प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृद्धिः १।१ ६ आदैच् १।१

समासः॥

आत् च ऐच् च आदैच्, समाहारद्वन्द्वसमासः॥

अर्थः॥

आत् = आ, ऐच् = ऐ, औ। आ ऐ औ इति एतेषां वर्णाणां वृद्धिसंज्ञा भवति॥

उदाहरणम्॥

भागः, त्यागः, यागः॥ नायकः, चायकः, पावकः, स्तावकः, कारकः, हारकः, पाठकः, पाचकः॥ शालायां भवः = शालीयः, मालीयः॥ उपगोरपत्यम् = औपगवः, औपमन्यवः॥ ऐतिकायनः, आश्वलायनः, आरण्यः॥ अचैषीत्, अनैषीत्, अलावीत्, अपावीत्, अकार्षीत्, अहार्षीत्, अपाठीत्॥
व्याख्या (काशिका)
वृद्धिशब्दः संज्ञात्वेन विधीयते, प्रत्येकम् आदैचां वर्णानां सामान्येन तद्भावितानाम्, अतद्भावितानां च। तपरकरणम् ऐजर्थम् तादपि परः तपरः इति, खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्ग-निवृत्तये। आश्वलायनः। ऐतिकायनः। औपगवः। औपमन्यवः। शालीयः। मालीयः। वृद्धिप्रदेशाः -- {सिचि वृद्धिः परस्मैपदेषु (७।२।१)} इत्येवम् आदयः॥
काशिका-वृत्तिः
वृद्धिरादैच् १।१।१

वृद्धिशब्दः संज्ञात्वेन विधीयते, प्रत्येकम् आदैचां वर्णानां सामान्येन तद्भावितानाम्, अतद्भावितानां च। तपरकरणम् ऐजर्थम् तादपि परः तपरः इति, खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्ग। निवृत्तये। आश्वलायनः। ऐतिकायनः। औपगवः। औपमन्यवः। शालीयः। मालीयः। वृद्धिप्रदेशाः सिचि वृद्धिः परस्मैपदेषु ७।२।१ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
वृद्धिरादैच् ३२, १।१।१

आदैच्च वृद्धिसंज्ञः स्यात्॥
न्यासः
वृद्धिरादैच् , १।१।१

वृद्धिः,आत् ऐच्()- इति केचित् त्रिपदमिदं सूत्रं वर्णयन्ति। अन्ये तु, आच्च, ऐच्च् इति आदैजिति समाहारे द्वन्दोऽयमिति मत्वा वृद्धिः, आदैच् इति द्विपदम्। इतरेतरयोगे हि बहुत्वाद्बहुवचनं स्यात्। ननु च समाहारेऽपि "द्वन्द्वाच्चुदषहान्तात्"५।४।१०६इति टच् समासान्तः स्यात्; समासान्तविधेरनित्यत्वान्न भविष्यति। अनित्यत्वं षष्ठे ज्ञापयिष्यते। अथ "चोः कुः" (८।२।३०) इति कुत्वं कस्मान्न भवति? "अय- स्मयादीनि च्छन्दसि" १।४।२० इति भसञ्ज्ञकत्वात्।

आदिशब्दस्य प्रकारवाचित्वादैच्छ- ब्दोऽयमयस्मयादिषु द्रष्टव्यः। ननु तत्र च्छन्दसीत्युच्यते, न चेदं छन्दः, तत्कुतो भसञ्ज्ञा? "छन्दोवत् सूत्राणि भवन्ति" इत्यदोषः। इहेदं सूत्रमनर्थकं वा स्याद्यथाकथञ्चिदुदात्तादिवचनवत्? साध्वनुशासनार्थंवा, वृद्धिशब्दस्यादैचाञ्चानेन साधुत्वमाख्यायत इति? प्रयोगनियमार्थं वा, आदैच पर एव वृद्धिशब्दः प्रयोक्तव्य इति? आदेशार्थंवा, आदैचां वृद्धिशब्द आदेशो भवति ते वा तस्येति? आगमागमिसम्बन्धार्थं वा, आदैचां वृद्धिशब्द आगमो भवति, ते वा तस्येति? विशेषणविशेष्यभावप्रसिद्ध्यर्थं वा, आदैचां वृद्धिशब्दो विशेषणम्, ते वा, तस्येति?एकविभक्तिकत्वं ह्यत्र दृष्टम्, दृष्टश्चैकविभक्तिकयोर्विशेषणविशेष्यभावः, तद्यथा नीलमुत्पलमिति; सञ्ज्ञासञ्ज्ञिसम्बन्धार्थं वा? दृश्यते हि सोऽप्येकविभक्तिकयोः, तद्यथा "अयं पनसः" इति? तत्र तावदाद्यः पक्षो नोपपद्यते। सगषिगतज्ञानातिशयो ह्याचार्यः परहितप्रतिपन्नः समाहितचेताः शिष्याणां कृतरक्षासंविधानो मङ्गलपूर्वकं महता प्रयत्नेन सूत्राणि प्रणीतवान्। तत्राशक्यमेकेन वर्णनाप्यनर्थकेन भवितुम, किं पुनरियता सूत्रप्रबन्धेन!नापि शक्यं वृद्धिशब्दस्यादैचां च साधुत्वमनेन विधीयत इति विज्ञातुम्, लक्षणान्तरेण विहितत्वात् तेषां साधुत्वस्य। तथा हि वृद्धिशब्दोऽयम- विशेषेणचोपदिष्टः। "वृधु वृद्धौ" (धा।पा।७५९) इत्यतः क्तिन्प्रत्ययः "स्त्रियां क्तिन्"३।३।९४ इति, "झषस्तथोर्धोऽधः"८।२।४० इति धत्वम्, "झलां जश् झशि" (८।४। ५३)इति धकारस्य दकारः। आदैचोऽप्यक्षरसमाम्नाय उपदेशात्। ऐचोऽक्षरसमाम्नाय उपदेशः, नाकारस्येति चेत्? अवर्णजातेरुपदेशात् सोऽपि गृह्यत इत्यदोषः। अथाप्यकारव्यक्तेरुपदेशः? एवमप्यदोषः। "अणुदित्सवर्णस्य चाप्रत्ययः"१।१।६८ इत्यकारेण गृह्यमाणेनाकारस्यापि ग्रहणात्। प्रयोगनियमार्थमप्येतन्नार्हति भवितुम। प्रयोगनियमार्थे ह्येतस्मिन्? "सिचि वृद्धिः" ७।२।१ मृजेर्वृद्धिः" ७।२।११४ इत्यादावनादैच्परस्य वृद्धिशब्दस्य प्रयोगो नोपपद्यते। कथं हि नाम स्वयमेव नियमं कृत्वा तमनादैच्परं प्रयुञ्जीत! अन्यस्तु प्रयोगनियमार्थमेतन्न भवतीति प्रतिपादयितुमाह- नह च प्रयोगनियमा- र्थमारभ्यत इति। ननु चायं प्रयोगनियमार्थमेवारभ्यते "ते प्राग धातोः" (१।४।८०) इति? ते गत्यपसर्गसञ्ज्ञका धातोः प्रागेव प्रयोक्तव्याः इति परेण चोदिते परिहारमाह- " प्रत्याख्यायते स योगः, न वा, तथानिष्टदर्शनात्" इति। न हि प्रपचतीति प्रयोक्तव्ये कश्चित् पचति प्र इति प्रयुङ्कते। अथापि न प्रत्याख्यायेत, एवमपि न दोषः, यतः सञ्ज्ञानियमोऽयं न प्रयोगनियमः, ते प्रादयो धातोः प्राक् प्रयुज्यमाना एव गत्युपस-र्गसञ्ज्ञका भवन्तीति। अथापि प्रयोगनियमार्थं स्यात्, एवमपि न दोषः, लौकिकानां शब्दानामर्थे प्रयुक्तानां प्रयोगनियम आरभ्यते, आदैच्छब्दश्च लौकिकः, तस्य किं प्रयोगनियमार्थेन वचनेनेति? तत्र यदुक्तं "प्रत्याखायायते स योगः" इति, तदयुक्तम्। न हि सार्थकस्य प्रत्याख्यानं युक्तम्। निरर्थकः स इति चेत्? अत्राप्यनर्थकत्वाशङ्काप्रसङ्गः। यदि ह्यनर्थकान्यपि कानिचित् सूत्राणि प्रणीतवान् सूत्रकार इत्येषोऽ- ध्यवसायः स्यात्। तस्मात तस्य प्रामाण्यमभ्युपगच्छता सर्वं तत्प्रणीतं येन केनचित् प्रकारेण सार्थकमभ्युपेयम्। योऽपि सञ्ज्ञानियमपक्षमाश्रित्य परिहार उक्तः, सोऽपि वृत्त्या विरुध्यते। "ते गत्युपसर्गसञ्ज्ञका धातोः प्राक् प्रयोक्तव्याः" इत्यनेन हि वृत्तिग्रन्थेन प्रयोगनियम एवाश्रित इति स्पष्टमेवाख्यातम्। न च वृत्तिं()त व्याख्यातुमुद्यतस्य तद्विरुद्धं व्याख्यानं युज्यते कर्तुम। यदप्युक्तं "लौकिकानां शब्दानाम्" इत्यादि, तदपि न प्रयोगनियमार्थता- शङ्कापनोदायालम्। तथा हि "विभाषा सुपो बहुच् पुरस्तात्५।३।६८, "अव्ययसर्व- नाम्नामकच् प्राक् टेः" ५।३।७१, "कृञ्चानुप्रयुज्यते लिटि" ३।१।४० इत्यलौकिकानामपि बहुजादीनं शास्त्रे प्रयोगनियमो दृश्यते, तत्र भवितव्यमेवाशङ्क्या, किमेतत् प्रयोगनियमार्थम्, अथान्यार्थमित्यलमतिप्रसङ्गेन। तस्मात् पूर्वोक्त एव परीहारो युक्तः। आदेशार्थमप्येतच्छक्यते न विज्ञातुम्। यदि ह्यादैचामनेन वृद्धिशब्द आदेशो विधीयेत, य एते निर्देशाः "याति वाति द्राति प्साति" ८।४।१७ इति, यश्च "रायो हलि"७।२।८५ इति, यश्च "नावो द्विगोः" ५।४।९९ इति, ते नोपपद्येरन्। अथ वृद्धिशब्द- स्यादैच आदिश्येरन्(), एवमपि "इद्()वृद्धौ"६।३।२७, "वृद्धिनिमित्तस्य च तद्धितस्य" ६।३।३८इत्येवमादयो निर्देशा न सम्भवेयुः। अत एवागमार्थमप्येतन्नोपपद्यते। न ह्यादैचां वृद्धिशब्द आगमे विहिते तस्य वा तेषु पूर्वोक्ता निर्देशा उपपद्यन्ते। अन्यस्त्वाह- आदेशविधाने स्थान्यादेशसम्बन्धे षष्ठ()आ भवितव्यम्, आगमविधानेप्यवयवावयविसम्बन्धे, न चेह षष्ठी विद्यते,

तस्मात् षष्ठ()आ अभावान्नेदमादेशार्थम्, नाप्यागमार्थम् इति। एतच्चासम्यक्। विनाऽपि षष्ठ()आ "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" ६।१।६६, "अनिते"८।४।१९, "अन्तः"८।४।१९, "उभौ साभ्यासस्य" ८।४।२० इत्यावेशविधानदर्शनात्। आगमविधानस्यापि "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" ७।३।३ इति षष्ठीमन्तरेणापि दर्शनात् विशेषणविशेष्यभावप्रसिद्ध्यर्थमप्येतन्न् सम्भाव्यते। तथा हि सम्भवव्यभिचारे च सति विशेषणविशेष्यभावो भवति, नीलोत्पलवत्। न चेहादैचां वृद्धिशब्दे तस्य वा तेषु सम्भवः। ननु च यथोत्पलशब्दःसर्वत्रोत्पलार्थे वर्तमानो नीलशब्देनार्थान्तराद्वयवच्छिद्यत इति व्यवच्छिद्यमानो विशेष्यो भवति, नीलशब्दस्तु व्यवच्छिन्दन् विशेषणम्, तथानयोरपबि यो वयवच्छेद्यः स विशेष्यो भवति, यस्तु व्यवच्छेदकः स विशेषणमिति? नैतदस्ति। उभयोर्हि सार्थकत्वे सत्येतदुपपद्यते, नीलोत्पलशब्दवत्। न चादैचोऽर्थवन्तः। भवतु नामानयोर्विशेषणविशे- ष्यभावः, तथापि नैतत्सिद्ध्यर्थमिदं युक्तम्; निष्प्रयोजनत्वात्, तत्पुनः प्रकृतानुपयोगित्वात्। शब्दानुशासने हि शास्त्रे प्रकृते यग्नाम शब्दसंस्कारानुपयोगिवचनं तत्सर्वमप्रयोजनम्। शब्दसंस्कारानुपयोगित्वं त्वेतत्प्रतिपदितेन विशेषणविशेष्यभावेनवृद्धिशब्दस्यादैचां वा स्वरविशेषस्य वा रुपविशेषस्य वा संस्कारस्यासिद्धेः। विशेषणविशेष्यभाव एव तेषां संस्कार इति चेत्? यद्येवम्, अत्यल्पमिदमुच्यते"वृद्धिरादैच्" १।१।१इति। नीलोत्पलमित्यद्पि हि वक्तव्यम्, नीलोत्पलादिशब्दानां विशेषणविशेष्यभावप्रसिद्धये। न चोक्तम्, अतो नैष संस्कारोऽभिमत इति नास्य तादर्थ्यं सम्भाव्यते। ननु तुल्यविभक्तिकानां तद्गुणसमाध्यारोपोऽपि दृष्टः, तद्यथा "सिंहो माणवकः" इति, तस्मात् तदर्थमेतद्भविष्यतीति यत्पक्षान्तरमेके परिकल्पयाम्बभूवुः, तदर्थम- प्येतन्न भवति, तद्गुणसमाध्यारोपस्य सतोऽप्यत्र प्रकृतानुपयोगित्वेनानर्थकत्वात्। तस्मात् पारिशेष्यात् सञ्ज्ञासञ्ज्ञिसम्बन्धार्थमेवैतदित्यालोच्याह-"वृद्धिशब्दः सञ्ज्ञात्वेन" इत्यादि। भवतु नाम परिशेष्यात्तदर्थम्। एतत् कुतो लभ्यते? वृद्धि- शब्दः सञ्ज्ञा, आदैचः सञ्ज्ञिनः इति। विपर्ययः कस्मान्न भवति,आदैचः सञ्ज्ञा, वृद्धिशब्दः सञ्ज्ञी इति? नार्हति विपर्ययो भवितुम्। तथा हि, लघ्वर्थत्वात् सञ्ज्ञाकरणस्य, यस्मिन्नुच्चार्यमाणे प्रदेशेषु लाघवं भवति तस्य सञ्ज्ञार्थत्वेन भाव्यम्। वृद्धिशब्दे च विभक्तिकेऽप्युच्चार्यमाणे लाघवं भवति, नादैक्षु; यस्माद्()वृद्धिशब्द उच्चार्यमाणे चतस्त्रो मात्रा भवन्ति, आदैक्षु तु पञ्च। न चादैचां प्रत्येकं सञ्ज्ञाभावाल्लाघवं भवतीति शक्यं परिकल्पयितुम्, प्रयोजनविशेषमन्तरेणैकस्थाने- सञ्ज्ञाविधानस्य निष्फलत्वात्। किञ्चावर्तिभ्यः सञ्ज्ञा भवन्ति। वृद्धिशब्दश्चावर्तते, नादैच्छब्दः तस्मान्न भवति विपर्ययः "वृद्धिशब्दः" इति। शब्दग्रहणमर्थव्यवच्छे- दार्थम्। असति हि तस्मिन् शब्दादर्थावगतेरर्थस्यैव सञ्ज्ञात्वं विज्ञायेत। यद्यपि प्रागेव सञ्ज्ञा विहिता, तथापि शिष्यप्रशिष्यप्रबन्धाद्युपरमाद्विधीयत इतिवर्तमान प्रयत्वेन् निर्देशः। यत्र समुदास्य कार्यमिच्छति तत्र उभेपदग्रहणं करोति, यथा "उभे अभ्यस्तम्" ६।१।५ इति, अन्वर्थां वा महतीं सञ्ज्ञाम्, "हलोऽन्तराः संयोगः"१।१।७ इति। तत्र हि महती सञ्ज्ञैवमर्था क्रियते, समुदायस्यैषा सञ्ज्ञायथा स्यादिति। एतच्चोत्तरत्र व्यक्तीकरिष्यामः। इह तु न किञ्चित्तथाविधं वचनमस्ति यतः समुदायस्यै- षा सञ्ज्ञा स्यात्। तस्मादेकैकस्यैषा सञ्ज्ञेति मनसि कृत्वाह "प्रत्येककम्" इति। ननु चेहापि लाघवार्थमेकाक्षरायां सञ्ज्ञायां कर्तव्यायां वृद्धिरिति महत्याः सञ्ज्ञायाःकरणं समुदायस्य सञ्ज्ञा यथा स्यादित्येवमर्थम्? नैतदस्ति। मङ्गलार्थत्वा- दस्याः सञ्ज्ञायाः। अत एवास्याः प्रागुच्चारणम्। अन्यथा सञ्ज्ञायाः सतः कार्यिणः कार्येण भवितव्यमिति, यथा "अदेङ्गुणः"१।१।२ इत्यादौ पूर्वसञ्ज्ञीनिर्दिष्ट-, तथेहापि निर्दिशेत्। आकारस्य गुणान्तरयुक्तयोश्चैचोः प्रत्याहारेऽसन्निवेशान्नामी वर्णा इति कस्यचिन्मन्दधियो भ्रान्तिः स्यात्, अतस्तन्निराकरणायाह-"वर्णानाम्" इत्यादि। प्रत्यासत्तेस्तद्भावितानामेवैषां सञ्ज्ञा स्यादिति कस्यचिद्विपर्ययः स्यात्, अतस्तमपाकर्तुमाह-"सामान्येन" इति। व्याप्तेन्र्यायादित्यभिप्रायः। सामान्येनेत्यस्यार्थं विस्पष्टीकर्तुमाह- "तद्भावितनाम्" इत्यादि। ते तद्भाविताः ये वृद्धिशब्देनोत्पादिताः, ततोऽन्येऽतद्भाविताः। आदिति तपरकरणम्-"तपरस्तत्कालस्य"१।१।६९ इति गुणान्तरभिन्नानामपि तुल्यकालानां ग्रहणार्थं वा स्यात्, भिन्न- कालानां ग्रहणनिवृत्त्यर्थं वा? तत्र् पूर्वः पक्षस्तावन्नोपपद्यते; अभेदकत्वादिहोदात्तादीनां शास्त्रे

गुणानाम। कुत एतत्? "लुङलङलृङक्ष्वडुदात्तः"६।४।७१ इत्युदात्तग्रहणात्, अन्यथा ह्युदात्तगुणयुक्तमेवाटमुच्चारयेत्। द्वितीयोऽपि नोपपद्यते। यदि ह्याकारः सवर्णानां ग्राहकः स्यात्, ततस्तेन भिन्नकालस्याप्यवर्णस्य ग्रहणे सति तस्यापि सञ्ज्ञा मा भूदिति भिन्नकालानां ग्रहणनिवृत्त्यर्थं तपरकरणमुपपद्यते। न चासौ सवर्णानां ग्राहकः, अनण्त्वात्, तस्य पुनरक्षरसमाम्नायेऽसन्निवेशात्। तस्मादनर्थकं तपरकरणम्। ततो न कर्तव्यमेवेत्यत आह- "तपरकरणम्" इत्यादि। एचोरर्थः प्रयोजनं यसय् तत् तथोक्तम्। ननु च जातौ पदार्थे प्लुतस्यापि ग्रहणं भवति, तत्राप्यवर्णजातेः समवयात्, तत्रासति तपरकरणे तस्यापि सञ्ज्ञा स्यत्, तस्मात् तन्निवृत्तय तपरकरणं भवदाकारार्थमप्युपपद्यत एव, तत्किमुच्यते "एजर्थम्" इति? एवं मन्यते- जातिपक्षसमाश्रयणेऽपि हि दीर्घोच्चारणसामर्थ्याद्()द्विमात्रा एवावर्णव्यक्तयः समाश्रिता इति गम्यते, इतरथा हि लाघवार्थम्? "अद्()" इत्येवाभिदध्यात्। न च ह्रस्वनिवृत्त्यर्थं दीर्घोच्चारणमिति शक्यते परिकल्पयितुम्, दीर्घोच्चारणेऽपि ह्रस्व- ग्रहणं प्राप्नोत्येव, तत्राप्यवर्णजातेः सम्भवादिति। न चासन्देहार्थम् "आत्" इत्युक्तम्, वर्णान्तरासाधारणत्वात्, असंहितया वा सन्देहाभावादिति। ननु च "तपरस्तत्काल- स्य" १।१।६९इत्यत्र तः परो यस्मादिति बहुव्रीहिराश्रितः, न चात्रैच् तपरः, तत्कथं तपरकरणमैजर्थं भवतीत्यत आह- "तावपि परस्तपरः" इति। न केवलं तः परो यस्मात् स तपर इति, अपि तु तादपि यः परः सोऽपि तपर इति अपिशब्देन दर्शयति। एतदुक्तं भवति, न केवलं बहुव्रीहिरेव तत्राश्रीयते, किं तर्हि? पञ्चमीतत्पुरुषोऽपि। यता चैतदुभयमा- श्रीयते तथा तत्रैवोपपादयिष्यामः। इति करणो हेतौ यत एवं तादपि परस्तपरः, तेन तपरकरणमैजर्थमित्यर्थः।"खट्वैडकादिषु" इत्यादिना तदेवैजर्थत्वं तपरकरणस्य स्पष्टीकरोति। वृक्ष एलका "वृक्षैलका"। अक्रियमाणे ह्यत्र तपरकरणे त्रिमात्रिकस्याकारैकारसमुदाय स्यस्थाने वृद्धिरेचि"६।१।८५ इति वृद्धिरान्तरतम्यात् त्रिमात्रिक एवैकारः स्यात्यदि तस्यापि वृद्धिसञ्ज्ञा स्यात्। खट्वा ओदनं खट्वौदनम्, खट्वा एलका खट्वैलका इत्यत्रापि पूर्वोत्तरसमुदाययोश्चतुर्मात्रायोश्चतुर्मात्रावकारैकारौ स्याताम्,तन्मा भूदेष दोष इति त्रिमात्रचतुर्मात्राणामैचां वृद्धिसञ्ज्ञानिवृत्तये तपरकरणं क्रियते। आ()आलायनः, ऐतिकायनः" इति। अ()आलेतिकशब्दाभ्यां "नडादिभ्यः फक्()" ४।१।९९, "यस्येति च" ६।४।१४८ इति लोपः, "किति च"७।२।११८ इत्यादिवृद्धिः। "औपगवः" इति। उपगुशब्दात् "प्राग्दीव्यतोऽण्"४।१।८३। "औपमन्यवः" इति। उपमन्युशब्दात "अनृष्यानन्तर्ये बिदादिभ्योऽञ्" ४।१।१०४इत्यञ्, उभयत्रापि "ओर्गुणः"६।४।१४६, अवादेशः ६।१।७५, " तद्धितेष्वचामादेः" ७।२।११७ इति वृद्धिः। एतानि चत्वार्यपि तद्भावितो- दाहरणानि। ननु येऽत्र त्रयः सञ्ज्ञिनस्तेषामाद्यैस्त्रिभिर्विषयो दर्शितः, किमर्थ- श्चतुर्थोपन्यासः? केचिदाहुः- वद्धिनिमित्तभेदात्, आद्ययोरुदाहरणयोः कित्तद्धितो वृद्धेर्निमत्तम्, तृतीयेऽपि णित्, तचुर्थेऽपि ञित् इति। एतच्चायुक्तम्। तथा हि "इको गुणवृद्धी" १।१।३ इत्यत्र"अकार्षीत्" इत्युदाह्यत्य "अहार्षीन्" इत्युदाह्मतम्", न च तत्र वृद्धिनिमित्तभेदोऽस्ति। तथा "न धातुलोप आर्धधातुके" १।१।४ इत्यत्र लोलुवः इत्युदाह्यत्य "पोपुवः, मरीमृजः" इत्यधिकोदाहरणोपन्यासः कृतः। न च तत्र लोपनिमित्तभेदः; प्रतिषेधनिमित्तभेदो वा अधिकोदाहरणोपन्यासस्य हेतुर्विद्यते। प्रायेणा- न्यष्वेपि च सामान्यलक्षणेषु विनापि निमित्तभेदानाधिकोदाहरणोपन्यास उपलभ्यते। योऽप्याह "ओपगव इत्यनेनैच औकारस्य विषये दर्शितेऽपि स्वरभेदादौपमन्यव इत्येतदधिकमुदाहरणमुपन्यस्तम्" इति, तस्यापि तदयुक्तम्, अत एवानन्तरोक्ताद्धेतोर्वेदितव्यम्।। यदि निमित्तभेदः, स्वरभेदो वा सर्वत्राधिकोदाहरणोपन्यासो वेदितव्यः। "शालीयः, मालीयः" इति। अतद्भावितस्योदाहरणे। अत्र हि वृद्धिसञ्ज्ञायां वृद्धिर्यस्या चामादिस्तद्वृद्धम्" १।१।७२ इति वृद्धसञ्ज्ञाफं छप्रत्ययोपन्यासस्तस्या एव फलभूताया अभिव्यक्त्यर्थः। वृद्धसञ्ज्ञायां हि सत्यां " वृद्धाच्छः" ४।२।११३ इति जातादावर्थे छो विधीयते। ऐकारौकारयोस्त्वतद्भावितयोरुदाहरणं नात्र दर्शितम्, एतदनुसरसार- णैव गम्यमानत्वात्। आकारस्यातद्भावितस्य वृद्धिसञ्ज्ञायाः कार्ये दर्शिते, तयोरपि तदेव कार्यमिति तन्मुखेनैव गम्यत एव। के पुनसत्योरुदाहरणे? "रैमयम्, नौमयम्" इति। आत्रैकारौकारयोर्वृद्धिसञ्ज्ञायां सत्यां पूर्ववद्()वृद्धसञ्ज्ञा। तस्यां च सत्यां रायो विकारः, नावो विकार इति "नित्यं वृद्धशरादिभ्यः" ४।३।१४२ इति मयड्()भवति।

बाल-मनोरमा

वृद्धिरादैच् १८, १।१।१

इदानीं संज्ञान्तराणि विधास्यन् वृद्धिसंज्ञां तावदाह--वृद्धिरादैच्। यद्यपि पाणिनीयाष्टाध्याय्यामिदमादिमं सूत्रं, तथापि नेदमादावुपन्यस्तम्, अस्य सूत्रस्य तपरकरणेन प्रत्याहारगर्भिततत्वेन ग्रहणकशास्त्रनियमार्थतपरसूत्रप्रत्याहारसूत्रप्रवृत्त्युत्तरप्रवृत्तिकतया प्रत्याहरशास्त्रप्रपञ्चनिरूपणात्प्रागुपन्यासनर्हत्वात्। न च सूत्रकृता अयमेव पाठकमः कुतो नाद्रियत इति वाच्यम्। स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वात्। आच्च ऐच्चेति समाहारद्वन्द्वः। "द्वन्द्वाच्चुदषहान्तात्" इति समासान्तस्तु न, अत एव निर्देशेन समासान्तविधेरनित्यत्वात्। "चोः कुः" इति पदान्ते विहितं कुत्वमपि न। "अयस्मयादीनि छन्दसि" इति भत्वात्। "वृद्धिरादैजदेङ" इति संहितापाठपक्षे चकारस्य "झलां जशोऽन्ते" इति पदान्ते विहितजश्त्वं तु भवत्येव, "उभयसंज्ञान्यपि छन्दसि दृश्यन्ते" इति वचनात् , "छन्दोवत्सूत्राणि भवन्ति" इति छान्दसविधीनां सूत्रेष्वपि प्रवृत्तेः। नचैवमपि पदत्वात्कुत्वं भत्वाज्जश्त्वाऽभावश्च कुतो न स्यादिति वाच्यम्, "छन्दसि दृष्टानुविधिः" इति वचनादित्यलम्।आच्च ऐच्चेतीतरेतरयोगद्वन्द्वो वा। तथा सति सौत्रमेकवचनम्। आचार्यपारंपर्योपदेशसिद्धसंज्ञाधिकारात् संज्ञेति लभ्यते। तदेतदाह--आदैच्चेत्यादिना।

तत्त्व-बोधिनी

वृद्धिरादैच् १७, १।१।१

वृद्धिरादैच्। आच्च ऐच्चेति इतरेतरयोगद्वन्द्वः, "सुपां सुलु" गिति औङः सुर्लुग्वा। यद्वा समाहारद्वन्द्वः। नचैवं "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच्स्यादिति वाच्यम्, समासान्तविधेरनित्यत्वात्। तत्र च प्रमाणं समासेषु वक्ष्यामः। अथवा "आ"दित्यसमस्तमेवास्तु, वृद्धिशब्दस्तन्त्रेणावृत्यां वा योजनीयः।?यस्मयादित्वेन भत्वाच्चोः कुर्न। "ऐ"जिह द्विमात्र एव, तात्परत्वात्, तेन "कृष्णैकत्व"मित्यत्र त्रिमात्रो न। वृद्धिप्रदेशाः-"वृद्धिरेचि"त्यादयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अदेङ् १।१ गुणः १।१ ६

समासः॥

अत् च एङ् च अदेङ्

अर्थः॥

अ ए ओ इति एतेषां वर्णानां गुणसंज्ञा भवति

उदाहरणम्॥

चेता, नेता, स्तोता, कर्ता, हर्ता, तरिता, भविता॥ जयति, नयति॥ पचन्ति, पठन्ति॥ पचे, यजे, देवेन्द्रः, सूर्योदयः, महर्षिः॥

काशिका-वृत्तिः

अदेङ् गुणः १।१।२

गुणशब्दः संज्ञात्वेन विधीयते, प्रत्येकम्, अदेङां वर्णानां सामान्येन तद्भावितानाम्, अतद्भावितानां च। तपरकरणं त्विह सर्वार्थम्। तरिता। चेता। स्तोता। जयन्ति। अहं पचे। गुणप्रदेशाः मिदेर् गुणः ७।३।८२ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

अदेङ् गुणः २५, १।१।२

अत् एङ् च गुणसंज्ञः स्यात्॥

न्यासः

अदेङ् गुणः। , १।१।२

"तपरकरणं त्विह सर्वार्थम्िति। सर्वस्मिन्नर्थः प्रयोजनं यस्य तत् तथोक्तम्। तुशब्दः पूर्वस्माद्विशेषं दर्शयति। तत्र ह्रैजर्थमेव, इह तु सर्वार्थम्, अकारार्थमेङर्थमपि। असति हि तपरकरणं अदेङामणत्वात् सवर्णानां ग्रहणं सति भिन्नकालानामप्येषा सञ्ज्ञा स्यात्। ततश्च "तरिता" इत्यत्रान्तरत्मयाद्दीर्घस्य दीर्घ एव गुणस्यात्।ननु च वृद्धिसञ्ज्ञा गुणसञ्ज्ञाया बाधिका भविष्यति, तत् कुतोऽयं प्रसङ्गः? नैतदस्ति। एकसञ्ज्ञाधिकारे हि सञ्ज्ञया सञ्ज्ञान्तरं बाध्यते, न चात्रेकसञ्ज्ञाधि-कारः। स्यादेतत्, असत्यप्येकसञ्ज्ञाधिकारे यथा "जीवति तु वंश्ये युवा"४।१।१६३ इति गोत्रसञ्ज्ञा युवसञ्ज्ञया बाध्यते, यथा च "लिट् च" ३।४।११५, "लिङाशिषि"३।४।११६इति चार्धधातुकसञ्ज्ञया सार्वधातुकसंज्ञा बाध्यते, तथा गुणसंज्ञा वृद्धिसञ्ज्ञया बाधिष्यते इति? अयुक्तमेतत। युवसञ्ज्ञाविधौ तुग्रहणं नियमार्थं क्रियते। ततो युक्तं यद्युवसञ्ज्ञया गोत्रसञ्ज्ञा बाध्यत इति। आर्धधातुकसञ्ज्ञाऽपि यत् सार्वधातुकसञ्ज्ञा बाध्यते तदपि युक्तमेव, "छन्दस्युभयथा" ३।४।११७ति वचनात्। यदि सार्व- धातुकार्धधातुकसञ्ज्ञयोः समावेशः स्यात्, न बाध्यबाधकभावः, तदा "छन्दस्युभयथा"३।४।११७ इति वचनमपार्थकं स्यात्। इह तु न किञ्चित् तथाविधं निबन्धनमस्ति, यतो वृद्धिसञ्ज्ञया गुणसञ्ज्ञा बाध्यते। अथापि कथञ्चिद्बाध्येत, एवमपि त्रिमात्रिकस्यापि गुण- सञ्ज्ञा स्यादेव। न हि सा तया शक्या बाधितुम्, तस्य अतद्विषयत्वात्। त्रिमात्रस्यापि गुणसञ्ज्ञायां सत्यां त्रिमात्रोऽपि गुणः प्रसज्यते। ॠकारस्य हि कालतो यथैकमत्रिकोऽकारोऽन्तरतमो न सम्भवति, तथा त्रिमात्रोऽपि, तत् कुत एतल्लभ्यते? ह्रस्वेनैवास्य गुणेन भवितव्यम् न हि त्रिमात्रेणाकारेणेति। किञ्च, यदि भिन्न- कालानामपि गुणसञ्ज्ञा स्यात्, "खट्वा इन्द्रः= खट्वेन्द्रः खट्वा उर्वी खट्वोर्वी" इत्यत्र त्रिमात्रत्वात् पूर्वोत्तरसमुदायात्मनः स्थानिनः "आद्()गुणः" ६।१।८४इति त्रिमात्रो गुणः स्यात्। खट्वा ईषा= खट्वेषा, खट्वा उढा=खट्वोढा" इत्यत्र चतुर्मा- मात्रित्वात् चतुर्मात्रः। तस्मात् सर्वार्थं तपरकरणं कर्तव्यम्। "तरिता" इत्यादि। "तृ? तप्लवनतरणयोः" (धा।पा।९६९), "चिञ् चयने" (धा।पा।१२५१), "ष्टुञ् स्तुतौ" (धा।पा।१०४३), एभ्यः "ण्वुल्()तृचौ"३।१।१३३ इति तृच्। "आर्धधातुकस्येड् वलादेः"७।२।३५ इतीट्, "सार्वधातुकार्धधातुकयोः" ७।३।८४ इति गुणः, सु, "ऋदुशनस्()"७।१।९४ इत्यादिना अनङ, "सर्वनामस्थाने च" ६।४।८ इति दीर्घः। एतानि त्रीणि यथाक्रमदेङां तद्भावितानामुदाहरणानि। "पठन्ति, पठन्" इत्यकारस्यात्द्भावितस्योदाहरणे। अत्रान्त्याकारस्य गुणसञ्ज्ञायां "अतो गुणे" ६।१।९४ पररूपत्वं भवति। पठन्निति शत्रन्तमेतत्। एकास्यातद्भावितस्यकार्योदाहरणम्- "अहं पचे" इत्यादि। ओकारस्यातद्भावितस् तन्न सम्भवतीति न प्रदश्र्यते।

बाल-मनोरमा

अदेङ्गुणः १९, १।१।२

अदेङ्गुणः। संज्ञाप्रस्तावात्संज्ञेति लभ्यते। अच्च एङ्? चेति समाहारद्वन्द्वः। तदाह--अदेङ् चेत्यादिना।

तत्त्व-बोधिनी

अदेङ्गुणः १८, १।१।२

अदेङ्गुणः। तपरकरणमिह सर्वार्थम्। तेन "गङ्गोदक"मित्यत्र त्रिमात्रो न। "तरती"त्यत्र त्वकार एव, नतु कदाचिदाकारः। नच प्रमाणत आन्तर्येण नियमसिद्धिः, रपरत्वे कृते एकस्याध्यर्धमात्रत्वादपरस्यार्धतृतीयमात्रत्वात्। गुणप्रदेशास्तु-"आद्गुणः" "अतो गुणे" इत्यादयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इकः ६।१ ६ गुण-वृद्धी १।२ ६ वृद्धिः १ गुणः २

समासः॥

गुणश्च वृद्धिश्च गुणवृद्धी, इतरेतरद्वन्द्वसमासः

अर्थः॥

वृद्धिः स्यात्, गुणः स्यात्, इति गुण-वृद्धि-शब्दाभ्यां यत्र गुण-वृद्धी विधीयते, तत्र इकः इति षष्ट्यन्तं पदम् उपस्थितं द्रष्टव्यम् = तत्र इकः स्थाने भवतः इत्यर्थः।

उदाहरणम्॥

मेद्यति, चेता, कर्ता, जयति। मार्ष्टि। अलावीत्।

काशिका-वृत्तिः

इको गुणवृद्धी १।१।३

परिभाषा इयं स्थानिनियमार्था। अनियमप्रसङ्गे नियमो विधीयते। वृद्धिगुणौ स्वसंज्ञया शिष्यमाणौ इकः एव स्थाने वेदितव्यौ। वक्ष्यति सार्वधातुकार्धधातुकयोः ७।३।८४ अङ्गस्य गुण इति। स इको एव स्थाने विदितव्यः। नयति। भवति। वृद्धिः खल्वपि अकार्षीत्। अहार्षीत्। अचैषीत्। अनैषीत्। अलावीत्। अस्तावीत्। गुणवृद्धी स्वसंज्ञया विधीयेते, तत्र इकः इति एतदुपस्थितं द्रष्टव्यम्। किं कृतं भवति? द्वितीयया षष्ठी प्रादुर्भाव्यते। मिदिमृजिपुगन्तलघौउपर्धाच्छिदृशिक्षिप्रक्षुद्रेष्वङ्गेन इग् विशेष्यते। जुसि सार्वधातुकाऽदिगुणेषु इकाङ्गं विशेष्यते। मेद्यते। अबिघयुः। इकः इति किम्? आत्सन्ध्यक्षरव्यञ्जनानां मा भूत्। यानम्। ग्लायति। उम्भिता। पुनर् गुणवृद्धिग्रहणं स्वसंज्या विधाने नियमार्थम्। इह मा भूत् द्यौः, पन्थाः, सः, इमम् इति।

न्यासः

इको गुणवृद्धी। , १।१।३

"परिभाषेयम्" इति। नाधिकारः, अस्वरितत्वात्। नापि गुणवृद्धयोर्विधायकं लक्षणम्, लक्षणान्तरेण तयोर्विधास्यमानत्वात्। "स्थानिनियमार्था" इति। स्थानिनि नियमः स्थानिनियमः, स्थान्यन्तरव्यवच्छेदेनैकत्र प्रवर्तनम्, सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता। "अनियमप्रसङ्गे नियमो विधीयते" इति। यत्र साक्षात् स्थानी न निर्दिष्टः

"सार्वधातुकार्धधातुकयोः"७।३।८४, "सिचि वृद्धिः परस्मैपदेषु"७।२।१ इत्यादौ, तत्रानियमे प्रसक्ते नियममेषां करोति-इक एव नान्यस्येति। अतः स एवस्या विषयो वेदितव्यः, न तु यत्र साक्षात् स्थानी निर्दिश्यते सोऽपि, यथा- "ओर्गुणः" ६।४।१४६ "अत उपधायाः" ७।२।११६ इत्यादिः। तत्र ह्यनियमस्य प्राप्तिरेव नास्ति। लिङ्गवती चेयं परिभाषा, लिङ्गं चास्या गुणवृद्धिग्रहणम्, तत्रोपतिष्ठते। तथा च द्वे षष्ठ्यौ प्रादुर्भवतः,-"इकः" इत्येका षष्ठी, "मिदेर्गुणः"७।३।८२ इत्येवमादिका द्वितीया। तत्र कामचारादयथेष्टं सिध्यति। तयोर्विशेषणविशेष्यभावः क्रियते। "मिदेः" इत्यत्रान्त इग न सम्भवतीति त्सयाङविशेषणत्वं नोपपद्यतेतस्मादत्राङ्गेनेगेव विशिष्यते- मिदेरङ्गस्य य इगिति। तेन स्थानष्ठ()भावादलोऽन्त्यस्यानुपस्थाने सति यत्र तत्र स्थस्येको गुणः सिद्धो भवति। "सार्वधातुकार्धधातुकयोः" ७।३।८४ इत्यादौ त्वङ्गस्य इगन्तत्वं सम्भवति। तेन चाङ्गे विशिष्यमाणे तदन्तविधौ सतीष्टं सिध्यति। तस्मादिकै-वाङ्गं विशिष्यते, "इगन्तस्याङ्गस्येति। एवंचय सत्यस्याः स्थानषष्ठीत्वात् "अलो।- न्त्यस्य" १।१।५१ इत्येतदुपतिष्ठछते, तेनेगन्तस्यैवाङ्गस्य गुणवृद्धी भवतः, नेतरस्य। "स्वसञ्ज्ञया" इति। अत्र वक्ष्यमाणोऽभिप्रायः। "इक एव स्थाने" इति। यदर्थेयं परिभाषा तस्य नियमस्य स्वरूपं दर्शयति- "अकार्षीत्" इति। "डुकृञ् करण" (धा।पा। १४७२),लुङ, "च्लेः सिच्" ३।१।४४ सिचि वृद्धिः ७।२।१"अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्। एवम् "अहार्षीत्" इति। अत्र "ह्मञ् हरणे" (धा।८९९) इत्ययं विशेषः। "इक इति किम्" इत। एकदेशद्वारेण समुदायस्य पर्यनुयोगो वेदितव्यः। न हि "गुणवृद्धी" इत्येतावता विनेग्ग्रहणेनार्थः कश्चित् संगृह्रते। "यानम्" इति। यातेर्ल्युटि गुणे विधीयमान आन्तरतम्यादकारः स्यात्। ततश्च द्वयोरकारयोः "अतो गुणे" (६।१।९७ पररूपत्वे कृते "यनम्" इत्यनिष्टं रूपं स्यात्। "ग्लायति" इति। "ग्लै म्लै हर्षक्षये" (धा।पा।९०३।९०४), अत्र सन्ध्यक्षरस्य ऐकारस्य एकारो गुणः स्यात्। ततश्चायादेशे कृते ग्लयति इत्यनिष्टं रूपं स्यात्। "उम्भिता"इति। "उभ उम्भ पूरणे" (धा।पा।१३१९,१३२०), तृच्, इट्। अत्र व्यञ्जनस्य कारस्यौष्ठ()स्य ओकारो गुणः स्यात्। ततश्चावादेशे कृते "उभविता" इत्यनिष्टं रूपं स्यात्। अथ कथं स्वसञ्ज्ञया शिष्यमाणावित्येष विशेषो लभ्यते? न हि सूत्रे स्वसञ्ज्ञाग्रहणमस्तीत्यत आह "पुनर्गुणवृद्धिग्रहणम्" इत्यादि। इहपूर्वसूत्राभ्यां गुणवृद्धिग्रहणमनुवर्तते। कतस्मिन्ननुवर्तमाने यत् पुनरिह गुणवृद्धरिग्रहणं क्रियतेतस्यैतत् प्रयोजनम्- "यत्र स्वसञ्ज्ञया गुणवृद्धी विधीयेते तत्रायं नियमो यथा स्यात्, अन्यत्र मा भूत्िति। पुनर्गुणवृद्धिग्रहणसामथ्र्यादन्यतरस्य गुणवृद्धिग्रहणस्य सञ्ज्ञाप्रधानत्वं सम्पाद्यते। कतेन स्वसञ्ज्ञया विधाने नियमो भवतीत्येषोऽ- र्थो लभ्यते। अन्यथा हि यद्येवं पूर्वो नियमो नात्राभिमतः स्यात्, ततो नियतस्य निय मस्य प्रकृतगुणवृद्धिग्रहणानुवृत्त्यैव सिद्धत्वात् पुनरिह गुणवृद्धिग्रहणमनर्थकं स्यादित्येवमभिप्रायः। "इह मा भूत्" इत्यादिनार्यैवं प्रकारस्य नियमस्य व्यवच्छेद्यत्वं दर्शयति- "द्यौः" इति। "दिव औत्"७।१।८४ इत्यौकारः। स्वरूपेण विधीयमानोऽलोऽन्त्यस्यैव भवति, नेकः। "पन्थाः" इति। "पथिमथ्यृभुक्षामात्" ७।१।८५ इत्याकारोऽन्त्यस्यैव भवति, नेकः। "इतोऽत्सर्वनामस्थाने"७।१।८६ इतीकारस्य अकारः, "थोऽन्थः" ७।१।८७ इति थकारस्य न्थादेशः। "इयम्" इति। "त्यदादीनामः" ७।२।१०२ इत्यत्वमन्तर्सयैव भवति, नेकः। "दश्च" ७।२।१०९ इति दकारस्य मकारः। स इत्यत्र त्वस्याः परिभाषाया उपस्थाने सति त्यदाद्यत्वं न स्यादेव। "तदोः सः सावन- न्त्ययोः" ७।२।१०६ इति सत्वम्, ननु च "अनश्च" १।२।२८ इत्ययमपि स्थानिनियमः स्वसञ्ज्ञाविधान एवेष्यते, तस्यापि च नियमस्य द्यौरित्यादिकं व्यवच्छेद्यम्। तथा हि वृत्तिकारस्तत्र वक्ष्यति "स्वसञ्ज्ञया विधाने नियमः। अजिति वर्तते। इह मा भूत्, द्यौः, पन्थाः, सः, द्युभ्याम्, द्युभिः" (का ३८) इति, ततश्च यदनेन नियमेनैवंविधेन कत्र्तव्यं तत्तेनैव सिध्यति, नार्थ एवंविधयनियमर्थेन पुनरिह गुणवृद्धिग्रहणेन() सत्यमेतत्" किन्त्वेवमर्थप्रतिपत्तौ य एते मन्दधियः प्राथमकल्पिकाः श्रोतारः, तेषांप्रतिपत्तिगौरवं स्यात्। तस्मात्ताननुग्रहीतं विस्पष्टार्थमिह सञ्ज्ञाविधाने नियमं प्रतिपादयितुं पुनर्गुणवृद्धिग्रहणं कृतम्। तद्येवम्, यत् येन विधातव्यं तदनेनैव विहितमिति तत्र सञ्ज्ञाविधाने नियमो न कत्र्तव्यः? नैतदस्ति; यदि ह्रसावित्थम्भूतो नियमो न स्यात्, ततो "द्युभ्याम् द्युभिः" इत्यत्र "दिव उत्"६।१।१२७ इत्युकारः स्वरूपेणैव विधीयमानोऽच एव स्थाने स्यात्, नालोऽन्त्यस्य। न ह्यनेन नियमेनाचः शक्यते व्यावर्तयितुम्, तस्य

गुणवृद्धिसञ्ज्ञकत्वात्।

बाल-मनोरमा

इको गुणवृद्धीः ३६, १।१।३

इको गुणवृद्धि। "इक" इति षष्ट()न्तशब्दः स्वरूपपरो नपुंसकलिङ्गः प्रथमैकवचनान्तः। सोर्लुका लुप्तत्वादत्वसन्तस्येति दीर्घो न ओ। "इकस्"शब्द इत्यर्थः। "उपतिष्ठते" इति शेषः। "वृद्धिरादैच्" "अदेङ्गुणः" इत्यतो वृद्धिरिति गुण इति चानुवर्तते। इतिशब्दोऽध्याहार्यः। "यत्र विधीयते तत्रे"त्यप्यध्याहार्यम्। गुणो वृद्धिरित्युच्चार्य यत्र गुणवृद्धि विधीयेते तत्र इक इति षष्ठ()न्तं पदमुपतिष्ठत इति योजना। तदाह--गुणवृद्धिशब्दाभ्यामित्यादिना। उपतिष्ठत इति। सङ्गतं भवतीत्यर्थः। "उपाद्देवपूचासङ्गतिकरणे"त्यात्मनेपदम्। सोऽयं पदोपस्थितिपक्षो भाष्यादौ सिद्धान्तितः। "सार्वधातुकार्धधातुकयोः", मिदेर्गुणः" इत्याद्युदाहरणम्। इक इत्यस्यान्वयप्रकारस्तु तत्र तत्र स्पष्टीभवष्यति। "यत्र विधीयेते" इत्युक्त्या "वृद्धिर्यस्याचा"मित्याद्यनुवादे इक इति नोपतिष्ठते। अनुवादे परिभाषामनुपस्थितेः। "त्यदादीनामः" इत्यादावपि नेदमुपतिष्ठते, तत्र गुणवृद्धिशब्दयोरश्रवणात्।

तत्त्व-बोधिनी

इको गुणवृद्धी ३०, १।१।३

इको गुणवृद्धी। यत्र साक्षात्स्थानी न निर्दिष्टः "सार्वधातुकाद्र्धधातुकयोः" "सिचि वृद्धि" रित्यादौ, तत्रैवेयं परिभाषा प्रवर्तते नतु "अचो ञ्णिती"त्यादौ, स्थानिनिर्देशात्। गुणवृद्धिशब्दाभ्यामिति। एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्त्य "गुणो वृद्धिरिति ये गुणवृद्धी" इति योजनया लभ्यते। तेनेह न "त्यदादीनामः" इमम्। "दिव औत्"द्यौः। विधीयेते इति। यत्र। त्वनुवादो "वृद्धिर्यस्याचामादि"रित्यादौ तत्रेक इति षष्ट()न्तं नोपतिष्ठते, अनुवादे परिभाषाणामनुपस्थितेरिति भावः। "अनुवादे परिभाषाणा"मित्यस्यानूद्यमानविशेषणेष्वित्यर्थः। अनुपस्थितौ लिङ्गं फलं च-"उदीचामातः स्थाने" इत्यत्र स्फुटीकरिष्यते। षष्ठ()न्तमिति। सूत्रे षष्ठ()न्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकत्वात्सोर्लुकि "अत्वसन्तस्ये"ति दीर्धो नेति भावः। पदमिति। तच्च संभवति सामानाधिकरण्ये "इगन्तस्याङ्गस्ये"त्यादिक्रमेण संबध्यते। "मिदेर्गुणः" मृजेर्बृद्धिः" इत्यादौ तु सामानाधिकरण्याऽसंभवान्मिदिमृज्योरवयवस्येक इति संबध्यते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० ६ धातुलोपे ७।१ आर्धधातुके ७।१ इकः ६।१ ३ गुणवृद्धी १।२ ३

समासः॥

धात्ववयवः धातुः, धातोः लोपः यस्मिन् तदिदं धातुलोपम्, तस्मिन् धातुलोपे, उत्तरपदलोपी-बहुव्रीहिसमासः

अर्थः॥

आर्धधातुकनिमित्ते धातुलोपे इकः स्थाने ये गुणवृद्धी प्राप्नुतः, ते न भवतः

उदाहरणम्॥

लोलुवः पोपुवः। मरीमृजः, सरीसृपः।

काशिका-वृत्तिः

न धातुलोप आर्धधातुके १।१।४

धात्वेकदेशो धातुः, तस्य लोपो यस्मिन्नार्धधातुके तदार्धधातुकं धातुलोपं, तत्र ये गुणवृद्धी प्राप्नुतः, ते न भवतः। लोलुवः। पोपुवः। मरीमृजः। लोलूयाऽदिभ्यो यङन्तेभ्यः पचाऽद्यचि विहिते यङो ऽचि च २।४।७४ इति यङो लुकि कृते तम् एव अचम् आश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः। धातुग्रहणं किम्? लूञ्, लविता। रेडसि। पर्णं न वेः। अनुबन्धप्रत्ययलोपे मा भूत्। रिषेर्हिंसार्थस्य विच्प्रत्ययलोप उदाहरणं रेटिति। आर्धधातुके इति किम्? त्रिधा बद्धो वृषभो रोरवीति इति। सार्वधातुके मा भूत्। इकः इत्येव अभाजि, रागः। बहुव्रीहिसमाश्रयणं किम्? क्नोपयति, प्रेद्धम्।

न्यासः

न धातुलोप आर्धधातुके। , १।१।४

उक्तपरिमाणस्य शब्दस्य धातुसञ्ज्ञा कृता। तस्य सर्वस्य लोपे कृते यत्र गुणवृद्धी प्राप्नुतस्तदार्धधातुकेन सम्भवत्येव, तत् किं प्रतिषेधेन? तस्मात् प्रतिषेधविधानसामर्थ्याद्धात्वेकदेशे धातुशब्दो वर्तत इति मत्वाह- "धात्वेकदेशो धातुः" इति। "धातुलोपे"इति। यद्ययं धातोर्लोपो धातुलोप इति तत्पुरूषः, तत आर्धधातुकग्रहणं गुणवृद्धिविशेषणं वा स्यात्- "धा४तुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः" इति। लोपविशेषणं वा स्यात्-" आर्धधातुकनिमित्ते धातुलोपे सति गुणवृद्धी न भवतः" इति? पूर्वस्मिन् "क्नोपयति"इत्यत्र प्रतिषेधः प्राप्नोति। तत्र प्रतिविधानं कर्तव्यम्। द्वितीये तु न भवत्येष दोषः। न हि "क्नोपयति" इत्यत्रार्धधातुकनिमित्तलोपः, किं तर्हि, कतवल्निमित्तकः। किन्तु द्वितीये पक्षे प्रेद्धमित्यत्र प्राप्नोति। अस्ति ह्त्रार्धधातुकनिमित्तो लोपः। ननु चेग्लक्षणयोर्गुणवृद्धयोरयं प्रतिषेधः; न चात्रेग्लक्षणो गुणः? नैतदस्ति; अत्रापीग्लक्षण एव गुणो यो ह्युभयोः स्थाने भवति, लभते सोऽन्तयतरव्यपदेशम्। तथा हि- "मातुः, पितुः" इत्यत्रोभयोः स्थाने भवन् रपरोऽण् भवति। तस्माल्लोपविशेषणपक्षेऽपि तत्पुरुषे प्रतिविधानं कत्र्तव्यमेव। बहुव्रीहौ तु न किञ्चित् प्रतिविधेयमिति मन्यमानो बहुव्रीहिरयमिति दर्शयन्नाह- "तस्य" इत्यादि। एतेन लोपविशेषणमार्धधातुकमित्येतद्दर्शितं भवति। एवं चार्धधातुके सम्भवति यदि तत्तस्य निमित्तं भवति, ततश्च क्नोपयतीत्यत्रातिप्रसङ्गो नावतरति। "तत्र" इत्यादि। नापि गुणवृद्ध्योरार्धधातुकं निमित्त्वेन विशेषणमित्या- ख्यातम्। ततश्च प्रेद्धमित्यत्राप्यतिप्रसङ्गो न भवति, न ह्याद्गुण आर्धधातुक- निमित्तः। "ये ते" इति। स्त्रीलिङ्गनिर्देशः "गुणवृद्धी"इत्यनेन स्त्रीलिङ्गेन सामानाधिकरण्यात्। अस्य तु स्त्रीलिङ्गता "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" २।४।२६ इत्यतिदेशात्। अर्थस्य च सोऽतिदेश इति यत्तदोरपि तत्रार्थे वर्तमानयोः स्त्रीलिङ्गता भवति। ननु च नियमस्य प्रकृतत्वात् तस्यैवायं प्रतिषेधो युक्तः, तत् किमित्येवमाह-"तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः" इति। तयोः प्राधान्यात्। तत् पुनर्नियमेनोपक्रियमाणत्वात्, नियमस्य तु तादर्थ्यादप्राधान्यम्। तस्माद्()गुणवृद्धयोरेवायं प्रतिषेधो न्याय्यः। "लोलुवः, पोपुवः" इति। "लूञ् छेदने" (धा।पा।१४८३), "पूञ् पवने (धा।पा।१४८२)इत्येताभ्यां "धातोरेकाचः" ३।१।२२ इत्यादिना यङ्, "सन्यङो" ६।१।९ इति द्विर्वचनम्, "गुणोयङलुकोः" ७।४।८२ इत्यभ्यासस्य गुणः, यङन्तात् पचाद्यचि "यङोऽचि च" २।४।७४ इति लुकि तन्निमित्तगुणप्रतिषेधः, तस्मिन् सति "अचि श्नुधातुकभ्रुवाम्" (६।४। ७७) इत्यादिनोवङ। "मरीमृजः" इति। "मृजू शुद्धौ" (धा।पा।१०६६), पूर्ववद्यङ, द्विर्वचनम्, उरदत्त्वम्, ७।४।६६ "हलादिः शेषः" ७।४।६० "रीगृदुपधस्य च" ७।४।९०इति रीगागमः। लोलूयादिभ्य इत्यादिशब्देन "पोपूय, मरीमृज्य" इत्येतयोग्र्रहणम्। "लूञ्- लविता" इति। यावदेव धातुसञ्ज्ञा न भवति तावदेव "सर्वविधिभ्यो लोपविधिर्बलीयात्" (व्या।प।७०) इति ञकारस्य लोपो भवति, पश्चाल्लू इत्येतस्य धातुसञ्ज्ञा, तेन ञकारलोपो धातुलोपो न भवतीति भवति प्रत्युदाहरणम्। "रेड् " इति। "रिष रुष हिंसायाम्" (धा।पा।१२३२,१२३०), "अन्येभ्योऽपि दृश्यन्ते"३।२।७५ इति विच्, इकारचकारौ

"वेरपृक्तस्य"६।१।६५ इत्यत्र सामान्यग्रहणाविघातार्थौ, वकारस्य चानेनैव लोपः, "पुगन्तलघूपध्स्य च" ७।३।८६ इति गुणः। "झलां जशोऽन्ते" ८।२।३९ इति षकारस्य डकारः। ननु च द्वयङ्गविकले द्वे अपि एते प्रत्युदाहरणे, तथैव ह्यत्र धातुलोपो न भवति, एवमार्धधातुकनिमि-त्तोऽपि न भवति, नैतदस्ति; सति हि धातुग्रहणे पदद्वयसान्निध्याद्बहुव्रीहिर्लभ्यते। त()स्मश्च सत्यार्धधातुकनिमत्तत्वं लोपस्य। असति हि धातुग्रहणे "न लोप आर्धधातुके" इत्युच्यमाने "आर्धधातुकाश्रये ये गुणवृद्धी प्रतिषेधः स्यात्। "रोरवीति" इति। " रु शब्दे" (धा।पा। १०३४) इत्यस्माद्यङ, "बहुलं छन्दसि" २।४।७३ इति यङो लुक्, लट्,तिप्, शप्। अदादित्वाच्छपो लुक् (२।४।७२(,"यङो वा"()७।३।९४) इतीट्। अत्र सार्वधातुकनिमित्तो गुणो न प्रतिषिध्यते। ननु च द्वयङ्गविकलमेवेदम्, यथैव ह्यार्धधातुकनिमित्तो गुणो न भवत्येवं लोपोऽपि? नैतदस्ति; सति ह्यार्धधातुकग्रहणेऽन्यपदार्थत्वे न तस्याश्रयणात् तन्निमित्तो लोपो लभ्यते, त()स्मश्च सति "न धातुलोपे" इतीयत्युच्यमाने "ये केचन गुणवृद्धी ते च लोपे सति भवतः" इत्येष वाक्यार्थः स्यात्। ततश्चाविशेषितत्वाल्लोपस्य लोपमात्रे प्रतिषेधो विज्ञायते। "अभाजि" इति। "भञ्जो आमद्र्दने" (धा।पा। १४५३),लुङ्, च्लिः, "चिण् भावकर्मणोः"३।१।६६ इति चिण्, "इणो लुक्" ६।४।१०४इति तशब्दस्य लुक्, "भञ्जेश्च चिणि" ६।४।३३ इत्यनुनासिकलोपः। "रागः" इति। अत्रापि "घञि च भावकरणयोः" ६।४।२७ इति नलोपः। "रञ्ज रागे" (धा।पा।११६७), भावे घञ्। यद्यप्यत्र रुआवमस्ति तथापीक इत्यत्रानुवृत्तेरिह चेकोऽसम्भवात् " अत उपधायाः" ७।२।११६ इति वृद्धेः प्राप्तायाः प्रतिषेधो न भवति। "क्नोपयति" इति। "क्नूयी शब्दे" (धा।पा।४८५), "हेतुमति च" ३।१।२६ इति णिच्, "अर्त्तिह्री" गुणः। "प्रेद्धम्" इति। "ञीन्धी दीप्तौ" (धा।पा।१४४८), क्तः, "अनिदिताम्" ६।४।२४ इत्या-दिनानुनासिकलोपः, "झषस्तर्थोर्घोऽधः" ८।२।४० इति तकारस्य धत्वम्। "झलां जश् झशि"८।४।५२ इति धातुधकारस्य दकारः, प्रगतमिद्धमिति "कुगतिप्रादयः" २।२।१८ इति समासः।

तत्त्व-बोधिनी

न धातुलोप आद्र्धधातुके ४१३, १।१।४

ज्वर रोगे। ञित्वरा संभ्रमे। अत्र वृत्तौ "झलादौ क्ङिती"त्युक्तं तत्र क्ङितीत्येतद्रभयसकृतमेवेत्याह-- क्ङितीति नानुवर्तत इति। अवतेस्तुनीति। "ज्वरत्वरे"त्युपधावकारयोरूठि गुणे च कृते मन्प्रत्ययस्य टिलोपे चोमिति सिध्यतीत्यर्थः। ज्वरादेरुदाहरणं क्विपि जूः। जुरौ। जुरः। झलादौ तु-- जूर्तिः। जूर्णः। जूर्णवान्। त्वर-- तूः। तुरौ। तुरः। तूर्तिः। तूर्णः। तूर्णवान्। रिउआवि- स्रूः। रुआउवौ। रुआउवः। रुआऊतिः। अवि-- ऊः। उवौ। उवः।ऊतिः। मव-- मूः। मुवौ। मूतः। मूतिः। मामोषीत्यादि। ईट्पक्षे मामवीषि। मामवीमि। मामवीतु। अमामवीत्। अमामवीरिति बोध्यम्। राल्लोपः। "च्छ्वोः शू"डित्तश्च्छ्वोरित्यनुवर्तते। क्वावुदाहरणं--तूः। तुरौ तुरः। धुर्वी-- धूः। धुरौ। धुरः। मुर्च्छा--मूः। मुरौ। मुरः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्क्ङिति ७।१ च ० इकः ६।१ ३ गुणवृद्धी १।२ ३ न ० ४

समासः॥

गश्च कश्च ङश्च क्क्ङः, क्क्ङः इतः यस्य सः क्क्ङत्, तस्मिन् क्क्ङति, द्वन्द्वगर्भो बहुव्रीहिः।

अर्थः॥

क्क्ङति इति निमित्तसप्तमी। गित् कित् ङित् निमित्तके इकः स्थाने ये गुणवृद्धी प्राप्नुतः, ते न भवतः।

उदाहरणम्॥

गित् - जिष्णुः भूष्णुः। कित् - चितः चितवान्, स्तुतः स्तुतवान्, कृतः कृतवान्। मृष्टः, मृष्टवान्। ङित् - चिनुतः सुनुतः, चिन्वन्ति सुन्वन्ति, मृजन्ति।
काशिका-वृत्तिः
क्ङिति च १।१।५

निमित्तसप्तम्येषा। क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतः, ते न भवतः। चितः, चितवान्। स्तुतः, स्तुतवान्। भिन्नः, भिन्नवान्। मृष्टः, मृष्टवान्। ङिति खल्वपि चिनुतः, चिन्वन्ति। मृष्टः, मृजन्ति। गकारो ऽपि अत्र चर्त्वभूतो निर्दिश्यते। ग्लाजिस्थश्च ग्स्नुः ३।२।१३९ जिष्णुः। भूष्णुः। इकः इत्य्म् एव कामयते, लैगवायनः। मृजेरजादौ सङ्क्रमे विभाषा वृद्धिरिष्यते। सङ्क्रमो नाम गुणवृद्धिप्रतिषेधविषयः। परिमृजन्ति,परिमार्जन्ति। परिमृजन्तु, परिमार्जन्तु। लघूपधगुणस्य अप्यत्र प्रतिषेधः। अचिनवम्, असुनवम् इत्यादौ लकारस्य सत्यपि ङित्त्वे यासुटो ङिद्वचनं ज्ञापकम् ङिति यत्कार्यं तल्लकारे ङिति न भवति इति।
लघु-सिद्धान्त-कौमुदी
क्ङिति च ४३५, १।१।५

गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः। भूयात्। भूयास्ताम्। भूयासुः। भूयाः। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म।
न्यासः
क्ङिति च। , १।१।५

क्ङितीति यदीयं परसप्तमी स्यादनन्तरस्यैवेकः प्रतिषेधः स्यात्, "चितः, चितवात्" इत्यादौ व्यवहितस्य "भिन्नो भिन्नवात्" इत्यादौ न स्यात्, "तस्मिन्निति निर्दिष्टे स्पूर्वस्य" १।१।६५ इत्यत्र निर्दिष्टग्रहणस्यानन्तरर्यार्थत्वात्। निमित्तसप्तम्यां त्वस्यां सर्वत्र भवितव्यम्, व्यवहितयोरपि निमित्तनिमित्तिभावसद्भावा- दिति मन्यमान आह- "निमित्तसप्तम्येषा" इति। निमित्तात् सप्तमी निमित्तसप्तमी। "पञ्चमी भयेन" २।१।३६ इति "पञ्चमी" इति योगविभागात् समासः। सा पुनः सप्तमी "यस्य च भावेन भावलक्षणम्" २।३।३७ इत्यनेन वेदितव्या। क्ङितो हि निमित्तभावेन गुणवृद्धयोःप्राप्तिलक्षणो भावो लक्ष्यते। अथ निमित्तसप्तम्यामप्यस्यां कस्मादेव व्यवहितस् प्रतिषेधो लभ्यते? तत्र तस्मिन् १।१।६५ इत्यादिकायाः परिभाषाया अनुपस्थानात्। "क्ङिति च" १।१।७२ इत्यादरावप्यस्या इक्()परिभाषाया उपस्थानात् "शालीयः, मालीयः" इत्यत्र वृद्धरसञ्ज्ञा न स्यात। यता चेयमिक्()परिभाषा विध्यङ्गशेषभूतत्वाद्विधावेवोपतिष्ठते, तथासावप्यानन्तर्यपरिभाषा। न चेह गुणवृद्धी विधीयेते, किं तर्हि? विहिते अप्यन्यत्र क्ङितीत्यनेन विशिष्येते। तस्मान्नात्र तस्याः परिभाषाया उपस्थानमित्यन-न्तरस्यापि प्रतिषेधः सिध्यति। "क्ङिन्निमित्ते ये गुणवृद्धी" इति। क्ङिन्निमित्तं ययोस्ते तथोक्ते। ते पुनर्ये क्ङिन्निमित्ते सति प्राप्नुतस्ते विज्ञेये। एतेन गुण- वृद्धीविशेषणं क्ङिद्()ग्रहणमिति दर्शयति। ननु च विधीयमानतया प्राधान्यात् प्रतिषेध- स्यैवैतद्विशेषणं युक्तम्? नैतदस्ति; यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्र प्रधानस्यैव भूयांसमुपकारं कर्तुमात्मनः संस्कारमनुभूय प्रधानेन सम्बन्धमनुभवति। यथोक्तम्- "गुणः कृतात्मसंस्कारः प्रतिपद्यते। प्रधानस्योपकारे हि तथा भयसि वर्तते॥ इति। इह तु गुणवृद्धयोः क्ङिद्ग्रहणेन विशेषितयोर्महान प्रधानस्य प्रतिषेधस्योपकारो भवति,

व्यवहितस्यापि तत्सिद्धेः। "भिन्नः" इति। "भिदिर् विदारणे" (धा।पा। १४३९),क्तः, "रदाभ्यां निष्ठातोनः"८।२।४२ इति नत्वम्। "मृष्टः" इति। मृजेः "व्रश्च"८।२।३६ इत्यादिना जकारस्य षत्वम्, "ष्टुना ष्टुः"८।४।४० इति ष्टुत्वम्। चिनुत इत्यादौ तु "सार्वधातुकमपित्"१।२।४ इति क्ङित्त्वम्। "चिन्वन्ति"इति। "हुश्नुवोः सार्वधातुके"६।४।८७ इति यणादेशः। अत्र "चितः, चितवान्, स्तुतः, स्तुतवान्, चिनतः, चिन्वन्ति" इत्येषूदाहरणेषु यतायोगं सार्वधातुकार्धधातुकलक्षणस्य गुणस्य प्रतिषेधः, "भिन्नः भिन्नवान्" इति लघूपधलक्षणस्य, परिशिष्टेषु "मृजेर्वृद्धिः" ७।२।११४ इति वृद्धेः। "ग्लाजिस्थश्च क्स्नुः" इति। क्स्नुप्रत्ययोऽयं यदि कित् स्यात्, स्थास्नुरित्यत्र घुमास्थादिसूत्रेण ६।४।६६ तिष्ठतेरीत्त्वं स्यात्। अतस्तत्परिहाराय क्स्नोर्गित्त्वं प्रतिज्ञायते। तथा हि तत्र वक्ष्यति-"गिच्चायं प्रत्ययो न कित्। तेन स्थ ईकारो न भवति"(का।२४१) इति। गित्वे च सति "भूष्णुः, जिष्णुः" इत्यत्र"क्ङितिच" १।१।५ इति प्रतिषेध उच्यमानो न प्राप्नोति। अत एतद्दोषपरिहारायाह- "गकारोऽप्यत्र" इत्यादि (का२४१)।चत्त्वभूतः चर्त्वं प्राप्त इत्यर्थः। चर्त्वं तु " खरि च"८।४।५४ इति। यदि हि क्स्नोर्गित्त्वमिष्यते, भूष्णुरित्यत्र "श्रयुकः किति"(७।२।११) इति किति प्रतिषेध उच्यमानो न स्यात्? नैष दोषः; तत्रापि चत्त्वभूतो गकारो निर्दिश्यते। तथा हि -"ग्लाजिस्थश्च क्स्नुः" ३।२।१३९ इत्यत्र जयादित्यवृ- त्तौ ग्रन्थः- ""क्ङिति च" १।१।५ इत्यत्र गकारश्चत्त्वभूतो निर्दिश्यते, तेन गुणो न भवति। "श्रयुकः किति" ७।२।११ इत्यत्रापि गकारो निर्दिश्यते, तेन भुव इड् न भवति"(का। २४१) इति। "श्रयुकः किति" ७।२।११ इत्यत्रापि जयादित्यवृत्तौ ग्रन्थः- "गकारोऽप्यत्र चत्त्वभूतो निर्दिश्यते भूष्णुरित्यत्र यथा स्यात्" इति। वामनस्य त्वेतत् सर्वमनभिमतम्। तथा हि तस्यैव सूत्रस्य तद्विरचितायां वृत्तौ ग्रन्थः- केचिदत्र द्विककरानिर्देशेन गकारप्रश्लेषं वर्णयन्ति भूष्णुरित्येवं यथा स्यात्। सौत्रत्वाच्च निर्देशस्य "श्रयुकः किति" ७।२।११ इत्यत्र चत्र्वस्यासिद्धत्वमना- श्रित्य रोरुत्वं न कृतम्, विसर्जनीयश्च कृतः इति। "ग्लाजिस्थश्च क्स्नुः" ३।२।१३९ इत्यत्र स्था आ इत्यकारप्रश्लेषेण स्थास्नोः सिद्धत्वान्न किञ्चदेतत्"(का ८०२) इति। स एवं मन्यते- यदि क्स्नुप्रत्यययस्य कित्त्वे सति तिष्ठतेरीत्त्वं प्राप्नुयात् तथा तत्परिहारार्थं गित्त्वं युज्यते प्रतिज्ञातुम। गित्त्वे च सति जिष्णुः, भूष्णुः" इत्यत्र यथायोगमिड्()गुणयोर्निरासाय "क्ङिति च"१।१।५ इत्यत्र "श्रयुकः किति" ७।२।११ इत्यत्र च गकारश्चत्र्वभूतो निर्दिश्यमानः शोभेत। न च क्स्नुप्रत्ययो गित्,किं तर्हि? किदेव। तत्किमिड्()गुणप्रतिषेधार्थेन चत्त्वभूतगकारस्य निर्देशेन !न च क्स्नोः कित्त्वेसति तिष्ठतेरात्वं प्राप्नोति। तस्मात् " ग्लाजिस्थशाच क्स्नुः" ३।२।१३९ इत्याकारप्रश्लेषः कृतः, क्स्नुप्रत्ययान्तस्य तिष्ठतेराकार एव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूत् इत्येवमर्थः। ततश्च तेनैव सिद्धत्वात् स्थास्नुशब्दस्याकिञ्चित्करमिह गकारप्रश्लेषवर्णनमिति। "कामयते" इति। "कमेर्णिङ"३।१।३०। अत्र "अत उपधायाः"७।२।११६ इति वृद्धेः प्रतिषेधो न भवति। "लैगवायनः" इति। लिगुशब्दात् "नडादिभ्यःफक्" ४।१।९९ इति फकि कृते "ओर्गुणः" ६।४।१४६ इति गुणस्य प्रतिषेधो न भवति। ननु चोकारैगेव, तदयुक्तमिदं प्रत्युदाहरणम्? नैतदस्ति; अत्र हि चकारः क्रियते "इकः" इत्यनुकर्षणार्थः। तत्र चकारेणानुकर्षणसा- मथ्र्यादिक इत्येतदर्थपदार्थतामुत्सृज्य स्वरूपपदार्थतामनुभवति। अन्यथा हि यदि चकारेणाध्यनुकृष्यमाणमर्थपदार्थकमेव स्यात् तदनुकर्षणार्थं चकारकरणमनर्थकं स्यात्, अर्थपदार्थस्य स्वरितत्वादेवानुवृत्तिसिद्धेः। स्वरूपपदार्थके च तस्()मिन्निह सन्नि- हिते सत्ययमर्थो भवति, "इकग इत्येवं ये गुणवृद्धी विधीयेते, इक इतीमं शब्दमुचार्य ये गुणवृद्धी विधीयेते, ते क्ङिन्निमित्ते न भवतः" इति। न च "लैगवायनः" इत्यत्र इकः" इतीमं शब्दमुचार्य गुणो विधीयते, इक्परिभाषायास्तत्रानुपस्थानात्। अनुपस्थानं तु साक्षादुकारस्य स्थानिनो निर्देशात्। यत्र हि साक्षात् स्थानी न निर्दिश्यते तत्रासावुपतिष्ठते। ननु यदि स्वरूपपदार्थस्येक इत्यस्येह सन्निधानम्, स्थानी न निर्दिष्टः स्यात्, ततश्च न ज्ञायते कस्य गुणवृद्धी प्रतिषिध्येते इति? नैष दोषः। सामथ्र्यादिक एव गुणवृद्धयोः प्रतिषेधोऽयं गम्यते। न ह्न्यस्येक इतीमं शब्दमु- च्चार्य गुणवृद्धी विधीयेते। अथ वा " यद्यपीक्परिभाषा विध्यङ्गशेषभूता, तथापीहास- त्यपि गुणवृद्धयोर्विधाने चकारेणानुकृशष्य सन्निधाप्यते। एतदेव हि चकारकरणस्य प्रयोजनं यदिदमिक्परिभाषायाः सन्निधापनम्। ततश्च तस्या उपस्थाने सति यत्रासौ व्याप्रियते तत्रैवायं प्रतिषेधो विज्ञायते। क्व

चासौ व्याप्रियते? यत्र स्थानी साक्षान्न् निर्दिश्यते। इह तु निर्दिश्यते स्थानी, तस्मादिक्परिभाषाया व्यापाराभावाद्भवति प्रत्युदाहरण्। "मृजेः" इत्यादि। कथं पुनरिष्यमाणापि सा लभ्यते? यथा लभ्यते तथा श्रूयताम। "अचो ञ्णिति" श्[७।२।११५ इत्यत्र "मृजेर्वृद्धिः" ७।२।११४ इति वर्तते, "जराया जरसन्यतरस्याम्" ७।२।१०१ इत्यतोऽन्यतरस्यां ग्रहणं च मण्डूकप्लुतिन्यायेनानुवत्र्तते, सा च व्यवस्थितविभाषा। "अचः" इति योगविभागः क्रियते। मृजेरजादौ संक्रमे विभाषा वृद्धिर्भवति, अन्यत्र न भवत्येव। "लघूपधगुणस्याप्यत्र प्रतिषेधः" इति। एतेन संक्रमत्वं दर्शयति। अन्ये तु उत्तरसूत्रे "कणिता ()आः" रणिता ()आः" इत्यनन्तरमनेन ग्रन्थेन भवितव्यम्िह तु दुर्विन्यस्तकाकुपदजनितभ्रान्तिभिः कुलेखकैर्लिखितमिति वर्णयन्ति। अथ वा- निमित्तसप्त- म्या एवेदं फलं दर्शितमिति मन्तव्यम्। "अचिनवम्, असनुवम्" इत्यत्र लङो ङित्वात् तदादेशस्यापि मिपो ङित्त्वम्। स्थानिवद्भावेन मिपो ङित्वात् तदादेशस्याप्यमो ङित्त्वं पूर्ववत्, ततश्च तदाश्रयो विकरणस्य गुणप्रतिषेधः प्राप्नोति। कस्मान्न भवतीत्याह- "अचिनवम्" इत्यादि। आदिशब्देन "अकरवम्" इत्यादिनां परिग्रहः। "लकारस्य" इति। लकारादेशोऽपि पारम्पर्येण लकारपूर्वकत्वादुपचारेण लकार इत्युक्तः। सत्यपीत्य- भ्युपगमे "हलः श्नः शानज्झौ" ३।२।८३ इति शानजादेशस्य शित्करणाल्लिङ्गान्नावश्यमनुबन्धकार्येषु स्थानिवद्भावो भवतीत्यध्यवसितोऽयमर्थः। अतो ङित्ववचम्" इत्यादि। यदि ङिति यत्कार्यं विधीयते तल्लकारे ङिति स्यात्, ततो लिङ एव ङित्त्वेन चिनुयादि- त्यादौ गुणप्रतिषेधस्य सिद्धत्वात् "यासुट् परस्मैपदेषूदात्तो ङिच्च" ३।४।१०३ इति यत् तस्य यासुटो ङ्द्विचनं तन्न कुर्यात्, कृतञ्च; ततोऽवसीयते- "ङिति यत् कार्यं तल्लकारे इति न भवति" इति।

बाल-मनोरमा

क्ङिति च ६५, १।१।५

क्ङिति च। ग्? क् ङ् एषां समाहारद्वन्द्वः, कात्पूर्वगकारस्य चर्त्वेन निर्देशात्। ग् क् ङ् च इत् यस्येति विग्रहः। द्वन्द्वान्ते श्रूयमाण इत्यर्थ। इक इत्युचार्य विहिते इति लभ्यते। "न धातुलोप आद्र्धधातुके" इत्यतो नेत्यनुवर्तते। तदाह-- गित्किन्ङिन्नमित्ते इत्यादिना। गितीत्यनुक्तौ तु "ग्लाजिस्थश्च ग्स्नु"रिति ग्स्नुप्रत्यये "जिष्णु"रित्यत्र गुणनिषेधो न स्यात्। न च ग्स्नुप्रत्ययः किदेव क्रियतामिति वाच्यं, तथा सति "घुमास्थे"ति किति विहितस्य ईत्वस्य प्रसङ्गात्। यदि तु गिति ङिति परतो गुणवृद्धी न स्त इति व्याख्यायेत, तदा च्छिन्नं भिन्नमित्यत्र क्तप्रत्यये परे लघुपधगुणनिषेधो न स्यात्। स्थानिभूतस्येको हला व्यवधानात्। न च येन नाव्यवधानन्यायः शङ्क्यः। चितं स्तुतमित्यादावव्यवहिते चरितार्थत्वात्। यदि च "इको गुणवृद्धी" इत्येव व्याख्यायेत, न त्विग्लक्षणे इति, तदा लिगोरपत्यं लैगवायनः, नडादित्वात् फक्, इह आदिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वान्निषेधः स्यादित्यलम्। भूयादिति। इहाद्र्धधातुकत्वाल्लिङ सलोप इत्यस्याऽप्रवृत्तेः स्कोरिति सलोप इत्युक्तं न विस्मर्तव्यम्। न चैवमपि संयोगादिलोपस्याऽसिद्धत्वाद्धल्ङ्यादिलोपः स्यादिति वाच्यं, सुटि यासुटि च सति ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनाऽपृक्तत्वाऽभावादित्यलम्। भूयास्तामिति। आशिषि लिङस्तस्तामादेशे आद्र्धधातुकत्वाच्छभावे यासुडागमेऽतः परत्वाऽभावादियादेशाऽभावे सुटि झल्परसंयोगदित्वेन यासुटः सकारस्य लोपो, गुणनिषेधश्च। भूयासुरिति। झेर्जुसि यासुडागमे गुणनिषेधे रूपम्। भूया इति। आशीर्लिङः सिपि इतश्चेतीकारलोपः। यासुटः "स्को"रिति सलोपः, गुणनिषेधः, रुत्वविसर्गौ। भूयास्तमिति। थसस्तमादेशे यासुटि गुणनिषेधः। एवं थस्य तादेशेऽपि भूयास्तेति रूपम्। भूयासमिति। मिपोऽमादेशे यासुटि गुणनिषेधः। भूयास्वेति। लिङो वस्। "नित्यं ङित" इति सकारलोपः। यासुट्। गुणनिषेधः। एवं मसि भूयास्मेति रूपम्। इत्याशीर्लिङ्()प्रक्रिया।

तत्त्व-बोधिनी

क्ङिति च ५०, १।१।५

ङिन्निमित्ते इति। "कितिगितिङिति परे इको गुणवृद्धी न स्त" इति न व्याख्यातम्, छिन्नं भिन्नमित्यत्र लघूपधगुणस्याऽनिषेधप्रसङ्गात्। नचाऽऽरम्भसामर्थ्यं शङ्क्यं, चितं स्तुतमित्यादाव्वयवहिते किति चरितार्थत्वादिति भावः। अन्ये तु-- क्ङितीति प्रत्ययग्रहणात्प्रत्ययेन संनिधापितस्याऽङ्गस्य क्ङिति पर इति व्याख्यानेन तु छिन्नं भिन्नमित्यादि सिध्यत्येव। नचैवं भववः भवाम प्रश्लिष्यत इत्याशयेन "गित्किन्ङिन्निमित्ते" इत्युक्तम्। गिति किम्?। "ग्लाजिस्थश्च ग्स्नु" जिष्णुः। किति त्वस्मिन्स्थास्नुरित्यत्र "घुमास्थे"तीत्वं प्रसज्येत। न ग्स्नोर्गित्त्वे भूष्णुरित्यत्रेण्निषेधो न स्यात्, "ग्लाजिस्थश्चे"ति चकाराद्भुवश्च ग्स्नुर्भवतीति स्वीकारादिति वाच्यम्, "श्र्युकः किती"त्यत्रापि चर्त्वेन गकारं प्रश्लिष्य गित्कितोरिण्न स्यादिति व्याख्यानात्। न चैवं चत्र्वस्याऽसिद्धतया "श्र्युकः" इत्यत्र विसर्जनीयो न लभ्यत इति "हशि चे"त्युत्वमेव स्यादिति वाच्यं, सौत्रत्वात्। "न मु ने"त्यत्यत्र नेति योगविभागेनाऽसिद्धत्वाऽभावाद्वेष्टसिद्धेः। वामनस्तु--"ग्लाजिस्थश्चे"ति सूत्रे स्था- आ इति प्रश्लेषात्स्थास्नुरित्यत्र "घुमास्थे"तीत्वं न भविष्यतीति गकारप्रश्लेषाऽभावान्न "श्र्युकः किती"त्यत्र चत्र्वस्याऽसद्धत्वाऽभावसमर्थनक्लेश इत्याह। इग्लक्षण इति। "इक" इत्येवं विहिते इत्यर्थः। इग्लक्षणे किम्?। लैगवायनः। लिगोर्नडादित्वात्फक्। इहादिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वेऽपि न निषेधः। न चेक इत्युक्तेऽपि "किति चे"त्यारम्भसामर्थ्यादत्र निषेधो न भवेदिति शङ्क्यम्, नाडायनादौ तस्य चरितार्थत्वात्। भूयादिति। इह "स्को"रिति लोपस्याऽसिद्धत्वात्तकारस्य संयोगान्तलोपः प्राप्तः पदान्तसंयोगादिलोपेनाऽनवकाशेन बाध्यते। नन्वेवमपि संयोगादिलोपस्य "पूर्वत्रासिद्ध"मित्यसिद्धत्वाद्धल्ङ्यादिलोपः स्यात्, पदान्ते संयोगादिलोपस्य भृट् भृडित्यादौ सावकाशत्वादितिचेत्, अत्राहुः--- सुड()आसुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनाऽपृक्तत्वाऽभावात्, हलन्तायाः प्रकृतेः परत्वाऽभावाच्चोक्तदोषशङ्कैव नास्तीति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दीधीवेवीटाम् ६।३ इकः ६।१ 3 गुणवृद्धी १।२ 3 न ० ४

समासः॥

दीधी च वेवी च, इट् च दीधीवेवीटः, तेषां दीधीवेवीटाम्, इतरेतरद्वन्द्वसमासः

अर्थः॥

दीधीङ् (दीप्तिदेवनयोः), वेवीङ् (वेतिना तुल्ये) छान्दसौ धातू अदादिगणे पठितौ स्तः। दीधीवेव्योः इटश्च इकः स्थाने ये गुणवृद्धी प्राप्नुतः, ते न भवतः।

उदाहरणम्॥

आदीध्यनम्, आदीध्यकः, आवेव्यनम्, आवेव्यकः॥ पठिता कणिता।
काशिका-वृत्तिः
दीधीवेवीइटाम् १।१।६

दीधीवेव्योः इटश्च ये गुणवृद्धी प्राप्नुतः, ते न भवतः। आदीछ्यनम्, आदीद्यकः। आवेव्यनम्, आवेव्यकः। इटः खल्वपि

कणिता श्वः। रणिता श्वः। वृद्धिरिटो न संभवति इति लघूपधगुणस्यात्र प्रतिषेधः।

न्यासः

दीधीवेवीटाम्। , १।१।६

"दीधीवेव्योः" इति। दीधीङ दीप्तिदेवनयोः" (धा।पा। १०७६); "वेवीङ वेतिना तुल्ये (धा।पा।१०७७) इत्येतयोग्र्रहणम्। ननु च "दीङ क्षये" (धा।पा। ११३४) "धीङ अनादरे"(धा।पा।११३६), "वेञ् तन्तुसन्ताने" (धा।पा।१००६) "वी गतिप्रजनकान्त्यसनखादनेषु" (धा।पा।१०४८) इत्येतेषां ग्रहणं कस्मान्न विज्ञायते? यद्येषां ग्रहणमभिमतं स्यादसन्देहार्थं "वीवेधीदीटाम्" इत्येवं न्यासं कुर्यात्। अन्यथा तु कृतम्। तस्मात् पूर्वोक्तयोरेव धात्वोरिह ग्रहणम्। इटश्चेति- "आर्धरधातुकस्य" ७।२।३५ इत्यादिना विहितस्य। अथ "इट्, किट, कटी गतौ" (धा।पा।३१८,३१९३२०) इत्यस्य ग्रहणं कस्मान्न भवति, युक्तं चैतत्, धातुसाहचर्यात्? नैतदस्ति; इह"अल्पाच्तरम्" २।२।३४ इत इटः पूर्वनिपाते कत्र्तव्ये तद्विपर्यासं कुर्वतैतत् सूचितम्-"अन्योऽ- प्यत्र कश्चिद्विपर्यासो विज्ञेयः" इति। तेन धातुसाहचर्याद्धातुग्रहणे प्राप्ते तद्विपरीतस्यैवागमस्य ग्रहणं विज्ञायते। "आदीध्यनम्" इति। ल्युट्। "आदीध्यकः" इति। ण्वुल्।"कणिता ()आः, रणिता ()आः" इति। "अण रण कण" (धा।पा।४४४,४४५,४४९) इत्यादौ शब्दार्थे धातुवर्गे कणिरणी पठ()एते , ताभ्यां लुटि स्यताशी लृलुटोः" ३।१।३३ इति तासिः, "लुटः प्रथमस्य "२।४।८५ इत्यादिना तिषो डादेशः, टिलोपः, "आर्धधातुकस्य" ७।२।३५ इत्यादिनेट्। अथेटो वृद्धेरुदाहरणं कस्मान्न प्रदर्शितमित्याह- "वृद्धिरिटो न सम्भवति" इति। अङ्गस्य वृद्धिर्ञ्णिदादौ प्रत्यये विधीयते इट् चायमार्धधुकभवतः। न चार्धधातुकस्याङसञ्ज्ञास्ति ञ्णिदादौ प्रत्यये। तस्मादिटो वृद्धिर्न भवति।

बाल-मनोरमा

दीधीवेवीटाम् ३९, १।१।६

दीधीवेवी। "दीधीह् दीप्तिदेवनयोः" "वेवीङ् वेतिनी तुल्ये"। दीधीश्च वेवीश्च इट् चेति द्वन्द्वात् षष्ठी। "इको गुणवृद्धी" इत्यतो गुणवृद्धी इति, "न धातुलोप" इत्यतो नेति चानुवर्तते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हलः १।३ अनन्तराः १।३ संयोगः १।१

समासः॥

न विद्यतेऽन्तरं येषां, ते अनन्तराः, बहुव्रीहिः

अर्थः॥

अनन्तराः व्यवधानरहिताः हलः संयोगसंज्ञकाः भवन्ति।

उदाहरणम्॥

अग्निः, अत्र ग् न्। अश्वः अत्र श् व्। इन्द्रः अत्र न् द् र्। गोमान्, यवमान्, चितवान्।

काशिका-वृत्तिः

हलो ऽनन्तराः संयोगः १।१।७

भिन्नजातीयैरज्भिरव्यवहितः श्लिष्टौच्चारिता हलः संयोगसंज्ञा भवन्ति। समुदायः संज्ञी। जातौ चेदं बहुवचनम्। तेन द्वयोर् बहूनां च संयोगसंज्ञा सिद्धा भवति। अग्निः इति गनौ। अश्वः इति शवौ। कर्णः इति रणौ। इन्द्रः, चन्द्रः मन्द्रः इति नदराः। उष्ट्रः, राष्ट्रम्, भ्राष्ट्रम् इति षटराः। तिलान्स्त्र्यावपति इति नसतरयाः, नतसतरया वा। हलः इति किम्? तितौच्छत्रम् संयोगान्तस्य लोपः ८।२।२३ इति लोपः स्यात्। अनन्तराः इति किम्? पचति पनसम् स्कोः संयोगाऽद्योरन्ते च ८।२।२९ इति लोपः स्यात्। संयोगप्रदेशाः सम्योगान्तस्य लोपः ८।२।२३ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

हलोऽनन्तराः संयोगः १३, १।१।७

अज्भिरव्यवहता हलिः संयोगसंज्ञाः स्युः॥

न्यासः

हलोऽनन्तराः संयोगः।, १।१।७

अन्तरं छिद्रं विवरं वर्णशून्यः काल इत्यर्थः। न विद्यतेऽन्तरं यषां ते तथोक्ताः। "भिन्नजातीयैः" इत्यादि। भिन्नजातीयैरिति वचनं भिन्नजातीयानामेव लोके व्यवधायकत्वदर्शनात्। तथा हि कश्चित् केनचित् किमनन्तरे परे ब्राआह्णकुले इति पृष्टः सन्नाह- नानन्तरे, वृषलकुलमनयोर्मध्ये प्रतिवसीति। "श्लिष्टोच्चारितस्य हलः सञ्ज्ञा स्यादिह निर्वायाय्, निर्यायादिति "वान्यस्य संयोगादेः" ६।४।६८ इत्येत्वं स्यात्, इह च "संस्कषीष्ट" इति "ऋतश्च संयोगादेः" ७।२।४३ इतीट्, इह च "संस्क्रियते" इति "गुणोऽर्तिसंयोगाद्योः" ७।४।२९ इति गुणः- इत्येवमादयोऽन्येऽपि बहवो दोषाः प्रत्येकं हलां सञ्ज्ञित्वे भाष्य उद्भाविताः। यद्यपि तत्रैव ते कथ- ञ्चित् प्रयासेन परिह्मताः, तथापि यस्तु तत्परिहारेण प्रतिपत्तौ साध्यायां प्रति- पत्तिगौरवदोष आपद्यते सोऽपरिहार्य एव। समुदाये तु सञ्ज्ञिनि दोषाशङ्काऽपि नास्ति। तस्मात् स एव सञ्ज्ञी युक्त इत्यालोच्याह- "समुदायः सञ्ज्ञी" इति। ननु च यत्र सहभूतानां कार्यमिच्छति तत्र यत्न आरभ्यते, यथा- "उभे अभ्यस्तम्" ६।१।५ इति उभेग्रहणं करोति, न चेह कश्चिद्यत्नः कृतः, तत्कथं समुदायस्य सञ्ज्ञा लभ्यते? इहापि कृत एव यत्न इत्यदोषः। पुनरसौ? महत्याः सञ्ज्ञायाः करणम्। "लघ्वर्थं हि सञ्ज्ञाकरणम्" (व्या।प।१३५) इति महत्याः सञ्ज्ञायाः करणं प्रयोजनमन्तरेण न सम्भाव्यते। तस्मान्महानत्र सञ्ज्ञीत्येतत् सूचयितुं महती सञ्ज्ञा कृतेति गम्येति। तथा चोक्तम्- "इङ्गितेनोन्मिषितेमन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो लक्ष्यते" इति। एवं च महान् सञ्ज्ञी भवति, यदि समुदायः सञ्ज्ञी भवति, नैकैको हळ्। तस्मादुप- पन्नमेतत् समुदायः सञ्ज्ञीति "हलः" इति बहुवचननर्देशाद्()द्वयोः सञ्ज्ञा न सिद्ध्यतीति यश्चोदयेत् तं प्रत्याह- "जातौ च " इत्यादि। चशब्दो यस्मादर्थे। यस्माज्जातौ बहुवचनं तेन द्वयोर्बहूनां च संयोगसञ्ज्ञा सिद्धा भवति। अग्निरित्यादिकं रूपोदाहरणं द्रष्टव्यम् "तिलान्स्त्रावपति" इत्यादि। "हे मपरे वा" ८।३।२६ इत्यतो वेति वत्र्तमाने , "डः सि धुट्" ८।३।२९ इत्यतो धुडिति च, "नश्च" ८।३।३० इति पक्षे धुट्, "खरि च" ८।४।५४ इति च तकारः। तत्र यदा धुण्()नास्ति तदा"नसतयाः" इति। यदा त्वस्ति तदा "नतसतरयाः"। "तितौच्छत्रम्" इति। "तनोतेर्डौः सन्वच्च(द।उ।१।१६०) इति डौ- प्रत्यये टिलोपे द्विर्वचने च कृते रूपम्। "संयोगान्तस्य लोपः"स्यात् इति। यद्य- त्राकारस्योकारेण सञ्ज्ञा स्यादित्यभिप्रायः। न च लोपे सत्युकारोपदेशस्य वैयथ्र्यमाशङ्कनीयम्। यत्र पदसञ्ज्ञा नास्ति तितौनीत्यादौ, तत्र श्रूयमाणत्वात्। "पचति" इति रूपप्रत्युदाहरणम्, "पनसम्" इति कार्यप्रत्युदाहरणम् "स्कोः संयोगाद्योरिति लोपः स्यात्" इति। यदि सकारनकारयोः सान्तरयोरपि संयोगसञ्ज्ञा स्यादिति भावः।

बाल-मनोरमा

हलोऽनन्तराः संयोगः ३२, १।१।७

हलोऽनन्तराः संयोगः। "अन्तर"शब्दोऽत्र व्यवधाने वर्तते। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इत्यमरः। व्यवधानं च विजातीयेनैव। अविद्यमानमन्तरं व्यवधानं येषामिति विग्रहः। "नञोऽस्त्यर्थाना"मिति विद्यमानपदस्य लोपः। तदाह--अज्भिरित्यादिना। तत्र हलौ च हलश्च हल इत्येकशेषः। तेन द्वयोरपि संयोगसंज्ञा लभ्यते। ततश्च शिक्षेत्यत्र "गुरोश्च" हलः इत्यप्रत्ययः सिध्यति। अत्र च समुदायस्यैव संयोगसंज्ञा, महासंज्ञाकरणात्, व्याख्यानाच। नतु प्रत्येकम्। तथा सति "सुदृषत्प्रासाद" इत्यत्र पकारसन्निधौ तकारस्य संयोगत्वापत्तौ संयोगान्तलोपापत्तेः। यत्र तु बहवो हलः श्लिष्टास्तत्रापि द्वयोद्र्वयोः संयोग९संज्ञा न तु बहूनामेवेति शब्देन्दुशेखरे स्पष्टम्।

तत्त्व-बोधिनी

हलोऽनन्तराः संयोगः ३७८, १।१।७

हलोऽनन्तराः संयोगः। तध्वर्थमेकाक्षरायां संज्ञायां कर्तव्यायां "संयोग" इति महासंज्ञाकरणमन्वर्थसंज्ञाज्ञापनार्थं- संयुज्यन्तेऽस्मिन्समुदाये वर्णा इति। तेनात्र समुदाये वाक्यपरिसमाप्तिर्न तु गुणवृध्या दिसंज्ञावत्प्रत्येकम्। तथाहि सति "दृषद्विभर्ती"त्यत्र बकारसंनिधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात्। "निर्याया"दित्यत्र यकारः संयोग इति "वान्यस्य संयोगादे"रित्येत्त्वं स्यात्। सिद्धान्ते तु "अचो रहाभ्या"मिति द्वित्वे सत्यपि तस्याऽसिद्धत्वादेत्त्वमत्र न भवति। "हल" इति जातौ बहुवचनम्, "जात्याख्यायामेकस्मिन्बहुवचन"मिति वचनात्। तेन द्वयोरपि संयोगसंज्ञा भवतीति "शिक्षे"त्यादौ "गुरोश्च हलः" इत्यप्रत्ययः सिध्यति। यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाऽविशेषेण संज्ञेति स्थितमाकरे। यदि तु बहूनामेव स्यात्तर्हि "गोमान्तकरोती"त्यत्र मतुपस्तकारस्य संयोगान्तलोपो न स्यादिति दिक्। हलः किम्?, तितौभ्याम्। अत्र "तनोतेर्डौः सन्वच्चे"ति "डौ"प्रत्ययः। सन्वद्भावाद्द्वित्वं, "सन्यतः" इति इत्वं च। व्यस्तोच्चारणसामर्थ्याद्गुणाऽबावः। यदि ह्वचोरप्यनन्तरयोः संयोहसंज्ञा स्यात्तर्हि इह "संयोगान्तस्ये"त्युकारलोपः स्यात्। अनन्तरा इति किम्? पनसम्। यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि "स्को"रिति सलोपः स्यात्॥

॥ इति तत्त्वबोधिन्यां संज्ञाप्रकरणम्॥

---------------------------

अथ सन्नन्तप्रक्रिया।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मुखनासिकावचनः १।१ अनुनासिकः १।१

समासः॥

मुखश्च नासिका च मुखनासिकम्, ईषद्वचनम् आवचनम्, मुखनासिकम् आवचनं यस्य, सः मुखनासिकावचनः, द्वन्द्वगर्भो बहुव्रीहिः॥

अर्थः॥

मुखनासिकम् आवचनं यस्य वर्णस्य सः अनुनासिकसंज्ञकः भवति॥

उदाहरणम्॥

अभ्र आँ अपः (ऋ॰ ५।५८।१॥ निरु॰ ५।५), चन आँ इन्द्रः। सुँ, पठँ, एधँ, त्रिमिदाँ॥
काशिका-वृत्तिः
मुखनासिकावचनो ऽनुनासिकः १।१।८

मुखसहिता नासिका मुखनासिका, तया य उच्चार्यते वर्णः सो ऽनुनासिकसंज्ञो भवति। आङो ऽनुनासिकश् छन्दसि ६।१।१२२। अभ्र आं अपः। गभीर आं उग्रपुत्रे। च न आं इन्द्रः। मुखग्रहनं किम्? अनुस्वारस्यैव हि स्यात्। नासिकाग्रहणं किम्? कचटतपानां मा भूत्। अनुनासिकप्रदेशाः आङो ऽनुनासिकश् छन्दसि ६।१।२६ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
तुल्यास्यप्रयत्नं सवर्णम् १०, १।१।८

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतदद्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। (ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्)। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठ तालु। ओदौतोः कण्ठोष्टम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकानुस्वारस्य। यत्नो द्विधा - आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा - स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृत भेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव। बाह्यप्रयत्नस्त्वेकादशधा - विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणोमहाप्राण उदात्तोऽनुदात्तः स्वरतिश्चेति। खरो विवाराः श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तःस्थाः। शल ऊष्माणः। अचः स्वराः। -क-ख इति कखाभ्यां प्रगर्धविसर्गसदृशो जिह्वामूलीयः। -प-फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ॥
न्यासः
मुखनासिकावचनोऽनुनासिकः। , १।१।८

"मुखसहिता नासिका मुखनासिका" इत्यनेन मुखनासिकाशब्दोऽयं तत्पूरुषः, न द्वन्द्व इति दर्शयति। तत्()पुरुषस्तु मयूरव्यंसकादित्वाद्वेदितव्यः। यदि च मुखं च नासिका चेति द्वन्द्व स्यात्, प्राणितूर्यादिसूत्रेण २।४।२ एकवद्भावः स्यात्। ततश्च "स नपुंसकम्" २।४।१७ इति नपुंसकत्वं स्यात्। त()स्मश्च सति "ह्यस्वो नपुंसके प्रातिपदिकस्य"१।२।४७ इति ह्यस्वत्वं प्रसज्येतेति भावः। ननु चोच्यते- अनयेति करणे ल्युटि कृते, तदन्तात् "टिड्()ढाणञ्" ४।१।१५ इत्यादिना ङीपा भवितव्यम्, ततशच् तदन्तेन बहुव्रीहौ "मुखनासिकावचनः" इति निर्देशो नोपपद्यते? नैतदस्ति; वचनशब्दोऽयं "कृत्यल्युटो बहुलम्" ३।३।११३ इति बहुलवचनात् कर्मसाधनः- उच्यत इति वचनो वर्णे वर्तते, न नासिकायाम्। अत एवाह- "तया य उच्चार्यते" इति।" उच्चार्यते" इति कर्मणि लकारः। एवं कृत्वा "मुखनासिकावचनः" इति षष्ठीसमासोऽयं वेदितव्यः, न बहुव्रीहिः। "अनुस्वास्यैव" इति। अनुस्वारे ह्रुच्यमाने नासिकायाश्च व्यापारो न मुखस्य ; तेन तस्यैव स्यात्, न तु स्यात् ञमङणनानाम् ; नापि "अभ्र आँ अपः" (ऋ।५।४८।१) इत्यात्रार्धचन्द्राकृतेर्वर्णस्य; तदुच्चारणे मुखस्यापि

व्यापारात्। ततश्च "यरोऽ नुनासिके " ८।४।४४ इत्येतस्मिन् कार्ये कत्र्तव्येऽनुस्वारस्यैव ग्रहणं स्यात्, न तु ङकारादीनामित्यभिप्रायः। ननु च प्रासादवासिन्यायेन तेषामपि भविष्यति? यथा "प्रासादवासिन आनीयन्ताम्" इत्युक्ते ये प्रासाद एव निवसन्ति, तेषामपि ग्रहणं भवति, येऽपि प्रासादे भूमौ च उभयत्र वसन्ति तेषामपि। यथा ह्रभय आनीयन्ते, तथेहापि "नासिकावचनः" इत्येतावत्युच्यमाने नासिकावचनस्यानुस्वारस्य मुखानसिकावचनानां च ङकारादीनां ग्रहणं भविष्यति,ततश्चानुस्वारस्य हि स्यादित्ययुक्तमुक्तम्। एवं तु वक्तव्यम्- अनुस्वारस्यापि हि स्यादिति? नैतदस्ति; इह हि त्रीणि दर्शनानि सम्भवन्ति,-" समस्त एवानुनासिको वर्णओ नासिकावचनो मुखवचनश्च" इत्येकं दर्शनम्; " पूर्वभागस्त्वस्य मुखवचनः" इति तृतीयम्। उभयोरप्यनन्तरयोर्दर्शनयोर्नासिकामुखवचने भागे तथानुरागं करोति यथाऽसावपि नासिकावचनभाग इव लक्ष्यते। तत्र यदेतदनन्तरदर्शन- द्वयम्, तस्यान्यरत् पाणिनेरभिमतम्। न चास्मिन् प्रासादवासिन्याय एकत्राप्यवतरति। यदि हि ङकारादयो नासिकायोऽपि साकल्येनोच्चार्येरन्, मुखेनापि; ततः प्रासादवासि न्यायेन "नासिकावचनः" इत्येतावत्युक्ते तेषामपि ग्रहणं स्यात्। न चैवं भागस्यैव; तेषां नासिकया मुखेन चोच्चारणात्। तदसति मुखग्रहणे तेषां ग्रहणं न स्यात्, तदभावे च सञ्ज्ञा न स्यादिति युक्तमुक्तम्- अनुस्वनारस्यैव हि स्यात्" इति। "कचटतपानां मा भूत्" इति। एते हि ककारादयो मुखेनैवोच्चार्यन्ते, न नासिकया; ततश्चासति नासिका- ग्रहणे तेषामेव स्यात्। एवं च "शक्तः", "सुप्तम्" इत्यत्र "अनुदात्तोपदेशवनति" ६।४।३७ इत्यादिना लोपः प्रसज्येत, "ओदनपक्" इत्यत्र "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घत्वम्। अथ किमर्थं महती सञ्ज्ञा क्रियते? अनु पश्चान्नासिका व्याप्रियते यस्मिन्, अथ वा - अनु पश्चान्नासिकाया व्याप्रियते यस्मिन्, यद्वा- नासिकायाः पश्चात् व्याप्रियते? मुखस्य तु प्रकृतत्वात् तदेव गम्यते। तत्र ये ते द्वे दर्शने, ययोः पाणिनेरन्यतरदभीष्टम्, तयोः पूर्वस्मिन् नासिका मुखात् पश्चात् व्याप्रियते, उत्तरत्र मुखं नासिकायाः। अन्वर्थसञ्ज्ञाकरणं तु पूर्वोक्तयोर्दर्शनयोरन्यतराभ्युपगमसूचनार्थम्। तदभ्युपगमसूचनं तु प्रासादवासिन्यायमाश्रित्य मुखग्रहणं ये प्रत्य- चक्षीरन्, तेषां निराकरणार्थम्।

बाल-मनोरमा

मुखनासिकावचनोऽनुनासिकः ११, १।१।८

तदेवमनुनासिका नव अचः, अननुनासिकाश्च नवेत्यष्टादशविधत्वमेकैकस्याऽच इति स्थितम्। अथाऽनुनासिकसंज्ञामाह--मुखनासिका। मुखसहिता नासिका मुखनासिका। शाकपार्थिवादित्वात्सहितपदस्य लोपः। उच्यते उच्चार्यते इति वचनः। कर्मणि ल्युट्। मुखनासिकया वचन इति "कर्तृकरणे कृता बहुलम्" इति तृतीयासमासः। तदेतदाह--मुखसहितेत्यादिना। मुखं च नासिका चेति द्वन्द्वस्तु न। तथा सति "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति समाहारद्वन्द्वनियमात् "स नपुंसक"मिति नपुंसकत्वे "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे "मुखनासिकवचन" इत्यापत्तेः। ननु अष्टादश भेदाः किं सर्वेषामचामविशिष्टाः(), नेत्याह--तदित्थमिति। इयता प्रबन्धेन यत् अचां भेदप्रपञ्चनं तत्--इत्थं=वक्ष्यमाणप्रकारेण व्यवस्थितं वेदितव्यमित्यर्थः। अष्टादश भेदा इति। अष्टादश प्रकारा इत्यर्थः। दीर्घाभावादिति। तथा च उदात्तलृकारदीर्घः, अनुदात्तलृकारदीर्घः, स्वरितलृकारदीर्घः। ते च अनुनासिकास्त्रयः अननुनासिकास्त्रय इति षड्()भेदानामभावे सति ह्रस्वप्रपञ्चः प्लुतप्रपञ्चश्च ,ड्विध इति लृकारस्य द्वादशविधत्वमेवेति भावः। लृकारस्य दीर्घाऽभावे होतृ लृकार इत्यत्र सवर्णदीर्घे कृते होतृ()कार इति ॠकारस्यैव अकस्सवर्ण इति सूत्रे च भाष्योदाहरणमेव प्रमाणम्। ह्रस्वाभावादिति। यद्येचो ह्रस्वाः स्युस्तर्हि वर्गसमाम्नाये त एव लाघवात् अ इ उ इत्यादिवत् पठ()एरन्, नतु दीर्घाः, गौरवात्। अत एचो ह्रस्वा न सन्तीति विज्ञायते। एवं च ह्रस्वप्रपञ्चषड्भेदाभावाद्द्वादशविधत्वमेवैचामिति भावः।

तत्त्व-बोधिनी

मुखनासिकावचनोऽनुनासिकः ११, १।१।८

मुखनासिका। मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह-मुखसहितेति। नासिकयोच्चार्येति। फलितार्थकथनमिदम्। उच्यतेऽनेनेति वचनं, मुखनासिका वचनमस्यास्तीति विग्रहः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तुल्यास्यप्रयत्नम् १।१ १० सवर्णम् १।१ १०

समासः॥

आस्ये प्रयत्नः, आस्यप्रयत्नः, सप्तमीतत्पुरुषः। तुल्यः आस्यप्रयत्नः यस्य (येन सह) तत् तुल्यास्यप्रयत्नं, बहुव्रीहिः

अर्थः॥

आस्ये भवं आस्यम्। तुल्यः आस्ये प्रयत्नः येषां, ते वर्णाः पसस्परं सवर्णसंज्ञकाः भवन्ति

उदाहरणम्॥

दण्डाग्रम्, खट्वाग्रम्। यदीदम्, कुमारीशः, भानूदयः, मधूदकम्, कर्तॄकारः
काशिका-वृत्तिः
तुल्याऽस्यप्रयर्नं सवर्णम् १।१।९

तुल्यशब्दः सदृशपर्यायः। आस्ये भवमास्यं ताल्वादिस्थानम्। प्रयतनं प्रयत्नः स्पऋष्टताऽदिर्वर्णगुणः। तुल्य आस्ये प्रयत्नो यस्य वर्णस्य येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति। चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायाम् आश्रीयन्ते -- स्पृष्टता, ईषत्स्पृष्टता, संवृतता, विवृतता च इति। अ अ अ इति त्रयो ऽकारा उदात्तानुदात्तस्वरिताः प्रत्येकं सानुनासिका निरनुनासिकाश्च ह्रस्वदीर्घप्लुतभेदादष्टादशधा भिद्यन्ते। तथा इवर्णः, तथा उवर्णः, तथा ऋवर्णः। ऌवर्णस्य दीर्घा न सन्ति, तं द्वादशभेदम् आचक्षते। सन्ध्यक्षराणां ह्रस्वा न सन्ति, तान्यपि द्वादशप्रभेदानि। अन्तःस्था द्विप्रभेदाः, रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च। रेफोष्मणां सवर्णा न सन्ति। वर्ग्यो वर्ग्येण सवर्णः। दण्डाग्रम्। खट्वाग्रम्। आस्यग्रहणं किम्? कचटतपानां भिन्नस्थानानां तुल्यप्रयत्नानां मा भूत्। किं च स्यात्? तर्प्ता, तर्प्तुम् इत्यत्र झरो झरि सवर्णे ८।४।६४ इति पकारस्य तकारे लोपः स्यात्। प्रयत्नग्रहणं किम्? इचुयशानां तुल्यस्थानानां भिन्नजातीयानां मा भूत्। किं च स्यात्? अरुश्च्योतति इत्यत्र झरो झरि सवर्णे ८।४।६४ इति शकारस्य चकारे लोपः स्यात्। ऋकारऌकारयोः सवर्णसंज्ञा वक्तव्या। होतॄकारः। होतृकारः। उभयोः ऋवर्णस्य ऌवर्णस्य च आन्तरतमः सवर्णो दीर्घो नास्ति इति ॠकार एव दीर्घो भवति। सवर्णप्रदेशाः अकः सवर्णे दीर्घः ६।१।९७ इत्येवम् आदयः। (
न्यासः
तुल्यास्यप्रयत्नं सवर्णम्। , १।१।९

तुलया सम्मितं तुल्यमिति "नौवयोधर्म" ४।४।९१ इत्यादिना यतमुत्पाद्य तुल्यशब्दो व्युत्पाद्यते। न च प्रयत्नस्य तुलया सम्मितत्वं सम्भवति, ततश्चासम्भवद्विशेषणमिति यश्चोदयेत्, तं प्रत्याह- "तुल्यशब्दः" इत्यादि। एवं मन्यते- व्युत्पत्त्यर्थं तु केवलं तुलोपादमते, न त्वत्र तुलार्थो विद्यते, न वा सम्मितार्थः। सदृषपर्यायो ह्ययं तुल्यशब्दः। तथा हि-

"तुल्य" इत्युक्ते "सदृश" इति पर्यायो भवति, न तु तुलया सम्मित इति। आस्यशब्दोऽयं ण्यदन्तोऽप्यस्ति। अस्यते क्षिप्यतेऽन्नमनेनेति "कृत्यल्युटो बहुलम्" 3|3|113 इति करणे ण्यत्। आस्यम्- मुखम्। तत्पुनः ओष्ठात्प्रभृति प्राक् काकलकात्। काकलकं नाम ग्रीवायामुन्नतप्रदेशः, लोके यः कण्ठमणिः इत्युच्यते। तद्धितान्तोऽप्यास्यशब्दोऽस्ति- आस्ये भवमिति, "शरीरावयवाच्च" 4|3|55 इति यति कृते, "यस्येति च" 6|4|148 इत्यकारलोपे "हलो यमां यमि लोपः" 8|4|63 इति यलोपे च कृते "आस्यम्" इति। एतच्च मुखान्तर्वर्त्तिनां ताल्वादीनां वाचकम्। तत्र यदि पूर्वस्यास्यशब्दस्येदं ग्रहणं स्यात्, कचटतपानामपि सवर्णसञ्ज्ञा स्यात्, ण्यदन्तस्यास्यशब्दस्य वाच्येऽर्थे तेषां तुल्यत्वात् प्रयत्नविषयस्य। इममतद्धितान्तस्यास्यशब्दस्य ग्रहणे दोषं दृष्ट्वा तद्धितान्तस्येदं ग्रहणमिति दर्शयन्नाह- "आस्ये भवमास्यम" इति। किं पुनस्तदित्याह- "ताल्वादिस्थानम" इति। यस्मिन् वर्णा निष्पाद्यन्ते, तत् स्थानम्। आविशब्देन नासिकादीनां ग्रहणम्। ननु च नासिका मुखाद्बहिर्वृत्तिरास्यं न भवति? नैतदस्ति; न हि मुखाद्बहिर्वर्त्तिनी नासिकेयं विवक्षिता, तस्यां वर्णानामनिष्पत्तेः। का तर्हि? अन्तरास्ये चर्म विततमस्ति पणवचर्मवत्, तत्सम्बद्धा रेखा, यस्यां वायुनाभिहन्यमा-नायां वर्णा निष्पद्यन्ते सेह नासिका विवक्षिता। कथं पुनर्विज्ञायते तद्धितान्तस्यास्यशब्दस्येदं ग्रहणमिति? आस्यग्रहणसाथ्र्यात्। यदि ह्यतद्धितान्तस्य ग्रहणं स्यात्, आस्यग्रहणमनर्थकं स्यात्। सर्वेषामेव हि तद्वाच्य एवार्थे प्रयत्नस्तुल्यः।नास्त्येव हि सः, यस्य व्यवच्छेदार्थमास्यग्रहणं स्यात्। ननु च विसर्जनीयस्य सत्य- सति वा सवर्णत्वे प्रयोजनमस्ति, नापि दोषः।"स्पृष्टतादिः" इति। आदिशब्देन ईषत्स्पृ-ष्टतादीनां ग्रहणम्। "वर्णगुणः" इति। अकारादीनां वर्णानां धर्म इत्यर्थः। "तुल्य आस्ये प्रयत्नो यस्य" इति। एतेन तुल्यास्यप्रयत्नशब्दस्त्रिपदोऽयं बहुव्रीहिरिति दर्शयति। व्याधिकरणानामपि गमकत्वनाद्बहुव्रीहिर्भवत्येव; यथा - "कण्ठेकालः, उरसिलोमा" इति। अथ द्वन्द्वगर्भबहुव्रीहिः कस्मान्नाश्रीयते- आस्यं च प्रयत्नश्च आस्यप्रयत्नौ,तौ तुल्यौ यस्य तत् तुल्यास्यप्रयत्नमिति? एवं मन्यते- द्वन्द्वगर्भबहुव्रीहावाश्रीयमाणे ताल्वादिना स्थानेन प्रयत्नो न विशेषितः स्यात्। ततश्च ककारङकारयोर्मिथः सवर्णसञ्ज्ञा न स्यात्, बाह्यस्य प्रयत्नस्य भिन्नत्वात्। ककारस्य विवृतकण्ठत्वादिर्बाह्यः प्रयत्नः। ङकारस्य संवृतकण्ठत्वादिः। असत्यां च सवर्णसञ्ज्ञायां शङ्कितेत्यत्र "अनुस्वारस्य ययि परसवर्णः" 8|4|57 इति ङकारो न स्यात्। अथ सत्यपि बाह्यस्य प्रयत्नस्य भेद आभ्यन्तरः स्पृष्टताख्योऽनयोस्तुल्यः प्रयत्नः, तं समाश्रित्यसवर्णसञ्ज्ञा भविष्यति? यद्येवम्, शकारचकारसयोरपि सत्यप्याभ्यन्तरयोर्विवृतास्पृष्टतयोः प्रयत्नयोर्भेदे योऽनयोर्बाह्यः प्रयत्नस्तुल्यो विवृत्कण्ठत्वादिस्तदाश्रया सवर्णसञ्ज्ञा स्यात्। ततश्च "अरुश्च्योतति" इति वक्ष्य-माणं प्रत्युदाहरणं नोपपद्यते।थ त्रिपदे तु बहुव्रीहौ ताल्वादिस्थानेन प्रयत्नो विशिष्यते। तेन बाह्यं प्रयत्नमुत्सृज्याभ्यन्तर एव स्पृष्टतादिर्गृह्यते। स एव हि ताल्वादावास्ये सम्भवति, नेतरः। आभ्यन्तरस्य प्रयत्नस्य ग्रहणे सति सत्यपि बाह्य- प्रयत्नभेदे भतत्येव ककार ङकारयोः सवर्णसञ्ज्ञा; आभ्यन्तरप्रयत्नस्य तुल्यत्वात्, तस्यैव चेह ग्रहणात्। न च चकारशकारयोः सत्यपि बाह्यस्य प्रयत्नस्य तुल्यत्वे सवर्णसञ्ज्ञा प्रसजति; तस्येहाग्रहणात्, यस्य च ग्रहणं तस्य चासमानत्वात्। तस्यात् त्रिपद एव बहुव्रीहिराश्रयितुं युक्तः; न द्वन्द्वगर्भ इति। यदि तर्हि त्रिपदो बहु- व्रीहिराश्रीयते, भिन्नविभक्तिकत्वादप्राधान्याच्चास्यं तुल्यत्वेनाविशेषितं भवति, ततश्च भिन्नस्थानानामपि सवर्णसञ्ज्ञा प्राप्नोति? नैष दोषः। यदाधेयं प्रति यदधिकरणमुपदीयते, तदाधेयतुल्ययैव तत् तुल्यमिति विज्ञायते। तथा हि- "देवदत्तयज्ञदत्तयोस्तुल्यं कांस्यपात्र्यां भोजनम्" इत्युक्ते कांस्यपात्र्यपि तयोस्तुल्येति गम्यते। यं प्रति यस्तुल्यास्यप्रयत्नः, स तमेव प्रति सवर्णसञ्ज्ञो भवतीत्येषोऽ- र्थो यतो वचनाल्लभ्यत इह तन्नास्ति। ततश्च यो यं प्रति तुल्यास्यप्रयत्नः, स ततोऽ- न्यमपि प्रति सवर्णसञ्ज्ञः स्यादिति चोद्यमाशङ्क्याह- "समानजातीयं प्रति" इति। समानजातीयो यं प्रति यस्तुल्यास्यप्रयत्नः, तं प्रति स सवर्णसञ्ज्ञो भवति, न ततोऽन्यम्। एतच्च तुल्यास्यप्रयत्नशब्दस्य सवर्णशब्दस्य च सम्बन्धिशब्दत्वाल्लभ्यते। सम्बन्धिशब्दो ह्यन्तेरणापि शब्दान्तरसन्निधिः नियमेव सम्बन्धिनमुपस्थापयति, यथा- "पितरि शुश्रूषितव्यम्" इति। नोच्यते स्वस्मिन्निति, सम्बन्धाच्चैतदवगम्यते, "यो यस्य पिता" इति। तथेहापि। यद्यपि यो यस्य तुल्यास्यप्रयत्नः, स तं प्रति सवर्णसञ्ज्ञो

भवतीति,न चोच्यते, तथापि सम्बन्धात् तुल्यास्यप्रयत्नः समानजातीयमेव प्रति सवर्णसञ्ज्ञो भवतीति गम्यते। अथ वा समानो वर्णः "सवर्णः" इत्यन्वर्थसञ्ज्ञेयम्। तेनतुल्यजातीयमेव प्रति सवर्णसञ्ज्ञो भवति। एवं हि समानोऽस्य वर्णो भवति, यदि तमेव प्रति सवर्णसञ्ज्ञो भवति, न विजातीयं प्रति। "चत्वारः" इत्यादि। द्विविधाः प्रयत्नाः, आभ्यन्तराः, बाह्याश्च। तत्राभ्य-न्तराः चत्वारो वृत्तरौ दर्शिताः। बाह्यास्त्वेकादशष। के पुनस्ते? "विवारः, संवारः,()आआसः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्च" इति। तत्र नाभिप्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊध्र्वमात्रामन्नुरः प्रभृतीनामन्यतमस्मिन् स्ताने प्रयत्नेन विधार्यते, स विधार्यमाणः स्थानमभिहन्ति, ततः स्थानाभिघाताद् ध्वनिरुत्पद्यते। आकाशे सावण्र्यश्रुतिः सवर्णस्यात्मलाभः। तत्र वर्णध्वनावुत्पद्यमाने यदा स्थानमभिहन्ति, ततः स्थानाभिघाताद् ध्वनिरुत्पद्यते। आकाशे सावण्र्यश्रुतिः सवर्णस्यात्मलाभः। तत्र वर्णध्वनावुत्पद्यमाने यदा स्थानकरण-प्रयत्नाः परस्परं स्पृशन्ति, तदा सा "स्पृष्टता"। ईषद्यदा स्पृशन्ति, तदा सा ईष-स्पृष्टता; सामीप्येन यदा स्पृशन्ति, सा संवृतता; दूरेण यदा स्पृशन्ति, सा विवृतता-एते चत्वार आभ्यन्तराः प्रयत्नाः। आभ्यन्तरत्वं पुनरेषां स्थानकरणप्रयत्न- व्यापारेणोत्पत्तिकाल एव सम्भवात्। तत्र स्पृष्टकरणाः स्पर्शाः। कादयो मावसानाः स्पर्शाः, स्पष्टता गुणः। करणं कृतिरुच्चारणप्रकारः। स्पृष्टतानुगतं करणं येषां ते स्पृष्टकरणाः। एवमन्यत्रापि वेदितव्यम्। ईषत्स्पृष्टकरणा अन्तः स्थाः। अन्तः स्था यरलवाः। विवृतं करणमूष्मणाम्, स्वराणां च। स्वराः सर्व एवाचः। उष्ममाणः शषसहाः। अथ बाह्याः प्रयत्नाः किंलक्षणाः? स एव प्राणो नाम वायुपरूध्वमाक्रामन् मु()ध्न प्रतिहतो निवृतो यदा कोष्ठमभिहन्ति तदा कोष्ठेऽभिहन्यमाने गलबिलस्य संवृतत्वात् संवारो नाम वर्णधर्म उपजायते। विवृतत्वाद् विवारः। संवृते गलबिलेऽव्यक्तः शब्दो नादः, विवृते ()आआसः। उपरिवर्तिनौ तौ ()आआसनादावनुप्रदानमिति केचिदाचक्षते। वर्णनिष्पत्तेरनु-पश्चात् प्रदीयत इत्यनुप्रदानम्। अन्ये तु ब्राउवते "अनुप्रदानमनु- स्वानो घष्टानिह्र्यादवत्" यथा-घण्टानिह्र्यादोऽनुस्वनमनुभवति तथा इति। तत्र यदा स्थानाभिघातजे ध्ननौ नादोऽनुप्रदीयते, तदा नादध्वनिसङ्गाद् घोषो जायते, यदा ()आआसोऽनुप्रदीयते, तदा ()आआसध्वनिसङ्गादघोषः, महित वायौ महाप्राणः, अस्पवायावल्प-प्राणः। यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः, कण्ठविवर- स्य च चाणुत्वम्, स्वरस्य च वायोस्तीव्रगतित्वाद् रौक्ष्यं भवति, तमुदात्तमाचक्षते। यदा तु मन्दः प्रयत्नो भवति, तदा गात्रस्य रुआंसनम्, कण्ठबिलस्य महत्त्वम्, स्वरस्य वायोर्मन्दगतित्वात् स्निग्धता भवति, तमनुदात्तमाचक्षते। उदात्तानुदात्तस्वरसन्निकर्षात् स्वरित इत्येवं लक्षणा बाह्याः प्रयत्नाः। बाह्त्वं पुनरेषां वर्णनिष्पत्तिकालादूध्र्वं, वायुवशेनोत्पत्तेः। तत्र वर्गाणां प्रथम द्वितीयाः शषरविसर्ज-नीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः ()आआसानुप्रदाना अघोषाः।वग्र्ययमानां प्रथमेऽल्पप्राणाः। इतरे सर्वे महाप्राणाः। वर्गाणाञ्च तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तः। वग्र्यमानां तृतीया अन्तःस्थाश्च अल्पप्राणाः। इतरे सर्वे महाप्राणाः। यथा तृतीया-स्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः। य एवैते द्विप्रकाराः प्रयत्ना बाह्या आभ्यन्तराश्चाख्याताः, तेषामिह सवर्णसञ्ज्ञायां पूर्वोक्ता आभ्यन्तराश्चत्वारः स्पृष्टतादय आश्रीयन्ते,न बाह्या विवारादयः, आस्यग्रहणेन तेषां व्यावर्तितत्वात्। स्पृष्टतादय एव ह्यास्ये भवन्ति, नविवारादयः। यद्येवम्, किमर्थं प्रयत्नग्रहणम्, एतावदस्तु तुल्यास्यमिति, आस्यग्रहणेनैव हि स्पृष्टतादयोऽपि प्रयत्नाः सवर्णसञ्ज्ञायां निमित्तभूतास्ताल्वादिस्थानवल्लभ्यन्त एव, तेषामप्यास्ये भवनात्? सत्यमेतत्, तथाप प्रत्येकं व्यापार- निरासार्थमुभयोरुपादानाम्। इतरथा हि यथैव स्थानं तुल्यं स्थानान्तरनिरपेक्षं सवर्ण सञ्ज्ञायां व्याप्रियते, एवं प्रयत्नोऽपि स्थाननिरपेक्षः, स्थानं च प्रयत्ननिर- पेक्षं व्याप्रियेत; ततश्च भिन्नप्रयत्नानामपि तुल्यस्थानानाम्, भिन्नस्थानानामपि तुल्यप्रयतनानां सवर्णसञ्ज्ञा स्यात्। "अ अ अ" इत्यादिना येषां यावतां च यादृशां च मिथो नित्या सवर्णसञ्ज्ञा, तान् दर्शयति। अकाराणां हि सर्वेषाम् "अकुहविसर्जनीयाः कण्ठ्याः" इति तुल्यं कण्ठस्थानम्। इकाराणामपि "इचुयशास्तालव्याः" इति तालु। उकारा-णामपि "उपूपध्मानीया ओष्ठ्याः" इत्योष्ठः। ऋकाराणामपि "ऋटुरषा मूर्धन्याः" इति मूर्धा। लृकाराणामपि "लृतुलसा दन्त्याः" इत दन्तः।

एकाराणामैकाराणां च "एऐ कण्ठ()तालव्यौ" इति कण्ठतालु। ओकाराणामौकाराणां च "ओ ओ कण्ठ्यौष्ठ्यौ" इति कष्ठोष्ठम्। प्रयत्नस्तु सर्वेषामेवैषां विवृतं करणमूष्मणां स्वराणां चेति विवृतत्वम्। तस्मात् तुल्यस्थान्प्रयत्नत्वात् स्वरेऽकारादयो मिथः सवर्णसञ्ज्ञाः। एवं यावदौकारः। अन्तःस्था द्विप्रभेदाः, सानुनासिका निरनुनासिकाश्च रेफवर्जिताः। तेऽपि समानजातीयानन्तःस्थान् प्रति सवर्णसञ्ज्ञा भवन्ति। "रेफोष्मणां सवर्णा न सन्ति" इति। तेऽभ्योऽन्येऽकारादयो वर्णा विजातीया इत्येषोऽभिप्रायः। तुल्यजातीयास्तु रेफोष्माणस्तुल्यस्थानप्रयत्नाः सवर्णाः सन्त्येव। तत्र रेफस्य तावद् ऋटुरषेभ्यो यवलेभ्यश्चान्ये वर्णा भिन्नस्थानत्वाच्च भिन्नप्रयत्नत्वाच्च सवर्णा न भवन्ति। तथा हि- "अकुहविसर्जनीयाः कण्ठ्()याः, इचुयशास्तालव्याः, लृतुलसा दन्त्याः,अपूपध्मानीया ओष्ठ्याः, एऐ कण्ठ()तालव्यौ, ओ औ कण्ठ()ओष्ठयौ" इति वचनादकारादीनां यथायोगं कण्ठादि स्थानम्। रेफस्य त्वृटुरषा मूर्धन्या इति मूर्धा।

प्रयत्नोऽप्यनन्तरनिर्दिष्टेष्वकारादिषु ये स्वराः तेषां विवृतं करणमूष्मणां स्वराणां चेति विवृतत्वम्। ये तु वर्गान्तः पातिनः ककारादयः, तेषां स्पृष्टकरणाः स्पर्शा इति स्पृष्टता। रेफ- स्येषत्स्पृष्टकरणा अन्तःस्था इतीषत्स्पृष्टता। शकारसकारावपि स्थानप्रयत्नभेदाद्() रेफस्य सवर्णौ न भवतः। तौ हि यथाक्रमं तालव्यदन्त्यौ। रेफस्तु मूर्धन्यः। प्रयत्नो ऽपि तयोर्विवृतत्वम्। रेफस्य तु पूर्वोक्त एव। ऋटुषाः प्रयत्नभेदाच्चैव रेफस्य सवर्णा न भवन्ति; न तु स्थानभेदेन; तेषामपि मूर्धन्यत्वात्। प्रयत्नभेदस्तु विद्यतेऋकारषकारयोः पूर्ववद् विवृतत्वम्, रेफस्य तु स एव पूर्वोक्तः। टवर्गस्य स्पृष्टता। यवलास्तु पुनः स्थानभेदादेव सवर्णा न भवन्ति, न तु प्रयत्नभेदात्; तेषामपीषत्स्पृ- ष्टगुणत्वात्। स्थानभेदस्तु विद्यते, यवलानां यथायोगं तालव्यदन्त्योष्ठ()त्वात्। एवं विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वाराः। कुँ खुँ गुँ घुँ इत्येते च यमाश्चातुल्यस्थानप्रयत्नत्वादेव रेफस्य सवर्णा न भवन्ति। विसर्जनीयो हि कण्ठ()ः, जिह्वामूलीयो हि जिह्व्यः; उपध्मानीय ओष्ठ्यः, अनुस्वारयमा नासिक्याः, रेफस्तु मूर्धन्यः। प्रयत्नस्तु यस्तस्य पूर्वोक्तः, स विसर्जनीयादीनां नास्त्येव तदेवं रेफस्य रेफादन्यो नास्ति कश्चित् सवर्तो वर्णः। अनया दिशोष्मणामपि शकारादीनां सावण्र्याभावे वेदितव्यः। "वर्ग्यः" इत्यादि। वर्गे भवो वर्ग्यः। "दिगादित्वाद् यत्" ४।३।५४, "यस्येति च" ६।४।१४८ इत्याकारलोपः। वग्र्यो यो वर्णः, सोऽन्येन वर्ग्येण स्ववर्गान्तःपातिना तुल्यास्यप्रयत्नेन सह सवर्णो भवति,यथा-ककारः खकारेण। एवमन्यत्रापि वेदितव्यम्। "भिन्नस्थानानाम्" इत्यादि। एते हि ककारादयः सर्वे स्पृ ष्टगुणत्वात् तुल्यप्रयत्ना यथाक्रमं कण्ठतालुमूर्धदन्तोष्ठस्थानत्वाद्भिन्नस्थानाः। "तर्सा, तर्सुम्" इति। "तृप तृन्फ तृप्तौ" (धा।पा।१३०७,१३०८) इत्यस्य तृचि तुमुनि च रूपम्। "भिन्नप्रयत्नानाम्ित्यादि। इकारादयोहि तालव्यत्वात् सर्वे तुल्य- स्थाना विवृतत्वस्पृष्टत्वेषत्स्पृष्टत्वप्रयत्नात् यथायोगं भिन्नप्रयत्नाः। इकार- शकारयोर्यद्यपि प्रयतनोऽप्यभिन्नः,तथापि, तयोः प्रतिषेधं वक्ष्यतीति न भवति सवर्ण- त्वम्। "अरुश्च्योतति"इति "श्च्युतिर् क्षरणे" (धा।पा।४१) इत्यस्य लटि रूपम्। तत्र परत्रावस्थितऽरुस्()शब्दस्य सकारस्य रुत्वम्। तस्य विसर्जनीयः, तस्यापि "वा शरि" ८।३।३६ इति सकारः, तस्यापि श्चुत्वं शकारः। "होतृ()कारः" इति। कथं पुनरत्र ऋकार आदेशो भवति, न हि ऋकारलृकारयोः समुदायस्य स्थानिनः सोऽन्तरतम इत्याह- "उभयोः" इत्यादि। ऋकारो मूर्धन्यः, लृकारस्तु दन्त्यः। तत्र तयोर्यद्येको मूर्धन्यो दन्त्यश्च दीर्घो वर्णोऽन्तरतमः सम्भवेत्, तदा सोऽन्तरतम आदेशो भवेत्। स च न सम्भवतीत्यवयवस्य योऽन्तरतमः, तेन भाव्यम्। तत्रापि यदि लृकारो दीर्घः स्यात्। सोऽपि पर्यायेण स्यात्, स च नास्ति; तस्मात् पारिशेष्यात् समुदायस्यैकादेशस्य योऽन्तरतमः स एव ऋकारो भवति।

बाल-मनोरमा

तुल्यास्यप्रयत्नं सवर्णम् १२, १।१।९

अथ "अणुदित्सवर्णस्य चाप्रत्ययः" इति अ इ उ इत्यादिसंज्ञां वक्ष्यन्सवर्णसंज्ञामाह--तुल्यास्य। आस्यं = मुखम्, तत्साम्यस्य सर्ववर्णेष्वविशिष्टत्वादव्यावर्तकत्वादास्यशब्दोऽत्र न मुखमात्रपरः। किन्तु आस्ये मुखे भवमास्यं =

ताल्वादिस्थानम्। "शरीरावयवाद्यत्" इति भवार्थे यत्प्रत्ययः। "यस्येति च" इति प्रकृत्यन्त्यस्य अकारस्य लोपः। प्रकृष्टो यत्नः प्रयत्नः। आस्यं च प्रयत्नश्च-आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्य वर्णजालस्य तत्तुल्यास्यप्रयत्नं परस्परं सवर्णसंज्ञकं स्यादिति भावः। तदाह--ताल्वादिस्थानमित्यादिना। मिथ इति। परस्परमित्यर्थः। कस्य किं स्थानमित्याकाङ्क्षायां तद्व्यवस्थापकानि पाणिन्यादिशिक्षावचनान्यर्थतः संगृह्णाति--

अकुहेत्यादिना। "अ" इत्यष्टादश भेदा गृह्यन्ते, "कु" इतदि कादिपञ्चकात्मकः कवर्गः। न चाणुदित्सूत्रस्येदानीमप्रवृत्तेः कथमत्र "अ" इत्यष्टादशभेदानां ग्रहणमिति वाच्यम्। लौकिकप्रसिद्धिमाश्रित्यैव एतत्प्रवृत्तेः। एवमग्रेऽपि कथञ्चित्समाधानं बोध्यम्। अश्च कुश्च हश्च विसर्जनीयश्चेति विग्रहः। विसर्जनीयशब्दोऽपि विसर्गपर्यायः।

इचुयशेति। इ इत्यष्टादश भेदाः। चु इति चवर्गः। इश्च चुश्च यश्च शश्चेति विग्रहः। तालु = काकुदम्।

ऋटुरषेति। ऋ इत्यष्टादश भेदाः। टु इति टवर्गः। आ च टुश्च रश्च षश्चेति विग्रहः। ऋ शब्दस्य आ इति प्रथमैकवचनान्तं धाता इति वत्।

लृतुलशेति। लृ इत्यस्य द्वादश भेदाः। तु इति तवर्गः। आ च तुश्च लश्च सश्चेति विग्रहः। लृशब्दस्यापि आ इत्येव प्रथमैकवचनान्तम्। आ अलौ अलः। दन्तशब्देन दन्तमूलप्रदेशो विवक्षितः। अन्यथा भग्नदन्तस्य तदुच्चारणाऽनुपपत्तेः।

उपूपेति। उ इत्यष्टादश भेदाः। पु इति पवर्गः उश्च पुश्च उपध्मानीयश्चेति विग्रहः। उपध्मानीयशब्दमनुपदमेव स्वयं व्याख्यास्यति।

ञमङणनेति। ञश्च मश्च ङश्च णश्च नश्चेति विग्रहः। चकारेण स्वस्ववर्गीयस्थानसमुच्चयः।

एदैतोरिति। एच्च ऐच्च एदैतौ। तपरकरणमसंदेहार्थम्। नतु "तपरस्तत्कालस्य" इति तत्कालमात्रग्रहणार्थम्। तेन प्लुतयोरपि संग्रहः। कण्ठश्च तालु चेति प्राण्यङ्गत्वात्समाहारद्वन्द्वः, एकवत्त्वं नपुंसकत्वं च।

ओदौतोरिति। ओच्च औच्च ओदौतौ। तपरकरणं पूर्ववदसंदेहार्थमेव। कण्ठश्च ओष्ठौ चेति प्राण्यङ्गत्वात्समाहारद्वन्द्वः, एकवद्भावो नपुंसकत्वं च।

वकारस्येति। दन्ताश्च ओष्ठौ चेति समाहारद्वन्द्वः। एकवत्त्वं नपुंसकत्वं च

जिह्वामूलीयस्येति। जिह्वामूलीयशब्दमग्रे व्याख्यास्यति। एवमनुस्वारशब्दमपि।

इति स्थानानीति। इति = एवंप्रकारेण वर्णाभिव्यक्तिस्थानानि प्रपञ्चितानीत्यर्थः।

ननु किमिह तुल्यास्यसूत्रे य()त्कचित्स्थानसाम्यं विवक्षितम् , उत यावत्स्थानसाम्यम्?। न तावदाद्यः, तथा सति इकारस्य एकारस्य च तालुस्थानकतया सावर्ण्यापत्तौ "भवत्येवे"त्यत्र इकारादेकारे परे सवर्णदीर्घापत्तेः। न च एकारस्य वर्णसमाम्नाये पाठसामर्थ्यादिकारेण न सावर्ण्यमिति वाच्यम्, एकारपाठस्य अक् इक् उक् इति प्रत्याहारेषु एकारग्रहणनिवृत्त्यर्थत्वसम्भवात्। किं च वकारलकारयोर्दन्तस्थानसाम्येन सावर्ण्यापत्तौ "तोर्लि" इत्यत्र लकारेण वकारस्यापि ग्रहणात्तद्वानित्यत्र दकारस्य परसवर्णापत्तिः। "यवलपरे यवला वा" इत्यत्र लकारग्रहणं तु यथासंख्यार्थं भविष्यति। न द्वितीयः, तथा सति कङयोः कण्ठस्थानसाम्येऽपि ङकारस्य नासिकास्थानाधिक्येन सावर्ण्याभावापत्तौ

"चोः कुः", क्विन्प्रत्ययस्य" इत्यत्र ङकारस्य ग्रहणानापत्त्या प्राङित्यादौ नुमो नकारस्य "क्विन्प्रत्ययस्य" इति कुत्वेन ङकाराऽनापत्तेः। तस्मात्स्थ्ानसाम्यं दुर्निरूपमिति चेत्, अत्र ब्राऊमः--यावत्स्थानसाम्यमेव सावण्र्यप्रयोजकम्। एवं च इकारस्य एकारस्य च तालुस्थानसाम्येऽपि एकारस्य कण्ठस्थानाधिक्यान्न सावण्र्यम्। वलयोश्च न सावण्र्यम्। वकारस्य ओष्ठस्थानाधिक्यात्। एवं च " तद्वानासाम्" "यजुष्येकेषाम्" इत्यादिनिर्देशा उपपन्नाः। ङकारस्य नासिका स्थानाधिक्येऽपि ककारेण सावण्र्यमस्त्येव, आस्यमवस्थानसाम्यस्यैव सावण्र्यप्रयोजकत्वात्, नासिकायाश्च आस्यानन्तर्गतत्वात्। उक्तं च भाष्ये-किं पुनरास्यं(), लोकिकमोष्ठात्प्रभृति प्राक्काकलकात्" इति। "काकलको नाम चुबुकस्याधस्तात् ग्रीवायामुन्नतप्रदेशः" इति कैयटः। तस्मादास्यभवयावत्स्थानसाम्यं सावण्र्यप्रयोजकमिति शब्देन्दुशेखरे विस्तरः।

ननु तुल्यास्यसूत्रे प्रयत्नशब्देन प्रशब्दबलादाभ्यन्तरयत्नो विवक्षित इति स्थितम्। तत्राभ्यन्तरत्वविशेषणं किमर्थम्, व्यावर्त्याऽभावादित्यत आह-यत्नो द्विधेति। यत्नानामाभ्यन्तरत्वं बाह्रत्वं च वर्णोत्पत्तेः प्रागूध्र्वभावित्वमिति पाणिन्यादिशिक्षासु स्पष्टम्। आद्य इति। आभ्यन्तयत्न इत्यर्थः। कथं चातुर्विध्यमित्यत आह-स्पृष्टेति।

कस्य कः प्रयत्न इत्याकाङ्क्षायां तद्व्यवस्थापकशिक्षावचनानि पठति--तत्रेति। तेषु मध्य इत्यर्थः। प्रयतनमिति। प्रयत्न इत्यर्थः। स्पर्शादिशब्दानग्रे व्याख्यास्यति। ह्यस्वस्यावर्णस्य संवृतमित्यन्वयः। एतावदेव शिक्षावचनम्। नन्वेवं दण्ड-आढकमित्यत्र अकारस्य च विवृतसंवृतप्रयत्नभेदेन सावण्र्याऽभावात्सवर्णदीर्घो न स्यादित्यत आह-प्रयोग इति। शास्त्रीयप्रक्रियाभिः परिनिष्ठितानां रामः कृष्ण इत्यादिशब्दानां प्रयोगे क्रियमाण एव ह्यस्वस्याऽवर्णस्य संवृतत्वमित्यर्थः। प्रक्रियेति। शास्त्रीयकार्यप्रवृत्तिसमये तु ह्यस्वस्याप्यवर्णस्य विवृतत्वमेवेत्यर्थः। शिक्षावचनसिद्धं स्वाभाविकं ह्यस्वावर्णस्य संवृतत्वं प्रच्याव्य शास्त्रमूलभूते वर्णसमाम्नाये तस्य विवृतत्वेनैवोपदिष्टतया कृत्स्नशास्त्रीयप्रक्रियासमये ह्यस्वस्याप्यवर्णस्य विवृतत्वेन दण्डाठतमिच्यादौ सवर्णदीर्घादिकार्यं निर्बाधकमिति ऐउणिति सूत्रभाष्ये स्पष्टम्। एवंच "ह्यस्वस्याऽवर्णस्य संवृत"मिति शिक्षावचनं परिशेषात्परिनिष्ठतदशायामेव पर्यवस्यतीति न तदानर्थक्यमिति भावः। अयं च शिक्षावचनसङ्कोचः सूत्रकारस्यापि संमत इत्याह-एतच्चेति॥ तदेवोपपादयितुं प्रतिजानीते-तथा हीति। यथा एतज्ज्ञापितं भवति तथा स्पष्टमुपपाद्यत इत्यर्थः।

तत्त्व-बोधिनी

तुल्यास्यप्रयत्नं सवर्णम् १२, १।१।९

तुल्यास्य। आस्ये भवमास्यं "शरीरावयवाद्यत्" इत्यभिप्रेत्याह-ताल्वादीति॥ आभ्यन्तरेति। एतच्च प्रशब्दबलाल्लभ्यते। ओष्ठात्प्रभृति प्राककाकलकादास्यम्। तुल्यास्यं किम्?, तर्प्ता। अत्र पकारस्य तकारे परे "झरो झरि" इति लोपो मा भूत्। प्रयत्नग्रहणं किम्, वाक्श्चोतति। अत्र शस्य लोपो न॥ ञमङणनानामिति। नासिका चेति। चकारेण स्ववर्गानुकूलं ताल्वादि समुच्चीयते॥ एदैतोरित्यादौ तपरत्वमसंदेहार्थं, न तत्कालग्रहणार्थम्। तेन प्लुतस्यापि संग्रहः॥ चतुर्धेति। निष्कर्षपक्षे तु पञ्चधा, ऊष्माणामीषद्विवृतप्रयत्नाभ्युपगमात्॥ स्पृष्टेषत्स्पृष्टेति। एतेषामाभ्यन्तरत्वं, वर्णोत्पत्तिप्राग्भावित्वात्। तथाहि-नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊध्र्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्षा उत्पत्तिः। तत्रोत्पत्ते प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता, ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता, समीपावस्थानमात्रे संवृतता, दूरत्वे विवृतता। अत एव इचुयशानां तालव्यत्वाऽविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्तव्ये सम्यक् स्पर्शः, यकारे ईषत्सपर्शः , शकारेकारयोस्तु दूराऽवस्थितिरित्याद्यनुभवं, शिक्षाकारोकिं()त चानुसृत्य विवेचनीयम्। विवारसंवारादयस्तु वर्णोत्पत्तेः पश्चान्मू()ध्न प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्त इति बाह्वा इत्युच्यन्ते। गलबलिस्य संकोचात्संवारः,

तस्यैव विकासाद्विवारः। एतौ च संवृतविवृतरूपाभ्यामाभ्यन्तराभ्यां भिन्नावेव। तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० अज्झलौ १।२ तुल्यास्यप्रयत्नम् १।१ ९ सवर्णम् १।१ ९

समासः॥

अच् च हल् च अज्झलौ, इतरेतरद्वन्द्वः

अर्थः॥

तुल्यास्यप्रयत्नौ अपि अच्-हलौ परस्परम् सवर्णसंज्ञकौ न भवतः।

उदाहरणम्॥

दण्डहस्तः, कुमारी शेते। वैपाशो मत्स्यः, आनुडुहं चर्म।
काशिका-वृत्तिः
न अज्झलौ १।१।१०

अच् च हल् च, अज्झलौ। तुल्याऽस्यप्रयत्नावपि अज्झलौ परस्परं सवर्णसंज्ञौ न भवतः। अवर्णहकारौ दण्डहस्तः, इवर्णशकारौदधि शीतम्, सवर्णदीर्धत्वं न भवति। वैपाशो मत्स्यः, आनडुहं चर्म इति यस्यैति च ६।४।१४८ इति लोपो न भवति।
न्यासः
नाज्झलौ। , १।१।१०

"तुल्यास्यप्रयत्नावपि" इति प्रसङ्गे हेतुमाह, प्रसङ्गपूर्वकत्वात् प्रतिषेधस्य। "दण्डहस्त" इत्यत्राकारहकारयोद्र्वयोरपि कण्ठस्थानत्वात् तुल्यस्थानत्वम्, उभयोर्विवृतकरणत्वात् तुल्यप्रयत्नत्वम्(); "दधि शीतम्" इत्यत्राप्यत एव तुल्युप्रयत्नत्वम्, उभयोस्तालव्यत्वात् तुल्यस्थानत्वम्। "सवर्णदीर्घत्वं न भवति" इति प्रतिषेध- स्य फलं दर्शयति। ननु च अकः सवर्णे दीर्घविधौ ६।१।९७ "अचि"; इति वर्तते, तत्रासत्यपि प्रतिषेधे दीर्घत्वं न भविष्यति, यथा- कुमारी शेते इत्यत्र, तदयुक्तमे-वोदाहरणद्वयम्। स्यादेतत्- "अणुदित् सवर्णस्य चाप्रत्ययः" १।१।६८ इत्यकारेका- राभ्यां सावर्ण्येन ग्रहणादच्त्वमस्ति, तथापि हल्षूपदेशाद् हल्त्वमप्यस्तीति न तावद्धकारश्कारवचावेव, अपि तु हलावपीति, सत्यमेतत्। अयं पुनरत्र वृत्तिकारस्याभि प्रायः- अवश्यं तावदन्यार्थं "नाज्झलौ" १।१।१० इत्येतत् कर्तव्यम्, यस्येति लोपा-भावार्थम्। तदन्यार्थं कृतमेतदर्थमपि स्यात्। एवं तह्र्रजनुवृत्तिद्वारेण दीर्घत्वाभावप्रतिपत्तौ साध्यायां यत् प्रतिपत्तिगौरवमापद्यते, तदपास्तं भवतीति। "वैपाशः" इति। विपाशि भव इत्यण्। "यस्येति च" ६।४।१४८ इत्यत्रेवर्ण उपादीयमानः सावर्ण्येन शकारमप्युपादत्ते। एवं च तस्य लोपः प्रसज्येत। "आनहुहम्" इति। अनडुहो विकार इति "प्राणिरजतादिभ्योऽञ्" ४।३।१५२,तत्र "यस्येति च" ६।४।१४८ इत्यत्राकारो गृह्रकारो हकारमपि गृह्णीयात्, ततश्च पूर्ववत् तस्य लोपः स्यात्।

बाल-मनोरमा

नाऽऽज्झलौ १५, १।१।१०

एवं प्राप्ते प्रतिषेधति--नाज्झलौ। आसहितः अच्-आच्। शाकपार्थिवादित्वात्सहितशब्दस्य लोपः। आ च ह्रस्व-आज्झलौ। तुस्यास्यसूत्रात्सवर्णमित्यनुवर्तते। तच्च पुँल्लिङ्गाद्विवचनान्ततया विपरिणम्यते। तदाह--अकारसहितोऽजित्यादिना। ननु किमर्थोऽयं प्रतिषेध इत्यत आह--तेनेत्यादि यणादिकं नेत्यन्तम्। तेन=प्रतिषेधेन। आदिना सवर्णदीर्घसङ्ग्रहः। दधीति इकारस्य हकारे षकारे सकारे च परे "इको यणचि" इति यणादेशः, शीतलमित्यत्र शकारे परे सवर्णदीर्घश्च न भवतीत्यर्थः। नन्वस्त्वकारहकारयोरिकारशकारयोरृकारषकारयोर्लृकारसकारयोश्च सावर्ण्यं, तथापि "दधि षष्ठ"मित्यादौ यणादिकं न प्रसक्तम्, अचपरकत्वाऽभावादित्यत आह--अन्यथेत्यादिना। अन्यथा=तेषां सावर्ण्याभ्युपगमे, दीर्घादीनामिव हकारादीनामप्यच्त्वं स्यादित्यन्वयः। ननु वर्णसमाम्नाये हकारादीनामकारचकारमध्यगत्वाऽभावात्कथमच्त्वमित्यत आह-ग्रहणकशास्त्रबलादिति। गृह्णन्त्यकारादयः स्वसवर्णान् येन तद्ग्रहणम्। करणे ल्युट्। स्वार्थे कः। अणुदित्सूत्रादित्यर्थः। यद्यप्यच्छब्द०वाच्यत्वं वार्णसमाम्नायिकानामेव वर्णानान्तथापीको यणचीत्यादावच्छब्देनाऽकारादिषूपस्थितेषु तैरणुदित्सूत्रबलेन स्वस्वसवर्णानामाकारादीनामुपस्थितिरस्ति। ततश्चाऽत्राच्पदवाच्याकारादिवाच्यत्वादाकारादीनामिव हकारादीनामपि लक्षणया अच्छब्देन ग्रहणं स्यादित्यर्थः। न च इको यणचीत्यादौ शक्यार्थमादायैवोपपत्तेर्न लक्षणासंभवः। अणुदित्सूत्रे तु अस्य च्वावित्यादौ सावकाशमिति वाच्यं, स्वादिभ्य इत्यादिनिर्देशबलेन प्रत्याहाराणां स्ववाच्यवाच्येषु लक्षणाऽवश्यंभावात्। तथा च "अच्त्वं स्या"दित्यस्य अचपदबोध्यत्वं स्यादित्यर्थः। किं तद्ग्रहणकशास्त्रमित्याकाङ्क्षायां तदुपपादनं प्रतिजानीते-तथा हीति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ईदूदेद्-द्विवचनम् १।१ प्रगृह्यम् १।१

समासः॥

ईच्च ऊच्च एच्च ईदूदेतः, द्वन्द्वः। ईदूदेतः अन्ते यस्य यस्य ईदूदेदन्तम्, बहुव्रीहिः। ईदूदेदन्तं च तत् द्विवचनं च ईदूदेद्द्विवचनं, कर्मधारयः तत्पुरुषः।

अर्थः॥

ईदाद्यन्तं द्विवचनं शब्दरूपं प्रगृह्यसंज्ञं भवति।

उदाहरणम्॥

अग्नी इति, वायू इति, माले इति। पचेते इति, पचेथे इति। इन्द्राग्नी इमौ, इन्द्रवायू इमे सुताः (ऋ॰ १।२।४)।

काशिका-वृत्तिः

ईदूदेद्द्विवचनं प्रगृह्यम् १।१।११

ईतूतेतित्येवमन्तं द्विवचनं शब्दरूपं प्रग्रह्यसंज्ञं भवति। अग्नी इति। वायु इति। माले इति। पचेते इति। ईदूदेतिति किम्?

वृक्षावत्र। प्लक्षावत्र। द्विवचनम् इति किम्? कुमार्यत्र। किशोर्यत्र। तपरकरणम् असंदेहार्थम्। प्रगृह्यप्रदेशाः प्लुतप्रगृह्या अचि नित्यम् ६।१।१२१ इत्येवम् आदयः। ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः। मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम। दम्पतीव। जम्पतीव। रोदसीव।

लघु-सिद्धान्त-कौमुदी

ईदूदेद् द्विवचनं प्रगृह्यम् ५१, १।१।११

ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू॥

न्यासः

ईदूदेद्?द्विवचनं प्रगृह्रम्। , १।१।११

अत्रेदादि यद्()द्विवचनम्,तत् प्रगृह्रमित्येवं वा विज्ञायते? ईदाद्यन्तं यद् द्विवचनम्, तत् प्रगृह्रमिति वा? तत्राद्ये पक्षे "पचेते" इत्यादौ प्रगृह्रसञ्ज्ञा न प्राप्नोति, न ह्रेकारमात्रमत्र द्विवचनम्; अपि तु आतेशब्द इति। इममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह- "ईदूदेदित्येवमन्तम्ित्यादि। नन्वेतस्मिन्नपि पक्षे अग्नी इत्येवमादि न सिध्यति, ईदाद्येव ह्रत्र द्विवचनं न तदन्तम्? "आद्यन्तवदेकस्मिन्" १।१।२० इत्यनेनान्तवद्भावो भवतीत्यदोषः। "अग्नी" इति। " प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घत्वम्। अत्र प्रगृह्रसञ्ज्ञायां सत्याम् "प्लुतप्रगृह्रा अचि" ६।१।१२१ इति प्रकृतिभावादितिशब्दे परतः "अकः सवर्णे" दीर्घत्वं ६।१।९७ न भवति। "वायु" इत्यत्रापि "इको यणचि" ६।१।७४ इति यणादेशः। शेषेष्वप्युदाहरणेष्वयादेशः। "खट्वे" इति। "औङ आपः" ७।१।१८ इति शीभावः। " आद्()गुणः" ६।१।८४। "पचेते" इति,"यजेते" इति। स्वरितेत्वादात्मनेपदम्, आताम्, टेरेत्वम्, "आतो ङितः" ७।२।८१ इतीयादेशः "लोपो व्योर्वलि" ६।१।६४ इति यलोपः। "वृक्षावत्र, प्लक्षावत्र" इति। भवत्येतद् द्विवचनम्; न त्वीदूदेदन्तम्। तेन प्रकृतिभावाभावादादेशो भवत्येव। "कुमार्यत्र" इति। "वयसि प्रथमे" ४।१।२० इति ङीपिकृते "कुमारी" इत्येतदीकारान्तम्(), न तु द्विवनचान्तम्; तेनासति प्रकृतिभावे भवत्येव यणादेशः। अथ तपरकरणं किमर्थम्?प्लुतनिवृत्त्यर्थमिति चेत्, न; इष्टत्वात् प्लुतस्य। यथा च तपरत्वे क्रियमाणेऽपि प्लुतस्य प्रगृह्रसञ्ज्ञा सिध्यति, तथा भाष्ये "असिद्धः प्लुतः, तस्यासिद्धत्वात् तत्काल एव"(म।भा।१।६६) इत्यादिना प्रतिपादितम्। गुणान्तरभिन्नानां तत्कालानां ग्रहणार्थमिति चेत्,न; "अभेदकत्वाच्छास्त्रे गुणानाम्" (सो।प।८०) इत्यत आह- "तपरकरणमसन्देहार्थम्" इति। असति हि तपरकरण ईकारस्योकारस्य च यणादेशः स्यात्। ततश्च सन्देह एव स्यात्()-किमिदं यकारवकारोयग्ररहणम्, आहोस्विदिकारोकारयोरिति "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यातम्- वक्ष्यमाणं शाकल्यग्रहणमिहोपतिष्ठते सिंहावलोकितन्यायेन , सा च व्यवस्थित- विभाषा; तेन मणीवादीनां प्रतिषेधो भविष्यति, मणीव, दम्पतीव्, रोदसीवेति। मणीवेत्या- दयः शब्दा द्विवचनान्ताः। तत्रासति प्रगृह्रत्वे "अकः सवर्णे दीर्घः" (६।१।९७ एकादेशो भवत्येव।

बाल-मनोरमा

ईदूदेद्द्विचनं प्रगृह्रम् १०१, १।१।११

ईदूदेद्द्विचनम्। ईच्च ऊच्च एच्चेति समाहारद्वन्द्वः। ईदूदेदिति द्विवचनविशेषणत्वात्तदन्तविधिः। "द्विवचन"मित्यनेन तु प्रत्ययत्वे।ऽपि न तदन्तं गृह्रते, "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती"ति तन्निषेधात्। तदाह-- ईदूदेदन्तमित्यादिना। हरी एताविति। अत्र ईकारस्य परादिवत्त्वाश्रयणाद्द्विवचनत्वम्। प्रगृह्रत्वे सति "प्लुतप्रगृह्रा" इति प्रकृतिभावान्न यण्। विष्णू इमावित्यत्राप्येवम्। गङ्गे अमू इत्यत्र त्वयादेशो न भवति। "ईदूदेदन्त"मिति तदन्तविधेः प्रयोजनं दर्शयितुमाह-पचेते इमाविति। तदन्तविध्यबावे ईदूदेदात्मकं द्विवचनं प्रगृह्रमिति लभ्येत। एवं सति "पचेते" इत्यत्र "इते इति द्विवचनस्य एद्रूपत्वाऽभावात्प्रगृह्रत्वं न स्यादिति भावः। "ईदूदेदन्तं यद्द्विचनान्त"मिति व्याख्याने तु

कुमार्योरगारं कुमार्यगारमित्यत्रातिप्रसङ्गः स्यात्। "ईदूदेदन्तं द्विवचन"मिति व्याख्याने तु नातिप्रसङ्गः, ओसो द्विवचनस्य ईदूदेदन्तत्वाऽभावात्। ननु "मणीवोष्ट्रस्य सम्बेते प्रियौ वत्सतरौ ममे"ति भारतश्लोके "मणी इवे"ति ईकारस्य प्रगृह्त्वे सति प्रकृतिभावे सवर्णदीर्घो न स्यादित्यत आह-मणीवोष्ट्रस्येति। "वं प्रचेतसि जानीयादिवार्थे च तदव्यय"मिति मेदिनी। "व वा यथा तथैवैवं साम्ये"इत्यमरः।

तत्त्व-बोधिनी

ईदूदेद्द्विवचनं प्रगृह्रम् ८१, १।१।११

ईदूदेदन्तमिति। अत्र विशेणेन तदन्तविध्याश्रयणं किम्?। "पचेते इमा"-विति यथा स्यात्। "हरी" "विष्णू" इत्यादिष्वेकादेशस्य परादिवद्भावाश्रयेण ईकारादीनां द्विवचनत्वादीदूदेद्रूपं द्विवचनमित्युक्तेऽपि प्रगृह्त्वं सिध्यतीति बोध्यम्। द्विवचनमिति। "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति", "सुप्तिङन्त"-मित्यन्तग्रहणाज्ज्ञापकात्। तेन कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति सिद्धम्। "द्विवचनान्तं प्रगृह्नं स्या"दिति व्याकुर्वतः प्राचस्तु नेदं सिध्येत्। हरी एताविति। इह ह्यस्वसमुच्चितप्रकृतिभावो न, "प्लुतप्रगृह्राः" इत्यत्र नित्यग्रहणादित्युक्तम्। अत्र वृत्तिकारेण--"मणीवादीनां प्रतिषेधो वक्तव्यः" इति पठित्वा "मणीव" "रोदसीव" "जंपतीवे"त्युदाह्रतम्। तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटादयः। एवं स्थिते "मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ ममे"ति भारतप्रयोगं समर्थयते--इवार्थे इति। वशब्द इत्यादि। "वं प्रचेतसि जानीयादिवार्थे च तदव्यय"मिति मेदिनी। "व वा यथा तथैवैवं साम्ये" इत्यमरः। कादम्बखण्डितदलानि व पङ्कजानी"त्यादिप्रयोगदर्शनाच्चेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अदसः ६।१ मात् ५।१ ईदूदेत् १।१ ११ प्रगृह्यम् १।१ ११

अर्थः॥

अदसः सम्बन्धः यः मकारः तस्मात् परे य ईदूदेतः तेषां प्रगृह्यसंज्ञा भवति।

उदाहरणम्॥

अमी अत्र, अमी आसते। अमू अत्र, अमू आसाते।

काशिका-वृत्तिः

अदसो मात् १।१।१२

अदसः सम्बधी यो मकारस्तस्मात् परे ईदूदेतः प्रग्र्ह्यसंज्ञा भवन्ति। अमी अत्र। अमी आसते। अमू अत्र। अमू आसाते। एकारस्य उदाहरणं न अस्ति। अदसः इति किम्? शम्यत्र। दाडिम्यत्र। माितति किम्? अमुके ऽत्र।

लघु-सिद्धान्त-कौमुदी

अदसो मात् ५२, १।१।१२

अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते। मात्किम्? अमुकेऽत्र॥

न्यासः

अदसो मात्। , १।१।१२

"अदसः सम्बन्धी यो मकारः" इति। अवयनवावयविभावलक्षणेन सम्बन्धेन षष्ठी। "अमी अत्र" इति अदस्()शब्दात् परस्य जसः शी ७।१।१७ त्यदाद्यत्वम् ७।१।१०२ , अतो गुणो" ६।१।९४पररूपत्वम्, ईकारेण सह "आद्()गुणः" ६।१।८४ "एत ईद्बहुवचने" ८।२।८१ इतीत्त्वम्, दस्य च मत्वम्, ८।२।८०। अयमद्विवचनार्थ आरम्भः। "अमू आसाते" इति। अदसो द्विवचनमौ। त्यदाद्यत्वम्,"वृद्धिरेचि" ६।१।८५ इति वृद्धिः; "अदसोऽसेर्दादुदो मः" ८।२।८० इत्यौकारस्य दीर्घस्य स्थाने तादृश एवान्तरतम्यादुकरः।अत्राप्यूकारादिकार्यमसिद्धमिति पूर्वेणाप्राप्तिः। अतः "पूर्वात्रासिद्धम्" ८।२।१ इत्यस्य बाधनार्थं आरम्भः। कथं पुनः "पूर्वत्रासिद्धम्"८।२।१ इत्येतच्छक्यं बाधितुम्, वचनसामर्थ्यात्? नैतदस्ति; यत् सिद्धे प्रगृह्यकार्यम् "अणोऽप्रगृह्य- स्यानुनासिकः" ८।४।५६ इति, तदर्थं वचनं स्यात्, नैतदेवम्; न ह्येकं प्रयोजनं योगारम्भं प्रयोजयति। यदि ह्येतावत् प्रयोजनं स्यात्, तत्रैवेदं ब्राऊयात्, "अणोऽप्रगृह्यस्यानुनासिकः, अदसो न" इति। "शम्यत्र, दाडिम्यत्र" इति। "षिद् गौरादिभ्यश्च" ४।१।४१इति ङीष्, "यस्येति च" ६।४।१४८ इत्यकारलोपः। भवत्ययं मकारात्पर ईकारः, न त्वदः सम्बन्धीति। "अमुकेऽत्र" इति। "अव्ययसर्वनाम्नाम्"(५।३। ७१) इत्यकच्, "जसः शी" ७।१।१७, "आद्()गुणः" ६।१।८४, पूर्ववदुत्वमत्वे अमुके इति स्थिते परत्र चात्रशब्दे "एङः पदान्तादति" ६।१।१०५ इति पूर्वरूपत्वम्।

बाल-मनोरमा

अदसो मात् १०२, १।१।१२

अदसो मात्। "अदस" इत्यवयवषष्ठी। अदश्शब्दावयवान्मकारादित्यर्थः। "ईदू"दिति "प्रगृह्य"मिति चानुवर्तते। "मा"दिति दिग्योगे पञ्चमी। परसभ्दोऽध्याहार्यः। तदाह--अस्मात्पराविति। अदश्शब्दावयवमकारात्परावित्यर्थः। "ए"दिति नानुवर्तते, अदश्शब्दे मकारात्परस्यैकारस्याऽसंभवात्। "द्विवचन"मित्यपि नानुवर्तते, अदश्शब्दे मकारात्परस्य ईकारस्य "अमी" इति बहुवचनत्वात्, ऊकारस्य च मकारात्परस्य तत्र द्विवचनान्तेष्वेव सत्त्वेन व्यावर्त्याऽभावात्। अमी ईशा इति। अदश्शब्दाज्जसि त्यदाद्यत्वं पररूपत्वं। जसश्शी। आद्गुणः। "अदे" इति स्थिते एकारस्य "एत ई"दिति ईत्त्वं, दस्य च मत्त्वम्। तदेवम्-"अमी"#इति रूपम्। अत्र ईकारस्य द्विवचनत्वा।ञभावात्पूर्वसूत्रेण प्रगृह्यसंज्ञा न प्राप्तेत्यनेन सा विधीयते। रामकृष्णावमू इति। पुँल्लिङ्गाददश्शब्दात्प्रथमाद्विवचने औङि, त्यदाद्यत्वं, पररूपत्वं। वृद्धिरेचि। अदौ इति स्थिते, अदसोऽसेरित्यौकारस्य ऊत्वं, दस्य मत्वम्। अमू इति रूपम्। यद्यप्ययमूकारो द्विवचनं भवति, तथापि पूर्वसूत्रेण प्रगृह्यत्वे कर्तव्ये उत्वमत्वयोरसिद्धतया दकारादौकारस्यैव शास्त्रदृष्ट()आ सत्त्वात्पूर्वस#ऊत्रेण तस्य प्रगृह्यत्वं न प्राप्तमित्यनेन विधीयते। "अदसो मा"दिति सूत्रं प्रति तु उत्वमत्वे नासिद्धे, आरम्भसामर्थ्यात्। पूर्वसूत्रस्य तु तत्र न सामर्थ्यं, हरी एतौ, विष्णू इमावित्यादौ चरितार्थत्वात्। "स्त्रियौ फले वा अमू आसाते" इति स्त्रीलिङ्गो नपुंसकलिङ्गश्च अदश्शब्दो नात्रोदाहरणम्। तथाहि स्त्रीलिङ्गददश्शब्दादौङि, त्यदाद्यत्वे, पररूपत्वे, टापि, "ओङ आप" इति शीभावे, आद्गुणे, उत्वमत्वयोरमू इत्येव रूपम्। तथा नपुंसलिङ्गात्तस्मादौङि, त्यदाद्यत्वे, पररूपत्वे, नपुंसकाच्चेति शीभावे, आद्गुणे, उत्वमत्वयोरमू #इत्येव रूपम्। अत्र पूर्वसूत्रेणैव प्रगृह्यत्वं सिद्धम्। उत्वमत्वयोरसिद्धत्वेऽप्येकारस्य द्विवचनस्य सत्त्वात्। अतः पुँल्लिङ्ग एव अदश्शब्दोऽत्रोदाहरणमिति प्रदर्शयितुं "रामकृष्णा" वित्युक्तम्। मात्किमिति। "अदस" इत्येव सूत्रमस्तु, माद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः। अमुकेत्रेति "अव्ययसर्वनाम्नामकच् प्राक्टेः" #इत्यकचि अदकश्शब्दाज्जसि, त्यदाद्यत्वं, पररूपत्वम्, जसश्शी, आद्गुणः उत्वमत्वे। "अमुके" इति रूपम्। अत्र एकारस्य प्रगृह्यत्वनिवृत्त्यर्थं माद्ग्रहणम्। कृते च तस्मिन्नेकारस्य म#आत्परत्वाऽभावान्न प्रगृह्यत्वमिति भावः। नन्वेवमपि माद्ग्रहणं व्यर्थम्, एद्ग्रहणमननुवर्त्य ईदूतोरेवाऽत्र प्रगृह्यत्वविधानाब्युपगमेन "अमुके" इत्यत्र प्रगृह्यत्वप्रसक्तेरेवाऽभावादित्यत आह--असतीति। "अदसो मा"दित्यत्र ईदूदेतामेकसमासपदोपात्तानां मध्ये

ईदूतोद्द्वयोरनुवृत्तौ एतोऽप्यनुवृत्तिप्रसक्तौ माद्ग्रहणादेतोऽनुवृत्तिः प्रतिबद्धा। माद्ग्रहणाऽभावे तु बाधकाऽभावादेतोऽप्यनुवृत्तिः स्यात्। ततश्च "अमुके" इत्यत्रापि एकारस्य प्रगृह्यत्वप्रसक्तौ तन्निवृत्त्यर्थं माद्ग्रहणम्। कृते तु तस्मिन्नेतोऽनुवृत्तिप्रतिबन्धादमुके इत्यत्र न प्रगृह्यत्वम्। तथाच एकाराननुवृत्तिफलसकं माद्ग्रहणमिति भावः।

तत्त्व-बोधिनी

अदसो मात् ८२, १।१।१२

अदसो मात्। इह एकारो नानुवर्तते, असंभवादित्यभिप्रेत्याह-ईदूताविति। अदसः किम्?। शम्यत्र, वाम्यत्र। ननूकारानुवृत्तिर्व्यर्था, "स्त्रियौ फले वा अमू आसाते" इत्यत्र पूर्वेणैव सिद्धेः। मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह--रामकृष्णाविति। पुंसि पूर्वेण न सिध्यति, औकारान्तत्वादिति भावः। "अदसो मा"दिति सूत्रं प्रति मूत्वमीत्वं च नाऽसिद्धम्, आरम्भसामर्थ्यात्। अमुकेऽत्रेति। स्त्रीलिङ्गद्विवचनस्य तु पूर्वसूत्रेण प्रगृह्यत्वे प्रकृतिभाव एव। अमुकेऽत्र। एकारोऽप्यनुवर्ततेति। तथाच एकाराननुवृत्तितात्पर्यग्रहफलकं माद्ध्रहणमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शे १।१ प्रगृह्यम् १।१ ११

अर्थः॥

शे इति लुप्तप्रथमान्तः निर्देशः {सुपां सुलुक्० (७।१।३९)} इत्यनेन छान्दसः आदेशः गृह्यते। शे इत्यस्य प्रगृह्यसंज्ञा भवति।

उदाहरणम्॥

अस्मे इन्द्राबृहस्पती (ऋ० ४।४९।४), युष्मे इति, अस्मे इति॥

काशिका-वृत्तिः

शे १।१।१३

शे इत्येतत् प्रगृह्यसंज्ञं भवति। किमिदं शे इति? सुपाम् आदेशश् छन्दसि। न युष्मे वाजबन्धवः। अस्मे इन्द्राबृहस्पती। युष्मे इति। अस्मे इति। त्वे रायः। मे रायः। त्वे इति। मे इति। छान्दसम् एतदेवैकम् उदाहरणम् अस्मे इन्द्राबृहस्पती इति। तत्र तथा पाठात्। इतरत् तु लौकिकम् अनुकरणम् युश्मे इति, अस्मे इति, त्वे इति, मे इति।

न्यासः

शे।, १।१।१३

"शे" इति। शेश्रुतेरविशिष्टत्वात् काशे कुशे इत्यत्र यः शेशब्दस्तस्यापि ग्रहणं प्राप्नोति, अतो विशेषो वक्तव्य इत्यभिप्रायेणाह- "किमिदं शे" इति। "सुपाम्ित्यादि। यस्तु काशकुशशब्दाभ्यां सप्तम्येकवचने च कृते आद्गुणे ६।१।८४ च शेशब्दः सम्पद्यते, तस्येह ग्रहणं न भवति; लाक्षमिकत्वादिति भावः। "युष्मे, अस्मे" इति। षष्ठीबहुवचनस्य "सुपां सुलुक्" ७।१।३९ इत्यादिना शेशब्दादेशः, "शेषे लोपः"७।२।९० अथ वा- प्रथमाबहुवचनस्यैव शेभावः, छान्दसत्वात्

"यूयवयौ जसि" ७।२।९३ इत्येतन्न प्रवर्तते। "त्वे इति, मे इति"। सप्तम्येकवचनस्य पञ्चम्येकवचनस्य च शेभावः। "त्वमा- वेकवचने" ७।२।९७ इति युष्मदस्मदोस्त्वमावादेशौ। "इतरत् तु लौकिकमनुकरणम्" इति। यदा "युष्मे इति" एवमादिकं तदा लौकिकमनुकरणमिति भावः। यदा "युष्मे", "अस्मे" इत्याददीनां वेदवाक्यस्थानामर्थाद्व यवच्छिद्य स्वरूपेऽवस्थानार्थं पदकारैरितिकरणोऽध्या- ह्रियते, तदा "युष्मे इति", "अस्मे इति" एवमादिकमुदाहरणमिति भवति। इतरत् तु लौकिकम नुकरणमित्युक्ते "न युष्मे वाजबन्धवः" (ऋ।८।६९।१९), "त्वे रायः" (तै।सं।१।२।५।२), "मे रायः" (वा।सं।४।२२) इत्येतेष्वपि वेदवाक्येषु यत् "युष्मे" इत्यादिशेशब्दान्तं शब्दरूपम्, तत् स्वरूपेण दर्शयितुमाह- "युष्मे इति, अस्मे इति, त्वे इति, मे इति"। यद्येववं किमर्थं "न युष्मे वाजबन्धवः" )ऋ ८।६९।१९) इत्यादीनामुपन्यासः? एषु वेदवाक्येषु ये "युष्मे" इत्यादयः शब्दाः, तेषामेतान्यनुकरणनीति प्रदर्शनार्थः; अन्यथा हि ज्ञायते कस्यैतान्यतनुकरणनीति॥

बाल-मनोरमा

शे १०३, १।१।१३

शे। एकपदं सूत्रम्। "प्रगृह्य"मित्यनुवर्तते। छन्दसीत्यनुवृत्तौ "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड()आयाजालः" इति विहितः "शे" इत्येकारान्त आदेशः प्रगृह्यः स्यादित्यर्थः। तदाह--अयमिति। "शे" आदेशे इत्यर्थः। अस्मे इति। अस्मभ्यमित्यर्थः। भ्यसः शे-आदेशः, "लशक्वतद्धिते" इति शकार इत्। "शेषे लोपः"। अस्मे इति रूपम्। अद्विवचनत्वादप्राप्तौ वचनम्। यद्यपि छान्दसमिदं बैदिकप्रक्रियायामेव निबन्ध्यं, तथापि "अस्मे इति" "त्वे इति" इत्याद्यवग्रहे लोकार्थत्वस्यापि सत्त्वादिह तन्निबन्धनम् , पदपाठस्याधुनिकत्वात्।

तत्त्व-बोधिनी

शे ८३, १।१।१३

शे इति। छान्दसमपीदं सन्दर्भशुध्यर्थमुक्तामित्याहुः। अस्मे इति। अस्मभ्यमित्यर्थः। "सुपां सुलु"गिति भ्यसः शेआदेशः। "शेषे लोपः"।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ निपातः १।१ १५ एकाच् १।१ अनाङ् १।१ प्रगृह्यम् १।१ ११

समासः॥

एकश्च असौ अच्च एकाच् कर्मधारयसमासः।
न आङ् अनाङ् नञ्तत्पुरुषः

अर्थः॥

एकाच् यः निपातः, तस्य प्रगृह्यसंज्ञा भवति, आङं वर्जयित्वा।

उदाहरणम्॥

अ अपेहि, अ उपक्राम। इ इन्द्रं पश्य। उ उत्तिष्ठ॥

काशिका-वृत्तिः

निपात एकाजनाङ् १।१।१४

एकश्च असावच्च एकाच्, निपातो य एकाचाङ्वर्जितः स प्रगृह्यसंज्ञो भवति। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिश्ठ। आ एवं नु मन्यसे। आ एवं किल तत्। निपातः इति किम्? चकारत्र। जहारात्र। एकाचिति किम्? प्राग्नये वाचमीरय। अनाङिति किम्? आ उदकान्तात्, ओदकान्तात्। ईषदर्थे त्रियायोगे मर्याऽदाभिविधौ च यः। एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्।

लघु-सिद्धान्त-कौमुदी

निपात एकाजनाङ् ५५, १।१।१४

एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात्। इ इन्द्रः। उ उमेशः॥अवाक्यस्मरणयोरङित्; आ एवं नु मन्यसे। आ एवं किल तत्। अन्यत्र ङित् ; आ ईषदुष्णम् ओष्णम्॥

न्यासः

निपात एकाजनाङ्। , १।१।१४

एकाजिति बहुव्रीहिर्वाऽयं स्यात्,कर्मधारयो वा? यदि बहुव्रीहिः, प्रशब्द- स्यापि प्रगृह्सञ्ज्ञा स्यात्। ततश्च "प्रोपाभ्याम्" १।३।४२ इति निर्देशो नोपप- द्येत, प्राग्नय इति च प्रत्युदाहरणम्। तस्मात् कर्मधारयोऽयमिति मनसि कृत्वाह- "एकश्चासावच्छेत्येकाच्" इति। "अ अपेहि" इत्यादीनि त्रीणि च्छान्दसान्युदाहरणानि; इतरत् तु लौकिकम्। तत्र "आ एवं नु मन्यसे" इत्यत्राकारो वाक्यापरिपूरणार्थः। "आ एवं किल तत्" इत्यत्र तु स्मरणार्थः। "चकारात्र" इति। करोतेर्लिट्। "परस्मैपदानाम्" ३।४।८२ इत्यादिना तिपो णल्, वृद्धिः, रपरत्वम्। "द्वर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावेन द्विर्वचनम्। उरत्त्वम् ७।४।६६। "कुहोश्चुः" ७।४।६२ इति चुत्वम्। भवत्ययं णलकार एकाच्, न तु निपातः। "प्राग्नये" इति। प्रशब्दो भवति निपातः, न त्वेकाच्। तेन "प्लुतप्रगृह्या अचि" ६।१।१२१ इति प्रकृतिभावो न भवति। "अकः सवर्णे" ६।१।९७ इति दीर्घत्वं तु भवत्येव। आकारोऽत्र हि ङिद्विशिष्ट उपात्तः, तस्य न ज्ञायते- क्व च ङित्त्वम्, क्व च नेति। अतो ङित्त्वाङित्त्वयोर्विषयविभागप्रदर्शनार्थमाह- "ईषदर्थे" इत्यादि। तत्रेषदर्थे-आ-उष्णम्- ओष्णमिति।ईषदुष्णमित्यर्थः। क्रियायोगे उपसर्गसञ्ज्ञायां ङिद्विशिष्ट एव पठ()ते। प्रपरापसमन्ववनिर्दुव्र्याङन्यधयोऽप्यतिसूदभयश्च। प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र॥ इति। आ इहि- एहि। आ अत्ति= आत्ति। मर्यादाभिविध्योरपि ङिद्विशिष्ट एव पठ()ते, "आह मर्यादाभिविध्योः" (२।११३) इति। मर्यादा= ,सीमा; अवधिः। आ उदकान्तात्= ओदकान्तात् प्रियं प्रोधमनुव्रजेत्। अभिविधिः = अभिव्याप्तिः। आ अहिच्छत्रात्, आहिच्छत्रं वृष्टो देवः। अहिच्छत्रं गृहीत्वा वृष्टो देव इत्यर्थः। ङिद्विशिष्टस्य "अनाङ" इति प्रगृह्सञ्ज्ञाप्रतिषेधात् स्वरसन्धिर्भवति। अथ "एतमातम्" इत्यत्रैतदः "द्वितोयाटौस्त्वेनः" (२।४।३५) इत्येनादेशः कस्मान्न भवति? "अन्वादेशे" इति तत्रानुवत्र्तते। अस्ति चेहान्वादेश इत्यस्ति प्राप्तिः? यथा न भवति तथा तत्रैव प्रकरणे वृत्तिकारः स्वयमेव वक्ष्यतीति(का।१६२) पुनरिह नोच्यते। "आतम्" इति। आकारे तकारो मुखसुखार्थः। ये तु पुरेतमाङमिति ङकारसहितमाकारं पठन्ति तेषां ङितं विद्यादिति वचनमनर्थकं स्यात्; ङकारसहितस्य पाठादेव ङित्त्वविज्ञानात्। तस्मात् तकारपर एवायमाकारः पठितव्यः। " वाक्यस्मरणयोः" इति। वाक्यशब्देन वाक्यार्थ उक्तः; अबिधेयेऽभिधानोपचारात्। प्रक्रान्तं हि वाक्यार्थं किञ्चिदपेक्ष्येदं प्रयुज्यते- "आ एवं नु मन्यसे" इति। एवमयं वाक्यार्थो विज्ञायत इत्यथः। पूर्वप्रक्रान्तवाक्यार्थप्रदर्शनपरोऽयमाकारः प्रयुक्तः। अथ वा- पूर्वप्रक्रान्तवाक्यार्थस्यान्यथाकरणमिदं प्रयुज्यते, "आ एवं नु मन्यसे" इति, नैवं पूर्वममंस्थाः, सम्प्रति त्वेवं मन्यस इति। अथ वा- वाक्याशब्देन वाक्यमेवोच्यते,

वाक्यावयवो निरर्थक एवाकारः प्रयुज्यत इति। स्मरणं स्मृतिः, तत्र य आकारो वत्र्तते स्मृतिसूचकः,स ङिन्न भवति। "आ एवं किल तत्", एवमिदं विज्ञातमित्यर्थः। ज्ञातं स्मृतमेव। अथ वा- स्मत्र्तव्यार्थविषयः पूर्वमाकारः प्रयुज्यते। "आ" इति स्मतेरुत्तरकालमर्थ आख्यायते। "आ" इत्येतस्यैवं किल तदिति भवत्ययमर्थ इत्यर्थः। वाक्यस्मरणयोराकारस्य प्रगृह्रसञ्ज्ञास्त्येवेति "प्लुतप्रगृह्रा अचि" ६।१।१२१ इति प्रकृतिभावः। तेन "वृद्धिरेचि" ६।१।८५ इति वृद्धिर्न भवति।

बाल-मनोरमा

निपात एकाजनाङ् १०४, १।१।१४

निपात एकाच्। "प्रगृह्र"मित्यनुवर्तते, पुँल्लिङ्गतया च विपरिणम्यते। एकाश्चासावच्चेति कर्मधारयः। तदाह--एकोऽजित्यादिना। इ विस्मये इति। इ इति चादित्वान्निपातः। स च आश्चर्ये वर्तत इत्यर्थः। इ इन्द्रः। उ उमेशः। इ इति उ इति निपातः। सम्बोधने उभयोरपि एकाच्त्वान्निपातत्वाच्च प्रगृह्रत्वान्न सन्धिः। "अना"ङित्यत्र ङकारानुबन्धस्य प्रयोजनमाह - अनाङित्युक्तेरिति। आ एवमिति। पूर्व प्रक्रान्तवाक्यार्थस्याऽन्यथात्वद्योतकोऽयमाकारः। पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः। आ एवमिति। स्मरणद्योतकोऽयमाकारः। इहोभयत्रापि आकारस्य ङित्त्वाऽभावान्न पर्युदासः। ङित्त्विति। ङित्तु आकारः प्रगृह्रो न भवति, अनाङिति पर्युदासादित्यर्थः। ओष्णमिति। आ-उष्णमित्यत्र आकारस्य ङित्वात्प्रगृह्रत्वाऽभावे सति आद्गुणः। ननु प्रयोगदशायां ङकारस्याऽश्रवणाविशेषान्ङिदङिद्विवेकः कथमित्यत आह-वाक्येति। प्रक्रान्तवाक्यार्थस्यान्यथात्वे स्मरणे च अङित्। अन्यत्र=ईषदाद्यर्थे गम्ये, ङिदिति विवेकः--भेदोऽवगन्तव्य इत्यर्थः।

तथाच भाष्यम्-"ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातांङितं विद्याद्वाक्यस्मरणयोरङित्॥" इति॥ "एकोऽच् यस्ये"ति बहुव्रीहिस्तु नाश्रितः, तथा सति "प्रेद"मित्यादाबतिप्रसङ्गात्।

तत्त्व-बोधिनी

निपात एकाजनाङ् ८४, १।१।१४

निपात एकाच्। निपातः किम्?। अततेर्डः। अः। "हे अ आगच्छ"। अत्र प्रगृह्रसंज्ञा मा भूत्। एकग्रहणाऽभावे "येन विधि"रिति सूत्रात्तदन्तलाभे "प्रेद"मित्यत्र स्यादत उक्तम्--एक इति। "एका"जिति तु न बहुव्रीहिः, उक्तातिप्रसङ्गतादवस्थ्यात्। अतः "पूर्वकालैके"ति कर्मधारय एव। ननु "निपातोऽना"तित्युक्ते हलन्तस्य सत्यपि प्रगृह्रत्वे प्रयोजनाऽभावादजन्ते प्राप्ते अज्ग्रहणसामथ्र्यादज्रूपस्यैव निपातस्य प्रगृह्रत्वे सिद्धे किमेकग्रहणेन?। न च "पुरोऽस्ती"त्यादौ हलन्तस्य संज्ञायां सत्यां प्रकृतिभावादतो रोरितिरोरुत्वं न स्यादतोऽज्ग्रहणसामथ्र्यमुपक्षीणमित्येकग्रहणमावश्यकमिति वाच्यम्; प्रगृह्रसंज्ञां प्रति रुत्वस्याऽसिद्धतया रेफान्त[स्यैत]स्य प्रगृह्रसंज्ञाऽभावेन दोषाऽप्रसक्तेः। न च सान्तस्य कृता प्रगृह्रसंज्ञा एकदेशविकृतन्यायेन रेफान्तस्यापि स्यादेवेति प्रकृतिभावादुत्वाऽभावप्रसङ्गस्तदवस्थ इति वाच्यम्; प्रगृह्रसंज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्याऽसिद्धत्वात्प्रकृतिभावाऽप्रवृत्तेः। सकारान्तस्य तु न किंचिदपि सिद्धकाण्डस्थं प्रयोजनं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्येत। न चाज्ग्रहणसामथ्र्यादजन्तस्यैव प्र परा अपेत्यादिनिपातस्य प्रगृह्रसंज्ञा स्यान्न त्वज्रूपनिपातस्यैति वैपरीत्यशङ्कानिवारणार्थमेकग्रहणमिति वाच्यम्; अनाङ्ग्रहणवैयथ्र्यापत्तेः , "व्याहरति मृग" इत्यादिनिर्देशविरोधाच्चोक्तशङ्काया अप्रवृत्तेः। किंच "निपातोऽजना"ङित्युक्तेऽप्यनाङिति प्रतिषेधसामथ्र्यान्निपातस्य विशेषणत्वाभ्युपगमे तदन्तविध्यप्रवृत्त्या निपातरूपो योऽच्स प्रगृह्र इत्यर्थलाभादज्रूपस्यैव निपातस्य प्रगृह्रत्वं सिद्धमिति नास्त्येव प्रयोजनमेकग्रहणस्य। नन्वेवमपि समुदायनिवृत्त्यर्थमेकग्रहणमावश्यकमेव। अन्यथा "ऐउ अपेही"त्यत्रैकाज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यान्नाऽवयवानामिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति

चेन्न; "अ"जित्येकत्वस्य विवक्षयैव
समुदायनिरासंभवात्समुदायसंज्ञयाऽवयवानामननुग्रहेणैकाज्द्विर्वचनन्यायस्याऽप्यप्रवृत्तेः। एकस्मिन्निपाते
संज्ञाविधानसंभवेन निपातसमुदायस्य निपातग्रहणेनाऽग्रहणाच्च।
अत्राहुर्भाष्यकाराः-"अच्समुदायग्रहणशङ्कनिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसङ्ख्या न विवक्ष्यते
किंतु जातिरेव निर्दिश्यते" इति। तेन "हलन्ताच्चे"ति सनः कित्त्वात् "दम्भ इच्चे"तीत्त्वे "धिप्सती"त्यादि सिद्धम्।
हल्ग्रहणस्य व्यक्तिपरत्वे तु योऽत्रैकः समीपो हल् नकारो, न ततः परः सन्, यस्माच्च परः सन् भकारान्नासाविकः समीप
इति कित्त्वं न स्यात्, ततश्च नलोपो न स्यात्। वस्तुतस्तु अपृक्तसंज्ञायामेकग्रहणमुक्तार्थज्ञापकमित्याश्रित्य प्रकृतसूत्रे
एकाज्ग्रहणं त्यक्तुं शक्यम्।?त #एव मनोरमायामनाङिति पर्युदासादेवाऽज्रूषनिपाते लब्धे निपातग्रहणमुत्तरार्थं
सत्स्पष्टप्रतिपत्त्यर्थमिहैव कृतमिति निपातग्रहणस्यैव प्रयोजनमुक्तं न त्वेकाज्ग्रहणस्य। अत्र नव्याः--यदुक्तं
मनोरमायाम्-"अनाङिति पर्युदासा"दित्यादि, तच्चिन्त्यम्, "ओत्"सूत्रे भाष्यकारैः प्सज्यप्रतिषेधस्यैवाङ्गीकृतत्वात्।
नच लभ्यभेदाऽभावात्प्रौढिवादमात्रं भाष्यमिति वाच्यम्;-अस्मादेव भाष्यवचनाल्लक्ष्यभेदोऽप्सतीति सुवचत्वात्।
तथाहि-अततेर्डः-अः। "अकारो वासुदेवः स्या"दिति वचनाद्रूढिशब्दो वा। अनेन "अ" शब्देन सह "अङ्भर्यादाभिविध्योः"
इति आङोऽव्ययीभावे सवर्णदीर्घे "अव्ययीभावश्चे"ति नपुंसकत्वाद्ध्रस्वत्वे सोरम्यमि पूर्वे च कृते "अ"मिति रूपं
भाष्यकृत्संमतम्। तथा इणो निष्ठायामितः, वेञस्तु निष्ठायां संप्रसारणे उतः। अम् इतः-एतः, अम् उतः-ओतः"
इत्यासमुद्रक्षिति-वत्समासे रूपं च तत्संमतम्। तत्र पर्युदासपक्षे अमि पूर्वो गुणश्च न सिध्यति।
अशब्दस्याङ्()भिन्नत्वात्स्थानिवद्भावेन निपातत्वाच्च प्रगृह्यत्वात्। प्रसज्यप्रतिषेधाश्रये तु सिध्यति, तस्याङ्()त्वेन
प्रगृह्यत्वनिषेधात्। न चैतादृशप्रयोगोऽप्रामाणिक इति वक्तुं युक्तम्, प्रकृतभाष्यस्यैव प्रमाणत्वात्। अन्यथा हि
भाष्यकारेङ्गितमात्रावलम्बनेन तत्र प्राचां ग्रन्थानामधिक्षेपाय भवतां प्रवृत्तयो व्याहन्योरन्नित्याद्याहुः। आङ्वर्जं इति।
प्रतिषेधपक्षे तु प्रगृह्यः स्यादित्येतदुत्तरमिदं द्रष्टम्। वर्ज्यत इति वर्जः। वृजेण्यन्तात्कर्मणि घञ्। वर्जनीय इत्यर्थः। आङो न
भवतीति यावत्। आ एवमिति। पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः। पूर्वमित्थं नामंस्था इदानीं त्वेवं
मन्यसे इत्यर्थः। आ एवं किलेति। स्मरणद्योतकोऽयमाकारः। वाक्यस्मरणयोरित्यादि। अत्रायमाशयः-"ईषदर्थे
क्रियायोगेमर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्।" इति भाष्यस्याऽङिल्लक्षण एव तात्पर्यं,
लाघवात्। अन्यस्य ङित्त्वं त्वर्थसिद्धम्। "ईषदर्थ#ए-"इत्यादिस्त्वेकदेशानुवादः। एवंच "अभ्र आँ अप"इत्यत्र
सप्तम्यर्थवृत्तेरप्याकारस्य ङित्वात् "आङोऽनुनासिकश्छन्दसी"ति प्रवर्तत इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ओत् १।१ १६ निपातः १।१ १४ प्रगृह्यम् १।१ ११

अर्थः॥

ओदन्तः निपातः प्रगृह्यसंज्ञकः भवति।

उदाहरणम्॥

आहो इति, उताहो इति। नो इदानीम्। अथो इति। अहो अधुना।
काशिका-वृत्तिः

ओत् १।१।१५

निपातः इति वर्तते। तस्यौकारेण तदन्तविधिः। ओदन्तो यो निपातः स प्रगृह्यसंज्ञो भवति। आहो इति। उताहो इति।
लघु-सिद्धान्त-कौमुदी
ओत् ५६, १।१।१५

ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः॥
न्यासः
ओत्। , १।१।१५

बाल-मनोरमा
ओत् १०५, १।१।१५

ओत्। "निपात" इत्यनुवर्तते। "ओ"दिति तस्य विशेषणमतस्तदन्तविधिः। "प्रगृह्य"मित्यनुवर्तते, पुँल्लिङ्गतया च विपरिणम्यते, तदाह--ओदन्त इत्यादिना। अहो ईशा इति। अनेकाच्त्वात्पूर्वसूत्रेणाऽप्राप्तौ वचनम्।

तत्त्व-बोधिनी
ओत् ८५, १।१।१५

ओत्। निपात इति किम्?। देवोऽसि, वायवायाहि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सम्बुद्धौ ७।१ ओत् १।१ १५ शाकल्यस्य ६।१ १७ इतौ ७।१ १७ अनार्षे ७।१ १७ प्रगृह्यम् १।१ ११

समासः॥

न आर्षः, अनार्षः, तस्मिन् अनार्षे, नञ्तत्पुरुषसमासः

अर्थः॥

सम्बुद्धि-निमित्तकः यः ओकारः, तस्य प्रगृह्यसंज्ञा भवति, शाकल्यस्य आचार्यस्य मतेन, अनार्षे (अवैदिके) इतौ परतः॥ शाकल्यस्य आचार्यस्य मतेन प्रगृह्यसंज्ञा भविश्यति, अन्येषाम् आचार्याणां मतेन न भविष्यति। तेन शाकल्यग्रहणेन विकल्पः अपि सिध्यति॥

उदाहरणम्॥

(शाकल्यमते) वायो इति, (अन्येषां मते) वायविति। भानो इति, भानविति। अध्वर्यो इति, अध्वर्यविति॥
काशिका-वृत्तिः
सम्बुद्धौ शाकल्यस्यैतावनार्षे १।१।१६

ओतिति वर्तते। सम्बुद्धिनिमित्तो य ओकारः स शाकल्यस्य आचार्यसय् मतेन प्नगृह्यसंज्ञो भवति, इतिशब्दे अनार्षे अवैदिके परतः। वायो इति, वायविति। भानो इति, भानविति। सम्बुद्धौ इति किम्? गवित्ययमाह। अत्र अनुकार्यानुकरणयोः भेदस्य अविवक्षितत्वात्, असत्यर्थवत्त्वे विभक्तिर्न भवति। शाकल्यग्रहणं विभाषाऽर्थम्। इतौ इति किम्? वायो ऽत्र। अनार्षे इति किम्? एता गा ब्रहमबन्ध इत्यब्रवीत्।

लघु-सिद्धान्त-कौमुदी

सम्बुद्धौ शाकल्यस्येतावनार्षे ५७, १।१।१६

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे। विष्णो इति, विष्ण इति, विष्णविति॥

न्यासः

सम्बुद्धौ शाकस्येतावनार्षे। , १।१।१६

"सम्बुद्धिनिमित्तः" इति। सम्बुद्धिर्निमित्तं यस्य स तथोक्तः। एतेन "सम्बुद्धौ" इत्यस्य निमित्तसप्तमीत्वं दर्शयति। परसप्तम्यां त्वस्याम् "हे त्रपो" इत्यत्र न स्यात्, "स्वमोर्नपुंसकात्" ७।१।२३ इति सम्बुद्धेर्लुप्तत्वादिति भावः। "सम्बुद्धौ च" ७।३।१०६ इति वत्र्तमाने "ह्रस्वस्य गुणः" ७।३।१०८ इत्यनेन यो गुणो विधीयते, स सम्बुद्धिनिमित्तः, तस्य सम्बुद्धिनिमित्तत्वमुपादाय विहितत्वात्। "गवित्ययमाह" इति। केनचिद् गौरिति वक्तव्ये शक्तिवैकल्याद् "गो" इत्युक्तम्, तमन्यो यदानुकरोति, तत्रैतत् प्रत्युदाहरणम्। ननु चानुकार्येणार्थेनार्थवत्त्वात् प्रतिपदिकत्वे सति विभक्त्यात्र भवितव्यमित्यत आह- "अत्र" इत्यादि। अत्रानुक्रियमाणस्यानुकरणस्य यदि भेदो विवक्ष्यते, ततोऽर्थवत्तायां सत्यां स्याद्विभक्तिः, स तु न विवक्ष्यत इति कुतस्तस्याः प्रसङ्गः? न हीह शब्दशास्त्रे वस्तुनः सत्तैव शब्- संस्कारस्य प्रधानं कारणम्, किं तर्हि, विवक्षा च। सा चेह नास्ति। "शाकल्यग्रहणं विभाषार्थम्" इति। एतेन पूजार्थताशङ्कां निरस्यति। यदि हि पूजार्थमेव तत् स्यात्, विकल्पो न भवेदिति भावः॥

बाल-मनोरमा

संबुद्धौ शाकल्यस्येतावनार्षे १०६, १।१।१६

संबुद्धौ शाकल्यस्येति। सम्बुद्धाविति निमित्तसप्तमी, ओदित्यनुवृत्तेन सहाऽन्वेति। "प्रगृह्न"मित्यनुवर्तते, स च पुँल्लिङ्गतया विपरिणम्यते। ऋषिः=वेदः। "तदुक्तमृषिणे"त्यादौ तथा दर्शनात्। ऋषौ भवः--आर्षः, न आर्षः-अनार्षः। अवैदिके इतिशब्दे परत इत्यर्थः। शाकल्यग्रहणाद्विकल्पस्तदाह--संबुद्धिनिमित्तक इति। विष्णो इतीति। अत्र ओकारो "ह्रस्वस्य गुण" इति सम्बुद्धिनिमित्तकः। अत्र ओदन्तत्वेऽपि निपातत्वाऽभावादप्राप्ते विभाषेयम्। "विष्ण"वितीति प्रगृह्नत्वाऽभावे रूपम्।

तत्त्व-बोधिनी

संबुद्धौ शाक्ल्यस्यैतावनार्षे ८६, १।१।१६

संबुद्धौ। ऋषिर्वेदः "तदुक्तमृषिणा" इत्यादौ तथा दर्शनादित्याभिप्रेत्याह-अवैदिक इति। संबुद्धौ किम्?। अहो इति। अत्र परत्वाद्विकल्पो मा भूत्। न च "ओ"दिति सूत्रस्य निरवकाशत्वं शङ्क्यम् , "अहो ईशा" इत्यादौ तस्य सावकाशत्वात्। इताविति किम्?। पटोऽत्र।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उञः ६।१ ऊँ १।१ शाकल्यस्य ६।१ १६ इतौ ७।१ १६ अनार्षे ७।१ १६ प्रगृह्यम् १।१ ११

अर्थः॥

उञः प्रगृह्यसंज्ञा भवति, तस्य स्थाने ऊँ-आदेशः च प्रगृह्यसंज्ञकः भवति, शाकल्यस्य आचार्यस्य मतेन, अनार्षे इतौ परतः।

उदाहरणम्॥

उ इति। विति। ऊँ इति॥

काशिका-वृत्तिः

उञः १।१।१७

शाकल्यस्यैतौ अनार्षे इति वर्तते। उञः प्रगृह्यसंज्ञा भवति इतौ शाकल्यस्य आचार्यस्य मतेन। शाकल्यस्य इति विभाषार्थम्। उ इति, विति।

काशिका-वृत्तिः

ऊं १।१।१८

उञः इति वर्तते। उञः इतावनार्षे ऊं इत्ययमादेशो भवति दीर्घो ऽनुनासिकश्च, शाकल्यस्य मतेन प्रगृह्यसंज्ञकश्च। शाकल्यस्य ग्रहणं विभाषाऽर्थम् इह अप्यनुवर्तते। तेन त्रीणि रूपाणि भवन्ति उ इति, विति, ऊं इति।

न्यासः

उञः। , १।१।१७

न्यासः

ऊँ। , १।१।१७

"तेन त्रीणि रूपाणि भवन्ति" इति शाकल्यग्रहणानुवृत्तेः फलं दर्शयति। यदि ह्यत्र शाकल्यग्रहणं नानुवर्त्तेत, तदा पूर्वसूत्रेण यस्मिन् पक्ष उञः प्रगृह्यसंज्ञा न विहिता तस्मिन्ननेनन नित्यम् "ऊँ" आदेशः स्यात्। तत "उ"इति, "ऊँ" इति च द्वे रूपे स्याताम्; न वितीति तृतीयम्। शाकल्यग्रहणानुवृत्तौ तु सत्यां यस्मिन् पक्षे पूर्वसूत्रेण प्रगृह्यसञ्ज्ञा उञो न कृता, तस्मिन्नेन ऊँ आदेशे विभाषा विहिते वितीति तृतीयं रूपं सिध्यति।

न्यासः

ईदूतौ च सप्तम्यर्थे। , १।१।१७

"अध्यस्यां मामकी तनू" इति। एतद् वेदवाक्यं वेदितव्यम्। अत्र "मामकी" "तनू" इति शब्दौ"सूपां सुलुक्" ७।१।३९ इति लुप्तसप्तमीकौ। तत्र यदा अर्थाद्वयव- च्छिद्य स्वरूपे व्यवस्थापनायेतिशब्दः प्रयुज्यते उदाहरणे- "मामकी"इति, "तनू" इति च। तथा स"सोमो गौरी" इत्येतदपि। मामक्यामित्यादेरुपन्यासः सप्तम्यर्थप्रदर्शनार्थः। "डादेशः" इति। सुपां सुलुगित्यादिना ७।१।३९। तत्रेतिशब्दे परतोऽकः सवर्णे दीर्घत्वं ६।१।९७ भवत्येव। "धीती" इत्यादि। "धीतिमतिसुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस् पूर्वसवर्णदीर्घत्वम्, लुग् वा। इतिशब्दे परतोऽकोऽत्रापि सवर्ण-दीर्घत्वं भवत्येव। धीत्येत्यादिना तृतीयार्थवृत्तितां दर्शयति। "वाप्याम()आः, नद्यामातिः" इति "सञ्ज्ञायाम्" २।१।४३ इति सप्तमीसमासः। अथार्थग्रहणे क्रियमाणेऽपि कस्मादेवात्र न भवति, अस्ति ह्यत्रापि सप्तम्यर्थः? नैतदस्ति, अर्थग्रहणसाम-

श्र्यात्। अर्थग्रहणे सति केवलो योऽसंसृष्टः सप्तम्यर्थः स इह गृह्यते। नैवंविधे समासे सप्तम्यर्थः सम्भवति; संविभिन्नोभयरूपत्वाद् वृत्तौ वर्त्तिपदार्थानाम्। एषोऽजहत्स्वार्थायां वृत्तौ परिहार उक्तः, जहत्स्वार्थायां तु तस्यां वाक्यावस्थायामुपसर्जनीभूतो योऽर्थः, तं शब्दो जहातीति सप्तम्यर्थो नास्त्येव। तेनार्थग्रहणे सति समासे प्रगृह्यसञ्ज्ञा न भवति। अथ तपकरणं किमर्थम्? प्लुतनिवृत्यर्थमिति चेत्, न ; असम्भवात्। न प्लुते हीकारोकारन्तं सतप्यमर्थ रूपं किञ्चिदस्ति, यद्व्यावृत्तये तपकरणं क्रियते। गुणान्तरभिन्नानां तुल्यकालानां ग्रहणार्थमिति चेत्, न; अभेदकाच्छास्त्रे गुणानाम् इत्यत आह- "तपरकरणम्" इत्यादि। तपरत्वे ह्रसति यणादेशः स्यात्। ततश्च किमयं दीर्घः, उत ह्रस्व इति सन्देहः स्यात्, स मा भूदिति तपरत्वं क्रियते। "ईदूतौ सप्तमी" इत्यादि। ईदूतौ सप्तमीत्येतावदेव सूत्रमस्तु, किमर्थग्रहणेन? "लुप्तेऽर्थग्रहणाद् भवेत्" इह "सोमो गौरी अधिश्रितः"(ऋ ९।१२।३) इति लुप्ताय- मपि सप्तम्यां प्रगृह्यसञ्ज्ञा यथा स्यादित्येव मर्थग्रहणम्। अत्र हि सप्तम्या अभावात् प्रगृह्यसञ्ज्ञा न स्यात्र्थग्रहणात्? तु भवति, सप्तम्यर्थस्य विद्यमान- त्वात्। "पूर्वस्य चेत्सवर्णोऽसौ" इति। स्यादेतत्()- नैवात्र सप्तम्या लुक् क्रियते,किं तर्हि? "सुपां सुलुक्" ७।१।३९ इत्यादिना पूर्वसवर्णः ईकारः। तत्राकः सवर्णेदीर्घत्वे कृते तस्यान्तवद्भावे सति सप्तमीग्रहणेन ग्रहणादस्त्येव सप्तमी, ततो नार्थोऽर्थग्रहणेनेति। एतच्चायुक्तम्। एवं हि सति आडाम्भावः प्रसज्यते। यद्यत्र पूर्वसवर्णः स्यात्, तदा परत्वादक सवर्णदीर्घत्वं बाधित्वा "आण् नद्याः" ७।३।११२ इत्याटो भाव आपपद्यते, "ङेराम्नद्याम्नीभ्यः" ७।३।११६ इत्यामश्च। भावः प्रादुर्भावः, सत्ता वा। तस्मात् पूर्वल्लुगेव कर्तव्यः,ततश्चासत्यां सप्तम्यां प्रगृह्- सञ्ज्ञा न स्यात्। तसमादर्थग्रहणं कत्र्तव्यम्? न कत्र्तव्यम्; यस्मात् सर्वत्रैव सप्तम्या लुका भवितव्यमिति न क्वचित् सप्तम्यस्ति। उच्यते चेदं वचनम्- "तत्र वचनसामथ्र्याल्लुप्तायामपि तस्यां भविष्यति"? नैतदस्ति; यथो वचनाद् यत्र दीर्घत्वम्, तत्र भविष्यति; यथा- "दृतिं न शुष्कं सरसी शयानम्" (ऋ।७।१०३।२) इति। अत्र सरः शब्दात् परस्याः सप्तम्या "इयाडियाजीकाराणाम्" (का।वा।८२०) इत्यस्मादुप- सङ्ख्यानात् "व्यत्ययो बहुलम्" ३।१।८५ इत्यतो वा दीर्घ ईकारे कृते सप्तमी श्रयूते; ततश्चात्र वचनस्य सावकाशत्वात् "सोमो गौरी अधिश्रितः"(ऋ।९।१२।३) इत्यत्र न स्यात्। "तत्रापि सरसी यदि" इति। यदि सरसीशब्दोऽस्ति तदात्रापि नैवावकाशः। अस्ति च सरसीशब्दः। तथा हि- गौरादिषु४।१।४१ "पिप्पल्यादयश्च" (ग।सू।४७) इति पाठात् पिप्पल्याद्यन्तःपातिनः सरः शब्दादीकारे कृते सरसीति रूपं सम्पद्यते तथा च दक्षिणापथे महान्ति सरांसि "सरस्य" इत्युच्यन्ते। सरसीशब्दस्य प्रगृह्यसञ्ज्ञायां प्रयोजनम्-तत उत्पनायायः सप्तम्या लुकि कृते इतिशब्दे चाध्याह्रते "सरसी" इत्यत्र स्वरसन्ध्य- भावः। तदेवं सरसीशब्दो विद्यत एवेति। "दृतिं न शुष्कं सरसी शयानम्" (ऋ।७।१०३।२) इत्यत्रापि सरसीशब्दो लुप्तसप्तमीक एव प्रयुक्तः तथा च तदेवावस्थितम्। वचनाद् भवि- ष्यतीति प्रत्याख्यातमर्थग्रहणम्। एवं तर्हि - ज्ञापकं स्यात्तदन्तत्वे "ईदूदेद्()- द्विवचनम्" १।१।११ इत्यत्र चत्वारः पक्षा आश्रीयन्ते। इदादयो हि द्विवचनेन विशिष्यन्ते- ईदादियद् द्विवचनमिति; ईदादिभिर्वा द्विवचनम् इति, ईदाद्यन्तं यद् द्विवचनमिति; द्विवचनप्रकृतिर्वोभाभ्याम्- द्विवचनान्तमीदाद्यन्तं यच् शब्दरूपमिति। इदादीभिर्वा द्विवचनं विशिष्य पश्चात् तेनेदन्तेन द्विवचनेन प्रकृतिः, ईदाद्यन्तं यद् द्विवचनमं शब्दरूपमितीदाद्यन्तं द्विवचनान्तमित्यर्थः। तत्र तृतीये पक्षे दोष उक्तः-"कुमार्योरगारं कुमार्यगारम्, व्दवोरगारं वध्वगारमम्" इत्यत्र प्रगृह्- सञ्ज्ञा प्राप्नोति; एतदीदाद्यन्तं द्विवचनान्तं च भवति प्रत्ययलक्षणेनेति चतुर्थे पक्षेऽपि दोष उक्तः। अशुक्ले वस्त्रे शुक्ले सम्पद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्र प्राप्नोति। शुक्लशब्दाच्()च्विप्रत्()ययान्तत् "नपुंसकाच्च्" ७।१।१९ इत्यौङः शीभावे कृते "अध्ययादाप्सुपः" २।४।८२ इति लुक्। एतद्धीदाद्यन्तं द्विवचननान्तं भवति प्रत्ययलक्षणेनेति। "तदन्तत्वे" इति अनेन तृतीयचतुर्थपक्षावुपलक्षयति। तदन्तत्वे तदन्तपक्षे तृतीये चतुर्थे च ज्ञापकं भवेदेतदर्थग्रहणम् इति। इह प्रगृह्यप्रकरणे प्रत्ययलोपलक्षणेन प्रगृह्यसञ्ज्ञा न भवतीति। यदि हि स्यादर्थग्रहणमनर्थकं स्यात्।एतावद् वक्तव्यम्- "ईदूतौ च सप्तमी" इति। सप्तम्या लुकि कृते प्रत्ययलक्षणेन सप्तमीसहचरितौ यावीदूतौ सप्तम्यां परतो वा यावीदूतौ तयोः प्रगृह्यसञ्ज्ञा भवेत्ये- तेति नार्थोऽर्थग्रहणेन। अर्थग्रहणाद्धि ज्ञायते- "प्रत्ययलक्षणेन प्रगृह्यसञ्ज्ञा न भवति" इति। तेन तदन्तपक्षद्वये यो दोषः उक्तः स न भवति। "मा वा पूर्वपदस्य भूत्" इति। पूर्वपदग्रहणे समास

उपलक्ष्यते। यस्मात् समासे सत्येतद्भवति पूर्वपदमुत्तरपदमिति। तदेतदुक्तं भवति- वाप्य()आओ नद्यातिरित्यादौ समासे प्रगृह्यसञ्ज्ञा मा भूदित्येवमर्थमर्थग्रहणमिति। यथा च तस्मिन् सति समासे प्रगृह्यसञ्ज्ञा भवति, तथा पूर्वमेव प्रतिपादितम्।

बाल-मनोरमा

उञः १०७, १।१।१७

उञः। एकपदं सूत्रम्। शाकल्यस्य इतौ प्रगृह्यमिति चानुवर्तते। उ इति। ञिदुकारो निपातः। तस्येतिशब्दे परे शाकल्यमते प्रगृह्यसंज्ञा स्यादित्यर्थः। तदाह उञ इतौ वैति। पूर्वोक्तं=प्रगृह्यत्वमित्यर्थः। उ इति। वितीति। "निपात एका"जिति नित्यं प्राप्ते विकल्पोऽयम्। प्रगृह्यत्वपक्षे प्रकृतिभावे प्रथमं रूपम्। तदभावपक्षे यणादेशे द्वितीयं रूपम्।

बाल-मनोरमा

ऊँ १०८, १।१।१७

ऊँ। इदमप्येकपदं सूत्रम्। ऊँ इति दीर्घस्याऽनुनासिकस्य ऊकारस्य लुप्तप्रथमाविभक्तिकस्य निर्देशः। उञ इत्यनुवर्तते, इतौ शाकल्यस्य प्रगृह्यमिति च। तदाह--उञ इताविति। ऊँ ईतीति। उक्तविधे ऊँकारादेशे रूपम्। प्रगृह्यत्वात्प्रकृतिभावः। एतदादेशाऽबावपक्षे पूर्वसूत्रेण प्रगृह्यत्वे सति "उ इती"ति रूपम्। प्रगृह्यत्वस्याप्यभावे सति यणादेशे "विती"ति रूपमिति त्रीणि रूपाणि फलितानि। तदेवमुत्र ऊँ इत्येकमेव सूत्रं विभज्य व्याख्यातम्। एकसूत्रत्वे तु उञ इतौ परे "ऊँ" इत्ययं दीर्घोऽनुनासिकः प्रगृह्यश्चादेशः शाकल्यामते स्यात्। तदभावपक्षे तु "निपात एका"जिति नित्यं प्रगृह्यत्वमित्येतावल्लभ्येत। ततश्च "ऊँ इति " "उ इती"ति रूपद्वयमेव स्यात्, "विती"ति रूपं न लभ्येत। अतो विभज्य व्याख्यातम्।

तत्त्व-बोधिनी

उञः ८७, १।१।१७

उञः। "निपात एका"जिति नित्यं प्राप्ते विभाषेयम्। साक्स्यस्येतौ प्रगृह्यमिति चात्रानुवरत्ते, इत्यत आह--इतौ वा प्रागुक्तमिति। इह "उञ ऊँ" इत्येकमेव सूत्रं योगविभागेन व्याख्यातम्। एकसूत्रत्वे तु उञ इतौ ऊँ शाक्लयस्येत्यर्थात् "ऊँइति " इत्येव रूपं शाकल्यमते सिध्यति। अन्येषां तु मते नित्यं प्रगृह्य इति उ-इतीत्येव रूपं सिध्यति, "विती"ति रूपं तु न सिध्यत्येवेति ज्ञेयम्।

तत्त्व-बोधिनी

ऊँ ८८, १।१।१७

ऊँ। अनुनासिक इति। तेनास्मिन् परे "यरोऽनुनासिके-" इति विकल्पः "यदेतनूँ इति पठसि" "यदेतदूँ" इति वा। एतदर्थमेवात्रानुनासिकग्रहणम्। अन्यथा "यरोञम्यनुनासिको वे"त्येवावक्ष्यत्। "यरो ञमि ञम्वे"त्येवावक्ष्यदित्युक्तौ तु यथासङ्क्यप्रवृत्त्या "अम्मयं" "तन्ने"त्यादिसिद्धावपि "चिन्मयं" "एतन्मुरारि"रिति न सिध्येत्। "कृन्मेजन्तः" "ङमुण्णित्य"मित्यादिनिर्देशाश्रयणे तु प्रतिपत्तिगौरवम्। वस्तुस्तु "यरोऽनुनासिके ञम्वे"त्येव सूत्रयितुं युक्तमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ईदूतौ १।२ च ० सप्तम्यर्थे ७।१ प्रगृह्यम् १।१ ११

समासः॥

सप्तम्याः अर्थः सप्तम्यर्थः, तस्मिन् सप्तम्यर्थे, षष्ठीतत्पुरुषः।

अर्थः॥

सप्तम्यर्थे वर्तमानौ, ईकारान्त-ऊकारान्तौ शब्दौ प्रगृह्यसंज्ञकौ भवतः।

उदाहरणम्॥

सोमो गौरी अधिश्रितः। अध्यस्यां मामकी तनू इति।
काशिका-वृत्तिः
ईदूतौ च सप्तम्यर्थे १।१।१९

शाक्ल्यस्यैतावनार्शे इति निवृत्तम्। ईदन्तम् ऊदन्तं च शब्दरूपं सप्तम्यर्थे वर्तमानं प्रगृह्यसंज्ञं भवति। अध्यस्यां मामकी तनू। मामक्यां तन्वाम् इति प्राप्ते, मांक्याम् मामकी इति, तन्वाम् तनू इति। सोमो गौरी अधि श्रितः। ईदूतौ इति किम्? प्रियः सूर्ये प्रियो अग्ना भवाति। अग्निशब्दात् परस्याः सप्तम्याः डादेशः। सप्तमीग्रहणं किम्? धीती, मती, सुष्टुती धीत्या, मत्या, सुष्टुत्या इति प्राप्ते। अर्थग्रहणं किम्? वाऽप्यश्वः। नद्यातिः। तपरकरणम् असन्देहार्थं। ईदूतौ सप्तमीइत्येव लुप्ते ऽर्थग्रहणाद् भवेत्। पूर्वस्य चेत् सवर्णो ऽसावाडाम्भावः प्रसज्यते। १। वचनाद्यत्र दीर्घत्वं तत्र अपि सरसी यदि। ज्ञापकं स्यात् तदन्तत्वे मा वा पूर्वपदस्य भूत्। २।
बाल-मनोरमा
ईदूतौ च सप्तम्यर्थे ११०, १।१।१८

ईदूतौ च। "प्रगृह्य"मित्यनुवर्तते। तच्च द्विवचनान्ततया विपरिणम्यते। शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिः। "ईदूतौ च सप्तम्या"वित्येव सिद्धेऽर्थग्रहणाद्यत्र सप्तम्या लुकि "यः शिष्यते स लुप्यमानार्थाभिधायी" इति न्यायेन प्रकृतेरेव सप्तम्यर्थे पर्यवसानं तथाविधत्वमीदूदन्तयोर्गम्यते। तथाच सप्तम्यर्थे पर्यवसन्नावीदूदन्तौ शब्दौ प्रगृह्यौ स्त इत्यक्षरार्थः। फलितमाह--सप्तम्यर्थ इत्यादिना। सोमो गौरी इति। गौर्यामित्यर्थः। "सुपां सुलु"गिति सप्तम्या लुक्। प्रगृह्यत्वे प्रकृतिभावान्न यण्। वातप्रमीत्यादिसप्तम्यन्तं तु नात्रोदाहरणम्, तत्र सप्तम्या लुप्तत्वाऽभावेन प्रकृतेः सप्तम्यर्थेऽप्रवृत्तेः। मामकी तनू इति। मामक्यां तन्वामित्यर्थः। "सुपां सुलु"गिति सप्तम्यालुक्। प्रगृह्येभ्यः परत इतिशब्दप्रयोगस्य पदकारैर्नियमितत्वात् पदपाठे "मामकी इति" "तनू इती"त्यत्र प्रगृह्यत्वफलं बोध्यम्। ननु "ईदूतौ च सप्तम्याः" इत्येव सूत्र्यताम्। षट()आ चाऽर्थद्वारा संबन्धो विवक्ष्यतां, ततश्च सप्तम्यर्थे विद्यमानमीदूदन्तमित्यर्थस्यार्थग्रहणं विनैव लाभादर्थग्रहणं किमर्थमिति पृच्छति--अर्थग्रहणं किमिति। कस्म#ऐ प्रयोजनायेत्यर्थः। "कि"मित्यव्ययम्। वृत्ताविति। अर्थग्रहणसामर्थ्याल्लुप्तसप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थो विवक्षितः। ततश्च समासवृत्तौ लुप्तसप्तमीके ईदूदन्तपूर्वपदे सप्तम्यर्थमतिलङ्घ्य उत्तरपदार्थे प्रवृत्ते सति प्रगृह्यसंज्ञा न भवति। मा भूदिति। "माङि लुङ्" सर्वलकारापवादः। वाप्य()आ इति। "वाप्याम्--अ()आ" इति विग्रहे सुप्सुपेति समासे "वाप्य()आ" इति रूपमित्यर्थः। अत्र वाप्यामिति सप्तम्या अधिकरणत्वमवगतं, तच्चाधिकरणकारकं क्रियापेक्षं। तत्र वाप्याम()आओ वर्तत इति क्रियाध्याहारे वर्तमानक्रियायां

वाप्या विद्यमानेऽ()ओ लक्षमया प्रवृतिं()त पुरस्कृत्य समासो वक्तव्यः। एवं च समासे लुप्तसप्तमीकस्य वापीशब्दस्य सप्तम्यर्थमतिलङ्घ्य तत्संसृष्टे आधेयभूतेऽ()ओऽपि प्रवृत्तेः सप्तम्यर्थमात्राविश्रान्त्यभावान्न प्रगृह्यत्वमिति भावः।

तत्त्व-बोधिनी
ईदूतौ च सप्तम्यर्थे ९०, १।१।१८

ईदूतौ च। ईदूताविति किम्?। "प्रियः सूर्ये प्रियो अग्ना भवाति"।?ग्निशब्दात्परस्याः सप्तम्याः "सुपां सुलु"गित्यादिना "डा"देशः। पदकारैः प्रगृह्येषु इतिशब्दुप्रयोगस्य नियमितत्वेन इहापि पदकाले इतिशब्दप्रयोगप्रसङ्गः, स चाऽनिष्ट इति बोध्यम्। सप्तमीग्रहणं किम्?, धीती, मती, सुष्टुती। धीत्या, मत्या, सुष्टुत्या इति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्ण ईकारः। ततः "अकः सवर्णे दीर्घः" इत्येकादेशः। न त्विह "सुपां सुलु"गिति लुक्, ह्रस्वश्रवणापत्तेः। सोमो गौरी इति। "वातप्रमी अत्र" "ययी आसक्त" इत्याद्युदाहरणे सत्यप्यूकारान्तस्य लौकिकोदाहरणाभावादुभयोरपि वेद एवोदाहरणमुक्तम्। मामकी तनू इति। यद्यप्यत्र संहितायां प्रगृह्यप्रयोजनं नास्ति, तथापि "मामकी इति" "तनू इति" पदकाले तदस्त्येव, "स्वायां तनू ऋत्व्येनाधमाना"-मित्यत्र तु संहिताकालेऽप्यस्ति, तथापि "ऋत्यकः" इति पाक्षिकप्रकृतिभावेनाप्येतत्सिद्धं, छन्दसि रूपान्तरस्यापादयितुमशक्यत्वादिति बोध्यम्। सप्तम्या लुगिति। यदि धीत्यादाविव विभक्तेः पूर्वसवर्णे कृते सवर्णदीर्घ एकादेश इति व्याख्यायेत तदा एकादेशं बाधित्वा परत्वादाङ्गत्वात्वाच्च "आण्नद्याः"इत्याट् ङेराम् च स्यादिति भावः। अर्थग्रहणं किमिति। "वाप्य()आ" इत्यत्र यो वापीशब्दः सतु वाप्यधिकरणकद्रव्ये उपसङ्क्रान्तः। "सोमो गौरी" इत्यत्र गौरीशब्दस्तु सप्तम्यर्थमात्रे पर्यवसन्नः, न तु तदधिकरणकद्रव्ये उपसङ्क्रान्तः, वृत्त्याभावादिति भेदः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दाधाः १।३ घु १।१ अदाप् १।१

समासः॥

दाश्च धाश्च इति दाधाः, इतरेतरद्वन्द्वः।
दाप् च दैप् च दाप्, न दाप् अदाप्, नञ्तत्पुरुषः।

अर्थः॥

दारूपाः, धारूपाश्च धातवः घुसंज्ञकाः भवन्ति, दाप्दैपौ वर्जयित्वा। दारूपाः चत्वारः धातवः - डुदाञ् दाने, दाण् दाने, दोऽवखण्डने, देङ् रक्षणे इति। धारूपौ अपि द्वौ धातू - डुधाञ् धारणपोषणयोः, धेट् पाने इति।

उदाहरणम्॥

प्रणिददाति, प्रणिदीयते, प्रणिदाता। प्रणियच्छति। प्रणिद्यति। प्रणिदयते। प्रणिदधाति, प्रणिधीयते, प्रणिधाता। प्रणिधयति। देहि। धेहि।
काशिका-वृत्तिः
दाधा घ्वदाप् १।१।२०

दारूपाश्चत्वारो धातवः, धारूपौ च द्वौ दाब्दैपौ वर्जयित्वा घुसंज्ञका भवन्ति। डुदाञ् प्रणिददाति। दाण् प्रणिदाता। दो प्रणिद्यति। देङ् प्रणिदयते। डुधाञ् प्रणिदधाति। धेट् प्रणिधयति वत्सो मातरम्। अदापिति किम्? दाप् लवने दातं बर्हिः। दैप् शोधने अवदातं मुखम्। घुप्रदेशाः घुमास्थागापाजहातिसां हलि ६।४।६६ इत्येवमादयः।

लघु-सिद्धान्त-कौमुदी

दाधा घ्वदाप् ६२६, १।१।१९

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। घ्वसोरित्येत्त्वम्। देहि। दत्तम्। अददात्, अदत्त। दद्यात्, ददीत। देयात्, दासीष्ट। अदात्। अदाताम्। अदुः॥

न्यासः

दाधा घ्वदाप्। , १।१।१९

"दाधा" इति। दारूपाणां चतुर्णां कृतैकशेषाणां धारूपयोद्र्वयोश्च कृतै कशेषयोद्र्वन्द्वः। ननु च लक्षण प्रततिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्, न तु लाक्षणिकस्य" (व्या।प।३), इत्यनया परिभाषया "दो अवखण्डने" (धा।पा।११४८), "देङ रक्षणे" (धा।पा।९६२), "धेट् पाने" (धा।पा।९०२) इत्येतेषां ग्रहणं न स्यात्? नैतदस्ति; तस्या हि परिभाषायाः "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इत्यपवादोऽ स्ति, तेन सत्यपि लाक्षणिकत्वेदोदेङौ तावद् गृह्ेते। धेटोऽपि लिङ्गाद् ग्रहणमनुमीयते। तत् पुनर्लिङं दैपः पकारानुबन्धः,स हि "अदाप्" इति दाप्प्रतिषेधसामान्य- ग्रहणार्थः क्रियते। यदि चास्याः परिभाषाया इह व्यापारः स्यात्, दैपः पकारानुबन्धकरणमनर्थकं स्यात्। लाक्षणिकत्वादेव ह्रस्य ग्रहणं न भविष्यतीति किं प्रतिषेधेऽस्य ग्रहणेन? ननु लाक्षणिकमपि दारूपं धारूपं च धेटो नोपपद्यत एव, सानुबन्धकस्य ह्रनेजन्तत्वादात्त्वानुपपत्तेः? नैष दोषः यदयम् "उदीचां माङो व्यतीहारे" ३।४।१९ इति मेङ सानुबन्धकस्यात्त्वभूतस्य निर्देशं करोति , तज्ज्ञापयति- नानुबन्धकृत- मनेजन्तत्वम्"(शा।प।१५) इति। ननु च "माङ माने" (धा।पा।११४२) इत्यस्याप्यसौ निर्देशः स्यात्, तत् कथं ज्ञापकम्? नैतदस्ति। "मेङ प्रणिदाने" (धा।पा। ९६१) इत्ययमेव व्यतीहारे वर्तते, न "माङ माने" (धा।पा।११४२) इति। तस्मान् मेङ एवायं कृतात्त्वस्य निर्देशो ज्ञापनार्थः। "प्रणिददाति" इति। "नेर्गदनदपतपदघुमास्यतिहन्ति" ८।४।१७ इत्यादिना घुसञ्ज्ञायां सत्यामिह णत्वं भवति। "प्रणिदाता" इति। तृजन्तम्। "प्रणिद्यति" इति। "ओतः श्यनि" ७।३।७१ इत्योकारलोपः। अशिद्विषये दारूपोऽयं भवतीत्यत्र घुसञ्ज्ञा प्रवत्र्तत एव। "दातं बर्हिः" इति। घुसञ्ज्ञाया अभावात् "दो दद्()घोः" ७।४।४६ इति ददादेशो न भवति। "अवदातम्" इति। अत्रापि "निष्ठा" ३।२।१०२ इति क्तप्रत्ययः।अत्र "अच उपसर्गात्तः" ७।४।४७ इति तकारादेशो न भवति।

बाल-मनोरमा

दाधाघ्वदाप् २१०, १।१।१९

आशीर्लिङि घुसंज्ञाकार्यं वक्ष्यन्घुसंज्ञां दर्शयति-- दाधाघ्वदाप्। "दे"त्यनेन स्वाभाविकाऽऽकारान्तयोः "डु दाञ् दाने" "दाण् दाने" इत्यनयोः, कृतात्वयोः "दो अवखण्डने" "देङ् रक्षणे" इत्यनयोर्लाक्षणिकयोश्च, "धे" त्यनेन स्वाभाविकाकारान्तस्य "डु धाञ् धारणपोषणयो"रित्यस्य, लाक्षणिकस्य "धेट् पाने" इत्यस्य च ग्रहणम्। "गामादाग्रहणेष्वविशेषः" इति परिभाषाबलात्तत्र दाग्रहणेन धारूपस्यापि ग्रहणाच्च। अत एव "दो दद्घो"रित्त्र धेण्निवृत्त्यर्थं दाग्रहणमर्थवत्, दधातेर्हिभावविधानादेव निवृत्तिसिद्धेः। तदाह--दारूपा धारूपाश्चेति।

तत्त्व-बोधिनी

दाधा घ्वदाप् १८२, १।१।१९

दाधा घ्वदाप्। इह दारूपाश्चत्वारः-- डुदाञ् दाने। दाण् दाने। दो अवखण्()डने। देङ् रक्षणे। धारुपौ तु द्वौ--- डुधाञ् धारणपोषणयोः। धेट् पाने। अनुबन्धानामनेकान्तत्वात् "आदेच उपदेशे" इत्यात्वेदोदेङ्धेटामनुकरणे दादारूपत्वमस्ति। एवं च दाश्च दाश्च दाश्च दाः। धाश्च धाश्च धौ। दाश्च धौ च दाधा इति विग्रहः। दाप्दैपौ विनेति। दाप् लवने। दैप् शोधने-- एतद्भिन्ना इत्यर्थः। दैपः पित्त्वमिह प्रतिषेधार्थं, न त्वनुदात्तार्थम्, "अनुदात्तौ सुप्पितौ" इति प्रत्ययस्यैव पितोऽनुदात्तत्वात्। न च दैपो लाक्षणिकत्वान्नाऽस्य प्रतिषेध इति शङ्क्यं, पित्करणस्यानर्थक्यप्रसङ्गात्। इदमेव च दैपः पित्त्वं "गामादाग्रहणेष्वविशेषः" इति परिभाषाया ज्ञापकमित्याहुः। अदाबिति किम्?। दातं बर्हिः। लूनमित्यर्थः। इह "दो दद्घो"रिति दद्भावो न। अवदातं मुखम्। शुद्धमित्यर्थः। इह तु "अच उपसर्गा" दिति तादेशो न।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आद्यन्तवत् ० एकस्मिन् ७।१

समासः॥

आदिश्च अन्तश्च आद्यन्तौ, इतरेतरद्वन्द्वः। आद्यन्तयोः इव आद्यन्तवत्, षष्ठ्यर्थे वतिप्रत्ययः (५।१।११५)

अर्थः॥

एकस्मिन्नपि आदौ इव, अन्तः इव कार्यं भवति

उदाहरणम्॥

औपगवः, आभ्याम्
काशिका-वृत्तिः
आद्यन्तवदेकस्मिन् १।१।२१

असहायसयाद्यन्तौपदिष्टानि कार्याणि न सिध्यन्ति इति अयमतिदेश आरभ्यते। सप्तम्यर्थे वतिः। आदाविव अन्ते इव एकस्मिन्नपि कार्यं भवति। यथा कर्तव्यम् इत्यत्र प्रत्ययाऽयुदात्तत्वं भवति, एवम् औपगवम् इत्यत्र अपि यथा स्यात्। यथा वृक्षाभ्याम् इत्यत्र अतो ऽङ्गस्य दीर्घत्वम् एवम् आभ्याम्, इत्यत्र अपि यथा स्यात्। एकस्मिन्निति किम्। सभासन्नयने भवः साभासन्नयनः, आकारम् आश्रित्य वृद्धसंज्ञा न भवति।
लघु-सिद्धान्त-कौमुदी
आद्यन्तवदेकस्मिन् २८०, १।१।२०

एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात्। सुपि चेति दीर्घः। आभ्याम्॥
न्यासः
आद्यन्तवदेकस्मिन्। , १।१।२०

"असहायस्य" इत्यादिना सूत्रारम्भस्य फलं दर्शयति। इति करणो हेतौ। यस्मादादेरन्तस्य यानि कार्याण्युपदिष्टानि, तान्यविद्यमानसहायस्य न सिध्यन्ति; तस्मादतिदेशोऽयमारभ्यते। द्वितीयादिकं हि सहायमपेक्ष्याद्यन्तशब्दौ प्रवर्त्तते।

तथा हि - लोकः सति हि परस्मिन् सहाये पूर्वाभावे चादिरिति व्यपदिशति, सति च पूर्वस्मिन्पराभावे चान्त इति। अतस्तदुभयमसहाये नास्तीति। तत्राद्यन्तप्रतिबद्धानि कार्याणि न स्युः, यद्ययमतिदेशो आरभ्यते। "एकस्मिन्" इति वचनात् "आद्यन्तवत" इत्यत्र सप्तमीसमर्था- द्वतिर्गम्यत इत्याह- "सप्तम्यर्थे वतिः" इति। आद्यन्तयोरिवाद्यन्तवत्, "तत्र तस्येव" ५।१।११५ इति वतिः। "औपगवम्" इत्यत्राप्यादिव्यपदिष्टं कार्यमतिदेशस्य फलम्। प्रत्ययाद्युदात्तत्वं ह्रादेरुपदिष्टम्, "आद्युदात्तश्च" ३।१।३ इति वचनात्। " आभ्याम्" इति। अत्रान्तोपदिष्टं दीर्घत्वं ह्रन्तस्योपदिष्टम्, "अलोऽन्त्यस्य" १।१।५१ इति वचनात्। इदमो भ्याम्, त्यदाद्यत्वम्, ७।२।१०२, "अतो गुणे" ६।१।९४ पररूपत्वम्, "हलि लोपः" ७।२।११३ इतीद्रूपस्य लोपः, "सुपि च" ७।३।१०२ इति दीर्घः।

बाल-मनोरमा

आद्यन्तवदेकस्मिन् , १।१।२०

ननु इदम् भ्यामिति स्थिते त्यदाद्यत्वे पररूपे इदो लोपे च कृते अ-भ्याम् इति स्थिते अङ्गस्याकारात्मकत्वाददन्तत्वाभावात्कथं "सुपि चे"ति दीर्घ इत्यत आह-आद्यन्तवदे। आदित्वान्तत्वयोर्नित्यमन्यसापेक्षत्वादेकस्मिन् तत्प्रयुक्तकार्याणामप्राप्तौ तत्पाप्त्यर्थमिदमारभ्यते।एकशब्दोऽसहायवाची। "एके मुख्यान्यकेवलाः" इत्यमरः। सप्तम्यन्ता"त्तत्र तस्येवे"ति वतिः, एकस्मिन्नित्युपमेये सप्तमीदर्शनात्। वतिश्च द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं संबध्यते। तदाह-एकस्मिन्नित्यादि। तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त इव च असहायेऽपि स्यादित्यर्थः। एकस्मिन्निति किम्?। दरिद्रातेरेरजिति न। आदिवत्त्वफलम्-औपगव इत्यादौ अण्प्रत्ययाद्युदात्तत्वम्। आभ्यामित्यादौ अन्तवत्त्वाद्दीर्घादिर्भवति। भाष्ये तु आद्यन्तवदित्यपनीय व्यपदेशिवदेकस्मिन्निति सूत्रपाठः शिक्षितः। तेन इयायेत्यादौ "एकाचो द्वे प्रथमस्ये"ति द्विर्भावः, धुगित्यत्र व्यपदेशिवत्त्वेन धात्ववयवत्वाद्भष्भावश्च सिध्यति। विशिष्टोऽपदेशो-व्यपदेश=मुख्यो व्यवहारः। सोऽस्यास्तीति व्यपदेशी। मुख्य इति यावत्। एकस्मिन् तदादित्वतदन्तत्वतदवयवत्वादिप्रयुक्तकार्यं स्यादिति फलितम्। ()इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ।२।४।३२।

इदम्--भिसिति स्थिते त्यदाद्यत्वे पररूपे "हलि लोपः" इति इदो लोपे अ-भिस् इति स्थिते "अतो भिस ऐ"सिति प्राप्ते--नेदमदसोरकोः। "अतो भिस ऐ"सित्यतो भिस ऐसित्यनुवर्तते। "अको"रिति षष्ठो। न विद्यते ककारो ययोरिति बहुव्रीहिः। तदाह--अककारयोरित्यादिना। एत्वमिति। "बहुवचने झलीत्यनेने"ति शेषः। ङयि विशेषमाह-अत्वमित्यादि। अत्वं ङेः स्मै इत्यन्वयः। इदम् एव इति स्थिते स्मैभावात्परत्वादनादेशे "विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न्यायेन पुनः स्मैभावो न स्यादित्यत आह--नित्यत्वादिति। कृतेऽकृतेऽप्यनादेशे प्रवृत्तियोग्यतया स्मैभावस्य नित्यत्वादनादेशात्प्रागेव स्मैभावे कृतेऽनादेशस्य हलि लोपेन बाध इति भावः। आभ्यामिति। पूर्ववत्। एभ्य इति। त्यदाद्यत्वं, पररूपत्वं, हलि लोपः, "बहुवचने झल्ये"दित्येत्वंचेति भावः। अस्मादिति। त्यदाद्यत्वं, पररूपत्वं हलि लोपःस "ङसिङ्योः" इति स्मादिति भावः। अस्येति। त्यदाद्यत्वं, पररूपत्वं, स्यादेशः, हलि लोपश्चेति भावः। अनयोरिति। त्यदाद्यत्वंस पररूपत्वम्, "अनाप्यकः" "ओसि चे"त्येत्वम्, अयादेशश्चेति भावः। एषामिति। आमि त्यदाद्यत्वं, पररूपत्वं, हलि लोपः, एत्वषत्वे इति भावः। अस्मिन्निति। अत्वं, पररूपत्वं, स्मिन्, हलि लोपश्चेति भावः। ए()इआति अत्वं, पररूपत्वं, हलि लोपः, एत्वषत्वे इति भावः। ककारयोगे त्विति। "अव्ययसर्वनाम्नामकच् प्राक् टे"रित्यनेन इदंशब्दस्य, अकचि सतीत्यर्थः। अयकमिति। अकचि सति निष्पन्नस्य इदकम्शब्दस्य "तन्मध्यपतिन्यायेन "इदमो मः" इत्यादाविदंग्रहणेन ग्रहणान्मत्वादिकमिति भावः। "अनाप्यकः" इति, "हलि लोपः" इति, "नेदमदसोरको"रिति च नेह प्रवर्तते। ककारयोगे तन्निषेधादित्याशयेनाह--इमकेन इमकाभ्यामिति। इत्यादीति। इमकैः। इमकस्यै। इमकेभ्यः। इमकस्मात्। इमकस्य, इमकयोः २, इमकेषाम्। इमकस्मिन् इमकेषु।

तत्त्व-बोधिनी
आद्यन्तवदेकस्मिन् ३०८, १।१।२०

आद्यन्तवत्। "सत्यन्यस्मिन् यस्य पूर्वो नास्ति स आदिः", "सत्यन्यस्मिन्यस्य परो नास्ति सोऽन्तः"इति लोके प्रसिद्धं, तदुभयमेकस्मिन्नसहाये न संभवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि नस्युरतोऽयमतिदेश आरभ्यते। नच परत्वात्, "सुपिचे"ति दीर्घे पश्चाद्धिलि लोपे सति आभ्यामित्यादि सिध्यतीति किमत्राद्यन्तवत्सूत्रोपन्यासेनेति शङ्क्यम्, नित्यत्वाद्धलि लोर इत्यस्य दीर्घात्पूर्वमेव प्रवृत्तेः। "एकस्मि"न्नित्युपमेये सप्तमीदर्शनात्सप्तम्यर्थ एव वतिरित्यभिप्रेत्याह--आदाविवान्त इवेति। आदिवत्किम्()। औपगवः। अत्राऽण आद्युदात्तत्वं यथा स्यात्। भाष्ये त्वादियविदित्यपनीय "व्यपदेशिवदेकस्मि"न्निति सूत्रमूहितम्। विशिष्टोऽपदेशो व्यपदेशः---मुख्यो व्यवहारः। सोऽस्यातीति व्यपदेशी, मुख्य इति यावत्। तेन तुल्यमेकस्मिन्नसगायेऽपि कार्यं स्यादित्यर्थः। तेन "इयाय""आरे"त्यादौ"एकाचः"इति द्वित्वं सिध्यति। अन्यथा आद्यन्तापदिष्टत्वाद्धित्वं न स्यादिति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तरप्तमपौ १।२ घः १।१

समासः॥

तरप् च तमप् च तरप्तमपौ, इतरेतरद्वन्द्वः

अर्थः॥

तरप्तमपौ प्रत्ययौ घसंज्ञकौ भवतः।

उदाहरणम्॥

कुमारितरा, कुमारितमा। ब्राह्मणितरा, ब्राह्मणितमा॥
काशिका-वृत्तिः
तरप्तमपौ घः १।१।२२

तरप् तमपित्येतौ प्रत्ययौ घसंज्ञौ भवतः। कुमारितरा। कुमरितमा। ब्राह्मणितरा। ब्राह्मणितमा। घप्रदेशाः घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्यो ऽनेकाचो ह्रस्वः ६।३।४२ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
तरप्तमपौ घः १२२३, १।१।२१

एतौ घसंज्ञौ स्तः॥
न्यासः
तरप्तमपौ घः। , १।१।२१

"कुमारितरा" इति। "द्विवचविभज्योपपदे" ५।३।५७ इत्यादिना तरप्। "कुमारितमा" इति। "अतिशायने" इत्यादिना तमप्। तयोर्घसञ्ज्ञायां सत्यां "घरूपकल्प" ६।३।४२ इत्यादिना ह्रस्वत्वं भवति।

बाल-मनोरमा

तरप्तमपौ घः , १।१।२१

तरप्तमपौ घः। प्रथमस्य प्रथमपादे सूत्रमिदम्। आतिशायनिकप्रत्ययप्रकरणान्ते, "पितौ घः" तादी घः इति वा वक्तव्ये प्रकरणान्तरे पृथग्गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति। तस्य आतिशायनिकप्रकरणबहुर्भूतस्य सत्त्वे तत्संग्रहणार्थं प्रकरणान्तरे सूत्रकरणस्यावश्यकत्वादित्याहुः। तेन "अल्पाच्तरं" "लोपस्च बलवत्तरः" इत्यादि सिद्धम्।

किमेत्तिङव्यय। "आमु" इति छेदः। उकार उच्चारणार्थः। किम्, एते, तिङ्, अव्यय--एषां चतुर्णां द्वन्द्वः। "किमेत्तिङव्ययप्रकृतिको घः" इति मध्यमपदलोपी समासः। फलितमाह--किम एदन्तादित्यादिना। एभ्य इत्यर्थः। किन्तमामिति अत्यन्तस्वार्थिकोऽयं तमप्, नत्वतिशायने। एषामतिशयेनाढ() इतिवदेषामतिशयेन क इति विग्रहस्याऽसंभवात्। जातिगुणक्रियासंज्ञाभि समुदायादेकदेशस्य पृथक्करणं हि निर्धारणम्। प्राह्णे तमामिति। प्राह्ण=पूर्वाह्णः। "प्राह्णाऽपराह्णमध्याह्नाः त्रिसन्ध्य"मित्यमरः। अतिशयिते पूर्वाह्णे इत्यर्थः। पूर्वावयवगतप्रकर्षादह्नः प्रकर्षो बोध्यः। अत्र अहर्न द्रव्यम्, सूर्योदयादारभ्य सूत्रास्तमयावधिकस्यैव कालस्य अहन्शब्दार्थत्वात्। तस्य च उदयादिक्रियाघटितत्वान्न द्रव्यत्वमिति भावः। पचतितमामिति। अतिशयिनता पाकक्रियेत्यर्थः, तिङन्तेषु क्रियाविशेष्यकबोधस्यैव "प्रशंसायां रूप"विति सूत्रभाष्ये प्रपञ्चितत्वात्। अतोऽत्र क्रियाया एवन प्रकर्षो नतु द्रव्यस्येति भावः। उच्चैस्तमामिति। "आशंसती"त्यध्याहार्यम्। अतिशयेन उच्चैराशंशनादिक्रियेत्यर्थः। अत्रापि क्रियाया एव प्रकर्षो न तु द्रव्यस्य। उच्चैस्तमस्तरुरिति। अतिशेन उच्चैस्तरुरित्यर्थः। अत्र उच्चैस्त्वप्रकर्षस्य तरौ द्रव्ये भानादाभ्यनेत्यर्थः। "किंतमा"मित्यादौ "यस्येति चे"ति लोपं परत्वाद्बाधित्वा ह्रस्वान्तलक्षणनुटो निवृत्त्यर्थमामु इत्युकारोच्चारणम्। सति तु तस्मिन् "निरनुबन्धकग्रहणे न सानुबन्धकस्ये"ति परिभाषया नुड्विधावस्य न ग्रहणमित्यादि "आमि सर्वनाम्नः" इति सूत्रभाष्ये प्रपञ्चितम्।

तत्त्व-बोधिनी

तरप्तमपौ घः १४९९, १।१।२१

तरप्तमपौ घः। अस्मिन्नेवाऽऽतिशायनिकप्रकरणे "तादौ घः" "पितौ घः"इति वा वक्तव्ये प्रकरणान्तरेण गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञायपति। तेन "अल्पाच्तरं", लोपश्च बलवत्तरः" इत्यादि सिद्धम्। अल्पाजेव ह्यल्पाचतरम्। न त्वत्र द्वयोरेकस्यातिशयविवक्षायां तरप्। अन्यथा "शिवकेशवौ"इथ्यादिसिद्धावपि "शङ्खदुन्दुभिवीणाः"इत्यादि न सिध्येदित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ बहुगणवतुडति १।१ सङ्ख्या १।१ २४

समासः॥

बहुश्च गणश्च वतुश्च डतिश्च बहुगणवतुडति समाहारद्वन्द्वः

अर्थः॥

बहुगणशब्दौ, वतुडतिप्रत्ययान्तौ च शब्दौ, सङ्ख्यासंज्ञकाः भवन्ति।

उदाहरणम्॥

बहुकृत्वः, बहुधा, बहुकः, बहुशः। गणकृत्वः, गणधा, गणकः, गणशः। तावत्कृत्वः, तावद्धा, तावत्कः, तावच्छः। कतकृत्वः, कतिधा, कतिकः, कतिशः॥
काशिका-वृत्तिः
बहुगणवतुडति सङ्ख्या १।१।२३

बहु गण वतु इत्येत सङ्ख्यासंज्ञा भवन्ति। बहुकृत्वः। बहुधा। बहुकः। बहुशः। गणकृत्वः। गणधा। गणकः। गणशः। तावत्कृत्वः। तावद्धा। तावत्कः। तावच्छः। कतिकृत्वः। कतिधा। कतिकः। कतिशः। बहुगणशब्दयोर् वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति, सङ्ख्यावाचिनोरेव। भूर्यादीनां निवृत्त्यर्थं सङ्ख्यासंज्ञा विधीयते। अर्धपूर्वपदश्च पूरणप्रत्ययान्तः सङ्ख्यासंज्ञो भवति इति वक्तव्यं समासकन् विध्यर्थम्। अर्धपञ्चमशूर्पः। अर्धं पञ्चमं येशाम् इति बहुव्रीहौ कृते अर्धपञ्चमैः शूर्पैः क्रीतः। तद्धितार्थैति समासः। तत्र दिक्सङ्ख्ये संज्ञायाम् २।१।४९ इत्यनुवृत्तेस् ततः सङ्ख्यापूर्वस्य द्विगुसंज्ञायां शूर्पादञन्यतरस्याम् ५।१।२६ इति अञ् ठञ् च। अध्यर्धपूर्वद्विगोर् लुगसंज्ञायाम् ५।१।२८ इति लुक्। अर्धपञ्चमकः। सङ्ख्याप्रदेशाःसङ्ख्या वंश्येन २।१।१८ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
बहुगणवतुडति संख्या १८६, १।१।२२

न्यासः
बहुगणवतुडति संख्या। , १।१।२२

अत्र बहुगणशब्दौ प्रातिपदिके, वतुडती प्रत्ययौ। "बहुकृत्वः" इति- " सख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" ५।४।१७। "बहुधा" इति- "सख्याया विधार्थे धा" ५।३।४२ "बहुकः" इति- "सख्याया अतिशदन्तायाः कन्" ५।१।२२ "तावत्कृत्वः" इत्यादि- तच्छब्दात् "यत्तदेतेभ्यः परिमाणे वतुप्" ५।२।३९ इति वतुपि कृते "आ सर्वनाम्नः" ६।३।९० इत्यात्वे कृते "तावत्" इति भवति; किंशब्दात् किमः संख्यापरिमाणे डतौ कृते टिलोपे च "कति" इति भवति; ताभ्यां पूर्ववदेव कृत्वसुजादयः। "बहुगणशब्दयोः" इत्यादि। बहुशब्दोऽयं संख्यावचनोऽप्यस्ति, वैपुल्यवचनोऽ पि; गणशब्दः संख्यावचनोऽप्यस्ति, सङ्घवचनोऽपि; तत्र यौ वैपुल्यसङ्घवचनौ,तयोरिह ग्रहणं नास्ति, संख्यावाचिनोरेव तयोस्त्वेषा सङ्ख्यासंज्ञा विधीयते,तत्कथं संख्ये- त्यन्वर्थसंज्ञेयम्- संख्यायतेऽनया संख्या ! न च यो वैपुल्ये बहुशब्दो वत्र्तते, यश्च सङ्घे गणशब्दः, ताभ्यां संख्यायते। तथा हि- "बहुरोदनः" इत्युक्ते वैपुल्यं गम्यते; तथा "महान् भिक्षौउमां गणः" इत्युक्ते सङ्घः,न तु संख्यानम्। तस्मादन्वर्थसंज्ञाकरणाद् यावेकद्विसंख्याव्यवच्छेदेन संख्याविशेषमाहतुः, तयोरेव ग्रहणम्। यद्येवम्,किमर्थं तयोरियं संज्ञा विधीयते, यावता संख्यावाचिनौ तौ लौकिकसंख्यायामन्तर्भूतौ? लौकिकी च संख्या शास्त्रे गृह्वत एव; अन्यथा "संख्याया अतिशदन्तायाः कन्" ५।१।२२ इत्यत्र "अतिशदन्तायाः" इति प्रतिषेधोऽनर्थकः स्यात्(), शास्त्रीयायाः संख्याया अतिशदन्ताया अभावादित्यत् आह- "भूर्यादीनां निवृत्त्यर्थम्" इति। भूरि-
प्रभूतमित्येवमादयस्तज्जातीयाः प्रचुरविशेषवाचिनः सन्ति, तेषां मा भूदित्येवमर्थं बहुगणशब्दयोः संख्यासंज्ञा

विधीयते। तदेतेन नियमार्थमेतयोः संज्ञाविधानमेतदिति दर्शयति। तुल्यजातीयापेक्षया हि नियमः। अतस्तुल्यजातीयानां भूर्यादीनामेव नियमेन व्यावृत्तिः क्रियते, नान्येषाम्। "अर्धपूर्वपदश्च" इति। अर्धशब्दः पूर्वपदं यस्य पूरणप्रत्ययान्तस् सोऽर्ध- पूर्वपदः, स च संख्यासंज्ञो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थमित्याह- "समासकन्विध्यर्थम्" इति। तत्रेदं व्याख्यानम्- "डति च" १।१।२४ इत्यत्र यश्चकारः, स इह स्वरितत्वमासज्य सिंहावलोकितन्यायेनोपस्थाप्यते। स चानुक्तसमुच्चयार्थः। तेनार्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति। अर्धपञ्चमशूर्पः" इति। अर्धं पञ्चमं येषामिति बहुव्रीहिः। अर्धपञ्चमैः शूर्पैः क्रीतमिति "तद्धितार्थोत्तरपदसमा- हारे च" ५।१।५० इति समासः। "संख्यापूर्वो द्विगुः" २।१।५१ इति द्विगुसंज्ञा। " शूर्पादञन्यतरस्याम्" ५।१।२६ इति विहितस्याञष्ठञो वा "अध्यर्धपूर्वद्विगोर्लुग- संज्ञायाम्" ५।१।२८ इति लुक्। "अर्धपञ्चकः" इति। "संख्याया अतिशदन्तायाः कन्"५।१।२२॥

बाल-मनोरमा

बहुगणवतुडति सङ्ख्या २५६, १।१।२२

अथ षट्संज्ञाकार्यं वक्ष्यन् षट्संज्ञोपयोगिनीं सङ्ख्यासंज्ञामाह-बहुगण। बहुश्च गणस्च वतुश्च डतिश्चेति समाहारद्वन्द्वः। एतत्सङ्ख्यासंज्ञं स्यादित्यर्थः। फलितमाह-एते इति। बह्वादय इत्यर्थः। बहुगणशब्दाविह त्रित्वादिपरार्धान्तशङ्ख्याव्यापकधर्मविशेषवाचिनौ गृह्लेते। न तु वैपुल्यसङ्घवाचिनौ, सङ्ख्यायतेऽनयेति अन्वयर्थसंज्ञाविज्ञानात्। वतुडती प्रत्ययौ। संज्ञाविधावपीह तदन्तग्रहणं, केवलयोः प्रयोगानर्हत्वात्। वतुरिह "यत्तदेतेभ्यः परिमाणे वतु"विति तद्धितप्रत्ययो गृह्लते, न तु "तेन तुल्यं क्रिया चेद्वति"रिति वतिरपि, उकारानुबन्धात्। डतिरपि "किमः सङ्ख्यापरिमाणे डति च " इति विहिस्ततद्धित एव गृह्लते, वतुना साहचर्यात्। न तु भातेर्डवतुरिति विहितः कृदपि। ननु "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसु"जित्यादिसङ्ख्याप्रदेशेषु बह्वादीनामेव चतुर्णां ग्रहणं स्यात्। न तु लोकप्रसिद्धसङ्ख्यावाचकानामपि, "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः" इति न्यायात्। ततश्च "पञ्चकृत्वः" इत्यादि न स्यादिति चेन्न, "सङ्ख्याया अतिशदन्तायाः कनि"त्यत्र तिशदन्तपर्युदासबलेन सङ्ख्याप्रदेशेषु कृत्रिमाऽकृत्रिमन्यायाऽप्रवृत्तिज्ञापनात्। नहि विंशतितिं()रशदादिशब्दानां कृत्रिमा सङ्ख्यासंज्ञाऽस्ति। नचैवं सति बहुगणग्रहणवैयर्थ्यं शङ्क्यं, तयोर्नियतविषयपरिच्छेदकत्वाऽभावेन लोकसिद्धसङ्ख्यात्वाऽभावात्। अत एव भाष्ये "एतत्सूत्रमतिदेशार्थं यदयमसङ्ख्यां संख्येत्याह" इत्युक्तं सङ्गच्छते इत्यस्तां तावत्।

तत्त्व-बोधिनी

बहुगणवतुडति सङ्ख्या २१७, १।१।२२

बहुगणवतु। बहुगणौ प्रतिपादके सङ्ख्यावाचके गृह्लते न तु सङ्घवैपुल्यवाचके अपि, सङ्ख्यायते अन्येत्यान्वर्थसंज्ञाविज्ञानात्। अत एव डतिरपि "किमः सङ्ख्यापरिमाणे डति चे"ति विहितस्तद्धित एव गृह्लते, "वतु"साहचर्याच्च। न तु "पातेर्डतिः"। यद्यपि संज्ञाविधौ प्रत्यग्रहणे तदन्तग्रहणं नास्ति तथापीह वतुडत्योः केवलयोः संज्ञाविधौ फलाऽभावादन्वर्थताबलाच्च तदन्तयोरेव संज्ञा प्रवर्तते। सानुवन्धनिर्देशस्तु "व्राह्नणबद्वसति"रित्यदावतिप्रसङ्गशङ्कां निराकर्तुमित्याहुः। न चैवं सङ्ख्याकार्येषु कृत्वसुजादिषु कृत्रिमसङ्ख्याया एव ग्रहणं स्यान्न त्वकृत्रिमाया इति "पञ्चकृत्व"इत्यादि न सिध्येत्, कृत्रिमाऽकत्रिमयोः कृत्रिमे कार्यसंप्रत्ययादिति वाच्यम्; "सङ्ख्याया अतिशदन्तायाः क"न्नित्यत्रातिशदन्तपर्युदासबलेन सङ्ख्याकार्येषु कृत्रिमाऽकृत्रिमन्यायाऽप्रवृत्तेः। नन्वेवं भूरिशब्दात्कृत्वसुच्प्रत्ययप्रसङ्ग इति चेदत्राहुः-"अनियतसङ्ख्यावाचिनां चेत्सङ्ख्याकार्यं स्यात्तर्हि वहुगणयोरेवे"त्येवंभूतनियमफलसङ्ख्याविज्ञानान्नास्त्यतिपर्सङ्ग इति।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ष्णान्ता १।१ षट् १।१ २४ सङ्ख्या १।१ २२

समासः॥

षश्च नश्च ष्णौ, ष्णौ अन्ते यस्याः सा ष्णान्ता, द्वन्द्वगर्भो बहुव्रीहिः।

अर्थः॥

षकारान्ता नकारान्ता च या सङ्ख्या सा षट्संज्ञिका भवति।

उदाहरणम्॥

षकारान्ता - षट् तिष्ठन्ति, षट् पश्य। नकारान्ता - पञ्च सप्त नव दश॥

काशिका-वृत्तिः

ष्णान्ता षट् १।१।२४

स्त्रीलिङ्गनिर्देशात् सङ्ख्य इति सम्बध्यते। षकारान्ता नकारान्ता च या सङ्ख्या सा षट्संज्ञा भवति। षकारान्ता तावत्षट् तिष्ठन्ति। षट् प्श्ये। नकारान्तःपञ्च। सप्त। नव। दस। अन्तग्रहणम् औपदेशिकार्थम्। तेनैह न भवति शतानि, सहस्राणि। अष्टानाम् इत्यत्र नुड् भवति। षट्प्रदेशाःषड्भ्यो लुक् ७।१।२२ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

ष्णान्ता षट् २९९, १।१।२३

षान्ता नान्ता च संख्या षट्संज्ञा स्यात्। पञ्चन्शब्दो नित्यं बहुवचनान्तः। पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यःउट्॥

न्यासः

ष्णान्ता षट्। , १।१।२३

"स्त्रीलिङ्ग निर्देशात्" इत्यादि। ष्णान्तेति स्त्रीलिङ्गनिर्देशः क्रियते, न चेह किञ्चित् स्त्रीलिङ्गं श्रूयते, नापि प्रकृतमन्यत् संख्यायाः। तस्मात् स्त्रीलिङ्गनिर्देशात् संख्यैव "ष्णान्ता" इत्यनेन विशेषणेन विशिष्यते। "षट्" इति चानया संज्ञया सम्बध्यते। यदि ष्णान्तेत्यत्र स्त्रीलिङ्गनिर्देशो न क्रियते, सर्वं ष्णान्तं शब्दरूपं षट्संज्ञं स्यात्। ततः "पामानः" विप्रुषः" इत्यादावपि "ष ड्भ्यो लुक्" ७।१।२२ इति लुक् प्रसज्येत। ननु च संख्येत्यनुवर्त्तिष्यते, तत् कुतोऽतिप्रसङ्गः? सत्यमेतत्; सैवानुवृत्तिः स्त्रीलिङ्गनिर्देशेन स्पष्टीक्रियते। यदि संख्येत्यनुवत्र्तते, सामथ्र्यादेव तदन्ता विज्ञास्यते, न हि षकारमात्रं वा नकारमात्रं वा संख्यास्ति, तदपार्थकमन्तग्रहणम्, नैतदस्ति; उपदेशावस्थायां या ष्णान्ता सा षट्()संज्ञा यथा स्यादित्येवमर्थत्वादन्तग्रहणस्य। असति तस्मिन् शतानि सहरुआआणीति नुमि कृते षट्संज्ञा स्यात्। इह च अष्टानाम्? इत्यष्टन आत्वे कृते षट्संज्ञा न स्यात्। ततश्च "षट्()चतुभ्र्यश्च" ७।१।५५ इति नुण् न भवति।

बाल-मनोरमा

ष्णान्ता षट् , १।१।२३

पञ्चन्शब्दो नित्यं बहुवचनान्तः। तस्य षट्संभाकार्यं लुकं विधास्यन् षट्संज्ञामाह--ष्णान्ता षट्। ष्च नश्च ष्णौ। ष्टुत्वेन णः। ष्णौ अन्तौ यस्याः सा ष्णान्ता। "बहुगणवतुडति सङ्ख्या" इत्यतः सङ्ख्येत्यनुवर्तते। तच्च पूर्वसूत्रे बहुगणवतुडतिपरमपि शब्दाधिकारादिह पञ्च षडित्यादिप्रसिद्धसङ्ख्याबोधकशब्दपरमाश्रीयते, बहुगणवतुडतिषु ष्णान्तत्वाऽसम्भवात्। तदाह--षान्तेत्यादिना। षड्भ्यो लुगिति। "अनेन जश्शसोर्लु"गिति शेषः। पञ्च पञ्चेति। जश्शसोर्लुकि नलोप इति भावः। सङ्ख्या किमिति। सङ्ख्याग्रहणानुवृत्तेः किं फलमिति प्रश्नः। विप्रुषः पामान इति विप्रुष्शब्दस्य पामन्शब्दस्य च ष्णान्तत्वेऽपि सङ्ख्यावाचकत्वाऽभावेन षट्संज्ञाविरहात्ततः परस्य जसो लुगिति भावः। ननु शतशब्दाज्जश्शसोः शिभावे "नपुंसकस्य झलचः" इति नुमि "सर्वनामस्थाने चे"ति दीर्घे शतानीति रूपम्। एवं सहरुआआणीत्यपि रूपम्। तत्र "अट्कुप्वाङि"ति णत्वं विशेषः। इह "तदागमाः" इति न्यायेन नुमोऽङ्गभक्तत्वाच्छतन्शब्दसहरुआन्शब्दयोर्नान्तसङ्ख्याशब्दत्वात् षट्संज्ञायां सत्यां "षड्भ्यो लु"गिति जश्शसोर्लुक् स्यादत आह--शतानीत्यादि। सर्वनामेति। सर्वनामस्थानं परत्वेन उपजीव्य प्रवृत्तस्य नुमः सन्निपातपरिभाषया सर्वनामस्थानभूतजश्शसोर्लुकं प्रति निमित्तत्वाऽभावादित्यर्थः। पञ्चभिः पञ्चभ्य इति। नलोपे रूपम्।

तत्त्व-बोधिनी

ष्णान्ता षट् ३३०, १।१।२३

ष्णान्ता षट्। स्त्रीलिङ्गनिर्देशः सङ्ख्यां विशषयितुम्, तत्सामाथ्र्याच्च पूर्वत्र संज्ञापरमपि सङ्ख्याग्रहणमिह संज्ञिपरं संपद्यत इत्यदाशयेनाह--सङ्ख्येति। प्राचा तूपदेशकाले षान्ता नान्ता चेत्युक्तम्, तत् "पञ्चेत्यत्र नलोपे कृतेऽपी"त्यादिवक्ष्यमाणस्वग्रन्थविरुद्धम्। संप्रत्यनान्तत्वेऽप्युपदेशे नान्तत्वमासीदिति किमसिद्धत्वेनेति दिक्। संनिपातेति। तथा चोपदेशकाले इति व्याख्यानं निष्पलमपीति भावः। यत्वहुः--परिभाषाया अनित्यत्वाल्लक् स्यादिति, तत्साहसमात्रम्। इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया अकिञ्चित्करत्वापत्तेः। यदप्याहुः--"उपदेशग्रहणमिह कुतः समागत"मित्याशङ्क्य "ष्णान्ते"त्यन्तग्रहणसामथ्र्यादौपदेशिकत्वं लभ्यत इति। तदपि न। "सङ्क्ये"त्यस्याकर्षणेन संज्ञपरत्वसंपादनेन च सामर्थ्यो पक्षयात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ डति १।१ च ० षट् १।१ २३ सङ्ख्या १।१ २२

अर्थः॥

डति प्रत्ययान्ता सङ्ख्या षट्-संज्ञिका भवति।

उदाहरणम्॥

कति तिष्ठन्ति, कति पश्य॥

काशिका-वृत्तिः

डति च १।१।२५

डत्यन्ता या सङ्ख्या सा षट्संज्ञा भवति। कति तिष्ठन्ति। कति पश्य।

लघु-सिद्धान्त-कौमुदी

डति च १८७, १।१।२४

डत्यन्ता संख्या षट्संज्ञा स्यात्॥

न्यासः

डति च। , १।१।२४

"डत्यन्ता या संख्या सा षट्संज्ञा भवति" इति। संख्याग्रहणेनेहापि संख्यानुवत्र्तत इति दर्शयति। किमर्थं पुनः सेहानुवत्र्तते? पातेर्डतिः पतय इत्यत्र मा भूत्। अथ संख्यानुवृत्तावपि कस्मादेवात्र न भवति, यावतायमपि संख्यासंज्ञ एव, सामान्येन हि पूर्वं डतेः संख्यासंज्ञा विहिता? नैतदस्ति; वतुना साहचर्यात् तद्धितस्यैव डतेस्तत्र ग्रहणम्, न कृतः; कृच्चायम्।

बाल-मनोरमा

डति च २५७, १।१।२४

डति च। "डती"त्यविभक्तिको निर्देशः। प्रत्ययत्वात्तदन्तग्रहणम्। पूर्वसूत्रा "त्संख्ये"त्यनुवर्तते। "ष्णान्ता षट्" इत्यतः "ष"डिति च। तदाह--डत्यन्तेति। संक्येति किम्। पतिः। अथ षट्संज्ञाकार्यं लुकं वक्ष्यन्नाह-प्रत्ययस्य लुक्। "अदर्शनं लोप" इत्यतोऽदर्शनमित्यनुवर्तते। प्रत्ययस्याऽदर्शनं लुक्श्लुलुप्संज्ञकं स्यादित्यर्थः प्रतीयते। एवं सति एकस्यैव प्रत्ययाऽदर्शनस्य तिरुआओऽपि संज्ञाः स्युः। ततश्च "हन्ती"त्यत्र शब्लुकि "श्लौ" इति द्वित्वं स्यात्। "जुहोती"त्यत्र श्लौ सति "उतो वृद्धिर्लुकि हली"ति वृद्धिः स्यात्।

तत्त्व-बोधिनी

डति च २१८, १।१।२४

डति च। "ष्णान्ता ष"डित्यतः "ष"डित्यनुवर्तते। "सङ्ख्ये"ति पर्कृतं, "डती"त्यनेन विशेष्यते तदाह--डत्यन्ता सङ्ख्येति। सङ्ख्येति किम्? पतयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्त-क्तवतू १।२ निष्ठा १।१

समासः॥

क्तश्च क्तवतुश्च क्त-क्तवतू, इतरेतरद्वन्द्वः

अर्थः॥

क्त-क्तवतू प्रत्ययौ निष्ठासंज्ञकौ भवतः

उदाहरणम्॥

पठितः, पठितवान्। चितः चितवान्। स्तुतः, स्तुतवान्। भिन्नः, भिन्नवान्। पक्वः, पक्ववान्॥

काशिका-वृत्तिः

क्तक्तवतू निष्ठा १।१।२६

क्तश्च क्तवतुश्च क्तक्तवतू प्रत्ययौ निश्ठासंज्ञौ भवतः। कृतः। कृतवान्। भुक्तः। भुक्तवान्। ककारः कित्कार्यार्थः। उकारः उगित्कार्यार्थः। निष्ठाप्रदेशाः श्वीदितो निष्ठायाम् ७।२।१४ इत्येवमादयः।

लघु-सिद्धान्त-कौमुदी

क्तक्तवतू निष्ठा ८१७, १।१।२५

एतौ निष्ठासंज्ञौ स्तः॥

न्यासः

क्वक्तवतू निष्ठा। , १।१।२५

"भुक्तवान्" इति। "चोः कुः" ८।२।३० इत कुत्वम्। "अत्वसन्तस् चाधातोः" ६।४।१४ इति दीर्घः। अथ केन विहितयोः क्तक्तवत्वोरेषा संज्ञा विधीयते? अनयैव संज्ञया। वक्ष्यति तृतीये "निष्ठा" ३।२।१०२ इति। यद्येवम्, निष्ठासंज्ञया क्तक्तवतू भाव्येते, तावेवाश्रित्य निष्ठासंज्ञेति; इतरेतराश्रयो दोषो भवति, "इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्प्यन्ते, (व्या।२८) नैष दोषः; भाविनी हि संज्ञा विज्ञास्यते, यथा- "अस्य सूत्रस्य शटकं वय" इति। तौ भूते काले भवतः, ययोर्विहित-र्निष्ठेत्येषा संज्ञा भवतीति।

बाल-मनोरमा

क्तक्तवतू निष्ठा ८२२, १।१।२५

क्तक्तवतू निष्ठा। क्त, क्तवतु अनयोर्द्वन्द्वः। निष्ठेति प्रत्येकाभिप्रायमेकवचनम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सर्वादीनि १।३ ३१ सर्वनामानि १।३ ३५

समासः॥

सर्वः आदिः येषां तानि इमानि, सर्वादीनि, बहुव्रीहिसमासः
सर्वेषां नामानि सर्वनामानि, षष्ठीतत्पुरुषः

अर्थः॥

सर्वादिशब्दानां सर्वनामसंज्ञा भवति

उदाहरणम्॥

सर्वे, सर्वस्मै, सर्वस्मात्, सर्वस्मिन्, सर्वेषाम्, सर्वकः। विश्वे, विश्वस्मै, विश्वस्मात्, विश्वस्मिन्, विश्वेषाम्, विश्वकः॥
काशिका-वृत्तिः
सर्वाऽदीनि सर्वनामानि १।१।२७

सर्वशब्दः आदिर् येषां तानीमानि सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वः, सर्वौ, सर्वे। सर्वस्मै। सर्वस्मात्। सर्वेषाम्। सर्वस्मिन्। सर्वकः। विश्वः, विश्वौ, विस्वे। विश्वस्मै। विश्वस्मात्। विश्वेषाम्। विश्वस्मिन्। विश्वकः। उभ। उभय। उभशब्दस्य सर्वनामत्वे प्रयोजनम् सर्वनाम्नस्तृतीय च २।३।२७ इति। उभाभ्यां हेतुभ्यां वसति, उभयोः हेत्वोः वसति। उभये। उभयस्मै। उभयस्मात्। उभ्येषाम्। उभयस्मिन्। डतर, डतम। कतर, कतम। कतरस्मै, कतमस्मै। इतर। अन्य। अन्यतर। इतरस्मै। अन्यस्मै। अन्यतरसमै। त्वशब्दो ऽन्यवाची स्वरभेदाद् द्विः पठितः। एकः उदात्तः। द्वितीयो ऽनुदात्तः। केचित् तकारान्तमेकं पठन्ति। त्व त्वतिति द्वावपि च अनुदाताउ इति स्मरन्ति। नेमनेमस्मै। वक्ष्यमाणेन जसि विभाषा भवति। नेमे, नेमाः इति। समसमस्मै। कथं यथासङ्ख्यम् अनुदेशः समानाम् १।३।१०, समे देशे यजेत इति। समस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञा इष्य्ते, न सर्वत्र। सिमसिमस्मै। पूर्वपरावरदक्षिणौत्तरापराधराणि व्यवस्थायाम् असंज्ञायाम् १।१।३३। स्वम् अंज्ञातिधनाऽख्याम् १।१।३४। अन्तरं बहिर्योगोप्संव्यानयोः १।१।३५। त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्। सर्वादिः। सर्वनामप्रदेशाः सर्वनाम्नः स्मै ७।१।१४ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
सर्वादीनि सर्वनामानि १५१, १।१।२६

सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्॥
न्यासः
सर्वादीनि सर्वनामानि। , १।१।२६

"सर्वशब्द आदिर्येषां तानीमानि सर्वादीनि" इति। एष तद्()गुणसंविज्ञानो बहुव्रीहिः; इतरथा ह्रुपलक्षणार्थत्वात् सर्वशब्दस्य संज्ञा न स्यात्। न ह्रुपलक्षणस्योपसर्जनी-भूतस्य कार्येण सम्बन्धो भवति। तथा हि- "चित्रगुरानीयताम्" इत्युक्ते न गवा- मप्यानयनं भवति। तद्गुणसंविज्ञानस्य बहुव्रीहेर्लिङ्गम्- "अदः सर्वेषाम्" ७।३।१०० इति निर्देशः। सर्वशब्दस्य सुट् सर्वनाम्नः कार्यम्; अन्यथा हि तन्नोपपद्यते। " सर्वः, सर्वौ सर्वे" इति। इदमत्रोदाहरणं "सर्वे" इति। अत्र हि सर्वनामसंज्ञायाम् " जसः शी" ७।१।१७ इति शीभावः कार्यः। पूर्वयोस्तु तत्साहचर्येण "सर्वे" इत्येतस्य पुँल्लिङ्गतां श्रूयमाणविभक्तितां च दर्शयितुमुपन्यासः; अन्यथा "सर्वे" इत्येता- वत्युच्यमाने स्त्रीलिङ्गस्य लुप्तसम्बृद्धेरयं प्रयोग इति। कस्यचिद् भ्रान्तिः स्यात्। "सर्वस्मै" इति। "सर्वनाम्नः स्मै" ७।१।१४। "सर्वस्मात्, सर्वस्मिन्" इति। "ङसिङ्योः स्मात्स्मिनौ" ७।१।१४। "सर्वस्मात्, सर्वस्मिन्" इति। "ङसिङ्योः स्मात्स्मिनौ" ७।१।१५ इति। "सर्वकः" इति- "अव्ययसर्वनाम्नामकच् प्राक् टेः" ५।३।७१ इति। उभशब्दोऽयं द्विवचनटाब्विषय एव प्रयुज्यते-"उभौ उभे"इति। न च तत् किञ्चित् सर्वनामकार्यं सम्भवति; स्मैप्रभृतीनां यतायोगमेकवचनबहुवचनविषयत्वात्। अकजपि नैवं सर्वनामसंज्ञां प्रयोजयति; विशेषाभावात्। नहि तस्मादकचि, कप्रत्यये वा विहिते रूपभेदो वा भवति। तत् किमर्थस्तस्येह पाठः? इत्याह- "उभशब्दस्थ" इत्यादि। "सर्व-नाम्नस्तृतीय च" २।३।२७ इत्यनेन उभाभ्यां हेतुभ्याम्, उभोयर्हेत्वोरिति तृतीया-षष्ठ्यौ यथा स्यातामित्येवमर्थ्सतस्येह पाठ इति दर्शयति। "डतरतम" इति। "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्" ५।३।९२ "वा बहूनां जातिपरिप्रश्ने डतमच्" ५।३।९३ इत्येतयोः प्रत्यययोग्रहणम्। "वक्ष्यमाणेन" इति। "प्रथमचरम"

१।१।३२ इत्यादिना। "कथम्" इत्यादि। समशब्दस्य सर्वनामसंज्ञायां सत्यां "आमि सर्वनाम्नः सुट्" ७।१।५२ इति सुटि "समेषाम्" इति भवितव्यम्, तत् कथं सामानामिति भवति? ततश्च सप्तम्येकवचनस्य स्मिन्भावे कृते समस्मिन्निति भवितव्यम्, तत् कथं "समे देशे यजेत्" इति प्रयोग उपपद्यते ! इत्यभिप्रायः। "न सर्वत्र" इति। न सर्वत्रार्थे वत्र्तमान-स्येत्यर्थः। एतच्च "सर्वेषां नामानि सर्वनामानि" इत्यन्वर्थसंज्ञाकरणाल्लभ्यते। स एव हि समशब्दः सर्वेषां नाम भवति यः सर्वशब्दपर्यायः, न चान्योः प्रयोगयोः समशब्दः सर्वपर्यायः। तथा हि "समानाम्" इत्यत्र समशब्दस्तुल्यार्थे वत्र्तते। "समे देशे" इत्यत्राप्यविषमे- निम्नोन्नतादिरहिते। अत एव चान्वर्थसंज्ञाकरणात् संज्ञोपसर्जनीभूतानां संज्ञा न भवति। यथा- सर्वो नाम कश्चित्, तस्मै सर्वाय देहि। अतिक्रान्तः रुआर्वमतिसर्वः, तस्मा अतिसर्वाय देहीति। न ह्येवंप्रकाराणि सर्वेषां नामानि; विशिष्टव्सतु विषयत्वात्। "सर्वनामानि" इत्यत्र"पूर्वपदात् संज्ञायाम्" ८।४।३ इतिणत्वं तु न भवति, अत एव निपातनात्।

बाल-मनोरमा

सर्वादीनि सर्वनामानि २११, १।१।२६

नपुंसकवशात् "शब्दरूपाणी"ति विशेष्यमद्याहार्यं, तदाह--सर्वादीनीति। ननु बहुव्रीहेरन्यपदार्थप्रधानत्वात्सर्वशब्दस्य च समासवर्तिपदार्थत्वादन्यपदार्थत्वाबावाद्वि()आआदिशब्दानामेव सर्वादिशब्देन बहुव्रीहिणावगमात्सर्वनामसंज्ञा स्यान्न तु सर्वशब्दस्यापीति चेत्, उच्यते--सर्व आदिर्यस्य समुदायस्येति विग्रहः। सर्वशब्दघटितः समुदायः समासार्थः। समुदाये च प्रवर्तमाना सर्वनामसंज्ञा क्वचिदप्यप्रयुज्यमाने तस्मिन् वैयथ्र्यादानर्थक्यात्तदङ्गेष्विति न्यायेनावयवेष्ववतरन्ती अविशेषात्सर्वशब्देऽपि भवति। एवंचात्र सर्वशब्दस्य स्वरूपेण वर्तिपदार्थता, समुदायरूपेण त्वन्यपदार्थप्रवेशः। नच समुदायस्यान्यपदार्थत्वे सर्वादीनीति बहुवचनानुपपत्तिः शङ्क्याः, सर्वशब्दघटितस्य विवक्षितावयवसङ्ख्यस्य समूहस्यान्यपदार्थत्वात्। "अद्भूतावयवभेदः समुदायः समासार्थ" इति कैयटोक्तेरप्ययमेवार्थः। अतो न बहुवचनस्यानुपपत्तिः तदेवं व्याख्याने "हलि सर्वेषा"मित्यादिनिर्देशः प्रमाणम्। सर्वशब्दस्य सर्वनामत्वाऽभावे तु सर्वेषामित्यादौ सर्वनामकार्याणि सुडादीनि न स्युः। तथाच सर्वादीनीति तद्गुणसंविज्ञानो बहुव्रीहिः। तस्य=अन्यपदार्थस्य, गुण#आ#ः=विशेषणानि वर्तिपदार्थरूपाणि, तेषां संविज्ञानं=क्रियान्वयितया विज्ञानं यत्र स तद्गुणसंविज्ञान इति व्यत्पत्तिः। यत्र संयोगसमवायान्यतरसंबन्धेनान्यपदार्थे वर्तिपदार्थान्वयस्तत्र प्रायेण तद्गुणसंविज्ञानो बहुव्रीहिः। यथा-"द्विवासा देवदत्तो भुङ्क्ते", "लम्बकर्णं भोजये"त्यादौ। तत्पर हि वाससोः कर्णयोश्च भुजिक्रियान्वयाऽभावेऽपि संनिहितत्वमात्रेण तद्गुणसंविज्ञानत्वम्। प्रकृते च समुदाये।ञन्यपदार्थे सर्वशब्दस्य समवायान्तर्गतारोपितावयवावयविभावसंबन्धसत्त्वात्तद्गुणसंविज्ञानत्वम्। स्वस्वामिभावादिसम्बन्धेनान्यपदार्थे वर्तिपदार्थान्वये त्वतद्गुणसंविज्ञानो बहुव्रीहिः। यथा--"चित्रगुमानये"त्यादावित्यलम्।

ननु सर्व वि()ओत्येवं सर्वादिशब्दानां केवलानामेव सर्वादिगणे पाठात्परमसर्वादिशब्दानां कथं सर्वनामतेत्यत आह--तदन्तस्यापीति। द्वन्द्वे चेतीति। "द्वन्द्वे चे"त्यनेन सर्वादिशब्दान्तद्वन्द्वस्य सर्वनामसंज्ञा प्रतिषिध्यते--वर्णाश्रमेतराणामित्यादौ। यदि केवलानामेव सर्वादिगणपठितानां केवलानामेव सर्वादिशब्दानामस्तु सर्वनामता, मास्तु तदन्तानामपि, "सर्वनाम्नः स्मै" इत्यादिसर्वनामकार्याणामङ्गाधिकारस्थत्वेन "पदाङ्गाधिकारे तस्य च तदन्तस्य चे"ति परिभाषया "परमसर्वस्मै" इत्यादिषु। सिद्धेरित्यत आह--तेनेति। तदन्तस्यापि संज्ञाबलेनेत्यर्थः। सिध्यतीत्यर्थः। चकारात्पञ्चम्यास्तसिलिति तसिल् च। नचावयवगतसर्वनामत्वेन तत्सिद्धिरिति वाच्यं , कुत्सित #इति सूत्रस्थभाष्यरीत्या सहृख्याकारकाभ्यां पूर्णार्थस्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्त्यवगमेन सर्वनामप्रकृतिकसुबन्तार्थगतकुत्सादिविवक्षायां सर्वनामावयवटेः प्रागकजित्यर्थपर्यवसानात्तदन्तसंज्ञाऽभावे तदसिद्धेरिति भावः।

तत्त्व-बोधिनी

सर्वादीनि सर्वनामानि १७८, १।१।२६

सर्वादीनीति। तद्गुणसंविज्ञानो बहुव्रीहिरयम्। "अदः सर्वेषा"मिति लिङ्गम्। आदिशब्दोऽत्रावयववाची। सर्व आदिराद्यावयवो येषां तानीति विग्रहः। उद्भूतावयवभेदः समुदायः समासार्थं इति बहुवचनम्। तस्य समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात् "आनर्थक्यात्तदङ्गेषु" इति न्यायेन तदवयवेषु प्रवर्तमाना सर्वनामसंज्ञाऽविशेषात्सर्वशब्देऽपि प्रवर्तत इति युक्तं तद्गुणसंविज्ञानत्वम्। तस्यान्यपदार्थस्य गुणा वर्तिपदार्थरूपाणि विशेषणानि तेषा कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यक्षरार्थः। लोकवेदयोरपि संयोगसमवायान्यतरसम्बन्धे "लोहितोष्णीषाऋत्विजश्चरन्ति,""लम्बकर्णमानये"त्यादौ तद्गुणसंविज्ञानत्वमेव। स्वस्वामिभावसंबन्धे त्वतद्गुणसंविज्ञानत्वं "चित्रगुमानये"त्यादौ। ननु "सर्वनामानी"त्यत्र "पूर्वपदात्संज्ञाया"मिति णत्वं कस्मान्न भवति?। सौत्रत्वान्नेति चेत्,लोके सर्वनामशब्दस्याऽसाधुत्वापत्त्या "सर्वनामसंज्ञानि स्यु"रित्युत्तरग्रन्थस्याऽसाधुत्वापत्तेरिति चेन्मैवम्। "निपातनाण्णत्वं ने"ति भाष्योक्तव्याख्याश्रयणादिष्टसिद्धेः। अत्र भाष्यानुसाराद्बाधकान्येव निपातनानि भवन्तीति पक्ष आश्रितः। "अब#आधकान्यपि निपातनानि भवन्ती"त् पक्षस्तु "विभाषा फाल्गुनी"ति सूत्रे श्रवणाशब्दे निपातितेऽपि "श्रावणी"ति प्रयोगोऽपि साधुरित्येवमर्थमाश्रयिष्यते। विशेषणानुगुणं विशेष्यमध्याहरति-शब्दस्वरूपाणीति। द्वन्द्वे चेति। स हि निषेधः समुदायस्यैव न त्ववयवानामिति वक्ष्यति, न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः। नन्वङ्गाधिरकारे तदन्तविधिं विनैव "परमसर्वस्मै" इत्यादौ स्मायादिसिद्धेस्तदन्तसंज्ञायाः किं फलमित्यत आह--तेनेति। न चेहापि "प्रातिपदिका"दित्यनुवृत्ते सर्वनाम्नस्तद्विशेषणत्वे तदन्तविधिर्भविष्यतीति वाच्यं, "समासप्रत्ययविधौ प्रतिषेधः" इत्युक्तत्वादिति भावः। अकच्चेति चकारात्परमसर्वत इत्यत्र तसिल्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ दिक्समासे ७।१ बहुव्रीहौ ७।१ सर्वादीनि १।३ २६ सर्वनामानि १।३ २६

समासः॥

दिशां समासः, दिक्समासः, तस्मिन् दिक्समासे, षष्ठीतत्पुरुषः

अर्थः॥

दिक्समासे बहुव्रीहौ सर्वादीनि सर्वनामसंज्ञकानि विभाषा भवन्ति।

उदाहरणम्॥

उत्तरपूर्वस्यै, उत्तरपूर्वायै। दक्षिणपूर्वस्यै, दक्षिणपूर्वायै। उत्तरपूर्वस्याः, उत्तरपूर्वायाः। दक्षिणपूर्वस्याः, दक्षिणपूर्वायाः।
काशिका-वृत्तिः
विभाषा दिक्षमासे बहुव्रीहौ १।१।२८

न बहुव्रीहौ १।१।२८ इति प्रतिषेधं वक्ष्यति। तस्मिन् नित्ये प्रतिषेधे प्राप्ते विभाषेयम् आरभ्यते। दिशां समासः दिक्षमासः।

दिगुपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसंज्ञानि भवन्ति। उत्तरपूर्वस्यै, उत्तरपूर्वायै। दक्षिणपूर्वस्यै, दक्षिणपूर्वायै। दिग्ग्रहणं किम्? न बहुव्रीहौ १।१।२८ इति प्रतिषेधं वक्ष्यति, तत्र न ज्ञायते क्व विभाषा, क्व प्रतिषेधः इति। दिग्ग्रहणे पुनः क्रियमाणे ज्ञायते दिगुपदिष्टसमासे विभाषा, अन्यत्र प्रतिषेधः इति। समासग्रहणं किम्? समास एव यो बहुव्रीहिः, तत्र विभाषा यथा स्यात्। बहुव्रीहिवद् भावेन यो बहुव्रीहिः, तत्र मा भूत्। दक्षिणदक्षिणस्यै देहि। बहुव्रीहौ इति किम्? द्वन्द्वे विभाषा मा भूत्। दक्षिणौत्तरपूर्वाणाम् इति द्वन्द्वे च १।१।३१ इत् नित्यं प्रतिषेधो भवति।

लघु-सिद्धान्त-कौमुदी

विभाषा दिक्समासे बहुव्रीहौ २२२, १।१।२७

सर्वनामता वा। उत्तरपूर्वस्यै, उत्तरपूर्वायै। तीयस्येति वा सर्वनामसंज्ञा। द्वितीयस्यै, द्वितीयायै॥ एवं तृतीया॥ अम्बार्थेति ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल॥ जरा। जरसौ इत्यादि। पक्षे रमावत्॥ गोपाः, विश्वपावत्॥ मतीः। मत्या॥

न्यासः

विभाषा दिक्समासे बहुव्रीहौ। , १।१।२७

"दिगुपदिष्टे" इति। दिशामुपदिष्ट उक्तो दिगुपदिष्टः। स पुनः "दिङ्नामान्यन्तराले" २।२।२६ इति यः समासस्तस्यात्र ग्रहणम्। स पुनर्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। प्रतिपदोक्तसमासाश्रयणं तु या पूर्वा दिक् सोत्तराऽस्योन्मु- ग्धस्य, "अस्मै पूर्वोत्तराय देहि" इत्यत्रा मा भूत्। "उत्तरपूर्वस्मै" इति। उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालमिति पूर्वोक्तेन सूत्रेण बहुव्रीहिः, "सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः" (जै।प।वृ।१०३) इति पूर्वपदस्य पुंवद्भावः, चतुर्थ्येकवचनम्, "सर्वनाम्नः स्याड्()ढ्रस्वश्च" ७।३।११४ इति याट्, "आटश्च" ६।१।८७ इति वृद्धिः। "समासग्रहणं किम्" इति। यावता न बहुव्रीहिः समासत्वं व्यभिचरत्येव, ततोऽ पार्थकं विसेषणमित्यभिप्रायः। "समास एव यो बहुव्रीहि" इति। यस्यातिदेशेन बहुव्रीहिवद्भावो न विधीयते स वेदितव्यः समास एव बहुव्रीहिरिति। स पुनर्यः समासाधिकारे विहितः। "बहुव्रीहिवद्भावेन" इति। यस्यातिदेशिकं बहुव्रीहित्वं स बहुव्रीहिवद्भावेन बहुव्रीहिः। "दक्षिणदक्षिणस्यै" इति। "एकं बहुव्रीहिवत्" ७।१।९ इत्यतो बहुव्रीहिवदिति वत्र्तमाने "आबाधे च" ८।१।१० इति दक्षिणाशब्दस्य द्विर्वचनम्। बहुव्रीहि- वद्भावाच्च सुब्लुक्। अयं बहुव्रीहिवद्भावेन बहुव्रीहिरिति विभाषा न प्रवत्र्तते। योऽपि "न बहुव्रीहौ" १।१।२८ इति वक्ष्यमाणः प्रतिषेधः सोऽपीह न भवति; तत्रापि समासाधिकारात। "दक्षिणोत्तरपूर्वाणाम्" इति। अत्र "द्वन्द्वे च" १।१।३० इति नित्य एव प्रतिषेधो भवति, तेन पक्षे सुण्न भवति। यद्येवम्, "सर्वनाम्नो वृत्तिमात्रे" ( जै।प।वृ१०३) इति पुंवद्भावोऽत्र न स्यात्; नैतदस्ति; अवयवस्याद्वन्द्वत्वात्। ननु विनाऽपि बहुव्रीहिग्रहणेनात्र "द्वन्द्वे च"१।१।३० इति प्रतिषेधेन भाव्यमेव; तदपार्थकं बहुव्रीहिग्रहणम्, नैतदस्ति; यो हि दिग्द्वन्द्वो न भवति स तस्य विषयः स्यात्। दिग्द्वन्द्वे त्वसति बहुव्रीहिग्रहणे एषैव विभाषा स्यात्। तस्माद्बहुव्री- हिग्रहणं कत्र्तव्यम्? न कत्र्तव्यम्। कस्मान्न भवति? "दक्षिणोत्तरपूर्वाणाम्" इत्यत्र प्रतिपदोक्तसमासस्येह ग्रहणात्। एवं तर्ह्युत्तरार्थं बहुव्रीहिग्रहणम्। "न वहुव्रीहौ" १।१।२८ इत्यत्रास्य प्रयोजनं वक्ष्यति। वृत्तिकारस्य त्वेषोऽभिप्रायः- "उत्तरार्थमवश्यकत्र्तव्यम्, तदुत्तरार्थं कृतमिहापि स्पष्टार्थं भविष्यति" इति।

बाल-मनोरमा

विभाषा दिक्समासे बहुव्रीहौ २९०, १।१।२७

तत्र विशेषं दर्शयितुमाह--विभाषा दिक्समासे। "सर्वादीनी"त्यतः "सर्वनाम"ग्रहणमनुवर्तते। तदाह--अत्रेति। दिक्समासे इत्यर्थः। "न बहुव्रीहौ" इत्यलौकिकविग्रहवाक्ये नित्यनिषेधे प्राप्ते विकल्पार्थमिति केचित्। गौणत्वादप्राप्ते विभाषेयमित्यन्ये। सर्वनामत्वपक्षे उदाहरति--उत्तरपूर्वस्यै इति। स्याड्ढ्रस्वौ। उत्तरपूर्वायै इति। सर्वनामत्वाऽभावपक्षे याट्। उत्तरपूर्वायाः-उत्तरपूर्वस्याः। उत्तरपूर्वासाम्--उत्त्रपूर्वाणाम्। उत्तरपूर्वस्याम्--उत्तरपूर्वायाम्। "सर्वनाम्नो वृत्तिमात्रे

पुंवद्भावः" इति मात्रग्रहणात्संप्रत्यसर्वनामत्वेऽपि पूर्वपदस्य पुंवत्त्वम्। ननूत्तरा दिगिति गत्वा मोहवशात्पूर्वा दिक् यस्याः सा उत्तरपूर्वा। "अनेकमन्यपदार्थे" इति बहुव्रीहिः। अत्रापि दिक्शब्दघटितसमासत्वात्सर्वनामताविकल्पे उत्तरपूर्वस्यै--उत्तरपूर्वायै इति रूपद्वयं स्यात्। स्याडागमस्तु नेष्यते। तत्राह--दिङ्नामानीति। "दिङ्नामान्यन्तराले" इति बहुव्रीहिः प्रतिपदोक्तो दिक्समासः, दिक्शब्दमुच्चार्यं विहितत्वात्। नतु "अनेकमन्यपदार्थे " इति बहुव्रीहिरपि। ततश्च लक्षणप्रतिपदोक्तपरिभाषया न तस्येह ग्रहणमित्यर्थः। योत्तरेति। उत्तराशब्दस्य पूर्वाशब्दस्य च सामानाधिकरण्यं द्योतयितुं यत्तच्छब्दौ। सामानाधिकरण्याऽभावे "अनेकमन्यपदार्थे" इति बुहुव्रीहेरसंभवात्, "बहुव्रीहिः समानाधिकरणानां वक्तव्य)" इति वचनात्। उन्मुग्धाया इति। तेन पूर्वोत्तरयोर्विरोधात्कथं सामानादिकरण्यमिति शङ्का निरस्ता। ननु "विभाषा दिक्समासे" इत्येवास्तु, बहुव्रीहिग्रहणं न कर्तव्यं, प्रतिपदोक्तत्वेन "दिङ्नामानी"ति बहुव्रीहेरेव ग्रहणसिद्धेरित्यत आह--बहुव्रीहिग्रहणं स्पष्टार्थमिति। बाह्यायै इत्यर्थ इति। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि चे"ति कोशात्। अर्थान्तरपरत्वेन तु सर्वनामत्वाऽभावान्न स्यादिति भावः। अपुरीत्युक्तेरिति। "अन्तरं बहिर्योगेति गणसूत्रे" इति शेषः।

तत्त्व-बोधिनी

बिभाषा दिक्समासे बहुर्वीहौ २५२, १।१।२७

वभाषा दिक्समासे। गौणत्वादप्राप्ते विभाषेयं, न तु "न बहुव्रीहा"विति निषेधे प्राप्ते इति भ्रमितव्यम्। तंस्याऽलौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वादस्य च समासविषयत्वात्। स्पष्टार्थमिति। प्रतिपदोक्समासविधायके "दिङामानी"ति सूत्रे "शेषो बहुव्रीहि"रित्यतो "बहुव्रीहि"रित्यधिकारादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० ३१ बहुव्रीहौ ७।१ सर्वादीनि १।३ २६ सर्वनामानि १।३ २६

अर्थः॥

बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञकानि न भवन्ति।

उदाहरणम्॥

प्रियविश्वाय, प्रियोभयाय, द्व्यन्याय, त्र्यन्याय।

काशिका-वृत्तिः

न बहुव्रीहौ १।१।२९

सर्वनामसंज्ञायां तदन्तविधेरभ्युपगमाद् बहुव्रीहेरपि सर्वाऽद्यन्तसय् संज्ञा स्यातिति प्रतिषेध आरभ्यते। बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। प्रियविश्वाय। प्रियोभ्याय। द्व्यन्याय। त्र्यन्याय। इह च, त्वत्कपितृकः, मत्कपितृकः इत्यकज् न भवति। बहुव्रीहौ इति वर्तमाने पुनर्बहुव्रीहिग्रहणं भूतपूर्वमात्रे ऽपि प्रतिषेधो यथा स्यात्, वस्त्रान्तरवसनान्तराः इति।

न्यासः

न बहुव्रीहौ। , १।१।२८

"सर्वनामसंज्ञायाम्" इत्यादि। कथं पुरेतदवगतम्- अभ्युपगतस्तदन्तविधिरिति? अत एव प्रतिषेधात्, अन्यथा हि निष्फलः प्रतिषेधः स्यात्। तदन्तविध्यभ्युपगमे हि "परमसर्वस्मै उत्तमसर्वस्मै" इत्यत्रापि संज्ञा यथा स्यात्। "इह च" इत्यादि। अस्य "प्रतिषेध आरभ्यते" इत्यनेन सम्बन्धः। "त्वं पिताऽस्य, अहं पिताऽस्य" इति विगृह्य बहुव्रीहौ कृतेऽज्ञाताद्यर्थविवक्षायाम् असति प्रतिषेधे। "अव्ययसर्वनाम्नामकच् प्राक् टेः" ५।३।७१ इत्यत्राकच् प्रसज्येत। ततश्च "त्वकत्पित-कः, मकत्पितृकः" इत्यनिष्टं रूपं स्यात्। तस्मादकज् मा भूदिति प्रतिषेद आरभ्यते। तेन "प्रागिवात् कः" ५।३।७० इति क एव भवति। तत्र परतः "प्रत्ययोत्तरपदयोश्च" ७।२।९८ इति मपर्यन्त-र्योर्युष्मदस्मदोस्त्वमयोः कृतयोः "नद्यृतश्च" ५।४।१५३ इति समासान्ते कपि च "त्वत्कपितृकः, मत्कपितृकः" इति सिद्ध्यति। ननु चान्वर्थसंज्ञाकरणादेव संज्ञानिरासे कृतेऽकज् न भविष्यति-न ह्यत्र सर्वार्थता सम्भवति, विशेषविषयत्वात्, नैतदस्ति; समुदायो हि विशेषे वत्र्तते, पूर्वपदं तु सर्वार्थताया अनपेतमेव। भवत्वनयोरनन्तरयो-रुदाहरणयोरेतत्सूत्रविषयता, "प्रियि()आआय" इत्यादिस्तु नपपद्यते; न हि प्रियवि()आआदयः शब्दाः सर्वेषां नामानि नापि तदवयवभूतानां वि()आआदिशब्दानां किञ्चित् सर्वनामका- र्यममुपपद्यते; स्मैप्रभृतीनामङ्गकार्यत्वात्, वि()आआदिशब्दानां चानङ्गत्वात्? एवं मन्यते- "त्वत्कपितृकः, कत्कपितृकः" इत्यत्राकज् मा भूदिति, एतदर्थं तावदेतदार- ब्धव्यम्, "प्रियवि()आआय" इत्येवमादावपि विस्पष्टार्थं भविष्यतीति। अथ "बहुव्रीहौ" इति वत्र्तमाने किमर्थं पुनर्बहुव्रीहग्रहणमित्याह- "बहुव्रीहौ" इत्यादि। "वस्त्रान्तरवसनान्तराः" इति। वस्त्रमन्तरं येषामिति बहुव्रीहिं कृत्वा वस्त्रान्तराश्च वसनान्तराश्चेति द्वन्द्वः कृतऋ। अत्र वत्र्तमा- नत्वाद् द्वन्द्वस्य "द्वन्द्वे च" १।१।६०, "विभाषा जसि" १।१।३१ इति द्वन्द्वा- श्रितो विभाषाप्रतिषेधः स्यात्, न नित्यो बहुव्रीह्याश्रितः। पुनर्बहुव्रीहिग्रहणा-त्तु भूतपूर्वस्यापि बहुव्रीहेराश्रयमात् तदाश्रयो नित्यः प्रतिषेधो भवति। वसनशब्द-श्चात्र वसत्यस्मिन्नित्यधिकरणसाधनो गृहे वत्र्तते, न वस्त्रे; अन्यथा वस्त्रान्तरवसनान्तरशब्दयोः पर्यायत्वाद् द्वन्द्वो न स्यात्, "तुल्यार्थाञ्च विरुपाणामेकशेषः" इत्येकशेषविधानात्।

बाल-मनोरमा

न बहुव्रीहौ २२०, १।१।२८

तत्रेदमारभ्यते--"न बहुव्रीहौ"। "सर्वादीनि सर्वनामानी"त्यनुवर्तते। बहुव्रीहौ सर्वादीनि सर्वनामानि न स्युरित्यर्थः प्रतीयते। एवं सति सूत्रमिदं व्यर्थं, "प्रियसर्वाये"त्यादीनां बहुव्रीहिवर्तिनां सर्वादीनां स्वार्थोपसङ्क्रान्तार्थान्तप्रधानकतयोपसर्जनत्वादेव सर्वनामत्वनिषेधसिद्धेः, "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इति वक्ष्यटमाणत्वात्। अतो व्याचष्टे -- चिकीर्षित इति। बहुव्रीहाविति विषयसप्तम्याश्रयणादयमर्थो लभ्यते। तथाच बहुव्रीहौ प्रसक्ते सति ततः प्रागेव विग्रहवाक्येऽयं निषेधोर्थवान्। एकार्थीभावात्मकसामथ्र्यस्य समासदशायामेव सत्त्वेन विग्रहवाक्ये तदभावेन तदानीमुक्तोपसर्जनत्वस्याऽभावादिति भावः। अथ लौकिकविग्रहवाक्यं दर्शयल्लँक्ष्यभूतं बहुव्रीहिं दर्शयति--त्वकं पितेत्यादिना। सर्वनामत्वाऽभावात्कप्रत्यये "प्रत्ययोत्तरपदयोश्चे"ति त्वमादेशे त्वत्को मत्क इति च रूपम्। ननु बहुव्रीहिप्रवृत्तेः प्रागलौकिकविग्रहवाक्ये सर्वनामत्वनिषेधात्त्वं पितेति कथं लोकिकविग्रहवाक्यप्रदर्शनमित्यत आह--इहेति। "न बहुव्रीहा"वित्यस्मिन्सूत्र इत्यर्थः। प्रक्रियावाक्य इति। युष्मद् स्-पितृ स्, अस्मद् स्-पित#ऋ स्--इत्यलौकिकविग्रहवाक्य एवेत्यर्थः। लोकिकविग्रहवाक्ये तु नायं निषेधः, बहुव्रीहिवत्तस्य स्वार्थे परिनिष्ठितत्वेन स्वतन्त्रप्रयोगाहृमतया बहुव्रीहेस्तत्र चिकीर्षितत्वाऽभावादलौकिकविग्रहात्मके प्रक्रियावाक्य एव तस्य चिकीर्षितत्वात्। यथा चैतत्तथा समासनिरूपणे वक्ष्यते नन्वलौकिकविग्रहवाक्ये मास्तु सर्वनामतानिषेधः, को दोषः()। तत्राह-अन्यथेति। न बहुव्रीहावित्यलौकिकविग्रहवाक्ये निषेधाऽभावे सतीत्यर्थः। तत्रापीति। अलौकिकविग्रहवाक्येऽपीत्यर्थः।

नन्वलौकिकविग्रहवाक्ये भवत्कच्। सत्यप्यकचि तस्य प्रयोगानर्हत्वेन बाधकाऽभावादित्यत आह--स चेति अलौकिकविग्रहवाक्ये श्रुतस्य लौकिकविग्रहवाक्ये समासे च श्रवणनियमादिति भावः। उभयत्रापि तन्नियमे दृष्टान्तद्वयमाह--अतिक्रान्तो भवकन्तमित्यादि। भवच्छब्दस्य सर्वादिगणे पाठात्सर्वनामत्वादलौकिकविग्रहदशायामकच्। ततश्च भवकत् अम् अति इत्यलौकिकविग्रहवाक्यं संपद्यते। तत्र "अत्यादयः क्रान्ताद्यर्थे द्वितीयये"ति समासे सति "सुपो धातुप्रातिपदिकयो"रिति सुब्लुकि अतिभवकच्छब्दात्प्रथमैकवचने।ऽतिभवकानिति रूपम्। समासाऽभावपक्षे तु भवकन्तमतिक्रान्त इति लौकिकविग्रहवाक्यं भवति। तत्र समासदशायां भवच्छब्दार्थस्य स्वोपसङ्क्रान्तार्थान्तरप्रधानतयोपसर्जनत्वे।ऽप्यलौकिकविग्रहदशायां भवच्छब्दस्यानुपसर्जनत्वात्सर्वनामत्वे सति प्रवृत्तोऽकच् अतिक्रान्तो भवकन्तमिति लौकिकविग्रहवाक्येऽभवकानिति समासे चानुवर्तते, लौकिकविग्रहदसायां भवच्छब्दस्योक्तरीत्याऽनुपसर्जनत्वात्। समासे तस्योपसर्जनत्वेऽपि योनिभूताऽलौकिकविग्रहदशायां प्रवृत्तस्याऽकचो निवर्तकाऽभावात्।

नच भवत् अम् इत्यलौकिकविग्रहदशायां सतोऽप्यनुपसर्जनत्वस्य समासदशायां विनाशं प्राप्स्यमानतया विनाशोन्मुखत्वादकृतव्यूहपरिभाषयाऽलौकिकविग्रहवाक्येऽपि सर्वनामत्वाऽभावादकज्दुर्लभः। ततश्चाऽतिक्रान्तो भवकन्तमिति लोकिकविग्रहवाक्येऽतिभवकानिति समासे च कथमकच्प्रसक्त इति दृष्टान्तऽसिद्धिरिति वाच्यम्। एवञ्जातीयकाऽलौकिकविग्रहवाक्ये सर्वनामत्वप्रवृत्तावकृतव्यूहपरिभाषाया अनित्यत्वेनाऽनाप्रवृत्तेः। तदनित्यत्वे च न बहुव्रीहाविति सूत्रमेव ज्ञापकम्। तथा हि--यद्यकृतव्यूहपरिभाषा सार्वत्रिकी स्यात्, तर्हि बहुव्रीहिविषयेऽपि युष्मद् स् पितृस् इत्याद्यलौकिकविग्रहवाक्येऽनुपसर्जनत्वस्य बहुव्रीहिकालिकविनाशोन्मुखतया सर्वनामत्वस्याऽप्रसक्तत्वात् "न बहुव्रीहा"विति नारभ्येत। अकृतव्यूहपरिभाषायास्तत्र प्रवृत्तेर्भविष्यद्बहुव्रीहिकालिकविनाशोन्मुखमनुपसर्जनत्वं पुरस्कृत्य तदलौकिकविग्रहवाक्ये सर्वनामत्वस्याऽप्रसक्तत्वान्न तन्निषेधाय न बहुव्रीहावित्यर्थवत्। नचोदाह्मतबहुव्रीहिविषयाऽसोकिकविग्रवाक्येऽकृतव्यूहपरिभाषामाश्रित्यैव सर्वनामत्वाऽभाव आश्रीयतां, किं न बहुव्रीहाविति सूत्रेणेति वाच्यम्। एवं सत्यतिक्रान्तो भवकन्तमतिभवकनित्यादि न सिध्येत्। अकृतव्यूहपरिभाषया तदलौकिकविग्रहवाक्येऽपि सर्वनामत्वाऽभावेनाकचः प्रवृत्त्यभावे तस्यातिक्रान्तो भवकन्तमित्यादिलौकिकविग्रहवाक्येऽतिभवकानिति समासेऽपि च श्रवणं न स्यात्। एवञ्च बहुव्रीहिविषयेऽलौकिकविग्रहवाक्येऽकृतव्यूहपरिभाषाया अप्रवृत्त्यसिद्धवत्कृत्य सर्वनामत्वनिषेधात्तदितरसमासविषयेऽप्यलौकिकविग्रहवाक्येऽकृतव्यूहपरिभाषाया अप्रवृत्त्या सर्वनामत्वं विज्ञायते। एतदर्थमेव न बहुव्रीहाविति सूत्रमित्यन्यत्र विस्तरः। प्रत्याचख्याविति। निराकृतवानित्यर्थः। सूत्रभाष्ययोरुभयोरपि स्मृतित्वाऽविशेषाद्विकल्पमाशङ्कयाह--यथोत्तरमिति। सूत्रकाराद्वार्तिककारस्य, उभाभ्यामपि भाष्यकृत इत्येवं मुनीनामुत्तरोत्तरस्य ग्रन्थस्य प्रामाण्यं, पूर्वपूर्वस्याऽप्रामाण्यमिति वैयाकरणसमय इति भावः। न चाऽकृतव्यूहपरिभाषाया उक्तरीत्या अनित्यत्वज्ञापनार्थमेतत्सूत्रमिति वाच्यम्, अकृतव्यूहपरिभाषाया निमूर्लत्वस्य निष्फलत्वस्य च हलन्तादिकारे सेदिवस्शब्दनिरूपणे, "समर्थानां प्रथमाद्वे"त्यत्र च वक्ष्यमाणत्वात्। संज्ञोपसर्जनीभूता इति। आधुनिकसङ्केतः संज्ञा। अन्यविशेषणत्वेन स्वार्थोपस्थापकम्--उपसर्जनम्। न सर्वादय इति। सर्वादिगणे पठिता न भवन्तीत्यर्थः।

महासंज्ञेति। टिघुभादिवदेकाक्षरसंज्ञामकृत्वा सर्वेषां नामानीत्यन्वर्थसंज्ञाकरणबलेन प्राधान्येनोपस्थितस्वीयसर्वार्थवाचकत्वस्य सर्वनामशब्दप्रवृत्तिनिमित्तत्वमित्यवगततया तथाविधानामेव सर्वादिगणे पाठानुमानादित्यर्थः। "प्राधान्येनोपस्थिते"त्यनेन उपसर्जनव्यावृत्तिः। "प्राधान्येनोपस्थितसर्वार्थवाचकत्व"मित्युक्ते

पूर्वादिशब्देष्वव्याप्तिरतः-"स्वीये"ति। सर्वार्थे"त्यनेन संज्ञाशब्दव्यावृत्तिः, संज्ञाशब्दानामेकैकव्यक्तिविषयकत्वात्। संज्ञाकार्यमिति। सर्वनामसंज्ञाकार्यं शीस्मायादिकमित्यर्थः। अन्तर्गणेति। सर्वादिगणेऽन्तर्गतो गणः-अन्तर्गणः। तदीयं कार्यम् ="अद्ड्डतरादिभ्यः" त्यदादीनामः" इत्यादिकमित्यर्थः। सर्वाय देहीति। संज्ञाशब्दत्वात्समायादेशो न।

अतिकतरमिति। कतरमतिक्रान्तं कुलम् अतिकतरमित्यत्र कतरशब्दस्य उपसर्जनत्वान्नाऽद्ड्डादेशः। अतितदिति। तमतिक्रान्तो ब्राआह्मणोऽतितदित्यत्र त्यदाद्यत्वं, "तदोः सः सौ" इति च न भवति।

तत्त्व-बोधिनी

न बहुव्रीहौ १८५, १।१।२८

न बहुव्रीहौ। कृते बहुव्रीहौ निषेधो व्यर्थः, "उपसर्जनीभूतास्तु न सर्वादयः" इति वक्ष्यमाणत्वात्। अत आहचिकीर्षित इति। "बहुव्रीहा"वित्यत्र विषयसप्तम्याश्रयणादयमर्थो लभ्यते। त्वकमिति। अज्ञाते कुत्सिते वा "अव्ययसर्वनाम्ना"मित्यकच्। एवमहकमित्यत्रापि। प्रक्रियावाक्ये इति। अलोकिकविग्रहवाक्ये इत्यर्थः। तच्च "युष्मद् सु पितृ सु" इत्याद्याकारकम्। ननु तत्राऽकच् प्रवर्ततां को दोष इत्यत आह--स चेति। न च निमित्तस्यानुपसर्जनत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया समासात्प्रागपि सर्वनामता न भविष्यतीति वाच्यं, तस्या अनित्यत्वात्। तत्र चूतत्सूत्रस्यैव ज्ञापकत्वात्। अतिभवकानिति। इदमेव ज्ञापनफलमिति भावः। "अत्यादयः क्रान्ताद्यर्थे द्वितीयये"ति प्रादिसमासः। प्रत्याचख्याविति। "छ्वोः शू"डिति सतुग्ग्रहणं, प्रकृतिप्रत्यापत्तिवचनं वा अनित्यत्वे ज्ञापकं, लक्ष्यानुरोधाच्च व्यवस्थेति भावः। यथोत्तरमिति। तथाच सम्प्रति भाष्यकारोतयैव व्यवस्थेति भावः। गणेसंनिवेशादिति। एतेन "पूर्वपरावरे"ति गणसूत्रे "असंज्ञाया"मिति ग्रहणं मन्दप्रयोजनमिति ध्वनितम्। संज्ञायां यानि पूर्वादीनि तेषां गणे संनिवेशाऽभावात्। एवमष्टाध्यायीस्थे "पूर्वपरावरे"ति सूत्रेऽपि "असंज्ञाया"मित्येतत्त्युक्तुं शक्यम्। न च तदभावे जसि परतः संज्ञायाम् "उत्तराः कुरव" इत्यत्राऽप्राप्तविकल्पः स्यांदिति वाच्यं, सर्वनामसंज्ञाया अन्वर्थत्वेन संज्ञायामप्राप्तविधेरसंभवादसंज्ञायामेव पूर्वेण प्राप्ता संज्ञा जसि वा स्यादिति वक्तुमुचितत्वात्। संज्ञाकार्यमिति। सर्वनामसंज्ञाप्रयुक्तं स्मायादिकमित्यर्थः। अन्तर्गणकार्यमिति। "अद्ड्डतरादिभ्यः,""त्यादादीनामः", "तदोः सः सौ" इत्यादिकमित्यर्थः। अतिकतरमिति। अत्राऽद्ड्डादेशो न। "अतित"दित्यत्र तु त्यदाद्यत्वं, "तदो सः सौ" इति सत्वं च नेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तृतीयासमासे ७।१ न ० २८ सर्वादीनि १।३ २६ सर्वनामानि १।३ २६

समासः॥

तृतीयया समासः तृतीयासमासः, तस्मिन् तृतीयासमासे, तृतीयातत्पुरुषः

अर्थः॥

तृतीयासमासे सर्वादीनि सर्वनामसंज्ञकानि न भवन्ति।

उदाहरणम्॥

मासपूर्वाय, संवत्सरपूर्वाय। द्व्यहपूर्वाय, त्र्यहपूर्वाय।

काशिका-वृत्तिः

तृतीयासमासे १।१।३०

तृतीयासमासे सर्वाऽदीनि सर्वनामसंज्ञानि न भवन्ति। मासपूर्वाय। संवत्सरपूर्वाय। द्व्यहपूर्वाय। त्र्यहपूर्वाय। समासे इति वर्तमाने पुनः सम्मसग्रहणं तृतीयासमासार्थवाक्ये ऽपि प्रतिषेधो यथा स्यात्। मासेन पूर्वाय। पूर्वसदृशसमौउनार्थकलहनिपुणमिश्रश्लक्ष्णैः २।१।३० इति तृतीयासमासं प्रतिपदं वक्ष्यति, तस्यैदं ग्रहणम्। न यस्य कस्यचित् तृतीयासमासस्य। कर्तृ करणे कृता बहुलम् २।१।३१ इतित्वयका खृतम्, मयका कृतम्।

न्यासः

तृतीयासमासे। , १।१।२९

ननु च "विभाषा दिक्समासे" १।१।२७ इत्यत समासग्रहणमनुवत्र्तत एव, तत् किमर्थं पुनः समासग्रहणमित्यत आह- "समास इत्यनुवत्र्तमाने" इत्यादि। अस्त्येव तृतीयासमासो मुख्यः, यस्मिन् सत्यैकपद्यमैकस्वर्यमेकविभ्कतिकत्वं च भवति। अस्ति च गौणः, य()स्मस्तादथ्र्यादतस्मिन्नपि ताच्छब्द्यं भवति। स पुनस्तृतीयासमासार्थं वाक्यम्। तत्रासति पुनः समासग्रहणे "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" (व्या।प।४) इति मुख्य एव प्रतिषेधः स्यात्। नेतरत्र। तस्मात् तत्रापि प्रतिषेधो यथा स्यादित्येवमर्थं पुनः समासग्रहणम्। यदि तर्हि तृतीयासमासार्थेऽपि वाक्ये प्रतिषेधो भवति,यावान् कश्चित् तृतीयासमासः, तदर्थे वाक्ये सर्वत्र प्रतिषेधः स्यात्; ततश्च "त्वयका कृतम्, मयका कृतम्ित्यत्राकज् न स्यात्। भवति ह्रेतत् "कर्तृकरणे कृता बहुलम्" २।१।३१ इत्यनेन यः समासस्तदर्थं वाक्यम्;तत्र कप्रत्यये कृते "त्वत्केन कृतम्, मत्केन कृतम्" इति रूपं स्यादित्यत आह- "पूर्वसदृश" इत्यादि। एतच्च लक्षमप्रतिपदोक्तपरिभाषया लभ्यते। "त्वयका, मयका" इति। पूर्ववत् त्वमावादेशौ, सुबन्तादकच्। क्वचित् त्वकया, मकया इति पाठः स त्वयुक्तः। प्रातिपदिकात् त्वकजुत्पत्तौ त्वकया मकयेति भवति, न चात्र प्रातिपदिकादकजुत्पत्तिरिष्यते; अपि तु सुबन्तात्। तथा ह्रकज्विधौ वक्ष्यति-"प्रातिपिदकात्" सुपः" इति च द्वयमपीहानुवत्र्तते। तत्राभिधानतो व्यवस्था- क्वचित् प्रातिपदिकस्य प्राक् टेः प्रत्ययो भवति, क्वचित् सुबन्तस्य। "युष्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवयकयोः" इत्यत्र प्रातिपदिकस्य। त्वयका, मयका, त्वयकि,मयकि" इत्यत्र सुबन्तस्य" इति।

बाल-मनोरमा

तृतीयासमासे २२१, १।१।२९

तृतीयासमासे। "सर्वादीनी"त्यतः सर्वनामग्रहणम् , "न "बहिव्रीहा"वित्यतो नेति चानुवर्तते इत्यभिप्रेत्याह--इहेति। मासूपार्वायेति। मासेन पूर्व इति विग्रहः। हेतौ तृतीया। "पूर्वसदृशे"ति तृतीयातत्पुरुषसमासः। मासात्पूर्वभावीत्यर्थः। "विभाषा दिक्समासे बहुव्रीहा"वित्यतः समासग्रहणे अनुवर्तमाने पुनः समासग्रहणं तृतीयासमासीयलौकिकविग्रहवाक्यरूपगौणसमासस्यापि परिग्रहार्थम्। ततश्च फलितमाह--तृतीयासमासार्थेति। द्वन्द्वे च। सर्वादीनीत्यतः सर्वनामग्रहणं, न बहुव्रीहावित्यतो नेति चानुवर्तते।

तत्त्व-बोधिनी

तृतीयासमासे १८६, १।१।२९

तृतीयासमासे। अत्र "विभाषा दिक्समासे" इत्यतः समास इत्यनुवर्तमाने पुनः समासग्रहणं गौणार्थस्यापि सङ्ग्रहार्थमित्यभिप्रेत्याह--तृतीयासमासार्थेति। इह "पूर्वसदृशे"ति विहितः समासो गृह्रते, प्रतिपदोक्तत्वात्। न तु "कर्तृकरणे" इति समासः, तेन त्वयका कृत"मित्यत्र निषेधो न भवति। "ओकारसकारभकारादौ सुपी"ति व्यवस्थापयिष्यमाणत्वादिह सुपष्टेः प्रागकच्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्वन्द्वे ७।१ ३१ च ० न ० २८ सर्वादीनि १।३ २६ सर्वनामानि १।३ २६

अर्थः॥

द्वन्द्वे समासे सर्वादीनि सर्वनामसंज्ञकानि न भवन्ति।

उदाहरणम्॥

पूर्वापराणाम्। दक्षिणोत्तरपूर्वाणाम्। कतरकतमानाम्।

काशिका-वृत्तिः

द्वन्द्वे च १।१।३१

द्वन्द्वे च समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। पूर्वापराणाम्। कतरकतमानाम्।

न्यासः

द्वन्द्वे च। , १।१।३०

बाल-मनोरमा

द्वन्द्वे च २२२, १।१।३०

तदाह--द्वन्द्वे उक्तेति। सर्वनामसंज्ञा नेत्यर्थः। वर्णाश्रमेतराणामिति। "वर्णाश्रमेतराणां नो ब्राऊहि धर्मानशेषतः" इति याज्ञवल्क्यस्मृतिः। वर्णाश्चाअश्रमाश्च इतरे चेति द्वन्द्वः। अत्र सर्वनामत्वाऽभावादामि सर्वनाम्न इति न सुट्। समुदायस्यैवेति। द्वन्द्वे विद्यमानानि यानि सर्वादीनि तानि सर्वनामानि न स्युरिति नाऽर्थः, विद्यतिक्रियाध्याहारे गौरवात्। किन्तु द्वन्द्वे सर्वनामसंज्ञा न भवतीति प्रधानभूतया निषेध्यवनक्रिययैव द्वन्द्वस्याधारतयाऽन्वयः। द्वन्द्वाधारा सर्वनामसंज्ञा न भवतीत्यक्षरार्थः। द्वन्द्वस्य सर्वनामसंज्ञा नेति फलितम्। वर्णाश्रमतरेत्यादिसमुदायस्यैव द्वन्द्वता नतु तदवयवानाम्। एवंच वर्णाश्रमेतरेत्यादिसमुदायस्यैव सर्वनामत्वनिषेधो नतु तदवयवानामिति वस्तुस्तितिकथनम्। ननु द्वन्दावयवानां सर्वनामत्वनिषेधाऽभावे वर्णाश्रमेतरशब्दे इतरशब्दस्य सर्वनामतया ततः परस्यामः सुटि वर्णाश्रमेतरेषामिति स्यात्। नच अवर्णान्तात्सर्वनाम्नोऽह्गात्परस्यामः सुड्विधीयते। ततश्च वर्णाश्रमेतरशब्दस्य समुदायस्य द्वन्द्वतया सर्वनामत्वनिषेधेऽपि तदवयवस्य इतरशब्दस्य सर्वनामतया तदन्ताङ्गात्परत्वादामः स#3उट् स्यात्। न चैवं सति द्वन्द्वस्य तन्निषेधात्। इतरशब्दस्तु सर्वनामसंज्ञकः,न ततो विहित आम्, आमः समुदायादेव विधानात्। अतो न सुडिति भावः। "अवर्णान्तादङ्गात्सर्वनाम्नो विहितस्यामः सु"डिति व्याख्याने तु येषां तेषामित्यत्राऽव्याप्तिः। अतोऽवर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्यामः सुडित्येव व्याख्येयम्।

तत्त्व-बोधिनी
द्वन्द्वे च १८७, १।१।३०

द्वन्द्वे च। समुदायस्येति। तत्रैव द्वन्द्वशब्दस्य मुख्यत्वात्। न च "द्वन्द्वे यानि सर्वादीनी"ति संबन्धः, कारकाणां क्रिययैवान्वयात्। न च "द्वन्द्वे विद्यमानानि यानी"ति संबन्धः, विद्यतिक्रियाध्याहारे गौरवात्, निषेध्याया भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्चेति भावः।

सुट्प्रसङ्ग इति। न च "द्वन्द्वे चे"ति निषेधसामर्थ्यात् "वर्णाश्रमेतराणा"मित्यादौ सुण्न प्रसज्यत इति वाच्यम्, अनङ्गस्य त्रतसिलादेर्व्यावृत्त्या तत्सामर्थ्यस्योपक्षीणत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ ३५ जसि ७।१ ३५ द्वन्द्वे ७।१ ३० न ० २८ सर्वादीनि १।३ २६ सर्वनामानि १।३ २६

अर्थः॥

द्वन्द्वे समासे जसि सर्वादीनि सर्वनामसंज्ञकानि विभाषा न भवन्ति।

उदाहरणम्॥

कतरकतमे, कतरकतमाः। दक्षिणपूर्वे, पक्षिणपूर्वाः।
काशिका-वृत्तिः
विभाषा जसि १।१।३२

पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषा आरब्यते। द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। कतरकतमे, कतरकतमाः। जसः कार्यं प्रति विभाषा, अकज् हि न भवति कतरकतमकाः।
न्यासः
विभाषा जसि , १।१।३१

"जसः कार्यं प्रति" इत्यादि। एतच्च् व्यवस्थितविभाषात्वादस्या विभाषाया लभ्यते। अथ वा जसीति कार्यापेक्षया आधारसप्तमीयम्, न तु सर्वाद्यपेक्षया परसप्तमी; तेन जसि यत् कार्यम्= जसाधारं यत् कार्यं जसः शीभावः तत्र विभाषा भवति, नान्यत्र । किं कारणमेवं व्याख्यायत इत्यत आह-"अकज् हि न भवति" इति हि शब्दो हेतौ।एवं व्याख्यायमाने सति "कतरकतमकाः" इत्यत्राकज् न भवति; पूर्वसूत्रेण संज्ञाप्रतिषेधात् अन्यथा हि यदि जसि परतः संज्ञा विकल्प्यते,तदा पक्षेऽकज् भवेदेव। तथा च तस्य तन्मध्यपतित्वात् तद्ग्रहणेन ग्रहणात् पाक्षिकः शीभावः प्रसज्येत। कप्रत्यये तु सति तेन व्यवधानादेवैष दोषो न भवति।
बाल-मनोरमा
विभाषा जसि २२३, १।१।३१

विभाषा जसि। सर्वनामग्रहणमनुवर्तते, द्वन्द्व इति च। "जसी"त्यविभक्तिको निर्देशः। जस इः जशिः। आर्षः सप्तम्या लुक्।

"इ"शब्द इवर्णपरः सन् "शी"तीकारमाचष्टे। ततश्च जसादेशे शीभावे कर्तव्ये इति फलितम्। तदाह --जसाधारमिति। जस् आधारो यस्येति बहुव्रीहिः। जस्स्थानकमित्यर्थः। ननु "जसि परतो द्वन्द्वे सर्वानामसंज्ञा वा स्या"दित्येव कुतो न व्याख्यायत इत्यत आह--शीभावं प्रत्येवेत्यादिना। यदि त्वकच्स्यात्तर्हि तस्याऽव्यवधायकत्वाच्छीभावः प्रसज्येत। कप्रत्यये तु सति तेन व्यवधानान्नोक्तदोष इत्याह--वर्णाश्रमेतरका इति। नचाऽकचि कर्तव्ये विकल्पाऽभावे।ञपि सर्वादीनी"ति नित्या सर्वनाम संज्ञा कुतोऽत्र न स्यादिति वाच्यं, "द्वन्द्वे चे"ति तस्या नित्यानिषेधात्। नच "द्वन्द्वे"चेति निषेधस्योक्तरीत्याऽवयवेषु प्रवृत्त्यभावाद्वर्णाश्रमेतरशब्दे समुदाये इतरशब्दस्याऽवयवस्य सर्वनामत्वाऽनपायादकज्दुर्वार इति वाच्यं, द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाऽबाववत्कुत्सादिविवक्षाया अभावात्। समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनाऽवयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक् तदनुत्पत्तेः। अन्यथा अवयवेभ्यः प्रत्येकं कप्रत्ययापत्तेः। एतदेवाभिप्रेत्योक्तं भाष्ये--"वर्णाश्रमेतरशब्दे अकच् न भवती"ति। एवंच यदा इतरशब्देन द्वन्द्वं कृत्वा कुत्सिता वर्णाश्रमेतरा इति कुत्सायोगः क्रियते तदा कप्रत्यये सति "वर्णाश्रमेतरका" इत्येव रूपम्। यदा तु कुत्सित इतरः-इतरक इत्यकचं कृत्वा वर्णाश्च आश्रमाश्च इतरकश्चेति द्वन्द्वः क्रियते, तदा शीभावविकल्पः स्यादेव॥

तत्त्व-बोधिनी
विभाषा जसि १८८, १।१।३१

जसाधारमिति। शीभावेन जस्यपह्नतेऽप्यौपचारिकमाधारत्वमत्र बोध्यम्। यद्वा जस इर्जसिः,तस्मिन्। सौत्रः सप्तम्या लुगित्यर्थतो व्याचष्टे-जसाधारमिति। अन्यथा सत्यकचि "जसः शी" त्यस्य प्रवृत्तौ "वर्णाश्रमेतरके" इत्यपि रूपं स्यादिति भावः। यदा अज्ञातः कुत्सितो वा इतरः इतरक इत्यकचं कृत्वा वर्णाश्च आश्रमाश्च इतरकश्चेति द्वन्द्वः क्रियते तदा रूपद्वयं स्यादेव। परं तु इतरशब्देन द्वन्द्वं कृत्वा अज्ञाता वर्णाश्रमेतरा इत्यज्ञाताद्यर्थयोगो यदा क्रियते तदा "वर्णाश्रमेतरका" इत्येकमेव रूपं साध्विति बोध्यम्।

ननु द्वन्द्वावयवस्येतरशब्दस्याप्यकच् दुर्वारः, अवयवस्य सर्वनामताऽनपायात्। "द्वन्द्वे चे"त्यनेन हि समुदायस्य निषेधो न त्ववयवानामिति चेत् ; अत्राहुः--सिद्धान्ते हि "जहत्स्वार्था वृत्ति"रिति पक्षो मुख्यस्त()स्मस्तु पक्षेऽवयवानां निरर्थकत्वादज्ञाताद्यर्थयोगाऽभावेनाऽकचः प्राप्तिरेव नास्ति। यैस्तु "द्वन्द्वे चे"ति चकारेणावयवेष्वपि संज्ञा निषिध्यत इत्युच्यते, तेषामजहत्स्वार्थावृत्तिपक्षाभ्युपगमेऽपि न दोष इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रथम-चरम-तयाल्पार्ध-कतिपय-नेमाः १।३ च ० विभाषा १।१ ३१ जसि ७।१ ३१ सर्वनामानि १।३ २६

समासः॥

प्रथमश्च चरमश्च तयश्च अल्पश्च अर्धश्च कतिपयश्च नेमश्च प्रथम॰नेमाः, इतरेतरद्वन्द्वः।

अर्थः॥

प्रथम, चरम, तयप्प्रत्ययान्तश्च, अल्प, अर्ध, कतिपय, नेम इत्येते शब्दाः जसि विभाषा सर्वनामसंज्ञकाः भवन्ति।

उदाहरणम्॥

प्रथमे, प्रथमाः। चरमे चरमाः। द्वितये द्वितयाः। अल्पे अल्पाः। अर्धे अर्धाः। कतिपये कतिपयाः। नेमे नेमाः॥
काशिका-वृत्तिः
प्रथमचरमतयाल्पार्धकतिपयनेमाश् च १।१।३३

विभाषा जसि १।१।३१ इति वर्तते। द्वन्द्वे इति निवृत्तम्। प्रथम चरम तय अल्प अर्ध कतिपय नेम इत्येते जसि विभाषा सर्वनामसंज्ञा भवन्ति। प्रथमे, प्रथमाः। चरमे, चरमाः। द्वितये, द्वितयाः। अल्पे, अल्पाः। अर्धे, अर्धाः। कतिपये, कतिपयः। नेमे, नेमाः। तय इति तयप् प्रत्ययः। शिष्टानि प्रातिपदिकानि। तत्र नेम इति सर्वादिषु पठ्यते, तस्य प्राप्ते विभषा, अन्येषाम् अप्राप्ते। उभयशब्दस्य तयप्प्रत्ययान्तस्य गने पाठान् नित्या सर्वनामसंज्ञा इह अपि जस्कार्यं प्रति विभाषा। काकचोर्यथायोगं वृत्तिः।
लघु-सिद्धान्त-कौमुदी
प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च १६०, १।१।३२

एते जसि उक्तसंज्ञा वा स्युः। प्रथमे, प्रथमाः॥ तयः प्रत्ययः। द्वितये, द्वितयाः। शेषं रामवत्॥ नेमे, नेमाः। शेषं सर्ववत्॥ (तीयस्य ङित्सु वा)। द्वितीयस्मै, द्वितीयायेत्यादि। एवं तृतीयः॥ निर्जरः॥
न्यासः
प्रथमचरमतयाल्पार्धकतिपयनेमाश्च। , १।१।३२

उभयशब्दस्य तयप्प्रत्ययान्तस्य" इति। "संख्याया अवयवे तयप्" ५।२।४२ इत्युभशब्दाद्विहितस्य तयपो यद्यपि"उभादुदात्तो नित्यम्" ५।२।४४ इत्ययजादेशो विधीयते, तथापि स्थानिवद्भावात् तद्ग्रहणेन गृह्यत इत्युभयशब्दस्तयप्प्रत्ययान्तो भवति। "तस्य गणे पाठान्नित्या सर्वनामसञ्ज्ञा"इति। न त्वनेन योगेन परेणापि पाक्षिकी। एतच्च व्यवस्थितविभाषात्वाल्लभ्यते। "काकचोर्यथायोगं वृत्तिः"इति। तेनोभय- नेम-शब्दयोः सर्वादित्वान्नित्यमकचो वृत्तिः, प्रथमादिभ्यस्तु कप्रत्ययस्य- इत्येष यथा- योगार्थः॥
बाल-मनोरमा
प्रथमचरमतयाल्पार्धकतिपयनेमाश्च २२४, १।१।३२

प्रथमचरम। "विभाषा जसी"त्यनुवर्तते, "सर्वनामानी"ति च। तदाह--एते इति। प्रतमादय इत्यर्थः। उक्तसंज्ञा इति। सर्वनामसंज्ञका इत्यर्थः। तत्र नेमशब्दस्य जसि सर्वनामसंज्ञा गणे पाठान्नित्या प्राप्ता। तद्विकल्पोऽत्र विधीयते। नेमशब्दव्यतिरिक्तानां प्रथमादिशब्दानां तु गणे पाठाऽभावादप्राप्तैव सर्वनामसंज्ञा जसि विकल्पेन विधीयते। अतो नेमशब्दव्यतिरिक्तानां प्रथमादिशब्दानां जसोऽन्यत्र न सर्वनामकार्यमित्याह-शेषं रामवदिति।

"तय" शब्दो न प्रातिपदिकमित्याह--तयप्प्रत्यय इति। "संख्याया अवयवे तयबिति विहित" इति शेषः। तत इति। तस्मात् प्रत्ययत्वाद्धेतोः प्रत्ययग्रहणपरिभाषया, तदन्ताः=तयबन्ता ग्राह्या इत्यर्थः। द्वितये द्वितया इति। द्ववयववावस्येत्यर्थे तयप्। यद्यप्यवयवसमुदायोऽवयवी तयवर्थः, तस्य चैकत्वादेकवचनमेव युक्तन्तथापि यदोध्भूतावयवभेदः समुदायस्तयबर्थः, उद्भूतत्वं च विवक्षितसङ्ख्याकत्वं, तदाऽवयवबहुत्वाभिप्रायमवयविनोऽवयवाऽभेदाभिप्रायं वा बहु वचनमिति न दोषः। अत्र च तयब्ग्रहणमेव प्रमाणम्। अन्यथा तयबन्ताज्जस एवाऽभावा()त्कतेन()। चरमे चरमाः। अल्पे अल्पाः। अर्धे अर्धाः। कतिपये कतिपयाः-इत्यपि

प्रथमशब्दवदुदाहार्यम्। अर्धशब्दस्त्वेकदेशवाची पुंलिङ्गः। समांशवाची तु नपुंसकलिङ्गः। "वा पुंस्यर्धोऽर्धं समेंऽशके" इति कोशात्। शेषं सर्ववदिति। नेमशब्दस्य सर्वादिगणे पाठादिति भावः।

विभाषाप्रकरण इति। "विभाषा जसी"त्यधिकारे तीयान्तस्य ङे-ङसि-ङस्#Hङि-इत्येतेषु ङित्सु परेषु सर्वनामसंज्ञावचनं कर्तव्यमित्यर्थः। द्वितीयस्मै द्वितीयायेति। द्वयोः पूरणो द्वितीयः। "द्वेस्तीय" इति पूरणे तीयप्रत्ययः। इत्यादीति। द्वितीयस्मात्, द्वितीयात्। द्वितीयस्मिन्, द्वितीये इत्यादिशब्दार्थः। एवं तृतीय इति। "ङित्सूदाहार्य" इति शेषः। "त्रेः संप्रसारणं चे"ति पूरणे तीयप्रत्ययः। रेफस्य संप्रसारणमृकारः। "संप्रसारणाच्चे"ति पूर्वरूपम्। ननु "प्रकारवचने जातीयर्" इति पटुशब्दाज्जातीयरि "पटुजातीय"शब्दः, तस्यापि तीयान्तत्वान्ङित्सु सर्वनामत्वविकल्पः स्यादित्यत आह--अर्थवदिति। "अर्थवद्ग्रहणे नानर्थकस्ये"ति परिभाषयाऽर्थवानेन तीयोऽत्र गृह्रते। जातीयरि तु समुदायस्यैवार्थवत्त्वं न तु तदेकदेशस्येति भावः। निष्क्रान्तो जराया निर्जरः। "निरादयः क्रान्ताद्यर्थे" इति समासः "गोस्त्रियोः" इति ह्यस्वत्वम्। निर्जरा जरा यस्मादिति बहुव्रीहिर्वा।

तत्त्व-बोधिनी
प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १८९, १।१।३२

प्रथमचरम। नेमशब्दस्य नित्यं प्राप्तेऽन्येषामप्राप्ते चायमारम्भः। तयः प्रत्यय इति। "सङ्ख्याया अवयवे तय"बिति विहितः। तीयस्येति। "द्वेस्तीयः", "त्रेः सम्प्रसारणं चेतिविहितस्य।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूर्व-परावर-दक्षिणोत्तरापराधराणि १।३ व्यवस्थायाम् ७।१ असंज्ञायाम् ७।१ विभाषा १।१ ३१ जसि ७।१ ३१ सर्वनामानि १।३ २६

समासः॥

पूर्वश्च, परश्च, अवरश्च, दक्षिणश्च, उत्तरश्च, अपरश्च, अधरञ्च, पूर्वपरावर॰धराणि, इतरेतरद्वन्द्वः
न संज्ञा असंज्ञा, तस्याम् असंज्ञायाम्, नञ्तत्पुरुषः

अर्थः॥

पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, इत्येतानि जसि विभाषा सर्वनामसंज्ञकानि भवन्ति संज्ञाभिन्नव्यवस्थायाम्

उदाहरणम्॥

पूर्वे पूर्वाः, परे पराः, अवरे अवराः, दक्षिणे, दक्षिणाः, उत्तरे, उत्तराः, अपरे, अपराः, अधरे, अधराः।
काशिका-वृत्तिः
पूर्वपरावरदक्षिणौत्तरापराधराणि व्यवस्थायाम् असंज्ञायाम् १।१।३४

पूर्व पर अवर दक्षिण उत्तर अपर अधर इत्येषां गणे पाठात् पूर्वेण नित्यायां सर्वनामसंज्ञायां प्राप्तायां जसि विभाषा

आरभ्यते। पूर्वादीनि विभषा जसि सर्वनामसंज्ञानि भवन्ति व्यवस्थायाम् असंज्ञायाम्। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। पूर्वे, पूर्वाः। परे, पराः। अवरे, अवराः। दक्ष्णे, दक्ष्णाः। उत्तरे, उत्तराः। अपरे, अपराः। अधरे, अधरः। व्यवस्थायाम् इति किं? दक्षिणा इमे गाथकाः। प्रवीणाः इत्यर्थः। असंज्ञायाम् इति किम्? उत्तराः कुरवः। सत्याम् एव व्यवस्थायाम् इयं तेषां संज्ञा।

लघु-सिद्धान्त-कौमुदी

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १५६, १।१।३३

एतेषां व्यवस्थायामसंज्ञायां च सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे, पूर्वाः। असंज्ञायां किम्? उत्तराः कुरवः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्? दक्षिणा गाथकाः, कुशला इत्यर्थः॥

न्यासः

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। , १।१।३३

"असंज्ञायाम्" इति। संज्ञायामसत्याम् पूर्वादयश्चेत् संज्ञारूपा न भवन्ती- त्यर्थः। "स्वाभिधेयापेक्ष" इत्यादि अवधिर्मर्यादा,तस्य नियमोऽवश्यम्भावः; अवधिभा- वादभ्रंशः।किंविशिष्टोऽवधिनियमः? स्वाभिधेयापेक्षः ह्यर्थानाम्-पूर्वादिशब्दाभिधयानां यत् पूर्वादित्वम्, तन्नियोगतः कञ्चनावधिमपक्ष्य सम्पद्यते, न त्ववधिनिरपेक्षम्; यथा- पूर्वदेशस्य यत् पूर्वत्वम्,तत्परं देशमपेक्ष्य भवति; परस्यापि यत् परत्वम्, तत् पूर्वदेशम्; तस्मात् पूर्वादिशब्दवाच्यापेक्षेणावश्यं केनचिदवधिना भाव्यम्। तत्र तस्यैवावधेः यः पूर्वादिशब्दार्थापेक्षोऽवधिभाव ऐकान्तिकः, स नियमो व्यवस्था, तस्यां गम्यमानायां पूर्वादीनां शब्दानां स्वाभिधेय एव वत्र्तमानानामियं संज्ञा भवति; न तु वाच्यायाम्। यो हि पूर्वादिशब्दाभिधेयादन्यस्यार्थस्यावधिभूतस्य नियमः, स कतं पूर्वादिशब्दवाच्यो भविष्यति! "पूर्वे,पर्वाः" इति। अत्र परसमादेवावधेरिति गम्यते। "परे,पराः"इति। पूर्व- स्मादेवावदेरिति गम्यते। "प्रवीणाः" इति। कुशला इत्यर्थः। अत्र प्रावीण्यमात्रेण निमित्तेनावधिनिरपेक्ष एव दक्षिणशब्दो वत्र्तत इति व्यवस्था न गम्यते। "सत्यामेव" इत्यादि। जम्बूद्वीपं वावधिमपेक्ष्य तत्रोत्तरशब्दो वत्र्तत इति विद्यत एव व्यवस्था।

बाल-मनोरमा

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् २१६, १।१।३३

अथ सर्वादिगणान्तर्गततिसूत्रीसमानाकारामष्टाध्यायीपठितां पूर्वपरेत्यादित्रिसूत्रीं पुनरुक्तिशङ्कां व्युदस्यन् व्याचष्टे--पूर्वपरा। "सर्वानामानी"ति"विभाषा जसी"ति चानुवर्तते। तदाह--एतेषामिति। पूर्वादिसप्तानामित्यर्थः। गण इति। सर्वादिगण इत्यर्थः। या प्राप्तेति। "सर्वादीनि"त्यनेन नित्या संज्ञाया प्राप्तेत्यर्थः। अनेन पूर्वपरेति सूत्रं गणपठितं जसोऽन्यत्र नित्यतया सर्वनामसंज्ञार्थम्। अष्टाध्यायीपठितं तु जसि तद्विकल्पार्थमिति न पौनरुक्त्यमिति सूचितम्। स्वाभिधेयेति। अपेक्ष्यत इत्यपेक्षः। कर्मणि घ()?। स्वस्य=ततश्चनियमेनावधिसापेक्षार्थे वर्तमानानां पूर्वादिशब्दानां जसि सर्वनामसंज्ञाविकल्प इति फलति। व्यवस्थायां किमिति। पूर्वादिशब्दानां नियमेनावधिसापेक्ष एवार्थे विद्यमानत्वादिति प्रश्नः। दक्षिणा गाथका इति। अत्र दक्षिणशब्दो नावध्यपेक्ष इति भावः। दक्षिणपार(ावर्तिनो गाथका इत्यत्र कस्मादित्यवध्यपेक्षा अस्त्येवेत्यत आह--कुशला इत्यर्थ इति। यद्यपि प्रावीण्यमपि कस्मादित्यवध्यपेक्षमेव, तथापि "उत्तरे प्रत्युत्तरे च शक्त" इत्यादि प्रत्युदाहरणं बोध्यमित्याहुः। असंज्ञायां किमिति। "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इति वक्ष्यमाणतया संज्ञायां सर्वनामत्वस्याऽप्रसक्तेरिति प्रश्नः। उत्तराः कुरव इति। कुरुशब्दो दोशविशेषे नित्यं बहुवचनान्तः। सुमेरमवधीकृत्य तत्रोत्तरशब्दो वर्तत इत्यस्तीह व्यवस्था। किं तु संज्ञाशब्दत्वान्नास्य सर्वनामता। पूर्वादिशब्दानां तु दिक्षु अनादिस्सङ्केत इति न ते संज्ञाशब्दाः। कुरुष तूत्तरशब्दस्याधुनिकस्सङ्केत इति भवत्ययं

संज्ञाशब्द इति मन्यते। केचित्त्वसंज्ञायामित्यस्याऽभावे संज्ञायामेव पूर्वादिशब्दानामप्राप्तविभाषा स्यादित्याहुः।

तत्त्व-बोधिनी
पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १८१, १।१।३३

पूर्वपरावरेत्यादिना। स्वाभिधेयेति। स्वस्य पूर्वादिशब्दस्याऽभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः। अपेक्ष्यते इत्यपेक्षः। कर्मणि घञ्। कथं तर्हि "दिशः सपत्नी भव दक्षिणस्या" इति?। अत्राहुः-अस्त्येवात्रापि व्यवस्था, प्रसिद्धत्वान्नावधिवाची शब्दः प्रयुज्यते। न च संज्ञात्वान्निषेधः। आधुनिकसङ्केतो हि संज्ञा, न च दिक्षु साऽस्तीति। "दिक्षु चिरन्तनः, कुरुष त्वाधुनिकः सङ्केत" इत्यत्र तु व्यख्यातृवचनमेव प्रमाणम्। एतेन "वि()ओषां देवाना"मिति व्याख्यातम्, वेदे प्रसिद्धत्वाद्देवगणविशेषे वि()आशब्दस्याधुनिकसङ्केताऽभावात्। दक्षिणा गाथका इति। "गस्थक"निति शिल्पिनि थकन्। इहामुकस्मात्कुशला इत्यवध्यन्वयसंभवेऽपि तन्नियमो नास्तीति भावः। एवम"धरे ताम्बूलरागः, "उत्तरे प्रत्यत्तरे च शक्तः" इत्यपि प्रत्युदाहर्तव्यम्। उत्तराः कुरव इति। सुमेरुमवधिमपेक्ष्य कुरुषु उत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था, किं त्वाधुनिकसङ्केतोऽयमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वम् १।१ अज्ञातिधनाख्यायाम् ७।१ विभाषा १।१ ३१ जसि ७।१ ३१ सर्वनामानि १।३ २६

समासः॥

ज्ञातिश्च धनं च ज्ञातिधने, ज्ञातिधनयोः आख्या ज्ञातिधनाख्या, द्वन्द्वगर्भषष्ठीतत्पुरुषः। न ज्ञातिधनाख्या अज्ञातिधनाख्या, तस्यां अज्ञातिधनाख्यायाम्, नञ्तत्पुरुषः।

अर्थः॥

अनेकार्थः अयं स्व-शब्दः। ज्ञति-धन-आत्मीयवाची च, तत्र ज्ञातिधनाभिधायकं स्वशब्दं वर्जयित्वा अन्यत्र स्वशब्दस्य जसि विभाषा सर्वनामसंज्ञा भवति।

उदाहरणम्॥

स्वे पुत्राः, स्वाः पुत्राः। स्वे गावः, स्वाः गावः। आत्मीयाः इत्यर्थः।
काशिका-वृत्तिः
स्वम् अज्ञातिधनाऽख्यायाम् १।१।३५

अत्र अपि नित्या सर्वनामसंज्ञा प्राप्ता जसि विभाष्यते। स्वम् इत्येतच्छब्दरूपं जसि विभाषा सर्वनामसंज्ञं भवति , न चेज् ज्ञातिधनयोः संज्ञारूपेण वर्तते। स्वे पुत्राः, स्वाः पुत्राः। स्वे गावः, स्वा गावः। आत्मीयाः इत्यर्थः। ज्ञातिप्रतिषेधः इति किम्? धूमायन्त इव अश्लिष्टाः प्रज्वलन्ति इव संहताः। उल्मुकानि इव मे ऽमी स्वा ज्ञातयो भरतर् षभ। अधनाख्यायाम् इति किम्? प्रभूताः स्वा न दीयन्ते, प्रभूतः स्वा न भुज्यन्ते। प्रभूतानि धनानि इत्यर्थः।
लघु-सिद्धान्त-कौमुदी

स्वमज्ञातिधनाख्यायाम् १५७, १।१।३४

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा। स्वे, स्वाः; आत्मीयाः, आत्मान इति वा। ज्ञातिधनवाचिनस्तु, स्वाः; ज्ञातयोऽथा वा॥

न्यासः

स्वमज्ञातिधनाख्यायाम्। , १।१।३४

"अत्रापि नित्या सर्वनामसंज्ञा प्राप्ता" इति। गणपाठात्। एवमुत्तरत्रापि वेदतव्यम्। "न चेत्" इत्यादिना ज्ञातिधनाख्याशब्दस्यार्थमाचष्टे। यत्र च शब्दान्तर- निरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपेणाचष्टे, तत्रासौ संज्ञारूपेण तयोर्वत्र्तते। "आत्मीया इत्यर्थः" इति। कथं पुनरयमर्थः, यावता "स्वे पुत्राः" इति ज्ञात्यर्थो गम्यते, "स्वे गावः" इति धनार्थः? नैतदस्ति; पुत्रगोशब्दसान्निध्यादतदुभयं गम्यते। स्वशभ्देनात्मीयत्वमात्रं गम्यते- "स्वा ज्ञातयः" इति। प्रभूता स्वा इति चोभयत्र शब्दान्तरमनपेक्ष्य ज्ञातिधने स्वरूपेणैव स्वशब्देनाभिधीयेते। यद्येवम्, ज्ञातय इत्यनुप्रयोगो नोपपद्यते; पर्यायत्वात्, यथा- वृक्षशब्दप्रयोगे सति तरुशब्द- शब्दस्यानुप्रयोगो विरुध्यते, नैष दोषः; पर्यायशब्दस्य हि यत्रानेकार्थो भवति सन्दिग्धार्थो वा, तत्र तदर्थस्यैव व्यक्तीकरणार्थः पर्यायान्तरस्यानुप्रयोगो न विरुध्यते; यथा- मेघाद्यनेकार्थवृत्तेर्वराहकशब्दस्य प्रयोगे शूकरशब्दस्य प्रयोगः। तथा सन्दिग्धार्थस्य पिकशब्दस्य प्रयोगे कोकिलशब्दस्य ! स्वशब्दश्चायमनेकार्थः, तत्रासत्यनुप्रयोगे किंविषयोऽयं प्रयुक्तः- इति सन्देह स्यात्।

बाल-मनोरमा

स्वमज्ञातिधनाख्यायाम् २१७, १।१।३४

स्वमज्ञाति। अत्रापि सर्वनामानीति विभाषा जसीति चानुवर्तते। ज्ञातिश्च धनं च ज्ञातिधने, तयोराख्या-ज्ञातिधनाख्या, न ज्ञातिधनाख्या अज्ञातिधनाख्या, तस्याम्--अज्ञातिधनाख्यायाम्। "स्व"मिति शब्दस्वरूपापेक्षया नपुंसकत्वम्। तदाह--ज्ञातिधनान्येति। स्वेस्वा इति। सर्वनामत्वे शीभावः, तदभावे तदभाव इति भावः। आत्मा आत्मीयं ज्ञातिः धनं चेति स्वशब्दस्य चत्वारोऽर्थाः। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः। अत्र "स्वो ज्ञातावात्मनी"त्येकं वाक्यम्। ज्ञातावात्मनि च स्वशब्दः पुँल्लिङ्ग इत्यर्थः। "स्वं त्रिष्वात्मीये"इति द्वितीयं वाक्यम्। आत्मीये स्वशब्दो विशेष्यनिघ्न इत्यर्थः। "स्वोऽस्त्रियां धने" इति तृतीयं वाक्यम्। धने स्वशब्दः पुंनपुंसक इत्यर्थः। "स्वः स्यात्पुंस्यात्मनि ज्ञातौ, त्रिष्वात्मीये।ऽस्त्रियां धने" इति मेदनीकोशः। तत्र ज्ञातिधनयोः पर्युदासादात्मनि आत्मीये च सर्वनामता जसि विकल्प्यत इत्यबिप्रेत्य व्याचष्टे--आत्मीया इत्यर्थः। आत्मान इति वेति। ज्ञातिधनपर्युदासस्य प्रयोजनमाह--ज्ञातिधनवाचिनस्त्विति। ज्ञातिवाचिनो धनवाचिनश्च सर्वनामत्वपर्युदासाज्जसि "स्वाः" इत्येव रूपमित्यर्थः। नच ज्ञातिधनयोरप्यात्मीयत्वपुरस्कारे सर्वनामत्वं न स्यादिति वाच्यम्, आख्याग्रहणबलेन ज्ञातित्वधनेत्वपुरस्कार एव पर्युदासप्रवृत्तेः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अन्तरम् १।१ बहिर्योगोपसंव्यानयोः ७।२ विभाषा १।१ ३१ जसि ७।१ ३१ सर्वनामानि १।३ २६

समासः॥

बहिर्योगश्च उपसंव्यानं च, बहिर्योगोपसंव्याने, तयोः बहिर्योगोपसंव्यानयोः, इतरेतरद्वन्द्वः

अर्थः॥

बहिः इत्यनेन योगः, बहिर्योगः, संव्यानस्य समीपम् उपसंव्यानम्। बहिर्योगे, उपसंव्याने च गम्यमाने अन्तरशब्दस्य जसि विभाषा सर्वनामसंज्ञा भवति।

उदाहरणम्॥

बहिर्योगे - अन्तरे गृहाः, अन्तराः गृहाः। उपसंव्याने - अन्तरे शाटकाः, अन्तराः शाटकाः।
काशिका-वृत्तिः
अन्तरं बहिर्योगौपसंव्यानयोः १।१।३६

अत्र अपि पूर्वेण नित्या सर्वनामसंज्ञा प्राप्ता सा जसि विभाष्यते। अन्तरम् इत्येतच्छब्दरूपं विभाषा जसि सर्वनामसंज्ञं भवति बहिर्योगे उपसंव्याने च गम्यमाने। अन्तरे गृहाः, अन्तराः गृहाः। नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते। उपसंव्यानेअन्तरे शाटकाः, अन्तराः शाटकाः। उपसंव्यानं परिधानीयम् उच्यते, न प्रावरणीयम्। बहिर्योगौपसंव्यानयोः इति किम्? अनयोः ग्रामयोरन्तरे तापसः प्रतिवसति। तस्मिन्नन्तरे शीतान्युदकानि। मध्यप्रदेशवचनो ऽन्तरशब्दः। गणसूत्रस्य चैदं प्रत्युदाहरणम्। अपुरि इति वक्तव्यम्। अन्तरायां पुरि वसति। विभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसंज्ञा इत्युपसंख्यानम्। द्वितीयस्मै, द्वितीयाय। तृतीयस्मै, तृतीयाय।
न्यासः
अन्तरं बहिर्योगोपसंव्यानयोः। , १।१।३५

"बर्हिर्योगे" इति। बहिरित्यनेनानावृतदेश उच्यते। तेन योगो बर्हिर्योगः। स चानावृतस्य बाह्रस्य वस्तुनो भवति। "उपसंव्याने च" इति। उपसंवीयते परिधीयते यत् तदुपसंव्यानम्- "कृत्यल्युटो बहुलम्" 3।3।113 इति कर्मणै ल्युट्। अथ वा, संवीयते पिधीयतेऽनेनेति संव्यानम्- "करणाधिकरणयोश्च" 3।3।117 इति ल्युट्। संव्यानस्य समीपमुपसंख्यानम्। अबहिर्योगे सामथ्र्यात् तदेव वेदितव्यम्। "नगरबाह्राः" इति। अनेन बहिर्योगं दर्शयति- "परिधानीयमुच्यते" इति। उपसंव्यान्सयेदमुदाहरणमुपन्यस्तम्। वस्त्रान्तरावृतवस्तु वस्त्वन्तरेणापिहितमुच्यते। अविशेषाभिधानऽपि यद्वस्त्रान्तरेणावृतम्, सामथ्र्यात् तदेवोपसंव्यानमुच्यते, नेतरत्। "न प्रावरणीयम्" इति। प्राव्रियतेऽपिधीयते-नेनेति प्रावरणीयम्, तन्नभिधीयते। तदभिधाने तस्य बहिर्योगत्वात् बहिर्योग एवेदमुदाहरणं स्यादित्याभिप्रायः। "अन्तरे तापसः प्रतिवसति" इति। अत्र संज्ञाया अभावात् सप्तम्याः स्मिन्नादेशो न भवति। ननु च जसीत्यनुवत्र्ते, तत् कस्मात् सप्तम्यन्तं प्रत्युदाह्मतमित्यत आह-"गुणसूत्रस्य च" इत्यादि। "अपुरीति वक्तव्यम्" इति। अनन्तरं "गणसूत्रस्य च" इत्यभिधानाद् गणसूत्रमेवैतद् वक्तव्यमिति गम्यते। यद्यपि गणसूत्रेऽन्तरशब्द पठ()ते,तथापि "प्रतिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" (व्या।प।२९) इति प्राकाराद्व-हिर्वर्त्तिनी या पूस्तस्या अपि बहिर्योगोऽस्तीति तत्र वत्र्तमानस्य टाबन्तस्याप्यन्तराशब्दस्य सर्वनामसंज्ञा प्राप्नोति, तेनापुरीति वक्तव्यम्। तेनान्तरायामित्यत्र स्याण् न भवति। "विभाषाप्रकरणे" इत्यादि। उपसंख्यानशब्दस्येह प्रतिपादनमर्थः। अस्मिन् विभाषाप्रकरणे तीयप्रत्ययान्तस्य सर्वनामसंज्ञायाः प्रतिपादनं कत्र्तव्यमि- त्यर्थः। तत्रेदं प्रतिपादनम् "विभाषा जसि" १।१।३१ इत्यत्र "विभाषा" इति योग- विभागः क्रियते, तत्र च "सर्वादीनि" "द्वन्द्वे" इति च निवृत्तम्, तेन तीयस्य विभाषा सर्वनामसंज्ञा भविष्यतीति। न चैवं सत्यतिप्रसङ्गः; योगविभागदिष्टसिद्धेः नापि "विभाषा द्वितीयतृतीयाभ्याम्"

७।३।११५ इत्यस्य वैयर्थ्यापत्तिः; प्रपञ्चार्तत्वात्। ततः "जसि" द्वितीयो योगः। अत्र विभाषाग्रहणम्, सर्वादिग्रहणम्, द्वन्द्व ग्रहणं चानुवत्र्तते।

बाल-मनोरमा

अन्तरं बहिर्योगोपसंव्यानयोः २१८, १।१।३५

अन्तरम्। अत्रापि "सर्वनामानी"ति "विभाषा जसी"ति चानुवर्तते। बहिः=अनावृतप्रदेशः, तेन योगः=सम्बन्धः यस्य स बहिर्योगः=बहिर्विद्यमानोऽर्थ इति यावत्। उपसंवीयते=परधीयते इति उपसंव्यानम्न्तरीयं वस्त्रम्। तदाह--बाह्य इत्यादिना।

तत्त्व-बोधिनी

स्वमज्ञातिधनाख्यायाम् १८२, १।१।३५

स्वमज्ञाति। आत्माऽऽत्मीयज्ञातिधनवाची स्वशब्दः, तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीयौ परिशिष्टावित्याशयेन व्याचष्टे--आत्मीया इत्यर्थः। आत्मान इति वेति। यत्वाहुः - आत्मनि स्वशब्दो नपुंसकः, ते "स्वे" "स्वा" इत्युदाहरणं तत्राऽयुक्तमिति। तद्रभसात्। "स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने" इत्यमरसिंहोक्तेरात्मन्यपि स्वशब्दस्य पुंस्त्वात्। न च "स्वौ ज्ञातौ" इत्यमरकोशे "आत्मनी"त्यस्य "स्व"मित्युत्तरेणान्वयादात्मवाची स्वशब्दो नपुंसक एवेति वाच्यम्, "स्वः स्यतापुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने" इति मेदिनीकोशविरोधेनात्मनीति पूर्वान्वयि, न तूत्तरान्वयीति व्याख्यातुमुचितत्वात्। किंच "विभाषा जसी"ति प्रकरणे "स्वमात्मीये" इत्येव वक्तव्ये गुरुनिर्देशं कुर्वन्सूत्रकारोऽप्यात्मवाचिस्वशब्दस्य पुंस्त्वे प्रमाणम्। तस्मात् "स्वे" "स्वा" इत्यस्य आत्मान इति विवरणं सम्यगेवेति स्थितम्। ज्ञातिधनवाचिनस्त्विति। ताच्छीस्येन णिनिना ज्ञातिधनयोरप्यात्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामताऽस्त्येवेति ध्वनयति। एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम्। "स्वमात्मात्मीयाख्याया"मिति वक्तव्ये ज्ञातिधनयोः पर्युदासाश्रयणं मात्रालाघवाय। न च "स्वमात्मात्मीययोः" इत्युच्यमाने आख्याग्रहणं नापेक्षितिमिति वाच्यम्; वस्तुतस्तु आत्मीयस्यापि ज्ञातित्वेन धनत्वेन विवक्षायां सर्वनामता मा भू"दिति तस्यावश्यकत्वात्।

तत्त्व-बोधिनी

अन्तरं बहिर्योगोपसंव्यानयोः १८३, १।१।३५

अन्तरं बहिर्योगोपसंव्यानयोः। "बहि"रित्यनावृतो देशो, बाह्यं चोच्यते। तत्राद्यमर्थं गृहीत्वाह--बाह्य इत्यर्थ इति। द्वितीये त्वाभ्यन्तरा इत्यर्थो बोध्यः। बाह्येन ह्यभ्यन्तरस्य योगोऽस्ति। अर्थद्वयमप्याकरे स्थितम्। इदमेवार्थद्वयं मनसि निधाय "अन्तरायां पुरी"त्यत्र प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेति व्याख्यातम्। "उपसंव्यान" शब्दोऽपि करणव्युत्पत्त्या उत्तरीयपरः, कर्मव्युत्पत्त्यात्वन्तरीयपरः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वरादिनिपातम् १।१ अव्ययम् १।१ ४०

समासः॥

स्वर् आदिः येषां ते स्वरादयः, स्वरादयश्च निपाताश्च स्वरादिनिपातम्, बहुव्रीहिगर्भः समाहारद्वन्द्वसमासः

अर्थः॥

स्वरादिशब्दरूपाणि निपाताश्च अव्ययसंज्ञकानि भवन्ति। {प्राग्रीश्वरान्निपाताः (१।४।५३)} इत्यतः {अधिरीश्वरे (१।४।९६)} इति यावत् निपातसंज्ञां वक्ष्यति, तेषां निपातानाम् अत्र अव्ययसंज्ञा वेदितव्या।

उदाहरणम्॥

स्वरादीः - स्वर् प्रातर्। निपाताः - च, वा, ह।
काशिका-वृत्तिः
स्वरादिनिपातम् अव्ययम् १।१।३७

स्वरादीनि शब्दरूपाणि निपाताश्च अव्ययसंज्ञानि भवन्ति। स्वर्, अन्तर्, प्रातर्, एते अन्तौदात्ताः पठ्यन्ते। पुनराद्युदात्तः। सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, आरात्, ऋते, युगपत्, पृथक्, एते ऽपि सनुतर्प्रभृतयो ऽन्तोदात्ताः पठ्यन्ते। ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, आविस्, अवस्, अधस्, समया, निकषा, स्वयम्, मृषा, नक्तम्, नञ्, हेतौ, अद्धा, इद्धा, सामि, एते ऽपि ह्यस्प्रभृतयो ऽन्तोदात्ताः पठ्यन्ते। वत्वदन्तम् अव्ययसंज्ञं भवति। ब्राह्मणवत्। क्षत्रियवत्। सन्, सनात्, सनत्, तिरस्, एते आद्युदात्ताः पठ्यन्ते। अन्तराऽयमन्तोदात्तः। अन्तरेण, ज्योक्, कम्, शम्, सना, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मुधा, मिथ्या। क्त्वातोसुङ्कसुनः, कृन्मकारान्तः, सन्ध्यक्षरान्तः, अव्ययीभावश्च। पुरा, मिथो, मिथस्, प्रबाहुकम्, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, समम, नमस्, हिरुक्, तसिलादिः तद्धित एधाच्पर्यन्तः, शस्तसी, कृत्वसुच्, सुच्, आस्थालौ, च्व्यर्थाश्च, अम्, आम्, प्रतान्, प्रषान्, स्वरादिः। निपाता वक्ष्यन्तेप्राग्रीश्वरान्निपाताः १।४।५६ इति। च, वा, ह, अह, एव, एवम् इत्यादयः। अव्ययप्रदेशाः अव्ययादाप्सुपः २।४।८२ इत्येवम् आदयः। अव्ययम् इत्यन्वर्थसंज्ञा। सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।
लघु-सिद्धान्त-कौमुदी
स्वरादिनिपातमव्ययम् ३६९, १।१।३६

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः। स्वर्। अन्तर्। प्रातर्। पुनर्। सनुतर्। उच्चैस्। नीचैस्। शनैस्। ऋधक्। ऋते। युगपत्। आरात्। पृथक्। ह्यस्। श्वस्। दिवा। रात्रौ। सायम्। चिरम्। मनाक्। ईषत्। जोषम्। तूष्णीम्। बहिस्। अवस्। समया। निकषा। स्वयम्। वृथा। नक्तम्। नञ्। हेतौ। इद्धा। अद्धा। सामि। वत्। ब्राह्मणवत्। क्षत्रियवत्॥ सना। सनत्। सनात्। उपधा। तिरस्। अन्तरा। अन्तरेण। ज्योक्। कम्। षम्। सहसा। विना। नाना। स्वस्ति। स्वधा। अलम्। वषट्। श्रौषट्। वौषट्। अन्यत्। अस्ति। उपांशु। क्षमा। विहायसा। दोषा। मृषा। मिथ्या। मुधा। पुरा। मिथो। मिथस्। प्रायस्। मुहुस्। प्रवाहुकम्, प्रवाहिका। आर्यहलम्। अभीक्ष्णम्। साकम्। सार्धम्। नमस्। हिरुक्। धिक्। अथ। अम्। आम्। प्रताम्। प्रशान्। प्रतान्। मा। माङ्। आकृतिगणोऽयम्॥च। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। भूयस्। कूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। यत्र। नह। हन्त। माकिः। माकिम्। नकिः। नकिम्। माङ्। नञ्। यावत्। तावत्। त्वे। द्वै। त्वै। रै। श्रौषट्। वौषट्। स्वाहा। स्वधा। वषट्। तुम्। तथाहि। खलु। किल। अथो। अथ। सुष्ठु। स्म। आदह। (उपसर्गविभक्तिस्वरप्रतिरूपकाश्च)। अवदत्तम्। अहंयुः। अस्तिक्षीरा। अ। आ। इ। ई। उ। ऊ। ए। ऐ। ओ। औ। पशु। शुकम्। यथाकथाच। पाट्। प्याट्। अङ्ग। है। हे। भोः। अये। द्य। विषु। एकपदे। युत्। आतः। चादिरप्याकृतिगणः॥तसिलादयः

प्राक् पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। अम्। आम्। कृत्वोर्थाः। तसिवती। नानाञौ। एतदन्तमप्यव्ययम्॥

न्यासः

स्वरादिनिपातमव्ययम्।, १।१।३६

स्वरादिषु स्वस्तिशब्दोऽस्तिशब्दश्च पठ()ते। तत्र स्वस्तिशब्दस्य किमर्थः पाठः? यावतास्तिशब्दपाठादेव तदन्तविधिना स्वस्तिशब्दस्यापि भविष्यति। "ग्रहणवता प्रातिपदिकेन " (व्या।प।८९) इति तदन्तविधि प्रतिषेधान्न सिध्यतीत्येतत् तु नाशङ्कनीयम्, "अव्ययम्" इति महती संज्ञा क्रियते, अन्वर्थसंज्ञा यथा विज्ञायेतलिङ्गकारकसंक्याविशेषानुपादान्न व्येति= विविधत्वं न गच्छतीत्यव्ययम्। तस्याश्चोपसर्जनप्रतिषेधः, तदन्तविधिश्च प्रयोजनम्। तस्मादन्वर्थसंज्ञकरणादेव तदन्तस्यापि भविष्यति, स्वस्तिशब्दोऽपि न व्येत्येव, सत्यमेतत्ैवं त्वन्वर्थसंज्ञाकरणाल्लब्धस्तदन्तविधिरननोपद- र्शितः। विस्पष्टार्थमुदाहरणमेतत्। "तसिलादिस्तद्धित एधाच्()पर्यन्तः" इति। "पञ्च- म्यास्तसिल्" ५।३।७ इत्यत प्रभृति"एधाच्च" ५।३।४६ इत्येतत्पर्यन्तः।"शस्तसी" इति। "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" ५।४।४२ "प्रतियोगे पञ्चम्यास्तसिः" ५।४।४४ "कृत्वसुच्" इति। "संख्यायः क्रियाभ्यावृत्तिगणने कृत्वसुच्" ५।४।१७इति। "द्वित्रिचतुर्भ्यः सुच्" ५।४।१८। "आस्थालौ" इति। "इण आसिः" (द।उ।९।८१) इत्युणा- दिसूत्रेण इणो धातोरासिप्रत्ययः। "अयाः" इत्युदाहरणम्। "प्रत्नपूर्ववि()ओमात्थाल् छन्दसि" ५।३।१११ इति। "च्व्यर्थाश्च" इति। अभूततद्भावे "कृभ्यस्तियोगे सम्पद्य- कत्तरि च्विः" ५।४।५० "विभाषा साति कात्स्न्ये" ५।४।५२। "आम्" इति। "किमे- त्तिङव्ययधादाम्वद्रव्यप्रकर्षे" ५।४।११। "निपाता वक्ष्यन्ते" इति। अथ कस्मात् ते स्वरादिषु न पठ()न्ते? कः पुरेवं गुणो भवति? अवययसंज्ञायां निपातग्रहणं तथा हि क्रियायोगे दृश्यते-"स्वः पश्यन्ति, स्वरारोहन्ति" इति। तत्र यदि चादयो निपाताः पठ()एरन्, तेषां सत्त्वेऽपि वत्र्तमानानामव्ययसंज्ञा प्रसज्येत। "अव्ययम्" इत्यन्वर्थसंज्ञेयम्" इति दर्शयितुमाह- "सदृशम्" इति। त्रिषु लिङ्गेषु स्त्रीपुंनपुंसकेषु सदृशं तुल्यम्, लिङ्गविशेषापरिग्रहाल्लिङ्गसामान्योपा- दानाच्च। "सर्वासु च विभक्तिषु" इति। विभक्तिनिमित्तत्वाद् विभक्तिः। विभज्यते वा प्रातिपदिकार्थ आभिरिति कर्मादीनि कारकाणि शक्तिरूपाणि विभक्तिशब्देनोच्यन्ते। "वच- नेषु च" इति। वचनान्येकवचनद्विवचनबहुवचनानि। इहाभिधेयेऽभिधानोचाराद् एकाधिका संख्या गृह्रते "यस्मान्न व्येति लिङ्गादिसंख्याविशेषानुपादानाद् विविधं नानात्वं न गच्छति तस्माद् अव्ययम्" इत्यन्वर्थता प्रतिपादिता भवति। प्रयोजनं पुनरुपसर्जनप्र- तिषेधः, तदन्तविधिश्चेत्युक्तम्। तत्रोपसरजनप्रतिषेधः- "अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैसः"। न ह्यत्र यथोपदर्शितार्थानुगमः सम्भवति। यत्र तु सम्भवति, तत्र तदन्तस्याव्ययसंज्ञा भवत्येव; यथा- "परमस्वः, उत्तमस्वः" इति। अत्र हि स्वर्? शब्द- स्य प्राधान्याल्लिङ्गादिविशेस्यासम्भवः। पूर्वत्र तूच्चैः शब्दस्य विपर्ययाद्वि- पर्ययः।

तत्त्व-बोधिनी

स्वरादिनिपातमव्ययम् ३९८, १।१।३६

स्वरादिनिपातमव्ययम्। स्वरादयश्च निपाताश्चेतिसमाहारद्वन्द्वः। ननु चादिष्वेव स्वरादीन्पठित्वाप्रकृतसूत्रं परित्यज्य "तद्धितश्चासर्वे"त्यादि सूत्रचतुष्टयमपि "चादयोऽसत्त्वे"इत्यास्मादूध्र्वं कृत्वाऽव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेन्न, "स्वस्ति वाचयति""स्वः पश्यति""स्वः पतती"त्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वात्तेषां निपातसंज्ञाऽनापत्तेः। चादीनां ह्रसत्त्ववाचिनामेव निपातसंज्ञा, न तु सत्त्ववाचिनाम्। स्वरादीनां तु सत्त्ववाचिनामसत्तववाचिनां चाऽव्ययसंज्ञेष्यत इति व्यवस्थाऽनापत्तेश्च। अथ "प्राग्री()आरान्निपाताः""स्वरादीनि""चादयोऽसत्त्वे"इति सूत्र्यतां, तथा हि सति स्वरादीनां सत्त्ववचनानामपि निपातसंज्ञा सेत्स्यतीति चेन्नः, एवं हि सति "निपात एकाजना"ङिति प्रगृह्रसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत। स्तो हि स्वरादिषु

"किमोऽत्""दक्षिणदाच्ित्यादावेकाचौ तद्धितौ। केन्प्रभृतय एकाचः कृत्प्रत्ययाश्च सन्ति। "तसिलादिस्तद्धित एधाच्पर्यन्तः"इति सूत्रस्य, "कृन्मकारसन्ध्यक्षरान्तः"इति सूत्रस्य च स्वरादिगणपपठित्वात्। यद्यप्यत्र मूले स्वरादिषु गणसूत्रद्वयमिदं न पठितं, तथापि प्राचां पाठ#ए त्वस्तीत्यनुपदमेव स्फुटीकरिष्यते। स्वरादीनुदाहरति---स्वरित्यादिना। स्वरिति स्वर्गे परलोके च। अन्तरिति मध्ये। प्रातरिति प्रत्यूषे। पुनरित्यपर्थमे विशेषे च। सनुतरित्यन्तर्धाने।स्वराद्याः पञ्चः रेफान्ताः। तेन स्वर्याति प्रातरत्रेत्यादावुत्वं न भवति। सान्तत्वे हि स्यादेव हि स्यादे दोषः। उच्चैस्--महतिः। नीचैस्---अल्पे। शनैस्--क्रियामान्द्ये। ऋधक्--सत्येऽपि। वियोगशीध्रसामीप्यलाघवेष्वित्यन्ये। ऋते--वर्जने। युगपदित्येककाले। आराद्()दूरसमीपयोः। पृथक्--भिन्ने। ह्रस्य--अतीतेऽह्नि। ()आस्--अनागतेऽह्नि। दिवा दिवसे। रात्राविति निशि :सायमिति निशामिखे। चिरमिति बहुकाले। मनाक्, ईषत्--इमावल्पे। जोषं--सुखे मौने।तूष्णीमिति मौने। बहिस् अवस् इमौ बाह्ये। समयेति समीपे मध्ये च। निकषेत्यन्तिके। स्वयमिति आत्मनेत्यर्थे। वृथेति व्यर्थे। नक्तमिति रात्रौ। नञिति निषेधे। हेताविति निमित्ते। इद्धेति प्रकाश्ये। अद्धेति स्फुटावधारणयोः। तत्वातिशयोरित्यन्ये। सामीत्यर्धजुगुप्सितयोः। वत्। "तेन तुल्य" मित्यादिभिर्विहतो यो वतिप्रत्ययः स इह गृह्रते। तदाह--ब्राआह्ऱआणवत्। क्षत्रियवदिति। प्रत्ययमात्रस्य संज्ञाप्रयोजनाऽभावाप्रत्ययान्तमुदाह्यतम्। यस्तु"उपसर्गाच्छन्दसि धात्वर्थे" इति विहितः, स इह न गृह्रते। यदुद्वतो निवतो यासी"त्यत्र सत्त्वधर्मस्य लिङ्गसङ्ख्यान्वयस्य दर्शनात्। अत्र वदन्ति--"तद्धितश्चासर्वविभक्ति"रित्यत्र "तसिवती"इति वतिप्रत्ययोऽपि परिगण्यते, तच्च न कर्तव्यं, स्वरादिपाठेनैव गतार्थत्वात्। स्वरादिषु वा वदिति न पठनीयमितिष सना, सनत्, सनात्,--एते नित्ये। उपधेति भेदे। तिरस्--अन्तर्धौ तिर्यगर्थे परिभावे च। अन्तरेति मध्ये विनार्थे च। अन्तरेणेति वर्जने। ज्योगिति कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च। कमिति वारिमूर्धनिन्दासुखेषु। शमिति सुखेष सहसेत्याकस्मिकाऽविमर्शयोः। विनेति वर्जने। नानेत्यनेकविनार्थयोः। स्वस्तीति मङ्गले। स्वधा पितृदाने। अलं--भूषणपर्याप्तिशक्तिवारणनिषेधेषु। वषट्, श्रौषट्, वौषट्,--एते हविर्दाने। अन्यदित्यन्यार्थे। अस्तीति सत्तायाम्। उपांशु--इत्यप्रकाशोच्चारणरहस्ययोः। क्षणेति क्षान्तौ। बिहायसेतचि वियदर्थे। दोषेति रात्रौष मृषा, मिथ्येत्येतौ वितथे। मुधेति व्यर्थे। इत ऊध्र्वं "क्त्वातोसुन्कसुनः""कृन्मकारसन्ध्यक्षरान्तः" "अव्ययीभावश्च"इति गणसूत्रत्रयमष्टाध्यायीस्थत्रिसूत्र्या समानार्थकमिह न पठितं चेदपि प्राचीनगणपाठे तदस्तीति बोध्यम्। वैयथ्र्यं तु परिहरिष्यते। पुरेत्यविरते चिरातीते भविष्यदासन्ने च। मिथो, मिथस्--एतौ रहः सहार्थयोःष प्रायसिति बाहुल्ये। मुहुसिति पुनरर्थे। प्रबाहुकमिति समानकाले ऊध्र्वार्थे च। प्रवाहिकेति पाठान्तरम्। आर्यहलमिति बलात्कारे। शाकटायनस्तु--आर्येति प्रतिबन्धे। हलमिति प्रतिषेधविवादयोरित्याह। अभीक्ष्णमिति पौनः पुन्ये। साकं, सार्धमेतौ साहार्थे। नमस्--नतौ। हिरुग्वर्जने। धिक्--निन्दाभत्र्सनयोः। इत उध्र्वं "तसिलादयस्तद्धिता एधाच्पर्यन्ताः""शस्तसी""कृत्वसुच्""सुच्"ास्थालौ""च्व्यर्थाश्चे"ति प्राचीनगणपाठेऽस्तीति बोध्यम्। तसिलादीत्यादेरयमर्थः,--"पञ्चम्यास्त सिः""तेनैकदिक्""तसिश्चे"त्ययमपि तसिः। "क्रियाभ्यावृत्तिगणने कृत्वसुच्"। "द्वित्रिचतुभ्र्यः सुच्"। "इण आसिः"इत्युणादिसूत्रेण विहित "आसिः"। "प्रत्नपूर्ववि()ओमात्थल्छन्दसि"। "संपद्यकर्तरि च्विः"। "विभाषा साति कात्स्न्र्ये""देये त्रा च"इत्येतदन्ता अपि ग्राह्या इति। अम्--शैध्येऽल्पे च। आम्--अङ्गीकारे। "अमु च छन्दसि""किमेत्तिङव्यय--"इति "कास्प्रत्ययात्--"इत्यादिभिश्च विहितावपि अमामौ गृह्रते इत्येके। प्रतं नय प्रतरं। ययाचतरां। कारयामास। प्रताम्---ग्लानौ। प्रशान्--समानार्थे। प्रतान्--विस्तारे। मा, माङ् एतौ निषेधाशङ्कयोः। आकृतिगण इति। तेनान्येऽपि ज्ञेयाः। तथा हि--कामम्--स्वाच्छन्द्ये। प्रकाममित्यतिशये। भूय इति पुनरर्थे। साम्प्रतमिति न्याय्ये। परमिति किन्त्वर्थे। साक्षात्--प्रत्यक्षे। साचीति तिर्यगर्थे। सत्यमित्यर्धाङ्गीकारे। मङ्क्षु, आशु--एतौ शैध्ये। संबत् वर्षे। अवश्यं निश्चये। उषेति रात्रौ। ओमित्यङ्गीकारे ब्राह्मणि च। भूरिति पृथिव्याम्। भुवरित्यन्तरिक्षे। झटिति, झगिति, तरसा--एते शैन्ध्ये। सुष्ठु प्रशंसायाम्। दुष्ठु निकृष्टे। सु पूजायाम्। कु इति कुत्सितेषदर्थयोः। अञ्जसेति तत्त्वशीघ्रार्थयोः। मिथु इति द्वावित्यर्थे। अस्तमिति विनाशे। स्थाने इति युक्ते। वरमिति

ईषदुत्कर्षे। सुदि शुक्लपक्षे। वदि कृष्णपक्षे इत्यादि। चादीनुदाहरति--चेत्यादिना। चेति समुच्चयान्वाचयेतरेतयोगसमाहारेषु। "वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये"। हेति प्रसिद्धौ। अहेति पूजायाम्। एवेत्यवधारणेऽनवक्लृप्तौ च। एवमित्युक्तपरामर्शे। नूनमिति निश्चये तर्के च। श()आदति पौनः पुन्ये सहार्थे च। युगपदित्येककाले। भूयसे--पुनरर्थे आधिक्ये च। कूपदिति प्रश्ने प्रशंसायां च। कुविदिति भूर्यर्थे प्रशंसायां च। नेदिति शङ्कायां प्रतिषेधविचारसमुच्चयेषु च। चेदिति यद्यर्थे। चण्--अयं चेदर्थे। णानुबन्धस्तु "निपातैर्यद्यदिहन्तकुविच्चेच्चण्--"इति विसेषणार्थः। समुच्चयादौ त्वननुबन्धकः। कच्चिदितीष्टप्रश्ने। यत्रेति अनवक्लृप्त्यमर्षगर्हाश्चर्येषु।"नावकल्पयामि न मर्षये, गर्हा आश्चर्यं वा यत्र भवान् वृषलं याजयेत्"। नहेति प्रत्यारम्भे। हन्तेति हर्षे विषादेऽनुकम्पायां वाक्यारम्भे च। माकिः, माकिं, नकिरिति त्रयोऽपि वर्जने। माङ्नञौ स्वरादिषूक्तौ। इह पाठस्तु निपातत्वार्थः, तेनाद्युदात्तत्वं फलं सिध्यतीति केचित्। तदसत्। फिट्स्वरेणाऽपीष्टसिद्धेः। अन्ये त्वाहुः--सत्त्ववचनानामप्यव्ययसंज्ञार्थं स्वरादिपाठ इति। तदप्यसत्। लक्ष्मीवाचकस्यापि माशब्दस्याऽव्ययत्वापत्तेः। तस्मादुभयत्र पाठश्चिन्त्यप्रयोजनः। यावत्तावदेतौ साकल्याऽवधिमानावधारणेषु। साकल्ये--यावत्कार्यं तावत्कृतम्। अवधौ--यावद्गन्तव्यं तावत्तिष्ठ। माने---यावद्दत्तं तावद्भुक्तम्। अवधारणे--यावदमत्रं तावद्ब्राआह्मणानामन्त्रयस्व। त्वै--विशेषवितर्कयोः। द्वै--वितर्के। न्वै--इति। पाठान्तरम्। रै दाने अनादरे च। रै करोति। ददातीत्यर्थः। त्वं रै किं करिष्यसि। श्रौषट्, वोषट्--एतौ हविर्दाने। स्वाहा देवताभ्यो दाने। स्वधेति पितृभ्यः। श्रौषडादीनामनेकाचामुभयत्र पाठः स्वरभेदार्थः। तुमिति तुङ्कारे। "गुरु तुङ्कृत्य हुङ्कृत्य"। तथाहीति निदर्शने। खलु इति निषेधवाक्यालङ्कारनिश्चयेषु। किलेति वार्तायामलीके च। अथो अथेति मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि। तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिध्यति। अतएव श्रीहर्षः--उदस्य कुम्भरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरि। यथाकुलाचारमथाऽवनीन्द्रजां पुरन्ध्रविर्गः स्नपयाम्बभूव ताम्िति। अत्र हि "अथ स्नपयांबभूवे"त्यस्य मङ्गलस्नपनं चकारेत्यर्थः। निपातस्तु स्वरूपेणैवः मङ्गलं मृदङ्गध्वनिवत्। सुष्ठु--स्वरभेदार्थपाठः। स्मेत्यतीते पाजपूरणे च। आदहेत्युपक्रमहिंसाकुत्सनेषु। "आदह स्वधामन्नि"त्यत्र तु पदकारा "आ"दिति पृथक् पदं पठन्ति। अवदत्तमिति। इह अवस्यानुपसर्गत्वात् "अच उपसर्गात्तः"इति न भवति। अहमिति सुबन्तप्रतिरूपकमहङ्कारे। एवं "गेये केन विनीतौ वा"मिति। युवामित्यर्थः। सुबन्तप्रतिरूपकमव्ययम्। अस्तीति तु तिङन्तप्रतिरूपकम्। एवं "त्वामस्मि वाच्मी"त्यत्राऽस्मीत्यहमर्थे तिङन्तप्रतिरूपकम्। आहेत्युवाचेत्यर्थे। आसेति बभूवएत्यर्थे। ---इत्यादि बोध्यम्। अहंयुरिति। "अहंशुभमोर्युस्"। यदि तु "त्वाहौ सौ"इति मपर्यन्तस्याऽहादेशे शेषलोपे च कृते निष्पन्नो योऽहंशब्दस्तस्माद्यस्प्रत्ययः क्रियते तर्हि सुपो लुकि अस्मद्युसिति स्थिते मदीय इत्यत्रेव मपर्यन्तस्य मादेशे सति "मद्यु"रिति स्यादिति भावः। अस्तिक्षीरेति। तिङन्तत्वे तु बहुव्रीहिसमासो[ऽयं]नोपपद्यत इत् भावः। अ इति संबोधनेऽधिक्षेपे निषेधे च। आ इति वाक्यस्मरणयोः। "इ"संबोधनजुगुप्साविस्मयेषु। ई उ ऊ ए ऐ ओ औ संबोधने। पशु सम्यगर्थे। "पशु मन्यमानाः"। शुकं---शैध्ये। यथाकथाचेत्यानादरे। पाट्प्रभृतयः सप्त संबोधने। द्येति हिंसाप्रतिलोभ्यपादपुरणेषु। विषु--नानार्थे। एकपदे---इत्यकस्मादित्यर्थे। युत्--कुत्सायाम्। आत इति---इतोऽपीत्यर्थे। आकृतिगण इति। तद्यथा--यत्तदिति हेतौ। आहोस्विद्विकल्पे। सीम---सर्वतोभावे। शुकम्--अतिशये। अनुकं वितर्के। शम्बट्--अन्तःकरणे आभिमुख्ये च। व पादपूरणे इवार्थे च। दिष्ट()एत्यानन्दे। चटु चाटु प्रियवाक्ये। हुमिति भत्र्सने। इवेति सादृश्ये। अद्यत्वे इति इदानीमित्यर्थे इत्यादि। अत्र स्वरादिचाद्योराकृतिगणत्वाऽविशेषेऽपि येषां निपातस्वर इष्टस्ते चादिषु, अन्ये तु स्वरादिषु, स्वरद्वयभाजस्तूङ्यत्रबोध्यः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तद्धितः १।१ च ० असर्वविभक्तिः १।१ अव्ययम् १।१ ३६

समासः॥

नोत्पद्यते सर्वाः विभक्तीः यस्मात् सः असर्वविभक्तिः तद्धितः, बहुव्रीहिः

अर्थः॥

असर्वविभक्तिः तद्धितप्रत्ययान्तः शब्दः अव्ययसंज्ञकः भवति।

उदाहरणम्॥

ततः, यतः, यत्र, तत्र, तदा, यदा, सर्वदा, सदा, विना, नाना।
काशिका-वृत्तिः
तद्धितश् च असर्वविभक्तिः १।१।३८

तद्धितान्तः शब्दो ऽसर्वविभक्तिः अव्ययसंज्ञो भवति। यस्मात् न सर्वविभक्तेरुत्पत्तिः सो ऽसर्वविभक्तिः। ततः, यतः, तत्र, यत्र, तदा, यदा, सर्वदा, सदा। तद्धितः इति किम्? एकः, द्वौ, बहवः। असर्वविभक्तिः इति किम्? औपगवः, औपगवौ, औपगवाः।
न्यासः
तद्धितश्चासर्वविभक्तिः। , १।१।३७

प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीत तद्धितान्त स्य संज्ञा विज्ञायत इत्याह "तद्धितान्तः शब्दः"इति। "यस्मान्न सर्व" इत्यादि। अत्रावयवकात्स्न्यवृत्तिः सर्वशब्दः। सर्वा निरवशेषा येषां त्रयाणां वचनानां विभक्तिरिति संज्ञा कृता। तानि सर्वाणि यतो नोपत्पद्यन्त इत्यर्थः। "ततः,यतः" इति। तद्- यच्छपब्दात् पञ्चमीसमर्थात् "पञ्चम्यास्तसिल्" ५।३।७इति तसिल्, "सुपो धातुप्रा तिपदिकयोः" २।४।७१ इति सुब्लुक्;"प्राग्दिशो विभक्तिः" ५।३।१ इति विभक्तित्वात् त्यदाद्यत्वम्; "अतो गुणे" ६।१।९४, पररूपत्वम्। "तत्र यत्र "इति। "सप्तम्यास्त्रल्" (५।३।१०० इति त्रल्। "तदा, यदा, सर्वदा" इति। "सर्वैकान्यकिंयत्तदः काले दा" ५।३।१५। सर्वे एते-ततः प्रभृतयः विभक्त्यर्थप्रधानाः। स च विभक्तयर्थः प्रातिपदिकार्थः सम्पन्न इति प्रातिपदिकार्थे प्रथमैव भवति। सापि संख्याविशेषाभावान्न सर्वा। किं तर्हि? एकवचनमेव; तस्योत्सर्गत्वात्। तथा चोक्तम्- "एकवचनमुत्सर्गतः करिष्यते" इति। तस्य "अव्ययादाप्सुपः" २।४।८२ लुक्। "एकः" इति। अत्रासर्वविभक्तिकत्वमस्ति; एकत्वे द्वित्वायोगात्। अतद्धितत्वान्न भवति। "औपगवः" इति। अत्र तद्धितान्तस्य सर्वविभक्तियोगान्न भवति॥
बाल-मनोरमा
तद्धितश्चाऽसर्वविभक्तिः ४४२, १।१।३७

अथ स्वरादिचादिभिन्नान्यव्ययान्याह--तद्धितश्चासर्व। असर्वविभक्तिरिति बहुर्वीहिः। तत्र सर्वा विभक्तयो यस्मान्न भवन्तीति बहुवचनान्तविग्रहो न संभवति, अव्ययेभ्यः सप्तानां विभक्तीनामुत्पत्त्यभ्युपगमात्। तथाहि "तद्धितश्चे"ति प्रकृतसूत्रे भाष्ये तावत् "द्व्येकयोर्द्विवचनैकवचने" "बहुषु बहुवचन"मिति सूत्रविन्यासं भङ्क्त्वा "एकवचनं"

"द्वयोर्द्विवचने""बहुषु बहुवचन"मिति सूत्रन्यासं कृत्वा एकवचनमुत्सर्गतः करिष्यते, द्विबह्वोरर्थयोस्तस्य द्विवचनबहुवचने बाधके इत्यादि स्थितम्। ततश्च एकवचन"मित्यनेन ङ्याप्प्रातिपदिकादेकवचनं भवतीति सामान्यविधिना द्वित्वबहुत्वाऽभावे एकवचनमिति लभ्यते। एवं च द्विबहुत्वाऽभावे सति एकत्वे तदभावे च एकवचनमिति फलति। तत्र द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्त्यैव ततोऽन्यत्र एकवचनस्य सिद्धत्वात् "एकवचनम्" इति सूत्रं कर्मत्वाद्यभावेऽपि प्रापणार्थं संपद्यते। तथाच अलिङ्गसंख्येभ्योऽव्ययेभ्य एकवचनं प्रवर्तमानं विनिगमनाविरहात्सर्वविभक्त्येकवचनं भवति। अत एव "अव्ययादाप्सुपः" इत्यत्र प्रत्याहारग्रहणमर्थवत्। तस्मात्सर्वा विभक्तियो यस्मादिति न विग्रहः, किन्तु सर्वशब्दोऽत्र सर्व पटो दग्ध इतिवदवयवकात्स्न्र्ये वर्तते। एवंच सर्वा वचनत्रयात्मिका विभक्तिर्यस्मान्नोत्पद्यते। किन्त्वेकवचनान्येवोत्पद्यन्ते, स तद्धितान्तोऽव्ययसंज्ञः स्यादिति फलतीत्यभिप्रेत्याह--यस्मादिति। सर्वेति। वचनत्रयात्मिकेत्यर्थः। नोत्पद्यत इति। "किन्त्वेकवचनान्येवोत्पद्यन्ते" इति शेषः। स्यादेतत्-तिङ्श्चे-त्यनुवृत्तौ "प्रशंसायां रूप"मिति रूपप्प्रत्यये "ईषदसमाप्तौ कल्प"बिति कल्पप्प्रत्यये च पचतिरूपं पचतिकल्पमिति रूपम्। प्रशस्तं पचति, ईषत् पचतीत्यर्थः। अत्राप्यव्ययत्वं स्यात्, अरुआवविभक्तितद्धितान्तत्वात्। किञ्च उभयशब्देऽतिव्याप्तिः, तस्याप्यसर्वविभक्तितद्धितान्तत्वादित्यत आह-परिगणनमिति। वार्तिकमेतत्। तसिलादय इति। "पञ्चम्यास्तसिल्" इत्यारभ्य "द्वित्र्योश्च धमु"ञित्यर्थः। शस्प्रभृतय इति। "बह्वल्पार्था"दित्यरभ्य "अव्यक्तानुकरणा"दिति डाजन्ता इत्यर्थः। अम् आमिति। "अमु च च्छन्दसी"त्यम्, "किमेत्तिङव्यये"त्यमा च गृह्रते। कृत्वोऽर्था इति। "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्", "द्वित्रिचतुभ्र्यःसुच्", "विभाषा बहोर्थे"ति त्रय इत्यर्थः। तसिवती इति। "तेनैकदिक्", "तसिश्च" इति तसि#ः "तेन तुल्यम्" इत्यादिविहितो वतिश्च गृह्रते। "प्रतियोगे पञ्चम्यास्तसिः" इत्यस्य तु शस्प्रभृतित्वादेव सिद्धम्। एवं च स्वरादिषु वदित्यस्य प्रयोजने चिन्त्यम्। नानाञाविति। "निनञ्भ्यां नानाञौ न सहे"ति विहातौ नानाञौ। इति परिगणनंकर्तव्यमित्यन्वयः। परिगणनेनैव सिद्धे "तद्धितश्चे"ति सूत्रं न कर्तव्यमिति भावः।

तत्त्व-बोधिनी

तद्धितश्चाऽसर्वविभक्तिः ३९९, १।१।३७

तद्धितश्चासर्वविभक्तिः। सर्वेति। वचनत्रयात्मिकेत्यर्थः। नोत्पद्यत इति। किं त्वेकवचनमेवोत्पद्यत इति भावः। तद्धितः किम्(), एकः। द्वौ। त्रयः। असर्वेत्यादि किम्()। औपगवः। ननु पञ्चालाः गदौ वरणा इत्यादावतिप्रसङ्गः। न च "लुब्योगाप्रख्याना"दितचि वदता नैषां तद्धितान्तत्वमङ्गीकृतमिति [नातिप्रसङ्ग इति] वाच्यम्, एवमपि "पचतिकल्पं""पचतिरूप"मित्यादावतिव्याप्तेर्दुर्वारत्वादित्याशङ्क्याह--परिगणनं कर्तव्यमिति। तसिलादय इति। "पञ्चम्यास्तसि"लिति विहितो यस्तसिल् तदादयो "याप्ये पाश"बिति विहितपाशप्प्रत्ययपर्यन्ताइत्यर्थः। शस्प्रभृतय इति।"बह्वल्पार्थात्--"इति विहितो यः शस्, तदादयः "समासान्ताः"इति सूत्रपर्यन्ताः। कृत्वोर्था इति। "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसु"जिति विहिताः कृत्वसुजादयस्त्रयः। तसिवती इति। न च तसेः परिगणनं व्यर्थं, शस्प्रभृतित्वादेव "प्रतियोगे पञ्चम्यास्तसिः"इत्यस्य लाभादिति वाच्यम्, तेनैकदिक्" "तसिश्चे"त्येतदर्थतया तस्यावश्यकत्वात्। "तेन तुल्य"मिति वतिः। नानाञाविति। "विनञ्भ्यां नानाञौ न सहे"ति विहितौ। पचतिकल्पमिति। अव्ययसंज्ञायां हि सत्यां सुपो लुक् स्यादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत् १।१ मेजन्तः १।१ अव्ययम् १।१ ३६

समासः॥

मश्च एच्च मेचौ, मेचौ अन्तौ अस्य सः मेजन्तः, बहुव्रीहिः

अर्थः॥

कृत् यः मकारान्तः एजन्तश्च, तदन्तं शब्दरूपम् अव्ययसंज्ञकं भवति

उदाहरणम्॥

अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते = स्वादुङ्कारं भुङ्क्ते। सम्पन्नंकारं भुङ्क्ते। लवणंकारं भुङ्क्ते। उदरपूरं भुङ्क्ते। एजन्तः - वक्षे रायः। ता वामेषे रथानाम्। क्रत्वे दक्षाय जीवसे। ज्योक् च सूर्यं दृशे। म्लेच्छितवै॥
काशिका-वृत्तिः
कृन्मेजन्तः १।१।३९

कृद् यो मकारान्तः, एजन्तश्च तदन्तं शब्दरूपम् अव्ययसंज्ञं भवति। स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारं भुङ्क्ते। लवणङ्कारं भुङ्क्ते। एजन्तःवक्षे रायः। ता वामेषे रथानाम्। ऋत्वे दक्षाय जीवसे। ज्योक् च सूर्यं दृशे। वक्षे इति वचेः तुमर्थे सेसेनसे ३।४।९ इति सेप्रत्यये कुत्वे षत्वे च कृते रूपम्। एषे इति इणः सेप्रत्यये गुणे षत्वे च कृते रूपम्। जीवसे इति जीवेः असे प्रत्यये रूपम्। दृशे इति दृशेः केन्प्रत्ययो निपात्यते दृशे विख्ये च ३।४।११ इति। अन्तग्रहणम् औपदेशिकप्रतिपत्त्यर्थम्। इह मा भूत् आधये, चिकीर्षवे, कुम्भकारेभ्यः इति।
लघु-सिद्धान्त-कौमुदी
कृन्मेजन्तः ३७०, १।१।३८

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्। स्मारं स्मारम्। जीवसे। पिबध्यै॥
न्यासः
कृन्मेजन्तः। , १।१।३८

"स्वादुङ्कारं भुङ्क्ते" इति। "स्वादुमि णमुल्" ३।४।२६। "स्वादुमि" इत्यत एव निर्देशादुपपदस्य मकारान्तत्वं निपात्यते। स्वादुमिति चार्थग्रहणम्। तेन सम्पन्नादावप्युपपदे णमुल् भवति। "वक्षे" इति। "वच परिभाषणे" (धा।पा।१०६३), "ब्राउवो वचिः" २।४।५६इति ब्राऊञादेशो वा। "चोः कुः" ८।२।३० इति कुत्वम्। "अन्तग्रहणम्" इत्यादि। "औपदेशिकप्रतिपत्त्यर्थम्" इति। नित्ययोगे बहुव्रीहिविज्ञानादौपदेशिकप्रतिपत्तिः। उपदेशे भवमौपदेशिकम्।तस्य प्रतिपत्तिज्ञ्ज्ञानम् प्रयोजनं यस्य तत् तथा। एवं मन्यते- विनाप्यन्तग्रहणेन "येन विधिस्तदन्तस्य" १।१।७१ इति सामथ्र्याद्वा कृतस्तदन्तविधौ सिद्धे यदन्तग्रहणं क्रियते तस्यैतत् प्रयोजनम् नियोगतो यस्यैजन्तत्वमुपदेशावस्थायामेव भवति तस्यैव प्रतीतिर्यथा स्यादिति। "आधये" इति। दधातेराङ्पूर्वात् "उपसर्गे घोः किः" ३।३।९२ इति किः, "आतो लोप इटि च" ६।४।३४ इत्याकारलोपः, चतुर्थ्येकवचने "घेर्ङिति" ७।३।१११ इति गुणः। "चिकीर्षदः" इति। करोतेः सन्, "अज्झनगमां सनि" ६।४।१६ इति दीर्घः; "सनाशंसभिक्ष उः" ३।२।१६८ इत्युप्रत्ययः; अतो लोपः, शेषं पूर्ववत्। "कुम्भकारेभ्यः" इति। "कर्मण्यण्" ३।२।१ "उपपदमतिङ"२।२।१९ इति समासः; "बहुवचने झल्येत्" ७।३।१०३ इत्येत्त्वम्। ननु च लक्षमप्रतिपदोक्तपरिभाषयैव वा "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्येव वात्र संज्ञा न भविष्यति- विभक्तिप्रत्ययं ह्याश्रित्य विधीयमानत्वाद् गुणादिकार्यं बहिरङ्गम्, अव्ययसंज्ञा त्वन्तरङ्गम्, बाह्यस्य

निमित्तस्यानाश्रयणात्, सत्यमेतत्; एवं त्वर्थप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात्। अतस्तत्परिहारार्थमन्तग्रहणं कृतम्॥

बाल-मनोरमा

कृन्मेजन्तः ४४३, १।१।३८

कृन्मेजन्तः। कृत्-मेजन्त इति छेदः। म् च एच्च मेचौ , तौ अन्ते यस्येति बहुव्रीहिः। तदाह--कृद्योमान्त इति। तदन्तमिति। केवलस्य कृतः प्रयोगाऽनर्हत्वात्संज्ञाविधावपि तदन्तविधिरिति भावः। स्मारं स्मारमिति। "आभीक्ष्ण्ये णमुल्चे"ति स्मृधातोर्णमुल्, "अचो ञ्णिती ति वृद्धिः, रपरत्वम्, "नित्यवीप्सयो"रिति द्वित्वं, मान्तकृदन्तत्वादव्ययत्वम्। जीवसे इति। "तुमर्थे सेसेनसे" इत्यादिनाऽसेप्रत्ययः। पिबध्यै इति। "तुमर्थे से" इत्यादिना शध्यैप्रत्ययः। शित्त्वात्सार्वधातुकत्वम्। "पाघ्राध्मे"ति पिबादेश इति भावः। शसु न, कत्र्रर्थे सार्वधातुके तद्विधेः, "अव्ययकृतो भावे" इति सिद्धान्तादित्याहुः।

तत्त्व-बोधिनी

कृन्मेजन्तः ४००, १।१।३८

कृन्मेजन्तः। अत्र "मेजन्त"इत्येतच्छ()तत्वात्कृत एव विशेषणं नतु कृदन्तस्याऽश्रुतस्य। अन्यथा "प्रतामौ" "प्रतामः"। लवमाचष्टे णौ क्विपि णिलोपे वस्योठि वद्धौ च "लौः"---अत्रापि प्रसज्यतेति भावः। भवति ह्येतत्प्रत्ययलक्षणेन कृदन्तम्, एजन्तं च श्रूयते इति, तदाह--कृद्यो मान्त एजन्त इति। स्मारं स्मारमिति। स्मरतेः"आभीक्ष्ण्ये णमुल्"। वृद्धिः। रपरत्वम्। "नित्यवूप्सयोः"इति द्वित्वम्। जीवसे इति। "तुमर्थे सेसेन्ित्यसेप्रत्ययः। पिबध्यै इति। "तुमर्थे" इत्यनेनैव "शध्यै"प्रत्ययः। "पाघ्रे"ति पिबादेशः। "येन विधिस्तदन्तस्ये"त्यनेनैव सिद्धे सूत्रेऽन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थं, तेनेह न---आधये। चिकीर्षवे। लक्षणप्रतिपदोक्त--संनिपातपरिभाषाभ्यां सिद्धे तयोरनित्यत्वज्ञापनायेदमिति मनोरमायां स्थितम्। एतच्च "अव्ययादाप्सुप"इत्यत्राव्ययात्परस्य सुपो लु"गिति यथाश्रुतव्याख्यानमभिप्रेत्योक्तम्। "अव्ययाद्विहिकस्ये"ति व्याख्याने त्वाधये इत्यादौ अव्ययसंज्ञामनिष्टान्तरमूह्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्त्वातोसुन्कसुनः १।३ अव्ययम् १।१ ३६

समासः॥

क्त्वा च तोसुंश्च कसुंश्च क्त्वातोसुन्कसुनः, इतरेतरद्वन्द्वः

अर्थः॥

क्त्वा तोसुन् कसुन् इत्येवम् अन्ताः शब्दाः अव्ययसंज्ञकाः भवन्ति।

उदाहरणम्॥

क्त्वा - पठित्वा, चित्वा, जित्वा, कृत्वा, हृत्वा। तोसुन् - पुरा सूर्यस्योदेतोराधेयः (का॰ सं॰ ८।३)। कसुन् - पुरा क्रूरस्य विसृपो विरप्शिन् (य॰ १।२८)॥

काशिका-वृत्तिः

क्त्वातोसुन्कसुनः १।१।४०

क्त्वा, तोसुन्, कसुन्, इत्येवम् अन्तं शब्दरूपम् अव्ययसंज्ञं भवति। कृत्वा। हृत्वा। तोसुन् व्युष्टायां पुरा सूर्यस्योदेतो राधेयः। पुरा वत्सानामपाकर्त्तोः। भावलक्षणे स्थाइण्कृञ्वदि ३।४।१६ इति इणः, कृञश्च तोसुन् प्रत्ययः। कसुन् सृपितृदोः कसुन् ३।४।१७। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जत्रुभ्य आतृदः।

लघु-सिद्धान्त-कौमुदी

क्त्वातोसुन्कसुनः ३७१, १।१।३९

एतदन्तमव्ययम्। कृत्वा। उदेतोः। विसृपः॥

न्यासः

क्त्वातोसुन्कसुनः।, १।१।३९

"कृत्वा,ह्मत्वा" इति। "समानुकर्तृकयोः पूर्वकाले" ३।४।२१ इति क्त्वा। " उदेतोः" इति। "इण् गतौ" (धा।१०४५) "सार्वधातुक" ७।३।८४ इति गुणः। "अपाकर्त्तोः" इति। कृञः। "विसृपः"इति।"गम्लृ" (धा।९४२) "सृप्लृ" (धा।९८३) इतौ। "आतृदः" इति। "तृदिर् हिंसानारदयोः" (धा।१४४७)

बाल-मनोरमा

क्त्वातोसुन्कसुनः ४४४, १।१।३९

क्त्वातोसुन्। कृत्वेति। "समानकर्तृकयोः" इति क्त्वा। उदेतोरिति। उत्पूर्वादिणो "भावलक्षणे" इत्यादिना तोसुन्। विसृप इति। "सुपितृदोः कसुन्"।

तत्त्व-बोधिनी

क्त्वतोसुन्कसुनः ४०१, १।१।३९

क्त्वातोसुन्कसुनः। कृत्वेति। "समानकर्तृकयोः"इत्यादिना क्त्वा। उदेतोरिति। उत्पूर्वादिणो "भावलक्षणे स्थे"णित्यादिना "तोसुन्"। विसृप इति। "सृपितृदोः कसुन्"।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अव्ययीभावः १।१ च ० अव्ययम् १।१ ३६

अर्थः॥

अव्ययीभावसमासः अव्ययसंज्ञकः भवति।

उदाहरणम्॥

उपाग्नि, प्रत्यग्नि, अधिस्त्रि।

काशिका-वृत्तिः

अव्ययीभावश् च १।१।४१

अव्ययीभावसमासो ऽव्ययसंज्ञो भवति। किं प्रयोजनम्? लुङ्मुखस्वरौपचाराः। लुक् उपाग्नि, प्रत्यग्नि शलभाः पतन्ति। मुखस्वरः उपाग्निमुखः, प्रत्यग्निमुखः। मुखं स्वाङ्गम् ६।२।१६६ इत्युत्तरपदान्तौदात्तत्वं प्राप्तम्, नाव्ययदिक्शब्द ६।२।१६७ इति प्रतिषिध्यते। तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर एव भवति। उपचारः उपपयःकारः, उपपयःकामः। विसर्जनीयस्थानिकस्य सकारस्य उपचारः इति संज्ञा। तत्र अव्ययीभावस्य अव्ययत्वे अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८।३।४६ इति पर्युदासः सिद्धो भवति। सर्वम् इदं काण्डं स्वरादावपि पठ्यते। पुनर् वचनम् अनित्यत्वज्ञापनार्थम्। तेन अयं कार्यनियमः सिद्धो भवति। इह च पुरा सूर्यस्योदेतोराधेयः, पुरा क्रूरस्य विसृपो विरप्शिनिति न लौउकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९ इति षष्ठीप्रतिषेधो न भवति।

लघु-सिद्धान्त-कौमुदी

अव्ययीभावश्च ३७२, १।१।४०

अधिहरि॥

न्यासः

अव्ययीभावश्च। , १।१।४०

"उपाग्नि" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिना सामीप्येऽव्ययीभावः। "अव्ययात्" २।४।८२ इत लुक्। अग्नेः समीपे उपाग्नीति। उपाग्नि मुखं यस्येत्यव्ययी-भावगर्भो बहुव्रीहिः।तत्र "मुखं स्वाङ्गम्" ६।२।१६६ इत्युत्तरपदान्तोदात्तत्वे प्राप्ते"नाव्यय" ६।२।१६७ इति प्रतिषिद्धम्। "तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वरः" इति। "बहुव्रीहौ प्रकृत्या" ६।२।१ इत्यादिना तत् पुनरन्तोदात्तत्वम्ुपाग्निशब्दस्य समासस्वरेणान्तोदात्तत्वात्। "उपपयःकारः"इति। "कर्मण्यण्" ३।२।१ एवम्, "उपपयः कामः" इत्यत्रापि। उपपयः कामो यस्येति बहुव्रीहिर्वायम्। काम्यत इति कामः, "अकत्र्तरि च कारके संज्ञायाम्" ३।३।१९ इति कर्मण्यपि घञ्। "अनव्ययस्य" (वा।९३९) इति सत्त्वे प्रतिषिद्धे "कुप्वो क पौ च"८।३।३७ जिह्वामूलीयो भवति, विसर्जनीयो वा। अत्र मुखस्वरोपचारौ निर्वत्र्यमानौ प्रयोजनम्, न तु विधीयमानौ; लुक् पुनर्विधीयमानः। ननु चावययनिबन्धनमकजादिकार्यमस्त्येव,तत् कुतोऽयं कार्यनियमो लभ्यत इत्याह- "सर्वम्" इत्यादि। "इदम्" इति। "तद्धितश्चासर्वविभक्तिः" १।१।३७इत्यादिकम्। किञ्चित् स्वरूपेणैव पठ()ते, कस्यचित् पर्यायान्तरेणार्थः। स त्वभिधेयधर्मेणोपचारा-दित्युच्यते। तत्र "कृम्भकारसन्ध्यरान्तः" इति "कृन्मेजन्तः" १।१।३८ इत्यस्यार्थःपठ()ते। क्त्वातोसुन्कसुनोऽव्ययीभावश्चेति स्वरूपेणैव। तसिलादिस्तद्धित एधाच्पर्य- न्त इति यावत्। च्व्यर्थाश्चेति। असिमौणादिकं वर्जयित्वा। तद्धितश्चासर्वविभक्तिरि- त्यस्यार्थः। "अनित्यत्वज्ञापनार्थम्" इति। प्रकृतत्वात् "संज्ञायाः" इति लभ्यते। तेनाकजादौ कत्र्तव्ये संज्ञा न भवतीति। अज्ञाताद्यर्थविवक्षायामुपाग्निकमित्यत्रा- कज् न भवति, क एव तु भवति। इह च उपकुम्भमात्मानं मन्यत उपकुम्भम्मन्यः, "आत्ममाने खश्च" ३।२।८३ इत खशि कृते "खित्यनव्ययस्य" ६।३।६५ इत्यनुवत्र्तमाने "अरुर्द्विषदजन्तस्य मुम्" ६।३।६६ इति मुमः प्रतिषेधो न भवति। "इह च" इत्यादिना "अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः" इति यद्वक्ष्यति तस्यात्रावक्तव्यतां दर्शयति। सूर्यस्येत्यत्र "कर्तृकर्मणोः कृति" २।३।६५ इति षष्ठी॥

बाल-मनोरमा

अव्ययीभावश्च ४४५, १।१।४०

अव्ययीभावश्च। "अव्ययसंज्ञः स्या"दिति शेषः। अधिहरीति। विभक्त्यर्थेऽव्ययीभावः। हरावित्यर्थः।

तत्त्व-बोधिनी
अव्ययीभावश्च ४०२, १।१।४०

अव्ययीभावश्च। अव्ययसंज्ञः स्यात्। इह "लुकि मुखस्वरोपचारयोर्निवृत्तौचे"ति परिगणनं कर्तव्यम्। लुक्युदाहरमम्---उपग्नि। "अव्यया"दिति सुपो लिक्। मुखस्वरनिवृत्तौ उदाहरणम्---उपग्निमुखः। प्रत्यग्निमुखः। "मुखं स्वाङ्ग"मित्युत्तरपदान्तोदात्तत्वे प्राप्ते "नाव्ययदिक्शब्दे"त्यदिना प्रतिषेधः। तथाच "बहुव्रीहौ प्रकृत्ये"ति पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपदं च समासस्वरेणाऽन्तोदात्तम्। विसर्गस्थानिकस्य सकारस्य "उपचार"इति प्राचां संज्ञा, तन्निवृत्तावुदाहरणम्---उपपयःकारः।उपपयःकामः। इह "अतः कृकमी"ति प्राप्तं सत्वम् "अनव्ययस्ये"ति पर्युदस्यते। परिगणनं किम्()। उपागन्धीयान। इह "सुबामन्त्रिते"इति पराङ्गवद्भावेन याने"त्यादौ मा भूदिति। तथा "उपाग्निक"मित्यादौ अव्ययसर्वनाम्ना"मित्यकच्[च]न। उपकुम्भंमन्यः। "खित्यनव्ययस्ये"ति वर्तमाने "अरुर्द्विषदजन्तस्येति विहितो यो मुस्तस्येह प्रतिषेधो न। उपकुम्भीभूतः। इह "अस्य च्वौ" इतीत्त्वस्य"प्रतिषेधो न। ईस्वविधौ हि "अव्ययस्य च्वावितीत्वं ने"ति प्रतिषे उच्यते, दोषाभूतमाहः दिवाभूता रात्रिरित्यत्र मा भूदिति। स्यादेतत्--स्वारादित्वेनैव सिद्धत्वात्। "तद्धितश्चे"त्यादि चतुःसूत्री व्यर्था। तत्र हि "तसिलादिस्तद्धित एदाच्पर्यन्तः"इत्यादिना "च्व्यर्थाश्चे"त्यन्तेनाऽऽसिप्रत्ययमौणादिकं वर्जयित्वा "तद्धितश्चासर्वविभक्तिः" इत्यस्याऽर्थः सङ्गृह्नते। "कृन्मकारसन्ध्यक्षरान्तः"इत्यनेन "कृन्मेजन्तः"इत्यस्यार्थः सङ्गृह्नते। "त्त्कातोसुन्कसुनः""अव्ययीभावश्चे"ति सूत्रद्वयं तु स्वरूपेणैव पट()त इति। अत्राहुः--पुनर्वचनमनित्यत्वज्ञापनार्थम्। तेन प्रागुक्तं "लुङ्मुखस्वरोपचाराः"इति परिगणनं लभ्यते। "पुरा सूर्यस्()योदेतोराधेयः"। "पुरा क्रूरस्य विसृपो विरप्श"न्नित्यासिद्धये "न लोकाव्यये"त्यत्र "अव्ययप्रतिषेधे तोसुन्कसुनोरप्रितषेधः"इति वक्ष्यते तदप्यनेनैव लभ्यत इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शि १।१ सर्वनामस्थानम् १।१ ४२

अर्थः॥

शि {जश्शसोः शि (७।१।२०)} इत्यनेन यः शि-आदेशः, तस्य सर्वनामसंज्ञा भवति।

उदाहरणम्॥

कुण्डानि, वनानि। दधीनि, मधूनि। त्रपूणि जतूनि।
काशिका-वृत्तिः
शि सर्वनामस्थानम् १।१।४२

शि इत्येतत् सर्वनामस्थानसंज्ञं भवति। किम् इदं शि इति? जश्शसोः षिः ७।१।२० इति शिः आदेशः। कुण्डानि तिष्ठन्ति। कुण्डानि पश्य। दधीनि। मधूनि। त्रपूणि। जतूनि। सर्वनामस्थानप्रदेशाः सर्वनामस्थाने च असम्बुद्धौ ६।४।८ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी

शि सर्वनामस्थानम् २३९, १।१।४१

शि इत्येतदुक्तसंज्ञं स्यात्॥

न्यासः

शि सर्वनामस्थानम्। , १।१।४१

"कुण्डानि" इत्यादि। "जश्शसोः शिः" ७।१।२० इति शिः, तस्य सर्वनामस्थान त्वे सति "नंपुसकस्य" स्थानम्" इति। पूर्वाचार्यैरेवेयं प्रयोजनमन्तरेणापि महती संज्ञा प्रणिता। तस्या इह यत् समाश्रयणम् तत् तत्कृतस्य शब्दानुशासनस्य दोषवत्त्वसूचनार्थम्। तत् पुनः स्वशास्त्रस्य पुनरुक्ततादोषपरिहारार्थम्। यदि हि तद्दोषवद्भवत्येवमस्य प्रणयनं युज्यते, नान्यथा।

बाल-मनोरमा

शि सर्वनामस्थानम् ३११, १।१।४१

शिसर्वनामस्थानम्। उक्तसंज्ञामिति। सर्वनामस्थानसंज्ञकमित्यर्थः। अनपुंसकस्येति पर्युदासाच्छीत्यस्य सर्वनामस्थानत्वेऽप्राप्ते वचनम्।

तत्त्व-बोधिनी

शि सर्वनामस्थानम् २७३, १।१।४१

शि सर्वनामस्थानम्। महासंज्ञाकरणं पूर्वाचार्यानुरोधेन।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सुट् १।१ अनपुंसकस्य ६।१ सर्वनामस्थानम् १।१ ४१

समासः॥

न नपुंसकम् अनपुंसकम्, तस्य अनपुंसकस्य, नञ्तत्पुरुषः

अर्थः॥

नपुंसकभिन्नः यः सुट् तस्य सर्वनामस्थान-संज्ञा भवति। सुट् इत्यनेन सु इत्यारभ्य औट्-पर्यन्तं प्रत्याहारः गृह्यते। तत्र च, सु औ जस् अम् औट् इति पञ्च प्रत्ययाः समाविष्टाः सन्ति।

उदाहरणम्॥

राजा राजानौ राजानः राजानम् राजानौ

काशिका-वृत्तिः

सुडनपुंसकस्य १।१।४३

सुटिति पञ्च वचनानि सर्वनामस्थानसंज्ञानि भवन्ति नपुंसकादन्यत्र। नपुंसके न विधिः, न प्रतिषेधः। तेन जसः शेः सर्वनामस्थानसंज्ञा पूर्वेण भवत्येव। राजा, राजानौ, राजानः। राजानम्, राजानौ। सुटिति किम्? राज्ञः पश्य। अनपुंसकस्य इति किम्? सामनी, वेमनी।

लघु-सिद्धान्त-कौमुदी

सुडनपुंसकस्य १६३, १।१।४२

स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य॥

न्यासः

सुजनपुंसकस्य। , १।१।४२

सु()इति प्रत्याहाररग्रहणम्- सुशब्दादारभ्य आ औटष्टकारात्। तत्र पञ्चैव वचनानयन्तर्भवन्तीत्याह -"सुडिति पञ्च वचनानि" इत्यादि। "नपुंसकादन्यत्र" इत्यादि। अनेनानपुंसकशब्दस्य पर्युदासतां दर्शयति। प्रसज्यप्रतिषेधे हि प्रतिषेधप्रधानमिदं वाक्यं स्यात् - नपुंसकस्य न भवतीति। ततश्च यावती काचित् सुटः सर्वनामस्थानसंज्ञा- प्राप्तिः, तस्याः सर्वस्याः प्रतिषेधः स्यात्। एवं हि "कुण्डानि तिष्ठन्ति" इत्यत्र पूर्वेणापि संज्ञा न स्यात्। तस्यास्तु शसः शिरादेशोऽवकाशः। यद्यपि "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा (व्या।प।त१९) इत्येतत्समाश्रयेण प्रसज्यप्रतिषेधे ऽप्येष दोष- शक्यते परिहर्तुम्, तथापि प्रतिपत्तिगौरवदोषः स्यात्। तथा हि- विधिप्रतिषेधयोर्विरोधादेकेन वाक्येन तावच्छक्यो न विधातुमिति वाक्यभेदः कत्र्तव्यः- "सुट् सर्वनामस्थानसंज्ञो भवति। नपुंसकस्य च न भवति" इति। ततश्चासम्बद्धं प्रतिषेधवचन- मिति पूर्वस्या अपि प्राप्तेरयं प्रतिषेधः सम्भाव्येत। ततस्तत्परिहारेणाभीष्टार्थ प्रतिपत्तौ साध्यायां नियतभावी गौरवदोषः प्रसज्येत। तस्मात् सुखावबोधार्थं - पर्युदास एवाश्रितः। नपुंसके न विधिः" इति। स्त्रीपुंसम्बन्धिनः सुट उपादानात्। "न प्रतिषेधः" इति। विधिप्रधानत्वात् प्रयुदासस्य। एतेन नपुंसकेऽस्य योगस्याव्यापारं दर्शयति- "तेन" इत्यादि। यत एव नुपंसके नास्य विधौ प्रतिषेधे वा व्यापारः, तेन जसो यः शिरादेशस्तस्य तेन पूर्वयोगेन संज्ञा भवत्येव; अप्रतिषिद्धत्वात्। "राजा" इति। पूर्वद्दीर्घः। हल्ङ्यादिलोपः। "सामनी,वमनी"इति। "नपुंसकाच्च" ७।१।१९ इति औङः शीभावः। तत्र संज्ञाया अभावाद्दीर्घत्वं न भवति।

बाल-मनोरमा

सुडनपुंसकस्य २२७, १।१।४२

तत्र किं सर्वनामस्थानमित्यत आह--सुडनपुंसकस्य। "शि सर्वनामस्थान"मित्यतः "सर्वानामस्थान"मित्यनुवर्तते। अक्लीबं=नपुंसकभिन्नप्रातिपदिकं, तस्य सुट् सर्वनामस्थानसंज्ञं स्यादित्यर्थः। तत्र सुट्शब्दमप्रसिद्धार्थत्वाद्व्याचष्टे--सुडिति प्रत्याहार इति। "सु"इत्यत्र औटष्टकारेणे"ति शेषः। नतु टाटकारेण, प्रथमातिक्रमणे कारणाऽभावात्।

तत्त्व-बोधिनी

सुडनपुंसकस्य १९२, १।१।४२

सुडनपुंसकस्य। "सुट् स्त्रीपुंसयो"रिति वक्तव्येऽनपुंसकस्येति वचनं ज्ञापकं "प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ती"ति कैयटः। तेन "असूर्यंपश्यानि मुखानी"त्यादि सिद्धम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० वा ० इति ० विभाषा १।१

अर्थः॥

न इति निषेधार्थः, वा इति विकल्पार्थः, अनयोः निषेध-विकल्पार्थयोः विभाषा-संज्ञा भवति।

उदाहरणम्॥

शुशाव, शिश्वाय। शुशुवतुः, शिश्वियतुः। दक्षिणपूर्वस्यै, दक्षिणपूर्वायै।
काशिका-वृत्तिः
न वाइति विभाषा १।१।४४

न इति प्रतिषेधः, वा इति विकल्पः। तयोः प्रतिषेधविकल्पयोः विभाषा इति संज्ञा भवति। इतिकरणो ऽर्थनिर्देशार्थः। विभाषाप्रदेशेषु प्रतिषेधविकल्पावुपतिष्ठेते। तत्र प्रतिषेधेन समीकृते विषये पश्चाद् विकल्पः प्रवर्तते। उभयत्रविभाषाः प्रयोजयन्ति। विभाषा श्वेः ६।१।३० शुशाव, शिश्वाय। शुशुवतुः, शिश्वियतुः। विभाषाप्रदेशाः विभाषा श्वेः ६।१।३० इत्येवम् आदयः।
न्यासः
न वेति विभाषा। , १।१।४३

नवेति शब्दोऽयमेको निपातोऽप्यस्ति प्रतिषेधवाची, यथा-"नवा वक्तव्यं भुक्तार्थत्वात्" इत्यादौ भाष्यवाक्ये। तस्येह यदि ग्रहणं स्यात् "विभाषा दिक्समासे बहुव्रीहौ" १।१।२७ इत्युक्त्वा "न बहुव्रीहौ" १।१।२८ इत्यत्र तु पुनः प्रति- षेधोपादानमनर्थकं स्यात्। तस्मान्न निपातसमुदायोऽयमिति दर्शयन्नाह- "नेति प्रतिषे- धः" इत्यादि। ननु चान्यत्र संज्ञासंज्ञिसम्बन्धप्रक्रियाया हि शास्त्रे शब्दस्यैव ग्रहणं प्रसिद्धम्, यथा तरप्तमपौ घः" १।१।२१ "दाधा घ्वदाप्" १।१।१९ इति, तथेहापि नवाशब्दयोरेव ग्रहणं युक्तम्। तत् कथं तदर्थयोः संज्ञा लभ्यत इत्याह-"इतिकरणः" इत्यादि। क्रियत इति करणः, इतश्चासौ करणश्चेतीतिकरणः, सोऽर्थस्य संज्ञिनो निर्देशो यथा स्यादित्येवमर्थः। इतिशब्दो हि विपर्यासकृत्। यथा गवित्यर्थमाहेति गोशब्दात् परतः प्रयुज्यमान इतशब्दस्तमर्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकत्वे व्यवस्थापयति, तथा "नवा" शब्दाभ्यां परः इति शब्दः प्रयुज्यमानः, तौ स्वरूपपदार्थक- त्वात्प्रच्याव्यार्थपदार्थकत्वे व्यवस्थापयति। तस्मादर्थनिर्देशार्थ एवेतिशब्दः कृत इति नवेति यावर्थौ प्रतीयेते प्रतिषेधविकल्पौ, तयोरेवेयं संज्ञा भवति; न नवाशब्द- योः। "तत्र प्रतिषेधेन" इत्यादिना प्रतिषेधविकल्पयोः प्रवृत्तिक्रमं व्यापारबेदं च दर्शयति। "समीकृते" इति। तुल्यतामापादिते। "विकल्पः प्रवत्र्तते" इति। पक्षे कार्यसम्पादनाय। ननु च वाशब्द एव विकल्पार्थत्वेन लोके प्रसिद्धः, प्रदेशेष्वयमुपादीयमानो विकल्पेन कार्यं सम्पादयिषयति। तथा हि प्राप्ते वा कार्ये विकल्पः क्रियताम्? यदि प्राप्ते? तत्र प्राप्तिरस्त्येवेति प्रतिषेध एव पक्षे कत्र्तव्यः। अथाप्राप्ते? तत्र प्राप्तिपूर्वकत्वात् प्रतिषेधस्य तामन्तरेण स न युज्यत इति विधिरेव पक्षे कत्र्तव्यः, न प्रतिषेधः। एतच्चोभयं वाशब्द एव शक्तः प्रयुज्यमानः सम्पादयितुम्। तत् किमर्थमियं संज्ञा क्रियत इत्याह- "उभयत्र विभाषाः प्रयोजन्ति" इति। प्रकृतत्वात् संज्ञामिति गम्यते। "विभाषा श्वेः" (६।१।३०) इत्यत्र प्रतिषेधमुखेन वाशब्दस्य प्रवृत्तिः स्यात्? विधिमुखेन वा? तत्र यदि प्रतिषेधमुखेन वा न भवतीत्येवं प्रवृत्तिः? प्राप्तिपूर्वकत्वात् प्रतिषेधस्य यत्र स एव तस्य विषय इति कित्स्वेव विकल्पेन प्रतिषेधायेदं प्रवत्र्तते। तत्र "वचिस्वपि" ६।१।१५ इत्यादिना ()आयतेः सम्प्रसारणस्य विहितत्वात्, न पित्सु; तत्र तस्य न केनचिद्विहितत्वात्। एकत्वच्चा- स्य वाक्यस्य कित्सु च प्रतिषेधसम्पादन एव चरितार्थत्वात् नोपपद्यते पुनर्विधिमुखेन प्रवृत्तिः। अथ विधिमुखेन वा

भवतीत्येवं प्रवृत्तिः स्यात्? यत्र प्राप्तिर्ना- स्ति स एव विधिविषय इति पित्स्वेव विकल्पेन विध्यर्थः प्रवर्त्तते;तत्र चरितार्थ- त्वात् न कित्सु। संज्ञाविधाने तु न दोषः; तस्यां हि सत्यां प्रतिषेधः प्रवर्त्त- मानो योऽसौ सम्प्रसारणनिमित्तानिमित्तभेदाद्विषय आसीत् तं समीकरोति। सर्वस्याः सम्प्रसारणनिमित्ततया तुल्यतामापादयति।तस्मिन् समीकृते किति च पिति च विकल्पः प्रव- र्त्तमानो विधिमुकेन सर्वत्र पाक्षिकं कार्यं सम्पादयति, सम्प्रसारणं पक्षे भवतीति। अप्राप्तिस्तु पक्षे स्थितैवेति सर्वमिष्टं सिध्यति। तस्मादुभयत्र प्राप्तावप्रा- प्तौ विभाषार्थमियं संज्ञा विधीयते। शुशावेति। "टुओ()इआगतिवृद्ध्योः" (धा।पा।१०१०), लिट्(), णल्, संप्रसारणे कृते वृद्ध्यावादेशौ। "शुशुवतुः,शि()इआयतुः" इति। "अचि श्नुधातु" ६।४।७७ इत्यादिना इयङुवङौ॥

बाल-मनोरमा

न वेति विभाषा २६, १।१।४३

न वेति विभाषा। "मेध्यः पशुरनड्वान्विभाषितः" इत्यादियाज्ञिकप्रयोगे विभाषाशब्दः केवलविकल्पे दृष्टः। इह तु शास्त्रे निषेधो विकल्पश्चेति द्वयं मिलितं विभाषाशब्दार्थ इति बोधयितुमिदमारभ्यते। इतिशब्दाभावे, स्वं रूपं शब्दस्येति नवाशब्दयो स्वरूपपरत्वान्नवाशब्दयोर्विभाषासंज्ञेत्यर्थः स्यात्। ततश्च "विभाषा ()ओ" रित्यादौ नवाशब्दा४वादेशौ स्याताम्। इतिकरणे तु नायं दोषः। इतिर्हि प्रत्येकं संबध्यते। ततश्च "न" इति शब्देन योऽर्थो गम्यते निषेधः, "वा" इति शब्देन योऽर्थो गम्यते विकल्पस्तदुभयस्य मिलितस्य विभाषासंज्ञा स्यादित्यर्थः फलति। एवंच नवाशब्दार्थयोरेव संज्ञित्वं लभ्यते, न तु नवाशब्दस्वरूपयोरिति नोक्तदोषः। तदाह-निषेधविकल्पयोरित्यादि। उभयत्रविभाषार्थमिदं सूत्रम्। तथाहि--(प्राप्तविभाषा अप्राप्तविभाषा उभयत्रविभाषेति) त्रिविधा विभाषा। प्राप्तविभाषा यथा-विभाषा जसीति। वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यत्र हि द्वन्द्वे चेति नित्यतया सर्वनामसंज्ञानिषेधे प्राप्ते विभाषेयम्। अप्राप्तविभाषा यथा--तीयस्य ङित्सु विभाषेति। द्वितीयस्मै द्वितीयायेत्यादौ तीयप्रत्ययस्य सर्वादिगणे पाठाऽभावादप्राप्ताया#ं सर्वनामसंज्ञायां विभाषेयम्। उभयत्रविभाषा यथा--विभाषा ()ओरिति। ()आयतेर्लिटि यङि च संप्रसारणविभाषेयम्। तत्र लिटि शुशाव, शि()आआय, शुशुवतुःशि()आयतुरित्याद्युदाहरणम्। यङि तु शोशूयते इति। अत्र यङंशेऽप्राप्तविभाषैवेयम्। लिटि तु द्विवचनबहुवचनेष्वपित्सु "वचिस्वपियजादीनां किति" इति नित्यतया सम्प्रसारणं प्राप्तम्, पित्सु त्वेकवचनेषु सम्प्रसारणं न प्राप्तमेव। "असंयोगाल्लिट् कित्" इति कित्वस्य अपित्स्वेव प्रवृत्तेः। एवं च प्राप्तेऽप्राप्ते चारम्भात् "विभाषा ()ओ"रित्युभयत्रविभाषेति स्तितिः। तत्र यदि "नवेति विभाषा" इति सूत्रं नारभ्येत, तर्हि "अनड्वान्विभाषितः" इत्यादियाज्ञिकप्रयोग इव विभाषा ()ओरित्यत्रापि केवलविकल्पः प्रतीयेत। भावोऽभावश्चेति द्वयं तावद्विकल्पः। ततश्च विभाषाश्रुतौ प्रवृत्तिस्दभावश्चेति द्वयमपि विधेयमिति लभ्यते। तत्र यदि "विभाषा श्वेः"इति विकल्पो विधिमुखः--"लिटि ()आयतेः सम्प्रसारणं भवति न भवती-ति तर्हि पित्स्वेव विकल्पस्य प्रवृत्तिः स्यात्। तत्र हि सम्प्रसारणस्य वचिस्वपीति किति विहितस्य अप्राप्तत्वेन प्रथमं भवनांशो विधेयः, तस्य पाक्षिकत्वाय न भवतीत्यपि विधयम्। कित्सु तु प्रवृत्तिर्न स्यात्। तेषु हि वचिस्व पियजादीनां कितीति प्राप्तत्वात् प्रथमं भवनांशो न विधेयः। न भवतीत्यंश एव विधेयः। एवं च उभयांशविधेयत्वाऽलाभात्तत्र विकल्पविधिरयं न प्रवर्तेत, तत्र नित्यमेव सम्प्रसारणं स्यात्। यदि तु विकल्पो निषेधमुखः --लिटि ()आयतेः सम्प्रसारणं न भवति भवती"ति, तर्हि कित्स्वेव प्रवृत्तिः स्यात्। तत्र हि वचिस्वपीति प्राप्तत्वान्न भवतीति प्रथमं विधेयम्। अभवनस्य पाक्षिकत्वलाभाय भवतीत्यपि विधेयम्। पित्सु तु प्रवृत्तिर्न स्यात्। तत्र सम्प्रसारणस्याऽप्राप्ततया न भवतीत्यंशस्य प्रथमं विध्यनर्हत्वात्। न च पित्सु विधिमुखः कित्सु निषेधमुख इत्युभयथापि प्रवृत्तिरिति वाच्यम्। सकृच्छ()तस्य विभाषाशब्दस्य क्वचिद्विधिमुखविकल्पबोधने क्वचिन्निषेधमुखविकल्पबोधने च असामथ्र्यात्। आवृत्त्या तद्बोधने तु स एव दोषः। "नवेति विभाषे"त्यारम्भे तु श्रुतक्रमानुरोधेन बोधान्नेत्यंशेन कित्सु पूर्वं निषेधः प्रवर्तते। ततः किदकिद्रूपे सर्वस्मिन् लिटि निःसम्प्रसारणतया

ऐकरूप्यं प्रापिते सति, भवति न भवतीत्येकरूपेण विधिमुख एव विकल्पः प्रवर्तते। तदेवमुभयत्रविभाषार्थमिदं सूत्रम्। प्राप्तविभाषायां तु नास्योपयोगः, तत्र भवनांशस्य प्राप्तत्वेन विध्यनर्हत्वात्। अप्राप्तविभाषायामपि न तस्योपयोगः, तत्र अभवनांशस्य सिद्धत्वेन विध्यनर्हत्वात्। नचैवमपि "उणादयो बहुलं""ह्मकोरन्यतरस्याम्""छन्दस्युभयथा" "अनुपसर्गाद्वा" इत्यादिविधिषु विभाषाशब्दाऽभावात् केवलविकल्पविधौ वैरूप्यं दुर्वारमिति वाच्यम्, विभाषाशब्दस्याऽत्र सूत्रे विकल्पवाचकशब्दोपलक्षणत्वात्। एवं च लोके ये विकल्पपर्यायाः शब्दास्ते सर्वेऽस्मिन् शास्त्रे निषेधविकल्पयोः प्रत्यायका इति सूत्रार्थपर्यवसानं बोध्यम्। भाष्ये तु विभाषादिशब्दानां लोकवदेव केवलविकल्पपरत्वेऽपि लक्ष्यानुरोधेनैव क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन विकल्पस्य प्रवृत्युपपत्तेरेतत्सूत्रं प्रत्याख्यातमित्यलं बहुना।

तत्त्व-बोधिनी

न वेति विभाषा २३, १।१।४३

न वेति विभाषा। "ने"ति प्रतिषेधो "वे"ति विकल्पस्तदाह-निषेधविकल्पयोरिति। "विभाषाश्वेः" इत्यादिषु प्रतिषेधविकल्पावुपतिष्ठेते, तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते। शुशाव शि()आआयेत्यत्राऽप्राप्तौ विकल्पः, शुशुवतुः शि()इआयतुरित्यादौ तु "वचिस्वपी"ति नित्यप्राप्ताविति विवेकः। अत्रेदं बोध्यम्-"इति" शब्दः काकाक्षिन्यायेनेभाभ्यां सम्बध्यते। स च पदार्थविपर्यासकृत्। तेन निषेधो विकल्पश्च नवाशब्दार्थः संज्ञी। विभाषाशब्दार्थो विकल्पः संज्ञा। उभयत्रविभाषार्थं चेदं सूत्रम्। प्राप्तविभाषायामप्राप्तविभाषायां च नास्योपयोगः। प्राप्तविभाषायां भावांऽशस्य सिद्धत्वेन विभाषाश्रुत्या "पक्षे भवती"ति भावांषमनूद्य "पक्षे न भवती"त्यभावांशमनूद्य "पक्षे भवती"ति भावांशमात्रकरणात्। "विभाषा श्वेः" इत्युभयत्रविभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव सम्प्रसारणविकल्पः स्यात् , कित्सु तु यजादित्वात् "वचिस्वपि-" इति नित्यमेव स्यात्। अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव प्रवृत्तिः-स्यान्न तु पित्सु। नच पित्सु विधिमुखेन कित्सु तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्त्विति वाच्यम्, वैरूप्यलक्षणवाक्यबेदप्रसङ्गात्। संज्ञाकरणे तु श्रुतक्रमानुरोधेन "ने"ति प्रतिषेधः प्रथमं कित्सु प्रवत्र्तते, ततः किदकिद्रूप सर्वस्मिल्लिटि एकरूपं प्रापिते सति "पक्षे भवती"त्यकरूपेण विधिमुखेनैव प्रवर्तते। इतीति किम्? घुसंज्ञावत् "स्वं रूप"मिति वचनाच्छब्दस्य संज्ञा मा भूत्। तथाहि सति "विभाषा श्वेः" इत्यस्य नवाशब्दः ()आयतेरादेश इत्यर्थः स्यात्। इतिशब्दे तु सति अर्थः संज्ञीति लभ्यते। तथाहि-लोके ह्रर्थप्रधानः शब्दः। "गौरित्ययमाहे"त्यादौ तु शब्दस्वरूपपरः संपद्यते। व्याकरणे तु "स्वं रूप"मिति परिभाषाणात्स्वरूपपरत्वमौत्सर्गिकम्। इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः। इदमेवोतिशब्दस्य पदार्थविपर्यासकत्वं नाम। संज्ञात्वमर्थस्यैव नतु विभाषाशब्दस्येति व्याख्यानस्य "ह्मक्रोरन्यतरस्या"-मित्यादौ वैरूप्योद्धारः फलम्। उभयत्रविभांषा हि तत्सूत्रम्, अभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थस्य करोतेरकर्मकत्वाच्च "गतिबुद्धी"त्यादिना अणौ कर्तुर्णौ कर्मत्वे प्राप्ते अर्थान्तरे चाऽप्राप्ते तदारम्भात्। उदाह्मतं च भाष्ये-"प्राप्ते तावत्-अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः। विकारयत#इ सैन्धवान्, विकारयति सैन्धवैः। अप्राप्ते तु-हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन। करोति कटं देवदत्तः, कारयति कटं देवदत्तम् , कारयति कटं देवदत्तेने"ति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इक् १।१ यणः ६।१ सम्प्रसारणम् १।१

अर्थः॥

यणः (य् व् र् ल्) स्थाने यः इक् (इ उ ऋ ऌ) (भूतः भावी वा) तस्य सम्प्रसारणसंज्ञा भवति।

उदाहरणम्॥

उक्तः, उक्तवान्। सुप्तः, सप्तवान्॥ इष्टः, इष्टवान्। गृहीतः, गृहीतवान्।
काशिका-वृत्तिः
इग्यणः सम्प्रसारणम् १।१।४५

इक् यो यणः स्थाने भूतो भावी वा तस्य संप्रसारणम् इत्येषा संज्ञा भवति। यजि ष्टम्। वप् उप्तम्। ग्रह गृहीतम्। केचिदुभयथा सूत्रम् इदं व्याचक्षते वाक्यार्थः संज्ञी, वर्णश्च इति। इग्यणः यो वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणः स सम्प्रसारणसंज्ञो भवति, यण्स्थानिक इग्वर्णः स सम्प्रसारणसंज्ञो भवति इति। तत्र विधौ वाक्यार्थ उपतिष्ठते ष्यङः सम्प्रसारणं पुत्रपत्योस् तत्पुरुषे ६।१।१३ वसोः सम्प्रसारणम् ६।४।१३१ इति। अनुवादे वर्णः सम्प्रसारणाच् च ६।१।१०४ इति। सङ्ख्यातानुदेशादिह न भवति अधितराम् इति। द्युभ्याम् इत्यत्र दिव उत् ६।१।१२७ इति तपरकरणाद् दीर्घो न भवति। सम्प्रसारणप्रदेशाः वसोः सम्प्रसारणम् ६।४।१३१ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
इग्यणः संप्रसारणम् २५७, १।१।४४

यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्॥
न्यासः
इग्यणः सम्प्रसारणम्। , १।१।४४

"भूतः"इति। यत्र शास्त्रान्तरेण विहितो भूतविभक्त्या कार्यान्तरार्थमनूद्य-ते, यथा- "सम्प्रसारणस्य" ६।१।१३४ "सप्रसारणाच्च" ६।१।१०४इति, तत्र भूतः। "भावी वा" इति। यत्र भाव्यमानविभक्त्या विधानार्थं निर्दिश्यते, यथा "ष्यङः सम्प्रसारणम्" ६।१।१३ "वसोः सम्प्रसारणम्" ६।४।१३१ इति, तत्र भावी। अत्र हि ष्यङः स्थानिको वसुस्थानिकश्चेङः नास्ति यस्य संज्ञा सूत्रस्य शाटकं वय" इति। स इग् यणः स्थाने भवति, यस्य भूतस्य सम्प्रसारणमित्येषा संज्ञा भवतीति। "इष्टम्, उप्तम्" इति। "वचिस्वपियजादीनां किति" ६।१।१५ इत सम्प्रसारणम्। "गृहीतम्ित्यत्रापि "ग्रहिज्यावयि"६।१।१६ इत्यादिना सम्प्रसारणम्। "ग्रहोऽलिटि दीर्घः" ७।२।३७। "केचित्" इत्यादिना ये भाविनीं संज्ञां नाश्रयन्ति तन्मतं दर्शयति। कथं पुनरेकस्य सूत्रस्यैतदर्थद्वयमेकेन वाक्येन लभ्यते? तन्त्रेण, आवृत्त्या वा। ननु च संज्ञाविधौशब्दस्यैव ग्रहणं प्रसिध्दमित्युक्तम्, ततो युक्तं वर्णस्यैव संज्ञित्वम्, अर्थस्यततु कथम्? यथा "नवेति विभाषा" (१॥४४) इति सूत्र इति चेत्? न युक्तम्; तत्रेतिकरण- स्यार्थनिर्देशार्थस्य प्रयोगात्, इह तु स नास्तीत्ययुक्तम्। इहापि तन्त्रस्यावृ- त्तेर्वा न्यायस्याश्रितत्वाद् युक्तमेव। अस्य च सूत्रार्थद्वयस्य विभक्तिविशेषनि-र्देशो लिङ्गम्। यदयं "ष्यङः सम्प्रसारणम्" (६ १।१३) इत्यादौ विधिवाक्ये भाष्यमानविभक्()त्या निर्देशं करोति ततो ज्ञायते-"वाक्यार्थः संज्ञी" इति। यतश्च "सम्प्रसारणस्य" ६।३।१३८ इत्यादौ भूतविभक्()त्या निर्देशं करोति ततोऽवसीयते- "वर्ण" इति। तस्माद् युक्तं वाक्यार्थस्यापि संज्ञित्वम्। किरूपोऽसौ वाक्यार्थः? इत्याह-"स्थान्यदेशः" इत्यादि। तत्रेत्यादिना अनन्तरयोः सूत्रार्थयोर्विषयविभागं दर्शयति--विधौ वर्णो न सम्भवतीति। "ष्यङः सम्प्रसारणम्" (६ १।१३) इत्यादौ विधिवाक्ये प्रथमः सूत्रार्थ उपतिष्ठते। अनवादे तु "सम्प्रसारणस्य"६।३।१३८ इत्यादौ विहितत्वाद्विधेयस्य प्रथमोऽकिञ्चित्कर इति द्वितीयः।

"अदुहितराम्" इति। अत्र यणः स्थानिकत्वादिकः सम्प्रसारणसंज्ञया भाष्यम्। तस्यां च सत्यां "हलः" ६।४।२ इति दीर्घत्वं प्रसज्येतीति चोद्यमपाकर्त्तुमाह-"संख्ययातानुदेशात्ित्यादीह स्थानिनो यणश्चत्वारः इकोऽप्यादेशाश्चत्वार एव, तेन संख्यातानुदेशेन भवितव्यम् "यथासंख्यमनुदेशः" १।३।१० इत्यादिना। ततश्च यकारस्य स्थाने य इवर्णस्तस्यैव सम्प्रसारमसंज्ञा भवति। न चेह यकारस्य स्थान इवर्णः। किं तर्हि? लकारस्य। तत् कुतस्तस्याः प्रसङ्गः? "द्रुह प्रपूरणे" (धा। पा। १०१४), लङ, "कर्मवत् कर्मणा तुल्यक्रियः" ३।१।८७ इत्यतिदेशे कर्मकर्तयस्मिनेपदम्, इट्। "न दुहस्नुनमां यक्चिणौ" ३।१।८९ इति यकि प्रतिषिद्धे शप्। तस्यादादित्वाल्लुक्। अदुहि इति स्थिते "तिङश्च" ५।३।५६ इति तरप्। "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे"(५ ४।११) इत्याम्। तरप इहोपन्यासोऽङ्गसंज्ञार्थः।

बाल-मनोरमा

इग्यणः संप्रसारणम् , १।१।४४

वि()आवागम्, वि()आवाहौ इति सुटि रूपाणि सुगमत्वादुपेक्ष्य शसादावचि संप्रसारणकार्यं वक्ष्यन् संप्रसरणसंज्ञा दर्शयति--इग्यणः यणः स्थाने इति। व्याख्यानात्स्थानार्थलाभः। "षष्ठी स्थानेयोगे"ति तु नेह भवति, अनुवादे परिभाषामनुपस्थितेः। षष्ठीश्रुतौ सर्वत्र व्याख्यानादेव स्थानार्थलाभसंभवात् "षष्ठीस्थानेयोगा" इत्येत"न्निर्दिश्यमानस्यादेशा भवन्ती"त्येतदर्थमिति भाष्ये सिद्धान्तितत्वाच्च। संप्रसारणसंज्ञ इति। ततश्च "वसोः संप्रसारणं" "वचिस्वपियजादीना"मित्यादौ संप्रसारणश्रुतौ यण्()स्थानिक इगुपस्थितो भवति। तत्रान्तरतम्याद्यस्य इकारः, वकारस्य उकारः, रेफस्य ऋकारः लस्य लृकार इति ज्ञेयम्।

तत्त्व-बोधिनी

इग्यणः संप्रसारणम् २८८, १।१।४४

इग्यणः। यणः स्थाने इति। विधिप्रदेशेषु सूत्रसाटकवद्भाविसंज्ञाश्रयणान्नान्योन्याश्रयः। ननु यण्स्थानिकस्येकः संप्रसारणत्वे "अदुहितचरा"मित्यत्र लङो लकारस्य स्थाने उत्तमपुरुषैकवचनमिट्, तस्य यण्स्थानिकत्वेन संप्रसारणसंज्ञायां सत्यां "हलः"इति दीर्घः स्यात्, तरपं प्रति लङ्न्तस्याऽङ्गत्वादिति चेत्। अत्र कैयटः--- यथासङ्ख्यसम्बन्धात्सम्प्रसारणसञ्ज्ञाऽत्र न भवतीति। नन्वनुवादे परिभाषाणामनुपस्थानात्कथमिह यथासङ्ख्यत्वलाभः। नचैवं स्थानेयोगोऽपि न लभ्येतेति वाच्यम्, "षष्ठी स्थानेयोगे"त्यत्रैतत्सूत्रमनुवत्र्तय व्याख्यायां तल्लभात्। अत्राहुः--तन्त्रावृत्याद्याश्रयणेन "सम्प्रसारणस्ये"ति सूत्रे तद्भावितग्रहणाददुहिकरामित्यत्र "हलः"इति लङः स्थामिकस्येटः संप्रसारणस्य दीर्घो न भवति, लङ्स्थानिकस्येटः संप्रसारणशब्देनाऽभावितत्वात्ष। नन्वेवमप्यक्षद्युवौ अक्षद्युव इत्यादावूठः संप्रसारणसंज्ञायां "संप्रसारणाच्चे"ति पूर्वरूपं स्यादिति चेन्न, "संप्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्य"मिति वार्तिककृतोक्तत्वाद्वार्णादाङ्गस्य बलीयस्त्वाद्वा उवङेव स्यात्। अत्र नव्याः--"ष्यङः संप्रसारण"मित्यादिविधिप्रदेशेष्वेव "यण् इ"गिति पठित्वा संप्रसारणसंज्ञासूत्रं त्युक्तं शक्यमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आद्यन्तौ १।२ टकितौ १।२

समासः॥

आदिश्च अन्तश्च आद्यन्तौ, इतरेतरद्वन्द्वः
टश्च कश्च, टकौ इतौ ययोः इति टकितौ, द्वन्द्वगर्भी बहुवृहिः

अर्थः॥

षष्ठी-निर्दिष्टस्य {टित्} आगमः आदौ भवति, {कित्} आगमः अन्ते भवति।

उदाहरणम्॥

टित् - पठिता, भविता। कित् - त्रापुषम्, जातुषम्। जटिलः भीषयते, मुन्डो भीषयते।
काशिका-वृत्तिः
आद्यन्तौ टकितौ १।१।४६

आदिः टित् भवति, अन्तः कित् भवति षस्ठीनिर्दिष्टस्य। लविता। मुण्डो भीषयते। टित्प्रदेशाः आर्धधातुकस्य इड् वलादेः ७।२।३५ इत्येवम् आदयः। कित्प्रदेशाः भियो हेतुभये शुक् ७।३।४० इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
आद्यन्तौ टकितौ ८४, १।१।४५

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः॥
न्यासः
आद्यतन्तौ टकितौ। , १।१।४५

"षष्ठी स्थानेयोगा" १।१।४८ इत्यस्याः परिभाषाया अयमपवादः। तेन तत्सम्बन्धादस्यापि परिभाषात्वं विज्ञायते। यदि तह्रादिष्टिद् भवत्यन्तः किद्भवति, तदा "चरेष्टः" ३।२।१६ "आतोऽनुपसर्गे कः" ३।२।३ इत्यादयोऽपि प्रत्यया आद्यन्तभूताः स्युओः। न च टितः प्रत्ययस्यादित्वे "टिड्ढाणञ्" ४।१।१५ इति टितो विधीयमानो ङीब् निरवकाश इत्याशङ्कनीयम्। यत्र हि प्रकृतेरेव सिद्धं टित्त्वं न प्रत्ययस्य, नदड् भष()डित्येवमादौ, स तस्यावकाशो भविष्यतीति। टितश्च प्रत्ययस्या- दित्वे सति कुरुचर इत्येवमादिरूपमेव सिध्येत्। कितस्त्वन्त्यत्वे आध्योः, विध्योरि- त्यत्र "उपसर्गे घोः किः" ३।३।९२ इति किप्रत्ययस्य प्रकृत्यन्तः-पातित्वाद्धातु- ग्रहणेन ग्रहणे सति "उदात्तयणो हल्पूर्वात्" ६।१।१६८ इत्येष स्वरो न स्यात्। "नोङ धात्वोः" ६।१।१६९ इति प्रतिषेधादित्यत आह- "षष्ठीग्रहणस्य सिंहावलोकितन्यायेनोप- स्थानात्। नन्वेवमपि "गापोष्टक्" ३।२।८ "व्रीहिशाल्योर्ढक्" ५।२।२ इत्येतावाद्य न्तौ प्राप्नुतः, नैष दोषः, "पुरस्तादपवादा अनन्तरात् विधीन् बाधन्ते नोत्तरान्" (व्या।प।९) इति स्थानेयोगत्वस्यैवायमपवादो भविष्यति, न प्रत्ययपरत्वस्य। अपर आह- आद्यन्तावयवौ, अवयवश्चावयविनमन्तरेण न सम्भवतीत्यवयविनमाक्षिप्य तौ वत्र्तेते। ततश्चावयवावयविसम्बन्धे यलस्यादिरन्तो वावयवो विधीयते, सोऽवयवो षष्ठ()आ निर्दैष्ट- व्य इति सामथ्र्यादवयवषष्ठ()आ निर्दिष्टस्येति ज्ञायते। न चैवम्। "गापोष्टक्" ३।२।८ "व्रीहिशाल्योर्ढक्" ५।२।२ इत्येतौ प्रत्ययावाद्यन्तौ प्राप्नुतः, यस्मादिह प्रकृतयोऽवयवषष्ठ()आ निर्दिष्टाः, किं तर्हि? सुपां सुपो भवन्तीति पञ्चम्यर्थे या षष्ठी तयेति। "भीषयते" इति। "ञिभी भये"(धा।पा।१०८४) हेतुमण्णिच्, "भियो हेतुभये षुक्" ७।३।४० "भीस्म्योर्हेतुभये" १।३।६८ इत्यात्मनेपदम्।
बाल-मनोरमा
आद्यन्तौ टकितौ ३८, १।१।४५

आद्यन्तौ टकितौ। आदिश्च अन्तश्च आद्यन्तौ, टश्च कच् टकौ। टकारादकार उच्चारणार्थः। टकौ इतौ ययोस्तौ टकितौ। द्वन्द्वान्त इच्छब्दः प्रत्येकं संबध्यते। टित्कितावाद्यन्तावयवौ स्तः। कस्येत्याकाङ्क्षायां यस्य तौ विहितौ तयोरित्यर्थाल्लभ्यते। तदाह--टित्कितावित्यादिना। क्रमादिति यथासङ्ख्य सूत्रलभ्यम्। टित् आद्यवयवः, किदन्तावयव इत्यर्थः। नचैवं सति मिलितयोरेकत्रान्वयाऽभावात्कथमिह द्वन्द्व इति वाच्यम्, प्रथमतः समुदायरूपेण परस्परं युगलयोरन्वयबोधमादाय द्वन्द्वप्रवृत्तौ सत्यां यथासंख्यसूत्रपर्यालोचनया पुनः प्रत्येकान्वयोपपत्तेः। "एचोऽयवायावः" इत्यादावप्येषैव गतिः। लोके त्वेवंजातीयकप्रयोगोऽसाधुरेवेति भाष्यादिषु स्पष्टम्। अत्रैव यथासङ्ख्यसूत्रोमन्यासो युक्तः। "आर्धधातुकस्येड्वलादेः" भविता। "ङ्णोः कुक् टुक् शरि", प्राङ्()क्?षष्ट इत्याद्युदाहरणम्। "पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान्" इति "षष्ठी स्थानेयोगे"त्यस्यानन्तरस्यैवायमपवादः। "प्रत्ययः" परश्चेत्यनेन तु परत्वादिदं बाध्यते। तेन चरेष्टः गापोष्टगित्यादयः परा एव भवन्ति।

तत्त्व-बोधिनी
आद्यन्तौ टकितौ ३२, १।१।४५

आद्यन्तौ टकिता। भविता,-"आर्धधातुकस्येट्"। पाययाति-"शाच्छासाह्वे"त्यादिनात्युक्। पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः। "प्रत्ययः" "परश्चेट"त्यनेन तु परत्वादयं बाध्यते। तेन "चरेष्टः" "गापोष्टा" गित्यादयः परा एव भवन्ति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मित् १।१ अचः ६।१ अन्त्यात् ५।१ परः १।१

समासः॥

म् इत् यस्य सः मित्, बहुव्रीहिः
अन्ते भवं अन्त्यम्, तस्मात् अन्त्यात्

अर्थः॥

अचां सन्निविष्टानां यः अन्त्यः अच्, तस्मात् परः मित् भवति।

उदाहरणम्॥

भिनत्ति, छिनत्ति। रुणद्धि। मुञ्चन्ति। वन्दे मातरम्। कूण्डानि, वनानि। यशांसि, पयांसि।
काशिका-वृत्तिः
मिदचो ऽन्त्यात् परः १।१।४७

अचः इति निर्धारणे षष्ठी। जातौ च इदम् एकवचनम्। अचां संनिविष्टानाम् अन्त्यादचः परो मित् भवति। स्थानेयोग प्रत्यय परत्वस्य अयम् अपवादः। विरुणद्धि। मुञ्चति। पयांसि। मित्प्रदेशाः रुदादिभ्यः श्नम् ३।१।७८ इत्येवम् आदयः। मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगाऽदिलोपार्थम्। मग्नः। मग्नवान्। मङ्क्ता। मङ्क्तुम्।

लघु-सिद्धान्त-कौमुदी

मिदचोऽन्त्यात्परः २४१, १।१।४६

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्॥ एवं धन वन फलादयः॥

न्यासः

मिदचोऽन्त्यात्परः।, १।१।४६

अत्र यदि "अचः" ४।३।३१ इत्येषा पञ्चमी स्यात्, अन्त्यादित्यनया पञ्चम्या समानाधिकरणत्वं स्यात्। ततः "नपुंसकस्य झलचः" ७।१।७२ इति नुमीहैवा- न्त्यादचः परः स्यात्- "कुण्डानि" इति; अस्ति ह्यत्र नपुंसकस्यान्त्योऽचः; पयांसी- त्यत्र तु न स्यात्, "अलोऽन्त्यस्य " १।१।५१ इति सकारस्यैव तु स्थाने स्यात्। ह्यत्राजन्त्यः, किं तर्हि? सकारः। तस्मान्निर्धारणे षष्ठीयमिति दर्शयन्नाह-"अचाम्ित्यादि। जातौ बहुवचम्। सूत्रेऽप्यच इत्येकवचनं जातावेव। यदि तर्हि निर्धारणषष्ठीयम्, अन्त्यस्याविशेषितत्वादविशेषेण यतः कुतश्चिदन्त्यात् परो मित् स्यात्; न हि द्वीतीयमज्ग्रहणमस्ति, येनान्त्यो दिशेष्यते, नैष दोषः; समानजातीयस्यैव हि लोके निर्धारणप्रतीतिर्भवति। तथा हि "कृष्णा गवां सम्पन्नश्रीरतमा" इत्युक्ते गौरेव प्रतीयते; नाजा, नाप्य()आआ। तसस्मादिहाप्यचां मध्येऽन्त्यादचोऽवधेरित्यन्त्यत्वेन निर्धार्यमाणः समानजातीयोऽजेव। प्रतीयते। तेनाच एवान्त्यात् परो भविष्यति।
स्थानेयोगित्वप्रत्ययपरत्वापवादार्थञ्चेदमारब्धम्। तत्र स्थानेयोगित्वापवादार्थम्-"शेमुचादीनाम्" ७।१।५९ नुम् भवति, मुञ्चति। "नपुंकस् झलचः" (७॥७२)पयांसि। प्रत्ययपरत्वापवादार्थम्()- "रुधादिभ्यः श्नम्" ३।१।७८,रुणद्धि। ननु च "पुरस्ताद-पवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् (व्या।प।९) इति स्थानेयोगित्वस्यैवापवादो युज्यते, न तु प्रत्ययपरत्वस्य, नैतदस्ति; एवं हि श्नमो मित्करणमनवकाशत्वादनर्थकं स्यात्। श्रवणार्थत्वान्नानर्थकमिति चेत्? नः; "तृणह इम्"७।३।९२ इति निर्देशात्। श्रवणार्थे ह्येतस्मिन् "तृणम् ह इम्" इति निर्देशः स्यात्। तस्मात् प्रत्ययपरत्व- स्यापवादो युक्तः। यद्येवं "तन्मध्यपतितस्तद्()ग्रहणेन गृह्यते" (व्या।प।२१) इति प्रकृत्यन्तः पातिनस्तद्()ग्रहणेन ग्रहणादपरत्वाच्च श्नमः प्रत्ययसंज्ञा न स्यात्, तथा च "लशक्वतद्धिते" १।३।८ इति प्रत्ययादेः शकारस्य विधीयमानेत्संज्ञा न स्यात्, नैष दोषः; प्रत्ययाधिकारे विधीयमानत्वात् प्रत्ययसंज्ञा भविष्यति- सत्यप्यपरत्वे, सत्यपि प्रकृत्यन्तः पातित्वे; यथा-बहुजकचोरन्तोदात्तत्वम्। "बहुपटवः, उच्चकैः" इत्यनयोरसति परत्वे सत्यं प्रत्ययसंज्ञायां "चितः" ६।१।१६७ इत्यन्तोदात्तत्वं भवत्येव। "मस्जेः" इत्यादि। नकारस्योपधाया "अनुषङ्गः" इति पूर्वाचार्यैः संज्ञा कृता। "टुमस्जो शुद्धौ" (धा।पा।१४१६) इत्यस्य "मस्जिनशोर्झलि" ७।१।६०इति नुमं वक्ष्यति। स च यद्यचोऽन्त्यात् परः स्यात् "स्कोः संयोगाद्योः" ८।२।२९ इति सकार- स्य "अनिदिताम्" ६।४।२४ इति नकारस्य च लोपो न स्यात्; यथाक्रममनादित्वादनु- धत्वाच्च। तस्मादन्त्याज्जकारात् पूर्वो जकारसकारयोर्मध्ये नुम् कत्र्तव्यः। यथा चान्त्यात् पूर्वो लभ्यते,तथा सप्तमे वक्ष्यते। "मग्नः" इति। "ओदितश्च" ८।२।४५इति निष्ठानत्वम्, तस्यासिद्धत्वत् "चोः कुः" ८।२।३० इति कुत्वं जकारस्य गकारः। "मङ्क्ता" इति अत्र पूर्ववद् गकारे कृते तस्य "खरि च" ८।४।५४ इति चर्त्वं ककारः। "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारः। "अनुस्वारस्य ययि परसवर्णः" ८।४।५७ ङकारः। पूर्वभक्तश्चायं मिद् वेदितव्यः; अन्यथा "वहाभ्रे लिहः" ३।२।३२ इति लिहः खशि कृते "अरुर्द्विषदजन्तस्य" ६।३।६६ इति मुमि कृते वहंलिह् इत्यत्र "मोऽनुस्वारः" ८।३।२३ इति पदान्तस्य विधीयमानोऽनुस्वारो न स्यात्, अपदान्तत्वात्।

बाल-मनोरमा

मिदचोऽन्त्यात्परः ३९, १।१।४६

मिदचोऽन्त्यात्परः। मकार इत् यस्य स मित् अन्त्यादचः परो भवतीत्यर्थे "शेमुचादीनाम्" इत्यादाविदं न प्रवर्तेत,तत्रान्त्यस्याचोऽभावादत आह--अच इति षष्ठ()न्तमिति। "यतश्च निर्धारणमित्यनेने"ति शेषः। "अच" इत्येकत्वमविवक्षितं, तदाह--अचां मध्य इत्यादिना। अन्तावयव इति। एतच्च आद्यान्तावित्यतोऽन्तग्रहणानुवृत्त्या लभ्यते, आद्यन्तशब्दैकदेशस्यान्तशब्दस्य तन्मात्रे स्वरितत्वप्रतिज्ञाबलेनाऽनुवृत्तिसंभवात्। आदिग्रहणमनुवत्र्य परादित्वाभ्युपगमे तु वारीणीति बहुवचने सर्वनामस्थाने चासंम्बुद्धौ "इति नान्ताङ्गस्य विहितो दीर्घो न सिध्येत्। अभक्तत्वे तु वहंलिह इत्यत्र "वहाभ्रे लिहः" इति खशि, "अरुर्द्विष"दिति मुमि तस्य "मोऽनुस्वारः" इति मान्तस्य पदस्य विहितोऽनुस्वारो न स्यात्। वस्तुतस्तु यस्य समुदायस्य मिद्विहितस्तस्याऽचां मध्ये योऽन्त्यस्तस्य समुदायस्याऽन्तावयवय इति व्याख्येयम्। अत एव "समुदायभक्तो मित्" इति भाष्यं सङ्गच्छते। समासाश्रयविधौ मूकारश्च वक्ष्यति--"अङ्गस्य नुम्विधानात्तद्भक्तो हि नु"मिति।

तत्त्व-बोधिनी

मिदचोऽन्त्यात्परः ३३, १।१।४६

मिदचोऽन्त्यात्परः। स्थानेयोगत्वस्य "प्रत्ययः"-परश्चे"ति परत्वस्य चायमपवादः। यशांसि वनानि। "नपुंसकस्य "झलचः" इति नुम्। रुणद्धि। "रुधादिभ्यः श्नम्"। ननु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यापवादोऽस्त्विति चेन्नः, बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इतीहाभ्युपगमात्, अन्यथा श्नमो मित्करणं व्यर्थं स्यात्। नच श्रवणार्थ एव मकारः स्यादिति वाच्यम्, "तृणह इ"मिति निर्देशात्। अचां मध्य इति। सूत्रे जात्यभिप्रायेण "अचः" इत्येकवचनमिति भावः। अचां मध्य इति किम्?, मुञ्चति लुम्पति। "अन्त्यादचः परो मित्स्या"दिति प्राचो व्याख्यायां नैतत्सिध्येत्। "शे मुचादीना"मित्यत्रान्त्यस्याचोऽसंभवेन मित्परिभाषाया अपनुस्थितिप्रसङ्गात्। अन्ये त्वचोऽन्त्यात्परो मित्स्यादिति व्यत्यासेन योजयित्वा प्राचो व्याख्यानमपि कथंचित्समर्थयन्ते। पूर्वसूत्रादन्त इत्यनुवत्र्तते, एकदेशे स्वरितत्वप्रतिज्ञानात्। अतो व्याचष्टे-अन्तावयव इति। तेन "वारीणी"त्यादावङ्गस्य नान्तत्वेन दीर्घः सिद्धः। परादित्वे स न सिध्येत्। अभक्तत्वे तु "वहंलिह" इत्यत्र "वहाभ्रे लिहः" इति खशि "अरुर्द्विष"दिति मुमि मोऽनुस्वारो न स्यात्, अपदान्तत्वादिति भावः। यत्तु कैश्चिदुक्तमभक्तत्वे "वारिणी"ति दीर्घो न स्यादिति, तत् "तदादिग्रहणं स्यादिनुमर्थ"मित्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एचः ६।१ एक् १।१ ह्रस्वादेशे ७।१

समासः॥

ह्रस्वस्य आदेशः ह्रस्वादेशः, षष्ठीतत्पुरूषः

अर्थः॥

एचः स्थाने ह्रस्वादेशे कर्त्तव्ये इक् एव भवति नान्यः।

उदाहरणम्॥

अतिरि कुलम्। अतिनु कुलम्। अपगु।

काशिका-वृत्तिः

एच इग्घ्रस्वाऽदेशे १।१।४८

एचो ह्रस्वाऽदेशे कर्तव्ये इकेव ह्रस्वो भवति, न अन्यः। रैअतिरि। नौअतिनु। गोउप गु। एचः इति किम्? अतिखट्वः। अतिमालः। ह्रस्वाऽदेशे इति किम्? दे३वदत्त। देवद३त्त।

लघु-सिद्धान्त-कौमुदी

एच इग्घ्रस्वादेशे २५१, १।१।४७

आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। प्रद्यु। प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि॥ प्ररि। प्ररिणी। प्रीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्राभ्याम्। प्रीणाम्॥ सुनु। सुनुनी। सुनूनि। सुनुनेत्यादि॥

लघु-सिद्धान्त-कौमुदी

इत्यजन्तनपुंसकलिङ्गाः। २५१, १।१।४७

लघु-सिद्धान्त-कौमुदी

अथ हलन्त पुंल्लिङ्गाः २५१, १।१।४७

न्यासः

एच इग्घ्रस्वादेशे।, १।१।४७

परिभाषेयमादेशनियमार्था "ह्यस्वो नपुंसके प्रातिपदिकस्य"१।२।४७ इत्यादावु-पतिष्ठते। इहेम् एचोऽवयवसमाहारवर्णाः। तत्र "ए ऐ" इत्येतयोः पूर्वो भागो वर्णसमा- नाकृतिर्मात्रात्मैव तालव्यः। अत एव "ए ऐ कण्ठ()तालव्यौ" (आ।शि। १७) इति शिक्षाकाराः पठन्ति; तदवयवोः कण्ठ()तालव्यत्वात्। "ओऔ" इत्येतयोः पूर्वो भागस्तादृश एव, यादृश एकारैकारयोः। उत्तरस्तूवर्णसमानाकृतिर्मात्रिक ओष्ठ्यः। अत एव "ओ औ कण्ठ()ओष्ठ्यौ" (आ।शि।१८) इति शिक्षाकाराः पठन्ति; तदवयवोः कण्ठ()ओष्ठ()त्वात्। तत्र समुदायात्मनामेचां समुदायान्तरतमो ह्यस्वो नास्तीति तदवयवस्य योऽन्तरतमः, तनैव युक्तं भवितुम्। स पुनरकारा इकार उकारो वा। तत्र एकारैकारयोह्र्यस्वो विधीयमानः कदाचिदकारः स्यात्,कदाचिदिकारः। ओकारौकारयोरपि कदाचिकारः स्यात्, कदाचिदुकारः। इकारोकारावेव यथायोगं यथा स्याताम्, कदाचिदप्यकारो मा भूदित्येवमर्थमिदमारभ्यते। अत्र यद्यप्येचामिकां साम्यम्, तथापि संख्यातानुदेशो न भवति, यस्मादन्नेदं विधायकम्, किं तर्हि? नियामकम्। प्राप्तिपूर्वकश्च नियम इति ये प्राप्ता अन्तरतमा इक एचो ह्यस्वास्तेषामनेन नियमः क्रियते। न च प्राप्तावृकारलृकाराविति कुतो यथासंख्य- त्वम्? यद्येवम्, इण्णित्येव वक्तव्यम्, न त्वगिति, सत्यमेतत्; किन्त्वेवमुच्यमाने सन्देहः स्यात्- किं पूर्वेण णकारेण प्रत्याहारः? उत परेण? इति; तस्मादसन्देहार्थमिगित्युक्तम्। "अतिरि, अतिनु" इति। रायमतिक्रान्तं, नावमतिक्रान्तं ब्राआह्मणकुलम् "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा।९१) इति "कुगति" २।२।१८ इत्या- दिना समासः, "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" २।४।२६ इति पुंल्लिङ्गे स्त्रीलिङ्गे च प्राप्ते "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु तल्लिङ्गमेव भवति। "ह्यस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्यस्वः। इक् कण्ठतालव्यस्यैकारस्य तालव्य इकारो भवति। कण्ठ()ओष्ठ()स्यौकारस्यौष्ठ() उकारः। "उपगु" इति। गोः समीपमिति। "अव्ययं विभक्ति" २।१।६ इत्यादिना सामीप्येऽव्ययीभावः। "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्यस्वः। कण्ठ()ओष्ठ()ओकार्सयौष्ठ() उकारः। एकारस्य तूदाहरणम्- हे इतीमं शब्दमतिक्रान्तं ब्राआह्मणकुलमतिहि। "अततिखट्वः" इति। पूर्ववत् प्रादिसमासे कृते "गोस्त्रिरुपसर्जनस्क" १।२।४८

इत्येवमादिना ह्रस्वोऽकार एव भवत्यन्तरतमः। "दे३वदत्त" इति। अत्रामन्त्रित्सयादेरुदात्तादेशे कत्र्तव्ये "देवद३त्त" इत्यत्र च "गुरोरनृतोऽन्त्यस्य" ८।२।८६ इत्यादिना प्लुतादेशे कत्र्तव्य इङ न भवति॥

न्यासः

उपान्वध्याङ्वसः , १।१।४७

लुग्विकरणालुग्विकरणपरिभाषया (व्या।प।५०) "वस निवासे" (धा।पा।१००५) इत्यस्य भौवादिकस्य ग्रहणम्, न "वस आच्छादने" (धा।पा।१०२३) इत्यस्यादादिकस्य। "वसेरश्यर्थस्य" इत्यादि। "उपोष्य रजनीमेकाम्" इति, त्रिरात्रमुपवसतीत्यत्र च "कालाध्वनोः" २।३।५ इति द्वितीया। अथ वा "कालभावाध्वगन्तव्याः" (वा; म।भा।१।३३६) इति कर्मत्वे। अत्रार्थशब्दो निवृत्तिवचन इति भोजननिवृत्तिवाचिन इत्यर्थ-। "वक्तव्यम्" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- इहाप्यन्यतरस्याग्रहणनुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते; तेन वसेरश्यर्थस्य प्रतिषेधो भविष्यति॥

बाल-मनोरमा

एच इग्घ्रस्वादेशे ९४२, १।१।४७

अथ ओदन्ताः। प्रकृष्टा द्यौर्यस्येति बहुव्रीहौ प्रद्योशब्दस्य "ह्रस्वो नपुंसके" इति ह्रस्वः प्राप्नुवन्नेचो ह्रस्वाऽभावात्तेषां द्विस्थानत्वेन अ, इ, उ, ऋ, लृ, इत्येतेषां ह्रस्वानामन्तरतमत्वाऽभावादन्तरस्थानसाम्याश्रयेण अवर्णादिषु यस्य कस्यचिदनियमेन पर्यायेण वा प्राप्ताविदमारभ्यते--एच इक्। आदिश्यते इत्यादेशः। कर्मणि घञ्। तस्य ह्रस्वपदेन सह कर्मधारयः विशेष्यस्यार्षः पूर्वनिपातः। आदेश इति निर्धारणसप्तमी। सौत्रमेकवचनम्। तदाह--आदिश्यमानेष्वित्यादिना। "मध्ये" इत्यपपाठः, तद्योगे षष्ठ()आ एवौचित्यात्। इगेवेति। तेन अकारव्यावृत्तिः फलतीति भावः। यद्यपीकश्चत्वारः, एचोऽप्येवं, तथापि स्थान्यादेशानां यथासङ्ख्यं न भवति। न ह्ययमपूर्वविधिः, किन्तु नियमविधिः। यताप्राप्तमेव नियम्यते। एचां हि पूर्वभागोऽवर्णसदृशः। उत्तरभागस्तु इवर्णोवर्णसदृशः। तत्पर पूर्वभागसादृश्यमवर्णस्यास्ति। तस्य च इग्ग्रहणेन निवृत्तौ इवर्णसादृश्यमात्रमादाय एकारस्य ऐकारस्य च इवर्णः, उवर्णसादृस्यादोकारस्य औकारस्य च उवर्ण इति व्यवस्था न्यायप्राप्ता। यताप्राप्तमेव च नियम्यत इति न यतासङ्ख्यम्। ततश्च प्रद्योशब्दे ओकारस्य उकारो ह्रस्व इत्यभिप्रेत्योदाहरति--प्रद्यु इत्यादि। ननुं पुंनपुंसकयोः प्रकृष्टस्वर्गवत्त्वमेकमेव प्रवृत्तिनिमित्तमिति टादौ पुंवत्त्वविकल्पः कुतो नेत्यत आह--इह न पुंवदिति। कुत इत्यत आह--यदिगन्तमिति। प्रद्योशब्द ओदन्तः पुंसि। प्रद्युशब्दस्तु उदन्तो नपुंसके। तथाच पुंसि प्रद्योशब्दस्य भाषितपुंस्कत्वेऽपि नपुंसके प्रद्युशब्दस्य तदपेक्षया भिन्नत्वेन भाषितपुंस्कत्वाऽभावान्न पुंवत्वमित्यर्थः। केचित्तु पुंसि यः प्रद्योशब्द ओदन्तः स एवेदानीं नपुंसकः, तस्य ह्रस्वान्तत्वेऽपि एकदेशविकृतस्याऽनन्यत्वात्, अतः पुंवत्वविकल्पोऽस्त्येवेत्याहुः। एवमग्रेऽपीति। प्ररि, सूनु इत्यादावपीत्यर्थः। इत्योदन्ताः। अथ ऐदन्ताः। एकारान्तस्योदाहरणं तु स्मृत इः कामो येन स स्मृतेः। सु=शोभनः स्मृतेर्यस्य तत् "सुस्मृति" इत्यादि बोध्यम्। प्ररीति। प्रकृष्टो रा=धनं यस्य इति बहुव्रीहौ प्रैशब्दः। तस्य नपुंसकह्रस्वत्वेन इकारः। सुटि वारिवत्। सोर्लुप्तत्वात् "रायो हली"त्यात्वं न, टादावचि पुंवत्त्वविकल्पः प्रद्युशब्दवत्। भ्यामादौ हलि विशेषमाह--रायो हलीत्यात्वमिति। ननु रैशब्दस्य ऐदन्तस्य बिहितमात्वं कथमिदन्तस्येत्यत आह--एकदेशविकृकतस्यानन्यत्वादिति। आमि विशेषमाह--नुमचिरेति। नुटि "रायो हली"त्यात्वे प्राणामित्यन्वयः। ननु प्ररि-आमिति स्थिते नुटं बाधित्वा परत्वान्नुमि तस्याङ्गभक्तत्वाद्धलादिविभक्त्यभावात्कथमात्वमित्यत आह--नुमचिरेति। पूर्वविप्रतिषेधान्नुमं बाधित्वा नुठ()आत्वं निर्बाधमिति भावः। संनिपातेति। ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमात्वं प्रति निमित्तत्वाऽसंभवादिति भावः। ननु तर्हि ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकं "नामी"ति दीर्घं प्रति कथं निमित्तत्वमित्यत आह--नामीति दीर्घस्त्विति। इत्युक्तमिति।

"रामशब्दाधिकारे" इति शेषः। इत्यैदन्ताः। अथ औदन्ताः। सु=शोभना नौर्यस्येति विग्रहे बहुव्रीहौ "ह्रस्वो नपुंसके" इति ह्रस्व उकार इति मत्वाह--सुनु इति। इत्यौदन्ताः॥

*****इति बालमनोरमायामजन्ता नपुंसकलिङ्गाः*****

अथाऽलुक्समासप्रकरणम्।

------------------

तत्त्व-बोधिनी

एच इग्घ्रस्वादेशे ८१५, १।१।४७

एचः। आदिश्यत इत्यादेशः, ह्रस्वाश्चसावादेशश्च ह्रस्वादेशः। निर्धरणे सप्तमी, जातबेकवचनमतो व्यचष्टे-----आदिश्यमानेषु ह्रस्वेष्विति। एचां पूर्वभागोऽकारसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः, तत्रोभयान्तरतमस्य ह्रस्वस्याऽभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याताम्, तथाच मा कदाप्यकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह---इगेव स्यादिति। आन्तरतम्यादेकारोकारयोरिकारः। ओकारौकारयोस्तूकारः। एकान्तस्योदाहरणं तु हः स्मृतो येन स स्मृतेः। शोभनः स्मृतेर्यस्य तत् "सुस्मृती"त्यादि। एतच्च परिभाषासूत्रमपार्थकम्। तथाच वार्तिककृतोक्तं--"सिद्धमेङः सस्थानत्वात्," ऐचोश्चोत्तरभूयस्त्वा"दिति। अस्यार्थः--शब्दपरविप्रतिषेधेन एङौत्तरभादान्तरतमौ इउवर्णाववेति सिद्धम्। "एचोश्चे"ति चकारो भिन्नक्रमः "उत्तरभूयस्त्वाच्चे"ति हेतोरन्तरं बोध्यः। अर्धमात्रा, अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मल्लग्रामातदिवद्भूयसा व्यपदेशेनाऽपि इकारोकारौ भविष्यत इति। प्रद्युनेति। ननु प्रकृष्टस्वर्गवत्त्वादिकं यत्प्रवृत्तिनिमित्तं तत्पुंनपुंसकयोः समानमिति भाषितपुंस्कत्वात्पक्षे पुंवद्भावोऽत्र स्यादेवेत्याशङ्कायाम#आह----यदिगन्तमिति। एतच्च "रा दाने"इति धातौ "अत् ब्राआह्वआणकुल"मिति प्रकम्यमाधवेन स्पष्टीकृतम्। कथं तर्हि प्राचा "प्रद्यवा""प्रराया""सुनावे"त्युदाह्रतमिति चेदत्राहुः--प्रकृष्टम्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्यात्सुद्योशब्दो भाषितपुंस्कः, स एवेदानीमिगन्तः। तथाच प्रद्युशब्दोऽपि भाषितपुंस्क एव, एकदेशविकृतस्यानन्यन्यत्वात्, अतः पुंवद्भावो भवतीति। इत्थं च पुंवद्भाव एजन्तेषु क्लीबेषु माधवमते नास्ति, मतान्तरे त्वस्तीति बोध्यम्। प्रीति। प्रकृष्टो रा यस्य तत् "प्ररि"इति। शोभमा नौर्यस्य तत्--"सुनु"। इति तत्त्वबोधिन्याम् अजन्ता नपुंसकलिङ्गाः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षष्ठी १।१ ५४ (स्थाने)योगा १।१ ५०

समासः॥

स्थाने योगः अस्याः सा इयं स्थानेयोगा, बहुव्रीहिः। अत्र निपातनात् सप्तम्याः अलुक् भवति।

अर्थः॥

अनियत-योगा अनियतसम्बन्धा षष्ठी स्थानेयोगा मन्तव्या। केवलं स्थाने इत्यस्य अनुवृत्तिः १।१।४० पर्यन्तं भवति।

उदाहरणम्॥

भविता, मध्वत्र, पित्रर्थम्, लाकृतिः

काशिका-वृत्तिः

षष्ठी स्थानेयोगा १।१।४९

परिभाशा इयं योगनियमार्था। इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते, सा स्थानेयोगाइव भवति, नान्ययोगा। स्थानेयोगस्य निमित्तभूते सति सा प्रतिपत्तव्या। स्थानशब्दश्च प्रसङ्गवाची। यथादर्भाणां स्थाने शरैः प्रस्तरितव्यम् इति दर्भाणां प्रसङ्गे इति गम्यते। एवम् इह अपि अस्तेः स्थाने प्रसङ्गे भूर् भवति। भविता। भवितुम्। भवितव्यम्। ब्रुवः प्रसङ्गे वचिर्भवति। वक्ता। वक्तुम्। वक्तव्यम्। प्रसङ्गे सम्बन्धस्य निमित्तभूते ब्रुव इति षस्ठी। बहवो हि षष्ठ्यर्थाः स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्याः। तत्र यावन्तः शब्दे सम्भवन्ति तेषु सर्वेषु प्रप्तेषु नियमः क्रियते षष्ठी स्थानेयोगा इति। स्थाने योगो ऽस्याः इति व्यधिकरणो बहुव्रीहिः। अत एव निपातनाच् च सप्तम्या अलुक्।

न्यासः

षष्ठी स्थानेयोगा॥ , १।१।४८

"योगनियमार्था" इति। योगनियमः सम्बन्धनियमः, सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता। यदि योगनियमार्थयम्- शास्त्रे या षष्ठी, सा स्थानेयोगैव् भवति, नान्ययोगे- ति। एवं सति "ऊदुपधाया गोहः" ६।४।८९ इत्येषापि षष्ठी स्थानेयोगैव स्यात्, नावयवादयविसम्बन्धयोगा। ततश्च "अलोऽन्त्यस्य" १।१।५१ इति स्थानषष्ठ()आ अन्त्येऽप्युपसंहाराद् गोहश्चान्तस्य हकारस्य ऊकारः स्यात्। "उपधायाश्च" ७।१।१०१ इति वचनादुपधा-मात्रस्य चेत्यत आह-"इह शास्त्रे या षष्ठ()नियतयोगा" इत्यादि। अनियमप्रसङ्गे नियमोऽनया क्रियते। क्व चानियमप्रसङ्गः? यत्र सन्देहः; यथा-"अस्तेर्भूः" २।४।५२इति। अत्र हि किमस्तेः स्थाने? आहोस्विदनन्तरे? इति सन्देहः, पूर्वत्र तूपधाया अवयवलक्षणस्य स्थानिनो विशिष्टावयविनो व्यवच्छिन्नत्वादवयवष्ठ()एवेयमिति निश्चितम्; ततो नात्रास्या व्यापारः। "स्थानेयोगैव" इति। स्थान इति निमित्तसप्तमी, योगः सम्बन्धः। तेनेदमुक्तं भवति-स्थाननिमित्तकसम्बन्धैवेति। एतदेव विस्पष्टीकुर्वन्नाह-"स्थाने योगस्य निमित्ते" इत्यादि। स्थानेयोगस् निमित्तभूते निमित्तत्वं प्राप्ते सति सा वेदितव्या। भूतशब्दो ह्मत्र प्राप्तशब्दे वर्तते; यथा- "देवभूतः" इत्यत्र देवत्वं प्राप्त इत्यर्थः। निमित्तग्रहणं कुर्वन् सूत्रे स्थानेयोगेति निमित्तसप्त- मीयमिति दर्शयति। योगः पुनरिह स्थान्यादेशभावलक्षणः। कुत एतत्? तस्यैव स्थानि- हेतुत्वात्। स्थानशब्दोभावसाधनः, स्थितिः स्थानम्। तत् पुनस्त्रिधा- "अपकर्षः, निवृत्तिः,प्रसङ्गश्च" इति। गोस्थानेऽ()आओ बध्यतामित्यपकर्षः स्थानशब्दस्यास्थेयः। "श्लेष्मणः स्थाने कटुकमौषधम्" इत्यत्र निवृत्तिः। "दर्भाणां स्थाने शरैरास्तकरित- व्यम्" इति प्रसङ्गः। तत्राद्यावर्थाविह न सम्भवतः; नित्यत्वाच्छब्दार्थसम्बन्धस्य प्रथमो न सम्भवति; सामान्येनास्तेरुपदेशान्न द्वितीयः। तस्मात् तृतीय एवार्थ इति मत्वाह-"स्तानशब्दश्च" इति। प्रसङ्गस्त्वर्थक्रियानिमित्तभूतस्य कालस्यावसरः। " अस्तेस्थाने प्रसङ्गे" इति। अस्तेर्या क्रिया स्वार्थप्रतिपादनलक्षणा, तस्या निमित्तभूतस्य कालस्यावसरः प्राप्त इत्यर्थः। प्रसङ्गे सम्बन्धस्य निमित्तभूत इत्यादिना सूत्रार्थस्योदाहरणे सम्भवं दर्शयति। "ब्राउवः" इति चोपलक्षणमात्रम्। अस्तेरि- त्यादेरपि हि षष्ठी प्रसङ्ग एव सम्बन्धस्य निमित्तभाव उत्पन्ना। के पुनर्बहवः षष्ठ()र्थाः, यतः सम्बन्धान्तरविषयव्यवच्छेदनार्थं षष्ठ()आ इदमुच्यते? इत्याह-"बहवो हि" इत्यादि। शब्दे हि समीपानन्तरविकारावयवादिनिमित्ताः सम्बन्धाः सन्ति। न त्वपत्यापत्यवत्प्रभृतय इत्यतो "यावन्तः शब्दे सम्भवन्ति" इत्याह। अथ स्थानेयोग इत किमसमासः? अथ समासः? यद्यसमासः? तदा योगशब्दस्य पुंल्लिङ्गत्वात् स्त्रीलिङ्गेन निर्देशः, षष्ठीशब्देन च सामानाधिकरण्यं न प्राप्नोति; योगस्याषष्ठीत्वात्। अतः समासः किं तत्पुरुषः? आहोस्विद् बहुव्रीहिः? यदि तत्पुरुषः? तौ च पूर्वोक्तौ दोषौ स्याताम्,

सप्तम्या लुकप्रसङ्गश्च। अथ बहुव्रीहिः? एवमपि लुक्प्रसङ्गोऽत्रानिवार्य एवेत्यत आह-"षष्ठी स्थानेयोगा" इत्यादि। गतार्थम्।

बाल-मनोरमा

षष्ठी स्थानेयोग ४०, १।१।४८

षष्ठी स्थानेयोगा। स्थानं प्रसङ्ग इति वक्ष्यति। तस्मिन् वाचकतया योगो यस्याः सा स्थानेयोगा। निपातनात्सप्तम्या अलुक्। स्थानेन योगो यस्या इति वा विग्रहः। निपातनादेत्वम्। "इको यणची"त्यादौ षष्ठी स्थानरूपसम्बन्धार्थिकेत्यर्थः। लोके तावदेकशतं षष्ट()र्था आर्था यौना मौखाः रुआऔवाश्च। शब्दस्य शब्देन त्रय एव संबन्धाः--आनन्तर्यं सामीप्यं प्रसङ्गश्चेति। तत्रान्यतमार्थनिर्धारणार्थमिदं सूत्रमिति भाष्यम्। ततश्च"इको यणची"त्यादौ "इक" इति षष्ट()आ स्थानमुच्यते। तस्मिन् प्रकृत्यर्थ इक् निरूपकतयाऽन्वेति। अचि परत इकः प्रसङ्गे यण्? स्यादिति। विवरणवाक्ये त्वस्मिन् "इक" इति षष्ठी निरूपकतायामिति न पुनरुक्तिः शङ्काः। यता--"देवदत्तस्यावयवः पाणि"रिति। "ऊदुपधाया गोहः" इत्यत्र तु "गोह" इति षष्ठी न स्थानार्थिका, उपपधापदसमभिव्याहारेणाऽवयवषष्ठीत्वनिर्धारणात्, परिभाषाणां चाऽनियमे नियमनार्थमेव प्रवृत्तेः। तदेतदाह-अनिर्धारितेत्यादिना। अनिर्धारितः सम्बन्धविशेषो यस्या इति विग्रहः। तदेवमुदाह्मतप्रकृतभाष्यरीत्या"इको यणची"त्यादौ षष्ठी स्थानरूपसंबन्धविशेषार्थिकेति स्थितम्।ष मतुप्सूत्रभाष्ये त्वनन्तरादयो न षष्ठ()र्था इति स्थितम्। एवं सति स्थाने इति सप्तम्यन्तपदेन योगो यस्या इति विग्रहे स्थाने इति सप्तम्यन्तस्यानुकरणम्। षष्ठीश्रुतौ "स्थाने" इति सप्तम्यन्तं पदमुपतिष्ठत इति फलति। स्थानेन स्थानपदार्थेन योगो यस्या इति तृतीयान्तविग्रहे त्वध्याह्मतस्थानपदार्थनिरूपितसंबन्धार्थिकेत्यर्थः। "अस्तेर्भूर्भवतीति सन्देहः स्थाने अनन्तरे समीपे इति" इत्यादिप्रकृतसूत्रभाष्यस्य तु अस्तेरनन्तरे इत्यध्याह्मतानन्तरादिपदार्थनिरूपितसम्बन्धे षष्ठीत्येवार्थः। अनन्तरादीनां षष्ठ()र्थत्वं तु नास्त्येवेति प्रौढमनोरमायां हलन्त्यमिति सूत्रे स्थितम्। तद्व्याख्याने च शब्दरत्ने शब्देन्दुशेखरे च बहुधा प्रपञ्चितम्। अनिर्धारितेति किम्()। ऊदुपधाया" इत्यत्र "गोह" इति षष्ठ्याः स्थानार्थकत्वं मा भूत्। सति तु तत्रापि स्थानार्थकत्वे, गोहोऽन्त्यस्य उपधामात्रस्य च ऊत् स्यात्। ननु स्थानशब्द आधारवाची लोके प्रसिद्धः। यथा शिवस्थानं कैलासः, विष्णुस्थानं वैकुण्ठमित्यादौ। एवं च इको यणचीत्यादौ षष्ठ्याः स्थानार्थकत्वे प्रकृत्यर्थस्य तत्र निरूपकत्वेऽभेदेन वा अन्वये सति इकोऽधिकरणे यण् स्यादिति इगधिकरणको यण् स्यादिति वाऽर्थः स्यात्। तत इको निवृत्तिर्न स्यादित्यत आह--स्थानं च प्रसङ्ग इति। क्वचिदाभिचारेष्टौ "दर्भाणां स्थाने शरैःप्रस्तरितव्य"मित्यत्र स्थानशब्दस्य प्रसङ्गे दर्शनादिति भावः। एवं च तत्र यथा शरैर्दर्भा निवत्र्यन्ते, तद्वदिको यणचीत्यादावपि यणादिभिरिगादयो निवत्र्यन्ते। तत्र च यः प्रसक्तो निवर्तते स स्थानीति व्यवह्रियते, यो निवर्तयति स आदेश इति।

तत्त्व-बोधिनी

षष्ठी स्थानेयोगा ३४, १।१।४८

षष्ठी स्थानेयोगा। स्थानेन योगोऽस्या इति विग्रहः। निपातनादेत्वम्। षष्ट()आः संबन्धमात्रवाचित्वेऽपीह शास्त्रे या षष्ठी सा स्थानेयोगा बोध्या। किमविशेषेण?, नेत्याह-अनिर्धारितसंबन्धविशेषेति। अनिर्धारितेति किम्?, "ऊदुपधाया गोहः", "शास इदङ्ह्मलो"रित्यादावुपधासंनिधानेनावयवषष्ठीत्वे निर्णीते "गोहः" "शास" इत्यादौ मा भूत्। सति हि तत्रापि स्थानेयोगत्वे गोहिशासिस्थाने धातुमात्रस्योपधायाश्च स्थाने ऊदितौ स्यातामिति दिक्। स्थानं च प्रसङ्ग इति। न चास्य प्रसङ्गार्थकत्वे विवदितव्यम्, "दर्भाणां स्थाने शरैः प्रस्तरितव्य"मित्युक्ते दर्भाणां प्रसङ्ग इति प्रतीतेः। एवं च "इको यणची"-त्यादाविगुच्चारणप्रसक्तौ यगुच्चारणीय इत्याद्यर्थः संपद्यते।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्थाने ७।१ अन्तरतमः १।१ स्थाने ७।१ ४८

अर्थः॥

सर्वे इमे अन्तराः, अयम् एषाम् अतिशयेन अन्तरः = अन्तरतमः, सदृशतमः, {अतिशयने तमबिष्ठनौ (५।४।५५)} इति तमप् प्रत्ययः॥
स्थाने प्राप्यमाणानाम् अन्तरत्मः=सदृशतमः आदेशः भवति॥ आन्तर्यं चतुर्विधं भवति -- स्थानकृतम्, अर्थकृतम्, प्रमाणकृतम्, गुणकृतं चेति॥

उदाहरणम्॥

स्थानकृतम् - दण्डाग्रम्, दधीदम्, भानूदयः॥ अर्थकृतम् - अभवताम्, वातण्ड्ययुवतिः॥ प्रमाणकृतम् - अमुष्मै, अमूभ्याम्॥ गुणकृतम् - भागः, यागः, त्यागः॥
काशिका-वृत्तिः
स्थाने ऽन्तरतमः १।१।५०

स्थाने प्राप्यमाणानाम् अन्तरतम् आदेशो भवति सदृशतमः। कुतश्च शब्दस्य अन्तर्यम्? स्थानार्थगुणप्रमाणतः। स्थानतः अकः सवर्णे दीर्घः ६।१।९७। दण्डाग्रम्। यूपाग्रम्। द्वयोरकारयोः कण्ठ्य एव दीर्घ आकारो भवति। अर्थतः वतण्डी च असौ युवतिश्च वातण्ड्ययुवतिः। पुंवद्भावेन अन्तरतमः पुंशब्दो ऽतिदिश्यते। गुणतःपाकः। त्यागः। रागः। चजोः कु घिण्यतोः ७।३।५२ इति चकारस्य अल्पप्राणस्य अघोषस्य तादृश एव ककारो भवति। जकारस्य घोषवतो ऽल्पप्राणस्य तादृश एव गकारः। प्रमाणतः अनुष्मै। अमूभ्याम्। अदसो ऽसेर् दादु दो मः ८।२।८० इति ह्रस्वस्य ह्रस्वः, दीर्घस्य दीर्घः। स्थाने इति वर्तमाने पुनः स्थाने ग्रहणं किम्? यत्र अनेकम् आन्तर्यं सम्भवति तत्र स्थानत एव आन्तर्यं बलीयो यथा स्यात्। चेता, स्तोता। प्रमाणतो ऽकारो गुणः प्राप्तः, तत्र स्थानत आन्तर्यादेकारौकारौ भवतः। तम्ब्ग्रहणं किम्? वाग् घसति। त्रिष्टुब् भसति। झयो हो ऽन्यतरस्याम् ८।४।६१ इति हकारस्य पूर्वसवर्णे क्रियमाणे सोष्मणः सोष्माणः इति द्वितीयाः प्रसक्ताः, नादवतो नादवन्तः इति तृतीयाः, तमब्ग्रहणाद् ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः।
लघु-सिद्धान्त-कौमुदी
स्थानेऽन्तरतमः १७, १।१।४९

प्रसङ्गे सति सदृशतम आदेशः स्यात्। सुध्य् उपास्य इति जाते॥
न्यासः
स्थानेऽन्तरतमः। , १।१।४९

परिभाषेयमादेशनियमार्था।"स्थाने प्राप्यमाणानाम्" इति। एतेन नेदं विधायकं वाक्यम्, किं तर्हि? लक्षणान्तरेण प्राप्तानामनन्तरतमानामितरेषां च योऽन्तरतमः, स एव भवतीति नियमार्थमिति दर्शयति। विधायकत्वे हि "दधि मधु" इतादावपि प्रसज्यते। किं पुनरत्रानिष्टम्? यावतान्तरतम्याद् दधिमधुशब्दयोस्तावेवादेशौ भविष्यतः, तयोरप्यादेशयोरन्यौ दधिमधुशब्दौ यावादेशौ स्याताम्, तयोरप्यन्यावित्येवमपरिसमाप्तादेशपर- म्पराविधानादनवस्था

स्यात्। ततश्चार्थप्रत्यायनं प्रति शब्दानां विनियोगो न स्यात्व्वाख्यायकस्य शास्त्रस्य प्रवृत्त्यनुपरमात्। शास्त्रोपरतौ ह्न्वाख्यातास्ते प्रयुज्यते, नान्यथेत्यनिष्टम्। ननु च सकृत्प्रवृत्तौ लक्षणस्य चरितार्तत्वात् पुनः प्रवृत्तिर्न भविष्यति, नैतदस्तिच यत्र हि प्रयोजनार्था प्रवृत्तिस्तत्रैतदुक्तम्, इह पुनरकस्मादन्तरतमो विधीयत इत्यनुपरतैवास्य प्रवृत्तिः। नियमाकत्वेऽप्यस्य यदीदं विहितानां नियमं कुर्यात् ! अनर्थकमेव वचनं स्यात्। यो हि भुक्तवन्तं ब्राउयात्- "मा भुङ्क्ष्य" इति,किं तस्य तेन कृतं स्यात् ! तस्मात् प्राप्यमाणावस्थायामेव वाक्यान्तरः सह संहत्यानन कार्यं निर्वत्र्यते; तदेकदेशभूत्वादस्य। "सदृशतमः" इति।? अन्तरतमशब्दस्यार्थ कथयति। "अर्थतः" इत्यादि। वतण्डशब्दात् स्त्रियामपत्यार्थे "वतण्डाच्च" ४।१।१०८ इति यञ्,तस्य "लुक् स्त्रियाम्"६।४।१४ इत्यकारलोपः, वतण्डी चासौ युवतिश्चेति "पोटायुवति" २।१।६४ इत्यादिना समासः। तत्रानेन "पुंवत कर्मधारयः" ६।३।४१ इत्यादिना पुंवद्भावे कर्तव्ये सर्वः पुंशब्दः प्रसक्तः। तत्रानेन वतण्डापत्यार्थ- स्य वतण्डी शब्दस्यार्थतोऽन्तरतमो वतण्डापत्यार्थ एव वातण्ड()शब्दो भवति। "पाकः" इत्यादौ भावे घञ्। "चकारस्य" इत्यादि। "वर्गाणां प्रथमा अल्पप्राणाः" (आपि।शि। ४।३।) इति चकारककारावल्पप्राणौ। "वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीय- जिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः ()आआसानुप्रदाना अघोषाः" (आपि।शि।४।२।) इत्यघोषौ। "जकारस्य" इत्यादि। "वर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ यमौ च द्वितीयचतुर्थौ नासिक्याश्च संवृकण्ठा नादानुप्रदाना घोषवन्तः"महाप्राणाः" इत्यल्पप्राणौ। "अमुष्मै, अमूभ्याम्" इति। अदसश्चतुर्थ्येकवचने भ्यामि च परतस्त्यदाद्यत्वम्,तो गुणे" ६।१।९४ पररूपत्वम्, "सर्वनाम्नः स्मैः" ७।१।४ इति स्मैभावः। भ्यामि "सुपि च" ७।३।१०२ इति दीर्घः, ततो ह्रस्वस्य ह्रस्व उकारो भवति, दीर्घस्य दीर्घः। "स्थाने इति वत्र्तमाने" इति। प्रकृतो हि स्थानशब्दः प्रसङ्गवाची। तदनुवृ- त्तौ स्थाने प्राप्यमाणानामन्तरतमो भवति" इत्येषोऽर्थो लभ्यते। ननु च यत्रानेकमा- न्तर्यं तत्र ताल्वादिस्थानत एवान्तर्यस्य बलीयस्त्वम्, तस्मात् तद् यथा स्यादिति पुनस्ताल्वादिस्थानवाचिनः स्थानशब्दस्योपादानं क्रियते। यद्येवम्,स्थानकृतमेवेहान्तर्यं विशिष्टमुपात्तमिति प्रमाणादिकृतं परित्यक्तं स्यात्? नैष दोषः, वाक्यभेदं हि कृत्वा तत्र सम्बन्धः क्रियते, स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति। "स्थाने च भवति" इति पूर्वत्र वाक्ये प्रसङ्गवाची स्थाशब्दः, उत्तरत्र ताल्वादिस्थानवाची। एवं वाक्यभेदेन सम्बन्धे सति, पूर्वस्मिन् वाक्ये स्थानादिकृतानामान्तर्याणां - परिग्रहः प्रतीयते। द्वितीये तु तेषामेव बलाबलवत्त्वम्। "स्थाने" इति च निमित्तसप्तमी। तेनेदमुक्तं भवति- यत्रानेकमान्तर्यं तत्र स्थानेन निमित्तेन योऽन्तरतमः, स एव भवति। वाक्यभेदस्य च तमब्ग्रहणं लिङ्गम्। सादृश्ये प्रकर्षो हि तेन प्रतिपादयितुमिष्टः। स चानेकस्मिन् सादृश्ये सति सादृश्यान्तरापेक्षया भवति। एकवाक्यतायां च स्थानग्रहणेन सादृश्यान्तरे निरस्ते किमपेक्षया सादृश्यप्रकर्षः स्यात् ! तस्मात् तम- ब्ग्रहणाद् वाक्यभेदोऽनुमीयते, अन्यथा हि तस्य वैयथ्र्यं स्यात्। "चेता" इति। अत्रेकारस्य तालव्यत्वादेकारस्य कष्ठतालव्यत्वात् स्थानत आन्तर्यम्; इकाराकारयोस्तु प्रमाणयोरपि मात्रिकत्वात्। "स्तोता" इति। अत्राप्युकार-स्यौष्ठ()त्वादोकारस्य कण्ठ्यौष्ठ()त्वात् स्थानत आन्तर्यम्। उकाराकायोस्तु प्रमाणतः पूर्ववत्। तत्रासति पुनः स्थानग्रहणे, प्रमाणत आन्तर्यात् कदाचिदकारो गुणः स्यात्, स्थानत आन्तर्यात् कदाचिदेकारौ। पुनः स्थानग्रहणात् तु स्थानकृतस्यान्तर्यस्य बलीयस्त्वादेकारौकारौ एव भवतः, न कदाचिदकारः। "सोष्मणः, सोष्माण इति " इत्यादि। इतिकरणो हेतौ; यस्मात् सोष्माणो द्वितीयस्तस्मात् सोष्मणो हकारस्य द्वितीयाः प्रसक्ता इत्यर्थः। एवं "नादवतो नादवन्तः" इत्यादौ वाक्ये हेत्वर्थो योज्यः। "शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्थाः" इति शिक्षा (आ।शि।१।४। द्वितीयाः" इत्यनेन तु वर्गद्वितीयानां खकारादीनाम्। "हकारेण चतुर्थाः" इत्यनेनापि वर्गचतुर्थानां धकारादीनाम्। समानं स्थानं यस्य स सस्थानः। "सस्थानेन" इति। इत्थ- म्भूतलक्षणे तृतीया। सस्थानेन द्वितीया ऊष्मतया लक्ष्यन्ते। एतदुक्तं भवति- "यथा सस्थान एवेषामूष्मा, एवमेतेऽपि वर्गाणां द्वितीया ऊष्माणः" इति। अथ वा - तुल्यार्थयोग एषा तृतीया, तुल्यशब्दस्त्वध्याहार्यः, तुल्यत्वमूष्मतया वेदितव्यम्। तत्र खकारस्य सस्थानो हकारः, छकारस्य शकारः, ठकारस्य षकारः, थकारस्य सकारः। फकारस्य सस्थान ऊष्मा नास्ति। तस्मात् तस्यापि

विशेषेणोष्मत्वं लक्ष्यन्ते, तत्सदृशत्वात्। तेन यथा हकार ऊष्मा एवं तेऽपीत्यर्थः। "नादवतः" इत्यादि। "वर्गाणां तृतीयचतुर्थाः" इत्यादिना पूर्वोक्तेन ग्रन्थेन तृतीयानां हकारस्य नादवत्त्वमुक्तम्। ये सोष्माणो "नादवन्तश्च" इति। सोष्मत्वं हकारस्य "शादय ऊष्माणः" (आ।शि।१।४।८) इत्यनेनाख्यातम्,चतुर्थानां तु "हकारेण चतुर्थाः" (आ।शि। १।४।१) इत्यनेन नादवत्त्वम्, उभयेषां वर्गाणां तृतीयचतुर्था इत्यादिनैव पूर्वोक्तेन।

बाल-मनोरमा

स्थानेऽन्तरतमः ४१, १।१।४९

स्थानेऽन्तरतमः। "स्थानं प्रसङ्ग" इत्युक्तम्। अन्तरशब्दोऽत्र सदृशपर्यायः, अतिशयतोऽन्तरोऽन्तरतमः। तदाह--प्रसङ्गे सतीत्यादिना। एकस्य स्थानिनोऽनेकादेशप्रसङ्गे सति यः स्थानार्थगुणप्रमाणतः स्थानिना सदृशतमः स एवादेशो भवतीत्यर्थः। अत्र स्थानशब्देन ताल्वादिस्थानं विवक्षितम्। गुणशब्देन प्रयत्नः। प्रमाणशब्देन एकद्विमात्रादिपरिमाणम्। तत्र स्थानतो यथा--दध्यत्र। तालुस्थानकस्य इकारस्य तालुस्थानको यकारः। अर्थतो यथा--तृज्वत्क्रोष्टुरिति क्रोष्टुशब्दस्य उकारान्तस्य तृजन्त आदेशो भवन्नर्थसाम्यात् क्रोष्टृशब्द एव तृजन्त आदेशो भवति। गुणतो यथा--वाग्घरिः। अत्र हकारः स्थानी घोषनादसंवारमहाप्राणप्रयत्नवान्। तस्य गकारसवर्णो भवंश्चतुर्थो घकारो भवति, तस्य हकारेण स्थानिना घोषनादसंवारमहाप्राणप्रयत्नसाम्यात्। ककारस्तु न भवति, तस्य ()आआसाऽघोषविवाराल्पप्राणप्रयत्नकत्वात्। तथा खकारोऽपि द्वितीयो न भवति, तस्य महाप्राणप्रयत्नसाम्येऽपि ()आआसाऽघोषविवारप्रयत्नभेदात्। तथा तृतीयो।ञपि गकारो न भवति, तस्य घोषनादसंवारप्रयत्नसाम्येऽपि निना हकारेण ()आआसाऽघोषविवारप्रयत्नबेदे सत्यपि महाप्राणप्रयत्नसाम्यसत्त्वात् , तथा तृतीयो वा गकारः कुतो न स्यात्, तस्य स्थानिना हकारेण अल्पप्राणप्रयत्नभेदेऽपि घोषनादसंवारप्रयत्नसाम्यसत्त्वात्। अत एव ङकारो वा कुतो न स्यादिति चेन्न ,तमब्ग्रहणेन उक्तातिप्रसङ्गनिरासात्। अतिशयितो ह्यन्तरोऽन्तरतमः। अतिशयितं च प्रयत्नतः सादृश्यं हकारेण घकारस्यैव, उभयोरपि घोषनादसंवारमहाप्राणात्मकप्रयत्नचतुष्टयसाम्येन सादृश्यातिशयसत्त्वात्। खकारस्य महाप्राणप्रयत्नसाम्येऽपि घोषनादसंवारप्रयत्नविरहात्। गङयोः घोषनादसंवारप्रयत्नसाम्येऽपि महाप्राणप्रयत्नविरहात्। प्रमाणतो यथा--"अदसोऽसोर्दादुदोमः" इति। ह्रस्वस्य उकारो दीर्घस्य ऊकारः। नन्वेवमपि चेता स्तोतेत्यत्र इकारस्य उकारस्य च सार्वाधातुकार्धधातुकयोरिति गुणो भवन् प्रमाणत आन्तर्यवानकारः कुतो न स्यादित्यत आह--यत्रेति। तेन इकारस्य एकार उकारस्य ओकारश्च गुणो भवति, स्थानसाम्यात्, न त्वकारः, स्थानभेदात्। नच इकारेण एकारस्य, उकारेण ओकारस्य कथं स्थानसाम्यम्। एकारस्य ओकारस्य च कण्ठस्थानाधिक्यादिति वाच्यं, यावत्स्थानसाम्यस्य सावण्र्यप्रयोजकत्वेऽपि आन्तरतम्यपरीक्षायां कथञ्चित्स्थानसाम्यस्यैव प्रयोजकत्वात्। अत्र सूत्रे पूर्वसूत्रात्स्थानेग्रहणमनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञाबलात्। तृतीयान्तं च विपरिणम्यते। अनुवर्त्यमानस्चायं "स्थान"शब्दः पूर्वसूत्रे प्रसङ्गपरोऽप्यत्र ताल्वाद्यन्तयतमस्थानपरः, शब्दाधिकाराश्रयणात्। "अन्तरतम" इत्यपि तेन संबध्यते। ततश्च "स्थानेनाऽन्तरतम" इति वाक्यान्तरं संपद्यते। सति संभवे ताल्वादिस्थानत एवान्तरतमो भवतीत्यर्थः। ततश्च "यत्रानेकविधमान्तर्यं तत्र स्थानत एवान्तर्यं बलीय" इति (सिद्धं) भवति।

तत्त्व-बोधिनी

स्थानेऽन्तरतमः ३५, १।१।४९

स्थाने। सदृशतम इति। अर्थात्प्राप्यमाणानां मध्ये एव। अत एव "गङ्गोदक"मित्यत्र त्रिमात्र ओकारो न। इह "स्थाने" इत्यनुवर्तमाने पुनःस्थाने ग्रहणादन्योऽपि वाक्यार्थः संमतः, "ताल्वादिरूपे स्थाने योऽन्तरतमः, तत्प्रयुक्तान्तर्यवानिति यावत्। स तु प्राप्यमाणानां मध्ये स्या"दिति।

तदेतदाह-यत्रानेकविधमिति। स्थानार्थगुणप्रमाणतश्चतुर्विधमित्यर्थः। स्थानतो यथा-दध्यत्र। तालुस्थानस्येकारस्य तालुस्थानो यकारः। अर्थतो यथा-वातण्ड()युवतिः। वतण्डशब्दात् "वतण्डाच्चे"ति गोत्रापत्ये यञ्। तस्य "लुक् स्त्रिया"मिति लुक्। शाङ्गरवादित्वान्ङीन्। वतण्डी चासौ युवतिश्चेति विग्रहे "पोटायुवती"त्यादिना समासः। "पुंवत्कर्मधारयेत्यतिदिश्यमानःपुंशब्दो वतण्डापत्यवाचिनो वतण्डीशब्दस्य तदपत्यवाचीवातण्ड()शब्दो भवति, न तु वतण्डादिः। गुणतो यथा वाग्घरिः। घोषवतो नादवतो महाप्राणस्य तादृश एव घकारः। प्रमाणतो यथा-अमुम् अमू अमून्। "अदसोऽसे"-रित्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः। तमब्ग्रहणं किम्? "वाग्घरि"रित्यत्र "झयो होऽन्यतरस्या"मिति पूर्वसवर्णे क्रियमाणे महाप्राणत्वसाम्येन द्वितीयो, नादवत्त्वसाम्येन तृतीयश्च मा भूत्। किंतु महाप्राणाश्चतुर्थो घ एव यथा स्यादिति। बलीय इति। तेन "चेता" "स्तोते"त्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उः ६।१ अण् १।१ रपरः १।१ स्थाने ७।१ ४८

समासः॥

र परः यस्मात् सः रपरः, बहुव्रीहिः

अर्थः॥

ऋवर्णस्य स्थाने अण् (अइउ) प्रसज्यमानः एव रपरः भवति

उदाहरणम्॥

कर्ता, हर्ता, कारकः, हारकः। किरति, गिरति। द्वैमातुरः, त्रैमातुरः
काशिका-वृत्तिः
उरण् रपरः १।१।५१

उः स्थाने अण् प्रसज्यमान एव रपरो वेदितव्यः। कर्ता। हर्ता। किरति। गिरति। द्वैमातुरः। त्रैमातुरः। उः इति किम्? खेयम्। गेयम्। अन्ग्रहणं किम्? सुधातुरकङ् च ४।१।९७ सौधातकिः।
लघु-सिद्धान्त-कौमुदी
उरण् रपरः २९, १।१।५०

ऋ इति त्रिंशतः संज्ञेत्युक्तम्। तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते। कृष्णर्द्धिः। तवल्कारः॥
न्यासः
उरण् रपरः।, १।१।५०

अत्र त्रयः पक्षाः सम्भवन्ति- "उः स्थानेऽण् रपरत्वं चानेनोभयं विधीयते" इत्येकः पक्षः। "लक्षणान्तरेण विहितस्याण उः स्थाने पश्चादनेन रपरत्वमात्रं क्रियते" इति द्वितीयः पक्षः। "उः स्थाने लक्षणान्तरेण विधीयमानोऽण विधानकाल एव तेन लक्षणान्तरेण सह संहत्य रपरत्वविशिष्टोऽनेन भाव्यते" इति तृतीयः। तत्र यद्याद्यः पक्ष आश्रीयते, ऋकारस्य स्थान

उदात्तादयो न स्युः, अनेन बाधित्वात्; "कृति" इत्यत्र "ञ्नित्यादिर्नित्यम्" ६।१।१९१ इत्याद्युदात्तो न स्यात्, "प्रकृतम्" इत्यत्र पूर्वपद्सयाद्युदात्तस्य "गतिरनन्तरः" ६।२।४९इति प्रकृतिस्वरे कृते "अनुदात्तं पदमेकवर्जम्" ६।१।१९२ इत्यनुदात्तो न स्यात्, "उदात्तानुदात्तस्य स्वरितः" ८।४।६५इति स्वरितश्च। यद्यचः स्थाने उदात्तादयो विधीयन्ते, तथापि तेषामन्योऽजवकाश इति ऋवर्णस्थाने प्रतिपदोक्तोऽणेव रपरः स्यात्। ये चाप्यन्य ऋवर्णस्थाने प्रतिपदमादेशा उच्यन्ते, "ऋत इद्धातोः" ७।१।१०० इत्येवमादिभिर्लक्षणान्तरैस्तेषु रपरत्वं न स्यात्; ततश्च "किरति" इत्यादि न सिध्येत्। अथ द्वितीयः पक्ष आश्रीयते, तरतेस्तृजादौ गुणो विधीयमानः प्रमाणत आन्तरतम्याद् दीर्घस्य दीर्घ एव स्यात्, तथा च "तरिता" इत्यादि न सिध्येत्। किं च- ण्वुलादौ वृद्धौ विधीयमानामृकारस्य केनचिद् वृद्धिसंज्ञकेनान्तरतम्यविशेषो नास्तीति सर्वे वृद्धिसंज्ञकाः पर्यायेण प्रसज्येरन्। तथा च पक्षे "नायकः, स्तावकः" इत्या- द्यप्यनिष्टं रूपं स्यात्। इत्येवमाद्ययोः पक्षयोर्दोषवत्तां दृष्ट्वा, तृतीयं पक्षमाश्रित्याह- "उः स्थानेऽण् प्रसज्यमान एव"इत्यादि। एतेन लक्षणान्तरेण विधीयमान- स्याणो विधानकाल एव तेन सह संहत्य रपरत्वविशिष्टस् विधाविवं परिभाषा व्याप्रियत इति दर्शयति। एतच्च स्थानद्वयग्रहणस्यात्रानुवृत्तेर्लभ्यन्ते। पूर्वकेण हि स्थानग्रह- णेनेहानुवृत्तौ "उः स्थाने" इत्यतदर्थरूपं लभ्यते। द्वितीयेन तु प्रसज्यमान इत्येतत्। तथा हि- स्थानग्रहणं सप्तम्यन्तं प्रकृतमनुवर्त्तमाने तत्सामर्थ्यात् प्रथमान्तं सम्पद्यते, स्थानशपब्दश्चायं प्रसङ्गवाची। ततश्च यदा स्थानेनाण् विशिष्यते-"अण् स्थानम्" इति, तदा "अण् प्रसज्यमान एव" इत्येषोऽर्थो जायते। "प्रसज्यमानः" इति। प्रसङ्गेनाभिसम्बध्यमान इति यावत्। "एव" इति। अवधारणं पुनरत्र व्यवच्छेद फलत्वेन सर्ववाक्यानां सावधारणत्वाल्लभ्यते। कथं पुनरण् स्थानं भवति? नैव हि स स्थानं भवति, तद्योगात्तु तत्र स्थानव्यपदेशो भवति, यथा-"यष्टीः प्रवेशय" इत यष्टियोगात् पुरुषाणां व्यपदेश-। ननु च "स्थानेऽन्तरतमः" लभ्यते? नैष दोषः, स्वरितत्वचिह्नाद्धि यो यत्रोपष्ठते, स तत्र सामर्थ्यात् तत्कार्ययोग्यस्यै-वार्थस्याभिधाता सन्नुपतिष्ठते। तेन यद्यपि पूर्वसूत्रे स्थानशब्दस्तवादिस्थानवचनः, तथापीहोपतिष्ठमानः प्रसङ्गवचन एवोपतिष्ठते। तेदवं यस्मान्नेदं स्वतन्त्रमणो रपरत्वविशिष्टस्य च विधायकम्। तस्मादाद्ये पक्षे यो दोषः स इह न भवति ततश्च लक्षणान्तरेण विहितस्याणः पश्चादनेन रपरत्वं न विधीयते, किं तर्हि? प्रसज्यमान एवाण् लक्षणान्तरेण तत्सहायं प्रतिपद्य रपरो भाव्यते। तेन द्वितीये पक्षे यो दोषः, सोऽप्यस्मिन्न भवत्येव। प्रसज्यमानस्यैव हि रपरत्वविधौ यथा ऋवर्णो रश्रुतिमान्(), एवमादेशोऽपि रश्रुतिमानेव भवति। ततश्चान्तरतम्यादृकारस्य रश्रुतिमतस्तादृश एव रश्रुतिमानेदेशो भवति। अन्ये गुणवृद्धिसंज्ञका व्यावर्तिता भवन्ति। यदि तर्हि प्रसज्यमान एव रपरो भवति, अनेकल्त्वात् सर्वादेशः प्रसज्येत, नैष दोषः; यदयं "तरति" इति निर्देशं करोति; ततो ज्ञाप्यते-सर्वादेशो न भवतीति। "कर्ता, हर्ता"इति। "डुकृञ् करणे"(धा।पा।१४७३) "ह्मञ् हरणे" (धा।पा।८९९) आभ्यां "ण्वुल्तृचौ" ३।१।१३३ इति तृच्, "सार्वधातुकार्धकयोः" ७।३।८४ इति गुणः, "अचो रहाभ्याम्" ८।४।४५ इति द्वित्वम्। "किरति, गिरति" इति। "कृ विक्षेपे" (धा।पा।१४१०) "गृ निगरणे" (धा।पा।१४११)- आभ्यां लट्, "शेषात् कर्तरि परस्मैपदम्" १।३।७८इति तिप्, तुदादित्वाच्छः, "ऋत इद् धातोः" ७।१।१०० इतीत्त्वम्। "द्वैमातुरः, त्रैमातुरः" इति। द्वयोर्मात्रोरपत्यम्, तिसृणां मातृ()णामपत्यमिति "मातुरुत् संख्यासम्भद्रपूर्वायाः" ४।१।११५ इत्यण्, उकारश्चान्तादेशः। "तद्धितेष्वचामादेः" ७।२।११७ इति वृद्धिः। "खेयम्" इति। "ई च खनः" ३।१।१११ इति क्यप्, इकारश्चान्तादेशः, "आद्गुणः"६।१।८४। "सौधातकिः" इति। "सुधातुरकङ च" ४।१।९७ इतीञ्। तत्संयोगेनाकङादेशः क्रियमाणो रपरो न भवति, अनण्त्वात्। अथ योऽत्राण्, स रपरः कस्मान्न भवति? अनादेश्त्वात्। समुदायो ह्यत्रादेशो न तदवयवः। नैष दोषः; यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवति, लभते सोऽन्यतरव्यपदेशम्, यथा- देवदत्तस्य पुत्रो देवदत्तायाः पुत्रः" इति॥

बाल-मनोरमा

उरण्? रपरः ७१, १।१।५०

लृकारेण तु स्थानिना न कस्यापि स्थानसाम्यं, तत्र कतमो गुणो भवतीत्याकाङ्क्षायामिदमारभ्यते--उरण्रपरः।

इत्युक्तमिति। "अणुदित्सूत्रे" इति शेषः। उरिति "ऋ"इत्यस्य षष्ठ()एकवचनम्। "षष्ठी स्थाने" इति परिभाषया स्थाने इति लभ्यते। अनुवादे तत्परिभाषानुपस्थितावपि स्थानेग्रहणं ततो।ञनुवर्तते। तदाह--तत्स्थाने योऽणिति। "स्थानेऽन्तरतम" इत्यतो।ञपि स्थानेग्रहणमनुवर्तते। स्थानं प्रसह्ग इत्युक्तम्। प्रसङ्गावस्थायामित्यर्थो विवक्षितः। तदाह--रपरः सन्नेव प्रवर्तत इति। अत्र "र" इति प्रत्याहारो विवक्षितः। ततश्च रेफशिरस्को लकारशिरस्कश्च प्रवर्तत इति लभ्यते। तयोव्र्यवस्थां दर्शयति--तत्रेति। रेफलकारशिरस्कयोर्मध्ये कृष्णर्दिं()धरित्यत्र अर्, तवल्कार इत्यत्र अलित्यन्वयः। कुत इयं व्यवस्थेत्यत आह--आन्तरतम्यादिति। त्रिषु गुणेषु प्रसज्यमानेषु अकारस्याऽणो रेफलकारशिरस्कतया तस्य अर् अलित्येवमात्मकस्य अकारांशे स्थानीभूतेन अकारेण रेफांशे ऋकारेण, लकारांशे लृकारेण च स्थानसाम्यादकारञकारयोः स्याने अरेव भवति। अकारलृकारयोः स्थानेऽलेव भवति। एकारोकारौ तु गुणौ न भवत एव, तयोरृकारेण लृकारेण च स्थानसाम्या।ञभावादित्यर्थः। नच एकार ओकारश्च कथं रपरो न स्यातामिति वाच्यं, पूर्वेणैव णकारेण ह्नत्राण् गृह्रते, प्रशास्तृ()णामित्यादिनिर्देशादित्यलम्।

पक्षे द्वित्वमिति। ऋधधातोः क्तिनि झषस्तथोरिति तकारस्य धत्वे ऋद्धिरिति द्विधकारं रूपं स्वाभाविकम्। तत्र अरादेशे रेफात्परस्य धकारस्याऽचो रहाभ्यामिति कदाचिद्द्वित्वमित्यर्थः।

तत्त्व-बोधिनी

उरण् रपरः ५८, १।१।५०

उरण् रपरः। अनुवादे "षष्ठी स्थानेयोगे"ति परिभाषया अनुपस्थितावपि स्थानेग्रहणं ततोऽनुवर्तत इत्याशयेनाह-तत्स्थानेयोऽणिति। "स्थानेऽन्तरतमः" इत्यतोऽपि "स्थाने"ग्रहणमिहानुवर्तते। तेन प्रसङ्गावस्तायामेवाऽण् रपरो भवति। तदेतद्व्याचष्टे-रपरः सन्ने प्रवर्तत इति। उः किम्?, "ईद्यति"-गेयम्, देयम्। अण् किम्?, रीङादीनां रपरत्वं मा भूत्। "रीङ्तः"-मात्रीयति। रिङ्-"क्रियते"। आन्तरतम्यादिति। रेफशिरस्कस्य "अ"रित्यस्य रेफद्वारेण ऋकारेण स्थानसाम्यादित्यर्थः। पक्षे द्वित्वमिति। ऋधेर्धस्येति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अलः ६।१ ५३ अन्त्यस्य ६।१ ५२ षष्ठी १।१ ४८

अर्थः॥

षष्ठीनिर्दिष्टः आदेशः अन्त्यस्य अलः स्थाने भवति।

उदाहरणम्॥

द्यौः। सः। पञ्चगोणिः।

काशिका-वृत्तिः

अलो ऽन्त्यस्य १।१।५२

षष्ठीनिर्दिष्टस्य य उच्यते आदेशः, सो ऽन्त्यस्य अलः स्थाने वेदितव्यः। इद् गोण्याः १।२।५० पञ्चगोणिः। दशगोणिः।

लघु-सिद्धान्त-कौमुदी

अलोऽन्त्यस्य २१, १।१।५१

षष्ठीनिर्दिष्टाऽन्त्यस्याल आदेशः स्यात्। इति यलोपे प्राप्ते - (यणः प्रतिषेधो वाच्यः)। सुद्ध्युपास्यः। मद्धरिः। धात्रशः। लाकृतिः॥

न्यासः

अलोऽन्त्यस्य। , १।१।५१

अल्ग्रहणमन्त्यस्य विशेषणम्, नादेशस्य; अन्यथा ह्लन्त्यस्येत्येवं ब्राऊयात्। आदेशः पुनरत्रैकाल्लभ्यते। अन्यस्य "अनेकाल्शित् सर्वस्य" १।१।५४ इति सर्वादेशतां वक्ष्यति। "षष्ठीनिर्दिष्टस्य" इति। सामान्यवचनेऽपि "षष्ठी स्थानेयोगा" (१।१४९) इत्यधिकारात् स्थानषष्ठ()आ निर्दिष्टस्येति वेदितव्यम्; अन्यथा टित्किन्मितोऽप्यवयवसम्बन्धषष्ठीनिर्दिष्टा विधीयमाना अन्त्यस्य स्युः। "इद् गोण्याः" १।२।५० इति। येयं षष्ठी सान्त्यमलं नीयते- अन्त्यस्याल इत्त्वमिति। "पञ्चगोणिः" इति। पञ्चभिर्गोणीभिः क्रीत इति "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति समासः। "तेन क्रीतम्" ५।१।३६ इति "प्राग्वहतेष्ठक्" ४।४।१ "अध्यर्धपूर्वद्विगोर्लुगसंज्ञा-याम्" ५।१।२८ इति तस्य लुक्। यद्यलोऽन्त्यस्य षष्ठीनिर्दिष्टस्यादेशो भवति," इदोऽय् पुंसि" ७।२।१११ इत्यतः "इदः" इत्यनुवृत्तेः "हलि लोपः"७।२।११३ विधीयमान इद्रूपस्य योऽन्त्यस्तस्य स्यात्। तथा च - आभ्यामिति न सिध्येत्, नैष दोषः;
"नानार्थकेऽलोऽन्त्यविधिरनभ्यासविकारेषु" (व्या।प।६२) इति परिभाषया न भविष्यति॥

बाल-मनोरमा

अलोऽन्त्यस्य ४४, १।१।५१

अलोऽन्त्यस्य। "अ"लिति प्रत्याहारो वर्णपर्यायः। "अल" इति षष्ठ()न्तम्। "षष्ठी स्थानेयोगा" इत्यतः "षष्ठी स्थाने इत्यनुवर्तते। तच्च षष्ठीति प्रथमान्तं तृतीयान्ततया विपरिणम्यते। "निर्दिष्टस्ये"ति शेषः। "स्थाने" इत्यनन्तरं "विधीयमान" इति शेषः। स्थाने विधीयमान आदेशः षष्ठीनिर्दिष्टस्य योऽन्त्योऽल् तस्य स्यादित्यर्थः। तदाह-- षष्ठीत्यादिना। "त्यदादीनामः"-यः सः। आदेश इति किम्?, "आर्धधातुकस्येट्" तृच ऋकारात् पूर्वो मा भूत्। अल इति किम्?। पदस्येत्यधिकृत्य विधीयमानं वसुरुआंस्विति दत्वं परमानडुभ्यामित्यत्राऽन्त्यस्य कृत्स्नस्य पदस्य मा भूत्।

तत्त्व-बोधिनी

अलोऽन्त्यस्य ३८, १।१।५१

अलोऽन्त्यस्य। स्थानषष्ठीनिर्दिष्टस्य य उच्यते सोऽन्त्यस्यालः स्थाने स्यादित्यर्थः। "त्यदादीनामः"। सः, यः। स्थानषष्ठीति किम्?, "आर्धधातुकस्यैट्" तृच् ऋकारात्पूर्वो मा भूत्। इदं च "षष्ठी स्थाने" इत्यनुवृत्त्या लभ्यते। अल इति किम्?, "पदस्ये"त्यधिकृत्य विधीयमानं "वसुरुआंसु" इति दत्वं परमानडुद्भयामित्यादावन्त्यस्य पदस्य मा भूत्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ङित् १।१ च ० अलः ६।१ ५१ अन्त्यस्य ६।१ ५१ षष्ठी १।१ ४८

समासः॥

ङ् इत् यस्य सः ङित्, बहुव्रीहिः

अर्थः॥

षष्ठी निर्दिष्टः यः ङिदादेशः, सः अन्त्यस्य अलः स्थाने भवति। {अनेकाल् शित् सर्वस्य (१।१।५४)} इति वक्ष्यति, तस्य अयं पुरस्तात् अपवादः, अर्थात् अनेकालपि सन् ङिदादेशः अन्त्यस्य अलः स्थाने भवति, न तु सर्वस्य।

उदाहरणम्॥

चेता, नेता। मातापितरौ। होतापोतारौ।

काशिका-वृत्तिः

ङिच् च १।१।५३

ङित् च य आदेशः सो ऽनेकालपि अलो ऽन्त्यस्य स्थाने भवति। आनङृतो द्वन्वे ६।३।२४ होतापोतारौ। मातापितरौ। तातङि ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वात् सर्वाऽदेशः तातङ् भवति। जीवताद् भवान्। जीवतात् त्वम्।

लघु-सिद्धान्त-कौमुदी

ङिच्च ४६, १।१।५२

ङिदनेकालप्यन्त्यस्ययैव स्यात्॥

न्यासः

ङिच्च। , १।१।५२

"होतापोतारौ" इति। होतृपोतृशब्दयोद्र्वन्द्व, आनङ्, औप्रत्यये परतः "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणः, रपरत्वं च। "अप्तृन्तृच्" ६।४।११ इत्यादिना दीर्घः। "मातापितरौ" इति। "पिता मात्रा" १।२।७० इति यस्मिन् पक्ष एक-शेषो नास्ति, तत्रेदमुदाहरणम्। यदि ङिदादेशोऽनेकालप्यन्त्यस्य भवति, एवं सति तातङ- प्यन्त्यस्य भवतीत्यत आह-"तातङि" इत्यादि। तत्र गुणप्रतिषेधार्थम् चिनुतादित्यादौ। अत्र हि सार्वधातुकलक्षणस्य गुणस्य प्राप्तिः। वृद्धिप्रतिषेधार्थम्- मृष्टादिति। अत्र हि "मृजेर्वद्धिः" ७।२।११४ इति वृद्धिप्राप्तिः। तदेवं गुणवृद्धिप्रतिषेधे चरितार्थत्वात् तातङो ङित्करणस्य सावकाशत्वे सति तस्मिन परत्वात "अनेकाल्शित्सर्व- स्य" १।१।५४ इत्यनेन तातङ सर्वादेशो भवति। ङिच्चेत्यस्यावकाशः- "होतापोतारौ" इत्यादि। अनेकालित्यादेरवकाशो योन ङित्-"अस्तेर्भूः" २।४।५२, भवितेत्यादि। "जीवतात्" इत्यादावुभयप्राप्तौ परत्वदनेकाल्त्वात् तातङ सर्वादेशो भवति, " जीवताद् भवान्" "जीवतात् त्वम्" इति। जीवतादिति "आशिषि लिङलोटौ" ३।३।१७३ इति लोट्, तिप्, "एरुः" "तु ह्योस्तातङ्" ७।१।३५ इत्यादिना तातङ॥

बाल-मनोरमा

ङिच्च ४५, १।१।५२

ङिच्च। ङकार इद्यस्य स-ङित्। "अलोऽन्त्यस्ये"त्यनुवर्तते। तदाह--अयमपीति। ङिदमपीत्यर्थः। अवङ् तावङ् अनङित्यादिरादेश उदाहरणम्।

नन्वलोऽन्त्यस्येति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह-सर्वस्येति। "अनेकाल् शित् सर्वस्ये"ति वक्ष्यमाणस्य सर्वादेशत्वविधेरयं विधिरपवादः। अपोद्यते बाध्यते अनेनेति अपवादः। बाहुलकः करणे घञ्। येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवाद इत्यपवादलक्षणम्। अप्राप्ते इति भावे क्तः। "येने"ति कर्तरि तृतीया। द्वौ नञावावश्यकत्वं बोधयतः। यत्कर्तृकावश्यकप्राप्तौ सत्यां यो विधिरारभ्यते स आरभ्यमाणविधिस्तस्याऽवश्यप्राप्तस्य अपवादो बाधक इति तदर्थः। अयं च न्यायसिद्धः। अवङादयो हि ङित आदेशाः सर्वेऽनेकाल एव। तेषु चानेकाल्विशेषेषु विधीयमानेन ङितामन्त्यादेशत्वेन स्वविषये अवश्यं प्राप्तमनेकाल्सामान्येन विहितं सर्वादेशत्वं बाध्यते, विशेषविहितत्वात्, निरवकाशत्वाच्च। विशेषशास्त्र हि विशेषेषु झटिति प्रवत्र्तते, विशेषाणां स्वशब्देनोपात्तत्वात्। सामान्यशास्त्रं तु सामान्यमुखेन विशेषेषु प्रवर्तत इति तस्य तेषु मन्दप्रवृत्तिः। अतो विशेषशास्त्रं प्रबलम्। उक्तं च भट्टवार्तिके "अवश्यमेव सामान्यं विशेषं प्रति गच्छति। गतमात्रं च तत्तेन विशेषे स्थाप्यते ध्रुवम्॥" इति। किं च यदि ङिच्चेति शास्त्रमनेक#आल्विशेषेषु ङित्सु न प्रवर्तेत, तर्हि तदनर्थकमेव स्यात्। "अनेकाल्शित्सर्वस्ये"त्यस्य तु ङित्सु अप्रवृत्तावपि नानर्थक्यम्, तस्थस्थमिपां तान्तंताऽमः" "अस्तेर्भू"रित्यादिष्वनेकाल्षु अङित्सु तस्य सावकाशत्वात्। अतो विशेषशास्त्रं प्रबलमिति।

तत्त्व-बोधिनी
ङिच्च ३९, १।१।५२

ङिच्च। अयमपीति। "अवङ् स्फोटायनस्य"-गवाग्रम्। "अनङ् सौ"-सखा। परस्य यदिति। "तस्मादित्युत्तरस्यादे"रिति न सूत्रितम्, "आदे"रित्यंशस्य सर्वादेशबाधकत्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्युपदमेव वक्ष्यति। आदेर्बोध्यमिति। आदेरलो बोध्यमित्यर्थः। "अल" इति ह्यनुवर्तते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आदेः ६।१ परस्य ६।१ अलः ६।१ ५१ षष्ठी १।१ ४८

अर्थः॥

परस्य उच्यमानं कार्यम् आदेः अलः स्थाने भवति। {तस्मादित्युत्तरस्य (१।१।६६)} इति वक्ष्यति, तस्य इदं शेषसूत्रम्

उदाहरणम्॥

आसीनः। द्वीपम्, अन्तरीपम्, समीपम्।
काशिका-वृत्तिः
आदेः परस्य १।१।५४

परस्य कार्यं शिष्यमाणम् आदेरलः प्रत्येतव्यम्। क्व च परस्य कार्यम् शिष्यते? यत्र पञ्चमीनिर्देशः। तद् यथाईदासः ७।२।८३ आसीनो यजते। द्व्यन्तरुपसर्गेभो ऽप ईत् ६।३।९६ द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्।
लघु-सिद्धान्त-कौमुदी
आदेः परस्य ७२, १।१।५३

परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। इति सस्य थः॥

न्यासः

आदे परस्य। , १।१।५३

अलोऽन्त्यस्यापवादोऽयम्। शास्त्रे न क्वचित् परस्येतुच्चार्य कार्यं विधीयते। ततश्च निर्विषयमेतदित्यभिप्रायेणाह-"क्व च" इत्यादि। "यत्र पञ्चमीनिर्देशः"इति। "तस्मादित्युत्तरस्य" १।१।६६ इति वचनाद् यत्र पञ्चमीनिर्देशस्तत्र परस्य कार्यं शिष्यते। "आसीनः" इति। "आस उपवेशने" (धा।पा।१०२१), लट्, अनुदात्तेत्वादात्मनेपदम्, शानच्, अदादित्वाच्छपो लुक्। "द्वीपम्, अन्तरीपम्" "समीपम्" इति। द्विर्गता अन्तर्गताः सङ्गता" आपोऽस्मिन्निति विगृह्य बहुव्रीहिः। "ऋक्पूः" ५।४।७४ इत्यादिना अकारप्रत्ययः समासान्तः॥

बाल-मनोरमा

आदेः परस्य ४६, १।१।५३

आदेः परस्य। परस्येति। "द्व्यन्तरुपसर्गेभ्योऽप ई"दित्यादौ "तस्मादित्युत्तरस्ये"ति परिभाषायां परस्य नियमितं कार्यं यत् तत्तस्यादेरेव भवति, नत्वलोऽन्त्यस्येति तदन्तस्येत्यर्थः। तदाह--अलोन्त्यस्येत्यस्यापवाद इति। तत्र "अल" इत्यप्यनुवर्तनीयम्। तेन "द्वीप"मित्यत्र ईत्वं पान्तसमुदायस्य न भवति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनेकाल्-शित् १।१ सर्वस्य ६।१ षष्ठी १।१ ४८

समासः॥

एकः च असौ अल् च एकाल्, कर्मधारयतत्पुरुषः। न एकाल् अनेकाल्, नञ्तत्पुरुषः। श् इत् यस्य सः शित्, अनेकाल् च शित् च अनेकाल्-शित्, बहुव्रीहिगर्भः समाहारद्वन्द्वः।

अर्थः॥

अनेकाल् शित् च यः आदेशः सः सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। {अलोऽन्त्यस्य (१।१।५१)} इति सूत्रस्य अपवादसूत्रम् इदम्।

उदाहरणम्॥

अनेकाल् - भविता, भवितुम्, भवितव्यम्। पुरुषैः। शित् - कुण्डानि, वनानि।

काशिका-वृत्तिः

अनेकाल् शित् सर्वस्य १।१।५५

अनेकाल् य आदेशः शित् च, स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। अस्तेर् भूः २।४।५२भविता। भवितुम्। भवितव्यम्। शित् खल्वपि जश्शसोः शिः ७।१।२० कुण्डानि तिष्ठन्ति। कुण्डानि पस्य।

लघु-सिद्धान्त-कौमुदी

अनेकाल् शित्सर्वस्य ४५, १।१।५४

इति प्राप्ते॥

न्यासः

अनेकाल्शित्सर्वस्य। , १।१।५४

शितः शकारानुबन्धेनानेकाल्त्वेऽपि शिदिति पृथक्करणं "नानुबन्धकृतमनेकाल्त्वम्"(व्या।प।१४) इति ज्ञापनार्थम्। तस्य तु प्रयोजनम्-- "दिव उत्" ६।१।१२७ इत्या-दिषु सर्वादेशाभावः॥

बाल-मनोरमा

अनेकाल्शित्सर्वस्य ४७, १।१।५४

अनेकाल्शित्सर्वस्य। न एकोऽनेकः, अनेकोऽल् यस्य सोऽनेकाल्, शकार इत् यस्य स शित्, अनेकाल्व शिच्चेति समाहारद्वन्द्वः। स्पष्टमिति। अनुवर्तनीयपदान्तराऽभावादिति भावः। अस्तेर्भूरित्याद्युदाहरणम्। नन्वस्धातोर्भूर्भवतीत्युक्ते कृत्स्नस्यैवादेशः प्राप्त इति किमर्थमिदं सूत्रमारभ्यत इत्यत आह-अलोऽन्त्यसूत्रापवाद इति। "अलोन्त्येति"ति सूत्रैकदेशानुकरणम्। अनुकरणत्वादेव नापशब्दः, अधिरी()आर इति सूत्रैकदेशस्य प्राग्री()आरान्निपाता इति ग्रहणाल्लिङ्गात्। स्यादेतत्। अष्टन्()शब्दाज्जसि शसि च "अष्टन आ विभक्ता"विति आत्वे अष्टा अस् इति स्थिते अष्टाभ्य औशिति कृताकारादष्टनः परयोर्जश्शसोर्विधीयमान औशादेशोऽलोऽन्त्यस्येति बाधित्वा आदेः परस्येत्यादेरकारस्य प्राप्तः। अनेकाल्त्वाच्च सर्वादेशः प्राप्तः। एवम् "अतो भिस ऐ"सित्यादावपि। तत्र कतरच्छास्त्रं बाध्यं कतरच्च प्रवर्तत इत्यत्र किं विनिगमकम्रित्यत आह-अष्टाभ्य औशित्यादाविति। आदिना "अतो भिस ऐ"सित्यादिसंग्रहः। अष्टाभ्य औ" शित्यादावादेः परस्येत्येतदपि परत्वादनेन बाध्यत इत्यन्वयः। अस्तेर्भूरित्यादौ अनेकाल्शिदित्यनेन यथाऽलोऽन्त्यस्येति बाध्यते तथ#आऽष्टाभ्या औशित्यादावादेः परस्येत्येतदपि बाध्यत इत्यर्थः। नन्वस्तेर्भूरित्यादावलोऽन्त्यस्येति प्राप्ते सत्येवानेकाल्शित्सर्वस्येति नापवादः। अस्तेर्भूरित्यादावादेः परस्येत्यप्राप्तावपि तत्प्रवृत्तेरित्यत आह-परत्वादिति। "विप्रतिषेधे परं कार्य"मिति तुल्यबलविरोधे परप्राबल्यस्य वक्ष्यमाणत्वादिति भावः। "आदेः परस्ये"त्यस्यावकाशो "द्व्यन्तरुपसर्गेभ्योऽप ई"दित्यादिः। "अनेकाल्शित्सर्वस्ये"त्यस्यावकाशः-"अस्तेर्भूः""इदम इ"शित्यादिः। अतस्तुल्यबलत्वमुभयोः।

तत्त्व-बोधिनी

अनेकाल्शित्सर्वस्य ४०, १।१।५४

अनेकाल्। "अस्तेर्भूः"। बभूव। ननु "निर्दिश्यमानस्यादेशा भवन्ती"त्यनेकालादेशस्य सर्वादेशत्वं सिध्यति, तत्किमनेनाऽल्ग्रहणेन?। न च "अलोऽन्त्यस्येट"त्यन्त्यस्य स्यादिति शङ्कयम्, "ङिच्चे"त्यस्य नियमार्थत्वाभ्युपगमात्। उच्यते-अनेकाल्ग्रहणाऽभावे "रामै"रित्यादावैसादेशः "आदेः परस्ये"ति भकारस्यैव स्थाने स्यान्नतु सर्वस्य स्थाने इति दिक्। शित उदाहरणम्-"इदम इश्"-इतः। इत्यादाविति। आदिशब्देन "अतो भिस ऐ"सित्यादि गृह्नते। परत्वादिति। अत एव "आदेः परस्ये"ति पृथक्रियत इत्युक्तम्। ननु "अनेकाल्शित्सर्वस्ये"त्यतः प्रागेव "तस्मादित्युत्तरस्यादे"रिति पठ()तां किमनेन पृथक्()सूत्रकरणेन?। न चैवं "तस्मिन्निति निर्दिष्टे-" इत्यतो निदष्टग्रहणं नात्रानुवर्ततेति वाच्यम्, तस्यापि सूत्रस्य प्राक् पठने बाधकाभावेन निर्दिष्टग्रहणाऽनुवृत्तिसिद्धेः। मैवम् "ब्राआह्णा अष्टौ" इत्यत्र अष्टाभ्यः पूर्वयोरपि जश्शसोरौश्प्रसङ्गात्। यथाश्रुतसूत्राभ्युपगमे तु "उत्तरस्ये"त्यंशः प्रवर्तत एवेति नायं दोषः प्रसज्यत इति। अत्र केचिन्निष्कर्षमाहुः-अनेकाल्शित्सूत्रात्प्रागेव वर्णलाघवाय "तस्मादित्युत्तरस्यादे"रिति सूत्रिते

परत्वात्सर्वादेशेन आदेरित्यंशवदविशेषादुत्तरस्येत्यंशस्यापि बाधितत्वाद्वाक्यसंस्कारपक्षे ब्राआहृण अस् अष्टन् अस् इति स्थिते "अष्टाभ्य[औश्"] इत्यस्य दिग्योगे पञ्चमीत्वाव्द्यासिन्यायेनाऽष्टनोऽङ्गात्पूर्वयोरपि जश्शसोरौश्स्यात्। व्यासिन्यायस्तु "प्राग्वी()आरान्निपाता" इति पठितेऽपि प्रत्यासत्तिन्यायेन "अधिरी()आरे" इति सूत्रावधिकत्वसिद्धौ "ई()आरे तोसुन्कसुनौ" इति सूत्रावधिकत्वनिराकरणाय रेफविशिष्टग्रहणं कुर्वता सूत्रकृतैव ज्ञापितः। ततश्च सर्वादेशेन "उत्तरस्ये"त्यंशस्याऽबाधनार्थं, निर्दिष्टग्रहणानुवृत्त्यर्थं च "तस्मिन्निति-" इति सूत्रात्परस्य कृते तु "आदे"रित्यस्य सर्वादेशबाधकत्वं स्यात्। तथा च "अतो भिस ऐस्" इत्याद्यादेश आदेरेव स्यात्, अनेकाल्सूत्रस्य "अस्तेर्भू"रित्यादौ चरितार्थत्वात्। यथान्यासे तु "उत्तरस्ये"त्यंशः प्रवर्तत एवेत्यष्टाभ्यः परयोरेव जश्शसोरौश्स्यात्, न तु पूर्वयोः। तथा "तस्मादित्युत्तरस्यादे"रिति न सूत्रितमित्यादिमनोरमाग्रन्थस्याप्ययमेवाशय इति। अन्ये तु यथाश्रुतसूत्रनिराकरणपरतयैव मनोरमां योजयन्ति। तद्यथा-"न सूतिं()रत"मित्यस्य "अनेकाल्शित्सूत्रात्प्राङ् सूत्रित"मित#इ नार्थः। "आदे"रित्यंशस्य सर्वादेशबाधकत्वापत्तेरित्याद्यग्रिमग्रन्थविरोधात्, किंतु तद्ग्रन्थानुकूल्याय "स्वं रूप"मिति सूत्रात्प्राङ् सूत्रितमित्यर्थोऽभ्युपेयः। एवं च अनेकाल्सूत्रात्प्राक्सूत्रिते तु नास्त्येव दोष इति मनोरमाग्रन्थाशयः। एवं स्थिते निर्दिष्टग्रहणानुवृत्तिलाभाय "तस्मिन्निति निर्दिष्टे" इति सूत्रं "तस्मादित्युत्तकस्यादेः परस्ये"त्यस्मात्प्रागेव पठनीयम्। "अष्टनोऽङ्गात्पूर्वयोरप्यौश् स्या"दित्युक्तदोषस्तु इत्थं परिहरणीयः, "तस्मादित्युत्तरस्यादेः परस्ये"त्यत्र आदे"रिति पृथग्वाक्यम्। तत्र "उत्तरस्ये"त्यनुवर्तते। सा च स्थानषष्ठी, "षष्ठी स्थाने" इत्यस्य प्राप्तेः। तत्र चायमर्थः-"पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि" "उत्तरस्य स्थाने यद्विधीयते तदादेर्भवती"ति। इत्थं वाक्यभेदेन व्याख्यानाश्रयणादनन्तरस्येति न्यायेन "आदे"रित्यंश एव सर्वादेशेन बाध्यते, न तूत्तरस्येत्यंशोऽपीति नास्त्येव पूर्वोक्तदोषः। वाक्यभेदेन व्याख्यानं तु "उत्तरस्यादे"रित्यसमस्तन्यासकरणेन ज्ञाप्यते। अन्यथा "उत्तरादे"रिति न सूत्रित"मिति वदेत्। किंच "अष्

#आभ्य औ"शित्यस्य दिग्योगे पञ्मीत्वेन पूर्वपरसाधारणतया अष्टनोऽङ्गाज्जश्शसोरित्युक्तेऽप्यनोऽङ्गसंज्ञानिमित्तभूतौ यौ जश्शसौ तावेव शीघ्रपस्थितिकावित्यष्टञ्शब्दादुत्तरयोरेव औश् स्यात्, न तु पूर्वयोरिति दिक्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्थानिवत् ० ५८ आदेशः १।१ ५८ अनल्विधौ ७।१

समासः॥

अल्विधौ इत्यत्र अर्थानुरोधात् चतुर्विधः समासः। (१) अलः (५।१) परस्य विधिः अल्विधिः, पञ्चमीतत्पुरुषः। (२) अलः (६।१) स्थाने विधिः अल्विधिः, षष्ठीतत्पुरुषः। (३) अलि विधिः अल्विधिः, सप्तमीतत्पुरुशः। (४) अला विधिः अल्विधिः, तृतीयातत्पुरुषः। न अल्विधिः अनल्विधिः, तस्मिन् अनल्विधौ, नञ्तत्पुरुषः॥
स्थानम् अस्य अस्ति इति स्थानी {५।२।११४} इत्यनेन इनिः-प्रत्ययः।

अर्थः॥

आदेशः स्थानिवत् भवति, अल्विधिं वर्जयित्वा। तत्र आदेशाः अष्टधा भवन्ति - धातु-अङ्ग-कृत-तद्धित-अव्यय-सुप्-तिङ्-पदादेशाः॥

उदाहरणम्॥

धात्वादेशः - भविता, भवितुम्, भवितव्यम्। वक्ता, वक्तुम्, वक्तव्यम्। अङ्गादेशः - केन, काभ्याम्, कैः। कृदादेशः - प्रकृत्य, प्रहृत्य। तद्धितादेशः - दध्नि संस्कृतम् दधिकम्, अद्यतनम्। अव्ययादेशः - प्रकृत्य, प्रहृत्य। सुबादेशः - पुरूषाय, वृक्षाय। तिङादेशः - अकुरुताम्, अकुरुतम्। पदादेशः - ग्रामो नः स्वम्, ग्रामो वः स्वम्। अल्विधौ स्थानिवत् न भवति, तद्यथा - अलः (५।१) विधिः - द्यौः, पन्थाः, सः। अलः (६।१) विधिः - द्युकामः। अलि (७।१) विधिः - कः इष्टः। अला (३।१) विधिः - महोरस्केन, व्यूढोरस्केन।

काशिका-वृत्तिः

स्थानिवदादेशो ऽनल्विधौ १।१।५६

स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यम् आदेशे न प्राप्नोति इत्ययमतिदेश आरभ्यते। स्थानिना तुल्यं वर्तते इति स्थानिवत्। स्थानिवदादेशो भवति स्थान्याश्रयेषु कार्येष्वनलाश्रयेषु, स्थान्यलाश्रयाणि कार्याणि वर्जयित्वा। न अल्विधिरनल्विधिः इत्यर्थः। किम् उदाहरणम्? धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदाऽदेशाः। धात्वादेशो धातुवद् भवति। अस्तेर् भूः २।४।५२। ब्रुवो वचिः २।४।५३। आर्धधातुकविशये प्रागेवाऽदेशेषु कृतेषु धातोः ३।१।९१ इति तव्याऽदयो भवन्ति। भविता। भवितुम्। भवितव्यम्। वक्ता। वक्तुम्। वक्तव्यम्। अङ्गाऽदेशो ऽङ्गवद् भवति केन। काभ्याम्। कैः। किमः कः ७।२।१०३ इति काऽदेशे कृते ऽङ्गाऽश्रया इनदीर्घत्वाइस्भावाः भवन्ति। कृदादेशः कृद्वद् भवति प्रकृत्य। प्रहृत्य। क्त्वो ल्यबादेशे कृते ह्रस्वस्य पिति कृति तुक् ६।१।६९ इति तुग् भवति। तद्धिताऽदेशः तद्धितवद् भवति दाधिकम्। अद्यतनम्। कृत्तद्धितसमासाश्च १।२।४६ इति प्रातिपदिकसंज्ञा भवति। अव्ययाऽदेशो ऽव्ययवद् भवति प्रस्तुत्य। प्रहृत्य। उपहृत्य। उपस्तुत्य। अव्ययादाप्सुपः २।४।८२ इति सुब्लुग् भवति। सुबादेशः सुब्वद् भवति वृक्षाय। प्लक्षाय। सुपि च ७।३।१०२ इति दीर्घत्वं भवति। तिङादेशः तिङ्वद् भवतिअकुरुताम्। अकुरुतम्। सुप्तिङन्तं पदम् १।४।१४ इति पदसंज्ञा भवति। पदाऽदेशः पदवद् भवति ग्रामो वः स्वं। जनपदो नः स्वम्। पदस्य ८।१।१६ इति रुत्वं भवति। वत्करनं किम्? स्थानी आदेशस्य संज्ञा मा विज्ञायि इति। स्वाऽश्रयम् अपि यथा स्यात्। आङो यमहनः १।३।२८ आहत, आवधिष्ट इति आत्मनेपदम् उभयत्र अपि भवति। आदेशग्रहणं किम्? आनुमानिकस्य अप्यादेशस्य स्थानिवद्भावो यथा स्यात्। पचतु एरुः ३।४।८६। अनल्विधौ इति किम्? द्युपथितदादेशा न स्थानिवद् भवन्ति। द्यौः, पन्थाः, सः इति। हल्ङ्याब्भो दीर्घात् सुतिस्यपृक्तं हल् ६।१।६६ इति सुलोपो न भवति।

लघु-सिद्धान्त-कौमुदी

स्थानिवदादेशोऽनल्विधौ १४४, १।१।५५

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ। इति स्थानिवत्त्वात् सुपि चेति दीर्घः। रामाय। रामाभ्याम्॥

न्यासः

स्थानिवदादेशोऽनल्विधौ। , १।१।५५

स्थानं प्रसङ्गः, स च पूर्वमुक्तस्वरूपः। अतिदेशोऽनेकप्रकारः- निमित्ताति- देशः; व्यपदेशातिदेशः, शास्त्रातिदेशः, रूपातिदेशः, कार्यातिदेशश्चेति। तत्र तावन्निमित्तमशक्यमतिदेष्टुम, न हि धात्वादिधर्माः शब्दप्रवृत्तिनिमित्तभूता धात्वादिव्यक्त्याश्रिता वस्त्वन्तरमादेशं प्रापयितुम्, प्रापयितुं पार्यन्ते; यथा- ब्राआह्णवदस्मिन् क्षत्रिये वर्त्तितव्यमिति ब्राआह्णशब्दप्रवृत्तिनिमित्तं न शक्यं क्षत्रिये प्रापयितुम्, तद्वत् तस्मादशक्यत्वात् नेह निमित्तादेश आश्रीयते। नापि व्यपदशातिदेशः; संज्ञासंज्ञिसम्बन्धादभिन्नत्वात्। संज्ञासंज्ञिसम्बन्धे हि वत्करण- स्यानर्थक्यं स्यात्, विनापि तेन तत्सिद्धेः। अप्रधानत्वाच्च नात्र व्यपदेशातिदेशो युक्त आश्रीयतुम्। अत एव शास्त्रातिदेशोऽपि। अप्रधानत्वं तु तयोरपि कार्यं

प्रत्यङ्गभूतत्वात्। रूपातिदेशस्याप्याश्रयणमयुक्तम्" निष्फलत्वात्। यदि ह्यादेशस्य स्थानिनोरूपमतिदिश्येत; आदेशस्य वैयर्थ्यं स्यात्। "द्विर्वचनेऽचि" १।१।५८ इत्यत्र रूपातिदेशेऽपि न भवत्यादेशवैयर्थ्यम्, द्वर्वचनादुत्तरकालं श्रवणार्थत्वात्। तस्मादतिदेशान्तराश्रयणस्यायुक्तत्वात् कार्यातिदेश आश्रीयते। "स्थानिना तुल्यं वर्तते" इति। तत्तुल्यकार्यत्वात्, "तेन तुल्यम्" ५।१।११४। "स्थान्याश्रयेषु" इति। स्थानी आश्रय एषामिति बहुव्रीहिः। "अनलाश्रयेषु" इति। अल आश्रय एषामिति बहुव्रीहि कृत्वा न अळाश्रयाणि अनलाश्रयाणीति नञ्समासः। अनन्तरोक्तमेवार्थं विस्पष्टीकर्तृमाह- "स्थान्यलाश्रयाणि" इत्यादि। स्थानी अल् आश्रयोयेषां तानि तथोक्तानि। आश्रयग्रह-णेन सूत्रे योऽल्विधिशब्दः, सोऽलाश्रयो विधिरल्विधिरित्युत्तरपदलोपी समास इति दर्शयति। स पुनः समासो मयूरव्यंसकादित्वात् समासं कृत्वा नञ्समासः कृतः। न अल्विधिरनल्विधिः" इति। पुनरलाश्रयो विधिः? यो वर्णमात्राश्रितः। यस्तु समुदाया- श्रितः सोऽनलाश्रयः। कार्यशब्देन क्मसाधनेन विधिशब्दस्यार्थमाचक्षाणः "विधीयते" इति विधिरिति तस्य कर्मसाधत्वं दर्शयति। "किमुदाहरणय्िति प्रश्नः। "धात्वाद्यादेशाः प्रयोजनम्" इत्युत्तरम्। प्रयुज्यतेऽनेनेति प्रयोजनम्, उदाहरणेन च प्रयुज्यत इति। अर्थात् प्रश्नानुरूपं प्रतिवचनम्। ननु चार्धधातुके परतो भाव्यमादेशाभ्याम्, तत्र किमत्रादेशेनेत्यत आह- "आर्धधातुके विषये" इति। "प्रकृत्य" इत्यादि। "कुगति" २।२।१८ इत्यादिना समासः, "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ७।१।३७। "दधिकम्" इति। दध्ना संस्कृतमिति "दध्नष्ठक्" ४।२।१७। "अद्यतनम्" इति। "सायंचिरम्" ४।३।२३ इत्यादिना ट()उप्रत्ययः, तुडागमश्च, योरनादेशः। "अकुरुताम्कुरुतम्" इति। कृञो लङ्, "तस्थस्थमिपाम्" ३।४।१०१ इत्यादिना तसस्ताम्, थसस्तम्, तनादित्वात् "तनादिकृञ्भ्य उः" ३।१।७९, धातोर्गुणः। "अत उत् सार्वधातुके" ६।४।११०। ग्रामो वृ स्वम्, जनपदो नः स्वम्" इति। युष्मदस्मदोः षष्ठी, "बहुवचनस्य वस्नसौ" ८।१।२१ इति वस्नसादेशौ। "वत्करणं किम्" इति? विनापि तेन तदर्थो गम्यते, यथा "असंयोगाल्लिट् कित्" १।२।५ इत्यादावित्यभिप्रायः। "स्थानो" इत्यादि। प्रायेण ह्स्मिन् पादे "वृद्धिरादैच्" १।१।१ इत्यादीनि सूत्राणि संज्ञासंज्ञिसम्बन्धार्थान्येव दृष्टानि। अतोऽसति वत्करणे स्थान्यादेशस्य संज्ञा विधीयत इति विज्ञायते। तदेवं मा विज्ञायी- त्येवमर्थं वत्करणम्। किमर्थं पुनः स्थान्यादेशस्य संज्ञा नेष्यत इत्याह-- "स्वाश्रयमपि" इत्यादि। संज्ञा हिसंज्ञिप्रत्ययनार्था न स्वतः कार्यं प्रतिपद्यते, अपि तु तत्प्रत्यायितः संज्ञीति। अत्र यदि स्थान्यादेशस्य संज्ञा स्यात्, आदेशस्यैव हि संज्ञिनः कार्यं स्यात्,न संज्ञाभूतस्य स्थानिनः। ततश्च "आङो यमहनः" १।३।२८ इति वधेरादत्मनेपदं स्यात्, न हन्तेः।वत्करणे तु सत्यतिदेशोऽयं भवति, अतिदेशेन चान्य- सम्बन्धिकार्यमन्यत्र सम्पाद्यते;न तु तत्र स्वाश्रयं निवर्त्यते। तथा हि "ब्राआह्मणवदस्मिन् क्षत्रिये वत्र्ततव्यम्" इत्यतिदेशे तद्()ब्राआह्मणसम्बन्धिकार्यं क्षत्रिये भाव्यते। न तु ब्राआह्मणस्य यत् स्वाश्रयमग्रभोजनादि तद्()व्यावर्त्यते। स्वाश्रयमपीत्यपिशब्दादतिदेशप्रापितमादेशे पराश्रितमपि। "आहत" इति। हन्तेरलुङ, "हनः सिच्" १।२।१४ इति कित्त्वम्। "अनुदात्तोपदेश" ६।४।३७ इत्यादिनाऽनुनासिकलोपः। "ह्स्वादङ्गात्" ८।२।२७ इति सिचो लुक्। "आवधिष्ट" इति। "आत्मनेपदेष्वन्यतरस्याम्" ३।१।५४ इति वधादेशः, इट्, "अतो लोपः" ६।४।४८ षत्वष्टुत्वे। "आदेशग्रहणं किम्" इति। सथानीति सम्बन्धिशब्दोऽयम्। तत्र यथा "पितृवत् स्थूलः" इत्युक्तेऽन्तरेणाप्यत्र पुत्रग्रहणं सम्बन्धिशब्दत्वात् पुत्र इति गम्यते,तथा स्थानिवदित्युक्ते विनाप्यादेशग्रहणेन सम्बन्धिशब्दत्वादादेश एव स्थानिवद् भवतीति विज्ञायत इत्यभिप्रायः। "आनुमानिकस्य" इत्यादि। "अस्तेर्भूः" २।४।५२ इत्यादौ स्थान्यपि शब्देन साक्षात् प्रत्याय्यते, आदेशोऽपि। पचत्वित्यत्र स्थान्यपि, आनुमानिक आदेशोऽपि। तथा हि- "एरुः" ३।४।८६ इत्यत्र न वस्तुत इकार एव स्थानी , अपि तु तिशब्दः। नाप्युकारमात्र आदेशः, तर्हि? तुशब्दः। लाघवार्थं तु तदेकदेशयो-रिकारोकारयोरुच्चारणम्। तेनैकदेशद्वारेण समुदायस्य समुदाय एवादेशो विधीयते। तत्र यथा विषाणेनैकदेशेनोपलब्धेन विषाणी समुदायोऽनुमीयते, तथैकदेशेनेकारेणोकारेण तिशब्दस्तुशब्दश्च। अत्र च शास्त्रे यस्य च क्रियाबिसम्बन्धः साक्षाच्छब्दादेव प्रतीयते, यस्य च कुतश्चिदर्थप्रकरणादेरनुमीयते,तयोः पूर्वस्य प्राधान्यमितरस्य विपर्यय इष्यते। तथा हि- "सहयुक्तेऽप्रधाने" २।३।१९ इत्यत्र वृत्तिकारः "पुत्रेण सहागतः" इत्याद्युदाहृत्य वक्ष्यति- "पितुरत्र

क्रियादिसम्बन्धः शब्देनोच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्" इति। प्रधानेतरयोश्च सन्निधाने प्रधानस्यैव कार्येण सम्प्रत्ययो युक्तः। तथा चाह- "प्रधाने कार्यसम्प्रत्ययात् सिद्धम्" इति। अत्र हि यद्यादेश इत नोच्येत, ततो य आदेशशब्देनोपादाय विधीयमानत्वात् प्राधान्यमनुभवति तस्यैव स्थानिवद्भावः स्यात्, नाप्रधानस्यानुमानिकस्य। तस्मात् तस्यापि स्थानि-वद्भावो यथा स्यादित्येवमादेशग्रहणम्। तेन पचत्वित्यादावपि "सुप्तिङन्तं पदम्" (१।४१४) इति पदसंज्ञा सिद्धा भवति। कुतः पुनरेतववसीयते? "एरुः" ३।४।८६ इत्यनेनैकदेश-द्वारेण तुःशब्दः समुदायो विधीयते, न पुनर्यथाश्रुतमिकारमात्रस्योकारमात्रमेवेति; पचत्वित्यत्र पदसंज्ञाकार्योपलब्धेः, तद्धि न विना पदसंज्ञया, सापि न विना तिङवद् भावेन, सोऽपि न विना समुदायोदेशेनेति। तस्मिन् हि सति स्थानिवद्भावेन यत्र- प्रतिपादितेन तिङभावो लभ्यते; नान्यथेति गतमेतत्। अथानुमानिके गृहीते कथमितरस्य ग्रहणं लभ्यते? एवं मन्यते स्थानिवदित्येतावानेको योगः कत्र्तव्यः, एतेन योगेनादेशः प्रधानभूतः सम्बन्धिशब्दत्वाल्लभ्यते। तत आदेश द्वितीयो योगः, आनुमानिकस्य स्थानि-वद्भावाय। अत्र च स्थानिवदिति वत्र्तते। एवमुभयोः प्रत्यक्षानुमानशिष्ट()ओग्र्रहणमुपपद्यते। "अनल्विधौ" इति। द्वयोरपि योगयोः शेषभूतः। "द्युपथित्यदादेशा" इत्यादि। "दिव औत्" "पथिमथ्यृभुक्षामात्" ७।१।८५, "त्यदादीनामः" ७।१।१०२ इत्येते " हल्ङ्याब्भ्यः" ६।१।६६ सुलोपे कत्र्तव्ये न स्थानिवद्भवन्ति; तस्य हल्मात्रमाश्रित्य प्रवृत्तेरलाश्रयत्वात्॥

बाल-मनोरमा

स्थानिवदादेशोऽनल्विधौ ५१, १।१।५५

ननु सुध् य् इत्यत्र ईकारस्थानिकस्य यकारस्य स्थानिवद्भावेनाच्त्वाद्च्परकत्वात्कथं धकारस्य द्वित्वमिति शङ्का ह्मदि निधाय तस्य स्थानिवद्भावप्रापकसूत्रमाह-स्थानिवदादेशः। गुरुस्थानापन्ने गुरुपुत्रादौ स्थानापत्त्या तद्धर्मलाभो लोकतः सिद्धः। कुशादिस्थानापन्नेषु शरादिषु च वैदिकन्यायसिद्धः। इह तु शास्त्रे स्वं रूपं शब्दस्येति वचनात्स्थानिधर्मा आदेशेषु न प्राप्नुयुरिति तत्प्राप्त्यर्थं स्थानिवदादेश इत्यारब्धम्। "स्थानं प्रसङ्ग" इत्युक्तम्। यस्य स्थानेऽन्यद्विधीयते तत्स्थानि। येन विधीयमानेन अन्यत्प्रसक्तं निवर्तते स आदेशः। स्थानिना तुल्यः स्थानिवत्। "तेन तुल्य"मिति वतिप्रत्ययः। आदेशः स्थानिना तुल्यो भति। स्थानिधर्मको भवतीति यावत्। अलिति वर्णपर्यायः। विधीयत इति विधिः=कार्यम्। अलाश्रयो विधि अल्विधिः अनल्विधिः। अलाश्रयभिन्ने कार्ये कर्तव्ये इति प्रतीयमानोऽर्थः। अलाश्रयकार्ये कर्तव्ये स्थानिवन्न भवतीति फलितम्। अलाश्रयेति सामान्यवचनात् अला विधिः, अलः परस्य विधिः, अलो विधिः?लि विधिश्चेति सर्वसंग्रहः। अला विधौ यथा-व्यूढोर स्केन। अत्र विसर्जनीयस्य सः" इति विसर्गस्थानिकस्य सकारस्य व#इसर्गत्वमाश्रित्य अड्व्यवाय इति णत्वं प्राप्तं न भवति। अलः परस्य विधौ यथा-द्यौः। "दिव औ"दिति वकारस्थानिकस्य औकारस्य स्थानिवद्भावेन हल्त्वात्ततः परस्य सोर्हल्ङ्यादिलोपः प्राप्तो न भवति। अलो विधौ यता द्युकामः। "दिव उ"दिति वकारस्थानिकस्य उकारस्य स्थानिवद्भावेन वकारत्वात् "लोपो व्योर्वली"ति लोपः प्राप्तो न भवति। अलि विधौ यथा-क इष्टः। यजेः क्तः। अत्र यकारस्थानिकसंप्रसारणस्य इकारहस्य स्थानिवद्भावेन हश्त्वात् हशि चे"त्युत्वं प्राप्तं न भवति। अल् चेह स्थानिभूतः, स्थान्यवयवश्च गृह्रते। ततश्च आदेशस्य स्थानिभूतो योऽल्, स्थान्यवयवश्च योऽल्, तदाश्रयविधौ न स्थानिवदिति फलति। तत्र स्थानीभूताऽल्विधौ व्यूढोरस्केनेत्युदाह्मतमेव। यथा वा-धिवि प्रीणन इति धातोर्लटि प्रथमपुरुषस्य झेरन्तादेशे "धिन्विकृण्व्योर च" इति विकरणस्य उकारस्य यणि वकारे सति तस्य स्थानिवद्भावेनार्धधातुकत्वात् स्वतो वलादित्वाच्च इडागमः प्राप्तो न भवति, वकारस्य स्थानिभूतो योऽल् उकारः, तदादेशं वकारमार्धधातुकत्वेनाश्रित्य प्रवर्तमानस्य इटः स्थान्यलाश्रयत्वात्। स्थान्यवयवालाश्रयविधौ यथा प्रतिदीव्य। इह क्त्वादेशस्य य इत्यस्य स्थानिवद्भावेन बलाद्यार्धधातुकत्वादिडागमः प्राप्तो न भवति। इडागमस्य वलादित्वविषये स्थान्यवयवभूतालाश्रयत्वात्। तदेतदाह-आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधाविति। स्थान्यलाश्रयेत्यत्र स्थानीति किम्?। रामाय। इह "सुपि चे"ति दीर्घस्य यञादिसुबाश्रयस्य

आदेशगतयकाररूपालाश्रयत्वेऽपि तस्मिन् कर्तव्ये यादेशस्य स्थानिवद्भावेन सुस्त्वं भवत्येव, दीर्घस्य आदेशगतयकाररूपालाश्रयत्वेऽपि स्थान्यलाश्रयत्वाऽभावात्। न च नीञ्धातोर्ण्बुलि अकादेशे वृद्धौ नै-अक इति स्थिते ऐकारस्य स्थानिवद्भावेन ईकारधर्मकत्वादायादेशो न स्यात्, ईकारस्य आयादेशाभावादिति वाच्यम्, इह हि स्थानिप्रयुक्तं यत् कार्यं शास्त्रीयं तदेवातिदिश्यते। ईकारस्य च आयादेशभावो न शास्त्रविहित इति न तस्य ईकारस्थानिके ऐकारे अतिदेश इत्यास्तां तावत्। अनेनेति। उदाह्यतेन स्थानिवत्सूत्रेण इह=सुध्य् इत्यत्र ईकारस्थानिकस्य यकारस्य स्थानिवद्भावेन अच्कार्यकारित्वमाश्रित्य अचि न द्वित्वमित्यर्थकेन अनचीत्यनेन धकारस्य द्वित्वनिषेधो न शङ्कनीय इत्यर्थः। कुत इत्यत आह--अनल्विधाविति तन्निषेधादिति। स्थानिवत्त्वनिषेधादित्यर्थः। यकारादेशस्थानीभूतो योऽल् ईकारः तद्गतमच्त्वं यकारे आश्रित्य प्रवर्तमानस्य यकारद्वित्वनिषेधस्य स्थान्यलाश्रयत्वादिति भावः।

तत्त्व-बोधिनी

स्थानिवदादेशोऽनल्विधौ ४४, १।१।५५

स्थानिवदादेशो। आदेशे कृते स्वरूपभेदात्स्थानिप्रयुक्तकार्याणप्रवृत्तावतिदेश आरभ्यते। "अस्तेर्भूः"। आर्धधातुके विवक्षिते धात्वादेशो धातुवत्। तेन "अचो य"-दित्यादिधातुप्रत्ययः-भव्यं बभूव। "किमः कः"। अङ्गादेशोऽङ्गवत्। तेन इनादेशदीर्घैस्वभावाः। केन काभ्यां कैः। आदेशग्रहणं किमर्थम्?, "स्थानिव"दित्येतावतैव संबन्धिशब्दमहिम्ना तल्लाभात्, यथा "पितृवदधीते" इत्युक्ते "पुत्र" इति गम्यते इति चेदत्रादुः,--द्विविध आदेशः,-प्रत्यक्ष आनुमानिकश्चेति। "अस्तेर्भूः" इत्यादिः प्रत्यक्षः। "तेस्तुः" इत्यादिस्त्वानुमानिकः। "एरुः" इत्यत्र हि इकारेणेकारान्तः स्थानी अनुमीयते, उकारेण चोकारान्त आदेशः। तथाच "तेस्तु"रिति फलितोऽर्थः, तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नत्वानुमानिकस्य। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः, तेन पचत्वित्यादेस्तिङ्न्तत्वात्पदसंज्ञा सिध्यतीति। ननु "एरु"-रित्यादि यथाश्रुतमेवास्तु, एकदेशविकृतस्याऽनन्यत्वात्पदत्वं भविष्यतीति चेन्नः, अर्थवत्येव स्थानादेशभावविश्रान्तेर्वाच्यत्वात्तस्यैवाऽत्र प्रसङ्गाऽसंभवात्। तथाहि-"षष्ठी स्थानेयोगे"त्युक्तम्। स्थानं च प्रसङ्गः। स चार्थवतः , अर्थप्रत्ययार्थं शब्दप्रयोगात्। यद्यपि च्लेः सिजादावसंभवीदं, तथापि सति संभवे अर्थप्रयुक्त एव प्रसङ्गो ग्राह्य इत्यनेनैवादेशग्रहणेन ज्ञाप्यते। उक्तं च--सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिने। एकदेशाविकारे हि नित्यत्वं नोपपद्यते"॥ इति पदमिहार्थवत्, पद्यतेऽनेनेति व्युत्पत्तेः। यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्ति स्तथापीह विकार एव नास्तीति तात्पर्यम्। एतच्च शब्दकौस्तुभे स्पष्टम्॥ अनल्विधाविति किम्?। यश्चाला विधिः, यश्चालः परस्य विधिः, यश्चालो विधिः, यश्चालि विधिस्तत्र मा भूत्। तत्राऽला विधौ यथा--व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य "अड्व्यवाये" इति णत्वं प्राप्तम्। अलः परस्य यथा--द्यौः, पन्थाः। इह हल्ङ्यादिलोपो न। अलो विधौ यथा--द्युकामः। लोपो व्योर्वली"ति लोपो न। न चोत्त्वविधिसामर्थ्याल्लोपोन भवेदिति शङ्क्यम् ; "द्युयान"मित्यादौ तस्य सावकाशत्वात्। अलि विधौ--यजेः क्तः। क इष्टः। "हशि चे"त्युत्वं न। न चेह स्थानिबद्भावेन जातेप्युत्वे आद्गुणेऽवादेशे च कृते "हलि सर्वेषा"मिति नित्यं लोपेन "क इष्ट" इति रूपं सिध्यत्येवेति वाच्यम् ; "कयिष्ट" इति रूपान्तराऽसिद्धिप्रसङ्गात्। सिद्धान्ते तु "भोभगोअघोअपूर्वस्ये"ति यस्य लोपविकल्पे "क इष्टः" "कयिष्ट" इति रूपद्वयमभ्युपगम्यते। अलं चेह स्थान्यवयव एव गृह्यते, तेन "रामाये"त्यादौ "सुपि चे"ति दीर्घः सिध्यति, तद्विधौ हि यञादित्वमाश्रितम्। यञ् चादेशावयवो न तु स्थान्यवयवः। तथा "अरुदिता"मित्यादौ "रुदादिभ्यः-" इति वलादिलक्षण इट् च सिध्यति। तदेतदाह्यन तु स्थान्यलाश्रय #इति। आश्रयणं चेह यथाकथञ्चिन्न तु प्राधान्येनैवेत्याग्रहः। तेन "प्रपठ()ए"त्यत्र वलादिलक्षण इण्न॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अचः ६।१ ५८ परस्मिन् ७।१ ५७ पूर्वविधौ ७।१ ५७ स्थानिवत् ० ५५ आदेशः १।१ ५५

समासः॥

पूर्वस्य विधिः, पूर्वविधिः, तस्मिन् पूर्वविधौ, षष्ठीतत्पुरुषः।

अर्थः॥

परस्मिन् इति निमित्त-सप्तमी। विधानं विधिः। परनिमित्तकः अजादेशः पूर्वविधौ कर्तव्ये स्थानिवत् भवति। पूर्वेण सूत्रेण अल्विधौ स्थानिवद्भावस्य निषेधः प्राप्नोति, अनेन सूत्रेण पुनः प्रतिप्रसूयते॥
काशिका-वृत्तिः
अचः परस्मिन् पूर्वविधौ १।१।५७

पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः। अल्विध्यर्थमिदमारभ्यते। आदेशः स्थानिवदिति वर्तते। अचः इति स्थानिनिर्देशः। परस्मिनिति निमित्तसप्तमी। पूर्वविधौ इति विषयसप्तमी। अजादेशः परनिमित्तकः पूर्वविदौ कर्तव्ये स्थानिवद् भवति। पटयति। अवधीत्। बहुखट्वकः। पटुमाचष्टे इति णिचिटिलोपे कृते तस्य स्थानिवद्भावातत उपधायाः ७।२।११६ इति वृद्धिर् न भवति। अवधीत् अतो लोपस्य स्थानिवद्भावदतो हलादेर् लघोः ७।२।७ इति हलन्तलक्षणा वृद्धिर् न भवति। बहुखट्वकः इति आपो ऽन्यतरस्याम् ७।४।१५ इति ह्रस्वस्य स्थानिवद्भावाद् ह्रस्वान्ते ऽन्त्यात् पूर्वम् ६।२।१७३ इति स्वरो न भवति। अचः इति किम्? प्रश्नः। आक्राष्टाम्। आगत्य। प्रश्नः इति प्रच्छेः नङ्प्रत्यये च्छ्Hवोः शूडनुनासिके च ६।४।१९ इति छकारस्य शकारः परनिमित्तकस् तुकि कर्तव्ये न स्थानिवद् भवति। आक्राष्टाम् इति झलो झलि ८।२।२६ इति सिचो लोपः परनिमित्तकः कृषेः षकारस्य षढोः कः सि ८।२।४१ इति ककारे कर्तव्ये न स्थानिवद् भवति। आगत्य इति वा ल्यपि ६।४।३८ इत्यनुनासिकलोपः परनिमित्तकः तुकि कर्तव्ये न स्थानिवद् भवति। परस्मिनिति किम्? युवजानिः वधूटीजानिः। वैयाघ्रपद्यः। आदीध्ये। युवजानिः इति जायायाः निङ् ५।४।१३४ न परनिमित्तकः, तेन यलोपे न स्थानिवद् भवति। वैयाघ्रपद्यः इति न परनिमित्तकः पादस्य अन्तलोपः पद्भावं न प्रतिबध्नाति। आदीध्ये इति दीधीङ उत्तमपुरुषैकवचने टेरेत्वस्यापरनिमित्तकत्वाद् यीवर्णयोर् दीधीवेव्योः ७।४।५३ इति लोपो न भवति। पूर्वविधौ इति किम्? हे गौः। बाभ्रवीयाः। नैधेयः। हे गौः इति वृद्धिरजादेशः सम्बुद्धिलोपे कर्तव्ये न स्थानिवद् भवति। बाभ्रवीयाः इति बाब्रव्यस्य अमी च्छात्राः इति वृद्धाच् छः ४।२।११३ इति छः। हलस् तद्धितस्य ६।४।१५० इति यकारलोपे कर्तव्ये अवादेशो न स्थानिवद् भवति। नैधेयः आतो लोप इटि च ६।४।६४ इत्याकारलोपः, इतश्च अनिञः ४।१।१२२ इति द्व्यज्लक्षणे प्रत्ययविधौ न स्थानिवद् भवति।
लघु-सिद्धान्त-कौमुदी
अचः परस्मिन् पूर्वविधौ ५६८, १।१।५६

परनिमित्तोऽजादेशः स्थानिवत्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये। इत्यल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। अवधीत्। अहनिष्यत्॥ यु मिश्राणामिश्रणयोः॥ ३॥
लघु-सिद्धान्त-कौमुदी
अचः परस्मिन्पूर्वविधौ ६९९, १।१।५६

अल्विध्यर्थमिदम्। परनिमित्तोऽजादेशः स्थानिवत् स्यात्स्थानि भूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये। इति स्थानिवत्वान्नोपधावृद्धिः। कथयति। अग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचकथत्॥ गण संख्याने॥ ३॥ गणयति॥

न्यासः

अचः परस्मिन् पूर्वविधौ॥ , १।१।५६

किमर्थमिदमुच्यते? अनल्विधौ स्थानिवद्भावः उक्तः, अल्विध्यर्थमिदम्। पटयतीत्यादौ "अत उपधायाः" ७।२।११६ इति वृद्धिरलाश्रया; अकारस्योपधाया अल्त्वात्। तस्मात् पूर्वेण न प्राप्नोतीत्येके एव परनिमित्तक एव पूर्वविधावेव कत्र्तव्ये स्थानिवद् भवतीति नियमार्थमित्यन्ये। "अच इति स्थानिनिर्देशः" इति। "अचः" इत्यनेन स्थानषष्ठ()न्ततां दर्शयति। "परस्मिन्निति सप्तमीति" इति। न परसप्तमी, परशब्देनैव परस्योक्तत्वादित्यभिप्रायः। " पूर्वविधौ" इति, "विषय" इति। प्रकृतत्वात् स्थानवद्भावस्येति गम्यते, पूर्वविधौ विषये स्थानिवद्भवति, नान्यस्मिन्नित्यर्थः। पूर्वस्य विधिः पूर्वविधिः। विधि- शब्दश्चायं कर्मसाधनः-- विधियत इति विधिः। भावसाधनो वा-- विधानं विधिरिति। कर्म- साधने ह्येतस्मिन् पूर्वस्येति शेषलक्षणा षष्ठी। पूर्वस्य व्यवस्थितस्य लब्धसत्ताक- स्य सम्बन्धिनि कार्ये कत्र्तव्य इत्यर्थः। भावसाधने तु "पूर्वस्य " इति कृद्योग- लक्षणा कर्मणि षष्ठी। पूर्वस्यापरिनिष्पन्नस्य विधाने कत्र्तव्य इत्यर्थः। पूर्वस्मिन् विधातव्य इति यावत्। पूर्वत्वं पुनरिहादेशापेक्षम्, अजपेक्षम्, निमित्तापेक्षं वा; एषामेवादेशा- दीनामिह सन्निधानात्। तत्रादेशः स्वरितत्वात् सन्निहितः, इतरयोस्त्वत्रैव सूत्र उपादानात्। ननु च त्रिष्वप्येषु दोषः, तत्कथमादेशाद्यपेक्षया पूर्वत्वं शक्यमाश्रयि- तुम्, आदेशापेक्षे हि पूर्वत्व आश्रीयमाणे "पटयति" इत्यादौ स्थानिवद्भावो न सिध्यति; लोपो हि तत्रादेशः, न च तेन पूर्वपरता सम्भवति; तस्याभावरूपत्वात्। स्यादेतत्- लोपस्य यः स्थानी तदपेक्षया पौर्वापर्यमस्तीतित तद्()द्वारेणादे- शापेक्षयाप्यौपचारिकं तद् भविष्यतीति वार्तमेतत्; बहुखद्()वकादिषु मुख्ये पौर्वा- पर्ये सत्यौपचारिककल्पनाया अयुक्तत्वात्। "व्यक्तिः पदार्थः" इत्यस्य दर्शनस्याश्रयणाददोषः। व्यक्तौ हि पदार्थे प्रतिलक्ष्यं लक्षणं प्रवत्र्तते। तत्र यदि पटयतीत्या-दिष्वौपचारिकत्वात् पौर्वापर्यस्य स्थानिवद्भावो न स्यात्, यदेतद्विषयं लक्षणं -तस्यानवकाशत्वाद् वैयथ्र्यं स्यात्, अयं तर्हि दोषः प्रथमस्तावत्पक्षोऽयुक्तः। द्वितीये तु काममेष दोषो न भवति। तथा हि -तत्र योऽचः पूर्वस्तस्य विधौ कत्र्तव्ये स्थानिवद्भवतीत्येषः सूत्रार्थः, इह च "न य्वाभ्यां पदान्ताभ्याम" ७।३।३ इति वचनात् प्रगेवैजागमाद् यणादेशेन भवितव्यम्। तेन नास्त्यैचोरजपेक्षं पूर्वत्वमिति न भवति स्थानिवद्भावः, तदभावादैचोरायावावपि न प्राप्नुतः; किन्त्वत्र "अचः" इत्येतदा- देशविशेषणार्थं षष्ठ()न्तं प्रतिज्ञातम्, न तु पञ्चम्यन्तम्। तदा चाचः तदा पञ्चम्य-न्तं सम्पद्यते। अयं तर्हि दोषः-- इह "तन्वन्ति" इत्युप्रत्ययस्य यणादेशकृत इट् प्राप्नोति, न ह्यत्राचः पूर्वस्य व्यवस्थितस्य किञ्चित्कार्यं विधीयते; यतो यणादेशस्य स्थानिवद्भावादिडागमो न स्यात्। तृतीये तु पक्षे यणादेश एव निमित्तात् पूर्वः। तस्य व्यवस्थितस्येटि विधातव्ये स्थानिवद्भावो लभ्यत इति न भवति तन्वन्तीत्यत्रेट् प्रसङ्गः; किन्त्वाद्ये पक्षे यो दोषः, स इहापि प्रसज्येत। "वैयाकरणः, सौव()आम्" इत्यत्रापि य्वौ निमित्तात् पूर्वौ भवत इति। ननु च निमित्तात् पूर्वस्य कार्ये विधातव्ये स्थानिवद्भाव उच्यते, न चेह निमित्तात् पूर्वयोव्र्योः किञ्चित् कार्यं विधीयते। न ह्यायावादेशौ य्वोः कार्यम्, किं तर्हि? ऐचः,नैतदस्ति; ऐचो हि यत् कार्यं तद् य्वोरपि सम्बन्धि भवत्येव, तयोस्तद्भक्तयोस्तदवयवभूतत्वात्। अत्रोच्यते-- आद्यन्तयोः पक्षयोर्यो दोष उक्तः, स तावन्न भवति; यस्माद् बहिरङ्गावैचौ, तद्धितश्रयत्वादङ्गाश्रयत्वाच्च; अन्तरङ्गावायावौ, तद्धितनिरपेक्षत्वाद् वर्णाश्रयत्वाच्च। "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।४२) इत्यसिद्धत्वादैचोरायावौ नभ भविष्यतः। इतरस्मिन्नपि पक्षे यो दोष उक्तः, सोऽपि न भवत्येव; तत्र कर्मसाधने सर्वमिष्टं न सिध्यतीति भावसाधनोप्याश्रीयते। तेन तन्वन्तीत्यत्रेट एवापरिनिष्पन्न- स्याचः पूर्वस्य विधाने कत्र्तव्ये स्थानिवद्भावः सिद्धो भवति। कर्मसाधनेऽप्यदोषः; यणादेश एवात्राचः पूर्वः, तस्य विधाने कत्र्तव्ये एव। न हि यणादेशात् पूर्वस्य व्यवस्थितस्य कस्यचिदिड् विधीयते, किं तर्हि? यणादेशस्यैव। भावसाधने तु तस्मिन्न

दोषः; यणादेशात् पूर्वस्यापरिनिष्पन्नस्येट एव विधानात्। तस्मात् तत्रापि पक्षे भावसाधन एव विधिशब्दोऽङ्गीकत्र्तव्यः। "पटयति" इति। "तत्करोति तदाचष्टे" इति णिच्, "णाविष्ठवत् प्रातिपदिकस्य" (वा।८१३)इति टिलोपः। ननु चात्र व्यवधानात् पूर्वत्वं न सम्भवति; नैष दोषः; व्यवहितेऽपि हि पूर्वशब्दो वत्र्तते, यथा-"मथुरायाः पूर्वं पाटलिपुत्रम्" इति। ननु च द्वितीया समर्थाण्णिजुत्पद्यते, तत्रान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां सत्यां जश्त्वे सति पडयतीति भवितव्यम्। टिलोपस्य स्थानिवद्भावाज्()जश्त्वं न भवतीति चेत्, न; जश्त्वविधौ स्थानिवद्भावप्रतिषेधात्, नैष दोषः; "तदाचष्टे" इत्यत्र हि तदिति न द्वितीयासमर्थादिति, कुतस्तर्हि? कर्मणि इति। कुत एतत्? अर्थनिर्देश- परत्वात्। एतदुक्तं भवति- कर्मसंज्ञकात् तदाचष्ट इत्यस्मिन्नर्थे णिज् भवतीति। तस्मादसुबन्धाण्णिजुत्पत्तेः पदसंज्ञाया अभावाज्()जश्त्वं न प्रवत्र्तते। "अवधीत्" इति। हन्तेर्लुङ्, "हनो वध लुङि" २।४।४२ इति वधशब्दोऽदन्त आदेशः, "अतो लोपः" ६।४।४८, "आर्धधातुकस्येट्" ७।२।३५, "अस्तिसिचोऽपृक्त" ७।३।९६ इतीट्,िट ईटि" ८।२।२८ इति सिचो लोपः। "हलन्तलक्षण" इति। "वदव्रज" ७।२।३ इत्यादेः सूत्राद्धल्ग्रहणानुवृत्तेः "अतो हलादेर्लघोः" ७।२।७ इति वृद्धिर्हलन्तलक्षणा। "बहुखट्()वकः" इति। ननु च "स्वरविधिं प्रति न स्थानिवद्भवति" इति प्रतिषेधं वक्ष्यति, अतः स्थानिवद्भावस्य प्राप्तिरेव नास्तीत्ययुक्तमेतदुदाहरणम्, नैतत्; विशेषे हि स प्रतिषेधः--स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद् भवतीति। न चायं लोपाजादेशः स्वरो न भवतीति खकाराकारस्योदात्तत्वं न भवति। "कपि पूर्वम्" ६।२।१७२ इत्युत्तर- पदान्तोदात्तत्वमेव भवति। "प्रश्नः" इति। "यजयाचयतवितच्छप्रच्छ" ३।३।९० इत्यादिना नङ। "तुकि न स्थानिवद्भवति" इति। तुकि कत्र्तव्ये न स्थानिवद्भवतीत्यर्थः। यदि हि स्याच् छकारमात्रस्य शादेशे कृते स्थानिवद्भावाद्विहितस्य तुकः श्रवणं स्यादित्येके, एतच्चायुक्तम्; अत्र ह्न्तरङ्गत्वात् "छे च" ६।१।७१ इति तुकैव प्राग् भवितव्यम्।न चात्रेद- मस्ति "वार्णादाङ्गं बलीयः" (व्या।परि।३९) इति, नानाश्रयत्वात। यत्र ह्नेकं निमित्तमाश्रित्ययुगपद् वार्णमाङ्गं च प्राप्नोति, तत्रेदमुपतिष्ठते, यता-- "इयाय" इति। अत्राकारमाश्रित्याभ्यासेकारस्य "इको यणचि" ६।१।७४ इति यण् प्राप्नोति, "अभ्यास- स्यासवण्र्ये" ६।४।७८ इतीयङ च। तत्र "वार्णादाङ्गं बलीयः" (व्या।परि।३९) इत्यस्योपस्थानादियङेव भवति। प्रश्न इत्यत्र तु शादेशमनुनासिकमाश्रयति, तुक् पुनश्छकारम्; अतो नानाश्रयत्वान्नोपतिष्ठते। तस्मात् तुकात्र भवितव्यमेव। अवश्यं चैतदेवं विज्ञेयम्; अन्यथा "च्छ्वोः शूडनुनासिके च" ६।४।१९ इत्यत्र यद्वक्ष्यति वृत्तिकारः-- "अन्तरङ्गत्वात् "छे च" ६।१।७१ इति तुकि कृते सतुक्कस्यायमादेशः" इति, तद्विरुध्यते। अन्ये तु व्याचक्षते--"च्छ्वोः शूडनुनासिके च" ६।४।१९ इति सूत्रे "सतुक्क- स्य च्छकारस्य निर्देशः" इत्येव केनचिदाचार्येण शिष्याः प्रतिपादिताः, केनचित्तु "तुग्विरहितस्य शुद्धस्य" इत्येवम्, उभयं चैतत् प्रमाणम्। द्वैतत्वे तत्राङ्गेन वा च्छ्वौ विशेष्येते, छकारवकाराभ्यां वाङ्गमिति। तत्राद्ये पक्षेऽङ्गस्य यश्छस्तस्य शादेश इति। वाक्यार्थः; सतुक्कस्य च स्थानित्वेनोपादानात्। अन्तरङ्गे तुकि कृते "नानार्थके अलोऽन्त्यविधिः" (व्या।प।६२) इति तदन्तविध्यभावात् समुदायस्यैवादेशो भवति। यदा शकारविधौ सतुक्कस्य च्छकारस्य निर्देशः, प्रश्न इत्येतत् तदानीमज्ग्रहण- स्याप्रत्युदाहरणमेव; तुकः पुनः प्रसङ्गाभावात्। यदा तु च्छकारवकाराभ्यामङ्गं विशेष्यते, तदा छकारान्तस्याङ्गस्य स्थानित्वम्। अस्मिन् पक्षे शविधौ शुद्ध एव छकार उपात्तो वेदितव्यः। अन्तरङ्गत्वात् तु पूर्वं तुकि कृते पश्चादलोऽन्त्यपरिभाषाया उपस्थानात् उपस्थानात् छकारमात्रस्य शकारः। तस्मिन् कृते निमित्ताभावात् तुको निवृत्तिः; यथा-- स्थातेत्यत्र षत्वनिवृत्तौ ष्टुत्वस्य। अत्र पक्षे प्रश्न इत्येतत् प्रत्युदाहरणमज्ग्रहणस्य। यद्यत्र स्थानिवद्भावः स्यात्, तुकः प्रत्यावृत्तिर्भवेत्; निमित्तसद्भावात्, यथा-- "प्रत्यष्ठात्" इत्यत्र ष्टुत्वस्य। "तुकि न स्थानिवद्भवति" इत्यस्यायमर्थः- योऽसौ निमित्ताभावान्निवृत्तस्तुगासीत्, तमेव पश्चात् प्रत्यावत्र्तमानं प्रति न स्थानिवद्भवतीति पुनः प्रत्यावृत्तिरेव। "पूर्वविधिः" इति। ननु च यद्यत्र तुकः प्रत्यावृत्तिः स्यान् नङो ङित्करणम-र्थकं स्यात्। तद्धि प्रच्छः प्रसारणार्थं वा विच्छेर्गुणप्रतिषेधार्थं वा क्रियते। तत्र प्रच्छेर्नङि सम्प्रसारणेन न भवितव्यम्; "प्रश्ने चासन्नकाले" ३।२।११७ इति निपातनात्। यदि च स्थानिवद्भावे सति तुकः प्रत्यावृत्तिः स्यात् ततो गुणप्रतिषेधार्तमपि स्यात्, अलघूपधत्वादेव गुणो न

भविष्यति, ततश्चानर्थकमेवैतत् स्यात्? नानर्थकम्; "अनित्यमागमशास्त्रम्" (व्या।प।९९) इति ज्ञापनार्थत्वात्। अनित्यत्वज्ञपाने त्वागमशासनस्य "स्नक्रमोरनात्मनेपदनिमित्ते" (७।२।३६) इत्यत्र यद्वक्ष्यति-- "क्रमेस्तु कर्तर्यात्मनेपदविषयादसत्यात्मनेपदे कृति प्रतिषेधो वक्तव्यः" इति, तन्न वक्तव्यं इति। "उछि उञ्छे" (धा।पा।२१५), "विछ गतौ" (धा।पा।१४२४), "सनाद्यन्ता धातवः" ३।१।३२ इत्येवमादयो निर्देशाश्चोपन्ना भवन्ति। "आक्राष्टाम्" इति। "कृष विलेखने" (धा।पा। ९९०) आङ्पूर्वाल्लुङ्; च्लिः, " स्पृशमृशकृषतृपदृपां सिज् वा" (वा।२०७) इत्युपसंख्यानात् क्सस्यापवादः पक्षे सिच्, ततस्ताम् "अनुदात्तस्य चदुपधस्यान्यतरस्याम्" ६।१।५८ इत्यमागमः, यणादेशः, "वदव्रजः" ७।२।३ इत्यादिना वृद्धिः। "वैयाघ्रपद्यः" इति। व्याघ्रस्यैव पादावस्येति बहुव्रीहिः। "पादस्य लोपोऽहस्त्यादिभ्यः" ५।४।१३८ इत्यन्तलोपः। व्याघ्रपादिति स्थिते गर्गादित्वाद् यञ्, " पादः पत्" ६।४।१३० इति पद्भावः। "आदीध्ये" इति। अदादित्वाच्छपो लुक्। अथात्र टेरेत्वात् प्रागेव कस्माल्लोपो न भवति? स्यात्, यदि "परस्मिन्" इत्युच्यमाने तु स्थानिवद्भावाभावात् कृते टेरेत्त्वे न प्राप्नोतीत्यनित्यो लोपः। टेरेत्वं तु कृताकृतप्रसङ्गित्वान्नित्यम्। तस्मात् तदेव पूर्वं भवति। "हे गौः"इति। "गोतो णित्" ७।१।९० इति णित्वात् सर्वनामस्थानस्य "अचो ञ्णिति" ७।२।११५ वृद्धिः। "सम्बुद्धिलोपे कत्र्तव्ये" इति। "एङ ह्रस्वात् सम्बुद्धेः" ६।१।६७ इत्यनेन। "बाभ्रव्यस्य" इति। बभ्व्रोरपत्यमिति "मधुबभ्व्रो- र्ब्राह्मणकौशिकयोः" ४।१।१०६ इति यञ्, "ओर्गुणः" ६।४।१४६ "वान्तो यि प्रत्यये" ६।१।७६ इति वान्तादेशः, आदिवृद्धिः, बाभ्रव्य इति स्थिते "वृद्धाच्छः" ४।२।११३ "यस्येति च" ६।४।१४८ इत्यकारलोपः। "अवादेशो न स्थानिवद्भवति" इति। ननु चासत्यपि स्थानिवद्भावे "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।परि।१२) इति न भवितव्यमेवात्र यलोपेन, तथा हि-- यकारादववादेशेनात्मलाभः प्रतिलब्धः इति नोत्सहते स तं बाधितुम्; नैतदस्ति; सङ्घातो ह्यत्र सन्निपातलक्षणः, नावयवो हल्; सत्यपि वा तस्य सन्निपातलक्षणत्वे न भवत्येव दोष-; अनित्यत्वात् सन्निपातलक्षणपरिभाषायाः। अनित्य- त्वं तु "न लोपः सुप्स्वर" ८।२।२ इत्यादौ सूत्रे ज्ञापयिष्यतते। "नैधेयः" इति। निपूर्वो डुधाञ् (धा।पा।१०९२), "उपसर्गे घोः किः" ३।३।९२, आतो लोपः,निधि इति स्थिते द्वयचः "इतश्चानिञः" ४।१।१२२ इति ढक्। ननु पूर्वस्माद् विधिः पूर्वविधिरिति पञ्चमीसमासस्याप्यभीष्टत्वात् पूर्वस्मादपि विधौ कत्र्तव्ये स्थानिवद्भावेन भाव्यम्, तथा हि "ठस्येकः" ७।३।५० इत्यत्र वक्ष्यति- "मथितं पण्यमस्य माथितिक इत्यत्र यस्येति लोपे कृते "इसुसुक्तान्तात्कः" ७।३।५१ इति स्थानिवद्भावादिकस्य कादेशः प्राप्तः; सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति,अकारलोपस्य स्थानि- वद्भावत्वात्; पूर्वस्मादपि विधौ स्थानिवद्भवति" इति। तदेवं यस्मात् पूर्वस्मादपि विधौ स्थानिवद्भावोऽनेन भवति, तस्मात् " हे गौः" इत्यादिष्वपि स्थानिवद्भावेन भवितव्यमेवेत्ययुक्तान्येतानि प्रत्युदारणानि, नैष दोषः; इत्यादिष्वपि स्थानिवद्भावेन भवितव्यमेवेत्ययुक्तान्येतानि प्रत्युदाहरणानि, नैष दोषः; पूर्वस्माद् विधौ कत्र्तव्येयः स्थानिवद्भावाः,तस्यानिवत्वात्। अत एव चानित्यत्वादप्रधानभूतोऽसाविति वृत्तावस्य सूत्रस्य पूर्वस्मादिति न प्रतिपादितस्तदेवा प्राधान्यस्य दर्शयितुम्। कुतः पुनस्तस्यानित्यत्वमवसितम्? "निष्ठायां सेटि" ६।४।५२ इत्यत्र सेड्ग्रहणात्।तदेवमर्थं क्रियते- इटि कृते णिलोपो यथा स्यादिति। यदि ह्यकृत एव तस्मिन् णिलोपः स्यात्, कारितमित्यत्रेडागमो न स्यात्; "एकाच" इति प्रतिषेधात्। तथा च तत्र वक्ष्यति-- " सेडिति किम? "संज्ञापितः पशुः" "सनीवन्तर्ध" ७।२।४९ इति ज्ञपेरिड् विकल्प्यते। "यस्य विभाषा" इति निष्ठायामिट्प्रतिषेधः। अथ पुनरेकाच इति तत्रानुवत्र्तते, तत्र निष्ठायाम् "अत्र भवितव्यमिडागमेन" इति। सेड्ग्रहणमनर्थकं स्यात्; तत् क्रियते कालावधारणार्थम्। इडागमे कृते णिलोपो यथा स्यात्" इति। अकृते त()स्मिष्टिलोपे सति कारितमित्यत्र "एकाच उपेदेशेऽनुदात्तात्" ७।२।१० इति प्रतिषेधः इटः प्रसज्येत। यदि च रपूर्वस्माद् विधौ कत्र्तव्ये नित्यं स्थानिवद्भावः स्यात्, णिलोपस्य स्थानिवद्भावे सत्यनेकाचत्वादिट्प्रतिषेधस्य प्रसङ्ग एव नास्तीति सेड्ग्रहणम् न कुर्यात्, कृतं च; ततोऽवसीयते-- "पूर्वस्माद् विधानित्यः स्थानि- वद्भावः" इति। तेन गौरित्यादिषु पूर्वस्माद् विधौ कत्र्तव्ये स्थानिवद्भावो न भवति। अथ विधिग्रहणं किमर्थम्, यावता पूर्वस्येत्येवं सिद्धम? तथा हि, कार्यापे- क्षया षष्ठी भविष्यति-पूर्वस्य विधौ कत्र्तव्य इति, नैतदस्ति;

असति हि विधिग्रहणे यदि पूर्वस्येत्युच्येत, पूर्वस्येत्युच्येत, पूर्वस्माद् विधौ स्थानिवद्भावो न स्यात्। अथ पूर्वस्मादित्युच्येत, पूर्वस्य विधौ न स्यात्। विधिग्रहणे सति षष्ठीसमासः पञ्चमीसमासश्च लभ्यत इति सर्वत्र सिध्यति। तस्मात् समासद्वयार्थं विधिग्रहणं कत्र्तव्यम्॥

बाल-मनोरमा

अचः परस्मिन्पूर्वविधौ ५२, १।१।५६

ननु सुध् य् इत्यत्र मास्तु स्थानिवदिति सूत्रेण स्थानिवद्भावः। तद्रुत्तरसूत्रेण तु स्थानिवत्त्वं स्यादेवेति शङ्कामुद्भावयिष्यंस्तथाविधमुत्तरसूत्रमाह-अचः परस्मिन्। स्थानिवत्सूत्रेणैव सिद्धे किमर्थमिदं सूत्रमित्यत आह-अल्विध्यर्थमिति। अलाश्रयविधावपि स्थानिवद्भावार्थमित्यर्थः। तेन वव्रश्चेति सिध्यति। "ओ व्रश्चू च्छेदने"। लिटि तिपि णलि द्वित्वम्। "लिठ()भ्यासस्ये"ति अभ्यचासे रेफस्य सम्प्रसारणम्। ऋकारः। पूर्वरूपम्। उरदत्वम्। रपरत्वम्। हलादिश्शेषः। तत्राभ्यासे वकारस्य पुनः सम्प्रसारणं न, ञकारस्थानिकस्य उरदत्वस्य स्थानिवद्भावेन सम्प्रसारणतया "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधात्। पूर्वसूत्रेण त्वत्र स्थानिवद्भावो न सम्भवति--सम्प्रसारणनिषेधस्य स्थान्यलाश्रयत्वादिति भावः। पूर्वसूत्रादिह स्थानिवदादेश इत्यनुवर्तते। अच इत्येतदादेश इत्यनेनान्वेति-अच आदेश इति। परहस्मिन्निति सति सप्तमी। ततश्च परनिमित्तक इति लभ्यते। तच्चादेशविशेषणम्। तदाह--परनिमित्तोऽजादेशैति। विधीयत इति बिधिः=कार्यम्। पूर्वस्य विधिः पूर्वविधिः। पूर्वत्वं च यद्यपि सावधिकम्, त्रयं चात्र संनिहितं-स्थानी आदेशः परनिमित्तं चेति। तत्र स्थानी तावन्नावधिर्भवितुमर्हति, तस्यादेशेनापहारात्। नाप्यादेशः, नापि परनिमित्तम्, वैयाकरण इत्यत्र इकारस्थानिकयणादेशात्तत्परनिमित्तादाकाराच्च पूर्वस्य न य्वाभ्यामित्यैकारस्य आयटादेशे कर्तव्ये यणादेशस्य स्थानिवद्भावेनाऽच्त्वापत्तेः। तथापि स्थान्यपेक्षयैवाऽत्र पूर्वत्वं विवक्षितं, स्थानिनि आदेशे नापह्नतत्वेऽपि भूतपूर्वगत्या तत्पूर्वत्वस्य सम्भवात्। तदेतदाह--स्थानिभूतादचः पूर्वत्वेनेत्यादि। अत्र स्थानिनि सति यद्भवति तदादेशे।ञपि भवति, यन्न भवति तदादेसेऽपि न भवतीत्येवमशास्त्रीयस्यापि कार्याऽभावस्य अतिदेशो भवति। तत्राद्ये वव्रश्चेत्युदाह्रतमेव, तत्र "न सम्प्रसारणे सम्प्रसारण"मिति निषेधकार्यस्य शास्त्रीयत्वात्। द्वितीये तु गणयतीत्युदाहरणम्। गण संख्यान इति चुरादौ अदन्तधातुः। तस्माण्णिच्। अतो लोपः। तिप् शप् णेर्गुणः, अयादेशः। गणयतीति रूपम्। अत्र णिचि परत उपधाभूतस्य गकारादकारस्य "अत उपधायाः" इति न भवति, प्रकृतसूत्रेणाऽल्लोपस्य स्थानिवद्भावात्। अकारे स्थानिनि सति गकारादकारस्य उपधात्वभङ्गादुपधावृद्धिर्न प्रवृत्तिमर्हति। वृद्ध्यभावस्याशास्त्रीयत्वेऽपि अल्लोपे अतिदेशात्। न चात्र गकारादकारस्य उपधात्वभङ्गादुपधावृद्धिर्न प्रवृत्तिमर्हति। वृद्ध्य भावस्याशास्त्रीयत्वेऽपि अल्लोपे अतिदेशात्। न चात्र गकारादकारस्य स्थान्यकारान्न पूर्वत्वम्, णकारेण व्यवधानादिति वाच्यम्, पूर्वत्वं ह्रत्र व्यवहिताऽव्यवहितसाधारणम्, उत्तरसूत्रे स्वरे निषेधाल्लिङ्गात्। तच्च तत्रैव स्पष्टीभविष्यतीत्यलम्। इति यण इति। अनेन सूत्रेण सुध्? य् इत्यत्र धकारस्य द्वित्वनिषेधे कर्तव्ये ईकारस्थानिकस्य यकारस्य स्थानिद्भावे प्राप्ते तत्प्रतिषेधसूत्रमारभ्यत इत्यर्थः।

तत्त्व-बोधिनी

अचः परस्मिन्पूर्वविधौ ४५, १।१।५६

अचः परस्मिन्पूर्वविधौ। अचः किम्?। आगत्य। "वा ल्यपी"त्यनुनासिकलोपस्तुकि कर्तव्ये न स्थानिवत्। परस्मिन् किम्?। आदीध्ये। नित्यत्वादिट्, एत्वम्, तच्च न परनिमित्तम्, तेन "यीवर्णयो"रिति लोपे कर्त्तव्ये तन्न स्थानिवत्। पूर्वविधौ इति किम्?, नैधेयः। निपूर्वाद्धाञः "उपसर्गे घोः किः" "आतो लोपः", "द्व्यचः" "इतश्चानिञः" इति ढक्। आकारस्य स्थानिवत्त्वे तु त्र्यच्त्वव्यपदेशेन द्व्यच्त्वं विरुद्धत्वाद्बाध्येत। नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते। नन्वेवमपि

विधिग्रहणं व्यर्थम्, पूर्वस्येति षष्ट()आ कार्ये कर्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेन्नः, पूर्वस्य विधिः, पूर्वस्माद्विधिरिति समासद्वयलाभार्थं विधिग्रहणात्। यद्यप्यत्र पञ्चमीसमासपक्षो मूले नोक्तः, तथापि "पूर्वस्मादपि विधौ स्थानिवद्भाव" इति पक्षे तु "अड्व्यवाये" इत्येवात्र णत्वमिति "पद्द"न्नादिप्रघट्टके स्वीकृतः सः। अल्विध्यर्थमिदमिति। तेन "वव्रश्चे"त्यत्र वस्य सम्प्रसारणं न, उरदत्त्वस्य स्थानिवत्त्वेन सम्प्रसारणतया "न सम्प्रसारणे" इति निषेधात्। न चोरदत्त्वं परनिमित्तं नेति वाच्यम्, अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात्। पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षस्य तु प्रयोजनम्-तन्वन्ति, तन्वते। इह यणादेशस्य स्थानिवद्भावान्नेट्। अत्र हि "तनित्यङ्ग"नेमित्तम्, तच्च स्थानिभूतादुकारात्पूर्वमिति। नन्विदं न प्रयोजनम्, बहिरङ्गस्य यणोऽसिद्धत्वादिडागमस्यात्राऽप्रसक्तेः। न च नाजानन्तर्ये" इति निषेधः। "यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्य"मिति हरदत्तादिमते निषेधप्रवृत्तावपि "उत्तरकार्ये यत्राच आनन्तर्यमाश्रितं तत्र बहिष्ट्वप्रक्लृप्तिर्ने"ति कैयटमते तदभावात्। न चैवमपीपचन्निति प्रयोजनं भवत्येव, इह हि अन्तेरकारस्य चङकारस्य च "अतो गुणे" इति पररूपे तस्य च परादिवद्भावाज्झिग्रहणेन ग्रहणे सति "सिजभ्यस्ते"ति जुस् प्राप्नोति, णिलोपस्य एकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यम्, वेत्तेर्हि लङयेवानन्तरो झिः सम्भवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्। न च सिचा साहचर्याल्लुङ एव ग्रहणमस्त्विवति शङ्क्यम् , "विप्रतिषेधे पर"मिति परसाहचर्यस्य वलीयस्त्वात्। न चैवमपि "अदभ्यस्ता"दित्यदादेशस्य निवारणाय पञ्चमीसमासपक्ष आवश्यक इति वाच्यम्, चङकारस्य अन्तेरकारेण च "अतो गुणे" इति पररूपे कृते झस्याभावददादेशाप्रसक्तेः। अत्र त्वेकादेशस्य परादिवद्भावाज्झग्रहणेन ग्रहणं न भवति; अल्विधौ अन्तादिवद्भावाऽप्रवृत्तेः। अन्यथा "अयजे इन्द्र"मित्यादौ सवर्णदीर्घो दुर्वार एव स्यात्। अस्तु वा परादिवद्भावस्तथापि झकारस्य अत्स्यादित्यदादेशे कर्तव्येऽन्तादेशो न स्थानिवत्, अल्विधित्वात्। तस्मात्पञ्चमीसमासपक्षो निरर्थक एवेति चेदत्राहुः-पञ्चमीसमासप्रयोजनतया अरीतचन्नित्युदाहरतो भगवतस्तु नेह साहचर्यं नियामकतया संमतम्। "द्वित्रिश्चतुर्-" इति सूत्रे कृत्वोर्थग्रहणाज्ज्ञापकात्साहचर्यं न सर्वत्राश्रीयते। एवं च भवतेर्यङ्लुकि अब्यस्ताश्रयस्य जुसः प्रवृत्त्या "अबोभूवु"रिति रूपं सिध्यति, "आत" इति नियमस्य सिचः परत्वमाश्रित्य यो जुस्प्राप्तस्तन्मात्रपरतया माधवादिभिर्व्याख्यातत्वात्। अत एव "अभ्यस्ताश्रयो जुस्, नित्यत्वाद्वुक्, अबोभूवुः", इति मूले यङ्लुङन्तेषूक्तम्। तथा चाऽपीपचन्नित्येतत्सिद्धये पञ्चमीसमास पक्ष आश्रयणीय इति। अन्येत्वाहुः-पञ्चमीसमासपक्षप्रयोजनतया भाष्ये "बेभिदिता" "माथितिकः" इत्यस्याप्युदाह्रतत्वान्न तस्य वैयर्थ्यशङ्का कार्या। यद्यपि यङोऽकारलोपस्य स्थानिवद्भावं विनापि "एकाच उपदेशेऽनुदात्ता"दित्यत्र विहितविशेषणाश्रयणादेव इण्निषेधाप्रवृत्तौ भिदेर्यङन्तातृचि"बेभिदिते"ति रूपं सुसाधम्, तथापि "माथितिक" इत्यादिसिध्यर्थं स पक्षोऽभ्युपगन्तव्यः। न च मथितं पण्यमस्य माथितिक इत्यत्रापि "तदस्य पण्य"मिति ठकि इकादेशे च कृते "यस्येति चे"ति लोपात् "इसुसुक्तान्तात्" इति इकः स्थाने प्रसज्यमानो यः कादेशः सोऽप्यल्लोपस्य स्थानिवद्भावं विनैव सुपरिहरः,, "ठस्येकः" इत्यत्र "स्थान्यादेशयोरकार उच्चारणार्थः" इत्यभ्युपगमे अल्विधित्वेन स्थानिवद्भावाऽप्रवृत्त्या ठस्थानिक इकादेशष्ठो न भवतीति कादेशाऽप्रसक्तेर्माथितिक इति रूपसिद्धौ किमनेन पञ्चमीसमासपक्षाश्रयणेनेति वाच्यम्, मथितयते क्विपि टिलोपाणिलोपयोर्वेरपृक्तलोपे च-मथित्, तेन चरति माथितिक इत्यत्र "चरति" इति ठकि तस्येकादेशसिद्धये तत्पक्षस्यावश्यकत्वात्। न ह्यत्र स्थानिवद्भावं विनापि इकादेशापवादः कादेशः सुपरिहारः, नाप्येतादृशकल्पनायां मानाऽभावः शङ्कयः, "माथितिक" इति भाष्योदाहरणस्यैव मानत्वादिति। स्यादेतत्,-पूर्वत्वस्य सावधित्वेन संनिहतस्यैवावधित्वमुचितं, संनिहितं चेह त्रयं,--स्थानी आदेशो निमित्तं च, तत्र तावत्स्थानी नाऽवधिः। तस्यादेशेनापहारात्। नाप्यादेशनिमित्ते, "वैयाकरण" इत्यत्रैकारस्यायादेशापत्तेरित्याशङ्कायाह-अचः पूर्वत्वेन दृष्टस्येति। पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ७।३ अचः ६।१ ५६ परस्मिन् ७।१ ५६ पूर्वविधौ ७।१ ५६ स्थानिवत् ० ५५ आदेशः १।१ ५५

समासः॥

पदे अन्तः पदान्तः, सप्तमीतत्पुरुषः। पदान्तश्च द्विर्वचनं च, वरे च यलोपश्च, स्वरश्च, सवर्णश्च, अनुस्वारश्च, दीर्घश्च् जश् च, चर् च, पदान्तद्विर्वचन॰चरः, एतेषां विधयः तेषु पदान्तद्विर्वचन॰विधिशु, द्वन्द्वगर्भः षष्ठीतत्पुरुषः।

अर्थः॥

पदान्त-द्विर्वचन-वरे-यलोप-स्वर-सवर्ण-अनुस्वार-दीर्घ-जश्-चर् इत्येतेषु विधिषु परनिमित्तकः अजादेशः पूर्वविधौ कर्तव्ये स्थानिवत् न भवति।

उदाहरणम्॥

पदान्तविधौ - कौ स्तः, यौ स्तः। तानि सन्ति यानि सन्ति। द्विर्वचनविधौ - दद्ध्यत्र, मद्ध्वत्र। वरेविधौ - अप्सु यायावरः प्रवपेत पिण्डान्। यलोपविधौ - कण्डूतिः। स्वरविधौ - चिकीर्षकः, जिहीर्षकः। सवर्णविधौ - शिण्ढि, पिण्ढि। अनुस्वारविधौ - शिंषन्ति, पिंषन्ति। दीर्घविधौ - प्रतिदीव्ना, प्रतिदीव्ने। जश्विधौ - सग्धिश्च मे सपीतिश्च मे, बब्धां ते हरी धानाः। चर्विधौ - जक्षतुः जक्षुः अक्षन्नमीमदन्त पितरः।
काशिका-वृत्तिः
न पदान्तद्विर्वचनवरेयलोपस्वरसवर्ण। अनुस्वारदीर्घजश्चर्विधिषु १।१।५८

पूर्वेण अतिप्रसक्तः स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते। पदान्तविधिं प्रत्यजादेशो न स्थानिवद् भवति। कौ स्तः। यौ स्तः। तानि सन्ति। यनि सन्ति। श्नसोरल्लोपः क्ङिति सार्वधातुके इति परनिमित्तकः, स पूर्वविधावावादेशे यणादेशे च कर्तव्ये स्थानिवत् स्यात्, अस्माद् वचनान् न भवति। द्विर्वचनविधिः द्विर्वचनविधिं प्रति न स्थानिवद् भवति। दद्ध्यत्र। मद्ध्वत्र। यणादेशः परनिमित्तकः, तस्य स्थानिवद्भावातनचि च ८।४।४६ इति धकारस्य द्विर्वचनं न स्यादस्माद् वचनाद् भवति। वरेविधिः वरे यो ऽजादेशः स पूर्वविधिं प्रति न स्थानिवद् भवति। अप्सु यायावरः प्रवपेत पिण्डान्। यातेः यङन्तात् यश्च यङः ३।२।१७६ इति वरचि कृते अतो लोपः ६।४।४८ परनिमित्तकः, तस्य स्थानिवत्त्वादतो लोप इटि च ६।४।६४ इत्याकारलोपः स्याद्, अस्माद् वचनान् न भवति। यलोपविधिः यलोपविधिं प्रत्यजादेशो न स्थानिवद् भवति। कण्डूतिः। कण्डूयतेः क्तिनि कृते, अतो लोपः परनिमित्तकः, लोपो व्योर् वलि ६।१।६४ इति यलोपे स्थानिवत् स्यादस्माद् वचनान् न भवति। स्वरविधिः स्वरविधिं प्रति अजादेशो न स्थानिवद् भवति। चिकीर्षकः। जिहीर्षकः ण्वुलि कृते अतो लोपः परनिमित्तकः, लिति ६।१।१८७ प्रत्ययात् पूर्वम् उदात्तम्, इति स्वरे कर्तव्ये न स्थानिवद् भवति इति। सवर्णविधिः सवर्णविधिं प्रति अजादेशो न स्थानिवद् भवति। शिण्ढि। पिण्ढि। शिषेः पिषेश्च लोण्मध्यमपुरुषैकवचने रुद्ादिभ्यः श्नम् ३।१।७८। हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु, श्नसोरल्लोपः क्ङिति सार्वधातुके परनिमित्तकः, अनुस्वारस्य ययि परसवर्णे कर्तव्ये न स्थानिवद् भवति। अनुस्वारविधिः अनुस्वारविधिं प्रति अजादेशो न स्थानिवद् भवति। शिंषन्ति। पिंषन्ति। नश्च अपदान्तस्य झलि ८।३।२४ इति अनुस्वारे कर्तव्ये श्नसोरल्लोपः न स्थानिवद् भवति। दीर्घविधिः दीर्घविधिं प्रति अजादेशो न स्थानिवद् भवति। प्रतिदीव्ना। प्रतिदीव्ने। प्रतिदिवनित्येतस्य भस्य ६।४।१२९ इत्यधिकृत्य तृतीयैकवचने

चतुर्थ्येकवचने च अल्लोपो ऽनः ६।४।१३४ इत्यकारलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद् हलि च ८।२।७७ इति दीर्घत्वं न स्यात्, न ह्ययं वकारो हल्परः इति, अस्माद् वचनाद् भवति। जश्विधिः जश्विधिं प्रत्यजादेशो न स्थानिवद् भवति। सग्धिश्च मे सपीतिश्च मे। बब्धां ते हरी धानाः। अदेः क्तिनि बहुलं छन्दसि २।४।३९ इति घस्लाऽदेशः। घसिभसोर् हलि च ६।४।१०० इत्युपधलोपः। झलो जह्लि ८।२।२६ इति सकारलोपः। झषस् तथोर् धो ऽधः ८।२।४० इति धत्वम्। उपधालोपस्य स्थानिवत्तवात् झलां जस् झसि ८।४।५२ इति घकारस्य जश्त्वं न स्यात्, अस्माद् वचनाद् भवति। समना ग्धिः। समानस्य सभावः। सग्धिः। बब्धाम् इति भसेर्लोड्द्विवचने शपः स्लुः, द्विर्वचनम्, अभ्यासकार्यम्, घसिभसोर् हलि च ६।४।१०० इति उपधालोपः, झलो झलि ८।२।२६ इत् सकारलोपः, झषस् तथोर् धो ऽधः ८।२।४० इति धत्वम्। उपधलोपस्य स्थानिवत्त्वात् झलाम् जश् झशि ८।४।५२ इति जश्त्वं न स्यात्, अस्माद् वचनाद् भवति। चर्विधिः चर्विधिं प्रति अजादेशो न स्थानिवद् भवति। जक्षतुः। जक्षुः। अक्षन् पितरो ऽमीमदन्त पितरः। लिड्द्विवचनबहुवचनयोरदेर् घस्लाऽदेशः। गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८ इति उपधालोपः, द्विर्वचनम्, अभ्यासकार्यम्। तत्र उपधालोपस्य स्थानिवत्त्वात् खरि च ८।४।५४ इति घकारस्य चर्त्वं न स्याद्, अस्माद् वचनाद् भवति। शासिवसिघसीनां च ८।३।६० इति शत्वम्। अक्षनिति अदेः लुङ् बहुवचने घस्लाऽदेशः, च्लेरागतस्य मन्त्रे घसह्वर २।४।८० इति लुक्। गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८ इत्युपधालोपः, तस्य स्थानिवत्त्वात् खरि च ८।४।५४ इति चर्त्वं न स्यात्, अस्माद् वचनाद् भवति। स्वरदीर्घयलोपेशु लोपाजादेशो न स्थानिवद् भवति। अन्यत्र स्थानिवदेव। तेन बहुखट्वकह्, किर्योः, गिर्योः, वाय्वोः इति स्थानिवत्त्वात् स्वरदीर्घयलोपा न भवन्ति।

न्यासः

न पदानतद्विर्वचनरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु। , १।१।५७

अत्रापि विधिशब्दो भावसाधनः कर्मसाधनश्च। स च प्रत्येकमभिसम्बध्यते। तत्र यथायोगं क्वचित् भावसाधन आश्रीयते, क्वचित् कर्मसाधनः। तत्र द्विर्वचनविधौ भावसाधनः, तत्र हि तदेव विधातव्यम्, न हि तस्यावस्थितस्य किञ्चित् कार्यम्। अन्यत्र तु कर्मसाधनः। तत्र हि व्यवस्थितस्य पदान्तादेः कार्यान्तरविधानात्। "कौ स्तः, यौ स्तः" इति। अस्तेर्लट्, तस्, अदादित्वाच्छपो लुक्, पूर्वविधा-वावादेशे यणादेशे च कत्र्तव्ये स्थानिवत् स्यादिति। कथं पुनः स्थानिवत् स्यात्, यावता पदसंस्कारायैव प्रयुक्तत्वाद् व्याकरणस्य? "स्तः" इत्यादिकं पदं पदान्तरनिर- पेक्षमेव संस्क्रियते, अनादिष्टादचो यः पूर्वः, तस्य विधिं प्रति स्थानिवद्भावेन भवितव्यम्। न चायं प्रकारः पदानतरनिरपेक्षे पदसंस्कारे सम्भवति; "स्तः" इत्यादिके पदे संस्क्रियमाणे कावित्यादेः पदान्तररस्यासन्निधानात्। किं पुनरिदं राजशासनम्-- पदसंस्कारायैव शब्दानुशासनं कत्र्तव्यमिति? अथ शास्त्रकारस्यैवायमभिप्रायः? इति चेत्, न; शास्त्रकारेण दि "युष्मद्यपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" १।४।१०४इति युष्मदाद्युपपदे मध्यमादिपुरुषविधानाद् वाक्यसंस्कारप्रयुक्तमपि शास्त्रमेतदिति सूचितम्। अत्र "कौ" इत्यादिकं पदं प्रागेव व्यवस्थाप्य "स्तः" इत्यादेः पदस्य संस्कारे क्रियमाणेऽनादिष्टावचः पूर्व औकारादिर्भवतीति स्थानिवद्भावः स्यात्। अतः प्रतिषेध उच्यते। ननु च "दध्यत्र" इत्येवमादौ" प्रतिषिद्धेऽपि स्थानिवद्भावे बहिरङ्गस्य यणादेशस्यासिद्धत्वादन्तरङ्गं द्वर्वचनं न प्राप्नोति। तत् किमित्येवमाह-- "अस्माद्वच- नात् भवति" इति। न च शक्यं वक्तुम्--" स्थानिवद्भावप्रतिषेधात् "असिद्धं बहिरङ्गम्"(व्या।प।४२) इत्येषा न प्रवत्र्तते" इति। यत्रोभयमेकपदाश्रयम्-- "पट्व्यौ पट्व्यः शुच्यौ शुच्यः" इत्येवमादौ,तत्र स्थानिवद्भावप्रतिषेधस्यार्थवत्त्वान्()नैष दोषः। द्विर्वचनमेव बहिरङ्गम्; बह्वपेक्षत्वात्। तथा ह्यच उत्तरस्य योरऽनचीति च त्रितयं तदपेक्षते। यणादेशस्त्विकोऽचीति द्वयमेव। "वरे" इति। ननु चात्र समासे सति सप्तम्या लुका भवितव्यम्। तत् कथं वरे इति निर्देशः? अत एव निपातनादलुगित्यदोषः। अन्ये त्वीकारप्रश्लेषोऽत्रेति वर्णयन्ति। एवं च सम्बन्धं कुर्वन्ति--"वरे योऽजादेशस्तस्य विधिं प्रति न स्थानिवत्, ईविधिं च प्रति न स्थानवत्" इति। तेनामलक्याः फलं विकार इति नित्यं वृद्धशरादिभ्यः" ४।३।१४२

इति मयट्, तस्य "फले लुक्" ४।३।१६१ इति लुक्, अतः "लुक् तद्धितलुकि" १।२।४९ गौरादिलक्षणस्य ङीषो लुकि कृते तस्य स्थानिवद्भावात् " यस्येति च" ६।४।१४८ इति लोपः प्राप्नोति। ईकारे परतो यो विधिस्तं प्रति स्थानिवद्भावप्रतिषेधान्न भवति। ननु चाजादेशः परनिमित्तकः लोपः पूर्वविधौ स्थानिवद्भवतीत्यु- च्यते, न च लुका पौर्वापर्यमस्तीत्यत एव स्थानिवद्भावो न भविष्यति? तदप्रयोजनमीकार- प्रश्लेषस्य। लोपेनापि तर्हि पौर्वापर्यं नास्तीति पटयतीत्यादावपि स्थानिवद्भावो न स्यात्। अथ तत्र स्थानिद्वारकं पौर्वापर्यं सम्भवति, इहापि तथा स्यात्। ये त्वीकार- प्रश्लेषं नेच्छन्ति, त आयलक्याः फलं विकार आमलकमित्येतदर्थं नेति योगविभागं कुर्वन्ति। "यायावरः" इति। अत्यर्थं यातीति "धातोरेकाचः" ३।१।२२ इत्यादिना यङ, द्विर्वचनम्, अभ्यासस्य ह्रस्वः, "दीर्घोऽकितः" ७।४।८३ इति दीर्घः, ततो वरच्च, अतो लोपे कृते "लोपो व्योर्वलि" ६।१।६४ इति यकारलोपः। "अतो लोपः परनिमित्तकः" इति।आर्धधातुके परतो विधानात्। यद्यतो लोपः परनिमित्तकः, ततः "अचो यत्" ३।१।९७ इत्यत्र "अज्()ग्रहणं किम्, यावता हलन्ताण्ण्यतं वक्ष्यति" इति चोद्यं समुत्थाप्य " अजन्तभूतपूर्वावपि यथा स्यात्--- दित्स्यं धित्स्यम्" इति यद् वक्ष्यति तद् विरुध्यते; न हि परनिमित्तकेऽतो लोपेऽजन्तभूतपूर्वाद् यतो विधिः सम्भवति, प्राक्कृदुत्प- त्तेरतो लोपस्याभावात्, अभावस्तु परस्य निमित्तस्याभावात्? पक्षे भेदादविरोधः। तत्र ह्यार्धधातुक इति वत्र्तते। "आर्धधातुके" इति विषयसप्तमी चैषा, परसप्तमी चेति पक्ष-द्वयम्; आर्धधातुकसमान्यविवक्षायां सामान्येन पौर्वापर्यं न सम्भवतीति विषयसप्तमी भवति आर्धधातुकव्यक्तिविवक्षायां तु व्यक्तेः पौर्वापर्यं सम्भवतीति परसप्तमी। यदा तु व्यक्तिद्वारकं सामान्यस्य पौर्वापर्यं विवक्ष्यते; तदापि परसप्तम्येव। तत्राद्ये पक्ष आर्धधातुके विषयभूते प्रागेव यदुत्पत्तेरतो लोपो भवति, इतरत्र तु तस्मिन्नुत्पन्ने। तत्र "अचो यत्" ३।१।९७ इत्यत्र यदज्ग्रहणस्य प्रयोजनं वक्ष्यति, तत् पूर्वं पक्षमाश्रित्य। यत् पुनरिहातो लोपः परनिमित्तक इत्युक्तम्, तदितरं पक्षम्। तस्माद् विषयभेदादविरोधः। परसप्तमीपक्षे तु तत्राज्ग्रहणं विस्पष्टार्थमेव वेदितव्यम्। कथं पुनर्ज्ञायते परसप्तमीपक्षोऽपि तत्राभिमत इति? "अनुदात्तेतश्च हलादेः" ३।२।१४९ इत्यादिग्रहणात्। तद्ध्येवमर्थं क्रियते-- हलन्तादित्येवं मा विज्ञायीति। एवं हि विज्ञायमाने जुगुप्सनः, मीमांसनः इत्यत्र युज् न स्यात्; अजन्त- त्वात्। यदि च "आर्धधातुके" इति विषयसप्तम्येवैषाभिमता स्यात्, न परसप्तमीतदाऽऽदिग्रहणमनर्थकं स्यात्; आर्धधातुके विषयेऽकारलोपे कृते जुगुप्सतिमीमांसत्योरपि हलन्तत्वात्। तस्मादादिग्रहणाद् विज्ञायते-- परसप्तमीपक्षोऽपि तत्राभीष्ट इति। विषयसप्तमीपक्षे तु तत्रादिग्रहणं विस्पष्टार्थमेव द्रष्टव्यम्। "कण्डूतिः" इति। "कण्ड्वादिभ्यो यक्" ३।१।२७ "स्त्रियां क्तिन्" ३।३।९४। "चिकीर्षकः, जिहीर्षकः" इति। चिकीर्षजिहीर्षशब्दाभ्यां ण्वुल्। "शिशेः, पिषेश्च" इति। "शिष्लृ विशेषणे" (धा।पा।१४५२)"पिष्लृ संचूर्णने" (धा।पा।१४५३)। हित्वधित्व-ष्टुत्वजश्त्वेष्विति। "सेह्रपिच्च" ३।४।८७ इति हेरादेशे कृते "हुझल्भ्यो हेर्धिः" ६।४।१०१ ति धिरादेशः। "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्, "झलां जश् झशि" ८।४।५२ इति जश्त्वम्। ननु चात्र स्थानिवद्भावस्य प्राप्तिरेव नास्ति; यो ह्यनादिष्टादचः पूर्वस्तस्य विधौ स्थानिवद्भवतीत्युच्यते, न चामानादिष्टादचः पूर्वः, तत् किं प्रतिषेधेन? नैष दोषः; स्थानिनो नाकरस्याऽनादिष्टाजपेक्षं पूर्वत्वम- स्तीति तदादेशोऽप्यनुस्वारः स्थानिवद्भावादनादिष्टादचः पूर्व इति लभ्यते। "शिषन्ति" इत्यादि। किमर्थं पुनरुदाहरणान्तरोपन्यासः, यावता शिण्ढीत्याद्य-न्तरोक्तमेवेदं युक्तमुदाहरण्? एवं मन्यते-- यदि तदेवोदाह्रियते तदा यत्र परसवर्ण- स्तत्रानुस्वारेण भवितव्यम्,तत्रैव हि स विधीयते; ततश्च नान्तरीयकत्वात् परसवर्ण- विधौ स्थानिवद्भावप्रतिषेधेऽनुस्वारविधावपि स्थानिवद्भावप्रतिषेधः कृत एव, ततोऽ- नुस्वारग्रहणं पृथङ न कत्र्तव्यमिति कस्यचिद् भ्रान्तिः स्यात्। तस्माद् यत्र परसवर्णो न सम्भवति, तदेवोदाहरणं युक्तमिति। "प्रतिदिव्ना" इति। दिवेः "कनिन्युवृषि" (द।उ।६।५१) इत्यादिना कनिन् प्रत्यये रूपम्। "हलि च" इति। "उपधायाञ्च" ८।२।७८ इत्येतदिदानीन्तनकुलेखकैः प्रमादाल्लिखितम्। तथा हि "उपधायाञ्च" ८।२।७८इत्यत्र वक्ष्यति " प्रतिदीव्न इत्यत्र तु "हलि च" ८।२।७७ इति दीर्घत्वम्" इति। ननु च स्थानिवद्भावे प्रतिषिद्धेऽपि "न भकुर्छु-राम्" ८।२।७९ इति दीर्घत्वप्रतिषेधेनात्र भवितव्यम्, तत् किमित्येवमाह--"अस्माद् वचनाद् भवति" इति। न च

स्थानिवद्भावप्रतिषेधसामर्थ्यादत्र प्रतिषेधो न भवतीति शक्यं परिकल्पयितुम्; स्थानिवद्भावप्रतिषेधस्य पिपठीरित्यत्रार्थत्वात्। अत्र हि पिपठिषतेः क्विपि कृतेऽतो लोपे रुत्वे च, रुत्वं पुनरस्य पूर्वत्रासिद्धमिति षत्व-स्यासिद्धत्वात्, यदि स्थानिवद्भावो न प्रतिषिध्येत, ततोऽकारलोपस्य स्थानिवद्- भावात् "र्वोरुपधाया दीर्घ इकः" ८।२।७६ इत्यधिकाराद् रेफवकारान्तस्य भस्य दीर्घत्वं प्रतिषिध्यते। न चैतद् रेफवकारान्तं भसंज्ञकम्, अपि तु नाकरान्तमिति। "सग्धिः" इति। समाना ग्धिरिति विशेषणसमासः। "समानस्य च्छन्दस्यमूर्ध" ६।३।८३ इति सभावः। "बब्धाम्" इति। "भस भत्र्सनदीप्त्योः" (धा।पा।११००), "अभ्यासे चर्च" ८।४।५३ इत्यभ्यासभकारस्य जश्त्वं बकारः। "चक्षतुः, जक्षुः" इति। "लिट()न्यतरस्याम्" २।४।४० इति घस्लादेशः, " कुहोश्चु"७।४।६२ इत्यभ्यासघकारस्य चुत्वं झकारः; तस्य पूर्ववज्जश्त्वं जकारः। बहुवचने घस्लादेश इति। "लुङ सनोर्घस्लृ" २।४।३७ इत्यनेन। "बहुखट्वकः" इति। अत्र स्थानिवद्भावाद् "ह्रस्वान्तेऽन्त्यात्पूर्वम्" ६।२।१७३ इति, खकारस्योदात्तत्वं न भवति। "कपि पूर्वम्" ६।२।१७२ इति ट्वशब्दस्याकारास्यैव भवति। "किर्योः, गिर्योः" इति। "र्वोरुपधाया दीर्घ इकः" ८।२।७६ "हलि च" ८।२।७७ इति दीर्घत्वं न भवति। एतच्च व्युत्पत्तिपक्षमाश्रित्योक्तम्, "कृग्रोरिच्च" इति किरिगिरिशब्दौ व्युत्पाद्येते। अव्युत्पत्तिपक्षे त्वसत्यपि स्थानिवद्भावे धातुत्वाभावान्न भवत्येव दीर्घत्वम्। तथा ह्रव्युत्पत्तिपक्षमाश्रित्य "उपधायाञ्च" ८।२।७८इत्यत्र वक्ष्यति--"उणादयऽव्युत्पन्नानि प्रातिपदिकानि" (हे।प।१०३) इति किर्यो- गिर्योरित्येवमादिषु दीर्घो न भवति" इति। "वाय्वोः" इति। "लोपो व्योर्वलि"६।१।६४ इति यलोपो न भवति।

बाल-मनोरमा

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु ५३, १।१।५७

न पदान्तद्विर्वचन। स्थानिवदादेश" इति "अचः परस्मि"न्निति चानुवर्तते। परनिमित्तकोऽजादेशो न स्थानिवदित्यन्वयः। पदान्तश्च द्विर्वचनं च वरे च यलोपश्च स्वरश्च सवर्णश्च अनुस्वारश्च दीर्घश्च जश्च चर्चेति द्वन्द्वः। तेषां विधयः=विधानानि। कर्मणि षष्ठ()आ समासः। ततश्च पदान्तादिषु विधेयेषु इति लभ्यते। वर इत्यनेन वरे योऽजादेशः स विवक्षितः। आर्षो द्वन्द्वः। सप्तम्या अलुक्च। विधिशब्दः प्रत्येकमन्वेति--पदान्तविधौ द्विर्वचनविधावित्यादि। पदस्यान्तः=चरमावयवः। पदान्तस्य विधाने=पदान्तकर्मके विधाने। पदस्य चरमावयवे कार्ये द्विर्वचनादौ च कार्ये इति यावत्। तदाह--पदस्य चरमेत्यादिना। पदान्तस्य स्थाने विधाविति तु न व्याख्यातम् , तथा सति एषो यन् हसतीत्यसिद्धेः। तथाहि--एषः यन् इति छेदः। इण्धातोर्लटः शतरि शपि लुकि इकारस्य इणो यणिति यण्। अत्र एतत्तदोरिति सुलोपो न भवति, तस्य हलि परतो विधानात्, इह च तस्मिन् कर्तव्ये इकारस्थानिकस्य यकारस्य स्थानिवद्भावेनाऽच्त्वात्। नच न पदान्तेति निषेधः शङ्क्यः, यो विधीयमानः पदस्य चरमावयवः संपद्यते तत्रैव तन्निषेधात्, इह च विधेयस्य सुलोपस्य पदानवयवत्वात्। "पदान्तस्य स्थाने विधा"विति व्याख्याने तु इह यकारस्य स्थानिवद्भावो न सिध्येत्, लोपस्य पदान्तसकारस्य स्थाने विधानात्। अत्र हशि चेत्युत्वे तु कर्तव्ये यकारो न स्थानिवद्भवति, उकारस्य विधीयमानस्य पदचरमावयवत्वात्। एवं च पदान्तविधावित्यस्य एषो यनित्येतदुत्वविषये उदाहरणम्। सुलोपविषये तु प्रत्युदाहरणमिति भाष्ये स्पष्टम्। बाष्यप्रदीपोद्योते स्पश्टतरमेतत्। पदान्तविधौ कानि सन्तीत्याद्युदाहरणमनुपदमेव मूले स्पष्टीभविष्यति। द्विर्वचने सुध्? य् इतयुदाहरणम्। नचेह द्वित्वे कर्तव्ये यकारस्य स्थानिवद्भावविरहेऽपि तन्निषेधे स्थानिवद्भावः स्यादेवेति वाच्यम्, अनचि चेति द्वित्वस्याऽनैमित्तिकतयातद्विषये यकारस्थानिवद्भावस्यानपेक्षितत्वेन तत्र तन्निषेधस्य वैयथ्र्यापत्त्या द्विर्वचनशब्देनात्र अचि नेति द्वित्वनिषेधस्यैव विवक्षितत्वादिति भावः। वरे यथा--यायावरः। "यश्च यङ" इति याधातोर्यङन्ताद्वरच्। "सन्यङो"रिति द्वित्वम्। यायाय वर इति स्थि अतो लोप इति यङोऽकारस्य लोपः। "लोपो व्यो"रिति यकारलोपः। अत्र अजाद्यार्धधातुकमाश्रित्य "अतो लोप इटि च" इत्याकारलोपे कर्तव्ये अल्लोपो न स्थानिवत्। यलोपे यता--यातिः। याध#आतोर्यङि द्वित्वं। क्तिच्। यायाय ति

इति स्थिते-अतो लोपः। "लोपो व्यो"रिति यलोपः। अल्लोपस्य स्थानिवत्त्वादातो लोपः। लोपो व्योरिति यलोपः। यातिरिति रूपम्। अत्र अल्लोपो यलोपे कर्तव्ये न स्थानिवत्। न च वाय्वोरित्यत्रापि लोपो व्योरिति यलोपे कर्तव्ये उकारादेशस्य वकारस्य स्थानिवत्त्वनिषेधः स्यादिति वाच्यं, स्वरदीर्घयलोपेषु लोप एवाजादेशो न स्थानिवदिति वार्तिके परिगणनात्, इह च वकारस्य लोपरूपत्वाऽभावात्। स्वरविधौ यथा--चिकीर्षकः। चिकीर्ष इति सन्नन्तात् ण्वुल्। अकादेशः। सनोऽकारस्य अतो लोपः। अत्र ईकारस्य वितीत्युदात्तत्वे कर्तव्ये अल्लोपो न स्थानिवत्। यद्यपि ईकारोऽल्लोपस्थानीभूतादकारान्नाव्यवहितपूर्व इति स्थानिवद्भावस्य प्राप्तिरिह नास्ति, तथाप्यस्मादेव ज्ञापकात् पूर्वसूत्रे पूर्वत्वं व्यवहिताव्यवहितसाधारणम्। तत्प्रयोजनं तु पूर्वसूत्र एवोक्तम्।

सवर्णविधो यथा--शिण्ड्ढि। शिष् इति धातो रौधादिकाल्लोण्मध्यमपुरुषैकवचनम्। सिप् श्नम्। शिनष् सि। हित्वम्। धित्वम्। ष्टुत्वम्। षस्य जश्त्वं डकारः। शिनड्ढि। श्नसोरल्लोपः। नश्चापदान्तस्येत्यनुस्वारः। अनुस्वारस्य ययीति तस्य परसवर्णो णकारः। शिण्ड्ढि इति रूपम्। अत्र परसवर्णे कर्तव्ये अल्लोपो न स्थानिवत्। वस्तुतस्तु सवर्णविधौ नेदमुदाहरणम्। श्नमकारस्य लोपोऽत्र अजादेशः। तत्स्थानीभूतः श्नमकार एव। तस्मिन् सति नकारस्यानुस्वारप्रसक्तिरेव नास्ति। तथा चानुस्वारस्य स्थानीबूतादचः पूर्वत्वेन कदाप्यदृष्टत्वात्तस्य परसवर्णे कर्तव्ये अचः परस्मिन्नित्यलोपस्य स्थानिवत्त्वं न प्रसक्तमिति किं तत्प्रतिषेधेन()। यत्तु तत्वबोधिन्याम--अनुस्वारस्य स्थानिभूतो नकारः श्नमकारात् पूर्वत्वेन दृष्ट इति तत्स्थानिकानुस्वारस्यापि तत्पूर्वत्वेन दृष्टत्वं, स्थानिद्वारापि पूर्वत्वाभ्युपगमादित्युक्तम्। एवं सति तितौमाचष्टे तितापयतीत्यत्र पुगागमो न स्यात्। "तत्करोति तदाचष्टे" इति णिच्। इष्ठवद्भावादुकारस्य टेरिति लोपः। अचो ञ्णितीति तकारादकारस्य वृद्धिराकारः। पुगागमः। तितापीत्यस्मात् लट् तिप् शप्। गुणः। अयादेश#ः। तितापयतीति रूपम्। अत्र अचो ञ्णितीति वृद्ध्या लब्धस्य आकारस्य पुगागमे कर्तव्ये उकारलोपस्य स्थानिवद्भावे सति उकारेण व्यवधाने णिपरकत्वाऽबावात्पुगागमो न स्यात्। आकारस्य लोपस्थानिभूतादुकारात्पूर्वत्वस्य स्वतोऽभावेऽपि स्थानिद्वारा सत्त्वादिति सिद्धान्तरत्नाकरे दूषितम्। प्रौढमनोरमाव्याख्याने तु शब्दरत्ने पादमाचष्टे पादयति, ततः क्विप् पात् हसतीत्यादौ "झयो हः" इति पूर्वसवर्णे कर्तव्ये पूर्वस्मात्परस्य विधिरिति पञ्चमीसमासप्राप्तस्थानिवद्भावनिषेधार्थमिह सूत्रे सवर्णग्रहणिति प्रपञ्चितम्। अनुस्वारविधौ यथा--शिंषन्ति। शिष्धातोर्लटि झिः। झोऽन्तः। श्नसोरल्लोपः। नस्चापदान्तस्येत्यनुस्वारः। शिंषन्ति। इह तु न परसवर्णः, षकारस्य यय्त्वाभावात्। अत्र अनुस्वारे कर्तव्ये अल्लोपो न स्थानिवत्। अत्र दीर्घविधौ यथा-प्रतिदीव्ना। हलि चेति दकारादिकारस्य दीर्घे कर्तव्ये अल्लोपो न स्थानिवत्। ज()इआधौ यथा--"सग्धिश्च मे"। अद भक्षणे क्तिन्। बहुलं छन्दसीति घस्लादेशः। "घसिभसोर्हलि च" इत्युपधालोपः। "झलो झली"ति सलोपः। झषस्तथोरिति तकारस्य धत्वम्। "झलाञ्जश् झशि" इति जश्त्वेन घकारस्य गकारः। समाना ग्धिः=अदनं-सग्धिः। समानस्य छन्दसीति संभावः। अत्र जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत्। चर्विधौ यथा--जक्षतुः। घसेर्लिटि अतुस्। द्वित्वम्। "हलादिश्शेषः" "अभ्यासे चर्चे"ति जश्त्वम्। "कुहोश्चुः" इति जकारः। "गमहने"त्युपधालोपः। "खरि च" इति चर्त्वं ककारः। "शासिवसी"ति षः। अत्र चर्त्वे कार्ये उपधालोपो न स्थानिवत्। भाष्ये तु "पूर्वत्रासिद्धे न श्थानिव"दित्यवष्टभ्य द्विर्वचनसवर्णानुसारदीर्घजश्चरः प्रत्याख्याताः। किञ्च "दीर्घा दाचार्याणा"मित्युत्तरम्--"अनुस्वारस्य ययि परसवर्णः" "वा पदान्तस्य" "खरि च" "वावसाने" "अणोऽप्रगृह्यस्यानुनासिकः" इति पञ्चसूत्रीपाठ इति "हलो यमां यमि" इति सूत्रस्थबाष्यसंमतः सूत्रक्रमः। "एवं च "शिण्ड्ढी"त्यत्र न परसवर्णप्रसक्तिः। परसवर्णे कर्तव्ये षकारस्थानिकस्य जश्त्वस्यासिद्धत्वेन यय्परकत्वाऽभावादिति सर्वथापि सवर्णविधौ शिण्ड्ढीति नोदाहसरणमित्यास्तां तावत्।

इति स्थानीति। अनेन सूत्रेण सुध्? य् इत्यत्र द्वित्वनिषेधे कर्तव्ये यकारस्य स्थानिवत्त्वनिषेध इत्यर्थः। एवं चाच्परकत्वाभावेन अनचि चेति निषेधाभावाद्धकारस्य द्वित्वं निर्बाधमिति भावः। तथाच सुध् ध् यिति स्थितम्।

तत्त्व-बोधिनी

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु ४६, १।१।५७

न पदान्त। पदान्तादीनां चरन्तानां द्वन्द्वः, ततो "विधि" शब्देन कर्मषष्ठ()न्तस्य समासः। विधिशब्दश्च भावसाधनो- विधानं विधिरिति। स च द्वन्द्वान्ते श्रूयमाणत्वांत्प्रत्येकं संबध्यते। पदस्य चरमावयव इति। वृक्षं वेतीति वृक्षवीः, वृक्षं वातीति वृक्षवाः। तमाचष्टे वृक्षवयति। ततो विच्। वृक्षव्। इह "लोपो व्योर्वली"ति वलोपो न, टिलोपस्य णिलोपस्य वा स्थानिवत्त्वात्। न च "सुबन्ताण्णि"जिति हरदत्तादिमते अन्तर्वर्तिसुपा पदत्वात् "न पदान्ते"ति निषेधः शङ्क्यः, विधेयस्य लोपस्य पदानवयवत्वात्। "पदान्तस्य स्थाने विधौ ने"ति व्याख्याने तु "न पदान्ते"ति स्थानिवत्त्वनिषेधाद्वलोपः स्यादेवेत्यादि मनोरमायां स्थितम्। द्विर्वचनादौ चेति। यलोपादय आदिशब्दार्थः। "वरे" इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्। सहविवक्षाभावेऽपि निपातनाद्द्वन्द्वः सप्तम्यलुक्व।

अथोदाहरणानि-पदान्ते-कानि सन्ति, कौ स्तः। इह यणावादेशयोः कर्तव्ययोः श्नसोरल्लोपो न स्थानिवत्। न चेकारौकारयोः स्थानिभूतादचः पूर्वत्वविरहादेवाऽल्लोपो न स्थानिवदिति वाच्यम्, "वाक्यादपोद्धृत्य पदानि संस्किल्लोपो न स्थानिवदिति उदाहार्यम्। अत्र हि वोपस्थान्यकारात्पूर्वत्वेन दृष्टत्वादोकारस्य। द्विर्वचने-सुद्ध्युपास्यः। "नाजानन्तर्ये" इति निषेधाद्बहिरङ्गपरिभाषाऽत्र न प्रवर्तते, स्थानिवद्भावनिषेधसामथ्र्याच्च। एवं क्वचिदन्यत्राप्यूह्रम्। वरे-यायावरः। यातेर्यङन्ताद्यश्च यङ इति वरच्। "अतो लोपः"। स च "आतो लोप इटि चे"त्यालोपे कर्तव्ये न स्थानिवत्। यलोपे-यातिः। यातेर्यङन्तात् क्तिच्। अतो लोपः। यलोपः। अल्लोपस्य स्थानिवत्त्वादातो लोपः। यलोपः। न च पुनरालोपः शङ्कयः। चिणो लुङ्()न्यायेन आलोपस्यासिद्धत्वात्स्थानिवद्भावाच्च। ननु यदि यलोपविधिं प्रति स्थानिवत्त्वनिषेधस्तर्हि कथं-वाय्वोरिति?। उच्यते-"असिद्धं बहिरङ्ग"मिति यणोऽसिद्धत्वान्न यलोपः। न च "नाजानन्तर्ये" इति निषेधः, अन्तरङ्गकार्ये अच आनन्तर्यं यत्र तत्रैव तदभ्युपगमात्। किं चात्र "स्वरदिर्घयलोपेषु लोपाजादेश एव न स्थानिव"दिति वार्तिकमस्ति। तेनाऽन्यः स्तानिवदेव भवतीति न दोषः। स्वरे-चिकीर्षकः। ईकारस्य "लिती"त्युदात्तत्वे कर्तव्ये सनोऽतो लोपो न स्थानिवत्। न च "लिती"त्यारम्भसामथ्र्य, "कारक" इत्यादौ सावकाशत्वात्। सवर्णानुस्वारयोः-शिण्ढि। श्नसोरल्लोपो न स्थानिवत्। यद्यप्यनुस्वारो न स्थानिभूतादचः पूर्व इति तस्य परसवर्णे कर्तव्येऽल्लोपस्य स्थानिवत्त्वप्रसङ्ग एव नास्ति, तथापि स्थानिवद्द्वारानुस्वारोऽपि दृष्ट इत्यस्त्येव तत्प्रसङ्ग इत्याहुः। ननु सवर्णग्रहणमात्रेणानुस्वारोऽप्याक्षेप्तुं शक्यत इति किमनेन पृथगनुस्वारग्रहणेन?। सत्यम्। पृथग्ग्रहणाभावे यत्र परसवर्णस्तत्रैवेति संभाव्येत। तथा च यत्र न परसवर्णप्रसङ्गः "शिषन्ती"त्यादौ तत्र स्थानिवद्भावं निषेद्धुमनुस्वारग्रहणम्। एवं यत्र वरे अजादेशस्य प्रसङ्गो नास्ति यातिरित्यादौ तत्र यलोपे स्थानिवद्भावं निषेद्धुं वरेग्रहणात्पृथग्यलोपग्रहणं कृतमिति ज्ञेयम्। दीर्घे-प्रतिदीव्ना, प्रतिदीव्ने। "हलि चे"ति दीर्घे कर्तव्येऽल्लोपो न स्थानिवत्। यणादेशस्तु स्थानिवद्भवत्येव। "लोपाजादेश एव न स्थानिव"दित्युक्तत्वात्। तेन "हलि च" "उपधायां चे"ति दीर्घाप्रवृत्त्या किर्योः गिर्योः विव्यतुरित्यादि सिद्धम्। जशि-सग्धिश्च मे। अदनं ग्धिः। तत्र अदेः क्तिनि "बहुलं छन्दसि" इति घस्लादेशः, "घसिभसोर्हलि चे"त्युपधालोपः। "झलो झलि" इति सलोपः। "झषस्तथोः" इति धत्वम्। धस्य "झलां जश्झशी"ति जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत्। "समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु" इति सः। समाना ग्धिः- सग्धिः। न चात्र सलोपे धत्वे च कर्तव्ये पूर्वस्मादपीति स्थानिवद्भावात्सग्धिरिति रूपं न स्यादिति शङ्क्यम्; पञ्चमीसमासपक्षस्याऽनित्यत्वात्। तत्र "निष्ठायां सेटी"ति लिङ्गात्। तथाहि-तत्र "सेटी"ति पदं न तावदनिड्वायवृत्त्यर्थम्, णिजन्तात्तदसंभवात्। ननु "संज्ञापितः पशु"रित्यत्र "यस्य विभाषे"ति इण्निषेधे संभवत्येवानिट्()त्वं, "सनीवन्ते"ति विकल्पितेट्त्वादिति चेन्न; "यस्य विभाषे" त्यत्र "एकाचः" इत्यनुवृत्तेः। अन्यथा "दरिद्रिति " इति इण्न स्यात् , तत्र "तनिपतिदरिद्रातिभ्यः" इति वार्तिकेन सनो विकल्पितेट्त्वात्।

तस्मात्कालावधारणार्तं सेङ्ग्रहणम्। इटि कृते णिलोपो न तु ततः प्रागिति। अन्यथा "कारित"मित्यादौ णिलोपे कृते "एकाच उपदेशे"इति इण्निषेधः स्यादिति। यदि तु पूर्वस्माद्विधौ स्तानिवत्त्वं तर्हि णिचा व्यवधानान्निषेधस्तर्हि "पटयती"त्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वं स्यात्। मैवम्। "इष्ठव"दित्यतिष्टया भसंज्ञया पदसंज्ञाया बाधाज्जश्तावऽप्रवृत्तेः। चरि-जक्षतुः, जक्षुः। घसेर्लिटि अतुस् उस् च। "गमहनेट"त्युपधालोपः। "खरि चे"ति चर्त्त्वं प्रति न स्थानिवत्। भाष्ये तु "पूर्वत्रासिद्धे न स्थानिव"दित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घश्चरः। प्रत्याख्याताः। तद्रीत्या तु सलोपे धत्वे च कर्तव्ये स्थानिवद्भावशङ्कैव नास्तीति बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्विर्वचने ७।१ अचि ७।१ अचः ६।१ ५६ स्थानिवत् ० ५५ आदेशः १।१ ५५

समासः॥

द्विर्वचनं च द्विर्वचनं च इति द्विर्वचनं, तस्मिन् द्विर्वचने। {सरूपाणाम् (१।२।६४)} इति एकशेषः।

अर्थः॥

द्विर्वचन-निमित्ते अचि परतः अजादेशः स्थानिरूपः भवति, द्विर्वचने एव कर्तव्ये। रूपातिदेशः अयम्।

उदाहरणम्॥

पपतुः, पपुः। जग्मतुः, जग्मुः। चक्रतुः, चक्रुः। निनय निनाय। लुलव लुलाव। आटिटत्।
काशिका-वृत्तिः
द्विर्वचने ऽचि १।१।५९

द्विर्वचननिमित्ते ऽचि अजादेशः स्थानिवद् भवति , द्विर्वचन एव कर्तव्ये। रूपातिदेशश्च अयं नियतकालः। तेन कृते द्विर्वचने पुनरादेश रूपम् एव अवतिष्ठते। आल्लोपौपधालोपणिलोपयणयवायावादेशाः प्रयोजनम्। आल्लोपःपपतुः। पपुः। आतो लोप इटि च ६।४।६४ इति आकारलोपे कृते तस्य स्थानिवद्भावातेकाचो द्वे प्रथमस्य ६।१।१ इति द्विर्वचनं भवति। उपधालोपःजघ्नतुः। जघ्नुः। गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८ इत्यौपधालोपे कृते अनच्कत्वाद् द्विर्वचनं न स्यात्, अस्माद् वचनाद् भवति। णिलोपः आटिटत्। अटतेः णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वादजादेर् द्वितीयस्य ६।१।२ इति टिशब्दस्य द्विर्वचनम् भवति। यण् चक्रतुः। चक्रुः। करोतेः अतुसि उसि च यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न स्यात्, स्थानिवत्त्वाद् भवति। अयवायावादेशाः निनय, निनाय। लुलव, लुलाव। नयतेः लुनातेश्च उत्तमे णलि गुणे कृते वृद्धौ च अयवायावादेशाः, तेषां स्थानिवत्त्वान् ने नै लो लौ इति द्विर्वचनं भवति। द्विर्वचने कऋतव्य इति किम्? जग्ले, मम्ले। श्रवणम् आकारस्य न भवति। द्विर्वचननिमित्ते इति किम्? दुद्यूषति। ऊठि यणादेशो न स्थानिवद् भवति। अचि इति किम्? जेघ्रीयते, देध्मीयते। ई घ्राध्मोः ७।४।३१ यङि च ७।४।३० इति ईकाराऽदेशः, तस्य स्थानिवद्भावादाकारस्य द्विर्वचनं स्यात्, अज्ग्रहणान् न भवति।
लघु-सिद्धान्त-कौमुदी
द्विर्वचनेऽचि ४७६, १।१।५८

द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये। गोपायाञ्चक्रतुः॥

न्यासः

द्वर्वचनेऽचि। , १।१।५८

पूर्वं कार्यातिदेशः कृतः, इदानीं तु रूपातिदेशार्थमिदमारभ्यते। अथ वा निमित्तात् पूर्वमित्येतस्मिन् पक्षेऽनन्तरसूत्रेण द्विर्वचनविधिं प्रति प्रतिषेधः प्राप्तः इत्यस्यारम्भो वेदितव्यः। "द्विर्वचनेऽचि" १।१।५८ इति समानाधिकरणे सप्तम्यौ। तत्राज् विशेष्यः, द्विर्वचनं विशेषणम्। विशेषणविशेष्यभावस्य च प्रयोजनं "दुद्यूषति" इति प्रत्युदाहरण दर्शयिष्यते। कथं पुनरज् द्विर्वचनशब्देनोच्यते? द्वर्वचननिमित्तत्वात्। अत एव वृत्तावाह-- "द्विर्वचननिमित्तेऽचि" इति। भवति हि तन्निमित्तत्वात् ताच्छब्द्यम, यथा -- "आर्युर्घुतम्" इति। परसप्तमी चेयमपीति "यस्मिनन् विधिस्तदादावल्ग्रहणम्" (व्या।प।१२७) इति अजादाविति द्रष्टव्यम्। परस्मिन्निति च प्रकृत्वात् परस्मिन्नजादाविति गम्यते। अथ वा - द्वर्वचनस्य प्रत्ययविशेषनिमित्त्वाद् द्विर्वचनग्रहणेन प्रत्ययः सन्निधापितः, तेनाजादौ प्रत्यय इति प्रतीयते। यदि तह्र्रजादावजादेशः स्थानिवद्भवति, "पपौ" इति न सिध्यति, न ह्रजादावादेशः, किं तर्हि? अच्येव; इहापि व्यपदेशिवद्भावेना-जादित्वमस्तीत्यदोषः। इह तर्हि न सिध्यति-- "चक्रतुः" इति; अच्येव तु यणादेशो विधीयते, न त्वजादौ? नैष दोषः; यो ह्यत्राचि यणादेशो विधीयते सोऽजादावपि भवत्येव। यदि द्विर्वचननिमित्तेऽच्यजादेशः स्थानिवद्भवति सर्वस्यामवस्थायां द्विर्वचनादुत्तरकालमपि स्यादित्यत आह--"द्विर्वचन एव कत्र्तव्ये" इति। एवकारेण द्विर्वचन क्रिया- कालात् कालान्तरे स्थानिवद्भावस्याभावं दर्शयति। कथं पुनरेतल्लभ्यते, यावतैकं द्विर्वचनग्रहणम्, तेन चाज् विशेषितः? एवं मन्यते-- द्वितीयमपि द्विर्वचनग्रहणमन- न्तरसूत्रादिहानुवत्र्तते। अथ वा- द्विर्वचनञ्चेत्येकशेषं कृत्वा "द्विर्वचने" इति निर्देशः कृतः। तत्रैकेन द्विर्वचनग्रहणेन "द्वर्वचननिमित्तेऽचि" इत्थेषोऽर्थो लभ्यते। द्वितीयेन तु "द्विर्वचन एव कत्र्तव्ये" इति। इह द्विर्वचने कत्र्तव्ये स्थानिवद्भावो विधीयते इत द्विर्वचनकार्यार्थं एवैष प्रतीयते। साच्कस्य द्विर्वचनं विधीयमानमनच्क- स्य न प्राप्नोति युज्यते द्विर्वचनकार्यार्थत्वमस्य। "द्वर्वचनकार्यार्थत्वमस्य। "द्विर्वचनकार्यार्थे त्वस्मिन् --"चक्रतुः,चक्रुः" इत्यत्रास्यानच्कस्य द्विर्वचने कृते सतीष्टमभ्यासरूपं न सिध्यति" इतिव्यामोहाद् यो मन्यते, तं प्रत्याह-- "रूपातिदेशश्चायम्" इति। "च" शब्दोऽवधारणे, रूपातिदेश एव, न कार्यातिदेश इत्यर्थः। कुतः पुनरेष निश्चयः-स "रूपातिधेशश्चायम्" इति? अज्ग्रहणात्। तस्य ह्येतत् प्रयोजनम्-- "जेघ्रीयते देध्मीयते" इत्यत्र मा भूदिति। यदि चायं द्विर्वचनकार्यातिदेशः स्यान्न रूपातिदेशः; अज्ग्रहणमनर्थकं स्यात्। भवत्वत्र स्थानिवद्भावः, तथापि न कश्चि-द्विशेषः। तथा हि-- यद्यप्यत्र स्थानिवद्भावः, एवमपि द्विर्वचनकार्येण भवितव्यम्; अथापि न स्थानिवद्भावः, एवमपि भवितव्यम्--उभयत्रापि साच्कत्वात्, ततश्च कथमेतत् प्रत्युदाहरणम्? तदेतदज्ग्रहणं कथमर्थवद् भवति? यद्येष रुपादेशः ररूपेऽस्यातिदि- श्यमाने यद्यज्ग्रहणं न क्रियते तदिहापि रूपातिदेशे सति ध्रा इति, ध्मा इति च द्वि-र्वचनं स्यात्, तथाऽनिष्टमभ्यासरूपं प्रसज्येत। तस्मादज्ग्रहणाद् रूपातिदेशोऽय- मिति निश्चीयते। यद्येवम्, भेदनिबन्धनो वतिर्नं प्राप्नोति; स्थान्येव हि पुनरात्मीयं रूपं प्रापित इति कुतो भेदः? आतिदेशिकानामतिदेशिकत्वेन रूपभेदस्य विवक्षितत्वाददोषः। "द्विर्वचन एव कत्र्तव्ये" इति यदुक्तं तस्यार्थं विस्पष्टीकर्तुमाह--"नियतकालः" इति। कृते द्विर्वचने इत्यादिना तदेव नियकालत्वं दर्शयति। "जघ्नतुः" इति। "अभ्यासाच्च" ७।३।५५ इति हकारस्य कुत्वम्। "आटिटत्" इति। अटतेर्हेतुमति णिच्; लुङ्, चङ, "चङि" ६।१।११ इति "अजादे- र्द्वितीयस्य" ६।१।२ इति द्विर्वचनम्। "आडजादीनाम्"६।४।७२ इत्याड् भवति। "निनय" इत्यादि। "णलुत्तमो वा" ७।१।९१ इति यदा णित्त्वं नास्ति तदा गुणः, यदा णित्वं तदा वृद्धिः। "जग्ले,मग्ले" इति। "ग्लै हर्षक्षये" (धा।पा। ९०४), "म्लै गात्रविनामे" (धा।पा।९०४) "आदेश उपदेशेऽशिति" ६।१।४४ इत्यात्त्वम्। भावे आत्मनेपदम्, "लिटस्तझयो-रेशिरेच्" ३।४।८१इत्येश्। "श्रवणमाकारस्य न भवति" इति। यदा कालावधिपरिग्रहार्थं द्विर्वचनग्रहणं न क्रियते, तदोत्तरकालमपि स्थानिरूपं प्रसज्येत, ततश्चाकारस्य

श्रवणमेव स्यात्। आतो लोपस्य तु गोद इत्येवमाद्यवकाशः। श्रूयमाणे चाकारे परेण सह वृद्धिः स्यात्। "दुद्युषति" इति। दिवेः "सनीवन्तर्ध" ७।२।४९ इत्यादिना यदा पक्ष इडागमो न क्रियते तदा "इको झल्" १।२।९ "हलन्ताच्च" १।२।१० इति कित्त्वम्, ततः "च्छ्वोः शूडनुनासिके च" ३।४।१९ इत्यूठ्। स च द्विर्वचननिमित्तं न भवति। तत्र यदि द्विर्वचननिमित्तत्वेन नाज् विशेष्यते, ऊठि परतो यो यणादेशस्तस्यापि स्थानिवद्भावः स्यात्। एवं चाभ्यासरूपमिवर्णान्तं श्रूयेत। द्विर्वचननिमित्तच्परिग्रहे तु "द्यु" इत्यस्य द्विर्वचनं भवति। तत्र हलादिशेषह्रस्वत्वयोर्दुद्यूषतीत्यभ्यासरूपमुकारा- न्तं सिध्यति॥

बाल-मनोरमा

द्विर्वचनेऽचि ८९, १।१।५८

द्विर्वचनेऽचि। द्विरुच्यते येन परनिमित्तेन तदद्वर्वचनं। द्वित्वनिमित्तमिति यावत्। अचीत्यस्य विशेषणमिदम्। "अचः परस्मिन्नित्यतोऽच इति, "स्थानिवदादेश" इत्यत आदेश इति, न पदान्तेत्यतो नेति चानुवर्तते। द्विर्वचन इत्यावर्तते। एवं च "द्वित्वे कर्तव्ये सती" त्यपि लभ्यते। तदाह--द्वित्वनिमित्तेऽचीत्यादिना। "द्वित्वे कर्तव्ये सती"त्युक्तेः कृते द्वित्वे "चक्रे" इत्यादौ यणादयो भवन्ति। अन्यता तु न स्युः, द्वित्वनिमित्तस्य अचः सत्त्वात्। द्वित्वनिमित्त इति किम्?। दुद्यूषति। दिव्धातोः सनि द्वित्वात्परत्वादूठि कृते द्वित्वात्प्राग्यण् भवत्येव। तथा च "द्यू" इत्यस्य द्वित्वे दुद्यूषतीति सिध्यति। द्वित्वे कर्तव्ये यणो निषेधे तु दिद्यूषतीत्यभ्यासे इकार एव श्रूयेत। न तूकारः। "द्वित्वनिमित्ते" इत्युक्तौ तूठि परे द्वित्वात्प्राग्यण्यो न निषेधः, ऊठो द्वित्वनिमित्तत्वाऽभावात्। अचीति किम्? । जेघ्रीयते। अत्र घ्राधातोर्यङि द्वित्वात्प्राक "ई घ्राध्मो"रितीकारादेशो न निषिध्यते। ईत्वस्य द्वित्वनिमित्त यङ्()निमित्तकत्वेऽपि द्वित्वनिमित्ताऽज्निमित्तकत्वाऽभावात्। अचः किम्?। असूषुपत्। इह स्वापेश्चङि द्वित्वात्प्राक् "स्वापेश्चडी"तिवकारस्य सम्प्रसारणं न निषिध्यते, तस्याऽजादेशत्वाऽभावात्। ततश्च कृते सम्रसारणे सुप् इत्यस्य द्वित्वेऽब्यासे उकारस्य श्रवणं संभवति। संप्रसारणे निषिद्धे तु "स्वप्" इत्यस्य द्वित्वेऽभ्यासे उकारो न श्रूयेत। एवं च प्रकृते यणादेशात्प्राग् "लिटि धातो"रिति द्वित्वे कृ कृ ए इति स्थिते--।

तत्त्व-बोधिनी

द्विर्वचनेऽचि ७०, १।१।५८

अचा सामानाधिकरण्यलाभाय द्विर्वचनशब्दस्य तन्निमित्ते लक्षणा स्वीक्रियते। यद्वा-- उच्यत इति वचनं, द्विः-- वचनं यस्मिन्नचि तद्द्विर्वचनम्। अथवा द्विर्वचनमस्मिन्नस्तीत्यर्शाअद्यच्। तदेतदाह-- द्वित्वनिमित्तेऽचीति। इह "अचः परस्मि"न्नित्यतोऽच इति, "स्थानिवदादेशः" इत्यस्मादादेश इति, "न पदान्ते"त्यतो नेति चानुवर्तते। तदाह-- अच आदेशो न स्यादिति। यद्यपीहि वृत्त्यादौ-- "अजादेशः स्थानिवत्स्या"दिति रूपातिदेशपक्षः स्वीकृतः फलं चोभयत्र तुल्यं, तथाप्यादेशनिषेधपक्षोऽपि भाष्यारूढ इति स एवात्र स्वीकृतः। किं च आदेशमङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु। "प्रक्षालनाद्धिपङ्कस्य दूरादस्पर्शनं वर"मिति न्यायात्। "न पदान्ते"ति निषेधानन्तरं पाठोऽप्येवं सत्यनुगृहीत इति श्रेयानयं पक्षः।

इष्टानुरोदेन द्विर्वचन इत्यावर्त्य कालावधारणपरतयापि व्याचष्टे-- द्वित्वे कर्तव्ये इति। कृते तु द्वित्वे यथायथमादेशः स्यादेवेति भावः। द्वित्वनिमित्ते किम्?। दुद्यूषतीत्यत्र द्वित्वात्परत्वादूठि कृते यदि यणः पूर्वमेव द्वित्वं स्यात्तदा दिद्यूषतीत्यनिष्टं रूपं स्यात्तन्माभूदिति द्वित्वनिमित्त इत्युक्तम्। नह्यूठ् द्वित्वनिमित्तम्। अचीति किम्?। जेघ्रीयते। देध्मीयते। शाशय्यते। इह "ई घ्राध्मो"रिति ईकारः, "अयङ् यि क्ङिती"त्ययहादेशस्च निषिध्येत, स माभूदिति प्राञ्चः। अन्ये त्वाहुः-- अचीति व्यर्थं, घ्रीय्-ध्मीय्-शय्य् इति द्वितीयाऽजवधिकस्यैकाचः कार्यितया यङो

द्वित्वनिमितत्वाऽभावादिति। अचः किम्?। असूषुपत्। इह "स्वापेश्चङी"ति यत्संप्रसारणं तस्मिन्निषिद्धेऽभ्यासे उवर्णो न श्रूयेत्। न च द्वित्वे कृते "यून" इत्यत्रेव "न संप्रसारणे" इति पूर्वस्य यणः संप्रसारणनिषेधात्। स्यादेतत्--- चक्रतुरित्यत्र अच आदेशस्य निषेधाऽप्रवृत्त्या यण् स्यादेव। अतुसो द्वित्वनिमित्तत्वेऽप्यकारस्याऽतथात्वात्। न च "द्विर्वचनेऽची"त्यस्य वैयर्थ्यं, चक्रे इत्यादौ सावकाशत्वात्। तथा चैकाच्त्वाऽभावात् "लिटि धातो"रितीह द्वित्वं न स्यादिति चेत्। मैवम्। इह द्वित्वनिमित्तशब्देनसाक्षाद्वा, समुदायघटकतया वा यद्द्वित्वप्रयोजकं, लक्ष्यानुरोधेन तस्य सर्वस्य ग्रहणात्। एतच्च "ठस्येकः" इति सूत्रे कैयटे स्पष्टम्। तथा च ऊर्णोतेः सनि "सनीवन्ते"तीट् पक्षे "विभाषोर्णो"रिति ङित्त्वविरहे ऊर्णुनविषतीति सिद्धम्। सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन्परे प्राप्तयोर्गुणाऽवादेशयोर्द्वित्वे कर्तव्ये निषेधात्। अत एवाहुः--- "तद्भावबाविताामात्रेणेह निमित्तत्व"मिति। एवं च द्वित्वनिमित्तघटकतया सन इडागमोऽतुस अकारश्च द्वित्वनिमित्तमिति स्थितम्। नन्वेवम्, ऋदातोः सनि "स्मिपूङ्रञ्ज्वशां सनी"तीटि कृते इस्शब्दनिमित्तकस्य गुणस्य "द्विर्वचनेऽची"ति निषेधे "अजादेर्द्वितीयस्ये"ति द्वित्वप्रसङ्गाददरिरिषतीति न सिध्येत्। रिस्()शब्दनिमित्तकस्य दित्वे तु यद्यपि सिध्यति तथापि गुणनिषेधे रिस्()शब्द एव दुर्लभ इति चेत्। अत्राहुः-- गुणे रपरे कृते निमित्ततयाऽऽश्रीयते, "स्थण्डिलाच्छयितरिव्रते" इति ज्ञापकात्। अन्यथा शीङो ङित्वेन "क्ङिति चे"ति गुणनिषेधाच्छयितरीति रूपस्याऽसिद्ध्यापत्तेः। न च "किति ङिति परे गुणवृद्धी ने"ति व्याख्यायमुक्तेऽर्थे शयितरीति न ज्ञापकमिति वाच्यं, तद्व्याख्यायां छिन्नं भिन्नमित्यत्र गुणनिषेधो न स्यादित्यादिदोषस्य "क्ङिति चे"ति सूत्र एवोपपादितत्वात्। न चैवं कार्यिणो निमित्तत्वाऽनाश्रयणे सन्नन्तस्य कार्यित्वातत्सनि परतः प्राप्तयोर्गुणावादेशयोरनिषेधादूर्णुनविषतीत्यपि न स्यादिति वाच्यं, मत्वर्थीयेनेनिना कार्यमनुभवत एवं कार्यित्वाऽलाभात्। ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपं कार्यमनुभवति, न तु सन्। अरिरिषतीत्यत्र तु रिस्()शब्दः कार्यभागिति वैषम्यादिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अदर्शनम् १।१ ६० लोपः १।१ इति १।१ ४३

समासः॥

न दर्शनम् अदर्शनम्, नञ्-तत्पुरुषः

अर्थः॥

इति इत्येतत् पदं {न वेति विभाषा १।१।४३} इत्यतः मण्डूक-प्लुत-गत्या अनुवर्तते॥
यत् भूत्वा न भवति, तत् अदर्शनम् = अनुपलब्धिः वर्णविनाशः तस्य लोपः इति संज्ञा भवति, अर्थात् प्रसक्तस्य अदर्शनं लोपसंज्ञकं भवति

उदाहरणम्॥

शालीयः। गौधेरः। पचेरन्। जीरदानुः। आस्रेमाणम्॥
काशिका-वृत्तिः
अदर्शनं लोपः १।१।६०

अदर्शनम्, अश्रवणम्, अनुच्चारनम्, अनुपलब्धिः, अभावो, वर्णविनाशः इत्यनर्थान्तरम्। एतैः शब्दैर्यो ऽर्थो ऽभिधीयते, तस्य लोपः इति इयं संज्ञा भवति। अर्थस्यैयं संज्ञा, न शब्दस्य। प्रसक्तस्य अदर्शनं लोपसंज्ञं भवति। गोधाया ढ्रक् ४।१।१२९ गौधेरः। पचेरन्। जीवे रदानुक् जीरदानुः। स्त्रिवेर्मनिनास्रेमाणम्। यकारवकारयोरदर्शनम् इह उदाहरणम्। अपरस्य अनुबन्धादेः प्रसक्तस्य। लोपप्रदेशाःलोपो व्योर् वलि ६।१।६४ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

अदर्शनं लोपः २, १।१।५९

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्।

न्यासः

अदर्शनं लोपः , १।१।५९

"अदर्शनम्" इत्यादि। ननु चादर्शनानुपलब्धिशब्दावनुपलब्धिसामान्यवचनौ। अश्रवणानुपच्चारणशब्दौत्वनुपलब्धिविशेषवचनौ। तथा ह्यश्रवणादिशब्दोच्चारणे शब्दस्यैवानुपलब्धिः प्रतीयते, नानुपलब्धिमात्रम्, न च सामान्यविशेषशब्दानामेकार्थता, तत् किमित्येवमाह-- "अनर्थान्तरम्" इति। एवं मन्यते- सामान्यशब्द अपि प्रकरणवशाद् विशेषे वर्तन्ते। इह च शब्दा व्युत्पाद्यत्वेन प्रकृताः, तस्माद् यद्यप्यदर्शनानुपलब्धिशब्दौ सामान्यवचनौ, तथापीह प्रकरणसामथ्र्याद् विशेषे शब्दानुपलब्धावेव वत्र्तेते। इह वृद्धिरित्यादिकाः संज्ञा शब्दानां विहिताः। तद्वदिहाप्यदर्शनमित्यस्यैव शब्दस्य "लोपः" इत्येषा संज्ञा स्यात्। ततश्च लोपप्रदेशेष्वदर्शनशब्दस्यैवोपस्थानात् स एवादेशः स्यादित्यत आह-- "एतैः शब्दैः" इत्यादि। कथं पुरेतल्लभ्यते? एवं मन्यते-- "नवेति विभाषा" १।१।४३ इत्यत इतिकरणोऽर्थनिर्दशार्थोऽनुवत्र्तते। तेन ह्यवधारणं गम्यते, यथा--- "क्रिया हि द्रव्यं विनयति नाद्रव्यम्" इति। विनापीकरणेन शब्द-स्वरूपस्य संज्ञा सिध्यत्येव, यथा-- "तरप्तमपौ घः" १।१।२१ इत्यत्र। तस्मादिति- करणानुवृत्तिसामथ्र्याददर्शनमिति योऽर्थः प्रतीयते, तस्यैवेषा संज्ञा, न शब्दस्य। किञ्च "लोपः" महती संज्ञा क्रियते यथान्वर्थसंज्ञा विज्ञायेत। लोपनं लोपः; अनुपलब्धिरनुच्चारणमित्यर्थः। न चादर्शनमित्येतच्छब्दरूपमेवाभावात्मकम्, किं तर्हि? तदर्थः। तस्मादन्वर्थसंज्ञाविज्ञानादर्थस्यैवैषा संज्ञा। यदि तह्र्यर्थस्यैवैषा संज्ञा, ततोऽतिप्रसङ्गः। सर्वो हि शब्दः स्वविषयादन्यत्र न दृश्यते। ततश्च "त्रपुजतु" इत्यत्र क्विपोऽदर्शनस्य लोपसंज्ञा स्यात्। एवञ्च सति "प्रत्ययलोपे प्रत्यय- लक्षणम्" १।१।६१ इति ह्रस्वस्य पिति कृति तुक्" ६।१।६९ इति तुक् प्रसज्यत इत्यत आह-- "प्रसक्तस्य" इत्यादि। तर्हयदर्शनमात्रस्यैषा संज्ञा? न किं तर्हि? शास्त्रादर्थाद्वा कुतश्चित् प्रसक्तस्य यददर्शनं तस्यैव। तदिह न केनचित्प्रकारेण क्विप्प्रसङ्गोऽस्ति, तत्कुतोऽस्तिप्रसङ्गः? कतं पुरेष विशेषो लभ्यते, यावता नेहप्रसक्तग्रहणमस्ति, नापि तत् कृतम्? एवं मन्यते-- "स्थानिवत्" इत्यतः स्थानिग्रहण- मिहाप्यनुवर्तते, स्थानी, प्रसङ्गवन्, प्रसक्तः-- इति पर्याया ह्येते। तेनायमर्थो लभ्यते-- प्रसक्तस्य यददर्शनं तस्येयं संज्ञेति। "गौधेरः" इति। "गोधाया ढ्रक्" ४।१।१२९ एयादेशः, "लोपो व्योर्वलि" ६।१।७३ इति यकारस्य शास्त्रेण प्रसक्तस्य लोपः। "पचेरन" इत्यत्रापि सीयुटः शारुओण। एवम- न्यत्रापि यथायोगं प्रसक्तता वेदितव्या। "जीरदानुः" "आस्त्रेमाणम्" इति। पूर्वपद् वकारस्य लोपः। "स्त्रिवु गतिशोषणयोः" (धा।पा। ११०९) यस्य "सर्वधातुभ्यो मनिन्" इति मनिन्प्रत्ययान्तस्य द्वितीयैकवचन उपधादीर्गेणैत्वे चकृते "आरुओमाणम्" इति। "अपरस्यानुबन्धादेः" इति। ककारादेरनुबन्धस्य। आदिशब्देन सीयुट्सकारस्य।

बाल-मनोरमा

अदर्शनं लोपः ५५, १।१।५९

सुद् ध् य् इत्यत्र यकारस्य संयोगान्तलोपं शङ्कितुं लोपसंज्ञासूत्रमाह--अदर्शनं लोपः। शब्दानुशासनप्रस्तावाच्छब्दविषयकश्रवणंमिह दर्शनं विवक्षितम्। दर्शनस्याभावोऽदर्शनम्। अर्थाभावेऽव्ययीभावः। "स्थानेऽन्तरतमः" इत्यतः स्थां इत्यनुवर्तते। स्थानं प्रसङ्ग इत्युक्तम्। शास्त्रतः शब्दस्य कस्यचिच्छ्रवणप्रसङ्गे सति यदश्रवणं तल्लोपसंज्ञं भवतीत्यर्थः।

तत्त्व-बोधिनी
अदर्शनं लोपः ४७, १।१।५९

अदर्शनं लोपः। अत्र दृशिज्ञ्रानसामान्यवचनः। दर्शनं ज्ञानं। तदिह शब्दानुशासनप्रस्तावाच्छब्दविषयकं सच्छ्रवणं संपद्यते। तच् श्रोतृव्यापारः, तन्निषेधोऽश्रवणम्। नन्वेवं "लोपो व्योर्वली"त्यादौ वकारयकारौ न श्रोतव्याविति श्रोतृव्यापार एव निषिध्येत, प्रयोक्तृव्यापार उच्चारणमनिषिद्धं स्यात्। अत्राहुः-असति च श्रवणे उच्चारणमनर्थकमवेति सामर्थ्याच्छ्रवणनिषेधे तद्धेतुभूतमुच्चारणमपि निषिद्धं भवतीति। प्रसक्तस्येति। इह "स्थाने" इत्यनुवर्तनादेताल्लभ्यते। प्रसक्तस्येति किम्? दधि मध्वित्यादौ तुगागमो मा भूत्। अस्ति हि तत्र क्विपोऽदर्शनम्, तच्च लोप इति प्रसक्तविशेषणाभावे प्रत्ययलक्षणेन तुक् स्यादेवेति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रत्ययस्य ६।१ लुक्-श्लु-लुपः १।३ अदर्शनम् १।१ ५९

समासः॥

लुक् च श्लु च लुप् च लुक्श्लुलुपः, इतरेतरद्वन्द्वः

अर्थः॥

({इति} इत्येतत् पदम् अत्रापि सम्बध्यते)॥ प्रत्ययस्य अदर्शनस्य लुक्-श्लु-लुप् इत्येताः संज्ञाः भवन्ति।

उदाहरणम्॥

लुक् - विशाखः स्तौति। श्लु - जुहोति। लुप् - वरणाः पञ्चालाः।
काशिका-वृत्तिः
प्रत्ययस्य लुक्श्लुलुपः १।१।६१

अदर्शनम् इति वर्तते। प्रत्यय। अदर्शनस्य लुक्, श्लु, लुपित्येताः संज्ञा भवन्ति। अनेकसंज्ञाविधनाच्च तद्भावितग्रहणम् इह विज्ञायते। लुक्संज्ञाभावितं प्रत्ययादर्शनं लुक्संज्ञम् भवति, श्लुसंज्ञाभावितं श्लुसंज्ञं भवति, लुप्संज्ञा भावितं लुप्संज्ञं भवति। तेन संज्ञानां सङ्करो न भवति। विधिप्रदेशेषु च भाविनी संज्ञा विज्ञायते। अत्ति। जुहोति। वरणाः। प्रत्ययग्रहणम् किम्? अगस्तयः। कुण्डिनाः। लुक्श्लुलुप्प्रदेशाः लुक्तद्धितलुकि १।२।४९, जुहोत्यादिभ्यः श्लुः २।४।७५, जनपदे लुप् ४।२।७० इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी

प्रत्ययस्य लुक्श्लुलुपः १८९, १।१।६०

लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्॥
न्यासः
प्रत्ययस्य लुक्?श्लुलुपः। , १।१।६०

यथा वृद्धिशब्दस्तद्भावितानमतद्भावितानामपि संज्ञा, तथा लुगित्यादिका अप्यतद्भावितस्यापि संज्ञाः प्राप्नुवन्ति, ततश्च संज्ञासंकरः स्यात्। संज्ञासंकरे हि सति संकीर्येरन्नित्यत आह-- "अनेकसंज्ञाविधानाच्च" इत्यादि। यद्यतद्भावितस्या- प्येताः संज्ञाः स्युः, अनेकसंज्ञाकरणमर्थकं स्यात्; एकस्यैव सर्वकार्यसिद्धः। तस्मादनेकसंज्ञाविधानाद् यददर्शनं यया संज्ञयोच्चारितया भावितम्= निष्पादितं, तस्यैव प्रत्ययादर्शनस्य सा संज्ञा, नान्यस्येति न भवति संकरः। एवं तर्हीतरेतराश्रयदोषः प्राप्नोति, तथा हि-- संज्ञया विशिष्टमदर्शनं भाव्यम्, सति च तस्मिन् प्रत्यया- दर्शने संज्ञया भाव्यमित्यत आह-- "विधिप्रदेशेषु च" इत्यादि। तददर्शनं विधीयते यस्य विहितस्य लुगित्येवमादिकाः संज्ञा भवन्तीति भाविन्याः संज्ञया विज्ञानान्न भवतीतरेतराश्रयदोषः। "अत्ति" इति। "अदिप्रभृतिभ्यः शपः" २।४।७२ इति शपो लुक्। "जुहोति" इति। "जुहोत्यादिभ्यः श्लुः" २।४।७५। "वरणाः" इति। वरणानां वृक्षाणामदूरभवो ग्राम इति। "प्राग्दीव्यतोऽण्" ४।१।८३ तस्य "वरणादिभ्यश्च" ४।२।८१ इति लुप्। "अगस्तयः, कुण्डिनाः" इति। यदि प्रत्ययग्रहमं न क्रियेत, आगस्त्यस्याप- त्यानि बहूनि "ऋष्यन्धकवृष्णिकुरुभ्यः" ४।१।११४ इति ऋष्यण्। कुण्डिन्या अपत्यानि बहूनि गर्गादित्वाद् यञ् ४।१।१६५, तयोरागस्त्यकौण्डिन्यशब्दयोर्जसि परतो यदा " आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्" २।४।७० इति लुक् क्रियते,अगस्तिकुण्डिनचौ चादेशौ; तदा वैषम्यादेकैकस्य षष्ठीनिर्दिष्टस्य स्थानिनस्त्रय आदेसाः पर्यायेण स्युः। तत्र यदा लुक् क्रियते तदा विभक्तिमात्रस्य श्रवणं प्राप्नोति। अथाप्यलोऽ- न्त्यस्य स्यात्ैवमप्यागस्त्यः,कौण्()डिन्यः इति स्यात्; अगस्तयः, कुण्डिना इति चेष्यते। यदाप्यागस्त्यशब्दस्य कुण्डिनजादेशः, कौण्डिन्यशब्दस्य चागसत्यादेशः, तथाप्यनिष्टमेव प्राप्नोति। आगस्त्यशब्दस्य हि जसन्तस्य अगस्तयैति रूपमिष्यते, कौण्डिन्यशब्दस्य तु कुण्डिना इति। अत एवागस्तयः कुण्डिना इत्यनयानुपूर्व्या तयोरुपन्यासः। अथाप्यान्तरतम्यादागस्त्यशब्दस्यागस्तिशब्द एवादेशो भवति, न कुण्डिनजिति? कौण्डिन्यशब्दस्यापि कुण्डिनजादेशो भवति, नागस्तिशब्द इति? एवमपि नैवानिष्टापत्ते- र्मुक्तिः। तथा हि-- एवं ह्रगस्तयः, कुण्डिना इति च सिध्यति, तथापि प्राग्दीव्यतीये-ऽजादौ प्रत्यये विवक्षिते सति "वृद्धाच्छः" ४।२।११३ इति च्छोः न स्यात्वृद्ध-त्वात्। प्रकृतेः। प्रत्ययग्रहणे तु सति तददर्शनस्यैवेयं संज्ञा विहितेति तस्यैव लुग् भवति। परिजादिप्रत्ययविवक्षायामपि "गोऽत्रेऽलुगचि" ४।१।८९ इति लुकि प्रतिषिद्धे वृद्धाच्छप्रत्ययश्च। अगस्तीनां छात्रा आगस्तीया इति। कौण्डिन्यशब्दात् तु सत्यपि लुकि "कण्वादिभ्यो गोत्रे" ४।२।११० इत्यणेव भवति-- कौण्डिन्याश्चात्रा इति। तेन तत्र छप्रत्ययाभावदोषो न प्रसन्जनीयः।
बाल-मनोरमा
प्रत्ययस्य लुक्श्लुलुपः २५८, १।१।६०

अतो नैवमर्थः, किं तु लुक्श्लुलुप इत्यावर्तते। ततश्च लुक् श्लु लुप इत्युच्चार्य विहितं प्रत्ययाऽदर्शनं यथासङ्ख्यपरिभाषया क्रमाल्लुगादिसंज्ञं स्यादिति लभ्यते, अतो नोक्तसङ्कर इत्यभिप्रेत्याह-लुक्श्लुलुप्शब्दैरित्यादिना। "फले लुक्", "जुहोत्यादिभ्यः श्लुः" "जनपदे लुप्" इत्यादिविधिप्रदेशेषु "अस्य सूत्रस्य शाटकं वये"तिवद्भाविज्ञानान्नान्योन्याश्रयः। तदेवं कतिशब्दस्य षट्संज्ञायाम्--।

तत्त्व-बोधिनी

पत्ययस्य लुक्श्लुलुपः २१९, १।१।६०

पत्ययस्य लुक्श्लुलुपः। "अदर्शनं लोपः"इत्यतोऽनुवृत्तस्याऽदर्शनस्यानेकसंज्ञाकरणसामथ्र्यात्तन्त्राद्यश्रित्य तद्भावितसंज्ञा इह विज्ञायन्ते, तेन संज्ञासङ्करोऽत्र न भवति, तदेतदाह--लुक्श्लुलुप्शब्दैरित्यादि। सति तु संज्ञासङ्करे "हन्ती"त्यत्र शब्लुकि "श्लौ"इति द्वित्वं स्याति। "जुहेती"त्यत्र श्लौ सति "उतोवृद्धिर्लुकि हली"ति वृद्धिः स्यात्। न च तत्र "अभ्यस्तस्य ने"त्यनुवृत्तेर्योयोति नोनोतीत्यादाविव वृद्धिर्न भविष्यतीति वाच्यं, संज्ञासङ्करपक्षे तदनुवृत्त्यसंभवात्, अन्यथा सूत्रस्य निर्विषयत्वापत्तेः। न च "यौती"त्यादिरवकाशः, संज्ञसङ्करे तत्रापि द्वित्वस्य दुर्वारत्वादिति भावः। "फले लुक्" "जुहोत्यादिभ्याः श्लुः""जनपदे लु"बित्यादिविधिप्रदेशेषु सूत्रशाटक वद्भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रत्ययलोपे ७।१ ६२ प्रत्ययलक्षणम् १।१ ६२

समासः॥

प्रत्ययस्य लोपः प्रत्ययलोपः, तस्मिन् प्रत्ययलोपे, षष्ठीतत्पुरूषः। प्रत्ययः लक्षणं यस्य कार्यस्य, तत् प्रत्ययलक्षणम्, बहुव्रीहीः।

अर्थः॥

प्रत्ययस्य लोपे सति, प्रत्ययनिमित्तं (प्रत्ययहेतुकं) कार्यं भवति।

उदाहरणम्॥

अग्निचित्। सोमसुत्। अधोक्।
काशिका-वृत्तिः
प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२

प्रत्ययनिमित्तं कार्यम् असत्यपि प्रत्यये कथं नु नाम स्यातित् सूत्रम् इदम् आरभ्यते। प्रत्ययलोपे कृते प्रत्ययलक्षणं प्रत्ययहेतुकं कर्यं भवति। अग्निचित्, सोमसुत्, अधोक्, इत्यत्र सुप्तिङोः लुप्तयोः सुप्तिङन्तं पदम् १।४।१४ इति पदसंज्ञा भवति। अधोकिति दुहेः लङि तिपि शब्लुकि तिलोपे घत्वभष्भावजश्त्वचर्त्वेषु कृतेषु रूपम्। प्रत्यय इति वर्तमाने पुनः प्रत्ययग्रहणं किम्? कृत्स्नप्रत्ययलोपे यथा स्यात्। इह मा भूत् आघ्नीय। सङ्ग्मीय। हनिगम्योर् लिङात्मनेपदे लिङः सलोपो ऽनन्त्यस्य ७।२।७९ इति सीयुट्सकारलोपः प्रत्ययैकदेशलोपः, तत्र प्रत्ययलक्षणेन झलि इत्यनुनासिकलोपो न भवति ६।४।३७। प्रत्ययलक्षणम् इति किम्? रायः कुलं रैकुलम्। गवे हितम् गोहितम्। आयवादेशौ न भवतः वर्णाऽश्रयत्वात्।
लघु-सिद्धान्त-कौमुदी
प्रत्ययलोपे प्रत्ययलक्षणम् १९०, १।१।६१

प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात्। इति जसि चेति गुणे प्राप्ते॥

न्यासः

प्रत्ययलोपे प्रत्ययलक्षणम्। , १।१।६१

"प्रत्ययलक्षणम्" इति। प्रत्ययो लक्षणं यस्येति कार्येऽन्यपदार्थे बहुव्रीहिः। प्रत्ययनिमित्तमित्यादिना सूत्रारम्भस्य प्रयोजनमाह। ननु च स्थानिवद्भावनाप्येतत् सिध्यति, नैतदस्ति; अलाश्रयमपि हि प्रत्ययलोपे प्रत्ययलक्षणं कार्यमिष्यते। तथा ह्यग्निचिदित्यत्र "ह्रस्वस्य पिति कृति तुक्" ६।१।६९ इत्यलाश्रयोऽपि तुग् भवत्येव। "अग्निचित्" इति। "अग्नौ चेः" ३।२।९ इति क्विप्। अधोगिति हल्ङ्यादिसूत्रेण तिलोपः; अदादित्वाच्छपो लुक् २।४।७२ "दादेर्धातोर्घः" ८।२।३२ इति धत्वम्, "एकाचो बशो भष्" ८।२।३७ इत्यादिना भष् धकारः, "झलाञ्जशोऽन्ते" ८।२।३९ इति जश्त्वम्, घकारस्य गकारः,तस्य "वावसाने" ८।४।५५ इति चर्त्वं ककारः। "प्रत्ययः" इति। "वर्तमाने" इति पूर्वसूत्रात्। "आहो यमहनः" १।३।२८इत्या-त्मनेपदम्। "गमहन" ६।४।९९ इत्यादिनोपधालोपः। "हो हन्तेः" ७।३।५४ इति घःष। " संग्मीय" इति। संपूर्वाद् गमेः "समो गमि" १।३।२९ इत्यादिनात्मनेपदम्। "इटोऽत्" इत्यद्भावः। "बहुलं छन्दसि" २।४।७३ इति शपो लुक्। पूर्ववदुपधालोपः। "अनुनासिकलोपो न भवति" इति। "अनुदात्तोपदेश" ६।४।३७ इत्यादिना। "रैकुलम्" इति। षष्ठीसमासः। "गोहितम्" इति। "चतुर्थी" २।१।३५ इत्यादिना। अस्त्यत्र षष्ठीचतुर्थ्येकवचनयोः प्रत्ययलोपः; किं त्वयावादेशयोरचि विधानात् तद्विधौ वर्ण आश्रयीते, न तु प्रत्ययः। तेन वर्णनिमित्तकौ तौ न प्रत्ययनिमित्त- काविति न भवतः। ननु च चात्र प्रत्ययस्य लोपः क्रियते, किं तर्हि? लुक्, नैतदस्ति; लोपशब्दोऽपि सामान्येन तद्भावितस्यातद्भावितस्य चाऽदर्शनस्य संज्ञा। तस्माल्लुगपि लोपो भवत्येव॥

बाल-मनोरमा

प्रत्ययलोपे प्रत्ययलक्षणम्। २६०, १।१।६१

जसि लुप्तेऽपि "जसि चे"ति गुणमाशङ्कितुमाह-प्रत्यय-लोपे प्रत्यय। प्रत्ययो लक्षणं=निमित्तं यस्य तत्-प्रत्ययलक्षणम्। प्रत्ययस्य लोपे सति प्रत्ययनिमित्तकं कार्यं स्यादित्यर्थः। फलितमाह--प्रत्यये लुप्तेऽपीत्यादिना। स्थानिवद्भावादेव सिद्धे अल्विध्यर्थमिदं सूत्रम्। यत्र प्रत्ययस्याऽसाधारणं रूपं प्रयोजकं तदेव कार्यं प्रत्ययलोपे सति भवतीति नियमार्थं चेति भाष्यादिषु स्पष्टम्। इति जसि चेतीति। अनेन सूत्रेण लुप्तं प्रत्ययमाश्रित्य "जसि चे"ति गुणे प्राप्ते इत्यर्थः।

तत्त्व-बोधिनी

प्रत्ययलोपे प्रत्ययलक्षणम् २२०, १।१।६१

प्रत्ययलोपे प्रत्यय। विशेषविहिता अपि लुगादिसंज्ञा लोपसंज्ञां न बाधन्ते, एकसंज्ञाधिकारदन्यत्र संज्ञायां बाध्यबाधकभावानङ्गीकारादिति भावः। स्थानिवत्सूत्रेण सिद्धे नियमार्थमिदं सूत्रं,"प्रत्ययस्याऽसाधरणं रूपरं यत्र प्रयोजकं, तदेव कार्यं प्रत्ययलोपे सति भवति न तु प्रत्ययाऽप्रत्ययासाधरण"मिति। तेन शोभना दृषदो यस्य सुदृषत्प्रासाद इत्यत्र "नञ्सुभ्यां"मित्यन्तोदात्ततां बाधित्वा "सोर्मनसी अलोमोषसी"इत्युत्तरपदाद्युदात्तत्वम्, "अत्वसन्तस्ये"ति दीर्घश्च न भवति। यद्वा,--यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राऽल्विधावपि विध्यर्थसिद्धम्। तेन "अतृणे"डित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन्भवति। "वर्णाश्रये नास्ति प्रत्ययलक्षण"मिति तु वर्णप्राधान्यविषयकम्, तेन गवे हितं "गोहित"मित्यत्राऽवैदेशोन। यद्यपीदं पक्षद्वयमाकरारूढं, तथापि नियमपक्ष एव प्रबल इति यङ्लुगन्ते मनोरमायां स्थितम्। स्यादेतत्-सूत्रस्याऽस्याऽवश्यकत्वेऽपि "प्रत्ययलोपे तल्लक्षण"मित्येव सूत्र्यतां किमनेन द्वितीयप्रत्ययग्रहणेन? अत्राहुः-"प्रत्ययस्याऽसाधारणं रूपं यत्रे"त्यादिलाभाय द्वितीयप्रत्ययग्रहणमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० लुमता ३।१ अङ्गस्य ६।१ प्रत्ययलोपे ७।१ ६१ प्रत्ययलक्षणम् १।१ ६१

समासः॥

लु अस्मिन् अस्ति इति लुमान्, तेन लुमता, {तस्यास्त्यस्मिन्निति मतुप् (५।२।९४)} इत्यनेन मतुप् प्रत्ययः

अर्थः॥

लुमता शब्देन प्रत्ययस्य लोपे (अदर्शने) सति, तस्मिन् परतः यदङ्गं तस्य यत् प्रत्ययलक्षणं कार्यं तत् न भवति।

उदाहरणम्॥

गर्गाः, मृष्टः, जुहुतः, वरणाः।
काशिका-वृत्तिः
न लुमता ऽङ्गस्य १।१।६३

पूर्वेण अतिप्रसक्तं प्रत्ययलक्षणम् इति विशेषे प्रतिषेधः उच्यते। लुमता शब्देन लुप्ते प्रत्यये यदङ्गं, तस्य प्रत्ययलक्षणं कार्यं न भवति। गर्गाः। मृष्टः। जुहुतः। यञ्शपोर् लुमता लुप्तयोरङ्गस्य वृद्धिगुणौ न भवतः। लुमता इति किम्? कार्यते। हार्यते। अङ्गस्य इति किम्? पञ्च। सप्त पयः। साम।
लघु-सिद्धान्त-कौमुदी
न लुमताङ्गस्य १९१, १।१।६२

लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्। कति २। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु। युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः॥ त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥
न्यासः
न लुमताङ्गस्य। , १।१।६२

"लुमता" इति। लुशबोद यस्मिन्निस्ति स लुमान्। कः पुनरसौ? लुगित्यादिसंज्ञाशब्दः। करणे चेयं तृतीया, हे तौ व, इत्थम्भूतलक्षणे वा। लुमता करणेन लुप्ते प्रत्यये, तेन हेतुना वा, तदुपलक्षितेन वेत्यर्थः। अथ प्रत्य इत्येतत् कुतो लभ्यते? प्रत्ययादर्शनस्यैव लुगादिसंज्ञाविधानात्। "लुमताशब्देन लुप्ते प्रत्यये यदङ्गम्" इति। तत् पुनस्तमेव प्रत्ययं निमित्तमाश्रित्य येनाङ्गसंज्ञा प्रतिलब्धा तद् वेदितव्यम्।तस्य प्रत्ययलक्षणं कार्यं न भवतीत्यविशेषाभिधानेऽपि प्रत्यासत्तेर्य एवासौ लुमता लुप्तः प्रत्ययोऽङ्गसंज्ञाया निमित्तं तल्लक्षणमिति गम्यते। "गर्गाः" इति। "गर्गादिभ्यो यञ्" ४।१।१०५ "यञञोश्च" २।४।६४ इति बहुषु लुक्। अत्र "तद्धितेष्वलचामादेः" ७।२।११७ इति वृद्धिर्न भवति। "मृष्टः" इति। मृजेस्तदस्, अदादित्वाच्छपो लुक्, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्, "मृजेर्वृद्धिः" ७।२।११४ इति वृद्धिर्न भवति। "जुहुतः" इति। तसि परतो जुहोत्यादिभ्यः श्लौ कृते सार्वधातुकलक्षणो गुणो न भवति। सर्वत्र यमेव प्रत्ययमाश्रित्याङ्गसंज्ञा जाता स एव वृद्ध्यादेः कार्यस्य निमित्तम्। इह च विशेषस्यानाश्रणान्न केवलमङ्गाधिकारविहितं कार्यं प्रतिषिध्यते; अपि त्वनङ्गा४धिकारविहितमपि। तेन गर्गाः, बिदाः, उष्ट्रग्रीवा इत्यत्र "ञ्नित्यादिर्नित्यम्" ६।१।१९१ इत्याद्युदात्तत्वमनङ्गाधिकारविहितमपि न भवति। इह च -- अत्रय इति तद्धितस्य "कितः" ६।१।१५९ इत्यन्तोदात्तत्वम्।

गर्गाः, बिदा इति यथाक्रमं गर्गादियञ्। "अनृष्यान्नतर्ये विददिभ्योऽञ्" ४।१।१०४ इत्यञ्। "यञञोश्च" २।४।६४ इति लुक्। उष्ट्रग्रीवा इति। "इवे प्रतिकृतौ५।३।९६ इति विहितस्य कनो "देवपथादिभ्यश्च" ५।३।१०० इति लुप्। अत्रय इति अत्रेरपत्यार्थे "इतश्चानिञः" ४।१।१२२ इति विहितस्य ढकः "अत्रिभृगुकुत्सवसिष्ठ" २।४।६५ इत्यादिना बहुषु लुक्। "पञ्च, सप्त" इति। "ष()ड्- भ्यो लुक्" ७।१।२२ इति जश्शसोर्लुक्। "पयः साम"इति। अत्रापि "स्वमोर्नपुंसकात्" ७।३।२३ इति। अत्र यद्यपि लुमता लुप्तः प्रत्ययः, तन्निमित्ता चाङ्गसंज्ञा, तथापि प्रत्ययलक्षणेन "सुप्तिङ्गन्तं पदम्" १।४।१४ इति पदसंज्ञा भवत्येव; यस्मान्नासाव-ङ्गस्य कार्यम्, अपि तु सविभक्तिकस्य समुदायस्य प्रत्ययस्य हि पूर्वभागोऽङ्गम्। न चेह तस् लुमता यो लुप्तः प्रत्यमाश्रित्याहगसंज्ञा भवति तमेवाश्रित्य पदसंज्ञा प्राप्नोति। पदसंज्ञायञ्चेह सत्यां पय इत्यत्र "ससजुषो रुः" ८।२।६६ इति रुत्वम्। खरवसनियोर्विसर्जनीयश्च पदकार्यं भवति। "पञ्च, सप्त,साम" इति। अत्रापि "नलोपः प्रा- तिपदिकान्तस्य" ८।२।७ इति नलोपः पदसंज्ञाकार्यम्। "कार्यते" इति। ण्यन्तात् कर्मणि लकारः, "सार्वधातुके यक्" (३।१।६७) अत्र न लुमता प्रत्ययो लुप्तः किं तर्हि? "णेरनिटि"६।४।५१ इति; अत्र "आतो लोपः" ६।४।६४ इत्यस्माल्लोपग्रहणानुवृत्तेः। तेन प्रत्ययलक्षणा वृद्धिर्भवत्येव॥

बाल-मनोरमा

न लुमताङ्गस्य २६१, १।१।६२

न लुमताङ्गस्य। "प्रत्ययलोपे प्रत्ययलक्षण"मित्यनुवर्तते। "लु"इत्येकदेशोऽस्यास्तीति लुमान्=लुक्शब्दः श्लुशब्दो सुप्शब्दश्च। तेन शब्देन प्रत्ययलोपे विहिते सति प्रत्ययनिमित्तकमङ्गकार्यं न स्यादित्यर्थः। तदाह--लुक्श्लु इत्यादिना। अङ्गस्येत्यनुक्तौ पञ्च सप्तेत्यादौ "सुप्तिङन्त"मिति पदसंज्ञा न स्यात्, जश्शसोर्लुका लुप्तत्वात्। ततश्च "न लोपः प्रातिपदिकान्तस्ये"ति नलोपो न स्यात्। अतोऽङ्गस्येत्युक्तम्। एवञ्च जसि लुका लुप्ते "प्रत्ययलक्षणाऽभावाज्जसि चे"ति गुणो न भवतीत्यभिप्रेत्योदाहरति--कतीति। प्रसङ्गादाह--अस्मदिति। त्रिष्विति। पुंस्त्रीनपुंसकेष्वित्यर्थः। सरूपा इति। समानानि रूपाणि येषामिति विग्रहः। लिङ्गविशेषबोधकटाबाद्यभावादिति भावः। नचैवं सति "अलिहगे युष्मदस्मदी"इति "साम आक"मिति सूत्रस्थभाष्यविरोध इति वाच्यं, पदान्तरसंनिधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यां न प्रतीयते इति हि तदर्थः। अत एव "न षट्स्वरुआआदिभ्यः" इति पञ्चनादिषट्संज्ञकेभ्यष्टाब्ङीब्निषेधः सङ्गच्छते। अन्यथा स्त्रीत्वाऽभावादेव तदभावे सिद्धे किं तेन?। अत एव च "ङे प्रथमयो"रिति सूत्रे भाष्ये युष्मानित्यत्र "तस्माच्छसो नः पुंसी"त्युपन्यासः सङ्गच्छते। अत एव च "नेतराच्छन्दसी"ति सूत्रे शिशीनुमादिभिर्युष्मदस्मदाद्यादेशानां विप्रतिषेधपरं वार्तिकं तद्भाष्ये च सङ्गच्छते। इति दिक्। त्रिशब्दे विशेषमाह--त्रिशब्द इति। त्रि-आमिति स्थिते नुटि दीर्घे णत्वे त्रीणामिति प्राप्ते।

तत्त्व-बोधिनी

न लुमताङ्गस्य २२१, १।१।६२

न लुमताङ्गस्य। लुमतेति किम्? कार्यते हार्यते। अत्र "णेपनिटि"इति णिलोपेऽपि णिजपक्षे वृद्धिर्भवत्येव। अङ्गस्येति किम्()। "पञ्च""सप्त""कती"त्यादौ प्रत्ययान्तकार्यं "सुप्तिङन्ताम्---"इति पदसंज्ञा यथा स्यात्। अस्मदिति। प्राचा त्वव्ययास्मदिति पठितं,तत्र अव्ययेत्युपेक्षितम्, "सदृशं त्रिषु लिङ्गेषु"इति श्रुतोर्लिङ्गत्रयाद्यभावपरत्वेन अव्ययानामलिङ्गत्वात्। अव्ययीभावस्य तु वचनात्क्लीबत्वेऽपि लिङ्गान्तराऽभावाच्च। त्रिशब्द इति। "तरतेङ्ग्रिः"। डित्वाट्टिलोपः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अचः ६।१ अन्त्यादि १।१ टि १।१

समासः॥

अन्त्यः आदिः यस्य तत् अन्त्यादि, बहुव्रीहिः

अर्थः॥

अचः इति निर्धारणे षष्ठी। अन्ते भवं अन्त्यम्, {दिगादिभ्यो यत् (५।३।५४)} इत्यनेन यत् प्रत्ययः। अचां मध्ये यः अन्त्यः अच्, सः आदिः यस्य समुदायस्य, सः टि-संज्ञकः भवति।

उदाहरणम्॥

अग्निचित्, सोमसुत्, इत्यत्र इत् उत् शब्दः। पचेते, पचेथे।
काशिका-वृत्तिः
अचो ऽन्त्याऽदि टि १।१।६४

अचः इति निर्धारणे षष्ठी। जातावेकवचनम्। अचां सन्निविष्ठामां, यो ऽन्त्यो ऽच् तदादि शब्दरूपं टिसंज्ञं भवति। अग्निचितिच्छब्दः। सोमसुतुच्छब्दः। आताम्, आथामाम्शब्दः। पचेते, पचेथे। टिप्रदेशाःटित आत्मनेपदानं टेरे ३।४।७९ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
अचोऽन्त्यादि टि ३९, १।१।६३

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट् टिसंज्ञं स्यात्। (शकन्ध्वादिषु पररूपं वाच्यम्)। तच्च टेः। शकन्धुः। कर्कन्धुः मनीषा। आकृतिगणोऽयम्। मार्तण्डः॥
न्यासः
अचोऽन्त्यादि टि। , १।१।६३

"अन्त्यादि"इति बहुव्रीहिः अचां मध्ये योऽन्त्योऽच्,स आदिर्यस्य शब्दरूप- स्य तत् तथोक्तम्। ननु चान्त्यशब्दोऽत्राचामित्येतदपेक्षत इत्यसामथ्र्यादादिशब्देन सह समासो न प्राप्नोति, नैष दोषः; अन्त्यशब्दो हि सम्बन्धिशब्दः, सम्ब्नधिशब्दानां नित्यसापेक्षत्वेन गमकत्वात् सापेक्षत्वेऽपि समासो भवति, यथा देवदत्तस्य गुरुकुल- मिति। "निर्धारणे षष्ठी" इति। "यतश्च निर्धारणम्" २।३।४१ इत्यनेन यदि निर्धारणे षष्ठीयम्, एवं हि सति निर्धारणमनेकसन्निपाते भवतीत्यच इत्येकवचनं न स्यात्। बहुत्वद्बहुवचनेन भवितव्यमित्यत आह -- "जातावेकवचनम्" इति। जातेरेकत्वादिति भावः। "अचां सन्निविष्टानां योऽन्त्योच्" इति। कथं पुनरजित्येष विशेषो लभ्यते, यावता नेह द्वितीयमज्ग्रहणम्, नापि प्रकृतम्? एवं मन्यते -- समानजातीयस्यैव लोके निर्धारणं प्रसिद्धम्। तथा हि, कृष्णा गवां सम्पन्नक्षीरतमेति द्वितीयं गोशब्दमन्तरेणापि गौरेव प्रतीयते। तस्मादिहापि यद्यपि द्वितीयमज्ग्रहणं नास्ति, तथापि समानजातीयोऽजेव निर्धार्यमाणोऽवसीयत इति। अन्ते भवोऽन्त्यः, दिगादित्वात् यत्। "तदादि" इति। स आदिर्यस्येति विग्रहः। "इच्छब्दः" इत्यादिनि रूपोदाहरणानि। कार्यं पुनरिच्छब्दस्य टिसंज्ञायामग्निचितमाचष्ट इति

णिचि कृते "णाविष्टवत् प्रातिपदिकस्य" (वा।८१३) इति टिलोप अ()ग्न चयतीति। "आताम्, आथाम्" इति। अनयोस्तु टिसंज्ञाकार्यम्-- "टित आत्मनेपदानां टेरे"३।४।९७ टेरेत्वम्। "पचेते, पचेथे" इति कार्योदाहरणे। अथ वहिमहिङोरिकारस्य कथं टिसंज्ञा, यावता न सोऽस्ति यस्य सोऽन्त्यः, अजादिरिति व्यपदिश्यते? नैष दोषः; "आद्यन्तवदेकस्मिन्" १।१।२० इतिव्यपदेशिद्भावेनादिः, अन्त्य इति व्यपदेशो भविष्यति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अलः ५।१ अन्त्यात् ५।१ पूर्वः १।१ उपधा १।१

अर्थः॥

अत्रापि पूर्ववत् अन्ते भवम्, अन्त्यम् इति बोध्यम्
अन्त्यात् अलः पूर्वः यः अल्, सः उपधा-संज्ञकः भवति

उदाहरणम्॥

भेत्ता, चेत्ता
काशिका-वृत्तिः
अलो ऽन्त्यात् पूर्व उपधा १।१।६५

धात्वादौ वर्णसमुदाये ऽन्त्यादलः पूर्वो यो वर्णः सो ऽलेव उपधासंज्ञओ भवति। पच्, पठकरः। भिद्, छिदिकारः। बुध्, युधुकारः। वृत्, वृधृकारः। अलः इति किम्? शिष्टः, शिष्टवान्। समुदायात् पूर्वस्य मा भूत्। उपधाप्रदेशाःअत उपधायाः ७।२।११५ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
अलोऽन्त्यात्पूर्व उपधा १७६, १।१।६४

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः॥
न्यासः
अलोऽन्त्यात्पूर्व उपधा। , १।१।६४

अलोऽन्त्यादितिसमानाधिकरणे पञ्चम्यौ। "धात्वादौ वर्णसमुदाये"इति। ननु च नेह वर्णसमुदाय ग्रहणमस्ति, नापि तत् प्रकृतम्। तत् कथमेषोऽर्थो लभ्यते? अन्त्यग्रहणात्, समुदायस्यैवान्त्योऽल् भवति, न केवलः। तस्मादन्त्यग्रहणादेषोऽर्थो लभ्यते। "अलेव" इति।एवकारकरणादेवाल्समुदायो व्यवच्छिद्यते। ननु च नेह द्वितीय-मल्ग्रहणमस्ति, तदल्सुमुदायस्याप्येषा संज्ञा कसमान्न भवति? लोकतश्च। लोके ह्मीषां बाहृणानामन्त्यात् पूर्व आनीयतामित्युक्तएक एवान्त्यात् पूर्व आनीयते, न समुदायः। एवमप्यल एव व्यवहितस्य कस्मादेषा संज्ञा न भवति? व्यहितेऽपि पूर्वशब्दो वत्र्तत एव। अत एव लौकिकाद् दृष्टान्तात्-- लोके ह्मन्त्यात् पूर्वमानयेत्युक्ते न कश्चिद् व्यवहितमानयति, अपि त्वननतरमेव। यदि ह्मल एवैषा संज्ञा, नाल्समुदायस्य, "ऋतश्च संयोगादेर्गुणः"७।४।१० इत्यत्र यद् वक्ष्यति-- "संयोगादिगुणविधाने संयोगोपधग्रहणं कत्र्तव्यम्" इति, तद्व्याहन्यते; न ह्मल

एवोपधासंज्ञायामनेकानन्तरहल्समुदायात्मनः संयोगस्योपधात्वमुपपद्यते। संयोगावयवस्योपधात्वादवयवधर्मेण समुदायस्य तथा व्यपदेश इत्यविरोधः। भवति ह्रवयवधर्मेण समुदायस्य तथा व्यपदेशः, यथा-- आढ()मिदं नगरमिति। अथ वा- संयोगस्याल्पूर्वत्वोपलक्षणार्थं तत्रोपधाग्रहणं द्रष्टव्यम्। अकार इत्यादीनि रूपोदाहरणानि। कार्यं त्वकारस्योपधासंज्ञायां पाचकः, पाठक इत्यत्र "अत उपधायाः" ७।२।११६ इति वृद्धिः। इकारलृकारयोस्तु भेदकः, छेदकः, वत्र्तकः वद्र्धक इति। अत्र "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः। "शिष्टः" इति। "शासु अनुशिष्टौ" (धा।पा।१०७५), निष्ठा, "शास इदङ हलोः" ६।४।३४ इति उपधाया इत्वम्। तत्र हि "अनिदिताम्" ६।४।२४ इत्यादेः सुत्रादुपधाग्रहणमनुवत्र्तते। "शासिवसि" ८।३।६० इत्यादिना षत्वम्। "समुदायात्" इत्यादि। अकारसकारसमुदायात्। पूर्वस्य शकारस्योपधासंज्ञा मा भूदित्यर्थः। यदि हि स्यात्,तस्यैवेत्त्वं स्यात्॥

बाल-मनोरमा

अलोऽन्त्यात्पूर्व उपधा २४७, १।१।६४

सखन्-स् इति स्थिते उपधाकार्यं वक्ष्यन्नुपधासंज्ञामाह--अलोन्त्यात्। "अल" इति पञ्चमी, "अन्त्या"दिति सामानाधिकरण्यात्। अल्प्रत्याहारो वर्णपर्यायः। पूर्वोऽप्यलेव गृह्रते, साजात्यादित्याह--अन्त्यादल इत्यादिना। अलः किम्?। "शिष्ट" इत्यत्र शास्धातौ आसिति संघातात्पूर्वशकारस्योपधात्वं न भवति। अन्यथा "शास इदङ्हलो"रिति शकारस्येकारप्रसङ्गः। वर्णग्रहणं किम्?। शास्धातौ "शा" इति समुदायस्य उपधात्वं न भवति। अन्यथा "शा" इति समुदायस्य इकारः स्यात्। न चालोन्त्यपरिभाषया आकारस्यैव इकारो भवतीति वाच्यं, "नानर्थकेऽलोन्त्यविधि"रिति तन्निषेधात्।

तत्त्व-बोधिनी

अलोऽन्त्यत्पूर्व उपधा २०८, १।१।६४

अलोऽन्त्यात्पूर्व। "अल"इति पञ्चमी "अन्त्या" दित्यनेन विशेष्यात इत्याह-अन्त्यादल इति। अलः किम्()। "शिष्टाः" "शिष्टवा" नित्यादावन्त्यात्सङ्घातात्पूर्वस्य शकारस्य मा भूत्। सत्यां हि संज्ञायां "शास इदङ्हलोः" इति शस्येत्त्वं स्यात्। नन्वेवमप्यन्त्यादलः पूर्वस्य सङ्घातेस्योपधासंज्ञायां "शिष्ट"इत्यादौ शकारविशिष्टस्याकारस्य इत्त्वं स्यादित्यतिप्रसङ्गदोषस्तदवस्थ एवेति चेदुच्यते--यथा हि लोके "अमीषां ब्राआह्णआणानामन्त्यात्पूर्व आनीयिता"मित्यक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते, तथाऽत्राप्यन्त्योऽलात्मक इति तत्पूर्वोऽप्यलेव गृह्रते। तदेतदाह--पूर्वो वर्ण इति। अत्र"अचोऽन्त्यादि टी" त्यत्रेव "अल" इति निर्धारणे षष्ठीत्यपि सुवचमिति केचिदाहुः, "अलां मध्ये योऽन्त्यस्तस्मात्पूर्वो वर्ण उपधासंज्ञः स्या"दिति व्याख्याया अपि संभवदुक्तिकत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तस्मिन् ७।१ इति ० निर्दिष्टे ७।१ ६६ पूर्वस्य ६।१

अर्थः॥

तस्मिन् इति सप्तम्या विभक्त्या निर्दिष्टे सति पूर्वस्य कार्यं भवति, अर्थात् सप्तम्यर्थ-निर्देशात् यः पूर्वः वर्णः तस्य कार्यं

भवति। इहापि इतिकरणः अर्थनिर्देशार्थः, तेन तस्मिन्-इति पदेन सप्तम्यर्थः गृह्यते, न तु तस्मिन् इति शब्दः।

उदाहरणम्॥

दध्युदकम्, मध्विदम्, पचत्योदनम्।
काशिका-वृत्तिः
तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६

तस्मिनिति सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति, नौत्तरस्य। इको यणचि ६।१।७४दध्युदकम्। मध्विदम्। पचत्योदनम्। निर्दिष्टग्रहणम् आनन्तर्यार्थम्। अग्निचिदत्र इति व्यवहितस्य मा भूत्।
लघु-सिद्धान्त-कौमुदी
तस्मिन्निति निर्दिष्टे पूर्वस्य १६, १।१।६५

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहतिस्य पूर्वस्य बोध्यम्॥
न्यासः
तस्मिन्नित निर्दिष्टे पूर्वस्य। , १।१।६५

किमर्थमिदम्? "इको यणचि" ६।१।७४ इत्येवमादावचीत्येवमादेराधाराधेयभावः प्रत्यासत्तिनिबन्धनः, यथा -- गङ्गायां घोषः प्रतिवसतीति। अत्र गङ्गायाः सा च प्रत्यासत्तिर्यथा पूर्वमपेक्ष्य भवति, तथा परमपि। ततदश्च दध्युदकादिषु न ज्ञायते-- किं पूर्वस्येकः प्रत्यासत्तिभाजो यणादेशः, उत परस्येति। तत्र सन्देहेसति नियमार्थेयं परिभाषाऽऽरभ्यते। यद्येवं सन्देहविषय इयमारभ्यत इति यत्र सन्देहस्तत्रोपतिष्ठते, ततश्च दध्युदकमिति सिद्धं स्यात्; इदं तु न सिध्यति-- दध्यत्रेति। ननु च विनैव परि- भाषैतत् सिद्धम्, न ह्यत्र सन्देहोऽस्ति। इदं तर्हि न सिध्यति-- समिदत्रेति, अग्निचिदत्रेति। यदि हि यत्र सन्देहो नास्ति, तत्रैषा परिभाषा न स्यादिहानुपस्थानात्, व्यवधानेऽपि यणादेशः स्यादेव। तस्मादसन्देहविषयेऽप्येषा परिभाषा यथा भवति स यत्नःकत्र्तव्यः। एष क्रियते-- इह (तस्मिन्निति) "सप्तमीनिर्दिष्टे पूर्वस्य" १।१।६५ तावत् सूत्रं कत्र्तव्यम्; इयतैवाभिलषितार्थसिद्धेः। तत्राप्ययमर्थः-- स्वरूपग्रहणशङ्कां निराकर्तुमितिकरणो न कत्र्तव्यो भवति। न हि क्वचिच्छास्त्रं सप्तमीनिर्दिष्टः शब्दः श्रूयते, येन स्वरूपग्रहणमाशङ्क्येत। सोऽयमल्पेन सूत्रेण सिद्धे यन्महत् सूत्रं करोति तन्महाविषयेयं परिभाषेति। सूचनार्थम्। एवं च महाविषयेयं भवति यदि सर्वत्र-- सन्देहविषये, अन्यत्र च प्रवत्र्तते। स्यादेतत्-- "सप्तमीनिर्दिष्ट" इत्युच्यमाने सप्तम्या यद्यप्यधिकरणं निर्दि-श्यते, तथापि तस्याधेयप्रधानत्वात् "इको यणचि" ६।१।७४ इत्यत्राचि योल्व्यवस्थित-स्तस्मिन् यणादेशो विज्ञायते, ततश्चेहैव स्यात् दधि भुङ्क्त इति, इह तु न स्यात्-- दध्यत्रेति; यथान्यासे त्वेष दोषो नास्ति, तस्मात् महत् सूत्रं प्रणीतम्" इति, नैतदस्ति; यदयं "दाधाघ्वदाप्" १।२।२० इति निर्देशं करोति, तज्ज्ञापयति-- अधिकरण एव यणादेशादिकार्यं भवति, न त्वाधेय इति। अपि च-यथान्यासेऽप्यधिकरणस्यादेयप्रधानत्वादाधेय एव यणादेशादिकार्यं तेन सर्वत्रैषा परिभाषोपतिष्ठत इति सर्वमिष्टं सिद्धं भवति। इह "स्वं रूपं शब्दस्याशब्दसंज्ञा"१।१।६७ इति स्वरूपस्यैव ग्रहणेन भवितव्यम्। ततश्च यत्रैव तस्मिन्नित्येतत् पदमुच्चार्यते तत्रैवेयं परिभाषा स्यात् "तस्मिन्नणि च यष्माकास्माकौ" ४।३।२ इति। अस्ति ह्यत्र तस्याः परिभाषायाः परनिवृत्तिः प्रयोजनम्-- यौष्माकीणं युष्मभ्यं देहि, आस्माकीनमस्मभ्यं देहीति। युष्मभ्यं देहि यौष्माकीणम्, अस्मभ्यं देह्यास्माकीनमिति। "इको यणचि" ६।१।७४ इत्येवमादौ त्वेषा नोपतिष्ठते,इत्यत आह-- "तस्मिन्" इति। "सप्तम्यर्थनिर्देशे" इति। एवं मन्यते-- इतिकरणो ह्यत्र कृतः, स च स्वरूप- पदार्थकत्वं निरस्यार्थपदार्थकत्वं तस्मिन्नित्यस्य सम्पादयति, तेनार्थस्यैव ग्रहणं भवति। स त्वर्थोऽवश्यं येन केनचिचछब्देन

निर्देष्टव्य इति नानार्थकत्वात् सामान्यवाचिना तस्मिन्निन्त्यनेन पदेन निर्दिष्ट इति। ननु च शब्दस्यार्थेन पौर्वापर्यं न सम्भवतीत्यर्थेनासम्भवात् तद्वाचिना शब्देन विज्ञास्यत इत्यदोषः। अत्रेदं चोद्यते-- अर्थस्य ग्रहणं यथा स्यात् स्वरूपस्य च ग्रहणं मा भूदित्येवमर्थमितिकरणः क्रियते, तच्च स्वरूपग्रहणम् "तस्मिन्नणि च युष्माकास्माकौ" ४।३।२ इति सूत्रेण सम्भाव्यते; यदि च स्वरूपग्रहणं स्यात्, तत्रैव पूर्वग्रहणं कुर्यात्, न च कृतम्; तसमादवगम्यते-- अन्तरेणापीतिकरणमर्थस्यैव ग्रहणं भविष्यति, न स्वरूपस्येति नार्थस्तेन?। स्तयमेतत्; ये तु मन्दवुद्ध्य एव प्रतिपत्तुमसमर्थास्तान् प्रति सुखाववधनार्थमितिकरणः क-तः। निर्दिष्टग्रहणमिदर्थस्य विशेषणम्। इह च शास्त्रे "इको यणचि" ६।१।७४ इत्यादिषु वाक्येषु यत्र सप्तम्यर्थोऽस्ति तत्रासौ निर्दिष्ट एव सर्वत्र। तदपार्थकं निर्दिष्टग्रहणविशेषणं व्यभिचाराभावादित्यत आह-- "निर्दिष्टग्रहणम्" इत्यादि। आनन्तर्यमव्यवधानमर्थो यस्य तत् तथोक्तम्। कथं पुनस्त-दानन्तर्यार्थं भवति? ततस्तत्प्रतीतेः। तथा हि दिशिरयमुच्चारणक्रियः, निःशब्दोऽ- प्ययमिह नैरन्तर्यं द्योतयति। तत्र निरन्तरं दिष्टः= निर्दिष्ट इति प्रादिसमासे कृते स्फुटमेनानन्तरमुच्चारितमिति प्रतीयते। किमर्थं पुनरानन्तर्यमाश्रितमित्यत आह-- अग्निचिदत्रेत्यादि। पूर्वशब्दोऽ-यं व्यवहितेऽपि वत्र्तते। तत्र यद्यानन्तर्य नाश्रीयते ततो व्यवहितेऽपि स्यादित्यभिप्रायः। ननु च "अचि" इत्यौपश्लेषिकमधिकरणं विज्ञायते, न च व्यवहितमुपश्लिष्टं भवति, तत् किमानन्तर्यार्थेन निर्दिष्टग्रहणेन? असदेतत्; असति हि निर्दिष्ट्()ग्रहणाउपश्लेषिकमधिकरणमेव न शक्यं विज्ञातुम्। यस्मात् पूर्वशब्दो व्यवहितेऽपि वत्र्तमानः परस्यैव निवृतिं()त करोति, न व्यवहितपूर्वस्यापि। निर्दिष्टग्रहणे तु सति, सप्तम्या औपश्लेषिकाधिकरणाभिधायिन्याः प्रत्यासत्तिरुपादीयते। सा च पूर्वग्रहणेन न निवत्र्यते, परनिवृत्तिरेव क्रियत इत्येषोऽर्थो लभ्यते। तेन व्यवहितस्य कार्यंन भवति। उत्तरार्थं च निर्दिष्टग्रहणं कत्र्तव्यमेव॥

बाल-मनोरमा

तस्मिन्निति निर्दिष्टे पूर्वस्य ४२, १।१।६५

तस्मिन्निति निर्दिष्टे। "इको यणची"त्यत्र अचि इको यण् स्यादित्यवगतम्। तत्राऽचो वर्णान्तराधिकरणत्वं न संभवतीति सतिसप्तम्याश्रयणीया,-अचि सति इको यण् स्यादिति। तत्र व्यवहितेऽव्यवहिते च इको यण् प्राप्तः। ततश्च "समिध"मित्यत्र धकारल्यलहितेऽकारे सत्यरि मकारादिकारस्य यण् स्यात्। तथा अचि सति पूर्वस्य परस्य वा इको यण् प्राप्तः। ततश्च दध्युदकमित्यत्र इकारे अचि सति उकारस्य परस्यापि इको यण् स्यात्। तत्राऽव्यवहित एव अचि भवति न व्यवहिते, पूर्वस्यैव भवति न परस्येत्येतदर्थमिदमारभ्यते। तस्मिन्निति न तच्छब्दः स्वरूपपरः। तथा सति "तस्मिन्नणि च युष्माकास्माकौ" इत्यादावेव प्रवर्तेत, न त्विको यणचीत्यादौ। किन्तु इको यणचीत्यादिसूत्रगतस्याऽचीत्यादिसप्तम्यन्तपदस्य "तस्मिन्नि"त्यनुकरणम्। "इती"त्यनन्तरं "गम्येऽर्थे" इति शेषः। निरिति नैरन्तर्ये। दिशिरुच्चारणे। एवं च इको यणचि रायो हलीत्यादिसूत्रेषु इचि हलि इत्येवं सप्तम्यन्तपदगम्येऽर्तेऽकारादौ दध्यत्र सुध्युपास्य इत्यादिप्रयोगदशायां निर्दिष्टेऽव्यवहितोच्चारिते सति पूर्वस्य कार्यं भवति, न तु व्यवहितोच्चारिते नापि परस्येति फलितोऽर्थः। व्यवधान#ं च वर्णान्तरकृतमेव निषिध्यते, नतु कालकृतम्। "इको यणची"त्यादौ कालकृतव्यवधानस्य संहिताधिकारादेव निरासलाभात्, तत्र कालकृतव्यवधानस्याप्यनेनैव सूत्रेण निरासे संहिताधिकारस्य वैयथ्र्यापातात्। एवं च ये संहिताधिकारबहिर्भूताः "आनङृतो द्वन्द्वे" "देवताद्वन्द्वे च" इत्यादय उत्तरपदे परत आनङादिविधयस्ते सर्वे अगनाविष्णू इत्यग्नाविष्णू इत्याद्यवग्रहे कालव्यवधानेऽपि भवन्ति। एतत्सर्वमभिप्रेत्य पर्यवसन्नार्थमाह--सप्तमीनिर्देशेनेत्यादिना।--इति सूत्राक्षरानुयायी पन्थाः। "अतिशयने तम"बित्यत्र तु नेयं परिभाषा प्रवर्तते, सर्तम्यन्तातिशायनपदार्थस्य शब्दरूपत्वाभावेनाऽव्यवहितोच्चारितत्वरूपनिर्धिष्टत्वाऽसंभवात्। नचैवमपि "कर्तृकर्मणोः कृती"त्यत्रापि अस्याः परिभाषायाः प्रवृत्तौकर्तृषष्ठी कर्मणिषष्ठी च कृष्णस्य कृतिः जगतः कर्ता कृष्ण इत्यत्रैव स्यान्नतु "कृतिः कृष्णस्य" "कर्ता

जगत" इत्यत्र इति वाच्यं, लक्ष्यानुरोधेन क्वचिदेवंजातीयकेष्वस्याः परिभाषाया अप्रवृत्तिरिति "श्नान्नलोप" इति सूत्रे भाष्ये प्रपञ्चितत्वात्। वस्तुतस्तु भाष्यानुसारेणाऽत्र सूत्रे निर्दिष्टग्रहणं संहिताधिकारसूत्रं च विफलमेवेति इको यणचीत्यत्र वक्ष्यते।

तत्त्व-बोधिनी
तस्मिन्निति निर्दिष्टे पूर्वस्य ३६, १।१।६५

तस्मिन्निति। सप्तम्यन्तानुकरणमिदम्। "निःशब्दो नैरन्तर्यपरः। दिशिरुच्चारणक्रियः। "अचि य"णित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तमव्यवहिते एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति त नियम्यते। अव्यवहितस्येति तु फलितार्थकथनम्। पूर्वस्यैवेति किं?, दध्युदकम्। अत्रोकारस्य मा भूत्। अव्यवहितस्यैवेति किम्?, अग्निचिदत्र सोमसुदत्र। व्यवधानं चात्र वर्णकृतमेव निषिध्यते, नतु कालकृतम्। संहिताधिकाराज्ज्ञापकात्। अन्यथा निर्दिष्टग्रहणादेवाऽसंहितायां यणाद्यप्रसङ्गा()त्क तेन संहिताधिकारेण?। अतो व्याचष्टे-वर्णान्तरेणेति। एवं च संहिताधिकारबहिर्भूतविधयः कालव्यवायेपि संभवन्ति। तेनाग्नाविष्णू इत्यादाववग्रहेऽपि "अनाङ्तो द्वन्द्वे" "देवताद्वन्द्वे चे"त्यादिना उत्तरपदे परतो विहिता आनङादयो भवन्तीति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तस्मात् ५।१ इति ० उत्तरस्य ६।१ निर्दिष्टे ७।१ ६५

अर्थः॥

पञ्चम्या विभक्त्या निर्दिष्टे सति उत्तरस्य कार्यं भवति। {आदेः परस्य (१।१।५३)} इत्यस्य शेषसूत्रम्, तथा च तस्य सङ्गतिः अत्र कर्त्तव्या।

उदाहरणम्॥

आसीनः, द्वीपम्, अन्तरीपम्, समीपम्। ओदनं पचति॥
काशिका-वृत्तिः
तस्मादित्युत्तरस्य १।१।६७

निर्दिष्टग्रहनम् अनुवर्तते। तस्मातिति पञ्चम्यर्थनिर्देश उत्तरस्यैव कार्यं भवति, न पूर्वस्य। तिङ्ङतिङः ८।१।२८ ओदनं पचति। इह न भवति पचत्योदनम् इति।
लघु-सिद्धान्त-कौमुदी
तस्मादित्युत्तरस्य ७१, १।१।६६

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम्॥
न्यासः
तस्मादित्युत्तरसस्य। , १।१।६६

किमर्थमिदम्? "तिङ्ङतिङः" ८।१।२८ इति याऽत्र सा तु न कारकविभक्तिः, किंतर्हि? "दिक्शब्दादञ्चूत्तरपद" २।३।२९ इति दिग्योगलक्षणा। दिक्शब्दस्त्वध्या- हार्यः, तत्र किं पूर्वशब्दमध्याह्रत्यातिङः पूर्वस्य निघातः क्रियते? उत परशब्दम- ध्याह्रत्य परस्य? इति सन्देहे सति परिभाषेयं नियमार्()ताऽऽरभ्यते। "निर्दिष्टग्रहणमनुवत्र्तते"इति। तेन तस्यानन्तर्यार्थत्वाद्व्यवहितस्य कार्यं न भवतीति भावः। इहापीतिकरणोऽर्थनिर्देशार्थः क्रियते। तेन पञ्चम्यर्थग्रहणं भवति, न तु शब्दस्वरूपस्येत्यभिप्रायेणाह-- "तस्मात्" इति। "पञ्चम्यर्थनिर्देशः" इति। ननु च पूर्वसूत्रादेवेतिकरणोऽनुवर्तिष्यते, तत् किमर्थः पुनरिहेतिकरणः? अनेन प्रकारेण पूर्वसूत्रादेकदेशोऽनुवत्र्तत इति ज्ञापनार्थ-। तेनेतिशब्दवन्निर्दिष्ट-ग्रहणमनुवत्र्ततेत्येतदाख्यातं भवति। अन्यस्त्वाह-- "इतिकरणं त्विहावधेरवधिमत्तन्त्रतां निवत्र्तयति। तेनावधेरे-वोत्तरस्य विज्ञायते, नावधिमतः। स्वरूपग्रहणनिरासार्थस्त्वितिकरणो न भवति; स्वरूपा-भावात्। यदपि "तस्माच्छसो नः पुंसि" ६।१।९९ इति, तत्रापि पूर्वसवर्णदीर्घात् पूर्वः शस् न सम्भवतीति न भवति सन्देहः। तस्मादवधेरवधिमत्तन्त्रतानिरासार्थ एवेति- शब्दः" इति, अत्रोच्यते; यद्यवधेरेवोत्तरस्य कार्यं यथा स्यादवधिमतो मा भूदित्येवम-र्थं इतिकरणोऽवधेरवधिमत्तन्त्रतामपाकर्तुं क्रियते, नार्थस्तेन; लोकत एव तत्सिद्धेः; लोके हि तस्माच्छात्रादुत्तरो भोज्यतामित्युक्तेरवधेरेवोत्तरो भोज्यते, नावधिमतः। तदिहापि विनापीतिकरणेनावधेरेवोत्तरस्य कार्यं भविष्यति; नावधिमतः। यदप्युक्तम्-- "तसमाच्छसो नः पुंसि" ६।१।९९ इत्यत्रापि पूर्वसवर्णदीर्घात् पूर्वः शस् न सम्भवति" इति, तदप्ययुक्तम्;तथा ह्रशब्दादिशब्दाच्च शसि परतः पूर्वसवर्णदीर्घत्वे पूर्वत्र च वृक्षादिशब्दे शसन्ते व्यवस्थापिते गच्छत आन् वृक्षानुपलभते गच्छतो वृक्षानानुपलभत इत्यत्र पूर्वसवर्णदीर्घात् पूरवं शश् सम्भवत्येव। अथ यत्रोभयनिर्देशस्तत्र कस्य कार्येण भवितव्यम्? तत्र यानवकाशा सेतरस्याः षष्ठीं प्रकल्पयिष्यति, अतः षष्ठीनिर्दिष्टस्य कार्यं भविष्यति। यथा "आने मुक्" ७।२।८२ इत्यत्र सप्तमी निरवकासा "अतो येयः" ७।२।८० इत्यत इति पञ्चम्याः पूर्वसूत्रे सावकाशायाः षष्ठीत्वं प्रकल्पयिष्यति। तथा "ईदासः" ७।२।८३ इति पञ्च- म्याऽऽन इति पूर्वसूत्रे सावकाशायाः सप्तम्याः। यत्रोभे सावकासे तत्र परत्वात् पञ्चमी सप्तम्याः षष्ठीं प्रकल्पयिष्यति। यथा-- "आमि सर्वनाम्नः सुट्" ७।१।५२ इति"आज्जसेरसुक्" ७।१।५० इत्यत्र पञ्चमी सावकाशा। "आमि" इति सप्तम्युत्तरार्था। तत्रादिति पञ्चमी आमीति सप्तम्याः षष्ठीत्वं प्रकल्पयति, तेन सर्वनाम्न उत्तरस्यामः सुड् भवति। इह तु "दीर्घात्" ६।१।७३ "पदान्ताद्वा" ६।१।७३ इति, यद्यपि "च्छे च" ६।१।७१ इति सप्तमी पूर्वसूत्रे सावकाशा, तथापि तस्याः स्वरित्त्वात् पूर्वयोगादनुवृत्ताया निरवकाशत्वम्। अतः सा च सप्तमी पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति। पञ्चमी तु पौर्वपर्यं प्रकल्प्य सावकाशा निवत्र्तते। तेनायं सूत्रार्थो भवति- दीर्घादुत्तरो यच्छः, तस्मिन् परतः पूर्वस्य दीर्घस्यैव तुग् भवतीति। "सार्वधा- तुके यक्" ७।१।६७ इत्यत्र निरवकाशापि सप्तमी धातोरिति पञ्चम्याः सावकाशाया अपि षष्ठीत्वं न प्रकल्पयति; अन्यथा हि धातोरेवादेशा यगादयः स्युः। ततश्च "परश्च" ३।१।२ इत्यस्यानुवृत्तस्य बाधाद् यगादीनां चानुबन्धकरणस्य वयथ्र्यं प्रसज्येत। न हि धात्वादेशत्वे सति तेषां परत्वमुपपद्यते तु ते धातोः परे भवन्ति॥

बाल-मनोरमा

तस्मादित्युत्तरस्य ४३, १।१।६६

तस्मादित्युत्तरस्य। द्व्यन्तरुपसर्गेभ्योऽप ईत्" "उदस्थारतम्भोः पूर्वस्ये"त्यादिसूत्रगतपञ्चम्यन्तस्यानुकरणं "तस्मा"दिति। "इति" शब्दानन्तरं "गम्येऽर्थे" इति शेषः। "निर्दिष्टे" इत्यनुवर्तते। निरिति नैरन्तर्ये। दिशिरुच्चारणे "द्व्यन्त"रित्यादिसूत्रेषु पञ्चम्यन्तगम्येऽर्थे=द्व्यन्तरादिशब्दे निर्दिष्टे= अव्यवहितोच्चारिते सत्येव ततः परस्यैव ईत्वं भवति, न तु व्यवहितोच्चारिते द्व्यादिशब्दे, नापि ततः पूर्वस्य भवतीति नियमार्थमिदम्। तदाह-- पञ्चमीनिर्देशेनेत्यादिना। उत्तरस्य किम्? तिङ्ङतिङ" इति निघात उत्तरस्यैव भवति--अग्निमीले। नेह ईले अग्निम्। अव्यवहिते किम्(), उत्प्रस्थानम्। उदःस्थास्तम्भोरिति पूर्वसवर्णो न भवति।

तत्त्व-बोधिनी

तस्मादित्युत्तरस्य ३७, १।१।६६

तस्मादिति। उत्तरस्येति किम्?, तिङ्ङतिङः" इति निघात उत्तरस्यैव यथा स्यात्। अग्निमीले। नेह-ईले अग्निम्। अव्यवहितस्येति। एतच्च निर्दिष्टग्रहणानुवृत्त्या लभ्यते। तेन उत्संस्थानं उत्संस्तम्भनमित्यादौ "उदस्थे"ति पूर्वसवर्णो न प्रवर्तते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वम् १।१ ७१ रूपम् १।१ ७१ शब्दस्य ६।१ अशब्द-संज्ञा १।१

समासः॥

शब्दस्य संज्ञा, शब्दसंज्ञा, षष्ठीतत्पुरुषः। न शब्दसंज्ञा, अशब्दसंज्ञा, नञ्तत्पुरुषः।

अर्थः॥

इह व्याकरणे यस्य शब्दस्य कार्यम् उच्यते, तस्य स्वं रूपं ग्राह्यं, न तु शब्दार्थः, न च पर्यायवाचीशब्दः, शब्दसंज्ञां वर्जयित्वा।

उदाहरणम्॥

आग्नेयमष्टाकपालं निर्वपेत्।

काशिका-वृत्तिः

स्वं रूपं शब्दस्य अशब्दसंज्ञा १।१।६८

शास्त्रे स्वम् एव रूपं शब्दस्य ग्राह्यं बोध्यं प्रत्याय्यं भवति, न बाह्यो ऽर्थः, शब्दसंज्ञां वर्जयित्वा। शब्देन अर्थावगतेरर्थे कार्यस्य असम्भवात् तद्वाचिनाम् शब्दानाम् सम्प्रत्ययो मा भूतिति सूत्रम् इदम् आरभ्यते। अग्नेर् ढक् ४।२।३२ आग्नेयम् अष्टाकपालं निर्वपेत्। अग्निशब्दो ऽग्निशब्दस्यैव ग्राहको भवति, न ज्वलनः, पावकः, धूमकेतुः इति। न अतः प्रत्ययो भवति। उदश्वितो ऽन्यतरस्याम् ४।२।१८औदश्वित्कम्। औदश्वितम्। तक्रम्, अरिष्टं, कालशेयं, दण्डाहतं, मथितम्, इति न अतः प्रत्ययो भवति। अशब्दसंज्ञा इति किम्? दाधा घ्वदाप् १।१।१९ तरप्तमपौ घः १।१।२२, घुग्रहणेषु घग्रहनेषु च संज्ञिनां ग्रहनम्, न संज्ञायाः। सित्तद्विशेषाणां वृक्षाद्यर्थम्। सिन्निर्देशः कर्तव्यः। ततो वक्तव्यम् तद्विशेषाणां ग्रहणं भवति इति। किं प्रयोजनम्? वृक्षाद्यर्थम्। विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशु। शकुन्यश्ववडवपूर्वापराधरोत्तराणाम् २।४।१२ इति प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। पित्पर्यायवचनस्य च स्वाऽद्यर्थम्। पिन्निर्देशः कर्तव्यः। ततो वक्तव्यम् पर्यायवचनस्य ग्रहणं भवति, चकारात् स्वस्य रूपस्य तद्विशेषाणां च इति। किं प्रयोजनम्? स्वाऽद्यर्थम्। स्वे पुशः ३।४।४०। स्वपोषं पुष्टः। रैपोशम्। धनपोशम्। अश्वपोषम्। गोपोशम्। जित्पर्यायवचनस्यैव राजाऽद्यर्थम्। जिन्निर्देशः कर्तव्यः। ततो वक्तव्यम् पर्यायवचनस्यैव ग्रहनं भवति इति, न स्वरूपस्य, न अपि तद्विशेषाणाम्। किं प्रयोजनम्? राजाऽद्यर्थम्। सभा राजा अमनुष्यपूर्वा २।४।२३ इनसभम्। ईश्वरसभम्। तस्यैव न भवतिराजसभा। तद्विशेषाणां च न

भवति पुष्यमित्रसभा। चन्द्रगुप्तसभा। झैत्तद्विशेषाणां च मत्स्याऽद्यर्थम्। झिन्निर्देशः कर्तव्यः। ततो वक्तव्यम् तस्य च ग्रहणं भवति तद्विशषाणां च इति। किं प्रयोजनम्? मत्स्याऽद्यर्थम्। पक्षिमत्स्यमृगान् हन्ति ४।४।३५ इति ठक्पाक्षिकः। मात्सियकः। तद्विशेषाणाम् शाकुनिकः। पर्यायाणां न भवतिअजिह्मान् हन्ति, अनिमिषान् हन्ति इति। अथैकस्यैश्यते, मीनान्, हन्ति इति मैनिकः।

न्यासः

स्वं रूपं शब्दस्याशब्दसंज्ञा। , १।१।६७

"शास्त्रे स्वमेव" इत्यादि। शास्त्रग्रहणं लोकेऽर्थस्यैव ग्राह्त्वात्। शब्दस्येति "कृत्यानां कर्तरि वा" २।३।७१ इति कत्र्तरि षष्ठी, शब्दः स्वमेव रूपं ग्राहयति बोधयति, प्रत्याययतीत्यर्थः। कः पुनः शब्दस्य स्वरूपस्य च भेदः? येन शब्दस्येत व्यतिरेकनिबन्धना षष्ठी भवति। परमार्थतो वस्तुगतो नास्त्येव भेदः। तथा हि-- स्वं रूपं शब्दस्य स्वभावः। तच्चेत् ततोऽर्थान्तरं स्याच् शब्दस्य वैस्वभाव्यमेव स्यात्। असत्यपि तु वास्तवे भेदे बुद्धिविरचितं भेदमाश्रित्य षष्ठी भवति। बुद्धिर्हि स्वबीजपरिपाकवशादाकारविशेषपरिग्रहवत्युपजायमाना वस्तुनोऽसत्यपि भेदे भेदमापादयति, यथा-- राहोः शिरः, स्वस्य स्वभाव इति। "न बाह्योऽर्थः" इति एवकारेण यद्व्यवच्छिन्नं तद्दर्शयति। अतिप्रसक्तस्यापवादमाह--"अशब्दसंज्ञा" इत्यादि। किमर्थं पुनरिदमारभ्यत इत्याह-- "शब्देन" इत्यादि। शब्देनोच्चारितेनार्थः कार्योपयोगितया गम्यते, न शब्द- स्वरूपम्। तथा हि-- गौरुपलभ्यतमित्युक्तेऽर्थमेवोपलब्धुमाद्रियते, न शब्दस्वरूपम्; व्याकरणे तु प्रत्ययविधानादिकार्यमर्थस्य न सम्भवति; तेन सह शब्दस्य पौर्वापर्याभावात्। न चार्थाद् विहितेन प्रत्ययेन कश्चित् प्रकृतोपयोगः। तेन "अग्नेर्ढक्" (४।२। ३३) इत्युक्ते नायं संप्रत्ययो भवति। अग्निशब्दस्य योऽर्थः, स इह कार्यी, तस्येदं कार्यं विधीयत इति। ततश्च तस्यार्थस्य ये वाचकाः विधेयमिति। यथा --आकृतिवादिनां गौर्दुह्यतामिति शब्देन जातौ चोदितायां तत्र तत्कार्यासम्भवात् तदाधारायां व्यक्तौ संभवात् तत्साहचर्याच्च तस्यामेव व्यक्तौ संप्रत्ययो भवति, न जातौ; तथेहापि तन्मा भूत् तद्वाचिनां संप्रत्यय इत्येवमर्थमिदमारभ्यते। तद्वाचिनामिति कर्मणि षष्ठी। तद्वाचिनो मा विज्ञायीत्येवमर्थमिदमारभ्यत इत्यर्थः। तत्र केचिदाहुः-- स्वरूपस्य पर्यायाणां च कार्ये प्रसक्ते श्रूयमाणस्यैव तद् यथा स्यात्, पर्यायाणां भूदिति नियमार्था परिभाषेयमिति। अन्ये तु-- " लिङ्गवती परिभाषा भवति" , यथा, "इको गुणवृद्धी" १।१।३ इति गुणवृद्धी लिङ्गम्। विध्यन्तरशेषभूता वा; यथा-- "विप्रतिषेधे परं कार्यम्" (कात।प।६७) इति परस्य विध्यन्तरस्य शेषभावमापद्यते। न वास्या लिङ्गं विध्यन्तरशेषभावो वा विद्यत इति संज्ञासूत्रमिदम्" इति प्रतिपन्नाः। यद्यपि वृत्तौ संज्ञाशब्दो नोच्चारिनः, तथापि "स्वमेव रूपं शब्दस्य ग्राह्यम्" इत्येवं ब्राउवता वृत्तिकारेण संज्ञैवेत्याख्यातं भवति। अग्निशब्दादौ शब्दान्तरैः साधारणमपि रूपमस्ति शब्दत्वादि, असाधारणमपि अग्निशब्दत्वादि, तत्र साधारणरूपव्युदासेनासाधारणस्याग्निशब्दत्वादि- रूपस्य परिग्रहार्थं "स्वम्" ग्रहणम्। तद्धि स्वमेव तस्य रूम्, इतरत् पुनः परस्यापि। प्रतीति प्रत्यनुपदेशाच्छब्दस्य स्वरूपमेवासन्नम्, नार्थः; विपर्ययात्, अहेयत्वा- च्च, तन्नित्यसम्बन्धित्वाच्च। तथा ह्यनुकरणशब्दा ह्यर्थं जहति, न तु स्वरूपम्। असाधारणञ्च रूपम्र्थस्तु साधारणः; शब्दान्तरैरपि प्रत्यायमानत्वात्। तदेवमासन्नत्वान्नित्यसम्बधित्वादसाधारणत्वाच्च रूपमेव शब्दस्य स्वम्, नार्थः। ततश्च स्वग्रहणादेव रूपपरिग्रहे सिद्धे व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियत इति ज्ञापनार्थं रूपग्रहणम्। तेन-- "अर्थवद्()ग्रहणेन नानर्थकस्य" (व्या।प।१) इत्येतदुपपन्नं भवति। शब्दानुशासननप्रस्तावादेव च शब्दस्येति सिद्धे शब्दग्रहणम्-- यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यते, नार्थपरो निर्देश इति ज्ञापनार्थम्। तेन " स्वे पुषः" ३।४।४० इत्यत्र स्वरूपस्य ग्रहणं न भवति। अर्थपरत्वं तु निर्देशस्याविच्छिन्नपारम्पर्यादाचार्योपदेशाद्()विज्ञायते। "आग्नेयम्" इति। अग्निर्देवताऽस्येत्यत्रार्थे ढक्। "औद()इआत्कम्" इति। आत्राप्युद()इआता संस्कृतमित्यत्रार्थे ढक्। "उद()इआतो- ऽन्यतरस्याम्" ४।२।१८ इत्यत्र "दध्नष्ठक्" ४।२।१७ इत्यस्यानुवत्तेः, "इसुसु- क्तान्तात्कः" ७।३।५१ इति ठकः कादेशः।

"घग्रहणेषु" इत्यादि। यदि घुप्रभृतिरपि संज्ञाशब्द स्वरूपस्य ग्राहकः स्यात् "उपसर्गे घोः किः" ३।२।९२ इत्यत्र यद्यपि धात्वधिकारस्तथापि घुग्रहणाद् घुशब्दात् किप्रत्ययः स्यात्। उपसर्गग्रहणं तु प्राद्युपलक्षणार्थं स्यात्। यथा-- "अञ् नासिकायाः संज्ञायां, नसञ्चास्थूलात्" ५।४।११८ "उपसर्गाच्च" ५।४।११९ इत्यत्र। कुमारीघ इत्यत्र च घ इति संज्ञाशब्देन स्वरूपप्रत्यायने सति "घरूपकल्प" ६।४।४३ इत्यादिन घशब्दे परतो ह्रस्वत्वं प्रसज्येत। ननु च संज्ञाविधानसामर्थ्यात् संज्ञायाः स्वरूपग्रहणं न भवति, संज्ञा हि संज्ञिनः प्रत्यायनार्था क्रियते; यदि संज्ञाशब्दोऽपि स्वरूपं प्रत्याययेत् संज्ञाविधानमनर्थकं स्यात्, नैतदस्ति; संज्ञाविदानसामर्थ्याद्धि संज्ञिनं प्रत्याययेत्, परिभाषाविधानसामर्थ्याच्च स्वरूपम्। तस्मात् प्रतिषेधः कत्र्तव्यः? न कत्र्तव्यः, ज्ञापकात् संज्ञाशब्दो रूपस्य ग्राहको न भविष्यति। यदयं "ष्णान्ता षट्" १।४।२४ इति षकारान्तायाः संख्यायाः षट्संज्ञां विदधाति,तज्ज्ञापयति- संज्ञाशब्दः स्वरूपस्य ग्राहको न भवतीति; अन्यथा हि "ष()ड्भ्यो लुक्" ७।१।२२ इत्यत्र षट्शब्देन स्वरूपस्य प्रत्यायितत्वात् ततोऽपि लुग् भवतीति षकारन्तायायः संख्यायाः षडिति संज्ञा न कुर्यात्। षट्शब्दो हि षकारान्ता संख्या, नान्या, सत्यमेतत्; तथापि येषां ज्ञापकद्वारेणार्थप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात्, तान् प्रतितत्परिहाराययाशब्द- संज्ञेति प्रतिषेधः कृतः। शब्दग्रहणम्- व्याकरणे या संज्ञा तस्या एव प्रतिषेधो न लौकिक्या इति प्रदर्शनार्थम्। "सित्त्दविशेषाणाम्" इत्यादि। यत्र विशेषाणां ग्रहणमिष्यते तत्र सकार इत्संज्ञकः कत्र्तव्यः "वृक्षस्य,मृगस्िति। "ततो वक्तवयः" इत्यादि। सिन्निर्देशं कृत्वा ततः प्रथमेऽध्यायेऽन्यत्र वा परिभाषेयं कत्र्तव्या-- सित्तद्विशेषाणामित्यादि। यस्य सकार इत्संज्ञकः, स तद्विशेषाणां वृक्षादिविशेणाणां खदिरादीनां प्रतिपादक इति वक्तव्यम्। एवं "पित्पर्यायवचनस्य च स्वाद्यर्थम्" (कात्या।वा।५१९) इत्यादावपि वेदितव्यम् न्यायादपि चैतत् प्रतिपाद्योऽर्थः सिध्यति। यथा सिध्यति तथा यथावससं पुरस्तात् प्रतिपादयिष्यामः सुखावबोधनार्थं सित्तद्विशेषाणामित्यादिग्रन्थोपन्यासः॥

बाल-मनोरमा

स्वं रूपं शब्दस्याऽशब्दसंज्ञा २७, १।१।६७

"अग्नेर्ढक्""वाय्वृतुपित्रुषसो यत्" "राज्ञो य"दित्यादौ लौकिकव्युत्पत्या उपस्थितानां वह्निवातादीनामर्थानां ढगादिप्रत्ययैः पौर्वापर्यासम्भवात्प्रातिपदिकादित्यनेनान्वयासंभवाच्च तत्तदर्थकपर्यायशब्दानां ग्रहणापत्तौ तन्नियमार्थमिदं सूत्रमारभ्यते--स्वं रूपम्। "अग्नेर्ढगित्यादौ अग्न्यादिशब्दस्य यत्स्वरूपं श्रुतं तदेव अग्न्यादिशब्दै प्रत्येतव्यं, नतु तदन्यस्तत्तत्पर्यायोऽपि। शब्दशास्त्रे संकेतिता वृद्धिगुणादिसंज्ञा शब्दसंज्ञा, तत्र नायं नियम" इत्यर्थः। तदाह--शब्दस्य स्व रूपं संज्ञीति। बोध्यमित्यर्थः। न च वृद्धिर्गुण इत्यादिसंज्ञाविधिबलादेव तत्र तदर्थग्रहणं भविष्यतीति किमशब्दसंज्ञेत्यनेनेति वाच्यम्, "उपसर्ग घोः कि"रित्यत्र "घु शब्दे" इति घुधातुनिवृत्त्यर्थत्वात् "दाधा ध्वदाप्" इति संज्ञाकरणस्य "घुमास्थागापाजहातिसां हलि" इत्यादौ आवश्यकतया संज्ञाकरणस्य सामर्थ्योपक्षयादित्यन्यत्र विस्तरः। इदं सूत्रं भाष्ये प्रत्याख्यातम्।

तत्त्व-बोधिनी

स्वं स्वं शब्दस्याऽशब्दसंज्ञा २४, १।१।६७

स्वं रूपं शब्दस्य। "अग्नेर्ढक्"। आग्नेयम्। "आङो यमहनः"। आयच्छते, आहते। इह-अग्नि, आङ्, यम्, हन्, -एते एव संज्ञिनः। नन्वग्न्यादिवाच्यादङ्गारादेर्ढगादिप्रत्ययो न संभवतीति स्वरूपादेव स्यात्, "प्रातिपदिका"दित्याद्यधिकाराच्च किमनेन सूत्रेणेति चेत्?, सत्यम्। अग्न्यादिशब्दपर्यायेभ्योवह्नयादिभ्यो मा भूदिति सूत्रस्याऽस्यारम्भः। नन्वत्र रूपग्रहणं विनापि स्वशब्देन रूपमेव ग्रहीष्यते, प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च। अर्थो हि प्रतीतौ संबन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायनात्साधारणः , पदज्ञानजन्यवोधविषयत्वाद्बहिरङ्गः,

अनुकरणदशायामप्रतीतेरनियतोपस्थितिकश्चेति किमनेन रूपग्रहणेन?।

उच्यते-"इह शास्त्रे अर्थोऽपि विवक्षितो रूपव"दिति ज्ञापनार्थं रूपग्रहणम्। तेन "अर्थवद्ग्रहणे नानर्थकस्ये"त्युपपन्नं भवति। तत्रोक्ताज्ञापकादर्थो ग्राह्यः, "स्व"मिति वचनात्स्वं रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम्। तेन "काशे" "कुशे" इत्यत्र "शे" इत्ययं प्रगृह्यसंज्ञो न भवति। "प्रादूहोढेइत्यत्र तु "ऊढग्रहणेन क्तान्तमेव गृह्यते नतु क्तवत्वन्तस्यैकदेशः" इत्यन्यत्र विस्तरः। अशब्दसंज्ञेति किम्? उपसर्गे घोः किः"-दाधाभ्यो यथा स्यात्, घुधातोः शब्दार्थकान्मा भूत्। नच "दाधा घु" इति घुसंज्ञाकरणसामर्थ्यादेव दाधाभ्यः किः स्यादिति वाच्यम्, "घुमास्थे"त्यादिना आत ईत्वविधौ संज्ञाकरणस्यावश्यकतया सामर्थ्योपक्षयात्। इह (अ) शब्दस्य संज्ञा (अ) शब्दसंज्ञेति न षष्ठीसमासः, "कर्म" "करण"मित्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः, किंतु शब्दः-शब्दशास्त्रं, तत्र संज्ञा शब्दसंज्ञेति सप्तमीसमासस्तदाह--शब्दशास्त्रे या संज्ञेति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अणुदित् १।१ सवर्णस्य ६।१ ६९ च ० अप्रत्ययः १।१ स्वम् १।१ ६७ रूपम् १।१ ६७

समासः॥

उत् इत् यस्य सः उदित्। अण् च उदित् च अणुदित्, बहुव्रीहिगर्भेतरद्वन्द्वः।
न प्रत्ययः अप्रत्ययः, नञ्तत्पुरुषः।

अर्थः॥

अण्-प्रत्याहारः, उदित् च सवर्णस्य ग्राहकः भवति, स्वस्य च रूपस्य प्रत्ययं वर्जयित्वा। अत्र अण्-प्रत्याहारः परेण णकारेण गृह्यते।

उदाहरणम्॥

{अस्य च्वौ (७।४।३२)} अत्र {अकारेण} सवर्णदीर्घाकारोऽपि गृह्यते, तेन {मालीयति} इत्यत्रापि {ईत्वं} सिध्यति। {यस्येति च (६।४।१४८)}, अत्रापि अकारेण {आकार} ग्रहणात् {मालीयः} अत्रापि लोपः भवति। {आद्गुणः (६।१।८४)} अत्रापि दीर्घप्लुतस्यापि ग्रहणं भवति, तेन रमा + ईश्वरः = रमेश्वरः, अत्रापि गुणः भवति। उदित् - कु (कवर्गः), चु (चवर्गः) टु (तवर्गः) तु (तवर्गः) पु (पवर्गः)
काशिका-वृत्तिः
अणुदित् सवर्णस्य चाप्रत्ययः १।१।६९

परेण णकारेण प्रत्याहारग्रहणम्। अण् गृह्यमाण उदिच् च सवर्णानां ग्राहको भवति, स्वस्य च रूपस्य, प्रत्ययं वर्जयित्वा। आद् गुणः ६।१।८४, अस्य च्वौ ७।४।३२, यस्यैइति च ६।४।१४८। स्वरानुनासिक्यकालभिन्नस्य ग्रहनं भवति। उदित् खल्वपि। चुटू १।३।७, लशक्वतद्धिते १।३।८। चवर्गटवर्गयोः कवर्गस्य च ग्रहनम् भवति। अप्रत्ययः इति किम्? सनाशंसभिक्ष उः ३।२।१६८, अ साम्प्रतिके ४।३।९, दीर्घो न भवति।

लघु-सिद्धान्त-कौमुदी

अणुदित्सवर्णस्य चाप्रत्ययः ११, १।१।६८

प्रतीयते विधीयत इति प्रत्ययः। अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम् - अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं ऌकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा; तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञा।

न्यासः

अणुदित्सवर्णस्य चाप्रत्ययः। , १।१।६८

संज्ञासूत्रमिदम्, न परिभाषा। साहि नियमार्था भवति। न चाणुदितां सवर्णाना- मन्येषांच ग्रहणं प्राप्तम्, येन सवर्णानामेव ग्रहणं भवतीति नियमः क्रियते- "परेण णकारेण प्रत्याहारग्रहणम्" इति। तेन ऋकारादयोऽपि सवर्णानां ग्राहकाः सिध्यन्तीत्यभिप्रायः। परेण च णकारेण प्रत्याहारग्रहणम् "अ इ उ ण्" इत्यत्र प्रतिपादितम्। पूर्वसूत्रात् "स्वं रूपम्" इत्येतदिहानुवत्र्तते। तच्चार्थाद्विभक्तिविपरिणामो भवतीति षष्ठ()न्तं सम्पद्यते। तेन स्वस्यापि रूपस्याण् गृह्णस्याण उदिच्च ग्राहको भवतीति दर्शयन्नाह-- "स्वस्य च रूपस्य" इति। "आद्गुणः" इत्यादि। यथेह भवति देवेन्द्र इति, तथा खट्वेन्द्र इत्यत्राप्याद्गुणो भवति। "अस्य च्वौ" ७।४।३२ यथा पटीभवतीत्यत्रे- त्वं भवति तथा मालीभवतीत्यत्रापि। "यस्येति च" ६।४।१४८। यथा दिक्षिरित्यत्र लोपो भवति, तथा चौडिरित्यत्रापि। बाह्वादित्वाच्चूडाशब्ददिञ्। "स्वरानुनासिक्य" इत्यादि। उदात्तः सूत्रे गृह्यमाणः स्वरान्तरभिन्नस्यापि ग्राहको भवति। एवमनुदात्तः स्वरितश्च। तथा सानुनासिको निरनुनासिकस्य, सोऽपि तस्य। "दीर्घो न भवति" इति। यदि "अप्रत्ययः" इति प्रतिषेधो न स्यात् प्रत्ययोऽपि सवर्णानां ग्राहकः स्यात्। ततश्च दीर्घोऽपि स्यात्। ननु चात्यल्पमिदमुच्यते- " अप्रत्ययः" इति, अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्। प्रत्यये प्रत्युदाहृतम्। आदेशे--- "इदम इश्" ५।३।३, अस्मात्= इतः, "पञ्चम्यास्तसिल्" ५।३।७ इति तसिल्, अस्मिन् = इह, "इदमो हः" ५।३।११। अत्र हि सवर्णग्रहणे सति यद्यकृते त्यदाद्यत्व इश्()भावस्तदान्तरतम्यात् त्रिमात्र इकारः प्राप्नोति, अथ कृतेऽद्र्धच- तुर्थमात्रः। यदि "अतो गुणे" ६।१।९४ पररूपत्वेऽकृतेतदापि; अथ कृते ततोऽद्र्धतृ-तीयमात्रः। अथ वा- अद्र्धचतुर्थमात्रोऽद्र्धतृकतीयमात्रश्च नास्ति ततो द्विमात्र- स्त्रिमात्रश्च स्यात। टित्-- "आर्धधातुकस्येड् वलादेः" ७।२।३५, लविता, सवर्णग्रहणे सति दीर्घोऽपि स्यात्। कित् भुवो वुग् लुङलिटोः" ६।४।८८ बभूव, अत्र सानुनासि-कोऽपि स्यात्। सन्ति हि यणः सानुनासिका निरनुनासिकाश्च। मित्-- "चतुरनडुहोरामुदा-त्तः", ७।१।९८ "अम् सम्बुद्धौ" ७।१।९९, अनड्()वन्-- अत्र दीर्घोऽपि स्यात्। तत् तह्र्येवं वक्तव्यम्? न वक्तव्यम्; चकारोऽत्र क्रियते, सोऽनुक्तप्रतिषेधसमुच्च- यार्थो भविष्यति। तेन येषामादेशादीनां ग्राहकत्वं नेष्यते ते सवर्णानां ग्राहका न भविष्यन्ति। अन्ये त्वाहुः- ""अप्रत्यः" इति नेह संज्ञाग्रहणम्, किं तर्हि? अन्वर्थग्रहणम्। प्रतीयते विधीयते=उत्पाद्यत इति प्रत्ययः। तेनाप्रत्यय इत्यस्यायमर्थो भवति--"भाव्यमानोऽण् सवर्णान् न गृह्णाति (व्या।प३५)इति। हशादयोऽपि भाव्यन्ते= उत्पाद्यन्त इति तेऽपि प्रत्ययाः, तेन ते सवर्णानां ग्राहका न भवन्ति" इति। चैश्चकारस्य प्रयोजनं वक्तव्यम्। "स्वं रूपम्" इत्यस्यानुकर्षणं तस्य प्रयोजनमिति चेत्, न; चानुकृष्टत्वादुत्तरत्र तदनुवृत्तिर्न स्यात्। न चैतत्प्रयोजनमुपपद्यते; स्वरितत्वादेवानुवृत्तिसिद्धेः। अथ मतम्-- "प्रथमान्तं स्वमित्येतत्प्रकृतं षष्ठीनिर्दिष्टेन चेहार्थः, तस्माच्चकाररे कृते यत्नात् षष्ठ()न्तता तस्य यथा स्यादित्येवमर्थश्चकारः" इति, एतदपि नास्ति; अर्थादेव हि विभ्कतिविपरिणामसिद्धेः॥

बाल-मनोरमा

अणुदित्सवर्णस्य चाऽप्रत्ययः १६, १।१।६८

अणुदित्सवर्णस्य। प्रत्ययशब्दस्य अणादिप्रत्ययपरत्वे "त्यदादीनामः" "इदमैश्" इत्यादीनां पर्युदासो न स्यादित्यतो व्याचष्टे--प्रतीयत इति। उत् इत् यस्य सः उदित=कु चु टु तु पु इत्यादिः। चकारात्स्वं रूपमित्यतः स्वमित्यनुवर्तते। तच्च षष्ट()न्ततया विपरिणम्यते। तदाह-अविधीयमान इत्यादिना। अणिति पूर्वेण परेण वा प्रत्याहार इति संशये निर्धारयति-अत्रेति। अस्मिन्नेव सूत्रे अण् परेण णकारेण, इतरत्र तु "अणोऽप्रगृह्यस्ये"त्यादौ पूर्वेणैवेत्यर्थः। अत्र च आचार्यपारंपर्योपदेशरूपं व्याख्यानमेव शरणम्। एवं चाणुदित्सूत्रेणानेन अकारादिभिश्चतुर्भिदीर्घप्लुतानामिव सवर्णभूतहकारादीनामपि ग्रहणादच्त्वातेषु परेषु इकारस्य यणादिकं स्यादिति नाज्झलाविति प्रतिषेध आवश्यक इति स्थितम्। अणुदित्सूत्रस्य फलमाह--तदेवमिति। तत्णुदित्सूत्रम्। एवं=वक्ष्यमाणप्रकारेण फलतीत्यर्थः। तिं()रशत इति। ऋलृवर्णयोर्मिथः। सवर्णतया ऋकारेण स्वाष्टादशभेदानाम्लृकारीयद्वादशभेदानां च ग्रहणादिति भावः। एवम्लृकारोऽपीति। ऋकारस्यापि लृकारसवर्णत्वादिति भावः। नन्वेकारेण ऐकारप्रपञ्चोऽपि गृह्यते, ऐकारेण एकारप्रपञ्चश्च। तथा ओकारेण औकारप्रपञ्चो गृह्येत, औकारेण ओकारप्रपञ्चश्च। ततस्च एचश्चतुवशतेः संज्ञा स्युरित्येवं वक्तव्यं नतु द्वादशानामित्यत आह--एदेतोरिति। कुतो न सावर्ण्यमित्यत आह--ऐऔजिति। यदि ह्येदैतोः ओदौतोश्च परस्परं सावर्ण्यं स्यात्तर्हि एकारेण ऐकारप्रपञ्चस्य, ओकारेण औकारप्रपञ्चस्य च अकारादिभिदीर्घप्लुतानामिव ग्रहणसम्भवात् "ऐऔ"जिति सूत्रं नारभ्येत। आरभ्यते च (सूत्रकृता)। अत एदैतोरोदौतोश्च न परस्परं सावर्ण्यमिति विज्ञायत इत्यर्थः। अच् इच् एच् इत्यादि प्रत्याहारास्तु ङकारेणैव निर्वाह्याः। नच "एचोऽयवायाव" इत्यत्र यथासंख्यार्थमैऔजिति सूत्रमस्त्विति वाच्यम्। तत्र स्थानेऽन्तरतमः" इति सूत्रेणैव निर्वाहस्य वक्ष्यमाणत्वादिति भावः। वस्तुतस्तु "ऐऔ"जिति सूत्राऽभावे "वृद्धिरादैच्" "न त्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" "प्लुतावैच् इदुतौ" इत्यादौ एङ्ग्रहणापत्तौ एदोतोरपि ग्रहणे प्रसक्ते तन्निवृत्त्यर्थमैच्प्रत्याहार आवश्यक इति तदर्थमैऔजित्यारम्भणमीयमेव। अत ऐऔजिति सूत्रारम्भस्य चरितार्थत्वादेदैतोरोदौतोश्च मिथश्च सावर्ण्याऽभावसाधकत्वकथनमनुपपन्नमेव। एदैतोरोदौतोश्च मिथः सावर्ण्याभावस्तु वृद्दिरादैजित्यादौ क्वचिदैज्ग्रहणात् "अदेङ्गुणः" इत्यादौ क्वचिदेङ्ग्रहणाच्च सुनिर्वाहः। अन्यथा सर्वत्र एङ्()ग्रहणमेव ऐज्ग्रहणमेव वा कुर्यात्। तावतैव चतुर्णां ग्रहणसम्भवात्। अत ऐच् एङिति प्रत्याहारद्वयग्रहणसामर्थ्यादेदैतोरोदौतोश्च न मिथः सावर्ण्यम्। "प्लुतावैच इदुतौ" "एचोऽप्रगृस्ये"ति प्रत्याहारद्वयग्रहणवैयर्थ्याच्चेति शब्देन्दुशेखरे प्रपञ्चितम्। तेनेति। एदैतौरोदौतोश्च मिथस्सावर्ण्याभावेनेत्यर्थः। नापादनीयमिति। नाशङ्कनीयमित्यर्थः। एवं च एकारेण सह वर्तत इति सैः, हे सैरित्यत्र "एङ्()ह्रस्वात्" इति संबुद्धिलोपो न। ग्लावं ग्लाव इत्यत्र "औतोऽम्शसोः" इत्यात्वं च न। स्यादेतत्। हकारस्य आकारस्य च सवर्णसंज्ञा स्यात् , स्थानप्रयत्नसाम्यात्, अज्झलामेव सावर्ण्यनिषेधात्, वार्णसमाम्नायिकानामेन वर्णानामज्झलशब्दवाच्यत्वात्, आकारप्रश्लेषे च प्रमाणाऽभावात्। न चाकारस्याच्त्वात्तेन आकारस्यापि अणौदित्सूत्रेण ग्रहणादाकारहकारयोर्न सावर्ण्यमिति वाच्यं, ग्रहणकसूत्रे हि लब्धात्मकमेव सत् "अस्य च्वौ" इत्यादौ प्रवृत्तिमर्हति। नाज्झलाविति प्रवृत्तिदशायां च ग्रहणकशास्त्रं न लब्धात्मकम्। तद्धि सवर्णपदघटितं, सवर्णपदार्थावगमोत्तरम#एव लब्धात्मकम्। सवर्णसंज्ञाविधायकं च तुस्यास्यसूत्रं सामान्यतः त्वर्थं बोधयदपि नाज्झलावित्यपवादविषयं परिह्रत्य तदन्तत्रैव पर्यवसन्नं स्वकार्यक्षमम्। तदुक्तम्--"प्रकल्प्यपवादविषयमुत्सर्गोऽभिनिविशते" इति। उक्तं च भाष्ये-वर्णानामुपदेशस्तावत्, उपदेशोत्तरकाला इत्संज्ञा, इत्संज्ञोत्तरकाल आदिरन्त्येनेति प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसंज्ञा, तदुत्तरकालमणुदित्सूत्रमित्येतेन समुदितेन वाक्येनात्यत्र सवर्णानां ग्रहणं भवती"ति। अन्यत्र="अस्य च्वौ" इत्यादावित्यर्थः। अत्र भाष्ये "प्रत्याहारोत्तरकाला सवर्णसंज्ञे"त्यनेन नाज्झलाविति निषेधसहितः सावर्ण्यविधिर्विवक्षितः , केवलसावर्ण्यविधेः प्रत्याहारानपेक्षत्वेन प्रत्याहारोत्तरकालिकत्वनियमाऽसम्भवात्। तथा चाणुदित्सूत्रस्य नाज्झलाविति निषेधसहिततुल्यास्यसूत्रप्रवृत्तेः प्रागलब्धात्मकत्वात्तेन नाज्झलावित्यत्र अज्ग्रहणेन सवर्णानां ग्रहणाऽभावात्सावर्ण्यविधिनिषेधाभावादकारहकारयोः सावर्ण्यं स्यादिति शङ्कते--नाज्झलाविति सावर्ण्येत्यादिना। यद्यपीति सम्भावनायाम्। अक्षरसमाम्नायः=चतुर्दशसूत्री। तत्र भवा आक्षरसमाम्नायिकाः। "बह्वचोऽन्तोदात्तात्" इति

ठञ्। न च नाज्झलविति प्रवृत्तिदशायामणुदित्सूत्रप्रवृत्त्यभावेऽपि तत्र अजित्यनेन लक्षणया दीर्घप्लुतानां ग्रहणमस्तु प्रत्याहाराणां स्ववाच्यवाच्येषु लक्षणाया अनुपदमेव प्रपञ्चितत्वादिति वाच्यम्। स्ववाच्यवाच्येषु हि प्रत्याहाराणां लक्षणा, न चात्राच्छब्दवाच्याकारादिवाच्यता दीर्घप्लुतानामस्ति। अमुदित्सूत्रस्येदानीमप्रवृत्तेरिति भावः। परिहरति--तथापीति। वार्णसमाम्नायिकानामेव नाज्झलाविति निषेध इत्यभ्युपगमेऽपि हकारस्य आकारो न सवर्ण इत्यर्थः। कुत इत्यत आह--तत्रापीति। अपिशब्दो व्युत्क्रमः। तत्र=नाज्झलाविति सूत्रे, आसहितोऽच् आचित्याकारस्यापि सवर्णदीर्घेण प्रश्लिष्टत्वादित्यर्थः।

नन्वस्तु हकारस्य आकारस्य च सावर्ण्यं, किं तत्प्रतिषेधार्थेन आकारप्रश्लेषेणेत्यत आह--तेनेति। तेन=हकारस्य आकारस्य च सावर्ण्यप्रतिषेधेन, हकारेण आकारस्य ग्रहणाऽभावाद्वि()आपाभिरित्यत्र "हो ढः" इति हकारस्य विधीयमानं ढत्वं पकारादाकारस्य न भवति। आकारप्रश्लेषाऽभावे तु, तस्य हकारस्य च सावर्ण्यसत्वाद्धकारेण आकास्य च ग्रहणात्तस्य ढत्वं स्यादित्यर्थः। अत्र ढत्वस्यासिद्धत्वात्संयोगान्तलोप एवापादनीय #इति नवीनाः। "कालसमयवेलासु तुमुन्" इति सूत्रे वेलास्विति लकारादाकारस्य निर्देशो नाज्झलावित्यत्र आकारप्रश्लेषे प्रमाणम्। अन्यथा तत्र ढत्वस्य संयोगान्तलोपस्य वाऽऽपत्तावाकारो न श्रूयेतेत्यलम्। ननु ग्रहणकसूत्रेऽज्ग्रहणमेव क्रियताम्, अणुदित्सवर्णस्येति किमण्ग्रहणेन, हयवरलानां सवर्णाऽभावेन तेषु ग्रहणकशास्त्रस्य व्यर्थत्वादित्यत आह--अनुनासिकेति। तेनेति। उक्तद्वैविध्येन सवर्णत्वात्-अननुनासिकास्ते यवलाः प्रत्येकं द्वयोद्र्वयोः संज्ञाः। अनुनासिकास्तु यवला अननुनासिकानामपि न संज्ञाः, "भेदको गुणा" इत्याश्रयणात्, वर्णसमाम्नायेऽननुनासिकानामेव तेषां पाठाच्च। एवं च यवलसंग्रहार्थं ग्रहणकसूत्रेऽज्ग्रहणमपह#आय अण्ग्रहणमिति भावः।

तत्त्व-बोधिनी

अणुदित्सवर्णस्य चाऽप्रत्ययः १५, १।१।६८

अविधीयमानोऽणिति। तेन इत इत्यत्र "इदम इश्" इति त्रिमात्र ईकारो न भवति। उदिच्चेति। इह "अविधीयमान" इति न संबध्यते, उदित्करणसामथ्र्यात्। तेन विधीयमानोऽप्युदित्सवर्णान्गृह्णात्येव,-"कुहोश्चुः" जगाद जघटे। परेण णकारेणेति। व्याख्यानतो विशेषप्रतिपत्तेः, "उपसर्गादृति" "ऋत उत्" इत्यादौ तपरकरणाल्लिङ्गाच्च। यदि पूर्वेण स्यात्तर्हि तपरत्वमिहानर्थकं स्यात्, ऋकारस्याऽनण्त्वेन सवर्णाऽग्राहकत्वात्। एवं च "तपरत्वाद्दीर्घे न, उप ऋकारीयति" इत्यादिवक्ष्यमाणग्रन्थोऽपि सङ्गच्छते। एवम्लृकारोऽपीति। "तिं()रशतः संज्ञे"त्यनुषज्यते। एतच्च न्यायसाम्यादुक्तम्। वस्तुत लृकारस्य ऋकारग्राहकत्वं न कुत्राप्युपलभ्यते। सूत्रारम्भसामथ्र्यादिति। सति तु सावर्ण्ये एकारेण ऐकारग्रहणादोकारेण चौकारग्रहणात् "ऐऔच्" इति सूत्रारम्भो वृथा स्यादिति भावः। नापादनीयमिति। तेन ग्लावं ग्लाव इत्यत्र "औतोम्शसोः" इति न प्रवर्तत इति मूल एव स्फुटीभविष्यति। यद्यपीति। ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः। एतच्च "अकः सवर्णे दीर्घः" इत्यत्र व्युत्पादयिष्यामः। आक्षरेति। अक्षराणां समाम्नायः=उपदेशसूत्राणि। तत्र भवा आक्षरसमाम्नायिकाः। "बह्वचोऽन्तोदात्ताट्ठञ्" इति ठञ्। हो ढ इति ढत्वं न भवतीति। यद्यप्याकारप्रश्लेषाभावे संयोगान्तलोप एव प्राप्नोति नतु ढत्वं, तस्यासिद्धत्वात्, अतोऽत्र संयोगान्तलोपो न भवतीति वक्तुमुचितम्, तथापि "कार्यकालं संज्ञापरिभाषम्" इति पक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषायाः प्रवृत्तेरन्तरङ्गे ढत्वे कर्तव्ये बहिरङ्गः संयोगान्तलोपोऽसिद्ध इति मत्वेदमुक्तमित्येके। अन्ये तु "संज्ञापूर्वको विधिरनित्यः" इति लोपस्य वारणं कथंचित्कर्तुं शक्यमित्याशयेन ढत्वं नेत्युक्तमित्याहुः। वि()आपाभिरित्यत्रेत्युपलक्षणम्। वि()आपाः वि()आपाभ्यामित्यादावपि न भवति। "हो ढः" इत्युपलक्षणम्। "पृथगायु"रित्यादौ "झयो हः" इत्याकारस्य घकारो नेति दिक्। यदि तु "विवृतमूष्मणाम्" इत्यत्र "ईषत्स्पृष्टम्" इत्यत "ईष"दित्यनुवर्त्य "स्वराणां चे"त्यत्र निवर्त्य "ईषद्विवृतमूष्मणां, विवृतं

स्वराणा"मिति प्रयत्नभेदो व्याख्यायते, तदा "नाज्झलौ" इति सूत्रं त्यक्तुं शक्यमित्याकरे स्थितम्। अनुनासिकास्ते इति। ये त्वाक्षरसमाम्नायिका अणस्त एव सवर्णानां संज्ञा भवन्तीति भावः। एवंच रेफो हकारश्च अण्प्रत्यागारान्तर्गतोऽपि न क्सयचित्संज्ञा, तत्सवर्णस्यान्यस्याऽभावादित्यवगन्तव्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तपरः १।१ तत्कालस्य ६।१ सवर्णस्य ६।१ ६८ स्वम् १।१ ६७ रूपम् १।१ ६७

समासः॥

तः परः यस्मात् सोऽयं तपरः, बहुव्रीहिः। अथवा तादपि परः तपरः, पञ्चमीतत्पुरूषः।
तस्य कालः, तत्कालः, षष्ठीतत्पुरुषः। तत्कालः कालः यस्य, सः तत्कालः, उत्तरपदलोपी बहुव्रीहिसमासः।

अर्थः॥

तपरः वर्णः तत्कालस्य सवर्णस्य (गुणान्तरयुक्तस्य च), स्वस्य रूपस्य च ग्राहकः भवति।

उदाहरणम्॥

{अतो भिह् एस् (७।१।६)} वृक्षैः प्लक्षैः। {आत् औ णलः (७।१।३४)} पपौ ददौ
काशिका-वृत्तिः
तपरस् तत्कालस्य १।१।७०

तः परो यस्मात् सो ऽयं तपरः, तादपि परः तपरः। तप्रो वर्णस् तत्कालस्य, आत्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य ग्राहको भवति, स्वस्य च रूपस्य। विद्Hयर्थम् इदम्। अणिति न अनुवर्तते। अणामन्येषां च तपराणाम् इदम् एव ग्रहणकशास्त्रम्। अतो भिस ऐस् ७।१।९ इत्येवम् आदिषु पूर्वग्रहणकशास्त्रं न प्रवर्तत एव। अतपरा अणस्तस्य अवकाशः। किम् उदाहरणम्? अतो भिस ऐस् ७।१।९ वृक्षैः। प्लक्षैः। विड्वनोरनुनासिकस्य आत् ६।४।४१ अब्जाह्, गोजाः। तत्कालस्य इति किम्? खट्वाभिः। मालाभिः।
लघु-सिद्धान्त-कौमुदी
तपरस्तत्कालस्य २६, १।१।६९

तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात्॥
न्यासः
तपरस्तत्कालस्य। , १।१।६९

तःपरो यस्मात् सोऽयं तपर इति बहुव्रीहिं दर्शयति, तादपि परस्तपर इति पञ्च-मीतत्पुरुषं च। स पुनः पञ्चमीति योगविभागात् समास इति वेदितव्यः। कथं पुनरेतत् समासद्वयं लभ्यते, यावतैकस्परशब्दः? एकस्याप्यावृत्या द्विधा भेदो भविष्यतीत्यदोषः। अत्र हि बहुव्रीहेर्लिङ्गम्--"अतो भिस ऐस्" ७।१।९ इति तपरकरणम्। न ह्त्र पञ्चमी तत्पुरुष उपपद्यते। अवर्णो ह्त्र तपरोऽभिमतः, न भिस्। यदि चेह पञ्चमीतत्पुरुषः स्यात्, तर्हि भिस् तपरः स्यात्; यतस्तपरो वर्ण

इहोच्यते, न चासौ वर्णः, किं तर्हि? तत्समुदायः। पञ्चमीतत्पुरुषे तु लिङ्गम्--"वृद्धिरादैच्" १।१।१ इति तपरकरणम्। न ह्यत्र बहुव्रीहिर्युज्यते। यदि बहुव्रीहिः स्यात् तदाऽऽकारस्य तपरत्वं स्यात्,न चाऽऽकारार्थं तपरकरणम्(), अपि त्वैजर्थम्। एतच्च तत्रैव प्रतिपादितम्। सवर्णस्येति वत्र्तते, वर्णस्य च सवर्णो न भवति, ननु वर्णसमुदायस्य; तस्मादविशेषाभिधानेऽपि वर्ण एव तपरो विज्ञायत इत्याह-- "तपरो वर्णः" इति। तत्कालस्येति बहुव्रीहिः-- स कालोऽस्येति। अयुक्तोऽयं निर्देशः। तथा हि -- तच्छब्देन तपरः परामृश्यते, तपरश्च वर्णः। कालस्तु क्रियाविशेष इष्यते। तथा ह्युक्तम्--- आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे। भिन्नमावृत्तिभेदेन कालं कालविदो विदुः॥ (वा।प।३।९।७६) इति। तत् कुतो वर्णक्रियाविशेषाभिधायिनोस्तपरकालशब्दयोः सामानाधिकरण्यम्? एवं तत्काल इव कालो यस्य स तत्काल इति। अस्यार्थं दर्शयितुमाह-- "आत्मना" इत्यादि। यद्यपि तपरकरणसन्निधानादिहात्मशब्दस्य तत्र वृत्तिर्युक्ता; तथापीह साहचर्यात् तत्सहचरितायामुच्चारणक्रियायां कालाख्यायां स वत्र्तते। कुत एतत्? तपरेण वर्णेन क्रियायास्तुल्यत्वानुपपत्तेः। सम्भवति साहचर्यात् ताच्छब्द्यम्। तदेतदुक्तं भवति- तपर- वर्णसहचरितया क्रियया तुल्यकालस्येति यादृशी तपरवर्णस्योच्चारणक्रिया तादृगुच्चारण- क्रिया यस्येति यावत्। "गुणान्तरयुक्तस्य" इति। यन गुणेन धर्माख्येनोदात्तादिना विशिष्ट उच्चारितस्ततोऽन्यैरुदात्तादिभिर्गुणैः सम्बद्धस्येत्यर्थः। "स्वस्य च रूपस्य" इति। इहापि तदनुवृत्तेः। इहेदं सूत्रं नियमार्थं वा स्यात्? विध्यर्थं वा? यद्यणित्यनुवत्र्तते,ततः पूर्वेणैव "सिद्धे सत्यारम्भो नियमार्थो भवति"--- (कात्य।प।६२)तपरोऽण् तत्कालस्यैव ग्राहको भवति, नान्यस्येति। अथाणिति निवृत्तम्, ततो विध्यर्थम्। तत्राद्ये पक्षे "विड्वनोरनुनासिकस्यात्" ६।४।४१ इत्याकारो दीर्घस्तपरो निरनुनासिकः सूत्र उपात्तः "भेदका गुणाः" इत्यस्मिन् दर्शने सानुनासिकस्य ग्राहको न स्यात्; अनण्त्वात्। ततश्च निरनुनासिक एवादेशः स्यात्। इतरत्र तु पक्षे सत्यपि भेदकत्वे गुणानामेष दोषो न भवतीति मन्यमानो द्वितीयं पक्षमाश्रित्याह-- "विध्यर्थमिदम्" इति। कथं विध्यर्थमित्याह-- "अणिति नानुवत्र्तते" इति। "अणामन्येषां च " इत्यादि। युक्तं यदन्येषामेव तपराणां ग्रहणकशास्त्रमिति तेषां पूर्वेण ग्रहणस्यासिद्धत्वात्। अणां तु पूर्वेणैव सिद्धे ग्राहकत्वे कथममित्यत आह--- "अतो भिस ऐस्" इत्यादि। स्यादेतत्, इहापि तत् प्रवृत्तमेवानवकाशत्वादित्यत आह-- "अत पराः" इत्यादि।"आद्गुणः" १।३।८७ इत्यादावतपरा अणोऽवकाशः।अस्य त्वनणस्तपरा दीर्घाः। यथा "विड्- वनोरनुनासिकस्यात्" १।४।४१इति। ये त्वणस्तपराः, तेषूभयप्राप्तौ परत्वादिदमेव ग्रहणकशास्त्रं प्रवत्र्तत इत्यभिप्रायः। "वृक्षै प्लक्षैः" इति। तृतीयाबहुवचनं भिस्।"अतो बिस ऐस्" (७।१।९ इत्यैसादेशः; वृद्धिरेचि" ६।१।८५ इति वृद्धिः। "अब्जाः गोजाः" इति। "जनी प्रादु- र्भावे" (धा।पा।११४९) अप्सु जायते, गोषु जायत इति-- "दजनसनकखनक्रमगमो विट्" ३।२।६। "खट्वाभिः" इति। कतं पुनरेतत् प्रत्युदाहरणम्, यावता "अन्तादिवच्च" ६।१।८२ इत्यन्तादिवद्भावे भवितव्यमेवात्रैस्भावेन, तपरकरणस्य तु य्तत्रैकादेशो नास्ति तद्()वयवच्छेद्यं भविष्यति-- "कीलालपाभिः, सोमपाभिः" इत्यादि? नैष दोषः; अन्तदिवच्च" ६।१।८२ इत्यत्र वक्ष्यति--- "वर्णाश्रयविधावन्तादिवद्भावो नेष्यते" इति। तथा हि-- खट्वाभिरितद्यत्रान्तवद्भावाभावात् "अतो भिस ऐस्" ७।१।९ न भवतीति। अथ वा -- "अतः" इत्यत्राकारद्वयप्रश्लेषः कृतः, श्रूयमाणादतो यथा स्यात्।

बाल-मनोरमा

तपरस्तत्कालस्य १७, १।१।६९

ग्रहणकसूत्रेऽण्सवर्णानां ग्राहक इति स्थितम्। एवं सति अत् इत् उत् इत्यादितपराणामप्यणां स्वस्वसर्वसवर्णग्राहकत्वे प्राप्ते इदमारभ्यते--तपरस्तत्कालस्य। "तपर" इत्यावर्तते। प्रथमस्तावत्तपरशब्दः-तः परो यस्मादिति बहुव्रीहिः। द्वितीयस्तु तात् पर इति पञ्चमीसमासः। ग्रहणकसूत्रादणित्यनुवर्तते। तस्य तपरत्वेन उच्चार्यमाणवर्णस्य काल इव कालो यस्येति बहुव्रीहिः। ऊकालः उष्ट्रमुख इत्यादिवत् समासः। एवं च "अत्"ित्" इत्याद्यात्मकोऽण् तपरत्वेन उच्चार्यमाणः स्वीयकालसदृशकालस्य संज्ञा स्यादित्यर्थः। तत्र अत् इत् उत् ऋत् इत्येतेषां तपराणां ह्रस्वाकारादीनामणां

तत्तत्कालास्तत्तद्ध्रस्वप्रपञ्चाः। एत्, ऐत्, ओत्ौत् इत्येतेषां तु तपराणामेकारादीनां तत्तत्कालास्तत्तद्दीर्घप्रपञ्चाः। तत्र ह्रस्वाकारादीनां तपराणां तत्तद्ध्रस्वप्रपञ्चावाचकत्वस्य एकारादीनां च दीर्घाणां तपराणां स्वस्वदीर्घप्रपञ्चवाचकत्वस्य लोकसिद्धत्वात् "सिद्धे सत्यारम्भो नियमार्थः" इति न्यायेन सूत्रमिदं नियमार्थं सम्पद्यते--"अण् तपरश्चेत्तत्कालस्यैव सवर्णस्य ग्राहको न त्वतत्कालस्ये"ति। एवं च अतत्कालनिवृत्त्यात्मकपरिसंख्यार्थंमिदं सूत्रम्। वैयाकरणस्तु परिसंख्याविधिमेव नियमविधिरिति व्यवहरन्ति। तदिदं सर्वमभिप्रेत्य व्याचष्टे--तः परोयस्मादित्यादिना। नियमविधानस्य फलमाह--तेनेत्यादिना। तेन=नियमविधानेन। आदिना लृदित्यादिसंग्रहः। अत्, इत्, उत्, लृत्, एत, ऐत्, ओत्, औत्--इत्येते अष्टौ तपरा अणः स्वस्वसमानकालानां षण्णां षण्णामेव संज्ञाः , न त्वतत्कालानामित्यर्थः। ऋदिति द्वादशानामिति। ऋलृवर्णयोरिति सावर्ण्यविधानादिति भावः। नन्वेवम्लृदित्यपि द्वादशानां ग्रहणं स्यात्, तथा च "पुषादिद्युताद्य्()लृदितः" इत्यादिविधय ऋदित्सवपि प्रवर्तेरन्निति चेन्न, ऋदित्यनेन लृकारप्रपञ्चस्य ग्रहणेऽपि क्वचित् लृदिद्ग्रहणबलेन लृ इत्यनेन ऋकारप्रपञ्चस्य ग्रहणाऽभावात्। अन्यथा "ऋतो ङी"त्यादौ क्वचित् ऋद्ग्रहणस्य पुषादिद्युताद्य्()लृदित इत्यादौ क्वचित् लृदिद्ग्रहणस्य च वैयर्थ्यापत्तेः। प्रथमातिक्रमणे कारणाऽभावेन सर्वत्र ऋदिद्ग्रहणस्यैव कर्तुं शक्यत्वात्। इदमेवाभिप्रेत्य ग्रहणकसूत्रे ऋदिति द्वादशानामित्येवोक्तम्, नतु लृदंपीति। अत्र च तः परो यस्मादिति बहुव्रीहेः-अत्, इत्, उत् इत्याद्युदाहरणम्। तात्पर इति पञ्चमीसमासस्य तु वृद्धिरादैजित्यैकार उदाहरणम्। आत् ईत् ऊत् इत्यादि तु न तपरसूत्रस्योदाहरणम् , आकारादिषु हि तपरसूत्रमपूर्वविधानार्थम्, उत नियमार्थम्?, नाद्यः, तपरसूत्रे अण्ग्रहणानुवृत्त्यभावेऽपि जातिपक्षे आकारादिभिर्दीर्घैः स्वस्वसमानकालिकप्रपञ्चस्य वाच्यताया लोकत एव सिद्धत्वेन तेषु तपरसूत्रप्रवृत्तेव्र्यर्थत्वात्। न द्वितीयः। उक्तरीत्या ग्रहणकसूत्रस्य वार्णसमाम्नायिकवर्णमात्रविषयतया आकारादिषु तस्य प्रवृत्त्यसम्भवेन तपरसूत्रस्य तेष्वतत्कालव्यावृत्तिफलकतन्नियमनार्थत्वानुपपत्तेः, सिद्धे सत्यारम्भस्यैव नियमार्थत्वात्। एवं च आत्, ईदित्यादि तपरकरणमसन्देहार्थमेवेत्यास्तां तावत्। तदेवं वृत्तः प्रत्याहारप्रपञ्चो ग्रहणकशास्त्रप्रपञ्चश्च।

तत्त्व-बोधिनी

तपरस्तत्कालस्य १६, १।१।६९

स च तापरश्चेति। तत्रादिना उभयं विवक्षितमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आदिः १।१ अन्त्येन ३।१ सह ० इता ३।१ स्वम् १।१ ६७ रूपम् १।१ ६७

अर्थः॥

आदिः अन्त्येन इता (इत्संज्ञकेन वर्णेन) सह तयोः मध्यस्थानां, स्वस्य च रूपस्य ग्राहकः भवति।

उदाहरणम्॥

अण् = अ इ उ। अक् = अ इ उ ऋ ऌ। अच् = अ इ उ ऋ ऌ ए ओ ऐ औ।
काशिका-वृत्तिः

आदिरन्त्येन सहैता १।१।७१

आदिरन्त्येन इत्संज्ञकेन सह गृह्यमाणस् तन्मद्यपतितानां वर्णानां ग्राहको भवति, स्वस्य च रूपस्य। अण्। अक्। अच्। हल्। सुप्। तिङ्। अन्त्येन इति किम्? सुटिति तृतीयैकवचनेन टा इत्यनेन ग्रहणं मा भूत्।
लघु-सिद्धान्त-कौमुदी
आदिरन्त्येन सहेता ४, १।१।७०

अन्त्येनेता सहति आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् यथाणिति अ इ उ वर्णानां संज्ञा। एवमच् हल् अलित्यादयः॥
न्यासः
आदिरन्त्येन सहेता। , १।१।७०

स्वरूपविधिपरिहारायारम्भः।इदमपि संज्ञासूत्रम्। अनादिभूत वस्त्वपेक्ष्य तत्पूर्ववस्तुन आदित्वं न भवति, अन्त्यभूतं वस्त्वपेक्ष्य ततः परस्यान्त्यत्वम्। न चेहाद्यन्तयोः परस्परापेक्षे आद्यन्तत्वे युज्येते। एवं हि सति वस्त्वन्तरस्य संज्ञिनो भावादादिरन्त्येन सहितः स्वयैव संज्ञा स्यात्। ततश्च "स्वं रूपम्" १।१।६७ इत्येतस्येहानुवृत्तये स्वरितत्वासङ्गो वृता स्यात्। तस्मादाद्यन्तशब्दाभ्यां सामथ्र्यादाद्यन्तव्यतिरेकेण तन्मध्यपाति वस्तु संज्ञित्वेनाक्षिप्तमिति मत्वाह-- "तन्मध्यपतितानाम्" इति। जाताविदं बहुवचनम्; अन्यथा ह्वेङ शब्द ओकारस्य संज्ञा न स्यात्। ननु चाद्यन्तशब्दाभ्यां नियतदेशावयवावभिधीयते, अवयवाश्चावयविनः समुदाय- रूपस्य सम्बन्धिन इति सम्बन्धिशब्दत्वादाद्यन्तशब्दाभ्यां तस्यैव संज्ञित्वेना- क्षेपो युक्तः। अकत एवं वक्तव्यम्-- "तन्मध्यपतितानां समुदायस्य" इति। एवं मन्यते-- यदयम् "तस्मादित्युत्तरस्य" १।१।६६इत्यादौ वर्णानां समुदाये परतो यकारं यणादेशं कृत्वा निर्देशं करोति, ततो गम्यते-- न वर्णसमुदायः संज्ञीति, किं तर्हि? प्रत्येकं वर्णा एवेति; अन्यथा वर्णसमुदाये संज्ञिनि परतो वर्णमालां यणादेशं कृत्वा निर्देशं कुर्यादिति। असम्भवात् स न कृत इति चेत्, न; वर्णमालात्मन आदेशस्य सम्भवात्। तर्हि समुदाये संज्ञिनि कार्यमेव न सम्भवतीति चेत्, यदि च समुदाये परतः कार्यं न सम्भवति वर्णा एव प्रत्येकं सन्तु संज्ञिनः; तत्र कार्यं सम्भवति, किं समुदायेन? "टा" इत्यनेन ग्रहणं मा भूदिति। ननु च सोऽपि तावतोऽवधेरन्त एव, न; तावतोऽवधेरविवक्षितत्वात्। टकारो ह्ययम् "टाङसिङसामिनात्स्याः" ७।१।१२ "द्वितीयाटौस्त्वेनः" २।४।३४ इत्यत्र तृतीयैकवचनस्य विशेषणार्थः, न तु प्रत्याहारार्थः। अथादिग्रहणं किमर्थम्? अन्त्येन सह समुदाय एव संज्ञा मा भूदिति, नैतदस्ति; "आवृत्तिधर्माणो हि संज्ञाशब्दा भवन्ति"। आदिरेव प्रदेशवाक्येष्वावत्र्तते, न समुदायः; तस्मादन्तरेणाप्यादिग्रहणं सामथ्र्यादादेरेवान्त्यसहितस्य संज्ञात्वं विज्ञायते, न समुदायस्य। एवं तर्हि सामथ्र्यलब्धस्यैवार्थस्य विस्पष्टीकरणार्थमादि- ग्रहणम्। अथ सहग्रहणं किमर्थम्, यावता तृतीययैव सहार्थो गम्यते, यथा-- "वृद्धो यूना" (१।२।६५) इत्यत्र? नैतदेवम्; इत्थम्भूतलक्षणेऽपि तृतीयाऽस्ति। तस्यां च सत्यामादिरेवान्त्येनेत्संज्ञकेनोपलक्षितः संज्ञा स्यात्। ततश्च प्रदेशेष्वक इति, इक इति, अचि इति च समुदायाद्विभक्तिर्न स्यात्, निरर्थकत्वेनाप्रातिपदिक्तवात्। "सह" ग्रहणात् तु सहभूता संज्ञेति समुदायस्य संज्ञात्वेनार्थत्त्वात् प्रातिपदिकत्वे सति विभक्तिर्लभ्यते। इद्ग्रहणं तु "अचि" इत्यत्रानित्संज्ञकेन "चटतव" इत्यनेन चकारेण संज्ञा मा भूदित्येवमर्थम्। अन्त्यत्वं तस्य पूर्ववत्, न समुदायापेक्षया। एवं तर्हि "हलन्त्यम्" १।३।३ इतीत्संज्ञा प्राप्नोति, तदर्थं "न विभक्तौ तुस्माः" १।३।४ इत्यत्र नेति योगविभागः कत्र्तव्यः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ येन ३।१ विधिः १।१ तदन्तस्य ६।१ स्वम् १।१ ६७ रूपम् १।१ ६७

समासः॥

सः अन्ते यस्य सः तदन्तः, तस्य तदन्तस्य, बहुव्रीहिः।

अर्थः॥

येन (विशेषणेन) विधिः विधीयते, सः तदन्तस्य समुदायस्य, स्वस्य च रूपस्य ग्राहकः भवति।

उदाहरणम्॥

{अचो यत् (३।१।९७)} चेयम्, जेयम्। {एरच् (३।३।५६)} चयः, जयः, अयः।
काशिका-वृत्तिः
येन विधिस् तदन्तस्य १।१।७२

येन विशेषणेन विधिर्विधीयते स तदन्तस्य आत्मान् तस्य समुदायसय् ग्राहको भवति , स्वस्य च रूपस्य। एरच् ३।३।५६, इवर्णान्तादच्प्रत्ययो भवतिचयः। जयः। अयः। ओरावश्यके ३।१।१२५, उवर्णान्ताद् ण्यद् भवति अवश्यलाव्यम्। अवश्यपाव्यम्। समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः। द्वितीयान्तं श्रितादिभिः सह समस्यते २।१।२३ कष्टश्रितः। इह मा भूत् कष्टं परमश्रित इति। प्रत्ययविधौ नडाऽदिभ्यः फक् ४।१।९९, नडस्य अपत्यं नाडायनः। इह मा भूत् सूत्रनडस्य अपत्यं सौत्रनाडिः। किम् अविशेषेण? न इत्याह। उगिद्वर्णग्रहणवर्जम् इति वाच्यम्। उगितश्च ४।१।६ इति ङीप्प्रत्ययः तदन्तादपि भवति भवती, अतिभवती। वर्णग्रहनमत इञ् ४।१।९५, दाक्षिः। प्लाक्षिः। यस्मिन् विधिस् तदादावल्ग्रहणे। अल्ग्रहणेषु यस्मिन् विधिस्तदादौ इति वक्तव्यम्। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७ इति श्रियः। भ्रुवः।
न्यासः
येनविधिस्तदन्तस्य। , १।१।७१

"स्वं रूपं शब्दस्येत्यस्यायमपवादः"। इदमपि संज्ञासूत्रम्। न तु परिभाषा। न ह्यत्र नियमरूपता परिभाषाधर्मो विद्यते। "येन" इति करमए तृतीया। विधीयते = अपूर्व एव क्रियते इति विधिः कर्मसाधनः; उपसर्गे घोः किः" ३।३।९२ इति किप्रत्ययान्तः। तदन्तस्य" इति। सोऽन्तोऽस्येति बहुव्रीहिः। तदित्यनेन स एव करणभूतः शब्दः प्रत्यवमृश्यते। अनतशब्दोऽयमवयववाची, अवयवश्च समुदायस्य भवति। अतश्च तस्यैवेयं संज्ञा विज्ञायत इत्याह--- "समुदायस्य संज्ञा भवति" इति। "अवश्यलाव्यम्" इति। "अवश्यपाव्यम्" इति। "लूञ् छेदने" (धा।पा।१४८४), "पूञ् पवने" (धा।पा।१४८३) वृद्धौ कृतायाम् "वान्तो यि प्रत्यये" ६।१।७६ इत्यावादेशः, मयूरव्यंसकादित्वात् समासः; "लुम्पेदवश्यमः कृत्ये:" (काशिका।६।१।१४४) इति मकारलोपः। अथेह कस्मादेजन्तस् संज्ञा न सम्भवति, "एचोऽयवायावः" (६।१।७८) इति? किञ्चस्यात्? "चयनं चायको लवनं लावकः" इत्यत्रानेकाल्त्वादयादयः सर्वादेशाः स्युः, नैष दोषः; "निर्दिश्यमानस्यादेशा भवन्ति" (व्या।प।१०६) इत्येच एव भविष्यन्ति, न सर्वस्यतदन्तस्य। अथ वा-- अस्य योगस्यैवं विधो विषय एव न भवति, ततो नायमिह प्रवर्तते। तथा हि येनेति करणे तृतीयेत्युक्तम्, न चाकर्तृकं करणमस्तीति कत्र्ताप्याश्रितः। स पुनरिह सम्बन्धिशब्दत्वादन्तशब्देनावयववाचिना सन्निधापितः समुदायो विज्ञाप्यते। प्रकृतत्वात् स्वरूपं च कर्ता च त्रिभिः प्रकारैः सन्निहितो भवति। क्वचिन्निर्देशात्-- "ईदूदेद्()द्विचनम्" १।१।११ इति, अत्र द्विवचनं कर्तृभूतं निर्दिष्टम्।

तथा हीदादिभिः करणैः प्रगृह्यसंज्ञां विदधाति। क्वचित् प्रकरणात्--यथा "एरच्" ३।३।५६ इति, अत्र "धातोः" ३।१।९१ इत्यधिकाराद्()धातुः प्रकरणात् कत्र्ता सन्निहितः। स इकारेण करणेनाचं विदधाति। क्वचिच् सामथ्र्यात्-- यथा "इको झल्" १।२।९ इति, अत्र धातोरेव सन् विधीयते, नान्यसमादिति सामथ्र्याद्धातुः कर्ता सन्निहितः; स इका करणेन सनः कित्त्वं विदधाति। तदेवम्, "ईदूदेद्()द्विवचम्" १।१।११ इत्यादौ कर्तृकरणयोरुभयोरपि विद्यमानत्वात् सोऽस्य सूत्रस्य विषय इति तत्र तदन्तविधिर्भवति। "एचोऽयवायावः" ६।१।७५ इत्यत्र तु न केनचित् कत्र्ता सन्निहितः प्रकारेण, न चाकर्तृकं करणं सम्भवति;तस्मात् कर्तृकरणयोरुभयोरप्यसन्निहितत्वाननायमस्य सूत्रस्य विषय इति न सम्भवति तदन्तविधिः। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यायम्-- "द्वितीया श्रित" २।१।२४) इत्यादौ सुपा श्रितादयो विशिष्यन्ते,न श्रितादिभिः सुप्। विशेषणेन च तदन्तविधिः, न विशेष्येण। यस्मादयेनेति करणे तृतीया, करणं च परतन्त्रं परार्थं भवति, न विशेष्यम्, तस्माद्विशिष्टैः श्रितादिभिस्तदन्तविधिर्न भवति। "नडादिभ्यः फक्" इति। अत्रापि प्रकृतेन प्रातिपदिकेन नडादयो विशिष्यन्ते, न नडादिभिः प्रातिपदिकम् अतोऽत्रापि नास्ति तदन्तविधिरिति। "उगिद्वर्णग्रहणवर्जम्" इति। उगिता वर्णेन च प्रातिपदिकं विशिष्यते। विशेषणेन च तदन्तविधिर्भवत्येव। "यस्मिन् विधिः" इत्यादि। तदन्तविधौ प्राप्ते तदादिविधिरुच्यते। यस्मिन्नि- ति सप्तमीनिर्दिष्टे तदादिविधिं दर्शयति। यत्राल्ग्रहणे सप्तमीनिर्दिष्टे पूर्वस्य विधिस्तत्र तदादौ वेदितव्यः। अलादावित्यर्थः। यदि तर्हि तत्रापि तदन्तिविधिः स्यात्, इहैव स्यात्-- श्रियाविति,इह तु न स्यात्-- "श्रियः" इति? तदादिविधौ तु सतीहापि भवति, स्वस्य च रूपस्येति श्रियावित्यत्रापि भवत्येव।

बाल-मनोरमा

येन विधिस्तदन्तस्य २८, १।१।७१

यच्छब्दस्वरूपमुपादाय यो विधिरारभ्यते स तस्य तदन्तस्य च भवतीत्येतद्वक्तुमाह-येन विधिः। विधीयत इति विधिः। "उपसर्गे घोः कि"रिति धाधातोर्भावे किप्रत्ययः। येनेति करणे तृतीया। शास्त्राकृद्विधाने कर्ता। धातोरित्यधिकृत्य #एरजिति इकारेण करणेन धातोरच्प्रत्ययं विधत्ते पाणिनिः। करणं च व्यापारवत्। एरजित्यत्र विशेषणस्य इकारस्य पाणिनिकर्तृकविधानक्रियायां करणस्य इतरव्यावर्तनमेव व्यापारः। ततश्च विशेषणमेवात्र येनेति तृतीयान्तेनोच्यते। स्वं रूपमित्यतः स्वमित्यनुवर्तते षष्ठ()न्ततया च विपरिणम्यते। एवं च "विशेषणसमर्पकः शब्दस्तदन्तस्य स्वस्य च प्रत्यायक" इति फलति। तदाह--विशेषणमित्यादि। विशेषणसमर्पकः शब्दस्तदन्तस्य शब्दस्य, विशेषण समर्पकशब्दस्य च बोधकः स्यादिति यावत्। ततश्च एरजित्यत्र इकारान्ताद्धातोरच्प्रत्ययः स्यात्, इकाररूपाद्धातोश्चेति फलति। यथा-चयः, अयः। केचित्तु करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणपरत्वं यच्छब्दस्य लभ्यत इत्याहुः।

तत्तु शब्देन्दुशेखरे दूषितम्। समासेति। वार्तिकमेतत्। समासविधौ प्रत्ययविधौ च तदन्तविधेः प्रतिषेधो वाच्य इत्यर्थः। तेन कृष्णं परमश्रित इत्यत्र "द्वितीया श्रिते"ति समासो न भवति। सूत्रनडस्य गोत्रापत्यं सौत्रनाडिः। "अत इञ्"। अनुशतिकादीनां चेत्युभयपदवृद्धिः। अत्र नडादिभ्यः फगिति फग्()नभवति। नन्वेवं सति पचन्तमतिक्रान्ता अतिपचन्तीत्यत्र "उगितश्चे"ति उगिदन्तात्प्रातिपदिकाद्विहितो ङीप् न स्यात्, प्रत्ययविधौ तदन्तविधेः प्रतिषेधात्। तथा दाक्षिरित्यत्र अत इञिति इञ्? न स्यात्।

अस्यापत्यं इरित्यत्रैव इञ्स्यादित्यत आह--उगिदिति। इदमपि वार्तिकम्। "द्वितीयायां चे"ति वर्जयतेर्णमुल्। "उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्या समासप्रत्ययविधावित्युक्तः प्रतिषेधो भवती"त्यर्थः। उगिद्वर्णग्रहणे तु येन विधिरिति तदन्तविधिरस्त्येव, ततश्च अतिपचन्तीत्यत्र उगिदन्तप्रातिपदिकान्तादुगितश्चेति ङीप्, दाक्षिरित्यत्र

अवर्णान्तादिञ् च सिध्यति।

तत्त्व-बोधिनी

येन विधिस्तदन्तस्य २६, १।१।७१

येन विधिः। "विधि"रित्यत्र "उपसर्गे" घोः किः" इति कर्मणि किः प्रत्ययः। "येने"ति करणे तृतीया, न तु कर्तरि। तस्याः कृद्योगषष्ट()आ बाधात्। नच "उभयप्राप्तौ कर्मणी"ति नियमेन निर्वाहः, कर्मण उक्तत्वेनोभयप्राप्त्यभावात्। तथा चात्र करणे तृतीयैव। करणं च परतन्त्रं, कत्र्रधिष्ठितस्यैव करणत्वात्। एवं चेह तृतीयया पारतन्त्र्यं लक्ष्यते। नच "एर"जित्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव संभवति, किंतु वैवक्षिकम्। तेन विशेषणमप्रधानम्। तच्चात्मान्तरस्य संज्ञेति फलितं, तदेतदाह--विशेषणं तदन्तस्यैति। स्वस्य चेति। "स्व रूप"-मित्यनुवृत्तेरेतल्लभ्यते। "एरच्"। इकारान्तादिकाररूपाच्च धातोरच्। चयः, जयः, अयः। समासप्रत्ययविधावाते। कृष्णं श्रितः कृष्णश्रितः। ["द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः"। द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते वा तत्पुरुषः ]। नेह-कृष्णमुपश्रितः। "नडादिभ्यः फक्"। नडस्य गोत्रापत्यं नाडायनः। नेह-[सूत्रनडस्यापत्यं] सौत्रनाडिः। अनुशतिकादित्वादुभयमदवृद्धिः।

उगिद्वर्णेति। उगिद्वर्णग्रहणं वर्जयित्वा,-उगिद्वर्णग्रहणवर्जं। "द्वितीयायां चे"ति णमुल्। महान्तमतिक्रान्ता अतिमहती। महच्छब्दस्य गौरादित्वेऽप्युपसर्जने "षिद्गौरे"ति ङीषोऽप्रवृत्तेः "उगितश्चे"त्युगिदन्तान्ङीप्। "अत इञ्"। दाक्षिः। न चेह सामथ्र्यात्तदन्तविधिः , अस्यापत्यमिः काम इत्यत्र चरितार्थत्वात्। न चैवमिञो ञित्त्वं व्यर्थमिति वाच्यम्, "बाह्वादिभ्यश्चे"त्यत्र यथायथं वृध्द्याद्युदात्ताभ्यां चपितार्थत्वात्। नन्वेवमपि औपगविरित्यादावेव अत इञ्स्यान्नतु दाक्षिरित्यादौ, अकारस्येहानर्थकत्वादिति चेन्नः, वर्णग्रहणे अर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृद्धिः १।१ यस्य ६।१ ७४ आचाम् (निर्धारणे षष्ठी) ६।३ ७४ आदिः १।१ ७४ तत् १।१ वृद्धम् १।१ ७४

अर्थः॥

यस्य समुदायस्य अचां मध्ये आदिः अच् वृद्धिः भवति, तत् समुदायरूपं वृद्धसंज्ञकं भवति।

उदाहरणम्॥

शालीयः, मालीयः। औपगवीयः, कापटवीयः॥

काशिका-वृत्तिः

वृद्धिर् यस्य अचाम् आदिस् तद् वृद्धम् १।१।७३

यस्य इति समुदाय उच्यते। अचां मद्ये यस्य वृद्धिसंज्ञक आदिभूतः, तच्छब्दरूपं वृद्धसञ्ज्ञं भवति। अचाम् इति जातौ बहुवचनम्। शालीयः। मालीयः। औपगवीयः। कापटवीयः। आदिः इति किम्? सभासन्नयते भवः साभासन्नयनः। वा नामधेयस्य वृद्धसंज्ञा वक्तव्या। देवदत्तीयाः। दैवदत्ताः। गोत्रान्तादसमस्तवत्प्रत्य्त्यो भवतीति वक्तव्यम्। घृतप्रधनो रौढिः

घृतरौढिः। तस्य छात्रा घृतरौढीयाः। ओदनप्रधानः पाणिनिः ओदनपाणिनिः। तस्य छात्रा ओदनपाणिनीयाः। वृद्धाम्भीयाः। वृद्धकाश्यपीयाः। जिह्वाकात्यहरितकायवर्जम्। जैह्वाकाताः। हारितकाताः।

लघु-सिद्धान्त-कौमुदी

वृद्धिर्यस्याचामादिस्तद्वृद्धम् १०७८, १।१।७२

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात्॥

न्यासः

वृद्धिर्यस्याचामादिस्तद्?वृद्धम्। , १।१।७२

"यस्येति समुदाय उच्यते" अचां मध्ये यस्यादिर्वृद्धिसंज्ञकस्तस्यैव शब्दरूपस्य संज्ञा विधीयते। तच्च नियोगतः समुदायात्मकमेवेति सामथ्र्याद् यस्येति सामान्यप-देनापि समुदाय एवाभिधीयते। संज्ञिनिर्देशार्थं यस्येति वचनम्। अचां मध्य इत्यादिना वृद्धिसंज्ञिनः समुदायादेकदेशस्य निर्धारणं दर्शयन्नचामित्यस्य निर्धारणषष्ठीत्वं दर्शयति। आदिशब्दस्त्विहोपक्रमे वत्र्तते, उपक्रमम्यते इत्युपक्रमः, प्रथमत उच्चारित इत्यर्थः। अचामिति बहुवचननिर्देशाद् यस् बहूनामचां मध्ये वृद्धिसंज्ञक आदिभूतः, तस्यैव वृद्धसंज्ञया भवितव्यम्; न तु यस्य द्वयोर्मध्ये इति चोद्यमपाकर्तुमाह-- "अचाम्" इत्यादि। यदि तह्र्यचामिति निर्धारणषष्ठीयम्, एवं सति समानजातीयस्यैव निर्धारणं भवतीत्यचां मध्ये वृद्धिकोऽजेव यथा स्यादित्येषोऽर्थः स्यात्। तथा च सत्याकारो यस्यादिस्तस्य संज्ञा न स्यादा()आलायन इत्यादेः, न ह्याकारस्य मुख्यमच्त्वमस्ति; अक्ष्वसन्निवेशात्। उपचरितं तु स्यात् ; "अणुदित्सवर्णस्य चाप्रत्ययः" १।१।६८ इत्येनेनानचोऽपि सतोऽच्कार्यकरणात्। न च मुक्ये सति गौणस्याश्रयणं युक्तम्, गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययात्, नैष दोषः; व्याप्तेन्र्यायादाकारस्यापि गौणमच्त्वमाश्रित्य भविष्यति,अन्यथा ह्रैज्ग्रहणमेव कुर्यात्, न वृद्धिग्रहणम्। "शालीयः, मालीयः, इत्यादि। अत्र वृद्धसंज्ञायां सत्याम् "वृद्धाच्छः" श४।२।११३ इति च्छो भवति। ननु च शालामालाशब्दयोः कापटुशब्दस्य च संज्ञया न भवितव्यम्, न ह्येषां वृद्धिसंज्ञक आदिः,किं तर्हि? हल्,नैतदेवम्; विद्यमानोऽपि ह्यत्र हल् नापेक्ष्यते,अजपेक्षस्यादित्वस्याश्रयणात्। एतदेव ह्यज्ग्रहणस्य प्रयोजनम्। कतं नाम तदपेक्ष- यादित्वं विज्ञायेतेति? अन्यथा तत्र कर्तव्यमेव स्यात्। अज्ग्रहणे क्रियमाणे सत्यमर्थो भवति। अचां मध्ये यस्य यो वृद्धिसंज्ञकोऽजेवादिभूत इति। अन्येभ्योऽज्भ्यो यस्य वृद्धिसंज्ञकः प्रागुच्चार्यत इति यावत्। तेन शालाशब्दादेरपि संज्ञा सिध्यति। "साभासन्नयनः" इति। अत्र वृद्धिसंज्ञाभावादणेव भवति, न तु च्छः। यदि पुनरा-दिग्रहणं न क्रियेत ततो यस्याप्यचां मध्ये वृद्धिसंज्ञकः कश्चित् सभासन्नयनादेस्त- स्याप्येषा संज्ञा स्यात्। अत्र यद्यपि वृद्धिशब्दः श्रूयते, तथापि तल्लिङ्गकपरि- भाषा नोपतिष्ठते। यसमाद् यत्र नियतस्थानिके गुणवृद्धी विधीयते तत्र स्थानिनियमार्थासा व्याप्रियते। एतच्च प्रागेवोक्तम्। न चेह गुणवृद्ध्योर्विधानम्, अतो नात्र व्यापारस्तस्याः। तेन यस्याप्यनियतस्थानिको वृद्धिसंज्ञक आदिभूतः, तस्यापि संज्ञा सिद्धा भवति। "वा नामधेयस्य" इत्यादि। ये पुरुषैव्र्यवहाराय संकीत्र्यमानाः शब्दा देवदत्त इत्येवमादयः, तेषामेषा संज्ञा वेदितव्या। तेष्वेव नामधेयशब्दो रूढः,न तु ये जात्यादिनिमित्तका गवादिशब्दा अनादिव्यवहारान्तः पातिनस्तेषु। ननु च काश्यादिपाठात् "काश्यादिभ्यः" ४।२।११५ ठञ्()ञिठाभ्यां भवितव्यम्, तदयुक्तं देवदत्तीय इति च्छप्रत्ययान्तस्योदाहरणम्, नैष दोषः; यो हि देवैदत्तो देवदत्त इति क्रियानिमित्तको देवदत्तशब्दः, तस्यैव तत्र पाठः,न संज्ञाशब्दस्य। तेन संज्ञाभूताद्देवदत्त शब्दाद् यदा वृद्धसंज्ञा तदा छो भवति,अन्यथा त्वण्। "गोत्रान्तात्" इत्यादि। तथाऽसमस्तात्त केवलाद्()गोत्रप्रत्ययान्ताद् वृद्धाच्छप्रत्ययो भवति तथा समस्ताद-वृद्धादपि। "घृतरौढिः" इति। "समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपद-लोपश्च" (वा।८३) इति समासः। एवमुत्तर रूढस्यापत्यम्, पाणिनस्यापत्यम्-- "अत इञ्" ४।१।९५ इतीञ्। बाह्वादिषु "सम्भूयोऽम्भसः सलोपश्च" (ग।सू।६६) इति पठ()ते। काश्यपशब्दो बिदादित्वादञन्तः। "जैह्वाकाताः, हारितकाताः" इति। कात्यशब्दो गर्गादियञन्तः। जिह्वाचपलः कात्यः,

जिह्वाकात्यः। हरितभक्षः कात्यः हरितकात्यः, ताभ्यामौत्सर्गिक एवाण्, "यस्येति च" ६|४|१४८इत्यकारस्य लोपः; "आपत्यस्य च तद्धितेऽनाति" ६|४|१५१ इति यकारस्य॥

बाल-मनोरमा

वृद्धिर्यस्याचामादिलस्तद्वृद्धम् १३१६, १|१|७२

वृद्धिर्यस्य। अचामिति बहुत्वमनेकत्वोपलक्षणम्। तेन शालाशब्दस्यापि वृद्धत्वं सिध्यति। व्यपदेशिवत्त्वेन ज्ञाशब्दस्यापि वृद्धत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ त्यदादीनि १।१ च ० वृद्धम् १।१ ७२

समासः॥

त्यद् आदिः येषाम्, तानि इमानि त्यदादीनि, बहुव्रीहिः।

अर्थः॥

त्यदादीनि शब्दरूपाणि वृद्धसंज्ञकानि भवन्ति।

उदाहरणम्॥

त्यदीयम्। तदीयम्। एतदीयम्।

काशिका-वृत्तिः

त्यदादीनि च १|१|७४

यस्य अचाम् आदिग्रहणम् उत्तरार्थम् अनुवर्तते। इह तु न सम्बध्यते। त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति। त्यदीयम्। तदीयम्। एतदीयम्। इदमीयम्। अदसीयम्। त्वदीयम्। त्वादायनिः। मदीयम्। मादायनिः। भवतीयम्। किमीयम्।

लघु-सिद्धान्त-कौमुदी

त्यदादीनि च १०७९, १|१|७३

वृद्धसंज्ञानि स्युः॥

न्यासः

त्यदादीनि च। , १|१|७३

"उत्तरार्थम्" इति। उत्तरसूत्रेऽस्य प्रयोजनवत्त्वात् यद्यनुवत्र्तते,एतद-र्थमपि कस्मान्न भवतीत्याह-- "इह न सम्बध्यते" इति। यदीहापि सम्बध्येत तदायमर्थः स्यात्--- "त्यदादीनि यस्याचामादिभूतानि तद्()वद्धम्" इति। ततश्च त्वत्पुत्र इत्यादावेव स्यात्, केवालानां च त्यदादीनां न स्यादित्यभिप्रायः। ननु च त्वत्पुत्रो मत्पुत्र इत्यादावुपसर्जनानि त्यदादीनि,

उपसर्जनानां च तेषां त्यदादित्वं निवर्तितम्, तत् कुतोऽयं प्रसङ्गः? यदि यस्याचामादेरित्येतदिह सम्बध्यते तदा सत्युपसर्जनत्वे वचनात् त्यदादावेव संज्ञा स्यात्, न केवलानामिति मन्यते; कथं पुनरिहानुवर्तमानं शक्यमसम्बन्धुम्? स्वसम्ब्नधानुवृत्तेः। "वृद्धिर्यस्याचामादिस्तद्()वृद्धम्" १।१।७२ इति त्यदादीनि च वृद्धिसंज्ञकानि भवन्ति। "वृद्धिर्यस्याचामादिस्तद्()वृद्धम्" इति तद्()वृद्धम्, "एङ प्राचां देशे" १।१।७४ यस्याचामादिग्रहणमनुवत्र्तते। वृद्धिग्रहणं निवृत्तम्। एवं वृद्धिग्रहणं निवृत्तम्। एवं वृद्धिशब्देन सम्बन्धमनुवत्र्तमानं न शक्यते त्यदादिभिः सम्बन्धुम्। "त्वादायनिः, मादायनिः" इति। "उदीचां वृद्धादगोत्रात्" ४।१।१५७ इति फिञ्(), "प्रत्ययोत्तरपदयोश्च" ७।२।९७ इति युष्मदस्मदोस्त्वामादेशौ। चकारोऽनुक्तसमुच्चयार्थः। तेन "वा नामधेयस्य" (वा।१५) इत्यादि वक्तव्यं न भवति॥

बाल-मनोरमा

त्यदादीनि च १३१७, १।१।७३

त्यदादीनि च। शेष पूरणेन सूत्रं व्याचष्टे--वृद्धसंज्ञानि स्युरिति। आदेरचो वृद्धिसंज्ञकत्वाऽभावादारम्भः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एङ् १।१ प्राचाम् ६।३ देशे ७।१ यस्य ६।१ ७२ आचाम् ६।३ ७२ आदिः १।१ ७२ वृद्धम् १।१ ७२

अर्थः॥

यस्य समुदायस्य अचाम् आदिः {एङ्} तस्य प्राचां देशाभिधाने वृद्धसंज्ञा भवति।

उदाहरणम्॥

एणीपचने भवः, एणीपचनीयः। गोनर्दे भव, गोनर्दीयः। भोजकटे भवः, भोजकटीयः।

काशिका-वृत्तिः

एङ् प्राचाम् देशे १।१।७५

यस्य अचाम् आदिग्रहणम् अनुवर्तते। एङ् यस्य अचाम् आदिः तत् प्राचां देशाभिधाने वृद्धसंज्ञं भवति। एणीपचनीयः। भोजकटीयः। गोनर्दीयः। एङिति किम्? आहिच्छत्रः। कान्यकुब्जः। प्राचाम् इति किम्? देवदत्तो नाम बाहीकेषु ग्रामह्, तत्र भवः दैवदत्तः। देशे इति किम्? गोमत्यां भवा मत्स्याः गौमताः। प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा। विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती। इति श्रीजयादित्यविरचितायां काशिकायाम् वृत्तौ प्रथमाध्यायसय् प्रथमः पादः।

न्यासः

एङ् प्राचां देशे। , १।१।७४

"प्राचां देशाभिधाने" इति। प्राचां सम्बन्धी यो देशस्तदभिधान इत्यर्थः। एतेन प्राचामिति देशविशेषणं न विकल्पार्थमिति दर्शयति। प्राचां मतेनेत्यस्याविवक्षितत्वादित्याख्यातं भवति। "एणीपचनीयः" इत्यादि। एणीपचन इत्यादिभ्यच्छः। "आहिच्छत्रः" इति, "कान्यकुब्जः" इति अहिच्छत्रकान्यकुब्जशब्दाभ्यामणेव भवति। "देवदत्तः" इति। वृद्धा-धिकारे विहितो "वाहीकग्रामेभ्यश्च" ४।२।११६ इति ठञ्()ञिठौ न भवतः, काश्यपादि- पाठादपि तौ न भवतः; क्रियानिमित्तको हि देवदत्तशब्दस्तत्र पठ()ते संज्ञाशब्दस्य चेदं प्रत्युदाहरणम्। एतच्च यदा "वा नामधेयस्य" (वा। १५) इति वृद्धसंज्ञा नास्ति;

तदा वेदितव्यम्। "गौमताः"इति। अत्र सर्वमस्ति न तु देशाभिधानम्। तथा हि गोमती नदी प्रग्देशे, न देशः। न हि नदी देशग्रहणेन गृह्यते;"नदीदेशोऽग्रामाः" २।४।७ इत्यत्र नद्याः पृथग्ग्रहणात्। "एङ् प्राचां देशे" इति। "उदीचां वृद्धादगोत्रात्" ४।१।१५७ इत्येवमादिषु प्रागुदञ्चौ श्रूयेते, तयोश्च विभागो न विज्ञायते। अतस्तत्परिज्ञानायाह-- " प्रागुदञ्चौ" इत्यादि। शरावती नाम नदी , तस्याः पूर्वेण व्यवस्थितो देशः प्राग्देशः, उत्तरेण उदग्देशः। तौ शरावती विभजते = विभागेन व्यवस्थापयति तस्यां हि मर्यादायां सत्यां तयोर्विभागः परिज्ञायते। किमर्थं विभजते? "विदुषां शब्दसिद्ध्यर्थम्" इति। पण्()डितानां वैयाकरणानां शब्दव्युत्पत्त्यर्थम्। कतं विभजते? "हंसः क्षीरोदकं यथा"। क्षीरोदकमिति "जातिरप्राणिनाम्" २।४।६ इत्येकवद्भावः। क्वचित् क्षीरोदके इति पाठः। सः "सर्वो द्वन्द्वो विभाषयैकवद्भवति" (व्या।प।९१) इति वेदितव्यः। यथा हंसः क्षीरमुदकं च मिश्रीभावमुपगतं पृथगसङ्करेण व्यवस्थापयति, तथा शरावती प्रागुदञ्चौ। यत्-तदोर्नित्याभिसम्बन्दात् सेति वचनादनुक्तमपि येत्येतल्लभ्यते। या विभजते सा नोऽस्मान् पातु रक्षतु। प्रसिद्धस्तु पाठो यत्र श्लोके प्रागुदीचाविति, तत्राऽचः "उद ईत्" (६।४।१३९) इति भसंज्ञकस्योच्यमानः कथमीकारः? कथं च "उगिदचां सर्वनामस्थानेऽधातोः" ७।१।७० इति नुम न भवतीति चिन्त्यम्। अत्र वर्णयन्ति-- "अच्प्रत्यन्ववपूर्वात् सामलोम्नः" ५।४।७५ इत्यत्राजितियोगविभागेनाच्प्रत्ययः कृतः, तेनात्राचि परतो भसंज्ञामीत्वं भवति। नुम् न भवति; अचा सर्वनामस्थानस्य व्यवहितत्वादिति। अनये तु प्रागुदीचमिति समाहारे कुर्वन्ति। तेषां "द्वन्द्वाच्चुदषहान्तात् समाहारे" ५।४।१०६ इति टचि समासान्ते कृते पूर्ववदीकारो नुमभावश्च भवति। क्वचित्तु प्रागुदीच इति पाटः। तत्रावयवदेशापेक्षया बहुत्वविवक्षायां बहुवचनम्। प्राग्देशानुदग्देशाश्च विभजत इत्यर्थः। श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धपादविरचितायां काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य प्रथमः पादः ------------ अथ प्रथमाध्ययस्य द्वितीय पादः

बाल-मनोरमा

एङ् प्राचां देशे १३१९, १।१।७४

एङ् प्राचां। देशविशेषनाम्नश्चेदेङादिरेव वृद्धसंज्ञक इति नियमार्थमिदम्।

वा नामधेयस्येति। रूढशब्दत्वमिह नामत्वं, न त्वाधुनिकसंकेतितत्वमेव। तेन घटीयमित्यादि सिद्धम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ गाङ्कुटादिभ्यः ५।३ अञ्णित् १।१ ङित् १।१ ४

समासः॥

कुटः आदिः येषां ते कुटादयः। गाङ् च कुटादयः च गाङ्कुटादयः, तेभ्यः ०, बहुव्रीहिगर्भेतरद्वन्द्वः। ञश्च णश्च ञ्णौ, इन्तरेतरद्वन्द्वः। ञ्णौ इतौ यस्य सः ञ्णित्, न ञ्णित् अञ्णित्, बहुव्रीहिगर्भः नञ्तत्पुरुषः।

अर्थः॥

गाङ्धातोः कुटादिभ्यश्च धातुभ्यः परे, ये ञित्-णित्-भिन्न-प्रत्ययाः, ते ङिद्वत् भवन्ति। गाङ् इत्यनेन इङादेशः गाङ् गृह्यते, यः {विभाषा लुङ्लृङोः (२।४।५०)} इत्यनेन सम्पद्यन्ते। कुटादयोऽपि (तुदा०) कुट कौटिल्य इत्यारभ्य कुङ् शब्दे इति यावत् गृह्यन्ते।

उदाहरणम्॥

कुटिता, कुटितुम्, कुटितव्यम्। उत्पुटिता, उत्पुटितुम्, उत्पुटितव्यम्।
काशिका-वृत्तिः
गाङ्कुटादिभ्यो ऽञ्णिन्ङित् १।२।१

अतिदेशो ऽयम्। गाङिति इङादेशो ह्यते, न गाङ् गतौ इति, ङकारस्य अनन्यार्थत्वात्। कुटादयो ऽपि कुट कौटिल्ये इत्येत दारभ्य यावत् कुङ् शब्दे इति। एग्यो गाङ्कुटादिभ्यः परे अञ्णितः प्रत्यया ङितो भवन्ति ङिद्वद् भवन्ति इत्यर्थः। गाङः अध्यगीष्ट। अध्यगीषाताम्। अध्यगीषत। कुटादिभ्यःकुटिता। कुटितुम्। कुटितव्यम्। उत्पुटिता उत्पुटितुम्। उत्पुटितव्यम्। अञ्णितिति किम्? उत्कोटयति। उच्चुकोट। उत्कोटकः। उत्कोटो वतते। व्यचेः कुटादित्वमनसीति वक्तव्यम्। विचिता। विचितुम्। विचितव्यम्। अनसि इति किम्? उरुव्यचाः।
लघु-सिद्धान्त-कौमुदी
गाङ्कुटादिभ्योऽञ्णिन्ङित् ५९०, १।२।१

गाङादेशात्कृटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः॥
न्यासः
गाङ्कुटादिभ्योऽञ्णिन्ङित्। , १।२।१

अत्र पक्षत्रयं सम्भाव्यते-- इत्संज्ञको वा ङकारोऽनेन भाव्यते, गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति, इत्संज्ञको ङकार एषां सम्बन्धी भवतीति यावत्; एवं हि ते ङितो भवन्ति यदि हि तेषां ङकारोऽनुबन्धो विधीयते, नान्यथा; न हि विना चित्रगवीभिर्देवदत्तश्चित्रगुर्भवति। ङिदितीयं वा संज्ञाऽनेन क्रियते, गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति, ङित्संज्ञका भवन्तीति यावत्। अतिदेशोऽयं वा स्यात्, गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति, ङिद्वद्()भवन्तीत्यर्थः। तत्राद्ये पक्षे "गाङ्कुटादिभ्यः" इत्यनया पञ्चम्याऽञ्णिदित्यस्याः प्रथमायाः षष्ठ()आं परिकल्पितायां सत्याम्। "आदेः परस्य" १।१।५३ इति वचनादादेरलः स्थान आदेश एव ङकारः प्राप्नोति। द्वितीये तु पक्षे "अनिदितां हल उपधायः क्ङिति " इत्यत्र संज्ञिनः संप्रत्ययो न स्यात्; शब्दभेदात्। अन्योहि ङिच्छब्दः, अन्यो हि क्ङिशब्दः। किञ्च, "ङिद्()ग्रहणे ग्रहादौ" ६।१।१६ सूत्र एषामेव संज्ञिनां ग्रहणं प्राप्नोति, न यङादीनाम् "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः" (व्या।प।६) इति वचनात्। अथापि कथञ्चिदेते दोषाः परिहर्तुं शक्येरन्, आद्ययोः पक्षयोर्यस्तु तत्परिहारद्वारेण प्रवृत्तौ साध्यायां प्रतिपत्तिगौरवदोष आपद्यते सोऽपरिहार्य एव। तृतीये तु पक्षे न कश्चिद् दोष इति मत्वा तमेवाश्रित्याह-- "अतिदेशोऽयम्िति। यद्येवम्, वतिना निर्देशः कत्र्तव्यः, अन्यथा तदर्थो नावगम्येत; नैतदेवम्, परपदार्थेषुहि प्रयुज्यमानाः शब्दावतिमन्तरेणापि वत्यर्थ गमयन्ति, यथा-- सिंहो माणवकः,गौर्वाहीकः। गाङितीङादेशो गृह्रते-- "इङश्च" २।४।४८, "गाङ लिटि" २।४।४९, विभाषा लुङ लृङो" २।४।५० इति। गाङादेशो य इङः स्थाने वक्ष्यते तस्येदं ग्रहणम्, न "गाङ गतौ" (धा।पा।९५०) इत्यस्य। अथ "गाङ गतौ" (धा।प।९५०) इत्यस्य धातोग्र्रहणं कस्मान्न भवतीत्याह--"ङकारस्य" इत्यादि।इङादेशस्य यो ङकारस्तस्येदं प्रयोजनम्--इह सूत्रे तस्यैव ग्रहणं यथा स्यान्नान्यत् किञ्चिदात्नेपदार्थ स्यादिति चेत्? न; आत्मनेपदस्य स्थानमिवद्भावेनैव सिद्धत्वात्। तस्मादिङादेश एव गृह्रते; अन्यथा ङकारस्य वैयथ्र्यं स्यात्। ननु चोभयोरपि सामान्यग्रहणार्थो ङकारः स्यात्, तत् कुतो वैयथ्र्यम्()नैतदस्त; यदि हि तौ समानौ स्यातां तदा सामान्यग्रहणार्थता तस्य, न च तौ समानौ; गत्यर्थस्य गाङो ङकारस्यात्मनेपदविधौ चिरार्थत्वात्। इतरस्य तु न क्विच्चरितार्थता। तस्मादसमानार्थत्वादयुक्तं सामान्यग्रहणमिति गाङादेश गृह्रते। किमर्थं पुनरिह उच्चार्यते, न गा इत्येवोच्येत? चैवं शक्यम्; एवं हि सति निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति "कै गै

शब्दे" (धा।पा। ९१६-९१७) इत्यस्यैव ग्रहणं स्यात्। कुटादयो हि "कुट कौटिल्ये" (धा।पा।१३६६) इत्यत आरभ्य "कुङ शब्दे" (धा।पा।१४०१) इति यावदिति। तदनन्तरं वृत्करणात् ततोऽधिकानां कुटादित्वानुपपत्तेः। "अध्यगीष्ट" इति। सिचो ङित्त्वे घुमास्थागादि ६।४।६६ सूत्रेणेत्वम्। अत्र हि "दीङो युडचि क्ङिति" ६।४।६५ इत्यतः क्ङितीत्यनुवत्र्तते, "ईद् यति" ६।४।५ इत्यत ईदिति च। "अध्यगीषत" इति। "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः। अथ लिटि यो गाङादेशस्तस्य कस्मादुदाहरणं न प्रदर्शितम्? एवं मन्यते-- लुङ एवायम्, नासाविह लिड्()ग्रहणं प्रयोजयति; "अंसयोगाल्लिट् कित्" १।२।५ इति वक्ष्यमाणेनैव सिद्धत्वात्। "उत्कुटिता" इति। "कुट कौटिल्ये" (धा।पा।१३६६)। "उत्पुटिता" इति। "पुट संश्लेषणे"(धा।पा।१३६७)। अथेहोच्चुकुटितषतीति सनो ङित्त्वादात्मनेपदं कस्मान्न भवति? उपदेशाधिकारात्। तत्र हि "उपदेशेऽजनुनासिकः" १।३।२ इत्यत उपदेशग्रहणमनुवत्र्तते। न चात्रौपदेशिकं ङित्त्वम्, किं तर्हि? आतिदेशिकम्। "व्यचेः" इत्यादि। "व्यच व्याजीकरणे"(धा।पा।१२९३) इति तुदादौ कुटादिभ्यः प्राक् पठ()ते। "विचिता" इति। ङित्त्वादिह ग्रह्यादिसूत्रेण ६।१।६ संप्रासरणम्। "उरुव्यचाः" इति। "सर्वधातुभ्योऽसुन्" (द।उ।९।४९) इत्यसुन्प्रत्ययः। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः।

बाल-मनोरमा

गाङ्कुटादिभ्योऽञ्णिन्ङित् २९२, १।२।१

गाङ्कुटादिभ्यो। ञ् च ण्च ञ्णौ,तौ इतौ यस्य स ञ्णित्,स न भवतीत्यञ्णित्। गाङ् च कुटादयश्चेति द्वन्द्वात्पञ्चमी। गाङिति ङकारानुबन्धात् "इणो गा लुङी"त्यस्य न ग्रहणमित्युक्तम्। नापि "गाङ्गतौ" इत्यस्याऽत्र ग्रहणं, तत्र ङकारस्यात्मनेपदप्रापणेन चरितार्थत्वात्। इङादेशस्य गाङो ङकारो नात्मनेपदप्रापणेन चरितार्थः, स्थानिवत्त्वेनैव तत्सिद्धेः। तदाह--गाङादेशादिति। एवं च सिचो ङित्त्वे आह--

तत्त्व-बोधिनी

गाङ्गुटादिभ्योऽञ्णिन्ङित् २५२, १।२।१

गाङ्कुटादिभ्यो। इह गाङ्गतावित्यस्य न ग्रहणम्, तङर्थतया ङकारानुबन्धस्य तत्र चरितार्थत्वात्। आदेशङकारस्तु अचरितार्थः। स्थानिवद्भावेनैव तङः सिद्धत्वादत आह---- गाङादेशादिति। कुटादिस्तुदाद्यन्तर्गणः। केचित्तु कुट आदिर्येषां ते कुटादयः। कुटस्य आदिः कुटादिः, कुटादिश्च कुटादयश्च कुटादय इति समासद्वयमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहमाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः। तच्च "रलो व्युपधा"दिति सूत्रस्थेन "लिखित्वा, लखित्वा लिलिखिषति लिलेखिषती"ति वृत्तिग्रन्थेन, "शकुनिष्वालेखने" इति सौत्र प्रयोगेण च विरुध्यते। अञ्णिदिति किम्?। घञि-- कोटः। पोटः। णलि चुकोट। पुपोट।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विजः ५।१ इट् १।१ ३ ङित् १।१ १

अर्थः॥

{ओविजी भयसञ्चलनयोः (तुदा॰ आ॰)} इत्येतस्मात् परः इडादिः प्रत्ययः ङिद्वत् भवति।

उदाहरणम्॥

अद्विजिता, उद्विजितुम्, उद्विजितव्यम्

काशिका-वृत्तिः

विज इट् १।२।२

ओविजी भयचलनयोः, अस्मात् परः इडादिः प्रत्ययो ङिद्वद् भवति। उद्विजिता। उद्विजितुम्। उद्विजितव्यम्। इटिति किम्? उद्वेजनम्। उद्वेजनीयम्।

लघु-सिद्धान्त-कौमुदी

विज इट् ६६८, १।२।२

विजेः पर इडादिप्रत्ययो ङिद्वत्। उद्विजिता॥

लघु-सिद्धान्त-कौमुदी

इति तुदादयः ६ ६६८, १।२।२

लघु-सिद्धान्त-कौमुदी

अथ रुधादयः ६६८, १।२।२

लघु-सिद्धान्त-कौमुदी

रुधिर् आवरणे १ ६६८, १।२।२

न्यासः

विज इट्। , १।२।२

"इडादिप्रत्ययः" इति। इट आदिर्यस्य तृजादेः स तथोक्तः।अथोत्तमपुरुषस्यैकवचनस्येटो ग्रहणं कस्मान्न भवति, "सार्वधातुकमपित्" १।२।४ इत्यनेनैव तस्य कित्त्वस्य सिद्धत्वात्?नैतदस्ति,यत्र हि तेन न सिद्ध्यति तत्रोत्तमपुरुषस्यैककवचनस्य ङित्त्वविधानार्थमिड्()ग्रहणं स्यात्। क्व च तेन न सिद्ध्यति? आर्धुधातुक आशिषि लिङि-- "उद्विजिषीय" इत्यत्र। अतो युक्तं चोत्तमपुरुषस्यैकवचनस्य ग्रहणम् नागमस्य;"अर्थवद्()ग्रहणे नानर्थकस्य" (व्या।प।९), "प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्" (व्या।प।७२) इति परिभाषाद्वयात्। अथापि कथञ्चिदागमस्येटो ग्रहणं स्यात्? एवमपि तन्मात्रस्यैव ङित्त्वं लभ्यते, न तु तदादेः प्रत्ययस्य, तत्किमित्याह-- "इडादिप्रत्ययो ङिद्भवति " इति? एवं मन्यते--- "वद्धिर्यस्याचामादिः" १।१।७२ इत्यत आदिग्रहणमनुवत्र्तते, तेन चेड् विशिष्यते। न चोत्तमपुरुषस्यैकवचनस्यादित्वमस्ति, किं तर्हि? आगमस्यैव; तस्मात् स एव गृह्रते। तस्य च केवलस्यादिभूतस्य ङित्वे प्रयोजनं नास्तीति सामथ्र्यादिडादेः प्रत्ययस्य ङित्वं विज्ञायत इति। "उद्विजिता" इति। ङित्वात् "पुगन्तलघुपधस्य" ७।३।८६ इति गुणो न भवति।

बाल-मनोरमा

विज इट् ३६६, १।२।२

विज इट्। "गाङ्कुटादिभ्यः" इत्यतो ङिदित्यनुवर्तते। तदाह - विजेः पर इत्यादि। उद्विजिता। उद्विजिषीष्ट।उदविजिष्ट। व्रश्चधातुरूदित्त्वाद्वेट्। ग्रहिज्येति। लटि व्रश्च् अति इति स्थिते शस्याऽपित्त्वेन ङित्वात् "ग्रहिज्ये"ति रेफस्य

संप्रसारणमृकारः, पूर्वरूपं चेति भावः।तदाह - वृश्चतीति। वृश्चतः वृश्चन्तीत्यादि। वव्रश्चेति। णलि रूपमिदम्। थलि च प्रक्रिया अनुपदं वक्ष्यते। अतुसादौ संयोगात्परत्वेन कित्त्वाऽभावात् "ग्रहिज्ये"ति न संप्रसारणम्। तदाह -- वव्रश्चतुरिति। ऊदित्त्वात्थलि वेट्। तदाह -- वव्रश्चिथ वव्रष्ठेति। धातुपाठे "व्रश्चू" इत्यत्र व्रस् च् इति?सथिते सस्य श्चुत्वेन शकारनिर्देशः। तता च वव्रश्च् थ इति स्थिते श्चुत्वनस्याऽसिद्धत्वात् "स्कोः" इति सकारलोपे, चस्य "व्रश्चे"ति षत्वे, ष्टुत्वेन थस्यठत्वे, वव्रष्ठेतिरूपम्। वव्रश्चिव। ननु णलि थलि च अकितिद्वित्वे कृते "लिट()ब्यासस्ये"त्यब्यासावयवयोर्वकाररेफयोद्र्वयोरपि संप्रसारणं स्यात्। न च "न संप्रसारणे संप्रसारण"मिति वकारस्य संप्रसारणनिषेधः शङ्क्यः, पूर्वं वकारस्य संप्रसारणसंभवादित्यत आह-- लिट()भ्यासेति। "न संप्रसारणे" इति निषेधादेव ज्ञापक#आत्प्रथमं रेफस्य ऋकारः संप्रसारणमित्यर्थः। तस्यसंप्रसारणसंपन्नस्य ऋकारस्य अकारविधं स्मारयति - उरदिति। ननु ऋकारस्य अकारे कृते वकारस्य संप्रसारणं स्यात्, संप्रसारणपरकत्ववविरहेण "न संप्रसारणे" इति निषेधाऽप्रवृत्तेरित्यत आह-- तस्य चेति। अकारस्येत्यर्थ-। न च उरदत्वस्य परिनिमित्तक्तवाऽश्रवणात्कथं स्थानिवत्त्वमिति वाच्यम्, "अपादपरिसमाप्तेरङ्गाधिकार" इत्यभ्युपगम्य अहगाक्षिप्रत्ययनिमित्तकत्वाभ्युपगमात्। "लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति"रितिन्यायस्तु "न संप्रसारणे" इति निषेधादेव न स्थानिबेदे प्रवर्तत इति ज्ञायते। अत एव "सुद्ध्युपास्य" इत्यादौ धकारस्य द्वित्वे कृते पूर्वधकारस्य जश्त्वेन दकारे तस्य द्वित्वमित्यास्तां तावत्। आशीर्लिङ्याग - वृश्च्यादिति। कित्त्वात्संप्रसारणमिति भावः। अव्राक्षीदिति। अव्रश्च् सीत् इति स्थिते हलन्तलक्षणावृद्धिः। श्चुत्वस्याऽसिद्धत्वात् "स्कोः" इति सलोपः। "व्रश्चे"ति चस्य षः, तस्य "षढो"रिति कत्रः, सस्य ष इति भावः। "नकारजावनुस्वरपञ्चमौ झलिधातुषु। सकारजः शकारः श्चे, र्षाट्टवर्गस्तवर्गजः। इत्याहुः। व्यच। सेट्। शे "ग्रहिज्ये"ति संप्रसारणं मत्वाह - विचतीति। वव्याचेति। "लिट()भ्यासस्ये"त्यभ्यासयकारस्य संप्रसारणम्। "न संप्रसारणे" इति न वकारस्य। विविचतुरिति। कित्वात् "ग्रहिज्ये"ति संप्रसारणे कृते द्वितवादीति भावः। विव्यचिथ। विविचिव। विच्यादिति। आशीर्लिङि कित्त्वाद्यकारस्य संप्रसारणम्। "अतो हलादे"रिति वृद्धिविकल्पं मत्वाह - अव्याचीत् अव्यचीदिति। ननु "व्यचेः कुटादित्वमनसी"ति व्यचेः कुटादित्ववचनात् व्यचिता, व्यचिष्यतीत्यादावपि "गाङ्कुटादिभ्यः" इति ङित्वात् संप्रसारणं स्यादित्यत आह- व्यचेरिति। कृन्मात्रेति। अवधारणे मात्रशब्दः। "उछि उञ्छे" "उछी विवासे" इति भ्वादौ पठितौ। इह तयोः पाठस्तु शविकरणार्थः। तेन उञ्छती उञ्छन्ती, उच्छती उच्छन्ती इति "आच्छीनद्यो"रिति नुम्विकल्पः सिध्यति। भ्वादौ पाठस्तु पित्स्वरार्थ इत्यन्यत्र विस्तरः। ऋच्छ गतीति। "छे चे"ति तुकि तस्य शचुत्वेन चकानिर्देशः। ऋच्छति। णलि लघूपधत्वाऽभावाद्गुणे अप्राप्ते आह - ऋच्छत्यृ()तामिति। द्वित्वे उरदत्वे हलादिशेषे "अत आदे"रिति दीर्घे आ अच्छ इति स्थिते बहुहल्त्वाद्विहल्त्वाऽभावान्नुटि अप्राप्ते आह - द्विहल्ग्रहणस्येति। आनच्छेति।"इजादे"रित्यत्र "अनृच्छः" इति पर्युदासादाम्न। ऋच्छतेति। "ऋच्छत्यृ()ता"मित्यत्र लिटीत्यनुवृत्तेर्न गुण इति बावः। लुभधातुः सेट्। "तीषसहे"ति वेडिति मत्वाह- लोभिता लोब्धेति। शिशुं नेति। "नशब्द इवार्थे। विप्राः शिशुमिव मतिभिः रिहन्ति = हिंसन्तीत्यर्थः। तृपधातुः श्यन्विकरण एवाऽनिट्। अङपवादत्वादिति। अपवादस्य उत्सर्गसमानदेशत्वादिति भावः। चृती हिंसाश्रन्थनयोरिति। श्रन्थनं विरुआंसनम्। चृततीत्यादि सुगमम्। "अथास्य योकं विचृते"दित्या()आलायनः। विरुआंसयेदित्यर्थः, उपसर्गवशात्। "यजमानो मेखलं विचृतते" इत्यापस्तम्बसूत्रे तु तङ् आर्षः। षुरधातुः षोपदेशः। कुर शब्दे। करोतेरेवेति। व्याख्यानमेवाऽत्र शरणम्। वृहूधातुः ऋदुपधः। ऊदित्त्वाद्वेट्कः। पवर्गादिरिति। पवर्गतृतीयादिरित्यर्थः। तृहू स्तृहू तृंहू इति। त्रयोऽपि ऋकारवन्तः। तृतीयोऽनुस्वारवान्। उदित्त्वाद्वेट्। तर्ढेति। तृहेस्तासि ढत्वध्तवष्टुत्वढलोपाः। एवं स्तर्ढा। तृण्ढा। अतर्हीत् अतार्क्षीत्, अस्तर्हीत् अस्तार्क्षीदिति सिद्धवत्कृत्याह - अतृंहीत् - अतार्ङ्क्षीदिति। तृंहेरिडभावपक्षे हलन्तलक्षणवृद्धौ रपरत्वम्। हस्य ढः, ढस्य कः, षत्वम्। अनुस्वारस्य परसवर्णो ङकार इति भावः। अतार्ढामिति। तृहेस्तसस्तामि सिच इडभावपक्षे लोपे हलन्तलक्षणवृद्धौ ढत्वधत्वष्टुत्वढञलोपा इति भावः। एव [स्तृहेः-] अस्तार्ढाम् [तृंहः] अताण्ढाम्। स्फुर स्फुरणे।

तत्त्व-बोधिनी

विज इट् ३२०, १।२।२

विज इट्। इह "वृद्धिर्यस्ये"ति सूत्रान्मण्डूकप्लुत्या यस्यादिरिति अनुवर्तते, तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम्। नव्यास्तु इह इडित्यनेनोत्तमैकवचनं न गृह्यते, तथाच सति विजिषीयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ। ततश्चेष्टसिद्ध्यर्थमिडागमो गृह्यते।तस्य तु ङित्त्वं व्यर्थम्, तन्निमित्तगुणस्याऽप्राप्तेः, अतो लक्षणया इड्वान् गृह्यते। इट् प्रत्ययस्यादिरिति। फलितार्थकथनम्--इडादिप्रत्ययो ङिद्वदिति। एंच इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः। इह ओविजीति तुदादी रुधादिश्च गृह्यते न तु "विजिर्पृथग्भावे" इति जुहोत्यादिः, व्याख्यानात्। यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः "तस्यानिट्कत्वा"दिति , तदयुक्तम्। क्रादिनियमनेन लिटि इट्संभवात्। न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यम्, अपिल्लिटः कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन ङित्त्वाऽभावात्। वव्रश्चेति। अत्र नव्याः-- "वव्रश्चे"त्यादौ "लिट()भ्यासस्ये" त्यभ्यासावयवयोद्र्वयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय "न संप्रसारणे"इति सूत्रं स्वीक्रियते। ततश्च "अत एव ज्ञापकात्परस्य प्रथमं संप्रसारण"मिति परिकल्प्य "आ पादपरिसमाप्तेरङ्गाधिकार" इति पक्षमभ्युपगम्य उरदत्वस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वस्वीकारात् "अचः परस्मि"न्निति स्थानिवद्भावप्रवृत्या संप्रसारणपरत्वामाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपद्यते। "परस्य संप्रसारणं", "परस्य यणः संप्रसारण" मिति वा सूत्रिते तु परस्यैव संप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभादुक्तक्लेशं विनैव वव्रञ्च यून इत्यादि सर्वं सिध्यति। नचैवं "लिटि वयो यः" "वेञः" इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्येतेति वाच्यं, "न लिटि वयो यः" इति सूत्रकरणे बाधकाऽभावात्, "न संप्रसारणे"इति यथाश्रुतसूत्रप्रणयने त्वन्ततो मात्राद्वयस्याधिक्याच्च। एवं च लघूपायेनेष्टसिद्धौ "न संप्रसारणे" इति सूत्रारम्भो ज्ञापयति "निमित्तभेदाऽभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते" इति। तथा च "सुद्ध्युपास्य" इत्यादौ धकारस्य द्वित्वे कृते पुनरुकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव। यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याऽप्रवृत्तिः क्वचिद्दृश्यते तत्र तु "ज्ञापकसिद्धं न सर्वत्रे"ति स दोषः परिह्रियतामित्याहुः। अव्रश्चीदिति। ऊदित्त्वात्पक्षे इट्। "वदव्रजे"ति वृद्धेः "नेटी"ति निषेधः। अव्राआक्षीदिति। "स्को" रिति सलोपः। "व्रश्चे"ति षः। "षढो"रिति कः। ततः सस्य षत्वम्। न चाऽत्र सकारस्य कथं लोप इति वाच्यं , धातुपाठे सकारस्य पाठात्। तदाहुः-- "नकारजावनुस्वारपञ्चौ झलि धातुषु। सकारजः शकारश्चे, षाट्टवर्गस्तवर्गजः"। इति। व्यच। व्याजीकरणं छद्मकरणम्। पर्युदासेनेति। प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रसज्येतेति भावः। कृन्मात्रविषयत्वादिति। तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारणं भवति। व्यचिता व्यचिष्यतीत्यादौ तु तिङ्विषये न भवति। विव्याचेत्यत्र कुटादित्वे जातेऽपि न क्षतिः, गाङ्कुटादिभ्यः" इति सूत्रे "अञ्णितः प्रत्यया ङितः स्यु" रित्युक्तत्वात्। उत्तमे णलि तु णित्त्वाऽभावपक्षे ङित्त्वात्संप्रसारणे "विव्यचे"ति न सिध्येदिति-- "अनसी"ति पर्युदास आवश्यक इति बोद्ध्यम्। "उझछी उञ्छे उछी विवासे"। इमौ भ्वादिगणे व्याख्यातौ।इह पाठस्तु उञ्छनती, [उञ्छती,उच्छन्ती, उच्छती इ]त्यत्र "आच्छीनद्यो"रिति नुम्विकल्पार्थः। पूर्वं पाठस्तु स्वरार्थः। तथाहि उञ्छति उच्छतीत्यादौ पिद्वचने शप्तिबादीनां पित्त्वादनुदात्तत्व#ए धातुस्वरेणाद्युदात्तं पदम्। शे तु प्रत्ययस्वरेण मध्योदात्तमिति। न च "सति शिष्टस्वरेबलीयस्त्वमन्यत्र विकरणेभ्यः" इति वक्ष्यमाणवात्कथमिह मध्योदात्ततेति वाच्यं, कुरुत इत्यादौ तसादेर्विकरणात्परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात्। उपलक्षणत्वादिति। अत एव "अदुपधस्य चेदश्नोतेरेवे"ति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम्। अन्यथा तन्न सङ्गच्छेतेति भावः। आनच्छेति। "अनृच्छ" इति पर्युदासान्नाऽऽम्। नव्यास्तु "ऋच्छत्यृ()ता"मिति लिटिपरे गुणविधानसामर्थ्यादामभावः सिद्ध इति सर्वैरेव व्याख्यातत्वाद्गणान्तरेऽपि ऋच्छिरस्तीत्यनुमीयते। तद्धातोस्तु लिट()आम्निवारणाय "अनृच्छ"

इत्येतदावश्यकमित्याहुः। मिच्छ। उत्कटः क्लेश उत्क्लेशः। ऋच स्तुतौ। ऋच्यते स्तूयते देवतादिकमनयेति ऋक्। बाहुलकादिह करणे क्विप्। लोभिता। लोब्धा। "तीषसहे"ति वेट्। शिशुं न विप्रा इति। न शब्द इवार्थे। विप्राः = ब्राआह्मणाः शिशुमिव मतिभी रिहन्ति = हिंसन्ति। न्यूनीकुर्वनतीत्यर्थः। वृती हिंसाग्रन्थनयोः। ईदित्करणं "()आईदितो निष्ठाया"मितीण्निष#एधार्थम्। यद्यप्यस्य वेट्कत्वान्निष्टायामिण्निषेधः सिध्यति, तथापि "यस्य विभाषे"त्यस्याऽनित्यतां ज्ञापयितुमीदित्करणम्। तेन "धावितमिभराजधिये"त्यादि सिद्धमित्याहुः।

*शे तृम्फादीनां नुम्वाच्यः। कुर शब्दे। करोतेरेवेति। सुप्रसिद्धत्वात्। "कुर्यादित्युक्तं हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येति भावः। मुर संवेष्टने। इगुपधलक्षणः कः। मुरो दैत्यः। मुरारिर्विष्णुः। क्षुर विलेखने। विलेखनं-- छेदनम्। "केशान् क्षुरति"। "इगुपधे"ति कः। क्षुरः शस्त्रम्। तिल स्नेहने। तिलति। "इगुपधे"ति कप्रत्यये तिलः। "तिल गतौ" तेलतीति शपि [गतम्] लिख अक्षरविन्यासे। "लिखितुं "लिखिष्यती"ति प्रयोगः प्रामादिकः। यत्तु कैश्चित्---कुटस्यादिः कुटादिः, कुट आदिर्येषां ते कुटादयः, कुटादिश्च कुटादयश्च कुटादय इत्येकशेषं स्वीकृत्य "लिखितु"मित्यादि समर्थितम्। तदसत्। "लेखिता" "लेखिष्यती"त्यादौ गुणनिषेधापत्तेः। न चेष्टापत्तिः, वृत्तिकारहरदत्तादिग्रन्थविरोधात्। "गाङ्()लिखादिभ्यः" इत्येव सूत्रितव्ये "कुटादिभ्य"इति पठनस्य स्वारस्यभङ्गापत्तेश्च। किं च "शकुनिष्वालेखने" इतिसौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तमित्यास्तां तावत्। "लिखापयती"ति प्रयोगस्तु मनोरमायामित्थं समर्थितः--, आपनम् आपः = प्राप्तिः, लिखस्यापो लिखापः,तं करोतीति। स्फुट विकसने। स्फुट विकसने। स्फुटत्यर्थोऽस्मादिति स्फोटः। स च पदस्फोटवाक्यस्फोटादिभेदेनानेकविधः। कड मदे। कुटादिकार्याऽभावेऽपि डान्तानुरोधेनाऽयं कुटादौ पठितः। भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः। पूर्वंपाठस्तु उच्छतीत्यादाविव कडतीत्यादौ आद्युदात्तार्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ ऊर्णोः ५।१ इट् १।१ २ ङित् १।१ १

अर्थः॥

{ऊर्णुञ् आच्छादने (अदा॰ उ॰)} अस्मात् परः इडादिः प्रत्ययः विभाषा ङिद्वत् भवति।

उदाहरणम्॥

ऊर्णुविता, ऊर्णविता।
काशिका-वृत्तिः
विभाषाऊर्णोः १।२।३

इटिति वर्तते। ऊर्णुञाच्छादने, अस्मात् परः इडादिः प्रत्ययो विभाषा ङिद्वद् भवति। प्रोर्णुविता। प्रोर्णविता। इटित्येव प्रोर्णवनम्। प्रोर्णवतीयम्।
लघु-सिद्धान्त-कौमुदी
विभाषोर्णोः ६०४, १।२।३

इडादिप्रत्ययो वा ङित्स्यात्। ऊर्णुनुविथ, ऊर्णुनविथ। ऊर्णुविता, ऊर्णविता। ऊर्णुविष्यति, ऊर्णविष्यति। ऊर्णौतु, ऊर्णोतु।

ऊर्णवानि। ऊर्णवै॥

न्यासः

विभाषोर्णोः।, १।२।३

"प्रोर्णुविता" इति। ङित्वाद् गुणे प्रतिषिद्धे "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङादेशः॥

बाल-मनोरमा

विभाषोर्णोः २७८, १।२।३

विभाषोर्णोः। "गाङ्कुटादिभ्यः" इत्यतो ङिदित्यनुवर्तते, "विज इ" डित्यत इडिति, --इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- इडादीति। ऊर्णुनुविथेति। ङित्त्वपक्षे गुणाऽभावादुवङ्। ऊर्णुनविथेति। ङित्त्वाऽभावपक्षे गुणः। ऊर्णुनुवथुः ऊर्णुनुव। ऊर्णुनाव -- ऊर्णुनव। लुटि तासि इटि ङित्त्वविकल्पं मत्त्वाऽऽह-- ऊर्णविता ऊर्णुवितेति। ऊर्णविष्यति ऊर्णुविष्यति। ऊर्णविष्यते-- ऊर्णुविष्यते। लङि और्णुदिति स्थिते "ऊर्णोतेर्विभाषे"ति वृद्धिविकल्पे, गुणे च प्राप्ते--

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सार्वधातुकम् ११ अपित् १।१ ५ ङित् १।१ १

समासः॥

प् इत् यस्य सः पित्, बहुव्रीहिः। न पित् अपित्, नञ्तत्पुरुषः।

अर्थः॥

अपित् सार्वधातुकं ङिद्वत् भवति।

उदाहरणम्॥

कुरुतः, कुर्वन्ति। चिनुतः, चिन्वन्ति।

काशिका-वृत्तिः

सार्वधातुकम् अपित् १।२।४

सार्वधातुकं यदपित् तन् ङिद्वद् भवति। कुरुतः। कुर्वन्ति। चिनुतः। चिन्वन्ति। सार्वधतुकम् इति किम्? कर्ता। कर्तुम्। कर्तव्यम्। अपितिति किम्? करोति। करोषि। करोमि।

लघु-सिद्धान्त-कौमुदी

सार्वधातुकमपित् ५०२, १।२।४

अपित्सार्वधातुकं ङिद्वत्। शृणुतः॥

न्यासः

सार्वधातुकमपित्।, १।२।४

"अपित्" इति। किमयं प्रसज्यप्रतिषेधः? उत पर्युदासः? किञ्चात्र? पूर्वस्मिन् पक्षे लोडुत्तमपुरुषस्यैकवचनस्य "आडुत्तमस्य पिच्च" ३।४।९२ इत्यादि पिति कृते तुदानीत्यत्राड्()विकरणाकारयोः पिदपितोरेकादेशः परं प्रति "अन्तादिवच्च" ६।१।८२ इत्यादिद्भावात् पिद्ग्रहणेन गृह्यते इति पित्त्वम् , पित्त्वे च सत्यपिदिति ङित्त्वप्रतिषेधः स्यात्, ततश्च धातोर्गुणः प्रसज्येत। इतरत्र तु पक्षे "च्यवन्ते, प्लवन्ते" इत्यत्र शबन्तादेशाकारयोः पिदपितोर्य एकादेशस्तस्य पितोऽन्यत्वात् ङित्त्वमपाद्येत, ततश्च धातोर्गुणो न प्राप्नोति? पितोऽन्यत्वं त्वेकादेशस्य सर्वं प्रत्यादिवत्त्वात् परग्रहणेन ग्रहणात्, उच्यते,यथेच्छसि तथैवास्तु, उभयथाप्यदोषः। पूर्वत्र तावददोषः; यस्मादपितोरेव तुदानीत्यत्रैकादेशः, न पिदपितोः। तथा हि-- "आडुत्तमस्य पिच्च" ३।४।९२ लोडुत्तमपुरुषस्यैव पित्त्वं विधीयते, न त्वाटः। इतरत्राप्यदोषः, यस्मादपिदित्यनेन सार्वधातुकं विशिष्यते-- पितोऽन्यत् सार्वधातुकमपिदिति। न चान्तशब्दाकारः सार्वधातुकम्, किं तर्हि? तदेकदेशः। यच्चात्र सार्वधातुकं न च तेन सहैकादेशः, येन सहैकादेशो न च तत्सार्वधातुकम्;तेन यद्यप्ययमेकादेशः पितोऽन्यः; तथापि सार्वधातुकं न भवतीति तत्कुतो ङित्त्वस्य प्रसङ्गः? अथ वा भवतु ङित्तवम्, सत्यपि तस्य ङित्त्वे तस्मिन् नास्ति गुणाभावप्रसङ्गः? यस्मात् "वार्णादाङ्गं बलीयः" (व्या।प।३९) इति वचनादेशाद्धि प्रागेव "च्यवन्ते, प्लवन्ते" इत्यत्र गुणेन भवितव्यम्। "कुरुतः" इति। ततो ङित्त्वे सति विकरणस्य गुणो न भवति। करोतेरस्य "अत उत् सार्वधातुके" ६।४।११० इत्युत्त्वं भवति। तत्र हि "गमहन" ६।४।९८ इत्यादिसूत्रात् क्ङितीत्यनुवर्तते॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ असंयोगात् ५।१ लिट् १।१ ६ कित् १।१ २६ अपित् १।१ ४

अर्थः॥

असंयोगान्तात् धातोः परः अपित् लिट् प्रत्ययः किद्वत् भवति।

उदाहरणम्॥

विभिदतुः, बिभिदुः। चिच्छिदतुः, चिच्छिदुः। ईजतुः, ईजुः।
काशिका-वृत्तिः
असंयोगाल् लिट् कित् १।२।५

अपितिति वर्तते। असंयोगान्ताद् धातोः परो लिट् प्रत्ययः अपित् किद् भवति। बिधिदतुः। बिभिदुः। चिच्छिदतुः। चिच्छिदुः। ईजतुः। ईजुः। असंयोगातिति किम्? संस्रसे। दध्वंसे। अपितित्येव। बिभेद।
लघु-सिद्धान्त-कौमुदी
असंयोगाल्लिट् कित् ४५४, १।२।५

असंयोगात्परोऽपिल्लिट् कित् स्यात्। सिषिधतुः। सिषिधुः। सिषेधिथ। सिषिधथुः। सिषिध। सिषेध। सिषिधिव। सिषिधिम। सेधिता। सेधिष्यति। सेधतु। असेधत्। सेधेत्। सिध्यात्। असेधीत्। असेधिष्यत्। एवम् -- चिती संज्ञाने॥ ४॥ शुच शोके॥ ५॥ गद व्यक्तायां वाचि॥ ६॥ गदति॥
न्यासः
असंयोगाल्लिट् कित्। , १।२।५

धातोरेव लिड् विधीयते, नान्यस्मादिति लिटा सामर्थ्याद्धातुः सन्निधापितः; स चासंयोगग्रहणेन विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह-- "असंयोगान्ताद्धातोः" इति। यदि तह्रसंयोगान्ताद्धातोः परस्य लिटः कित्त्वं विधीयते; तदा "ववृते, ववृधे" इति न सिध्यति, परत्वाद् गुणेन भवितव्यम्। कित्त्वस्यावकाशः -- "ईजतुरीजुः" इति, गुणस्यावकाशः-- "वर्त्तित्वा, वर्धित्वा इति; "ववृते,ववृधे" इत्यादावुभयप्राप्तौ परत्वाद् गुण एव स्यात्, नैतदस्ति; इष्टवाचित्वात्परशब्दस्य, कित्त्वमेवेष्टम्, कित्वमेव परम्, अतस्तदेव भविष्यतीत्यदोषः। अत्र च यदि "असंयोगात्" इति पर्युदास आश्रीयते, तदा संयोगादन्यस्मिन् गृह्णमाणे नञिवयुक्तन्यायेन (व्या।प।६५) सदृशस्यैव ग्रहणं स्यात्-- संयोगस्य सदृशो योऽन्योऽसहायो हल् इति हलन्तादेव कित्त्वं भविष्यति, नाजन्तात्,ततः "चक्रश्चक्रुः" इति न सिध्यति। तस्मात् प्रसज्यप्रतिषेधोऽयम्, न पर्युदासः-- न चेत् संयोगात् यजादीनां किति" ६।१।१५ इति किति विधीयते, न ङिति। "बिभिदतुः, बिभिदुः" इति। कित्त्वात् "पुगन्तलघूपधस्य" ७।२।८६ इति गुणाभावः। "सस्त्रंसे, दध्वंसे" इति। कित्त्वाभावात् "अनिदिताम्" ६।४।२४ इत्यरनुनासिकल्लोपो न भवति। "स्त्रन्सु ध्वन्सु अधः पतने" (धा।पा। ७५४-७५५), अनुदात्तेत्वादात्मनेपदम्, "लिटस्तझयोरेशिरेच्" ३।४।८१ इत्येशादेशः। "बिभेदिथ" इति। सिप्,थल्, क्रादिनियमादिट्।

बाल-मनोरमा

असंयोगाल्लिट्कित् ८८, १।२।५

असंयोगाल्लिट्। अपिदिति। "सार्वधातुकमपि" दित्यस्तदनुवृत्तेरिति भावः। "सार्वधातुकमपि" दिति ङितत्वं तु नात्र प्रवर्तते, लिडादेशनामाद्र्धदातुकत्वादिति बोध्यम्। कित्त्वस्य फलमाह-- क्ङिति चेति। द्वित्वादिति। कृ ए स्थिते लिटि धातोरिति द्वित्वात्परत्वादिको बोध्यम्। कित्त्वस्य फलमाह-- क्ङिति चेति। द्वित्वादिति। कृ ए इति स्थिते लिटि धातोरिति द्वित्वं न स्यादिति भावः।

तत्त्व-बोधिनी

असंयोगाल्लिट्कित् ६९, १।२।५

असंयोगादिति किम्?। ममन्थे। अत्र नलोपो न।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इन्धिभवतिभ्याम् ५।२ च ० लिट् १।१ ५ कित् १।१ ५

समासः॥

इन्धिश्च, भवतिश्च इन्धिभवती, ताभ्यां इन्धिभवतिभ्याम्, इतरेतरद्वन्द्वः।

अर्थः॥

इन्धि, भवति इत्येताभ्यां परः लिट्-प्रत्ययः किद्वत् भवति।

उदाहरणम्॥

पुत्र ईधे अथर्वणः (ऋ॰ ६।१६।१४)। समीधे दस्युहन्तमम् (ऋ ६।१६।१५), बभूव, बभूविथ।

काशिका-वृत्तिः

इन्धिभवतिभ्यां च १।२।६

इन्धि भवति इत्येताभ्यां परो लिट् प्रत्ययः किड् भवति। समीधे दस्यु हन्तमम्। पुत्र ईधे अथर्वणः। भवतेः खल्वपि बभूव। बभूविथ। इन्धेः संयोगर्थं ग्रहणम्। भवतेः पिदर्थम्। अत्रैष्टिः श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्। श्रेथतुः, श्रेथुः। ग्रेथतुः, ग्रेथुः। देभतुः, देभुः। परिषस्वजे, परिषस्वजाते।

न्यासः

इन्धिभवतिभ्यां च। , १।२।६

"समीघे" इति। "ञीन्धी दीप्तौ", (धा।पा। १४४८) पूर्ववदात्मनेपदम्, एशादेशः, कित्त्वात् "अनिदिताम्" ६।४।२४ इत्यादिनानुनासिकलोपः, द्विर्वचनम्, अकः सवर्णे दीर्घत्वं च ६।१।९७। अथ "इजादेश्च गुरुमतोऽनृच्छः" (३।१।३६) इत्याम् कस्मान्न भवति? मन्त्रविषयत्वादस्य; तत्र च "अमन्त्रे" इत्यधिकाराता। एवं तर्हि मन्त्रश्छन्द एवेति "च्छन्दस्युभयथा" ३।४।११७ इति सार्वधातुकत्वम्, ततश्च सार्वधाकुमपित्" १।२।४ इति ङित्त्वम्, अत एव ङित्त्वादनुनासिकलोपो भविष्यतीति तत् किमर्थमिन्धेःपरस्य लिटऋ कित्त्वं विधीयते? ज्ञापनार्थम्। एतदनेन ज्ञाप्यते-अनित्योऽयमामिति। नित्ये ह्यामि तेन व्यवधानादेवेन्धेः परो लिण्न सम्भवतीति कित्त्वविधानं नोपपद्यते; तस्मादनित्योऽयमामिति। तेन भाषायामपि "समीधे" इति प्रयोग उपपन्नो भवति। "बभूव, बभूविथ" इति। कित्त्वाद् यथाक्रमं वृद्धिगुणौ न भवतः।"भुवो वुग् लुङलिटोः" ६।४।८८ इति वुक्। "भवतेरः" ७।४।७३ इत्यभ्यासस्यात्त्वम्। ननु च कृतयोरपि गुणवृद्ध्योर्वुका भवितव्यम्, अकृतयोरपीति नित्यो वुक्; कृताकृतप्रसङ्गित्वात्, तत्र नित्यत्वाद् वुकि कृते गुणवद्धयोः प्राप्तिरेव नास्ति, भवतेरलघूपधत्वात्, अनजन्तत्वाच्चेति भवतिग्रहणमनर्थकम्? नैतदस्ति; "शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति" (व्या।प।१००) इति वुगप्यनित्यः। ततश्च परत्वात् गुणवृद्ध्योः कृतयोर्वङ न स्यात्। तस्माद् भवतिग्रहणं कत्र्तव्यम्। अथ कृतयोरपि गुणवृद्ध्योरेकदेशविकृतमनन्यवद्भवतीति नास्ति शब्दान्तरत्वम्? एवं सति शक्यं भवतिग्रहणमकर्तुम्। तत् क्रियते विस्पष्टार्थम्। अथ "बभूव" इत्यत्र "अचो ञ्णिति" ७।२।११५ इति वृद्धेः कथं प्रतिषेधः, यावतेक इत्यनुवत्र्तते? क्ङिति च" १।१।५ इत्यनेनेग्लक्षणा वृद्धिः प्रतिषिध्यते, न चेयमिग्लक्षणा वृद्धिः, निर्दिष्टस्थानिकत्वात्। अत्र कित्त्वविधानसामथ्र्यादनिग्लक्ष णा अपि वृद्धेर्भविष्यति प्रतिषेधः; अन्यथा कित्त्वविधानमनर्थकं स्यादिति चेत्, न; तस्य थल्युत्तमणलि च गुणप्रतिषेधार्थत्वात्। एवं तर्हि ङिद्ग्रहणमप्यनुवत्र्तते, तदनुवत्र्तमाने न विद्यमानमन्यत् प्रयोजनम्, तेनानिग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यति। "इन्धेः संयोगार्थं (ग्रहणम्-- काशिका) वचनम्" इति। तस्य संयोगान्तत्वात् पूर्वेणासिद्धेः। "भवतेः पिदर्थम्" इति। नापिदर्थम्; तस्यासंयोगान्तत्वादपिदिति पूर्वेण सिद्धेः। भवतेरिह श्तिपा निर्देशो यङलुग्()निवृत्त्यर्थः-- यङलुगन्तल्लिटः कित्त्वं मा भूदिति। "बोभाव" इति। तथा चोक्तम्---- श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च। यत्रैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङलुकि॥ (पु।प।९४) इति। "अन्थिग्रन्थि" इत्यादि। "श्रन्थ ग्रन्थ सन्दर्भे" (धा।पा।१५१२,१५१३), "दम्भ,द्म्भे" (धा।पा। १२९०) "ष्वन्ज परिष्वङ्गे" (धा।पा।९७३) एषामपि श्रन्थिग्रन्थिप्रभृतीनां लिटः कित्त्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- चकारोऽनुक्तसमुच्चयार्थः क्रियते, तेन श्रन्थिप्रभृतीनामपि संयोगान्तानां लि टः कित्त्वं भविष्यतीति। "श्रेथतुः" इत्यादि। कित्त्वात् "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः। "तृ()फलभजत्रपश्च" ६।४।१२२ इति चकारस्यानुक्तसमुच्चयार्थत्वादनेकहल्मध्यस्याप्येत्वाभ्यासलोपौ। "परिषस्वजे" इति। अनुदात्तेत्त्वादात्मनेपदम्। पूर्वस्य सकारस्य "स्थादिष्वभ्यासेन चाभ्यासस्य" ८।३।६४ इति वत्र्तमाने, "उपसर्गात् सुनोति" ८।२।६५ इत्यादिना षत्वम्। परस्य तु सकारस्य "सदिस्वञ्जयोः परस्य लिटि" इति षत्वप्रतिषेधः।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मृडमृदगुधकुषक्लिशवदवसः ५।१ क्त्वा १।१ ८ कित् १।१ ५

समासः॥

मृडश्च मृदश्च गुधश्च कुषस्य क्लिशश्च वदश्च वस् च मृडमृद॰वस्, तस्मात् मृड॰वसः, समाहारो द्वन्द्वः।

अर्थः॥

{मृड सुखने (तुदा॰ प॰)}, {मृद क्षोदे (क्र्या॰ प॰)}, {गुध रोषे (क्र्या॰ प॰)}, {कुष निष्कर्षे (क्र्या॰ प॰)}, {क्लिशू विबाधने (क्र्या॰ प॰)}, {वद व्यक्तायां वाचि (भ्वा॰ प॰)}, {वस निवासे (भ्वादि प॰)}, इत्येतेभ्यः धातुभ्यः परः क्त्वाप्रत्ययः किद्वत् भवति।

उदाहरणम्॥

मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उदित्वा, उशित्वा।
काशिका-वृत्तिः
मृडमृदगुधकुषक्लिशवदवसः क्त्वा १।२।७

मृड मृद गुध कुष क्लिश वद वस इत्येतेभ्यः परः क्त्वाप्रत्ययः किद् भवति। न क्त्वा सेट् १।२।१८ इति प्रतिषेधं वक्ष्यति तस्यायं पुरस्तादपकर्षः। गुधकुषक्लिशीनां तु रलो व्युपधाद्धलादेः संश्च १।२।२६ इति विकल्पे प्राप्ते नित्यार्थं वचनम्। मृडित्वा। मृदित्वा। गुधित्वा। कुषित्वा। क्लिशित्वा। उदित्वा। उषित्वा।
न्यासः
मृडमृदगुधकुषक्लिशवदवसः क्त्वा। ल् , १।२।७

"मुड सुखने", (धा।पा।१५१६) "मृद क्षोदे" (धा।पा।१५१५) , "गुध रोषे " (धा।पा।१५१७) , "कुष निष्कर्षे" (धा।पा।१५१८) "क्लिशू विबाधने" (धा।पा।१५२२), "वद व्यक्तायां वाचि" (धा।पा। १००९), "वस निवासे" (धा।पा।१९४२)। "न क्त्वा सेट् इति कित्त्वप्रतिषेधं वक्ष्यति" इति। नन्वेदतदेव नियमार्थं भविष्यतीति--- मृडादिभ्य एव सेट् क्त्वा किद् भवति, नान्येभ्य इति, ततश्च सिद्धं देवित्वा, सेवित्वेत्यादि, तत् किमर्थं "न क्त्वा सेट्"(१।२।१८) इति प्रतिषेधं वक्ष्यतिर? विस्पष्टार्थम्; अन्यथा हि केचिद्विपरीतनियमं सम्भावयेयुः-- मृडादिभ्यः क्त्वाप्रत्यय एव किद् भवति, नान्य इति। "पुरस्तादपकर्षः" इत्यादि। अपकर्ष इत्यपवाद इत्यर्थः। "क्लिशित्वा" इति। "क्लिशः क्त्वानिष्ठयोः" ७।२।५० इतीट्। "उदित्वा"इति, "उषित्वा" इति। वच्यादिसूत्रेण ६।१।१५ संप्रसारणम्। वसतेः "शासिवसिधसीनाञ्च" ८।३।६० इति षत्वम्, "वसतिक्षुधोः" ७।२।५२ इतीट्।
तत्त्व-बोधिनी
मृडमृदगुधकुषक्लिशवदवसः क्त्वा १५९१, १।२।७

मृडमृद। मृड सुखने, मृद क्षोदे, गुध परिवेष्टने, गुध रोषे च, कुष निष्कर्षे, क्लिश हिंसायां --दिवादिः, क्लिशू विबाधने--- क्र्यादिः, वद व्यक्तायां वाचि, वस निवासे। किदिति। "असंयोगाल्लिट् कि"दित्यतः किदित्यनुवर्तत इति भावः।

उदित्वेति। यजादित्वात्संप्रसारणम्। उषित्वेति। "वसतिक्षुधो"रितीट्। यजादित्वात्संप्रसारणम्। "शासिवसी"ति षः। गृहीत्वेति। "ग्रहिज्ये"ति संप्रसारणम्, "ग्रहोऽलिटी"ति इटो दीर्घः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ रुदविदमुषग्रहिस्वपिप्रच्छः ५।१ सन् १।१ १० च ० क्त्वा १।१ ७ कित् १।१ ५

समासः॥

रुदश्च, विदश्च, मुषश्च, ग्रहिश्च, स्वपिश्च, प्रच्छ च, रुद॰प्रट्, तस्मात् रुद॰प्रच्छः, समाहारो द्वन्द्वः।

अर्थः॥

{रुदिर् अश्रुविमोचने (अदा॰ प॰)}, {विद ज्ञाने (अदा॰ प॰)}, {मुष स्तेये ( क्र्या॰ प॰)}, {ग्रह अपादाने (क्राय॰ उ॰)}, {ञिष्वप् शये (अदा॰ प॰)}, {प्रच्छ ज्ञीप्सायाम् (तुदा॰ प॰)}, इत्येतेभ्यः धातुभ्यः परौ क्त्वा-सनौ प्रत्ययौ किद्वत् भवतः।

उदाहरणम्॥

रुदित्वा, रुरुदिषति। विदित्वा, विविदिषति। मुषित्वा, मुमुषिषति। गृहीत्वा, जिघृक्षति। सुप्त्वा, सुषुप्सति। पृष्ट्वा, पिपृच्छिषति।
काशिका-वृत्तिः
रुदविदमुषग्रहिस्वपिप्रच्छः संश् च १।२।८

रुद विद मुष ग्रहि स्वपि प्रच्छ इत्येतेभ्यः संश्च क्त्वा च कितौ भवतः। रुदविदमुषीणां रलो व्युपधाद्धलादेः संश्च १।२।२३ इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम्। ग्रहेर् विध्यर्थम् एव। स्वपिप्रच्छयोः सन्नर्थं ग्रहणम्। किदेव हि इत्वा। रुदित्वा, रुरुदिषति। विदित्वा, विविदिशति। मुषित्वा, मुमुषिषति। गृहीत्व, जिघृक्षति। सुप्त्वा, सुषुप्सति। पृष्ट्वा, पिपृच्छिषति। ग्रहाऽदीनां कित्त्वात् सम्प्रसारणं भवति। किरश्च पञ्चभ्यः ७।२।७५ इति प्रच्छेरिडागमः।
लघु-सिद्धान्त-कौमुदी
मुखनासिकावचनोऽनुनासिकः ९, १।२।८

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम् - अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। ऌवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्॥
न्यासः
रुदविदमुषग्रहिस्वपिप्रच्छः संश्च। , १।२।८

"रुदिर् अश्रुविमोचने" (धा।पा।१०६७), "विद ज्ञाने" (धा।पा।१०६४), "मुष स्तेये" (धा।पा।१५३०), "ग्रह उपादाने" (धा।पा।१५३३), "ञिष्वप् शये (धा।पा। १०६८) "प्रच्छ ज्ञीप्सायाम्" (धा।पा।१४१३)। "ग्रहेर्विध्यर्थमेव" इति। "न क्त्वा सेट" १।२।१८ इति प्रतिषिद्धस्य कित्त्वस्य पुनर्विधिर्यथा स्यात्। "स्वपिर्विध्यर्थमेव" इत्यादि। "सन्नर्थम्" इति। अथ क्त्वार्थं वचनं कस्मान्न भवतीत्याह--- "किदेव हि क्त्वा" स्वपिप्रच्छयोर्हि "एकाच उपदेशेऽनुदात्तात्" ७।२।१०

इतीट्प्रतिषेधात् क्त्वा सेड् न भवतीत्यतः "न क्त्वा सेट्" १।२।१८ इति निषेधो न प्रवत्र्तते। तेन किदेव हि क्त्वेति। "रुदित्वा" इति। "समानकर्तृकयोः पूर्वकाले" ३।४।२१ इति क्त्वा। "गृहीत्वा" इति। "ग्रहोऽलिटि दीर्घः" ७।२।३७ ग्रह्यादिसूत्रेण ६।१।१६ संप्रासरणम्। "जिघृक्षति" इति। "हो ढः" ८।२।३१ इति तत्वम्, "ष()ढोः कः सि" ८।२।४१ इति कत्वम्; "एकाचो बसो भष्" ८।२।३७ इत्यादिना गकारस्य घकारः, "सनि ग्रहगुहोश्च" ७।२।१२ इतीट्प्रतिषेधः। "सुषुप्सति" इति। वच्यादिसूत्रेण ६।१।१५ संप्रसारणम्। "पिपृच्छिषति" इति। अत्रापि ग्रह्यादिसूत्रेण ६।१।१६ संप्रसारणम्; "छे च" ६।१।७१ इति तुक्, "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वम्॥

बाल-मनोरमा

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ४३६, १।२।८

रुदविद। इका निर्देशात् संप्रसारणे गृहीति निर्देशः। स्वपीति इकारस्तु उच्चारणार्थः, न त्विका निर्देशः, सुपीति संप्रसारणप्रसङ्गात्। चकारात् "मृडमृदगुधे"ति पूर्वसूत्रस्थं क्त्वेति समुच्चीयते। तदाह -- सन् क्त्वा चेति। किताविति। "असंयोगाल्लि"डित्यतस्तदनुवृत्तेरिति भावः। रुदसाहचर्याद्वेत्तेरेव ग्रहणमिति केचित्। अविशेषात्सर्वस्येत्यन्ये। "हलन्ताच्चे"ति सिद्धे रुदविदमुषां ग्रहणं "रलो व्युपधा"दिति विकल्पबाधनार्थम्। ग्रहेस्तु क्त्वायां "न क्त्वा से"डिति निषेधबाधनार्थम्।स्वपिप्रच्छयोस्तु क्त्वायां कित्त्वेऽपि सनोऽप्राप्तकित्तवविधानार्थम्। रुरुदिषतीत्यादौ सनः कित्वाल्लघूपधगुणाऽभावः।

तत्त्व-बोधिनी

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ३८०, १।२।८

रुदसाहचर्याद्वेत्तेरेव ग्रहणम्। इह रुदविदमुषाणां ग्रहणं "रलो व्युपधा"दिति विकल्पे प्राप्ते, ग्रहेः "न क्त्वा से"डिति निषेधाक्त्वाया अप्राप्ते, स्वपिप्रच्छयोस्तु क्त्वः कित्त्वेऽपि सनः कित्वस्याऽप्राप्तौ वचनम्। रुदित्वा। विदित्वा। मुषित्वा।सुप्त्वा। पृष्ट्वा। एतेषु संप्रसारणमपि फलम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इकः ५।१ ११ झल् १।१ १३ सन् १।१ ८ कित् १।१ ५

अर्थः॥

इगन्तात् धातोः परः झलादिः सन् किद्वत् भवति।

उदाहरणम्॥

चिचीषति, तुष्टूषति, चिकीर्षति, जिहीर्षति।

काशिका-वृत्तिः

इको झल् १।२।९

सनित्यनुवर्तते। क्त्वा इति निवृतम्। इगन्ताद् धातोः परो झलादिः सन् किद् भवति। चिचीषति। तुष्टूषति। चिकीर्षति।

इकः इति किम्? पिपासति। तिष्ठासति। झलिति किम्? शिशयिषते। किम् अर्थम् इदम् उच्यते? गुणो मा भूतिति। अज्झनगमां सनि ६।४।१६ इति दीर्घत्वं गुणस्य बाधकं भविष्यति? यथैव तर्हि दीर्घत्वं गुणं बाधते तथा णिलोपमपि बधेत। तस्माद् दीर्घत्वस्य अवकाशदानाय कित्त्वम् इदम् आरभ्यते। चिचीषति इत्यादिषु सावकाशं दीर्घत्वं पर्त्वाद् णिलोपेन बाध्यते। ज्ञीप्सति। इकः कित्त्वं गुणो मा भूत् दीर्घाऽरम्भात् कृते भतेत्। अनर्थकम् तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते। १। सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम्। दीर्घाणां नाकृते कीर्घे णिलोपस्तु प्रयोजनम्। २।

लघु-सिद्धान्त-कौमुदी

इको झल् ७१२, १।२।९

इगन्ताज्झलादिः सन् कित् स्यात्। ॠत इद्धातोः। कर्तुमिच्छति चिकीर्षति॥

न्यासः

इको झल्। , १।२।९

"क्त्वेति निवृत्तम्" इति। झलादेः क्त्वाप्रत्ययस्यौपदेशिकं कित्त्वमस्त्येवेति तदनुवृत्तेरपार्थकत्वात्। सन्()ग्रहणन्तु प्रथमान्तमिहानुवत्र्तते, तस्य झलित्यनेन सामानाधिकरण्यमुपपन्नम्। अतः सामथ्र्यात् तदादिविधिर्विज्ञायत इत्यत आह-- "झलादिः सन् किद्भवति" इति। अथ तदन्तविधिः कस्मान्न भवति-- झलन्तः सन्निति? एवं मन्यते-- वृद्धसंज्ञा १।१।७२ सूत्रादिहादिग्रहणमनुवत्र्तते, तेन झल् विशिष्यते; तस्मात् तदादिविधिरेव विज्ञायिते, न तदन्तविधिरिति। यदि पुनस्तदन्तविधिः स्यात् तदा किं स्यात्? यत्रातो लोपे कृते झलन्तत्वं सनस्तत्रैव स्यात्-- चिकीर्षितेत्यादौ; चिकीर्षतीत्यादौ तदु न स्यात्, अदन्तत्वात्। अदन्तत्वन्तु सञ्शबकारयोद्र्वयोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावात्। अथेक इति "इक् स्मरणे" (धा।पा।१०४७) इत्यस्य धातोग्र्रहणं कस्मान्न भवति? झलिति प्रत्याहारस्यैव युक्तत्वात्; किञ्च-- गर्गादिषु जिगीषुशब्दपाठाच्च। धातुग्रहणे हि सति जयतेः परस्य सनः कित्त्वं न स्यात्, तथा च जिगीषुशब्दो न सिद्ध्येत्। किञ्च-- धातुग्रहणे हि सतीको धातोः समीपगतो हल् न सम्भवतीति "हलन्ताच्च" १।२।१० इत्येदप्यघटमानं स्यात्। तस्मात् प्रत्याहारस्यैव ग्रहणं न्याय्यम्, न धातोः। "चिचीषति" इति। "अज्झनगमां सनि" ६।४।१६ इति दीर्घः। "एकाचः" ७।२।१० इत्यादिना पूर्वोक्तेनेट्प्रतिषेधः। उत्तरत्रापि यत्रेटः श्रवणं नास्ति, तत्राप्यनेनैव प्रतिषेधो वेदितव्यः। यत्र तु विशेषोऽस्ति, तत्रासौ वक्तव्य एव। "तुष्टूषति"इति। "शर्पूर्वाः खयः" ७।४।६१ इति खयः शेषः। "शिशयिषते" इति। "पूर्ववत् सनः " १।३।६२ इत्यात्मनेपदम्। एवमुत्तरत्रापीच्छासन्नन्तादात्मनेपदमनेनैव बोद्धव्यम्। "किमर्थं पुनः" इत्यादि। अत्र वक्ष्यमाणोऽभिप्रायः। "गुणो मा भूत्" इति। यदर्थमिदमुच्यते तदाह। येनाभिप्रायेण पृष्टवांस्तमाविष्कर्तुमाह-- "अज्झनगमां सनि" इत्यादि। यदि दीर्घत्वे कृतेऽपि गुणः स्यात् तदा दीर्घत्वस्य वैयथ्र्यं स्यात्। तस्मान्मा भूतस्य वैयथ्र्यमिति दीर्घत्वं तद्()गुणस्य बाधकं भविष्यतीति। अत्र दोषमापादयितुमाह-- "यथैव तर्हि" इत्यादि। असति कित्त्वेऽनवकाशं दीर्घत्वं यता गुणस्य बाधकं भवति, तथा-- "तस्मात्" इत्यादि। यत एवमनारभ्यमाण एतस्मिन्नेष दोषोऽनुषज्येत, तस्माद्दीर्घत्वस्यावकाशदानाय कित्त्वमिदमारभ्यते। अथारभ्यमाणेऽप्येतस्मिन् कस्मादेष दोषो न भवतीत्यत आह----"चिचीषति" इत्यादि। कित्त्वे सति तेनैव गुणस्य बाधितत्वात्। चिचीषति, तुष्टूषतीत्यादिषु सावकाशं दीर्घत्वं भवति; तेन च परत्वाण्णिलोपो न बाध्यते। न हि कित्त्वे सति शक्यमेवं वक्तम्-- यथा दीर्घत्वं गुणं बाधते, तथा णिलोपमपीति; यस्मान्न गुणो दीर्घत्वेन बाध्यते,किं तर्हि? कित्त्वेन। अत्र दीर्घत्वस्यावकाशो दर्शितः णिलोपस्य त्वेषोवकाशः- पाचयतेः पाक्तिः, याजयतेर्याष्टिरित्यादि; ज्ञीप्सतीत्यत्रोभयप्राप्तौ दीर्घत्वं बाधित्वा परत्वात् णिल#ओप एव भवति। "ज्ञा अवबोधने" (धा।पा।१५०७), "मारणतोषणमनिशामनेषु" (धा।पा।८११), "मिच्च" (धा।पा।१६२४)इति चुरादिपाठाण्णिच्। "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्। "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वत्वम्। अन्ये तु-- "ज्ञप मारणतोषणनिशामनेषु" (धा।पा।१६२४) इति पठन्ति, ततो णिच्, तत इच्छासन्, "सनीवन्तद्र्ध"

७।२।४९ इत्यादिना पक्षे इडभावः, क"आप्ज्ञपृधामीत्" ७।४।५५ इतीत्वम्, "अत्र लोपोऽभ्यासस्य" ७।४।५८ इत्यभ्यासलोपः। त"णेरनिटि" ६।४।५१ इति णिलोपः। "इकः कित्त्वम्" इत्यादि। अथ किमर्थमिक उत्तरस्य सनः कित्त्वं विधीयते, किमर्थमिको झलिति योगविभागः क्रियते, नन्वेकमेवेदं सूत्रं पठितव्यम्, "इको झल् हलन्ताच्च" इति? प्रयोजनमाह--- "गुणो मा भूत्" इति। चिचीषतीत्यादौ "सार्वधातुकार्धधातुकयोः" ७।३।८४ इति गुणः प्राप्नोति, स मा भूदित्येवमर्थं कित्त्वं विधीयते। नैतदस्ति प्रयोजनम्; यस्मात् "अज्झनगमां सनि" ६।४।१६ इति नाप्राप्ते गुणे दीर्घत्वमारभ्यते, अतो दीर्घारम्भाद् गुणो न भविष्यतीति; अन्यथा हि दीर्घग्रहणमनर्थकं स्यात्। ननु च चुकूषते इत्यत्र दीर्घवचनस्य सार्थकत्वम्, अत्र हि गाङ्कुटादिसूत्रेण १।२।१ ङित्त्वे सति गुणो न प्रवत्र्तते, नैतदस्ति; न ह्येकमुदाहरणं प्रति योगारम्भं प्रयोजयति। यदि ह्येतत् प्रयोजनमभिमतं स्यात्, णिग्रहणमेव कुर्यात्। समुदायामात्रादपेक्षया वा "पुरस्तादपदादाः" इत्यादिका परिभाषा नास्त्येवेति।

बाल-मनोरमा

इको झल् ४३९, १।२।९

इको झल्। इगन्तादिति। सना आक्षिप्तधातुविशेषणत्वात्तदन्तविधिरिति भावः। सन् किदिति। "रुदविदमुषग्रही"त्यतः, "असंयोगाल्लिट्कि"दित्यश्च तदनुवृत्तेरिति भावः। बुभूषतीति। कित्त्वान्न गुणः। इकः परत्वान्नेट्। दिदीषते इति। सनः कित्त्वान्न गुणः। दीङो ङित्त्वात् "पूर्ववत्सनः" इत्यात्मनेपदम्। एज्विषयत्वाभवादिति। कित्त्वे गुणनिषेधादिति भावः। अत एवेति। यद्येज्विषयादन्यत्राप्यात्वं स्यात्तदा मीमेति पृथग्ग्रहणमनर्थकं स्यात्, "गामादाग्रहणेष्विशेषः" इत्युक्तेरिति भावः।

तत्त्व-बोधिनी

इको झल् ३८३, १।२।९

इको झल्। "रुदविदे"त्यतः सननुवर्तते, सनाक्षिप्तो धातुरिका विशेष्यते,वशेष्यणेन च तदन्तविधिरित्याह--- इगन्तादिति। इगन्तात्किम्?। पिपासति। तिष्ठासति। झलीति किम्?। शिशयिषते। कित्स्यादिति। "असंयागाल्लिट्कि"दित्तः किदनुवर्तत इति भावः। एज्विषयत्वाऽभावादिति। कित्त्वेन गुणाऽप्राप्तेरित्यर्थः। अत एवेति। ययेज्विषयादन्यत्राप्यात्वं भवेत्तदा मीग्रहणं तत्र न कुर्यात, गामादाग्रहणेष्वविशेषादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हलन्तात् ५।१ ११ च ० इकः ५।१ ९ झल् १।१ ९ सन् १।१ ८ कित् १।१ ५

समासः॥

हल् चासौ, अन्तश्च, हलन्तः, तस्मात् हलन्तात्, कर्मधारयतत्पुरूषः।

अर्थः॥

इकः समीपात् यः हल् तस्मात् परः झलादिः, सन् किद्वत् भवति। अन्तशब्दः अत्र सामीप्यवाची।

उदाहरणम्॥

बिभित्सति, बुभुत्सते।

काशिका-वृत्तिः

हलन्ताच् च १।२।१०

हलन्तादिको झल् कितिति वर्तते। सनिति निवृत्तम्। इगन्तदिक्समीपाद्धलः परौ झलादी।

लघु-सिद्धान्त-कौमुदी

हलन्ताच्च ७४६, १।२।१०

इक्समीपाद्धलः परो झलादिः सन् कित्। निविविक्षते॥

न्यासः

हलन्ताच्च।, १।२।१०

इक इत्यनुवत्र्तते। अत्र यदि चान्तशब्दोऽवयववाची स्यादिको हला सह सम्बन्धोन स्यात्, न हीको हलवयवः सम्भवति। यो हि येनारभ्यते, अपृथग्()देशभूतः स तस्यावयवो भवति; यथा-- पटस्य तन्तव इति। न च हलेगारभ्यते, तस्मान्नायमन्तशब्दोऽवयववाची; अपि तु समीपवचनो युक्त इति मत्वाऽऽह-- "समीपवचनोऽऽयमन्तशब्दः" इति। ननु च धातुरत्र सामथ्र्यादाक्षिप्तः, अत्सतदपेक्षया हलोऽवयवत्वं भविष्यति, नैतदस्ति; एवं तह्रन्तशब्दोऽतिरिच्येत, "येन विधिस्तदन्तस्य" (१।१।७२० इत्यनेनैव तदन्तविधेर्लब्धत्वात्। हल् चासावन्तश्चेति विग्रहविशेषेण कर्मधारयत्वं दर्शयति। कस्य पुनरसावन्तः? प्रकृतस्येकः। यद्येवम्, सापेक्षमसमर्थं भवतीतिकमपेक्षमाणस्यान्तशब्दस्य समासो नोपपद्यते, नैष दोषः; अन्तशब्दो ह्रत्र प्रधानः। भवति च प्रधानस्य सापेक्षस्यापि समास #इति द्वितीयेऽध्याये ज्ञापयिष्यति "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २।१।५५ इत्यत्र सामान्याप्रयोगग्रहणेन। "इगन्तात्िति। षष्ठीसमासोऽयम्। ननु चेक इति पञ्चम्यन्तं प्रकृतम्, तत् कथं षष्ठीसमासः? नैष दोषः; यद्यपि पञ्चम्यन्तं प्रकृतम्, तथापीह समीपसमीपिसम्बन्धे सति विभक्तिविपरिणामेन षष्ठ()न्ततामनुभवति-- "इकः समीपगतात्" इति। इकः समीपवर्तिन इति। "बुभुत्सते" इति। "बुध अवगमने" (धा।पा।११७२), "एकाचो बशो भष्" ८।२।३७ इत्यादिना भष्भावः। एवमुत्तरत्रापि यत्र भष्भावस्तत्रानेनैव बोद्धव्यः। "खरि च" ८।४।५४ इति चत्र्वम् = धकारस्य तकारः। "यियक्षते" इति। यजेव्र्रश्चादिना ६।१।१५ इत्यादिना संप्रसारणं न भवति। यदि समीपवचनोऽमन्तशब्दस्तदा दम्भेः परस्य सनः कित्त्वं न सिध्यति। तथा हि-- तस्य य इकः समीप गतो हल् न तस्मात् परः सन्, यस्मात् परः सन् नासाविकः समीपगत इत्यत आह-- "दम्भेः" इत्यादि। हलित्यनेन हल्जातिरुच्यते, न तु व्यक्तिः। तेन यदा "ता एव व्यक्तयस्त्यक्तभेदा जातिः" इति दर्शनम्; तदा तासां व्यक्तीनां हल्त्वेनाश्रितानां नास्ति व्यवधानम्। अतो यैव हल्जातिरिकः समीपवर्तिनी तत एव परः सन्निति दम्भेर्विहितस्य सनः कित्त्वं सिद्धमेव। यदाप्यर्थान्तरभूता जातिव्र्यक्तिषु प्रत्येकं परिसमाप्ता निरवयवैका, तदापि नास्ति व्यवधानम्; यस्माद्व्यक्तिव्र्यक्त्यन्तरस्य व्यवधायिका भवति, न तु जातेः; तस्या अशरीरिणीत्वात्। तस्मादिहापि दर्शने यैव हल्जातिरिकः समीपगता तत एव परः सन्निति दम्भेः परस्य सनः कित्त्वं भवति। तस्यास्तु व्यक्तिव्यतिरिक्ताया जातेर्यदिकमपेक्ष्य समीपवर्तिनीत्वम्, यच्च तज्जातिमपेक्षमाणस्य सनः परत्वम्-- तदुभयं व्यक्तिद्वारकं वेदितव्यम्। तत्र नकारव्यक्तिरिकः समीपगतेति तदाधारा हल्जातिरपीकः समीपगतेति भकारस्य व्यक्तेः परः सन्निति तदाधारभूताया जातेरपि परः सन्, न तु जातेव्र्यक्तिनिरपेक्षं समीपवर्तिनीत्वं सम्भवति। नापि जात्यपेक्षं सनः परत्वम्; तदुभयं व्यक्तिद्वारकं वेदितव्यम्। तत्र नकारव्यक्तिरिकः समीपगतेति तदाधारा हल्जातिपीकः समपीगतेति भकारस्य व्यक्तेः परः सन्निति तदाधारभूताया जातेरपि परः सन, न तु जातेव्र्यक्तिनिरपेक्षं समीपवर्तिनीत्वं

सम्भवति नापि जात्यपेक्षं सनः परत्वम्; जातेरशरीरिणीत्वात्। यदि तर्हि व्यक्तिद्वारकमेतदुभयम्? एवं तर्हि विपर्ययोऽपि व्यक्तिद्वारकः स्यात्। भकारव्यक्तिरिकः समीपगता न भवतीति जातिरपि न स्यात्; नकारव्यक्तेः परः सन् न भवतीति जातेरपि न स्यात्, ततश्च हल्ग्रहमस्य सत्यपि जातिवाचकत्वे दम्भेः परस्य सनः कित्त्वं न सिध्यत्येव? नैतदस्ति; यद्यपि जातेर्व्यक्तिद्वारकमिकः समीपवर्तिनीत्वं तद्विपर्ययश्च, सनोऽपि यद्यपि व्यक्तिद्वारकं जात्यपेक्षं परत्वं तद्विपर्ययश्च; तथापि यदत्र हल्त्वसामान्यस्येकः समीपगतत्वं यदपेक्षञ्च सनः परत्वं तदाश्रयं कित्त्वं भविष्यतीति विपर्ययस्तु विद्यमानोऽपि नापेक्ष्यत एव, लक्ष्यानुरोधात्। ननु च हल्त्वं नाम जातिर्नासत्येव, तथा हि-- हलिति संज्ञाशब्दः संङ्केतवशादेव प्रवर्तते डित्थादिशब्दवत्। न हि यथा गवादिषु गोत्वादिकं नाम सामान्यमभिन्नमस्ति, तथा हकारादिषु वर्णेषु हल्त्वं नाम सामान्यमभिन्नमस्तीति शक्यमभ्युपगन्तुम्; तन्नबन्धनस्याभावात्। ततश्चायुक्तमुक्तम्-- दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्त सिद्धमिति, नैतदस्ति; जातिपदार्थवादिनां मते येऽपि तावदेकवस्त्वभिधायिनः संज्ञाशब्दा देवदत्तादयस्तदर्थानामप्यवस्थाभेदे परिकल्पितानानात्वेन जातिरभ्युपगम्यते, किं पुनर्हलित्येवमादीनामनेकवर्णविषयाणां संज्ञाशब्दानाम !अन्यथा ह्रतिव्यापिनी शब्दार्थस्य व्यवस्था स्यात्। इदञ्च तावद्भवान् प्रष्टव्यः-- गवादिषु जातेरस्तित्वस्य किं निबन्धनं येनासौ तत्राभ्युपगम्यत इति? भिन्नेष्वभिन्नाभिधानप्रत्ययाविति चेत्, एताावितरत्रापि समानौ।यथैव हि गवादिषु भिन्नेष्वपि प्राक् सह्केतादुत्तरकालमनुयायिनौ तौ भवतः, तथा हकारादिष्वपि। प्राक् सङ्केताद्यथा तेषु तौ न भवतस्तथा गवादिष्वपि। तस्माद् यौ भिन्नेष्वभिन्नाभिधनाप्रत्ययौ जातिसद्भावसम्प्रत्ययहेतुभूतौ हल्ष्वपि स्त इति तत्रापि हल्त्वं नाम जातिरभ्युपेया, न तु गवादिष्वेव गोत्वादिकमस्तीत्येकान्त एव। "धिप्सति, धीप्सति" इति। "सनीवन्तर्ध" ७।२।४९ इत्यादिना यत्र पक्ष इण् नास्ति तत्रेदमुदाहरणम्। "दम्भ इच्च" ७।४।५६ इतीत्त्वम्, ईत्त्वञ्च, "अत्र लोपोऽभ्यासस्य" ७।४।५८ इत्यभ्यासलोपः। "खरि च" ८।४।५४ इति चर्तम् = भकारस्य पकारः। कित्त्वे सति "अनिदिताम्" ६।४।२४ इति न लोपः। दकारस्य भष्भावेन धकारः॥

बाल-मनोरमा

हलन्ताच्च ४४०, १।२।१०

हलन्ताच्च। "इको झ"लिति पूर्वसूत्रमनुवर्तते। "रुदविदमुषे"त्यतः सनिति,"असंयोगाल्लि"डित्यतः किदिति च। "ह"लिति लुप्तपञ्चमीकं पदम्। अन्तशब्दः समीपवाची। तदाह-- इक्समीपादित्यादि। जुघुक्षतीति। सनः कित्त्वान्न गुणः। "सनि ग्रहगुहोश्चे"त्यूदित्त्वेऽपि नित्यं नेट्। हस्य ढत्वे भष्भावे कत्वषत्वे इति भावः। बिभित्सतीति। भिदेः सनः कित्त्वान्न गुणः। यियक्षते इति। अत्र हलः इक्समीपत्वाऽभावान्न कित्त्वम्। सति तु कित्त्वे यजेः संप्रसारणं स्यादिति भावः। विवर्धिषते इति। वृधेः सनि रूपम्। अत्र सन इटि झलादित्वं नेति भावः। ननु "तृंहू हिंसायाम्" तुदादिर्नोपधोऽयम्। कृतानुस्वारस्य निर्देशः। अस्मात्सनः "अनिदिता"मिति नलोपार्थं कित्त्वमिष्यते। तन्नोपपद्यते। न ह्रत्र इक्समीपादनुस्वारात्सन् परो भवति, हकारेण व्यवधानात्। हकारात्तु परः सन् इक्समीपाद्धलः परो न भवति, अनुस्वारेण व्यवधानादित्यत आह-- हल्ग्रहमं जातिपरमिति। हल्त्वजात्याक्रान्तैकाऽनेकव्यक्तिपरमित्यर्थः। तृंह्रिति। तृंहूधातोः प्रदर्शनामिदम्।तितृक्षतीति।ऊदित्त्वादिडभावपक्षे रूपम्। सनः कित्त्वान्नलोपः, लघूपधगुणाऽभावश्च। ढत्वकत्वषत्वानि। इट्पक्षे आह-- तितृंहिषत#ईति। झलादित्वाऽभावेन कित्त्वाऽभावान्नलोपो नेति भावः।

तत्त्व-बोधिनी

हलन्ताच्च ३८४, १।२।१०

हलन्ताच्च। इगित्यनुर्तते। तदवयवत्वं हलो न संभवतीति समीपवाच्यत्राऽन्तशब्द इत्याशयेन व्याचष्टे---

इक्समीपादिति। सौत्रत्वाद्विशेषणस्याऽन्तशब्दस्य परनिपातः। तितृक्षतीति। कित्त्वे सति "अनिदिता" मिति नलोपः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लिङ्सिचौ १।२ १३ आत्मनेपदेषु ७।३ १७ हलन्तात् ५।१ १० इकः ५।१ ९ झल् १।१ ९ कित् १।१ ५

समासः॥

लिङ् च सिच् च लिङ्सिचौ, इतरेतरद्वन्द्वः।

अर्थः॥

इक् समीपात् हलः परौ झलादी लिङ्सिचौ, आत्मनेपदविषये किद्वत् भवति।

उदाहरणम्॥

लिङ् - भित्सीष्ट, भुत्सीष्ट। सिच् - अभित्त, अबुद्ध।
काशिका-वृत्तिः
लिङ्सिचौ आत्मनेपदेषु १।२।११

परतः कितौ भवतः। भित्सीष्ट, भुत्सीष्ट। सिचि खल्वपिअभित्त, अबुद्ध। इकः इत्येव। यक्षीष्ट, अयष्ट। सम्प्रसारणं हि स्यात्। आत्मनेपदेषु इति किम्? अस्राक्षित्। अद्राक्षीत्। सृजिदृशोर् झल्यमकिति ६।१।५७ इत्यमागमो न स्यात्। हलन्तातित्येव। चेषीष्ट, अचेष्ट। गुणो न स्यात्। झलित्येव वर्तिषीष्ट, अवर्तिष्ट। गुणो न स्यात्। लिङ्सिचौ इति किम्? द्वेष्टा द्वेक्ष्यति।
लघु-सिद्धान्त-कौमुदी
लिङ्सिचावात्मनेपदेषु ५९२, १।२।११

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि। धुक्षीष्ट॥
न्यासः
लिङ्सिचावात्मनेपदेषु। , १।२।११

"लिङसिचावात्मनेपदेषु परतः"इति। कथं पुनर्लिङात्मनेपदेषु परतो भवति, यावता सिच एवात्मनेपदेषु परत्वं सम्भवति, न लिङः? एवं मन्यते-- लिङेकदेशेऽत्र सीयुटि लिङशब्दो वर्तते, यथा-- "न धातुलोप आर्धधातुके" १।१।४ इत्यत्र धात्वेकदेशे धातुशब्दो वर्तते। तस्मात् सीयुट एवानेन प्रकारेण कित्त्वं विधीयते। अथ वा-- यथा हल्ङ्यादिसूत्रे ६।१।६६ ययोरेव दीर्घत्वं सम्भवति तयोरेव ङ्यापो दीर्घादित्येतद्विशेषणम्, तथेहापि यस्मादात्मनेपदं परं सम्भवति सिचः, तस्यैवैतद्विशेषणम्। आत्मनेपदग्रहणं भवति परस्मैपदव्यवच्छेदार्थम्। "भिस्तीष्ट"इति। "आशिषि लिङलोटौ" ३।३।१७३ इति लिङ्; स्वरितत्वादात्मनेपदम्। एवमुत्तरत्रापि स्वरितञितः कत्र्रयात्मनेपदमनेनैव वेतितव्यम्। "सुट तिथोः" ३।४।१०७ इति सुट्। कर्तरि श्नम्, "लिङ सलोपोऽनन्त्यस्य" ७।२।७९ इति च न भवति, "लिङाशिषि" ३।४।११६ इत्यार्धधातुकत्वात्, तयोश्च सार्वधातुके विधानात्। "भुत्सीष्ट" इति। बुधेः "अनुदात्तङितः" १।३।१२ इत्यात्मनेपदं

वेदितव्यम्। उत्तरत्राप्यनुदात्तङिद्भ्यः कर्तर्यात्मनेपदमनेनैव वेदितव्यम्। "अभित्त" इति। "झलो झलि" ८।२।२६) इति सिचो लोपः। "अबुद्ध" इति। "झषस्तथोर्धोऽधः" ८।२।४० इति तकारस्य धकारः, "झलां जश् झशि" ८।४।५२ इति पूर्वधकारस्य दकारः। "यक्षीष्ट" इति। स्वरितेत्त्वादात्मेपदम्। पूर्ववत् षत्वं कत्वञ्च। "संप्रसारणं हि स्यात्" इति। वच्यादिसूत्रेण ६।१।१५। "अद्राक्षीत्" इति। "अस्ति सिचोऽपृक्ते" ७।३।९६ इतीट्, "वदव्रजहलन्तस्याचः" ७।२।३ इति वृद्धिः। पूर्ववत् षत्वकत्वे॥

बाल-मनोरमा

लिङ्सिचावात्मनेपदेषु १४३, १।२।११

लिङ्। इको झलिति, हलन्ताच्चेति च सूत्रमनुवर्तते। "असंयोगा"दित्यतः किदिति च। इक इति सामीप्ये षष्ठी, हलि अन्वेति। तदाह--इक्समीपादित्यादिना। आत्मनेपदपरकत्वं सिच एव विशेषणं, न तु लिङः, लिङादेशस्यात्मनेपदस्य लिङः परत्वाऽसंभवात्। इकः किम्?। "वह्"वक्षीष्ट। सति तु कित्त्वे "वचिस्वपी"ति संप्रसारणं स्यात्। आत्मनेपदेषु किम्?। अद्राक्षीत्। इह कित्त्वे सति "सृजिदृशोर्झल्यमकिती"त्यम्न स्यात्। अतिप्तेति। लुङस्तादेशे, च्लिः, सिच्। "झलो झली"ति लोपः। आत्मनेपदपरकत्वेन सिचः कित्त्वान्न लघूपधगुणः। अथ तेपृधातोरेदुपधत्वस्य प्रयोजनमाह-- तितेपे इति। इदुदुपधत्वे तु कित्त्वाद्गुणो न स्यादिति भावः। सेट्कोऽयमिति सूचयति-- तेपितेति। तेपिषीष्ट। अतेपिष्ट। ष्टिपृधातोस्तु "धात्वादेः षः स" इति सत्वे ष्टुत्वनिवृत्त्या लटि स्तेपत इति रूपं सिद्धवत्कृत्य लिटि रूपमाह-- तिष्टिप इति। "शर्पूर्वाः खयः" इति तकारः शिष्यते, षकारस्य निवृत्तौ ष्टुत्वनिवृत्तेः। कित्वान्न गुणः। तिष्टेप इति। ष्टेपृधातो रूपम्। तेपृ कम्पने चेति। चात्क्षरणे। वस्तुतस्तु चकारेण क्षरणार्थस्य लाभात्पू()रवत्रास्य पाटस्त्यक्तुं शक्यः। केचितु "देपृ"इति वर्गतृतीयादिं पठन्ति। चात्कम्पने गतौ चेति। अनुक्तसमुच्चयार्थश्चकार इति भाव-। एतच्च टु वेपृ केपृ गेपृ कम्पन इत्येव सिद्धे पृथ"क्पाठाल्लभ्यते। अर्थभेदादिति। ग्लेपृ दैन्ये" इति पूर्वं पठितम्। #इह त्वर्थभेदात्पुनः पाठः। अन्यथा "ग्लेपृ दैन्ये कम्पने गतौ चे"ति गौरवं स्यादिति भावः। त्रपूषिति। ऊकारः षकारश्च इत्। अदुपधः।

तत्त्व-बोधिनी

लिङ्सिचावात्मनेपदेषु ११८, १।२।११

"इको झल्", "हलन्ताच्च" इति वर्तते। "असंयेगाल्लिट् कित्" इत्यतः किदिति च। तदाह-- इक्समीपादित्यादि। इकः किम्?। यक्षीष्ट। सतिकित्त्वे संप्रसारणं स्यात्। आत्मनेपदेति किम्?। अद्राक्षीत्। कित्त्वे सति "सृजिदृशोर्झल्यमकिति" इत्यम्न स्यात्। आत्मनेपदपरत्वं सिच एव विशेषणं न तु लिङ्स्थानिकस्यात्मनेपदस्य। लिङः परत्वाऽसंभवात्। तेपृ कम्पनेच। चकारात्क्षरणार्थस्य लाभादस्य पूर्वत्र पाठस्त्यक्तुं शक्यः। केचित्तु "तिपृ देपृ" इति पठन्ति। टुवेपृ। वेपथुः। केपृ गेपृ ग्लेपृ च। योगविभागात्पूर्वोत्तरार्थौ चकारेणानुकृष्येते। तदाह--चात्कम्पने गतौ चेति।
योगविभागसामथ्र्यादेवार्थद्वयलाबे चकारो व्यर्थ इत्यन्ये। पुनः पाठ इति। दैन्ये पठितस्य कम्पनाद्यर्थलाभार्थमिति भावः। तृ()फल। तरतेरकारस्य गुणशब्देन
भावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात्तरपतेस्त्वेकहल्मध्यस्थत्वाऽभावादप्राप्ते विधिरयम्। तेरतुः। तेरुः। फेलतुः। फेलुः। भेजतुः। भेजुः। अबि शब्दे। अस्मात् "गुरोश्च हलः" इति अप्रत्यये अम्बाशब्दः। तिरुआः--अम्बाः= अकारोकारमकारात्मकाः शब्दा यस्य इति बहुव्रीहौ "शेषाद्विभाषे"ति कप्रत्यये त्र्यम्बक इत्येके। केचित्तु त्र#ईणि अम्बकानि नेत्राणि यस्येतिविगृह्णन्ति। अभिरभी इति। "सर्वधातुभ्योऽसु" न्नित्यधिकारे "उदके नुम्-भौ चे"ति वक्ष्यमाणत्वाद्धात्वन्तरेणापि अम्भः-- शब्दः सिध्यतीति बोध्यम्। अम्भः-- तोयम्। तस्यापत्यम् आम्भिः-- भीष्मः। "अम्भसो लोपश्चे"ति बाह्वादिपाठादिञि सलोपः। तद्बीजं त्विति। पूर्वसवर्णप्रवृत्तेः, षत्वाऽप्रवृत्तेश्च बीजमित्यर्थः।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उः ५।१ च ० लिङ्सिचौ १।२ ११ आत्मनेपदेषु ७।३ ११ झल् १।१ ९ कित् १।१ ५

अर्थः॥

ऋवर्णान्तात् धातोः परौ झलादी लिङ्सिचौ, आत्मनेपदविषये किद्वत् भवतः।

उदाहरणम्॥

लिङ् - कृषीष्ट, हृषीष्ट। सिच् - अकृत, अहृत।
काशिका-वृत्तिः
उश् च १।२।१२

ऋवर्णान्ताद् धातोः परौ लिङ्सिचौ आत्मनेपदेशु झलादी कितौ भवतः। कृषीष्ट। हृषीष्ट। सिचः खल्वपि अकृत। अहृत। झलित्येव। वरिषीष्ट। अवरिष्ट। वृऋतो वा ७।२।३८ अवरीष्ट।
लघु-सिद्धान्त-कौमुदी
उश्च ५४६, १।२।१२

ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्॥
न्यासः
उश्च।, १।२।१२

लिङसिचाविहानुवर्तमानौ धातुं सन्निधापयतः, तत एव तयोर्विधानात्। न च ऋकारेण विशिष्यते। "येन विधिस्तदन्तस्य " १।१।७१ इति ऋकारेण तदन्तविधिर्विज्ञायत इत्याह--"ऋकारान्ताद्धातोः" इत्यादि। अथ "ऋ गतौ" (धा।पा।१०९८) इत्यस्य धातोग्र्रहणं कस्मान्न भवति? शैलीहेयमाचार्यस्य यत्र यस्य धातोग्र्रहणमिच्छति तत्र यस्य श्तिपा निर्देशः करोति, यथा-- "अर्तिपिपत्र्योश्च" ७।४।७७ "सर्तिशास्त्यर्तिभ्यश्च" ३।१।५६ इति, न चेह श्तिपा निर्देशः कृतः; तस्माद्दवर्ण्सयैवेदं ग्रहणम्, न धातोः। "अकृत" इति। "ह्रस्वादङ्गात् ८।२।२७ इति सिचो लोपः। "वरिषीष्ट" इति। वृङो वृञो वैकस्य रूपम्। "लिङसिचोरात्मनेपदेषु" ७।२।४२ इतीट्।
बाल-मनोरमा
उश्च २०५, १।२।१२

आशीर्लिङि भृषीष्टेत्यत्र गुणे प्राप्ते-- उश्च। "लिङ्गिचावात्मनेपदेषु" इति सूत्रमनुवर्तते। "इको झ"लित्यतो झलिति च। तदाह--ऋवर्णादिति। भृषीष्टेति। कित्त्वान्न गुणः। अभार्षीदिति। परस्मैपदे सिचि वृद्धौ रपरत्वम्।

तत्त्व-बोधिनी
उश्च १७७, १।२।१२

उश्च। "इको झ"लित्यतो झल्ग्रहणं , "लिङ्सिचौ" इति पूर्वसूत्रं चानुवर्तते। तदाह-- ऋवर्णादित्यादि। अभार्षीदिति। "सिचि

वृद्धि"रिति वृद्धिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वा ० गमः ५।१ लिङ्सिचौ १।२ ११ आत्मनेपदेषु ७।३ ११ झल् १।१ ९ कित् १।१ ५

अर्थः॥

गम्-धातोः परौ झलादी लिङ्सिचौ, आत्मनेपदवीषये विकल्पेन किद्वत् भवतः।

उदाहरणम्॥

संगसीष्ट, संगंसीष्ट। सिच् - समगत, समगंस्त।

काशिका-वृत्तिः

वा गमः १।२।१३

लिङ्सिचावात्मनेपदेषु इति वर्तते। गमेर्धातोः परु लिङ्सिचौ आत्मनेपदेषु झलादी वा कितौ भवतः। संगंसीष्ट, संगसीष्ट। सिचः खल्वपि समगंस्त्, समगत। कित्त्वपक्षे अनुनासिकलोपो भवति अनुदात्तौपदेशवनतितनोत्यादीनाम्६।४।३७ इति।

न्यासः

वा गमः। , १।२।१३

"संगसीष्ट" इति। "समो गमृच्छि" १।३।२९ इत्यादिनात्मनेपदम्। "समगत" इति। ह्रस्वाङ्गात्" ८।२।२७ इति सिचो लोपः।

बाल-मनोरमा

वा गमः ५२४, १।२।१३

वा गमः। "इको झल्" इत्यतो झलिति, "लिङ्सिचावात्मनेपदेषु" इत्यतो लिङ्()सिचाविति, "असंयोगाल्लिट्" इत्यतः किदिति चानुवर्तते। तदाह-- गमः परावित्यादि। समगतेति। लुङि रूपम्। सिचः कित्तवपक्षे "अनुदात्तोपदेशे" ति मकारलोपे "ह्रस्वादङ्गादि"ति सिचो लुक्। समृच्छते इति। "ऋच्छ गतीन्द्रियप्लयमूर्तिभावेषु" इति तौदादिकस्य रूपम्। अत्र तौदादिकस्य ऋच्छतेरेव ग्रहणं, नतु ऋच्छादेशस्येति सूचयितुं लृडन्तमप्युदाहरति-- समृच्छिष्यते इति। विदिप्रच्छिस्वरतीनामिति। सम इत्यनुवर्तते। संपूर्वेभ्यो विदिप्रच्छिस्वरतिभ्य आत्मनेपदमित्यर्थः। वेत्तेरिति। लुग्विकरणस्यैव विदेग्र्रहणमित्यर्थः। व्याख्यानादिति भावः।

तत्त्व-बोधिनी

वा गमः ४४७, १।२।१३

"असंयोगाल्लिट्कि"त्यतः किदनुवर्तते , "इको झ"लित्यतो झल्ग्रहणं, "लिङ्सिचौ" इत्यतो लिङ्सिचाविति चानुवर्तते। कित्त्वपक्षे "अनुदात्तोपदेशे" ति मलोपः। "समृच्छिष्यते" इति लृटः प्रयोगस्तु तौदादिकऋच्छेरत्र ग्रहणं न तु ऋच्छादेशस्येति ध्वननार्थम्। ग्रामं सङ्गच्छतीति। "तच्चैक्यं समगच्छते"त्यत्र तु एकं

जातमित्यर्थाद्गमेरकर्मकत्वमेवेति तङ्। एकमेवेक्यम्। स्वार्थे ष्यञ्।

* विदिप्रच्छि। परस्मैपदसाहचर्यादाह--- वेत्तेरेवेति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हनः ५।१ सिच् १।१ १७ आत्मनेपदेषु ७।३ ११ कित् १।१ ५

अर्थः॥

हन्-धातोः परः सिच् आत्मनेपदविषये विद्वत् भवति।

उदाहरणम्॥

आहत, आहसाताम्, आहसत।
काशिका-वृत्तिः
हनः सिच् १।२।१४

हन्तेर् धातोः परः सिच् किद् भवति। आहत, आहसाताम्, आहसत। सिचः कित्त्वादनुनासिकलोपः। सिज्ग्रहणं लिङ्निवृत्यर्थम्। उत्तरत्रानुवृत्तिर् मा भूत्। अत्मनेपदग्रहणम् उत्तरार्थम् अनुवर्तते। इह तु परस्मैपदे हन्तेर् वधभावस्य नित्यत्वात् कित्वस्य प्रयोजनं न अस्ति।
न्यासः
हनः सिच्। , १।२।१४

"आहत" इति। " आङो यमहनः" १।३।२८ इत्यात्मनेपदम्। पूर्ववत् सिचो लोपः। "आहसत" इति। "आत्मनेपदेष्वनतः" (७।१।५ इत्यदादेश-। अथ सिज्ग्रहणे प्रकृते पुनः सिज्ग्रहणं किमर्थं क्रियत इत्याह-- "सिज्ग्रहणं लिङनिवृत्यर्थम्" इति। प्रकृतं हि सिज्ग्रहणं लिङा सह सम्बद्धम्, अतस्तदनुवृत्तौ सत्यां तस्याप्यनुवृत्तिराशङ्क्येत; तस्मात् तन्निराकर्तुं सिज्ग्रहणं क्रियते। ननु च हन्तेलिङि वधादेशेन भवितव्यम्; न च तत्र सत्यपि कित्वे किञ्चिदनिष्टमापद्यते, तत् कस्माल्लिङनिवृत्यर्थं सिज्ग्रहणं क्रियत इत्यत आह-- "उत्तरत्र" इत्यादि। यद्यत्र लिङनुवत्र्तते तत उत्तरत्र तस्यानुवृत्तिः स्यात्, ततश्चोत्तरसूत्रेण तस्यापि कित्वं स्यादित्यभिप्रायः। इह तु वृत्तावात्मनेपदेन सिज् न विशेष्यत इत्यात्मनेपदं निवृत्तमिति कस्यचिद्भ्रान्तिः स्यात्, अतस्तन्निराकर्तुमाह--- "आत्मनेपदग्रहणम्" इत्यादि। इहापि कस्मान्न भवतीत्यत आह-- "इह तु" इत्यादि। "लुङि च" २।४।४३ इति हन्तेः परस्मैपदेषु लुङि वधादेशः क्रियते, स च नित्यः। नित्यत्वन्तु तस्य "आत्मनेपदेष्वन्यतरस्याम्" २।४।४४ इत्युत्तरसूत्रेऽन्यतरस्यां ग्रहणात्। नच नित्ये वधादेशे कित्वस्य किञ्चित् प्रयोजनमस्ति अतो नेहात्मनेपदस्यानुवृत्तिरुपपद्यते। अथ किमर्थं हन्तेः परस्य सिचः, कित्वं विधीयते, यावता "सार्वधातुकमपित्" (१।२।४) इति सिचः परस्य सार्वधातुकस्य ङित्वमस्त्येव? तत्र "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः सिद्धः। सिच इदित्वान्न सिध्यतीति चेत्? न; सिच इकारस्योच्चारणार्थत्वात्। तथा हि "च्लेः सिच्" ३।१।४४ इत्यत्र वक्ष्यति-- "इकार उच्चारणार्थः" इति। एवमपि च्लेरिदित्वात् सिचोऽपि स्थानिवद्भावेनेदित्वमतो न सिध्यतीति चेत्, न ; च्लेरकारस्योच्चारणार्थत्वात्। तथा हि "च्लि लुङि" ३।१।४३ इत्यत्र वक्ष्यति--- "इकार उच्चारणार्थः"

इति। एवं तर्हि सिद्धे ङित्त्वे सति यत् पुनरिह हनः सिजिति सिचः कित्त्वं विदधाति तज्ज्ञापयति--बाह्य सार्वधातुकमाश्रित्य सिजन्तस्य "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपो न भवतीति; तेनारंस्त,अमंस्त आयंस्त पादमिति सिद्धं भवति; अन्यथा ह्यनुनासिकलोपे कृत आयतेत्यनिष्टं रूपं स्यात्।

बाल-मनोरमा

हनः सिच् ५२१, १।२।१४

हनः सिच्। "कित्स्या"दिति शेषपूरणम्। "असंयोगाल्लिट्कि"दित्यतस्तदनुवृत्तेरिति भावः। हनधातोः परः सिच् कित्स्यादिति फलितम्। अनुनासिकलोप इति। "अनुदात्तोपदेशे" इति नकारलोप इत्यर्थः। उत् आ यम् स् त इति स्थिते---

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यमः ५।१ १६ गन्धने ७।१ सिच् १।१ १४ आत्मनेपदेषु ७।३ ११ कित् १।१ ५

अर्थः॥

गन्धने अर्थे वर्तमानात् यम्-धातोः परह् सिच् आत्मनेपदविषये किद्वत् भवति। गन्धनम् = सूचनम्, परस्य दोषाविष्करणम्

उदाहरणम्॥

उदायत, उदायसाताम्, उदायसत।

काशिका-वृत्तिः

यमो गन्धने १।२।१५

सिच आत्मनेपदेषु इति वर्तते। यमेर् धातोर् गन्धने वर्तमानात् परः सिच् प्रत्ययः किद् भवति आत्मनेपदेषु परतः। गन्धनं सूचनं, परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणम्। अनेकार्थत्वाद् धातूनां यमिस् तत्र वर्तते। उदयत, उदायसाताम्, उदायसत। सूचितवानित्यर्थः। सिचः कित्त्वादनुनासिकलोपः। आङो यमहनः १।३।२८ इत्यात्मनेपदम्। गन्धन इति किम्? उदायंस्त पादम्। उदायंस्त कूपादुदकम्। उध्दृतवानित्यर्थः। सकर्मकत्वे ऽपि समुद्वाङ्भ्यो य्मो ऽग्रन्थे १।३।७५ इत्यात्मनेपदम्।

न्यासः

यमो गन्धने। , १।२।१५

ननु च "यम उपरमे" (धा।पा।९८४) इति पठ()ते, तत् कथमयं गन्धने वर्तते, इत्यत आह-- "अनेकार्थत्वात्" इति। "आङो यमहनः" १।३।२८ इत्यत्र "अकर्मकाच्च" १।३।२६ इत्यतोऽकर्मकग्रहणमनुवर्तते। तत् कथमिह सकर्मकत्वे सत्यात्मनेपदमित्यत आह-- "सकर्मकत्वेऽपि इत्यादि। सकर्मकत्वन्तु पदादेः क्रमणोऽत्र विद्यमानत्वात्। "उदायंस्त पादम्" इति। आकृष्टवानित्यर्थः॥

बाल-मनोरमा

यमो गन्धने ५२२, १।२।१५

यमो गन्धने। सिच्कित्स्यादिति। शेषपूरणम्। सिचः कित्त्वे मकारस्य "अनुदात्तोपदेशे" ति लोपः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ उपयमने ७।१ यमः ५।१ १५ सिच् १।१ १४ आत्मनेपदेषु ७।३ ११ कित् १।१ ५

अर्थः॥

उपयमने अर्थे वर्तमानात् यम्-धातोः परः सिच्-प्रत्ययः आत्मनेपदविषये विकल्पेन किद्वत् भवति। उपयमनं पाणिग्रहणम्।

उदाहरणम्॥

उपायत कन्याम्, उपायंस्त कन्याम्।

काशिका-वृत्तिः

विभाषाउपयमने १।२।१६

यमः सिजात्मनेपदेषु इति वर्तते। यमेर् धातोः उपयमने वर्तमानात् परः सिच्प्रत्ययओ विभाषा किद् भवति आत्मनेपदेषु परतः। उपायत कन्याम्, उपायंस्त कन्याम्। उपायत भार्याम्, उपायंस्त भार्याम्। उपयमनं स्वीकरणं, विवाहः, दारकर्म, पाणिग्रहणम् इत्यर्थः। उपाद्यमः स्वकरणे १।३।५६ इत्यात्मनेपदम्।

न्यासः

विभाषोपयमने। , १।२।१६

"दारकर्म" इति। कर्मशब्दः क्रियावाची। दारक्रियेत्यर्थः॥ १७। स्थाघ्वोरिच्च। १।२।१७ सिच्च किद्भवतीति चकारेण कित्त्वं समुच्चीयत इति दर्शयति। किमर्थं पुनः सिचः कित्त्वं विधीयते; यावता गुणप्रतिषेधस्तस्य फलम्, इकारविधानसामर्थ्यादेव गुणो न भविष्यति; अन्यथा ह्येकारमेव विदध्यात्? नैतदस्ति; लाघवार्थं हीकारविधानं स्यात्। दीर्घोच्चारणाद्ध्रस्वोच्चारणं लघु भवति। "उपास्थित" इति। "समप्रविभ्यः स्थः" १।३।२२ इत्यतः स्थग्रहणेऽनुवर्तमाने "उपान्मन्त्रकरणे" १।३।२५ इत्यत उपादिति तेन "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।प।१२) इतीत्त्वं नोत्सहते सिचं विहन्तुम्, तत् कुतो लोपः? नैतदस्ति;न हीत्त्वं सिचीत्युच्यते, किं तर्हि? इकारश्चान्तादेशो भवति सिच्च किद्भवतीति। अथापि सिज्निमित्तकं स्यात्? एवमप्यदोषः; तस्याः परिभाषायाश्चानित्यत्वात्। अनित्यत्वन्तु सप्तमेऽध्याये ज्ञापयिष्यते(काशिका।७।१।१३)। "इच्च" इत्यादि। हेतुशब्दोऽत्राध्याहार्यः। तेन "षष्ठी हेतुप्रयोगे" २।३।२६ इति हेतुशब्दप्रयोगे कस्येति षष्ठी भवति। तकार इत् तकारेत्, तकार एव वा इद् यस्य स तकारेत्, तकारेतो भावस्तकारेत्त्वम्। इच्चेत्यत्र निर्देशे कस्य हेतोरिकारस्य तकारेत्त्वं क्रियते? किमर्थमिकारस्तपरः क्रियत इत्यर्थः। शेषलक्षणा वा कार्यसम्बन्धविवक्षायां षष्ठीयम्। कस्य कार्यस्य निष्पत्त्यर्थमिकारस्तपरः क्रियत इति यावत्। "दीर्घो मा भूत" इति, असति हि तपरत्वेऽण् गृह्यमाणः सवर्णान् गृह्णातीतीकारेण सवर्णानां ग्रहणे सति स्थानेन्तरतमपरिभाषयोपास्थित, अदितेत्यत्र दीर्घस्थाने दीर्घो भवति, स मा भूदिति तपरत्वं क्रियते। "ऋतेऽपबि सः"

इति। स इत्यनेन दीर्घस्य प्रत्यवमर्शः। ऋतेऽप्यस्मादेव वचनाद् घुमास्थादिसूत्रेण ६।४।६६ दीर्घः सिद्धः, तस्माद् वचनसामर्थ्याद्दीर्घो न भविष्यतीत्यभिप्रायः। "भाव्यमानोऽण् सवर्णान् न गृह्णाति" (व्या।प।३०) इत्यतो दीर्घो न भविष्यतीति। एष तु परिहारो नोक्तः, भाव्यमानेनाप्यणा क्वचित् सवर्णानां ग्रहणात्। तथा हि-- अदस औप्रत्यये परतस्त्यदाद्यत्वे "वृद्धिरेचि" ६।१।८५ इति वृद्धौ कृतायाम् भवति। "अदसोऽसेर्दादु दो मः" ८।२।८० इत्युकारो विधीयमानः सवर्णानां ग्रहणादौकारस्य दीर्घस्य स्थाने दीर्घ एव भवति-- अमू इति। "अनन्तरे प्लुतो मा भूत्" इति। अनन्तरार्थे विसदृशार्थ आरम्भे सति।कुत एतत्? विसदृशस्य आकारस्य स्थाने क्रियमाणो ह्रस्वो भवति, न पुनः प्लुतः। तस्मात् प्लुतबाधनार्थं तपरत्वं कर्तव्यम्। एतदपि नास्ति प्रयोजनम्। "प्लुतश्च विषये स्मृतः" इति। चशब्दो हेतौ। प्लुतो हि दूराद्धूतादिविषयविशेषे ८।२।८४ उक्त एव। तत्र यद्यनेन प्लुतो विधीयते तदा सर्वत्र दूराद्धूतादिविषयेऽन्यत्र चानेन भवितव्यम्, ततश्च दूराद्धूतादिविषयेऽपि तस्मिन् भवत्युक्तानुवाददोषः स्यात्; तस्य कृतस्य करणात्। तस्मात् पक्ष उक्तानुवाददोषो मा भूदिति ह्रस्व एव भविष्यति, न प्लुतः इति प्रत्याख्यातं भाष्ये तपरत्वम्। अन्ये तु वर्णयन्ति-- "प्लुतश्च विषये स्मृतः" इत नानेन तपरत्वं प्रत्याख्यायते, किं तर्हि? तस्य प्रयोजनमाख्यायते। दूराद्धूतादिविषये प्लुत इष्टोऽभिप्रेतः, स न प्राप्नोति। स्थानेऽन्तरतमपरिभाषया( १।१।५०) दीर्घस्यैव स्थाने दीर्घ एव विधीयते। ननु चोक्तं सिद्ध एव दीर्घ इति? सिद्धस्य पुनर्वचनं प्लुतस्य बाधनार्थं स्यात्। इष्यते च प्लुतो दूरादधूतादिविषये। तस्मात् तस्य बाधको दीर्घो मा भूदिति तपरत्वं कर्तव्यम्। तेन विचार्यमाणानामित्याष्टमिको भवत्येव प्लुत इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्थाघ्वोः ६।२ इत् १।१ च ० सिच् १।१ १४ आत्मनेपदेषु ७।३ ११ कित् १।१ ५

समासः॥

स्था च घुश्च स्थाघू, तयोः स्थाघ्वोः, इतरेतरद्वन्द्वः।

अर्थः॥

स्था-धातोः घु-संज्ञकानां च इकारादेशः भवति, तेभ्यः परः सिच् किद्वत् अपि भवति।

उदाहरणम्॥

उपास्थित, उपास्थिषाताम्, उपास्थिषत। घुसंज्ञकानाम् - अदित, अधित।
काशिका-वृत्तिः
स्थाघ्वोरिच्च १।२।१७

सिजात्मनेपदेषु इति वर्तते। तिष्ठतेर् धातोः घुसंज्ञकानां च इकारश्च अन्तादेशः सिच् च किद् भवति आत्मनेपदेषु परतः। उपास्थित, उपास्थिषाताम्, उपास्थिषत। घुसंज्ञकानम् अदित। अधित। इच्च कस्य तकारेत्त्वं दीर्घो मा भूद्दते ऽपि सः। अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः।
लघु-सिद्धान्त-कौमुदी
स्थाघ्वोरिच्च ६२७, १।२।१७

अनयोरिदन्तादेशः सिच्च कित्स्यादात्मनेपदे। अदित। अदास्यत्, अदास्यत॥ डु धाञ् धारणपोषणयोः॥ १०॥ दधाति॥

बाल-मनोरमा

स्थाध्वोरिच्च २२६, १।२।१७

लुङि सिचि अदास् त इति स्थिते-- स्थाध्वोरिच्च। "असंयोगाल्लिट्" इत्यतः किदिति, "हनस्सि"जित्यतः सिजिति चानुवर्तते। तदाह--- अनयोरित्यादिना। परस्मैपदेषु नेदं प्रवर्तते, तत्र "गातिस्थे" ति सिचो लुका लुप्तत्वात्। अत एव "लिङ्()सिचौ" इति सूत्रादात्मनेपदेष्विति नानुवर्तितम्, व्यवर्त्त्याऽभावात्। अदितेति। इत्त्वेकृते "ह्रस्वादङ्गा"दिति सिचो लुक्। त इत्यस्य ङित्त्वादिकारस्य न गुणः। आतामादौ तु इत्वे कृतेऽपि सिचो न लुक्, झलिपरतएव लुग्विधेः। सिचः कित्त्वादिकारस्य न गुणः। अदिषाताम् अदिषत। अदिथाः अदिषाथाम्। अदिढ्वम्। अदिषीति। अदिष्वहि अदिष्महि। अदास्यदित्यपि ज्ञेयम्। श्यैङ् गतौ। श्यायते इति। शपि आयादेशः। शिद्विषत्वादात्वं नेति भावः। शश्ये इति। एशि आत्वे आतो लोपः। शश्याते शश्यिरे। क्रादिनियमादिट्। शश्यिषे शश्याथे शश्यिध्वे। शश्ये शश्यिवहे शश्यिमहे। श्याता। श्यास्यते। श्यायताम्। अश्यायताम्। अश्यायत। श्यायेत। श्यासीष्ट। अश्यास्त। अश्यास्यत। प्यैङ्धातुरपि श्यैङ्वत्। त्रैङप्येवम्। पूङ् पवने इति। पवते इति। सेट्, ऊदन्तानामनिट्()सु पर्युदासात्। पवते इति। शपि गुणः। अवादेशः। पुपुवे इति। कित्त्वाद्गुणाऽभावे उवङ्। पुपुवाते पुपुविरे। पुपुविषे पुपुवाथे पुपुविध्वे। पुपुवे पुपुविवहे पुपुविमहे। पविता। पविष्यते। पवताम्। सेडयम्, अनिट्सु डीङः पर्युदासात्। डयते इति। शपि ईकारस्य गुणेऽयादेश इति भावः। डिड()ए डिडि()वहे डिडि()महे। डयिता। डयिष्यते। डयताम्। अडयत। डयेत। डयीषीष्ट डयिषीयास्ताम्। डयिषीरन्। डयिषीष्ठाः डयिषीयास्थाम् डयिषीढ्वम्-डयिषीध्वम्। डयिषीय डयिषीवहि डयिषीमहि। अडयिष्ट।अडयिष्यत। इति स्मिङादयो डीङन्ता ङितः। तृ()धातुः सेट् परस्मैपदी। अनिट्सु ॠदन्तपर्युदासात्सेट्।

तत्त्व-बोधिनी

स्थाध्वोरिच्च १९८, १।२।१७

स्थाध्वोरिच्च। इह "लिङ्सिचौ"इति सूत्रादात्मनेपदेष्विति नानुवर्तितम्, परस्मैपदेषु "गातिस्थे" तिलुकः प्रवृत्तेर्व्यावर्त्त्याऽलाभात्। अस्थित। अस्थिषाताम्। "भाव्यमानोऽण् क्वचित्सवर्णान् गृह्णाती"त्यत्रेदमपि तपरकरणं लिङ्गमित्याहुः। अत्र वदन्ति-- विधीयमानस्य सवर्णग्राहकत्वेऽपि तपरकरणमिह व्यर्थम्। न चात्र दीर्घः स्यादिति वाच्यं, "घुमास्थे" त्यनेनैव तत्सिद्धा विधिवैयर्थ्यापत्तेः। न चैवमपि प्लुतः स्यादिति वाच्यं, "प्लुताऽप्लुतप्रसङ्गे "प्लुतश्च विषये स्मृतः" इति सिद्धान्तादिति। डीङ्। विहायसा-- आकाशेन। "विहायसा" मिति पाठस्त्वनाकर इत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० २६ क्त्वा १।१ सेट् १।१ २६ कित् १।१ ५

समासः॥

सह इटा सेट्, {तेन सहेति॰ (२।२।२८)} इति बहुव्रीहिसमासः।

अर्थः॥

सेट् क्त्वाप्रत्ययः कित् न भवति।

उदाहरणम्॥

देवित्वा, वर्त्तित्वा, वर्धित्वा।
काशिका-वृत्तिः
न क्त्वा सैट् १।२।१८

क्त्वा प्रत्ययः सेण् न किद् भवति। देवित्वा। वर्तित्वा। सेटिति किम्? इॠत्वा ऽ गुत्वा ऽ क्त्वाग्रहणं किम्? निगृहीतिः। उपस्निहितिः। निकुचितिः। न सेडिति कृते ऽकित्त्वे निष्ठायाम् अवधारणात्। ज्ञापकान्न प्रोक्षायां सनि झल्ग्रहणं विदुः। इत्त्वं कित्वंनिहोगेन रेण तुल्यं सुधीवनि। वस्वर्थं किदतीदेशान्नि गृहीतिः प्रयोजनम्।
लघु-सिद्धान्त-कौमुदी
न क्त्वा सेट् ८८३, १।२।१८

सेट् क्त्वा किन्न स्यात्। शयित्वा। सेट् किम्? कृत्वा॥
न्यासः
न क्त्वा सेट्। , १।२।१८

क्त्वाप्रत्ययस्यौपवेशिकं कित्त्वमस्त्येवेति तदिटः क्त्वाप्रत्ययेन ग्रहणात् सेटोऽपि प्राप्नोतीत्यतः प्रतिषेधऽयमारभ्यते। "क्त्वाप्रत्ययः सेट् किन्न भवति" इति। अथ किं ककारस्येत्संज्ञाप्रतिषेधात् कित्त्वन्न भवति? कित्कार्यस्य प्रतिषेधाद्वा? यदि ह्यत्र ककारस्येत्संज्ञाप्रतिषेधादकित्त्वं विधित्सितं स्यादित्संज्ञाप्रकरणे "लशक्वसेट्क्त्वातद्धितयोः" इति सूत्रं कुर्यात्। एवं हि द्विष्प्रतिषेधो न कत्र्तव्यो भवति। तस्मात् कित्त्वप्रतिबद्धं यत् कार्यं तत्प्रतिषेधादकित्त्वं सेटः क्त्वाप्रत्यस्यानेन क्रियते, न तु ककारस्येत्संज्ञाप्रतिषेधात्। अथ सानुबन्धकस्य ग्रहणं किमर्थम् "न त्वा" इत्येवोच्येत,एवं हि लघु सूत्रं भवति? नैतदस्ति; ककारानुच्चारणे हि कश्चिद्द्वेष्यमपि विजानीयात्। सेटः क्त्वाप्रत्ययस्य ककारानुबन्ध एव नास्ति, निरनुबन्धकस्योच्चारणादिति। तदेवं मा विज्ञायीति सानुबन्धकस्योच्चारणम्।कः पुनः सेटो निरनुबन्धकत्वे विधौ निरनुबन्धक उच्चार्यते? एवमपि सेट एव ग्रहणं स्यात्, नानिटः;सानुबन्धकत्वात्। "निगृहीतिः"इति। "स्त्रियां क्तिन्" ३।३।९४ "तितुत्रतथ" (७।२।९) इति "ग्रहादीनां प्रतिषेधो वक्तव्यः (वा।८३१।?) इति तितुत्रतथेत्यादिनेट्प्रतिषेधो न भवति।"उपस्निहितिः" इति। "स्निह प्रीतौ" (धा।पा।१२००),"निकुचितिः" इति। "कुन्चु क्रुन्चु कौटिल्याल्पीभावयोः" (धा।प।१८५,१८६) एषु त्रिषूदाहरणेषु यथाक्रमं संप्रसारणगुणप्रतिषेधौ। "अनिदितां हल उपधायाः क्ङिति" ६।४।२४ इत्यनुनासिकलोपश्च कित्त्वाद्भवति। "न सेट्" इत्यादि। न सेडित्येतावता योगेनाकित्त्वे सति सिद्धं देवित्वेत्यादि,क्त्वाग्रहणं तु किमर्थम्, तेन विनाऽकित्त्वे सति "गुध परिवेष्टने" (धा।पा।११२०) निगुधितो निगुधितो निगुधितवानित्यत्र निष्ठायां प्राप्नोतीति चेत्? नैतदस्ति; निष्ठायामवधारणात्। "निष्ठा शीङस्विदिमिदि" १।२।१९ इत्यत्रावधारणान्निष्ठायां न भविष्यति-- शीङादिभ्य एव निष्ठा सेट् किन्न भवति नान्येभ्यो धातुभ्य इति। शीङादिभ्यो निष्ठैवेति विपरीत नियमस्तु नाशङ्कनीयः, न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिरिति न भविष्यति। लिटस्तर्हि कित्त्वस्य प्रतिषेधः स्यात्, ततश्च जग्मिव,जग्मित्येतत्र "गमहन" ६।४।९८ इत्यादिनोपधालोपो न स्यादित्यत आह-- "ज्ञापकान्न परोक्षायाम्" इति। परोक्षे विहितत्तवाल्लिटः श्रुतिः परोक्षेत्युच्यते, तस्यां कित्त्वप्रतिषेधो न भविष्यति। कथम्? ज्ञापकात्। किं तज्ज्ञापकम्? इत्याह-- "सनि झल्ग्रहणं विदुः" इति। यदयम् "इको झल्" १।२।९ इति सन्()विशेषणं करोति,ततो ज्ञायते-- औपदेशिकस्य कित्त्वस्यन सेडिति प्रतिषेधोऽयम् नातिदेशिकस्येति। झल्ग्रहणं हिशिशयिषत इत्यत्र कित्त्वं मा

भूदित्येवमर्थः क्रियते। यदि च न सेडिति प्रतिष#एधः आतिदेशिकस्यापि कित्त्वस्य स्यात्; झल्ग्रहणमनर्थकं स्यात्। अस्त्वत्र कित्त्वम्, तस्य न सेडिति प्रतिषेधो भविष्यतीति तस्मादौदेशिकस्य कित्त्वस्य प्रतिषेधोऽयं नातिदेशिकस्येति। अस्यार्थस्य ज्ञापकं झल्ग्रहणं स्यात्, "स्थाध्वोरिच्च" १।२।१७ इत्यत्र झलादौ सिचीत्वं यथा स्यात्, अजादौ मा भूदिति-- उपास्थायिषातामिति। अत्र हि "स्यसिच्सीयुट्तासिषु" ६।४।६२ इत्यादिना चिष्वद्भावः प्राप्नोति, इत्त्वञ्च; तत्र परत्वाच्चिण्वद्भावादिट्। चिण्वद्भावे सति "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्; तत्रासति झल्ग्रहण इडादावपीत्त्वं यकारस्थाने प्राप्नोति, नैतदस्ति; यस्मादित्त्वं कित्सन्नियोगेन विधीयते। कित्त्वं हि प्रधानभूतम्, इत्त्वमन्वाचयशिष्टम्। अतः कित्त्वाभावे तदित्त्वं न भविष्यतीति। अथ "स्थाध्वोरिच्च" (१।२।१७) इत्यत्रापि कित्त्वं कस्मान्न भवति? "न सेट्" इत्येतावता योगेन प्रतिषिद्धत्वात्। "रेण तुल्यं सुधीवनि" इति। रेफेण तुल्यमेतदित्त्वम्। क्व चोदाहरणे? सुधीवनीत्यत्र। शोभना धीवानो यस्यां सा सुधीवा। "अनो बहुव्रीहेः" ४।१।१२ इति ङीपोऽत्र प्रतिषेधे कृते यथा "वनो र च" ४।१।७ इति रेफो ङीप्सन्नियोगेन विधीयमानस्तदभावे न भवति, तथा कित्तवसन्नियोगेन विधायमानमित्त्वं तदभावे न भविष्यति। किमर्थं तर्हि क्त्वाग्रहणम्? क्वसौ कित्त्वप्रतिषेधो मा भूदित्येवमर्थं क्त्वाग्रहणं कत्र्तव्यम्। क्वसौ त्वौपदेशिकं कित्त्वमस्ति, तस्य "न सेट्" इत्येतावता योगेन प्रतिषेधः स्यात्। ततश्च जग्मिवान्-- इत्यत्रोपधालोपो न स्यात्। "वस्वर्थं किदतीदेशात्" इति। न भविष्यतीत्यध्याहार्यम्। अस्तु क्वसावौपदेशिकस्य कित्त्वस्य प्रतिषेधः, सत्यपि तस्मिन् "असंयोगाल्लिट् कित्" १।२।५ इति यदातिदेशिकं कित्त्वम्, तेनोपधालोपो भविष्यति। झल्ग्ररहणादातिदेशिकस्य कित्त्वस्य प्रतिषेधो न भविष्यतीत्युक्तं ह्येतत्। तस्माद्वस्वर्थं क्त्वाग्रहणं न भविष्यतीति। एवं तर्हि-- निगृहीतिः प्रयोजनम्। क्तिनि तु प्रतिषेधो मा भूदित्येवमर्थं क्त्वाग्रहणमित्यर्थः। जग्मिवानित्यत्र "विभाषा गमहनविदविशाम्" ७।२।६८ इति क्वसोरिट्, "उगिदचाम्" ७।१।७० इति नुम्, हलङ्यादिसंयोगान्तलोपौ (५।१।६८; ८।२।२३) "सान्तमहतः" ६।४।१० इत्यादिना दीर्घः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ निष्ठा १।१ २२ शीङ्स्विदिमिदिक्ष्विदिधृषः ५।१ न ० १८ सेट् १।१ १८ कित् १।१ ५

समासः॥

शीङ् च स्विदिश्च मिदिश्च क्ष्विदिश्च धृट् च, शीङ्॰धृट्, तस्मात् शीङ्॰धृषः, समाहारो द्वन्द्वः।

अर्थः॥

{शीङ् स्वप्ने (अदा॰ आ॰)}, {ञिष्विदा गात्रप्रक्षरणे (दिवा॰ प॰)}, {ञिमिदा स्नेहने (दिवा॰ प॰)}, {ञिक्ष्विदा स्नेहन-मोचनयोः (देवा॰ प॰)}, {ञिधृषा प्रागल्भ्ये (स्वा॰, प॰)}, इत्येतेभ्यः धातुभ्यः परः सेट् निष्ठाप्रत्ययः कित् न भवति।

उदाहरणम्॥

शयितः, शयितवान्, प्रस्वेदितः, प्रस्वेदितवान्, प्रमेदितः, प्रमेदितवान्, प्रक्ष्वेदितः, प्रक्ष्वेदितवान्, प्रधर्षितः, प्रधर्षितवान्।
काशिका-वृत्तिः
निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः १।२।१९

न सेटिति वर्तते। शीङ् स्विदि मिदि क्ष्विदि धृषित्येतेभ्यः प्रो निष्ठाप्रत्ययः सेण् न किद् भवति। शयितह्, शयित्वान्। प्रस्वेदितः, प्रस्वेदितवान्। प्रमेदितः, प्रमेदितवान्। प्रक्ष्वेदितह्, प्रक्ष्वेदितवान्। प्रधर्षितः प्रधर्षितवान्। सेटित्येव स्विन्नः, स्विन्नवान्। स्विदादीनम् आदितश्च [७।२।१६](http://) इति निष्ठायामिट् प्रतिषिध्यते। विभाषा भावाऽदिकर्मणोः [७।२।१७](http://) इति पक्षेऽभ्यनुज्ञायते स विषयः कित्त्वप्रतिषेधस्य।

न्यासः

निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः।, १।२।१९

"शीङ स्वप्ने" (धा।पा।१०३२), "ञिष्विदा गात्रप्रक्षरणे" (धा।पा।११८८), "ञिमिदा स्नेहने" (धा।पा।१२४३), "ञिक्ष्विदा स्नेहनमोचनयोः" (धा।पा।१२४४), "ञिधृषा प्रागल्भ्ये" (धा।पा।१२६९)। "शयिततवान्" इति। "अत्वसन्तस्य चाधातोः" [६।४।१४](http://) इति दीर्घः। "शयितः" इति। "गत्यथाकर्मक" [३।४।७२](http://) इत्यादिना कर्तरि क्तः। "प्रस्वेदितः" इत्यादौ "आदिकर्मणि क्तः कर्तरि च" [३।४।७१](http://) इत्यनेन प्रशब्द आदिकर्म = प्रारम्भं द्योतयति।"प्रधर्षितः" इति। वैयात्यादन्यत्रेदमुदाहरणम्। तत्र हि "धृषिशसीवैयात्ये" [७।२।१९](http://) इतीट्प्रतिषेधेन भवितव्यम्। प्रकृतिग्रहणे यङलुको ग्रहणं स्मरति। अतो यङलुको "एरनेकाचः" [६।४।८२](http://) इत्यादिना यणादेशः॥

बाल-मनोरमा

निष्ठा शीङ्?स्विदिमिदिक्ष्विदिधृषः ८५९, १।२।१९

निष्ठा शीङ्। "न क्त्वा से"डित्यतो न सेडित्यनुवर्तते। "असंयोगा"दित्यतः किदिति च। तदाह-- एभ्यः सेडिति। शीङिति ङकारस्य फलमाह-- अनुबन्धेति। यङ्? लुकि"श्तिपा शपे"ति निषेधार्थ इत्यर्थः। सेश्यितवानिति। अत्र कित्त्वनिषेधाऽभावात्कित्त्वान्न गुण इति भावः। आदिकर्मणि निष्ठा वक्तव्येति। दीर्घकालव्यासक्तायाः कटाद्युत्पादनक्रियाया आरम्भकालविशिष्टोंऽश आदिकर्म। तत्र विद्यमानाद्धातोर्निष्ठा वक्तव्येत्यर्थः। तत्र आद्येषु क्रियाक्षणेषु भूतेष्वपि क्रियाया भूतत्वाऽभावाद्भूते विहिता निष्ठा न प्राप्तेत्यारम्भः।

तत्त्व-बोधिनी

निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ७०४, १।२।१९

शेश्यित इति। "एरनेकाचः" इति यण्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मृषः ५।१ तितिक्षायाम् ७।१ निष्ठा १।१ [१९](http://) न ० [१८](http://) सेट् १।१ [१८](http://) कित् १।१ [५](http://)

अर्थः॥

तितिक्षायाम् अर्थे वर्तमानात् मृष्-धातोः परः सेट् निष्ठा-प्रत्ययः न कित् भवति। तितिक्षा = क्ष्मा।

उदाहरणम्॥

मर्षितः, मर्षितवान्।

काशिका-वृत्तिः

मृषस् तितिक्षायाम् १।२।२०

मृषेर् धातोः तितिक्षायाम् अर्थे निष्ठा सेण् न किद् भवति। तितिक्षा क्षमा। मर्षितः, मृषितवान्। तितिक्षायाम् इति किम्? अपमृषितं वाक्यम् आह।

न्यासः

मृषस्तितिक्षायाम्। , १।२।२०

तितिक्षा = क्षमा, क्षान्तिरिति। यद्येवम्, क्षान्तिग्रहणेव कत्र्तव्यम्,लघु ह्येवं सूत्रं भवति? सत्यमेतत्; वैचित्र्यार्थं तु न कृतम्। "अपमृषितम्" इति। अपरामृष्टमित्यर्थः, अनेकार्थत्वातद्धातूनाम्। अनेकार्थत्वं तु तितिक्षाग्रहणाद्विज्ञायते। असति हि तत्र मृषस्तितिक्षायामेव पठ()त इति तन्न कुर्यात्, व्यवच्छेद्याभावात्।

बाल-मनोरमा

मृषस्तितिक्षायाम् ८६२, १।२।२०

मृषस्तितिक्षायाम्। तितिक्षा -- क्षमा। सेण्निष्ठा किन्नेति -- शेषपूरणमिदम्। "निष्ठा शी"ङित्यतो निष्ठेति, "न क्त्वा से"डित्यतः सेण्नेति, "असंयोगा"दित्यतः किदिति चानुवर्तत इति भावः।

तत्त्व-बोधिनी

मृषस्तितिक्षायाम्। ७०७, १।२।२०

अविस्पष्टमिति। मृषधातोस्तितिक्षायामेव वृत्तिसत्त्वेऽपि सूत्रस्थतितिक्षाग्रहणमेव ज्ञापयत्यनेकार्था धातव इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ऊदुपधात् ५।१ भावादिकर्मणोः ७।२ अन्यतरस्याम् ७।१ निष्ठा १।१ १९ न ० १८ सेट् १।१ १८ कित् १।१ ५

समासः॥

उत् उपधायां यस्य सः उदुपधः, तस्मात् उदुपधात्, बहुव्रीहिः।
भावश्च, आदिकर्म च भावादिकर्मणी, तयोः भावादिकर्मणोः, इतरेतरद्वन्द्वः।

अर्थः॥

उदुपधात् धातोः परः भावे, आदिकर्मणि च वर्तमानः सेट् निष्ठा-प्रत्ययः अन्यतरस्याम् (विकल्पेन) कित् न भवति।

उदाहरणम्॥

भावे - द्योतितमनेन, द्युतितमनेन। मोदितमनेन, मुदितमनेन। आदिकर्मणि - प्रद्योतितः, प्रद्युतितः। प्रमोदितः, प्रमुदितः।

काशिका-वृत्तिः

उदुपधाद् भावाऽदिकर्मणोरन्यतरस्याम् १।२।२१

निष्ठा सेण् न कितिति वर्तते। उदुपधाद् धातोः परो भावे आदिकर्मणि च वर्तमानो निष्ठाप्रत्ययः सेडन्यतरस्यां न किद् भवति। द्युतितत्मनेन, द्योतितमनेन। प्रद्युतितः, प्रद्योतितः मुदितमनेन, मोदितमनेन। प्रमुदितः, प्रमोदितः। उदुपधातिति किम्? लिखितमनेन। भावाऽदिकर्मणोः इति किम्? रुचितं कार्षापणं ददाति। सेटित्येव। प्रभुक्त ओदनः। व्यवस्थितविभाषा चैयम्। तेन शब्विकरणानाम् एव भवति। गुध परिवेष्टने, गुधितम् इत्यत्र न भवति।

न्यासः

उदुपधाद्भावदिकर्मणोरन्यतरस्याम्। , १।२।२१

"आदिकर्मणि वर्तमानः" इति। आदिभूतक्रियाक्षण आदिकर्म, तस्मिन् भूतत्वेन विवक्षते यः क्तो भवति, स आदिकर्मणि वर्तते। "द्योतितमनेन, द्युतितमनेन" इति। "द्युत दीप्तौ" (धा।पा।७४१) नंपुसके भावे क्तप्रत्ययः। एवं "मोदितमनेन, मुदितमनेन" इत्यत्रापि ; "मुद हर्षे" (धा।पा।१६) इत्यस्मात्। "प्रद्युतितः" इत्यादिषु तु "आदिकर्मणि क्त कत्र्तरि च" [३।४।७१](#) इति क्तः कत्र्तर्येव विधीयते, न कर्मणि; धातोरकर्मकत्वात्। नापि भावे; भावोदाहरणादविशेषप्रसङ्गात्।कत्र्तर्यव्युत्पन्नः क्त आदिकर्मसम्बन्धादादिकर्मणीत्युच्यते।आदिकर्मसम्बन्धस्त्वर्थद्वारकः। "रुचितम्" इति। "रुच दीप्तौ" (धा।पा। ७४५) अस्याकर्मकत्वात् "गत्यर्थाकर्मक" ३।४।७२) इत्यादिना कत्र्तरि क्तः। दीप्तिमत् कार्षापणमित्यर्थः। आदिकर्मात्र न विवक्षितम्। "प्रभुक्त ओदनः" इति। "भुज पालनाभ्यवहारयोः" (धा।पा।१४५४) "तयोरेव कृत्यक्तखलर्थाः" [३।४।७०](#) इति कर्मणि क्तः। तस्यादिकर्मसम्बन्धादादिकर्मणि वृत्तिः। "गुध परिवेष्टने" (धा।पा।११२०) इति दौवादिकः। निगुधितमिति भावे क्तः। यदि व्यवस्थितविभाषया शब्विकरणानामेव भवति, सेड्ग्रहणेन किमर्थमिह निष्ठा विशिष्यते? अशब्विकरणत्वादेव हि प्रभुक्त इत्यत्र न भवति। न हि भुजिः शब्विकरणः, अपि तु श्नम्विकरणः, सत्यमेतत्; उत्तरार्थं सेड्ग्रहणमनुवत्र्तनीयम्। अतस्तदुत्तरार्थयनुवत्र्तमानमिहापि मन्दधियां सुखप्रतिपत्तिर्यथा स्यादित्येवमर्थम्। तकारोऽत्र मुखसुखार्थः, न दीर्घनिवृत्त्यर्थः; अलघूपधत्वादेव हि दीर्घोपधानां गुणप्रसङ्गाभावात्॥

बाल-मनोरमा

अन्यपदार्थे च संज्ञायाम् ६६७, १।२।२१

अन्यपदार्थे च। संख्येति निवृत्तम्। नदीभिरित्यनुवर्तते। तदाह--सुबन्तं नदीभिरिति। समस्यत इति। सोऽव्ययीभाव इत्यपि बोध्यम्। संज्ञानवगमादिति। सम्यक्ज्ञायते इति संज्ञा। "आतश्चोपसर्गे" इति कर्मण्यङ्। उन्मत्ता गङ्गा यस्मिन्निति वाक्येन देशविशेषस्यानवगमादिह नित्यसमास इत्यर्थः। ततश्च नास्ति लौकिकविग्रहः। अस्वपदविग्रहो वेति फलति। वस्तुतस्तु विभाषाधिकारादयमपि समासो वैकल्पिक एव। अत एव "द्वितीयतृतीये"ति सूत्रेऽन्यतरस्याङ्ग्रहणेन उत्सर्गापवादयोर्महाविषाविभाषयत्वादपवादाऽभावे उत्सर्गस्याऽप्रवृत्तिरिति ज्ञापितेऽर्थे उन्मत्तगङ्गमित्युदाह्रतम्। "अव्ययीभावेन मुक्ते बहुव्रीहिर्नै"ति चोक्तं भाष्ये। अस्य समासस्य नित्यत्वे तु तदसङ्गतिः स्पष्टैव, कदाप्यव्ययीभावमुक्त्यसंभवात्।

बाल-मनोरमा

उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ८६३, १।२।२१

उदुपधाद्भावादिकर्मणोः। भावे उदाहरति-- मुदितमित्यादि। आदिकर्मण्युदाहरति-- प्रद्युतितः प्रद्योतितः साधुरिति। आदिकर्मणि कर्तरि क्तः। उदुपधा()त्क , विदितमिति।"विद ज्ञानेट इति वेत्तेः रूपम्। गुध्यतेर्गुधितमिति। "गुध परिवेष्टने"दिवादिः सेट्कः।

तत्त्व-बोधिनी

अन्यपदार्थे च संज्ञायाम् ५९१, १।२।२१

अन्यपदार्थे च। सङ्ख्येति नुवृत्तम्। नदीग्रहणमनुवर्तते। तदाह--सुबन्तं नदीभिः सहेति। अन्यपदार्थ इति किम्()। कृष्णवेणी। संज्ञानवगमादिति। सम्यक् ज्ञायते इति संज्ञा। "आतश्चोपसर्गे" इति कर्मण्यङ्। संज्ञिनो देशविशेषस्याऽनवगमादित्यर्थः। अन्यपदार्थानवगमादिति तु नोक्तं, यस्येत्यादिपदान्तरसमभिव्याहारेणाऽन्यपदार्थप्रतीतेः। अथएव बहुव्रीहिर्न नित्यसमास इति भावः। संज्ञायां किम्()। शीघ्रगङ्गो देशः। अथाऽव्ययीभावेऽसाधारणान्समासान्तनाह--अव्ययी। "शरदादिभ्य"इति वक्तव्ये पर्यायेषु लाघवचिन्ता नाद्रियत इति प्रभृतिग्रहणं कृतम्। टच् स्यादिति। "राजहःसखिभ्यः--"इत्यतष्टजनुवर्तत इति भावः।

तत्त्व-बोधिनी

उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ७०८, १।२।२१

रुचितमिति। रुच दीप्तौ। "गत्यर्थाऽकर्मके"ति कर्तरि क्तः। क्रुष्टमिति। क्रुश आह्वाने रोदने च। व्रश्चादिना षत्वे ष्टुत्वम्।

* शब्विकरणेभ्य एवेष्यते। गुधितमिति। गुध परिविष्टने दिवादिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूङः ५।१ क्त्वा १।१ २६ च ० निष्ठा १।१ १९ न ० १८ सेट् १।१ १८ कित् १।१ ५

अर्थः॥

{पूङ् पवने (भ्वा॰ आ॰)} अस्मात् धातोः परः सेट् निष्ठा क्त्वा च कित् न भवति।

उदाहरणम्॥

पवितः, पवितवान्। पवित्वा।

काशिका-वृत्तिः

पूङः क्त्वा च १।२।२२

अन्यतरस्याम् इति न स्वर्यते। उतरसूत्रे पुनर् वा वचनात्। न सेटिति वर्तते। पूङ्श्च इट् विहितः क्लिशः क्त्वानिष्ठयोः ७।२।५०, पूङ्श्च ७।२।५१ इति। पूङः परो निष्ठाप्रत्ययः इत्वा च सेण् न किद् भवति। पवितः, पवितवान्। क्त्वाप्रत्ययसय न क्त्वा सेट् १।२।१८ इति सेद्ध एव प्रतिषेधः। तस्य ग्रहणमुत्तरार्थम्। तथा चौक्तं नित्यम् अकित्त्वम् इडाद्योः क्त्वानिष्ठयोः क्त्वाग्रहणम् उत्तरार्थम् इति।

न्यासः

पूङः क्त्वा च , १।२।२२

"न सेट् वत्र्तते" इत्यक्तम्। "न क्त्वा सेट्" १।२।१८ इत्यतः। ननु च पूङः परयोः क्त्वानिष्ठयोरिटा न भवितव्यमेव;

"श्रयुकः किति" ७।२।११ इति प्रतिषेधात्। तदपार्थिका सेड्ग्रहणानुवृत्तिरिति यश्चोदयेत् तं प्रत्याह-- पूङश्चेड् विहितः" इत्यादि। अत क्त्वाप्रत्ययस्योदाहरणं कस्मान्न प्रदर्शितमित्यत आह-- "क्त्वाप्रत्ययस्य" इत्यादि। यदि ह्यनेन योगेन क्त्वाप्रत्ययस्य कित्त्वं प्रतिषिध्येत, तदा तस्याप्युदाहरणं प्रदर्श्येत, न चानेन प्रतिषिध्यते, किन्तर्हि? "न क्त्()वा सेट्" १।२।१८ इत्यनेनैव प्रतिषिद्धत्वात्। तस्मात तस्योदाहरणं न प्रदर्शितमितित भावः। क्त्वाप्रत्ययस्य "न क्त्वा सेट्" १।२।१८ इत्यनेन प्रतिषेध इत्येतदेव द्रढयितुमाह-- "तथा च " इत्यादि। "पूङ्श्च" ७।२।५१ इत्यत्र सूत्रे द्वयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीति मन्यमानैर्भारद्वाजीयैरिदमुक्तम्-- "नित्यमकित्त्वमिडाद्योः" इति। तौ पुनरिडादी क्त्वानिष्ठाप्रत्ययौ। यदि तर्हि नित्यमकित्त्वमिडाद्योः; तदा क्त्वाग्रहणमनर्थकं स्यात्। विकल्पेन ह्यत्राकित्तवसद्धये तस्य ग्रहणमर्थवद्भवति, नान्यथा। नित्यत्वं कित्त्वप्रतिषेधस्य "न क्त्वा सेट्" १।२।१८ इत्यनेनैव सिद्धत्वादिति चोद्यमाशहक्येदमुक्तम्-- "क्त्वाग्रहणमुत्तरार्थम्" इति। "पूङः" इति सानुबन्धकस्योच्चारणं किमर्थम्? पोपुवितः, पोपुवितवान्, पोपुवित्वेति यङलुगन्तात् कित्त्वप्रतिषेधो मा भूदिति। पूङनिवृत्यर्थं सानुबन्धक्सयोच्चारणं नोपपद्यते; "श्रयुकः किति" ७।२।११ इतीट्प्रतिषेधात्। पूञः परयोः क्त्वानिष्ठयोः सेटोरभावात्॥

बाल-मनोरमा

पूङ क्त्वा च ८५८, १।२।२२

पूङः क्त्वा च। "न क्त्वा से"डित्यतो न सेडित्यनुवर्तते। "असंयोगा"दित्यतः किदिति, "निष्ठा शीङित्यतो निष्ठेति च। तदाह-- पूङः क्त्वा निष्ठा चेत्यादि। ननु "न क्त्वा से"डित्येव सिद्धे किमर्थमिह क्त्वाग्रहणमित्यत आह-- क्त्वाग्रहणमुत्तरार्थमिति। तदेवोपपादयति-- नोपधादित्यत्रेति। तत्र हि क्त्वाप्रत्ययस्यैवानुवृत्तिरिष्टा। "पूङश्चे"त्येवोक्तौ तु "निष्ठा शी" ङित्योत निष्ठाग्रहणमेवाऽनुवर्तेतेति भावः।

तत्त्व-बोधिनी

पूङः क्त्वा च ७०३, १।२।२२

पूङः क्त्वा च। "न क्त्वा से"डित्यनेनैव सिद्धे क्त्वाग्रहणमिह व्यर्थमित्यत आह--उत्तरार्थमिति। क्त्वैवेति। नतु निष्ठा, चानुकृष्टत्वादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नोपधात् ५।१ थफान्तात् ५।१ वा ० २६ क्त्वा १।१ २२ न ० १८ सेट् १।१ १८ कित् १।१ ५

समासः॥

न उपधायां यस्य सः नोपधः, तस्मात् नोपधात्, बहुव्रीहिः।
थश्च फश्च थफौ, थफौ अन्ते यस्य सः थफान्तः, तस्मात् थफान्तात्, द्वन्द्वगर्भो बहुव्रीहिः।

अर्थः॥

नकारोपधात् थकारान्तात् फकारान्तात् च धातोः परः सेट् क्त्वा प्रत्ययः वा न कित् भवति।

उदाहरणम्॥

ग्रथित्वा, ग्रन्थित्वा। गुफित्व, गुम्फित्वा।

काशिका-वृत्तिः

नौपधात् थफान्ताद् वा १।२।२३

निष्ठा इति निवृत्तम्। निकारौपधाद् धातोः थकारान्तात् फकरान्ताच् च परः क्त्वा प्रत्ययः सेड् व न किद् भवति। ग्रथित्वा, ग्रन्थित्व। श्रथित्वा, श्रन्थित्वा। गुफित्वा, गुम्फित्वा। नौपधातिति किम्? रेफित्वा। गोफित्वा। थफान्तातिति किम्? स्रंसित्व। ध्वंसित्वा।

न्यासः

नोपधात्थफान्ताद्वा। , १।२।२३

"निष्ठेति निवृत्तम्" इति। पूर्वसूत्रे चानुकृष्टत्वात्। "ग्रथित्वा" इति। कित्वपक्षे "अनिदिताम्" ६।४।२४ इत्यनुनासकिलोपः। "गुफित्वा" इति। "गुफ गुन्फ ग्रन्थे" (धा।पा।१३१७,१३१८) "रिफित्वा" इति। "रिफ कत्थनयुद्धनिन्दाहिंसादानेषु" (धा।पा।१३०६)। ननु चैतद्विक्पाभावेऽपि "रलो व्युपधात्" १।२।२६ इत्यादिनैवात्र विकल्पेन भवतव्यम्, न चानयोर्विकल्पयोः कश्चिद्विशेषोऽप्यस्ति? एवं तर्हि नोपधग्रहणसाम- श्र्याद्योगान्तरकृतोऽपबि विकल्पोऽनेन बाध्यते। ननु च ऋकारोपधो नोपधग्रहणस्य प्रत्युदाहरणविषयो भविष्यति, "ऋफ ऋन्फ हिंसायाम्" (धा।पा।१३१५,१३१६), अर्फित्वेति, नैतद्स्ति; इहास्माभिरनयोर्धात्वो रूपत्रयं साध्यम्-- अर्फित्वा, ऋम्फित्वा, ऋफित्वेति। एतत् तु सत्यसति वा नोपधग्रहणऽनेनैव सिद्ध्यत्येव। सति तावन्नोपधग्रहणे, अनोपधस्य ऋफेः "न क्त्वा सेट्" १।२।१८ इति प्रतिषेधे सत्यर्फित्वेति सिद्ध्यति। नोपधस्य तु ऋम्फेरस्मिन् विकल्पे सति, ऋम्फित्वा ऋफित्वेतीदमपरं रूपद्वयं सिद्धयति। असत्यपि नोपधग्रहणे सर्वथास्मिन् विकल्पे सतीदं रूपत्रयं सिद्ध्यत्येव। तस्माद् युक्तमुक्तं प्रत्युदाहरणं रेपित्वेति। "येन विधिस्तदन्तस्य" १।१।७१ इति तदन्तविधौ सिद्धेऽन्तग्रहणम् "इह क्त्वाप्रत्यकाण्डे यत्नमन्तरेण तदन्तविधर्न भवति" इति ज्ञापनार्थम्। तेनोत्तरसूत्रे "ऋत" इति धातुः स्वरूपेण गृह्नते, न तु तदन्त इति।

तत्त्व-बोधिनी

नोपधात्थफान्ताद्वा १५९२, १।२।२३

नोपधात्थ। अन्तग्रहणं स्पष्टार्थम्। "थफा" दित्युक्तेऽपि धातोरेव क्तवाप्रत्ययविधानाद्विशेष्यसंनिधानेन तदन्तविधिना थफान्तादिति लाभात्। कोथित्वा। रेफित्वेति। कुथ पूतीभावे, रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। इह "रलो व्युपधा" दिति विकल्पोऽपि न भवति, नोपधग्रहसामश्र्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वञ्चिलुञ्च्यृतः ५।१ च ० वा ० २३ क्त्वा १।१ २२ न ० १८ सेट् १।१ १८ कित् १।१ ५

समासः॥

वञ्चिश्च लुञ्चिश्च ऋत् च, वञ्चिलुञ्च्यृत्, तस्मात् वञ्चिलुञ्च्यृतः, समाहारो द्वन्द्वः।

अर्थः॥

{वञ्चु प्रलम्भने (चुरा॰ अ॰)}, {लुञ्च अपनयने (भ्वा॰ प॰)}, {ऋत् सौत्रो धातुः घृणायाम्}, इत्येतेभ्यः धातुभ्यः परः सेट् क्त्वा वा न कित् भवति।

उदाहरणम्॥

वचित्वा, वञ्चित्वा। लुचित्वा, लुञ्चित्वा। ऋतित्वा, अर्तित्वा।
काशिका-वृत्तिः
वञ्चिलुञ्च्यृतश् च १।२।२४

वञ्चि लुञ्चि ऋतित्येतेभ्यः परः क्त्वा प्रत्ययः सेड् वा न किद् भ्वति। वचित्वा, वञ्चित्व। लुचित्वा,। उञ्चित्वा। ऋतित्व, अर्तित्वा। ऋतेरीयङ् ३।१।२९ आर्धधातुके विकल्पितः ३।१।३१। स यत्र पक्षे न अस्ति तत्रैदम् उदाहरणम्। सेटित्येव। वक्त्वा।
न्यासः
वञ्चिलुञ्च्यृतश्च , १।२।२४

"वन्चु प्रलम्भने" (धा।पा।१७०३), "लुन्च अपनयने" (धा।पा।१८७), "ऋत" इति सौत्रौ धातुः, यत्र "ऋतेरीयङ" ३।१।२९ इतीयङ विहितः। "ऋतेरीयङ" आर्धधातुके विकल्प्यते" इति। "आदाय आर्धधातुके वा" ३।१।३१ इत्यनेन। "वचित्वा" इति। "अनिदिताम्। ६।४।२४ इति नलोपः। "वक्तवा" इति। "उदितो वा" ७।२।५६ इतीडभावः पक्षे। चकारो वाग्रहणस्य स्वरितत्वविस्पष्टीकरणार्थः। तेनोत्तरसूत्रे काश्यपग्रहणस्य पूजार्थता; अन्यथा हि तस्य विकल्पार्थता विज्ञायेत। तथा च द्वयोर्विभाषयोर्मध्यवर्त्तित्वान्नित्योऽयं विधिः स्यात।
तत्त्व-बोधिनी
वञ्चिलुञ्च्यृतश्च १५९३, १।२।२४

वचित्वेति। वञ्चु प्रलम्भने। लुचित्वेति। लुञ्च अपनयने। ऋतित्वेति। ऋतिः सौत्रो दातुर्घृणार्थकः, तस्याद्र्धधातुकविषये "ऋतेरीय"ङित्यस्य वैकल्पिकत्वात्तदभाव कित्तवमनेन विकल्प्यते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तृषि-मृषि-कृशेः ५।१ काश्यपस्य ६।१ वा ० २३ क्त्वा १।१ २२ न ० १८ सेट् १।१ १८ कित् १।१ ५

समासः॥

तृषिश्च मृषिश्च कृशिश्च, तृषिमृषिकृशि, तस्मात्, तृषि-मृषि-कृशेः, समाहारो द्वन्द्वः।

अर्थः॥

{ञितृष पिपासायाम् (दिवा॰ प॰)}, {मृष तितिक्षायाम् (दिवा॰ उ॰)}, {कृश तनूकरणे (दिवा॰ प॰)}, इत्येतेभ्यः धातुभ्यः

परः सेट् क्त्वा वा न कित् भवति, काश्यपस्य आचार्यस्य मतेन।

उदाहरणम्॥

तृषित्वा, तर्षित्वा। मृषित्वा, मर्षित्वा। कृशित्वा, कर्षित्वा।
काशिका-वृत्तिः
तृषिमृषिकृशेः काश्यपस्य १।२।२५

न क्त्वा सेट् १।२।१८ इति प्रतिषेधे प्रापे कित्त्वं विकल्प्यते। तृषि मृषि कृशि इत्येतेभ्यः परः क्ता प्रत्ययः सेट् काश्यपस्य आचार्यस्य मते वा न किड् भवति। तृषित्वा, त्रिषत्वा। मृषित्व, म्रिषत्व। कृशित्व, कर्शित्वा। कश्यपग्रहणं पूजार्थम्। वा इत्येव हि वर्तते।
न्यासः
तृषिमृषिकृशेः काश्यपस्य। , १।२।२५

"ञितृषा पिपासायाम्" (धा।पा।१२२८), "मृष तितिक्षायाम्" (धा।पा।११६४), "कृश तनूकरणे" (धा।पा।१२२७)। "काश्यपग्रहणं पूजार्थम्" इति। "काश्यपस्यैवैतद्विषयकं ज्ञानं नान्येषाम्" इत्यसाधारणज्ञानोद्भावनमेव पूजा। तस् तत्पूजाद्वारेण शास्त्रस्यापि महार्थतोद्भावनलक्षणा पूजा कृता भवति। एवन्नाम शास्त्रस्य महार्थत्वं येन तथाविधा मुमुक्षवोऽप्याद्रियन्त इति। तेन विकल्पार्थं काश्यपग्रहणं कस्मान्न भवतीत्यत आह-- वेत्येव हि वत्र्तते" इति॥
तत्त्व-बोधिनी
तृषिमृषिकृशेः काश्यपस्य १५९४, १।२।२५

तृषिमृषि। ञितृषा पिपासायां, मृष तितिक्षायां, कृश तनूकरणे। "नोपधा"दित्यतो वेत्यनुवर्तनात्काश्यपग्रहणं पूजार्थम्। अञ्चेरिति। "उदितो वे"ति विकल्पप्राप्तावयमारम्भः। अञ्चित्वेति। "न क्त्वा से"डिति कित्त्वाऽभावान्नलोपो न। एवं चेह "नाञ्चेः पूजाया"मिति नलोपो नेति प्रसादकारोक्तिर्वृथेत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ रलः ५।१ व्युपधात् ५।१ हलादेः ५।१ सन् १।१ च ० वा ० २३ क्त्वा १।१ २२ न ० १८ सेट् १।१ १८ कित् १।१ ५

समासः॥

उश्च इश्च वी {इको यणचि (६।१।६४) इत्यनेन यणादेशः}। वी उपधे यस्य सह् व्युपधः, तस्मात् व्युपधात्, द्वन्द्वगर्भो बहुव्रीहिः।

अर्थः॥

उकारोपधात् इकारोपधात् च, रलन्तात् हलादेः धातोः परः सेट् सन्, सेट् क्त्वा च वा कितौ न भवतः।

उदाहरणम्॥

द्युतित्वा, द्योतित्वा, लिखित्वा, लेखित्वा। दिद्यतिषते, दिद्योतिषति, लिलिखिषति, लिलेखिषति।

काशिका-वृत्तिः

रलो व्युपधद्धलादेः संश् च १।२।२६

वा इति वर्तते सेटिति च। उश्च इश्च वी। वी उपधेयस्य स व्यौपधः। उकारौपधादिकारौपधच् च धातो रलन्ताद्धलादेः परः संश्च क्त्वा च सेटौ व कितौ भवतः। द्युतित्वा, द्योतित्वा। दिद्युतिषते, दिद्योतिषते। लिखित्वा, लेखित्वा। लिलिखिषति, लिलेखिषति। रलः इति किम्? देवित्वा, दिदेविषति। व्युपधातिति किम्? वर्तित्वा, विवर्तिषते। हलादेः इति किम्? एषित्व, एषिषिष्ति। सेटित्येव। भुक्त्वा, बुभुक्षते।

न्यासः

रलो व्युपधाद्धलादेः संश्च।, १।२।२६

क्त्वाप्रत्ययश्च "न क्त्वा सेट्" १।२।१८ इति कित्त्वे प्रतिषिद्धे सनोऽप्यकित्वे स्वभावत एव व्यवस्थित उभयत्रेदं विधिमुखेनैव प्रवत्र्तत इतिपक्षे कित्त्वं भवतीति। "{दिद्युतिषते" -- काशिका,पदमंजरी च} विदद्युतिषते" इति। "द्युतिस्वाप्योः संप्रासरणम्" ७।४।६७ इत्यभ्यासस्य संप्रासरणम्। "एषिषिषति" इति। "इषु इच्छायाम्" (धा।पा।१३५१), इडागमे कृते "अजादेर्द्वितीयस्य" ६।१।२ इति द्वितीयस्यैकाचो द्विर्वनचम्। "बुभुक्षते" इति। "हलन्ताच्च" २।१।१० इति नित्यं कित्त्वं भवति। लाघवार्थम् "इणुपधात्" इति वाच्ये, इण्ग्रहणानि सर्वाणि परेम णकारेणेति ज्ञापनार्थं "व्युपधात्" इत्युक्तम्। तेन "लण्" इत्यत्र यदुक्तम्-- "इण्ग्रहणानि सर्वाणि परेण णकारेण" इति तदुपपन्नं भवति॥

बाल-मनोरमा

रलो व्युपधाद्धादेः संश्च ४४४, १।२।२६

रलो। क्त्वासनाविति। चकारेण पूङः क्त्वा चे"त्यतः क्त्वाया अनुकर्षादिति भावः। सेटाविति। "न क्त्वा सेडि"त्यतस्तदनुवृत्तेरिति भावः। वा किताविति। "नोपधात्थफान्ताद्वे"त्यतः "असंयोगाल्लिट्कि"दित्यतश्च तनदुवृत्तेरिति भावः। दिद्युतिषते इति। "द्युत दीप्तौ" अनुदात्तेत्। सनि द्वित्वे कित्वात् "द्युतिस्वाप्यो"रित्यभ्यासस्य संप्रसारणे पूर्वरूपे सनः कित्त्वान्न लघूपधगुण इति भावः। सनः कित्वाऽभावे आह-- दिद्योतषते इति। "पूर्ववत्सनः" इत्यात्मनेपदम्। एषिषिषतीति। इष्()धातोः सन्। इट्। हलादित्वाऽभावेन कित्तवाऽभावाद्गुणे एष् इस ति इति स्थिते "अजादेर्द्वितीयस्ये"ति षिस् इत्यस्य द्वित्वे हलादिशेषे सनः षत्वे रूपम्। नन्विह सत्यपि कित्त्वे नित्यत्वात्परमपि गुणं बाधित्वा षिसित्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाऽभावादेव गुणाऽप्रसक्तेर्हलादेरिति व्यर्थमित्यत आह -- इह नित्यमपि द्वित्वं गुणेन बाध्यते इति। कुत इत्यत आह-- उपधाकार्यं हि द्वितवात्प्रबलमिति। तच्च कुत इत्यत आह-- ओणेरिति। ओणेः ऋदित्करणस्य ज्ञापकत्वादित्यन्वयः। तथाहि -- ओणृधातोण्र्यन्ताल्लुङि चङि "णौ चङ्युपधायाः" ह्यस्वस्य "नाग्लोपिशास्वृदित#आ" मिति निषेधे सति ओणि अ त् इति स्थिते णि इत्यस्य द्वित्वे मा भवानोणिणदिति रूपम्। अत्र उपधाह्यस्वनिषेधार्थमोणेरृदित्करणम्। उपधाह्यस्वे कृते तु उण् इ अ त् इति स्थिते णीत्यस्य द्वित्वे मा भवानुणिणदिति स्यात्, ओकारो न श्रूयेयेति स्थितिः। यदि तु नित्यत्वादुपधाह्यस्वत्प्रागेव ओण् इ अ त् इत्यस्यां दशायां द्वित्वं स्यात्तदा ओकारस्य उपधात्वाऽभावादेव ह्यस्वाऽप्रसक्तेस्तन्निषेदार्थमृदित्करणमनर्थकं स्यात्।तस्मादुपधाह्यस्वात्मकमुपधाकार्यं द्वित्वात्प्रबलमिति विज्ञायते इत्यर्थः। ननु भवतु उपधाह्यस्वो द्वित्वात्प्रबलः, प्रकृते तु उपधागुणः कथं द्वित्वात्प्रबलः स्यादित्यत आह-- सामान्यापेक्षेति। उपधाह्यस्वस्य उपधाह्यस्वस्य उपधाकार्यत्वेन रूपेण द्वित्वात्प्राबल्यविज्ञानादित्यर्थः। वस्तुतस्तु "णौ चङ्युपधायाः" इति सूत्रे"यदमोणिमृदितं करोति तज्ज्ञापयति द्विर्वचनाद्ध्रस्वत्वं बलीय" इति विशिष्य उपधाह्यस्वग्रहणात्सामान्यापेक्षत्वं ज्ञापकस्य चिन्त्यमिति

शब्देन्दुशेखरे प्रपञ्चितम्।

तत्त्व-बोधिनी

रलो व्यपधाद्धलादेः संश्च ३८७, १।२।२६

रलो व्युपधा। "न क्त्वा से"डित्यतः सेडिति वर्तते। चकारेण क्त्वायाः सङ्ग्रहः। "असंयोगा"दित्यतः किदिति, "नोपधा"दित्यतो वेति चानुवर्तते। तदाह- क्त्वासनावित्यादि। सेट् किम्?। भित्त्वा। छित्त्वा। बुभुक्षते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ऊकालः १।१ अच् १।१ ३१ ह्रस्व-दीर्घ-प्लुतः १।१ ३१

समासः॥

उ, ऊ, ऊ३कालः इति {अकः सवर्णे दीर्घः (६।१।९७)} इत्यनेन त्रयाणाम् उकाराणां दीर्घत्वम्) ऊकालः। कालशब्दः प्रत्येकम् उकारं प्रति सम्बध्यते, उकालः, ऊकालः, ऊ३कालः इति॥ उ ऊ ऊ३कालः इव कालः यस्य अचः सः ऊकालः, बहुव्रीहिः।
ह्रस्वश्च दीर्घश्च प्लुतश्च, ह्रस्वदीर्घप्लुतः, इतरेतरद्वन्द्वः। ह्रस्वदीर्घप्लुतः इत्यत्र {सुपां सुलुक्० (७।१।३९)} इत्यनेन जसः स्थाने सुः॥ यद्वा ह्रस्वदीर्घप्लुतः इत्यत्र स्माहारो द्वन्द्वः, छान्दसत्वात् नपुंसकताऽभावः।

अर्थः॥

उ ऊ ऊ३ मात्रिक-द्विमात्रिक-त्रिमात्रिक इत्येवं कालः यः अच् सः यथासङ्ख्यं ह्रस्व-दीर्घ-प्लुत-संज्ञकः भवति।

उदाहरणम्॥

ह्रस्वः - दधिच्छत्रम्, मधुच्छत्रम्। दीर्घः - कुमारी, गौरी। प्लुतः - देवदत्त३अत्र न्वसि।
काशिका-वृत्तिः
ऊकालो ऽज्झ्रस्वदीर्घप्लुतः १।२।२७

ऊ इति त्रयाणाम् अयं मात्रिकद्विमात्रिकत्रिमात्रिकाणां प्रश्लिष्टनिर्देशः। ह्रस्वदीर्घप्लुतः इति द्वन्द्वैकवद् भावे पुंल्लिङ्गनिर्देशः। उ ऊ ऊ३ इत्येवं कालो अज् यथाक्रमं ह्रस्वदीर्घप्लुतः इत्येवं संज्ञो भवति। उकालो ह्रस्वः दधि। मधु। ऊकालो दीर्घः कुमारी। गौरी। ऊ३कालः प्लुतः देवदत्त३ अत्र न्वसि। कालग्रहणं परिमाणार्थम्। दीर्घप्लुतयोः ह्रस्वसंज्ञा मा भूत्। आलूय, प्रलूय, ह्रस्वस्य पिति कृति तुक् ६।१।६९ इति तुङ् न भवति। अज्ग्रहणं संयोगाच्समुदायनिवृत्यर्थम्। प्रतक्ष्य, प्ररक्ष्य, ह्रस्वाश्रयस् तुङ् मा भूत्। तितौच्छात्रम्, दीर्घात् ६।१।७३, पदान्ताद् वा ६।१।७३ इति विभाषा तुङ् मा भूत्। ह्रस्वदीर्घप्लुतप्रदेशाः ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७। अकृत्सर्वधातुकयोर् दीर्घः ७।४।२५। वाक्यस्य टेः प्लुत उदात्तः ८।२।८२।
लघु-सिद्धान्त-कौमुदी
ऊकालोऽज्झ्रस्वदीर्घप्लुतः ५, १।२।२७

उश्च ऊश्च ऊ३श्च वः; वां कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्। स प्रत्येकमुदात्तादि भेदेन त्रिधा।

न्यासः

ऊकालोऽज्झ्रस्वदीर्घप्लुतः। , १।२।२७

ऊः कालो यस्याचः स ऊकालः। ननु चायुक्तोऽयं निर्देशः, तथा हि-- ऊ इति शब्दः कालस्तु क्रिया, तत् कुतोऽत्र सामानाधिकरण्यम्? नैष दोषः; यस्मात् "ऊ" इत्येतत्सहचरितायामुच्चारणक्रियायामिह साहचर्यात् "ऊ" इत्येष शब्दो वत्र्तते, एवमप्ययुक्तम्; यतः "ऊ" इत्येतत्सहचरितं यदुच्चारणं तदूकारस्यैव, नान्यस्याचः। तत्कथं सोऽन्यसम्बन्धिन्या क्रियया ऊकारलः स्यात्, न हि यज्ञदत्तसम्बन्धिनीभिश्चित्रगवीभिर्देवदत्तश्चित्रगुर्भवति? अयमप्यदोषः; वत्यर्थस्येह गमयन्तीत्युक्तमेतत्। तदेतदुक्तं भवति-- "ऊ" इत्येतत्सहचिरतयोच्चारणक्रियया तुल्योच्चारणक्रिया कालालख्या यस्याचः स ऊकाल इति। ननु च ऊकाल इत्येकः संज्ञी, संज्ञास्तु तिस्त्रः, ततो वैषम्यात् संख्यातानुदेशो न प्राप्नोतीति यो मन्येत, तं प्रत्याह-- "ऊ इति त्रयाणाम्" इत्यादि। मात्रिकाणां त्रयाणामकः सवर्णे ६।१।९७ दीर्घत्वमेकादेशं कृत्वा "ऊ" इति निर्देशः कृत इत्यर्थः। कुतः पुनरेतद्विज्ञायते त्रयाणामेकः प्रश्लेषनिर्देश इति? तिसृणां संज्ञानां विधानसामश्र्यात्। न ह्येकस्य भिन्नप्रयोजनमन्तरेणानेकसंज्ञाविधानमर्थवद्भवति। न चेहैकस्यानेकसंज्ञाकरणे भिन्नप्रयोजनमस्ति। "ह्यस्वदीर्घप्लुत" इति यद्येक एवायं शब्दः संज्ञा स्यात्, लाघवार्थत्वात् संज्ञाकरणस्य, महत्याः संज्ञायाः करणमयुक्तं स्यात्। किञ्च-- आवृत्तिधर्माणः संज्ञाशब्दाः प्रदेशेषु भवन्ति, न चायं समुदाय संज्ञाशब्दाः प्रदेशेषु भवन्ति, न चायं समुदायः प्रदेशेष्वावत्र्यते,अपि तु प्रत्येकं ह्यस्वादिशब्दाः। तस्मात् तेषां द्वन्द्वं कृत्वा निर्देश इति मत्वाह- "ह्यस्वदीर्घप्लुतः" इत्यादिः। द्वन्द्वैकवद्भावस्तु "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इति वचनात्। ननु च द्वन्द्वैकवद्भावे "स नपुंसकम्" २।४।१७ इति नुपंसकत्वेन भवितव्यम्, तत्कथं पुंल्लिङ्गेन निर्देशः, सौत्रत्वान्निर्देशस्य। छन्दसि "व्यत्ययो बहुलम्" ३।१।८५ इति लिङ्गव्यत्यय उक्तः। "छन्दोवत्सूत्राणि भवन्ति" (म।भा।१।१।१) इत्यविरुद्धास्य पुंल्लिङ्गता। उ ऊ ऊ३ इत्यनया आनुपूर्व्यैषां प्रश्लेष इति दर्शयति। कुतः पुनरेष निश्चयः-- एषैवैषामानुपूर्वीति? एवं मन्यते-- "विभाषा पृष्टप्रतिवचने हेः" ८।२।९३ इत्येकमात्रिकस्य हेः प्लुतविधानाज्ज्ञायते-- न मात्रिकोऽन्त्य इति। अन्त्यत्वे हि सति तस्य प्लुतसंज्ञा स्यात्। एवञ्च प्लुतविधानमनर्थं स्यात्। द्विमात्रिकोऽप्यन्त्यो न भवति; "ओमभ्यादाने" ८।२।८७ इति द्विमात्रिकस्य प्लुतविधानात्। तस्य चान्त्यत्वे हि सति यदि प्लुतसंज्ञा स्यात्, तदा च प्लुतस्य प्लुतविधानमनर्थकं स्यात्। तसमादन्ते एकमात्रिकद्विमात्रिकौ न भवतः। मध्येऽप्येकमात्रिको न भवति, "अतो दीर्घो यञि" ७।३।१०१ इति "सुपि च" ७।३।१०२ इतिच दीर्घविधानसामश्र्यात्। यदि मध्य एकमात्रिकः स्यात् तदा तस्य दीर्घसंज्ञा स्यात्,दीर्घस्य दीर्घवचनमकिञ्चित्करं स्यात्, तस्मादादावेकमात्रिकत्वे हि सति पारिशेष्यान्मध्ये द्विमात्रिकः, अन्ते त्रिमात्रिक इति। "उ ऊ ऊ३" इति। अत्राप्युकारादिसहचरितायामुच्चारणक्रियायमुकारादयो वत्र्तन्ते। एवं कालोऽजिति यकारस्य लोपः। ननु चोकारोऽयमण् गृह्रमाणः सवर्णान् गृह्णातीत्यत उकारेण दीर्घप्लुतयोग्र्रहणे सति तयोरपि ह्यस्वसंज्ञा भवतीत्यत आह- "कालग्रहणम्" इत्यादि। कालग्रहणे हि येषामेताःसंज्ञा विधीयते तेषां यथाक्रममेकमात्रिकत्व द्विमात्रिकत्वत्रिमात्रिकत्वानि विशेषणानि लभ्यन्ते। तथा हि, कालग्रहणेसति प्रत्येकं वाक्यपरिसमाप्तौ क्रियमाणायां त्रयो बहुव्रीहयो भवन्ति- उः कालो यसय् स उकालः, ऊः कालो यस्य स ऊकालः, ऊ३#ःकालो यस्य सः ऊ३ कालः। एषां यथार्ममेकमात्रिकद्विमात्रिकत्रिमात्रिका अचोऽन्यपदार्थाः। यस्मान्मात्रिक एवाचः "उ" इत्येतत्सहचारिण्या उच्चारमक्रियायास्तुल्यकालः; एवं द्विमात्रिक एवाच "ऊ" इत्येतत्सहचारिण्या उच्चारणक्रियायास्तुल्यकालः; एवं त्रिमात्रिक एवाच "ऊ३" इत्येतत्सहचारिण्या उच्चारणक्रियायास्तुल्यकालः। एवं च सति मात्रापरिमाणस्याचो ह्यस्वसंज्ञा विधीयमाना सत्यप्युकारेण दीर्घप्लुतयोग्र्रहणे तयोर्न भवति, न हि तौ मात्रा परिमाणौ। तेन आलूय, परिणीयेत्यत्र ह्यस्वाश्रयस्तुङ न भवति। "प्रत्यक्ष्य, प्रक्ष्य" इति। "तक्षू त्वक्षू तनूकरणे" (धा।पा।६५५, ६५६) "रक्ष पालने" (धा।पा।६५८)

"कुगतिप्रादयः" २।२।१८ इति समासे कृते "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ७।१।३७ इति ल्यप्। तत्र परतो द्वयोरर्धमातर्योर्हलोः संयोगसंज्ञिनोरूकाल्त्वमस्तीत्यसत्यज्ग्रहणे ह्रस्वसंज्ञा स्यात्, ततश्च ह्रस्वाश्रयस्तुक प्रसज्येत। "तितौच्छत्रम्" इति। अत्राकारोकारचोः समुदायस्य ऊकालत्वाद् द्विमात्रिकत्वमस्तीति दीर्घसंज्ञा स्यात्। ततश्च "पदान्ताद्वा" ६।१।७३ इति विकल्पितस्तुक् प्रसज्येत। अज्ग्रहणे तु सति दीर्घसंज्ञा न भवति,अच्समुदायस्याज्ग्रहणेनाग्रहणात्। ननु च सत्यामपि तस्यां समुदायाश्रयायां दीर्घसंज्ञायायमवयवाश्रया ह्रस्वसंज्ञा भविष्यति। तदाश्रयस्तुङनित्य एव, नैतदस्ति; परत्वाद्दीर्घाश्रयस्तुग्विकल्पः प्राप्नोति। न चैवं विधविषये पुनः प्रसङ्गविज्ञानमस्ति; यत्र पूर्वो विधिः प्रवत्र्तमानः परविधिविज्ञानं न बाधते तत्रैतद्भवति-- "पुनः प्रसङ्गविज्ञानात् सिद्धम्" इति, इह तु नित्यो विधिः परविधिविकल्पविज्ञानं बाधते; नित्यविकल्पयोर्विरोधात्। ततश्च "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (व्या।प।४०) इति परिभाषयैव विकल्पः स्यात्। तस्मादज्ग्रहणं

बाल-मनोरमा

ऊकालोऽज्झ्रस्वदीर्घप्लुतः ६, १।२।२७

तदेवमणादिसंज्ञासु सिद्धासु अचो ह्रस्वादिसंज्ञां विधत्ते--ऊकालोऽजिति। "ह्रस्वदीर्घप्लुत" इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। इतरेतरयोगद्वन्द्वो वा। तथा सत्येकवचनमार्षम्। उ ऊ ऊ३ इति त्रयाणां एकमात्रद्विमात्रत्रिमात्राणां द्वन्द्वसमासे सति सवर्णदीर्घेण ऊ इति प्रश्लिष्टनिर्देशः। तेषां कालः ऊकालः। कालशब्दो मात्रापर्यायः कालसदृशे लाक्षणिकः। ऊकालः कालो यस्येति विग्रहः। "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः" इति द्विपदो बहुव्रीहिः। ऊकालशब्दे पूर्वपदे उत्तरखण्डस्य कालशब्दस्य लोप इत्यभिप्रेत्य फलितमाह--वां काल इवेत्यादिना। "वः" इति ऊशब्दस्य प्रथमाबहुवचनम्। वामिति षष्ठीबहुवचनम्। वां काल इव कालो यस्येति फलितार्थकथनम्। उक्तरीत्या द्विपद एव बहुव्रीहिः। क्रमादिति।

यथासंख्यसूत्रलभ्यमेतत्। इहैव तत्सूत्रमुपन्यसितुमुचितम्। नच उ ऊ ऊ३ इत्युवर्णानां कथं ह्रस्वदीर्घप्लुतसंज्ञाः, तेषामूकालसदृशकालत्वाऽभावात्, सादृश्यस्य भेदनिबन्धनत्वादिति वाच्यम्। ऊ शब्दस्यात्र एकमात्रद्विमात्रत्रिमात्रकुक्()कुटरुतानुकरणत्वात्। स इति। सः=ह्रस्वः दीर्घः प्लुतश्च अच्, प्रत्येकमुदात्तादिभेदेन=उदात्तत्वेनानुदात्तत्वेन स्वरितत्वेन च धर्मविशेषण, त्रिधा = त्रिभिः प्रकारैर्वर्तत इत्यर्थः।

तत्त्व-बोधिनी

ऊकालोऽज्झ्रस्वदीर्घप्लुतः ८, १।२।२७

ऊकालोऽज्झ्रस्वदीर्घप्लुत इति। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। "ऊ" इति त्रयाणां प्रश्लेषेण निर्देश इत्याह-उश्च ऊश्च ऊश्चेति। वः। वामिति। त्रयाणां सवर्णदीर्घे कृते जसि परतो यणि-वः। आमि तु वाम्। वां काल इव कालो यस्येति। फलितार्थकथनमिदम्। विग्रहस्तु वः कालो यस्येति बोध्यः। "ऊ" शब्देन स्वोच्चारणकालो लक्ष्यते। अच् किम्?। संयोगस्य माभूत्, प्रतक्ष्य, प्ररक्ष्य। कषयोरेकमात्रत्वेन ह्रस्वसंज्ञायां "ह्रस्वस्य पिति कृति-" इति तुक् स्यात्। आ ये इति। "निपाता आद्युदात्ताः" इत्याकार उदात्तः। यच्छब्दस्तु "फिष" इत्यन्तोदात्तः। ततः परस्य जसः सुस्वादनुदात्तत्वम्, त्यदाद्यत्वे शीभावे आद्गुणे च सति "एकादेश उदात्तेन" इत्येकार उदात्तः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अचः ६।१ च ० अच् १।१ २७ ह्रस्व-दीर्घ-प्लुतः १।१ २७

अर्थः॥

परिभाषेयं स्थानिनियमार्था। ह्रस्व, दीर्घ, प्लुत इत्येवं विधीयमानः यः अच्, सः अचः एव स्थाने भवति।

उदाहरणम्॥

अतिरि, अतिन् अपगु। पूर्वसूत्रस्य अपि उदाहरणानि अत्र बोद्धव्यानि।
काशिका-वृत्तिः
अचश् च १।२।२८

परिभाषा इयं स्थानिनियमार्था ह्रस्वदीर्घप्लुतः स्वसंज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः। वक्ष्यति ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७, रैअतिरि। नौअतिनु। गोउपगु। अचः इति किम्? सुवाग् ब्रह्मणकुलम्। अकृत्सार्वधातुकयोर् दीर्घः ७।४।२५ चीयते। श्रूयते। अचः इति किम्? भिद्यते। धिद्य्ते। वाक्यस्य टेः प्लुत उदात्तः ७।२।८२ देवदत्त३। यज्ञदत्त३। अचः इति किम्? अग्निचि३त्। सोमसु३त्। तकारस्य मा भूत्। स्वसंज्ञया वधाने नियमः। अचिति वर्तते। इह मा भूत्। द्यौः पन्थाः। सः द्यौभ्याम्। द्युभिः। अत्र नियमो न अस्ति।
न्यासः
अचश्च।, १।२।२८

परिभाषेयं लिङ्गवती स्थानिनियमार्था प्रदेशेषु "ह्यस्वो नपुंसके प्रातिपदिकस्य" १।२।४७
इत्येवमादिषूपतिष्ठते;तदुपस्थाने च षष्ठीद्वयं प्रादुर्भवति; विशेषणविशेष्यभावं प्रति कामचारात्। "ह्यस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इत्यत्राचा प्रातिपदिकं गृह्रमाणं विशिष्यते-- अजन्तस्य प्रातिपदिकस्येति, न तु प्रातिपदिकेना-ज्विशिष्यते। यदि हि प्रातिपदिकेनाज्विशिष्येत-- प्रातिपदिकस्य योऽजिति, तदा मध्यस्थितस्याप्यचो ह्यस्वः स्यात्। "सुवाग् ब्राआह्णकुलम्" इति। अचा तु प्रातिपदिके विशिष्यमाणे प्रातिपदिकस्यैवेत्येषा स्थानषष्ठी भवति, न चावयवषष्ठी, तेनालोऽन्त्यस्यैवाचो ह्यस्वो भवति। "वाक्यस्य टेः प्लुत उदात्तः" ८।२।८२ इत्यत्र गृह्रमाणेन टिशब्देनाज्विशिष्यते-- टेर्योऽजिति। तेन टेर्मध्यवर्तिनोऽप्यचः प्लुतो भवति। यदि त्वचा टिर्विशिष्यते-- अजन्तस्य टेरिति, तदेहैव स्यात्-- देवदत्ता३ इति; इह तु न स्यात्-- अग्निचिदिति। चकारेणाजित्यनुकृष्यते, त्सय प्रयोजनमिहैव वक्ष्यति। अतिरि-इत्यादीन्युदाहरमानि "एच इग्घ्रस्वादेशे" १।१।४७ इत्यत्र व्युत्पादितानि। चीयते इति कर्मणि लकारः। "संज्ञाविधाने नियमः" इत्यत्र युक्तिमाह-- "अजिति वत्र्तते" इति। अज्ग्रहणे ह्नुवत्र्तमाने ह्यस्वादिशब्दा अनुवत्र्तमाना अच एवोपस्थानं प्रति व्याप्रियन्ते;तस्य स्वयमेवोपस्थितत्वात्। ततश्च स्वरूपमात्रपदार्थकाः सन्तो विधीयमानस्याचो विशेषणतामुपयान्ति। तत्रैवमभिसम्बन्धः क्रियते-- अः स्थानेऽज् भवति "ह्यस्वदीर्घप्लुतः इत्येवं संज्ञया विधीयमान इति। "द्यौः, पन्थाः, सः" इति। एतानि "इको गुणवृद्धी" १।१।३ इत्यत्र व्युत्पादितानि। एषु च यथायोगं "दिव औत्" ७।१।८४ "पथिमथ्यृभुक्षामात्" ७।१।८५ "त्यदादीनामः" ७।२।१०२ इत्येभिरौकारादयः स्वरूपेण विधीयमाना दीर्घादिसंज्ञया न विधीयन्त इति हल एव स्थाने ते भवन्ति, नाचः। द्युभ्याम्, द्युभिरित्यत्रापि "दिव उत् इत्युकारो ह्यस्वसंज्ञया न विधीयत इति हल एव स्थाने भवति, नाचः। ननु च द्यौरित्यादीनि त्रीण्युदाहरणानि "इको गुणवृद्धि" १।१।३ इत्यनेनैव संज्ञाविधाननियमेन सिद्धानि, तत्र हि तस्याप्येतानि प्रत्युदाहरणानि प्रागुपन्यस्तानि, तस्मान्नार्थ एतदर्थेन संज्ञया विधीयमानेन नियमेन? सत्यमेतत्; एवं मन्यते-- द्युभ्याम्, द्युभिरित्येवमर्थं संज्ञाविधाने नियमः कत्र्तव्यः; न

ह्रुकारस्य गुणसंज्ञास्ति, नापि वृद्धिसंज्ञा; यतः पूर्वेणैव संज्ञाविधाननियमेनैतदपि सिद्ध्यति। तस्मादन्यार्थोऽयं संज्ञाविधाननियमः क्रियमाणो येऽपि विस्मरणशीलाः पूर्वस्य नियमस्य प्रयोजनं न स्मरन्तिताननुग्रहीतुम्-- द्यौः, पन्था-, स इत्येवमर्थोऽपि भवति॥

बाल-मनोरमा

अचश्च ३७, १।२।२८

अचश्च। अच इत्यपि षष्ठ()न्तशब्दः स्वरूपपरः, पूर्वसूत्रे इक इतिवत्। ऊकालोऽजित्यतः "अच्" "ह्रस्वदीर्घप्लुत" इत्यनुवर्तते। "इति यत्र विधीयते" इत्यध्याहार्यम्। फलितमाह--ह्रस्वेत्यादिना। "दिव उत्" इत्यादौ तु नेदं प्रवर्तते, ह्रस्वादिशब्दानामश्रवणात्। "ह्रस्वो नपुंसके प्रातिपादिकस्ये"त्याद्युदाहरणम्। श्रीपम्। नेह--सुपात् ब्राआह्मणकुलम्।

तत्त्व-बोधिनी

अतश्च ३१, १।२।२८

अतश्च। ह्रस्वदीर्घेत्यादि। एतच्च "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इति सूत्रादझ्यस्वदीर्घप्लुत इत्यनुवर्त्त्य "ह्रस्वो दीर्घः प्लुत इति योऽ"जिति योजनया लभ्यते। ह्रस्वेत्यादि किम्?, "दिव उत्" द्युभ्याम्। "अष्टन आ विभक्तौ" अष्टौ। "अष्टाभ्य औ"शित्यत्र कृतात्त्वनिर्देशाज्ज्ञापकाज्जश्शसोर्विषये प्रवत्र्तमानस्य "अष्टन" इत्यात्त्वस्याऽच्स्थानिकत्वे सति नैतत्सिद्ध्येदिति दिक्। षष्ठ()न्तं पदमिति। तच्च सति संभवे सामानाधिकरण्येनैव संबध्यते न वैयधिकरण्येन। तेन "ह्रस्वो नपुंसके" इत्यजन्तप्रातिपदिकस्यैव ह्रस्वः। श्रीपम्। नेह सुवाग्ब्राआह्मणकुलम्। "शमामष्टानां दीर्घः-" इत्यत्र तु सामानाधिकरण्याऽसंभवत्-शमादीनामच" इति संबध्यते , तेन "शाम्यती"त्यादि सिद्धम्। "वाक्यस्य टेः प्लुतः-" इत्यत्र सामानाधिकरण्यसंभवेऽपि टेग्र्रहणसामथ्र्याट्टेरवयवस्याचः प्लुत इति व्याख्यायते। अन्यथा "अलोऽन्त्यस्य" "अतश्चे"ति परिभाषाभ्यामेहि कृष्णेत्यादिवाक्यान्त्यस्याऽचः प्लुतसिद्धौ किमनेन टेग्र्रहणेन?। तेन "आयुष्मानेधीन्द्रवर्मन्" इत्यादि सिध्यतीति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उच्चैः ० उदात्तः १।१ अच् १।१ २७

अर्थः॥

ताल्वादिषु हि भागवत्सु स्थानेषु वर्णाः निष्पद्यन्ते, तत्र यः समाने स्थाने ऊर्ध्वभागनिष्पन्नः अच्, सः उदात्तसंज्ञः भवति। अत्र महाभाष्यकारः आह -- आयामो दारूण्यमणुता खस्येति उच्चैःकराणि शब्दस्य -- इति। आयामः = गात्राणां निग्रहः। दारुण्यम् = स्वरस्य दारुणता, रूक्षता। अणुता स्वस्य = कण्ठस्य संवृतता, उच्चैःकराणि शब्दस्य।

उदाहरणम्॥

औपगवः, ते, ते, के॥

काशिका-वृत्तिः

उच्चैरुदात्तः १।२।२९

अचिति वर्तते। उदात्ताऽदिशब्दाः स्वरे वर्णधर्मे लोकवेदयोः प्रसिद्धा एव। ते इह तद्गुणे ऽचि परिभाष्यन्ते। उच्चैरुपलभ्यमानो यो ऽच् स उदात्तसंज्ञो भवति। उच्चैः इति च श्रुतिप्रकर्षो न गृह्यते, उच्चैर् भाषते, उचैः पठति इति। किं तर्हि? स्थानकृतम् उच्चत्वं संज्ञिनो विशेषणम्। ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते। तत्र यः समाने स्थाने ऊर्ध्वभगनिष्पन्नो ऽच् स उदात्तसंज्ञो भवति। यस्मिन्नुचार्यमाणे गात्राणामायामो निग्रहो भवति, रूक्षता अस्निग्धता स्वरस्य, संवृतता क्ण्ठविवरस्य। ये। ते। के। उदात्तप्रदेशाःआद्युदात्तश्च ३।१।३ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

उच्चैरुदात्तः ६, १।२।२९

न्यासः

उच्चैरूदात्तः। , १।२।२९

उदात्तादयो लोकवेदयोः प्रसिद्धाः। तत् किं संज्ञाकरणेनेति यश्चोदयेत् तं प्रत्याह-- "उदात्तादिशब्दाः" इत्यादि। आदिशब्देनानुदात्तस्वरितयोः परिग्रहः। एवकारो भिन्नक्रमो वर्णधर्मे इत्यस्यानन्तरं द्रष्टव्यः। लोकवेदयोरुदात्तादयः शब्दा वर्णनां यो धर्मः = गुणस्तत्रैव प्रसिद्धाः, न तु तद्वित्यचि। तस्मादिह व्याकरण उदात्तादयो धर्मा यस्याचस्तद्गुणेऽचि संज्ञाप्यन्ते = परिभाष्यन्ते; अन्यथा प्रदेशेषूदात्तादिशब्दश्रवणाद्वर्णधर्म एव गृह्येत, न तद्वानजित्यभिप्रायः। उच्चैरिति श्रुतिप्रकर्षेऽस्ति-- श्रुतिप्रकर्षवत्युच्चैर्भाषते उच्चः पठतीति। अस्ति च प्रमाणाधिकरणवाची उच्चैः स्थितो देवदत्त इति, उच्चैर्नाम प्रमाणम्, तस्य तदधिकरणं तदिहोच्चैः शब्देनोच्यते। तदिह द्वितीयस्योच्चैः शब्दस्यार्थो गृह्यते, नेतरस्येति दर्शयितुमाह-- "उच्चैः" इति। उच्चैर्भाषते इत्येवमादौ तु वाक्ये प्रयुक्तस्योच्चैः शब्दस्य योऽर्थः श्रुतिप्रकर्षः स उच्चैरित्यत्र न गृह्यते। यदि गृह्येत, उपांशुप्रयोग उदात्तादिसंज्ञा न स्यात्; प्रकर्षाभावात्, प्रकर्षस्थितत्वादुदात्तादयो न विशिष्येरन्। य एव हि कञ्चित् प्रत्युच्चैर्भवति, स एव हि कञ्चित्प्रतति नीचैर्भवति। एवञ्च सर्वमुदात्तं स्यात्, अनुदात्ततमोऽपि चेष्यत इत्यभिप्राय। "स्थानकृतम्" इत्यादि। उच्यता नाम प्रमाणविशेषः, तदधिकरणभूतस्थानमुच्चैर्भवति। एवञ्च सर्वनमुदात्तं न स्यात्। अनुदात्तमुच्चैरुच्यत इत्यर्थः। "भागवत्सु" इति। भागा अवयवा येषां तानि भागवन्ति। ते भागास्ताल्वादिषु स्थानेष्वौत्तराधर्येण व्यवस्थिताः। स्थानमुच्चैः शब्देनोच्यते, तत् कुतः संज्ञिन उच्चैस्त्वविशेषणम्? उच्चैस्थाननिष्पन्नत्वात्। तत्र समाने स्थान उच्चैरूध्वभागे यो निष्पन्नः स उदात्तसंज्ञो भवति। यदि स्थाने य ऊध्वभागनिष्पन्नोऽच् स उदात्तसंज्ञो भवतीत्येतावदुच्यते, एवञ्च स एवानवस्थितदोषः। तथा हि- अल्पशरीरेषु य एव ताल्वादिभाग उच्चैर्भवति, स एव महाशरीरेषु ताल्वादिभागापेक्षया नीचैर्भवति। अतः "समान" इत्येतत् स्थानविशेषणमुक्तम्। एतच्च् लघ्वर्थत्वात् संज्ञाकरणस्यैकाक्षरायां संज्ञायां कर्तव्यायामनेकाक्षरसंज्ञाकरणाल्लभ्यते। ग्रन्थाधिक्यादर्थाधिक्यं भवतीति। ननु च ग्रन्थाधिक्यादत्र कश्चिदाचार्यस्याधिकोऽर्थोऽभिप्रेत इत्येतावन्मात्रं प्रतीयते, समानत्वमित्येषोऽर्थ विशेषः कुतो लभ्यते? अविच्छिन्नादुपदेशपारम्पर्यात्। तत् पुनः समानत्वं वक्त्रभिन्नत्वाद्वेदितव्यम्; न तु ताल्वादिस्थानस्याभिन्नत्वात्; अन्यथा तालव्यमेवापेक्ष्योदात्तः स्यात्, न तु कण्ठादीन्। वक्तुरभेदात् तद्()द्वारेण भिन्नानामपि ताल्वादीनां समानत्वेऽपि विज्ञायमान एष दोषो न भवति। किंलक्षणः पुनरसावुच्चभागनिष्पन्नोऽजित्याह-- "यस्मिन्" इत्यादि। "आयामः" इत्यस्य विवरणं "निग्रहः" इति। निग्रहः = स्तब्धता। संवृतकण्ठता = कण्ठविवरस्य संवृतता। अत एव शनैर्निष्क्रामन् वायुर्गलावयवाञ्शोषयति। रूक्षता भवत्यस्निग्धता। "ये ते के" इति। यत्त()त्कशब्देभ्यस्त्यदाद्यत्वम्, "अतो गुणे" ६।१।९४ पररूपत्वम्,"जसः शी" ७।१।१७, "आद्गुणः" ६।१।८४। अत्र प्रातिपदिकस्वरेण प्रकृतिरूदात्ता। "अनुदात्तौ सुप्पितौ" ३।१।४ इति विभक्तिस्वरः। एकादेशस्तु "एकादेश उदात्तेनोदात्तः" ८।१।५ इति॥

बाल-मनोरमा

उच्चैरुदात्तः ७, १।२।२९

उदात्तसंज्ञामाह--उच्चैरुदात्तः। नादधर्मविशेष उच्चैस्त्वं नेह विवक्षितम्, उपांशूच्चार्यमाणे अव्याप्तेः। किन्तूच्चैश्शब्दोऽधिकरणशक्ति प्रधान ऊध्र्वभागे इत्यर्थे वर्तते। ऊध्र्वावयवस्य चावयव्यपेक्षायां तालुकण्ठादिवर्णाभिव्यक्तिस्थानानामित्यर्थाल्लभ्यते। उकालोऽजिति सूत्रादजित्यनुवर्तते, तदेतदाह-ताल्वादिष्वित्यादिना। सभागेष्विति। ताल्वादीनां सावयवत्वकथनमूध्र्वभागे इत्यस्योपपादनार्थम्, तेषाम् अखण्डत्वे "ऊध्र्वभागे" इत्यनुपपत्तेः। उदात्तमुदाहरति-आ ये इति। "आये मित्रावरुणा" इत्यृचि आकार एकारश्च उदात्त इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नीचैः ० अनुदात्तः १।१ अच् १।१ २७

अर्थः॥

समाने स्थाने नीचभाग=अधोभागनिष्पन्नः यः अच्, सः अनुदात्तसंज्ञकः भवति। अत्रापि महाभाष्यकारः आह -- अन्ववसर्गो मार्दवमुरुता स्वस्येति नीचैः कराणि शब्दस्य -- इति। अन्ववसर्गः = गात्राणां शिथिलता। मार्दवं = स्वरस्य मृदुता स्निग्धता। उरुता खस्य = महत्ता कण्ठस्येति नीचैःकराणि शब्दस्य।

उदाहरणम्॥

नमस्ते देवदत्त, त्व, सम, सिम॥
काशिका-वृत्तिः
नीचैरनुदात्तः १।२।३०

अचिति वर्तते। नीचैरुपलभ्यमानो यो ऽच् सो ऽनुदात्तसंज्ञो भवति। समाने स्थाने नीचभागे निष्पन्नो ऽचनुदात्तः। यस्मिन्नुच्चार्यमाणे गात्राणाम् अन्ववसर्गो मार्दवं भवति, स्वरस्य मृदुता स्निग्धता, कण्ठविवरस्य उरुता महत्ता। त्व सम सिम इत्यनुच्चानि। नमस्ते रुद्र नीलकण्ठ सहस्राक्ष। अनुदात्तप्रदेशाः अनुदात्तौ सुप्पितौ ३।१।४ इत्येवम् आद्यः।
लघु-सिद्धान्त-कौमुदी
नीचैरनुदात्तः ७, १।२।३०

न्यासः
नीचैरनुदात्तः। , १।२।३०

अन्ववसर्ग इत्यस्य विवरणं मार्दवमिति। शैथिल्यमित्यर्थः। मृदुतेत्यस्य विवरणं स्निग्धतेति। उरुतेत्यस्यापि महत्तेति। महत्त्वादेव कण्ठविवरस्य पुनः शीघ्रं वायुर्निष्क्रामन् गलावयवान्न शोषयतीति। अतः स्वरस्य स्निग्धता भवति। त्व-सम-सिम-नेमेत्यनुच्चानीति सर्वादिष्वेव पठ()न्ते। अनुच्चानि अनुच्चानि अनुदात्तानीत्यर्थः। "नमस्ते रुद्र" इत्यादि। तेशब्दः "तेमयावेकवचने" ८।१।२२ इति "अनुदात्तं सर्वमपादादौ" ८।१।१८ इत्यधिकारादनुदात्तः। रुद्रादयोऽपि "आमन्त्रितस्य च" ८।१।१९ इत्यनेनाष्टमिकेन सर्वेऽनुदात्ता भवन्तीति।

बाल-मनोरमा
नीचैरनुदात्तः ८, १।२।३०

अनुदात्तसंज्ञामाह-नीचैरनुदात्तः। स्पष्टमिति उक्तरीत्या ताल्वादिषु अधोभागे निष्पन्नोऽच् अनुदात्तसंज्ञः स्यादिति स्पष्टार्थकमित्यर्थः। अर्वाङ्? इति। "अर्वाङ् यज्ञस्संक्राम" इत्यृचि आद्योऽकारोऽनुदात्त इत्यर्थः।

तत्त्व-बोधिनी
नीचैरनुदात्तः ९, १।२।३०

अर्वाङिति। अर्वन्तमञ्चतीति अर्वाङ्। "ऋत्विक्-" आदिना अञ्चतेः सुप्युपपदे क्विन्। "ऋ गतौ" इत्यस्मात् "स्नामद्रिपद्यर्ति" इत्यादिना वनिपि गुणे च निष्पन्नोऽर्वञ्छब्दो धातुस्वरेणाद्युदात्तः। वनिपः पित्त्वेनाऽनुदात्तत्वातच्। अञ्चतेरकारोऽपि धातुस्वरेण नित्स्वरेण वा उदात्तः। "उपपदमतिङ्" इति समासे कृते "समासस्य" इति स्वरेण तदपवादभूतेन "गतिकारकोपपदात्कृत्" इति कृदुत्तरपदप्रकृतिस्वरेण वा अञ्चतेरकार उदात्तः। वनो नलोपे सवर्णदीर्घे च कृते "एकादेश उदात्तेन" इत्याकार उदात्त इति "अनुदात्तं पदमेकवर्जम्" इति शेषनिघातादाद्योऽकारोऽत्रानुदात्तः। एतच्च संभवाभिप्रायेणोक्तम्। वेदभाष्ये तु "अर्वाङ्-अभिमुखः" इति स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समाहारः १।१ स्वरितः १।१ अच् १।१ २७

अर्थः॥

समाहारः इत्यत्र सम् आङ् पूर्वात् हृञ्-धातोः घञ्-प्रत्ययः, समाहरणं समाहारः, पश्चात् समाहारः अस्मिन् अस्ति इति समाहारः, {अर्श आदिभ्योऽच् (५।२।१२७)} इत्यनेन मत्वर्थीयोऽच् प्रत्ययः। उदात्तानुदात्तगुणयोः समाहारः यस्मिन् अचि सः अच् स्वरितसंज्ञकः भवति।

उदाहरणम्॥

क्वं, शिक्यम्, कन्या, सामन्यः॥
काशिका-वृत्तिः
समाहारः स्वरितः १।२।३१

अचिति वर्तते। उदात्तनुदात्तस्वरसमाहारो यो ऽच् स स्वरितसंज्ञो भवति। सामर्थ्याच् च अत्र लोकवेदयोः प्रसिद्धौ गुणावेव वर्णधर्मावुदात्तानुदात्तौ गृह्येते, ना ऽचौ। तौ समाह्रियेते यस्मिन्नचि तस्य स्वरितः इत्येषा संज्ञा विधीयते। शिक्यम्। कन्या। सामन्यः। क्व। स्वरितप्रदेशाः तित् स्वरितम् ६।१।१६९ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
समाहारः स्वरतिः ८, १।२।३१

स स नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा॥

न्यासः

समाहारः स्वरितः , १।२।३१

उदात्तानुदात्तशब्दावज्विशेषयोः संज्ञे। संज्ञा हि प्रदेशेषूच्चारिताः संज्ञिनं प्रत्याययन्ति। ताभ्यामिहानुवृत्ताभ्यामुदात्तानुदात्तयोरचोरुपस्थापितयोः प्रत्ययः। तस्मात् समाहारात्मकस्याचः स्वरितसंज्ञा विधीयते। समाहारशब्दश्चसमाहरणं समाहार इति भावसाधनोऽयं लोके समुदाये रूढः। न चोदात्तानुदात्तात्मकः कश्चिदच्समुदायः सम्भवतीति, ततश्च संज्ञिनोऽसम्भवात् संज्ञापि न सम्भवीति यश्चोदयेत्, तं प्रत्याह-- "सामथ्र्याच्च" इत्यादि। उच्यते चेदम्-- उदात्तानुदात्तसमाहारः स्वरितसंज्ञो भवतीति, न च पारिभाषिकोदात्तानुदात्तसमाहारत्मनोऽचः सम्भवोऽस्ति। तत्र सामथ्र्याल्लोकवेदप्रसिद्धौ यौ धर्मावुदात्तानुदात्तौ तावेव गृह्लेते; नाचौ। नन्वेवमपि स एव दोषः, लोके प्रसिद्धोदात्तानुदात्तात्मनोऽच एषा संज्ञा विधीयते, कस्य तर्हि? लोकवेदप्रसिद्धावुदात्तानुदात्तौ समाह्रियेते यस्मिन्नचि तस्य। सम्भवति चैकस्मिन्नप्यचि तयोः समाहार इति कुतः संज्ञिनोऽसम्भवः। "समाह्रियेते यस्मिन्" इति ब्राउवताऽधिकरण साधनोऽयं समाहारशब्दो न भावसाधन इति दर्शितम्। समाह्रियेते = संहन्येते, सहितावुपलभ्येते इत्यर्थः। "शिक्यम्" इति। "पूञो यण्णुग् ह्यस्वश्च" (द।उ।१६) इति यदिति वत्र्तमाने "श्रन्सेः शि कुट् किच्च" (द।उ।८१७) इति श्रंसतेर्यत्प्रत्यये शिशब्दादेशे कुडागमे च कृते रूपम्। तित्त्वात् स्वरितम्। "कन्या" इति। "तिल्यशिक्यमत्र्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः" (फि।सू।४।७६) इत्यन्तः स्वरितम्। "सामान्यः" इति। सामनि साधुः। "तत्र साधुः" ४।४।९८ इति यत्प्रत्ययः। क्वेति किंशब्दात् सप्तम्यन्तात्"किमोऽत्" ५।३।१२ इत्यत्()प्रत्ययः। "क्वाति" ७।२।१०५ इति क्वादेशः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तस्य ६।१ आदितः ० उदात्तम् १।१ अर्धह्रस्वम् १।१

समासः॥

अर्धं ह्रस्वस्य अर्धह्रस्वम्, {अर्धं नपुंसकम् (२।२।२)} इत्यनेन तत्पुरुषसमासः।

अर्थः॥

तस्य इति सापेक्षकं पदं स्वरितः इत्येतम् अनुकर्षति। {आदितः} इत्यत्र {तसिप्रकरणो आद्यादिभ्य उपसङ्ख्यानम् (वा॰ ५।४।४४)} इत्यनेन वार्त्तिकेन तसिः प्रत्ययः, {तद्धितश्चास॰ (१।१।३७)} इत्यनेनाव्ययत्वम्। अर्धह्रस्वमात्रम् अर्धह्रस्वं, मात्रचोऽत्र {प्रमाणे लो वक्तव्यः (वा॰ ५।२।३७)} इत्यनेन वार्त्तिकेन लोपः द्रष्टव्यः। तस्य स्वरितस्य आदौ, अर्धह्रस्वम् उदात्तं भवति, शेषम् अनुदात्तम्।

उदाहरणम्॥

क्वं, कुन्यां॥

काशिका-वृत्तिः

तस्याऽदित उदात्तम् अर्धह्रस्वम् १।२।३२

उदात्तानुदात्तस्वरसमाहारः स्वरितः इत्युक्तम्। तत्र न ज्ञायते कस्मिन्नंशे उदात्तः कस्मिन्ननुदात्तः, कियान् वा उदात्तः कियान् वा अनुदात्तः इति। तदुभयम् अनेनाऽख्यायते। तस्य स्वरितस्य आदावर्धह्रस्वम् उदात्तम्, परिशिष्टम् अनुदात्तम्। अर्धह्रस्वम् इति च अर्धमात्रौपलक्ष्यते। ह्रस्वग्रहणम् अतन्त्रम्। सर्वेषाम् एव ह्रस्वदीर्घप्लुतानां स्वरितानाम् एष स्वरविभागः। शिक्यम् इत्यत्र अर्धमात्रा आदित उदात्त, अपरार्धमात्रा अनुदात्ता, एकश्रौतिर् वा। कन्या इत्यत्र अर्धमात्रा आदित उदत्ता अध्यर्धमात्रा अनुदात्ता। माणवक३ माणवक ८।२।१०३ इत्यत्र अर्धमात्रा आदित उदात्ता अर्धतृतीयमात्रा अनुदात्ता।

न्यासः

तस्यादित उदात्तर्धह्यस्वम्। , १।२।३२

आदौ = आदितः, सप्तम्यर्थे तसिः। अयमेव निर्देशो ज्ञापकः-- "आद्यादिभ्यस्तसिर्भवति" इत्यत्र। तेन तसिप्रकरणे "आद्यादिभ्यः उपसंख्यानम्" (वा।६३४) इत्येतन्न वक्तव्यं भवति। "अद्र्धह्रस्वम्" इति। ह्रस्वस्याद्र्धमित्यर्थः। "अर्धं नपुंसकम्" २।२।२ इति समासः। ततश्च "परवल्लिङ्गम्" २।४।२६ इत्यादिना पुंल्लिङ्गेन भवितव्यम्, ह्रस्वशब्दस्य पुंल्लिङ्गत्वात्, नैतदस्ति; ह्रस्वशब्दो हि प्रमाणविशेषं गुणमुपादाय प्रवृत्तः, "गुणवनचानाञ्चाश्रयलिङ्गवचनानि" इति गुणवचनत्वाच् शुक्लशब्द एव ह्रस्वशब्दस्त्रिलिङ्गः। "ह्रस्वः" इति मात्रिकस्य संज्ञा कृता, तस्यैव विभागः स्यात्, न तु दीर्घप्लुतयोरित्याशङ्क्याह-- "अद्र्धह्रस्वम्" इत्यादि। ह्रस्वस्याद्र्धमद्र्धमात्रा भवति, अतोऽद्र्धमात्रा भवति, अतोऽद्र्धह्रस्वग्रहणेनाद्र्धमात्रोपलक्ष्यते। तत एव च तस्येत्युक्तम्। त्रयाणां ह्रस्वदीर्घप्लुतानां स्वरितानां निर्देशार्थम्। यदि चाद्र्धह्रस्वग्रहणमद्र्धमात्रोपलक्षणम्, अतस्त्रयाणां निर्देशोऽर्थवान् भवति; नान्यथा। "ह्रस्वग्रहणमतन्त्रम" इति। अतन्त्रप्रधानम्, उपलक्षणार्थत्वात्। यथा काकेभ्यो दधि रक्ष्यतामित्यत्रकाकाः। तेन सर्वेषामेव ह्रस्वादीनामेष स्वरितविभागो भवति। नन्वेवमप्याष्टमिकस्य स्वरितस्य विभागो न सिध्यति, तस्यासिद्धत्वात्, नैतदेवम्; यस्मात् परविधिः पूर्वविधावसिद्धः। न चायं विधिः, किं तर्हि? तस्य विहितस्य विभागाख्यानार्थः। अथ वा-- "न मु ने" ८।२।३ इत्यत्र नेति योगविभागात् सिद्धं भवति॥।"एवश्रिर्वा" इति। पूर्वो भागोऽयमुदात्तः पटुतरः। तेनोपरज्यमानस्तद्रूपतामिवापन्नः परो भागः स्फटिकमणिरिवोपधानेनोपरक्तः शुद्धेनोदात्तेन भिन्नश्रुतिकत्वादनुदात्तव्यपदेशं नार्हति। उदात्तव्यपदेशमपि नार्हति; उपरागमात्रत्वात्। तस्मादेकश्रुतिरिति केचित्। अन्ये त्वाहुः-- पूर्वेण भागेनानुपजातरूपातिशयेन नोपरज्यते यदोत्तरभागस्तदा स्वेन रूपेण प्रतिभानादनुदात्त इति व्यपदिश्यते। यदा तूपधानेन स्फटिकमणिरिव पूर्वेण भागेन पटीयसोदात्तेनाभिभूयानुरज्यमानस्तद्रूपतामिवोपपद्यते तदैकश्रुतिरिति व्यपदिश्यते। पूर्वभागश्रुतेरभिन्नैका तुल्याकारा श्रुतिर्यस्येति कृत्वा। न हि तदानीं पूर्वोत्तरयोः स्वरितश्रुतिं प्रति कश्चित् भेदोऽस्ति; द्वयोरप्युदात्तगुणवत्तया प्रतीयमानत्वनादिति।

बाल-मनोरमा

तस्यादित उदात्तमर्धह्रस्वम् १०, १।२।३२

फलितमाह--उदात्तत्वानुदात्तत्वे इत्यादिना। ननु उदात्तत्वानुदात्तत्वयोरेकस्मिन्नपि मेलने कस्मिन्भागे उदात्तत्वस्य समावेशः , कस्मिन्भागे अनुदात्तत्वस्य समावेश इत्यत आह-तस्यादितः। तस्य = स्वरितस्य आदितः = पूर्वभागे अर्धह्रस्वमुदात्तमित्यर्थः प्रतीयते। एवं सति दीर्घस्वरिते इयं व्यवस्था न स्यात्। अत आह - ह्रस्वग्रहणतन्त्रमिति। तन्त्रं = प्रधानम्। "तन्त्रं प्रधाने सिद्धान्ते" इति कोशः। न विद्यते तन्त्रं वाच्यार्थलक्षणं प्रधानं यस्य तत् अतन्त्रं। अविवक्षितार्थकमित्यर्थः। ह्रस्वग्रहणं न कर्तव्यमिति यावत्। दीर्घस्वरितेऽप्युत्तरभागस्य वेदे अनुदात्तत्वदर्शनादिति भावः। ततश्च फलितमाह--स्वरितस्यादितोऽर्धमुदात्तं बोध्यमिति। ननु अनुदात्तत्वस्य निवेशव्यवस्था कुतो नोक्तेत्यत आह--उत्तरार्धं त्विति। ननु एवं सति अग्निमील इत्यत्र ईकारे स्वरिते कथमुत्तरार्धमनुदात्तं नेत्यत आह--तस्य चेति।

चकारो वाक्यालङ्कारे। तस्य अनुदात्तभागस्य उदात्तस्वरितपरत्वे उदात्तस्वरितौ परो यस्मात् सः उदात्तस्वरितपरः। तस्य भावः उदात्तस्वरितपरत्वम्। उदात्तपरकत्वे स्वरितपरकत्वे वा सति श्रवणं स्पष्टं भवतीत्यर्थः। अन्यत्रेति। उदात्तस्वरितपरकत्वाभावे अनुदात्तप्रचयपरकत्वे, अनुदात्तभागस्य उदात्ततरत्वापरपर्याया उदात्तश्रुतिः ऋग्वेदप्रातिशाख्ये विहितेत्यर्थः। तत्र त्वेवमुक्तम्--अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्।उदात्तं वोच्यते किंचित्स्वरितं वाऽक्षरं परम्॥"

--इति स्वरिते पूर्वभागस्य उदात्तत्वे सति परः शेष उत्तरभागः अनुदात्तः प्रत्येतव्यः। सः परः शेषः उदात्तश्रुतिः क्वचिद्भवति। किं सर्वत्र एवं(), नेत्याह--न चेदित्यादिना। उदात्तं स्वरितं वा किञ्चिदक्षरं परं नोच्यते चेदिति योजना। तत्र अनुदात्तभागस्य स्पष्टं श्रवणमुदाह्मत्य दर्शयति--केत्यादिना इत्यादिष्वनुदात्त इत्यन्तेना तत्र "क्व" इति ह्मस्वस्वरितः। स तावत् "वो" इत्योकारात्मकोदात्तपरकः। "येऽरा" इत्येकारो दीर्घस्वरितः। स च "रा" इत्याकारात्मकोदात्तपरः। "शतचक्रं यो" इत्योकारः कम्पस्वरितः। स तु "ह्र" इत्यकारात्मकस्वरितपरकः। इत्येवमादिप्रदेशेषु अनुदात्तभागः स्पष्टं श्रूयत इत्यर्थः। अन्यत्र तूदात्तश्रुतिरित्येतदुदाह्मत्य दर्शयति-अग्निमीळे इत्यादावुदात्तश्रुतिरिति। पदकाले अग्निमित्यन्तोदात्तम्। ईळ इति अनुदात्तम्। तत्र "उदात्तादनुदात्तस्य स्वरितः" इति संहितायामीकारः स्वरितः। "स्वरितात्संहितायामनुदात्तानाम्" इत्येकारः प्रचयः। ततश्च ईकारः स्वरित उदात्तस्वरितपरको न भवतीति तदुत्तरभागस्य उदाह्मतप्रातिशाख्यवचनेन उदात्ततरत्वात्मिका उदात्तश्रुतिरेव भवतीत्यर्थः। तदेवमुदात्तह्मस्वः अनुदात्तह्रस्वः स्वरितह्मस्व इति ह्मस्वस्त्रिविधः। एवं दीर्घोऽपि त्रिविधः। तथा प्लुतोऽपि। ततश्च एकैकोऽच्? नवविध इति स्थितम्। स नवविधोऽपीति। उक्तरीत्या नवविधोऽपि सः = अच्, अनुनासिकत्वेन अननुनासिकत्वेन च द्विधा = द्वाभ्यां प्रकाराभ्यां वर्तते इत्यर्थः।

तत्त्व-बोधिनी

तस्यादित उदात्तमर्धह्मस्वम् १०, १।२।३२

अतन्त्रमिति। अविवक्षितमित्यर्थः। तस्य चोदात्तस्वरितपरत्व इति। उदात्तस्वरितौ परौ यस्मात्तदुदात्तस्वरितपरं, तस्य भावस्तत्त्वं, तस्मिन् सति=उदात्तो वा स्वरितो वा परश्चेत्पूर्वस्य स्वरितस्य यदुत्तराद्र्धमनुदात्तं तस्य श्रवणं स्पष्टमित्यर्थः। अन्यत्रेति। उदात्तस्वरितपरत्वाऽभावे। क्वेति। "किमोऽत्"। "तित्स्वरितम्"। व इति। अनुदात्तं सर्वमपादादौ" इत्यधिकारादनुदात्तः। अ()आआ इति। अशे क्वनि नित्स्लकेणाद्युदात्तम्। संहितायां तु "एकादेश उदात्तेनोदात्तः" इत्योकार उदात्तः। उदात्तपरत्वे ह्मस्वस्वरितस्योदाहरणमुक्त्वा दीर्घस्वरितस्योदाहरणमाह-रथानां न ययिति। "ये" "अरा" इति पदद्वयमपि फिट्स्वरेणान्तोदात्तम्। एकादेशस्तु पक्षे स्वरितः, "स्वरितो वानुदात्ते पदादौ" इत्युक्तेः। स्वरितपरत्वे उदाहरणमाह-शतचक्रमिति। य इति--फिट्स्वरेणान्तोदात्तः, ततः परस्य सकारस्य रुत्वे उत्वे कृत आद्गुणे च उदात्तेनैकादेशादोकार उदात्तः॥ अह्र इति। स्वरितान्तत्वादकारस्य शेषनिघातत्वे, ओकारेण सह एकादेशे च कृते "स्वरितो वानुदात्ते पदादौ" इत्योकारः स्वरितः॥ कथमह्रस्य स्वरितान्तत्वमिति चेदत्राहुः-"अह व्याप्तै" इत्यस्मात्कर्मणि ण्यत्। "तित्स्वरितम्"। वृद्धाभावस्तु संज्ञापूर्वकविधेरनित्यत्वादिति। "नोदात्तस्वरित-" इति निषेधस्त्वनन्तरस्येति न्यायात् "उदात्तात्-" इति प्राप्तस्य। यदाऽहेरित्यर्थेऽह्नः वृत्रस्येत्यर्थः , तदा "छन्दसि वा वचनम्" इति गुणाऽभावः। "उदात्तस्वरितयोः" इति स्वरितः। "उदात्तयण" इति तु न, छान्दसत्वात्। अग्निमील इति। ईकारः स्वरितः, ले इति तु प्रचयापरपर्याया एकश्रुतिरिति च स्वरप्रक्रियायां मूल एव स्फुटीभविष्यति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एकश्रुति १।१ ३९ दूरात् ५।१ सम्बुद्धौ ७।१

समासः॥

एका श्रुतिः श्रवणं यस्य तत् एकश्रुति, बहुव्रीहिः॥ श्रवणं श्रुतिः॥ सम्यक् बोधनं ज्ञापनं सम्बुद्धिः॥

अर्थः॥

दूरादाह्वाने सति, उदात्तानुदत्तस्वरितस्वराणाम् एकश्रुतिः भवति। यत्र उदात्तानुदात्तस्वरितानां पृथक् २ स्वरः न श्रूयते सः एकश्रुतिस्वरः।

उदाहरणम्॥

आगच्छ भो माणवक देवदत्त३। अत्रोदात्तानुदात्तस्वरितस्वराः पृथक् २ नोच्चारिता भवन्ति।
काशिका-वृत्तिः
एकश्रुति दूरात् सम्बुद्धौ १।२।३३

त्रैस्वर्ये पदानां प्राप्ते दूरात् सम्बुद्धावैकश्रुत्यं विधीयते। एका श्रुतिर् यस्य तदिदम् एकश्रुति। एकश्रुति वाक्यं भवति। दूरात् सम्बोधयति येन वाक्येन तत् सम्बोधनं सम्बुद्धिः। न एकवचनं सम्बुद्धिः। स्वराणाम् उदात्तादीनाम् अविभागो भेदति रोधानम् एकश्रुतिः। आगच्छ भो माणवक देवदत्त३। दूरातिति किम्? आगच्छ भो माणवक देवदत्त।
न्यासः
एकश्रुति दूरात्सम्बुद्धौ। , १।२।३३

"एकश्रुति वाक्यं भवति" इति। वाक्यग्रहणेन पदपदैकदेशयोर्निरासं करोति; तयोःसम्बोधनं प्रत्यसामथ्र्यात्। वाक्यस्य सम्बुद्धौ कर्तव्यायां करणभावोपगमादस्ति सामथ्र्यम्। ततस्तस्यैकश्रुत्यं विधीयते। कुतः पुनस्तद्वाक्यमित्याह-- "दूरात् सम्बोधयति येन" इति। एतेन सम्बुदिं()ध प्रति वाक्यस्य करणभावो दर्शितो भवति। दूरादिति-- "दूरान्तिकार्थेभ्यो द्वितीया च" २।३।३५ इति पञ्चमी। "सम्बोधनं सम्बुद्धिः" इत्यादिना सम्बुद्धिरित्कयन्वर्थग्रहणम्, न पारिभाषिकं सम्बुद्धिग्रहणमिति दर्शयति। यदि पारिभाषिक्याः सम्बुद्धेग्र्रहणं स्यात् तदा "देवा {ब्राआह्मणाः इति पदंजरीपाठः} ब्राह्मआणःट इत्यत्रैकश्रुत्यं न स्यात्; पारिभाषिक्याः सम्बुद्धेरसत्त्वात्। अन्वर्थग्रहणे तु भवति; सम्बोधनलक्षणक्रियारूपायाः सम्बुद्धेरिहापि विद्यमानत्वादिति भावः। कुतः पुनरेतदन्वर्थग्रहणं व्यवसितम्? दूरग्रहणात्। अन्वर्थग्रहणे दूरादित्यनेन सम्बुद्धिरुत्पद्यते। "{पंक्तिरियं नास्ति-काशिका} दूरात् सम्बोधने कत्र्तव्ये" इति। तेनार्थवद्भवति दूरशब्दस्यपादानम्। पारिभाषिक्यास्तु ग्रहणे तदसम्बद्धमेव स्यात्। न ह्यामन्त्रितविभ्कतेर्दूरत्वमस्ति। दूरत्वञ्च यद्यप्यनवस्थितम्, तथापि यत्र प्राकृतप्रयत्नसंस्थापितं वचनं न श्रूयते, तदिह दूरं वेदितव्यम्। "स्वराणाम्" इत्यादि। "{पंक्तिरियं नास्ति-काशिका}एकश्रुतिस्वरूपाख्यानमविभागः" भेदतिरोधानमित्यनन्तरं विवरणम्। उदात्तादिस्वरविशेषानुपलब्धिरकारादिवर्णमात्रावबोध एकश्रुतिरित्युक्तं भवति। "आगच्छ भो माणवक देवदत्ता३" इति। "दूराद्धूते च" ८।२।८४ इत्यत्रैवार्थे प्लुतः, स चोदात्तः; "वाक्यस्य टेः प्लुतः उदात्तः" ८।२।८२ इत्यधिकारात्। तस्यैकश्रुत्योदात्तस्य समावेश इष्यते, प्लुतनिवृत्त्यर्थम्। यथा चासौ लभ्यते तथा वक्ष्यति। प्रत्युदाहरणे त्रैस्वर्यमेव भवतीति तत्र आकारः "निपाता आद्युदात्ताः" (फि।सू।४।८०) "उपसर्गाश्चाभिवर्जम्" (फि।सू।४।८१) इत्युदात्तः। गच्छेत्यस्य "तिङङतिङः" ८।१।२८ इति निघातः। भो इति "निपाता आद्युदात्ताः" इत्युदात्तः। माणवक-- देवदत्तशब्दयोः "आमन्त्रतस्य

च" ८।१।१९ इत निघातः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यज्ञकर्मणि ७।१ ३५ अजपन्यूङ्खसामसु ७।३ एकश्रुति १।१ ३३

समासः॥

यज्ञस्य कर्म यज्ञकर्म, तस्मिन् यज्ञकर्मणि, षष्ठीतत्पुरुषः। जपश्च न्यूङ्खश्च साम च, जपन्यूङ्खसामानि, न जपन्यूङ्खसामानि अजपन्यूङ्खसामानि तेषु अजपन्यूङ्खसामसु द्वन्द्वगर्भनञ्तत्पुरुषः।

अर्थः॥

यज्ञकर्मणि, उदात्तानुदात्तस्वरितस्वराणाम् एकश्रुतिः भवति, जयन्यूङ्खसामानि वर्जयित्वा। जप उपांशुप्रयोगः। नूङ्खा निगदविशेषाः, आश्वलायनश्रौतसूत्रे {७।११} व्याख्यातास्तत्र द्रष्टव्याः॥

उदाहरणम्॥

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन् हव्या जुहोतन॥ यजु॰३।१॥ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म्॥ यजु॰ ३।१२॥ अत्रैकश्रुतिरभूत्।
काशिका-वृत्तिः
यज्ञकर्मण्यजपन्यूङ्खसामसु १।२।३४

त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते। तेषां यज्ञक्रियायाम् अपि तथैव प्रयोगे प्राप्ते एकश्रुतिर् विधीयते जपन्यूङ्खसामानि वर्जयित्वा। यज्ञकर्मणि मन्त्राणाम् ऐकश्रुत्यं भवति। अग्निर् मूर्धा दिवः ककुत् पतिः पृथिव्या अयम्। अपां रेतंसि जिन्वतो३म्। यज्ञकर्मणि इति किम्? सम्पाठे मा भूत्। अजपेष्विति किम्? ममाग्ने वर्चो विहवेष्वस्तु। जपो ऽनुकरणमन्त्र उपांशुप्रयोगः। अन्यूङ्खाइति किम्? न्यूङ्खा ओकाराः षोडश। तेषु केचिदुदात्ताः केचिदनुदात्ताः। असामसु इति किम्? विश्वं समत्रिणं दह। सामानि वाक्यविशेषस्थगीतय उच्यन्ते। तत्रैकश्रुतिर् न भवति।
न्यासः
यज्ञकर्मण्यजपन्यूङ्खसामसु। , १।२।३४

"अग्निर्मूर्धा दिवः" इत्यादि। "अगि रगि गत्यर्थाः" (धा।पा।१४६,१४४)। "वीज्याज्वरिभ्यो निः" (द।उ।१।१८) इत वत्र्तमाने "अङ्गेर्निर्नलोपश्च" (द।उ।१।२०) इति निप्रत्ययः; नलोपश्च भवति। अग्निशब्दः प्रत्ययस्वरेणान्तोदात्तः। "मुर्वी बन्धने" (धा।पा।५७५),"अकनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" (द।उ।६।५१) इत्यतः कनिन्निति वत्र्तमाने "()आन्नुक्षन्पूषन्()प्लीहन्क्लेदन्()स्नेहन्()मूर्धन्मज्जन्नर्यमन्वि()आप्सन्परिज्मन्मातरि()आन्मघवन्" (द।उ।६।५५) इति मूर्धन्शब्दः कनिन्प्रत्यान्तो निपातित इति निपातनादाद्युदात्तः। वकारस्य धकारोऽत्र निपातनादेव। "दिवु क्रीडादौ" (धा।पा।११०७) डिविन् प्रत्ययः। इकार उच्चारणार्थः। डित्यभस्याप्यनुबन्धकरणसामथ्र्यात् "ट #ए#ः" ६।४।१४३ इति टिलोपः। "दिव्" इति स्थिते "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" ६।१।१६५ इति विभक्तेरन्तोदात्त्वम्। ककुच्छब्दः "{फिषोन्त उदात्तः- #इति मुद्रितं सूत्रम्}प्रातिपदिकमन्तोदात्तं भवति" (फि।सू। १।१)इत्यन्तोदात्तः। पतिशब्दः "पातेर्डतिः"

(द।उ।१।२७) इति डतिप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः, ततः ककुदः पतिः ककुत्पतिरिति षष्ठीसमासः, स"समासस्य" ६।१।२१७ इत्यन्तोदात्तत्वम्। "प्रथ प्रख्याने" (धा।पा।१५५३), "प्रथेः षिवन् संप्रसारणञ्च" (द।उ।८।१२४)। "षिद्गौरादिभ्यश्च"४।१।४१ इति पृथिवशब्दान्()ङीष्। प्रत्ययस्वरेण धातुप्रत्यङीष आद्युदात्तोदात्तः। षष्ठ()ऐकवचनम् ङस्। "आण्नद्याः"इत्यनुदात्तत्वम्। सवर्णदीर्घः। "इको यणचि" ६।१।७४ इति यणादेशः। "उदात्तयणो हल्पूर्वात्" ६।१।१६८ इति विभक्तिरुदात्ता। "अयम" इति। "इदि परमै()आर्ये" (धा।पा।६३) "इदितो नुम् धातोः" ७।१।५८ इति नुम्, "इन्देः कमिर्नलोपश्च" (पं।उ।५९६) इति कमिप्रत्ययो नलोपश्च; इदम्शब्दः कमिप्रत्ययेनान्तोदात्तः। सौ परतः "इदोऽय् पुंसि" इतीदम इद्रूपस्यादेशः। "अपाम्" इति। "आप्लृव्याप्तौ" (धा।पा।१२६०), "आप्नोतेह्रस्वश्च" (द।उ।१।१२७) इति क्विप्, ह्रस्वश्च, षष्ठीबहुवनचम्। "ऊडिदं पद" ६।१।१६५ इति विभक्तेरुदात्तत्वम्। तेनापामित्यस्यान्तोदात्तत्वम्। "रि गतौ" (धा।पा।१४०४), "स्त्रुरिभ्यां तुट् च" (द।उ।९।६२) इत्यसुन् प्रत्ययः। तुडागमः। "रेतांसि" इति नित्स्वरेणाद्युदात्तः। "जिन्वति" इति। "जि जये" (धा।पा।५६१) लट्,शत्रादेशः। "व्यत्ययो बहुलम्" ३।१।८५ इति व्यत्ययेन श्नुप्रत्ययः।"हुश्नुवोः सार्वधातुके" ६।४।८७ इति यणादेशः। "उगितश्च" ४।२।६ इति ङीप्। "अम्बार्थनद्योह्रयस्वः" ७।३।१०७ इति ह्रस्वः। "एङ ह्रस्वात् सम्बुद्धेः" ६।१।६७ इति सुलोपः। "ये यज्ञकर्मणि" ८।२।८८ इति वत्र्तमाने "प्रणवष्टेः"८।२।८९ इति प्रणवादेशः। स च प्लुत उदात्तश्च,"वाक्यस्य टेः प्लुत उदात्तः" ८।२।८२ इत्यधिकरात्। प्रणव इत्योकारम्, ओङ्कारं वाऽऽचक्षते। प्रणवस्योदात्तविधानसामथ्र्यादसिद्धत्वाच्च पदादुत्तरस्य "आमन्त्रितस्य च" ८।१।१९ इत्यनुदात्तं न भवति; शेषस्य तु भवति। एषु स्वरेषु प्राप्तेष्वेकश्रुतिर्विधीयते। "संपाठे मा भूत्" इति। संपाठ= स्वाध्यायकालः। "ममाग्ने" इत्यादि। "असु क्षपणे" (धा।पा।१२०९), "युष्यसिम्यां मदिक्" (द।उ।६।५०) इति मदिक्। अस्मच्छब्दः प्रत्ययस्वेरणान्तोदात्तः। षष्ठ()एकवचनस्य "युष्मदसमद्भ्यां ङसोऽश्" ७।१।२७ इत्यशादेश-, "तवममौ ङसि" ७।२।९६ इत्यस्मदो ममादेशः। स्था४निवद्भावादन्तोदात्तः। "अतो गुणे" ६।१।९४ पररूपत्वम्। "एकादेश उदात्तेनोदात्तः" ८।२।५ अग्निशब्दस्य "आमन्त्रितस्य च" ८।१।१९ इति निघातः। "वर्च दीप्तौ" (धा।पा।१६२), "असुन्" (द।उ।९।४९) इतिअसुन् प्रत्ययः। वर्चशब्दो नित्स्वरेणाद्युदात्तः। "ह्वेञ् स्पर्धायाम्" (धा।पा।१००८)। "ह्वः संप्रासारणञ्च न्यभ्युपदिषु ३।३।७२ इत्यप् प्रत्ययः। "उपपदमतिङ" २।२।१९ इति समासः। "गतिकारकोपपदात् कृत्" ६।२।१३८ इत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते, "अन्तः" ६।२।१४२ इत्यनुवर्तमाने "थाथघञ्क्ताजवित्रकारणाम्" ६।२।१४३ इत्यन्तोदात्तत्वम्, सप्तमीबहुवचने "बहुवचने झल्येत्"७।३।१०३ इत्येत्वम्, स्थानिवद्भावादेकारोऽपब्यदात्त एव। "अस भुवि" (धा।पा।१०६५) , लोट्, तिप्, "एरुः" ३।४।८६ इत्युत्वम्, अदादित्वाच्छपो लुक्। "तिङङतिङः" ८।१।२८ इति निघातेन "अस्तु" शब्दोऽनुदात्तः। "जपोऽनुकरणमन्त्रः" इति। "जप" इत्यक्तेरर्थकथनमनुकरणमन्त्र इति। अनुकृतिः = अनुकरणम्। सर्वत्र मन्त्रे स्फुटमुच्चारणमित्यनुकरणमन्त्रः। अत एवाह-- "उपांशुप्रयोगः" इति। यता जले निमग्नस्य पाठः। क्वचिदकरणमन्त्र इति पाठः। तत्रायमर्थः-- ईषत् करणमुच्चारणं यस्य सोऽकरणमन्त्र इति; नञ ईषदर्थत्वात्। एशब्दो निपातः। "निपाता आद्युदात्ताः" (फि।सू।४।८०)। "विश प्रवेशने" (धा।पा।१४२४),"अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" (द।उ।१२५) इति क्वप्रत्ययान्तत्वाद्वि()आशब्दो नित्स्वरेणाद्युदात्तः। समञ्च तत् अत्रिणञ्चेति विशेषणसमासः। समासान्तोदात्तत्वम्। "दह भस्मीकरणे" (धा।पा।९९१), लोट्,सिप्, सेर्हिरादेशः,"अतो हेः" ६।४।१०५ इति हेर्लुक्, "तिङङतिङ" ८।१।२८ इति निघातविधानात् दहशब्दोऽनुदात्तः। केचिद् वहा३ इति प्लुतान्तं पठन्ति; तेषां साहसमनिच्छतां "सर्वत्र विभाषा प्लुतो वक्तव्यः" (म।भा।३।४२०) इत्यतो वचनात् प्लुतो वक्तव्यः, स चोदात्तः। अन्ये त्वाकारान्तं पठन्ति, तेषां छान्दसत्वादाकारः। ह्रस्वोऽपि हि वर्णो व्यत्ययेन दीर्घो भवति,"पुरुषः" "नारकः" इति यथा। "वाक्यविशेषस्था गीतयः" इति। यथोक्तं जैमिनिना-- "गीतिषु सामाख्या" इति। गीतिः = ध्वनिविशेषः। कर्मग्रहणं किमर्थम्,यज्ञ इत्येवोच्येत, यज्ञमन्त्राणां यज्ञक्रियार्थत्वाद्य ज्ञकर्मणि भविष्यति? सत्यमेतत्; विस्पष्टार्थ हि कर्मग्रहणम्। अथ वा -- योऽपि न प्रसिद्धो यज्ञः पञ्चयजनादिः, तत्रापि यथा स्यादित्येवमर्थम्; अन्यथा "यज्ञे" इच्युच्यमाने प्रसिद्धो यो यज्ञोऽ()आमेधादिस्तत्रैव

स्यात्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उच्चैस्तराम् १।१ वा ० वषट्कारः १।१ यज्ञकर्मणि ७।१ ? एकश्रुति १।१ ३३

अर्थः॥

उच्चैः इत्यनेन उदात्तः गृह्यते, अयम् उदात्तः अयम् उदातः अयम् अनयोः अतितराम् उदात्तः, उच्चैस्तराम्, {द्विवचनविभ० (५।३।४७)} इत्यनेन तरप्प्रत्ययः॥ यज्ञकर्मणि वषट्कारः मन्त्रः, उच्चैस्तराम् = उदात्ततरः विकल्पेन भवति, पक्षे एकश्रुतिः भवति। वषट्कारशब्देन अत्र वौषट्-शब्दः गृह्यते। यदि एवं वौषड्ग्रहणम् एव, कस्मात् न कृतम्? वैचित्र्यार्थम्। विचित्रा हि सूत्रस्य कृतिः पाणिनेः॥

उदाहरणम्॥

सोमस्याने वीही३ वौ३षट्। पक्षे एकश्रुतिः -- सोमस्याने वीही३ वौ३षट्॥
काशिका-वृत्तिः
उच्चैस्तरां वा वषट्कारः १।२।३५

यज्ञकर्मणि इति वर्तते। यज्ञकर्मणि वषट्कारः उच्चैस्तरां वा भवति एकश्रुतिर् वा। वषट्शब्देन अत्र वौषट् शब्दो लक्षयते। वौषटित्यस्यैवेदं स्वरविधानम्। यद्येवं वौषड्ग्रहणम् एव कस्मान् न कृतम्? वैचित्र्यार्थम्। विचित्र हि सूत्रस्य कृतिः पाणिनेः। सोमस्य अग्ने वीही३षट्। सोमस्य अग्ने वीही३ वौ३षट्।
न्यासः
उच्चैस्तरां वा वषट्कारः। , १।२।३५

"वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते"इति। समानार्थत्वादित्यभिप्रायः। द्वावपि तौ देवानां दानवचनौ। यथा "वषट्" शब्देन देवानां दानं दीयते तथा वौषट्शब्देनापि। तस्मात् समानार्थत्वात् "वषट्" शब्दो "वौषट्" शब्दं लक्षयति। कारशब्दग्रहणमर्थपदार्थकत्वं विहाय शब्दपदार्थकत्वेन दानक्रियायामुपयुज्यमानस्य तस्योदात्ततरत्वं यथा स्यादित्येवमर्थम्। कारग्रहणे शब्दपदार्थतया दृष्टा, यथा एवकार इति। अन्ये कारग्रहणमन्यस्यापि यथा स्यादिति वर्णयन्ति। तेन "अस्तु श्रौषट्" इत्यत्रायमुदात्ततरो भवति। उच्चैस्तरामिति प्रकर्षप्रत्ययो वौषट्()शब्दे "ब्राऊहिप्रेष्यश्रौषडावहानामादेः" ८।२।९१ इति यः प्लुतो विहितस्तदपेक्षया वेदितव्यः; स ह्युदात्तः, "याज्यान्तः" ८।२।९० इत्यनेन य उदात्तः प्लुतो विहितस्तदपेक्षया प्रकर्षस्य सत्त्वात्। अथ वा-- प्रकर्षप्रत्यान्तः स्वरूपशब्दान्तरमेवैतदिति। अपरे त्वाहु-- "अनुदात्तं पदमेकवर्जम्" ६।१।१५२ इति वचनेन प्लुतश्चोदात्तः। अन्यस्त्वनुदात्ततर इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ छन्दसि ७।१ एकश्रुति १।१ ३३

अर्थः॥

छन्दसि विषये, उदात्तानुदात्तस्वरितस्वराणाम् एकश्रुतिः भवति विकल्पेन, पक्षे त्रैस्वर्यमेव॥

उदाहरणम्॥

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् (ऋ. १।१।१)॥ इषे त्वोर्जे त्वा वयवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण. (य. १।१।१)॥ अग्न आ याहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि (सा. १।१।१)॥ ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः। वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे (अथ. १।१।१)॥
काशिका-वृत्तिः
विभाषा छन्दसि १।२।३६

छन्दसि विषये विभाषा एकश्रुतिर् भवति। पक्षान्तरे त्रैस्वर्यम् एव भवति। वा इति प्रकृते विभाषाग्रहनं यज्ञकर्मणि इत्यस्य निवृत्त्यर्थम्। तेन अयं स्वाध्यायकाले ऽपि पाक्षिक ऐकश्रुत्यविधिर् भवति। इषे त्वोर्जे त्वा। इषे त्वोर्जे त्वा। अग्न आयाहि वीतये। अग्न आयाहि वीत्ये। अग्निमीले पुरोहितम्। अग्निमीले पुरोहितम्। शं नो देवीरभैष्टये। शं नो देवीरभैष्टये।
न्यासः
विभाषा छन्दसि , १।२।३६

"इषे त्वा" इत्यादि। "इषु इच्छायाम्" (धा।पा।१३५१), "अन्येभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्। इडस्यास्तीति लुगधिकारस्य "अप्रत्ययः" (वा। ४९२) इत्यनेनोपसंख्यानेन अकारप्रत्ययः, प्रत्ययस्वरेणाद्युदात्तः, इषशब्दात् सप्तम्येकवचनम्, "आद्गुणः" ६।१।८४ , "एकादेश उदात्तेनोदात्तः" ८।२।५। युष्मच्छब्दस्य द्वितीयान्तस्य "त्वामौ द्वितीयायाः" ८।१।२३ इति त्वामादेशः, स त्वनुदात्तः; "अनुदात्तं सर्वमपादादौ" ८।१।१८ इत्यधिकारात्। "अग्ने" इति। "आमन्त्रितस्य च" ६।१।१९२ इति षाष्ठिकमाद्युदात्तत्वम्। आङ्पूर्वात् "या प्रापणे" (धा।पा।१०४९) इत्यस्माल्लोट, सिप्, सेर्हिरादेशः, आङ "उपसर्गाश्चाभिवर्जम्" (फि।सू।४।८१) इत्युदात्तः। "तिङ्ङतिङ" ८।१।२८ इति याहीत्यस्य निघातः। "वी गत्यादिषु" (धा।पा।१०१९) "मन्त्रेवृषेषपच" ३।३।९६ इत्यादिना क्तिन्नुदात्तः, चतुर्थ्येकवचने प्रत्यये "घेर्ङिति" ७।३।१११ इति गुणः, अयादेशः, द्वावपि स्थानिवद्भावेनोदात्तौ, शेषमनुदात्तम्। अग्निशब्दः पूर्ववन्निप्रत्ययस्वरेणान्तोदात्तः। द्वितीयैकवचनेऽमि पूर्वत्वम्। "एकादेश उदात्तेनोदात्तः" ८।२।५। "ईड स्तुतौ" (धा।पा।१०१९)। अनुदात्तेत्त्वादात्मनेपदम्। "तिङ्ङतितिङः" ८।१।२८ इतीडेशब्दस्य निघातः। पुरः पूर्वस्मिन् देश इति विगृह्य "पूर्वापराधरावराणामसि पुरधवश्चैषाम्" ५।३।३९ इत्यसिप्रत्ययः, पूर्वशब्दस्य पुरादेशः। पुरः शब्दः प्रत्ययस्वरेणान्तोदात्तः। दधातेर्निष्ठायां "दधातेर्हिः" ७।४।४२ इति हिरादेशः। "पुरोऽव्ययम्" १।४।६६ इति गतिसंज्ञायां सत्यां "कुगतिप्रादयः" २।२।१८ इति समासः। समासस्यान्तोदात्तत्वे प्राप्ते "गतिरनन्तरः" ६।२।४९ इति पूर्वपदप्रकृतिस्वरेण पुरः शब्दोऽन्तोदात्तः। शंशब्दश्चादित्वान्निपातः। निपातस्वरेणाद्युदात्तः। अस्मच्छब्दस्य षष्ठी, "बहुवचनस्य वस्न सौ" ८।१।२१ इत#इ नसादेशोऽनुदात्तः,अनुदात्ताधिकारात्। दिवः पचाद्यच्॥ पचादिषु देवडिति पठ()ते। "टिड्()ढाणञ्" ४।१।१५ ङीप् अनुदात्तः,"यस्येति च" ६।४।१४८ इत्यकारलोपः। "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इति ङीबुदात्तः। द्वितीयाबहुवचने "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति पूर्वसवर्णदीर्घत्वम्। "एकादेश उदात्तेनोदात्तः" ८।२।५। "ष्टुञ् स्तुतौ" (धा।पा।१०४३), अभिपूर्वात्ृदोरप्" ३।३।५७ इत्यप्, गुणावादेशौ। वर्णव्यत्ययेन वकारस्य यकारः। "गतिकारक" ६।२।१३८ इत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते "अन्तः" ६।२।१४२ इति वर्तमाने "थाथघञ्क्ताजवित्रकाणाम्" ६।२।१४३ इत्युत्तरपदान्तोदात्तत्वम्। सप्तम्येकवचम्। "आद्गुणः" ६।१।८४ "एकादेश उदात्तेनोदात्तः" ८।२।५ तस्मात् "अभिष्टये"

शब्दोऽन्तोदात्तः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० सुब्रह्मण्यायाम् ७।१ स्वरितस्य ६।१ ३८ तु ० उदात्तः १।१

काशिका-वृत्तिः

न सुब्रह्मण्यायां स्वरितस्य तु उदात्तः १।२।३७

सुब्रह्मण्या नाम निगदस् तत्र यज्ञकर्मणि इति विभाषा छन्दसि १।२।३६ इति च एकश्रुतिः प्राप्ता प्रतिषिध्यते। सुब्रह्मण्यायाम् एकश्रुतिर् न भवति। यस् तु लक्षणप्राप्तः स्वरितस् तस्यौदात्त आदेशो भवति। सुब्रह्मन्योम्। इन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर्मेष वृषणश्वस्य मेने। गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्। अत्र सुब्रह्मण्योम् इत्योकारस् तित्स्वरेण स्वरितस् तस्यौदात्तो विधीयते। इन्द्र आगच्छ इत्यामन्त्रितम् आद्युदत्तम्। द्वितीयो वर्णो ऽनुदात्तः। उदात्तादनुदातस्य स्वरितः इति स्वरितः प्रसक्तस् तस्य अनेनौदात्तः त्रियते। तदेवम् इन्द्र आगच्छ इति चत्वार उदात्ताः। पश्चिम एको ऽनुदात्तः। हरिव आगच्छ इत्यनयैव प्रक्रियया चत्वार उदात्ताः द्वावनुदात्तौ। मेधातिथेः इति षष्ट्यन्तं परमामन्त्रितम् अनुप्रविशति सुबामन्त्रिते पराङ्गवत्स्वरे २।१।२ इति। ततः सकलस्या मन्त्रिताद्युदात्तत्वे इकृते द्वितीयम् अक्षरम् अनुदात्तं, तस्य उदात्तादनुदात्तस्य स्वरितः ८।४।६५ इति स्वरितत्वे प्राप्ते इदमुदात्तत्वं विधीयते। तेन द्वावप्युदात्तौ भवतः। शेषमनुदात्तम्। वृषणश्वस्य मेने इति समानं पूर्वेण। गौरावस्कन्दिनिति तथैव द्वे आद्ये अक्षरे उदात्ते, शेषम् अनुदात्तम्। अहल्यायै जार इति सुबन्तस्य अमन्त्रितानुप्रवेशात् तद्वदेव स्वरः। द्वावुदात्तौ शेषम् अनुदात्तम्। कौशिकब्रह्मण इति समस्तमामन्त्रितमाद्युदात्तं तत्र पूर्ववद् द्वावुदात्तौ शेषम् अनुदात्तम्। एवम् गौतमब्रुवाण इति द्वावुदात्तौ शेषम् अनुदात्ताम्। श्वः सुत्यामागच्छ मघवनिति श्वःशब्द उदात्तः सुत्याम् इत्यन्तोदात्तः। संज्ञायां समजनिषदनिपतमनविदषुञ् शीङ्भृञिणः ३।३।९९ इति क्यपो विधाने उदात्तः इति वर्तते। अगच्छ इति द्वौदात्तौ। अन्त्यो ऽनुदत्तः। मघवनिति पदात् परमामन्त्रितं निहन्यते।

न्यासः

न सुब्राह्मण्ययां स्वरितस्य तूदात्तः। , १।२।३७

"सुब्राह्मण्या नाम निगदः" इति। अपादबन्धे गदतिर्वर्तते। अपादबन्धं हि गद्यमुच्यते। निशब्दः प्रकर्षे। यदुच्चैरविच्छिन्नमपादबन्धं मन्त्रवाक्यं निगद इति तस्य व्यपदेशः। तस्य च सुब्राह्मण्योपलक्षमत्वात्, "सुब्राह्मण्या" इति स्त्रीलिङ्गनिर्देशः। "सुब्राह्मण्योम्" इति। सुब्राह्मणि साधुः।"तत्र साधुः" ४।४।९८ इति यत्। "तत् स्वरितम्" ६।१।१७९ इति स्वरितत्वम्, "प्रणवष्टेः" ८।२।८९ इत्योङ्कार आदेश इति केचित्, तदयुक्तम्; "पादस्य वाद्र्धर्चस्य वान्त्यमक्षरमुपसंह्मत्य तदाद्यक्षरशेषस्य स्थाने? त्रिमात्रमोकारमोङ्कारं वा विदधति तं प्रणवमित्याचक्षते" इति {काशिका-८।२।८९}वक्ष्यति। न च निगदे पादव्यवस्था, नाप्यद्र्धर्चव्यवस्था। तस्मादोशब्दोऽस्ति निपातोऽनर्थकः। तस्य स्वरितेन सहैकादेशः स्वरितः। "आमन्त्रितमाद्युदात्तम्" इति। "आमन्त्रितस्य च" ६।१।१९२ इत्यनेन षाष्ठिकेन। "त्सयानेनोदात्तः क्रियते" इति। ननु चासिद्धोऽसौ स्वरितः; वचनात् तस्यासिद्धत्वं न भवति। ननु च वचनस्य सुब्राह्मण्योमिति प्रयोजनं वक्तुं शक्यम्? न हि समस्ते निगदे सुब्राह्मण्याशब्दनोपलक्षिते सतीदमेकमुदाहरणं युक्तम्। "अकार उदात्तः" इति। निपातस्वरेण। "ततः परोऽनुदात्तः स्वरितः" इति। "तिङङतिङ" ८।१।२८ इति निघाते कृते,

"उदात्तादनुदात्तस्य स्वरितः" ८।४।६५ इत्यनेन। "पश्चिम एकः" इति। छकाराकारः। "चत्वार उदात्ताः" इति। वकारच्छाकाराभ्यामन्ये। "द्वावनुदात्तौ" इति। वकारच्छकारौ। "द्वितीयमक्षरम्" इति। मेधाशब्दाकारः। "शेषमनुदात्तम्" इति। मेधाशब्दे यावचौ ताभ्यामन्यत्। "पूर्वेण" इति। मेधातिथेर्मेषेत्यनेन। "तथैव द्वे आद्ये अक्षरे उदात्ते" इति। "यदि गौरावस्कन्दिन्" इति समस्तमामन्त्रितमाद्युदात्तमिति। अथापि गौरेति शब्दान्तरमामनन्ति, तथापि तस्यापि प्रवेशे कृते सकलस्यामन्त्रितस्याद्युदात्तत्वे "उदात्तादनुदात्तस्य" ८।४।६५ इत्यादिना पूर्वोक्तेन विधिना द्वे उदात्ते भवतः। "अहल्यायै जार" इति। षष्ठ()र्थे चतुर्थी, "बहुलं छन्दसि" २।३।६२ इत्यत्र "षष्ठ()र्थे चतुर्थी वक्व्या" (वा।१४२) इत्युपसङ्ख्यानात्; "व्यत्ययो बहुलम्" ३।१।८५ इति व्यत्ययेन वा। "समस्तमामन्त्रितमाद्युदात्तम्" इति। कौशिकशब्दस्य परामन्त्रितानुप्रवेशात्। "एवं गौतमब्राउवाण" इति। एतदपि कौशिकब्राआह्णेत्यनेन तुल्यमित्यर्थः। "द्वावुदात्तौ" इति। अनन्तरयोरुदाहरणयोः प्रत्येकमाद्यवित्यर्थः। "()आः शपब्द उदात्तः" इति। प्रातिपदिकस्वरेण। "उदात्त इति वर्तते" इति। "मन्त्रे वृष" ३।३।९६ इत्यादेः सूत्रात्। "द्वावुदात्तौ" इति। तौ पुनरादी आगच्छेत्यत्र दर्शितौ। "पदात् परमामन्त्रितं निहन्यते" इति। "आमन्त्रितस्य च" ८।१।१९ इत्यनेन।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ देवब्रह्मणोः ६।२ अनुदात्तः १।१ स्वरितस्य ६।१ ३७

काशिका-वृत्तिः
देवब्रह्मणोरनुदात्तः १।२।३८

सुब्रह्मण्यायाम् एव देवा ब्रह्माणः इति पठ्यते, तत्र पूर्वेण स्वरितस्य उदात्ते प्राऽप्ते ऽनेनानुदात्तो विधीयते। देवब्रह्मणोः स्वरितस्य अनुदात्त आदेशो भवति। देवा ब्रह्माण आगच्छत। द्वयोरपि पदयोरामन्त्रिताऽद्युदात्तत्वे शेषनिघाते च उदात्तादनुदात्तस्य स्वरितः कृतस् तस्यानुदात्तो भवति।
न्यासः
देवब्राह्णोरनुदात्तः। , १।२।३८

"द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे कृते" इति। "विभाषितं विशेषितं विशेषवचने बहुवचनम्" ८।१।७४ इति पूर्वस्याविद्यामानत्वात् "आमन्त्रितस्य च" ८।१।१९ इति पदात् परस्यापि निघातो न भवति। तेन द्वयोरपि पृथगेव षाष्ठिकमाद्युदात्तत्वं भवति। "शेषनिघातः" इति। "अनुदात्तं पदमेकवर्जम्" ६।१।१५२ इत्यनेन।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वरितात् ५।१ संहितायाम् ७।१ अनुदात्तानाम् ६।३ ४०

काशिका-वृत्तिः
स्वरितात् संहितायाम् अनुदात्तानाम् १।२।३९

एकश्रुतिः इति वर्तते। संहितायं विशये स्वरितात् परेषाम् अनुदात्तानाम् एकश्रुतिर् भवति। इमं मे गङ्गे यमुने सरस्वति

शुतुद्रि। माणवक जटिलकाध्यापक क्व गमिष्यसि। इमम् इत्यन्तौदात्तं, मे इति अनुदात्तं विधिकाल एव निघातविधानात्। तत् पुनः उदात्तादनुदात्तस्य स्वरितः ८।४।६५ इति स्वरितं सम्पद्यते। तस्मात् स्वरितात् परेषाम् अनुदात्तानां गङ्गेप्रभृतीनाम् एकश्रुतिर् भवति। सर्व एते आमन्त्रितनिघातेन अनुदात्ताः। माणवक जटिलक इति प्रथमम् आमन्त्रितमाद्युदात्तं, तस्य द्वितीयम् अक्षरम् स्वरितं, ततः परेषाम् अनुदात्तानाम् एकश्रुतिर् भवति। संहिताग्रहणं किम्? अवग्रहे मा भूत्। इमम् मे गङ्गे यमुने सर्स्वति।

न्यासः

स्वरितात्संहितायामनुदात्तानाम्। , १।२।३९

"अनुदात्तानाम्" इति जातौ बहुवचनम्। तेन द्वयोरपि भवति। "इममित्यन्तोदात्तम्" इति। इदंशब्दस्य कमिप्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तोदात्त्वम्, तस्य त्यदात्यत्वे "अतो गुणे" ६।१।९४ पररूपत्वे तस्याप्येकादेश ८।२।५ उदात्तेनोदात्तत्वात्। "विधिकल एव" इति। "तेमयावेकवचनस्य" ८।१।२२ इति विधिकाल एव निघातविधानात्। "सर्व एत आमन्त्रितनिघातेनानुदात्ताः" इति। यद्यपि ""आमन्त्रितं पूर्वमविद्यमानवत्" ८।१।७२ इति, तथापि मेशब्दापेक्षया सर्वेषां निघातापत्तेः। "प्रथमामन्त्रितमाद्युदात्तम्" इति। "आमन्त्रितस्य च" ६।१।१९२ इति षाष्ठिकेन। "तस्य द्वितीयमक्षरं स्वरितम्" इति। "उदात्तादनुदात्तस्य स्वरितः" ८।४।६५ इति। "ततः परेषामनुदात्तानाम्" इति। "नामन्त्रिते समानाधिकरणे सामान्यवचनम्" ८।१।७३ इत्यविद्यमानत्वस्य प्रतिषेधे सति माणवकात् परयोः "आमन्त्रितस्य च" ८।१।१९ इति निघातविधानात् परेऽनुदात्ताः। "अवग्रहे मा भूत" इति। अवग्रहः = असंहितापाठः। ननु च स्वरितादिति पञ्चमी, तेन "तस्मादित्युत्तरस्य" १।१।६६ इत्यत्र निर्दिष्टग्रहणस्यानन्तरर्याथकत्वादवग्रहे प्राप्तिरेव नास्ति, यथैव हि वर्णो व्यवधायकस्तथा कालोऽपि, तत् किं संहिताग्रहणम्? पञ्चमीनिर्देशकालो न व्यवधायक इति ज्ञापनार्थम्। तेन "तिङङतिङः" ८।१।२८ इत्यत्रावग्रहेऽतिङन्तात् परं तिङन्तं निहन्यते॥

तत्त्व-बोधिनी

नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ७९८, १।२।३९

नपुंसकमन। अन्यतरस्याङ्ग्रहणम् "एकवच्चे"त्यनेनैवानन्तर्यात्संबन्ध्यते, न त्वेकशेषेणेत्याशयेनाह--क्लीबं शिष्यते तच्च वा एकवदिति। अनपुंसकेनेति किम्()। शुक्लं च शुक्लं च शुक्ले। अत्र "एकवच्चे"ति न भवति। "अस्य"ग्रहणम् "अस्यैवैकशेषस्य एकवद्भावो यथा विज्ञायेते"त्येवमर्थम्। अन्यथा उत्तरत्राप्येकवदित्यस्यानुवृत्तिः शङ्क्येत। शुक्लः पट इत्यादि। "शुक्लः शुक्ला शुक्ल"मित्येव विग्रहः, "पटः पटी"त्यादिप्रदर्शनं तु शुक्ल शब्दस्य गुणुलिङ्गत्वस्फोरणाय।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उदात्तस्वरितपरस्य ६।१ सन्नतरः १।१ अनुदात्तानाम् ६।३ ३९

काशिका-वृत्तिः

उदात्तस्वरितपरस्य सन्नतरः १।२।४०

अनुदात्तग्रहणम् अनुवर्तते। उदात्तः परो यस्मात् स उदात्तपरः स्वरितः परो यस्मात् स स्वरितपरः। उदात्तपरस्य स्वरितपरस्य च अनुदात्तस्य सन्नतर आदेशो भवति। अनुदात्ततरः इत्यर्थः। देवा मरुतः पृश्निमातरो ऽपः। मातरः इत्यनुदात्तः। अपः इत्यन्तौदात्तः ऊडिदंपदाद्यप्पुमैद्युभ्यः ६।१।१६५ इति। तत्र अनुदात्तयोरेकादेश ओकारो ऽनुदात्तः

तस्यौदात्ते परभूते सन्नतर आदेशो भवति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि। इकारो ऽनुदात्तः। शुतुद्रि इत्येतदामन्त्रितं पादादौ तस्मान् न निहन्यते, अनुदात्तं सर्वम् अपादादौ ८।१।१८ इति। तस्य प्रथमम् अक्षरम् उदात्तं तस्मिन् परभूते पूर्वस्य सरस्वति इति इकारस्य सन्नतर आदेशो भवति। माणवक जटिलकाध्यापक क्व गमिष्यसि। क्व इति स्वरितस् तस्मिन् परभूते क इति अनुदत्तस् तस्य सन्नतर आदेशो भवति।

न्यासः

उदात्तस्वरितपरस्य सन्नतरः। , १।२।४०

"मातर इत्यनुदात्तः" इति। अनुदात्तत्वं तु विभक्तिस्वरेण। मातर इति मातृशब्दाज्जस्, "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणः। जसः सकारस्य रुत्वम्। तस्याप्यशब्दे शसन्ते परतः "अतो रोरप्लुतादप्लुते" ६।१।१०९ इत्युत्वम्। "आद्गुणः" ६।१।८४ "उडिदम्" ६।१।१६५ इत्यादिना विभक्तेरन्तोदात्तत्वे कृते "एङः पदान्तादति" (६१।१०९) इतिय ओकारः, सोऽपि स्थानिवद्भावेनानुदात्तो भवति। "तस्योदात्ते परभूते" इति। विभक्त्यकारे। "इकारोऽनुदात्तः" इति। सरस्वतीतिशब्दसम्बन्धी; "आमन्त्रित्सय च" ८।१।१९ इति सरस्वतीशब्दस्य निघातविधानात्। "तस्मान्न निहन्यते" इति। "अनुदात्तं सर्वमपादादौ" ८।१।१८ इत्यत्रापादादाविति निघातप्रतिषेधात्। "प्रथममक्षरम्" इति। शकारोकार उदात्तः, "आमन्त्रितस्य च" ६।१।१९२ इति षाष्ठिकेन।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपृक्त १।१ एकाल् १।१ प्रत्ययः १।१

समासः॥

एकश्च असौ अल् च, एकाल्, कर्मधारयः तत्पुरुषः

अर्थः॥

एकाल् प्रत्ययः अपृक्तसंज्ञकः भवति। असहायवाची एकशब्दः।

उदाहरणम्॥

वाक्, लता, कुमारी। घृतस्पृक्, अर्धभाक्, पादभाक्॥

काशिका-वृत्तिः

अपृक्त एकाल् प्रत्ययः १।२।४१

अपृक्तः इति इयं संज्ञा भवति एकाल् यः प्रत्ययस् तस्य। असहायवाची एकशब्दः। स्पृशो ऽनुदके क्विन् ३।२।५८ धृतस्पृक्। भजो ण्विः ३।२।६२ अर्धभक्। पादभाक्। एकालिति किम्? दर्विः। जागृविः। प्रत्यय इति किम्? सुराः। अपृक्तप्रदेशाः वेरपृक्तस्य ६।१।६७ इत्येवम् आद्यः।

लघु-सिद्धान्त-कौमुदी

अपृक्त एकाल् प्रत्ययः १७८, १।२।४१

एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्॥

न्यासः

अपृक्त एकाल्प्रत्ययः। , १।२।४१

"घृतस्पृक्" इति। "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम् = शकारस्य खकारः, तस्य जश्त्वम् = खकारस्य गकारः। "अद्र्धभाक्" इति। "चोः कुः" ८।२।३० इति जकारस्य गकारः। उभयत्र "वाऽवसाने" ८।४।५५ इत चर्त्वं ककारः। त्तरापृक्तसंज्ञायां सत्याम् " वेरपृक्तस्य" ६।१।६५ इति वकारलोपो भवति। प्रत्युदाहरणेषु हि तदभावान्न भवति। "दर्विः" इति। "दृ विदारणे" (धा।पा।१४९३) "वृ दृभ्यां विन्" (द।उ।१।२३) इति विन्। "जागृविः" इति। "जागृ निद्राक्षये" (धा।पा।१०७२), "जृशृस्तृजागृभ्यः क्विन्" (द।उ।१।२४) इति क्विन्। "सुराः" इति। "षूञ् अभिषवे" (धा।पा।१२४७), सुरां सुनोतीति "अन्यभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्; सुरासुत्, ह्यस्वस्य तुक्। "तमाचष्टे " (वा। २०१) इति णिच्। "णाविष्टवत् कार्यं प्रातिपदिकस्य" (वा।८१३) इति टिलोपः। सुरासवतेः पुनः क्विप्, णिलोपः, प्रथमैकवनचम्, हल्ङ्यादिना६।१।६६ सुलोपः; रुत्वविसर्जनीयौ। अत्रापि णिलोपे कृतेऽसति प्रत्ययग्रहणे धातुकारस्यापृक्तसंज्ञा स्यात्। तस्यां च सत्यां "हल्ङ्याब्भ्यः" ६।१।६६ इति धातुसकारलोपप्रङ्गः स्यात्। ननु चासत्यपि प्रत्ययग्रहणे "प्रत्याप्रत्ययोः प्रत्ययस्यैव ग्रहणम्" (व्या।प।७२) इति संज्ञा विज्ञास्यते, तत् किमर्थं प्रत्ययग्रहणम्? क्रियते विस्पष्टार्थम्। अथैकग्रहणं किमर्थम्? अल्समुदायस्य मा भूदिति, नैतदस्ति; अल्ग्रहणसामथ्र्यान्न भविष्यति, अन्यथा ह्रल्ग्रहणमनर्थकं स्यात्- यदि हल्समुदायस्यापि संज्ञा स्यात्। एवं तह्र्रल्ग्रहणेनात्र जातिग्रहणं भवतीति ज्ञापनार्थमेकग्रहणमम्। तेन "हलन्ताच्च" १।२।१० इत्यत्र यदुक्तम्--"दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्" इति तदुपपन्नं भवति।

बाल-मनोरमा

अपृक्त एकाऽल्प्रत्ययः २४९, १।२।४१

सखान् स् इति स्थिते अपृक्तकार्यं वक्ष्यन्नपृक्तसंज्ञामाह--अपृक्तः। एकालिति कर्मधारयः। अत्रैकशब्दो।ञसहायवाची। "एके मुख्यान्यकेवलाः" इत्यमरः। "स्" इत्यस्याऽपृक्तसंज्ञायाम्।

तत्त्व-बोधिनी

अपृक्त एकाऽल्प्रत्ययः २१०, १।२।४१

अपृक्त एकाल्। असहायावाच्यत्रैकशब्दः सङ्ख्यावाची वा। न च सङ्ख्यावाचित्वे "अभैत्सी"दित्यत्र हलन्तात्परस्य सिचोऽपृक्तत्वाल्लोपः स्यादिति वाच्यं, विभक्तिसाहचर्याद्विभक्तेरेव लोप इति व्याख्यानात्। एकालिति किम्? जागृविः। "वरेपृक्तस्ये"ति लोपो न। "अ"लित्यनेनैकत्वे लब्धे इदमेकग्रहण वर्णग्रहणं ज्ञापयतीति। फलं दम्भितुमिच्छति धिप्सतीत्यत्र सनो "हलन्ताच्चे"ति कित्त्वम्। तत्र हल्ग्रहणस्य व्यक्तिपरत्वे योऽत्रैकः समीपबर्ती हल्नकारस्ततः परः सन् न, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्त्वं न स्यात्। ततश्च नलोपो न स्यादित्यभ्युपगम्य "निपात एकाजना" ङित्यत्र एकाज्ग्रहणं त्युक्तुं शक्यमित्यवोचान्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तत्पुरुषः १।१ समानाधिकरणः १।१ कर्मधारयः १।१

समासः॥

समानम् अधिकरणं यस्य समानाधिकरणः तत्पुरुषः, बहुव्रीहिः॥

अर्थः॥

समानाधिकरणः तत्पुरुषः कर्मधारयसंज्ञकः भवति। तत्पुरुषः इति समासविशेषस्य संज्ञा।

उदाहरणम्॥

पाचकवृन्दारिका, परमराज्यम्, उत्तमराज्यम्॥

काशिका-वृत्तिः

तत्पुरुषः समानाधिकरणः कर्मधारयः १।२।४२

तत्पुरुषः इति समासविशेषस्य संज्ञां वक्ष्यति। स तत्पुरुषः समानाधिकरणपदः कर्मधारयसंज्ञो भवति। अधिकरणशब्दो ऽभिधेयवाचि। समानाधिकरणः समानाभिधेयः। परमराज्यम्। उत्तमराज्यम्। अकर्मधारये राज्यम् ६।२।१२९ इत्युत्तरपदाऽद्युदात्तं न भवति। पाचकवृन्दारिका। तत्पुरुषः इति किम्? पाचिकाभार्यः। समानाधिकरणः इति किम्? ब्राह्मणराज्यम्। कर्मधारयप्रदेशाः कर्मधारये ऽनिष्ठा ६।२।४६ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तत्पुरुषः समानाधिकरणः कर्मधारयः ९४३, १।२।४२

न्यासः

तत्पुरुषः समानाधिकरणः कर्मधारयः , १।२।४२

"तत्पुरुषः" इति समासविशेषस्याख्या। स च एक एवशब्दः। अनेकस्य च शब्दस्य भिन्नप्रवृत्तिनिमित्तकस्यैकस्मिन्नर्थे वृत्तिः =सामानाधिकारण्यम्। ततश्च यत्र बाह्येन पदेन तत्पुरूषस्य सामानधिकरण्यम्(), तत्रैवेयं संज्ञा स्यात्--राजपुरुषः शोभन इत्यादौ,अस्ति ह्यत्र तत्पुरुषस्य केनचित् सामानाधिकरण्यमस्ति; शोभनशब्देन सह। पाचकवृन्दारिकेत्यादौ तु न स्यात्, न ह्यत्र तत्पुरुषस्य केनचित् सामानाधिकरण्यमस्ति; शब्दान्तरस्य प्रयोगाभावादिति चोद्यमपाकर्त्तुमाह- "समानाधिकरणपदः" इति। समानम् = अभिन्नम्, एकमधिकरणम् = वाच्यं येषां पदानां तानि समानाधिकरणानि पदानि, तान्याश्रयभूतानि यस्य तत्पुरुषस्य स समानाधिकरणपदस्तत्पुरुषः। एतेन तत्पुरुषार्थानां पदानां समानाधिकरणत्वादुपचारेण तत्पुरुषोऽत्र सूत्रे समानाधिकरणशब्देनोक्त इति दर्शयति। कथं पुनर्बाह्यन्यपदापेक्षया तत्पुरुषस्य मुख्ये सामानाधिकरण्ये सम्भवति सत्यौपचारिकस्य ग्रहणमुपपद्यते? "कर्मधारयः" इति महत्याः संज्ञायाः करणात्। इह हि लाघवार्थत्वात् कसंज्ञाकरणस्य, लघीयस्यां संज्ञायां कत्र्तव्यायां "कर्मधारयः" इति महतीं संज्ञां कुर्वता-- "अन्योऽप्यत्र कश्चित् विपर्ययः संज्ञायामाश्रितः" इत्येषोऽर्थः सूचितः। तेन "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" (व्या।प।४) इति मुख्यस्य समानाधिकरणस्य ग्रहणं न विज्ञायते। "समानाभिधेयः" इति। तदर्थानां पदानां समानाभिधेयत्वात् तत्पुरुषोऽप्युपचारेण समानाभिधेय इत्युक्तः। "परमराज्यम्, उत्तमराज्यम्" इति। "सन्महत्" २।१।६० इत्यादिना समासः। कर्मधारये सति "अकर्मधारये राज्यम्" ६।२।१२९ इत्युत्तरपदाद्युदात्तमत्वं न भवति। "पाचकवृन्दारिका" इति। वृन्दारकनागकुञ्जरैः" २।१।६१ इति पुंवद्भावः। "पाचिकाभार्यः" इति। बहुव्रीहिरयम्। तेनात्र "न कोपधायाः" ६।३।३६ इति प्रतिषेधो भवत्येव। "ब्राआह्मणराज्यम्" इति। षष्ठीतत्पुरुषोऽयम्। तेनात्र समासान्तोदात्तमेव न

भवति, अपि तूत्तरपदाद्युदात्तत्वम्॥

बाल-मनोरमा

तत्पुरुषः समानाधिकरणः कर्मधारयः ७३५, १।२।४२

अथ कर्मधारयकार्यं वक्ष्यन्करमधारयसंज्ञामाह--तत्पुरुषः समाना। समानम्-एकमधिकरणं=वाच्यं ययोः पदयोः, ते समानाधिकरणे पदे, ते अस्य स्त इति समानाधिकरणः, मत्वर्थीयोऽर्शाअद्यच्। समानाधिकरणानेकपदावयवकस्तत्पुरुषः कर्मधारयसंज्ञको भवतीत्यर्थः। तत्पुरुषाधिकारे इयं संज्ञा न कृता, तथा सत्येकसंज्ञाधिकारात्कर्मधारधारयसंज्ञया तत्पुरुषसंज्ञा बाध्येतेत्याहुः।

तत्त्व-बोधिनी

तत्पुरुषः समानाधिकरणः कर्मधारयः ६५०, १।२।४२

तत्पुरुषः। समानाधिकरणशब्दोऽर्साअद्यजन्तः। समानाधिकरणपा()क इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रथमा-निर्दिष्टम् १।१ समासे ७।१ ४४ उपसर्जनम् १।१ ४४

समासः॥

प्रथमया विभक्त्या निर्दिष्टं प्रथमानिर्दिष्टम्, तृतीयातत्पुरुषः।

अर्थः॥

समासे = समासविधायके सूत्रे प्रथमया विभक्त्या विर्दिष्टं यत् पदं तद् उपसर्जनसंज्ञकं भवति।

उदाहरणम्॥

कष्टश्रितः, शङ्कुलाखण्डः, यूपदारु, वृकभयम्, राजपुरुषः, अक्षशौण्डः॥

काशिका-वृत्तिः

प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३

प्रथमया विभाक्त्या यन् निर्दिश्यते समासशास्त्रे तदुपसर्जनसंज्ञं भवति। समासे इति समासविधायि शास्त्रं गृह्यते। वक्ष्यति द्वितीया श्रितातीतपतितगतात्यस्तप्राप्ताऽपन्नैः २।१।२३ इति। द्विदीयासमासे द्वितीया इत्येतत् प्रथमानिर्दिष्टं, तृतीयासमासे तृतीया इति, चतुर्थीसमासे चतुर्थी इति, पञ्चमीसमासे पञ्चमी इति, षष्ठीसमासे षष्ठी इति, सप्तमीसमासे सप्तमी इति। कष्टश्रितः। शङ्कुलाखण्डः। यूपदारु। वृकभयम्। राजपुरुषः। अक्षशौण्डः। उपसर्जनप्रदेशाः उपसर्जनं पूर्वम् २।२।३० इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

प्रथमानिर्दिष्टं समास उपसर्जनम् ९१२, १।२।४३

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्॥

न्यासः

प्रथमानिर्दिष्टं समास उपसर्जनम्। , १।२।४३

"समासे" इत्यधिकरणनिर्देशोऽयम्। कष्टश्रितादयः समासाः न किञ्चित् प्रथमानिर्दिष्टं शब्दरूपमस्ति। तथा हि-- समासे कृते तत एव समासाद् विभक्तिरुत्पद्यते, न तु तत्र स्थाच्छब्दात्। न च वाक्यकाले समासार्थात् पदाद् या प्रथमोत्पन्ना तदाश्रयं प्रथमानिर्दिष्टत्वं समासावयवस्य कल्पयितुं युक्तम्, यतः "समासे" इत्यधिकरणनिर्देशोऽयम्। तत्र समासे कृते यस्मात् प्रथमोत्पद्यते, तदेव समासे प्रथमानिर्दिष्टं भवति; न तु यस्मात् वाक्यकाले विभक्तिकाले विभक्तिरुत्पद्यते। तद्धि वाक्य एव प्रथमानिर्दिष्टम्, न तु समासे; प्रागेव समासात् तस्य प्रथमानिर्दिष्टत्वात्। ततश्च समासे कृते प्रथमानिर्दिष्टस्य संज्ञिनोऽसम्भवात् संज्ञा न सम्भवीत्येतच्चोद्यमपाकर्तुमाह- "प्रथमया विभक्त्या यन्निर्दिश्यते" इति। समासार्थं यच्छास्त्रं तत् समासशास्त्रं गृह्रते। तत्र प्रथमानिर्दिष्टस्येयं संज्ञा विधीयते, न तु कष्टश्रितादौ; समासे प्रथमानिर्दिष्टस्याविद्यामानत्वात् विद्यते च समासशास्त्रे प्रथमानिर्दिष्टं संज्ञीति कुतः संज्ञाया अप्रसिद्धिः? कथं पुनः "समासे" इत्युच्यमाने समासशास्त्रे यत् प्रथमया निर्दिश्यते तस्य संज्ञित्वं लभ्यत इत्यत आह-- "समासे" इति। "समासशास्त्रं गृह्रते इति। कथं पुनः "समासे" इत्युच्यमाने समासशास्त्रं ग्रहीतुं शक्यम्? तादर्थ्यात् तत्र समासशब्दस्य प्रवृत्तेः। भवति हि तादर्थ्यात् तावच्छब्द्यम् , यथा-- प्रदीपार्था मल्लिका "प्रदीपः" इति, इन्द्रार्था स्थूणा "इन्द्रः" इति। कष्टश्रितादिषूपसर्जनसंज्ञयायाः कार्यम्-- "उपसर्जनं पूर्वम्" २।२।३० इति पूर्वनिपातः। तत्रेदं चोद्यते-- राज्ञः कुमारीं पश्य राजकुमारीं पश्येत्यत्र राजन्()शब्दः "षष्ठी" २।२।८ इति समासशास्त्रे प्रथमानिर्दिष्टः; "द्वितीया श्रितातीतपतित" २।१।२३ इति द्वितीयासमासशास्त्रे कुमारीशब्दश्च। समसाशास्त्रे तत्रोभयोरप्यस्यां संज्ञायां सत्यां पूर्वनिपातानियम उपसर्जनह्रस्वस्वत्वञ्चेत्येतद्दोषद्वयं प्राप्नोतीति। इह च राज्ञः कुमार्याः स्वं राजकुमारीस्वमिति द्वयोरपि षष्ठ()न्तयोः समासशास्त्रे प्रथमानिर्दिष्टत्वादुभयोरप्युपसर्जनसंज्ञायां सत्यां तदेव दोषद्वयं प्राप्नोति? नैष दोषः; यस्मादुसर्जनमिति महत्याः संज्ञायाः करणस्यैतदेव प्रयोजनम्-- अन्वर्थसंज्ञा यथा विज्ञायेतेति। अप्रधनामुपसर्जनम्, प्रधानमनुपसर्जमिति। अप्रधानञ्च प्रधानमपेक्षते; सम्बन्धिशब्दत्वात्। तत्र सम्नब्धादेतवगन्तव्यं यत् प्रति यदप्रधानं तत् प्रतितदुपसर्जनमिति। श्रितादींश्चापेक्ष्य द्वितीयान्तमुपसर्जनं भवति, न तु द्वितीयान्तमात्रम्। न चेह श्रितादयः सन्ति। राज्ञः कुमार्याः स्वं राजकुमारीस्वमित्यात्राप्येष परीहारः। अत्रापि कुमारीशब्दमपेक्ष्य राजन्शब्दस्याप्राधान्यम्; न तु राजन्()शब्दमपेक्ष्य कुमारीशब्दस्य। तस्मात् राजन्()शब्दस्योपसर्जनसंज्ञा, न तु कुमारीशब्दस्य। यदि ह्रन्वर्थसंज्ञेयम्, पाचकवृन्दारिका, पुरुषव्याघ्रः, अर्धपिप्पली, पूर्वकायः-- इत्येतेषु पूर्वपदार्थ एव प्रधानमिति पाचिकादीनामिह प्राधान्यम्। अतो यद्यप्येते "वृन्दारकनागकुञ्जरैः पूज्यमानम्" २।१।६१, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २।१।५५, "अर्धं नपुंसकम्" २।२।२, "पूर्वापराधरोत्तरमेकदेशिकनैकाधिकरणे" २।२।१ इत्येतेषु समासशास्त्रेषु प्रथमानिर्दिष्टाः, तथापि तेषामुपसर्जनसंज्ञा न प्राप्नोति; कुतः? तेषां प्राधान्यात्। एवं तर्ह्युत्तरसूत्रेऽनुक्तसमुच्चयार्थत्वाच्चकारस्य भविष्यतीत्यदोषः। अन्यस्त्वेवं मन्यते-- "पाचकवृन्दारिकेत्येवमादिषु पूर्वोक्तेषु समासेष्वाद्यौ "विशेषणं विशेष्येण बहुलम्" २।१।५६, "उपमानानि सामान्यवचनैः" २।१।५४ इत्येताभ्यामेव सिद्धौ; शेषौ तु "षष्ठी" २।२।८ इत्यनेनैव। तस्मात् "वृन्दारकनागकुञ्जरैः" २।१।६१ इत्यादीनां न तदर्थ आरम्भः; किं तर्हि? उपसर्जन संज्ञार्थः; तेनासत्यपि पाचिकादीनामप्रधानत्वे तेषामियं संज्ञा भविष्यति" इति, एतच्चासम्यक्, तथा हि -- "पूज्यमानम्", "सामान्याप्रयोगे", "नपुंसकम्", "एकाधिकरणम्"-- इत्येतान् विशेषान् वक्ष्यामीत्येतदर्थ आरम्भः स्यात्। सति चैतदर्थ आरम्भेऽत्राप्रधानस्योपसर्जनसंज्ञा विधीयमाना प्रधानस्य न स्यात्॥

बाल-मनोरमा

प्रथमानिर्दिष्टं समास उपसर्जनम् ६४५, १।२।४३

अत्र उपसर्जनकार्यं वक्ष्यन्नुपसर्जनसंज्ञामाह-प्रथमानिर्दिष्टम्। ननु समासे प्रतमानिर्दिष्टमुपसर्जनमिति व्याख्याने असंभवः, समाससे सति "सुपो धातु" इति प्रथमाया लुप्तत्वात्। समासे चिकीर्षिते प्रथमानिर्धिष्टमिति व्याख्याने तु कृष्णं श्रितः कृष्णश्रित इत्यत्र विग्रहे कृष्णशब्दस्य द्वितीयानिर्दिष्टत्वादुपसर्जनत्वं न स्यात्। श्रितशब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वं स्यात्। अतो व्याचष्टे-समासशास्त्रै इति। समास पदं समासविधायकशास्त्रपरमिति भावः। एवंच "द्वितीया श्रिते"ति समासविधायकशास्त्रे द्वितीयान्तस्यैव कृष्णशब्दस्य द्वितीयेति प्रथमानिर्दिष्टत्वादुपसर्जनत्वम्। एवंच "अव्यय"मिति समासविधावपेत्यस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वं स्थितम्।

तत्त्व-बोधिनी

प्रथमानिर्दिष्टं समास उपसर्जनम् ५७२, १।२।४३

प्रथमानिर्दिष्टम्। अत्र समासपदं तद्विधायके लाक्षणिकम्। अन्यथा "चिकीर्षिते समासे यत्प्रथमान्त"मिति व्याख्यानप्रसक्त्या कृष्णश्रित इत्यादौ श्रितादिष्वतिप्रसङ्ग इत्याशयेनाह समासशास्त्र इथि। विग्रह इति। अनुवर्तमानेन समासग्रहणेन विग्रहे लक्ष्यत इति भावः। नतु तस्येति। "अनन्तरस्य--"इति न्यायात्पूर्वसूत्रेण विहितस्य पूर्वनिपातत्वं न निषिध्यते। तेन कुमारीश्रित इत्यादौ न दोषः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एकविभक्ति १।१ च ० अपूर्वनिपाते ७।१ समासे ७।१ ४३ उपसर्जनम् १।१ ४३

समासः॥

एका विभक्तिः यस्य तत् एकविभक्ति (पदं), बहुव्रीहिः॥ पूर्वः च असौ निपातः च इति पुर्वनिपातः, कर्मधारयः तत्पुरुषः। न पूर्वनिपातः अपूर्वनिपातः तस्मिन् अपूर्वनिपाते, नञ्तत्पुरुषः॥

अर्थः॥

समासे विधीयमाने, एकविभक्तिकं = नियतविभक्तिकं पदम् उपसर्जनसंज्ञं भवति, तत्सम्बन्धिपदं सर्वाभिः विभक्तिभिः युज्यमाने अपि, पूर्वनिपातम् उपसर्जनकार्यं वर्जयित्वा॥

उदाहरणम्॥

निष्कौशाम्बिः, निर्वाराणसिः। निष्त्रान्तः कौशाम्ब्या निष्कौशाम्बिः। निष्त्रान्तं कौशाम्ब्या निष्कौशाम्बिम्। निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना। निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये। निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्तस्य कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ। हे निष्क्रान्त कौशाम्ब्या निष्कौशाम्बे। सर्वत्र एव अत्र -- कौशाम्ब्याः -- इति नियतविभक्तिकं पञ्चम्यन्तं पदं वर्तते, यद्यपि तत्सम्बन्धि -- निष्क्रान्त -- इति पदं बहुभिः विभक्तिभिः युज्यते। एवं -- निर्वाराणसिः -- इत्यपि बोध्यम्॥

काशिका-वृत्तिः

एकविभाक्ति च अपूर्वनिपाते १।२।४४

एक विभाक्तिर् यस्य तदिदम् एकविभाक्ति। समासे विधीयमाने यन् नियतविभक्तिकं, द्वितीये सम्बन्धिनि बहुभिर्विभक्तिभिर् युज्यमाने ऽप्येकयैव विभक्त्या युज्यते तदुपसर्जनसंज्ञं भवति अपूर्वनिपाते, पूर्वनिपतं पूर्वनिपाताऽख्यम् उपसर्जनकार्यं वर्जयित्वा। निरादयः क्रान्ताऽद्यर्थे पञ्चम्या। पूर्वपदे नानाविभक्तिके ऽप्युत्तरपदं पञ्चम्यन्तम् एव भवति। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। निष्त्रान्तं कौशाम्ब्या निष्कौशाम्बिम्। निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना। निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये। निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्तस्य कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ। एवं निर्वाराणसिः। एकविभक्ति इति किम्? राजकुमारी। अपूर्वनिपाते इति किम्? न हि भवति कौशाम्बीनिः इति।
लघु-सिद्धान्त-कौमुदी
एकविभक्ति चापूर्वनिपाते ९५४, १।२।४४

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः॥
न्यासः
एकविभक्ति चापूर्वनिपाते।, १।२।४४

अप्रधमानिर्दिष्टार्थोऽयमारम्भः। विभक्तिशब्दः सुपां वाचकः, विभागवचनो वा। कारकशक्तिर्विभागः--विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा। "समासे विधीयमाने" इति। समासार्थवाक्यकाले। तदा हि तस्य समासस्य विधीयमानता भवति। एतेन समासग्रहणमनुवर्तमानं समासार्थे वाक्ये वत्र्तते, न समासशास्त्र इति दर्शयति। समासशास्त्रे हि सर्वमेव शब्दरूपमेकविभक्तिकमेव भवतीत्येकविभक्तिग्रहणमनर्थकं स्यादिति भावः। सर्वमेव हि प्रातिपदिकं पर्यायेणैकया विभक्त्या प्रयुज्यते। तस्मादेकविभक्तिग्रहणसामथ्र्यादवधारणमत्र विज्ञायत इत्यत आह-- "यन्नियतविभक्तिकम्" इति। तदेव स्पष्टीकुर्वन्नाह-- "द्वितीये सम्बन्धिति" इत्यादि। "पूर्वपदेनानाविभक्तिकेऽपि" इति। निष्क्रान्तशब्दः कर्तृशक्त्युपसर्जनीभूतं द्रव्यमाह। तच्चानेकसाधनशक्त्युपचितमिति क्रियान्तरसम्बन्धादेनेकसाधनविभक्तिकं भवति। "उत्तरपदंद तु पञ्चम्यन्तमेव भवति" इति। निषक्रमणक्रियापेक्षयाऽऽविर्भूतापादानशक्तिकत्वात्। "निष्कौशाम्बिः" इत्यत्रोपसर्जनसंज्ञाकार्यम्"गास्त्रियोरुपसर्जनस्य" १।२।४८ इति हस्वत्वम्। अथ निसोऽत्र केनोपसर्जनसंज्ञा विधीयते, ययोऽस्य पूर्वनिपातः? पूर्वसूत्रेणेति चेत्, नैतदस्ति; तेनाप्रधानस्योपसर्जनसंज्ञाविधानात्, निसश्चात्र प्राधान्यात्। एवं तर्हि चकारस्यानुक्तसमुच्चायार्थत्वात् भविष्यति। अन्ये त्वाहुः-- मा भून्निस उपसर्जनसंज्ञा, असत्यामपि तस्यां पूर्वनिपातो भविष्यति, "एकविभक्ति चापूर्वनिपाते" १।२।४४ इति वचनादिति, एतच्चायुक्तम्; पूर्वनिपाते हि कत्र्तव्य एकविभक्तिकस्योपसर्जनसंज्ञा नास्त्येव। तत्र यदि निस उपसर्जनसंज्ञा न स्यात्, तदोदहरणे द्वयोरप्यसत्यां तस्यां पर्यायेणानियः पूर्वनिपातः प्रसज्येत। अथ कथमर्धपिप्पल्यादीनामूपसर्जनसंज्ञा न भवति? अत्र च "विभाषा च्छन्दसि" १।२।३६ इत्यतो विभाषाग्रहणं मम्डूकप्लुतन्यायेनानुवर्तते, सा च व्यवस्थितविभाषा। तेनार्ध पिप्पल्या अर्धपिप्पलीत्यादौ विषये पिप्पल्यादीनामेकविभक्तियुक्तानामप्युसर्जनसंज्ञा न भवति। यदि हि स्यात्, तदा ह्यस्वत्वं स्यात्॥
बाल-मनोरमा
एकविभक्ति चापूर्वनिपाते ६४७, १।२।४४

अत्र दिशाशब्दस्यापि उपसर्जनत्वमाह-एकविभक्ति। "प्रथमानिर्दिष्टं समास उपसर्जन"मित्यतः "समास" इति, "उपसर्जन"मिति चानुवर्तते। "समास" इत्यनेन विग्रहवाक्यं लक्ष्यते। एकैव विभक्तिर्यस्य तदेकंविभक्ति।

नियतविभक्तिकमिति यावत्। एवंच विग्रहे यन्नियतविभक्तिकं तत्पूर्वनिपातभिन्नकार्ये कर्तव्ये उपसर्जनं स्यादित्यर्थः। फलितमाह-विग्रहे यन्नियतेति। "निष्कौशाम्बि"शब्द उदाहरणम्। तत्र कौशाम्ब्या निष्क्रान्तः। निष्क्रातं निष्क्रान्तेन निष्क्रान्ताय निष्क्रान्तात् निष्क्रान्तस्य निष्क्रान्ते इति विग्रहेषु "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासे निष्कौशाम्बिः निष्कौशा()म्ब निष्कौशाम्बिना इत्यादीति स्थितिः। अत्र "कौशाम्बी"शब्द एव विग्रहे नियतविभक्तिक इति तस्योपसर्जनत्वमनेन भवति। समासशास्त्रे कौशाम्बीशब्दस्य पञ्चमीनिर्दिष्टत्वमेव, न तु प्रथमानिर्दिष्टत्वमिति प्रथमानिर्दिष्टमित्यनेनोपसर्जनत्वाऽप्राप्तौ वचनम्। तत्र कौशाम्बीशब्दस्याऽनेन उपसर्जनत्वेऽपिन "पूर्वनिपातः तत्तद्विभक्त्यन्तैरेव समास इत्यत्र इदमेव सूत्रं प्रमाणम्। "तुल्यार्थै"रिति सूत्रे भाष्ये स्पष्टमिदम्। प्रथमान्तपदेनैव समास इत#इ "अनेक"मिति सूत्रे भाष्ये स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अर्थवत् १।१ अधातुः १।१ अप्रत्ययः १।१ प्रातिपदिकम् १।१

समासः॥

न धातुः, अधातुः, नञ्तत्पुरुषः।
न प्रत्ययः, अप्रत्ययः, नञ्तत्पुरुषः।

अर्थः॥

अर्थः अस्य अस्ति इति अर्थवत्, {तदस्यास्त्य॰ (५।२।९४)} इति मतुप्प्रत्ययः।
अर्थवत्, शब्दरूपं प्रातिपदिकसंज्ञं भवति, धातुं प्रत्ययं च वर्जयित्वा।

उदाहरणम्॥

पुरुषः, डित्थः, कपित्थः, कुण्डम्, पीठम्
काशिका-वृत्तिः
अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५

अभिधेयवचनो ऽर्थशब्दः। अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति धातुप्रत्ययौ वर्जयित्वा। डित्थः। कपित्थः। कुण्डम्। पीठम्। अर्थवतिति किम्? वनम्, धनम् इति न अन्तस्य अवधेर् मा भूत्। नलोपो हि स्यात्। अधातुः इति किम्? हन्तेर् लङ्। अहन्। अलोपः स्यत्। अप्रत्ययः इति किम्? काण्डे। कुड्ये। ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७ इति ह्रस्वः स्यात्। अनर्थकस्य अपि निपातस्य प्रातिपदिकसंज्ञा इष्यते। अध्यागच्छति। प्रलम्बते। प्रातिपदिकप्रदेशाः ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७ इत्येवम् आद्यः।
लघु-सिद्धान्त-कौमुदी
अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ११६, १।२।४५

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्॥

न्यासः

अर्थवदगधातुरप्रत्ययः प्रातिपदिकम्। , १।२।४५

"अभिधेयवचनोऽयमर्थशब्दः" इति। एतेन प्रयोजनादिवचनाद्व्यवच्छिनत्ति। अर्थशब्दो हि प्रयोजनवचनोऽप्यस्ति, यथा-- अनेनार्थनागतः, अनेन प्रयोजनेनेति गम्यते। निवृत्तिवचनोऽप्यस्सि, यथा-- मशकारर्थो धूम इति, मशकनिवृत्त्यर्थ इति गम्यते। धनवचनोऽप्यस्ति,यथा--अर्थवान् देवदत्त इति, धनवानिति गम्यते। अभिधेयवचनोऽप्यस्ति, यथा-- अस्य वचनस्यायमर्थ इति, इदमस्याभिधेयमिति गम्यते। इह त्वभिधेयवचनस्यैव ग्रहणम्। तत् पुनरभिधेयं जातिगुणक्रियाद्रव्यभेदेन चतुर्विधम्।अत एव चतुष्टयी शब्दानां प्रवृत्तिर्भवति। तत्र जातिशब्दानां जातिरभिधेया-- गौरिति। यद्यर्थवतः प्रातिपदिकसंज्ञा विधीयते तदाऽभाववचनशशविषाणादिशब्दानां प्रातिपदिकसंज्ञा नोपपद्यते, अर्थाभावात्, नैतदस्ति; "अर्थशब्दोऽभिधेयवचनः" (का।१।२।४५) इत्युक्तम्, अभावोऽप्यभिधेयो भवत्येव। अन्यथा ह्यर्थाभावादितीदं वचनमनुच्चारणीयं स्यात्, अनर्थकत्वात्, न ह्यनर्थकं वचनं प्रयोगर्हति। तस्मादबाववचनानामपि प्रातिपदिकसंज्ञा भवत्येव। "नान्तस्याधेर्मा भूत्" इति। ननु चाधातुरिति प्रतिषेधो भविष्यति, तथा हि "वन सम्भ्कतौ" (धा।पा।४६३), "धन धान्ये" (धा।पा।११०४) इत्येतयोः धरात्वोरेते रूपे, नैतदस्ति; अव्युत्पन्नावपि वनधनशब्दौ स्तः, तयोरेवायं प्रयोगः। अत्र यदि नान्तस्यावधेः प्रातिपदिकसंज्ञा स्यात् तदा सुबुत्पत्तिः स्यात्, ततश्च पदसंज्ञायां सत्यां नलोपः स्यात्। ननु च "अधातुः" "अप्रत्ययः"-- नैतदस्ति; अनर्थकस्यापि धातोर्विद्यमानत्वात् यथा-- "इङ अध्ययने" (धा।पा।१०४६), "इक् स्मरणे" (धा।पा।१०४७) इति-- एतयोरधिपूर्वयोरेवार्थवत्त्वम्, न केवलयोः। यस्तु गणपाठेऽनयोरर्थनिर्देशः, स समुदायार्थमवयवेऽध्यारोप्य कृत इति वेदितव्यम्। अध्यारोपितार्थयोरपि तयोर्गणपाठसामर्थ्याद्धातुसंज्ञा भवत्येव। एवं प्रत्ययोऽप्यनर्थकोऽप्यस्ति। यथा-- "यावादिभ्यः कन्" ५।४।२९, याव एव यावक इति। न ह्यत्र प्रत्ययस्यान्वयव्यतिरेकाभ्यां शक्यतेऽर्थवत्त्वं प्रत्येतुम्। विनापि तेन कन्प्रत्ययेन यावशब्दादेव तदर्थः प्रतीययते। तस्मादर्थवदिति युक्तमुक्तम्। "अहन्" इति। अदादित्वाच्छपो लुक्, तिपो हल्ङ्यादिना ६।१।६६ लोपः, अट्। स च हन्तिग्रहणेन गृह्यत इति कृतेऽपि तस्मिन् हन्तिर्दातुरेव। अत्र विना धातुग्रहणेन प्रागेव प्रत्ययोत्पत्तेः प्रातिपदिकसंज्ञा स्यात्। नलोपस्तु प्रत्ययोत्पत्तौ पदत्वे सत्युत्तरकालम्। अथ वा-- प्रातिपदिकसंज्ञाऽपि प्रत्ययोत्पत्तेरुत्तरकालमेव स्यात्, तस्माद्धातुग्रहणं कर्तव्यम्। ननु चात्र प्रत्ययलक्षणेन "अप्रत्ययः" इति प्रतिषेधेन भवितव्यम्,तत् किमधातुग्रहणेन? नैतदस्ति; प्रातिपदिकसंज्ञायां नलोपः कार्यः, नलोपे च "न ङिसम्बुद्धयोः" ८।२।८ इति प्रतिषेधो ज्ञापकः- प्रत्ययलक्षणेन "अप्रत्ययः" इति प्रतिषेधो न प्रवर्तत इति। यदि ह्यप्रत्यय इति प्रत्ययलक्षणेन हे राजन्नित्येवमादिषु प्रातिपदिकसंज्ञायाः प्रतिषेधः स्यात्, "न ङिसम्बुद्धयोः" ८।२।८ इति प्रतिषेधो अनर्थकः स्यात्; प्राप्त्यभावात्। अथ भिद्-छिद्-लूः- पूरित्येवमादीनां कथं प्रातिपदिकसंज्ञा, यावता क्विबन्ता धातुत्वं न जहतीति धातव एवैत इति, अत्राधातुरिति प्रतिषेधेन भवितव्यम्? नैष दोषः; मा भूदनेन, कृदन्तत्वादुत्तर सूत्रेण भविष्यति। न चोत्तरस्याः प्राप्तेरयं बाधकः; वाक्यान्तरस्थत्वात्। "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" (व्या।प।१०) इति वा। "काण्डे, कुड()ए" इति। प्रथमाद्विवचनान्ते एते रूपे। "नपुंसकाच्च" ७।१।१९ इति शीभावः। अत्र च "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य" (भा।प।सू।७) इति तदन्तस्य प्रतिषेधो भविष्यति, न प्रत्ययमात्रस्य। ननु च "सुप्तिङन्तं पदम्" १।४।१४ इत्यत्रान्तग्रहणेन "अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति" इति ज्ञापितत्वात् "अप्रत्ययः" इति प्रत्ययान्तस्य प्रतिषेधो न लभ्यते, नैष दोषः; संज्ञाविधौ स प्रतिषेधः, न चायं संज्ञाविधिः, किं तर्हि? प्रतिषेधविधिः। अथ किमर्थमप्रत्यय इत प्रतिषेध उच्यते, यावतोत्तरसूत्रे कृत्तद्धितग्रहणं नियमार्थं भविष्यति-- "कृत्तद्धितान्तस्यैव प्रातिपदिकसंज्ञा, नान्यप्रत्ययान्तस्य-- काण्डे,कुड()ए इत्येवमादेः"इति? नैतदस्ति, असत्यस्मिन् प्रतिषेधेऽन्यत्र"संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति" इति कृत्तद्धितयोरेव प्रातिपदिकसंज्ञा स्यान्न तदन्तस्य;

तदन्तस्य चैवेष्यते-- भिच्छिल्लूःपूरित्येवमादीनां प्रातिपदिकसंज्ञार्थम्। सत्यप्रत्यय इत्येतस्मिन् प्रतिषेधे प्राप्ते यथा कृत्तद्धितान्तस्य प्रातिपदिकसंज्ञा लभ्यते तथोत्तरसूत्रे प्रतिपादयिष्यामः। ननु च "काण्डे" "कुड्ये"-- इत्येतयोः पूर्वमेव प्रकृतेः प्रातिपदिकसंज्ञा प्रवृत्ता, विभक्त्या च सहैकादेशे कृतेऽन्तादिवद्भावादस्त्येव प्रातिपदिकत्वमिति सत्यप्यप्रत्ययग्रहणे ह्रस्वत्वं प्राप्नोत्येव, नैतदस्ति; अप्रत्ययग्रहणसामर्थ्यान्न भविष्यति,अन्यथा ह्रप्रत्ययग्रहणमनर्थकं स्यात्()। "अधातुरप्रत्ययः" इति द्विष्प्रतिषेधः षष्ठीतत्पुरुषाशङ्कानिरासार्थः "अधातुप्रत्ययः" इत्युच्यमाने षष्ठी तत्पुरुषोऽप्याशङ्क्येत-- धातोर्यः प्रत्ययस्य न भवतीति॥

बाल-मनोरमा

अर्थवदधातुप्रत्ययः प्रातिपदिकम् १७७, १।२।४५

अथ स्वौजसमौडित्यादिना स्वादिप्रत्ययान्वक्ष्यति। तत्र ङ्याप्प्रातिपदिकादित्यधिकृतम्। किं तत्प्रातिपदिकमिति जिज्ञासायामाह--अर्थवदधातुः। अर्थोऽस्यास्तीत्यर्थवत्। नपुंसकलिङ्गनुसारात्-"शब्दस्वरूप"मिति विशेष्य मध्याहार्यम्। अधातुरिति, अप्रत्यय इति च तद्विशेषणम्। न धातुरधातुरिति नञ्()तत्पुरुषः। "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति पुंस्त्वम्। "अप्रत्यय" इत्यावर्तते। प्रत्ययभिन्नं प्रत्ययान्तभिन्नं च विवक्षितम्। पूर्ववत्पुंस्त्वम्। "संज्ञाविधा"विति निषेधस्तु प्रत्ययस्य यत्र संज्ञा तद्विषय इति भावः। तदाह--धातु प्रत्ययमित्यादिना। अव्युत्पन्ना डित्थादिशब्दा इहोदाहरणानि। अर्थवदिति किम्?। दनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञा मा भूत्। सत्यां हि प्रातिपदिकसंज्ञायां प्रतिवर्णं सुबुत्पत्तिः स्यात्, सङ्ख्याकारकाभावेऽपि प्रथमैकवचनस्य सोर्दुर्वारत्वात्प्रथमाविभक्तेः कारकानपेक्षत्वात्तदेकवचनस्य सङ्ख्यानवगमे।ऽपि प्रवृत्तेर्भाष्ये सिद्धान्तिततत्वाच्च। नच हल्ङ्यादिना सुलोपात्प्रतिवर्णं सोरुत्पत्तावपि न क्षतिरिति वाच्यम्, एवमपि नलोपस्य दुर्वारत्वादकारात्सो रुत्वविसर्गापत्तेश्चेत्यलम्। अधातुरिति किम्?। हनधातोर्लङि, तिपि, शपि लुकि, इतश्चेतीकारलोपे, अडागमे, हल्ङ्यादिलोपेऽहन्निति रूपम्। अत्र धातोः प्रातिपदिकसंज्ञायां सुबपबादे तिङि उत्पन्ने लुप्ते तस्मिन् प्रातिपदिकसंज्ञायाः प्रागुत्पन्नाया अनपगमान्नलोपः स्यात्। नच प्रत्ययलक्षणमाश्रित्य प्रत्ययान्तपर्युदासादेव न प्रातिपदिकत्वमिति वाच्यम्। एवमपि प्राक्()प्रवृत्तप्रातिपदिकत्वस्यानपगमात्। नचैवमपि कार्यकालपक्षे नलोपार्थं प्रातिपदिकसंज्ञायां क्रियमाणायां प्रत्यलक्षणेन प्रत्ययान्तस्य प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्। तर्हि हे राजन्नित्यत्रापि प्रत्ययलक्षणेन प्रत्ययान्तत्वात्प्रातिपदिकत्वाभावे सति नलोपस्याऽप्रसक्तौ "न ङिसंबुद्ध्योः" इति तन्निषेधवैयर्थ्यप्रसङ्गात्। नच राजन्शब्दस्यौणादिककनिन्प्रत्ययान्तस्य कृत्तद्धितेति प्रातिपदिकत्वान्नलोपप्रसक्तौ "न ङिसंबुद्धयोः" इति निषेधो।ऽर्थवानिति वाच्यम्, उणादीनामव्युत्पत्तिपक्षे कृत्तद्धितेत्यस्याऽप्रवृत्तेः। एवं चास्मादेव निषेधात्प्रत्ययलक्षणमाश्रित्याऽप्रत्ययान्त इति पर्युदासो न प्रवर्तत इति विज्ञायते। एवं च अह न्नित्यत्राप्यप्रत्ययान्तत्वात्प्रातिपदिकत्वप्राप्तौ तन्निवृत्त्यर्थमधातुग्रहणम्। अप्रत्यय इति किम्?। हरिषु करोषीत्यत्र सुप्सिपोरर्थवत्त्वादप्रत्ययान्तत्वाच्च प्रातिपदिकत्वे प्राप्ते तन्निवृत्त्यर्थमप्रत्यय इति प्रत्ययपर्युदासः। नचात्र सुप्सिपोर्व्यपदेशिवद्भावेन प्रत्ययान्तत्वात्प्रत्ययान्तपर्युदासेनैव प्रातिपदिकत्वनिवृत्तिसंभवा()त्क प्रत्ययपर्युदासेनेति वाच्यम्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया प्रकृतिप्रत्ययसमुदायस्यैव प्रत्ययान्ततया केवलप्रत्यययोः सुप्सिपोः पर्युदासाऽलाभात्। अप्रत्ययान्त इति किम्?।हरिषु करोषि अत्र प्रक-तिप्रत्ययसमुदाययोः प्रत्ययभिन्नत्वादर्थवत्त्वाच्च प्रातिपदिकत्वं मा भूत्।

तत्त्व-बोधिनी

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १४७, १।२।४५

अथाजन्तपुंलिङ्गप्रकरणम्। अर्थवदधातु। प्रत्ययं प्रत्ययान्तं चेति। सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः। अर्थव"दिति नपुंसकनिर्देशस्याऽनुगुणं विशेष्यमध्याहरति--शब्दस्वरूपमिति। "अधातुरप्रत्यय" इति पुंलिङ्गनिर्देशस्तु "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्युत्तरपदलिङ्गवत्त्वाद्बोध्य इत्याहुः। यदि तु धातुभिन्नमित्यर्थं परित्यज्यारोपितो धातुरधातुरिति व्याख्यायते, तदा नपुंसकत्वप्राप्तेराशङ्कैव नास्तीति ज्ञेयम्। अर्थवदिति किम्?। "धनं" "वन"मित्यादौ प्रतिवर्णं संज्ञा मा भूत्। तस्यां च सत्यां स्वादयः स्युः। ननु सङ्ख्याकर्मादेरभावान्न भविष्यतीति चेन्न; "एकवचनमुत्सर्गतः करिष्यते" इति सिद्धान्ताड्डुंफडादिभ्य इव सोर्दुर्वारत्वात्। न चार्थवद्ग्रहणपरिभाषया अनर्थके न स्यादिति वाच्यं, तस्या विशिष्टरूपोपादानविषयत्वात्। "प्रादूहोढ"इत्यत्र तु "ऊढ" इति विशिष्टरूपमुपात्तमितिक्तवत्वन्तैकदेशस्यानर्थकस्योढशब्दस्य ग्रहणं नेत्युक्तम्। न ह्यत्र तथा विशेषरूपस्योपादानमस्ति। यद्यप्यधातुरित्यादिपर्युदासेनार्थवत्त्वं लभ्यते, तथाप्युत्तरार्थमर्थवद्ग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। न चैकाज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यान्नावयवानामित्यर्थवद्ग्रहणमिह व्यर्थमिति शङ्क्यं ; समुदाये द्विरुक्ते अवयवा अपि द्विरुक्ता भवन्ति। "वृक्षः प्रचलन्सहावयवैः प्रचलती"ति न्यायात्। इह तु समुदाये प्रवृत्तया प्रातिपदिकसंज्ञया नावयवानां तत्कार्यसिद्धिरिति वैषम्यात्। अतएव "यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बाहूनां चाऽविशेषेण संयोगसंज्ञे"ति सिद्धान्तः सङ्गच्छते। अन्यथा त्वदुपन्यस्तन्यायेन समुदाय एव संयोगसंज्ञा प्रवर्तेत। अत्र केचित्-"धनं" "वन"मित्यादौ प्रतिवर्णं सत्यामपि संज्ञायां सत्स्वपि स्वादिषु न क्षतिः। "हल्ङ्या"बित्यादिना सुलोपात्। न च नलोपो धस्य जश्त्वं च स्यादिति शङ्क्यम्, धातुपाठे "धन" "वने"त्युच्चारणसामर्थ्यात्तदप्रवृत्तेरित्याहुः। तदसत्।?कारात्सोरुत्पत्तौ रुत्वप्रवृत्तेः। यद्यपि समुदितप्रातिपदिकस्यावयवत्वेन सुपो लुकि रुत्वं न भवेत्तथापि "चिकीर्षति" "विघ्न" इत्यादौ रेफदकारयोः पदान्तत्वे सति "खरवसानयो"रिति विसर्गस्य "यरोऽनुनासिके" इत्यनुनासिकस्य च प्रसङ्गादिति दिक्। अधातुः किम्?, अहन्। धातोः प्रातिपदिकसंज्ञायां सत्यां तिङां स्वाद्यपवादत्वादहन्नित्यत्र हन्तेस्तिपि सिप#इ वा कृते "इतश्चे"तीकारलोपे हल्ङ्यादिलोपे च प्राक्कृता प्रातिपदिकसंज्ञा नापगतेति "नलोपः प्रातिपदिकान्तस्ये"ति नलोपः स्यात्तन्मा भूत्। "अहन्" इति रुत्वं "रोऽसुपी"ति रत्वं चेह नाशङ्क्यम्, लाक्षणिकत्वात्। न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासात्प्रातिपदिकसंज्ञाऽभावेन नलोपो न भवेदिति वाच्यं, प्रत्ययलक्षणेन उक्तपर्युदासाऽप्रवृत्तेः "न ङिसंबुध्यो"रिति निषेधेन ज्ञापितत्वात्। कथमन्यथा "राज"त्यादौ नलोपः स्यात्। यद्यपि व्युत्पत्तिपक्षे राजञ्शब्दस्य कनिन्प्रत्ययान्ततया "कृत्तद्धिते"ति प्रातिपदिकसंज्ञायां राजेत्यादौ नलोपःस्यात् , तथा च "न ङिसबनध्यो"रिति निषेधो न ज्ञापक इति कार्यकालपक्षेऽधातुग्रहणं व्यर्थं, तथाप्यव्युत्पत्तिपक्षे ज्ञापक एवेति कार्यकालेऽपि तत्स्वीकर्तव्यम्, न च "सुपो धा"त्विति सूत्रे प्रातिपदिकात्पृथग्धातुग्रहणाद्धातोर्नेयं संज्ञेति वाच्यम्, "पुत्रीयती"त्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात्। अप्रत्ययः किम्?, हरिषु, करोषि। अत्र सुप्सिपोर्मा भूत्। अप्रत्ययान्तः किम्?। तत्रैव विभक्तिविशिष्टयोर्मा भूत्। न चान्तवद्भावेन "काण्डे" "कुड()ए"इत्यादौ प्रातिपद#इकत्वं स्यादेव। तथा च "ह्रस्वो नपुंसके-" इति ह्रस्वः सोरुत्पत्तिश्च स्यादिति वाच्यम्, "सप्तम्यधिकरणे चे"त्यादिनिर्देशेन विभक्तयेकादेशस्यान्तवद्भावानभ्युपगमादिति दिक्। ननु प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात्। व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति चेन्मैवं, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेग्र्रहणात्, केवलस्य चाऽतथात्वात्। अन्यथा सुप्तिङोरपि तदन्तत्वात्पदत्वं स्यात्। तथा च "हरिषु" "करोषी"-त्यादौ षत्वं न स्यात्, "सात्पदाद्यो"रिति निषेधात्। न च षत्वविधेर्निरवकाशाता, "सर्पिषे" "एष" इत्यादौ चरितार्थत्वात्। अन्ये तु व्याचक्षते-"कृत्तद्धिते"त्यत्र हि तदन्तविधिर्वक्ष्यते। तथा च "तद्धितग्रहणस्य तद्धितान्तानामेव नत्वन्यप्रत्ययान्तानां संज्ञे"ति नियमार्थतामाश्रित्य प्रत्ययान्तपर्युदासोऽत्र न कर्तव्यः। अथवा "सात्पदाद्यो"रिति सूत्रे सातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे प्रत्ययग्रहणं सामर्थ्यात्तदन्तपरम्। उत्तरसूत्रे तद्धितग्रहणं तु विध्यर्थमेवाऽस्तु। यद्वा सातिग्रहणात्प्रत्ययस्य प्रातिपदिकत्वाऽभावे तद्धितग्रहणस्योक्तरीत्या नियमार्थत्वे च "अर्थवदधातुः प्रातिपदिक"मित्येव सुवचमिति, तेषाम् "इको यणची"ति सूत्रं व्यर्थं स्यात्। "तस्मादित्युत्तरस्य"

"वाय्वृतुपित्रुषसः"-इत्यादिनिर्देशाज्ज्ञापकादिष्टसिद्धेः। "नाज्झलौ" इत्यत्राकारसहितोऽच् आजित्ययं मूलग्रन्थोऽपि विरुध्येत, "कालसमयवेलासु"-इत्यादिज्ञापकादेव ढत्वाऽभावसिद्धे। यदि ज्ञापकेन प्रत्याख्यानमयुक्तमिति, यदि चाऽऽकारप्रश्लेषे एव तल्लिङ्गमित्यभ्युपगमे सूत्राक्षरैरेवेष्टं सिध्यतीत्युच्येत, तर्हि "अप्रत्यय" इत्येतदभ्युपगम्य प्रत्ययपर्युदासे "साति"ग्रहणं लिङ्गं, प्रत्ययान्तपर्युदासे तु तद्धितग्रहणमित्यप्रत्ययग्रहणमेवावर्त्त्य व्याख्यायतां, किमनया कुसृष्टयेति दिक्। "अधातुप्रत्यया"विति सिद्धे नञ्द्वयोपादानमप्रत्यय इत्यस्यावृत्तिसोकर्यार्थम्। महासंज्ञाकरणं श्रुत्यनुरोधात्। तथा चाथर्वणे पट()ते--"को धातुः, किं प्रातिपदिकं, कः प्रत्ययः" इति। डित्थादीन्यव्युत्पन्नानीहोदाहरणम्। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः। वस्तुतस्तु व्युत्पत्तिपक्षे "बहुपटव" इत्याद्यर्थं सूत्रमिति नव्याः। न चैवं "बहुच्पूर्वः प्रातिपदिक"मित्येव सूत्र्यतामिति वाच्यम्, "मूलकेनोपदंश"मित्यादौ कृदन्तत्वेनातिप्रसङ्गात्, गतिकारकपूर्वस्यापि कृदन्तत्वात्। न च समासग्रहणं नियमार्थमिति निस्तारः, अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वाऽयोगात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत्-तद्धित-समासाः १।३ च ० प्रातिपदिकम् १।१ ४५

समासः॥

कृत् च तद्धितश्च समासश्च कृत्तद्धितसमासाः, इतरेतरद्वन्द्वः

अर्थः॥

कृत्प्रत्ययान्ताः तद्दितप्रत्ययान्ताः समासाश्च प्रातिपदिकसंज्ञकाः भवन्ति

उदाहरणम्॥

कृत् - कारकः, हारकः, कर्त्ता, हर्त्ता॥ तद्दितः - शालीयः, औपगवः, ऐतिकायनः॥ समासः - राजपुरुषः, कष्टश्रितः
काशिका-वृत्तिः
कृत्तद्धितसमासाश् च १।२।४६

कृतस् तद्धिताः समासाश्च प्रातिपदिकसंज्ञा भवन्ति। अप्रत्ययः इति पूर्वत्र पर्युदासत् कृदन्तस्य तद्धितान्तस्य च अनेन प्रातिपदिकसंज्ञा विधीयते। अर्थवत्समुदयानां समासग्रहणं नियमार्थम्। कृत् कारकः। हारकः। कर्ता। हर्त। तद्धितः औपगवः। कापटवः। समासः राजपुरुषः। ब्राह्मणकम्बलः। समासग्रहणस्य नियमार्थत्वाद् वाक्यस्य अर्थवतः संज्ञा न भवति।
लघु-सिद्धान्त-कौमुदी
कृत्तद्धितसमासाश्च ११७, १।२।४६

कृत्तद्धितान्तौ समासाश्च तथा स्युः॥
न्यासः

कृत्तद्धितसमासाश्च। , १।२।४६

अत्र "अन्यत्र संज्ञाविधौ प्रत्ययग्रणे तदन्तविधिर्नास्ति" इत्यतन्नोपतिष्ठते, यस्मादप्रत्यय इति प्रतिषेधे प्राप्ते वचनमिदम्। "अप्रत्ययः" इति प्रत्ययान्तस्य प्रतिषेधः उक्तः। तेन यत्र संज्ञायाः प्रतिषेधस्तत्रेयमारभ्यमाणा तदन्तस्यैव भवतीत्येतच्चेतसि कृत्वाऽऽह-- "अप्रत्यय इति पूर्वसूत्रे पर्युदासात् कृदन्तस्य" इत्यादि। अथ समासग्रहणं किमर्थम्? यावता समासस्यार्थवत्त्वात् पूर्वेणैव संज्ञा सिद्धेत्यत आह-- "अर्थवत्समुदायानाम्" इत्यादि। निर्धारणषष्ठीयम्-- अर्थवन्तो ये समुदायास्तेषां मध्ये समासस्यार्थवतः समुदायस्य प्रातिपदिकसंज्ञा यथा स्यादिति नियमार्थं समासग्रहणम्। यद्येवम्, प्रकृतिप्रत्ययसमुदायस्यार्थवतः प्रातिपदिकसंज्ञा न स्यात्-- बहुपटव उच्चकैरिति? कोऽत्र दोषः? "चितः" ६।१।१६७ इत्यस्मिन् सूत्रे चितः सप्रकृतेर्बहुजकजर्थमिति वचनादेतद्व्यवस्थाप्यते-- प्रकृतिमन्तर्भाव्य चित्स्वरो विधीयत इति। बहुपटव इत्यत्र बहुचि विहिते यदि प्रातिपदिकसंज्ञा न स्यात्,तदा प्रातिपदिकत्वाभावात् यथा सुबुत्पत्तिर्न स्यात् तथोत्पन्नाया अपि विभक्तेः "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति लुका न भवितव्यम्। ततश्च बहुपटव इत्यत्र जस्विभक्तेरकारस्य स्वरः स्यात्; उकारस्य चेष्यते। प्रातिपदिकत्वे तु सति पूर्वोत्पन्नाया विभक्तेर्लुकि कृते याऽन्या विभक्तिरुत्पद्यते, सा बहुजुत्पत्तेरुत्तरकालभाविनीत्वात् प्रकृतौ नान्तर्भवति। तेन तामुत्सृज्य पूर्वो भागः स्वरभाग भवति। अत उकारस्य स्वरः सिध्यति। उच्चकैरित्यत्र प्रातिपदिक्तवाभावाकज्वतः समुदायाद्विभक्तिर्न स्यात्, तस्याञ्चासत्यां पदत्वं न स्यात्। ततश्चोच्चकैः पठतीति "तिङ्ङतिङः" ८।१।२८ इति निघातो न स्यात्। तस्मात् प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा वक्तव्या? न वक्तव्या, यस्मात् तुल्यजातीयानां नियमः, तेन तुल्यजातीयो नियमेन व्यवच्छ#इद्यते। तुल्यजातीयश्चच समाससुबन्तसमुदायादन्यः वाक्यसमुदाय एव, न तु प्रकृतिप्रत्ययसमुदायः। तेनायं तस् नियमेन व्यवच्छेदो न करिष्यते, नैतदस्ति; सुबन्तासुबन्तसमुदायोऽपि समासोऽस्ति, यथा-- प्रकत्र्ता, प्रकारक इति। अत्र हि "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्()सुबुत्पत्तेः" (व्या।,प।वृ १३८) इति कृदन्तेनासुबन्तेन गतिकारकं सुबन्तं समस्यते, तेन सुबन्तासुबन्तसमुदायोऽयं समास इति तुल्यजातीयस्यापि नियमे विज्ञायमाने बहुपटवः, उच्चकैरित्यत्र प्रातिपदिकसंज्ञा न स्यात्। एवं तह्र्राचार्यप्रवृत्तिज्ञ्ज्ञापयति-- भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञेति; यदयमप्रत्यय इति प्रत्ययान्तस्य प्रतिषेधं शास्ति॥

बाल-मनोरमा

कृत्तद्धितसमासाश्च १७८, १।२।४६

कृत्तद्धित। कृच्च तद्धितश्च समासश्चेति विग्रहः। पूर्वसूत्रात् "प्रातिपदिक"मित्यनुवर्तते, तच्च बहुवचनान्ततया विपरिणम्यते। प्रत्ययग्रहणपरिभाषया कृत्तद्धितेति तदन्तग्रहणम्। तदाह--कृत्तद्धितान्ताविति। कृत्तद्धितान्तयोः प्रत्ययान्तत्वात्पूर्वसूत्रेणा।ञप्राप्तौ कृत्तद्धितग्रहणम्। केवलयोः कृत्तद्धितयोः संज्ञायां प्रयोजनाऽभावात्संज्ञाविधाविति निषेधोऽत्र न भवति। अस्मादेव पूर्वसूत्रे संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तलाभात्प्रत्ययान्तपर्युदासः। केचित्तु अर्थवदित्यनुवर्त्त्य तत्सामथ्र्यात्तदन्तविधिमाहुः। कृदन्ते यथा--"कर्ता" "भर्ता" इत्यादि। तद्धिते यथा--"औपगव" इत्यादि। समासे यथा--"राजपुरुष" इत्यादि। ननु समासग्रहणं व्यर्थं, समासे "राजपुरुष" इत्यादि। ननु समासग्रहं व्यर्थं, समासे "राजपुरुष" इत्यादिशब्दानां पूर्वसूत्रेणैव प्रातिपदिकत्वस्य सिद्धत्वात्। न च उत्तरपदोत्तरलुप्तप्रत्ययं प्रत्ययलक्षणेनाश्रित्य प्रत्ययान्तपर्युदासः शङ्क्यः, उत्तरपदमात्रस्य प्रत्ययान्तत्वेऽपि समुदायस्याऽप्रत्ययान्तत्वात्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्, प्रत्ययलक्षणमाश्रित्य प्रत्ययान्तपर्युदासो न प्रवर्तत इति "न ङिसम्बुद्धयोः" इति निषेधेन ज्ञाप्यत इति पूर्वसूत्रे प्रपञ्चितत्वाच्चेत्यत आह--पूर्वसूत्रेणेत्यादिना। नियमशरीरं दर्शयति-यत्रेति। "पूर्वो भागः पद"मित्युपलक्षणम्। "उत्तरभागस्तु प्रत्ययो ने"त्यपि द्रष्टव्यम्। अन्यथा जन्मवानित्यादौ प्रातिपदिकत्वं न स्यात्, स्वादिष्वसर्वनामस्थान इति पूर्वभागस्य पदत्वात्। नचात्र कृत्तद्धितेति तद्धितग्रहणसामथ्र्यादेव

प्रातिपदिकत्वं संभवतीति वाच्यम्, दाक्षिरित्यादौ तद्धितग्रहणस्य चरितार्थत्वात्। तत्र हि प्रकृतिभागो न पदम्, भत्वेन तद्बाधात्। "पूर्वो भागः पद"मित्यनुक्तौ "बहुपटव" इत्यत्र प्रातिपदिकसंज्ञा न स्यात्। ईषदसमाप्ताविव्यनुवृत्तौ "विभाषा सुपो बहुच्पुरस्तात्तु" इति सूत्रेण "पटव" इति प्रथमाबहुवचनान्तात्पूर्वतो बहुच्प्रत्यये कृतेऽर्थवदिति प्रातिपदिकत्वात्तदवयवजसो लुकि "चितः सप्रकृतेर्बह्वजर्थ"मिति टकारादुकारस्य उदात्तत्वे चित्स्वरे कृते पुनर्जसि "बहुपटव" इति रूपम्। अत्र टकारादकार उदात्त इति स्थितिः। जसन्तात्पूर्वतो बहुच्प्रत्यये बहुपटव इति समुदायस्य प्रातिपदिकत्वा।ऽभावे तु ततो जसन्तरं नोत्पद्येत। नचेष्टापत्तिः, तथ#आ सति बहुच्प्रकृतिभूतजसन्ते जसःप्रातिदिकावयवत्वा।ऽभावेन"सुपो धातुप्रातिपदिकयो"रिति लुगभावाद्बहुपटव इति जसन्तस्यैव बहुच्प्रक-तितया चितस्सप्रकृतेर्विधीयमानश्चित्स्वरः जस एवाकारस्य स्यात्। इष्यते तु टकारादुत्तरस्य। "बहुपटव" इति समुदायस्य प्रातिपदिकावयवत्वाज्जसो लुकि पटुशब्दस्यैव बहुच्प्रकृतितया टकारादुत्तरस्य चित्स्वरे सति पुनर्जसि बहुपटव इति रूपमुक्तं निर्बाधमिति भावः। नियमस्य फलमाह--तेनेति। उक्तनियमेनेत्यर्थः। अन्यथा "देवदत्त गामभ्याज शुक्लां दण्डेने"त्यादिवाक्यस्यापि प्रातिपदिकत्वापत्तौ सुब्लुक् स्यात्। न च वाक्यस्य प्रत्ययान्तत्वादेव न प्रातिपदिकत्वमिति वाच्यम्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणादिति भावः। कृत्तद्धितसमासाश्चेति चकारोऽनुकसमनुच्चयार्थः। तेन "निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्ये"ति वार्तिकं गतार्थम्।

तत्त्व-बोधिनी

कृत्तद्धितसमासाश्च १४८, १।२।४६

कृत्तद्धितसमासाश्च। "अर्थव"दित्यनुवर्तते, तत्सामर्थ्यात्तदन्तविधिः। ननु यद्यर्थवत्ता पारमार्थिकीं विवक्ष्यते, सा पदस्य वाक्यस्य वाऽस्ति, न तु कृत्तद्धितान्तस्य, यदि तु प्रक्रियादशायां या कल्पिता सा विवक्ष्यते, तर्हि कृत्तद्धितयोरपि साऽस्तीति कथमर्थवद्ग्रहणानुवृत्त्या तदन्तग्रहणमिति चेदत्राहुः,-अतएवार्थवद्ग्रहणसामर्थ्यमुक्तम्। प्रत्ययान्तेन ह्येकार्थीभूतेन प्रतीयमानोऽर्थ इह गृह्यते। तस्य लोकिकार्थं प्रति प्रत्यासन्नतरत्वान्मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात्। अतएव च तदुपादानं सार्थकं, पूर्वसूत्रे "अधातु"रिति "कर्ता " "औपगव" इत्यादौ "अप्रत्ययान्त" इति च पर्युदासे प्राप्ते "कृत्तद्धिते"त्यारम्भः। नियमार्थमिति। न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम् ; वाक्यस्याऽप्रत्ययान्तत्वात्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्। न चैवमप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावाद्राजकुमारीत्यादौ ङीबन्ते विध्यर्थमस्त्विति वाच्यम्, "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते" इति लुग्विषये हल्ङ्यादिलोपाऽप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः। तत्र च कुमारीशब्दस्य सुबन्तत्वेऽपि राजशब्दसहित[कुमारी]शब्दस्याऽतथात्वादप्रत्ययान्तत्वेन प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात्। अतएव "गोमत्प्रिय"इत्यादौ नुमादयो न, लुकः प्रागन्तरङ्गस्य हस्ङ्यादिलोपस्य प्रवृत्तौ तु स्युरेवेति दिक्। नियमशरीरमाह-यत्र सङ्घात इति। नियमश्चात्र सजातीयापेक्ष इत्याह-पूर्वो भागः पदमिति। षड्विधेऽपि समासे पूर्वभागस्य पदत्वाऽव्यभिचाराद्भवत्ययं सजातीयः। "पूर्वो भाग" इत्युपलक्षणम्, "उत्तरस्तु प्रत्ययो ने"त्यपि बोध्यम्। अन्यथा "जन्मवा"नित्यादौ संज्ञा न स्यात्, "स्वादिष्वि"त्यनेन पूर्वभागस्य पदत्वात्। न च तद्धितग्रहणसामर्थ्यात्तत्र स्यादेवेति वाच्यं, तद्धितग्रहणस्य "भानव" इत्यादौ कृतार्थत्वात्। तत्र हि पूर्वभागस्य भत्वं, न तु पदत्वम्। न चैवमयमियानित्यादिसमुदायस्य प्रातिपदिकत्वं स्यादेव, पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वादनेन नियमेन वारयितुमशक्यत्वादिति वाच्यम् ; "उत्तरस्तु प्रत्ययो ने"त्यत्र "तद्विहितप्रत्ययो ने"ति व्याख्यानात्। पूर्वो भागः पदमिति किम्?, बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात्। तेन "बहुपटव" इत्यत्र उपोत्तमोदात्तत्वं सिध्यति। प्रथमजसो लुकि "चितः सप्रकृतेर्बह्वकजर्थ"मिति चित्स्वरे कृते पुनर्जस उत्पत्तेः। प्रातिपदिकसंज्ञायामसत्यां तु जसेवोदात्तः स्यात्। यद्वा "प्रकृतिप्रत्ययभावानापन्नसङ्घातस्य चेद्भवति तर्हि समासस्यैवे"ति नियमार्थं "समास"ग्रहणम्। तेन

गवित्ययमाहे"त्यादौ नातिप्रसङ्ग इति दिक्। नियमफलमाह-तेन वाक्यस्य नेति। "गांमभ्याज शुक्ला"मित्यादिवाक्यस्य न भवतीत्यर्थः। सत्यां हि संज्ञायां सुब्लुक्स्यात्। नन्वेवमपि "मूलकेनोपदंशं भुङ्क्ते" इत्यादिवाक्यस्य संज्ञा दुर्वारा, "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणा"दिति चेन्मैवम्। समासग्रहणरृतनियमेन परत्वाद्बाधात्। एवंच "कृत्तद्धिते"ति सूत्रे कृद्ग्रहणपरिभाषा निष्फलत्वान्नोपतिष्ठते। तस्याश्च परिभाषायाः "व्यावक्रोशी" "व्यावहासी"त्यत्रावकाशः। तत्र हि "कर्मव्यतिहारे णच्स्त्रिया"मिति धातोर्णचि कृते गतिपूर्वस्य णजन्तत्वात् "णचः स्त्रिया"मित्यञिसत्युपसर्गाकारस्यादिवृद्धिस्वरौ भवतः। कृद्ग्रहणे कारकपूर्वस्याप्युदाहरणम्-अवतप्ते नकुलस्थितमित्यादि स्फुटीभविष्यति। चकारोऽनुक्तसमुच्चयार्थः। तेन "निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्ये"ति वार्तिकं गतार्थम्। येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम्,-अवद्यति। अनुकरणेषु तु अनुकार्येण सहाऽभेदविवक्षायामर्थवत्त्वाऽभावादेव न प्रातिपदिकत्वम्। "भू सत्ताया"मिति यथा। भेदविवक्षायां तु संज्ञा स्यादेव-"भुवो वु"गिति यथा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ह्रस्वः १।१ ४८ नपुंसके ७।१ प्रातिपदिकस्य ६।१ ४८

अर्थः॥

नपुंसकलिङ्गेऽर्थे वर्त्तमाने यत् प्रातिपदिकं तस्य ह्रस्वः भवति॥ अत्र {अचश्च (१।२।२८)} इति परिभाषासूत्रम् उपतिष्ठते, तेन अजन्तस्य प्रातिपदिकस्य ह्रस्वः भवति॥

उदाहरणम्॥

अतिरि कुलम्, अतिनु कुलम्॥

काशिका-वृत्तिः

ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७

नपुंसकलिङ्गे ऽर्थे यत् प्रातिपदिकं वर्तते तस्य ह्रस्वो भवति आदेशः अलो ऽन्यस्य अचः। अतिरि कुलम्। अतिनु कुलम्। नपुंसके इति किम्? ग्रामणीः। सेनानीः। प्रातिपदिकस्य इति किम्? काण्डे तिष्ठतः। कुड्ये तिष्ठतः। प्रातिपदिकग्रहणसामर्थ्यतेकाऽदेशः पूर्वस्य अन्तवन्न भवति।

न्यासः

ह्यस्वो नपुंसके प्रातिपदिकस्य। , १।२।४७

"नपुंसकलिङ्गे" इति। नुपुंसकं लिङ्गं यस्येति बहुव्रीहिः। स पुनर्नपुंसकलिङ्गोऽर्थो द्रव्यभूतो वेदितव्यः; न पुंसकिलिङ्गस्य द्रव्यधर्मत्वात्। "अलोऽन्त्यस्य" इति। "अलोऽन्त्यस्य" १।१।५१ इति परिभाषा। "ग्रामणीः" इति। "सत्सूद्विष" ३।२।६१ इत्यादिना क्विप्। "अग्रग्रामाभ्यां च" (का।वा।५०६४) इत्युपसंख्यानाण्णत्वम्। काण्डे, कुड()ए-- इत्यत्रापि "अप्रत्ययः" इति प्रतिषेधात्प्रातिपदिकसंज्ञा नास्ति, तेन ह्यस्वत्वं न भवति। ननु च प्रातिपदिकाप्रातिपदकयोरेकादेशोऽन्तादिवद्भावात् प्रातिपदिकग्रहणेन गृह्यते, ततश्च क्रियमाणे प्रातिपदिकग्रहणे ह्यस्वत्वं

प्राप्नोतीत्यत आह-- "प्रातिपदिकगर्हणसमथ्र्यात्" इत्यादि। इह यदन्तवद्भावः स्यात्, प्रातिपदिकगर्हणमनर्थकं स्यात्,व्यवच्छेद्याभावादिति भावः॥

बाल-मनोरमा

ह्रस्वो नपुंसके प्रातिपदिकस्य ३१६, १।२।४७

अथ आदन्ताः। श्रियं पातीति श्रीपाशब्दो वि()आपाशब्दवद्विजन्तः क्विबन्तो वा। तस्य न पुंसकत्वे ह्रस्वविधानमाह-- ह्रस्वो नपुंसके। ह्रस्वश्रुत्योपस्तितेनाऽच इत्यनेन प्रातिपदिकस्य विशेषणात्तदन्तविधिरित्याह--क्लीब इत्यादिना। नच कुले इति द्विवचने एकादेशस्य पूर्वान्तत्वेन ग्रहणादजन्तप्रातिपदिकत्वाद्ध्रस्वः स्यादिति वाच्यम्, अर्थवदधातुरित्यतः प्रातिपदिकग्रहणानुवृत्तौ पुनः प्रातिपदिकग्रहणेनाऽन्तवद्भावतः प्रातिपदिकत्वे ह्रस्वाऽभावबोधनात्। ज्ञानवदिति। ह्रस्वविधानाद्दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः। "जश्शसोः शिः"। श्रीपाणीति रूपम्। भिन्नपदस्थत्वेऽपि "एकाजुत्तरपदे णः" इति णत्वप्रवृत्तेः। श्रीपेण। इनादेशे गुणे तस्य पूर्वान्तत्वादुत्तरपदस्य एकाच्त्वात्स्यादेव णत्वम्। श्रीपायेति। श्रीपाशब्दस्य "ह्रस्वो नपुंसके" इति ह्रस्वत्वे ङेर्यादेशे "सुपि चे"ति दीर्घे रूपम्। संनिपातपरिभाषा तु कष्टायेति निर्देशान्न प्रवत्र्तत इति प्रागुक्तम्। नन्वत्र ह्रस्वत्वे कृतेऽपि "पे"त्यस्य एकदेशविकृतन्यायेन धातुत्वानपायाद्दीर्घे कृते आकारान्तत्वाच्च "आतो धातोः" इत्याल्लोपः स्यात्, यादेशस्य स्वतो यकारादितया स्थानिवत्त्वेन स्वादिप्रत्ययतया च तस्मिन् परे भत्वस्यापि सत्त्वादित्यत आह-अत्र संनिपातेति। ननूपजीव्यविघातकं प्रति उपजीवकं निमित्तं न भवतीति संनिपातपरिभाषया लभ्यते। प्रकृतेच अदन्तमुपजीव्य प्रवृत्तस्य यादेशस्य आल्लोपं प्रति कथं न निमित्तत्वम्। यादेशस्य आकारमुपजीव्य प्रवृत्तत्वाऽभावेन आकारलोपं प्रति निमित्तत्वे बाधकाऽभावादिति चेत्, मैवम्-यादेशस्तावद्ध्रस्वमवर्णमुपजीव्य प्रवर्तते, तद्विधावत इत्यनुवृत्तेः। ततश्च ह्रस्वत्वमवर्णत्वं च समुदितं यादेशस्योपजीव्यम्। तत्र कष्टायेति निर्देशात्संनिपातपरिभाषां बाधित्वा कृते।ञपि दीर्घे ह्रस्वत्वांश एव निवृत्तः। अवर्णत्वांशस्त्वनुवृत्त एव। तस्याप्याल्लोपेन निवृत्तौ उपजीव्यविघातः स्यादेवेति भवेदेव संनिपातपरिभाषाविरोधः। अतो न भवत्याल्लोप इति कौस्तुभे समाहितम् "इको गुणवृद्धी" इत्यत्र। वस्तुतस्त्वातो धातोरित्यत्र लक्षणप्रतिपदोक्त परिभाषया प्रतिपदोक्त एवाकारान्तदातुर्गृह्रते। इह तु पाधातोह्र्यस्वत्वे तु पुनर्दीर्घे सति अवगम्यमानं पास्वरूपं लाक्षणिकमेवेति न तस्यात्र ग्रहणमित्यास्तां तावत्। इत्यादन्ताः।

तत्त्व-बोधिनी

ह्रस्वो नपुंसके प्रातिपदिकस्य २७८, १।२।४७

ह्रस्वो नपुंसके। इह ह्रस्वश्रुत्योपस्थितेनाऽच इत्यनेन प्रातिपदिकविशेषमात्तदन्तविधिरित्यह--अजन्तस्येति। प्रातिपदिकस्याच इति वैयधिकरण्येन व्याख्यायां तु "सुवाग्ब्राआह्रआणकुल"मित्यत्रातिप्रसङ्गः स्यात्। एतच्च "अचश्चे"ति सूत्र एवास्माभिः स्पष्टीकृतम्। प्रातिपदिकस्येति किम्()। काण्डे। कुड()ए। ज्ञानवादिति। श्रीपाणी"त्यादौ "एकाजुत्तरपदे"इति णत्वं तु विशेषः। श्रीपेणे" त्यत्रापीनादेशेन सहाद्गुणे कृते एकादेशस्य पूर्वान्तत्वेन ग्रहणात् "अचः परस्मि"न्निति सूत्रे पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षाश्रयेण स्थानिवत्त्वाद्वा एकाजुत्तरपदमस्तीति स्यादेव णत्वम्। संनिपातेति। अवर्णमाश्रित्य कृतो यादेशः कथमवर्णलोपे निमित्तं स्यात्। न च "सुपि चे"ति दीर्घार्थं संनिपातपरिभाषाया अनित्यात्वाभ्युपगम आवश्यक एवेति वाच्यम्, "कष्टाये"ति निर्देशेन दीर्घविधौ अनित्यात्वाभ्युपगमेऽप्यवर्णलोपे कार्ये तदनभ्युपगमात्। कृतेऽपि दीर्घे ह्रस्वव्यक्त्यपायेऽप्यत्वजातेरनपायादिति दिक्। एतेन "श्रीपशब्दान्ङयि श्रीत्ये"ति केषाञ्चिद्व्याख्यानं परास्तम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ गोस्त्रियोः ६।२ ४९ उपसर्जनस्य ६।१ ४९ ह्रस्वः १।१ ४७ प्रातिपदिकस्य ६।१ ४७

समासः॥

गोश्च स्त्री च, गोस्त्रियौ, तयोः गोस्त्रियोः, इतरेतरद्वन्द्वः॥

अर्थः॥

उपसर्जनगोशब्दान्तस्य प्रातिपदिकस्य, उपसर्जनस्त्रीप्रत्ययान्तान्तस्य च प्रातिपदिकस्य ह्रस्वः भवति॥ स्त्रीशब्दः {स्त्रियां (४।१।३)} इत्यधिकारात् टाप्, डाप्, चाप्, ङीप्, ङीन् स्त्रीप्रत्ययाः, न तु स्त्रीशब्दः॥

उदाहरणम्॥

गोशब्दान्तस्य -- चित्रगुः, शबलगुः। स्त्रीप्रत्ययान्तस्य -- निष्कौशाम्बिः, निर्वाराणसिः, अतिखट्वः, अतिमालः॥
काशिका-वृत्तिः
गोस्त्रियोरुपसर्जनस्य १।२।४८

प्रातिपदिकस्य इति वर्तते। गो इति स्वरूपग्रहणं स्त्री इति प्रत्ययग्रहणं स्वरितत्वात्। उपसर्जनग्रहणं तयोर् विशेषणम्। गोरुपसर्जनस्य स्त्रीप्रत्ययान्तस्य उपसर्जनस्य इति। ताभ्यां प्रातिपदिकस्य तदन्तविधिः। उपसर्जनगोशब्दान्तस्य उपसर्जनस्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्वो भवति। चित्रगुः। शबलगुः। स्त्रियाः निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। उपसर्जनस्य इति किम्? राजकुमारी। स्वरितत्वं किम्? अतितन्त्रीः। अतिलक्ष्मीः। अतिश्रीः। ईयसो बहुव्रीहेः प्रतिषेधो वक्तवयः। बहुश्रेयसी। विद्यमानश्रेयसेई।
लघु-सिद्धान्त-कौमुदी
गोस्त्रियोरुपसर्जनस्य ९५५, १।२।४८

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। अतिमालः। (अवादयः क्रुष्टाद्यर्थे तृतीयया)। अवक्रुष्टः कोकिलया - अवकोकिलः। (पर्यादयो ग्लानाद्यर्थे चतुर्थ्या)। परिग्लानोऽध्ययनाय पर्यध्ययनः। (निरादयः क्रान्ताद्यर्थे पञ्चम्या)। निष्क्रान्तः कौशाम्ब्याः - निष्कौशाम्बिः॥
न्यासः
गोस्त्रियोरुपसर्जनस्य। , १।२।४८

"स्त्रीति स्त्रीप्रत्ययग्रहणम्" इति। अत्र हेतुमाह-- "स्वरितत्वात्" इति। स्त्रीग्रहणस्येह स्वरितत्वं क्रियत इति स्वरितेनाधिकारादवगतिर्भवति। तेन "स्त्रियाम्" ४।१।३ इत्यधिकृत्य ये प्रत्यया विहिताष्टावादयस्तेषां ग्रहणं भवति; न स्त्रर्थाभिधायिनः शब्दमात्रस्य, नापि स्त्रीशब्दस्यैव स्वरूपस्य उपसर्जनग्रहणं द्वयोर्विशेषणमित्यादेः स्पष्टीकरणयाह-- "गोरुपसर्जनस्य, स्त्रीप्रत्ययस्योपसर्जनस्य" इत्यादि। ताभ्यां प्रातिपदिकस्यत्यादेरपि स्फुटीकरणायाह--"उपसर्जनगोशब्दान्तस्य" इत्यादि। उपसर्जनगोशब्दोऽन्तो यस्येति विग्रहः। एवं गोशब्देनोपसर्जनेन स्त्रीप्रत्ययेन च प्रातिपदिकस्य तदन्तविधो सति गोः कुलं गोकुलम्, राज्ञः कुमार्याः पुत्रो राजकुमारीपुत्र इत्यत्र गोशब्द

कमारीशब्दस्य च ह्रस्वत्वं न भवति, अन्यथा इहापि स्यात्। भवति ह्रत्र गोशब्दस्य राजकुमारीशब्दस्य चोपसर्जनत्वमित्यभिप्रायः। "चित्रगुः" इति। "प्रथमानिर्दिष्टम्" १।२।४३ इत्यादिना गोशब्दसयोपसर्जनसंज्ञा, निष्कोशाम्बिरित्यादौ तु "एकविभक्ति चापूर्वे" १।२।४४ इत्यादिना। "अतितन्त्रीः" इत्यादि। "तत्रि कुटुम्बधारणे" (धा।पा।१६७८), "इदितो नुम्" ७।१।५८, "अवितृस्तृतन्त्रीभ्यः" (द।उ।१।८२) इतीः- तन्त्रीः। "लक्ष दर्शनाङ्कनयोः" (धा।पा।त१५३८), "लक्षेर्मुट् च" (द।उ।१।८४) इति मुट् ईप्रत्ययश्च-- लक्ष्मीः। "श्रिञ् सेवायाम्" (धा।पा। ८९७), "क्विब वचिप्रच्छि"(वा।२८८) इत्यादिना क्विप्, दीर्घः- श्रीः। "अत्यादयः क्रान्त्याद्यर्थे द्वितीयया" (वा।९१) इति प्रादिसमासः। यदि स्त्रीति स्त्र्यधिकारविहिताः प्रत्यया गृह्रन्ते ततश्च "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य" (भो।सू।७) इति तदन्तग्रहणेऽतिराजकुमारीरित्यत्र ह्रस्वत्वं न सिध्यति; न हि राजकुमारशब्दात् "वयसि प्रथमे" ४।१।२० इति ङीप्प्रत्ययो विहितः,किं तर्हि? कुमारशब्दात्, नैष दोषः; एषा परिभाषा "यस्मात्प्रत्ययविधिस्तदादि" १।४।१३ इत्यत्र सूत्रे प्रतिपादिता। तत्र च "वाऽऽमि १।४।५ इत्यतः "वा" ग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन व्यवस्थिविभाषावतीयं क्वचिन्नोपतिष्ठत एव। अथ वा-- "कृत्तद्धितसमासाश्च" १।२।४६ इत्यतश्चकारोऽनुवर्तते,स चानुक्तसमुच्चयार्थः, तेनातिराजकुमारिरित्यत्रापि ह्रस्वत्वं भविष्यतीत्यदोषः। "ईयसो बहुव्रीहौ प्रतिषेधः" इति। ईयसन्ताद्यो विहितः स्त्रीप्रत्ययः,तदन्तस्य बहुव्रीहौ प्रतिषेध इति। कथं पुनरसौ लभ्यते? " विभाषा च्छन्दसि" १।२।३६ इत्यतो विभाषाग्रहणानुवृत्तेः। न चैवं सत्यतिप्रसङ्गः; व्यवस्थितविभाषाविज्ञानात्। "बहुश्रेयसी" इति। अतिशयेन प्रशस्येति "द्विवचनविभज्योपपदे तरबीयसुननौ" ५।३।५७ इतीयसुन्प्रत्ययः। "प्रशस्यस्य" ५।३।६० इति प्रशस्यशब्दस्येयसुनि परतः श्रादेशो भवति, "प्रकृत्यैकाच्" ६।४।१६३ इति प्रकृतिवद्भावः, "आद्गुणः" ६।१।८४, "उगितश्च" ४।१।६ इति ङीप्। बह्व्यःश्रेयस्यो यस्येति बहुश्रेयसीति "नद्युतश्च" ५।४।१५३ इति कप् न भवति; "ईयसश्च" ५।४।१५६ इति कपो निषेधात्।

बाल-मनोरमा

गोस्त्रियोरुपसर्जनस्य ६४८, १।२।४८

प्रकृते च दिशयोर्मध्यः मध्यं मध्येनेत्यादिविग्रहवाक्येषु दिशाशब्दस्य नियतविभक्तिकत्वात्समासविधौ प्रथमानिर्दिष्टत्वाऽभावेऽपि अनेनोपसर्जनत्वं भवति। पूर्वनिपातस्तु न भवतीति स्थितम्। गोस्त्रियोः। "ह्रस्वो नपुंसके प्रातिपदिकस्ये"त्यतो "ह्रस्व" इति "प्रातिपदिकस्ये"ति चानुवर्तते। उपसर्जनस्येति गोस्त्रिर्विशेषणम्। प्रत्येकाभिप्रायमेकवचनम्। स्त्रीशब्देन स्त्रीप्रत्ययो गृह्रते। प्रत्ययग्रहणपरिभाषया तदन्तविधिः। उपसर्जनभूतस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य चेति लभ्यते। तदुभयं प्रातिपदिकस्य विशेषणम्। तेन तदन्तविधिः। तदाह-- उपसर्जनमित्यादिना। अत्र च शास्त्रीयमेवोपसर्जनं गृह्रते,न त्वप्रधानमात्रं, कुमारीमिच्छन् कुमारीवाचरन्वा ब्राआह्रणः कुमारीत्यत्रातिप्रसङ्गात्। अव्ययीभावश्चेत्यव्ययत्वमिति।

तत्त्व-बोधिनी

गोस्त्रियोरुपसर्जनस्य ५७३, १।२।४८

गोस्त्रियोः। उपसर्जनस्येति गोस्त्रियोर्विशेषणम्। एकवचनं तु प्रत्येकाभिप्रायेण। गोस्त्रीभ्यां तु प्रातिपदिकं विशेष्यते। विशेषणेन तदन्तविधिरित्याशयेनाह--उपसर्जनंय इति। उपसर्जनमिह शास्त्रियं गृह्रते, न त्वप्रधानलक्षणम्। तेन कुमारीवाऽऽचरन्ब्राआह्रणः कुमारीत्यत्र न दोष इत्युक्तम्। स्त्रीप्रत्ययान्तमिति। स्त्र्यधिकारोक्तटाबाद्यन्तमित्यर्थः। तेनातिलक्ष्मीरित्यादौ नातिप्रसङ्गः। नन्वेवमपि "राजकुमारीपुत्र"इत्यादावतिप्रसङ्ग इति चेत्। अत्राहुः--उपसर्जनस्य ससंबन्धिकतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तदर्थं प्रति यद्युत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वत्वमिति

भाष्यादावुक्तत्वान्न दोषः। भाष्यदावपि उत्तरपदभूतयोरित्यर्थलाभस्तु "कृत्तद्धिते"त्यतः समासपदानुवर्तनादिति बोध्यमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लुक् १।१ तद्धितलुकि ७।१ ५० स्त्री १।१ ४८ उपसर्जनस्य ६।१ ४८

समासः॥

तद्धितस्य लुक् तद्धितलुक्, तस्मिन् तद्धितलुकि, षष्ठीतत्पुरुषः।

अर्थः॥

तद्धितलुकि सति उपसर्जनस्य स्त्रीप्रत्ययस्यापि लुक् भवति॥

उदाहरणम्॥

पञ्चेन्द्रः, दशेन्द्रः। पञ्चशष्कुलं, आमलकं, बकुलं, कुवलं, बदरम्॥
काशिका-वृत्तिः
लुक् तद्धितलुकि १।२।४९

स्त्रीग्रहणम् अनुवर्तते उपसर्जनस्य इति च। पूर्वेण ह्रस्वत्वे प्राप्ते लुग् विधीयते। तद्धितलुकि सति स्त्रीप्रत्ययस्य उपस्र्जनस्य लुग् भवति। पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। दशेन्द्रः। पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलः। आमलक्याः फलमामलकम्। बदरम्। कुवलम्। तद्धितग्रहणं किम्? गार्ग्याः कुलं गार्गीकुलम्। लुकि इति किम्? गार्गीत्वम्। उपसर्जनस्य इत्येव। अवन्ती। कुन्ती। कुरूः।
न्यासः
लुक्तद्धितलुकि। , १।२।४९

अदर्शनं १।१।५९ लुक्, तच्चाभावः। अभावे पौवापर्यन्नोपपद्यते। तस्माल्लुकीति सति सप्तमीयम्, न परसप्तमीति मत्वाहऽऽह-- "तद्धितलुकिसति" इति। "पञ्चेन्द्रः" इति। "तद्धितार्थ" २।१।५० इत्यादिना समासे कृते "साऽस्य देवता" ४।२।२३ इत्यण्, तस्य "द्विगोर्लुगनपत्ये" ४।१।८८ इति लुक्, "इन्द्रवरुण" ४।१।४९ इत्यादिना विहितस्य ङीषोऽनेन लुक्। तस्मिन्निवृत्ते सन्नियोगशिष्टानामेकतरापाय उभयोरप्यपाय इत्यानुको निवृत्तिः। "पञ्चशष्कुलिः" इति। "अध्यद्र्धपूर्वद्विगोर्लुगसंज्ञायम्" ५।१।२८ इत्यार्हीयस्य ठकस्तेन क्रीतार्थे विहितस्य लुक्। "आमलकम्" इति। आमलक्याः फलं विकार इति "नित्यं वृद्धशरादिभ्यः" ४।३।४४ इत्यञ्। पूर्ववल्लुक्। शष्कुली, बदरी, आमलकी, कुवली-- गौरादिपाठदेते ङीषन्ताः। "गार्गीकुलम्िति। गार्ग्यशब्दात् "यञश्च" ४।१।१६ इति ङीप्; "यस्येति च" ६।४।१४८ इत्यकारलोपः; "हलस्तद्धितस्य" ६।४।१५० इति यकारस्य च लोपः, गार्ग्याः कुलमिति षष्ठीसमासः, षष्ठ()आ लुक्। गार्गीशब्दस्य समासशास्त्रे प्रथमानिर्दिष्टत्वाच्छास्त्रीयमुपसर्जनत्वम्, मूलोदाहरणेषु त्विन्द्रणी प्रभृतीनां लौकिकमात्रोपसर्जनमत्वम्। उभयगतिरिह शास्त्रे सम्भवतीति लौकिकमप्रधानत्वमुपसर्जनत्वम्। लोके

ह्रप्रधानमुपसर्जनमित्यच्यते। "गार्गीत्वम्" इत्यत्रापि गार्गीशब्दस्य लौकिकमेवोपसर्जनत्वम्। "अवन्ती, कुन्ती कुरूः" इति। अवन्तेरपत्यं गोत्रं स्त्री, कुन्तेरपत्यं गोत्रं स्त्री-- "वृद्धेत्कोशलाजादाञ्ञ्यङ" ४।१।१६९। कुरोरपत्यं स्त्री-- "कुरुनादिभ्यो ण्यः" ४।१।१७० इति ण्यः। "स्त्रियामवन्तिकुन्तिकुरुभ्यश्च" ४।१।१७४ इति लुक्। अवन्तिकुन्तुशब्दाभ्याम्, "इतो मनुष्यजातेः" ४।१।६५ इति ङीष्। कुरुशब्दात् "ऊङुतः" ४।१।६६ इत्यूङ्। अत्र ङीषा ऊङा च तद्धितार्थो गोत्रापत्यं स्त्रीप्रधानमेवाभिधीयत इत्युपसर्जनत्वं नासति लौकिकम्। शास्त्रीयमपि नास्ति; अप्रथमानिर्दिष्टात् समासशास्त्र इति॥

बाल-मनोरमा

लुक्तद्धितलुकि १३८७, १।२।४९

लुक्तद्धितलुकि। प्रथमस्य द्वितीये इदं सूत्रम्। उपसर्जनस्त्रीप्रत्ययस्येति। "गोस्त्रियोरुपसर्जनस्ये"त्यतस्तदनुवृत्तेरिति भावः। श्रविष्ठ इति। ऋत्वणो लुकि स्त्रीप्रत्ययस्य निवृत्तिः। "लुक्तद्धितलुकी"त्यत्र अप्रधानमेवोपसर्जनम्, नतु शास्त्रीयम्, असंभवादिति भावः। फल्गुन इति। फल्गुन्योर्जात इत्यर्थः।?णो लुकि स्त्रीप्रत्ययनिवृत्तिः। इत्यादीति। अनुराधासु जातोऽनुराधः। नक्षत्राऽणो लुकि स्त्रीप्रत्ययनिवृत्तिः। एवमग्रे लुकि स्त्रीप्रत्ययनिवृत्तिः। इत्यादीति। अनुराधासु जातोऽनुराधः। नक्षत्राऽणो लुकि स्त्रीप्रत्ययनिवृत्तिः। एवमग्रेऽपि। "अनुराधान् हविषा वर्धयन्तः" इत्यादौ छान्दसं पुंस्त्वम्। स्वात्यां जातः-स्वातिः। तिष्ये जातस्तिष्यः। पुनर्वस्वोर्जातः--पुनर्वसुः। पस्ते जातो-हस्तः। विशाखयोर्जातो-विशाखः। अषाढासु जातोऽषाढः। बहुलासु जातो बहुलः।

चित्रेति। चित्रादिभ्यः परस्य स्त्रीरूपजातार्थकप्रत्ययस्य लुगित्यर्थः। रेवती रोहिणीति। जातायां नक्षत्राऽणो लुकि सति प्रकृतेर्गौरादिस्त्रीप्रत्ययनिवृत्तौ जातार्थगतस्त्रीत्वे पुनर्ङीष्। ननु "रेवती नक्षत्रे" "रोहिणी नक्षत्रे" इति गौरादौ पाठादिह जातार्थवृत्तिभ्यां कतं ङीषित्यत आह--आभ्यामिति। रेवतीरोहिणीशब्दाभ्यामित्यर्थः। "परस्य स्त्रीत्वविशिष्टजातार्थप्रत्ययस्ये"ति शेषः। आकृतिगणत्वादिति। स्त्रीत्वविशिष्टजातार्थवृत्त्योरनयोः पिप्पल्यादौ निवेसे बाष्योदाहरणमेव प्रमाणम्। स्त्रियामित्येवेति। तथा भाष्यादिति भावः। फल्गुनी, आषाढा इत्याभ्यां क्रमाट्टः अन् च स्त्रीत्वविशिष्टजातार्थे वक्तव्यावित्यर्थः।

फल्गुनीति। फल्गुन्योर्जातेत्यर्थः। नक्षत्राऽणोऽपवादष्टप्रत्ययः। "यस्येति चे"ति ईकारलोपः। जातार्थस्त्रीत्वे टित्त्वान्ङीप्। अषाढेति। अषाढासु जातेत्यर्थः। नत्रत्राऽणोऽपवादोऽन्। "यस्येति च " इत्याकारलोपः। जातार्थे स्त्रीत्वे टाप्। "श्रविष्ठाफल्गुनी" त्यादिना टाऽनोर्लुक् तु न, विधानसामश्र्यात्। छण्वक्तव्य इति। नक्षत्राऽणोऽपवादः। विधिसामश्र्यादस्यापि न लुक्। अस्त्रियामपीति। अत्र स्त्रियामिति न संबध्यते, भाष्ये तथोदाहरणादिति भावः।

श्राविष्ठीय इति। श्रविष्ठासु जात इत्यर्थः। छण्। ईयः "यस्येति चे"त्याकारलोपः। णित्त्वादादिवृद्धिः। आषाढीय इति। अषाढासु जात इत्यर्थः।

तत्त्व-बोधिनी

लुक्तद्धितलुकि १०९०, १।२।४९

लुक्त। उपसर्जनेति। अप्रधानमिहोपसर्जनं गृह्रते , न शास्त्रीयम्, असंभवात्। ननु "गोस्त्रियो"रिति सूत्रेऽप्यप्रधानलक्षणमेवोपसर्जनं गृह्रताम् "एकविभक्ति चे"ति शास्त्रीयं न गृह्रताम्। मैवम्। हरीतक्याः फलानि हरीतक्य इत्यत्र ह्यस्वप्रसङ्गात्। उपसर्जनस्य किम्()। अवन्ती, कुन्ती, कुरूः।

श्रविष्ठाऽषाढाभ्यां छण्वक्तव्यः। श्रविष्ठास्विति। श्रविष्ठा=धनिष्ठाः। इत्यादीति। आदिशब्दादनूराधः। स्वातिः। तिष्यः।

पुनर्वसुः। हस्तः। विशाखः। अषाढः। बहुलः। कृत्तिकावाची बहुलाशब्दष्टाबन्तः, तस्य समाहारद्वन्द्वेन ह्रस्वनिर्देशः सूत्रे। उपशङ्ख्यानमिति। "लुक"इति शेषः। चित्रेति। "लुक्तद्धिते"ति लुकि पुनष्टाप्। टाऽनाविति। विधानसामर्थ्यादनयोर्न लुक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इत् १।१ गोण्याः ६।१ तद्धितलुकि ७।१ ४९

अर्थः॥

तद्धितलुकि सति गोणीशब्दस्य इकारादेशः भवति। पूर्वसूत्रेण लुकि प्राप्ते तदपवादः इकारः विधीयते॥

उदाहरणम्॥

पञ्चगोणिः, दशगोणिः॥

काशिका-वृत्तिः

इद्गोण्याः १।२।५०

पूर्वेण लुकि प्राप्ते इकारो विधीयते। गोण्यास्तद्धितलुकि सति इकाराऽदेशो भवति। पञ्चभिर् गोणीभिः क्रीतः पटः पञ्चगोणिः। दशगोणिः। इतिति योगविभागः। पण्चभिः सूचीभिः क्रीतः पञ्चसूचिः। दशसूचिः। स च एवं विषय एव।

न्यासः

इद्गोण्याः। , १।२।५०

"पञ्गोणिः" इति। "तद्धितार्थ" २।१।५० इति समासे कृत आर्हीयष्ठक्। तस्य पूर्ववल्लुक्। "इदिति योगविभागः" इति। एतस्येद्ग्रहणमेव लिङगम्। तथा हि गोणी इत्येतावति सूत्रे ह्रस्वग्रहणानुवृत्तौ ह्रस्वत्वे कृते पञ्चगोणिरिति सिद्ध्यत्येव;किमिद्ग्रहणेन? तदेतदिद्ग्रहणं क्रियमाणं योगविभागर्थं विज्ञायते। ननु चानन्तरसूत्राल्लुक एवानुवृत्तिः स्यात्, न ह्रस्वस्य, नैतदस्ति; लुगनुवृत्तौ हि सूत्रमिदमनर्थकं स्यात्; लुकोऽनन्तरसूत्रेणैव सिद्धत्वात्। तस्माद्ध्रस्वग्रहणमेवानुवत्र्तते, न लुग्ग्रहणम्। "पञ्चसूचिः" इति। पञ्चगोणिरित्यनेन तुल्यम्। यदि योगविभागः क्रियते, तदातिप्रसङ्गः स्यात्। अन्येषामपि प्रसज्यत इत्यत आह-- "स च" इत्यादि। यदि सर्वत्रेत्त्वं पूर्वयोगेणैव स्यात्, तदा "गोण्याः" इति वचनमनर्थकम्। तस्मादगोणीग्रहणादस्यासर्वविषयत्वम्। तेन योगविभागः सूचीविषय एव, नान्यविषय इति। तपरकरणं दीर्घानिवृत्त्यर्थम्। दीर्घस्य दीर्घकरणमनर्थकं स्यात्। अतो विना तपरकरणेन दीर्घो न भविष्यीति चेत्, न; लुघ्यस्वबाधनार्थत्वाद्दीर्घकरणस्य। भाव्यमानोऽण् सवर्णान् न गृह्णातीति, तस्माददीर्घनिवृत्त्यर्थं तपरत्वं नोपपद्यत इति चेत्, न; तस्याभाव्यमानत्वात्। अपूर्वस्य हि विधानं भाव्यमानत्वम्। न चात्रापूर्वस्य विधानम्। तथा हि-- लुग्घ्रस्वयोः प्राप्तयोः पुनः स एव ईकारः प्रतिप्रसूयते। तस्मात् तपरकरणं कत्र्तव्यम्॥

बाल-मनोरमा

इद्गोण्याः १६८०, १।२।५०

इद्गोण्याः। लुकोऽपवाद इति। "लुक्तद्धितलुकी"ति प्राप्तस्येत्यर्थः। पञ्चगोणिरिति। आर्हीयस्य ठको लुकि स्त्रीप्रत्ययस्य इकारः। नच उपसर्जनह्रस्वत्वेनैव इदं सिद्धमिति वाच्यम्, इत्त्वविध्यभावे "सुक्तद्धितलुकी"ति ङीषो निवृत्तावदन्तत्वाट्टापि

पञ्चगोणेत्यापत्तेः। मूलद्रव्यवाचिन एव तृतीयान्तात्क्रीतार्थे प्रत्यया भवन्ति, नतु "देवदत्तेन क्रीत"मित्यर्थे, अनभिधानादिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी
इद्गोण्याः १२९९, १।२।५०

लुकोऽपवाद इति। "लुक्ताद्धितलुकी"ति प्राप्तस्य स्त्रीप्रत्ययस्य लुकोऽपवाद इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लुपि ७।१ ५२ युक्तवत् ० ५२ व्यक्तिवचने १।२ ५२

समासः॥

व्यक्तिश्च वचनञ्च व्यक्तिवचने, इतरेतरद्वन्द्वः॥

अर्थः॥

लुपि सति व्यक्तिवचने = लिङ्गसङ्ख्ये युक्तवत् = प्रकृत्यर्थवद्भवतः, अर्थात् तद्धितप्रत्ययोत्पत्तेः पूर्वस्य प्रकृत्यर्थस्य ये लिङ्गसङ्ख्ये स्तः ते तद्धितप्रत्ययस्य लुपि सत्यपि भवतः। युक्तह् प्रकृत्यर्थः प्रत्ययार्थेन सम्बद्धः तद्वत् लुपि सत्यपि भवतः॥ व्यक्तिः = लिङ्गम्। वचनं = सङ्ख्या, एकत्वद्वित्यबहुवचनानि। व्यक्तिवचने इति लिङ्गसङ्ख्ययोः पूर्वाचार्याणां निर्देशः।

उदाहरणम्॥

पञ्चालाः, कुरवः, मगधाः, मत्स्याः, अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्राः। गोदौ ग्रामः। कटुकवदरी ग्रामः॥
काशिका-वृत्तिः
लुपि युक्तवद्व्यक्तिवचने १।२।५१

लुपि इति लुप्सनंज्ञया लुप्तस्य प्रत्ययस्य अर्थ उच्यते। तत्र लुपि युक्तवद्व्यक्तिवचने भवतः। युक्तवतिति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यते। स हि प्रत्ययार्थम् आत्मना युनक्ति। तस्य युक्तवतो व्यक्तिवचने लुबर्थे विधीयेते। अथ वा युक्तः प्रकृत्यर्थः प्रत्ययार्थेन सम्बद्धः, तस्मिन्निव व्यक्तिवचने लुबर्थे भवतः। सप्तम्यर्थे वतिः। व्यक्तिवचने इति च लिङ्गसङ्ख्ययोः पूर्वाचर्यनिर्देशः, तदीयम् एव इदं सूत्रम्। तथा च अस्य प्रत्याख्यानं भविष्यते, तदशिष्यं संज्ञाप्रमाणत्वात् १।२।५३ इति। व्यक्तिः स्त्रीपुम्नपुंसकानि। वचनम् एकत्वद्वित्वबहुत्वानि। पञ्चलाः क्षत्रियाः पुंलिङ्गा बहुवचनविशयाः। तेषां निवासो जनपदः। यथा तेषु क्षत्रियेषु व्यक्तिवचने तद्वज्जनपदे भवतः। पञ्चालाः। कुरवः। मगधाः। मत्स्याः। अङ्गाः। वङ्गाः। सुग्माः। पुण्ड्राः। लुपि इति किम्? लुकि मा भूत्। लवणः सूपः। लवणा यवागूः। लवणं शाकम्। व्यक्तिवचने इति किम्? शिरीषाणाम् अदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनम्। विभाषाओषधिवनस्पतिभ्यः ८।४।६ इति णत्वं न भवति। हरितक्यादिषु व्यक्तिः। हरीतक्याः फलानि हरीतक्यः फलानि। खलतिकादिषु वचनम्। खलतिकस्य पर्वतस्य अदूरभवानि वनानि खलतिकं वनानि।

लघु-सिद्धान्त-कौमुदी

जनपदे लुप् १०६३, १।२।५१

जनपदे वाच्ये चातुरर्थिकस्य लुप्॥

लघु-सिद्धान्त-कौमुदी

लुपि युक्तवद्व्यक्तिवचने १०६४, १।२।५१

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः॥

न्यासः

लुपि यक्तवद्वयक्तिवचने। , १।२।५१

अभिधेयस्य लिङ्गसङ्ख्ययोः प्राप्तयोरयमारम्भः। लुबिति प्रत्ययस्यादर्शनम्,तच्चाभावात्मकम्। न चाभावे व्यक्तिवचनयोः शक्यतेऽतिदेशः कर्त्तुम्। तस्माल्लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थो लुप्शब्देन विवक्षित इति मत्वाऽह--"लुपीति लुप्संज्ञया" इत्यादि। कथं पुनरेतल्लभ्यते, यावता प्रत्ययादर्शनस्यैषा संज्ञा, न तु प्रत्ययार्थस्य? साहचर्यात्। साहचर्य्यन्तु यत्र लुप्, तत्रावश्यं प्रत्ययार्थस्य सद्भावात्। "युक्तवदिति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यते" इति। अत्र कारणमाह-- "स हि" इत्यादि। युनक्ति = अभिसम्बध्नाति, विशेषणविशेष्यभावलक्षणसम्बन्धेनात्मसम्बन्धिनं करोतीत्यर्थः। तत्र "तस्य निवासः" इत्यादि प्रत्ययार्थो विशेष्यः,पञ्चालादिशब्दस्यार्थः प्रकृत्यर्थो विशेषणम्। तेन हि पूर्व विज्ञातेन स्वाम्यन्तरव्यवच्छेदेन प्रत्ययार्थो विशिष्यते। "अथ वा" इत्यादि। पूर्वं "युजिर् योगे" (धा।पा।१४४४) इत्यस्माद्धातो क्तवतुप्रत्यये सति युक्तवदित्यतद्रूपं प्रदर्शितम्, इदानीं तस्यैव धातोः क्तप्रत्ययाद्वतिप्रत्यये सति युक्तवदित्येतद्रूपं दर्शयति। यद्यपि द्विष्ठत्वात् सम्बन्धस्य -- यथा प्रत्ययार्थेन प्रकृत्यर्थो युक्तः, तथा प्रकृत्यर्थेनापि प्रत्ययार्थः; तथापि प्रत्ययार्थसम्बन्धिनोव्र्यक्तिवचनयोः प्रत्ययार्थ एवातिदेशोऽनर्थक इति प्रकृत्यर्थ एवात्र युक्तशब्देन विवक्षित इति मत्वाऽह-- "युक्तः प्रकृत्यर्थः" इति। "सप्तम्यर्थे वतिः" इति। लुपीति सप्तमीनिर्देशात्। व्यक्तिशब्दः प्रादुर्भावादावप्यर्थे वत्र्तते, वचनशब्दो हि भाषणादिषु, अतस्तत्संप्रत्ययो मा भूदित्यत आह-- "व्यक्तिवचने" इति। किं पुनः कारणं पूर्वाचार्यनिर्देश आश्रीयत इत्यत्र आह-- "तदीयम्" इत्यादि। कुत एतदित्यत आह-- "तथा च" इत्यादि। न हि स्वकीयस्यैव प्रत्याख्यानं युक्तमिति भावः। "पञ्चालाः क्षत्रियाः" इति। पञ्()चालस्यापत्यानि बहूनीति विवक्षायाम् "जनपदशब्दात् क्षत्रियादञ्" ४।१।१६६, तस्य "तद्राजस्य बहुषु तेनैवास्त्रियाम्" २।४।६२ इति लुक्। "तेषां निवासो जनपदः" इत्यस्य वक्ष्यमाणेन "पञ्चालानाम्" इत्यनेन सम्बन्धः। "पञ्चालानां निवासो जनपदः" इति। तस्य "जनपदे लुप्" ४।२।८० इति लुक्। कुरुशब्दादपत्यार्थे "करुनादिभ्यो ण्यः" ४।१।१७० इति ण्यप्रत्ययः। मत्स्यादिशब्देभ्योऽप्यपत्यार्थे "द्वयञ्मगध" ४।१।१६८ इत्यादिनाण्। शेषं पूर्ववत्। "लवणः सूपः" इति। लवणेन संसृष्ट इति प्राग्वहतीष्ठक् ४।४।१, तस्य "लवणाल्लुक्" ४।४।२४ इति लुक्। अत्राभिधेयवल्लिङ्गवचने भवतः। शिरीषाणामदूरभदो ग्राम इति शिरीषाः। "अदूरभवश्च" ४।१।७० इति शरीषशब्दादण्, तस्य "वरणादिभ्यश्च " ४।२।८१ इति लुप्। णत्वन्न भवतीति व्यक्तिवचनग्रहणस्य फलम्। यदि "व्यक्तिवचने" इति नोच्येत, तदा शिरीषेषु यद्वनस्पतित्वं तस्यापि ग्रामेऽतिदेशः स्यात्। एवञ्च शिरीषवनमित्यत्र "विभाषौषधिवनस्पतिभ्यश्च" ८।४।६ इति णत्वं प्रसज्येत्। "हरीतक्यः फलानि" इति। हरीतकीशब्दो गौरादिषु पिप्पल्यादिदर्शनान्ङीषन्तः। ततः फले विकारे "अनुदात्तादेरञ्" ४।२।४३ इत्यञ्; तस्य "हरीतक्यादिभ्यश्च" ४।३।१६५ इति लुप्। अत्र व्यक्तिरेव युक्तवद्भावेन भवति, वचनन्त्वभिधेयवदिति। एतच्च विभाषाग्रहणानुवृत्तेव्र्यवस्थितविभाषाविज्ञानाच्च लभ्यते। "खलतिकं वनानि" इति। "अदूरभवश्च" ४।२।६९ इत्यण्, तस्य

"वरणादिभ्यश्च" ४।२।८१ इति लुप्। अत्र वचनमेव युक्तवद्भावेन भवति, व्यक्तिस्त्वभिधेयवदेवेति। एतदपि पूर्ववदेव लभ्यते॥

बाल-मनोरमा

लुपि युक्तवद्व्यक्तिवचने १२७५, १।२।५१

लुपि यक्तवत्। प्रकृतिभूतः शब्दः=युक्तः, व्यक्तिः=लिङ्गं, वचनं=सङ्ख्येति पूर्वाचार्यसङ्केतः। तदाह--लुपि सति प्रकृतिवल्लिङ्गवचने स्त इति। "लु"बिति प्रत्ययाऽदर्शनमुच्यते। लुपः प्रवृत्तेः प्राक्प्रत्ययप्रकृतेर्यल्लिङ्गं वचनं ते एव लुपि सति भवतः, न तु प्रत्ययार्थविशेष्यमनुसृत्येत्यर्थः। पञ्चालानामिति। पञ्चालसंज्ञकानां राज्ञामित्यर्थः। पञ्चाला इति। "तस्य निवास" इति विहितस्याऽणः "जनपदे लु"बिति लुपि प्रकृतिबद्बहुवचनमिति भावः। कुरव इत्यादि। कुरूणाम्, अङ्गाना, वङ्गानां, कलिङ्गानां च निवासो जनपद इति विग्रहः। लिङ्गातिदेशे तु "कटिबदर्या अदूरभवो जनपदः कटुबदरी"त्युदाहार्यम्।

तत्त्व-बोधिनी

लुपि युक्तवव्द्यक्तिवचने १०३१, १।२।५१

लुपि युक्तवदिति। व्यक्तिवचने किम्()। शिरीषाणामदूरभवो ग्रामः शिरीषाः। "वारणादिभ्यश्चे"ति लुप्। तस्य वनं शिरीषवनम्। इह वनस्पतित्वमतिदिश्येत। ततश्च "विभाषौषधिवनस्पतिभ्यः"इति णत्वं स्यात्। नन्वत्र शिरीषाणामिति षष्ठीबहुवचनं कृतो नातीदिश्यत इति चेत्। अत्राहुः--वचनमिह सङ्क्या, न त्वेकवचनाद्विवचनादि। न चैवमपि सहृख्याबोधकत्वेन श्रुतैव षष्ठी परिगृह्णतामिति वाच्यं, षष्ठ()र्थस्य तद्धितवृत्त्यन्तर्गतत्वादुक्तार्थे प्रथमाया एव युक्तत्वादिति। पञ्चला इत्यादि। यद्यप्यत्राभिधेयलिङ्गवत्त्वेऽपीष्टसिद्धिस्तथापि कटुबदर्या अदूरभवो ग्रामः कटुबदरीत्यादिसिद्धये प्रकृतिलिङ्गातिदेश इति भावः। पूर्वाचार्यानुरोधेन कृतं सूत्रं संप्रति प्रतायचष्टे।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विशेषणानाम् ६।३ च ० आ ० जातेः ५।१ लुपि ७।१ ५१ युक्तवत् ० ५१ व्यक्तिवचने १।२ ५१

अर्थः॥

तद्धितप्रत्ययस्य लुपि = लुबर्थस्य यानि विशेषणानि तेषाम् अपि युक्तवत् (प्रखृत्यर्थवत्) लिङ्गसङ्ख्ये भवतः, आ जातेः = जातेः पूर्वम्, आजातिप्रयोगात् इत्यर्थः। यदा तु विशेषणत्वेन विशेष्यत्वेन वा जातिः विवक्ष्यते तदा युक्तवद् भावः न भवति॥

उदाहरणम्॥

पञ्चालाः रमणीयाः बह्वन्नाः बहुक्षीरघृताः बहुमाल्यफलाः। गोदौ रमणीयौ बह्वन्नौ बहुक्षीरघृतौ बहुलाल्यफलौ। कटुकबदरी शोभना बहुमाल्यफला बहुक्षीरघृता॥

काशिका-वृत्तिः

विशेषणानां च अजातेः १।२।५२

लुपि इति वर्तते। लुबर्थस्य यानि विशेषणानि तेषाम् अपि च युक्तवद् व्यक्तिवचने भवतः जातिं वर्जयित्वा। पञ्चालाः रमणीयाः, बह्वन्नाः, बहुक्षीरघृताः, बहुमाल्यफलाः। गोदौ रमणीयौ, बह्वन्नौ, बहुक्षीरघृतौ, बहुमाल्यफलौ। अजातेः इति किम्? पञ्चालाः जनपदः। गोदौ ग्रामः। जात्यर्थस्य चायं युक्तवद्भावप्रतिषेधः। तेन जातिद्वारेण यानि विशेषणानि तेषाम् अपि युक्तवद्भावो न भवति। पञ्चालाः जनपदो रमणीयो, बह्वन्नः। गोदौ ग्रामो रमणीयो, बह्वन्नः इति। मनुष्यलुपि प्रतिषेधो वक्तव्यः। चञ्चा अभिरूपः। वर्ध्रिका दर्शनीयं।

न्यासः

विशेषणानां चाजातेः।, १।२।५२

पूर्वं प्रकृत्यर्थगतयोर्लिङ्गसंख्ययोर्लुबर्थेऽतिधेशात् तद्विशेषणानामपि रमणीयादीनां व्यक्तिवचनातिदेशः सिद्ध एव। यद्यपि भिन्नं विशेषणानां प्रवृत्तिनिमित्तम्; तथापि तेन भिन्नेनापि तत्र प्रवत्त्तमानानां स एव लुबर्थोऽतिदिष्टव्यक्तिवचनस्तेषामभिधेयः, तस्मात् तद्गतेनैव लिङ्गसंख्याभिधाने सिद्धे जातिप्रतिषेधार्थमिदं वचनम्। "गोदौरमणीयौ" इति। गोदौ नाम ह्यदौ, तयोरदूरभवो ग्राम इत्यर्थेऽण्। "वरणादिभ्यश्च" ४।२।८१ इति लुप् तस्य। "पञ्चालाः जनपदः"। "गोदौ ग्रामः "इति। जनपदग्रामशब्दौ जातिवचनौ। ताभ्यां जातिनिमत्ताभ्यां स एव लुबर्थो जातिरूपेणोच्यत इति तयोरपि व्यक्तवचने युक्तवत् स्याताम्। ततो "जातेः" इति प्रतिषेधः। "जात्यर्थस्य" इत्यादि। जातिशब्दस्यार्थो जात्यर्थः, तस्यायम् "अजातेः" इति युक्तवद्भावप्रतिषेधः, न जातिशब्दस्यैवेत्यर्थः। किमेव सति सिद्धं भवतीत्यत आह- "तेन" इत्यादि। अर्थस्य युक्तवद्भावप्रतिषेधे सति यथा जातिशब्दस्य तत्रार्थे वत्त्तमानस्य तदीये लिङ्गसंख्ये न भवतः, तथा तद्विशेषणानामपि युक्तवद्भावो न बह्वन्न इत्यादौ न स्यात्, रमणीयादीनामजातिशब्दत्वात्। द्वारग्रहणं लुबर्थे जातिशब्द्स्य प्रवृत्तत्वात्, लुबर्थे जातिविशेषणानां साक्षादप्रवृत्तेः। तानि हि साक्षाज्जातिमेव विशेषयन्ति। तस्यां तु विशेषितायां लुबर्थोऽपि विशिष्ट एव प्रतीयत इति जातिद्वारेण तस्य तानि विशेषणानि भवन्ति। "मनुष्यलुपि" इति। मनुष्यलक्षणो यो लुप् तस्य विशेषणानां युक्तवद्भावप्रतिषेध इति। स च विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाल्लभ्यते। "चञ्चाभिरूपः" इति। चञ्चेव मनुष्यश्चञ्चा-- "इवे प्रतिकृतौ" ५।३।९६ इति कन्। तस्य "लुम् मनुष्ये" ५।३।९८ इति लुप्। "अभिरूपः" इति विशेषणस्याभिधेयवल्लिङ्गवचनानि भवन्ति। " वर्ध्रिका" इति। पूर्ववत् कँल्लुपौ॥

बाल-मनोरमा

विशेषणानां चाऽजातेः १२८१, १।२।५२

विशेषणानां चाजातेः। कस्य विशेषणानामित्याकाङ्क्षायां लुबित्यनुवृत्तं षष्ठ()आ विपरिणतं संबध्यते। लुप्तप्रत्ययार्थस्येति लभ्यते। तदाह--लुबर्थस्येति। तद्वदिति। प्रकृतिवदित्यर्थः। "लुपि युर्तवद्व्यक्तिवचने" इत्यस्मादुत्तरं पठितमिदं सूत्रं तत्रैव व्याख्यातुमुचितम्। पञ्चाला रमणीया इति। पञ्चालानां निवासो जनपद इत्यर्थः। अत्र प्रत्ययार्थजनपदं प्रति विशेषणस्यापि रममीयशब्दस्य प्रकृतिवद्बहुवचनम्। गोदौ रमणीयाविति। गोदयोर्निवासो जनपद इत्यर्थः। अत्र प्रत्ययार्थजनपदस्य तद्विशेषणस्यापि प्रकृतिवद्द्विवचनम्। पञ्चाला जनपद इति। जनपदशब्दस्य जातिवाचित्वान्न प्रकृतिवद्बहुवचनम्। गोदौ ग्राम इति। अत्र ग्रामशब्दस्य जातिवाचित्वान्न प्रकृतिवद्द्विवचनम्।

हरीतक्यादिषु व्यक्तिरिति। वार्तिकमिदम्। "लुपि लिङ्गं प्रकृतिवद्भवति, न तु वचन"मिति शेषः। हरीतक्य इति। "हरीतक्यादिभ्यश्चे"ति विकारप्रत्ययस्य लुप्। अत्र प्रत्ययार्थेषु फलेषु प्रकृतिवत्स्त्रीलिङ्गमेव भवति, न त्वेकवचनमिति भावः।

खलतिकादिषु। वार्तिकमिदम्। एषु लुपि प्रकृतिवद्वचनमेव भवति, नतु लिङ्गमित्यर्थः। खलतिकं वनानीति।

"वरणादिभ्यश्चे"ति लुप्। अत्र खलतिकशब्दस्य लुप्तप्रत्ययान्तस्य प्रकृतिवत्पुंलिङ्गत्वं न भवति, किन्तु एकवचनमेवेति भावः। मनुष्यलुपि प्रतिषेध इति। वार्तिकमिदम्।

मनुष्यलक्षणे इति। मनुष्यात्मके लुप्तप्रत्ययार्थे यानि विशेषणानि तेषां प्रकृतिवल्लिङ्गवचनप्रतिषेध इत्यर्थः। चञ्चा अभिरूप इति। चञ्चा तृणमयी प्रतिमा, तत्सदृशो मनुष्यश्चञ्चा। "इवे प्रतिकृतौ" इत्यधिकारे "संज्ञाया"मिति कनो "लुम्मनुष्ये" इति लुप्। अत्र लुप्तप्रत्ययान्तस्य चञ्चाशब्दस्य मनुष्ये वाच्ये प्रकृतिलिङ्गत्वं, न तु तद्विशेषणस्याऽभिरूपशब्दस्येति भावः। इति युक्तवद्भावप्रकरणम्।

तत्त्व-बोधिनी
विशेषणानां चाऽजातेः १०३४, १।२।५२

विशेषणानां। यद्यपि सूत्रपाठे "लुपि युक्तव"दिति सत्रादनन्तरमेतत्सूत्रं पठित्वा "तदशिष्य"मित्याशब्धात्वात्तत्रैवेदं व्याख्यातुमुचितम्, तथापि जातेः प्रतिषेधमात्रपरमिदं, न तु युक्तवद्भावपरिमित्याशयेन तत्र नोक्तमित्याहुः। पञ्चाला रमणीया इति। कथं तर्हि "पञ्चाला जनपदः सुभिक्षः सम्पन्नपानीयः"इति प्रयोग इति चेत्, जनपदविशेषणत्वादित्येवेहि। पञ्चालविशेषणत्वाभ्युपगमे तु तद्वलिङ्गवचने स्त एव ---पञ्चाला जनपदाः सुभिक्षः सम्पन्नपानीया इति।

हरीतक्यादिषु व्यक्तिः। हरीतक्य इति। "हरीतक्यादिभ्यश्चे"त्यणो लुप्। तत्र हि "लुप् चे"त्यतो लुबनुवर्तते।

खलतिकादिषु वचनम्। खलतिकमिति। "वरणादिभ्येश्चे"ति लुप्।

मनुष्यलुपि प्रतिषेधः। चञ्चेति। "सञ्ज्ञाया"मिति कनो "लुम्मनुष्ये"इति लुप्। "चञ्चा तृणमयः पुमान्"।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तत् १।१ अशिष्यम् १।१ ५७ संज्ञाप्रमाणत्वात् ५।१

समासः॥

शासितुं शक्यं शिष्यं, न शिष्यं अशिष्यं, नञ्तत्पुरुषः।
संज्ञायाह् प्रमाणं संज्ञाप्रमाणं, षष्ठीतत्पुरुषः। संज्ञाप्रमाणस्य भावः संज्ञाप्रमाणत्वं, तस्मात् संज्ञाप्रमाणत्वात्। {तस्य भावस्त्वलतौ (५।१।११८)} इत्यनेन त्वप्रत्ययः। संज्ञानं संज्ञा = लौकिकव्यवहारः। तदित्यनेन युक्तवद्भावः परिगृह्यते। अशक्यम् इत्यनेन शासितुम् अशक्यम् इति वेदितव्यं, न तु शासितुम् अयोग्यं कुतः? शासु अनुशिष्टौ, इत्येतस्मात् धातोह् {एतिस्तुशास्वृदृजुषः क्यप्(३।१।१०९)} इत्यनेन क्यप् प्रत्ययः, सः च शक्यार्थे वेदितव्यः तेन अशिश्यम् इत्यस्य पूर्णतया शासितुम् अशक्यम् इत्यर्थः॥

अर्थः॥

तद् = युक्तवद्भावकथनम् अशिष्यं = शासितुम् अशक्त्यम्। कुतः? संज्ञाप्रमाणत्वात् = लौकिकव्यवहाराधीनत्वात्॥

उदाहरणम्॥

पञ्चालाः, वरणाः, जनपदादीनां संज्ञा एताः तत्र लिङ्गं वचनं च स्वभावसिद्धम् एव॥

काशिका-वृत्तिः

तदशिष्यं संज्ञाप्रमाणत्वात् १।२।५३

तदिति प्रकृतं युक्तवद्भावलक्षणं निर्दिश्यते। तदशिष्यं न वक्तव्यम्। कस्मात्? संज्ञाप्रमाणत्वात्। संज्ञाशब्दा हि नानालिङ्गसङ्ख्याः प्रमाणम्। पञ्चालाः, वरणा इति च, न एते योगशब्दाः। किं तर्हि? जनपदादीनां संज्ञा एताः। तत्र लिङ्गं वचनं च स्वभावसंसिद्धम् एव न यत्नप्रतिपाद्यम्, यथा आपः, दाराः, गृहाः, सिकताः, वर्षाः इति।

न्यासः

तदशिष्यं संज्ञाप्रमाणत्वात्। , १।२।५३

"तदशिष्यम्" इति प्रतिज्ञा, "संज्ञाप्रमाणत्वात्" - इति हेतुः। यस्मात् संज्ञाभूतानां पञ्चालादिशब्दानां प्रमाणत्वम्, तस्मात् तदशिष्यम्। प्रमाणत्वं पुनः प्रत्ययलक्षणम्। सर्वेषामेव शब्दानामेवं विधे स्वविषये प्रमाणत्वमस्ति, उच्यते चेदम्, तत्र विशेषो विज्ञायते, स पुनरभिधेयगतलिङ्गसंख्यानपेक्षया भिन्नलिङ्गसंख्यानामपि तेषां स्वार्थे प्रत्यायकत्वम्। अत एवाह-- "संज्ञाशब्दा हि नानालिङ्गसंख्याः" इति। "प्रमाणम्िति। प्रमाणं प्रत्यायका वाचका इत्यर्थः। तत्रैतत् स्यात्-- संज्ञाशब्दा एवामी पञ्चालादयो न भवन्ति, किं तर्हि? योगनिमित्तका इत्यत आह-- "पञ्चाला वरणाः" इत्यादि। योगनिमित्तकाः शब्दा योगशब्दाः। न हि पञ्चालादयः शब्दाः क्षत्रियादिसम्बन्धेन जनपदादौ वत्र्तन्ते; किं तर्हि? संज्ञा एता जनपदादीनाम्। यदि संज्ञाशब्दा एते, ततः किमिति? तदशिष्यमित्यत आह-- "तत्र लिङ्गं वचनञ्च" इत्यादि। कुत एतत्? यत् संज्ञाशब्दानां लिङ्गं वचनञ्च तत्स्वभावसिद्धमित्यत आह-- "यथा" इत्यादि। एकस्यामपि जलकणिकायां बहुवचनान्तः स्त्रीलिङ्गोऽप्शब्दः प्रयुज्यते, एकस्यामपि योषिति दारशब्दः पुंल्लिङ्गो बहुवचनान्तः, गृहशब्दश्चैकस्मिन् वेश्मनि बहुवचनान्तः पुंल्लिङ्गश्च, एकस्यामपि वालुकायां बहुवचनान्तः सिकताशब्दः स्त्रीलिङ्गः, वर्षा इत एकस्मिन् विशिष्टकालेऽपि प्रवत्र्तमानः स्त्रीलिङ्गो बहुवचनान्तश्च वत्र्तते। तस्मात् यथैवेषामप्प्रभृतिशब्दानां स्वाभाविकं लिङ्गं वचनञ्च तथा पञ्चालादिशब्दानामपीति नार्थो युक्तवद्भावचनेन। यद्येवम्, कस्मात् पूर्वं तदुक्तम्? प्रतिषेधविषयोपदर्शनार्थम्। न ह्यनिर्दिष्टविषयस्य प्रतिषेधः शक्यते कर्त्तु ज्ञातुं वा॥

बाल-मनोरमा

तदशिष्यं संज्ञाप्रमाणत्वात् १२७६, १।२।५३

तदेतत्पूर्वाचार्यसूत्रं पाणिनिः प्रत्याचष्टे--तदशिष्यं। यथा "दाराः" इत्यादौ शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य भानं, तथा लुपि सति शास्त्रीयप्रकृत्यर्थगतलिङ्गसङ्ख्याविशिष्टस्यैव स्वार्थस्य सोकव्यवहारादेव भानं संभवति, न तु तदंशे शास्त्रव्यापारापेक्षेति भावः। संज्ञानामिति। लोकव्यवहाराणामित्यर्थः।

तत्त्व-बोधिनी

तदशिष्यं संज्ञाप्रमाणत्वात् १०३२, १।२।५३

तदशिष्यमिति। पञ्चालाः, अङ्गाः, वङ्गाः, कलिङ्गाः---इत्यादयो जनपदस्य यथायथं बहुवचनाद्यन्ता एव संज्ञा, न त्वत्र यत्नेन लिङ्गसङ्ख्ये प्रतिपादनीये। "आपः" "दारा" इत्यादिषु यथा। न हि तत्र शास्त्रेण लिङ्गसङ्ख्ये प्रतिपाद्येते इति भावः। उपजीवकं प्रत्याख्यायोपजीव्यं प्रत्याचष्टे--।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लुप् १।१ योगाप्रख्यानात् ५।१ अशिष्यम् १।१ ५३

समासः॥

न प्रख्यानम् अप्रख्यानं, नञ्तत्पुरुषः। योगस्य अप्रख्यानं योगाप्रख्यानं, तस्मात् योगाप्रख्यानात्, षष्ठीतत्पुरुषः।

अर्थः॥

लुब्विधायकं {जनपदे लुबित्यादिकं} सूत्रम् अपि अशिष्यं = शासितुम् अशक्यम्। कुतः? योगस्य = सम्बन्धस्य, अप्रख्यानात् = अप्रतीतत्वात् इत्यर्थः॥

उदाहरणम्॥

पञ्चालाः, वरणाः इति देशविशेषस्य संज्ञाः, नहि निवाससम्बन्धात् एव पञ्चालाः, वृक्षयोगात् एव वरणाः इति व्यवह्रियन्ते, तत्र अशक्यं लुब्विधानम्। अनन्तरसूत्रम् अपि इदम् एव सूत्रं दृढीकरोति॥
काशिका-वृत्तिः
लुब् योगाप्रख्यानात् १।२।५४

लुबप्यशिष्यः। यो ऽयं जनपदे लुप् ४।२।८०, वरणाऽअदिभ्यश्च ४।२।८१ इति लुबुच्यते,अयं न वक्तव्यः। किं कारणम्? योगाप्रख्यानात्। न हि पञ्चाल वरणाः इति योगः सम्बधः प्रख्यायते। नएतदुपलभामहे वृक्षयोगान्नगरे वरणाः इति। किं तर्हि? संज्ञा एताः। तस्मादत्र तस्य निवासः (*४,२ ६९), अदूरभवश्च ४।२।६९ इति तद्धितो न एव उत्पद्यते, किं लुपो विधानेन।
न्यासः
लुब्योगाप्रख्यानात्। , १।२।५४

"योगप्रख्यानात्" इति।योगो जनपदादेः क्षत्रियादिभिः सह सम्बन्धः, तस्याप्रख्यानादनुपलब्धेरित्यर्थः। ये हि योगनिमित्तिकाः शब्दा योगमभिधाय तद्वति द्रव्ये वर्त्तन्ते, तेभ्यो योग उपलभ्यते; यथा-- दण्डिशब्दादिभ्यः। न च पञ्चालादिभ्यो दण्ड()आदिशपब्दवद्योग उपलभ्यते, तस्मान्नैते योगशब्दा इत्यत आह- "न हि" इत्यादि। प्रख्यायते = कथ्यते, प्रकाश्यते, बुद्धेर्विषय आपद्यत इति यावत्। यत एवं पञ्चाला वरणा इति सम्बन्धो न प्रख्ययते अत एव नैतदुपलभामहे वृक्षयोगान्नगरे वरणा इति, किं तर्हि? संज्ञा एता अनपेक्षितप्रवृत्तिनिमित्ताः। यदि संज्ञाश्बदा एते, ततः किमित्याह-- "तस्मादत्र" इत्यादि। गतार्थम्। ननु च संज्ञा शब्दानामपि व्युत्पत्त्यर्थ तद्धित उत्पद्यत ए, यथा "हस्ताज्जातौ" ५।२।१३२ हस्ती, "कम्बलाच्च संज्ञायाम्" ५।१।३ कम्बल्यमिति, तत्किमुच्यते-- " तस्मादत्र "तस्य निवासः" ४।२।६८ "अदूरभवश्च" (४।२।७०) इति तद्धितो नोत्पद्यते" इति? सत्यम्, संज्ञाशब्दव्युत्पत्त्यर्थं तद्धित उत्पद्यते। स च क्वोत्पद्यते? यत्र श्रुतिकृतो विशेषो विद्यते, न चेह तद्धितोत्पत्तौ लुपि सति कश्चिद्विशेष इति न तद्धितोत्पत्तिः॥
बाल-मनोरमा
लुव्योगाऽप्रख्यानात् १२७७, १।२।५४

एवंच सुवपि न विदे इत्याह--लुव्योगाप्रख्यानात्| "अशिष्य"मित्यनुवृत्तं पुंलिङ्गेन तविपरिणतं "लु"वित्यनन्तरं संबध्यते| तदाह--लुबपि न कर्तव्य इति| योगः=अवयवार्थः, तस्य--अप्रख्यानात्प्रतीतेरित्यर्थः| तदाह--अवयवेति| नहि पचालाङ्गवङ्गादिसंबन्धित्वेन पञ्चाला अङ्गा वङ्गा इत्यादितो बोधः, अतः प्रत्यय एव तत्र नास्तीति भावः|

तत्त्व-बोधिनी

लुब्योगाऽप्रख्यानात् १०३३, १|२|५४

लुब्योगेति| "जनपदे लुप्", "वरणादिभ्यश्चे"ति द्विसूत्री "लुप्शब्देन विवक्षिता| "अशिष्य"मिति सम्बध्यत एव| तदाह--लुबपीति| प्रकृतिप्रत्ययार्थयोः सम्बन्धोयोग इत्याशयेन फलितमाह---अवयवार्थस्येति| अप्रख्यानाद्विति व्याचष्टे---अप्रतीतेरिति| पञ्चालादयः शब्दाः क्षत्रियेषु यथा रूढास्तथा जनपदेऽपीति "तस्य निवासः" "अदूरभवश्च" इति तद्धितो नैवोत्पद्यते किमनेन लुपो विधानेनेत्यर्थः| न दृश्येतेति| विनापि क्षत्रियसम्बन्धं पञ्चालादिशब्दोजनपदेषु प्रयुज्यते इति नार्थः सूत्रेणेत्यर्थः| प्रसङ्गात्पूर्वाचार्यपरिभाषितकमन्यदपि प्रत्याचष्टे--प्रधानेत्यादिना|

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ योगप्रमाणे ७|१ च ० तदभावे ७|१ अदर्शनम् १|१ स्यात् विधिलिङ् १|१ अशिष्यम् १|१ ५३

समासः॥

योगस्य प्रमाणं योगप्रमाणं, तस्मिन् योगप्रमाणे, षष्ठीतत्पुरुषः|
न भावः अभावः, नञ्तत्पुरुषः| तस्य अभावः तदभावः, तस्मिन् तदभावे, षष्ठीतत्पुरुषः|
न दर्शनम् अदर्शनं, नञ्तत्पुरुषः|

अर्थः॥

यदि पञ्चालादिशब्दाः निवासाद्यर्थस्य वाचकाः स्युः तदा निवासादिसम्बन्धाभावे, पञ्चालादीनाम् अदर्शनं अप्रयोगः स्यात्, न चैव भवति, तेन ज्ञायते न एते योगनिमित्तिकाः, परं संज्ञा एताः देशविशेषस्य| पूर्वसूत्रार्थम् एव दृढीकरोति॥

उदाहरणम्॥

काशिका-वृत्तिः

योगप्रमाणे च तदभावे ऽदर्शनम् स्यात् १|२|५५

पञ्चालाऽदयः संज्ञाशब्दाः, न योगनिमित्ताः इत्युक्तम्| तच्चावश्यम् एव अभ्युपगन्तव्यम्| योगप्रमाणे हि तदभावे ऽदर्शनं स्यात्| यदि पञ्चालादिशब्दो योगस्य प्रमाणं योगस्य वाचकः स्यात् ततस् तदभावे ऽदर्शनम् अप्रयोगः स्यात्| दृश्यते च सम्प्रति वनैव क्षत्रियसम्बन्धेन जनपदेषु पञ्चालादिशब्दाः, ततो ऽवसीयते नायं योगनिमित्तकः| किं तर्हि? रूढिरूपेणैव तत्र प्रवृत्तः इति|

न्यासः

योगप्रमाणे च तदभावेऽदर्शनं स्यात्| , १|२|५५

"योगप्रमाणे" इति। योगस्य प्रमाणं योगप्रमाणम्, येन योगः प्रत्याय्यते। तत् पुनरिह प्रकृतत्वात् पञ्चालादिशब्दः। स हि परमतेन पञ्चालादिसम्बन्धं स्वप्रवृत्तिनिमित्तमभिधायैव जनपदादौ वत्र्तते, नानभिधाय। तेन योगस्य प्रमाणं प्रत्यायको वाचक इत्यर्थः। "तदभावेऽदर्शनं स्यात्" इति। यो हि योगनिमित्तकः स योगाभावे न प्रयुज्यते, दणड()आदिशब्दवदित्यभिप्रायः। "योगप्रमाणे हि" इत्यादि। हिशब्दं हेत्वर्थं प्रयुञ्जानश्चशब्दो हेत्वर्थवृत्तिः सूत्रे उपात्त इति दर्शयति। स्यादेतत्, भवत्येव योगाभावे पञ्चालादिशब्दस्यादर्शनमित्यत आह-- "दृश्यते च" इत्यादि। गतार्थम्।
बाल-मनोरमा
योगप्रमाणे च तदभावेऽदर्शनं स्यात् १२७८, १।२।५५

प्रत्ययस्वीकारे बाधकमाह--योगप्रमाणे च। पञ्चालाऽङ्गवङ्गादिशब्देषु योगस्य=अवयवार्थस्य प्रमापकत्वे सति तदभावे=पञ्चालाङ्गादिक्षत्रियसम्बन्धाऽभावे संप्रति शूद्रादिराजके जनपदे पञ्चालादिशब्दो न प्रयुज्यते, प्रयुज्यते च यतः, अतः पञ्चालादिशब्दा जनपदविशेषेषु केवरूढा इति युक्तमित्यर्थः। तदाह-यदि हि योगस्येति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रधानप्रत्ययार्थवचनम् १।१ अर्थस्य ६।१ अन्यप्रमाणत्वात् ५।१ अशिष्यम् १।१ ५३

समासः॥

प्रधानं च प्रत्ययः च प्रधानप्रत्ययौ, इतरेतरद्वन्द्वः। अर्थस्य वचनम् अर्थवचनं, षष्ठीतत्पुरुषः। प्रधानप्रत्यययोः अर्थवचनं, प्रधानप्रत्ययार्थवचनं, षष्ठीतत्पुरुषः॥ अन्यस्य प्रमाणम्, अन्यप्रमाणं, षष्ठीतत्पुरुषः। अन्यप्रमाणस्य भावः, अन्यप्रमाणत्वं, तस्मात् अन्यप्रमाणत्वात्॥

अर्थः॥

प्रधानार्थवचनं प्रत्ययार्थवचनम् अपि अशिष्यं शासितुम् अशक्यं, कुतः? अर्थस्य अन्यप्रमाणत्वात् = लोकप्रमाणत्वात्। शास्त्रापेक्षया अन्यशब्दः। केषाञ्चित् आचार्याणाम् इदं मतम् अभूत् -- प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः -- तदेतत् पाणिन्याचार्यः प्रत्याचष्टे। अर्थात् ये व्याकरणं न जानन्ति तेऽपि प्रधानार्थं प्रत्ययार्थम् एव प्रयुञ्जते, तस्मात् लोकाधीनम् एव एतत्, अस्य लक्षणं कर्त्तुम् अशक्यम्॥
काशिका-वृत्तिः
प्रधानप्रत्ययार्थवचनम् अर्थस्य अन्यप्रमाणात्वात् १।२।५६

अशिष्यम् इति वर्तते। प्रधानं समासे किंचित् पदं, प्रत्ययस्तव्यदादिः। ताभ्याम् अर्थवचनम् अर्थाभिधानम् अनेन प्रकारेण भवति इति पूर्वाऽचार्यैः परिभाषितम्। प्रधानौपसर्जने च प्रधानार्थं सह ब्रूतः, प्रक्तिप्रत्ययौ सहार्थं ब्रूतः इति। तत् पाणिनिराचर्यः प्रत्याचष्टे, अशिष्यम् एततर्थस्य अन्यप्रमाणत्वातिति। अन्यः इति शास्त्रापेक्षया लोको व्यपदिश्यते। शब्दैरर्थाभिधानम् स्वाभाविकं न पारिभषाकम् अशक्यत्वात्। लोकत एव अर्थावगतेः। यैरपि व्याकरणं न श्रुतं ते ऽपि राजपुरुषम् आनय इत्युक्ते राजविशिष्टं पुरुषम् आनयन्ति न राजनम् न अपि पुरुषमात्रम्। औपगवम् आनय इत्युक्ते उपगुविशिष्टम् अपत्यम् आनयन्ति, न उपगुं न अप्यपत्यमात्रं, न उभौ। यश्च लोकतो ऽर्थः सिद्धः किं तत्र यत्नेन।

न्यासः

प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्। , १।२।५६

"अन्यप्रमाणत्वात्" इति। अन्यत् प्रमाणम् अवगतिहेतुर्यस्यार्थाभिधानलक्षणस्य तदन्यप्रमाणम्, तस्य भावोऽन्यप्रमाणत्वम्। "प्रधानं समासे किञ्चित् पदम्" इति। यथा राजपुरुषशब्दे पुरुष इत्येतत्। "प्रधानोपसर्जने" इत्यादि। राजपुरुष इत्यत्र पूर्ववदुपसर्जनम्, इतरत् प्रधानम्। ते च प्रधानार्थं सह ब्राऊतः। "प्रकृतिप्रत्ययौ" इत्यादि। अशक्यत्वं त्वनन्तप्रकारत्वात्। तथा हि-- चित्रगुरिति बहुव्रीहौ कृते गुणगुणिभ्यामन्यपदार्थ उच्यते। अत्र गुणपदं चित्रशब्दोऽप्रधानम्, विशेषणत्वात्; गुणिपदं गोशब्दः प्रधानम्, विशेष्यत्वात्। क्वचिदुपसर्जनाभ्यामन्योऽर्थोऽभिधीते-- प्लक्षन्यग्राधाविति। तथा हि, न केवलं प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्राऊतः अपि तु, क्वचित् प्रकृत्यर्थमपि, यथा-- स्वार्थिकेषु शुक्लतरम्, शुक्लतममिति। तथा केचिदाख्यातेषु स्वभावात् प्रधानमाहुः प्रकृत्यर्थम्-- "क्रियाप्रधानमाख्यातम्" इति। अन्ये तु मन्यन्ते- आख्यातेषु प्रधानभूतः प्रत्ययार्थ एव शक्तिरूपेणोच्यते, यथा विभक्तिभिः क्वचित् प्रत्यये; न तु शक्तिमान् पदार्थो द्रव्यभावमापन्न उच्यते। अतः क्रियान्तरेण च सम्बन्धे शक्त्यन्तरमाविर्भवति कर्त्तारं पश्येति। एवमाद्यनन्तप्रकारमर्थाभिधानशक्यं सर्वमुपदेष्टुम्, तस्माल्लोकत एवार्थावगतिः। कथं पुनरेतद्विज्ञायत इत्यत आह-- "यैरपि" इत्यादि। सुगमम्॥

बाल-मनोरमा

विभाषोपयमने ५५४, १।२।५६

विभाषोपयमने। "यमो गन्धने" इत्तो यम इति, "हनः सिच्" इत्यतः सिजिति, "असंयोगा"दित्यतः किदिति चानुवर्तते। तदाह-- यमः सिच्किद्वा स्याद्विवाहे इति। उपयमशब्दो विवाहे वर्तते इति भावः। रामः सीतामुपायतेति। भार्यात्वेन स्वीकृतवानित्यर्थः। सिचः कित्त्वपक्षे "अनुदात्तोपदेशे"ति मकारलोपे "ह्रस्वादङ्गा"दिति सिचो लोपः। उदवोढेति। भार्यात्वेन स्वीकृतवानित्यर्थः। सिचः कित्त्वपक्षे "अनुदात्तोपदेशे"ति मकारलोपे "ह्रस्वादङ्गा"दित सिचो लोपः। उदवोढेति। भार्यात्वेन परिग्रहः-- उद्वाहः। गन्धनाङ्गे उपयमे त्विति। हिंसापूर्वके विवाहे त्वित्यर्थः। राक्षसविवाहे त्विति यावत्। "हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदतो हरेत्। स राक्षसो विवाहः-" इति स्मृतेः। नित्यं कित्त्वमिति। "यमो गन्धने" इति पूर्वसूत्रेणे"ति शेषः। यदि गन्धनाङ्गकेऽप्युपयमने परत्वादियं विभाषा स्यात्तर्हि एषा प्राप्तविभाषा स्यात्। ततश्च "न वेति विभाषे"त्यत्र भाष्येऽप्राप्तविभाषास्वस्याः परिगणनं विरुध्येत। अतः पूर्वविप्रतिषेध आश्रयणीय इति भावः।

बाल-मनोरमा

प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् १२७९, १।२।५६

अथ प्रसङ्गादन्यदपि पूर्वाचार्यपरिभाषितं निराचष्टे--प्रधानप्रत्ययार्थ। प्रत्ययार्थ इति। "प्रकृत्यर्थं प्रति प्रत्ययार्थः प्रधानं=विशेष्यम्, प्रकृत्यर्थस्तु तद्विशेषण"मित्येवं यत्पूर्वाचार्यवचनं तदपीत्यर्थः।

तत्त्व-बोधिनी

विभाषोपयमने ४६१, १।२।५६

गन्धनाङ्गे इति। पूर्वविप्रतिषेधश्च "नवेति विभाषा" सूत्रे भाष्ये उक्तः। नित्यं कित्त्वमिति। "यमो गन्धने" इति पूर्वसूत्रेणेत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कालोपसर्जने १।२ च ० तुल्यम् १।१ अशिष्यम् १।१ ५३

समासः॥

कालः च उपसर्जनं च, कालोपसर्जने, इतरेतरद्वन्द्वः॥

अर्थः॥

कालः परोक्षादिः॥ कालः, उपसर्जनं च अशिष्यं शासितुम् अशक्यम्। कुतः? तुल्यहेतुत्वात्, अर्थात् लोकप्रमाणत्वात्। तुल्यशब्दः पूर्वोक्तस्य सूत्रस्य हेतोः अनुकर्षणार्थः॥
काशिका-वृत्तिः
कालौपसर्जने च तुल्यम् १।२।५७

अशिष्यम् इति वर्तते। कालौपसर्जने च अशिष्ये। कस्मात्? अर्थस्य अन्यप्रमाणत्वात्। तुल्यशब्दो हेत्वनुकर्षणार्थः। अशिष्यविशेषणं चैतत्। कालौपसर्जने च तुल्यम् अशिष्ये भवतः। इह अन्ये वैयाकरणाः कालौपसर्जनयोः परिभाषां कुर्वन्ति। आन्याय्यादुत्थानादान्याय्याच् च संवेशनात्, एषो ऽद्यतनः कालः। अपरे पुनराहुः। अहरुभयतो ऽर्धरात्रम् , एषो ऽद्यतनः कालः इति। तथा उपसर्जनपरिभाषां कुर्वन्ति अप्रधानम् उपसर्जनम् इति। तत् पाणिनिराचार्यः प्रत्याचष्टे लोकतो ऽर्थवगतेः। यैरपि व्याकरणम् न श्रुतं ते ऽप्याहुरिदम् अस्माभिरद्य कर्तव्यम् इदं श्वः कर्तव्यम् इदम् हयः कृतम् इति। नैवं व्युत्पाद्यन्ते। तथाउपसर्जनम्, वयमत्र गृहे ग्रामे वा उपसर्जनम् अप्रधानम् इति गम्यते। य्श्च लोकतो ऽर्थः सिद्धः किं तत्र यत्नेन। यद्येवं पूर्वसूत्र एव कालौपसर्जनग्रहणम् कस्मान् न क्रियते? किमर्थो योगविभागः? प्रदर्शनार्थः। अन्यदप्येवं जातीयकमशिष्यम् इति। तथा च पूर्वाचार्याः परिभषन्ते मत्वर्थे बहुव्रीहिः, पूर्वपदार्थप्रधानो ऽव्ययीभावः, उत्तरपदार्थप्रधानस् तत्पुरुषह्, उभयपदार्थप्रधानो द्वन्द्वः इत्येवम् आदि, तदशिष्यम् इति।
न्यासः
कालोपसर्जने च तुल्यम्। , १।२।५७

अर्थस्यान्यप्रमाणत्वादित्युक्तम्। कथं पुनरत्राप्ययं हेतुर्लभ्यत इति प्रश्नावसर इत्याह-- "तुल्यशब्दो हेत्वनुकर्षणार्थः" इति। कथं पुनस्तुल्यशब्दो हेत्वनुकर्षणार्थो भवति? मन्यते-- तुल्यमिति प्रत्याख्यानक्रियाविशेषणमेतत्। अनन्तरोक्तेन प्रत्याख्यानेन तुल्यमेतत् प्रत्याख्यानम्। एवञ्च् तुल्यं भवति यदि यस्तस्य हेतुः स एवास्यापि भवति। तस्मात् तुल्यग्रहणसामथ्र्यात् पूर्वको हेतुत्रानुवत्र्तते। तेन तुल्यशब्दो हेत्वनुकर्षणार्थो भवतीति। "आन्याय्यादुत्थानात्" इत्यादि। उत्थानं शयनाद्रात्रेः पश्चिमे यामे न्याय्यमुक्तम्। संवेशनम् = शयनम् तदपि रजन्याः प्रथमे यामे न्याय्यम्। तदेवं सकलो दिवसः; पूर्वस्याश्च रात्रेः पश्चिमो यामः, आगमिन्याश्च प्रथमो याम इत्येषोऽद्यतनः काल इत्युक्तं भवति। "अहरुभयतोऽद्र्धरात्रम्" इत्यादि। कृत्स्नो दिवस उभयश्चाद्र्धरात्रम्। अतिक्रान्तायाश्च रात्रेरागामिन्याश्च रात्रेरद्यतनः काल इत्यपरे॥
बाल-मनोरमा
कालोपसर्जने च तुल्यम् १२८०, १।२।५७

कालोपसर्जने च। कालश्च उपसर्जनं चेति समाहारद्वन्द्वाद्विषयसप्तमी। "अशिष्य"मित्यनुवृत्तं भावप्रधानमाश्रीयते।

कालविषये उपसर्जनविषये च यत्पूर्वाचार्याणां विशेषवचनं, तत्राप्यशिष्यत्वं समानमित्यर्थः। तद्विशेषवचनं विशदन्यग्न्याचष्टे-अतीताया इत्यादिना।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ जात्याख्यायाम् ७।१ एकस्मिन् ७।१ ५९ बहुवचनम् १।१ ६० अन्यतरस्याम् ७।१ ६२

काशिका-वृत्तिः

जात्याख्यायम् एकस्मिन् बहुवचनम् अन्यतरस्याम् १।२।५८

अशिष्यम् इति निवृतम्। जातिर् नाम अयम् एको ऽर्थः। तदभिधाने एकवचनम् एव प्राप्तम् अत इदम् उच्यते। जातेराख्या जात्याख्या। जात्याख्यायाम् एकस्मिन्नर्थे वहुवचनम् अन्यतरस्यां भवति। जात्यर्थो बहुवद् भवति इति यावत्। तेन तद्विशेषणानाम् अजातिशब्दानाम् अपि सम्पन्नादीनां बहुवचनम् उपपद्यते। सम्पन्नो यवः, सम्पन्ना यवाः। सम्पन्नो व्रीहिः, सम्पन्ना व्रीहयः। पूर्ववया ब्राह्मणः प्रत्युत्थेयः, पूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः। जातिग्रहणं किम्? देवदत्तः। यज्ञदत्तः। आख्यायाम् इति किम्? काश्यपप्रतिकृतिः काश्यपः। भवत्ययं जातिशब्दो न त्वनेन जातिराख्यायते। किं तर्हि? प्रतिकृतिः। एकस्मिनिति किम्? व्रीहियवौ। सङ्ख्याप्रयोगे प्रतिषेधो वक्तव्यः। एको ब्रीहिः सम्पन्नः सुभिक्षं करोति।

न्यासः

जात्याख्यामेकस्मिन्बहुवचनमन्यतरस्याम्। , १।२।५८

"जातिर्नामायमेकोऽर्थः इत्यादिना सूत्रारम्भस्य प्रयोजनमाह। ननु जातेः संख्या न विद्यते? तस्या द्रव्यधर्मत्वात्। यद्यपि वैशेषिकसिद्धान्तप्रसिद्धा गुणपदार्थसंगृहीता या संख्या सा न विद्यते; तथापि "भेदका गुणाः" इत्यस्मद्दर्शने" भेदमात्रा या संख्या सा विद्यत एवेत्यदोषः। "जातेराख्या" इति। आख्यानमाख्या = प्रत्यायनम्। "एकस्मिन्नर्थे" इति। जात्याख्योऽर्थो "जात्यर्थो बहुवद्भवतीति यावत्" इति। एतेनैतद्दर्शयति-- न हि जातिविशेषणेभ्यः सम्पन्नादिभ्यस्तन्न स्यात्। तेषामजातिशब्दत्वादित्यभिप्रायः। कथं पुनर्जात्यर्थस्य बहुवद्भावो लभ्यते? अन्वर्थग्रहणात्। बहुवचनमिह न पारिभाषिकं बहुवचनं गृह्णते, किं तर्हि? अन्वर्थम्। उक्तिः = वचनम्। बहूनां वचनं बहुवचम्। न चैकस्मिन्नर्थे बहूनां वचनं सम्भवति, अतः सामथ्र्याद्वित्यर्थो गम्यते-- एकस्मिन्नर्थे बहुविदिति। तदनेन प्रकारेण जात्यर्थो बहुवद्भवति। "तेन" इत्यादि। यत ए जात्यर्थस्य बहुवद्भावो विधीयते, तेन जातिविशेषणानामजातौ वर्तमानानां बहुवचनमुपपद्यते, जातिशब्दवत्। "देवदत्तः" इति। देवदत्तशब्दो यदृच्छाशब्दः। नानेनैकं वस्त्वनेकव्यक्त्यनुगतमभिधीयते। अनेकव्यक्त्याधारा हि जातिः। ततो न देवदत्तत्वं नाम जातिरस्तीति न भवत्यत्र बहुवद्भावः। ननु चात्रावस्थाभेदेनानेकाधारं देवदत्तत्वमस्ति, नैतदस्ति; एवं हि जातिग्रहणमनर्थकं स्यात्, सर्वत्र जातेः सम्भवात्। तस्माज्जातिग्रहणसामथ्र्याल्लोके ये जातिशब्दाः, प्रतीताः, तदर्था एवात्र जातिशब्देन विवक्षिता इति विज्ञायते, न च देवदत्तशब्दो लोके जातिशब्दः प्रतीतः। "काश्यपप्रतिकृतिः काश्यपः" इति। काश्यपस्यापत्यम् "अनृष्यानन्तर्ये विदादिभ्योऽञ्" ४।१।१०४ इत्यञ्-- काश्यप इति। तत इवार्थे "एवे प्रतिकृतौ"५।३।९६ इति कन्। "लुम् मनुष्ये" ५।३।९८इति लप् भवति। "अयं जातिशब्दः" इति। "गोत्रञ्च चरणैः सह" (४।१।६३म।भा) इति लक्षणात्, तस्य च गोत्रप्रत्ययान्तत्वात्। न त्वयं जातिरूपेणोच्यते, किं तर्हि? प्रतिकृतिरिति। एवं तर्हि जातिप्रत्यायने हि चिकीर्षिते बहुवद्भावेन भवितव्यम्। न चेह जातिप्रत्यायनं चिकीर्षितम्, किं तर्हि? प्रतिकृतिप्रत्यायनम्।"व्रीहियवौ" इति। एकस्मिञ्जात्यर्थे बहुवद्भावोऽनेन विधीयते। इह तु द्वौ जात्यर्थो विवक्षितौ।

वक्तव्यशब्दस्य व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- अन्यतरस्यामिति व्यवस्थितविभाषेयम्। तेन संख्याप्रयोगे न भविष्यति। अथ वा- एको व्रीहिः सम्पन्न इत्यत्रैकशब्दः प्रयुज्यमानो जात्यर्थस्यैकत्वमुद्भावयति,तच्च बहुत्वेन विरुध्यते। तस्मादेकत्वबहुत्वयोर्विरोधाद्बहुवद्भावो नेह भविष्यति॥

बाल-मनोरमा

जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ८०७, १।२।५८

जात्याख्यायाम्। आकृत्यधिकरणमन्यायेन घटादिशब्दानां जातिवाचकत्वाज्जातेश्चैकत्वादेकवचनमेव स्यादित्यारम्भः। जातिशब्दे एकत्वे बहुवचनं वा स्यादित्यक्षरार्थः। तथा सति "ब्राआह्मणा भोज्या" इत्यादौ विशेषणान्न स्यादित्याशङ्क्य एकस्मिन्नर्थे विद्यमानः शब्दो बहूनर्थान् वक्ति, एकार्थो बहुवद्भवतीति लभ्यते इत्यभिप्रेत्याह-एकोऽप्यर्थ इति। बहुत्वप्रयुक्तं कार्यं लभत इत्यर्थः।

तत्त्व-बोधिनी

जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ७०९, १।२।५८

एकोऽप्यर्थो वा बहुबदिति। एवंच विशेषणादपि सिद्धमिति ध्वनयन्नुदाहरति---ब्राआह्मणाः पूज्या इति। जात्याख्यायां किम्()। दोवदत्तो यज्ञदत्तः। एकस्मिन्किम्()। व्रीहियवौ। अस्मदो द्वयोश्च। चात् "एकस्मिन् बहुवचनमन्यतरस्या"मिति च वर्तते। तदेतदाह---एकत्वे द्वित्वे च विवक्षित इत्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अस्मदः ६।१ द्वयोः ७।२ ६१ च ० एकस्मिन् ७।१ ५८ बहुवचनम् १।१ ५८ अन्यतरस्याम् ७।१ ५८

काशिका-वृत्तिः

अस्मदो द्वयोश् च १।२।५९

अस्मदो यो ऽर्थस् तस्य एकत्वे द्वित्वे च बहुवचनम् अन्यतरस्यां भवति। अहं ब्रवीमि , वयं व्रूमः। आवां ब्रूवः, वयं व्रूमः। सविशेषणस्य प्रतिषेधो वक्तव्यः। अहं देवदत्तो ब्रवीमि। अहं गाग्र्यो व्रवीमि। अहं पटुर् ब्रवीमि। युष्मदि गुरावेकेषाम्। त्वं मे गुरुः, यूयं मे गुरवः।

न्यासः

अस्मदो द्वयोश्च। , १।२।५९

अत्राप्यर्थस्य बहुत्वातिदेशः। "अस्मदो योऽर्थः स बहुवद्भवति" इति। तेन तिङन्तस्यापि तत्र वर्तमानस्य बहुवचनान्तत्वं भवति। "वयं ब्राऊमः" इति। "एकत्वे द्वित्वे च" इत्यादि। युक्तं यदेकत्वे भवति, द्वित्वे तु कथम्? न हि द्वित्वमस्मदर्थस्य सम्भवति; अस्मच्छब्दस्यात्मविषयत्वात्, आत्मनश्चैकत्वात्, नैष दोषः; आत्मत्वं परत्र यदोपचर्यते "अयं मे द्वितीय आत्मा" इति तदा अस्मच्छब्दस्य तत्रापि वृत्तेद्वर्यर्थविषयत्वं सम्भवति। अथ वा-- त्यदादीनां मिथो यद्यत् परं तच्छिष्यत इत्यस्मच्छब्द एव शिष्यमाणो युष्मदर्थमप्याहेति द्वयर्थतोपपद्यत इति युज्यते द्वयर्थता। अथ यद्यस्मच्छब्दो बहुवचनान्तः प्रयुज्यते तदैकार्थविषयोऽयम्, न द्वयर्थविषय इति; अथ द्व्यर्थविषयोऽयं नैकार्थविषय इति

कुतस्यस्यैकार्थद्वयर्थविषये वृत्तिरवसीयते? प्रकरणात्। यथा-- आराच्छब्दस्य दूरान्तिकार्थयोर्वृत्तिरिति। "अहम्" इति। "ङे प्रथमयोरम्" ७।१।२८ इत्यम्भावः, "त्वाहौ सौ" ७।२।९४ इत्यहारदेशः। "वयम्" इति। जसि "मपर्यन्तस्य" ७।२।९१ "यूयवयौ जसि" ७।२।९३ इत वयादेशः, "शेषे लोपः" ७।२।९० "आवाम्" इति। औप्रत्यये "युवावौ द्विवचने" ७।२।९२ इत्यावादेशः। "प्रथमायाश्च" ७।२।८८ इत्यादिनात्वम्। वक्तव्य इति व्याख्येय इत्यर्थः। व्याख्यानां तु-- अन्यतरस्यांग्रहणं यदनुवर्ततते तस्य व्यवस्थितविभाषात्वमाश्रित्य कत्र्तव्यम्। "युष्मदि गुरावेकेषाम्" इति। एतदपि चकारस्यानुक्त समुच्चयार्थत्वात् सूत्रेणैव संगृहीतम्॥

बाल-मनोरमा

अस्मदोद्वयोश्च ८०८, १।२।५९

अस्मदो द्वयोश्च।

सविशेषणस्येति। "त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमान्नोन्नताः" इत्यत्र तु अवयवगतबहुत्वाभिप्रायं बहुवचनम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ फल्गुनीप्रोष्ठपदानाम् ६।३ च ० नक्षत्रे ७।१ ६२ द्वयोः ७।२ ५९ बहुवचनम् १।१ ५८ अन्यतरस्याम् ७।१ ५८

काशिका-वृत्तिः

फल्गुनीप्रोष्ठपदानां च नक्षत्रे १।२।६०

चकारो द्वयोः इत्यनुकर्षणार्थः। फल्गुन्योर् द्वयोः प्रोष्ठपदयोश्च द्वयोर् नक्षत्रयोर् बहुवचनम् अन्यतरस्यां भवति। कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः। कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः। नक्षत्रे इति किम्? पल्गुन्यौ मणविके।

न्यासः

फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे।, १।२।६०

"चकारो द्वयोरनुकर्षनार्थः" इति। ननु च फल्गुन्यौ नक्षत्रे द्वे एव, तथा प्रोष्ठपदे अपि द्वे; अत्रानयोर्दित्वाद्वित्व एव बहुवचनं भविष्यति, तत् किं चकारेण द्वयोरित्यनुकर्षणार्थेन? एवं तह्र्येतज्ज्ञापयति-- नक्षत्रग्रहणं ज्योतिष उपलक्षणार्थमिति। तेनैतदपि सिद्धं भवति-- उदिताः पूर्वाः फल्गुण्यः, उदिते पूर्वे फल्गुन्याविति। यदि नक्षत्रग्रहणं ज्योतिष उपलक्षणार्थमिति न ज्ञाप्यते, तदिह तु न स्यात्, यतो ज्योतिषामावस्थिकी नक्षत्रता चन्द्रमसा योगे सति भवति, नान्यदा; अन्यदा तु ज्योतिष्ट्वमेव। न च नक्षत्राभिधायिनः "उदिताः पूर्वाः फल्गुन्यः" इत्यत्र फल्गुनीशब्दस्य प्रयोगः, किं तर्हि? ज्योतिर्मात्राभिधायिन इति। अत्र ज्योतिष्ट्वमेक्सयाप्यस्तीति तन्निवृत्यर्थं द्वयोरित्यनुकर्षणार्थं चकारकरणं युक्तम्। यदि पुनर्ज्योतिष उपलक्षणार्थं नक्षत्रग्रहणं न स्यात्, तदा क्व स्यात्? तदेहैव स्यात्-- अद्य पूर्वाः फल्गुन्यः, अद्य पूर्वे फल्गुन्याविति। अस्ति ह्यत्र फल्गुन्योर्नक्षत्रता, चन्द्रमसा युक्तत्वात्। तथा ह-- "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यण् भवति। श्रवणं तस्य न भवति; "लुबविशेषे" ४।२।४ इति लुप्तत्वात्। "फल्गुन्यौ माणविके" इति। फल्गुन्योर्जाते इति। "फल्गुन्याषाढाभ्यां टानौ" (वा।४५१) इत्युपसंख्यानाट्टप्रत्ययः। "टिड्()ढाणञ्" ४।१।१५ इति ङीप्॥

बाल-मनोरमा

फल्गुनीप्रोष्ठपदानां च नक्षत्रे ८०९, १।२।६०

फल्गुनी। "नक्षत्रे" इति प्रथमाद्विवचनम्। नक्षत्रे यद्यभिधीयते इत्यर्थः। चेन द्वयोरित्यनुकर्षः। तदाह--द्वित्वे इति। पूर्वं प्रोष्ठपदे इति। स्त्रीत्वादौङः शीभावः। "प्रोष्ठपदा भाद्रपदा स्त्रिया"मित्यमरः। फल्गुन्यौ माणविके इति। फल्गुनीनक्षत्रयुक्तकाले जाते इत्यर्थः। "नक्षत्रेण युक्तः" इत्यण्। "लुबविशेषे" इति लुप्। ततो जातार्थे "फल्गुन्यषाढाभ्यां टाऽनौ" इति टः। टित्त्वान्ङीप्।

तत्त्व-बोधिनी

फल्गुनीप्रोष्ठपदानां च नक्षत्रे ७१०, १।२।६०

फल्गुनीप्रोष्ठपदानां च। चकारेण द्वयोरनुकर्षणादाह--द्वित्व इति। फल्गुन्यौ माणविके इति। फल्गुनीशब्दात् "नक्षत्रेण युक्तः कालः " इत्यण्। तस्य "लुबविशेषे"इति लुप्। ततो जातार्थे "फल्गुन्यषाढाभ्यां टाऽनौ"इति टः। टित्त्वन्ङीप्। न चायं गौणः, यौगिकत्वात्। तथा च गौणमुख्यन्यायऽप्रवृत्त्यानक्षत्रग्रहणमावश्यकमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ छन्दसि ७।१ ६२ पुनर्वस्वोः ६।२ एकवचनम् १।१ ६२ नक्षत्रे ७।१ ६० द्वयोः ७।२ ५९ अन्यतरस्याम् ७।१ ५८

काशिका-वृत्तिः

छन्दसि पुनर्वस्वोरेकवचनम् १।२।६१

अन्यतरस्याम् इत्यनुवर्तते। द्वयोर् द्विवचने प्राप्ते पुनर्वस्वोश् छन्दसि विषये एकवचनम् अन्यतरस्यां भवति। पुनर्वसुर् नक्षत्रम् अदितिर् देवता। पुनर्वसू नक्षत्रम् अदितिर् देवता। नक्षत्रे इत्येव। पुनर्वसू माणवकौ। छन्दसि इति किम्? पुनर्वसू इति।

न्यासः

छन्दसि पुनर्वस्वोरेकवचनम्। , १।२।६१

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विशाखयोः ६।२ च ० छन्दसि ७।१ ६१ एकवचनम् १।१ ६१ नक्षत्रे ७।१ ६० अन्यतरस्याम् ७।१ ५८

काशिका-वृत्तिः

विशाखयोश् च १।२।६२

छन्दसि इति वर्तते। द्विवचने प्राप्ते छन्दसि विषये विशाखयोरेकवचनम् अन्यतरस्यां भवति। विशाखं नक्षत्रम् इन्द्राग्नीं देवता। विशाखे नक्षत्रम् इन्द्राग्नी देवता।

लघु-सिद्धान्त-कौमुदी

पूर्ववत्सनः ७४५, १।२।६२

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। एदिधिष्यते॥

न्यासः

विशाखयोश्च।, १।२।६२

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तिष्यपुनर्वस्वोः ६।२ नक्षत्रद्वन्द्वे ७।१ बहुवचनस्य ६।१ द्विवचनम् १।१ नित्यम् १।१

काशिका-वृत्तिः

तिष्यपुनर्वस्वोर् नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् १।२।६३

छन्दसि इति निवृत्तम्। निष्यः एकः, पुनर्वसू द्वौ, तेषं द्वन्द्वो बह्वर्थः। तत्र बहुवचने प्राप्ते द्विवचनं विधीयते। निष्यपुनर्वस्वोः नक्षत्रविषये द्वन्द्वे बहुवचनप्रसङ्गो नित्यं द्विवचनं भवति। उदितौ तिष्यपुनर्वसू दृश्येते। तिष्यपुनर्वस्वोः इति किम्? विशाखानुराधाः। नक्षत्रे इति किम्? तिष्यश्च माणवकः, पुनर्वसू माणवकौ, तिष्यपुनर्वसवो माणवकाः। ननु च प्रकृतम् एव नक्षत्रग्रहणं किमर्थं पुनरुच्यते। पर्यायाणाम् अपि यथा स्यात्। तिष्यपुनर्वसू। पुष्यपुनर्वसू। सिद्ध्यपुनर्वसू। द्वन्द्वे इति किम्? यस्तिष्यस्तौ पुनर्वसू येषां ते इमे तिष्यपुनर्वसवः। उन्मुग्धाः तिष्यादय एव विपर्ययेण दृश्यमाना बहुव्रीहिणोच्यन्ते। तेन नक्षत्रसमास एव अयम्। बहुवचनस्य इति किम्? एकवचनस्य मा भूत्। निष्यपुनर्वसु इदम् इति। सर्वो द्वन्द्वो विभाषा एकवद् भवति इत्यस्य एतद एव ज्ञापकम्। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्।

न्यासः

तिष्यपुनर्ववस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्।, १।२।६३

"तिष्यपुनर्वसवो माणवकाः" इति। तिष्यपुनर्वसुशब्दाभ्यां "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यण् भवति। तस्य "लुबविशेषे" ४।२।४ इति लुप्। ततस्तिष्ये जातो माणवकः पुनर्वस्वोर्जातौ माणवकाविति "सन्धिवेलादि" ४।३।१६ इत्यादिनाऽण्, तस्य "श्रविष्ठाफल्गुन्यनुराधा" ४।३।३४ इत्यादिना लुप्। "पर्यायाणामपि यथा स्यात्" इति। नक्षत्रग्रहणे सत्यर्थग्रहणादेतद्भवति। शब्दग्रहणे च "स्वं रूपम्" १।१।६७ इत्यषा परिभाषा भवतीत्युक्तमेतत्। तदभावे पर्यायाणामपि भवति। "सिद्ध्यपुनर्वसू" इति। सिद्ध्यशब्दस्तिष्यपर्यायः। "यस्तिष्यस्तौ पुनर्वसू येषाम्" इत्यवयवेन विग्रहं दर्शयति। समुदायस्तु समासार्थो वेदितव्यः। अथ तिष्यपुनर्वसव इति? बहुव्रीहिणा विपर्यस्तमतयः पुरुषा एवैवमुच्यन्ते। ततश्च नक्षत्रसमास एवायं न भवति। तत् किमेतन्निवृत्त्यर्थेन द्वन्द्वग्रहणेनेत्येवं यो देशयेत् तं प्रत्याह-- "तिष्यादय एव" इत्यादि। स्वदर्णनापराधादन्यथा तिष्यादीन् दृष्ट्वा प्रतिपत्तृभिस्त ए तिष्यादयो विपर्ययेण दृश्यमाना बहुव्रीहिणैवमुच्यन्ते, न तु पुरुषाः। तस्मान्नक्षत्रसमास एवायम्। "तिष्यपुनर्वस्विदम्" इति। केन पुनरत्रैकवद्भावः? "जातिरप्राणिनाम्" २।४।६ इति चेत्, न; संज्ञाशबदत्वात्, देवदत्तादिशब्दवत्। नायं जातिशब्दः,अनेकधारा हि जातिर्भवति, न च तिष्यादिस्तथा। किञ्च वक्ष्यति-- "जातिप्रधानपरत्वे च जातिद्रव्याणामयमेकवद्भावः, न नियतद्रव्यविवक्षायाम्" इति; नियतद्रव्यविवक्षा चात्र, तस्मान्न "जातिरप्राणिनाम्" इत्यनेनैकवद्भाव उपपद्यते। न चान्यदेकवद्भावलक्षणमस्ति। तत्र तिष्यपुनर्वस्वोर्नक्षत्रे द्वन्द्वसमासे बहुत्वाद्बहुवचनेन भवितव्यम्। एवञ्च बहुवचनग्रहणमनर्थकमित्यत आह-- "सर्वो द्वन्द्वो विभाषा" इत्यादि। यदयमेकवचननिवृत्त्यर्थं बहुवचनग्रहणं करोति, ततोऽवसीयते-- अस्तीयम्परिभाषा "सर्वो द्वन्द्वो विभाषैकवद्भवतिट (व्या।प।९१) इति। तेनेह

बहुवचनग्रहणमेकवचननिवृत्त्यर्थं कृतिमित्यभिप्रायः।

बाल-मनोरमा

तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ८१०, १।२।६३

तिष्यपुनर्वस्वो। विशाखानुराधा इति। विशाखे च अनुराधाश्चेति विग्रहः। तिष्यपुनर्वसव इति। तिष्यश्च पुनर्वसू चेति विग्रहः। तिष्यशब्दात्पुनर्वसुशब्दाच्च "नक्षत्रेण युक्तः" इत्यण्। "लुबविशेषे" इति लुप्। ततो जातार्थे सन्धिवेलाद्यण्। "श्रविष्ठाफल्गुनी"त्यादिना लुक्। "जात्याख्याया"मित्यादिचतुःसूत्र्या अत्र सङ्गतिश्चिन्त्या।

तत्त्व-बोधिनी

तिष्यपुनर्वस्वौर्वक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ७११, १।२।६३

तिष्यपुनर्वस्वोः। विशाखानुराधा इति। विशाखे चानुराधाश्चेति विग्रहः। तिष्यपुनर्वसव इति। तिष्यपुनर्वसुशब्दाभ्यां पूर्ववत् "नक्षत्रेण युक्तः कालः"इत्यण्, "लुबविशेषे"इति च लुप्। ततो जातार्थे सन्धिवेलादिसूत्रेण अण्, तस्य तु "श्रविष्ठाफल्गुन्यनुराधे"त्यादिना लुक्। नक्षत्र इत्यनुवर्तमाने पुनर्नक्षत्रग्रहणं पर्यायाणामपि यथा स्यादित्येतदर्थमित्याकारः। एवं च "सिध्यपुनर्वसू"इत्यपि सिध्यतीति दिक्। बहुवचनस्य किम्()।, इदं तिष्यपुनर्वसु। "चार्थे द्वन्द्व"इति समाहारद्वन्द्वोयम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सरूपाणाम् ६।३ एकशेषः १।१ ७३ एकविभक्तौ ७।१

काशिका-वृत्तिः

ससूपाणाम् एकशेष एकविभक्तौ १।२।६४

समानं रूपम् एषाम् इति सरूपाः। सरूपाणां शब्दानं एकविभक्तौ परत एकशेषो भवति। एकः शिष्यते तरे निवर्तन्ते। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च व्रक्षश्च वृक्षाः। प्रत्यर्थं शब्दनिवेशान् न एकेन अनेकस्य अभिधानम्। तत्र अनेकार्थाभिधाने ऽनेकशब्दत्वं प्राप्तं तस्मादेकशेषः। सरुपाणाम् इति किम्? प्लक्षन्यग्रोधाः। रूपग्रहणं किम्? भिन्ने ऽप्यर्थे यथा स्यात्। अक्षाः। पादाः। माषाः। एकग्रहणं किम्? द्विबह्वोः शेषो मा भूत्। शेषग्रहनं किम्? आदेशो मा भूत्। एकविभक्तौ इति किम्? पयः पयो जरयति। ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहि।

लघु-सिद्धान्त-कौमुदी

सरूपाणामेकशेष एकविभक्तौ १२५, १।२।६४

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते॥

न्यासः

सरूपाणामेकशेष एकविभक्तौ। , १।२।६४

"सरूपाणाम्" इति बहुव्रीहौ कृते "ज्योतिर्जनपद" ६।३।८४ इत्यादिना समानस्यसभावः। रूपशब्दोऽत्र स्वभावे वत्र्तते। "सरूपाणां शब्दानाम्" इति निर्धारणे षष्ठी। तेन स्वरूपाणां मध्ये समानजातीयो यः सरूपः, स एक एव शिष्यते, न

विरूपः। समानजातीयस्यैव हि निर्धारणं भवति, न विजातीयस्य। अथ वा-- समुदायलक्षणैषा षष्ठी, सरूपसमुदायान्तःपाती च सरूप एव भवति, न विरूपः। तेन सरूप एव शिष्यते। "एक विभक्तौ" इति। एकशब्दः समानार्थः, एकधनाविति यथा। एका चासौ विभक्तिश्चेति "पूर्वकालैक" २।१।४८ इत्यादिना समासः। एकमेकशेष इत्यत्रापि। अत्र त्वेकशब्दः संख्यावचनः, शेषशब्दोऽयं निवृत्त्या विशिष्टवस्थानमाह, नावस्थानमात्रम्। अत एवाह-- "एकः शिष्यते, अपरे निवत्र्तन्ते" इति। "वृक्षश्च वृक्षश्च वृक्षौ" इत्यादि। अविभक्तिकानामयमेकशेषः; अनैमित्तकत्वाद्विभक्तेः। न ह्रयं परां विभक्तिमाश्रित्य विधीयते। एकविभक्ताविती‌हसारूप्योपलक्षणमेतत्, न निमित्तनिर्देशः। एकस्यां विभक्तौ परतो यानि रूपाणि दृष्टानि, तेषामनुत्पन्नायामेव विभक्तौ प्रातिपदिकानामेकशेषो भवति। ततः कृत एकशेषे विभक्तिरुपपद्यते। अथ वा -- सविभक्तिकानामेवैकशेषः, कथम्? विभक्तिशब्देन हि कारकमभिधीयते, विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा। तदेतदुक्तं भवति-- एकस्मिन् समानेऽभिन्ने कारके यानि सरूपाणि तेषामेवैककारकाणामेकशषो भवतीति। यद्येवम्, "परतः" इति वृत्तिग्रन्थो नोपपद्यते, कारकं ह्रर्थसमवायिनी शक्तिः, न च तया शब्दानां पौर्वापर्यं सम्भवति, कथञ्च विभक्तिशब्देन कारकेऽभिधीयमाने सविभक्तिकानामेकशेषो लभ्यते? उच्यते; वृत्तिग्रन्थस्तावदुपपद्यते-- परशब्दो ह्रयमिष्टवाची, एकविभक्तौ परतः = एकस्यां विभक्ताविष्टायामित्यर्थः। विषयसप्तमी चेयम्, सति सप्तमी वा। एकस्मिन् कारके विषयभूत इष्टे सति सप्तमी वा। एकस्मिन् कारके विषयभूत इष्टे सति चेत्यर्थः। किञ्चेष्टं कारकं भवति? यद्विवक्षितम्। अत ए विवक्षिततत्वात् कारकं स्वनिमित्तां विभक्तिकानामेकशेषो लभ्यते। सहभावविवक्षायाञ्चायमेकशेषो भवति। यद्येकेन युगपत् सर्वेषामर्थोऽभिधातुमिष्यत एवं सति भवति; नान्यथा। ननु च जातिः पदार्थः, जातिश्चैकैव; तत्रैकत्वाज्जातेर्बहूनां शब्दानां प्रसङ्ग एव नास्ति,तत्किमेकशेषारम्भेण? इति चोद्यावसरे "द्रव्यं पदार्थः" इत्येतद्दर्शनमाश्रित्याह-- "प्रत्यर्थम्" इत्यादि। प्रत्यर्थम् = एकैकस्मिन्नर्थे यस्माच्छब्दानां निवेशप्रवृत्तिस्ततोऽकेन शब्देनानेकार्थ्सयाभिधानम्। तत्रैतद्दर्शनेऽकेषामर्थाभिधाने प्रत्येकेनैव कर्तव्येऽनेकशब्दत्वं प्रसज्यत इति यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति, इष्यते चैकशब्दता। तस्मादेकशेष आरभ्यते। "रूपग्रहणं किम्" इति। एवं मन्यते-- रूपग्रहणे क्रियमाणे पदद्वयसमनुगम्योऽर्थः प्रतिपत्तव्य इति प्रतिपत्तिगौरवं भवति। समानानामित्युच्यमाने सत्येकपदसमनुहम्योऽर्थः प्रतीयत इति प्रतिपत्तिलाघवं भवति; तस्मात् समानग्रहणमेव कत्र्तव्यमिति? भिन्नेऽप्यर्थे यथा स्यादिति रूपग्रहणम्। यदि रूपग्रहणं न क्रियेत तदा विशेषानभिधानाद्यत्र सर्व समानं शब्दोऽर्थश्च तत्रैव स्याद्()वृक्षा इत्यादौ, अक्षा इत्यादौ तु न स्यात्; अर्थभेदात्। तथा ह्रक्षशब्द इन्द्रियाख्ये, शकटाङ्गे, बिभीतकादावर्थे च वर्ततेष पादशब्दोऽपि कार्षापण-- श्लोकपाद-- पाणिपदादावर्थे वर्तते, माषशब्दोऽपि व्रीह्रादौ। "द्विबह्वोः शेषे मा भूत्" इति। ननु च "शेष" इत्येकत्वसंख्याविवक्षायां द्वयोर्बहूनाञ्च शेषो न भविष्यति,नैतदेवम्; इह विधीयमानत्वाच्छेष एव प्रधानम्, न च प्रधाने संख्या विवक्ष्यते। तथा हि-- "कर्तुरीप्सिततमं कर्म" १।४।४९ इति कर्मसंज्ञा; ईप्सिततमस्य प्राधान्यात्। असत्यां संख्याविवक्षायां द्वयोर्बहूनाञ्च कर्मसंज्ञा भवति। गुणे तु संख्या विवक्ष्यते, यथा-- "ङ्याप्प्रातिपदिकात्" ४।१।१ इति स्वादयो विधीयमानत्वात् प्रधानम्; ङ्याप्प्रातिपदिकमप्रधानमिति तत्र संख्या विवक्ष्यते। तेनैकैक्मादेव स्वादय उपपद्यन्ते। लक्षणानुरोधाद्गुणेऽपि क्वचित् संख्या न विवक्ष्यते, यथा इहैव-- सरूपाणामिति। तेन द्वयोरपि सरूपयोरेकः शिष्यते। "आदेशो मा भूत्" इति। असति शेषग्रहणे सरूपाणामिति स्थानषष्ठीयं स्यात्; ततशचादेशः स्यात्। एवञ्च "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" (द।उ।८।१२५) इति क्वन्प्रत्ययान्तोऽ()आशब्दो नित्स्वरादाद्युदात्त इति द्वयोर()आशब्दयोराद्युदत्तयोः स्थान आद्युदात्तद्वयवानेवादेशः स्यात्; आन्तरतम्यात्। "पयः" इत्यादि। एकः पयः शब्दः प्रथमान्तः कर्तृपदम्, द्वितीयो द्वितीयान्तः कर्मपदम्, ततो भिन्नविभक्तिकत्वम्;नैकविभक्तिपरत्वमित्येकशेषो न भवति। " ब्राआह्मणाभ्याम्" इति। प्रथमो ब्राआह्मणशब्दस्तृतीयान्तः,द्वितीयस्तु चतुथ्र्यन्तः। तेनात्रापि समानविभक्तिकत्वं नास्ति॥

बाल-मनोरमा

सरूपाणामेकशेष एकविभक्तौ १८७, १।२।६४

अथ प्रातिपदिकार्थगतद्वित्वादिविक्षायां प्रातिपदिकस्य द्वित्र्यादिप्रयोगप्राप्ताविदमारभ्यते--सरूपाणाम्। "एकविभक्ता"विति "सरूपाणा" मित्यत्रान्वेति। समानं रूपं येषां तानि सरूपाणि। ज्योतिर्जनपदेत्यादिना समानस्य सभावः। निर्धारणषष्ठी। "वृद्धो यूने"त्युत्तरसूत्रादेवेत्यपकृष्यते। शिष्यते इति शेषः। कर्मणि घञ्। एकश्चासौ शेषश्चेति पूर्वकालैकेति समासः। एकस्यां विभक्तौ परतः सरूपाणामेव दृष्टानां मध्ये एकः शिष्यते इति फलति। तदाह--एकविभक्ताविति। एवेति कम्?। मातृशब्दस्तावज्जननीवाची परिच्छेतृवाची च। त्र मातृभ्यामिति भ्यामादौ क्वचित्सारूप्ये सत्यपि, औजसादिषु मातरौ माताराविति वैरूप्यदर्शनान्नैकशेषः। यद्यपि कतिपयविभक्तौ उक्तयोर्मातृशब्दयोः सारूप्येणैव दर्शनमस्ति। तथापि एकस्यामपि विभक्तौ परतो विरूपाणि न दृष्टानित्यर्थो विवक्षितः। एतद्द्योतनायैव एकविभर्ताविव्यत्र "एक"ग्रहणम्। एवकारापकर्षसिद्धार्थकथनपरमेकग्रहणं स्पष्टार्थमेवेति केचित्। "एकशेष" इत्येकपदोपादानं तु द्विबहूनामपि शेषो मा भूदित्येतदर्थम्। "शेष" पदानुपादाने तु सरूपाणां स्थाने एक आदेशः स्यात्। ततश्च अ()आश्च अ()आश्चेति द्वयुदात्तवतः स्थाने द्व्युदात्तवानादेशः स्यात्। तन्निवृत्त्यर्थं शेषग्रहणम्। एकविभक्ताविति सारूप्ये उपलक्षणम्। न तु एकविभक्तौ परतः एकशेषो भवतीति व्याख्यानमुचितम्, जननीपरिच्छेतृवाचिनोरेकशेषापत्तेरित्यादि प्रपञ्चितं प्रौढमनोरमायाम्। अत्र "तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे " इति पूर्वसूत्राद्द्वन्द्व इत्यनुवर्त्य द्वन्द्वे प्रसक्त इति व्याख्येयम्। ततश्च "देवदवः" "राजराज" इत्यादौ नैकशेषः। द्वन्द्वापवाद एकशेष इति फलितम्। यद्यप्यनैमित्तिकत्वादन्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते, तथापि द्वन्द्वापवाद एवायम्। असति ह्येकशेषे सुबुत्पत्तिः, पक्षे द्वन्द्वश्च स्यात्। सति तु अनेकसुबन्तीविरहाद्द्वन्द्वस्याऽप्राप्तिः फलिता। घटश्च घटश्च घटश्च तेषां समाहार इति समाहारद्वन्द्वविषये तु नास्य प्रवृत्तिः, अनभिधानात्। द्वन्द्वे कृते एकशेष इति तु न व्याख्येयम्। "पन्थान" इत्यादौ ऋक्()पूरित्यादिसमासान्तापत्तेः। करावित्यादौ "द्वन्द्वश्च प्राणितूर्ये"त्याद्यापत्तेः। पूर्वसूत्रादिह द्वन्द्वग्रहणानुवृत्तौ च "इदितो नुम्धातो"रित्यत्र "इदित" इति निर्देशो लिङ्गम्। इत्िकार इत्संज्ञको यस्य स इदित्। अत्र इच्छब्दयोरेकविभक्तौ सारूप्येऽपि द्वन्द्वविषयत्वाऽभावान्नैकशेषः। अन्यथा तत्राप्येकशेषः स्यादित्यलम्।

राम औ इति स्थिते प्रक्रियां दर्शयति-प्रथमयोरित्यादिना। वृदिं()ध बाधित्वा पूर्वसवर्णदीर्घे प्राप्ते आह-नादिचीति। तस्मिन् प्रतिषिद्धे सति वृद्धेः प्रवृत्तौ रामौ इति रूपमित्यर्थः।

तत्त्व-बोधिनी

सरूपाणामेकशेष एकविभक्तौ १५६, १।२।६४

सरूपाण्येवेति। एतच्च उत्तरसूत्रस्थस्यैवकारस्येहानुकर्षणाल्लभ्यते। अत्र च "एकस्यापि विभक्तौ परतो विरूपाणि न दृष्टानी"ति पर्यवसन्नोऽर्थः, तेन मातृशब्दयोर्जननीवाचिपरिच्छेतृवाचनिनोर्नैकशेषः, "मातृभ्यां" "मातृभि"रित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात्। नन्वेवं "पयः पयो नयति" "देवदेवे"त्यादावतिप्रतिप्रसङ्ग स्यादेवेति चेत् ; उच्यते-सहविविक्षायामेवैकशेषः प्रवर्तते। इतरेतरयोगद्वन्द्वस्य विषय इति यावत्। यत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः स तथाभूतो विषयः। इदं च "इदितो नुम्धातो"रिति लिङ्गाल्लभ्यते, न्यायाच्च। तथाहे-"यः शिष्यते स लुप्यमानार्थाभिधायी"ति स्थिते श्रूयमाणैकशब्दोपस्थितं सर्वमविशेषादैकरूप्येणैवान्वयितुमर्हति। यद्वा "तिष्यपुनर्वस्वो"रिति सूत्राद्द्वन्द्वे इत्यनुवर्त्य "द्वन्द्वे प्रसक्ते सती"ति व्याख्येयं, न तु द्वन्द्वे कृते सती"ति। "पन्थानौ" "पन्थान" इत्यादौ "ऋक्पूरब्धू"रित्यादिना समासान्तापत्तेः, "करौ""करा" इत्यादौ "द्वन्द्वश्च प्राणितूर्ये"त्यादिना एकवद्भावापत्तेश्चेति दिक्। सूत्रे "शेष" शभ्दः कर्मसाधन इत्याह-एक एव शिष्यत इति। असत्येकग्रहणे द्विबह्वोरपि शेष#ः स्यादित्येकग्रहणम्। न चैवमप्येकविभक्तावित्यत्र एकग्रहणं व्यर्थमिति शङ्क्यम्, "एकस्यामपि विभक्तौ परतो विरूपाणि

न दृष्टानी"व्यर्थलाभाय तस्यावश्यकत्वात्। किंच "स्वसा च स्वसारौ चे"त्यादौ विभक्तौ परतः पूर्वभागयोर्वैरूप्यदर्शनात्स्वसार इत्येकशेषस्तत्र न स्यात्। तथा "स्वसरि च स्वस्रोश्चे"त्यत्र वैरूप्यदर्शनात्स्वसृष्विति न स्यात्। किं तु "कमलौ" "कमल" इत्यादिष्वेव स्यात्। कृते त्वेकग्रहणे नायं दोषः प्रसज्यते। एकविभक्तौ परतः पूर्वत्र वैरूप्याऽदर्शनात्। यदा तु विभक्तावित्यत्रैकत्वस्य विवक्षितत्वान्मास्त्वत्र एकग्रहणमित्युच्यते, तर्हि स्पष्टप्रतित्त्यर्थमेवास्त्विति केचित्। अन्ये त्वाहुः-एकग्रहणमेकैकविभक्तावित्यर्थलाभार्थम्। तथा च सकलविभक्तावित्यर्थलाभादेवकारापकर्षणं विनैव सिद्धमिष्टमिति दिक्।

एकश्च एकश्च द्वौ च द्वौ चेत्यादावेकशेषो न भवत्यनभिधानात्। द्वन्द्वोऽप्यत्रानभिधानेनैव वारणीयः। उत्सर्गतः सङ्ख्याशब्दे()ओवमेव। विंशत्यादौ त्वेकशेष इष्ट एवेति बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृद्धः १।१ ६६ यूना ३।१ ६६ तल्लक्षणः १।१ ६९ चेत् ० ६९ एव ० ६९ विशेषः १।१ ६९ शेषः १।१ ६४

काशिका-वृत्तिः

वृद्धो यूना तल्लक्षणश् चेदेव विशेषः १।२।६५

शेषः इति वर्तते। यूना इति सहयोगे तृतीया। वृद्धो यूना सहवचने शिष्यते युवा निवर्तते। वृद्धशब्दः पूर्वाचार्यसंज्ञा गोत्रस्य अपत्यम् अन्तर्हितं वृद्धम् इति। वृद्धयूनोः सहवचने वृद्धः शिष्यते तल्लक्षणश्चेदेव विशेषः। तदिति वृद्धयूनोर् निर्देशः। लक्षणशब्दो निमित्तपर्यायः। चेच्छब्दो यद्यर्थे। एवकारो ऽवधारणे। विशेषो वैरूप्यम्। वृद्धयुवनिमित्तकम् एव यदि वैरूपयम् भवति ततो वृद्धिः शिष्यते, युवा निवर्तते। समानायामाकृतौ वृद्धयुवप्रत्ययौ भिद्येते। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वत्स्यश्च वात्स्यायनश्च वात्स्यौ। वृद्धः इति किम्? गर्गश्च गार्ग्यायणश्च गर्गगार्गायणौ। यू ना इति किम्? गार्ग्यश्च गर्गश्च गार्ग्यगर्गौ। तल्लक्षणः इति किम्? गार्ग्यवात्स्ययनौ। एवकारः किमर्थः। भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ। कुत्सा सौवीरत्वं च भागवित्तिकस्य अपरो विशेषो विद्यते।

न्यासः

वृद्धो यूना तल्लक्षणश्चेदेव विशेषः। , १।२।६५

वृद्धशब्दोऽयमस्ति लौकिकः, यश्चरमे वयसि वर्तते; अस्ति च शास्त्रीयः-- "वृद्धिर्यस्याचामादेस्तद्()वृद्धम्" १।१।७२ इति; अस्ति च पूर्वाचार्यसंज्ञा-- अपत्यमन्तर्हितं वृद्धमिति। तत्र यदि लौकिको गृह्रेत? युवशब्दस्यापि तत्साहचर्याल्लौकिकस्यैव वयोविशेषवाचिनो ग्रहणं स्यात्, ततश्चाजश्च वर्करश्चेत्येवमादौ प्रसज्येत। वृद्धावस्थो हि पशुविशेषोऽज इत्युच्यते, युवा तु वर्करः। अथ शास्त्रीय उपादीयते? औपगवश्चौपगविश्चेत्यादावपि स्यादित्येतदालोच्याह-- "वृद्धशब्दः" इत्यादि। एतेन पूर्वाचार्यप्रणीतायाः संज्ञाया वृद्धस्येदं ग्रहणमिति दर्शयति। कथं पुनरेतल्लभ्यते? उपदेशात्। अथ वा एवं मन्यते-- युवशब्दो यद्यपि लोके द्वितीये वयसि रूढः, तथापि "जीवति तु वंश्ये युवा" ४।१।१६३ इति परिभाषाबलादपत्ये यो वत्र्तते स एव गृह्रते। तेन तत्साहचर्यात् वृद्धशब्दस्यापत्यार्थवृत्तेरेव ग्रहणं युक्तमिति। गोत्रग्रहणं तु न कृतम्, वैचित्र्यार्थम्। "यूना सह वचने" इति। सहग्रहणेन यूनेति सहयोग एषा तृतीयेति दर्शयति। अत ए सहयोगे तृतीयाविधानादवगम्यते- सहभावविवक्षायामेकशेषो भवतीति। "समानायाम्" इत्यादिना यत्र वृद्धयुनिमित्तमेव वैरूप्यं तद्व#इषयं दर्शयति। आकृतिः= शब्दस्य प्रवृत्तिनिमित्तम्, गाग्र्यात्वादि, तस्यां समानायाम् = अभिन्नायां यत्र

वृद्धयुवप्रत्ययादेव केवलं भिद्येते, नान्यत् प्रकृत्यादिकम्, तत्र वृद्धयुवप्रत्ययनिमित्तमेव वैरूप्यं भवतीति भावः। "गार्ग्यश्च" इत्यादि। गर्गवत्सशब्दाभ्यां गर्गादित्वाद् यञ्, गार्ग्यः, वात्स्यः, ताभ्यां यून्यपत्ये "यञिञोश्च" ४।१।१०१ इति फक्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ, वात्स्यश्च वात्स्यायनश्च वात्स्यौ। प्रकरणादिनात्र युवार्थो गम्यते। "गर्गश्च" इति। गर्गशब्दोऽयं मूलप्रकृतिः; न वृद्धे वत्र्तते, नापि यूनि। "गार्ग्यवात्स्यायनौ" इति। अत्र न केवलं वृद्धयुवप्रत्ययनिमित्तको विशेषोऽस्ति, अपि तु प्रकृतिनिमित्तकोऽपि। भागवित्तिशब्दो गोत्रापत्ये भगवित्तशब्दादिञन्तः। "भागवित्तिकश्च" इति। भागवित्तिशब्दाद्यून्यपत्ये "गोत्रस्त्रियाः कुत्सने ण च" ४।१।१४७ इत्यतः "कुत्सने" इत्यनुवृत्तौ "वृद्धाट्()ठक् सौवीरेषु बहुलम्" ४।१।१४८ इति ठक्॥

बाल-मनोरमा

वृद्धो यूना तल्लक्षणश्चेदेवे विशेषः ९१८, १।२।६५

वृद्धो यूना। रूपतोऽर्थश्च भेदेऽपि प्राप्त्यर्थमिदम्। यूनेति। "जीवति तु वंश्ये युवे"ति वक्ष्यमाणयुवप्रत्ययान्तेनेत्यर्थः। सहोक्ताविति। अध्याहारलब्धमेतत्। गोत्रमिति। वृद्धशब्देन "अपत्यं पौत्रप्भृति गोत्र"मिति सूत्रोक्तं गोत्रं विवक्षितम्। "अपत्यमन्तरिरिति वृद्ध"मिति पूर्वाचार्यपरिभाषितत्वादिति भावः। गोत्रप्रत्ययान्त"मिति यावत्। न च "गोत्रं यूने"त्येव कुतो न सूत्रितमिति वाच्यम्, "अपत्याधिकारादन्यत्र गोत्रग्रहणेन लौकिकं गोत्रं विवक्षितमिति सिद्धान्तज्ञापनार्थत्वात्। शिष्यत इति। शेष इति कर्मणि घञन्तमनुवर्तत इति भावः। तल्लक्षण इति। स=गोत्रप्रत्ययो युवप्रत्ययश्च, लक्षणं=निमित्तं यस्येति विग्रहः। विशेषः=वैलक्षणम्। तथाच गोत्रयुवप्रत्ययान्तयोर्विशेषः=वैरूप्यम्, तल्लक्षणश्चेत्=गोत्रयुवप्रत्ययनिमित्तकश्चेदित्यर्थः। अन्यनिमित्तको न चेदित्यर्थः सिद्धः। तदाह--गोत्रयुवेति। कृत्स्नमिति। एवकारलभ्यमिदम्। गार्ग्यश्चेति। गर्गस्य गोत्रपत्यं गार्ग्यः। "गर्गादिभ्यो यञ्"। गार्ग्यायण इति। गर्गस्य गोत्रापत्यं गार्ग्यः। तस्यापत्यं युवा गार्ग्यायणः। "यञिञोश्चे"ति फक्। गार्ग्याविति। अत्र गार्ग्यशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्ययकृतमेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यत इति भावः। गर्गगार्ग्यायणाविति। गर्गश्च गार्ग्यायणश्चेति विग्रहः। अत्र गर्गशब्दस्य गार्ग्यायणशब्दस्य च युवप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तत्वाऽभावान्नैकशेष इति भावः। गर्गगार्ग्याविति। अत्र गर्गशब्दस्य गार्ग्यशब्दस्य च गोत्रप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते, यूना सहोक्त्यभावादिति भावः। भागवित्तिभागवित्तिकाविति। भगवित्तस्य गोत्रापत्यं भागवित्तिः। अत इञ्। भागवित्तेः सौवीरस्यापत्यं युवा कुत्सितो भागवित्तिकः। "वृद्धाट्ठक् सौवीरेषु" इति ठक्। अत्र भागवित्तिशब्दस्य च न [गोत्र]युवप्रत्ययमात्रकृतं वैरूप्यं, कुत्सासौवीरत्वकृतस्यापि वैरूप्यस्य सत्त्वात्। अतो गोत्रप्रत्ययान्तो भागावित्तिशब्दो न शिष्यत इति भावः। गार्ग्यवात्स्यायनाविति। गर्गस्य गोत्रापत्यं गार्ग्यः, वत्सस्य गोत्रापत्यं वात्स्यः। गर्गादित्वाद्यञ्। वत्सस्यापत्यं युवा वात्स्यायनः। "यञिञोश्चे"ति फक्। गार्ग्यश्च वात्स्यायनवश्चेति विग्रहः। अत्र गार्ग्यशब्दस्य वात्स्यायनशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यं, प्रकृतिवैरूप्यस्य गोत्रयुवप्रत्ययमात्रकृतत्वाऽभावात्। अतो गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यत इति भावः।

तत्त्व-बोधिनी

वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ७९५, १।२।६५

वृद्धो यूना। "अपत्य मन्तर्हितं वृद्ध"मिति पूर्वाचार्यैः परिभाषितस्य पाणिन्युक्तगोत्राऽपरपर्यायस्येह ग्रहणं, कृत्रिमेण यूना साहचर्यात्। तदाह---गोत्रं शिष्यत इति। "गोत्रं यूना"इत्येव तु न सूत्रितम्, "अपत्याधिकारादन्यत्र लौकिकं गोत्रग्रहण"मिति सिद्धान्तात्। तेन आपगवश्चानन्तरः, औपगविश्च युवेत्यत्र नैकशेषः। भागवित्तीति। भगवित्तस्य

गोत्रापत्यं भागवित्तिरित्यस्माद्यूनि "वृद्धाट्ठक्सौवीरेषु बहुल"मिति कुत्सायां ठक्। इह कुत्सा सौवीरत्वं चाधिकमपेक्ष्यते नतु युवत्वमात्रकृतं वैरुप्यम्। गाग्र्यवात्स्यायनाविति। इह प्रकृत्यंशे वैरूप्यं, न गोत्रादिकृतम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्त्री १।१ पुंवत् ० च ० वृद्धः १।१ ६५ यूना ३।१ ६५ तल्लक्षणः १।१ ६५ चेत् ० ६५ एव ० ६५ विशेषः १।१ ६५ शेषः १।१ ६४

काशिका-वृत्तिः

स्त्री पुंवच्च १।२।६६

शेषः इति वर्तते, वृद्धो यूना इति च सर्वम् स्त्री वृद्धा यूना सहवचने शिष्यते, तल्लक्षणश्चेदेव विशेषो भवति। पुंसः इव अस्याः कार्यं भवति। स्त्र्यर्थः पुमर्थवद् भवति। गर्गी च गर्ग्यायणश्च गार्ग्यौ। वात्सी च वात्स्यायनश्च वात्स्यौ। दाक्षी च दाक्षायाणश्च दाक्षी।

न्यासः

स्त्री पुंवच्च। , १।२।६६

स्त्र्यर्थस्य वैरूप्यकारणस्याधिक्यात् पूर्वेण न सिध्यतीति वचनम्। "पुंवच्च" इति वचनादतदेशोऽयम्। "स्त्री" इति। स्त्रीप्रत्ययग्रहणं वेदं स्यात्? स्त्र्यर्थवृत्तिशब्दस्य वा ग्रहणम्? अर्थग्रहणं वा? यदि स्त्रीप्रत्ययस्य ग्रहणं स्यात्, ततोऽनेन तस्यैव निवृत्तिः क्रियते-- पुंवत् स्त्रीप्रत्ययो भवतीति; न तु स्त्र्यर्थस्य निवृत्तिः क्रियते; ततो गाग्र्यश्च गाग्र्यायणश्चेति गर्गा इत्यत्र "अस्त्रियाम" २।४।६२ इत्यनुवत्र्तमाने "यञञोश्च" २।४।६४ इति लुङ्न स्यात्; इह तु गर्गान् पश्यतीति "तस्माच्छसो नः पुंसि" ६।१।९९ इति नत्वं न स्यात्। द्वितीये तु पक्षे स्त्र्यर्थवृत्तेः शब्दस्यानेन पुंवद्भावः क्रियते, न तु स्त्रीत्वस्य निवृत्तिः; तथापि स एव दोषः स्यात्। अर्थगर्हणे तु न कश्चिद्दोष इत्यतः स्त्र्यर्थस्येदं ग्रहणमिति मत्वाऽऽह-- "स्त्र्यर्थः पुंवद्भवति" इति। कथं पुनरर्थस्येदं ग्रहणं लभ्यते? उच्यते; स्त्रीप्रत्ययानां तु तस्याभिधेयपातन्त्र्यात्। अर्थस्याप्राधान्यमपारतन्त्रयात्। प्रधानगुणन भवति; अप्राधान्यात्। अप्रधान्यं तु तस्याभिधेयपारतन्त्र्यात्। अर्थस्याप्राधान्यमपारतन्त्र्यात्। प्रधानगुणसन्निपाते तु प्रधानस्य ग्रहणं न्याय्यम् अतः स्त्र्यर्थं एव गृह्रते। "गार्गी, वात्सी च" इति। गाग्र्यवात्स्यशब्दाभ्यां "य()ञश्च" ४।१।१६ इति ङीप्,पूर्ववदकारयकारलोपो। "दाक्षी" इति। पूर्ववन्ङीप्()। "दाक्षायणश्च" इति। दाक्षेरपत्यमिति "यञिञोश्च" ४।१।१०१ इति फक्॥

बाल-मनोरमा

स्त्री पुंवच्च ९१९, १।२।६६

स्त्री पुंवच्च। "वृद्धेति स्त्रीलिङ्गेन विपरिणम्यते। तदाह--यूना सहोक्तौ वृद्धा स्त्री शिष्यत इति। गोत्रप्रत्ययान्तः स्त्रीवाचकः शब्दः शिष्यत इति भावः। स्त्रीत्वस्य वैरूप्यकारणस्याधिकस्य सत्त्वात् सत्त्वात् पूर्वेणाऽप्राप्ते वचनमिदम्। तदर्थ इति। तस्य=शिष्यमाणस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्यार्थः पुमानिव स्यादित्यर्थः। गर्गी चेति। गर्गस्यापत्यं स्त्रीत्यर्थः। गर्गादियञन्तात् "यणश्चे"ति ङीप्। गाग्र्यायणौ चेति। गर्गाद्यञन्ताद्यून्यपत्ये "यञिञोश्चे"ति फक्। गर्गा इति। अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते। स पुंवत्। कर्हि यञ् कितो न श्रूयत इत्यत आह--अस्त्रियामितीति। उपलक्षणमिदम्। "तद्राजस्य बहुषु तेनैवास्त्रियामि"त्यतोऽस्त्रियामिति, तेनैवेति, बहुष्विति

चानुवर्तमाने सतीत्यर्थः। एतेन "पुंव"दित्यतस्य प्रयोजनमुक्तम्। गार्गी च गार्ग्यायणश्चेति विग्रहस्तु न दर्शितः। तता सत्यबहुत्वाद्यञो लुगभावे सति पुंस्त्वे स्त्रीत्वे च रूपं तुल्यं--गार्ग्याविति। तत्र पुंवत्त्वं निरर्थकं स्यात्। उदाहरणान्तरमाह--दाक्षी चेति। दक्षस्य गोत्रा पत्यं स्त्री दाक्षी। "अत इञि"तीञन्तात् "इतो मनुष्यजाते"रिति ङीष्। दाक्षायणश्चेति। दक्षस्यापत्यं पुमान् दाक्षिः, तस्यापत्यं युवा दाक्षायणः। "यञिञोश्चे"ति फक्। दाक्षी च दाक्षीयणश्चेति विग्रहे दाक्षीशब्दः शिष्यते। तस्य पुंवत्त्वे निरर्थकं स्यात्। उदाहरणान्तरमाह--दाक्षी चेति। दक्षस्य गोत्रापत्यं स्त्री दाक्षी। "अत इञि"तीञन्तात् "इतो मनुष्यजाते"रिति ङीष्। दाक्षायणश्चेति। विग्रहे दाक्षीशब्दः शिष्यते। तस्य पुंवत्त्वे सति ङीषो निवृत्तौ दाक्षिशब्दात् प्रथमाद्विवचने "दाक्षी"इति भवति। अत्र तल्लक्षणश्चेदेव विशेष इत्यप्यनुवर्तते। ततश्च भागवित्ती च भागवित्तिकश्च, गर्गी च वात्स्याययनश्चेत्यत्र न भवति।

तत्त्व-बोधिनी

स्त्री पुंवच्च ७९६, १।२।६६

स्त्री पुंवच्च। वृद्धा स्त्रीति। गोत्रप्रत्ययान्तं स्त्रीवाचकमित्यर्थः। पुंवद्भावकृतवैलक्षण्यं स्फुटिकर्तुं द्विवचनान्तेन विग्रहमाह गार्ग्यायणाविति। अनुवर्तमान इति। "तद्राजस्य बहुषु---"इत्यतः "पुंव"दित्यर्थातिदेशस्य फलमनेन दर्शितम्। अन्यथा स्त्रीत्वस्याऽनिवर्तनाल्लुङ् न स्यात्। "गर्गान्पश्ये"त्यत्र नत्वं च सिद्धम्। रूपातिदेशे तु नैतत्सिद्ध्येत्, सामान्यातिदेशे विशेषानतिदेशादित्याहुः। "वृद्धो यूना" इत्याद्यनुवर्तनान्नेह---गार्गी च वात्स्यायनौ च।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पुमान् १।१ स्त्रिया ३।१ तल्लक्षणः १।१ ६५ चेत् ० ६५ एव ० ६५ विशेषः १।१ ६५ शेषः १।१ ६४

काशिका-वृत्तिः

पुमान् स्त्रिया १।२।६७

तल्लक्षणश्चेदेव विशेषः इति वर्तते। वृद्धो यून इति निवृत्तम्। स्त्रिया सहवचने पुमान् शिष्यते स्त्री निवर्तते। स्त्रीपुंसलक्षणश्चेदेव विशेषो भवति। ब्राह्मणश्च मयूरी च कुक्कुटमयूर्यौ। एवकरः किमर्थः। इन्द्रश्च इन्द्राणी च इन्द्रेन्द्राण्यौ। पुंयोगादाख्यायाम् ४।१।४८ इत्यपरो विशेषः। पुमानिति किम्? प्राक् च प्राचि च प्राक्प्राच्यौ। प्राकित्यवययम् अलिङ्गम्।

न्यासः

पुमान् स्त्रिया। , १।२।६७

"स्त्रीपुंसलक्षणश्चेदेव विशेषः" इति। यद्येवम्, इह न स्यात्-- गौश्चायं गौश्चेयमित्येतौ गावौ तिष्ठत इति, न ह्यत्र स्त्रीपुंसकृतः कश्चिद्विशेषोऽस्ति? मा भूदनेन , "सरूपाणाम्" (१।२।६४) इत्यादिना भविष्यति? नैतदस्ति; यदि हि तेन स्यात् स्त्रीशब्दस्याप्येकशेषः प्रसज्येत। ततश्च स्त्रीलिङ्गतापि स्यात् लिङ्गमशिष्यं लोकाश्रयत्वात्। स्त्रीलिङ्गस्यैकशेषे कृते पुंसत्वं विवक्षितव्यमित्यदोषः। अथ वा, पुमानिति योगविभागः क्रियते। तेनेहाप्यसत्यपि स्त्रीपुंसकृते विशेषे पुंस एवैकशेषो भवति। न चैवं सत्यतिप्रसङ्गो भवति; योगविभागादिष्टसिद्धेरिति। "ब्राआह्मणी, कुक्कुटी, मयूरी" इति। "जातेरस्त्रीवषयादयोपधात्" ४।१।६३ इति ङीष्। "कुक्कुटमयूर्यौ" इति। अत्र न केवलं स्त्रीपुंसकृतो विशेषः,किं तर्हि? आकृतिश्रुतिकृतोऽपि। "इन्द्राणी" इति। "इन्द्रवरुण" ४।१।४९ इत्यादिना ङीष्, आनुगागमश्च। "प्राक् च प्राची" इति।

प्राञ्चीति प्रपूर्वादञ्चतेः "ऋत्विक्" ३।२।५९ इत्यादिना क्विन्, "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्। क्विनन्तात् "दिक्छब्देभ्यः" ५।३।२७ इत्यादिनाऽस्तातिप्रत्ययः। तस्य "अञ्चेर्लुक्" ५।३।३) इति लुक्। "प्राची" इति। प्राक्छब्दात् "उगितश्च" ४।१।६ इत्यत्राञ्चतेश्चोपसंख्यानान्ङीप्। "प्रागित्यव्ययम्" इति। "तद्धितश्चासर्वविभक्तिः" १।१।३७ इत्यव्ययत्वम्॥

बाल-मनोरमा

पुमान्स्त्रिया ९२०, १।२।६७

पुमान्स्त्रिया। तल्लक्षण एवेति। "वृद्धो यूने"त्यतस्तदनुवृत्तेरिति भावः। हंसी चेति। अत्र पुंस्त्वस्त्रीत्वमात्रकृतवैरूप्यात् पुंलिङ्गो हंसशब्दः शिष्यते। स्त्रीत्वपुंस्त्वकृतवैरूप्यादेव "सरूपाणामि"त्यस्याऽप्राप्तिः। मातृमातरावित्यत्र जननीवाचकपरिच्छेत्तृवाचकमातृशब्दयोस्तु नायमेकशेषः, एकविभक्तो सरूपाणामित्यनुवत्र्य एकविभक्तौ सरूपाणां स्त्रीत्वपुंस्त्वेतरकृतवैरूप्यरहितानामित्याश्रयणात्। इह च मातरावित्यत्र "अप्तृ"न्निति दीर्घतदभावाभ्यामपि वैरूप्यात्।अत एव हंसश्च वरटा चेत्यत्रापि नेत्यलम्।

तत्त्व-बोधिनी

पुमान्स्त्रिया ७९७, १।२।६७

पुमान्स्त्रिया। "वृद्धो यूने"ति निवृत्तम्, "सरूपाणा"मिति त्वनुवर्तते, "भ्रातृपुत्रौ"इत्युत्तरसूत्रारम्भात्। तेन "हंसश्च वरटा चे"त्यत्र न भवति। अन्यथा स्यादेवाऽतिप्रसङ्गः। हंसत्वजातिसाम्येन शब्दवैलक्षण्यस्य स्त्रीत्रपुंस्त्वमात्रप्रयुक्तत्वात्। स्यादेतत्---गौरियं, गौश्चायं, तयोः सहोक्तौ "एतौ गावौ"इति नियमतो न स्यात्, तल्लक्षणविशेषाऽभावात्। किं तु स्त्रीवाचकस्य पुंवाचकस्य वा "सरूपाणा"मित्येकशेषोऽनियमेन स्यात्। अत्राहुः---तदितरकृतविशेषाऽभावे तात्पर्यान्न दोष इति। "इन्द्रेन्द्राण्यौ"इत्यादौ त्वेकशेषो न भवति, स्त्रीत्वपुंस्त्वेतरपुंयोगकृतविशेषस्य सद्भावात्। स्यादेतत्"----"एतौ गावौ"इति नियमतो न स्या"दिति मनोरमादौ यदुक्तं, तत्कथं सङ्गच्छताम्()। "त्यदादितः शेषे पुंनपुंसकतः"इति नियमप्रवृत्त्या स्त्रीवाचिनो गोशब्दस्य शेषेऽपि "एतौ गावौ"इति नियमतः प्रयोगः ध्यत्वेवेति चेत्। अत्र केचित्---- दिक्प्रदर्शनमात्रमिदम्। "नीलौ गावौ"इति "सुन्दरौ गावौ"इति नियमतो न स्यादित्युदाहर्तव्यम्। अथवा एतशब्दोऽत्राऽदन्तः कर्बुरवाची। एतश्च एता च एतौ गावौ, कर्बुरौ गावौ। "सरुपाणा---"मित्यनेन स्त्रीलिङ्गशेषे तु "एत#ए गावौ"इत्यपि स्यादिति यथाश्रुतमेव समर्थनीयमित्याहुः। तदपरे न क्षमन्ते। "त्यदादितः शेषे"इति नियमाऽऽप्रवृत्तावपि "पुमान्स्त्रिया"इति नियमप्रवृत्त्या "नीलौ गावौ" "एतौ गावौ"इति नियमतः सिद्ध्यत्येवेति। अत्र वदन्ति---"अद्वन्द्वतत्पुरुषविशेषणाना"मित्येतन्न्यायसिद्धमेव वचनम्। "विशेष्ये यल्लिङ्गं तदेव विशेषणेष्वपी"ति सर्वसंमतत्वात्, एवं च द्वन्द्वतत्पुरुषविशेषणेष्विव एकशेषविशेषणेऽपि "एतौ"इत्यत्र "त्यदादितः शेषे"इत्यादिनियमाऽप्रवृत्त्या विशेष्यगतमेव लिङ्गं भवतीति स्त्रीवाचिगोशब्दस्य शेषे "एते"इति स्यादेवेति "एतौ गावौ"इति नियमतो न स्यादित्यक्षेपः सङ्गच्छत एवेति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भ्रातृपुत्रौ १।२ स्वसृदुहितृभ्याम् ३।२ शेषः १।१ ६४

काशिका-वृत्तिः

भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १।२।६८

यथा सङ्ख्यं भ्रातृपुत्रशब्दौ शिष्येते सहवचने स्वसृदुहितृभ्यम्। स्वस्रा सहवचने भ्रातृशब्दः शिष्यते। भ्राता च स्वसा च भ्रातरौ। दुहित्रा सहवचने पुत्रशब्दः शिष्यते। पुत्रश्च दुहित च पुत्रौ।
न्यासः
भ्रातृपुत्रौ स्वसृदुहितृभ्याम्। , १।२।६८

बाल-मनोरमा
भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ९२१, १।२।६८

भ्रातृपुत्रौ। स्वसृदुहितृभ्यां सहोक्तौ क्रमात् भ्रातृपत्रौ शिष्यते। स्वरूपतोऽपि वैरूप्यादप्राप्तौ वचनम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नपुंसकम् १।१ अनपुंसकेन ३।१ एकवत् ० च ० अस्य ६।१ अन्यतरस्याम् ७।१ ७१ तल्लक्षणः १।१ ६५ चेत् ० ६५ एव ० ६५ विशेषः १।१ ६५ शेषः १।१ ६४

काशिका-वृत्तिः
नपुंसकम् अनपुंसकेनएकवच्चास्यान्यतरस्याम् १।२।६९

तल्लक्षणश्चेदेव विशेषः इति वर्तते। नपुंसकानपुंसकमात्रकृते विशेषे ऽनपुंसकेन सहवचने नपुंसकं शिष्यते, एकवच् च अस्य कार्यं भवति अन्यतरस्याम्। शुक्लश्च कम्बलः, शुक्ला च बृहतिका, शुक्लम् च वस्त्रं, तदिदं शुक्लम्। तानि इमानि शुक्लानि। अनपुंसकेन इति किम्? शुक्लं च शुक्लं च शुक्लं च सुक्लानि। एकवच्च इति न भवति।
न्यासः
नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्। , १।२।६९

"अनपुंसकेन" इति। "किम" इत्यादि। ननु च विना नपुंसकेनापि सहवचनेन सरूपाणामित्यादिनैकशेषो भवत्येव; तत् कोऽत्र विशेषः, यस्तेनैकशेषो विधीयमानः, अनेनैव चेत्यत आह-- "एकवच्चेति न भवति" इति। यद्यनेनैकशेषः स्यात्, पक्ष एकवद्भावः स्यात्। तेन त्वेकशेषे सति न भवति। अथास्येति किमर्थमुच्यते? यद्यस्येति नोच्येत, उत्तरत्राप्येकवच्चेत्यनुवृत्तिः स्यात्। ततश्चोत्तरत्र तु यस्यैकशेषः करिष्यते, तस्यैकवद्भावः प्रसज्येत। तस्मादस्यैव नपुंसकस्यैकवद्भावो यथा स्यात्। उत्तरत्र तु यस्यैकशेषः करिष्यते, तस्य मा भूदित्येवमर्थमस्येति वचनम्। अस्येति हि वचने सति मा भूदस्य वैयर्थ्यमित्युत्तरत्राप्येकवच्चेति नानुवर्तते। ननु चास्वरितत्वादेव नानुवर्तष्यते। एवं तर्हि तदेवास्वरितत्वमनेन प्रकारेणाख्यायते विस्पष्टार्थम्। एकारोऽत्रानुवत्र्तते। तेन हिमञ्च हिमानी च हिमहिमान्यौ, अरण्यञ्चारण्यानी चारण्यारण्यान्यावित्यत्र न भवति। इन्द्रवरुणादिसूत्रेण ४।१।४९ "हिमारण्ययोर्महत्वे" (वा। ३५२) इति वचनात् महत्त्वमपरो विशेषः॥
बाल-मनोरमा
नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ९२२, १।२।६९

नपुंसकम्। अन्यतरस्याङ्ग्रहणमेकवदित्यनेनैवान्वेति, आनन्तर्यात्, नत्वेकशेषेणेत्याह--तच्चेति। तल्लक्षण एवेति। नपुंसकत्वाऽनपुंसकत्वमात्रकृतवैरूप्यं चेदित्यर्थः। शुक्लः पटः शुक्ला शाटी शुक्ल वस्त्रमिति। पटशब्दसमभिव्याहाराच्छुक्लशब्दः पुंलिह्गः, शाटीशब्दसमभिव्याहारात्स्त्रीलिङ्गः, वस्त्रशब्दसमभिव्याहारे तु नपुंसकलिङ्गः, "गुणे शुक्लादयः पुंसि गुणिलिह्गास्तु तद्वती"त्यमरोक्तेरिति भावः। स च सा च तच्च तत्।अयं च इयं च इदं च इदम्। शुक्लश्च शुक्ला च शुक्लं च शुक्लम्। अत्र नपुंसकान्येव शिष्यन्ते एकवच्चा भवन्ति॥ तानीमानि शुक्लानीति। नपुंसकत्वे एकशेषे सति एकवत्त्वाऽभावे रूपाणि। न चेतरेतरयोगविवक्षायां द्विबहुवचनान्तयोः, समाहाद्वन्द्वविवक्षायामेकवचनस्य च सिद्धत्वादेकवदिति व्यर्थमिति वाच्यम्, अत एवैकशेषप्रकरणस्य समाहारेऽप्रवृत्तिज्ञापनात्। तेन ओदनश्च ओदनं च तयोः समाहारे ओदनमिति न भवति। ओदनशब्दो ह्रर्धर्चादिः। ओदनश्च ओदनं चेति इतरेतरयोगद्वन्द्वेऽपि ओदनमिति न, अनभिधानात्। एवंच। क्वचिदनभिधानस्यावश्याश्रयणीयतया द्वन्द्वमात्रस्यैकशेषविषयेऽनभिधानमाश्रित्य एकस्य शब्दस्यानेकार्थत्वं च#आश्रित्य एकशेषप्रकरणं भाष्ये प्रत्याख्यातम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पिता १।१ मात्रा ३।१ अन्यतरस्याम् ७।१ ६९ शेषः १।१ ६४

काशिका-वृत्तिः

पिता मात्रा १।२।७०

अन्यतरस्याम् इति वर्तते, न एकवतिति। मात्रा सहवचने पितृशब्दः शिष्यते ऽन्यतरस्याम्। माता च पिता च पितरौ, मतापितरौ इति वा।

लघु-सिद्धान्त-कौमुदी

पिता मात्रा ९९३, १।२।७०

मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ, मातापितरौ वा॥

न्यासः

पिता मात्रा।, १।२।७०

"पितरौ" इति। "ऋतो ङि" ७।३।११० इति गुणः। "मातापितरौ" इति। "आनङृतो द्वन्द्वे" ६।३।२४ इत्यानङ, अभ्यर्हितत्वन्मातुः पूर्वनिपातः॥

तत्त्व-बोधिनी

पिता मात्रा ७९९, १।२।७०

पितामात्रा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ श्वशुरः १।१ श्वश्र्वा ३।१ अन्यतरस्याम् ७।१ ६९ शेषः १।१ ६४

काशिका-वृत्तिः

श्वशुरः श्वस्रवा १।२।७१

अन्यतरस्याम् इति वर्तते। श्वस्वा सहवचने श्वशुरशब्दः शिष्यते अन्यतरस्याम्। श्वशुरश्च श्वश्रूश्च श्वशुरौ, श्वसूश्वशुरौ इति वा।

न्यासः

�आशुरः �आ�आआ। , १।२।७१

"()आश्रू()आशुरौ" इति। पूर्ववत्पूर्वनिपातः॥

बाल-मनोरमा

�आशुरः �आश्र्वा ९२४, १।२।७१

()आशुरः। ()आश्र्वा। ()आश्रू()आशुराविति। ()आ()आआ अपि मातृतुल्यत्वोक्तेरभ्यर्हितत्वम्। "()आश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता" इति स्मृतेः। इह तल्लक्षणग्रहणानुवृत्तिः स्पष्टार्था, "()आशुरः ()आश्र्वा" इति शब्दग्रहणात्।

बाल-मनोरमा

आदिरन्त्येन सहेता ३, १।२।७१

नन्वस्तु हल्सूत्रे लकारस्य इत्संज्ञा। ततः किमित्यत आह--आदिरन्त्येन सहेता। अन्ते भवः अन्त्यः। तेन इता सहोच्चार्यमाणः आदिः अण्? अच् इत्यादिरूपः संज्ञेत्यर्थः। तत्र "यस्मात्पूर्वं नास्ति परमस्ति स आदिः, यस्मात्परं नास्ति पूर्वमस्ति सोऽन्तः" इति आद्यन्तवत्सूत्रे भाष्यम्। तदिहाद्यन्तशब्दाभ्यां मध्यगा आक्षिप्यन्ते। अतस्तेषां संज्ञेति लभ्यते। "स्वं रूपं"मिति पूर्वसूत्रात्स्वमित्यनुवर्तते। तच्च षष्ट्यन्ततया विपरिणम्यते। तदेतदाह--अन्त्येनेतेत्यादि। स्वस्य चेति। अत्र च स्वशब्देन संज्ञाकोटि प्रविष्ट आदिरेव परामृश्यते, नत्वन्त्योऽपि, अन्त्येनेति तृतीयया "सहयुक्तेऽप्रधाने" इति विहितया तस्य अप्राधान्यावगमात्, सर्वनाम्नां चोत्सर्गतः प्रधानपरामर्शित्वात्। न च इक्? उक् इच् यय् मयित्यादिप्रत्याहाराः कथं स्युः, इकारादीनामादित्वाऽभावादिति वाच्यं, न हि सूत्रापेक्षमिहादित्वं किंतु आद्यन्तशब्दाक्षिप्तसमुदायापेक्षम्। ततश्च ऐउणिति इकारमारभ्य ऋलृगिति ककारपर्यन्तं वर्णसमुदायं बुद्ध्या परिकल्प्य तदादित्वमिकारस्य संभावनीयम्। एवमिजादिष्वपि। तथा अन्त्यत्मपि बुद्धिकल्पितसमुदायापेक्षमेव न तु सूत्रापेक्षम्। ततश्च रप्रत्याहारः सुग्रहः। अन्यथा लण्सूत्रे अकारस्याऽन्त्यात्वाभावात्स न स्यात्। अत्र आद्यन्तशब्दयोरन्यतराऽभावे मध्यगानामिति न लभ्येत। आदिरित्यस्याऽभावे हि अन्त्येनेता सहोच्चार्यमाणो वर्णोऽन्त्यात्प्राग्भाविनां वर्णानां संज्ञेत्येव लभ्येत। ततश्च हल्प्रत्याहारे अकारादीनामपि ग्रहणं स्यात्, अन्त्यलकारात्पूर्वभावित्वाविशेषात्। अन्त्येनेत्यस्याऽभावे तु आदिरिता सहोच्चार्यमाण आदिरूध्वभाविनां वर्णानां संज्ञेत्येव लभ्येत। ततश्च अच्प्रत्याहारे हकारादीनामपि ग्रहणापत्तिः, आदेरकारादूध्वभावित्वाऽविशेषात्। उभयोरुपादाने तु मध्यगानामिति लभ्यते इत्यदोषः। परस्मिन् सति यस्मात्पूर्वो नास्ति स आदिः, पूर्वस्मिन् सति यस्मात्परो नास्ति सोऽन्त्य इति भाष्ये आद्यन्तशब्दार्थनिर्वचनेन आद्यन्तयोर्मध्यगाऽविनाभूतत्वेन ताभ्यां मध्यगानामाक्षेपात्। यद्यपि द्वयोरप्याद्यन्तशब्दौ संभवतः, उक्तनिर्वचनाऽविरोधात्, तथापि नेह द्वयोराद्यन्तशब्दौ भवतः। तथा सति हि अन्त्येनेता सह उच्चार्यमाण आदिः स्वस्य आदेः संज्ञेत्येव लभ्येत, उक्तरीत्या स्वशब्देन अन्त्यस्य परामर्शाऽसंभवात्। ततश्च उणित्युकारस्य संज्ञेति

पर्यवस्येत्। तत्र एकस्य वर्णस्य वर्णद्वयात्मकसंज्ञाविधानं व्यर्थमापद्येत, गौरवात्, प्रत्याहाराणां व्यवहारलाघवार्थत्वात्। अतो मध्यमसत्त्व एवाऽत्र आद्यन्तशब्दाविति ताभ्यां मध्यगानामिति लभ्यते। इतेति किम्?। अम्()प्रत्याहारो ञमङणेति मकारेण मा भूत्। नचैवमपि सुट्()प्रत्याहारः "टा" इति टकारेण किं न स्यात्, टान्तसमुदायापेक्षया तस्य अन्त्यत्वादिति वाच्यम्। प्रथमातिक्रमणे कारणाऽभावेन सुट्()प्रत्याहारस्य औटष्टकारेणैव ग्राह्रत्वात्। उक्तं च जैमिनिना --"प्रथमं वा नियम्येत कारणस्यानतिक्रमात्।" इति। विस्तरभयाद्विरम्यते। इति हल्संज्ञायामिति। हल्सूत्रे लकारस्य हलन्त्यमित्यावृत्तप्रथमसूत्रेण इत्संज्ञायां सत्यामादिरन्त्येनेति हल्संज्ञासिद्धौ चतुर्दशसूत्र्यामन्त्यणकारादिवर्णानां हल्त्वं सिद्धमित्यर्थः।

तत्त्व-बोधिनी

�आशुरः �आश्र्वा ८००, १।२।७१

()आशुरः ()आश्र्वा। नन्वेतत्सूत्रद्वयं व्यर्थं, पितृशब्देन मातापित्रोः, ()आशुरशब्देन ()आश्रू()आशुरयोर्लक्षणया बोधसंभबात्। न च "सरूपाणा"मित्यादिसूत्रसमूहवदिदमपि सूत्रद्वयं द्वन्द्वनिवृत्त्यर्थमावश्यकमिति वाच्यं, पक्षे तस्यापीष्टत्वादिति चेत्। अत्राहुः--पितृ()आशुरशब्दयोरिव मातृ()आशब्दयोः केवलयोरुक्तविषये प्रयोगं वारयितुमारम्भणीयणेव सूत्रद्वयम्, अनभिधानमाश्रित्य प्रत्याख्यानस्याऽनुचितत्वादिति। मातापितराविति। "पितुर्दशगुणं माता गौरवेणातिरिच्यते"इति स्मृतेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः। "आनङृतः"इत्यानाङ्। ()आश्रू()आशुराविति। "()आश्रुः पूर्वपत्नी च मातृ-तुल्या प्रकीर्तिता"इति स्मृतेः ()आश्र्वा अभ्यर्हितत्वापूर्वनिपातः।

तत्त्व-बोधिनी

आदिरन्त्येन सहेता ६, १।२।७१

अन्त्येनेति किम्()। "सु"डिति प्रत्याहारस्तृतीयैकवचनावयवेन भूदिति काशिकाकृत्। यद्यपि टकारान्तसङ्घस्य टाटकारोऽप्यन्त्यो भवति, तथाप्यन्त्येनेति ग्रहणसामर्थ्यादन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेनैव प्रत्याहारः, न हि टाटकारे "हलन्त्यम्" इतीसंज्ञा प्रवर्तते। नचैवं "र"प्रत्याहाराऽसिद्धिः।
लण्सूत्रस्थाऽवर्णस्यानुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि इता प्रत्याहारात्तत्सिध्यतीति काशिकाकाशशयः। निष्कर्षस्त्विह-"स्वौजसमौट्-" इति सूत्रे दर्शयिष्यते। विस्तरस्तु शब्दकौस्तुभेऽनुसन्धेयः। इतेति किम्?। रप्रत्याहारो यथा स्यात्। स ह्रनुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि गृह्रत इत्युक्तम्, न चैतदितेत्यस्य विरहे लभ्यत इति शब्दकौस्तुभे स्थितम्। अत्राद्यन्ताभ्यामवयबाभ्यामवयवी समुदाय आक्षिप्यते। तस्य च युगपल्लक्ष्ये प्रयोगाऽभावात्तदवयवेष्वलवतरन्ती संज्ञा मध्यगेषु विश्राम्यति, नत्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पाराश्र्यनिर्णयादित्याशयेनाह-मध्यगानामिति। स्वस्य चेति। "स्वं रूपम्" इत्यनुवर्तत इति भावः। स्वं रूपां चादेरेव गृह्रते नान्त्यस्य, "अन्त्येन" इत्यप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्। ननु "स्व"मित्यस्यानुवृत्तौ "कः संज्ञी" इत्याकाङ्क्षायाः शान्तत्वादवयव्याक्षेपो न स्यात्। तथा च "इकोयणचि" इत्यादाविकारस्य स्थाने यकारः स्यादकारे परे इत्येवमर्थः स्यात्। मैवम्। आदेरेव संज्ञित्वे तु "आदिरन्त्येन" इति संज्ञाकरणस्यैव वैयथ्र्यापत्तैः। किंच अण्()-अक्-अच्-अट्-अम्-अशादीनां पृथङ्निर्देशोऽपि व्यर्थः स्यात्, सर्वत्राऽकारस्यैव संज्ञित्वादिति दिक्। शब्दकोस्तुभे तु-आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्त्यर्थमिदं सूत्रमिति स्थितम्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ त्यदादीनि १।३ सर्वैः ३।१ नित्यम् १।१ शेषः १।१ ६४

काशिका-वृत्तिः
त्यदादीनि सर्वैर् नित्यम् १।२।७२

तय्दादीनि शब्दरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते त्यदादिभिरन्यैश्च। सर्वग्रहणं सकल्यार्थम्। नित्यग्रहनं विकल्पनिवृत्त्यर्थम्। स च देवदत्तश्च तौ। यश्च देवदत्तश्च यौ। त्यदादीनां मिथो यद्यत् परं तत्तच् छिस्यते। स च यश्च यौ। यश्च कश्च कौ।
न्यासः
त्यदादीनि सर्वैर्नित्यम्। , १।२।७२

"सर्वग्रहणं साकल्यार्थम्" इति। विना तेनानपुंसकेनेत्यस्यानुवृत्तिराशङ्क्येत, ततश्च नपुंसकेन सह न स्यात्। अथ वा--तल्लक्षमश्चेदेव विशेष इत्येतदिहानुवत्र्तत इत्याशङ्क्येत, ततश्च यत्र त्यदादिकृत एव विशेषस्तत्रैव स्यात्-- स च यश्च यावित्यादि, इहि तु न स्यात्- स च देवदत्तशच् ताविति। अतः सर्वग्रहणम्। "स च देवदत्तश्च तौ" इति। यदा विशेषविवक्षा तदैतदुदाहरणम्, यदा तु सामान्यविवक्षा , तदा देवदत्तोऽपि तच्छब्देन सम्बध्यत इति "सरूपाणाम्" १।२।६४ इत्यनेननैव सिध्यति। "यद्यत्परम्" इति। गणपाठापेक्षं परत्वं वेदितव्यम्॥
बाल-मनोरमा
त्यदादीनि सर्वैर्नित्यम् ९२५, १।२।७२

त्यदादीनि। सर्वैरिति। त्यदादिभिरितरैश्चेत्यर्थः। ताविति। अत्र देवदत्तशब्दो निवर्तते। तच्छब्दस्तु शिष्यते। तद्देवदत्ताविति न भवति। "सर्वैः किम्?। प्रत्यासत्त्या त्यदादिभिरेव सहोक्तावित्यर्थो मा भूदित्येतदर्थम्।

त्यदादीनां मिथ इति। भाष्ये स्थितमेतत्। यत्परमिति। त्यदादिगणे यत्परं पठितं तच्छिष्यत इत्यर्थः। शब्दपरविप्रतिषेधाश्रयणादिति भावः। स च यश्च यौ, सा च या च ये इति। त्यदादिगणे यच्छब्दस्य तच्छब्दादूध्र्वं पाठात् परत्वात्स एव शिष्यते इति भावः, पूर्वशेषोऽपीति। परशब्दस्येष्टवाचित्वात्क्वचित्पूर्वमपि शिष्यत इति। भावः। अत्र "द्विपर्यन्ताना"मिति न भवति। अहं च भवांस्चावामिति भाष्योक्तेः।

त्यादादित इति। आद्यादित्वात्षष्ठ()र्थे तसिः। त्यदादीनां स्त्रीशेषेऽपि सहविवक्षितेषु यः पुमान् यच्च नपुंसकं यद्वशेन लिङ्गप्रतिपादकानि भवन्तीत्यर्थः। कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव सम्बध्यन्ते। सा च देवदत्तश्च ताविति। अत्र तच्छब्दः शिष्यते, समभिव्याह्मतदेवदत्तशब्दलिङ्गश्च। देवदत्तशब्दस्तु निवर्तत एव। पुंनपुंसकयोरिति। "सहोक्ता"विति शेषः। परत्वादिति। पुंनपुंसकतो लिङ्गवचनानी"त्यत्र पुंमपेक्षया नपुंसकस्य पाठतः परत्वावगमादित्यर्थः।

अद्वन्द्वेति। द्वन्द्वतत्पुरुषविशेषणानां त्यदादीनां स्त्रीशेषे "त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानी"त्येतन्न भवतीत्यर्थः। द्वन्द्व उदाहरति--कुक्कुटमयूर्याविमे इति। "अयं च इयं च इमे"इत्यत्र "त्यदादितः शेषे" इति पुंलिङ्गत्वं न भवति, किंतु विशेष्यनिघ्नतैव विशेषणस्येति बोध्यम्। न च अयं च इयं च इत्यत्र स्त्रीशेष एव न भवति, "पुमान् स्त्रिये"त्युक्तत्वात्, अतः पुंनपुंसकतो लिङ्गविधेः प्रसक्तिः कथमिति वाच्यं, "परवल्लिङ्ग"मिति हि द्वन्द्वतत्पुरुषार्थयोः परवल्लिङ्गविधिः। अतो द्वन्द्वविशेषणस्य तत्पुरुषविशेषणस्य चानुप्रयोगे तदेव लिङ्गमिति भाष्यकैयटयोः स्थितम्।

ततश्च "कुक्कुटमयूर्याविमे"इति उदाहरणे--अयं च इयं चेति विग्रहे "पुमान् स्त्रिया"ति पुंशेषेऽपि "परवल्लिङ्ग"मिति विशेषणत्वात्स्त्रीलिङ्गत्वे सति तस्य "त्यदादितः" इति पुंवत्त्वं प्राप्तमनेन निषिध्यत इति नानुपपत्तिः। क्वचिन्मूलपुस्तकेषु तु "मयूरीकुक्कुटाविमा"वित्यपि दृश्यते, तत्तुत प्रकृतानुपयुक्तम्,?त्र मयूरीकुक्कुटाविति द्वन्द्वार्थस्य पुंलिङ्गतया इयं चायं च इमाविति तद्विशेषणस्यानुप्रयुज्यमानस्यापि "पुमान् स्त्रिया" इति परिशिष्टस्य पुंलिङ्गस्य इदम्शब्दस्य स्त्रीत्वाऽप्रसक्त्या तत्र "त्यदादितः शेषे" इति पुंस्त्वविधेरप्रवृत्तत्वेन "अद्वन्द्वतत्पुरुषविशेषणाना"मिति निषेधस्यानुपयोगात्। तत्पुरुषे उदाहरति--तच्चेति। पिप्पल्या अर्धम्--अर्धपिप्पली। "अर्धं नपुंसक"मिति तत्पुरुषः। अर्धपिप्पली च पिप्पल्यर्धं च-अर्धपिप्पल्यौ। तच्च सा च ते। तत्र पिप्पल्यर्धंशब्दविशेष्याभिप्रायं "त"दिति नपुंसककत्वम्। "से"ति स्त्रीत्वं तु अर्धपिप्पलीति विशेष्याभिप्रायम्। अत्र "पुमान् स्त्रिये"त्यस्य नैव प्रसक्तिः, किन्तु "नपुंसकमनपुंसकेनैकव"दिति नपुंसकं शिष्टम्। तत्र "परवल्लिङ्ग"मिति स्त्रीत्वम्। तस्य स्त्रीलिङ्गतया तद्विशेषणस्यापि "परवल्लिङ्ग"मिति स्त्रीत्वम्। तस्य "त्यदादितः शेषे" इति नपुंसकत्वं प्राप्तं निषिध्यते। एवंच "ते" इति स्त्रीलिङ्गमेव सिध्यति। यद्यपि स्त्रीत्वे नपुंसकत्वे वा "ते" इति द्विवचनस्य न कोऽपि विशेषः, तथाप्यर्धपिप्पल्यस्ता इत्युदाहार्यम्। तच्च तच्च सा चेति विग्रहः।

तत्त्व-बोधिनी

त्यदादीनि सर्वैर्नित्यम् ८०१, १।२।७२

त्यदादीनि सर्वैः। सर्वैः किम्()। त्यदादिभिन्नैरपि सहोक्तौ यथा स्यात्, प्रत्यासत्त्या "त्यदादिभिरेव सहोक्तौ"इत्यर्थो मा भूत्। यत्परमिति। शब्दपरविप्रतिषेधादिति भावः।

त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते। त्यदादित इति। आद्यादित्वात्तसिः। "त्यदादीनां [स्त्री]शेषे सह विवक्षितेषु यः पुमान्, यच्च नपुंसकं, तद्वशेन लिङ्गप्रतिपादकानि भवन्तीति वाच्य"मित्यर्थः। कानीयत्याकाङ्क्षायामर्थात्त्यदादीन्येव। अस्यापवादमाह---।

अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्। अद्वन्द्वेति। द्वन्द्वादिविशेषणानां पूर्वोक्तं न, किं तु विशेष्यनिघ्नतैवेत्यर्थः। नन्वेवं "कुक्कुटमयूर्यौ"इत्यत्र उभयपदार्थप्रधानत्वेन उभयोरपि विशेष्यत्वाद्विशेष्यनिघ्नतायामपि "कुक्कुटमयूर्याविमे"इति नियमतो न स्यादिति चेदत्र नव्याः---"परवल्लिङ्ग"मित्यनेन द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गवत्त्वादुत्तरपदलिङ्गस्यैव द्वन्द्वतत्पुरुषप्रतिपाद्यत्वेन तल्लिङ्गाधीनतैवाऽनुप्रयोगस्येति न काचिदनुपपत्तिरिति। मयूरीकुक्कुटाविमाविति। प्रकृतानुपयुकतमप्येतत्प्रसङ्गादुक्तम्। तच्चेति। पिप्पल्यद्र्धम्। सा चेति अर्धपिप्पली। तत्पुरुषविशेषणमुदाहरति---अर्धपिप्पल्यौ ते इथि। यद्यपि स्त्रीनपुंसकसाधारणः "ते" इति प्रयोगस्तथापि "तच्च तच्च सा च अर्धपिप्पल्यस्ताः"इत्याद्युदाहरणमूह्रम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ग्राम्यपशुसङ्घेषु ७।३ अतरुणेषु ७।३ स्त्री १।१ शेषः १।१ ६४

काशिका-वृत्तिः

ग्राम्यपशुसङ्घेष्वतरुणेशु स्त्री १।२।७३

ग्राम्याणां पशूनां सङ्घाः ग्राम्यपशुसङ्घाः। एतेषु सहविवक्षायां स्त्री शिष्यते। पुमान् स्त्रिया १।२।६७ इति पुंसः शेषे प्राप्ते स्त्रीशेषो विधीयते। अतरुणग्रहणम् सामर्थ्यात् पशुविशेषनम्। गाव इमाः। अजा इमाः। ग्राम्यग्रहनं किम्? रुरव इमे। पुषता इमे। पुशुषु इति किम्? ब्राह्मणाः। क्षत्रियाः। सङ्घेषु इति किम्? एतौ गवौ चरतः। अतरुणेसु इति किम्? वर्सा इमे। वर्करा इमे। अनेकशफेष्विति वक्तव्यम्। इह मा भूत्। अश्वा इमे। इति स्रीजयादित्यविरचितायं काशिकायां वृत्तौ प्रथमाध्यायस्य द्वितीयः पादः।

न्यासः

ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री। , १।२।७३

"ग्राम्याणाम्" इति। ग्रामे भवा ग्राम्याः। "ग्रामाद्यखञौ ४।२।९३ इति यः। ननु च सङ्घस्य तरुमत्वं न सम्भवति, नापि तद्वयवच्छेद्यं तरुणत्वम्। अतः "अतरुणेषु " इत्ययुक्तं विशेषणमित्याह- "अतरुणग्रहणम्" इत्यादि। उच्यते चेदं विशेषणम्, न च सङ्घस्य तत्सम्भवति, तत्र सामथ्र्यादन्येषां सङ्घो विज्ञायते। "गावः इमाः" इति। इमा इत्यनुप्रयोगः स्त्रीत्वाभिव्यक्तये। "एतौ गावौ" इति। कथं पुनरिदं प्रत्युदाहरणम्, यावता द्वाभ्यामपि सङ्घो भवत्येव? नैष दोषः, यस्मात् मतं स्यात् सङ्घग्रहणमनर्थकं स्यात्, व्यवच्छेद्याभावात्। "अनेकशफेषु" इत्यादि। अनेकानि शफानि खुरा येषां तेष्वयमेकशेषो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- अन्यतरस्यांग्रहणमिहानुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनानेकशफेष्वेव भवति, नान्यत्रेति॥ इति श्रोबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य द्वितीयः पादः

------------ अथ प्रथमाध्यायस्य तृतीयः पादः

बाल-मनोरमा

ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री , १।२।७३

ग्राम्यपशु। एष्विति। तरुणभिन्नेषु ग्राम्याणां पशूनां सङ्घेष्वित्यर्थः। इह अनपुंसकेनेत्यनुवर्तनादाहपुमान्()स्त्रियेत्यस्यापवाद इति। गौश्च गौश्च गौश्चे"ति पुंलिङ्गस्त्रीलिङ्गेषु गोशब्देषु सहविवक्षितेषु "पुमान् स्त्रिये"त्यतद्बाधित्वा स्त्री शिष्यत इति भावः। ननु स्त्रीशेषे पुंशेषे वा न कोऽपि रूपभेद इत्यत आह--इमा इति। अनुप्रयोगे रूपभेदः फलमिति भावः। "त्यदादितः शेषे" इति न भवति, "गाव इमाः" इतिभाष्यप्रयोगादित्याहुः। रुरव इमे इति। रुरुः--कृष्णाख्यो मृगः। अग्राम्यपशुत्वान्न स्त्री शिष्यते। किंतु "पुमान् स्त्रिये"त्येकशेषः। ततश्चानुप्रयोगे "इमे" इति पुंलिङ्गत्वमेव। ब्राआह्णा इमे इति। ब्राआह्णी च ब्राआह्णाश्चेति विग्रहः। अपशुत्वान्न स्त्रीशिष्यते, किन्तु "पुमान् स्त्रिये"त्येकशेषः। अन्यथा "ब्राआह्ण्य इमा" इति स्यात्। एतौ गाविविति। स्त्रीलिङ्ग पुंलिङ्गयोः सबोक्तावसङ्घत्वान्न स्त्री शिष्यते। सङ्घशब्दो हि बहूनां समुदाये वर्तते, अन्यथा एकशेषस्यानेकविषयत्वादेवाऽनेकपरिग्रहे सिद्धे किं तेनेति भावः। स्त्रीशेषे तु "एते" इत्यनुप्रयोगे रूपं स्यात्। वत्सा इमे इति। वत्साश्च वत्साश्चेति विग्रहः। तरुणत्वान्न स्त्री शिष्यते। अन्यथा "वत्सा इमा" इत्यनुप्रयोगः स्यात्।

अनेकशफेष्विति वाच्यमिति। वार्तिकमिदम्। एकशफा अ()आआदयः, तेषां सहोक्तौ "ग्राम्यप()इआ"ति न भवति। अ()आआ इमे इति। एकशफत्वान्न स्त्री शिष्यते। ततश्चानुप्रयोगे पुंलिङ्गत्वमिति भावः। ननु "सरूपाणा"मिति सूत्रे "तिष्यपुंनर्वस्वोर्नक्षत्रद्वन्द्वे" इत्यतो द्वन्द्वग्रहणानुवृत्या द्वन्द्वे एकशेष इति भाष्यात्कृते द्वन्द्वे एकशेषः। स्यादित्यत आह--इहेति। इहोदाह्रतेषु एकशेषविषयोषु सर्वत्र प्रसक्तं द्वन्द्वमनवकाशत्वादेकशेषो बाधते। कृते त्वेकशेषेऽनेकाभावादद्वन्द्वो नेत्यर्थः। "द्वन्द्वसमासे एकशेष" इति भाष्यं तु द्वन्द्वे प्रसक्ते सहविवक्षायामेकशेष इति व्याख्येयम्। ननु कृत एव द्वन्द्वे एकशेषो भवतु, का हानिरित्यत आह--तेनेति। द्वन्द्वात् प्रागेवैकशेषाश्रयणेनेत्यर्थः। कृते

द्वन्द्वे एकशेषाभ्युपगमे "शिरसी" इति द्विवचने शिरांसीति, बहुवचने च समासस्येत्यन्तोदात्तः स्यात्, प्राण्यङ्गत्वात् "द्वन्द्वश्च प्राणी"त्यादिना एकवद्भावश्च स्यादित्यर्थः। आदिना शिरोभ्यां शिरोभिरित्यादिसङ्ग्रहः। पन्थानाविति। द्वन्द्वे कृते एकशेषाभ्युपगमे पन्थानौ पन्थानः, पथिभ्यां पथिभि"रित्यादौ "ऋक्पू"रित्यप्रत्ययः समासान्तः स्यादिति भावः। नचात्र "इतोऽत्सर्वनामे"ति सर्वनामस्थाने परेऽकारविधानाल्लिङ्गात्समासान्तः सुपरिहरः। "इतोऽदि"त्युक्तेऽपि सावित्यनुवत्र्य "पन्था" इति सिद्धेरिति वाच्यं, "पथो विभाषे"ति समासान्ताऽभावेऽपन्थानावित्यादौ "इतोऽदि"ति सूत्रस्य सावकाशत्वात्।

*****इति बालमनोरमायाम् एकशेषप्रकरणम्।*****

तत्त्व-बोधिनी

ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री २८३, १।२।७३

ग्राम्य। ग्रामे भवा गान्याः। "ग्रामाद्यखञौ"इति यः। लिङ्गद्वयेऽपि "गावः"इति रूपस्य समानत्वात्स्त्रीलिङ्गशेषस्य फलमाह---इमा इति। एवं च "इमे च इमाश्च इमाः"इति स्त्रीलिङ्गशेष एव भवति, न त्वत्र "त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानी"ति पुंलिङ्गशेषः, "गाव इमाः"इति भाष्योदाहरणादित्येके। अन्ये तु ग्राम्यपशुसङ्घविषयत्वाऽविशेषात् "गावः"इतिवत् "इमाः"इति च स्त्रीलिङ्गशेष एव स्यादिति नास्ति शङ्कावकाश इत्याहुः। एतौ गाविति। एकशेथस्याऽनेकविषयत्वादेवाऽनेकपरिग्रहे सिद्धे सङ्गग्रहणसामथ्र्याद्बहूनां समुदायोऽत्र गृह्त इति भावः।

अनेकशफेष्विति वाच्यम्। एकशेषे कृते इति। विभक्त्युत्पत्त्यनपेक्षत्वेनान्तरङ्गत्वादिति भावः। नन्वेवं विषयभेदात् "द्वन्द्वापवाद एकशेषः"इत्युद्घोषः कथं प्रवर्तत इति चेत्()। अत्राहु--यद्येकशेषो न स्यात्तर्हि विभक्तावुत्पद्यमानायां द्वन्द्वः स्यात्, कृते त्वेकशेष स न भवतीति कार्किकीं प्राप्तिमादायापवादोद्घोष इति। द्वन्द्वो नेति। एतेन "कृतद्वन्द्वानामेकशेषः"इति भ्रमो निरस्तः। न च तथैवास्तु, फले विशेषाऽभावादिति वाच्यमित्याह---तेनेति। पन्थानाविति। न चात्र"इतोऽत्सर्वनामस्थाने"इति लिङ्गात्समासान्तः सुपरिहरः, "इतोऽ"दित्युक्तेऽपि "सौ" इत्यनुवृत्त्या "पन्थाः"इति सिद्धेरिति वाच्यं, "पथो विभाषा"इति समासान्ताऽभावे "अपन्थानौ"इत्यादौ "इतोऽ"दिति सूत्रस्य सावकाशत्वात्। इत्येकशेषः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भूवादयः १।३ धातवः १।३

समासः॥

भूश्च वाश्च भूवौ, भूवौ आदी येषां ते भूवादयः, द्वन्द्वगर्भो बहुव्रीहिः॥

अर्थः॥

भू इत्येवम् आदयः वा इति एवं प्रकारकाः क्रियावचनाः शब्दाः धातुसंज्ञकाः भवन्ति॥

उदाहरणम्॥

भवति, पठति, वाति॥

काशिका-वृत्तिः

भूवादयो धातवः १।३।१

भू इत्येवम् आदयः शब्दाः क्रियावचना धातुसंज्ञा भवन्ति। भू भवति। एध एधते। स्पर्ध स्पर्धते। धातुशब्दः पूर्वाचार्यसंज्ञा। ते च क्रियावचनानां संज्ञां कृतवन्तः। तदिह अपि पूर्वाचर्यसंज्ञाश्रयणात् क्रियावाचिनाम् एव भूवादीनां धातुसंज्ञा विधीयते। भूवादीनां वकारो ऽयं मङ्गलार्थः प्रयुज्यते। भूवो वार्थं वदन्ति इति भ्वर्था वा वादयः स्मऋताः। धातुप्रदेशाः धातोः ३।१।९१ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

भूवादयो धातवः ३६, १।३।१

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः॥

न्यासः

भूवादयो धातवः। , १।३।१

भूरादिर्येषां ते भूवादयः। भूवादयो दशगणीपरिपठिता गृह्न्ते। "भवति" इत्यादि। अत्र धातुसंज्ञायां सत्याम् "धातोः" ३।१।९१ इत्यनुवत्र्तमाने "वत्र्तमाने लट्" ३।२।१२३ इति लट्()प्रत्ययः। "भू इत्येवमादयः शब्दा धातुसंज्ञका भवन्ति" इत्यनेन गणपाठेनैवेयं धातुसंज्ञा विधीयत इति दर्शयति। तेन अणपयति, कड्ड्पयति इत्येवमादीनां धातुसंज्ञा न भवतीत्युक्तं भवति। यद्यवम्, या-वा- दिव-इत्येवमादीनां सर्वनाम--विकल्प-स्वर्गाभिधायिनां धातुसमानशब्दानामक्रियावचनानामपि धातुसंज्ञा प्राप्नोतीति कस्यचिद्भ्रान्तिः स्यात्, अतस्तन्निराकर्त्तुमाह-- "धातुशब्दः" इत्यादि। लघ्वर्थं हि संज्ञाकरणमिच्छन्त्याचार्या इत्येकाक्षरायां संज्ञायां कत्र्तव्यायां महत्याः पूर्वाचार्यसंज्ञाया यदाश्रयणं तस्यैतत्प्रयोजनम्--यथाविधानां ते धातुसंज्ञां कृतवन्तः, तथाविधानमेवैषा संज्ञा यथा स्यादिति। ते च क्रियावचनानामेव धातुसंज्ञां विहितवन्तः। तदिहापि पूर्वाचार्यसंज्ञाश्रयणात् क्रियावचनानामेव धातुसंज्ञा विधीयते। तेन या-वा-दिव इत्येवमादीनां धातुसमानशब्दानामक्रियावचनानान्न भवतीति भावः। ननु च भूरादिर्येषामिति बहुव्रीहौ कृते, आदिशब्दे परतो यदि संहितया निर्देशः, तदा "इको यणचि" ६।१।७४ इति यणादेशे कृते "भ्वादयः" इति भवितव्यम्, अथासंहितया निर्देशस्तदा भू आदय इति, तत्कुतोऽयं वकारो यस्मिन् सति भूवादय इति निर्देशो भवतीत्यत आह-- "भवादीनाम्" इत्यादि। भूवादीनां संज्ञिनां निर्देशेऽयं वकारो मङ्गलार्थः प्रयुज्यते। मङ्गलमर्थः प्रयोजनं यस्य स तथोक्तः। स मङ्गलशब्दो धर्मपर्यायः, धर्मार्थ इति यावत्। यथा वेदे "त्रियम्बकं यजामहे" इत्यत्र यकारस्य दृष्टप्रयोजनं नास्त्रीत्यदृष्टार्थो धर्मार्थ एव पाठस्तस्य, तथेहापि वकास्य। अथ वा-- अपूर्वस्य वस्तुनो लाभो लोके मङ्गलं सम्मतम्, यथा प्रातर्दध्यादीनाम्; तथेहापि वकारस्यापूर्वस्यलाभो मङ्गलं प्रशस्तम्। प्रशस्तार्थो मङ्गलशब्दः। तथा चोक्तम्- "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च" (म।भा। १।१।१) इति। इह चादौ वृद्धिशब्दो मङ्गलम्, मध्ये चायं वकारः, अन्ते च "स्वरिदतोयम्" ८।४।६६ इत्युदयशब्दः। "भुवो वार्थम्" इत्यादि। अथ वा-- भूवादय इत्यत्र निर्देशे नायमादिशब्द्स प्रयोगः, नापि मङ्गलार्थस्य वकारस्य किं तर्हि? वादिशब्दस्यौणादिकस्य। वदन्तीति वादयः,वाचका इत्यर्थः। वदेर्धातोः "वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्" (द।उ। १।५३) इति कर्तरीञ्()प्रत्ययः। यद्यपि वादीति सूत्रण्यन्तस्योपदानाम्, तथापि बहुलवचनादण्यन्तादपि भवति।"भ्वर्थाः" इति। तेषां वदीनामिदं विशेषणम्,भवनं भूः, सम्पदादित्वाद्()भावे क्विप्। भवतेरर्थः क्रियासामान्यम्। भूरर्थो येषां ते भ्वर्थाः।कस्मात् पुनस्ते भ्वर्थाः? "भुवो वार्थं

वदन्ति" इति। इतिकरणो हेतौ-- यस्माद्भुवो धातोरर्थ वदन्त्यभिदधति तस्मात् ते भ्वर्थाः। एवं विधा वादयो वाचकाः शब्दा भूवादयो धातुसंज्ञा भवन्तीत्युक्तं इतीह सूत्रे संज्ञिनः स्मृताः =अभिमताः, अभिप्रेता इत्यर्थः। तदेवं क्रियावचनाः शब्दा भूवादयो धातुंसज्ञा भवन्तीत्युक्तं भवति।तेन याव-वा- दिव प्रभृतीनां धातुसमानशब्दानां क्रियावचनानां धातुसंज्ञा न भवति। गणपाठसामथ्र्यात् पाठोऽप्यङ्गीक्रियते। तेनाणपयतीत्येवमादीनां क्रियावचनानामपि धातुसंज्ञा न भवतकीत्युक्तंभवति। अस्मिन् व्याख्याने भूवादय इति षष्ठीसमासो वेदितव्यः-- भुवोवादयो भूवादय इति। अथ वा-- आदिशब्दस्यैवात्र "वा गतिगन्धनयोः"(धा।पा।१०५०)इत्यस्मात् परस्य प्रयोगः। वा आदिः येषां ते वादयः। आदिशब्दः प्रकारवाची, वाप्रकारा इत्यर्थः। प्रकारस्तु सादृश्यम्, तत्पुनः क्रियात्मकतया, यदाह-- "भ्वर्थाः" इति। भ्वर्थता तु भुवोऽर्थं वदतीति हेतोः। एवं विधा वाप्रकारकाः शब्दा इह सूत्रे संज्ञिनः स्मृता।तदनेन प्रकारेण क्रियावचनानामेव भूवादीनां धातुसंज्ञा भवतीत्युक्तम्। तेन धातुसमानशब्दानां या-वा-दिव-प्रभुतीनां धातुसंज्ञा न भवति। न हि ते क्रियावचनाः; निष्पन्नवस्त्वभिधायित्वात्। साध्यमानस्वरूपा हि क्रिया निरवयवा क्वचित् पूर्वापरीभूतावयवाऽनिष्पन्नवस्तुस्वभावा। गणपाठस्तु पूर्ववदेवाङ्गीक्रियते। तेनाणपयतीत्येवमादीनां शब्दानां धातुसंज्ञा न भवतीति। अस्मिन्नपि व्याख्यानं "भूवादयः" इति षष्ठीसमासोऽयम्। षष्ठी च वाच्यवाचकसम्नबधलक्षणा वेदितव्या॥

बाल-मनोरमा

भूवादयो धातवः २०, १।३।१

भूवादयो धातवः। भूश्च वाश्च भूवौ। आदिश्च आदी। प्रथम आदिशब्दः प्रभृतिवचनः, द्वितीयस्तु प्रकारवचनः। भूवौ आदी येषां ते भूवादयः। भूप्रभृतयो वासदृशाश्च ये, ते धातुसंज्ञका इत्यर्थः। वाधातुसादृश्यं च क्रियावाचकत्वेन। तदाह-- क्रियावाचिन #इत्यादिना। क्रियावाचिनः किम्?। धातुपाठे या इत्यस्य पाठात् याः पश्यन्तीत्यत्र टाबन्तयच्छब्दस्य धातुत्वं मा भूत्। धातुत्वे हि "आतो धातोः" इत्याल्लोपः स्यात्। वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया टाबन्तयच्छब्दस्याऽत्र न ग्रहणप्रसक्तिः। "क्रियावाचिन" इति तु वाशब्दस्य विकल्पार्थस्य निपातस्य धातुत्वनिवृत्त्यर्थम्, धातुपाठे वा इत्यस्य पाठात्। "वां गतिगन्धनयोः" "या प्रापणे" इत्यर्थनिर्देशस्याधुनिकत्वात्। "क्रियावाचिन" इत्युक्तौ तु न दोषः। वार्थस्य विकल्पस्य, "वा भविष्यति" इति "वा अभव"दित्येवं भूतभविष्यत्कालसंबन्धाऽभावेन क्रियात्वाऽभावादिति शब्देन्दुशेखरे स्थितम्। भ्यादयः किम्?। वर्जनक्रियावाचिनो हिरुगित्यस्य धातुत्वं मा भूत्।

तत्त्व-बोधिनी

भूवादयो धातवः १९, १।३।१

भूवादय इति। भूश्च वाश्च भूवाविति द्वन्द्वः , आदिशब्दयोव्र्यवस्थाप्रकारवाचिनोरेकशेषः। आदिश्च आदिश्च आदी, भूवौ आदी येषामिति विग्रहः। भूप्रभृतयो वासदृशाः। सादृश्यं च क्रियावाचित्वेनेत्यभिप्रेत्याह-क्रियावाचिन इति। क्रियावाचिन इति किम्?,"याः पश्यसी"त्यादौ धातुत्वं मा भूत्। सति हि तस्मिन् "अतो धातो"रित्याकारलोपः स्यादिति स्थितं मनोरमायाम्। भ्वादयः किम्?" "हिरुक्" "पृथग्" इत्याद्यव्ययानां "शिश्ये" इति भावार्थतिङन्तस्य च मा भूत्। स्तन्भ्वादीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते। चुलुम्पादीनां "बहुलमेतन्निदर्शन"मिति गणसूत्रेण सङ्ग्रहः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपदेशे ७।१ अच् १।१ अनुनासिकः १।१ इत् १।१ ८

अर्थः॥

उपदेशे यः अनुनासिकः अच्, तस्य इत्संज्ञा भवति॥

उदाहरणम्॥

पठँ=पठति, वदँ=वदति, एधँ=एधते, सुँ॥
काशिका-वृत्तिः
उपदेशे ऽजनुनासिक इत् १।३।२

उपदिश्यते ऽनेन इत्युपदेशः शास्त्रवाक्यानि, सूत्रपाठः, खिलपाठश्च। तत्र यो ऽचनुनासिकः स इत्संज्ञो भवति। एध। स्पर्ध। प्रतिज्ञानुनासिक्याः पाणिनीयाः। उपदेशे इति किम्? अभ्र आं अपः। अचिति किम्? अतो मनिन्क्वनिब्वनिपश्च ३।२।७४। अनुनासिकः इति किम्? सर्वस्य अचो मा भूत्। इत्प्रदेशाः आदितश्च ७।२।१६ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
उपदेशेऽजनुनासिक इत् २८, १।३।२

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः। लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा॥
न्यासः
उपदेशेऽजनुनासिक इत्। , १।३।२

"उपदिश्यतेऽनेनेत्युपदेशः" इति। "अकर्तरि च कारके संज्ञायाम्" ३।३।१९ इति करणे घञ् ननु च संज्ञायामित्युच्यते, न चेयं संज्ञा? नैतदस्ति; "कृत्यल्युटो बहुलम्" ३।३।११३ इति बहुलवचनादसंज्ञायामपि भवतीत्यदोषः। "शास्त्रवक्यानि" इति। अस्येदं विवरणम्-- "सूत्रपाठः, खिलपाठश्च" इति। खिलपाठः = धातुपाठः। चकारात् प्रातिपदिकपाठश्च। अथ रगेलगेप्रभृतीनां कथमानुनासिक्यम्; न हि तेषामानुनासिक्यं गणे पठ()ते? अथापरिपठितानामपि भवति, तदा "भू" इत्येवमादीनां कस्मान्न भवतीत्याह--- "प्रतिज्ञाननासिक्याः पाणिनीयाः" इत्यादि। प्रतिज्ञयाऽऽनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः। यत्रैवानुनासिक्यं पाणिनीयाः प्रतिजानते, तत्रैव तदपठ()मानमपि भवति, नान्यत्र। एतदपि प्रतिज्ञानं नानियमेन भवति, किं तर्हि? यत्रैवाचार्याः स्मरन्ति तत्रैव तेन भवितवयम्, यथा स्वरितत्वमनुदात्तत्वञ्च स्मरणेन विज्ञायते, तथाऽऽनुनासिक्यमपि। यदि तह्रानुनासिक्यं प्रतिज्ञामात्रभावि तत् किमर्थं तत् क्वचित् पठ()ते-- "डुपचँष् पाके " (धा।पा।९९६) इत्यादौ? एवंविधोऽर्थोऽनुनासिकः प्रतिज्ञेय इत्यर्थस्य प्रदर्शनार्थम्। "अभ्र आँ अपः" इति। अत्रोपपदेशात्तूत्तरकालम् "आङोऽनुनासकिश्छन्दसि" ६।१।१२२ इत्यनेनानुनासिको विहितः, तेनेत्संज्ञा न भवति। ननु चानुनासिकविधानसामथ्र्यादेव न भविष्यति, तत् किमुपदेशग्रहणेन? इत्संज्ञायां हि सत्यां "तस्य लोपः" १।३।९ इति लोपः स्यात्, ततश्चानुनासिकविधानमनर्थकं स्यात्, सत्यमेतत्; एवं मन्यते-- उत्तरार्थमवश्यमुपदेशग्रहणं कत्र्तव्यम्। उत्तरार्थं क्रियमाणमिहापि विस्पष्टार्थं भविष्यति। अथ वा-- प्रत्युदाहरणदिगियं वृत्तिकृता दर्शिता। इदन्त्वत्र प्रत्युदाहरणम्-- "अणोऽप्रगृह्रस्यानुनासिकः" ८।४।५६, दधिं ब्राआह्मणकुलम्। यद्यत्रेत्संज्ञा स्यात् "इदितो नुम् धातोः" ७।१।५८ इति नुम् स्यात्। ननु च धातोरित्युच्यमाने धातोर्नुम् विधीयते, नचायं धातुः, किं तर्हि? प्रातिपदिकम्,तत्कथं नुम् स्यात्? नैतदस्ति; "क्विबन्ता धातुत्वं न जहति" (व्या।प।१३२) इति क्विबन्तत्वाद्धातुत्वं भवति। आत्मनो दधीच्छति "सुप आत्मनः क्यच्" ३।१।८ दधीयति, दधीयतेः क्विप्; दधिं ब्राआह्मणकुलमिति। "अतो लोपः" ६।४।४८

इत्यकारलोपः। "लोपो व्योर्वलि" ६।१।६४ इत्यत्रादौ लोपग्रहणात् पूर्वं यकारस्य लोपो भवति। "वेरपृक्तस्य" ६।१।६५ इति वकारस्य। प्रत्ययलोपलक्षणेन "अकृतसार्वधातुकयोः" ७।४।२५ इति दीर्घः। "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्रस्वत्वम्। "अणोऽप्रगृह्यस्यानुनासिकः"८।४।५६ इत्यनुनासिके कृते "क्वबन्ता धातुत्वं न जहति" (व्या।प।१३२) इति नुम् स्यात्। अश्मा,भस्मेति "आतो मनिन्" ३।२।७४ इत्यत्र मकारस्येत्संज्ञा न भवति। यदि हि स्यात्, "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति हलन्तेभ्यो विधीयमानो मनिन्नचोऽन्त्यात् परः स्यात्। "सर्वस्याचो मा भूत्" इति। दरिद्राप्रभृतिसम्बन्धिनोऽपि॥

बाल-मनोरमा

उपदेशेऽजनुनासिक इत् ५, १।३।२

लण्सूत्रे अकारश्चेति प्रतिज्ञातम्। तस्य अकारस्य अनन्त्यत्वादहल्त्वाच्च हलन्त्यमिति इत्संज्ञायामप्राप्तायां तत्प्रापकं सूत्रमाह--उपदेशे। संज्ञाप्रस्तावात्संज्ञेति। लभ्यते। तदाह--उपदेशे अनुनासिक इत्यादिना। सूत्रे अजिति कुत्वाऽभाव आर्षः। "अजित्संज्ञः स्या"दिति विवरणे कुत्वाभावोऽसन्देहार्थः। ननु मुखेन नासिकया चोच्चार्यमाणो वर्णोऽनुनासिक इत्यनुपदमेव वक्ष्यते। शास्त्रकृता च एते कतिपयवर्णास्तथोच्चारिताः, इतरे तु केवलं मुखेन उच्चारिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह--प्रतिज्ञानुनासिक्याः पाणिनीया इति। प्रतिज्ञायते अभ्युपगम्यत इति प्रतिज्ञा। नित्यस्त्रीलिङ्गोऽयम्। स्त्रियामित्याधिकारे "आतश्चोपसर्गे" इकति कर्मण्यङ्()। अनुनासिकस्या भावः आनुनासिक्यम्। प्रतिज्ञा आनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः पाणिनिशिष्या इत्यर्थः। शिष्यपरंपरया शास्त्रकृतां तथाविधमुच्चारणमिदनींन्तनानां सुगममिति यावत्। तदेवं लण्सूत्रे अकारस्य अनुनासिकत्वादित्संज्ञा सिद्धा। ततः किमित्यत आह--लण्सूत्रस्थेति। लण्सूत्रे तिष्ठतीति लण्सूत्रस्थः, स चासाववर्णश्च लण्सूत्रस्थावर्णः, तेन सहोच्चार्यमाणो रेफो र इत्येवंरूपो रेफलकारयोः संज्ञेत्यर्थः। वस्तुतस्तु रप्रत्याहार एव नास्तीति शब्देन्दुशेखरे व्यक्तम्। ननु आदिरन्त्येनेति सूत्रे मध्यगानामादेश्च संज्ञेति स्थितम्। एवंच अजादिप्रत्याहारेषु संज्ञाकोटिप्रविष्टानामन्त्यानामितां ग्रहणाऽभावेऽपि णकारादीनामपि मध्यगत्वाऽविशेषाद्ग्रहणं स्यात्। ततश्च रलयोः संज्ञेति पूर्वग्रन्थे रलयोरिति न्यूनं, टकारस्यापि मध्यगत्वेन ग्राह्यत्वादित्यत आह--प्रत्याहारेष्वितां न ग्रहणमिति। प्रत्याहारेषु=अजादिसंज्ञासु मध्यवर्तिनामपि इतां न ग्रहणमित्यर्थः। कुत इत्यत आह--अनुनासिक इत्यादिनिर्देशादिति। आदिना "तृषिमृषिकृषेः काश्यपस्य" इत्यादिसंग्रहः। कथमयं निर्देश उक्तार्थे हेतुरित्यत आह--न हीति। अत्र अनुनासिकशब्दे ककारे परे इकारस्य अच्प्रयुक्तं कार्यम् "इको यणची"ति यणादेशो न दृश्यते हीति योजना। यदि हि अजादिप्रत्याहारेषु इतामपि ग्रहणं स्यात्तर्हि अच्()प्रत्याहारे ॠलृक्? इति ककारस्यापि प्रविष्टत्वेन?च्त्वात्तस्मिन् परे इकारस्य "इको यणचि" इति यणादेशे "लोपो व्योर्वलि" इति लोपे "अनुनास्क" इति स्यात्। इकारो न श्रूयते। श्रूयते च। अतः प्रत्याहारेष्वितां न ग्रहणमिति विज्ञायत इति भावः। यत्तु ॠलृगिति ककारस्य अच्()प्रत्याहारप्रविष्यत्वेऽपि "प्रत्ययस्थात्" इत्यादिना इत्वविधिसामथ्र्यादेव यण् लोपश्च न भवति। अन्यथा लाघवाल्लोपमेव विदध्यात्। अतः प्रत्याहारेष्वितां न ग्रहणमित्यत्र अनुनासिक इत्यादिनिर्देशो न लिङ्गमित्याहुः। तन्न, "प्रत्ययस्थात्कात्()पूर्वस्यातो लोप आप्यसुपः" इति लोपविधौ वर्णादिक्यप्रसङ्गात्। प्रत्याहारशब्दस्याऽप्रसिद्धार्थत्वादाह--आदिरन्त्येनेत्यादिना। प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा इति व्युत्पत्तेरिति भावः। नच अणुदित्सूत्रसिद्धासु ऐउ इत्यादिसंज्ञास्वतिप्रसङ्गः शङ्क्यः, योगरूढ()आश्रयणात्। वैयाकरणप्रसिद्धिवशाच्च तथा रूढिरिति भावः। तत्र वर्णसमाम्नायसूत्रेषु पूर्वेण णकारेण एकः प्रत्याहारः-अण्। ककारेण त्रयः-अक् इक् उक्। ङकारेण एकः-एङ्()। चकारेण चत्वारः-अच् इच् एच् ऐच्। टकारेण एकः-अट्। परेण णकारेण त्रयः-अण् इण् यण्। मकारेण चत्वारः-अम् यम् ञम् ङम्। ञकारेण एकः-यञ्। षकारेण द्वौ-झष् भष्। शकारेण षट्-अश् हश् वश् झश् जश् बश्। वकारेण एकः-छव्। यकारेण पञ्च-यय् मय झय् खय् चय्। रेफेण पञ्च-यर् झर् खर् चर् शर्। लकारेण षट्-अल् हल् वल् रल् झल्

शल्। अकारेण एको रप्रत्याहारः इति वार्णसमाम्नायिकाः प्रत्याहाराश्चतुश्चत्वारिंशत्, एतेषामेव शास्त्रे उपयोगात्। इङित्यादिप्रत्याहारास्तु प्रयोजनाऽभावान्न भवन्ति, शास्त्रे तद्व्यवहाराऽभावात्। अत्राऽस्मदीया सङ्ग्रहकारिका--

"स्यादेको ङञणवटैः, षेण द्वौ, त्रय इह कणाभ्याम्।

चत्वारश्च चमाभ्यां, पञ्च यराभ्यां, शलाभ्यां षट्॥"

तत्त्व-बोधिनी
उपदेशेऽजनुनासिक इत् ७, १।३।२

उपदेशेऽजनु। उपदेशनमुपदेशः। भावे घञ्। उपदेशे किंम्()। अभ्र आँ अपः। सप्तम्यर्थद्योतकोऽत्राङ्। "आङोऽनुनासिकश्छन्दसि" इत्याकारोऽनुनासिकः। यद्यपीह "उञ् ॐ" इत्यत्रेवानुनासिकविधानसामर्थ्यान्नेत्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कत्र्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। अच् किम्?। मनिनो मकारस्य मा भूत्। नच "हलन्त्यम्" इत्यन्त्यग्रहणसामर्थ्यादनन्त्यस्य मकारस्य न भवेदिति वाच्यम्, आलच्-त्राप्रत्ययादावतिप्रसङ्गवारणेन तस्य चरितार्थत्वात्। अनुनासिक इति किम्?। "ईक्ष दर्शने"। ईक्षितः। सत्यां हीत्संज्ञायां "()आआदितो निष्ठायाम्" इतीण् न स्यात्। यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वादनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम्। नचैवं "यरोऽनुनासिके-" इत्यत्र यरः पदान्तस्यानुनासिकशब्दे परेऽनुनासिकशब्दः स्यादित्यर्थः प्रसज्येत, "स्वं रूपम्-" इति परिभाषाया अनुपस्थितिकल्पबनात्सूत्रमतेऽपि दोषाऽभावात्। ननूक्तनिर्देशाश्रयमे प्रतिपत्तिगौरवमिति चेत्, अतएव "निष्प्रयोजन" मित्यनुक्त्वा "मन्दप्रयोजन"मित्युक्तम्। प्रतिज्ञेति। प्रतिज्ञायत इति प्रतिज्ञा। "आतश्चोपसर्गे" इति कर्मण्यङ्। अनुनासिकस्य भाव आनुनासिक्यम्। "गुणवचनब्राआह्मणादिभ्यः-" इति ष्यञ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। केचित्तु-प्रतिज्ञानं प्रतिज्ञा, सा अस्यास्तीति प्रतिज्ञम्। अर्शाअद्यच्। प्रतिज्ञमानुनासिक्यमेषामिति विगृह्णन्ति। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक्स्थित इत्यनुमीयत इति भावः।

पाणिनीया इति। पाणिनीया प्रोक्तं पाणिनीयम्। "वृद्धाच्छः"। तदधीयते विदन्ति वा पाणिनीयाः। "तदधीते-" इत्यणः "प्रोक्ताल्लुक्" इति लुक्।

ननु रलयोरिति न्यूनं, टकारस्यापि मध्यगत्वादत आह-प्रत्याहारेष्विति। अनुनासिक इत्यादीति। आदिशब्देन "पापाणके कुत्सितैः", "एङः पदान्तादति" इत्यादि ग्राह्ऽम्। प्रत्याहारशब्देनेति। प्रत्याह्रियन्ते सङ्क्षिप्यन्ते वर्णा यत्रेति प्रत्याहारः। "करणाधिकरणयोश्च" इति ल्युटि प्राप्ते "कृत्यल्युटो बहुल"मिति बहुलग्रहणादधिकरणे घञ्। यद्युपि योगमात्रमकारादिसंज्ञास्वतिप्रसक्तन्तथापि योगरूढिरिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हल् १।१ ४ अन्त्यम् १।१ ४ उपदेशे ७।१ २ इत् १।१ २

समासः॥

हस्य ल् हल्, षष्ठीतत्पुरुषः॥ हल् च हल् च=हल् सरूपाणाम् इति अनेन (१।२।६४) एकशेषः जातिविवक्षायाम् एकवचनं च, अनया रीत्या हल् प्रत्याहारः निष्पद्यते॥

अर्थः॥

अन्ते भवम् अन्त्यं, दिगादित्वात् (४।३।५४) यत् प्रत्ययः॥
उपदेशे अन्त्यं हल् इत्संज्ञकं भवति॥

उदाहरणम्॥

अइउण् इति ण-कारस्य। ऋऌक् इति क-कारस्य॥
काशिका-वृत्तिः
हलन्त्यम् १।३।३

उपदेशे इति वर्त्ते। अन्ते भवम् अन्त्यम्। धात्वादेः समुदायस्य यदन्त्यम् हल्, तदित्संज्ञं भवति। ऐउण् णकारः। ऋऌक् ककारः। एओङ् ङकरः। ऐऔच् चकारः। उपदेशे इत्येव। अग्निचित्। सोमसुत्। हस्य ल् हलिति द्वितीयम् अत्र हल्ग्रहणं तन्त्रेण उपात्तं द्रष्टव्यम्। तेन प्रत्याहारपाठे हलित्यत्र लकारस्य इत्संज्ञा क्रियते। तथा च सति हलन्त्यम् इत्यत्र प्रत्याहारे न इतरेतराश्रयदोषो भवति।
लघु-सिद्धान्त-कौमुदी
हलन्त्यम् १, १।३।३

उपदेशेऽन्त्यं हलित्स्यात्। उपदेश आद्योच्चारणम्। सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र॥
न्यासः
हलन्त्यम्। , १।३।३

"अन्ते भवमन्त्यम्" इति। दिगादित्वाद्यत्। अन्तशब्दोऽयं समाप्तौ वत्र्तते। यथा-- एतदन्तं वनमिति। येन च समाप्यते समुदायः सोऽन्तः। तरान्ते = समाप्तौ भवमन्त्यम्। हलिति हल्शब्दस्योभयलिङ्गत्वादन्त्यमिति नपुंसकेन निर्देशः। "धात्वादेः" इत्यादि। आदिशब्देन सूत्रप्रातिपदिकप्रत्ययागमादेशानां ग्रहणम्। तत्र धातोः -- "डुकृञ्" (धा।पा।१४७२) इति ञकारः; सूत्रस्य-- "ऐउण्" (मा।सू।१) इति णकारः; प्रातिपदिकस्य - "नवट्" इति टकारः; नदडिति पचादिषु पठ()ते। प्रत्ययस्य-- "गुप्तिज्किद्भ्यः सन्" ३।१।५ इति नकारः; आगमस्य "त्रपुजतुनोः षुक्" ४।३।१३६ इति ककारः; आदेशस्य च -- "चक्षिङः ख्याञ्" २।४।५४ इति ञकारः। "अग्निचित्, सोमसुत्" इति। चिनोतेः सुनोतेश्चा()ग्न चितवान् सोमं सुतवानिति क्विप्, तुक्। ननु च हलिति प्रत्याहारपाठे योऽन्त्यो लकारस्तस्येत्संज्ञा न प्राप्नोति; इतरेतराश्रयत्वात्। तथा हि-- इत्संज्ञायाम् "आदिरन्त्येन सहेता" १।१।७० इति हलिति प्रत्याहारग्रहणं भवति। त()स्मश्च तस्य लकारस्य हलन्त्यमितीत्संज्ञा। तदिदमितरेतराश्रयत्वं स्फुटतरमेव। "इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्प्यन्ते" (व्या।प।२८) इत्यत आह-- "हस्य ल् हल्" इत्यादि। यदेकमावृत्तिभेदमन्तरेणाप्यनेकेषामुपकारं करोति तत् तन्त्रम्। यथा-- प्रदीपः सुप्रज्वलितो बहूनां छात्राणामुपकारं करोति। इह तु प्रयत्नविशेषस्तन्त्रशब्देन विवक्षितः। तेन तन्त्रेण द्वितीयमत्र हल्ग्रहणमुपात्तं परिगृहीतं वेदितव्यम्। यथा ()ओतो धावतीत्येकेन प्रयत्नेन द्वे वाक्ये उच्चारिते भवतः, तथेहाप्येकेनैव प्रयत्नेन द्वौ हल्शब्दावुच्चारितावित्यभिप्रायः। हस्य ल् हलिति समीपिसामीप्यसम्बन्धे षष्ठी। "तेन" इत्यादि। यतस्तन्त्रेण न्यायेन द्वितीयं हल्ग्रहणं कृतम्, तेन प्रत्याहारपाठे हलित्यस्य लकारस्य हकारसमीपवर्तिनः साक्षादेव

संज्ञित्वेनोपात्तस्येत्संज्ञा क्रियते, न तु प्रत्याहारसमाश्रयणेन। एवञ्च सति "हलन्त्यम्" ३|३|३ इत्यत्र प्रत्याहारपाठे इतरेतराश्रयद#ओषो न भवति।

बाल-मनोरमा

हलन्त्यम् २, १।३।३

एकपदं सूत्रम्। हलि अन्त्यं हलन्त्यमिति विग्रहः। शौण्डादेराकृतिगणत्वात् "सप्तमी शौण्डैः" इति सप्तमीसमासः, सुप्सुपेति समासो वा। हल्पदमिह सूत्रपरम्। "उपदेशेऽजनुनासिक इत्()" इति पूर्वसूत्रादिदित्यनुवर्तते। तदाह--हलिति सूत्र इत्यादिना। इत्स्यादिति। इत्संज्ञकः स्यादित्यर्थः, संज्ञाप्रस्तावात्। एवं च अनेन सूत्रेण हल्सूत्रे लकारस्य हल्संज्ञामनुपजीव्यैव इत्संज्ञा सिद्धेति नान्योन्याश्रय इति भावः।

बाल-मनोरमा

हलन्त्यम्(बि) ४, १।३।३

ततः किमित्यत आह--हलन्त्यम्। आवृत्तयोर्द्वितीयं सूत्रमेतत्। हल् अन्त्यमितिच्छेदः। हल्शब्दो नपुंसकलिङ्गोऽप्यस्ति, अन्त्यमिति नपुंसकसामानाधिकरण्यात्। "उपदेशेऽजनुनासिक इ"दिति पूर्वसूत्रादुपदेश इति" इदिति चानुवर्तते। तदाह--उपदेशेऽन्त्यमित्यादिना। धातुप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशागमानामन्त्यमिति भाष्यम्। अथ कोऽयमुपदेशो नाम()" तत्राह--उपदेश आद्योच्चारणमिति। उपशब्द आद्यर्थकः। दिशिरुच्चारणक्रियायाम्। भावे घञिति भावः। एतच्च "आदेच उपदेशे" इत्यादासूत्रे भाष्ये स्पष्टम्। धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः॥

--इति प्राचीनकारिका तु प्रौढमनोरमायां बहुधा दूषिता। उपदेशे किम्-"इदमस्थमुः" इति थमुप्रत्यये उकारस्योच्चारणार्थस्य निवृत्तौ मकारस्य प्रत्ययान्तत्वेऽपि इत्संज्ञा मा भूत्। तदेवं हलन्त्यमिति आवृत्तद्वितीयसूत्रेण चतुर्दशसूत्र्यामन्त्यणकारादिवर्णानामित्संज्ञा सिद्धेति स्थितम्। ततः किमित्यत आह-ततोऽण्? अजित्यादिसंज्ञासिद्धाविति। ततः णकारादिनामित्संज्ञासिद्ध्यनन्तरमादिरन्त्येनेत्यणादिसंज्ञा सिद्धेत्यर्थः।

तत्त्व-बोधिनी

हलन्त्यम् ४, १।३।३

अन्तेऽवसाने भवमन्त्यम्। दिगादित्वाद्यत्। "उपदेशेऽजनुनासिक इत्" इत्यत "उपदेशे" इति, "इ"दिति चाऽत्रानुवर्तते। "आदिरन्त्येन-" इति सूत्रेण सहाऽन्योन्याश्रयमाशङ्क्य आवृत्त्या तं परिहरति-हलिति सूत्रेऽन्त्यमिति। हलि अन्त्यमिति विग्रहे "सप्तमी" इति योगविभागात् सुप्सुपा" इति वा समास इति भावः। यद्वा षष्ठीतत्पुरुषोऽयं, "हलिति सूत्रस्यान्त्यमित्स्यात् " इति व्याख्यानसम्भवात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० विभक्तौ ७।१ तुस्माः १।३ हल् १।१ ३ अन्त्यम् १।१ ३ उपदेशे ७।१ २ इत् १।१ २

समासः॥

तुश्च सश्च मश्च तुस्माः, इतरेतरद्वन्द्वः।

अर्थः॥

विभक्तौ वर्तमानानां तवर्ग-सकार-मकाराणाम् इत्संज्ञा न भवति। पूर्वेण अन्त्यं हल् इत्संज्ञकं प्राप्तम्, अनेन प्रतिषिध्यते॥

उदाहरणम्॥

रामात् वृक्षात् इति तकारस्य। सकारः -- जस्, शस्, भिस्, ङस्, ओस्। मकारः -- अम्, आम्॥
काशिका-वृत्तिः
न विभक्तौ तुस्माः १।३।४

पूर्वेण प्राप्तायमित्संज्ञायां विभाक्तौ वर्तमानानां तवर्गसकारमकरणां प्रतिषेध उच्यते। तवर्गः, टाङसिङसाम् इनाऽत्स्याः ७।१।१२ वृक्षात्, प्लक्षात्। सकारः, जस् ब्राह्मणाः। तस् पचतः। थस् पचथः। मकारः उपचत्ताम्, अपचतम्। बिभक्तौ इति किम्? अचो यत् ३।१।९७, ऊर्णाया युस् ५।२।१२२, रुधादिभ्यः श्नम् ३।१।७८। किमो ऽत् ५।३।१२, इटो ऽत् ३।४।१०६ इत्यत्र प्रतिषेधो न भ्वति , अनित्यत्वाऽदस्य प्रतिषेधस्य। इदमस् थमुः ५।३।२४ इत्युकारानुबन्धनिर्देशादनित्यत्वम् उपलक्ष्यते।
लघु-सिद्धान्त-कौमुदी
न विभक्तौ तुस्माः १३१, १।३।४

विभक्तिस्थास्तवर्गसमा नेतः। इति सस्य नेत्त्वम्। रामाः॥
न्यासः
न विभक्तौ तुस्माः। , १।३।४

"वृक्षात्" इत्यत्र तकारस्येत्संज्ञायां सत्याम् "तित्स्वसितम्" (६।१।१७९ इति स्वरितत्वं स्यात्।"अपचतात्, अपचतम्" इति। पचेर्लङ्, "तस्तथस्थमिपां तान्तन्तामः" ३।४।१०१ इति तान्तमादेशौ भवतः। "किमोऽत्" ५।३।१२ इत्यत्राच्छब्दस्य "प्राग् दिशो विभक्तिः" ५।३।१ इत्यस्य मकारस्येत्संज्ञापरित्राणार्थादुकारानुबन्धाद्वि ज्ञायते। नित्यत्वे हि सत्येतस्मादेव प्रतिषेधान्मकारस्येत्संज्ञा न भविष्यतीत्युकारानुबन्धग्रहणमनर्थकं स्यात्।
बाल-मनोरमा
न विभक्तौ तुस्माः १८९, १।३।४

अथ जसः सकारस्य "हलन्त्यम्"मितीत्संज्ञायां लोपमाशङ्क्याह--न विभक्तौ। तु स् म एतेषां द्वन्द्वः। "इत" इत्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। तदाह--विभक्तिस्था इत्यादिना।

तत्त्व-बोधिनी
न विभक्तौ तुस्माः १५८, १।३।४

न विभक्तौ। "हलन्त्य"मितीत्संज्ञाप्राप्तौ निषेधारम्भः। "तु" इत्यस्योदाहरणं रामात्, पचेरन्। मकारस्य तु--रामम्, अद्राक्षम्। विभक्तौ किम्?। "अचो यत्" ऊर्णायां युस्", "रुधादिभ्यः श्नम्"। एतेष्वन्त्यस्येत्संज्ञा यथा स्यात्। "इदमस्थमु"रित्यत्र मकारपरित्राणार्थमुकारानुबन्धासञ्जनादनित्योऽयमिति ज्ञायते। अन्यथा "प्राग्दिशो विभक्ति"-रिति

थमो विभक्तित्वाद्दानीमो मकारस्येवानेनैव सूत्रेणेत्वनिषेधसिद्धेः किं तेनेति। तेन "किमोऽत्" क्वेति सिद्धम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आदिः १।१ ८ ञि-टु-डवः १।३ उपदेशे ७।१ २ इत् १।१ २

अर्थः॥

उपदेशे आदौ वर्तमानानां ञि, टु, डु इत्येतेषाम् इत्संज्ञा भवति

उदाहरणम्॥

ञिमिदा=मिन्नः। ञिधृषा=धृष्टः। ञिक्ष्विदा=क्ष्विण्णः। ञिइन्धी=इन्धः। टुदेपृ=वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
टुओश्वि=श्वयथुः। डुपचष्=पक्त्रिमम्। डुवप्=उप्त्रिमम्। डुकृञ्=कृत्रिमम्।
काशिका-वृत्तिः
आदिर् ञिटुडवः १।३।५

इतिति वर्तते। आदिशब्दः प्रतेकम् अभिसम्बध्यते। ञिटुडु इत्येतेषां समुदयानाम् आदितो वर्तमानानाम् इत्य् संज्ञा भवति। ञि, ञिमिदा मिन्नः। ञिधृषा धृष्टः। ञिक्ष्विदा क्ष्विण्णः। ञीन्धी इद्धः। टु, टुवेपृ वेपथुः। टुओश्वि श्वयथौः। डु, डुपचष् पक्त्रिमम्। डुवप् उप्त्रिमम्। डुकृञ् कृत्रिमम्। आदिः इति किम्? प्टूयति। क्ण्डूयति। उपदेषे इत्येव ञिकारीयति।
लघु-सिद्धान्त-कौमुदी
आदिर्ञिटुडवः ४६४, १।३।५

उपदेशे धातोराद्या एते इतः स्युः॥
न्यासः
आदिर्ञिटुडवः। , १।३।५

अत्र टुग्रहणेन "अणुदित्सवर्णस्य चाप्रत्ययः" (१।१।६९) इति टवर्गस्य ग्रहणं कस्मान्न भवति?
उकार्सयानुनासिकत्वाप्रतिज्ञानात्, "चुटू" १।३।७ इत्यत्र टुग्रहणाच्च। यद्यत्र टवर्गस्य ग्रहणं स्यात्, तदानेनैव प्रत्ययादेरपि सिद्धत्वात् टुग्रहणमनर्थकं स्यात्। "मिन्नः" इति। "ञीतः क्तः" ३।२।१८७ , "आदितश्च" ७।२।१६ इतीट्प्रतिषेधः।
"वेपथुः"इति। "ट्वितोऽथुच"३।३।८९। "पक्त्रिमम्" इति। "ड्()वितः क्त्रिः" ३।३।८८। पाकेन निवृत्तम्, "क्त्रेर्मम् नित्यम्" ४।४।२० इति मप्। "उप्त्रिमम्" इति। वच्यादिसूत्रेण ६।१।१५ सम्प्रासारणम्। "पटूयति" इति। "सुप आत्मनः क्यच्" ३।१।८, "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। "कण्डूयति" इति। "कण्()ड्वादिभ्यो यक्" ३।१।२७। कथं पुनरत्रेत्संज्ञाप्राप्तिः, यावता सूत्रे टुडुशब्दौ ह्रस्वान्तावुपात्तौ,दीर्घान्ताविमौ? नेतत्; यद्यपि दीर्घत्वे कृते दीर्घान्तावेतौ भवतस्तथाप्युदेशे ह्रस्वान्तावेव,"उपदेशे" (१।३।२।) इति चेहानुवर्तते। तत्र पटुशब्दस्य पृथ्वादिपाठात् टुशब्दस्योपदेशे ह्रस्वान्तता सिद्धा। कण्डूशब्दस्य "कण्डवादिभ्यो यक्" ३।१।२७ इत्यत्र पाठात् डुशब्दस्यापि। द्विविधा हि कण्ड्वादयः-- धातवः, प्रातिपदिकानि च। तत्र धातुः कण्डुशब्दो ह्रस्वान्तः। प्रातिपदिकं तु कण्डुशब्दो दीर्घान्तः। अथ वा-- यद्यप्युपदेश इति नानुवर्तते, तथापि दीर्घत्वे कृतेप्येकदेशविकृतस्यानन्यत्वादस्त्येव प्राप्तिः। "ञिकारीयति" इति। पूर्ववत् क्यच्।

त्रिकारशब्दो न क्वचित् पठ()त इति तेनात्रेत्संज्ञा न भवति। यदि स्यात्, लोपे कृते रूपं न सिद्ध्येत्॥

बाल-मनोरमा

आदिर्ञिटुडवः १३३, १।३।५

आदिः। "भूवादयो धातवः" इत्यस्माद्धात्व इत्यनुवृत्तं षष्ठ()आ विपरिणम्यते। "उपदेशेऽजनुनासिकः" इत्यस्मादुपदेशे इति, इदिति चानुवर्तते। आदिरिति इदिति च बहुत्वे एकवचनं। तदाह--उपदेश इति। ट्विकरणं "द्वितीऽथु"जित्येतदर्थम्। नन्दतीति। इदित्त्वान्नुम्। इदित्त्वादिति। आशीर्लिङि यासुटः कित्त्वेऽपि इदित्त्वादनिदितामिति नलोपो नेत्यर्थः। नन्द्यादिति।अन्त्यात्, अन्द्यादित्यस्याप्युपलक्षणं। चदीति। इदित्त्वान्नुमित्याह--चन्दतीति। त्रदीति। अदुपधोऽयम्। इदित्त्वान्नुमित्याह-- त्रन्दतीति।क्रदि क्लदीति। अदुपधौ। क्लिदि परिदेवने इति। अनुदात्तेत्सुपठितस्येह पाठः परस्मैपदार्थः। शुन्ध शुद्धाविति। अकर्मकोऽयम्। शुन्धतीति। शुचिर्भवतीत्यर्थः। ननु शुधीत्येवमिदिदेवाऽयं कुतो न पठित इत्यत आह--नलोप इति। आशीर्लिङि "अनिदिता"मिति नलोपे शुध्यादिति रूपमिष्टम्। इदित्त्वे तु नलोपो न स्यादिति भावः। "अथ कवर्गीयान्ता" इत्यादि "लोकृ" इत्यन्तं स्पष्टम्। श्लोकृ इति। सङ्घातशब्दं व्याचष्टे-- ग्रन्थ इति। ननु वाक्यसमुदायात्मकस्य ग्रन्थस्य अक्रियात्वात् कथं धात्वर्थत्वमित्याशङ्क्याह-- स चेहेति। ग्रन्थनं ग्रन्थः-- सङ्घीभावःष सङ्घीकरणं वा। तत्र सङ्घीभवनं सङ्घनिष्ठम्। सङ्घीकरणं तु सङ्घीकर्तृनिष्ठम्। तत्र सङ्घीभवनार्थकत्वेऽकर्मकः। सङ्घीकरणार्थत्वे सकर्मकः इत्यर्थः। श्लोकत इति। सङ्घीभवतीत्यर्थः। सङ्घीकरोततीति वा। द्रेकृ ध्रेकृ इति। शब्दनं शब्दः। [एच इगिति ह्रस्व इति। लिट एशि द्वित्वे "हलादिः शेषे"देद्रेक् ए इति स्थिते अभ्यासे एकारस्य ह्रस्वो भवन् "एच इग्घ्रस्वादेशे" इति इकारो भवतीत्यर्थः]। दिध्रेके इति। अभ्यासे धकारस्य जश्त्वेन दकारः। एकारस्य तु ह्रस्व इकारः। रेकृ इति। शङ्का-- संशयः, आक्षेपो वा। शीकृ सेचने इत्यारभ्य एतत्पर्यन्ता ऋदितः। सेकृ इति। आद्यौ एकारमध्यौ ऋदितौ। इतरे त्रयोऽदुपधा इदितः। त्रय इति। पञ्चसु आद्यास्त्रय इत्यर्थः। अषोपदेशत्वादिति। सेकृधातोः पर्युदासान्न षत्वमिति भावः। "एच इग्घ्रस्वादेशे" इत्यभिप्रेत्याह-- सादित्वाऽभावान्न षोपदेशत्वं। ततश्च सकारस्यादेशसकारत्वाऽभावान्न षत्वमिति भावः। "एच इग्घ्रस्वादेशे" इत्यभिप्रेत्याह---सिसेक इत्यादि। "सरुआङ्के" इत्यादावदित्त्वान्नुम्। शकीति। इदित्त्वान्नुमित्याह---शङ्कते। शशङ्क इति। अकीति। लक्षणं--चिह्नीकरणम्। अङ्क इति। इदित्त्वान्नुम्। आनङ्क इति। "तस्मान्नुड् द्विहलः"इति नुट्।वकि कौटिल्ये इत्यादि स्पष्टम्। कुक वृकेति। द्वितीय ऋदुपधः। शपि लगूपधगुणं मत्वा आह-- कोकत इति। चुकुक इति। "असंयोगा"दिति कित्त्वान्न लघूपधगुणः। अभ्यासे चुत्वं। लघूपधगुणे रपरत्वं मत्वाह-- वर्कत इति। लिटि "असंयोगा"दिति कित्त्वान्न गुण इति मत्वाह-- ववृके इति। उरदत्वं, हलादिः शेषः। ननु कित्त्वात्परत्वाद्गुणः तृप्तावकर्मकः। प्रतिघाते सकर्मकः। एत्वाभ्यासलोपौ मत्वाह--चेक इति। ककीति। एते पञ्चदश धातवः। आद्याश्चत्वार इदितः। द्वितीयो वकारादिः। तृतीयस्तालव्यादिः। पञ्चमषष्ठौ दशमाद्याश्चत्वारश्च ऋदितः। दशमद्वादशौ इदुपधौ। रघिलघी इदितौ चतुर्थान्तौ। "कङ्कते" इत्यादाविदित्वान्नुम्। ड्ढौके तुत्रौक इति। अभ्यासे ढस्य जश्त्वेन डकारः, ओकारस्य ह्रस्व उकारः। अथ ष्वष्कधातोः षोपदेशपरिगणनाद्धात्वादेरिति सत्वे प्राप्ते आह--सुब्धात्विति। षष्वष्क इति। संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपौ न, संयोगात्परत्वेन लिटः कित्त्वाऽभावाच्च। तृतीय इति। तथा च "स्वष्कते" इति रूपं। केवलदन्त्यपरकसादित्वाऽभावेन षोपदेशत्वाऽभावः। टेकते इति। लघूपधगुणः। टीकत इति। दीर्घोपधत्वान्न गुणः। एवं तेकते तीकत इति। रङ्घते लङ्घते। इदित्त्वान्नुम्। लघि भोजननिवृत्तावपीति। निवृत्तिः- विमुखीभवनम्। लङ्घते। न भुङ्क्त इत्यर्थः। अघीति। त्रयोऽपि चतुर्थान्ता इदितः। आनङ्घ इति। "तस्मान्नुड् द्विहलः" इति नुट्। वङ्घत इति। इदित्त्वान्नुम्। लिटि तु ववङ्घे इति रूपम्। वादित्वात्संयुक्तहल्मद्यस्थत्वात्संयोगात्परत्वेन लिटः कित्त्वाऽभावाच्च एत्त्वाभ्यासलोपौ न। मघि कैतवे चेति। कैतवं वञ्चना। राघृ इचि त्रयोऽपि ऋदितः। सामर्थ्यं--कार्यक्षमीभवनम्। ध्राघृ इत्यपीति। चतुर्थादिमपि केचित् पठन्तीत्यर्थः।

द्राघृ इति।आयामः-- दीर्घीभवनम्। श्लाघृ कत्थन इति। कत्थनं-स्तुतिः। शीकृ इत्यादयो द्विचत्वारिंशदात्मनेपदिनो गताः। फक्क नीचैरित्यादि स्पष्टं। प्रनिकखतीति। "शेषे विभाषे"त्यत्र अकखादाविति पर्युदासान्नेर्णत्वं नेति भावः। ओखृ इति। अलमर्थः- भूषणक्रिया, पर्याप्तिः, वारणं वा। ओखति। ओखांचकार।शाखृ श्लाखृ इति। श्लाघृ इति चतुर्थान्त आत्मनेपदेषु गतः। उख उखीति। पञ्चदशेति। "ईखि इत्यन्ता" इति शेषः। त्रयोदशेति। "वल्गादय" इति शेषः। तत्र इदित्त्वान्नुम्। आशीर्लिङि नलोपाऽभावश्च। पठन्तीति। तेषां मते खान्ता एकोनविंशतिरिति बोध्यम्। ओखतीति। शपि लघूपधगुणः।

तत्त्व-बोधिनी

आदिर्ञिटुडवः १०७, १।३।५

"उपदेशेऽजनुनासिक" इत्यतोऽनवर्तनादाह--उपदेशे इति। उपदेशे किम्। ञिकारीयति। ञिष्वप्। "ञीतः क्तः"॥। सुप्तः। "ट्वितोऽथुच्"। नन्दथुः। "ड्वितः क्त्रिः"। कृत्रिमम्। क्लिदि परिवेदने। अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः। क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं स्वरितेत्स्वयं न पठितः। शुन्ध शुद्धौ। अयं शौचकर्मणि युजादौ। माङ्गलिक एधतिरुक्तस्तवर्गीयान्तस्तदनुरोधेन कतिचित्तवर्गीयान्ताः पठिताः। इदानीं लोकप्रसिद्धकादिपाठक्रमेणाह--अथेत्यादि। चुकुके इति। परमपि गुणं बाधित्वा नित्यत्वात् "असंयोगा"दिति कित्त्वम्।

सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः। सुब्धात्वित्यादि। सुब्दातोरुदाहरणानि--षट् दन्ता अस्य षोडन्। तमाचष्टे। णिचि टिलोपः। षोडयति। एवं षण्()डं करोत्याचष्टे वा षण्डयति। षण्डीयतीत्यत्र तु षण्डशब्दात्क्यचि ईत्वं बोध्यम्। एतच्च वार्तिकं भाष्ये प्रत्याख्यातम्। तथाहि "धात्वादे"रिति उपदेश इति वर्तते। न च सुब्धातूनामुपदेशोऽस्ति। ष्ठिवुष्वष्कती तु यकारादी। "लोपो व्यो"रिति यलोपः। प्रनिकखतीति। "शेषे विभाषे"त्यत्र अकखादाविति पर्युदासान्नेर्णत्वं नेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षः १।१ प्रत्ययस्य ६।१ ८ आदिः १।१ ५ उपदेशे ७।१ २ इत् १।१ २

अर्थः॥

उपदेशे प्रत्ययस्य आदिः षकारः इत्संज्ञकः भवति।

उदाहरणम्॥

नर्तकी, रजकी।

काशिका-वृत्तिः

षः प्रत्ययसय १।३।६

षकारः प्रत्ययसय आदिः इत्संज्ञः भवति। शिल्पिनि ष्वुन् ३।१।१४५ नर्तकी, रजकी। प्रत्ययस्य इति किम्? षोडः, षण्डः, षडिकः। आदिः इत्येव अविमह्योष्टिषच् अविषः, महिषः।

लघु-सिद्धान्त-कौमुदी

षः प्रत्ययस्य ८४२, १।३।६

प्रत्ययस्यादिः ष इत्संज्ञः स्यात्। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी॥
न्यासः

षः प्रत्ययस्य। , १।३।६

"रजकी" इति। षित्वात् "षिद्गौरादिभ्यश्च" ४।१।४९ इति ङीष्। अथ केनात्रानुनासकिलोपः? "अनिदिताम्" (६।४।२४) इति चेत्? न; तत्र क्ङितीत्युच्यते,न चात्र क्ङित्प्रत्ययोऽस्ति, नैष दोषः; "जनीजृष्क्नसुरञ्जौ।ऽमन्ताश्च" (ग।सू।धा।पा।८१७) #इतिमित्संज्ञाकरणं रञ्जेर्ज्ञापकम्- अक्ङित्यपि तस्यानुनासिकलोपो भवति, अन्यथा णौ रञ्जेरकारस्यानुपधत्वात् "अत उपधायाः" ७।२।११६ इति वृद्ध्या न भवितव्यमिति मित्संज्ञाकरणमनर्थकं स्यातदित्येके। "घञि च भावकरणयोः" ६।४।२७ इत्यत्र चकार्सयानुक्तसमुच्चयार्थत्वादक्ङित्यपि क्वचिद्रञ्जेरनुनासकिलोपो भवतीत्यपरे। "षोडः" इति। ष()ड् दन्ता अस्येति बहुव्रीहिः; "वयसि दन्तस्य दतृ" ५।४।१४१ इति दत्रादेशः, ऋकार उगित्कार्यार्थः; "षष उत्वं दतृदशधासूत्त्रपदादेः ष्टुत्वञ्च" (वा।७६५) पृषोदरादिपाठात् षषोऽन्त्यस्योत्वम्, "आद्गुणः" ६।१।८४, उत्तरपदादिष्टु()तवमिति दकारस्य डकारः। षोडत् इति स्थिते षोडन्तमाचष्ट इति "तत्करोति तदादष्टे" (वा।२००,२०१) इति णिच्, "णाविष्ठवत् कार्यम् प्रातिपदिकस्य" (वा।८१३) इतीष्ठवद्भावाट्टिलोपः-- षोडयतीति, ततः पचाद्यच्, णिलोपः। "षण्()डः" इति। "षणु दाने" (धा।पा।१४६४)। "ञमन्ताड्डः" (द।उ।५।७), "उणादयो बहुलम्" ३।३।१इति बहुलवचनात् "धात्वादेः षः सः" ६।१।६२ इति सत्वं न भवति। अथ वा-- "षण्ड" इत्येतदव्युत्पनन्नं प्रातिपदिकमिति। "ष()डिकः" इति। षडङ्गुलिदत्तशब्दात् अनुकम्पायाम् "बह्वचोऽमनुष्यनाम्नष्ठज्वा" ५।३।७८ इति ठच्। "ठाजादापूर्ध्वं द्वितीयादयः" ५।३।८३ इति ङ्गुलिदत्तस्य लोपः; "ठस्येकः" ७।३।५० इतीकादेशः। ष()डशब्द्सय "यस्येति च" ६।४।१४८ इत्यकारलोपः, तस्य स्थानिवद्भावे सति व्यवधानात् षट्शब्दस्य "यचि भम्" १।४।१८ इति भसंज्ञा न भवति। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वम् = षकारस्य डकारः। यद्येषां षकारस्येत्संज्ञा स्यात्, स्त्रीविवक्षायां "षिद्()गौरादिभ्यश्च" ४।१।४१ इति ङीष् स्यात्। षण्डशब्दोऽयं यद्यपि बलीवर्दे वत्र्तते, तथापि स्त्रीगवीष्पपि षण्डधर्मयोगाद्वृत्तिरस्य सम्भवत्येव। यद्यप्येते षोडादयो लाक्षणिकाः, तथाप्युदेशग्रहणेन षकारो विशिष्यत इति भवन्त्येतानि प्रत्ययग्रहणस्य प्रत्यदाहरणानि। भवति ह्यत्राप्युदेशे षकारः।"अविषः, महिषः" इति। "अव रक्षणे" (धा।पा।६००) "मह पूजायाम्" (धा।पा।१८६७), "अविमह्योष्टिषच्" (द।उ।९।३।) ननु च"उणादयो बहुलम्" ३।३।१ इति बहुलवचनात् प्रत्ययसंज्ञैवात्र न भवति, सत्यामपि तस्यामित्संज्ञा न भविष्यति, बहुलवचनात्, तत् कस्मादादिग्रहणमेतदनुवत्र्तत#ए? एवं मन्यते-- उत्तरार्थमवश्यमादिग्रहणमनुवत्र्तमानमिहापि स्पष्टार्थं भविष्यति।
बाल-मनोरमा

षः प्रत्ययस्य ४६७, १।३।६

षश्च प्रत्ययस्य। "आदिर्ञिटुडवः" इत्यत आदिरित्यनुवर्तते। "उपदेशेऽजनुनासिक इ"दित्यत इदिति च। तदाह--प्रत्ययस्यादिरिति। षकारस्य इत्संज्ञायां तस्य लोपः।

तत्त्व-बोधिनी

षः प्रत्ययस्य ४२१, १।३।६

षः प्रत्ययस्य। "आदिर्ञिटुडवः"इत्यत "आदि"रित्यनुवर्तत इत्यभिप्रकेत्याह---प्रत्ययस्यादिरिति। प्रत्ययस्य किम्? षोडश।"षष उत्व"मित्यत्र उपदेशस्थोऽयं षकारस्येत्संज्ञा न भविष्यति, टित्वादेवाऽविषी महिषीति रूपसिद्धेः। न च पक्षे

ङीष्यन्तोदात्तः प्रयोजनमिति वाच्यम्, "अनुदात्तस्य च यत्रोदात्तलोपः"इत्युदात्तनिवृत्तिस्वरेण टितः परस्य ङीपोऽप्युदात्तत्वात्। अत्राहुः---विनिगमनाऽभावेव पक्षे टकारस्याऽपि श्रवणं स्यात्। तथा च षित्त्वान्ङीषि "अविषी"त्यादिरुपसिद्धिः स्यात्। अतः षकारस्यैव श्रवणं भवतु मा कदाचिट्टकारस्य श्रवणं भूदित्येतदर्थमादिग्रहणानुवृत्तिरिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चुटू १।२ प्रत्ययस्य ६।१ ६ आदिः १।१ ५ उपदेशे ७।१ २ इत् १।१ २

समासः॥

चुश्च टुश्च चुटू, इतरेतरद्वन्द्वः

अर्थः॥

उपदेशे प्रत्ययस्य आदी चवर्ग-टवर्गौ इत्संज्ञकौ भवतः

उदाहरणम्॥

कौञ्जायन्यः। ब्राह्मणाः। शाण्डिक्यः। टवर्गः - वाचा। कुरुचरी, मन्द्रचरी। उपराजः, मन्दुरजः। आन्नः॥
काशिका-वृत्तिः
दुटू १।३।७

चवर्गटवर्गौ प्रत्ययस्यादी इत्सञ्जौ भवतः। गोत्रे कुञ्जाऽदिभ्यश्च्फः ४।१।९८ कौञ्जायनः। छस्य ईयादेशं वक्ष्यति। जस् ब्राह्मणाः झस्य अन्ताऽदेशं वक्ष्यति। शण्डिकाऽदिभ्यो ञ्यः ४।३।९२ शाण्डिक्यः। तवर्गः, चरेष्टः ३।२।१६ कुरुचरी, मद्रचरी। ठस्य इकादेशं वक्ष्यति। सप्तम्यां जनेर् डः ३।२।९७ उपसरजः, मन्दुरजः। ढस्य एयादेशं वक्ष्यति। अन्नाण्णं ४।४।८५ आन्नः। पृथग्योगकरणम् अस्य विधेरनित्यत्वज्ञापनार्थम्। तेन वित्तश्चुञ्चुप्चणपौ ५।२।२६ केशचुञ्चुः, केशचणः। अवात् कुटारच् च ५।२।३०, नते नासिकायाः संज्ञायां टिटञ्नाट्ज्भ्रटचः ५।२।३१ अवटीतः। आदिः इत्येव। कर्मणि घटो ऽठच् ५।२।३५ कर्मठः।
लघु-सिद्धान्त-कौमुदी
चुटू १२९, १।३।७

प्रत्ययाद्यौ चुटू इतौ स्तः॥
न्यासः
चुटू।, १।३।७

"कौञ्जायन्यः" इति। चफञन्तात् "व्रातच्फञोरस्त्रियाम्" ५।३।११३ इति स्वार्थे ञ्यः। "छस्येयादेशं वक्ष्यति" इति। इत्संज्ञापवादम्। "शाण्डिक्यः" इति। "शण्डिकादिभ्यो ञ्यः" ४।३।९२ इति शण्डिकोऽभिजनोऽस्येत्यर्थे ञ्यः, तत्र हि "सोऽस्याभिजनः" इति वत्र्तते। "मन्दुरजः"इति। "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" ६।३।६२ इति मन्दूराशब्दस्य

ह्रस्वत्वम्। "अन्नाण्णः- आन्नः" इति। "अन्नं लब्धा" इत्यर्थे णः। तत्र हि "धनगणं लब्धा" ४।४।८४ इत्यतो लब्धेत्यनुवर्त्तते। अथ किमर्थं पृथग्योगः क्रियते, "चुटुषाः प्रत्ययस्य" इत्येक एव योगः क्रियतामित्यत आह-- "पृथग्योगकरणम्" इत्यादि। "तेन वित्तः" ५।२।२६ इत्यादिनाऽस्य विधेरनित्यत्वज्ञापनस्य प्रयोजनं दर्शयति॥

बाल-मनोरमा

चुटू १८८, १।३।७

देवदत्तहन्तृंहतन्यायस्तु नात्र प्रवर्तत इति स्वादिसन्धौ मनोरथ इत्यत्र प्रञ्चितम्। राम जस् इति स्थिते--चुटू। "उपदेशेऽजनुनासिक इत्" इत्यतः "इ" दित्यनुवर्तते। तच्च द्विवचनान्ततया विपरिणम्यते। "आदिर्ञिटुडवः" इत्यत "आदि"ग्रहणमनुवर्त्य द्विवचनान्ततया विपरिणम्यते। "षः प्रत्ययस्ये"त्यनुवर्तते। तदाह--प्रत्ययाद्यावित्यादिना। इति जस्येति। इत्संज्ञायां तस्य लोप" इति लोपः। जकारस्तु जसश्शीत्यादौ शसो निवृत्त्यर्थः।

तत्त्व-बोधिनी

चुटू १५७, १।३।७

युटू। "आदिर्ञिटुडवः" इत्यत "आदिः," "षः प्रत्ययस्य" इत्यतः "प्रत्ययस्ये"ति चानुवर्तते, तदाह-प्रत्ययाद्याविति। प्रत्ययाद्यविति किम्?। वाचाटः। "तेन वित्तश्चुञ्चुप्चणपौ" इत्यत्र प्रत्ययादौ यकारो लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञेति वक्ष्यति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लशकु १।१ अतद्धिते ७।१ प्रत्ययस्य ६।१ ६ आदिः १।१ ५ उपदेशे ७।१ २ इत् १।१ २

समासः॥

न तद्धितः, अतद्धितः, तस्मिन् अतद्धिते, नञ्-तत्पुरुषः

अर्थः॥

उपदेशे प्रत्ययस्य आदयः लकार-शकार-कवर्गाः इत्संज्ञकाः भवन्ति, तद्धितं वर्जयित्वा

उदाहरणम्॥

लकारः - चयनम्, जयनम्। शकारः - भवति, पचति। कवर्गः - भुक्तः, भुक्तवान्। प्रियंवदः, वशंवदः। ग्लास्नुः, जिष्णुः, भूष्णुः। भङ्ग्रम्। वाचः॥

काशिका-वृत्तिः

लशक्वतद्धिते १।३।८

तद्धितवर्जितस्य प्रत्ययस्यादितो वर्तमाना लकारशकारकवर्गा इत्संज्ञा भवन्ति। लकरः, ल्युट् च ३।३।११५ चयनम्, जयनम्। शकारः, कर्तरि शप् ३।१।६८ भवति, पचति। कवर्गः, क्तक्तवतू निष्ठा १।१।२५ भुक्तः, भुक्तवत्। प्रियवशो वदः खच्

३।२।३८ प्रियंवदः, वशंवदः। ग्लाजिस्थश्च ग्स्नुः ३।२।१३९ ग्लास्नुः, जिष्णुः, भूष्णुः। भञ्जभासमिदो घुरच् ३।२।१६१ भुअङ्गुरम्। टाङसिङसाम् इनाऽत्स्याः ७।१।१२ वृक्षात्, वृक्शस्य। अतद्धिते इति किम्? चूढालः। लोमशः। कर्णिका।
लघु-सिद्धान्त-कौमुदी
लशक्वतद्धिते १३६, १।३।८

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥
न्यासः
लशक्वतद्धिते। , १।३।८

"प्रियंवदः" इति। "प्रियवशे वदः खच्" ३।२।३८, "अरुर्द्विषदजन्तस्य" ६।३।६६ इति मुम्। "जिष्णुः"- इति। "ग्लाजिस्थश्च क्स्नुः" ३।२।१३९ इति। ये तु क्स्नुप्रत्ययं गितमिच्छन्ति तन्मतेनेदं गकारस्योदाहरणम्। ये तु कितमिच्छन्ति तन्मतेनेमपि ककारस्योदाहरणं भवति। "चूडाल#ः" इति। मत्वर्थे "प्राणिस्थादातो लजन्यतरस्याम्" ५।२।९५ इति लच् प्रत्ययः। ननु च प्रयोजनाभावादत्रेत्संज्ञा न भविष्यति; लित्प्रत्ययात् पूर्वस्योदात्तत्वं प्रयोजनमिति चेत्, न; चित्स्वरस्य हि सर्वस्य रस्यापवादत्वात् प्रत्ययस्वरेणह्नन्तोदात्तत्वे सिद्धे चित्करणस्यैतत् प्रयोजनम्-- चित्स्वर एव यथा स्यात्, योऽन्यः स्वरः प्राप्नोति स मा भूदिति। इदं तु प्रत्युदाहरणम्-- लोमान्यस्य सन्तीति "लोमादिपामादि" ५।२।९९ इत्यादिना शः, लोमशः? एतदपि नास्ति, अत्रापि प्रोयजनाभावादेवेत्संज्ञा न भविष्यति। इदं तर्हि प्रत्युदाहरम्-- "कर्णललाटात् कनलङ्कारे" ४।३।६५ इति भावार्थे कन्; कर्णिका, यद्यत्रेत्संज्ञा स्यात् "किति च" ७।२।११८ इत्यादिवृद्धिः स्तात्, ततश्च रूपमेव न सिद्ध्येत? यद्येवम् इवमेवोपन्यसनीयम्, नेतरे? एवं मन्यते-- एतदर्थम् "अतद्धिते"इति क्रियमाणमिहापि मन्दधियां प्रतिपत्तिगौरवं परिहर्तु चूडालः, लोमश इत्येवमर्थमपि भवितुमर्हतीति॥
बाल-मनोरमा
लशक्वतद्धिते १९४, १।३।८

"राम शस्"-इति स्थिते, "न विभक्तौ तुस्मा" "इति सकारस्य नेत्वम्। तत्र शकारस्य अनन्त्यत्वाद्धलन्त्यमित्यस्याऽप्राप्तावाह-लशक्वतद्धिते। "लशकु" इति समाहारद्वन्द्वः। उपदेशेऽजनुनासिक इत्, "आदिर्ञिटुडवः, "षः प्रत्ययस्ये"त्यतः-इदिति , आदिरिति, प्रत्ययस्येति चानुवर्तते। अतद्धित इति षष्ठ()र्थे सप्तमी। तद्धितभिन्नस्य प्रत्ययस्य आदिभूतं लकारशकारकवर्गम् इत्संज्ञं भवतीत्यर्थः। तदाह--तद्धितवर्जेति। अतद्धित इति किम्?। "कर्णललाटात्कनलङ्कारे"। कर्णिका। अत्र ककारस्य तद्धितावयवत्वान्नेत्वम्। सति तस्मिन् "किति चे"त्यादिवृद्धिः स्यात्। एतेन प्रयोजनाऽभावादेव लशादितद्धितेषु नेत्वमित्यतद्धितग्रहणं व्यर्थमिति निरस्तम्। इति शस इति। शकारस्येत्संज्ञायां "तस्य लोप" इति लोपः। शकारोच्चारणं तु "जसः शी" "तस्माच्छसो नः" इत्यादौ विषयविभागार्थम्। राम असिति स्थिते, अकः सवर्णे दीर्घ इति बाधित्वा, अतो गुण इति प्राप्ते प्रथमयोरिति पूर्वसवर्णदीर्घे, रामास् इति स्थिते।

तत्त्व-बोधिनी
लशक्वतद्धिते १६२, १।३।८

लशक्व। "आदिर्ञिटुडवः" इत्यत "आदि"-रित्यनुवर्तते "षः प्रत्ययस्ये"त्यतः प्रत्ययस्येति। "अतद्धिते" इति पर्युदासाद्वा लभ्यत इत्याह--प्रत्ययाद्या इति। लश्त शश्च कुश्चेति समाहारद्वन्द्वे "लशक्वि"ति नपुंसकम्। तदितरेतरयोगद्वन्द्वेन विवृणोति-लशकवर्गा इति। अतद्धित इति कम्?, "प्राणिस्थादातः-"इति लच्। चूडालः। "लोमादिभ्यः[शः"]। लोमशः। अत्र

प्रयोजनाऽभावादेव नेत्संज्ञेति नेदं प्रत्युदाहरणमिति नव्याः। "कर्णललाटा"दिति भवार्थे कन्। कर्णिका। सत्यां हीत्संज्ञायां "किति चे"ति वृद्धिः स्यात्। प्रत्ययाद्या इति किम्?। "जल्पभिक्षे"ति वृङः षाकन्। वराकः। अत्र "क्ङिति चे"ति गुणो न स्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तस्य ६।१ लोपः १।१

अर्थः॥

तस्य इत्संज्ञकस्य लोपः भवति॥

उदाहरणम्॥

उदाहरणानि पूर्वसूत्रेषु एव द्रष्टव्यानि॥

काशिका-वृत्तिः

तस्य लोपः १।३।९

तस्य इत्संज्ञकस्य लोपो भवति। तथा च एव उदाहृतम्। तस्य ग्रहणं सर्वलोपार्थम्, अलो ऽन्त्यस्य १।१।५१ मा भूतादिर् ञिटुडवः १।३।५ इति।

लघु-सिद्धान्त-कौमुदी

तस्य लोपः ३, १।३।९

तस्येतो लोपः स्यात्। णादयोऽणाद्यर्थाः।

न्यासः

तस्य लोपः।, १।३।९

अथ किमर्थम् "तस्य" इत्युच्यते, यवातेत्संज्ञायाः प्रकृतत्वाद्यस्येत्संज्ञा विहिता सामथ्र्यात्तस्यैव लोपो भविष्यतीति आह-- "तस्यग्रहणम्" इत्यादि। कः पुनरित्संज्ञको योऽलोन्त्यस्य निवृत्त्यर्थं तस्यग्रहणं प्रयोजनतीत्याह-- "आदिर्ञिटुडवः" इति। असति तस्यग्रहणे, एषामपि ञिप्रभृतीनाम् "अलोऽन्त्यस्य" १।१।५१ इति वचनादन्त्यस्य लोपः स्यात्। तस्यग्रहणेन तु प्रकृत इत्संज्ञके सन्निधापिते सर्वस्य लोपो भवति, नान्त्यस्य; अन्यथा हि तस्यग्रहणमनर्थकं स्यात्। यदि तु "नानर्थकेऽलोऽन्त्यविधिः" (व्या।प।६२) इत्येषा परिभाषाऽऽश्रीयते, तदा तस्यग्रहणमकर्तुं शक्यते। तत् क्रियते विस्पष्टार्थम्।

बाल-मनोरमा

तस्य लोपः ६३, १।३।९

एतेष्वादेशेषु यकारवकारयोर्हलन्त्यमितीत्संज्ञायां लोपमाशङ्कितुमाह--तस्य लोपः। इत्संज्ञाप्रकरणान्ते इदं सूत्रम्। तत्र तच्छब्दः सन्निहितमितं परामृशति। तदाह--तस्येति इति। इत्यनेन सूत्रेण यवयोर्लोपो न शङ्कनीय इत्यर्थः। कुत

इत्यत आह--उच्चारणेति। यद्यत्र यवयोर्लोपः स्यात्तर्हि तयोः सूत्रेऽनुच्चारणमेव स्यात्, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर"मिति न्यायादिति भावः। तर्हि किमनयोरित्संज्ञयेत्यत आह--एवंचेति। उक्तप्रकारेण लोपाऽभावे सतीत्संज्ञापीह यकारे वकारे च न भवति, फलाऽभावादित्यर्थः। क्रमेणोदाहस्ति--हरय इत्यादिना। हरे--ए,विष्णो-ए, नै-अकः, पौ-अक इति स्थितेषु एकारादीनां क्रमादयादयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यथा-सङ्ख्यम् ० अनुदेशः १।१ समानाम् ६।३

समासः॥

सङ्ख्याम् अनतिक्रान्तः, यथासङ्ख्यम्, अव्ययीभावः

अर्थः॥

समानाम्=सम-सङ्ख्यानाम् अनुदेशः=पश्चात् कथनम्, यथासङ्ख्यं=यथाक्रमेण भवति

उदाहरणम्॥

इको यणचि, तूदी-शलातुर-वर्मती-कूचवाराड्-ढक्-छण्-ढञ्-यकः (४।३।९४)। तूदी-शब्दात् ढक् प्रत्ययः=तौदेयः। शलातुरात् छण् - शालातुरीयः। वर्मती-शब्दात् धञ् - वार्मतेयः। कूचवारात् यक् - कौचवार्यः, अत्र क्रमेण अनुदेशाः भवन्ति

काशिका-वृत्तिः

यथासङ्ख्यम् अनुदेशः समानाम् १।३।१०

सङ्ख्याशब्देन क्रमो लक्ष्यते। यथासङ्ख्यं यथाक्रमम् अनुदेशो भवति। अनुदिश्यते इति अनुदेशः। पश्चादुच्चार्यते इत्यर्थः। समानां समसङ्ख्यानं समपरिपहितानाम् उद्देशिनाम् अनुदेशिनां च यथाक्रममौद्देशिभिरनुदेशिनः सम्बध्यन्ते। तूदीशलातुरवर्मतीकूचवाराड् ढक्छण्ढञ्यक्H ४।३।९४। प्रथमात् प्रथमः, द्वितीयाद् द्वितीयः इत्यादि। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः। समानाम् इति किम्? लक्षणैत्थम्भूताऽख्यानभाग। वीप्सासु प्रतिपर्यनवः १।४।८९। लक्षणादयश्चत्वारो ऽर्थाः, प्रत्यादयस् त्रयः, सर्वेषं सर्वत्र कर्मप्रवचनीयसंज्ञा भवति। इह कस्मान् न भवति वेशोयशाऽदेर् भगाद् यल् ४।४।१३० ख च ४।४।१३१ इति? स्वरितेन लिङ्गेन यथासङ्ख्यम्। यत्र एष्यते, तत्र स्वरितत्वं न प्रतिज्ञायते। स्वरितेन अधिकारः १।३।११ इति स्वरितग्रहणं पूर्वेण अपि सम्बध्यते।

लघु-सिद्धान्त-कौमुदी

यथासंख्यमनुदेशः समानाम् २३, १।३।१०

समसंबन्धी विधिर्यथासंख्यं स्यात्। हरये। विष्णवे। नायकः। पावकः॥

न्यासः

यथासंख्यमनुदेशः समानम्। , १।३।१०

"संख्याशब्देनात्र क्रमो लक्ष्यते" इति। यत्रानेके उद्देशिनोऽनुदेशिनश्च, तत्रानियमेन सम्बन्धे प्राप्ते नियमार्थमिदमारभ्यते। यत्रोद्देशिनोऽनुदेशिनोऽनेकसंख्याः; तत्रावश्यं संख्याभेदेन भवितव्यम्। यत्र च संख्याभेदः, तत्र नियतभावी क्रमः ; संख्याभेदवतां युगपदुच्चारयितुमशक्यत्वात्। अतः साहचर्यात् संख्याशब्देन क्रमो लक्ष्यते। अर्थधर्मत्वं तु शब्दे समारोप्य संख्याशब्देन क्रमो लक्ष्यत इत्युक्तम्। यथाक्रमग्रहणं कथं न कृतम्? वैचित्र्यार्थम्। "यथासंख्यम्" इति। "यथाऽसादृश्ये" २।१।७ इति वीप्सायामव्ययीभावः। "अनुदिश्यत इत्यनुदेशः" इति। "अकर्तरि च कारके संज्ञायाम्" ३।३।१९ इति घञ्। "पश्चादुच्चार्यते" इति। अनुशब्दस्य पश्चादर्थवृत्तित्वाद्दिश्चोच्चारणक्रियत्वात्। "समसंख्यानम्" इति। समसंख्यतया समानत्वं दर्शयति। "{समं परिपठितानाम्ििति मूल (काशिका) पाठः। }समगणनपरिपठितानाम" इति। तमेवार्थं शब्दान्तरेण व्यक्तीकरोति। "उद्देशिनामनुदेशिनाञ्च" इति। यथाक्रममित्येतदपेक्षया षष्ठी। उद्देशिनो यद्यपि सूत्रे न श्रूयन्ते, तथापि सम्बन्धित्वात् पश्चाद्भावस्यानुदेशग्रहणाल्लभ्यन्ते। "यथाक्रमम्" इति। पूर्ववद्वीपसायामव्ययीभावः, तृतीयान्तञ्चैतत्; तदयमत्रार्थः- उद्देशिनामनुदेशिनाञ्च योऽयं क्रमस्तेन क्रमेणानुदेशिनः सम्बध्यन्त उद्देशिभिः सहेति। यद्यप्युद्देशिनामिति षष्ठ()न्तं प्रकृतम्, तथाप्यर्थाद्विभक्तेर्विपरिणामो भविष्यतीति तृतीयान्तं सम्पद्यते। "प्रथमात् प्रथमः" इत्यादिना यथाक्रमसम्बन्धं दर्शयति। आदिशब्दस्तृतीयात् तृतीयः, चतुर्थाच्चतुर्थ इत्यादिपरिग्रहाय। तौदेय इत्यादौ "सोऽस्याभिजनः" ४।३।९० इत्यत्रार्थे तद्धितः। "इह" इत्यादि। "वेशोयशाअदेर्भगात्" ९४।४।१३१) इति द्वे प्रकृती, "यल्खौ" इति प्रत्ययावपि द्वावेव; अतो यथासंख्येन भवितव्यमित्यभिप्रायः। इह केनचिनदाचार्येण शिष्याः प्रतिग्राहिताः-- "वेशो यश आदेर्भगाद्यल् ख च" इत्येको योगः। अन्ये तु द्वावेतौ योगविति- "वेशोयश आदेर्भगात्" इत्येको योगः, "यल् ख च" इति द्वितीयः। तत्र य एक एवायं योग इत्येवं शिष्या ग्राहितास्तान्प्रत्ययं प्रश्नः। वृत्तिकारेणापि तन्मतमेवाश्रित्य"स्वरितेन" इत्यादिना परीहार उक्तः। ये तु द्वावेतौ योगावित्येवं ग्राहितास्तान् प्रत्येष प्रश्नो नास्ति; योगविभागेनैव यथासंख्यस्य स्यात्, योगविभागकरणमनर्थकं स्यादित्यभिप्रायः। कथं पुनः स्वरितेन लिङ्गेन यथासंख्यं लभ्यते, यावता नेह स्वरितग्रहणमस्तीत्याह-- "स्वरितेनाधिकारः" इत्यादि। "स्वरितेनाधिकारः" १।३।११ इति योगं विभज्य "स्वरितेन" इत्येको योगः, "अधिकारः" इति द्वितीयः। तत्र प्रथमो योगः पूर्वेणापि "यथासंख्यम्" इत्यादिना सम्बध्यते। अपिशब्दात् परेणापि "अधिकारः" इत्यनेन। यदि तर्हि स्वरितेन लिङ्गेन यथासंख्यं भवति, एवं हि सति सन्देहः स्यात्। तथा हि-- यथासंख्यमिति स्वरितेनाधिकारोऽपि तत्र न ज्ञायते -- किमधिकारार्थः स्वरितानुषङ्गः? अथ वा यथासंख्यार्थ इति? सन्देहमात्रमेतत्। सर्वनसन्देहेष्विदमुच्यते-- "भवति व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" (व्या।प।७५) इति॥

बाल-मनोरमा

यथासङ्ख्यमनुदेशः समानाम् १२८, १।३।१०

यथासङ्ख्यम्। साम्यमिह सङ्ख्यातो विवक्षितम्। अनुदेशः=विधानम्। समानामिति यदि कर्मणि षष्ठी स्यात्तर्हि स्थान्यादिभिः समसङ्ख्यानां यत्र विधानं, यथा "एचोऽयवायाव" इत्यादौ तत्रैव यथासङ्ख्य प्रवृत्तिः स्यात्, "समूलाकृतजीवेषु हन्()कृञ्()ग्रहः" इत्यत्र न स्यात्, तत्र विधेयस्य णमुल एकत्वात्। अतः "समाना"मिति सम्बन्धसामान्ये षष्ठी। एवञ्च समूलाद्युपपदानां हनादिधातूनां च समसङ्ख्यानामुपादानेन एकस्य प्रत्ययस्य विधिरपि समसङ्ख्याकसम्बन्धी विधिरेवेति तत्रापि यथासङ्ख्यप्रवृत्तिनिर्बाधा। तदाह--समसम्बन्धीति। यथासङ्ख्यमिति। सङ्ख्याशब्देनात्र प्रथमत्वद्वितीयत्वादिरूपाः सङ्ख्याघटितधर्मा विवक्षिताः,ताननतिक्रम्य यथासङ्ख्यम्। ततश्च "एचोऽयवायाव" इत्यादिषु प्रथमस्य स्थानिनः प्रथम आदेशः, द्वितीयस्य द्वितीय इत्येवमक्रमेण स्थान्यादेशतन्निमित्तादीनां समसङ्ख्याकानां क्रमेणाऽन्वयः प्रतिपत्तव्य इति फलितम्। प्रकृ-ते च यपरके हकारे परे मकारस्य यकारः, वपरके वकारः, लपरके लकार इति सिध्यति। किय्#ँ ह्म इति। मस्य यत्वे रूपम्। "ह्म" इत्यव्ययम्,

पूर्वेद्युरित्यर्थः। यत्वाभावे मोऽनुस्वारः। किव्#ँ ह्वलयतीति। मस्य वत्वम्। ह्वल चलने, णिच्। किल्#ँ ह्लादयतीति। मस्य लत्वम्॥ "ह्लादी सुखे च" णिच्।

तत्त्व-बोधिनी

यथासङ्ख्यमनुदेशः समानाम् १०२, १।३।१०

यथासङ्ख्यमनुदेशः। अनुदिश्यत इति अनुदेशः। पश्चादुच्चार्यत इत्यर्थः। "समाना"मिति संबन्धे षष्ठी, तदाह-- समसम्बन्धी विधिरिति। "समकर्मकं विधान"मिति तु नोक्तम्, तथाहि सति यत्रोद्देशिषु समेषु समानां विधानं पाघ्रादिषु पिबादीनां प्रियस्थिरादिषु च प्रस्थादीनां" तत्रैव यथाक्रमं प्रवृत्तिः स्यात्। इष्यते तु अनुवाद्ययोरपि यथासङ्ख्यत्वम्। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इत्यत्र यथा। समानामिति किम्?, "लक्षणेत्थंभूते"त्यत्र लक्षणादयश्चत्वारोऽर्थाः, प्रत्यादयस्तु त्रयः, तत्र सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा यथा स्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वरितेन ३।१ अधिकारः १।१

अर्थः॥

स्वरितेन चिह्नेन अधिकारः वेदितव्यः॥

उदाहरणम्॥

प्रत्ययः, परश्च (३।१।१,२) धातोः(३।१।९१) अङ्गस्य (६।४।१)

काशिका-वृत्तिः

स्वरितेन अधिकारः १।३।११

स्वरितेन इति इत्थम् भूतलक्षणे तृतीया। स्वरितो नाम स्वरविशेषो वर्णधर्मः। तेन चिह्नेन अधिकारो विदितव्यः। अधिकारो विनियोगः। स्वरितगुणयुक्तं शब्दरूपम् अधिकृतत्वादुत्तरत्र उपतिष्ठते। प्रतिज्ञास्वरिताः पाणिनीयाः। प्रत्ययः ३।१।१। धातोः ३।१।९१। ञ्याप्प्रातिपदिकात् ४।१।१। अङ्गस्य ६।४।१। भस्य ६।४।१२९। पदस्य ८।१।१६।

न्यासः

स्वरितेनाधिकारः। , १।३।११

"इत्थंभूतलक्षणे तृतीय" इति। स्वरितेन चिह्नेनाधिकारस्योपलक्षणीयत्वात्। यदि पारिभाषिकस्येह स्वतिस्य ग्रहणं स्यात्, "रषाभ्यां नो णः समानपदे" ८।४।१ इत्यत्र णकारण्णाकारस्याधिकारस्याधिकारता न स्यात्; परिभाषिकस्याज्धर्मत्वात्। णकारस्यानच्कत्वादिति मत्वा सर्वेषां वर्णानामचां हलाञ्च स्वरिताख्यो यो वर्णधर्मो गुणस्यस्येदं ग्रहणम्, न पारिभाषिकस्येति दर्शयन्नाह-- "स्वरितो नाम स्वरदोषो वर्णधर्मः" इति। वर्णधर्मस्य तु गर्हणमधिकारावगमाय। स इह हल्यपि स्वरितासरञ्जनाद्विज्ञायते। "अधिकारो विनियोगः" इति। व्यापारकरणम्। "अधिकृतत्वादुत्तरत्रोपतिष्ठते" इति। यथा पुरुषो यत्राधिकृतो नगरादौ तत्रैवोपतिष्ठते, तथा स्वरितगुणयुक्तं शब्दरूपं

सूत्रकारेण नियुक्तं सूत्रकारेण तत्र तत्रोपतिष्ठते। "उत्तरत्र" इति वचनमुपलक्षणार्थम्। क्वचित् पूर्वत्राप्युपतिष्ठत एव। क्व पुनरस्य सद्भावो भवति? क्व च वा न भवति? इत्याह-- "प्रतिज्ञास्वरिताः पाणिनीयाः" इति। प्रतिज्ञया स्वरितो येषां ते तथोक्ताः। तदेतदुक्तं भवति-- यत्रेव त आचार्याः स्वरितत्वं प्रतिजानते तत्रैवास्य सद्भावो भवति, नान्यत्रेति। तदपि प्रतिज्ञानं नानियमेन भवति, किं तर्हि? यत्राचार्याः स्मरन्ति तत्रैव भवति। स चायं धर्मः कलागद्युपम इति वेदितव्यः। कार्यार्थमुपादीयते, कृतकार्यस्तु निवर्तते; न तु प्रयोगसमवायी भवति। "प्रत्ययः" ३।१।१ इत्यादिना येऽधिकाराः स्वरितनावच्छिद्यन्ते तेषामुदाहरणानि दर्शयति। अथ किमर्थोऽयमधिकारः क्रियते? प्रतियोगं तस् ग्रहणं मा कार्षीदित्येवमर्थमिति चेत्, न; यथा देवदत्ताय गौर्दीयतां कम्बलश्चेत्युक्ते न च पुनरुच्यते देवदत्तायेति, अथ च प्रस्तुतत्वाद्देवदत्तस्य कम्बलश्चेत्यस्य साकाङ्क्षत्वात् तेनैव सम्बन्धो भवति; तथा च "सृ स्थिरे" ३।३।१७"भावे" ३।३।१८ इत्येवमादीनामपि वाक्यानां साकाङ्क्षत्वाद्घञादीनाञ्च प्रस्तुतत्वात् तैरेव सम्बन्धो भविष्यति, तत्किमधिकरेण? सत्यमेतत्; यत्रान्य निर्देशो नास्ति तत्रोपतिष्ठते, यत्र त्वन्यनिर्देशस्तत्रासौ प्रकृतस्य निवर्तक एव स्यात्। तथा हि-- गौर्दीयतां यज्ञदत्ताय कम्बलो विष्णुमित्रायेत्युक्तेऽन्यनिर्देशेन प्रस्तुतो देवदत्तो निवर्तत्ते। एवञ्चान्यनिर्देशेनास्य निवर्तकत्वे सति "अभिविधौ भाव इनुण" ३।३।४४ इत्यस्येनुणो निर्देशेन प्रस्तुतस्य घञो निवर्तितत्वात् "आक्रोशेऽवन्योग्रहः" ३।३।४५ इत्यत्रानन्तरेणेनुणा सम्बन्धः स्यात्,न पुनव्र्यवहितेन घञा,घञ् त्विष्यते। ननु च दृष्टानुवृत्तिसामथ्र्याद् घञेवानुवर्तिष्यते तेनैवाभिसम्बन्धो भविष्यति, तथा च तत्र वक्ष्यति-- "दृष्टानुवृत्तिसामथ्र्यात्तत्र घञेवानुवत्र्तते, नानन्तर इनुण् " इति नैतदस्ति; यदि दृष्टानुवृत्तिसामथ्र्यादघञ एवानुवृत्तिः स्यात्, तदा "ऋदोरप्" ३।३।५७ इत्तत्रोत्तरेष्वपि योगेषु घञेवानुवत्र्तेत, नाप्प्रत्ययः। यत्पवुनर्वक्ष्यति-- "दृष्टानुवृत्तिसामथ्र्यात्" इति, तत्र दृष्टानुवृत्तिसामथ्र्यशब्देन स्वरितत्वमेवोक्तम्। दृष्टमनुवृत्तौ सामथ्र्यम्-- अधिकृतस्य शब्दरूपस्य यस्मादिति बहुव्रीहिकृत्वा।तस्मात् स्वरितत्वादित्ययमत्रार्थः। यद्येषोऽर्थः सूत्राकाराभिमतः स्यात्, स्वरितत्वादिति कस्मान्नोक्तमिति चेत्? न;स्वच्छन्दतो हि वचसां प्रवृत्तिः, अर्थस्तु परीक्षणीय इत्यचोद्यतमेतत्। तदेवं यतोऽन्यनिर्दशः प्रस्तुतस्य निवत्र्तको भवति तस्मादधिकारः कत्र्तव्यः। त()स्मश्च क्रियमाणे तदवगमोपायदर्शनाय "स्वरितेनाधिकारः" इत्येतदिप कत्र्तव्यः॥

बाल-मनोरमा

स्वरितेनाधिकारः १९२१, १।३।११

स्वरितेनाधिकारः। अधिकारः=व्यापृतिः। यथा लोके "अधिकृतो ग्रामेऽसा"विति व्यापृत इति गम्यते। शब्दस्य च उत्तरसूत्रेष्वनुवृत्तिरेव व्यापृतिः। स्वरितेन=स्वरविशेषेण अधिकार उत्तरत्रानुवृत्तिरूपव्यापारः प्रत्येतव्यः। यत् पदं शास्त्रकृता स्वरिताख्यस्वरविशेषविशिष्टमुच्चारितं तदुत्तरसूत्रेष्वनुवर्तनीयमिति यावत्। फलितमाह-- स्वरितत्वयुक्तमित्यादिना। आनुनासिक्यवत्सव्रितोच्चारणमपि प्रतिज्ञागम्यम्। अनुवृत्तावुत्तरावधिस्तु व्याख्यानादेवावगन्तव्यः। यद्यपि निवृत्तिवदनुवृत्तिरपि व्याख्यानादेव भविष्यतीति किं सूत्रेण, तथापि भाष्ये एतत्प्रयोजनं बहुधा प्रपञ्चितम्।

परनित्येति। परादीनां मध्ये पूर्वपूर्वापेक्षया उत्तरमुत्तरं शास्त्रं बलवत्तपरमित्यर्थः। "उत्तरोत्तर"मित्यत्र "आनुपूव्र्ये द्वे वाच्ये" इति द्वित्वम्। "कर्मधारयवदुत्तरेषु" इति कर्मधारयवद्भावात्सुपो लुक्। बलवच्छब्दात् "द्विवचनविभज्योपपदे तरबीयसुनौ " इति ईयसुन्। "विन्मतोर्लु"गिति मतुपो लुक्। परापेक्षया नित्यान्तरङ्गापवादाः, नित्यापेक्षयाऽपि अन्तरङ्गापवादौ, अन्तरङ्गापेक्षयापि अपवाद इत्येवं क्रमेण पूर्वपूर्वापेक्षया उत्तरोत्तरबलवत्त्वमिति फलितोऽर्थः। परं विप्रतिषेधसूत्रात् बलवत्। परान्नित्यं यथा--तुदति। अत्र "तुदादिभ्यः शः" इति शप्रत्ययं बाधित्वा परत्वाल्लधूपधगुणः प्राप्तः, स च शप्रत्यये प्रवृत्ते सति न प्रवृत्तिमर्हति। शप्रत्ययस्तु कृतेऽकृतेऽपि लघूपधगुणे प्रवृत्तिमर्हतीति स नित्यः। "कृताकृतप्रसङ्गी

यो विधिः स नित्य" इति हि तल्लक्षणम्। अतो नित्यः शप्रत्ययो लघूपधगुणं बाधित्वा प्रथमं प्रवर्तते। ततः "सार्वधातुकमपित्" इति शस्य ङित्वात् "क्ङिति च " इति निषेधान्न गुणः। अक्लृप्ताऽभावकस्य नित्यशास्त्रस्याऽभावकल्पनापेक्षया क्लृप्ताऽभावकस्याऽनित्यशास्त्रस्यैव तत्कल्पनं युज्यत इति नित्यस्य बलवत्त्वे बीजम्। परादन्तरङ्गं यथा--उभये देवमनुष्याः। अत्र "प्रथमचरमे"ति परमपि विकल्पं बाधित्वा "सर्वादीनी"ति नित्यैव सर्वनामसंज्ञा भवति, तस्या विभक्तिनिरपेक्षत्वेनारङ्गत्वात्। अल्पापेक्षमन्तरङ्गमिति हि तल्लक्षणम्। तस्य बलवत्त्वे बीजमाह--

असिद्धं बहिरङ्गमन्तरङ्गे। अन्तरङ्गशास्त्रे प्रसक्ते बहिरङ्गशास्त्रमविद्यमानं प्रत्येतव्यमित्यर्थः। इयं तु परिभाषा "वाहौउठ्"सूत्रे भाष्ये स्थिता। परादपवादो यथा--दध्ना। अस्थिदधीत्यनङ्()। इह परमप्यनेकालिति सर्वादेशं बाधित्वा "ङिच्चे"त्यन्तादेशः, तस्य येन नाप्राप्तिन्यायेन तदपवादत्वात्। अपवादस्य बलवत्त्वे बीजं। त्वनुपदमेवोक्तम्। नित्यादन्तरङ्गं यथा--ग्रामणिनि कुले इह। नित्यमपीकोऽचीति नुमं बाधित्वा "ह्रस्वो नपुंसके" इति ह्रस्वः। प्रथमतः कृते नुम्यनजन्तत्वाध्यस्वो न स्यात्। अन्तरङ्गादपवादो यथा--दैत्यारिः। श्रीशः। परमपि सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वादाद्गुणे यणि च प्राप्तेऽपवादत्वात्सवर्णदीर्घः।

अकृतव्यूहाः पाणिनीयाः। न कृतः अकृतः, व्यूह=प्रकृतिप्रत्ययविवेचनं यैस्तेऽकृतव्यूहाः पाणिनीयाः=पाणिनिशिष्या इत्यक्षरार्थः। तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यमित्यतोऽध्याहृत्य व्याचष्टे-निमित्तमित्यादिना। "सेदुष" इत्याद्युदाहरणम्। तच्च शब्दाधिकारे "सेदिवस्"शब्दनिरूपणावसरे मूल एव स्पष्टीभविष्यति। इयं परिभाषा निर्मूला निष्फला चेति परिभाषेन्दुशेखरे स्पष्टम्।

इति श्रीवासुदेवदीक्षितविरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां परिभाषाप्रकरणम्॥

*********************

अथ प्राग्दिशीयाः।

------------

तत्त्व-बोधिनी
स्वरितेनाधिकारः १४७०, १।३।११

स्वरितेनाधिकारः। अत्रेत्थंभूतलक्षणे तृतीया। अधिकारो विनियोगः। कियद्()दूरमधिकार इत्यत्रतु व्याख्यानमेव शरणम्। यथा--आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः, न तु प्रागभ्यासविकारेभ्य एवेत्यादि। यद्वा स्वरिता इति सप्तम्यन्तम्, स्वरिते दृष्टे अधिकारो निवर्तत इत्यर्थः। कः स्वरितोऽधिकारार्थः, कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणम्। नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तः किमनेन सूत्रेणेति चेत्, अत्राहुः-अर्थान्तरसङ्ग्रहायेदं सूत्रं कृतम्। तथाहि-अधि-अधिकः कारोऽधिकारः। अधिकं कार्यं गौणेपि शास्त्रप्रवृत्तिरित्यर्थः। तथा च गौणमुख्यन्यायो यत्र नेष्यते अपादानाधिकरणादौ, तत्र स्वरितः पाठ्यः। किंच अधिकः कारः कृतिरियं-यत्पूर्वः सन् परं बाधते। तथा च "नुमचिरतृज्वद्भावेभ्यो नु"डित्यादिवक्ष्यमाणपूर्वविप्रतिषेधाः सर्वे सङ्गृहीता भवन्ति, तत्र स्वरितपाठेनैव गतार्थत्वादिति॥

परनित्येति। परान्नित्यं यथा-"तुदादिभ्यः शः"। तुदति। "रुधादिभ्यः श्नम्"। रुणद्धि। परमपि लघूपधगुणं बाधित्वा नित्यत्वात् शश्नमौ। तथा धिनवाव, धिनवाम। परमपि "लोपस्चास्यान्यतरस्यां म्वो"रित्युकारलोपं बाधित्वा

नित्यत्वादाडुत्तमस्येत्याट्। परादन्तरङ्गं यथापरमपि "अनेका"ल्लिति सर्वादेशं बाधित्वा "ङिच्चे"त्यन्तादेशः। दध्ना, दध्ने। "अस्थिदधी"त्यनङ्। नित्यादन्तरङ्गं यथा-"ग्रामणिनी कुले"। नित्यमपीकोऽचीति नुमं बाधित्वा "ह्रस्वो नपुंसके" इति ह्रस्वः। कृते तु नुमि अनजन्तत्वाद्ध्रस्वो न स्यात्। अन्तरङ्गादपवादो यथा-"दैत्यारि", "श्रीशः"। परमपि सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वादाद्गुणे यणि च प्राप्तेऽपवादत्वात्सवर्णदीर्घः। तथा "उन्न्यः" सुल्वौ "सुल्वः" इत्यत्रान्तरङ्गत्वादियङि उवङि च प्राप्तेऽपवादत्वादेरनेकाच इति, "ओः सुपी"ति च यण्। यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां उवङि च प्राप्तेऽपवादत्वादेरनेकाच इति, "ओः सुपी"ति च यण्। यद्यपवादेऽन्यत्र चरितार्थत्वात्तातङि न प्रवर्तते, किंतु परेण "अनेकाल्शि"दित्यनेन बाध्यते,-जीवतात्। भवतात्। अयजे इन्द्रम्, ग्रामे इह, सर्वे इत्थम्।-अत्र अयज इ इन्द्रम्, ग्राम इह, सर्व ई इत्थमिति स्थितेऽन्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। तस्य असमानाश्रये "दैत्यारिः" "श्रीश" इत्यादौ चरितार्थत्वात्॥

असिद्धमिति। तेन "पचावेद"मित्यादौ "एत ऐ" इत्यैत्वं न। अकृतव्यूहा इति। अकृतकार्या इत्यर्थः। एवं तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यं स्यादत आह--निमित्तं विनाशोन्मुखं दृष्ट्वेति। लोकसिद्धार्थकथनमेतत्। यद्वा। अक्षरार्थेनाप्येतत्कथनम्। ऊह्यते तर्क्यत इत्यूहः-कार्यम् , विशिष्टो य ऊहो व्यूहो=विनाशोन्मुखनिमित्तकं कार्यम्। अकृतो व्यूहो यैस्ते अकृतव्यूहा इति। यद्यपि "कृतमपि शास्त्रं निवर्तयन्ती"ति परिभाषान्तरं पठ()ते, फलं च तुल्यं, तथापि "अकृतव्यूहा" इत्येव लघु, "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर"मिति न्यायादिति भावः। न कुर्वन्तीति। यथा निषेदुषी"मित्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि "भाविना संप्रसारणेन वलादित्वं नङ्क्षयती"त्यालोच्य न कुर्वन्तीत्यर्थः॥

इति तत्त्वबोधिन्यां परिभाषाप्रकरणम्।

-------------------------

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुदात्तङितः ५।१ आत्मनेपदम् १।१ ७७

समासः॥

अनुदात्तश्च ङश्च अनुदात्तङ्गौ, अनुदात्तङौ इतौ यस्य, सः अनुदात्तङित्, तस्मात् अनुदात्तङितः, द्वन्द्वगर्भः बहुव्रीहिः।

अर्थः॥

अनुदात्तेतः ङितश्च धातोः आत्मनेपदं भवति।

उदाहरणम्॥

आस् -- आस्ते। वस् -- वस्ते। एध -- एधते। षूङ् -- सूते। शीङ् -- शेते।
काशिका-वृत्तिः
अनुदात्तङित आत्मनेपदम् १।३।१२

अविशेषेण धातोरात्मनेपदं पस्मैपदं च विधास्यते, तत्र अयं नियमः क्रियते। अनुदात्तैतो ये धतवो ङितश्च, तेभ्य एव

आत्मनेपदं भवति न अन्येभ्यः। अनुदत्तेद्भ्यः, आस आसते। वस वस्ते। ङिद्भ्यः खल्वपि, षूङ् सूते। शीङ् शेते।

लघु-सिद्धान्त-कौमुदी

अनुदात्तङित आत्मनेपदम् ३८०, १।३।१२

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात्॥

न्यासः

अनुदात्तङित आत्मनेपदम्। , १।३।१२

"तत्रायं नियमः क्रियते" इति। विधीयमानत्वात् प्रधानस्य प्रत्ययस्य न तु प्रकृतेरिति विज्ञायते। अत एवाह-- "अनुदात्तेतो ये धातवो ङितश्च तेभ्यः" इति। यदि पुनरयं प्रकृतिनियमः स्यात्, तदा किं स्यात्? अनुदात्तङिद्भ्यः प्रत्ययान्तरं न स्यात्। कामं वचनसामर्थ्यात् प्रत्ययान्तरमपि भविष्यतीत्येष दोषः शक्यते परिहर्तुम्। यस्तु वचनसामर्थ्यद्वारेणाभीष्टेऽर्थे प्रतीयमाने प्रतिपत्तिगौरवदोषः स्यात्, सोऽपरिहार्य एव। यदि तर्हि प्रत्ययनियमोऽयम्, तदा प्रकृतीनामनियतत्वात् ताभ्यः परस्मैपदमपि स्यात्? न भविष्यति; "शेषात्कर्त्तरि परस्मैदपदम्" १।३।७८ इति द्वितीयनियमविधानात् शेषादेव परस्मैपदम्, नान्यस्मादिति। "आस्ते" इत्यादि। "आस उपवेशने" (धा।पा।१०२१) "वस आच्छादने" (धा।पा।१०२३), "षूङ प्राणिगर्मविमोचने" (धा।पा।०३१) , "शीङ स्वपने" (धा।पा।१०३२), अदादित्वाच्छपो लुक्। "शेते" इति। "शीङः सार्वधातुके गुणः" ७।४।२१॥

तत्त्व-बोधिनी

अनुदात्तङित आत्मनेपदम् ७, १।३।१२

अनुदात्तश्च ङश्च अनुदात्तङौ, तौ इतौ यस्य सोऽनुदात्तङित्। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं संबध्यते। तत्रानुदात्तांशे तदन्तविधेः फलाऽभावादंशान्तर एव तदन्तग्रहममित्याशयेनाह--अनुदात्तेत इत्यादि। "उपदेशेऽजनुनासिक" इत्यतोऽनुवृत्तमुपदेशग्रहममपि ङिदंश एव संबध्यते, नान्यत्र, अव्यभिचारात्तदाह-- उपदे()शे यो ङिदिति। विशेष्यमन्तरेण तदन्तविधिरिह दुर्लभ इत्यत आह--- धातोरिति। लस्येति। नन्विहाऽनुवृत्तेरभावादुभयमपि दुर्लभं, "भूवादयः" इति सूत्रान्मण्डूकप्लुत्यानुवृत्तस्य "धातव" इत्यस्य विभक्तिविपरिणामात्कथंचिद्धातोरितिपदे लब्धेऽपि लस्येत्येतन्न लभ्यत इति चेत्। अत्राहुः-- "इको झ"लित्यत्र सना धातोरिवेहात्मनेपदेन लकारधात्वोरापेक्षो बोध्यः, तिङां लादेशत्वाल्लस्य च धातोर्विधानादिति। उपदेश इति किम्?। चुकुटिषति। "गाङ्कुटादिभ्यः" इति सन आतिदेशिकं ङित्त्वम्। धातोः किम्?। चङ्ङ्भ्यां माभूत्। अदुद्रुवत्। अवोचत्। ननु लावस्थायामेव वृतादिभ्यः "स्यतासी" इत्यादिना स्यप्रत्यये कृते व्यवधानादात्मनेपदपरस्मैपदरूपनियमाऽप्रवृत्तावपि लकारसामान्याश्रयत्वेनान्तरङ्गत्वात्स्यप्रत्ययात्पूर्वमेव लस्य तिबादिषु सत्सु पक्षे परस्मैपदं पक्षे चात्मनेपदं सिध्यत्येवेति "वृद्भ्यः स्यसनो"रिति सूत्रे स्यग्रहणं व्यर्थं [स] त्तेनैव स्यग्रहणेन "विकरणेभ्यो नियमो बलीया"निति ज्ञापितम्। तेनानुदात्तेत्त्वाद्वर्तिष्यत इत्येवं नित्यमात्मनेपदे प्राप्ते "वृद्भ्यः स्यसनो"रिति परस्मैपदमपि पक्षे भवति। तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङ्ङोर्दोषः स्यादेव। अयं च पक्षः "शदेः शितः" इति सूत्रे भाष्यकैयटयोः स्पष्टः। किं च तदन्तविधिलाभार्थमपि धातुग्रहणमावस्यकं। "धातोरेकाच" इत्यादिना यङ्। बोभूयते। "ऋतेरीयङ्"। ऋतीयते। शेते ह्नुते इत्यत्र तु व्यपदेशिवद्भावेन ङिदन्तत्वम्। "नमोवरिवश्चित्रङ" इति क्यचि चित्रीयते इत्येतत्कथमिति चेत्। अत्राहुः--- अवयवेऽचरितार्थो ङकार क्यजन्तस्य विशेषणं भवति। तथा च समुदायानुबन्धो ङकार इति व्यपदेशिवद्भावेनैव ङिदन्तत्वं बोध्यमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भावकर्मणोः ७।२ आत्मनेपदम् १।१ १२

समासः॥

भावश्च कर्म च भावकर्मणी, तयोः भावकर्मणोः, इतरेतरद्वन्द्वः।

अर्थः॥

भावे कर्मणि च अर्थे धातोः आत्मनेपदं भवति।

उदाहरणम्॥

भावे -- आस्यते देवदत्तेन, चिन्त्यते देवदत्तेन, ग्लायते भवता, सुप्यते भवता॥ कर्मणि -- देवदत्तेन वेदः पठ्यते, देवदत्तेन फलं खाद्यते, क्रियते कटस्त्वया, ह्रियते भारो मया॥
काशिका-वृत्तिः
भावकर्मणोः १।३।१३

लः कर्मणि च भावे च अकर्मकेभ्यः ३।४।६९ इति भावकर्मणोर् विहितस्य लस्य तिबादयः सामान्येन वक्ष्यन्ते। तत्रैदम् उच्यते, भावे कर्मणि च आत्मनेपदं भवति। भावे ग्लाय्ते भवता, सुप्यते भवता, आस्यते भवता। कर्मणि क्रियते कटः, ह्रियते भारः। कर्मकर्तरि, लूयते केदारः स्वयम् एव इति, परस्मैपदं न भवति। तस्य विधाने द्वितीयं कर्तृग्रहणम् अनुवर्तते। तेन कर्तिव यः कर्ता तत्र प्रस्मैपदं भवति।
लघु-सिद्धान्त-कौमुदी
भावकर्मणोः ७५४, १।३।१३

लस्यात्मनेपदम्॥
न्यासः
भावकर्मणोः। , १।३।१३

भाव इति धात्वर्थः क्रियात्मक उच्यते, कर्म तु पारिभाषिकमेव। तत्रेदमुच्यते नियमार्थं इति विशेषः। अयमपि पूर्वत् प्रत्ययनियमः-- भावकर्मणोरेवात्मनेपदं भवति, नार्थनियमः। अर्थनियमे सति "को भवता दायोदत्तः", "को भवता लाभो लब्धः" इति कर्मणि घञादिर्दुर्लभः स्यात्। "सुप्यते" इति। "ञिष्वप् शये" (धा।पा।१०६८) वच्यादिना ६।१।१५ सम्प्रासरण्। "क्रियते" इति। "रिङ शयग्लिङक्षु" ७।४।२८ इति रिङादेशः। "लूयते केदारः स्वयमेव" इति। "कर्मवत्कर्मणा तुल्यक्रियः" ३।१।८७ इत्यत्र व्यपदेशातिदेशशासत्रातिदेशपक्षयोः कर्मकर्तरि परस्मैपदेन परत्वाद्भवितव्यमिति कस्यचिद्()भ्रान्तिः स्यात्, अतस्तन्निराकर्तुमाह -- "कर्मकर्तरि" इत्यादि। "द्वितीयं कर्तरिग्रहणमुपतिष्ठते" इति। "कर्तरि कर्मव्यतिहारे" १।३।१४ इत्यतः। तेन कर्त्तैव यः कत्र्ता शुद्धः केवलः कर्मवद्भावरहितः, तत्र परस्मैपदं भवति; यत्र कर्मवद्भावस्तत्रात्मनेपदं भवति।कार्यातिदेशपक्षे "क्रमवत् कर्मणा तुल्यक्रियः" ३।१।८७ इत्यनेनैवात्मनपेपदं भवति।
बाल-मनोरमा
भावकर्मणोः ५०४, १।३।१३

अथ आत्मनेपदप्रक्रिया निरूप्यते। आत्मनेपदपरस्मैपदव्यवस्थापकानि सूत्राणि प्रथमस्य तृतीयपादे पठितानि। तानि क्रमेण व्याख्यास्यन् व्याख्यातमपि सूत्रं पुनः स्मारयति-- अनुदात्तङित इति। "आत्मनेपद"मित्येतत् "शेषात्कर्तरि परस्मैपद"मित्यतः प्रागनुवर्तते।

भावकर्मणोः। भावः भावना क्रियेति पर्यायाः। कर्मशब्दः कर्मकारके वर्तते। भावे कर्मणि च यो लकारस्तस्यात्मनेपदमित्यर्थः। भावे उदाहरति-- बभूवे इति। वृत्ता भवनक्रियेत्यर्थः। कर्मण्युदाहरति-- अनुबभूवे इति। "आनन्द" इति शेषः। आनन्दकर्मिका वृत्ता अनुभवक्रियेत्यर्थः।

तत्त्व-बोधिनी
भावकर्मणोः ४३२, १।३।१३

भावकर्मणोः। भावे कर्मणि चयो लकारस्तस्याऽऽत्मनेपदमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तरि ७।१ कर्म-व्यतिहारे ७।१ १६ आत्मनेपदम् १।१ १२

समासः॥

कर्मणः व्यतिहारः कर्मव्यतिहारः, तस्मिन् ॰ षष्ठीतत्पुरुषः॥

अर्थः॥

कर्मशब्दः क्रियावाची, न तु {कर्तुरीप्सिततमं कर्म (१।४।४९)} इति। व्यतिहारः = विनिमयः, परस्परक्रियाकरणम्। क्रियायाः व्यतिहारे = विनिमये कर्तृवाच्ये, आत्मनेपदं भवति॥

उदाहरणम्॥

व्यतिलुनते क्षेत्रम्, व्यतिपुनते वस्त्रम्॥
काशिका-वृत्तिः
कर्तरि कर्मव्यतिहारे १।३।१४

कर्मशब्दः क्रियवाची। व्यतिहारो विनिमयः। यत्रान्यसम्बन्धिनीं क्रियामन्यः करोति, इतरसम्बन्धिनीं चेतरः, स कर्मव्यतिहारः। तद्विशिष्टक्रियावचनाद् धातोरात्मनेपदं भवति। व्यतिलुनते। व्यतिपुनते। कर्मव्यतिहारे इति किम्? लुनन्ति। कर्तृग्रहणम् उत्तरार्थं शेषात् कर्तरि परस्मैपदम् १।३।७८ इति।
लघु-सिद्धान्त-कौमुदी
कर्तरि कर्मव्यतिहारे ७३४, १।३।१४

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम्। व्यतिलुनीते। अन्यस्य योग्यं लवनं करोतीत्यर्थः॥
न्यासः

कत्र्तरि कर्मव्यतीहारे। , १।३।१४

"कर्मशब्दः क्रियावाची" इति। एतेन लौकिकमिह कर्म क्रियात्मकं गृह्रते, न पारिभाषिकमिति दर्शयति। कुत एतल्लभ्यते? प्रत्यासत्तेः। क्रिया हि धातोः प्रत्यासन्ना, तत्र साक्षाद्()वृत्तेः। साक्षाद्()वृत्तिस्तु धातुवाच्यत्वात् क्रियायाः। पारिभाषिके तु साधनात्मके कर्मणि धातुः साक्षान्न वत्र्तते;तस्याधातुवाच्यत्वात्। तस्माद्धातुं प्रतिन तस्य प्रत्यासत्तिरिति न गृह्रते, तेन साधनकर्मव्यतीहारे न भवत्यात्मनेपदम्-- देवदत्तस्य धान्यं व्यतिलुनन्तीति। लुनातिरुपसंगर्हार्थे लवने वत्र्तते। देवदत्तेन यद्धान्यं सङगृहीतं पुरस्ताल्लवनेनोपसंगृह्णन्तीत्यर्थः। ततश्चान्यसम्बन्धिनो धानयस्यान्येन संग्रहणाद्भवति साधनकर्मव्यतीहारः। "अन्यसम्बन्धिनीम्" इति। अन्यस्य कर्त्तुरभीष्टया क्रियेमां क्रियां करिष्यामीति सेहान्यसम्बन्धिन्यभिप्रेता, अन्यथा यद्यन्येन निष्पादिता या क्रिया सेहान्यसम्बन्धिन्यभिप्रेता स्यात् तदा व्यतिहारो नोपपद्येत, न ह्रन्येन निष्पादितायाः पुनर्निष्पादनमुपपद्यते। "व्यतिलुनते" इति। "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः, "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपः। अथ कर्तृग्रहणं किमर्थम्? भावकर्मनिवृत्त्यर्थमिति चेत्, न; अभीष्टत्वाद्भावकर्मणोरात्मनेपदम्-- व्यतिभूयते सेनया, व्यतिगम्यन्ते ग्रामाः, व्यतिहन्यन्ते दस्यव इति। "भावकर्मणोः" १।३।१३ इत्यनेनैव यथा स्यात्, अनेन मा भूदित्येवमर्थमिति चेत्, न; विशेषाभावात्। न हि तेनात्मनेपदे सत्यनेन वा कश्चिद्विशेषोऽस्ति। यद्यनेन स्यात् तदा "न गतिहिंसार्थेभ्यः" १।३।१५ इति प्रतिषेधः स्यात्, तेन चात्मनेपदे विधीयमाने न भवत्येष दोष इति चेत्, सत्यम्; एषोऽस्तु विशेषः,तथापि न कर्त्तृग्रहणं कत्र्तव्यम्; यस्मात् "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इत्यनन्तरा या प्राप्तिः सा प्रतिषिध्यते, न पूर्वा। तेन भावकर्मणोरात्मनेपदं भविष्यति। अत आह--"कर्त्तृग्रहणमुत्तरार्थम्" इति। कः पुनरसावुत्तरो योगो यत्रास्य प्रयोजनमित्याह-- "शेषात्" इत्यादि॥
बाल-मनोरमा
कर्तरि कर्मव्यतिहारे ५०५, १।३।१४

कर्तरि कर्म। कर्मव्यतिहारशब्दं विवृण्वन्नाह-- क्रियाविनिमये द्योत्ये इति। एवं च कर्मशब्दः क्रियापरः, व्यतिहारशब्दो विनिमयपर इत्युक्तं भवति। अन्यस्येति। शूद्रादियोग्यं सस्यादिलवनं ब्राआह्णः करोतीत्यर्थः। परस्परकरणमपि कर्मव्यतिहार इति कैयटः। संप्रहरन्ते राजानः। कर्तृग्रहणं भावकर्मणोरित्यस्याऽनुवृत्तिनिवृत्त्यर्थम्।अन्यथा व्यतिलुनीत इत्यत्र न स्यात्। वस्तुतस्तु पृथक् सूत्रारम्भादेव सिद्धे कर्तृग्रहणमुत्तरार्थमिति भाष्ये स्पष्टम्। व्यति अस् ते इति स्थिते आह--श्नसोरिति। तपसे अयोग्यः शूद्रस्तपस्वी भवतीत्यर्थः। इह "उपसर्गप्रादुभ्र्या"मिति न षः, यच्परकत्वाऽभावादिति भावः। व्यतिषाते इति। इह अच्परकत्वादुपसर्गप्रादुभ्र्यामिति षः। व्यति स्?से इति स्थिते आह-- तासस्त्योरिति। "उपसर्गप्रादुभ्र्या"मिति नेह ष्तवम्, अस्त्यवयवस्य सकारस्य लुप्तत्वात्। व्यति स् ध्वे इति स्थिते आह-- धि चेति। "सलोप" इति शेषः। व्यितस् ए इति स्थिते आह-- ह एतीति। सकारस्य हकार इति भावः। व्यत्यसै इति। लोडुत्तमपुरुषैकवचनम्। व्यत्यास्तेति। लङि रूपम्। व्यतिषीतेति। लिङि रूपम्। व्यतिराते इति। लटि प्रथमपुरुषैकद्विबहुवचनेषु समानमेव र#ऊपम्। व्यतिभाते इति। भाधातो रूपम्। व्यतिबभे इति। लिटि रूपम्।

तत्त्व-बोधिनी
कर्तरि कर्मव्यतिहारे ४३३, १।३।१४

कर्तरि कर्म। अन्यस्येति। शूद्रस्य योग्यं सस्यादिलवनं ब्राआह्णः करोतीत्यर्थः। परस्परकरणमपि कर्मव्यतिहारः। संप्रहरन्ते राजानः। पृथक्()सूत्रारम्भादेव सिद्धे कर्तृग्रहणमुत्तरार्थम्। व्यतिस्ते इति। यच्परत्वाऽभावान्न षः। व्यतिसे इति। "उपसर्गप्रादुभ्र्या"मिति नेह षत्वम्, सकारस्याऽस्त्यवयवत्वाऽभावात्। "आदेशप्रत्यययो" रिति षत्वं तु "सात्पदाद्यो"रिति निषिद्धम्, एकदेशविकृतन्यायेन प्रत्ययमात्रस्य पदत्वात्।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० १६ गति-हिंसार्थेभ्यः ५।३ कर्म-व्यतिहारे ७।१ १४ आत्मनेपदम् १।१ १२

समासः॥

गतिश्च हिंसा च गतिहिंसे, गतिहिंसे अर्थौ येषां ते गतिहिंसार्थाः, तेभ्यः ॰ द्वद्वगर्भः बहुव्रीहिः।

अर्थः॥

गत्यर्थेभ्यः धातुभ्यः, हिंसार्थेभ्यः च कर्मव्यतिहारे आत्मनेपदं न भवति। पूर्वेण प्राप्तिः प्रतिषिध्यते॥

उदाहरणम्॥

गत्यर्थेभ्यः -- व्यतिगच्छन्ति, व्यतिसर्पन्ति। हिंसार्थेभ्यः -- व्यतिहिंसन्ति, व्यतिघ्नन्ति॥
काशिका-वृत्तिः
न गतिहिंसाऽर्थेभ्यः १।३।१५

पूर्वेण आत्मनेपदं प्राप्तं प्रतिषिद्यते। गत्यर्थेभ्यो हिंसाऽर्थेभ्यश्च धातुघ्यः कर्मव्यतिहरे आत्मनेपदं न भवति। व्यतिगच्छन्ति। व्यतिसर्पन्ति। हिंसाऽर्थेभ्यः व्यतिहिंसन्ति। व्यतिघ्नन्ति। प्रतिषेधे हसादीनाम् उपसङ्ख्यनम्। व्यतिहसन्ति। व्यतिजल्पन्ति। व्यतिपठन्ति। हरतेरप्रतिषेधः। संप्रहरन्ते राजानः।
लघु-सिद्धान्त-कौमुदी
न गतिहिंसार्थेभ्यः ७३५, १।३।१५

व्यतिगच्छन्ति। व्यतिघ्नन्ति॥
न्यासः
न गतिहिंसार्थेभ्यः। , १।३।१५

"व्यतिगच्छन्ति"इति। "इषुगमियमां छः" ७।३।७७ इति छत्वम्, "छे च" ६।१।७१ इति तुक्। "व्यतिसर्पन्ति" इति। "गम्लृ सृप्लृ गतौ" (धा।पा।९८२,९८३), लघूपधगुणः। "व्यतिहिंसन्ति" इति। "तृहि हिसि हिंसायाम्" (धा।पा।१३४८,१८२९)। "व्यतिघ्नन्ति" इति। "हन हिंसागत्योः" (धा।पा।१०१२) "गमहन" ६।४।९८ इत्युपधापलोपः, "हो हन्तेञ्र्णिन्नेषु" ७।३।५४ इति कुत्वम्। "प्रतिषेधे" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। उपसंख्यानशब्दोऽत्रानेकार्थत्वाद्धातूनां प्रतिपादने वत्र्तते। तच्च प्रतिपादनं प्रकृतत्वात् प्रतिषेधस्येति गम्यते। तदयमर्थः-- प्रतिषेधे कत्र्तव्ये हसादीनामप्यात्मनेपदप्रतिषधस्य प्रतिपादनं कत्र्तव्यमिति। तत्रेदं प्रतिपादनम्-- नेति योगविभागः क्रियते, तेन हसादीनामपि भविष्यतीति। ततः "गतिहिंसार्थेभ्यः" इति द्वितीयो योगः, तत्र "न" इति वत्र्तते।किमर्थं पुनरयम्? पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थम्, तेन "न" इति योगविभागेन हसादीनामेव प्रतिषेधो भविष्यति, नान्येष्यमिति।
बाल-मनोरमा

न गतिहिंसार्थेभ्यः ५०६, १।३।१५

न गतिहिंसार्थेभ्यः। कर्मव्यतिहारे आत्मनेपदं नेत्यर्थः। हसादिगणस्य अदर्शनादाह-- हसप्रकारा इति। उपसर्गमनपेक्ष्य ये गतिहिंसयोर्वर्तन्ते तेषामेव ग्रहणलाभाय अर्थग्रहणम्। ह्मञ्()धातुस्तु उपसर्गबलादिं()धसायां वर्तते इति न तस्य प्रतिषेध इत्याह-- हरतेरप्रतिषेध इति। अर्थग्रहणलभ्यमिदं वार्तिकम्।

तत्त्व-बोधिनी
न गतिहिंसार्थेभ्यः ४३४, १।३।१५

न गतिहिंसार्थेभ्यः। अर्थशब्दः प्रत्येकभिसंबध्यते। कर्मव्यतिहारे यदात्मनेपदं तस्य निषेधः। अर्थग्रहणसामथ्र्याद्येशब्दान्तरमनपेक्ष्य गतिहिंसयोर्वर्तन्ते त एवेह गृह्न्ते। हरतिस्तूपसर्गवशादिं()धसायां प्रवर्तते इति "हरतेरप्रतिषेधः" इति वार्तिकमर्थग्रहणलभ्यमेवेत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इतरेतरान्योन्योपपदात् ५।१ च ० न ० १५ कर्म-व्यतिहारे ७।१ १४ आत्मनेपदम् १।१ १२

समासः॥

इतरेतरश्च, अन्योन्यश्च, इतरेतरान्योन्यौ, तौ उपपदे यस्य, सः इतरेतरान्योन्योपपदः, तस्मात् ॰ द्वन्द्वगर्भः बहुव्रीहिः।

अर्थः॥

इतरेतरान्योन्योपपदात् धातोः, आत्मनेपदं न भवति, कर्मव्यतिहारे अर्थे॥

उदाहरणम्॥

इतरेतरस्य व्यतिलुनन्ति, अन्योन्यस्य व्यतिलुनन्ति॥
काशिका-वृत्तिः
इतरेतरान्योन्यौपपदाच् च १।३।१६

इतरेतरः, अन्योन्यः इत्येवम् उपपदाद् धातोः कर्मव्यतिहारे आत्मनेपदं न भवति। इतरेतरस्य व्यतिलुनन्ति। अन्योन्यस्य व्यतिलुनन्ति। परस्परौपपदाच् च इति वक्तव्यम्। पर्स्परस्य व्यतिलुनन्ति।
न्यासः
इतरेतरान्योऽन्योपपदाच्च। , १।३।१६

उपोच्चारितं पदमुपपदम्। इतरेतरान्योऽन्यशब्दावुपपदे यस्य स तथोक्तः। अथोपपदग्रहणं किमर्थम्, "नेतरेतरान्योऽन्याभ्याम्" इत्युच्यताम्? अशक्यमेवं वक्तुम्; एवं ह्रुच्यमाने पञ्चमीनिर्देशात् "तस्मादित्युत्तरस्य" १।१।६६ इत्युत्तरस्यैव स्यात्-- इतरेतरस्य व्यतिलुनन्तीति, इह तु न स्यात्-- व्यतिलुनन्तीतरेतरस्येति। "परस्परोपपदाच्चेति वक्तव्यम्" इति। परस्परशब्द उपपदं यस्य तस्मात् प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः।

तत्रेदं व्याख्यानम्()- चकारोऽत्र क्रियते। स चानुक्तसमच्चयार्थः। तेन परस्परोपपदादपि प्रतिषेधो भविष्यतीति।

बाल-मनोरमा

इतरेतरान्योन्योपपदाच्च ५०७, १।३।१६

इतरेतर।"नात्मनेपद"मिति शेषः।

तत्त्व-बोधिनी

इतरेतरान्योन्योपपदाच्च ४३५, १।३।१६

इतरेतरा। नन्वितरेतरादिशब्दैरेव कर्मव्यतिहारस्य द्योतितत्वात्()तद्द्()योतकमात्मनेपदं न प्राप्नोतीतित किमर्थो निषेधः?। अत्राहुः लौकिके व्यवहारे लाघवाऽनादरादात्मनेपदं प्रसज्येतेति निषेधोऽयमारभ्यते। अत एव व्यतिलुनीते इत्यादौ कर्मव्यतिहारद्योतनाय "व्यती" त्युपसर्गावात्मनेपदं च समुञ्चित्य प्रयुज्यत इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नेः ५।१ विशः ५।१ आत्मनेपदम् १।१ १२

अर्थः॥

निपूर्वात् निश् (तुदा०प०) धातोः, आत्मनेपदं भवति।

उदाहरणम्॥

निविशते, निविशेते, निविशन्ते।

काशिका-वृत्तिः

नेर् विशः १।३।१७

शषात् कर्तरि पस्मैपदम् १।३।७८ इति प्रस्मैपदे प्राप्ते निपूर्वाद् विश आत्मनेपदं विधीयते। नेः परस्माद् विश आत्मनेपदं भवति। निविशते। निविशन्ते। नेः इति किम्? प्रविशति। यदागमास् तद्ग्रहणेन गृह्यन्ते तेन अटा न अस्ति व्यवधानम्। न्यविशत। नेरुपसर्गस्य ग्रहणम्, अर्थवद्ग्रहने न अनर्थकस्य ग्रहणम् इति। तस्मादिह न भवति, मधुनि विशान्ति भ्रमराः।

लघु-सिद्धान्त-कौमुदी

नेर्विशः ७३६, १।३।१७

निविशते॥

न्यासः

नेर्विशः। , १।३।१७

"निविशते" इति। "विश प्रवेशने" (१४२४) तुदादित्वाच्छः। "न्यविशत" इति। अडागमेन व्यवधानमित्यात्मनेपदेन न

भविव्यमिति कस्यचिद्भ्रान्तिः स्यात्, अतस्तन्निराकर्त्तुमाह-- "{यदागमास्तद्()ग्रहणेन" इति-- काशिका।पदमञ्जरी च। अडागमः" इत्यादि। "मधुनि विशन्ति" इति। अत्र नेः परस्य विशतेरात्मनेपदं प्राप्नोति, तत्कस्मान्न भवतीत्याह-- "नेरुपसर्गस्य" इत्यादि। मधुशब्दस्य सप्तमेयकवचने "इकोऽचि विभक्तौ" ७।१।७३ इति नुमि मधुनीति रूपं भवति, तस्य चावयवो निशब्दोऽनर्थकः॥

बाल-मनोरमा

नेर्विशः ५०८, १।३।१७

नेर्विशः। निपूर्वाद्विश आत्मनेपदं स्यादित्यर्थः। नेति निवृत्तम्। यद्यपि न्यविशतेत्यत्र न विशिर्नेः परः, अटा व्यवधानात्टो विकरणान्ताङ्गभक्तत्वेन विशधात्ववयवत्वऽभावात्, तथापि "अड्()व्यवाये उपसङ्ख्यान"मिति वार्तिकाद्भवतीति "शदेः शितः" इत्यत्र भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

नेर्विशः ४३६, १।३।१७

नेर्विशः। नेः किम्?। प्रविशति। अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणम्। तेनेह न-- "मधूनि विशन्ति भ्रमराः"। "इत्युक्त्वा मैथिली भर्तुरङ्के निविशी भया" दित्यत्र तु "अङ्गानि विशती"ति पाठ()म्। न च पदसंस्कारपक्षे त्वङ्के नि विशतीति पाठेऽप्यदोष इति वाच्यं, त्वं करोति भवान् करोषीत्यादिप्रयोगस्यापि त्वदुक्तरीत्या साधुत्वापत्तेः, "वा लिप्साया"मित्यदेर्वैयर्थ्यापत्तेश्च। स्यादेतत्-- "नवाऽम्बुदश्यामतनुर्न्यविक्षते" त्यत्रात्मनेपदं न स्यात्, अटा व्यवधानात्। न च स्वाङ्गमव्यवधायकमिति वाच्यम्ङ्गभक्तस्याऽटो विकरणविशिष्टस्याऽवयवत्वेऽपि धातोरनवयवत्वादिति चेत्। अत्राहुः-- "लावस्थायामडागम"इति भाष्यमते न कश्चिद्दोषः। मतान्तरे तु उपसर्गनियमे "अड्व्यवाये उपसङ्ख्यान"मिति वार्तिकमस्तीति [दिक्]।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ परिव्यवेभ्यः ५।३ क्रियः ५।१ आत्मनेपदम् १।१ १२

समासः॥

परि च वि च अव च परिव्यवाः, तेभ्यः ॰ इतरेतरद्वन्द्वः।

अर्थः॥

परि, वि अव इत्येवं पूर्वात् {डुक्रीञ् द्रव्यविनिमये} धातोः आत्मनेपदं भवति॥

उदाहरणम्॥

परिक्रीणीते, विक्रीणीते, अवक्रीणीते॥

काशिका-वृत्तिः

परिव्यवेभ्यः क्रियः १।३।१८

डुक्रिञ् द्रव्यविनिमये। ञित्वात् कर्त्रभिप्राये क्रियाफले सिद्धम् आत्मनेपदम्। अकर्त्रभिप्रायार्थो ऽयमारम्भः। परिव्यवेभ्य उत्तरस्मात् क्रीणातेरात्मनेपदं भवति। परिक्रीणीते। विक्रीणीते। अवक्रीणीते। पर्यादय उपसर्गा गृह्यन्ते तेन इह न भवति, वहुवि क्रीणाति वनम्।
लघु-सिद्धान्त-कौमुदी
परिव्यवेभ्यः क्रियः ७३७, १।३।१८

परिक्रीणीते। विक्रीणीते। अवक्रीणीते॥
न्यासः
परिव्यवेभ्यः क्रियः।, १।३।१८

"परिक्रीणीते" इति। "ई हल्यघोः" ६।४।११३ इतीत्त्वम्। "पर्यादय उपसर्गा गृह्न्ते" इति। कथम्? क्रिय इति सम्बन्धलक्षणा षष्ठी, न पञ्चमी-- क्रियो ये सम्बन्धिनः पर्यादय इति। अर्थद्वारश्च तेषां सम्बन्धो विशेषणविशेष्यभावलक्षणः। स चोपसर्गैरेव पर्यादिभिः सम्भवति; नान्यैरिति सामथ्र्यादुपसर्गग्रहणं भवति। "बहुवि क्रीणाति" इति। बहवो वयो यस्मिन्निति बहुव्रीहिः। विशब्दोऽत्र पक्षिणि वत्र्तते॥
बाल-मनोरमा
परिव्यवेभ्यः क्रियः ५०९, १।३।१८

परि वि अव एभ्य परस्मात् क्रीञ्दातोरात्मनेपदमित्यर्थः। ञित्त्वादात्मनेपदसिद्धेः किमर्थमिदमित्यत आह--अकत्र्रभिप्रायार्थमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विपराभ्याम् ५।१ जेः ५।१ आत्मनेपदम् १।१ १२

समासः॥

वि च परा च विपरौ, ताभ्यां ॰ इतरेतरद्वन्द्वः॥

अर्थः॥

वि, परा इत्येवं पूर्वात् जिधातोः आत्मनेपदं भवति॥

उदाहरणम्॥

विजयते, पराजयते।
काशिका-वृत्तिः
विपराभ्यां जेः १।३।१९

शेषात् कर्तरि परस्मैपदम् १।३।७८ इत्यस्य अपवादः। विपरा पूर्वाज् जयतेर् धातोरात्मनेपदं भवति। विजयते। पराजयते।

विपराशब्दावुपसर्गौ गृह्येते साहचर्यत्। तेन इह न भवति, बहुवि जयति वनम्, परा जयति सेना इति।

लघु-सिद्धान्त-कौमुदी

विपराभ्यां जेः ७३८, १।३।१९

विजयते। पराजयते॥

न्यासः

विपराभ्यां जेः। , १।३।१९

"साहचर्यात्" इति। उपसर्गग्रहणए हेतुः "नेर्विशः" १।३।१७ इत्यत्र नेरुपसर्गस्य ग्रहणम्। अनन्तरसूत्रेऽपि १।३।१८ पर्यादीनामुपसर्गाणामेव ग्रहणम्। अतः प्रकरणसाहचर्यादद्विपराशब्दावुपसर्गौ गृह्येतेत-- इत्येके। अपरे तु वर्णन्ति-- साहचर्य पत्र्यासत्त्युपलक्षणम्। येषां साहचर्यं तेषां नियोगतः प्रत्यासत्त्या भवितव्यमिति। अतः साहचर्यस्य प्रत्यासत्त्याऽविनाभावित्वात् तेन प्रत्यासत्तिर्लभ्यते। तदेतदुक्तं भवति-- प्रत्यासत्तेर्विपराशब्दावुपपसर्गौ गृह्येते इति। प्रत्यासत्तिश्च जयतेर्विपराशब्दाभ्यामुपसर्गाभ्यामेव, नानुपसर्गाभ्याम्। तथा हि-- ताभ्यामेव जयत्यर्थो जयत्यर्थो विशिष्यते,नेतरभ्यामिति॥

बाल-मनोरमा

विपराभ्यां जेः ५१०, १।३।१९

विपराभ्यां जेः। वि परा आभ्यां परस्माज्जिधातोरात्मनेपदमित्यर्थः। विजयते इति। उत्कृष्टो भवतीत्यर्थः। पराजयते इति। निकृष्टो भवतीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आङः ५।१ २१ दः ५।१ अनास्यविहरणे ७।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अङो दो ऽनास्यविहरणे १।३।२०

अकर्त्रभिप्रायर्थो ऽयम् आरम्भः। आङ्पूर्वाद् ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति। विध्यामादत्ते। अनास्यविहरणे इति किम्? आस्यं व्याददाति। आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः। विपादिकां व्याददाति। कुलं व्याददाति। स्वाङ्गकर्मकाच् च इति वक्तव्यम्। इह मा भूत्, व्याददते पिपीलिकाः पतङ्गस्य मुखम्।

न्यासः

आङो दोऽनास्यविहरणे। , १।३।२०

ददातेरेवास्यविहरणे वृत्तिः सम्भवति, नान्येषां दारूपाणां धतूनामिति। अतस्तत्प्रतिषेधेन तस्यैव ग्रहणं विज्ञायत इत्यत आह-- "आङ्पूर्वाद्दात्रः" इति। "आदत्ते" इति। पूर्ववदाकारलोपः, "खरि च" ८।४।५४ इति चत्र्वम्। "आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः" इत्युपसंख्यानध्याजेनास्यविहरणविषयं दर्शयति। कथम्? विहरणग्रहणं न कत्र्तव्यम्, इह "आङो दोऽनास्ये" इत्येतद्वक्तव्यम्, तत्रास्ये दात्रो वृत्तिर्न सम्भवतीति

सामर्थ्यादास्यसमवायिन्यां क्रियायां वृत्तिर्विज्ञास्यते, तत्रैव प्रतिषेधः,तत् किं विहरणग्रहणेन? ननु च "आङो दोऽनास्ये" इत्येतावत्युच्यमाने, स्वं मुखमादत्ते देवदत्त इत्यत्रापि प्रतिषेधः स्यात्, नैष दोषः, वा ह्यास्यविषयैव क्रिया तस्यां वर्त्तमानो ददातिरास्यवृत्तिर्भवति, विहरणमेवास्यविषयम्, ग्रहणं त्वास्यविषयं ग्रहीतृविषयञ्च। तदेवं विहरणमन्तेरणापि सिद्धे यद्विहरणग्रहणं क्रियते तस्यैतत् प्रयोजनम्-- आस्यविहरणसमानक्रियादपि प्रतिषेधोऽयं यथा स्यादित्येवमित्येके। "इतरेतरान्योऽन्योपपदाच्च" १।३।१६ इत्यतश्चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः। तेनास्यविहरणसानक्रियादपि प्रतिषेधो भवतीत्यपरे। "स्वाङ्गकर्मकाच्च" इति। वक्तव्यमिति शेषः। न चात्राद्रवमूर्तिमल्लक्षमं पारिभाषिकं स्वाङ्गं विवक्षितम्, किं तर्हि? स्वमङ्गं स्वाङ्गमिति। तत् कर्म यस्य स स्वाङ्गकर्मकः,तस्मात् स्वाङ्गकर्मात् प्रतिषेधो भवतीत्येतदर्थरूपं वक्तव्यमित्यर्थः। तेन परसम्बन्धिना मुखेन यदा सकर्मको भवति तदा भवत्येवात्मनेपदम्-- "व्याददते पिपीलिकाः पतङ्गस्य मुखम्" इति। वक्तव्यशब्दस्य व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- कर्त्तरीति वर्त्तते, आस्यमिति च सम्बन्धिशब्दः, तत्रैवं विज्ञायते-- "यस्मिन् कर्त्तर्यैवात्मनेपदं भवति तस्य चेदास्यम्()" इति। "आङ" इति योगविभागः क्रियते-- आगमयस्व तावन्माणवकम्, आनुते शृगालः, आपृच्छते गुरूनित्येवमर्थः। तेन "आगमेः क्षमायाम्" (वा।३५) इति "आङि नुप्रसच्छयोः" (वा।४०) इति च नोपसंख्येयं भवति॥

बाल-मनोरमा

आङो दोऽनास्य विहरणे ५११, १।३।२०

आङो दो। आस्यविहरणं --मुखविकसनम्। दा इत्यस्य दः इति पञ्चमी। तदाह-- ददातेर्मुखविकसनादन्यत्रेति। विद्यामादत्ते इति। गृह्णातीत्यर्थः। दात्रो ञित्त्वेऽप्यकत्रभिप्रायार्थमिदम्। अविवक्षितमिति। "अविहरणे" इत्येतावदेव विवक्षितमित्यर्थः। विपादिकां व्याददातीति। क्षारौषधादिना विदारयतीत्यर्थः। अत्र आस्यविहरणाऽभावेऽपि विकसनसत्त्वान्नात्मनेपदमिति भावः। नदी कूलं व्याददातीति। भिनत्तीत्यर्थः। अत्रापि विकसनसत्त्वादास्यविहरणाऽभावेऽपि नात्मनेपदम्। पराङ्गकर्मकान्न निषेध इति, - वार्तिकम्। पतङ्गस्येति। पक्षिणो मुखं भक्षणाय विकासयन्तीत्यर्थः।

तत्त्व-बोधिनी

आङो दोऽनास्यविहरणे ४३७, १।३।२०

आङो दो। अकत्रभिप्रयार्थमिदम्। तेन "व्यादत्ते विहगपतिर्मुखं स्वकीय"मिति प्रयोग आस्यविहरणेऽपि सिद्धः, क्रियाफलस्य कर्तृमित्वविवक्षणात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्रीडः ५।१ अनुसंपरिभ्यः ५।३ च ० आङः ५।१ २० आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

क्रीडो ऽनुसंपरिभ्यश् च १।३।२१

क्रीडृ विहारे, एतस्मादनु सम् परि इत्येवं पूर्वादाङ्पूर्वाच् चाऽत्मनेपदं भवति। अनुक्रीडते। सङ्क्रीडते। परिक्रीडते। आङः खल्वपि, आक्रीडते। समा साहचर्यादन्वादिरुपसर्गो गृह्यते, तेन इह कर्मप्रवचनीयप्रयोगे न भवति, माणवकमनु क्रीडति।

समो ऽकूजने इति वक्तव्यम्। सङ्क्रीडन्ति शकटानि। आगमेः क्षमायाम् आत्मनेपदं वक्तव्यम्। क्षमा उपेक्षा, कालहरणम् इति यावत्। आगमयस्व तावन्माणवकम्। शिक्षेर्जिज्ञासायाम्। विद्यासु शिक्षते। आशिषि नाथः। सर्पिषो नाथते। मधुनो नाथते। आशिषि इति किम्? माणवकमनुनाथति। हरतेर्गतताच्छील्ये। पैतृकमश्वा अनुहरन्ते। मातृकं गावो ऽनुहरन्ते। गतताच्छील्ये इति किम्? मातुरनुहरति। किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्। अपस्किरते वृषभो हृष्टः। जीविकायाम् अपस्किरते कुक्कुटो भक्षार्थी। कुलायकरणे अपस्किरते श्वा आश्रयार्थी। हर्षादिषु इति किम्? अपकिरति कुसुमम्। आङि नुप्रच्छयोरुपसङ्ख्यानम्। आनुते सृगालः। आपृच्छते गुरुम्। शप उपलम्भन इति वक्तव्यम्। वाचा शरीरस्पर्शनम् उपलम्भनम्। देवदत्ताय शपते। यज्ञदत्ताय शपते। उपलम्भने इति किम्? शपति।

न्यासः

क्रीडोऽनुसंपरिभ्यश्च। , १।३।२१

"समा साहचर्यात्" इति। यद्यप्यन्वादिरुपसर्गत्वं व्यभिचरति, सम्शब्दस्तु न व्यभिचरति, अतस्तत्साहचर्यादन्वादिरुपसर्ग एव गृह्यते। "माणवकमनुक्रीडति" इति। माणवकेन सह क्रौडतीत्यर्थः। "तृतीयार्थे" १।४।८४ इत्यनुशब्दस्य कर्मप्रवचनीयसंज्ञा। "आगमेः" इति। आङ्पूर्वस्य गमेण्र्यन्तस्य ग्रहणम्। "क्षमा उपेक्षा कालहरण्" इति। कालप्रतिपादनं प्रतीक्षणमित्यर्थः। "आगमयस्व" इति। "जनीजृष्वनसुरञ्जौऽमन्ताश्च" (ग।सू।धा।पा। ८१७) इति मित्संज्ञायाम् "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वत्वम्। लोण्मध्यमपुरुषैकवचनम्, "थासः से" ३।४।८० "सवाभ्यां वामौ" ३।४।९१ इति वादेशः। "शिक्षेः" इति। शकिः सन्नन्तो गृह्यते।"विद्यासु शिक्षते" इति। विद्यां जिज्ञासितुं घटत इत्यर्थः। शकेः सन्, "सनि मीमाघुरभलभ" ७।४।५४ इत्यादिनेस्भावः। "अत्र लोपोऽभ्यासस्य" ७।४।५८ इत्यभ्यासस्य लोपः। "स्कोः संयोगाद्योरन्ते च " ८।२।२९ इति सकारलोपः, शिक्ष इति स्थिते लट्। यस्तु "शिक्ष विद्योपादाने" (धा।पा।६०५) इति पठ()ते, ततोऽनदात्तेत्त्वादात्मनेपदं सिद्धमेव। "आशिषि नाथः" इति। गतेस्ताच्छील्यं गतिताच्छील्यम्। ताच्छील्यम् = तत्स्वभावता। "पैतृकम()आआ अनुहरन्ते, मातृकं गावोऽनुहरन्ते" इति। पितृवन्मातृवद्()गमनमेषां स्वभाव इत्यर्थः। "मातुरनुहरति, पितुरनुहरति" इति। मातुराकारं पितुराकारमनुकरोतीत्यर्थः। मातृसदृशः,पितृसदृशः इत्यर्थः। पैतृकमिति पितुरागतमिति "ऋतष्ठञ्" ४।३।७८, "इसुसुक्तान्तात् कः" ७।३।५१। मातुरनुहरतीत्यत्र गतिताच्छील्यं न विवक्षितम्। "किरतेः" इत्यादि। "कृ विक्षेपे" (धा।पा। १४०९) अस्य विक्षेप एवार्थः। हर्षादयस्तस्य विषयभूताः। अत्र हर्षो विक्षेपस्य कारणम्, जीविकाकुलायकरणञ्च तत्फलम्। एतेष्वेवार्थेषु किरतेरात्मनेपदं भवति। "अपस्किरते" इति। "अपाच्चतुष्पाच्छकुनिष्वालेखने" ६।१।१३७ सुट्। "आनुते" इति। "णु स्तुतौ" (धा।पा।१०३५), अदादिः। अयञ्चात्रोत्कण्ठापूर्वकशब्देन वर्तते। "आपृच्छते" इति। "प्रच्छ ज्ञीप्सायाम्" (धा।पा।१४१३) तौदादिकः, ग्रहादिना ६।१।१६ सम्प्रसारणम्। "वाचा शरीरस्पर्शनमुपलम्भनम्" इति। शपथविशेषः। तथा हि-- देवदत्तस्य शरीरं स्पृशामीति शपथं कुर्वाणो देवदत्ताय शपत इति प्रयुज्यते। "श्लाघह्नुङ्स्थाशपाम्"१।४।३४ इत्यादिना समप्रदानसंज्ञायाम्, देवदत्तायेति सम्प्रदाने चतुर्थी। शपतीत्याक्रोशतीत्यर्थः। "समोऽकूजने" (वा।३४) इत्यादिग्रन्थस्य शप उपलम्भनपर्यन्तस्य योऽर्थः स इह चकारेणानुक्तसमुच्चयार्थेनोपात्तः, तस्यैवार्थस्य चकारोपात्तस्य स्पष्टीकरणायास्य ग्रन्थस्योपन्यासः कृतः॥

बाल-मनोरमा

क्रीडोऽनुसंपरिभ्यश्च ५१२, १।३।२१

क्रीडोऽनु। चादाङ इति। तथा च अनु सम परि आङ् एभ्यः परस्मात् क्रीडधातोरात्मनेपदमित्यर्थः। "अनोः कर्मपर्वचनीयान्ने"ति वार्तिकम्। तदिदं न्यायसिद्धमित्याह-- उपसर्गेण समेति। "समोऽकूजने" इति वार्तिकम्। समः परस्मादकूजने विद्यमानात् क्रीडेरात्मनेपदमित्यर्थः। कूजने तु संक्रीडति चक्रमिति। कूजतीत्यर्थः। आगमेः

क्षमायामिति। "आत्मनेपद"मिति शेषः। वर्तिकमिदम्। ण्यन्तस्येदं ग्रहणमिति। भाष्ये ण्यन्तस्यैवोदाहरणादिति भावः। आगमयस्व तावदिति। कंचित्कालं सहस्वेत्यर्थः। आङुपसर्गवशाद्गमधातुः क्षमायां वर्तते। "हन्त्यर्थाश्चे"ति चुरादिगणसूत्रेण स्वार्थे णिच्। चुरादेराकृतिगणत्वाद्वा। मा त्वरिष्ठा इति। फलितार्थकथनम्। "शिक्षेर्जिज्ञासाया"मितप्यि वार्तिकम्। धनुषि शिक्षते इति। वैषयिके आधारे सप्मती। शकिः सन्नन्तः। "सनि मीमा" इति इस्। अभ्यासलोपश्च। तदाह-- धनुर्विषये इत्यादि। "सिक्ष विद्योपादाने" इत्यस्य तु नेह ग्रहणम्, अनुदात्तेत्त्वादेव सिद्धेरिति भावः। कथमिति। भूभृतां पतिं किमु न नाथसे = न याचसे इत्यर्थः। आशिषोऽप्रतीतेः कथमात्मनेपदमित्यर्थः। नाधसे इति पाठ()मिति। तवर्गचतुर्थान्तोऽयम्। "आशिषि नाथः" इति नियमस्तु तवर्गद्वितीयान्तस्यैवेति भावः। "हरतेर्गते"त्यादि वार्तिकम्। "आत्मनेपद"मिति शेषः। गतं प्रकार इति। वृत्तमित्यर्थः। ताच्छील्यं = स्वभावानुसरणम्। गतिताच्छील्यमिति यावत्। गतेति पाठे भावे क्तः। पैतृकम()आआ इति। पैतृकं वृत्त()आआः स्वभावादनुसरन्तीत्यर्थः। मातृकं गाव इति। "अनुहरन्ते" इत्यनुषज्यते। मातुरनुहरतीति। अनुकरोतीत्यर्थः। अत्र सादृश्यमात्रं विवक्षितं, न तु गतिताच्छील्यमिति भावः। किरतेरिति वार्तिकम्। हर्षः = प्रमोदः, जीविका जीवनोपायो, भक्षणम्, कुलायकरणम् = आश्रयसंम्पत्तिः, एषु कृ()धातोरात्मनेपदमित्यर्थः। ननु कधातोर्विक्षेपार्थकस्य कथमेषु वृत्तिरित्यत आह-- हर्षादयो विषया इति। धात्वर्थत्वाऽभावेऽपि पदान्तरसमभिव्याहारगम्या इत्यर्थः। तत्रेति। तेषु हर्षादिष्वित्यर्थः। कारणमिति। तथा च हर्षमूलकत्वं विक्षेपस्य लभ्यते इति भावः। इतरे इति। जीविकाकुलायकरणे विक्षेपस्य साध्ये इति लभ्यते। हर्षादीनामेवं विधविषयत्वे सत्येवात्मनेपदमिति फलितम्, भाष्ये तथैवोदाह्रतत्वादिति भावः।

तत्त्व-बोधिनी
क्रीडोऽनुसंपरिभ्यश्च ४३८, १।३।२१

*शिक्षेर्जिज्ञासायामिति। "शिक्ष विद्योपादाने" इत्यस्य नेह ग्रहणमनुदात्तेत्त्वादेवात्मनेपदसिद्धेः, किं तु शकेः सन्नन्तस्येति ध्वनयति-- धनुर्विषय इत्यादिना। नियमार्थमिति। नाथतेरनुदात्तेत्त्वं तु "अनुदात्तेतश्च हलादे"रिति युचि नाथन इति रूपसिद्ध्यर्थमिति भावः। मातुरनुहरतीति। सादृश्यमात्रमत्र विवक्षितं , न तु प्रकारताच्छील्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समवप्रविभ्यः ५।३ स्थः ५।१ २६ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
समवप्रविभ्यः स्थः १।३।२२

सम् अव प्र वि इत्येवं पूर्वात् तिष्ठतेरात्मनेपदं भवति। संतिष्ठते। अवतिष्ठते। वितिष्ठते। आङः स्थः प्रतिज्ञाने इति वक्तव्यम्। अस्तिं सकारम् आतिष्ठते। आगमौ गुणवृद्धी आतिष्ठते।
लघु-सिद्धान्त-कौमुदी
समवप्रविभ्यः स्थः ७३९, १।३।२२

संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते॥
न्यासः

समवप्रविभ्यः स्थः।, १।३।२२

"सन्तिष्ठते" इति। पाघ्रादिसूत्रेण ७।३।७८ तिष्ठादेशः। "अ()स्त सकारमातिष्ठते" इति सकारमात्रम()स्त धातुम् आपिशलिराचार्यः प्रतिजानीते। तथा हि -- न तस्य पाणिनेरिव "अस भुवि" (धा।पा।१०६५) इति गणपाठः, किं तर्हि? "स भुवि" इति स पठति। "आगमौ गुणवृद्धी आतिष्ठते" इति। स त्वागमौ गुणवृद्धी आतिष्ठते। एवं हि स प्रतिजनीत इत्यर्थः॥
बाल-मनोरमा
समवप्रविभ्यः स्थः ५१४, १।३।२२

समवप्रविभ्यः स्थः। स्थ इति पञ्चमी। सम् अव प्र वि एभ्यः परस्मात्स्थाधातोरात्मनेपदमित्यर्थः। संतिष्ठते इति। समाप्तं भवतीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रकाशनस्थेयाख्ययोः ७।२ च ० स्थः ५।१ २२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
प्रकाशनस्थेयाऽख्यहोश् च १।३।२३

स्वाभिप्रायकथनं प्रकाशनम्। स्थेयस्य आख्या स्थेयाख्या। तिष्ठत्यस्मिन्निति स्थेयः। विवादपदनिर्णेता लोके स्थेयः इति प्रसिधः। तस्य प्रतिपत्त्यर्थम् आख्याग्रहणम्। प्रकाशने स्थेयाऽख्यायां च तिष्ठतेरात्मनेपदं भवति। प्रकाशने तावत् तिष्ठते कन्या धात्रेभ्यः। तिष्ठते वृषली ग्रामपुत्रेभ्यः। प्रकाशयत्यात्मानम् इत्यर्थः। स्थेयाऽख्यायाम् त्वयि तिष्ठते। मयि तिष्ठते। संशय्य कर्णादिषु तिष्ठते यः।
न्यासः
प्रकाशनस्थेयाख्ययोश्च।, १।३।२३

"तिष्ठन्त्यस्मिन्नति स्थेयः" इति। "कृत्यल्युटो बहुलम्"३।३।११३ इत्यधिकरणे "अचो यत्" ३।१।९७। "ईद्यति" ६।४।६५ इतीत्वम्। गुणः। "विवाद" इति। सन्देहविषये। "निर्णेता" इति। निश्चेता, प्रमाणभूत इत्यर्थः। कथं पुनः स्थेयशब्दात् तस्य प्रतीतिर्भवति, यावता स्थेयशब्दो भावसाधनोप्यस्ति गतिनिवृत्तिवचन इत्याह-- "तस्य" इत्यादि। यस्य "स्थेय" इत्याख्या, लोके तस्य प्रतीतिर्यथा स्यादित्येवमर्थमाख्याग्रहणम्। तेनाख्याग्रहणेन तस्य प्रतीतिर्भवतीति दर्शयितुमाख्याग्रहणं कृतम्। "तिष्ठते कन्या छात्रेभ्यः" इति। पूर्ववत् सम्प्रदानसंज्ञायां सत्यां छात्रेभ्य इति चतुर्थी। "प्रकाशयत्यात्मानमित्यर्थः " इति। अनेकार्थद्वातूनां तिष्ठतिरत्र प्रकाशने वत्र्तते। "संशय्य" इति। जहातु नैनं कथमर्थसिद्धः संशय्य कणादिषु तिष्ठते यः। असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि॥ (किरा-३।१४) इत्यस्य श्लोकस्यायमेकदेश इहोपन्यस्तः। संशय्येति विवादपदभूते वस्तुनि संशयित्वो भूत्वा कर्णादिषु तिष्ठत इति। कर्णशकुनिप्रभृतिषु निर्षेतृत्वेनाभिमतेषु तत्सु पक्षान्तरं परित्यज्य तिष्ठते; तदुपदर्शितस्यैव पक्षस्याश्रयणात्॥
बाल-मनोरमा
प्रकाशनस्थेयाऽऽख्ययोश्च ५१५, १।३।२३

प्रकाशन। प्रकाशनं-- स्वाभिप्रायाविष्करणम्। स्थेयः-- विवादपदनिर्णेता। तिष्ठति = विश्राम्यति विवादपदनिर्णयोऽस्मिन्नित्यर्थे बाहुलके अधिकरणे "अचो यत्" इति यति [ईत्वे] स्थेयशब्दव्युत्पत्तेः। "स्थेयो विवादस्थानस्य निर्मएतरि पुरोहिते" इति मेदिनी। इह तु विवादपदनिर्णेतृत्वेनाध्यवसायो विवक्षितः। आख्या = अभिधानम्। प्रकाशनाख्यायां, स्थेयाख्यायां च वर्तमानात् स्थाधातोरात्मनेपदमित्यर्थः। प्रकाशने उदाहरति - गोपी कृष्णाय तिष्ठते इति। "श्लाघह्नुङ्स्थाशपा"मिति संप्रदानत्वाच्चतुर्थी। स्थेये उदाहरति- - संशय्येति। कर्णादिष्विति विषयसप्तमी। फलितमाह-- कर्णादीनिति।

तत्त्व-बोधिनी

प्रकाशनस्थेयाऽख्ययोश्च ४४०, १।३।२३

प्रकाशन। प्रकाशनं -- ज्ञापनम्। स्थेयो-- विवादपदनिर्णेता, तिष्ठन्तेऽस्मिन् विवादपदनिर्मयार्थमिति व्युत्पत्तेः। बाहुलकादधिकरणे "अचो यत्" "स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते" इति मेदिनी। कर्णादिष्विति अधिकरणे सप्तमी। तेषां स्थेयत्वं "तिष्ठते"इत्यात्मनेपदेन द्योत्यते। तमेवाऽर्थमाह-- कर्णादानिति। प्रकाशनेत्यादि। चैत्रे तिष्ठति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उदः ५।१ अनूर्ध्वकर्मणि ७।१ स्थः ५।१ २२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

उदो ऽनूर्ध्वकर्मणि १।३।२४

उत्पूर्वात् तिष्ठतेरनूर्ध्वकर्मणि वर्तमानादात्मनेपदं भवति। कर्मशब्दः क्रियावाची। अनूर्ध्वताविशिष्टक्रियावचनात् तिष्ठतेरात्मनेपदं भवति। गेहे उतिष्ठते। कुटुम्बे उत्तिष्ठते। तदर्थं यतते इत्यर्थः। उद ईहायाम् इति वक्तव्यम्। इह मा भूत्, अस्माद् ग्रामात् शतम् उत्तिष्ठति। शतम् उत्पद्यते इत्यर्थः। ईहग्रहणम् अनूर्ध्वकर्मण एव विशेषनं, न अपवादः। अनूर्ध्वकर्मणि इति किम्? आसनादुत्तिष्ठति।

न्यासः

उदोऽनूध्र्वकर्मणि। , १।३।२४

अनुध्र्वकर्मणि वत्र्तमानादित्युक्ते, यश्चोदयति--- "ननु च तिष्ठतेरकर्मकक्रियावचनत्वान्न कर्मणि वृत्तिरुपपद्यते। तत्किमुच्यते-- "अनूध्र्वकर्मणि वत्र्तमानात्" इति, तं प्रत्याह-- "क्रियावाची" इति। यदुक्तम्-- अनूध्र्वकर्मणि वत्र्तमानादिति, तस्यार्थं विस्पष्टीकर्त्तुमाह-- "अनूध्र्वकर्मविशिष्टात् क्रियावचनात्" इति। "उद ईहायामिति वक्तव्यम्िति। उत्पूर्वात् तिष्ठतेरीहायां परिस्पन्दने वत्र्तमानादात्मेपदं भवतीत्येतदर्थरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्-- अन्तरेणापि कर्मग्रहणं क्रियामात्रवृत्तित्वे तिष्ठतेः सिद्धे यत् कर्मग्रहणं तल्लोके या क्रिया कर्मत्वेन प्रसिद्धा तस्याः प्रतिपत्तयर्थं कृतम्, सा तु परिस्पन्दनात्मकैव परिस्पन्दनात्मिकैव घटनभ्रमणादिका, तथा हि--तां कुर्वाणः "सक्रियः" इत्युच्यते। स्थानासनादिकां त्वपरिसम्पन्दनात्मिकां कुर्वाणोऽपि "निष्क्रियः" इति। तस्मादात्मनेपदमिदं कर्मग्रहणादीहायामेव वत्र्तमानाद्भविष्यति। उद ईहायामित्युक्ते, ईहाग्रहणमनूध्र्वकर्मणोऽपवाद इति कस्यचिद्()भ्रान्तिः स्यात्, अतस्तन्निराकर्त्तुमाह-- "ईहाग्रहणम्" इत्यादि। विशेषणं व्यक्तीकरणमिहाभिप्रेतम्। एतदुक्तं भवति-- यदिदमुक्तम्

"उद ईहायामिति वक्तव्यम्" इति, तत्र यदीहाग्रहणं तदनूध्र्वकर्मण एव विशेषणं सूत्रोपात्तस्य व्यक्तीकरणार्थम्। ईहात्मकमिहानूध्र्वकर्म विवक्षितमिति प्रतिपादनार्थमित्यर्थः॥

बाल-मनोरमा

उदोऽनूध्र्वकर्मणि ५१६, १।३।२४

उदोऽनुध्वकर्मणि। ऊध्र्वदेशसंयोगानुकूला क्रिया ऊध्र्वकर्म। तद्भिन्नमनूध्र्वकर्म। तद्वृत्तेः स्थाधातोरुत्पूर्वादात्मनेपदमित्यर्थः। मुक्तावुत्तिष्ठते इति। गुरूपगमनादिना यतते इत्यर्थः। पीठादुत्तिष्ठतीति। उत्पततीत्यर्थः। ईहायामेव - इति वार्तिकम्। ईहा कायपरिस्पन्दः। ग्रामाच्छतमुत्तिष्ठतीति। उत्पद्यत इत्यर्थः।

तत्त्व-बोधिनी

उदोऽनूध्र्वकर्मणि ४४१, १।३।२४

उदोऽनुर्द्ध्वकर्मणि। "स्थ" इत्यनुवर्तते। ऊर्द्ध्वदेशसंयोगानुकूलं यत्कर्म तदूर्द्ध्वकर्म। "उदोऽनूध्र्वे" इत्युक्तेऽप्यनूध्र्वक्रियायां वर्तमानादुत्पूर्वात्तिष्ठतेर्लस्यात्मनेपदमित्यर्थो लभ्यत एव, तथापि परिस्पन्दार्थलाभाय कर्मपदमित्यभिप्रेत्याह-- ईहायामेवेति। इच्छापूर्विका चेष्टा--ईहा। सा च "ग्रामाच्छत"मित्यत्र नास्ति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपात् ५।१ २६ मन्त्रकरणे ७।१ स्थः ५।१ २२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

उपान् मन्त्रकरणे १।३।२५

उपपूर्वात् तिष्थतेर् मन्त्रकरणे ऽर्थे वर्तमानादात्मनेपदं भवति। ऐन्द्र्या गार्हपत्यम् उपतिष्ठते। आग्नेय्या आनीघ्रम् उपतिष्ठते। मन्त्रकरणे इति किम्? भर्तारम् उपतिष्ठति यौवनेन। उपाद् देवपूजासङ्गतकरणमित्रकरणपथिष्विति वाच्यम्। देवपूजायाम् आदित्यम् उपतिष्ठते। सङ्गतकरणे रथिकानुपतिष्ठते। मित्रकरणे महामात्रानुपतिष्ठते। मित्रकरणसङ्गतकरणयोः को विशेषः? सङ्गतकरणम् उपश्लेषः। तद्यथा, गङ्गा यमुनाम् उपतिष्थते। मित्रकरणं तु विनाप्युपश्लेषेण मैत्रीसम् भन्धः। पथि अयं पन्थाः स्त्रुघ्नम् उपतिष्ठते। वा लिप्सायामिति वक्तव्यम्। भिक्षुको ब्राह्मणकुलम् उपतिष्थते, उपतिष्ठति इति वा।

न्यासः

उपान्मन्त्रकरणे। , १।३।२५

"मन्त्रकरणे"इति। मन्त्रः करणं साधकतमं यस्य धात्वर्थस्य स तथोक्तः। "उपात्" इत्यादि। अत्र वक्तव्यशब्दस्य व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- उत्तरसूत्रे चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन उपपूर्वात्तिष्ठतेर्देवपूजादिष्वप्यात्मनेपदं भवति। "वा लिप्सायाम्" इति। लब्धुमिच्छा लिप्सा। लिप्सायां गम्यमानायामित्येषोऽर्थोवेदितव्यः,न तु तत्र वत्र्तमानात् तिष्ठतेरिति, न लिप्सा तिष्ठरेरर्थः। तथा हि-- "भिक्षुको ब्राआह्णकुलमुपतिष्ठते"इत्यत्र तिष्ठतिरुपसंक्रमणे वत्र्तते। लिप्सा तूपसंक्रमणस्य हेतुभूता गम्यते। लिप्सायां हेतुभूतानां

ब्राआह्वणकुलमुपसंक्रामतीत्यर्थः॥

बाल-मनोरमा

उपान्मन्त्रकरणे ५१७, १।३।२५

उपान्मन्त्रकरणे। मन्त्रकरणकेऽर्ते विद्यमानात्स्थाधातोरात्मनेपदमित्यर्थः। आग्नेय्या आग्नीध्रमुपतिष्ठते इति। आग्नेय्या ऋचा आग्नीध्राख्यमण्डपविशेषमुपेत्य तिष्ठतीत्यर्थः। स्थितेरकर्मकत्वेऽपि उपेत्येतदपेक्ष्य सकर्मकत्वम्। केचित्तु मन्त्रकरणके समीपावस्थितिपूर्वकस्तवे विद्यमानात्स्थाधातोरात्मनेपदमिति व्याचक्षते। तत्र स्तवो गुणवत्त्वेन संकीर्तनमिति स्तुतशस्त्रधिकरणे प्रपञ्चितमस्माभिः। श्लोकै राजानं स्तौतीत्यर्थे श्लोकैरुपतिष्ठते इत्यात्मनेपदं न, मन्त्रकरणकत्वाऽभावात्। उपाद्देवपूजा-- इति वार्तिकम्। अमन्त्रकरणकत्वार्तम्। आदित्यनुपतिष्ठते इति। अभिमुखीभूयाऽवस्थितिपूर्वकस्तुत्यादिभिः पूजयतीत्यर्थः। कथं तर्हीति। रघोर्देवतात्वाभावादिति भावः। समाधत्ते-- देवतात्वारोपादिति। नृपस्येति। "नाऽविष्णुः पृथिवीपति"रित्यादिस्मरणादिति भावः। वा लिप्सायामिति। लिप्साहेतुकाऽर्थवृत्तेः स्थाधातोरात्मनेपदं वेत्यर्थः।

तत्त्व-बोधिनी

उपान्मन्त्रकरणे ४४२, १।३।२५

उपान्मन्त्रकरणे। मन्त्रः करणं यत्र मन्त्रकरणं--स्तुतिः, तत्र वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं स्यात्। आग्नेय्येति। अग्निदेवताकया ऋचा आग्नीध्रम् = अग्निविशेषं स्तौतीत्यर्थः। अत्रकेचित्-- "श्लोकै राजानं स्तौतीत्यर्थे स्लौकैरुपतिष्ठत इति प्रयोगो नेष्यते। ऐन्द्य्रा गार्हपत्यमुपतिष्ठते, आग्नेय्या आग्नीध्रमिति वैदिकविषय एव सर्वैरुदाह्रतत्वात्। तथा च तिष्ठतेरर्थे यदा मन्त्रः करणं तदा तङिति व्याख्येयम्। उपतिष्ठत इत्यस्य तु समीपवस्थानमेवार्थः। न च तत्र यष्टायदिवन्मत्रस्य करणत्वं न संभवतीति वाच्यम्, उपस्थानस्वरूपे तस्योपयोगाऽभावेऽपि तत्कार्ये स्तुतावुपयोगादुपस्थानकरणत्वं मन्त्रस्य न विहन्यते। "आग्नीध्र"मिति द्वितीया तु करमत्वान्यथानुपपत्तिलभ्येन स्तोतुमित्यनेनान्वेति। एवं चाऽऽग्नेय्या आग्नीध्रं स्तोतु तत्समीपे तिष्ठतीत्येव वाक्यार्थः। आदित्यमुपतिष्ठते इत्यत्र तु तत्समीपावस्थानस्याऽसंभवदादित्यं स्तोतुं तदभिमुखतया तिष्ठतीत्यर्थः इत्याहुः। गङ्गा यमुनामिति। एतेन यमुनैव प्राचीना, गङ्गा तु पश्चाद्यमुनया सह मिलितेति प्रतीयते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अकर्मकात् ५।१ २९ च ० उपात् ५।१ २५ स्थः ५।१ २२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अकर्मकाच् च १।३।२६

उपातिति वर्तते। उपपूर्वात् तिष्ठतेरकर्मकातकर्मकक्रियावचनादात्मनेपदं भवति। यावद् भुक्तम् उपतिष्ठते। यावदोदनुम् उपतिष्ठते। भुक्तम् इति भावे क्तप्रत्ययः। भोजने भोजने सन्निधीयते इत्यर्थः। अकर्मकातिति किम्? राजानम् उपतिष्ठति।

न्यासः

अकर्मकाच्च। , १।३।२६

"अकर्मकात्" इति। नास्य कर्मास्तीति बहुव्रीहिः। "डुकृञ् करणे"(धा।पा।१४७२), "अन्यभ्योऽपि दृश्यन्ते" ३।२।७५ इति मनिन्, धातोर्गुणः, "शेषाद्विभाषा" ५।४।१५४ इति कप्। ननु धातोः क्रियावचनादकर्मकत्वं न सम्भवतीति तस्मादयुक्तमकर्मकादिति विशेषणम्, व्यवच्छेद्याभावादित्यत आह-- "अकर्मकक्रियावचनात्िति। अकर्मिका चासौ क्रिया चेत्यकर्मकक्रिया, तस्या वचनो यः, तां वक्ति सोऽकर्मकक्रियावचनः। एतेनार्थद्वारकं विशेषणमिदं दर्शयति-- अकर्मको यो धात्वर्थस्तसत्साहचर्यादभिधेयधर्मस्याभिधान उपचारात् धातुरकर्मक इति। अर्थस्य च युक्तमेतद्विशेषणम्,तस्य सकर्मकत्वाकर्मकत्वसम्भवात्। "यावद्भुक्तम्" इति। यावच्छब्दो निपातोऽव्ययम्, तस्य यथार्थे वीप्सायामव्ययीभावः, सप्तम्यन्तञ्चैतत्।अत एवाह-- "भोजने भोजने सन्निधीयते" इति। "भावे क्तः" इति। "नपुंसके भावे क्तः" ३।३।११४ इत्यनेन॥

बाल-मनोरमा

अकर्मकाच्च ५१८, १।३।२६

अकर्मकाच्च। उपात्तिष्ठतेरिति। "उपान्मन्त्रकरणे इत्यतः, "समवप्रविभ्यः स्थः" इत्यतश्च तदनुवृत्तेरिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उद्विभ्याम् ५।२ तपः ५।१ अकर्मकात् ५।१ २६ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

उद्विभ्यां तपः १।३।२७

अकर्मकातिति वर्तते। उत् वि इत्येवं पूर्वात् तपतेरकर्मकत्रियावचनादात्मनेपदं भवति। उत्तपते। वितपते। दीप्यते इत्यर्थः। अकर्मकातित्येव। उत्तपति सुवर्णं सुवर्णकारः। वितपति पृथ्वीं सविता। स्वाङ्गकर्मकाच् च इति वक्तव्यम्। उत्तपते पाणिम्, उत्तपते पृष्ठम्। वितपते पाणिम्, वितपते पृष्ठम्। स्वाङ्गं च इह न पारिभाषिकं गृह्यते अद्रवं मूर्तिमत् स्वाङ्गम् इति। किं तर्हि? स्वम् अङ्गं स्वाङ्गम्। तेन इह न भवति, देवदत्तो यज्ञदत्तस्य पृष्ठम् उत्तपति इति। उद्विभ्याम् इति किम्? निष्टपति।

न्यासः

उद्विभ्यां तपः। , १।३।२७

"स्वाङ्गकर्मकाच्चेति वक्तव्यम्" इति। स्वाङ्गं कर्म यस्य तस्मात् तपतेरात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः, तत्रेदं व्याख्यानम्-- पूर्वसूत्राच्चकारोऽनुवत्र्तते, तस्यानुक्तसमुच्चयार्थत्वात् स्वाङ्गकर्मकादपि भविष्यति। स्वाङ्गञ्चेह न पारिभाषिकम्, किं तर्हि? स्वमङ्गं स्वाङ्गमिति। आत्मीयमङ्गमित्यर्थः। "निष्टपति" इति। "निसस्तपतावनासेवने" ८।३।१०२ इति मूर्धन्यः॥

बाल-मनोरमा

उद्विभ्यां तपः ५१९, १।३।२७

उद्विभ्यां तपः। "अकर्मकादित्येवे"ति भाष्यम्। दीप्यते इति। दीप्तिमान् भवतीत्यर्थः। स्वाङ्कर्मकाच्चेति। "उद्विभ्यां तप" इत्यनुवर्तते। चकारादकर्मकसमुच्चयः। स्वाङ्गशब्दोऽत्र यौगिक इत्याह-- स्वमङ्गमिति। सुवर्णमुत्तपतीति।

अस्वाङ्गकर्मकत्वादकर्मकत्वाऽभावाच्च नात्मनेपदमिति भावः। स्वाङ्गशब्दोऽत्र न पारिभाषिकः, किन्तु यौगिक इत्यसय् प्रयोजनमाह--- चैत्रो मैत्रसय् पाणिमुत्तपतीति। अत्र "अद्रवं मूर्तिम"दित्यादिपरिभाषितस्वाङ्गकर्मकत्वेऽपि स्वकीयाङ्गकर्मकत्वाऽभावान्नात्मनपदमिति भावः।

तत्त्व-बोधिनी

उद्विभ्यां तपः ४४३, १।३।२७

* स्वाङ्गकर्मकाच्चेति। चकारेणाऽकर्मकस्य सङ्ग्रहः। न त्वद्रवमिति। अन्यथा चैत्रो मैत्रस्येत्यादि वक्ष्यमाणं न सङ्गच्छेतेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आङः ५।१ यमहनः ५।१ अकर्मकात् ५।१ २६ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

आङो यमहनः १।३।२८

अकर्मकातिति वर्तते। यम उपरमे, हन हिंसागत्योः इति परस्मैपदिनौ। ताभ्याम् अकर्मकक्रियावचनाभ्याम् आङ्पूर्वाभ्याम् आत्मनेपदं भवति। आयच्छते, आयच्छेते आयच्छन्ते। हनः खल्वपि आहते, आघ्नाते, आघ्नते। अकर्मकातित्येव। आयच्छति कूपाद् रज्जुम्। आहन्ति वृषलं पादेन। स्वाङ्गकर्मकाच् च इति वक्तव्यम्। आयच्छते पाणिम्। आहते शिरः। स्वाङ्गं च इह न पारिभाषिकम् गृह्यते। किं तर्हि? स्वम् अङ्गं स्वाङ्गम्। तेन इह न भवति , आहन्ति शिरः परकीयम् इति।

न्यासः

आङो यमहनः। , १।३।२८

"आहते" इति। "अनुदात्तोपदेश" ६।४।३७ इत्यादिनानुनासिकलोपः। "आघ्नते" इति। "गमहन" ६।४।९८ इत्युपधालोपः, "हो हन्तेः" ७।३।५४ इत्यादिना कुत्वम्। "स्वाङ्गकर्मकाच्चेति वक्तव्यम्" इति। अस्य पूर्ववदर्थः। व्याख्यानमपि पूर्ववदेव॥

बाल-मनोरमा

आङो यमहनः ५२०, १।३।२८

आङो यमहनः। आङः परस्माद्यमो, हनश्चात्मनेपदमित्यर्थः। आयच्छते इति। रज्जुर्दीर्घीभवतीत्यर्थः। दीर्घीकरोति पादमिति वा। आहते इति। "स्वोदर"मिति शेषः। परस्य शिर आहन्तीति।

स्वीयाऽङ्गकर्मकत्वाऽभावादकर्मकत्वाऽभावाच्च नात्मनेपदम्। कथं तर्हीति।

स्वीयाऽङ्गकर्मकत्वाऽभावादकर्मक्तवाऽभावाच्चात्मनेपदाऽसंभवादिति भावः। प्राप्येति। विषमविलोचनस्य वक्षः प्राप्याअजघ्ने इति, रघूत्तमं प्राप्त माऽऽहध्वमिति च प्राप्तिक्रियां प्रत्येव विषमविलोचनस्य रघूत्तमस्य च कर्मतया हन्तेरकर्मकत्वादात्मनेपदं निर्वाधमिति भावः। यद्यपि हननक्रियां प्रत्यपि तयोरेव वस्तुतः कर्मत्वं तथापि

तस्याऽविक्षितत्वादकर्मकत्वमेव, "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इत्यनुपदमेव वक्ष्यमाणत्वादिति बोध्यम्। ननु प्राप्येत्यध्याहारे "प्रासादात्प्रेक्षते" इत्यादिवत्पञ्चमी स्यादित्यत आह-- ल्यब्लोपे इति। "ल्यब्लोपे पञ्चमी"त्येतत्तु यत्राऽर्थाध्याहारमाश्रित्य ल्यबन्तार्थावगतिस्तद्विषयकम्। अत्र तु ल्यबन्तशब्दाध्याहारान्नाऽत्र पञ्चमीत्यर्थः। भेत्तुमित्यादीति। एवं च ल्यब्लोपपञ्चम्या न प्रसक्तिरिति भाव-। "आजघ्ने विषमे" त्यत्र परिहारान्तरमाह-- समीपमेत्येति वेति। "अध्याहार" इति शेषः। विषमविलोचनस्य समीपमेत्य स्वीयमेव वक्षो मल्ल इव वीरावेशादास्फालयांचक्रे इत्यर्थः। तथा च स्वाङ्गकर्मकत्वादात्मनेपदं निर्बाधमिति भावः। लुङि आहन् स् त इति स्थिते --

तत्त्व-बोधिनी

आङो यमहनः ४४४, १।३।२८

आङो यमहनः। प्राप्येति। तथा च हन्तेरकर्मकतया आजघ्ने आहध्वमित्यात्मनेपदं युक्तमित्यर्थः। भेत्तुमित्यादीति। एवं च ल्यब्लोपपञ्चम्याः प्रसक्तिरेव नास्तीति भावः। समीपमेत्येति। विषमविलोचनस्य समीपमेत्य वक्ष आजन्वे। स्वकीयमेव वक्षो मल्ल इव सन्तोषातिशयादास्फालयांचक्रे इत्यर्थात्स्वाङ्गकर्मकत्वमस्त्येवेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समः ५।१ गम्यृच्छिभ्याम् ५।२ अकर्मकात् ५।१ २६ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिघ्यः १।३।२९

अकर्मकातिति वर्तते। शेषात् कर्तरि परस्मैपदम् १।३।७८ इति प्राप्ते सम्पूर्वेभ्यो गमि ऋच्छि प्रच्छि स्वरति अर्ति श्रु विदि इत्येतेभ्यो ऽकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति। सङ्गच्छते। अमृच्छते। संपृच्छते। संस्वरति। सङ्कल्पा अस्य समरन्त। अर्तेर् लुङि च्लेः सर्तिशास्त्यर्तिभ्यश्च ३।१।५६। इत्यङादेशः। तत्र प्रस्मैपदेशु इत्येतन् नाश्रीयते। बहुलं छन्दस्यमाङ्योगे ऽपि ६।४।७५ इत्याट् प्रतिषध्यते। ऋदृशो ऽङि गुणः ७।४।१६ इति गुणः समरनत। संशृणुते। संवित्ते। ऋच्छेरनादेशस्य ग्रहणम्, समृच्छिष्यते। अर्त्यादेशस्य त्वर्ति इत्येव सिद्धम् आत्मनेपदम्। अर्तिरुभयत्र पठ्यते, ऋ गतिप्रापणयोः इति भ्वादौ, ऋ सृ गतौ इति जुहोत्यादौ। विशेषाभावाद् द्वयोरपि ग्रहणम्। विदेर्ज्ञानार्थस्य ग्रहनम्, परस्मैपदिभिर् गमादिभिः साहचर्यात्, न लाभार्थस्य स्वरितेत्त्वादुभ्यतोभाषस्य। दृशेश्च इति वक्तव्यम्। संपश्यते। अकर्मकातित्येव। ग्रामं संपस्यति।

न्यासः

समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः।, १।३।२९

"संस्वरते" इति। "स्वृ शब्दोपतापयोः" (धा।ता।९३२)। "समरन्त" इति। अर्त्तेः "सर्तिशास्त्यर्तिभ्यश्च" ३।१।५६ इत्यत्र पुषादिसूत्रात् परस्मैपदग्रहणानुवृत्तेरात्मनेपदेष्वङागेशेन न भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्, अतस्तन्निराकर्तुमाह-- "तत्र हि" इत्यादि। "संशृणुते"इति। "श्रु श्रवणे" (धा।पा।९४२), "श्रुवः शृ च" ३।१।७४ इति श्नुप्रत्ययः, शृभावश्च। "ऋच्छेरनादेशस्य ग्रहणम्" इति। "ऋच्छ गतीन्द्रियप्रलयमृर्तिभावेषु" (धा।पा।१२९६) इत्यस्य।

"स्मृच्छिष्यते" इति लृट्। स्यप्रत्ययः। यद्यादेशस्य ग्रहणं स्यात् तदेतन्न सिध्येत्। प्राध्रादि ७।३।७२ सूत्रेणात्रतेरृच्छादेशस्यच्छादशस्य शितीत्येवं विधानात्। अथात्र्यादेश्यापि ग्रहणं कस्मान् भवतीत्याह-- "अर्त्यादेशस्यत्वत्रीत्येवम्" इत्यादि। अथ वा-- यद्यनादेशस्य ग्रहमं स्यात्, आदेशस्यात्मनेपदं न सिध्यतीत्यत आह-- अर्त्यादेशस्य त्वर्तीत्येवम्" इत्यादि। स्थानिवद्भावेनेत्यभिप्रायः। "न लाभार्थस्य" इति। "विद्लृ लाभे" (धा।पा।१४३२) इत्यस्य। अथ "न तु सत्तार्थस्य, नापि विचारणार्थस्य" इत्येवमपि कस्मान्नोक्तम्? एवं मन्यते-- नित्यात्मनेपदित्वादनयोरात्मनेपदार्थग्रहणं नाशङ्क्येतैवेति। "दृशेश्चेति वक्तव्यम्" इति। "दृशिर् प्रेक्षणे"(धा।पा।९८८) इत्यस्मात् संपूर्वादात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याखानं तु पूर्वपदेव। "सम्पश्यते इति। पाध्रादिना७।३।७२ पश्यादेशः॥

बाल-मनोरमा

समो गम्यृच्छिभ्याम् ५२३, १।३।२९

समो गम्यृच्छिभ्याम्। "आत्मनेपद"मिति शेषः। अकर्मकाभ्यामित्येवेति। "स्वाङ्गकर्मकाच्चे"ति तु निवृत्तमिति भावः। सङ्गच्छते इति। संगतं भवतीत्यर्थः।

तत्त्व-बोधिनी

समो गम्यृच्छिभ्याम् ४४६, १।३।२९

सङ्गतं भवतीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ निसमुपविभ्यः ५।३ ह्वः ५।१ ३१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

निसमुपविभ्यो ह्वः १।३।३०

अकर्मकातिति निवृत्तम्। अतः परं सामान्येन आत्मनेपदविधानं प्रतिपत्तव्यम्। नि सम् उप वि इत्येवं पूर्वात् ह्वयतेर् धातोरात्नमेपदं भवति। निह्वयते। संह्वयते उपह्वयते। विह्वयते। अकर्त्रभिप्रायार्थो ऽयमारम्भः। अन्यत्र हि ञित्त्वात् सिद्धम् एवाऽत्मनेपदम्। उपसर्गादस्यत्यूह्योर् वा वचनम्। निरस्यति, निरस्यते। समूहति, समूहते।

बाल-मनोरमा

निसमुपविभ्यो ह्वः ५२६, १।३।३०

निसमुपवि। ह्वेञः कृतात्त्वस्य ह्व इति पञ्चम्यन्तम्। निह्वयते इति। संह्वयते। उपह्वयते। विह्वयते। अकत्र्रभिप्रायार्थमिदम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्पर्धायाम् ७।१ आङः ५।१ ह्वः ५।१ ३० आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
स्पर्धायाम् आङः १।३।३१

अकर्त्रभिप्रायार्थो ऽयमारम्भः। स्पर्धायां विषये आङ्पूर्वाद् ह्वयतेरात्मनेपदं भवति। स्पर्धा सङ्घर्षः, पराभिभवेछा, स विषयो धात्वर्थस्य। धातुस् तु शब्दत्रिय एव। मल्लो मल्लम् आह्वयते। छात्रश् छात्रम् आह्वयते। स्पर्धमानस् तस्याऽह्वानं करोति इत्यर्थः। स्पर्धायाम् इति किम्? गाम् आह्वयति गोपालः।
न्यासः
स्पद्र्धायामाङः। , १।३।३१

"स्पद्र्धायां विषये" इति। स्पर्धेह धात्वर्थस्य विषयोऽभिमतः, न धातोः। अत एवाह-- "स्पर्धा सङ्घर्षः। "पराभिभवेच्छा" इति। स्पर्धायाः स्वरूपं दर्शयित्वा धात्वर्थस्य विषयं दर्शयितुमाह- "स विषयो धात्वर्थस्य" इति। कः पुनर्धातोरर्थो नाम यस्यैवं विषयः? इत्याह-- "धातुस्तु शब्दक्रियः" इत्यादि। शब्दनं शब्दः। सा क्रिया यस्य स तथोक्तः। शब्दनक्रियावाचीति यावत्। यद्यपि ह्वयतिः स्पद्र्धायामपि पठ()ते, तथाप्याङपूर्वस्तत्र न वत्र्तते, यथा-- तिष्ठतिर्गतिनिवृत्तौ पठ()ते, अथ च प्रपूर्वो गतावेव वत्र्तते, न गतिनिवृत्तौ; तथा हि प्रतिष्ठित इत्युक्ते गच्छतीत्यर्थः। तस्मादाङपूर्वस्य ह्वयतेः स्पद्र्धायां वृत्त्यभावात् स्पद्र्धा धात्वर्थस्य विषयः। धात्वर्थविषयत्वं तु तद्धेतुभावेन वेदितव्यम्॥
बाल-मनोरमा
स्पर्धायामाङः ५२७, १।३।३१

स्पर्दायामाङः। आङ्पूर्वकात् स्पर्धाविषयकात् ह्वेञ आत्मनेपदमित्यर्थः। कृष्णश्चाणूरमाह्वयते इति। स्पर्धार्थमाकारयतीत्यर्थः।

बाल-मनोरमा
समाहारः स्वरितः ९, १।३।३१

अथ स्वारितसंज्ञामाह-समाहारः स्वरितः। पूर्वसूत्राभ्यामुदात्त इति अनुदात्त इति चानुवर्तते। ऊकालोऽजित्यस्मादजित्यनुवर्तते। ततश्चोदात्तोऽनुदात्तश्च अच समाह्वियमाणः स्वरित इत्यर्थः प्रतीयते। एवं सति वर्णद्वयस्य स्वरितसंज्ञा स्यान्न त्वेकस्य। अतो नैवमर्थः। किंतु उदात्तानुदात्तपदे अनुवृत्ते धर्मप्रधाने षष्ट()न्ततया च विपरिणम्येते। यत्र समाहरणं स समाहारः। अधिकरणे घञ्। ततश्च उदात्तत्वानुदात्तत्वयोर्धर्मयोर्यस्मिन्नचि मेलनं सोऽच् स्वरितसंज्ञक इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ गन्धन॰योगेषु ७।३ कृञः ५।१ ३५ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
गन्धनावक्षेपणसेवनसाहसिक्यप्रतिथत्नप्रकथनौपयोगेषु कृञः १।३।३२

कर्त्रभिप्राये क्रियाफले सिद्धम् एवाऽत्मनेपदम्। अकर्त्रभिप्रयार्थो ऽयमारम्भः। गन्धनाऽदिष्वर्थेषु वर्तमानत् करोतेरात्मनेपदं भवति। गन्धनम् पकारप्रयुक्तं हिंसात्मकं सूचनम्। तथा हि, बस्त गन्ध अर्दने, अर्द हिंसायाम् इति चुरादौ पथ्यते। अवक्षेपणम् भर्त्सनम्। सेवनम् अनुवृत्तिः। साहसिक्यं साहसिकं कर्म। प्रतियत्नः सतो गुणान्तराधानम्। प्रकथनं प्रकर्षेण कथनम्। उपयोगो धर्मादि प्रयोजनो विनियोगः। गन्धने तावत् उत्कुरुते। उदाकुरुते। सूचयति इत्यर्थः। अवक्षेपणे श्येनो वर्तिकाम् उदाकुरुते। भर्त्सयति इत्यर्थः सेवते गणकानुपकुरुते। महामात्रानुपकुरुते। सेवते इत्यर्थः। साहासिक्ये परदारान् प्रकुरुते। तेषु सहसा प्रवर्तते इत्यर्थः। प्रतियत्ने एधो दकस्य उपस्कुरुते। काण्डं गुडस्य उपस्कुरुते। तस्य सतो गुणन्तराधानं करोति इत्यर्थः। षष्ठीसुटौ करोतेः प्रतियत्न एव विधीयेते। प्रकथने गाथाः प्रकुरुते। जनापवादान् प्रकुरुते। प्रकर्षेण कथयति इत्यर्थः। उपयोगे शतम् प्रकुरुते। सहस्रं प्रकुरुते। धर्मार्थं शतं विनियुङ्क्ते इत्यर्थः। एतेषु इति किम्? कटं करोति।

लघु-सिद्धान्त-कौमुदी

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु ७४७, १।३।३२

गन्धनं सूचनम्। उत्कुरुते। सूचयतीत्यर्थः। अवक्षेपणं भर्त्सनम्। श्येनो वर्तिकामुत्कुरुते। भर्त्सयतीत्यर्थः। हरिमुपकुरुते। सेवत इत्यर्थः। परदारान् प्रकुरुते। तेषु सहसा प्रवर्तते। एधोदकस्योपस्कुरुते। गुणमाधत्ते। कथाः प्रकुरुते। प्रकथयतीत्यर्थः। शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते। एषु किम्? कटं करोति॥

न्यासः

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः। , १।३।३२

"अपकारप्रयुक्तम्" इति। तृतीयासमासोऽयम्। अपकारमुद्दिश्य यत्प्रवर्तते तदपकारप्रयुक्तं वेदितव्यम्। "हिंसात्मकम्" इति। हिनस्तीति हिंसः, पचाद्यच्, हिंस आत्मा यस्य तत् तथोक्तम्। पीडाकरणमित्यर्थः। "सूचनम्" इति दोषाविष्करणम्। कथमेतद्विज्ञायत एंविधं सूचनं गन्धनमित्याह-- "तथा ह" इत्यादि। "वस्त" इत्यादिनना गन्धयतिधातुरर्दयतेरर्थे वत्र्तते इति दर्शयति। "अर्द हिंसायाम्" इत्यादिना अर्दयतेर्हिसात्मकत्वम्। एवञ्च हिंसार्थेनार्दयतिना गन्धयतेः समानार्थतां दर्शयता गन्धनशब्दवाच्यस्यार्थस्य हिंसात्मकत्वं दर्शितं भवति। भत्र्सनं तिरस्करणम्। अनुवृत्तिः परचितावधारणम्। "साहसिक्यं साहसं कर्म" इति। "ओजः सहोऽम्भसा वत्र्तते" ४।४।२७ इति ठक्, साहसिकः। तस्य कर्मेति तस्माद्गुणवचनब्राआह्णादित्वात् ५।१।१२३ ष्यञ्, साहसिक्यम्। "उपयोगो धर्मादिप्रयोजनो विनियोगः" इति। धर्मादिषु प्रयोजनं यस्य स तथोक्तः। आदिशब्दः कामापरिग्रहाय। "एधो दकस्योपस्कुरुते" इति। "उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु" ६।१।१३४ इति सुट्। "कृञः प्रतियत्ने" २।३।५३ इति षष्ठी॥

बाल-मनोरमा

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकनोपयोगेषु कृञः ५२८, १।३।३२

गन्धनावक्षेपण। "आत्मनेपदमकत्र्रभिप्रायेऽपी"ति शेषः। गन्धनं हिंसेति। गन्ध अर्दने। अर्द हिंसायामित्युक्तेरिति भावः। सूचयतीति। परदोषमाविषकरोतीत्यर्थः। नन्वेवं सति कथमस्य गन्धने वृत्तिः?, हिंसाया असत्त्वादित्यत आह-- सूचनं हीति। श्येनो वर्तिकामिति। वर्तिका - शकुनिविशेषः। साहसिक्ये उदाहरति-- परदारान् प्रकुरुते इति। साहसप्रवृत्तिविषयीकरोतीत्यर्थः। सहसा वर्तते साहसिकः। "ओजस्सहोऽम्भसा वर्तते" इति ठक्। तस्य कर्म असमीक्ष्यकरणं = साहसिक्यम्। तदाह--तेषु सहसा प्रवर्तते इति। फलितार्थकथनमिदम्, साहसप्रवृत्तिमात्रार्थकत्वे द्वितीयानुपपत्तेः। अतः साहसप्रवृत्तिविषयीकरणपर्यन्तानुधावनमिति बोध्यम्। प्रतियत्ने उदाहरति - एधोदकस्योपस्कुरुते इति। एधशब्दोऽदन्तः "अवोदैधौद्मप्रश्रथहिमश्रथाः" इति सूत्रे निपातितः। एधश्च उदकं चेति समाहारद्वन्द्वः। यद्वा

एधस्शब्दः सकारान्तो नपुंसकलिङ्गः। एधश्च दकं चेति विग्रहः। दकशब्द उदकवाची। "प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च" इति हलायुधः। "काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् रिउआयामि"त्यमरः। प्रतियत्नो गुणाधानमित्यभिप्रेत्य आह-- गुणमाधत्ते इति। काष्ठस्य शोषणादिगुणाधानम्। दकस्य तु गन्धद्रव्यसंपर्कजनितगन्धाधानम्।

तत्त्व-बोधिनी

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ४४९, १।३।३२

गन्धनं हिंसेति। गन्ध अर्दने, अर्द हिंसायामित्यनयोश्चुरादौ पाठादिति भावः। सहसा वर्तते साहसिकः। "ओजः सहोम्भसे"ति ठक् तस्य कर्म साहसिक्यम्। ब्राआहृणादित्वत्ष्यञ्। परदारानित्यादि। तान्वशीकरोतीत्यर्थः। साहसिक्यं न धात्वर्थः, तथाहि सति परदारानिति कर्मणोऽनन्वयः स्यात्, किं तु प्रयोगोपाधिरित्यभिप्रेत्याह--- तेषु सहसेति। एधो दकस्येति। एधशब्दोऽकारान्तः-- "अवोदैधौद्म"ति निपातितः। एधाश्च उदकं च एषां समाहारः। यद्वा एधः शब्दः सकारान्तः। तथा च एधांसि च दकं चेति विग्रहः। दकशब्दोऽप्युदकवाच्येवेत्यर्थोऽत्र न भिद्यते। उक्तं च हलायुदे-- "प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं चे"ति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अधेः ५।१ प्रसहने ७।१ कृञः ५।१ ३२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अधेः प्रसहने १।३।३३

अकर्त्रभिप्रायार्थो ऽयमारम्भः। अधिपूर्वात् करोतेः प्रसहने वर्तमानातात्मनेपदं भवति। प्रसहनम् अभिभवः अपराजयो वा। तम् अधिचक्रे। तम् अभिवभूव, न तेन प्राजितः इत्यर्थः। प्रसहने इति किम्? अर्थम् अधिकरोति। पृथग्योगकरणम् उपसर्गविशेषणार्थम्।

न्यासः

अधेः प्रहसने। , १।३।३३

"तमधितक्रे" इति। कृञो लिट्, तस्य चैशादेशः। "द्विर्वचनेऽचि १।१।५८ इति स्थानिवद्भावाद्()द्विर्वचनम्, "उरत"७।४।६६ इत्यत्त्वम्, रपरत्वञ्च, "हलादिः शेषः" ७।४।६० "कुहोश्चुः" ७।४।६२ इति चुत्वम्॥

बाल-मनोरमा

अधेः प्रसहने ५२९, १।३।३३

अधेः प्रसहने। अधेः परस्मात् कृञः प्रसहनवृत्तेरात्मनेपदमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वेः ५।१ ३५ शब्दकर्मणः ५।१ कृञः ५।१ ३२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

वेः शब्दकर्मणः १।३।३४

कृञः इत्यनुवर्तते। विपूर्वत् करोतेरकर्त्रभिप्राये क्रियाफले शब्दकर्मण आत्मनेपदं भवति। कर्मशब्द इह कारकाभिधायी, न क्रियावचनः। क्रोष्टा विकुरुते स्वरान्। ध्वाङ्क्षो विकुरुते स्वरान्। शब्दकर्मणः इति किम्? विकरोति पयः।

न्यासः

वेः शब्दकर्मणः। , १।३।३४

"कर्तरि कर्म" १।३।१४ इत्येवमादौ क्वचित् कर्मशब्दस्य क्रियावाचिना दृष्टा। इहापि तस्य क्रियावाचिता मा विज्ञायीत्याह- "कर्मशब्द इह कारकाभिधायि"इति। अथ क्रियाभिधायी कस्मान्न भवति? विपूर्वस्य करोतेः शब्दनक्रियायां वृत्यसम्भवात्। "शब्दकर्मणः" इति। धातोरर्थद्वारकं चेदं विशेषणम्-- शब्दः कर्मास्येति; शब्दकर्मा धात्वर्थः। तदर्थस्य शब्दकर्मत्वात्तद्द्वारेण धातुरपि शब्दकर्मेति; अन्यथा हि क्रियावाचित्वाद्धातोः कतं शब्दः कर्मास्येति सम्बन्ध उपपद्यते॥

बाल-मनोरमा

वेः शब्दकर्मणः ५३०, १।३।३४

वेः शब्दकर्मणः। शब्दः कर्म कारकं यस्य तस्मात्कृञो विपूर्वादात्मनेपदमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अकर्मकात् ५।१ च ० वेः ५।१ ३४ कृञः ५।१ ३२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अकर्मकाच् च १।३।३५

वेः कृञ इत्यनुवर्तते। विपूर्वात् करोतेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। विकुर्वते सैन्धवाः। साधु दान्ताः शोभनं वल्गन्ति इत्यर्थः। ओदनस्य पूर्णाश् छात्रा विकुर्वते। निष्फलं चेष्टन्ते इत्यर्थः।

न्यासः

अकर्मकाच्च। , १।३।३५

"ओदनस्य {पूर्णाः" इत्येव-- काशिका, पदमञ्जरी च।} परिपूर्णाः" इति। सुहितार्थयोगे षष्ठी। "पूरणगुणसुहितार्थ"२।२।११ इत्यादिना षष्ठीसमासप्रतिषेधेन ज्ञापितमेतत्-- सुहितार्थयोगे षष्ठी भवतीति। सुहितार्थाः = तृप्त्यर्थाः। पूर्णास्तृप्ता इत्यर्थः॥

बाल-मनोरमा

अकर्मकाच्च ५३१, १।३।३५

अकर्मकाच्च। वेः कृञ इत्यवेति। तथा च अकर्मकात् विपूर्वात् कृञ आत्मनेपदमित्यर्थः। "विकुर्वते" इत्येतद्व्याचष्टे -- विकारं लभन्ते इति। लाभे विकारस्य कर्मत्वेपि धात्वर्थोपसङ्ग्रहादकर्मकत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सम्मानन॰व्ययेषु ७।३ नियः ५।१ ३७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
सम्मानननौत्सञ्जनाऽचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः १।३।३६

णीञ् प्रापणे। अस्मात् कर्त्रभिप्राये क्रियाफले सिद्धम् एवाऽत्मनेपदम्। अकर्त्रभिप्रयार्थो ऽयम् आरम्भः। णीञ् प्राप्णे इत्येतस्मात् धातोरात्मनेपदं भवति सम्माननाऽदिषु विशेषणेषु सत्सु। सम्माननं पूजनम् नयते चार्वी लोकायते। चार्वी बुद्धिः, तत्सम्बन्धादचार्ये ऽपि चार्वी। स लोकायते शास्त्रे पदार्थान् नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति। ते युक्तिभिः स्थाप्यमानाः सम्मानिताः पूजिता भवन्ति। उत्सञ्जनम् उत्क्षेपणम् माणवकम् उदानयते। उत्क्षिपति इत्यर्थः। आचार्यकरणम् आचार्यक्रिया माणवकम् ईदृशेन विधिना आत्मसमीपं प्राप्यति यथा स उपनेता स्वयम् आचार्यः सम्पद्यते। माणवकम् उपनयते। आत्मानम् आचार्यीकुर्वन् माणवकम् आत्मसमीपं प्रापयति इत्यर्थः। ज्ञानं प्रमेयनिश्चयः नयते चर्वी लोकयते। तत्र प्रमेयं निश्चिनोति इत्यर्थः। भृतिर्वेतनम् कर्मकरानुपनयते। भृतिदानेन समीपं करोति इत्यर्थः। विगणनम् ऋणादेर् निर्यातनम् मद्राः करम् विनयन्ते। निर्यातयन्ति इत्यर्थः। व्ययो धर्माऽदिषु विनियोगः। शतं विनयते। सहस्रं विनयते। धर्माऽयर्थं शतम् विनियुङ्क्ते इत्यर्थः। एतेषु इति किम्? अजां नयति ग्रामम्।
न्यासः
सम्मानननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः। , १।३।३६

"सम्माननादिषु विशेषणेषु" इति। किंस्विदत्र विशिष्यते नयत्यर्थोऽनेनेति विशेषणम्? किंस्विन्नयत्यर्थ एव विशेषणम्? विशिष्यते व्यावर्त्यतेऽर्थान्तरादिति कृत्वा। तत्र सम्माननमाचार्यकरणं भृतिश्चेति पूर्वेणैवार्थेनैतानि विशेषणानि, परिशिष्टानि तु नयत्यर्थस्वभावानि द्वितीयेन विशेषणानि। "नयते चार्वी लोकायते" इति। अत्र नयतेः प्रापणमर्थो विशेष्यः, शिष्यसम्माननन्तु तस्य फलभावेन विशेषमम्। तत्सम्बन्धादाचार्योऽपि चार्वीत्युच्यत इति। यथा कुन्तान्न प्रवेशयेत्युक्ते कुन्तशब्दः कुन्तसम्बन्धात् पुरुषेष्वपि वत्र्तते, तथेहापि चार्वीशब्दश्चार्वीसम्नबधादाचार्येऽपि। "स्थिरीकृत्य" इति। निशच्लीकृत्येत्यर्थः। निश्चलत्वन्तु तेषामनन्यार्थभावः। "स्थाप्यमानाः" इति। लोकायते शास्त्रे पदार्थानां सम्यगवबोधः। "पूजिता भवन्ति" इति। अभिलषितार्थसम्पादनमेव तेषां पूजा। अभिलषितोऽर्थस्तु लोकायते शास्त्रे पदार्थानां सम्यवबोधः। "उत्क्षिपतीत्यर्थः" इति। एतेनोपत्सञ्जनं नयतेरर्थः, न तु तस्य विशेषणमिति दर्शयति। एवं "निश्चिनोतीत्यर्थः" इत्यादिभिरपि ज्ञानादीनां यथासम्भवं नयत्यर्थतां दर्शयतीति वेदितव्यम्। "ईदृशेन" इति। यादृशः शास्त्रोक्तो विधिः, तादृशेनेत्यर्थः। अत्राप्याचार्यकरणं नयत्यर्थस्य फलभावेनैव विशेषणम्। "कर्मकरानुपनयते" इति। अत्र हि भृतिर्हेतुभावेन नयत्यर्थस्य समीपकरणस्य विशेषणम्। "ऋणादेः" इति। आदिशब्देन करशुल्कदण्डादीनां ग्रहणम्। करो नाम राजग्राह्यो भागः कर्षकैः रक्षार्थं परिकल्पितः। "धर्मादिषु" इति। आदिशब्देन कामादिष्वपि॥
बाल-मनोरमा
संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ५३२, १।३।३६

संमननोत्सञ्जना। एषु गम्येषु णीञ्धातोरात् मनेपदमित्यर्थः। परगामिन्यपि फले आत्मनेपदार्थमिदम्। इतरे इति। संमाननाऽऽचार्यकरणप्रभृतय इत्यर्थः। प्रयोगोपाधय इति। वाच्यत्वाऽभावेऽपि आर्थिकाः सत्तामात्रेण शब्दप्रयोगे

निमित्तभूता इत्यर्थः। आत्मनेपदद्योत्या इति यावत्। तदेवोपपादयितुं प्रतिजानीते-- तथा हीति। संमानने उदाहरति-- शास्त्रे नयते इति। अत्र णीञ् प्रापणार्थकः। "सिद्धान्तप्रापणेनेत्यर्थः। फलितमिति। अर्थादिति भावः। उत्सञ्जने इति। "उदाह्रियते" इति शेषः। उत्सञ्जनमुत्क्षेपः। उत्क्षिपतीत्यर्थ इति। धातूनामनेकार्थत्वादिति सत्त्या प्रापयित्रपेक्षमेव। तच्च माणवकीयमात्मसमीपप्रापणं वैधमेव विवक्षितम्, पूर्वोत्तराऽङ्गकलापाम्नासामश्र्यात्। तदाह--- विधिना आत्मसमीपं प्रापयतीति। तत्राऽऽचार्यकरणस्यार्थिकत्वमुपपादयति-- उपनयनपूर्वकेणेति। "माणवकमुपनयीत,तमध्यापयीते"त्यध्यापनार्थत्वमुपनयनस्याऽवगतम्, अध्यापनादाचार्यत्वं संपद्यते, "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते।" इतिस्मरणात्। तथा च आचार्यकरणमुपनयनसाध्यत्वादार्थिकहरति-- कर्मकरानुपनयते इति। भृतिः = वेतनं। तदर्थ#ं कर्म करोतीति कर्मकरः। "कर्मणि भृतौ" इति टप्रत्ययः। कर्मण्युपपदे कृञष्टः स्यात्कर्तरीति तदर्थः। उपपूर्वको णीञ् समीपप्रापणार्थकः। तदाह-- राज्ञे देयं भागंपरिशोधयतीति। परिगणयति दातुमित्यर्थः। व्यये उदाहरति-- शतं विनयते धर्मार्थमिति। अत्र विपूर्वो णीञ् व्ययार्थकः। तदाह-- विनियुङ्क्ते इत्यर्थ इति।

तत्त्व-बोधिनी
संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ४५०, १।३।३६

संमाननो। उपनयनपूर्वकेणेति। उपनयनं-- वटुसंस्कारः।तस्य परगामित्वात्परस्मैपदं प्राप्ते अनेनात्मनेपदं विधीयते। नह्युपनयनमात्रेण आचार्यत्वं भवति किं तु तत्पूर्वकाध्यापनेनेत्याचार्यकरणस्य प्रयोगोपाधित्वं परपरया ज्ञेयम्। "उपनीय ददद्वेदमाचार्यः स उदाह्मतःर" इति स्मृतिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तृस्थे ७।१ च ० अशरीरे ७।१ कर्मणि ७।१ नियः ५।१ ३६ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
कर्तृस्थे च शरीरे कर्मणि १।३।३७

नयतेः कर्ता देवदत्ताऽदिर् लकारवाच्यः। कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मनेपदं भवति। शरीरं प्राणिकायः, तदेकदेशो ऽपि शरीरम्। क्रोधं विनयते। मन्युं विनयते। कर्तृस्थे इति किम्? देवदत्तो यज्ञदत्तस्य क्रोधं विनयतेइ। अशरीरे इति किम्? गडुं विनयति। घाटां विनयति। कर्मणि इति किम्? बुद्ध्या विनयति। प्रज्ञया विनयति।
न्यासः
कर्तृस्थे चाशरीरे कर्मणि। , १।३।३७

"नयतेः कत्र्ता" इति। अर्थद्वारकः सम्बन्धो वेदितव्यः। "तदेकदेशोऽपि शरीरम्" इति। समुदायेषु हि प्रवृत्ताः शब्दाः क्वचिदवयवेष्वपि वत्र्तन्त इति भावः। कथं पुनर्मुख्ये सति गौणस्यापि ग्रहणं लभ्यते? शरीरग्रहणात्। इह लघुत्वात् कायग्रहणं कत्र्तव्ये यच्छरीरग्रहणं कत्र्तव्ये यच्छरीरग्रहणं करोति तच्छरीरैकदेशोऽपि शरीरश्रुत्या नाम गृह्येतेत्येवमर्थम्। "क्रोधं विनयते" इति। अत्र नयतेर्यः कत्र्ता स हि बुद्धीन्द्रियदेहसमुदायस्वभावो देवदत्तादिः। तत्रैव कर्म क्रोधो वत्र्तत इति कर्त्तृस्थं कर्माशरीरं भवति। एवं गडुं विनयतीत्यादौ गड्वादैः शरीरैकदेशस्य कर्मणः कर्त्तृस्थाभावो वेदितव्यः। अत्र च

क्रोधाद्यपगमः क्रियाफलं कत्रर्भिप्राय एवेति " स्वरितञितः कत्रर्भिप्राये" १।३।७२ इत्यनेनैव सिद्धे नियमार्थमेतद्वचनं वेदितव्यम्-- कर्त्तृस्थे कर्मण्यशरीर एव, नान्यत्रेति॥

बाल-मनोरमा

कर्तृस्थे चाऽशरीरे कर्मणि ५३३, १।३।३७

कर्तृस्थे। निय इति। कर्मकारके कर्तृस्थे सति णीञ्धातोर्यदात्मनेपदं कर्तृगे फले ञित्त्वात्प्राप्तं, तच्छरीरावयवभिन्न एव सति कर्मकारके स्यात्। कर्मणः शरीरावयवत्वे तु कर्तृगेऽपि फले परस्मैपदमेवेत्यर्थः। ननु सूत्रे शरीरग्रहणात्कथं शरीरावयवेत्युक्तमित्यत आह-- सूत्रे इति। शीरतादात्म्यापन्नस्यैव कर्तृतया शरीरस्य कर्तृस्थ्तवं न संभवति। शरीरावयवानां तु समवायेन आधारतया तत्संभवतीति भावः। ननु क्रोधापगमस्य क्रोध विषयशत्रुगताऽनिष्टपरिहारफलकत्वाञ्ञित्वेऽप्यात्मनेपदऽप्राप्तेस्तद्विध्यर्थत्वात्कथमुक्तनियमार्थत्वमस्य सूत्रस्येत्यत आह-- तत्फलस्येत्यादि। गडुं विनयतीति। कर्मणो गडोः शरीरावयवत्वान्नात्मनेपदमित्यर्थः। कथं तर्हीति। पौरुषस्य कर्मणः शरीरावयवभिन्नतया आत्मनेपदप्रसङ्गादिति भावः। कर्तृगामित्वेति। कर्तृस्थे कर्मणि नियः कर्तृगे फले ञित्त्वात् प्राप्तमात्मनेपदं शरीरावयवभिन्न एवेति नियम्यते, ननु विधीयते। अत्र तु फलस्य कर्तृगामित्वं सदपि न विवक्षितम्, अतो नात्मनेपदमिति भावः।

तत्त्व-बोधिनी

कर्तृस्थे चाऽशरीरे कर्मणि ४५१, १।३।३७

कर्तृस्थे। कर्मणीति। आत्मगामिनि क्रियाफले इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृत्तिसर्गतायनेषु ७।३ ३९ क्रमः ५।१ ४३ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

वृत्तिसर्गतायनेषु क्रमः १।३।३८

शेषत् कर्तरि परस्मैपदे प्राप्ते वृत्त्यादिश्वर्थेशु कर्मेर् धतोरात्मनेपदं भवति। वृत्तिरप्रतिबन्धः। सर्ग उत्साहः। तायनं स्फीतता। वृत्तौ तावतृक्ष्वस्य क्रमते बुद्धिः। न प्रतिहन्यते इत्यर्थः। यजुःष्वस्य क्रमते बुद्धिः। सर्गे व्याकरणाध्ययनाय क्रमते। उत्सहते इत्यर्थः। तायते अस्मिन् शास्त्रापि क्रमन्ते। स्फीतीभवन्ति इत्यर्थः। एतेषु इति किम्? अपक्रामति।

न्यासः

वृत्तिसर्गतायनेषु क्रमः। , १।३।३८

शेषलक्षणेन क्रमेः परस्मेपदे प्राप्त आत्मेपदं विधीयते। वृत्त्यादयोऽर्था अप्रतिबन्धोत्साहस्फीततासु प्रसिद्धाः॥

बाल-मनोरमा

वृत्तिसर्गरतायनेषु क्रमः ५३४, १।३।३८

वृत्तिसर्ग। "आत्मनेपद"मिति शेषः। तायने उदाहरति-- क्रमन्तेऽस्मिन्निति। तायनं = वृद्धिः। तदाह-- स्फीतानीति।

तत्त्व-बोधिनी

वृत्तिसर्गतायनेषु क्रमः ४५२, १।३।३८

वृत्तिसर्ग। तायृ सन्तानपालनयोः। तायनं स्फीतता।तदाह-- स्फीतानीति। प्रवृद्धानीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपपराभ्याम् ५।२ वृत्तिसर्गतायनेषु ७।३ ३८ क्रमः ५।१ ३८ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

उपपराभ्याम् १।३।३९

वृत्तिसर्गतायनेषु इति वर्तते। उपपरापूर्वात् क्रमतेर् वृत्यादिश्वर्थेषु वर्तमानादात्मनेपदं भवति। किमर्थं तर्हि इदम् उच्यते? उपसर्गनियमार्थम्। सोपसर्गादुपपरापूर्वादेव, न अन्यपूर्वातिति। उपक्रमते। पराक्रमते। उपपराभ्याम् इति किम्? सङ्क्रामति। वृत्यादिष्वित्येव। उपक्रामति। पराक्रामति।

न्यासः

उपपराभ्याम्। , १।३।३९

"संक्रमति" इति। "क्रमः परस्मैपदेषु" ७।३।७६ इति दीर्घः।

बाल-मनोरमा

उपपराभ्याम् ५३५, १।३।३९

उपपराभ्याम्। "वृत्तिसर्गतायनेषु क्रमः" इत्यनुवर्तते। तेनैव सिद्धे नियमार्थमिदं। तदाह-- आभ्यामेव क्रमेरिति। "आत्मनेपद"मिति शेषः।

बाल-मनोरमा

आङ उद्गमने ५३६, १।३।३९

आङ उद्गमने। आङः परस्मादुद्गमनवृत्तेः क्रम आत्मनेपदमित्यर्थः। आक्रमते सूर्य इति। आङ्पूर्वः क्रमिरुद्गमनार्थकः। तदाह-- उदयते इत्यर्थ इति। उपसर्गवशादिति भावः।

बाल-मनोरमा

राधीक्ष्योर्यस्य विप्रश्नः ५६९, १।३।३९

राधीक्ष्योः। यदीय इति। यद्विषयक इत्यर्थः। "विप्रश्न" इत्येतद्व्याचष्टे--विविधः प्रश्न इति। कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्ग इति। गर्गो नाम ज्योतिः शास्त्रविदृषिविशेषः, स कृष्णाय राध्यति ईक्षते वेत्यन्वयः। "राध संसिद्धौ " "ईक्ष दर्शने"। इह तु प्रस्नविषयशुभाऽशुभपर्योलोचनमर्थः, "यस्य विप्रश्न" इति लिङ्गात्। तदाह--शुभाशुभं पर्योलोचयतीत्यर्थ इति। अत्र शुभस्याऽशुभस्य च प्रश्नविषयस्य धात्वर्थोपसङ्ग्रहाकर्मकावेतौ। अत एव राध्यतीति श्यन्नुपपद्यते। अन्यथा "राधोऽकर्मकादि"ति नियमाच्छ्यन्न स्यात्। एवंच किं कृष्णस्य शुभमशुभं वेति पृष्टो गर्गः कृष्णविषयकं शुभाऽशुभं

पर्यालोचयतीत्यर्थः। कृष्णस्य संप्रदानत्वं। षष्ठ()पवादः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आङः ५।१ उद्गमने ७।१ क्रमः ५।१ ३८ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
आङ उद्गमने १।३।४०

आङ्पूर्वात् क्रमतेरुद्गमने वर्तमानादात्मनेपदं भवति। आक्रमते आदित्यः। आक्रमते चन्द्रमाः। आक्रमन्ते ज्योतींषि। उद्गनमे इति किम्? आक्रामति माणवकः कुतुपम्। ज्योतिरुद्गमने इति वक्तव्यम्। इह मा भूत्, आक्रमति धूमो हर्म्यतलात्।
न्यासः
आङ उद्गमने। , १।३।४०

"आक्रामति माणवकः कुतपम्" इति।अवष्टभ्नातीत्यर्थः। "ज्योतिरुद्गमन इति वक्तव्यम्" इति। ज्योतिषां ग्रहनक्षत्रादीनामुद्गमन एवात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "अनुपसर्गाद्वा" १।३।४३ इत्यतो वाग्रहणमनुवत्र्तते सिंहावलोकितन्यायेन, सा च व्यवस्थितविभाषा; तेन ज्योतिरुद्गमन् एव भविष्यति, नान्यत्रेति। यदि तर्हि "वा" ग्रहणमनुवत्र्तते, उभयोरपि योगयोरनुवत्र्तेत? मण्डूकप्लुतिन्यायेन नानुवर्तिष्यत इत्यदोषः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वेः ५।१ पादविहरणे ७।१ क्रमः ५।१ ३८ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
वेः पादविहरणे १।३।४१

विपूर्वात् क्रमतेः पदविहरणे ऽर्थे वर्तमानादात्मनेपदं भवति। विहरणं विक्षेपः। सुष्ठु विक्रमते। साधु विक्रमते। अश्वादीनां गतिविशेषो विक्रमणम् उच्यते। यद्यपि क्रमिः पादविहरण एव पठ्यते, क्रमु पादविक्षेपे इति, तथाऽप्यनेकार्थत्वाद् धातूनाम् एवम् उक्तम्। पादविहरणे इति किम्? विक्रामत्यजिनसन्धिः।
न्यासः
वेः पादविहरणे। , १।३।४१

"विक्रामत्यजिनसन्धिः" इति। द्विधा भवति। स्फुटतीत्यर्थः॥
बाल-मनोरमा
वेः पादविहरणे ५३७, १।३।४१

पादविहरणं = पादविक्षेपः। तद्वृत्तेर्विपूर्वात् क्रमेरात्मनेपदमित्यर्थः। साधु विक्रमते वाजीति। सम्यक्पदानि विक्षिपतीत्यर्थः।

तत्त्व-बोधिनी

वेः पादविहरणे ४५३, १।३।४१

वेः पाद। यद्यपि क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रोपाभ्याम् ५।२ समर्थाभ्याम् ५।२ क्रमः ५।१ ३८ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

प्रौपाभ्यां समर्थाभ्याम् १।३।४२

प्र उपित्येताभ्यां परस्मात् क्रमतेरात्मनेपदं भवति, तौ चेत् प्रोपौ समर्थौ तुल्यार्थौ भवतः। क्व चानयोस् तुल्यार्थता? आदिकर्मणि। प्रक्रमते भोक्तुम्। उपक्रमते भोक्तुम्। समर्थाभ्याम् इति किम्? पूर्वेध्युः प्रक्रामति। गच्छति इत्यर्थः। अपरेध्युरुपक्रामति। आगच्छति इत्यर्थः। अथ उपपराभ्याम् १।३।३९ इत्यनेन आत्मनेपदम् अत्र कर्मान् न भाति? वृत्यादिग्रहणम् तत्र अनुवर्तते। ततो ऽन्यत्र इदं प्रत्युदाहरणम्।

न्यासः

प्रोपाभ्यां समर्थाभ्याम्। , १।३।४२

"प्रकर्मते, उपक्रमते" इति। आरभत इत्यर्थः।

बाल-मनोरमा

प्रोपाभ्यां समर्ताभ्याम् ५३८, १।३।४२

प्रोपाभ्याम्। "क्रम आत्मनेपद"मिति शेषः। समौ अर्थौ ययोरिति विग्रह इत्याह-- समर्थौ तुल्यार्थाविति। सवर्णदीर्घमाशङ्क्य आह-- शकन्ध्वादित्वादिति। ननु "प्रक्रमते" इत्यत्र अतिशयितपदविक्षेपार्थप्रतीतेः, उपक्रमते इत्यत्र समीपे पदानि विक्षिपतीति प्रतीतेः कथमनयोस्तुल्यार्थकत्वमित्यत आह-- प्रारम्भेऽनयोस्तुल्यार्थतेति। तथाच आरम्भार्थकाम्यामिति फलितमिति भावः।

तत्त्व-बोधिनी

प्रोपाभ्यां समर्थाभ्याम् ४५४, १।३।४२

प्रोपाभ्याम्। "प्रोपाभ्यां प्रारम्भे" इत्येव सुवचम्। उपक्रामतीति। वृत्याद्यर्थेष्ववोपपराभ्यामिति प्रवृत्तेर्नाऽत्रात्मनेपदं शङ्क्यमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुपसर्गात् ५।१ वा ० क्रमः ५।१ ३८ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अनुपसर्गाद् वा १।३।४३

क्रमः इति वर्तते। अप्राप्तविभाषेयम्। उपसर्गवियुक्तात् क्रमतेरात्मनेपदं वा भवति। क्रमते। क्रामति। अनुपसर्गातिति किम्? सङ्क्रामति।

न्यासः

अनुपसर्गाद्वा। , १।३।४३

"अप्राप्तविभाषेयम्" इति। वृत्यादीनां निवृत्त्वात्।

बाल-मनोरमा

अनुपसर्गाद्वा ५४०, १।३।४३

अनुपसर्गाद्वा। "कर्म आत्मनेपद"मिति शेषः। अप्राप्तविभाषेयमिति। अनुपसर्गात् क्रमेरात्मनेपदस्य कदाप्यप्राप्तेरिति भावः। वृत्त्यादाविति। वृत्तिसर्गतायनेषु तु पूर्वविप्रतिषेधान्नित्यमेवेत्यर्थः।

तत्त्व-बोधिनी

अनुपसर्गाद्वा ४५५, १।३।४३

वृत्यादौ त्विति। न च वृत्यादिसूत्रं सोपसर्गे चरितार्थमित्यनुपसर्गात्क्रमेर्वृत्त्याद्यर्थेऽपि विभाषैवाऽस्त्विति वाच्यम्, "उपपराभ्या"मिति नियमस्योक्तत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपह्नवे ७।१ ज्ञः ५।१ ४६ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अपह्नवे ज्ञः १।३।४४

शेषात् कर्तरि प्रस्मैपदे प्राप्ते जानतेरपह्नवि वर्तमनादात्मनेपदं भवति। अपह्नवो ऽपह्नुतिरपलापः। सोपसर्गश्च अयमपह्नवे वर्तते, न केवलः। शतम् अपजनीते। सहस्रम् अपजानीते। अपलपति इत्यर्थः। अपह्नवे इति किम्? न त्वं किञ्चदपि जानासि।

लघु-सिद्धान्त-कौमुदी

अपह्नवे ज्ञः ७४०, १।३।४४

शतमपजानीते। अपलपतीत्यर्थः॥

न्यासः

अपह्नवे ज्ञः। , १।३।४४

"शतमपजानीते" इति। "ज्ञाजनोर्जा" ७।३।७९ इति जादेशः श्ना, पूर्ववत् "ई हलघोः" ६।४।११३ इतीत्वम्॥

बाल-मनोरमा

अपह्नवे ज्ञः ५४१, १।३।४४

अपह्नवे ज्ञः। अपह्नवः = अपलापः। तद्वृत्तेज्ञ्राधातोरात्मनेपदमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अकर्मकात् ५।१ च ० ज्ञः ५।१ ४४ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अकर्मकाच् च १।३।४५

अकर्त्रभिप्रायार्थम् इदम्। कर्त्रभिप्राये हि अनुपसर्गाज् ज्ञः १।३।७६ इति वक्ष्यति। जानातेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। सर्पिशो जानीते। मधुनो जानीते। कथं च अयम् अकर्मकः? न अत्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्। किं तर्हि? ज्ञानपूर्विकायां प्रवृत्तौ करणत्वेन। तथा च ज्ञो ऽविदर्थस्य करणे २।३।५१ इति षष्ठी विधीयते सर्पिषो जानीते, मधुनो जानीते। सर्पिशा उपायेन प्रवर्तते इत्यर्थः। अकर्मकातिति किम्? स्वरेण पुत्रं जानाति।

लघु-सिद्धान्त-कौमुदी

अकर्मकाच्च ७४१, १।३।४५

सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तत इत्यर्थः॥

न्यासः

अकर्मकाच्च। , १।३।४५

"कथञ्चायमकर्मकः" इति। एवं मन्यते-- सर्पिरादि ज्ञेयत्वेन विवक्षितं कर्म, अतस्तेन कर्मणा सकर्मक एवायमित्यभिप्रायः। "कथम्" इति। न कथञ्चिदित्यर्थः। तथा चेत्यादिना "नात्र सर्पिरादि कर्मत्वेन, अपि तु करणत्वेन विवक्षितम् इत्यत्र युक्तिमाह-- "सर्पिषोपायेन" इत्यादि। यस्य सर्पिःष्वभिष्वङगो विना तेन भुजिक्रियायामभिलाषो न भवति तस्य भोजने प्रवृतिं()त प्रति सर्पिरुपायभावं प्रतिपद्यत इति तेनोपायेन स प्रवर्तत इति। "अकर्मकादिति किम्" इति। "नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्। किं तर्हि? करणत्वेन" इति ब्राउवता वृत्तिकृता साक्षाच्छब्दोपात्तेन करणेन सकरणादात्मनेपदं भवतीत्युक्तं भवति। एवञ्च सकरणादित्येवं वाच्यम्, किमकर्मकग्रहणेनेति भावः। एवमुच्यमाने करणयुक्तात् सकर्मकादपि स्यादिति दर्शयितुमाह--- "स्वरेण पुत्रं जानाति" इति॥

बाल-मनोरमा

अकर्मकाच्च ५४२, १।३।४५

अकर्मकाच्च। "ज्ञ आत्मनेपदटमिति शेषः। सर्पिषो जानीते इति। अत्र ज्ञाधातुः प्रवृत्तौ वर्तते। "ज्ञोऽविदर्थस्य करणे" इति तृतीयार्थे षष्ठी। तदाह-- सर्पिषोपायेन प्रवर्तते इति। "अनुपसर्गाज्ज्ञः" इति वक्ष्यमाणेनैव सिद्धे सोपसर्गार्थमिदम्। सर्पिषोऽनुजानीते।

तत्त्व-बोधिनी

अकर्मकाच्च ४५६, १।३।४५

अकर्मकाच्च। "अनुपसर्गाज्ज्ञः" इत्यनेनैव सिद्धे "सर्पिषोऽनुजानीते" इत्यादिसोपसर्गार्थमिदं सूत्रम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संप्रतिभ्याम् ५।२ अनाध्याने ७।१ ज्ञः ५।१ ४४ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

संप्रतिभ्याम् अनाध्याने १।३।४६

ज्ञः इति वर्तते। सकर्मकार्थम् इदम्। सम् प्रति इत्येवं पूर्वाज् जानातेरनाध्याने वर्तमानादात्मनेपदं भवति। आध्यानम् उत्कण्ठास्मरणम्। शतं संजानीते। सहस्रं संजानीते। शतं पतिजानीते। सहस्रं प्रतिजानीते। अनाध्याने इति किम्? मातुः सञ्जानाति। पितुः सञ्जानाति। उत्कण्ठते इत्यर्थः।

न्यासः

संप्रतिभ्यामनाध्याने। , १।३।४६

"उत्कण्ठास्मरणम्" इति। उत्कण्ठापूर्वकस्मरणमिति। "मातुः" इति। "अधीगर्थदयेशां कर्मणि" २।३।५२ इति षष्ठी॥

बाल-मनोरमा

सम्प्रतिभ्यामनाध्याने ५४३, १।३।४६

"ज्ञ आत्मनेपद"मिति शेषः। अवेक्षते इत्यर्थ इति। अकर्मकत्वाऽभावात् पूर्वेणाऽप्राप्तिरिति भावः। अनाध्याने किम्? मातरं संजानाति। आध्यायतीत्यर्थः। उत्कण्ठापूर्वकंस्मरणमाध्यानम्। ननु यदा आध्याने कर्मणः शेषत्वविवक्षया षष्ठीमाश्रित्य मातुः संजानातीति प्रयुज्यते तदा सम्पूर्वो जानातिरयमकर्मक इति स्थितिः। ततर् "संप्रतिभ्यामनाध्याने" इत्यात्मनेपदस्याऽप्रवृत्तावपि "अकर्मकाच्चे"ति सूत्रेणात्मनेपदं दुर्वारम्, तत्र अनाध्याने इत्यभावात्। संप्रतिभ्यामित्यत्र अनाध्यानग्रहणस्य मतारं संजानातीति सकर्मके चरितार्थत्वादित्यत आह-- अनाध्याने इति योगो विभज्यते इति। ततश्च "संप्रतिभ्या"मित्येको योगः।संप्रतिपूर्वाज्ज्ञ आत्मनेपदमित्यर्थः। "अनाध्याने" इति योगान्तरम्। अनाध्याने संप्रतिभ्यामात्मनेपदमित्यर्थ-। ततः किमित्यत आह-- अकर्मकाच्चेति प्राप्तिरपि बाध्यते इति। ननु अनन्तरस्येति न्यायेन "सम्प्रतिभ्या"मित्यस्यैव बाधो युक्त इत्यत आह-- तत्सामश्र्यादिति। एकसूत्रत्वेनैव सिद्धे अनाध्याने इति योगविभागाद्व्यवहितस्यापि बाध इत्यर्थः। ननु "मातरं मातुर्वा संजानाती"त्यत्र मातुः कर्मत्वाद्द्वितीयैव युक्तेत्यत आह-- कर्मणः शेषत्वविवक्षायां षष्ठीति। नचैवमपि "अधीगर्थदयेशां कर्मणि" इति षष्ठ()एव स्यान्नतु द्वितीयेति वाच्यम्, तत्र शेष इत्यनुवर्त्य कर्मणः शेषत्वविवक्षायां षष्ठी, कर्मत्वविवक्षायां तु द्वितीयेत्यभ्युपगमात्। न चैवं सति "षष्ठी शेषे" इत्यनेनैव

सिद्धत्वात् "अधीगर्थे"ति व्यर्थमिति वाच्यम्, "मातुः स्मरण"मित्यादौ शेषष्ठ्याः समासाऽभावार्थत्वादिति कारकाधिकारे प्रपञ्चितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु ७।३ वदः ५।१ ५० आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
भासनौपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः १।३।४७

शेषात् कर्तरि परस्मैपदे प्राप्ते भासनाऽदिशु विशेषणेषु सत्सु वदतेरात्मनेपदं भवति। भासनं दीप्तिः वदते चार्वी लोकायते। भासमानो दीप्यमानस् तत्र पदार्थान् व्यक्तीकरोति इत्यर्थः। उपसम्भाषा उपसान्त्वनम् कर्मकरानुपवदते। उपसान्त्वयति इत्यर्थः। ज्ञानं सम्यगवबोधः वदते चार्वी लोकायते। जानाति वदितुम् इत्यर्थः। यत्न उत्साहः क्षेत्रे वदते। गेहे वदते। तद्विषयम् उत्साहम् आविष्करोति इत्यर्थः। विमतिर्नानामतिः क्षेत्रे विवदन्ते। गेहे विवदन्ते। विमतिपतिता विचित्रं भाषन्ते इत्यर्थः। उपमन्त्रणं रहस्युपच्छन्दनम् कुलभार्याम् उपवदते। परदारानुपवदते। उपच्छन्दय्ति इत्यर्थः। एतेषु इति किम्? यत् किञ्चिद् वदति।
लघु-सिद्धान्त-कौमुदी
ह्रस्वो नपुंसके प्रातिपदिकस्य २४४, १।३।४७

अजन्तस्येत्येव। श्रीपं ज्ञानवत्॥
न्यासः
भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रमेषु वदः। , १।३।४७

"{भासनादिषु विशेषणेषु" इत्येव-काशिका, पदमञ्जरी च।} भासनादिष्वर्थेषु विशेषणेषु" इति। अत्रापि किंस्विद्विशिष्यते वदत्यर्थोऽनेनेति विशेषणम्? किंस्विद्वदत्यर्थ एव, विशेषणं ह्यर्थान्तराद्विशिष्यते व्यवच्छिद्यत इति कृत्वा? तत्रोपसम्भाषोपलसान्त्वनमुपमन्त्रणञ्च द्वितीयेनार्थेन वदत्यर्थ एव विशेषणम्। परिशिष्टानि तु भासनादीनि प्रथमेनार्थेन विशेषणानि। "भासनमान" इत्यादिना भासनं वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणमिति दर्शयति। तथा ह्यत्र भासमान इति "लक्षणहेत्वोः क्रियायाः" ३।२।१२६ इत्यनेन शानजादेशो विहितः। "जानाति" इत्यादिना ज्ञानं वदत्यर्थस्य विषयिभावेन विशेषणमिति दर्शयति। ज्ञानेन ह्यसौ वदितुं जानाति। अत्र येन ज्ञानेन वदनं वदत्यर्थस्य हेतुभावेन तत्र तेनैव विषयेण परिच्छेद्येन विषयीभवति। "तद्विषयम्" इत्यादिना यत्र आविष्करणस्य वदत्यर्थस्य हेतुभावेन विशेषणमित्याचष्टे। उत्साहो ह्याविष्क्रियमाण आदिष्करणक्रियायाः कर्माख्यं साधनं भवति, साधनं च हेतुः; कारकाणां क्रियानिमित्तत्वात्। "विमतिपतिताः" इत्यादिना विमतिर्भाषणस्य वदत्यर्थस्य हेतुभावेन विशेषणमिति दर्शयति। सत्यां विमतौ विचित्रं नानाप्रकारं भाषन्ते। यदि ह्यभिन्ना मतिः स्यादभिन्नमेव भाषेरन्। "उपच्छन्दयति" इति। "भद्रे भजस्य मामिदं ते दास्यामि" इत्येवमादिभिरभिष्टेऽर्थे प्रवत्र्तयतीत्यर्थः॥
बाल-मनोरमा
भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ५४४, १।३।४७

भासनोपसंभाषा। "आत्मनेपद"मिति शेषः। इतरे इति। भासनज्ञानादय इत्यर्थः। प्रयोगोपाधय इति। इदं "सम्माननोत्सञ्जने"त्यत्र व्याख्यातं प्राक्। भासनं तु तत्तदाक्षेपेषु समाधानाय नवनवयुक्त्युल्लेखः। शास्त्रे वदते इति। विषयसप्तम्येषा इति। भासमान इति। नवनवयुक्तीरुल्लिखतीत्यर्थः। शास्त्रे वदते इति - विषसप्तमी। व्यवहरतीत्यर्थः। व्यवहारश्च ज्ञानं विना न संभवतीति ज्ञानमार्थिकम्। ज्ञात्वा व्यवहरतीति फलितम्। क्षेत्रे विवदन्ते इति। विरुद्धं व्यवहरन्तीत्यर्थः। विरुद्धव्यवहारश्च वैमत्यमूलक इति विमतिरार्थिकी। उपवदते इति। उपपूर्वस्य वदेः प्रार्थनमर्थः। तदाह-- प्रार्थयते इत्यर्थ इत।

तत्त्व-बोधिनी

भासनोपसंबाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ४५७, १।३।४७

भसनोपसंभाषा। एषु किम्?। य()त्कचिद्वदति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ व्यक्तवाचाम् ६।३ ५० समुच्चारणे ७।१ ५० वदः ५।१ ४७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

व्यक्तवाचां समुच्चारणे १।३।४८

वदः इति वर्तते। व्यक्तवाचां समुच्चारणं सहोच्चारणम्। तत्र वर्तमानाद् वदतेरात्मनेपदं भवति। ननु वद व्यक्तायां वाचि इत्येव पठ्यते, तत्र किं व्यक्तवाचाम् इति विशेषणेन? प्रसिद्ध्युपसंग्रहार्थम् एतत्। व्यक्तवाचः इति हि मनुष्याः प्रसिद्धाः। तेषां समुच्चारणे यथा स्यात्। संप्रवदन्ते ब्राह्मणाः। संप्रवदन्ते क्षत्रियाः। व्यक्तवाचाम् इति किम्? संप्रवदन्ति कुक्कुटाः। समुच्चारणे इति किम्? ब्राह्मणो वदति। क्षत्रियो वदति।

न्यासः

व्यक्तवाचां समुच्चारणे। , १।३।४८

"प्रसिद्ध्युपसंग्रहार्थम्" इति। यदि तदर्थं व्यक्तवाचामिति नोच्येत,"वरतनु सम्प्रवदन्ति कुक्कुडा {अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्। अरुणकरोद्गम एष वत्र्तते वरतनु सम्प्रवदन्ति कुक्कुटाः।इत्येवं सयग्रः श्लोकः।}। कुक्कुटाः अपि व्यक्तवाच एव। तथा हि -- कुक्कुटेनापि लपिते विशेषपरिच्छेदादुच्यते- कुक्कुटा लपन्तीति। वरतन्विति तनूशब्दस्य "अम्बार्थनद्योह्र्यस्वः" ७।३।१०७ इति ह्रस्वः। ह्रस्वकवचनसामथ्र्यात् "ह्रस्वस्य गुणः" ७।३।१०८ इति गुणो न भवति। नृणामिति न कृतं वैचित्र्यार्थम्॥

बाल-मनोरमा

व्यक्तवाचां समुच्चारणे ५४५, १।३।४८

व्यक्तवाचाम्। व्यक्ताः = अज्झल्भेदेन स्पष्टोच्चारिताः वाचः = शब्दा येषामिति विग्रहः। समित्येकीबावे। तदाह-- मनुष्यादीनामिति। संप्रवदन्ते ब्राआह्णा इति। संप्रवदन्ते ब्राआह्णा इति। संभूयोच्चारयन्तीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनोः ५।१ अकर्मकात् ५।१ व्यक्तवाचाम् ६।३ ४८ समुच्चारणे ७।१ ४८ वदः ५।१ ४७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
अनोरकर्मकात् १।३।४९

वदः इति, व्यक्तवाचाम् इति च वर्तते। अनुपूर्वाद् वदतेरकर्मकाद् व्यक्तवाग्विषयादात्मनेपदं भवति। अनुवदते कठः कलापस्य। अनुवदते मौद्गः पैप्पलादस्य। अनुः सादृश्ये। यथा कलापो ऽधीयानो वदति तथा कठः इत्यर्थः। अकर्मकातिति किम्? पूर्वम् एव यजुरुदितम् अनुवदति। व्यक्तवाचम् इत्येव। अनुवदति वीणा।
न्यासः
अनोरकर्मकात्। , १।३।४९

"अनुवदति" इति। अनुशब्दः पुनरित्यस्यार्थे वत्र्तते। पुनर्वदतीत्यर्थः। यजुषात्र कर्मणा सकर्मकत्वम्।
बाल-मनोरमा
अनोरकर्मकात् ५४६, १।३।४९

अनोरकर्मकात्। "व्यक्तावाचा"मित्यनुवृत्तं विषयषष्ठ()न्तमाश्रीयते। समुच्चारणे इति निवृत्तम्। तदाह--व्यक्तवाग्विषयादिति। मनुष्यकर्तृकादित्यर्थः। अनुवदते इति। अनुः सादृश्ये। "तुल्यार्थैरतुलोपमाभ्या"मिति षष्ठी। कठः कलापेन तुल्यं वदतीत्यर्थः। वस्तुतस्तु शेषषष्ठीत्येवोचितम्। "तुल्यार्थै"रित्यत्र "अतुलोपमाभ्या"मिति पर्युदासेनाऽनव्ययानामेव तुल्यार्थानां ग्रहणात्। अन्यथा "च्नद्र इव मुख"मित्यादावपि तृतीयाषष्ठ()ओरापत्तेरित्यलम्।

तत्त्व-बोधिनी
अनोरकर्मकात् ४५८, १।३।४९

अनुवदते कठ इति। अनुः सादृश्ये। तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ विप्रलापे ७।१ व्यक्तवाचाम् ६।३ ४८ समुच्चारणे ७।१ ४८ वदः ५।१ ४७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
विभाषा विप्रलापे १।३।५०

वदः इति वर्तते, व्यक्तवाचां समुच्चारणे इति च। विप्रलापात्मके व्यक्तवाचां समुच्चारने वर्तमानाद् वदतेरात्मनेपदं भवति विभाषा। प्राप्तविभाषेयम्। विप्रवदन्ते संवत्सराः, विप्रवदन्ति सांवत्सराः। विप्रवदन्ते मौहूर्ताः, विप्रवदन्ति मौहूर्ताः। युगपत् परस्परप्रतिषेधेन विरुद्धं वदन्ति इत्यर्थः। विप्रलापे इति किम्? संप्रवदन्ते ब्राह्मणाः। व्यक्तवाचाम् इत्येव। विप्रवदन्ति शकुनयः। समुच्चारणे इत्येव। क्रमेण मौहूर्ता मौहूर्तेन सह विप्रवदन्ति।
न्यासः

विभाषा विप्रलापे। , १।३।५०

"विप्रलापात्मके" इति। परस्परप्रतिबन्धेन विरुद्धः प्रलापो विप्रलापः, स यस्यात्मा स्वभावः स तथोक्तः। "प्राप्तविभाषेयम्" इति। "व्यक्तवाचां समुच्चारणे" १।३।४८ इत्यस्यानुवृत्तेः।

बाल-मनोरमा

विभाषा विप्रलापे ५४७, १।३।५०

विभाषा विप्रलापे। "व्यक्तवाचां समुच्चारणे" इत्यनुवर्तते। विरुद्धोक्तिर्विप्रलापः। तदाह-- विरुद्धोक्तिरूपे इति।

तत्त्व-बोधिनी

विभाषा विप्रलापे ४५९, १।३।५०

विभाषा विप्रलापे। अप्राप्तविभाषा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अवात् ५।२ ग्रः ५।१ ५२ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

अवाद् ग्रः १।३।५१

गृ निगरणे इति तुदादौ पठ्यते, तस्य इदं ग्रहणम्। न तु गृ शब्दे इति क्र्यादिपठितस्य। तस्य ह्यवपूर्वस्य प्रयोग एव न अस्ति। शेषात् कर्तरि परस्मैपदे प्राप्ते अवपूर्वाद् गिरतेरात्मनेपदं भवति। अवगिरते, अवगिरेते, अवगिरन्ते। अवातिति किम्? गिरति।

न्यासः

अवाद्ग्रः। , १।३।५१

"अवगिरते" इति। "ऋत इद्धातोः" ९७।१।१००) इतीत्त्वम्, रपरत्वञ्च।

बाल-मनोरमा

अवाद्ग्रः ५४८, १।३।५१

अवाद्ग्रः। आत्मनेपद"मिति शेषः। "गृ()" इत्यस्य "ग्र" इति पञ्चमी। "प्रकृतिवदनुकरण"मित्यस्याऽनुत्यत्वात् "ऋत इद्धातो"रिति न भवति। तदनित्यत्वे इदमेव मानम्। अवगिरत इति। शविकरणोऽयम्।
"अवगृणाती"त्यत्राप्यात्मनेपदमाशङ्क्य आह-- गृणातिस्त्विति। एवं च तुदादेरेव ग्रहणमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समः ५।१ प्रतिज्ञाने ७।१ ग्रः ५।१ ५१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

समः प्रतिज्ञाने १।३।५२

ग्रः इति वर्तते। संपूर्वात् गिरतेः प्रतिज्ञाने वर्तमानादात्मनेपदं भवति। प्रतिज्ञानम् अभ्युपगमः। शतं संगिरते। नित्यं शब्दं संगिरते। प्रतिज्ञाने इति किम्? सङ्गिरति ग्रासम्।

न्यासः

समः प्रतिज्ञाने। , १।३।५२

बाल-मनोरमा

समः प्रतिज्ञाने ५४९, १।३।५२

समः प्रतिज्ञाने। गिरतेरात्मनेपदमित्यर्थः। प्रतिज्ञानम् - अभ्युपगमः। सङ्गिरति ग्रासमिति। भक्षयतीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उदः ५।१ चरः ५।१ ५४ सकर्मकात् ५।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

उदश् चरः सकर्मकात् १।३।५३

शेषात् कर्तरि परस्मैपदे प्राप्ते उत्पूर्वाच् चरतेः सकर्मकक्रियाऽवचनादात्मनेपदं भवति। गेहम् उच्चरते। कुटुम्बम् उच्चरते। गुरुवचनम् उच्चरते। उत्क्रम्य गच्छति इत्यर्थः। सकर्मकातिति किम्? वाष्पम् उच्चरति।

लघु-सिद्धान्त-कौमुदी

उदश्चरः सकर्मकात् ७४२, १।३।५३

धर्ममुच्चरते। उल्लङ्घ्य गच्छतीत्यर्थः॥

न्यासः

उदश्चरः सकर्मकात्। , १।३।५३

"गेहेमुच्वरते" इति। चरिर्गत्यर्थः। "गुरुवचनमुच्चरते" इति। अत्रोत्क्रमणात्मिकायां गतौ वत्र्तमानश्चरतिर्गुरुवचनेन कर्मणा सकर्मकः। "बाष्पमुच्चरति" इति। उपरिष्टाद्()गच्छतीत्यर्थः। नात्र किञ्चित्कर्म विवक्षितमित्यकर्मकत्वम्।

बाल-मनोरमा

उदश्चरः सकर्मकात् ५५०, १।३।५३

उदश्चरः। उत्पूर्वाच्चरधातोः सकर्मकदात्मनेपदमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समः ५।१ ५५ तृतीयायुक्तात् ५।१ ५५ चरः ५।१ ५३ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
संस् तृतीयायुक्तात् १।३।५४

सम्पूर्वाच् चरतेस् तृतीयायुक्तादात्मनेपदं भवति। तृतीया इति तृतीयाविभक्तिर् गृह्यते, तया चरतेरर्थद्वारको योगः। अश्वेन सञ्चरते। तृतीयायुक्तातिति किम्? उभौ लोकौ सञ्चरसि इमं च अमुं च देवल। यद्यप्यत्र तदर्थयोगः सम्भवति, तृतीया तु न श्रूयते, इति प्रत्युदाहरणं भवति।
लघु-सिद्धान्त-कौमुदी
समस्तृतीयायुक्तात् ७४३, १।३।५४

रथेन सञ्चरते॥
न्यासः
समस्तृतीयायुक्तात्। , १।३।५४

यद्यत्र तृतीयेति गृह्हते, तदेहापि स्यात्-- उभौ लोकौ सञ्चरति इमाञ्चामुत्र देवलेति। अत्रापि तृतीयार्थो गम्यत एव। तपसा श्रुतेन वा विद्यत एवेत्येतच्चेतसि कृत्वाह-- "तृतीया" इति। " तृतीयाविभक्तिर्गृह्हते" इति। यद्येवं तया सह धातोः सम्बन्धो नोपपद्यते। न हि तृतीय धातुवाच्येत्याह-- "तया" इत्यादि। अर्थो द्वारं मुखमुपायो यस्य स तथोक्तः। तृतीयार्थेन धात्वर्थस्य युक्तवादौपचारिको धातोस्तृतीयीर्थेन योग इति दर्शयति। "यत्रप्यत्र तदर्थेन योगः सम्भवति" इति। विना करणेन क्रियानिष्पत्तेरभावात्, तथापि न भवति। "तृतीय तु" इत्यादि। तृतीयायपुक्तग्रहणं ह्वेवमर्थं क्रियते--श्रूयमाणतृतीययुक्ताद्यथा स्यादिति, अन्यथा सम इत्येवं वक्तव्यं स्यात्? अनुक्तेऽपि सिद्ध्वतात् तृतीयाप्रयोगस्य। न हि तेन विना क्रियानिष्पत्तिरुपपद्यते। तस्माद्यत्र तृतीया श्रूयते तन्मूलोदाहरणम्, यत्र तु न श्रूयते तत्प्रत्युदाहरणम्॥
बाल-मनोरमा
समस्तृतीयायुक्तात् ५५१, १।३।५४

समस्तृतीया। सकर्मकादिति निवृत्तम्। संपूर्वात्तृतीयान्तसमभिव्याह्रताच्चरेरात्मनेपदमित्यर्थः। तृतीयायुक्तादिति किम्?। रथिकाः संचरन्ति। अत्र यद्यपि रथेनेत्यर्थाद्गम्यते, तथापि तृतीयान्तश्रवणाऽभावान्नात्मनेपदम्। एतदर्थमेव योगग्रहणम्। अन्यथा "तृतीयये"त्येवावक्ष्यत्। सकर्मकादप्येतदात्मनेपदं भवति, अविशेषात्, अत एव"तृतीयायुक्तादिति किम्?। उभौ लोकौ संचरसीभं चामुं च लोक"मिति भाष्यं सङ्गच्छते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दाणः ५।१ च ० सा १।१ चेत् ० चतुर्थ्यर्थे ७।१ समः ५।१ ५४ तृतीयायुक्तात् ५।१ ५४ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
दाणश् च सा चेच् चतुर्थ्यर्थे १।३।५५

चाण् दाने परस्मैपदी। ततः सम्पूर्वात् तृतीयायुक्तातात्मनेपदं भवति, सा चेत् तृतीया चतुर्थ्यर्थे भवति। कथं पुनस् तृतीया चतुर्थ्यर्थे स्यात्? वक्तव्यम् एव एतत् अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवति इति वक्तव्यम्। दास्य संप्रयच्छते। वृषल्या संप्रयच्छते। कामुकः सन् दास्यै ददाति इत्यर्थः। चतुर्थ्यर्थे इति किम्? पाणिना सम्प्रयच्छति। समः प्रशब्देन व्यवधाने कथम् आत्मनेपदं भवति? समः इति विशेषणे षष्ठी, न पञ्चमी।

लघु-सिद्धान्त-कौमुदी

दाणश्च सा चेच्चतुर्थ्यर्थे ७४४, १।३।५५

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते कामी॥

न्यासः

दाणश्च सा चेच्चतुश्र्यर्थे। , १।३।५५

कथं पुनस्तृतीया चतुश्र्यर्थे स्यादिति? न कथञ्चिदित्यर्थः। तद्विधायिनः शास्त्रस्याभावादिति भावः। "वक्तवयमेवैतत्" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- तदेव सम्प्रदानं यदा साधकतमत्वेन विवक्ष्यते तदा साधकतमत्वेन विवक्ष्यते तदा चतुर्थ्येऽपि तदा चतुर्थ्येऽपि तृतीया भवति, विवक्षातः कारकाणि भवन्तीति कृत्वा; न तु स्वभाववतः। सा च विवक्षा लौकिकी समाश्रीते, न तु प्रोयोगिकीति। लोके चाशिष्टव्यवहारे एव सा सम्भवति, नान्यत्र। लौकिकविवक्षात्र समाश्रीयत इति अस्यैवार्थस्य द्योतनाय चेच्छब्दः प्रयुक्तः। "दास्या मालां सम्प्रच्छते" इति। यो हि धर्मशास्त्रविरुद्धां दासीं कामयितुं तस्यै मालां ददाति तस्यासावशिष्टव्यवहारो भवतीत्यस्त्यत्राशिष्टव्यवहारः। सम्प्रयच्छत इति पाध्रादिसूत्रेण ७।३।७८ दाणो यच्छादेशः। कथमात्मनेपदं भवतीति। न कथञ्चिदित्यर्थः। "तस्मादित्युत्तरस्य" १।१।६६ इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति। एवं मन्यते-- "सम इति विशेषणे षष्ठी" इत्यादि। यदि "समः" इति पञ्चमी स्यान्न षष्ठी, तदा प्रशब्देन व्यवधानादात्मननेपदं न स्यात्; तस्मान्नेयं पञ्चमी, किं तर्हि? षष्ठी-- समो विशेषणस्य सम्बन्धी यो विशेष्यो दाणिति। ततश्च व्यवहितोऽपि विशेषणविशेष्यभावो भवतीति तेन व्यवधानेऽपि भवत्यात्मनेपदम्॥

बाल-मनोरमा

दाणश्च सा चेच्चतुश्र्यर्थे ५५२, १।३।५५

दाणश्च सा। "समस्तृतीयायुक्ता"दित्यनुवर्तते। तदाह--संपूर्वादिति। उक्तं स्यादिति। आत्मनेपदमित्यर्थः। सा चेदिति। तच्छब्देन तृतीया परामृश्यते। तदाह--तृतीया चेदिति। दास्या संयच्छते इति। "अशिष्टव्यवहारे दाणः प्रयोगे चतुश्र्यर्थे तृतीया वाच्या" इति तृतीया। ननु "रथेन समुदाचरते इत्यत्र "समस्तृतीयायुक्ता"दिति पूर्वसूत्रस्य न प्रवृत्तिः, आङा व्यवहितत्वेन सम्पूर्वकत्वाऽभावात् "त्समादित्युत्तरस्ये"ति परिभाषया सम इति पञ्चम्या चरेरव्यवहितपरत्वलाभात्। तथा "दास्या संप्रयच्छते" इत्यत्रापि "दाणश्च सा चे"दिति कथं प्रवर्तते, प्रशब्देन व्यवधानादित्यत आह-- पूर्वसूत्रे सम इति षष्ठीति। तथा च षष्ठ()आ पौर्वापर्यमेव गम्यते, न त्वव्यवहितत्वमिति भावः। तेनेति। षष्ठ()आश्रयणेनेत्यर्थः। सूत्रद्वयमिति। "समस्तृतीयायुक्ता"दिति पूर्वसूत्रस्थस्य षष्ठ()न्तस्यैव समः "दाणश्चे"ति सूत्रेऽप्यनुवृत्तेरिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपात् ५।१ यमः ५।१ स्वकरणे ७।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

उपाद् यमः स्वकरने १।३।५६

शेषात् कर्तरि परस्मैपदे प्राप्ते उपपूर्वात् यमः स्वकरणे वर्तमानादात्मनेपदं भवति। पाणिग्रहणविशिष्टम् इह स्वकरनम् गृह्यते, न स्वकरणमात्रम्। भार्याम् उपयच्छते। स्वकरणे इति किम्? देवदत्तो यज्ञदत्तस्य भार्याम् उपयच्छति।
न्यासः
उपाद्यमः स्वकरणे।, १।३।५६

यदि स्वकरणमात्र आत्मनेपदं भवति शाकटकादिस्वीकारेऽपि स्यादिति चोद्यमपाकर्त्तुमाह-- "पाणिग्रहणम्" इत्यादि। एवं मन्यते-- प्रतिनियतविषया हि शब्दशक्तयो भवन्ति, यस्मादुपपूर्वो यमिरात्मनेपदान्त एवंविध एव स्वीकारे वर्तते; न तु सर्वस्मिन्। तस्मात् पाणिग्रहणात्मकमेव स्वीकरणं गृह्लते। उपयच्छत इति पूर्ववद्यच्छादेशः॥
बाल-मनोरमा
उपाद्यमः स्वकरणे ५५३, १।३।५६

उपाद्यमः। "आत्मनेपद"मिति शेषः। ननु "स्वं वरुआमुत्पादयती"त्यर्थे "वस्त्रमुपयच्छती"त्यत्राप्यात्मनेपदं स्यादित्यत आह--स्वकरणं स्वीकार इति। अस्वस्य सतः स्वत्वेन परिग्रहः स्वकरणशब्देन विवक्षित इत्यर्थः। च्विप्रत्ययस्तु वैकल्पिकः, "समर्थानां प्रथमाद्वे"त्युक्तेरिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी
उपाद्यमः स्वकरणे ४६०, १।३।५६

स्वकरणं स्वीकार इति। स्वकरणमित्यत्र च्विर्न भवति, "समर्थानां प्रथमाद्वे"ति विकल्पात्। स्वकरणशब्देन भार्यास्वीकारो गृह्लते इति वृत्तिकृत्। भट्टिस्तु स्वीकारमात्रेऽपि प्रायुङ्क्त "उपायंस्त महाऽस्त्राणी"ति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ज्ञाश्रुस्मृदृशाम् ६।३ सनः ५।१ १।१।७९ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
ज्ञाश्रुस्मृदृशां सनः १।३।५७

ज्ञा श्रु समृ दृशित्येतेषां सन्नन्तानाम् आत्मनेप्दं भवति। तत्र जानातेः अपह्नवे ज्ञः १।३।४४ इति त्रिभिः सूत्रैरात्मनेपदं विहितम्, श्रुदृशोरपि समो गम्यृच्छि १।३।२९ इत्यत्र विहितम्। तस्मिन् विषये पूर्ववत् सनः १।३।६२ इत्येव सिद्धम् आत्मनेपदम्। ततो ऽन्यत्र अनेन विधीयते। स्मरते पुनरप्राप्त एव विधानम्। धर्मं जिज्ञासते। गुरुं शुश्रूषते। नष्टं सुस्मूर्षते। नृपं दिदृक्षते। सनः इति किम्? जानाति, शृणोति, स्मरति, पष्यति।
न्यासः
ज्ञाश्रुस्मृदृशां सनः।, १।३।५७

"त्रिभिः सूत्रेः" इति। "अपह्नवे ज्ञः" १।३।४४ इत्यादिभिः। "धर्मं जिज्ञासते" इति। "ज्ञा अवबोधने" (धा।पा।१५०७), सन्,

 

द्विर्वचनम्, अभ्यासस्य ह्यस्वत्वम्, "सन्यतः" ७।४।७९ इतीत्वम्। "शुश्रूषशते" इति। श्रु श्रवणे" (धा।पा।९४२), "इको झल्" १।२।९ इति सनः कित्तम्, "श्रयुकः किति" ७।२।११ इतीट्प्रतिषेधः, "अज्झनगमां सनि" ६।४।१६ इति दीर्घः। "सुस्मूर्षते" इति।"स्मृ आध्याने" (धा।पा।८०७) ; पूर्ववत् कित्वात् "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्त्वम्, रपरत्वम्। "दिदृक्षते" इति। "हलन्ताच्च" १।२।१० इति कित्त्वम्, ततश्च व्रश्चादिना ८।२।३६ षत्वम्, "षढोः कः सि" ८।२।४१ इति कत्वम्॥

बाल-मनोरमा

ज्ञाश्रुस्मृदृशां सनः ५५५, १।३।५७

ज्ञानश्र। प्राग्वदिति। आत्मनेपदमित्यर्थः। यद्यपि "अपह्नवे ज्ञः, "अकर्मकाच्च" "सम्प्रतिभ्यानाध्याने" इति सूत्रैः, "अर्तिश्रुदृशिभ्यश्चे"ति वार्तिकेन च ज्ञादिभ्य आत्मनेपदे कृते "पूर्ववत्सनः" इत्यात्मनेपदं सिद्धम्, "तथाप्यपह्नवाद्यभावेऽप्यात्मनेपदार्थं ज्ञाश्रुदृशीनामिह ग्रहणमिति मत्वोदाहरति-- धर्मं जिज्ञासते इति। ज्ञातुमिच्छतीत्यर्थः। शुश्रूषते इति। "अज्झनगमां सनी"ति दीर्घः। "इको झ"लिति सनः कित्त्वम्। "श्र्युकः किती"ति इण्निषेधः। सुस्मूर्षते इति। स्मृधातोः सनि "अज्झने"ति दीर्घे "उदोष्ठ()पूर्वस्ये"त्युत्त्वे रपरत्वे "हलि चे"ति दीर्घः।

तत्त्व-बोधिनी

ज्ञाश्रुस्मृदृशां सनः ४६२, १।३।५७

ज्ञाश्रुस्मृ। "अपह्नवे ज्ञः" इत्यादिना ज्ञादातोः, "अर्तिश्रुदृशिभ्यश्चे"ति श्रुदृ शिभ्यां चात्मनेपदे कृते तस्मिन्विषये "पूर्ववत्सनः" इत्यनेन सिद्धेऽपि विषयान्तरे सन्नन्तादनेन विधीयत इति ज्ञेयम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० १।१।५९ अनोः ५।१ ज्ञः ५।१ सनः ५।१ १।१।५७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

न अनोर् ज्ञः १।३।५८

पूर्वेण योगेन प्राप्तम् आत्मनेपदम् प्रतिषिध्यते। अनुपूर्वाज् जानातेः सन्नन्तादात्मनेपदं न भवति। तथा च सति सकर्मकस्य एव अयं प्रतिषेधः सम्पद्यते। पुत्रम् अनुजिज्ञासति। अनोः इति किम्? धर्मं जिज्ञासते।

न्यासः

नानोर्ज्ञः। , १।३।५८

"पूर्वेण" इति। अनन्तरसूत्रप्राप्तं यत्तत्प्रतिषिध्यते-- "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा " (व्या।प।१९) इति कृत्वा। "तथा च" इत्यादि। यस्मादनन्तरसूत्रेणाअत्मनेपदं #एयत्प्राप्नोति, तस्यायं प्रतिषेधः सम्पद्यते। एवंसति सकर्मकस्यैवायं प्रतिषेधः; अनन्तरसूत्रेण सकर्मकादात्मनेपदविधानात्। अकर्मकाद्धि "अकर्मकाच्च" १।३।४५ इत्यनेन प्रागेवात्मनेपदं विहितमित्यनन्तरातीतो योगः सकर्मकार्थो विज्ञायते; यतश्चैवम्, तेनाकर्मकात् "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदं भवत्येव-- औषधस्यानुजिज्ञासत इति॥

बाल-मनोरमा

नाऽनार्ज्ञः ५५६, १।३।५८

नानोर्ज्ञः। अनुपूर्वाज्ज्ञाधातोः सन्नन्तान्नात्मनेपदमित्यर्थः। पुत्रमनुजिज्ञासतीति। अनुज्ञातुमिच्छतीत्यर्थः। ननु सर्पिषा प्रवर्तितुमिच्छतीत्यर्थे "सर्पिषोऽनुजिज्ञासते" ईत्यत्रापि "अपह्नवे ज्ञः", "अकर्मकाच्चे"त्यात्मनेदस्याप्यनेन निषेधे सति सन्नन्तात्परस्मैपदमेव स्यादित्यत आह-- पूर्वसूत्रस्थेवेति। एवं च "सर्पिषोऽनुजिज्ञासते" इत्यत्र "अकर्मकाच्चे"त्यात्मनेपदं निर्बाधमिति भावः। ननु "अकर्मकाच्चे"ति ज्ञाधातोरात्मनेपदे सन्नन्तात्कथममात्मनेपदलाभ इत्यत आङ-- पूर्ववदिति। केवलात्सन्विहीनाज्ज्ञाधातोरात्मनेपदविधानात्सन्न्नतादपि तस्मात् "पूर्ववत्सनः" इत्यात्मनेपदमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रत्याङ्भ्याम् ५।२ श्रुवः ५।१ न ० १।१।५८ सनः ५।१ १।१।५७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

प्रत्याङ्भ्यां श्रुवः १।३।५९

प्रति आङित्येवं पूर्वाच्छृणोतेः सन्नन्तादात्मनेपदं न भवति। प्रतिशुश्रूषति। आशुश्रूषति। उपसर्गग्रहणं चेदं, तस्मादिह प्रतिषेधो न भवति , देवदत्तं प्रति शुश्रूषते।

न्यासः

प्रत्याङ्भ्यां श्रुवः। , १।३।५९

"उपसर्गग्रहणञ्चेदम्" इति। कथं श्रुव इति? विशेषणविशेष्यभावसम्बन्धे षष्ठी। तेनायं सम्बन्धो भवति-- शृणोतेर्यौ विशेषणभूतौ प्रत्याङौ तत्पूर्वाच्छरुवः सम्बन्धात् सन्नन्तादात्मनेपदं न भवति। उपसर्गादेवार्थं द्वारेण शृणोतेर्विशेषणभूताविति सामथ्र्यादुपसर्गयोग्रहणम्। "देवदत्तं प्रति शुश्रूषते" इति। प्रतिशब्दस्य "लक्षणे त्यम्भूताख्यान" १।४।८९ इत्यादिना लक्षणे कर्मप्रवचनीयसंज्ञा, तेन प्रतिना देवदत् एव सम्बध्यते; न धात्वर्थ इति॥

बाल-मनोरमा

प्रत्याङ्भ्यां श्रुवः ५५७, १।३।५९

प्रत्याङ्भ्यां श्रुवः। उक्तं नेति। आत्मनेपदं नेत्यर्थः। प्रत्याङाविहोपसर्गावेव गृह्वेते, व्याख्यानात्। तदाह-- कर्मप्रवचनीयात्स्यादेवेति। "आत्मनेपद"मिति शेषः। देवदत्तं प्रतीति। "लक्षणेत्थम्भूते"ति प्तिः कर्मप्रवचनीयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शदेः ५।१ शितः ६।१ ६१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

शदेः शितः १।३।६०

शद्लृ शातने परस्मैपदी, तस्मादात्मनेपदं विधीयते। शदिर्यः शित्, शिद्भावी, शितो वा सम्बन्धी तस्मादात्मनेपदं भवति। शीयते, शीयेते, शीयन्ते। शितः इति किम्? अशत्स्यत्। शत्स्यति। शिशत्सति।

लघु-सिद्धान्त-कौमुदी

शदेः शितः ६६२, १।३।६०

शिद्भाविनोऽस्मात्तङानौ स्तः। शीयते। शीयताम्। अशीयत। शीयेत। शशाद। शत्ता। शत्स्यति। अशदत्। अशत्स्यत्॥ कृ विक्षेपे॥ ३९॥

न्यासः

शदेः शितः।, १।३।६०

यदि "शदेः शितः" इति व्यधिकरणे एते पञ्चम्यावित्यभ्युपगम्यैवं व्याख्यायते-- शदेः परो यः शित् तस्मादात्मेपदं भवतीति, तदा सार्वधातुकाश्रयत्वाच्छितः प्रागेव तदुत्पत्तेर्धातोः शेषत्वादस्य लावस्थायां परस्मैपदं स्यात्, ततस्तन्निमित्तकः व्याचिख्यासुराह-- शदिर्यः शिदिति। एतेन "शदेः शितः" इति समानाधिकरणे एते पञ्चम्याविति दर्शयति। कथं पुनः शदिः शिद्भवति, यावता विकरणस्य शकार इत्संज्ञक इत्संज्ञासम्बन्धी, न तु शदेः? इत्यत आह-- "शद्भावी" इति। भाविशब्दोऽयम् "भविष्यति गम्यादयः"३।३।३ इति भविष्यत्कालविषयः। शिद्भावीति यतः शिद्भविष्यति स शिद्भावी।एतदुक्तं भवति-- शिन्निमित्तत्वादुपचारेण शदिः शिदित्युक्तमिति। भवति हि कारणे कार्योपचारात् तथा व्यपदेशः, यथा-- नड्वलोदकं पकादरोग इति। शितो वा सम्बन्धी" इति। एतेन "शितः" इत्यस्य षष्ठ()न्ततां दर्शयति। कः शदेः शित्सम्ब्नधी? यस्तस्य प्रकृतिः। प्रागपि शितः शदेस्तत्प्रकृतित्वमस्त्येवेति शित्प्रकृतेः शदेरात्मनेपदं भवति। "शीयते" इति। पाघ्रादिसूत्रेण ७।३।७८ शीयादेशः॥

बाल-मनोरमा

शदेः शितः १९९, १।३।६०

शदेः शिदः। "अनुदात्तङित" इत्यस्मादात्मनेपदमित्यनुवर्तते। श् इत् यस्य स शित्। शप् विवक्षितः।शिति विवक्षिते सतीत्यर्थः, तिङुत्पत्तेः पूर्वं सार्वधातुकाश्रयस्य शपोऽसंभवात्। तदाह--शिद्भाविन इति। शित् भावी = भविष्यन् यस्मात्स शिद्भावी, तस्मादित्यर्थः। शीयते इति। शपि शदेः शीयादेशः। विशीर्यतीत्यर्थः। शीयेते शीयन्ते इत्यादि। "शिद्विषया" दित्युक्तेर्लिटि नात्मनेपदम्। "इत्संज्ञकशकारादा"वित्युक्तेर्न" शीयादेशः। विशीर्यतीत्यर्थः। तदाह--शशादेति। अनिट्कोऽयम्। क्रादिनियमप्राप्तस्य इटः "उपदेशेऽत्वतः" इति नियमात्थलि भारद्वाजनियमाद्वेट्। तदाह-- शेदिथ शशत्थेति च। इट्पक्षे "थलि च सेटी" इत्येत्वाभ्यासलोपाविति भावः। शेदिव शेदिम। क्रादिनियमादिट्। अशददिति। लृदित्त्वादङिति भावः। क्रुशधातुरनिट्कः। चुक्रोशिथ। क्रादिनियमात्थलि नित्यमिट्। अजन्ताऽकारवत्त्वाऽभावान्न भारद्वाजनियमः। चुक्रुशिव चुक्रुशिम। क्रोष्टेति। व्रश्चादिना शस्य षः। "षढो"रिति षस्य कः, सस्य षत्वम्। कित्त्वान्न गुणः। कुच। "कुच शब्दे" इति पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादिकार्यणप्रत्ययार्थः। अर्थनिर्देशः क्वचित्पाणिनीय इति भूधातौ प्रपञ्चितम्। बुध इति। सेट्कोऽयम्, अनिट्सु श्यन्विकरणस्यैव बुधेग्र्रहणात्। तदाह-- बोधिनेति। अबोधीत्। रुहधातुरनिट्कः। क्रादिनियमात्थल्यपि नित्यमिट्। अजन्ताऽकारवत्त्वाऽभावान्न भारद्वाजनियमः। रोढेति। लुटितासिगुणे ढत्वधत्वष्टुत्वढलोपाः। रोक्ष्यतीति। लृटि स्ये ढकषाः। अरुक्षदिति। इगुपधशलन्तत्वात् क्से ढकषाः। कित्त्वान्न गुणः। वृदिति। "ज्वलितिकसन्तेभ्यः" इति उत्तराऽवधेरपि कसेग्र्रहणादेव

सिद्धेर्वृत्करणं स्पष्टार्थमित्याहुः। इति ज्वलादयः। गूहत्यन्ता इति। "गुहू संवरणे" इत्येतत्पर्यन्ता इत्यर्थः। चते चदे याचने। अचीदिति। एदित्त्वान्न वृद्धिः। एवमचदीत्। बुधिर्। "बुध अवगमने" इति केवलपरस्मैपदी गतः। स तु ज्वलादिकार्यार्थः। अयं तु इरित् स्वरितेत्। अनिट्सु श्यन्विकरणस्यैव पाठादयं सेट्। अबुधदिति। इर इत्त्वेऽपि तदवयवस्य इकारस्य प्रत्येकमित्त्वेऽपि न नुम्, "इदितो नु"मित्यत्र कर्मधारयमाश्रित्य इत्संज्ञकेकारान्तस्यैव नुम्वधेः। पूर्वोत्तरेति। जन- पूरि- साहचर्येणेत्यर्थः। उ बुन्दिरित। आद्य उकार इत्-- "उदितो वे" ति क्त्वायामिड्विकल्पार्थः। अबुदिति। इरित्त्वादङि "अनिदिता" नलोपः, इर इकारस्य प्रत्येकमित्संज्ञाविरहात्, अनिदितामित्यस्य इत्संज्ञकेकारान्तभिन्नानामित्यर्थाश्रयणाच्चेति शब्देन्दुशेखरे स्थितम्। वेणृ गतीति। वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम्। खनुदातुरुदित्--क्त्वायामिड्विकल्पः।

तत्त्व-बोधिनी

शदेः शितः १७२, १।३।६०

कुच संपर्चनादौ। "कुच शब्दे तारे" इति रचवर्गीयान्तेषु पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितम्। अत्र नव्याः-- अनेनैव ग्रन्थेन पाणिनिनापि क्वचित्क्वचिदर्थनिर्देशः कृत इत्यनुमीयते, अन्यथाऽत्रत्यग्रन्थस्वारस्यभङ्गापत्तेरित्याहुः॥ बोधितेति। बुध्यतेरेवाऽनिट्कारिकासु पाठितत्वादयं सेडिति भावः। अकासीदिति। हलन्तलक्षणाया वृद्धेः "नेटी"ति निषेधेऽपि "अतो हलादे"रिति वैकल्पिकी वृद्धिः। वृदिति। अत्र नव्याः-- "ज्वलितिकसन्तेभ्यः" इति निर्देशाद्वृत्करणमिहाऽनार्षमित्यनुमीयते। अन्यथा "ज्वलादीभ्यो णः" इत्येव सूत्रयेदित्याहुः। अञ्चु गतौ। "अनिदिता"मिति नलोपः। अच्यात्। "अची"त्येकीयमते तु इदित्त्वात् -- अञ्च्यात्। मेधृ सङ्गमे च। चात्पूर्वोक्तेऽर्थे। "प्रजायै गृहमेथिना" मित्यत्र गृहैर्दारैर्मेधन्ते = सङ्गच्छन्ते इति विग्रहः। "सुप्यजातौ" इति णिनिः। शृधु मृधु। क्लेदनमिति। आद्रीभाव इत्यर्थः। उदित्त्वाक्त्वायां वेट्। शर्धित्वा श्रृद्ध्वा। उबुन्दिर्। बुन्दित्वा। बुत्त्वा। निष्ठायां-- बुन्नम्। निशामनं -चाक्षुषं ज्ञानम्। वेणृ। गत्यादयः पञ्चार्थाः। वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम्। वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः। नान्तोऽपीति। "उत माता महिषमन्ववेन" दित्यत्र नान्तदर्शनादिति भावः। खनु। खनित्वा। खात्वा। निष्ठायां-- खातः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ म्रियतेः ५।१ लुङ्लिङोः ७।२ च ० शितः ६।१ ६० आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

म्रियतेर् लुङ्लिङोश् च १।३।६१

मृङ् प्राणत्यागे। ङित्त्वादात्मनेपदम् अत्र सिद्धम् एव। नियमार्थम् इदं वचनम्। म्रियतेर् लुङ्लिङोः शितश्चाऽत्मनेपदं भवति, अन्यत्र न भवति। अमृत। मृषीष्ट। शितः खल्वपि म्रियते, म्रियेते, म्रियन्ते। नियमः किमर्थः? मरिश्यति। अमरिस्यत्।

लघु-सिद्धान्त-कौमुदी

म्रियतेर्लुङ्लिङोश्च ६६७, १।३।६१

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र। रिङ्। इयङ्। म्रियते। ममार। मर्ता। मरिष्यति। मृषीष्ट। अमृत॥ पृङ् व्यायामे॥ ४३॥ प्रायेणायं व्याङ्पूर्वः। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। व्यापृत। व्यापृषाताम्॥ जुषी प्रीतिसेवनयोः॥ ४४॥ जुषते। जुजुषे॥ ओविजी भयचलनयोः॥ ४५॥ प्रायेणायमुत्पूर्वः। उद्विजते॥

न्यासः

म्रियतेर्लुङलिङोश्च । , १।३।६१

"नियमार्थमिदं वचनम्िति। म्रियतेर्लुङलिङोः शित एव यथा स्यात्। यद्येवम्, ङिद्()ग्रहणं किमर्थम्? यावताऽन्यत्रात्मनेपदेन न भवितव्यमिति? उच्यते; स्वरार्थमुपदिश्यते-- मा हि मृतेति लुङि "तास्यनुदात्तेन्ङिदुपदेशाल्ल सार्वधातुकस्य" ६।१।१८० इति अनुदात्तत्वे कृते धातोरन्तोदात्तत्वं भवति। "तिङतिङः" ८।१।२८ इति निघातोऽत्र "हि च" ८।१।३४ इति प्रतिषिध्यते। अडागमोऽपि "न माङयोगे" ६।४।७४ इति। "अमृत" इति। "ह्रस्वादङ्गात्" ८।२।२७ इति सिचो लोपः। "मृषीष्ट" इति। आशिषि लिङ, तस्य "लिङाशिषि" ३।४।११६ इत्याद्र्धधातुकत्वाद्विकरणाभावः; "सुट् तिथोः" ६।४।१०७ इति सुट्; वलि ६।१।६४ यलोपः। "म्रियते"इति। तुदादित्वाच्छः; "रिङ शयग्लिङक्षु" ७।४।२८ इति रिङादेशः, "अचि श्नुधातु" ६।४।७७ इत्यादिनेयङ। "मरिष्यति"इति। "ऋद्धनोः स्ये" ७।२।७० इतीट्॥

बाल-मनोरमा

म्रियतेर्लुङलिङोश्च ३६८, १।३।६१

म्रियतेः। अनुदात्तहितः" इत्यत आत्मनेपदमित्यनुवर्तते। चकारेण "शदेः शितः" इत्यतः शित इत्यनुकृष्यते। प्रकृतिभूतादित्यध्याहार्यम्। तदाह - लुङ्()लिङोरिति। तङ् स्यादिति। आत्मनेपदं स्यादित्यर्थः, "म्रियमाण" इत्यत्र आनस्यापि इष्टत्वात्। ननु हित्वादेव सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमित्याह - नान्यत्रेति। तर्हि ङित्त्वं व्यर्थमित्यत आह -- ङित्त्वं स्वरार्थमिति। "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्त"मित्येतदर्तमित्यर्थ-। म्रियते इति। शे कृते रिङियङाविति भावः। ऋदन्तत्वाद्भारद्वाजमतेऽपि नेडित्याह -- ममर्थेति। मम्रिवेति। क्रादिनियमादिट्। मर्ता। "ऋद्धनोः स्ये" इति इटं मत्वाह - मरिष्यतीति। रि पि गताविति। द्वाविमावनिटौ। ननु शे कृते तिपमाश्रित्य इकारस्य परत्वाल्लघूपधगुणः स्यादित्य आह- अन्तरहगत्वादियङिति। कृ? विक्षेपे इति। दीर्घानतोऽयं , सेट्। किरतीति। "ऋत इद्धातो"रितीत्वं। रपत्वम्। चकरतुरिति। कित्वेऽपि "ऋच्छत्यृ()ता"मिति गुण इति भावः। "वृ()तो वे"ति मत्वाह - करिता करीतेति।

तत्त्व-बोधिनी

म्रियतेर्लुङ्?लिङोश्च ३२२, १।३।६१

म्रियतेर्लुङ्()लिङोश्च। चात् "शित" इति अनुकृष्यते। तदाह-- शितश्च प्रकृतिभूतादिति।तङिति। आत्मनेपदमित्यर्थः। तेन "म्रियमाण" इति सिद्धम्। स्वरार्थमिति। " मा हि मृते" त्यत्र "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्त"मित्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः। ङित्त्वाऽभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात्। न च सिज्लोपस्याऽसिद्धत्वान्ङितः परत्वं लसार्वधातुकस्य दुरुपपादमिति तस्य कथमनुदात्तता स्यादिति शङ्क्यम्, ङित्त्वसामथ्र्यात्सिज्लोस्याऽसिद्धत्वं नेति सुवचत्वात्। "अमृते"त्यत्राडागमस्यैवोदात्तत्वान्मृङो ङित्त्वस्य न किंचित्प्रयोजनमिति अण्िवारणाय "मा हि मृते" ति माङः प्रयोगः। "तिङ्ङतिङः" इति तिङन्तनिघातेऽपि ङित्त्वं व्यर्थमेव स्यादिति "हि" शब्दप्रयोगः। हि प्रयोगे तु "हि चे"त्यनेन तिङन्तनिघातनिषेधादिष्टस्वरः सिध्यतीति बोध्यम्। रि पि गतौ। परत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह--अन्तरङ्गत्वादिति।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूर्ववत् ० सनः ५।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

पूर्ववत् सनः १।३।६२

सनः पूर्वो यो धातुः आत्मनेपदी, तद्वत् सन्नन्तादात्मनेपदम् भवति। येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेन एव सन्नन्तादपि भवति। अनुदात्तङित आत्मनेपदम् १।३।१२ आस्ते, शेते। सन्नन्तादपि तदेव निमित्तम् आसिसिषते, शिशयिषते। नेर् विशः १।३।१७ निविशते, निविविक्षते। आङ उद्गमने १।३।४० आक्रमते, आचिक्रंसते। इह न भवति, शिशत्सति, मुमूर्षति। न हि शदिम्रियतिमात्रम् आत्मनेपदनिमित्तम्। किं तर्हि? शिदाद्यपि, तच् च इह न अस्ति। यस्य च पूर्वत्र एव निमित्तभावः प्रतिशिध्यते, तत् सन्नन्तेश्वप्यनिमित्तम् अनुचिकीर्षति। पराचिकीर्षति। इह जुगुप्सते, मीमांसते इति? अनुदात्तङित इत्येव सिद्धम् आत्मनेप्दम्। अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति इति।

न्यासः

पूर्ववत्सनः।, १।३।६२

"पूर्ववत्" इति। "तेन तुल्यं क्रिया चेद्वतिः" ५।१।११४ इति वतिः।। पूर्वशब्दः सम्बन्धिशब्दत्वादवधिमपेक्षते। स चावधिः श्रुतत्वात्सन्नेव विज्ञायत इत्याह-- "सनः पूर्वो यो धातुः" इति। यद्येवम्, अवधिभावोपगम एव सन्ग्रहणस्योपयुक्तत्वात्त सन्नन्तादात्मनेपदं भवतीति, न तत्रैतल्लभ्यते; कुतस्तर्हि स्यात्? धातुमात्रात्, नैतदस्ति; एवं ह्यात्मनेपदं परस्मैपदानुक्रमणमनर्थकं स्यात्। अथ प्रत्ययान्तात् स्यात्? एवमपि सन्ग्रहणमनर्थकं स्यात्, पूर्ववत् प्रत्ययादिति वाच्यं स्यात्। तस्मात् पत्र्यासन्नं सनं त्यक्त्वा न युक्त्वा न युक्ताऽन्यन्यस्याश्रुतस्य परिकल्पनेति सन्न्तादेव भवतीति विज्ञायते। "येन" इत्यादिना वत्यर्थमाचष्टे। "तदेव निमित्तम्" इति। अनुदात्तेत्वं ङित्त्वञ्च धात्वन्तरावस्थायामपि सन्नन्ताद्वचनसामर्थ्यान्निमित्तं भवति। "असिसिषते" इति। इटि कृते "अजादेर्द्वितीयस्य" ६।१।२ इति सिशब्दस्य द्विर्वचनम्। "निविविक्षते" इति। "विश प्रवेशने" (धा।पा।१४२४), पूर्ववत् कित्त्वषत्वकत्वानि। "आचिक्रंसते" इति। आत्मनेपदनिमित्तत्वात् "स्नुक्रमोरनात्मनेपदनिमित्ते" ७।२।३६ इतीण् न भवति। "शिशत्सति", मुमूर्षति"इति। अत्र सनो यः पूर्वो भागः, तस्यात्मनेपदनिमित्तत्वमस्ति; शीयते, म्रियत इत्यात्मनपददर्शनात्। तत आत्मनेपदेन भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह-- "इह न भवति" इत्यादि। किं कारणमित्याह-- "न हि" इत्यादि। किं तर्हि? "शिदाद्यपि"इति। शिच्छब्देनात्र शिद्भावित्वं शित्सम्बन्धित्वञ्चोक्तम्। आदिशब्देन लुङलिङोग्र्रहणम्, तच्चेह नास्तीति न ह्त्र सनः पूर्वभागस्य शिद्भावित्वं शित्सम्बन्धित्वं वास्ति; शित्प्रत्ययस्यास्मिन् विषयेऽत्यन्तासम्भवात्, नापि म्रियतेः परौ लुङलिङौ स्तः; तस्मान्नेह शदिम्रियत्योरात्मनेपदनिमित्तत्वमस्तीति न भवत्यात्मनेपदम्। इह तर्हि कस्मान्न भवति-- अनुचिकीर्षति, पराचिकीर्षतीति? करोतेर्हि गन्धनादिष्वर्थेष्वात्मनेपदं विहितम्, अतस्त्दविवक्षायां सनन्तादपि तेन भवितव्यमित्याह-- "यस्य च" इत्यादि। गन्धनादिष्वर्थेषु पूर्वत्रासनन्तावस्थायाम् "अनुपराभ्यां कृञः" १।३।७९ इत्यनेन परस्मैपदविधानात् करोतेरात्मनेपदाभावः क्रियते। तस्मादाभ्यां सनन्तादप्यात्मनेपदनिमित्ताभावान्न भवति। "अथ जुगुप्सते, मीमांसत इत्यत्र कथमात्मनेपदम्, यावता "पूर्ववत्सनः" १।३।६२ इत्युच्यते, न च गुपादिषु सनः प्रागेवात्मनेपदं भवतीति; अतः पूर्ववदित्यतिदेशाभावान्न भवितव्यमात्मनेगदेनेत्यत आह-- "इह" इत्यादि। "जुगुप्सते"इति। "गुप्तिज्किद्भ्यः सन्" ३।१।५ इति सन्।

"मीमांसते" इति। "मानबध" ३।१।६ इत्यादिना सन्, अभ्यासस्य "सन्यतः" ७।४।७९ इतीत्वे दीर्घः। कथं पुनरिह "अनुदात्तङित आत्मनेपदम्" १।३।१२, यावता गुपादाववयवेऽनुदात्तेत्वं लिङ्गम्, न जुगुप्सादौ समुदाय इत्यत आह -- "अवयवे कृतम्" इत्यादि। यथा गोः कर्णादाववयवे कृतं लिङगं समुदायस्य विशेषकं भवति, तथा गुपादाववयवे कृतमनुदात्तेत्त्वं समुदायस्य जुगुप्स इत्येवमादेर्विशेषक्रं भवति। यद्येवम्, गोपयति, तेजयति, सङ्केतयतीत्येवमादावपि प्राप्नोति, सत्यम्; स्यादेतत्-- अवयवेकृतं लिङगं तस्य समुदायस्य गोर्विशेषकं भवति, यं समुदायं सोऽवयवो न व्यभिचरति; सनन्तं पुनर्न व्यभिचरति; णिजन्तन्तु व्यभिचरतीत्यतोऽत्रात्मनेपदेन न भवितव्यम्; वात्र्तमेतत्, सनन्तमपि व्यभिचरतीति विनापि तेन गोपयतीत्यादौ सम्भवात्। तस्मात् समुदायं यं गुपादिर्न व्यभिचरति, तस्यासम्भवात् सर्वस्य गुपादावयवे कृतमनुदात्तेत्त्वं लिङ्गं समुदायस्य विशेषकं भविष्यति। ततश्च गोपयतिप्रभृतिभ्योऽप्यात्मनेपदं प्राप्नोतीत्येव। एवं तर्हि "निगरणचलनार्थेभ्यश्च" १।३।८७ इत्यत्र चकारोऽनुक्तसमुध्चयार्थः क्रियते। तेन गुपादिभ्यो ण्यन्तेभ्यः परस्मैपदात्मनेपदापवादो भविष्यति॥
बाल-मनोरमा
पूर्ववत्सनः ५५८, १।३।६२

पूर्ववत्सनः। पूर्वेणेव पूर्ववत्। "तेन तुल्यटमिति तृतीयान्तद्वतिः। पूर्वशब्देन सन्प्रकतिर्विवक्षिता। तदाह-- सनः पूर्व इत्यादि। एदिधिषते इति। सन्प्रकृतेरेधधातोरात्मनेपदित्वात्तत्प्रकृतिकसन्ननन्तादात्मनेपदम्। "नेर्विशः" इत्यात्मनेपदविधानात्तत्प्रकृतकसन्ननन्तादपि आत्मनेपदम्। ननु "शदेः शितः" "म्रियतेर्लुङ्लङोश्चे"त्यस्य ग्रहणम्। "शदे"रित्यादिसूत्रद्वये "पूर्ववत्सनः" इति, "नानोर्ज्ञः" इत्यतो नेति चानुवर्त्त्य शदेर्म्रियतेश्च सन्ननतान्नात्मनेपदमिति व्याख्येयमित्यर्थः। नन्वेवं सति शीयते म्रियते इत्यादावात्मनेपदं न लभ्येतेत्यत आह-- वाक्यभेदेनेति। "शदेः शितः" म्रियतेर्लुङ्लिङोश्चे"त्येकं वाक्यम्। शिङ्वाविनः शदेरात्मनेपदं स्यात्, मृङो लुङ्लिङ्प्रकृतिभूतात्, शित्प्रकृतभूताच्चात्मनेपदं स्यान्नान्यत्रेत्यर्थः। तेन शीयते म्रियते ममारेत्यादि सिध्यति। "सनो ने"त्यपरं वाक्यम्। शदेः, म्रियतेश्च सन्नन्तान्नात्मनेपदमित्यपरम्। तेन शिशत्सति, मुमूर्षति इत्यादौ नात्मनेपदमित्यर्थः।

तत्त्व-बोधिनी
पूर्ववत्सनः ४६३, १।३।६२

निविविक्षत इति। "नेर्विशः" इत्यात्मनेपदविधानात्सन्ननन्तादपि आत्मनेपदम्। सनो नेत्यनुवर्त्त्येति। "नानोर्ज्ञः", "पूर्ववत्सनः" इति सूत्राभ्या"मिति शेषः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आम्प्रत्ययवत् ० कृञः ५।१ अनुप्रयोगस्य ६।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
आम्प्रत्ययवत् कृञो ऽनुप्रयोगस्य १।३।६३

अकर्त्रभिप्रायार्थो ऽयमारम्भः। आम्प्रत्ययो यस्मात् सो ऽयमाम्प्रत्ययः। आम्प्रत्ययस्य इव धातोः कृञो ऽनुप्रयोगस्य आत्मनेपदं भवति। ईक्षाञ्चक्रे। ईहाञ्चक्रे। यदि विध्यर्थम् एतत्, तर्हि उदुब्जाञ्चकार, उदुम्भाञ्चकार इति कर्त्रभिप्राये

क्रियाफले अत्मनेपदं प्राप्नोति। न एष दोषः। उभयम् अनेन क्रियते, विधिः नियमश्च। कथम्? पूर्ववतिति वर्तते। स द्वितीयो यत्नो नियमार्थो भविष्यति। कृञः इति किम्? ईक्षामास। ईक्षाम्बभूव। कथं पुनरस्य अनुप्रयोगः यावता कृञ् च अनुप्रयुज्यते लिति 3|1|40 इत्युच्यते? कृञिति प्रत्याहारग्रहणं तत्र विज्ञायते। क्व संनिविष्टानां प्रत्याहारः? अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः 5|4|50 इति कृशब्दादारभ्य यावत् कृञो द्वितीयतृतीयशम्बबीजात् कृषौ 5|4|58 इति ञकरम्।

लघु-सिद्धान्त-कौमुदी

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ५१४, १।३।६३

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम्॥

न्यासः

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य। , १।३।६३

"आम्प्रत्ययवत्िति। "तत्र तस्येव" 5|1|115 इति षष्ठीसमर्थाद्वतिः। "कृञोऽनुप्रयोगस्य" इति समानाधिकरणे षष्ठ्यौ। "ईक्षाञ्चक्रे" इत्यादि। "ईक्ष दर्शने" (धा।पा।६१०), "ईह चेष्टायाम्" (धा।पा।६३२), "ऊह वितर्के" (धा।पा।६४८) लिट्, "इजादेः" 3|1|36 इत्यादिऽऽनाम्, "आमः" 2|4|81 इति लेर्लुक्; प्रातिपदिकत्वात् सुप प्राप्तः; सुः, स्वरादित्वादव्ययत्वात् सुब्लुक्, "कृञ्च" 3|1|40 इत्यादिना कृञो लिट्परस्यानुप्रयोगः। "अकत्र्रभिप्रायायर्थोऽयमारम्भः" इति ब्राउवता विध्यर्थमेतदित्युक्तं भवति। तत्रास्मिन्विध्यर्थे यो दोषस्तमुद्भावयितुमाह-- "यदि" इत्यादि। "उदुब्जाञ्चकार" इति। "उब्ज आर्जवे"(धा।पा। १३०३), उत्पूर्वाल्लिट्, पूर्ववदाम्। "परस्मैपदानाम्" 3|4|82 इत्यादिना तिपो णल्। "उदुम्भाञ्चकार" इति। "उभ उम्भ पूरणे" (धा।१३१९, १३२०) "उभयम्" इत्यादिना परिहारः। "कथम्िति? एकेन प्रयत्नेनाशक्यमेतदुभयं कर्त्तुमित्यत आह-- "पूर्ववत्" इत्यादि। नैवात्रेको यत्नः, किं तर्हि? द्वौ-- "आम्प्रत्ययवत्" इत्येको यत्नः,पूर्ववद्ग्रहणमनुवत्र्तमानं द्वितीयः। तत्र पूवण यत्नेन विधिः क्रियते, इतरेण नियमः। यद्यनुप्रयोगस्य कृञ आत्मनेपदं भवति, पूर्ववदेव; नान्यथा। तेनोदुब्जाञ्चकारेत्येनमादौ न भवति। न ह्युब्जादीनामात्मनेपदं सम्भवति, परस्मैपदित्वात्। "ईक्षामास" इति। आम्, अस्तेरनुप्रयोगः। "ईक्षाम्बभूव" इति। "भवेतरः" 7|4|73 "कृञ्च" 3|1|40 इत्यत्र करोतेरेव ग्रहणमित्यभिप्रायेणाह-- "कथं पुनः" इत्यादि। "कृञिति प्रत्याहारग्रहणम्" इत्यादि। तत्र प्रत्याहरे।डस्तिभवत्योरपि सन्निदेशः।?तस्तयोरप्यनुप्रयोगो भवतीति भावः। यद्यवम्, सम्पदोऽप्यनुप्रयोगः प्राप्नोति,तस्यापि तत्र सन्निवेशोस्त्येव; "अभिविधौ सम्पदा च" 5|4|53 इति वचनात्। सत्यपि सन्निवेशे नासौ प्रत्याहारग्रहणन गृह्यत इत्यदोषः। यथा तस्याग्रहणं ततोत्तरत्र प्रस्तावान्तरे प्रतिपदायिष्यामः। अथाम्प्रत्ययवदिति किम्? असति हि तस्मिन्ननुप्रयोगमात्रस्यात्मनेपदं स्यात्-- देवदत्तः करोतीति? अत्रापि पूर्ववदित्यनुवत्र्तते। तथापीह स्यात्-- ईहते, करोतीति? "आम्प्रत्ययम्" इत्युच्यमाने प्रत्यासत्तेराम एवानुप्रयोगस्येति गम्यते, नानुप्रयोगमात्रे, तेनातिप्रसङ्गो न भवति॥

बाल-मनोरमा

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ८६, १।३।६३

आम्प्रत्ययव। "अनुदात्तङित" इत्यत आत्मनेपदमित्यनुवर्तते। तत्राम्प्रत्ययस्यात्मनेपदाऽभावादाह-- अतद्गुणसंविधानो बहुव्रीहिरिति। तस्य = अन्यपदार्थस्य, गुणाः = विशेषमानि वर्तिपदार्थरूपाणि,तेषां संविज्ञानं = क्रियान्वयो न तु चित्राणां गवामपि। तथा च प्रकृते आम्प्रत्ययविनिर्मुक्त आम्प्रत्ययप्रकृतिभूत एधादिधातुरेव आम्प्रत्ययविनिर्मुक्त

आम्प्रत्ययप्रकृतिभूत एधादिधातुरेव आम्प्रत्ययशब्देन लभ्यत इति भावः। "आम्प्रत्यव"दिति तृतीयान्ताद्वतिः। अनुप्रयुज्यत इत्यनुप्रयोगः। कर्मणि घञ्। पञ्चम्यर्थे षष्ठी। तदाह--आम्प्रकृत्येत्यादिना। आम्प्रकृतेर्भवितुं योग्यं यदात्मनेपदं तत् अनुप्रयुज्यमानात्कृञोऽपि स्यादिति यावत्। अत्र न प्रत्याहारग्रहणम्, "अनुप्रयोगस्ये"त्येव सिद्धे कृञ्ग्रहणादिह न प्रत्याहारग्रहण"मिति भाष्यम्। परगामिन्यपि क्रियाफले कृञ्धातोरात्मनेपदार्थोऽयमारम्भः। इन्दंचकारेत्यादौ तु परगामिनि क्रियाफले नाऽनेनात्मनेपदम्, आम्प्रकृतेः "इदि परमै()आर्ये" इति धातोरात्मनेपदाऽभावात्, तस्य परस्मैपदित्वात्। एतदर्थमेव आम्प्रत्ययवदित्युपात्तम्। नन्विन्दांचकारेत्यादौ मास्त्वमनेन सूत्रेण परगामिनि क्रियाफले आत्मनेपदम्। आत्मगामिनि तु क्रियाफले "स्वरतञित" इत्यात्मनेपदं दुर्वारम्। अस्य सूत्रस्य एधाञ्चक्र इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याऽप्राप्तस्य विधान एव समर्थतया आत्मगामिनि क्रियाफले "स्वरितञित" इति प्राप्तस्यात्मनेपदस्य निवारणे सामथ्र्याऽभावादित्यत आह-- इहेति। इह = "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्ये"ति सूत्रे "पूर्ववत्सनः" इति पूर्वसूत्रात्पूर्ववदित्यनुवर्त्य "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्ये"त्येकं वाक्यं, "पूर्ववत्कृञोऽनुप्रयोगस्ये"ति अन्यद्वाक्यमति वाक्यद्वयं संपाद्यम्। तत्र पूर्ववदिति तृतीयान्ताद्वतिः। पूर्वेण = पूर्वप्रयुक्तेन एधादिधातुना, तुल्यमित्यर्थ-। तत्र वाक्यद्वयस्य समानार्थकत्वे वैयथ्र्याद्द्वितीयं वाक्यं नियमार्थं संपद्यते। "पूर्ववदेव आत्मनेपदं न तु तद्विपरीत" मिति। एवं च पूर्ववाक्येन एधाञ्चक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु इन्दाञ्चकारेत्यादौ कर्तृगामिनि क्रियाफले "स्वरितञित" इत्यात्मनेपदस्य निवृत्तिः फलति। तदाह --तेनेति। द्वितीयवाक्येनेत्यर्थः। न तङिति। न आत्मनेपदमत्यर्थः। एवं चाऽनुप्रयुज्यमानात्कृञो लिटस्तङि प्रथमपुरुषैकवचने तादेशे एधाम् कृ त इति स्थिते--।

तत्त्व-बोधिनी

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ६७, १।३।६३

आम्प्रत्ययवत्। आम्प्रत्ययान्तस्यात्मनेपदाऽभावादाह-- अतद्गुण इति। आम्प्रकृत्या तुल्यमनुप्रयुज्यमानादिति। तृतीयान्ताद्वतिः। अनुप्रयोगस्येत्यत्र कर्मणि घञिति भावः। "अनुदात्तङित" इत्यतोऽनुवर्तनादाह-- आत्मनेपदं स्यादिति। एवमप्राप्तस्य विधानेऽपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह-- वाक्यभेदेनेति। अत्र च प्रमाणमाम्प्रत्ययवदिति वचनमेव। अन्यता पूर्ववदित्यनुवृत्त्यैवानुप्रयोगस्य कृञ आमः पूर्वेण तुल्यमित्यर्थलभादिष्टसिद्धेः किं तेन "आम्प्रत्ययव"दित्यनेन।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रोपाभ्याम् ५।२ युजेः ५।१ अयज्ञपात्रेषु ७।३ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

प्रौपाभ्यां युजेरयज्ञपात्रेषु १।३।६४

युजिर् योगे स्वरितेत्। तस्य कर्त्रभिप्राये क्रियाफले सिद्धम् एव आत्मनेपदम्। अकर्त्रभिप्रायार्थो ऽयमारम्भः। प्र उप इत्येवं पूर्वात् युजेरयज्ञपात्रप्रयोगविषयादात्मनेपदं भवति। प्रयुङ्क्ते। उपयुङ्क्ते। अयज्ञपात्रेषु इति किम्? द्वन्द्वं न्यञ्च पात्राणि प्रयुनक्ति {देवसंयुक्तानि}। स्वराध्यन्तोपसृष्टादिति वक्तव्यम्। उद्युङ्क्ते। नियुङ्क्ते। स्वराद्यन्तौपसृष्तातिति किम्? संयुनक्ति।

न्यासः

प्रोपाभ्यां युजेरयज्ञपात्रेषु। , १।३।६४

"युज समाधौ"(धा।पा।११७७) इत्यस्यानुदात्तेत्त्वात् सिद्धमात्मनेपदमित्यतस्तस्येह ग्रहणमयुक्तमित्यभिप्रायेणाह-- "युजिर् योगे" इति। "प्रयुङ्क्ते" इति। रुधादित्वात् "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः। "चोः कुः" ८।२।३० इति कुत्वम् = जकारस्य गकारः, "खरि च" ८।४।५४ इति चर्त्वम् = ककारः, "नश्च" ८।३।२४ इत्यादिनाऽनुस्वारः, "अनुस्वारस्य ययि परसवर्णः" ८।४।५७ इति ङकारः। "स्वराद्यन्तोपसृष्टाविति वक्तव्यम्" इति। स्वरोऽज् आदिरन्तो वा यस्य स स्वराद्यन्तः, तदुपसृष्टात् = तत्सम्बन्धाद्युजेरात्मनेपदं भवति-- इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्- इह सूत्रे प्रशब्दोऽजन्तोपसर्गलक्षणार्थः, उपशब्दोजाद्युपलक्षणार्थः, उपशब्दोऽजाद्युपलक्षणार्थः, तेन सर्वेणाजन्तेनाजादिना चोपसर्गेण चयुक्ताज्युजेरात्मनेपदं भवतीति। स्वराद्यन्तोपसृष्टादिति किम्? निर्युनक्ति॥

बाल-मनोरमा

प्रोपाभ्यां युजेरयज्ञपात्रेषु ५५९, १।३।६४

प्रोपाभ्यां। "आत्मनेपद"मिति शेषः। स्वरेति। स्वरौ अचौ आद्यन्तौ यस्य सः स्वराद्यन्तः। तथाभूतोपसर्गात्परत्व एव युजेरात्मनेपदमित्यर्थः। द्वन्द्वमिति। द्वन्द्वं द्विशः, न्यञ्चि-- अधोबिलानीत्यर्थ-।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समः ५।१ क्ष्णुवः ५।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

समः क्ष्णुवः १।३।६५

क्ष्णु तेजने परस्मैपदी। ततः सम्पूर्वातात्मनेपदं भवति। समो गम्यृच्छि १।३।२९ इत्यत्र एव कस्मान् न पठितः? अकर्मकातिति तत्र वर्तते। संक्ष्णुते षस्त्रम्। संक्ष्णुवाते, संक्ष्णुवते।

न्यासः

समः क्ष्णुवः। , १।३।६५

"अकर्मकादिति तत्रानुवत्र्तते" इति। सकर्मकादपि क्ष्णुव आत्मनपदमिष्यत इति मन्यते। अत एव सकर्मकस्योदाहरणमुपन्यस्तम्। "संक्ष्णुते शस्त्रम्" इति। अदादित्वाच्छपो लुक्। "संक्ष्णुवाते" इति। "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङ। "संक्ष्णुवते" इति। पूर्ववदादेशः।

बाल-मनोरमा

समः क्ष्णुवः ५६०, १।३।६५

समः क्ष्णुवः। "आत्मनेपद"मिति शेष"समो गम्यृच्चिभ्या"मित्यत्रैव "समो गम्यृच्छिक्ष् णुव" इति न सूत्रितं , तथा सति अकर्मकादित्यनुवृत्त्या सकर्मकान्न स्यात्। तत्सूचयन्नुदाहरति-- संक्ष्णुते शस्त्रमिति। तीक्ष्णीकरोतीत्यर्थः।

तत्त्व-बोधिनी

समः क्ष्णुवः ४६४, १।३।६५

समः क्ष्णुवः। "समो गम्यृच्छिक्ष्णुभ्यः" इति पठनीये पृथगस्य पाठः सकर्मकादपि विधानार्तं इति ध्वनयन्नुदाहरति--संक्ष्णुतेशस्त्रमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भुजः ५।१ अनवने ७।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
भुजो ऽनवने १।३।६६

भुज पालनाभ्यवहारयोः इति रुधादौ पठ्यते। तस्मादनवने ऽपालने वर्तमानादात्मनेपदं भवति। भुङ्क्ते, भुञ्जाते, भुञ्जते। अनवने इति किम्? भुनक्त्येनम् अग्निराहितः। अनवन इति प्रतिषेधेन रौधादिकस्यएव ग्रहनं विज्ञायते, न तौदादिकस्य भुजो कौटिल्ये इत्यस्य। तेन इह न भवति, विभुजति पाणिम्।
लघु-सिद्धान्त-कौमुदी
भुजोऽनवने ६७५, १।३।६६

तङानौ स्तः। ओदनं भुङ्क्ते। अनवने किम्? महीं भुनक्ति॥ ञीन्धी दीप्तौ॥ २१॥ इन्द्धे। इन्धाते। इन्धाताम्। इनधै। ऐन्ध। ऐन्धताम्। ऐन्धाः। विद विचारणे॥ २२॥ विन्ते। वेत्ता॥
लघु-सिद्धान्त-कौमुदी
इति रुधादयः ७ ६७५, १।३।६६

लघु-सिद्धान्त-कौमुदी
अथ तनादयः ६७५, १।३।६६

लघु-सिद्धान्त-कौमुदी
तनु विस्तारे १ ६७५, १।३।६६

लघु-सिद्धान्त-कौमुदी
भुजोऽनवने ७४८, १।३।६६

ओदनं भुङ्क्ते। अनवने किम्? महीं भुनक्ति॥
लघु-सिद्धान्त-कौमुदी
इत्यात्मनेपदप्रक्रिया ७४८, १।३।६६

लघु-सिद्धान्त-कौमुदी
अथ परस्मैपदप्रक्रिया ७४८, १।३।६६

न्यासः

भुजोऽनवने।, १।३।६६

"अवनप्रतिषेधेन" इत्यादि। अवनं पालनम्। तत्प्रतिषेधेन रौधादिकस्य भुजेग्र्रहणं विज्ञायते; न तौदादिकस्य-- "{भुजौ--धातुपाठः} भुज कौडिस्ये" (धा।पा।१४१७) इत्यस्य। यथैव हि सवत्सा धेनुरानीयतामित्युक्ते यस्या हि वत्सेन सह सम्बन्धः सम्भवति सैव गोधेनुरानीयते, न महिष्यादिधेनुः; तथेहाप्यवनप्रतिषेधेन यस्य भुजोऽनवने वृत्तिः सम्भवति, स एव रौधादिकः प्रतीयते; तस्मात् तस्यैव ग्रहणं विज्ञायते। तेन निर्भुजति, विभुजतीति तौदादिकस्यात्मनेपदं न भवति॥

बाल-मनोरमा

भुजोऽनवने ५६१, १।३।६६

भुजोऽनवने। अवनं---रक्षणम्। ततोऽन्यत्र भुजेरात्मनेपदमित्यर्थः। ननु भुज पालनाऽब्यवहारयो" रिति धातुपाठे स्थितम्। तत्र "बुभुजे पृथिवी"मित्यत्र न पालनमर्थः। तथा सति "अनवने" इति पर्युदासादात्मनेपदाऽयोगात्। नाप्यभ्यवहरणम्, असंभवात्। नहि पृथिव्या अभ्यवहरणं संभवति। तथा "वृद्धो जनो दुःखशतानि भुङ्क्ते" इत्पि न युज्यते, दुःखशतानां पालनस्य अभ्यवहरणस्य चाऽसंभवात्। तत्राह-- इह उपभोगो भुजेरर्थ इति। धातूनामनेकार्थकत्वादिति भावः। महीं भुनक्तीति। रक्षतीत्यर्थः। अत्र रौधादिकस्यैव "भुज पालनाभ्यवहारयो"रित्यस्य ग्रहणम् -- नतु "भुजो कौटिल्ये" इति तौदादिकस्याऽपीति भाष्यम्। भुजति वासः = कुटिली भवतीत्यर्थः।

तत्त्व-बोधिनी

भुजोऽनवने ४६५, १।३।६६

अवनं-- पालनम्। "अदने" इति वक्तव्ये अनवन इति पर्युदासस्य प्रयोजनद्वयम्। संयोगवद्विप्रयोगस्यापि विशेषावधारणहेतुत्वाद्रौधादिकस्यैव भुजेग्र्रहममित्येकम्, अदनादर्थान्तरेऽप्युपभोगादौ आत्मनेपदं भवतीति द्वितीयम्, तदाह-- बुभुजेपृथिवीपाल इति। इहेति। उपभोग इत्युपलक्षममात्मसात्करणस्यापि।पृथिवीं बुभुजे। स्वाधीनां चकारेत्यर्थः। भुज पालनाभ्यवहारयोरित्यस्य रूधादेस्वे ग्रहणमिति भुजो कौटिल्य इत्यस्मात्तुदादेः परस्मैपदमेव। पाणिं विभुजति। मूलानि विभुजति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ णेः ५।१ ७१ अणौ ७।१ यत् १।१ कर्म १।१ णौ ७।१ चेत् ० सः १।१ कर्ता १।१ अनाध्याने ७।१ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

णे रणौ यत् कर्म णौ चेत् स कर्ता ऽनाध्याने १।३।६७

णिचश्च १।३।७४ इति कर्त्रभिप्राये क्रियाफले सिद्धम् एव आत्मनेपदम्। अकर्त्रभिप्रायार्थो ऽयमारम्भः। ण्यन्ता दात्मनेप्दं भवति। कथम्? अणौ यत् कर्म णौ चेत् तदेव कर्म, स एव कर्ता भवति, अनाध्याने आध्यानं वर्जयित्वा। आरोहन्ति

हस्तिनं हस्तिपकाः, अरोहयते हस्ती स्वयम् एव। उपसिञ्चन्ति हस्तिनं हस्तिपकाः, उपसेचयते हस्ती स्वयम् एव। पश्यन्ति भृत्या राजानम्, दर्शयते राजा स्वयम् एव। णेः इति किम्? आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती साध्वारोहति। अणौ इति किम्? गनयति गनं गोपालकः, गनयति गणः स्वयम् एव। कर्मग्रहणं किम्? लुनाति दात्रेन, लाव्यति दात्रम् स्वयम् एव। णौ चेद्ग्रहनं समानक्रियार्थम् आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती भीतान् सेचयति मौउत्रेण। यत्सग्रहणम् अनन्यकर्मार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्। कर्ता इति किम्? आरोहन्ति हस्तिनम् हस्तिपकाः, तानरोहयति महामात्रः। अनाध्याने इति किम्? स्मरति वङ्गुल्मस्य कोकिलः, समरयत्येनं वङ्गुल्मः स्वयम् एव। ननु चात्र कर्मकर्तरि मूलोदाहरणानि। तत्र कर्मवद्भावेन एव सिद्धम् आत्मनेपदम्। किम् अर्थम् इदम् उच्यते? कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवदतिदेशो विज्ञायते। कर्तृस्थार्थो ऽयमारम्भः। तथा च रुहिः कर्तृस्थक्रियः, दृशिः कर्तृस्थभावकः उदाहृतः।
न्यासः
णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने। , १।३।६७

"आरोहन्ति हस्तिनं हस्तिपकाः" इति। अणौ कर्मप्रदर्सनार्थमेतदुक्तम्। इदं त्वत्रोदाहरणम्-- "आरोहयते हस्ती स्वयमेव" इत। आरोहन्ति हस्तिनं हस्तिपका इत्यत्राङ्पूर्वस्य तु "रुह बीजजन्मनि प्रादुर्भावे" (धा।पा।८५९) इत्यस्य द्वे क्रिये वाच्ये-- न्यगम्भवनम्, न्यग्भावनञ्च। तत्र न्यग्भवनस्य हस्ती कर्त्ता, न्यगम्भावनस्य हस्तिपका इति। न्यग्भवन्तं हस्तिनं न्यग्भावयन्तीत्यर्थः। स यदा तु सुशिक्षितत्वात् सुविधेयत्वाच्च न्यग्भावनक्रियायामत्यन्तमानुकूल्यं प्रतिपद्यते हस्ती स्वयमेव; तदासौ हस्ती हस्तिपकान् प्रति प्रयोजनकत्वेन विवक्ष्यते, हस्तिपकास्तु प्रयोज्यत्वेन। हस्ती हस्तिपकान् प्रयुङ्क्ते-- मामारोहतेति, ततश्च प्रयोज्यप्रयोजकभावे विवक्षिते हेतुमण्णिच्। एवमुत्तरत्रापि कर्मणः कर्तृत्वस्य विवक्षितत्वात् प्रयोजकभावविवक्षायां णिज्विधेयः। ततस्तस्मिन्नुत्पन्ने यदा निर्ज्ञातस्वरूपत्वाच्चरितार्थत्वात् प्रयोज्या न विवक्ष्यन्ते, तदा निवृत्तत्वात् प्रयोज्यप्रयोजकभावस्य न्यग्भवनमात्रे रुहिर्वर्तते। अत्रेदमुदाहरणम्-- आरोहयते हस्ती स्वयमेवेति। तथा हि यदेवाण्यन्ते कर्मासीत् स एव ण्यन्ते हस्ती कर्त्ता भवति। न च प्रयोज्यप्रयोजकभावे निवृत्तेऽपि णिचो निवृत्तिर्भवतिः निवृत्तिकारणाभावात्। यथैव हि देवदत्तस्य व्यापारे निवृत्तेऽपि पचिः पाकान्न निवर्त्तते-- पच्यत ओदनः स्वयमेवेति, तथेहापि निवृत्ते प्रयोज्यप्रयोजकव्यापारे णिचो निवृत्तिर्न भवतीति वेदितव्यम्। "सिञ्चन्ति" इत्यादि। अत्रापि सिच्यमानो हस्ती कर्म यदा सुशिक्षितत्वात् सुविधेयत्वाच्च सेचनक्रियां प्रति प्रकृष्टमानुकूल्यं भजते, तदा तस्य प्रयोजकत्वे विवक्षिते हस्तिपकानाञ्च प्रयोज्यत्वे णिच्। तत्र कृते पूर्ववत् प्रयोज्येष्वविवक्षितेषु यदेवाण्यन्ते कर्म स एव ण्यन्ते कर्त्ता भवति। "पश्यन्ति" इत्यादि। अत्रापि दृश्यमानस्य राज्ञः
दर्शनक्रियायामतिशयेनानुकूल्यभावोपगमनात् प्रयोजकत्वे विवक्षिते भृत्यानाञ्च प्रयोज्यत्वे णिच्। तत्र विहिते पूर्ववत् प्रयोज्याविवक्षायां यदेव दृशेरण्य्नते कर्म राजा, स एव ण्यन्ते कर्त्ता। क्रियपि च सर्वेष्वेतेषूदाहरणेषु यैवाण्यन्तावस्थायाम्, सैव ण्यन्तेऽपि। सत्यपि च णिचि प्रयोज्यप्रयोजकभावस्य निवर्त्तितत्त्वात् क्रियान्तरस्य चानुत्पत्तेः। "गणयति" इत्यादि। "गण संख्याने" (धा।पा।१८५३) चनुरादवदन्तः पठ()ते। ततो णिच् , "अतो लोपः" ६।४।४८ इत्याकारलोपः। तस्य पूर्वविधौ कर्त्तव्ये स्थानिवद्भावात् "अत उपाधायाः" ७।२।११६ ति वृद्धिर्न भवति। "गणयति गोगणं गोपालकः। गणयति गणः स्वयमेव" इति। अत्र स गण्यमानो यदा गणनं प्रत्यानुकूल्यं भजमानः प्रयोजकत्वेन विवक्ष्यते, गोपालकस्तु प्रयोज्यत्वेन; तदा हेतुमण्णिच्। तस्मिन् कृते पूर्ववत् प्रयोज्याविवक्षायां यदेव कर्म स एव कर्त्ता भवति। तथाप्यणाविति वचनादात्मनेपदं न भवति; न हि गणःप्रागणौ कर्मासीत्, किं तर्हि? ण्यन्त एव। ननु च "अणावकर्मकाच्चित्तवत्कर्तृकात्" (१।३।८८) इत्यत्र "अणौ" इति किम्? चेतयमानं प्रयोजयति चेतयते इति केचित् प्रत्युदाहरन्ति" इत्युक्त्वा प्रत्युदाहरन्ति" इत्युक्त्वा वृत्तिकारो वक्ष्यति, तदयुक्तम्, "हेतुमण्णिचो विधिः। प्रतिषेधोऽपि

प्रत्यासत्या तस्यैव न्याय्यः"इति, तच्चेत्, सत्यम्, गणयति गोगणं गोपालकः, गणयति गोगणः स्वयमेवेत्येतदपि प्रत्युदहारणमयुक्तमेव स्यात्, नैतदस्ति; भेदस्याविवक्षितत्वात्। यदि हि भेदो विवक्ष्यते, तदा हेतुमण्णिचो विधिरिति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव स्य#आत्, न हि विप्रकृष्टस्य चुरादिणिचः।न चेह भेदो विवक्षितः, "णेः"इति जातिनिर्देशात्। तस्माण्णिज्मात्रविधिः, अतः प्रितिषेधोऽपि णिज्मात्रस्यैव स्यदिति युक्तमेतत् प्रत्युदाहरणम्। "अणावकर्मकात्" १।३।८८ इत्यादौ सूत्रेऽणाविति हेतुमण्णिच एव ग्रहणम्। अत एव हेतुमण्णिच एव विधिरिति प्रायासत्तेस्तस्यैव प्रतिषेधो युक्तः। यथा तत्र हेतुमण्णिचो ग्रहणं तथा तत्रैव प्रतिपादयिष्यामः। न चात्र तथाविधं किञ्चिन्निबन्धनमस्ति, यतो णेरिति हेतुमण्णिच एव ग्रहणमवसीयते; चौरादिकानामप्यनित्यण्यन्तत्वात्, विभाषितणिचां च केषाञ्चिद्विद्यमानत्वात् येषामण्यन्तानामेव यत् कर्म, तेषामेव चुरादिणिजन्तानां तस्यैव कर्तृत्वसम्बवात्। तस्मादिह णेरिति णिज्मात्रस्य ग्रहणं सूत्रकारस्याभिमतमिति लक्ष्यते। अथ गणयति गोगणः स्वयमेवेत्यत्र "कर्मवत् कर्मणा तुल्यक्रियाः"(३।१।८७) इत्यतिदेशात् कस्मादात्मनेपदं न भवति? कर्तृस्थभावकत्वात्। अत्र हि गणयतिरयं संख्यानिमित्ते परिच्छेदे ज्ञानविशेषे वत्र्तते, यस्य हि संख्यानमित्याख्या। स च ज्ञाविशेषः कत्र्तरि वत्र्तते; तत्र तस्य समवेतत्वात्, न कर्मणि। तस्मात् कर्तृस्थभावकत्वादिहात्मनेपदं न भवति। कर्मस्थक्रियाणां कर्मस्थभावकानाञ्च कर्मवद्भावातिदेशेनात्मनेपदमिष्यते, नेतरेषाम्। "लुनाति दात्रेण" इत्यादि। दात्रस्य तीक्ष्णतया करणस्यापि सतो विशिष्टव्यापारभूतत्वाल्लावकपुरुषान् प्रति प्रयोजकत्वविवक्षायां णिच्। "णौ चेद्()ग्रहणम्" इत्यादि। इह णौ चेदिति यत् कर्म स कत्र्तेत्येतावत्युच्यमानेऽणौ यत् कर्म तस्य सामथ्र्याण्णावेव कर्तृत्वं विज्ञायत इति किं णौ चेदित्यनेन? तदैतण्णौ चेद्()ग्रहणं क्रियमाणं समानक्रियार्थं विज्ञायते-- यदि यैव कर्मावस्थायां क्रिया, सैव कत्र्रवस्थायां भवतीति। एतदुक्तं भवति-- यस्यैव धात्वर्थस्य य्तकर्म तस्यैव यदि तत् कर्तृत्वेन विवक्ष्यत एवमात्मनेपदं भवति; नान्यथेति। तेन "आरोहन्ति हस्तिनं हस्तिपकाः, आरोह्यमाणो हन्ती भीतान् सेचयति मूत्रेण" इत्यत्र सेचयतेरात्मनेपदं न भवति; भिन्नत्वात् क्रियायाः। तथा हि, न्यग्भावनक्रियायां प्राक् हसती कर्मत्वेन विवक्षितः, सेचनक्रियायां तूत्तरकालं कर्तृत्वेन। "यत्सग्रहणमनन्यकर्मार्थम्" इति। अण्यन्ते यत्कर्म ण्यन्तेऽपि यदि तदेव कर्म कत्र्ता भवति न कर्मान्तरम्, एवमात्मनेपदं भवति; नान्यथा। ननु विप्रतिषिद्धमेतत्-- एकस्यैवैकदा कर्मत्वं कर्तृत्वञ्च? नैतद्विप्रतिषिद्धम्; एको हि वस्तुधर्मः, अपरश्च विवक्षाधर्मः, स्वातन्त्र्यविवक्षायां कर्तृत्वस्य विवक्षाधर्मत्वात्त वस्तुध्रमत्वाच्चारुह्यमाणताय कर्मत्वम्। "स्थलमारोहयति मनुष्यान्" इति। अत्र कर्मान्तरमप्यस्ति। मनुष्यानिति न केवलं हस्त्येवेति न भवत्यात्मनेपदम्। यद्येवम्, भीतान् सेचयति मूत्रेणेत्यत्र कर्मान्तरसद्भावादात्मनेपदं न भविष्यति; अस्ति ह्यत्रापि कर्मान्तरम्-- भीतानिति; अतो न वक्तव्यम्-- समानक्रियार्थं णौ चेदित्येतत्? नैतदस्ति, न हि भीतानिति सेचयतेः कर्म किं तर्हि? आरोहयतेः। भीतानाराहयमाणः सन् मूत्रेणात्मानं सेचयतीत्यर्थः; अयुक्तमेतत्, एवं ह्यारोह्यमाण इत्यत्रात्मनेपदं शानच्च न स्यात्, कर्मान्तरसद्भावात्। नैवं तर्हि शानजेवात्र विहितः किं तर्हि? "ताच्छील्यवयोवचनशक्तिषु" ३।२।१२९ चानश्()प्रत्ययः। तत्र यदि समानक्रियार्थं णौ चेद्ग्रहणं न क्रियेत, तदा यदेवारोहयतेरण्यन्ते कर्म, स एव हस्ती सेचयतेण्र्यन्ते कत्र्ता भवतीति तदेव कर्म, स एव कत्र्तेति स्यादेवात्मनेपदम्। तस्माण्णौ चेद्ग्रहणं समानक्रियार्थं कत्र्तव्यम्। "कत्र्तेति किमि" इति। कत्र्तर्येवात्मनेपदमनेन विधीयते; भावकर्मणोः १।३।१३ इत्मनेनैव सिद्धत्वात्। तस्मात् सामथ्र्यलब्धः कत्र्तेत्यभिप्रायः। कर्त्तृग्रहणं येवाण्यन्ते कर्म तस्मिन्नेव ण्यन्ते कर्तृत्वेन विवक्षिते सत्येवात्मनेपदं भतवि, नान्यथेत्येवमर्थ क्रियत इति दर्शयितुमाह-- "आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति महामात्रः" इति। अत्र यदेवाण्यन्ते हस्ती कर्म न तदेव ण्यन्ते कर्तृत्वेन विवक्षितम्, किं तर्हि? महामात्रः, तेनात्मनेपदं न भवति। एतच्च कर्त्तृग्रहणाल्लभ्यते; तस्यानन्यार्थत्वात्। ननु च यत्सग्रहणमनन्यकर्मार्थमित्यत्तम्, इहच कर्मान्तरं हस्तिपकाख्यमस्त, अतो यत्सग्रहणादेव न भविष्यति, तत् किमेतन्निवृत्त्यर्थेन कर्तृग्रहणेन? नैतदस्ति;एवं सति हि कर्तृग्रहणेऽणौ यत्कर्म णौ चेत् स कत्र्ता तदेव कर्म कत्र्ता भवतीत्यस्यार्थस्यच प्रतिपादनाय क्रियमाणं यत्सग्रहणमर्थवद्भवतीति। असति तु कर्त्तृग्रहणे तन्न

कत्र्तव्यमेव स्यादिति कुतः समानकर्मता प्रतीयते। "स्मरति वनगुल्मस्य" इति। अणौ कर्मप्रदर्शनार्थमेतत्। कर्मविषयेण शेषत्वेन विषयिणा विषयं दर्शयितुमुक्तम्। नन्वत्र न कर्मास्ति; तस्य शेषत्वेन विवक्षितत्वात्। तथा हि "शेषे" २।३।५० इत्यनुवत्र्तमाने "अधीगर्थ" २।३।५२ इत्यादिना कर्मणि शेषत्वेन विवक्षिते षष्ठीयं विहिता। तस्मादेदं दर्शयितव्यम्,-- स्मरति वनगुल्ममिति। अथ वा-- यद्यपि तच्छेषत्वेन विवक्षितम्, तथापि स्मर्यमाणत्वात् तस्य कर्मत्वं वस्तुतोऽस्त्येवेति। "स्मरयति" इति। "स्मृ आध्याने" (धा।पा।८०७), वनगुल्मस्य प्रयोजकत्वे विवक्षिते णिच्, घटादित्वान्मित्संज्ञा, "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वत्वम्। "एनम्" इति। "गतिबुद्धिप्रत्यवसानार्थ" १।४।५२ इत्यादिना कर्मसंज्ञायां सत्याम्, "द्वितीया टौस्त्वेनः" २।४।३४ इत्येनादेशः। ननु च यत्सग्रहणमनन्यकर्मार्थम्, इह च कर्मानतरमस्ति कोकिलः, ततश्च कर्मान्तरसद्भावादात्मनेपदं न भविष्यतीति किमेतन्निवृत्यर्थेनानाध्यानग्रहणेन? नैतदस्ति; आध्यानामात्रं विवक्षित्येदं प्रत्युदाहरणमुपन्यस्तम्। एनम इति तु वचनं वनगुल्मः कत्र्ता न कोकिल इत्यर्थोपदर्शनपरं वेदितव्यम्। एवं वनगुल्मं वनगुल्मो स्मरयति। आत्मानमात्मना स्मरयतीत्यर्थः। णिच्युत्पन्ने कोकिलस्य प्रयोज्यस्य विवक्षितत्वान्निवृत्ते प्रयोज्यप्रयोजकभावे स्मरयतेण्र्यन्तस्य प्रकृत एवार्थो भवति। ननु च स्मरणं चेतनावतां धर्मः, वनगुल्मश्चाचेतनः, तत् कथमसौ स्मरेत्? नैतदस्ति; अचेतनेष्वपि चेतनावद्धर्मोपचारः-- यथा नदीकूलं पिपतिषतीति। "रुहः कत्र्तस्थक्रियः" इति। तदर्थस्य न्यग्भावनात्मनो हस्तिपकेषु समवेतत्वात्। "दृशिश्च कत्र्तस्थभावकः" इति। तदर्थस्य दर्शनस्य कर्तृषु भृत्येषु व्यवस्थित्वात्॥

बाल-मनोरमा

णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ५६२, १।३।६७

णेरणौ। इह चत्वार्यवान्तरवाक्यानि। "णे"रिति प्रथमं वाक्यम्। प्रत्ययग्रहणपरिभाषया णेरिति तदन्तग्रहणम्। आत्मनेपदमित्यधिकृतं। तदाह-- ण्यन्तादात्मनेपदं स्यादिति। "अणौ यत्कर्म णौ चे"दिति द्वितीयं वाक्यम्। "कर्तरि कर्मव्यतिहारे" इतिवत्कर्मशब्दोऽत्र क्रियापरः। यत्तदोर्नित्यसम्बन्धात्तदिति लभ्यते। तथा च द्वितीयं वाक्यम्। तथा च अणौ या क्रिया सा ण्यन्ते चेदिति लभ्यते। एवं सति पचति पाचयतीत्यादौ सर्वतर् अणौ क्रियायाण्यन्ते अवश्यं सत्त्वाद्वाक्यमिदमनर्थकम्। तस्मात् अणौ या क्रिया सैव ण्यन्ते चेदित्येवकारो लभ्यते। ततश्च द्वितीयवाक्यस्य फलितमाह-- अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेत। "स कर्ते"ति तृतीयं वाक्यम्। अत्र "अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यादिति। अत्र तच्छब्दस्य विदेयसमर्पककर्तृशब्दानुसारेण पुंलिङ्गता ज्ञेया, "शैत्यं हि यत्सा प्रकृतिर्जलस्ये"तिवत्। अथ "अनाध्याने"ति चतुर्तं वक्यं व्याचष्टे-- न त्वाध्याने इति। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। तत्र नात्मनेपदमिति प्रसज्यप्रतिषेधोऽयमिति मन्यते। वस्तुतस्तु आध्याने आत्मनेपदं नेत्यर्थाश्रयणे भवतीत्यत्र नञोऽन्वितत्वेन असामथ्र्यादाध्यानशब्देन सम#आसाऽसंभवात्पर्युदास एवाऽयम्। "न त्वाध्याने" इतिमूलं तु फलितार्थकथनपरमेव। तथा च आध्यानभिन्नेऽर्थे विद्यमानाण्ण्यन्तादात्मनेपदं स्यादित्येवं प्रथमवाक्य एव आध्याने इत्यस्यान्वयात्रीण्येवाऽतवाक्यानीति युक्तम्। "वाक्यत्रय"मित्येव च भाष्ये दृश्यते। ननु "णिचश्चे"ति सिद्धे किमर्थमिदं सूत्रमित्यत आह-- णिचश्चेतीति। परगामिन्यपि फले आत्मनेपदार्थमित्यर्थः। स्यादेतत्। "विभाषोपपदेन प्रतीयमाने" इति सूत्रं वक्ष्यते। कर्तृगामिनि क्रियाफले यदात्मनेपदं विहितं तदुपपदेन क्रियाफलस्य कर्तृगामित्वे गम्ये वा स्यादिति तदर्थः। "स्वं यज्ञं यजति यजते वे"त्याद्युदाहरणम्। "णेरणौ" इत्स्य तु दर्शयते भव इत्यनुपदमेव उदाहरणं वक्ष्यते इत स्थितिः। तत्र "दर्शयते भवः स्वयमेवे"त्यत्र फलस्य कर्तृगामित्वविवक्षायां "णेरणा"विति नित्यमात्मनेपदमिष्यते। तत्र परत्वात् "विभाषोपपदेने"ति विकल्पः स्यात्, "णेरणौ" इत्स्य फले आत्मगामित्वगमकोपपदाऽभावे सावकाशत्वात्। किंच "अणावकर्मकाच्चित्तवत्कर्तृका"दिति वक्ष्यते। अण्यन्ते यो धातुरकर्मकः, चित्तवत्कर्तृकश्च तस्माण्ण्यन्तात् परस्मैपदं स्यादिति तदर्थः। शेते कृष्णः। तं गोपी शाययतीत्युदाहरणम्। णेरणावित्यस्य तु दर्शयते भव

इत्युदाहरणविषय इति स्थितिः। तत्र लूधातोर्लुनाति केदारं देवदत्त इत्यतर् चित्तवत्कर्तृकत्वात्, लूयते केदार इति कर्मकर्तरि कर्मणः केदारस्य कर्तृत्वेन विवक्षिततया अकर्मकत्वाच्च "लावयते केदार" इति ण्यन्तात् "णेरणौ" इत्यात्मनेपदं बाधित्वा पर्तवात् "अणावकर्मका"दिति परस्मैपदमेव स्यात्, णेरणावित्यस्य दर्शयतेभव इत्यत्र सावकाशत्वादित्यत आह-- कत्रभिप्राये त्विति। पूर्वविप्रतिषेधेनेति। पूर्वविप्रतिषेधाश्रयणे "राजा दर्शयते" इति भाष्यप्रयोगो मानम्, अन्यथा तत्र "अणावकर्मका"दिति परस्मैपदापत्तेः, दर्शनविषयो भवतीत्यर्थे पश्यति भव इत्यत्र दृशेरणावकर्मकत्वाच्चित्तवत्कर्तृकत्वाच्च। "विभाषोपपदेने"ति विकल्पबाधविषये पूर्वविप्रतिषेधाश्रयणे तु व्याख्यानमेव शरणम्। अन्ये तु "दर्शयते राजे"ति भाष्यप्रयोगः फलस्य परगामित्वविषयो भविष्यति। एवं च कर्तृगामिनि क्रियाफले परत्वादणावकर्मकादित्यस्य प्रवृत्तौ न किंचिद्बाधकमिति पूर्वविप्रतिषेधाश्रयणं चिन्त्यमित्याहुः। तच्चिन्त्यम्, "अणावकर्मका"दित्यस्य परगामिन्यपि फले परत्वात्प्रवृत्तेर्दुर्वारत्वात्। नह्यणावकर्मकादित्यत्र कत्रभिप्राय इत्यस्ति, "स्वरितञितः कत्रभिप्राये" इत्यस्य बहुव्यवहितत्वादिति शब्दरत्ने प्रपञ्चितम्। ननु दर्शनविषयो भवतीत्यर्थे दर्शयते भव इत्यतत्र वस्तुतो दर्शनकर्मीभूतस्यैव भवस्य कर्तृत्वविवक्षायां तस्य "कर्मवत्कर्मणे"ति कर्मवद्भावात् "भावकर्मणो"रित्यात्मनेपदसिद्धेः "णेरणौ" इति सूत्रं व्यर्थमित्यत आह-- कर्तृस्थेति। कर्तृस्थो भावो येषां ते कर्तृस्थकभावकाः, कर्तृस्था क्रिया येषां ते कर्तृस्थक्रियाः, एवंविधा धातव इह सूत्रे उदाहरणम्। "कर्मवत्कर्मणे" त्यस्य तु कर्मस्थभावकाः, कर्मस्थक्रियाश्चोदाहरणमिति प्रकृतसूत्रे "कर्मवत्कर्मणे" ति सूत्रे च भाष्ये स्पष्टम। अतो विषयभेदात् "कर्मवत् कर्मणे"त्यनेन "णेरणौ"इत्यस्य न गतार्थतेति भावः। अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः। यथा दर्शनश्रवणादिः। सपरिस्पन्दनसाधनसाध्यो धात्वर्थः। क्रिया। यथा पाकादिः। यद्यपि दर्शने चक्षुरुन्मीलनादिरूपं स्पन्दनमस्ति तथापि तद्भिन्नहस्तपादादिचेष्टैवाऽत्र स्पन्दनमित्यविरोधः। तत्र कर्तृस्थभावकमुदाहरति-- पश्यन्ति भवं भक्ता इति। सकर्मकेषु धातुषु फलव्यापारयोर्धातुर्वर्तते। यथा पचेर्विक्लित्त्यनुकूलो व्यापारः। तत्र विक्लित्तिः फलम्। तदनुकूलोऽधिश्रयणादिव्र्यापारः। धातूपात्तव्यापाराश्रयः कर्ता देवदत्तादिः। व्यापारव्यधिकरणधातूपात्तफलाश्रयभूतं कर्म। यथा तण्डुलान् पचतीत्यत्र विक्लित्त्याश्रयास्तण्डुला इति स्थितिः। प्रकृते च दृशेश्चाक्षुषज्ञानानुकूलव्यापार्थकत्वे सकर्मकत्वानुपपत्तिः, फलस्य चाक्षुषज्ञानस्य तदनुकूलप्रयत्नादेश्च समानाधिकरणतवात्। अतो दृशेश्चाक्षुज्ञानविषयत्वापत्त्यनुकूलव्यापारोऽर्थः। तत्र ज्ञानविषत्वापत्तिः फलम्। तदनुकूलः प्रयत्नादिव्ापारो देवदत्तनिष्ठः। एवं च प्रयत्नादिव्यापारव्यधिकणचाक्षुषज्ञानविषयत्वरूपफलाश्रयो घटादिः कर्मेति युज्यते। तदेतदाह-- चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थ इति। प्रेरणेति। यदा चाक्षुषज्ञानविषयत्वापत्तिरेव दृशेरर्थो विवक्षितो न तु तदनुकूलव्यापारः कृञ्धातुगम्यः प्रेषणांशस्तदा पश्यति भव इत्यस्य चाक्षुषज्ञानविषयः संपद्यते इत्यर्थः। सौकर्यातिशयविवक्षया अनुकूलव्यापारांऽशस्य अविवक्षा बोध्या। तथा च चाक्षुषज्ञानविषयत्वापत्तेरेव दृश्यर्थत्वात्तदाश्रयस्य भवस्य कर्तृत्वमेव। तदाह-- विषयो भवतीत्यर्थ इति। लक्षणया चाक्षुषज्ञानविषयो भवतीत्यर्थ इत्यर्थः। नचाऽत्र भवस्य वस्तुतो दर्शनकर्मण इह कर्तृत्वात् "कर्मवत्ककर्मणा तुल्यक्रियः" इति कर्मवत्त्वाद्यगादिकमेव स्यान्न तु शबादीति शङ्क्यं, "कर्मवत्कर्मणे"त्यस्य कर्मस्थभावकेषु, कर्मस्थक्रियेषु च प्रवृत्तेः। अतः कर्मकर्तर्यपि शबादिकमेवेति भावः। तत इति। कृञ्धातुगम्यं पेरषणांशं विहाय चाक्षुषज्ञानविषयत्वापत्तिवृत्तेर्दृशेर्हेतुमण्णिजित्यर्थः। दर्शयन्ति भवं भक्ता इति। चाक्षुषज्ञानविषयत्वमापादयन्तीति णिजन्तस्य फलितोऽर्थ-। तदाह--पश्यन्तीत्यर्थ इति। चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः। पुनरिति। चाक्षुषज्ञानविषयत्वमापादयन्तीत्यर्थके "दर्शयन्ति भवं भक्ता" इत्युक्तोदाहरणे णिजर्थस्य आपादनांऽशस्याऽविवक्षायां प्रकृतसूत्रेणात्मनेपदे सति "दर्शयते भव" इत्युदाहरणमित्यर्थः। अत्र ण्यन्तस्यप्रेरणारहिऽथ लक्षणा। "गङ्गायां घोष" इत्यत्र टाप इव णिचः स्थितिः। चुरादेराकृतिगणत्वात्स्वार्थिको णिजित्यन्ये। इहेति। अवस्था = पदविशेषात्मकावयवसंनिवेशविशेषः। प्रथमा च तृतीया च प्रथमतृतीये। तयोरवस्थयोरिति विग्रहः। "सर्वनाम्नो वृत्तिमात्रे" इति प्रथमाशब्दस्य पुंवत्त्वम्। पश्यन्ति भवं भक्ता इति प्रथमावस्था। पदविशेषसंदर्भ इति यावत्। अवस्थैव

कक्ष्येति व्यवहरिष्यते मूले। कक्ष्या हि राजधान्यादौ जनविशेषसङ्घातनिवासात्मिका अनन्तरस्थानप्रापिका। तद्यथा रामायणे-- "आपञ्चमायाः कक्ष्याया नैनं कश्चिदवारय"दित्यादि। इदं च प्रथमवाक्यं प्रेरणांशत्यागे पश्यति भव इति द्वितीयवाक्यस्य उपपादकम्। चाक्षुषज्ञानविषयत्वापादने दृश्यर्थे प्रेरणांऽशत्यागसय् प्रेरणाविशिष्टार्थकदृशिघटितप्रथमवाक्याऽभावे असंभवात्। प्रेरणांऽशत्यागे पश्यति भव इति द्वितीया कक्ष्या तु दर्शनविषयत्वापत्तिमात्रार्थकाद्धेतुमण्णिचि दर्शयन्ति भवं भक्ता इति तृतीयवाक्यस्य पश्यन्ति भवं भक्ता इति प्रथमवाक्यसमानार्थकस्य प्रवेशापत्तेः। तृतीयं वाक्यं त्विदं दर्शयन्तीति -- ण्यर्थस्याऽविवक्षायां दर्शयते भव इति चतुर्थवाक्यस्य दर्शनविषयो भवतीति द्वितीयवाक्यसमानार्थकस्य ण्नय्तघटितस्योपपादकमिति स्पष्टमेव। तथा च प्रथमतृतीययोः कक्ष्ययोः पश्यन्ति भवं भक्ताः, दर्शयन्ति भवं भक्ता इत्यनयोः , तथा पश्यन्ति भवः, दर्शयते भव इति द्वितीयचतुर्थ्योः कक्ष्ययोश्च तुल्योऽर्थ इत्यर्थः। तत्र प्रथमद्वितीययोः कक्ष्ययोर्दृशेण्र्यन्तत्वाऽभावादेव तङो न प्रसक्तिरिति मत्वा आह-- तत्र तृतीयकक्ष्यायां न तङिति। कुत इत्यत आह-- क्रियासाम्येऽपीति। "दर्शयन्ति भवं भक्ता" इति तृतीयक्ष्यायाः, "पश्यन्ति भवं भक्ता" इति प्रथमकक्ष्यासमनार्थकतया "अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येते"त्यंशस्य सत्()तवेऽपि प्रथमकक्ष्यायामणौ कर्मकारकस्य भवस्य "दर्शयन्ति भवं भक्ता" इति तृतीयकक्ष्यायां णौ कर्तृत्वाऽभावादित्यर्थः। एवं चतुर्थकक्ष्योपपादिका तृतीयकक्ष्यैषा प्रत्युदाहरणं चेत्युक्तं भवति। अणा या क्रिया सैव चेण्ण्यन्तेनोच्येतेत्यंशस्य तु अध्यारोपितप्रेरणपक्षे द्वितीयकक्ष्यायां न तङिति फलं वक्ष्यते। चतुर्थकक्ष्या तु प्ररकृतसूत्रसयोदाहरणमित्याह-- चतुर्थ्यां तु तङिति। "णेरणौ" इति प्रकृतसूत्रेणे"ति सेषः। तदेवोपपादयति--- द्वितीयामादायेति। "पश्यति भव" इति द्वितीयकक्ष्यायां या चाक्षुषज्ञानविषयत्वापत्तिरूपा क्रिया तस्या एव "दर्शयते भव" इति चतुर्थक्ष्यायां ण्यन्तदृश्यर्थत्वादित्यर्थः। अनेन "अणौ या क्रिया सैव चेण्ण्यन्तेनोच्येते त्यंश उपपादितः। अथ "अणौ यत्कर्मकारकं णौ स चेत्कर्ता स्या"दित्यंशमुपपादयति-- प्रथमायामिति। "पश्यन्ति भवं भक्ता" इति प्रथमकक्ष्यायामण्यन्तदृशिकर्मणो भवस्य "दर्शयते भव" इति चतुर्थकक्ष्यायां ण्यन्तदृशिकर्तृत्वाच्चेत्यर्थः। अथ कर्तृस्थक्रियधातुमुद#आहरति--एवमारोहयते हस्तीत्यादि। तत्र प्रथमकक्ष्यामाह-- आरोहन्ति हस्तिनं हस्तिपका इति। हस्तिनं पान्तीति हस्तिपाः। त एव हस्तिपकाः। स्वार्थे कः। उपरिभागाक्रमणानुकूलव्यापारो रुहरेर्थः। तत्र प्रासादमारोहतीत्यादौ उपरिभागाक्रमणानुकूलव्यापारः सोपानगमनादिः। इह तु उच्चस्य हस्तिनो न्यग्भावनमेव उपरिभागाक्रमणानुकूलो व्यापारो विवक्षितः। तच्च नीचीकरणं। तदाह-- न्यग्भावयन्तीति। अत्र उपरिभागाक्रमणानुकूलन्यग्भवनानुकूलोऽङ्कुशपातादिव्र्यापारः। उपरिभागाक्रमणानुकूलन्यग्भवनं फलम्। तदाश्रयत्वाद्धस्ती कर्म। तादृशव्यापारश्रयत्वाद्धस्तिपकाः कर्तारः। अत द्वितीयकक्ष्यामाह-- तत इति। प्रेरणांशपरित्यागे सति उपरिभागाक्रमणानुकूलन्यग्भवनार्थकाल्लटि आरोहति, हस्तीति न्यग्भवतीत्यर्थः। प्रेषणांऽशपरित्यागे फलितमाह-- न्यग्भवतीत्यर्थ इति। अथ तृतीयकक्ष्यामाह-- ततो णिजिति। प्रेषणांऽशं परित्यज्य न्यग्भवनार्थकत्वमाश्रिताद्धातोः प्रेषणविवक्षायायं हेतुमण्णिजिति भावः। आरोहयन्तीति। "हस्तिनं हस्तिपका" इति शेषः। प्रेषणांशनिवृत्तौ णिजन्तस्य फलितमर्थमाह--- आरोहन्तीत्यर्थ इति। आक्रमणाय हस्तिनं न्यग्भावयन्तीति यावत्। चतुर्थकक्ष्यामाह-- तत इति। अविवक्षितप्रेषणाण्ण्यन्तात्प्रकृतसूत्रेणात्मनेपदे आरोहयते इति रूपमित्यर्थः। प्रेषणांऽशत्यागे सति ण्यन्तस्य फलितमर्थमाह-- न्यग्भवतीत्यर्थ इति।तददेवं "निवृत्तप्रेषणाअद्धातोः प्राकृतेऽर्थे णिजिष्यते" इति पक्षमाश्रित्योदाह्यतम्। इदानीमध्यारोपितप्रेषणपक्षमाश्रित्य आह-- यद्वेति। पश्यन्तीति। पश्यनति भवं भक्ता इति, आरोहन्ति हस्तिनं हस्तिपका इति च प्रथमकक्ष्या पूर्ववद्व्याख्येयेत्यर्थः। द्वितयीकक्ष्यामाह-- ततः कर्मण इति। दृशे रुहेश्च प्थमकक्ष्यायां कर्मीभूतस्य भवस्य हस्तिनश्च प्रयोजकर्तृकत्वरूपहेतुत्वारोपाद्धेतुमण्णिजित्यर्थः। दर्शयति भव इति। "भक्ता"निति शेषः। तदाह-- पशत आरोहतश्च प्रेरयतीत्यर्थ इति। चाक्षुषज्ञानविषयत्वमापादयतो भक्तान्भवः प्रेरयति, न्यग्भावयतो हस्तिपान् हस्ती प्रेरयतीत्यर्थः। उभयत्रहेतुमण्णिच्। तत्र प्रकृतिभ्यां

दृशिरुहिभ्यामेकैकं प्रेरणम्। णिचा तु तद्विषयकमेकैकं प्रेरणान्तरं प्रतीयते इति स्थितिः। चतुर्थकक्ष्यामाह--- ततो णिज्भ्यामिति। हेतुमण्णिज्भ्यां, तत्प्रकृतिभूतदृशिरुहिभ्यां च उपात्तयोः प्रेरणयोस्त्यागे सत चाक्षुषज्ञानविषयो भवति भव इति, न्यग्भवति हस्तीति चार्थः पर्यवस्यति। तत्र प्रकृतसूत्रेणात्मनेपदे दर्शयति भवः, आरोहयते हस्तीति च सिद्धमित्यर्थः। पश्यन्ति भवं भक्ता इति, आरोहन्ति हस्तिनं हस्तिपका इति च प्रथमकक्ष्यायां कर्मणो भवस्य हस्तिनश्च तृतीयकक्ष्यायां कर्तृत्वात्, प्रथमकक्ष्यायामणौ या क्रिया तस्या एवाऽत्र तृतीयकक्ष्यायां कर्मणो भवस्य हस्तिनश्च तृतीयकक्ष्यायां कर्तृत्वात्,प्रथमकक्ष्यामणौ या चाक्षुषज्ञानविषयं कुर्वन्तीति, न्यग्भावयन्तीति प्रकृत्युपात्तस्यप्रेषणांशसय् तृतीयकक्ष्यायां त्यागागदणौ या क्रिया सैव चेण्ण्यन्तेनोच्येतेत्यंशसय्कथं प्रवृत्तिरिति वाच्यम्, "सैव चेण्ण्यन्तेने"त्यत्र आधिक्यमात्रं व्यवच्छिद्यते, नतु न्यूनत्वमपीत्यदोषात्। ननु द्वितीयकक्ष्यामेव कुतो न तङित्यत आह-- अस्मिन्पक्षे द्वितीयेति। कुत इत्यत आह-- समानक्रियत्वाभावादिति। द्वितीयकक्ष्यायामणौ या क्रिया सैव चेण्ण्यनतेनोच्येतेत्यंशस्याऽभावादिति यावत्। तदेवोपपादयति-- णिजर्थस्येति। णेरिति किम्?। पश्यत्यारोहतीति निवृत्तप्रेषणान्मा भूत्। स्मरति वनगुल्मं कोकिल इति। स्मृतिविषयत्वमापादयतीत्यर्थः। पक्षद्वयेऽप्येषा प्रथमकक्ष्या द्वितयीतृतीयकक्ष्योरप्युपलक्षणम्। तत्र निवृत्तप्रेषणपक्षे "स्मरति वनगुल्मट इति द्वितीयकक्ष्या। स्मृतिविषयो भवतीत्यर्थः। "स्मरयति वनगुल्मं कोकिल" इति तृतीयकक्ष्या। स्मृतिविषयत्वमापादयतीत्यर्थः। द्वितीयकक्ष्या। प्रेषणपक्षे तु "स्मरयति वनगुल्मः कोकिल"मिति द्वितीयकक्ष्या। स्मरन्तं प्रेरयतीत्यर्थः। स्मरयति वनगुल्म इति। प्रत्युदाहरणमिदम्। निवृत्तप्रेषणपक्षे चतुर्थकक्ष्यैषा। अध्यारोपितप्रेषणपक्षे तु तृतीयकक्ष्येति बोध्यम्। "स्मृ आध्याने" इति घाटादिकत्वेन मित्त्वद्ध्रस्वः। विस्तरस्त्वत्र प्रौढमनोरमाशब्दरत्नशब्दोन्दुशेखरेष्वनुसन्धेयः।

तत्त्व-बोधिनी

णैरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने ४६६, १।३।६७

णेरणौ यत्कर्म। आत्मनेपदमित्यधिक्रियते। इहावान्तरवाक्यानि चत्वारि प्रतीयन्ते। "णेरात्मनेपद"मित्येकं वाक्यम्। तच्च स्यादित्यन्तेन व्याख्यातम्। "अणौ यत्कर्म णौ चे"दिति द्वितीयम्। कर्मशब्दः क्रियापरः "कर्तरि कर्मव्यतिहारे" इति वत्। तथा च अणौ या क्रिया सैव ण्यन्ते चेदित्यर्थः। एवं स्थिते फलितमाह-- सैव चेण्ण्यन्तेनोच्येतेति। स कर्ते"ति तृतीयं वाक्यम्। अणावित्यादि चेच्छब्दान्तमिहानुर्तते। कर्मशब्दश्चात्र कारकविशेषपरः, शब्दाधिकाराश्रयणात्, तदेतद्व्याचष्टे-- अणौ यदित्यादिना, स्यादित्यन्तेन। "अनाध्याने" इति वाक्यान्तरं व्याचष्टे -- न त्विति। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। वस्तुतस्तु पर्युदास एव लाघवादाश्रयणीयः। अस्मिन्पक्षे आध्यानभिन्ने इत्यर्थे सति फलितो- "न त्वाध्याने" नेयः। तथा च अत्र वाक्यत्रयमेवेति बोध्यम्। विकल्प इति। "परत्वात्प्राप्ते" इत्युत्तरेणान्वयः। पूर्वविप्रतिषेधेनेति। "विभाषोपपदेने"त्यस्यावकाशः--स्वं यज्ञं यजति। स्वं यज्ञं यजते इत्यादि। "णेरणा" वित्यस्य तु-- दर्शयते राजेत्यादि। तथा "अणावकर्मका" दित्यस्य --शेते कृष्णस्तं गोपी शाययतीत्यवकाशः। "णेरणौ" इत्यस्य तु-- लावयते केदारः स्वयमेवेति। तत्र हि लूयते केदार इति द्वितीयकक्षायामणावकर्मकत्वादिति भावः। न च "पश्यति भव" इतिवद्द्वितीयकक्षायां "लुनाति केदार" इत्येव प्रयोग इति भ्रमितव्यम्। लवनस्य कर्मस्थक्रियात्वेन "कर्मवत्कर्मणे"ति यगात्मनेपदप्रवृत्तेः। नव्यास्तु "अणावकर्मका" दित्यस्य बाधे "दर्शयते राजे"ति भाष्यप्रयोगो मानम्। तत्र हि निवृत्तप्रेषमपक्षे दृशेरणावकर्मकत्वाच्चित्तवत्कर्तृकत्वाच्च परस्मैपदप्राप्तेः। "विभाषोपपदेने"ति विकल्पबाधेतु न किंचिन्मानम्। किं च "अणावकर्मका"दित्यस्य बाधेऽपि नास्त्येव प्रमाणम्, पूर्वोक्तभाष्यस्य परगामिनि क्रियाफले चरितार्थत्वात्। तथा च कर्तृगामिनि क्रियाफले परत्वात् "अणावकर्मका" दित्यस्य प्रवृत्तौ न किंचिद्बाधकमस्तीति "पूर्वविप्रतिषेधेनेदमेवेष्यते" इत्येतच्चिन्त्यमित्याहुः। वस्तुतस्तु "णेरणौ" इति सूत्रस्याऽचित्त्वत्कर्तृकेऽपि लावयते केदार इत्यादौ चरितार्थत्वात् "अणावकर्मका" दित्यनेन परगामिनि क्रियफलेऽपि परत्वात्परस्मैपदे प्राप्ते दर्शयते राजेति

भाष्यप्रयोगबलात्पूर्वविप्रतिषेधाभ्युपगमेन "णेरणौ" इत्यात्मनेपदप्रवृत्तावपि "आत्मार्थं दर्शयते" "स्वार्थं दर्शयते" इत्यादौ परत्वात् "विभाषोपपदेने"त्यस्य प्रवृत्तौ न किंचिद्बाधकमस्ति। ततोऽपि परत्वात् "अणावकर्मका" दिति परस्मैपदमेव स्यादिति तद्बाधेन पूर्वविप्रतिषेधे स्वीकृते "विभाषोपपदेने"त्यस्याप्यर्थात्पूर्वविप्रतिषेधेन बाधो जात एवेति चेत्, एवं तर्हि "दर्शयते राजे"ति भाष्यप्रयोगस्य केवले चरितार्थत्वात्सोपपदप्रयोगे "अणावकर्मका" दिति गतार्थत्वशङ्कां निरस्यति-- कर्तस्थभावका इति। अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः।ष सपरिस्पन्दनसाधनसाध्या तु क्रिया। साधनं = कारकं, तत्साध्यत्वाद्धात्वर्थस्य। ननु "नृत्यन्तं भवं पश्यती"त्यत्र दृशेः कर्तृस्थभावकता न स्यात्, किं तु कर्तृस्थक्रियाकतैव स्यात्। न च साधनशब्देन लकारवाच्यं कारकं विवक्षितमिति वाच्यं, नृत्यन्भवः पश्यतीत्यत्र तद्दोषतादवस्थ्यादिति चेत्। अत्राहुः-- आरोहणादौ सपरिन्पन्द एव देवदत्तादिर्यथा साधनतथा दर्शनश्रवणादौ न भवति किंतु स्पन्दनरहितोऽपि नोक्तदोष इति। कर्तृस्थभावकमुदाहरति--पश्यन्तीति। प्रेरणांशेति। सौकर्यविवक्षयेति भाव-। तत इति। त्यक्तप्रेरणांशकाद्धातोरित्यर्थः। पुनण्र्यर्थस्येत्यादि। न चैवं णिजपि गच्छतीति "दर्शयते भव" इति न सिध्येदिति वाच्यम्, उपायनिवृत्तावप्युपेयाऽनिवर्तनादिति कैयटोक्तेः। तत्र तृतीयायेति। प्रथमाद्वितीययोस्तु ण्यन्तत्वाऽभावात्तङः प्रसक्तिरेव नास्तीति बावः। क्रियासाम्येऽपीति। प्रथमकक्षया सहेत्यर्थः। द्वितीयामादायेति। "अणौ या क्रिया सैव चेण्ण्यन्ते" इत्यस्य न्यूनाधिकभावव्यवच्छेदपरत्वमभ्युपेत्येदमुक्तम्। यदा त्वधिकव्यवच्छेदमात्रपरत्वमभ्युपगम्यते तदा प्रथमामादाय तत्संभवति। इदानीं कर्तृस्थक्रियाकमुदाहरति-- एवमित्यादिना। आरोहति हस्तीति। प्रेषणांशत्यागे उदाहरणमिदम्। ततो णिजैति। निवृत्तप्रेषणाद्धातोः प्रेषणांऽशविवक्षायां णिजित्यर्थः।
पुनण्र्यर्थस्याऽविवक्षायामुदाहरणमाह-- आरोहयते इति। एवं निवृत्तप्रेषणपक्षमुपपाद्येदानीमध्यारोपितप्रेषणपक्षमाह-- यद्वेति। हेतुत्वारोपादिति। प्रयोजककर्तृत्वारोपादित्यर्थः। अत्रापि सौकर्यविवक्षैव बीजम्। पश्यत इति। पश्यतो भक्तान्, आरोहतो हस्तिपकानिति क्रमेणाऽर्थः। आधिक्यादिति। "अस्मिन्पक्षे णौ चेत्सा क्रियेत्यनेन आधिक्यमात्रं व्यवच्छिद्यते न तु न्यूनत्वमपि। अन्यथा तृतीयक्षायामपि तङ् न स्यात्, प्रकृत्युपात्तप्रेषणाशंस्य त्यागेन न्यूनतायाः सत्त्वादिति भावः। णेरिति किम्?। पश्यत्यारोहतीत्यादिनिवृत्तप्रेषमान्म#आभूत्। न च "णौ चे"दिति श्रुतत्वाण्ण्यन्तादेव स्यादिति वाच्यम्, अणावित्यस्यापि श्रुतत्वात्। तस्याऽग्रिमयोगार्थमवश्यं कर्तव्यस्य स्पष्टार्थमिहैव कर्तृमौचित्याच्च। अणौ या क्रिया सैव चेण्ण्यन्ते किम्?। दर्शयति भवः, आरोहयति हस्तीत्यध्यारोपितप्रेषमपक्षे द्वितीयकक्षायां माभूत्। कथं तर्हि "करेणुरारोहयते निषादिन"मिति माघप्रयोगः, "स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव सादु बन्धुता" मिति भारविप्रयोगश्च सङ्गच्छत इति चेत्। अत्राहुः-- "णिचश्चे" त्यनेन क्रियाफले कर्तृगामिनि तङ्, न तु प्रकृतसूत्रेणेति। अणौ यत्कर्म कारकं णौ चेत्स कर्तेति किम्()। दर्शयन्ति भवमिति निवृत्तप्रेषणपक्षे चतुर्थकक्षेयम्। आध्यारोपितपक्षे तु तृतीयकक्षेति ज्ञेयम्। केचित्तु एतत्सूत्रस्थे भाष्ये दर्शयते भृत्यान्राजेत्युदाहरणं, स्मरयत्येनं वनगुल्मैति प्रत्युदाहरणं च दृश्यते। ततश्च अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायामेवाऽनेनात्मनेपदं भवति, न तु तृतीयकक्षायामिति प्रतीयते। तथा च कर्मपदमावर्त्त्य तस्य क्रियावाचित्वं स्वीकृत्याऽणौ या क्रियासैव चेण्ण्यन्तेनोच्येतेति वाक्यान्तराभ्युपगमेऽप्येवकारेणाऽधिक्यं न व्यवच्छिद्यते, किं तु न्यूनतैवेत्यस्मादेव भाष्यादवगम्यते। एवं च "दर्शयते भवः" "आरोहयते हस्ती"ति कर्मप्रयोगरहितं मूलग्रन्थस्योदाहरणं,"स्मरयति वनगुल्म" इति प्रत्युदाहरणं च भाष्यविरुद्धमेवेत्याहुः। अन्यैस्त्वविविक्षितमिह क्रमेत्युक्त्वाऽत्र मूलग्रन्थाऽविरोधेनैव भाष्यग्रन्थः समर्थितः।तेषामयमाशयः-- "गभीरायां नद्यां घोष" इत्यत्र गभीराऽभिन्ननद्यामिति गभीरनदीपदार्थयोरभेदबोधानन्तरं तीरलक्षणायां तीरस्य गभीरत्वाऽभावात्, नद्यास्तु गभीरत्वेऽप्येकदेशान्वयाऽसंभवाच्च अनर्थकमपि गभीरायामिति पदं प्राथमिकबोधमादाय यथा सार्थकं, तद्वदिहापि अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मण्यन्वितं, ततो णिजर्थस्येव कर्मणोऽपि त्यागे णिचः कर्मपदस्य च प्राथमिकबोधमादाय सार्थक्यम्। स्वबोध्यसंबन्धो लक्षणेत्यभ्युपगमात्। विशिष्टवाक्यार्थस्य चेह बोध्यत्वेन तत्संबन्धस्य बोधतृकतारूपस्य वाक्ये सत्त्वात्। एषैवार्थवादैः प्राशस्त्यलक्षणायां

गतिः। अन्यथा "वायव्यं ()ओतमालबेत बूतिकामः" इत्यादिविधिवाक्यस्य योऽर्थवादः "वायुर्वैक्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति" "स एवैनं भूति गमयति" इत्यादिस्तत्र "वायुमेव स्वेन भागधेयेन" "स एवैन" मित्य#आदिरूपस्य विभक्तिभेदेन प्रयोगस्य वैयर्थ्यं स्यादिति। नन्वेतत्सूत्रस्योदाहरमं प्रत्युदाहरणं च यताश्रुतभाष्यानुसारेण सकर्मकमेवास्तु किमनेन विद्यमानकर्मणोऽविवक्षितत्वोपपादनक्लेशेनेति चेत्। मैवम्। निवृत्तप्रेषमपक्षे दर्शयते भव इत्याद्युदाहरणस्य प्रत्युदाहरणस्य च कर्मरहितस्य स्वीकर्तव्यतया तदैकरूप्यस्याऽस्मिन्नपि पक्षे अकर्मकोदाहरमप्रत्युदाहरणयोः सिद्ध्ये कर्मणोऽविवक्षितत्वाव्याख्याया उचितत्वात्। किंच "कर्मवत्कर्मणे" त्यनेनैव सिद्धे कर्तृस्थभावक्रियार्थं सूत्रमिति भाष्यग्रन्थस्वारस्यादप्यकर्मकमेवोदाहरणं प्रत्युदाहरणं चायाति। न च "कर्मवत्कर्मणे"ति सूत्रे तुल्यशब्देनापि कर्मस्थक्रियातो न्यूनतैव व्यवच्छिद्यते न त्वाधिक्यमिति स्वीकृते नास्ति भाष्यग्रन्थस्वारस्यभङ्ग इति वाच्यं, तथा हि सति "कर्मवत्कर्मस्थक्रिय" इत्युक्तेऽपि कर्मस्था क्रिया यस्य कर्तुः स कर्ता कर्मवदित्यर्थलाभात्तत्समीहितसिद्धौ "कर्मणा तुल्यक्रिय" इत्यस्य वैयर्थ्यापत्तेः। द्वितीयकक्षायां भवे हस्तिनि च विषयत्वापादनविषयकप्रेरणायाश्च न्यग्भवनविषयप्रेरणायाश्च सत्त्वेऽपि विषयत्वापत्तिरूपाया न्यग्भवनरूपायाश्च कर्मस्थक्रियायाः सत्त्वात्। यदि तु "कर्मणा तुल्यक्रियः" इत्येतत्सार्थक्याय तुल्यशब्देनात्र न्यूनाधिकव्यवच्चेदः क्रियत इत्युच्यते, तदा "कर्मवत्कर्मणे"ति सूत्रस्य द्वितयीकक्षायामप्रवृत्तेः "कर्मवत्कर्मणेत्यनेनैव सिद्धे" इत्यादिभाष्यग्रन्थस्वारस्यभङ्गो भवत्येव। ततश्च अध्यारोपितप्रेषणपक्षे तृतीयकक्षायामेवोदाहरणं, न तु द्वितयीकक्षायामित्यभ्युपगन्तव्यम्। एतेनाध्यारोपितप्रेषणपक्षे णौ चेत्सा क्रियेत्यनेनाधिक्यमात्रं व्यवच्छिद्यते न्यूनत्वं नेत्यत्र विनिगमनाऽभावान्न्यूनत्वव्यवच्छेद एव स्वीकृते, द्वितयीकक्षायां तङ् दुर्वार इति न्यूनाधिकव्यवच्छेद एव ग्राह्यस्तेन कक्षाचतुष्टयपक्ष एव साधीयानिति वदन्तः परास्ताः। दर्शयते भृत्यान् राजेति भाष्योदाहरबलेन अध्यारोपितपक्षस्यैव प्रबलत्वादिति दिक्। गृधिवञ्च्योः प्रलभने। अकत्र्रभिप्रायार्थ आरम्भः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भीस्म्योः ६।२ हेतुभये ७।१ णेः ५।१ ६७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः
भीस्म्योर् हेतुभये १।३।६८

णेः इति वर्तते। अकर्त्रभिप्रायार्थो ऽयमारम्भः। विभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतुभये। हेतुः प्रयोजकः कर्ता लकारवाच्यः, ततश्चेद् भयं भवति। भयग्रहणम् उपलक्षणार्थम्, विस्मयो ऽपि तत एव? जटिलो भीषयते। मुण्डो भीषयते। जटिलो विस्मापयते। मुण्डो विस्मापयते। हेतुभये इति किम्? कुञ्चिकयैनं भाययति। रूपेण विस्माययति। अत्र कुञ्चिका भयस्य करणम्, न हेतुः।
न्यासः
भीस्म्योर्हेतुभये।, १।३।६८

"हेतुभये"इति। हेतोर्भयं हेतुभयमिति। "पञ्चमी भयेन" २।१।३६ इति समासः। भीतिर्भयम् = त्रासः, अनिष्टापाताशङ्का। "ततश्चद्भयं भवति" इति। यदि ततो हेतुसंज्ञकात् प्रयोजकाद्भयं भवत्येवमात्मनेपदं भवति, नान्यथेति। यद्येवम्,स्मयत्यर्थो न विशेषितः स्यात्; यस्माद्भयं बिभेतेरेवार्थो न स्मरतेः, ततश्च रूपेण

विस्माययतीत्यवमादावप्यात्मनेपदं स्यात्। मुण्डो विस्मापयत इत्यादौ न स्यादित्यत आह-- "भयग्रहणम्" इत्यादि। भयग्रहणं हि धात्वर्थोपलक्षणार्थम्। धात्वर्थश्चेत् प्रयोजकाद्भवतीत्ययमर्थो विवक्षितः।तेन विस्मयोऽपि यदि तत एव हेतोर्भवति यद्येषोऽर्थो लभ्यत इति स्मयत्यर्थोऽपि विशेषित एव। विस्मयः = आश्चर्यम्। "मुण्डः" इति। मुण्डगुणोपेतत्वान्मुण्डः। "भीषयते" इति। "ञिभी भये" (धा।पा।१०८४),"विभाषा लीयतेः" ६।१।५० इत्यतो विभाषाग्रहणानुवृत्तेः "बिभेतेर्हेतुभये" ६।१।५५ इति पक्ष आत्वम्। "भियो हेतुभये षुक्" ७।३।४० इति षुक्। "विस्मापयते" इति। "{ष्मिङ"-धातुपाठः} स्मिङ ईषद्धसने" (धा।पा।९४८)। "नित्यं स्मयतेः" ६।१।५६ इत्यात्वम्;र्तिह्री" ७।३।३६ इत्यादिना पुक्। "कुञ्चिकयैनं भाययति" इति। करणादत्र भयम्, न हेतोः प्रयोजकात्। तेनात्मनेपदं न भवति। षुगप्यत्र न भवति, स हीकारान्तस्यैवेष्यते, "भियो हेतुभये षुक्" ७।३।४० इत्यत्र भी ई-- इतीकारप्रश्लेषनिर्द्देशात्। "रूपेण विस्माययति" इति। अत्र करणादेव विस्मयः;न हेतोः॥

बाल-मनोरमा

भीस्म्योर्हेतुभये ४२२, १।३।६८

भीस्म्योर्हेतुभये। "अनुदात्तङितः"इत्यत आत्मनेपदमिति, "णेरणौ" इत्यतो णेरिति चानुवर्तते। हेतुः- प्रयोजकः। तदाह - आभ्यां ण्यन्ताभ्यामित्यादि अकत्र्रभिप्रायार्थमिदम्। ननु हेतोश्चेद्भयस्मयावित्यनुवपपन्नं, सूत्रे स्मयग्रहणाऽभावादित्यत आह--सूत्रे भयेति। सूत्रे भयग्रहणं स्मिङ्घात्वर्थस्य स्मयस्याप्युलक्षणमित्यर्थः। मुण्डो भापयते इति। अत्र आत्वं पुक्, आत्मनेपदं च। भिय आत्वाऽभावपक्षे विशेषमाह--

तत्त्व-बोधिनी

भीस्म्योर्हेतुभये ३७०, १।३।६८

भीस्म्योः। व्यत्ययेन षष्ठीत्याह--- आभ्यामिति। "णेरणौ" इत्यतो णेरित्यनुवृत्तेण्र्यन्ताभ्यामेव विधिरकत्र्रभिप्रायार्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ गृधिवञ्च्योः ६।२ प्रलम्भने ७।१ णेः ५।१ ६७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

गृधिवञ्च्योः प्रलम्भने १।३।६९

णेः इति वर्तते। अकर्त्रभिप्रायार्थो ऽयमारम्भः। गृधु अभिकाङ्क्षायाम्, वञ्चु गतौ इत्येतयोर् ण्यनतयोः प्रलम्भने वर्तमानायोरात्मनेपदं भवति। प्रलम्भनम् विसंवादनं, मिथ्याफलाऽख्यानम्। माणवकं गर्धयते। माणवकं वञ्चयते। प्रल्म्भने इति किम्? श्वानं गर्धयति। गर्धनम् अस्यौत्पादयति इत्यर्थः अहिं वञ्चयति। परिहरति इत्यर्थः।

न्यासः

गृधिवञ्च्योः प्रलम्भने। , १।३।६९

बाल-मनोरमा

गृधिञ्च्योः प्रलम्भने ५६३, १।३।६९

गृधिवञ्च्योः। प्रलम्भनं प्रतारणमिति मत्वाऽऽह- प्रतारणेऽर्थे इति। प्राग्वदिति। आत्मनेपदमित्यर्थः। धातूनामनेकार्थकत्वादनयोः प्रतारणे वृत्तिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लियः ५।१ सम्माननशालीनीकरणयोः ७।२ च ० णेः ५।१ ६७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

लियः संमाननशालीनीकरणयोश् च १।३।७०

णेः इति वर्तते। अकर्त्रभिप्रायार्थो ऽयमारम्भः। लीङ् श्लेषणे इति दिवादौ पठ्यते ली श्लेषणे इति च क्र्यादौ। विशेषाभावाद् द्वयोरपि ग्रहणम्। लियो ण्यन्तात् संमानने शालीनीकरणे च वर्तमानादात्मनेपदं भवति। चशब्दात् प्रलम्भने च। सम्माननं पूजनम् जटाभिरालापयते। पूजां समधिगच्छति इत्यर्थः। शालीनीकरणं न्यग्भावनम् श्येनो वर्तिकामुल्लापय्ते। न्यक्करोति इत्यर्थः। प्रलम्भने कस्त्वामुल्लापयते। विसंवादयति इत् यर्थः। विभाषा लीयतेः ६।१।५० इति वा आत्वं विधीयते। तदस्मिन् विषये नित्यम् अन्यत्र विकल्पः। व्यवस्थितविभाषा हि सा। सम्माननादिषु इति किम्? बालकमुल्लापयति।

न्यासः

लियः सम्माननशालीनीकरणयोश्च। , १।३।७०

"विशेषाभावात्" इति। कतं पुनर्विशेषभावः, यावता निरनुबन्धकत्वं सानुबन्धकत्वञ्चानयोर्विशेषोऽस्त्येव,ततश्च "निरनुबन्धकग्रहणे न सानुबन्धकस्यट (व्या।प।#आ५३) इत्यनया पिरभाषाय न लीङो ग्रहणेन भवितव्यम्। तदयुक्तमुक्तं विशेषाभावाद्()द्वयोरपि ग्रहणमिति? नैष दोष-, उत्सृष्टानुबन्धको हि लीह ल्यन्तो भवति। उत्सृष्टे चानुबन्धे द्वयमेवाभेदकं भवति-- अर्थः, शब्दान्तरत्वञ्च। तत्रार्थस्तावदनयोरेक एव, शब्दान्तरत्वमपि नास्ति। शब्दान्तरत्वञ्च प्रकृतिबेदविकरणभेदाभ्यां भवति। न चानयोण्र्यन्तयोः प्रकृतिभेदःष नापि विकरणभेदोऽस्ति;शब्विकरणत्वात्। यदपि "विभाषा लीयतेः" ६।१।५० इत्यात्त्वं तदप्युभयोर्भवति। तथा च वक्ष्यति-- "किमिदं लीयतेरिति? लीनातिलीयत्योरागन्तुकेन यका निदशः" इति। "न्यग्भावम्" इति। अभिभवनमित्यर्थः। "जटाभिः" इति। हेतौ तृतीया। जटा हि पूजाद्यधिगमहेतुभूताः। तथा हि-- यस्य जटाः सन्ति लोके महानयं तपस्वी()तयुपजातसम्प्रत्ययैः पूज्यते॥

बाल-मनोरमा

लियः संमाननशालीनीकरणयोश्च ४२०, १।३।७०

लियः संमानन। "लिय" इतिलीलीङोग्ग्रहणम्। "अनुदात्तङितः" इत्यत् आत्मनेपदमिति, "णेरणौ" इत्यतो णेरिति चानुवर्तते। "णिचश्चे"ति सिद्देऽकत्र्रभिप्रायार्थमिदम्। संमाननं - पूजालाभः। शालिनीकरणम् - अभिनवः। चकारात् "गृधिवच्च्यो"रितिपूर्वसूत्रात्प्रलम्भनग्रहणं समुच्चीयते। तदाह-- लीङ्लियोरित्यादिना।

तत्त्व-बोधिनी

लियः संमाननशालीनीकरणयोश्च ३६८, १।३।७०

लियः संमानन। चात्प्रलम्भने।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मिथ्योपपदात् ५।१ कृञः ५।१ अभ्यासे ७।१ णेः ५।१ ६७ आत्मनेपदम् १।१ १२

काशिका-वृत्तिः

मिथ्योपपदात् कृञो ऽभ्यासे १।३।७१

णेः इति वर्तते। अकर्त्रभिप्रायार्थो ऽयमरम्भः। ण्यन्तात् करोतेर् मिथ्योपपदादात्मनेपदं भवति अभ्यासे। अभ्यासः पुनः पुनः करणम्, आवृत्तिः। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टम् असकृदुच्चारयति इत्यर्थः। मिथ्योपपदतिति किम्? पदं सुष्ठु कारयति। कृञः इति किम्? पदं मिथ्या वाचयति। अभ्यासे इति किम्? पदं मिथ्या कारयति। सकृदुच्चारयति।

न्यासः

मिथ्योपपदात्कृञोऽभ्यासे। , १।३।७१

"मिथ्योपपदात्" इति। उपोच्चारितं पदमुपपदम्, मिथ्याशब्द उपपदं यस्य स तथोक्तः। "पदं मिथ्या कारयते" इति। अत्रात्मनेपदानाभ्यासस्य द्योतितत्वात् "नित्यवीप्सयोः" ८।१।४ इसि द्विर्वचनं न भवति। "सापचारम्" इति। सदोषम्। अनेन मिथ्याशब्दस्यार्थमाचष्टे। "स्वरादिदुष्टम्" इति। पूर्वस्यैवार्थं व्यक्तीकरोति। आदिशब्देन रूपस्य परिग्रहः। "असकृत्" इति। अभ्यासशब्दार्थमुदाहरणेन दर्शयति॥

बाल-मनोरमा

मिथ्योपपदात्कृञोऽभ्यासे ५६४, १।३।७१

मिथ्योपपदात्। अभ्यासवृत्तेर्मिथ्याशब्दोपपदकात्कृञ आत्मनेपदमित्यर्थः। इत ऊध्र्वं "णे"रिति निवृत्तम्।

तत्त्व-बोधिनी

मिथ्योपपदात्कृञोऽभ्यासे ४६७, १।३।७१

मिथ्योपपदात्कृञोऽभ्यासे। इह करोतिरुच्चारणार्थत्वादकर्मकः। उच्चारण--- निःसरणम्। ण्यन्तस्तूच्चारणवृत्तिः सकर्मकः। उच्चारयतीति। निःसारयतीत्यर्थः। असकृदुच्चारणे तु धातोर्लक्षणा, आत्मनेपदं तु द्योतकं, तेनैव द्योतितत्वात् "नित्यवीप्सयो"रिति न द्विर्वचनम्। ऋत्विजो यजन्तीति। दक्षिणादिकं तु न यागफलम्, "स्वर्गकामो यजेते"त्यादिना स्वर्गाद्युद्देशेन यागादिविधानात्स्वर्गादिरेव फलमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वरितञितः ५।१ कर्त्रभिप्राये ७।१ ७७ क्रियाफले ७।१ ७७ आत्मनेपदम् १।१ १२

समासः॥

स्वरितश्च ञश्च स्वरितञौ, तौ इतौ यस्य सः स्वरितञित्, तस्मात् ॰ द्वन्द्वगर्भः बहुव्रीहिः।
कर्तुः अभिप्रायः कर्त्रभिप्रायः, तस्मिन् ॰ षष्ठीतत्पुरुषः।
क्रियायाः फलं क्रियाफलं, तस्मिन् ॰ क्रियाफले, षष्ठीतत्पुरुषः।

अर्थः॥

स्वरितेतः ञितः च धातुभ्यः आत्मनेपदं भवति, क्रियाफलं यदि कर्त्तारम् अभिप्रौति॥

उदाहरणम्॥

यजते। पचते। सुनुते। कुरुते॥
काशिका-वृत्तिः
स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२

णेः इति निवृत्तम्। शेषात् कर्तरि परस्मैपदे प्रप्ते स्वरितेतो ये धातवो ञितश्च तेभ्यः आत्मनेपदं भवति, कर्तारं चेत् क्रियाफलम् अभिप्रैति। क्रियायाः फलं क्रियाफलं प्रधानभूतम्, यदर्थम् असौ क्रिया आरभ्यते तच् चेत् कर्तुर् लकारवाच्यस्य भवति। यजते। पचते। ञितः खल्वपि सुनुते। कुरुते। स्वर्गादि प्रधानफलम् इह कर्तारम् अभिप्रैति। कर्त्रभिप्राये इति किम्? यजन्ति याजकाः। पचन्ति पाचकाः। कुर्वन्ति कर्मकराः। यद्यपि दक्षिणा भृतिश्च कर्तुः फल्मिहास्ति तथा अपि न तदर्थः क्रियारम्भः।
लघु-सिद्धान्त-कौमुदी
स्वरितञितः कर्त्रभिप्राये क्रियाफले ३८१, १।३।७२

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले॥
न्यासः
स्वरितञितः कत्र्रभिप्राये क्रियाफले। , १।३।७२

"कत्र्रभिप्राये" इति। कत्र्तारमभिप्रैतीति "कर्मण्यण्" ३।२।१। यदि सामान्येन यत्र क्रियाफलं कत्र्तारमभिप्रैति तत्रात्मनेपदम्, तदेहापि स्यात्-- पचन्ति पाचकाः, यजन्ति याजका इति। तथा ह्यत्र क्रियाफलं दक्षिणा याजकान् कर्तॄनभिप्रैति, भृतिश्च पाचकानित्यत आह-- "क्रियायाः फलम्" इत्यादि। प्रधानभूतं यत्फलं क्रियायास्तदिह गृह्रते। न च दक्षिणादिकं क्रियाफलं प्रधानभूतम्, ततो न भवत्यतिप्रसङ्गः। किं पुनस्तत्प्रधानभूतमित्यत आह- "यदयर्थम्" इत्यादि। एतेन यदुद्दिश्यासौ यागादिक्रियारभ्यते, न तु दक्षिणाद्यर्थम्। "यदर्थम्" इति। स्वर्गादि, न तु दक्षिणादि। तथा हि स्वर्गाद्यर्थं यागादिक्रियारभ्यते, न तु दक्षिणाद्यर्थम्। "यदर्थम्" इति। क्रियाविशेषणमेतत्। यच्छब्देन क्रियायाः प्रधानभूतं फलं निर्दिश्यते। यदर्थः प्रयोजनं यस्य क्रियारम्भस्य फलमात्रस्य ग्रहमभिप्रेतं स्यात्, तदा फलग्रहणमनर्थकं स्यात्; व्यवच्छेद्याभावत्। नास्त्येव हि स विषयो यत्र क्रियाफलं कत्र्तारं नाभिप्रैति; ततश्च कत्र्रभिप्राये क्रियाया इत्येदं ब्राउयात्। एवमप्युक्ते षष्ठ()आ क्रियायाः सम्बन्धिनि कत्र्रभिप्राये प्रत्यायिते सामथ्र्यात् फमलेव क्रिय#आयाः कत्र्रभिप्रायं गम्यते। न हि फलान्यत् क्रियासम्बन्धि कत्र्तारमभिप्रैति। तस्मात् फलग्रहणसामथ्र्यात् प्रधानं फलं गृह्रते। अथ वा-- प्रधानत्वादेव प्रधानं फलं गृह्रते। तथा चोक्तम्-- प्रधाने कार्यसम्प्रत्ययात् सिद्धमिति। अस्मिन् व्याख्याने फलग्रहणं स्पष्टार्थम्, कर्तर्यात्मनेपदविधानात्। प्रत्यासत्तर्यस्तस्य वाच्यः कत्र्ता यदि तस्यैव तत् फलं भवतीति विज्ञायत इत्याह-- "तच्च" इत्यादि। गतार्थम्। "स्वर्गादि" इति। आदिशब्देनौदनादिकमपि गृह्रते। "तथापि" इत्यादिना दक्षिणादेः

फलस्याप्रधान्यं दर्शयति। यदर्थं सा क्रियारभ्यते तत्प्रधानमिहोपात्तं फलम्। स्वर्गाद्यर्थं च यागादिक्रियाऽऽरभ्यते; न दक्षिणाद्यर्थम्। अतोऽप्रयोजकत्वात्तदप्रधाम्। तेन यद्यपि तत् कत्र्तारमभिप्रैति तथाप्यात्मनेपदं न भवति। अथाभिप्रग्रहणं किमर्थम्? विप्रकृष्टेऽपि फले यथा स्यात् द्विविधं हि क्रियाफलम्-- आसन्नम्, विप्रकृष्टञ्च। तत्रासन्नम्-- यस्य व्यापारानन्तरमेव निष्पत्तिः। विप्रकृष्टन्तु-- उपरतेषु व्यापारेषु यन्निमित्तान्तरमपेक्ष्य कालविप्रकर्षकृतं संस्कारपरिपाकाच्चिराद्भवति। तत्राद्यमासन्नत्वात् दृष्टत्वादुत्पत्तिं()त प्रत्यव्यभिचाराच्च प्रधानमम्। इतरत् पुनर्विप्रकृष्टत्वादनुमेयत्वात् सम्भवव्यभिचाराच्चोत्पत्तिं()त प्रति व्यभिचारः। यद्यपि तदुद्दिश्य क्रियारम्भात् तदपि प्रधानम्, तथाप्यविप्रकृष्टफलापेक्षया तस्याप्राधान्यमस्त्येव। तत्र यद्यभिप्रग्रहणं न क्रियेत, तदा लुनीत पुनीत इत्यादावेव स्यात्-- यत्राविप्रकृष्टं क्रियाफलम्। यजते इत्यादौ तु न स्यात्-- यत्र विप्रकृष्टं स्वर्गादिकं क्रियाफलम्, प्रधाने कार्यसम्प्रत्ययात्। अभिग्रहणे तु न दोषः; यस्मादभिराभिमुख्ये वत्र्तते, प्रशब्दसत्त्वारम्भे। तेन प्रारम्भमात्रस्याभिमुख्ये फलनिष्पत्तौ बुद्धावाश्रीयमाणायां सर्वत्र सिद्धं भवति। ननु चासत्यभिप्रग्रहणे प्रकृतीनां यजिप्रभृतीनामनुबन्धविशेषासञ्जनादेव विप्रकृष्टेऽपि फले भविष्यतिच अन्यथा हि तस्य वैयथ्र्यं स्यात्, न; अभिचारादौ यत्राविप्रकृष्टं फलं दृष्टमस्ति तत्र तस्य सार्थकत्वात्। तस्माद्विप्रकृष्टेऽप्यप्रधाने फले स्यादित्येवमर्थमिप्रग्रहणं कत्र्तव्यमेव॥

बाल-मनोरमा

स्वरितञितः कत्र्रभिप्रायेक्रियाफले ८, १।३।७२

स्वरितञितः। स्वरितश्च ञ् च स्वरितञौ, तौ इतौ यस्य तस्मादिति बहुव्रीहिः। इच्छब्दः प्रत्येकं सम्बध्यते। तदाह-- स्वरितेतो ञितश्चेति। धातोरित्यनन्तरं "लस्य स्थाने"इति शेषः। कर्तारमभिप्रैति गच्छतीति "कत्र्रभिप्रायम्"। कर्मण्यण्। तदाह--कर्तृगामिनीति। एवं च "होता याज्यया यजती"त्यादौ यागफलस्य स्वर्गस्य यजमानगामित्वेन होतृगामित्वाऽभावान्नात्मनेपदम्। तथा "वेतनेन यज्ञदत्तभृतो देवदत्तः पचती"त्यत्रापि पाकफलस्य भोजनस्य पक्तृगामित्वाऽभावान्नात्मनेपदम्। दक्षिणादिलाभस्तु न फलम्। लोकतो वेदतो वा यदुद्देशेन क्रियाप्रवृत्तिस्तस्यैवात्र क्रियाफलशब्देन। विवक्षित्वात्। कर्तृगामिफलकक्रियावृत्तेर्धातोरित्यर्थः। आत्मनेपदं तु धात्वर्थफलस्य कर्तृगामित्वं द्योतयतीत्यलम्।

तत्त्व-बोधिनी

स्वरितञितः कत्र्रभिप्राये क्रियाफले ८, १।३।७२

पूर्ववदिच्छब्दः प्रत्येकं संबध्यते। कर्तारमभिप्रैति गच्छतीति कत्र्रभिप्रायम्। "कर्मण्यण्"। धातोरिति। धातोर्लस्येत्यर्थः। लकारधात्वोराक्षेपः पूर्ववद्बोध्यः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपात् ५।१ वदः ५।१ कर्त्रभिप्राये ७।१ ७२ क्रियाफले ७।१ ७२ आत्मनेपदम् १।१ १२

अर्थः॥

अपपूर्वात् वदधातोः कर्त्रभिप्राये क्रियाफले अर्थे आत्मनेपदं भवति।

उदाहरणम्॥

धनकामो न्यायम् अपवदते।

काशिका-वृत्तिः

अपाद् वदः १।३।७३

कर्त्रभिप्राये इति वर्तते। अपपूर्वद् वदतेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। धनकामो न्यायम् अपवदते। न्यायापवादेन धनम् अर्जयिष्यामि इति मन्यते। कर्त्रभिप्रये क्रियफले इत्येव, अपवदति।

न्यासः

अपाद्वदः। , १।३।७३

"न्यायपवादेन" इत्यादिना येनाभिप्रायेण धनकामो न्यायमपवदते तं दर्शयति॥

बाल-मनोरमा

अपाद्वदः ५६५, १।३।७३

अपाद्वदः। अपपूर्वाद्वदधातोरात्मनेपदमित्यर्थः। न्यायमपवदते इति। वचनेने निरस्यतीतय्र्थः। "किमिह वचनं न कुर्यान्नास्ति वचनस्यातिभारः" इति न्यायात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ णिचः ५।१ च ० कर्त्रभिप्राये ७।१ ७२ क्रियाफले ७।१ ७२ आत्मनेपदम् १।१ १२

अर्थः॥

णिजन्तात् धातोः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति।

उदाहरणम्॥

कटं कारयते॥

काशिका-वृत्तिः

णिचश् च १।३।७४

कर्त्रभिप्राये क्रियाफले इति वर्तते। णिजन्तादात्मनेपदं भवति कर्त्रभिप्राये क्रियाफले। कटं कारयते। ओदनं पाचयते। कर्त्रभिप्राये इत्येव, कटं कारयति परस्य।

लघु-सिद्धान्त-कौमुदी

णिचश्च ६९८, १।३।७४

णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। चोर्यात्, चोरयिषीष्ट। णिश्रीति चङ्। णौ चङीति ह्रस्वः। चङीति द्वित्वम्। हलादिः शेषः। दीर्घो लघोरित्यभ्यासस्य दीर्घः। अचूचुरत्, अचूचुरत॥ कथ

वाक्यप्रबन्धे॥ २॥ अल्लोपः॥

न्यासः

णिचश्च। , १।३।७४

बाल-मनोरमा

णिचश्च ३९१, १।३।७४

णिचश्च। "अनुदात्तङितः"इत्यत आत्मनेपदमिति, "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति चानुवर्तते। प्रत्ययग्रहणपरिभाषया। णिजन्तादिति लभ्यते। तदाह-- णिजन्तादित्यादिना। चोरयतीति। चोरयिष्यति। चोरयिष्यते। चोरयतु। चोरयताम्। अचोरयत्। अचोरयत। चोरयेत। आशीर्लिङि परस्मैपदे आह - चोर्यादिति। "णेरनिटी"ति णिलोप इति भावः। आशीर्लिङि आत्मनेपदे आह - चोरयिषीष्टेति। लुङ्याह - णिश्रीत्यादि। दीर्घो लघोरिति। "सन्वल्लघुनी"ति सन्वद्भावविषयत्वादिति भावः। चिति स्मृत्याम्। चिन्तयतीति। इदित्त्वान्नुमि णिजन्तात्तिङ उत्पत्तिरिति भावः। ननु इदित्करणं मास्तु, प्रक्रियालाघवात् "चिन्त स्मृत्या"मित्येवोच्यताम्। न च नलोपनिवृत्त्यर्थमिदित्त्वमिति वाच्यं, चिन्तयति चिन्तयांचकारेत्यादौ णिचः क्ङित्त्वाऽभावादेव नलोपस्याऽप्रसक्तेः। न च णिजभावे आशीर्लिङि चिन्त्यादिति, कर्मलकारे यकि चिन्त्यते इत्यत्र नलोपनिवृत्त्यर्थमिदित्त्वमिति शङ्क्यं, चुरादिणिचो नित्यत्वेन णिचं विना केवलात् चिन्त्यात् चिन्त्यते इति प्रयोगस्य शशशृङ्गायमाणत्वादित्यत आह-- चिन्तेत्यादि। तेनेति। पाक्षिकत्वेनेत्यर्थः। तथा च कदाचित् चिन्त्यात् चिन्त्यते इति प्रयोगस्य सत्त्वात्तत्र नलोपनिवृत्त्यर्थमिदित्करणमिति भावः। ननु तथापि यत्र नलोपप्रसक्तिस्तत्रैव चिन्त्यात् चिन्त्यते इत्यत्र णिज्विकल्पः स्यान्नतु चिन्ततीत्यादौ, शपा व्यवधानेन तत्र नलोपस्याऽप्रसक्तेरित्याशङ्क्य ज्ञापकमिदं चिन्तधातुसामान्यापेक्षमित्यभिप्रेत्योदाहरति-- चिन्तिति। चिन्तेदिति। ज्ञापकमिदं चुरादित्वसामान्यापेक्षमिति मतान्तरमाह--एतच्चेति। ज्ञापकस्य चुरादित्वसामान्यापेक्षत्वे वृद्धसंमतमाह- अत एकेति। ज्ञापकस्य चितिधातुमात्रिषयकत्वे गणधातोश्चौरादिकस्य जगणतुरित्युदाहरमानुपपत्तिः स्पष्टैवेति भावः। विशेषापेक्षमिति। चितिधातुमात्रविषमित्यर्थः। इदमेव मतं युक्तमित्याह-- अत एवेति। सर्वस्यापि चुरादैर्णिज्विकल्पे सति "आ धृषाद्वा"इति कतिपयचुराद्यन्तर्गणपठितानां णिज्विकल्पिविदिवैयर्थ्यमिति भावः। यत्रि सङ्कोचे। यन्त्रयतीति। अकारस्य उपधात्वाऽभावान्न वृद्धिः। अययन्त्रदिति। अकारस्य गुरुत्वादलघुत्वाल्लघुपरकत्वाऽभावात् सन्वद्भावाऽभावादित्त्वदीर्गौ न। एवमग्रेऽपि संयोगान्तधातूनां ज्ञेयम्। पठितुं शक्यमिति। नलोपाऽभावस्तु इदित्त्वस्य न फलं, नकारस्य उपधात्वाऽभावादेव नलोपस्याऽप्रसक्तेरिति भावः। तच्चिन्त्यमिति। यन्त्र्यादित्यणिजन्ते सत्यपि नकारस्य अनुपधात्वादेव लोपाऽप्रसक्त्या इत्त्वस्य प्रयोजनाऽभावादिति भावः। एवं "कुद्रि अनृतभाषणे" "तत्रि कुटुम्बधारणे" "मत्रि गुप्तभाषणे" इति चुरादौ पठिष्यमाणेष्वपि इदित्त्वं त्यक्तुं शक्यमित्यर्थः। लड उपसेवायां। लाडयतीति। णिचि अतुपधावृद्धिः। एवमग्रेऽपि ज्ञेयम्। अलीलडत्। पीड अवगाहने।

तत्त्व-बोधिनी

णिचश्च ३४२, १।३।७४

अचूचुरदिति। अत्र प्राचा व्याख्यात्रा "सन्वल्लघुनी"ति सन्वद्भाव इत्युक्तं , तद्भ्रमसात्। सन्वद्भावविषये हि जायमानो दीर्घः सन्वद्भावं नापेक्षत इति।सामान्यापेक्षमिति। सर्वेऽपि चुरादयो विकल्पेन णिचं लभन्त इत्येतदर्थकमित्यर्थः। न चैवम् "आर्धषाद्वे"ति व्यर्थमिति वाच्यं, ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात्। एवं चाऽस्मिन्पक्षे आधृषीयाणामेवैच्छिको विकल्पः, अन्येषां तु शिष्टप्रोगाद्व्यवस्थित इत्यर्थः। जगाण जगणतुरिति। वृत्तौ "चकाण चकणतु"रिति प्रचुरः पाठस्त()स्मस्तु पाठे नास्त्येव प्रकृतार्थसिद्धिः। केचित्तु णिजभावे गणयामासेत्यादिरूपाऽभावेपि गणधातोरदन्तत्वाद्गणामासेत्यामा

भवितव्यमिति जगाणेत्यादिपाठश्चिन्त्य इत्याहुः। न वैयश्र्यमिति। वैयश्र्यशङ्क्यपि नेत्ययमेव पक्षो युक्त इति भावः। तत्र पूर्वोक्तपक्षस्य शिथलत्वे जगाण जगणतुरिति वृत्तिप्रयोगः कथं सङ्गच्छतामिति न शङ्क्यम्, भ्वादेराकृतिगणत्वातत्रत्यधातोस्तद्रूपसिद्धेः। तच्चिन्त्यमिति। यत्रितत्रिमत्र्यादिषु इकारो व्यर्थ एव न तु ज्ञापनार्थः, तेषां संयोगान्तत्वात्, यन्त्रतन्त्रमन्त्रेति नकारे पठितेऽपि "अनिदिता" मिति लोपो न लभ्यते, नकारस्याऽनुपधात्वात्। चिन्त्यादित्यत्र तु "चिन्त स्मृत्या"मिति नाकरोपधपाठे नलोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः। लड। स्नेहपूर्विका सेवा उपसेवा। लाडयति पुत्रम्। लडयोरभेदाल्लालयति। ओकार इदित्येके इति। ओदित्करणम् "ओदितश्चे"ति धातोरव्यवहितस्य निष्ठातकारस्य नत्वार्थमिति तद्बलान्नेडित्येके। लण्डणः। ओदिद्बलादिड्व्यवदानेऽपि नत्वमित्यन्ये। लण्डिनः। पीट अवगाहने। "भ्राजभासे"ति ह्रस्वपक्षे सन्वद्भावविषयत्वात् "दीर्घो लघो"रित्यभ्यासस्य दीर्घः। ह्रस्वाऽभावपक्षे तु न दीर्घ इत्याह-- अपीपिडदित्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समुदाङ्भ्यः ५।३ यमः ५।१ अग्रन्थे ७।१ कर्त्रभिप्राये ७।१ ७२ क्रियाफले ७।१ ७२ आत्मनेपदम् १।१ १२

समासः॥

समुदाङ्भ्यः इत्यत्र इतरेतरद्वन्द्वः।
अग्रन्थे इत्यत्र नञ्तत्पुरुषः।

अर्थः॥

सम् उत् आङ् इत्येवं पूर्वात् यम्धातोः कर्त्रभिप्राये क्रियाफले अर्थे आत्मनेपदं भवति, ग्रन्थविशयः चेत् प्रयोगः न स्यात्।

उदाहरणम्॥

व्रीहीन् संयच्छते। भारम् उद्यच्छते। वस्त्रम् आयच्छते॥
काशिका-वृत्तिः
समुदाङ्भ्यो यमो ऽग्रन्थे १।३।७५

कर्त्रभिप्राये इति वर्तते। सम् उदाङित्येवं पूर्वाद् यमेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति, ग्रन्थविशयश्चेत् प्रयोगो न भवति। व्रीहीन् संयच्छते। भारम् उद्यच्छते। वस्त्रम् आयच्छते। आङ्पूर्वादकर्मकाताङो यमहनः १।३।२८ इति सिद्धम् एवाऽत्मनेपदम्। सकर्मकार्थम् इदं पुनर्ग्रहणम्। अग्रन्थे इति किम्? उध्यच्छति चिकित्सां वैद्यः। कर्त्रभिप्राये इत्येव, संयच्छति। उद्यच्छति। आयच्छति।
न्यासः
समुदाङ्?भ्यो यमोऽग्रन्थे।, १।३।७५

"उद्यचछति" इति। "चिकित्सा वैद्यः" इति। चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः॥
बाल-मनोरमा

समुदाङ्भ्यो यमोऽग्रन्थे ५६६, १।३।७५

समुदाङ्भ्यो। सम्, उत्, आङ् एतत्पूर्वादग्रन्थविषयकाद्यमेरात्मनेपदमित्यर्थः। व्रीहीन्संयच्छते इति। संगृह्णातीत्यर्थः। भारमुद्यच्छते इति। उद्गृह्णातीत्यर्थः। वरुआमायच्छते इति। कट()आदौ निबध्नातीत्यर्थः। कत्र्रभिप्राये इत्येवेति। व्रीहीन् संयच्छतीति। परार्थं संगृह्णातीत्यर्थः। "आङो यमहनः" इत्येव सिद्धे आङ्ग्रहणं सकर्मकार्थम्, तस्य अकर्मकादेव प्रवृत्तेरिति बोध्यम्।

तत्त्व-बोधिनी
समुदाङ्भ्यो यमोऽग्रन्थे ४६८, १।३।७५

समुदाङ्भ्यो। "आङो यमहनः" इत्येव सिद्धे आङ्पूर्वकस्य वचनं सकर्मकार्थमिति ध्वनयन्नुदाहरति-- वस्त्रमायच्छत इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुपसर्गात् ५।१ ज्ञः ५।१ कर्त्रभिप्राये ७।१ ७२ क्रियाफले ७।१ ७२ आत्मनेपदम् १।१ १२

समासः॥

अनुपसर्गात् इत्यत्र नञ्तत्पुरुषः।

अर्थः॥

अनुपसर्गात् ज्ञाधातोः आत्मनेपदं भवति, कत्रभिप्राये क्रियाफले।

उदाहरणम्॥

गां जानीते। अश्वं जानीते।
काशिका-वृत्तिः
अनुपसर्गाज् ज्ञः १।३।७६

कर्त्रभिप्राय इति वर्तते। अनुपसर्गाज् जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। गां जानीते। अश्वं जाणीते। अनुपसर्गातिति किम्? स्वर्गं लोकं न प्रजानाति मूढः। कर्त्रभिप्राये इत्येव, देवदत्तस्य गं जानाति।
न्यासः
अनुपसर्गाज्ज्ञः।, १।३।७६

नास्योपसर्गाः सन्तीति बहुव्रीहिः। कतसकर्मकार्थेञ्चेदम्। "अकर्मकाच्च" १।३।४५ इत्येवं सिद्धत्वात्॥
बाल-मनोरमा
अनुपसर्गाज्ज्ञः ५६७, १।३।७६

अनुपसर्गाज्ज्ञः। अनुपसर्गाज्ज्ञादातोरात्नेपदमित्यर्थः। "अकर्मकाच्चे"त्येव सिद्धे सकर्मकार्थमिदम्। तदाह--गां जानीते इति। कथमिति। अनुपूर्वकस्य अनुमत्यर्थकस्य ज्ञाधातोरुपसर्गपूर्वकतया प्रकृतसूत्रस्याऽप्रवृत्तेः सकर्मकतया "अकर्मकाच्चे"त्यस्याप्यप्रवृत्तेरनुजज्ञे इतिकथमात्मनेपदमित्यर्थः। समाधत्ते-- कर्मणि लिडिति। तथा च "भावकर्मणोटरित्यात्मनेपदमिति भावः। सुतस्य गमनमनुज्ञातमित्यर्थः फलति। नन्वेवं सति "नृप" इति प्रथमान्तरस्य कथमिहान्वय इत्यत आह-- नृपेणेति विपरिणाम इति। अवालुलोचे इत्यत्रान्वितं नृप इति प्रथमान्तरं तृतीयया विपरिणमितमत्रानुषज्यते इत्यर्थः।

तत्त्व-बोधिनी

अनुपसर्गाज्ज्ञः ४६९, १।३।७६

अनुपसर्गाज्ज्ञः। अकर्मकाच्चेत्येव सिद्धे सकर्मकार्थ आरम्भः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ उपपदेन ३।१ प्रतीयमाने ७।१ कर्त्रभिप्राये ७।१ ७२ क्रियाफले ७।१ ७२ आत्मनेपदम् १।१ १२

अर्थः॥

कर्त्रभिप्राये क्रियाफले उपरिष्टात् पञ्चभिः सूत्रैः आत्मनेपदं विहितं, तद् अस्मिन् विषये उपपदेन = सपीमोच्चरितेन पदेन कर्त्रभिप्राये क्रियाफले प्रतीयमाने = ज्ञायमाने सति विभाषा आत्मनेपदं भवति॥

उदाहरणम्॥

स्वं यज्ञं यजति, स्वं यज्ञं यजते। स्वं कटं करोति, स्वं कटं कुरुते। स्वं पुत्रं अपवदति, स्वं पुत्रं अपवदते, इत्यादयः॥
काशिका-वृत्तिः
विभाषाउपपदेन प्रतीयमाने १।३।७७

स्वरितञितः १।३।७२ इति पञ्चभिः सुत्रैरात्मनेपदं कर्त्रभिप्राये क्रियाफले द्योतिते विहितम्। तदुपपदेन द्योतिते न प्राप्नोति इति वचनम् आरभ्यते। समीपे श्रूयमाणं शब्दान्तरम् उपपदम्। तेन प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाशा आत्मनेपदं भवति। स्वं जज्ञं यजते, सवं यज्ञं यजति। सवं कठं कुरुते, स्वं कथं करोति। स्वं पुत्रम् अपवदते, स्वं पुत्रम् अपवदति। एवं पञ्चसूत्र्याम् उदाहार्यम्।
न्यासः
विभाषोपपदेन प्रतीयमाने। , १।३।७७

तत्र "स्वरितञितः"१।३।७२ इत्यादीनि पञ्च सूत्राण्यनुवत्र्तन्ते। "कत्र्रभिप्राये क्रियाफले द्योग्ये" इति। केन द्योत्ये? प्रकृतत्वादात्मनेपदेनेति विज्ञेयम्। "तदुपपदेन द्योतिते न प्राप्नोति" इति। उक्तार्थानामप्रयोगात्। एतेनाप्राप्तविभाषेयमिति दर्शयति। ननु चस्वं यज्ञं यजते इत्यत्र स्वशब्दस्योपपदत्वान्नोपपद्यते? यतः "तत्रोपपदं सप्तमीस्थम्" ३।१।९२ इति द्वितीयधात्वधिकारे यत् सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवति, न च स्वशब्द एवंविध इत्याह-- "समीपे श्रूयमाणम्" इत्यादि।

एतेनोपोच्चारितं पदमुपपदमित्यन्वर्थस्योपपदस्य ग्रहणम्, न पारिभाषिकस्येति दर्शयति। एतच्च पारिभाषिकस्यासम्भवाल्लभ्यते। "स्वं यज्ञम्" इत्यादिना पञ्चसूत्र्यां यदाद्यं सूत्रं तत्रोदाहरति। "स्वं पुत्रम्" इत्यादिना यद्()द्वितीयं तत्र। "एवं पञ्चसूत्र्यामुदाहरार्यम्" इति। अन्यत्रापीति सेषः। पञ्चसूत्र्यन्तर्गते सूत्रे यदुदाह्मतं ततोऽन्यत्राप्युदाहार्यमित्यर्थः। स्वं कटं कारयते, कारयति वा। स्वं व्रीहिं संयचछते, संयच्छति वा। स्वं भारमुद्यच्छते, उद्यच्छति वा। स्वं वस्त्रमायच्छते, आयच्छति वा। स्वं गां जानीते, जानाति वेति। एतानि "णिचश्च" १।३।७४ इत्यादिषु सूत्रेषु यथायोगमुदाहरणानि॥

बाल-मनोरमा

विभाषोपपदेन प्रतीयमाने ४४१, १।३।७७

विभाषोपपदेन। स्वरितञित इत्यादीति। "स्वरितञितः कत्र्रभिप्राये क्रियाफले", "अपाद्वदः", "णिचश्च","समुदाङ्भ्यो यमोऽग्रन्थे","अनुपसर्गाज्ज्ञः" इति पञ्चसूत्रीत्यर्थः। समीपोच्चारितं पदमुपपदम्, नतनु "तत्रोपपदं सप्तमीस्थ"मिति सङ्केतितम्, असंभवात्। तदाह-- समीपोच्चारितेन पदेनेति। फस्य कर्तृगामित्वे नित्यमात्नेपदे पञ्चसूत्र्या प्राप्ते विभाषेयमिति "न वेति विभाषा"इति सूत्रे भाष्ये स्पष्टम्। स्वं यज्ञमिति। स्वीयमित्यर्थः। अत्र स्वशब्देनैव फलस्याऽऽत्मगामित्वावगमात् "स्वरितञितः" इति नित्यात्मनेपदस्यानेन विकल्पः। स्वं यज्ञं कारयतीत्यत्र "णिचश्चे"त्यस्याऽनेन विकल्पः। स्वं व्रीहिमिति। अत्र "समुदाङ्भ्यो यमः" इत्यस्याऽनेन विकल्पः। स्वां गामिति। अत्र "अनुपसर्गाज्ज्ञः" इत्यस्याऽनेन विकल्पः। इत्यात्मनेपदप्रक्रिया।

स्वरादिनिपातमव्ययम्।१।१।३७।

स्वरादिनिपातमव्ययम्। स्वर् आदिः येषां ते स्वरादयः, ते च निपाताश्चेति समाहारद्वन्द्वः। फलितमाह--स्वरादय इति। स्वरादीन् पठति--स्वरित्यादिना। स्वरादीनांचादीनां च पृथक्पाठस्तु "निपाता आद्युदात्ताः" इति स्वरभेदार्थः, चादीनामसत्त्ववाचिनामेवाऽव्ययत्वम्, स्वरादीनां तु सत्त्ववाचिनामसत्त्ववाचिनां च तदिति व्यवस्थार्थश्च। स्वर्--स्वर्गे पारत्रिकसुखविशेषे,परलोके च। अन्तर्--मध्ये। प्रातर्-प्रत्यूषे। पुनर्--अप्रथमे, विशेषे च। सनुतर--अन्तर्धाने। स्वराद्याः पत्र् रेफान्ताः। र्तेन स्वर्याति प्रातरत्रेत्यादौ "हशि चे"त्युत्त्वं न, तत्र "रोः" इत्युकारानुबन्धग्रहणात्।उच्चैस्--महति। नीचैस्--अल्पे। शनैस्--क्रियामान्द्ये। ऋधक्--सत्ये। वियोगशैघ्र्यसामीप्यलाघवेष्वित्यन्ये। ऋते--वर्जने। युगपत्-एककावे। आरात्-दूरसमीपयोः। पृथक्--भिन्ने। ह्यस्-अतीतेऽह्नि। दिवा-दिवसे। रात्रौ-निशि। सायं-निशामुखे। चिरं बहुकाले। मनाक्, ईषत्--इदं द्वयमल्पे। जोषं-सुखे, मौने च। तूष्णीम्--मौने। बहिस् अवस--इदं द्वयं बाह्ये। समया--समीपे, मध्ये च। निकषा--अन्तिके। स्वयम्--आत्मनेत्यर्थे। वृथा--व्यर्थे। नक्तम्--रात्रौ। नञ्--निषेधे। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः।" इत्यन्ये। हेतौ--निमित्ते। इद्धां--प्रकाशये। अद्धा--स्फुचावधारणयोः। तत्त्वातिशययोरित्यन्ये। सामि--अर्धे, जुगुप्सिते च। वत् इत्यनेन "तेन तुल्यं क्रिया चेद्वतिः" "तत्र तस्येव" "तदर्हम्" इति वतिप्रत्ययो गृह्नते। "उपसर्गाच्छन्दसि धात्वर्थे" इति वतिस्तु न गृह्नते, "परावतो निवत उद्वतश्चे"त्यत्राव्ययत्वाऽभावात्। वस्तुतस्तु "तद्धितश्चासर्वविभक्तिः" इत्येव सिद्धे वतिग्रहणमिह व्यर्थमेव। ब्राआह्णवत्, क्षत्रियवदिति वतिप्रत्ययान्त स्योदाहरणम्। केवसप्रत्ययस्य अव्ययत्वे प्रयोजनाऽभावात्। सना, सनत्, सनात्-एतत्रयं नित्ये। उपधा-भेदा। तिरस्--अन्तर्धौ, तिर्यगर्थे, पराभवे च। अन्तरा--मध्ये, विनार्थे च। अन्तरेण--वर्जने। वस्तुतस्तु "अन्तबोध्यम्। ज्योक्--कालभूयस्त्वे प्रश्ने, शीघ्रार्थे, सम्प्रतीत्यर्थे च। कम्--वारिमूर्धनिन्दासुखेषु। शम्--सुखे। सहसा आकस्मिकाविमर्शयोः। विना वर्जने। नाना अनेकविनार्थयोः। स्वस्ति-मङ्गले। स्वधा-पितृहविर्दाने। अलम्--भूषणपर्याप्तिशक्तिवारणनिषेधेषु। वषट्, वौषट्, श्रौषट्, एतत्रयं देवहविर्दावे। अन्यत्-अन्यार्थे। अस्ति-सत्तयाम्।

"उपसर्गविभक्तिस्वरप्रतिरूपकाश्चे"ति चाद्यन्तर्गणसूत्रादेव "अस्ति"शब्दस्य विभक्तिप्रतिरूपकस्य अव्ययत्वसिद्धेरिह स्वरादिगणे तस्य पाठो व्यर्थ इति मतुप्सूत्रे भाष्यकैयटयो स्थितम्।

उपांशु--अप्रकाशोच्चारणे, रहस्ये च। क्षमा--क्षान्तौ।विहायसा--आकाशो। दोषा--रात्रौ। मृषा मिथ्या-इदं द्वयं वितथे। मुधा-व्यर्थे। पुरा--अविरते, चिरातीते, भविष्यदासन्ने च। मिथो मिथस्-इदं द्वयं रहसि, सहार्थे च। प्रायस्--बाहुल्ये। मुहुस्--पुनरार्थे। प्रबाहुकम्--समानकाले, ऊध्र्वार्थे च। प्रवाहिका इति पाठान्तरम्। आर्यहलम्--बवात्कारे। शाकटायनस्तु--आर्येति प्रतिबन्धे, हलमिति निषेधानुवादयोरित्याह। अभीक्ष्णम्-पौनः पुन्ये। साकम् सार्धम्--इदं द्वयं सहार्थे। नमस्-नतौ। हिरुक् वर्जने। धिक्-निन्दाभत्र्सनयोः। अम्-शैध्न्ये, अल्पे च। आम्-अङ्गीकारे। प्रताम्--ग्लानौ। प्रशाम्-समानार्थे। प्रतान्--विस्तारे। अत्र "प्रतान्" इति नान्तस्य पुनः पाठसामथ्र्यात्। प्रताम्, प्रशाम् इति पूर्वयोः "मो नो धातोः" इति नत्वं न। प्रशान् इति नान्तपाठस्तु असाम्प्रदायिकः। "कृन्मेजन्तः" इति सूत्रभाष्यस्वरसोऽप्येवभिति शब्देन्दुशेखरे स्थितम्। मा, माङ्--एतो निषेधे। आकृतिगणोऽयमिति। ततश्च अन्येऽप्येवंजातीयकाः स्वरादिगणे ज्ञेयाः। तथाहि--कामम्-स्वाच्छन्द्ये। प्रकामम्-अतिशये। भूयस्--पुनरर्थे। साम्प्रतम्--न्याय्ये। परम्-किन्त्वर्थे। साक्षात्-प्रत्यक्षे। साचि-तिर्यगर्थे। सत्यम्--अर्धाङ्गीकारे। मङ्क्षु, आशु--इदं द्वयं शैघ्र्ये। संवत्-वर्षे। अवश्यम् -- निश्चये। सपदि--शैघ्र्ये। बलवत्--अतिशये। प्रादुस् आविस्--इदं द्वयं प्रकाशे। अनिशम्, नित्यम्, सदा, अजरुआम्, सन्ततम्--एतत्पञ्चकं सातत्ये। उषा--रात्रौ। रोदसी द्यावापृथिव्यर्थे। ओम्--अङ्गीकारे ब्राह्म्णि च। अत्र अश्च उश्च म् चेति समाहारद्वन्द्वे, ओम्शब्दो ब्राह्मविष्णुशिवात्मकब्राह्मवाची। "अवतेष्टिलोपश्च" इत्युणादिव्युत्पन्नस्तु ब्राह्मण्यङ्गीकारे चेति विवेकः। "अवतेष्टिलोपश्चे"त्यस्यायमर्थः,--अवधातोर्मन्स्यात्प्रत्ययस्य टिलोपश्चेति। अव्म् इति स्थिते "ज्वरत्वरे"ति वकारस्य उपधाभूतस्याकारस्य च ऊठ्, ऊकारद्वयस्य सवर्णदीर्घः, "सार्वधातुके"ति तस्य गुणः, ओमिति रूपम्। उभयोरपि स्वरादित्वम्। न चौणादिकस्य "कृन्मेजन्तः" इत्येव सिद्धमिति वाच्यम्, उणादौ हि "च्विकव्यय"मिति पठ()ते। च्व्यन्तानां नेतर"दिति। ततश्च ओमित्यस्य औणादिकस्याऽप्राप्ते अव्ययत्वे स्वरादिपाठ इत्यलम्। भूः--पृथिव्याम्। भुवर्--अन्तरिक्षे। झटिति, द्राक्, तरसा-त्रयमिदं शैघ्र्य#ए। सुष्ठु--प्रशंसायाम्। दुष्ठु--निकृष्टे। सु-पूजायाम्। आः--आश्चर्ये। कु--कुत्सिते, ईषदर्थे च। अञ्जसा--तत्त्वे शीघ्रार्थे च। मिथुं-द्वावित्यर्थे। अस्तम्--विनाशे। स्थाने-युक्तार्थे। ताजक्--शैघ्र्ये। चिराय चिररात्राय, चिरस्य, चिरम्, चिरेण, चिरात्--इति षट्कं चिकार्थकम्। वरम्--ईषदुत्कर्षे। आनुषके-आनुपूव्र्ये। अनुषक्--अनुमाने। अमेनः-शीघ्रसाम्प्रतिकयोः। सुदि--शुक्लपक्षे। वदि-कृष्णपक्षे इत्यादि। इति स्वरादयः। अथ चादीनाह--च वा इत्यादिना। च--समुच्चयान्वाचयेतरेतरयोगसमाहारेषु। वा--विकल्पादिषु। "वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये।" ह--प्रसिद्धौ। अह--अद्भुते, खेदे च। एव--अवधारणे, अनवक्लृप्तौ च। एवम्-उक्तपरामर्शे। नूनम्--निश्चये, तर्के च। श()आत्--पौनःपुन्ये, नित्ये, सहार्थे च। युगपत्--एककाले। भूयस्-पुनरर्थे, आधिक्ये च। कूपत्-प्रश्ने, प्रशंसायां च। कुवित्--भूर्यर्थे, प्राशंसायां च। नेत्--शङ्कायां, प्रतिषेधविचारसमुच्चयेषु च। चेत्--यद्यर्थे। चण् अयं चेदर्थे णित्, समुच्चयादिष्वननुबन्धकः। स्वरे भेदः फलम्। कच्चित्--इष्टप्रश्ने। यत्र-अनवक्लृप्त्यवमर्षगर्हाश्चर्य#एयु। "नावकल्पयामि, न मर्षये, गर्हे, आश्चर्यं वा यत्र भवान्वृषलं याजयेत्"। नग-प्रत्यारम्भे। हन्त--हर्षे, विषादे, अनुकम्पायां, वाक्यारम्भे च। माकिः माकिम्, नकिः,-इदं त्रयं वर्जने। माङ्नञौ-स्वरादिषूक्तौ। अन्यतरत्र पाठ इति युक्तम्, उभयत्र पाठस्तु ब्यर्थ एव। नच निपातस्वरार्थ इह पाठ इति वाच्यं, "फिषोऽन्त उदात्तः" इत्येव तत्सिद्धेः। नच सत्त्ववचनत्वेऽप्यव्ययत्वार्थं स्वरादिपाठ इति वाच्यं, तथा सति लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः। तस्माच्चादिष्वेव माङ्नञौ पाठ()आवित्याहुः। यावत् तावत्-इदं द्वयं साकल्यावधिमानावधारणेषु। त्वै--विशेषवितर्कयोः। द्वै-वितर्के। न्वै इति पाठान्तरम्। रै--दाने, अनादरे च। श्रौषट्, वौषट्, स्वाहा--इदं त्रयं देवहविर्दाने। स्वधा--पितृदाने। श्रौषडादीनामनेकाचां त्रयाणाअं स्वरभेदार्थ उभयत्र पाठः। तुम्-तुङ्कारे।

तथाहि--निदर्शने। खलु--निषेधवाक्यालंकारनिश्चयेषु। किल--इवार्थे, वार्तायाम्, अलीके च। अथ--अयं मङ्गलानन्तरारम्भश्नकात्स्न्यार्धिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि। तेन मङ्गलवाचकस्य सत्त्वार्थकत्वेऽप्यव्ययत्वम्। तथाच श्रीहर्षः--" यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्" इति। "अथ स्नपयाम्बभूव" इत्यस्य मङ्गस्नानं कारयामासेत्यर्थः। निपातश्चाऽथशब्दः भृदङ्गादिध्वानवत् मङ्गवम्। सुष्ठु। स्वरभेदार्थः पुनः पाठः। स्म--अतीते, पादपूरणे च। आदह--उपक्रमहिंसाकुत्सनेषु। उपसर्गविभक्ति। चादिगणसूत्रमेतत्। उपसर्गप्रतिरूपकाः, विभक्त्यन्तप्रतिरूपकाः, अच्प्रतिरूपकाश्च चादिगणे पाठ()आ इत्यर्थः। तत्रोपसर्गप्रतिरूपकमुदाहरतिअवदत्तमिति। अत्र अवेत्युपसर्गप्रतिरूपकं, न तूपसर्गः। ततस्च "अच उपसर्गातः" इति तो न भवति। तादेशे तु "अवत्त"मिति स्यात्। अहंयुरिति। "अह"मिति सुबन्तप्रतिरूपकहङ्कारे। "अहंशुभमोर्यु"सिति मत्वार्थीयो युस्। अत्र अहमिति न अस्मच्छब्दस्य प्रथमैकवचनम्, तथा सति "प्रत्ययोत्तरपदयोश्चे"ति मपर्यन्तस्य मदादेशे मद्युरित्यापत्तेः। अस्तिक्षीरेति। अस्ति क्षीरं यस्या इति बहुव्रीहिः। अत्र अस्तीति तिङन्तप्रतिरूपकमव्ययं, नतु तिङन्तम्। तथा सति बहुव्रीह्नुपपत्तेः। "अनेकमन्यपदार्थे" इति बहुव्रीहिविधौ सुबित्यनुवृत्तेः। एवं च बहुव्रीहिविधौ "अस्तिक्षीरेत्युपसंख्यान"मिति वार्तिकं न कर्तव्यमिति "अनेकमन्यपदार्थे" इत#इ सूत्रे भाष्ये स्पष्टम्।

स्वरप्रतिरूपकानुदाहरति--अ इत्यादिना। अ--सम्बोधने। आ--वाक्यस्मरणयोः। इ--सम्बोधनजुगुप्साविस्मयेषु। इ उ ऊ ए ऐ ओ औ इतचि सप्तकं सम्बोधने। पशु--सम्यगर्थे। शुकम्--शेघ्र्ये। यथाकथाच सङ्घातोऽयमनादरे। पाट् प्याट् अङ्ग है हे भो अये एते सप्त सम्बोधने। घ हिंसाप्रातिलोम्यपादपूरणेषु विषुनानार्थे। एकपदे-अकस्मादिदित्यर्थे। युत्-कुत्सायाम्। आतः-इतोऽर्थे। चादिरप्याकृतिगण इति। यत् तत् द्वयंहेतौ। आहोस्वित् विकल्पे। सम् सर्वतोभावे। कम् पादपूरणे ष। सुकम् अतिशये। अनु वितर्के। शम्बत्(ट) अन्तःकरणे, आभिमुख्ये च। व पादपूरणे इवार्थे च। चटु चाटु द्वयं प्रियवाक्ये। हुम् भत्र्सने। इव सादृश्ये। अद्यत्वे-इदानीमित्यर्थे इत्यादि। अत्र स्वरादिचाद्योराकृतिगणत्वेऽपि येषां निपातस्वर इष्टस्ते चादिषु, अन्ये तु स्वरादिषु, स्वरद्वयभाजस्तु उभयत्र बोध्याः। इति चादयः।

तत्त्व-बोधिनी

विभाषोपपदेन प्रतीयमाने ३९८, १।३।७७

विभाषोपपदेन। उपपदेन फलस्य कर्तृगामित्वे द्योतिते तङोऽप्राप्तवप्राप्तविभाषेयम्। कर्तृगामिनि क्रियाफले नित्ये प्राप्ते प्राप्तविभाषेत्यन्ये। स्वं यज्ञमिति। स्वमित्युपलक्षणम्। "स्वार्थं यज्ञं यजति। आत्मार्थं यज्ञं यजती" त्याद्यपि बोध्यम्।

इति तत्त्वबोधिन्याम् आत्मनेपदप्रक्रिया।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शेषात् ५।१ कर्तरि ७।१ परस्मैपदम् १।१ ९३

अर्थः॥

येभ्यः धातुभ्यः आत्मनेपदम् उक्तं, ततः अन्यत् शेषः, तस्मात् कर्त्तरि वाच्ये परस्मैपदं भवति।

उदाहरणम्॥

यातिऀ। वातिऀ। प्रविशतिऀ।

काशिका-वृत्तिः

शेषात् कर्तरि परस्मैपदम् १।३।७८

पूर्वेण प्रकरणेन आत्मनेपदनियमः कृतः, न प्रस्मैपदनियमः। तत् सर्वतः प्राप्नोति, तदर्थम् इदम् उच्यते। येभ्यो धातुभ्यो येन विशेषणेन आत्मनेपदम् उक्तं ततो यदन्यत् स शेषः। शेषात् कर्तरि परस्मैपदं भवति। शेषादेव न अन्यस्मात्। अनुदात्तङित आत्मनेपदम् उक्तम् अस्ते। शेते। ततो ऽन्यत्र परस्मैपदम् भवति याति। वाति। नेर्विशः आत्मनेपदम् उक्तम् निविशते। ततो ऽन्यत्र परस्मैपदम् आविशति। प्रविशति। कर्तरि इति किम्? पच्यते। गम्यते। कर्मकर्तरि कस्मात् परस्मैपदं न भवति, पच्यते ओदनः स्वयम् एव? कर्तरि कर्मव्यतिहारे १।३।१४ इति द्वितीयं कर्तृग्रहणम् अनुवर्तते, तेन कर्ताएव यः कर्ता तत्र प्रस्मैपदम् भवति, कर्मकर्तरि न भवति।

लघु-सिद्धान्त-कौमुदी

शेषात्कर्तरि परस्मैपदम् ३८२, १।३।७८

आत्मनेपद निमित्त हीनाद्धातोः कर्तरि परस्मैपदं स्यात्॥

न्यासः

शेषात्कर्तरि परस्मैपदम्।, १।३।७८

"पूर्वेण" इति। "अनुदात्तहितः" १।३।१२ इत्यादिना। "सर्वत्र प्राप्नोति" इति। अशेषेभ्योऽपि। "तदर्थमिदमुच्यते" इति। सर्वत्र परस्मैपदे प्रसक्ते तन्निवृत्त्यर्थम्; अर्थशब्दस्य निवृत्तिवचनत्वात्। तथा-मशकार्थो धूम इति। तदेनैतत् नियमार्थमित्युक्तं भवति। "येभ्यो धातुभ्यः" इत्यादिना शेषत्वं दर्शयति। "येन विशेषणेन" इति। अनुबन्धादिना। "याति, वाति" इत्यनुबन्धशेषस्योदाहरणम्। "आविशति, प्रविशति" इत्युपसर्गशेषस्यार्थशेषस्यापि। एवं गन्धनादिभ्योऽन्यत्र करोतीत्येवमादिकमुदाहरणं वेदितव्यम्। ननु च शेषादित्यनेन पञ्चम्यन्तेन धातुसमानाधिकरणेन धातुरेव विशिष्यते, नार्थः, ततश्चाशेषेषु गन्धनादिष्वर्थेषु परस्मैपदं प्राप्नोति, नैतदस्ति; गन्धनादयो हि प्रकृतेरेवार्थाः, तत्रासौ शेषग्रहणान्निवर्त्तमानस्तानपि निवर्त्तयति। "पच्यते, गम्यते" इति। ननु च यद्यत्र परस्मैपदं स्यात्, तदा "भावकर्मणोः" १।३।१३ इति वचनमनर्थकं स्यात्, अनवकाशत्वात्, नैतदस्ति; अस्ति हि तस्यावकाशः। कः पुनरसौ? यो न शेषः-- आस्यते, शय्यते, क्रियत इति। अनुदात्तेत्वं ङित्त्वञ्चाशेषः। "शेषात् कर्तरि" १।३।७८ इत्यत्र कर्त्तृग्रहणं सामान्यमुपात्तमिति यो देशयेत् तं प्रत्याह--"कर्मकर्त्तरि" इत्यादि। "कर्त्तरि कर्मव्यतीहारे" १।३।१४ इत्यादिना परिहरति। "कर्त्तैव यः कर्त्ता" इति। शुद्धो यः कर्त्ता, कर्त्तृवद्भावरहितो यः कर्त्तैत्यर्थः॥

बाल-मनोरमा

शेषात्कर्तरि परस्मैपदम् ९, १।३।७८

शेषात्कर्तरि। "अनुदात्तङित" इति "स्वरितञित" इति चोक्तादात्मनेपदविषयादन्यः शेषः। तदाह-- आत्मनेपदनिमित्तहीनादिति। अनेन भूधातोः कर्तरि लस्य परस्मैपदं सिद्धम्। तत्र तिबादिनवके युगपत्पर्यायेण एकद्वित्रादिकतिपयरूपेण वा प्राप्ते "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" "अस्मद्युत्तमः" "शेषे प्रथमः" इति व्यवस्थां वक्ष्यन् प्रथमादिसंज्ञां तावदाह--तिङस्त्रीणि त्रीणि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुपराभ्याम् ५।२ कृञः ५।१ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः

अनुपराभ्यां कृञः १।३।७९

कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितम्। तदपवादः परस्मैपदं विधीयते। अनु परा इत्येवं पूर्वात् करोतेः परस्मैपदं भवति। अनुकरोति। पराकरोति।

लघु-सिद्धान्त-कौमुदी

अनुपराभ्यां कृञः ७४८, १।३।७९

कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात्। अनुकरोति। पराकरोति॥

न्यासः

अनुपराभ्यां कृञः। , १।३।७९

बाल-मनोरमा

अनुपराभ्यां कृञः ५७०, १।३।७९

अनुपराभ्यां कृञः। "परस्मैपदमिति शेषः। ननु "स्वरितञितः" इत्यात्मनेपदस्य कर्तगाम्निन्येव फले विधानादकर्तृगामिनि फले "शेषात्कर्तरी"ति परस्मैपदस्य सिद्धत्वात् किमर्थ मिदमित्यत आह-- कर्तृगेऽपीति। गन्धनादाविति। गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु इत्यर्थः। मा भूदिति। भावे कर्मणि लकारस्य कर्तृगे फलेपरस्मपैदनिवृत्त्यर्थं कर्तरीत्यस्याऽनुवृत्तिरिति भावः। ननु कर्तरीत्यस्यानुवृत्तावपि "अनुक्रियते शब्दः स्वयमेवे"त्यत्र कर्मकर्तरि परस्मैपदं दुर्वारमित्याशङ्क्य परिहरति-- नचेति। एवमपि = कर्तरीत्यस्यानुवृत्तावपि कर्मकर्तरि आत्मनेपदस्य प्रसङ्गो न शङ्क्य इत्यर्थः। कुत इत्यत आह-- कार्यातिदेशेति। तत्र कर्मकर्तरि "कर्मवत्कर्मणा तुल्यक्रियः" इत्यात्मनेपदेन परेणाऽस्य परस्मैपदस्य बाधादित्यन्वयः। नु कर्मणि यच्छास्त्रं तत् "कर्मवत्कर्मणे"ति कर्मकर्तर्यतिदिश्यते, तथा चाऽत्र कर्मकर्तरि "भावकर्मणो"रित्यात्मनेपदशास्त्रमिह प्राप्तम्। तस्य च परत्वाऽभावात् "अनुपराभ्यां कृञः" इत्यनेन कथं बाधः स्यादित्यत आह-- कार्यातिदेशपक्षस्य मुख्यतयेति। शास्त्रातिदेशस्य कार्यातिदेशार्थतया कार्यातिदेशस्य मुख्यत्वम्। ततश्च "कर्मवत् कर्मणे"त्यनेन कर्मणि विहितमात्मनेपदं कर्मकर्तरि विधीयते। तस्य च परत्वात्तेनात्मनेपदेन "अनुपराभ्याटमिति परस्मैपदं कर्मकर्तरि बाधमर्हतीति भावः। "कर्मवत्कर्मणे"त्यत्र शास्त्रातिदेशमभ्युपगम्याअह----- शास्त्रातिदेशपक्षे त्विति। "अनुपराभ्यां कृञः" इत्यत्र "कर्तरि कर्मव्यतिहारे" इत्यस्मादेकं कर्तृघणमनुवर्तते। तथा "शेषात्कर्तरि परस्मैपद"मित्यस्माद्द्वितीयं कर्तृग्रहणमनुवर्तते। तथा च "स्वभावतः एव यः कर्ता, नतु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव अनुपराभ्यां कृञः परस्मैपद"मिति लभ्यते। एवं च कर्मकर्तरि नास्य प्रवृत्तिरित्यर्थः।

तत्त्व-बोधिनी

अनुपराभ्यां कृञः ४७१, १।३।७९

अस्य बाधादिति। "अनुपराभ्या"मित्यस्येत्यर्थः। अत एव "कर्मवत्कर्मणे"ति सूत्रे कार्यातिदेशोऽयमिति वक्ष्यति।

शास्त्रातिदेशपक्षे "कर्मवत्कर्मणे" त्यनेनात्मनेपदं न विधीयते, किं तु तद्विधायकं "भावकर्मणो"रिति शास्त्रमतिदिश्यते, तस्य च पूर्वत्वात्परेण "अनुपराभ्या"मित्यनेन बाधमाशङ्क्याह-- शास्त्रातिदेश इत्यादि। स्वरितेदिति। तथा च कर्तृगामिनि क्रियाफलेऽपि परस्मैपदार्थः सूत्रारम्भ इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अभिप्रत्यतिभ्यः ५।३ क्षिपः ५।१ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
अभिप्रत्यतिभ्यः क्षिपः १।३।८०

क्षिप प्रेरणे स्वरितेत्। ततः कर्त्रभिप्रायक्रियाफलविवक्षायाम् आत्मनेपदे प्राप्ते परस्मैपदं विधीयते। अभि प्रति अति इत्येवं पूर्वात् क्षिपः परस्मैपदं भवति। अभिक्षिपति। प्रतिक्षिपति। अतिक्षिपति। अभिप्रत्यतिभ्यः इति किम्? आक्षिपते। द्वितीयम् अपि कर्तृग्रहणम् अनुवर्तते, तेन इह न भवति, अभिक्षिप्यते स्वयम् एव।
लघु-सिद्धान्त-कौमुदी
अभिप्रत्यतिभ्यः क्षिपः ७४९, १।३।८०

क्षिप प्रेरणे स्वरितेत्। अभिक्षिपति॥
न्यासः
अभिप्रत्यतिभ्य क्षिपः। , १।३।८०

"अभिक्षिपति" इति। तुदादित्वाच्छः ष।
बाल-मनोरमा
अभिप्रत्यतिभ्यः क्षिपः ५७१, १।३।८०

अभिप्रति। "परस्मैपद"मिति शेषः। स्वरितेदिति। ततश्च कर्तृगामिनि फले आत्मनेपदे प्राप्ते अनेन तत्रापि परस्मैपदमिति भावः। अभिक्षिपतीति। प्रतिक्षपति अतिक्,िपतीत्यप्युदाहार्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रात् ५।१ वहः ५।१ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
प्राद्वहः १।३।८१

वह प्राप्ने स्वरितेत्। तत्र कर्त्रभिप्रायक्रियाफलविवक्षायाम् आत्मनेपदे प्राप्ते परस्मैपदं विधीयते। प्रपूर्वाद् वहतेः प्रस्मैपदम् भवति। प्रवहति, प्रवहतः, प्रवहन्ति। प्रातिति किम्? आवहते।

लघु-सिद्धान्त-कौमुदी
प्राद्वहः ७५०, १।३।८१

प्रवहति॥

न्यासः
प्राद्वहः।, १।३।८१

बाल-मनोरमा
प्राद्वहः ५७२, १।३।८१

प्रद्वहः। प्रपूर्वाद्वहेः परस्मैपदमित्यर्थः। वहेः स्वरितेत्त्वात्कर्तृगामिन्यात्मनेपदे प्राप्ते तत्राप्यनेन परस्मैपदम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ परेः ५।१ मृषः ५।१ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
परेर् मृषः १।३।८२

मृष तितिक्षायाम् स्वरितेत्। ततः तथा एव आत्मनेपदे प्राप्ते परस्मैपदं विधीयते। परिपूर्वाद् मृष्यतेः परस्मैपदं भवति। परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति। परेः इति किम्? आमृष्यते। वहतिम् अपि केचिदत्र अनुवर्तयन्ति परिवहति।
लघु-सिद्धान्त-कौमुदी
परेर्मृषः ७५१, १।३।८२

परिमृष्यति॥

न्यासः
परेर्मृषः।, १।३।८२

"परिमृष्यति" इति। दिवादित्वाच्छ्यन्॥

बाल-मनोरमा
परेर्मृषः ५७४, १।३।८२

परेर्मृषः। "परस्मैपद"मिति शेषः। "मृष तितक्षाया"मिति दैवादिकस्य स्वरितेत्त्वात्पदद्वये प्राप्तेऽयं विदिः। तदाह--परिमृष्यतीति। चौरादिकस्याऽपि "आधृषाद्वे"ति णिजभावे स्वरितेत्त्वेऽपि परस्मैपदमेव- परिमर्षतीति। भौवादिकस्य त्विति। "मृषु सहने सेचने चे"ति भौवादिकस्यतु परस्मैपदित्वात्परिमर्षतीत्येव रूपं सिद्धम्। अतोऽमिन् सूत्रे तस्य न ग्रहणमिति भावः। इहेति। "परे" रिति योगो विभज्यते। "वह" इत्यनुवर्तते। परेर्वहः परस्मैपदमित्यर्थः। परिवहति। "मृष" इति योगान्तरम्। तत्र परेरित्यनुवर्तते, परेर्मृषः पर्समैपदमित्युक्तोऽर्थ इति केचिदाहुरित्यर्थः। भाष्ये त्वयं योगविभागो न दृश्यते।

व्याङ्परिभ्यो रमः।१।३।८३।

व्याङ्परिभ्यो रमः। "परस्मैपद"मिति शेषः। रमेरनुदात्तेत्त्वाद्विधिरयम्। विरमतीति। आरमति, परिरमतीत्यप्युदाहार्यम्।

तत्त्व-बोधिनी
परेर्मृषः ४७२, १।३।८२

स्वरित्वात्पदद्वये प्राप्तेऽयमारम्भः। परिमर्षतीति। "आ धृषाद्वे"ति ति वैकल्पिकत्वाण्णिजभावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ व्याङ्परिभ्यः ५।३ रमः ५।१ ८५ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
व्याङ्परिभ्यो रमः १।३।८३

रमु क्रीडायम्। अनुदात्तेत्त्वदात्मनेपदे प्राप्ते प्रस्मैपदं विधीयते। विआङ् परि इत्येवं पूर्वात् रमतेः परस्मैपदं भवति। विरमति। आरमति। परिरमति। एतेभ्यः इति किम्? अभिरमते।
लघु-सिद्धान्त-कौमुदी
व्याङ्परिभ्यो रमः ७५२, १।३।८३

रमु क्रीडायाम्॥ विरमति॥
न्यासः
व्याङ्परिभ्यो रमः। , १।३।८३

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपात् ५।१ ८५ च ० रमः ५।१ ८३ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
उपाच् च १।३।८४

रमः इत्येव। उपपुर्वात् रमतेः प्रस्मैपदं भवति। देवदत्तम् उपरमति। जज्ञदत्तम् उपरमति। उपरमयति इति यावत्। अन्तर्भावितन्यर्थो ऽत्र रमिः। पृथग् योगकरणम् उत्तरार्थम्। अकर्मकाद् विभाषां वक्ष्यति, सा उपपूर्वादेव यथा स्यात्।
लघु-सिद्धान्त-कौमुदी
उपाच्च ७५३, १।३।८४

यज्ञदत्तमुपरमति। उपरमयतीत्यर्थः। अन्तर्भावितण्यर्थोऽयम्॥

लघु-सिद्धान्त-कौमुदी
इति परस्मैपदप्रक्रिया ७५३, १।३।८४

इति पदव्यवस्था॥
लघु-सिद्धान्त-कौमुदी
अथ भावकर्मप्रक्रिया ७५३, १।३।८४

न्यासः

उपाच्च। , १।३।८४

"उपाच्च" इति। चकारः पूर्वापेक्षया समुच्चयार्थः। "उपरमति देवदत्तम्" इति। ननु चोपपूर्वो रमिरकर्मक एव भवति। तथा ह्युपपूर्वस्यास्य विनाशोऽर्थो भवति; यथा-- उपरतानि, नष्टानीति गम्यते। निवृत्तिर्वा भवति, स्वाध्यायादुपरमते, निवर्तत इति गम्यते। न चास्मिन्नार्थे वर्तमानस्य सकर्मकत्वमुपपद्यते। तत्कतं सकर्मकस्योदाहरणं युज्यत इत्याह-- "उपरमयतीति यावत्" इति। एतेन ण्यर्थवृत्तितामुपरमतेर्दर्शयन् सकर्मकतामुपपादयतीति। अकर्मको हि धातुण्र्यर्थे वर्तमानः सकर्मको भवति। अथ पुनरण्यन्तस्य ण्यर्थवृत्तितोपपद्यते कथम्? स तथोक्तः। एवंविधस्य तस्य प्रयोज्येन सकर्मत्वमुपपद्यत एव। अथ किमर्थं पृथग्योगः क्रियते? "न व्याङपर्युपेभ्यो रमः" इत्येक एव योगः क्रियतामित्याह-- "पृथग्योगकरणम्" इत्यादि। गतार्थम्॥
बाल-मनोरमा
उपाच्च ५७५, १।३।८४

उपाच्च। उपपूर्वादपि रमेः परस्मैपदमित्यर्थः। उत्तरसूत्रे उपादित्यस्यैवाऽनुवृत्तये "व्याङ्पर्युपेभ्यो रमे"रिति नोक्तम्। अत्र विरमतीत्यर्थे उपरमतीति नोदाहरणम्, तस्य अकर्मकतया उत्तरसूत्रेण परस्मैपदविकल्पविधानात्। अतः सकर्मकमुदाहरति-- यज्ञदत्तमुपरमतीति। ननु विरामार्थकत्वात्कथं सकर्मकतेत्यत आह-- उपरमयतीत्यर्थ इति। ननु णिजभावात्कथमयमर्थो लभ्यते इत्यत आह-- अन्तर्भावितण्यर्थोऽयमिति। धातूनामनेकार्थत्वादिति भावः।

तत्त्व-बोधिनी
उपाच्च ४७३, १।३।८४

उपाच्च। "व्याङपर्युपेभ्यः" इति नोक्तम्, उत्तरसूत्रे उपेत्यस्यैवानुवृत्तिर्यथा स्यादिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ अकर्मकात् ५।१ उपात् ५।१ ८४ रमः ५।१ ८३ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
विभाशा ऽकर्मकात् १।३।८५

रमः उपातिति च वर्तते। पूर्वेण नित्ये परस्मैपदे प्राप्ते विकल्प आरभ्यते। उपपूर्वद् रमतेरकर्मकाद् विभाषा परस्मैपदं

भवति। यावद् भुक्तम् औपरमति, यावद् भुक्तम् उपरमते। निवर्तते इत्यर्थः।

न्यासः

विभाषाऽकर्मकात्। , १।३।८५

"यावद्भुक्तम्" इति। "यावदवधारणे" २।१।८ इत्यव्ययीभावः।"भुक्तम" इति। "नपवंसके भावे क्तः" ३।३।११४ इति क्तप्रत्ययः। यावन्ति भोजनानि तावद्भ्यो निवत्र्तत इत्यर्थः। अथ वा-- यावद्()भुक्तमिति यथार्थे वीप्सायामव्ययीभावः। भोजनाद्भोजनन्निवत्र्तत इत्यर्थः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यः ५।३ णेः ५।१ ८९ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः

बुधयुधनशजनैङ्प्रुद्रुस्रुभ्यो णेः १।३।८६

णिचश्च १।३।७४ इति कर्त्रभिप्रायत्रियाफलविवक्षायाम् आत्मनेपदे प्राप्ते परस्मैपदं विधीयते। बुध युध नश जन इङ् प्रु द्रु स्रु इत्येतेभ्यो ण्यन्तेम्यः परस्मैपदम् भवति। बोध्यति। योध्यति। नाशयति। जनयति। अध्यापयति। प्रावयति। द्रावयति। स्रवयति। ये ऽत्राकर्मकास् तेषाम् अणावकर्मकाच् चित्तवत्कर्तृकात् १।३।८८ इत्येवं सिद्धे वचनम् इदम् अचित्तवत्कर्तृकार्थम्। बोध्यति पद्मम्। योध्यन्ति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। ये ऽत्र चलनार्थ अपि तेषाम् निगरणचलनार्थेभ्यश्च १।३।८७ इति सिद्धे यदा न चलनार्थास् तदर्थं वचनम्। प्रवते। प्राप्नोति इति गम्यते। अयो द्रवति। विलीयते इत्यर्थः कुण्डिका स्रवति। स्यन्दते इत्यर्थः। तद्विषयाण्युदाहरणानि { प्रावयति। द्रावयति। स्रावयति}।

न्यासः

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः। , १।३।८६

"बुध अवगमने" (धा।पा।११७२), "युध सम्प्रहारे" (धा।पा।११७३), "णश अदर्शने" (धा।पा।११९४), "जनी प्रादुर्भावे" (धा।पा। ११४९), "इह अध्ययने" (धा।पा।१०४६), "च्यङ" (धा।पा।९५५) छ्युङ्, ज्युङ (धा।पा।९५६), झयुङ प्रुङ (धा।पा।९५७) प्लुङ (धा।पा।९५८) गतौ "दु द्रु गतौ" (धा।पा।९४४, ९४५), "सु रुआउ गतौ" (धा।पा।९४०)। "जनयति" इति। "जनीजृष्" (ग।सू।धा।पा।८१७) इत्यादिना मित्संज्ञा। मितां ह्रस्वत्वम्। "अध्यापयति" इति। "क्रीडजीनां णौ" ६।१।४७ इत्यात्वम्। पूर्ववत् पुक्। "एतद्विषयाण्युदाहरणानि" इति। प्राप्तिविलयनस्यन्दनविषयाण्येतानि प्रावयतीत्याद्युदाहरणानि यथाक्रममित्यर्थः। स्यन्दनं चलनमिति लोके प्रसिद्धम्। ततोऽन्यत्र स्यन्दयतीति बोद्धयम्। प्रावयति = प्रापयति द्रावयति = विलापयति। रुआआवयति = स्यन्दयतीत्यर्थः।

बाल-मनोरमा

विभाषाऽकर्मकात् ५७६, १।३।८६

विभाषाऽकर्मकात्। उपादिति, रम इति, परस्मैपदमिति चानुवर्तते। तदाह- उपाद्रमेरिति।

बाल-मनोरमा

बुधुयुधनशजनेङ्प्रुद्रुरुआउभ्यो णेः ५७७, १।३।८६

बुधयुध। बुध युध नश जन इङ् प्रुद्रु रुआउ एषां द्वन्द्वः। बोधयति पद्ममिति। "सूर्य"इति शेषः। बुधिर्विकसनार्थकः। विकसति पद्मम्। तद्विकासयति सूर्य इत्यर्थः। "अणावकर्मकाच्चित्तवत्कर्तृका"दिति परस्मपैदं तु न सिध्यति, अणौ पद्मस्य कर्तृतया चित्तवत्करर्तृकत्वाऽभावत्। योधयति काष्ठानीति। काष्ठानि युध्यन्ते स्वयमेव। तानि योधयतीत्यर्थः। अणावचित्तवत्कर्तृकत्वात् "अणावकर्मका"दित्यस्य न प्राप्तिः। अतएव योधयति देवदत्तमिति नोदाह्मतम्, "अणावकर्मकाच्चित्तवत्कर्तृका"दित्येव सिद्धेः। एवमग्रेऽपि ज्ञेयम्। नाशयति दुःखमिति। दुखं नश्यति, तन्नाशयति हरिरित्यर्थः। जनयति सुखमिति। जायते सुखम्, तज्जनयति हरिरित्यर्थः। अध्यापयतीति। अधीते वेदं विधिः, तमध्यापयतीत्यर्थः। "प्रु गतौ" इत्यस्योदाहरति-- प्रावयतीति। गत्यर्थकत्वं मत्वा आह-- प्रापयतीत्यर्थ इति। द्रावयतीति। द्रवत्याज्यं, तद्द्रावयतीत्यर्थः। धातोद्र्रवीभावार्थकत्वं मत्वा आह-- स्यान्दयतीत्यर्थ इति। "प्रीतिं भक्तजनस्य यो जनयते" इत्यात्मनेपदं तु प्रामादिकमेव। यद्वा भक्तजनो हरौ प्रीतिं जनयत्यत्मविषये , तां हरिर्जनयते इति ण्यन्ताण्णौ रूपम्। प्रयोज्यकर्तुः शेषत्वविवक्षय#आ भक्तजनस्येति षष्ठीत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ निगरणचलनार्थेभ्यः च णेः ५।१ ८६ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः

निगरणचलनार्थेभ्यश् च १।३।८७

णेः इति वर्तते। कर्त्रभिप्रायक्रियाफलविवक्शायाम् आत्मनेपदापवादH परस्मैपदं विधियते। निगरणम् अभ्यवहारः। चलनं कम्पनम्। निगरणार्थेभ्यश्चलनार्थेभ्यश्च धातुभ्यो ण्यन्तेभ्यः परस्मैपदं भवति। निगारयति। आशयति। भोजयति। चलनार्थेभ्यः चलयति। चोपयति। कम्पयति। अयम् अपि योगः सकर्मकार्थः, अचित्तवत्कर्तृकार्थश्च। अदेः प्रतिषेधो वक्तव्यः। अत्ति देवदत्तः, आदयते देवदत्तेन।

न्यासः

निगरणचलनार्थेभ्यश्च।, १।३।८७

"निगारयति" इति। "गृ निगरणे" (धा।पा।१४१०)। "आशयति" इति। "अश भोजने" (धा।पा।१५२३)। "भोजयति" इति। "भुज पालनाभ्यवहारयोः" (धा।पा।१०४६), "चलति" इति। "चल कम्पने" (धा।पा।८३२)। घटादित्वान्मित्त्वम्; पूववद्()ध्रस्वः। "चोपयति" इति। "चुप मन्दायां गतौ" (धा।पा।४०३)। "कम्पयति" इति। "कपि चलने" (धा।पा।३७५)। अयमपि योगः सकर्मकार्थः, अचितत्वत्कर्तृकार्थश्चेति। तद्विपरीतेभ्यः "अणावकर्मकाच्चितवत्कर्त्तृकात्" १।३।८८ इत्यनेनैव सिद्धत्वात्। तत्र येषामुदाहरणान्युपन्यस्तानि, तेषु चलिकम्पी अकर्मकौ द्वौ; तयोरचितवत्कर्त्तृकार्थोऽयं योगः। शेषाणान्तु सकर्मकार्थः। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- "विभाषाऽकर्मकात्" १।३।८५ इत्यतो विभाषाग्रहणं मण्डूकप्लुत्याऽनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनादेरन्येभ्यो नित्यं परस्मैपदम्, अदेस्तु न भवत्येव। "आदयते देवदत्तेन" इति। अत्र "गतिबुद्धि" १।४।५२ इत्यादिना कर्मसंज्ञा न भवति; "आदिखादिनीवहीनां प्रतिषेधः" (वा।६४) इति वचनात्॥

बाल-मनोरमा

निगरणचलनार्थेभ्यश्च ५७८, १।३।८७

निगरण। निगरणं भक्षणम्। चलनं-- कम्पनम्। एतदर्थकेभ्यो ण्यन्तेभ्यः परस्मैपदमित्यर्थः। पूर्वसूत्रे प्रद्रुरुआऊणां ग्रहणं तु अचलनार्थानामेव। अत एव मूले प्रापयतीत्यादि व्याख्यातम्। पानमपि चकोरजिह्वया कथं चिदेतन्मुखचन्द्रचन्द्रिका। इमां किमाचामयसे न चक्षुषी चिरं चकोरस्य भवन्मुखस्पृशी"। इति श्रीहर्षश्लोके आचामयेति पृथक्पदम्। अः विष्णुः, तस्य स्त्री ई = लक्ष्मीः। तया सहिता से इत्येकारान्तस्य सेशब्दस्य संबोधनम्। "एङ्()ह्रस्वात्" इति सम्बुद्धिलोप इति व्याख्येयमिति प्रौढमनोरमायां स्थितम्। वस्तुतस्तु चक्षुषोर्मुखचन्द्रिकाकर्मकपानात्मकाचमनाऽसंभवादाचामिरादरे लाक्षमिकःअतो निगरणार्थकत्वाऽभावान्न परस्मैपदम्। नचैवं सति प्रत्यवसानार्थकत्वाऽभावाच्चक्,ुषोः "गतिबुद्धी"ति कर्मत्वं न स्यादिति शङ्क्यम्, न ह्याचामिरत्र केवले आदरे वर्तते, किंतु दर्शनपूर्वकादरे वर्तते। सादरज्ञाने लाक्षणिक इति यावत्। ततश्च बुद्ध्यर्थकत्वादाचामेश्चक्षुषोः कर्मत्वं निर्बाधमित्यादि शब्देन्धुशेखरे प्रपञ्चितम्। अदेः प्रतिषेध इति। अदेण्र्यन्तान्निगरणार्थकतया प्राप्तस्य परस्मैपदस्य प्रतिषेधो वक्तव्य इत्यर्थः। "आदयते देवदत्तेने"त्यत्र अदेः प्रत्यवसानार्थकतया प्राप्तस्य परस्मैपदस्य अदेः प्रतिषेधादित्यत आह-- निगरणचलनेति सूत्रेण प्राप्तस्यैवायं निषेध इति। नतु शेषात्कर्तरीति प्राप्तस्येत्येवकारार्थः, "अनन्तरस्य" इति न्यायादिति भावः।

तत्त्व-बोधिनी
निगरणचलनार्थेभ्यशच् ४७४, १।३।८७

निगरणचलनार्थेभ्यश्च। निगरणं-- भक्षणम्। प्रद्रुरुआऊणां चलनार्थानामेनात्मनेपदे सिद्धेऽप्यचलनार्थानां तत्सिद्धये पूर्वसूत्रे ग्रहणम्। अतएव तत्र विवृतं "प्रापयतीत्यर्थ" इत्यादिना। कतं तर्हि "इमां किमाचामयसे न चक्षुषी" इति श्रीहर्षः। आङ्पूर्वाच्चमेरनेन परस्मैपदौचित्यादिति चेत्। अत्राहुः-- आचामयेति पथृक्पदम्। #ई लक्ष्मीस्तया सहिता सेस्तस्याः संबोधने "हे से" इति। केचित्तु सा त्वम् इमे चक्षुषो इनचक्षुषी = श्रेष्ठचक्षुषी आचामय किमिति व्याचक्षते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अणौ ७।१ अकर्मकात् ५।१ चित्तवत्कर्तृकात् ५।१ णेः ५।१ ८६ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
अणावकर्मकाच् चित्तवत्कर्तृकात् १।३।८८

णेः इति वर्तते। कर्त्रभिप्रायक्रियाफलविवक्षायाम् आत्मनेपदापवादः परस्मैपदं विधीयते। अण्यन्तो यो धतुरकर्मकश्चित्तवत्कर्तृकश्च तस्माद् ण्यन्तात् परस्मैपदं भवति। आस्ते देवदत्तः, आसयति देवदत्तम्। शेते देवदत्तः, शाययति देवदत्तम्। अणौ इति किम्? चेतयमानं प्रयोजयति चेतयते, इति केचित् प्रत्युदाहरन्ति तद्युक्तम्। हेतुमण्णिचो विधिः। प्रतिषेधो ऽपि प्रत्यासत्तेस् तस्य एव न्याय्यः। तस्मादिह चेतयति इति परस्मैपदेन एव भवितव्यम्। इदं तु प्रत्युदहरणम् आरोहयमाणं प्रयुङ्क्ते आरोहयते। अकर्मकातिति किम्? कठं कुर्वाणं प्रयुङ्क्ते कारयते। चितवत्कर्तृकातिति किम्? शुष्यन्ति व्रीहयः, शोषयते व्रीहीनातपः।
न्यासः
अणावकर्मकाच्चित्तवत्कर्तृकात्। , १।३।८८

"चेतयमानम्" इति। "चिती संज्ञाने" (धा।पा।३९), चौरादिकः। अय()ञ्चाकर्मकश्चित्तवत्कर्तृकश्च। "हेतुमण्णिचो विधिः"

इति। बुधादेः १।३।८६ सूत्रादिह णिज्ग्रहणमनुवर्त्तते, स च हेतुमण्णिजेव; बुधादिभ्योऽन्यस्य णिचोऽसम्भवात्। यतश्च हेतुमण्णिचो विधिः, प्रत्यासत्तेस्तस्यैव प्रतिषेधो युक्तः। यथाभूत एव विधिभाक्; तथाभूतेनैव प्रतिषेधभाजा भवितव्यम्; प्रत्यासत्तेः। तथा हि-- ब्राआह्()मणाः प्रवेश्यन्तामन्यताधीयानेभ्य इत्युक्ते यताजातीयकानां प्रवेशो विहितस्तथाजातीयकानामेव प्रत्यासत्तेः पर्युदासो विज्ञायते। "{आरोह्रमाणः"- इति मुद्रितः पाठः।} आरोह्रमाणम्" इति। णेरणावादि १।३।६७ सूत्रेणात्मनेपदम्। यद्यप्यत्र हस्तिपकान् प्रति हस्तिनः प्रयोजकत्वे विवक्षिते णिज्विहितः, तथापि ण्यन्तावस्थायां हस्तिपकाः प्रयोज्यत्वेन न विवक्ष्यन्ते; अन्यथा ह्णौ यत्कर्म तदेव णौ कत्र्ता न स्यात्। तत्र प्रयोज्यत्वाविवक्षायामारोह्र- माण इत्यस्य स्वयमेवारोहयतीत्येषोऽर्थो भवति। तमारोहयमाणं यदान्यः प्रयुङ्क्ते, तदा द्वितीयो हेतुमण्णिच्। तदन्तात् "णिचश्च" १।३।७४ इत्यात्मनेपदं भवति। तेनारोहयत इति युक्तमेव प्रत्युदाहरणम्॥
बाल-मनोरमा
अणावकर्मकाच्चित्तवत्कर्तृकात् ५७९, १।३।८८

अणावकर्मकात्। ण्यन्तादिति शेषपूरणम्, णेरित्यनुवृत्तेरिति भावः। अणौ यो दातुरकर्मकः, चित्तवत्कर्तृकश्च, तस्माण्ण्यन्तात्परस्मैपदमिति यावत्। चित्तवत्कर्तृकादिति किम्?। व्रीहयः शुष्यन्ति, तान् शोषयते। अकर्मकात्किम्?। कटं करोति तं प्रयुङ्क्ते।कटं कारयति।

तत्त्व-बोधिनी
अणावकर्मकाच्चित्तवत्कर्तृकात् ४७५, १।३।८८

अणावकर्मकात्। क्रियाफलस्य कर्तृगमित्वविवक्षायामात्मनेपदे प्राप्ते परस्मैपदार्थमिदम्। अणाविति किम्?। हेतुमण्यन्तादकर्मकात्परस्मैपद[मिति] नियमो मा भूत्। आरोह्रमाणं प्रयुङ्क्ते आरोहयते। न्यग्भवन्तं प्रेरयतीत्यर्थः। "णेरणौ" इतिसूत्रे उदाहरणत्वेन य आरोहयतिकर्मको निर्णीस्तस्माद्द्वितीये णिचि प्रत्युदाहरणमिदम्। केचित्तु अणाविति किम्। चुरादिण्यन्तात्परस्मैपदनियमो माभूत्। तद्यथा पुट्ट प्वुट्ट अल्पीभावे। पुट्टयति। चुट्टयति। अल्पीभवतीत्यर्थः। अकर्मकाविमौ। ततो हेतुमण्णिचि--पुट्टयते चुट्टयते। इति प्रत्युदाहरणन्ति, तद्भाष्यादिविरुद्धम्। तथाहि बुधादिसूत्रादिह णेरिति वर्तते, बुधादिभ्यश्च हेतुमण्णिरेव संभवतीति तदन्तादेवायं विधिः। अणाविति प्रतिषेधोऽपि प्रत्यास्त्तेस्तस्यैव न्याय्यः। तेन चुरादिण्यन्ताद्धेतुमण्णौ परस्मपैदं भवत्येवेति भाष्यादौ स्थितम्। तथा च हेतुमण्णेः प्राग्योऽकर्मको हेतुमण्ण्यन्तभिन्नस्तस्माद्धेतुमण्णावात्मनेपदं नेति फलितोऽर्थः। अकर्मकात्किम्()। कटं यः करोति तं प्रयुङ्क्ते कटं कारयति। चित्तवत्कर्तृकादिति किम्?। शुष्यन्ति व्रीहयस्ताञ्शोषयते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ५।१ णेः ५।१ ८६ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
न पादम्याङ्यमाऽङ्यसपरिमुहरुचिनृतिवदवसः १।३।८९

पूर्वेण योगद्वयेन कर्त्रभिप्रयक्रियाफलविवक्षायाम् आत्मनेपदापवादः परस्मैपदं विहितम्। तस्य प्रतिषेधो ऽयमुच्यते। यत् कर्त्रभिप्रायविषयम् आत्मनेपदं तदवस्थितम् एव, न प्रतिषिध्यते। पा दमि अङ्यम आङ्यस परिमुह रुचि नृति वद वस

इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं न भवति। णिचश्च १।३।७४ इत्यात्मनेपदं भवति। तत्र पिवतिर् निगरणार्थः। दमिप्रभृतयश्चित्तवत्कर्तृकाः। नृतिश्चलनार्थो ऽपि। एषां परस्मैपदं न भवति। पा पाययते। दमि दमयते। आङ्यम् आयामयते। यमो ऽपरिवेषणे इति मित्संज्ञा प्रतिषिध्यते। अङ्यस आयासयते। परिमुह परिमोहयते। रुचि रोचयते। नृति नर्तयते। वद वादयते। वस वासयते। पादिषु धेट उपसङ्ख्यानम्। धापयेते शिशुमेकं समीची।

न्यासः

न पादम्याङ्यमाङ्यसमपरिमुहरुचिनृतिवदवसः। , १।३।८९

"पा" इति "लुग्विकरणालुग्विकरणायोरलुग्विकरणस्यैव ग्रहणम्" (व्या।प।५०) इत्यनेन "पा पाने" (धा।पा।९२५) इत्यस्यैव ग्रहणम्, न "पा रक्षणे" (धा।पा।१०५६)इत्येतस्य। "दमु उपशमे" (धा।पा।१२०३), "यम उपरमे" (धा।पा।९८४), "यसु प्रयत्ने" (धा।पा।१२१०), आङ्पूर्वावेतौ। "मुह वैचित्ये" (धा।पा। ११९८), परिपूर्वः, "रुच दीप्तौ" (७४५), "नृती गात्रविक्षेपे" (धा।पा।१११६), "वद व्यक्तायां वाचि" (धा।पा।१००९) "वस निवासे" (धा।पा।१००५), आच्छादनार्थस्य वसेग्र्रहणं पूर्वोक्तादेव हेतोर्न भवति। "पूर्वेण योगद्वयेन" इति। अन्तरेणेत्यर्थः। "नृतिश्चलनार्थोऽपि" इति। अपिशब्दाच्चितवत्कर्तृकार्थश्च। "पाययते" इति। "शाच्छासाह्वाव्यावेपां युक्" ७।३।३७। पातेस्त्वकर्मकत्वविवक्षायां परस्मैपदं भवति। "पालयति" इति। "पातेलुग्वक्तव्यः" (वा।२;७, ३।३७) इत्युपसंख्यानाल्लुगागमः। "दमयते" इति। पूर्ववत् "मितां ह्रस्वः" ६।४।९२। "आयामयते" इति। ननु चात्रपिमित्वे सति ह्रस्वेन भवितव्यमित्यत आह-- "यमोऽपरिवेषणे" इति। तत्र हि "न कम्यमिचमाम्" (ग।सू।धा।पा।८१७)इत्यतो नेत्यनुवर्तते। "आङ"इति। ङिद्विशिष्टस्याकारस्योपबदानमुपसर्गप्रतिपत्त्यर्थम्। तेनोपसर्गप्रतिरूपको य आकारस्तस्य ग्रहणं न भवति। "पादिषु धेट उपसंख्यानम्" इति। पादिष्विति विषयसप्तमी। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। धेटः पादिविषयस्य परस्मैपदप्रतिषेधस्य प्रतिपादनं कत्र्तव्यम्। योऽयं पादिविषयः परस्मैपदप्रतिषेधः,स धेटोऽपि भवतीत्यर्थः। तत्रेदं प्रतिपादनम्- नेति योगविभागः क्रियते, तेन धेटोऽपि प्रतिषेधो भविष्यति। यद्येवम्, नेत्यनेनैव सिद्धत्वात् पादीनां ग्रहणमनर्थकम्? नानर्थकम्; पूर्वयोगस्यासर्वविषयात्वज्ञापनार्थत्वात्। "धापयेते" इति। "धेट पाने" (धा।पा।९०२) "आदेचः" ६।१।४४ इत्यादिनात्त्वम्, पूर्ववत् पुक्। "शिशुम्" इति। "गतिबुद्धि" १।४।५२ इत्यादिना कर्मसंज्ञायां द्वितीया॥

बाल-मनोरमा

न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ३५, १।३।८९

न पादम्याङ्यम्। पा दमि आङ्यम् आङ्यम् आङ्यस परिमुहरुचि नृति वद वस् एषां समाहारद्वन्द्वात्पञ्चमी। प्राप्तस्य निषेध्यत्वात् प्राप्तिमुपपादयति-- पिबतिर्निगरणार्थ इति। ततश्च "निगरणचलनर्थेभ्यः" इति प्राप्तिरिति भावः। नृतिरिति। नृतिश्चलनार्थकः। अणौ चित्तवत्कर्तृकः अकर्मकश्चेत्यर्थः। सूत्रद्वयनेनेति। "अणावकर्मका"दिति, "निगरणचलनार्थेभ्यश्च" इति च सूत्रद्वयेनेत्यर्थः। पाययते इति। "शाच्छासाह्वाव्यावेपां यु"गिति पुकोऽपवादो युक्। दमयते इति। "जनीजॄ()ष्क्नसुरञ्जोऽमन्ताश्चे"त मित्त्वाद्ध्रस्वः। ननु दिवादौ दमिः सकर्मक इत्युक्तम्, अतः कथमिह "अणावकर्मका"दिति प्राप्तिरिति चेद्दमेः परस्मैनिषेधादेव दमिरकर्मकोऽपि। अतो दमिः सकर्मक इत्यस्य न विरोधः। आयामयते इति। "यमोऽपरिवेषणे" इति मित्त्वनिषेधान्न ह्रस्वः। वासयते इति। "वस निवासे" इति भौवादिकस्यैवात्र ग्रहणम्, नतु "वस आच्छादने" इत्यादादिकस्याऽपि, तस्य सकर्मकत्वादेवाऽप्राप्तेः, "लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहण"मित्युक्तेश्च। धेट #उपसङ्ख्यानमिति। "परस्मैपदनिषेधस्ये"ति शेषः। धापयेते शिशुमिति मन्त्रः। ननु "वत्सान् पाययति पयः", "दमयन्ती कमनीयतामदं", "भिक्षा वासयती"ति च कथम्। "न पादम्यड()मेति परस्मैपदस्य निषेधादित्यत आह-- अकत्र्रभिप्राये इति। "अनन्तरस्ये"ति न्यायेन "निगरणचलनार्थेभ्यश्च","अणावकर्मकाटदिति सूत्रद्वयप्राप्तस्यैव "न पादम्याङ्यमाङ्यमसे"ति निषेध इति भावः। "वा

क्यषः" इत्यादि प्राग्व्याख्यातमपि सूत्रक्रमेण पुनरुपात्तम्। इतिपरस्मैपदव्यवस्था।

अथ परिभाषाप्रकरणम्॥

तत्त्व-बोधिनी

न पादम्याङ्यमाङ्यसपरिमुद्दरुचिनृतिवदवसः २९, १।३।८९

न पाद। चित्तवत्कर्तृका अकर्मका इति। दिवादौ दमिः सकर्मक इत्युक्तम्, इह त्वकर्मक इति पूर्वोत्तरविरोधो यद्यप्यस्ति तथापि कर्मणः कर्तृत्वविवक्षायां दमिरत्राऽकर्मक इत्याहुः। पाययत इति। "शाच्छसे"ति युक्। आयामयत इति। "यमोऽपरिवेषमे" इति मित्त्वनिषेधः। वासयत इति। वस निवास इत्यस्य ग्रहणं। वस आच्छादने इत्यस्य तु न निषेधः, सकर्मकत्वेन तस्य प्राप्त्यभावात्। कर्मकर्तृत्वविवक्षायामकर्मकत्वेऽपि लुग्विकरमपरिभाषया नाऽत्र ग्रहणमित्याहुः।

* धेट उपसङ्ख्यानम्। समीची इति। प्रथमाद्विवचनम्। "वा छन्दसी"ति पूर्वसवर्णदीर्घः। परस्मैपदं स्यादेवेति। "अनन्तरस्य" इति योगद्वयेन प्राप्तस्यैव परसमैपदस्य प्रतिषेध इति भावः।

[इति तत्त्वबोधिन्याम् परस्मैपदप्रक्रिया] इति पदव्यवस्था।

अथ परिभाषाप्रकरणम्।

----------------

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वा ० ९३ क्यषः ५।१ परस्मैपदम् १।१ ७८

काशिका-वृत्तिः

वा क्यषः १।३।९०

लोहितादिडाज्भ्यः क्यष् ३।१।१३ इति वक्ष्यति। तदन्ताद् धातोर् वा परस्मैपदं भवति। लोहितायति, लोहितायते। पटपटायति, पटपटायते। अथ अत्र प्रस्मैपदेन मुक्ते कथम् आत्मनेपदं लभ्यते, यावता अनुदात्तङित आत्मनेपदम् १।३।१२ इत्येवम् आदिना प्रकर्णेन तन् नियतम्? एवं तर्हि आत्मनेपदम् एव अत्र विकल्पितं विधीयते, तच् च अनन्तरं परस्मैपदप्रतिषेधेन सनिधापितम् इह सम्बध्यते। तेन मुक्ते, शेषात् कर्तरि परस्मैपदम् भवति।

न्यासः

वा क्यषः। , १।३।९०

"लोहितायति" इति। अलोहितो लोहितो भवतीत्यत्रार्थे "लोहितादिडाज्भ्यः क्यष्" ३।१।१३इति क्यष्। "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। "पटपटायति" इति। पटच्छब्दस्य डाचि विषयभूते "डाचि बहुलं द्वे" (वा।८८८) इत्युपसंख्यानाद्()द्विर्वचनम्, "अव्यक्तानुकरणात्" ५।४।५७ इत्यादिना डाच्, "नित्यमाम्रेडिते डाचि"६।१।९६ इति पटशब्दस्य योऽन्त्यस्तकारः, यश्च तस्मात्परः पकारः-तयोः "कथम्" इति। न कथञ्चिदित्यर्थः। किं कारणं न लभ्यत आह-- "यावता" इत्यादि। आत्मनेपदं हि "अनुदात्तङितः" १।३।१२ इत्यादि नियतम्, अतो न शक्यते

क्यषन्ताद्विज्ञातुमिति। "एवं तर्हि" इत्यादिना परिहरति। "विकल्पितम्" इति विभाषितम्, पाक्षिकमित्यर्थः। ननु चात्मनेपदं परस्मैपदेन व्यवच्छिन्नम्, अतोऽसन्निहित्वान्न शक्यते विज्ञातुमित्याह-- "तच्च"इत्यादि। कत्रृभिप्राये क्रियाफले विवक्षित आत्मनेपदं प्राप्ते तदपवादेन "अमावकर्मकात्" १।३।८८ इत्यादिना योगद्वयेन परस्मैपदं विहितम्। तस्यापवादस्यानन्तरसूत्रेण यः प्रतिषेधो विहितः, तेनापवादेन परस्मैपदमपनयतात्मनेपदं सन्निधापितम्। अपवादे ह्रपनीते नियोगत एवोत्सर्गेण भवितव्यम्। तदेवं प्रतिषेधेन सन्निधापितमिहात्मनेपदं सम्बध्यते। यदि तह्र्यनेन कर्तर्यात्मनेपदमेव विकल्पेन विधीयते, पक्षे परस्मैपदं कथं लभ्यत इत्याह-- "तेन" इत्यादि॥

बाल-मनोरमा

वा क्यषः ४९४, १।३।९०

वा क्यषः। परस्मैपदमिति। "शेषात्कर्तरी"त्यस्तदनुवृत्तेरिति भावः। लोहितायतीति। अलोहितो लोहितो भवतीत्यर्थः। अत्रेति। "लोहितादी"ति सूत्रे इत्यर्थः। तच्चेति। अभूततद्भावविषयत्वमित्यर्थः। असंभवादिति। अव्यक्तानुकरणड्डाचो विहितत्वेन तस्य अभूततद्भावविषयत्वे अनुकरणत्वस्य भङ्गापत्तेरिति भावः। नाप्यादिशब्दग्राह्राणामिति। "श्यामादिशब्दाना"मिति शेषः। तस्येति। आदिग्रहणस्येत्यर्थः। आदिगर्हणप्रख्याने प्रमाणं दर्शयति-- तथा चेति। आदिग्रहणमपनीय लोहितशब्दाड्डाजन्तेभ्यश्च क्यष्वचनं कर्तव्यम्। इतराणि = लोहितादिगणपठितानि श्यामादीनि प्रतिपदिकानि भृशादिष्वेव पठनीयानीत्यर्थः। एवं च श्यामादिशब्देभ्यः क्यङि आत्मनेपदमेवेति फलितम्। तस्यापीति। आदिग्रहणस्येव क्यषः ककारस्यापि विवक्षिते सति "डाचि विवक्षिते द्वे बहुल"मिति द्वित्वे नित्यमाम्रेडिते "डाची"ति पूर्वखण्डान्तस्य तकारस्य , उत्तरखण्डादेः पकारस्यच पररूपे एकस्मिन् पकारे, डित्त्वाट्टिलोपे, पटपटाशब्दाड्डाजन्तात् क्यषि तदन्ताल्लडादीति भावः। "अभूततद्भावे" इति तु नात्र संबध्यते इत्युक्तम्। न ह्रपटच्छब्दः पटच्छब्दो भवतीति युज्यते। ननु कृभ्वस्तियोगाऽभावादिह कथं डाजित्यत आह-- कृभ्वस्तियोगं विनापीति। भवत्यर्थसत्तामात्रेणेत्यर्थः। कुत इत्यत आह--डाजन्तादिति। तद्भाष्येति। "भृशादिष्वितराणी"त्युक्तवार्तिकतद्भाष्यविरुद्धमित्यर्थः। तस्मादिति। उक्तवार्तिकभाष्यविरोधात्तेभ्यः श्यामादिभ्यो भृशादित्वलक्षणः क्यङेव नतु क्यषित्यर्थः। ततश्च "वा क्यषः" इत्यस्याऽप्रवृत्तेर्ङित्त्वादात्मनेपदमेवेति मत्वाऽऽह-- श्यामायते इति। श्यामो भवतीत्यर्थः। ननु देवदत्तः सुखायते इति कथम्(), देवदत्तस्य सुखत्वाऽभावादित्यत आह-- सुखादय इति। श्यामादिषु ये सुखदुःखादिशब्दा गुणवनचास्ते सुखादिगुणवति वत्र्तन्ते इत्यर्थः। एवंच "सुखायते" इत्यस् सुखवान् भवतीत्यर्थः। एवं "दुखायते" इत्यादावपि। ननु लोहितशब्दाद्विहितः क्यष् कथं लोहिनीशब्दात्स्यादित्यत आह--- लिङ्गविशिष्टेति।

तत्त्व-बोधिनी

वा क्यषः ४२३, १।३।९०

तस्येति। आदिशब्दस्येत्यर्थः।

* लोहितडाज्भ्यः क्यष्वचनं, भृशादिष्वितराणि। तस्यापीति। क्यषः ककारस्येत्यर्थः। एतेन "नः क्ये" क्यस्य विभाषे"ति सूत्रद्वये क्यषोऽपि ग्रहणं वदन्तः परास्ताः। लोहनीयतीति। क्यङि सति तङेव स्यात्, "क्यङ्मानिनोश्चे"ति पुंवद्भावश्चेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्युद्भ्यः ५।३ लुङि ७।१ वा ० ९० परस्मैपदम् १।१ ७८

काशिका-वृत्तिः
ध्य्द्भ्यो लुङि १।३।९१

वा इत्येव। द्युत दीप्तौ। तत्साहचर्याद् लुठादयो ऽपि कृपू पर्यन्तास् तथा एव व्यपदिश्यन्ते। बहुवचननिर्देशादाद्यर्थो भवति। अनुदात्तेत्त्वान् नित्यम् एव आत्मनेपदे प्राप्ते द्युतादिभ्यो लुङि वा परस्मैपदं भवति। व्यद्युतत्, व्यद्योतिष्ट। अलुठत्, अलोठिष्ट। लुङि इति किम्? द्योतते।
लघु-सिद्धान्त-कौमुदी
द्युद्भ्यो लुङि ५४०, १।३।९१

द्युतादिभ्यो लुङः परस्मैपदं वा स्यात्। पुषादीत्यङ्। अद्युतत्, अद्योतिष्ट। अद्योतिष्यत॥ एवं श्विता वर्णे॥ ५॥ ञिमिदा स्नेहने॥ ६॥ ञिष्विदा स्नेहनमोचनयोः॥ ७॥ मोहनयोरित्येके। ञिक्ष्विदा चेत्येके॥ रुच दीप्तावभिप्रीतौ च॥ ८॥ घुट परिवर्तने॥ ९॥ शुभ दीप्तौ॥ १०॥ क्षुभ संचलने॥ ११॥ णभ तुभ हिंसायाम्॥ १२-१३॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने॥ १४-१५-१६॥ ध्वंसु गतौ च॥ स्रम्भु विश्वासे॥ १७॥ वृतु वर्तने॥ १८॥ वर्तते। ववृते। वर्तिता॥
न्यासः
द्युद्भ्यो लुङि। , १।३।९१

ननु च द्युतेरेकत्वाद्बहुवचननिर्देशो नोपपद्यत इत्याह-- "तत्साहचर्यात्" इत्यादि। यथैकेन छत्त्रिणा साहचर्यादन्येऽपि तत्सहचारिणश्छत्रिण इत्युच्यन्ते-- छत्रिणो गच्छन्तीति, तथेहापि द्युतिना साहचर्यात् ()इआतादयोऽपि "द्युत" इति व्यपदिश्यन्ते। कथं पुनरेकस्य व्यपदेशे सत्ययमभिप्रेतोऽर्थः सम्पद्यत इत्याह-- "बहुवचननिर्देशात्" इत्यादि। एं हि विनाऽप्यादिशब्देन तदर्थो लभ्यत इत्येषोऽर्थः सम्पद्यत इति दर्शयति। "कृपूपर्यन्ताः"इति। अनेन कृपेः परे ये पठ()न्ते ते द्युतादयो न भवन्तीत्याचष्टे। एतच्च तदनन्तरं वृत्करणाद्गणपरिसमाप्तेर्लिङ्गाद्विज्ञायते। "व्यद्युतत्" इति। पुषादित्वादङ्। यद्येवम्, तत एवाङविधानात् परस्मैपदं तेभ्यो भविष्यति, किमनेन योगेन? नैतदस्ति; ज्ञापकाद्धि नित्यं लुङि परस्मैपदं विज्ञायते। किञ्च लुङोऽन्यत्रात्मनेपदं न भवतीति सम्भाव्येत। ननु चानुदात्तेत्करणसामर्थ्यादन्यत्र न भविष्यति, नैतत्; अनुदात्तेत्करणम् "अनुदात्तेतश्च हलादेः" ३।२।१४९ इति युजर्थं स्यात्। तस्मात् कत्र्तव्योऽयं योगः। अलुठत्। "रुठ लुठ प्रतीघाते" (धा।पा।७४७, ७४९)॥
बाल-मनोरमा
द्युद्भ्यो लुङि १८४, १।३।९१

द्युद्भ्यो लुङि। बहुवचनात् द्युतादिभ्य इति गम्यते। दिग्योगे पञ्चमी। "तस्मादित्त्युत्तरस्ये"ति परिभाषया परस्येति लभ्यते। "शेषात्कर्तरी"त्यतः परस्मैपदमित्यनुवर्तते। तदाह-- द्युतादिभ्य इति। परस्मैपदे अङिति। आत्मनेपदपक्षे सिजेव नत्वङ्, पुषादिसूत्रे परस्मैपदग्रहणादिति भावः। तदाह-- द्युतादिभ्य इति। परस्मैपदे अङिति। आत्मनेपदपक्षे सिजेव नत्वङ्, पुषादिसूत्रे परस्मैपदग्रहणादिति भावः। तदाह--अद्योतिष्टेति। ()इआता वर्णे इति। आत्मनेपदपक्षे रूपम्। एवमग्रेऽपि द्युतादौ लुङि रूपभेदो ज्ञेयः। ञि मिदा स्नेहने इति। ञिरित् "ञीतः क्तः" इत्येतदर्थः।

तत्त्व-बोधिनी
द्युद्भ्यो लुङिः १५७, १।३।९१

द्युद्भ्यो लुङि। बहुवचननिर्देशाच्छौण्डैरित्यत्रेव तदादिग्रहणम्। तदाह -- द्युतादिभ्य इति। द्युतादयो "घट चेष्टाया"मित्यवधिकाः। "ङः सी"त्यत्रेव लुङीति सप्तम्याः षष्ठ()र्थतेत्यभिप्रेत्याह--- लुङः परस्मपैदमिति। त्रिमिदा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृद्भ्यः ५।३ स्यसनोः ७।२ ९३ वा ० ९० परस्मैपदम् १।१ ७८

काशिका-वृत्तिः

वृद्भ्यः स्यसनोः १।३।९२

द्युतादिष्वेव वृतादयः पठ्यन्ते। वृतु वर्तते, वृधु वृद्धौ शृधु शब्दकुत्सायाम्, स्यन्दू प्रस्रवणे, कृपू सामर्थ्ये, एतेभ्यो धतुभ्यः स्ये सनि च परतो वा परस्मैपदं भवति। वृत् वत्स्र्यति। अवत्स्र्यत्। विवृत्सति। वर्तिष्यते। अवर्तिष्यत। विवर्तिषते। वृद्H वत्स्र्यति। अवत्स्र्यत्। विवृत्सति। वर्धिष्यते। अवर्धिष्यत। विवर्धिषते। स्यसमोः इति किम्? वर्तते।

न्यासः

वृद्भ्यः स्यसनोः। , १।३।९२

"स्यसनोः" इति। सती सप्तमीयम्। वत्स्र्यतीत्यादौ "सेऽसिचि" ७।२।५७ इत्यादेः सूत्रादसिचि स इत्यनुवत्र्तमाने "गमेरिट् परस्मैपदेषु"७।२।५८ इत्यतः परस्मैपदे च "न वृद्भ्यश्चतुभ्र्यः" ७।२।५९ इतीट्प्रतिषेधः। आत्मनेपदं त्विड्भवत्येव। "विवृत्सति" इति। "हलन्ताच्च" १।२।१० इति कित्वाद्()गुणाभावः॥

बाल-मनोरमा

वृद्भ्यः स्यसनोः १८६, १।३।९२

वृद्भ्यः। बहुवचनाद्वृतादिभ्य इति गम्यते। "शेषात्कर्तरी"त्यतः परस्मैपदमित्यनुवर्तते, "वा क्यषः" इत्यतो वेति च। तदाह-- वृतादिभ्य इति।

तत्त्व-बोधिनी

वृद्भ्यः स्यसनोः १५९, १।३।९२

वृतादयः पञ्च।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लुटि ७।१ च ० क्लृपः ५।१ स्यसनोः ७।२ ९२ वा ० ९० परस्मैपदम् १।१ ७८

काशिका-वृत्तिः

लुटि च क्लुपः १।३।९३

वृतादित्वादेव स्यसनोर् विकल्पः सिद्धो लुटि विधीयते। चकारस् तर्हि स्यसनोरनुकर्षणार्थो न वक्तव्यः, एवं तर्हि इयं प्राप्तिः पूर्वां प्राप्तिं बाधेत, तस्माच् चकरः स्यसनोरनुकर्षणार्थः क्रियते। लुटि च स्यसनोश्च क्लृपेः परस्मैपदं वा भवति। कल्प्ता, कल्प्तारौ, कल्प्तारः। कल्प्स्यति। अकल्प्स्यत्। चिक्लृप्सति। कल्पिता। कल्पिश्यते। अकल्पिश्यत। चिकल्पिशते। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य तृतीयः पादः।

न्यासः

लुटि च क्लृपः। , १।३।९३

"चकारस्तर्हि" इत्यादि। स्यसनोर्वृतादित्वादेव सिद्धे विकल्प इत्यभिप्रायः। "एवं तर्हि"इत्यादिना विशेषविधानं सामान्यविधानस्य बाधकं भवतीति विज्ञायते। ननु च यदीयं प्राप्तिः कृपेः प्रा()प्त बाधते, द्युतादिषु पाठस्य तस्यानर्थक्यं प्रसज्येत? नैतदस्ति; अङर्थत्वात्। ननु च स्यसनोरिति स्वरितत्वमिष्यते, तेन तस्य बाधा न भविष्यतीति, सत्यमेतत्; सूत्रकारस्तु चकारं वैचित्र्यार्थं चकार, न स्वरितत्वार्थम्। "कल्प्ता" इति। पूर्ववदधिकारद्वयानुवृत्तौ सत्यां "तासि च क्लृपः" ७।२।६० इतीट्प्रतिषेधः। "लुटः प्रथमस्य डारौरसः" २।४।८५ इति डादेशः। "कृपो रो लः" ८।२।१८ इति लत्वम् "चिक्लृप्सति" इति। पूर्ववत् कित्वाद्()गुणाभावः॥ इति श्रोबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य तृतीयः पादः ----------------- अथ प्रथमाध्यायस्य चतुर्थः पादः

बाल-मनोरमा

लुटि च क्लृपः १९०, १।३।९३

लुटि च क्लृपः। चकारात् "वृद्भ्यः सस्यनो"रित्यतः स्यसनोरित्यनुकृष्यते, "शेषात्कर्तरी"त्यतः परस्मैपदमिति, "वा क्यषः" इत्यतो वेति च। तदाह-- लुटि स्यसनोरित्यादिना।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आ ० कडारात् ५।१ एका १।१ संज्ञा १।१

काशिका-वृत्तिः

आ कडारादेका संज्ञा १।४।१

काडराः कर्मधारये २।२।३८ इति वक्ष्यति। आ एतस्मात् सूत्रावधेर्यदित ऊर्ध्वम् अनुक्रमिष्यामः, तत्र एका संज्ञा भवति इति वेदितव्यम्। का पुनरसौ? या परा अनवकाशा च। अन्यत्र सञ्ज्ञासमावेशान् नियमार्थं वचनम् एकैव संज्ञा भवति इति। वक्ष्यति ह्रस्वं लघु १।४।१०, भिदि, छिदि भेत्ता, छेत्ता। संयोगे गुरु १।४।११, शिक्षि, भिक्षि शिक्षा, भिक्षा। संयोगपरस्य ह्रस्वस्य लघुसंज्ञा प्राप्नोति, गुरुसंज्ञा च। एका संज्ञा इति वचनाद् गुरुसंज्ञा एव भवति। अततक्षत्, अररक्षत्, सन्वल्लघुनि चङ्परे ऽनग्लोपे ७।४।९३ इत्येष विधिर् न भवति।

लघु-सिद्धान्त-कौमुदी

आकडारादेका संज्ञा १६६, १।४।१

इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया। या परानवकाशा च॥

न्यासः

आ कडारादेका संज्ञा। , १।४।१

"या परा" इति। यत्र विप्रतिषेधस्तत्र "विप्रतिषेधे परम्" १।४।२ इति वचनात् परा भवति। "अनवकाशा च या" इति। यस्याः संज्ञायाः क्वचिदवकाशो नास्ति, साऽप्यपवादभूत्वात् संज्ञान्तरं बाधित्वा प्रवत्र्तते। यद्येवम्, अत एव संज्ञासमावेशो न भविष्यति, तत् किमेकसंज्ञाधिकारेण? नैतदस्ति, विरोधे हि सत्यपवादभूतत्वं भवति। विप्रतिषेधस्तु विरोध एव, स च विरोध एकसंज्ञाधिकारे सति भवति, नासति; तथा हि यत्रैकसंज्ञाधिकारो नास्ति, तत्र विप्रतिषेधो नास्त्येव, यथा-- प्रत्ययादीनां संज्ञायाम्; तस्मादस्मिन्नधिकारे सति विरोधो भवति। त()स्मश्च सति "विरोधे परम्" इति वचनात् परा भवति,?पवादभूतत्वादनवकाशा च। तस्मात् कत्र्तव्योऽयमधिकारः। यद्येवम्, अङ्संज्ञायां भपदसंज्ञयोः समावेशो वक्तव्यः-- बाभ्रव्यः, धानुष्क इति। बभ्रुशब्दात् "मधुब्राभ्व्रोब्राआह्मणकौशिकयोः" ४।१।१०६ इति यञ्। तत्र भत्वात् "ओर्गुणः" ६।४।१४६ अङ्गत्वादादिवृद्धिः, तत्र "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः; धनुःशब्दाच्च धनुः प्रहरणमस्य "तदस्य प्रहरणम्" ४।४।५७ इति ठक्; "इसुसुक्तान्तात्कः" ७।३।५१ इति कादेशः, अत्र पदत्वात् "इणः षः" ८।३।३९ इति षत्वम्। अङ्गत्वादादिवृद्धिर्न वक्तव्या। "वा क्यषः" १।३।९० इततो वाग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा। तेन क्वचित् संज्ञासमावेशो भविष्यतीति। "अन्यत्र " इति। लोके च, शास्त्रे च। लोके तावत्-- इन्द्रः, शुक्रः, पुरन्दर इति संज्ञायाः समावेशो दृष्टः। शास्त्रेऽपि प्रत्ययः,कृत्, कृत्यप्रत्ययः। एवमन्यत्र संज्ञासमावेशादिहापि स्यात्, अतएवैका संज्ञा यथा स्यादिति नियमार्थमेतत्। "भिदिश्छिदिः" इति। लघुसंज्ञाया अवकाशः। प्रयोजनं तु-- "भेत्ता, छेत्ता" इति। "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः। "शिक्षिर्भिक्षिः" इति। गुरुसंज्ञाया अवकाशः। प्रयोजनं-- "शिक्षा, भिक्षा" इत। "गुरोश्च हलः" ३।३।१०३ इत्यकारप्रत्ययः। लघुसंज्ञा त्वत्र प्रयोजनाभावान्न भवति। इहोभयं प्राप्नोति-- "अततक्षत्, अररक्षत्" इति। परत्वाद्गुरुसंज्ञैव भवति। "तक्षूत्वक्षू तनूकरणे" (धा।पा।६५५, ६५६), "रक्ष पालने" (धा।पा।६५र८), हेतुमण्णिच्, लुङ, च्लेश्चङ, णिलोपः, "चङि" ६।१।११ इति द्वर्वचनम्। यद्यत्र लघुसंज्ञा स्यात्, "सन्वल्लघुनि" ७।४।९३ इत्यादिना सन्वद्भावादित्वं स्यात्। तदभावान्न भवतीत्याह-- "सन्वल्लघुनि" इत्यादि। "एष विधिः " इति। सन्वद्भावविधिः। परस्या इदमुदाहरणमुक्तम्। अनवकाशायास्तूच्यते-- अयन्ते योनिरृत्विय इति। ऋतुः प्राप्तोऽस्तेति "ऋतोरण्" ५।१।१०४ "छन्दसि घस्" ५।१।१०५ इति घस्; तस्येयादेशे कृते "सिति च" १।४।१६ इति पदसंज्ञा प्राप्नोति, "यचि भम्" १।४।१८ इति भसंज्ञा च, अनवकाशत्वात् पदसंज्ञैव भवति। यदि भसंज्ञा स्यात् तदा "ओर्गुणः" ६।४।१४६ इति गुणः स्यात्। भसंज्ञायास्त्वौपगवादिष्ववकाशः। आ कडारादितीयतोऽवधेग्र्रहणं वैचित्र्यार्थम्; अन्यथा हि "आ द्वन्द्वात इत्येवं ब्राऊयात्। न हि द्वन्द्वसंशब्दानात् परेणाकडारादेकसंज्ञाविधानस्य प्रयोजनमस्ति; यत एतावतोऽवधेग्र्रहणमर्थवद्भवति॥

बाल-मनोरमा

आ कडारादेका संज्ञा २३०, १।४।१

नह्त्र द्वयोरपि संज्ञयोः समावेसे विरोधोऽस्ति, तव्यत्तव्यानीयरादौ कृत्कृत्यप्रत्ययादिसंज्ञासमावेशदर्शनादित्यत आह-आ कडारा। आङ्मर्यादायामित्याह--कडाराः कर्मधारये इति। आङिह नाभिविधौ। कडारशब्दस्यापि प्रवेशे प्रयोजनाऽभावात्। "प्राक्कडारा"दिति कडारशब्दस्तु नोत्तरावधिः। "कडाराः कर्मधारये" इति कडारशब्दस्य उत्तरावधित्वेऽधिकलाभात्। "प्राक्कडारादित्युत्तरं तत्पुरुषः द्विगुश्चेति चकाराच्च। संज्ञाद्वयसमावेशषार्थो हि चकारः। तत्रैकसंज्ञाया नियमाऽप्रवृत्तौ किं तेन?। नन्वस्त्विह एकैव संज्ञा, तथापि विनिगमनाविरहाद्भसंज्ञैवेति कुतो लाभः?। तत्राह--या परेत्यादि। विरोधाऽभावेन विप्रतिषेधसूत्रस्य सामान्याद्विशेषबलीयस्त्वस्य चाऽप्रवृत्तावपि परत्वनिरवकाशत्वयोरन्यत्र बलवत्त्वेन दृष्टत्वादिहापि ताभ्यां व्यवश्ता युज्यते इति भावः। द्वयोः सावकाशयोः परा संज्ञा बलवती। अन्यतरस्या निरवकाशत्वे तु सैवेति बोध्यम्। तत्र परा यथा--"धनुषा शरैर्विध्यती"त्यत्र शराणां विश्लेषं प्रत्यवधिभूतस्यैव धनुषा व्यधनं प्रति साधकतमत्वादपादानत्वे

करणत्वे च प्राप्ते परा करणसंज्ञैव भवति। अनवकाशा यथाअततक्षदिति। अत्र तकारादकारस्य "संयोगे गुरु" इति गुरुसंज्ञैवाऽनवलकाशत्वाद्भवति, नतु लघुसंज्ञा। तस्या असंयोगे परे चरितार्थत्वात्। अतः सन्वल्लघुनीति तत्र न प्रवर्तते। तेनेति। अनवकाशत्वेनेत्यर्थः। अत इति। पदत्वाऽभावाज्जश्त्वं नेत्यर्थः। जश्त्वमिति। दत्-भ्यामिति स्थिते "स्वादिष्वसर्वनामस्थाने" इति पदान्तत्वात्। "झलां जशोऽन्ते" इति जश्त्वमित्यर्थः। इत्यादीति। दद्भिः दते इत्यादिरादिशब्दार्थः। "खरि च" इति चर्त्वे-दत्सु। पक्षे रामवत्। मास इति। मासशब्दस्य शसि "पद्दन्न" इति मासित्यादेशे रूपम्। मासेति तृतीयैकवचनम्। रुत्व इति। मास्-भ्याम् इति स्थिते स्वादिष्विति पदत्वात् "ससजुषोः" इति रुः। "भोभगो" इति तस्य यकारे "हलि सर्वेषा"मिति तस्य लोपे माभ्यां" "माभि"रिति रूपमित्यर्थः। इत्यादीति। "माब्यः" इत्यादिरादिशब्दार्थः। मास्-सु इति स्थिते रुत्वे "खरवसानयोः" इति विसर्गे "वा शरि" इति सत्वविकल्पः। मास्सु-माःसु।

तत्त्व-बोधिनी
आ कडारादेका संज्ञा १९५, १।४।१

आ कडारा। इह "प्राक्कडारात्मसमासः" इत्यस्य नावधित्वं, व्याप्तिन्यायात्। "तत्पुरुषो द्विगुश्चे"ति लिङ्गाच्च। संज्ञाद्वयसमावेशार्थं हि तत्र चकारः। तदाह-कडाराः कर्मधारय इत्यत इति। एकस्यैकैव संज्ञेति। उभयोः सावकाशत्वे "विप्रतिषेधे पर"मिति परैव गृह्यते, निरवकाशत्वे तु सैव। तत्र परस्या उदाहरणं--"धनुषा विध्यती"ति। अत्र शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते। निरवकाशायाः पूर्वस्यास्तदाहरणं "भवतष्ठक्छसौ" भवदीय इति। अत्र हि "सिति चे"ति पदसंज्ञा परामपि भसंज्ञां बाधते, निरवकाशत्वात्। तेन तकारस्य जश्त्वं भवति। प्रकृते तु पराऽनवकाशा भसंज्ञा पदसंज्ञां बाधते इति शसादावचि सैव ग्रहीतुमुचितेत्याशयेनाह--या परेत्यादि। यलोप इति। "हलि सर्वेषा"मित्यनेन। "लोपो व्योर्वली"ति तु न प्रवर्तते, यत्वास्याऽसिद्धत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विप्रतिषेधे ७।१ परम् १।१ कार्यम् १।१

अर्थः॥

विप्रतिषेधः = तुल्यबलविरोधः, तस्मिन् सति परं कार्यं भवति।

उदाहरणम्॥

वृक्षेभ्यः, प्लक्षेभ्यः।
काशिका-वृत्तिः
विप्रतिषेधे परं कार्यम् १।४।२

तुल्यबलविरोधो विप्रतिषेधः। यत्र द्वौ प्रसङ्गावन्यार्थवेकस्मिन् युगपत् प्राप्नुतः, स तुल्यबलविरोधो विप्रतिषेधः। तस्मिन् विप्रतिषेधे परं कार्यं भवति। उत्सर्गापवादनित्यानित्यान्तरङ्गवहिरङ्गेषु तुल्यबलता न अस्ति इति न अयम्

अस्य योगस्य विषयः। बलवतैव तत्र भवितव्यम्। अप्रवृत्तौ, पर्यायेण वा प्रवृत्तौ प्राप्तायां वचनम् आरभ्यते। अतो दीर्घो यञि ७।३।१०१, सुपि च ७।३।१०२ इत्यस्य अवकाशः वृक्षाभ्याम्, प्लक्षाभ्याम्। वहुवचने झल्येत् ७।३।१०३ इत्यस्य अवकाशः वृक्षेषु, प्लक्षेषु। इह उभयं प्राप्नोति वृक्षेभ्यः, प्लक्षेभ्यः इति। परं भवति विप्रतिषेधेन।
लघु-सिद्धान्त-कौमुदी
विप्रतिषेधे परं कार्यम् ११३, १।४।२

तुल्यबलविरोधे परं कार्यं स्यात्। इति लोपे प्राप्ते। पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव। मनोरथः॥
न्यासः
विप्रतिषेधे परं कार्यम्। , १।४।२

"विरोधो विप्रतिषेधः " इत। विप्रतिषेधशब्दस्य लोके विरोधवाचित्वेन प्रसिद्धत्वात्। तथा हि-- विरुद्धेऽभिहिते वक्तारो वदन्ति-- "विप्रतिषिद्धमिदमुच्यते" इति, विरुद्धमिति गम्यते। तस्य विप्रतिषेधस्य विषयं दर्शयितुमाह-- "यत्र" इत्यादि। प्रसज्येते विधीयेते इति प्रसङ्गौ = विधी। "अन्यार्थौ" इति। अन्यत्र विषयेऽर्थः प्रयोजनं ययोस्तौ तथोक्तौ। अन्यत्र विषयान्तरे कृतार्थावित्यर्थः। "एकस्मिन्" इति। अभिन्ने। युगपत् = एककलाम्। स इत्यस्य विप्रतिषेध इत्यने सम्बन्धः। स विप्रतिषेधो विप्रतिषिद्धः, विप्रतिषेधस्य विषय इत्यर्थः। विप्रतिषेधविषयत्वाद्विप्रतिषेदविषयो ह्यत्र विप्रतिषेधशब्देनोक्तो विषयिणा विषयं दर्शयितुम्। यस्मान्न प्रसङ्गो विप्रतिषेध उपपद्यते, नापि तदाधारः। "तुल्यबलविरोधः" इति। तुल्यबलयोर्विरोधोऽस्मिन्निति बहुव्रीहिः। इदं जातिपक्षमाश्रित्य विवरणं कृतम्। द्रव्यपदार्थपक्षे त्वयं विशेषः-- अन्यः= भिन्नोऽर्थः = प्रयोजनं यतोस्तावन्यार्थाविति। शेषं समानम्। "विप्रतिषेधे" इति च सती सप्तमीयम्। "उत्सर्गापवाद" इत्यादि। विप्रतिषेधो यत्रास्ति, सोऽय योगस्यावकाशः। विप्रतिषेधञ्च तुल्यबलयोरेव भवतीति नातुल्यबलयोः। एतत्तु "यत्र हि प्रसङ्गावन्यार्थौ"इत्यादिग्रन्थेन तस्य विषयं दर्शयता व्याख्यातम्। न चोत्सर्गापवादादिषु तुल्यबलतास्तीति, ततो नासावुत्सर्गापवादादिरस्य योगस्य विषयः। तेन बलवानेव तत्र भवति; तत्र सामान्येनोत्सर्गः प्रवत्र्तते; यथा--"आर्धधातुकस्येड्वलादेः" ७।२।३५ इति, वलादिसामान्यस्येड्विधानात्। विशेषोऽपवादः, यथा-- नेड वशि कृति" ७।२।८ इतीट्प्रतिषेधस्य वलादिविशेषे वशादौ कृति विधानात्। यस्य च विशेषे विधिः, स बलवान् भवति; तथा हि-- ब्राआह्मणेभ्यो दधि दीयताम्, तक्रं कौण्()डिन्यायेति विशेषविहितं तक्रदानं सामान्यविहितस्य दधिदानस्यैव बाधकं भविष्यति। तस्माद्वशादौ कृति परेऽपीडागमो न भवति, प्रतिषेध एव भवति-- "स्थेशभासपिसकसो वरच" ३।२।१७५ ई()आर इति। नित्यानित्ययोर्नित्यं बलवत् यथा- "भिस ऐस्" ७।१।९ इत्यैत्वम्। तद्धि "बहुवचने झल्येत्" ७।३।१०३ इत्येत्वे कृते प्राप्नोति। अकृतेऽपि-- भूतपूर्वगत्याश्रयणादकारान्तादङ्गाद्भिस ऐस् विहित इति कृत्वा। यश्च कृताकृतप्रशङ्गी विधिः स नित्य इति। तथा च तत्र ७।१।९ वक्ष्यति-- एत्त्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति। कृतेऽप्येत्त्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति॥ इति स नित्यः। ऐस्त्वे एत्त्वं न प्राप्नोति; निमित्तस्य झलादेर्विहितत्वात्। वृक्षेष्व्तयादादेत्त्वस्यावकाशः, अ()स्मश्च सति भूतपूर्वगत्याश्रयणस्यायुक्तत्वात्। तस्मात् तदनित्यम्। यच्चानित्यं तत् परस्य भावाभावमपेक्षत इति दुर्बलम्। विपर्ययात् तु नित्यं बलवत्। तेन वृक्षैरिति परमप्येत्त्वं न भवति। ऐस्भाव एव तु भवति। अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति लोकत एव दृष्टत्वात्। लोको हि प्रातरुत्थायान्तरङ्गाणि मुखप्रक्षालनादीनि कार्याणि करोति, पश्चद्बहिरङ्गाणि राजगृहगमनादीनि कार्याणि कर्त्तुमारभते। शास्त्रेऽप्येवं वेदितव्यम्। दिवि कामोऽस्य द्युकामः, तस्यापत्यम् "अत इञ्" ४।१।९५ द्यौकामिः। यद्यपि द्युकामशब्दादिञ् विहितः, तथापि "अकृतव्यूहाः पाणिनीयाः" (व्या।प।८४) कृतमपि शास्त्रं निवत्र्तयन्तीति,प्रविभ्जायन्वाख्याने दिव् काम इञिति स्थिते "दिव् उत्" ६।१।१२७ इत्युत्त्वे कृते यणादेशः प्राप्नोति, "तद्धितेष्वचामादेः" (७।२।११७) इति परत्वात् वृद्धिः प्राप्नोति? अन्तरङ्गत्वाद्यणादेशः पूर्वो विधिः क्रियते, पश्चाद्()वृद्धिरुकारस्य। अन्तरङ्गत्वन्तु यणादेशस्य

वर्णाश्रयत्वात्। वृद्धेस्तु बाह्नतद्धिताश्रयाद्बहिरङ्गत्वम्। "वार्णादाङ्गं बलीयः" (व्या।प।३९) इत्येतदिह न प्रवर्तते; व्याश्रयत्वात्। "अप्रवृत्तौ" इत्यादि। यदा "आकृतिः पदार्थः"इत्येष पक्ष, तदाऽन्यत्र कृतार्थत्वाच्छास्त्रयोर्विप्रतिषेधे सति परस्परप्रतिबन्धादप्रवृत्तिरेव प्राप्नोति; यथा-- यदिह द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति, तौ च युगपत् प्रेषयतः, नानादिक्षु तयोः कार्ये भवतः। ततो यद्यसावविरोधार्थी भवति तदोभयोरपि कार्ये न प्रवर्तते। द्रव्ये पदार्थे तु प्रतिव्यक्ति लक्षणं प्रवत्र्त इत्यकृतार्थत्वल्लक्षणयोः पर्यायेण प्रवृत्तिः प्राप्नोति, यथा-- ब्राआह्णक्षत्रियादीनामसहभुजामेकस्मिन् भाजने भुजक्रियायां पर्यायः स्यात्। तत्र जातौ पदार्थे कृतार्थत्वाद्()वृत्तौ प्राप्तयां विध्यर्थमिदमारभ्यते-- विप्रतिषेधे सति परं कार्यं भवतीति। तत्र कृते यदि पूर्वमपि प्राप्नोति, तदपि भवत्येव। तत्रेदमुच्यते-- पुनः प्रसङ्गविज्ञानात् सिद्धमिति। व्यक्तौ तु पदार्थेऽकृतार्थत्वात् शास्त्रयोः पर्यायेण प्रवृत्तौ प्राप्तयां नियमार्थमिदम्-- विप्रतिषेधे परमेव भवति न पूर्वमिति। तत्रेदमुच्यते-- "सकृद्()गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (व्या।प।४०) इति।

बाल-मनोरमा

विप्रतिषेधे परं कार्यम् १७४, १।४।२

ननु परत्वाद्रेफलोप एव स्यादिति शङ्कितुमाह--विप्रतिषेधे। विप्रतिपूर्वात्सेधतेर्घञि उपसर्गवशात्परस्परविरोधे विप्रतिषेधशब्दः। विरोधश्च तुल्यबलयोरेव लोकसिद्धः। नहि मशकसिंहयोर्विरोध इत्यस्ति। तदाह--तुल्यबलेति। द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र लक्ष्ये युगपत्सम्भवस्तुल्यबलविरोधः। कार्यस्य परत्वञ्च-परसास्त्रविहितत्वमेव। इति लोपे च प्राप्त इति। "हशि चे"त्यस्यावकाशः-शिवो वन्द्य इति। रेफलोपस्यावकाशः-पुना रमते इति। तत्र हि रोरित्युकारानुबन्धग्रहणाद्धसिचेत्यप्रसक्तम्। ततश्च तयोस्तुल्यबलयोः उत्वरेफलोपयोर्मनोरथ इत्यत्र युगपत्सम्भवादन्यतरस्मिन् बाधनीये सति परत्वादुत्वं बाधित्वा रेफलोपे प्राप्ते इत्यर्थः।

तामिमां रेफलोपशङ्कां परिहरति-पूर्वत्रेति। अत्र रेफलोपस्यासिद्धत्वादित्यनुक्त्वा रो रीत्यस्यासिद्धत्वादिति ब्राउवन् पूर्वत्रासिद्धमित्य्तर शास्त्रासिद्धत्वमेवाभ्युपैति, नतु कार्यासिद्धत्वम्। तथा सति हि अतिदेशस्यारोपरूपत्वादऽसिद्धत्वोरोपान्निरधिष्ठानारोपाऽसम्भवेन सूत्रोदाहरणसम्पत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात्त्रैपादिके कार्ये जाते तत्राऽभावप्रतियोगित्वारोपेऽपि देवदत्तस्य न पुनरुन्मज्जनमिति न्यायेन स्थानीबूतरोरभावाद्धशि चेत्यस्य प्राप्तिर्न स्यात्। शास्त्राऽसिद्धत्वे तु यद्यत्रैपादिकं शास्त्रं प्रवृत्त्युन्मुखं तत्त्चास्त्र एवासिद्धत्वारोपात्पूर्वशास्त्रप्रतिबन्धकस्य परशास्त्रस्य उच्छेदबुद्धौ सत्यां "विप्रतिषेधे परं कार्य"मिति न प्रवर्तते। तदुक्तं--"पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये"ति ततश्च स्थानिनो निवृत्त्यभावात्पूर्वशास्त्रप्रवृत्तिर्निर्बाधा। एतच्च पूर्वत्रासिद्धमित्यत्र, अचः परस्मिन्नित्यत्र, षत्वतुकोरसिद्ध इत्यत्र च भाष्ये स्पष्टम्। न च तौ सदित्यादिनिर्देशाद्देवदत्तहन्तृन्यायो न सार्वत्रिक इति वाच्यं, "हते सति देवदत्ते तद्धन्तरि हतेऽपि देवदत्तस्य न पुनरुन्मेषः। हन्तृहन्तरि हतत्वारोपे तु सुतरां नोन्मेषः। देवदत्तं हन्तुमुद्युक्तस्य हनने तु देवदत्तस्य जीवनमस्त्येवे"ति न्यायशरीरम्। तावित्यादौ च वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रम्। न तु हननस्थानीया लक्ष्ये कार्यप्रवृत्तिरावश्यकी। ततस्च प्रवृत्तस्य रेफलोपस्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेन रोरुन्मेषा।ञभावादुत्वं न भवतीति शब्दरत्ने प्रपञ्चितम्। न च उत्वकार्यासिद्धत्वपक्षे।ञपि मनोरथसिद्धिरस्त्येव, दर्शनाऽभावरूपरेफलोपस्याभावरूपा।ञसिद्धत्व सति रोरुन्मेषावश्यकत्वात्, अभावाभावस्य प्रतियोगिरूपत्वादिति वाच्यं, एवमपि कार्यासिद्धत्वे अमू अमी इत्याद्यसिद्धेः। यता चैतत्तथा अदस्()शब्दनिरूपणावसरे प्रपञ्चयिष्यते।

तत्त्व-बोधिनी

विप्रतिषेधे परं कार्यम् १४४, १।४।२

विप्रतिषेधे। विप्रतिपूर्वात् "षिधू शास्त्रे माङ्गल्ये च"षिधं गत्या"मित्यस्माद्वा धातोर्घञ्। "उपसर्गात्सुनोती"ति षत्वम्। उपसर्गवशाच्च विरोधार्थकत्वम्। कार्यमिति। "अर्हे कृत्यतृचश्चे"त्यर्हार्थे कृत्यप्रत्ययः। तेन तुल्यबलविरोध इति पर्यवसानादतुल्यबलेषूत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गविधिषु नेदं प्रवर्तते। नह्रपवादादीनां संनिधावुत्सर्गादीनां कृत्यर्हत्वं, तैर्बाधितत्वात्। तत्र नित्यमावश्यकत्वाद्बाधकम्, अन्तरङ्गं तु लाघवात्, अपवादस्तु वचनप्रामाण्यात्। तद्भिन्नस्तु प्रकृतसूत्रस्य विषयः। अतएव "परनित्यान्तरङ्गपवादानामुत्तरोत्तरं बलीयः" इत्युक्तम्। यद्यतुल्यबलेप्वपि परमेव स्यात्तन्नोपपद्येताऽतो व्याचष्टे-तुल्यबलविरोध इति। जातौ पदार्थे विध्यर्थमिदं सूत्रम्। "वृक्षेषु" "वृक्षाभ्यां" मित्यत्र हि लब्धावकासयोरेत्वदीर्घत्वशास्त्रयोर्वृक्षेभ्य इत्यत्र युगपत्प्रसङ्गे विनिगमकाऽभावादप्रतिपत्तिरेव स्यात्। तदुक्तम्-"अप्रतिपत्तिर्वा उभयोस्तुल्यबलत्वा"दिति। तत्रास्माद्वचनात्परस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवति, यथा "भिन्धकी"त्यत्र परत्वाद्भिभावे कृतेऽ[प्य]कच्। तदुच्यते-"पुनः प्रसङ्गविज्ञानात्सिद्ध"मिति। ब्यक्तौ तु पदार्थे तत्तव्द्यक्तिविषययोर्लक्षणयोरन्यत्र चरितार्थत्वाऽसम्भवात्तव्यानीयरामिव पर्यायेण प्रवृत्तौ नियमार्थमिदं सूत्रं "विप्रतिषेधे परमेव स्यान्न तु पूर्व"मिति। एतल्लक्षणारम्भाच्च तत्र तत्र पूर्वस्यानारम्भोऽनुमीयते। तथाच "जुहुतात्त्व"मित्यत्र परत्वात्तातङि कृते स्थानिवद्भावेन "हुझल्भ्यः"-इति धित्वं न भवति। तदुच्यते-"सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे "ति। लक्ष्यानुरोधाव्द्यवस्थाप्यमेतद्द्वयमपि। तत्र विधिपक्षे तूत्वे रेफलोपे वा प्राप्ते इति पाठ()म्। नियमार्थमिति पक्षे "परमेव कार्यं स्या"दित्येवकारोऽध्याहर्तव्यो वृत्तौ। उत्वमेवेति। सिद्धासिद्धयोरतुल्यबलत्वेन "विप्रतिषेधे पर"मित्यस्याऽप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः। तदुक्तम्--"पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये"ति। एतेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे" इति वक्ष्यमाणग्रन्थो व्याख्यात।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यू ६ स्त्र्याख्यौ १।२ ६ नदी १।१ ६

काशिका-वृत्तिः
यू स्त्र्याख्यौ नदी १।४।३

ई च ऊ च यू। अविभक्तिको निर्देशः। स्त्रियम् आचक्षते स्त्र्याख्यौ। मूलविभुजादिदर्शनात् कप्रत्ययः। ईकारान्तम् ऊकरान्तं च स्त्र्याख्यं शब्दरूपं नदीसंज्ञं भवति। ईकरान्तम् कुमारी। गौरी। लक्ष्मीः। शार्ङ्गरवी। ऊकारान्तम् ब्रह्मवन्धूः। यवागूः। यू इति किम्? मात्रे। दुहित्रे। स्त्र्याख्यौ इति किम्? ग्रामणीः। सेनानीः। खलपूः। आख्याग्रहणं किम्? शब्दार्थे स्त्रीत्व एव यथा स्यात्, पदान्तराख्ये मा भूत्, ग्रामन्ये स्त्रियै। खलप्वे स्त्रियै। नदीप्रदेशाः आण्नद्याः ७।३।११२ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
यू स्त्र्याख्यौ नदी १९५, १।४।३

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। (प्रथमलिङ्गग्रहणं च)। पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः॥
न्यासः
यू स्त्र्याख्यौ नदी। , १।४।३

"ई च ऊ च यू" इति। ननु च "दीर्घाज्जसि च" ६।१।१०१ इति प्रथमयोः पूर्वसवर्णदीर्घत्वे प्रतिषिद्धे यणादेशे सति य्वाविति

भवितव्यम्। तत्कथं "यू" इति निर्देश इत्यत आह-- " अविभक्तिकोऽयं निर्देशः" इति। "सुपां सुलुक्" ७।१।३९ इति विभक्तिर्लुप्तत्वात्। नास्माद्विभक्तिर्विद्यत इत्यविभक्तिकः। "स्त्रियमाचक्षाते स्त्र्याख्यौ" इति। ननु च "कर्मण्यण्" ३।२।१ इत्यणि कृते "आतो युक् चिण्कृतोः" ७।३।३३ इति युकि च स्त्र्याख्यायाविति भवितव्यम्, तत्कथं स्त्र्याख्याविति? "आतोऽनुपसर्गे कः" ३।२।३ इति कप्रत्यये कृत एतद्रूपमिति चेत्, न; चक्षिङोऽत्र सोपसरग्त्वादित्यत आह-- "मुलविभुजादिदर्शनात्" इति। मूलविभुजादिष्वपि कप्रत्यय इष्यते। तथा च वक्ष्यति तृतीयेऽध्याये कप्रकरणे-- "मूलविभुजादिभ्य उपसंख्यानम्" (वा।२३२) इति। तेन "स्त्र्याख्यौ" इति शब्दस्य मूलविभुजादिषु दर्शनात् कप्रत्ययः। इहेदूतोरेवेयं संज्ञा विधीयते? तदन्तयोर्वा? तत्र यद्याद्यः पक्ष आश्रीयेत, कृत्स्त्रियां न स्यात्-- हे लक्ष्मि, हे यवाग्विति; समुदायौ ह्यत्र स्त्र्याख्यौ, न त्वीदूताविति। इममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह -- "ईकारान्तमूकारान्तम्" इत्यादि। ननु च "सुप्तिङन्तं पदम्"१।४।१४ इत्यत्रान्तग्रहणादन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न लभ्यते, नैष दोषः; यदयम् "नेयङवङस्थानौ" १।४।४ इति प्रतिषेधं शास्ति; तज्ज्ञापयति-- भवतीह प्रकरणे तदन्तविधिरिति ; अन्यथा प्रतिषेधोऽनर्थकः स्यात्। न हीकारोकारमात्रं स्त्र्याख्यामियङस्थानमस्ति,किं तर्हि? तदन्तम्। "कुमारी" इति। "वयसि प्रथमे" ४।१।२० इति ङीष्। "गौरी" इति। "षिद्गौरादिभ्यश्च" (४।१।४१ इति ङीष्। "शार्ङरवी" इति। "शार्ङरवाद्यञो ङीन्" ४।१।७३। "लक्ष्मीः" इति। "लक्ष दर्शनाङ्कयोः" (धा।पा।१५३८) "अवितृस्तृतन्त्रिभ्य ईः" (द।उ।१।८२) इत्यनुवर्त्तमाने "लक्षेर्मुट् च" (द।उ।१।८४) चकारादीकारश्च। "ब्राह्मबन्धूः" इति। "ऊङुतः" ४।१।६६ इत्यूङ्प्रत्ययः। ङकारः "नोङधात्वोः" ६।१।१६९ इति विशेषणार्थः। "यवागूः" इति। "यू मिश्रणे" (धा।प।#आ१०३३) "सुयूवचिभ्योऽन्युजागूजक्()नुच्" (द।उ।१०।४) इत्यागूच्()प्रत्ययः। रूपोदाहरणान्येतानि।कार्यं तु "अम्बार्थनद्योह्र्यस्वः"७।३।१०७ इत्येवमादि। "मात्रे, दुहित्रे" इत्यत्र नदीसंज्ञाया अभावात् "आण् नद्याः" ७।३।११२ इत्याण् न भवति। "ग्रामणीः, खलपूः" इति। पंस्येतौ वत्र्तेते। तेन नतीसंज्ञाया अभावात् "अम्बार्थनद्योह्र्यस्वः" ७।३।१०७ इति ह्रस्वो न भवति। ग्रामं नयतीति "सत्सूद्विष" ३।२।६१ इत्यादिना क्विप्। "अग्रग्रामाभ्याञ्च" (का।वा।५०६४) इति णत्वम्। खलं पुनातीति "अन्यभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्। "ग्रामण्ये स्त्रियै" इति। "एरनेकाचोऽसंयोगपूर्वस्य" ६।४।८२ इति यणाअदेशः। "खलप्वे स्त्रियै"। अत्रापि ओः सुपि" ६।४।८३ इति। अत्र स्त्रीशब्देन पदान्तरेण स्त्रीत्वं द्योत्यत इति नदीसंज्ञा न भवति, तेनाण्न भवति। इष्वशनिप्रभृतीनां तूभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति भवत्येव नदीसंज्ञा-- इष्वै, अशन्या इति। यदि पदान्तरद्योत्ये स्त्रीत्वे नदीसंज्ञा न भवति, इह पट्वै स्त्रिया इति पटुशब्दस्य पुरुषेऽपि दृष्टत्वात् पदान्तरद्योत्यमत्र स्त्रीत्वमिति नदीसंज्ञा न स्यात्, नैतदस्ति; पदान्तरं हि दविविधम्- क्वचित्सामान्येन प्रवृत्तिमाशङ्कमानस्य शब्दस्य सामान्यस्याभिधेयान्तरं व्यवच्छिन्नत्ति, यथा-- गोशब्दस्य गवादिषु गौर्वागिति; क्वचित् प्रवृत्तिमेव करोति , यथा-- वाहीकादौ गौर्वादीक इति। अत्र यत् सामान्यस्य शब्दस्य पट्वादेः पदान्तरसम्बन्धेन विशेषेऽवस्थानं तत् पदेऽन्तर्भूतमेवेत्याख्याग्रहणेन नापनीयते। ग्रामणीशब्दस्य तु स्त्रीत्वप्रवृत्तिः पदान्तरेण क्रियते,न तु व्यवच्छिद्यते। तेनासावाख्याग्रहणेनापसार्यते। एतयोस्तु क्रियाशब्दत्वेन रूढा पुंसिमुख्या वृत्ति। पटुशब्दस्य पाटवोपादयिनः परत्र मुख्येऽपीत्यस्ति भेदः।

बाल-मनोरमा

यू स्त्र्याख्यौ नदी २६४, १।४।३

हे बहुश्रेयसी सिति स्थिते नदीकार्यं वक्ष्यन्नदीसंज्ञामाह--यूस्त्र्याख्यौ नदी। ईश्चौउश्च यू। पूर्वसवर्णदीर्घः। "दीर्घाज्जसि चे"ति निषेधाऽभावश्छान्दसः। व्याख्यानाद्दीर्घयोरेव ग्रहणम्। स्त्रियमाचक्षाते स्त्र्याख्यौ। शब्दावित्यर्थाल्लभ्यते। "यू" इतितद्विशेषणं, ततस्तदन्तविधिः। "स्त्रिया"मित्येव सिद्धे "आख्या"ग्रहणं नित्यस्त्रीलिङ्गलाभार्थम्। द्वित्वे नदीत्येकवचनं छान्दसम्। तदाह--इदूदन्तावित्यादिना। यू किम्?। मात्रे। "आण्नद्याः" इति न भवति। स्त्रीलिङ्गाविति किम्?। वातप्रम्ये। नित्येति किम्()। ग्रामण्ये।

ननु प्रकृते बहुश्रेयसीशब्दस्य पुंलिङ्गत्वात्कथं नदीसंज्ञेत्यत आह--प्रथमलिङ्गग्रहणं चेति। वार्तिकमेतत्। प्रथमस्य=समासादिवृत्तिप्रवृत्तेः पूर्वं प्रवृत्तस्य, स्त्रीलिङ्गस्य "यूस्त्र्याख्यौ" इत्यत्र ग्रहणं कर्तव्यमित्यर्थः। नन्वेवं सति समासादिवृत्त्यभावे गौर्यादिशब्दानां नदीत्वं न स्यादित्याशङ्क्य अपिशब्दमध्याहृत्य व्याचष्टे--पूर्वमित्यादिना। समासादिवृत्तिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतः वृत्तिदशायामुपसर्जनतया स्त्रीलिङ्गत्वाऽभावेऽपी नदीत्वं वक्तव्यमिति वार्तिकार्थ इति भावः। अम्बार्थनद्योर्ह्रस्वः।

तत्त्व-बोधिनी

यू स्त्र्याख्यौ नदी २२६, १।४।३

यू स्त्र्याख्यौ। ई()आ ऊश्च यू। व्याख्यानाद्दीर्घयोरेव ग्रहणम्। अविभक्तिकोऽयं निर्देश इत्येके। "दीर्घाज्जसि चे"ति निषेधस्य "वा छन्दासी"ति पाक्षिकत्वात् "पर्थमयोः पूर्वसवर्णः"इति दीर्घ इत्यन्ये इह"प्रत्ययस्यैव ग्रहण"मिति परिभाषा नोपतिष्ठते। नेयङुवङ्स्थानावस्त्री" ति निषेधाल्लिङ्गात्। तेन "प्रध्यै""प्रध्य"इत्यादौ नदीकार्यं स्यादेव। स्त्रियमाचक्षाते स्त्र्याख्यौ। मूलविभुजादित्वात्काः। "चक्षिङः ख्यात्र्"। "आतो लोप इटि चे"त्यालोपः। ईदुदन्तविति। इह "वर्णयोरेव संज्ञे"त्यपि पक्षोऽस्ति। "आच्छीनद्योः--"इति सूत्रस्वरसात्। तयोः स्त्र्याख्यत्वं तु ङ्यादिषु स्वतः, तन्त्रीर्लक्ष्मिरित्यादौ तु स्त्रीवाचकवर्णसमुदाये घटकत्वेन प्रवेशात्। तेन नद्यन्तादिव्यवहारो न विरुध्यते। एवं "शेषो ध्यसखी"त्यत्रापि "इवर्णोवर्णयोरेव घिसंज्ञे"ति पक्षोऽप्यस्तीति बोध्यम्। तेन "ध्यन्ताजाद्यन्तयोघ्र्यन्तं पर"मिति व्यवहारः सङ्गच्छेते। वर्णसंज्ञापक्षे "असखी"त्यस्य सखिभिन्नस्ययव इत्यर्थो न तु "सकिशब्दावयवं वर्जयित्वे"ति। तेन समुदायस्य सखिशब्दभिन्नत्वादितिसखिनोत्यादि निर्बाधमित्यवधेयम्।

"स्त्रिया"मित्येव वक्तव्ये आख्याग्रहणं नित्यस्त्रीत्वलाभार्थमित्याशयनाह-नित्यस्त्रीलिङ्गाविति। यू किम्()।, मात्रे। स्त्र्याख्याविति किम्(), ग्रामण्येष पूर्वमिति। वृत्तेः प्रागित्यर्थः। संज्ञायां यथोद्देशपर्वृत्तौ न्यायसिद्धमिदं, कार्यकालपक्षे तु वाचमिकमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० ६ इयङुवङ्स्थानौ १।२ ६ अस्त्री १।१ ६ यू ३ स्त्र्याख्यौ १।२ ३ नदी १।१ ३

काशिका-वृत्तिः

नैयङुवङ्स्थानावस्त्री १।४।४

पूर्वणातिप्रसक्ता नदीसंज्ञा प्रतिषिध्यते। स्थितिः स्थानम्। इयङुवङोः इति इयङुवङ्स्थानौ, तौ यू नदीसंज्ञौ न भवतः, स्त्रीशब्दम् वर्जयित्वा। हे श्रीः। हे भ्रूः। अस्त्री इति किम्? हे स्त्रि।

लघु-सिद्धान्त-कौमुदी

नेयङुवङ्स्थानावस्त्री २३०, १।४।४

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री। हे श्रीः। श्रियै, श्रिये। श्रियाः, श्रियः॥

न्यासः

नेयङुवङ्स्थानावस्त्री। , १।४।४

"इयङुवङस्थानौ यौ यू तौ नदीसंज्ञकौ न भवतः" इति। यूद्वारेण य्वन्तस्यायं प्रतिषेधो विज्ञायते, न केवलयोः; प्राप्त्यभावात्। न हि यू केवलावियङुस्तानौ स्त्र्याख्यौ विद्येते। "हि श्रीः, हे भ्रूः" इति। अत्र नदीसंज्ञाया अभावात् तन्निबन्धनः "अ म्बार्थनद्योह्रयस्वः" ७।३।१०७ इति ह्रस्वो न भवति। "श्रिञ् सेवायाम्" (धा।पा।८९७) "क्विब्वचिप्रच्छिश्रिरुआउद्रुप्रुज्वां दीर्घौऽसम्प्रासारणञ्च"(वा। २८८) इति क्विपि दीर्घत्वे कृते श्रीरिति भवति। "भ्रमु अनवस्थाने" (धा।पा।१२०५) इत्यस्मात् "भ्रमेर्डूः" (द।उ।१।१७७) इति डूप्रत्यये टिलोपे भ्रुरिति भवति। उभयोः "अचि श्नुधातु" ६।४।७७ इत्यादिनेयङुवङोर्विधानादियङुवङस्थानौ यू भवतः। "हे स्त्रि" इति। "ष्ट()ऐ स्त्यै शब्दसंधातयोः" (धा।पा।९११,९१०)। "आदेच उपदेशेऽशितित ६।१।४४ इत्यात्त्वम्; स्त्यायतेर्ड्रट, "टेः"६।४।१५५ इति टिभागलोपः; "लोपो व्योर्वलि" ६।१।६४ इति वाकरस्य लोपः, "टिट्ढा" ४।१।१५ इत्यादिना ङीप्। अत्र नदीसंज्ञायाः प्रतिषेधाभावात् ह्रस्वत्वं भवत्येव। स्त्रीशब्दस्य "स्त्रियाः" ६।४।७९ इतीयङविधानादियङस्थान ईकारः। अथ स्थानग्रहणं किमर्थम्? इयङुवङस्थानयोः प्रतिषेधो यथा स्यादिति चेत्? न; यद्येतत् प्रयोजनमभिमतं स्यात् "इयङुवङोः" इत्येवं वाच्यम्। एवमप्ययमेवार्थः--- ईयङुवङोः सम्बन्धौ यौ यू तयोर्नदीसंज्ञा न भवतीति। कौ च तयोः सम्बन्धिनौ यू? यौ तयोः प्रकृतिभुतावियङुवङरस्थानाविति, अन्तरेणापि स्थानग्रहणमियङुवङस्थानयोः प्रतिषेधो विज्ञास्यते। इदं तर्हि स्थानग्रहणस्य प्रयोजनम्-- यत्रेयङ्वङोः स्थितिरभिनिवृत्तिस्तत्र प्रतिषेधो यथा स्यात्। यत्र त्वपवादेन तयोर्बाधस्तत्र मा भूदिति-- आध्यै, वर्षाभ्वै इति। "ध्यै चिन्तायाम्" (धा।पा।९०८) "अन्यभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्; सम्प्रसारणञ्च। सम्प्रसारणन्तु दृशिग्रहणाल्लभ्यते। तथा हि तत्रैव दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्। क्वचिद्दीर्घः, क्वचिद्द्विर्वचनमित्युक्त्वा "ध्यायतेः सम्प्रसारणञ्च" (वा।२९२) इति वक्ष्यति। कृतसम्प्रसारणस्यैव चतुर्थ्येकवचने "एरनेकाचः" ६।४।८२ इत्यादिना यणादेशः। वर्षाभूशब्दस्यापि "वर्षाभ्वश्च" ६।४।८४ इति।

बाल-मनोरमा

नेयङुवङ्स्थानावस्त्री ३०१, १।४।४

नेयङुवङ्स्थानावित्यतोऽस्त्रीत्यस्यानुवृत्तिर्वक्तव्या। ततश्च इयङुवङ्स्थानाविति यत्रान्वेति तत्रैव तत्संबद्धस्याऽस्त्रीत्यस्यानुवृत्तिरुचिता। एवं च ह्रस्वादिवाक्ये इयङुवङ्स्थानावित्यस्याऽनुवृत्त्यभावादस्त्रीत्यस्यापि तत्र नानुवृत्तिरिति भावः। अतिस्त्रियै इति। नदीत्वपक्षे आट् वृद्धिः। अतिस्त्रये इति। नदीत्वाऽभावे घित्वात् "घेर्ङिती"ति गुणेऽयादेशः। अतिस्त्रियाः अतिस्त्रेरिति। नदीत्वे आट्। तदभावे गुणः। "ङसिङसोश्चे"ति पूर्वरूपम्। अतिस्त्रियामिति। नदीत्वपक्षे ङेराम्, आट्। अतिस्त्राविति। नदीत्वाऽभावपक्षे "अच्च घेः"। श्रीरिति। श्रयन्त्येतामिति श्रीः। "क्विब्बचिप्रच्छिश्रिस्नुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं चे"ति क्विप्, प्रकृतेदीर्घश्च। श्री शब्दात्सुः। अङ्यन्तत्वान्न सुलोपः। श्रियौ श्रिय इति। "दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घनिषेधौ "इको यणची"ति यणि प्राप्ते धात्वयवेवर्णान्तत्वादचि श्नुधात्विवितीयङ्। एकाच्त्वात्संयोगपूर्वकत्वाच्च यण् न। "यू स्त्र्याख्यौ" इति नदीत्वात् "अम्बार्थे"ति ह्रस्वेप्राप्ते--नेयङुवङ्। "यू स्त्र्याख्यौ नदी" इत्यतो "यू" "नदी"त्यनुवर्तते। "स्थान" शब्दो भावे ल्युडन्तः। इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः। इयङुवङ्योग्याविति यावत्। तदाह--इयङुवङोरित्यादिना। हे श्रीरिति। अजादाबियङ्योग्यत्वान्नदीत्वनिषेधादम्बार्थनद्यौ"रिति ह्रस्वो नेति भावः। श्रियमिति। अमि पूर्वरूपं बाधित्वा इयङ्। श्रियौ श्रिय इति। औट्शसोः पूर्ववत्। टा-श्रिया। श्रियै इति। "ङिति ह्रस्वश्चे"ति ङिति नदीत्वपक्षे आट्, वृद्धिः। श्रिये इति। नदीत्वाऽभावे इयङ्। श्रिया इति। ङसिङसोर्नदीत्वे आट्, वृद्धिः। श्रिय इति। नदीत्वाऽभावपक्षे इयङेव। ङित्वाऽभावादामि "ङिति ह्रस्वश्चे"ति अप्राप्ते।

तत्त्व-बोधिनी

नेयङ्वङ्?स्थानावस्त्री २६३, १।४।४

नेयङ्वङ्स्तानावस्त्री। तिष्ठतो ययोरिति "स्थानौ"। अधिकरणे ल्युट्। इयङुवङोः स्थानाविति षष्ठीसमासः। तथाच फलितार्थमाह---इयङुवङोः स्थितिर्ययोरिति। स्थानग्रहणं किम्? प्रकृष्टा धीः--प्रधीः। हे प्रधि!। अत्र "एरनेकाच" इति यणा इयङो बादानान्नेयङ्वङ्स्थानाविति निषेधो न प्रवर्तते। "यत्रेयङुवङौ निष्पद्येते तत्रैव नदीसंज्ञाया निषेधः। यत्र त्वपवादेन बाध्यते तत्र न निषेध"इत्येतदर्थं हि "स्थान"ग्रहणं कृतम्। अन्यथा "नेयङ्वङा"रित्येव ब्राऊयात्। "इवङुवङोनिमित्तभूतौ यू नदीसंज्ञकौ ने "त्यर्थलाभात्। अस्त्रीति किम्? हे स्त्री।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वा ० ६ आमि ७।१ न ० ४ इयङुवङ्स्थानौ १।२ ४ अस्त्री १।१ ४ यू ३ स्त्र्याख्यौ १।२ ३ नदी १।१ ३

काशिका-वृत्तिः

व आमि १।४।५

पूर्वेण नित्ये प्रतिषेधे प्राप्ते आमि विकल्पः क्रियते। इयङुवङ्स्थानौ यू आमि परतो वा नदीसंज्ञौ न भवतः। श्रियाम्, श्रीणाम्। भ्रुवाम्, भ्रूणाम्। अस्त्री इत्येव, स्त्रिणाम्।

लघु-सिद्धान्त-कौमुदी

वामि २३१, १।४।५

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री। श्रीणाम्, श्रियाम्। श्रियि, श्रियाम्॥ धेनुर्मतिवत्॥

न्यासः

वाऽऽमि। , १।४।५

संहितासाम्येऽपि षष्ठीबहुवचनस्यामो ग्रहणम्, न तु द्वितीयैकवचनस्य; तत्र नदीसंज्ञाकार्याभावात्। नापि सप्तम्यादेशस्यामो ग्रहणम्; तस्य नदीसंज्ञोत्तरकालं "ङेराम्नद्याम्नीभ्यः" ७।३।११६ इत्याम्विधानात्। "श्रीणात्र" इति। नदीसंज्ञापक्षे "ह्रस्वनद्यापो नुट्" ७।१।५४ इति नुट्। इह स्त्र्याख्यादिति वत्र्तते, विभक्तिसम्बन्धेन चेयं नदीसंज्ञा विधीयत इति विभक्तिसम्बन्धिन एव शब्दरूपस्य स्त्र्याख्यस्य नदीसंज्ञा युक्ता, तेन यत्रावयवस्त्र्याख्यः, तत्र नदीसंज्ञा न भवति--अतिश्रियां ब्राआह्र्णानाम्, अतिभ्रुवां ब्राआह्र्णानामिति॥

बाल-मनोरमा

वामि ३०२, १।४।५

वाऽऽमि। "यूस्त्र्याख्यौ नदी"त्यनुवर्तते। "नेयङ्वङ्स्थानावस्त्री"ति नञ्वर्जनमनुवर्तते। वा आमीति च्छेदः। अमि नदीकार्याऽभावात्। तदाह--इयङुवङ्स्थानावित्यादिना। श्रीणामिति। नदीत्वपक्षे "ह्रस्वनद्यापः" इति नुट्। श्रियामिति। नदीत्वाऽभावे तु इयङेव। श्रियोः श्रीषु। प्रधीशब्दस्य त्विति। प्रध्यायतीत्यर्थे "ध्यायतेः संप्रसारणं चे"ति क्विपि यकारस्य संप्रसारणे इकारे "संप्रसारणाच्चे"ति पूर्वरूपे "हलः" इति दीर्घे निष्पन्नस्य प्रधीशब्दस्य वृत्तिकारहरदत्तादिमते

लक्ष्मीवद्रूपाणि। तत्र "एरनेकाचः" इति यणा इयङो बाधितत्वेन इयङ्स्थानत्वाऽभावान्नेयङुवङ्स्थानौ" इति नदीत्वनिषेधाऽभावा "यू स्त्र्याख्यौ" इति नित्यनदीत्वे सति "अम्बार्थे"त्यादिनदीकार्यप्रवृत्तेरिति भावः। तत्र अमि शसि च पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यणेवेति विशेषः। ननु प्रध्यायतेः क्विपि निष्पन्नस्य प्रधीशब्दस्य प्रकर्षेण ध्यातृत्वप्रवृत्तिनिमित्तकस्य लिङ्गत्रयसाधारणत्वान्नित्यस्त्रीलिङ्गत्वाऽभावान्नदीत्वाऽभावात्कथं नदीकार्याणीत्यत आह--पदान्तरं विनापीति। पदान्तरसमभिव्याहाराऽभावेऽपि यः शब्दः स्त्रीरूपार्थबोधकः सः नित्यस्त्रीलिङ्ग इति विवक्षितः। अत एव ब्राआहृण्यामाधीशब्दस्य आध्यै इति रूपमास्थितं भाष्ये "स्त्रियामेव यो वर्तते स एव नित्यस्त्रीलिङ्ग" इत्यभ्युपगमे तु तदसङ्गतिः स्पष्टैव, आधीशब्दस्य क्रियाशब्दतया त्रिलिङ्गत्वात्। अतः पदान्तरं विनापि स्त्रियां वर्तमानत्वमेव नित्यस्त्रीत्वम्। इदं तु प्रधीशब्दस्य आध्यै इति रूपमास्थितं भाष्ये। "स्त्रियामेव यो वर्तते स एव नित्यस्त्रीलिङ्गः" इत्यभ्युपगमे तु तदसङ्गतिः स्पष्टैव, आधीशब्दस्य क्रियाशब्दतया त्रिलिङ्गत्वात्। अतः पदान्तरं विनापि स्त्रियां वर्तमानत्वमेव नित्यस्त्रीत्वम्। इदं तु प्रधीशब्दस्य संभवत्येव, प्रकर्षेण ध्यातृत्वं निमित्तीकृत्य स्त्रियां वृत्तिसम्भवात्। परन्तु प्रधीरित्युक्ते पुंसः स्त्रियाश्च प्रतीतिप्रसक्तावन्यतरव्यवच्छेदाय "ब्राआहृणः" "ब्राआहृणी"त्यादिपदान्तरसमभिव्याहारापेक्षा। नैतावतास्य पदान्तरसमभिव्याहाराऽभावे स्त्रियां वृत्तिरपैति। अतः प्रधीशब्दस्य नित्यस्त्रीलिङ्गत्वान्नदीकार्यं निर्बाधमिति भावः। लिङ्गान्तरेति। "स्त्रीलिङ्गान्यलिङ्गानभिधायकत्वमेव नित्यस्त्रीत्व"मिति कैयटमतम्। "स्त्रीविषायावेव यौ यू तयोरेव नदीसंज्ञे"ति "यू स्त्र्याख्यौ" इत्यत्र भाष्यादिति तदाशयः।

पुंवद्रूपमिति। उदाहृतप्रधीशब्दस्य त्रिलिङ्गतया नित्यस्त्रीत्वाऽभावात्पुंसीव स्त्रियामपि अनदीत्वादिति भावः। प्रकृष्टेति। प्रकृष्टा धीरिति विग्रहे प्रादिसमासे प्रधीशब्दस्य मतद्वयरीत्यापि नित्यस्त्रीलिङ्गत्वाल्लक्ष्मीवद्रूमित्यर्थः। अमि शसि चेति। प्रध्यायतीति, प्रकृष्टा धीरिति च विग्रहे प्रधीशब्दादमि शसि च पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा "एरनेकाचः" इति यणित्येतावान्विशेषो लक्ष्मीशब्दापेक्षयेत्यर्थः। कैयटमते ब्राआहृण्याम् "आध्यै" इति भाष्यप्रयोगस्तु बहुव्रीह्रभिप्रायेण नेयः। अत एव भाष्यात् "नद्यृतश्च" इति कप् नेत्याहुः। सुष्ठि धीर्स्या इति। सुष्ठुधीर्यस्या इति, सुष्ठु ध्यायतीति उभयविधविग्रहेऽपि पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वृत्तिकारादिमते सुधीशब्दस्य नित्यस्त्रीलिङ्गत्वेन "नेयङुवङ्स्थानौ" इति नदीत्वनिषेधा "ङ्किति ह्रस्वश्चे"ति "वामी"ति च श्रीशब्दवद्रूपाणि प्रत्येतव्यानि। "न भूसुधियो"रिति यण्निषेधे इयङ एव प्रवृत्तेरिति भावः। मतान्तरे तु पुंवदिति। "लिङ्गाऽन्तरनभिधाकत्वं नित्यस्त्रीत्व"मिति कैयटमते तु त्रिलिङ्गतया नदीत्वाऽभावात्पुंवदेव रूपमित्यर्थः। ननु सुधीशब्दे बहुव्रीहिप्रवृत्तेः प्राक् धीशब्दस्य नित्यस्त्रीलिङ्गत्वात् "प्रथमलिङ्गग्रहणं चे"ति नदीत्वं दुर्वारमिति चेत्, सत्यम्-यस्य वृत्तेः प्राक् नदीत्वं दृष्टं तस्योपसर्जनत्वेऽपि नदीत्वमतिदिश्यते। इह च वृत्तेः प्राक् धीशब्दस्य केवलस्य एकाच्त्वाद्यणभावे इयङयोग्यतया "नेयङुवङ्स्थानौ" इति नदीत्वनिषेधाद्वृत्तावपि न तदतिदेश इत्यास्तां तावत्। सुष्ठु धीरिति विग्रहे तु श्रीवदेवेति। मतद्वयेपि नित्यस्त्रीलिङ्गत्वादिति भावः। ग्रामणीः पुंवदिति। "स्त्रिया"मिति शेषः। ननु ग्रामं नयति नियमयतीति ग्रामणीशब्दस्य प्रधीशब्दवत्पदान्तरं विनापि स्त्रियां वर्तमानत्वान्नित्यस्त्रीलिङ्गत्वान्नदीकार्यसत्त्वात्पुंवदिति कथमित्यत आह--ग्रहनयनस्येति। ग्रामनयनस्य लोके उत्सर्गतः=सामान्यतः पुंधर्मतया=पुरुषकर्तव्यतया ब्राआहृणीत्यादिपदान्तरसमभिव्याहारं विना स्त्रीलिङ्गाप्रतीतेः वृत्तिकारादिमतेऽपि नित्यस्त्रीलिङ्गत्वाऽभावान्नदीत्वं नेत्यर्थः। एवमिति खलपवकनकटप्रवणादिक्रियाणामपि पुरुषकर्तव्यत्वमौत्सर्गिकं सामान्यतः सिद्धम्। अतः खलपूः कटप्ररित्यादिशब्दानामपि स्त्रियां वृत्तिकारादिमतेऽपि नित्यस्त्रीत्वं न। अतः पुंवदेव रूपमित्यर्थः। इति ईदन्ताः। अथ उदन्ताः। धेनुर्मतिवदिति। उकारस्य ओकारो गुणोऽवादेश इत्यादिविशेषस्तु सुगम इति भावः।

तत्त्व-बोधिनी

वामि २६५, १।४।५

वामि। "यू स्त्र्याख्यौ नदी" "नेयहुवङ्स्थानावस्त्री"त्यनुवर्तनादाह---इयङुवङ्स्थानावित्यादिना। यद्यपि "ने ति प्रकृतो निषेधोऽनेन विकल्प्यते तथापि निषेधविकल्पे विधिविकल्प एव फलतीति स एव सूत्रार्थ उचित इत्याशयेनाह---वा नदीसंज्ञौ स्त इति। "ङिति ह्यस्वश्चे"ति सूत्रेऽप्येवमेव। प्रधीशब्दस्य त्विति। "एरनेकाच"इचि यणा इयङो बाधनात् "नेयङुवङ्स्थाना"विति निषेधोऽत्र न प्रवर्तते। यत्र त्वपवादेनेयङुवङौ बाध्यते तत्र न निषेध इत्याशयेन व्याचष्टे---लक्ष्मीवद्रूपमिति। "अमि शसि च विशेषं "इत्यनुपदमेव वक्ष्यति। पुंवद्रूपमिति। अयं च मतभेदः "प्रकृष्टा धीर्यस्याः""प्रकर्षेण ध्यायती"ति वा विग्रहे बोध्यः। लक्ष्मीवदिति। "मतद्वयेऽपी"ति शेषः। सुष्ठु धीर्यस्या इति। नन्वस्मिन्विग्रहे कैयटमते सुधीशब्दस्य नित्यस्त्रीत्वाऽभावेऽपि धीशब्दस्य नित्यस्त्रीत्वा "त्प्रथमलिङ्गग्रहणं चे"ति सुधीशब्दः श्रीवदेव भवति, नतु पुंवदिति चेदत्राहुः----"नेयङुवङ्स्थानावस्त्री"ति धीशब्दे नदीसंज्ञानिषेधात्सुधीशब्दे "प्रथमलिङ्गग्रहणं चे"त्यस्याऽप्रवृत्तिः, तथा "वृत्तिमते"इति ग्रन्थः स्वरसत सङ्गच्छते इति। मतान्तर इति। "लिङ्गान्तरानभिधायकत्वं त"दिति कैयटमते इत्यर्थः। श्रीवदेवेति। बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वान्मतद्वयेऽपि श्रीवदेवेत्यर्थः। (२६४) स्त्रियां च।७।१।९६।

स्त्रियां च। असर्वमानस्थानार्थमयमारम्भः। "तृज्वत्क्रोष्टु"रिति वर्तते। तद्वदेवात्रापि रूपाऽतिदेशः। "स्त्रिया"मित्यर्थग्रहणं, तदाह---स्त्रीवाची क्रोष्टुशब्द इत्यादि। एवं च पञ्चमिः क्रोष्ट्रीबिः क्रीतै रथैः पञ्चक्रो,()ट्रभी रथैरित्यत्रापि तृ()ज्वद्भावः सिध्यति। ये तु"स्त्रिया"मिति स्त्रीप्रत्यये इति व्याचक्षते, ङीषर्थं च क्रोष्टुशब्दं गौरादुषु पठन्ति तेषामिह तृजद्भावे न सिध्येत्। "तेन क्रीत"मिति ठको"ऽध्यर्धपूर्वे"ति लुका लुप्तत्वाल्लुक्तद्धितलुकीति ङीषो लुकि स्त्रीप्रत्ययपरत्वाष()भावात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ङिति ० ह्रस्वः ० 7 च ० वा ० 5 न ० 4 इयङुवङ्स्थानौ १।२ 4 अस्त्री १।१ 4 यू 3 स्त्र्याख्यौ १।२ 3 नदी १।१ 3

काशिका-वृत्तिः
ङिति ह्रस्वश् च १।४।६

दीर्घस्य नदीसंज्ञा विहिता, ह्रस्वस्य न प्राप्नोति, इयङुवङ्स्थानयोश्च प्रतिषिद्धा। तस्मान् ङिति व विधीयते। ङिति परतो ह्रस्वश्च य्वोः सम्बन्धी यः स्त्र्याख्यः, स्त्र्याख्यौ इयङुवङ्स्थानौ च यू वा नदी संज्ञौ भवतः। कृत्यै, कृतये। धेन्वै, धेनवे। श्रियै, श्रिये। भ्रुवै, भ्रुवे। अस्त्री इत्येव, स्त्रियै। स्त्र्याख्यौ इत्येव, अग्नये। वाय्वे। भनवे।
लघु-सिद्धान्त-कौमुदी
ङिति ह्रस्वश्च २२३, १।४।६

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ चेवर्णोवर्णौ, स्त्रियां वा नदीसंज्ञौ स्तो ङिति। मत्यै, मतये। मत्याः २। मतेः २॥
न्यासः
ङिति ह्यस्वश्च। , १।४।६

यद्यत्र ह्रस्वविशेषणार्थं "यू" इति नानुवर्त्तते इति नानुवर्त्तते, तदेहापि स्यात्-- मात्रे दुहित्र इति; तस्मात् तदिहानुवर्त्तते। अनुवर्त्तमानमपि यदि प्रथमान्तमनुवर्तते, तदा प्रथमान्तयोह्र्यस्वत्वं प्रति विशेषणविशेष्यभावो नोपपद्यते। तस्मात् तदिहार्थात् षष्ठ()न्तमुपजायत इत्यत आह-- "ह्रस्वश्च य्वोः सम्बन्धी" इति। कः पुनस्तयोः सम्बन्धी ह्रस्वः? यस्तयोह्र्यस्वः सवर्णः; तेन सामथ्र्यादिकारोकारयोग्र्रहणम्, न हि ताभ्यामन्यो ह्रस्व ईदुतोः सवर्णः सम्भवति। "कृत्यै, कृतये" इति। यदा नदीसंज्ञा तदा पूर्ववदाट्, अन्यथा तु "शेषो ध्यसखि" १।४।७ इति घिसंज्ञकत्वात् "घेर्ङिति"७।३।१११ गुणः। अत्रापि यत्र विभक्तिसम्बन्धिनः शब्दरूपस्यावयवः स्त्र्याख्यस्तत्र पूर्वोक्तया रीत्या नदीसंज्ञा न प्राप्नोति-- अतिकृतये ब्राआह्मणाय, अतिश्रियेति॥

बाल-मनोरमा

ङिति ह्रस्वश्च २९४, १।४।६

इदन्तत्वाद्यूस्त्र्याख्याविति नदीत्वेऽप्राप्ते ङित्सु तद्विकल्पं दर्शयितुमाह--ङिति ह्रस्वश्च। अत्र चकाराद्वाक्यद्वयं, तथा हि "यूस्त्र्याख्यौ नदी"त्यनुवर्तते। ईश्च ऊश्च यू। "दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घनिषेधाऽभावश्छान्दसः। स्त्रियमेवाचक्षाते स्त्र्याख्यौ। नित्यस्त्रीलिङ्गाविति यावत्। "नेयङ्वङ्स्थानावस्त्री"ति सूत्रं नञ्वर्जमनुवर्तते। इयङुवङोः स्थानं स्थितिर्ययोस्ताविति विग्रहः। इयङुवङ्प्राप्तियोग्याविित्यर्थः। "वामी"त्यतो "वे"त्यनुवर्तते। ततश्च "इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वा स्तो ङिति परे" इति वाक्यमेकं संपद्यते। पुनरपि "यू" इत्यनुवर्तते। इश्च उश्च यू। "ह्रस्व" इति तत्र प्रत्येकमन्वेति। स्त्र्याख्याविति चानुवर्तते। तस्य च स्त्रीलिङ्गावित्येतावदेव विवक्षितं, नतु नित्यस्त्रीलिङ्गवीदूतौ नदीसंज्ञौ वा स्तो ङिति परे" इति वाक्यमेकं संपद्यते। पुनरपि "यू" इत्यनुवर्तते। इश्च उश्च यू। "ह्रस्व" इति तत्र प्रत्येकमन्वेति। स्त्र्याख्याविति चानुवर्तते। तस्य च स्त्रीलिङ्गावित्येतावदेव विवक्षितं, नतु नित्यस्त्रीलिङ्गाविति , व्याख्यानात्। "वामी"त्यतो वेति चानुवर्तते। ततश्च "स्त्रीलिङ्गौह्रस्वौ चेवर्णोवर्णौ नदीसंज्ञौ वा स्तो ङिति परे" इति वाक्यमेकं संपद्यते।तदाह--इयङुवङ्स्थानाविति। द्वितीयवाक्येऽपि स्त्रीलिङ्गे नित्यत्वविशेषणे तु इष्वशन्यरणिप्रभृतीनामुभयलिङ्गानां, पटुमृदुप्रभृतीना त्रिलिङ्गानां च ङिति नदीत्वविकल्पो न स्यादिति बोध्यम्। तत्र ह्रस्वयोकप्राप्ते दीर्घयोस्तु "नेयङुवङ्स्थाना"विति निषेधादप्राप्ते नदीत्वे विभाषेयम्। नदीत्वपक्षे आह--आण्नद्या इति। मति-ए इति स्थिते आटि वृद्धौ यणि च सिद्धं रूपमाह--मत्यै इति। मतये इति। नदीत्वाऽभावपक्षे "शेषो घ्यसखी"ति घित्वाद्धेर्ङितीति गुणेऽयादेशे हरिशब्दवद्रूपम्। नदीत्वपक्षे ङसिङसोरटि वृद्धिराकारः, यण्। मत्याः। नदीत्वाऽभावे-मतेः। आमि नदीत्वाभावेऽपि हस्वान्तत्वान्नुटि दीर्घः। मतीनाम्। ङौ विशेषमाह--नदीत्वपक्षे इति। नदीत्वपक्षे घित्वाऽभावात् "अच्च घेः" इत्यत्वसंनियोगशिष्टमौत्वं न भवति। किंतु ङेरामिति प्राप्तं, तद्बाधित्वा औदिति केवलमौत्वे परत्वात्प्राप्ते सतीत्यर्थः।

तत्त्व-बोधिनी

ङिति ह्रस्वश्च २५६, १।४।६

ङिति ह्रस्वश्च। "वामी"ति सूत्राद्वेत्यनुवर्तते। अप्राप्तविभेषेयं। ह्रस्वयोरप्राप्तावितरयोस्तु "नेयङुवाङ्स्थाना"विति निषेधप्राप्तावारम्भात्। इहे"इयङुवङ्स्थानौ""स्त्रीशब्दभिन्नौ""नित्यस्त्रीलिङ्गा"विति त्रीणि ईदुतोर्विशेषणानि, ह्रस्वयोस्तु "स्त्रिया"मित्येव विशेषणं, नत्तु नित्यस्त्रीत्वपर्यन्तम्, अन्यथा इष्वशनिप्रभ-तीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां सर्वलिङ्गानां च स्त्रीत्वेऽपि नदीत्वं न स्यात्। कैयटमते हि तेषां नित्यस्त्रीत्वाऽभावात्, ह्रस्वांशे नित्यग्रहमव्यावर्त्त्याऽलाभाच्च। अतएवाऽऽख्याग्रहणं विहाय स्त्रीशब्दमात्रं निष्कृष्य संबध्यते, तदेतदाह----ह्रस्वौ च इउवर्णौ स्त्रियामिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शेषः १।१ घि १।१ ९ असखि १।१ ह्रस्वः ० ६

काशिका-वृत्तिः
शेषो घ्यसखि १।४।७

ह्रस्वः इति वर्तते। शेषो ऽत्र घिसंज्ञो भवति, सखिशब्दम् वर्जयित्वा। कश्च शेषः? ह्रस्वम् इवर्णौवर्णान्तं यन् न स्त्र्याख्यम्, स्त्र्याख्यं च यन् न नदीसंज्ञकं, स शेषः। अग्नये। वायवे। कृतये। धेनवे। असखि इति किम्? सख्या। सख्ये। सख्युः। सख्यौ। घिप्रदेशाः द्वन्द्वे घि २।२।३२ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
शेषो घ्यसखि १७०, १।४।७

शेष इति स्पष्टार्थम्। ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम्॥
न्यासः
शेषो घ्यसखि। , १।४।७

"सख्या" इति। घिसंज्ञाया "आङो नास्त्रियाम्" ७।३।११९ इति नाभावो न भवति। "सख्ये, सख्युः" इत्यत्रापि "घेर्ङिति" ७।३।१११ न गुणः। "सख्यौ" इत्यत्र "अच्च घेः" ७।३।११८ इत्यत्त्वं न भवति। "इदुद्भ्याम्" ७।३।११७ "औत्" ७।३।११८ इत्यौत्त्वं भवति। सख्युरित्यत्रापि "ख्यत्यात् परस्य" ६।१।१०८ इत्युक्तम्। इह शोभनः सखाऽस्येति सुसखिरिति; सुसखेरागच्छतीत्यत्र तदन्तविधिना प्रतिषेधः प्राप्नोति, स च "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" (व्या।प।८९) इति प्रतिषेधान्न भवति। इह द्विविधा घिसंज्ञा-- अवयवाश्रया, समुदायाश्रया च। तत्र याऽवयवाश्रया सा प्रतिषिध्यते, या पुनः समुदायाश्रया सा च भवत्येव; तस्या अप्रतिषेधात्॥
बाल-मनोरमा
शेषो घ्यसखि २४१, १।४।७

तृतीयैकवचने हरि आ इति स्थिते घिकार्यं वक्ष्यन्घिसंज्ञामाह--शेषो। "यू स्त्र्याख्यौ" इत्यतो "यू" इत्यनुवर्तते। इश्च उश्च यू=इवर्णश्च उवर्णश्च। "ङिति ह्रस्वश्चे"त्यतो "ह्रस्व" इत्यनुवर्तते। तच्च यूभ्यां प्रत्येकमन्वेति। उक्तान्नदीसंज्ञकादन्यः शेषः। स च यूभ्यां प्रत्येकमन्वेति। "शब्दस्वरूप"मित्यध्याहार्यं यूभ्यां विशेष्यते। तदन्तविधिः। तदाह-- अनदीसंज्ञावित्यादिना। शेषः किमिति। अनदीसंज्ञकत्वविशेषणं किमर्थमिति प्रश्नः।

मत्यै इति। शेषग्रहणाऽभावे "ङिति ह्रस्वश्चे"ति नदीत्वपक्षेऽपि घिसंज्ञा स्यात्। ततश्च आण्नद्याः" इत्याडागमे वृद्धौ "घेर्ङिती"ति गुणेऽयादेशे " मतयै" इति स्यादिति भावः। शेषग्रहणाऽभावे।त्रपि "मत्यै" इत्यत्र घिसंज्ञा न भवति, "आकडारादेका संज्ञे"त्यनवकाशया नदीसंज्ञया बाधादित्यत आह--एकसंज्ञेति। वातप्रम्ये इति। ह्रस्वग्रहणाऽभावे वातप्रमी-ए इति स्थिते ईकारान्तस्यापि घिसंज्ञा स्यात्। ततश्च "घेर्ङिती"ति गुणेऽयादेशे च "वातप्रमये" इति स्यात्। अतो ह्रस्वग्रहणमिति भावः। मात्रे इति। "यू" इत्यस्याऽभावे मातृ-ए इति स्थिते ऋकारान्तस्यापि घिसंज्ञायां "घेर्ङिती"ति गुणे अकारे रपरत्वे "मातरे" इति स्यात्। अत इदुताविति भावः। वस्तुतस्तु इदुताविति व्यर्थमेव, "मात्रे" इत्यत्र

ऋकारान्तस्यापि घित्वे तु "घेर्ङिती"त्येव गुणसिद्धौ किं तेन?।

तत्त्व-बोधिनी
शेषो घ्यसखि २०३, १।४।७

सूत्रे शेषपदस्य प्रयोजनमाह--अनदी--संज्ञाविति। "यूस्त्र्याख्यौ" इत्यतः "यू" इति, "ङिति ह्रस्वश्चे"त्यतो "ह्रस्व" इति चानुवर्तते, तदाह-ह्रस्वौ यावित्यादि। मत्यै इति। नदीसंज्ञापक्षेऽपि घिसंज्ञायां सत्याम् "आण्नद्या" इत्याडागमे "घेर्ङिती"ति गुणे कृतेऽयादेशे च "मतयै" इति स्यादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पतिः १।१ ९ समासे ७।१ एव ० घि १।१ ७

काशिका-वृत्तिः
पतिः समास एव १।४।८

पतिशब्दस्य घिसंज्ञायां सिद्धायाम् अयं नियमः क्रियते, पतिशब्दः समासे एव घिसंज्ञओ भवति। प्रजापतिना। प्रजापतये। समासे इति किम्? पत्या। पत्ये। एवकार इश्टतो ऽवधारणार्थः। दृढमुष्टिना। दृढमुष्टये।
लघु-सिद्धान्त-कौमुदी
पतिः समास एव १८५, १।४।८

घिसंज्ञः। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो नित्यं बहुवचनान्तः॥
न्यासः
पतिः समसा एव।, १।४।८

"पतिशब्दस्य सिद्धायां घिसंज्ञायाम्" इति। अनन्तरसूत्रेणैवेति शेषः। "प्रजापतिना" इति षष्ठीसमासः। यदि सिद्धायां घिसंज्ञायामिदमारभ्यते तदा "सिद्धे सत्यारम्भो नियमार्थः" (दु।सि।का।सू।वृ।५९) इति विनाप्येवकारेण लभ्यत एव नियमः, तत् किमर्थमेवकारकरणमित्यत आह-- "एवकारकरणम्" इत्यादि। विना ह्येवकारेण विपरीतमप्याशङ्क्येत--पतिरेव समसा इति। ततश्च दृढमुष्टिनेत्यादौ न स्यात्, एवकारे तु सति भवतीति। तथा ह्यतर् समासशब्दादनन्तरं प्रयुज्यमानं यत एवकारकरणं ततोऽन्यत्रावधारणमिति पतिशब्द एव नियम्यते, न समासः॥
बाल-मनोरमा
पतिः समास एव २५५, १।४।८

अथ पतिशब्दे विशेषं दर्शयति--पतिः समास एव। "शेषो घ्यसखी"त्यतो "घी"त्यनुवर्तते। तदाह पतिशब्द इति। पत्या। पत्ये इति। घित्वाऽभावान्नात्वगुणाऽभावे यणि रूपम्। पत्युरिति। "ख्यत्या"दित्युत्त्वम्। पत्याविति। घित्वाऽभावात् "अच्च घेः" इत्यस्य प्रवृत्तेरभावे "औत्" इति ङेरौत्त्वे यणि रूपम्। आरम्भसामर्थ्यादेव नियमार्थत्वे सिद्धे एवकारस्तु "पतिरेव समासे घि"रिति विपरीतनियमव्यावृत्त्यर्थः। तेन सुहरिणेत्यादि सिध्यति। समासे तु भूपतये इति। "भूपतिने"त्याद्युपलक्षणम्। "सीतायाः पतये नमः" इत्यादि त्वार्षम्।

अथ कतिशब्दे विशेषं दर्शयति-कतिशब्दे नित्यं बहुवचनान्त इति। "किमः सङ्ख्यापरिमाणे" इत्यनेन किंशब्दाद्बहुत्वसङ्ख्यावच्छिन्नसङ्ख्येयविषयप्रश्न एव डतिरिति भाष्ये स्पष्टत्वादिति भावः।

तत्त्व-बोधिनी

पतिः समास एव २१६, १।४।८

पतिः समास एव। एवकार इष्टतोऽवधारणार्थः। अन्यथा हि "समासे पतिरेवे"ति नियमः संभाव्येत्, ततश्च "महाकविने"त्यादिप्रयोगो न सिध्यते। "अनल्विधौ", "धात्वादे"रित्यादिज्ञापकानुसरणे तु प्रतिपत्तिगौरवं स्यादिति भावः। पत्येत्यादि। नन्वेवं "शेषो ध्यसखिपती"इत्येवोच्यतां, किमनेन "पतिः समास एवे"ति सूत्रेणेति चेन्न; समुदायस्य पतिरूपत्वाऽभावने बहुच्पूर्वकपतिशब्दस्यापि घिसंज्ञा स्यात्। ततश्च "सुसखिने"त्यादिवद्बहुपतिनेत्यादिवब्दहुपतिनेत्यादि प्रसज्येत, इष्यते तु "वहुपत्ये"त्यादि। नापि "सखिपती समास एवे" त्येवसूत्र्यतामिति शङ्क्यम्, "बहुपत्ये"त्यादिवद्बहुसख्येत्याद्यापत्तेः, इष्यते तु "बहुसखिने"त्यादि। अथ कथं "सीतायाःपतये नमः"इति, "नष्टे मृते प्रव्रजिते क्लीबे इः" इत्यौणादिक इप्रत्यये "णेरनिटी"ति णिलोपे च निष्पन्नोऽयं पतिशब्दः "पतिः समास एव" इत्यत्र न गृह्रते, लाक्षणिकत्वादिति। एतेन "कृष्णस्य सखिर्जुनः"इति भारतम्, "सखिना वानरेन्द्रेणे"ति रामायणं च व्याख्यातम्। कति शब्द इति। का सङ्ख्या येषां ते कति। "किमः सङ्ख्यापरिमाणे डति च" इति डतौ डित्त्वाट्टिलोपः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षष्ठीयुक्तः १।१ छन्दसि ७।१ वा ० पतिः १।१ ८ घि १।१ ७

काशिका-वृत्तिः

षष्ठीयुक्तश् छन्दसि वा १।४।९

पतिः इति वर्तते। पूर्वेण नियमेन असमासे न प्राप्नोति इति वचनम् आरभ्यते। षष्ठ्यन्तेन युक्तः पतिशब्दः छन्दसि वषये वा घिसंज्ञो भवति। कुलुञ्चानां पतये नमः, कुलुञ्चानां पत्ये नमः। षस्ठीग्रहणं किम्? मया पत्या जरदष्टिर्यथासः। छन्दसि इति किम्? ग्रामस्य पत्ये।

न्यासः

षष्ठीयुक्तश्छन्दसि वा। , १।४।९

अत्र यदि पतिशब्दः षष्ठीविभक्त्यन्तो घि ज्ञो भवतीत्येषोऽर्थोऽभिमतः स्यात्, तदा युक्तग्रहणमनर्थकं स्यात्; षष्ठीत्यवं ब्राऊयात्। तस्माद्युक्तग्रहणे सति षष्ठ()न्तशब्दान्तरेण युक्त इत्येषोऽर्थो विज्ञायत इत्यत आह-- "षष्ठ()न्तेन" इत्यादि। यदि पुनः पतिशब्दस्य षष्ठ()न्तस्य घिसंज्ञा स्यात्, तदा किं स्यात्? पस्युरित्यत्रैव स्यात्, इह तु न स्यात्-- क्रुञ्चानामपतये नम इति। "मया पत्या" इति। तृतीयायुक्तोऽत्र पतिशब्दः। अस्मदः "मपर्यन्तस्य" ७।२।९१ "त्वमावेकवचने" ७।२।९७ इति मादेशः। "योऽचि" ७।२।८९ इति यकारः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ह्रस्वम् १।१ ११ लघु १।१

अर्थः॥

ह्रस्वम् अक्षरं लघुसंज्ञकं स्यात्।

उदाहरणम्॥

भेत्ता, चेत्ता। अचीकरत्। अजीहरत्॥

काशिका-वृत्तिः

ह्रस्वं लघु १।४।१०

मात्रिकस्य ह्रस्वसंज्ञा कृता तस्य अनेन लघुसंज्ञा विधीयते। ह्रस्वम् अक्षरं लघुसंज्ञं भवति। भेता। छेत्त। अचीकरत्। अजीहरत्। लघुप्रदेशाः पुगन्तलघूपधस्य च इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

ह्रस्वं लघु ४५०, १।४।१०

न्यासः

ह्यस्वं लघु। , १।४।१०

"भेत्ता" इति। "पुगन्तलघूपधस्य च" ७।३।८६ इति गुणः। "अचीकरत्" इत। कृञो णिच्, लुङ, अडागमः, च्लेश्चङ, णिलोपः,"णौ चङ्युपधायाः" ७।४।१ इति ह्यस्वः। "ओः पुयण्ज्यपरे" ७।४।८० इति वचनं ज्ञापकम्-- णौ कृतं स्थानिवद्भवतीति। "चङि" ६।१।११ इति कृशब्दो द्विरुच्यते। "उरत्" ७।४।६६ इत्यत्त्वम्, रपरत्वम्, "सन्वल्लघुनि" ७।४।९३ इति लघुसंज्ञायां सत्यां सन्वद्भावादित्त्वम्, "दीर्घो लघोः" ७।४।९४ इति दीर्घत्वम्॥

बाल-मनोरमा

ह्यस्वं लघु ३३, १।४।१०

ह्यस्वं लघु। ह्यस्वं लघुसंज्ञं स्यादित्यर्थस्य स्पष्टत्वान्न व्याख्यातम्। अत एव निर्देसाद्ध्रस्वशब्दो नपुंसकलिङ्गोऽपि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संयोगे ७।१ गुरु १।१ १२

अर्थः॥

संयोगे परतः ह्रस्वम् अक्षरं गुरुसंज्ञकं भवति।

उदाहरणम्॥

कुण्डा। हुण्डा। शिक्षा। भिक्षा।

काशिका-वृत्तिः

संयोगे गुरु १।४।११

ह्रस्वम् इति वर्तते। पूर्वेण लघुसंज्ञायां प्राप्तायां गुरुसंज्ञा विधीयते। संयोगे प्रतो ह्रस्वम् अक्षरं गुरुसंज्ञं भवति। कुण्डा। हुण्डा। शिक्षा भिक्षा। गुरुप्रदेशाः गुरोश्च हलः ३।३।१०३ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

संयोगे गरु ४५१, १।४।११

संयोगे परे ह्रस्वं गुरु स्यात्॥

न्यासः

संयोगे गुरु। , १।४।११

"कुण्डा, हुण्()डा" इति। "कुडि दाहे" (धा।पा।२७०), "हुडि सङ्घाते" (धा।पा।२६९), नुम्विधावुपदेशिवद्वचनादुपदेशावस्तायामेव नुम्। "शिक्षा, भिक्षा" इति। "शिक्ष विद्योपादाने" ३।३।१०३ इत्यकारप्रत्ययः, "अजाद्यतष्टाप" ४।१।४॥

बाल-मनोरमा

संयोगे गुरुः ३४, १।४।११

संयोगे गुरु। "ह्यस्व"मित्यनुवर्तते। तदाह--संयोगे पर इत्यादिना।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दीर्घम् १।१ च ० गुरु १।१ ११

अर्थः॥

दीर्घं च अक्षरं गुरुसंयकं भवति।

उदाहरणम्॥

ईहाञ्चके। ऊहाञ्चके।

काशिका-वृत्तिः

दीर्घं च १।४।१२

संयोगे इति न अनुवर्तते। सामान्येन संज्ञाविधान। दीर्घं च अक्षरं गुरुसंज्ञं भवति। ईहाञ्चक्रे। ईक्षाञ्चक्रे।

लघु-सिद्धान्त-कौमुदी

दीर्घं च ४५२, १।४।१२

गुरु स्यात्॥

न्यासः

दीर्घञ्च। , १।४।१२

"ईहाञ्चक्रे, उहाञ्चक्रे" इति। "आम्प्रत्ययवत्" १।३।६३ इत्यादौ सूत्र एते व्यत्पादिते। गुरुसंज्ञायां त्वत्र कार्यम्- "इजादेश्च गुरुमतोऽनुच्छः ३।१।३६ इत्यात्मप्रत्ययः॥

बाल-मनोरमा

दीर्घं च ४३४, १।४।१२

दीर्घं च। संयोग इति नानुवर्तते। दीर्घमपि गुरुसंज्ञकमित्यर्थः। इति संज्ञाप्रकरणमिति। सन्धिकार्योपयोगिप्रथमाध्यायस्थसंज्ञानिरूपणं समाप्तमित्यर्थः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां संज्ञाप्रकरणं समाप्तम्॥

********************

अथ सन्नन्तप्रक्रिया।

अथ सन्प्रक्रिया निरूप्यन्ते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यस्मात् ५।१ प्रतयविधिः १।१ तदादि १।१ प्रत्यये ७।१ अङ्गम् १।१

समासः॥

प्रत्ययस्य विधिः, प्रत्ययविधिः, षष्ठीतत्पुरुषः
तस्य आदिः, तदादिः, तदादिः आदिः यस्य तत् तदादि, बहुव्रीहिः

अर्थः॥

यस्मात् (धातोः वा प्रातिपदिकात् वा) प्रत्ययविधिः=प्रत्ययः विधीयते तस्य च तदादिशब्दरूपस्य च प्रत्यये परतः अङ्गसंज्ञा भवति

उदाहरणम्॥

कर्त्ता, हर्त्ता, औपगवः, कापटवः। करिष्यति, अकरिष्यत्, करिष्यावः, करिष्यामः

काशिका-वृत्तिः

यस्मात् प्रत्ययविधिस् तदादि प्रत्यये ऽङ्गम् १।४।१३

यस्मात् प्रत्ययो विधीयते धातोर् वा प्रातिपदिकाद् वा तदादि शब्दरूपं प्रत्यये परतो ऽङ्गसंज्ञं भवति। कर्ता। हर्ता।

करिष्यति हरिष्यति। अकरिष्यत्। औपगवः। कापटवः। यस्मातिति संज्ञिनिर्देशार्थम्, तदादि इति सम्बन्धात्। प्रत्ययग्रहणं किम्? न्यविशत। व्यक्रीणीत। नेर् बिशः १।३।१७ इत्युपसर्गाद् विधिरस्ति, तदादेरङ्गसंज्ञा स्यात्। विधिग्रहणं किम्? प्रत्ययपरत्वम् आत्रे मा भूत्। स्त्री इयती। तदादिवचनं स्यादिनुम् अर्थम्। करिष्यावः। करिष्यामः। कुण्डानि। पुनः प्रत्ययग्रहणं किम् अर्थम्? लुप्तप्रत्यये मा भूत्। श्र्यर्थम्। भ्र्वर्थम्। अङ्गप्रदेशाः अङ्गस्य ६।४।१ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १३३, १।४।१३

यः प्रत्ययो यस्मात् क्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात्॥

न्यासः

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। , १।४।१३

"कत्ता" इति लुट्। "करिष्यति,अकरिष्यत्" इति। लुट्लृङौ। अङ्गसंज्ञायाः कार्यमत्र "सार्वधातुकार्धधातुकयोः" ७।३।८४ इति गुणः, "ऋद्धनोः स्ये" ७।२।७० इतीडागमो यथायोगम्। "यस्मादिति संज्ञिनिर्देशार्थम्" इति। संज्ञिनो निर्देशः, सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। ननु च तदादीत्यनेनात्र संज्ञीनिर्दिष्टः, तत्कथं संज्ञिनिर्देशार्थमिति पर्यनुयोगमाशङ्क्य येन हेतुना यस्मादित्यस्य संज्ञिनिर्देशार्थत्वं भवति,तं दर्शयितुमाह-- "तदादिसम्बन्धात्" इति। यस्मादित्येतस्मिन् सत्यनेन प्रकृतेन तदादीत्यस्य सम्बन्धो भवति। यस्मात् प्रत्ययो विधीयते स आदिर्यस्य तत् तदादीति। अनुच्यमाने ह्रेत()स्मस्तदित्यनेन सर्वनाम्ना प्रकृतप्रत्यवमर्शिना किं सम्बध्येतेति, असदेतत्; एवं हि सति प्रत्ययादेः प्रत्यये परतोऽङ्गसंज्ञा स्यात्, ततश्च करिष्यावः, करिष्याम इत्यत्र धातोर्गुणो न स्यात्। तस्माद्विशिष्टस्य संज्ञिनो निर्देशार्थ तस्मादिति वक्तव्यम्। अनेन हि सम्बन्धे सति तदादीत्यनेन योऽत्र विशिष्टः संज्ञी विवक्षितः स शक्यते निर्द्देष्टुम्; नान्यथा। "नेर्विशः" १।३।१७ इत्युपसर्गाद्विधिरस्तीति नियमस्य, न तु प्रत्ययस्य; तस्य लक्षण#आन्तणरे विहितत्वात्। "नेर्विशः" १।३।१७ इत्युपलक्षणमात्रम्। "परिव्यवेभ्यः क्रियः" १।३।१८ इत्येतदपीहोपात्तं द्रष्टव्यम्। तदादेरङ्गसंज्ञा स्यात्, ततश्चोपसर्गात् प्रागडागमः स्यादिति भावः। "स्त्री इयती" इति। इदं परिमाणमस्या इति "किमिदम्भ्यां वो घः" (५।२४०) इति वतुप्। वस्य च घत्वम्, इयादेशः, "इदम्किमोरीश्की" ६।३।८९ इतीदम ईश, "यस्येति च" ६।४।१४८इतीकारलोपः। "उगितश्च" ४।१।६ इति ङीप्- इयती। स्त्रीशब्दात् सुः, तस्य हलङ्यादिना ६।१।६६ लोपः, स्त्री इयती इति स्थिते यदि विधिग्रहणं न क्रियेत, तदेयच्छब्दे प्रत्यये परतः स्त्रीशब्दस्याङ्गसंज्ञा स्यात्; ततश्च "यस्येति च" ६।४।१४८) इतीकारलोपः प्रसज्येत। ननु च"असिद्धवदत्राभात्" ६।४।२२) इत्यसिद्धत्वादीकारलोप एवासिद्धः, तत् कुतोऽयं लोपप्रसङ्गः? प्राग्भाधिकारादसिद्धत्वमित्यभिप्रायः, नैषोऽस्त्यभिप्रायः; वक्ष्यति हि तत्र वृत्तिकारः-- र"असिद्धवदित्यधिकारोऽयम्, यदित ऊध्र्वमनुक्रिमिष्याम आअध्यायपरिसमाप्तेस्तदसिद्धवद्भवति" इति, तथा ह्रा भादित्यभिविधावाङ,तेन भाधिकारेऽप्यसिद्धत्वं भवतीति? एवं तर्हि विधिग्रहणेनैतज्ज्ञाप्यते-- भाधिकारीयमसिद्धत्वमनित्यत्वमिति; तेन "वुग्युटाववङ्यणोः सिद्धौ वाच्यौ" (वा।७७६) इत्येतन्न वक्तव्यं भवतीति। वुक्-- बभूव, युट्-- उपदिदीय इति। नन्वेवम् "अचः परस्मिन् पूर्वविधौ" १।१।५६ इतीकारलोपस्य स्थानिवत्त्वात् स्त्रीशब्देकारलोपाप्रसङ्ग एव, नैतदस्ति; यो ह्रनादिषाटदचः पूर्वस्तस्य पूर्वस्तस्यविधिं प्रति स्थानिवद्भवतीत्यादिष्टदचः पूर्वः स्त्रीशब्देकारः प्राक् संस्कृतस्य सत इयीतशब्योत्तरकालं स्त्रीशब्देन सम्बध्यते। अथ क्रियमाणेऽपि विधिग्रहणे कस्मादेवाङ्गसंज्ञा न भवति, यावता स्त्रीशब्दाद्विभक्तेः प्रत्ययस्य विधिरस्त्येव, प्रत्ययोऽपि चास्मात् पर इयच्छब्दो विद्यत एव? नैष दोषः; विधिग्रहणे सति यस्मात्प्रत्ययो विधीयते प्रत्यासत्तेस्तस्मिन् परतोऽङ्गसंज्ञा विधीयते। इह तु यः स्त्रीशब्दाद्विहितः प्रत्ययो नासौ परः, लुप्तत्वात्; यश्च पर इयच्छब्दो विहितः, नासौ ततो विहितः। अथ तदादिग्रहणं

किमर्थम्? यावाता विनाऽपि तेन "यस्मात् प्रत्ययविधिः प्रत्ययेऽङ्गम्" इत्येतावत्युच्यमाने यत्तदोर्नित्याभिसम्बन्धाद्यस्मात्प्रत्ययो विधीयते तत्प्रत्यये परतोऽङ्गसंज्ञा भवतीत्येषोऽर्थो लभ्यत इत्यत आह-- "तदादिवनचम्" इत्यादि। असति तदादीत्येतस्मिन् यस्मादेव प्रत्ययो विधीयते तस्यैवाङ्गत्वं स्यात्, न तु सर्वस्य सहस्यादेः, नापि सनुम्कस्य समुदायस्य; ततः प्रत्ययस्यादिविहितत्वत्। तदादिग्रहणे सति यस्मात् प्रत्ययो विधीयते स आदिर्यस्य शब्दरूपस्य तत् तदादीति बहुव्रीहिराश्रितो भवति, तेन सर्वस्य सहस्यादेः सनुम्कस्य समुदायस्याङ्गसंज्ञा सिद्ध्यति-- इति तदादिवचनं स्यादिनुमर्थम्। आदिग्रहणेन प्रकृतिप्रत्ययस्य मध्यवर्तिनां प्रत्ययागमानां ग्रहणम्; नुम आगमोपलक्षणत्वात्। "करिष्यावः" इत्यत्र यस्मात् प्रत्ययो विहितस्तदादेः सहस्य प्रत्ययस्य समुदायस्याङ्गसंज्ञायां सत्याम् "अतो दीर्घो यञि"७।३।१०१ इति दीर्घत्वं भवति; अन्यथा क्व तर्हि स्यात्? "वावावः, वावामः" इत्यादौ। "अय वय मय पय तय चय णय गतौ" (धा।पा।४७४-४८०), यङलुक्, अभ्यासस्य "दीर्घोऽकितः"७।४।८३ इति दीर्घत्वम्; वस्मसोः "लोपो व्योर्वलि" ६।१।६४ इति यलोपः-- इह विना विकरणेन धातोदीर्घत्वम्; विकरणस्य शपः "अदिप्रभृतिभायः शपः" २।४।७२ इति लुप्तत्वात्। अदादित्वम् "चर्करीतञ्च" (धा।पा।१०८१) इत्यादिषु पाठात्। "चर्करीतम्" इति यङ्लुकः पूर्वाचार्यसंज्ञा। "कुण्डानि" इति। जसि "जश्शसोः शिः" ७।१।२० इति शिभावः। "नपुंसकस्य झलचः" ७।१।७२ इति नुम्। तदायं नुम् परादिरिति पक्षः, तदा "सुपि च" ७।३।१०२ इति दीर्घत्वं विनापि सनुम्कस्याङ्गसंज्ञया सिद्धम्। यदापि पूर्वान्तः, तदाप्यङ्गकदेशत्वात् "नोपधायाः" ६।४।७ इत्यनुवर्त्तमाने "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इति दीर्घत्वं सिद्धम्। यदा त्वभक्तः, तदाङ्स्यानेकदेशत्वान्न सिद्ध्यति। अभक्तश्चायं नुमिति सूत्रकारस्य पक्षः। तेन नुमर्थमपि तदादिवचनं कृतम्। "श्रयर्थम्, भ्व्यर्थम्" इति। श्रिय इदं भ्रुव इदमिति-- "चतुर्थी तदर्थार्थ" २।१।३५ इत्यादिना समासः; अस्त्यत्र चतुर्थ्यैकवचनस्य विधिरिति। असति हि पुनः प्रत्ययग्रहणे श्रीभ्रूशब्दयोरर्थशब्दे परतोऽङ्गसंज्ञा स्यात्, ततश्चेयङुवङौ स्याताम्। सप्तमीनिर्दिष्टे तु पुनः प्रत्ययग्रहणे श्रीभ्रूशब्दयोरर्थशब्दे परतोऽङ्गसंज्ञा स्यात्, ततश्चेयङुवङौ स्याताम्ा। सप्तमीनिर्दिष्टे तु पुनः प्रत्ययग्रहणे सति न दोष इति। तथा हि-- ततो विहिते प्रत्यये परत इत्येवं विज्ञायते। यश्चातो विहितः प्रत्ययः स लुप्तः। यद्यपि लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनाङ्गसंज्ञा लभ्यते, कार्यं तु न लभ्यते; "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षमप्रतिषेधात्॥

बाल-मनोरमा

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १९८, १।४।१३

राम-आ इति स्थिते अङ्गकार्यं वलिधास्यन्नङ्गसंज्ञामाह - यस्मात्प्रत्ययविधि। यस्मादिति। प्रकृतिभूतादित्यर्थः। यः प्रत्यय इति। यच्छब्दान्तराध्याहारस्तु प्रत्यासत्तिलभ्यः। स च यस्माद्यस्य प्रत्ययस्य विधिस्तस्मिन्प्रत्यये तदादेरङ्गसंत्रेत्यर्थलाभाय। तत्प्रकृतिरूपमादिर्यस्य तत्--तदादि। नपुंसकवाशाच्छब्दरूपमित्यध्याहार्यम्। तदाह--तदादि शब्दस्वरूपमिति। प्रकृते च रामशब्दस्य प्रकृतिमात्रस्य तदादित्वं व्यभूधातोर्लट्। मिप्। कर्तरि शवबिति विकरणसंज्ञः शप्। गुणावादेशौ अतो दीर्घो यञीति भवेत्यङ्गस्य दीर्घः। भवामीति रूपम्। तथा भूधातोर्लृट् मिप्। "स्यातासी लृलुटोः" इति विकरणसंज्ञः स्यः। इट् गुणावादेशौ। षत्वम्। "अतो दीर्घो यञी"ति "भविष्य" इत्यङ्गस्य दीर्घः। " भविष्यामी"ति रूपम्। अत्र आदिग्रहणाऽभावे मिप्प्रत्यये परतो भू इति प्रकृतिमात्रस्य अङ्गसंज्ञा स्यात्, भूशब्दादेव मिप्प्रत्ययविधेः, नतु "भव" इत्यस्य, "भविष्य" इत्यस्य च विकरणविशिष्टस्य, ततो मिप्प्रत्ययविधेरभावात्। ततश्च "अतो दीर्घो यञी"ति मिप्प्रत्यये परतो दीर्घो न स्यात्। अत आदिग्रहणमित्यर्थः। विधिरिति किमिति। यस्माद्यः प्रत्यय#ः। परत्वेन श्रूयते तदादि शब्दरूपं तस्मिन् प्रत्यये अङ्गसंज्ञामित्येतावतैव सिद्धे विधिग्रहणं किमर्थमिति प्रश्नः। स्त्री इयतीति। इदं परिमाणमस्या इत्यर्थे इदंशब्दात् "किमिदंभ्यां वो घः" इति वतुप्, वस्य घश्च। तस्य इयादेशः। "इदंकिमोः" इति इदम् ईश्। शित्त्वात्सर्वादेशः। ई-इयत् इति स्थिते "यस्येति च" इतीकारलोपः। इयदिति

प्रत्ययमात्रमवशिष्यते। "उगितश्चे"ति ङीपि इयतीति रूपम्। अत्र विधिग्रहणाऽभावे स्त्री-इयतीत्यत्र रेफादीकारस्य "स्त्रियाः" इत्यङ्गकार्यमियङ् स्यात्। स्त्रीशब्दात्परत्वेन इयदिति प्रत्ययस्य श्रूयमाणत्वात्। न च यस्येति लोपस्याभीयत्वेना।त्रसिद्धत्वादजादिप्रत्ययपरकत्वाऽभावान्नात्र इयङः प्राप्तिरिति वाच्यम्, अन्यूनानतिरिक्तसमानाश्रये कार्ये कर्तव्य एव आभीया।त्रसिद्धत्वस्य प्रवृत्तेः। अस्ति च यस्येति चेति शास्त्रापेक्षया "स्त्रिया" इति सूत्रे अधिकस्य स्त्रीशब्दस्यापेक्षा। कृते तु विधिग्रहणे इयङत्र न भवति, बतुप् इदम एवात्र विहितत्वेन तस्मिन् परे स्त्रीशब्दस्याङ्गत्वाऽभावात्। न च यस्येति लोपस्य इयङि कर्तव्ये अचः परस्मिन्निति स्थानिवद्भावः शङ्क्यः, पदान्तविधौ तन्निषेधात्। स्त्रीशब्दस्य सुनिरूपिताङ्गत्वेऽपि नेयङ्, प्रत्यासत्त्या अजादिप्रत्ययनिरूपिताङ्गत्वे तत्प्रवृत्तेः। प्रत्यये किमिति। "यस्मात्प्रत्ययविधिस्तदाद्यङ्ग"मित्येतावदेवास्त्वित्यर्थः। प्रत्ययविशिष्यस्य ततो।त्रप्यधिकस्य वा मा भूदिति। तदादि शब्दरूपं कियदित्यपेक्षायामविशेषात्प्रत्ययविशिष्टं वा, ततोऽप्यधिकं वा निरवधिकमङ्गं स्यात्। नच यस्मात्प्रत्ययेति प्रत्ययस्य श्रुतत्वात्प्रत्ययावध्येवाङ्गत्वं भविष्यतीति वाच्यम्, यस्मात्प्रत्ययविधिस्तदादीत्यर्थसमर्पणेन तस्य प्रत्ययग्रहणस्य चरितार्थत्वात्। ततश्च प्रत्ययविशिष्टस्याङ्गत्वे वव्रश्चेत्यत्र प्रत्ययविशिष्टस्याङ्गत्वेन उरदित्यादेशस्य परनिमित्तत्वाऽलाभादचः परस्मिन्निति स्थानिवत्त्वाऽप्रवृत्त्या "न सम्प्रसारण" इति सम्प्रसारणनिषेधो न स्यात्। अधिकस्याङ्गत्वे च "देवदत् ओदनमापाक्षी"दित्यादौ देवदत्तादिशब्दोत्तरं सुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवदत्तादिशब्दात्पूर्वमप्यडापत्तिः, अङ्गसंज्ञायाः प्रत्ययनिमित्तत्वाऽभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वात्।"प्रत्यये" इत्युक्तौ तु न कोऽपि दोष इत्यलम्।

तत्त्व-बोधिनी

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १६६, १।४।१३

यस्मात्। तदादीति। तत्प्रकृतिरूपमादिर्यस्य शब्दस्वरूपस्येति बहुव्रीहिः।

ननु "यस्मात्प्रत्ययविधिस्तदङ्ग"मित्येवास्तु किमादिग्रहणेनेत्यत आह-भवामीत्यादि। प्रकृतिमात्रस्य तु व्यपदेशिवद्भवेन तदादित्वादङ्गत्वम्, तेन "कर्ता" "कारक" इत्याद्यपि सिध्यतीति भावः। अङ्गसंज्ञार्थमिति। अन्यथा "अतो दीर्घो यञी"ति दीर्घो न स्यादिति भावः। नचारम्भसामथ्र्यादेव दीर्घः स्यादिति वाच्यम्। "पय गतौ" "वय गतौ" आभ्यां यङ्लुकि पापामि पापावः, वावामि वावाव इत्यादौ चरितार्थत्वात्। स्त्रीइयतीति। इदमः परिमाणे वतुप्। "किमिदभ्यां वो घ" इति घः। तस्य इयादेशः। "इदंकिमो"रिति ईश्। "यस्येति च" इति ईशो लोपः। "उगितश्च" इति ङीप्। सत्यां संज्ञायां स्त्रीशब्दस्य "यस्येति च" इति लोपः स्यात्। न चेशो लोपस्य "असिद्धवदत्राभा"दित्यसिद्धत्वान्नातिप्रसङ्ग इति वाच्यम्, "प्राग्भादसिद्धत्व"मिति पक्षाभ्युपगमादनित्यत्वाद्वेति व्याख्यातारः। नव्यास्तु-"स्त्री अंपश्यती"त्यत्र स्त्रीशब्दस्य "स्त्रियाः" इति इयङ् स्यात्। अकारादमि कृते "अमि पूर्वः" इत्येकादेशस्य परादिवद्भावेन प्रत्ययत्वात्। अततेर्डप्रत्यये टिलोपे च सत्यकारस्य स्वत एव प्रत्ययत्वाच्च। विधिग्रहणे कृते तु नायं दोषः प्रसज्यते। अम्प्रत्ययस्य अकाराड्डप्रत्ययस्य चाततेर्विहितत्वेऽपि स्त्रीशब्दादविधानात्। स्यादेतत्। वतुपोऽम्प्रत्ययस्य च स्त्रीशब्दादविधानेऽपि सोर्विधिरस्त्येवेति तद्दोषतावदवस्थ्यमिति चेन्मैवम्, संनिधानबलेन "यस्माद्यः प्रत्ययो विहितस्तस्मिस्तदङ्ग"-मिति व्याख्यानात्। प्रत्यये किमिति। "तदादिरूपं किय"दित्यपेक्षयां यस्मात्प्रत्यय इति प्रत्ययस्य श्रुतत्वात्प्रत्ययपर्यन्तमेवाङ्गं भविष्यतीति मत्वा प्रश्नः। प्रत्ययस्य श्रुतत्वेऽपि प्रत्ययविशिष्टं, ततोऽप्याधिकं वा निरवधिकमङ्गं स्यात्, तदादीत्यस्यार्थनिर्णये प्रत्ययश्रवणस्योपक्षयादित्याशयेन व्याचष्टे--प्रत्ययविशिष्टस्येत्यादिना। प्रत्ययविशिष्टस्येति किम्?। वव्रश्च। अत्र विशिष्टस्याङ्गसंज्ञायाम् "उरत्" इत्यादेशस्य परनिमित्तत्वाऽलाभात् "अचः परस्मिन्नि"ति स्थानिवत्त्वाऽप्रवृत्त्या "न संप्रसारणे--" इति निषेधाऽभावादभ्यासस्य पुनरपि संप्रसारणं प्रवर्तेत। तथा

"श्यर्थं" भ्र्वर्थमित्यत्र "अचि श्नुधातुभ्रुवाम्-,"इति इयुङुवङौ स्याताम्, उक्तरीत्या अचीप्यनेनाजादौ प्रत्यये इत्यलाभात्। ततोऽधिकस्याङ्गसञ्ज्ञायान्तु "देवदत्त ओदनमपाक्षी"दित्यत्र देवदत्तशब्दात्प्रागडागमः स्यात्, देवदत्तशब्दासुत्प्रत्ययस्य विहितत्वेन लुङः प्राग्वर्तिसमुदायस्याऽङ्गत्वात्। द्वितीयप्रत्ययग्रहणे कृते तु न कोऽपि दोषः प्रसज्यते। अन्ये तु यस्माल्लुङादिविधिः प्रत्यासत्त्या तस्यैवाङ्गस्याडागमः स्यादिति ततोऽप्यधिकस्येत्येतदनास्थयोक्तं, किंतु एतस्यापि प्रत्ययविशिष्टस्याङ्गत्वे यद्दूषणं तदेवेत्यहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सुप्तिङन्तम् १।१ पदम् १।१

समासः॥

सुप् च तिङ् च, सुप्तिङौ। सुप्तिङौ, सुप्तिङौ अन्ते यस्य तत् सुप्तिङन्तम्, द्वन्द्वगर्भः बहुव्रीहिः

अर्थः॥

सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं भवति

उदाहरणम्॥

कर्त्ता, हर्त्ता, औपगवः, कापटवः। करिष्यति, अकरिष्यत्, करिष्यावः, करिष्यामः॥
काशिका-वृत्तिः
सुप्तिङन्तं पदम् १।४।१४

सुप् तिङिति प्रत्याहारगरहणम्। सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं भवति। ब्राह्मणाः पथनित्। पदसंज्ञायाम् अन्तग्रहणम् अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधार्थम्। गौरी ब्राह्मणितरा। पदप्रदेशाः पदस्य ८।१।१३, पदात् ८।१।१७ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
सुप्तिङन्तं पदम् १४, १।४।१४

सुबन्तं तिङन्तं च पदसंज्ञं स्यात्॥
लघु-सिद्धान्त-कौमुदी
इति संज्ञाप्रकरणम् १४, १।४।१४

लघु-सिद्धान्त-कौमुदी
अथाच्सन्धिः १४, १।४।१४

न्यासः
सुप्तिङन्तं पदम्। , १।४।१४

"सुप् तिङिति प्रत्याहारग्रहणम्" इति। युक्तं हि तिङिति प्रत्याहारग्रहणम्, अन्यस्य तिङशब्दस्याभावात्; कथं सुबिति प्रत्याहारग्रहणम्, सप्तमीबहुवचनस्य विद्यमानत्वात् तस्य ग्रहणं कस्मान्न भवतीति? नैष दोषः; " न ङिसम्बुद्ध्योः" ८।२।८ इति प्रतिषेधात्। सप्तमीबहुवचनस्य सुपो ग्रहणे ङिसम्बुद्ध्योः पदत्वाभावान्नलोपस्य प्राप्तिरेव नास्तीति प्रतिषेधोऽर्थकः स्यात्। "ब्राआह्मणाः" इति। पदत्वे च सति "ससजुषो रुः" ८।२।६६, "खरवसानयोर्विसर्जनीयः" ८।३।१५। "पठन्ति" इति। अत्र पदत्वे सति "तिङङतिङः" ८।१।२८ इति निघातः। ननु च"प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य" (पु प २४) इत्यनेन "येन विधिस्तदन्तस्य" १।१।७१ इत्यनेन वाऽन्तरेणाप्यन्तग्रहणं तदन्तस्यैव संज्ञा भविष्यति, तत्किमर्थमन्तग्रहणमित्यत आह-- "पदसंज्ञायाम्" इत्यादि। यदीहान्तग्रहणेनाप्यन्यत्र संज्ञाविधौ तदन्तविधिर्नास्तीत्येषोऽर्थो न ज्ञाप्यते, तदा "तरप्तमपौ घः" १।१।२१ इत्यत्र तरबन्तस्य घसंज्ञा स्यात्, न प्रत्ययमात्रस्य। तस्मादत्रास्मिन्नर्थेऽन्तग्रहणेन ज्ञाप्यते-- अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधो यथा स्यादित्येवमर्थमन्तग्रहणम्। तेन तरप्तमपोरेव घसंज्ञा भवति, न तु तदन्तस्य। "गौरीब्राआह्मणितरा" इति।अत्र गौरीशब्दस्य तरबन्ते ब्राआह्मणितराशब्दे परतः "घरूपकल्प" ६।३।४२ इत्यादिना ह्रस्वो न भवति; तरबन्तस्याघसंज्ञकत्वात्। प्रत्ययमात्रस्य घसंज्ञायां तत्र परतो ब्राआह्मणीशब्दस्य ह्रस्वो भवत्येव॥

बाल-मनोरमा

सुप्तिङन्तं पदम् ३१, १।४।१४

सुप्तिङन्तं पदम्। सुबिति स्वौजसमौङिति सूत्रे "सु" इत्यारभ्या सुपः पकारेण प्रत्याहारो न तु सप्तमीबहुवचनस्यैवाऽत्र ग्रहणं, व्याख्यानात्। सुप्च तिङ् च सुप्तिङौ, तौ अन्ते यस्य तत् सुप्तिङन्तम्। शब्दरूपमिति शब्दशास्त्रप्रस्तावाल्लभ्यते। अन्तशब्दश्च प्रत्येकं सम्बध्यते। तदाह--सुबन्तमिति।

तत्त्व-बोधिनी

सुप्तिङ्न्तं पदम् २८, १।४।१४

सुप्तिङ्न्तं पदम्। अत्राऽन्तग्रहणं "अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती"ति ज्ञापनार्थम्। तेन "ईदूदेद्द्विवचनं प्रगृह्य"मिति न द्विवचनान्तस्य प्रगृह्यत्वम्। अन्यथा कुमार्गोरगारं कुमार्यगारमित्यत्र प्रकृतिभावः स्यात्। कथं तर्हि प्रातिपदिकसंज्ञायां कृतद्धिताभ्यां तदन्तग्रहणमिति चेत्?; अत्राहुः -"कृत्तद्धिते"ति सूत्रेऽर्थवद्ग्रहणमनुवर्तते तत्सामर्थ्यात्तदन्तग्रहणमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नः १।१ क्ये ७।१ पदम् १।१

अर्थः॥

क्ये परतः नान्तं शब्दरूपं पदसंज्ञं भवति।

उदाहरणम्॥

क्यच् -- राजीयति। क्यङ् -- राजायते। क्यप् -- चर्मायति, चर्मायते॥

काशिका-वृत्तिः

नः क्ये १।४।१५

क्ये इति क्यच् क्यङ् क्यशां सामान्यग्रहनम्। नान्तं शब्दरूपं क्ये परतः पदसंज्ञं भवति। क्यच् राजीयति। क्यङ् राजायते। क्यश् चर्मायति, चर्मायते। सिद्धे सत्यारम्भो नियमार्थः। नान्तम् एव क्ये परतः पदसम्ंज्ञम् भवति, न अन्यत्। वाच्यति। स्रुच्यति।

लघु-सिद्धान्त-कौमुदी

नः क्ये ७२६, १।४।१५

क्यचि क्यङि च नान्तमेव पदं नान्यत्। नलोपः। राजीयति। नान्तमेवेति किम्? वाच्यति। हलि च। गीर्यति। पूर्यति। धातोरित्येव। नेह - दिवमिच्छति दिव्यति॥

न्यासः

नः क्ये।, १।४।१५

"राजीयति" इति। आत्मनो राजानमिच्छतीति "सुप आत्मनः क्यच्" ३।१।८ "क्यचि च" ७।४।३३ इतीत्त्वम्। "राजायते" इति। राजेवाचरतीति "कर्त्तृः क्यङ सलोपश्च" ३।१।११ इति क्यङ। "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। "वर्मायते" इति। अवर्म भवतीति "लोहितादिडाज्भ्यः क्यष" ३।१।१३ इति क्यष्प्रत्ययः। "वा क्यषः" १।३।९० इत्यात्मनेपदम्। पदसंज्ञायामिह नलोपः कार्यः। ननु चैते क्यजादयः सुबन्तादेव विधीयन्ते प्रत्ययलक्षणेन, ततश्च "सुप्तिङन्तं पदम्" १।४।१४ इत्यनेनैवात्र पदसंज्ञा सिद्धा, तत् किमर्थोऽयमारम्भ इत्यत आह-- "सिद्धे सत्यारम्भो नियमार्थः" इति। सिद्ध इति सिद्धावित्यर्थः। "नपुंसके भावे क्तः" ३।३।११४ सिद्धत्वन्तु प्रकृतत्वात् पदसंज्ञाया एव विज्ञायते। अथ वा सिद्ध इत्यकर्मकत्वात् कर्तरि क्तप्रत्ययः। सिद्धे निष्पन्ने पदसंज्ञाकार्य इत्यर्थः। नान्तमेव इति। नियमस्य प्रतिषेधात्। विपरीतनियमे हि सति ङिसम्बुद्धयोः पदसंज्ञाया अभावान्नलोपो न भविष्यतीति किं तत्प्रतिषेधेन? "वाच्यति" इति। "सुप आत्मनः क्यच्" ३।१।८। क्यचि पदत्वाभावात् "चोः कुः" ८।२।३० इति कुत्वं न भवति॥

न्यासः

अनुर्यत्समया।, १।४।१५

यस्य समया यत्समयेति षष्ठीसमासोऽयम्। ननु च समयाशब्दयोगे "अभितः परितः समयानिकषा" (वा। ११९) इत्यादग्युपसंख्यानाद्द्वितीयया भवितव्यम्, अतः षष्ठ()एव तावन्न न सम्भवति, कुतः पुनस्तस्याः समासः? अथापि कथञ्चित् षष्ठी स्यात्, तथापि समयाशब्दस्याव्ययत्वत् "पूरणगुण" (२।२।११) इत्यादिना षष्ठीसमासप्रतिषेधेन भवितव्यम्? नैष दोषः; योगग्रहणादिह समयाशब्दार्थेन योगे द्वितीया विज्ञायते। स चार्थो मुख्य एव गृह्लते, न गौणः। स पुनर्मुख्योऽर्थः समीपम्। न चेह समयाशब्दस्य मुख्योऽर्थोऽस्ति, किं तर्हि? गौणोऽर्थः। अनुरेव समयाशब्देनोच्यते, तस्माच्छेषलक्षणा षष्ठ()एव न्याय्या। अत एव द्रव्यवाचित्वादव्ययसंज्ञाया अभावात् "पूरणगुण" २।२।११ इति प्रतिषेधो नोपपद्यते। "अनुर्यत्समया" इति। एतेनानुशब्दार्थे समयाशब्दो वत्र्तत इति दर्शयति। ननु च समयाशब्दस्य समीपमर्थः, तत्कथमनुशब्दः समयाशब्देनोच्येत इत्याह-- "यस्य समीपवाची"इति। एतेन समयाशब्दार्थाभिधायित्वादनुशब्दः समयाशब्देनोपचाराद्व्यपदिष्ट इत्याचष्टे। भवत्युपचारेण हि तदर्थाभिधायिनि तद्व्यपदेशः, यथा-- सीताहरणं काव्यमिति। तेनेत्यनेन यस्यानुशब्दः समयवाची स परामृश्यते। ननु च स#ओऽर्थः, तत्कुतस्तेन समासः? अर्थे कार्यासम्भवात् तद्वाचिनि शब्दे कार्यं विज्ञायते, तथा च तेनेत्यस्य तद्वाचिना शब्देनेत्ययमर्थोऽत्र गम्यते। "अनुवनम्" इति। तेनेत्यनेन यत् षष्ठ()न्तं तेन वनशब्देन समासः। वनस्यान्विति समीपसमीपिसम्बन्धे षष्ठ()एव युक्ता। "वनं

समया" इति; पूर्वोक्तेनोपसंख्यानेन वनशब्दाद्द्वितीया। "वृक्षमनु विद्योतते विद्युत्" इति। अत्र कप्रवचनीयलक्षणा द्वितीया। अनुशब्दोऽत्र लक्षणे वत्र्तते, न सामीप्ये॥

बाल-मनोरमा

नः क्ये ४८४, १।४।१५

नः क्ये। नकारादकार उच्चारणार्थः। "सुप्तिङन्त"मित्यतः सुबन्तं पदमित्यनुवर्तते। सुबन्तं नकारेण विशेष्यते। तदन्तविधिः। नकारान्तं सुबन्तं पदसंज्ञं स्यादिति लभ्यते। सुबन्तत्वादेव पदत्वे सिद्धे नियमार्थमिदम्। क्यग्रहणेन क्यच्क्यङोग्र्रहणं न तु क्यषः, "लोहितडाज्भ्यः क्यष्वचन"मिति वक्ष्यमाणतया हलन्तात्क्यषोऽभावात्। तदाह क्यचि क्यङि चेत्यादिना। ननु गव्यांचकारेत्यत्र आम आद्र्धधातुकावादेशसंपन्नवकारस्य यकारलोपं प्रति निमित्तत्वाऽसंभवादिति भावः। गव्यितेति। इटि अतो लोपः। राजीयतीत्यत्र आह-- नलोप इति। राजानमिच्छतीत्यर्थे क्यचि राजन् य ति इतिस्थिते "नः क्ये" इति पदत्वान्नकारस्य लोप इत्यर्थः। कृते नलोपे "क्यचि चे"त्यकारस्य ईत्वमिति मत्वाह-- राजीयतीति। न च ईत्वे कर्तव्ये नलोपस्याऽसिद्धत्वं शङ्क्यं, "नलोपः सुप्स्वरे"ति नियमादित्यलम्। ननु त्वामात्मन इच्छति, मामात्मन इच्छतीत्यत्र युष्मदस्मद्भ्यां क्यचि धात्ववयवत्वात्सुपो लुकि प्रत्ययलक्षणाऽभावात् "त्वमावेकवचने" इति कथं त्वमौ स्यातां, विभक्तौ परत एव तद्विधानादित्यत आह-- प्रत्ययोत्तरपदयोश्चेति। सुपो लुका लुप्तत्वेऽपि क्यचमादाय मपर्यन्तस्य त्वमाविति भावः। ननु युष्मानात्मन इच्छति, अस्मानात्मन इच्छति- युष्मद्यति अस्मद्यतीत्यत्रापि क्यचमादाय त्वमौ स्यातामित्यत आह-- एकार्थयोरित्येवेति। प्रत्ययोत्तरपदयोश्चे"त्यत्र "त्वमावेकवचने" इति सूत्रमनुवृत्तम्। एकवचनशब्दश्च न रूढः, किंतु एकत्वविशिष्टार्थवृत्तित्वमेकवचनशब्देन विवक्षितमिति युष्मदस्मत्प्रक्रियायां प्रपञ्चितं प्राक्। तथा च युष्मदस्मदोरेकत्वविशिष्टार्थवृत्तित्वाऽभावान्न त्वमाविति भावः। गिरमात्मन इच्छति, पुरमात्मन इच्छतीत्यत्र गिर्शब्दात्पुर्शब्दाच्च क्यचि विशेषमाह-- हलि चेति। "उपधादीर्घ" इति शेषः। ननु दिवमिच्छति दिव्यतीत्यत्रापि "हलि चे"ति दीर्घः स्यादित्यत आह-- धातोरित्येवेति। "हलि चे"ति सूत्रे "सिपि धातो"रित्यस्तदनुवृत्तेरिति भावः। दिव्यतीति। दिव्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति भावः। इहेति। "हलि चे"ति सूत्रे धातोरित्यनुवृत्तेः पुर्यतीत्यत्र न दीर्घ इति माधवग्रन्थश्चिन्त्य इत्यर्थः। कुत इत्यत आह-- पुर्गिरोः साम्यादिति। "गृ? शब्दे" "पृ? पालनपूरणयोः" इत्याभ्यां क्विपि "ऋत इद्धातोटरिति "उदोष्ठ()पूर्वस्ये"ति च इत्वे उत्वे च कृते रपरत्वे गिर्शब्दस्य च निष्पत्तेरिति भावः। प्रामादिक एवेति। दिव्शब्दस्याऽव्युत्पन्नप्रातिपदिकत्वान्न धातुत्वम्। दिव्धातोः क्विबन्तादूठि द्यूशब्दाच्च क्यचि "द्यूयती"त्येव उचितम्। विचि तु लघुपधगूणे "लोपो व्यो"रिति लोपे देशब्दात् क्यचि देयतीत्येवोचितमिति भावः। अदस्यतीति। अमुमात्मन इच्छतीत्यर्थे अदस्शब्दात्क्यचि सुपो लुका लुप्तत्वाद्विभक्तिपरकत्वाऽभावान्न त्यदाद्यत्वम्। सान्तत्वान्नोत्वमत्त्वे। "नः क्ये" इति नियमेन पदान्तत्वाऽभावान्न सस्य रूत्वमिति भावः। कर्तृशब्दात्क्यचि विशेषमाह-- रीङ्त इति। गाग्र्यशब्दात्क्यचि विशेषमाह-- क्यच्व्योश्चेति। आपत्यस्य यञो यकारस्य लोप इति भावः। कृते यलोपे "क्यचि चे"त्यकारस्य ईत्वं मत्वाह-- गार्गीयतीति। वात्सीयतीति। वात्स्यशब्दात्क्यचि पूर्ववत्। कविशब्दात्क्यचि विशेषमाह-- अकृत्सार्वेति। वाच्यतीति। वाच्शब्दात्क्यचि "नः क्ये" इति नियमेन पदत्वाऽभावान्न कुत्वम्। "वचिस्वपी"ति संप्रसारणं तु न, "धातोः कार्यमुच्यमानं धातुविहितप्रत्यये एवे"ति नियमात्। समिध्यतीति। समिध्शब्दात्क्यचि "नः क्ये" इति नियमेन पदत्वाऽभावान्न जश्त्वम्। लुटस्तासि इटिसमिध्य इता इति स्थिते "यस्य हलः" इति नित्ये यलोपे प्राप्ते--

तत्त्व-बोधिनी

नः क्ये ४१६, १।४।१५

नः क्ये। "लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणी"ति वक्ष्यमाणतया हलन्तात्क्यष् दुर्लभ इत्यभिप्रेत्याह-- क्यचि क्यङीति। एवं चेह "क्यषी" त्यपि कैश्चिदुक्तं तदुपेक्ष्यम्। "यस्य हलः" इति लोपमाशङ्क्याह-- सन्निपातपरिभाषयेति। यकारे परे वान्तादेशविधानाद्वकारो यलोपस्य निमित्तं न भवतीति भावः। [गव्यीति। अत्रान्तर्वर्तिविभक्त्या पदत्वाल्लोपो दुवारः, स्यादित्याशङ्क्याह-- अपदान्तत्वादिति। इदं च "समाधानस्य समाधानान्तराऽदूषकत्वा"दिति न्यायेन समाधिसौकर्यादुक्तम्। वस्तुतस्तु उक्तरीत्या शङ्कैव नेति बोध्यम्। अन्ये तु वार्तिक एव प्रश्लेष इति द्वितीयपक्षमाश्रित्येदं,सूत्रे वकारप्रश्लेषे लोपाऽसंभवात्, "न हि कार्यी"ति न्यायात्। न च वलीति निमित्तत्वेनाऽऽश्रयणात्तत्रापि लोपो भवत्येव, अन्यथा वलीत्येव कुर्यादिति वाच्यम्, वकारे परतोय कारलोपे तस्य निमित्तत्वेनाऽऽश्रयणावश्यकत्वादिति द्वितीयकल्प एव युक्त इत्याहुः। राजीयतीति। "क्यचि चे"त्यवर्णस्य ईत्वे कर्तव्ये "पूर्वत्रासिद्ध"मिति नलोपोऽसिद्धो न भवति, "नलोपः सुप्स्वरे" ति नियमात्। यद्यपि नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति "नलोपः सुप्स्वरे"ति सूत्रं राज#ईयतीत्यादिषु पठनीयम्, "राजभ्या"मित्यादौ तु "पूर्वत्रासिद्ध"मिति नलसोपस्याऽसिद्धत्वेन दीर्घाद्यभावसिद्धेस्तथापि "विधिमुखेन प्रवृत्ति"रिति पक्षाभ्युपगमेन हलन्तेषु राजभ्यां राजभिरित्यत्रैव पठितमिति ज्ञेयम्। नच विधिमुखप्रवृत्तिपक्षो निरालम्ब एवेति वाच्यम्, "अनुपराभ्यां कृञः" इति सूत्रस्थभाष्यग्रन्थपर्यालोपचनया तत्पक्षावगमात्। यत्तु "नलोपः सुप्स्वरे"ति सूत्रे मनोरमायामुक्तं--"नियमसूत्राणां विधिमुखेन प्रवृत्तिः, सामान्यशास्त्रतात्पर्यसङ्कोचकता चे"ति पक्षस्य "द्युद्भ्यो लुङी"ति सूत्रे भाष्यकृता ध्वनितत्वा"दिति। तच्चिन्त्यम्। तत्सूत्रस्य भाष्यकारैरस्पृष्टत्वात्। केचित्तु "द्युद्भ्योलुङीतिसूत्रम्"। परस्मैपदप्रकरणमित्यर्थः। तत्र हि "अनुपराभ्या"मिति सूत्रं वर्तत इति तत्सूत्रे यद्ध्वनितं तत्तु परस्मैपदप्रकरणे ध्वनितमिति भवति। यद्वा "अनुपराभ्यां कृञः" इत्यत्र हि भाष्यकृता "द्युद्भ्यो लुङी"ति परामृष्टम्। तथा च "द्युद्भ्यो लुङी"ति सूत्रं य()स्मस्तत् द्युद्भ्योलुङीतिसूत्रम् = "अनुपराभ्यां कृञः" इति सूत्रमित्यर्थ इत्येवं कुकविकृतिवत्कथंचित्स्थितस्य गतिः समर्थनीयेत्याहुः। पूर्गिरोः साम्यादिति। गॄ? शब्दे, पॄ? पालनपूरणयोरित्येताभ्यां क्विपि "ॠत इद्धातोः", "उदोष्ठ()पूर्वस्ये"ति प्रवृत्तेरिति भावः। प्रामादिक एवेति। दिवु धातोः क्विपि तु "द्यू"रिति स्यात्। ततः क्यचि तु द्यूयतीति भवति। क्विपं विहाय विचि कृते तूपधागुणो वलोपश्च स्यात्। ततः क्यचि तु देयतीति भवति। तथा च "हलि चे" ति सूत्रे वृत्तावपि "दातोरित्येव, नेह दिवमिच्छति दिव्यती"त्येवोक्तमिति भावः। आपत्ययकारस्य लोपं स्मारयति--क्यच्व्योश्चेति। "नः क्ये" इति नियमेन पदत्वाऽभावात्कुत्वं नेत्याह-- वाच्यतीति। एवं "समिध्यती" त्यत्र जश्त्वं नेति बोध्यम्। "मान्ताव्ययेभ्यः प्रतिषेधः" इति वार्तिकस्य यथा श्रुतव्याख्याने पुत्रमिच्छतीत्यत्रापि न स्यात्। पुत्रौ पुत्रान् वा इच्छतीत्यादावेव स्यात्, अतो व्याचष्टे-- मान्तप्रकृतिकादिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सिति ७।१ च ० पदम् १।१

समासः॥

सकारः इत् यस्य सः सित्, यस्मिन् सिति, बहुव्रीहिः।

अर्थः॥

सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति। {यचि भम् (१।४।१८)} इत्यस्य अपवादः अयम्॥

उदाहरणम्॥

भवदीयः। ऊर्णायुः।
काशिका-वृत्तिः
सिति च १।४।१६

यचि भम् १।४।१८ इति वक्ष्यति। तस्यायं पुरस्तादपवादः। सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति। भवतष् ठक्छसौ ४।२।११४ भवदीयः। ऊर्णाया युस् ५।२।१२२ ऊर्णायुः। ऋतोरण् ५।१।१०४, छन्दसि घस् ५।१।१०५ ऋत्वियः।
न्यासः
सिति च। , १।४।१६

"भवदीयः" इत्यादि। "तत्र जातः"४।३।२५ इत्यादौ शैषिकेऽर्थे तद्धितः, पदत्वात् "झलाञ्जशोऽन्ते" ८।२।३९ इति जश्त्वम्। "ऊर्णायुः" इति। "ऊर्णाया युस्" ५।२।१२२ इति युसि कृते पदसंज्ञया भसंज्ञायां निरस्तायां "यस्येति च" ६।४।१४८ इत्याकारलोपो न भवति। "ऋत्वियः" इति। ऋतुः प्राप्तोऽस्त्येति "ऋतोरण्" "छन्दसि घस्" ५।१।१०५ ऋत्वियः, पदत्वात् भत्वाभावे तदाश्रयः "ओर्गुणः" ६।४।१४६ न भवति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वादिषु ७।३ १८ असर्वनामस्थाने ७।१ १८ पदम् १।१ १४

समासः॥

सु आदिः येषां ते स्वादयः, तेषु॰ बहुव्रीहिः। असर्वनामस्थाने इत्यत्र नञ्तत्पुरुषः॥

अर्थः॥

सर्वनामस्थान-भिन्नेषु स्वादिषु (प्रत्ययेषु) परतः पूर्वं पदसंज्ञं भवति।

उदाहरणम्॥

राजभ्याम्, राजभिः, राजत्वम्, राजता, राजतरः, राजतमः। वाग्भिः।
काशिका-वृत्तिः
स्वादिष्वसर्वनमस्थाने १।४।१७

लघु-सिद्धान्त-कौमुदी
स्वादिष्वसर्वनामस्थाने १६४, १।४।१७

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात्॥
न्यासः
स्वादिष्वसर्वनामस्थाने। , १।४।१७

अत्र यदि सप्तमीबहुवचनादारभ्य आ कपः प्रत्यया गृह्येरन्, तदा "असर्वनामस्थाने" इति प्रतिषेदं न कुर्यात्; प्राप्त्यभावात्। कृतश्चासावतोऽवसीयते प्रथमैकवचनादारभ्या कपः प्रत्ययाः स्वादयो गृह्यन्त इत्यत आह-- "स्वादिष्विति सुशब्दादेकवचनादारभ्य" इति। "राजत्वम्, राजता" इति। "तस्य भावस्त्वतलौ" ५।१।११८। "राजतरः" इति। "द्विवचनविभज्योपपदे तरबीयसुनौ" ५।३।५७ इति तरप्। "राजतमः" इति। "अतिशायने" ५।३।५५ इत्यादिना तमप्। "राजानौ,राजानः" इति। अत्र पदसंज्ञाया अभावान्नलोपो न भवति। यद्येवम्, राजत्यत्रापि न स्यात्, प्रत्ययलक्षणेनासर्वनामस्थान इति पदसंज्ञाया अभावात्,नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति-- भवति सौ परतः पदसंज्ञेति, यदयम् "नङिसम्बुद्ध्योः" ८।२।८ इति प्रतिषेधं शास्ति। अत्र सम्बुद्धिशब्दोऽनर्थकः स्यात्, पदत्वाभावादेव नलोपस्याप्राप्तेः। अथ वा -- "असर्वनामस्थाने" इति पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः,तेन सर्वनामस्थानादन्यत्र पदसंज्ञा विधीयते; न तु सर्वनामस्थानं प्रतिषिध्यते। तेन तत्र पूर्वसूत्रेण सौ परे पदसंज्ञा भविष्यति। अथ वा- प्रसज्यप्रतिषेधेऽपि न दोषः, यस्मात् "अनन्तरस्य विधिर्वा प्रतिषेधो वा"(व्या।प।१२) इत्यनन्तरा या प्राप्तिः सा प्रतिषिध्यते; न व्यवहिता। तेन "सुप्तिङन्तं पदम्" १।४।१४ इत्यकारलोपः॥

बाल-मनोरमा

स्वादिष्वसर्वनामस्थाने २२८, १।४।१७

तदेतदाह--स्वादिपञ्चेति। स्वादिष्वस। "असर्वनामस्थाने"इति बहुत्वेऽप्येकवचनमार्षम्। कप्प्रत्ययावधिष्विति। पञ्चमाध्यायान्ते विधीयमानकप्प्रत्ययोत्तरावधिकेष्वित्यर्थः। तत्र च व्याख्यानमेव शरणम्। एवं च दत्-असित्यत्र दत्शब्दस्य सुबन्तत्वाऽभावेन पदत्वाऽभावेऽप्यनेन सूत्रेण पदत्वात् "झलां जशोऽन्ते" इति तकारस्य जश्त्वं स्यादित्याक्षेपः सूचितः।

तत्त्व-बोधिनी

स्वादिष्वसर्वनामस्थाने १९३, १।४।१७

स्वादिष्वसर्वनाम। "सु"रत्र सप्तमीबहुवचनमिति न शङ्क्यम् , किंतु "असर्वनामस्थाने" इति पर्युदासात्प्रथमैकवचनमेव। "सुपी"त्येव सिद्धे आदिग्रहणमधिकपरिग्रहार्थमित्याशयेनाह -कप्प्रत्ययावधिष्विति। नन्वेवं-राजे"त्यत्र नलोपो न स्यात्प्रत्ययलक्षणेन सर्वनामस्थानपरतया पदत्वाऽभावात्। नैष दोषः। सौ परतः "स्वादिषु" इत्यनेन पदत्वाऽसंभवेऽपि सुब्विशिष्टस्य "सुप्तिङ्न्त"मितित पदसंज्ञायां हल्ङ्यादिना सुलोपे एकदेशविकृतन्यायेन नकारान्तस्य पदत्वात्। यदि तु "स्वादिषु" इतियोगेन स्वादिषु परेषु पूर्वं पदं भवतीति पूर्वस्य पदसंज्ञां विधाय "यचि भ"मित्यत्र "यची"ति च्छित्त्वायजादौ सर्वनामस्थाने परतः पूर्वं पदं नेति निषिध्यते, तदा औजसादिषुपदसंज्ञाऽभावेऽपि सौ परतः पदत्वसंभवात् "राजे"त्यादौ नलोपे कार्ये न काप्यनुपपत्तिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यचि ७।१ भम् १।१ २० स्वादिषु ७।३ १७ असर्वनामस्थने ७।१ १७

समासः॥

य् च अच् च तस्मिन् यचि, समाहारः द्वन्द्वः

अर्थः॥

सर्वनामस्थान-भिन्न-स्वादौ यकारादौ, अजादौ च प्रत्यये परतः पूर्वं भ-संज्ञकं भवति।

उदाहरणम्॥

गार्ग्यः, वात्स्यः। दाक्षिः, प्लाक्षिः।
काशिका-वृत्तिः
यचि भम् १।४।१८

सवादिश्वसर्वनामस्थाने इति वर्तते। पूर्वेण पदसंज्ञायां प्राप्तायां तदपवादो भसंज्ञा विधीयते। यकारादावजादौ च स्वादौ सर्वनामस्थानवर्जिते प्रत्यये परतः पूर्वं भस्ंज्ञं भवति। यकाराऽदौ गार्ग्यः। वात्सयः। अजादौ दाक्षिः। प्लाक्षिः। नभोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम्। नभ इव नभस्वत्। अङ्गिरा इव अङ्गिरस्वत्। मनुरिव मनुष्वत्। वृषण्वस्वश्वयोः। वृषनित्येतत् वस्वश्वयोः प्रतो भसंज्ञं भवति छन्दसि विशये। वृषण्वसुः। वृषणश्वस्य मैनासीत्। भप्रदेशाः भस्य ६।४।१२९ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
यचि भम् १६५, १।४।१८

यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात्॥
न्यासः
यचि भम्। , १।४।१८

"यचि" इति वर्णग्रहणं सप्तमीनिर्दिष्टम्। अतः "यस्मिन् विधिस्तद्दावल्ग्रहणे" (वा।१४) इति तदादिविधिनात्र भवितव्यमित्यत आह-- "यकारादौ" इत्यादि। गाग्र्य इत्यादौ भसंज्ञायां सत्यां "यस्येति च" ६।४।१४८ इत्यकारलोपः। "नभोऽङिरोमनुषां वत्युपसंख्यानं कर्तव्यम्" इति। भसंज्ञायास्त्वत्र पदसंज्ञाबाधः फलम्। "नभ इव" इति तुल्यार्थतोपदर्शनमेतत्; न तु प्रथमासमर्थाद्वतिः। स तु नभसा तुल्यं वत्र्तत इति "तेन तुल्यम्" ५।१।११४ "आङ्गिरस्वत्" इति। पूर्वेण तुल्यम्। "मनुष्वत" इति। "जनेरुसिः"(द।उ।९।३७) इत्यत्र बहुलग्रहणानुवृत्तेः "मन ज्ञाने" (धा।पा।११७६) इत्येतस्मादुसिप्रत्ययः। "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्। मनुष् इति स्थिते पूर्ववद्वतिः-- मनुष्वदिति। यद्यत्र पदसंज्ञा स्यात् तदा षत्वस्यासिद्धत्वादिह रुत्वं स्यात्, ततश्च मनुर्वदित्यनिष्टं रूपं स्यात्। उपसंख्यानशब्दस्य चेह प्रतिपादनम्-- "सिति च" १।४।१६ इत्यतश्चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः। तेन नभोऽङ्गिरोमनुषां वतौ भसंज्ञा भविष्यति। "वृषण्वस्व()आयोः" इति। अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां प्राप्तायां भसंज्ञा विधीयते,तस्याश्च विधिश्चकारानुवृत्तेरेव लभ्यते। वृष्णोऽ()आः, अत्र भत्वे सति यद्यपि णत्वस्यासिद्धत्वम्, तथापि नलोपः पदनिबन्धनो न भवति, "पदान्तस्य" ८।४।३६ इति णत्वप्रतिषेधश्च॥
बाल-मनोरमा
यचिभम् २२९, १।४।१८

भसंज्ञया पदसंज्ञाबाधान्न जश्त्वमिति समाधातुं भसंज्ञासूत्रमाह--यचि भं। य्च अश्चेति समाहाद्वन्द्वः। "स्वादिष्वसर्वनामस्थाने" इत्यनुवृत्तं "यची"त्यनेन विशेष्यते। "यस्मिन्विधि"रिति तदादिविधिः। तदाह-- यकारादिष्वित्यादिना। एवंच दत्-असित्यत्र "दत्" इत्यस्य भसंज्ञया पदसंज्ञाबाधान्न जश्त्वमिति भावः। ननु

पदभसंज्ञयोरिह समावेशः कुतो न स्यात्। नच"विप्रतिषेधे परं कार्य"मिति परैव भसंज्ञा भवतीति वाच्यं, विरोध हि विप्रतिषेधः।

तत्त्व-बोधिनी
यचि भम् १९४, १।४।१८

यचि भम्। "यची"त्यल्ग्रहणेन सप्तमीनिर्देशात्तदादिविधिरित्याह-यकारादिष्वित्यादि। यकारादिषु किम्?।गार्ग्यः। वात्स्यः। गर्गादिभ्यो यञि "यस्येति चेत्यकारलोपो यथा स्यात्। असर्वनामस्थानेषु किम्?। सुपादौ, सुपादः। विद्वांसौ, विद्वांसः। दित्यवाहौ , दित्यवाह इत्यादौ "पादः पत्" "वसोः संप्रसारणम्" "वाह ऊ"डित्यादयो मा भूवन्निति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तसौ १।२ मत्वर्थे ७।१ भम् १।१ १८

काशिका-वृत्तिः
तसौ मत्वर्थे १।४।१९

भम् इति वर्तते। तकारान्तं सकारान्तं शब्दरूपं मत्वर्थे प्रत्यये परतो भसंज्ञं भवति। उदश्वित्वान् घोषः। विद्युत्वान् बलाहकः। सकारान्तम् पयस्वी। यशस्वी। तसौ इति किम्? तक्षवान् ग्रामः।
लघु-सिद्धान्त-कौमुदी
तसौ मत्वर्थे ११८९, १।४।१९

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। गरुत्मान्। वसोः संप्रसारणं। विदुष्मान्। (गुणवचनेभ्यो मतुपो लुगिष्टः)। शुक्लो गुणोऽस्यास्तीति शुक्लः पटः। कृष्णः॥
न्यासः
तसौ मत्वर्थे। , १।४।१९

"तसौ" इति वर्णग्रहणम्। न च वर्णमात्रान्मत्वर्थीय सम्भति, अतः सामर्थ्यात् तदन्तविधिर्विज्ञायत इत्याह-- "तकारान्तम्" इत्यादि। "मत्वर्थे प्रत्यये" इति व्यधिकरणे पदे; षष्ठीसमासः। मतोरर्थो मत्वर्थ इति, तत्र यो वत्र्तते प्रत्ययस्तस्मिन्नित्यर्थः। अथ वा- समानाधिकरणे पदे, मतुशब्देन साहचर्यान्मतुप्सहचरितार्थ उच्यते-- णतुबर्थो यस्य तस्मिन्, न तु यस्मिन्निति मत्वर्थे प्रत्यय इति। अर्थग्रहणं कमतुपोऽन्यत्रापि यथा स्यात्; इतरथा हि मतावित्युच्यमाने मतावेव स्यात्; नान्येषु। मत्वर्थग्रहणे क्रियमाणे मतुपि न स्यात्; तस्यार्थविशेषणत्वात्। विशेषणस्य च कार्येण सम्बन्धानुपपत्तेः। न हि चित्रगुरानीयतामित्युक्ते विशेषणभूता गावोऽडप्यानीयन्ते, नैष दोषः; विशेषमपि क्वचित् कार्ये विशिष्यते, यथा हि-- देवदत्तशालाया ब्राआह्मणा आनीयन्तामित्युक्ते देवदत्तः शालायां विशेषणभूतो यदि ब्राआह्मणो भवति तदा सोऽप्यानीयत एव। "उद()इआत्वान" इति। भत्वात् पदसंज्ञाभावे जश्त्वं सिध्यति। "झयः" ८।२।१० इति वत्वम्, "उगिदचाम्" ७।१।७० इति नुम्, "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "पयस्वी, यशस्वी" इति। "अस्मायामेधारुआजो विनिः" ५।२।१२० भत्वाद्रुत्वं न भवति। "इन्दरन्पूषार्यम्णां सौ" ६।४।१२ इत्यनुवत्र्तमाने "सौ च"

६।४।१३ इत्यनेन दीर्घः॥

बाल-मनोरमा

तसौ मत्वर्थे १८७१, १।४।१९

ननु विद्वच्छब्दान्मतुपि यजादिस्वादिपरकत्वाऽभावेन भत्वाऽभावात् "वसोः संप्रसारण"मिति करथं संप्रसारणमित्यत आह--तसौ मत्वर्थे। मत्वर्थप्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वात्तदन्तविधिमभिप्रेत्याह-तान्तसान्ताविति। तकारसकारान्तावित्यर्थः।

गुणवचनेभ्य इति वार्तिकमिदम्, गुणे गुणवति च ये प्रसिद्धाः शुक्लादिशब्दास्त एव गृह्न्ते, नतु रूपादिशब्दा अपि।तेन "रूपं वस्त्र"मित्यादि न भवति। अत्र यद्वक्तव्यं तदध्वरमीमांसाकौतूहले अरुणाधिकरणे प्रपञ्चितमस्माभिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अयस्मादीनि १।३ छन्दसि ७।१ भम् १।१ १८

काशिका-वृत्तिः

अयस्मयाऽदीनि छन्दसि १।४।२०

अयस्मयाऽदीनि शब्दरूपाणि छन्दसि विशये साधूनि भवन्ति। भपदसंज्ञाधिकारे विधनात् तेन सुखेन सधुत्वम् अयस्मयाऽदीनां विधीयते। अयस्मयं वर्म। अयस्मयानि पात्राणि। क्वचिदुभयम् अपि भवति। स सुष्टुभा स ऋक्वता गणेन। पदत्वात् कुत्वं, भत्वाज् जश्त्वं न भवति। छन्दसि इति किम्? अयोमयं वर्म। आकृतिगणो ऽयम्।

न्यासः

अयस्मयादीनि च्छन्दसि। , १।४।२०

यद्यत्र भसंज्ञा विधीयेत तदा पदसंज्ञा न स्यात्, अथ यदि पदसंज्ञा विधीयेत तदाऽत्र भसंज्ञा न स्यात्, तदा भपदसंज्ञयोः समावेशो न स्यात्; एकसंज्ञाधिकारात्। साधुत्वविधाने त्वेष दोषो न भवति, तद्धि केषाञ्चिद्भसंज्ञा विधीयते पदसंज्ञकानाम्, केषाञ्चिदुभयसंज्ञाकानाम्; तस्मात् साधुत्वमेव विधातुं युक्तमित्यत आह-- "अयस्मयादीनि" इत्यादि। कथं पुनरेषां साधुत्वं विधीयत इत्याह-- "भपदसंज्ञाधिकारे" इत्यादि। द्वारम्, मुखम्, उपाय तत्र भाषाग्रहणमस्ति, तथाप्ययस्मयशब्दस्यास्मादेव साधुत्वविधानाच्छन्दस्यपि मयड् भवतीति भत्वाद्रुत्वं न भवति। "सऋक्वता" इति। ऋचोऽस्य सन्तीति मतुप्। पदत्वात् "चोः कुः" ८।३।३०) इति कुत्वम्। भत्वात् "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वं न भवति। "आकृतिगणोऽयम्" इति। आदिशब्दस्य प्रकारवाचित्वात्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ बहुषु ७।३ बहुवचनम् १।१

अर्थः॥

बहुत्वे विवक्षिते बहुवचनं भवति।

उदाहरणम्॥

ब्राह्मणाः पठन्ति।

काशिका-वृत्तिः

बहुषु बहुवचनम् १।४।२१

ङ्याप् प्रातिपदिकात् स्वादयः, लस्य तिबादयः इति सामान्येन बहुवचनं विहितं, तस्य अनेन बहुत्वसङ्ख्या वाच्यत्वेन विधीयते। बहुषु बहुवचनम् भवति। बहुत्वम् अस्य वाच्यं भवति इति यावत्। कर्मादयो ऽप्यपरे विभक्तीनाम् अर्था वाच्याः। तदीये बहुत्वे बहुवचनम्। कर्माऽदिषु बहुषु बहुवचनम् इत्यर्थः। व्राह्मणाः पठन्ति। यत्र च सङ्ख्या सम्भवति तत्र अयम् उपदेशः। अव्ययेभ्यस् तु निःसङ्ख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव।

लघु-सिद्धान्त-कौमुदी

बहुषु बहुवचनम् १२८, १।४।२१

बहुत्वविवक्षायां बहुवचनं स्यात्॥

न्यासः

बहुषु बहुवचनम्। , १।४।२१

"तस्यानेन बहुत्वसंख्या वाच्यत्वेन विधीयते" इति। एतेन विध्यर्थतामस्य योगस्य दर्शयति। इह केषाञ्चित् "स्वार्थद्रव्यलिङ्गसंख्याकर्माद्यात्मकः पञ्चकः प्रातिपदिकार्थः" इति दर्सनम्। केषाञ्चित् "स्वार्थद्रव्यलिङ्गात्मकस्त्रिकः प्रातिपदिकार्थः" इति। तत्र स्वार्थो विशेषणम्; स्वरूपजातिगुणद्रव्याणि। द्रव्यस्तु विशेष्यम्, तत्पुनर्जातिगुणद्रव्याणि। तत्र यदा शब्दस्वरूपेण विशिष्टा जातिरभिधीयते-- गौरिति, तदा शब्दस्वरूपं विशेषणत्वात् स्वार्थो भवति; जातिस्तु विशेष्यत्वाद्()द्रव्यम्। यदा तु जात्या विशिष्टो गुणोऽभिधीते-- पटस्य शुक्लो गुण इति, तदा जातिर्विशेषणत्वात् स्वार्थो भवति; गुणस्तु विशेष्यत्वाद्()द्रव्यम्। यदा तु गुणैर्विशिष्टं पटादिकं द्रव्यमुच्यते-- शुक्लः पट इति, तदा विशेषणभूतो गुणः स्वार्थो भवति; विशेष्यभूतं पटादिकं द्रव्यमेव। यदा पुनद्र्रव्यमपि द्रव्यान्तरस्य विशेषणभूतं भवति-- यष्टीः प्रवेशय, कुन्तान् प्रवेशयेत्यादौ, तदा यष्ट()आदिकं द्रव्यं विशेषणभावापन्नं स्वार्थः; द्रव्यान्तरं विशेष्यभावापन्नं पुरुषादिकं द्रव्यमेव। क्वचित्सम्बन्धोऽपि स्वार्थो भवति-- यत्र सम्बन्धनिमित्तकः प्रत्यय उत्पद्यते, यथा-- दण्डी, विषाणीति। अत्र दण्डपुरुषसम्बन्धो विशेषणम्, दण्डीति द्रव्यम्। क्वचित् क्र#इयापि स्वार्थो भवति, यत्र क्रियानिमित्तकः प्रत्ययः उत्पद्यते, यथा--पाचकः, पाठक इति। क्रियाकारकसम्बन्धोऽत्र स्वार्थ इत्यपरे। लिङ्गं स्त्रीत्वादि, संख्यैकत्वादि, कर्मादयो वक्ष्यमाणाः कारकविशेषाः। तत्र पूर्वोक्तयोर्दर्शनयोर्द्वितीयं यद्दर्शनं तदिह वृत्तिकारेणाश्रितम्। धातोस्तु क्रियैव वाच्येत्यत्राचार्याणामविवाद एव। तत्र प्रातिपदिकस्य पूर्वोक्ते त्रिकेऽर्थे सति धातोश्च क्रियात्मकत्वे यदीदं सूत्रं नोच्येत, ततः "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (सी।वृ।१२५) इति प्रातिपदिकाज्जसादिबहुवचनं विधीयमानं त्रिक एवार्थे स्यात्, न बहुत्वसंख्यायाम्। धातोरपि झिप्रभृति बहुवचनं विधीयमानं क्रियायामेव स्यात्; न तु बहुत्वसंख्यायाम्। तस्मादनेनैव तस्य बहुत्वसंख्यावाच्यत्वेन विधीयत इति विध्यर्थमेतद्भवति। यथा चानेन योगेन बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते, तथा "कर्मणि द्वितीया" २।३।२ इत्येवमादिभिर्योगैर्द्वितीयादीनां कर्मादि च। "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इत्यनेनापि लकाराणां कर्माद्येव। तस्मादेतेऽपि योगा विध्यर्था एव वेदितव्याः। येषाञ्च पञ्चकं प्रातिपदिकार्थ इति मतम्, तेषां प्रातिपदिकस्यैव पञ्चाप्यर्था वाच्याः। विभक्तयश्च

तद्द्योतिका भवन्ति। तत्र "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (सी।वृ।१२५) इति विनापि वचनेनानेन प्रातिपदिकाद्बहुवचनं जसादि बहुत्वे सिद्धमेव। तत्र त्वनियमेनान्यत्राप्येकत्वादौ प्राप्तमनेन नियम्यत इति नियमार्थमेतद्भवति। कस्मात् पुनर्वृत्तिकारेण त्रिकं प्रातिपदिकार्थ इति दर्शनमाश्रितम्? युक्तत्वात्। तथा हि-- वृक्षं पश्येत्यादौ न हि विना विभक्तिभिः संख्याकर्मादयश्चार्थाः प्रतीयन्ते। यद्यपि पयः पयो जरयतीत्यादौ विनापि विभक्त्या संख्याकर्मादेरर्थस्य प्रतीतिर्भवतीति, तथापि पयसी पयांसि पयसेत्येवमादौ संख्याकर्मादिप्रतीत्यर्थं नियोगतो विभक्तिरपेक्ष्यत एव। न हि यथा गर्गा इत्यत्र बहुवचनेन यञ्प्रत्ययमन्तरेणापत्यार्थः प्रतीयते, तथा गार्ग्य इत्यत्र प्रकृतिरेवापत्यार्थमभिधत्त इति शक्यते वक्तुम। अपि च -- पयः पयो जरयतीत्येवमादौ विभक्तिविशेषओत्पत्तिसामथ्र्यादेव संख्याकर्माद्यथ्र्स्यं प्रतीतिर्भवति। तथा हि, यतः स विभक्तिविशेष उत्पन्नस्त एवासावर्थविशेषः प्रतीयते, नान्यस्मादिति त्रिक एव प्रातिपदिकार्थो युक्तः। यदि तर्हि बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते तदा सूत्रे भावप्रत्ययेन बहुत्वनिर्देशः कत्र्तव्यः, अन्यथा बहुत्वसंख्या न प्रतीयेत? न कत्र्तव्यः; अन्तरेणापि भावप्रत्ययं भावप्रधानो निर्देशो भविष्यतीति, यथा -- पटस्य शुक्ल इति। नन्वेवमपि भादस्यैकत्वाद्बहुष्विति बहुवचनं नोपपद्यते, नैष दोषः; यस्माद्बहुतवसंख्याधारस्य द्रव्यस्य यो भेदस्तं बहुत्वे गुणेऽध्यारोप्य बहुष्विति बहुवचनेन निर्देशः कृतः , संख्यावाच्ययं बहुशब्दो न वैपुल्यवाचीति ज्ञापनार्थश्च। तेन वैपुल्यं बहुवचनस्य वाच्यं न भवतीति बहुरोदनः,बहुः सूप इति वैपुल्यवाचिनो बहुशब्दादेकवचनमेव भवति, न बहुवचनम्। यदि बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते, इह वृक्षं पश्येत्यत्र बहुवचनं प्राप्नोति, द्वे ह्यत्र संख्ये-- समुदायसंख्या चैकत्वम्, अवयवसंख्या च फलमूलशाखाद्यवयवसमवेता बहुत्वम्। अस्यापि प्रातिपदिकार्थेनैकार्थसमवायलक्षणः सम्बन्धोऽस्त्येव। तथा हि-- येष्वयववेषु समवेत। बहुत्वसंख्या प्रातिपदिकार्थोऽपि समुदायस्तत्रैव समवेतः, ततश्च तस्माद्बहुवचनं प्राप्नोतीत्यत आह-- "कर्मादयः" इत्यादि। कर्मादयो ह्येकविभक्तिशब्दवाच्यत्वात् प्रत्यासन्ना बहुत्वसंख्यायाः; ततः प्रत्यासत्तेस्तदीय एव बहुत्वे बहुवचनं भवति। समुदाय एव हि वृक्षं पश्येत्यत्र दृशिक्रियया व्याप्तमिष्टतम इति स एव कर्मभावमापद्यते, नावयवाः, तत्कुतो बहुवचनस्य प्रसङ्ग? "कर्मादिषु" इत्यादि। कर्मादयो बहुवचनस्य वाच्याः। तदीयं बहुत्वं बहुष्वेव कर्मदिषु सम्भवति, अतः सामथ्र्यात् कर्मादिषु बहुष्वित्येषोऽर्थः सम्पद्यते। यदि तर्हि विभक्तीनां बहुवचनस्य बहुत्वसंख्या वाच्यत्वेन विधीयते, तदा निःसंख्येभ्योऽव्ययेभ्यः स्वादयो न स्युः; ततश्च पदसंज्ञा तेषां न स्यादित्याह-- "यत्र च" इत्यादि। ननु स्वादिविधानसूत्रे संख्याकर्मादयः स्वादीनामर्थाः शास्त्रान्तरेण विहिताः, तेन सहास्यैकवाक्यतेति वक्ष्यति। तत्कुतः स्वादीनां सामान्यविहितत्वम्? न हि "बहुषु बहुवचनम" १।४।२१, "कर्मणि द्वितीया" २।३।२ इत्यादिना शास्त्रान्तरेण स्वौजसादेः सूत्रस्यैकवाक्यतायां स्वादीनां सामान्यविहितत्वमुपपद्यते। एवं तर्हि ज्ञापकेन अव्ययेभ्यः सामान्येन स्वाद्युत्पत्तेज्र्ञापितत्वात् सामान्यविहिता इत्युक्तमित्यदोषः; किं पुनस्तज्ज्ञापकम्? "अव्ययादाप्सुपः" २।४।८२ इत्यव्ययादुत्पन्नानां सुपां लृग्ववचम्, न ह्यनुत्पन्नानां लुगुपपद्यते॥

बाल-मनोरमा

बहुषु बहुवचनम् १८६, १।४।२१

बहुषु। पूर्वसूत्राऽवैरूप्यायेहापि बहुशब्दो बहुत्वपर इत्याह--बहुत्व इति। नचात्र सूत्रे बहुशब्दस्य बहुत्वपरत्वेऽपि बहुत्वस्य एकत्वाद्बहुष्विति बहुवचनं कथमिति शङ्क्यम्, बहुत्वसंख्याधरद्रव्यगतबहुत्वस्य बहुत्वगुणे आरोपेण तदुपपत्तेः। बहुत्वं च त्रित्वचतुष्ट्वादिपराद्र्धसङ्ख्याव्यापकीभूतधर्मविशेषः, नतु त्रित्वाद्यन्यतममित्येकादशस्य प्रथमे "बहुवचनेन सर्वप्राप्तेर्विकल्पः स्या"दिति कपिञ्जलाधिकरणे तद्भाष्यवार्तिकयोः स्थितम्। प्रपञ्चितं चास्माभिरध्वरमीमांसाकुतूहलवृत्तौ। एवंच बहुरोदन इति वैपुल्यवाचिनो बहुशब्दान्न बहुवचनम्। द्वयेकयोरित्यादिप्रायपाठबलेन सङ्ख्यानियतस्यैव तथाविधबहुत्वस्यात्र विवक्षितत्वात्। एकस्यामेव स्त्र्यादिव्यक्तौ दारा

इत्यादिप्रयोगे त्ववयवबहुत्वस्यावयविन्यारोपाद्बहुवचनं कोशवृद्धव्यवहारबलादित्यलम्। रुत्वविसर्गाविति। रामशब्दात्प्रथमाविभक्तौ एकवचने सुप्रत्यये सति, उकारस्य इत्त्वेन लोपे, "ससजुषो"रिति रुत्वे, "खरवसानयो"रिति विसर्ग इत्यर्थः। स इत्युकारस्तु अर्वणस्त्रसावित्यादौ विशेषणार्थः। असीत्युक्ते हि असकारादावित्यर्थः स्यात्। ततश्च वाजमर्वत्सु इत्यत्र अर्वणस्तृविधिर्न प्रवर्तेत। नचात्र रोरसुस्वात्तदन्तस्य पदत्वाऽभावाद्रेफस्य पदान्तत्वाऽभावात्कथमिह विसर्ग इति वाच्यम्। स्थानिवद्भावेन रोः सुस्वात्। नच स्थानिवद्भावे कर्तव्ये त्रैपादिकस्य रोरसिद्धत्वं शङ्क्यम्, "इदुदुपधस्य चाप्रत्ययस्ये"त्यप्रत्ययग्रहणेन स्थानिवत्त्वातिदेशे रोरसिद्धत्वाऽभावज्ञापनात्। तत्र ह्यप्रत्ययग्रहणमग्नि> <करोति, कविभि><कृतमित्यादौ विसर्गपर्युदासार्थम्। स्थानिवत्त्वे कर्तव्ये रोरसिद्धत्वे तु तत्र विसर्गस्यैवाऽबावात्तद्वैयथ्र्यं स्पष्टमेवेत्यलम्। राम इति। "रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि। इति रामपदेनासौ परं ब्राह्मआभिधीयते। इति श्रुतिः। "करणाधिकरणयोश्च" इत्यधिकारे "हलश्च" इत्यधिकरणे घञ्। कृत्तद्धितेति प्रातिपदिकत्वम्। अव्युत्पन्नः संज्ञाशब्दो वा। तथा सति अर्थवदिति प्रातिपदिकत्वम्।

तत्त्व-बोधिनी

बहुषु बहुवचनम् १५५, १।४।२१

बहुषु। अयमपि सङ्ख्यापर एवेत्याह--बहुत्व इति। बहुवचनं त्वाश्रयद्रव्यगतबहुत्वं धर्मे आरोप्य कृतम्। तत्फलं तु "बहुः परव्त" इति वैपुल्यवाचिनो नेह ग्रहणमिति सूचनमेव। वस्तुतो व्यर्थं तत्, परत्वादेकवचनसंभवादिति शब्दकौस्तुभादौ स्थितम्। रुत्वविसर्गाविति। ननु रुत्वस्यासिद्धत्वादुकारस्येत्संज्ञालोपयोरभावात् "स्थानिवदादेशः" इत्यस्यापि त्रिपाद्यामप्रवृत्त्या रेफान्तस्य "सुप्तिङ्न्त"मिति पदसंज्ञाऽभावेन विसर्गोऽत्र दुर्लभः। विसर्गविधेस्तु "पुन"रित्यादौ चरितार्थत्वादिति चेन्मैवम्, "न मु ने" इति सूत्रे "ने"ति योगं विभज्य "असिद्धं ने"ति व्याख्यायामिष्टसिद्धिरित्युक्तत्वात्। राम इति। संज्ञाशब्दोऽयमव्युत्पन्न इति पक्षेऽर्थवत्सूत्रेण प्रातिपदिकसंज्ञा, "करणाधिकरणयोश्चे"त्याधिकारे घापवादेन "हलश्चे"ति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु "कृत्तद्धिते"ति सूत्रेणेति विवेकः। अत्र केचित्परिश्कुर्वन्ति--"गन्धर्वः शरभो रामः सृमरो गवयः शशः। इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः इत्यमरोक्तया यदि पशुविशेषे प्रयुज्यते तदा रूढोऽयं रामशब्द इत्यर्थवत्सूत्रेण संज्ञा। यदा तु रामचन्द्रे भगवति प्रयुज्यते तदा रमन्ते योगिनोऽस्मिन्निति व्युत्पत्त्याश्रयणात्कृद्धितेति सूत्रेण संज्ञेति। सरूपाणामेकशेषः। इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थः। न च विरूपेष्वेकशेषाऽप्रवृत्त्या "घटकलशा"विति द्वन्द्वापत्तिरिति शङ्क्यम्, "वुरूपाणा"मिति वार्तिकस्य वक्ष्यमाणत्वात्। वस्तुतस्तु सूत्राक्षरैरेव वार्तिकार्थो लभ्यते। रूप्यते बोध्यते। इति रूपमर्थः, समानं रूपं येषामिति सरूपाः। ज्योतिर्जनपदेत्यादिना समानस्य सभावः। तथा समानं रूपं स्वरूपं येषां ते सरूपाः। सरूपाश्च सरूपाश्च सरूपाः, तेषामित्येकशेषेण व्याख्यानात्। न च स्वाङ्गे स्वव्यापाराऽयोगो वाक्यापरिसमाप्तिन्यायादिति वाच्यम् ; उद्देश्यतावच्छेदकरूपाक्रान्ततया स्वस्मिन्नपि प्रवृत्तेः। अन्यथा "तुल्यास्यप्रयत्न"मित्यादौ सवर्णदीर्घो न स्यात्। तथाऽर्थवत्सूत्रान्तर्गतानां प्रातिपदिकत्वं, "प्रत्ययः" "परश्चे"त्यत्र सुप्प्रत्ययः, "ससजुषो"रित्यत्र रुः, "खरवसानयो"रिति सूत्रे विसर्गश्च न स्यादिति सर्वोपप्लवः स्यात्। "स्वाध्यायोऽध्येतव्यः" इत्यस्य "नेह नाने"त्यादिश्रुतेश्च स्वस्मिन्नपि यथा प्रवृत्तिस्तथा दीर्घादीनामपीति चेत्तुल्यमेकशेषेऽपि। एतेन "ऐउ"णित्यादौ "आद्गुणः" इत्यादिसन्धिकार्यं कुतो नेत्याशङ्कायाम्--"वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्सन्धिर्न"ेति केषाञ्चित्समाधानं परास्तम्। वर्णोपदेशे इत्संज्ञायामत्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां गुणादीनामुपेन्द्र इत्यादौ तटस्थ इव उद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात्। स्यादेतत्--"सरूपाणामेक एकविभक्तौ" इत्येव सूत्रमस्तु, किमनेन "शेष"ग्रहणेन?। अत्राहुः--तथाहि सति सरूपाणां स्थाने एकोऽन्तरतम आदेशो भवतीत्यर्थः स्यात्। तथा चा()आश्चा()आश्चेत्यत्रोदात्तद्वयवतः स्थाने उदात्तद्वयवानादेशस्तथाऽनुदात्तद्वयवतः स्थानेऽनुदात्तद्वयवानादेशः प्रसज्येतेति।

एकविभक्तौ यानीति। विभक्तिः सारूप्ये उपलक्षणं न त्वेकशैषे निमित्तम्। एवं चाऽनैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते। यद्योतन्नारभ्येत तर्हि प्रत्येकं विभक्तिः स्याद्द्वन्द्वश्च प्रवर्तते। आरब्धे त्वेकशेषेऽनेकसुबन्तविरहाद्द्वन्द्वस्य प्राप्तिरेव नास्तीति भावः। ननु सुबुत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्यनुत्पत्तौ "रामौ" "र#आमा" इत्यादि न सिध्येत्। नैष दोषः, शिष्यमाणस्य लुप्यमानार्थाभिधीयित्वात्। अतएव "कृत्तद्धितसमासैकशेष"त्येकशेषो वृत्तषु गण्यते। परार्थाभिधानं हि वृत्तिः। अतएव च लुप्तेऽपि प्रत्यये"लिङ्""धु"गित्यादौ कर्ता प्रतीयत इति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्व्येकयोः ७।२ द्विवचनैकवचने १।२

समासः॥

द्वौ च एकं च, द्व्येकौ, तयोः ॰ इतरेतरद्वन्द्वः। द्विवचनं च एकवचनं च द्विवचनैकवचने, इतरेतरद्वन्द्वः॥

अर्थः॥

द्वित्वे विवक्षिते द्विवचनम्, एकत्वे विवक्षिते एकवचनं च भवति

उदाहरणम्॥

ब्राह्मणौ पठतः। एकत्वे - ब्राह्मणः पठति॥

काशिका-वृत्तिः

द्व्येकयोर् द्विबचनएकवचने १।४।२२

द्वित्वएकयोरर्थयोः द्विवचनएकवचने भवतः। एतदपि सामान्यविहितयोर् द्विवचनएकवचनयोरर्थाभिधानम्। द्वित्वे द्विवच्नं भवति। एकत्वे एकवचनं भवति। ब्राह्मणौ पठतः। ब्राह्मणः पठति।

लघु-सिद्धान्त-कौमुदी

द्व्येकयोर्द्विवचनैकवचने १२३, १।४।२२

द्वित्वैकत्वयोरेते स्तः॥

न्यासः

द्वयेकयोर्द्विवचनैकवचने। , १।४।२२

"द्व्येकयोः" इति। अयमपि भावप्रधानो निर्देशः; अन्यथा हि बहुत्वाद्बहुवचनं स्यात्। भावप्रधाने तु निर्देशे,द्वित्वमेकत्वञ्च द्वावेतावर्थाविति युक्तं द्विवचम्। "एतदपि" इत्यादिनाऽस्यापि योगस्य विध्यर्थतां दर्शयति। "अर्थाभिधानम्" इति। अर्थो वाच्योऽभिधीयते येन तदर्थाभिधानम्॥

बाल-मनोरमा

द्वयेकयोर्द्विवचनैकवचने १८५, १।४।२२

द्वयेकयोः। "द्वयेकयो"रिति भावप्रधानो निर्देशः, अन्यथा "द्वयके"ष्विति स्यादित्यभिप्रेत्य व्याचष्टे--द्वित्वैकत्वयोरिति।

तत्त्व-बोधिनी

द्वयेकयोर्द्विवचनैकवचने १५४, १।४।२२

द्वयेकयोः। इह "द्वयेक"शब्दौ सङ्ख्यापरावित्यभिप्रेत्याह--द्वित्वैकत्वयोरिति। सङ्ख्येयपरत्वे तु बहुवचनं स्यादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कारके ७।१ ५५

अर्थः॥

{तत्प्रयोजको हेतुश्च (१।४।५५)} इति यावद् यदितः ऊर्ध्वम् अनुक्रमिष्यामः कारके इत्येवं तद् वेदितव्यम्। यथा -- {ध्रुवमपायेऽपादानम्, इत्यत्र कारके इति अनुवर्तते}॥ क्रियायाः निर्वर्त्तकं कारकं, क्रियायाम् इति वा (क्रियानिमित्ते सति) कारकं, तच्च विवक्षाधीनम् इति वेदितव्यम्॥

काशिका-वृत्तिः

कारके १।४।२३

कारके इति वशेषणम् अपादानादिसंज्ञाविषयम् अधिक्रियते। कारके इत्यधिकारो वेदितव्यः। यदित ऊर्ध्वम् अनुक्रमिष्यामः कारके इत्येवं तद् वेदितव्यम्। कारकशब्दश्च निमित्तपर्यायः। करकम् हेतुः इत्यनर्थान्तरम्। कस्य हेतुः? क्रियायाः। वक्ष्यति, घ्रुवमपाये ऽपादानम् १।४।२४ ग्रामादागच्छति। पर्वतादवरोहति। कारके इति किम्? वृक्षस्य पर्णं पतति। कुड्यस्य पिण्डः पतति। अकथितं च १।३।५१, अकथितं च कारकं कर्मसंज्ञं भवति माणवकं पन्थानं पृच्छति। करके इति किम्? माणवकस्य पितरं पन्थानं पृच्छति। कारकसंशब्दनेषु च अनेन एव विशेषणेन व्यवहारो विज्ञायते।

न्यासः

कारके। , १।४।२३

"कारक इति विशेषणमपादानादिसंज्ञाविषयम्" इति। अपादानदयः संज्ञा विषयो यस्य तत्तथोक्तम्। आदिशब्देन सम्प्रदानादीनां ग्रहणम्। अथ वक्ष्यमाणानां ध्रुवादीनाभियं संज्ञा कस्मान्न भवति? एवं मन्यते-- यदीयं संज्ञाशब्दा निर्दिश्यन्ते; अयं तु सप्तम्या निर्दिष्टः, तस्मान्नेयं ध्रुवादीनां संज्ञेति। "कारके" इति निर्धारणे सप्तमी, निर्धारणं तु बहुनां सम्भवति, तत्कथमेकवचनेन निर्देशः? सामान्यपेक्षया त्वेकवचनम्। अथ वा-- "छन्दोवत् सूत्राणि भवन्ति" (म।भा।१।१।१) ततो "व्यतयो बहुलम्" ३।१।८५ इति बहुवचने प्राप्त एकवचम् कारकेषु मध्ये यद् ध्रुवं कारकं तदपादानसंज्ञं भवति। एवमन्यत्रापि वेदितव्यमिति। कारकशब्दोऽयमस्त्येव व्युत्पन्नः-- ण्वुलन्तः कर्तृपय्र्याय इति, अस्ति च संज्ञाशब्दः-- अव्युत्पन्नो पय्र्याय इति। तत्रेह यदि पूर्वोक्तस्य ग्रहणं स्यात तदापादानादिषु कारकशब्दो न वत्र्तते, यथा-- कर्तृशब्दः "ण्वुल्तृचौ" ३।१।१३३ इति कर्तरि व्युत्पादितः, तथा कारकशब्दोऽपि; कत्र्ता च स्वतन्त्रः, अपादानादयश्चास्वतन्त्राः, तत्कथं तेषु कारकव्यपदेशः स्यात्? असति हि कारकव्यपदेशे कारकसंशब्देषु तेषां ग्रहणं न स्यात्। अथ तेषामपि कथञ्चित् स्वतन्त्रताभ्युपेयेत, एवञ्च तत्र कर्तृसंज्ञा प्रसज्येत, ततश्च ग्रामादागच्छति,

उपाध्यायाय गां ददातीत्यादौ ग्रामादिभ्यस्तृतीया प्रसज्येत, इतरेतराश्रयश्चापि दोषः स्यात्। तथा हि-- कर्तृसंज्ञोत्तरकालं कारकशब्दस्य व्युत्पत्तिः, तस्यां सत्यां कारकशब्दोपक्रमेण कर्तृसंज्ञा स्यात् बह्वेवं प्रतिविधेयं स्यात्, प्रतिविधाने च प्रतिपत्तिगौरवं स्यात्। निमित्तपर्यायस्य तु कारकशब्दस्य ग्रहणे न दोषः स्यात्, ततः स एव गृह्णत इति मत्वाह--"कारकशब्दोऽयं निमित्तपर्यायः" इति। "ग्रामादागच्छति" इति। ग्रामस्य ध्रुस्यागमनक्रियां प्रति निमित्तभावोऽस्ति। यदीह ग्रामोऽवधिभावेन नावतिष्ठेततत आगमनं न निष्पद्येत,तस्माद्()ग्रामः कारकम्। "वृक्षस्य पर्णं पतति" इति। वृक्षः सम्बन्धित्वेनात्र विवक्षितः न तु निमित्तत्वेन। अपायस्य कारकग्रहणान्निमित्तत्वेनाविवक्षितस्यापादानसंज्ञा न भवति। नैतत् कारकग्रहणस्य प्रत्युदाहरणं युक्तम्; ध्रुग्रहणेनैवात्रापादानसंज्ञाया निवर्तितत्वा#आत्, ध्रुवं हि तद्यदवधिभूतमपाये साध्ये। तथा हि वृत्तिकारो वक्ष्यति-- "अपाये साध्ये यदवधिभूतम्" (का।१।४।२४) इति। न चेह वृक्षोऽवधित्वेन विवक्षितः, किं तर्हि? सम्बन्धत्वेन, नैतदस्ति; विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धिभावेन विवक्षित्वात्। अवधिभूतस्य वृक्षस्य सम्बन्धिनः पर्णं पततीत्यर्थः। न हि सम्बन्धित्वेन विवक्षाऽवधिभावविक्षाया विरुध्यते। तस्माद्विवक्षितावधिभावस्यैव वृक्षसय सम्बन्धित्वमात्रं विवक्षितम्, न तु विद्यमानमप्यपायं प्रति निमित्तत्वमिति काऽत्रायुक्तता ! "माणवकस्य पितरं पन्थानं पृच्छति"इति। "अकथितञ्च" १।४।५१ इत्यकथितस्य कर्मसंज्ञा विधीयमाना "कारके " १।४।८१ इत्येतस्मिन्नसति माणवकस्यापि स्यात्, कथम्? अकथितशब्दोऽयमकीर्त्तित पर्यायः। स च कस्याचिद्विशेषस्याप्रकृतत्वद्विशेषानुपादाने सति प्रयुज्यमानः सर्वत्राविशेषएणाकीर्त्तितमात्रे स्यात्। ततश्च "अकथितम्" इत्युच्यमाने कारकञ्चाकारकञ्च सर्वमकथितमिति सर्वकथितमिति गम्यते। यथा पिताऽपादानादिभिर्विशेषकथाभिर्न कथितः, तथा माणवकोऽपि, अत्स्तस्यापि कर्मसंज्ञा स्यात्। "कारके" इत्य()स्मस्तु सति प्रश्नक्रियानिमित्तस्य पितुरेव भवति; न तु माणवकस्य। न ह्यसौ प्रश्नक्रियां प्रति निमित्तभावेन विवक्षितः, किं तर्हि? पितुः सम्बन्धित्वेन। यदि विशेषणमिदं ध्रुवादीनाम्; न संज्ञा, ततश्च "कारकादत्तश्रुतयोरेवाशिषि" ६।२।१४७ इत्येवमादिषु प्रदेशेषु यत्र कारकशब्दः संशब्यते तदा तत्रापादानादीनां कारकग्रहणेन ग्रहणं न स्यात्। संज्ञापक्षे तु न दोषः, संज्ञा ह्यावर्तमाना संज्ञिनं प्रत्यायतीत्यत आह-- कारकसंशब्दनेषु"इत्यादि। यत्र कारकशब्दस्य संशब्दनं तत्राप्यनेनैव विशेषणेन विवक्षितार्थप्रत्यायनलक्षणो व्यवहारोऽयं विज्ञायते; प्रदेशान्तरेऽपि कारकशब्दस्य निमित्तपर्यायस्यैवोपादानात्। तच्च् निमित्तमपादाननाद्येव, न हि ततोऽन्यत्क्रियानिमित्तं भवति। तस्मात् कारकग्रहमेनापादानादीनां ग्रहणं भवति। अन्ये त्वाहुः-- साहचर्यात् कारकविशेषणसहचरिता अपादानादयः कारकशब्देनोच्यन्त इति तद्ग्रहणेनैव तेषां ग्रहणम्। कारकग्रहमं वा स्वरयितव्यम्। तेन "स्वरितेनाधिकारः" १।३।११ इत्येष विधिर्भवति। तस्मात् कारकग्रहणेनापादानादीनां ग्रहणं भविष्यति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ध्रुवम् १।१ अपाये ७।१ अपादानम् १।१ ३१ कारके ७।१ २३

अर्थः॥

क्रियायां सत्यां अपाये = पृथग्भूते सति, यद् ध्रुवं तत्कारकम् अपादानसंज्ञकं भवति॥

उदाहरणम्॥

वृक्षाद् पत्रं पतति। ग्रामाद् आगच्छति। पर्वताद् अवरोहति॥

काशिका-वृत्तिः

ध्रुवमपाये ऽपादानम् १।४।२४

ध्रुवं यदपाययुक्तम् अपाये साध्ये यदवधिभूतं तत् कारकम् अपादानसंज्ञं भवति। ग्रामादागच्छति। पर्वतादवरोहति। सार्थाद्धीनः। रथात् पतितः। जुगुप्साविरामप्रमादार्थनाम् उपसङ्ख्यानम्। अधर्माज् जुगुप्सते। अधर्माद् विरमति। धर्मात् प्रमाद्यति। अपादानप्रदेशाः अपादाने पञ्चमी २।३।२८ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

ध्रुवमपायेऽपादानम् ९०२, १।४।२४

अपायो विश्लेषस्तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात्॥

न्यासः

ध्रुवमपायेऽपादानम्। , १।४।२४

अपायः = विश्लेषःक; विभाग इत्यर्थः। तस्य द्विष्ठत्वाद्याथा तेन विभागेन योऽपैति सोऽपाययुक्तः, तथा यतोऽपैति सोऽप्यपाययुक्तः; तस्मादुभयत्र पञ्चम्या भवितव्यमित्यत एवाह-- "ध्रुवं यदापायमुक्तम्" इति। "अपाये साध्ये" इति। विषयसप्तमीयम्। अपायस्य साध्यत्वेन विषयभूत इत्यर्थः। यद्यपि ध्रुवशब्दो लोक एकरूपतामाचष्टे-- ध्रुवमस्य शीलम्, ध्रुवमस्य रूपमिति; तथाप्ययाये साध्येऽभिहितया तया न कश्चिदर्थः सम्पद्यत इति नात्र ध्रुवताऽपायं प्रत्युपयुज्यते? सैवोपदीयते, सा चावधिभाव एव। तस्यादपायस्य सन्निधौ ध्रुवशब्दः सम्बन्धात् सश्लेषलक्षणात् प्रच्यवमानस्यावधिभावमाचष्टे, इत्यत आह-- "अवधिभूतम्" इति। अत एवापाये साध्येऽवधिभूतं यत्तदिह ध्रुवशब्देनोच्यते। तेन धावतोऽ()आआत् पतित इत्येवमादावप्यपादानसंज्ञा अ()आआदेः सिद्धा भवति। असति ह्यत्रापि सत्यपि चलत्वेऽ()आआदेरप्यपायेऽवधिभावः। अथेह कथमपादानसंज्ञा-- अधर्याज्जुगुप्सते, अधर्माद्विरमति, धर्()मात्प्रमाद्यतीति, न ह्यत्रापायोऽस्ति? कथम्? कार्यसम्प्राप्तिपूर्वको ह्यपायो भवति, न चेह कार्यसम्प्राप्तिरस्तीति आह-- "जुगुप्सा" इत्यादि। जुगुप्साद्यर्थानां धातूनां प्रयोगेऽपादानासंज्ञाया उपसंख्यानम् = प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्-- "अपादानम्िति महती संज्ञा क्रियते, महाविषयेयं संज्ञेति सूचनार्थम्। एवञ्च महाविषया भवतीयम्-- यदि सूत्रोपात्तात् संज्ञिनोऽन्योऽप्यस्या विषयो भवति, नान्यथा; तेन दजुगुप्सादीनां प्रयोगेऽसत्यपायेऽपादानसंज्ञा भविष्यतीति। अथ वा-- अस्त्येवाऽत्रापायः, न हि कार्यसम्प्राप्तिपूर्वक एवापायो भवतीति, किं तर्हि? चित्तसम्प्राप्तिपूर्वकोऽपि भवति। इह तावदधर्माज्जुगुप्सते, अधर्माद्विरमतीति, य एव मनुष्यः प्रेक्षापूर्वकारी भवति स एवं पश्यति-- दुःख हेतुरयमधर्मो नाम, अतो नार्हत्येनं सचेताः कर्त्तुमिति; एवं पश्यति-- "नास्माद्धर्मात् किञ्चिदिष्टं सम्पद्यते, दुःखमेव केवलं तदारम्भ निमित्तकं भवति" स एवं विचारयंस्तं बुद्ध्या प्राप्नोति, प्राप्य च ततो निवत्र्तते। तथा च ध्रुवमपायेऽपादानमित्येवं स#इद्धम्। "प्रमाद्यति" इति। "मदी हेर्षे" (धा।पा।१२०८), "शमामष्टानां दीर्घः श्यनि" ७।३।७४ इति दीर्घः। अथेह कथमपादानसंज्ञा-- ग्रामान्नागच्छतीति? कथञ्च न स्यात्? ग्रामस्यापायेनायुक्तत्वात्। यस्यां सत्यामपायो भवति, सा प्रतिषिद्ध्यते चापादनसाधनागमनक्रिया, तदसत्यां तस्यां कुतोऽपायः? नैष दोषः अत्र ह्यपादानसंज्ञायां समुपजातायां पश्चात्प्रतिषेधेन सम्बन्धः क्रियते,अन्यथा हि प्रतिषेधस्य विषयो न दर्शितः स्यात्। तथा ह्यपादानसाधनागमनक्रिया प्रतिषेद्धुमिष्टा।तत्र यदि चादावेव निषेधः स्यात्, अपायाभावात् तदसम्बद्धस्य ग्रामस्यापादानसंज्ञा सिद्धा न स्यात्। ततश्च या प्रतिषेध्यापादानसाधनागमनक्रिया प्रतिषेधस्य विषयभूता; सा न शक्यते प्रदर्शकयितुम्; न चात्राप्रदर्शितकविषयेत प्रतिषेधः शक्यते वक्तुम्। तस्मात् पूर्वमपादानसंज्ञा भवति, पश्चात्प्रतिषेधेन

योग इत्येष क्रमः।

बाल-मनोरमा

ध्रुवमपायेऽपादानम् ५७८, १।४।२४

अथ पञ्चमी। ध्रुवमपाये। अपायपदं व्याचष्टे--अपायो विश्लेष इति। वियोग इत्यर्थः। "ध्रुव"पदं व्याचष्टे-अवधिभूतमिति। द्वयोः संयुक्तयोरन्यतरस्य चलनाद्विश्लेष इति स्थितिः। तत्र तादृशचलनाऽनाश्रयभूतं ध्रुवम्। तच्चेहार्थादवधिभूतं विवक्षितमिति भावः।

तत्त्व-बोधिनी

ध्रुवमपायेऽपादानम् ५१९, १।४।२४

ध्रुवमपाये। "ध्रु गतिस्थैर्ययोः" अस्मात्पचाद्यचि कुटादित्वान्ङित्त्वे उवङ्। "ध्रुव स्थैर्ये" इति केचित्। तत्र "इगुपध--"इति कः। ध्रुवं स्थिरम्। अपायशब्देन विवक्षितमाह--विश्लेष इति। एवं च प्रकृतधात्वर्थाऽनाश्रयत्वे सति तज्जन्यविभागाश्रयो ध्रुवमिति फलितम्। तच्चाऽर्थादवधिरेवेत्याह--अवधिभूतमिति। धावत इति। इह धावनक्रियाविशिष्टस्याऽप्य()आस्य प्रकृतपतनधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते, "परस्परस्मान्मेषावपसरतः" इत्यत्र तु सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठां गतिं प्रति इतरस्याप्यपादानत्वं न विरुध्यते। उक्तं च हरिणा--"अपाये यदुदासीनां चलं वा यदि वाऽचलम्। ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते। पततो ध्रुव एवास्वो यस्माद()आआत्पतत्यसौ। तस्याप्य()आस्य पतेन कुड()आदि ध्रुवमिष्यते। मेषान्तरक्रियापेक्षमवधित्वं पृथकं पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्"॥ इति। "पर्वतात्पततोऽ()आआत्पतती"त्यत्र तु पर्वतावधिकपतनाश्रयो योऽ()आस्तदवधिकं देवदत्तादिनिष्ठं पतनमर्थः, पञ्चम्यर्थाऽवधौ अभेदेन संसर्गे प्रकृत्यर्थः परवतादिर्विशेषणम्, प्रत्ययार्थस्तु पतनक्रियायाम्, स चाऽवधिरूपो धर्मी, न तु धर्ममात्रम्, "उद्धृतौदन स्थाली" त्यात्रौदनकर्मकोद्धरणावधिभूता स्थालीति सामानाधिकरण्यदर्शमात्। एतच्च मनोरमायां स्थितम्। नन्विह ध्रुवग्रहणं किमर्थम्()। न च "ग्रामादागच्छति शकटेने"त्यत्र शकटेऽतिव्याप्तिवारणाय तदिति वाच्यम्, परत्वात्तत्र करणसंज्ञाप्रवृत्तेः। न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम्, कारकाऽधिकारात् कारकमिति लभ्यत इति ध्रुवग्रहणं चिन्त्यप्रयोजनमिति चेत्। अत्र वदन्ति--कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साधकतमत्वेन विवक्षाऽभावदशायां करणसंज्ञाप्रसङ्गेन शकटस्याऽपादानत्वं स्यात्तन्मा भूदित्येतदर्थं ध्रुवग्रहणमिति।

जुगुप्साविरामप्रमादार्थानासुपसंख्यानम्। जुगुप्सेति। जुगुप्सा-निन्दा, विरमो विरतिः, प्रमादोऽनवधानता, एतदर्थकानां धातूनां कारकमपादानसंज्ञं स्यादित्यर्थः। संयोगपूर्वको विश्लेषो विभागः, स चेह नास्ति, बुद्धिकृतस्तु गौणत्वान्नेह गृह्रत इति सूत्रेणाऽप्राप्तौ वार्तिकारम्भः। भाष्याकारस्तु--कारकप्रकरणे गौणमुक्यन्यायो नाश्रीयत इति तमब्ग्रहणेन ज्ञापितत्वाज्जुगुप्सादीनां तत्पूर्वकनिवृत्तिवाचित्वामाश्रित्येदं वार्तिकं, "भीत्रार्थानाम्---"इत्यादि सूत्राणि च प्रत्याचख्यौ। पूर्वं हि बुद्ध्याऽपायं संप्राप्य ततो दोषदर्शनान्निवर्तत इत्यस्त्येवाऽत्र बुद्धिकृतोऽपायः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भीत्रार्थानाम् ६।३ भयहेतुः १।१ अपादानम् १।१ २४ कारके ७।१ २३

समासः॥

भीश्च त्राश्च भीत्रौ, भीत्रौ अर्थौ येषां ते भीत्रार्थाः, तेषां । द्वन्द्वगर्भः बहुव्रीहिः।
भयस्य हेतुः, भयहेतुः, षष्ठीतत्पुरुषः।

अर्थः॥

बिभेत्यर्थानां, त्रायत्यर्थानां च धातूनां प्रयोगे, भयस्य हेतुः यत् कारकं तद् अपादानसंज्ञं भवति॥

उदाहरणम्॥

बिभेत्यर्थानां -- चौरेभ्यो बिभेति। चौरेभ्य उद्विजते। त्रायत्यर्थानां -- चौरेभ्यः त्रायते, चौरेभ्यो रक्षति॥
काशिका-वृत्तिः
भीत्राऽर्थानां भयहेतुः १।४।२५

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर् यः स्तत् कारकम् अपादानसंज्ञं भवति। चौरेभ्यो बिभेति। चौरेभ्य उद्विजते। त्रायत्यर्थानाम् चौरेभ्यस् त्रायते। चौरेभ्यो रक्षति। भयहेतुः इति किम्? अरण्ये बिभेति। अरण्ये त्रायते।
न्यासः
भीत्रार्थानां भयहेतुः। , १।४।२५

भीतिर्भीः; त्राणं त्राः; सम्पदादित्वात्? क्विप्। भीश्च त्राश्च भीत्रौ। भीत्रादर्थौ येषां ते भीत्रार्थाः। "बिभेत्यर्थानाम्" इत्यादि। बिभेतित्रायतिशब्दाविह साहचर्याद्बिभेतित्रायत्यर्थयोर्वर्तेते। बिभेतिरर्थो येषां ते बिभेत्यर्थाः। त्रायतिरर्थो येषां ते त्रायत्यर्थाः। "बिभेति" इति। "ञिभी भये" (धा।पा।१०८४), जौहोत्यादिकः। "उद्विजते" इति। "ओविजी भयचलनयोः" (धा।पा।१४६०) तौदादिकोऽनुदात्तेत्। "त्रायते" #इति। "त्रैङ पालने" (धा।पा।९६५) भौवादिकः। "अरण्ये बिभेति" इति। नात्रारण्याद्भयम्, किं तर्हि? तत्रस्थेभ्यश्चौरादिभ्यः। ननु चात्राधिकरणसंज्ञा परत्वात् बाधिका भविष्यति।अपि च-- ध्रुवमित्यनुवत्र्तते, "ध्रुवञ्चावधिभूतम्" इत्युक्तम्। न चारण्यमवधिबावेन विवक्षितम्, तत्किमेतन्निवृत्त्यर्थेन भयहेतुग्रहणेन? एवं तर्हि पूर्वस्यायं प्रपञ्चः। न हि कायसम्प्राप्तिपूर्वक एवापायो भवति, किं तर्हि? बुद्धिसम्प्राप्तिपूर्वकोऽपि। अस्ति चेह बुद्धिकसंप्राप्तिपूर्वकोऽप्ययायः, तथा हि -- चौरेभ्यो बिभेतीत्यत्र यस्तावत् पुरुषः प्रेक्षावान् भवति स एवं पश्यति-- "यदि मां चौराः पश्येयुध्रुवं मे मृत्युः" इति विचारयंस्तान् बुद्ध्या प्राप्नोति, प्राप्य चततो निवर्तते। तत्र ध्रुवमित्यादिनैव सिद्धम्। तस्मात् पूर्वस्यायं प्रपञ्चः। न च प्रपञ्चे गुरुलाघवं चिन्त्यते। एवमुत्तरेऽपि योगाः पूर्वस्यैव प्रपञ्चा वेदितव्याः; तदुदाहरणानां "अध्ययनात् पराजयते" इत्येवमादीनां पूर्वेणैव सिद्धत्वात्। यथा च तेषां सिद्धत्वं तथा भाष्ये एव प्रतिपादितम्। तस्मात् तत्रापि गुरुलाघवं न चिन्तनीयम्॥
बाल-मनोरमा
भीत्रार्थानां भयहेतुः ५८०, १।४।२५

भीत्रा। चोराद्बिभेतीति। चोरेण हेतुनेत्यर्थः। हेतुतृतीया प्राप्ता। चोरात्त्रायत इति। चोरेण हेतुना आत्मानं तत्कृतवधबन्धनादिनिवृत्त्यै रक्षतीत्यर्थः। यदा तु चोराद्बिभेति=भीत्या निवर्तते, चोरात्त्रायते=आत्मानं त्रातु निवर्तयतीत्यर्थ आश्रीयते, तदा बुद्धिकल्पितविश्लेषावधित्वमादायापादानत्वं सिद्धमिति इदं सूत्रं भाष्ये प्रत्याख्यातम्।

तत्त्व-बोधिनी
भीत्रार्थानां भयहेतुः ५२०, १।४।२५

भीत्रा। "कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे" इति रामायणे तु "कस्ये" त्यस्य संयुगेनान्वयान्नास्ति भयहेतुत्वमिति षष्ठीप्रयोगः सङ्गच्छत एव। न चैवं संयुगस्याऽपादानत्वापत्तिरिति वाच्यम्। परया अधिकरणसंज्ञया अपादानसंज्ञा[या]बाधात्। अधिकरणत्वाऽविवक्षायां तु इष्टापत्तेः। भीत्रार्थेति किम्()। व्याघ्रं पश्यति। न च कर्मत्वेन बाधः शङ्क्यः, कर्मत्वाऽविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमी प्रसङ्गादित्याहुः। भयतहेतुग्रहणं चिन्त्यप्रयोजनम्, अरण्ये बिभेतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेरिति चेत्, अत्र वदन्ति--भयहेतुग्रहणाऽभावे कारकशेषत्वविवक्षायामतिप्रसङ्गः स्यात्। तथा च "अरण्यस्य चोराद्बिभेती"ति प्रयोगो न स्यादिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पराजेः ६।१ असोढः १।१ अपादानम् १।१ २४ कारके ७।१ २३

समासः॥

सोढुं शक्यते इति सोढः, न सोढः असोढः, नञ्तत्पुरुषः।

अर्थः॥

परा इत्येवं पूर्वात् {जयतेः} धातोः प्रयोगे असोढः यः अर्थः, तत् कारकम् अपादानसंज्ञं भवति॥

उदाहरणम्॥

अध्ययनात् पराजयते (अध्ययनं नहि सहते इत्यर्थः)।
काशिका-वृत्तिः
पराजेरसोढः १।४।२६

परापूर्वस्य जयतेः प्रयोगे ऽसोढो, यो ऽर्थः सोढुं न शक्यते, तत् कारकम् अपादानसंज्ञं भवति। अध्ययनात् पराजयते। असोढः इति किम्? शत्रून् पराजयते।
न्यासः
पराजेरसोढः।, १।४।२६

"सोढुं न शक्यते" इति। अनुभवितुं न शक्यत इत्यर्थः। "अध्ययनात् पराजयते" इत्यध्ययनमभिभवितुं न शक्नोति, न पारयतीत्यर्थः। "विपराभ्यां जेः" १।३।१९ इत्यात्मनेपदम्। "शत्रून् पराजयते" इति। अभिभवतीत्यर्थः। ननु च परत्वात् कर्मसंज्ञयैवात्र बाधितत्वादपादानसंज्ञा न भविष्यति, तत् किमेतन्निवृत्त्यर्थेनासोढग्रहणेन? सत्यमेतत्; प्रपञ्चे गुरुलाघवं न हि चिन्त्यते, प्रपञ्चश्चायम्। अस्ति ह्यत्राध्ययनाद् बुद्धिसंसर्ग पूर्वकोऽपायः। तथा हि-- यएव पुरुषोऽलसो भवति, स एवं मन्यते-- दुःखायैवैतदध्ययनमिति, पश्यन् बुद्ध्या तत्प्राप्नोति, प्राप्य च ततो निवर्तते; तस्मात् पूर्वेणैव सिद्धम्॥
बाल-मनोरमा
पराजेरसोढः ५८१, १।४।२६

पराजेरसोढः। सहधातोः क्तप्रत्यये धत्वढत्वष्टुत्वढलोपेषु कृतेषु "सहिवहोरोदवर्णस्ये"त्योत्त्वे सोढ इति रूपम्। तत्र क्तार्थो

भूतकालो न विवक्षितः। तदाह--असह्योऽर्थ इति। सोढुमशक्य इत्यर्थः। हेतुतृतीयाऽपवादोऽयम्। ग्लायतीत्यर्थ इति। "असहना"दिति शेषः। यदा तु असहनान्निवर्तत इत्यर्थः आश्रीयते, तदा ध्रुवमित्यपादानत्वादेव सिद्धमिति भाष्यम्। अभिभवतीति। तिरस्करोतीत्यर्थः। अत्र शत्रूणामभिभवनीयतया?सह्यत्वाऽभावान्नापादानता।

तत्त्व-बोधिनी

पराजेरसोढः ५२१, १।४।२६

पराजेः। अध्ययनादिति। अध्ययनसंबन्धिनी ग्लानिरित्यर्थः। कारकशेषत्वेन षष्ठ()आं प्राप्तायामि दम्। पराजयत इति। "विपराभ्यां जेः" इति तङ्। "असोढ"इति क्तार्थो भूतकालो न विवक्षितः। तेनाऽध्ययनात् पराजेष्यत इत्यादि सिद्धम्। नन्वसोढग्रहणं व्यर्थं, शत्रून् पराजयत इत्यत्र परत्वात् कर्मसंज्ञासिद्धेः। अत्रापि वदन्ति---कर्मत्वाऽविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमी स्यात्, सा मा भूदिति कर्तव्यमेवाऽसोढग्रहणमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वारणार्थानाम् ६।३ ईप्सितः १।१ अपादानम् १।१ २४ कारके ७।१ २३

समासः॥

वारणम् अर्थः येषां धातूनां ते वारणार्थाः, तेषां ०, बहुव्रीहिः।

अर्थः॥

वारणार्थानां धातूनां प्रयोगे ईप्सितः यः अर्थः, तत् कारकम् अपादानसंज्ञं भवति।

उदाहरणम्॥

यवेभ्यो गां वारयति। यवेभ्यो गां निवर्तयति॥

काशिका-वृत्तिः

वारणार्थानाम् ईप्सितः १।४।२७

वारणार्थानाम् धातूनाम् प्रयोगे य ईप्सितो ऽर्थः तत् कारकम् अपादानसंज्ञं भवति। प्रवृत्तिविघातो वारनम्। यवेभ्यो गा वारयति। यवेभ्यो गा निवर्तयति। ईप्सितः इति किम्? यवेभ्यो गा वारयति क्षेत्रे।

न्यासः

वारणार्थानामीप्सितः।, १।४।२७

वारणमर्थो येषां ते वारणार्थाः। "यवेभ्यो गा वारयति" इति। "गाः" इति गवामीप्सिततमत्वेन विवक्षितत्वात्कर्मसंज्ञा, गोशब्दाच्छस, "औतोऽम्शसोः" ६।१।९० इत्यात्त्वम्, रुत्वे कृते "भोभगोअधोअपूर्वस्य" ८।३।१७ इति यत्वम्, "हलि सर्वेषाम्" ८।३।२२ इति यलोपः। "वारयति" इति। "वृञ् आवरणे" (धा।पा।१८१३), चुरादिणिच्। "निवर्तयति" इति। "वृतु वर्तने" (धा।पा। ७५८), हेतुमण्णिच्। "यवेभ्यो गा वारयति क्षेत्रे" इति। अत्र क्षेत्रस्यानीप्सितस्य न भवति संज्ञा;

ईप्सितग्रहणम्। ननु चात्र परत्वादरधिकरणसंज्ञयैव बाधितत्वादपादानसंज्ञायाः, क्षेत्रस्यापादानसंज्ञा न भविष्यतीत्यतो न कर्तव्यमीप्सितग्रहणमिति, एतन्नाशङ्कनीयम्; उक्तोत्तरत्वात्॥

बाल-मनोरमा

वारणार्थानामीप्सितः ५८२, १।४।२७

वारणार्थानामीप्सितः। प्रवृत्तिविमुखीकरणं वारणम्। यवेभ्य इति। यवेषु प्रवर्तितुकामां गां प्रवृत्तिविमुखीकरोतीत्यर्थः। संयोगपूर्वकविश्लेषाऽभावात् "ध्रुवमपाये" इत्यप्राप्ताविदं वचनम्। तत्र यवानां स्वकीयतया संरक्षणीयत्वेन ईप्सितत्वादपादानत्वं, नतु गोः, तस्याः परकीयत्वेनानीप्सितत्वात्, वारणीयतया ईप्सितत्वाव्याघाताच्च। तथाच "तथायुक्तं चे"ति गोः कर्मत्वाद्द्वितीया। यदा तु यवाः परकीयाः, गौस्तु स्वकीया, तदा वारणमसंभावितमेव। वस्तुतस्तु यवानां परकीयत्वेऽपि तद्विनाशादधर्मः स्यात्, यवस्वामी गामपहृत्य बध्नीयात्, गोस्वामिनं च यवस्वामी दण्डयेत्, अतो यवानां रक्षितुमिष्टत्वादीप्सितत्वादपादानत्वमस्त्येव। गोस्तु स्वकीयत्वेऽपि बाधकनिवृत्त्यै वारयितुमिष्टतमत्वात्कर्मत्वम्। नच गोरीप्सिततमत्वेऽपि ईप्सितत्वस्यापि सत्त्वादपादानत्वं किं न स्यादिति वाच्यम्, ईप्सिततमत्वे "वारणार्थाना"मित्यपादानत्वं बाधित्वा "कर्तुरीप्सिततम"मिति कर्मत्वस्यैव परत्वात्प्राप्तेः। नच "वारणार्थानामीप्सितः" इत्यपादानत्वस्य "कर्तुरीप्सततम"मिति कर्मत्वापवादत्वं शङ्क्यं, "कर्तुरीप्सिततम"मिति कर्मत्वं हि ईप्सिततममात्रविषयम्। वारणार्थानामित्यपादानत्वं तु ईप्सितविषयम्। तस्य प्रकृते ईप्सितेषु यवेषु परकीयेषु सावकाशत्वान्न "कर्तुरीप्सततम"मिति कर्मत्वापवादत्वम्। अतः परत्वाद्गोः स्वकीयायाः परकीययवापेक्षया ईप्सिततमत्वात्कर्मत्वमेव। नच "अग्नेर्माणवकं प्रवृत्तिविमुखीकरोतीति हि तदर्थः। तत्राग्निस्पर्शे माणवकस्य दाहप्रसङ्गात्तद्विषयप्रवृकत्तिविमुखीकरणात्मकवारणक्रिययाऽऽप्तुमिष्टतमत्वेन वारयितुरीप्सिततमत्वान्माणवकस्य कर्मत्वम्। अग्नेस्तु वारणक्रियेप्सिततममाणवकीयस्पर्शक्रियया आप्तुमिष्टतमत्वेऽपि वारयितुरीप्सितततत्वादपादानत्वम्। एतेन तयोः पृथग्ग्रहणेन। एतावतैव हरिं भजति, ग्रामं गच्छंस्तृणं स्पृशति, विषं भुङ्क्ते इत्यादिसर्वलक्ष्यसङ्ग्रहादिति निरस्तम्। कर्तृव्यापारजन्यफलाश्रयः कर्मेत्युक्तौ हि "वारणार्थाना"मिति सूत्रमस्यापवादः स्यात्, विशेषविहितत्वात्। तथाच माणवक्सय कर्मत्वं न स्यात्। नचाग्नौ "बाकणार्थाना"मिति सावकाशमिति वाच्यं, वारयतेह्र्त्र स्पर्शफलकप्रवृत्तिविघटनमर्थः। तच्चान्यतो नयनादिरूपम्। तादृशव्यापारप्रयोज्यफलं मामवककर्तृकस्पर्शफलकप्रवृत्तिविरहः। तत्र स्वर्शांशोऽग्निनिष्ठः माणवकनिष्ठश्च, संयोगरूपस्य स्पर्शस्य द्विनिष्ठत्वात्। प्रवृत्तिविरहश्च विषयतयाऽग्निनिष्ठः, आश्रयतया माणवकनिष्ठश्च। तथाच कर्तृव्यापारप्रयोज्यफलाश्रयत्वलक्षणकर्मत्वस्य परत्वादुभयत्रापि प्राप्तौ "वारणार्थाना"मित्यपादानत्वं निरवकाशत्वादपवादः स्यादिति माणवकादपि पञ्चमी स्यात्, तद्बाधनार्थ "कर्तुरीप्सिततमं कर्मे"त्यारब्धव्यम्। एवंच ईप्सितमात्रेऽग्नौ सावकाशस्यापादानत्वस्य परत्वादीप्सिततमे माणवके बाधः सिध्यति। "कर्तुरीप्सिततम"मित्यारब्धे च द्रेष्योदासीनसङ्ग्रहार्थं "तथायुक्त"मित्यप्यारब्धव्यमित्यास्तां तावत्। भाष्ये तु बुद्धिकल्पितसंयोगविश्लेषकृतमपादानत्वामाश्रित्य प्रत्याख्यातमिदं सूत्रम्।

तत्त्व-बोधिनी

वारणार्थानामीप्सितः ५२२, १।४।२७

वारणार्था। यवेभ्य इति। यवसंयोगात्प्रागेव गां निवारयतीति "ध्रुवमपाये---"इत्यनेनाऽसिद्धावयमारम्भः। बुद्धिपरिकल्पिताऽपायमङ्गीकुर्वातो भाष्यकारस्य मते तु वैयर्थ्यमेतस्य स्फुटमेव। गां वारयतीति। "वृञ् वरणे" चुरादिः। "गा"मित्यत्र ईप्सितत्वप्रयुक्ताऽपादानसंज्ञा न भवति।ईप्सिततमत्वविवक्षायां परत्वात्कर्मसंज्ञाप्रवृत्तेः। नन्वेवमीप्सितग्रहणमेव व्यर्थं, क्षेत्रे वारयतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेः। सत्यम। अधिकरणस्य

शेषत्वविवक्षायामिदं प्रत्युदाहरणमिति पूर्वोक्तरीत्या पदप्रयोजनस्येहापि कल्पयितुं शक्यत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अन्तर्द्धौ ७।१ येन ३।१ अदर्शनम् १।१ इच्छति लट् १।१ अपादानम् १।१ २४ कारके ७।१ २३

समासः॥

अदर्शनम् इत्यत्र, नञ्तत्पुरूषः।

अर्थः॥

अन्तर्द्धौ = व्यवधाननिमित्ते येन अदर्शनम् इच्छति, तत् कारकम् अपादानसंज्ञकं भवति।

उदाहरणम्॥

उपाध्यायाद् अन्तर्धत्ते। उपाध्यायाद् निलीयते।
काशिका-वृत्तिः
अन्तर्धौ येन अदर्शनम् इच्छति १।४।२८

व्यव्धानम् अन्तर्धिः। अन्तर्धिनिमित्तं येन अदर्शनम् आत्मन इच्छति तत् कारकम् अपादानसंज्ञं भवति। उपाध्यायादन्तर्धत्ते। उपाध्यायान् निलीयते। मा मामुपाध्यायो द्राक्षीतिति निलीयते। अन्तर्धौ इति किम्? चौरान् न दिदृक्षते। इच्छतिग्रहणं किम्? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्।
न्यासः
अन्तर्द्धौ येनादर्शनमिच्छति। , १।४।२८

"अन्तर्द्धौ" इति निमित्तसप्तमीयम्। "निमित्तात् कर्मयोगे" (वा।१३८) इति सप्तमी, यथा-- चर्मणि द्वीपिनं हन्तीति। एतदेव ज्ञापकम्-- निमित्तात् कर्मसंयोगेऽस्ति सप्तमीति। अस्त ह्यत्रादर्शनेन कर्मणा संयोगः। "येन" इति। कत्र्तरि तृतीया। ननु च "कर्त्तृकर्मणोः कृति" (२।३।६५) इति षष्ठ()आ भवितव्यमिति? नैतदस्ति; "उभयप्राप्तौ कर्मणि" २।३।६६ इति नियमात् कर्मण्येव, न कर्तरि। कर्म त्वत्रादर्शनस्यात्मा, तस्यान्तरङ्त्वात् स एव कर्म विज्ञायते। "तत् कारकम्" इति। यद्यप्यत्र सूत्रे तच्छब्दो नोपात्तः, तथापि स यत्तदोर्नित्याभिसम्बन्धाल्लभ्यते। "उपाध्यायादन्तर्धत्ते" इत्यत्रोपाध्यायेन कर्ता शिष्य आत्मनः कर्मभूतस्यादर्शनमिच्छति। अन्तर्द्धिनिमित्तम्। अन्तद्र्धते इति दधातेर्लट्,"स्वरितञितः" १।३।७२ इत्यात्मनेपदम्, शपः श्लुः, क"श्लौ" ६।१।१० इति द्विर्वचनम्, "श्नाभ्यसत्योरातः" ६।४।११२ इत्याकारलोपः, अभ्यासस्य जश्त्वम्, "दधस्तथोश्च" ८।२।३८ इति दकारस्य धकारः, परस्य धकारस्य "खरि च" ८।४।५४ इति चत्र्वम् = तकारः। "निलीयते" इति। "लीङ श्लेषणे" (धा।पा।११३९) वैवादिकः। "चौरान्न दिदृक्षते" इति। अत्र यश्चौरान् न दिदृशत इति स तैरात्मनोऽदर्शनमिच्छति, न त्वन्तर्द्धिनिमित्तम्; किन्तूपघातनिवृत्त्यर्थम्। विस्पष्टार्थञ्चान्तार्द्धिग्रहण्। परत्वात् कर्मसंज्ञैव बाधितत्वाच्चौराणामिहापादानसंज्ञा न भविष्यति। प्रपञ्चार्थोऽयं योगः, न च प्रपञ्चे गुरुलाघवं चिन्त्यत इत्युक्तम्। उपाध्यायादन्तर्धते शिष्य इति शिष्यस्यान्तद्र्धातुर्मा भूत्, नैतदस्ति; ध्रुवमित्यनुवर्तते,

ध्रुवञ्चावधिभूतमित्युक्तम्; न चान्तद्र्धातावधिभूतः। एवं तह्र्रसति येनेत्येतस्मिन् वचने, सत्यामपि ध्रुवमित्यस्यानुवृत्तौ सूत्रस्यावाचकत्वं स्यात्। अतस्तन्माभूदिति येनेत्युक्तम्॥
बाल-मनोरमा
अन्तर्द्धौ येनाऽदर्शनमिच्छति ५८३, १।४।२८

अन्तर्धौ। अन्तर्धावित्येतद्व्याचष्टे--व्यवधाने सतीति। व्यवधानेनेति यावत्। यत्कर्तृकस्येति। येनेति कर्तृतृतीयेति भावः। आत्मनो दर्शनस्येति। "आत्मन" इति दर्शनशब्दयोगे कर्मणि षष्ठी। "आत्मन" इत्यध्याहारलभ्यम्। अत एव येनेति कर्तरि तृतीया सङ्गच्छते। अन्यथा कृद्योगषष्ठीप्रसङ्गात्। "आत्मन" इत्यध्याहारे तु उभयप्राप्तौ कर्मण्येवेति नियमान्न कृद्योग९षष्ठी। आत्मशब्देन इच्छतिकर्ता विवक्षितः। व्यवदानेन स्वविषये यत्कर्तृकदर्शनस्य अभावमिच्छतीति यावत्। मातुर्निलीयते कृष्म इति। "लीङ्श्लेषणे"श्यन्विकरणः। इह तूपसर्गवशाद्व्यवधानेन परकर्तृकस्वविषयकदर्शनविरहानुकूलव्यापारे वर्तते। ततश्च कृष्णो मातृकर्तृकस्वविषयकदर्शनविरहाय कुड()आदिना प्रच्छन्नो भवतीत्यर्थः। अत्र व्यवधानमाश्रित्य मातृकर्तृकस्वविषयकदर्शनविरहस्य कृष्णेनेष्यमाणतया मातुरपादानत्वात्पञ्चमी। कर्तृतृतीयापवादोऽयं , षष्ठ()पवादो वा। भाष्ये तु बुद्धिकृतमपादानत्वमाश्रित्य इदमपि प्रत्याख्यातम्।

तत्त्व-बोधिनी
अन्तर्द्धौ येनाऽदर्शनमिच्छति ५२३, १।४।२८

अन्तर्धौ। येनेति कर्तरि तृतीया। न च कृद्योगषष्ठीप्रसङ्गः, "उभयप्राप्तौ कर्मण्येवे ति नियमात्। अत्र ह्रात्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः। निलीयत इति। "लिङ् श्लेषणे" दैवादिकः। नन्वन्तद्र्धाविति व्यर्थं, "न दिदृक्षते चोरो नित्यत्र परत्वात्कर्मसंज्ञासिद्धेः। अत्राहुः--चोराः आत्मानं मा द्राक्षुरिति बुद्ध्या चोरन्न दिदृक्षत इत्ययमर्थोऽत्र विवक्षितस्तत्र कर्मणः शेषत्वविवक्षायामिदं पूर्ववत्प्रत्युदाहरणमिति। शब्दकौस्तुभे तु "अन्तर्धौ" इत्येतच्चिन्त्यप्रयोजनमिति स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आख्याता १।१ उपयोगे ७।१ अपादानम् १।१ २४ कारके ७।१ २३

अर्थः॥

आख्याता = प्रतिपादयिता, पाठयिता वा। उपयोगः = नियमपूर्वकं विद्याग्रहणम्। नियमपूर्वके विद्याग्रहणे यः आख्याता = पाठयिता तत्कारकम् अपादानसंज्ञं भवति॥

उदाहरणम्॥

उपाध्यायाद् अधीते। उपाध्यायाद् आगमयति॥
काशिका-वृत्तिः
आख्याताउपयोगे १।४।२९

आख्याता प्रतिपादयिता। उपयोगः नियमपूर्वकं विध्याग्रहणम्। उपयोगे साध्ये य आख्याता तत् कारकम् अपादानसंज्ञं भवति। उपाध्यायादधीते। उपाध्यायादागमयति। उपयोगे इति किम्? नटस्य शृणोति।

न्यासः

आख्यातोपयोगे। , १।४।२९

"नियमपूर्वकं विद्याग्रहणम्" इति। विद्याग्रहणार्थं शिष्यप्रवृत्तिः = नियमः। स पूर्वो यस्य तत् तथोक्तम्। "शेषाद्विभाषा" ५।४।१५४ इति कप्। "नटस्य गाथां शृणोति" इति। सम्बन्धलक्षणा षष्ठी। नियमपूर्वकमिह विद्याग्रहणं नास्ति॥

बाल-मनोरमा

आख्यातोपयोगे ५८४, १।४।२९

आख्यातोपयोगे। आख्याता-उपयोगे इति च्छेदः। आख्यातेति तृजन्तात्प्रथमैकवचनम्। उपयोगपदं व्याचष्टे-नियमपूर्वकेति। भाष्ये तथोक्तेरिति भावः। आख्यातेति तृजन्तं व्याचष्टे-वक्तेति। अध्यपयितेत्यर्थः। उपाध्यायादधीते इति। नियमविशेषपूर्वकमुपाध्यायस्योच्चारणमनूच्चरयतीत्यर्थः। षष्ठ()पवादोऽयम्। भाष्ये तूपाध्यांयान्नर्गतं वेदं गृह्णातीत्यर्थमाश्रित्य प्रत्याख्यातमिदम्।

तत्त्व-बोधिनी

आख्यातोपयोगे ५२४, १।४।२९

आख्यातोप। नयमपूर्वकेति। तत्रैवोपयोगशब्दो रूढ इति भावः। आख्यातेत्येतत्तृजन्तमित्याह---वक्तेति। उपाध्यायादिति। उपेत्य अस्मादधीयत इति उपाध्यायः, "इङश्च"इति घञ्। अध्ययनं तु गुरुच्चारणोत्तरोच्चरणं नियमपूर्वकम्। नटस्येति। गाथाकर्मकं नटसंबन्धि श्रवणमित्यर्थः। नटस्य गाथाऽन्वये तु कारकत्वाऽभावादेवाऽप्राप्तेरुपयोगग्रहणम् समर्थितं स्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ जनिकर्तुः ६।१ ३१ प्रकृतिः १।१ अपादानम् १।१ २४ कारके ७।१ २३

समासः॥

जनेः कर्ता, जनिकर्ता, तस्य ॰ षष्ठीतत्पुरुषः।

अर्थः॥

जन-धातोः यः कर्ता, तस्य या प्रकृतिः, कारणं = हेतुः तस्य अपादानसंज्ञा भवति।

उदाहरणम्॥

शृङ्गात् शरो जायते। गोमयाद् वृश्चिको जायते।

काशिका-वृत्तिः

जनिकर्तुः प्रकृतिः १।४।३०

जनेः कर्ता जनिकर्ता। जन्यर्थस्य जन्मनः कर्ता जायमानः, तस्य या प्रकृतिः कारणम्, हेतुः, तत् कारकम् अपादानंज्ञम् भवति। शृङ्गाच्छरो जायते। गोमयाद् वृश्चिको जायते।

न्यासः

जनिकर्तुः प्रकृतिः। , १।४।३०

जनिशब्दोऽत्र साहचर्याज्जन्यर्थे वर्तते। अत एवाह-- "जन्यर्थस्य" इति। "जन्मनः" इति। एतेन जन्यर्थं दर्शयति। तथा हि-- "जनी प्रादुर्भावे" (धा।पा।११४९) इति पठ()ते। प्रादुर्भावो जन्म एव। कः पुनस्तस्य कत्र्तेत्यत आह-- "जायमानः" इति। "ज्ञाजनोर्जा" ७।३।७९ इति जादेशः। अथ प्रकृतिग्रहणं किमर्थम्? यावता ध्रुवमित्यनुवत्र्तते, ध्रुवञ्चावधिभुतमित्युक्तम्। जनिकर्तृश्चावधिः कारणमेव भवति; तत्रान्तरेणापि प्रकृतिग्रहणं प्रकृतेरेव भविष्यति, नैतदस्ति; पुत्रात् प्रमादो जायत इत्यादौ पुत्रादेरप्यपादानासंज्ञा यथा स्यादित्येवमर्थं प्रकृतिग्रहणम्। द्विविधं हि कारणम्-- उपादानकारणम्, सहकारिकारणञ्च। तत्र यत् कार्येणाभिन्नदेशं तदुपादानकारणम्, यथा- घटस्य मृत्पिण्डः। सहकारिकारणं यत् कार्येण भिन्नदेशम्, यथा-- तस्यैव दण्डचक्रादि। तत्रासति प्रकृतिग्रहणे प्रत्यासत्तेरुपादानकारणस्यैव स्यात्, नेतरस्य। प्रकृतिग्रहणे तु सति सर्वस्यैव कारणमात्रस्य भवति॥

बाल-मनोरमा

जनिकर्तुः प्रकृतिः ५८५, १।४।३०

जनिकर्तुः प्रकृतिः। जनिर्जननमुत्पत्तिः। "जनी प्रादुर्भावे"दैवादिकोऽकर्मकः। "इण्जादिभ्यः" इति भावे इण्। "जनिवध्योश्चे"ति निषेधान्नोपधावृद्धिः। जनेः कर्तेति विग्रहः। शेषषष्ठ()आ समासः। "तृजकाभ्यां कर्तरी"ति निषेधस्तु कारकषष्ठ()आ एवेति वक्ष्यते। जायमानस्येति। जनधातोः कर्तरि लटश्शानच्, श्यन्, "ज्ञाजनोर्जा" "आने मुक्"। उत्पत्त्याश्रयस्येत्यर्थः। प्रकृतिशब्दं व्याचष्टे-हेतुरिति। ब्राहृण इति। हिरण्यगर्भादित्यर्थः। घटादिषु कुलालादिवत्तस्य प्रजोत्पत्तौ निमित्तकारणत्वमिति भावः। वृत्तिकृन्मतमेतदयुक्तम्, संयोगविश्लेषसत्त्वेन "ध्रुवमपाये" इत्येव सिद्धत्वात्। अतोऽत्र मूले हेतुशब्द उपादानकारणपर एव। अत एव भाष्यकैयटयोः "गोमायाद्वृश्चिका जायन्ते" गोलोमाऽविलोमभ्यो दूर्वा जायन्ते" इत्युदाहृत्य परिणामेषु प्रकृतिद्रव्यावयवानुस्यूतिसत्त्वेऽपि बुद्धिकृतविश्लेषसत्त्वात् "ध्रुवमपाये" इत्येव सिद्धमिति प्रत्याख्यानं सङ्गच्छते। एवं च "ब्राहृणः प्रजाः प्रजायन्ते" इत्यत्र ब्राहृशब्देन मायोपहितमी()आरचैतन्यमेव विवक्षितम्। तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः।

तत्त्व-बोधिनी

जनिकर्तुः प्रकृतिः ५२५, १।४।३०

जनिकर्तुः। जननं जनिः--उत्पत्तिः। "इञजादिभ्यः"इति जनेर्भावे इञ्। "जनिवध्योश्च"इति वृद्धिप्रतिषेधः। तस्याः कर्तेति शेषषष्ठ()आ समासो, न तु कारकषष्ठ()आ,"तृताभ्याम्---"इति यथा। तदेतदाह--जायमानस्येति। एतेन "इक्()श्तिपौ धातुनिर्देशे"इति इका निर्देशोऽयं जनिरित्याश्रित्य "गमहन---" इत्युपधालोपमर्थाऽसङ्गतिं समासानुपपत्तिं()त चोद्भाव्य व्याकरणाधिकरणे जरन्तो मीमांसकाः समाहिता इति भावः। इह प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम्, "पुत्रात् प्रमोदो जायते" इत्युदाहरणात्। उपादानमात्रपरमिति तु भाष्यकैयटमतं, तदुभयसाधारणमुदाहरणमाह--ब्राहृण इति। ब्राहृआ=हिरण्यगर्भ-। स च हेतुरेव न तूपादानम्। किंच मायोपहितं चैतन्यं ब्राहृ, तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भुवः ६।१ प्रभवः १।१ कर्तुः ६।१ ३० अपादानम् १।१ २४ कारके ७।१ २३

अर्थः॥

भू-धातोः यः कर्त्ता, तस्य यः प्रभवः = उत्पत्तिस्थानं, तत् कारकम् अपादानसंज्ञं भवति।

उदाहरणम्॥

हिमवतो गङ्गा प्रभवति। कश्मीरेभ्यो वितस्ता प्रभवति।

काशिका-वृत्तिः

भुवः प्रभवः १।४।३१

कर्तुः इति वर्तते। भवनं भूः। प्रभवत्यस्माततिति प्रभाः। भूकर्तुः प्रभवो यः, तत् कारकम् अपादानसंज्ञम् भवति। हिमवतो गङ्गा प्रभवति। काश्मीरेभ्यो वितस्ता प्रभवति। प्रथमत उपलभ्यते इत्यर्थः।

न्यासः

भुवः प्रभवः।, १।४।३१

"भवनं भूः"इति। सम्पदादित्वात् क्विप्। प्रभव्तयस्मीदित प्रभव इत्यपादाने "ऋदोरप्"३।३।५७ इत्यप्। ननु च "हिमवतो गङ्गा प्रभवति" इत्येतत् पूर्वेणैव सिद्धम्। तथा ह्ययमत्रार्थः-- हिमवतो गङ्गा जायत इति, तत्किमर्थमिदमारभ्यत इत्याह-- "प्रथमत उपलभ्यते" इति। एष चार्थोऽनेकार्थत्वाद्धातूनां वेदितव्यः। जन्यर्थस्त्वत्र न सम्भवत्येव, न हि हिमवान् गङ्गायाः कारणम्, सा ह्न्येभ्य एव कारणेभ्य उत्पन्ना। हिमवति तु केवलं प्रथमत उपलभ्यत इति॥

बाल-मनोरमा

भुवः प्रभवः ५८६, १।४।३१

भुवः प्रभवः। पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमेकदेशे स्वरितत्वप्रतिज्ञाबलादिहानुवर्तते। तदाह--भूकर्तुरिति। भवनं भूः। संपदादित्वात्क्विप्। भुवः कर्ता भूकर्ता, तस्येत्यर्थः। प्रभव इति। प्रभवति=प्रथमं प्रकाशतेऽस्मिन्निति प्रभवः। प्रथमप्रकाशस्थानमित्यर्थः। "प्रभवती"त्यस्य उत्पद्यते इत्यर्थे तु असङ्गतिः, गङ्गायस्तत्रानुत्पत्तेः। तदाह--प्रकाशते इत्यर्थ इति। प्रथमं प्रकाशते इति यावत्। अत एव "हिमवपि प्रकाशते" इत्यत्र न भवति। एतेन "जनिकर्तु"रित्यनेन "ध्रुवमपाये" इत्यनेन च गतार्थत्वं निरस्तम्। भाष्ये तु अपक्रामतीत्यर्थमाश्रित्य "ध्रुवमपाये" इत्यनेनैव सिद्धमिति स्थितम्।

ल्यब्लोपे इति। ल्यबन्तस्य लोपे= अदर्शने अप्रयोगे सति गम्यमानतदर्थं प्रति कर्मणि अधिकरणे च पञ्चमी वाच्येत्यर्थः। जिह्रेतीति। लज्जते इत्यर्थः।

नन्वत्र ल्यबन्तस्य प्रयोगाऽभावात्कथं तदर्थं प्रति कर्माद्यवगतिरित्यत आह--गम्यमानापीति। प्रकरणादिनेत्यर्थः। "गम्यमानापी"त्यस्य प्रयोजनान्तरमाह--कस्मात्त्वमिति। "आगतोऽसी"ति गम्यमानक्रियापेक्षमपादानत्वगिति भावः।

"नद्या" इत्युत्तरम्। "आगतोऽस्मी"ति गम्ययानक्रियापेक्षमपादानत्वमिति भावः।

यतश्चेति। "यत" इति तृतीयार्थे तसिः। येनावधिना अध्वनः कालस्य वा निमानं परिच्छेदः=इयत्ता गम्यते, ततः पञ्चमी वाच्येत्येकं वाक्यम्। "तत्र पञ्चमी"ति पाठेऽप्ययमेवार्थः।

तद्युक्तादिति। तेन=पञ्चम्यन्तेन युरक्तादन्वितात् अध्ववाचिनः प्रथमासप्तम्यौ वाच्ये" इति द्वितीयं वाक्यम्। "कालात्सप्तमी च वक्तव्या" इति वाक्यान्तरम्। तद्युक्तादित्यनुषज्यते। तेन=पञ्चम्यन्तेन अन्वितात्कालवाचिनः सप्तमी वक्तव्येत्यर्थः। वनादिति। अत्र योजनात्मकमध्वपरिमाणं वनेन पूर्वावधिना परिच्छिद्यते, कस्मादाभ्य योजनमित्याकाङ्क्षोत्थानात्। योजने योजनमिति प्रथमासप्तम्योरपि स्वोत्तराव्यवहितदेशवृत्तित्वमर्थः। वनात्मकपूर्वावधिकयोजनोत्तरदेशे ग्राम इत्यर्थः। अवधिसत्वसत्त्वेऽपि विश्लेषाऽप्रतीतेध्रुवमित्यपादानत्वाऽभावाद्वचनम्। कार्तिक्या इति। कार्तिक्या मासे आग्रहायणीत्यन्वयः। अत्र मासात्मकं कालपरिमाणं कार्तिक्या पूर्वावधिना परिच्छिद्यते, कस्मादारभ्य मास इत्याकाङ्क्षोत्थानात्। मासे इति सप्तम्यास्तु स्वोत्तराऽव्यवहितकालवृत्तित्वमर्थः। कार्तिकपौर्णमास्यात्मकपूर्वावधिकमासोत्तरकाले मार्गशीर्षपौर्णमासीत्यर्थः।

तत्त्व-बोधिनी

भुवः प्रभवः ५२६, १।४।३१

भुवः। भुवनं भूरिति। संपदादित्वाद्भावे क्विप्। पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते, स्वरितत्वादित्याह---भूकर्तुरिति। प्रभवत्यस्मादिति प्रभवः, "अकर्तारि च कारके" इत्यधिकारादपादानार्थे "ऋदोरप्"। जनिकर्तुरित्येव सिद्धे निरर्थकमिदमित्याशङ्कां परिहरन्नाह--तत्र प्रकाशत इति। प्रथमं दृश्यत इत्यर्थः। एष चाऽर्थो धातूनामनेकार्थत्वाल्लभ्यते। तथा चाऽभूतप्रादुर्भावो जनिः। अन्यतः सिद्धस्य प्रथममुपलम्भः प्रभव इत्यर्थभेदोऽस्तीति भावः। "भीत्रार्थानाम्---" इत्यारभ्येयं सप्तसूत्री भाष्ये प्रत्याख्याता। तत्रेत्थमुपपत्तिसंभवः---चौरेभ्यो बिभेति, भयान्निवर्तत इत्यर्थः। त्रायते=रक्षणेन चौरेभ्यो निवत्र्तयतीत्यर्थः। पराजयते=ग्लान्या निवर्तत इत्यर्थः। वारयति। प्रवृतिं()त प्रतिबन्धन्निवर्तयतीत्यर्थः। निलीयते=निलयनेन निवर्तत इत्यर्थः। अधीते=उपध्यायान्निः सरन्तं शब्दं गृङ्णातीत्यर्थः। ब्राह्णः प्रपञ्चो जायत इत्यत्रापि ततोऽपकामति। निर्गच्छतीत्यर्थः। प्रभवतीत्यत्रापि भवनपूर्वकं निःसरणमर्थः। तथा च "ध्रुवमपाये---" इत्येनेनैवेष्टेरूपसिद्धिरिति। वस्तुतस्तु निवृत्तिनिस्सरणादिधात्वन्तरार्थविशिष्टे स्व#आर्थे वृत्तिमाश्रित्य यथाकथंचुदित्तप्रयागाणां समर्थनेऽपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः,--नटस्य श्रृणोतीतिवत्। न ह्नुपध्यायनटयोः क्रियानुकूलव्यापाराशे विशेषो वक्तुं शक्यः। अनभिधानब्राह्आस्त्रमाश्रित्य प्रत्याख्यानं तु नाऽतीव मनोरमम्। एवं "जुगुप्साविरामे"त्यादिवार्तिकमप्यारम्भणीयम्। तथा च सूत्रवार्तिकमतमेवेह प्रबलम्। तथा "ध्रुवं" "भयहेतुः" "असोढः" इत्यादिसंज्ञिनिर्देशोऽपि सार्थकः। परत्वात्तत्संज्ञाप्राप्तावपि शेषत्वविवक्षायां "न भाषाणामश्रीयात्" इत्यादाविव षष्ठ()आ इष्टतया तत्रापादानसंज्ञाया वारणीयत्वात्। एतच्च शब्दकौस्तुभे स्पष्टम्।

ल्यब्लोपे कर्मण्यधिकरणे च। ल्यब्लोप इति। ल्यबन्तस्य गम्यमानार्थत्वलादप्रयोग इत्यर्थः। ल्यब्ग्रहणमिह ल्यबर्थपरम्। तेन क्त्वोऽपि लोपे सिध्यति। आसने स्थित्वा प्रेक्षते,----आसनात्प्रेक्षते,---आसनात्प्रेक्षते इति।

यतश्चाऽध्वकालनिर्माणं तत्र पञ्चमी॥ यतश्चेति। यदवधित्वेनाश्रित्याद्वनः कालस्य वा निर्माणं=परिच्छेदः प्रतिपाद्यते ततः पञ्चमीत्यर्थः। तेन पञ्चम्यन्तार्थेनार्थद्वारा युक्तान्निर्मीयमाणाध्ववाचिनः प्रथमासप्तम्यौ स्तः।

कालात्सप्तमी च वक्तव्या। कालादिति। इहापि तद्युक्तादित्यपेक्ष्यते। आग्रहायणीति। अग्रे हायनमस्याः सा।

प्रज्ञादेराकृतिगणत्वात्स्वार्थिकोऽण्। "पूर्वपदात्संज्ञायाम्" इति णत्वम्। अन्यारा। अर्थग्रहणमिति। व्याख्यानादिति भावः। प्रपञ्चार्थमिति। न च "इतरस्त्वन्यनीचयोः" इत्यमरोक्तेर्नीचार्थस्येदं ग्रहणमस्तीति वाच्यम्, "अस्मात्तारो मन्द्रो वा" इतिवत् "पञ्चमी विभक्ते" इत्यनेनैव सिद्धत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्मणा ३।१ यम् २।१ अभिप्रैति लट् प०।१ सः १।१ सम्प्रदानम् १।१ ४१ कारके ७।१ २३

अर्थः॥

करणभूतेन कर्मणा यस्य अभिप्रायं साधयति (यम् उद्दिशति) तत्कारकम्, कारके = क्रियायां सत्यां सम्प्रदानसंज्ञकं भवति॥

उदाहरणम्॥

उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति॥

काशिका-वृत्तिः

कर्मणा यम् अभिप्रैति स सम्प्रदानम् १।४।३२

कर्मणा करणभूतेन कर्ता यम् अभिप्रैति तत् कारकं सम्प्रदानसंज्ञं भवति। अन्वर्थसंज्ञाविज्ञानाद् ददातिकर्मणा इति विज्ञायते। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति। क्रियाग्रहणम् अपि कर्तव्यम्। क्रियया ऽपि यम् अभिप्रैति स सम्प्रदानम्। श्राद्धाय निगर्हते। युद्धाय सन्नह्यते। पत्ये शेते। सम्प्रदानप्रदेशाः चतुर्थी सम्प्रदाने २।३।१३ इत्येवम् आदयः। कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा। पशुना रुद्रं यजते। पशुं रुद्राय ददाति इत्यर्थः।

लघु-सिद्धान्त-कौमुदी

कर्मणा यमभिप्रैति स सम्प्रदानम् ८९९, १।४।३२

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात्॥

न्यासः

कर्मणा यमभिप्रैति स सम्प्रदानम्। , १।४।३२

"कर्मणा करणभूतेन" इति। ननु च कथं कर्म करणं भवति? क्रियाभेदसम्बन्धात्। तथा हि ददातिक्रिययाऽऽस्तुमिष्टतमत्वात् तस्याः कर्मत्वम्, अभिप्रयाणक्रियां प्रतितस्य साधकतमत्वात् करणत्वम्। "अभिप्रैति" इति। अभिसम्बध्नातीत्यर्थः। यदि कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञो भवति, एवमजां नयति ग्राममित्यजादिभिर्नयनक्रियाकर्मभिः सम्बध्यमानस्य ग्रामस्य सम्प्रदानसंज्ञा प्रसज्येतेत्यत आह-- "अन्यर्थसंज्ञाविज्ञानात्" इत्यादि। सम्प्रदानमिति। तेन ददातेः कर्मणा यमभिप्रैति तत् सम्प्रदानमिति विज्ञायते। नन्वेवमपि रजकस्य वस्त्रं ददाति, घ्नतः पृष्ठं ददातीत्यतत्र प्राप्नोति, नैतदस्ति; दानं हि नाम पूजानुग्रहकाम्यया स्वकीयद्रव्यपरित्यागः परस्वत्वापत्तिः, तच्चेह नास्ति, अतो न भविष्यति। कर्मणेति किमर्थम्? " यमभिप्रैति स सम्प्रदानम्" इत्युच्यमाने यमभिप्रैति तस्य कर्मण एव सम्प्रदानसंज्ञत्रा स्यात्। कर्मसंज्ञायास्तु

ददातिकर्मणोऽन्यत्रावकाशः स्यात्-- ओदनं पचतीति। "यं स" ग्रहणं किमर्थम्? "कर्मणाभिप्रैति सम्प्रदानम्" इत्युच्यमाने कयोऽभिप्रैति तस्य सम्प्रदानसंज्ञा स्यात्। ततश्च कर्तुः सम्प्रदानसंज्ञा स्यात्, कर्तसंज्ञायास्तु यत्र कर्मसम्बन्धो नास्ति, सोऽवकाशः स्यात्--आस्ते, शेते इति। अथाभिप्रग्रहण किमर्थम्? "कर्मणा यमेति स सम्प्रदानाम्" इत्युच्यमाने कालविशेषविक्षा स्यात्, वर्तमान एव स्यात्। ततश्चोपाध्यायस्य गामदात्, उपाध्यायायं गां दास्तीत्यत्र न स्यात्, अभिग्रहणे तु सति भवति। अभिराभिमुख्ये वत्र्तते तच्चाप्यतीतेऽप्यस्ति। प्रशब्द आदिकर्मणि, प्रारम्भे। स चासन्निहितायां भाविन्यामपि क्रियायां सम्भवतीति सर्वत्र संज्ञा सिद्धा भवति। नैतदभिप्रग्रहस्य प्रयोजनमुपपद्यते। यथैव कर्मणेत्यत्रैकत्वसंख्याया विवक्षा न भवति; यता च "यं" "सः" इत्यत्र लिङ्गसंख्योर्विवक्षा न भवति तथा कालस्यापि न भविष्यति। किं कारणम्? उपलक्षणार्थत्वात्। यथा-- "सोऽर्थो योऽनर्थ बाधते" इत्युक्ते योऽपि बाधितवान्, योऽपि बाधिष्यते सोऽप्यर्थ एव। एवं तर्हि ग्रन्थाधिक्यादर्थाधिक्यं यथा स्यादित्यवमर्थमभिप्रग्रहणम्। एतेन क्रिययापि यमभिप्रैति तस्यापि सम्प्रदानसंज्ञा सिद्धा भवति; अन्यथा हि यद्यपि क्रिया प्रार्थनाध्यवसानाभ्यां व्याप्तुमिष्टतमत्वात् कर्म, तथापि ददातिकर्मसम्बन्धाभावान्न सिद्ध्येत्। कथं पुनरेतदवसितम्-- क्रियया यमभिप्रैतिस सम्प्रदावमित्ययमर्थोऽत्र प्रतिपादयितुमिष्टतम् इति? अभिप्रग्रहणात्। अस्ति ह्यत्राचार्यस्य कश्चिदर्थोऽधिकोऽभिमतः, यस्यावभासनायाधिकं शब्दान्तरं प्रयुक्तमिति गम्यते, न त्वर्थविशेषः। न हि तत् तस्य वाचकम्। यद्यप्यवाचकं स्यात्, तथापि लक्ष्यदर्शनवशादविच्छिन्नाचार्यपारम्पर्योपदेशाच्च विशेषावगतिर्भविष्यतीत्यद्वेष्यमेतत्। "क्रियाग्रहणमपि कत्र्तव्यम्" इति। क्रियया ग्रहणं क्रियाग्रहणम्। येन क्रिया गृह्यते, तद्वयाख्यानं कत्र्तव्यम्। किं पुनस्तद्व्याख्यानम्? तच्चास्माभिरभिग्रहण्सय प्रयोजनं वर्णयद्भिः कृतमेव। का पुनरिह क्रिया, ययाभिप्रेयमाणस्य सम्प्रदानसंज्ञेष्यते? सा विवक्षिता। अत आह-- "क्रिययापि यमभिप्रैति" इत्यादि। "निगल्हते" इति। "गर्ह गल्ह कुत्सायाम्" (धा।पा।६३६,६३७) अनुदात्तेत्। "युद्धाय सन्नह्यते" इति। "नह बन्धने" (धा।पा।११६६) दिवादौ स्वरितेत्। स चेह निश्चये वत्र्तते, युद्धे निश्चयं करोतीत्यर्थः। "पत्ये शेते" इति। शीङत्रोपसर्पणपूर्वके शयन वत्र्तते। पतिमुपसृत्य शेते इत्यर्थः। "कर्मणः करणसंज्ञा" इत्यादि। एतत् "पशुना रुद्रं यजते" इत्येतद्विषयमेव वेदितव्यम्। यजिः स्वरितेत्। एतच्च "व्यत्ययो बहुलम्" (३।१।८५) इति सुव्यत्ययेन सिद्धमेवेति न वक्तव्यम्॥

बाल-मनोरमा

कर्मणा यमभिप्रैति स संप्रदानम् ५६१, १।४।३२

अथ चतुर्थी। कर्मणा यमभि। कर्मसंज्केन गवादिद्रव्येण यमभिप्रैति शेषित्वेनऽध्यवस्यति स संप्रदानमित्यर्थः। शेषित्वं-भोक्तृत्वम्। संप्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थसंज्ञैषा। ततश्च कस्याः क्रियायाः कर्मणेत्याकाङ्क्षायां दानस्येति गम्यते। तदाह--दानस्येत्यादिना। देयद्रव्योद्देश्यं संप्रदानमिति फलितम्। दानस्येति किम्? पयो नयति देवदत्तस्य। अत्र देवदत्तस्य पयोनयनोद्देश्यत्वेऽपि न संप्रदानत्वं, पयसो दानकर्मत्वाऽभावात्।

तत्त्व-बोधिनी

कर्मणा यमभिप्रैति स संप्रदानम् ५०६, १।४।३२

कर्मणा। महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम्। सम्यक् प्रदीयतेऽस्मै तत्संप्रदानमिति। अत एवाह---दानस्येति। दानक्रियाकर्मणा कर्ता यमभिप्रैति सम्बन्ध्नाति, सम्बन्द्धुमीप्सति वा तस्कारकं सम्प्रदानसंज्ञकमित्यर्थः। तेन "अजां नयति ग्रामं" "हस्तं निदधाति वृक्षे" इत्यादौ नाऽतिप्रसङ्गः। दानं चाऽनुपुनग्र्रहणाय स्वस्वत्विनिवृत्तिपूर्वकं परस्वत्वोत्पादनम्। अतएव "रजकस्य वस्त्रं ददाती"त्यादौ न भवति। तत्र हि ददातिर्भाक्तः। एतच्च वृत्तिमतम्। भाष्यमते तु नाऽन्वर्थतायामाग्रहः "खण्डिकोपाध्यायः शिष्याय चपेटां ददाति" इत्यादिप्रयोगात्। "राजकस्य ददाती"ति प्रयोगस्तु

शेषत्वविवक्षायां भविष्यति। न चैवमजां नयति ग्राममित्यादावतिप्रसङ्गः शङ्क्यः, अजां प्रति ग्रामस्य शेषित्वाऽभावात्। "यमभिप्रैती"त्युक्त्या हि यमिति निर्दिष्टस्य शेषित्वं, कर्मणश्च शेषत्वं लभ्यते, गां प्रति तु विप्रस्य शेषित्वमस्तीति भवति तस्य संप्रदामसंज्ञा। अत्र अभि प्र एतीत्येतत्पदत्रयं, न तु समासः।" उदात्तवता गातिमता च तिङा गतेः समासो वक्तव्यः" इति वार्तिकस्य छन्दोविषयत्वादिति हरदत्तः। भाषाविषयत्वे तु "यत्प्रकुरुते" इत्यादौ समासत्वात्सोर#उत्पत्तिः स्यात्। लिङ्गसर्वनाम नपुंसकतामभ्युपेत्य "स्वमोर्नपुंसकात्" इति लुकि कृतेऽपि "ह्रस्वो नपुंसके---" इति ह्रस्वः स्यात्,"यत्प्रकुर्वीर"न्नित्यत्र तु नलोपः स्यात्(), तस्मादुक्तवार्तिकस्य छन्दोविषयत्वंयुक्तमेव। दानीय इति। बाहुलकात्संप्रदाने अनीयरि। क्रिययेति। क्रियायाः कृत्रिमाकर्मत्वाऽभावात्तया अभिप्रेयमाणस्य सूत्रेण संज्ञा न प्राप्नोतीति वचनम्। एतच्च "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यनेन सिद्धम्। "पत्ये शेते" इत्यादौ पतिमनुकूलयितुं शेते इत्याद्यर्थाभ्युपगमे वाधकाऽभावात्। भाष्यकारमते तु "कर्मणा यमभिप्रैति" इति सूत्रेणैव सिद्धम्, "संदर्शनप्रार्थनाऽध्यवसायैराप्यमाणत्वात्क्रियापि कृतिं()रमं कर्म" इति तैरुक्तत्वात्। नचैवमपि ददातिकर्मत्वाऽभावात् "क्रियया यमभिप्रैति" इत्येतद्वचनं कर्तव्यमेवेति वाच्यम्, भाष्येऽन्वर्थसंज्ञात्बस्वोकारात्। नन्वेनं कटं करोति, ओदनं पचतीत्यादावपि संप्रदानत्वप्रसङ्गस्तथा च वचनद्वयबलात्कर्मसंप्रदानयोः पर्यायत्वे "कटाय करोती"त्याद्यनिष्टप्रयोगोऽपि स्यादिति चेत्()। अत्राहुः--"पत्ये शेते" इत्यकर्मकस्थले सावकाशायाः संप्रदानसंज्ञायाः निरवकाशया कर्मसंज्ञया बाधितत्वान्नैवाऽनिष्टप्रसक्तिः। न चैवं "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ---" इति सूत्रमावश्यकमेवेति तत्प्रत्याख्यानं भाष्यस्थं न सङ्गच्छत इति वाच्यम्। भाष्ये तत्प्रत्याख्यानस्य प्रौढिवादमात्रत्वादिति दिक्। स्यादेतत्---दानस्य तदर्थत्वात्तादर्थ्ये चतुर्थी सिद्धैव किमनया संप्रदानसंज्ञया?। मैवम्। दानक्रियार्थं हि संप्रदानं न तु दानक्रिया तदर्था। कारकाणां क्रियार्थत्वात्।

कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा। कर्मणः करणसंज्ञेत्यादि। छन्दसमेतत्। अत एवेदं सुब्व्यत्यत्येन सिद्धत्वादिति प्रत्याख्यायते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ रुच्यर्थानाम् ६।३ प्रीयमाणः १।१ सम्प्रदानम् १।१ ३२ कारके ७।१ २३

समासः॥

रुचिः अर्थः येषां, ते रुच्यर्थाः, तेषां ॰, बहुव्रीहिः।

अर्थः॥

रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणः = तृप्यमाणः (यः तृप्यते) तत्कारकं संप्रदानसंज्ञकं भवति॥

उदाहरणम्॥

देवदत्ताय रोचते मोदकः। यज्ञदत्ताय स्वदतेऽपूपः।
काशिका-वृत्तिः
रुच्यर्थानाम् प्रीयमाणः १।४।३३

रुचिना समानार्थाः रुच्यर्थाः अन्यकर्तृको ऽभिलाषो रुदिः। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो यो ऽर्थः, तत् कारकं सम्प्रदानासंज्ञम् भवति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय स्वदते ऽपूपः। देवदत्तस्थस्याभिलाषस्य मोदकः कर्ता। प्रीयमाणः इति किम्? देवदत्ताय रोचते मोदकः पथि।

न्यासः

रुच्यर्थानां प्रीयमाणः। , १।४।३३

"रुचिना समानार्था रुच्यर्थाः" इति। रुच्यर्थानामित्यस्मादेव निपातनात-- मयूरव्यंसकादित्वान्मध्यमपदलोपो समासः। "समानार्थाः" इति। एकार्था इत्यर्थः। यद्यपि "रिचिर्दीप्तौ" (धा।पा।७४५) पठ()ते, तथापीहाभिलाषे वत्र्तते, अनेकार्थत्वाद्धातूनाम्; तत्रैव प्रीयमाणार्थस्य सम्भवात्। यस्य ह्रभिलाषः स प्रीयमाणः। यस्त्वभिलषति स प्रीणाति। "प्रीयमाणः" इति। तृप्यमाण इत्यर्थः। "प्रीञ् तर्पणे" (धा।पा। १४७४) इत्येतस्मात् कर्मणि विहितस्य लस्य शानच्। "अन्यकर्तृकः" इत्यादिना तमभिलाषविशेषं दर्शयन् रुचिशब्दस्यार्थमाचष्टे। प्रीयमाणापेक्षयाऽन्योर्थो वेदितव्यः। प्रीयमाणादन्यः कत्र्ता यस्य सोऽन्यकर्त्तुकः। "रोचते स्वदते" इति। "रुच दीप्तौ"(धा।पा।७४५) "स्वद आस्वादने" (धा।पा।१८) अनुदात्तेत्तौ। "देवदत्तस्थस्य" इत्यादिनाऽन्यकर्त्तृकतामभिलाषस्य दर्शयति। "देवदत्ताय रोचते मोदकः पथि" इति। प्रीयमाणग्रहादिहाधिकरणस्य पथः सम्प्रदानसंज्ञा न भवति। अथ देवदत्तो मोदकमभिलषतीत्यत्र देवदत्तस्य सम्प्रदानसंज्ञा कस्मान्न भवति? रुच्यर्थाभावात् "अन्यकर्तृको ह्रभिलाषो रुचिः, (का। १।४।३३) इत्युक्तम्। न चेहान्यकर्त्तृकोऽभिलाषः, किं तर्हि? प्रीयमाणो देवदत्तो यस्तत्रस्थोऽभिलाषस्तत्कर्त्तृकः॥

बाल-मनोरमा

रुच्यर्थानां प्रीयमाणः ५६३, १।४।३३

रुच्यर्थानां। रुच्यर्थानां धातूनामिति। "रुच दीप्तावभिप्रीतौ च"। दीप्तिरिह न रुच्यर्थः, प्रीयमाण इति विरोधात्। तथाच प्रीतिजननार्थानामित्यर्थः। प्रीयमाण इति। समवायेन प्रीत्याश्रय इत्यर्थः। हरये रोचते भक्तिरिति। भक्तिः स्वविषयां प्रीति हरौ जनयतीत्यर्थः। भक्तिगतव्यापारप्रयोज्यप्रीत्याश्रयत्वाद्धरेः कर्मत्वं प्राप्तं, तदपवादोऽयम्। नन्वेवं सति हरिर्भक्तिममिलषतीत्यत्रापि भक्तेः प्रीतिविषयत्वात्संप्रदानत्वं स्यादित्यत आह-अन्यकर्तृक इति। समवायेन प्रीत्याश्रयापेक्षया यदन्यत्, तत्कर्तृकाभिलाषो रुच्धात्वर्थः। प्रीत्याश्रयकर्तृकः किञ्चिद्विषयक इच्छाविशेषोऽभिलाषः। तथा च अभिलषते रुच्र्थकत्वाऽभावान्न तद्योगे संप्रदानत्वम्। प्रकृते च प्रीत्याश्रयो हरिः, तदपेक्षया यत् अन्यता=भक्तिः, तत्कर्तृकैव प्रीतिरिति रूच्यर्थयोगः। नन्विह भक्तेः संप्रदानत्वं कुतो न स्यात्, विषयतासंबन्धेन भक्तिरपि प्रीत्याश्रयत्वादित्यत आह--हरिनिष्ठप्रीतेर्भक्तिः कत्रीति। हरेरेव समवायसंबन्धेन प्रीत्याश्रयतया प्रीयमाणत्वाद्भक्तेः कत्र्या उक्तरीत्या प्रीयमामत्वाऽभावाच्च न संप्रदानत्वमिति भावः। भक्तिर्हरिं प्रीणाति, प्रीणयतीत्यादौ तु न भक्तेः संप्रदानत्वप्रसक्तिः, तिङा अभिहितत्वात्, समवायेन प्रीत्याश्रयत्वाऽभावाच्च। नापि हरेः, प्रीयमाण इति कर्मणि सानच्प्रयोगबलेन प्रीधातुयोगे रुच्यर्थानामित्यस्याऽप्रसक्तेर्विज्ञानात्, अन्यथा प्रीधातुकर्मणः संप्रदानत्वे कर्मणि शानचो दौर्लभ्यात्। मोदकः पथीति। अत्र पथः प्रीयमामत्वाऽभावान्न संप्रदानत्वमिति भावः।

तत्त्व-बोधिनी

रुच्यर्थानां प्रीयमाणः ५०७, १।४।३३

रुच्यर्थानाम्। रुचिरर्थो येषां ते रुच्यर्थास्तेषाम्। प्रीयमाणा इति। "प्रीञ् तर्पणे" अस्मात्कर्मणि लिट्। हरये रोचत इति। हरिं प्रीणयतीत्यर्थः। कर्मसंज्ञायां प्राप्तायां वचनम्। यद्यपि रुचिर्दीप्तावपि पट()ते, तथापीह दीप्तिर्न विवक्षितेत्याह--- अन्यकर्तृकोऽभिलाष इति। अत एव "आदित्यो रोचते दिक्षु" इत्यत्र दीप्त्यर्थे संज्ञा न भवति। हरिनिष्ठ प्रीतेरिति। एतेन

अन्यकर्तृकत्वमिह प्रीत्याश्रयाऽन्यकर्तृकत्वमित्युक्तं भवति। मोदकः पथीति। देवदत्तस्यैव प्रीयमाणत्वं न तु पथ इति न कतस्य संप्रदानत्वं। प्रीयमाणपदाऽभावे चु पथोऽपि स्यादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ श्लाघ-ह्नुङ्-स्था-शपाम् ६।३ ज्ञीप्स्यमानः १।१ सम्प्रदानम् १।१ ३२ कारके ७।१ २३

समासः॥

श्लाघ-ह्नुङ्॰ इत्यत्र इतरेतरद्वन्द्वः।

अर्थः॥

श्लाघ, ह्नुङ्, स्था, शप इत्येतेषां धातूनां प्रयोगे ज्ञीप्स्यमानः = ज्ञपयितुम् इष्यमाणः यत् कारकं तत् सम्प्रदानसंज्ञं भवति।

उदाहरणम्॥

देवदत्ताय श्लाघते। देवदत्ताय ह्नते। देवदत्ताय तिष्ठते। देवदत्ताय शपते।

काशिका-वृत्तिः

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः १।४।३४

श्लाघ ह्नुङ् स्था शप इत्येतेषाम् ज्ञीप्स्यमानो यो ऽर्थह्, तत् कारकं सम्प्रदानसंज्ञं भवति। ज्ञीप्स्यमानः ज्ञपयितुम् इष्यमणः, बोध्यितुम् अभिप्रेतः। देवदत्ताय श्लाघते। देवदत्तं श्लाघमानस्ताम् श्लाघां तम् एव ज्ञपयितुम् इच्छति इत्यर्थः। एवम् देवदत्ताय ह्नुते। यज्ञदत्ताय ह्नुते। देवदत्ताय तिष्ठते। यज्ञदत्ताय तिष्ठते। देवदत्ताय शपते। यज्ञदत्ताय शपते। ज्ञीप्स्यमानः इति किम्? देअदत्ताय श्लाघते पथि।

न्यासः

श्लीघह्?नुङ्स्थाशपां ज्ञीप्स्यमानः।, १।४।३४

"ज्ञीप्स्यमानः" इति। "मारणतोषणनिशामनेषु ज्ञा" (धा।पा।८११) इति घटादिषु पठ()ते। तस्मात् निशामने ज्ञाने वत्र्तमानात् हेतुमण्णिच्। अथ वा "ज्ञप मिच्च" (धा।पा।१६२४) इति चुरादौ पठ()ते। तस्माच्चुरादिणिच्, मित्त्वात् ह्यस्वत्वम्, सन्, द्विर्वचनम्, "आप्ज्ञप्यृधामीत्" ७।४।५५ इतीत्वम्, "अत्र लोपऽभ्यासस्य" ७।४।५८ इत्यभ्यासलोपः, कर्मणि लकारः, शानच् यक्, "अतो लोपः" ६।४।४८। "श्लाघते" इति। "श्लाघु कत्थने" (धा।पा।११५) अनुदात्तेत्। "{ह्नुते-काशिका, "निह्नुते-पदमञ्जरी।} अपह्नते" इति। "ह्नुङ अपनयने" (धा।पा।१०८२), आदादिकः। "तिष्ठते" इति। "प्रकाशनस्थेयाख्ययोश्च" १।३।२३ इति तङ। "शपते" इति। "{शप आक्रोशे- धा।पा।} शप उपलम्भने" (धा।पा।१०००) इत्यनेनोपलसंख्यानन तङ॥

बाल-मनोरमा

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ५६४, १।४।३४

श्लाघह्नुङ्। "श्लाघृ कत्थने" "ह्नुङ् अपनयने" "ष्ठा गतिनिवृत्तौ" "शप उपालम्भे" एषां द्वन्द्वः। "शपा"मित्यनन्तरं "प्रयोगे"

इत्यध्याहार्यम्। श्लाघादीनां स्तुत्यादिना बोधनमर्थः, ज्ञीप्स्यमान इति लिङ्गात्। ज्ञापनवाचिनो ज्ञपेः सन्नन्तात्कर्मणि शानच्। तदाह--एषां प्रयोगे इत्यादिना। गोपी स्मरादीति। मन्मथपीडावशाद्गोपी आत्मस्तुत्या विरहवेदनां कृष्णं बोधयतीत्यर्थः। कृष्णस्यैव स्तुत्यत्वे तु द्वितीयैवेत्याहुः। ह्नुते इति। सपत्न्यपनयनेन स्वाशयं कृष्णं बोधयतीत्यर्थः। तिष्ठते इति। गन्तव्यमित्युक्तेऽपि स्थित्या स्वाशयं कृष्णं बोधयतीत्यर्थः। "प्रकाशनस्थेयाख्ययोश्चे"त्यात्मनेपदम्। शपते इति। उपालम्भेन स्वाशयं कृष्णं बोधयतीत्यर्थः।

तत्त्व-बोधिनी

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ५०८, १।४।३४

श्लाघह्नुङ्। "श्लाघृकत्थने," "ह्नुङ् अपनयने" "ष्ठा गतिनिवृत्तौ,""शप उपलम्भे"। कृष्णाय श्लाघत इति। अ()स्मस्तु पक्षे शेष षष्ठ()आं प्राप्तायां वचनम्। ह्नुति इति। सपत्नीभ्यः कृष्णं ह्नुवाना तमेवाऽर्थं कृष्णं बोधयतीत्यर्थः। यस्य कस्यचित्थ्नुति बोधयतीति वा। तिष्ठत इथि। स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः। "प्रकाशनस्थेयाख्ययोश्चे "ति तङ्। शपत इति। उपालम्भेन स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः। "शप उपालम्भे" इति तङ्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ धारेः ६।१ उत्तमर्णः १।१ सम्प्रदानम् १।१ ३२ कारके ७।१ २३

समासः॥

ऋणे उत्तमः उत्तमर्णः, तस्मिन् सप्तमीतत्पुरुषः (निपातनात् ऋणशब्दस्य परनिपातः)

अर्थः॥

धृञ् धारणे धातोः प्रयोगे, उत्तमर्णः = ऋणदाता यत् कारकं तत् संप्रदानसंज्ञकं भवति॥

उदाहरणम्॥

देवदत्ताय शतं धारयति यज्ञदत्तः।

काशिका-वृत्तिः

धारेरुत्तमर्णः १।४।३५

धारयतेः प्रयोगे उत्तमर्णो यो ऽर्थः, तत् कारकं सम्प्रदानसंज्ञं भवति। उत्तमम् ऋणं यस्य स उत्तमर्णः। कस्य चोत्तममृणम्? यदीयं धनम्। धनस्वामी प्रयोक्ता उत्तमर्णः, स सम्प्रदानसंज्ञो भवति। देवदत्ताय शतम् धारयति। यज्ञदत्ताय शतं धारयति। उत्तार्णः इति किम्? देवदत्ताय शतम् धरयति ग्रामे।

न्यासः

धरेरुत्तमर्णः।, १।४।३५

"उत्तमर्णः" इति। ऋणे उत्तम् उत्तमर्णः। अत एव निपातनात् समासः, सप्तमीसमासे ऋणस्य पूर्वनिपातात्। ननु चोत्तमर्णे

ऋणशब्देन न भवितव्यम्। "ऋणमाधमण्र्ये " ८।२।६० इत्याधमण्र्ये तस्य निपातनात्, नैतदस्ति; कालान्तरे देयनियमोपलक्षणार्थं हि तत्राधमण्र्यग्रहणम्। अत उत्तमर्णोऽपि भवत्येव। "शतं धारयति" इति। "धृङ अवस्थाने" (धा।पा।१४१२), शतं ध्रियते स्वरूपेणावतिष्ठते, स्वभावान्न प्रच्यवते। तदन्यः प्रयुङ्क्त इति "हेतुमति च" ३।१।२६ इति णिच्। "ग्रामे" इति ग्रामस्याधिकरणस्यानुत्तमर्णस्य न भवति॥

बाल-मनोरमा

धारेरुत्तमर्णः ५६५, १।४।३५

धारेरुत्तमर्णः। "धारे"रित्यनन्तरं "प्रयोगे" इत्यध्याहार्यम्। "धृङ् अवस्थाने" इत्यस्य हेतुमण्ण्यन्तस्य धारेरिति निर्देशः। तदाह--धारयतेरित्यादिना। अन्यस्वामिकं द्रव्यं नियतकाले पुनरर्पणबुद्ध्या गृहीतम् ऋणमित्युच्यते। तत्र ऋणस्य ग्रहीता-अधमर्णः, ऋणस्यार्पयिता-धनस्वामी-उत्तमर्णः। प्रतिमासमशीतिभगादिवृद्ध्या उत्तमम्= अधिकतां प्राप्तम् ऋणं यस्येति विग्रहः। भक्तायेति। भक्तसंबन्धी यो मोक्षः= अपरिमितनित्यसुखविशेषस्तं धारयतीत्यर्थः। धरते मोक्षः, अवतिष्ठते इत्यर्थः। तं प्रेरयति धारयति, अवस्थापयतीति यावत्। पूजयन्हि भक्तस्तुलसीदलादिद्रव्यं प्रयच्छति, तच्च गृह्णन्तुष्टो हरिस्तत्प्रत्तद्रव्यं मोक्षदानेन निष्क्रीणाति। तदाहुः पौराणिकाः-"तोयं वा पत्रं वा यद्वा किञ्चित्समर्पितं भक्त्या। तदृणं मत्वा देवो निःश्रेयसमेव निष्क्रयं मनुते।" इत्यादि। तथाचात्र भक्तस्य ऋणदातृत्वेन उत्तमर्णत्वात्संप्रदानत्वं संबन्धषष्ठ()पवादः।

तत्त्व-बोधिनी

धारेरुत्तमर्णः ५०९, १।४।३५

धारेरुत्तमर्णः। "धृङ् अवस्थाने"। हेतुमण्ण्यन्तः। उत्तमर्णो=धनस्वामी। अर्तेः क्तः। ऋणम्। ऋणमाधमण्र्ये इथ्यत्र व्यवहारविशेषोपलक्षणार्थमाधमण्र्यग्रहणमिति व्याख्यानादुत्तमर्णेऽपि निष्ठानत्वं भति। अस्मादेव निपातनादत्र बहुव्रीहौ निष्ठान्तस्य परनिपातो बोध्यः। भक्तायेत्यादि। इह भक्त उत्तमर्णो, हरिरधमर्णः। धृङोऽकर्मकत्वादणौ कर्तुर्मोक्षस्य णौ कर्मत्बम्। शतं धारयति ग्राम इति। परत्वादिहाऽधिकरणसंज्ञा भविष्यतीति चेदुत्तमर्णेऽपि तर्हि हेतुसंज्ञा स्यादिति हरदत्तः।ततश्चोत्तमर्णग्रहणाऽभावे हेतुसंज्ञाया इवाधिकरणसंज्ञाया अप्ययमपवादः स्यात्तद्वारणयोत्तमर्णग्रहणमिति भावः। एवं च कृतेऽप्युत्तमर्णग्रहणे "तत्प्रयोजको हेतुश्च" इति हेतुसंज्ञायां प्राप्तायां तद्बाधनार्थमिदं संप्रदानसंज्ञावचनमिति निष्कर्षमाहुः। मनोरमायां तु षष्ठ()आं प्राप्तायामिदं वचनमिति स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्पृहेः ६।१ ईप्सितः १।१ सम्प्रदानम् १।१ ३२ कारके ७।१ २३

अर्थः॥

स्पृह ईप्सायां धातोः प्रयोगे ईप्सितः अभिप्रेतः यः तत्कारकं संप्रदानसंज्ञं भवति।

उदाहरणम्॥

पुष्पेभ्यः स्पृहयति। फलेभ्यः स्पृहयति।

काशिका-वृत्तिः
स्पृहेरीप्सितः १।४।३६

स्पृह ईप्सायाम् चुरादावदन्तः पठ्यते। तस्य ईप्सितो यो ऽर्थः, तत् कारकं सम्प्रदानसंज्ञम् भवति। ईप्सितः इत्यभिप्रेतः उच्यते। पुष्पेभ्यः स्पृहयति। फलेभ्यः स्पृहयति। ईप्सितः इति किम्? पुश्पेभ्यो वने स्पृहयति।
लघु-सिद्धान्त-कौमुदी
अन्तरं बहिर्योगोपसंव्यानयोः १५८, १।४।३६

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा। अन्तरे, अन्तरा वा गृहाः; बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः; परिधानीया इत्यर्थः॥
न्यासः
स्पृहेरीप्सितः। , १।४।३६

"स्पृहयति" इति। अतो लोपस्य ६।४।४८ "अचः परस्मिन् पूर्वविधौ" १।१।५६ इति स्थानिवद्भावाद्गुणो न भवति। यदा तु पुष्पादीनामीप्सिततमत्वं विवक्ष्यते, तदा परत्वात् कर्मसंज्ञैव भवति-- पुष्पाणि स्पृहृतीति॥
बाल-मनोरमा
स्पृहेरीप्सितः ५६६, १।४।३६

स्पृहेरीप्सितः। "स्पृह ईप्सायाम्"चुरादावदन्तः। ततः स्वार्थे णिचि अल्लोपस्य स्थानिवत्त्वाल्लघूपधगुणाऽभावे स्पृहिशब्दात्षष्ठ()एकवचनम्। "प्रयोग" इत्यध्याहार्यम्। तदाह--स्पृहयतेरित्यादिना। ननु "पुष्पेभ्यः स्पृहयती"त्येव स्यात्, नतु पुष्पाणि स्पृहयतीत्यपि। उभयं त्विष्यते। तत्राह ईप्सितमात्र इति। यदा त्वीप्सितत्वस्यापि न विवक्षा, किं तु विषयतामात्रविवक्षा, तदा "पुष्पाणां स्पृहयती"ति साधु। "कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चे"त्यादिदर्शनात्। वाक्यपदीये तु स्पृहयतियोगे कर्मसंज्ञायाः शेषषष्ठ()आश्चायमपवाद इति स्थितम्। हेलाराजोऽप्येवम्। तन्मते पुष्पाणि स्पृहयति पुष्पाणां स्पृहयतीत्याद्यसाध्वेवेत्यन्यत्र विस्तरः।

तत्त्व-बोधिनी
स्पृहेरीप्सितः ५१०, १।४।३६

स्पृहेरीप्सितः। "स्पृह ईप्सायां" चुरादावदन्तः, तेन स्पृहयतीत्यत्र लघूपधगुणो न। परत्वादिति। तेन"परस्परेण स्पृहणीयशोभम्", स्पृहणीयगुणैर्महात्मभिः" इत्यादौ कर्मण्यनीयर् सिध्यति। शेषत्वविवक्षायां तु "कुमार्य इव कान्तस्य त्रस्यान्ति स्पृहयन्ति च " इत्यत्र षष्ठ()पि सिध्यतीति हरदत्तादयः। वाक्यपदीयहेलाराजीयग्रन्थयोस्तु स्पृहयतियोगे कर्मसंज्ञायाः शेषषष्ठ()आश्च बाधिकेयं संप्रदानसंज्ञेति स्थितम्। युक्तम चेतत्---"क्रियया यमभिप्रैति---" इत्यनेनैवेष्टसिद्धे "स्पृहेरीप्सितः"इत्येत्सूत्रस्य हरदत्तादिमते वैयर्थ्यप्रसङ्गात्। तस्माद्वाक्यपदीयादिग्रन्थानुरोधेन "परस्परेण स्पृहणीयशोभम्" इत्यादौ "दानीयो विप्रः" इतिवद्बाहुलकात्संप्रदानेऽनीयरिति व्याख्येयम्। "कुमार्य इव कान्तस्य" इथ्यत्र तु त्रस्यन्तीत्येतदर्थतया कृतार्थस्य कान्तस्येति षष्ठ()न्तस्य विभक्तिविपरिणामेन "कान्ताय स्पृहयन्ती"ति व्याख्येयमिति केचित्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कुध-द्रुह-ईर्ष्य-असूयार्थानाम् ६।३ यम् १।२ ३८ प्रति ० ३८ कोपः १।१ ३८ सम्प्रदानम् १।१ ३२ कारके ७।१ २३

समासः॥

क्रुधश्च द्रुहश्च ईर्ष्यश्च असूयश्च, क्रुधद्रुहेर्ष्यासूयाः, तेषाम् अर्थाः क्रुध॰सूयार्थाः। क्रुध॰सूयार्थानाम् इव अर्थाः येषां ते क्रुध॰सूयार्थाः, तेषां ॰, द्वन्द्वगर्भः बहुव्रीहिः।

अर्थः॥

क्रुधार्थानां द्रुहार्थानां ईर्ष्यार्थानां असूयार्थानां च धातूनां प्रयोगे यं प्रति कोपः, तत् कारकं संप्रदानसंज्ञकं भवति।

उदाहरणम्॥

देवदत्ताय क्रुध्यति। देवदत्ताय द्रुह्यति। देवदत्ताय ईर्ष्यति। देवदत्ताय असूयति॥
काशिका-वृत्तिः
क्रुधद्रुहैइर्ष्यासूयार्थानां यं प्रति कोपः १।४।३७

अमर्षः क्रोधः। अपकारो द्रोहः। अक्षमा ईर्ष्या। गुणेषु दोषाविष्करनम् असूया। क्रुधाद्यर्थानाम् प्रयोगे यं प्रति कोपः, तत् कारकं सम्प्रदानसंज्ञम् भवति। क्रोधस्तावत् कोप एव। द्रोहादयो ऽपि कोपप्रभवा एव गृह्यन्ते। तस्मात् सामान्येन विशेसणम् यं प्रति कोपः इति। देवदत्ताय क्रुध्यति। देवदत्ताय द्रुह्यति। देवदत्ताय ईर्ष्यति। देवदत्ताय असूयति। यम् प्रति कोपः इति किम्? भार्याम् ईर्ष्यति, मा एनाम् अन्यो द्राक्षीतिति।
न्यासः
क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः। , १।४।३७

क्रुधद्रुहावकर्मकौ, तत्र षष्ठ()आं प्राप्तायामयमारम्भः, इतरौ सकर्मकौ। तत्र द्वितीयायां प्राप्तायाम्। कथं पुनरेषां भिन्नार्थत्वे सति "यं प्रति कोपः" इति सामान्येन तद्विशेषणमुपपद्यत इत्याह-- "क्रोधस्तावत्" इत्यादि। सुगमम्। "क्रुद्ध्यति, द्रुह्रति" इति। "क्रुध कोपे"(धा।पा।११८९), "द्रुह जिघांसायाम्" (धा।पा।११९७) दैवादकौ। "ईर्ष्र्यति" इति। "{ईक्ष्यं, सूक्ष्यं-धा।पा।}ईक्र्ष, सूक्र्ष, ईर्ष्य ईर्ष्यार्थाः" (धा।पा।५१०,५०९,५११)। "असूयति" इति। असूयशब्दः कण्()?डवादियगन्तः। "भार्यामीर्ष्यति"इति। अस्ति भार्यायामीर्ष्या, न तु तां प्रति कोपः। केवलं परैर्दृश्यमानां तां न क्षमते। अथास्मिन् द्वेष्टीत्यत्र कथं न भवति सम्प्रदानसंज्ञा? द्विषेरक्रोधाद्यर्थत्वात्। अप्रीतौ ह्रेनं स्मरन्ति; तथा चाचेतनेष्वपि प्रयुज्यते-- औषदं द्()वेष्टीति। नाभिनन्दतीति गम्यते॥
बाल-मनोरमा
क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः ५६७, १।४।३७

क्रुधद्रुह। क्रुधाद्यर्थानामिति। "क्रुध क्रोधे" "द्रुह द्रोहे" श्यन्विकरणौ। "ईर्ष्य ईर्ष्यायां" शब्विकरणः। "असूञ् उपतापे" कण्ड्वादिः। एषामर्था एवार्था येषामिति विग्रहः। हरये क्रुध्यतीति। "रावणादि"रिति शेषः। हरिविषयकं कोपं करोतीत्यर्थः। घातेच्चासमनियतश्चित्तवृत्तिविशेषः कोपः। अकर्मकत्वात्षष्ठी प्राप्ता। द्रुह्यतीति। कोपाद्धरिविषयकमपकारं करोतीत्यर्थः। अकर्मकत्वात्षष्ठी प्राप्ता। अपकारो दुःखजनिका क्रिया। धात्वर्थोपसङ्ग्रहादकर्मकः। ईर्ष्यतीति। ईर्ष्या असहनम्। हरिं

कोपान्न सहत इत्यर्थः। कर्मणि द्वितीया प्राप्ता। असूयति वेति। असूया गुणेषु दोषारोपः। यथाविहितकर्माचारे दम्भादिकृत्वारोपणम्। इहग कोपाद्धरिं दुर्गुणं मन्यत इत्यर्थः। मैनामिति। एनां भार्यामन्यो न पश्येदित्येतदर्थं भार्यागुणेषु दोषारोपणं करोतीत्यर्थः। नात्र भार्यां प्रति कोपः, किन्तु परेण दृश्यमानां तां न सहत इत्येव विवक्षितमिति बोध्यम्। एवंच क्रोधद्रोहेष्र्यासूयानां कोपमूलकत्वएवेदमिति भाष्ये स्थितम्। तथाच कुप्यति कस्मै चिदित्याद्यसाध्वेव, कोपमूलकत्वाऽभावात्क्रुधार्थकत्वाऽभावाच्च। प्ररूढकोप एव हि क्रोधः, "नह्रकुपतः क्रुध्यति" इति भाष्यात्।

तत्त्व-बोधिनी

क्रुधद्रुहेष्र्याऽसूयार्थानां यं प्रति कोपः ५११, १।४।३७

क्रुधद्रुह। "क्रुधे क्रोधे", द्रुह जिघांसायाम्", "ईष्र्य ईष्र्यायाम्", असूयतिः कण्ड्वादियगन्तः, एषामर्थ इवार्थे येषां धातूनामित्यर्थः। द्रोहोऽपकार इति। द्रुह द्रोहे"इति पाठाभिप्रायेणोक्तं, जिघांसाद्रोह एवेत्यर्थतोऽनुभाषणं वा। अक्षमेति। परसंपत्त्यसहनमित्यर्थः। क्रुधद्रुहोरकर्मकत्वात्तद्योगे षष्ठी प्राप्ता, अन्ययोस्तु सकर्मकत्वाद्द्वितीया प्राप्ता। ननु चित्तदोषार्थानामित्येवास्तु, किं क्रोधादीनां विशिष्योपादानेनेति चेत्(त्राहुः--द्विषादावतिप्रसङ्गवारणाय विशिष्योपादानम्। तेन "योऽस्मान्द्वेष्टि यं च वयं द्वि ष्मः" इत्यत्र चतुर्थी न भवति। तत्र ह्रनभनन्दनं द्विषेरर्थः। अत एवाऽचेतनेषु न प्रयुज्यते "--औषधं द्वेष्टि देवदत्त"मिति। कोपप्रभवा एवेति। कथं तर्हि "कुप्यसि कस्मैचित्िति। न हि कोपः कोपप्रभवः। अत्र व्याचख्युः--कुपिरत्र द्रोहार्थ इति। पत्ये शेते इतिवत् "क्रिययायम्---" इत्येव सिद्धे क्रुधद्रुहोग्र्रहणं चिन्त्यप्रयोजनमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कुर्ध-द्रुहोः ६।२ उपसृष्टयोः ६।२ कर्म १।१ यम् १।२ ३७ प्रति ० ३७ कोपः १।१ ३७ कारके ७।१ २३

समासः॥

क्रुध-द्रुहोः इत्यत्र इतरेतरद्वन्द्वः।

अर्थः॥

उपसृष्टयोः = उपसर्गपूर्वकयोः क्रुध-द्रुहोः प्रयोगे, यं प्रति कोपः तत्कारकं कर्मसंज्ञकं भवति। पूर्वेण सम्प्रदानसंज्ञा प्राप्ता कर्मसंज्ञा विधीयते॥

उदाहरणम्॥

देवदत्तम् अभिक्रुध्यति। देवदत्तम् अभिद्रुह्यति॥

काशिका-वृत्तिः

क्रुधद्रुहोरुपसृष्टयोः कर्म १।४।३८

पूर्वेण सम्प्रदानसञ्ज्ञायाम् प्राप्तायाम् कर्मसंज्ञा विधीयते। क्रुधद्रुहोरुपसृष्टयोरुपसर्गसम्बद्धयोः यं प्रति कोपः, तत् कारकं कर्मसंज्ञं भवति। देवदत्तम् अभिक्रुध्यति। देवदत्तम् अभिद्रुह्यति। उपसऋष्टयोः इति किम्? देवदत्ताय क्रुध्यति। यज्ञदत्ताय

द्रुह्यति।

न्यासः

क्रुधद्रुहोरुपसृष्टयोः कर्म। , १।४।३८

बाल-मनोरमा

क्रुधद्रुहोरुपसृष्टयोः कर्म ५६८, १।४।३८

क्रुधद्रुहोः। "उपसृष्टयो"रित्येतद्व्याचष्टे--सोपसर्गयोरिति। पूर्वसूत्रापवादोऽयम्। हरेः क्रोधद्रोहोद्देश्यत्वाऽभावात् "क्रियया यमभिप्रैती"ति संप्रदानत्वस्य न प्रसक्तिः। नापि तादथ्र्यचतुथ्र्याः। क्रुधद्रुहोरकर्मकत्वान्नहरेः कर्मत्वम्। अतः शेषषष्ठ()आं प्राप्ताया वाचनिकां कर्मत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ राधीक्ष्योः ६।२ यस्य ६।१ विप्रश्नः १।१ सम्प्रदानम् १।१ ३२ कारके ७।१ २३

समासः॥

रादिश्च, ईक्षिश्च, राधीक्षी, तयोः ॰, इतरेतरद्वन्द्वः।

अर्थः॥

राधीक्ष्योः धात्वोः प्रयोगे यस्य विप्रश्नः = विविधः प्रश्नः क्रियते, तत् कारकं सम्प्रदानसंज्ञकं भवति।

उदाहरणम्॥

देवदत्ताय राघ्नोति। देवदत्ताय ईक्षते॥

काशिका-वृत्तिः

राद्ीक्ष्योर् यस्य विप्रश्नः १।४।३९

राधेरीक्षेश्च कारकम् सम्प्रदानसंज्ञं भवति। कीदृशम्? यस्य विप्रशः। विविधः प्रश्नः विप्रश्नः। स कस्य भवति? यस्य शुभाशुभं पृच्छयते। देवदत्ताय राध्यति। देवदत्ताय ईक्षते। नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयति इत्यर्थः।

न्यासः

राधीक्ष्योर्यस्य विप्रश्नः। , १।४।३९

"राध्यति" इति। "राध साध संसिद्धौ" (धा।पा।१२६२,१२६३),दैवादिकः। "दैवम्" इति शुभाशुभं कर्म। यस्येति ग्रहणं विस्पष्टार्थम्। तथा हि-- "यं प्रति" इत्यनुवत्र्तते, तत्र यं विप्रश्न इत्येवमभिसम्बन्धे क्रियमाणे यस्येत्यस्यार्थोऽप्रयुज्यमानस्यापि गम्यत एव।

तत्त्व-बोधिनी

राधीक्ष्योर्यस्य विप्रश्नः ५१२, १।४।३९

राधीक्ष्योः। "राध संसिद्धौ", "ईक्ष दर्शने"। अनयोस्त्विह शुभाऽशुभपर्यालोचनमर्थस्तञ्च प्रश्नपूर्वकमित्याशयेन विवृणोति--पृष्टो गर्ग इति। शुभाऽशुभरूपयोः कर्मणोर्धात्वर्थेनोपसंग्रहादकर्मकावेतौ। अतएव राध्यतीति श्यन्, "राधोऽकर्मकाद्वृद्धावेव" इथि दिवादिषु वक्ष्यमाणेनि गणसूत्रेणाऽकर्मकादेव तद्विधानात्, कृष्णसम्बन्धि शुभाऽशुभमित्यर्थाभ्युपगमात् षष्ठ()आं प्राप्तायां वचनमिदम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रत्याङ्भ्याम् ५।२ श्रुवः ६।१ पूर्वस्य ६।१ ४१ कर्त्ता १।१ ४१ सम्प्रदानम् १।१ ३२ कारके ७।१ २३

समासः॥

प्रत्याङ्भ्याम् इत्यत्र इतरेतरद्वन्द्वः।

अर्थः॥

प्रति आङ् इत्येवं पूर्वात् शृणोतेः धातोः प्रयोगे, पूर्वस्य कर्त्ता यत् कारकं, तत् सम्प्रदानसंज्ञं भवति॥

उदाहरणम्॥

यज्ञदत्तः देवदत्ताय गां प्रतिशृणोति। देवदत्ताय गाम् आशृणोति॥
काशिका-वृत्तिः
प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता १।४।४०

प्रति आङित्येवं पूर्वस्य शृणोतेः कारकम् सम्प्रदानसंज्ञं भवति। कीदृशम्? पूर्वस्य कर्ता। प्रतिपूर्व आङ्पूर्वश्च शृणोति रभ्युपगमे प्रतिज्ञाने वर्तते। स च अभ्युपगमः परेन प्रयुक्तस्य सतो भवति। तत्र प्रयोक्ता पूर्वस्याः क्रियाया कर्ता सम्प्रदानसंज्ञो भवति। देवचत्ताय गाम् प्रतिशृणोति। देवदत्ताय गामाशृणोति। प्रतिजानीते इत्यर्थः।
न्यासः
प्रत्याङ्भ्यां श्रुवः पूर्वस्य कत्र्ता।, १।४।४०

"परेण" इत्यादि। अन्येन केनचिदिदं मे क्रियतामिति प्रयुक्तो व्यापारितः सन् प्रतिजानीते। अतः प्रतिज्ञातुरन्येन प्रयुक्त्सयाभ्युपगमो भवति। प्रयोक्तेति व्यापारयिता। सूत्रे पूर्वस्येत्यर्थापेक्षया पुंल्लिङ्गेन निर्देशः।स त्वर्थो विचार्यमाणः क्रियैव भवति। यस्मात् कत्र्तेति क्रियाया एव भवति नान्यस्यार्थस्येत्याह-- "पूर्वस्याः क्रियायाः" इति। यश्चासौ पूर्वस्याः क्रियायाः कत्र्ता भवति, स प्रतिज्ञातुः प्रयोजको भवतीति हेतुसंज्ञायां प्राप्तायामिदं वनचम्। "देवदत्ताय गां प्रतिशृणोति" इति। अत्र पूर्वस्या यानचक्रियाया देवदत्तः कत्र्ता। देवदत्तेन हि मह्यं गां देहीति याचित स यदा ददामीति प्रतिजानीते, तदैवं प्रयुज्यते-- देवदत्ताय गां प्रतिशृणोतीति। पूर्वस्य कत्र्तेति किम्? विना तेन गवादेरभ्युपयेमानस्य कर्मण एव स्यात्। ननु च परत्वात् कर्मसंज्ञा तस्य बाधिका भविष्यति, नैतदस्ति; नाप्राप्ते हि संज्ञान्तर इदमारभ्यत इति। इहापि च देवदत्ताय गामाशृणोतीति देवदत्तस्य हेतुसंज्ञा प्राप्नोति। तत्र पूर्वस्य कत्र्तेत्यस्मिन्नसति यथा देवदत्तस्य हेतुसंज्ञां बाधते, तदा कर्मसंज्ञामपि बाधेत। अथ वा-- "पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्" (व्या।प।९) इति कर्मसंज्ञामेव

बाधेत। पूर्वस्य कत्र्तेत्य()स्मस्तु सति हेतुसंज्ञामेव बाधते, न कर्मसंज्ञाम्॥

बाल-मनोरमा

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ५७०, १।४।४०

प्रत्याङ्भ्याम्। प्रत्याङ्भ्यामिति दिग्योगे पञ्चमी। परस्येत्यध्याहार्यं श्रुव इत्यस्य विशेषणम्। "श्रु श्रवणे"। इह तु प्रेरणापूर्वकाभ्युपगमे वर्तते। पूर्वशब्दः प्रेरणात्मकव्यापारं परामृशति। तदाह--आभ्यामित्यादिना। "पूर्वस्ये"त्यस्य व्याख्यानं-प्रवर्तनारूपस्येति। प्रेरणारूपस्येत्यर्थः। "प्रत्याङ्भ्या"मित्यनेन समुदिताभ्यां परस्येति नार्थो विवक्षितः, किन्तु प्रत्येकमेव तयोर्निमित्तत्वम्, अन्यथा "अभिनिविशश्चे"तिवत् "प्रत्याङ् श्रुवः" इत्येव ब्राऊयादित्यभिप्रेत्योदाहरति--विप्राय गां प्रतिश्रणोति आश्रणोति वेति। अत्र प्रतिपूर्वक आङ्पूर्वकश्च श्रुधातुः प्रेरणापूर्वकाभ्यपगमे वर्तते, ततश्च प्रवर्तितः प्रतिजानीते इति लभ्यते केन प्रवर्तित इत्याकाङ्क्षायां विप्रः कर्तृत्वेनान्वेति। तत्र विप्रस्य प्रेरणाकर्तृत्वात्संप्रदानत्वं कर्तृ तृतीयापवाद इत्यभिप्रेत्याह--विप्रेणेति। मग्यं गवादिद्रव्यं देहीति विप्रेण पृष्टः सन् देवदत्तस्तुभ्यं ददामीत्यभ्युपगच्छतीति योजना।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुप्रतिगृणः ६।१ च ० पूर्वस्य ६।१ ४० कर्त्ता १।१ ४० सम्प्रदानम् १।१ ३२ कारके ७।१ २३

समासः॥

अनु च प्रति च अनुप्रती, ताभ्यां घृणा, अनुप्रतिघृणा, तस्य अनुप्रतिगृणः, द्वन्द्वगर्भपञ्चमीतत्पुरुषः।

अर्थः॥

अनु पूर्वस्य प्रति पूर्वस्य च गृणातेः धातोः प्रयोगे पूर्वस्य कर्त्ता यत् कारकं, तत् सम्प्रदानसंज्ञकं भवति।

उदाहरणम्॥

होत्रे अनुगृणाति। होत्रे प्रतिगृणाति। (होतुः मन्त्रोच्चारकस्य प्रोत्साहणार्थं अपरः मन्त्रम् उच्चारयति इत्यर्थः)

काशिका-वृत्तिः

अनुप्रतिगृणश् च १।४।४१

पूर्वस्य कर्ता इति वर्तते। अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकम् पूर्वस्याः क्रियायः कर्तृभूतं संप्रदानसंज्ञं भवति। होत्रे ऽनुगृणाति। होता प्रथमं शंसति, तम् अन्यः प्रोत्साहयति। अनुगरः, प्रतिगरः इति हि संसितुः प्रोत्साहने वर्तते। होत्रे ऽनुगृणाति, होतारं शंसन्तम् प्रोत्साहयति इत्यर्थः।

न्यासः

अनुप्रतिगृणश्च। , १।४।४१

"अनुप्रतिगृणः" इति श्नाप्रत्ययेन निर्देशात् क्र्यादिपठितस्य "गृ? शब्दे" (धा।पा।१४९८) इत्यस्य, न "गृ? निगरणे" (धा।पा।१४१०) इत्यस्य तौदादिकस्य। "होता प्रथमं शंसति"इति। एतेन स्तुतिक्रियायाः पूर्वस्या होता कत्र्तेति दर्शयति।

प्रोत्साहयतीत्यनेनागृणातिप्रतिगृणातिशब्दयोरर्थमाचष्टे। कथं पुनज्ज्ञायते-- अनुपूर्वः प्रतिपूर्वश्च शंसितुर्गृणातिः प्रोत्साहने वत्र्तत इत्याह-- "अनुगरः प्रतिगरः" इति। अनुगीर्यते = होता प्रथमं प्रशस्यते येन शब्देन सोऽयमनुगरः। एवं प्रतिगीर्यते येन स प्रतिगरः। पूर्वसय् कत्र्तेत्येव, होत्रेऽनुगृणातिक सदसीत्यधिकरणस्य मा भूत्॥

बाल-मनोरमा

अनुप्रति गुणश्च ५७१, १।४।४१

अनुप्रतिगुणश्च। पूर्वस्य कर्तेत्यनुवर्तते। "गृ? शब्दे" इत्यस्य श्नान्तस्याऽनुकरणशब्दाद्गृण इति षष्ठी। अत्र गृ()धातुः शंसितृकर्मके शंसनविषयकप्रोत्साहने वर्तते। तत्र पूर्वव्यापारस्य शंसनस्य कर्ता संप्रदानमित्यर्थः। तदाह--आभ्यामिति। पूर्वसूत्रे प्रत्याङ्भ्यामिति द्विवचननिर्देशबलात्प्रत्येकमेव धातुसंबन्धावधारणात्तत्साहचर्यादिहापि प्रत्येकमेव धातुसंबन्ध इत्यबिप्रेत्यादाहरति--होत्रे अनुगृणाति प्रतिगृणाति वेति। होत प्रथममिति। शंसितारं होतारम् उत्तरोत्तरशंसनविषये प्रोत्साहयतीति यावत्। "ओऽथ मोदै वे"ति प्रतिगरमन्त्रः। "ओ" इति संबोधने, मोदै" इति लोडुत्तमपुरुषैकवचनम्। "व" इत्येवकारार्थे। हे होतः। अथ त्वदीयशंसनान्तरं तुष्याम्येवेति तदर्थः। प्रोत्साहने होतुः कर्मत्वं प्राप्तं, पूर्वव्यापारं शंसनं प्रति कर्तृत्वाद्धोतुः संप्रदानत्वम्।

तत्त्व-बोधिनी

अनुप्रति गृणश्च ५१३, १।४।४१

अनुप्रति। "गुण" इति श्नान्तस्यानुकरणशब्दात्षष्ठी। प्रत्याङ्भ्याम्---"इति पूर्वसूत्रे द्विवचननिर्देशात्प्रत्येकमेव धातुसम्बन्ध इथि निर्धारिते तत्साहचर्यादिहापि प्रत्येकमेव धातुसम्बन्ध इति सूचयन्नाह---आभ्यां गृणातेरिति। होत्रे इति। कर्मत्वे प्राप्ते वचनम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ साधकतमम् १।१ ४४ करणम् १।१ कारके ७।१ २३

अर्थः॥

क्रियायाः सिद्धौ, यत् साधकतमं, तत् कारकं करणसंज्ञकं भवति।

उदाहरणम्॥

दात्रेण लुनाति। परशुना छिनत्ति।

काशिका-वृत्तिः

साधकतमं करणम् १।४।४२

क्रियासिद्धौ यत् प्रकृष्टोपकारकं विवक्षितम् तत् साधकतमं कारकम् करणसंज्ञं भवति। दात्रेण लुनाति। परशुना छिनत्ति। तमब्ग्रहनम् किम्? गङ्गायां घोषः। कूपे गर्गकुलम्। करणप्रदेशाः कर्तृकरणयोस् तृतीया २।३।१८ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

साधकतमं करणम् ८९७, १।४।४२

क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्॥

न्यासः

साधकतमं करणम्। , १।४।४२

ननु च सामग्र्यधीना हि क्रियासिद्धरेकस्याप्यभावेन न भवति। तत् कस्यात्र प्रकर्षो यत्परिग्रहाय साधकतमशब्दस्य ग्रहममित यश्चोदयेत्, तं प्रत्याह-- "क्रियासिद्धौ" इत्यादि। प्रकृष्टम् = अत्यन्तमुपकारकम्। अथ वा -- प्रकर्षः प्रकृष्टम् "नुपंसके भावे क्तः" ३।३।११४। प्रकृष्टेन प्रकर्षेणोपकारकं प्रकृष्टोपकारकं यत् क्रियायसिद्धिविषये प्रकर्षेणोपकारकं विवक्षितं तत् साधकतमम्। विवक्षितग्रहणं यदा प्रकृष्टोपकारकत्वेन विवक्ष्यते, तदा साधकतमव्यवहारो विज्ञायते, नान्येदित ज्ञापनार्थम्। तथाहि-- विवक्षावशाद् यदेव कदाचित् करणम्भवति-- धनुषा विध्यतीति, तदेव कदाचित् स्वातन्त्र्यविवक्षायां कर्तृत्वमनुभवति-- टधनुर्विध्यतीति। "लुनाति" इति। "प्वादीनां ह्रस्वः" ७।३।८०। "तमब्ग्रहणं किम्? गङ्गायां घोषः" इति। यदि तमब्ग्रहणं न क्रियेत, ततोऽत्राधिकरणसंज्ञा न स्यात्। इह हि द्विवध आधारः- गौणः,मुख्यश्च। तत्र मुख्यो य आधेयेन व्याप्यते, यथा-- तिलेषु तैलमस्ति;अत्र तैलेनाधेयेनाधारभूतास्तिला व्याप्ताः। अव्याप्तो गौणो यथा-- गङ्गायां घोष इति। अत्र हि सामीप्याद् गङ्गायां आधारत्वमुपचरितम्, न मुख्यम्; व्याप्त्यभावात्। तत्रासति तमब्ग्रहणे "गौणमुख्ययोर्मुख्ये कार्यसंम्प्रत्ययः" (व्या।प।४) इति मुख्यस्यैवाधिकरणसंज्ञा स्यात्, नेतरस्य; तमब्ग्रहणात् तस्यापि भवति; तथपीह तमब्ग्रहणं न कत्र्तव्यम्,कथम्? विनापि तेन प्रकर्षावगतेः। यथैव ह्रनभिरूपाय कन्यादानस्य प्रवृत्तिर्नास्तीत्यभिरूपाय कन्या देयेत्युक्ते विनापि प्रकर्षप्रत्ययेनाभिरूपतमायेति गम्यते; तथेहापि कारकाधिकारादसाधके संज्ञायाः प्रवृत्तिर्नस्तीति "साधकं करणम्" इत्युक्तेऽन्तरेणापि तमब्ग्रहणं साधकतममिति गम्यते, त()त्क तमब्ग्रहणेन? तदेतत् तमब्ग्रहणं ज्ञापनार्थं कृतम्। एतदनेन ज्ञाप्यते-- "इह कारकाधिकारे इतः सूत्रादन्यत्र विना तमब्ग्रहणेन प्रकर्षो नाश्रीयते" इति। तेन "आधारोऽधिकरणम्" १।४।४५ इत्यनेन "गङ्गायां घोषः" इत्यादावमुख्यस्यापि गङ्गादेराधारस्याधिकरणसंज्ञा सिद्धा भवति॥

बाल-मनोरमा

साधकतमं करणम् ५५२, १।४।४२

साधकतमं करणं। क्रियासिद्धाविति। क्रियोत्पत्तावित्यर्थः। कारकाधिकारलभ्यमिदम्। प्रकृष्टोपकारकमिति। कत्र्रा क्रियायां जनयितव्यायां यत्सहायभूतं तदुपकारकमित्युच्यते। "साधकतम"मित्यस्य व्याख्यानमेतत्। साधकशब्दादतिशायने तमबिति तमप्। अतिशयितं साधकं साधकतममिति भावः। यद्व्यापारानन्तरं क्रियानिष्पत्तिस्तत् प्रकृष्टम्। कर्तृव्यापाराधीनयद्व्यापाराऽव्यवहिता क्रियानिष्पत्तिस्तत्तस्यां करणमिति यावत्। तमब्ग्रहणं किमिति। साधकमित्येवोच्यताम्, कारकाधिकारादेव सिद्धे पुनः साधकग्रहणादेव प्रकृष्टं साधकमिति विज्ञायत इति प्रश्नः। गङ्गायां घोष इति। अयमाशयः, --कारकप्रकरणे गौणमुख्यान्याय एतत्सूत्रादन्यत्र न प्रवर्तते इति ज्ञापनार्थं तमब्ग्रहणम्। अन्यथा "आधारोऽधिकरण"मित्यत्र अन्वर्थमहासंज्ञाबलादेवाधारलाभे पुनस्तद्ग्रहणसामथ्र्यात्रुआआववयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्यात्। एवं च "तिलेषु तैलं", "दध्नि सर्पि"रित्यादावेव स्यात्। "गङ्गायां घोषः", कूपे गर्गकुल"मित्यादौ न स्यात्। अतस्तमब्ग्रहणमिति भाष्ये स्पष्टम्। अत्र यद्वक्तव्यं तत् "आधारोऽधिकरणं" "सप्तम्यधिकरणे च" इत्यत्र वक्ष्यते।

तत्त्व-बोधिनी

साधकतमं करणम् ४९५, १।४।४२

साधकतमं करणम्। प्रकृष्टेति। यद्व्यापारानन्तरं फलनिष्पत्तिस्तत्परकृष्टम्। उक्तञ्च----"क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्िति। "विवक्ष्यते"इत्यनेन स्थाल्यादीनामपि करणत्वमस्तीति सूचितम्। आह च--"वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्। स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः"इति। अयं भावः--कारकत्वं तद्व्यप्यकर्तृत्वादिषट्कं च वस्तुविशेषे विशेषणविशेष्यभाववन्न नियतं, किन्तु वैवक्षिकम्। न हि "गौः सर्वं प्रति गौरवे, न तु कञ्चित्प्रत्यगौः" इति वद्विशेषणं सर्वं प्रति विशेषणमेवेति वक्तुं शक्यम्। तथाच कया धातुव्यक्त्या उपस्थापितेऽर्थे किं कत्र्रादिकमिति प्रश्ने "प्रकृतधातुव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्ता, व्यापारव्यधिकरणफलाश्रयः कर्म, कर्तृकर्मद्वारकसम्बन्धेन व्यापारस्य फलस्य वा आश्रयोऽधिकरण"मिति स्थितम्। पच्यर्थो व्यापार श्चाऽनेकधा। एवञ्च पचेरधिश्रयणतण्डुलावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता, ज्वलनातात्पर्यकत्वे एधाः कत्त्तारः, तण्डुलधारणादिपरत्वे स्थाली कत्र्री, अवयवविभागादिपरत्वे तण्डुलाः कर्तारः। "स्थाल्या पचती"त्यत्र तृतीयोपात्तव्यापाराश्रयाऽपि स्थाली करणमेव, नतु कत्र्री, देवदत्तादिव्यापारास्यैव तद्धातीपात्तत्वात्, तथा आदिखादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्ता, तस्मिन्नेवार्थे भक्षयतिनोपात्ते प्रयोज्यः कर्म। अधिपूर्वैः शीहादिभिरुपात्तेऽर्थे आधारः कर्म, केवलैरुपात्ते अधिकरणामित्यादि ज्ञेयम्। एतेन ज्ञानस्य स्वप्रकाशत्वे कर्तृकर्मविरोध इति केषाञ्चिदुक्तिः परास्ता। यद्धातूपात्तक्रियायां यदा यस्त स्वातन्त्र्यं विवक्ष्यते तदा तत्क्रियायां स कर्ता, यदुपात्तया कर्तुॠ क्रियाया यदा आप्तुमिष्टतमत्वेन यद्विवक्ष्यते तदा तत्कारकं तत्क्रियायां कर्मेत्येव शब्दविशेषपाधिकस्य कर्तृत्वादेः प्रत्यक्षे उक्तिसम्भवाऽभावात्। यत्तुत केचित्परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वं चेत् "वृक्षात्पर्णं पतती"त्यादौ स्वसमवेतक्रियाजन्यविभागादिफलशालिनि कर्तर्यतिव्याप्त्यभावेऽप्यापादानेऽतिव्याप्तिः स्यादेव। अतश्च धात्वर्थताव्च्छेदकफलशालित्वं कर्मत्वमित्येवाभ्युपगन्तव्यम्। एवञ्च सति "ग्रामं गच्छती"त्यादिसकर्मकेषु गमनजन्यसंयोगादाविष्टाऽनुरोधेने धात्वर्थतावच्छद्दकत्वेऽभ्युपगतेऽपि, "वृक्षात्पतती"त्याद्यकर्मकेषु पतनाद#इजन्यविभागादौ तदवच्छेदकत्वाऽकल्पनान्नापादानेऽतिव्याप्तिः, नवा" ग्रामं गच्छती"त्यादौ कर्तर्यतिव्याप्तिः,संयोगादिफलजनकीभूतधात्वर्थस्य परसमवेतत्वविशेषणात्कर्मत्वेनाभिमतं यत्तद्भिन्नस्य परशब्देनाऽत्र विवक्षितत्वादित्याहुः। तदप्येतेन प्रत्युक्तम्। "ग्रामं गमयति देवदत्त"मित्यादौ गन्तर्यव्याप्तेः। णिजर्थप्रेरणाजन्यप्रयोज्यव्यापारे गमनादौ धात्वर्थतावच्छेदकत्वाऽभावात्। तत्त्वाभ्युपगमे तु "देवदत्तेन पाचयती"त्यादौ प्रयोज्यकर्तर्यतिव्याप्तेः। "गतिबुद्धी"त्यादिशास्त्राभ्युपगमं विना क्वचित्प्रयोज्यकर्तरि क्रमत्वं, क्वचित्तु कर्तृत्वमिति निर्धारयितुमशक्यत्वात्। "ह्मक्रोरन्यतरस्या"मिति शास्त्रमन्तरेण "हारयति कारयति वा कटं भृत्येन भृत्य"मित्यत्र वैकल्पिककर्मत्वस्य दुरुपपादत्वाच्च। एतादृशेषि वैयाकरणोक्त्यैव निर्वाह इति चेत्, तर्हि "आकडारादेका सञ्ज्ञा, या पराऽनवकाशा चे"त्यक्त्वान्निरवकाशया अपादानसंज्ञया सावकाशायाः कर्मसञ्ज्ञाया बाधान्नोक्तातिव्याप्तिरिति किमनेन "धात्वर्थतावच्छेदके"त्यादि परिश्रमेण()। स्यादेतत्--"आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मने"त्यादिप्रयोगः कथं सङ्गच्छते, एकस्यैव वस्तुनो युगपदेकक्रियानिरूपितकर्तृत्वकर्मत्वादेरसम्भवात्, परया कर्तृसञ्ज्ञया कर्मकरणादिसञ्ज्ञाया बाधात्। नैष दोषः। अहङ्काराद्युपधिभेदेनात्मनोऽपि बेदमाश्रित्य "आत्मानमात्मना हन्ति"इत्यादिप्रयोगस्याकरे समर्थितत्वात्। ननु "साधकं करण"मित्येवास्तु, कारकाधिकारादिह कारकमिति वर्तते, साधकं कारकं हि पर्यायः, तथा चोभयोपादानेन प्रकर्षो लभ्यत इत्याशयेन पृच्छति---तमब्ग्रहणं किमिति। इतरस्तु कारकप्रकरणे गौणमुक्यन्याय एतत्सूत्रादन्यत्र न प्रवर्तत इति ज्ञापनाय तमब्ग्रहणमित्याशयेन ज्ञापनफलमुदाहरति---गङ्गायां घोष इति। उक्तज्ञापनाऽनङ्गीकारे त्विहाधिकरणसञ्ज्ञा न स्यात्। तिलेषु तैलं, दधनि सर्पिरित्यादौ मुख्याधारे तस्याश्चरितार्थत्वादिति भावः। अत्र व्याचख्युः--यदा च तीरधर्म आधारत्वं सामीप्यात्प्रवाहे उपचर्यते तदेदं प्रयोजनम्, यदा तु गङ्गाशब्द एव तीरे वर्तते तदा तु न प्रयोजनम्, तीरस्य मुख्याधारत्वात्। तत्रा द्यपक्षे विभक्तिर्लाक्षणिकी,द्वितीये तु प्रकृतिर्लाक्षणिकीत्यादि।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दिवः ६।१ कर्म १।१ च ० साधकतमम् १।१ ४२ कारके ७।१ २३

अर्थः॥

दिव्धातोः साधकतमं यत् कारकं, तत् कर्मसंज्ञं भवति, चकारात् करणसंज्ञं च।

उदाहरणम्॥

अक्षान् दीव्यति। अक्षैर्दीव्यति।

काशिका-वृत्तिः

दिवः कर्म च १।४।४३

पूर्वेण करणसंज्ञायां करनसंज्ञायां प्राप्तायाम् कर्मसंज्ञा विधीयते। दिवः साधकतमं यत् कारकम् तत् कर्मसंज्ञम् भवति, चकारात् करणसंज्ञम् च। अक्षान् दीव्यति, अक्षैर् दीव्यति।

न्यासः

दिव कर्म च। , १।४।४३

"दीव्यति" इति। "हलि च" ८।२।७७ इति दीर्घः॥

बाल-मनोरमा

दिवः कर्म च। ५५४, १।४।४३

दिवः कर्म च। साधकतममित्यनुवर्तते। तदाह--दिवः साधकतममिति। दिवुधात्वर्थं प्रति साधकतममित्यर्थः। चादिति। चकारात्करणसंज्ञकमित्यपि लभ्यत इत्यर्थः।

तत्त्व-बोधिनी

दिवः कर्म च ४९७, १।४।४३

द्विद्रोणेनेति। द्वयोद्र्रोणयोः समाहारो द्विद्रेणम्। पात्रादित्वात्स्त्रित्वाऽभावः। द्रोणद्वयसम्बन्धि धान्यमित्यर्थः। इह षष्ठी प्राप्ता। द्विद्रोणपरिमितधान्यार्थे मूल्ये द्विद्रोणशब्दः, तस्य च क्रयं प्रति करणत्वमितीहापि तृतीया सिद्धेति दिक्। चादिति। करणशब्दानुवृत्त्या, "परिक्रयणे संप्रदानमन्यतरस्या"मित्युत्तरसूत्रस्थाऽन्यतरस्याङ्ग्रहणापकर्षणेन वा संज्ञयोः पर्यायत्वे लब्धे चग्रहणं समुच्चयार्थम्। तेन "मनसा दीव्यती"ति "मनसदिव"इत्यत्र कर्मण्यण्, करणे तृतीया चोभयं युगपत्सिध्यति। "मनसः संज्ञायाम्िित्यलुक्। किञ्च "अक्षैर्देवयते देवदत्तो यज्ञदत्तेने"त्यत्र सकर्मकत्वादणि कर्तुर्णौ "गतिबुद्धी"त्यनेन कर्मत्वं न, "अणावकर्मका"दिति परस्मैपदमपि न भवति। ननु कर्मकरणसंज्ञासमावेशस्य "मानसादेव"इत्यत्र क-तार्थत्वादक्षान्दीव्यतीत्यत्र परत्वातृतीयैव स्यान्न तु द्वितीयेति चेत्(), अत्राहुः--कार्यकालपक्षे "कर्मणि द्वितीये"त्यत्र यदस्योपस्थानं तस्यानवकाशत्वाद्द्वितीयेति। स्यादेतत्--"दीव्यन्तेऽक्षा"इत्यत्राभिहितेऽपि कर्मणि करणत्वस्याऽनभिधानातृतीयं स्यात्। तथा "देवना अक्षा"इत्यत्र ल्युटा करणत्वस्याभिधानेऽप#इ

कर्मणोऽनभिधानद्द्वितीया स्यात्। मैवम्। एकाव ह्यत्र शक्तिः संज्ञाद्वययोगिनी, तथा चैकस्यां शक्तावभिहितायामन्यस्या अप्यभिधानादुभयत्राप्यभिधानमेव, न त्वन भिहितत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ परिक्रयणे ७।१ सम्प्रदानम् १।१ अन्यतरस्याम् ७।१ साधकतमम् १।१ ४२ कारके ७।१ २३

अर्थः॥

परिक्रयणे = नियतकाले वेतनादिना स्वीकरणे अर्थे साधकतमं यत् कारकं, तत् सम्प्रदानसंज्ञकं भवति विकल्पेन। पक्षे यथाप्राप्ताकरणसंज्ञा भवति।

उदाहरणम्॥

शताय परिक्रीतोऽनुब्रूहि। शतेन परिक्रीतोऽनुब्रूहि। (त्वं शत-रूप्यकैः वेतनैः क्रीतः, इदानीं वद इत्यर्थः)
काशिका-वृत्तिः
परिक्रयणे सम्प्रदानम् अन्यतरस्याम् १।४।४४

साधकतमम् इति वर्तते। पूर्वेन करणसंज्ञायां प्राप्ताया सम्प्रदानसज्ञा पक्षे विधीयते। परिक्रयणे साधकतमं कारकम् अन्यतरस्यां सम्प्रदानसंज्ञं भवति। परिक्रयणम् नियतकालं वेतनादिना स्वीकरणम्, नत्यन्तिकः क्रय एव। शतेन परिक्रीतो ऽनुब्रूहि, शताय परिक्रीतो ऽनुब्रूहि। सहस्रेण परिक्रीतो ऽनुब्रूहि, सहस्राय परिक्रीतो ऽनुब्रूहि।
न्यासः
परिक्रयणे कसंप्रदानमन्यतरस्याम्।, १।४।४४

परिक्रीतिः = परिक्रयणम्। "नियतकालम्" इति। नात्यन्तिकम्। "वेतनादिना" इति। आदिशब्देन बन्धकादीनां ग्रहणम्। "नात्यन्तिकः क्रय एव" इति नियतकालत्वं स्पष्टीकरोति। परिशब्दोऽत्र प्रत्यासतिं द्योतयति। क्रयो हि नामात्यन्तिकः। वेतनादिना केवलं यत्तु नियतकालं तदात्यन्तिकस्य क्रयस्य समीपमिति परिशब्देनाख्यायते॥
बाल-मनोरमा
परिक्रयणे संप्रदानमन्यतरस्याम् ५७२, १।४।४४

परिक्रयणे। नियतकालमिति। "तुभ्यमेतावद्वेतनं दीयते, तद्गृहाणेतावन्तं कालं त्वं मम कर्मकरो भवे"त्येवं परिमितकालं भृत्या स्वीकरणं परिक्रयणमित्यर्थः। साधकतममित्यनुवर्तते। तदाह--तस्मिन्साधकतममिति। संप्रदानत्वाऽभावे करणसंज्ञा। शतेनेति। सुवर्णादियत्किञ्चिदद्रव्यशतेनेत्यर्थः।

तादर्थ्ये चतुर्थीति। "चतुर्थी संप्रदाने" इति सूत्रभाष्ये पठितमेतत्। तस्मै इदं तदर्थम्। अर्थेन नित्यसमासः। तदर्थस्य भावस्तादर्थ्यम्। ब्राआह्मणादित्वात् ष्यञ्। तेन च उपकार्योपकारकभावसंबन्धो विवक्षितः। तत्र उपकार्यादेव चतुर्थी, भाष्ये यूपाय दारु, कुण्डलाय हिरण्यमित्युदाह्रतत्वादित्यभिप्रेत्योदाहरति-मुक्तये इति। मुक्त्यर्थमित्यर्थः। उपकार्यत्वं च बहुविधं जन्यत्वादि। यथा मुक्तये हरिं भजतीति। मुक्तिर्जन्येति गम्यते। प्राप्यत्वं वा, ब्राआह्मणाय दधीति।

ब्राआह्नणस्योपकार्यत्वं गम्यते इत्यादि। नचैवमपि अनेनैव सिद्धे "चतुर्थी सम्प्रदाने" इति सूत्रं संप्रदानसंज्ञाविधानं च व्यर्थमिति वाच्यं, "हरये रोचते भक्तिः" इत्यादौ "रुच्यर्थानां प्रीयमाणः" इत्याद्यर्थ तदावश्यकत्वादिति भाष्ये स्पष्टम्।

क्लृपि संपद्यमाने चेति। क्लृपीति सप्तमी। सम्पत्तिः=विकारात्मना उत्पत्तिः। परिणाम इति यावत्। क्लृपिधातौ प्रयुज्यमाने सति संपद्यमानेऽर्थे वर्तमानाच्चतुर्थी वाच्येत्यर्थः। भक्तिरिति। ज्ञानात्मना परिणमते इत्यर्थः। "क्लृपीत्यर्थग्रहण"मित्यभिप्रेत्यादाहरति--संपद्यते जायते इत्यादीति। आदिना "परिणमते" इत्यादिसङ्ग्रहः। परिणामत्वप्रकारकबोधार्थमिदं वचनम्। अन्यथा तादर्थ्यचतुर्थ्यैव सिद्धमित्याहुः।

उत्पातेन ज्ञापिते चेति। अशुभसूचक आकस्मिको भूतविकार उत्पातः, तेन सूचितेऽर्थे विद्यमानाच्चतुर्थी वाच्येत्यर्थः। वातायेति। महाबातस्य सूचिकेत्यर्थः।

हितयोगे चेति। "चतुर्थी वाच्ये"ति शेषः। ब्राआह्नणाय हितमिति। ब्राआह्नणस्य सुखकृदित्यर्थः। "याजनादी"ति शेषः।

तत्त्व-बोधिनी
पस्क्रियणे संप्रदानमन्यतस्याम् ५१४, १।४।४४

तादर्थ्ये चतुर्थी वाच्या॥ तादर्थ्य इथि तस्मै कार्यायेदं तदर्थं=कारणं, तस्य भावस्तादर्थ्यम्। ब्राआह्नणादित्वात्ष्यञ्। "कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन" इति सिद्धान्तात्ष्यञा संबन्धोऽभिधीयते। स च संबन्धोऽनेकविधो, न तु कार्यकारणभाव एव; तेन "ब्राआह्नणाय दधी" त्याद्यपि सिद्धम्। ब्राआह्नणस्य दध्यजन्यत्वेऽपि तत्संस्कार्यत्वात्। न चैवं दधिशब्दादपि चतुर्थी स्यादिति शङ्क्यं, संबन्धस्य द्विष्ठत्वेऽपि षष्ठीवद्विसेषणादेव भवतीत्याकरेऽभ्युपगमात्। एवं "यूपाय दारु" इत्यत्र दारुशब्दादपि न भवति। "हेतौ" इति तृतीयापि षष्ठीविषय एव भवतीति सापीह न भवति, किंतु प्रातिपदिकार्थे प्रथमैव। न चैवद्वार्तिकस्यावश्यकत्वे "चतुर्थी संप्रदाने" इति सूत्रे व्यर्थमिति भ्रमितव्यम्, "हरये रोचते" इत्याद्यर्थ तस्याप्यावश्यकत्वात्। "विप्राय गा" मित्यत्रापि तादर्थ्य चतुर्थ्याः प्राप्तिर्नास्तीति प्रागेवोक्तत्वाच्चेति दिक्।

क्लृपि संपद्यमाने च॥ क्लृपीति। संपदादित्वाद्भावे क्विपि तदन्तात्सप्तमी। संपत्तिरिहाऽभूतप्रादुर्भावः, क्लृप्कत्यर्थकधातुप्रयोगे यः संपद्यते तत्र चतुर्थी, विकारवाचकाच्चतुर्थीत्यर्थः। स हि संपद्यते=प्रादुर्भवति। तदुदाहरति---भक्तिर्ज्ञानायेति। ज्ञानात्मना परिणमत इत्यर्थः। प्रकृतिविकृत्योर्भेदबिवक्षायां विकृतिवाचकाच्चतुर्थी। अभेदविवक्षायां तु परत्वात्प्रथमैव, "भक्तिर्ज्ञानं कल्पते"। यदा तु "जनिकर्तुः---" इति भक्तेरपादनत्वं विवक्ष्यते, तदापि ज्ञानस्याभिहितकर्तृक्वनात्प्रथमैव, "भक्तर्ज्ञानं कल्पते"। क्लृपीत्यर्थग्रहणमित्याशयेनाह---संपद्यते इत्यादि। यद्यपि तादर्थ्ये चतुर्थ्यैव भक्तिर्ज्ञानायेत्यादिप्रयोगाः सिध्यन्ति, तथापि परिणमात्वप्रकारकबोधार्थमिदं वचनमित्याहुः।

उत्पातेन ज्ञापिते च। उत्पातेनेति। प्राणिनां शुभाऽशुभसूचको भूतविकार उत्पातः, तेन ज्ञापितेऽथे वर्तमानच्चतुर्थी वाच्येत्यर्थः। वातायेति। वातस्य ज्ञापिकेत्यर्थः।

हितेयोगे च। हितेति। चतुर्थीसमासविधानाज्ज्ञापकादेतल्लब्धमिति भावः। एवं सुखयोगेऽपिल चतुर्थी बोध्या। क्रियार्थोपपद। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था, सा क्रियार्था क्रिया उपपदं यस्य। यद्यपि क्रियाया उपपदत्वं न संभवति, तथापीह स्ववाचकशब्दद्वारा तद्बोध्यम्। क्रियाफलकक्रियावाचकमित्यर्थः। क्रियावाचकस्यापि धातोरुपोच्चारितपदरूपोपपदत्वं यद्यपि न संभवति, सुप्तिङन्तस्यैव पदत्वात्, तथापीह क्रियावाचकप्रकृतिकमित्यर्थो विवक्षितः, तादृशमुपपदं यस्य तुमुन्नन्तस्य तस्य कर्मणि चतुर्थी भवतीति निष्कृष्टोऽर्थः। "तुमुन्ण्वुलौ क्रियायाम्---"

इति सूत्रमहिन्मा क्रियार्थकमुपपदं क्रियावाच्येव फलतीत्याशयेनाह--।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आधारः १।१ ४८ अधिकरणम् १।१ कारके ७।१ २३

अर्थः॥

क्रियायाः सिद्धौ यः आधारः, तत् कारकम् अधिकारणसंज्ञकं भवति।

उदाहरणम्॥

कटे आस्ते। कटे शेते। स्थाल्यां पचति॥

काशिका-वृत्तिः

आधारो ऽधिकरणम् १।४।४५

आध्रियन्ते ऽस्मिन् क्रियाः इत्याधारः। कर्तृकर्मणोः क्रियाश्रयभूतयोः धारणक्रियां प्रति य आधारह्, तत् कारकम् अधिकरणसंज्ञं भवति। कटे आस्ते। कटे शेते। स्थाल्यां पचति। अधिकरनप्रदेशाः सप्तम्यधिकरणे च २।३।३६ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

आधारोऽधिकरणम् ९०५, १।४।४५

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात्॥

न्यासः

आधारोऽधिकरणम्। , १।४।४५

"आध्रियन्ते क्रियागुणा अस्मिन्नित्याधारः" इति। "अध्यायन्यायोद्यावट ३।३।१२२ इत्यादिनाऽऽधारशब्दोऽधिकरणे घञन्तो व्यत्पादित-। क्रियापेक्षत्वत् कारकस्येति क्रियाग्रहणम्। यद्याध्रियन्ति क्रिया यस्मिन् स आधारः इति, एवं हि सति कर्तृकर्मणोरेवाधिकरणसंज्ञा प्रसज्येत, तयोरेव हि क्रिया आध्रियन्ते। तथा हि- कत्र्तस्था व #आ क्रिया भवति, कर्मस्था वा, अनवकाशत्वात् कर्त्तृकर्मणोः संज्ञा न भविष्यत्येष दोष प्रसङग् इति, एतच्चानुत्तरम्; सत्यपि ह्नवकाशत्वे तयोः पर्यायः स्यात्। एकदाधिकरणसंज्ञा भवितव्यं तं दर्शयति। प्रतिराभिमुख्ये। "क्रियां प्रति य आधारः" इति॥ क्रियाया अभिमुखो य आधार इत्यर्थः। यश्च क्रियां धारयति स क्रियाया अभिमुखो भवति। क्रियायास्तु धारणं साक्षात्, व्यवधानेन वा; कर्त्तृकर्मणोः क्रियाश्रययोर्धारणात्। अत्र पूर्वस्य व्यवच्छेदार्थं "कर्तृर्मणोः" इत्युक्तम्। तदेतदुक्तं भवति-- कर्तृकर्मणोः क्रियाधारभूतयोर्धारणात् क्रियाया अभिमुखो य आधारस्तस्याधिकरणसंज्ञा भवतीति। तदेवं क्रियाधारभूतकर्त्तृकर्मधारणद्वारेण क्रियाया अभिमुखो य आधारस्तस्याधिकरणसंज्ञा; यतोऽनेन विधीयते ततो न भवति पूर्वस्य दोषप्रसङ्गः। न हि कर्त्तृकर्मणोरनेन प्रकारेण क्रियां प्रत्याधारत्वम्; अपि तु साक्षादेव क्रियाधारणात्। नन्वेवमपि कर्त्तृकर्मणोर्मुख्यं क्रियाधारत्वम्, साक्षादेव क्रियाधारणात्, कर्तृकर्माधारस्य तु कटादेर्गौणत्वं क्रियाश्रयभूतकर्त्तृकर्मधारणद्वारेण क्रियाधारणात्। तत्र मुख्य आधारे सति गौणस्याधिकरणसंज्ञा न प्राप्नोतीति स

दोषसत्दवस्थ एव? नैतदस्ति; तमब्ग्रहणेन ज्ञापितमेतत्-- गौणस्याप्याधारस्याधिकरणसंज्ञा भवतीति। भवतु गौणस्याधिकरणसंज्ञा, मुख्यस्यापि कर्त्तृ कर्मणश्च कस्मान्न भवतीति चेत्, न; परत्वादनवकाशत्वाच्च कर्तृकर्मसंज्ञाभ्यां बाध्यमानत्वात्। अधिकरणसंज्ञा हि पूर्वो गौण आधारे सावकाशा, तद्विपरीते तु कर्तृकर्मसंज्ञे इति ताभ्यां बाध्यमाना नोत्सहते तयोर्विषयमवगाहितुम्। "कटे आस्ते" इति। कर्तृस्था क्रिया यत्र पूर्वेण प्रकारेणाध्रियते तस्योदाहरणम्;; विक्लेदनक्रियायाः कर्मस्थत्वात्। "स्थाल्यां पचति" इति। कर्मस्था क्रिया यत्राध्रियते तस्योदाहरणम्; विक्लेदनक्रियाया कर्मस्थत्वात्। तत्पुनरधिकरणं त्रिप्रकारम्-- औपश्लेषिकम्,वैषयिकम्, अभिव्यापकञ्च। तत्राद्ये -- कटे आस्ते,स्थाल्यां पचतीति कटादेर्पयाधारस्य ह्याधेयेन सहोपश्लेषः संयोगलक्षणोऽस्तीत्यौपश्लेषिकं तद्भवति। वैषयिकम्-- गुरौ वसति, गङ्गायां घोष इति। प्रतिवसतीति विषयो ह्यनन्यत्रभावः, यथा-- चक्षुष्वप्रभृतीनां रूपादिभ्योऽनन्यत्रभावाच्चक्षुरादीनां रूपादयो विषया इत्युच्यन्ते, एवं शिष्यादीनां गुर्वादिभ्योऽनन्यत्रभावादेषां ते विषया इति। ननु च "आधारोऽधिकरणम्" १।४।४५ इत्युक्तम्, आधारश्च को भवति? य आश्रयः; संयोगतः समवायो वा भवति, न च शिष्यादीनां गुरुप्रभृतिभिः सह संयोगः समवायो वाऽस्ति, तदयुक्तं तेषामधिकरणत्वम्? नैतदस्ति; यदायत्ता हि यस्य स्थितिः स विनापि संयोगसमवायाभ्यां तस्याश्रयो भवति, यथा-- राजायत्तस्थितित्वात् पुरुषस्य राजेति; न च राज्ञा सह पुरुषस्य संयोगसमवायौ स्त-। तथा हि-- तदधीनस्थितित्वात् राजाश्रयः पुरुष इति लोके व्यपदिश्यते, तथा शिष्यादीनां गुर्वाद्यायत्ता स्थितिरिरिति युक्तस्तान् प्रति गुरुप्रभृतीनामाश्रयभावः। अभिव्यापकं यथा-- तिलेषु तैलम्, दध्नि सर्पिरिति। तिलादिकं तैलदिकमाधेयं व्याप्यावतिष्ठत इति तिलादिकमभिव्यापकमधिकरणम्। यद्यप्यत्र तिलादीनां तैलादिभिः सह संयोगोऽस्ति, तथापि देशविभागाभावादत्र संश्लेषव्यवहारो नास्तीत्यौपश्लेषिकात् तत्पृथगेवोपस्थाप्यते॥

बाल-मनोरमा

आधारोऽधिकरणम् ६२४, १।४।४५

आधारोऽधिकरणं। "कारके" इत्यधिकृतं प्रथमान्ततया विपरिणम्यते, तच्च आधारस्य विशेषणम्, आधारः कारकमधिकरणमिति लभ्यते। क्रियान्वयि कारकम्। एवञ्च कस्याधार इत्याकाङ्क्षायाम् उपस्थितत्वात्क्रियाया इति लभ्यते। क्रिया च कर्तृकर्मगता विवक्षिता। तदाधारत्वं च न साक्षात्, किंतु कर्तृकर्मद्वारैव, व्याख्यानात्। तदाह-- कर्तृकर्मद्वारेति। तन्निष्ठेति। कर्तृकर्मनिष्ठेत्यर्थः।

तत्त्व-बोधिनी

आधारोऽधिकरणम् ५५६, १।४।४५

आधारः। आध्रियतेऽस्मिन्नित्याधारः। "अध्यायन्याय---"इति सूत्रे "अवहाराधारे" त्युपसङ्ख्यानादधिकरणे घञ्। स चाधारः कस्येत्याकङ्क्षायां कारकाधिकारात्क्रियाया इति लभ्यते। इयं च संज्ञा साक्षात्क्रियाधारयोर्न सम्भवति, पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वात्। अतो व्याचष्टे--कतृकमद्वारेति। एवं च "भूतले घट"इत्यादौ अस्तीति क्रियाध्याहारो बोध्यः। त्रिधेति। एतच्च "संहितायाम्" इति सूत्रे भाष्ये स्पष्टम्। नद्यमास्त इत्याद्यर्थं सामीपिकमधिकरणं चतुर्थमपि केचिदिच्छन्ति। कटे आस्ते इति। कर्तृद्वारा क्रियाधारस्योदाहरणमिदम्। कर्मद्वारा क्रियाधारस्य तु---स्थाल्यां पचतीति। वैषयिकाधारमुदाहरति---मोक्षे इच्छाऽस्तीति। अभिव्यापकस्य तु---सर्वस्मिन्निति। तिलेषु तैलमित्याद्यप्यभिव्यापकस्योदाहरणमाहुः। चतरुआ इति। प्रातिपदिकार्थमात्र इत्यर्थः। दूरान्तिकार्थेभ्य इत्यस्येहाऽनुवर्तनादधिकरणेऽप्येते बोध्याः। क्तस्येन्विषस्य कर्मण्युपसङ्ख्यानम्। क्तस्येन्विषयस्येति। इन्िन्नन्तः शब्दो, विषयो=वर्तभूतमिर्यस्य क्तान्तस्य तस्येत्यर्थः। अन्ये त्वाहुः--इनो विषय इति षष्ठीसमासः। विषयशब्देनेह प्रकृतिरुच्यते। क्तान्तस्येनः प्रकृतित्वादिति। अधीति व्याकरणे इति। भावे क्तप्रतक्यये तत "इष्टादिभ्यश्च" इति कर्तरीनौ

कृते पश्चाद्गुणभूतक्रियया सम्बध्यमानं व्याकरणमनभिहितं कर्मेति कृतपूर्वी कटमितिवद्द्वितीयाऽत्र प्राप्ता। "मासमधीति व्याकरणे" इत्यादौ त्वकर्मकैर्धातुभिरियोगनिमित्तस्य कालकर्मणो बहिरङ्गत्वादिहाऽग्रहणमिति सप्यम्यभावः। न चैवं तत्र द्वितीयापि न स्यादिति वाच्यम्। लक्ष्यानुरोधेन द्वितीयाविधाने व्यक्तिपक्षाश्रयणात्। एतच्च कोस्तुभे स्थितम्।

साध्वसाधुप्रयोगे च। साध्वसाधुप्रयोगे च। यत्राऽर्चा न विवक्षिता, किं तु तत्त्वकथनमात्रं, तत्रापि सप्तम्यर्तं वार्तिकेऽस्मिन् साधुग्रहणं, साधुर्भृत्यो राज्ञीत्यादि यथा। "साधुनिपुणाभ्याम्िति सूत्रे साधुग्रहणं त्वर्चायां ववक्षितायां प्रतियोगे सप्तमीनिवृत्त्यर्थमिति विवेकः।

निमित्तात्कर्मयोगे। निमित्तमिह फलमिति। यदि तुकारणमित्युच्येत तर्हि "जाङ्येन बद्ध" इत्यादावतिप्रसङ्गः स्यादिति भावः। चर्मणीति। चर्मणीति। चर्मद्वीप्यादीनां समवायः सम्बन्धः। हेतुतृतीयेति। तादर्भ्ये चतुर्थीत्यपि बोध्यम्। सीमाऽन्ण्डकोश इति। तथा च मेदिनीकारः--"सीमा घाटस्थितिक्षेत्रेष्वण्डकोशु च स्त्रियाम्" इति। "अथ पुष्कलको गन्धमृगे क्षपणकीलयोः" इति च। हरदत्तस्तु---"पुष्कलकः शङ्कुः, सीम्नि=सीमज्ञानार्थं हतो=निहतः निखात" इत्याह। अ()स्मस्तु पक्षे सीमपुष्कलयोः संयोगसम्बन्धः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अधिशीङ्स्थऽसाम् ६।३ कर्म १।१ ४८ आधारः १।१ ४५ कारके ७।१ २३

समासः॥

शीङ् च स्थाश्च आश्च शीङ्स्थासः, अधेः शीङ्स्थासः अधिशीङ्स्थासः, तेषां ॰ द्वन्द्वगर्भपञ्चमीतत्पुरुषः।

अर्थः॥

अधिपूर्वात् शीङ्, स्था, आस् इत्येतेषां धातूनां प्रयोगे आधारः यत् कारकं, तत् कर्मसंज्ञकं भवति।

उदाहरणम्॥

ग्रामम् अधिशेते (ग्रामे स्वपिति)। ग्रामम् अधितिष्ठति (ग्रामे अधिकारः सन् तिष्ठति)। पर्वतम् अध्यास्ते (पर्वतस्य उपरि वसति)॥

काशिका-वृत्तिः

अधिशीङ्स्थाऽअसां कर्म १।४।४६

पूर्वेण अधिकरणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते। अधिपूर्वाणां शीङ् स्था आसित्येतेषाम् आधारो यः, तत् कारकं कर्मसंज्ञं भवति। ग्रामम् अधिशेते। ग्रामम् अधितिष्ठति। पर्वतम् अध्यास्ते।

न्यासः

अधिशीङ्स्थासां कर्म।, १।४।४६

"अध्यास्ते" इति। "आस उपवेशने" (धा।पा।१०२१) अदादिः अनुदात्तेत्॥

बाल-मनोरमा
अधिशीङ्स्थासां कर्म ५३४, १।४।४६

अधिशीङ्। शीङ्, स्था, आस् एषां द्वन्द्वः। अधिपूर्वा शीङ्स्थाऽऽस इति विग्रहे शाकपार्थिवात्वादुत्तरपदलोपः। तदाह--अधिपूर्वाणामिति। अधिकरणसंज्ञापवादोऽयम्। अधिशेति इति। अधिशेते वैकुण्ठं हरिः, अधितिष्ठति वैकुण्ठं हरिः, अध्यास्ते वैकुण्ठं हरिरित्यन्वयः। अधिस्तु सप्तम्यर्थस्याधारस्य द्योतकः। वैकुण्ठे शेते तिष्ठत्यास्ते वेत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अभिनिविशः ६।१ च ० कर्म १।१ ४६ आधारः १।१ ४५ कारके ७।१ २३

समासः॥

अभिश्च निश्च अभिनी, ताभ्यां विश् अभिनिविश्, तस्य ॰ द्वन्द्वगर्भपञ्चमीतत्पुरुषः।

अर्थः॥

अभिनिपूर्वात् विशधातोः प्रयोगे आधारः यत्कारकं, तत्कर्मसंज्ञं भवति॥

उदाहरणम्॥

ग्रामं अभिनिविशते (ग्रामे प्रविशति इत्यर्थः)।
काशिका-वृत्तिः
अभिनिविशश् च १।४।४७

अभिनिपूर्वस्य विशतेराधारो यः, तत् कारकम् कर्मसंज्ञं भवति। ग्रामम् अभिनिविशते। कथं कल्याणे ऽभिनिवेशः, पापे ऽभिनिवेशः, या या संज्ञा यस्मिन् यस्मिन् संज्ञिन्यभिनिविशते इति? अन्यतरस्याम् इति वर्तते, परिक्रयणे सम्प्रदानम् अन्यतरस्याम् १।४।४४ इत्यतः। सा च व्यवस्थितविभाषा विज्ञायते।
न्यासः
अभिनिवशश्च , १।४।४७

बाल-मनोरमा
अभिनिविशश्च ५३५, १।४।४७

अभिनिविशश्च। आधार इति कर्मेति चानुवर्तते। अभिनीति सङ्घातग्रहणम्। तदाह--अभिनीत्येतदिति। अभिनिविशते सन्मार्गमिति। आग्रहवानित्यर्थः। अप्रतिहतप्रवृत्तिमानिति यावत्। नन्वेवं सति "पापेऽभिनिवेश" इत्यत्रापि कर्मत्वाद्द्वितीया स्यादित्यत आह--परिक्रयणे इति। "परिक्रयणे" इति सूत्रादन्यतरस्याङ्ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्नेत्यन्वयः। तर्हि "अभिनिविशते सन्मार्ग"मित्यत्रापि विकल्पः स्यादित्यत आह--व्यवस्थितेति।

ननु "परिक्रयणे संप्रदानमन्यतरस्याम्", "आधारोऽधिकरणम्",धिशीङ्स्थासां कर्म", "अभिनिविशश्च" इति सूत्रक्रमः। तत्र "अभिनिविशश्चे"त्यत्र कथमन्यतरस्याङ्ग्रहणानुवृत्तिः, "आधारोऽधिकरणम्" "अधिशीङ्स्थासां कर्म" इत्यत्र च तदनुवृत्तेरभावादित्यत आह--मण्डूकप्लुत्येति। "तुल्य"मिति शेषः। मण्डूका यतामध्ये पदानि सन्ततमप्रक्षिपन्त एव उत्प्लुत्य गच्छन्ति तद्वदनुवत्र्येत्यर्थः। "एष्वर्थेष्वभिनिविष्टाना"मिति समर्थसूत्रे भाष्यप्रयोगोऽत्र मानम्।

तत्त्व-बोधिनी

अभिनिविशश्च ४८१, १।४।४७

अभिनिवि। नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशशसङ्घातविवक्षार्थमित्याह--सङ्घातपूर्वस्येति। तेनेह--"निविशते यदि शूकशिखा पदे"इति। क्वचिन्नेति। "एष्वर्थेष्वभिनिविष्टाना"मिति समर्थसूत्रस्थभाष्यप्रयोगोऽत्र मानमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपान्वध्याङ्वसः ६।१ कर्म १।१ ४६ आधारः १।१ ४५ कारके ७।१ २३

समासः॥

अप च अनु च अधि च आङ् च उपान्यध्याङः, तेभ्यः वस् उपान्वध्याङ्वस्, तस्य ॰ द्वन्द्वगर्भपञ्चमीतत्पुरुषः।

अर्थः॥

अप, अनु, अधि, आङ्, इत्येवंपूर्वात् वसधातोः प्रयोगे आधारः यत्कारकं, तत् कर्मसंज्ञं भवति॥

उदाहरणम्॥

ग्रामम् उपवसति सेना (ग्रामस्य समीपे सेना तिष्ठति)। पर्वतम् उपवसति। ग्रामम् अनुवसति (ग्रामेण सह सेना तिष्ठति)। ग्रामम् अधिवसति (ग्रामस्य सेना तिष्ठति)। ग्रामम् आवसति (ग्रामे वसति)॥

काशिका-वृत्तिः

उपान्वध्याङ्वसः १।४।४८

उप अनु अधि आ इत्येवं पूर्वस्य वसतेराधारो यः, तत् कारकं कर्मसंज्ञं भवति। ग्रामम् उपवसति सेना। पर्वतम् उपवसति। ग्रामम् अनुवसति। ग्रामम् अधिवसति। ग्रामम् आवसति। वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः। ग्रामे उपवसति। भोजननिवृत्तिं करोति इत्यर्थः।

बाल-मनोरमा

उपान्वध्याङ्वसः ५३६, १।४।४८

उपान्वध्याङ्वसः। उप अनु अधि अङ् इत्येतेषां द्वन्द्वः। उपान्वध्याङ्पूर्वो वसिति विग्रहे शाकपार्थिवादित्वात्समासः। तदाह--उपादिपूर्वस्येति। उपवसतीत्यादि। वैकुण्ठे वसतीत्यर्थः। उपसर्गा आधारत्वद्योतकाः। अत्र "वसेरश्यर्थस्य

प्रतिषेधः" इति वार्तिकम्। तत्राऽर्थशब्दो निवृत्तिवचनः। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। भोजनस्याऽर्थो निवृत्तियस्मात्प्रतीयते सोऽश्यर्थः। भोजननिवृत्तिवाचकस्य अशेराधारस्य कर्मत्वप्रतिषेध इति यावत्।

तदेतदर्थतः। सङ्गृह्णाति--अभुक्त्यर्थस्य नेति। उभसर्वतसोरिति। वार्तिकम्। उभशब्दसर्वशब्दप्रकृतिकतसन्तयोः प्रयोगे सति द्वितीया कार्येत्यर्थः। धिगिति। धिक्शब्दस्य प्रयोगे सति द्वितीया कार्या। "प्रकृतिवदनुकरणमि"त्यव्ययत्वात्सुपो लुक्। उपर्यादिष्वित्यनेन "उपर्यध्यधसः सामीप्ये" इति सूत्रोपात्तान्यव्ययानि गृह्न्ते। द्विरुक्तस्य परमाम्रेडितम्। तदन्तेषु। कृतद्विर्वचनेष्विति यावत्। तथाच कृत्तद्विर्वचनेषु उपर्यादिषु त्रिषु प्रयुज्यमानेषु द्वितीयेत्यर्थः। तत इति। उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यत इत्यर्थः। उभयतः कृष्णं गोपा इति। कृष्णस्य पार्(ाद्वयेऽपीत्यर्थः। आद्यादित्वात्तसिः। "उभयोऽन्यत्रे"त्ययच्। षष्ठ()र्थे द्वितीया। सर्वतः कृष्णमिति। कृष्णस्य सर्वेषु पार्(ोषु गोपा इत्यर्थः। धिक्कृष्णाभक्तमिति। धिक्-निन्दायाम्। कृष्णाभक्तस्य निन्देत्यर्थः। केचित्तु कृष्णाभक्तो निन्ध इत्यर्थः, प्रथमार्थे द्वितीयेत्याहुः। "धिङ्मूर्खे"त्यत्र तु "नषिद्धाचरण"मित्यध्याहार्यम्। उपर्युपरीति। "उपर्यध्यधसः सामीप्ये" इति द्विर्वचनम्। लोकस्य समीपे उपरि हरिरस्तीत्यर्थः। अध्यधीति। लोकस्य समीपदेसे हरिरस्तीत्यर्थः। अधोऽध इति। लोकस्य समीपे अधो हरिरस्तीत्यर्थः।

अबितः परित इति। "ततोऽन्यत्रापि दृश्यते" इत्यस्य प्रपञ्चोऽयम्। "योगेऽपी"त्यनन्तरं "द्वितीये"ति शेषः। अभितः कृष्णमिति। "गोपा" इति शेषः। कृष्णस्य पार्(ाद्वयेऽपीत्यर्थः। परितः कृष्णमिति। कृष्णस्य सर्वेषु पार्(ोषु गोपा इत्यर्थः। "पर्यभिभ्यां चे"ति तसिल्। ग्रां समया निकषेति। "समया" "निकषा" इति च आकारान्ते अव्यये। "ग्राम"मित्यस्य प्रत्येकमन्वयः। ग्रामस्य समीपे इत्यर्थः। "निकषाऽन्तिके" "समयाऽन्तिकमध्ययोः" इति चामरः। विलङ्घ्य लङ्कां निकषा हनिष्यती"ति माघः। हा कृष्णाभक्तमिति। "हा" इत्याकारान्तमव्ययं खेदे। "हा विषादशुगार्तिषु" इत्यमरः। तदाह-तस्य शोच्यतेत्यर्थ इति। कृष्णाभक्तः शोच्य इत्यर्थ इत्यन्ये। प्रतियोगमुदाहरति--बुभुक्षितमिति। क्षुधार्तस्य किंचिदपि न स्फुरतीत्यर्थः। "भा दी#उ()तौ"। इह तु उपसर्दबलात्स्फुरणे वर्तते। ततो लक्षणादाववृत्तेः प्रतेर्न कर्मप्रवचनीयत्वम्। एवंच "कर्मप्रवचनीययुक्ते द्वितीया" इत्यनेन गतार्थत्वं न भवति।

तत्त्व-बोधिनी
उपान्वध्याङ्वसः ४८२, १।४।४८

उपान्व। "लुग्विकरणादलुग्विकरणं बलीय"इति "वस निवासे"इति भौवादिक एव गृह्यते, न तु "वस आच्छादने"इत्यादादिक इत्यभिप्रेत्य शपा निर्देशमाह---उपादिपूर्वस्य वसतेरिति। "वसेरशश्यर्थस्य प्रतिषेधः"इति वार्तिकमर्थतो व्याचष्टे---

अभुक्त्यर्थस्य न। अभुक्त्यर्थस्य नेति। वार्तिके अर्थशब्दो निवृत्तिवचनः। भोजननिवृत्तिवाचकस्य वसेराधारः कर्म नेत्यर्थः। वने उपवसतीति। कथं तर्हि "गत्र्थाऽकर्मके"ति सूत्रे "हरिदिनमुपोषितः"इत्युदाहरणं सङ्गच्छत इति चेत्। अत्राहुः--वसेरत्र स्थितिरर्थः, भोजननिवृत्तिस्त्वार्थिकीति न दोष इति। उपपदविभक्तिमाह--उभसर्वतसोरित्यादिना। उभसर्वयोस्तसौ उभसर्वतसो, तदन्तयोर्योगे द्वितीय कार्येत्यर्थः। प्रकृतिद्वित्वेन तसोरिति द्वित्वनिर्देशः। अत्र उभशब्दादयत् न कृतः, अनुकरणशब्दत्वेनाऽसङ्ख्यावाचित्वात्। तथाच उभशब्देन उभयशब्दो लक्ष्यते, केवलात्परत्र तसिलोऽसम्भवादित्येके। वस्तुतस्तु वृत्तिविषये अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तमस्त्येवेति यथाश्रुतं साधु इति तु मनोरमायां स्थितम्। धिगिति। धिक्()शब्दयोगेऽपि द्वितीया कार्येत्यर्थः। अत्र प्राञ्चः--"धि"गित्यविभक्तिको निर्देशो गवित्ययमाहेतिवदित्याहुः। तन्न। तथा सत्यपदान्ततया दृष्टन्ते "लोपः

शाकल्यस्य"इत्यस्येव दार्ष्टान्तिके जश्त्वस्याप्यप्रवृत्तिसङ्गात्। न चायं गकारान्त एवास्त्विति शङ्क्यम्। "कस्य च दः"इति सूत्रे "धकि"दित्युदाहरणस्याऽसङ्गतिप्रसङ्ग#आत्। "कस्य च दः"इत्यनेन हि कान्ताव्ययस्याऽकच्सन्नियोगेन दत्वं विधीयते, तस्माद्धिगिति विभक्त्यन्तमेव। परन्तु "प्रकृतिवदनुकरण"मित्यतिदेशेनाऽव्ययत्वात्सुपो लुक्। यदि तु धिगित्यविभक्तितो निर्देश इत्येतावानेव प्राचां ग्रन्थस्तदा सम्यगेव। अव्ययत्वात्सुपो लुक्यविभक्तिको निर्देश इति वक्तुं शक्यत्वात्। उभयतः कृष्णमिति। कृष्णस्य पार्(ाद्वयेऽपूत्यर्थः। आद्यादित्वात्तसिः। षष्ठ()र्थे द्वितीया। एवमुपपदविभक्तौ सर्वत्र बोध्यम्। अत्र--व्याचक्षते--"उभसर्वतसो"रित्यत्र उभसर्वयोर्गणे परस्परसाहचर्यात्तसिलेव गृह्यते, न त्वाद्यादिभ्य इति तसिः। तथा चोभयत इत्यादौ "तसेश्चे"त्यनेन तसिलादेशोऽवगन्तव्यस्तेन यत्र सञ्ज्ञायां तसेस्त सिलादेशाऽभावस्तत्र न द्वितीया, किन्तु षष्ठ()एव। तसिलभावस्तु "तसेश्चे"त्यत्र "किंसर्वनामबहुभ्यः"इत्यनुवर्तनादिति। धिक् कृष्णाभक्तमिति। तस्य निन्द्यतेत्यर्थः। षष्ठ()र्थे द्वितीया। स निन्द्य इत्यर्थः। प्रथमार्थे द्वितीयेत्येके। कथं धिह् सूर्खेति()। सम्बोधनपदस्य क्रियमन्वय इति प्रागेवोक्ततया धिक्शब्दयोगाऽभावाद्द्वितीया न प्रवर्तत इति "सम्बोधने चे"ति प्रथमैव भव[ती]ति। क्रियापदं च क्वचिच्छ्रुतं क्वचिदाक्षिप्तम्। तथा च धिङ् मूर्क निषिद्धाचरणमिदमित्येतदिह कल्प्यम्। मूर्खसम्बोध्यकनिषिद्धाचरणस्य निन्द्यतेति तु वाक्यार्थः। "प्रथमार्थे धिग्योदे द्वितीये"ति वादिनां तु मूर्खसम्बोध्यकं निषिद्धाचरमं निन्द्यमिति वाक्यार्थः। यत्तु "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"ति सम्बोधने प्रथमैव भवति, सम्बोधनपदस्य कर्तृकारकवाचित्वादित्याहुः। तच्चिन्त्यम्। सम्बोधनस्य कर्तृकारकत्वे उक्तिसम्भवाऽभावात्। न च "देव प्रसीदे"त्यादौ वस्तुगत्या देव एव कर्तेत्यस्त्येवोक्तिसम्भव इति वाच्यम्, वास्तवकर्तृत्वेऽपि कारकविभक्तित्वस्याऽलाभात्। किञ्च "देव त्वां भजे, त्वां भजन्ति भक्ता"इत्यादौ सम्बोध्यदेवस्य वास्तवमपि कर्तृत्वं नास्तीति आस्तां तावत्। उपर्युपरीति। कथं तर्हि "उपर्युपरिबुद्धीनां चरन्तीस्वरबुद्ध्यः"इति()। अत्राहुः--उपरिबुद्धीनाम्ुतानबुद्धीनामुपरि चरन्तीत्यर्थः। तेनाऽऽत्राम्रेडितत्वाऽभावान्न द्वितीया। यद्वा--प्रतिपदोक्तस्य "उपर्यध्यधसः सामीप्ये"इति कृतद्वित्वस्य वार्तिके ग्रहणादिह च वीप्साद्विर्वचनत्वान्नास्ति द्वितीयाप्रसक्तिरिति।

अभितः परितः समयानिकषाहाप्रतियोगेऽपि। अभितः परितैति। एतच्च "अन्यत्रापि दृश्यत" इति पूर्वोक्तस्यैव प्रपञ्चभूतमिति व्याचख्युः। लङ्कां निकषा हनिष्यती"ति माघः। "ह"ति खेदे, तदेतदाह--तस्य शोच्यतेति। बुभुक्षितमिति। बुभुक्षितस्येत्यर्थः। एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गः, न तु कर्मप्रवचनीयः। तेनाऽत्र "कर्मप्रवचनीययुक्ते---" इत्यनेन गतार्थता न शङ्क्या।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तुः ६।१ ईप्सिततमम् १।१ कर्म १।१ ५३ कारके ७।१ २३

अर्थः॥

क्रियायां सत्यां यत् कर्तुः ईप्सिततमं = इष्टतमं कारकं तत् कर्मसंज्ञं भवति।

उदाहरणम्॥

देवदत्तः कटं करोति। ग्रामं गच्छति देवदत्तः।

काशिका-वृत्तिः

कर्त्रुरीप्सिततमं कर्म १।४।४९

कर्तुः क्रियया यदाप्तुम् इष्टतमं तत् कारकं कर्मसंज्ञं भवति। कटं करोति। ग्रामं गच्छति। कर्तुः इति किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषाः, न कर्तुः। तम् अब्ग्रहणं किम्? पयसा ओदनं भुङ्क्ते। कर्म इत्यनुवर्तमाने पुनः कर्मग्रहणम् आधारनिवृत्त्यर्थम्। इतरथा आधारस्य एव हि स्यात् गेहं प्रविशति इति। ओदनं पचति, सक्तून् पिबति इत्यादिषु न स्यात्। पुनः कर्मग्रहणात् सर्वत्र सिद्ध भवति। कर्मप्रदेशाः कर्मणि द्वितीया २।३।२ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

कर्तुरीप्सिततमं कर्म ८९३, १।४।४९

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्॥

न्यासः

कर्तुरीप्सिततमं कर्म। , १।४।४९

"कर्तुः क्रियया" इति। एतेन कर्त्तुरिति नेप्सिततमापेक्षया "क्तस्य च वर्तमाने" २।३।६७ इत्यनेनेयं षष्ठी, अपि तु क्रियापेक्षया शेषलक्षणैवेति दर्शयति। ननु च नेह क्रियोपात्ता, तत्कथं तदपेक्षया षष्ठी प्रयुज्यते? यद्यपि नोपात्ता, तथापि कर्त्तुः क्रियापेक्षत्वात् कर्त्तृशब्दोऽयं सम्बन्धिशब्द इति कर्त्तृसम्बन्धिनीं क्रियामुपस्थापयतीत्यदोषः। ईप्सितशब्दो ह्रस्ति रूढिशब्दः-- ईप्सितोऽभिप्रेत इति, अस्ति च क्रियाशब्दः-आप्तमिष्ट ईप्सित इति ; तत्रह क्रियाशब्दो गृह्रते, नेतरः; न हि रूढिशब्दस्य क्रियया कर्त्तृसाध्यया सम्बन्ध उपपद्यते। "ईप्सित" इति। "आप्लृ व्याप्तौ" (धा।पा।१२६०) सन्, द्विर्वनचम्, "आप्ज्ञप्यृधामीत्" ७।४।५५ इतीत्त्वम्। "अत्र लोपोऽभ्यासस्य" ७।४।५८ इत्यभ्यासलोपः। ईप्स इति स्थिते, क्तप्रत्यये कृते, इटि च "अतो लोपः" ६।४।४८ इत्यकारलोपे चेप्सितशब्दः सम्पद्यते। तेनार्थद्वयमिहोपात्तम्-- प्रकृत्यर्थः, प्रत्ययार्थश्च। तत्राप्तुमित्यनेन प्रकृत्यर्थं दर्शयति,इष्टतममित्यनेन प्रत्ययार्थम्। "कर्मणः" इत। अ()आस्य। अत्र बन्धक्रियया आप्तमिष्टतमत्वात् कर्मत्वम्। स हि भक्षणक्रियया माषानाप्तुमिच्छति। "पयसौदनं भङ्क्ते" इति। असति हि तमब्ग्रहणे पयसोऽपि स्यात्। तदपि कर्त्तृर्भुजिक्रियया व्याप्तुमिष्टं भवति। तमब्ग्रहणे तु सति न भवत्यतिप्रसङ्गः; प्राधान्यादौदनस्यैवेप्सिततमत्वात्। प्राधान्यं त्वोदनस्य संस्कार्यत्वात्, पयसस्त्वप्राधान्यं संस्कारकत्वात्। "कर्मेत्यनुवत्र्तमाने" इति। "अधिशीङस्थासां कर्म" १।४।४६ इत्यतः। "पुनः"इत्यादि। पूर्व कर्मग्रहणमाधारेण सम्बद्धम्; अतस्तदनुवृत्तौ तस्यानुवृत्तिः स्यादत आधारनिवृत्त्यर्थं पुनः कर्मग्रहणं क्रियते। यदि पुनराधारोऽनुवत्र्तते, ततः किं स्यादित्यत्राह-- "आधारस्यैव हि स्यात्" इति। "हि" शब्दो यस्मादर्थे। यस्मास्यादित्याह-- "गेहम्" इत्यादि। आधारानुवृत्तौ तु यत्र न भवति तद्दर्शनयितुमाह-- "ओदनं पचति" इत्यादि। आदिशब्देनौदनं भङ्क्तं इत्येवमादेग्र्रहणम्। अथ नदी कूलं कर्षतीत्यादौ कथं कर्मसंज्ञा? कथञ्च न स्यात्? नद्यादेरचेतनत्वात्, अचेतनानामीप्साया असम्भवात्, नैतदस्ति; अत्र नदीति पदान्तरसम्बन्दादीप्साया अभावोऽचेतनस्यापि भावः प्रतीयते। न च पदसंस्कारे पदानतरसम्बन्धगम्योऽर्थ उपयुज्यते, तेन कूलं कर्षतीत्यादाविच्छामात्रमाश्रिता व्याप्तिः, कर्म च संस्क्रियते। यद्यपि पश्चान्नद्या सह सम्बन्धादचेतनत्वमिच्छाया अभावश्च प्रतीयते, तथापि च तद्बहिरङ्गत्वादन्तरङ्गसंज्ञाकार्य न शक्नोति निवर्तयितुम्। अनेनैव न्यायेन यत्र व्याप्तिर्नास्ति,इच्छामात्रं च केवलम्, तत्रापि कर्मसंज्ञा भवति, यथा- ग्रामं गनतुमिच्छामि न च मे गमनशक्तिरस्तीति। तच्च कर्म त्रिविधम्-- निर्वत्र्यम्, विकार्यम्, प्राप्यञ्च। तत्र निर्वर्त्यं यदसकदेवोत्पाद्यते, यस्य जन्म क्रियते, तन्निर्वर्त्त्यम् , यथा-- कटं करोति, कटो ह्रसन्नेव क्रियते। विकार्यं यल्लब्धसत्ताकमवस्थान्तरमापाद्यते केवलं भस्माख्यामवस्थामापाद्यन्ते। प्राप्यं यत्र व्याप्तिव्यितरेकेण क्रियाकृता विशेषा

न विभाव्यन्ते, यथा-- आदित्यं पश्यतीति। न हि दृशिक्रियया व्याप्यमानस्य सवितुः क्रियाकृतविशेष उपलभ्यत इति प्राप्यमेतत् कर्म॥

बाल-मनोरमा

कर्तुरीप्सिततमं कर्म ५२७, १।४।४९

कारके इत्यधिकृत्येति। "संज्ञा वक्ष्यन्ते" इति शेषः। "क्रियाजनकं कारकं, करोति क्रियां निर्वर्तयती"ति भाष्ये व्युत्पत्तिदर्शनात्। "ब्राआह्मणस्य पुत्रं पश्यती"त्यत्र ब्राआह्मणस्याऽन्यथासिद्धत्वान्न कारकत्वम्। कर्तुरीप्सित। "कारके" इत्यनुवृत्तं प्रथमया विपरिणम्यते। आप्तुमिष्यमाणम्-ईप्सितम्। "आप्लृ व्याप्तौ", अस्मात्सन्नन्ता"न्मतिबुद्धिपूजार्थेभ्यश्चे"ति वर्तमाने क्तः। मतिरिच्छा, बुद्धेः पृथग्ग्रहणात्। "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। अतिशयेनेप्सितमीप्सिततमम्। धातूपात्तव्याव्यापाराश्रयः कर्ता। केनाऽऽप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते। तत्फलितमाह--कर्तुः क्रिययेत्यादिना। क्तप्रत्ययोपात्तं वर्तमानत्वं तु न विवक्षितम्। तेन कटं करोति कृतवान् इत्यादौ नाव्याप्तिः। आप्तिः=संबन्धः। एवं च कत्र्रा स्वनिष्ठव्यापारप्योज्यफलेन संबन्द्धुमिष्यमाणमित्यर्थः। यता "तण्डुलान्पचती"त्यत्र विक्लित्त्यनुकूलव्यापारः पचेरर्थः। तप्तोदकप्रस्वेदनकृतप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः, तदनुकूलव्यापारोऽधिश्रयणोदकासेचनैधोऽपकर्षणप्रज्वलनादिरूप इति "कारके" इत्यादिसूत्रभाष्ये स्पष्टम्। अत एव "फलव्यापारयोर्धातु"रिति सिद्धान्तः। तथाच तण्डुलानधिश्रयणादिव्यापारेण विक्लेदयतीत्यर्थः। अधिश्रयणादिरूपकर्तृव्यापारप्रयोज्य विक्लित्तिरूपफलाश्रयत्वात्तण्डुलानां कर्मत्वम्। ननु कर्तृग्रहणं व्यर्थम्। नच व्यापारलाभाय तदिति वाच्यं, केना प्तुमित्याकाङ्क्षायां कारकाधिकारादेव तल्लाभादिति पृच्छति--कर्तुः किमिति। माषेष्व()आं वध्नातीति। माषेषु भक्षणाय प्रवृत्त्युन्मुखमुदरव्यथाभयात्तद्भक्षणान्निवर्तयितुमन्यत्र बध्नातीत्यर्थः। अत्र माषाणां कर्मत्वनिवृत्त्यर्थं कर्तृग्रहणमिति भावः। कर्तृ ग्रहणे कृते तुनोक्तदोष इत्याह--कर्मण #इति। बन्धनकर्मीभूतस्या()आस्यैवात्र माषा ईप्सिता नतु बन्धनकर्तुः, अ()आरक्षणस्यैव तदपेक्षि तत्वादित्यर्थः। तमब्ग्रहणं किमिति। तमबन्धमीप्सिततममित्येतत्किमर्थं कर्तृरिद्देश्यं कर्मे"त्येवास्त्विति प्रश्नः। पयसा ओदनं भुङ्क्ते इति। पयसा मिश्रमित्यर्थः। यद्यप्यत्र भोक्तुरोदन एव पयसा मिश्र उद्देश्यो, नतु केवलं पयो, नापि केवल ओदनः, नह्यसौ केवलपयःपानेन तुष्यति, नापि केवलौदनेन। तथापि यदा भुक्तवानेन पयोलिप्सया पुनरोदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणम्। तत्र यद्यपि पय एव उद्देश्यं भुजिक्रियां प्रति, तथापि भुजिक्रियाकर्मीभूतमोदनं प्रति मिश्रमसाधनतया गुमत्वेनैव तदुद्देश्यं, नतु भोज्यत्वेन। अतस्तत्र पयसो गुणत्वेन ओदनस्य तत्संस्कार्यतया उद्देश्यत्वादोदनस्यैव ईप्सिततमत्वम्, नतु पयसोऽपि। तस्याप्योदन एव ईप्सिततमः, गुणेष्वस्य नानुरोध इति भावः। नच तमब्ग्रहणं किमर्थम्, "कर्तुरीप्सितं कर्म" इत्येबास्त्विति वाच्यम्, "अग्नेर्माणवकं वारयती"त्यत्र मामवकस्य "वारणार्थानामीप्सितः" इत्यपादानत्वनिवृत्त्यर्थत्वादिति प्रकृतसूत्रभाष्ये स्थितम्। तदेतद्वारणार्थानामिति सूत्रव्याख्यावसरे स्फुटीभविष्यति। प्रचीनैस्तु कैश्चित्,--"तमब्ग्रहणं किम्, पयसा ओदनं भुङ्क्ते" इति ग्रन्थः केवलतमब्ग्रहणप्रयोजनपरतया व्याख्यातः। ते भाष्यविरुद्धत्वादुपेक्ष्याः। ननु "अधिशीङ्()स्थासां कर्मे"त्यतोऽनुवृत्तेरिह कर्मग्रहणं व्यर्थमित्यत आह--कर्मग्रहणमाधारेति। अधिशीङित्यत्र हि आधार इत्यनुवर्तते। इहापि तदनुवृत्तिर्माभूदिति कर्मग्रहणमित्यर्थः। ननु "हरिं भजती"त्यादावसंभवादेव तदनुवृत्तिर्न भविष्यतीत्यत आह--अन्यथेत्यादि। हरिं भजतीत्यादौ न स्यादित्येवकारार्थः।

तत्त्व-बोधिनी

कर्तुरीप्सिततमं कर्म ४७४, १।४।४९

कर्तुरीप्सिततं कर्म। कर्तुरिति "क्तस्य च वर्तमाने"इति कर्तरि षष्ठी। आप्नोतेः सन्। द्वित्वम्। आप्()ज्ञप्यृधामीत्", "अत्र लोपोऽभ्यासस्ये"त्यभ्यासलोपः। "मतिबुद्धिपूजार्थेभ्यश्च"इति वर्तमाने क्तः। मतिरिहेच्छा, नतु बुद्धिः, पुनर्बुद्धिग्रहणात्। ततः "अतिशायने""तमबिष्ठनौ"इत्यतिशये तमप्। एवं च कत्र्रा आप्तुमिष्यमाणतमं कर्मेत्यर्थः। कर्ता च धातीपात्तव्यापाराश्रयः। स च केनाऽऽप्तुमिच्छतीति विशेषणीभूतेन व्यापारेणेत्येर्थाल्लभ्यते, तदाह---क्रिययेति। क्तप्रत्ययेनोपस्थितं वर्तमानत्वं चेह न विवक्षितम्। तेन कटं कृतवान्करिष्यतीत्यादि सिद्धम्। कारकमिति। एतच्च "कारके" इत्यधिकारल्लभ्यते। तत्र हि व्यत्ययेन प्रथमार्थे सप्तमी। प्रतिसूत्रं वाक्यं भित्त्वा कारकसञ्ज्ञाऽनेन विधीयते। तद्यथा अपाये ध्रुवं कारकसञ्ज्ञं स्यात्। ततो "ऽपादानम्"। उक्तं कारकमपादानं स्यात्। पुनः कारकशब्दानुवृत्तिसामथ्र्याद्विशेषसञ्ज्ञाभिः सह समावेशसिद्धिः। तेन "स्तम्बेरम"इत्यत्राधिकरणत्वात्सप्तमी। कारकक्वाद्गतिकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति। अन्यथा "तत्पुरुषे तुल्यार्थे"त्यादिना पूर्वपदप्रकृतिस्वरः स्यात्। नचाऽत्रोपपदस्वरेणान्यथासिद्धिः शङ्क्या, "स्तम्बकर्णयोः"इति निर्देशात् प्रातिपदिकस्योपपदत्वेऽपि सप्तम्यन्तस्याऽतथात्वात्। यद्यपीह थाथादिस्वरेणैवाऽन्तोदात्तत्वं सिध्यति, तथापियप्प्रत्ययसाहचर्येण एरच एव तत्रोपादानान्नास्ति थाथादिस्वरेण तत्सिद्धिरित्याहुः। अन्वर्था चेयं सञ्ज्ञा--करोतीति कारकमिति। तेन "ब्राआह्मणस्य पुत्रं पन्थानं पृच्छती"त्यत्र क्रियाऽनन्वयिनो न भवति। ब्राआह्मणो ह्रत्र पुत्रविशेषणं, न तु क्रियान्वयीति। पयसेति। भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वेऽपि ओदन एवाऽत्रैइप्सिततमः, पयस्तु संस्कारत्वात्करणम्। नह्रसौ केवलपयसः पानेन सन्तुष्यति , किं तु तत्संस्कृतेनौदनेन। यदा तु पय एव ईप्सिततममस्य भवति, तदा कर्मत्वं भवत्येव--पयः पिबतीति। कर्मेत्यनुवृत्ताविति। "अधिशीङ्स्थासां कर्मे"ति सूत्रात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तथायुक्तम् १।१ च ० अनीप्सितम् १।१ कर्म १।१ ४९ कारके ७।१ २३

समासः॥

तेन प्रकारेण युक्तं तथायुक्तं, मयूरव्यंसकादित्वात् (२।१।७१) तत्पुरुषसमासः। न ईप्सितम्, अनीप्सितं, नञ्तत्पुरुषः।

अर्थः॥

येन प्रकारेण कर्तुः ईप्सिततमं क्रियया युक्तं भवति, तेनैव प्रकारेण यदि कर्तुः अनीप्सिततमम् अपि युक्तं भवेत्, तद् अपि कर्मसंज्ञकं स्यात्।

उदाहरणम्॥

विषं भक्षयति। चौरान् पश्यति। ग्रामं गच्छन् वृक्षमूलान्युपसर्पति॥
काशिका-वृत्तिः
तथायुक्तं च अनीप्सितम् १।४।५०

येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते, तेन एव चेत् प्रकारेन यदनीप्सितं युक्तं भवति, तस्य कर्मसंज्ञा विधीयते। ईप्सितादन्यत् सर्वम् अनीप्सितम्, द्वेष्यम, इतरच् च। विषं भक्षयति। चौरान् पश्यति। ग्रामं गच्छन्

वृक्षमूलान्युपसर्पति।

न्यासः

तथायुक्तं चानीप्सितम् , १।४।५०

चकारोऽवधारणे। अत एव वृत्तावाह-- "तेनैव" इति। "अनीप्सितम्" इति। यद्यप्ययं प्रसज्यप्रतिषेधः स्यात्, तदा ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीत्यादौ वृक्षमूलादीनां कर्मसंज्ञा न स्यात्। तथा हि-- प्रसज्यप्रतिषेधे सत्यनेन योगेनानीप्सितस्यैव कर्मसंज्ञा विधीयते; वृक्षमूलानि च न तावदीप्सितानि, पूर्वमनभिसन्धाय प्रवृत्तेः; नाप्यनीप्सितानि, अप्रतिकूलत्वात्; ततश्चानीप्सितस्य कर्मसंज्ञा विधीयमाना तेषमीप्सितादन्यत्वेनानीप्सितान्न स्यात्। पर्युदासे तु सत्यनेन योनेनेप्सितादन्यस्य कर्मसंज्ञा विधीयते। भवन्ति च यथोक्तप्रकरणानि वृक्षमूलानीप्सितादन्यानि; अतस्तेषामपि कर्मसंज्ञा सिध्यतीत्येतदालोच्य पर्युदासोऽयमिति दर्शयितुमाह-- "ईप्सितादन्यत्" इत्यादि। किं पुनस्तदित्याह-- "द्वेष्यम्" इत्यादि। द्वेष्यम् = प्रतिकूलम्, यथा-- विषचौरादि। इतरदप्रतिकूलम्, यथा -- उक्तप्रकाराणि वृक्षमूलानि। "भक्षयति" इति। "भक्ष अदने" (धा।पा। १५५७) चौरादिकः॥

बाल-मनोरमा

तथा युक्तं चानीप्सितम् ५३०, १।४।५०

तथायुक्तं। "तथा"शब्दस्य सादृश्यवाचकस्य प्रतियोगसापेक्षत्वादाह-ईप्सितततभवदिति। पूर्वसूत्रे संनिहितत्वादीप्सिततममेव सादृश्यप्रतियोगीति भावः। क्रिययेति। क्रियाजन्यफलयुक्तमित्यर्थः। पूर्वसूत्रे ईप्सिततमस्य कर्मत्वमुक्तम्। द्वेष्योपेक्ष्यसंग्रहार्थमिदं वचनम्। तत्र उपेक्ष्यमुदाहरति-ग्रामं गच्छंस्तृणं स्पृशतीति। संयोगानुकूलव्यापारः स्पृशेरर्थः। अत्र स्पृश्यमानस्य तृणस्य ईप्सिततमत्वाऽभावेऽपि "गङ्गां स्पृशती"त्यादौ स्पृश्यमानस्येप्सिततमस्य गङ्गादेरिव क्रियाजन्यसंयोगात्मकफलाश्रयत्वात्कर्मत्वमिति भावः। द्वेष्यमुदाहरति--विषं भुङ्क्त इति। यदा कश्चिद्बलवता वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणम्। भुजेर्हि मुखे प्रक्षिप्तस्य गलविवरप्रवेशानुकूलः हनुचलनादिव्यापारोऽर्थः। विषस्य द्वेष्यतया ईप्सिततमत्वाऽभावेऽपि ओदनं भूङ्क्ते इत्यादौ भुज्यमानस्य ईप्सिततमस्य ओदनादेरिव क्रियाजन्यगलविवरप्रवेशात्मकफलाश्रयत्वात्कर्मत्वमिति भावः। नच "धातूपस्थाप्यफलशालि कर्मे"त्येवास्तु, किमीप्सिताऽनीप्सितयोः पृथग्ग्रहणेनेति वाच्यम्, "अग्नेर्माणवकं वारयती"त्यत्र हि "वारणार्थानामीप्सितः" इति माणवकस्याप#आदानत्वं प्राप्तं तन्निवृत्त्यर्थं "कर्तुरीप्सिततम"मिति वक्तव्यमेव। एवंच द्वेष्योदासीनसंग्रहार्थं "तथायुक्तं चे"ति सूत्रमावश्यकमित्यास्तां तावत्।

बाल-मनोरमा

अकथितं च ५३१, १।४।५०

अकथितं च। अकथितशब्दं व्याचष्टे--अपादानादिविशेषैरिति। अपादानं संप्रदानम् अधिकरणं कर्म करणं कर्ता हेतुरिति कारकसप्तकम्। तदेतद्यदाऽपादानत्वादिशेषात्मना न विवक्षितं किन्तु संबन्धसामान्यात्मनैव तदा तत्कर्मसंज्ञकमित्यर्थः। ननु "नटस्य श्रणोती"त्यत्र नटसंबन्धि श्रवणमित्यर्थके नटस्यापि कर्मत्वं स्यात्, तस्य क्रियान्वयित्वेन कारकत्वात्, वस्तुतोऽपादानस्य संबन्धित्वेन विवक्षितत्वाच्चेत्याशङ्क्य परिगणयति--दुह्याजिति। वार्तिकार्थसङ्ग्रहश्लोकोऽयम्। अतो व्याचष्टे--दुहादीनामिति। "दुह प्रपूरणे," "टु याचृ याच्ञायां,""डुपचष् पाके," "दण्ड दण्डनिपातने"चुरादिः। निग्रह इत्यर्थः। इह ग्रहणार्थकः। "रुधिर् आवरणे," "प्राच्छ ज्ञीप्सायाम्",। श्लोके प्रच्छीत्यत्रेकार उच्चारणार्थः। इका निर्देशे तु "ग्राहिज्या" इति संप्रसारणप्रसङ्गात्। "चित्र् चयने," "ब्राऊत्र् व्यक्तायां वाचि," "शासु अनुशिष्टौ," "जि अभिभवे", "मन्थ विलोडने," "मुष स्तेये" इति द्वादशानामित्यर्थः। चतुर्णामिति। णीञ्प्रापणे,

"ह्मञ्हरणे," "कृष विलेखने," "बह प्रापणे," इति चतुर्णामित्यर्थः। कर्मणा यद्युज्यते इति। "कर्मयु"गित्यस्य व्याख्यानमिदम्। करणे उपपदे कर्मणि वाच्ये "सत्सूद्विषे"त्यादिना क्विबिति भावः। यद्यपि-"दुहियाचिरुधिप्रच्छिभिक्षिचित्रामुपयोगनिमित्तमपूर्वविधौ। ब्राउविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना।" इति प्रकृतसूत्रस्थश्लोकवार्तिके पचिमथिमुष्यादयो न पठिताः, तथापि चकारेण तेऽपि सङ्ग्राह्मा इति कैयटः। गां गोग्धीति। क्षरणानुकूलव्यापारः क्षारणपर्यायो दुहेरर्थः। क्षारणात्मकव्यापारप्रयोज्यक्षरणात्मकफलाश्रयत्वात्पयः कर्म। गौस्तु क्षरणेऽपादानम्। तदपादानत्वमुपेक्ष्य संबन्धित्वात्मना गोर्विवक्षायां कर्मत्वमनेन भवति। ततश्च शेषषष्ठीनिरासे द्वितीया भवति। तदिदमुक्तं प्रौढमनोरमायां--गोसंबन्धि पयःकर्मकं दोहनमर्थ इति। तथाच "न माषणामश्रनीया"दित्यत्रेव शेषत्वविवक्षायां प्राप्तां षष्ठीं बाधितुमिदं सूत्रम्। गोरपादानत्वविवक्षायां तु पञ्चम्येव--गोः पयो दोग्धीति। गोः सकाशात्पयः क्षारयतीत्यर्थः। यदि तु गौः पयोविशेषणं तदा षष्ठ()एव। गोसंबन्धि यत्पयस्तत्क्षारयतीत्यर्थः। एवमग्रेऽप्यूह्ममिति प्राचीनमतानुसारी पन्थाः। वस्तुतस्तुअपादानत्वादिविशेषरूपेणाविवक्षितं किन्तु कर्मत्वेनैव विवक्षितम् अकथितम्। तादृशमपादानादि कर्मसंज्ञकं स्यादित्यर्थः, कारकत्वव्याप्संज्ञानां स्वबोध्ये कर्मत्वादिशक्तिमत्त्वबोधकत्वात्। बोधोऽपि तथैव। एवं च "गां दोग्धि पयः" इत्यत्र गोकर्मकं पयःकर्मकं च दोहनमित्येव बोधः। अवदेः सकाशाद्द्रवद्द्रव्यविभागो हि क्षरणम्। तच्च गोपनिष्ठव्यापारप्रयोज्यम्। एवंच कर्तृव्यापारप्रयोज्यक्षरणात्मकविभागविशेषाश्रयत्वाद्गोः, पयसश्च पूर्वसूत्राभ्यां कर्मत्वमस्त्येव। अत उभयकर्मकबोध एव युक्तो, नतु संबन्धित्वेन गोर्बोधः। अत एव प्रकृतसूत्रभाष्ये "अकथित"मित्यनेनैव सिद्धत्वात्पूर्वसूत्रद्वयस्य वैयर्थ्यमाशङ्क्य ईप्सितमात्रस्याप्यनेन कर्मसंज्ञायां "वारणार्थाना"मित्सयस्यानवकाशतयाऽग्नेर्माणवकं वारयतीत्यत्र माणवकस्याप्यपादनसंज्ञायां प्राप्तायां "कर्तुरीप्सिततमं कर्मे"त्यारब्धव्यम्। ततश्च द्वेष्यापेक्ष्यसङ्ग्रहाय "तथायुक्तं चानीप्सित"मित्यारब्धव्यमिति समाहितम्--"एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन। तत्रेप्सितस्य किं स्यात्प्रयोजनं कर्मसंज्ञायाः॥ यत्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थम्। ईप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेन"॥ इति श्लोकद्वयेनेति शब्देन्दुशेखरे स्थितम्। "एतेन कर्मे"त्यादिभाष्यार्थस्तु कैयटे भाष्यप्रदीपोद्योते च स्पष्ट इत्यास्तां तावत्। बलिं याचत इति। "हरि"रिति शेषः बलिर्नाम असुरविशेषः। मह्मं देहीति प्रार्थना याचेरर्थः। दानानुकूलो मह्मं देहीति शब्दप्रयोगरूपव्यापार इति यावत्। बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयत इत्यर्थः। कर्तुः कर्मत्वविवक्षायां द्वितीयेति नव्याः। प्रार्थनारूपव्यापारजन्यदाने जनकतया आश्रयत्वात्। बलिसंबन्धि यद्वसुधाकर्मकं दानं तत्प्रार्थयत इत्यर्थ इति तु प्राचीनाः। अविनीतमिति। अभ्युपगमप्रार्थना याचेरर्थः। यदा कश्चिद्बलवानविनीतो दुर्बलं कंचिद्बाधते तदा दुर्बमधिकृत्येदं वाक्यं प्रवृत्तम्। अविनीतकर्तृकं विनयकर्मकमभ्युपगमं प्रार्थयते इत्यर्थः। कर्तुः कर्मत्वविवक्षायां द्वितीयेति नवीनाः। अविनीतसंबन्धिनमभ्युपगममिति तु प्राचीनाः। तण्डुलानोदनं षचतीति। विक्लित्त्यनुकूलव्यापारः पचेरर्थः। तप्तोदकप्रस्वेदनजनितप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः। तया ओदनाख्याद्रव्यान्तरं प्रकृतिभूतेषु तण्डुलेषु वर्तते। ओदने तु जन्यजनकभावेन वर्तते। तण्डुलैः प्रकृतिभूतैरोदनं करोतीत्यर्थः। तण्डुलसमवायिकारणिकां तत्समवेतामोदनजनिकां विक्लितिं()त निर्वर्तयतीत्यर्थः। तत्र व्यापारफलं विक्लितिं()त प्रति जन्यतया आश्रयत्वादोदनः प्रधानं कर्म। तादृशौदनजनिकां विक्लितिं()त निर्वर्तयतीत्यर्थः। तत्र न्यापारफलं विक्लितिं()त प्रति जन्यतया आश्रयत्वादोदनः प्रधानं कर्म। तादृशौदनजनिकां विक्लितिं()त प्रति समवायित्वेनाधारत्वात्तण्डुलानां गुणकर्मत्वमिति तद्विवक्षायां द्वितीया। तण्डुसम्बन्धिनीमोदनजनिकां विक्लितिं()त निर्वर्तयतीति तु प्राचीनाः। गर्गानिति। दण्डधातुग्र्रहणानुकूलव्यापारार्थकः। ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्मातीत्यर्थः। ताडनादिव्यापारप्रयोज्यग्रहणविषयत्वाच्छतं प्रधानकर्म। गर्गाणां तु तद्ग्रहणावधित्वाद्गुणकर्मत्वम्। ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम्। तत्र स्वत्वविश्लेषे गर्गाणामवधित्वादपादानत्वम् ष

ग्रहणघटकतादृशविश्लेषप्रतियोगभूतस्वत्वाश्रयत्वात्कर्मत्वं च। तत्रापादानत्वमनादृत्य कर्मत्वविवक्षायां द्वितीया। गर्गसम्बन्धिकमिति तु प्राञ्चः। व्रजमिति। निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलबन्धद्वारकपिधानादिव्यापारो रूधेरर्थः। गां निर्गमप्रतिबन्धपूर्वकं व्रजे चिरस्थितिका#ं करोतीत्यर्थः। अत्र चिरस्थितिं प्रति व्रजस्याधिकरणत्वमुपेक्ष्य गोद्वारा तत्स्थित्याश्रयतया कर्मत्वविवक्षायां द्वितीया। व्रजसम्बन्धिनं गोकर्मकं चिरस्थित्यनुकूलव्यापारं करोतीत्यर्थ इति प्राचीनाः। माणवकमिति जिज्ञासितव्याऽर्थज्ञानानुकूलः "केन पथा गन्तव्य"मित्यभिलापादिरूपव्यापारः पृच्छेरर्थः। तत्र विषयतया ज्ञानरूपफलाश्रयत्वात्पन्थाः प्रधानकर्म। तज्ज्ञानं प्रति जनकतया आश्रयत्वान्माणवको गुणकर्म। माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः। अत्र माणवके करणत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया। पथिविषयकं माणवकसंबन्धि ज्ञानमिच्छतीत्यर्थ इति प्राञ्चः। वृक्षमवचिनोतीति। वृक्षात्प्रच्याव्य फलान्यादत्त इत्यर्थः। प्रच्याव्यादानानुकूलव्यापारो लोष्टप्रहारादिरूपोऽवपूर्वकचिञ्धातोरर्थः। तत्र प्रच्याव्यादानविषयत्वात्फलानि प्रधानकर्म। प्रच्यवावधित्वाद्वृक्षोऽपादानम्। तस्यापादानत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया, वृक्षस्य फलप्रच्यवाश्रयत्वेन कर्मत्वात्प्रच्यवस्य विभागस्य द्विनिष्ठत्वात्। वृक्षसंबन्धि यत्प्रच्युतफलादानं तत्करोतीत्यर्थ इति प्राचीनाः। माणवकं धर्मं ब्राऊते शास्ति वेति। बोधनान#उकूलव्यापारः "चोदनालक्षणोऽर्थो धर्म" इत्यादिशब्दप्रयोगात्मको ब्राऊञोऽर्थः। माणवकाय धर्म बोधयतीत्यर्थः। व्यापारप्रयोज्यबोधिविषयत्वाद्धर्मः प्रधानकर्म। बोधविषयेण कर्मणाऽभिप्रेयमाणत्वान्माणवकः संप्रदानम्। तस्य संप्रदानत्वमुपेक्ष्य धर्मद्वारा बोधाश्रयत्वात्कर्मत्वविवक्षायां द्वितीया। धर्मविषयकं माणवकसंबन्धिनं बोधं जनयतीत्यर्थ इति तु प्राञ्चः। शासेस्तु धर्मं कुर्वित्यादिविधिघटितशब्दप्रयोगरूपो बोधनानुकूलव्यापारोऽर्थः। इतरत्प्राग्वत्। शतं जयतीति। "जि अभिभवे"। ग्रहणानुकूलताडनादिव्यापारो जयतेरर्थः। गर्गान् शतं दण्डयतीतिवद्व्याख्येयम्। सुधां क्षीरनिधिं मथ्नातीति। "मन्थ विलोडने" द्रवद्रव्यगतसारोद्भवनानुकूलो मन्थानदण्डभ्रमजनितसंक्षोभात्मक आस्फालनपर्यायो व्यापारो मन्थेरर्थः। क्षीरोदधेः सकाशात्सुधां मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः। व्यापारप्रयोज्योद्भवाश्रयत्वात्सुधा प्रधानकर्म। क्षीरोदधिस्तूद्भवं प्रत्यपादानम्। तस्यापादानत्वमुपेक्ष्य सुधाद्वारा उद्भवाश्रयत्वात्कर्मत्वविवक्षायां द्वितीया। सुधाश्रयं क्षीरोदधिस्तूद्भवं करोतीत्यर्थ इति तु प्राचीनाः। देवदत्तं शतं मुष्णातीति। अपश्यति देवदत्ते तदीयं सुवर्णशतं तस्मादपनीयादत्ते इत्यर्थः। परस्वामिकद्रव्यस्य स्वामिनः सकाशादपनीयादानानुकूलः स्वाम्यज्ञातो निशासंचारभित्तिच्छिद्रकरणादिरूपव्यापारो मुषेरर्थः। व्यापारप्रयोज्यापनयनपूर्वकादानाश्रयत्वाच्छतं प्रधानकर्म। अपनयनावधित्वाद्देवदत्तोऽपादानम्। अपादानत्वमनादृत्यापनीयादेयद्रव्यस्वामितया देवदत्तस्यापनीयादानश्रयत्वात्कर्मत्वविक्षायां द्वितीया। शतकर्मकं देवदत्तसंबन्ध्यपनीयादानं करोतीत्यर्थ इति तु प्राञ्चः। ग्राममजां नयतीति। ग्रामेऽजां प्रापयतीत्यर्थः। "णीञ् प्रापणे"। देशान्तरसंयोगानुकूलश्चलनगमनपर्यायो व्यापारः प्राप्तिः। नतु देशान्तरसंयोगमात्रम्। ग्रामं प्रति चलनदशायामेव प्राप्नोतिहगच्छतीति प्रयोगदर्शनात्। चलनेत संयोगे जाते अजा ग्रामं गता प्राप्तेत्येव दर्शनात्। तादृशप्राप्त्यनुकूलो दण्डोद्यमनमार्गान्तरगतिप्रतिबन्धपूर्वकयोग्यमार्गसंयोजनादिरूपव्यापारो नीधातोरर्थः। एतादृशव्यापारप्रयोज्यग्रामसंयोगतदनुकूलगमनोभयाश्रयत्वादजा प्रधानकर्म। तादृशाऽदाधारत्वाद्ग्रामोऽधिकरणम्। अधिकरणत्वमनादृत्य ग्रामस्यापि तथाविधसंयोगाश्रयत्वात्कर्मत्वविवक्षायां द्वितीया। अजाकर्मकं ग्रामसंबन्धिनयनमित्यर्थ इति तु प्राचीनाः। एवमेव-ग्राममजां हरति कर्षति वहतीत्यपि व्याख्येयम्। तत्र देशान्तरसंयोगानुकूलमजाचलनं वाहकद्वारकं, तादृशचलनानुकूलव्यापारः स्कन्धग्रहणादिरूपो हरतेरर्थः। रज्जुबन्धनादिना बलाच्चलनं कृषेरर्थः। शकटाद्यारोपणादिरूपदेशान्तरसंयोगानुकूलप्राप्त्यनुकूलो वहेरर्थ इति विशेषः। अर्थनिबन्धनेयं संज्ञेति। कैयटादिभिस्तथा व्याख्यातत्वादिति भावः। तथाच #एतदर्थकधात्वन्तरसंयोगेऽपि द्विकर्मत्वं लभ्यते। वस्तुतस्तु भाष्ये याचिरूधीत्याद्युदाहृतश्लोकद्वयपरिगणिता दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्राऊञ्शासय

इत्यष्टावेव धातवो द्विकर्मकाः। न तु पचिदण्डिजिप्रभृतयस्तद्बहिर्भूता अपि। अर्थनिबन्धनेयं संज्ञेत्यपि न युक्तम्, भाष्ये अदर्शनात्, भाष्ये याचिग्रहणेनैव सिद्धे भिक्षिग्रहणवैयर्थ्याच्च। नन्वेवं सति "अहमपीदमवोद्यं चोद्ये" इति "तद्राजस्य बहुषु" इति सूत्रस्थभाष्यविरोधः। तत्र हि चुदधातुश्चौरादिकः प्रच्छिपर्यायः, कर्मणि लट्, उत्तमपुरुषैकवचनम्। अप्रष्टव्यमहं पृच्छ्ये इत्यर्थः। अत्रि चुदेर्द्विकर्मकत्वदर्शनादर्थनिबन्धनेयं संज्ञेति विज्ञायत इति चेन्न। तावता चुदधातोरपि द्विकर्मकत्वलाभेऽपि तदन्येषां द्विकर्मकत्वे मानाऽभावात्। अत एव "कर्तुरीप्सिततम"मिति सूत्रभाष्ये "द्वयर्थः पचिः, तण्डुलानोदनं पचतीति तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीति गम्यते। तण्डुलानादनं पचतीति तण्डुलविकारमोदनं निर्वर्तयतीति गम्यते। ओदनं पचतीति ओदनार्थान् तण्डुलान् विक्लेदयतीति गम्यत इत्यादाह्मतम्। "कर्तुरीप्सिततम"मित्येव तण्डालानापि कर्मत्वमिति पचेरेतदुदाहरणत्वमनुपपन्नमेव। तस्माद्भाष्यपरिगणितबहुर्भूतधातूनामन्तर्भावितण्यर्थकत्व एव द्विकर्मकत्वमिति शब्देन्दुशेखरे स्थितम्।

ननु कुरून्स्वपिति देवदत्तः, मासमास्ते इत्यादौ कुर्वादेरनुद्देश्यत्वात् "कर्तुरीप्सिततम"मिति कर्मत्वं न संभवति, कर्तुरेव स्वापादिक्रियाश्रयत्वात् "तथायुक्त"मित्यपि न कर्मत्वमित्यत आह--अकर्मकधातुभिरिति। ग्रामसमूहात्मककुरुपञ्चालाऽवन्त्यादिपरोऽत्र देशशब्दः, नतु ग्रादिरपि। तेन "ग्रामे स्वपिती"त्यत्र न द्वितीया। अत्र च "अधिशीङ्स्थासां कर्मे"ति लिङ्गम्। अन्यथा अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिरित्यत्राप्यनेनैव कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्यैदाहरति--कुरून् स्वपितीति। "देवदत्त" इति शेषः। कुरुषु निद्रां करोतीत्यर्थः। देवदत्तात्तु न तृतीया, तिंङा अभिहितत्वादिति भावः। कुर्वादिशब्दा जनपदविशेषेषु स्वभावान्नित्यबहुवचनान्ताः। मासमास्ते इति। मासस्याधिकरणसंज्ञां बाधित्वा कर्मत्वम्। गोदोहमिति। दोहनं दोहः। भावे घञ्। भावो धात्वर्थः। गोदोहनकालोऽत्र विवक्षितः। नचेह कालत्वादेव सिद्धिः शङ्क्या,अहोरात्रसमूहस्य मासादेरेव तत्र ग्रहणात्। गन्तव्यतद्वेनाऽध्वानो विशेषितत्वान्नियतपरिमाणः क्रोशादिरेव गृह्त इत्यभिप्रेत्योदाहरति--क्रोशमास्ते इति। गन्तव्यत्वविशेषणादध्वन्यास्ते इत्यत्र न भवति। अनत्यन्तसंयोगार्थमिदं वार्तिकम्। अत्यन्तसंयोगे तु "कालाध्वनोरत्यन्तसंयोगे" इत्येव सिद्धमिति प्राचीनानुसारी पन्थाः। वस्तुतस्तु "अकर्मकधातुभिर्योगे" इत्यादिवचनं भाष्ये न दृश्यते। किंतु अक्रमकधातूनां कथं द्विकर्मकत्वमित्याशङ्कायां "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यक्रमणाम्। देशश्चे"त्युक्तम्। हिशब्दघटितत्वादिदं न विधायकं, किन्त्वनुवादकमेव। तथाहि "कुरून् स्वपिती"त्यादौ स्वापादिक्रियया कुर्वादीन् व्याप्नोतीत्यर्थः, धातूनामनेकार्थतया कदाचित्तेषां स्वापादिकरणकव्यापनेऽपि वृत्तेः। ततश्च "कर्तुरीप्सिततम"मित्येव सिद्धम्। यदा तु स्वपादिधातूनां स्वापादावेव वृत्तिर्नतु व्याप्तिपर्यन्ते, तदा कुरुषु स्वपिति, मासे आस्ते इत्यधिकरणत्वमेव। एतच्च "अकथितं चे"त्यत्र "कालाध्वनोरत्नयन्तसंयोगे" इत्यत्र च भाष्ये स्पष्टम्। अत एव "समां समां विजायते" इति सूत्रे "समायां समायां विजायते" इति विग्रहकथनं भाष्ये सङ्गच्छते। अन्यथा द्वितीयाप्रसङ्गात्। अत एव च लकारार्थप्रक्रियायाम् "अत्यन्तापह्नवे लिड्वक्तव्यः" इत्यत्र "कलिङ्गेष्ववात्सीः?। नाहं कलिङ्गान् जगाम" इति मूलकृदुदाह्नते व#आक्ये कलिङ्गेष्विति सप्तमी संगच्छते। उक्तं च हरिणा--"कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥" इति। इति शब्देन्दुशेखरे प्रपञ्चितम्।

बाल-मनोरमा

क्रीतात्करणपूर्वात् ४९९, १।४।५०

क्रीतात्करणपूर्वात्। प्रातिपदिकादित्यनुवृत्तमत इत्यनुवृत्तेन क्रीतादित्यनेन च विशेष्यते, तदन्त विधिः। तदाह--क्रीतान्तादित्यादिना। करणमादिर्यस्येति विग्रहः। प्रातिपदिकशब्दो विशेष्यं, तेन करणादेरिति पुंस्त्वमुपपन्नम्।

वस्त्रक्रीतीति। ननु वस्त्रेण क्रीतेति टाबन्तेन विग्रहे कर्तृकरणे कृता बहुल"मिति समासात्मकं प्रातिपदिकमादन्तमेव, न त्वदन्तमिति कथमत्र ङीषिति चेत्, सत्यम्--समासस्य तावदलौकिकविग्रहवाक्यं प्रकृतिः। वस्त्र भिस् क्रीत इति स्थिते "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति परिभाषया सुबुत्पत्तेः प्रागेव क्रीतशब्देन समासे "सुपो धातु" इति सुब्लुकि वस्त्रक्रीतेति प्रातिपदिकस्य अदन्तत्वं निर्बाधमिति भावः। एतच्च "पुंयोगादाख्याया"मिति सूत्रे भाष्ये स्पष्टम्। धनक्रीतेत्यत्रापि ङीष् स्यादित्यत आह-क्वचिन्नेति। "कर्तृकरणे कृता बहुल"मिति बहुलग्रहणेन "गतिकारकोपपदाना"मित्यस्य क्वचिदप्रवृत्त्यवगमादिह सुबन्तेन समासः। तत्र च सुपः प्रागेवान्तरङ्गत्वाट्टापि सति ततः सुपि टाबन्तप्रकृतिकसुबन्तेन समासे सुब्लुकि धनक्रातीशब्दस्य अदन्तत्वाऽभावान्न ङीषित्यर्थः। एवं च "अत" सुपि टाबन्तप्रकृतिकसुबन्तेन समासे सुब्लुकि धनक्रीताशब्दस्य अदन्तत्वाऽभावान्न ङीषित्यर्थः। एवं च "अत" इत्यनुवृत्तेरेतत्प्रयोजनमित्युक्तं भवति। एतच्च "उपपदमतिङि"त्यत्र कैयटे स्पष्टम्। करणपूर्वात किम्?। सुकीता नचैवमपि वस्त्रेण क्रीतेति वाक्यान्ङीष्प्रसङ्गः, क्रीतेति प्रातिपदिकस्य करणपूर्वात्वात्, अदन्तत्वाच्चेति वाच्यं, करणपूर्वादिति हि क्रीतान्तस्य प्रातिपदिकस्य विशेषणं, नतु क्रीतशब्दस्य। करणं पूर्वं यस्मिन्निति बहुव्रीहिः। करणशब्दात्मकपूर्वायवात् क्रीतान्तसमासप्रातिपदिकादित्यर्थः। एतदर्थमेव पूर्वग्रहणम्। अन्यथा "क्रीतात्करणा"दित्येवावक्ष्यदित्यलम्।

तत्त्व-बोधिनी

तथा युक्तं चानीप्सितम् ४७७, १।४।५०

ईप्सिततमवदिति। सूत्रे चशब्दोऽपिशब्दार्थे वर्तत इति ध्वनयन्नाह--अनीप्सितमपीति। ईप्सितादन्यदनीप्सितमिति पर्युदासोऽयं, तेन यदुपेक्ष्यं, यच्च द्वेष्यं, तद्द्वयमपीह गृह्वत इत्याशयेनाद्यमुदाहरति---ग्रामं गच्छन् तृणं स्पृशतीति। यथा स्पृश्यमानस्य ग्रामादेरीप्सितस्य क्रियायोगस्तज्जन्यसंयोगादिफलाधारत्वात्, तथैवानीप्सितस्य तृणादेरपीति भावः। इह हि ग्रामं गच्छतस्तृणस्पर्शनं नान्तरीयकं, तृणस्याऽनीप्सितत्वात्। यदा तु तृणमपीप्सिततमं भवति तदा पूर्वेणैव सिद्धम्। उपेक्ष्यं च--नोपेक्षाबुद्धिविषयः, नदी कूलं कषतीत्यचेतने तदसम्भवात्। किन्तु यत्रेप्साद्वेषयोरभावस्तदुपेक्ष्यमिति विवक्षितम्। विषमिति। अत्र विषं हेयमप्योदनवद्भुजिना सम्बन्धात्कर्म। ननु य एव पुरुषो व्याध्यादिना पीड()माने मरणमेव श्रेयो मन्यते तस्य विषमपूप्सितमे। योऽपि भ्रान्त्या भुङ्क्ते तस्यापि गुडादिवद्बुद्ध्या व्यवसीयमानं विषमीप्सितमेव। कथमन्यथा प्रवर्तेत। तस्मादिदमुदाहरणमयुक्तमेवेति चेत्। अत्राहुः--यदा कश्चिन्मरणकातरोऽपि वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणमिति। अनीप्सितग्रहणं स्पष्टप्रतिपत्त्यर्थं, "तथा युक्तम्-----"सूत्रद्वयकथन#एनेति चेत्। अत्राहुः--"अग्नेर्माणवकं वारयती"त्यत्र "वारणार्थानामीप्सितः"इति सूत्रेण माणवकस्यापादानत्वं प्राप्तं तद्बाधनाय "कर्तुरूप्सिततम"मिति वक्तव्यमेव। एवञ्च द्वेष्योदासीनयोः सङ्ग्रहार्थं "तथा यूक्तम्----"इत्यपि आवश्यकमेवेति।

तत्त्व-बोधिनी

क्रीतात्करणपूर्वात् ४५०, १।४।५०

क्रीतात्। इह प्रकरणे "अतः"इत्यनुवर्तते, "प्रातिपदिका"दिति च, तदाह--अदन्तादिति। "प्रातिपदिका"दिति शेषः। वस्त्रक्रीतीति। "वस्त्र भिस्क्रीते"ति स्थिते प्राकुबुत्पत्तेः "कर्तृकरणे"इति समासेऽदन्तत्वान्ङीष्। क्वचिन्नेति। "कर्तृकरणे कृता बहुल"मिति बहुलग्रहणात् "गतिकारकोपपदे"ति वक्ष्यमाणस्य क्वचिदप्रवृत्तौ सुबन्तेन समासः। तत्र सुपः प्रागेवान्तरङ्गत्वाट्टाप्, ततोऽदन्तत्वाऽभावान्न ङीषिति भावः। करणपूर्वादिति किम्()। गवा क्रीताअ()ओन क्रीतेत्यादिविग्रहे मा भूत्। पूर्वशब्दो ह्यवयववचनः, समासप्रातिपदिकं चान्यपदार्थः। करणं पूर्वं यस्मिन्? प्रातिपदिके

तदिदं करणपूर्वं, तस्मादित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अकथितम् १।१ च ० कर्म १।१ ४९ कारके ७।१ २३

समासः॥

न कथितम्, अकथितं, नञ्तत्पुरुषः।

अर्थः॥

अकथितम् अपादानादिकारकैः च अनुक्तं यत् कारकं, तत् कर्मसंज्ञं भवति॥
महाभाष्ये परिगणना -- दुहि-याचि-रुधि-प्रच्छि-भिक्षि-चिञाम् उपयोग-निमित्तम् अपूर्व-विधौ। ब्रुवि-शासि-गुणेन च यत् सचते तद् अकीर्त्तितम् आचरितं कविना॥ अर्थात्, दुह्, याच, रुध, प्रच्छ, भिक्ष्, तथा चिञ्, एतेषां धातूनां उपयोगनिमित्तं (उपयोगः दुग्धं यथा, निमित्तं गौ यथा), एतेषां पूर्वविधौ (अकथिते सत्यपि) कर्मसंज्ञं भवति। तथा ब्रूञ्, शास् धात्वोः क्रधानकर्मणः (धर्मं यथा) सम्बन्धितः (माणवकं यथा) कर्मसंज्ञं भवति।

उदाहरणम्॥

पाणिना कांस्यपात्र्यां गां दोग्धि पयः। पौरवं गां याचते। गाम् अवरुणद्धि व्रजम्। माणवकं पन्थानं पृच्छति। पौरवं गां भिक्षते। वृक्षम् अवचिनोति फलम्। माणवकं धर्मं ब्रूते। माणवकं धर्मम् अनुशास्ति।
काशिका-वृत्तिः
अकथितं च १।४।५१

अकथितं च यत् कारकं तत् कर्मसंज्ञं भवति। केन अकथितम्? अपादानादिविशेषकथाभिः। परिगणनं कर्तव्यम् दुहियाचिरुधिप्रच्छिभिक्षिचिञाम् उपयोगनिमित्तम् अपूर्वविधौ। ब्रुविशासिगुणेन च यत् सचते तदकीर्तितम् आचरितं कविना। उपयुज्यते इत्युपयोगः पयःप्रभृति। तस्य निमित्तं गवादि। तस्य उपयुज्यमानपयःप्रभृतिनिमित्तस्य गवादेः कर्मसंज्ञा विधीयते। पाणिना कांस्यपात्र्यां गां दोग्धि पयः। पाण्यादिकम् अप्युपयोगनिमित्तं, तस्य ८६ कस्मान् न भवति? न एतदस्ति। विहिता हि तत्र करणादिसंज्ञा। तदर्थम् आह अपूर्वविधौ इति। ब्रुविशासिगुणेन च यत् सचते। ब्रुविशास्योर् गुणः साधनम्, प्रधानं, प्रधानं कर्म, धर्मादिकम्, तेन यत् सम्बध्यते, तदकीर्तितम् आचरितं कविना, तदकथितम् औक्तं सूत्रकारेण। दुहि गां दोग्धि पयः। याचि पौरवं गां याचते। रुधि गामवरुणद्धि व्रजम्। प्रच्छि माणावकं पन्थानं पृच्छति। भिक्षि पौरवम् गां भिक्षते। चिञ् वृक्षमविचिनोति फलानि। ब्रुवि माणवकं धर्मं ब्रूते। शासि माणवकं धर्मम् अनुशास्ति।
लघु-सिद्धान्त-कौमुदी
अकथितं च ८९५, १।४।५१

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्। दुह्याच्पच्दण्ड् रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक्

स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥ १॥गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति हरति कर्षति वहति वा। अर्थनिबन्धनेयं संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते अभिवत्ते वक्तीत्यादि॥ इति द्वितीया।

न्यासः

अकथितञ्च। , १।४।५१

"{मुद्रित "काशिकावृत्तौ" तु "अपादानादिविशेषकथाभिः" इत्येवास्ति।}अपादानाधिभिर्विशेषकथाभिः" इति। कारकसामान्यकथाया व्यवच्छेदार्तमेतत्। यदि हि केनाप्यकथितस्य कर्मसंज्ञा स्यात्, तदा माणवकस्य पितरं पन्थानं पृच्छतीत्यत्राकारकस्यापि माणवकस्य कर्मसंज्ञा स्यात्। "परिगणनम्" इति। अनयधातुव्यवच्छेदार्थमेतत्। तेन "दुह प्रपूहरणे" (धा।पा।१०१४) इत्येवमादीनामेव धातूनां प्रयोगेऽकथितस्य कर्मसंज्ञा विधीयते, नान्येषाम्। "उपयुज्यत इत्युपयोगः" इति। कर्मसाधनो घञन्तः। "उपयज्यते" इति। इष्टार्थसिद्धौ व्यापार्यत इत्यर्थ-। "पयःप्रभृति" इति। प्रभृतिशब्दन भिक्षादीनां ग्रहणम्। "तस्य निमित्तं गवादि" इति। आत्राप्यादिशब्देन पौरवादेग्र्रहणम्। "तस्योपर्युज्यमानपयः प्रभृतनिमित्तस्य" इति। उपयुज्यमानञ्च तत् पयः प्रभृति चेति विशेषणसमासं कृत्वना उपयुज्यमानपयः प्रभृतेर्निमित्तमिति षष्ठीसमासः। "गवादेः" इति। आदिशब्देन पौरवादेग्र्रहणम्। ननु च पाण्यादिकमप्युपयोगनिमित्तमिति, तेन विनोपयोगस्य पयसोऽसम्भवात्। आदिशब्देन कांस्यपात्रादेग्र्रहणम्। "विहिता हि तत्र करणादि संज्ञा" इति। आदिशब्देनाधिकरणसंज्ञाया ग्रहणम्। "तदर्थम्" इति। करणादेः कर्मसंज्ञानिवृत्त्यर्थमित्यर्थः। अर्थशब्दस्य निवृत्तिवचन्तवात्। "अपूर्वविधौ" इति। पूर्वग्रहणमत्रान्यविधेरुपलक्षणार्थम्। एतदुक्तं भवति-- यस्यान्यो विधिर्नोक्तस्य कर्मसंज्ञेति। तेन यत्रापि वक्ष्यमाणे हेतुकर्तृसंज्ञे इति तत्राप्येषा संज्ञा न भवतीति दोग्धाप्युपयोगस्य निमित्तं तस्य कर्मसंज्ञा न भवति। सूत्रेऽपि "अकथितम्" इति कथमनिवृत्तपरायां चोदनायां भूतकालो न विवक्ष्यते; उपलक्षणत्वात्। तेन योऽपि कथयिष्यमाणो हेतुकर्तृसंज्ञाभ्याम्, तस्यापि कर्मसंज्ञा न भवतीत्युक्तं भवति। ब्राउविशासिगुणेन" इति। कः पुनर्गुण इत्याह-- "साधनम्" इति। साधनं हि क्रियया उपकारकम्। यच्चोपकारकं तदुपकार्यम् प्रधानमपेक्ष्य गुणो भवति। कतरत् पुनः साधनमित्याह-- "प्रधानं कर्म" इति। किं पुनस्तदित्याह-- "धर्मादिकम्" इति। आदिशब्देन पत्यादेग्र्रहणम्। प्रधानत्वन्तु धर्मादेस्तदर्थत्वाच्छिष्यादिप्रवृत्तेः। "सम्बध्यते" इति सचत इत्यस्यार्थकथनम्। तथा हि-- "षच समवाये" (धा।पा।९९७) इति पठ()ते, समवायश्च सम्बन्ध एव। सचते = तेन गुणेन सम्बन्धमुपैति। यच्च तेन सम्बन्धमुषैति तत्तेन सम्बध्यते। "उक्तम्" इति आचरितमित्यस्य विवरणम्। सूत्राकारेणेत्येतदपि "कविना" इत्यस्य। "गां दोग्धि पयः" इति। "दुह प्रपूरणे" (धा।पा।१०१४) आदादिकः। "दादेर्धातोर्घः" ८।२।३२, "झषस्तथोर्धोऽधः" ८।२।४०, "झलां जश् झशि" ८।४।५२ इति जश्त्वम्। ननु चात्र विहिताऽपादान संज्ञा, अस्ति ह्यत्रापायः-- गोः दुहेः क्षरणार्थत्वात्, क्षरति गौओः क्षीरम्, तद्()गोर्दोग्धा क्षारयति, एवञ्च तत् क्षार्यमाणं ततोऽपक्रामतीति स्पष्ट एवापायः, ततो नेदमुदाहरणमुपपद्यते? नैतदेवम्; सत्यपि ह्यपाये नात्र गोरवधित्वं विवक्षितम्, किं तर्हि? क्षीरं प्रति निमित्तभावमात्रम्। यद्येवम्, गोः कारकत्वं न स्यात्, यथा -- वृक्षस्य पर्णं पततीत्यत्र वृक्षस्य न; क्षरणक्रियां प्रति निमित्तभावेनाविवक्षिततत्वात्, नैतत्; अवधित्वं ह्यत्र गोर्न विवक्षितम्। क्षरणं प्रति निमित्तभावस्तु विवक्षित एव। वृक्षस्य पर्णं पततीत्यत्र तु पतनं प्रति वृक्षस्य निमित्तभावमात्रमपि न विवक्षितम्, न केवलमवधिभाव इत्यसमानम्। "पौरवं गां याचते" इति। ननु चात्र कथितापादानादिसंज्ञा , अस्ति ह्यसौ। पौरवाद्गामादत्त इति अस्त्येववापायः? नैतदस्ति; न हि याचनादेवापायो भवति , किं तर्हि? अवरोधनक्रियां प्रति निमित्तबावमात्रम्। अस्याञ्चावस्थायां वा विवक्ष्यते; न चैतदिह विवक्षितम्, हेतुना गामवस्थापयतीत्ययमत्रार्थो वेदितव्यः, न तु

क्वावस्थापयतीत्येतदिह चिन्त्यत एव। "माणवकं पन्थानं पृच्छति" इति। "प्रच्छ ज्ञीप्सायाम्" (धा।पा। १४१३), तुदादिः, ग्रहिज्यादिसूत्रेण ६।१।१६ सम्प्रसारणम्। ननु च कथितात्रापादानसंज्ञा, अस्ति ह्त्रापायः-- सहि तस्मादुपदेशमादित्सते, नैतदस्ति; न हि प्रश्नमात्रेणापायो भवति, किं तर्हि? पृष्टः सन् यद्यसावाचष्टे तदापायेन युज्यते। सत्यप्यपाये नात्र माणवकोऽवधिभावेन विवक्षितः, किं तर्हि? प्रश्नक्रियां प्रति निमित्तभावमात्रेण। "पौरवं गां भिक्षते" इति। "भिक्ष याच्ञायाम्" (धा।पा।६०६) अनुदात्तेत्। अत किमर्थ याचिभिक्ष्योद्रवयोरुपादानम्, यावताऽनयोरर्थभेदो नास्ति? न चेयं संज्ञा श्बदाश्रया, किं तर्हि? अथश्रिया। तथा हि- याचिना समानार्थस्यान्यस्यापि ग्रहणं भवति-- देवदत्तं शतं प्रार्थयते, देवदत्तं शतं मृगयत इति। तस्मात् सत्यपि शब्देभेदे न युक्तं तयोः पृथग्ग्रहणम्। एवं तर्हि याचिरत्रानुनये वत्र्तते-- तन क्रुद्धं याचते, अविनीतं याचत इति, तदर्थं पृथग्ग्रहणं स्यात्। "वृक्षमवचिनोति फलानि" इति। ननु चात्र विहिताऽपादानसंज्ञा तथा हि-- वृक्षात् फलान्यादत इत्यपायोऽत्रार्थः,नैतदस्ति; न ह्त्र वृक्षोऽवधित्वन विवक्षितः। किन्तर्हि? फलावचयनस्य हेतुभावमात्रेण। वृक्षेण हेतुना फलावचयनं करोत्यर्थः। तस्य वृक्षस्य हेतुभावः किमवधिभूतस्य? अधिकरणभूतस्य वा? इत्येवमादिका चिन्ता न कृता। एवं "माणवकं धर्मं ब्राऊते, माणवकं धर्ममनुशास्ति" इति। "ब्राऊञ् व्यक्तायां वाचि" (धा।पा।१०४४), "शासु अनुशिष्टौ" (धा।पा।१०७५) अदादी। ननु च कथितात्र सम्प्रदानसंज्ञा, अस्ति ह्त्र सम्प्रदानत्वम्, सम्प्रदेयेन धर्मेणाभिप्रेयमाणत्वात्, नैतदस्ति; ददातिकर्मणाभिप्रेयमाणस्य सम्प्रदानसंज्ञा विहिता, न चात्र धर्मो ददातिकर्म; ब्राउविशास्योरदानार्थत्वात्। अथापि दानार्थता स्यात्? एवमपि माणवेकन निमित्तेन धर्मं ददातीत्ययमर्थः स्यात्। माणवकस्य सम्प्रदानत्वनाविवक्षितत्वात्; धर्मदाननिमित्तत्वेन विवक्षितत्वात्। ब्राउविशासिगुणेन चेति चकारोऽनुक्तसमुच्चयार्थः। तेन नयतिप्रभृतीनां प्रयोगेऽप्यकथितस्य कर्मसंज्ञेष्यते।तथा चोक्तम्-- नीवह्होहरतेश्चैव गत्यर्थानां तथैव च। द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः॥ इति। अत्रापि श्लोके चकारो जयतिप्रभृतीनां प्रयोगेऽकथितस्य समुच्चयार्थः। किमुदाहरणम्? अजां नयति ग्रामं देवदत्तः। अजां वहति ग्रामं देवदत्तः। अजां हरति ग्रामं देवदत्तः। शतं जयति देवदत्तं यज्ञदत्तः। शतं गर्गान् दण्()डयतीति। ननु चोभयेषामपि "कर्त्तुरीप्सिततमं कर्म" १।४।४९ इत्यनेनैव कर्मसंज्ञा सिद्धा। यदि तह्रजादीनामीप्सिततमत्वं विवक्ष्यते, न ग्रामादीनाम्, तदा कथं कर्मसंज्ञा? तथापि "तथायुक्तम्" १।४।५० इत्यनेन सिद्धा। यदा तर्हि ग्रामादीनामीप्सितत्वं प्रकर्षरहितं विवक्ष्यते, तदा न सिद्ध्यति। अकर्मकाणाञ्च धातूनां कालभावाध्नगन्तव्यदेशानां कर्मसंज्ञेष्यते। तथा चोक्तम्-- कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्कर्मणाम्। दशाश्चाकर्मकाणाञ्च कर्मसंज्ञा भवन्ति च॥ इति वक्तव्यम् (म।भा।१।३३६) इति। तस्मात् तदर्थोऽनुक्तसमुच्चयार्थश्चकारः कृतः कालः -- मासमास्ते मासं स्वपितीति। भावः-- गोदोहमास्ते, गोदोहं कस्वपितीति। अध्वा गन्तव्यः-- क्रोशमास्ते, क्रोशं स्वपितीति। अध्वा चासौ गन्तव्यश्चेति विशेषमसमासः। "कडाराः कर्मधारय" २।२।३८ इति विशेष्यस्य पूर्वनिपातः। देशः कुरूनास्ते, कुरून् स्वपितीति। सर्वं एते कालादयोऽकथिताः; पूर्वविधेः कस्यचिद्()प्रवृत्तत्वात्॥

तत्त्व-बोधिनी

अकथितं च ४७८, १।४।५१

अकथितञ्च। केनाऽकथितमित्याकाङ्क्षायामाह---अपादानादिविशेषैरिति। अपादानं सम्प्रदानम् अधिकरणं कर्म करणं कर्ता हेतुरित्येतैर्विशेषैरित्यर्थः। अविवक्षितमिति। अपादानादिविशेषविवक्षायां तु--गोर्दोग्धि पयः। बलेर्याचते वसुधाम्। व्रजेऽवरुणद्धि गाम्--इत्येवं पञ्चम्यादय एव भवन्तीति भावः। एतेन "पाणिना कांस्यापात्र्यां दोग्धी"त्यत्र करणाधिकरणयोरतिप्रसङ्गः। तयोस्तु दण्डेन करोति, कटे तिष्ठतीत्यादिरवाकाशो दुहादिपरिगणना"दित्याक्षेपो निरस्तः। करणाधिकरणसञ्ज्ञयोरिह विवक्षितत्वात्। यदि तु सूत्रेऽकथितशब्दोऽप्रधानपर्यया न त्वनुक्तपर्यय इत्यभ्युपगम्येत, तदा स्यादेवाऽयमाक्षेपो न त्वन्यथा। कारकमिति। ततश्च "ब्राआह्णस्य पुत्रपृच्छती"त्यत्र

नातिप्रसङ्गः। दुह्याजिति। "दण्ड दण्जनिपातने"चुरादिः। इह तु दण्डिग्र्रहणार्थो न तु निग्रहार्थः। प्रच्छीत्यागन्तुकेनेकारेण निर्देशो न त्विका, "ग्रहिज्ये"ति सम्प्रसारणप्रसङ्गात्। कर्मुयुगिति। कर्मणा युज्यते कर्मयुक्। "सत्सूद्विषे"त्यादिना क्विपे। कर्मणा यद्युज्यत इति। मुख्यकर्मणा सह क्रियया सम्बध्यमानं कारकमेवाऽपादानादिविसेषैरकथितं सत्कर्मसञ्ज्ञक भवतीत्यर्थः। एतेन दुहादीनां द्विकर्मकत्वं स्फोरितम्। अन्ये त्वाहुः---"कर्मयु"गित्यत्र कर्मशब्देन क्रियोच्यत इति। तेन क्रियान्वयीत्यर्थः। परिगणनमिति। तेन "नटस्य श्रणोति गाथा"मित्यादौ नातिप्रसङ्ग इति भावः। इह हि गाथाकर्मकं नटसम्बन्धि श्रवणं वाक्यार्थः। तेन क्रियान्वयित्वान्नटस्य कारकत्वमस्त्येव। गां दोग्धीति। पयःकर्मकं गोसम्बन्धि दोहनमर्थः। पयोऽत्र मुख्यं कर्म, कर्तुरूप्सिततमत्वात्। गौस्तु पयसो निमित्ततामात्रेणोपात्ता, न तु वस्तुसताऽप्यवधिभावेनेत्यपादानसञ्ज्ञाया अप्रवृत्तेरनेन कर्मसञ्ज्ञिका भवति। तदुक्तं हरदत्तेन---"यद्यपि गोरवधिभावो विद्यते, तथाप्यविवक्षिते तस्मिन्निमित्त मात्रविवक्षायामुदाहरणोपपत्ति"रिति। एतेनाऽवधित्वविवक्षायां गोरिति पञ्चम्येवेति स्पष्टम्। यदा तु गौरित्येतत्पयसा सम्बध्यते तदा गोशब्दात्षष्ठ()एव भवतीत्यपि बोध्यम। यत्तु प्राचा--दुह्याच्यर्थरुधिप्रच्छिचिब्राऊशासुजिकर्मयुक्। नीह्मकृष्मन्थवहृदण्डग्रहमुष्पचिकर्मभाक्िति पठितं, तत्र ग्रहेः पाठोऽप्रामाणिकः। इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं, तथापि सन्दर्भोऽशुद्धिः। तथाहि दुह्यादीन्न्यादीश्च द्वैराश्येन पठित्वा भावकर्मप्रकियाशेषे "लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वा"इत्याशङ्कायां स्वयमेव पठितं---" न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि। प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि"इति। एवञ्च दण्डिमन्थिभ्यामपि मुख्ये स्यात्। न चेष्टापत्तिः। "गर्गाः शतं दण्ड()न्ता"मिति भाष्यविरोधात्। शतं ह्त्र प्रधानां न तु गर्गाः, "अर्थिनश्च राजानो हिरण्येन भवन्ति"इति वाक्यशेषात्। दण्डिरत्र ग्रहणार्थो न तु निग्रहार्थ इत्युक्तम्। अतएवाऽत्र समुदाये वाक्यपरिसमाप्तिः, गुणानुरोधेन प्रधानवृत्तेरसम्भवात्। तथा मन्थेरपि प्रधाने स्यात्, इष्यते तु गौणे। तथा च भारविः---"येनापविद्धिसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधर्ममन्थे"इति। अत्राऽमृतं मुख्यम्--उद्देश्यत्वात्, अम्बुनिधिस्तु गौणः। बलिं याचत इति। अत्र प्रार्थनार्थस्य याचेर्वसुधा मुख्यं कर्म, तेन युक्तो बलिर्वस्तुतोऽवधिरपि तदविवक्षायामनेन कर्म भवति। अविनीतमिति। अनुनयार्थस्य याचेरविनीतो मुख्यं कर्म, अविनीतं विनयायाऽनुनयतीत्यर्थः। विनयस्य तादर्थ्याविवक्षायाम् "अकथितञ्चे"ति कर्मसञ्ज्ञा। तण्डुलानिति। निर्वर्तनार्थस्य पचेरोदनो मुख्यं कर्म, ओदनं निर्वर्तयतीत्यर्थः। तण्डुलास्तु करणत्वाऽविवक्षायामकथितं कर्म। अन्ये त्वाहुः---"द्यर्थः पचिः"इति भाष्यापर्यालोचनया "तण्डुनोदनं पचती"त्यस्य तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः। दुह्यादिषु पचेः परिगणनमप्रामाणिकं, भाष्यकैयटयोरनुक्तत्वादिति। गर्गानिति। ग्रहणार्थस्य दण्डेः शतं कर्म, गर्गास्त्वपादानत्वाऽविवक्षायामकथितं कर्म। व्रजमिति। अत्र गौर्मुख्यं कर्म, व्रजं त्वधिकरणत्वाऽविवक्षायाम् "अकथितञ्च"इति कर्म भवति। एवमग्रेऽप्यूह्रम्। अर्थनिबन्धनेति। न तु स्वरूपाश्रया, "अहमपीदमचोद्यं चोद्ये"इति "तद्राज"सूत्रभाष्ये पृ()च्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शमादिति भावः। अएतएव "स्थातुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थ"मिति भट्टिः प्रायुङ्क्ता। एवच्च नाथत्यादयो बहवो द्विकर्मका ज्ञेयाः। स्यादेतत्----यद्यर्थनिबन्धनेयं सञ्ज्ञा तर्हि नीवहियोरन्यतरो न पठनीयः, उभयोरप्येकार्थत्वादिति चेत्सत्यम्। भारं वहति, भारं नयतीत्यत्र यदि विलक्षणोऽर्थोऽनुभूयते, तदा द्वयमपि पठनीयमेव, यदि तु नानुभूयते तह्र्यन्यतरो न पठनीयः, उभयथापि लक्ष्यस्य निर्बाधत्वात्। अत्र वदन्ति---"जग्राह द्युतरु शक्रम्ित्युदाहरणमप्ययुक्तमिति मनोरमोक्तं चिन्त्यमेव। सञ्ज्ञाया अर्थनिबन्धनत्वाद्दण्डेग्र्रहणार्थत्वाच्चेति। बलिं भिक्षत इति। "भिक्ष मिक्षायामलाभे लाभे च"। भिक्षते याचत इत्यर्थः।

अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्बा च कर्मसञ्ज्ञक इति वाच्यम्। देश इति। कुरुपञ्चालादिरेवेह गृह्यते, तेन "अधिसीङ्स्थासां क्रम"इत्यस्य न वैयर्थ्यम्, अधिपूर्वाणामेवाषामाधारः कर्मेति नियमार्थत्वाभ्युपगमेऽपि वैकुण्ठे

वर्तते इत्यादिष्वतिप्रसङ्गः स्यादेवेत्याशयेन तथैवोदाहरति--कुरूनिति। गोदोहमिति। न चेह कालत्वात्सिद्धिः, लोके कालत्वेन प्रसिद्धस्य मासादेरेव कालशब्देन ग्रहणात्। तेन "घटमास्ते" इत्यादि न भवति, जन्यमात्रं कालोपाधिरिति घटादेरपि कालत्वात्। यत्तु प्राचा "अकर्मकधातु भिर्योगे देशकालाध्वभावेभ्यो द्वितीयेति केचि"दित्युक्त्वा "नदीमास्त" इत्युदाह्रतम्। तदसङ्गतम्। "ग्रामसमूहः कुर्वादिरेव देशो गृह्रते, न तु प्रदेश मात्रम्, तेन ग्रामं स्वपितीति न भवति"त्याकरात्। अध्वेति च न्यनम्, अध्वानं स्वपिती"त्यस्यापि प्रसङ्गात्। अतएव आकरेऽध्वा गन्तव्यत्वेन विशेषितः। गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति च व्याख्यातम्। द्वितीयेत्यप्यसङ्गतम्, कर्मसञ्ज्ञाया अव्हतत्वात्कर्मणि लादयो न स्युरित्यास्यते मास इत्यीदिप्रयोगाऽभावप्रसङ्गात्।
"केचि"दित्युक्तिस्तन्मतदौर्बल्यसूचनायेति कथञ्च#इद्()व्याख्याय पूर्वोक्तदोषपरिहारेऽपि नदीमास्त इत्युदाहरणस्याऽसाङ्गत्यदोषस्तदवस्थ एवेति ध्ययम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम् ६।३ अणि ७।१ लुप्ता ५३ कर्त्ता १।१ ५३ स १।१ ५३ णौ ७।१ ५३ कर्म १।१ ४९ कारके ७।१ २३

समासः॥

गतिश्च बुद्धिश्च प्रत्यवसानं च गतिबुद्धिप्रत्यवसानानि, गति॰वसानानि अर्थाः येषां, ते गतिबुद्धिप्रत्यवसानार्थाः, द्वन्द्वगर्भः बहुव्रीहिः। शब्दः कर्म यस्य तत् शब्दकर्म, गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्म च अकर्मदश्चेति गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाः, तेषां ॰ बहुव्रीहिगर्भः द्वन्द्वः॥
न णि अणि, तस्मिन् ॰ नञ्तत्पुरुषः।

अर्थः॥

गत्यर्थानां, बुद्ध्यर्थानां प्रत्यवसानार्थानां च, शब्दकर्मकाणाम् अकर्माकाणां च अण्यन्तावस्थायां यः कर्ता, सः ण्यन्तावस्थायां कर्मसंज्ञकः भवति॥

उदाहरणम्॥

गत्यर्थाः -- गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामम्। याति माणवको ग्रामम्, यापयति माणवकं ग्रामम्। बुद्ध्यर्थाः -- बुध्यते माणवको धर्मम्, बोधयति माणवकं धर्मम्। वेत्ति माणवको धर्मम्, वेदयति माणवकं धर्मम्। प्रत्यवसानार्थाः -- भुङ्क्ते माणवको रोटिकाम्, भोजयति माणवकं रोटिकाम्। अश्नाति मानवको रोटिकाम्, आशयति माणवको रोटिकाम्। शब्दकर्मकाणम् -- अधीते मानवको वेदम्, अध्यापयति माणवकं वेदम्। पठति माणवको वेदम्, पाठयति माणवकं वेदम्। अकर्मकाणाम् -- आस्ते देवदत्तः, आसयति देवदत्तम्। शेते देवदत्तः, शाययति देवदत्तम्।
काशिका-वृत्तिः
गुतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम् अणि कर्ता स णौ १।४।५२

अर्थशब्दः प्रत्येकम् अभिसम्बध्यते। गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानम् च धातूनां, तथ शब्दकर्मकाणाम्

अकर्मकनाम् च अण्यन्तानाम् यः कर्ता, स ण्यन्तानां कर्मसंज्ञो भवति। गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामम्। याति माणवको ग्रामम्, यापयति माणवकं ग्रामम्। गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः। नयति भारम् देवदत्तः, नाययति भारम् देवदत्तेन। वहति भारम् देवदत्तः, वाह्यति भारं देवदत्तेन। वहेरनियन्तृकर्तृकस्य इति वक्तव्यम्। इह प्रैत्षेधो मा भूत्, वहन्ति यवान् बलीवर्दाः, वाहयति यवान् बलीवर्दानिति। बुद्धिः बुध्यते माणवको धर्मम्, बोधयति माणवकं दह्र्मम्। वेत्ति माणवको धर्मम्, वेदयति माणवकं धर्मम्। प्रत्यवसानम् अभ्यवहारः। भुङ्क्ते माणवक ओदनम्, भोजयति माणवकम् ओदनम्। अश्नाति मानवक ओदनम्, आशयति माणवकमोदनम्। आदिखाद्योः प्रतिशेधो वक्तव्यः। अत्ति माणवक ओदनम्, आदयते माणवकेन ओदनम्। खादति माणवकः, खादयति माणवकेन। भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः। भक्षयति पिण्डीं देवदत्तः, भक्षयति पिण्डीं देवदत्तेन इति। अहिंसार्थस्य इति किम्? भक्षयन्ति बलीवर्दाः सस्यम्, भक्षयन्ति बलीवर्दान् सस्यम्। शब्दकर्मणाम् अधीते मानवको वेदम्, अध्यापयति माणवकं वेदम्। पठति माणवको वेदम्। पाठयति माणवकं वेदम्। अकर्मकाणाम् आस्ते देवदत्तः, आसयति देवदत्तम्। शेते देवदत्तः, शाययति देवदत्तम्। एतेषाम् इति किम्? पचत्योदनं देवदत्तः, पाचयत्योदनं देवदत्तेन इति। अण्यन्तानाम् इति किम्? गमयति देवदत्तो यज्ञदत्तम्, तम् अपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः।

न्यासः

गतिबुद्धिकप्रत्यवसानाथशब्दकर्माकर्मकाणामणि कत्र्ता स णौ , १।४।५२

"यापयति" इति। "अर्तिह्री" ७।३।३६ इत्यादिना पुक्। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- उत्तरसूत्रे १।४।५३ अन्यतरस्यांग्रहणमुभयोर्योगयोः शेषभूतो विज्ञायते, सा च व्यवस्थितविभाषा; तेन नीवह्योर्न भविष्यति। "वहेः" इत्यादि। नियच्छति = विशिष्टे विषयेऽवस्थापयतीति नियन्ता सारथिः, अविद्यमानो नियन्ता कत्र्ता यस्य स तथोक्तः, तस्य। "नीवह्योः प्रतिषेधो वक्तव्यः" (वा।६२) इति योऽनन्तरोक्तः स वहेरनियन्तृकर्त्तृकस्य भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- तस्यैवान्यतरस्यांग्रहणस्य व्यवस्थितविभाषा त्वान्नियन्तृकर्त्तृकस्य वहेः कर्मसंज्ञा भविष्यतीति। "आदिखाद्योः" इत्यादि। अत्रापि वक्तव्यशब्दस्य पूर्ववदेवार्थः। व्याख्यानमपि पूर्ववदेव कत्र्तव्यम्। "भक्ष्यति पिण्डी देवदत्तः" इति। चुरादिणिच्। "भक्षयति" पिण्डीं देवदत्तेन" इति। हेतुमण्णिच्। "भक्षयति बलीवर्द्दान् शस्यम्" इति। भक्षिरत्र हिंसार्थः। "सर्वे सचेतना भावाः" इत्यस्मिन् दर्शे हिंसितं शस्यमिति शस्यस्य भक्षणेन देवदत्तो हिंसितो भवति। यस्य हि तच्छस्यं तस्य हिंसा गम्यते। "शब्दकर्मणाम्" इति। शब्दग्रहणेनेह पारिभाषिकं कर्म गृह्र।ते, न तु क्रिया। क्रिया ग्रहणे हि कर्म ग्रहणमनर्थकं स्यात्। कारकाधिकारादेव कारकस्य क्रियापेक्षत्वाच्छब्दात्मिकायां क्रियायां वत्र्तमाना धातवो ग्रहीष्यन्त इति, तत् किं कर्मग्रहणेन? यदि तर्हि पारिभाषिकं कर्म गृह्रते, जल्पति देवदत्तो जल्पयति देवदत्तम्, विलपति देवदत्तं कार्षापणमित्यत्र न प्राप्नोति, शब्दादन्यस्य पारिभाषिकस्य कर्मणो विवक्षितत्वात्, नैष दोषः; बुद्ध्यर्थत्वात् भविष्यति। अत्र हि जल्पतिप्रभृतयस्तावच्छब्दसाधने बोधने वत्र्तन्ते। जल्पति देवदत्त इति। वचनेन बोधयतीत्यर्थः। एवमन्यत्रापि। पश्यति कार्षापणमित्यत्र दृशिश्चक्षुः साधने ज्ञाने वत्र्तते। चक्षुषा जानीत इत्यर्थः। तस्माद्बुद्ध्यर्थत्वात् सिद्धम्। "अध्यापयति" इति। "क्रीङजीनां णौ" (६।१॥४८) इत्यात्वम्। "अर्तिह्री" ७।३।३६ इत्यादिना पुक्। किमर्थं पुनरिदं सूत्रम्, यावता ण्यन्ते धातौ प्रयोजनकव्यापारेण प्रेषणाध्येषणाख्येन व्याप्तुमिष्टतमत्वात् प्रयोज्यस्य "कर्त्तुरीप्सिततमं कर्म" (१।४।४९) इत्यनेनैव कर्मसंज्ञा सिद्धा? सत्यम्, नियमार्थं वचनम्-- प्रयोजकव्यापारेण व्याप्यमानस्य यदा कर्मसंज्ञा तदा गत्यर्थादीनामेव,नान्येषामिति॥

बाल-मनोरमा

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ ५३२, १।४।५२

गतिबुद्धि। गतिश्च बुद्धिश्च प्रत्यवसानं च तानीति द्वन्द्वः। प्रत्यवसानं-भक्षणम्। गतिबुद्धिप्रत्यवसानानि अर्थो येषामिति

विग्रहः। शब्दः कर्म येषां ते शब्दकर्मणः, तेषामिति बहुव्रीहिः। अविद्यमान कर्म येषां ते अकर्मकाः। उभयत्रापि कर्मशब्दः कारकपरः। गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्च तेषामिति द्वन्द्वः। अणौ कर्ता-अणिकर्ता। यच्छब्दोऽध्याहार्यः। तदाह--हत्याद्यर्थानामित्यादिना। णौ अनुत्वपन्ने सति शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ण्यन्ताधातुवाच्यां प्रयोजकव्यापारात्मिकां क्रियां प्रति कर्मसंज्ञकः स्यादित्यर्थः। क्रमेणोदाहरति--शत्रूनिति। "शत्रूनगमयत् स्वर्ग"मिति गत्यर्थकस्योदाहरणम्। शत्रवो युद्धे मृताः स्वर्गमगच्छन्, तान् यः शस्त्रवातेनाऽगमयत् स्वर्गं, स श्रीहरिर्मे गतिरित्यत्रान्वयः। अत्र गमेरण्यन्तावस्थायां शत्रवो गमनक्रियां प्रति कर्तारः, स्वर्गस्तु कर्म। ण्यन्तावस्थायां तु णिज्वाच्यां प्रयोजकव्यापारात्मिकां शस्त्रघातक्रियां प्रति घातयिता हरिः कर्ता। शत्रवस्तु कर्म। शस्त्रघातजन्या या क्रिया स्वर्गप्राप्तिस्तदाश्रयत्वात्। एवंच हरिः प्रयोजककर्ता, शत्रवस्तु प्रयोज्यकर्तारः। प्रयोजककर्तुर्हरेः शाब्दं प्राधान्यम्, अन्यानधीनत्वलक्षणं चार्थप्राधान्यमस्ति। शत्रूणां तु अन्याधीनस्वर्गप्राप्तिकर्तृत्वं प्रयोकधीनत्वाद्गुणभूतमेव। सेषित्वलक्षणमार्थप्राधान्यं तु प्रयोज्यशत्रुगतकर्तृत्वस्यैव, प्रयोजकव्यापास्य प्रयोज्यस्वर्गप्राप्त्यर्थत्वादिति स्थितिः। तत्रान्यानधीनत्वलक्षणस्यार्थप्राधान्यस्य शाब्दप्राधान्यस्य च प्रयोजकव्यापारे सत्त्वात्तदनुरोधि शत्रुगतं कर्मत्वं "कर्तुरीप्सिततम"मित्येव सिद्धम्। अतो नियमार्थमिदं सूत्रे "णिजर्थनाऽऽप्यमानस्य प्रयोज्यकर्तुर्यदि कर्मत्वं भवति तर्हि गत्यर्थादीनामेवे"ति। तेन "पाचयति देवदत्तेन" इत्यादौ प्रयोज्यकर्तुर्न कर्मत्वं, किंतु कर्तृत्वमेव। तदेतत् "हेतुमिति चे"ति सूत्रे भाष्यकैयटयोः स्पष्टम्। उक्तं च हरिणा--"गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः। नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते।" इति स्वधर्मेणेति। तृतीययेत्यर्थः। एवंच स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः। एवमग्नेऽप्यूह्यम्। वेदार्थं स्वानवेदयदिति। बुद्ध्यर्थधातोर#उदाहरणम्। स्वशब्द आत्मीयपरः। स्वे=स्वकीयाविधिप्रमुखा वेदार्थमविदुः, तान् हरिर्वेदार्थमवेदयदित्यर्थः। अत्र स्वेषां प्रयोज्कर्तृ()णां कर्मत्वम्। आशयच्चामृतं देवानिति। प्रत्यवसानार्थस्य उदाहरणम्। देवा अमृतमाश्नन्, तान् हरिराशयदित्यर्थः। वेदमध्यापयद्विधिमिति। शब्दकर्मण उदाहरणमेतत्। विधिब्र्राह्मआ वेदमधीतवान्, तं हरिरध्यापयदित्यर्थः। अत्र प्रयोज्यकर्तुर्विधेः कर्मत्वम्। आसयत्सलिले पृथ्वीमिति। अकर्मकस्योदाहरणम्। सलिले पृथ्वी आस्त, तां हरिरासयदित्यर्थः। अत्र पृथिव्याः प्रयोज्यकर्त्र्याः कर्मत्वम्। यः स मे श्रीहरिर्गतिरिति प्रतिवाक्यमन्वयः।

नीवह्रोनेति। "णीञ् प्रापणे," "वह प्रापणे" इत्यनयोण्र्यन्तयोः प्रयोज्यकर्तु"र्गतिबुद्धी"त्युक्तं नेति वक्तव्यमित्यर्थः। नाययति वाहयति वेति। भृत्यो भारं नयति वहति वा, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य णिच्प्रकृत्यर्थं नयं वहनं च प्रति कर्तुः प्रयोजकव्यापारं प्रतिकर्मत्वे निवृत्ते णिच्प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वे नावस्थानात्तृतीया बोध्या। यद्यपि नीवग्योः प्रापणमर्थः, तथापि गत्यनुकूलव्यापारार्थके प्रापणे गतेर्विशेषणत्वेन प्रविष्टतया गत्यर्थत्वात्प्राप्तिरिति भावः।

नियन्तृकर्तृकस्येति। एवंच तत्र प्रयोज्यकर्तुरुक्तस्य "नीवह्रोर्ने"ति प्रतिषेधस्याऽभावे सति प्रयोज्यस्य कर्मत्वं वक्तव्यमिति फलितम्। वाहयतीति। बाहाः=अ()आआ वहन्ति, तान् सूतः प्रेरयतीत्यर्थः। "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः" इत्यमरः। "वहन्ति बलीवर्दा यवान्, वाहयति बलीवर्दान् देवदत्तः" इति बाष्योदाहरणान्नियन्ता पशुप्रेरक एव विवक्षितः।

अदिखाद्योर्नेति। अद भक्षणे, खाद्द भक्षणे, अनयोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। प्रत्यवसानार्थकत्वात् प्राप्तिः। आद्()यति खादयति वेति। अत्ति खादति वा अन्नं बटुः, तं प्रेरयतीत्यर्थः।

भक्षेरिति। अहिंसार्थकस्य भक्षधातोः प्रयोजकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। ननु "गतिबुद्धी"ति सूत्रे अणौ कर्तुर्णौ कर्मत्वमुक्तम्। भक्षधातुस्तु चुरादित्वान्नित्यं स्वार्थिकण्यन्तः, तस्याऽणिकर्ता नास्त्येव। अतस्तस्य

कर्मत्वनिषेधोऽनुपपन्नः, अप्रसक्तत्वादिति चेन्न, अत एव निषेधाल्मलिङ्गात् "गतिबुद्धी"ति सूत्रे णिग्रहणेन हेतुमत एव विवक्षितत्वात्। एवंच हेतुमण्णिचि अनुत्पन्ने सति अण्यन्तभक्षिधातुवाच्यां क्रियां प्रति कर्तुर्हेतुमण्ण्यन्तवाच्यां क्रियां प्रति कर्मत्वमित्यर्थः पर्यवस्यतीति न दोषः। भक्षयत्यन्नं बटुनेति। चुरादिण्यन्ताद्भक्षधातोर्हेतुमण्णिचि पूर्वणेर्लोपे हेतुमण्ण्यन्तात्तिबादौ सति भक्षयतीति रूपम्। एवंच भक्षयत्यन्नं बटुः। खादतीत्यर्थः। तं प्रेरयतीति ण्यन्तस्यार्थः। भक्षयति बलीवर्दानिति। क्षेत्रे प्ररूढमूलनं सस्यमिह विवक्षितम्। तस्य तदानीमन्तःप्रज्ञजीवत्वात्तद्भक्षणं हिंसैवेति भावः।

जल्पतिप्रभृतीनामिति। एतेषामणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः। जल्पयति भाषयति वेति। "धर्म मिति शेषः। पुत्रो धर्मं जल्पति भाषते वा, तं देवदत्तः प्रेरयतीत्यर्थः। गत्यर्थादिष्वनन्तर्भावाद्वचनम्। नच शब्दनक्रियार्थत्वादेव सिद्धे वचनमिदं व्यर्थमिति वाच्यम्, अत एव "शब्दकर्माकर्मकाणा"मित्यस्य शब्दः कर्म कारकं येषामित्यर्थात्। अन्यथा वेदमध्यापयद्विधिमित्यसिद्धेः। वार्तिके आदिना व्याहरतिवदत्यादीनां सङ्ग्रहः। भाष्ये तु "के पुनर्जल्पतिप्रभृतयः?। जल्पति विलपति आभाषते" इत्येवोक्तम्। परिगणनमित्येके, उदाहरणमात्रप्रदर्शनमित्यन्ये।

दृशेश्चेति। "दृशिर् प्रेक्षणे" अस्याप्यणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः। दर्शयतीति। हरि भक्ताः पश्यन्ति, तान् गुरुः प्रेरयतीत्यर्थः। ननु दृशेर्बुद्धिविशेषात्मकत्वादेव सिद्धे किमर्थमिदं वचनमित्यत आह-सूत्रे इति। "गतिबुद्धी"ति सूत्रे बुद्धिग्रहणेन ज्ञानसामान्यवाचिनां "विद ज्ञाने, ज्ञा अवबोधने" इत्यादीनामेव ग्रहणं नतु ज्ञानविशेषवाचिनामित्येतत् "दृशेश्चे"त्यनेन विज्ञायते। अन्यथा "दृशेश्चे"त्यस्य वैयर्थ्यप्रसङ्गात्। तेनेति। ज्ञापनेनेत्यर्थः। स्मरति जिघ्रतीत्यादीनामिति। आदिना प्रेक्षते इत्यादीनां सङ्ग्रहः। स्मारयतीति। स्मरति प्रियां देवदत्तः, जिघ्रति चन्दनं देवदत्त, तं यज्ञदत्तः, प्रेरयतीत्यर्थः।

शब्दायतेर्नेति। शब्दं करोतीत्यर्थे "शब्दवैरे"त्यादिना क्यङि, "अकृत्सार्वधातुकयो"रिति दीर्घे, "सनाद्यन्ताः" इति धातुत्वे श्तिपा निर्देशोऽयम्। शब्दायेति क्यङ्न्तधातोरणौ कर्ता णौ कर्म नेति वक्तव्यमित्यर्थः। शब्दाययति देवदत्तेनेति। शब्दायते देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः। देवदत्तस्य कर्मत्वाऽभावात्प्रयोज्यकर्तृत्वमादाय तृतीयैव। अत्र शब्दकर्मकत्वात्प्राप्तिरिति भ्रमं निरस्यति-धात्वर्थेति। शब्दकर्मकमुत्पादनं शब्दायेति क्यङन्तस्य धातोरर्थः। एवं च शब्दात्मकं कर्म धात्वर्थेऽन्तर्भूतम्, अतः शब्दस्येति क्यङन्तदातुरकर्मकः, "धात्वर्थबहुर्भूतकर्मकत्वमेव सकर्मकत्वमि"ति "सुप आत्मनः" इति सूत्रे भाष्ये प्रपञ्चितत्वात्। तस्मादकर्मकत्वादेवात्र प्राप्तिरित्यर्थः। एवं च "शब्दाययति सैनिकै रिपून्" इति कर्म प्रयुञ्जानाः परास्ताः। ननु मासमास्ते देवदत्तः, तं प्रेरयति मासमासयति देवदत्तं यज्ञदत्त इत्यत्र देवदत्तस्य प्रयोज्यकर्तुः कर्मत्वं न स्यात्। आसधातोर्गत्यादिष्वनन्तर्भावात्। नचाकर्मकत्वात्तदन्तर्भाव इति वाच्यम्, "अकर्मकधातुभिर्योगे"इति मासस्य कर्मतया आसेरकर्मकत्वाऽसंभवात्। किं च ओदनादिकर्मणोऽविवक्षायां देवदत्तः पचति,पाचयति देवदत्तेन यज्ञदत्त #इत्यत्र प्रयोज्यकर्तुर्देवदत्तस्य कर्मत्वं स्यात्, तदानीं पचेरकर्मकत्वेन गत्यादिष्वन्तर्भावादित्यत आह--येषामिति। इदं च प्रकृतसूत्रे भाष्यकैयटयोः स्पष्टम्।

तत्त्व-बोधिनी

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ ४७९, १।४।५२

गतिबुद्धि। प्रत्यवसानं-भक्षणम्। शब्दकर्मणामिति। शब्दः कर्म कारकं येषां तेषामित्यर्थः। कर्मशब्दो ह्यत्र कारकपरः, न तु "कर्तरि कर्मव्यतिहारे"इत्यत्रेव क्रियापरः, कृत्रिमे कार्यसम्प्रत्ययात्, कर्मग्रहणसामर्थ्याच्च। अन्यथा हि "गतिवुद्धिप्रत्यवसानशब्दार्थाऽकर्मकाणाम्ित्येव ब्राऊयात्। अणौ यः कर्तेति। अनुपत्पन्ने णिचि--शुद्ध धातुवाच्यां क्रियां प्रतिः यः कर्ता स ण्यन्तधातुवाच्यां क्रियां प्रति कर्मसञ्ज्ञः स्यादित्यर्थः। नियमार्थमेतत्सूत्रमिति प्राञ्चः।

"णिजर्थेनाऽऽप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेव कर्तु"रिति। तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये कर्तरि प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनाऽवस्तानात्तृतीय सिध्यति। उक्तं च--"गुणिक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः। नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाभिधीयते" इति। कर्तुः स्वधर्मेण--तृतीययेत्यर्थः। ननु णिजर्थं प्रति कर्तृत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम्, अन्तरङ्गत्वाच्च। स्वकारकविशिष्टा हि क्रिया णिजर्थेन सम्बध्यते, हेतुमति णिज्विधानात्। कर्तृप्रयोजकस्य हेतुत्वात्। अतएव उपजीव्याऽपि कर्तृसञ्ज्ञा। एवञ्च---"परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च। प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता"। यद्यपि विधिपक्षेऽपि लक्ष्यं निर्बाधमेव, तथापि नियमसूत्रमिदमिति प्राचां ग्रन्थो विरुध्यत इति चेत्। अत्राहुः--णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसञ्ज्ञायाः प्राबल्याद्विप्रतिषेध एव नास्तीति परत्वात्कर्तृत्वसिद्धिरित्येतन्न सङ्गच्छते। अन्तरङ्गत्वेपजीव्यत्वे अपि प्रधानं प्रति प्राबल्यं न प्रयोजयतः, ततश्च नियमार्थत्वेक्तिः प्राचां निर्बाधैवेति। गत्यादिण्यन्तान्क्रमेणोदाहरति--शत्रूनिति। शत्रवः स्वर्गमगच्छन्, तान् श्रीहरिः स्वर्गमगमयदिति--गमेरण्यन्तावस्थायां शत्रवः कर्तारस्ते ण्यन्तावस्थायां कर्म अभवन्। स्वकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्टो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः। एवमग्रेऽप्यूह्रम्। वेदार्थमिति। स्वे=स्वकीया वेदार्थमविदुः, तान् श्रीहरिवेदार्थमवेदयत्। तथा देवा अमृतम् आश्रन्, तानाशयत्। विधिः वेदमध्यैत, तं ब्राह्रआणं वेदमध्यापयत्--अपाठयत्। सलिले पृथ्वी आस्त, तां यो हरिरासयत्स्थापयतिस्म स हरिर्मे गतिरित्यन्वयः। ननु शत्रूण#आमनेन कर्मत्वे कृते कर्मण ईप्सिततमः स्वार्गो, न तु कर्तुरिति कर्तुरीप्सिततमत्वाऽभावात्स्बर्गस्य कर्मत्वं न स्यात्। अत्र केचित्---"गतिबुद्धि---"इति कर्मत्वस्य बहिरङ्गत्वेन ततः पूर्वमेव धात्वर्थव्यापारप्रयुक्तं कर्मत्वं स्वर्गस्य निर्वाधमित्यदोष इति। अन्येतु---"कर्तुरीप्सिततमम्---"इत्यत्र कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम्। स्वातन्त्रे सङ्केतितस्य कर्तृ पदस्य तत्रैव लक्षणा न सङ्गच्छते, एकस्यैकस्मिन्नेवार्थे शक्तिलक्षणोभयाभ्युपगस्य शास्त्रकाराऽसम्मतत्वादिति वाच्यम्, सञ्ज्ञान्तरानुपहितस्वतन्त्रे सङ्केतितस्य सञ्ज्ञान्तरोपहितानुपहितसाधारणे स्वतन्त्रे लक्षणाभ्युपगमे बाधकाऽभावात्। अतएव जिधातोर्जये शक्तिः, प्रकृष्यजये लक्षणा। "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा"इति। तेन प्रजयतीत्यत्र प्रशब्दो द्योतकः, प्रकृष्टजयस्तु जिधातोरेवार्थ इति नैयायिकोक्तिः सङ्गच्छते। नापि कर्तृपदस्य स्वतन्त्रलक्षणायां प्रमाणाऽभावः शङ्क्यः। "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनाम्" इत्युक्त्वा "ण्यन्ते कर्तुश्च कर्मणः"इतिवदतो भाष्यकारस्यैव प्रमाणत्वात्। न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते, येन "ण्यन्ते क्रतुः"इति वचनं सावकाशं स्यादित्याहुः।

नीवह्रोर्न। नीवह्रोरिति। यद्यप्यनयोः प्रपणमर्थो न गतिः, तथापि गतिरपि विशेषणीभूय प्रापणममध्ये प्रविष्टेत्येतावन्मात्रेण प्रा()प्त मत्वा प्रतिषेध उक्तः।

नियन्तृकर्तृकस्य वहेरनिषेधः। नियन्त्रिति। नियन्ता पशिप्रेरकः, न तु सारथिरेवेति। तेन "वाहयति बलीवर्दान्यवा"निति सिध्यति। अस्मादेव भाष्योदाहरणात् "रूढिर्योगमपहरति"इति न्यायोऽत्र न स्वीक्रियते। अनिषेध इति। "प्रयोज्यः कर्मे"ति वक्तव्यमिति फलितोऽर्थः। यैस्तु प्रापणं गतिशब्देन गृह्रते यौर्वा न गृह्रते उभयेषामपीदं वचनमावस्यकम्। "नीवह्रोर्ने"ति वचनं तु यैः प्रापणं गतिशब्देन गृह्रते तेषामनावश्यकमिति बोध्यम्। सूत इति। "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः" इत्यमरः। प्रत्यवसानार्थत्वात्कर्मत्वे प्राप्ते निषेधमाह---।

अदिखाद्योर्न। अदिखाद्योरिति। "अद भक्षणे" "खादृ भक्षणे"। प्राचा तु आदीति पट()ते, तत्तु ण्यन्तावस्थानुकरणमिति बोध्यम्। आदयतीति। "इह निगरणचलनार्थेब्यश्च"इति परस्मैपदनियमो न प्रवर्तते, "अदेः प्रतिषेधः" इथि तस्य निषिद्धत्वात्। तेनाऽक्रत्र्रभिप्राये क्रियाफले "शेषात्कर्तरि"--इति परस्मैपदम्, कत्र्रभिप्राये तु "णिचश्च"इत्यात्मनेपदं

भवत्येवेति बोध्यम्।

भक्षेरहिंसार्थस्य। ननु "गतिबुद्धि--"इति सूत्रेणाऽणौ कर्तृणौ कर्मत्वं विधीयते न तु णौ कर्तुरिति प्राप्तेरेवाऽभावान्निषेधोऽयं व्यर्थ इति चेत्। अत्राहुः--हेतुमण्णिजन्ते विधिरिति निषेधोऽप्यणावित्ययं सन्निधानाद्धेतुमण्णिज्विषय एव, तेन चुरादिणिजन्तेऽपि भक्षयतौ प्राप्तिसत्त्वात्तन्निषेध उपसङ्ख्यात इति। भक्षयतीति। बलीवर्दाः सस्यं भक्षयन्ति। तान् भक्षयतीत्यर्थः। क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा ज्ञेया, तस्यामवस्थायां तेषां चेतनत्वात्।

जल्पति प्रभृति नामुपसङ्ख्यानम्। जल्पपतिपर्भृतीनाममिति। "जप जल्प व्यक्तायां वाचि"। पुत्रो धर्मं जल्पति, तं देवदत्तो जल्पयतीति अण्यन्तावस्थायां पुत्रः कर्ता, ण्यन्तावस्थयां कर्म अभवत्। तथा पुत्रो धर्म भाषते, तंत भाषयति देवदत्तः। नच जल्पतिभाषत्योः शब्दक्रियत्वेन "गतिबुद्धि--"इति सूत्रेणैव सिद्धे उपसङ्ख्यानामिदं व्यर्थमिति भ्रमितव्यम्। "शब्दकर्मणा"मित्यस्य शब्दः कर्मकारकं येषामित्यर्थात्। अन्यथा "वेदमध्यापयद्विधिम्ित्यादेरसिद्धिप्रसङ्गात्। एवं पुत्रो यत्किञ्चिद्विलपति, तं विलापयतीत्याद्यप्यूह्यम्।

दृशेश्च। स्मारयतीति। आध्यानार्थकस्यैव स्मरतेः "घटादयो मितः"इति मित्त्वं, न चिन्तार्थकस्येति भावः।

शब्दायतेर्न। देवदत्तेनेति। "स्मारयत्येनं वनगुल्म"इत्यत्र तु "णेरणौ---"इति सूत्रे भाष्ये प्रयोगादेब कर्मत्वं बोध्यम्। शब्दाययतीति। शब्दं करोतीत्यर्थे "शब्दवैर---"इत्यादीना क्यङ्। ततो हेतुमण्णिच्। धात्वर्थ संगृहीतेति। एतेन "शब्दाययति सैनिकैः रिपू"निति कर्म प्रयुञ्जानाः परास्ताः। न त्वविवक्षितकर्माणोऽपीति। यथा "लः कर्मणि च"इति सूत्रे अविवक्षितकर्माणोऽप्यकर्मका इति गृह्यन्ते, तथैवेहापि यदि गृह्येरन् तदा ओदनादिकर्मणोऽविवक्षायां "पाचयति देवदत्त"मिति स्यात्, न तु देवदत्तेन पाचयतीति। एवं "गत्यार्थाकर्मक---"इति सूत्रेऽप्यविवक्षितकर्माणोऽकर्मका इति न गृह्यन्ते। दत्तवान् पक्ववान् इत्यर्थे दत्तः पक्व इत्यापत्तेः। यत्तु प्राचा--"अयक्रन्दशब्दायह्वेञां न"इत्युक्तं, तदयुक्तम्। अयतेर्निषेधस् निर्मूलत्वेन अणौ कर्तुर्णौ कर्मत्वस्य तत्रेष्टत्वात्। क्रन्दह्वेञोस्तु शब्दक्रियत्वेऽपि शब्दः कर्म कारकं नेति प्राप्तेरेवाऽभावाच्चेतिस्थितं मनोरमायाम्। यद्यपि "श्रुग्रहदृशाम्िति कर्मत्वमुक्तं, तत्र दृशिग्रहणं प्रामाणिकमेव। श्रृणोतेस्तु शब्दकर्मकत्वात्सिद्धम्। ग्राहेर्द्विकर्मकत्वं यद्यपि "अञ्जि ग्रहत्तं जनक#ओ धनुस्तत्िति भट्टिप्रयोगस्य, "अयाचितारं न हि देवदेवमद्रिः सुतां ग्रहयितुं शशाके"ति कालिदासप्रयोगस्य चाऽनुगुणं, तथापि बहूनामसम्मतमेव। अतएव "तं बोधितवान्, सुतां ग्राहयितुम् उद्वाहृत्वेन बोधयितुम्ित्येवमुक्तप्रयोगं समर्थयाञ्चक्रिरे। न च बुद्ध्यर्थत्वं विनापि यथाश्रुतार्थेस एव ग्राहोर्द्विकर्मकत्वमस्त्विति वाच्यम्, तथा हि सति "जायाप्रतिग्राहितगन्धमाल्या"मित्यत्र क्तप्रत्ययेनाऽभिधानं प्रयोज्यकर्मीभूतधेनोः स्यान्न तु गन्दमाल्यकर्मणः, "ण्यन्ते कर्तुश्च कर्मणः"इत्युक्तेः। जायाप्रेरिता हि धेनुर्गन्धमाल्ये प्रतिगृह्णातीति भवत्येव धेनुः प्रयोज्यकर्म। ततश्च "जयया गन्धमाल्ये प्रतिग्राहिता"मिति स्यात्, क्तप्रत्ययानभिहितत्वेन गन्धमाल्यकर्मणि द्वितीयायाः प्रवृत्तेः। सिद्धान्तेः। सिद्धान्ते तु जायया प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः, द्विकर्मकत्वाऽभावेन गन्धमाल्यस्यैव क्तप्रत्ययेनाऽभिहितत्वात्। "यये"ति तृतीया तु णिजर्थं प्रति जायायाः कर्तृत्वेऽपि णिच्प्रकृत्यर्थं प्रतिग्रहं प्रति धेनोः कर्तृत्वादुपपद्यते। एवञ्चेह जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं तत्तत्रीमिति वृत्त्यर्थः। यद्यपि धेनुकर्तृकं जायानिष्ठप्रेरणाविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं तत्कर्मीभूते गन्धमाल्ये इथि विग्रहार्थः, तथाप्यन्यपदार्थान्तरभावेणैव विशेषणविशेष्यभाववैपरीत्येनैकार्थीभावः कल्प्यत इति नास्त्यत्राऽनुपपत्तिरिति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हृक्रोः ६।२ अन्यतरस्याम् ७।२ अणि ७।१ लुप्ता ५२ कर्ता १।१ ५२ स १।१ ५२ णौ ७।१ ५२ कर्म १।१ ४९ कारके ७।१ २३

समासः॥

हृक्रोः इत्यत्र इतरेतरद्वन्द्वः।

अर्थः॥

हृञ्, कृञ् इत्येतयोः धात्वोः, अण्यन्तयोः यः कर्त्ता, सः ण्यन्तावस्थायां विकल्पेन कर्मसंज्ञकः भवति।

उदाहरणम्॥

हरति माणवको भारम्, हारयति माणवकं भारम्, हारयति माणवकेन भारम्। करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन।

काशिका-वृत्तिः

हृक्रोरन्यतरस्याम् १।४।५३

अनि कर्त स णौ इति वर्तते। हरतेः करोतेश्च अण्यन्तयोर् यः कर्ता स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति। हरति भारं मानवकः, हरयति भारं मानवकं, मानवकेन इति वा। करोति कटं देवदत्तः, कारयति कटं देवदत्तं, देवदत्तेन इति वा। अभिवादिदृशोरात्मनेपद उपसङ्ख्यानम्। अभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तं, देवदत्तेन इति वा। पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजानम्, भृत्यैः इति वा। आत्मनेपदे इति किम्? दर्शयति चैत्रं मैत्रमपरः। प्राप्तविकल्पत्वाद् द्वितीयैव। अभिवादयति गुरुं माणवकेन पिता। अप्राप्तविकल्पत्वात् तृतीया एव।

न्यासः

ह्मक्रोरन्तयतरस्याम् , १।४।५३

गत्यर्थादयो निवृत्ताः। तेनोभयत्र विभाषेयम्। यदा हरतिर्गतौ वत्र्तते, अभ्यवहारे वा, करोतिश्चाकर्मणो भवति तदा प्राप्ते। यदा तु हरतिः स्तेयादौ वत्र्तते, करोतिश्च सकर्मको भवति तवाऽप्राप्ते। "उपसंख्यानम्" इति। प्रतिपादनमित्यर्थः। एतच्च प्रकृतत्वात् तत्रेदं प्रतिपादनम्-- "अकथितञ्च" १।४।५१ इत्यतश्चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः। तेनाभिवादिदृशोरप्यात्मनेपदे कर्मसंज्ञा भविष्यतीति। "अभिवादयते" इति। "णितश्च"(१।३।क७४) इत्यात्मनेपदम्। "दर्शयते" इति। अत्रापि "णेरणौ" १।३।६७ इत्यादिना।

बाल-मनोरमा

ह्मक्रोरहन्यतरस्याम् ५३३, १।४।५३

ह्मक्रो। हा च का च ह्मकरौ, तयोरिति विग्रहः। हारयति कारयति वेति। हरति करोति वा कटं भृत्यः, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य कर्मत्वविकल्पः। ह्मक्रोर्गत्यर्थादिष्वनन्तर्भावादप्राप्ते विभाषेयम्। ह्मक्रोरर्थान्तरे तु प्राप्तविभाषा। "अब्यवहारयति सैन्धवान्सैन्धवैर्वा," "विकारयति सैन्धवान्सैन्धवैर्वा"। अत्र अब्यबहरतेर्भक्षणार्थत्वाद्विकारयतेरकर्मकत्वाच्च प्राप्तिः।

अभिवादीति। हेतुमण्ण्यन्तस्याभिपूर्वकवदधातोर्दृशिप्रकृतिकण्यन्तस्य चात्मनेपदिनोऽणौ कर्ता णौकर्म वेत्यर्थः। अभिवादयते इति। अभिवदति=नमस्करोति देवं भक्तः, तं गुरुः प्रेरयतीत्यर्थः। कर्तृगामिति फले "णिचश्चे"त्यात्मनेपदम्। अत्र भक्तस्य प्रयोज्यकर्तुः कर्मत्वविकल्पः। अप्राप्तविभाषेयम्। परसमैपदे तु अभिवादयति देवं भक्तेनेत्येव। पश्यति देवं भक्तः, तं गुरुः प्रेरयति, दर्शयते देवं भक्तं भक्तेन वा। "गतिबुद्धी"त्यत्र बुद्धिग्रहणेन ज्ञानसामान्यवाचिन एव ग्रहणमित्युक्तम्, तथापि "दृशेश्चे"ति नित्यं प्राप्ते विकल्पः।

तत्त्व-बोधिनी

ह्यकोरन्यतरस्याम् ४८०, १।४।५३

ह्यकोः। हा च कता च ह्मकारौ, तयोरिति विग्रहः। हृश्च कृश्च ह्मक्रोरिति वा। प्रथमान्तेन, परिनिष्ठितचविभक्त्या वा विग्रहो इति सिद्धान्तात्। "गतिबुद्धी"त्यादीह नानुवर्तते। तेन उभयत्रविभाषेयम्। अभ्यवपूर्वस्य हरतेर्भक्षणार्थकत्वाद्विकारार्थस्य करोतेश्चाऽकर्मकत्वात् "गतिबुद्धि"इत्यादिना अणौ कर्तुर्णौ कर्मत्वे प्राप्ते, अर्थान्तरे चाऽनयोः सकर्मकत्वादप्राप्तेऽस्यारम्भात्। अप्राप्तावुदाहरणमाह---हारयतीति। हरति करोति वा कटं भृत्य इत्यण्यन्तावस्थायां भृत्यः कर्ता, स एव ण्यन्तावस्थायां कर्माऽभूत्। प्राप्ते तूदाहरणम्--तृणमभ्यवहारयति सैन्धवान्, तृणमभ्यवहारयति सैन्धवैः। विकारयति सैन्धवान्, विकारयति सैन्धवैरिति बोध्यम्। ननु यदि "गतिबुद्धी"त्यादिरिह नानुवर्तेत तदैतदेवं स्यात्, तत्रैव मानं न पश्याम इति चेन्मैवं, "न वेति विभाषा"इति सूत्रे उभयत्रविभाषासु भाष्यकृताऽस्यापि सूत्रस्य गणितत्वेनोक्तशङ्काया अनवतारात्।

अभिवादिदृशोरात्मनेपदे वेति वाच्यम्। अभिवादीति। "वद सन्देशवचने" चुरादिराधृषीयः। अभिपूर्वकत्वान्नमस्कारार्थता। अभिवादयतेरप्राप्तौ, दृशेस्तु प्राप्तावयं विकल्पः। अभिवदति देवं भक्तस्तं प्रेरयत्यन्यः-- अभिवादयते। "णिचश्चे"त्यात्मनेपदम्। परस्मैपदे तु अभिवादयति देवं भक्तेनेत्येव। तथा पश्यति देवं भक्तः, दर्शयते देवं भक्तमित्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वतन्त्रः १।१ कर्ता १।१ ५५ कारके ७।१ २३

अर्थः॥

क्रियायाः सिद्धौ स्वतन्त्रं यत् कारकं, तत् कर्तृसंज्ञकं भवति।

उदाहरणम्॥

देवदत्तः पचति। यज्ञदत्तः पचति।

काशिका-वृत्तिः

स्वतन्त्रः कर्ता १।४।५४

स्वतन्त्रः इति प्रधानभूत उच्यते। अगुणीभूतो, यः क्रियासिद्धौ स्वतन्त्र्येण विवक्ष्यते, तत् कारकं कर्तृसंज्ञं भव्ति। देवदत्तः

पचति। स्थाली पचति। कर्तृप्रदेशाः कर्तृकरणयोस् तृतीया २।३।१८ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

स्वतन्त्रः कर्ता ७०१, १।४।५४

क्रियायां स्वातन्त्र्येण विवक्षितोर्ऽथः कर्ता स्यात्॥

लघु-सिद्धान्त-कौमुदी

स्वतन्त्रः कर्ता ८९६, १।४।५४

क्रियायां स्वातन्त्र्येण विवक्षितोर्ऽथः कर्ता स्यात्॥

न्यासः

स्वतन्त्रः कर्ता। , १।४।५४

अस्त्ययं स्वतन्तरशब्दो बहुव्रीहिः। स्वं तन्त्रं यस्य स स्वतन्त्रः। अस्ति च समासप्रतिरूपको रूढिशब्दः, प्रधानार्थवृत्तिः, यथा-- स्वतन्त्रोऽयमिह देवदत्त इति, प्रधानभूत इति गम्यते। तत्र यदि पूर्वो गृह्येत तदा तन्तुवायस्यैव स्यात्; विस्तृता हि तन्तवस्तन्त्रम्, तच्च तन्तुवायस्यैवास्ति। देवदत्तः पचतीत्यादौ न स्यात्। इतरस्य तु ग्रहणे सर्वत्र भवति। तस्मात् व्याप्तेन्र्यायात् स एव गृह्यत इति मत्वाह-- "स्वतन्त्र इति प्रधानभूतः" इति। यद्येवमप्रधानमपेक्ष्य प्रधानमुच्यत इति यत्राधिकरणादीन्यपराण्यप्रधानानि कारकाणि सन्ति, देवदत्तः काष्ठैरग्निनोदनं स्थाल्यां पचतीत्यादौ तत्रैव स्यात्। यत्र तु तेषामविवक्षा-- आस्ते देवदत्तः, शेते देवदत्त इत्यादौ, तत्र न स्यादिति यो देशयेत् तं प्रत्याह-- "अगुणभूतः" इति। एवं मन्यते-- प्रधानेनागुणभाव उपलक्ष्यते। गुणभावो यत्र नास्ति स कत्र्तेति। कारकान्तराविवक्षायामप्यगुणभावोऽस्त्येवेति सर्वत्र भवति। ननु च सामग्र्यधीना हि क्रियासिद्धिः, एकस्याप्यभावे न सिध्यति, तत् कस्यात्र प्राधान्यं यत्परिग्रहाय स्वतन्त्रग्रहणं क्रियते? इत्याह -- "यः क्रियासिद्धौ" इत्यादि। यद्यपि क्रिय#आसिद्धौ सर्वेषां व्यापारः, तथापि स्वातन्त्र्यं यस्य विवक्ष्यते स एव स्वतन्त्र इत्युत्यते, नान्य इति। देवदत्तः पचतीत्यत्र देवदत्तः कर्त्तृसंज्ञकत्वात् कर्त्तृप्रत्ययेनोच्यते लकारेण॥

बाल-मनोरमा

स्वतन्त्रः कर्ता ५५१, १।४।५४

अथ तृतीया। स्वतन्त्रः कर्ता। कारकाधिकारात्क्रियाजनने स्वातन्त्र्यमिह विवक्षितमित्याह--क्रियायामिति। स्वातन्त्र्यमिह प्राधान्यमिति भाष्ये स्पष्टम्। ननु स्थाली पचतीत्यादौ कथं स्थाल्यादीनां कर्तृत्वं, स्वातन्त्र्याऽभावादित्यत आह--विवक्षितोऽर्थ इति। "विवक्षातः कारकाणि भवन्ती"ति भाष्यादिति भावः। स्वातन्त्र्यं च धात्वर्थव्यापाराश्रयत्वम्। फलानुकूलव्यापारो धात्वर्थः। तत्र पचतीत्यत्र विक्लित्रिरूपफलाश्रये तण्डुलेऽतिव्याप्तिवारणाय व्यापारेति। उक्तं च हरिणा--"धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते।"इति। धातूपात्तव्यापारवतीत्यर्थः।

तत्त्व-बोधिनी

स्वतन्त्रः कर्ता ४९४, १।४।५४

स्वतन्त्रः कर्ता। प्रधानभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यम्। आह च--"धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते"इति। स्थाल्यादीनां वस्तुतः स्वातन्त्र्याऽभावेऽपि "स्थाली पचति काष्ठानि पचन्ती"त्यादिप्रयोगोऽपि साधुरेवेति ध्वनयति---विवक्षितोऽर्थ इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तत्प्रयोजकः १।१ हेतुः १।१ च ० कर्ता १।१ ५४ कारके ७।१ २३

समासः॥

तस्य प्रयोजकः, तत्प्रयोजकः, षष्ठीतत्पुरुषः। निपातनात् समासः॥

अर्थः॥

तस्य स्वतन्त्रकर्तुः यः प्रयोजकः = प्रेरकः, तस्य हेतुसंज्ञा भवति, चकारात् कर्तृसंज्ञा च॥

उदाहरणम्॥

देवदत्तः कटं करोति, तं यज्ञदत्तः प्रयुङ्क्ते -- यज्ञदत्तो देवदत्तेन कटं कारयति॥
काशिका-वृत्तिः
तत्प्रयोजको हेतुश् च १।४।५५

ततिति अनन्तरः कर्ता परामृश्यते। तस्य प्रयोजकस् तत्प्रयोजकः। निपातनात् समासः। स्वतन्त्रस्य प्रयोजको यो ऽर्थः, तत्कारकं हेतुसंज्ञं भवति। चकारात् कर्तृसंज्ञं च। संज्ञासमावेशार्थश्चकारः। कुर्वाणं प्रयुङ्क्ते, कारयति। हारयति। हेतुत्वद् णिचो निमित्तं कर्तृत्वाच् च कर्तृप्रत्ययेन उच्यते। हेतुप्रदेशाः हेतुमति च ३।१।२६ इत्येवम् अदयः।
लघु-सिद्धान्त-कौमुदी
तत्प्रयोजको हेतुश्च ७०२, १।४।५५

कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्॥
न्यासः
तत्प्रयोजको हेतुश्च। , १।४।५५

"तस्य प्रयोजकस्तत्प्रयोजकः" इति। ननु च "कत्तरि च" २।२।१६ इत्यनेन षष्ठीसमासप्रतिषेधे नात्र भवितव्यमित्याह-- "निपातनात्समासः" इति। "प्रयोजकः" इति प्रेरकः = उपदेशकः, व्यापारक इत्यर्थः। न चान्येन प्रयुज्यमानस्य स्वव्यापारे स्वातन्त्रयं हीयते; अन्यथा ह्रकुर्वत्यपि कारयीति स्यात्। प्रयोजकत्वं द्विविधम्-- मुख्यम्, इतरच्च। देवदत्तः कटं कारयीत्यत्र देवदत्तस्य मुख्यम्। भिक्षा वासयतीत्यत्र भिक्षाणां वासहेतुत्वात् प्रयोजनत्वमुपचरितम्, न मुख्यम्। न हि भिक्षा यूयं वसथेत्येवं प्रयुञ्जते। इह च कारकाधिकारे तमब्ग्रहणव्यतिरेकेणातिशयो न विवक्षित इति "साधकतमं करण म्" १।४।४२ इत्यत्र तमब्ग्रहणेन ज्ञापितमेतत्। तेन यस्यापि प्रयोजगत्वमुपचरितम्, न मुख्यम्, तस्यापि हेतुसंज्ञा भवत्येव। "संज्ञासमावेशार्थश्चकारः" इति। असति तस्मिन्नेकसंज्ञाधिकारादत्र कर्तृसंज्ञा न स्यात्। अतः संज्ञासमावेशार्थश्चकारः क्रियते। "हेतुत्वात्" इत्यादिना संज्ञाद्वयस्य प्रयोजनं दर्शयति। प्रयोजकव्यापारे हि "हेतुमति च" ३।१।२६ इति णिच् विधीयते। तस्य हेतुत्वं प्रयोजकस्य हेतुत्वे सत्युपपद्यते। हेतुत्वात्प्रयोजको णिचो निमित्तं भवति। कर्तृप्रत्येन न लकारेणाभिधानं कर्तृसंज्ञायां सत्यां भवतीति कर्तृत्वत् कर्तृप्रत्ययेन लकारेणोच्यत इति॥
बाल-मनोरमा

तत्प्रयोजको हेतुश्च ४०३, १।४।५५

अथ "हेतुमति चे"ति णिज्विधिं वक्ष्यन् हेतुसंज्ञामाह -- तत्प्रयोजको हेतुश्च। "स्वतन्त्रः कर्ते"ति पूर्वसूत्रोपात्तः कर्ता तच्छब्देन परामृश्यते। तस्य कर्तुः प्रयोजकः प्रवर्तयिता - तत्प्रयोजकः। तदाह -- कर्तुः प्रयोजको हेतुसंज्ञ इति। चकारः पूर्वसूत्रोपात्तां कर्तृसंज्ञां समुच्चिनोति। तदाह -- कर्तृसंज्ञश्चेति।देवदत्तः पचति, तं प्रेरयति यज्ञदत्त इत्यत्र देवदत्तस्यैव पाकानुकूलव्यापारात्मकपचधात्वर्थाश्रयत्वरूपक्रतृत्वसत्त्वात्प्रयोजकस्य तदभावादिह कर्तृसंज्ञाविधिः। प्रयोजकस्य प्रयोज्यकत्र्रा अन्यथासिद्धत्वाद्धेतुत्वाऽप्राप्तौ हेतुसंज्ञाविधिः।

तत्त्व-बोधिनी
तत्प्रयोजको हेतुश्च ३५२, १।४।५५

तत्प्रयोजको हेतुश्च। तच्छब्देन "स्वतन्त्रः कर्ते"ति पूर्वसूत्रोपात्तः कर्ता कपरामृश्यते।तस्य = कर्तुः प्रयोजकः = प्रेरकः, तद्व्यापारानुकूलव्यापारवानित्यर्थः। चकार एकसंज्ञाधिकारबाधनार्थस्तदाह-- हेतुसंज्ञः कर्तृसंज्ञश्चेति। हेतुसंज्ञायाः प्रयोजनं "भीस्म्योर्हेतुभये", "भियो हेतुभये षु" गित्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः। कर्तृसंज्ञायास्तु "लः कर्मणि च भावे चे"ति सूत्रेण प्रयोजके वाच्ये लकारादयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्राक् ० रीश्वरात् ५।१ निपाताः १।३ ९७

अर्थः॥

{अधिरीश्वरे (१।४।९६)} इत्येतस्मात् प्राक् निपातसंज्ञाः भवन्ति, इति अधिकारः वेदितव्यः॥
च, वा, ह, अह इत्यादयः {चादयोऽसत्त्वे (१।४।५७)} इत्यस्मात् निपातसंज्ञा भूत्वा, {स्वरादिनिपातम् अव्ययम् (१।१।३६)} इत्यस्मात् अव्ययसंज्ञा भवति। ततः {अव्ययादाप्सुपः (२।४।८२)} इत्यस्मात् सुप् इत्यस्य लोक् (लोपः) भवति। तथा यत्र यत्र निपातसंज्ञा।

उदाहरणम्॥

च, वा, ह, अह॥
काशिका-वृत्तिः
प्राग्रीश्वरान् निपाताः १।४।५६

अधिरीश्वरे १।४।९६ इति वक्ष्यति। प्रागेतस्मादवधेर्यानित ऊर्ध्वम् अनुक्रमिष्यामः, निपातसंज्ञास्ते वेदितव्याः। वक्ष्यति चादयो ऽसत्त्वे १।४।५७, च, वा, ह, अह। प्राग्वचनं संज्ञासमावेशार्थम्। गत्युपसर्गकर्मप्रवचनीय। संज्ञाभिः सह निपातसंज्ञा समाविशति। रेफोच्चारणम् इश्वरे तोसुन्कसुनौ ३।४।१३ इत्ययम् अवधिर्मा विज्ञायि इति। रीश्वराद्रीश्वरान् मा भूत् कृन्मेजन्तः परो ऽपि सः। समासेष्वव्ययीभावो लौकिकम् च अतिवर्तते।
न्यासः

प्राग्री�आरान्निपाताः। , १।४।५६

च,वा,ह, अह इत्यत्र निपातसंज्ञायां सत्याम् "स्वरादिनिपातमव्ययम्" १।१।३६ इत्यव्ययसंज्ञा भवति। "निपाता आद्युदात्ता भवन्ति" (फि।सू।४।८०) इत्याद्युदात्तत्वञ्च। अथ किमर्थं प्राग्ग्रहणम्? यावता पञ्चम्युच्चारणसामथ्र्यादेव प्रागित्यस्य दिक्छब्दस्याध्याहारो भविष्यति। न च "पराम्" इत्ययमपि दिक्छब्दोऽस्ति। अतो नाध्याहार आशङ्कनीयः। तदध्याहारे हि "चादयोऽसत्त्वे" १।४।५७ इत्येवमादयो योगा निपातसंज्ञासम्बन्धाभावादसम्बद्धाः स्युः। तस्मात् प्रागित्येतदेवाध्याहरिष्यते। तत् किं प्रागवचनेन? इत्याह-- "प्राग्वचनम्" इत्यादि। एका संज्ञेत्यनुवत्र्तते। निपातसंज्ञा चादिषु प्रादिषु वा क्रियायोगे चरितार्था। तत्रासति प्राग्वचने निपातसंज्ञाया उपसर्गादिसंज्ञाभिरनवकाशाभिर्बाध्यमानत्वात् ताभि) सह तस्याः समावेशो न स्यात्। इष्यते चात्र, तदर्थं प्राग्वचनम्, तस्मिन् सत्येवं सम्बन्धः क्रियते-- री()आरात यावन्तः प्राग्व्यवस्थितास्ते सर्वे निपातसंज्ञका भवन्ति, निपाताश्च सन्त उपसर्गादिसंज्ञका इति। तेन निमित्तमेव निपातसंज्ञोपसर्गसंज्ञानां भवति। न च निमित्तिना निमित्तं व्याहन्यते, अन्यथा हि तस्य निमितत्वमेव न स्यात्। अध्याह#ऋते तु प्राक्शब्दे री()आराद्ये प्राग्व्यवस्थितास्ते सर्वे निपातसंज्ञका भवन्तीत्येषोऽर्थोऽभिमतः स्यात्, न तु निपाताः सन्त उपसर्गादिसंज्ञका इत्येषोऽप्यर्थो लभ्यते। सूत्रोपात्तो तु प्राक्()शब्द एषोऽर्थो लभ्यत एव; अन्यथा तस्य वैयथ्र्यं स्यात्। अथ किमर्थं रेफादिक ई()आरशब्दो गृह्तते-- प्राग्री()आरादिति, न च प्राग्री()आरादित्येवोच्येत, प्रत्यासत्तेरनन्तर एव ही()आरशब्दो ग्रहीष्यत इत्यत आह-- "री()आराद्वी()आरात्मा भूत" इति। रेफसहित ई()आरो री()आरः। शाकपार्थिवादित्वान्मयूरव्यंसकादित्वाद्वा समासः। री()आरादित्युच्यमाने वी()आरान्मा भूत्, "अधिरी()आरे" १।४।९६ इत्यस्यैवे()आरशब्दस्य ग्रहणं यथा स्यात्। "ई()आरे तोतुन्कसुनौ" ३।४।१३ इत्यत्र यो वी()आरशब्दस्तस्य ग्रहणं मा भूत्। यस्य ग्रहणे बहूनां संज्ञा भवत्यतो व्याप्तेन्र्यायादस्यैव ग्रहणं स्यात। ननु च वकारस्तत्र नास्त्येव, तत् किमुच्यते वी()आरान्मा भूदिति? एवं मन्यते-- यदा सूत्राणि संहितया पठ()न्ते-- "शकि णमुल्कमुलावी()आरेतोसुन्कसुनौ" (३।४।१२,१३) इति तदा लौशब्दस्य ग्रहणे न प्रयोजकम्। यद्यपि परस्ये()आरशब्दस्य ग्रहणे तन्निबन्धना व्याप्तिरस्ति, तथाप्यनन्तरस्यैवे()आरशब्दस्य ग्रहणं भविष्यति, न परस्य; कथम्? ज्ञापकात्; यदयं "कन्मेजन्तः" १।१।३८ इति कृतो मान्तस्यैजन्तस्याव्ययसंज्ञा शास्ति तज्ज्ञापयति-- अनन्तरस्ये()आरशब्दस्य ग्रहणं नेतरस्येति; अन्यथा हि णमुलादीनां निपातत्वादेवाव्यव्यसंज्ञा सिद्धेति "कृन्मेजन्तः" १।१।३८ इति वचनमर्थकं स्यात्, नैतदस्ति ज्ञापकम्; यस्मात् "ई()आरे तोसुन्कसुनौ" ३।४।१३ इत्यस्मात् परोऽपि कृदेजन्तो मान्तश्चास्ति। "कृत्यार्थे तवैकेन्केन्यत्वनः" ३।४।१४ "आभीक्ष्ण्ये णमुल च" ३।४।२२ इत्येवमादिः। तत्कथं "कृन्मेजन्तः" (१।१।३९) इत्येत ज्ञापकं स्यात्? एवं तर्हि यदयमव्ययीभावस्य "अव्ययीभावश्च" १।१।४० इत्यव्ययसंज्ञां शास्ति, तज्ज्ञापयति-- अनन्तरो य ई()आरशब्दस्तस्य ग्रहणमिति। अन्यथा हि "अव्ययीभावश्च" १।१।४० इत्येदपार्थकं स्यात्; निपातत्वादेवाव्ययीभावस्याव्ययसंज्ञायाः सिद्धत्वात्। अस्यापि ज्ञापकतामपाकर्त्तुमहा-- "समासेष्वव्ययीभावः" इति। सर्वेषां समासानां निपातत्वादव्ययसंज्ञायां प्राप्तायां "अव्ययीभावश्च" १।१।३८ इत्येतद्वचनं नियमार्थं स्यात्-- समासेषु तत्पुरुषादिषु मध्येऽव्ययीभाव एवाव्ययसंज्ञो भवति, नान्य इति। एवं तर्हि लौकिकन्यायादनन्तरस्यैवे()आरशब्दस्य ग्रहणं भविष्यति। लोके हि "ओदकान्तं प्रियं प्रोथमनुव्रजेत्" इति य एवानन्तर उदकान्तस्तमेव गत्वा तत एव बान्धवा निवत्र्तन्ते, न व्यवहितात्। तस्मादिहाप्यनेनैव न्यायेनानन्तरादेव()आरशब्दान्निपातसंज्ञा निवर्तिष्यत इत्यत आह-- "लौकिकं चातिवत्र्तते" इति। लौकिकमपि न्यायं लोकोऽतिक्रम्य वत्र्तते, यस्मात् द्वितीयमप्यदकान्तं स्नेहात् कथाप्रसङ्गद्वा गत्वा निवत्र्तन्ते बान्धवाः। तदेवं रेफाधिक ई()आरशब्द उच्चार्यते। तेन वी()आरान्मा भूदिति स्थितमेतत्॥

बाल-मनोरमा

प्राग्री�आरान्निपाताः २१, १।४।५६

प्रागी()आरान्निपाताः। प्रथमस्य चतुर्थपादे "तत्प्रयोजको हेतुश्चे"त्यनन्तकमिदं सूत्रम्। "री()आर"शब्दः "अधिरी()आरे" इति सूत्रैकदेशस्य अनुकरणम्। अनुकरणत्वान्नापशब्दः। अत एव "प्रत्यक्षोपजीव्यत्वा"दिति चिन्तामणिवाक्यस्य "प्रत्यक्षविती"ति प्रतीकग्रहणं तद्व्याख्याने दृश्यते। "इतः प्रभृति अधिरी()आर इति एतत्पादीयोपरितनसूत्रे री()आरशब्दात् प्राक्निपातसंज्ञकाः प्रत्येतव्या इत्यर्थः। निपातपदमनुवर्तत इति यावत्। रेफविशिष्टग्रहणं किम्?। "ई()आरे तोसुन्कसुनौ" इति तृतीयाध्यायस्थस्यावधित्वं मा भूत्। यदि तु प्रथमातिक्रमणे कारणाभावादधिरी()आर इत्यस्यैवावधित्वं तदा सरेफग्रहणं स्पष्टार्थम्।

तत्त्व-बोधिनी
प्राग्री�आरान्निपाताः २०, १।४।५६

प्राग्री()आरात्। रेफविशिष्टग्रहणं किम्?,ी()आरे तोसुन्कसुनौ" इत्यस्य व्याप्तिन्यायेनावधित्वं मा भूत्। यदि तु प्रत्यासत्त्यैव "अधिरी()आरे" इत्यस्यावधित्वसिद्धिरित्युच्यते तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्तु।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चादयः १।३ असत्त्वे ७।१ ५८ निपाताः १।३ ४६

समासः॥

च आदिः येषां, ते चादयः, बहुव्रीहिः।
न सत्त्वम्, असत्त्वं, तस्मिन् असत्त्वे नञ्तत्पुरुषः।

अर्थः॥

चादयः निपातसंज्ञकाः भवन्ति, यदि सत्त्वे अर्थे (द्रव्यवाचिनः) न वर्तन्ते॥

उदाहरणम्॥

च, वा, ह, एव॥
काशिका-वृत्तिः
चाऽदयो ऽसत्त्वे १।४।५७

चाऽदयो निपातसंज्ञा भवन्ति, न चेत् सत्त्वे वर्तन्ते। प्रसज्यप्रतिषेधो ऽयम्। सत्त्वम् इति द्रव्यम् उच्यते। च। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। सूपत्। कूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। यत्र। नह। हन्त। माकिम्। नकिम्। माङ्। माङो ङकारो विशेषणार्थः, माङि लुङ् ३।३।१७५ इति। इह न भवति, मा भवतु, म भविष्यति। नञ्। यावत्। तावत्। त्वा। त्वै। द्वै। रै। श्रौषट्। वौषट्। स्वाहा। वषट्। स्वधा। ओम्। किल। तथा। अथ। सु। स्म। अस्मि। अ। इ। उ। ऋ। ऌ। ए। ऐ। ओ। औ। अम्। तक्। उञ्। उकञ्। वेलायाम्। मात्रायाम्। यथा। यत्। यम्। तत्। किम्। पुरा। अद्धा। धिक्।

हाहा। हे। है। प्याट्। पाट्। थाट्। अहो। उताहो। हो। तुम्। तथाहि। खलु। आम्। आहो। अथो। ननु। मन्ये। मिथ्या। असि। ब्रूहि। तु। नु। इति। इव। वत्। चन। बत। इह। शम्। कम्। अनुकम्। नहिकम्। हिकम्। सुकम्। सत्यम्। ऋतम्। श्रद्धा। इद्धा। मुधा। नो चेत्। न चेत्। नहि। जातु। कथम्। कुतः। कुत्र। अव। अनु। हाहौ। हैहा। ईहा। आहोस्वित्। छम्बट्। खम्। दिष्ट्या। पशु। वट्। सह। आनुषक्। अङ्ग। फट्। ताजक्। अये। अरे। चटु। बाट्। कुम्। खुम्। घुम्। हुम्। आईम्। शीम्। सीम्। वै। उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः। उपसर्गप्रतिरूपकाः अवदत्तम् विदत्तं च प्रदत्तं च अदिकर्मणि। सुदत्तम् अनुदत्तं च निदत्तम् इति चेष्यते। अच उपसर्गात् तः ७।४।४७ इति तत्वम् न भवति। दुर्नीतम्। दुर्नयः। दुर्निर्णयः। उपसर्गात् ८।४।१४ इति णत्वं न भवति। असत्वे इति किम्? पशुर् वै पुरुषः। पशुः पुरोडशः निपातप्रदेशाः स्वराऽदिनिपतम् अव्ययम् १।१।३६ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

चादयोऽसत्वे ५३, १।४।५७

अद्रव्यार्थाश्चादयो निपाताः स्युः॥

न्यासः

चादयोऽसत्त्वे , १।४।५७

"असत्त्वे" इति। पर्युदासोऽयं वा स्यात्, प्रसज्यप्रतिषेधो वा? तत्र यद्ययं पर्युदासः स्यात्, तदा सत्त्वादन्यत्र वत्र्तमानाश्चादयो निपातसंज्ञका भवन्तीत्ेयषः सूत्रार्थः स्यात्। ततश्च पशुशब्दस्य चादिपरिपठितस्य जातिव्यवच्छिन्ने द्रव्ये वत्र्तमानस्य निपातसंज्ञा स्यात्। यो हि जातिविशिष्टे द्रव्ये वत्र्तते, स जातिद्रव्यसमुदायात्मकमर्थमाह। यश्चैवंविधोऽर्थः स द्रव्यात् केवलादन्यो भवति। निपातसंज्ञायां सत्यां पशुरिति सविभक्तिकस्य श्रवणं न स्यात्। प्रसज्यप्रतिषेधे त्वेष दोषो न भवति। तत्र हि यत्र द्रव्यगन्धोऽप्यस्ति तत्र सर्वत्र प्रतिषेधेन भवितव्यम्। अस्ति चेह द्रव्यगन्धः। पशुत्वजात्याश्रितस्य द्रव्यस्यापि पशुशब्देनाभिधानात्। तस्मात् प्रसज्यप्रतिषेध एवायं युक्त इत्यालोच्याह-- "प्रसज्यप्रतिषेधोऽयम्" इति। क्व तर्हि वत्र्तमानः पशुशब्दोऽसत्त्ववचनो भवति? यत्र वृत्तौ निपातसंज्ञां लभते दृश्यर्थे-- यथा, लोधं नयन्ति पशु मन्यमाना इति। अत्र दृश्यर्थेन पशुशब्देन मननं विविष्यते। दर्शनमेतन्मननम्, सम्यग्ज्ञानमित्यर्थः। सत्त्वशब्दोऽयमिह सत्तायां वत्र्तत इति कस्यचिद्भ्रान्तिः स्यात्, अतस्तन्निराकर्तुमाह-- "सत्त्वमिति च द्रव्यमुच्यते" इति। चशब्दोऽवधारणे। द्रव्यमेव न सत्तेत्यर्थः। यदि ह्यत्र सत्तवशब्देन सत्तोच्यते, प्रतिषेधोऽनर्थकः स्यात्? न हि चादिषु मध्ये शब्दः सत्तावाची कश्चिदस्ति। तस्मादद्रव्यमेवोच्यते। इदं तर्हि सर्वनामप्रत्यवमर्शयोग्यो योऽर्थस्तद्()द्रव्यमिति। तथा चोक्तम्-- वस्तूपलक्षमं यत्र सर्वनाम प्रयुज्यते। द्रव्यमित्यच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ इति। भेद्यत्वेन विशेष्यत्वेनेत्यर्थः। अत एवावसीदति यत्र गुणो विशेषणभावेनेति सत्त्वं तद्()द्रव्यमुच्यते। "चण्" इति पठ()ते। तस्य णकारो विशेषार्थः "निपातैर्यद्यदिहन्तकुविन्नेकच्चेण्कच्चिद्यत्रयुक्तम्" ८।१।३० इति, स तु चेच्छब्दस्यार्थे वत्र्तते। यत्र" इति पठ()ते। तस्य "तद्धितश्चासर्वविभक्तिः" १।१।३७ इत्यव्ययसंज्ञा सिद्धैव। "निपातैर्यद्यदिहन्तः" ८।१।३० इति विशेणणार्थं निपात संबोध्यते। असति निपातत्वे "त्रैङ पालने" (धा।पा।९६५) यं त्रायत इति यत्र इत्यस्य "आतोऽनुपसर्गे कः" ३।२।३ इति कप्रत्ययस्य ग्रहणं स्यात्। "नञ्()" इति पठ()ते; नञो ञकारः "नलोपोः नञः" ६।३।७२ इति विशेषणार्थः। "नलोपो नञ्" इत्युच्यमाने पामनपुत्र इत्यत्रापि स्यात्, यदि तत्र "अलुगुत्तरपदे" ६।३।१ इत्युत्तरपदग्रहण पूर्पपदं नशब्देन विशेष्यते-- नान्तस्य पूर्वपदस्येति। अथ तु पूर्वपदेन विशेष्यते-- (सेए इन् ओथेर् तेक्ष्त्)पगे नो।२०६) उत्तरसंज्ञीत्तरसूत्रे कृता संज्ञोपसर्गसंज्ञा। तस्या विशेषणं व्यवच्छेदः प्रादिभ्योऽन्यस्माद्व्यावर्तनमुत्तरसंज्ञा मा भूत्" इति। एकयोगे हि सति यथा प्रादीनामुपसर्गसंज्ञा भवति तथा चादीनामपि स्यात्। अतः प्रादीनामेवोपसर्गसंज्ञा यथा स्याच्चादीनां मा भूदित्येवमर्थं पृथग्योगः क्रियते। "पराः सेनाः" इति। सेनायाः

द्रव्यत्वात् तत्र वत्र्तमानस्य पराशब्दस्येह ग्रहणं न भवति। परा उत्कृष्टाः परदेशस्थिता वा। यत्र त्वेकवचनं पठ()ते-- परा सेनेति, तत्र रूपोदाहरणं वेदितव्यम्। द्विवचनबहुवचनयोस्तु निपातत्वादव्ययसंज्ञायां सत्यां विभक्तेर्लुक्स्यात्॥

बाल-मनोरमा

चादयोऽसत्त्वे २२, १।४।५७

चादयोऽसत्त्वे। च आदिर्येषां ते चादयो गणपाठसिद्धाः। निपाता इत्यधिकृतम्। "सत्त्व"शब्देन द्रव्यमुच्यते। "द्रव्यासुव्यवसायेषु सत्त्वम्" इत्यमरः। लिङ्गसङ्ख्याकारकान्वितं द्रव्यम्। चाद्यर्थाः समुच्चयादयो यदा चादिभिर्गम्यन्ते, तदा लिङ्गाद्यन्विता न भवन्ति, यदा समुच्चयादिशब्दगम्यास्तदा लिङ्गाद्यन्विताः, शब्दस्वाभाव्यात्। न सत्त्वम् असत्त्वम् = अद्रव्यं। तत्र वाचकतया विद्यमानाश्चादयो निपातसंज्ञकाः स्युरित्यर्थः। तदाह--अद्रव्यार्था इति। असत्त्वे किम्? छागः पशुः। चादौ पठितस्यापि पशुशब्दस्य अत्र द्रव्यवाचित्वान्न निपातत्वम्। इह तु स्यादेव-पुष्टं पशु मन्यते। इह पशु इति सम्यगर्थे।

तत्त्व-बोधिनी

चादयोऽसत्त्वे २१, १।४।५७

चादयः। अद्रव्यार्थाः किम्?, पशुः। लिङ्गसङ्ख्यान्वितं द्रव्यम्। इह तु स्यादेव-"लोधं नयन्ति पशु मन्यमानाः"। "पशु" इति सम्यगर्थे।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रादयः १।३ ५९ उपसर्गाः १।२ क्रियायोगे ७।१ ७८ असत्त्वे ७।१ ५७ निपाताः १।३ ४६

समासः॥

प्र आदिर्येषां ते प्रादयः, बहुव्रीहिः।
क्रियाया योगः क्रियायोगः तस्मिन्, षष्ठीतत्पुरुषः।

अर्थः॥

असत्त्ववाचिनः प्रादयो निपातसंज्ञका भवन्ति, ते च प्रादयः क्रियायोगे उपसर्गसंज्ञकाश्च भवन्ति।

उदाहरणम्॥

प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप॥
क्रियायोगे - प्रणयति, परिणयति, प्रणायकः।

काशिका-वृत्तिः

प्राऽदयः १।४।५८

प्राऽदयो ऽसत्त्वे निपतसंज्ञा भवन्ति। प्र। परा। अप। सम्। अनु। अव। निस्। निर्। रुस्। दुर्। वि। आङ्। नि। अधि। अपि।

अति। सु। उतभि। प्रति। परि। उप्। पृतग्योगकरनम् उत्तरसंज्ञाविशेषणार्थम्। उपसर्गाः क्रियायोगे १।४।५८ इति चाऽदीनाम् उपसर्गसंज्ञा मा भूत्। असत्त्वे इत्येव, परा जयति सेना।

काशिका-वृत्तिः

उपसर्गाः क्रियायोगे १।४।५९

प्राऽदयः क्रियायोगे उपसर्गसंज्ञा भवन्ति। प्रणयति। परिणयति। प्रणायकः। परिणायकः। क्रियायोगे इति किम्? प्रगतो नायको ऽस्माद् देशात्, प्रनायको देशः। मरुच्छाब्दस्य च उपसङ्ख्यानम् कर्तव्यम्। मरुद्भिर् दत्तो मरुतः। संज्ञाविधानसामर्थ्यादनजन्तत्वे ऽपि अच उपसर्गात् तः ७।४।४७ इति तत्त्वं भवति। श्रच्छब्दस्य उपसङ्ख्यानम्। आतश्चोपसर्गे ३।३।१०६ इति अङ् भवति श्रद्धा। उपसर्ग। प्रदेशाः उपसर्गे घोः किः ३।३।९३ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

प्रादयः ५४, १।४।५८

एतेऽपि तथा॥

लघु-सिद्धान्त-कौमुदी

उपसर्गाः क्रियायोगे ३५, १।४।५८

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव निस् निर दुस् दुर वि आङ् नि अधि अपि अति सु उत् अभि प्रति पर उपि - एते प्रादयः॥

न्यासः

उपसर्गाः क्रियायोगे। , १।४।५८

"प्रणयति" इति। प्रशब्दस्योपसर्गत्वात् "उपसर्गादसमासेऽपि णोपदेशस्य" ८।४।१४ इति णत्वम्। "प्रनायको देशः" इति। अत्रनयनक्रियया प्रशब्दस्य योगो नास्तीत्युपसर्गसंज्ञा न भवति। ननु चात्रापि गमिक्रियया योगोऽस्त्येवेति स्यादेव तस्योपसर्गसंज्ञा, नेतदस्ति; क्रियायोगग्रहणं ह्वेवमनर्थकं स्यात्। कथम्? प्रादीनां क्रियायोगाव्यभिचारात्; तस्मात् क्रियायोगग्रहणसामर्थ्याद्यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्ुयपसर्गसंज्ञका भवन्ति, नान्यं प्रति। न चेह नयनक्रियया युक्तः प्रशब्दः, किं तर्हि? गमिक्रिययेति नयतिं प्रत्युपसर्गसंज्ञको न भवति। "मरुच्छब्दस्योपसंख्यानम्" इति। तत्वविधाविति। शेषः; अन्यथा हि "निपाता आद्युदात्ताः" (फि।सू।४।८०) "उपसर्गाश्चाभिवर्जम्" (फि।सू।४।८१) इत्याद्युदात्तत्वमपि स्यात्। अन्तोदात्तश्चेष्यते मरुच्छब्दः। उपसंख्यानशब्दस्य प्रतिपादनमर्थः; मरुच्छब्दस्योपसर्गसंज्ञायाः प्रतिपादनं कर्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्-- "उपसर्गाः" इति योगविभागः क्रियते। अत्र च "प्रादयः" इति नाभिसम्बध्यते। तेन मरुच्छब्दस्य तत्वविधावुपसर्गसंज्ञा भवतीति। अत एव योगविभागात् श्रच्छब्दस्याङविधावन्तः शब्दस्याङ्गिविधिणत्वेषूपसर्गसंज्ञा भवतीति वेदितव्यम्। योगविभागस्येदं लिङ्गम् "प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः" ५।२।१००, "तिरोऽन्तर्धौ" १।४।७० इति च निर्देशः। ततः "क्रियायोगे" इति द्वितीयो योगः। अत्र च "प्रादयः" इति सम्बध्यते। किमर्थमिदम्? पूर्वेणैव सिद्धमिति पूर्वयोगस्यासर्वविषयत्वाज्ञापनार्थम्, तेन नातिप्रसङ्गः। प्रादीनामक्रियायोग उपसर्गसंज्ञा मा भूदित्येवमर्थञ्च। "मरुत्तः" इति। "अच उपसर्गात्तः" ७।४।४७ इति क्तप्रत्यये कृते द्वितकारनिर्देशाद्दवातेः सर्वादेशः। ननु चसत्यामुपसर्गसंज्ञयां करुच्छब्दस्यानजन्तत्वात् तत्वेन न भवितव्यमित्यत आह-- "संज्ञाविधान सामर्थ्यात्" इत्यादि। यथा ह्रुपसरज इत्यत्र डित्करणसामर्थ्यादभस्यापि टिलोपो भवति, तथेहाप्यनजन्तादपि तत्वं भविष्यति; अन्यथा हीदं वचनमपार्थकं स्यात्। मरुच्छब्दस्योपसर्गसंज्ञाया अन्यकार्याभावादिति भावः। "श्रच्छब्दस्योपसंख्यानम्" इति। अत्राप्युपसंख्यानशब्दस्य स एवार्थः। प्रतिपादनमपि

तदेव। ननु च भिदादिपाठादेव हि श्रद्धेति सिद्धम्;तत्कथं तत्सिद्धये श्रच्छब्दस्योपसर्गसंज्ञा क्रियते? एवं मन्यते- अनार्षस्तत्र पाठ इति॥

बाल-मनोरमा

प्रादयः २३, १।४।५८

प्रादयः। असत्त्व इत्यनुवर्तते, निपाता इति च। तदाह--अद्रव्येति। तथेति। निपातसंज्ञका इत्यर्थः।

बाल-मनोरमा

उपसर्गाः क्रियायोगे २४, १।४।५८

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ गतिः १।१ ७८ च ० प्रादयः १।३ ५८ क्रियायोगे ७।१ ५८

अर्थः॥

प्रादयः क्रियायोगे गतिसंज्ञकाश्चापि भवन्ति।

उदाहरणम्॥

प्रकृत्य, प्रकृतम्, यत् प्रकरोति।

काशिका-वृत्तिः

गतिश् च १।४।६०

गतिसंज्ञकाश्च प्राऽदयो भवन्ति क्रियायोगे। प्रकृत्य। प्रकृतम्। यत् प्रकरोति। योगविभाग उत्तरार्थः। उत्तरत्र गतिसंज्ञा एव यथा स्यात्। उपसर्गसंज्ञा मा भूत्। ऊरीस्यातित्यत्र उपसर्गप्रादुर्भ्याम् अस्तिर् यच्परः ८।३।८७ इति षत्वं प्रसज्येत। चकरः संज्ञासमावेशार्थः। प्रणीतम्। अभिषिक्तम्। गतिरनन्तरः ६।२।४९ इति स्वरः, उपसर्गात् ८।४।१४ ८।३।६५ इति णत्वषत्वे च भवतः। कारिकाशब्दस्य उपसङ्ख्यानम्। कारिकाकृत्य। कारिकाकृतम्। यत् कारिका करोति। पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम्। पुनरुत्स्यूतं वासो देयम्। गतिर् गतौ ८।१।७० इति निघातो भवति। चनो हितः। गतिरनन्तरः ६।२।४९ इति स्वरः। गतिप्रदेशाः कुगतिप्राऽदय २।२।१८ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

गतिश्च २०२, १।४।५९

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। (गतिकारकेतरपूर्वपदस्य यण् नेष्यते)। शुद्धधियौ॥

न्यासः

गतिश्च।, १।४।५९

"प्रकृत्य" इति। गतिसंज्ञायां सत्यां "कुगतिप्रादयः" २।२।१८ इति समासः। "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ७।१।३७ इति ल्यप्। "प्रकृतम्" इति। "क्ते च" ६।२।४५ इत्यनुवर्तमाने "गतिरनन्तरः" ६।२।४९ इति प्रकृतिस्वरेणाद्युदात्तः प्रशब्दः।

"यत्प्रकरोति" इति। प्रशब्दादनन्तरस्य "तिङ्ङतिङः" ८।१।२८ इति निघाते प्राप्ते "निपातैर्यद्यदि" ८।१।३० इत्यादिना प्रतिषेधे तिपः पित्त्वादनुवदात्तत्वम्। "सतिशिष्टस्वरस्य बलीयस्त्वमन्यत्र विकरणस्वरेभ्यः" (वा; ९;६।१।१५८) इति विकरणस्वरस्य प्रत्ययाद्युदात्तत्वं न भवति। करोतेरेव तु भवति-- "धातोः" ६।१।१५६ इति। शेषमनुदात्तं भवति। प्रशब्दस्य "उपसर्गाश्चाभिवर्जम्" (फि।सू।४।८१) इत्याद्युदात्तत्वे प्राप्ते "गतिर्गतौ" ८।१।७० इति निघातेऽनुवर्तमाने "तिङि चोदात्तवति" ८।१।७१ इति करोतिशब्दे तिङन्त उदात्तवति परतोऽनुदात्तत्वं भवति। तत्र हि "पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः" ८।१।६७ इत्यतोऽनुदात्तमिति वर्तते। एतच्च प्रयोजनत्रयमुत्तरत्र गतिसंज्ञाया वेदितव्यम्। अथ किमर्थो योगविभागः, न गतिग्रहणं पूर्वयोगग एव क्रियते? इत्यत आह- "योगविभाग उत्तरार्थः" इति। "उत्तरत्र " इत्यादिना योगविभागस्योत्तरार्थतां दर्शयति। यद्युत्तरत्राप्युपसर्गसंज्ञा स्यात्, तदा किं स्यादित्यत आह-- "ऊरीस्यादित्यत्र " इत्यादि। "चकारः संज्ञासमावेशार्थः" इति। असति चकार एकसंज्ञाधिकारादेकत्र संज्ञाद्वयस्य विधानात् पर्यायः स्यात्, न समावेशः। "प्रणीतम्" इत्यादिना संज्ञासमावेशस्य फलं दर्शयति। "गतिरनन्तर इति स्वरः" इति। उदाहरणद्वयेऽपि "उपसर्गादिति णत्वषत्वे भवतः" इति। "प्रणीतम्" इति। "उपसर्गादसमासेऽपि णोपदेशस्य" ८।४।४३ इति णत्वम्। "अभिषिक्तम्" इति। "उपसर्गात्सुनोति" ८।३।६५ इत्यादिना षत्वम्। "कारिका" इत्यादि। धात्वर्थनिर्देश एतदुपसंख्यानं कत्र्तव्यम्। योऽन्यः कत्र्तरि कारिकाशब्दो ण्वुलन्तः, तस्य कारिकां कृत्वेत्येवं भवति। "उपाख्यान" शब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्-- उत्तरसूत्रे चकार्सयानुक्तसमुच्चयार्थत्वात् कारिकाशब्दस्य गतिसंज्ञा भवतीति। "पुनश्चनसौ" इत्यादि। पुनश्चनः शब्दौ छन्दसि विषये गतिसंज्ञकौ च भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थतामाश्रित्य कत्र्तव्यम्। "पुनरुस्त्यूतम्" इति। "षिवु तन्तुसन्ताने" (धा।पा।११०८), निष्ठा, उदित्वात् "इदितो वा" ७।२।५६ इति विभाषेट्त्वात् "यस्य विभाषा" ७।२।१५ इतीट्()प्रतिषेधः; "च्छ्वोः शूडनुनासिके च" ६।४।१९ इति वकारस्योठ्, यणादेशः। "चनोहितम्" इति। "दधातेर्हिः" ७।४।४२ इति नहिरादेशः, "गतिरनन्तरः" ६।२।४९ इति प्रकृतिस्वरे णाद्युदात्तत्वम्। चनः शब्दो हि "निपाता आद्युदात्ता भवन्ति" (फि।सू।४।८०) इत्याद्युदात्तः॥

बाल-मनोरमा

गतिश्च २५, १।४।५९

उपसर्गाः। गतिश्च। सूत्रद्वयमिदं व्याख्यासौकर्यात्सहोपात्तम्। प्रादय इत्यनुवर्तते। गतिरिति बहुत्वे एकवचनमार्षम्। तदाह--प्रादय इत्यादिना। क्रियायोग इति। क्रियया अन्वये सतीत्तयर्थः। निपात इत्यप्यत्रानुवर्तते, प्रागी()आकात्तदधिकारात्। ततश्च प्रादयो निपातसंज्ञका एव सन्तो गत्युपसर्गसंज्ञका भवन्ति। आकडारादिति च बाध्यते। गत्युपसर्गसंज्ञायोस्तु गतिश्चेति चकारादेव समावेशः। सिध्यति। ततश्च प्रणेयमित्यादावुपसर्गकार्यम् "उपसर्गादसमासेऽपि" इत्यादि सिध्यति, गतिकारकेत्यादि कार्यं च, निपातस्यानर्थकस्येत्यादि च। अथ प्रादीन् पठति--प्र परेत्यादि। "परा" इत्याकारान्तम्। अयदातौ "उपसर्गस्यायतौ" इति निर्दुरोर्लत्वम् --निलयते दुलयते। निसो दुशश्च "ससजुषो रुः" इति रुत्वस्यासिद्धत्वान्न लत्वम्। निरयते दुरयते। एतदर्थमेव निस्()दुसोर्निर्दुरोश्च पृथक्पाठः।

तत्त्व-बोधिनी

गतिश्च २२, १।४।५९

गतिश्च। उपसर्गसंज्ञायाः समावेशार्थश्चकारः। अन्यथा "आ कडारा"दिति पर्यायः स्यात्। तत्फलं तु "प्रणेय"-मित्यादौ "उपसर्गादसमासेऽपी"ति णत्वम्, "गतिकारके"ति कृदुत्तरपदप्रकृतिस्वरसिद्धिश्चेति दिक्। निस्निर्दुस्दुरिति। "उपसर्गस्यायतौ" इति निर्दुरोर्लत्वं। निलयते, दुलयते। निसो दुसश्च रुत्वस्याऽसिद्धित्वाल्लत्वाऽभावः,-निरयते, दुरयते॥

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ऊर्यादिच्विडाचः १।३ च ० गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

ऊर्यादिच्विडाचश् च १।४।६१

ऊर्यादयः शब्दाः च्व्यन्ता डजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति। च्विडाचोः कृभ्वस्तियोगे विधनम्। तत्साहचर्यादूर्यादीनाम् अपि तैरेव योगे गतिसंज्ञा विधीयते। ऊरीउररीशब्दावङ्गीकरने विस्तारे च। ऊरीकृत्य। ऊरीकृतम्। यदुरीकरोति। उररीकृत्य। उररीकृतम्। यदुररीकरोति। पापी। ताली। आत्ताली। वेताली। धूसी। शकला। संशक्ला। ध्वंसकला। भ्रंशकला। एते शकलादयो हिंसायम्। शकलाकृत्य। संशकलाकृत्य। ध्वंसकलाकृत्य। भ्रंशकलाकृत्य। गुलुगुध पीडार्थे गुलुगुधाकृत्य। सुजूःसहार्थे सजूःकृत्य। फलू, फली, विक्ली, आक्ली इति विकारे फलू कृत्य। फली कृत्य। विक्ली कृत्य। आलोओष्टी। करली। केवाली। शेवाली। वर्षाली। मस्मसा। मसमसा। एते हिंसायाम्। वषट्। वौषट्। श्रौषट्। स्वाहा। स्वधा। वन्धा। प्रादुस्। श्रुत्। आविस्। च्व्यन्ताः खल्वपि शुक्लीकृत्य। शुक्लीकृतम्। यच्छुक्लीकरोति। डाच् पटपटाकृत्य। पटपटाकृतम्। यत्पटपटकरोति।

लघु-सिद्धान्त-कौमुदी

ऊर्यादिच्विडाचश्च ९५३, १।४।६०

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः। ऊरीकृत्य। शुक्लीकृत्य। पटपटाकृत्य। सुपुरुषः॥ (प्रादयो गताद्यर्थे प्रथमया)। प्रगत आचार्यः प्राचार्यः। (अत्यादयः क्रान्ताद्यर्थे द्वितीयया)। अतिक्रान्तो मालामिति विग्रहे -।

न्यासः

ऊर्यादिच्विडाचश्च। , १।४।६०

"च्व्यन्ता डाजन्ताश्च" इति। ननु च पदसंज्ञायामन्तग्रहणेन ज्ञापितम्--"अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति" (पु।प।वृ।८१) इति; अतश्च्विडाचोरेव गतिसंज्ञया भवितव्यम्, तत् किमुच्यते-- च्व्यन्ता डाजन्ताश्चेति? एवं मन्यते-- "क्रियायोगे" १।४।५८ इति वत्र्तते, न च प्रत्ययमात्रस्य क्रियायोगः सम्भवति। तस्मात् क्रियायोगानुवृत्तिसमाश्र्यात् तदन्तस्यैव संज्ञा विज्ञायत इति भवत्येव तदन्तस्य संज्ञा। सा तु विशेषानुपादानाद्धातुमात्रेण योगे प्राप्नोतीत्यत आह-- "च्विडाचोः" इत्यादि। अभूततद्भावे कृभ्वस्तियोगे ५।४।५० च्विर्विहितः। "अव्यक्तानुकरणात्" ५।४।५७ इत्यादावपि सूत्रे कृभ्वस्तियोगस्यानुवृत्तेर्डाजिपि तत्रैव विहितः। तेन च्विडाचोस्तावद्धात्वन्तरेण योगासम्भवात् कृभ्वस्तियोगे गतिसंज्ञाविधानम्। अतस्तत्साहचर्यादूर्यादीनामपि तैरेव योगे विधीयते। ऊर्यादिभ्यश्च्व्यर्थस्याप्रतीतेर्न प्रतिपादयितुमाह-- "उरी, उररी" इत्यादि। श्रौषञडादीनां स्वधापर्यन्तानां चादिषु पाठादक्रियायोगेऽपि निपातसंज्ञा भवति। आविस्()शब्दः साक्षात्प्रभृतिषु पठ()ते। तेन तस्य "विभाषा कृञि" १।४।७१ इति करोतियोगे विभाषा गतिसंज्ञ#आ। "शुक्लीकृत्य" इति। "अस्य च्वौ" ७।४।३२ इतीत्वम्। "पटपटाकृत्य" इति। "वा क्यषः" १।३।९० इत्यत्र पटपटाशब्दो व्युत्पादितः॥

बाल-मनोरमा

ऊर्यादिच्विडाचश्च ७५१, १।४।६०

ऊर्यादिच्वि। च्वि-डाचौ प्रत्ययौ। ऊरीकृत्येति। ऊरीत्यव्ययमङ्गीकारे, तस्य कृत्वेत्यनेन गतिसमासः। समासेऽनञ्पूर्वे क्त्वो ल्यप्। शुक्लीकृत्येति। अशुक्लं शुक्लं कृत्वेत्यर्थः। "कृभ्वस्तियोगे" इत्यभूततद्भावे च्विः। गतिसमासे सति क्त्वो ल्यप्, "वेरपृक्तस्ये"ति वलोपः। "अस्य च्वौ" इति ईत्त्वम्। पटपटाकृत्येति। "पटपटा" इति शब्दं कृत्वेत्यर्थः। "अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्" इति पटच्छब्दाड्डाचि द्वित्वम्, टिलोपः। "नित्यमाम्रेडिते डाची"ति तकारपकारयो पकार एकादेशः। गतिसमासे क्त्वो ल्यप्।

कारिकाशब्दस्योपसङ्ख्यानमिति। "गतिसंज्ञाया" इति शेषः। कारिकाशब्दं व्याचष्टे--कारिका क्रियेति। "स्त्रियां क्ति"नित्यधिकारे धात्वर्थनिर्देशे ण्वुल्। कारिकाकृत्येति। क्रियां कृत्वेत्यर्थः। द्वितीयान्तस्य गतिसमासे क्त्वो ल्यप्, सुब्लुक्। कारिकाशब्दोऽत्र न कत्रीवाची, न श्लोकवाची च, व्याख्यानात्।

तत्त्व-बोधिनी

ऊर्यादिच्विडाचश्च ६६५, १।४।६०

ऊर्यादिच्विडाचश्च। "उपसर्गाः क्रियायोगो"इत्यतोऽनुवर्तनादाह--क्रियायोग इति। च्विडाचौ कृभ्वस्तियोगे विहितौ, तत्साहचर्यादूर्यादीनामपि तत्रैव गतिसंज्ञा। तेनेह न---ऊरी पक्त्वा। माधवादिग्रन्थे तु आविःप्रादुः शब्दौ मुक्त्वा अन्येषां कतोतिनैव योगे गतिसंज्ञे"ति स्थितम्। तथैवोदाहरति--ऊराकृत्येति। एतच्च मनोरमानुसारेणोक्तम्। वस्तुतस्तु ऊरीभूयेति भाष्योदाहरणाद्दिङ्भात्रमुदाहरति, ऊरीकृत्येत्यवतरितुं युक्तम्। संज्ञाफलं समासः, तत्फलं च ल्बिति बोध्यम्। ऊरी उररी--एतावङ्गीकारे। आविः शब्दस्य तु साक्षात्प्रभृतिषु पाठात्कृञो योगे गतिसंज्ञाविकल्पः, कृम्भस्तियोगे त्वनेन नित्यमिति बोध्यम्। कथं तर्हि "वारुणीमदविशङ्कमथाविश्चक्षुषो भवदसाविव रागः"इति माघ इति चेत्()। अत्राहुः--"ते प्राग्धातोः"इति सूत्रस्य प्रयोगनियमार्थत्वपक्षे प्रकृतेऽनुपपत्तवपि संज्ञानियमार्थत्वपक्षे दोषलेशोऽपि नास्तीति।शुक्लीति। "कुम्भस्तियोगे संपद्यकर्तरि च्विः"। "अस्य च्वौ"इतीकारः। पटपटाकृत्येति। "डाचि बहुलं द्वे भवतः"इति पटच्छब्दस्य द्वित्वम्। "अव्यक्तानुकरणाद् व्यजवराद्र्धादि"ति तकारपकारयोः पकार एकादेशः। निपातसंज्ञायाः समावेशार्थः [सूत्रे]चकारः। तेन ऊरीकृतमित्यत्र "गतिरनन्तरः"इति पूर्वपदप्रकृतिस्वरे क्रियमाणे निपातप्रयुक्तमाद्युदात्तत्वं भवति।

कारिकाशब्दस्योपसंख्यानम्। कारिकेति। भावे "पर्यायार्हणे"ति ण्वुच्। तदाह--क्रियेति। "क्रियायोगे"इत्यनेन कारिकाशब्दस्य विशेषणाच्छलोकवाचौ कारिकाशब्दोऽत्र न गृह्नत इति भावः। क्रियशब्दस्याऽत्र मर्यादास्थितिरर्थः। यत्न इत्यन्ये।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुकरणम् १।१ च ० अनितिपरम् १।१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

अनुकरणं च अनितिपरम् १।४।६२

इतिः परे यस्मातिति बहुव्रीहिः। अनुकरनम् अनितिपरं क्रियायोगे गतिसंज्ञम् भवति। खाट्कृत्य। खाट्कृतम्। यत्खाट्करोति। अनितिपरम् इति किम्? खाडिति कृत्वा निरष्ठीवत्।

न्यासः

अनुकरणं चानितिपरम्?। , १।४।६१

"अनितिपरम्" इति। अत्रेतिपरशब्द इते पर इति पञ्चमीति योगविभागात् तत्पुरुषो वा स्यात्? इतिः परो यस्मादिति बहुव्रीहिर्वा? तत्र यद्याद्यः पक्ष आश्रीयेत, तदेतिखाट्()कृत्येत्यत्र प्रतिषेधः स्यात्; इह तु न स्यात्-- खडिति कृत्वा आगत इत, अनिष्टञ्चैतत्; द्वितीये तु पक्ष एष दोषो न भवति, अतस्तमेवाश्रित्याह-- "इतिः परो यस्मात्" इति। "निरष्ठीवत्" इति। "ष्ठिवु निरसने" (धा।पा।५६०) "सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः" (वा।६७१) इति प्रतिषेधात् "धात्वादेः षः सः" ६।१।६२ इति सत्वं न भवति। "ष्ठिवुक्लमुचमां शिति" ७।३।७५ इति दीर्घत्वम्॥

बाल-मनोरमा

अनुकरणं चाऽनितिपरम् ७५२, १।४।६१

अनुकरणं चा। अनुकरणं गतिसंज्ञं स्यादितिपरं वर्जयित्वेत्यर्थः। खाट्कृत्येति। खाडिति शब्दं कृत्वेत्यर्थः। गतिसमासे क्त्वो ल्यप्। खाडिति कृत्वेति। न चात्र इतिशब्देन व्यवहितत्वे क्रियायोगाऽभावादेव गतिसंज्ञा न भविष्यति तत्किमनितिपरग्रहणेनेति वाच्यं, यथाकथंचित्क्रियायोगसत्त्वात्। "ते प्राग्धातोः" इति सूत्रं तु "ते गत्युपसर्गा धातोः प्रागेव प्रयोज्याः, न तु परत" इति प्रयोगनियमपरमेवेति भावः।

तत्त्व-बोधिनी

अनुकरणं चऽनितिपरम् ६६६, १।४।६१

अनुकरणं चा। "ते प्राग्धातोः"इत्यस्य संज्ञानियमपक्षेऽनितीति व्यर्थमिति मत्वा पृतच्छति अनितिपरं किमिति। इतरस्तु प्रयोगनियमपक्षे खाडित्यनुकरणस्येतिशब्दे परे गतिसंज्ञानिवारणायाऽनितिपरमित्यावश्यकमिति प्रत्युदाहरति खाडिति कृत्वेति। सत्यां संज्ञायामेष प्रयोगो नैव स्या()त्कतु "इति खाटकृत्ये"त्येव स्यादिति भावः। न च "इति खाटकृत्ये"ति न भवति, इतेः परस्यानुकरणस्य गतिसंज्ञानिषेधादिति वाच्यम्, "अनितिपर"मित्यत्र इतिः परोयस्मात्तदितिपरं, न इतिपरमनितिपरमिति बहुव्रीहिघटितनञ्तत्परुषाश्रयणात्। स्यादेतत्-- अनुकरणस्येतिशब्दपरत्वे क्रियायोगाऽभावाद्गतिसंज्ञा नास्तचीति खाडिति कृत्वेति रूपं निर्बाधं, किमनेनाऽनिकिपरग्रहणेनेति चेत्, अत्राहुः-- इतिकृत्वेति समुपदाये एवंकृत्वेत्यर्थे वर्तते। तथा च इतिशब्दः क्रियाविशेषक इति तद्घटितसमुदायस्य क्रियावाच कत्वादस्त्येव क्रियायोग इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आदरानादरयोः ७।२ सदसती १।२ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

आदरानादरयोः सदसती १।४।६३

प्रीतिसंभ्रम आदरः। परिभवौदासीन्यम् अनादरः। आदरानादरयोः यथाक्रमं सदसच्छब्दौ गतिसंज्ञौ भवतः। सत्कृत्य। सत्कृतम्। यत्सत्करोति। असत्कृत्य। असत्कृतम्। यदसत्करोति। आदरानादरयोः इति किम्? सत्कृत्वा काण्डं गतः।

असत्कृत्वा काण्डम् गतः।

न्यासः

आदरानादरयोः सदसती। , १।४।६२

"{प्रीत्यतिशयः = आदरः-- काशिका}प्रीतिसम्भ्रम आदरः" इति। प्रीत्या सम्भ्रमः प्रीतिसम्भ्रमः, प्रीतिपूर्विका प्रत्युत्थानासनादिदानक्रियेत्यर्थः। "परिभवौदासीन्यम्" इति। परिभवः = अवज्ञा। तिरस्कारः = औदासीन्यम्। कत्र्तव्यम् = प्रत्युत्थानासनादिदानं प्रत्युपेक्षा। परिभवेणौदासीन्यं परिभवौदासीन्यमिति, "तृतीया" इति योगविभागात् समासः। अथ वा-- परिभवश्चौदासीन्यञ्च परिभवौदासीन्यम्। अथ किमर्थमनादरग्रहणमसद्ग्रहणञ्च क्रियते? नादरे सदित्येवोच्यते? अथ कथमिदानीमनादेऽसच्छब्दस्याव्ययसंज्ञा स्यात्? कथञ्च समासादि कार्यम्? तदन्तविधिनासच्छब्दस्यापि निपातसंज्ञायां गतिसंज्ञायाञ्च सत्यां सच्छब्दस्य निपातस्याव्ययसंज्ञा विधीयमानाऽव्ययसंज्ञायां तदन्तविधेरुपसंख्यानादसच्छब्दस्याप्यव्ययसंज्ञा भविष्यति। "कुगतिप्रादयः" २।२।१८ इत्यत्र च सुबन्तस्य प्रकृतत्वाद्गत्यन्तस्य सुबन्तस्य समासो विधीयमानोऽसच्छब्दस्यापि भविष्यति। "गतिरन्तरः" ६।२।४९ इत्यत्रापि पूर्वपदमित्यनुवत्र्तते। "गतिर्गतौ" ८।१।७० इत्यत्रापि पदस्येति। तेन गत्यन्तस्य पूर्वपदस्य प्रकृतिस्वरो विधीयमानस्तता यथोक्तं कार्यम्, अनादरावगतिस्तु कथं स्यात्? असत्यनादरग्रहणे न सदसदिति नञाऽऽदरस्रिषेधात्। आदरश्चेत् प्रतिषिद्धः किमन्यदनादरात् स्यात्? नैतद्युक्तमुच्यते; नञ्समासो हि तत्पुरुषः सदृशमेव कार्यं प्रतिपादयति, यथा-- अब्राआह्मणमानयेति। तत्रेह यद्यनादरग्रहणं न क्रियेत तदा सत्सदृशं यत् तदसद् यत्रादरप्रसङ्गस्तत्रैव स्यात्-- गुरुमसत्कृत्य गतः। यत्र त्वप्रसक्त एवादरस्तत्र न स्यात्-- भृत्यमसत्कृत्य गतः। अनादरग्रहणे तु सति बहुव्रीहिर्विज्ञायते-- अविद्यमान आदरो यस्मिन्नित्यनादर इतो। बहुव्रीहिश्चात्यन्ताभावे प्रसक्त्यबावे च भवतीति सर्वत्र संज्ञा सिध्यति। तस्मादनादरग्रहणं कत्र्तव्यम्। त()स्मश्च क्रियमाणे सत्यसद्ग्रहणमपि कत्र्तव्यमेव। अन्यथा हि किमनादरग्रहणेन विशिष्येत-- य्सयानादरे वत्र्तमानस्य गतिसंज्ञा विधीयते ! न हि सच्छब्दस्यानादरे वृत्तिः सम्भवति। यद्यपि तस्य न सम्भवति तदन्तस्यासच्छब्दस्य सम्भवतीति चेत्, सत्यम्; सम्भवति, न तु तस्य गतिसंज्ञा लभ्यते, तदन्तविधेरभावात्। प्रकृते न हि तदन्तविधिर्भवति, न चेह किञ्चित् प्रकृतमस्ति ; तस्मादसच्छब्दार्थमनादरग्रहणम्। यदि तु यथा "गोष्पदं सेवितासेवितप्रमाणेषु" इत्यत्रासेविते गोष्पदशब्दो न सम्भवतीत्यगोष्पदशब्दार्थमसेवितग्रहणं विज्ञायते, तथेहापि सच्छब्दोऽनादरे न सम्भवतीत्यस्छब्दार्थमनादरग्रहणं विज्ञायेत; तदा शक्यमसच्छब्दस्य ग्रहणमकर्त्तुम्। असद्ग्रहणन्तु क्रियते तदा विस्पष्टार्थम्। सत्कृत्वाऽसत्कृत्येति। शोभनाशोभनार्थाविह सदसच्छब्दौ। विद्यमानाविद्यमानार्थौ वा॥

बाल-मनोरमा

आदराऽनादरयोः सदसती ७५३, १।४।६२

आदरानादरयोः। सदिति असदिति च अव्यये आदराऽनादरयोः क्रमेण विद्यमाने गतिसंज्ञके स्त इत्यर्थः। सत्कृत्येति। आदरं कृत्वेत्यर्थः। असत्यकृत्येति। अनादरं कृत्वेत्यर्थः। गतिसमासे क्त्वो ल्यप्। खाडिति कृत्वेति। न चात्र इतिशब्देन व्यवहितत्वे क्रियायोगाऽभावादेव गतिसंज्ञा न भविष्यति तत्किमनितिपरग्रहणेनेति वाच्यं, यथाकथंचित्क्रियायोगसत्त्वात्। "ते प्राग्धातोः" इति सूत्रं तु "ते गत्युपसर्गा धातोः प्रागेव प्रयोज्याः, न तु परत" इति प्रयोगनिमपरमेवेति भावः।

बाल-मनोरमा

आदराऽनादरयोः सदसती ७५४, १।४।६२

आदरानादरयोः। सदिति असदिति च अव्यये आदराऽनादरयोः क्रमेण विद्यमाने गतिसंज्ञके स्त इत्यर्थः। सत्कृत्येति। आदरं कृत्वेत्यर्थः। असत्कृत्येति। अनादरं कृत्वेत्यर्थः। गतिसमासे क्त्वो ल्यप्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भूषणे ७।१ अलम् ० गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

भूषने ऽलम् १।४।६४

अलम् इति प्रतिषेधे, सामर्थ्ये, पर्याप्तौ, भूषणे च इति विशेषनम् उपादीयते। भूवणे यो ऽलंशब्दः स गतिसंज्ञो भवति। अलङ्कृत्य। अलङ्कृतम्। यदलङ्करोति। भूषणे इति किम्? अलं भुक्त्वा ओदनं गतः।

न्यासः

भूषणेऽलम् , १।४।६३

"अलं कृत्वा" इति। पर्याप्ताविहालंशब्दो वत्र्तते।

बाल-मनोरमा

भूषणेऽलम्। ७५५, १।४।६३

भूषणेऽलम्। भूषणे विद्यमानमलमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः। अलंकृत्येति। कटकादिधारणेन परिष्कारं कृत्वेत्यर्थः। भूषणे विद्यमानमलमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः। अलंकृत्येति। कटकादिधारणेन परिष्कारं कृत्वेत्यर्थः। कृञ्विषयेति। कृञ्योग एव भवतीत्यर्थः। वस्तुतस्तु सङ्कोचे प्रमाणाऽभावाद्धात्वन्तरयोगेऽपि त्रिसूत्रीप्रवृत्तिर्युक्ता। अत एव "अलं भुक्त्वा ओदनं गत" इति वृत्तिकृता प्रत्युदाह्रतम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अन्तः ० अपरिग्रहे ७।१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

अन्तरपरिग्रहे १।४।६५

अन्तःशब्दो ऽपरिग्रहे ऽर्थे गतिसंज्ञो भवति। परिग्रहः स्वीकरणम्। तदभावे गतिसंज्ञा विधीयते। अन्तर्हत्य। अन्तर्हतम्। यदन्तर्हन्ति। अपरिग्रहे इति किम्? अन्तर्हत्वा भूषिकाम् श्येनो गतः। परिगृह्य गतः इत्यर्थः। अन्तःशब्दस्य अङ्किविधिणत्वेषु उपसर्गसंज्ञा वक्तव्या। अन्तर्धा। अन्तर्धिः। अन्तर्णयति।

न्यासः

अन्तरपरिग्रहे , १।४।६४

अन्तःशब्दोऽयं मध्येऽधिकरणभूते वर्तते; परिग्रहे च। तत्र परिग्रहप्रतिषेधादिरत्र संज्ञा विधीयते।यस्त्वस्य स्वरादिषु पाठः, स परिग्रहेऽप्यव्ययसंज्ञार्थः। "अन्तर्हस्य" इति। मध्ये हत्वेत्यर्थः। "वा ल्यपि" ६।४।३८, इत्यनुनासिकलोपः। वक्तव्य इति व्याख्येय इत्यर्थः। व्याख्यानं तु पूर्वमेव कृतम्। "अन्तर्धा" इति। आतश्चोपसर्गे" ३।३।१०६ इत्यङ। "अन्तर्द्धिः" इति। "उपसर्गे घोः किः" ३।३।९२ इति किप्रत्ययः। "अन्तर्णयति" इति। "उपसर्गादसमासेऽपि" ८।४।१४ इति णत्वम्॥

बाल-मनोरमा

अन्तरपरिग्रहे ७५६, १।४।६४

अन्तरपरि। अपरिग्रहे वर्तमानमन्तरित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः। हतं परिगृह्णेति। हत्वा गमनं हतमपरिगृह्ण परिगृह्ण वा भवति। तत्र आद्यमुदाहरणं, द्वितीयं प्रत्युदाहरणमित्यर्थः। अपरिग्रह इति प्रयोगोपाधिरेव, न तु वाच्यकोटिप्रविष्टम्।

तत्त्व-बोधिनी

अन्तरपरिग्रहे ६६७, १।४।६४

हतं परिगृह्णति। हत्वा गमनं द्विधा, हतं त्यच्त्वा परिगृह्ण चेति। आद्यमुदाहरणं, द्वितीयं तु प्रत्युदाहरणम्।"अपरिग्रहे"इति च प्रयोगोपाधिः, नतु वाच्यकोटिनिविष्टमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कणेमनसी १।२ श्रद्धाप्रतीघाते ७।१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

कणेमनसी श्रद्धाप्रतीघाते १।४।६६

कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः। कणेहत्य पयः पिबति। मनोहत्य पयः पिबति। तावत् पिबति यावदस्य अभिलाशो निवृत्तः। श्रद्धा प्रतिहता इत्यर्थः। श्रद्धाप्रतीघाते इति किम्? कणे हत्वा गतः। मनो हत्वा गतः।

न्यासः

कणेमनसी श्रद्धाप्रतीघाते , १।४।६५

कणेशब्दः सप्तम्यन्तप्रतिरूपको निपातः। न चेहाभिलाषातिशये वत्र्तमानो गृह्रते। तस्य हि श्रद्धाप्रतीघात इत्युपाधिः सम्भवति। मनःशब्दोऽपि तत्साहचर्यादभिलाषवृत्तिरेव विज्ञायते। "कणे" हत्वा, मनो हत्वा" इति। अत्र कणेशब्दः सूक्ष्मे तण्()डुलावयवे वत्र्ततेऽधिकरणभूते, मनश्शब्दश्चेतसि॥

बाल-मनोरमा

कणेमनसी श्रद्धाप्रतीघाते ७५७, १।४।६५

कणेमनसी। कणेशब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञकौ स्तः। अत्यन्ताभिलाषः=श्रद्धा, तस्या निवृत्तिः=प्रतीधातः। कणेहत्येति। गतिसमासे क्त्वो ल्यप्। मनोहत्येति। "पयः पिबती"त्यनुषज्यते। ननु समासे कृते "कणे" इति सप्तम्याः

कथं न लुगित्यत आह--कणेशब्द इति। ननु श्रद्धाप्रतीघातस्य कथमिहावगतिः, श्रद्धावाचकशब्दाऽभावात्। मनसो घाते सति कथं वा पयःपानमित्यत आह--अभिलाषातिशये इति। "कणेशब्द" इत्यनुषज्यते। "परावरयोगे चे"ति सूत्रेण क्त्वा। अभिलाषनिवृत्तिपर्यन्तं पयः पिबतीत्यर्थः। श्रद्धाप्रतीघाते किम्? कणे हत्वा गतः। सूक्ष्मस्तण्डुलावयवः कणः, तद्विषये हत्वा गत इत्यर्थः। मनो हत्वा गतः। विषपानादौ मनः प्रवृतिं()त प्रतिवध्य गत इत्यर्थः।

तत्त्व-बोधिनी

कणेमनसी श्रद्धाप्रतीघाते ६६८, १।४।६५

कणेहेत्येति। अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः। तथा च श्रद्धाया अपगमात्तत्प्रतीघातो गम्यते। प्रत्युदाहरणं तु कणे हत्वा गतः। सूक्ष्मस्तण्डुलावयवः कणः। तस्मिन् हत्वेत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पुरः ० अव्ययम् १।१ ६८ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

पुरो ऽव्ययम् १।४।६७

असिप्रत्ययान्तः पुरःशब्दो ऽव्ययम्। स गतिसंज्ञो भवति। समासस्वरोपचाराः प्रयोजनम्। पुरस्कृत्य। पुरस्कृतम्। यत् पुरस् करोति। अव्ययम् इति किम्? पूः, पुरौ। पुरः कृत्वा काण्डं गतः।

न्यासः

पुरोऽव्ययम् , १।४।६६

"पुरस्कृत्य" इति। पूर्वस्माद्देशागत इत्यस्मिन्नर्थे "पूर्वाधरावराणामसि पुरधवश्चैषाम्" ५।३।३९ इत्यसिप्रत्ययः पूर्वशब्दस्य च पुरादेशः। "तद्धितश्चासर्वविभक्तिः" १।१।३७ इत्यव्ययसंज्ञा विसर्जनीयस्थानिकस्य सकारस्योपचार इत्येषा संज्ञा पूर्वाचार्यप्रणीता। "नमस्पुरसोर्गत्योः" ८।३।४० इति सकारः। "पूः पुरौ, पुरः कृत्वा गतः" इति। पुरः कृत्वेतीदं प्रत्युदाहरण्। पूः परावित्येतयोस्तूपन्यसस्तत्साहचर्येण पुरःशब्दस्यानव्ययत्वप्रदर्शनार्थः। "पृ? पालनपूरणयोः" (धा।पा।१४८९), "भ्राजभ्रास" ३।२।१७७ इत्यादिना। क्विप्। "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युक्तम्, रपरत्वञ्च। गतिसंज्ञाया अभावादिह समासादि कार्यं न भवति। "नमस्पुरसोर्गत्योः" ८।३।४० इति विसर्जनीयस्य सकारोऽपि न भवति। ननु च यद्यत्र गतिसंज्ञा स्यात् गतिसमासे कृते सुपो निवृत्त्या भवितव्यम्, तदा पुर इति रूपं न स्यात्; असति तस्मिन् संज्ञाऽपि निवर्त्तते, नैतदस्ति; यद्यपि विभक्तौ निवृत्तायां पुर इति रूपं न स्यात्, नैवं संज्ञा निवर्त्तते; एकदेशविकृतस्यानन्यत्वात् (व्या।प।१६)॥

बाल-मनोरमा

पुरोऽव्ययम् ७५८, १।४।६६

पुरोऽव्ययं। पुर इत्यव्ययं गतिसंज्ञकं स्यात्। पुरस्कृत्येति। गतिसमासे क्त्वो ल्यप्। अव्ययं किम्?। पुरम्, पुरौ, पुरः कृत्वा गतः।

तत्त्व-बोधिनी

पुरोऽव्ययम् ६६९, १।४।६६

पुरस्कृत्येति। "पूर्वधरावराणा"मित्यसिप्रत्ययान्तोऽयमव्ययम्। "नमस्पुरसो"रिति विसर्गस्य सः। "अमुं परः पश्यसी"त्यत्र तु" स्थित"मित्यध्याहारेण दृशि प्रत्ययतित्वात्सत्वाऽभावः। अव्ययं किम्()। पुरं पुरौ पुरः कृत्वा गतः। अस्तं च। अवययमिति किम्()। अस्तं कृत्वा काण्डं गतः। क्षिप्तमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अस्तम् ० च ० अव्ययम् १।१ ६६ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

अस्तं च १।४।६८

अस्तंशब्दो मकारान्तो ऽव्ययम् अनुपलब्धौ वर्तते। स गतिसंज्ञओ भवति। अस्तंगत्य सविता पुनरुदेति। अस्तंगतानि धनानि। यदस्तं गच्छति। अव्ययम् इत्येव, अस्तं काण्डम्। क्षिपतम् इत्यर्थः।

न्यासः

अस्तं च , १।४।६७

"अस्तंशब्दो मकारान्तोऽव्ययम्" इति। अव्ययमित्यत एव विशेषणोपादानससामर्थ्याददव्ययत्वं विज्ञेयम्। चादेशकृतिगणत्वाद्वा। "अस्तं कृत्वा काण्डं गतः" इति। "असु क्षेपणे" (धा।पा।१२०९), निष्ठा, पूर्ववदिट्प्रतिषेधः। चकारः "अव्ययम्" (१।४।क६७) इत्यस्यानुकर्षणार्थः। यद्येवम्,चानुकृष्टत्वादुत्तरत्र तस्यानुवृत्तिर्न स्यात्? उत्तरत्रापि चकारस्तदनुकर्षणार्थोऽनुवर्तिष्यत इत्यदोषः॥

बाल-मनोरमा

अस्तं च ७५९, १।४।६७

अस्तं च। पूर्वसूत्रादव्ययमित्यनुवर्तत इत्याह--मान्मव्ययमिति। अस्तङ्गत्येति। तिरोधानं प्राप्येत्यर्थः। अव्ययं किं?। काण्डमस्तं कृत्वा। प्रक्षिप्तं कृत्वेत्यर्थः। अच्छ गत्यर्थ। गत्यर्थधातुषु, वदधातौ च प्रयुज्यमानेषु अच्छेत्यव्ययं गतिसंज्ञं स्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अच्छ ० गत्यर्थवदेषु ७।३ अव्ययम् १।१ ६६ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

अच्छ गत्यर्थवदेषु १।४।६९

अच्छशब्दः अव्ययम् अभिशब्दस्य अर्थे वर्तते। स गत्यर्थेषु धातुषु वदतौ च गतिसंज्ञो भवति। अच्छगत्य। अच्छगतम्। यदच्छगच्छति। वदतौ अच्छोद्य। अच्छोदितम्। यदच्छवचति। अव्ययम् इत्येव, उदकम् अच्छं गच्छति।
न्यासः
अच्छ गत्यर्थवदेषु , १।४।६८

"अच्छशब्दोऽव्ययमभिशब्दस्यार्थे"इति। अभिराभिमुख्ये। "अच्छोद्य" इति। यजादित्वाद्वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्। अच्छमित्यकलुषमित्यर्थः॥
बाल-मनोरमा
अच्छ गत्यर्थवदेषु ७६०, १।४।६८

अच्छगत्येति। गतिसमासे क्त्वो ल्यप्। अच्छोद्येति। वदधातोः क्त्वा। गतिसमासे क्त्वो ल्यप्। अच्छेत्यव्ययमाभिमुख्ये। तद्यथा--बर्हिरच्छैतीति। तदाह--अभिमुखमिति। जलमच्छं गच्छतीति। अत्राऽच्छशब्दस्य नाव्ययत्वं, न गतिसंज्ञा, नापि "प्राग्री()आरान्निपाताः" इत्यधिकृतनिपातसंज्ञा। निपातत्वे सति हि अव्ययत्वाद्विभक्तिलुक्। स्यादिति भावः।

तत्त्व-बोधिनी
अच्छ गत्यर्थवदेषु ६७०, १।४।६८

अच्छमिति। सत्यां हि गतिसंज्ञायां निपातसंज्ञावत्त्वेनाव्ययत्वात्सुब्लुक् स्यादिति भावः। अदःस कृत्येति। यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अदः १।१ अनुपदेशे ७।१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः
अदो ऽनुपदेशे १।४।७०

अदःशब्दस्त्यदादिषु पठ्यते, सो ऽनुपदेशे गतिसंज्ञो भवति। उपदेशः परार्थः प्रयोगः। स्वयम् एव तु यदा बुद्ध्या पराम् ऋशति तदा न अस्त्युपदेशः इति सो ऽस्य विशयः। अदःकृत्य। अदःकृतम्। यददःकरोति। अनुपदेशे इति किम्? अदः कृत्वा काण्डं गतः इति परस्य कथयति।
न्यासः
अदोऽनुपदेशे , १।४।६९

उपदेशः = परस्यार्थकथनम्। तच्च परस्य प्रत्यायनार्थं भवतीत्याह-- "उपदेशः परार्थः" इति। "अदः कृत्वा" इति। एतत्कृत्वेत्यर्थः॥
बाल-मनोरमा
अदोऽनुपदेशे ७६१, १।४।६९

अदोऽनुपदेशे। अदश्शब्दोऽनुपदेशे गतिसंज्ञः स्यात्। अदः कृतमिति। गतिसमासे क्त्वो ल्यप्। अमुं यज्ञं कृत्वेत्यर्थे तु सुब्लुक् च। अदः कृतमिति। "गतिरनन्तरः" इति स्वरः फलम्। यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम्। परं प्रतीति। अदऋ कृत्वा अदः कुर्वित्यादावित्यर्थः।

तत्त्व-बोधिनी

अदोऽनुपदेशे ६७१, १।४।६९

अदःकृतमिति। "गतिरनन्तरः"इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्। प्रत्युदाहरणमिति। अदः कृत्वा अदः कुर्वित्यादीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तिरः ० ७१ अन्तर्द्धौ ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

तरो ऽन्तर्धौ १।४।७१

अन्तर्धिः व्यवधानम्। तत्र तिरःशब्दो गतिसंज्ञो भवति। तिरोभूय। तिरोभूतम्। यत् तिरोभवति। अन्तर्धौ इति किम्? तिरो भूत्वा स्थितः। पार्श्वतो भूत्वा इत्यर्थः।

न्यासः

तिरोऽन्तर्द्धौ, १।४।७०

"तिरो भूत्वा स्थितः" इति। अनृजुर्भूत्वा, पार्(ातो भूत्वेत्यर्थः॥

बाल-मनोरमा

तिरोऽन्तर्द्धौ ७६२, १।४।७०

तिरोऽन्तर्धौ। अन्तर्धि=व्यवधानम्, तत्र तिरसित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः। तिरोभूयेति। गतिसमासे क्त्वो ल्यप्। व्यवहितो भूत्वेत्यर्थः।

तत्त्व-बोधिनी

तिरोऽन्तर्द्धौ ६७२, १।४।७०

किरोऽन्तर्धौ। अन्तर्धौ किम्()। तिरोभूत्वा स्थितः। पार्(ातो भूत्वेत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ ७५ कृञि ७।१ ७८ तिरः ० ७० अन्तर्द्धौ ७।१ ७० गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३

४६

काशिका-वृत्तिः
विभाषा कृञि १।४।७२

अन्तर्धौ इति वर्तते। प्राप्तविभाषेयम्। तिरःशब्दः करोतौ परतो विभाषा गतिसंज्ञो भवति। तरः कृत्य, तिरस्कृत्य। तिरस्कृतम्। यत् तिरस्करोति। तिरः कृत्वा, तिरस्कृत्वा। अन्तर्धौ इत्येव, तिरःकृत्वा काष्ठं तिष्ठति।
न्यासः
विभाषा कृञि , १।४।७१

"तिरस्कृत्य"इति। "तरिसोऽनयतरस्याम्" ८।३।४२ इति विसर्जनीयस्य सत्त्वम्।
न्यासः
उपाजेऽन्वाजे। , १।४।७१

बाल-मनोरमा
विभाषा कृञि ७६३, १।४।७१

विभाषा कृञि। कृञि प्रयुज्यमाने तिरसित्यव्ययं गतिसंज्ञं वा स्यादित्यर्थः। तिरस्कृत्य तिरः कृत्येति। गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप्। "तिरसोऽन्यतरस्या"मिति सत्वविकल्पः। तिरः कृत्वेति। गतित्वाऽभावपक्षे सत्वमपि न भवति, तद्विधौ गतिग्रहणानुवृत्तेरित्याहुः। केचित्तु तिरस्कार इति परिभवे प्रयोगदर्शनात्सत्वविधौ गतिग्रहणं नानुवर्तयन्ति।

तत्त्व-बोधिनी
विभाषा कृञि ६७४, १।४।७१

विभाषा कृञि। तिरः कृत्वेति। गतित्वाऽभावपक्षे "तिरसोऽन्यतरस्या"मिति सत्वमपि न भवति, तद्विधौ गतिग्रहणानुवृत्तेः। माधवस्तु--पराभवे "तिरस्कार"इति प्रयोगदर्शनात्सत्वविधौ गतिग्रहणानुवृत्तिं()त केचिन्नेच्छन्तीत्याह। (६७३) उपाजेऽन्वाजे।१।४।७३।

उपाजेऽन्वाजे। एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्यधाने वर्तेते। तदाह--दुर्बसल्येति। साक्षात्प्भृतीनि। साक्षात्। मिथ्या। आम्। अद्धा। लवणम्। उष्णम्। शीतम्। उदकम्। आद्र्रम्। गतिसंज्ञासंनियोगेन लवणादीनां पञ्चानां मकारान्तत्वं निपात्यते। प्रादुस्। नमस्। आविस् इत्यादि। आकृतिगणोऽयम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपाजेऽवजि विभाषा १।१ ७१ कृञि ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः
उपाजे ऽन्वाजे १।४।७३

विभाषा कृञि इति वर्तते। उपाजे ऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते। तौ कृञि विभाषा गतिसंज्ञौ भवतः। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा।

बाल-मनोरमा

उपाजेऽन्वाजे ७६४, १।४।७२

उपाजेऽन्वाजे। उपाजेकृत्येति। गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप्। अन्वाजेकृत्येत्यपि तथैव "उपाजे" "अन्वाजे" इत्यव्यये दुर्बलस्य बलाधाने वर्तेते। तदाह--दुर्बलस्येति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ साक्षात्प्रभृतीनि १।३ च ० विभाषा १।१ ७१ कृञि ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

साक्षात्प्रभृतीनि च १।४।७४

विभाषा कृञि इति वर्तते। साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भवन्ति। साक्षात्प्रभृतिषु च्व्यर्थवचनम्। साक्षात्कृत्य, साक्षात् कृत्वा। मिथ्याकृत्य, मिथ्या कृत्वा। साक्षात्। मिथ्या। चिन्ता। भद्रा। लोचन। विभाषा। सम्पत्का। आस्था। अमा। श्रद्धा। प्राजर्या। प्राजरुहा। वीजर्या। वीजरुहा। संसर्या। अर्थे। लवणम्। उष्णम्। शीतम्। उदकम्। आर्द्रम्। गतिसंज्ञासंनियोगेन लवणादीनाम् मकारन्तत्वम् निपात्यते। अग्नौ। वशे। विकम्पते। विहसने। प्रहसने। प्रतपने। प्रादुस्। नमस्। आविस्।

न्यासः

साक्षात्प्रभृतीनि च , १।४।७३

"साक्षात्प्रभृतिषु च्व्यर्थवचनम्" इति। च्व्यर्थ उच्यते कथ्यते येन तच्व्यर्थवचम् - च्व्यर्थव्याख्यानम्। एतेनैतदुक्तं भवति-- साक्षात्प्रभृतीनां च्व्यर्थो येन प्रतिपाद्यते अस्मिन् संज्ञाविधौ तच्व्यर्थवचनं कत्र्तव्यमित्यर्थः। किमर्थम्? असाक्षाद्भूतं यदा साक्षात् क्रियते तदा गतिसंज्ञा यथा स्यात्। यदा त्वसाक्षाद्भावो न क्रियते, किन्तु साक्षाद्भूत्सय प्रत्यक्षभावमुपगतस्यैव सतो योऽन्यो विशेषः कश्चित् क्रियते, तदा मा भूदिति। एवं मिथ्याप्रभृतीनाम्। अमिथ्याभूतानां मिथ्याभूतानां यदा क्रियते, तदा यथा स्यात्; अन्यथा मा भूत्। तदेवं व्याख्यानम्-- "ऊर्यादिच्विडाचश्च" १।४।६० इत्यत्र च्विग्रहणम् "अच्छ गत्यर्थवदेषु" १।४।६८ इत्यतश्चार्थग्रहणमिह मण्डूकप्लुतिन्यायेनानुवत्र्तते। तेन च्व्यर्थे वत्र्तमानानां साक्षात्प्रभृतीनां गतिसंज्ञा विधीयत इति। व्यवस्थितविभाषाविज्ञानाद्वा च्व्यर्थ एव वत्र्तमानानां तेषां संज्ञा भविष्यतीति। च्व्यर्थता चोभयथा सम्भवति-- च्व्यन्तानाम्, अच्व्यन्तानाञ्च। तत्र यदा च्व्यन्तता भवति तदा "ऊर्यादिच्विडाचश्च" १।४।६० इति नित्यं संज्ञा भवति, अन्यथा त्वनेन गतिसंज्ञा विभाषा भवति; व्यवस्थितविभाषया चास्य सूत्रस्य च्व्यर्थष्वेव प्रवृत्तेः। मकारान्तत्वनिपातनम्। अग्नौ, वशेप्रभृतयो विभक्तिप्रतिरूपकनिपाता द्रष्टव्यः। प्रादुराविः शब्दावूर्यादिषु उरसिमनसिशब्दौ विभक्तिप्रतिरूपकौ निपातौ। "उरसिकृत्य"इति। अभ्युपगम्येत्यर्थः। "मनसिकृत्य" इति। निश्चित्येत्यर्थः॥

बाल-मनोरमा

साक्षात्प्रभृतीनि च ७६५, १।४।७३

साक्षात्प्रभृतीनि च। शेषपूरणेन सूत्रं व्याचष्टे--कृञि वेति। साक्षादित्यव्ययम्।

च्व्यर्थ इति। अभू ततद्भावे गम्ये सतीति वक्तव्यमित्यर्थः। साक्षात्कृत्येति। अप्रत्यक्षं प्रत्यक्षं कृत्वेत्यर्थः। गतित्वपक्षे क्त्वो ल्यप्। तत्र सुब्लुकमाशङ्क्याह--मान्तत्वमिति। लवणम्, उष्णम्, शीतम्, उदकम्, आमिति पञ्चानां साक्षात्प्रभृतिगणे मान्तत्वं निपात्यत इत्यर्थः।

तत्त्व-बोधिनी
साक्षात्प्रभृतीनि च ६७५, १।४।७३

साक्षात्कृत्येति। असाक्षाद्भूतं यथा साक्षाद्भवति तथा कृत्वेत्यर्थः। च्व्यन्तेषु तु पूर्वविप्रतिषेधात् "ऊर्यादिच्विडाचश्चे"ति नित्यैव गतिसंज्ञा। तेन लवणीकृत्येत्यत्र मान्तत्वं न भवति। तद्धि पाक्षिकं। गतिसंज्ञासंनियोगेनेह गणे निपातनात्। भाष्यकृता "लवणशब्दस्य लवणीशब्दस्य वा विकल्पेन लवणशब्द आदिश्यते तस्य च संज्ञाविकल्प"इत्युक्तम्। उभयथापि त्रैरूप्यं निर्बाधम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनत्याधाने ७।१ ७५ उरसिमनसी १।२ विभाषा १।१ ७१ कृञि ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः
अनत्याधान उरसिमनसी १।४।७५

विभाषा कृञि इति वर्तते। अत्याधानम् उपश्लेषणम्, तदभावे ऽनत्याधाने उरसिमनसी शब्दौ विभाषा कृञि गतिसंज्ञौ भवतः। उरसिकृत्य, उरसि कृत्वा। मनसिकृत्य, मनसि कृत्वा। अनत्यावाने इति किम्? उरसि कृत्वा पाणिं शेते।
बाल-मनोरमा
अनत्याधान उरसिमनसी ७६६, १।४।७४

अनत्याधाने। "उपसि" "मनसि" इति विभक्तिप्रतिरूपके अव्यये गतिसंज्ञे वा स्तोऽनत्याधाने। उरसिकृत्येति। गतित्वपक्षे कत्वो ल्यप्। इह अत्याधानं न गम्यत इत्याह -अभ्युपगम्येत्यर्थ इति। मनसिकृत्येति। गतित्वपक्षे क्त्वो ल्यप्। इहापि नाऽत्याधानं गम्यत इत्याह--निश्चित्येत्यर्थ इति। अत्याधानशब्दं विवृण्वंस्तस्य प्रयोजनमाह--उपश्लेषणमिति। संयोग इत्यर्थः। उरसि कृत्वेति। उरसि पाणिं निधाय शेत इत्यर्थः। अत्र पाणिसंश्लेषणावगमान्न गतिसंज्ञेति भावः। मध्येपदे। गतित्वे तदभावे च त्रयाणामेदन्तत्वं निपात्यते।

तत्त्व-बोधिनी
अनत्याधान उरसि मनसी ६७६, १।४।७४

अनत्या। उरसिमनसी विभक्तिप्रतिरूपकौ।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मध्ये १।१ पदे १।१ निवचने १।१ अनत्याधाने ७।१ ७४ विभाषा १।१ ७१ कृञि ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः
मध्ये पदे निवचने च १।४।७६

विभाषा कृञि इति वर्तते। चकारातनत्याधाने इति च। मद्ये पदे निवचने इत्येते शब्दा अनत्याधाने विभाषा कृञि गतिसज्ञा भवन्ति। मद्येकृत्य, मध्ये कृत्वा। पदेकृत्य, पदे कृत्वा। निवचनम् वचनाभावः। निवचनेकृत्य, निवचने कृत्वा। वाचम् नियम्य इत्यर्थः अनत्याधाने इत्येव, हस्तितः पदे कृत्वा शिरः शेते।
न्यासः
मध्ये पदे निवचने च , १।४।७५

"मध्ये पदे" इति। सप्तम्यन्तप्रतिरूपकौ। "निवचने" इति। अर्थाभावेऽव्ययीभावः; नितृ()णं निवुसमिति यथा। "निवचनेकृत्य" इति। उच्चारणसामर्थ्यात् सप्तम्याः समासेऽप्यलुग् भवति। एवमुत्तरत्र॥
बाल-मनोरमा
मध्ये पदे निवचने च ७६७, १।४।७५

मध्येकृत्येति। गतिसमासे क्त्वो ल्यप्। मद्यं कृत्वेत्यर्थः। पदेकृत्येति। गतिसमासे क्त्वो ल्यप्। पदं कृत्वेत्यर्थः। निवचनेकृत्येति। वचनाऽभावं कृत्वेत्यर्थः। तदाह--वाचं नियम्येत्यर्थ इति। वचनस्याभावो निवचनम्। अर्थाभावेऽव्ययीभाव इति भावः।

तत्त्व-बोधिनी
मध्ये पदे निवचने च ६७७, १।४।७५

मध्ये पदे। "विभाषा "कृञी"ति वर्तते, चकाराद "नत्याधाने"इति च। एषामनत्याधानरूपार्थविशेषे एदन्तत्वमविशेषएण निपात्यते, न तु गतिसंज्ञासंनियोगेन। अनत्याधाने किम्()। पदे कृत्वा शिरो नमति। वाचं नियम्येति। निवचनं हि वचनाऽभावः। अर्थाऽभावेऽव्ययीभावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नित्यम् १।१ ७८ हस्ते ० पाणौ ० उपयमने ७।१ अनत्याधाने ७।१ ७४ विभाषा १।१ ७१ कृञि ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः
नित्यं हस्ते पानावुपयमने १।४।७७

कृञि इति वर्तते। हस्ते पाणौ इत्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ भवतः उपयमने। उपयमनं दारकर्म। हस्तेकृत्य। पाणौकृत्य। दारकर्म कृत्वा इत्यर्थः। उपयमने इति किम्? हस्ते कृत्वा कार्षापनं गतः।

न्यासः

नित्यं हस्ते पाणावुपयमने। , १।४।७६

"हस्तेकृत्य, पाणौकृत्य" इति। सप्तम्याः पूर्ववदलुक्। "दारकर्म" इति। भार्याकरणम्॥

बाल-मनोरमा

नित्यं हस्ते पाणावुपयमने ७६८, १।४।७६

नित्यं हस्ते। शेषपूरणेन सूत्रं व्याचष्टे-कृञीति। हस्ते इति पाणाविति च शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमन इति यावत्। हस्तेकृत्य, पाणौकृत्येति। कन्यां स्वीकर्तुं पाणिं गृहीत्वेत्यर्थः। एदन्तत्वमौदन्तत्वं चानयोर्निपात्यते। उपयमने किं?। हस्ते कृत्वा सुवर्णं गतः। अन्यदीयमिति बुद्ध्या दातु परावृत्त इत्यर्थः।

तत्त्व-बोधिनी

नित्यं हस्ते पाणावुपयमने ६७८, १।४।७६

नित्यं हस्ते। उपयमनरूपार्थ एवैतयोरेदन्तत्वमौदन्तत्वं च निपात्यते। हस्तेकृत्येति। परिणीयेत्यर्थः। उपयमने किम्()। हस्ते कृत्वा कार्षापणं गतः। स्वीकारमात्रमिति पक्षे तु नाऽलमिति बुद्ध्य परावृत्त्य दानार्थं गति इति योज्यम्। एवं तावद्गतिसमासानुदाहृत्य प्रादिसमासान्वक्तुमारभते--प्रादिग्रहणमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्राध्वम् ० बन्धने ७।१ नित्यम् १।१ ? कृञि ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

प्राध्वं वन्धने १।४।७८

कृञि इति वर्तते। प्राध्वम् इति मकारान्तम् अव्ययमानुकूल्ये वर्तते। तदानुकूल्यं वन्धनहेतुकं यदा भवति तदा प्राध्वंशब्दः कृञि नित्यं गतिसंज्ञो भवति। प्राध्वंक्रत्य। बन्ध्ने इति किम्? प्राध्वं कृत्वा शकटं गतः।

न्यासः

प्राध्वं बन्धने , १।४।७७

"बन्धने" इति निमित्तसप्तमीयम्। प्राध्वंशब्दस्यानुकूल्यवृत्तित्वात् "बन्धने" इत्यस्य विशेषणं नोपपद्यत इति सामथ्र्यात् तदर्थस्य विशेषणं विज्ञायत इत्यत आह-- "तदानुकूल्यम्" इत्यादि। बन्धनं हेतुर्यस्य तत्तथोक्तम्। "प्राध्वंकृत्य" इति। बन्धनेन निमित्तेनानुकूल्यं कृत्वेत्यर्थः। "प्राध्वं कृत्वा" इति। समर्थमध्वगमने शकटम्, अध्वाभिमुखं कृत्वेति गम्यते। "उपसर्गादध्वनः" ५।४।८५ इत्यच् समासान्तः। "नस्तद्धिते" ६।४।१४४ इति टुलोपः। प्रगतमध्वानमिति प्रादिसमासः। लक्षमप्रतिपदोक्तपरिभाषयैवात्र (व्या।पा।३) प्राप्तौ सिद्धायां लाक्षणिकोऽपि प्राध्वंशब्दो यत्र बन्धनेनाभिसम्बध्यते, तत्रापि गतिसंज्ञा भवतीति ज्ञापनार्थं बन्धनग्रहणम्। तेन यदा बन्धनेनैव शकटस्याध्वनि सामथ्र्यादध्वाभिमुखता विवक्ष्यते,

तदा प्राध्वंकृत्य शकटं गतमित्येतदपि सिद्धं भवति॥

बाल-मनोरमा

प्राध्वं बन्धने ७६९, १।४।७७

प्राध्वं बन्धने। प्राध्वमिति न द्वितीयान्तमित्याह--प्राध्वमित्यव्ययमिति। बन्धने गम्ये प्राध्वमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः। प्राध्वङ्कृत्येति। गतिसमासे क्त्वे ल्यप्। अत्र प्राध्वमिति मान्तमव्ययं बन्धनेन आनुकूल्ये वर्तते। तदाह--बन्धनेनेति। बन्धनग्रहणस्य प्रयोजनमाह--प्रार्थनादिनेति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ जीवकोपनिषदौ १।२ औपम्ये ७।१ नित्यम् १।१ ७७ कृञि ७।१ ७१ गतिः १।१ ५९ क्रियायोगे ७।१ ५८ निपाताः १।३ ४६

काशिका-वृत्तिः

जीविकाउपनिषदावौपम्ये १।४।७९

कृञि इति वर्तते। जीविका उपनिषदित्येतौ शब्दौ औपम्ये विषहे कृञि गतिसंज्ञौ भवतः। जीविकाकृत्य। उपनिषत्कृत्य। औपम्ये इति किम्? जीविकाम् कृत्वा गतः।

न्यासः

जीविकोपनिषदावौपम्ये , १।४।७८

"{औपम्ये विषये"-- काशिका।} औपम्यविषये" इति। उपमीयतेऽनयेत्युपमा। "आतश्चोपसर्गे" ३।३।१०६ इत्यङ। तस्या भाव औपम्यम्; ष्यञ्। तत्पुनः क्रियाकारकसम्बन्धः। "समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ()भिन्नरूपाव्यभिचरितसम्बन्धेभ्यः"इति वचनात्। विषयग्रहणेनौपम्ये इति सप्तम्या विषयसप्तमीत्वं दर्शयति। सम्भवति च जीविकोपनिषदावुपमाभूते प्रत्यौपम्यविषयभावः, तेन विनोपमाया अभावात्। "जीविकाकृत्य" इत्यादि।जीविकामिव कृत्वा। उपनिषदमिव कृत्वेत्यर्थः। जीविका = जीवनोपायः। उपनिषत् = रहस्यं हेतुश्च। यत्तत्सदृशं तज्जीविकेन जीविका। उपनिषधिवोपनिषदिति जीविकोपनिषद्भ्यामुपमीयते॥

बाल-मनोरमा

जीविकोपनिषदावौपम्ये ७७०, १।४।७८

जीविकोपनि। उपमैव ओपम्यं, तस्मिन्विषये जीविकाशब्द उपनिषच्छब्दश्च कृञा योगे गतिसंज्ञौ स्तः। जीविकामिवेति। अशनपानादिजीवनोपायो जीविका। तामिव अवश्यं कृत्वेत्यर्थः। जीविकाकृत्येति। गतिसमासे क्त्वो ल्यप्। उपनिषदमिव कृत्वेति। उपनिषद्वेदान्तभागः, तामिव अवश्यं कृत्वेत्यर्थः। जीविका कृत्येति। गतिसमासे क्त्वो ल्यप्। उपनिषदमिव कृत्वेति। उपनिषद्वेदान्तभागः, तामिव रहसि ग्राह्यत्वेन कृत्वेत्यर्थः। उपनिषत्कृत्येति। गतिसमासे क्त्वो ल्यप्। उभयत्रापि सुब्लुक्। तदेवं "कुगतिप्रादयः" इत्यत्रत्यगतिसमासाः प्रपञ्चिताः। ननु गतिग्रहणेनैव सिद्धे प्रादिग्रहणं व्यर्थमित्यत आह--प्रादिग्रहणमगत्यर्थमिति। सुपुरुष इति। अत्र क्रियायोगाऽभावादगतित्वेऽपि समासः। सोः पूजार्थकत्वेऽपि धातुवाच्यक्रियायोगाऽभावान्न गतित्वम्। भाष्ये तु "कुगतिप्रादयः" इति सूत्रमपनीय तत्स्थाने

"क्वाङ्स्वतिदुर्गतयः समस्यन्त इति वक्तव्य"मित्युक्त्वा"कुब्राआह्वणः" "आकडारः", "सुब्राआह्वणः","अतिब्राआह्वणः, "दुब्र्राआह्वणः", "ऊरीकृत्ये"त्युदाह्रतम्। "स्वती पूजायां", "दुर्निन्दायाम्", "आङीषदर्थे", "कुः पापार्थे" इति सौनागव्याकरणवचनमित#इ भाष्ये स्पष्टम्। अत्र वार्तिकानीति। "प्रादयो गताद्यर्थे समस्यन्ते इति वक्तव्य"मिति वार्तिकं पठित्वा तत्र व्यवस्तापकानि पञ्च वार्तिकानि सौनागव्याकरणसिद्धानि भाष्ये यानि पठितानि तानि प्रदश्र्यन्त इत्यर्थः। प्रादय इति। गताद्यर्थे विद्यमानाः प्रादयः समस्यन्त इत्यर्थः। प्रगत आचार्य इति। प्रेत्यस्य विवरणं गत इति, "गत आचार्य" इत्येव अस्वपदविग्रहः, नित्यसमासत्वात्। अभिगतो मुखम् अभिमुखः, प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि।

अत्यादय इति। क्रान्ताद्यर्थे अत्यादयः समस्यन्त इत्यर्थः। अति क्रान्तो मालामिति। अतिशब्दः क्रान्ते वत्र्तते। क्रान्तो मालामित्यस्वपदविग्रहः। तत्र क्रमुधातोरतिक्रमणमर्थ। अतिमाल इति। "एकविभक्ति चे"ति मालाशब्दस्य उपसर्जनत्वात् "गोस्त्रि योः" इति ह्रस्वः।

अवादय इति। क्रुष्टाद्यर्थे अवादयः समस्यन्त इत्यर्थः। अवकोकिल इति। कोकिलया आहूत इत्यर्थः।

पर्यादय इति। ग्लानाद्यर्थे पर्यादयः समस्यन्त इत्यर्थः। अध्ययनाय=अध्ययनार्थम्। तेन श्रान्त इत्यर्थः। परिरत्र ग्लाने वर्तते।

निरादय इति। क्रान्ताद्यर्थे निरादयः समस्यन्त इत्यर्थः। निष्कोषाम्बिरिति। अतिमालवद्ध्रस्वः। निरित्यव्ययं निर्गमने वर्तते।

कर्मप्रवचनीयानां प्रतिषेध इति। वार्तिकमेतत्। वृक्षं प्रतीति। "लक्षणेत्थ"मिति कर्मप्रवचनीयत्वान्न प्रादिसमासः। इदं वार्तिकं भाष्ये प्रत्याख्यातम्।

तत्त्व-बोधिनी
जीविकोपनिषदावौपम्ये ६७९, १।४।७८

सुपुरुष इति। क्रियायोगाऽभावाद्गतित्वाऽभावः। अव्यवस्थया समासप्रसक्तौ व्यवस्थार्थं वचनानि पठ()न्ते--प्रादय इति। आदिशब्द उभयत्र प्रकारे। तेन दुराचारः पुरुषो दुष्पुरुष इत्यादि सिद्धम्। प्रगत आचार्य इति। अनेन गतार्थे वृत्तिमस्वपदविग्रहेण नित्यसमासतां च दर्शयति। एवं प्रगतः पितामहः प्रपितामहः। प्रमातामह इत्यादि।

अत्यादयः क्रान्ताद्यर्थे द्वितीयया। अत्यादय इति। आदिपदादभिगता मुखमभिमुखः। उद्गतो वेलामुद्वेलः। प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि सिद्धम्। अतिमाल इति। "गोस्त्रियो"रिति ह्रस्वः।

अवादयः क्रुष्टाद्यर्थे तृतीयया। अवादय इति। आदिपदात्परिणद्धो वीरुधा परि वीरुत्। संनद्धो वर्मणा संवर्मेति।

पर्यादयो ग्लानाद्यर्थे चतुथ्र्या। पर्यादय इति। आदिपदादुद्युक्तः सङ्ग्रामाय--उत्सङ्ग्रामः। अध्ययनायेति। तादथ्र्ये चतुर्थी। गुरुकुलवासादिना परिग्लानोऽध्ययनार्थमित्यर्थः।

निरादयः क्रान्तद्यर्थे पञ्चम्या। निरादय इति। आदिपदादुत्क्रान्तः कुलादुत्कुलः। निर्गतमङ्गुलिभ्यो निरङ्गुलम्। प्रतिषेध इति। "कुगतिप्रादयः"इति प्रसक्तसमासस्य वक्तव्यः प्रतिषेधः, स च "सुराजा, अतिसखे"ति भाष्यादिप्रयागात्स्वतिभिन्ननामेव कर्मप्रवचनीयानामित्यर्थः।

कर्मुप्रवचनीयानां प्रतिषेधः। वृक्षं प्रितीति। "लक्षणेत्थ भूते"ति कर्मप्रवचनीयत्वविधिसामर्थ्यादिह समासो नेति चेत्, तर्हि अपि स्तुततमित्युदाहार्यम्। "अपि स्तुयाद्विष्णु"मित्यादौ "अपिः पदार्थसंभावने त्यस्य साबकाशत्वात्स्वरे विशेषसत्त्वाच्चत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ते १।३ ८१ प्राक् ० धातोः ५।१ ८१

काशिका-वृत्तिः
ते प्राग् धातोः १।४।८०

ते गत्युपसर्गसंज्ञका धातोः प्राक् प्रयोक्तव्याः। तथा चैवोदाहृताः। तेग्रहणम् उपसर्गार्थम्। गतयो ह्यनन्तराः।
लघु-सिद्धान्त-कौमुदी
ते प्राग्धातोः ४२१, १।४।७९

ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः॥
न्यासः
ते प्राग्धातोः , १।४।७९

नियमार्थमेतत्। नियमः पुनः संज्ञाननियमो वा स्यात्-- ते प्रादयो यदा धातोः प्राक प्रयुज्यते तदैव गत्युपसर्गसंज्ञकाः भवन्तीति? प्रयोगनियमो वा-- ते प्रादयो गत्युपसर्गसंज्ञकाः सन्तो धातोः प्राक् प्रज्ञोक्तव्या इति? यत्र यदि पूर्वो नियम आश्रीयेत तदा संज्ञावाक्यानामयमेकदेशो विज्ञायेत-- ते प्रादयो धातोः प्राक् प्रयुज्यमाना गत्युपसर्गसंज्ञका भवन्तीति। तथा च गत्युपसर्गसंज्ञयोरनभिनिर्वृत्तत्वात् ते गत्युपसर्गसंज्ञा इति प्रत्यवमर्शो न युज्यते।
निपातसंज्ञायाश्चाभिनिर्वृत्तत्वात् त इत्यनेन निपाता एव प्रत्यवमृश्येरन्; ततश्च निपातसंज्ञाया नियमः स्यात्। इतरत्र तु नियमेनायं योगो गत्युपसर्गसंज्ञावाक्यानामेकदेशभूतो भवतीति न भवत्येव दोषप्रसङ्गः। संज्ञानियमस्य चाप्राक्प्रयुज्यमानानां संज्ञानिवृत्तिः फलं स्यात्, तच्चायुक्तम्; न ह्प्राक्प्रयुज्यमानानां सत्यामपि संज्ञायां किञ्चिदनिष्टमापद्यते। इतरस्य तु नियमस्याप्राक्प्रयोगाभावः फलम्, तच्च युक्तम्; न हि गत्युपसर्गसंज्ञकानामप्राक्प्रयोग इष्यते। तस्मात् प्रयोगनियम एव न्याय्य इति तमाश्रित्याह-- "ते गत्युपसर्गसंज्ञकाः" इति। "तथा च" इत्यादि। यादृशो नियमः कृतस्तदनुरूपं तत्सदृशमेवेत्यर्थः। ननु च नैव कश्चित् प्रपठतीति प्रयोक्तव्ये "पठति प्र" इति प्रयुङ्क्ते, ततोऽनिष्टादर्शनादपार्थकमेतत्, नैतदस्ति; यद्यपि भाषायां धातोः परेण प्रयुज्यमानास्ते गत्युपसर्गसंज्ञका न दृश्यन्ते, छन्दसि तु दृश्यन्ते। तत्र य एव मन्दबुद्धिः प्रतिपत्ता तेषां छन्दसि धातोः परे प्रयोगं दृष्ट्वा यथैव ते छन्दसि विषये धातोः परेण प्रयुज्यन्ते, तथा भाषायमपि प्रयोक्तव्या इति मन्यते, तं प्रति व्युत्पादनार्थत्वान्नास्ति वैयर्थ्यप्रसङ्गः। अथ किमर्थं तेग्रहणम्? यावता प्रकृतत्वादेव गत्युपसर्गसंज्ञकानां प्राक्प्रयोगेण सम्बन्धो विज्ञस्यत इत्याह-- "तेग्रहणम्" इत्यादि। असति तेग्रहणे गतिसंज्ञकानामनन्तरत्वात् त एव प्राक्प्रयोगेण सम्बध्येरन्। तेग्रहणे तूपसर्गसंज्ञा अपि निर्दिश्यन्त इति तषामपि सम्बन्ध उपपद्यते। तस्मादुपसर्गाणामपि प्राक्प्रयोगनियमो यथा स्यादित्येवमर्थं तेग्रहणम्। ननु चयं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीत्यन्तरेणापि धातुग्रहणं धातोरेव प्राक् प्रयोगो विज्ञास्यते, न हि धातोरन्यत्र क्रियाऽस्ति, तत्कथं धातोरित्युच्यते? नैतदस्ति ; प्रकर्तृमिच्छति प्रचिकीर्षतीत्यत्रापि धातोश्च प्राक् प्रयोगो

यथा स्यात्। अत्र सनः सम्बन्धिन्यषणक्रियया युक्तः प्रशब्द इति सनं गत्युपसर्गसंज्ञा यथा स्यात्। ततश्चासति धातुग्रहणे तत एव प्राक् प्रयुज्येत।धातुग्रहणे तु चिकीर्षतेर्धातोः प्राक्प्रयुज्यते, न सनः॥
बाल-मनोरमा
ते प्राग्धातोः ७७, १।४।७९

ते प्राग्धातोः। "ते" इत्यस्य विवरणं -- गत्युपसर्गसंज्ञा इति। "उपसर्गाः क्रियायोगे" "गतिश्चे"ति प्रकृतत्वादिति भावः। प्रागेवेति। न परतो, नापि व्यवहिता इत्यर्थ-। इह "धातोः प्रागेव प्रयुज्यमाना गत्युपसर्गाः स्यु"रिति संज्ञानियमपक्षोऽपि भाष्ये स्थितः।

तत्त्व-बोधिनी
ते प्राग्धातोः ५९, १।४।७९

न परतः, नापि व्यवहिता इत्यर्थः। अत एव "छन्दसि परेऽपि", "व्यवहिताश्चे"ति सूत्रितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ छन्दसि ७।१ ८१ परे ७।१ अपि ० ते १।३ ७९ धातोः ५।१ ७९

काशिका-वृत्तिः
छन्दसि परे ऽपि १।४।८१

प्राक् प्रयोगे प्रप्ते छन्दसि परे ऽपि अभ्यनुज्ञायन्ते। छन्दसि विषये गत्युपसर्गसंज्ञकाः प्रे ऽपि पूर्वे ऽपि प्रयोक्तव्याः। न च प्रेषां प्रयुज्यमानानां संज्ञाकार्यं किञ्चिदस्ति। केवलं प्रप्रयोगे ऽपि क्रियायोगे एषाम् अस्ति इति ज्ञाप्यते। याति नि हस्तिना, नियाति हस्तिना। हन्ति नि मुष्टिना, निहन्ति मुष्टिना।
न्यासः
छन्दसि परेऽपि , १।४।८०

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ व्यवहिताः १।३ च ० छन्दसि ७।१ ८० ते १।३ ७९ धातोः ५।१ ७९

काशिका-वृत्तिः
व्यवहिताश् च १।४।८२

व्यवहिताश्च गत्युपसर्गसंज्ञकाः छन्दसि दृश्यन्ते आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। आ याहि।
न्यासः
व्यवहिताश्च। , १।४।८१

छन्दसि व्यवहितानां प्रयोगवचनात् भाषयां व्यवहितानां प्रयोगो न भवतीत्युक्तं भवति। यद्येवम्, गतिव्यवधानेऽपि प्राक्प्रयोगो न प्राप्नोति-- समाहरतीत्यादौ नैष दोषः; न हि तुल्यजातीयको व्यवधायको भवति। गत्युपसर्गजातेराश्रयणान्नास्ति व्यवधानम्। "आ मन्द्रैः" इत्यादि। अत्राङो मन्द्रैरित्यादिभिः पदैर्व्यधानेऽपि यातेर्धातोः प्राक्प्रयोगः। "आयाहि" इति। एतेनाङो याहीत्यनेन सम्बन्धं दर्शयति॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्मप्रवचनीयाः १।३ ९७

काशिका-वृत्तिः
कर्मप्रवचनीयाः १।४।८३

कर्मप्रवचनीयाः इत्यधिकारो विदितव्यः। यानित ऊर्ध्वम् अनुक्रमिष्यामः कर्मप्रवचनीय। संज्ञास्ते वेदितव्याः अधिरीश्वरे इति यावद् वक्ष्यति। कर्मप्रवचनीयप्रदेशाः कर्मप्रवचनीययुक्ते द्वितीया २।३।८ इत्येवम् आदयः।
न्यासः
कर्मप्रवचनीयाः।, १।४।८२

"कर्मप्रवचीयाः" इति वक्ष्यमाणानां संज्ञिनां बहुत्वाद्बहुवचनेन निर्देशः। महत्याः संज्ञायाः करणस्यैतत्प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत-- कर्म प्रोक्तवन्तः कर्मप्रवचीया इति। भूते "कृत्यल्युटो बहुलम्" ३।३।११३ इति कत्र्तर्यनीयर्। कर्मशब्दः क्रियावचनः। के च कर्म प्रोक्तवन्तः? ये सम्प्रति क्रियां न त्वाहुः। तदेवमन्वर्थसंज्ञाकरणद्वारेण ये क्रियां द्योतितवन्तः, न तु प्रोक्तवन्तः? येत सम्प्रति क्रियां न त्वाहुः। तदेवमन्वर्थसंज्ञाकरणद्वारेण ये क्रियां द्योतितवन्तः, न तु सम्प्रति द्योतयन्ति, ते कर्मप्रवचनीयसंज्ञा भवन्तीत्युक्तं भवति। यदि सम्प्रतति न क्रियां द्योतयन्ति, किन्तर्हि? सम्बन्धविशेषम्। यथा शाकल्यस्य संहितामनुप्रावर्षखदित्यत्र हि निशमनक्रियया संहिताप्रवर्षणयोर्यः सम्बन्ध उपजनितो हेतुहेतुमद्भावलक्षणः, तमनुशब्दो द्योतयति। कर्मप्रवचनीयसंज्ञायां सत्याम् "कर्मप्रवचनीययुक्ते द्वितीया" २।३।८ इति द्वितीया भवति॥
बाल-मनोरमा
कर्मप्रवचनीयाः ५३८, १।४।८२

कर्मप्रवचनीयाः। इत्यधिकृत्येति। "प्राग्रीस्वरान्निपाताः" इति पर्यन्तमिति बोध्यम्।

तत्त्व-बोधिनी
कर्मप्रवचनीयः ४८४, १।४।८२

कर्मप्रवचनीयाः। इत्यधिकृत्येति। रू()आरात्प्रागिति बोध्यम्। गुरुसंज्ञाकरणमन्वर्थत्वाय। कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः। बाहुलकाद्भूते कर्तर्यनीयर्। तेन संप्रति क्रियां न द्योतयन्तीति लभ्यते। तथा च हरिः--"क्रियाया द्योतको नाऽयं सम्बन्खस्य न वाचकः। नापि क्रियापदाक्षेपी, सम्बन्धस्य तु भेदकः"इति। तथाहि "जपमनु प्रावर्ष"दित्यत्र अनुना न क्रियाविशेषो द्योत्यते, "अनुभूयते सुख"मित्यदौ यथा। नापि षष्ठ()एव सम्बन्ध उच्यते, द्वितीययैवो तस्योक्तत्वात्। नापि "प्रादेशं विपरिलिखति"विमाय परिलिखतीत्यत्र विशब्देन मानक्रियेव क्रियान्तरमाक्षिप्यते, कारकविभक्तिप्रसङ्गात्। किं तु जपसम्बन्धि वर्षणमिति द्वितीययावगतः सम्बन्धो लक्ष्यलक्षणभाव एवेत्यवगमात्सम्बन्ध एवानुना

विशेषेऽवस्थाप्यते। क्वचित्तु क्रियागतविशेषद्योतकेऽपि इयं संज्ञा वचनात्प्रवर्तते। "सुःपूजायाम्"तिरतिक्रमणे च "इति यथा। उक्तसंज्ञ इति। कर्मप्रवचनीयसंज्ञ इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुः १।१ ८५ लक्षणे ७।१ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

अनुर् लक्षणे १।४।८४

अनुशब्दो लक्षणे ध्योत्ये कर्मप्रवचनीयसंज्ञो भवति। शाकल्यस्य संहितामनु प्रावर्षत्। अनड्वद्यज्ञमन्वसिञ्चत्। अगस्त्यमन्वसिञ्चत् प्रजाः। किम् अर्थम् इदम् उच्यते, यावता लक्षनैत्थम् भूताऽख्यान १।४।८९ इति सिद्धैवानोः कर्मप्रवचनीयसंज्ञा? हेत्वर्थं तु वचनम्। हेतुतृतीयां वाधित्वा द्वितीयाऽ एव यथा स्यात्।

न्यासः

अनुर्लक्षणे। , १।४।८३

"लक्षणाशब्दोऽत्र चिह्ने वर्तते" इति मत्वा कश्चिच्चोदयति-- "किमर्थम्" इत्यादि। इतरस्तु "लक्षणेत्थम्भूताख्यानभागवीप्सासु" १।४।८९ इत्यादौ सूत्रे। तत्र चिह्ने ज्ञापके वत्र्तमानस्य लक्षणशब्दस्य ग्रहणम्, इह तु कारके हेतौ, अतस्तेन न सिध्यतीत्येनाभिप्रायेण तं प्रत्याह-- "हेत्वर्थन्तु वचनम्" इत्यादि। तुशब्दोऽवधारणे-- हेत्वमर्थमेवेति। हेतुशब्दोऽतर् कारकहेतुवचनः, न ज्ञापकहेतुवचनः; अन्यथा ह्यपरिहार एवायं स्यात्। हेतुरर्थो यस्य तत्तथोक्तम्। हेतौ वत्र्तमानस्यानोः कर्मप्रवचनीयसंज्ञा यथा स्यादित्येवमर्थमिदं वचनमित्यर्थः। किमर्थं पुनहतौ वत्र्तमानस्य तस्येयं संज्ञा विधीयत इत्याह-- "हेतौ तृतीयायाम्" इत्यादि। संहिता हि वर्षणस्य हेतुः, अनुहुद्()द्यज्ञः सेकस्य, तथा हि-- संहितामनुनिशम्य श्रुत्वा प्रावर्षत्। अवुड्वद्यज्ञञ्चानुनिशम्यासिञ्चत्। तत्र यदि हेतावनोरेषा संज्ञा नोच्येत शाकल्यस्य संहितामनु रप्रावर्रषदित्यादौ "हेतौ" २।३।२३ इति तृतीया स्यात्। तस्मात्तां बाधित्वा द्वितीयैव यथा स्यादित्येवमर्थ हेताावियं संज्ञाऽनोर्विधीयते॥

बाल-मनोरमा

अनुर्लक्षणे ५३९, १।४।८३

अनुर्लक्षणे। लक्षणे द्योत्ये इति। लक्ष्यलक्षणभावसंबन्धे द्योत्ये इत्यर्थः। उक्तसंज्ञ इति। कर्मप्रवचनीसंज्ञ इत्यर्थः। लक्ष्यते ज्ञायतेऽनेनेति लक्षणम्, तच्च हेतुभूतं विवक्षितम्, नतु वृक्षं प्रति विद्योतते विद्युदितिवच्चिह्नमात्रम्, तथा सति "लक्षणेत्थ"मित्येव सिद्धेरिति वक्ष्यते। गत्युपसर्गसंज्ञापवाद इति। अनेन क्रियायोगे एव कर्मप्रवचनीयसंज्ञेति सूचितम्। "कर्मप्रवचनीयाः" इति महासंज्ञाकरणसामर्थ्यादन्वर्थत्वम्। कर्मेति क्रियोच्यते, तां प्रोक्तवन्तः कर्मप्रवचनीयाः, भूते कर्तरि बाहुलकादनीयप्रत्ययः, ततश्च क्रियामेव न द्योतयन्ति किंतु क्रियानिरूपितसंबन्धविशेषं द्योतयन्ति। एवं च अनुप्रत्यादिषु क्रियानिरूपितसंबन्धस्य द्योत्यत्वेन अन्वयात्तत्र गत्युपसर्गसंज्ञयोः प्राप्तिर्बोध्या।

तत्त्व-बोधिनी

अनुर्लक्षणे ४८५, १।४।८३

गत्युपसर्गसंज्ञापवाद इति। ननु "जपमनु प्रावर्ष"दित्यत्र वृ()ष्ट प्रत्यनोर्योगाऽभावेन क्रियायोगाऽभावादेतयोः संज्ञयोः प्राप्त्यभावात्कथं तदपवादत्वमस्याः सञ्ज्ञाया इति चेत्। अत्राहुः--गम्यमाननिशमनक्रियामपेक्ष्य तयोः प्राप्तिरस्तीति संभावनामात्रेण मूलस्य निर्बाधत्वात्। न चैवं कर्मत्वादेव द्वितीयासिद्धौ किमनया संज्ञयेति वाच्यम्, जपस्य निशमनप्रयुक्तहेतुत्वाख्यसंबन्धविवक्षायां कर्मत्वाऽभावेन तृतीयायां प्राप्तायां तदारम्भात्। न चैवमपि "जपमनु निशम्य देवः प्रावर्षत्ित्यर्थावगमाल्ल्य[बन्त]लोपे पञ्चम्यपवादार्थैवेयं संज्ञाऽस्त्विति वाच्यम्। ल्य[बन्त]लोपे हि कर्मणि अधिकरणे च पञ्चमी, जपस्य तु कर्मत्वादिना विवक्षाऽभावादिति। परापि हेतौतृतीयेत्यादि। अयं भावः--लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशो यो न हेतुः--"वृक्षमनु विद्योतते विद्यु"दिति, हेतुतृतीयाया अवकाशो "धनेन कुल"मित्यादि। "जपमनु प्रावर्ष"दित्यत्र तु देतुभूते लक्षणे परत्वात्तृतीया स्यात्तां बाधित्वा "अनुर्लक्षणे"इति पुनः संज्ञाविधानसामर्थ्याद्द्वितीयैव भवतीति। न च "तृतीयार्थे"इति सूत्रेणेह गतार्थता शङ्क्या, तस्य पुरस्तादपवादन्यायेन "सहयुक्तेऽप्रधाने"इत्येतावन्मात्रबाधकत्वात्। समाश्र्यादिति। अत एव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियते इति भावः। नदीमन्विति। द्वितीयायाः संम्बन्धोऽर्थः, षष्ठ()पवादत्वादेतद्द्वितीयायाः। स चेह संबन्धः साहित्यरूप एवेत्यनुना द्योत्यते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तृतीयार्थे ७।१ अनुः १।१ ८३ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ५६

काशिका-वृत्तिः
तृतीयाऽर्थे १।४।८५

अनुशब्दस् तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। नदीम् अन्ववसिता सेना। पर्वतम् अन्ववसिता सेना। पर्वतेन सम्बद्धा इत्यर्थः।

न्यासः
तृतीयार्थे , १।४।८४

"नदीमन्ववसिता" इति। सहार्थोऽत्र तृतीयार्थः। "सहयुक्तेऽप्रधाने" २।३।१९ इति सहार्थयोगे तृतीयाविधानात्। "अन्ववसिता" इति। "षिञ् बन्धने" (धा।पा।१४७७) इत्यस्य निष्ठायां रूपम्॥

बाल-मनोरमा
तृतीयार्थे ५४१, १।४।८४

तृतीयार्थे। अनुरित्यनुवर्तते। "कर्मप्रवचनीयाः" इत्यधिकृतम्। अस्मिन्द्योत्ये इति। "सहयुक्तेऽप्रधाने" इति तृतीयार्थे साहित्ये द्योत्ये इत्यर्थः। अत्र "तृतीयार्थे" इत्यनेन कर्तृकरणे न गृह्येते, "रामेण शरेणानुहतो वाली"त्यत्र "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायेन तृतीयाया एव प्रवृत्त्या अस्याः संज्ञायाः फलाऽभावात्। नापि "येनाङ्गविकारः" इति तृतीयार्थोऽत्र विवक्षितः, "अनन्तरस्ये"ति न्यायेन "कर्मप्रवचनीययुक्ते द्वितीया" इत्यस्य "सहयुक्तेऽप्रधाने" इत्यस्यैव बाधकत्वात्। तदाह-नद्या सह संबद्धेति। साहित्यं द्वितीयार्थः, अनुस्तद्ध्योतक इति भावः। नन्ववसितशब्दस्य अवपूर्वात् "षो अन्तकर्मणि" इति धातोरुत्पन्नत्वात्कथमुक्तार्थलाभ इत्यत आह-षिञ्बन्धने क्त इति। उपसर्गबलेन संबन्धवृत्तेरस्मात्क्तप्रत्यय इत्यर्थः। अत्र यदवश्यं पुनः पुनर्लक्ष्यस्य ज्ञापकं तदेव न लक्षणम्, किंतु सकृज्ज्ञापकमपि।

यथा यं कमण्डलुना भवानद्राक्षीत्, स छात्र इति। सकृदेव हि कमण्डलुपाणिर्दृष्टः, तस्य कमण्डलुर्लक्षणमिति "अनुर्लक्षणे" इत्यत्र भाष्ये स्पष्ठम्। तेन व्याप्यात्मकलिङ्गमेवात्र लक्षममिति न भ्रमितव्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हीने ७।१ ८६ अनुः १।१ ८३ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः
हीने १।४।८६

हीनः इति न्यूनः उच्यते, स च उत्कृष्टापेक्षः। तेन इयम् हीनौत्कृष्टसम्बन्धे संज्ञा विज्ञायते। हीने द्योत्ये अयम् अनुः कर्मप्रवचनीयसंज्ञो भवति। अनु शाकटायनं वैयाकरणाः। अन्वर्जुनं योद्धारः।
न्यासः
हीने , १।४।८५

"अनुशाकटायनं वैयाकरणाः" इति। शाकटायनमपेक्ष्यान्ये वैयाकरणा हीना इति। अपेक्षयात्र जनितो यः सम्बन्धस्तेन व्यतिरिच्यते शाकटायन इति। ततः षष्ठ()आं प्राप्तायां तदपवादेन द्वितीया विधीयते। एकयैव विभक्त्योभयस्थोऽपि सम्बन्धो द्योतित इति। तेन सम्बन्ध्यन्तरवाचिनो वैयाकरणशब्दादपरः सम्बन्धिविभक्तिर्न भवति॥
बाल-मनोरमा
हीने ५४२, १।४।८५

हीने। हीने द्योत्ये इति। निकर्षे द्योत्ये इत्यर्थः। हीन इति भावे क्तः। "ओ हाक् त्यागे" इति धातोरोदित्त्वात् "ओदितश्चे"ति निष्ठानत्वम्। अनुः प्राग्वदिति। क्रमप्रवचनीयसंज्ञ इत्यर्थः। अनु हरिं सुरा इति। अत्र निकृष्टभावोऽनुद्योत्या द्वितीयार्थः। तदाह--हरेर्हीना इत्यर्थ इति। हरेरिति षष्ठी प्रतियोगितायाम्, हरिप्रतियोगिकनिकर्षवन्त इत्यर्थः।

तत्त्व-बोधिनी
हीने ४८६, १।४।८५

हीने। उत्कृष्टादेव द्वितीया न त्वपकृष्टात्, शक्तिस्वभावदित्याशयेनोदाहरति--अनु हरिमिति। उपोऽधिके च। चकारेण हीने इत्यनुकृष्यते, तदाह--अधिके हीने चेति। अधिके संज्ञाविधानं न द्वितीयार्थमित्याह--सप्तमी वक्ष्यत इति। "यस्मादधिक"मित्यनेनेति भावः। तस्मिन्नपि सूत्रे "कर्मप्रवचनीययुक्ते"इत्यनुवृत्तेरधिके संज्ञाविधान मावश्यकमेवेति ज्ञेयम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपः १।१ अधिके ७।१ च ० हीने ७।१ ८५ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

उपो ऽधिके च १।४।८७

उपशब्दः अधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। उप खार्यं द्रोणः। उप निष्के कार्षापणम्। हीने उप शाकटायनं वैयाकरणाः।

न्यासः

उपोऽधिके च। , १।४।८६

अधिकध्यारूढमुच्यते। न चानधिकेन विनाधिकं सम्भवति। तेनाधिके सम्बन्धेऽध्यारूढक्रियाजनिते संज्ञेयं विज्ञायते। चकारद्धीने च। "उपखार्यां द्रोणः" इति। खार्या द्रोणोऽधिक इत्यर्थः। "यस्मादधिकम्" २।३।९ इत्यादिना सप्तमी। तयैव सम्बन्धस्याभिहितत्वात् द्रोणशब्दात् "कर्मप्रवचनीययुक्ते द्वितीया" २।३।८ इति द्वितीया न भवति॥

बाल-मनोरमा

उपोऽधिके च ५४३, १।४।८६

उपोऽधिके च। चकारात् "हीने" इति समुच्चीयते। तदाह-अधिके हीने चेति। आधिक्ये निकर्षे चेत्यर्थः। प्राक्संज्ञमिति। प्रागुक्तकर्मप्रवचनीयसंज्ञकमित्यर्थः। अधिके संज्ञाविधानं न द्वितीयार्थमित्याह-अधिके सप्तमी वक्ष्यत इति "यस्मादधिक"मित्यनेन कर्मप्रवचनीयसंज्ञाकार्यं सप्तमी वक्ष्यते इत्यर्थः। हीने इति। "उदाहरणं वक्ष्यते" इति शेषः। उप हरिं सुरा इति। हरेर्हीना इत्यर्थः।

तत्त्व-बोधिनी

उपोऽधिके च ४८७, १।४।८६

उपहरिमिति। पूर्ववदुत्कष्टादेव द्वितीया।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपपरी १।२ वर्जने ७।१ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

अपपरी वर्जने १।४।८८

अपपरी शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः। प्रकृतेन सम्बन्धिना कस्यचिदनभिसम्बन्धः वर्जनम्। अप त्रिगर्तेभ्यो वृष्टो देवः। परि परि त्रिगर्तेभ्यो वृष्टो देवः। वर्जने इति किम्? ओदनं परिषिञ्चति।

न्यासः

अपपरी वर्जने , १।४।८७

"प्रकृतेन सम्बन्धिना" इति। वर्षादिना। "कस्यचित्" इति। त्रिगत्र्तादेः। "अप त्रिगर्तेभ्यः" इति। "पञ्चम्यपाङ्परिभिः" २।३।१० इति पञ्चमी। "परि परि त्रिगर्तेभ्यः" इति। "परेर्वर्जने" ८।१।५ इति द्विर्वचनम्। "ओदनं परिषिञ्चिति" इति।

 

सर्वतः सिञ्चतीत्यर्थः। "शे मुचादीनाम्" ७।१।५९ इति नुम्। कर्मप्रवचनीयसंज्ञाया अभावादुपसर्गसंज्ञैव भवति। तेन "उपसर्गात्सुनोति" ८।३।६५ इत्यादिना षत्वं भवति॥

बाल-मनोरमा

अपपरी वर्जने ५८८, १।४।८७

अपपरी वर्जने। कर्मप्रवचनीयौ स्त इति। "कर्मप्रवचनीयाः" इत्यधिकृतस्य द्विवचनेन विपरिणाम इति भावः। वर्जने किम्?। परिषिञ्चति। सर्वतः सिञ्चतीत्यर्थः। अत्रोपसर्गत्वात् "उपसर्गात्सुनोती"ति षत्वम्।

तत्त्व-बोधिनी

अपपरी वर्जने ५२८, १।४।८७

अपपरी। वर्जने किम्()। परिषिञ्चति। सर्वत इत्यर्थः। अत्रोपसर्गत्वात्षत्वम्। वचनग्रहणादिति। विना तेनेति मर्याद, सह तेनेत्यभिविधिरित्यत्र य उपात्तो विशेषो विशेषणांशरूपः सोऽत्र न गृह्नते, वचनग्रहणसामर्थ्यात्, किंत अवधिमात्रं विवक्ष्यते इत्यर्थद्वयसङ्ग्रहः। यद्वा मर्यादाशब्दो यस्मिन्नुच्यते तन्मर्यादा वचनं, तद्धि "आङ्भार्यादाभिविध्योः" इति सूत्रं, तत्र य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आङ् १।१ मर्यादावचने ७।१ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

आङ् मर्यादावचने १।४।८९

आङित्येषा शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति। अवधिर्मर्यादा। वचनग्रहणादभिविधिरपि गृह्यते। आ पाटलिपुत्राद् वृष्टो देवः। आ कुमारं यशः पाणिनेः। आ सांकाश्यात्। आ मथुरायाः। मर्यादावचने इति किम्? ईषदर्थे क्रियायोगे च मा भूत्।

न्यासः

आङ् मर्यादावचने , १।४।८८

यत्राङो मर्यादायामभिविधौ च कार्यमिच्छति तत्रोभयोरपि ग्रहणं करोति, यथा-- "आङ मर्यादाभिविध्योः" २।१।१२ इत्यादि। इह तु मर्यादाग्रहमेव कृतम्, नाभिविधिग्रहणम्, अतोऽभिविधावनया संज्ञया न भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह-- "वचनग्रहणात्" इत्यादि। वचनग्रहणे हि सति बहुव्रीहिर्लभ्यते। "मर्यादा" इत्येतद्वचनं यत्र सूत्रे तन्मर्यादावचनम्। तत्रायमर्थो भवति-- यत्र मर्यादाग्रहणमस्त सूत्रे, तत्र य आङ स कर्मप्रवचनीयसंज्ञो भवति। तत्पुनः सूत्रम्-- "आह मर्यादाभिविध्योः" २।१।१२ इत्येतत्-- तत्र चाङ मर्यादाभिविध्योर्वत्र्तमान उपात्त इत्युभयत्रापि भवति। कः पुनर्वर्जनस्य मर्यादाश्च विशेषः, येन पूर्वसूत्रे वर्जनमभिधायेह मर्यादाग्रहणं करोति? अयमस्ति विशेषः-- वर्जने हि तत्परित्यागेनान्यत्र सामान्येन वर्षणादिना सम्बन्धो गम्यते, यथा-- आ त्रिगत्र्तेभ्यो वृष्टो देव इति, अत्र हि यस्यां दिशि व्यवस्थितो वक्तेदं वाक्यं प्रयुङ्क्ते तस्यां दिशि यो देशो यस्तथान्यासु

दिक्षु तत्र सर्वत्रैव त्रिगर्तान्? वर्जयित्वा वृष्ट इति गम्यते। मर्यादायां त्विदं वाक्यं प्रयुङ्क्ते-- आ पाटलिपुत्राद्()वृष्टो देव इति, तत्सम्बन्धिन्यामेव दिशि यो व्यवस्थितो देशस्तस्य देशस्य वर्षणेन सम्बन्धरः प्रतीयत इत्येष विशेषः। "ईषदर्थे क्रियायोगे मा भूत्" इति। ईषदर्थ आकडार इति। क्रियायोगे समाहरतीति। पूर्वत्र संज्ञाया अभावात्पञ्चमी न भवति। इतरत्र "गतिर्गतौ" ८।१।७० इति निघातो भवति। यस्तु वाक्यस्मरणयोराकारो वत्र्तते, तस्याङित्त्वादिह ङकारोच्चारणादेव संज्ञाया अप्रसक्तिः॥

बाल-मनोरमा

आङ्मर्यादावचने ५८९, १।४।८८

आङ्मर्यादावचने। उक्तसंज्ञ इति। कर्मप्रवचनीयसंज्ञक इत्यर्थः। ननु "आङ्मर्यादायामि"त्येव सिद्धे वचनग्रहणं व्यर्थमित्यत आह--वचनग्रहणादिति। तेन विनेति मर्यादा। तेन सहेत्यभिविधिः। मर्यादाशब्दो यत्रोच्यते तन्मर्यादावचनम्=ाङ्मर्यादाभिविध्योः" इति सूत्रम्। तत्र य आङ् दृष्टः स कर्मप्रवचनीयसंज्ञकः स्यादित्यर्थः। तथाच मर्यादिभिविध्योराङ् कर्मप्रवचनीय इति फलतीति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लक्षणेत्थम्भूताख्यानभागवीप्सासु ७।३ ९० प्रतिपर्यनवः १।३ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

लक्षनैत्थंभूताऽख्यानभागवीप्सासु प्रतिपर्यनवः १।४।९०

लक्षणे, इत्थंभूताऽख्याने, भागे, वीप्सायां च विशायभूतायां प्रति परि अनु इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति। लक्षणे तावत् वृक्षं प्रति विद्योतते विद्युत्। वृक्षं परि। वृक्षम् अनु। इत्थंभूताऽख्याने साधुर् देवदत्तो मातरम् प्रति। मातरम् परि। मातरम् अनु। भागे यदत्र मां प्रति स्यात्। माम् परि स्यात्। मामनु स्यात्। वीप्सायाम् वृक्षं वृक्षम् प्रति सिञ्चति। परि सिञ्चति। अनु सिञ्चति। लक्षणादिषु इति किम्? ओदनं परिषिञ्चति। अथ परिशब्दयोगे पञ्चमी कस्मान् न भवति पञ्चम्यपाङ्परिभिः २।३।१० इति? वर्जनविषाये सा विधीयते, अपशब्दसाहचर्यात्।

न्यासः

लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः , १।४।८९

लक्षणं ज्ञापको हेतुश्चिह्नमिहाभिप्रेतम्। लक्ष्यते चिह्न्यते येन तल्लक्षणम्। कञ्चित्प्रकारमापन्नमित्थम्भूतम्, तस्याख्यानमित्थम्भूताख्यानम्। "भी प्राप्तौ" (धा।पा।१८४४) आत्मनेपदी। तस्मात् "आ धृषाद्वा" (धा।पा।१८०५ तः पश्चात्) इति विभाषितणिचो यदा चुरादिणिज् नास्ति, तदा क्तान्तस्य भूत इति रूपं भवति। स्वीक्रियमाणोंऽशो भागः। यस्त्वस्वीक्रियमाणेऽशे भागशब्दः प्रयुज्यते-- प्रियङ्गोर्भागो नगरस्य भाग इति, स स्वीक्रियमाणांशसादृश्यात्। पदार्थान् व्यासुमिच्छा वीप्सा। एते च लक्षणादयः प्रत्यादीनां न द्योत्याः। किं तर्हि? विषयभूताः, अत एवाह-- "विषयभूतायम्" इति। एतच्च "अभिधेयवल्लिङ्गवचनानि भवन्ति" (व्या।प।७३) इति लिङ्गविपरिणामं कृत्वा लक्षणादिभिः सम्बध्यते।
एतच्च "अभिधेयवल्लिङ्गवचनानि भवन्ति" (व्या।प।७३) इति लिङ्गविपरिणामं कृत्वा लक्षणादिभिः सम्बध्यते। यदि लक्षमादयः प्रत्यादीनां न द्योत्याः, तर्हि किं ते द्योतयन्ति? सम्बन्धविशेषम्। "वृक्षं प्रति विद्योतते विद्युत्" इति। अत्र वृक्षो लक्षणम्, विद्योतमाना विद्युल्लक्ष्या; सा हि वृक्षं प्राप्य विद्योतत इति तयोः प्राप्तिक्रियाजनितोऽत्र लक्ष्यलक्षणभावः

सम्बन्धः प्रतिशब्देन द्योत्यते। "साधुर्देवदत्तो मातरं प्रति" इति। प्रतिना देवदत्तस्य मातृविषया साधुभावापत्तिराख्यायते। अत्रापि मातरं प्राप्य साधुभावापत्तिरिति प्राप्तिक्रियाजनित एव मातुः साधुभावापत्तेश्च विषयविषयिभावलक्षणः सम्बन्धः प्रतिनाऽऽख्यायते। "यदत्र माम्"ित्यादि। यो भागो मामभिभजते स दीयतामित्यर्थः। अत्रापि विभजनक्रियाजनितः स्वीकारक्रियाजनितो वा स्वस्वामिभावः सम्बन्धः। "माम्" इति। अस्मच्छब्दस्य "त्वमावेकवचने" ७।२।९७ इति मादेशः। "द्वितीयायाञ्च" ७।२।८७ इत्त्यात्त्वम्। "वृक्षं वृक्षं प्रति सिञ्चति" इति। अत्र वीप्सा द्विर्वचनेनैव द्योत्यते। प्रतिशब्दस्य तु सेकक्रियाजनितो वृक्षायां यः सम्बन्धः साध्यसाधनभावलक्षणः स एव द्योत्यः। वृक्षादिनिमित्तं साधनम्, सेकः साध्यः। द्वितीया चेह सकर्मकत्वात् सिचेः सेकेन व्याप्तुमिष्टतमानां वृक्षाणां कर्मत्वे सति "कर्मणि द्वितीया" २।३।२ इत्यनेनैव सिद्धा। कर्मप्रवचनीयसंज्ञयोपसर्जनसंज्ञया निवर्त्तितत्त्वात् "उपसर्गात् सुनोति" ८।३।६५ इत्यादिना धत्वं न भवति। "परिषिञ्चति" इति। सर्वतः सिञ्चतीत्यर्थः। अथेत्यादि चोद्यम्। वर्जनेत्यादि परीहारः। अपशब्दसाहचर्यादित्यतत्रैवोपपत्तिः। तत्र हि कर्मप्रवचनीयाधिकाराद्वर्जनार्थस्यापशब्दस्य ग्रहणं वर्जन एव। तस्य "अपपरी वर्जने" १।४।८७ इति कर्मप्रवचनीयसंज्ञा विहिता। तस्मात्तेन साहचर्याद्वर्जनार्थस्य परोग्रहणम्। अतस्तेनापि योगे वर्जन एव विषय इयं पञ्चमी विधीयते, न लक्षणादिषु॥

बाल-मनोरमा

लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ५४४, १।४।८९

लक्षणेत्थंभूत। लक्षणं ज्ञापकम्। अयं प्रकार इत्थं, तं प्राप्त इत्थम्भूतः तस्याख्यानमुपपादकमित्थम्भूताख्यानम्। भागः स्वीकार्योऽशस्तत्स्वामी विवक्षितः। व्याप्तुं कात्स्न्र्येन संबन्द्धुमिच्छा वीप्सा। लक्षणं च इत्थम्भूताख्यानं भागश्च वीप्सा चेति द्वन्द्वाद्विषयसप्तमी। तदाह-एष्विति। एष्वर्थेषु द्योत्येष्विति तु नाश्रितम्। व्याप्तुमिच्छायास्तद्द्योत्यार्थत्वाऽभावादिति भावः। लक्षणे इति। "उदाहरणं वक्ष्यते" इति शेषः। वृक्षं प्रतीति। लक्ष्यलक्षणभावसंबन्धो द्वितीयार्थः। स च प्रत्यादिद्योत्यः। वृक्षेण लक्ष्यमाणा विद्युद्विद्योतते इत्यर्थः। उत्पन्नविनष्टा विद्युत्, तदुत्पादितो वृक्षप्रकाशोऽपि उत्पन्नविनष्ट एव। तथाच वृक्षप्रकाशोत्तरं विद्युतोऽसत्त्वेन प्रत्यक्षाऽभावादनुमेया सा। ततश्च प्रकाशितेन वृक्षेम विद्युज्ज्ञानाद्वृक्षो लक्षणम्। इत्थम्भूताख्यात इति। "उदाहरणं वक्ष्यते" इति शेषः। भक्तो विष्णुं प्रतीति। "भज सेवायाम्"। भक्तिरस्त्यस्येति भक्तः, मत्वर्थीयोऽर्शाअद्यच्, विषयतासंबन्धः प्रत्यादिद्योत्यो द्वितायार्थः , तस्य भक्तावेकदेशेऽन्वयः। विष्णुविषयकभक्तिमानित्यर्थः। अत्र भक्तो भक्तिरूपं प्रकारविशेषं प्राप्तत्वादित्थम्भूतस्तस्य विष्णुविषयकतया उपपाद्यत्वाद्विषयतासंबन्धस्तदुपपादकः प्रतिद्योत्य इति ज्ञेयम्। भागे इति। "उदाहरणं वक्ष्यते" इति शेषः। लक्ष्मीर्हरिं प्रतीति। स्वामित्यं द्वितीयार्थः। प्रत्यादिद्योत्यः। तदाह--हरेर्भाग इत्यर्थ इति। हरेः स्वभूतेति यावत्। वीप्सायामिति। "उदाहरणं वक्ष्यते" इति शेषः। वृक्षं वृक्षं प्रतीति। "नित्यवीप्सयो"रिति द्विर्वचनम्। अत्र सन्वाच्या इच्छा स्वरूपसती व्याप्तिरेव तु विवक्षिता, सा च कात्स्न्र्येन संबन्धात्मिका। तथाच प्रकृत्यर्थगतकात्स्न्र्यमेव व्याप्तिः, सा यद्यपि द्विर्वचनद्योत्या, तथापि प्रतिपर्यनुयोगे तद्द्योत्यत्वमपि। तथाच कृत्स्नं वृक्षं सिञ्चतीत्यर्थः। व्यक्तिकात्स्न्र्यमिह विवक्षितं नत्ववयवकात्स्न्र्यमिति "नित्यवीप्सयो"रित्यत्र भाष्ये स्पष्टम्। ननु सेचने वृक्षस्य कर्मत्वादेव द्वितीयासिद्धेः किमिह कर्मप्रवचनीयसंज्ञयेत्यत आह--अत्रेति। गत्युपसर्गसंज्ञापवादः कर्मप्रवचनीयसंज्ञेत्युक्तमतोऽत्र प्रतेः क्रमप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् "उपसर्गात्सुनोती"ति षत्वं न भवति। कर्मप्रवचनीयत्वाऽभावे तु प्रतेरुपसर्गत्वात्ततः परस्य सिञ्चतेः सस्य षत्वं स्यादित्यर्थः। भाष्ये तु "किमर्थमिदमुच्यते, कर्मत्वादेव द्वितीया सिध्यति,उपसर्गसंज्ञानिवृत्तिस्तु न प्रयोजनम्। क्रियायोगाऽभावे तदप्रसक्ते"रित्याक्षिप्य "द्वितीयार्थमेवैतत् कर्मप्रवचनीयसंज्ञाविधान"मित्यक्तम्। वृक्षस्य सेचने कर्मत्वेऽपि तदविवक्षायां षष्ठीं बाधितुमिदं कर्मप्रवचनीयत्वाविधानम्। किं च वृक्षस्य सेचने कर्मत्वेऽपि प्रथमतः प्रतिद्योत्यसंबन्धेऽन्वयेन

अन्तरङ्गत्वात्तन्निमित्तषष्ठीबाधनार्थमिदम्। "वृक्षं वृक्षं प्रति पक्षिण आसते" इत्यादावकर्मकधातुयोगेऽधिकरणादिसंज्ञानिरसार्थं चेदमिति भाष्याशय इति शब्देन्दुशेखरे मञ्जूषायां च स्पष्टम्। एषु किमिति। "लक्षणेत्थम्भूताख्यानभागवीप्सासु" इति किमर्थमित्यर्थः। परिषिञ्चतीति। "अग्नि"मित्यादि शेषः। अत्र लक्षणाद्यभावात्कर्मप्रवचनीयत्वाऽभावे"उपसर्गात्सुनोती"ति षत्वमिति भावः।

तत्त्व-बोधिनी
लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ४८८, १।४।८९

लक्षणेत्थं। वृक्षं प्रतीति। वृक्षसंबन्धि द्योतनमर्थः। संबन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति। भक्तो विष्णुं प्रतीति। विष्णोर्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः। भक्तः किंचित् प्रकारं प्राप्त इत्यर्थः। लक्ष्मीर्हरिं प्रतीति। लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः [संबन्धः]। वृक्षं वृक्षमिति। इह वूप्सा द्विर्वचनेनैव द्योत्यते। प्रत्यादिशब्दस्तु क्रियया संबध्यते। कर्मण्येव द्वितीय। क्रमप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न, एतदर्थमेव "लक्षणादयो विषयट तयोपात्ता"इति व्याख्यातमाकरे। "पञ्चम्यपाङ्परिभिः"इति तु न भवति, वर्जनार्थेनाऽपेत्यनेन साहचर्यात्। परिषिञ्चतीति। सर्वतः सिञ्चतीत्तर्थः। "उपसर्गात्सुनोती"ति षत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अभिः १।१ अभागे ७।१ लक्षणेत्थम्भूताख्यानभागवीप्सासु ७।३ ८९ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः
अभिरभागे १।४।९१

लक्षनाऽदिषु एव भागवर्जितेषु अभिः कर्मप्रवचनीयसञ्ज्ञो भवति। वृक्षम् अभि विद्योतते विद्युत्। साधुर् देवदत्तो मातरम् अभि। वृक्षं वृक्षम् अभि सिञ्चति। अभागे इति किम्? भागः स्वीक्रियमाणो ऽंशः। यदत्र मम अभिष्यत् तद् दीयताम्। यदत्र मम भवति तद् दीयताम् इत्यर्थः।
न्यासः
अभिरभागे , १।४।९०

"यदत्र मामाभिष्यात्" इति। "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः। कर्मप्रवचनीयसंज्ञाया अभावदुपसर्गत्वमस्त्येव। तेन "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" ८।३।८७ इति षत्वम्। "माम्" इति। यद्यप्यस्तिरकर्मकस्तथाप्यकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीति कर्मणि द्वितीया २।३।२ ननु चाभिशब्दो भागसम्बन्धस्य द्योतक इति तेनास्तेः सम्बन्धो नास्ति; तत्कथं सकर्मकता? नैतदस्ति; अस्ति सम्बन्धद्वारेण ह्यभिशब्दो भागसम्बन्धं द्योतयति, अन्यथा हि यदि तस्यास्तिना योगो न स्यात् तदोपसर्गसंज्ञापि न स्यात्। ततश्चोपसर्गसंज्ञानिबन्धनमभिष्यादिति षत्वमपि न स्यात्॥
बाल-मनोरमा
अभिरभागे ५४५, १।४।९०

अभिरभागे। लक्षणादाविति। आदिना इत्थम्भूताख्यानवीप्सयोः सङ्ग्रहः। लक्षणे उदाहरति--हरिमभि वर्तत इति। जयः क्वेति प्रश्ने इदमुत्तरम्। लक्ष्यभावोऽभिद्योत्यो द्वितीयार्थः। हरिलक्ष्यो जय इत्यर्थः। भक्तो हरिमभीति। इत्थम्भूताख्याने उदाहरणमिदम्। विषयतासंबन्धोऽभिद्योत्यो द्वितीयार्थः। हरिविषयकभक्तिमानित्यर्थः। वीप्सायामुदाहरति-देवं देवमभि सिञ्चतीति। कात्स्न्र्यसंबन्धात्मिका व्याप्तिर्द्वितीयार्थः, अभिद्योत्यश्च। कृत्स्नं देवमभि सिञ्चतीत्यर्थः। षत्वाऽभावादिपूर्ववत्। यदत्रेति। बहूनां द्रव्यं तण्डुलादि यत्र संसृष्टं तत्रेदं वाक्यम्। स्वस्वाभिभावः षष्ठ()र्थः। अभिस्तद्द्योतकः। अत्र संसृष्टद्रव्ये यद्वस्तु मम स्वभूतं स्यात्तन्मह्रं दीयतामित्यर्थः। स्यादित्यस्तेर्लिङि रूपम्। अत्र मम भाग इत्यर्थतः पर्यवसानादभाग इति कर्मप्रवचनीयत्वपर्युदासादुपसर्गत्वस्य निर्बाधत्वात् "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" इति षत्वम्।

तत्त्व-बोधिनी
अभिरभागे ४८९, १।४।९०

ममाऽभिष्यादिति। मम भागः स्यादित्यर्थः। प्राञ्चस्तु---मामभिष्यादिति प्रत्युदाहरन्ति, तत्र प्राप्नुयादित्यर्थः। उपसर्गवशेनाऽस्तेः सकर्मकत्वान्मामिति द्वितीया। अत्र च मम भाग इत्यर्थतः पर्यवसानात् "अभागे"इति कर्मप्रवचनीयत्वे निषिद्धे "उपसर्ग प्रादुर्भ्या"मिति षत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रतिः १।१ प्रतिनिधिप्रतिदानयोः ७।२ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः
प्रतिः प्रतिनिधिप्रतिदानयोः १।४।९२

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति। अभिमन्युरर्जुनतः प्रति। माषानस्मै तिलेभ्यः प्रति यच्छति।
लघु-सिद्धान्त-कौमुदी
वृद्भ्यः स्यसनोः ५४१, १।४।९१

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च॥
न्यासः
प्रतिः प्रतिनिधिप्रतिदानयोः , १।४।९१

"अभिमन्युरर्जुनतः प्रति" इति। अर्जनो मुख्यः। तत्सदृशोऽभिमन्युः। सोऽर्जुमनुकरोतीत्यत्रानुकरणक्रियाजनितः सम्बन्धविशेषोऽनुकार्यानुकरणभावः प्रतिना द्योत्यते। "प्रतिनिधिप्रतिदाने च यस्मात्" २।३।११ इति पञ्चमी। "प्रतियोगे पञ्चम्यास्तसिः" ५।४।४४। "माषानस्मै तिलेभ्यः" इति। तिलानां पूर्वदत्तानां माणाणां प्रतिदानमिह निर्यातनम्। तिलान् गृहीत्वा माषान् ददातीत्यर्थः। दानग्रहणक्रियाजनितोऽत्र सम्बन्ध उत्तमर्णाधमर्णभावलक्षणः॥
बाल-मनोरमा

प्रतिः प्रतिनिधिप्रतिदानयोः ५९१, १।४।९१

प्रतिः प्रतिनिधि। सदृशः प्रतिनिधिः, दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। उक्तसंज्ञ इति। कर्मप्रवचनीयसंज्ञक इत्यर्थः।

बाल-मनोरमा

प्रतिः प्रतिनिधिप्रतिदानयोः ५९२, १।४।९१

प्रतिनिधि। अत्रेति सूत्रोक्तविषये इत्यर्थः। सूत्रे यस्मादिति षष्ठ()र्थे पञ्चमी, अस्मादेव निर्देशात्। "कृष्णस्य प्रतिनिधिः" इति तु "ज्ञापकसिद्धं न सर्वत्रे"ति समाधेयम्। तथाच यत्सम्बन्धिनी प्रतिनिधिप्रतिदाने, तस्मात् कर्मप्रवचनीययुक्तात्पञ्चमित्यर्थः फलति। प्रद्युम्नः कृष्णात्प्रतीति। युद्धादौ प्रद्युम्नः कृष्णनिरूपितसादृश्यवानित्यर्थः। पञ्चम्यर्थः सादृश्यम्। प्रतिस्तु तद्द्योतकः। तिलेभ्य इति। ऋणत्वेन गृहीतान् तिलान् स्वरूपेण मूल्याद्यात्मना वा प्रत्यर्पयतीत्यर्थः। कर्मणि पञ्चमी।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अधिपरी १।२ अनर्थकौ १।२ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

अधिपरी अनर्थकौ १।४।९३

अधिपरी शब्दौ अनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः। कुतो ऽध्यागच्छति। कुतः पर्यागच्छति। गत्युपसर्गसंज्ञावाधनार्था कर्मप्रवचनीयसंज्ञा विधीयते।

न्यासः

अधिपरी अनर्थकौ , १।४।९२

"अनर्थान्तरवाचिनौ" इति। #एतेनानर्थान्तरवाचित्वादनर्थकादवित्युक्तम्, न त्वर्थाभावादिति दर्शयति। यदि ह्यविद्यमानार्थत्वादनर्थकौ स्याताम्, निरर्थकमिदं सूत्रं स्यात्। तथा हि-- कर्मप्रवचनीयसंज्ञा गत्युपसर्गसंज्ञाबाधनार्थाऽनेन विधीयते। न चानर्थकयोरधिपर्योर्गत्युपसर्गसंज्ञाप्राप्तिरस्ति। यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा विधानात्। अनर्थकयोश्च क्रियायोगासम्भवात्। "कुतोऽध्यागसच्छति" इत्यादि। कुत इत्यापादाने पञ्चमी। कर्मप्रवचीयेति २।३।८ द्वितीया न भवति; "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"(चां।प।६९) इति वचनात्। सूत्रारम्भस्य तु प्रयोजनमाख्यातमेव। कुत इति, किंशब्दात् "पञ्चम्यास्तसिल्" ५।३।७ इति तसिल्, "कु तिहोः" ७।२।१०४ इति कुभावः। कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञोर्वाधितत्वात् "गतिर्गतौ" ८।१।७० इति निघातो न भवति। ननु चागच्छतीत्युक्त आगमनं विशिष्टं प्रतीयते, अध्यागच्छति, पर्यागच्छतीति-- अधिपरियोगे त्वागमनस्योपरिभावः सर्वतोभावश्चावगम्यत इत्यपरो विशेषः, तत्कथमनर्थान्तरवाचित्वमनयोः? नैतदस्ति; यदा तयोरप्यर्थयोः प्रकरणादेः कुतश्चिदवगतयोरधिपरी प्रयुज्येते तदा तयोरनर्थान्तरवाचित्वं वेदितव्यम्। कथं पुनरवगतार्थयोः? नैतदस्ति; यदा तयोरप्यर्थयोः प्रयोगः, "उक्तार्थानामप्रयोगः" (व्या।प।६०) इति वचनात्? सत्यम्, अवगतार्थस्यापि प्रयोगो दृश्यते, यथा-- "ब्राआह्णौ द्वौ" इति। लोकस्य प्रयोगे गुरुलाघवं प्रत्यनादरात्॥

बाल-मनोरमा

अधिपरी अनर्थकौ ५४६, १।४।९२

अधिपरी। उक्तसंज्ञो स्त इति। कर्मप्रवचनीयसंज्ञकावित्यर्थः। कुतोऽध्यागच्छति, कुतः पर्यागच्छतीति। अत्र "कुत" इत्यपादानपञ्चम्यास्तसिल्। कस्मात् प्रदेशादागच्छतीत्यर्थः। नन्वत्र अधिपर्योरनर्थकतया सम्बन्धस्य तद्द्योत्यत्वाऽभावेन द्योत्यसम्बन्धप्रतियोगित्वरूपकर्मप्रवचनीययुक्तत्वस्याऽभावान्न द्वितीयाप्रसक्तिरित्यत आह--गतिसंज्ञाबाधादिति। अत्र "गतिर्गतौ" इत्यत्र पदादित्यधिकारात् पदात्परत्वसम्पत्तये "कुत" इत्युपात्तमिति भावः। अत्र प्रभवति पराभवति अनुभवतीत्यादौ प्रादेरिवाऽर्थान्तरद्योतकत्वाऽभावेऽपि धात्वर्थद्योतकत्वमस्त्येव। अर्थान्तरद्योतकत्वाऽभावेनाऽनर्थकत्वव्यवहारः। उक्तं च भाष्ये--"अनर्थान्तरवाचिनौ धातुनोक्तक्रियामेवाहतुः" इति। एवंच क्रियायोगाऽभावाद्गतित्वस्यापि न प्रसक्तिरिति शङ्का निरस्ता।

तत्त्व-बोधिनी

अधिपरी अनर्थकौ ४९०, १।४।९२

कृतोऽध्यागच्छतीति। इह--प्रयती, पराभवति, वृक्षं प्रति विद्योतते इत्यत्र प्रादेर्विशेषद्योतकत्ववदधिपर्योरिह विशेषद्योतकत्वाऽभावादानार्थक्यं, धात्वर्थमात्रद्योतकत्वेन त्वर्थताऽस्त्येवेति बोध्यम्।"गतिर्गतौ"इत्यत्र पदादित्यधिक्रियत इति पदात्परत्वसंपत्तये "कुत"इत्युक्तम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सुः १।१ पूजायाम् ७।१ ९४ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

सुः पूजायाम् १।४।९४

सुशब्दः पूजायाम् अर्थे कर्मप्रवचनीयसंज्ञो भवति। सु सिक्तं भवता। सु स्तुतं भवता। धात्वर्थः स्तूयते। उपसर्गसंज्ञाऽश्रयं षत्वं न भवति। पूजायाम् इति किम्? सुषिक्तं किं तवात्र।

न्यासः

सुः पुजायाम् , १।४।९३

"सुसिक्तं भवता" इति। भवच्छब्दात् कर्त्तरि तृतीया। द्वितीया तु पूर्ववदेव न भवति। "धात्वर्थः स्तूयते" इति। शोभनोद्भावनं स्तुतिः, सैव तस्य पुजा। "उपसर्गाश्रयं षत्वं न भवति" इति। कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया बाधितत्वादिति भावः। "सुषिक्तं किं तवात्र" इति। क्षेपोऽयम्,न पूजा॥

बाल-मनोरमा

सुः पूजायाम् ५४७, १।४।९३

सुः पूजायाम्। "कर्मप्रवचनीय" इति शेषः। सु सिक्तं सु स्तुतमिति। अत्र सोः कर्मप्रवचनीयत्वे प्रयोजनमाह--अनुपसर्गत्वान्न ष इति। "उपसर्गात्सुनोतीत्यनेने"ति शेषः। पूजायां किमिति। सुना पूजाया नित्यं प्रतीतेः प्रश्नः। सुषिक्तं

किं [स्यात्]तवात्रेति। त्वया सम्यक् सिक्तं, किन्त्वत्रास्मिन् सुसेके कृते सति सेक्तुस्तव किं, न किञ्चिदपीत्यर्थः। क्षेपोऽयमिति। निन्दाऽत्र गम्यत इत्यर्थः। सेकक्रियाकर्तुः पूज्यत्वे गम्य एवात्र कर्मप्रवचनीयत्वम्। तदभावात् "उपसर्गात्सुनोती"ति षत्वमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अतिः १।१ अतिक्रमणे ७।१ च ० पूजायाम् ७।१ ९३ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

अतिरतिक्रमणे च १।४।९५

अतिशब्दः अतिक्रमणे, चकारात् पूजयं च कर्मप्रवचनीयसंज्ञो भवति। निष्पन्ने ऽपि वस्तुनि क्रियाप्रवृत्तिः अतिक्रमणम्। अति सिक्तम् एव भवता। अति स्तुतम् एव भवता। पूजायम् अति सिक्तं भवता। अति स्तुतम् एव भवता। शोभनं कृतम् इत्यर्थः।

न्यासः

अतिरतिरक्रमणे च , १।४।९४

"अतिस्तुतमेव भवता" इति। निष्पन्नेऽपि फले स्तुतिः प्रवृत्तेर्थः। "शोभनं कृतमित्यर्थः" इति। पूजामाविष्करोति॥

बाल-मनोरमा

अतिरतिक्रमणे च ५४८, १।४।९४

अतिरतिक्रमणे च। चकारात्पूजायामिति समुच्चीयत #इत्याह--पूजायां चेति। अतिक्रमणम्-उचितादाधिक्यम्। अति देवान् कृष्ण इति। प्रपञ्चसंरक्षणविषये देवेभ्योऽधिकः कृष्ण इत्यर्थः। देवानां पूज्य इति वा। आद्यऽर्थे "कुगतिप्रादयः" इति समासो न, "स्वती पूजायामि"ति नियमात्। द्वितीये त्वनभिधानान्नेत्याहुः।

तत्त्व-बोधिनी

अतिरतिक्रमणे च ४९१, १।४।९४

अतिरतिक्रमेण च। चकारेण "पूजाया"मित्यनुकृष्यत इत्याह---पूजायां चेति। अतिक्रमणम्--उचितादधिकस्यानुष्ठानम्। अर्थद्वयेऽप्येकमेवोदाहरिति---अति देवान् कृष्ण इति। अन्ये तूदाहरन्ति अतिसिक्तम्, अतिस्तुतमिति। बहुतरं समीचीनं वा सिक्तं स्तुतं चेत्यर्थः। बहुतरार्थे अतिक्रमाणं, समीचीने पूजेति विवेकः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपि १।१ पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ७।३ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः

अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु १।४।९६

पदार्थे, सम्भावने, अन्ववसर्गे, गर्हायाम्, समुच्चये च वर्तमानः अपिः कर्मप्रवचनीयसंज्ञो भवति। पदान्तरस्य अप्रयुज्यमानस्य अर्थः पदार्थः सर्पिषो ऽपि स्यात्। मधुनो ऽपि स्यात्। मात्रा, बिन्दुः, स्तोकम् इत्यस्य अर्थे ऽपि शब्दो वर्तते। सम्भावनम् अधिकार्थवचनेन शक्तेरप्रतिघाताविष्करनम् अपि सिञ्चेन् मूलकसहस्रम्। अपि स्तुयाद् राजानम्। अन्ववसर्गः कामचाराभ्यनुज्ञानम् अपि सिञ्च। अपि स्तुहि। गर्हा निन्दा धिग् जाल्मं देवदत्तम्, अपि सिञ्चेत् पलाण्डुम्। अपि स्तुयाद् वृषलम्। समुच्चये अपि सिञ्च। अपि स्तुहि। सिञ्च च स्तुहि च। उपसर्गसंज्ञाबाधनात् षत्वम् न भवति।
न्यासः

अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु , १।४।९५

"पदार्थे" इति। अन्यस्य पदस्यार्थो लक्ष्यते। न स्वार्थः, नापि स्वसम्बन्धिनः; पदस्यार्थः पदार्थः। स्वपदार्थग्रहणं, स्वसम्बन्धिपदार्थग्रहणं वा पदार्थग्रहणमनर्थकं स्यात्। अपिशब्दस्य हि योऽर्थः यश्चापिशब्दसम्बन्धिनः स्यादित्यादेः पदस्य , स पदार्थ एवेति किं पदार्थग्रहणेन? तस्मात् पदार्थग्रहणसामर्थ्याद्विशिष्टपदस्यार्थो विज्ञायत इत्याह-- "पदान्तरस्य" इत्यादि। "सर्पिषोऽपि स्यात्" इति। कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया निवर्तितत्वात् "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" (८।३।क८७) इति षत्वं न भवति। अथ सर्पिःशब्दाद्()द्वितीया कथं न भवति? अपिशब्देन तस्य योगासम्भवात्। सर्पिषो हि या मात्रा साऽपिशब्देन युक्ता, न सर्पिः। मात्राशब्दात् तर्हि कस्मान्न भवति? तस्य प्रयोगाभावात्। यदा तु प्रयुज्यते, तदा कर्मप्रवचनीयसंज्ञैव नास्ति; अप्रयुज्यमानस्य पदान्तरस्यार्थे तद्विधानात्। "अधिकार्थवचनेन" इति। अधिकर्थो मूलकसहरुआसेकादिः, तस्य वचनेन सेकादावर्थे क्रियायां यच्छक्तेरप्रतिघातस्याविष्करणम् = प्रकाशनं तत्सम्भावनम्। "अपि सिञ्चेन्मूलकसहरुआम्। अपि स्तुयाद्राजानम्" इति। तस्य सेके स्तुतौ च सामर्थ्यं न विहन्यत इत्यर्थः। "सम्भावनेऽलमिति चेत् सिद्धाप्योगे" ३।३।१५४ इति लिङ। "कामचाराभ्यनुज्ञानम्" इति। कमचारः = इच्छया प्रवृत्तिः, तस्याभायनुज्ञानं कामचाराभ्यनुज्ञानम्। "अपि सिञ्च, अपि स्तुहि" इति। सिञ्च वा स्तुहि वा यथेष्टमभ्यनुज्ञातोऽसीत्यर्थः। "धिग्जाल्मं देवदत्तम्" इति। उभयसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥(वा।११८) इत्युपसंख्यानाद्()द्वितीया। "अपि सिञ्चेत्पलाण्डुम्" इति। "अर्हे कृत्यतृचश्च" ३।३।६९ इति लिङ। पलाण्()डुमिति कर्मणि द्वितीया २।३।२। "अपि सिञ्च, अपि स्तुहि " इति। एकस्मिन् कत्तरि स्तुतिसेकक्रिययोश्चनीयमानता। अत्र समुच्चयः। सिञ्च च स्तुहि चेति प्रसिद्धसमुच्चयार्थस्य चशब्दस्य प्रयोगेण तमेव समुच्चयमुदाहरणे व्यक्तीकरोति॥
बाल-मनोरमा

अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु ५४९, १।४।९५

अपिः पदार्थ। पदार्थश्च संभावनञ्च अन्ववसर्गश्च गर्हा च समुच्चयश्चेति द्वन्द्वः। एषु द्योतकत्रया विद्यमानोऽपिः क्रमप्रवचनीय इत्यर्थः। तदाह--एष्विति। अप्रयुज्यमानस्य पदान्तरस्यार्थः-पदार्थः। तद्द्योतकमपिमुदाहरति--सर्पिषोऽपि स्यादिति। यत्रातिदौर्लभ्यादत्यल्पमाज्यं भुञ्जनेभ्यो दीयते तदुपहासार्थमिदं वाक्यम्। अत्रापेः कर्मप्रवचनीयत्वे प्रयोजनमाह--अनुपसर्गत्वान्न ष इति। "#उपसर्गाप्रादुर्भ्यामित्यनेने"ति शेषः। अपिद्योत्यं पदार्थं विशदयितुमाह-- संभावनायां लिङिति। "उपसंवादाशङ्कयोश्चे"ति सूत्रे "उपसंवादाशङ्कयोर्लि"ङिति पठितवचनेने"ति शेषः। तत्र आशङ्का=उत्कटान्यतरकोटिका शङ्का संभावनैवेति भावः। सा च प्रकृत्यर्थगता भवति, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः। अस्धातोश्च भवनमर्थः, "अस भुवी"त्युक्तेः। भवनं च सत्ता, "भू सत्ताया"मित्युक्तेः। ततश्च संभावनाविषयीभूतभवनार्थकाऽस्धातोः कर्तरि लिङि श्नसोरल्लोपे यासुडागमादौ स्यादिति रूपम्। तेन च

संभावनाविषयीभूतभवनार्थकाऽस्धातोः कर्तरि लिङि श्नसोरल्लोपे यासुडागमादौ स्यादिति रूपम्। तेन च संभावनाविषयभवनाश्रयः कर्ता अवगतः। सच कर्ता क इत्याकाङ्क्षायां प्रकरणादौचित्यात्सर्पिष इत्यवयवषष्ठीबलाच्च बिन्दुरिति गम्यते, तमेवाऽपिशब्दो द्योतयति। सच विन्दुरपिशब्दद्योत्यः कर्ता प्रकृत्यर्थे संभावनाविषये भवने स्वस्य विन्दोर्दौर्लभ्यात्तदेव दौर्लभ्यं पुरस्कृत्यान्वेति, संभावनाविषयत्वबोधे दौर्लभ्यस्यापि संभावनाविषयतया अनुभवसिद्धत्वात्। तदिदं दौर्लभ्यमपि अपिशब्दो द्योतयति। एवं च बिन्धोः कर्तृविशेषरूपेण द्योत्योक्तदौर्लभ्यसंबन्धेन च स्यादित्यत्रान्वयः। तदाह--तस्या एवेति। संभावनाया एवेत्यर्थः। कर्तुर्बिन्दोर्दौर्लभ्याद्भवन क्रियायां यद्यौर्लभ्यं तद्द्योतयन्नपिशब्दः स्यादित्यनेन संबध्यत इत्यर्थः। ननु सर्पिरेव कर्तृत्वेनान्वेति इत्यत आह--सर्पिष इति। "संबन्ध" इत्यनन्तरं "वर्तते" इति शेषः। एवंच सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती बुन्दु कर्तृका संभावनाविषयीभूता सत्तेति बोधः। इयमेवेति। बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यद्योतकतैवेत्यर्थः। ननु कर्मप्रवचनीयेनाऽपिना अन्वयसत्त्वात् सर्पिषो द्वितीया स्यादित्यत आह--द्वितीया तु नेति। कुत इत्यत आह--सर्पिष इति। सर्पिषो बिन्दुनैव योगो न त्वपिनेत्येवं सर्पिष इति षष्ठी त्वित्यादिसंदर्भेण उक्तत्वादित्यर्थः। कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगित्वमेव कर्मप्रवचनीययुक्तत्वम्, प्रकृते च अपिद्योत्यस्य उक्तसंबन्धस्य विन्दुरेव प्रतियोगी नतु सर्पिरिति भावः। तदेवं पदार्थद्योतकमपिमुदाहृत्य संभावनद्योतकमपिमुदाहरति--अपि स्तुयादिति। "संभावनेऽलमिति चेत् सिद्धाऽप्रयोगे" इति लिङ्। संभावनपदं व्याचष्टे--संभावनमित्यादिना। अवाङ्भनसगोचरं विष्णुमपि स्तुयात्। स्तोतु शक्त इत्यर्थः। अत्युक्तिरियम्, अवाङ्मनसगोचरस्य विष्णोः केनापि स्तोतुमशक्यत्वात्। तत्र कर्मप्रवचनीयत्वे उपसर्गत्वबाधात् "उपसर्गात्सुनोती"ति षत्वं न। अन्ववसर्गद्योतममपिमुदाहरति--अपिस्तुहीति। स्तुहि वा, न वा, यथेष्टं कुर्वित्यर्थः। अन्ववसर्गपदं व्याचष्टे --कामचारानुज्ञेति। "प्रैषातिसर्गे"ति लोट्। गर्हाद्योतकमपिमुदाहरति--()पि स्तुयाद्वृषलमिति। "गर्हायां लडपिजात्वोः" इति लटं बाधित्वा परत्वादन्तरङ्गत्वाच्च संभावनायां लिङ्। अत्र वृषलस्य निन्द्यत्वात् तत्स्तुतेर्निन्द्यत्वं गम्यमानमपिशब्दो द्योतयति। धिग्देवदत्तमिति तदनुवादः। समुच्चयद्योतकमपिमुदाहरति--अपि सिञ्च अपि स्तुहीति। अपिद्वयेन मिलितेन समुच्चयद्योतनात् प्रत्येकं कर्मप्रवचनीयत्वादुभयत्रापि षत्वाऽभावः। सिञ्च, स्तुहि चेत्यर्थः।

तत्त्व-बोधिनी

अपिः पदार्थसंभावनाऽन्ववसर्गबर्हासमुच्चयेषु ४९२, १।४।९५

अपिः पदार्थ। सर्पिषोऽपि स्यादिति। सर्पिर्बिन्दुः स्यादित्यर्थः। अपेः कर्मप्रवचनीयत्वे फलमाह--अनुपसर्गत्वान्न ष इति। उपसर्गसंज्ञाऽभावात् "उपसर्गप्रदुभ्र्यामस्ति"रितीह न प्रवर्तत इति भावः। संभावनायामिति। संभावनाया एवेत्यर्थः। कर्तृदौर्लभ्येत्यादि। कर्तृदौर्लभ्याद्भवनक्रियाया दौर्लभ्यं द्योतयन्नपिशब्दो भवनक्रियावाचिना "स्या"दित्यनेन सम्बध्यत इत्यर्थः। अवयवावयविभावेति। सर्पिरवयवी। बिन्दुरवयवः। इयमेवेति। बिन्दुदौभ्र्यप्रयुक्तदौर्लभ्यद्योतकतैवेत्यर्थः। द्वितीयेति। "कर्मप्रवचनीययुक्ते---"इत्यनेन विहिता। नत्वपिनेति। न च बिन्दुना योगे तद्दयोतकाऽपिशब्देनाऽपि योगो जात एव, अर्थद्वारा शब्दानां योगस्याब्युपगमादिति शङ्क्यम्। अपिशब्दस्य बिन्दुद्योतकत्वाऽभावात्। कथं तर्हि बिन्दुप्रतीतिरिरिति चेत्। श्रृणु---अपिना द्योत्यं भवनदौर्लभ्यमेव कर्तृदौर्लभ्यमाक्षिपति। कर्ता त्विह विन्दुरेवेति स प्रतीयते। अत एव "अपिशब्दबलेन गम्यमानस्ये"त्यक्तुं, न त्वपिना गम्यमानस्येति। उक्तत्वादिति। उक्तप्रयात्वादित्यर्थः। "अपिशब्दः स्यादित्यनेन संबध्यत"इत्युक्तेस्यादित्यस्याऽपिना योगो न तु सर्पिषा इत्यर्थपर्यवसानात्। अप#इ स्तुयादिति। अवाङ्भनसगोचरं विष्णुमपि स्तुयादित्यधिकोक्तिः। एतादृशस्याऽन्यदीयस्तवने सामथ्र्यमस्तीत्यत्र किं वक्तव्यमिति भावः। इह संभावनाद्योतकोऽपिशब्दः, पूर्वत्र तु संभावनाविषयेदौर्लभ्यद्योतक इति महान्भेदः। "उपसर्गात्सुमनोति" इत्यादिना षत्वं न भवति, कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात्। एवमुत्तरत्रापि बोध्यम्। अपि सिञ्च। अपि स्तुहीति। सिञ्च च स्तुहि चेत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अधिः १।१ ९७ ईश्वरे ७।१ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः
अधिरीश्वरे १।४।९७

ईश्वरः स्वामी, स च स्वम् अपेक्षते। तदयम् स्वस्वामिसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञो भवति। तत्र कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः सप्तमी भवति, कदाचित् स्वात्। अधि ब्रह्मदत्ते पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्तः।
न्यासः
अधिरी�आरे , १।४।९६

"तदयं स्वस्वामिसम्बन्धे" इति। परिलपालनादिक्रियाजनितोऽत्र सम्बन्धः। "तत्र" इत्यादि। सर्वत्र हि सम्बन्धे किञ्चिदनूद्यते, किञ्चिदाख्यायते। यत्प्रसिद्धं तदनूद्यते, यदप्रसिद्धं तदाख्यायते = विधीयते; ज्ञाप्यते; यथा-- यः कुण्()डली स देवदत्त इति। कुण्डलित्वानुवादेन देवदत्तनुवादेन देवदत्तत्वं विधीयते। यच्च विधीयते तत्प्रधानम्, इतरदप्रधानं विशेषमम्। तत्र यदा स्वमप्रसिद्धत्वाद्विधीयते तदा स्वामी प्रधानत्वाद्वयतिरेकमापद्यत इति तत इव कर्मप्रवचनीयसंज्ञायुक्तत्वाद्व्यतिरेकनिबन्धनविभक्तो षष्ठ()आं प्राप्तायां तदपवादः "यस्मादधिकं यस्य चे()आरवचनं तत्र सप्तमी" २।३।९ इति सप्तमी भवति। तयैव सम्बन्धस्य द्योतितत्वात् स्वात् प्रथमैव भवति, न सप्तमी। यदा तु स्वाम्यप्रसिद्धत्वात् विधीयते, तदा विपर्ययो वेदितव्यः॥
बाल-मनोरमा
अधिरी�आरे ६३६, १।४।९६

अधेः कर्मप्रवचनीयकार्यं वक्ष्यन्कर्मप्रवचनीयसंज्ञामाह--अधिरी()आरे। ई()आरशब्देन इ()आरत्वं स्वस्वामिभावसंबन्धात्मकं विवक्षितम्। "कर्मप्रवचनीयाः" इत्यधिकृतमेकवचनान्ततया विपरिणम्यते। तदाह--स्वस्वामीति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ कृञि ७।१ अधिः १।१ ९६ कर्मप्रवचनीयाः १।३ ८२ निपाताः १।३ ४६

काशिका-वृत्तिः
विभाषा कृञि १।४।९८

अधिः करोतौ विभाषा कर्मप्रवचनीयसंज्ञो भवति। यदत्र मामधि करिष्यति। कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् तिङि च उदात्तवति ८।१।७१ इति निघातो न भवति।
न्यासः

विभाषा कृञि। , १।४।९७

अधिरी()आर इति वत्र्तते। तेन प्राप्ते विभाषेयम्। अधिपूर्वः करोतिर्विनियोगे वर्तते। विनियुक्तस्यैव()आर्यं सम्पद्यते। "यदत्र मामधिकरिष्यति" इति। मामिति कर्मणि द्वितीया। अधिकरिष्यतीति; अत्र "निपातैर्यद्यदि" ८।१।३० इत्यादिना निघाते प्रतिषिद्धेऽस्य प्रकृतिस्वरेणाद्युदात्तत्वं भवति॥

बाल-मनोरमा

विभाषा कृञि ५९०, १।४।९७

विभाषा कृञि। "अधिरी()आरे" इत्यनुवर्तते। "कर्मप्रवचनीया" इत्यधिकृतम्। तदाह--अधिः करोताविति। कृञ्धातौ परे अधिः कर्मप्रवचनीयो वा स्यादी()आरत्वे इति यावत्। यदत्रमामधिकरिष्यतीति। अत्र=अस्मिन्विषये मामधिकरिव्यतीति यत्नयुक्तमित्यर्थः। अत्र कर्मप्रवचनीययोगे मामिति द्वितीया। अधिकरिष्यतीत्येतद्व्याचष्टे--विनियोक्ष्यत इत्यर्थ इति। तर्हि कर्मत्वादेव द्वितीयासिद्धेः किं कर्मप्रवचनीयत्वेनेत्यत आह--अगतित्वादिति। तिङि चेति। उदात्तवति तिङि परे गतिर्निहन्यत इति तदर्थः। अत्र करिप्यतीति तिङन्तमुदात्तवत्, तिङ्ङतिङः" इति निघातस्य "निपोत्तैर्यत्" इत्यादिना निषेधात्। ततश्च अधेरत्र गतित्वान्निघात इह प्राप्तः। कर्मप्रवचनीयत्वे तु स न भवति, तेन गतित्वस्य बाधात्। अतोऽधेर्निघाताऽभावार्थमिदं सूत्रमिति सिद्धम्।

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां विभक्त्यर्थनिरूपणम्।

************************

अथ तिङन्ते कर्तृकर्मप्रक्रिया।

अथ कर्मकर्तृप्रक्रियां निरूपयिष्यन्कर्मणः कर्तृत्वं साधयितुमाह-- यदेति। "फलव्यापारयोर्धातु"रिति सिद्धान्तः। पचिर्हि विक्लित्यनुकूलव्यापारे वर्तते। तत्र विक्लित्तिः फलम्। तदाश्रय ओदनं कर्म।तदनुकूलो व्यापारः-- अधिश्रयणादिः पुरुषप्रयत्नरूपो व्यापारः। तत्राधिश्रयणं चुल्ल्या उपरि तण्डुलयुक्तस्थाल्याः स्थापनम्। स्थापनं स्थित्यनुकूलव्यापारः। तत्र स्थितिः स्थालीतण्डुलनिष्ठा। तदनुकूलः पुरुषचेष्टाविशेषः। धातु#ऊपात्तव्यापाराश्रयः पुरुषः कर्ता, स्वतन्त्रत्वात्। स्वातन्त्र्यं प्रधान्यमिति भाष्यम्। कर्मकरणादिकं तु पुरुषप्रयत्नपरतन्त्रत्वान्न कर्तृत्वं लभते इति स्थितिः। तत्र यदा सौकर्यतिशयविवक्षया कर्तुः पुरुषस्य व्यापारः प्रयत्नो न विवक्ष्यते, किंतु कर्मादिगत एव व्यापारो विक्लित्यादिफलानुकूलत्वेन विवक्ष्यते तदा कर्मादिकारकाण्यपि कर्तृसंज्ञा लभन्ते इत्यर्थः। ननु कर्मादिगतव्यापारस्य पुरुषप्रयत्नाधीनत्वादस्वतन्त्रत्वात्कथं कर्मणः कर्तृत्वमित्यत आह-- स्वव्यापारे स्वतन्त्रत्वादिति। स्वातन्त्र्येण विवक्षितत्वादित्यर्थः। तदुक्तं "कर्मवत्कर्मणे"त्यत्र भाष्ये -- "कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्ष#इतत्वात्" इति। अत्र कर्मग्रहणं करणादिकारकस्याप्युपलक्षणम्। तेनेति। असिना छिनत्तीत्यादिप्रयोगदशायामसिकुठारादीनां करणत्वादिसत्त्वेऽपि, "असिश्छिनत्ती" इत्यादिप्रयोगदशायां कर्तृत्वेन विवक्षितत्वात्कर्तरि लकार इत्यर्थः। साध्वसिश्छिनत्तीति। अत्र करणस्य कर्तृत्वविवक्षा। "साधु" इति क्रियाविशेषं सौकर्यातिशयद्योतनाय। अतितैक्ष्ण्यात् पुरुषप्रयत्नविशेषमाघातातिशयं विना स्वयमेव असिश्छिनत्तीत्यर्थः। काष्ठानि पचन्तीति। अत्रापि करणानां कर्तृत्वविवक्षा। स्थाली पचतीति। अत्राऽधिकरणस्य कर्तृत्वविवक्षा। काष्ठानामतिशुष्कत्वाद्धमनफूत्कारानपेक्षया स्थाल्या अतिलघुत्वादविलम्ब्यश्रपणतया सौकर्यं बोध्यम्। कर्मणस्त्विवति। ये छिदिभिदिप्रभृतय एककर्मकास्तत्र कर्मणः कर्तृत्वविवक्षायां वृक्षश्छिनत्ती"त्यादौ प्राक् सकर्मकत्वेऽपि संप्रति सर्मणः कर्तृत्वविवक्षायामकर्मका एते इत्यर्थः। ये तु द्विकर्मकास्तत्र एकस्य कर्मणः कर्तृत्वविवक्षायामपि इतरेण कर्मणा सकर्मकत्वसत्त्वात्प्रायेणेत्युक्तिः। ततश्च तेषु

द्विकर्मकेषु कर्मणि कर्तरि च लकारः। तत्र कर्मणि लकारे यथा-- "सुधां क्षीरसागरो मथ्यते"। कर्तरि यथथा-- "सुधां क्षीरसागरो मथ्न#आति"। अथ यदुक्तम्-- एककर्मकेषु कर्मणः कर्तृत्वविवक्षायामकर्मकत्वमिति, तस्य प्रयोजनाह-- तेभ्यो भावे कर्तरि च लकारा इति। नतु कर्मणि, असंभवात्। अत एव "अकर्मकेभ्यो भावे कर्तरि ल" इत्युक्तमिति भावः। तत्र एककर्मकेभ्यः कर्मणः कर्तत्वविवक्षायां भावे लकारमुदाहरति-- पच्यते ओदनेनेति। ओदनकर्तृकः पाक इत्यर्थः। एवं भिद्यते काष्ठेनेत्यपि। यद्यपि पचेर्द्विकर्मकत्वं तथापि तण्डुलानामविवक्षायामेककर्मकत्वं पचेराश्रितम्। कर्तरि त्विति। एककर्मकेषु कर्मणः कर्तृत्वविवक्षायां कर्तरि लकारे विशेषो वक्ष्यते इत्यर्थः।

तत्त्व-बोधिनी

विभाषा कृञि ४८५, १।४।९७

यदत्रेति। यो मामधि करिष्यति=विनियोक्ष्यते तस्य मद्विनियोक्तुरीश्वरत्वं गम्यते इथ्यर्थः। तिङि चोदात्तेति। उदात्तविति तिङि परे गतिर्मिहन्यत इति सूत्रार्थः। अत्र करिष्यतीति तिङन्त उदात्तवान्, "तिङ्ङतिङः" इथि निघातस्य "निपातैर्यद्यदि" इत्यादिना निषेधात्। निघातो नेति। मामिति द्वितीया तु "कर्मणि द्वितीया" इत्यनेनैव सिध्यतीति भावः। इति सप्तमी। इति विभक्त्यर्थाः।

* इति ज्ञानेन्द्र भिक्षुविरचितायां तत्त्वबोधिन्यां कारकप्रकरणम् *

अथ तिङन्ते कर्मकर्तृप्रक्रिया।

कर्मणस्त्विति। सौकर्यातिशयं द्योतयितुमित्यनुषह्गः। प्रायेणेति। ये भिदिच्छिदिप्रभृतय एककर्मकान्ते अकर्मका ये तु द्विकर्मकास्ते सकर्मका इति भावः। अकर्मकत्वस्य फलमाह-- भावे कर्तरि चेति। "भावे चाऽकर्मकेभ्य" इत्युक्तत्वादिति भावः। द्विकर्मकेषु कर्मणः कर्तृत्वविवक्षायामुदाहरणम्-- "मथ्नाति सागरोऽमृतं" "स्वयं प्रदुग्धेऽस्य गुणैरुपरुआउता वसूपमानस्य वसूनि मेदिनी"ति। "प्रदुग्धे" इत्यत्र "कर्मवत्कर्मणे" ति प्राप्तस्य "सकर्मकाणा"मिति निषेधे दुहिपच्योरिति प्रतिप्रसूतस्य यको "न दुहस्नुनमा"मिति निषेधः। उक्तप्रयोगानुरोधादद्वकर्मकेषु गौणस्यैव कर्मणः कर्तृत्वविवक्षा न मुख्यस्येत्याहुः। तच्चिन्त्यम्। "अजां ग्रामं नयती"त्यत्र मुख्यकर्म णः कर्तृत्वविवक्षादर्शनात्। अत्रेदमवध्यम्-- अदिकरणत्वाऽविवक्षायां व्रजो गौणकर्मेति "रुणिद्धि व्रजो गां स्वयमेवे"ति भवति। यदा तु व्रजस्य न कर्मत्वं तदा मुख्यकर्मणोऽपि कर्तृत्वविवक्षा भवति। रुध्यते व्रजे गौः स्वयमेवेति। तथा गोरपादानत्वविवक्षायां गौर्दुह्यते पयः स्वयमेवेत्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लः ६।१ परस्मैपदम् १।१

अर्थः॥

लादेशाः परस्मैपदसंज्ञकाः भवति।

उदाहरणम्॥

तिप्, तस्, झि। सिप्, थस्, थ। मिप्, वस्, मस्। शतृ, क्वसु।

काशिका-वृत्तिः

लः परस्मैपदम् १।४।९९

लः इति षष्ठी आदेशापेक्षा। लाऽदेशाः परस्मैपदसंज्ञा भवन्ति। तप्, तस्, झ। सिप्, थस्, थ। मिप्, वस्, मस्। शतृक्वसू च परस्मैपदप्रदेशाः सिचि वृद्धिः प्रस्मैपदेषु ७।२।१ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

लः परस्मैपदम् ३७८, १।४।९८

लादेशाः परस्मैपद संज्ञाः स्युः॥

न्यासः

लः परस्मैपदम्।, १।४।९८

ल इति प्रथमा वा स्यात्? षष्ठी वा? तत्र यदि प्रथमा स्याल्लकारस्यैव परस्मैपदसंज्ञा स्यात्, न तदादेशानां तिबादीनाम्। कामम्, तेषममपि स्थानिवद्भावेन स्यात्। "तङानावात्मनेपदम्" १।४।९९इत्यत्र तु "लः" इत्यनेन तङानयोः सम्बन्धो नोपपद्येत, न हि तङानौ लौ भवतः। अत्र तङानभावो लकार एव तङानावित्येवमभिहितः। साहचर्याद्वा लादेशौ तङानावव "ल" इत्युक्ताविति व्याख्येयम्। तथा च व्याख्यानद्वारेणेष्टार्थप्रतिप्तौ साध्यायां प्रतिपत्तिगौरवं स्यात्। षष्ठीपक्षे त्वेष दोषो नास्ति, अतस्तमाश्रित्याह-- "लः" इति षष्ठी" इत्यादि। नन्वयमपि पक्षो दोषवानेव, लादेशस्य हि परस्मैपदसंज्ञा विधीयमाना तिङां न स्यात्, तेषां परत्वात् "तिङस्त्रीणि त्रीणि" १।४।१०० इत्यादिना प्रथमपुरुषादिसंज्ञया भवितव्यम्। परस्मैपदसंज्ञायास्तु शतृक्वस्वोश्चावकासः? नैष दोषः; यदयं "सिचि वृद्धिः परस्मैपदेषु" (७।२।१।) इत्याह तज्ज्ञापयति-- भवति च तिङां परस्मेपदसंज्ञेति। स हि परस्मैपदे परे सिचि विधीयते, न हि सिज्विषये शतृक्वसू सम्भवतः। "तिप्तस्झि" इत्यादि रूपोदाहरणमात्रम्॥ "कतीह निघ्नानाः" इति। निपूर्वोद्धन्तेः "ताच्छील्यवयोवचनशक्तिषु चानश्" ३।२।१२९ इति चानशप्रत्ययः। "गमहन" ६।४।९८ इत्यादिनोपधालोपः। "होहन्तेर्ञ्णिन्नेषु" ७।३।५४ इति कुत्वम्। यद्यनादेशोऽपि चानशात्मनपदसंज्ञकः स्यात् परस्मैपदिनो हन्तर्न स्यात्॥ तिङ इति प्रथमाबहुवचनम्। तिङः संज्ञिनः किंभुताः? त्रीणि त्रीणित्येवम्भूता इत्यर्थः। वचनापेक्षया नपुंसकलिङ्गेन निर्देशः। वीप्सायाञ्चैतद्()द्विर्जनम्। यदि तिङस्त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमपुरुषसंज्ञकानि भवन्ति, एवं सति षट्()त्रिकाः संज्ञिनः संज्ञास्तित्र इति यथासंख्यं न प्राप्नोति; वैषम्यात्। तत्र यद्येकस्यानेकसंज्ञाविधानवैयथ्र्यादेका संज्ञा भवेत्, न त्वेकैकस्य तिरुआः, तथापि सैवैकैका भवन्तीत्यव्यवस्था वा स्यात्; नैष दोषः;इह हि परस्मैपदग्रहणमात्मनेपदगर्हणञ्चानुवर्तते। तदनुवृत्तौ च द्वौ राशी भवतः- नवानां तिङां परस्मैपदसंज्ञकानामेको राशिः, तथा नावानामात्मनेपदसंज्ञकानां द्वितीयः। तत्र प्रथमे राशौ ये त्रयस्त्रिकाः, ये च द्वितीये राशौ त्रयस्त्रिकास्तैरिदं सूत्रं प्रत्येकमभिसम्बध्यते-- परस्मैपदेषु तिङस्त्रीणि त्रीणि प्थममध्यमोत्तमाः, तथात्मनेपदेषु तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमा इति। एवं हि सति न भवति संख्यातानुदेशाभावप्रसङ्गः। तमेवार्थं दर्शयितुमाह-- "तिङोऽष्टादश प्रत्ययाः" इति। "नव" इत्यादिना राशिद्वयं दर्शयति। "तत्र" इत्यादिना प्रथमे राशौ ये त्रयस्त्रिकास्तैरस्य सूत्रस्य सम्बन्ध#ं करोति। "आत्मनेपदेषु" इत्यादिनापि द्वितीये राशौ ये त्रयस्त्रिकास्तैश्च॥ "तानि" इति बहुवचनं संज्ञासमावेशार्थम्; अन्यथा ह्येकसंज्ञाधिकारे सति वचन्परामाण्यात् पुरुषवचनसंज्ञाः पर्यायेण प्रवर्तेरन्। एवञ्च तत्र "आडुत्तमस्य पिच्च" ३।४।९२ इत्यादिना विधीयमानमाडादिकार्यं पाक्षिकं स्यात्। अ()स्मस्तु सति भवति संज्ञासमावेशः। तच्छब्देन हि त्रीणि त्रीणि लब्धपुरुषसंज्ञकानि तान्येकवचनादिसंज्ञकानि भवन्तीति प्रत्यवमृश्यन्ते, तेन यानि लब्धप्रथमपुरुषादिसंज्ञकानि तान्येवैकवचनादिसंज्ञकानि भवन्ति। ननु च त्रिकाणां प्रथमादिसंज्ञैकैकस्य

चैकवचनादिसंज्ञा, तत्र विषयबेदादेकसंज्ञाधिकारेऽपि विरोधो नास्त्येवेति; नैष दोषः; तदस्ति पुरुषादिसंज्ञापि हि प्रत्येकमेव, न हि समुदायो नामान्यस्त्रिकेभ्योऽस्ति; तस्मात् तिबादयस्त्रका एव संज्ञिनः। त्रिग्रहणन्तु मर्यादार्थम्। त्रत्वसंख्यापरिच्छिन्नास्तिङः प्रत्येकं पुरुषसंज्ञाः प्रतिपाद्यन्ते। तस्मात् प्रथमादिसंज्ञानामेकवचनादिसंज्ञानाञ्चैकविषयतैवेति संज्ञासमावेशार्थं तानीत्युक्तम्॥

बाल-मनोरमा

लः परस्मैपदम् ६, १।४।९८

लः पर। "ल" इति स्थानषष्ठी। "आदेश" इत्यध्याहार्यम्। तदाह-- लादेशा इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तङानौ १।२ आत्मनेपदम् १।१

समासः॥

तङ् च आनश्च, तङानौ, इतरेतरद्वन्द्वः

अर्थः॥

तङानौ आत्मनेपदसंज्ञकौ भवतः पूर्वेण परस्मैपदसंज्ञायां प्राप्तायाम् आत्मनेपदं विधीयते।

उदाहरणम्॥

त, आताम्, झ। थास्, आथास्, ध्वम्। इट्, वहि, महिङ्। आन् = शानच्, कानच्॥

काशिका-वृत्तिः

तङानावात्मनेपदम् १।४।१००

तङिति प्रत्याहारो नवानाम् वचनानाम्। आनः इति शानच्कानचोर्ग्रहनम्। पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपदसंज्ञा विधीयते। त, आताम्, झ। थास्, आथाम्, ध्वम्। इट्, वहि, महिङ्। आनह्H खल्वपि शानच्कानचौ। लः इत्येव, कतीह निघ्नानाः। आत्मनेपदप्रदेशाः अनुदत्तङित आत्मनेपदम् १।३।१२ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तङानावात्मनेपदम् ३७९, १।४।९९

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः। पूर्व संज्ञापवादः॥

बाल-मनोरमा

तङानावात्मनेपदम् ७, १।४।९९

तङानौ। तङ् च आनश्चेति द्वन्द्वः। प्रत्याहार इति। "त आतामिति तशब्दमारभ्य महिङिति ङकारेणे"ति शेषः। तदाह-- तादिनवकमिति। इह पूर्वसूत्राल्ल इत्यनुवर्तते। ततश्च आनग्रहणेन शानच्कानचावेव गृह्रते, न तु

"ताच्छील्यवयोवचनशक्तिषु चान"शिति विहितश्चानशपि, तस्य लादेशत्वाऽभावात्। तेन परस्मैपदिभ्योऽपि चानश् सिध्यति--निघ्नाना इत्यादौ। तदाह--शानच्कानचौ चेति। एतत्संज्ञानीति। आत्मनेपदसंज्ञकानीत्यर्थः। पूर्वसंज्ञेति। परस्मैपदसंज्ञापवाद इत्यर्थः। एवं च तिबादिनवके परस्मैपदसंज्ञा पर्यवस्यति। अथ कस्माद्धातोः परस्मैपदं, कस्मादात्मनेपदमित्याकाङ्क्षायामाह-- अनुदात्तङितः। अनुदात्तश्च ङ्च अनुदात्तङौ। तावितौ यस्य सः--- अनुदात्तङित्। तस्मात्--अनुदात्तङितः। द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बध्यते। अनुदात्तेतो ङितश्चेति। लभ्यते। "उपदेशेऽजनुनासिक इ"दित्यस्मान्मण्डूकप्लुत्या उपदेश इत्यनुवृत्तं ङित इत्यनेन सम्बध्यते, नत्वनुदात्तेत इत्यनेन। उपदेशादन्यत्र अनुदात्तस्येत्संज्ञाया अप्रसक्तत्वेनाऽव्यभिचारात्। "भूवादयो धातव" इत्यस्मान्मण्डूकप्लुत्या "धातव" इत्यनुवृत्तं पञ्चम्या विपरिणतमनुदात्तेता ङिता च विशेष्यत#ए। तत्रानुदात्तेदंशे तदन्तविधेः प्रयोजनाऽभावान्ङिदंशे तदन्तविधिः। तदाह-- अनुदात्तेत इत्यादिना। लस्य स्थान इति। आत्मनेपदग्रहणलभ्यमिदम्, तिङां लादेशत्वनियमात्। उपदेशे किम्?। चुकुटिषति। अत्र "गाङ्कुटादिभ्य" इति सन आतिदेशिकमेव ङित्वम्, नत्वौपदेशिकम्। धातोः किम्?। अदुद्रुवत्। अत्र "णिश्री"ति चङन्तान्नात्मनेपदम्। ङिदंशे तदन्तविध्यभावे तु "बोभूयते" इत्यादौ "सनाद्यन्ता" इति धातुसंज्ञकाद्यङन्तादात्मनेपदं न स्यात्। "ङित" इत्येवोक्तौ यङो ङित्वेऽपि तद्वन्तस्य धातोर्ङित्त्वाऽभावादात्मनेपदं न स्यात्।

तत्त्व-बोधिनी

तङानावात्मनेपदम् ६, १।४।९९

लस्येत्यस्यानुवृत्तेर्लादेश एवाऽऽनो गृह्रते इत्याशयेनाह-- शानच्कानचौ चेति। तेन परस्मैपदिभ्योऽपि "ताच्छील्यवयोवचने"इति चानश्भवत्येव। "कतीह निघ्नानाः"॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तिङः ६।१ १०३ त्रीणि १।३ १०३ त्रीणि १।३ १०३ प्रथम-मध्यमोत्तमाः १।३

समासः॥

प्रथमश्च, मध्यमश्च, उत्तमश्च, प्रथम-मध्यमोत्तमाः, इतरेतरद्वन्द्वः

अर्थः॥

तिङ् (अष्टादश-प्रत्ययाः) त्रीणि त्रीणि, यथाक्रमं प्रथम-मध्यम-उत्तम-संज्ञकाः भवन्ति

उदाहरणम्॥

तिप्, तस्, झि इति प्रथमः पुरुषः। सिप्, थस्, थ इति मध्यमः। मिप्, वस्, मस् इति उत्तमः
काशिका-वृत्तिः
तिङस् त्रीणि त्रीणि प्रथममध्यमौत्तमाः १।४।१०१

तिङो ऽष्टादश प्रत्ययाः। नव परस्मैपदसंज्ञकाः, नवाऽत्मनेपदसंज्ञकाः। तत्र परस्मैप्रदेषु त्रयस्त्रिकाः यथाक्रमं

प्रथममध्यमौत्तमसंज्ञा भवन्ति। तिप्, तस्, झि इति प्रथमः। सिप्, थस्, थ इति मद्यमः। मिप्, वस्, मसिति उत्तमः। आत्मनेपदेषु त, आताम्, झ इति प्रथमः। थास्, आथाम्, ध्वम् इति मध्यामः। इट्, वहि, महिङिति उत्तमः। प्रथममध्यमौत्तमप्रदेशाः शेषे प्रथमः १।४।१०७ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ३८३, १।४।१००

तिङ उभयोः पदयोस्त्रिकाः क्रमादेतत्संज्ञाः स्युः॥

बाल-मनोरमा

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १०, १।४।१००

तिङः षट् त्रिकाः,संज्ञास्तु तिरुआ इति यथासङ्ख्याऽसम्भवादेकैकस्य त्रिकस्य तिसृषु संज्ञासु प्राप्तास्वाह-- तिङ उभयोः पदयोरिति। "लः परस्मैपद"मित्यतः परस्मैपदमिति, "तङानावात्मनेपद"मित्यत आत्मनेपदमिति चानुवृत्तं षष्ठ()न्ततया विपरिणम्यते। ततश्च परस्मैपदात्मनेपदयोरुभयोरपि प्रत्येकं त्रयस्त्रिकाः सन्तीति यथासङ्ख्यं प्रथमादिसंज्ञाः प्रवर्तन्त इति भावः। प्रथमादिषु पुरुषसंज्ञा तु प्राचीनाचार्यशास्त्रसिद्धेति बोध्यम्।

तत्त्व-बोधिनी

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ९, १।४।१००

तिङ षट् त्रिकाः, संज्ञास्तु तिरुआ इति यथासङ्ख्याऽसम्भवादेकैकस्य त्रिकस्य तिसृषु संज्ञासु उभयोरिति। परस्मैपदमात्मनेपदमिति चानुवर्तते। तेन पदद्वये प्रत्येकं त्रयस्त्रिका इतियथासंङ्ख्यं संज्ञाः प्रवर्तन्त इति भावः। ननु प्रथमश्च् प्रथमश्च प्रथमौ, मध्यमश्च मध्यमश्च मध्यमावित्येवं कृतैकशेषाणां प्रथमादीनां, प्रथमौ च मध्यमौ च उत्तमौ च प्रथममध्यमोत्तमा इति द्वन्द्वेऽभ्युपगते त्रिकद्वयस्य त्रकद्वयस्य यथासङ्ख्यं प्रथममद्यमोत्तमसंज्ञाः स्युर्न त्वेकैकस्येति "णलुत्तमो वे"ति सूत्रं विरध्येत, णल उत्तमसंज्ञकत्वाऽलाभात्, ततश्च "प्रथममद्यमोत्तमा" इत्यत्र कृतद्वन्द्वानां प्रथममध्योमोत्तमाश्च प्रथममद्यमोत्तमाश्चेत्येकशेष आश्रीयताम्, तथाहि सति सञ्ज्ञा अपि षडिति परस्मैपदात्मनेपदग्रहणानुवृत्तिक्लेशं विनैवेष्टसिद्धिरिति चेत्। मैवम्। एकदेशाश्रयणे गौरवाद्वैयश्र्याच्च त्वयापि परस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव। अन्यथा शतृक्वस्वोः सावकाशा परस्मैपदसंज्ञा प्रथमादिसंज्ञया बाध्येत। ततश्च क्राम्यति पदानामिति विहितस्य णलो "णलुत्तमो वे"ति णित्त्वविकल्पविधानाज्ज्ञापकात्परस्मैपदसंज्ञा प्रथमादिसंज्ञया न बाध्यत इति ब्रूषे, तर्हि सुतरां प्रतिपत्तिगौरवम्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तानि १।३ एकवचन-द्विवचन-बहुवचनानि १।३ १०२ एकशः ० १०२ तिङः ६।१ १०० त्रीणि १।३ १०० त्रीणि १।३ १००

समासः॥

एकवचनं च, द्विवचनं च, बहुवचनं चेति एकवचन-द्विवचन-बहुवचनानि, इतरेतरद्वन्द्वः

अर्थः॥

तानि तिङः त्रीणि, त्रिणि, एकशः=एकैकं पदं (क्रमेण) एकवचन-द्विवचन-बहुवचन-संज्ञाकि भवन्ति

उदाहरणम्॥

तिप् (एकवचनं) तस् (द्विवचनम्) झि (बहुवचनम्) एवमग्रेऽपि
काशिका-वृत्तिः
तान्येकवचनाद् विवचनबहुवचनान्येकशः १।४।१०२

लघु-सिद्धान्त-कौमुदी
तान्येकवचनद्विवचनबहुवचनान्येकशः ३८४, १।४।१०१

लब्ध प्रथमादि संज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादि संज्ञानि स्युः॥
बाल-मनोरमा
तान्येकवचनद्विवचनबहुवचनान्येकशः ११, १।४।१०१

अथ प्रथमादिपुरुषेषु एकैकस्मिन्पुरुषे प्रत्ययत्रिकात्मके युगपत्पर्यायेण वा एकैकप्रत्यये प्राप्ते "द्व्येकयोर्दविवचनैकवचने" "बहुषु बहुवचन"मिति व्यवस्तार्थमेकवचनादिसंज्ञामाह--तान्येक। तच्छब्देन पूर्वसूत्रोपात्तानि प्रथममध्यमोत्तमाख्यानि तिङस्त्रीणि त्रीणि परामृश्यन्ते। तदाह-- लब्धप्रथमादिसंज्ञानीति। "एकश"इत्यस्य विवरणं--प्रत्येकमिति। "सङ्ख्यैकवचनाच्च वीप्साया"मिति शसिति भावः।

तत्त्व-बोधिनी
तान्येकवचनद्विवचनबहुवचनान्येकशः १०, १।४।१०१

"तानी"त्यस्य व्याख्यानं-- लब्धेत्यादि। अन्यथैकसंज्ञाधिकारात्प्रथमादिसंज्ञानामेकवचनादिसंज्ञानां च पर्यायः स्यात्। इष्टापत्तौ तु अत्तेर्लोटो "मेर्नि" रिति कृते एकत्वविवक्षायामुत्तमसंज्ञाऽभावात् "आडुत्तमस्ये"त्यस्याऽप्रवृत्त्या अन्नीत्यादिप्रयोगोऽपि साधुः स्यादिति भावः। प्रत्येकमिति। यत्तु प्राचा " एकैकश" इत्युक्तं,तदयुक्तम्। शसैव वीप्साया उक्तत्वेन द्विर्वचनाऽयोगात्, "येन नाप्राप्तिन्यायेन द्विर्वचनापवादः श" सिति सिद्धान्तात्। तथा "सुपःर" इति सूत्रेऽप्येककैकश इति प्राचोक्तमयुक्तमेव। एतच्च मनोरमाग्रन्थानुरोधेनोक्तम्॥ अन्ये तु एकैकमेवैकैकशः, स्वार्थे शस्, न त्वत्र वीप्सायाम्। न च स्वार्थे यः शस् स आकरग्रन्थान्नावगम्यत इति वाच्यम्, "एकां कपिलामेकैकशः सहरुआकृत्वो दत्त्वे"ति भाष्यात्, शसन्तस्य प्रत्येकमित्यर्थकत्वेन कैयटेन व्याख्यानाच्च स्वार्थिकस्यापि शसोऽवगम्यमानत्वात्। ततश्चैकैकश इति प्राचोक्तमयुक्तमिति यदुक्तं तदेवाऽयुक्तमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सुपः ६।१ १०३ एकवचन-द्विवचन-बहुवचनानि ६।१ १०१ एकशः ० १०१ त्रीणि १।३ १०० त्रीणि १।३ १००

अर्थः॥

सुपश्च त्रीणि त्रीणि एकशः (क्रमेण) एकवचन-द्विवचन-बहुवचन-संज्ञकानि भवन्ति

उदाहरणम्॥

सु (एकवचनम्), औ (द्विवचनम्), जस् (बहुवचनम्) एवं सर्वत्र
काशिका-वृत्तिः
सुपः १।४।१०३

तिङां त्रिकेषु एकवचनादिसंज्ञा विहिताः। सम्प्रति सुपाम् त्रिकेषु विधीयन्ते। सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति। सु इति एकवचनम्। औ इति द्विवचनम्। जसिति बहुवचनम्। एवम् सर्वत्र।
लघु-सिद्धान्त-कौमुदी
सुपः १२२, १।४।१०२

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः॥
न्यासः
सुपः। , १।४।१०२

सुविति प्रत्याहारग्रहणम्। प्रथमैकवचनात् सुशब्दादारभ्य सप्तमीबहुचनस्य सुपः पकारेण। अथ कपः पकारेणायं प्रत्याहार कस्मान्न विज्ञायते? सप्तमीबहुवचनस्य पकारस्य वैयर्थ्यप्रसङ्गात्। स ह्यनुदात्तार्थः स्यात्? प्रत्याहारार्थो वा? तत्रानुदात्तार्थो न भवति; अनुदात्तस्य सुपत्वादेव सिद्धत्वात्। तत्र यदि प्रत्याहारार्थोऽपि न स्यात् तदास्यापार्थकत्वमेव स्यात्। तस्मात् तेनैवायं प्रत्याहारो विज्ञायते, न तु कपः पकारेण; स्वरविधौ तस्य चरितार्थत्वात्॥
बाल-मनोरमा
सुपः १८४, १।४।१०२

सुपः। सुप् प्रत्याहारः, षष्ठ()एकवचनम्। "तान्येकवचनद्विवचनबहुवचनान्येकशः" इति सूत्रं तानीतिवर्जमनुवर्तते। एकश इति। एकैकमित्यर्थः "सङ्ख्यैकवचनाच्च वीप्सायाम्" इति शश्। शसैव वीप्साया अबिधानात् "नित्यवीप्सयोः" इति द्वित्वं न। तच्च "सङ्ख्यैकवचनाच्चे"ति सूत्रव्याख्यावसरे प्रपञ्चयिष्यते। "तिङस्त्रीणि त्रीणी"त्यतः "त्रीणि त्रीणि"त्यनुवर्तते। तदाह--सुपस्त्रीणीत्यादिना।

तत्त्व-बोधिनी
सुपः १५३, १।४।१०२

सुपः। अत्र "तिङस्त्रीणि त्रीणि"--इति सूत्रात् "त्रीणि त्रीणी"ति पदं, "तान्येकवचने"ति सूत्रं च "तानी"ति पदं विहायानुवर्तत इति व्याचष्टे--सुपस्त्रीणि त्रीणित्यादिना। एकश इति। एकैकमित्यर्थः। सङ्ख्यैकवचनाच्चे"ति वीप्सायां प्रथमान्ताच्छस्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभक्तिः १।१ च ० सुपः ६।१ १०२ तिङ् ६।१ १०० त्रीणि १।३ १०० त्रीणि १।३ १००

अर्थः॥

सुपः तिङश्च त्रीणि त्रीणि विभक्तिसंज्ञकानि च भवन्ति

उदाहरणम्॥

पठतः, पुरुषान्
काशिका-वृत्तिः
विभक्तिश्च १।४।१०४

विभक्तिश्च ।त्रीणि त्रीणि इत्यनुवर्तते। त्रीणि त्रीणि विभक्तिसंज्ञाश्च भवन्ति सुपस्तिङश्च। विभक्तिप्रदेशाः अष्टन आ विभक्तौ ७।२।८४ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
विभक्तिश्च १३०, १।४।१०३

सुप्तिङौ विभक्तिसंज्ञौ स्तः॥
न्यासः
विभक्तिश्च। , १।४।१०३

चकारः पुरुषादिसंज्ञासमावेशार्थः। विना तेनैकसंज्ञाधिकारे वचनप्रामाण्यात् पर्यायः स्यात्। तिङो विभक्तत्वे प्रयोजनम् "न विभक्तौ तुस्माः" (र१।३।४) इतीत्संज्ञाप्रतिषेधः। सुपस्त्वेच्च, अन्यच्च त्यदाद्यत्वादि॥
बाल-मनोरमा
विभक्तिश्च १८३, १।४।१०३

अथ "न विभक्तो तुस्माः" इत्याद्युपयोगिनी विभक्तिसंज्ञामाह--विभक्तिश्च। "सुप" इति पूर्वसूत्रात्सुब्ग्रहणम्, "तिङस्त्रीणी"त्यतस्तिङ्ग्रहणं चानुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञाबलात्। तदाह--सुप्तिङाविति। चकारः पुरुषवचनसंज्ञाभिः समावेशार्थः। तेन एकसंज्ञाधिकारस्थत्वेऽपि न पर्यायत्वम्। अन्यथा "रामेभ्यः" "भवाम" इत्यादौ विभक्तिसंज्ञाविरहेण "न विभक्ता"विति निषेधो न स्यात्।

ननु प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा, कर्मणि द्वितीया, कर्तृकरणयोस्तृतीया, चतुर्थी सम्प्रदाने, अपादाने पञ्चमी, षष्ठी शेषे, सम्पतम्यधिकरणे चेत्यादौ कथं प्रथमादिव्यवहारः , सूत्रकृता पाणिनिना प्रथमादिसंज्ञानामनुक्तत्वादित्यत आह--तत्रेति। तेषु स्वादिप्रत्ययेषु मध्य इत्यर्थः। इत्यादीनामिति। आदिना--अम्--औट्--शस्--इत्यादीनां ग्रहणम्। प्राचामिति। पाणिनेः पूर्वेषां स्फोटायनाद्याचार्याणां शास्त्रे प्रथमाद्याः सप्तम्यन्ताः संज्ञाः स्थिता इत्यन्वयः। किं तत् इत्यत आह--ताभिरिति। ताभिः=प्रथमादिसंज्ञाभिरिहापि=पाणिनीयशास्त्रेऽपि व्यवहारः--सम्भवतीत्यर्थः।

तत्त्व-बोधिनी
विभक्तिश्च १५२, १।४।१०३

विभक्तिश्च। "तिङ्स्त्रीणि त्रीणि--" इत्यतस्तिङ्ग्रहणं व्यवहितमपि स्वरितत्वबलादनुवर्तते। "सुपः" इति च

संनिहितमित्यभिप्रेत्याहु--सुप्तिङाविति। तिङां विभक्तिसंज्ञायाः प्रयोजनं "न विभक्तौ तुस्माः" इति। सुपां तु त्यदाद्यत्वादिकमपि। चकारः पुरुषवचनसंज्ञाभ्यां संमावेशार्थः। अन्यथा एकसंज्ञाधिकारादेकवचनादिसंज्ञाभिः सह वचनद्वयप्रामाण्यात्पर्यायः स्यात्। ततश्च "रामेभ्यो" "नमाम" इत्यादौ बहुवचनसंज्ञापक्षे विभक्तित्वाऽभावात्सस्येत्संज्ञा स्यात्। इहापीति। अस्मिन्नपि तन्त्रे "प्रातिपदिकार्थलिङ्गपरिमाणे"त्यादावित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ युष्मदि ७।१ १०५ उपपदे ७।१ १०७ समानाधिकरणे ७।१ १०७ स्थानिनि ७।१ १०७ अपि ० १०७ मध्यमः १।१ १०५

अर्थः॥

युष्मदि शब्दे उपपदे स्मानाधिकरणे सति = समानाभिधेये, तुल्यकारके सति, स्थानिनि = अप्रयुज्यमाने अपि, प्रयुज्यमानेऽपि मध्यमपुरुषः भवति।

उदाहरणम्॥

त्वं पचसि, युवां पचथः, यूयं पचथ। अप्रयुज्यमानेऽपि -- पचसि, पचथः, पचथ॥
काशिका-वृत्तिः
युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १।४।१०५

लस्य ३।४।७७ इत्यधिकृत्य सामान्येन तिबादयो विहिताः। तेषाम् अयं पुरुषनियमः क्रियते। युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमाने ऽप्यप्रयुज्यमाने ऽपि मध्यमपुरुषो भवति। त्वं पचसि। युवां पचथः। यूयं पचथ। अप्रयुज्यमाने ऽपि पचसि। पचथः। पचथ।
लघु-सिद्धान्त-कौमुदी
युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ३८५, १।४।१०४

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः॥
न्यासः
युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः। , १।४।१०४

नियतार्थमेतदिति दर्शयितुमाह-- "लस्येत्यधिकृत्य" इत्यादि। एतच्च नियमार्थत्वे कारणम्। सत्यारम्भो नियमार्थो भवति, नासिद्धे। स पुनरयं नियम उपपदार्थनियमो वा स्यात्-- तिङो युष्मद्युपपदे मध्यम एव? पुरुषनियमो वा स्यात्-- युष्मद्येवोपपदे मध्यम् इति वा? तत्र यदि प्रथमो नियम आश्रीयते, त्वया कुर्वता त्वया कुर्वाणेनेति युष्मद्युपदे लस्य शतृशानजादेशौ न भवतः। तस्मात् तदर्थं यत्नान्तरमास्थेयम्। इतरत्र तु न किञ्चिद्यत्नसाध्यम्, अतो द्वितीयपक्षमाश्रित्याह-- "तेषामयम्" इत्यादि। व्यवहिते च, अव्यवहिते चेति। ननु च परस्परं सन्निकृष्टं यत्पदं तदुपपदमुच्यते-- उपोच्चारितं पदमिति कृत्वा;यच्च व्यवहितं तदव्यवहितापेक्षया विप्रकृष्टम्, अतो व्यवहितेन भवितव्यम्, नैष दोषः; यस्मात् सन्निकृष्टं विप्रकृष्टमित्यव्यवस्थितमेतदुभयग्रहणम्; सापेक्षत्वात् परापरवत्। तत्र

यद्यव्यवहितमपेक्ष्य व्यवहितं विप्रकृष्टं भवति, तथाप्यन्यद्विप्रकृष्टतरमपेक्ष्य सन्निकृष्टं भवतीतीतरत्र व्यवहितेनापि भवितव्यम्। यद्येवम्, उपपदग्रहणं किमर्थम्? पूर्वभूतेऽपि यथा स्यादित्येवमर्थ कृतम्। अन्यथा "युष्मदि" इत्येतावत्युच्यमाने" तस्मिन्निति निर्दिष्ट#ए पूर्वस्य" १।१।६७इति परभूत एव युष्मदि पूर्वस्य मध्यमः स्यात्, न तु पूर्वभूते परस्य। उपपदग्रहणादत्रापि भवति। पूर्वेण परेणापि प्रयुज्यमानमुपपदं भवत्येव। "समानाधिकरणे" इत्यनेन समानाभिधेय इति व्याचक्षाणोऽयमधिकरणशब्दोऽभिधेयवचनः सूत्र उपात्त इति दर्शयति। तत्पुनरभिधेयं यत्र लकार उत्पद्यते कर्तरि कर्मणि वा कारके प्रत्यासत्तेस्तदेव विज्ञायते इत्याह-- "तुल्यकारके" इत्यादि। तुल्यं कारकं यस्य तत् तथोक्तम्। तुल्यशब्देन समानशब्दस्यार्थो दर्शितः। "प्रयुज्यमानेऽप्रयुज्यमानेऽपि" इति। अनेन स्थानिन्यपीत्यस्यार्थमाचष्टे। स्थानशब्दः प्रसङ्गवाची-- स्थानमस्यास्तीति स्थानी। कस्य च स्थानम्? तस्यैव स्थानमस्ति यस्यार्थो गम्यते, शब्दो न प्रयुज्यते। तदेतदुक्तं भवति-- अप्रयुज्यमानेऽपि युष्मदि, अपिशब्दात् प्रयुज्यमानेऽपि। समानाधिकरणग्रहणं किम्? "त्वया पच्यते" इत्यत्र मा भूत्, भिन्नं ह्यधिकरणम्। तथा हि-- "त्वया" इत्येतत् कर्तृवाचि; कत्र्तरि तृतीयाविधानात्। "पच्यते" इति कर्मवाचि; कर्मणि लकारविधानात्॥

बाल-मनोरमा

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १२, १।४।१०४

युष्मदि। उपोच्चारितं पदमुपपदम्। युष्मदि समीपोच्चारिते सतीत्यर्थः। समानमेकमधिकरणं वाच्यं यस्येति विग्रहः। सामानाधिकरण्यं च युष्मदस्तिङः स्थानीभूतलकारेण विवक्षितम्, "लः परस्मैपद"मित्यतस्तदनुवृत्तेः। तथा च फलितमाह--तिङ्वाच्यकारकवाचिनि युष्मदीति। स्थानं-- प्रसङ्गोऽस्यास्तीति स्थानी, तस्मिन्। प्रसक्ते सतीत्यर्थः। प्रसङ्गश्च तदर्थावगतौ सत्यां वक्त्रा अप्रयोग एव भवति। तथा च "स्थानिनी"त्यनेन उपपदभूते युष्मदि प्रयोगं विना स्वार्थं बोधयति सतीत्यर्थः पर्यवस्यति। तदाह-- अप्रयुज्यमान इति। "स्थानिनी"त्यनुक्तौ युष्मद्युपपदे प्रयुज्यमान एव मध्यमः स्यात्। ततश्च राम पाहीत्यादावव्याप्तिः स्यात्। अपिना लब्धमाह--प्रयुज्यमानेऽपीति। "युष्मद्युपपदे स्थानिनी"त्येवोक्तौ राम त्वं पाहीत्यादौ युष्मत्प्रयोगे मध्यमो न स्यादतोऽपिग्रहणमिति भावः। अत्वं त्वं संपद्यत इत्यत्र तु न मध्यमपुरुषः, तत्र युष्मच्छब्दस्य गौणत्वात्। "भवानागच्छती"त्यादौ भवच्छब्दयोगे तु न मध्यमपुरुषः, युष्मच्छब्दस्य संबोध्यैकविषयत्वात्, भवच्छब्दस्य तु स्वभावेन संबोध्याऽसंबोध्यसादारणत्वादित्यलम्।

तत्त्व-बोधिनी

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ११, १।४।१०४

युष्मदि। समानाधिकरणे इत्यस्य व्याख्यानं-- तिङ्वाच्यकारकवाचिनीति। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः-- सामानाधिकरणम्। स्थानिनीत्यस्य व्याख्यानम्- अप्रयुज्यमान इति। समानाधिकरणे किम्?। त्वं पश्यति, त्वया क्रियते, तुभ्यं ददाति॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रहासे ७।१ च ० मन्योपपदे ७।१ मन्यतेः ६।१ उत्तमः १।१ एकवत् ० च ० युष्मदि ७।१ १०४ उपपदे ७।१ १०४ समानाधिकरणे ७।१ १०४ स्थानिनि ७।१ १०४ अपि ० १०४ मध्यमः १।१ १०४

समासः॥

मन्ये उपपदे यस्य सः मन्योपपदः, तस्मिन् ॰ बहुव्रीहिः।

अर्थः॥

प्रहासः = परिहासः। प्रसाहे गम्यमाने मन्योपपदे धातोः युष्मदि उपपदे समानाधिकरणे स्थानिनि अपि मध्यमपुरुषः भवति, मन्यतेः धातोः च उत्तमपुरुषः भवति, सः च उत्तमः एकवद् भवति॥

उदाहरणम्॥

एहि मन्ये ओदनं भोक्ष्यसे, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः। एहि मन्ये रथेन यास्यसि, नहि यास्यसि, यातः तेन ते पिता।

काशिका-वृत्तिः

प्रहासे च मन्यौपपदे मन्यतेरुत्तम एकवच् च १।४।१०६

प्रहासः परिहासः क्रीडा। प्रहासे गम्यमाने मन्यौपपदे धातोर् मध्यमपुरुषो भवति, मन्यतेश्चौत्तमः, स च एकवद् भवति। एहि मन्ये ओदनम् भोक्ष्यसे इति, न हि भोक्ष्यसे, भुक्तः सो ऽतिथिभिः। एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यात्स्तेन ते पिता। मध्यमौत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते। प्रहासे इति किम्? एहि मन्यसे ओदनं भोक्ष्ये इति। सुष्ठु मन्यसे। साधु मन्यसे।

न्यासः

प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च , १।४।१०५

"प्रहासे गम्यमाने" इति। यत्र भूतार्थाभावाद्वञ्चनैव केवलं तत्र वक्तुरभिप्रयाविष्करणेन प्रहासो गम्यते। "मन्योपपदे" इति।मन्यतिरुपपदमुपोच्चारितं पदं यस्य स तथोक्तः। मध्यमस्य धातोर्विधानात् धातुरन्यपाद्रथो विज्ञायत इत्याह-- "धातोःट इति। "स चैकवत्" इति। यत्र द्वौ मन्तारौ बहवो वा तत्रायमेकवद्भावो विधीयते। अन्यत्र तु मन्तुरेकत्वादेवैकवचनं सिद्धम्। "मध्यमोत्तमयोः" इति। यथाक्रमं युष्मदस्मदोरुपपदयोः समानाधिकरणयोरप्रयुज्यमानयोरप्यर्थस्य विद्यमानत्वात्। यथा प्रत्युदाहरणे पूर्वकमुपपदग्रहणं युष्मच्छब्देनाभिसम्बद्धमिहानुवर्त्तेतेति तन्मन्यतिनाऽशक्यमभिसम्बन्धुमिति पुनरुपपदग्रहणं क्रियते। मन्यतेरिति श्यना निर्देशः, इत्यस्य तानादिकस्य ग्रहणं मा भूदत्येवमर्थः। तेनेनह न भवति-- एहि मनुषे रथेन यास्यामि न हि यास्यसि यातस्तेन ते पितेति। एवं हि मनोतेर्भवति॥

बाल-मनोरमा

प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च १३, १।४।१०५

प्रहासे च। वाक्यद्वयमिदं सूत्रम्। "प्रहासे च मन्योपपदे इति प्रथमं वाक्यम्। मध्यम इत्यनुवर्तते। मनधातुः श्यन्विकरण उपपदं यस्येति बहुव्रीहिः। मन्यपदश्रवणबलाद्धाताविति विशेष्यं लभ्यते। तदाह--मन्यधातुरित्यादिना। तस्मिन्प्रकृतिभूते सतीति। तस्माद्धातोर्लस्य स्थाने इत्यर्थः। मध्यमः स्यादिति। "अस्मद्युपपदे" इति शेषः। अस्मद्युत्तमं इत्युत्तरसूत्रात्तदनुवृत्तेः। एवं च उत्तमपुरुषापवादोऽयं मध्यमविधिः। "मन्यतेरुत्तम एकवच्चे"ति द्वितीयं वाक्यम्। तद्व्याचष्टे-- मन्यतेस्तूत्तमः स्यादिति। "युष्मद्युपपदे" इति शेषः। पूर्वसूत्रात्तदनुवृत्तेः। स चेति। सः = मन्येतरुत्तमपुरुषः,द्वित्वबहुत्वयोरपि एकवचनं लभत इत्यर्थः। मध्यमोत्तमयोर्व्यत्यासार्थमिदम्। एतत्सर्वमनुपदमेवोदाहरणे स्पष्टीभविष्यति।

तत्त्व-बोधिनी

प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च १२, १।४।१०५

वाक्यद्वयमिदं सूत्रम्। "प्रहासे च मन्योपपदे" इति प्रथमं वाक्यम्। मध्यम इत्यनुवर्तते। मनधातुः श्यन्विकरण उपपदं यस्येति बहुव्रीहिः। मन्यपदश्रवणबलाद्धाताविति विशेष्यं लभ्यते। तदाह-- मन्यधातुरित्यादिना। तस्मिन्प्रकृतिभूते सतीति। तस्माद्धातोर्लस्य स्थाने इत्यर्थः। मध्यमः स्यादिति। "अस्मद्युपपदे" इति शेषः। अस्मद्युत्तमं इत्युत्तरसूत्रात्तदनुवृत्तेः। एवं च उत्तमपुरुषापवादोऽयं मध्यमविधिः। "मन्यतेरुत्तम एकवच्चे"ति द्वितीयं वाक्यम्। तद्व्याचष्टे--- मन्यतेस्तूत्तमः स्यादिति। "युष्मद्युपपदे" इति शेषः। पूर्वसूत्रात्तदनुवृत्तेः। स चेति। सः = मन्यतेरुत्तमपुरुषः, द्वित्वबहुत्वयोरपि एकवचनं लभत इत्यर्थः। मद्यमोत्तमयोर्व्यत्यासार्थमिदम्। एतत्सर्वमनुवपदमेवोदाहरणे स्पष्टीभविष्यति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अस्मदि ७।१ उत्तमः १।१ उपपदे ७।१ १०४ समानाधिकरणे ७।१ १०४ स्थानिनि ७।१ १०४ अपि ० १०४

अर्थः॥

अस्मदि उपपदे स्मानाभिधेये सति प्रयुज्यमानेऽपि अप्रयुज्यमानेऽपि उत्तमपुरुषः भवति।

उदाहरणम्॥

अहं पचामि। आवां पचावः। वयं पचामः॥ अप्रयुज्यमानेऽपि -- पचामि, पचावः, पचामः॥

काशिका-वृत्तिः

अस्मद्युत्तमः १।४।१०७

उत्तमपुरुषो नियम्यते। अस्मद्युपपदे समानाभिधेये प्रयुज्यमाने ऽप्यप्रयुज्यमाने ऽपि उत्तमपुरुषो भवति। अहम् पचामि। आवाम् पचावः। वयम् पचामः। अप्रयुज्यमाने ऽपि पचामि। पचावः। पचामः।

लघु-सिद्धान्त-कौमुदी

अस्मद्युत्तमः ३८६, १।४।१०६

तथाभूतेऽस्मद्युत्तमः॥

न्यासः

अस्मद्युत्तमः।, १।४।१०६

यदा युष्दस्मदी द्वे अप्येते उपपदे स्तः, तदा कथं भवितव्यम्? यदि कर्तृशक्ती आधारप्रतिनियते अपेक्ष्येते, तदाऽऽख्यातमपि पृथगेव प्रयुज्यते-- पचसि पचामि चेति। अथाविरोधाच्छक्तिद्वयेऽपि लकार उत्पद्यते, तदा विप्रतिषेधादुत्तम एव भवति-- त्वञ्चाहञ्च पचाव इति। यद्यपि "त्यदादीनां यद्यत्परं तच्छिष्यते" भवति। आवां पचाव इत्यत्र ह्यस्मच्छब्दस्य युष्मदर्थोऽपि वाच्यः, अन्यथा हि द्विवचनं न स्यात्। न ह्यस्मच्छब्दस्यैव द्वित्वमुपपद्यते॥

बाल-मनोरमा

अस्मद्युत्तमः १४, १।४।१०६

अस्मद्युत्तमः। तथाभूत इति। तिङ्वाच्यकारकवाचिनि अप्रयुज्यमाने प्रयुज्यमाने चेत्यर्थः।

तत्त्व-बोधिनी

अस्मद्युत्तमः १३, १।४।१०६

तथाभूते इति। तिङ्वाच्यकारकवाचिनि प्रयुज्यमानेऽप्रयुज्यमाने चेत्यर्थः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शेषे ७।१ प्रथमः १।१ उपपदे ७।१ १०४ समानाधिकरणे ७।१ १०४ स्थानिनि ७।१ १०४ अपि ० १०४

अर्थः॥

मधमोत्तम-विषयात् अन्यत्र शेषः। यत्र युष्मदस्मत्-समानाधिकरण-शब्दौ उपपदे न स्थः, तस्मिन् शेषे उपपदे समानाधिकरणे प्रयुज्यमाने, अप्रयुज्यमानेऽपि प्रथमपुरुषः भवति।

उदाहरणम्॥

सः पचति। तौ पचतः। ते पचन्ति। अप्रयुज्यमानेऽपि-पचति, पचतः, पचन्ति।
काशिका-वृत्तिः
शेषे प्रथमः १।४।१०८

शेषः इति मध्यमौत्तमविषयादन्य उच्यते। यत्र युष्मदस्मदी समनाधिकरणे उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति। पचति। पचतः। पचन्ति।
लघु-सिद्धान्त-कौमुदी
शेषे प्रथमः ३८७, १।४।१०७

मध्यमोत्तमयोरविषये प्रथमः स्यात्। भू ति इति जाते॥
न्यासः
शेषे प्रथमः।, १।४।१०७

बाल-मनोरमा

शेषे प्रथमः १५, १।४।१०७

शेषे। उक्तान्मध्यमोत्तमविषयादन्यः शेषः। तदाह--मध्यमोत्तमयोरविषय #इति। "त्वमहं च पचाव" इत्यत्र तु परत्वादुत्तमपुरुष एव न तु मध्यमः। "देवदत्तस्त्वं च पचथ" इत्यत्रापि न प्रथमपुरुषः, युष्मदस्सत्वेन शेषत्वाऽभावादित्यलम्। भू सत्तायामिति। "वर्तते" इति शेषः। भ्वादिगणे प्रथमो धातुरयम्। तत्र "भू"इत्येव गणे पाठः।

अर्थनिर्देशस्त्वाधुनिक इति वक्ष्यते। यद्यपि सत्ता जातिः, न क्रिया, तथापि आत्मधारणं सत्तेत्युच्यते। स्वरूपेणाऽवस्थानमिति यावत्। कर्तृविवक्षायामिति। वर्तमानसत्तावृत्तेर्भूधातोः कर्तरि लटि आत्मनेपदनिमित्तहीनतया परस्मैपदे तिबादिनवके तत्रापि युष्मदस्मत्सामानाधिकरण्याऽभावात् प्रथमपुरुषत्रिके, तत्रापि कर्तुरेवकत्वविवक्षायां तिपि सति, भू-ति इति स्थिते प्रक्रिया वक्ष्यत इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ परः १।१ सन्निकर्षः १।१ संहिता १।१

अर्थः॥

परशब्दः अतिशयवाची, वर्णानां परः = अतिशयितः सन्निकर्षः = प्रत्यासत्तिः संहितासंज्ञकः भवति।

उदाहरणम्॥

दधि + अत्र = दध्यत्र। मधु + अत्र = मध्वत्र॥
काशिका-वृत्तिः
परः संनिकर्षः संहिता १।४।१०९

परशब्दो ऽतिशये वर्तते। संनिकर्षः प्रत्यासत्तिः। परो यः सन्निकर्षः, वर्णानाम् अर्धमात्राकालव्यवधानं, स संहितासंज्ञो भवति। दध्यत्र। मध्वत्र। संहिताप्रदेशाः सिंहितायाम् ६।१।७० इत्येवम् आदयः।
न्यासः
परः सन्निकर्षः संहिता। , १।४।१०८

"परशब्दोऽतिशये वत्र्तते" इति। यथा परं दुःखमिति। एतन परशब्दोल दिगादिष्वप्यर्थेषु वत्र्तते, तथापीहातिशये वत्र्तमानस्य तस्य ग्रहणमित दर्शयति। सन्निकर्षः = प्रत्यासत्तिः, संश्लेषश्च। तत्रेह प्रत्यासत्तिर्गृह्रत इति दर्शयन्नाह-- "सन्निकर्षः प्रत्यासत्तिः" इति। संश्लेषस्तु न गृह्रते, तस्य वर्णेष्वसम्भवात्। संश्लेषो ह्रेककालानां भवति, न च वर्णामामेककालतापत्तिः; क्रमेणोच्चारित्वादुच्चरितप्रध्वंसिततत्वात्। संश्लेषो ह्रेककालानां भवति, न च वर्णानामेककालतापत्तिः; क्रमेणोच्चारित्वादुच्चरितप्रध्वंसततत्वात्। सत्यामपि चैककालतायां न सम्भवत्येव वर्णानां सश्लेषः। तथा हि-- संश्लेषः संयोगतो वा स्यात्, समवायतो वा; तत्र पूर्वको द्रव्यस्यैव स्यात्, न तु शब्दस्य-- निर्गुणा गुणा इति कृत्वा। इतरोऽपि नैव शब्दस्य सम्भवति, न हि वर्णो वर्णे समवैति; शब्दस्याकाशसमवायित्वात्। न च संयोगसमवाययोरतिशयः सम्भवति; सर्वत्रैकरुपकत्वात्। तथा च "परः" इति विशेषणं नोपपद्यते। प्रत्यासत्तिस्त्वपेक्षाकृतभेदात् प्रकर्षाप्रकर्षाभ्यां प्रयुज्यमानापरग्रहणेन विशिष्यत इति युक्तं तस्य विशेषणत्वम्। कः पुनरसौ परः सन्निकृष्टान् वर्णानुच्चारयति वक्तरि पूर्वस्य वर्णस्य ये निष्पादकास्ताल्वादयस्तेषां व्यापारोपरतौ वर्णान्तरस्य च ये निष्पादकास्ताल्वादयस्तेषां व्यापारोपदेशनमद्र्धमात्राकालमाहुः। स वर्णानां व्यवधानः = व्यवधायको यस्मिन् सोऽद्र्धमात्राकालव्यवधानः सन्निकर्षः। यदि वर्णानामद्र्धमात्राकालव्यवधानः सन्निकर्षः,कथं तर्हि दध्यत्रेत्यादौ वयवधायककालो नोपलक्ष्यते,वर्णाः संश्लिष्टा एवोपलभ्यन्ते? नैतत्; किमर्थं पुनरेतदारभ्यते, यावता परमेव

सन्निकर्षं संहितेति वदन्त्याचार्याः, तथा हि संहितामधीष्वेत्युक्ते परं सन्निकर्षमेवाधीते शिष्यः? नैतदेवम्; पदस्य पदान्तरेण यदानन्तर्यं सा संहितेति लोकेऽभिधीयते। तथा च वक्तारो वदन्ति-- संहितामधीते न पदानि, पदान्यधीते न संहितामिति। तथा चैकपदे हि संहिताकार्यं न स्यात्, "इको यणचि"६।१।७४ इति-- कुमार्यौ, कुर्मार्य इति। सति ह्यस्मिन् वर्णानां सन्निकर्षविशेषस्यानेन संहितासंज्ञा विधीयत इत सर्वत्रैव भवति॥।

बाल-मनोरमा

लुक् स्त्रियाम् १०९६, १।४।१०८

लुक्स्त्रियाम्। वतण्डाच्चेति विहितस्येति। "यञ" इति शेषः। वतण्डीति। वतण्डस्य गोत्रापत्यं स्त्री आङ्गिरसीति विग्रहः। यञो लुकि आदिवृद्धिनिवृत्तौ ङीनिति भावः। वातण्ड()आयनीति। अत्रि आदिवृद्धौ लोहितादिलक्षणः ष्फः, षित्त्वान्ङीषिति भावः। "वतण्डाच्चे"ति विहितस्येत्यस्य प्रयोजनमाह--अणि तु वातण्डीति। शिवादित्वादणि गोत्रत्वेन जातित्वाज्जातिलक्षणे ङीषि तस्याऽणो वतण्डाद्विहितत्वेऽपि "वतण्डाच्चे"ति विहितत्वाऽभावान्न लुगिति भावः। ननु वतण्डादणि तस्य "अणिञोरनार्षयो"रिति वक्ष्यमाणः ष्यङ् स्यादित्यत आह--ऋषित्वादिति।

बाल-मनोरमा

परः संनिकर्षः संहिता ३०, १।४।१०८

परः संनिकर्षः। परः=अतिशयितः। "दूरानात्मोत्तमाः पराः" इत्यमरः। सन्निकर्षः=सामीप्यम्। अर्धमात्राधिककालव्यवधानाऽभावः। अर्धमात्राकालव्यवधानस्याऽवर्जनीयत्वात्। तदेतदभिप्रेत्याह-अतिशयित इत्यादिना।

तत्त्व-बोधिनी

लुक् स्त्रियाम् ९१७, १।४।१०८

लुक् स्त्रियाम्। विहितस्येति। "परिशेषितस्य वे"ति बोध्यम्। एतच्च "आङ्गिरसे"इत्यनुवृत्त्या लभ्यते। यद्यपि "वतण्डाल्लुक् स्त्रिया"मित्येकसूत्रकरणेऽपि "आङ्गिरसे"इत्यनिवृत्त्या अनाङ्गिरसे यञणोर्लुगभावात् स्त्रियामिष्टं सिद्ध्यति, तथापि पुंस्याङ्गिरसे यञणोरुभयोः प्राप्तिरनिष्टेति तद्वारणाय पृथक् सूत्रं कृतम्। ऋषित्वादिति। न चैवं "ऋष्यन्धके"त्यणि सिद्धे शिवादिगणे वतण्डपाठो व्यर्थं इति शङ्क्यम्। गर्गादिपाठेन यञा बाधात्तन्निवृत्तये तत्पाठस्यावश्यरकत्वात। ष्यङ्नेति। "अणिञोरनार्षयो"रिति सूत्रेणेति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विरामः १।१ अवसानम् १।१

अर्थः॥

विरामः अवसानसंज्ञकः भवति

उदाहरणम्॥

वृक्षः, प्लक्षः। दधिँ, मधुँ

काशिका-वृत्तिः

विरामो ऽवसानम् १।४।११०

विरतिः विरामः। विरम्यते ऽनेन इति वा विरामः। सो ऽवसानसंज्ञो भवति। दधिं। मधुं। वृक्षः। प्लक्षः। अवसानप्रदेशाः खरवसानयोर् विसर्जनीयः ८।३।१५ इत्येवम् आदयः। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य चतुर्थः पादः। द्वित्तियो ऽध्ययः प्रथमः पादः

लघु-सिद्धान्त-कौमुदी

विरामोऽवसानम् १२४, १।४।१०९

वर्णानामभावोऽवसानसंज्ञः स्यात्। रुत्वविसर्गौ। रामः॥

न्यासः

विरामोऽवसानम्। , १।४।१०९

"विरतिर्विरामः" इति। भावे घञ्। विरामो वणोच्चारणाभावोऽवसानसंज्ञो भवति। "विरम्यतेऽनेनेति विरामः" इति विरामशब्दस्य द्वितीयमर्थं दर्शयति। "कृत्यल्युटो बहुलम्" ३।३।१३ इति बहुलवचनादसंज्ञायामपि "हलश्च" ३।३।१२१ इति घञ्। अत्र पक्षे येनान्त्येन वर्णेन विरम्यते सोऽवसानसंज्ञो भवति। तत्र पूर्वस्मिन् पक्षेऽभावे पौर्वापर्याभावात् "खरवसानयोः" ८।३।१५ इत्यत्रावसानापेक्षया विषयसप्तमीयं विज्ञायते; न परसमप्तमी। खरपेक्षया तु सप्तमीयम्। अन्ये तु-- यद्यभावे पौर्वापर्यं न सम्भवतीत्यवसनापेक्षया "खरवसानयोः" ८।३।१५ इति परसप्तमी नोपपद्यते, तदा "इको यणचि" ६।१।७४ इत्यादावपि परसप्तमी नोपपद्यते। कथम्? वर्णानां क्रमभावित्वात्, उच्चरितप्रध्वंसितत्वाच्च। यदेगस्ति तदाज् नास्ति, यदा त्वजस्ति तदेग् नास्ति। अथात्र बुद्धिप्रकल्पितं पौर्वापर्यमाश्रित्य परसप्तमीष्यते, तदा "खरवसानयोः" ८।३।१५ इत्यत्रापितथैवेष्टव्येति मन्यमाना अवसानापेक्षयापि परसप्तमीमिच्छन्ति। अपरे तु--अन्त्यस्य तु वर्णस्यावसानसंज्ञायां सत्यां "खरवसानयोः" ८।३।१५ इति षष्ठी विज्ञायते। अत्रावसानापक्षया स्थानषष्ठी। रेफस्यावसानस्य विसर्जनीय इति खरपेक्षया तवानन्तर्यलक्षणा षष्ठीति वदन्ति। तन्मते स्थानषष्ठ()आं हि "रो रि" ८।३।१४ इत्यतो रेफस्यानुवृत्तस्य यत् स्थानित्वं तदविरुध्यते तदेवमेकापि विभक्तिर्यथायोगं विभज्यते। ननु चाभावपक्षेऽपि पूर्वस्मिन्नपि भागेऽनुच्चारममस्ति, तत्रापि विसर्जनीयः प्राप्नोति-- रथ इति, अस्ति ह्यत्रापि रेफात् प्रागुच्चारणम्? नैष दोषः तत्र हि प्रकृतं पदग्रहणं रेफेण विशिष्यते-- रेफान्तस्य पदस्येति। न च पूर्वेण रेफेण पदं भवति। नन्वेवप्यर्थस्यैषा संज्ञा स्यादिति "खरवसनायोः" ८।३।१५ इत्यत्र "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति परिभाषा नोपतिष्ठते। शब्दे हि सप्तमीनिर्दिष्टे सतीयमुपतिष्ठते, नार्थे। तदनुपस्थाने च परेण रेफेण रेफान्तस्य रथ इत्येतस्य पदस्य पूर्वो यो रेफस्तस्य व्यवहितस्यापि विसर्जनीयः स्यात्, नैष दोषः; ज्ञापकान्न भविष्यति, यदयं "उरण् रपरः" १।१।५० इति व्यवहितस्य रेफस्य विसर्जनीयमकृत्वा निर्देशं करोति, तज्ज्ञापयति- व्यवहितस्य रेफस्य विसर्जनीयो न भवतीति। "नन्वत्र लोके प्रसिद्धेरेवायन्त्ये वर्णेऽवसानशब्दस्य सम्प्रत्ययो भविष्यति। प्रसिद्धो हि लोके--अन्त्ये वर्णेऽवस्यतेः प्रयोगः। तथा हि केनावस्यतीत्युक्ते वक्तारो वदन्ति-- इकारेणोकारेण वेति। इकारादिवर्णेनावसानं करोतीत्यर्थः। ततः प्रदेश एवावसानग्रहणं कत्र्तव्यमिति नार्थः संज्ञासंज्ञिप्रणनेन, नैतदस्ति; अपूर्वो हि स्यतिः परिसमाप्तावपि वत्र्तते-- अवसितो वाद इति, अवगमेऽपि वत्र्तते-- अवसितोऽर्थ इति, पराभवेऽपि वत्र्तते--द्वयोर्विवादेऽवसितो दवदत्त इति। तत्र यदीयं नारभ्यते, तदावसानग्रणे सन्देहः स्यात्-- किमभिधानावसानशब्दस्य ग्रहणमिति? "विरामोऽवसानम्" (१।४।११०) इति तु ह्न्तग्रहणं कत्र्तव्यम्-- खरन्त्ययोरिति? एतदपि नास्ति; एवं हि सन्देहः स्यात्-- किमन्त्यस्य वर्णस्य? उत पदस्य?

आहोस्वद्वाक्यस्येति? तत्रान्त्यस्य विशेषणार्थं वर्णग्रहणं कत्र्तव्यं स्यात्। तस्मात् संज्ञासंज्ञिसम्बन्धः कत्र्तव्यः। "वृक्षः, प्लक्षः" इति। "खरवसनायोर्विसर्जनीयः" ८।३।१५। "दधिं मधुँ" इति। "अणोऽप्रगृह्रस्यानुनासिक" ८।४।५६ इति। अत्र हि "वाऽवसाने"८।४।५५ इत्यतोऽवसानग्रहणमनुवर्तते॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य चतुर्थः पादः समाप्तश्चायं प्रथमोऽध्यायः॥ ----------- श्रीबोधिसत्त्वदशीयाचार्यजिनेन्द्रबुद्धिपादविरचिता न्यासापरपर्याया काशिकाव्याख्या ---------- द्वितीयाध्यायस्य प्रथमः पादः

बाल-मनोरमा

विरामोऽवसानम् २९, १।४।१०९

विरामोऽवसानम्। विरम्यते अस्मिन्निति विरामः। सामीपिकेऽधिकरणे घञ्। विरमणं-क्रियाया अभावः, स च शब्दशास्त्रप्रस्तावाद्वर्णानामुच्चारणाऽभावात्मक इति लभ्यते। तथा च "यस्मिन्वर्णे उच्चारिते सति अव्यवहितात्तरकाले वर्णान्तराणामुच्चारणाऽभावः सोऽन्त्यवर्णोऽवसानसंज्ञक" इत्यर्थः फलति। तदभिप्रेत्य व्याचष्टे--वर्णानामिति। यस्मिन्नुच्चारिते सति वर्णान्तराणामुच्चारणाऽभावः सोऽन्त्यवर्णोऽवसानसंज्ञक इत्यद्याहारेण विवरणं योज्यम्। यद्वा वर्णानामुच्चारणाऽभावो विरामः। भावे घञ्। स च किञ्चिद्वर्णोच्चारणोत्तरकालिक एव गृह्रते , व्याख्यानात्। अस्मिन् पक्षे "किञ्चिद्वर्णोच्चारणोत्तरं वर्णान्तराणामुच्चारणाभावोऽवसान"मिति विवरणयोजना। तत्र प्रथमपक्षे खरवसानयोरित्यत्र खरि परतो रेफस्य विसर्गः, अवसाने तु "रेफे स्थानिनी"ति योज्यम्। खपवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते। द्वितीयपक्षे तु अभावस्यापि बुद्धिकृतं परत्वं बोध्यम्।

तत्त्व-बोधिनी

विरामोऽवसानम् २७, १।४।१०९

विरामोऽवसानम्। विरमणं विरामः। भांवेघञ्। शब्दानुसासनप्रस्तावादाह-वर्णानामिति। संज्ञाप्रदेशाः-वावसाने" इत्यादयः। अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव, यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम्। यद्वा विरम्यतेऽनेनेति विरामः, बाहुलकात्करणे घञ्। यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते सोऽन्त्यवर्णोऽवसानसंज्ञ इत्यर्थः। अ()स्मस्तु पक्षे "खरवसानयोः" इत्येकापि सप्तमी विषयभेदाद्भिद्यते-खरि परे रेफस्य विसर्गः, अवसाने च रेफे स्थानिनीति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समर्थः १।१ पदविधिः १।१

समासः॥

चतुर्विधः अत्र विग्रहः द्रष्टव्यः। सङ्गतार्थः समर्थः। संसृष्टार्थः समर्थः। सम्प्रेक्षितार्थः समर्थः। सम्बद्धार्थः समर्थः। उत्तरपदलोपी कर्मधारयः तत्पुरुषः।
पदस्य विधिः, पदयोः विधिः, पदानां विधिः, पदात् विधिः=पदविधिः इति सर्वविभक्त्यन्तः समासः अत्र बोध्यः

अर्थः॥

परिभाषासूत्रम् इदम्। येन सह यस्य सम्बन्धः भवति, तेन सह सः समर्थः भवति। अर्थात् समर्थात् समर्थस्य वा पदस्य विधिः भवति। तत् यथा समासविधौ - राज्ञः पुरुषः राजपुरुषः इत्यत्र समासः भवति यतः हि अत्र--राज्ञः पुरुषः--इति उभे पदे परस्परं सम्बद्धार्थे=समर्थे स्तः, अतः एव अनयोः समासः जायते, परं--भार्या राज्ञः पुरुषः देवदत्तस्य--इत्यत्र राज्ञः, पुरुषः इति अनयोः पदयोः सम्बद्धार्थता=परस्परम् आकाङ्क्षता नास्ति, इत्यतः समासः न भवति। एवं कष्टश्रितः इत्यत्र समर्थता-भावात् समासः भवति। एवं सर्वत्र योजनीयम्॥

काशिका-वृत्तिः

समर्थः पदविधिः २।१।१

परिभाषेयम्। यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स समर्थो विदितव्यः। विधीयते इति विधिः। पदानां विधिः पदविधिः। स पुनः समासादिः। समर्थः शक्तः। विग्रहवाक्यार्थभिधाने यः शक्तः स समर्थो विधितव्यः। अथ वा समर्थपदाश्रयत्वात् समर्थः। समर्थनां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वेदितव्यः। वक्ष्यति, द्वितीया श्रितातीतपतितगतात्यस्तप्राप्ताऽपन्नैः २।१।२३ कष्टं श्रितः कष्टश्रितः। समर्थग्रहणं किम्? पश्य देवदत्त कष्टं, श्रितो विष्णुमित्रो गुरुकुलम्। तृतीया तत्कृतार्थेन गुणवचनेन २।१।२९ शङ्कुलया खण्डः शङ्कुलाखण्डः। समर्थग्रहणं किम्? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन। चतुर्थी तदर्थार्थवलिहितसुखरक्षितैः २।१।३५ यूपाय दारु यूपदारु। समर्थग्रहणं किम्? गच्छ त्वं यूपाय, दारु देवदत्तस्य ग्रेहे। पञ्चमी भयेन २।१।३६ वृकेभ्यो भयं वृकभयम्। समर्थग्रहणं किम्? गच्छ त्वं मा वृकेभ्यो, भयं देवदत्तस्य यज्ञदत्तात्। षष्ठी २।२।८ राज्ञः पुरुषः राजपुरुषः। समर्थग्रहणं किम्? भार्या राज्ञः, पुरुषो देवदत्तस्य। सप्तमी शौण्डैः २।१।३९ अक्षेषु शौण्डः अक्षशौण्डः। समर्थग्रहणं किम्? शक्तस्त्वं अक्षेषु, शौण्डः पिबति पानागारे। पदग्रहणं किम्? वर्णविधौ समर्थपरिभाशा मा भूत्। तिष्ठतु दध्यशान त्वं शाकेन। तिष्ठतु कुमारी च्छत्रं हरदेवदत्तात्। यणादेशो, नित्यश्च तुग् भवति।

लघु-सिद्धान्त-कौमुदी

समर्थः पदविधिः ९०७, २।१।१

पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः॥

न्यासः

समर्थः पदविधिः। , २।१।१

"परिभाषेयम्" इति। परितो व्यापृता भाषा = परिभाषा। तथा चोक्तम्-- "परिभाषा पुनरेकस्था सर्व शास्त्रमभिज्वलयति, यथा-- वश्मप्रदीपः"। कुतः पुनरेतद्विज्ञायते-- परिभाषेयम्, नाधिकार इति? पदविधिग्रणाल्लिङ्गात्। उत्तरत्र हि सर्वः पराङ्गवद्भावादिरनुकरस्यमानः पदविधिरेव। तत्र यद्यमधिकारः स्यात्, पदविधिग्रहणमनर्थकं स्यात्; वयावत्र्याभावात्। परिभाषायां त्वस्याम्, परिभाषा ह्येकदेशस्यापि सर्वत्र शास्त्रे व्याप्रियत इत्यसति पदविधिग्रहणे वर्णविधायवप्युपतिष्ठेत। ततो वर्णविधिनिरासार्थ क्रियमाणं पदविधिग्रहणमर्थवद्भवति। तस्मात् पदिविधग्रहणाल्लिङ्गात् परिभाषेयं नाधिकार इत्यवसीयते। यद्यवम्, "इसुसोः सामर्थ्ये" ८।३।४४ , "न चवाहाहैवयुक्ते" ८।१।२४ इत्येवमादिषु योगेषु सामथ्र्यग्रहणं युक्तग्रहणञ्च किमर्थं क्रियते, यावता "पदस्य" इति तत्रानुवत्र्तते, तत्र पदविधित्वादेवासामर्थ्ये न भविष्यति? सत्यमेतत्; यदर्थं तु क्रियते तत् तत्रैव प्रतिपादयिष्यामः। विधिशब्दोऽयमस्त्येव भावसाधनः-- विधानं विधिरिति। अस्ति च कर्मसाधनः-- विधीयत इति विधिः। तत्र भावसाधने विधिशब्द आश्रीयमाणे पदानामपरिनिष्पन्नानां परिनिष्पादनं पदविधिरिति पदेषु कर्मणि कृद्योगलक्षणा षष्ठी; तेषां विधिना सम्बन्धात्। कर्मसाधने तु परिनिष्पन्नानां

व्यवस्थितानामेव पदानां यत्समासादि कार्यं विधीयते स पदिविधिः। तत्र पदेषु च शेषलक्षणा षष्ठी भवति; विधीयमानस्य कार्यस्य पदसम्बन्धित्वेनोपादानात्। तत्र यदीह भावसाधनो विधिशब्द आश्रीयेत तदा विभक्तिविधानमेव सङ्गृहीतं स्यात्,समास-- पराङ्गवद्भाव--तद्धितवृत्त्यादिकं न सङ्गृह्येतच न हि तत्र पदानामसतां विधानम्; किं तर्हि? व्यवस्थितानामेव पदानां समासादि कार्यं विधीयते। इतरत्र तु विधिशब्द आश्रीयमाणे तेऽपि सङ्गृहीता भवन्तीति मन्यमानः कर्मसाधनं विधिशब्दमाश्रित्याह-- "विधीयत इति विधिः" इति। ननु चात्रापि पक्षे विभक्तिविधानं न सङ्गृह्येत, न हि "कर्मणि द्वितीया" २।३।२ इत्येवमादिशास्त्रेण व्यवस्थितानां पदानां किञ्चित् कार्यं विधीयते, अपि तु पदान्येव विधीयन्ते? यदि न सङ्गृहीतं स्यान्न नाम। न च तदसङ्ग्रहे किञ्चिदनिष्टमापद्यत इत्युत्तरत्र प्रतिपादयिष्य#आमः। "समासादिः" इति। आदिशब्देन तद्धितवृत्त्यादीनां ग्रहणम्। "समर्थः शक्तः" इति। स्वकार्यनिर्वर्तनक्षम इत्यर्थः। स हि लोके समर्थ इत्युच्यते। स्वार्थप्रतिपादनमेव शब्दानां स्वकार्यम्। ये चेह लौकिका वैदिकाश्च शब्दा अधिकृतास्ते सर्वे एव स्वकार्यप्रतिपादनं प्रति समर्थाः। तस्मात् "समर्थः" इत विशेषणोपादानसामर्थ्याद्विशेषः कश्चिदाश्रीयते। स च विशेषः-- वृत्यर्थं यद्वाक्यमुपादीयते, प्रत्यासत्तेस्तदर्थप्रतिपादने या शक्तता तल्लक्षमो विज्ञायत इत्याह-- "विग्रहवाक्यर्थाभिधाने" इत्यादि। विशेषेण गृह्यते विज्ञायतेऽनेनेति विग्रहः, विग्रहश्च तद्वाक्यम्। अथ वा-- विशेषेण ग्रहणं विग्रहः, विग्रहार्थं यद्वाक्यं तद्विग्रहवाक्यम्। शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। विग्रहवाक्यस्यार्थो विग्रहवाक्यार्थः, तदभिधाने तत्प्रत्यायने यः शक्तः स समर्थो वेदितव्यः, यथा-- राजपुरुष इत्ययं समसाः, एतदर्थं यद्वाक्यं राज्ञः पुरुष इति तस्य योऽर्थस्तदभिधाने राजपुरुष इत्ययं शब्दं शक्तः; ततोऽपि तदर्थस्य प्रतीतेः। स पुनरर्थः-- संसर्गः, भेदश्च;भेदसंसर्गौ वा।तत्र स्वविशेषस्य स्वामिविशेस्य स्वामिविशेषेण यः सम्बन्धः स "संसर्गः" आख्यायते। स्वान्तरस्य स्वाम्यन्तरेभ्यः, स्वाम्यतरस्य स्वातन्तरेभ्यश्च व्यावृत्तिः "भेदः" आख्यायते। तत्र संसर्गवादिनो मते संसर्ग एव शब्दार्थः, व्यावृत्तिस्त्वर्थसंगृहीता। न ह्व्यावर्त्यसंगृहीता। न ह्व्यावर्त्यमानयोः स्वस्वामिनोः सम्बन्ध्यन्तरेभ्यः संसर्ग उपपद्यते। भेदवादिनस्तु व्यावृत्तिरव शब्दार्थः, संसर्गोऽर्थसङ्गृहीतः; न हि व्यावर्त्यमानस्य सम्बन्ध्यन्तरेणासम्बद्धस्य स्वाम्यादेरवस्थानमस्ति। उभयवादिनस्तु उभय एव शब्दार्थः। यदि विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो विज्ञायेत, एवं सति समासतद्धितविषयमेव सामर्थ्यामिति पराङ्गवद्भावविभक्तिविधानयोरियं परिभाषा नोपतिष्ठेत; न हि तत्र विग्रहवाक्यार्थाभिधानमस्ति? यदि नोपतिष्ठेत, न नाम; न च तदनुपस्थाने किञ्चिदनिष्टमापद्येत। तथा हि-- पराङ्गवद्भावे तावन्निमित्तग्रहणं देशयिष्यति भाष्यकारः। तत्र च निमित्तस्य निमित्तिना सामर्थ्यमस्त्येव-- मद्राणां राजन्, परशुना वृश्चन्निति। विभक्तिविधानेऽपि यास्तावत् कारकविभक्तयस्ता येष्वेव कारकेषु कर्मादिषु विधीयन्ते तेषां क्रियया सम्बन्धोऽस्त्येव। उपपदविभक्तिष्वपि "सहयुक्तेऽप्रधाने" २।३।१९ इत्येवमादिषु युक्तग्रहणादीनि सन्ति, तत्रापि सामर्थ्यमस्त्येव। तत्रैवं सम्बन्धे सति विभक्तय इष्यन्ते, न तु व#इग्रहवाक्यार्थाभिधानलक्षणसामर्थ्ये। एवं तावन्मुख्यार्थवृत्तिः समर्थशब्दो दर्शितः। इदानीमुपचरितवृत्तिं()त दर्शयितुमाह-- "अथ वा" इत्यादि। समर्थानि पदान्याश्रयो यस्य स समर्थपदाश्रायः; तद्भावः समर्थपदाश्रयत्वम्। ततो हेतोः समासादिः समर्थ उच्यते। आश्रयस्य समर्थत्वादुपचारेणाश्रितोऽपि तथेति व्यपदिश्यते; कारणधर्मस्य कार्य उपचारात्, यथा-- नड्()वलोदकं पादरोगः। "समर्थानाम्" इत्यनेन वाक्ये व्यपदेशलक्षणं सामर्थ्यमाह। तथा हि "राज्ञः पुरुषः" इत्यत्र वाक्ये राजा पुरुषमपेक्षते -- ममायमिति, पुरुषोऽपि राजानमपेक्षते-- अहमस्येति। "संसृष्टार्थानाम्" इत्यनेन समासे पदानामेकार्थीभावनलक्षमं सामर्थ्यं दर्शयति। एकार्थीभावश्च पृथगवस्थितानां भिन्नार्थानां पदानां समासे साधारणार्थता नामावस्थाविशेषः। वाक्ये हि साधारणार्थता नास्ति; भिन्नार्थत्वात्। अत एव तत्र भेदनिबन्धना षष्ठ्युपजायते-- राज्ञः पुरुष इति। वृत्तौ तूभयपदव्यवच्छिन्नार्थाभिधानत् साधारणार्थता भवति। एतेनैतदुक्तं भवति-- समासे हि विशेषणं विशेष्यमनुप्रविशत्येकार्थी भवति विशेष्येण सरह, वाक्ये हि विशेषमं विशेष्यात् पृथगवतिष्ठत इति। यस्मिन्नसति, वाक्ये राज्ञो गौश्चा()आश्च पुरुषश्चेति भेदनिबन्धनसमुच्चयप्रतिपादनाय चशपब्द प्रयुज्यते। समासे तु यस्मिन् सति स

निवत्र्तते राज्ञो गवा()आपुरुषा इत्ययमेकार्थीभावो वेदितव्यः। "पश्य देवदत्त कष्टम्, श्रितो विष्णुमित्रो गुरुकुलम्" इति। अत्र कष्टशब्दस्य पश्येत्यनेन सम्बन्धः; न तु श्रितशब्दन; तेन सामथ्र्याभावात्समासो न भवति। ननु च श्रितादीनां श्रुतत्वात्तैरेव द्वितीयां विशेषयिष्यामः-- श्रितादीनां सम्बन्धिनी या द्वितीयेति शक्यते व्यपदेष्टम् : असति तु तस्मिन्, द्वितीयामात्रं श्रितादिभिः समस्यत इति विज्ञायते। एवं सापेक्षस्यापि समासः स्यादेव-- महत् कष्टं श्रित इति, भवति ह्यत्र श्रितादिनिमित्ता द्वितीया। तस्मात् समर्थग्रहणं कत्र्तव्यम्। "किं त्वं करिष्यसि सङ्कुलया, खण्डो देवदत्त उपलेन" इति। अत्रोपलेन तृतीयान्तेन कृतं खण्डनम्। अतस्तत्कृतत्वमस्तीति प्राप्नोति समासः; समर्थग्रहमान्न भवति। समर्थग्रहणे तु सत्ययमर्थो भवति-- यस्यैव तृतीयान्तस्य समासस्तेनैव यदि कृतं खण्डनमिति। न चेह तत्कृतं खण्डनमतो न भवति समासः। एवमन्यत्राप्यसामथ्र्यादसमासो वेदितव्यः।

बाल-मनोरमा

समर्थः पदविधिः ६३९, २।१।१

अथ समासेष्वव्ययीभावः। तदेवं विभक्त्यर्थं निरूप्य तदाश्रितसमासान्निरूपयिष्यंस्तदुपोद्धातत्वेनाह समर्थः पदविधिः। विधीयते इति विधिः-कार्यम्। पदस्य विधिः पदविधिरिति शेषषष्ठ()आ समासः। तदाह-पदसंबन्धी यो विधिरिति। समर्ताश्रित इति। सूत्रे समर्थशब्दः समर्थाश्रिते लाक्षणिक इति भावः। सामथ्र्यं द्विविधम्-व्यपेक्षालक्षणमेकार्थीभावलक्षणं च। तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परान्वयस्तद्व्यपेक्षाभिधं सामथ्र्यम्, विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः। संबद्धार्थः समर्थ इति व्युत्पत्तेश्च। इदं च राज्ञः पुरुष इत्यादिवाक्य एव भवति। तत्र च एकैकस्य शब्दस्य यो यः संनिहितो योग्यश्च तेन तेनान्वयो भवति। यथा राज्ञः पुरुषोऽ()आश्चेति, राज्ञो देवदत्तस्य च पुरुष इति, ऋद्धस्य राज्ञः पुरुष इति च। एकार्थीभावलक्षणसामथ्र्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग्गृहीतानां पदानां समुदायशक्त्या विसिष्टैकार्थप्रतिपादकतारूपम्। "सङ्गतार्थः समर्थः", "संसृष्टार्थः समर्थ" इति व्युत्पत्तेः। सङ्गतिः संसर्गश्च एकीभाव एव। यथा-सङ्गतं घृतं तैलेनेति। एकीभूतमिति गम्यते। यथा वा संसृष्ट#ओऽग्निरिति। एकीभूत इति गम्यत इति भाष्याच्च। इदंच सामथ्र्यं राजपुरुष इत्यादिवृत्तावेव। अत एव "ऋद्धस्य राजपुरुष" इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणं नान्वेति, विशिष्टस्य एकपदार्थतया राज्ञः पदार्थैकदेशत्वात्। "देवदत्तस्य गुरुकुल"मित्यत्र तु उपसर्जनस्य नित्यसापेक्षत्वात्समासः। यद्वा गुरुवद्देवदत्तोऽपि विशेष्ये प्रदाने कुल एवान्वेति। तत्र गुरुणा कुलस्य उत्पाद्यत्वसंबन्धेनान्वयः। देवदत्तेन तु कुलस्य तदीयगुरूत्पाद्यतयाऽन्वयो गुरुगर्भः। उक्तं च हरिणा-"संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते।" इति। समुदायेन संबन्धो येषां गुरुकलादिना। संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह।" इति च।

एतेन "अयश्शूल" इति सूत्रे भाष्ये "शिवस्य भगवतो भक्तः" इत्यर्थे "शिवभागवतः" इत्यादि व्याख्यातम्। एकार्थीभावश्चाऽयमलौकिकविग्रहवाक्ये कल्प्यते। यथा लादेशभूतशतृशानचोरप्रथमासामानाधिकरण्यं लकारेऽपि कल्प्यते तद्वत्। अत एव "लस्य अप्रथमासमानाधिकरणेनार्थेनाऽयोगादादेशानुपपत्तिः, तस्य क्वापि प्रयोगाऽभावा"दित्याक्षिप्य "आदेशे सामानाधिकरण्यं दृष्ट्वा अनुमानाद्गन्तव्यं प्रकृतेरपि तद्भवति " इति "लटश्शतृशानचौ" इति सूत्रभाष्ये समाहितम्। "सिद्धानां शब्दानामन्वाख्यानात् पचन्तं देवदत्तं पश्येत्यादिप्रयोगदर्शनात् स्थानिनोऽपि लस्य प्रक्रियार्थं कल्पितस्य बोधकत्वकल्पना सूचिता। अलोकिकविग्रहवाक्ये श्रूयमाणानां च शब्दानां क्लृप्तशक्तित्यागे मानाऽभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या विशिष्टोपस्थितिः। ततश्च?यमेकार्थीभावोऽजहत्स्वार्था वृत्तिरिष्यते। वृत्तिविषये पदानां प्रत्येकमनर्थकत्वमाश्रित्य जहत्स्वार्था वृत्तिस्तु नाश्रयितुं युक्ता, महाबाहुः, सुपन्था इत्यादौ आत्त्वाद्यनापत्तेः, वृत्तौ महादादिशब्दानामनर्थकत्वादर्थवद्ग्रहणसंभवे अनर्थकस्य "आन्महतः" इत्यादौ ग्रहणाऽयोगात्।
तदुक्तम्--"जहत्स्व#आर्था तु तत्रैव यत्र रूढिर्विरोधिनी" इति। अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः। यथा

अ()आकर्णमण्डपादौ। विस्तरस्तु शब्देन्दुशेखरे मञ्जूषायां चानुसंधेयः। समर्थः किम्?। पश्य कृष्णं, श्रितो रामं मित्रम्। अत्र कृष्णश्रितयोः परस्परान्वयाऽभावाद्विशिष्टैकार्थोपस्थित्यजनकत्वान्न सामथ्र्यम्।

तत्त्व-बोधिनी

समर्थः पदविधिः ५६७, २।१।१

समर्थः पदविधिः। सामथ्र्यं च द्विविधं--व्यपेक्षालक्षणमेकार्थीभावलक्षणं चेति। तत्र स्वार्थपर्यवसायिना पदानामाकाङ्क्षादिवशाद्यः परस्परसंबन्धः सा व्यपेक्षा। सैव वाक्ये राज्ञः पुरुष इत्यादौ। तत्प व्यपेक्षायां सत्यां यो यः संनिहितो योग्यश्च तेन तेन संबन्धोऽभ्युपेयते। यथा राज्ञः पुरुषोऽ()आश्च। राज्ञो देवदत्तस्य च पुरुष इति। एकर्थीभावस्तु राजपुरुष इत्यादिवृत्तावेव। स च प्राक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः। अतएव राजपुरुष इत्यत्र राज्ञि ऋद्धस्येति विशेषणं नान्वेति, पदार्थैकदेशत्वात्। न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ()र्थस्य गुरुणाऽन्वयादिति वाच्यम्। देवदत्तस्य प्रधानीभूतकुलैनैवान्वयात्। संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ()र्थो, न तु तदितरः। उक्तं च---"समुदायेन सम्बन्धो येषां गुरुकुलादिना। संस्पृश्यवयवांस्ते तु युज्यन्ते तद्वता सह"। इति। यद्वा---ससंबन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः। उक्तं च---"संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते" इति। नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वादेशत्वेऽपि ऋद्धस्येति विशेषणेनान्वयोऽस्तचु। मैवम्। राज्ञ ईशितुरीशितव्यं प्रति साकाङ्क्षत्वेऽपि ऋद्धं प्रत्यनाकाङ्क्षत्वात्। ननु वाक्ये क्लृप्तयैवाऽवयवशक्त्योपपत्तौ विशिष्ट

र्थविषयं शक्त्यन्तरमेव मास्तु। सत्यम्---"बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्मदद्गौरवं तस्मादेकार्थीभाव आस्थितः। चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्। कर्तव्यं ते, न्यायसिद्धं त्वस्माकं तदिति स्थितम्"। तथाहि---धवखदिराविति वृत्यैव क्रीडीकृतार्थत्वाच्चकारो न प्रयुज्यते, तथा चित्रग्वादौ यत्पदम्। त्वया तु वचनं कर्तव्यम्। निरूढलक्षणा तु शक्तितो नातीव भिद्यते। किंच प्राप्तमुदकं यमिति व्यस्ते समीचीनमुदकमिति विशेषणत्समस्तेऽपि उदकविशेषणप्रयोगः[समासघटव पदार्थानां]प्राप्तः, स च "वृत्तस्य विशेषणयोगो न" इति वचनेनैव वारणीयः, "नामार्थयोरभेदान्वयः", "प्रत्ययार्थः प्रधानम्िति व्युत्पत्तित्यागश्च। "प्राप्तोदक" इत्यादौ उदकर्तृकप्राप्तिकर्मेत्यचाद्यर्थाभ्युपगमात्। एकार्थीभावे तु लाघवमिति दिक्। पदग्रहणं किम्()। वर्णविधौ समर्थपरिभाषा मा भूत्। तिष्ठतु दध्यानय तक्रम्। इह स्यादेव यण्। विधिग्रङणं तु पदस्य विधिः पदयोर्विधिः पदानां विधिरित्यनेकविभक्तयन्तसमासलाभार्थम्। पदस्येत्युक्तौ तु "उपपदमतिङ्" इत्यादावेवास्योपस्थितिः स्यादित्याहुः। सूत्रे समर्थशब्दो लाक्षणिक इति ध्वनयन्नाह--समर्थाश्रित इति। समर्थेति किम्()। पश्यति कृष्णं, श्रितो देवदत्तमित्यादौ कृष्णश्रित इत्यादि समासो मा भूत्। यथा वस्त्रमुपगोरपत्यं चैत्रस्येत्यत्र "तस्यापत्यम्" इत्युपगुशब्दादण्मा भूदिति। क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद्वृत्तिरङ्गीक्रियते। तद्यथा---"किमोदनः शालीनाम्"। केषां शालीनामोदन इत्यर्थः। सक्त्वाढकमापणीयानाम्"। आपणीयानां सक्तूनामाढकमित्यर्थः। "कृतो भवान्पाटलिपुत्रकः"। द्वे पाटलिपुत्रे, तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः। "रोपधेतोः प्राचाम्" इति वुञ्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सुप् १।१ २।२।२९ आमन्त्रिते ७।१ पराङ्वत् ० स्वरे ७।१

काशिका-वृत्तिः
सुबामन्त्रिते पराङ्गवत् स्वरे २।१।२

सुबन्तम् आमन्त्रिते परतः परस्य अङ्गवद् भवति, स्वरे स्वरलक्षणे कर्तव्ये। तादात्म्यातिदेशो ऽयम्। सुबन्तम् आमन्त्रितम् अनुप्रविशाति। वक्ष्यति आमन्त्रितस्य च ६।१।१९२। आमन्त्रितस्यादिरुदात्तो भवति। ससुप्कस्य अपि यथा स्यात्। कुण्डेनाटन्। परशुना वृश्चन्। मद्राणाम् राजन्। कश्मीराणां राजन्। सुपिति किम्? पीड्ये पीद्यमान। आमन्त्रिते इति किम्? गेहे गार्ग्यः। परग्रहणम् किम्? पूर्वस्य मा भूत्। देवदत्त, कुण्डेनाटन्। अङ्गग्रहणं किम्? यथा मृत्पिण्डीभूतः स्वरं लभेत। उभयोराद्यौत्तत्वं मा भूत्। वत्करणं किम्? स्वाश्रयम् अपि यथा स्यात्। आम् कुण्डेनाटन्। आम एकान्तरम् आमन्त्रितम् अनन्तिके ८।१।५५ इत्येकान्तरता भवति। स्वरे इति किम्? कूपे सिञ्चन्। चर्म नमन्। षत्वणत्वे प्रति पराङ्ग्वद् न भवति। सुबन्तस्य पराङ्गवद् भावे समानाधिकरणस्य उपसङ्ख्यानम् अनन्तरत्वत्। तीक्ष्णया सुच्या सीव्यन्। तीक्ष्णेन प्रशुना वृश्चन्। अव्ययानां प्रतिषेधो वक्तव्यः। उच्चैरधीयानः। नीचैरधीयानः।
न्यासः
सुबामन्त्रिते पराङ्गवत्स्वरे। , २।१।२

"परस्याङ्गवत्" इति। अत्राङ्गवशब्दोऽवयववचनः। पर्सयाङ्गवत् परैकदेशवद्भवति। तद्()ग्रहणेन गृह्त इत्यर्थः। एवं तादात्म्यातिदेशोऽयं विज्ञायत इत्याह-- "तादात्म्यातिदेशोऽयम्" इति। तादात्म्यम् = तत्सभावत्वम्। "सुबन्तम्" इत्यादिना तमेव तादात्म्यातिदेशं स्पष्टीकरोति। "सुबन्तमामन्त्रितमनुप्रविशति" इति। तत्रान्तर्भवतीत्यर्थः। "कुण्डेनाटन्" इति। अत्र कुण्डशब्दोकार आमन्त्रितस्वरः। एवमन्यत्रापि ससुप्कस्यामन्त्रितस्य स्वरो वेदितव्यः। "पीड()ए पीड()मान" इति। हे पीड()मान त्वदीयया पीडयाऽहं पीड()ए, बाध्येऽहमित्यर्थः। "पीड अवगाहने" (धा।पा।१५४४), चुरादिणिच्, उभयत्र कर्मण्यात्मनेपदम्, एकत्रोत्तमपुरुषैकवचनमिट्, अन्यत्र शानच्, सार्वधातुके यक्, णिलोपः, "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुमनुदात्तमहन्विङोः" ६।१।१८० इतीटोऽनुदात्तत्वम्, यकः प्रत्ययस्वरेणाद्युदात्तत्वम्, यकः प्रत्ययसर्वेणाद्युदात्तत्वम्, "एकादेश उदात्तेनोदात्तः" (२८।२।५) इत्येकार उदात्तः। पीड()मानेत्यस्य तु "पीड()" इत्यस्यात् पदादुत्तरस्य "आमन्त्रितस्य च" ८।१।१९ इति निघातः। "गेहे गार्ग्यः" इति। गेहशब्द उञ्छादिपाठादन्तोदात्तः, सप्तम्येकादेशः पूर्ववदुदात्तः, गाग्र्य इति ञ्त्सरेणाद्युदात्तः। पृथक्स्वर एवात्र भवति। "देवदत्त कुण्डेनाटन्" इति। यदि परग्रहणं न क्रियते तदा देवदत्तशब्दं पूर्वमप्यामन्त्रितं प्रति सुबन्तस्यानुप्रवेशः स्यात्, ततश्च देवदत्तशब्दात् पदात्परस्याटन्नित्येतस्य "आमन्त्रितस्य च"८।१।१९ इति निघातः स्यात्। ननु च परग्रहणे क्रियमाणे कुण्डशब्दस्य पराङ्गवद्भावे सत्याद्युदात्तत्वे षाष्ठिके कृते देवदत्तशब्दात् पदात्परस्याटन्नित्येतस्य निघातेन भवितव्यमेव? नैतदस्ति; अपादादौ हि स निघातः, पादादित्वञ्चेह विवक्षितम्; तत्र च देवदत्तेत्यामन्त्रितस्वरेणाद्युदात्तः। एवं कुणेडनाटन्नित्यपि। आमन्त्रितनिघातोऽत्र न भवति; पादादित्वात्। "यथा मृत्पिण्डीभूतः स्वरं लभेत" इति। कथं नाम सुबन्तसमुदायो मृत्पिण्ड इवैकीभूत एकरूपतामिवापन्नः स्वरं लभेततेत्यवमर्थमङ्गग्रहणम्। किमर्थं पुनरेकीभूतस्य स्वरप्राप्तये यत्नः क्रियत इत्यत आह-- "उभयोः" इत्यादि। यद्यङ्गग्रहणं न क्रियेत, ततश्च कार्यातिदेश- शास्तरातिदेश- व्यपदेशातिदेशानामन्यतमः स्यात्। तथा च सति यथा परस्य कार्यमाद्युदात्तत्वमामन्त्रितव्यदेश आद्युदात्तशास्त्रं च; तथा सुबन्तस्य पूर्वस्यापि स्यादिति,ततश्चोभयोरप्याद्युदात्तत्वं स्यात्। अङ्गग्रहणे तु सति तादात्म्यातिदेशोऽयं भवति। तेन मृत्पिण्डीभूतः सुबन्तसमुदाय आमन्त्रिताद्युदात्तरूपं स्वरं लभत इति न भवत्युभयोराद्युदात्तत्वप्रसङ्गः। "स्वाश्रयमपि कार्यं यथा स्यात्" (इति)। "आम कुण्डेनाटन्" इत्यत्र अटन्नित्येतस्य पदात्परस्य "आमन्त्रितस्य" (८॥१९) इति निघाते प्राप्ते "न लुट्" ८।१।२९ इत्यतो नेत्यनुवत्र्तमाने "आम एकान्तरताया अभावात्। परमेव हि स्यात् सुबन्तमसत#इवत्करणे, न च तथाभूतेनैकान्तरता युक्ता। वत्करणे तु सति, भवति कदाचित्

स्वाश्रयमप्यनङ्गत्वमित्युपपद्यत एकान्तरता, तेन निघातप्रतिषेधः सिध्यति। तत्रायं स्वरविभागः-- आमित्यस्य निपातस्वरेणाद्युदात्तत्वम्। कुण्डशब्दस्यापि पराङ्गवद्भावे सत्यामन्त्रितस्वरेणाद्युदात्तत्वम्। तथा निघातप्रतिषेधे सत्यटन्नित्येतस्यापि षाष्ठिकेनाद्युदात्तेन भवितव्यम्। "कूपे सिञ्चन्" इति। अत्र पराङ्गवद्भावो नास्तीति पदादित्वं सकारस्य भवति। तेन "सात्पदाद्योः" ८।३।१११ इति षत्वप्रतिषेधः स्यात्। "चर्म नमन्" इति। अत्रापि पराङ्गवद्भावाभावात् समानपदस्थौ निमित्तनिमित्तिनौ न भवत इति समानपदाश्रयं णत्वं न भवति। "सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्य" इत्यादि। किं पुनः कारणं समानाधिकरणस्य न प्राप्नोति, यत इदमुपसंख्यानं क्रियत इत्याह-- "अनन्तरत्वात्" इति। "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् व्यवहिते न प्राप्नोतितत्युपसंख्यायते। "तीक्ष्णया सूच्या सीव्यन्" इत्यत्र सीव्यन्नित्येतस्मिन् परतस्तीक्ष्णयेत्यस्य व्यवहितस्यापि पराङ्गवादाद्युदात्तत्वं भवति। "उच्चैरधीयान" इति। उच्चैः शब्दस्य पराङ्गवद्भावाभावादामन्त्रितनिबन्धनमाद्युदात्तत्वं न भवति। तस्मिन्नसति तत्रान्तोदात्तत्वमेव भवति; स्वरादिष्वनन्तोदात्तस्य पाठात्। तथा हि तत्रैव सन्नतर-- उच्चैस्- नीचैरित्येवमादीनि पृथक्पर्यन्तान्युपदिश्य "एते सन्नतरप्रभृतयोऽन्तोदात्ताः पठ()न्ते" १।१।३६ इत्युक्तम्। अधीयानेत्यस्य यदा पादादित्वं विवक्ष्यतेतदाऽऽद्युदात्तत्वम्, अन्यत्र "आमन्त्रितस्य च" ८।१।१९ इति निघातः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्राक् ० कडारात् ५।१ समासः १।१ २।२।३८

काशिका-वृत्तिः

प्राक् कडारात् समासः २।१।३

कडारसंशब्दनात् प्राग् यानित उर्ध्वम् अनुक्रमिष्यामः, ते समाससंज्ञा वेदितव्याः। वक्ष्यति यथा ऽसादृश्ये २।१।७। यथा वृद्धं ब्राह्मणानामन्त्रयस्व। प्राग्वचनं संज्ञासमावेशार्थम्। समासप्रदेशाः तृतीयासमासे १।१।२९ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

प्राक्कडारात्समासः ९०८, २।१।३

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते॥

न्यासः

प्राक्कडारात्समासः। , २।१।३

"यथावृद्धम्" इति। अत्र समाससंज्ञायां सत्याम् "कृत्तद्धितसमासाश्च " १।२।४६ इत्येवमादि कार्यं भवति। अथ किमर्थं प्राग्वचनम्? यावता पञ्चमीनिर्देशादेव प्रागित्यस्याध्याहारो भविष्यति; न च परागित्ययमपि दिक्छब्दोऽस्ति, अतस्तस्याप्यध्याहारः स्यादित्यशङ्कनीयम्, तदध्याहारे कडारसंशब्दनात् परे येऽनुक्रंस्यन्ते तेषां समाससंज्ञा स्यात्; तथा च कडारसंशब्दनादनन्तरमेव समासाधिकारं कुर्यात्, इह तु कृतः, तस्मादिह करणसामर्थ्यात् समासाधिकारस्य प्रागित्यस्याध्याहारो भविष्यति, ततो नार्थः प्राग्वचनेनेत्याह-- " प्राग्वचनम्" इत्यादि। उत्तरत्राव्ययीभावादिसंज्ञाभिः सह समाससंज्ञायाः समावेशो यथा स्यादित्येवमर्थं प्राग्वचमनम्। असति तु तस्मिन्, ताभिरनवकाशाभिरियं संज्ञाल बाध्येत। अस्यास्तु समाससंज्ञायाः "सह सुपा" २।१।४ इत्यत्र सहेति योगविभागेन यः समासः क्रिते सोऽवकाशः स्यात्--

अनुप्रावर्षत्, अनुव्यचलदिति, तिङन्तेनात्र समासः; असत्यपि सावकाशत्व एकसंज्ञाधिकारे वचनप्रमाण्यात् पर्यायेण वृत्तिः स्यात्, न तु समावेशः। साक्षात् सूत्रेणोपात्ते तु प्राग्वचने सति भवति समावेशः, कथम्? एवं हि सम्बन्धः क्रियते--कडारात् प्राग्यावन्तो व्यवस्थितः सर्वे ते समाससंज्ञका भवन्ति, समाससंज्ञकाः सन्तोऽव्ययीभावादिसंज्ञां लभन्त इत। तेन निमित्तमेव समाससंज्ञाऽव्ययीभावादिसंज्ञानाम्। नच निमित्तिना निमित्तं विहन्यते; अन्यथा तस्य निमित्तत्वमेव न स्यादिति युक्तः सूत्रोपात्तेन प्राग्वचनेन समावेशः। अध्याह्मते तु तस्मिन् "कडारसंशब्दनात्प्राग्यावन्तो व्यवस्थिताः सर्वे ते समाससंज्ञका भवन्ति" इत्येषोऽर्थो लभ्यते, न तु "समाससंज्ञकाः सन्तोऽव्ययीभावादिसंज्ञकाः" इत्येषोऽपि। साक्षात् सूत्रोपात्ते तु तस्मिन्नेषोऽपि लभ्यते; अन्यथा तस्य सूत्रे साक्षादुपादानमनर्थकं स्यात्॥

बाल-मनोरमा

प्राक्कडारात्समासः ६४०, २।१।३

प्राक्कडारात्। "आकडारात्" इत्येव "प्रा"गिति सिद्धे प्राग्ग्रहणमेकसञ्ज्ञाधिकारेपि अव्ययीभावादिसंज्ञासमुच्चयार्थमिति भाष्ये स्पष्टम्। सम्पूर्वकस्य अस्यतेरेकीकरणात्मकश्च संश्लेषोऽर्थः। समस्यते अनेकं पदमिति समासः। "अकर्तरि च कारके संज्ञाया"मिति कर्मणि घञ्। अत एव मूले समस्यते इति वक्ष्यते। तथा च अन्वर्थेयं संज्ञा।

तत्त्व-बोधिनी

प्राक्कडारात्समासः ५६८, २।१।३

प्राक्कडारात्समासः। प्राग्ग्रहणमावर्तते, तेन पूर्वं समाससंज्ञा, ततः संज्ञान्तरमपीति लभ्यते। अतोऽव्ययीभावादिभिः समावेशः सिद्ध्यति। अन्यथा पर्यायः स्यात्। समसनं समासः। भावे घञ्। अनेकस्य पदस्य एकपदीभवनमित्यर्थ इत्येके। वस्तुतस्तु--"अकर्तरि च कारके---" इति कर्मणि घञ्। अन्यथा सुबन्तं समस्यत इत्युत्तरग्रन्थो न सङ्गच्छेत। नन्वन्वर्थत्वात्समाससंज्ञायाः प्रत्येतमप्रसङ्गात्सहग्रहणं व्यर्थमित्याशङ्क्याह---।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सह ० २१ सुपा ३।१ २१ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

सह सुपा २।१।४

सुपिति वर्तते। सुपिति सह इति सुपा इति च त्रयम् अपि अधिकृतं वेदितव्यम्। यदित ऊर्ध्वम् अनुक्रमिष्यामः, तत्र इदम् उपस्थितं द्रष्टव्यम्। वक्ष्यति द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२३ इति। द्वितीयान्तं श्रितादिभिः सह समस्यते, कष्टं श्रितः कष्टश्रितः। सहग्रहणं योगविभागार्थम्, तिङापि सह यथा स्यात्। अनुव्यचलत्। अनुप्रावर्षत्।

लघु-सिद्धान्त-कौमुदी

सह सुपा ९०९, २।१।४

सुप् सुपा सह वा समस्यते॥ समासत्वात्प्रातिपदिकत्वेन सुपो लुक्। परार्थाभिधानं वृत्तिः। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। सच लौकिकोऽलौकिकश्चेति द्विधा।

तत्र पूर्वं भूत इति लौकिकः [🗆]पूर्व अम् भूत सु' इत्यलौकिकः। भूतपूर्वः। भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः। (इवेन समासो विभक्त्यलोपश्च)। वागर्थौ इव वागर्थाविव॥

लघु-सिद्धान्त-कौमुदी

इति केवलसमासः १ ९०९, २।१।४

लघु-सिद्धान्त-कौमुदी

अथाव्ययीभावः ९०९, २।१।४

न्यासः

सह सुपा। , २।१।४

"सहग्रहणं योगविभागार्थम्" इति; ननु चासति तस्मिन्नेकैकस्य संज्ञा स्यात्, ततश्च ऋक्पाद इत्यत्र "ऋक्पूरब्धूःपथामानक्षे" ५।४।७४ इत्यत्राकारः समासान्तः स्यात्; इह च "राजा()आः" इत्यत्र "समासस्य" ६।१।२१७ इति द्वौ स्वरौ स्याताम्, सहभूतयोरेव समाससंज्ञा यथा स्यादेकैकस्य मा भूदित्येवमर्थं सहग्रहणं कस्मान्न विज्ञायते? एवं मन्यते-- सुपेति तृतीयैव सहार्थं गमयति, यथा "वृद्धो यूना" १।२।६५ इति। समासट इति च महती संज्ञा क्रियते-- अन्वर्थसंज्ञा यथा विज्ञायेतेति। कथं नामान्वर्थसंज्ञा क्रियते? समसनम् = समासः, संक्षेप इत्यर्थः। संक्षेपश्चानेकवस्तुविषयः। तेनासत्यपि सहेतस्मिन् सहभूतयोरेव समाससंज्ञा भविष्यति। "न प्रत्येकम्" इति। "अनुव्यचलत्" इति। तिङन्तेनात्र समासः। अत्र "तिङ्ङतिङः" ८।१।२८ इति निघाते कृते समाससंज्ञायां सत्यां तन्निबन्धनमन्तोदात्तत्वं भवति॥

न्यासः

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु। , २।१।४

"स्त्रीष्वधिकृत्य कथा प्रवत्रततेऽधिस्त्रि" इति। "अनभिहिते" २।३।१ इति सूत्रे "तिङकृत्तद्धितसमासैः परिसंख्यानम्" (म।भा।१।४४१) इति परिगणनं कृतम्, तेनाधिशब्देन द्योतिते सप्तम्यर्थे स्त्रीशब्दात् सप्तमी भवति। तेन तदन्त एव समस्यते। अधिशब्दस्तु प्रथमान्तः। "अव्ययीभावश्च" २।४।१८ इति नपुंसकत्वम्। "ह्रस्वो नपुंसके" १।२।४७ इति ह्रस्वः। विभक्तिशब्देनेह कारकमुच्यते-- विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा। तच्चेहाधिकरणं विवक्षितमित्याह-- "सप्तम्यर्थे यदव्ययम्" इति। "उपकुम्भम्" इति। समीपार्थेनोपशब्देनोपजनिते व्यतिरेके कुम्भशब्दात् षष्ठी भवतीति षष्ठ()न्तं एव समस्यते। "समुद्रम्" इति। यदा मद्रैर्विशिष्यमाणत्वात् समृद्धेः प्राधान्यं भवति तदायं समासः। मद्राणामाधिक्येन ऋद्धिर्वत्रतत इत्यर्थः। यदा तु मद्राः समृद्ध्या विशिष्यमाणाः प्रधानभावमनुभवन्ति तदा "कुगतिप्रादयः" २।२।१८ इत तत्पुरुषो भवति-- सुमद्रा इति। समृद्धिमन्तो मद्रा इत्यर्थः। "दुर्गवदिकम्" इति। गवादिकानामृद्धिविगमो वत्रतत इत्यर्थः। ननु चार्थाभाव इत्यनेनैव तत्सिद्धम्, तथा ह्यर्थाभावो वस्त्वभावो भवत्येव, तत्कोऽत्र विशेषो येनार्थाभावात् ऋद्धिविगमस्य पृथगभिधानं क्रियते? अयमस्ति विशेषः; उत्तरपदार्थाभावो हि द्रव्याभावः, यथा-- निर्मक्षिकमिति, मक्षिकाणामभाव उच्यते; न तु दुर्गवदिकमित्यत्र गवादिकानामभावः, किं तर्हि? तदीयाया ऋद्धेर्विगमः। "अर्थाभावः" इति। अर्थार्थग्रहणं किमर्थम्? धर्माभावे प्रसज्यप्रतिषेधो मा भूत्, यथा-- न भवति ब्राआह्णणोऽब्राआह्णण इति। ब्राआह्णणत्वं धर्मोऽत्र प्रतिषिध्यते, न तु वस्त्वभावः। किञ्च-- इतरेतराभावेच मा भूत्, गौर()आओ न भवतीति। अत्राप्यर्थान्तरत्वं प्रतिध्यते, न तु वस्त्वभावः। "अत्ययोऽभूतत्वम् इति। अस्यैव प्रयायोऽतिक्रमः। अतिक्रमः इत्युत्पत्त्यभावः, प्रध्वंसाभाव इत्यर्थः। अर्थाभावस्तु क्वचिद्देशे सर्वदैव वस्तुनोऽभावः, न

तूत्पन्नस्य पश्चादभाव इत्यत्ययोऽर्थाभावाद्भिद्यते। "उपभोगस्य" इत्यादिनाऽर्थाभावाद्भेदं दर्शयति। अर्थाभावो हि क्वचिद्देशे कालत्रयेप्यभावः, असम्प्रति पुनरुपभोगस्य यो वत्र्तमानः कालस्तस्यैव प्रतिषेध इति भिद्यते; असम्प्रत्यर्थाभावात्। "अतितैसृकम्" इति। तिसृका नाम ग्रामः "तत्र भवः" ४।३।५३ "तत आगतः" ४।३।७४ इति वाऽण्, तैसृकम्, न तैसृकस्य वत्र्तमानः काल उपभोगस्येत्यर्थेऽतितैसृकमिति भवति। "अनुरूपम्" इत्यत्र योग्यतायामनुशब्दः। योग्यं रूपं वहतीत्यर्थः। "प्रत्यर्थम्" इति। प्रतिशब्दोऽव्ययमत्र वीप्सायाम्, अर्थमर्थं प्रति प्रत्यर्थम्। ननु चात्र नित्यसमासत्वात् वाक्येन न भवितव्यम्? नैतदस्ति; प्रतिशब्दस्य वीप्सायामर्थे कर्मप्रवचनीयसंज्ञा विहिता, तद्योगे द्वितीया यथा स्यादित्येवर्थम्। तस्याश्च वाक्य एव प्रयोगो नान्यत्रेति तेन सत्यपि नित्यसमासत्वे वाक्यमपि भवति। "यथाशक्ति" इति। पदार्थानतिवृत्तौ यथाशब्दः। पदमत्र शक्तशब्दस्तस्यार्थः शक्तरेव; तस्या अनतिवृत्तिरनतिक्रमः। यथाशक्ति करोतीति शक्यनतिक्रमेण करोतीत्यर्थः। "ज्येष्ठानुपूव्र्येण" इति। ज्ैयष्ठानुक्रमेणेत्यर्थः। "सचक्रम्" इति। "अव्ययीभावे चाकाले" ६।३।८० इति सहशब्दस्य सभावः। एवं "सकिखि" इत्यादावपि सभावो वदितव्यः। "गुणभूतेऽपि" इत्यादि। यदि सादृश्य इति नोच्येत तदा पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात् प्रधानं भवति तदैव स्यात्, सादृश्यं किख्याः सकिखीति गुणभूते तु न स्यात्, अस्माद्वचनाद्भवति। "सदृशः किख्या" इति। सादृश्यवतः प्राधान्यप्रदर्शनेन सादृश्यस्य गुणभावं प्रदर्शयितुं सदृशः किख्या इत्युक्तम्()। सादृश्यप्राधान्ये विवक्षिते हि सादृश्यमिति भावप्रत्ययेन युक्तो निर्देशः स्यात्। "सकिखि" इति। पूर्ववद् ह्यस्वः। ननु च सम्पत्तिः समृद्धिरेव, तत्कथं पृथगुच्यत इत्यत आह-- "सम्पत्तिरनुरूपम्" इत्यादि। "सब्राह्ववाभ्रवाणाम्" इति। तेषामनुरूप आत्मभाव इत्यर्थः। "अधिकार्थवचनेन " इति। तृणानामभ्यवहारोऽधिकार्यस्तद्वचनेन। न किञ्चिदित्यादिना वाक्येनाधिकार्थतां दर्शयति। यो हि तृणान्यभ्यवहरति स कथमन्यदभ्यवहाय्र्य परित्यज्यति ! ननु चान्तशब्दः परिसमाप्तौ वत्र्तते, तत्र च साकल्यमस्त्येव तत्कथमन्तवचनं साकल्यात्पृथगुच्यत इत्यत आह-- "{अन्तः-- काशिका} अन्तशब्दः"इत्यादि। यावतोऽध्ययनस्य परिग्रहः-- एतावन्मयाऽध्येतव्यमिति-- तदपेक्षया या समाप्तिः सोऽन्तः, स चासाकल्येऽप्यध्ययनस्य भवतीति साकल्यात् पृथगुच्यते। "साग्न्यधीते" इति। अग्निपर्यन्तमधीत इत्यर्थः। अग्नर्थो ग्रन्थस्तादथ्र्यादग्निशब्देनोच्यते। यावतोऽध्ययनस्य परिग्रहस्तस्याग्निरन्तः; न तु ततः परेणाध्ययनमेव नास्तीति। तत्तु नाधीयत इत्यसाकल्यमत्रेत्याह-- "इयम्" इत्यादि। सुबोधम्॥

बाल-मनोरमा

सह सुपा ६४१, २।१।४

सह सुपा। "सुबामन्त्रिते" इत्यतः "सु"बित्यनुवर्तते। सुबन्तं सुबन्तेन सहोच्चारितं समाससंज्ञं भवतीति फलति। एवं सति "पर्यभूषय"दित्यादौ सुबन्तस्य तिङन्तेन समासो न स्यात्। तत्राह--सहेति योगो विभज्यत इति। समाससंज्ञायां अन्वर्थत्वादेकस्याऽप्रसङ्गात्सुपेत्येतावतैव सहेति सिद्धे तद्ग्रहणं योगविभागार्थमिति भावः। "सहे"त्यत्र "सुबामन्त्रिते" इत्यतः सुबित्यनुवर्तते। प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। "समर्थः पदविधिः" इत्यतः समर्थग्रहणमनुवृत्तं तृतीयया विपरिणम्यते। तदाह--सुबन्तमित्यादिना। समस्यत इति। एकीक्रियते प्रयोक्तृभिरित्यर्थः। समाससंज्ञां लभत इति यावत्। केचित्तु सुबन्तं कर्तृ समर्थेन समस्यते, एकीभवतीत्यर्थः। कर्तरि लट्। "उपसर्गादस्यत्यूह्रो"रित्यात्मनेपदम्। समासशब्दोऽपि कर्तरि बाहुलकाद्घञन्तएव, कर्मणि घञन्तो वा। तथा सति समस्यत इति कर्तरि तिङन्तं फलितार्थकथनपरमित्याहुः। ननु "घटो भवती"त्यत्र समासे घट-भवतीत्यपि लोके प्रयोगः स्यादित्यत आह--योगविभागस्येति। कतिपयेति। कतिपयानि तिङन्तानि उत्तरपदानि यस्येति विग्रहः।पर्यभूषयदिति। समासान्तोदात्तत्वे शेषनिघात इति "कुगति" इति सूत्र#ए कैयटः। "देवो देवान् क्रतुना पर्यभूषय"दित्यत्र तु स्वरव्यत्ययो बोध्यः। अनुव्यचलदिति। "अचल"दित्यनेन वेः पूर्वं समासे सति तेन अनोः समासः। नत्वनुव्योर्युगपत्समासः,

सुबित्येकत्वस्य विवक्षितत्वात्। अत एव "महिष्या अजायाश्च क्षीर"मित्यत्र क्षीरशब्देन सुबन्तयोर्न समास इति कैयटः। सुपा। "सुबामन्त्रिते" इत्यतः सुबित्यनुवर्तते। "समास" इत्यधिकृतम्। तदाह--सुप्सुपेति। सुबन्तं सुबन्तेनेत्यर्थः। ततश्च पूर्वं भूत इति विग्रहे समाससंज्ञा स्थिता। समासत्वात्प्रातिपदिकसंज्ञेति। "कृत्तद्धितसमासाश्च इत्यनेने"ति शेषः।

तत्त्व-बोधिनी

सह सुपा ५६९, २।१।४

योगो विभज्यत इति। "सुबामन्त्रितो---" इत्यतः सुबित्यनुवर्तते, तदाह---सुबन्तमिति। समस्यत इति। सपूर्वादस्यतेः कर्णि तङ्। आचार्येणेति शेषः। समर्थेनेति तु सहयोगे तृतीया। समसनक्रियां प्रति सुबन्तं कर्म, न तु कर्तृ। यद्यपि सुबन्तस्य कर्तृत्वाभ्युपगमेऽपि "उपसर्गादस्यत्यूह्योः" इति वार्तिकेन समस्यत इत्यत्रात्मनेपदं लभ्यते, तथापि समास इति व्याख्येयग्रन्थे कर्तरि घञ् दुर्लभः। बाहुलकं तु अगतिकगतिरिति कर्मत्वाभ्युपगम एव ज्यायान्। स चेति। एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्ते। छन्दस्येवेति। यदि लोकेऽपि स्यात्तर्हि यत्प्रकुरुते इत्यादौ स्वाद्युत्पत्तिः स्यात्। लिङ्गसर्वनामनपुंसकतामभ्युपेत्य "स्वमोर्नपुंसकात्" इति लुकि कृतेऽपि "ह्रस्वो नपुंसके---"इति ह्रस्वः स्यादित्यादि दूषणं "कर्मणा यमभिप्रैती"ति सूत्रेऽस्माभिरुद्भावितम्। अनुव्यचलदिति। सुबित्येकत्वस्य विवक्षितत्वात्पर्यायेण समासो बोध्यः। समासान्तोदात्तत्वे शेषनिघात इति "कुगति---" इति सूत्रे कैयटः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अव्ययीभावः १।१ २१

काशिका-वृत्तिः

अव्ययीभवः २।१।५

अव्ययीभावः इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वम् अनुक्रमिष्यामः, अव्ययीभावसंज्ञा अस्ते वेदितव्याः। वक्ष्यति यथा ऽसादृश्ये २।१।७। यथावृद्धं ब्राह्मणानामन्त्रयस्व। अन्वर्थसंज्ञा चेयं महती पूर्वपदार्थप्राधान्यम् अव्ययीभावस्य दर्शयति। अव्ययीभावप्रदेशाः अव्ययीभावश्च २।४।१८ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

अव्ययीभावः ९१०, २।१।५

अधिकारोऽयं प्राक् तत्पुरुषात्॥

न्यासः

अव्ययीभावः।, २।१।५

"यथावृद्धम्" इत्यत्राव्ययीभावत्वे सति "अव्ययीभावश्च" २।४।१८ इति नपुंसकत्वे "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" २।४।८३ इत्येष विधिर्भवति। "अन्वर्थसंज्ञा चेयम्" इति। अनव्ययमव्ययं भवतीत्यव्ययीभावः। "पूर्वपदार्थप्राधान्यम्" इत्यादिना अन्वर्थसंज्ञायाः फलमाह। प्रायेण ह्यव्ययीभावे पूर्वपदमव्ययम्, परपदमन्यव्ययम्; समुदायो नाव्ययम्()। स यदि पूर्वपदवशेन तस्य पूर्वपदस्य यो धर्मोऽव्ययत्वं तत्प्रतिपद्यते ततो।ऽनव्ययस्वभावः सन्नव्ययस्वभावो भवति।

एवञ्च पूर्वपदवशेन तद्धर्मं प्रतिपद्यते यदि पूर्वपदं प्रधानं भवति, नान्यथा। प्रधानवशेन हि वस्तुनः स्वधर्मपरित्यागेन धर्मान्तरापत्तिर्युक्ता। तदेवमन्वर्थसंज्ञेयं भवन्ती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति। तेन यदा पूर्वपदार्थस्य प्राधान्यं भवति तदाव्ययीभावो भवति, नान्यथेत्युक्तं भवति॥

बाल-मनोरमा

अव्ययीभावः ६४३, २।१।५

अव्ययीभावः। अधिकारोऽयमिति। एकसंज्ञाधिकारेऽपि अनया संज्ञया समास संज्ञा न बाध्यते इति "प्राक्कडारात्" इत्यत्रोक्तम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अव्ययम् १।१ ८ विभक्ति॰वचनेषु ७।३ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

अव्ययं

विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथाऽनुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचने

२।१।६

सुप् सुपा इति च वर्तते। विभक्त्यादिश्वर्थेषु यदव्ययं वर्तते तत् समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति। वचनग्रहणं प्रत्येकं सम्बध्यते। विभक्तिवचने तावत् स्त्रीष्वधिकृत्य कथा प्रवर्तते अधिस्त्रि। अधिकुमारि। सप्तम्यर्थे यदव्ययं तद् बिभक्तिवचनम्। समीपवचने कुम्भस्य समीपम् उपकुम्भम्। उपमणिकम्। समृद्धिरृद्धेराधिक्यम् समृद्धिर् मद्राणां सुमद्रम्। सुमगधं वर्तते। व्यृद्धिरृद्धेरभावः गवदिकानाम् ऋद्धेरभावः दुर्गवदिकम्। दुर्यबनं वर्तते। अर्थाभावः वस्तुनो ऽभावः अभावो मक्षिकाणां निर्मक्षिकम्। निर्मशकम् वर्तते। अत्ययः अभूतत्वम्, अतिक्रमः अतीतानि हिमानि अतिहिमम्। निर्हिमम्। निःशीतं वर्तते। असम्प्रति उपभोगस्य वर्तमानकालप्रतिषेधः अतितसृकम्। तैसृकमाच्छादनम्, तस्य अयम् उपभोगकालो न भवति इत्यर्थः। शब्दप्रादुर्भावः प्रकाशता शब्दस्य इति पाणिनि। तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशते इत्यर्थः। पश्चात् अनुरथं पादातम्। रथानां पश्चातित्यर्थः। यथा। यथाऽर्थे यदव्ययं वर्तते तत् समस्यते। योग्यता विप्सा पदार्थानतिवृत्तिः सादृश्यं च इति यथार्थाः। योग्यतायाम् अनुरूपम्। रूपयोग्यम् भवति इत्यर्थः। वीप्सायाम् अर्थमर्थं प्रति प्रत्यर्थम्। पदार्थनतिवृत्तौ यथाशक्ति। आनुपूर्व्यमनुक्रमः अनुज्येष्ठं प्रविशन्तु भवन्तिअः। ज्येष्ठानुपूर्व्या भवन्तः प्रविशन्तु इत्यर्थः। यौगपद्यम् एककालता सचक्रम् धेहि। युगपच्चक्रं धेहि इत्यर्थः। सादृश्यम् तुल्यता। किमर्थम् इदम् उच्यते, यथार्थ इत्येव सिद्धम्? गुणभूते ऽपि सादृश्ये यथा स्यात्, सदृशः किख्या राकिखि। सम्पत्तिः अनुरूप आत्मभावः समृद्धेरन्यः सब्रह्म बाभ्रवाणाम्। सक्षत्रं शालङ्कायनानाम्। साक्ल्यम् अशेषता सतृणम् अभ्यावहरति। सबुसम्। न किंचिदभ्यावहार्यं परित्यजति इत्ययमर्थो ऽधिकार्थवचनेन प्रतिपाद्यते। अन्तवचने अन्तः इति परिग्रहापेक्षया समाप्तिरुच्यते। साग्नि अधीते। सेष्टि सपशुबन्धम्। सपशुबन्धान्तमधीते इत्यर्थः। इयं समाप्तिरसकले ऽप्यध्ययने भवति इति साकल्यात् पृथगुच्यते।

लघु-सिद्धान्त-कौमुदी

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्त

वचनेषु ९११, २।१।६

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः। प्रायेणाविग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा। विभक्तौ, हरि ङि अधि इति स्थिते॥

लघु-सिद्धान्त-कौमुदी

नञ् ९४९, २।१।६

नञ् सुपा सह समस्यते॥

बाल-मनोरमा

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाऽभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययोगपद्यसादृश्यसंपत्तिसाकल्याऽन्तवचनेषु ६४४, २।१।६

अव्ययं विभक्ति। विभक्त्यर्थाद्यभावेऽप्यपदिशमित्यादि साधयितुमाह--अव्ययमिति योगो विभज्यत इति। अत्र "समर्थः पदविधिः" इत्यतः समर्थग्रहणमनुवृत्तं तृतीयान्ततया विपरिणम्यते। समास इति, अव्ययीभाव इति चाधिकृतम्। तदाह--अव्ययं समर्थेनेति। सोऽव्ययीभाव इति। स समासः अव्ययीभावसंज्ञः स्यादित्यर्थः। तथाच दिशयोर्मध्यमित्यस्वपदविग्रहे मध्यार्थकस्य अपेत्यव्ययस्य दिशयोरित्यनेन समाससंज्ञा, तस्य समासस्याऽव्ययीभावसंज्ञा च सिद्धा। तथाच समासत्वात्प्रातिपदिकत्वे "सुपो धातु"इति सुब्लुकि सति दिशा-अप इति स्थितम्।

तत्त्व-बोधिनी

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाऽभावात्ययासंप्रतिशब्दप्राजिर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्याऽन्तवचनेषु ५७१, २।१।६

अव्ययं विभक्ति। विभक्तिरिह कारकशक्तिः। विभज्यते अनया प्रातिपदिकार्थ इथि व्युत्पत्तेः। अतएव वक्ष्यति "विभक्त्यर्थादिषु विद्यमानमव्यय"मिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यथा ० सादृश्ये ७।१ अव्ययम् १।१ ? अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

यथा ऽसादृश्ये २।१।७

यथा इत्येतदव्ययम् असादृश्ये वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धाः यथावृद्धम्। यथाध्यापकम्। असादृश्ये इति किम्? यथा देवदत्तः तथा यज्ञदत्तः। यथार्थे यदव्ययम् इति पूर्वेण एव सिद्धे समासे वचनम् इदं सादृश्यप्रतिषेधार्थम्।

न्यासः

यथाऽसादृश्ये। , २।१।७

"ये य वृद्धाः" इत्यनेन "यथावृद्धम्" इत्यत्र यथाशब्दो वीप्सायां वत्र्तत इत्याचष्टे। "यथा देवदत्तस्तथा यज्ञदत्तः" इति। देवदत्तसदृशो यज्ञदत्त इत्यर्थः। ननु च यथाशब्दोऽयमुपमानं "यज्ञदत्त" इत्युपमेयमपेक्षते। तत्र "सापेक्षमसमर्थं भवति" इत्यसामथ्र्यादेव समासो न भविष्यति, तत्किमर्थमसादृश्य इति प्रतिषेधेन? नैतदस्ति; न ह्यत्र यथाशब्द उपमानम्, किं तर्हि? "यथा देवदत्तः" इत्येष समुदायः। तस्मात् तस्यैवोपमेयापेक्षयाऽसामथ्र्यम्, न तु यथाशब्दस्य॥

बाल-मनोरमा

यथाऽसादृश्ये ६५३, २।१।७

यथाऽसादृस्ये। "असादृश्ये" इति छेदः। व्याख्यानात्। असादृश्ये योग्यतावीप्सापदार्थानतिवृत्तिरूपे वर्तमानं यथेत्यव्ययं समस्यते इत्यर्थस्य यथार्थत्वादेव सिद्धे नियमार्थमिदमित्याह-असादृश्ये एवेति। ननु "प्रकारवचने था"लिति विहिततताल्प्रत्ययान्तस्य कथं सादृश्ये वृत्तिरित्यत आह--हरेरिति। सामान्यस्य भेदको यो विशेषः स प्रकारः, तस्मिन्प्रकारे थालिति "प्रकारवचने थाल्" इत्यास्यार्थः। ततश्च यद्विशेषधर्मवान्हरिस्तद्विशेषधर्मवान्हर इति बोधे सति यत्तच्छब्दाभ्यां तयोः प्रकारयोरभेदावगमादुपमानत्वप्रतीतिरिति भावः। तेनेति "प्राप्त"मित्यत्रान्वयः। सादृश्यार्थकत्वेनेत्यर्थः। सादृश्य इति वेति। "अव्ययं विभक्ती"ति सूत्रगतेन सादृश्ये वर्तमानमव्ययं समस्यत इत्यंशेन वा, यथार्थे विद्यमानमव्ययं समस्यत इत्यंशेन वा प्राप्तमव्ययीभावसमासकार्यं निषिध्यत इति भावः। भाष्ये तु प्रकारवचने यथाशब्दयोगे सादृस्येत्यनेनैव प्राप्तिरुक्ता, न तु यथार्थत्वेन प्राप्तिरुक्ता। यथाशब्दस्य सूत्रगृहीतत्वेन तद्योगे यतार्थेत्यस्याऽप्रवृत्तेरिति तदाशय इति शब्देन्दुशेखरे विस्तरः।

तत्त्व-बोधिनी

यथाऽसादृश्ये ५७८, २।१।७

यथाऽसा। निःसंदेहाय "सादृश्ये यथे"त्येव वक्तव्ये विपरीतोच्चारणं नञः प्रश्लेषलाभार्थमिति वायचष्टे असादृश्य इति। यावन्त इति। यत्परिमाणमेषां ते। "यत्तदेतेभ्यः---" इति वतुप्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यावत् ० अवधारणे ७।१ अव्ययम् १।१ ७ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

यावदवधारणे २।१।८

यावतित्येतदव्ययम् अवधारणे वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। अवधारणम् इयत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व। यावन्त्यमत्राणि सम्भवन्ति पञ्च षट् वा तावत आमन्त्रयस्व। अवधारणे इति किम्? यावद्दत्तं तावद् भुक्तम्। न अवधारयामि कियन् मया भुक्तम् इति।

न्यासः

यावदवधारणे। , २।१।८

"इयत्तापरिच्छेदः"इति। इयतो भाव इयत्ता = परिमाणम्, तस्याः परिच्छेदो निश्चयः। "यावन्ति पात्राणि" इत्यादिना तमेवेयत्तापरिच्छेदं विस्पष्टीकरोति। "नावधारयामि" इत्यादिना इयत्तापरिच्छेदाभावं दर्शयति॥

बाल-मनोरमा

यावदवधारणे ६५४, २।१।८

यावदवधारणे। इयत्तापरिच्छेदे गम्ये यावदित्यव्ययं समस्यते, सोऽव्ययीभाव इत्यर्थः। यावन्त इति। यत्परिमाणं येषामिति विग्रहे"यत्तदेतेभ्यः परिमाणे वतु"बिति वतुप्प्रत्ययः। यावदित्यव्ययमेव समस्यते, विग्रहस्तु तद्धितान्तेनैव, नित्यसमासत्वेनाऽस्वपदविग्रहौचित्यात्। अवधारणे किम्?। यावद्दत्तं तावद्भुक्तम्। इयद्भुक्तमिति नावधारयतीत्यर्थः।

तत्त्व-बोधिनी

यावदवधारणे ५७९, २।१।८

यावच्छ्लोकमिति।"याव"दित्यव्ययं समस्यते, विग्रहस्तु तद्धितान्तेनेत्यस्वपदविग्रहत्वमस्त्येव। अवधारणे किम्()। यावद्दत्तं तावद्भुक्तम्। [कियद्दत्त] कियद्भुक्तं वा नावधारयतीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सुप् १।१ प्रतिना ३।१ मात्राऽर्थे ७।१ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३

काशिका-वृत्तिः

सुप् प्रैत्रा मात्राऽर्थे २।१।९

मात्रा बिन्दुः, स्तोकम्, अल्पम् इति पर्यायाः। मात्राऽर्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति। अस्त्यत्र किञ्चित् शाकम् शाकप्रति। सूपप्रति। मात्राऽर्थे इति किम्? वृक्षं प्रति विधोतते विद्युत्। सुपिति वर्तमाने पुनः सुब्ग्रहणम् अव्ययनिवृत्त्यर्थम्।

न्यासः

सुप्प्रतिना मात्रार्थे। , २।१।९

"वृक्षं प्रति" इत्यत्र लक्षणे प्रतिशब्दो वत्र्तते, न मात्रार्थे। ननु परं सुब्ग्रहणं कमर्थम्? यावता "सुबामन्त्रिते" २।१।२ इत्यतः सुब्ग्रहणमतुवर्तिष्यत इत्यत आह-- "सुब्ग्रहणम्" इत्यादि। सुब्ग्रहणं पूर्वं ह्व्ययेन सम्बद्धम्; अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मादव्ययनिवृत्त्यर्थमिदमन्यत सुब्ग्रहणं क्रियते॥

बाल-मनोरमा

सुप्प्रतिना मात्रार्थे ६५५, २।१।९

सुप्प्रतिना मात्रार्थे। सुबिति छेदः। मात्रा-लेशः। तस्मिन्नर्थे विद्यमानेन प्रतिना सुबन्तं समस्यत इत्यर्थः। सुबित्यनुवर्तमाने पुनः सुब्ग्रहणं संनिहितस्याऽव्ययमित्यस्यानुवृत्त्यर्थं, तदध्वनयन्नुदाहरति-शाकस्य लेश इति। अत्र

"प्रती"त्यव्ययं मात्रार्थकम्। अतस्तेन शाकस्येति सुबन्तस्य समासः। समासविधौ सुबन्तस्य प्रथमानिर्दिष्टत्वेन उपसर्जनत्वात्पूर्वनिपातः, न तु प्रतेः, तस्य समासविधौ तृतीयानिर्दिष्टत्वात्। वृक्षं प्रतीति। अत्र प्रतेर्मात्रार्थकत्वाऽभावान्न तेन समासः। न च "लक्षणेत्थ"मिति कर्मप्रवचनीयत्वविधानसामर्थ्यादेवाऽत्र समासो न भविष्यति, सति समासे द्वितीयायाः षष्ठ()आ वा लुकि अविशेषात्, सकृत्प्रवृत्ततया समासात्तद्विभक्त्यनुत्पत्तेरिति वाच्यम्, "वृक्षं प्रति सिञ्चती"त्यादौ "उपसर्गात्सुनोती"ति षत्वनिवृत्त्या कर्मप्रवचनीयत्वस्य चरितार्थत्वादित्यन्यत्र विस्तरः।

तत्त्व-बोधिनी
सुप्प्रतिना मात्रार्थे ५८०, २।१।९

सुप्प्रतिना। सुबित्यनुवर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थमिति ध्वनयन्नुदाहरति--शाकप्रतीति।नन्वारम्भसामर्थ्यादव्ययभिन्नमेव सुप्समस्यत इति चेत्। अत्राहुः--पुनः सुब्ग्रहणाऽभावे दोषामन्यमहर्दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशाव्ययान्येव मात्रार्थे प्रतिना समस्येरन्, तथा च दिवसस्य लेशो दिवाप्रति दोषाप्रतीत्यादीनाहरणत्वं संभाव्येतेति। वृक्षं प्रतीति। ननु लक्षणादौ प्रतेः कर्मप्रवचनीयसंज्ञाविधानसामर्थ्याद्ध्वितीयागर्भं वाक्यमेव स्यात्, न तु समासः, तस्य लेशार्थे सावकाशत्वादिति चेत्। मैवम्। "वृक्षं प्रति सिञ्चन्ती"त्यादौ षत्वनिवारकत्वेन कर्मप्रवचनीयसंज्ञाविधानस्य चरुतार्थत्वान्मात्रार्थग्रहणाऽभावे लक्षणादाबप्यनेन समासप्रसङ्गात्। वीप्सायामव्ययीभावे तु प्रत्यादेः पूर्वनिपातत्वे "प्रत्यर्थं सिञ्चन्ती"त्यादौ षत्वाऽप्रसक्त्या कर्मप्रवचनीयविधानस्याऽचरितार्थतया तत्सामर्थ्याद्द्वितीयागर्भं वाक्यमपीत्युक्तं मूलकृता "अव्ययं विभक्ती"ति सूत्रे। अत्र नव्याः--प्रत्यर्थमित्यव्ययीभावे वीप्सायां द्योतकत्वेन विद्यमानमव्ययं समस्यते। वीप्साद्योतकस्य यदि कर्म प्रवचनीयसंज्ञाविधिः स्वीक्रियते, तदापि प्रतिस्तवनं प्रतिस्थानमित्यादौ षत्वनिवारणाय प्रतीत्यस्य कर्मप्रवचनीयसंज्ञा चरितार्थैव। वस्तुतस्तु वीप्सायां विषयभूतायां प्रत्यादेः कर्मप्रवचनीयसंज्ञा, न तु वीप्साद्योतकस्यैव। अन्यथा "वृक्षं वृक्षं प्रति सिञ्चती"त्यत्र द्विर्वचनेनैव वीप्सा द्योत्यते। प्रतिशब्दस्तु क्रियाया संबध्यते। कर्मणि द्वितीया। कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं ने"त्यादिमनोरमाग्रन्थस्य "लक्षणेत्थंभूते"ति सूत्रस्थस्य दत्तजलाञ्जलिः स्यात्, ततश्च संज्ञाविधानसामर्थ्यास्योपक्षीणत्वात्, अर्थमर्थं प्रतीत्यादिभाष्यप्रयोगादेव द्वितीयागर्भं वाक्यमपि भवतीत्येवं व्याख्येयमित्याहुः। पराजयं द्योतयितुमाह---विपरीतं वृत्तमिति। पूर्वं जये यथा वृत्तं तथा न वृत्तमित्यर्थः। एकपरीति। एकंन विपरीतं वृत्तमित्यर्थः। एवं द्विपरीत्यादि। "विभाषाऽपपरिबहि"रिति योगं विभज्य व्याचष्टे।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अक्षशलाकासंख्याः १।३ परिणा ३।१ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
अक्षशलाकासङ्ख्याः परिणा २।१।१०

अक्षशब्दः, शलाकाशब्दः, सङ्ख्याशब्दश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे समासो ऽयम् इष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर् वा भवति। तत्र यदा सर्वे उत्तानाः पतन्ति अवाञ्चो वा, तदा पात्यिता ज्यति, तस्य एव अस्य विपातो ऽन्यथा पाते सति जायते। अक्षेण इदं न तथा वृत्तं यथा पूर्वं जये अक्षपरि।

शलाकापरि। एकपरि। द्विपरि। त्रिपरि। परमेण चतुष्परि। पञ्चसुत्वेकरूपासु जय एव भविष्यति। अक्षादयस् तृतीयान्ताः पूर्वोक्तस्य यथा न तत्। कितवव्यवहारे च एकत्वे ऽक्षशलाकयोः।

न्यासः

अक्षशलाकासंख्याः परिणा। , २।१।१०

"कितवव्यवहारे" इत्यादि। कथं पुनः कितवव्यवहार इष्यमाणेऽपि तत्र लभ्यते? स्वभावत एव; समासस्य तत्र वृत्तेः।न ह्रर्था अतिदिश्यन्ते, लौकिकत्वात् तेषाम्। "तस्य" इत्यादि। तस्य पातयितुस्तस्य च विपात इत्यनेन सम्बन्धः। विपातः = पराजयः। "एतस्य" इति। अक्षादेरेव प्रत्यवमर्शः। अभेदविवक्षायामेकवचनम्। एतस्यानयथा पात इत्यनेन सम्बन्धः। "अन्यथा" इति। जये य उक्तः पातप्रकारस्तदपेक्षयाऽन्यथात्वं विवक्षितम्। "पञ्चसु त्वेकरूपासु जय एव भवति" इति। पञ्चपरीति समसो न भवतीति भावः। जये हि यदक्षादीनां वृत्तं तदपेक्षयान्यपातत्वे सति समासेन भवितव्यम्। न च पञ्चस्वेकरूपास्वन्यथात्वं सम्भवति। अत एव जयस्तदा भवति यदा पञ्चाप्येकरूपा भवन्ति-- उत्ताना अवाञ्चो वा। एतेन प्रकारेण "परेण चतुष्परि" इत्यत्रोपपत्तिर्दर्शिता। "परेण" इति। अतिशयेनेत्यर्थः। "अक्षादयस्तृतीयान्ताः" इत्यादि। अन्यथा वृत्तावयं समास इष्यते। तत्र चाक्षादिनामन्यथावृत्तौ कर्त्तृत्वं करणत्वं वा भवति, अतस्तृतीयया भवितव्यमिति तदन्ता एव समस्यन्ते। "पूर्वोक्तस्य" इति। अक्षादेरित्यर्थः। कुत एतत्? अक्षादयस्तृतीयान्ता इति पूर्वमक्षादेरेवोक्तत्वात्। अभेदविवक्षायामेकवचनम्। षष्ठी चेयं शेषविवक्षायां वृत्तशब्दापेक्षया सम्बन्धलक्षणा, वृत्तशब्दस्त्वध्याहर्तव्यः। "यथा न तत्" इति। अक्षादेः पूर्वोक्तस्य यथा वृत्तमभूत् पूर्वं जये तथा वृत्तं यदि सम्प्रति न भवत्येवं समासो भवति , नान्यथा। पूर्ववृत्तस्यान्यथात्वद्योतने समासोऽयम्, तच्चैकेनापि क्रियते, ततो द्विवचनाद्यपेक्षया निष्प्रयोजनमित्याह-- "एकत्वेऽक्षशलाकयोः" इति। अक्षशलाकयोरेकवचनान्तयोरित्यर्थः। ततोऽयं न्यायसिद्ध एवार्थः श्लोकेन संगृहीतः। अथ वा-- उत्तरं विभाषाग्रहणमिहापि सिंहावलोकितन्यायेन सम्बध्यते। सा च व्यवस्थिविभाषा। तेन वचनसिद्ध एवायमर्थो वेदितव्यः। अक्षादय इति किम्? पाशकेनेदं न तथावृत्तं यथा पूर्वं जये। परिणेति किम्?? सुबन्तमात्रेण सह समासो मा भूत्। कितवव्यवहार इति किम्? अक्षाभ्यामक्षैर्वा न तथा वृत्तं यता पूर्वं जये॥

बाल-मनोरमा

अक्षशलाकासंख्याः परिणा ६५६, २।१।१०

अक्षशलाका। "समस्यन्ते सोऽव्ययीभाव" इति शेषः। द्यूतव्यवहारे इति। वार्तिकमिदम्। [इद] द्यूतं तावत्पञ्चभिरक्षैः शलाकाभिर्वा भवति। यदि अक्षाः शलाका वा कत्स्ना उत्ताना अवाञ्चो वा पतन्ति, तदा पातयिता जयति। अन्यथा पराजयत इति स्थितिः। अक्षेणेति। कर्तरि तृतीया। "विपरीतं वृत्त"मित्यत्र वृत्तेर्भाव क्तः। "विपरीत"मिति क्रियाविशेषणम्। जये यथा परिवर्तितव्यं न तथा परिवृत्तमित्यर्थः। शलाकापरीति। शलाकया विपरीतं वृत्तमिति भावः। एकपरीति। एकेन विपरीतं वृत्तमित्यर्थः। एवं "द्विपरि" "त्रिपरी"त्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ २।२।२९ अपपरिबहिरञ्चवः १।३ पञ्चम्या ३।१ १२ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

विभाषा २।१।११

विभाषा इत्ययम् अधिकारो वेदितव्यः। यदित ऊर्ध्वम् अनुक्रमिष्यामः, तद् विभाषा भवति। वक्ष्यति
काशिका-वृत्तिः
अपपरिबहिरञ्चवः पञ्चम्या २।१।१२

अपत्रिगर्तं वृष्तो देवः, अप त्रिगर्तेभ्यः। अपपरिबहिरञ्चवः पञ्चम्या २।१।११। अप परि बहिसञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः। परित्रिगर्तम्, परि त्रिगर्तेभ्यः। बहिर्ग्रामम्, वहिर्ग्रामात्। प्राग्ग्रामम्, प्राग् ग्रामात्। बहिः शब्दयोगे पञ्चमीभावस्य एतदेव ज्ञापकम्।
न्यासः
विभाषा। , २।१।११

न्यासः
अपपरिबहिरञ्चवः पञ्चम्या। , २।१।११

"ननु बहिः शब्दयोगे न केनचित्पञ्चमी विधीयते, तत्कथं तदन्तेन समास इत्याह-- "बहिः शब्दयोगे" इत्यादि। यदेतत् पञ्चम्यन्तेन सह बहिः शब्दस्य समासविधानम्, तज्ज्ञापयति- भवति हि बहिः शब्दयोगे पञ्चमीति। अथोपादानसामर्थ्यात् बहिः शब्दयोगे पञ्चमी न सम्भवतीत्यपञ्चम्यन्तेनैव सुबन्तमात्रेण समास इत्येवं कस्मान्न विज्ञायते? अशक्यमेतद्विज्ञातुम्; पञ्चमीग्रहणस्य वैयर्थ्यप्रसङ्गात्। तथा हि "अपपरि वर्जने" १।४।८७ इत्येवमपपर्योः कर्मप्रवचनीयसंज्ञायां सत्यां ताभ्यां योगे "पञ्चम्यपाङपरिभिः" (२।३१०) इति पञ्चम्यैव भवितव्यम्; नान्यथा विभक्त्या। "अञ्चुशब्देनापि योगे" "अन्यारात्" २।३।२९ इत्यादिना पञ्चम्यैव भवितव्यमित्यपार्थकं पञ्चमीग्रहणं स्यात्। ननु चाकर्मप्रवचनीयौ यावपरी तयोरपञ्चम्यन्तेन समासो मा भूदित्येवमर्थं पञ्चमीग्रहणं स्यात्-- परिगतः, अपगत इति? नैतदस्ति; परत्वाद्धि तयोः "कुगतिप्रादयः" (र२।२।१८) इतितत्पुरुषेष भवितव्यम्। ननु च नाप्राप्ते ह्येतस्मिन्नयमारभ्यमाणो बाधको भवति? नैतदस्ति; कर्मप्रवचनीयो यावपपरी तत्रावकाशः स्यात्। तत्र हि कर्मप्रवचनीयानां प्रतिषेधं वक्ष्यतति। तस्माद्बहिः शब्दस्य पञ्चम्यन्तेनैव समसाविधानम्, नान्येन; अन्यथा पञ्चमीग्रहणमनर्थकं स्यात्। तस्मात्साधूक्तम्-- "बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम्" इति॥
बाल-मनोरमा
विभाषा ६५७, २।१।११

विभाषा। अधिकारोऽयमिति। ततश्चोत्तरत्र समासविधिष्वेतदनुवर्तते इति लभ्यते। ननु "प्राक्कडारात्समासः" इत्यत ऊध्र्वं "सहसुपे"त्यतः प्रागेव कुतो विभाषाधिकारो न कृत इत्यत आह--एतत्सामथ्र्यादिति। मध्ये विभाषाधिकारपाठसामथ्र्यादेवेतः प्राचीनानां नित्यसमासत्वं गम्यत इत्यर्थः। यद्यपीतः प्राचीनानां विकल्पे प्रमाणाऽभावादेव नित्यत्वं सिद्धं, तथापि तस्यैव लिङ्गेन दृढीकरणमिति। बोध्यम्। नन्वेवं सति "सुप्सुपे"त्यपि नित्यसमासः स्यात्, ततश्च पूर्वं भूत इति लौकिकविग्रहवाक्यमनुपपन्नं स्यात्। "सुप्सुपे"ति विषये विस्पष्टं पटुर्विस्पष्टपटुरिति विग्रहप्रदर्शनपरम् "आकडारात्" इति सूत्रस्थभाष्यमपि विरुध्येतेत्यत आह-न नित्यसमास इति। कुत इतयत आह--अव्ययमित्यादीति। "आकडारा"दित्येव सिद्धे "प्राक्कडारा"दिति प्राग्ग्रहणं समाससंज्ञायां अव्ययीभावादिसंज्ञासमावेशार्थम्। अन्यथा एकसंज्ञाधिकारात्पर्यायः स्यादिति "आकडारा"दिति सूत्रे भाष्ये स्थितम्।

तत्र "अव्ययं विभक्ती"त्याद्यव्ययीभावादिविधिषु"सुप्सुपे"ति समासमनूद्य नाव्ययीभावादिसंज्ञा विधेयाः। "उपपदमतिङ्" "कर्तृकरणे कृता बहुलम्" "आख्यातमाख्यातेन क्रियासातत्ये" इत्यादौ सुबन्तस्य सुबन्तेन समासस्य उद्देश्यस्याऽप्रसिद्धेः। अतस्तेषु समासविधानस्यावश्यकत्वादर्थाधिकारानुरोधात्सर्वत्र समास इत्यनुवृत्तं विधेयसमर्पकमित्यास्थेयम्। तत्र "सुप्सुपे"त्येव सिद्धे "अव्ययं विभक्ती"त्याद्यव्ययीबावादिविधिषु समाससंज्ञाविधानं व्यर्थं सत्ततः प्राचीनविधेर्वैकल्पिकत्वं ज्ञापयति। न चाव्ययीभावादिविधिषु समासविध्यभावेऽव्ययादीनां समासशास्त्रे प्रथमानिर्दिष्टत्वाऽभावेन उपसर्जनत्वाऽभावात्पूर्वनिपातनियमो न स्यात्, तदर्थमव्ययीभावादिविदिषु समासविधानं चरितार्थमिति वाच्यं, "प्रथमानिर्दिष्टम्" इति सूत्रे "समासे" इत्यस्य समासत्वव्याफ्याऽव्ययीभावादिविधायके शास्त्रे इत्यर्थाभ्युपगमेनाऽव्ययादीनामुपसर्जनत्वसिद्धेर्वक्तुं शक्यत्वात्। तस्मादव्ययी भावादिविधिषु समासविधानं "सुप्सुपे"ति समासस्य वैकल्पिकत्वं ज्ञापयतीति स्थितम्। "आकडारा"दिति सूत्रे "सुप्सुपे"ति समासविषये विस्पष्टं पटुविस्पष्टपटुरिति विग्रहप्रदर्शनपरभाष्यं चेह लिङ्गमित्यलं बहुना। एवंच "इवेन समासः" इत्यादि वैकल्पिकमिति सिद्धम्। यद्यपि नित्यसमासाधिकारे "कुगती"त्यत्रापि "इवेने"ति वार्तिकं पठितं तथापि "सुप्सुपे"त्यत्र पठितमेव तत्रापि स्मार्यत इति कैयटः।

बाल-मनोरमा

अपपरिबहिरञ्चवः पञ्चम्या ६५८, २।१।११

अपरिबहिः। "समस्यन्ते सोऽव्ययीभाव" इति शेषः। अपविष्ण्विति। अत्र "अप" इत्यव्ययं वर्जने। विष्णुं वर्जयित्वा संसरणमित्यर्थः। अप विष्णोरिति-लौकिकविग्रहवाक्यम्, समासस्य वैकल्पिकत्वेनास्वपदविग्रहनियमाऽभावात्। "अपपरी वर्जने" इति अपेत्यव्ययस्य कर्मप्रवचनीयत्वात्तद्योगे "पञ्चम्यपाङ्परिभि"रिति पञ्चमी। तदन्तेन "अपे"त्यस्याव्ययीभावसमासः। सुब्लुक्। अपेत्यव्ययस्य प्रथमानिर्दिष्टत्वात् पूर्वनिपातः। समासात्सुबुत्पत्तिः। "अव्ययादाप्सुपः" इति लुक्। एवं यथायथमग्रेऽपि ज्ञेयम्। परिविष्ण्विति। अत्रापि परिर्वर्जने। पञ्चम्यादि पूर्ववत्। बहिर्वनं बहिर्वनादिति। अस्मादेव ज्ञापकाद्बहिर्योगे पञ्चमी। इतरत् पूर्ववत्।?दन्तत्वादम्भावः। प्राग्वनं प्राग्वनादिति। अञ्चूत्तरपदयोगे पञ्चमी।

तत्त्व-बोधिनी

विभाषा ५८१, २।१।११

विभाषेति। इतः प्राचीनानां समासानां हि टिघुभादिसंज्ञानामिव वाग्रहणाऽभावान्नित्यत्वं न्यायत एव सिद्धं, तच्च लिङ्गेनापि द्रढयति-एतदिति। नन्वेवं "सुप्सुपा" इत्यपि नित्यं स्यात्, इष्टापत्तौ तु "पूर्वं भूतो भूतपूर्वः। सुप्सुपेति समासः" इति वृत्तिग्रन्थो विरुध्येत। तथा शाकलसूत्रे "सिन्नित्यसमासयोः शाकलप्रतिषेधः" इत्यत्र "नित्य ग्रहणेन नार्थः, इदमपि सिद्धं भवति--वाप्याम()आओ वाप्य()आः" इति भाष्यं कैयटो व्याख्यात्--"वाप्य()आ इति सुप्सुपे"ति समाससः। "संज्ञायाम्" इति सप्तमीसमासस्य तु नित्यत्वात्सिद्धः प्रतिषेधः"इति। सोऽपि ग्रन्थो विरुध्येतेत्याशङ्कायामाह सुप्सुपेति त्विति। नन्वत्र किं प्रमाणमित्यत आह--अव्ययमित्यादीति। सुप्सपेत्यनेनैव सिद्धे समासे "अव्यय"मित्यादिसूत्रैः पुनः समासविधानं प्काचीनस्य क्वाचित्कातां ज्ञापयतीत्यर्थः। एवं च इवेन समासस्यापि क्वाचित्कत्वात् "उद्वाहुरिव वामनः"इत्यादि सिद्धम्। "इवेने"तिवार्तिकं तु यद्यपि "कुगती"त्यत्र पठ()ते तथापि "सुप्सुपे"त्यत्रत्यमेव नित्याऽधिकारे स्मारितमिति कैयटः। एवं स्थिते "उद्वाहुरिव वामनः"इत्यादिलोकप्रयोदसिद्धये इवेन समासस्य छन्दोविषयकत्वं कल्पयन्तः प्रत्युक्ताः। छन्दस्यपि तत्समासस्य नित्यत्वानभ्युपगमात्। "जीमूतस्येवे"त्यत्र हि बह्वृचैः समासाभ्युपगमेऽपि तैत्तिरयैर्व्यस्तस्यैव पाठात्। एतच्च मनोरमायां स्थितम्।

तत्त्व-बोधिनी

अपपरिबहिरञ्चवः पञ्चम्या ५८२, २।१।११

अपपरिबहिः। अपपरियोगे "पञ्चम्यपाङ्परिभि"रिति पञ्चमीविहिता, अञ्चूत्तरपदयोगेऽपि "अन्यारा" दित्यादिना विहितैव। तेनाऽत्र "पञ्चम्या"इति ग्रहणं "बहिर्योगे पञ्चमी भवति" इति ज्ञापनार्थम्। "ज्ञापकसिद्धं न सर्वत्रे"ति "करस्य करभो बहि"रित्यपि सिद्धम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आङ् ० मर्यादाभिविध्योः ७।२ विभाषा १।१ ११ पञ्चम्या ३।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

आङ् मर्यादाऽभिविध्योः २।१।१३

आङित्येतन् मर्यादायाम् अभिविधौ च वर्तमानम् पज्चम्यन्तेन सह विभाषा संस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात्। अभिविधौ आकुमारं यशः पाणिनेः, आ कुमारेभ्यः।

न्यासः

आङ् मर्यादाभिविध्योः। , २।१।१२

अथ मर्यादाभिविधिग्रहणं किमर्थम्? यावता पञ्चमीत्यनुवत्र्तते, आङा च कर्मप्रवचनीयेनैव योगे पञ्चमी विधीयते-- एतयोरेवार्थयोः "आङ मर्यादावचने" १।४।८८ इत्याङः कर्मप्रवचनीयसंज्ञा४, नान्यत्र; तत्रान्तरेणापि मर्यादाविधिग्रहणं तयोरेवार्थयो समासो भविष्यति, नान्यत्रेति? सत्यमेतत्; तथापि मन्दधियां सुखावबोधनार्थं मर्यादाभिविधिग्रहणम्॥

बाल-मनोरमा

आङ्मर्यादाभिविध्योः ६५९, २।१।१२

आङ्मर्यादाभिविध्योः। एतयोरिति। मर्यादाभिविध्योर्विद्यमानादित्यर्थः। मर्यादायामुदाहरति-आमुक्तीति। मुक्तेः प्रागित्यर्थः। अमिविधावुदाहरति-आबलमिति। बालानारभ्येत्यर्थः। "आङ्मर्यादावचने" इत्युभयत्रापि कर्मप्रवचनीयत्वात् "पञ्चम्यपाङ्परिभि"रिति पञ्चमी।

तत्त्व-बोधिनी

आङ्वर्यादाभिविध्योः ५८३, २।१।१२

आबालमिति। "आ परमणोरा च भूगोलक" मिति किरणावलीप्रयोगस्तु प्रामादिकः, समासमध्ये च शब्द प्रयोगाऽसंभवात्। "आ च भूगोलकात्िति पास्तूचितः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लक्षणेन ३।१ १५ अभिप्रती १।२ आभिमुख्ये ७।१ विभाषा १।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
लक्षणेन अभिप्रती आभिमुख्ये २।१।१४

लक्षणं चिह्नं, तद्वाचिना सुबन्तेन सह अभिप्रती शब्दावाभिमुख्ये वर्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निमभि। प्रत्यग्नि, अग्निं प्रति। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्ति इत्यर्थः। लक्षणेन इति किम्? स्रुग्घ्नं प्रतिगतः। प्रतिनिवृत्त्य स्रुग्घ्नम् एव अभिमुखं गतः। अभिप्रती इति किम्? येन अग्निस् तेन गतः। आभिमुख्ये इति किम्? अभ्यङ्का गावः। प्रत्यङ्क्का गावः। नवाङ्का इत्यर्थः।
लघु-सिद्धान्त-कौमुदी
कष्टाय क्रमणे ७३१, २।१।१३

चतुर्थ्यन्तात् कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः॥
न्यासः
लक्षणेनाभिप्रती आभिमुख्ये। , २।१।१३

"अभ्यग्नि, प्रत्यग्नि" इति। "अग्निमभि, अ()ग्न प्रति" इति विग्रहः। "कर्मप्रवचनीययुक्ते द्वितीया" २।३।८ कर्मप्रवचनीयसंज्ञा त्वेकस्य "अभिरभागे" १।४।९० इत्यनेन। अपरस्य "लक्षणेत्यम्भूताख्यान" १।४।८९ इत्यादिना। अत्र चाग्निर्लक्ष णम्, तेन शलभपातो लक्ष्यते। अत्राभिमुख्ये चाभिप्रती वत्र्तेते; तथा ह्रग्न्यभिमुखमेव शलभाः पतन्ति, नापि पार्(ातः, नापि पृष्ठत इत्यर्थोऽवगम्यते। "रुआउघ्नं प्रतिगतः" इति। रुआउघ्नान्मथुरां प्रस्थितो दिङमोहात् रुआउघ्नमेव प्रतिनिवृत्त इति नात्र रुआउघ्नो लक्षणम्। यदुद्दिश्य हि गच्छति तल्लक्षणं भवति। यदा तु दिङमोहाद्यत एव प्रस्थितस्तमेव प्रतिगच्छतितदा तदप्रतीतं कथं लक्षणं भवति-- "रुआउघ्नमिति ! "तथायुक्तञ्चानीप्सितम्" १।४।५० इति कर्मसंज्ञायां सत्यां कर्मणि द्वितीया। "येनाग्निस्तेन गतः" इति। भवत्यत्राग्निर्लक्षणमाभिमुखायमप्यस्ति, अभिप्रती तु न स्त इति तेन येनतेनशभ्दाभ्यां सह समासो न भवति। "अभ्यङ्का गावः, प्रत्यङ्का गावः" इति। अभिनवः प्रतिनवोऽङ्क आसामिति बहुव्रीहिः। अभिशब्दोऽत्राभिनवार्थे वत्र्तते, प्रतिशब्दश्च प्रतिनवार्थे। अङ्कोऽत्र भवति गवां लक्षणम्, आभिमुख्यन्तु नास्ति। ननु चात्र परत्वाद्बहुव्रीहिणा भवितव्यम्, अतः स बाधको भविष्यति, किमाभिमुख्यग्रहणेन? नैवम्; असत्याभिमुख्यग्रहणेऽशेषत्वात् कुतो बहुव्रीहिर्भवति ! अथ वैतज्ज्ञापयति-- बहुव्रीहिरव्ययीभावेन बाध्यत इति। तेन द्वौ मुनी व्याकरणमिसि सिद्धं भवति; अन्यथा हि स्वपदार्थे चरितार्थोऽव्ययीभावो द्विमुनि व्याकरणमित्यत्रान्यपदार्थे परत्वाद्बहुव्रीहिणा बाध्येत॥
बाल-मनोरमा
लक्षणेनाभिप्रती आभिमुख्ये ६६०, २।१।१३

लक्षणेनाभि। लक्षणेनेत्येतद्व्याचश्टे-चिह्नवाचिनेति। प्राग्वदिति। "समस्येतेसोऽव्ययीभाव" इत्यर्थः। अभ्यग्नीति। शलभाः-क्षुद्रजन्तुविशेषाः स्थूलमक्षिकाः। अग्निमभीति। विग्रहोऽयम्। "अभिरभागे" इति "लक्षणेत्थ"मिति चाभिप्रत्योः कर्मप्रवचनीयत्वम्, अग्निज्ञाप्यं तदभिमुखं च शलभपतनमित्यर्थः।

तत्त्व-बोधिनी

लक्षणेनाभिप्रती आभिमुख्ये ५८४, २।१।१३

लक्षणेन। "चिह्नं लक्ष्म च लक्षण"मित्यमरस्तदाह--चिह्नवाचिनेति। इहाऽभिप्रती लक्ष्यलक्षणभावम्, आभिमुख्यं चेत्युभयं द्योतयत इति फलितम्। अग्निमभि। अ()ग्न प्रतीति। "अभिरभागे" "लक्षणेत्थंभूते"त्यनेन च अभिप्रत्योः कर्मप्रवचनीयत्वाद्द्रितीया। लक्षणेनेति किम्()। रुआउग्ध्नं प्रतिगतः। रुआउग्ध्नादागतस्तमेव प्रतिनिवृत्त इत्यर्थः। अत्र हि रुआउग्ध्नः कर्म, न तु लक्षणम्। अभिप्रतीति किम्()। येनाग्निस्तेन गतः। येन पथा अग्निर्गतस्तेन गत इति प्रतीतेर्भवति गमनस्याग्निर्लक्षणम्, आभिमुख्यमप्यस्तीति येनतेन शब्दयोरग्निशब्देन समासः स्यात्। आभिमुख्ये किम्()। अभ्यङ्का गावः। प्रत्यङ्काः। अभिनवः प्रतिनवश्चाङ्क आसामिति बहुव्रीहिः। अङ्को ह्त्र भवति गवां लक्षणम्। आभिमुख्यं तु नास्ति। ननूत्सर्गतोऽव्ययार्थप्राधान्येऽव्ययीभावस्वीकारात्कथमिह प्रसङ्गः()। अत्राहुः--इह प्रकरणे बहुव्रीहिविषयेऽव्ययीभावो भवतीति ज्ञापनार्थमिदं। तेन "सङ्ख्या वंश्येन""द्विमुनि व्याकरण"मित्यादि सिद्धमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनुः १।१ १५ यत्समया ० लक्षणेन ३।१ १३ विभाषा १।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

अनुर् यत्समया २।१।१५

समया समीपम्। अनुर्यस्य समीपवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः। अनुः इति किम्? वनं समया। यत्समया इति किम्? वृक्षमनु विद्योतते विद्युत्। अव्ययं विभक्तिसमीप २।१।६ इत्येव सिद्धे पुनर्वचनम् विभाषार्थम्।

बाल-मनोरमा

अनुर्यत्समया ६६१, २।१।१४

अनुर्यत्समया। लक्षणेनेत्यनुवत्र्तते। "य"दिति समयायोगे "अभितःपरितः" इति द्वितीयान्तम्। सामान्ये नपुंसकम्। तदाह--पदार्थमिति। अनुवनमिति। अत्र वनशब्दः वनसमीपदेशे लाक्षणिकः। वनसमीपस्य लक्षणत्वं वस्तुसदेव निमित्तम्। तदाह--वनस्य समीपं गत इत्यर्थ इति। वस्तुतो लक्षणीभूतस्य वनस्य समीपंगत इति यावत्। "अव्ययं विभक्ती"त्यादिना सिद्धे विभाषार्थमिदं सूत्रम्। ततश्च "वनस्यानु" इति लौकिकविग्रहवाक्यमुदाहार्यम्। नात्र कर्मप्रवचनीयसंज्ञा शङ्क्या, वस्तुसत एवात्र लक्षणत्वस्य निमित्तत्वाश्रयणात्। लक्षणत्वस्य ज्ञातस्य निमित्तत्वे तु "वनमनु" इत्येववाक्यमुदाहार्यम्।

तत्त्व-बोधिनी

अनुर्यत्समया ५८५, २।१।१४

अनुर्यत्,। यदिसि समयायोगे द्वितीयेति ध्वनयति-यं पदार्थमिति। यस्य पदार्थस्य समीपमित्यर्थः। लक्षणेनेत्यनुवर्तत

इत्याह--लक्षणभूतेनेति। चिह्नवाचिनेत्यर्थः। "अव्यय विभक्ती" त्यनेन सिद्धे विभाषार्थं सूत्रम्। तेन पक्षे "वनस्यानु"इत्युदाहार्यमिति मनोरमायां स्थितम्। अत्र वदन्ति--वनस्येति षष्ठीह दुर्लभा, कर्मप्रवचनीययुक्ते द्वितीयाया दुर्वारत्वात्, तत्सामर्थ्यात्समया लङ्कामितिवत्समासबाधे प्रसक्ते अस्य विध्यर्थत्वात्। न चायमनुः सामीप्यमात्रद्योतको, न लक्ष्यलक्षमभावस्येति वाच्यम्। लक्षणेनेत्यवृत्तिवैयथ्र्यात्। न चैवमपि लक्षणमात्रद्योतकत्वं नास्तीति वाच्यम्। "लक्षणेत्थ"मित्यत्र मात्रपदाऽभावात्। अग्निमभि, अ()ग्न प्रतीति पूर्वसूत्रस्थोदाहरणा[प्रत्युदाहरण]वाक्यविरोधाच्च। अतोऽत्र पक्षे "वनमनु"इत्युदाहार्यम्। "वनस्य समीपं गत" इति मूलस्थं विवरणवाक्यं तु "लक्षण भूतस्य वनस्य समीपं गत" इति व्याख्येयमिति। अन्विति किम्()। ग्रामं समया। यत्समयेति किम्()। वृक्षमनुविद्योतते विद्युत्। लक्षणेन किम्()। अनुव[च]नम्। उपकृष्णमितिवदत्र नित्यमव्ययीभावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यस्य ६।१ च ० आयामः १।१ अनुः १।१ १४ लक्षणेन ३।१ १३ विभाषा १।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

यस्य च आयामः २।१।१६

लक्षनेन इति वर्तते। आयामो दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी। अनुयमौनं मथुरा। यमुनायामेन मथुरायामो लक्ष्यते। आयामः इति किम्? वृक्षमनु विध्योतते विद्युत्।

न्यासः

यस्य चायामः।, २।१।१५

अत्राप्युपचारेणायामवाचित्वादनुरेवायामशब्दनोक्तः। "अनुगङ्गं वाराणसी" इति। यद्यपि गङ्गावाराणस्यावुभे अप्यायमवत्यौ, तथाप्यायामवत्तया गङ्गायाः प्रसिद्धत्वाद्? गङ्गैवात्र लक्षणम्, न वाराणसी। प्रसिद्धं हि लक्षणं भवति, नाप्रसिद्धम्। तस्माद्ग्ङ्गयैवात्र समासो भवति, न वाराणस्या। "यमुनायामेन गथुरायामः लक्ष्यते" इति। यमुनया तद्वत्या लक्षणभूतयेति वेदितव्यम्। यस्माद्यस्यायामवाच्यनुशब्दस्तेन लक्षणभूतेन सुबन्तेन समस्यते। युमनायाश्चायामवाच्यनुशब्दः, न यमुनायामस्य। न ह्यायामस्यापर आयामोऽस्ति, तस्माद्यमुनायामेति हेताविवयं तृतीया। यमुनायामेन हेतुना तद्वत्या यमुनया लक्षणयभूतया करणभावमापन्नया वा मथुरायामो लक्ष्यत इत्ययमर्थो वेदितव्यः॥

बाल-मनोरमा

यस्य चायामः ६६२, २।१।१५

यस्य चायामः। लक्षणेनेत्यनुवर्तते। अनुरित्यनुवर्त्य आवर्त्य तृतीयया विपरिणम्यते। तत्र एकं लक्षणेनेत्यत्र संबध्यते। द्वितीयं तु अनुनेत्येतत्--"यस्य चायामः" इत्यनन्तरं संबध्यते। द्योत्यत इति शेषः। आयामो दैघ्र्यम्। तदाह-यस्य दैघ्र्यमिति। यद्दैघ्र्यसदृशं दैघ्र्यमित्यर्थः। समस्यते इति। "सोऽव्ययीभाव" इत्यपि बोध्यम्। अनुगङ्गमिति-समासः। लौकिकविग्रहं दर्शयति-गङ्गाया अन्विति। इहापि लक्षणत्वं वस्तुसदेव निमित्तं न त्वनुद्योत्यम्। अतो न कर्मप्रवचनीयत्वम्। द्योत्यत्वेनान्वये तु गङ्गामन्विति युक्तम्। अनुगङ्गमित्यत्र गङ्गाशब्देन गङ्गादैघ्र्यसदृशं दैघ्र्यं

लक्ष्यते। तदेवानुद्योत्यम्। तदाह--गङ्गा-दैघ्र्येति।

तत्त्व-बोधिनी

यस्य चायामः ५८७, २।१।१५

यस्य चा। इहानुरित्यनुवर्त्त्य आवर्त्त्यैकं तृतीयान्तत्वेन विपरिणमय्य व्याचष्टे--अनुनेति। लक्षणभूतेनेति। लक्षणेनेत्यनुवर्तत इति भावः। अनुगङ्गमिति। इहाऽऽयामोपलक्षणत्वं चानुना द्योत्यते, लक्ष्यं तु समासार्थः। अतएव वाराणस्याः सामानाधिकरण्यम्। एवं स्थिते फलितमाह--गङ्गादैध्र्येति। वाराणसीति। वरं च तदनश्च वरानः=श्रेष्ठोदकम्। "अनः क्लीबं जले शोके मातृस्यन्दनयोद्र्वयोः" इति रुद्रभसौ। तस्याऽदूरे भवा। "अदूरभवश्च" इत्यण्। आदिवृद्धिः। "पूर्वपदात्संज्ञायाम्िति णत्वम्। गङ्गाया अन्विति। समासाऽभावपक्षे प्रागुक्तरीत्या गङ्गामन्वित्युदाहार्यमित्याहुः। (५८६) तिष्ठद्गुप्रभृतीनि च।२।१।१७।

तिष्ठद्गुप्रभृतीनि च। चकार एवकारार्थेष। तेनैषां वृत्यन्तरं न भवति। परमतिष्ठद्गु इत्यादि न भवतीत्यर्थः। तिष्ठद्गु इति। "गोस्त्रियो"रिति ह्यस्वः। प्रथमासमानाधिकरणे शत्रादेशस्याऽसंभवादाह--इह शत्रादेश इति। इत्यादीति। आदिशब्देन--खलेयवम्। खलेबुसम्। सप्तम्या अलुक्। लूनयवम्। लूयमानयवमित्यादि ग्राह्रम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तिष्ठद्गुप्रभृतीनि १।३ च ० अव्ययीभावः १।१ ५ समासः १।१ ३

काशिका-वृत्तिः

तिष्ठद्गुप्रभृतीनि च २।१।१७

तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञानि भवन्ति। तिष्ठद्गु कालविशेषः। तिष्ठन्ति गावो यस्मिन् काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि प्रथमानतानि विभक्त्यनतरेन्ण न एव सम्बध्यन्ते ऽन्यपदार्थे च काले वर्तन्ते। चकारो ऽवधारणार्थः। अपरः समासो न भवति, परमतिष्ठद्गु इति। तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेबुसम्। खलेयवम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणायवम्। संहृतबुसम्। संह्रियमाणाबुसम्। एते कालशब्दाः। समभूमि। समपदाति। सुषमम्। विषमम्। निष्षमम्। दुष्षमम्। अपरसमम्। आयतीसमम् ाःप्राह्णम्। प्ररथम्। प्रमऋगम्। प्रदक्षिणम्। अपरदक्षिणम्। संप्रति। असंप्रति। पापसमम्। पुण्यसमम्। इच् कर्मव्यतिहारे ५।४।१२७ दण्डादण्डि। मुसलामुसलि।

न्यासः

तिष्ठद्गुप्रभृतीनि च , २।१।१६

तिष्ठद्गुप्रभृतीनां गणपाठादेव कृतसाधुत्वानामिह प्रकरणे सङ्कीर्तनमव्ययीभावसंज्ञार्थम्; न तु सुबन्तेन समासार्थम्। अत एवाह-- "समुदाया एव निपात्यन्ते" इति। तथाभूतानां पाठ एवैषां निपातनम्। "अव्ययीभावसंज्ञकानि भवन्ति" इति। अनेन संज्ञामातर्#ं विधीयते, न त्वेषां सुबन्तेन समास इति दर्शयति। "तिष्ठद्गु, बहद्गु"इति। पूर्वपदस्य शत्रादेशो निपात्यते। "गोस्तरियोरुपसर्जनस्य" १।२।४८ इति ह्यस्वः। तिष्ठन्ति गावो यस्मिन्न काले स तिष्ठद्गु कालः। वहन्ति गावो

यस्मिन् काले स बहद्गु कालः। "चकारोऽवधारणार्थः" असति तस्मिन् परमतिष्ठद्ग्विति "सन्महत्" २।१।६० इत्यादिना परमशब्देन समासः स्यात्। अवधारणार्थे तु तस्मिन् तिष्ठद्गुप्रभृतीनीत्येवम्भूतान्येवावतिष्ठते। "आयतीगवम्" इति। पुंवद्भावाभावः समासान्तश्च भवति। आयत्यो गवो यस्मिन् काले स आयतीगवम्। "खलेयवम्; खलेबुसम्" इति। सप्तम्या अलग् निपात्यते। "लूयमानयवम्" इति। शानज् निपात्यते। तथा "पूयमानयवम्" इत्यत्रापि। "एते कालशब्दाः" इति। तिष्ठद्गुप्रभृतयः संस्क्रियमाणबुसपर्यन्ताः। "समभूमि, समपदाति" इति। समत्वं भूमेः, समत्वं पदातेरिति पूर्वपदार्थप्राधान्येऽव्ययीभावः। उत्तरपदार्थप्राधान्यविवक्षायान्तु समपदातिः समभूमिरिति विशेषणसमासस्तत्पुरुषो भवति। अन्ये मकारान्तं समशब्दं पठन्ति-- समम्भूमि, समम्पदाति" इति। " सुषमम्, विषमम्, दुःषमम्परसमम्" इति। समशब्देनेति। सुषमादयश्चैते। सुषमादयश्चैते पूर्वपदार्थप्राधान्ये समासाः। अत्र शोभनत्वं समस्येत्येवमादि वाक्यं द्रष्टव्यम्। उत्तरपदार्थप्राधान्ये तु प्रादिसमासो विशेषणसमासश्च यथथायोगं कत्र्तव्यः। "आयतीसमम्" इति। समाशब्दः संवत्सरवाची, तेन समासः- आयती समं आयतीसमम्। एवं पापा समा पापसमम्। पुण्या समा पुष्यसमम्। अन्ये तु तृतीयासमासं वर्णयन्ति-- आयत्या समं आयतीसममिति; एवमन्यत्रापि। प्रगतत्वमह्नः प्राह्णम्। अयमपि पूर्वपदार्थप्रधानः। उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव भवति-- प्राह्णे कल्याणनामानावेतौ तिष्यपुनर्वसू इति। एवं "प्ररथम्" "प्रदक्षिणम्" "प्रमृगम्" , "अपरदक्षिणम्" , "सम्प्रति", "असम्प्रति"। "इच् कर्मव्यतीहारे" ५।४।१२७ इतीचोऽव्ययीभावत्वे प्रयोजनमव्ययसंज्ञा, नपुंसकत्वञ्च। दण्डैश्च दण्डैश्च प्रह्त्येदं युद्धं वृतिमित#इ। "तत्र तेनेदमिति सरूपे"(२।२।क२७) इति समासः, "इच् कर्मव्यतीहारे" ५।४।१२७ इतीच् समासान्तः-- "अन्येषामपि दृश्यते" ६।३।१३६ इति दीर्घः, "दण्डादण्डि" इति॥

बाल-मनोरमा

तिष्ठद्गुप्रभृतीनि च ६६३, २।१।१६

तिष्ठद्गुप्रभृतीनि च। एतानीति शब्दरूपाणीत्यर्थः। तिष्ठन्ति गाव इति। फलितार्थकथनम्। तिष्ठन्त्यो गावो यस्मिन् काले स तिष्ठद्गुः इत्येव वक्तव्यम्, "सुप्सुपः" इत्यनुवृत्तेः। दोहनकाल इति। तदा गवां शयनोपवेशनयोरभावादिति भावः। आयतीगवमिति। आयत्यो गावो यस्मिन् काले इति विग्रहः। इहेति। उदाहरणद्वये इत्यर्थः। शत्रादेश इति। "तिष्ठन्त्यो गाव" इति "आयत्यो गाव" इति च प्रथमासमानाधिकरणत्वात् "लटश्शतृशानचौ" इत्यस्याऽप्राप्तौ तन्निपातनमिति भावः। पुंवद्भावेति। तिष्ठन्तीशब्दस्येव आयतीशब्दस्यापि "स्त्रियाः पुंवत्" इति पुंवत्त्वस्य प्राप्तौ तदभावो निपात्यते इति भावः। समासान्तश्चेति। आयतीगोशब्दस्य टच् समासान्तो निपात्यते, तत्पुरुष एव गोशब्दस्य टज्विधेरिति भावः। "समासान्तश्चे"ति चकारादव्ययीभावश्च निपात्यते इति ज्ञेयम्। तथा च तिष्ठद्गोशब्दस्य नपुंसकह्रस्वत्वम्। अव्ययत्वात् सुपो लुक्। औगतीगवशब्दात्तु "नाव्ययीभावात्" इत्यम्भाव इत्यादि फलति। इत्यादीति। खलेयवं खलेबुसमिति सप्तम्या अलुगिति -आदिपदग्राह्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पारे मध्ये षष्ठ्या ३।१ वा ० विभाषा १।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

पारे मध्ये षष्ठ्या वा २।१।१८

षष्थीसमासे प्राप्ते तदपवादो ऽव्ययीभव आरभ्यते। वावचनात् षष्ठीसमासो ऽपि पक्षे ऽभ्यनुज्ञायते। पारंध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति। तत्सन्नियोगेन च अनयोरेकारान्तत्वं निपात्यते। पारं गङ्गायाः पारेगङ्हम्। मध्यं गङ्गायाः मध्येगङ्गम्। षष्ठीसमासपक्षे गङ्गापारम्। गङ्गामध्यम्। महाविभाषया वाक्यविकल्पः क्रियते।

न्यासः

पारे मध्ये षष्ठ�आ वा। , २।१।१७

ननु च प्रकृतैव महाविभाषा तयैव विकल्पो भविष्यति, त()त्क वाग्रहणेनेत्याह-- "वावचनात्" इत्यादि। गतार्थम्। यदि तर्हि वावचनात् पक्षे षष्ठीसमासो भवति, माहविभाषया किं क्रियत इत्याह-- "महाविभाषया" इत्यादि॥

बाल-मनोरमा

पारे मध्ये षष्ठ�आ वा ६६४, २।१।१७

पारे मध्ये। पारे मध्ये #इति न सप्तम्यन्तयोग्रहणं, किन्तु पारमध्यशब्दयोरेवेत्याह--पारमद्यशब्दाविति। समस्येते इति। अव्ययीभावसंज्ञौ चेत्यपि बोध्यम्। ननु पारमध्यशब्दयोरकारान्तयोग्रहणे कथमेकारनिर्देश इत्यत आह--एदन्तत्वं चेति। ननु विभाषेत्यधिकारादेव सिद्धे "वा"ग्रहणं किमर्थमित्यत आह--पक्षे षष्ठीतत्पुरुष इति वाग्रहणाभावेऽयमव्ययीभावसमासो विशेषविहितत्वात् षष्ठीसमासं बाधेत, तदबाधार्थं वाग्रहणमिति भावः।

पारेगङ्गादानयेति। गङ्गायाः पारादिति विग्रहे अव्ययीभावसमासे सति सुब्लुकि पारशब्दस्य पूर्वनिपाते निपातनादेत्वे नपुंसकह्रस्वत्वे पारेगङ्गशब्दात्समासात्पुनः पञ्चम्युत्पत्तिः। "अव्ययादाप्" इति न लुक्, अदन्ततया "नाव्ययीभावात्" इति निषेधात्। "अपञ्चम्या" इति पर्युदासादम्भावश्च नेति भावः। गङ्गापारादिति -षष्ठीसमासपक्षे ज्ञेयम्। मद्येगङ्गादिति। पारेगङ्गादितिवद्रूपम्। गङ्गामध्यादिति -षष्ठीसमासेज्ञेयम्। "पारे मध्ये इति सप्तम्यन्ते षष्ठ()आ समस्येते" इति व्याख्याने तु गङ्गायाः पारे मध्ये इति विग्रहे संमासे सति "तत्पुरुषे कृति बहुलम्" इति बहुलग्रहणात् सप्तम्योरलुकि नपुंसकह्रस्वत्वे समासात्पुनरुत्वपन्नायाः सप्तम्या अम्भावे पारेमध्यं पारेगङ्गमिति सिद्धे रेकारनिर्देशो व्यर्थः स्यात्। अतो यत्र सप्तम्यर्थो न संभवति तदर्थमेकारनिपातनमिति भाष्ये स्पष्टम्। एतत्सूचनायैव पञ्चम्यन्तोदाहरणमिति बोध्यम्। ननु यदि वाग्रहणमिह पक्षे षष्ठीसमासप्राप्त्यर्थमेव स्यात्, तर्हि गङ्गायाः पारात् गङ्गाया मध्यादिति वाक्यं न स्यादित्यत आह-महाविभाषयेति। विभाषेत्यधिकृता महाविभाषा। सर्वेषु समासविधिषु प्रायेण तस्यानुवृत्तेर्महत्त्वं बोध्यम्। नन्वव्ययीभावसमासस्य षष्ठीसमासापवादत्वेऽपि तस्य महाविभाषया वैकल्पिकत्वात्तदभावपक्षे उत्सर्गतः षष्ठीतत्पुरुषः प्रवर्तत एव। तस्यापि षष्ठीसमासस्य विभाषाधिकारस्थत्वेन वैकल्पिकत्वात्तदभावपक्षे वाक्यमपि सिध्यत्येव। तस्मादिह सूत्रे वाग्रहणं व्यर्थमेवेति चेत्, उच्यते, "यत्र उत्सर्गापवादौ महाविभाषया विकल्पितौ तत्रापवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते " इति ज्ञापनार्थमिह वाग्रहणम्। तेन पूर्वं कायस्येत्यत्र #एकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति। दक्षस्यापत्यं दाक्षिरित्यत्र अत इञा मुक्ते "तस्यापत्य"मित्यण् न भवति। किं तु वाक्यमेवेति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

पारे मध्ये षष्ठ�आ वा ५८८, २।१।१७

पारे मध्ये। निपात्यत इति। यत्र सप्तम्यर्थो न संभवति तदर्थमेकारान्तत्वनिपातनम्। सप्तम्यर्थसंभवे तु "तत्पुरुषे कृति बहुल"मिति बहुलग्रहणादलुकाऽपि सिद्धेः, अतोऽत्र सप्तम्यर्थाऽभावसूचनाय पञ्चम्यन्तमुदाहरति--पारेगङ्गादित्यादि।

महाविभाषयेति। नन्वपवादेऽव्ययीभावे महाविभाषया विकल्पिते पक्षे तदुत्सर्गः षष्ठीतत्पुरुषः प्रवर्तते, तस्यापि विभाषाधिकारस्थत्वेन वैकल्पिकत्वात्पक्षे वाक्यमपि सिध्यतीति सूत्रे वाग्रहणं व्यर्थमेवेति चेत्। अत्राहुः--महाविभाषया एकार्थीभावस्य पाक्षिकत्वे विवक्षिते यदा एकार्थीभावस्तदा षष्ठीसमासं बाधित्वा नित्यमव्ययीभावे प्राप्ते पक्षे षष्ठीसमाससमावेशार्थमिह वाग्रहणम्। "व्यपेक्षासामथ्र्यमेके" इति पक्षे तु वृत्तावपि व्यपेक्षालक्षणमेव सामथ्र्यामिति वाक्यस्य नित्यं बाधे प्रसक्ते तया वृत्तिर्विकल्प्यते। तथा चाऽव्ययीभावे विकल्पिते पूर्वोक्तरीत्या पक्षे तत्पुरुषस्तस्यापि वैकल्पिकत्वाद्वाक्यमपि सिद्धत्येव, तथापि "यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते" इति ज्ञापनायेदम्। तेन पूर्वं कायस्येत्येकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति, दक्षस्यापत्यं दाक्षिरित्यत्र अत इञा मुक्ते अण् न भवति, किंतूभयत्र वाक्यमेवेति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संख्या १।१ १९ वंश्येन ३।१ विभाषा १।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

सङ्ख्या वंश्येन २।१।१९

विद्यया जन्मना वा प्राणिनाम् एकलक्षणसन्तानो वंशः इत्यभिधीयते। तत्र भवो वंश्यः। तद्वाचिना सुबन्तेन सह सङ्ख्या समस्यते, अव्ययीभावश्च समासो भवति। द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरनस्य। त्रिमुनि व्याकरणस्य। यदा तु विद्यय तद्वताम् अभेदविवक्षा तदा सामानाधिकरण्यं भवति। द्विमुनि व्यकरणम्। त्रिमुनि व्याकरणम् इति। जन्मना एकविंशतिभारद्वाजम्।

न्यासः

संख्या वंश्येन। , २।१।१८

"एकलक्षण" इति। एकस्वभावः। सन्तानः = प्रबन्धः। सन्तानिनामेकलक्षणत्वात्, सन्तानोऽप्येकलक्षमो भवति। ततर् विद्यैकलक्षणः-- वैयाकरणवंशः, उपाध्यायवंश इति। जन्मना-- ब्राआह्मणवंशः, क्षत्रियवंश इति। "तत्र भवो वंश्यः" इति। दिगादित्वाद्यत्। "द्वौ मुनी" इति। पाणिनिकात्यायनौ। "व्याकरणस्य" इति। सम्बन्धलक्षमा षष्ठी। "त्रिमुनिव्याकरणस्य" इति। पूर्वौ द्वौ, भाष्यकारस्तृतीयः। "विद्यया" इति। व्याकरणाख्यया। "तद्वताम्" इति। पाणिनिप्रभृतनीनाम्। "अभेदविवक्षा" इति। यौ तौ द्वौ मुनी तावेव व्याकरणमित्यतिशयेन विद्यया योगं तयोराख्यातुमभेदविवक्षा यदा क्रियते तदा सामानाधिकरण्यं भवति-- द्विमुनि व्याकरणमिति॥

बाल-मनोरमा

संख्या वंश्येन ६६५, २।१।१८

संख्या वंश्येन। वंशो द्विधेति। वंशः-सन्ततिः। "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः" इत्यमरः। विद्यया जन्मनेति। तत्र जन्मनवांशः पुत्रादिपरम्परेति प्रसिद्धमेव। विद्यया तु वंशो गुरुपरम्परा, "यस्माद्धर्मानाचिनोति स आचार्यः। तस्मै न द्रुह्येत्कदाचन। स हि विद्यातस्तं जयति तच्छ्रेष्ठं जन्म। शरीरमेष मातापितरौ जनयतः" इत्याद्यापस्तम्बस्मरणात्। तत्र भवो वंश्य इति। दिगादित्वाद्यत्। वा समस्यते इति। "सोऽव्ययीभाव" इत्यपि

बोध्यम्। द्वौ मुनी वंश्याविति। विग्रहोऽयम्। मुनिशब्दो विद्यावंश्यवाचीति सूचनाय वंश्यावित्युक्तम्। द्विमुनि व्याकरणस्येति। द्वौ च तौ मुनी चेति विग्रहे "विशेषणं विशेष्येण बहुल"मिति कर्मधारयं बाधित्वाऽव्ययीभावः। अव्ययत्वात्सुब्लुक्। व्याकरमविद्यायाः प्रवर्तकौ द्वौ मुनी पाणिनिकात्यायनावित्यर्थः। त्रिमुनीति। त्रयो मुनयः पाणिनिकात्यायनपतञ्जलय इति विग्रहः। नन्वेवं "त्रिमुनि व्याकरण"मिति सामानाधिकरण्यानुपपत्तिरित्यत आह--विद्यातद्वतामिति। यद्यपि बहुव्रीहिणाप्येतत्सिद्धं तथापि विभक्त्यन्तरेषु रूपभेद इत्याहुः। अथ जन्मना वंश्यमुदाहरति--एकविशतिभ#आरद्वाजमिति एकविंशतिर्भरद्वाजा इति कर्मधारयं बाधित्वाऽव्ययीभावः। तत्र विग्रहवाक्ये भरद्वाजशब्दाद्विदादित्वादञ्। "यञञोश्चे"ति लुक्। समासे तु "उपकादिभ्योऽन्यतरस्यामद्वन्द्वे" इति लुगभावः। "तृतीयासप्तम्योर्बहुल"मिति सूत्रे "एकविंशतिभारद्वाज"मिति प्रयोगदर्शनेन उपकादिषु भारद्वाजशब्दस्य पाठानुमानात्।

तत्त्व-बोधिनी
संख्या वंश्येन ५८९, २।१।१८

संख्या वंश्येन। वंशः संतानस्तत्र भवो वंश्यः। दिगादित्वाद्यत्। द्विमुनीति। पाणिनिकात्यायनौ। त्रिमुनीति। तौ द्वौ, पातञ्जलिश्चेति त्रयो वंश्याः। व्याकरणस्येति संबन्धे षष्ठी। स्वपदार्थप्राधान्य एवायं समासः। यदा त्वन्यपदार्थप्राधान्यविवक्षा-त्रयो मुनयो वंश्या यस्येति, तदा बहुव्रीहिरेवेत्याहुः। त्रिमुनि व्याकरणमिति। यद्यप्येतद्बहुव्रीहिणाऽप्युपपन्नं, तथापि विभक्त्यन्तरेषु रुपेऽपि विशेषोऽस्त्येवेति भावः। वस्तुतस्तु "लक्षणेनाभिप्रती--"इति सूत्रे आभिमुख्यग्रहणाद्बहुव्रीहिविषयेऽप्यठ()यीभावो भवतीतिद्विमुनि व्याकरणमित्यादि सिद्धमित्यवोचाम। जन्मनोदाहरति---एकविंशति भारद्वाजमिति। एकविंशतिर्भरद्वाजा वंश्या इति विग्रहः। ननु भरद्वाजाद्विदाद्यञो "यञञोश्चे"ति लुक् प्राप्नोति। न च वर्तिपदानां स्वार्थेपसर्जनैकत्वविशिष्टार्थान्तरोपसङ्कमाल्लुगभाव इति कैयटोक्तमादर्तव्यम्। वृत्तिप्रवेशात्प्रागेव प्राप्नुवतोऽन्तरङ्गस्य लुको दुर्वारत्वात्। अन्यथा गर्गाणां कुलं गर्गकुलमित्यपि न स्यात्। अत्राहुः--भाष्यकारप्रयोगादेव लुगभावोऽत्र बोध्य इति। एतच्च "तृतीयासप्तम्यो"रिति सूत्रे शब्दकौस्तुभे स्पष्टम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नदीभिः ३।१ २० च ० संख्या १।१ १८ विभाषा १।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
नदीभिश् च २।१।२०

सङ्ख्या इत्यनुवर्तते। नदीवचनैः शब्दैः सह सङ्ख्या समस्यते, अव्ययीभावश्च समासो भवति। समाहारे च अयम् इष्यते। सप्तगङ्गम्। द्वियमुनम्। पञ्चनदम्। सप्तगोदावरम्।
लघु-सिद्धान्त-कौमुदी
नदीभिश्च ९१८, २।१।१९

नदीभिः सह संख्या समस्यते। (समाहारे चायमिष्यते)। पञ्चगङ्गम्। द्वियमुनम्॥

न्यासः
नदीभिश्च। , २।१।१९

चकारेण "संख्या" इत्यनुकृष्यते। बहुवचननिर्देशेनार्थस्येदं ग्रहणम्, न स्वरूपस्य, नापि संज्ञायाः, तेन सर्वैर्नदीवाचिभिः समासो विज्ञायत इत्याह-- "नदीवचनैः" इत्यादि। "समाहारे चायमिष्यते" इति। चकारोऽवधारणे -- समाहार एव नान्यत्रेति। यद्येवम्, समाहारग्रहणमं कत्र्तव्यम्? न कत्र्तव्यम्, यत एव हेतोरक्षादीनां परिणा सह कितवव्यवहार एव समासो भवति, ततएव हेतोरयमपि समाहार एव भविष्यति- सप्त गङ्गाः समाहृताः सप्तगग्ङमिति। पूर्ववद् ह्रस्वः। अन्यपदार्थे तु न भवति-- द्वीरावतीको देश इति। "पञ्चनवम्, सप्तगोदावरम्िति। कृष्णोदकपाण्()डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः। गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि॥ इति वचनादच् समासान्तः॥
बाल-मनोरमा
नदीभिश्च ६६६, २।१।१९

नदीभिश्च। प्राग्वदिति। नदीभिः संख्या समस्यते सोऽव्ययीभाव इत्यर्थः। समाहारे चेति--वार्त्तिकम्। चकार एवार्थे। भाष्ये चकारविहीनस्यैव पाठात्। सप्तगङ्गमिति। सप्तानां गङ्गानां समाहार इति विग्रहे "तद्धितार्थोत्तरपदसमाहारे चे"ति द्विगुसमासं बाधित्वाऽव्ययीभावसमासः। द्वियमुनमिति। द्वयोर्यमुनयो समाहार इति विग्रहः। अत्र नदीशब्देन नदीशब्दविशेषस्य, नदीवाचकानां च ग्रहणमिति संख्यासंज्ञासूत्रे भाष्ये स्पष्टम्। तेन पञ्चनदं सप्तगोदावरमित्यादि सिध्यति।

तत्त्व-बोधिनी
नदीभिश्च ५९०, २।१।१९

नदीभिश्च। स्वरूपस्य संज्ञायाश्च नेह ग्रहणं, बहुवचननिर्देशात्, किं त्वर्थस्य। नच तस्य समासः संभवति, अतस्तद्वाचिनामयं समासः, ते च न केवलं विशेषशब्दा एव किंतु सामान्यशब्दोऽपि। तेन पञ्चनदं सप्तगोदावरमिति सिद्धम्। "गोदावर्याश्च नद्याश्चे"ति वक्ष्यमाणेन समासान्तोऽच्। चकारेण सङ्ख्येत्यनुकृष्यत इत्याह---संख्येति। स्यादेतत्--पुरस्तादपवादन्यायेन "पूर्वकालैके"त्यस्यैवेदं बाधकं स्यात्, ततश्चैवनदीत्यत्राव्ययोभावे तन्निबन्धनस्य "नदीपौर्णमास्ये"ति टचः प्रसङ्गः, समाहारे तु परत्वाद्द्विगुरेव स्यादित्यत आह--।

समाहारे चायमिष्यते। समाहारे चायमिति। एवकारार्थश्चाकारः। एवं च द्विगोरपवादोऽमव्ययीभाव इति फलितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अन्यपदार्थे ७।१ च ० संज्ञायाम् ७।१ नदीभिः ३।१ १९ विभाषा १।१ ११ अव्ययीभावः १।१ ५ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
अन्यपदर्थे च संज्ञायाम् २।१।२१

सङ्ख्या इति निवृत्तम्। नदीग्रहनम् अनुवर्तते। नदीभिः सह सुबन्तम् अन्यपदार्थे वर्तमानं संज्ञायां विष्ये समस्यते,

अव्ययीभावश्च समासो भवति। विभाषा ऽधिकारे ऽपि नित्यसमास एव अयम्। न हि वाक्येन संज्ञा गम्यते। उन्मत्तगङ्गम् नाम देशः। लोहितगङ्गम्। शनैर्गङ्गम्। कृष्णगङ्गम्। अन्यपदार्थे इति किम्? कृष्णवेण्णा। संज्ञायाम् इति किम्? शीघ्रगङ्गो देशः।

न्यासः

अन्यपदार्थे च संज्ञायाम्। , २।१।२०

"कृष्णवेण्णा" इति। कृष्णा चासौ वेण्णा चेति विशेषणसमासः। "शीघ्रगङ्गः" इति। बहुव्रीहिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तत्पुरुषः १।१ २।२।२३ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

तत्पुरुषः २।१।२२

तत्पुरुषः इति संज्ञा ऽधिक्रियते प्राग् बहुव्रीहेः। यानित ऊर्ध्वम् अनुक्रमिष्यामः, तत्पुरुषसंज्ञास्ते वेदितव्याः। वक्ष्यति, द्वितीय श्रितातीतपतित २।१।२३। इति। कष्टश्रितः। पूर्वाचार्यसंज्ञा चेयं महती, तदङ्गीकरणौपाधेरपि तदीयस्य परिग्रहार्थम्, उत्तरपदार्थप्रधानस् तत्पुरुषः इति। तत्पुरुषप्रदेशाः तत्पुरुषे कृति बहुलम् ३।३।१४। इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तत्पुरुषः ९२५, २।१।२१

अधिकारोऽयं प्राग्बहुव्रीहेः॥

न्यासः

तत्पुरुषः। , २।१।२१

"कष्टश्रितः" इति। तत्पुरुषसंज्ञायां सत्यां "तत्पुरुषे तुल्यार्थ"६।२।२ इत्यादिना पूर्वपदप्रकृतिस्वरत्वम्। अथ किमर्थमियं महती संज्ञा विधीयत इत्याह-- "पूर्वाचार्यसंज्ञा चेयम्" इति। तदङ्गीकरणं किमर्थमित्याह-- "तदङ्गीकरणम्" इत्यादि। उपाधिः = विशेषणम्। कः पुनरसौ तदीय उपाधिरित्याह-- उत्तरपदार्थप्रधानस्तत्पुरुषः" इति॥

बाल-मनोरमा

तत्पुरुषः ६७६, २।१।२१

तत्पुरुषः। प्रागिति। "शेषो बहुव्रीहि"रित्यनः प्रागित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्विगुः १।१ च ० तत्पुरुषः १।१ २१

काशिका-वृत्तिः

द्विगुश् च २।१।२३

द्विगुश्च समासः तत्पुरुशसज्ज्ञो भवति। द्विगोस् तत्पुरुशत्वे समासान्ताः प्रयोजनम्। पञ्चराजम्। दशराजम्। द्व्यहः। त्र्यहः। पङ्चगवम्। दशगवम्।

लघु-सिद्धान्त-कौमुदी

द्विगुश्च ९२६, २।१।२२

द्विगुरपि तत्पुरुषसंज्ञकः स्यात्॥

न्यासः

द्विगुश्च। , २।१।२२

"समासान्ताः प्रयोजनम्" इति। "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" ५।४।८६ इत्यतस्तत्पुरुष इत्यनुवत्र्तमाने "राजाहःसखिभ्यष्टच्" ५।४।९१ "गोरतद्धितलुकि" ५।४।९२ इति च द्विगोरपि यथा स्यात्। "पञ्चराजी" इति। पञ्चानां राज्ञां समाहार इति "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति समासः। "संख्यापूर्वो द्विगुः" २।१।५१ इति द्विगुसंज्ञा, टच्, "नस्तद्धिते" ६।४।१४४ इति टिलोपः "अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते" (वा।१५६) इति स्त्रीलिङ्गता, "द्विगोः" ४।१।२१ इति ङीप्। "द्वह्नहः, त्र्यहः" इति। "अह्नष्टखोरेव" ६।४।१४५ इति टिलोप), "रात्रह्नाहाः पुंसि"२।४।२९ इति पुंस्त्वम्। "पञ्चगवम्" इति। "स नपुंसकम्" २।४।१७ इति नपुंसकत्वम्। सत्यप्यकारान्तत्वे स्त्रीत्वं न भवति; "पात्रादीनां प्रतिषेधो वक्तव्यः" (वा।१।५।९) इति वचनात्॥

बाल-मनोरमा

द्विगुश्च ६७७, २।१।२२

द्विगुश्च। द्विगुरपीति। "तद्धितार्थोत्तरपदसमाहारे च" इति वक्ष्यमाणसमासस्य "संख्यापूर्वो द्विगु"रिति द्विगुसंज्ञा विधास्यते। स द्विगुसमासोऽपि तत्पुरुषसंज्ञक इति यावत्। एतत्सूत्राऽभावे एकसंज्ञाधिकाराद्द्विगुसंज्ञया तत्पुरुषसंज्ञा बाध्येतेति भावः। इदमिति। "द्विगुश्चे"त्येतदित्यर्थः। तर्हि द्विगुसंज्ञया तत्पुरुषसंज्ञा बाध्येतेत्यत आह--संख्येति। "संख्यापूर्वोद्विगु"रिति द्विगुसंज्ञाविधायकं सूत्रम्। तत्र चकारः पठनीयः। ततश्च संख्यापूर्वसमासो द्विगुसंज्ञकस्तत्पुरुषसंज्ञकश्च स्यादिति लभ्यते। एवञ्च चकारेण लघुना तत्पुरुषसंज्ञासमुच्चयलाभा"द्द्विगुश्चे"ति गुरुभूतं सूत्रं न कर्तव्यमित्यर्थः। ननु मास्तु द्विगोस्तत्पुरुषत्वमित्यत आह--समासान्तः प्रयोजनमिति। तदुदाह्मत्य दर्शयति - पञ्चराजमिति। पञ्चानां राज्ञां समाहार इति विग्रहे "तद्धितार्थे"ति द्विगुः। तस्य तत्पुरुषत्वाद्राजाहःसखिभ्यष्टजि"ति टच्। "स नपुंसक"मिति नपुंसकत्वम्। "अकारान्तोत्तरपदो द्विगुः स्त्रिया"मिति तु न भवति, समासान्तस्य टचः समुदायावयवत्वेन उत्तरपदावयवत्वाऽभावात्। न च "संख्यापूर्वोद्विगुश्चे"ति पाठे द्विगुतत्पुरुषसंज्ञयोः पर्यायेण प्रवृत्तिः स्यात्, अतः समुच्चयार्थं "द्विगुश्चे"ति पृथक्सूत्रमस्त्विति वाच्यम्, "सङ्ख्यापूर्व" इति, "द्विगु"रिति च योगौ विभज्य पूर्वेण सङ्ख्यापूर्वस्य तत्पुरुषसंज्ञाविधिः, द्विगुरित्यनेन द्विगुसंज्ञाविदिरित्याश्रयणे सति, चकारमन्तरेणापि पर्यायेण प्रवृत्तिसिद्ध्या चकारस्य समुच्चयार्थत्वोपपत्तेः।

तत्त्व-बोधिनी

द्विगुश्च ५९८, २।१।२२

चकारबलेन संज्ञाद्वयसमावेशस्येति। न चैवं द्विगुतत्पुरुषयोः पर्यायता स्यादिति शङ्क्यम्। योगं विभज्य संख्यापूर्स्य तत्पुरुषसंज्ञां विधाय पश्चद्द्विगुसंज्ञाविधाने चकारपठनमन्तरेणापि पर्यायत्वसिद्धेः। नापि द्वौ अन्यौ यस्य "द्य्वन्य" इत्यत्रातिप्रसङ्गः शङ्क्यः, "तद्धितार्थोत्तरपदे"ति सूत्रमनुवर्त्य "तद्धितार्थेत्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्व" इति व्याख्यानात्। द्विगोस्तत्पुरुषत्वे फलमाह---समासान्त इति। टजचावित्यर्थः। अचि तूदाहरणं--"तत्पुरुषत]स्याङ्गुले"रित्यचि व्यङ्गुलमिति बोध्यम्। पञ्चराजमिति। समाहारद्विगौ "राजहःसखिभ्यः"इति टच्। समास स्यैवायमन्तावयव इति उत्तरपदस्याऽनकारान्तत्वात् स्त्रीत्वाऽभावः। "समासार्थोत्त्रपदान्ताः समासान्ता" इति पक्षे तु अकारान्तोत्तरपदत्वेऽपि पात्रादित्वान्नेति बोध्यम्। काशिकायां तु पञ्चराजीत्युदाहृतम्। स क्वाचित्कोऽपपाठ इति हरदत्तः। अत्र केचित्--पात्रादित्वकल्पने मानाऽभावात्पञ्चराजीति काशिकोक्तोदाहरणमपि सम्यगेवेत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्वितीया १।१ २८ श्रितातीत-पतित-गतात्यस्त-प्राप्तापन्नैः ३।३ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

द्विदीया श्रितातीतपतितगतात्यस्तप्राप्ताऽपन्नैः २।१।२४

सुप् स्पा इति वर्तते। तस्य विशेषणम् एतद् द्वितीया। द्वितीयान्तं सुबन्तम् श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। कष्टं श्रितः कष्टश्रितः। नरकश्रितः। अतीत कान्तारम् अतीतः कान्तारातितः। पतित नरकम् पतितः नरकपतितः। गत ग्रामम् गतः ग्रामगतः। अत्यस्त तरङ्गनत्यस्तः तरङ्गात्यस्तः। तुहिनात्यस्तः। प्राप्त सुखं प्राप्तः सुखप्राप्तः। आपन्न सुखम् आपन्नः सुखापन्नः। दुःखापन्नः। श्रितादिषु गमिगाम्यादिनाम् उपसङ्ख्यनम्। ग्रामं गमी ग्रामगमी। ग्रामम् गामी ग्रामागामी। ओद्नं बुभुक्षुः ओदनबुभुक्षुः।

लघु-सिद्धान्त-कौमुदी

द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ९२७, २।१।२३

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः। कृष्णं श्रितः कृष्णश्रित इत्यादि॥

न्यासः

द्वितीया श्रितातीतपतितगत्यास्तप्राप्तापन्नैः। , २।१।२३

"श्रितादिषु" इत्यादि। श्रितादिषु समासकारणत्वेनोपात्तेषु सत्सु गमिगाम्यादीनां समासस्योपसंख्यानं प्रतिपादनं कत्र्तव्यमित्यर्थः। एतैरपि समासः प्रतिपादयितव्यः। तत्रेदं प्रतिपादनम्-"द्वितीया" इति योगविभागः क्रियते, तेन गमिगामिप्रभृतिभिरपि समासो भवति। न चैवं श्रितादिग्रहणनर्थकम्; पूर्वविषयस्यासर्वविषयत्वज्ञापनार्थत्वात्। आदिशब्दः प्रकारवाची। गमिगामिशब्दयोरेकतरोपादानेनैव सिद्धे द्वयोरुपादानमुणादीनामन्येषाञ्च यथा स्यात्; अन्यथा यदि गमिग्रहणमेव क्रियेत तदाऽऽदिशब्दस्य प्रकारवाचित्वात् गमिप्रकाराणामुणादीनामेव ग्रहणं स्यात्। अथ गामिग्रहणमेव क्रियेत, तदा गामिप्रकाराणामुणादीनां स्यात्। तस्माद्द्वयोरपि ग्रहणं कत्र्तव्यम्। "ग्रामं गमी"इति। "गमेरिनि" (द।उ।६।७७) इतीनिप्रत्ययः। स च भविष्यत्काले; "भविष्यति गम्यादयः" ३।३।३ इति वचनात्। "ग्रामं

गमी" इति। "आवश्यकाधमर्ण्ययोः" ३।३।१७० इत्यावश्यमे णिनिः। "अकेनोर्भविषायदाधमर्ण्ययोः" २।३।७० इति षष्ठीप्रतिषेधः। "ओदनं बुभुक्षुः" इति। भुजेः सन्नन्तात् "सनाशंसभिक्ष उः" ३।२।१६८ इत्युप्रत्ययः। क"न लोक " २।३।६९इत्यादिना षष्ठीप्रतिषेधः। कष्टं श्रित इत्यादावप्यनेनैव षष्ठीप्रतिषेधः।

बाल-मनोरमा

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ६७८, २।१।२३

द्वितीया श्रिता। द्वितीयान्तमिति। प्रत्ययग्रहणपरिभाषालभ्यस्तदन्तविधिः। ननु सुपेत्यनुवृत्तं बहुवचनान्ततया विपरिणतं प्रत्ययग्रहणपरिभाषया सुबन्तपरम्। प्रत्ययग्रहणपरिभाषालभ्यस्तदन्तविधिः। ननु सुपेत्यनुवृत्तं बहुवचनान्ततया विपरिणतं प्रत्ययग्रहणपरिभाषया सुबन्तपरम्। प्रत्ययग्रहणपरिभाषया च प्रत्ययग्रहणे प्रकृतिप्रत्ययसमुदायग्रहणं लभ्यते। तथा च "सुबन्तै"रित्यस्य सुप्-तत्प्रकृतिसमुदायैरित्यर्थः पर्यवस्यति। श्रितादिशब्दास्तु क्तप्रत्ययान्ता एव न तु सुबन्ताः, तेषां सुब्घटितसमुदायात्मकत्वाऽभावादित्यत आह-श्रितादिप्रकृतिकैः सुबन्तैरिति। श्रितादिशब्दाः श्रितादिप्रकृतिकेषु लाक्षणिका इति भावः। "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्ते"रित्यस्य तु नायं विषयः, "कर्तृकरणे कृता" "साधनं कृते"तिवत्कारकविशेषानुपादानादिति प्रौढमनोरमायां स्थितम्। न च श्रितादीनां समर्थविशेषणत्वात्तदन्तविधौ श्रितान्तादिशब्दप्रकृतिकैरित्यर्थलाभा"त्कृष्णं परमश्रित" इत्यत्रापि समासः स्यादिति वाच्यं, समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात्। कृष्णं श्रित इति। श्रयतेर्गतिविशेषार्थकत्वाद्गत्यर्थाकर्मकेति कर्तरि क्तः। "न लोके"ति कृद्योगषष्ठीनिषेधात्कर्मणि द्वितीया। समासविधौ द्वितीयेति प्रथमानिर्दिष्टत्वात्कृष्णशब्दस्य पूर्वनिपातः दुःखातीत इति। "दुःखमतीत इति विग्रहः। "इण् गतौ"। अतिपूर्वात् कर्तरि क्तः। इत्यादीति। गर्तं पतितो गर्तपतितः। "पल्लृ गतौ"। कर्तरि क्तः। तनिपतिदरिद्रातिभ्यः सनो वेट्कत्वेन "यस्य विभाषे"तीण्निषेधप्राप्तावप्यत एव निपातनादिट्। ग्रामं गतो ग्रामगतः। ग्राममत्यस्तः-अतिक्रान्तो-ग्रामात्यस्तः। ग्रामं प्राप्तः ग्रामप्राप्ताः। संशयमापन्नः संशयापन्नः।

गम्यादीनामिति। गम्यादिप्रकृतिकैः सुबन्तैरपि द्वितीयान्तं समस्यते स तत्पुरुष इति यावत्। ग्रामं गमीति। "गमेरिनिः" रित्यौणादिक इनिप्रत्ययः, स च "भविष्यति गम्यादयः" इति वचनाद्भविष्यति काले भवति। "अकेनो"रिति कृद्योगषष्ठीनिषेधात्कर्मणि द्वितीया। ग्रामं गमिष्यन्नित्यर्थः। अन्नं बुभुक्षुरिति। भुजेः सन्। "सनाशंसभिक्ष उः"। "न लोके"ति कृद्योगषष्ठीनिषेधात्कर्मणि द्वितीया। बुभुक्षुशब्दो गम्यादपठित इति भावः। स्वयं क्तेन। क्तप्रत्ययान्तप्रकृतिकसुबन्तेन स्वयमित्यव्ययं समस्यते स तत्पुरुष इत्यर्थः। अयोग्यत्वादिति। "स्वय"मित्यव्ययस्य आत्मनेत्यर्थकस्य कर्तृशक्तिप्रधानतया तृतीयाया एवोचितत्वादिति भावः। "स्वय"मित्यव्ययस्य समासेऽसमासेऽपि को भेदः?। असमासेऽपि "अव्ययादाप्सुपः" इति लुकः प्रवृत्तेरित्यत आह--स्वयंकृतस्यापत्यमिति। स्वयंकृतस्यापत्यमित्यर्थे "अत इ" ञिति स्वयंकृतशब्दात्षष्ठ()न्तत्वात्तत इञि ऋकारस्यादिवृद्धौ रपरत्वे स्वयंकार्तिरित्येव स्यादिति भावः। वस्तुतस्तु असामथ्र्यादिह न तद्धितः। स्वयंकृतशब्दस्य समासस्वरः प्रयोजनम्।

तत्त्व-बोधिनी

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ५९९, २।१।२३

द्वितीया श्रितातीत। श्रितादीनां गतिवशेषवाचित्वात् "गत्यर्थकर्मके"ति कर्तरि क्तः। "प्रत्ययग्रहणे तदन्तग्रहण"मित्याशयेनाह--द्वितीयान्तमिति। श्रितादिप्रकृतिकैरिति। यद्यपि संबोधने सुबन्तत्वं संभवति तथाप्यन्यत्रापि समासस्येष्टत्वात् श्रितादयस्तद्घटितसमुदाये लाक्षणिक इह गृ-ह्न्त इति भावः। एवं "खट्वा क्षेपे" "गर्गादिभ्योय" ञित्यादावप्यूह्म्। न हि खट्वेत्यस्य द्वितीयान्तत्वं, गर्गादीनां षष्ठ()न्तत्वं वा संभवति। स्यादेतत्---

द्वितीयान्तस्य श्रितप्रकृतिकसुबन्तेन समासे काष्टश्रितेयो न सिध्येत्। श्रितशब्दाट्टपि ततः सुपि कष्टं श्रिता कषष्टश्रितेति समासे श्रिताशब्दस्यैव टाबन्ततत्वात्, ततः "स्त्रीभ्यो ढ"गिति ढकि काष्टश्रैतेय इति स्यात्। "गतिकारकोपपदाना"मिति सुबत्पत्तेः प्राक्कृदन्तेन समासे तु श्रितान्तस्य टाबन्ततत्वादिष्टं सिध्यतीति चेत्। मैवम्। प्रधानस्त्रीप्रत्यये तदादिनियमाऽभावेन काष्टश्रितेयस्य निर्बाधत्वात्। न च कदाचित् श्रिताशब्दादपि ढकस्यादिति वाच्यम्। जहत्स्वार्थायां वृत्तौ श्रिताशब्दस्यानर्थकत्वेनाऽपत्ययोगाऽसंभवात्। अजहत्स्वार्थायामपि न दोषः, समुदायावयवसंनिधौ समुदायस्यैव कार्यप्रयोजकत्व#आत्। अन्यथा सुन्दरदुहितुरपत्यं सौन्दरदौहित्र इत्यापत्तेरिति दिक्। कृष्णं श्रित इति। "न लोके"ति षष्ठीनिषेधः। कृष्णश्रित इति। "प्रथमनिर्दिष्ट"मिति द्वितीयान्तस्।य पूर्वनिपातः। यद्यपीह श्रितशब्दोऽपि प्रथमानिर्दिष्टस्तथापि "समासविधायके प्रथमानिर्दिष्टमुपसर्जन"मित्युक्तमिति नास्त्यतिप्रसङ्गः। नन्वेवमव्ययादीनामुपसर्जनसंज्ञार्थमव्ययं विभक्तीत्यादिना समासविधानस्यावश्यकत्वात् "सुप्सुपे"ति समास्याऽनित्यत्वे प्रागुक्ज्ञापकं न संभवत्येव, तथा चाऽव्ययीभावतत्पुरुषादिसमासाऽभावपक्षे "सुप्सुपे"ति समासप्रवृत्त्या "अप विष्णोः""परि विष्णोः" "कृष्णं श्रितः" "राज्ञः पुरुष"इत्यादिविग्रहवाक्यानि न सिध्येरन्निचि चेत्। अत्राहुः--पुनः समासविधानं न केवलमुपसर्जनसंज्ञार्थं, तस्याः प्रकारान्तरेणापि सिद्धेः। तथा हि--"प्राक्कडारात्समासः"इत्यनन्तरं "प्रथमानिर्दिष्टमुपसर्जनम्", "एकविभक्ति चापूर्वनिपाते"इति पठित्वा समासाधिकारे प्रथमानिर्दिष्टमिति व्याख्यायामुपसर्जनसंज्ञा सिध्यत्येव, "विभक्त्यर्थादिषुत] विद्यमानमव्ययं सुबन्तेन चेत्समस्यते स समासोऽव्ययीभावः स्यात्, द्वितीयान्तं चेत्स समासस्तत्पुरुष"

इत्येवं व्याख्यानादव्ययीभावतत्पुरुषादिसंज्ञापि सिध्यतीति पुनः समासविधानं व्यर्थं सज्ज्ञापयतीति। ननु "अव्ययं विभक्ति--" इत्यादीनां समासविधयकत्वे सिद्धे भवदुक्तमेतत्स्यात्, तत्रैव मानं न पश्याम इति चेत्-अत्र केचित्-उक्तरीत्यैवोपसर्जनसंज्ञायां सिद्धायां "प्रथमानिर्दिष्ट"मिति सूत्रे समासग्रहणं व्यर्थं सत्समासविधायके प्रथमानिर्दिष्टमित्यर्थलाभार्थं। तेनामीषां समासविधायकत्वं सिध्यतीति। अथवा "सुप्सुपे"ति समासस्याऽनित्यत्वे आकरग्रन्थ एव प्रमाणम्, अन्यथा "सिन्नित्यसमासयोः"इति वार्तिके "नित्यग्रहणेम नार्थः, इदमपि सिद्धं भवति वाप्यम()आओ वाप्य()आ" इत्यादिप्रागुक्तभाष्यकैयटग्रन्थस्याऽसामञ्जस्यापत्तेरिति दिक्। ननु कृष्णश्रित इत्यस्य कृष्णकर्मकश्रयणकर्तेति ह्रर्थः, स च कृष्णः श्रितो येनेति कर्मणि क्तान्तेन बहुव्रीहिणापि सुलभ इति किमनेन समासारम्भेण()। मैवम्। बहुव्रीहौ श्रितकृष्म इति निष्ठान्तस्यपूर्वनिपातप्रसङ्गात्। "शेषाद्विभाषे"ति समासान्तः कप्प्रसज्येतेति दिक्। दुःखातीति इति। अतिपूर्वकादिणः कर्तरि क्तः। अवशिष्टान्यप्युदाहरणान्यूह्यानि। कूपपतितः। यद्यपि "तनिपतिदरिद्रतिभ्यः"इति विकल्पितेट्कत्वात् "यस्य विभाषे"तीण्निषेधेन भाव्यं, तथाप्यतएव निपातनादिडित्याहुः। वस्तुतस्तु चुरादावदन्तेषु पठितस्य "पत गतौ वा" इत्यस्याश्रयणेन पतितः सिध्यति, "यस्य विभाषे"त्यत्रैकाच इत्यनुवृत्तेः सर्वसंमतत्वात्। ग्रामगतः। तुहिनात्यस्तः।अत्यसो--व्यतिक्रमः। सोऽपि गतिविशेष एवेति कर्तरि क्तः। आदिकर्मणि क्तो वाऽत्राभ्युपेयः। सुखप्राप्तः। दुःखापन्नः।

गम्यादीनामुपसङ्ख्यानम्। गम्यादीनामिति। गम्यादयश्च प्रयोगतो ज्ञेयाः। ग्रामगमीति। "गमेरिनिः"इत्यौणादिक इनिः। स च "भविष्यति गम्यादयः"इति भविष्यत्काले। "अकेनो"रिति षष्ठीनिषेधात्कर्मणि द्वितीया। अयोग्यत्वादिति। "स्वय" मित्यस्यात्मनेत्यर्थकस्य कत्र्रर्थतया द्वितीयान्तत्वानुपपत्तिरिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वयं ० क्तेन ३।१ २७ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
स्वयं क्तेन २।१।२५

स्वयम् एतदव्ययम् आत्मना इत्यस्यार्थे वर्तते, तस्य द्वितीयया सम्बन्धो ऽनुपपन्नः इति द्वितीयाग्रहणम् उत्तरार्थम् अनुवर्तते। स्वयम् इत्येतत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भाति। स्वयंधौतौ पादौ। स्वयंविलीनम् आज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद् भवति।
लघु-सिद्धान्त-कौमुदी
सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण चुरादिभ्यो णिच् ६९७, २।१।२४

एभ्यो णिच् स्यात्। चूर्णान्तेभ्यःऽप्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे। पुगन्तेति गुणः। सनाद्यन्ता इति धातुत्वम्। तिप्शबादि। गुणायादेशौ। चोरयति॥
न्यासः
स्वयं क्तेन। , २।१।२४

"तस्य द्वितीयया सह सम्बन्धो नोपपद्यते" इति। द्वितीयार्थासम्भवात्। इतिशब्दो हेतौ। यतस्तस्य द्वितीयया सह सम्बन्धोऽनुपपन्नस्तस्माद्द्वितीयाग्रहणमुत्तरार्थमनुवर्त्तते, न त्वेतदर्थम्। "स्वयंधौतौ पादौ" इति। "धावु गतिशुद्धयोः" (धा।पा।६०१), अस्योदित्त्वाद्विभाषितेट्। "यस्य विभाषा" ७।२।१५ इतीट्प्रतिषेधः। "च्छवोः शूडनुनासिके चट ६।४।१९ इत्यूठ्। "एत्येधत्यूठसु" ६।१।८६ इति वृद्धिः। "स्वयंविलीनमाख्यम्" इति। "लीङ श्लेषणे" (धा।पा।११३९), "स्वादय ओदितः" (का।८।२।४५) इत्योदित्त्वात् "ओदितश्च" ८।२।४५ इति नत्वम्। "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" (व्या।प।१२६) इति गतिपूर्वस्यापि समासो भवति। कः पुनरत्र समासे सति विशेषः यावता विनापि तेनैतद्रूपं सिध्यतीत्याह-- "ऐकपद्यम्" इत्यादि॥
तत्त्व-बोधिनी
स्वयं क्तेन ६००, २।१।२४

स्वायंकृतिरिति। असति समासे कार्तिरिति स्यादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ खट्वा १।१ क्षेपे ७।१ क्तेन ३।१ २४ द्वितीया १।१ २३ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
खट्वा क्षेपे २।१।२६

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति। क्षेपो निन्दा, स च समासार्थ एव, तेन विभाषा ऽधिकारे ऽपि नित्यसमास एव अयम्। न हि वक्येन क्षेपो गम्यते। खट्वारोहणं च इह विमार्गप्रस्थानस्य

उपलक्षनम्। सर्व एव अविनीतः खट्वारूढः इत्युच्यते। खट्वारुढो जाल्मः। खट्वाप्लुतः। अपथप्रस्थितः इत्यर्थः। क्षेपे इति किम्? खट्वामारूढः।

न्यासः

खट्वा क्षेपे। , २।१।२५

"स च" इत्यादि। एवकारेण वाक्यार्थतां क्षेपस्य निरस्यति। स्यादेतत्-- वाक्यार्थोऽपि क्षेपः; तेन वाक्यमपि भविष्यतीत्याह-- "न हि" इत्यादि। वाक्येन हि क्रियाकारकसम्बन्धमात्रं गम्यते, न तु क्षेपः। "खट्वारोहणञ्च" इत्यादि। विरुद्धो मार्गः = विमार्गः,तेन प्रस्थानम् = गमनम्। अधीत्य स्नात्वा गुरुणाभ्यनुज्ञातेन खट्वाऽरोढव्या। यत्त्वन्यथा खट्वारोहणं तद्विमार्गप्रस्थनम्। न तु खट्वारोहणमेव। इह च "खट्वारूढः" इत्यादौ खट्वारोहणं विमार्गप्रस्थानस्योपलक्षणं वेदितव्यम्। किं पुनः कारणमेव विज्ञायत इत्याह-- "सर्व एव" इत्यादि। आरूढ इत्याङ्पूर्वस्य रुहेः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु कृतेषु रूपम्। जाल्म इत्ययुक्तकारीत्यर्थः।

बाल-मनोरमा

खट्वा क्षेपे ६७९, २।१।२५

खट्वा क्षेपे। क्तेनेत्यनुवर्तते। प्रत्ययग्रहणात्तदन्तविधिः। क्षेपो निन्दा। द्वितीयेति सुपेति चानुवर्तते। तदुभयमपि प्रत्ययग्रहणपरिभाषया तदन्तपरं सत्प्रकृतिप्रत्ययसमुदायपरम्। खट्वाशब्दस्य क्तान्तशब्दस्य च सुब्घटितसमुदायात्मकत्वाऽसंभवादत्र खट्वाशब्दः क्तप्रत्ययान्तशब्दश्च तत्प्रकृतिके लाक्षणिक इत्याह-खट्वाप्रकृतिकमिति। खट्वारूढौ जाल्म इति। "जाल्मोऽसमीक्ष्यकारी"त्यमरः। खट्वा अम्-आरूढ स् इत्यलौकिकविग्रहः। लौकिकविग्रहस्तु नास्तीत्याह-नित्यसमासोऽयमिति। तत्कुत इत्य आह--न हि वाक्येनेति। वृत्त्यर्थबोधकं वाक्यं-लौकिकविग्रहः। तत्र खट्वामारूढ इति वाक्यं हि गृहस्थाश्रमिणि निन्दां न गमयति। "खट्वा रूढ" इति समासस्तु रूढ()आ निन्दां गमयति। तथाच भाष्यम्--"अधीत्य रुआआत्वा गुर्वनुज्ञातेन खट्वा आरोढव्या। यस्तावदन्यथा करोति स "खट्वारूढोऽयं जाल्म"इत्युच्यते" इति। अत्र "जाल्य" इत्यनेनोद्वृत्तेऽयं शब्दो रूढः अवयवार्थे तु नाभिनिवेष्टव्यमिति सूचितम्।

तत्त्व-बोधिनी

खट्वा क्षेपे ६०१, २।१।२५

खट्वारूढ इति। "जाल्मोऽसमीक्ष्यकारी स्यात्" इत्यमरः। वेदं व्रतानि च समाप्य समावृत्तेन हि खट्वारोढव्या। ब्राह्मचर्य एव भूमिशयमार्होऽपि यः खट्वामारोहति स जाल्मः। रूढश्चायम्। तेन खट्वामारोहतु मा त।]वा, निषिद्धानुष्ठानपरः सर्वोऽपि खट्वारूढ इत्युच्यते। अत एवाह--नित्येति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सामि ० क्तेन ३।१ २४ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

सामि २।१।२७

सामि इत्येतदव्ययम् अर्धशब्दपर्यायः, तस्य असत्त्ववाचित्वाद् द्वितीयया न अस्ति सम्बन्धः। तत् सुबन्तं क्तन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। सामिकृतम्। सामिपीतम्। समिभुक्तम्। ऐकपद्यमैकस्वर्यं च समासत्वद् भवति।

न्यासः

सामि।, २।१।२६

"असत्त्ववाचित्वात्" इति। द्रव्याधारा हि कर्मशक्तिः। अतो द्रव्यवाचिन एव द्वितीयया सम्बन्धो भवति, नासत्त्ववाचिनः॥

बाल-मनोरमा

सामि ६८०, २।१।२६

सामि। "सामी"त्यव्ययमर्धे वर्तते। तत्-क्तान्तप्रकृतिकसुबन्तेन समस्यत इत्यर्थः। सामिकृतमिति। समासाऽभावे तु तद्धितवृत्तौ "सामिकार्ति"रिति स्यादिति भावः।

तत्त्व-बोधिनी

सामि ६०२, २।१।२६

सामि। सामीत्येतदव्ययमर्धशब्दपर्यायः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कालाः १।३ २८ क्तेन ३।१ २४ द्वितीया १।१ २३ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

कालाः २।१।२८

द्वितीया क्तेन इति वर्तते। कालवाचिनः शब्दाः द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाष, तत्पुरुषश्च समासो भवति। अन्त्यन्तसम्योगार्थं वचनम्। कालाः इति न स्वरूपविधिः। षण्मुहूर्ताश्चराचराः, ते कदाचितहर्गच्छन्ति कदाचित् रात्रिम्। अहरतिसृता मुहूर्ताः अहःसङ्क्रान्ताः। रात्र्यतिसृता मुहूर्ताः रात्रिसङ्क्रान्ताः। मासप्रमितश्चन्द्रमाः। मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमाः इत्यर्थः।

न्यासः

कालाः।, २।१।२७

"चराचराः" इति। अनत्यन्तसंयोगप्रतिपादनार्थम्। चरन्ति भ्रमन्तीति चराचराः, अनवस्थिता इत्यर्थः। "चरिचलिपतिवदीनमच्याक्चाभ्यासस्य" (वा।६५८) इति चरेः पचाद्यचि द्विर्वचनमभ्यासस्याक्चागमश्च। "कदाचिदहर्गच्छन्ति" इत्युत्तरायणे। "कदाचिद्रात्रिम्" इति दक्षिणायने। एतेन तदेवानवस्थितत्वं व्यक्तीकुर्वन्नह्नो रात्रेश्च तैर्मुहूर्तैरनत्यन्तसंयोगमाचष्टे। "अहरतिसृताः" इति। "रोऽसुपि" ८।२।६९ इत्यह्नो नकारस्य रेफः। "अहः संक्रान्ताः" इति। "क्रमु पादविक्षेपे" (धा।पा।४७३),पूर्वपदिट्प्रतिषेधः। "अनुनासिकस्य क्विझलोः" ६।४।१५ इति दीर्घः। "मासप्रमितः" इति। "माङ माने" (धा।१०८८), "आदिकर्मणि कत्र्तरि च" ३।४।७१ इति कत्र्तरि निष्ठा। "द्यतिस्यति" ७।४।४०

इत्यादिनेत्त्वम्। "मासं प्रमातुमारब्धः" इति। मासस्यैकदेशस्य प्रतिपदश्चन्द्रमसा योगं दर्शयन् मासस्य तेनात्यन्तसंयोगमाचष्टे। कालस्य हि कृत्स्नस्य स्वेन सम्बन्धिना व्याप्तिः = अत्यन्तसंयोगः। न च प्रतिपच्चन्द्रमा मासस्येह व्याप्तिः = संयोगोऽस्तीति नेहात्यन्तसंयोगः।

बाल-मनोरमा

कालाः ६८१, २।१।२७

कालाः। क्तेनेत्येवेति। क्तेनेत्यनुवर्तत एवेत्यर्थः। कालवाचिप्रकृतिकद्वितीयान्ताः क्तप्रत्ययान्तप्रकृतिकसुबन्तेन वा समस्यन्त इत्यर्थः। ननु "अत्यन्तसंयोगे चे"त्युत्तरसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह--अनत्यन्तेति। मासप्रमिति इति। मासं प्रमित इति विग्रहः। प्रपूर्वकान्माधातोरादिकर्मणि क्तः कर्तरि चेति कर्तरि क्तः। तदाह--मासं परिच्छेत्तुमिति। इह प्रतिपच्चन्द्रेण मासस्य नात्यन्तसंयोग इति भावः।

तत्त्व-बोधिनी

कालाः ६०३, २।१।२७

कालाः। बहुवचननिर्देशः स्वरूपनिरासार्थः। "कालवाचिनो द्वितीयान्ताः क्तान्तेन सह वा समस्यन्त" इति सूत्रार्थः। ननु "काला अत्यन्तसंयोगे"इत्येवास्तु क्तेनेति निवृत्तम्, नार्थो योगविभागेनेत्यत आह--अनत्यन्तेति। मासप्रमति इति। "माङ्माने"। आदिकर्मणि क्तः कर्तरि। इह प्रतिपञ्चन्द्रेण नास्त्यत्यन्तसंयोगः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अत्यन्तसंयोगे ७।१ च ० कालाः १।३ २७ क्तेन ३।१ २४ द्वितीया १।१ २३ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

अत्यन्तसंयोगे च २।१।२९

कालाः इति वर्तते। क्तेन इति निवृत्तम्। अत्यन्तसंयोगः कृत्स्नसंयोगः, कालस्य स्वेन सम्बन्धिना व्याप्तिः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। मुहूर्तं सुखम् मुहूर्तसुखम्। सर्वरात्रकल्पाणी। सर्वरात्रशोभना।

न्यासः

अत्यन्तसंयोगे च। , २।१।२८

"कृत्स्नसंयोगः" इति। कृत्स्नस्य संयोगः कृत्स्नसंयोगः, कृत्स्नस्य कालस्य मुहूर्त्तादेः स्वेन सम्बन्धिना = सुखादिना संयोग = सम्बन्धोऽत्यन्तसंयोगः। एतदेव स्पष्टीकर्त्तुमाह-- "कालस्य" इत्यादि। "मुहूर्तं सुखम्" इति। "कालाध्वनोरत्यन्तसंयोगे" २।३।५ इति द्वितीया। अत्र मुहूर्तस् कालस्य स्वेन सम्बन्धिना सुखेन व्याप्तिः।

बाल-मनोरमा

अत्यन्तसंयोगे च ६८२, २।१।२८

अत्यन्तसंयोगे च। काला इत्येवेति। तेनात्यन्तसंयोगे कालवाचिनो द्वितीयान्ताः सुबन्तेन सह वा समस्यन्त इति लभ्यत इत्यर्थः। ननु "कालाः" इति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्याअह--अक्तान्तार्थमिति। अत्र क्तेनेति निवृत्तमिति भावः। मुहूर्तं सुखमिति। अत्यन्त संयोगे द्वितीया। मुहूर्तव्यापि सुखमित्यर्थः।

तत्त्व-बोधिनी

अत्यन्तसंयोगे च ६०४, २।१।२८

मुहूर्तमिति। मुहूर्तव्यापीत्यर्थः। "कालाध्वनोरत्यन्तसंयोगे"इति द्वितीया।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तृतीया १।१ ३४ तत्कृत अर्थेन ३।१ गुणवचनेन ३।१ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०

सुप् सुपा इति वर्तते। तस्य विशेषणम् एतत्। तृतीयान्तम् गुणवचनेन अर्थशब्देन च सह संस्यते, तत्पुरुषश्च समासो भवति। कीदृशेन गुणवचनेन? तत्कृतेन तदर्थकृतेन, तृतीयान्तार्थकृतेन इति यावत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः। अर्थशब्देन धान्येन अर्थः धान्यार्थः। तत्कृतेन इति इम्? अक्ष्णा काणः। गुणवचनेन इति किम्? गोभिर्वपावान्।

लघु-सिद्धान्त-कौमुदी

तृतीया तत्कृतार्थेन गुणवचनेन ९२८, २।१।२९

तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्। शङ्कुलया खण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्? अक्ष्णा काणः॥

न्यासः

तृतीया तत्कृतार्थेन गुणवचनेन। , २।१।२९

"तत्कृत" इति। एतदर्थशब्देनासमस्तमेव, अविभक्तिञ्च। तृतीयाविभक्तेः "सुपां सुलुक्" ७।१।३९ इति लुप्तत्वात्। एतच्च गुणवचनेनेत्यस्य समानाधिकरणं विशेषणम्। अत एव कीदृशेनेति पृष्टः सन्नाह-- "तत्कृतेन" इति। तदिति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्श इति तृतीयान्तकृतेनेति दर्शयति। तृतीयान्तेन गुणवचनस्य करणत्वं न सम्भवतीत्यतः सामथ्र्यात् तदर्थकृतेनेति विज्ञायत इत्यत आह-- "तृतीयान्तार्थकृतेनेति यावत्" इति। अर्थद्वारेण चेदं गुणवचनस्य विशेषणं वेदितव्यम्- तृतीयान्तार्थकृतो गुणवचनार्थ इति। सोऽपि तथोच्यते। एतदुक्तं भवति-- तृतीयान्तार्थकृतेन गुणवचनार्थेनेति। अर्थ एव हि तृतीयान्तार्थेन क्रियते, न च गुणवचनशब्दः। गुणमुक्तवान् = गुणवचनः। " कृत्यल्युटो बहुलम्" ३।३।१३ इति कत्र्तरि ल्युट्। अथ वा-- करणे, गुण उक्तोऽनेनेति गुणवचनः। यश्च पूर्व गुणे वर्तित्वा पश्चात् तद्वति द्रव्ये वत्र्तते स गुणवचनः। गुणेनेत्युच्यमाने घृतेन पाटवमित्यादौ प्रसङ्गः,

अतस्तन्निवृत्त्यर्थं वचनग्रहणम्। त()स्मश्च सति गुणे वर्तित्वा तद्वति द्रव्ये यो वत्र्तते तेनैव समासो भवति, न तु गुण एव यो वत्र्तते तेन सह। न च पाटवादयः शब्दाः पूर्वं गुणे वर्तित्वा पश्चात् तद्वति द्रव्ये वत्र्तन्ते, अपि तु गुण एव। वचनग्रहणात् तैः सह समासो न भवति। "शङ्कुलाखण्डः, गिरिकाणः" इति। खण्डकाणशब्दावत्र खण्डनेन निमीलने च क्रियारूपापन्ने गुणे वर्तित्वा पश्चान्मतुब्लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्तते इति गुणवचनौ भवतः। "धान्यार्थः" इति। भवुत्ययमर्थशब्दस्तत्कृतः, तथा हि स गोभिर्वपावान् कृतः। न तु वपावानित्ययं शब्दो गुणमुक्तवामिति न गुणवचनः, ततस्तेन सह समासो न भवति॥

बाल-मनोरमा

तृतीया तत्कृतार्थेन गुणवचनेन ६८३, २।१।२९

तृतीया तत्कृत। तत्कृतेत्यस्याऽव्यवहितमप्यर्थेनेति परित्यज्य गुणवचनेनेत्यत्रान्वयं वक्तुमाह--तत्कृतेति लुप्ततृतीयाकमिति। तत्र "तृतीये"त्यनेन तृतीयान्तं विवक्षितम्। "तत्कृते"ति लुप्ततृतीयाकं भिन्नं पदम्। तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते। तत्कृतेत्येतच्च गुणद्वारा गुणवचनेऽन्वेति। ततश्च "तृतीयान्तं तृतीयान्तार्थकृतो यो गुणस्तद्वाचिना समस्यते" "अर्थशब्देन च तृतीयान्तं समस्येति" इति वाक्यद्वयं संपद्यत इति भाष्ये स्थितत्। तदाह--तृतीयान्तमित्यादिना। "गुणे"त्यस्य तत्कृतत्वसापेक्षत्वेऽपि सौत्रः समासः। इदं सूत्रं कृतशब्दार्थद्वारक एव सामर्थ्ये प्रवर्तते न तु साक्षात्परस्परान्वये इति भाष्ये स्पष्टम्। नच "घृतेन पाटव"मित्यत्रातिप्रसङ्गः शङ्क्यः। गुणेनेति सिद्धे वचनग्रहणाद्गुणोपसर्जनद्रव्यवाचिशब्दो गृह्यत" इति व्याख्यानात्। शङ्कुलाखण्ड इति। "देवदत्त" इति शेषः। "शङ्कुलाखण्डो देवदत्तः" इत्येव भाष्ये उदाह्रतम्। "खडि भेदने"भावे घञ्। खण्डनं खण्डः। मत्वर्थीयोऽर्शआद्यच्। शङ्कुलयेति करणे तृतीया। शङ्कुलाकृतखण्डनक्रियावानित्यर्थः। यत्वाकडारादिति सूत्रभाष्ये "समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दभिन्नमर्थवच्छब्दस्वरूपं गुणवचनसंज्ञं भवती"त्युक्त, तदेतत्प्रकृते न प्रवर्तते। "गुणमुक्तवता गुणवचनेने"ति भाष्येण यौगिकत्वावगमात्। अतोऽत्र गुणशब्देन धर्ममात्रं विवक्षितम्। एवञ्च खण्डशब्दस्य क्रियावचनत्वेऽपि न क्षतिः। तत्त्वबोधिन्यां तदु "वोतो गुणवचना"दित्यत्र "सत्त्वे निविशतेऽपैती"त्यादिलक्षणलक्षितो गुणोऽत्र गृह्यत इत्युक्तम्। तद्व्याख्यावसरे क्रियाया गुणत्वं नास्तीत्यप्युक्तम्। इह तु खण्डशब्दस्य क्रियावाचिनोऽपि गुणवचनत्वमास्थितम्। तत्तु प्रकृतसूत्रस्थभाष्यविरुद्धत्वात्पूर्वोत्तरविरुद्धत्वाच्चोपेक्ष्यम्। अर्थशब्देन समासमुदाहरति--धान्येनेति। अर्थशब्दो धनपरः। हेतौ तृतीया। धान्यहेतुकं धनमित्यर्थः। अत्र धनस्य धान्यहेतुकत्वेऽपि तत्करणकत्वाऽभावदप्राप्तौ पृथगुक्तिः। "धान्येनेति प्रकृत्यादित्वात्तृतीया, धान्याऽभिन्नं धनमित्यर्थ" इति केचित्। ननु "शङ्कुलया खण्ड" इत्यत्र "कर्तृकरणे कृता बहुल"मित्येव सिद्धे तत्कृतेति व्यर्थमिति पृच्छति-तत्कृतेति किमिति। "गुणवचनेन चेत्तत्कृतेनैवे"ति नियमार्थं तत्कृतग्रहणमित्यभिप्रेत्य प्रत्युदाहरति--अक्ष्णा काण इति। नह्यक्ष्णा काणत्वं कृतं, किन्तु रोगादिनेति भावः। गुणवचनेनेति किम्?। गोभिर्वपावान्। गोसम्बन्धिक्षीरादिभोजनेन देवदत्तस्य वपावत्त्वमित्यस्ति तत्कृतत्वम्। किन्तु न गुणवचनोऽसौ।

तत्त्व-बोधिनी

तृतीया तत्कृतार्थेन गुणवचनेन ६०५, २।१।२९

तृतीया तत्कृत। लुप्तेति। सौत्रत्वादिति भावः। तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते। तदर्थकृतत्वं च गुणवाचकस्यार्थद्वारा विशेषणं--तृतीयान्तार्थकृतो यो गुणस्तद्वचनेनेति। तदेतव्द्याचष्टे--तृतीयान्तार्थेत्यादिनाष। अर्थशब्देन चेति। सोऽपि स्वतन्त्रं निमित्तमिति भावः। नन्वर्थेन समासाऽसंभवात्तद्वाची शब्दो ग्रहीष्यते किमत्र वचनग्रहणेन()। अत्राहुः--गुणमुत्तवान्गुणवचनः। "कृत्यल्युटो बहुल" मिति भूते कर्तरि ल्युट्। गुणमुक्त्वा यो

द्रव्यमुक्तवान्स गुणवचनस्तेन घृतेन पाटवमिति गुणमात्रनिष्टेन शब्देन समासो न भवति। गुणश्चात्र "सत्त्वे निविशतेऽपैति" इत्यादिलक्षतो गृह्यते न तु प्रवृत्तिनिमित्तं घटत्वादिः, त।]तस्य तत्त्वाऽसंभवादिति। शङ्कुलया खण्ड इति। करणेऽत्र तृतीया। "खडि भेदने" इत्यस्माद्भावे घञि व्युत्पादितः खण्डश्बधः क्रियारुपापन्ने गुणे वतित्वा पश्चान्मत्वर्थलक्षणया तद्वति द्रव्ये वर्तत इति गुणवचनो भवति। धान्येनेति। करणे तृतीया। अर्थ्यते इत्यर्थः--प्रयोजनम्। कर्मणि घञ्। अर्थनमर्थः--अभिलाषो वा। भावे घञ्। अर्थशब्दस्य रूढत्वे तु धान्येनेति हेतौ तृतीया। "कर्तृकरणे कृता---"इति सिद्धमिति प्रश्नः। इतरो "गुणवचनेन चेत्तत्कृतेनैवे"ति नियमार्थमिदमित्याशयेन प्रत्युदाहरति--अक्ष्णेति। न ह्यक्ष्णा काणत्वं कृतं किंतु कर्मादिनैवेति भावः। तृतीया त्विह "येनाङ्गविकारः" इत्यनेन। काण इति। "कण निमीलने"इत्यस्माद्घञ्। गुमवचनत्वं कृक्तरीत्मा खण्डशब्दस्येवास्यापि बोध्यम्। गुणवचनेनेति किम्()। गोभिर्वपावान्। गोसंबन्धिदध्यादिभोजनेन देवदत्तस्य वपावत्त्वमित्यस्ति तत्कृतत्वं, न त्वसौ गुणवचनः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूर्व॰श्लक्ष्णैः ३।३ तृतीया १।१ २९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
पूर्वसदृशसमौउनार्थकलहनिपुणमिश्रश्लक्ष्णैः २।१।३१

पूर्व सदृश सम ऊनार्थ कलह निपुण मिश्र श्लक्ष्ण इत्येतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समसो भवति। अस्मादेव वचनात् पूर्वादिभिर् योगे तृतीया भवति, हेतौ वा द्रष्टव्या। पूर्व मासेन पूर्वः मासपूर्वः। संवत्सरपूर्वः। सदृश मातृसदृशः। पितृसदृशः। सम मातृसमः। ऊनार्थ माशोनम्। कार्षापणोनम्। माषविकलम्। कार्षापनविकलम्। कलह असिकलहः। वाक्कलहः। निपुण वाङ्निपुणः। आचारनिपुणः। मिश्र गुडमिश्रः। तिलमिश्रः। श्लक्ष्ण आचारश्लक्ष्णः। पूर्वादिष्ववरस्योपसङ्ख्यानम्। मासेनावरः मासावरः। संवत्सरावरः।
न्यासः
पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः।, २।१।३०

युक्तः समसदृशशब्दाभ्यां समासः, यावाता ताभ्यां योगे "तुल्यार्थैरतुलोपमाभ्याम्" २।३।७२ इति तृतीयाविधानम्, इतरैस्तु पूर्वादिभिः कथं तृतीयासमास उपपद्यते? न हि तद्योगे केनचित्तृतीया विहिता इत्याह "अस्मादेव" इत्यादि। सुबोधम्। "पूर्वादिष्ववरस्योपसंख्यानम्" इति। पूर्वादिषु समासकारणत्वेनोपात्तेषु सत्स्ववरशब्दस्योपसंख्यानं प्रतिपादनं कत्र्तव्यमित्यर्थः। अवरशब्देनापि तृतीयासमासः प्रतिपद्यत इत्यर्थः। तत्रेदं प्रतिपादनम्-- उत्तरसूत्रे बहुलग्रहणं क्रियते। तेनावरशब्देनापि समासो भवति॥
बाल-मनोरमा
पूर्वसदृशसमोनार्थकलहनिपुणामिश्रश्लक्ष्णैः ६८४, २।१।३०

पूर्वसदृश। एतैरिति। पूर्व-सदृश-सम-ऊनार्थ-कलह-निपुण-मिश्र-श्लक्ष्ण एतैरित्यर्थः। मासपूर्व इति। मासेन पूर्व इति विग्रहः। मासात्प्रागुत्पन्न इत्यर्थः। यद्यप्यवधित्वसम्बन्धे "अन्यारादितरर्ते" इति दिक्शब्दयोगे पञ्चमी प्राप्ता, दिशि दृष्टः शब्दो दिक्शब्द इत्यभ्युपगमात्। तथाप्यत-एव ज्ञापकात्तृतीया हेतौ तृतीयेत्यन्ते।

मातृसदृश इति "मात्रा सदृश" इति विग्रहः। पितृसम इति। पित्रा सम इति विग्रहः। "तुल्यार्थैरतुलोपमाभ्या"मिति तृतीया। "तुल्यार्थै"रिति षष्ठ()आं षष्ठीसमासेनैव सिद्धमिदमित्यहुः। ऊनार्थेति। उदाहरणसूचमिदम्। मात्रोनमिति। मात्राख्यपरिमाणविशेषेण ऊनं परिमाणमित्यर्थः। अतएव ज्ञापकादवधित्वे तृतीया, हेतौ वा। अर्थग्रहणं च ऊनेनैव सम्बध्यते, न पूर्वादिभिरपि, समसदृश्योः पृथगुपादानात्। अर्थग्रहणस्य प्रयोजनमाह--माषविकलमिति। माषेण विकलमिति विग्रहः। हीनमित्यर्थः। पूर्ववत्तृतीया। वाक्कलह इति। वाचा कलह इति विग्रहः। आचारनिपुण इति। आचारेण निपुण इति विग्रहः। आचारहेतुकनैपुण्यवानित्यर्थः। गुडमिश्र इति। गुडेन मिश्र इति विग्रहः। आचारश्लक्ष्ण इति। आचारेण श्लक्ष्ण इति विग्रहः। आचारहेतुककुशलत्ववानित्यर्थः। ननु "गुडसंमिश्रा" इत्यत्र कथं समासः(), सुबन्तविशेषणत्वेऽपि समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात्। तत्राह--मिश्रग्रहणे सोपसर्गस्यापीति। कुत इत्यत आह--मिशं चेति। "असन्धौ मिश्रेत्युत्तरपदमुपसर्गहीनं तृतीयान्तात्परमन्तोदात्त"मिति तदर्थः। अत्राऽनुपसर्ग गणादितरत्र मिश्रग्रहणे सोपसर्गग्रहणं विज्ञायत इत्यर्थः।

मासेनावर इति। मासेन पूर्व इत्यर्थः। न्यून इत्यर्थे तूनार्थकत्ववादेव सिद्धम्।

तत्त्व-बोधिनी
पूर्वसदृशमोनार्थकलहमिषुणमिश्रश्लक्ष्णैः ६०६, २।१।३०

पूर्वसदृश। इह समसदृशाभ्यां योगे "तुल्यार्थैः"इति तृतीया। अन्यैर्योगे त्वतएव वचनात्, "हेतौ"इति वा तृतीया। इह सदृशग्रहणं व्यर्थं, षष्ठीसमासेन गतार्थत्वात्। न च "तत्पुरुषे तुल्यार्थतृतीया---" इति पूर्वपदप्रकृतिस्वरार्थमिदमिति वाच्यम्। "सदृशप्रतिरूपयोः सादृश्ये"इति सूत्रेण तत्सिद्धेरिति मनोरमायां स्थितम्। विद्यया सदृशो विद्यासदृश इत्यादौ हेतुत्वप्रकारकबोधार्थं तृतीयासमासोऽप्यावश्यक इति त्वन्ये। पूर्वसूत्रेणैव तत्कृतत्वात्तृतीयासमासोऽपि सिद्ध्यतीत्यपरे। ऊनार्थेति। पूर्वसूत्रेऽर्थशब्देन समासस्योक्तत्वादिहार्तग्रहणमभिधेयपरम्। त।] तच्चोनशब्दोनैव संबध्यते, न तु पूर्वादिभिः, समसदृशयोः पृथग्ग्रहणादिति भावः।

अवरस्योपसङ्क्यानम्। अवरस्येति। अत्र व्याचक्षते--ऊनार्थेत्येव सिद्धत्वादिदं सुत्यजमेव। न चावरशब्दस्योनार्थकत्वमप्रसिद्धमिति वाच्यम्। " सप्तदशावराः सत्रमासीरम्िति श्रुतौ "अव्यक्तानुकरणाद् द्व्यजवरार्धात्िति सूत्रे च तत्प्रसिद्धेरिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तृकरणे ७।१ ३२ कृता ३।१ बहुलम् १।१ तृतीया १।१ २९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
कर्तृकर्णे द्दता बहुलम् २।१।३२

तृतीया इति वर्तते। कर्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति। सर्वोपाधिव्यभिचारार्थं बहुलग्रहनम्। कर्तरि अहिना हतः अहिहतः। करणे नखैर्निर्भिन्नः नखनिर्भिन्नः। परशुना छिन्नः।

कर्तृकरणे इति किम्? भिक्षाभिरुषितः। बहुलग्रहनम् किम्? दात्रेण लूनवान्, परशुना छिन्नवान्, इह समासो न भवति। पादहारकः, गले चोपकः इति च भवति।

लघु-सिद्धान्त-कौमुदी

कर्तृकरणे कृता बहुलम् ९२९, २।१।३१

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नः नखभिन्नः। (प।) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। नखनिर्भिन्नः॥

न्यासः

कर्तृकरणे कृता बहुलम्। , २।१।३१

"भिक्षाभिरुषितःट इति। हेतौ २।३।२३ तृतीया विहिता। वसेर्वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्, "शासिवसिघसीनाञ्च" ८।३।६० इति षत्वम्, "वसतिक्षुधोः" (७।२।क५२) इतीट्। "दात्रेण धान्यं लूनवान्" इति। "ल्वादिभ्यश्च" ८।२।४४ इति निष्ठानतवम्। "पादहारकः" इति। पादाभ्यां ह्रियत इति पादाहारकः। पादाभ्यामिति पञ्चमी चतुर्थी वा। हारक इति "कृत्यल्युटो बहुलम्" ३।३।११३ इति कर्मणि ण्वुल्। "गलेचोपकः" इति। गले चुप्यत इति। "चुप मन्दायां गतौ" (धा।पा। ४०३) इत्यस्मात् पूर्ववदेव ण्वुल्। "तत्पुरुषे कृति बहुलम्" ६।३।१३ इत्युलक्॥

बाल-मनोरमा

कर्तृकरणे कृताबहुलम् ६८५, २।१।३१

कर्तृकरणे। कर्ता च करणं चेति समाहाद्वन्द्वात्सप्तमी। तृतीयेत्यनुवर्तते। प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं। कृतेत्यपि तथैव। तदाहकर्तरि करणे चेति। प्राग्वदिति। समस्यते स तत्पुरुष इत्यर्थः। इह कृद्ग्रहणेन क्तप्रत्यय एव गृह्रते, बहुलग्रहणादिति भाष्यम्। अतः क्तान्तमेवोदाहरति--हरिणा त्रात इति। पालित इत्यर्थः। ननु कृदन्तस्य समर्थविशेषणत्वेऽपि समासप्रत्ययविधौ तदन्तविधिप्रतिषेधान्नखनिर्भिन्न इत्यत्र न स्यादित्यत आह--कृद्ग्रहणे इति। परिभाषेयम् "गतिरनन्तरः" इति सूत्रे भाष्ये स्थिता। पचतितरामिति। अतिशयेन पचतीत्यर्थः। "अति शायने" "तिङश्चे"त्यनुवृत्तौ "द्विवचनविभज्ये"ति तरप्। "किमेत्तिङव्ययघादाम्बद्रव्यप्रकर्षे" इत्याम्। अत्र तद्धितान्तेन समासनिवृत्त्यर्थं कृद्ग्रहणमिति भावः।

तत्त्व-बोधिनी

कर्तृकरणे कृता बहुलम् ६०७, २।१।३१

कर्तृकरणे। समाहारद्वन्द्वात्सप्तमीत्याशयेनाह-कर्तरि करणे चेति। अत्र केचित्--कर्तृकरणे इति प्रथमाद्विवचनं तृतीयया विशेष्यते, विशेषणेन च तदन्तविधिस्तेन तृतीयान्ते कर्तृकरणे कृदन्तेन समस्येते इति व्याख्यान्तरमित्याहुः। सर्वोपाधीति। कर्तरि करणे च या तृतीया तदन्तमपि बहुलग्रहणात् क्वचिन्न समस्यते। क्वचित्तु विभक्त्यन्तरमपि समस्यते, बहुलग्रहणादेवेत्यर्थः। समासाऽभावं प्रदर्शयति--दात्रेण लूनवानित्यादाविति। आदिशब्देन दात्रेण छिन्नवान्, हस्तेन कुर्वन्नित्यादि ग्राह्रम्। विभक्त्यत्यन्तरमपि समस्यत इत्यस्योदाहरणं तु--पादहारकः गलेचोपकः। ह्रियत इति हारकः। बाहुलकात्कर्मणि ण्वुल्। पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः। "चुप मन्दायां गतौ"। हेतुमण्णिजन्तात्कर्मणि ण्वुल्। "अमूर्धमस्तका"दित्यलुक्। कर्तृ[त्व]करणत्वयोः क्रियानिरूपितत्वेन क्रियासमर्पककृदन्तेनैव भवेत्समासः, "सुपा"इत्यधिकारात्तिङन्तेन तु नातिप्रसङ्ग इत्याशयेन पृच्छति-कृता किमिति। इतरस्तु तिङन्तप्रकृतिकतद्धि तान्तप्रकृतिकसुबन्तेनाऽसमासस्तत्फलिमित्याशयेन प्रत्युदाहरति--काष्ठैरिति।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत्यैः ३।३ अधिकार्थवचने ७।१ कर्तृकरणे ७।१ ३१ तृतीया १।१ २९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

कृत्यैरधिकाऽर्थवचने २।१।३३

स्तुतिनिन्दाप्रयुक्तम् अध्यारोपितार्थवचनम् अधिकार्थवचनम्। कर्तृकरणयो या तृतीया तदन्तं सुबन्तं कृतैः सह समस्यते ऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति। कर्ता काकपेया नदी। श्वलेह्यः कूपः। करणम् बाष्पच्छेद्यानि तृणानि। क्ण्टकसञ्चेय ओदनः। पूर्वस्या एव अयं प्रपञ्चः। कृत्यग्रहणे यण्ण्यतोर्ग्रहनं कर्तव्यम्। इह मा भूत्, काकैः पातव्या इति।

न्यासः

कृत्यैरधिकार्थवचने। , २।१।३२

"स्तुतिनिन्दाप्रयुक्तम्" इति। स्तुत्या निन्दया वा यत् प्रयुक्तं प्रवर्तितं तत् स्तुतिनिन्दाप्रयुक्तम्। तदर्थमुच्चारितमित्यर्थः। "अध्यारोपितार्थवचनम्" इति। अध्यारोपितोऽर्थोऽसन्नेव बुद्ध्या समारोपितस्तस्य वचनमिति षष्ठीसमासः। "कर्तृकरणयोःट इति। अर्थे कार्यासम्भवात् तदभिधायिनि सुबन्ते कार्यं विज्ञायते। "काकपेया" इति। "पा पाने" (धा।पा।९२५) इति "अचो यत्" ३।१।९७ "ईद्यति" ६।४।६५ ईत्त्वम्। अत्र सम्पूर्णतोयत्वोद्भावनं नद्याः स्तुतिः, अध्यारोपितः पुनरत्रार्थः काकपेयत्वम्-- एवं नाम सम्पूर्णतोया नदी यत्तटस्थैरपि काकैः शक्या पातुम्। "()आलेह्यः कूपः" इति। "ऋहलोण्र्यत्" ३।१।१२४ अत्राप्यासन्नोदकत्वोद्भावनं कूपस्य स्तुतिः। अध्यारोपितः पुनरत्रार्थः ()आलेह्यत्वम्-- एवं नामासन्नोदकः कूपो यतः श्वभिरपि लिह्यते। "बाष्पच्छेद्यानि तृणानि" इति। अत्र मारद्वातिशयोद्भावनं तृणानां स्तुतिः। अध्यारोपितः पुनरत्रार्थो बाष्पच्छेद्यता-- एवं नाम मृदूनि तृणानि यद्बाष्पेणापि शक्यानि छेत्तुम्। "कण्टकसञ्चेय ओदनः" इति। अत्रापि वैषद्यातिशयोद्भावनं विक्लिन्नतोद्भावनञ्चौदनस्य स्तुतिः। अध्यारोपितः पुनरत्रार्थः कण्टकसञ्चेयत्वम्-- एवं नामौदनस्य विशदतातिशयो विक्लेदश्च यत्कण्टकेनापि शक्यः सञ्चेतुम्। एवं तावत् स्तुतिप्रयुक्तेऽधिकार्यवचन उदाहरणानि। निन्दाप्रयुक्तेऽधिकार्थवचन एतावन्त्येव द्रष्टव्यानि। तथा हि-- काकेया नदीत्यत्राल्पतोयत्वोद्भावनं नद्या निन्दा। अध्यारोपितः पुनरत्रार्थस्तदेव पूर्वोक्तं काकपेयत्वम्, एवं ()आलेह्यादावपि पूर्वोक्त एवाध्यारोपितोऽर्थो द्रष्टव्यः-- एवं नामाल्पतोया नदी यत्काकैरपि शक्यं पातुमिति। ()आलेह्यः कूप इत्यत्राप्यशुद्धतोयत्वोद्भावनं निन्दा- एवं नामाल्प ओदनो यत्कण्टकैरपि चीयत इति। ननु च बहुलवचनादधिकार्थोऽपि पूर्वेणैव सिद्धः समासः, तत्किमर्थमिदमित्याह-- "पूर्वस्य" इत्यादि। ते वै विधयः सुसंगृहीता येषां प्रपञ्चश्चेति। सुसंगृहीतं यथा स्यादिति पूर्वस्यायं प्रपञ्च क्रियते॥ "दध्योदनः" इति। ननु च क्रियाकृतः कारकाणां सम्बन्ध-, न तु स्वतः। न च वृत्ताविह काचन क्रिया श्रूयत इति सामथ्र्याभावः। असति च सामर्थ्ये समासाभावः। अथासत्यपि सामर्थ्ये वचनसामथ्र्यात् समासो भवतीति चेदास्यतां दध्ना, ओदनो भुज्यतां देवदत्तेनेत्यत्रापि स्यादित्यत आह-- "वृत्तौ" इत्यादि। न ह्सत्यामुपसेचनक्रियायां संस्कार्यं संस्कारकं सम्भवति। अस्ति चेह तदुभयमित्यतस्तद्भावादेव समासान्तर्भूता क्रिया गम्यते। तदद्वारकश्चान्नव्यञ्जनयोः सम्बन्ध इति विद्यत एव सामथ्र्यम्॥

बाल-मनोरमा

कृत्यैरधिकार्थवचने ६८६, २।१।३२

कृत्यैरधिकार्थवचने। अर्थवादवचनमिति। असदुक्तिरित्यर्थः। वातच्छेद्यमिति। वातेन च्छेद्यमिति विग्रहः। छेत्तुं योग्यमित्यर्थः। "ऋहलोण्र्य"दिति कृत्यप्रत्ययः। कोमलत्वेन स्तुतिः, दुर्वलत्वेन निन्दा वा। काकपेयेति। "अचो य"दिति यत्। "ईद्यती"ति गुणः। अत्र पूर्णाम्भस्त्वेन स्तुतिः, अल्पाम्भस्त्वेन निन्दा वा।

तत्त्व-बोधिनी

कृत्यैरधिकार्थवचने ६०८, २।१।३२

कृत्यैरधिकार्थ। पूर्वसूत्रस्यैव प्रपञ्चोऽयं न तु नियमार्थमित्याहुः। वातच्छेद्येमिति। पूर्वत्कृत्यः। कोमलत्वाद्वातेनापि छेत्तु शक्यत इति स्तुतिः, वातेनापि छेत्तुं शक्यते निर्बलत्वादिति निन्दा वा। काकपेयेति। "शकि लिङ् चे"ति शक्यार्थे कृत्यः। पूर्णतोयत्वात्तटस्थैः काकैरपि पातुं शक्येति स्तुतिः, अल्पतोयत्वेन निन्दा वा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अन्नेन ३।१ व्यञ्जनम् १।१ तृतीया १।१ २९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

अन्नेन व्यञ्जनम् २।१।३४

तृतीया इति वर्तते। व्यंज्ञवाचि तृतीयान्तम् अनवाचिना सुबन्तेन सहा समस्यते, विभाशा तत्पुरुषश्च समासो भवति। संस्कार्यम् अन्नं, संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः दध्योदनः। क्षीरौदनः। वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम्।

बाल-मनोरमा

अन्नेन व्यञ्जनम् ६८७, २।१।३३

अन्ने व्यञ्जनम्। व्यञ्जनशब्दं व्याचष्टे--संस्कारेति। संस्क्रियते गुणविशेषवतया क्रियते अनेनेति संस्कारः=उपसेकादिसाधनं दद्यादि, त्दावचकमित्यर्थः। अन्ननेति। अन्नम्-ओदनः। तद्वाचकशब्देनेत्यर्थः। "भिस्सा स्त्री भक्तमन्धोऽन्न"मिति कोशः। दध्योदन इति। नन्विह दध्नेति करणत्वस्योपसिक्तपदापेक्षत्वादसामथ्र्यात्कथमिह समास इत्यत आह--अन्तर्भूतेति। उपसेकक्रियां विना दध्नोऽन्नसंस्कारकत्वानुपपत्त्या दध्नेत्यस्य दधिकरणकोपसेके वृत्तेर्नाऽसामथ्र्यामिति भावः। तदुक्तं भाष्ये--"युक्तार्थसंप्रत्ययाच्च सामथ्र्य"मिति।

तत्त्व-बोधिनी

अन्नेन व्यञ्जनम् ६०९, २।१।३३

अन्नेन। "भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री" इत्यमरः। व्याख्यानान्नेह स्वरूपग्रहणं, तदाह--संस्कारकेत्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भक्ष्येण ३।१ मिश्रीकरणम् १।१ व्यञ्जनम् १।१ तृतीया १।१ २९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
भक्ष्येण मिश्रीकरनम् २।१।३५

मिश्रीकरनवाचि तृतीयान्तम् भक्ष्यवाचिना सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। खरविशदमभ्यवहार्यं भक्ष्यं, तस्य संस्कारकं मिश्रीकरणम्। हुडेन मिश्राः धानाः गुडधानाः। गुडपृथुकाः। वृत्तौ क्रियाया अन्तर्भावात् पूर्वोत्तरपदयोः सामर्थ्यम्।
न्यासः
भक्ष्येण मिश्रीकरणम्। , २।१।३४

बाल-मनोरमा
भक्ष्येण मिश्रीकरणम् ६८९, २।१।३४

भक्ष्येण। मिश्रीक्रियते खाद्यं द्रव्यमनेनेति मिश्रीकरणं-गुडादि। तद्वाचकं तृतीयान्तं भक्ष्यवाचकेन समस्यत इत्यर्थः। कठिन द्रव्य-खाद्यम्। पृथुकादि भक्ष्यं विवक्षितम्। गुडधाना इति। "धाना भृष्टयवे स्त्रियः" इत्यमरः। गुडेन मिश्रा धाना इत्यर्थः। ननु गुडकरणत्वस्य मिश्रपदाऽपेक्षत्वान्न सामथ्र्यमित्यत आह--मिश्रेणेति। गुडेनेत्यस्य गुडकरणकमिश्रणे वृत्तेर्नाऽसामथ्र्यमिति भावः।

चतुर्थी। प्रत्ययग्रहणपरिभाषया चतुर्थीत्यनेन चतुथ्र्यन्तं गृह्रते। तदर्थ- अर्थ-बलि-हित-सुख-रक्षित-एषां द्वन्द्वः। चतुथ्र्यन्तम् एतैः षड्भिः समस्यते, स तत्पुरुष इति फलितम्। तदर्थेत्यत्र तच्छब्देन चतुथ्र्यन्तार्थो विवक्षितः। तस्मै चतुथ्र्यन्तार्थाय इदं तदर्थम्। "अर्थेन नित्यसमासः" इति वक्ष्यमाणः समासः। चतुथ्र्यन्तवाच्यप्रयोजनकं यत्तत्दर्थमिति पर्यवस्यति। तदाह--चतुथ्र्यन्तार्थायेत्यादिना। तदर्थेनेति। तदर्थेन समास इति यदुक्तं तत्प्रकृतिविकृतिभाव एव भवति, न त्वन्यत्रेत्यर्थः। कुत इत्यत आह--बलिरक्षितेति। यदि तादथ्र्यमात्रेऽयं समासः स्यात्प्रकृतिविकृतिभाव एवेति नोच्येत, तर्हि बलिरक्षितग्रहणं व्यर्थं स्यात्। भूतेभ्यो बलिः, गोभ्यो रक्षितं तृममित्यत्रापि बलेर्भूतार्थतया, रक्षिततृणस्य गवार्थतया च तदर्थेत्येव समाससिद्धेरिति भावः। यूपायेति। अत्र चुत्रथ्यन्तवाच्ययूपार्थं दारु, अतो दारुशब्देन यूपायेत्यस्य समासः, यूपस्य दारुविकृतित्वाच्च, तक्षादिना अष्टाश्रीकृतवृक्षस्यैव यूपशब्दार्थत्वात्। अथ प्रकृतिविकृतिभावग्रहणस्य प्रयोजनमाह--नेहेति। रन्धनायेति। पाकायेत्यर्थः। "रध हिंसायाम्"। इह पाको विवक्षितः। भावे ल्युट्, अनादेशः। "रधिभजोरची"ति नुम्। स्थाल्याश्चतुथ्र्यन्तवाच्यपाकार्थत्वेऽपि प्रकृतिविकृतिभावविरहान्न समासः। नन्व()ओभ्यो घासः अ()आघासः, धर्माय नियमो धर्मनियम इत्यादौ कथं तदर्थेन समासः, प्रकृतिविकृतिभावविरहादित्यत आह--अ()आघासादयस्त्विति। न चैवं "रन्धनायस्थाली"त्यत्रापि षष्ठीसमासः स्यादेवेति प्रकृतिविकृतिभावनियमो व्यर्थ इति वाच्यं, शाब्दबोधे सम्बन्धत्वतादथ्र्यन्तवकृतवैलक्षण्येन उक्तनियमसाफल्यात्। एवञ्च "रन्धनस्य स्थाली"ति सम्बन्धत्वेन भाने षष्ठीसमास इष्ट एव। तादथ्र्यत्वेन भाने चतुर्थीसमासवारणाय तु प्रकृतिविकृतिभावनियमाश्रयणमित्यास्तां तावत्। तदेवं तदर्थेत्यंशः प्रपञ्चितः।

अथेदानीमर्थशब्देन चतुर्थ्यन्तस्य समासे विशेषमाह--अर्थेनेति। अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमास इति वक्तव्यम्। अन्यथा विभाषाधिकाराद्विकल्पः स्यात्। विशेष्यस्य प्रधानस्य यल्लिङ्गं तल्लिङ्गमित्यपि वक्तव्यम्। अन्यथा अर्थशब्दस्य नित्यं पुँल्लिङ्गत्वात् "परवल्लिङ्ग"मिति सर्वत्र पुँल्लिङ्गतैव स्यादित्यर्थः। अर्थशब्दोऽत्र वस्तुपरः। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। इहोपकारकं वस्तु विवक्षितमित्यभिप्रेत्योदाहरति--द्विजार्थ इति। तत्र द्विजायाऽयमित्यस्वपदविग्रहः। तत्रा।ञर्थशब्दस्थानेऽयमिति शब्दः, नित्यसमासत्वेनाऽस्वपदविग्रहौचित्यात्। द्विजायेति तादर्थ्यचतुर्थी। तदन्तस्याऽर्थशब्देन समासो विशेष्यसूपशब्दस्य पुँल्लिङ्गत्वात्समासस्य पुँल्लिङ्गता च। द्विजस्यो कारकः सूप इत्यर्थः। द्विजार्थेति। द्विजायेयमिति विग्रहः। अर्थशब्दस्य नित्यपुँल्लिङ्गत्वेऽपि "परवल्लिङ्ग"मिति पुँल्लिङ्गं बाधित्वाऽनेन विशेष्यलिङ्गानुसारेण स्त्रीलिङ्गता। द्विजार्थं पय इति। द्विजायेदमिति विग्रहः। अत्र विशेष्यलिङ्गानुसारान्नपुंसकत्वम्। भाष्ये तु चतुर्थ्यैव तादर्थ्यस्योक्तत्वात् "उक्तार्थानामप्रयोगः" इति न्यायेनाऽर्थशब्देन विग्रहाऽप्रसक्तेर्नित्यसमासत्वं न्यायसिद्धमेव। "गुरोरिदं गुर्वर्थ"मित्यादाविव लिङ्गमपि लोकत एव सिद्धमिति वार्तिकमिदं प्रत्याख्यातम्। भूतबलिरिति। भूतेभ्यो बलिरिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य बलिशब्देन समासः। गोहितमिति। गोभ्यो हितमिति। विग्रहः। गवामनुकूलमित्यर्थः। "हितयोगे चे"ति शेषषष्ठ()पवादश्चतुर्थी"। तदन्तस्य हितशब्देन समासः। गोरक्षितमिति। "तृणादिक"मिति शेषः। गोभ्यो रक्षितमिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य रक्षितशब्देन समासः।

तत्त्व-बोधिनी

भक्ष्येण मिश्रीकरणम् ६१०, २।१।३४

भक्ष्येण। खरं विशदमभ्यवहार्यं भक्ष्यम्। खरं =कठिनं विशदं=विविक्तावयवं खाद्यं भक्ष्यमित्यर्थः। यत्प्रत्ययान्तस्य एरन्तस्य च भक्षयतेस्तत्रैव प्रयोगात्। "अब्भक्ष" इत्यादिप्रयोगस्तु भक्ताः। गुडधाना इति। ननु धानानां प्रत्येकं विविभक्तावयवत्वाऽभावात्कथमेतदुदाहरणं सङ्गच्छत इति चेत्। मैवम्। भृष्टयवसमुदायस्य धानात्वात्समुदायं प्रति समुदायिनामवयवत्वाच्च तदुपपत्तेः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चतुर्थी १।१ तदर्थार्थबलिहितसुखरक्षितैः ३।३ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६

सुप् सुपा इति वर्तते। तस्य विशेषणम् एतत्। ततिति सर्वनाम्ना चतुर्थ्यन्तस्य अर्थः परामृश्यते। तस्मै इदं तदर्थम्। तदर्थ अर्थ बलि हित सुख रक्षित इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। तदर्थेन प्रकृतिविकारभावे समासो ऽयम् इष्यते। यूपाय दारु यूपदारु। कुण्ड्लाय हिरण्यम् कुण्डलहिरण्यम्। इह न भवति, रन्धनाय स्थली, अवहननाय उलूखलम् इति। तादर्थ्ये चतुर्थी च अस्मादेव ज्ञापकाद् भवति। अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या। ब्राह्मणार्थं पयः। ब्राह्मणार्था यवागूः। बलि कुबेराय बलिः कुबेरबलिः। महाराजबलिः। हित गोहितम्। अश्वहितम्। सुख गोसुखम्। अश्वसुखम्। रक्षित गोरक्षितम्। अश्वरक्षितम्।

लघु-सिद्धान्त-कौमुदी

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ९३०, २।१।३५

चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु यूपदारु। (तदर्थेन प्रकृतिविकृतिभाव एवेष्टः)। तेनेह न - रन्धनाय स्थाली। (अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्)। द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥

न्यासः

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः। , २।१।३५

"तदर्थेन" इत्यादि। यदि तादथ्र्यमात्रे समासः स्यात्, बलिरक्षितग्रहणमनर्थकं स्यात्। तथा हि-- कुबेरबलिः,गोरक्षितमित्यत्रापि तादथ्र्यं गम्यतत एव। तसमाद्बलिरक्षितग्रहणाल्लिङ्गात् "तादर्थ्ये प्रकृतिविकारभावे समासो भवति" इति विज्ञायते। ननु च सम्प्रदाने चतुथ्र्यर्थं बलिरक्षितग्रहणं स्यात्, नैतदस्ति; ददातिकर्मणा हि अभिप्रेयमाणस्य क्रियया वा सम्प्रदानसंज्ञेष्यते, न चेह ददातिकर्मणा क्रियया वाऽभिप्रेयमाणताऽस्ति, तत्कुतः सम्प्रदाने चतुर्थी? केन पुनस्तादर्थ्ये चतुर्थी भवतीत्याह-- "अस्मादेव" इत्यादि। यदि तादर्थ्ये चतुर्थी न स्यात्, तदा तदर्थग्रहणमनर्थकं स्यात्। तस्माद्यदेतत्, तदर्थेन चतुथ्र्यन्तस्य समासविधानं तदेव ज्ञापकम्-- तादर्थ्ये चतुर्थी भवतीति। "अर्थेन" इत्यादि। कत्र्तव्यमिति शेषः। नित्यसमास उच्यते = कथ्यते, येन तन्नित्यसमासवचनं व्याख्यातव्यम्। एतदुक्तं भवति-- येनार्थशब्देन नित्यसमासः प्रत्याय्यते तद्व्याख्यानं कत्र्तव्यमिति। तत्रेदं व्याख्यानम्-- विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनार्थशब्देन नित्यसमासो भविष्यति, सर्वलिङ्गता चेति। "परवल्ललिङ्गं द्वन्द्वतत्पुरुषयोः" २।४।२६ इति परवल्लिङ्गतायां प्राप्तायां सर्वलिङ्गता विधीयते। एषा तु लोकाश्रयत्वाल्लिङ्गस्येति सिद्धा। अथ वा -- बहुलग्रहणानुवृत्तेः सर्वमेतत् सिद्धम्। गोहितम्, गोसुखमिति "चतुर्थी चाशिष्यायुष्य" २।३।७३ इत्यादिना चतुर्थी। हितयोगे त्वनाशिष्यपि चतुर्थी भवति। तथा हि वक्ष्यति-- "हितयोगे चतुर्थी वक्तव्या" (वा। १२३) इति।

तत्त्व-बोधिनी

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ६११, २।१।३५

चतुर्थी तदथार्थ। तच्छब्देन प्रकृता चतुर्थी परामृश्यते, प्रत्ययग्रहमम्, चतुथ्र्यन्तेन सामथ्र्यात्तदर्थो लक्ष्यते इत्याशयेनाह-- चतुथ्र्यन्तार्थय यदिति। चतुथ्र्यन्तवाच्याय यूपाय यद्दार्वादि, तद्वाचिना चतुथ्र्यन्तं समस्यत इत्यर्थः। बलिरक्षितग्रहणादिति। हितसुखग्रहणं तु न ज्ञापकं, तग्योगे चतुर्थी चाशिषीत्यतादर्थ्येऽपि चतुर्थीसमभवादिति भावः। ननु "चतुर्थी चाशिषी"ति वहिता या चतुर्थी तदन्तस्य समासो न भवति, समासादाशिषोऽनवगमादिति केचिदाहुरिति कैयटेनोक्तम्।ततश्च तत्पक्षे हितसुखग्रहणमपि बलुरक्षितग्रहणवज्ज्ञापकमेवेति चेत्, अत्र नव्याः--"ब्राआह्मणहितम्। गोहितम्। गोसुखमित्यतादथ्र्यचतुथ्र्यन्तेनापि समा४सः स्वीक्रियते। सा चाऽतादथ्र्यचतुर्थी "हितयोगे चे"ति वार्तिका "चतुर्थी तदर्थे" त्यादिना हितसुओखशब्दाभ्यां समासविधानज्ज्ञापकाद्वा सम्भवतीति हितसुखग्रहणं न ज्ञापकमिति सम्यगेवेत्याहुः। यूपायेति। तादर्थ्ये चतुर्थी। एवमग्रेऽपि यथासंभवमूह्रम्। अ()आघासादय इति। एतच्च भाष्यकृतोक्तम्। नन्वेवं "रन्धनाय स्थाली" त्यत्रापि षष्ठीसमासः स्यादेवेति प्रकृति विकृतिभाव एवेति नियमो निष्पल एव। न च स्वरे विशेषः, "चतुर्थी तदर्थे"इति पूर्वपदकृतिस्वरस्यापि प्रकृति विकृतभाव एवेष्यमाणत्वात्।

अत्राहुः--"संबन्धत्वातादथ्र्यकृतवैलक्षण्येनोक्तनियमसाफल्यान्न दोषः। अत्र च मानमेतदेव भाष्यम्। "न माषाणामश्रीयात्", "दाशरथाय मैथिली"त्यादिप्रयोगा अपीत्थमेव विवक्षाभेदेन निर्वाह्राः। एवंच "पूर्वसद्दशे"ति सूत्रे

सदृशग्रहणं व्यर्थमिति कैयटहरदत्तादीनामुक्तिः प्रामादिकीत्यवधेयम्। शाब्दबोधकृतवैलक्षण्यस्य तत्रापि सत्त्वादिति।

अर्थे नित्यसमासो विशेषेयलिङ्गता चेति वक्तव्यम्। अर्थेन नित्येति। अन्यथा विभाषाधिकारात्पक्षे "द्विजायार्थ"इति प्रयोगः स्यादिति भावः। विशेष्यलिङ्गता चेति। वचनाऽभावे त्वर्थशब्दस्य नित्यपुंस्त्वात् "परवल्लिङ्ग"मिति सर्वत्र पुँल्लिङ्गप्रयोग एव स्यादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पञ्चमी १।१ ३८ भयेन ३।१ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
पञ्चमी भयेन २।१।३७

सुप् सुपा इति वर्तते। तस्य विशेषणम् एतत्। पञ्चम्यन्तं सुबनतं भयशब्देन। सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। वृकेब्यो भयं वृकभयम्। चौरभयम्। दस्युभयम्। भयभीतभीतिभीभिरिति वक्तव्यम्। वृकेभ्यो भीतः वृकभीतः। वृकभीतिः। वृकभीः। पूर्वस्य एव अयं बहुलग्रहणस्य प्रप्ञ्चः। तथा च ग्रामनिर्गतः, अधर्मजुगुप्सुः इत्येवम् आदि सिद्धं भवति।
लघु-सिद्धान्त-कौमुदी
पञ्चमी भयेन ९३१, २।१।३६

चोराद्भयं चोरभयम्॥
न्यासः
पञ्चमी भयेन। , २।१।३६

"भयभीतभीतिभीभिरिति वक्तव्यम्" इति। एवं हि त्रिभिरपि भीतादिभिः समासो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। स्वयमेव व्याख्यातुमाह-- "पूर्वस्य" इत्यादि। यथैव हि "कर्तृकरणे कृता बहुलम्" २।१।३१ इति तृतीयान्तस्य समासो विधीयमानो बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादन्यविभक्त्यन्तस्यापि समासो भवति-- पादहारकः, गलेचोपक इति, तथा वृकभीत इत्यादावपि समासो भविष्यति। तस्मात् पूर्वकस्य बहुलग्रहणस्सयैवोदाहरणप्रदर्शनार्थोऽयं योगः प्रपञ्चार्थो वेदितव्यः। "तथा च" इत्यादि। यस्मात् पूर्वकेणैव बहुलग्रहणेन सिद्धं तस्यैवायम्प्रपञ्चः; तस्मात्तत एव बहुलग्रहणात् "ग्रामनिर्गतः" इत्याद्यपि सिद्धं भवति। आदिशब्देन वृकभीतादेग्र्रहणम्॥
बाल-मनोरमा
पञ्चमी भयेन ६९०, २।१।३६

पञ्चमी भयेन। पञ्चम्यन्तं भयशब्देन सुबन्तेन समस्यत इत्यर्थः। चोरभयमिति। "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात्पञ्चमी। भयभीतभिति। सूत्रे भयशब्दस्यैव ग्रहणाद्भूतादेरप्राप्ते समासे वचनम्। वृकभीत इति। वृकभीतिः वृकभीरित्यप्युदाहार्यम्। अत्र भाष्ये "अपर आहे"त्युक्त्वा भयनिर्गतजुगुप्सुभिरिति वक्तव्यमित्युक्त्वा वृकभयं

ग्रामनिर्गतः, अधर्मजुगुप्सु"रित्युदाहृतम्। चोरत्रस्तः, भोगोपरत इत्यादौ "सुप्सुपे"ति वा, मयूरव्यंसकादित्वाद्वा समासः।

तत्त्व-बोधिनी

पञ्चमी भयेन ६१२, २।१।३६

पञ्चमी भयेन। भयेनेति स्वरूपग्रहणं, नार्थस्य, प्रमाणाऽभावात्,"भयभीते"ति वार्तिकारम्भच्च। तेन "वृकात्त्रास"इत्यादौ समासो न। कथं तर्हि "भोगोपरतो" "ग्रामनिर्गतः", इत्यादिप्रयोगः()। अत्राहुः--बहुलग्रहणात्क्वचिद्विभक्त्यन्तरमपि कृता समस्यतैति प्रागेवोक्तत्वात्, "सुप्सुपे"त्यनेन वा तदुपपत्तिरिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपेतापोढमुक्तपतितापत्रस्तैः ३।३ अल्पशः ० पञ्चमी १।१ ३६ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः २।१।३८

अपेत अपोढ मुक्त पतित अपत्रस्त इत्येतैः सह पज्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। अपेत सुखापेतः। अपोढ कल्पनापोढः। मुक्त चक्रमुक्तः। पतित स्वर्गपतितः। अपत्रस्त तरङ्गापत्रस्तः। अल्पशः इति समासस्य अल्पविषयतामाचष्टे। अल्पा पञ्चमी संस्यते, न सर्वा। प्रासादात् पतितः, भोजनादपत्रस्तः इत्येवम् अदौ न भवति। कर्तृकरणे कृता बहुलम् २।१।३१ इत्यस्य एव अयम् प्रपञ्चः।

न्यासः

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः। , २।१।३७

"अल्पशः" इति। "बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्" ५।४।४२ इति शस्। "अल्पा पञ्चमी समस्यते" इति॥ अल्पेभ्यः प्रातिपदिकेभ्यः उत्पन्ना या पञ्चमी सा समस्यते, न तु सर्वेभ्यः प्रातिपदिकेभ्यः इत्यर्थः॥

बाल-मनोरमा

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ६९१, २।१।३७

अपेतापोढ। अल्पशः" इति स्वार्थे शस् अत एव निपातनात्। तदाह--अल्पं पञ्चम्यन्तमिति। "बह्वल्पार्था"दिति शस्तु न भवति, "बह्वल्पार्थान्मङ्गलवचन"मिति वक्ष्यमाणत्वात्।

तत्त्व-बोधिनी

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ६१३, २।१।३७

अपेतापोढ। "पञ्चमी"ति वर्तते, प्रत्ययग्रहणात्तदन्तग्रहणम्। "अल्पश"इत्यत्र "बह्वल्पार्थाच्छस्कारका"दिति शस्। यद्यपि "बह्वल्पार्थन्मङ्गलाऽमङ्गलवचन"मिति वक्ष्यति, तथाप्यत एव निपातनाच्छसिति बोध्यम्। कारकत्वं तु समसनक्रियां

प्रतित पञ्चम्यन्तस्य कर्मत्वात्तदभिधायित्वाच्चाल्पशब्दस्य। तदेतदाह--अल्पं पञ्चम्यन्तमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्तोकान्तिकदूरार्थकृच्छ्राणि १।३ क्तेन ३। पञ्चमी १।१ ३६ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २।१।३९

स्तोक अन्तिक दूर इत्येवम् अर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। स्तोकान् मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रान् मुक्तः। कृच्छ्राल् लब्धः। पञ्चम्याः स्तोकाऽदिभ्यः ६।३।२ इत्यलुक्। शतसहस्रौ परेणेति वक्तव्यम्। शतात् परे परश्शताः। सहस्रात् परे परस्सहस्राः। राजदन्तादित्वात् परनिपातः। निपातनात् सुडागमः।
लघु-सिद्धान्त-कौमुदी
स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ९३२, २।१।३८

न्यासः
स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन।, २।१।३८

"स्तोकान्मुक्तः; कृच्छ्रान्मुक्तः" इति। "करणे स्तोकाल्पकृच्छ्र" २।३।३३ इत्यादिना पञ्चमी। "अन्तिकादागतः, दूरादागतः" इति। दूरान्तिकार्थेभ्यो द्वितीया च" २।३।३५ इत्यनेन॥
बाल-मनोरमा
स्तोकान्तिकदूरार्थकृछ्रणि क्तेन ६९२, २।१।३८

स्तोकान्तिक। स्तोक-अन्तिक-दूर-एतदर्थकानि, कृच्छ्र एतानि पञ्चम्यन्तानि क्तप्रत्ययान्तेन समस्यन्त इत्यर्थः। अर्थग्रहणं स्तोकान्तिकदूरेषु संबध्यते। अल्पान्मुक्त इति। स्तोकपर्यायस्योदाहरणम्। अभ्याशादागत इति। अन्तिकपर्यायस्योदाहरणम्। विप्रकृष्टादागत इति। दूरशब्दपर्याय उदाहार्यः। "करणे च स्तोके"ति पञ्चमी। "दूरादागत" इत्यत्र तु "दूरान्तिकार्थेभ्यः" इति पञ्चमी। अत्र "सुपो धात्वि"ति लुकमाशङ्क्याह--पञ्चम्याः स्तोकादिभ्य इत्यलुगिति।

तत्त्व-बोधिनी
स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ६१४, २।१।३८

स्तोकान्मुक्त इत्यादि। "करणे च स्तोकाल्पे"ति पञ्चमी। "दूरादागत" इत्यादौ तु "दूरान्तिकार्थेभ्यः"इत्यनेन।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सप्तमी १।१ ४७ शौण्डैः ७।१ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
सप्तमी शौण्डैः २।१।४०

सप्तम्यन्तं शौण्डाऽदिभिः सह समस्यते, तत्पुरुषाश्च समासो भवति। अक्षेषु शौण्डः अक्षशौण्डः। अक्षधूर्तः। अक्षकितवः। शौण्ड। धूर्त। कितव। व्याड। प्रवीण। संवीत। अन्तर्। अन्तःशब्दस्त्वराधिकरनप्रधान एव पठ्यते। अधि। पटु। पण्डित। चपल। निपुण। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावदक्षादिषु अधिकरणे सप्तमी।
लघु-सिद्धान्त-कौमुदी
सप्तमी शौण्डैः ९३७, २।१।३९

सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशोण्ड इत्यादि। द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः॥
न्यासः
सप्तमी शौण्डैः। , २।१।३९

शौण्डैरिति बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह-- "शौण्डादिभिः" इत। केन पुनर्विहितायां सप्तम्यां तदन्तस्य शौण्डादिभिः समासो विधीयते? "सप्तम्यधिकरणे च" २।३।३६ इत्यनेनेति चेत्, वात्रमेतत्। तथा ह्यधिकरणं कारकम्, तच्च क्रियापेक्षम्। न चाक्षशौण्ड इत्यादौ वृत्तौ काचन क्रिया श्रूयते। तत्कुतोऽधिकरणस्येह सम्भवः? न च शक्यते वक्तुम्()-- अस्मादेव वचनाच्छौण्डादिभिर्योगे सप्तमी भविष्यतीति, देवदत्तः शौण्ड इत्यत्रापि प्रसङ्घः स्यादित्यत आह-- "वृत्तौ" इत्यादि। अस्त्येवात्र प्रसक्तिक्रिया। सा तु समासार्थ एवान्तर्भूतेतिगम्यमानत्वादद्वृत्तौ क्रियापदं न प्रयुज्यते। तस्या यत्साधनमधिकरणं तत्र सप्तमीत्यदोषः। अन्तः शब्दस्त्वत्राधिकरणप्रधान एव पठ()ते। तस्य प्रयोगे तत्सामानाधिकरण्यमेव सप्तम्याः कारणम्। वनेऽन्तर्वनान्तर्वसतीति पूर्वपदार्थप्रधान्ये तु "विभक्त्यर्थे यदव्ययम्" २।१।६ इत्यव्ययीभाव एव भवतिः- अन्तर्वणमिति। अधिशब्दोऽत्र पठ()ते-- तस्याधिकरणप्राधान्ये सत्यव्ययीभावः- अधिस्त्रि। आधेयप्राधान्ये तु तत्पुरुषः-- ब्राआह्णणेष्वपि ब्राआह्णणाधीन इति। ब्राआह्णणाधिशब्दः केवलो न प्रयुज्यते। "अष()डक्षाशित" ५।४।७ इत्यादिनाऽध्युत्तरपदात् स्वार्थिकस्य नित्यस्य खस्य विधानात्॥
बाल-मनोरमा
सप्तमी शौण्डैः ७०८, २।१।३९

सप्तमी शौण्डैः। शौण्डादिभिरिति। बहुवचननिर्देशाद्गणपाठाच्च शौण्डशब्दस्तदादपरः। अक्षेषु शौण्ड इति। शौण्डः=क्रियाकुशलः। वौषयिकाधिकरणत्वे सप्तमी। अक्षविषयकक्रीडाकुशल इत्यर्थः। अत्रेति। शौण्डादावित्यर्थः। ई()आराधीन इति। "प्रपञ्च" इति शेषः। "ई()आरे अधि" इति विग्रहः। "अधिरी()ओरे" इत्यधेः कर्मप्रवचनीयत्वम्। "यस्मादधिक"मिति सप्तमी। तदन्तस्याऽधिना समासः। सुब्लुक्। "अषडक्षे"त्यद्युत्तरपदत्वात्खः। ईनादेशः। "ई()आराधीन" इति रूपम्।

तत्त्व-बोधिनी
सप्तमी शौण्डैः ६३०, २।१।३९

सप्तमी शौण्डैः। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्च आद्यर्थावगतिरित्यभिप्रेत्याह--शौण्डादिभिरिति। अक्षशौण्ड इति। शौण्डः=प्रवीणः। इह आसक्ति रूपा क्रिया वृत्तावन्तर्भवतीति, तदद्वारकं च सामर्थ्यम्। यथा दध्योदनगुडधानादौ उपसेचनमिश्रीकरणादिद्वारा सामर्थ्यम्। तेन "कारकाणां क्रिययैव संबन्ध" इति नियमस्य न व्यभिचारः। आधिशब्द इति। "आधेयप्रधान"इति शेषः। अधिकरणप्रधानस्य त्वव्ययीभाव एव। अधिहरीति यथा। ख इति। "नित्य"मिति शेषः। "विभाषाञ्चेः" इति विभाषाग्रहणसामर्थ्यादिति वक्ष्यमाणत्वात्। अन्तः शब्दोऽत्र पठ()ते, स चाधिकरणप्रधानः। मध्ये इत्यर्थात्। तद्योगेऽवयविन आधारत्वविवक्षायां सप्तमी, यथा " वृक्षे शाखे"ति। वने अन्तर्वनान्तर्वसति। यस्त्वधिकरणकत्वमात्रवृत्तिरन्तः शब्दस्तस्य तु "विभक्त्यर्थे"इति नित्यमव्ययीभावः। "प्रनिरन्तः शरे" इथि णत्वम्। वने इति अन्तर्वणम्। यत्तु तत्पुरुषस्य वैकल्पिकत्वात्पक्षे अवययीभाव इति हरदत्तेनोक्तम्। तच्चिन्त्यम्। तत्पुरुषस्य वैकल्पिकत्वेऽप्यव्ययीभावस्य नित्यत्वाद्वने अन्तरिति तदुक्तस्वपदविग्रहस्याऽयोगात्। किं च विभक्त्यर्थमात्रवृत्तेरव्ययीभावः, वचनग्रहणसामर्थ्यात्। अन्यथा वृक्षस्योपरीत्यादावतिप्रसङ्गः स्यात्। ततश्च मध्यवाचिनः प्रसङ्गः एव नास्तीति दिक्। शौण्ड। धूर्त। कितव। व्याड। प्रवीण। संवीत। अन्तर्। अधि। पटु। पण्डित। कुशल। चपल। निपुण। वृत्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सिद्धशुष्कपक्वबन्धैः ३।३ च ० सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
सिद्धशुष्कपक्वबन्धैश् च २।१।४१

सप्तमी इति वर्तते। सिद्ध शुष्क पक्व बन्ध इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। साङ्काश्यसिद्धः। काम्पिल्यसिद्धः। शुष्क आतपशुष्कः। छायाशुष्कः। पक्व स्थालीपक्वः। कुम्भीपक्वः। बन्ध चक्रबन्धः। बहुलग्रहणस्य एव अयम् उदाहरणप्रपञ्चः।
न्यासः
सिद्धशुष्कपक्वबन्धैश्च। , २।१।४०

बाल-मनोरमा
सिद्धशुष्कपक्वबन्धैश्च ७०९, २।१।४०

सिद्धशुष्क। "सप्तमी"त्यनुवर्तते। तदाह--एतैः सप्तम्यन्तमिति। साङ्काश्यसिद्ध इति। सङ्खाशेन निर्वृत्तं नगरं साङ्काश्यम्। तत्र सिद्धः=उत्पन्नो ज्ञातो वेत्यर्थः। आतशुष्क इति। आतपे शुष्क इति विग्रहः। स्थालीपक्व इति। स्थाल्यां पक्व इति विग्रहः। "चक्रबन्ध इति। चक्रे बन्ध इति विग्रहः। शौण्डादिगणे एतेषां पाठाऽभावात्पृथगुक्तिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ध्वाङ्क्षेण ३।१ क्षेपे ७।१ सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
ध्वाङ्क्षेन क्षेपे २।१।४२

ध्वाङ्क्षेण इत्यर्थग्रहनम्। धवाङ्क्षवाचिना सुबन्तेन सह सप्तम्यन्तं सुबन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति क्षेपे गम्यमाने। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। अनवस्थितः इत्यर्थः। तीर्थकाकः। तीर्थवायसः। क्षेपे इति किम्? तीर्थे ध्वाङ्क्षस्तिष्थति।
न्यासः
ध्वाङ्क्षेण क्षेपे। , २।१।४१

"ध्वाङक्षेणेत्यर्थग्रहणम्" इति। अर्थप्रधानत्वान्निर्देशस्य। यत्र हि शब्दप्रधानो निर्देशस्तत्र स्वरूपग्रहणं भवति, अन्यत्र त्वर्थग्रहणमेवेति प्रतिपादितमेतत् प्राक्। अर्थप्रधानत्वन्तु निर्देशस्याविच्छिन्नाचार्यपारम्पर्योपदेशाद्विज्ञायते। बहुलग्रहणानुवृत्तेरर्थस्येदं ग्रहणं वा। अपि च "क्षेपे" इत्युच्यते, क्षेपश्चार्थकारित एवेत्यर्थग्रहणमेव युक्तम्। अर्थग्रहणे च सति ध्वाङक्षपर्यायैरपि समासो भवति, अत आह-- "ध्वाङक्षवाचिना" इत्यादि। "तीर्थे ध्वाङक्ष इव" इति। उपमानभावे सति ध्वाङक्षस्य क्षेपो गम्यते,नान्यथेति दर्शयितुमिवशब्दः प्रयुक्तः। समासे तु समास एवोपमानार्थस्यान्तर्भूतत्वादिवशब्दो गतार्थो न प्रयुज्यते। यथैव हि तीर्थ ध्वाङक्षश्चिरं स्थातारो न भवन्ति, तद्वदन्योऽपि यः कार्यं प्रत्यनवस्थितः स "तीर्थध्वाङक्षः" इत्युच्यते, यदाह-- "अनवस्थित इत्यर्थः" इति। कार्यं प्रत्यनवस्थितत्वमेव क्षेपः॥
बाल-मनोरमा
ध्वाङ्क्षेण क्षेपे ७१०, २।१।४१

ध्वाङ्क्षेण क्षेपे। "ध्वांक्षे"त्यर्थग्रहणम्, व्याख्यानात्। तदाह--ध्वाङ्क्षवाचिनेति। "क्षेप"पदं व्याचष्टे--निन्दायामिति। तीर्क्षध्वाङ्क्ष इति। ध्वाङ्क्षः=काकः, स इव यो गुरुकुले चिरं न तिष्ठति स इत्यर्थः। एवं हि निन्दा भवति। अर्थग्रहणस्य प्रयोजनमाह--तीर्थकाक इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत्यैः ३।३ ऋणे ७।१ सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
कृत्यैरृणे २।१।४३

सुप्तमी इति वर्तते। कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति ऋणे गम्यमाने। यत्प्रत्ययेन एव इष्यते। मासे देयमृणम् मासदेयम्। संवत्सरदेयम्। व्यहदेयम्। ऋणग्रहणं नियोगोपलक्षणार्थं, तेन इह अपि समासो

भवति, पूर्वाह्णे गेयं साम पूर्वाह्णगेयम्। प्रातरध्येयो ऽनुवाकः। ऋणे इति किम्? मासे देया भिक्षा।

न्यासः

कृत्यैरृणे। , २।१।४२

"यप्रत्ययान्तेनैव समास इष्यते" इति। कथं पुनर्यत्प्रत्ययेनैव लभ्यते? अल्पश इत्यनुवृत्तेः, "मासदेयम्" इति। पूर्ववद्यत्, ईत्वञ्च। सप्तमी ह्त्रौपश्लेषिकेऽधिकरणे वेदितव्या। मासे ह्तीते योऽन्तरो दिवसः स मासं प्रत्युपश्लिष्टो भवति, "यस्य च भावेन भावलक्षमम्" २।३।३७ इत्यनेन वा। मासातिक्रमणभावेन हि ऋणदानभावो लक्ष्यते। अथ ऋण इत्युच्यते, तत्रेदं न सिध्यति-- पूर्वोह्णेगेयं साम, प्रातरध्येयोऽनुवाकः, इत्यत आह-- "ऋणम्" इत्यादि। ऋणं हि नियोगतो निर्यातयितव्यमिति नियोगसहचरितम्। अतः साहचर्यात् तेन नियोगोऽवश्यम्भाव उपलक्ष्यते। एतच्च "कृत्यैः" इति बहुवचनन्निर्देशाल्लिङ्गाद्गम्यते। कथम्? "कृत्यैः" इति बहुवचनमत्र विवक्षितम्, तच्च ऋणग्रहणस्य नियोगोपलक्षणार्थत्वे प्रकृतिभेदेन। भिद्यमाने कृत्ये सति प्रसज्यते, न त्वन्यथा। यत्प्रत्ययस्यैकत्वात् तेनैव समासस्येष्टत्वात्॥

बाल-मनोरमा

कृत्यैरृणे ७११, २।१।४२

कृत्यैरृणे। "सप्तमी"त्यनुवर्तते। कृत्यग्रहणेन प्रत्ययग्रहणपरिभाषया कृत्यसंज्ञकप्रत्ययान्तग्रहणम्। "ऋणपदमावस्यकोपलक्षण"मिति भाष्यम्। तदाह--,प्तम्यन्तमित्यादि। मासे इति। सामीप्याधिकरणत्वे सप्तमी। मासाऽव्यवहितोत्तरकाले प्रत्यर्पणीयमृणमित्यर्थः। ऋणपदस्यावश्यकोपलक्षणतायाः प्रयोजनमाह--पूर्वाह्णेगेयमिति। "तत्पुरुषे कृती"त्यलुक्। यत्प्रत्यय एव कृत्योऽत्र विवक्षित इति भाष्यम्। तेनेह न-पूर्वाह्णे दातव्या भिक्षेति।

तत्त्व-बोधिनी

कृत्यैरृणे ६३१, २।१।४२

कृत्यैः। यत्प्त्र्ययान्तेनैव समास इष्यते। "अल्पशः" इत्यनुवृत्तेः। बहुवचनं तु प्रकृतिभेदाभिप्रायम्। तथैवोदाहरति--मासेदेयमिति। तत्पुरुषे कृती"त्यलुक्। ने--मासे दातव्यम्। नियोगोपलक्षणार्थमिति। नियोगो--निर्धारणम्। आवश्यकोपलक्षमार्थमित्यर्थः। नित्यसमासोऽयमिति।अतएव "पुरुषोत्तमः"इति स्वपदविग्रहोऽसङ्गत इत्यवोचाम।

तत्त्व-बोधिनी

कुत्सितानि कुत्सनैः ६४०, २।१।४२

कुत्सितानि। "कुत्स अवक्षेपणे" कर्मणिक्तः। स च "मतिबुद्धी"ति सूत्रे चकारस्याऽनुक्तसमुच्चयार्थत्वाद्वर्तमाने विहित इत्याशयेनाह--कुत्स्यमानानीति। तत्प्रतिपादकानित्यर्थः। उभयत्र बहुवचननिर्देशः स्वरूपविधिनिरासार्थः। वैयकरणखसूचिरिति। सूचयतेः "अच इः"। यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयत्यभ्यासवैधुर्यात्स एवमुच्यते, न तु वस्तुतो व्याकरणं, तदध्ययनं वा कुत्सितम्, वेदाङ्गत्वेन तस्य प्रशस्तत्वात्। तथापि तस्य प्रतिभानाऽभावेन निष्फलत्वात्कुत्स्यते। दुर्दुरूढ इति। "दुल उत्क्षेपे"दुर्पूर्वः। औणादिक कूटप्रत्ययः। "बहुलमन्यत्रापी"ति णेर्लुक्। रलयोरेकत्वस्मरणाल्लस्य रः। विशेषस्यस्य पूर्वनिपातनियमार्थं सूत्रम्। शब्दप्रवृत्तिनिमित्तकुत्सायामेवाऽयं, संनिधानात्। तेनेह न--नैयायिको दुराचारः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संज्ञायाम् ७।१ सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
संज्ञायाम् २।१।४४

संज्ञायां विषये सप्तयन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। संज्ञा समुदायोपाधिः। तेन नित्यसमास एव अयम्, न हि वाक्येन संज्ञा गम्यते। अरण्येतिलकाः। अरण्येमाषाः। वनेकिंशुकाः। वने बिल्वकाः। कूपेपिशाचकाः। हलदन्तात् सप्तम्याः संज्ञायाम् ६।३।८ इत्यलुक्।
न्यासः
संज्ञायाम्।, २।१।४३

"समुदायोपाधिः" इति। "संज्ञायाम्" इति नेदं पूर्वपदस्योत्तरपदस्य वा विशेषणम्, किं तर्हि? समुदायस्य-- समुदायेन चेत्संज्ञा गम्यत इति। किमेवं सति सिध्यतीत्यत आह-- "तेन" इत्यादि। अत्रैवोपपत्तिमाह-- "न हि" इत्यादि॥
बाल-मनोरमा
संज्ञायाम् ७१२, २।१।४३

संज्ञायाम्। "सप्तमी"त्यनुवर्तते। तदाह--सप्तम्यन्तमित्यादि। "अरण्येतिलका" इति "वनेकशेरुका" इति च संज्ञाशब्दौ। "हलदन्तात्सप्तम्याः" इत्यलुक्।

क्तेनाहो। अहोरात्रयोरवयवा इति विग्रहः। सप्तमीत्यनुवर्तते। क्तेनेति तदन्तग्रहणं। तदाह--अह्नो रात्रेश्चेति। अहरवयवस्योदाहरति--पूर्वाह्णकृतमिति। रात्र्यवयवस्योदाहरति--अपररात्रकृतमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्तेन ३। ४६ अहोरात्रावयवाः १।३ सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
क्तेन अहोरात्रावयवाः २।१।४५

अहरवयवाः रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वाह्णकृतम्। अपराह्णकृतम्। पूर्वरात्रकृतम्। अपररात्रकृतम्। अवयवग्रहनम् किम्? एतत् तु ते दिवा वृत्तं रात्रौ वृत्तं च द्रक्ष्यसि। अहनि भुक्तम्। रात्रौ वृत्तम्। बहुलग्रहणात्। रात्रिवृत्तम्, सन्ध्यगर्जितम् इत्यादयः।
न्यासः
क्तेनाहोरात्रावयवाः।, २।१।४४

"एतत्तु ते दिवावृत्तं रात्रौ वृत्तञ्च द्रक्ष्यसि" इत्यादि। नात्राहरवयवाः रात्र्यवयवाश्च सन्ति, किं तर्हि? कृत्स्नमेवाहः, कृत्स्ना

च रात्रिरिति, तेनेह समासो न भवति॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तत्र क्तेन ३।१ ४४ सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

तत्र २।१।४६

तत्र इत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। तत्रभुक्तम्। तत्रकृतम्। तत्रपीतम्। ऐकपद्यमैकस्वर्यं च समासत्वात् भवति।

न्यासः

तत्र। , २।१।४५

"तत्रेत्येतत् सप्तम्यन्तम्" इति। सप्तमीसाधर्म्यात्। त्रल्()प्रत्यय एवात्र सप्तमीशब्देनोक्तः। भवति हि ताद्धर्म्यात् ताच्छब्द्यम्। यथा-- गौर्वाहीक इति। सप्तमीसाधर्म्यं पुनस्त्रलोऽधिकरणार्थत्वात्। यथैव ह्यधिकरणप्रत्यायनाय सप्तमी प्रयुज्यते,तथा त्रलपि। अथ मुख्यैव सप्तमीविभक्तिः कस्मान्न विज्ञायते? तस्यास्तत्रशब्देऽसम्भवात्। असम्भवस्तु त्रलैव तदर्थस्य द्योतित्तवात्। अन्यस्त्वाह-- यदा विभक्त्यादशास्त्रलादयस्तदा स्थानिवद्भावेनैवैतत् सप्तम्यन्तं भवति। आदेशपक्षसत्ु तत्र वृत्तिकृता नाश्रित इत्यसम्यगेतत्। अन्तशब्दश्चात्रावयववचनः। सप्तमीत्रल्प्रत्ययोऽन्तोऽवयवो यस्य तत्तथोक्तम्॥

बाल-मनोरमा

तत्रः ७१३, २।१।४५

तत्र। "तत्रे"ति शब्दस्वरूपग्रहणम्। "सप्तमी"ति "क्तेने"ति चानुवर्तते। तदाह--तत्रेत्येतदित्यादि। तत्रभुक्तमिति। समासस्वरः प्रयोजनम्। तत्रभुक्तस्येदं तात्रभुक्तमिति च।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्षेपे ७।१ ४७ क्तेन ३।१ ४४ सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

क्षेपे २।१।४७

क्षेपो निन्दा। क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। अवतप्ते नकुलस्थितं त एतत्। चापलम् एतत्, अनवस्थितत्वं तवैततित्यर्थः। उदकेविशीर्णम्। प्रवाहेमूत्रितम्। भस्मनिहुतम्। निष्फलं यत् क्रियते

तदेवम् उछ्यते। तत्पुरुषे कृति बहुलम् ६।३।१३ इत्यलुक्।

न्यासः

क्षेपे। , २।१।४६

"अवतप्तेनकुलस्थितम्" इति। "तत्पुरुषे कृति बहुलम्" ६।३।१३ इति सप्तम्या अलुक्। कः पुनरत्र क्षेपः? कार्येष्वनवस्थितता। यदाह-- "एतच्चापलम्" इत्यादि। यथा अवतप्ते देशे नकुला न चिरं स्थातारो भवन्ति, तद्वदन्योऽपि योऽर्थानारभ्य न चिरं तेष्ववतिष्ठते तं प्रतीदमुच्यते-- अवतप्तेनकुलस्थितमिति। "उदकं विशीर्णम्" इत्यादावप्यारम्भस्य निष्फलता क्षेपः। अत एवाह-- "निष्फलं यत्क्रियते तदेवमुच्यते" इति। "प्रवाहे मूत्रितम्" इति। "मूत्र प्ररुआवणे" (धा।पा।१९०९) चुरादिः॥

बाल-मनोरमा

क्षेपे ७१४, २।१।४६

क्षेपे। "सप्तमी" "क्तेने"ति चानुवर्तते। तदाह--सप्तम्यन्तमित्यादि। अवतप्तेनकुलस्थितं त एतदिति। "स्थित"मिति भावे क्तः। नकुलेन स्थितम्। "कर्तृकरणे कृता बहुल"मिति समासः। "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण"मिति परिभाषया "नकुलस्थित"शब्दोऽपि क्तान्तः, तेन सहावतप्ते इति सप्तम्यन्तस्याऽनेन समासे कृते "तत्पुरुषे कृती"त्यलुक्। हे देवदत्त ! ते=तव, एतत्वस्थानम्, अवतप्ते नकुलस्थित"मित्यन्वयः। यथा अवतप्तप्रदेशे नकुला न चिरं तिष्ठन्ति तथा कार्याण्युपक्रम्य तान्यनिर्वर्त्य तव इतस्ततो धावनमित्यर्थः। अव्यवस्थितोऽसीति निन्दा ज्ञेया।

तत्त्व-बोधिनी

क्षेपे ६३२, २।१।४६

अवतप्ते इति। नकुलेन स्थितं नकुलस्थितम्। "कर्तृकरणे कृते"ति समासः। कृद्ग्रहणपरिभाषया नकुलस्थितशब्दोऽपि क्तान्त इथि तेन सह सप्तम्यन्तस्य समासः। "तत्पुरुषे कृती"ति सप्तम्या अलुक्। अव्यवस्थितत्वप्रतिपत्त्याऽत्र निन्दावगम्यते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पात्रेसंमितादयः १।३ च ० क्षेपे ७।१ ४६ सप्तमी १।१ ३९ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

पात्रेसमिताऽदयश् च २।१।४८

समुदाया एव निपात्यन्ते। पात्रेसमिताऽदयः शब्दस् तत्पुरुषसंज्ञा भवन्ति क्षेपे गम्यमाने। ये च अत्र क्तान्तेन सह समासाः, तेषां पूर्वेन एव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः, पूर्वपदाद्युदात्तत्वं यथा सयातिति। युक्तरोह्यादिषु हि पात्रेसमितादयश्च इति पठ्यते। पात्रेसमिताः। पात्रेबहुलाः। अवधारणेन क्षेपो गम्यते, पात्रे एव समिता न पुनः क्वचित् कार्ये इति। उदुम्बरमशकादषु उपमया क्षेपः। मातरिपुरुषः इति प्रतिषिद्धसेवनेन। पिण्डीषूरादिषु निरीहतया।

अव्यक्तत्वाच्चाकृतिगणो ऽयम्। पात्रेसमिताः। पात्रेबहुलाः। उदुम्बरमशकाः। उदरकृमिः। कूपकच्छपः। कूपचूर्णकः। अवटकच्छपः। कूपमण्डूकः। कुम्भमण्डूकः। उदपानमःडूकः। नगरकाकः। नगरवायसः। मातरिषुरुषः। पिण्डीषूरः। पितरिषूरः। गेहेशूरः। गेहेनर्दी। गेहेक्ष्वेडी। गेहेविजिती। गेहेव्याडः। गेहेमेही। गेहेदाही। हेहेदृप्तः। गेहेधृष्टः। गर्भेतृप्तः। आखनिकबकः। गोष्ठेशूरः। गोष्ठे विजिती। गोष्ठेक्ष्वेडी। गोष्ठेपटुः। गोष्ठेपण्डितः। गोष्ठेप्रगल्भः। कर्णेटिट्टिभः। कर्णेटिरिटिरा। कर्णेचुरचुरा। चकारो ऽवधारणार्थः, तेन समासान्तरं न भवति, परमपात्रेसमिताः इति।

न्यासः

पात्रेसमितादयश्च। , २।१।४७

"युक्तारोह्यविपरिग्रहार्थः" इति। युक्तारोह्यादिषु युक्तारोह्यादिभिर्वा परिगर्होऽर्थः प्रयोजनं यस्य पाठस्य स तथोक्कतः। किमर्थं पुनर्युक्तारोह्यादिषु परिग्रहस्तेषामिष्यत इत्याह-- "पूर्वपदाद्युदात्तत्वं यथा स्यात्" इति युक्तारोह्यादीनां हि "युक्तारोह्यादयश्च" ६।२।८१ इत्यनेन पूरवपदाद्युदात्तत्वं विधीयते। तत्र यदि ये क्तान्तास्ते न पठ()एरन्, तदा तेषामाद्युदात्तत्वं न स्यात्। कथं पुनः पात्रेसमितादयो युक्तारोह्यादिग्रहणेन गृह्न्ते; यतस्तेषां विधीयमानमाद्युदात्तत्वं पात्रेसमितादीनमपि भवतीत्याह-- "युक्तारोह्यादिषु हि" इत्यादि। "उदुम्बरमशकादिषूपमया क्षेपः" इति। यस्तत्रैवावरुद्धो न क्वचिद्()गच्छति तमव विशिष्टचं मन्यते-- नास्मात्परमस्तीति, सोऽदृष्टविस्तार उच्यत उदुम्बरमशक इति। एवमन्यत्राप्यपमानात् क्षेपः। "प्रतिषिद्धसेवनेन" इति। यः कश्चित् प्रतिषिद्धमाचरति स "मातरिपुरुषः" इत्युच्यते। "निरीहतया" इति। यो न किञ्चित् कर्तुं समर्थः स "पिण्डीशूरः" इत्येवमादिभिः पदैरभिधीयते। "चकारोऽवधारणार्थः" इति। पात्रेसमितादय एव यता स्युः, यदन्यत् समासान्तरं तेषां प्राप्नोति तन्मा भूदिति। तेन परमपात्रेसमिता इत#इ "सन्महत्" २।१।६० इत्यादिना समासान्तरं न भवति॥

बाल-मनोरमा

पात्रेसमितादयश्च ७१५, २।१।४७

पात्रेसमितादयश्च। निपात्यन्त इति। कृतसमासादिकार्या एते शब्दा निर्दिश्यन्त इत्यर्थः। पात्रेसमिता इति। इण् गतौ। संपूर्वात् "गत्यर्थाकर्मके"ति कर्तरि क्तः। निपातनात्सप्तम्या अलुक्। भोजनपात्रे निहिते सति सङ्गता इत्यर्थः। फलितमाह--भोजनेति। गेहेशूर इति। गेह एव प्रकटितशौर्यो, न तु युद्ध इत्यर्थः। गेहेनर्दीति। "नर्द शब्दे" "सुप्यजातौ" इति णिनिः। समासे सति निपातनादलुक्। गेह एव गर्जति, युद्धादौ तु न प्रवर्तत इत्यर्थः। अवधारणार्थ इति। ततश्च एते यथा गणे पठितास्तथैव भवन्तीत्यर्थः। ततः किमित्यत आह--तेनेति। ततश्च परमाश्च ते पात्रेसमिताश्चेत्यादौ समासो न भवति।

तत्त्व-बोधिनी

पात्रे समितादयश्च ६३३, २।१।४७

पात्रेसमितादयश्च। संपूर्वादिणः क्तः। गेहेनर्दीति। "नर्द शब्देq"इत्यस्मात् "सुप्यजातौ---"इति णिनिः। घटकतया प्रवेशो नेति। "परमाः पात्रेसमिताः"इति वाक्यमेव भवति, न तु "सन्मह"दित्यादिना समासान्तरमिति भावः। एतच्च शब्दकौस्तुभे स्थितम्। अन्ये तु "कवलाः पात्रेसमिताः"इति वाक्यमेव, न तु "पूर्वकालैके"त्यादिना समासान्तरमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः १।३ समानाधिकरणेन ३।१ ७१ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

पूर्वकालएकसर्वजरत्पुराणानवकेवलाः समानाधिकरणेन २।१।४९

सुप् सुपा इति वर्तते। तस्य विशेषणम् एतत्। पूर्वकाल एक सर्व जरत् पुराण नव केवल इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। भिन्नप्रवृत्तिनिमित्तस्य शब्दस्य एकस्मिन्नर्थे वृत्तिः साऽमानाधिकरण्यम्। पूर्वकालः इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम्। पूर्वकालो ऽपरकालेन समस्यते। स्नातानुलिप्तः। कृष्टसमीकृतम्। दग्धप्ररूढम्। एकशाटी। एकभिक्षा। सर्वदेवाः। सर्वमनुष्याः। जरद्धस्ती। जरद्गृष्टिः। जरद्वृत्तिः। पुराणान्नम्। पुराणावसथम्। नवान्नम्। नवावसथम्। केवलान्नम्। समानाधिकरणेन इति किम्? एकस्याः शाटी।

न्यासः

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन। , २।१।४८

"भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्य" इत्यादि। भिन्नप्रवृत्तिनिमित्तग्रहणं पर्यायनिवृत्त्यर्थम्। एकग्रहणं गौर()आ इत्यादिनिवृत्त्यर्थम्। "पूर्वकाल इत्यर्थनिर्देशः" इति। अर्थप्रधानत्वान्निर्देशस्य। तेन स्वरूपग्रहणं न भवतीति भावः। "परिशिष्टानां स्वरूपग्रहणम्" इति। शब्दप्रधानत्वान्निर्देशस्य। "पूर्वकालोऽपरकालेन" इति। कुतः पुनरनुक्तोऽप्येषोऽर्थविशेषो लभ्यते; सम्बन्धिशब्दत्वात् पूर्वकालस्य? न ह्यनपेक्ष्यापरकालं पूर्वकालं सम्भवति; अतः पूर्वकालपरिग्रहे कृते सत्यपरकालस्यापि परिग्रहः कृत एव। "स्नानानुलिप्तः" इति। पूर्वं स्नातः पश्चादनुलिप्त इत्यत्र स्नातशब्दः स्नानेन निमित्तेन प्रयुक्तः, अनुलिप्तशब्दोऽनुलेपनेन; तयोश्चैकत्रार्थे वृत्तिरित्यस्ति सामानाधिकरण्यम्। "एकशाटी" इति। एका चासौ शाटी चेति "पुंत्कर्मधारय" ६।३।४१ इत्यादिना पुंवद्भावः॥

बाल-मनोरमा

पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ७१६, २।१।४८

पूर्वकालैक। "सु"बित्यनुवृत्तं बहुवचनेन विपरिणम्यते। सुपेति चानुवर्तते। पूर्वः कालो यस्य स पूर्वकालः। पूर्वकालवृत्तिरित्यर्थः। ततश्च "पूर्वकाले"त्यनेन पूर्वकालवृत्त्यर्थकशब्दस्य ग्रहणम्। एकादिशब्दास्तु षट् स्वरूपपरा एव। तथाच पूर्वकालादयः सप्तसुबन्ताः समानाधिकरणेन सुबन्तेन समस्यन्ते, स तत्पुरुष इत्यर्थः। समानम्-एकम् अधिकरणं=वाच्यं यस्येति विग्रहः। एकार्थवृत्तित्वं सामानाधिकरण्यमिति फलितम्। पूर्वनिपातेति। पश्चादनुलिप्तः पूर्वं स्नातत्वेन, पूर्वं स्नातो वा पश्चादनुलिप्तत्वेन विशेष्टुं शक्यते, अतो "विशेषणं विशेष्येणे"ति समासे सति अन्यतरस्य पूर्वनिपाते प्राप्ते पूर्वकालवृत्तिशब्दस्यैव पूर्वनिपातार्थमिदं वचनम्। एवमेकादीनामपीत्यर्थः। एकशब्दविषये प्रयोजनान्तरमप्याह--एकशब्दस्येति। "दिक्संख्ये संज्ञायां समस्येते" इति नियमस्य वक्ष्यमाणतया "एकनाथ" इत्यत्र विशेषणसमासस्य बाधे प्राप्ते तत्प्रतिप्रसवार्थमप्येकग्रहणमित्यर्थः। स्नातानुलिप्त इति। विग्रहवाक्यवदिह पूर्वपश्चाच्छब्दाऽभावेऽपि स्नानानुलेपनयोः पौर्वापर्यं समासगम्यमेव। "पूर्वकालः समस्यते" इत्युक्ते परकालेनेत्यर्थात्प्रतीतेः। एकनाथ इति। एकश्चासौ नाथश्चेति विग्रहः। सर्वयाज्ञिका इति। यज्ञमधीयते विदन्ति वा याज्ञिकाः। "क्रतूक्थादिसूत्रान्ताट्ठक्"। सर्वे च ते याज्ञिकाश्चेति विग्रहः। जरन्नैयायिका इति। मीमांसामधीयते मीमांसकाः। "क्रमादिभ्यो वुन्"। पुराणश्च ते मीमांसकाश्चेति विग्रहः। नवपाठका इति। नवाश्च ते पाठकाश्चेति विग्रहः। अत्र पुराणसाहचर्यान्नवशब्दो नूतनवाच्येव गृह्यते, न तु सङ्ख्याविशेषवाची। केवलवैयकरणा इति। व्याकरणमधीयते विदन्ति

वा वैयाकरणाः। "तदधीते तद्वेदे"त्यण्। न य्वाभ्या"मिति वृद्धिनिषेध ऐजागमश्च। केवलाश्च ते वैयाकरणाश्चेति विग्रहः।

तत्त्व-बोधिनी
पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ६३४, २।१।४८

पूर्वकालै। "पूर्वकैले"त्यर्थनिर्देशः। इतरेषां तु षण्णां स्वरूपग्रहणम्। पूर्वत्वस्य ससंबन्धिकत्वात्पूर्वकालोऽपरकालेन समस्यते। तथैवोदाहरति--स्नतानुलिस इति। अत्र क्रियाशब्दत्वात्पाचकपाठकवत्पर्यायः। याज्ञिका इत्यादि। यज्ञमधीयते विदन्ति वा याज्ञिकाः। "क्रतूक्थादी"ति ठक्। एवं नैयायिकाः। "जीर्यतेरतृन्" इति भूतेर्थेऽतृन्। जरन्तश्च ते नैयायिकाश्च। जीर्णनैयायिकाश्च। जीर्णनैयायिका इत्यर्थः। मीमांसामधीयते विदन्ति वा मीमांसकाः। "क्रमादिभ्यो वुन्"। नवपाठका इति। पठन्तीति पाठकाः। "ण्वुल्()तृचौ"इति ण्वुल्। संख्यावाची नवशब्दोऽत्र न गृह्रते, "दिक्सङ्ख्यते संज्ञाया"मिति नियमात्। समानाधिकरणेनेति किम्()। एकस्याः शौक्ल्यम्। षष्ठीसमासोऽपि इह न भवति, "पुरणगुमे"ति निषेधात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दिक्सङ्ख्ये १।२ ५० संज्ञायाम् ७।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
दिक्सङ्ख्ये संज्ञायाम् २।१।५०

समानाधिकरणेन इत्यापादसमाप्तेरनुवर्तते। दिग्वाचिनः शब्दाः सङ्ख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति संज्ञयां वषये। पूर्वेषुकामशमी। अपरेषुकामशमी। पञ्चाम्राः। सप्तर्षयः। संज्ञायाम् इति किम्? उत्तरा वृक्षाः। पञ्च ब्राह्मणाः।
लघु-सिद्धान्त-कौमुदी
दिक्संख्ये संज्ञायाम् ९३८, २।१।४९

संज्ञायामेवेति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः। तेनेह न - उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥
न्यासः
दिक्संख्यं संज्ञायाम्। , २।१।४९

"पूर्वेषुकामशमीत्यादिः" ग्रामाणां संज्ञा। पूर्वा चासाविषुकामशमी चेति पूर्वेषुकामशमी। मन्दश्रियां पूर्वोत्तरपदविभागमात्रप्रदर्शनार्थं वाक्यं कृतम्। न ह्यत्र वाक्येन भवितव्यम्। न हि वाक्येन संज्ञा गम्यते॥
बाल-मनोरमा
दिक्संङ्ख्ये संज्ञायाम् ७१७, २।१।४९

दिक्संख्ये। अधिकार इति। "पूर्वकालैके"ति सूत्रस्थं "समानाधिकरणेने"त्येतदा पादसमाप्तेरनुवर्तत इत्यर्थः। ततश्च दिक्सङ्ख्ये समानाधिकरणेन सुबन्तेन समस्येते, स तत्पुरुष इत्यर्थः। ननु "विशेषणं विशेष्येणे"ति यदि

दिक्सङ्ख्ययोस्समासः स्यात्तर्हि संज्ञायामेवे"ति नियमशरीराभ्युपगमात्। "पूर्वसूत्रं" "पूर्वमासः" "पूर्वसमुद्रः" इत्यादौ तु संज्ञात्वाऽभावेऽपि कालदेशवाचकत्वात् समासो भवत्येव। ननु "त्रिलोकनाथः पितृसद्मगोचरः" इति कथं कालिदासप्रयोगः, त्रिलोकशब्दस्य असंज्ञात्वात्। त्रयाणां लोकानां समाहार इति विग्रहे "तद्धितार्थ" इति द्विगुसमासे तु "द्विगोः" इति ङीप्प्रसङ्गः। "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति स्त्रीलिङ्गत्वात्। पात्रादित्वान्न स्त्रीत्वमित्यभ्युपगमे "यदि त्रिलोकी गणनापरा स्या"दित्यादिप्रयोगा न युज्येरन्निति चेत्सत्यम्। लोकशब्दोऽत्र लोकसमुदायपरः। त्यवयवो लोकस्त्रिलोक इति मध्यमपदलोपी समासः। एतच्च "द्विगोर्लुगनपत्ये" इति सूत्रे भाष्ये स्पष्टम्। "षोडशपदार्थाना"मित्यत्र तु षोडशसंख्याकाः पदार्था इति मध्यमपदलोपी समास इत्यलम्। पूर्वेषुकामशमीति। पूर्वशब्दस्य इषुकामशमीशब्देन समासः। देशविशेषस्य संज्ञेयम्। सप्तर्षय इति। मरीच्यत्रिप्रभृतीनां सप्तानामृषीणां संज्ञेयम्। नेहेति। असंज्ञात्वादिति भावः।

तत्त्व-बोधिनी

दिक्सङ्ख्ये संज्ञायाम् ६३५, २।१।४९

दिक्सङ्ख्ये संज्ञायाम्। नियमार्थमिति। "तत्पुरुषे संज्ञायामेव दिक्सङ्ख्ये समस्येते"इति नियमशरीरम्। तेन पञ्चगुरित्यादि सिद्ध्यति। कथं तर्हि "त्रिलोकनाथः पितृसद्मगोचरः"इति कालिदासः। त्रिलोकशब्दस्याऽसंज्ञात्वात्। न च समाहारे द्विगु), "द्विगोः"इति ङीप्प्रसङ्गात्। न च पात्रादित्वं कल्प्यं, "यदि त्रिलोकी गणना परा स्या"दित्यादिप्रयोगाणामसङ्गत्यापत्तेः। न च "उत्तरपदे"इति समासः, त्रिपदतत्परुषस्येह दुर्लभत्वात्। अत्राहुः--लोकशब्दोऽत्र लोकसमुदायपरः। त्र्यवयवो लोकस्त्रिलोकः। शाकपार्थिवादित्वादुत्तरपदलोप"इति। पञ्च ब्राआह्मणा इति। यद्यप्यत्र कृतेऽपि समासे रूपे विशेषो नास्ति, तथापि विभक्त्यन्वये पञ्चभिब्र्राआह्मणैरित्यादौ विशेषो बोध्यः। तद्धितार्थो। असंज्ञार्थं वचनम्। एकापि सप्तमी विषयेभेदाद्भिद्यत इत्याशयेनाह।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तद्धितार्थोत्तरपदसमाहारे ७।१ च ० दिक्सङ्ख्ये १।२ ४९ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

तद्धितर्थोत्तरपदसमाहारे च २।१।५१

दिक्सङ्ख्ये इत्यनुवर्तते। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च अभिधेये दिक्सङ्ख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। तद्धितार्थे तावत् पूर्वस्यां शालायां भवः, दिक्पूर्वपदादसंज्ञायां ञः ४।२।१०६, पौर्वशालः। आपरशालः। उत्तरपदे पूर्वशालाप्रियः। अपरशालाप्रियः। समाहारे दिक्शब्दो न सम्भवति। सङ्ख्या तद्धितार्थे पाञ्चनापितिः। पञ्चकपालः। उत्तरपदे पञ्चगवधनः। दशगवधनः। समाहारे पञ्चपूली। दशपूली। पञ्चकुमारि। दशकुमारि। स नपुंसकम् २।४।१७ इति नपुंसकत्वम्। ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७ इति ह्रस्वत्वम्।
लघु-सिद्धान्त-कौमुदी
तद्धितार्थोत्तरपदसमाहारे च ९३९, २।१।५०

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः - पूर्वा शाला इति समासे जाते (सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः)॥

न्यासः

तद्धितार्थोत्तरपदसमाहारे च। , २।१।५०

एकस्या अपि सप्तम्या विषयभेदेन भेदं दर्शयितुमाह-- "तद्धितार्थे विषये" इत्यादि। यदि तद्धितार्थेऽभिधेय इत्येवं विज्ञायेत, तदा पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्। तदर्थस्य समासेनैवोक्तत्वादित्येतन्मनसि कृत्वा तद्धितार्थापेक्षया विषयसप्तमीयमिति दर्शयितुं "तद्धितार्थे विषये" इत्युक्तम्। तद्धिताः = अणादयः, तेषामर्थोऽपत्यादिः, तस्मिन् विषये। अनन्यत्रभावो विषयशब्दस्यार्थः, यथा-- मत्स्यानां जलं विषः इति। "पौर्वशालः" इति। पूर्वस्यां शलायां भव इति तद्धितार्थे विषयभूते?प्राक् समासः। ततः सुब्लुक्। ततस्तद्धितः। "पूर्वशालाप्रियः" इति। पूर्वा शाला प्रियाऽस्येति पूर्वं पदानां त्रयाणां बहुव्रीहिः। पश्चात् प्रियशब्दे उत्तरपदे परतः पर्वयोः पदयोस्तत्पुरुषः। तस्मिन् सति समासान्तोदात्तत्वं भवति शालेत्यत्र। "समाहारे {दिक्शब्दः इति मूलपाठः, पदमञ्जरी च। } दिङ न सम्भवति" इति। समाहारो हि समूहः। स च भिन्नार्थानामेवैककालानां भवति। बुद्ध्या युगपदार्थानां परिग्रहादेककालत्वम्, न त्वभिन्नवस्तुनः। संखायैव च भेदमाचष्टे; तस्या भिन्नार्थाभिधायित्वात्, न तु दिक्शब्दः; तस्य प्रतिनियतविषयत्वात्। तस्मात् समाहारे द#इक्शब्दोन सम्भवतीति स न तत्र समस्यते। "पञ्चानापितिः" इति। पञ्चानां नापितानामपत्यमिति तद्धितार्थे विषयभूते प्राक् समासः। पश्चात् "अत इञ्" (४।१।९५)। "पञ्चकपालः" इति। पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे विषयभूते पूर्वं समासः; पश्चादण्। तस्य "द्विगोर्लुगनपत्ये" ४।१।८८ इति लुक्। "{पञ्चगवधनम् इति मुद्रित पाठः}पञ्चगवधनः" इति। पञ्च गावो धनमस्येति प्राक् त्रयाणां पदानां बहुव्रीहिः। उत्तरकालं धनशब्द उत्तरपदे परतः पूर्वयोः पदयोस्तत्पुरुषः। तस्मिन् सति "गोरतद्धितलुकि" ५।४।९२ इति टच् समासान्तः। तत्र हि "तत्पुरुषस्याङ्गुलेः" ५।४।८६ इत्यतस्तत्पुरुषग्रहणमनुवत्र्तते। "पञ्चपूली"इति। पञ्चानां पूलानां समहार इति विग्रहः। "द्विगुरेकवचनम्" (२।४।१।) इत्येकवद्भावः। "अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते" (वा।१५६) इति स्त्रीलिङ्गता; "द्विगोः" ४।१।२१ इति ङीप्। ननु समाहारः = समूहः, समूहश्च तद्धितकार्थो भवतीत्यपार्थकं समाहारग्रहणम्; तद्धितार्थ इत्येव सिद्धत्वात्? नैतदस्ति; पञ्चकुमारीत्यत्र हि समूहप्रत्ययस्य "द्विगोर्लुगनपत्ये" ४।१।२१ इति लुकि कृते "लुक् तद्धितलुकि" १।२।४९ इति स्त्रीप्रत्ययस्यापि लुक् स्यात्। समाहारे तु पृथग्गृहीते तद्धितानुत्पत्तिरेवात्र विषये समाख्यायते। ततो न भवत्येष दोषः। पञ्चानां कुमारीणां समाहारः पञ्चमकुमारि। "एकविभक्तिचापूर्वनिपाते" १।२।४४ इत्युपसर्जनसंज्ञायाम् "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्रस्वत्वम्। कथं पुनरत्रैकविभक्तत्वम्? षष्ठ()ऐवैकया योगात्। तथा हि समाहारः समूहः, तेन च तत्सम्बन्धे षष्ठ()ऐव भवितव्यम्। अतः समाहारः कुमा४रीणाम्, समाहारं कुमारीणां पश्य, समाहारेण कुमारीणामित्येवमादिभिरनेकाभिर्विभक्तिभिर्युज्यमानेऽपि समाहारशब्दे कुमारीशब्दः षष्ठ()ऐवैकया युज्यत इत्येकविभक्तिकत्वम्॥व

बाल-मनोरमा

तद्धितार्थोत्तरपदसमाहारे च ७१८, २।१।५०

तद्धितार्थ। एकापि सप्तमी विषयभेदाद्भिद्यते। तत्र तद्धितार्थेत्यंशे वैषयिकाधारत्वे वर्तते। उत्तरपदेत्यंशे सामीपिकमाधारत्वमादाय परसप्तमी पर्यवस्यति। समाहारांशे तु वाच्यतया आधारत्वे सप्तमी। पूर्वसूत्राद्दिक्संख्ये इत्यनुवर्तते। तदाह--तद्धितार्थे विषये इति। तद्धितार्थे भविष्यत्तद्धितजन्यज्ञानविषये सतीत्यर्थः। तद्धिते भविष्यतीति यावत्। प्राग्वदिति। समानाधिकरणेन समस्यते स तत्पुरुष इत्यर्थः। तद्धितार्थे दिक्समासमुदाहरति--पूर्वस्यामिति। समासे कृते इति। पूर्वस्यां शालायां भव इति विग्रहे "तद्धितार्थ" इति समासे कृते "दिक्पूर्वपदा"दिति ञप्रत्यते कृते

"यस्येति चे"त्याकारलोपे आदिवृद्धिरिति भावः।

सर्वनाम्न इति। मात्रशब्दः कात्स्न्र्ये। समासतद्धितादिवृत्तिगतसर्वनाम्नां पुंवत्त्वमिति तदर्थः। यदि तु "तद्धिते परे दिक्सङ्ख्ये समस्येते" इत्युच्यते, तर्हि उत्पन्ने तद्धिते समासः, समासे कृते दिक्पूर्वपदत्वात्तद्धित इत्यन्योन्याश्रयप्रसङ्गः। "तद्धितार्थे वाच्ये दिक्संख्ये समस्येते" इति तु न व्याख्यातं, तद्धितार्थस्य तद्धितवाच्यतया समासार्थत्वाऽभावात्। अतस्तद्धिते भविष्यतीत्येव व्याख्यातुमुचितम्। आपरशाल इति। अपरस्यां शालायां भव इति विग्रहः। समासादि पौर्वशालवत्।

उत्तरपदे परतो दिक्समासमुदाहरति-पूर्वा शाला प्रिया यस्येत्यादिना। ननु बहुव्रीहिसमासे कृते सुपां लुप्तत्वादुत्तरपदे परतः पूर्वयोः किमनेन समासेनेत्यत आह--तेन शालाशब्दे आकार उदात्त इति। अवान्तरतत्पुरुषे सति समासान्तोदात्तत्वेन लकारादाकार उदात्त इत्यर्थः। असति त्ववान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्यादिति भावः। ननु पूर्वेषां पुरुषाणां समाहार इत्यत्रापि समासः स्यादित्यत आह--दिक्ष्विति। दिक्षु समाहारो द्विगुविषयो न भवतीत्यर्थः। समाहारे दिक्पूर्वपदसमासो नास्तीति यावत्।

सङ्ख्यायास्तद्धितार्थे इति। समास उदाह्रियत इत्यर्थः। तत्र तद्धितार्थे उदाहरति-षाण्मातुर इति। मातुरुत्सह्ख्यासम्भद्रपूर्वायाः" इत्यण्, प्रकृतेरुकारश्चादेशः, आदिवृद्धिश्च। अथ उत्तरपदे परत उदाहरति-पञ्चगाव इति। अवान्तरतत्पुरुषस्येति। उत्तरपदे परतो विहितस्येत्यर्थः। विकल्पे प्राप्ते इति। "महाविभाषाधिकारा"दिति शेषः। ततश्च पञ्चगोशब्दयोस्तत्पुरुषाऽभावपक्षे "गोरतद्धितलुकी"ति तत्पुरुषप्रयुक्तटजभावे "पञ्चगोधन" इत्यपि स्यादिति भावः।

द्वन्द्वतत्पुरुषयोरिति। उत्तरपदे परतो यौ द्वन्द्वतत्पुरुषौ तयोर्नित्यत्वं वक्तव्यमित्यर्थः। समासग्रहणं तु संपातायातम्, अनन्वयात्, उत्तरपदे परतः समाससंज्ञया अव्यभिचाराच्च, उत्तरपदशब्दस्य समासोत्तरखण्डे रूढत्वात्।

तत्त्व-बोधिनी

तद्धितार्थोत्तरपदसमाहारे च ६३६, २।१।५०

तद्धितार्थे विषये इत्यादि। यदि तु "तद्धितार्थे वाच्ये"इति व्याख्यायेत, तर्हि "पौर्वशाल"इत्यादौ तद्धितो न स्यात्, तदर्थस्य समासेनैवलोक्तत्वात्। "द्विगोर्लुगनपत्ये"इति ज्ञापकादुक्तेऽपि तद्धितार्थे तद्धितो भवतीति कल्पनायां प्रतिपत्तिगौरवमिति भावः। "तद्धिते परे"इति तु न व्यख्यायमेव, तद्धिते परतः समासः, समासे कृते "दिक्पूर्वपदा"दित्यादिना तद्धित इत्यन्योन्याश्रयप्रसङ्गात्। समाहारे च वाच्ये इति। तेन "पञ्चगव"मित्यादौ समासेनैव समाहारस्योक्तत्वात्समूहार्थप्रत्ययो नोत्पद्यते। अन्यथा अत्र "गोरतद्धितलुकी"ति टज्न स्यात्, समूहिकप्रत्ययस्य "द्विगोर्लुगनपत्ये"इति लुक्()प्रवृत्तेरिति भावः।

सर्वनाम्नो वृत्तिमात्रे पुंवद्भावे पुंव्द्भावः। सर्वनाम्ना इति। एतच्च पूर्वापरोदाहरणान्वयि। यद्यपि "स्त्रियाः पुंव"दित्येनेनापि प्रकृतरूपसिद्धिः, तथाप्युत्तर पूर्वेत्याद्यर्थं "सर्वनाम्न"इति वचनमावश्यकं, प्रतिपदोक्तत्वादिहापि तदुपन्यासो न्याय्य इति भावः। वृत्तिमात्रे इति। तद्धितवृत्तौ समासवृत्तौ चेति कैयटः। आकार उदात्त इति। असति त्ववान्तरे तत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमेव स्यादिति भावः। षाण्मातुर इति। "मातुरुत्सङ्ख्यासंभद्रपूर्वायाः"इत्युदादेशः। "अनपत्ये"इत्युक्तेः "द्विगोर्लु"गिति लुग् न। विकल्पे प्राप्त इति।"महाविभाषये"ति शेषः। ततश्च तत्पुरुषप्रयुक्तटजभावे "पञ्चगोधन"इत्यपि स्यादिति भावः। मनोरमायां तु--विकल्पे प्राप्ते नित्यसमासार्थं द्वन्द्वतत्पुरुषयोरित्येतद्वचन"मिति प्राचां ग्रन्थमनुसृत्योक्तम्। वस्तुतस्तु त्रयाणां समासे

कृतेऽन्यपदार्थोपसङ्क्रमेण परस्पर संबन्धाऽभावाद्द्वन्द्वतत्पुरुषयोरप्राप्तौ सत्यां त्रिपदे बहुव्रीहौकृते पूर्वयोर्नित्यं द्वन्द्वः, तेन "द्वन्द्वाच्चुदषहान्ता"दिति समासान्तष्टजपि नित्य एव।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संख्यापूर्वो १।१ द्विगुः १।१

काशिका-वृत्तिः
सङ्ख्यापूर्वो द्विगुः २।१।५२

तद्धितार्थौत्तरपदसमाहारे च २।१।५० इत्यत्र यः सङ्ख्यापूर्वः समासः स द्विगुसंज्ञो भवति। तद्धितार्थे तावत् पञ्चसु कपालेशु संस्कृतः पञ्चकपालः। दशकपालः। संस्कृतं भक्षाः ४।२।१५ इति इह अण्, तस्य द्विगोर् लुगनपत्ये ४।१।८८ इति लुक्। उत्तरपदे पञ्चनावप्रियः। नावो द्विगोः ५।४।९९ इति समासान्तो भवति। समाहारे पञ्चपूली। द्विगोः ४।१।२१ इति ङीब् भवति। द्विगुप्रदेशाः द्विगोः ४।१।२१ इत्येवम् आदयः।
लघु-सिद्धान्त-कौमुदी
संख्यापूर्वो द्विगुः ९४४, २।१।५१

तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात्॥
न्यासः
सख्यापूर्वो द्विगुः। , २।१।५१

"समासान्तो भवति" इति। टच्। "राजाहःसखिभ्यष्टच्" ५।४।९१ इत्युवृत्तेः॥
बाल-मनोरमा
सङ्ख्यापूर्वो द्विगुः ७२०, २।१।५१

अत्र समासे सति "गोरतद्धितलुकि" इति टचि अवादेशे पञ्चगवशब्दस्य द्विगुकार्यं विधास्यन् द्विगुसंज्ञामाह--संख्यापूर्वो द्विगुः। सङ्ख्या पूर्वोऽवयवो यस्येति बहुव्रीहिः। "तद्धितार्थ" इति पूर्वसूत्रविहितसमासोऽन्यपदार्थः, प्रत्यासत्तेः, तदाह--तद्धितार्थेत्यत्रोक्तस्त्रिविध इति। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये इत्येवं त्रिप्रकारो यः सङ्ख्यापूर्वः समास उक्तः, स द्विगुरिति यावत्। तथाच पञ्चगवशब्दस्य समाहारे वाच्ये विहितसमासत्वाद्द्विगुसंज्ञा स्थिता। तद्धितार्थे तु पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः। "संस्कृतं भक्षाः" इत्यण्। "द्विगोर्लुगनपत्ये" इति लुक्। उत्तरपदे यथा,-पञ्चनावप्रियः। "नावो द्विगो"रिति समासान्तष्टच्।

तत्त्व-बोधिनी
सङ्ख्यापूर्वो द्विगुः ६३८, २।१।५१

सङ्ख्यापूर्वो द्विगुः। अत्रोक्त इति। अयं भावः--पूर्वसूत्रविषय एवेयं संज्ञा,"अनन्तरस्यैवे"ति न्यायात्। एतदर्थमेव हि सूत्रद्वयं कृतम्, अन्यथा "दिक्संख्यं संज्ञायां तद्धितार्थोत्तरपदसमाहारेष्वि"त्येव ब्राऊयात्। तेन "सप्तर्षय"इत्यत्र "इगन्तकालकपाले"त्यादिना पूर्वपदप्रकृतिस्वरो न भवति, किन्तु समासान्तोदात्त एव। तथा च लक्ष्यं, "सप्त ऋषयस्तपसे

ये निषेदुः"। "सप्तऋषीणां सुकृतां यत्र लोकः"इत्यादि। त्रिविधः संख्यापूर्व इति। तद्धितार्थे विषये, उत्तरपदे चपरतः, समाहारे च वाचच्ये संख्यापूर्वो यः समासः स इत्यर्थः। तद्धितार्थे यथा--पञ्चकपालः। "संस्कृतं भक्षाः" इत्यणो "द्विगोर्लुगनपत्ये"इति लुक्। उत्तरपदे यथा--पञ्चनावप्रियः। "नावो द्विगोः"इति समासान्तष्टच्। समाहारे--पञ्चपूली। "द्विगोः"इति ङीप्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कुत्सितानि १।३ कुत्सनैः ३।३ ५३ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
कुत्सितानि कुत्सनैः २।१।५३

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। शब्दप्रवृत्तिनिमित्तकुत्सायाम् अयं समास इष्यते। विशेषणं विशेष्येण बहुलम् २।१।५६ इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। वैयाकरणखसूचिः। निष्प्रतिभः इत्यर्थः। याज्ञिककितवः। अयाज्ययाजनतृष्णापरः। मीमांसकदुर्दुरूढः। नास्तिकः। कुत्सितानि इति किम्? वैयाकरणश्चौरः। न ह्यत्र वैयाकरणत्वं कुत्स्यते। कुत्सनैः इति किम्? कुत्सितो ब्राह्मणः।
न्यासः
कुत्सितानि कुत्सनैः। , २।१।५२

कुत्सितशब्दोऽयमिह रूढिमाचष्टे। तथा च निष्ठा भूतकालं नोपादत्ते। कुत्सनशब्देन च कुत्साहतुर्धर्मो गृह्र्यते-- कुत्स्यते गह्र्यतेऽनेनेति कृत्वा। बहुवचननिर्देशस्तु स्वरूपविधेर्निरासार्थः। तेन कुत्सितवादिना कुत्सनवचनैः सह समासो विज्ञायते, न तु कुत्सितशब्दस्य कुत्सनशब्देन। अत आह-- "कुत्सितवाचीनि" इत्यादि। शब्दप्रवृत्तिनिमित्तकुत्सायामयं समासो वेदितव्यः। कुतः पुनरेतल्लभ्यते? प्रत्यासत्तेः। शब्दस्य हि प्रवृत्तिनिमित्तं प्रत्यासन्नम्, अतस्तत् कुत्सायामेव समासेन भवितुं युक्तम्। "वैयाकरणखसूचिः" इति। वैयाकरणश्चासौ खसूचिश्चेति विग्रहः। यः पृष्टः सन् व्याकरणे खमाकाशं सूचयतीति निरीक्षते निष्प्रतिभो भवति स एवमुच्यते। अत्र हि वैयाकरणत्वं वैयाकरणशब्दस्य प्रवृत्तिनिमित्तं तत् कुत्स्यते; तत्पुनः व्याकरणाध्येतृसम्बन्धः, व्याकरणवेदितृसम्बन्धो वा।तेन हि निमित्तेन वैयाकरणशब्दो पुरुषे वत्र्तते। एवमन्यत्रापि शब्दप्रवृत्तिनिमित्तकुत्सायां समासो वेदितव्यः। "याज्ञिककितवः" इति। कितव इव कितवः। यथा हि कितवः किं तवास्तीति धनवत्तामात्रमपेक्षमाणो द्यूते प्रवत्र्तते, न तु तस्य जात्यादिकमपेक्षते; तथा याज्ञिकोऽपि याजने प्रवत्र्तमानो यस्तृष्णयाऽयाज्यस्य धनवतामात्रमपेक्षते, न तु तस्य यागार्हतां स याज्ञिककितव इत्युच्यते। अत आह- "अयाज्ययाजनतृष्णापर उच्यते" इति। "मीमांसकदुर्दुरूढः" इति। मीमांसको मीमांसाध्ययनफलमनवाप्य नास्तिको जात इति प्रतीयते। "वैयाकरणश्चौरः" इति। ननु चौरत्वेन गह्र्यमाणो वैयाकरणः कुत्सितो भवत्येव। तदभिषायी च वैयाकरणशब्दः। तत्कथमिदं प्रत्युदाहरणमुपपद्यत इत्याह-- "न ह्र्त्र " इत्यादि। प्रत्यासत्तेर्हि शब्दप्रवृत्तिनिमित्तस्य कुत्सायां ससासेन भवितव्यम्। न चेह वैयाकरणशब्दस्य प्रवृत्तिनिमित्तं कुत्स्यते; यस्माच्चौरोऽपि सम्यक् व्याकरणं वेत्त्यधीते वा। तस्मान्नात्र शब्दप्रवृत्तिनिमित्तं कुत्स्यते, किं तर्हि? यत्र तद्वैयाकरणत्वं वत्र्तते स कुत्स्यते, वैयाकरणत्वन्तु

तस्योपलक्षणमेव केवलम्, योऽसौ वैयाकरणः स चौरः, यथा-- यः कम्पते सोऽ()आत्थ इति। अत्र कम्पनम()आत्थस्योपलक्षणम्। "कुत्सितो बाहृणः" इति। भवत्यत्र कुत्सितशब्दः कुत्सिताभिधायी। न तु ब्राआहृणशब्दः कुत्सनवचनः॥ "पापाणकशब्दौ कुत्सनाभिधायिनौ" इत्युक्तम्। यद्येवमत्र पूर्वेणैव सिद्धः समासः, किमर्थमिदनुच्यत इत्याशङ्()क्याह-- "तयोः" इत्यादि। यदि पूर्वेण स्यात् समासः, ततः कुत्सितशब्दस्य प्रथमानिर्दिष्टत्वात् पूर्वेनिपातः स्यात्, पापापणकशब्दयोस्तु परनिपातः। तस्मात् पूर्वनिपातार्थमिदमारभ्यते। कुत्सितग्रहणं विस्पष्टार्थम्। अन्यथा पूर्वयोगादेव कुत्सित इत्यनुवर्तिष्यत इति तन्न कत्र्तव्यमेव स्यात्॥
बाल-मनोरमा
कुत्सितानि कुत्सनैः ७२२, २।१।५२

कुत्सितानि। वर्तमाने क्तः, व्याख्यानात्। तदाह--कुत्स्यमानानीति। कुत्सनैरिति करणे ल्युट्। प्राग्वदिति। समानाधिकरणेन समस्यते स तत्पुरुष इत्यर्थः। वैयाकरणखसूचिरिति। वैयाकरणश्चासौ खसूचिश्चेति विग्रहः। यः प्रक्रियां पृष्टःसन् प्रश्नं विस्मारयितुमाकाशं दर्शयति पश्यति वा स एवमुच्यते। अत्र वैयाकरणः प्रक्रियाविस्मरणान्निन्द्यः। खसूचनं निन्दाहेतुः। मीमांसकदुर्दुरूट इति। "दुल उत्क्षेपे"चुरादिः दुर्पूर्वादौणादिकाः कूटप्रत्ययः। "बहुलमन्यत्रापी"ति णेर्लुक्। रलयोरभेदाद्रः। यो मीमांसामधीत्याऽन्यथा जानानो दुराक्षेपं करोति स एवमुच्यते। विशेष्यस्य पूर्वनिपातार्थं सूत्रम्। विशेषणसमासे तु विशेषणस्य पूर्वनिपातः स्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पापाणके १।२ कुत्सितैः ३।३ कुत्सनैः ३।३ ५२ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
पापाणके कुत्सितैः २।१।५४

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः, पूर्वनिपतार्थम् इदम् आरभ्यते। पाप अणक इत्येते सुबन्ते कुत्सितवचनैः सह समस्येते, तत्पुरुषश्च समासो भवति। पापनापितः। पापकुलालः। अणकनापितः। अणककुलालः।
बाल-मनोरमा
पापाणकेकुत्सितैः ७२३, २।१।५३

पापाणके। पापशब्दोऽणकशब्दश्च कुत्सितवाचकैः समस्यते स तत्पुरुष इत्यर्थः। ननु विशेषणसमासेनैव सिद्धे किमर्थमिदमित्यत आह--पूर्वसूत्रेति। पापमस्यास्तीति मत्वर्थीयोऽर्शाअद्यच्। पापशब्दः पापवति वर्तते। अणकशब्दः कुरूपिणि वर्तते। "कुरूपकुत्सिताऽवद्यखेटगह्रऽणकाःसमाः" इत्यमरः। ततश्च पापाऽणकशब्दौ निन्दाहेतुभूतपापकुरूपात्मकप्रवृत्तिनिमित्तौ कुत्सनाभिधायिनौ। ततश्चानयोः पूर्वसूत्रेम समासे परनिपातः स्यादतः पूर्वनिपातनियमार्थमिदं सूत्रमित्यर्थः। पापनापित इति। पापश्चासौ नापितश्चेति विग्रहः। अणककुलाल इति। अणकश्चासौ कुलालश्चेति विग्रहः।

तत्त्व-बोधिनी
पापाणकेकुत्स्तितैः ६४१, २।१।५३

पापाणके। एतौ कुत्सनाभिधिनौ। "कुपूयकुत्सितावद्यखेटगर्ह्याऽणकाः समाः"इत्यमरः। ततश्चानयोः पूर्वसूत्रेण समासे परनिपातः स्यात्, तस्मात्पूर्वनिपातनियमार्थमिदं सूत्रमित्याशयेनाह--पूर्वसूत्रापवाद इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपमानानि १।३ सामान्यवचनैः ३।३ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
उपमानानि सामान्यवचनैः २।१।५५

उपमीयते ऽनेन इत्युपमानम्। उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। उपमानौपमेययोः साधारणे धर्मः सामान्यं, तद्विशिष्टौपमेयवचनैरयं समासः। शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला। उपमानानि इति किम्? देवदत्ता शयामा। सामान्यवचनैः इति किम्? फाला इव तण्डुलाः। पर्वता इव बलाहकाः।
लघु-सिद्धान्त-कौमुदी
उपमानानि सामान्यवचनैः ९४८, २।१।५४

घन इव श्यामो घनश्यामः। (शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्)। शाकप्रियः पार्थिवः शाकपार्थिवः। देवपूजको ब्राह्मणो देवब्राह्मणः॥
न्यासः
उपामानानि सामान्यवचनैः। , २।१।५४

"उपमीयतेऽनेनेत्युपमानम्" इति। सादृश्येन येन परिच्छिद्यते तदुपमानमित्यर्थः। यथा गौरिव गवय इत्यत्र गौरुपमानम्,तेन हि सादृश्येन गवयः परिच्छिद्यते। "यादृशो गौस्तादृशो गवयः" इत्यर्थः प्रतीयते। सामान्यमनेकसाधारणं भवति; इह चोपमानस्य श्रुतत्वात् तस्य चोपमेयापेक्षत्वादुपमानोपमेयोरेव साधारणो धर्मः सामान्यं विज्ञायत इत्याह--"उपमानोपमेययोः" इत्यादि। "तद्विशिष्टोपमेयवचनैरयं समासः" इति। तेन सामान्येन धर्मेण विशष्टं यदुपमेयं तद्वचनैरयं समासो भवति। कृतः पुनः सामान्यवचनैरित्युक्ते सत्येष विशेषो लभ्यते? न्यायात्। तथा हि--सामान्यमुक्तवन्तः सामान्यवचनाः, यथा- गुणमुक्तवन्तो गुणवचना इति। कदा च ते सामान्यवचना भवन्ति? यदा सामान्यमभिधाय सामान्यविशिष्टे तद्वति द्रव्ये वत्र्तन्ते। तच्च सामान्यवदुपमानस्य सम्बन्धिशब्दत्वादुपमेयमेव विज्ञायत इति न्यायप्राप्त एवार्थो वृत्तिकृता दर्शितः। "शस्त्रीश्यामा देवदत्ता" इति। अत्रोपमानं शस्त्री, उपमेया देवदत्ता। प्रसिद्धं ह्युपमानं भवति, नाप्रसिद्धम्। शस्त्र्येव श्यामगुणत्वेन प्रसिद्धा, न देवदत्ता। तयोः सामान्यं साधारणो धर्()मः श्यामत्वम्। तत् श्यामत्वमुक्त्वा श्यामशब्दो द#एवदत्तयामभेदोपचारान्मतुब्लोद्वा वत्र्तत इति सामान्यवचनो भवति। ननु च समानाधिकरणेनेत्यनुवत्र्तते, इह च शस्त्रीशब्दस्य शस्त्र्यां वृत्तिः, श्यामाशब्दस्य देवदत्तायाम्, अतो

वैयधिकरण्यात् समासेन न भवितव्यम्? नैतदस्ति; सर्वत्र ह्युपमानोपमेययोर्भेदात् तद्वाचिनोर्वैयधिकरण्यमेव, उच्यते चेदं वचम्, अतो वैयधिकरण्येऽपि वचनसामर्थ्यात् समासो भविष्यति। अथ वा-- शस्त्रीशब्दोऽप्यत्र देवदत्तायां वत्र्तते। तेन सामानाधिकरण्यं एवायं समासः-- शस्त्रौ चासौ श्यामा चेति शस्त्रीश्यामा। ननु च शस्त्रीशब्दोऽयं जातिवचनः शस्त्रीत्वं प्रवृत्तिनिमित्तमुपादाय तद्वति वत्र्तते, न च तत् शस्त्रीत्वं देवदत्तायामस्ति, तत् कथं तत्र वत्र्तते? नैष दोषः; "सर्व एवामी शब्दा गुणमुपादाय तद्वति द्रव्ये वत्र्तन्ते" इत्यपि दर्शनमस्ति। तत्र श्यामत्वं गुणमुपादाय शस्त्रीशब्दो देवदत्तायां वर्तिष्यते। ताद्धम्र्याद्वा देवदत्ता शस्त्रीशब्देनाभिधास्यते। भवति हि ताद्धम्र्यात् ताच्छब्द्यमित्युक्तं प्राक्। ताद्धम्र्यं पुनः श्यामगुणत्वम्। "फाला इव तण्डुलाः" इति। भवन्ति हि फाला उपमानम्। तथाहि तैर्दीर्घत्वादिना सादृश्येन तण्डुला उपमीयन्ते। तण्डुलशब्दस्तु सामान्यवचनो न भवति। ननु च तण्डुलशब्दोऽपि तण्डुलत्वं सामान्यमुपादाय तद्वति द्रव्ये वत्र्तत इति भवत्येव सामान्यवचनः, तदयुक्तमिदं प्रत्युदाहरणम्? नैतदस्ति; तथा ह्युपमानोपमेययोः साधारणो धर्मः सामान्यमित्युक्तम्। न च तण्डुलत्वं फालानामस्ति, किं तर्हि? तण्डुलानामेव॥

बाल-मनोरमा

उपमानानि सामान्यवचनैः ७२४, २।१।५४

उपमानानि। उपमीयन्ते सदृशतया परिच्छिद्यन्ते यैस्तानि--उपमानानि। सादृश्यनिरूपकाणीत्यर्थः। सामान्यम्ुपमानोपमेयसाधारणधर्मः, तमुक्तवन्तः शब्दाः सामान्यवचनाः। बाहुलकः कर्तरि ल्युट्। पूर्वं सामान्यमुक्त्वा तद्विति द्रव्ये ये पर्यवस्यन्ति ते सामान्यवचना इति यावत्। तथाच सादृश्यनिरूपकशब्दाऽपरपर्याया उपमानशब्दा उपमानोपमेयसाधारणधर्मविशिष्टवाचिभिः समानाधिकरणैः समस्यन्ते स तत्पुरुष इत्यर्थः। घनश्याम इति। नन्विह घन इव श्याम इति विग्रहे घनशब्दस्य श्यामशब्दस्य चैकार्थवृत्तित्वलक्षणसामानाधिकरण्याऽभावात्कथमिह समासः, इवशब्दापेक्षत्वेनाऽसामथ्र्याच्चेत्यत आह--इह पूर्वपदमिति। एवं च घनशब्दो लक्षणया घनसदृशे रामे वर्तते, श्यामशब्दोऽपि रामे वर्तत इति सामानाधिकरण्यम्। अत एव मृगीव चपला मृगचपलेत्यत्र "पुंवत्कर्मधारये"ति पुंवत्त्वं सिध्यति। घनशब्दस्य भूतपूर्वगत्योपमानपरत्वं निर्वाह्रम्। तथाच "घनसदृशश्यामः" इति बोधः। सादृश्यं तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम्। एवंच सादृश्यप्रतियोग्यनुयोगिनोः साधारणधर्मवत्त्वं लब्धम्। स चेह साधारणधर्म उत्तरपदोपस्थाप्य एव गृह्रते, संनिहितत्वात्। तथाच घनगतश्यामत्वसदृशश्यामत्ववानिति बोधपर्यवसानम्। ननु विशेषणसमासेन सिद्धे किमर्थमिदं सूत्रमित्यत आह--पूर्वनिपातेति। अन्यथा उभयोरपि गुणवचनतया विशेषणविशेष्यभावे कामचारात्खञ्जकुब्जः कुब्जखञ्ज इतिवदनियमः स्यादिति भावः।

तत्त्व-बोधिनी

उपमानानिसामान्यवचनैः ६४२, २।१।५४

उपमानानि। उपमीयते येन तदुपमानम्। उपपूर्वान्माङः कतरणे ल्युट्। प्रादिसमासः उपपूर्वको माङ् सादृश्यहेतुके परिच्छेदे रूढः। येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानमित्यर्थः। यथा "गौरिव गवयः"। इह हि गौः करणं, सादृश्यं हेतुः, पुरुषः परिच्छेत्ता। स हि गोसादृश्येन गवयं परिच्छिनत्ति। सामान्यवचनैरिति। समानो धर्मः--सामान्यम्। चातुर्वण्र्यादित्वात्स्वार्थे ष्यञ्। उपमानोपमेयसाधारणो यो धर्मस्तद्विशिष्टवचनैरित्यर्थः, न तु साधारणधर्ममात्रवचनैरिति। एतच्च वचनग्रहणाल्लभ्यते। सामान्यमुक्तवन्तः--सामान्यवचनाः। बाहुलकात्कर्तरि भूते ल्युट्। ये पूर्वं सामान्यमुक्त्वा तद्वति द्रव्ये पर्यवस्यन्ति ते तथोक्ताः। तच्च सामान्यविशिष्टमुपमानशब्दस्य संबन्धिशब्दत्वादाक्षिप्तमुपमेयमेव विज्ञायते। लाक्षणिकमिति। अतएव सामानाधिकरण्यान्मृगीव चपला मृगचपलेत्यादौ पुंवद्भावः। उत्तरपदोपस्थितश्यामत्वचरलत्वादिद्वारकमेवेह सादृश्यं गृह्रते, संनिधानात्। कथं तर्हि

उपमानपरतेति चेत्। भूतपूर्वगत्या शक्यार्थमादाय तत्परतेत्यवेहि। पूर्वनिपातेति। अन्यथाऽनियमः स्यात्, खञ्ज कुब्जवदिति भावः। किंच "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानव्यय#ए"ति सूत्रे प्रतिपदोक्तस्यास्यैवोपमानग्रहणेन ग्रहणार्थमपीदं सूत्रम्। अतएव मयूरव्यंसकादित्वात्समासे न प्रवर्तत इति सिद्धान्तः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपमितं १।१ व्याघ्रादिभिः ३।३ सामान्याप्रयोगे ७।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
उपमितं व्याघ्राऽदिभिः सामान्याप्रयोगे २।१।५६

उपमेयम् उपमितं , तद्वाचि सुबन्तं व्याघ्राऽदिभिः सामर्थ्यादुपमानवचनैः सह सामस्यते, तत्पुरुषश्च समासो भवति, न चेत् सामान्यवाची शब्दः प्रयुज्यते। विशेषणं विशेष्येण बहुलम् २।१।५६ इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थ आरम्भः। पुरुषो ऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। सामान्याप्रयोगे इति इम्? पुरुषो ऽयं व्याघ्र इव शूरः। व्याघ्र। सिंह। ऋक्ष। ऋषभ। चन्दन। वृक्ष। वराह। वृष। हस्तिन्। कुञ्जर। रुरु। पृषत। पुण्डरीक। बलाहक। अकृतिगनश्च अयम्, तेन इदम् अपि भवति मुखपद्मम्, मुखकमलम्, करकिसलयम्, पार्थिवचन्द्रः इत्येवम् आदि।
न्यासः
उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। , २।१।५५

"सामथ्र्यादुपमानवचनैः" इति। यद्यपि "उपमानवचनैः" इति सूत्रे नोपात्तं, तथाप्युपमेयमानापेक्षमित्युपमितशब्दः सम्बन्धिशब्दत्वादुपमानत्वं व्याघ्रदीनां गमयति। तेन विशेषानभिधानेऽपि सामथ्र्यादुपमानवचनैस्तैः समासो विज्ञायते। "न चेत्सामान्यवाची शब्दः प्रयुज्यते" इति। उपमानोपमेययोः साधारणो धर्मः, शौर्यादि, सामान्यम्ष यदि तद्वाची शब्दो न प्रयुज्यते, एवं सति समासो भवति; नान्यथा। ननु च सामान्यस्य समासेऽन्तर्भूत्तवात् त्दवाचिनां शब्दानां प्रयोगो नास्ति, त()त्क प्रतिषेधेन? नैतदस्ति; साधारणधर्मः सामान्यं हि समासेऽन्तर्भूतम्, न तु तद्विशेषः। तत्रासति प्रतिषेधे विशिष्टसाधारणधर्मवाचिनः प्रयोगः स्यादेवेति कत्र्तव्यः प्रतिषेधः? न कत्र्तव्यः,कथम्? सामान्यशब्दप्रयोगे हि सति तदपेक्षत्वेन सापेक्षमसमर्थं भवतीत्यसामथ्र्यादेव समासो न भविष्यति। एं तह्र्येतज्ज्ञापयति-- "भवति हि प्रधानस्य सापेक्ष्यस्यापि समासः" इति। पुरुषाश्चात्रोपमेयत्वात् प्रधानः, उपमानन्तु व्याघ्रादि तदर्थत्वादप्रधानम्। किमेतेन ज्ञापकेन प्रयोजनम्? "राजपुरुषः शोभनः" इत्येवमादि सिद्धं भवति। "विशेषणं विशेष्येणेति प्राप्ते" इति। ननु च विशेषणस्य विशेष्येण समानाधिकरणेन समासं वक्ष्यति, उपमानोपमेययोश्च भेदाद्वैयधिकरण्यम्, तत्कुतो विशेषणं विशेष्येणेति प्राप्तिः? एवं मन्यते-- पुरुषादावुपमेये वत्र्मानैव्र्याघ्रादिभिरुपमानशब्दैरयं समासो भवति। यथा चोपमानशब्दानामुपमेयवृत्तित्वे सामानाधिकरण्यं तथा पूर्वसूत्र एव व्याख्यातम्॥
बाल-मनोरमा
उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे ७२५, २।१।५५

उपमितम्। प्राग्वदिति। समानाधिकरणैः समस्यते स तत्पुरुष इत्यर्थः। अत्रोपमितस्य

नित्यमुपमानाकाङ्क्षत्वादुपमानभूतव्याघ्रादिभिरित्यर्थसिद्धम्। ननु विशेषणसमासेनैव सिद्धे किमर्थमिदं सूत्रमित्यत आह-विशेष्यस्येति। उपमानोपमेयसमभिव्याहारे उपमानस्यैव विशेषणत्वात्पूर्वनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातनार्थमिदमित्यर्थः। पुरुषव्याघ्र इति। पुरुषो व्याघ्र इवेति विग्रहः। अत्र सादृश्योपपादकः शौर्यात्मकः साधारणधर्मः, स इह नोपात्त इति भवति समासः। पुरुषोव्याघ्र इव शूर इति। शौर्येण व्याघ्रसदृश इति यावत्। अत्र शौर्यस्योपमानोपमेयसाधारणधर्मस्य प्रयोगान्न समास इति भावः। "भाष्याब्धिः क्वातिगम्भीरः" इति कैयटप्रयोगस्तु मयूरव्यंसकादित्वात्समाधेयः। बाष्यमेवाब्धिरिति रूपकं वा। न च पुरुषशब्दस्य शूरशब्दसापेक्षत्वादसामथ्र्यादेवात्र समासस्य न प्रवृत्तिः, अतः "सामान्याऽप्रयोगे" इति व्यर्थमिति वाच्यं, समस्यमानेष्वप्रधानस्यैव हि सापेक्षत्वं सामथ्र्यविघातकं न तु प्रधानस्य। तथाचाऽत्र पुरुषस्य प्रधानतया तस्य शूरापेक्षत्वेऽपि अस्त्येव सामथ्र्यमिति समासप्रवृत्तेः, तन्निवृत्त्यर्थं सामान्याऽप्रयोग इति वचनम्। इदमेव "प्रधानस्य सापेक्षत्वेऽपि न सामथ्र्यविघातकत्व"मिति ज्ञापयति। तेन "राजपुरुषः सुन्दर" इत्यादौ समासः सिद्धो भवतीति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ६४३, २।१।५५

उपमितम्। उपमेयमुपमितम्। भूतकालोऽत्र न विवक्षितः। तच्च संबन्धिशब्दादुपमानमाक्षिपति। तथा चोपमानभूतैव्र्याघ्रादिभिरित्यर्थः। पुरुषो व्याघ्रा इव शूर इति। तत्र हि शूरसापेक्षस्यापि पुरुषस्य प्रधानत्वात् "राजपुरषः सुन्दरः"इतिवदत्रापि समासः स्यात्स मा भूदिति "सामान्याऽप्रयोगे"इत्युक्तमिति भावः। कथं तर्हि "भाष्याब्धिः क्वातिगम्भीरः" इति कैयटः, सामान्यप्रयोदसत्त्वेनाऽस्याऽप्राप्तेः। अत्र केचित्--प्रमाद एवायमित्याहुः। इह गम्भीर्येण सादृश्यं न विवक्षितं, किंतु विततदुरवगाहत्वादिना। तस्य हि विततत्वादेरप्रयोगोऽस्त्येवेति निर्बाधः समास इति मनोरमायां स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विशेषणं १।१ ५७ विशेष्येण ३।१ ५७ बहुलम् १।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

विशेसनं विशेष्येण बहुलम् २।१।५७

भेदकं विशेषणं, भेद्यं विशेष्यम्। विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति। नीलोत्पलम्। रक्तोत्पलम्। बहुलवचनम् व्यवस्थार्थम्। क्वचिन् नित्यसमास एव, कृष्णसर्पः, लोहितशालिः। क्वचिन् न भवत्येव, रामो जामदग्न्यः, अर्जुनः कार्तवीर्यः। क्वचिद् विकल्पः, नीलम् उत्पलम्, नीलोत्पलम्। विशेषणम् इति किम्? तक्षकः सर्पः। विशेष्येण इति किम्? लोहितस्तक्षकः।

लघु-सिद्धान्त-कौमुदी

विशेषणं विशेष्येण बहुलम् ९४७, २।१।५६

भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम् - कृष्णसर्पः।

क्वचिन्न - रामो जामदग्न्यः॥

न्यासः

विशेषणं विशेष्येण बहुलम्। , २।१।५६

"भेदकं विशेषणम्" इति। "{शिष्लृ विशरणे इति मुद्रित); शिष्लृ शेषणे, विपूर्वः-- पदमंजरी} शिष्लृ विशेषणे" (धा।पा।१४५१) इत्यस्माद्धातोर्विपूर्वात् करणे ल्युट्। विशिष्यतेऽनेनेति विशेषणम्। तस्येदं लक्षणम्-- भदेमिति। यत् सामान्याकारेण प्रवृत्तमनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थापयति, तद् भेदकं विशेषणमिति। "भेद्यं विशेषणम्" इति। विशेषणीयं विशेष्यम्। विपूर्वात् तस्माद्धातोः "ऋहलोण्यत्" ३।१।१२४ इति कर्मणि ण्यत्। तस्येदं लक्षणम्, भेद्यमिति। यदनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थाप्यते तद्भेद्यं विशेष्यमिति। अथ किमर्थं विशेषणविशेष्ययोरुभयोरुपादानं क्रियते? न; अन्यतरस्यैव क्रियेत, सम्बन्धिशब्दत्वाद्धि तयोरन्यतरोपादानेनैवेतरस्याप्यवगतिर्भवत्येव? सत्यमेतत्; यत्र पूर्वोत्तरपदे प्रत्येकं विशेषणविशेष्यभूते भवतस्त्रैव समासो भवतीति ज्ञापानार्थमुभयोरुपादानम्, यथा-- नीलोत्पलमिति। अत्र नीलार्थो भ्रमरादिभ्यो व्यावर्त्योत्पलार्थेनोत्पले व्यवस्थाप्यते। उत्पलार्थोऽपि रक्तोत्पलादिभ्यो व्यावर्त्य नीलार्थेन नीले व्यवस्थाप्यत इत्यस्ति प्रत्येकं विशेषणविशेष्यभावः। स यत्र नासत्ि तत्र तु न समासः यथा-- वृक्षः शिंशपेति। वृक्षो हि शिंशपात्वं व्यभिचरति, शिंशपा तु न वृक्षत्वम्। अतस्तत्प्रकारान्तरेभ्यः पलाशादिभ्यस्तं व्यवच्छिनत्तीति शिंशपा तस्य विशेषणं भवति, न तु विशेष्यम्। वृक्षस्तु विशेष्यः शिंशपार्थस्तु वृक्षत्वं न व्यभिचरतीति न तस्यासौ विशेषणं भवति। अथ किं न भवितव्यमेव शिंशपावृक्षः, आम्रवृक्ष इति? विशेषणसमासेन भवितव्यम्, यदा शिंशपादिशब्दानां विशेषे वृत्तिर्नावधार्यते। तथा हि-- शिंशपादिशब्दाः फलस्य वृक्षस्य मूलस्य च वाचकाः सामान्यशब्द इति तदर्थानां वृक्षत्वव्यभिचारादद्विशेष्यभावः, वृक्षश्च विशेषणं भवति। यदा तु कुतश्चित् प्रकरणादर्थाद्वा वृक्षाद्यर्था एवावसितवृत्तयो भवन्ति तदा न भवितव्यम्। ननु च वृक्षार्थावसितवृत्तित्वाद्()वृक्षशब्दस्य तदा प्रयोग एव नोपपद्यते, उक्तार्थत्वात्, "उक्तार्थानामप्रयोगः" (व्या।प।६०) इति वचनात्। ततश्च समासस्याप्रसङ्ग एव। त()त्क तन्निवृत्त्यर्थेनोभयग्रहणेन? नैतदेवम्; क्वचिदुक्तार्थानामपि लोके प्रयोगो दृश्यते, यथा-- अपूपौ द्वावानयेति। यदि तर्हि यत्रोभयोः प्रत्येकं विशेषमविशेष्यभावस्तत्र समासेन भवितव्यम्, एवं सति प्रत्येकमुपसर्जनत्वं स्यात्, उभयोरपि विशेषणत्वात्, विशेषणस्येह सूत्रे प्रथमानिर्दिष्टत्वात्, ततश्चोत्पलनीलरमित्यपि स्यात्, नीलोत्पलमिति तु सर्वदैवेष्यते? नैष दोषः; यस्मादेकतरं प्रधानम्, इतरदप्रधानम्। द्वयोः प्राधान्ये परस्परानुपकारित्वादसम्बन्धयोरेकत्र प्रयोगो न स्यात्। अप्राधान्येऽपि द्वयोः प्रधानापेक्षावतोर्नास्ति परस्परोपकारित्वमिति न स्यादेवैकत्र प्रयोगः। तस्मादेकत्र प्रधानम्, अपरं त्वप्रधानम्। यच्चाप्रधानं तेदवोपसर्जनसंज्ञां भवति, नेतरत्; अन्वर्थत्वादुपसर्जनसंज्ञायाः-- उप = समीपे विशेष्ये स्वार्थं सृजति = क्षिपतीति। नीलशब्दश्चाप्रधानम्, तदर्थस्य गुणस्याप्राधान्यात्; उत्पलशब्दस्तु प्रधानम्, तदर्थस्य द्रव्यस्य प्राधान्यात्। तस्मान्नीलशब्द एवोपसर्जनम्, नोत्पलशब्द इति न भवति पूर्वोक्तदोषावसरप्रसङ्गः। यत्रोभावपि तत्र पर्यायेणोपसर्जनभावः, यथा-- कुब्जखञ्ज, खञ्जकुब्ज इति। अथ कुतोऽत्र द्रव्यस्य प्राधान्यमवसितम्? उच्यते;यथा-- ()ओतं छागमालभेतेत्यस्यां देशनायां देशनायां ()ओतगुणस्याभावेऽन्यवर्णस्यापि च्छागस्यालम्भनाच्छागाबावे ()ओतगुणस्यान्यद्रव्यस्यानालम्भनाच्च। न हि च्छागाभावे पिष्टकपिण्डीलमालभ्य याज्ञिकः कृती भवति। यदि च प्रधानं गुणः स्यात्तदा यथा छागाभावे पिष्टकपिण्डी नालभ्यते, तथा ()ओतगुणाभावेऽन्यगुणोऽपि च्छागो नालभ्यते। न च स नालभ्यते, तस्मात् द्रव्यमेव प्रधानम्, न गुण इति। ननु चोत्पलशब्दोऽपि नैव द्रव्यशब्दोऽयमिति व्यवस्थाप्यते। एवं नीलशब्देऽप्यतिप्रसङ्गः, प्रभृत्या विनाशात् स्वाधारं द्रव्यं नैव जहाति। अतो द्रव्यात्मभूतत्वाज्जातेस्तन्निमित्तकः शब्दो द्रव्यस्योत्पत्ते। गुणाः पुनरपायिनोऽनपायिनो वा सत्येतस्मिन् द्रव्ये वर्त्तन्ते निवर्त्तन्ते च। तस्मान्नैते द्रव्यात्मभूता इति न तन्निमित्तशब्दो

द्रव्यशब्दो व्यवस्थाप्यत इत्यलमतिप्रसङ्गेन। "तक्षकः सर्पः" इति। ननु च तक्षकः सर्पस्य विशेषणं भवत्येव, तथा हि--सर्प त्युक्ते सर्पसामान्यं प्रतीयते, न सर्पविशेषः। तक्षक- सर्प इत्युक्ते सर्पविशेषोऽतक्षकाद्व्यावृत्तोऽवसीयते, तदयुक्तं प्रत्युदाहरणमेतत्; नैतदस्ति;उक्तं ह्येतत्- यत्रैकैस्योभयत्र भावस्तत्र समास इति। न तु कदाचित् सर्पार्थस्य तक्षको विशेष्यो भवति। कथं न भवति? तक्षकस्य सर्पत्वाव्यभिचारात्। ननु च तक्षकशब्दस्यानेकप्रकारत्वेन प्रकारान्तरनिवृत्तये युज्यत एव सर्पस्य तक्षकोऽपि विशेष्यः? नैतदस्ति; न नामधेयस्य क्रियाशब्देन तुल्यमर्थाभिधानसामर्थ्यम्। अवयवार्थानुसारेण हि क्रियाशब्दोऽर्थं बोधयति, समुदायरूपेण तु नामधेयम्। "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" (व्या।प।१०८) इति तस्यां सत्यां क्रियाशब्दार्थविषयापेक्षा नोपजायत एव। "लोहितस्तक्षकः" इति। भवति लोहितो विशेषणम्, न तु तक्षको विशेष्यम्। तस्य लोहितत्वाव्यभिचारात्। यदि तर्हि तक्षको न विशेष्यः, लोहितोऽपि विशेषणं न स्यात्; विशेषणस्य विशेष्यापेक्षत्वात्। न च शक्यं तक्षकाद्यर्थान्तरं पटादिकं विशेष्यं तदपेक्षया लोहितस्य विशेषणत्वं परिकल्पयितुम्। एवं हि लोहिताद्यदर्थान्तरं त#ईव्रविषादिकं विशेषणं तदपेक्षं तक्षकस्यापि विशेष्यत्वं प्रसज्येत। तस्माद्विस्पष्टार्थमुभयोग्र्रहणमित्यपरे॥

बाल-मनोरमा

विशेषणं विशेष्येण बहुलम् ७२६, २।१।५६

विशेषणं विशेष्येण। विशिष्यते अनेनेति विशेषणम्, इतरस्माद्व्यावर्तकम्। व्यावर्त्यं तु विशेष्यं भिन्नत्वेन ज्ञायमानम्। समानाधिकरणेनेत्यधिकृतम्। तदाह--भेदकमिति प्राग्वदिति। समस्यते स तत्पुरुष इत्यर्थः। नीलोत्पलमिति। नीलपदं तावदुत्पलमनीलादुत्पलाद्व्यावर्तयतीति विशेषणसमर्पकम्। तस्य उत्पलपदेन विशेष्य समर्पकेण समासः। प्रतमानिर्दिष्टत्वाद्विशेषणस्यपूर्वनिपात इति भावः। नच उत्पलपदमनुत्पलान्नीलं व्यावर्तयतीत्युत्पलपदस्यापि विशेषणत्वं स्यादिति वाच्यं, जातिशब्दो गुणक्रियाशब्दसमभिव्याहारे विशेष्यसमर्पक एव, न तु विशेषण समर्पकः, स्वभावात्। यथा-"नीलोत्पलं" "पाचकब्राआह्णण" इति। गुणशब्दयोः समभिव्याहारे विशेषणविशेष्यभावस्य न नियमः। यथा-खञ्जकुब्जः कुब्जखञ्ज इति। क्रियाशब्दयोरप्यनियमः। यथा-"खञ्जपाचकः" "पाचकखञ्ज" इति -इतिभाष्ये स्पष्टम्। तथा "कैलासाद्रिः" "मन्दराद्रिः" "अयोध्यानगरी"त्यादौ संज्ञाशब्दा अपि विशेषणसमर्पका एव, स्वभावात्। सामान्यजाति-विशेषजातिशब्दयोः समभिव्याहारे तु विशेषजातिरेव विशेषणम्। "शिंशपावृक्ष" इत्यादि ज्ञेयम्। ननु वाग्रहणेन सिद्धे बहुलग्रहणं किमर्थमित्यत आह--बहुलग्रहणादिति।

तत्त्व-बोधिनी

विशेषणं विशेष्येण बहुलम् ६४५, २।१।५६

विशेषणम्। विशिष्यते येन तद्विशेषणं। कर्तुः करणत्वविवक्षायां ल्युट्। तदाह--भेदकमिति। व्यावर्तकमित्यर्थः। विशेषणविशेष्ययोः स संबन्धिकतयाऽन्यतरोपादानमात्रेणेतराक्षेपसंभवे उभयोरुपादानां स्पष्टर्थमिति कैयटः। एतच्च "कुत्सितानि कुत्सनै"रित्यत्रापि तुल्यम्।
हरदत्तस्त्वाह--"समस्यमानपदद्वयजन्यबोधप्रकारकयोविशेषणविशेष्यधर्मयोर्यत्र परस्परव्यभिचारस्तत्रैव समासो भवति, न तु "तक्षकः सर्पः" इत्यादौ। न हि तक्षकत्वं सर्पत्वं व्यभिचरती"ति। तन्मदम्। "कैलासाद्रिः, "मन्दराद्रिः","भावपदार्थः""तर्कविद्या,""व्याकरणशास्त्रं","भोजराजः", इत्यादिप्रयोगाणामसाङ्गत्यापत्तेः। ननु विशेषणविशेष्यभावे कामचारात्पाचकपाठकादाविव नीलोत्पलादावप्यव्ययस्थितः पूर्वनिपातः स्यादिति चेदत्राहुः--जातिशब्दस्य गुणक्रियाशब्दयोर्गुणक्रियाशब्दयोश्चाऽनियम एव। तेन"नीलोत्पलं" "पाचकब्राआह्णण" इति व्यवस्थित एव प्रयोगः। गुणशब्दयोः क्रियाशब्दयोर्गुणक्रियाशब्दयोश्चाऽनियम एव। खञ्जकुब्जः, कुब्जखञ्जः। पाचकपाठकः,

पाठकपाचकाः। खञ्जपाचकः, पाचकखञ्ज इति। अत्र मूलमुपसर्जनमिति महासंज्ञा। अप्रधानां ह्रुपसर्जनम्। गुणक्रिययोश्च द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवेति।

अपरस्यार्ध इति। एतच्च "पश्चा"दिति सूत्रे भाष्ये स्थितम्। बहुलग्रहणादिति। एकेषु मुख्येषु वीरयते पराक्रमते इति वा बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूर्वापर॰वीराः १।३ च ० विशेषणं १।१ ५६ विशेष्येण ३।१ ५६ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश् च २।१।५८

पूर्व अपर प्रथम चरम जघन्य समान मध्य मध्यम वीर इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वपुरुषः। अपरपुरुषः। प्रथमपुरुषः। चरमपुरुषः। जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः। वीरपुरुषः। पूर्वस्य एव अयं प्रपञ्चः।
न्यासः
पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च। , २।१।५७

"पूर्वस्यैवायं प्रपञ्चः" इति। तेनैव सिद्धत्वात्। अस्ति ह्यत्रापि प्रत्येकं पूर्वोत्तरपदयर्विशेषणं विशेष्यभावः॥
बाल-मनोरमा
पूर्वापरप्रथमचरमजघन्यसमानमध्यमद्यमवीराश्च ७२७, २।१।५७

पूर्वापर। पूर्वादय समानाधिकरणेन समस्यन्ते इत्यर्थः। विशेषणसमासेनैव सिद्धे किमर्थमिदमित्यत आह-पूर्वनिपातेति। अपराध्यापक इति। बहुलग्रहणानुवृत्त्या पाचकादिक्रियाशब्दैः पूर्वादीनामेषां न समास इति समर्थसूत्रे भाष्ये स्थितम्। ततश्च "अपराध्यापकः" इत्युदाहरणमुपेक्ष्यम्। "अपरमीमांसक" इत्युदाहरणमुचितम्।

अपरस्यार्धे इति। "पश्चा"दिति सूत्रभाष्ये इदं वार्तिकं स्थितम्। प्रथमवैयकरणः। चरमवैयाकरणः। "मच्यान्मः"। मध्यमवैयाकरणः। वीरवैयाकरणः। आक्षिपति-कथमेकवीर इति। हि=यतः, अनेन=प्रकृतसूत्रेण, वीरशब्दस्यैकशब्देन समासे सति वीरशब्दस्य पूर्वनिपाते सति वीरैक इति स्यात्, अतः "एकवीरः" इति कथमित्यन्वयः। ननु "पूर्वकालैके"ति सूत्रेणैकशब्दस्य वीरशब्देन समासे सति "एकवीरः" इति निर्बाधमित्यत आह--पूर्वकालैकेति बाधित्वा परत्वादिति। परिहरति--बाहुलतादिति। बहुलग्रहणानुवृत्तेरस्य सूत्रस्याऽप्रवृत्तौ "पूर्वकाले"त्येव समासो भवतीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ श्रेण्यादयः १।३ कृतादिभिः ३।३ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

श्रेण्यादयः कृताऽदिभिः २।१।५९

श्रेण्याऽदयः सुबन्ताः कृताऽदिभिः समानधिकरणैः सहः समस्यन्ते, तत्पुरुषश्च समासो भवति। श्रेण्यादिषु च्व्यर्थवचनम्। अश्रेणयः श्रेनयः कृताः श्रेणिकृताः। एककृताः। पूगकृताः। श्रेण्यादयः पठ्यन्ते। कृतादिराकृतिगनः। च्व्यन्तानां तु कुगतिप्राऽदयः २।२।१८ इत्यनेन नित्यसमासः। श्रेणीकृताः। श्रेणि। एक। पूग। कुण्ड। राशि। विशिख। निचय। निधान। इन्द्र। देव। मुण्ड। भूत। श्रवन। वदान्य। अध्यापक। अभिरूपक। ब्राह्मण। क्षत्रिय। पटु। पण्डित। कुशल। चपल। निपुण। कृपण। इति श्रेण्यादिः। कृत। मित। मत। भूत। उक्त। समाज्ञात। समाम्नात। समाख्यात। सम्भावित। अवधारित। निराकृत। अवकल्पित। उपकृत। उपाकृत। इति कृताऽदिः।

न्यासः

श्रेण्यादयः कृतादिभिः। , २।१।५८

"श्रेण्यादिषु च्व्यर्थवचनम्" इति। अभूततद्भावे वर्त्तमानानां समासो यथा स्यात्। यदा हि श्रेण्यादिशब्दानामर्था अपरिनिष्पन्ना एव निष्पाद्यन्ते तदा समास इष्ते। यदा तु निष्पन्ना एव ते रूपान्तरेण क्रियते तदा श्रेणयः कृता दण्डिताः सत्कृता वेत्येवमाद्यर्थविवक्षायां नेष्यते। कृतशब्दस्य दण्डितादिशब्दानामर्थेषु वृत्तिर्न सम्भवतीत्येतच्च नाशङ्कनीयम्। करोतेः क्रियासामान्यवाचित्वात्। अनेकार्थत्वाद्वा धातूनाम्। श्रेण्यादिषु च्व्यर्थवचनमित्यस्यायमर्थः-- च्व्यर्थ उच्यते = प्रत्याय्यते येन तच्च्व्यर्थवचनम्। "कर्त्तव्यम्" इति। येन श्रेण्यादिषु समासकराणत्वेनोपात्तेषु च्व्यर्थता प्रतिपद्यते तद्वयाख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्-- बहुलग्रहणमिहानुवर्त्तते, तेन च्व्यर्थानामेव समासो भवतीति नाच्व्यर्थानाम्। "च्व्यन्तानाम्" इत्यादि। च्वेर्विकल्पेन विधानाद्द्विविधाश्च्व्यर्थाः-- च्व्यन्ताः, अच्व्यन्ताश्च। तत्र ये श्रेण्यादयोऽच्व्यन्तास्तेषामनेन समासः। च्व्यन्तानान्तु "ऊर्यादिच्विडाचश्च" १।४।६० इति गतिसंज्ञायां सत्यां परत्वात् "कुगतिप्रादयः" २।२।१८ इति समासो भविष्यतीति॥

बाल-मनोरमा

श्रेण्यादयः कृतादिभिः ७२८, २।१।५८

श्रेण्यादयः। श्रेम्यादयः कृतादिभिः समानाधिकरणैः समस्यन्ते स तत्पुरुष इत्यर्थः।

श्रेण्यादिष्विति। श्रेण्यादिषु समासविधौ च्व्यर्थवचनं। च्विप्रत्ययार्थेऽभूततद्भावे गम्ये श्रेण्यादीनां समासो वक्तव्य इत्यर्थः। अश्रेमय इति। शिल्पेन पण्येन वा जीविनां समूहाः-श्रेणयः। पूर्वं शिल्पेन पण्येन वा जीवितुमसमर्था इदानीं तेन जीवितुं समर्थाः कृता इत्यर्थे समासे सति "श्रेणिकृताः" इति भवतीत्यर्थः। श्रेणिशब्दो ह्यस्वान्तः, भाष्ये तथैवोदाहरणात्। यदा तु सिद्धा एव श्रेणयः परिष्कृतास्तदा तु न समासः, च्व्यर्थाऽभावात्। च्विप्रत्ययान्तस्य तु परत्वात् "कुगती"ति नित्यसमासः। ततः "च्वौ चे"ति श्रेणिशब्दस्य दीर्घः।

तत्त्व-बोधिनी

श्रेण्यादयः कृतादिभिः ६४७, २।१।५८

श्रेण्यादयः। आद्य आदिशब्दो व्यवस्थावाची। द्वितीयस्तु प्रकारवाची। "श्रेण्यादयः पठ()न्ते, कृतादिराकृतिगणः"इति

भाष्यात्। श्रेणी, एक, पूग, कुन्द, शशि, विशिख, निचय, निधनादिः--श्रेण्यादिः। कृत, मित, भूतादिः।

कृतादिः। यदा तु सिद्धा एव श्रेणयः सम्यक्कृतास्तदा समासो नेष्यत इत्याशयेनाह--अश्रेणयः श्रेणय इथि। एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः--श्रेणिः। च्व्यन्तानां तु "कुगती"ति नित्यसमासः,परत्वात्। श्रेणीकृतम्। इह तु "च्वौ चे"ति दीर्घः। (६४६) क्तेन नञ्विशिष्टेनाऽनञ्।२।१।६०।

क्तेन विशिष्टशब्दोऽवधारणार्थः। नञ्मात्राधिकेन नञ्रहितं समस्यत इति सूत्रार्थः। तेनेह न---सिद्धं चाऽभिक्तं च। "नुडिडधिकेनापी"ति वाच्यम्। अशितं चानशितं च अशितानशितम्। क्लिष्टाऽक्लिशितम्। "क्लिशः क्त्वानिष्ठयोः" इति वेट्। कृताकृतमिति। एकदेशान्तरस्याऽकरणात्तदेवाऽकृतम्।

शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्। शाकपार्थिव इति। पृथिव्या ई()आरः पार्थिवः। "तस्ये()आरः"इत्यण्। "शाकप्रिय"इति बहुव्रीहिः, तस्य पार्थिवशब्देन समासे कृते पूर्व समासे यदुत्तरपदं प्रिय इथि, तस्य लोपः। तथा "दवेब्राआह्मण" इत्यत्र देवस्य पूजको देवपूजक इति पूर्वस्मिन् षष्ठी समासे यदुत्तरपदं पूजक इति, तस्य लोपो ज्ञेयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्तेन ३।१ नञ्विशिष्टेन ३।१ अनञ् १।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
क्तेन नञ्विशिष्टेन अनञ् २।१।६०

नञैव विशेषो यस्य, सर्वमन्यत् प्रकृत्यादिकं तुल्यं, तन् नञ्विशिष्टम्, तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सह अनञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति। कृतं च तदकृतं च कृताकृतम्। भुक्ताभुक्तम्। पीतापीतम्। उदतानुदितम्। नुडिटौ तद्भक्तत्वान्नैव भेदकौ। अशितानशितेन जीवति। क्लिष्टाक्लिशितेन वर्तते। कृतापकृतादीनाम् उपसङ्ख्यानम्। कृतापकृतम्। भुक्तविभुक्तम्। पीतविपीतम्। गतप्रत्यागतम्। यातानुयातम्। क्रयाक्रयिका। पुटापुटिका। फलाफलिका। मानोन्मानिका। समानाधिकरणाधिकारे शाकपार्थिवादीनाम् उपसङ्ख्यानम् उत्तरपदलोपश्च। शाकप्रधानः पार्थिवः शाकपार्थिवः। कुतपसौश्रुतः। अजातौल्वलिः।
न्यासः
क्तेन नञ्विशिष्टेनानञ्। , २।१।५९

अयं विशिष्टशब्दोऽस्त्येव सावधारण आधिक्ये वत्र्तमानः। यथा-- देवदत्तयज्ञदत्तावाढ()आवभिरूपौ प्रेक्षावन्तौ। देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः; स्वाध्यायेनैवाधिक इति गम्यते। अन्ये तु गुणाः समाना एव भवन्ति। अस्ति च निरवधारण आधिक्ये वत्र्तमानः, यथा-- देवदत्तयज्ञदत्तावाढ()आविभिरूपौ प्रेक्षावन्तौ। देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः, स्वाध्यायेनाधिक इति गम्यते। अन्ये तु गुणाः समाना भूयांसो वा, ते न विवक्षिता भवन्ति। यद्यपि चाभिन्नरूपमेव वाक्यद्वयमेतत्, तथापि प्रकरणादेः कुतश्चिदर्थभेदो गम्यते, यथा-- आराच्छब्दे दूरान्तिकार्थभेदः। तत्र

यदि निरवधारण आधिक्ये वर्त्तमानो विशिष्टशब्दो गृह्येत, तदा सिद्धं च तदभुक्तञ्चेत्यत्रापि स्यात्, अस्त्यत्र नञाधिकं क्तान्तम्। तस्मात् सावधारण आधिक्ये वर्तमानं विशिष्टशब्दं परिगृह्याह-- "नञैव विशेषो यस्य" इत्यादि। "प्रकृत्यादिकम्" इति। आदिशब्देन प्रत्ययोपसर्गयोः परिग्रहः। "अनञ्" इति। अविद्यामानो नञ् यस्मिन् क्तान्ते तदनञ्। "कृतञ्च तदकृतञ्च" इति। कथं पुनरेकमेव वस्तु कृतं स्यादकृतञ्च? अवयवधर्मेण समुदायस्य तथा व्यपदेशाददोषः। कृतभागसम्बन्धात् कृतम्, अकृतभागसम्बन्धात् तदेवाकृतमित्यु()च्यते। अथ वा- यदर्थं कृतं तत्रासामर्थ्यादकृतम्, यथा-- पुत्रकार्यासामर्थ्यात् पुत्रोऽप्यपुत्र इति। यदि नञेव विशेषो यस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यं तेन समासः, एवं सति यस्य नुडप्यधिक इडागमो वा, तेन सह समासो न भवतीत्याह-- "नुडिटौ" इत्यादि। यत्तु नञ्विशिष्टं क्तान्तं तद्भक्तौ नुडिटौ, अतस्तद्ग्रहणेन गृह्येते, अतो नास्य भेदकौ तौ। अभेदकावित्यर्थः। तेन तदधिकमपि नञ्विशिष्टमेव भवतीति तेन समासो भवत्येव। "अशितानशितेन" इति। "तस्मान्नुडचि" ६।३।७३ इति नुट्। "क्लिष्टाक्लिशितेन" ति। "क्लिशः क्त्वानिष्ठयोः" ७।२।५० इति पक्षे इट्। अनञिचि शक्यमकर्तुम्। यदि स नञ् समस्येत तदा नञ्विशिष्टता नोपपद्यते; द्वोयरपि नञ्सम्बन्धात्। तस्मान्नञ्विशिष्टग्रहणादेवानञ् समस्यत इत्येषोऽर्थो लभ्यत इत्यनञ्ग्रहममनर्थकम्। तत् क्रियते विस्पष्टार्थम्। "कृतापकृतादीनाम्" इत्यादि। कृतापकृतप्रभृतीनामुपसंख्यानम् = प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्-- बहुलग्रहणमिहानुवर्त्तते, तेन कृतापकृतादीनामपि समासी भवतीति। "कृतापकृतम्" इति। तदेकदेशस्येष्टस्य करणात् कृतम्। अपकृतञ्च तदेकदशस्यानभिमतस्य करणात्। "भुक्तविभुक्तम्" इति। भुक्तं त्वभ्यवह्यतत्वात्, विभुक्तञ्चाशोभनत्वात्। विशब्दोऽत्राशोभवत्वं प्रतिपादयति विरूपवत्। अथ वा- भुक्तञ्च तत्प्रत्यागतञ्चेति "गतप्रत्यागतम्"। यातञ्च तत्पूर्वमनुयातञ्च पश्चात् "यातानुयातम्"। "क्रयाक्रयिका" #इति। महान् क्रयः क्रयशब्दोनोच्यते, अल्पस्तु क्रयिकाशब्देन। क्रयावयवसम्बन्धात् क्रयः, क्रयिकावयवसम्बन्धात् क्रयिता, क्रयश्चासौ क्रयिका चेति क्रयाक्रयिका। "अन्येमामपि दृश्यते" ६।३।१३६ इति दीर्घः। एवं पुटश्चासौ पुटिका चेति "पुटापुटिका"। फलञ्च तत् फलिका चेति "फलफलिका"। मानञ्च तदुन्मानिका चेति "मानोन्मानिका"। "समानाधिकरणाधिकारे" इत्यादि। अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनन्तु पूर्ववदेव॥ "पूज्यचमानवचनैरिति वचनात्" इत्यादि। पूज्यमनत्वं ह्यवमुत्तरपदस्य भवति यदि पूजावचना भवन्ति, नान्यथा; तस्मात् पूज्यमानग्रहणात् सदादयः पूजावचना विज्ञायन्ते। अत एव सच्छब्देन शतृशानचोग्रहणं न भवति, न हि तौ पूजामाहतुः। "उत्कृष्टा गौः कद्र्दमात्" इति। उद्धृतेत्यर्थः। अथ कथं महाद्रुमः, महोदधिरिति समासः, न ह्यत्र पूजा गम्यते, किं तर्हि? प्रमाणातिरेक उत्तरपदार्थस्य? यद्यप्येवम्, तथापि बहुलग्रहणानुवृत्तेर्भविष्यति॥

बाल-मनोरमा

क्तेन नञ्विशिष्टेनाऽनञ् ७२९, २।१।५९

क्तेन नञ्विशिष्टेनानञ्। नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सह नञ्रहितं क्तान्तं समस्यते, तत्पुरुष इत्यर्थः। कृतं च तदिति। एकदेशस्य करणात्कृतम्, एकदेशान्तरस्याऽकरणात्तदेवाऽकृतम्। पूर्वनिपातनियमार्थम्। सिद्धं च तदभुक्तं चेत्यत्र तु नायं समासः, विशिष्टशब्दो ह्यत्राधिकवाची। यथा "देवदत्ताद्यज्ञदत्तः स्वाध्यायेन विशिष्ट" इत्युक्ते अधिक इति गम्यते। नञैव विशिष्टं। नञ्मात्राधिकेन क्तान्तेनेति लभ्यते। एवंच समानप्रकृतिकत्वं क्तान्तयोः पर्यवसन्नमिति बोध्यम्।

शाकपार्थिवादीनामिति। "वर्णो वर्णेने"ति सूत्रभाष्ये इदं वार्तिकं पठितम्। शाकपार्थिव इति। शाकः प्रियो यस्य स शाकप्रियः। "वा प्रियस्ये"ति प्रियशब्दस्य परनिपातः शाकप्रियश्चासौ पार्थिवश्चेति विग्रहे बहुव्रीहिगर्भो विशेषणसमासः। तत्र पूर्वखण्डे बहुव्रीहौ उत्तरपदस्य प्रियशब्दस्य लोपः। देवब्राआह्मण इति। देवाः प्रिया यस्य स देवप्रियः, स चासौ ब्राआह्मणश्चेति विग्रहः। पूर्ववदुत्तरपदलोपः। देवपूजको ब्राआह्मण इति वा विग्रहः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सन्महत्परमोत्तमोत्कृष्टाः १।३ पूज्यमानैः ३।३ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
सन्महत्परमौत्तमौत्कृष्टाः पूज्यमानैः २।१।६१

सत् महत् परम उत्तम उत्कृष्ट इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूज्यमानैः इति वचनात् पूजावचनाः सदादयो विज्ञायन्ते। सत्पुरुषः। महापुरुषः। परमपुरुषः। उत्तमपुरुषः। उत्कृष्टपुरुषः। पूज्यमानैः इति किम्? उत्कृष्टो गौः कदर्मात्।
बाल-मनोरमा
सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ७३०, २।१।६०

सन्महत्परम। "समानाधिकरणैः समस्यन्ते स तत्पुरुषः" इति शेषः। सद्वैद्य इति। सन्-वैद्य इति विग्रहः। चिकित्साशास्त्ररकूलङ्कषज्ञानवत्त्वं सत्त्वम्। तेन वैद्यस्य पूजा गम्यते। पूर्वनिपातनियमार्थं सूत्रम्। वक्ष्यमाणेनेति। महांश्चासौ वैयाकरणश्चेति विग्रहेऽनेन समासे सति महच्छब्दस्य "आन्महतः" इति वक्ष्यमाणेन आकारेऽन्तादेशे सवर्णदीर्घे "महावैयाकरण" इति भवतीत्यर्थः। ननूत्कृष्टो गौरित्यत्रोत्कृष्टशब्दस्याऽतिशयितवाचितया तेन गोः पूजावगमात्कथमिह समासो न भवतीत्यत आह--पङ्कादुद्धृत इत्यर्थ इति। उत्पूर्वकः कृषधातुरिहोद्धरणार्थक इति भावः। परमवैद्यः, उत्तमवैद्यः, उत्कृष्टवैद्यः। गुणक्रियाशब्दैः समासे सदादीनां पूर्वनिपातनियमार्थमिदं सूत्रम्।

तत्त्व-बोधिनी
सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ६४८, २।१।६०

सन्महत्। गुणक्रियाशब्दैः सह समासे सदादीनां पूर्वनिपातनियमार्थं सूत्रम्। कतरकतमौ। जातिपरिप्रश्ने किम्()। कतरो देवदत्तः। "वा बहूनां जातिपरिप्रश्ने डतम"जिति व्युत्पादितकतमशब्दसाहचर्यातादृशास्यैव कतरशब्दस्यापि ग्रहणे सिद्धे जातिपरिप्रश्नग्रहणं ज्ञापयति "कतमश दोऽर्थान्तरेऽपिसाधुः"इति। तथा च प्रत्युदाह्मतं प्राचीनवृत्तिषु "कतरो भवतोर्देवदत्तः, कतमो भवतां देवदत्तः"इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृन्दारकनागकुञ्जरैः ३।३ पूज्यमानम् १।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
वृन्दरकनागकुञ्जरैः पूज्यमानम् २।१।६२

वृन्दारक नाग कुञ्जर इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। पूज्यमानम् इति वचनात् पूजावचना वृन्दारकाऽदयो गृह्यन्ते। गोवृन्दारकः। अश्ववृन्दारकः। गोनागः। अश्वनागः। गोकुञ्जरः। अश्वकुञ्जरः। पूज्यमानम् इति किम्? सुषीमो नागः।

न्यासः

वन्दारकनागकुञ्जरैः पूज्यमानम्। , २।१।६१

वन्दारकादयो जातिशब्दाः। ते चोपमानत्वे सति पूजावचना भवन्ति। तत्र व्याघ्रादेराकृतिगणत्वात् "उपमितं व्याघ्रादिभिः" २।१।७५ इत्येवं सिद्धे समान्यप्रयोगगेऽपि यथा स्यादित्येवमर्थोऽयमारम्भः। ""पूज्यमानम्" इति वचनाद्वृन्दारकादयः पूजावनचना गृह्न्ते" इति। न ह्न्यथा पूज्यमानत्वमुपपद्यत इति भावः। "सुषीमो नागः" इति। ननु च विशेषणं विशेष्येणेति वत्र्तते। न च नागादन्यः सुषीमोऽस्ति, संज्ञा ह्रेषा नागस्यैव? एवं तर्हि प्रत्युदाहरणदिगियं वृत्तिकृता दर्शिता।इदन्त्वत्र प्रत्युदाहरणम्--देवदत्तो नागो यस्मान्मूर्ख इति॥

बाल-मनोरमा

वृन्दारकानागकुञ्जरैः पूज्यमानम् ७३१, २।१।६१

वृन्दारकनाग। "समानाधिकरणैः समस्यते" इति शेषः। विशेषणसमासेनैव सिद्धे विशेष्यस्य पूर्वनिपातनियमार्थं सूत्रम्। गोवृन्दारक इति। वृन्दारकशब्दो देवतावाची। "अमरा निर्जरा देवाः" इत्युपक्रम्यं, "वृन्दारका दैवतानी"त्यमरः। गौर्वृन्दारक इवेति विग्रहः। गौर्नाग इव गोनागः। गौः कुञ्जर इव गोकुञ्जरः। नागशब्दः कुञ्जरशब्दश्च गजवाची। अत्र गौर्वृन्दारादितुल्यत्वात् श्रैष्ठ()ं गम्यत इति पूज्यमानता। ननु व्याघ्रादेराकृतिगणत्वात् "उपमितं व्याघ्रादिभि"रित्येव सिद्धे किमर्थमिदमित्यत आह--व्याघ्रादेरिति। सामान्येति। गोकुञ्जरः श्रेष्ठ इत्यादिविति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कतरकतमौ १।२ जातिपरिप्रश्ने ७।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

कतरकतमौ जातिपरिप्रश्ने २।१।६३

कतरकतमौ जातिपरिप्रश्ने वृतमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। कतरकठः। कतरकालापः। कतमकठः। कतमकालापः। ननु कतमशब्दस्तावज् जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दो ऽपि साहचर्यात् तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन? एवं तर्ह्येतज् ज्ञापयति कतमशब्दो ऽन्यत्र अपि वर्तते इति। तथा च प्रत्युदाहरनम् कतरो भवतोर् देवदत्तः, कतमो भवतां देवदत्तः।

न्यासः

कतरतमौ जातिपरिप्रश्ने। , २।१।६२

"जातिपरिप्रश्न एव व्युत्पाद्येते"इति। "किंयत्तदौर्निर्धारणे"५।३।९२ इत्यनुवत्र्तमाने "वा बहूनाम्" ५।३।९३ इत्यादिना। स्यादेतत्-- कतरशब्दविशेषणार्थं जातिपरिप्रश्नग्रहणमित्याह-- "कतरशब्दोऽपि" इत्यादि। "तदेव ज्ञापयति" इति। यदि

तर्हि कतमशब्दो जातिपरिप्रश्न एव वत्र्तमानो गृह्रते, जातिपरिप्रश्नग्रहणमनर्थकं स्यात, विनाऽपि तेन यथोक्तया नीत्या कतरतमशब्दौ जातिपरिप्रश्न एव वत्र्तमानो ग्रहीष्येते। "तथा च" इत्यादि। यत एव तकमशब्दस्य जातिपरिप्रश्नादन्यत्रापि वृत्तिः, एवञ्च कृत्वा भवतां देवदत्तः कतम इति प्रत्युदाहरणमुपपद्यते। अन्यथा तन्नोपपद्येत्; तस्य जातिपरिप्रश्नादन्यत्राप्रवृत्तेः॥

बाल-मनोरमा

कतरकतमौ जातिपरिप्रश्ने ७३२, २।१।६२

कतरकतमौ। जातिपरिप्रश्ने गम्ये कतरकतमो समानाधिकरणेन समस्येते इत्यर्थः। कतरकठ इति। अनयो कः कठ इत्यर्थः। "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्"। कठेन प्रोक्तमधीते कठः। वैशम्पायनान्तेवासित्वात् प्रोक्ते णिनिः। "कठचरकाल्लु"गिति तस्य लुक्। ततः "तदधीते " इत्यणः "प्रोक्ताल्लु"गिति लुक्। कतमकलाप इति। एषां कः कलाप इति विग्रहः कलापिना प्रोक्तमधीते कलापः। "कलापिनोऽण्"। "सब्राह्मचारी"ति टिलोपः। "वा बहूनां जातिपरिप्रश्ने डतमच्"। ननु घटत्वादिवत्कठशाखाध्येतृत्वादिकं न जातिः, "आकृतिग्रहणा जातिः" इति लक्षणस्य "लिङ्गानां च न सर्वभाक्, सकृदाख्यातनिग्र्राह्रा" इति लक्षणमस्य च तत्राऽप्रवृत्तेरित्यत आह--गोत्रं चेति। अत्र कतमशब्दस्य जातिपरिप्रश्न एव व्युत्पादनातरार्थमेव जातिपरिप्रश्नग्रहणम्। एवंचाऽनयोः कतरो देवदत्त इत्यत्र न भवति समासः। "एषां कतमो देवदत्तः" इति तु नास्त्येव, जातिपरिप्रश्न एव डतमचो विधानात्। वस्तुतस्तु डतरतमविधौ द्वयोरिति बहूनामिति जातिपरिप्रश्ने इति प्रत्याख्यातं भाष्ये। एवंच "कतम एषां देवदत्त" इत्यप्यस्ति। तत्र समासाऽभावाय जातिपरिप्रश्नग्रहणमिति शब्देन्दुशेखरे स्थ#इतम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ किं १।१ क्षेपे ७।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

किं क्षेपे २।१।६४

किम् इत्येतत् क्षेपे गम्यमाने सुपा सह समस्यते ततुरुषश्च समासो भवति। किंराजा, यो न रक्षति। किंसखा, यो ऽभिद्रुह्यति। किंगौः, यो न वहति। किमः क्षेपे ५।४।७० इति समासान्तो न भवति। क्षेपे इति किम्? को राजा पाटलिपुत्रे।

न्यासः

किं क्षेपे। , २।१।६३

"किंसखा" इति। "अनङ सौ" ७।१।९३ इत्यनङादेशः। अथ किंराजेत्यादौ "राजाहः सखिभ्यष्टच्" ५।४।९१ "गोरतद्धितलुकि" ५।४।९२ इति टच् समासान्तः कस्मान्न भवतीत्याह-- "किमः क्षेपे" इत्यादि। अत्र "न पूजनात्" ५।४।६९ इत्यतः "न" इत्यनुवत्र्तते॥

बाल-मनोरमा

किं क्षेपे ७३३, २।१।६३

किं क्षेपे। क्षेपो निन्दा। तत्रगम्ये किमित्यव्ययं समानाधिकरणेन समस्यते स तत्पुरुष इत्यर्थः। कुत्सितो राजेति। अस्वपदविग्रहोऽयम्। किम्पदस्थाने कुत्सिदपदमिति ज्ञेयम्, वाक्येन निन्दानवगमेन स्वपदलौकिकविग्रहाऽसम्भवात्। किंराजेति। "राजाहःसखिभ्यः" इति टच् तु न, "किमः क्षेपे" इति निषेधात्। ननु राज्ञो बहुसम्पत्तिशालिनः कथं कुत्सितत्वमित्यत आह--यो न रक्षतीति। स किराजेत्यन्वयः।

तत्त्व-बोधिनी

किं क्षेपे ६४९, २।१।६३

किं क्षेपे। किंराजेति। "किमः क्षेपे"इति समासान्तनिषेधः। क्षेपे किम्()। को राजा पाटलिपुत्रे। एवं "किंसखा यो दहति" "किंगौर्यो न वहति" इत्यप्युदाहरणं बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पोटायुवति॰धूर्तैः ३।३ र्जातिः १।१ ६५ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर् जातिः २।१।६५

उभयव्यञ्जना पोटा इत्यभिधीयते। गृष्टिरेकवारप्रसूता। धेनुः प्रत्यग्रप्रसूता। वशा वन्ध्या। देहद् गर्भपातिनी। बष्कयणी तरुणवत्सा। पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। इभपोटा। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः। जातिः इति किम्? देवदत्तः प्रवक्ता। धूर्तग्रहणम् अकुत्सार्थम्।

न्यासः

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः।, २।१।६४

विशेषणमित्यादिना समासे प्राप्ते वचनमिदं परनिपातार्थम्। गुणशब्दा ह्येते। तत्र यदि तेन समासः स्यात तदैषां पूर्वनिपातः प्रसज्येत। अथ धूर्त्तग्रहणं किमर्थम्, यावता कुत्सनशब्दोऽयम्, "कुत्सितानि कुत्सनैः" (२।१।५३) इत्येवं समासः सिद्ध? इत्याह-- "धूर्त्तग्रहणमकुत्सार्थम्" इति। शब्दप्रवृत्तिनिमित्तकुत्सायां समासो विज्ञायते, न कुत्सायाम्॥

बाल-मनोरमा

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ७३४, २।१।६४

पोटायुवति। पोटादिभिः समानाधिकरणैर्जातिवाचकं समस्यते स तत्पुरुष इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रशंसावचनैः ३।३ च ० जातिः १।१ ६४ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

प्रशंसावचनैश् च २।१।६६

जातिः इति वर्तते। जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति। रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयः। ते च आविष्टलिङ्गत्वादन्यलिङ्गे ऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाहिकरना भवन्ति। गोप्रकाण्डम्। अश्वप्रकाण्डम्। गोमत्ल्लिका। अश्वमतल्लिका। गोमचर्चिका। अश्वमचर्चिका। जातिः इति किम्? कुमारी मतल्लिका।

न्यासः

प्रशंसावचनैश्च। , २।१।६५

"रूढिशब्दाः प्रशंसावचना गृह्न्ते" इति। त्रिप्रकारा हि प्रशंसाशब्दाः- के#इज्जातिशब्दाः परार्थे प्रयुज्यमानाः प्रशंसामाचक्षते यथा-- सिंहो देवदत्त इति। केचिद्गुणशब्दा गुणगुणिसम्बन्धेन प्रशंसावचना भवन्ति, यथा-- रमणीयो ग्रामः, शोभनः पाचक इति। केचिद्रूढिशब्दा मतल्लिकादयः; तेषां प्रशंसैव शब्दार्थः। तदिह वचनग्रहणात् प्रशंसायामेव ये वत्र्तन्ते ते गृह्न्ते रूढिशब्दाः। "गोप्रकाण्डम्" इति। शोभनः प्रशस्तो गौरित्यर्थः। योगविभागोऽसन्देहार्थः। यदि पूर्वयोग एव प्रशंसावचना गृह्णेरन्, तदा सन्देहः स्यात्-- किं पोटादिभिः प्रत्येकं वचनमभिसम्बध्यते? अथ प्रशंसयेति? पोटादिभिः सम्बन्धे तत्पर्यायैरपि समासः स्यात्॥

बाल-मनोरमा

प्रशंसावचनैश्च ७३७, २।१।६५

प्रशंसावचनैश्च। एतैरिति। रूढ()आ प्रशंसावाचकैरित्यर्थः। जातिरिति। "पोटायुवती"त्यतस्तदनुवृत्तेरिति भावः। प्राग्वदिति। समानाधिकरणैः समस्यते स तत्पुरुष इत्यर्थः। जातेः पूर्वनिपातनियमार्थं सूत्रम्। गोमतल्लिकेति। मतल्लिका चासौ गौश्चेति विग्रहः। गोमचर्चिकेति। मचर्चिका चासौ गौश्चेति विग्रहः। गोप्रकाण्डमिति। प्रकाण्डं चासौ गौश्चेति विग्रहः। गवोद्ध इति। उद्धश्चासौ गोश्चेति विग्रहः। "अवङ् स्फोटायनस्य" "आद्गुणः"। गोतल्लज इति। तल्लजश्चासौ गौश्चेति विग्रहः। सर्वत्र परवल्लिङ्गता। मतल्लिकादिशब्दानमप्रसिद्धत्वाद्व्याचष्टे--प्रशस्ता गौरित्यर्थ इति। गोशब्दस्य स्त्रीलिङ्गत्वाभिप्रायात्प्रशस्तेति स्त्रीलिङ्गनिर्देशः। गोशब्दस्य पुंलिङगत्वे तु प्रशस्त इति पाठ()म्। ननु गोशब्दस्य पुंलिङ्गत्वे मतल्लिकामचर्चिकाप्रकाण्डशब्दानामपि विशेष्यनिग्नत्वात्पुंलिङ्गतापत्तिः। गोशब्दस्य स्त्रीलिङ्गत्वे तु प्रकाण्डोद्धतल्लजानामपि स्त्रीलिङ्गतापत्तिश्चेत्यत आह--मतल्लिकादय इति। "मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनी"त्यमरः। कुमारी मतल्लिकेति। अवस्थाविशेषात्मकवयोविशेषवाचित्वान्न जातिवाची कुमारीशब्द इति न समासः। समासे तु "पुंवत्कर्मधारये"ति पुंवत्त्वं स्यादिति भावः।

तत्त्व-बोधिनी

प्रंशसावचनैश्च ६५२, २।१।६५

प्रशंसावचनैस्च। वचनग्रहणं रूढि शब्दपरिग्रहार्थम्। तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयो, ये च विशेषवचनाः शुचिमृद्वादयो, ये तु गौण्यावृत्त्या प्रसंसां गमयन्ति--"सिंहो माणवकः"इत्यादयस्ते सर्वे व्युदस्यन्ते। गवोद्ध इति। "अवङ्

स्फोटायनस्ये"त्यवङि "आद्गुणः"। "मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमरः। "प्रशंसावचनपोटायुवती" त्येकयोगसंभवे पृथग्योगकरणं चिन्त्यफलम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ युवा १।१ खलतिपलितवलिनजरतीभिः ३।३ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
युवा खलतिपालितवलिनजरतीभिः २।१।६७

खलत्यादिभिः। समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति। जरतीभिः इति स्त्रीलिङ्गेन निर्देशः, प्रातिपादिकग्रहणे लिङ्गविशिष्टस्य अपि ग्रहनम् इति ज्ञापकार्थः। युवा खलतिः युवखलतिः। युवतिः खलती युवखलती। युवा पलितः युवपलितः। युवतिः पलिता युवपलिता। युवा वलिनः युववलिनः। युवतिर्वलिना युववलिना। युवा जरन् युवजरन्। युवतिर्जरती युवजरती।
न्यासः
युवा खलतिपलितवलिनजरतीभिः। , २।१।६६

"खलत्यादिभिः समानाधिकरणैः" इत्यादि। यद्येवम्, किमर्थं जरतीभिरिति स्त्रीलिङ्गेन निर्देशः, जरद्भिरित्येवं नाम निर्देशः कत्र्तव्यः स्यात्, न हि जरतीशब्देन स्त्रीलिङ्गेन युवशब्दस्य पुंलिङ्गस्य सामानाधिकरण्यमुपपद्यत इत्याह-- "जरतीभिरिति स्त्रीलिङ्गेन निर्देशः" इत्यादि। कथं पुनरनेन निर्देशेनैषा परिभाषा शक्यते ज्ञापयितुम्? यद्येषा न स्यात् तदा जरतीभिरित्येवं निर्देशोऽनर्थकः स्यात्। तथा च समानाधिकरणाधिकारात् समानाधिकरणेन जरतीशब्देनायं समासो विज्ञायते। न च तेन स्त्रीलिङ्गेन पुंसि वत्र्तमानस्य युवशब्दस्य सामानाधिकरण्यं भवति, तदेष निर्देशः कथमर्थवान् भवति? यद्येषा परिभाषाऽवतिष्ठते ! तस्यां हि सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्य ग्रहणं भवतीत्युपपद्यते। युवतिजरतीशब्दयोः सामानाधिकरण्यम्, त()स्मश्च सति तयोः समासः। तेदवं जरतीभिरिति निर्देशो ज्ञापयति-- एषा परिभाषाऽस्तीति। नन्वेवमपि जरत्या समास उच्यमाने जरता न प्राप्नोति-- युवजरन्निति? नैष दोषः; वृत्यन्तरे हि जरद्भिरिति पठ()ते। उभयथाऽप्याचार्येण शिष्याः प्रतिपादिता इत्युभयं सिध्यति॥
बाल-मनोरमा
युवा खलतिपलितवलिनजरतीभिः ७३८, २।१।६६

युवा खलति। युवन्शब्दः खलत्यादिभिः समानाधिकरणैः समस्यते, स तत्पुरुष इत्यर्थः। विशेषणसमासेन सिद्धे किमर्थमिदमित्यत आह--पूर्वेति। युवन्शब्दस्य खलत्यादिशब्दानां च गुणवाचित्वाद्विशेषणत्वे कामचारात्पूर्वनिपातस्याऽनियमे प्राप्ते तन्नियमार्तमिदं सूत्रमित्यर्थः। खलतिः=केशहीनशिराः। "पलितं जरसा शौक्लयं" "वलिनो वलिभः समौ" इत्यमरः। युवखलतिरिति। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः। ननु युवेति पुंलिङ्गनिर्देशात् कथं युवतिशब्दस्य समास इत्यत आह--लिङ्गविशिष्टेति। युवखलतीति। "पुंवत्कर्मधारये"ति पुंवत्त्वम्। युवजरतीति। जरती=वृद्धा। युवतिश्चासौ जरती चेति विग्रहः। "पुंवत्कर्मधारये"ति पुंवत्त्वम्। ननु युवतिः कतं जरती स्यादित्यत आह--युवत्यामेवेति।

तत्त्व-बोधिनी

युवा खलतिपलितवलिनजरतीभिः ६५३, २।१।६६

युवखलतीति। "कृदिकारादक्तिनः"इति ङीष्। "पुंवत्कर्मधारये"ति युवतिशब्दस्य पुंवद्भावः। जरतीति। "जीर्यतीति। "जीर्यतेरतृन्"ुगितश्चे"ति ङीष्। एवं युवपलितः युववलिन इत्युदाहार्यम्। वलिनशब्दः पामादिः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत्यतुल्याख्याः १।३ अजात्या ३।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

कृत्यतुल्याऽख्या अजात्या २।१।६८

कृत्यप्रत्ययान्तास् तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति। भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। तुल्याख्याः तुल्यश्वेतः। तुल्यमहान्। सदृशश्वेतः। सदृशमहान्। अजात्या ति किम्? भोज्य ओदनः।

न्यासः

कृत्यतुल्याख्या अजात्या। , २।१।६७

"तुल्यपर्यायाश्च" इति। अथ स्वरूपग्रहणं कस्मान्न विज्ञायते? एवं मन्यते--कृत्य इत्यर्थग्रहणम्। अतस्तत्साहचर्यात् तुल्य इत्यर्थस्यैव ग्रहणं युक्तम्, तत्रार्थे कार्यासम्भवात् तद्वाचिनां समासो विज्ञायत इत्याख्याग्रहणं तुल्यनामधेयपरिग्रहार्थम्। अन्यथा गौर्वाहीक इत्यत्रापि स्यात् ; गोशब्दस्येह सादृश्यार्थत्वात्। सर्व एव हि शब्दाः परपदार्थे प्रयुज्यमानाः सादृश्यं गमयन्ति। आख्याग्रहणे तु क्रियमाणे गोशब्दोऽत्र तुल्यनामधेयं न भवतीति समासाभावः। भोज्योष्णमित्यादावुष्णादयः शब्दा गुणवचनाः। तत्रासत्यस्मिन् योगे विशेषणसमासे सति तेषां पूर्वनिपातः स्यात्। अतः परनिपातार्थ आरम्भः। "तुल्यमहान्" इति। यद्यप्यत्र "सन्महत्" इत्यादिना समासः प्राप्नोति, तथापि परत्वादनेनैव भवति। तुल्याख्यायामस्यावकाशः-- तुल्य()ओत इति। तस्य चातुल्याख्यायामवकाशः-- महापुरुष इति। "भोज्य ओदनः" इति। ओदन शब्दोऽत्र जातिवचनः॥

बाल-मनोरमा

कृत्यतुल्याल्या अजात्या ७३९, २।१।६७

कृत्यतुल्याख्या। कृत्यप्रत्ययान्ताः , तुल्यवाचकाश्च जातिभिन्नवाचकेन समानाधिकरणेन समस्यन्ते स तत्पुरुष इत्यर्थः। भोज्योष्णमिति। भोज्यं च तदुष्णं चेति विग्रहः। "ऋहलोर्ण्य"दिति ण्यत्। अर्हे। कृत्यप्रत्ययः। भोज्योष्णशब्दयोः क्रियागुणशब्दत्वाद्विशेषणत्वे कामचारादनियतपूर्वनिपाते प्राप्ते नियमार्थमिदम्। तुल्य()ओत इति। तुल्यश्चासौ ()ओतश्चेति विग्रहः। उभयोर्गुणवचनतया विशेषणत्वाऽनियमेऽपि तुल्यशब्दस्यैव पूर्वनिपातः। आख्याग्रहणस्य प्रयोजनमाह--सदृश()ओत इति। सदृशशब्दस्य तुल्यपर्यायत्वादिति भावः। भोज्य ओदन इति। अत्र ओदनशब्दस्य जातिवाचित्वात्तेनायं समासो न भवतीत्यर्थः। नन्वेतत्समासाऽभावेऽपि विशेषणसमासो दुर्वार इत्यत

आह-प्रतिषेधेति। भोज्यशब्दपूर्वनिपातस्योभयत्राप्यविशिष्टतया "अजात्ये"ति पर्युदासवैयर्थ्यादिति भावः।

तत्त्व-बोधिनी

कृत्यतुल्याल्या अजात्या ६५४, २।१।६७

कृत्यतुल्याख्या। "तुल्यमहान्""सदृशमहा"नित्यादौ तु परत्वादनेन "सन्मह"दिति बाध्यते। "तस्य सत्कृत्यशालिनः"इति भट्टिप्रयोगे तु "सतां कृत्यं सत्कृत्य"मिति षष्ठीसमासो बोध्यः। एवं "परमपूज्यः"इत्यादिष्वपि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वर्णः १।१ वर्णेन ३।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

वर्णो वर्णेन २।१।६९

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवति। कृष्णसारङ्गः। लोहितसारङ्गः। कृष्णशबलः। लोहितशबलः। अवयवद्वारेन कृष्णशब्दः समुदाये वर्तमानः समानाधिकरणो भवति।

न्यासः

वर्णो वर्णेन।, २।१।६८

"विशेषणं विशेष्येण" २।१।५६ इति वत्र्तते। तत्र यदि द्वयोरपि वर्णशब्दयोः स्वरूपग्रहणमिह स्यात्, विशेषणविशेष्यभावो नोपपद्येत; अभिन्नार्थत्वात्। न हि तदेव देवदत्तस्य विशेषणत्वं विशेष्यत्वं चोपपद्यते। अथाप्येकस्य स्वरूपग्रहणं स्यात्, अपरस्यार्थग्रहणम्? एवप्येकः सामान्यवाची स्याद्वर्णशब्दः, द्वितीयस्तु विशेषवाची कृष्णादिशब्दः। ततश्च प्रत्येकं विशेषणत्वं विशेष्यत्वं च न स्यात्। यत्र च तदुभयमस्ति तत्र समास इति प्रागुभयग्रहणस्य प्रयोजनमुक्तम्। तस्मादुभयत्राप्यर्थग्रहणं विज्ञायत इत्याह-- "वर्णविशेषवाचि" इत्यादि। "कृष्णसारङ्गः, लोहितसारङ्गः" इति। ननु च कृष्णशब्दो लोहितशब्दश्चावयवे वत्र्तते सारङ्गशब्दस्तु समुदाये; यथा-- शबलशब्दः, तत्कथमवयववृत्तेः कृष्णादिशब्दस्य समुदायवृत्तिना सारङ्गादिशब्देन सामानाधिकरण्यमित्याह-- "अवयवद्वारेण" इत्यादि। कृष्ण इत्युच्यते, लोहितावयवसम्बन्धाल्लोहित इति। अत एव गौणत्वादत्र सामानाधिकरण्यस्य "विशेषणं विशेष्येण" २।१।५६ इत्यादिना समासो न प्राप्नोतीतीदमारभ्यते महत्याः संज्ञायाः करणमन्वर्थसंज्ञा यथा विज्ञायेतेति। तेनाप्रधानमुपसर्जनमिति। न चात्र समुदायोऽप्रधानम्, किं तर्हि? प्रधानमेव। अवयवानान्तु तदर्थत्वादप्राधान्यम्। अतोऽवयववचनस्यैव कृष्णशब्दादेरुपसर्जनत्वम्। न समुदायवचनस्य सारङ्गादिशब्दस्य॥

बाल-मनोरमा

वर्णो वर्णेन ७४०, २।१।६८

वर्णो शेषपूरणेन सूत्रं व्याचष्टे--समानाधिकरणेनेति। वर्णवाचिना समानाधिकरणेन वर्णवाची समस्यते स तत्पुरुष

इत्यर्थः। कृष्णसारङ्ग इति। सारङ्गः-चित्रवर्णवान्। कृष्णशब्दः कृष्णावयवके लाक्षणिक इति सामानाधिकरण्यम्। कृष्णश्चासौ सारङ्गश्चेति विग्रहः। विशेषणसमासेन सिद्धे इदं प्रपञ्चार्थमेव। यत्तु "वर्णो वर्णेष्वनेते" इति स्वरविधौ प्रतिपदोक्तत्वादस्यैव ग्रहणार्थमिदम्। तेन सारङ्गस्यावयवः कृष्णः सारङ्गकृष्ण इत्यत्र "वर्णो वर्णेषु" इति स्वरो नेति, तच्चिन्त्यं, कर्मधारयस्वरप्रकरणे "वर्णो वर्णेष्वनेते" इति सूत्रस्य पाठेनैव सिद्धेरिति दिक्।

तत्त्व-बोधिनी

वर्णो वर्णेन ६५५, २।१।६८

वर्णो। समानाधिकरणेन वर्णवाचिना वर्णवाचि समस्यत इत्यर्थः। "विशेषणं विशेष्येणे"त्यनेनैव सिद्धे पृथग्विधानं "वर्णो वर्णेष्वनेते"इति पूर्वपदप्रकृतिस्वरो विधीयमानः प्रतिपदोक्तत्वादेतत्समासपूर्वपदस्यैव भवतु नान्यस्येत्येतदर्थम्। कृष्णसारङ्ग इति। सारङ्गश्चित्रपर्यायः। स च गुणोपसर्जनद्रव्यपरः। कृष्णशब्दोऽपि कृष्णावयवके भाक्तः। एवं च गौणे सामानादिकरण्ये "विशेषणं विसेष्येणे"त्यप्रवृत्तौ समासार्थमपीदमारब्धव्यमित्याहुः। ननु "तृतीये"त्यनेनैवायं समासः सिध्यति, सारङ्गत्वस्य कृष्णादिकृतत्वात्। नापि स्वरे भेदः। "तत्पुरुषे तुल्यार्थ तृतीये"त्यनेनैव पूर्वपदप्रकृतिस्वरसिद्धेरिति चेदत्राहुः--"कृष्णशुक्लो हरितशुक्ल इत्याद्यर्थं समासोऽनेनाऽवश्यं विधेयः। नहीह तत्कृतत्वमस्ति। यद्यपीह "विशेषणं विशेष्येणे"त्यनेन समासः सिध्यति, तथापीष्टः स्वरो न सिध्यति। न चप्रतिपदोक्तसमासोऽकिञ्चित्करः, व्यावर्त्याऽलाबादिति वाच्यं, कृष्णशुक्लौ इत्यादेव्र्यावर्त्यस्य संभवा"दिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कुमारः १।१ श्रमणाऽऽदिभिः ३।३ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

कुमारः श्रमणाऽअदिभिः २।१।७०

कुमारशब्दः श्रमणाऽअदिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। ये ऽत्र स्त्रीलिङ्गाः पठ्यन्ते, श्रमणा, प्रव्रजिता, कुलटा इत्येवम् आदयः, तैः सह स्त्रीलिङ्गः एव कुमारशब्दः समस्यते। ये तु पुंलिङ्गाः, अध्यापकः, अभिरूपकः, पण्डितः इति, तैरुभयथा, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य अपि ग्रहणम् इति। कुमारी श्रमणा कुमारश्रमणा। श्रमना। प्रव्रजिता। कुलटा। गर्भिणी। तापसी। दासी। बन्धकी। अध्यापक। अभिरूपक। पण्डित। पटु। मृदु। कुशल। चपल। निपुण।

न्यासः

कुमारः श्रमणादिभिः। , २।१।६९

"तैः सह स्त्रीलिङ्ग एव कुमारीशब्दः समस्यते" इति। न तु पुंल्लिङ्ग इत्यवधारणेन दर्शयति। न हि पुंल्लिङ्गस्य स्त्रीलिङ्गेन सामानाधिकरण्यमुपपद्यत इति भावः। "तैरुपभयथा" इति। स्त्रीलिङ्गः, पुंल्लिङश्च। कथं पुनः पुंल्लिङ्गैः समास उच्यमानः स्त्रीलिङ्गैः स्यादित्यत आह-- "प्रातिपदिकग्रहणे" इति। गतार्थम्॥

तत्त्व-बोधिनी

कुमारः श्रमणादिभिः ६५७, २।१।६९

एतदेवेत्। एलकारः स्फुटसिद्धतच्चद्योतनार्थो, न त्ववधारणार्थः, "युवा खलती"ति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वसंभवात्। न हि युवन्शब्दस्य पुंस्त्वं जरतीसामानाधिकरण्यं सङ्गच्छते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चतुष्पादः १।३ गर्भिण्या ३।१ समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः
चतुष्पादो गर्भिण्या २।१।७१

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति। गोगर्भिणी। अजागर्भिणी। चतुष्पाज्जातिरिति वक्तव्यम्। इह मा भूत् कालाक्षी गर्भणी, स्वस्तिमती गर्भिणी। चतुष्पादः इति किम्? ब्राह्मणी गर्भिणी।

न्यासः
चतुष्पादो गर्भिण्या। , २।१।७०

"चतुष्पादः" इति। चत्वारः पादा यासां ताश्चतुष्पादः। "पादस्य लोपोऽहस्त्यादिभ्यः" ५।४।१३८ इत्यन्तस्य लोपः। "चतुष्पाज्जातिरिति वक्तव्यम्" इति। चतुष्पादो जातिवचना एव गर्भिण्या समस्यन्त इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- पोटादि२।१।६४ सूत्रादिह जातिग्रहणमनुत्रतते। तेन चतुष्पज्जातिवाच्येव गर्भिण्या समस्यते, नान्यदिति॥

बाल-मनोरमा
चतुष्पादो गर्भिण्या ७४३, २।१।७०

चतुष्पादो गर्भिण्या। "जातिग्रहणं कर्तव्य"मिति वार्तिकमभिप्रेत्याह--चुत्ष्पाज्जातीति। गोगर्भिणीति। गर्भिणी चासौ गौश्चेति विग्रहः। विशेष्यस्य पूर्वनिपातार्थमिदं सूत्रम्। जातिरिति किम्?। कालाक्षी गर्भिणी।

तत्त्व-बोधिनी
चतुष्पादो गभिण्या ६५८, २।१।७०

चतुष्पादो। मण्डूकप्लुत्याऽत्र "जाति"रित्यनुवर्तत इत्याह---जातिवाचीति। जातिः किम्()। "कालाक्षी गभिणी"। चतुष्पात्किम्()। ब्राआह्णी गर्भिणी। प्रत्युदाहरणे "विशेषण्"मिति समासः स्यादेव। गर्भिणीकालाक्षीत्यादिपूर्वनिपाते विशेषः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मयूरव्यंसकादयः १।३ च ० समानाधिकरणेन ३।१ ४८ तत्पुरुषः १।१ २१ विभाषा १।१ ११ सह ० ४ सुपा ३।१ ४ समासः १।१ ३ सुप् १।१ २

काशिका-वृत्तिः

मयूरव्यंसकाऽदयश् च २।१।७२

समुदाया एव निपात्यन्ते। मयूरव्यंसकाऽदयः शब्दाः तत्पुरुषसंज्ञा भवति। चकारो ऽवधारणार्थः , परममयूरव्यंसकः इति समासान्तरं न भवति। मयूरव्यंसकः। छात्रव्यंसकः। काम्बोजमुण्डः। यवनमुण्डः। छन्दसि हस्तेगृह्य। पादेगृह्य। लाङ्गलेगृह्य। पुनर्दाय। एहीडादयो ऽन्यपदार्थे एहीडम्। एहियवं वर्तते। एहिवाणिजाक्रिया। अपेहिवाणिजा। प्रेहिवाणिजा। एहिस्वागता। अपोहिस्वागता। प्रेहिस्वागता। एहिद्वितीया। अपेहिद्वितीया। इहवितर्का। प्रोहकटा। अपोहकटा। प्रोहकर्दमा। अपोहकर्दमा। उद्धरचूडा। आहरचेला। आहरवसना। आहरवनिता। कृन्तविचक्षणा। उद्धरोत्सृजा। उद्धमविधमा। उत्पचिविपचा। उत्पतनिपता। उच्चावचम्। उच्चनीचम्। अचितोपचितम्। अवचितपराचितम्। निश्वप्रचम्। अकिञ्चनम्। स्नात्वाकालकः। पीत्वास्थिरकः। भुक्त्वासुहितः। प्रोष्यपापीयान्। उत्पत्यपाकला। निपत्यरोहिणी। निषण्णाश्यामा। अपेहिप्रसवा। इहपञ्चमी। इहद्वितीया। जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति जहिजोडः। उज्जहिजोडः। जहिस्तम्बः। उज्जहिस्तम्बः। आख्यातमाख्यातेन क्रियासातत्ये अश्नीतपिबता। पचतभृज्जता। खादतमोदता। खादतवमता। खादताचमता। आहरनिवपा। आवपनिष्किरा। उत्पचच्विपचा। भिन्धिलवना। छिन्धिविचक्षना। पचलवना। पचप्रकूटा। अविहितलक्षनस् तत्पुरुषो मयूरव्यंसकाऽदिषु द्रष्टव्यः। इति श्रीजयादित्यविरचितायाम् काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः। द्वित्तियो ऽध्ययः द्वितीयः पादः

न्यासः

मयूरव्यंसकादयश्च। , २।१।७१

"मयूरव्यंसकः" इति। मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः। व्यंसकशब्दस्य पूर्वनिपाते प्राप्ते परनिपातार्थः पाठः। एवं चात्र मयूरव्यंसकादीनां यवनमुण्डपर्यन्तानाम्। "छन्दसि हस्तेगृह्" इत्यादि। समासेऽनञ्पूर्वे क्त्वो ल्यप्" ७।१।३७। भाषायान्तु -- हस्तेगृहीत्वा, पुनर्दत्वेत्येवं भवति। "एहीडादयोऽन्यपदार्थे" इति। एहि ईड यत्र कर्मणि वत्र्तते तदुच्यते-- "एहीडम्" इति। एवम्-- "एहियवम्" इति। एहिवाणिजेति यस्यां क्रियायां सा "एहिवाणिजा"। एवम्-- "अपेहिवाणिजा, प्रेहिवाणिजा"। एहि सवागतमिति यस्यां क्रियायां सा "एहिस्वागता"। एवम्-- "अपेहिस्वागता"। प्रौह कटमिति यस्यां सा "प्रोहकटा"। एं प्रोहकर्दमादय आहरवसनान्ताः। कृन्धि विचक्षणेति यस्यां क्रियायां सा "कृन्धिविचक्षणा"। "उद्धरोत्सृज" इति। तिङन्तयोः समासः। "आख्यातमाख्यातेन क्रियासात्ये" (ग।सू।२०) इत्येवं सिद्धेऽसातत्यार्थं वचनम्। उद्धरोत्सृजति यस्यां क्रियायां सा उद्धरोत्सृजा। क्रियाप्रधानश्चायं समासः। "उत्पतनिपता"। "उत्तमविधमा"। एवमुद्धरोत्सृजेत्यादिकमसातत्यविषयमेव। "उच्चावचनम्" इति निपात्यते। उदक् चावाक् चिति विगृह्। उच्चैश्च नीचैश्चेति विगृह्योच्चनीचमिति निपात्यते। आचितञ्चोपचितञ्चेति विगृह्य "आचोपचम्"। आचितञ्च पराचितञ्चेति "आचपराचम्"। निश्चितञ्च प्रचितञ्चेति "निश्वप्रचम्"। न किञ्चन "अकिञ्चनम्"। "स्नत्वाकालकः"। "पीत्वास्थिरकः"। "भुक्त्वासुहितः" इत्येषामन्तोदात्तार्थः पाठः। ल्यब्भावश्च निपात्यते। "प्रोष्यपापीयान्" इति। ऐकपद्यमैकस्वर्यञ्च समासाद्भवति। एवम्-- उत्पत्यपाकलादीनाम्। "नित्यरोहिणी। निषण्णश्यामा। अपेहिप्रसवा। इहपञ्चमी। इहद्वितीया" इति। ऐकपद्यमैकस्वर्यञ्च समासे भवति। "जहि कर्मणा बहुलमाभीक्ष्ण्ये कत्र्तारञ्चाधिदधाति" इति। जहीति लोण्मध्यमपुरुषैकवचनम्। तदन्तं कर्मणा च बहुलं समस्यत आभीक्ष्ण्ये गम्यमाने समासेन चेत्कत्र्ता

चाभिधीयते। जहिजोडमित्याभीक्ष्ण्यं य आह स उच्यते "जहिजोडः" इति। जहिस्तम्ब इति, लोट्; सिप्, "हन्तेर्जः" ६।४।३६ इति जादेशः। जोडादेरत्र कर्मभावः। "आख्यातम्" इत्यादि। तिङन्तं तिङन्तेन सह समस्यते क्रियासातत्ये गम्यमाने। अश्नीत पिबतेत्यसकृद्यत्रोच्यते तत्र "अश्नीतपिबत" इति प्रयुज्यते। क्रियाप्रधानश्चायं समासः। एवं पचतभृज्जतेत्येवमादयो वेदितव्याः। भिन्धि लवणमिति यत्रीभिधीयते सा "भिन्धिलक्षणा"। एवं "पचलवणा" इति॥ इति श्रीबोधसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य प्रथमः पादः --------------- अथ द्वितीयाध्यायस्य द्वितीयः पादः

बाल-मनोरमा

मयूयव्यंसकादयश्च ७४४, २।१।७१

मयूरव्यंसका। एते निपात्यन्त इति। कृतसमासकार्या निर्दिश्यन्त इत्यर्थः। मयूरव्यंसक इति। व्यंसकश्चासौ मयूरश्चेति विग्रहः। व्यंसको धूर्त इति।?त्र कोशो मृग्यः। गुणवचनत्बाद्ब्यंसकशब्दस्य पूर्वनिपाते प्राप्ते इदं वचनम्। उच्चावचमिति। उदक्शब्दस्य उच्चेत्यादेशः। अवाक्शब्दस्य अवचादेशश्च। उच्चावचयं नैकबेद"मित्यमरः। निश्चप्रचमिति। निश्चितशब्दस्य निश्चादेशः। प्रचितशब्दस्य प्रचादेशः। नास्ति "किंचनेति। चनेत्यव्ययमप्यर्थे। नास्ति किमपि यस्येत्यर्थे बहुव्रीह्यपवादस्त्रिपदस्तत्पुरुषः। नञो नकारस्य लोपश्च निपात्यते। "नलोपो नञः" इति तु नात्र प्रवर्तते, किंशब्दस्य उत्तरपदत्वाऽभावात्, समासचरमखण्ड एव उत्तरपदशब्दस्य रूढत्वात्। नास्ति कुत इति। कुतोऽपि भयमस्य नास्तीति विग्रहस्यार्थः। अकुतोभय इति। बहुव्रीह्यपवादस्तत्पुरुषः। राजान्तरमिति। अत्राऽन्तरशब्दोऽन्यपर्यायः। तस्य स्थाने अन्यशब्दो विग्रहवाक्ये ज्ञेयः, नित्यसमासत्वेनाऽस्वपदविग्रहौचित्यात्। नित्यसमासत्वं च राजान्तरमित्यस्य व्याख्यानादेव ज्ञेयम्। अत्र अन्तरशब्दस्य परनिपातः। चिन्मात्रमिति। "मात्रं कात्स्न्र्येऽवधारणे" इत्यमरः। नित्यसमासत्वसूचनाय अस्वपदविग्रहः। निपातनादनुनासिकनित्यतेत्याहुः। आख्यातमिति। गणसूत्रम्। क्रियासातत्ये गम्ये तिङन्तं तिङन्तेन समस्यते, स तत्पुरुष इत्यर्थः। अश्नीतपिवतेति। इहाऽसुबन्तत्वेऽपि समासः। क्रियारूपस्यान्यपदार्थस्य प्राधान्यात्स्त्रीत्वाट्टाप्। एवं पचतभृज्जतेत्यादावपि। एहीजादय इति। इदमपि गणसूत्रम्। अन्यपदार्थधे एहीडादयो निपात्यन्त इत्यर्थः। एहि ईडे इति विग्रहः। "ईडे" इति लडुत्तमपुरुषैकवचनम्। डकारादेकारस्य अकारादेशः। एहियवमिति। "यौमी"त्यस्य यवादेशः। "उत्सृजे"त्यस्य विवरणं-देहीति। इह पाठ इति। एहीडादिष्वत्यर्थः। "जहि कर्मणा बहुल"मित्यपि गणसूत्रम्। कर्ताऽभिधीयते। इति। उक्तेः कर्तेत्यर्थः। जहिजोड इति। "जोड" इति कस्यचित्संज्ञा। जहि जोडं जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः। जहि स्तम्बं, जहि स्तम्बमिति य आहेति विग्रहः। [इति समानाधिकरणाधिकारः]।

तत्त्व-बोधिनी

मयूरव्यंसकादयश्च ६५९, २।१।७१

मयूर। चकारोऽत्रावधारणार्थः। तेन "परमयूरव्यंसकः"इत्यादि समासान्तरं न भवति। धूर्त इति। एवं च गुणवचनत्वात्पूर्व निपाते प्राप्ते इदं वचनमारब्धमिति भावः। अन्ये तु "मयूर इव व्यंसको मयूरव्यसक"इत्यादौ "उपमनानि सामान्यवचनै"रिति समासस्यापवादोऽयम्। तेन "समासस्ये त्यन्तोदात्तत्वमिह सिध्यिति, "तत्पुरुषे तुल्यार्थे"त्युपमानपूर्वपदप्रकृतिस्वरस्योपमानसंशब्दनेन विहिते प्रतिपदोक्तसमासे चरितार्थत्वादित्याहुः। अश्नीतपिवतेति। इह क्रिया रूपस्यान्यपदार्थस्य प्राधान्यात्स्त्रीत्वाट्टाप्। एवमग्रेऽपि। राजन्तरामिति। अन्तरशब्दोऽत्र भिन्नवाची। चिन्मात्रमिति। "मात्रं कात्स्न्र्येऽवधारणे"इत्यमरः। अन्तर--मात्रशब्दाभ्यां सह नित्यसमास इत्युभयत्राऽस्वपदविग्रहोदर्शितः। नित्यसमासत्वं त्ववधारणार्तकचकारेण लब्धमित्याहुः। उद्धर कोष्ठादित्यादि। उद्धर

उत्सृजेत्येतावानेव विग्रहः। उत्सृजेत्यस्य विवरणं--देहीति। कोष्ठादिति तूद्धरेत्यस्याकाङ्क्षापूरणार्थमुक्तम्। समासेन चेत्कर्तेति। "जहि जोड"मित्याभीक्ष्ण्येन य आह स जहिजोडः। एवं जहि स्तम्बमिति य आह स जहिस्तम्बः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूर्वापराधरोत्तरम् १।१ एकदेशिना ३।१ ३ एकाधिकरणे ७।१ ३ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
पूर्वापराधरौत्तरम् एकदेशिनाएकाधिकरणे २।२।१

एकदेशो ऽस्य अस्ति इत्येकदेशी, अवयवी, तद्वाचिना सुबन्तेन सह पूर्व अपर अधर उत्तर इत्येते शब्दाः सामर्थ्यादेकदेशबचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति। एकाधिकरणग्रहनम् एकदेशिनो विशेषणम्। एकं चेदधिकरणम् एकद्रव्यम् एकदेशि भवति। षष्ठीसमासापवदो ऽयं योगः। पूर्वं कायस्य पूर्वकायः। अपरकायः। अधरकायः। उत्तरकायः। एकदेशिना इति किम्? पूर्वं न अभेः कायस्य। एकाधिकरणे इति किम्? पूर्वं छात्राणाम् आमन्त्रय। कथं मध्याह्नः, सायाह्नः इति? सङ्ख्याविसायपूर्वस्य अह्नस्य अहन्नन्यतरस्यां ङौ ६।३।१०९ इति ज्ञापकात् सर्वणैकदेशशब्देन अह्नः समासो भवति।
लघु-सिद्धान्त-कौमुदी
पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ९३५, २।२।१

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकाधिकरणे किम्? पूर्वश्छात्राणाम्॥
न्यासः
पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे। , २।२।१

"सामथ्र्यादेकदेशवचनाः" इति। यदि हि पूर्वादयः शब्दा एकदेशवचना न स्युसतदोत्तरपदस्यैकदेशित्वं न गम्येत;एकदेशिन एकदेशापेक्षत्वात्। तस्मात् सामान्योक्ता अपि पूर्वादयः शब्दा सामथ्र्यादेकदेशवचनाः समस्यन्त इति विज्ञायते। एकाधिकरणग्रहणमेकदेशिनो विशेषणमित्यस्यार्थं विस्पष्टीकर्तुमाह-- "एकं च" इत्यादि। एकमित्येकसंख्याविशिष्टं द्रव्यमित्यर्थः। "एकद्रव्यम्" इत्यनेनाधिकरमशब्दोऽत्र द्रव्ये वत्र्तमान उपात्त ति दर्शयति। ननु "एकदेशिना" इति तृतीयान्तमेतत्, "एकाधिकरणे इत्येतत् सप्तम्यन्तम्, तत् कथं तयोर्भिन्नविभक्तिकयोः सामानाधिकरण्येन विशेषणविशेष्यभाव उपपद्यते, कथञ्च न स्यात्; भिन्नार्थत्वात्? नैतदस्ति; "छन्दोवत् सूत्राणि भवन्ति" (म।भा।१।१।१) इत्यतो "व्यत्ययो बहुलम्" ३।१।८५ इति बहुलवचनात्। "एकाधिकरणे" इत्यत्र तृतीयार्थ एवैषा सप्तमी। न "सप्तम्यधिकरणे च" २।३।३६ इत्यनेन। अतो नास्ति भिन्नार्थत्वमित्यदोषः। "षष्ठीसमासापवादोऽयं योगः" इति। "एकदेशिना" इति वचनात् पूर्वादयः शब्दा एकदेशवचना आश्रीयन्ते। सम्बन्धिशब्दा हि नियतमेव प्रतियोगिनमुपस्थापयन्ति। तत्रावयवावयविसम्बन्धे स्तेयकदेशिनः षष्ठ()आमुपजनितायां "षष्ठी" २।२।८ इति समासः प्राप्नोति, अतस्तदपवादोऽयं योग इति। "पूर्वकायः" इत्यत्र काय एकदेशी, एकद्रव्यञ्च; एकसंख्यायुक्तत्वात्। "पूर्वं नाभेः कायस्य" इति। नाभेरिति दिग्योगलक्षणा पञ्चमी। नाभेरुपरिष्टात् यत् पूर्वं तत् कायस्येत्येषोऽर्थो विवक्षितः। तेनात्र

नाभिरेकदेशिनी न भवति। किं तर्हि? अवधिभूता, तद्वाची नाभिशब्दः पञ्चम्यन्तो न समस्यन्ते। यस्त्वेकदेशी कायस्तद्वाचिनः कायशब्दस्य भवत्येव समासः। सत्यपि पूर्वशब्दस्य सापेक्षत्वे कायस्य प्राधान्यात् प्रधानस्यच सापेक्षस्यापि समासो भवतीति ज्ञापितमेतत् "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २।१।५५ इत्यत्र। "पूर्वं {छात्राणामामन्त्रय इत मूलपाठः, पदमञ्जरीसम्मतश्च।} छात्राणामामन्त्रयस्व"इति। अत्र बहुत्वसंख्याविशिष्टैकदेशिनश्छात्रा इति न भवति समासः। ननु चात्र परत्वात् "न निद्र्धारणे" २।२।१० इति षष्ठीसमासनिषेधो भविष्यति। तत् {किमेवाधिकरणे- इति मुद्रित पाठः।} किमेकाधिकरणग्रहणेन? नैतदस्ति; यदि तह्रामन्त्रयस्वेत्येतन्नापेक्ष्यते तदा पूर्वं छात्राणामित्येतावद्वाक्यं परिसमाप्यते,तदा निद्र्धारणाभावान्नायं तस्य प्रतिषेधस्य विषय इत्यसत्येकाधिकरणेऽनेकसंख्येनाप्येकदेशिना समासः स्यात्। अथ सर्वं हि वाक्यं क्रियया परिसमाप्यत इति पूर्वं छात्राणामित्यत्र यां काञ्चित् क्रियामध्याह्मत्य निद्र्धारणं परिकल्प्येत, एवं "पूर्वं कायस्य" इत्यत्रापि निद्र्धारणं स्यात्। अस्ति ह्नत्राप्यकर्षणक्रिया निद्र्धारणहेतुः। तथा च तस्यैव योगस्य विषये किलारभ्यमाणोऽयं योगस्तदपवादः स्यात्। न चोत्सर्गापवादयोर्विप्रतिषेध उपपद्यते, तत्कथं परत्वात् "न निद्र्धारणे" (२।२।१०) इति प्रतिषेधः प्रवत्र्तते-- संख्याविसायपूर्वस्येत्यादि? यदयं "संख्याविसायपूर्वस्याह्नस्य" ६।३।१०९ इत्याह, ततो ज्ञापकादवसीयते-- सर्वेणैकदेशिनाऽह्नः समासो भवतीति। अन्यथा हि सायपूर्वत्वमह्नशब्दस्य नोपपद्यत इत्ययुक्तमेतद्वचनं स्यात्॥

बाल-मनोरमा

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ७०३, २।२।१

पूर्वापर। "पूर्वापराधरोत्तर"मिति समाहरद्वन्द्वात्प्रथमैकवचनम्। एकदेशशब्दोऽवयवे रूढः। एकदेशोऽस्यास्तीत्येकदेशी-अवयवी, तेनेति लभ्यते। अधिकरणं=द्रव्यम्। एकमधिकरणम्-एकाधिकरणम्। एकत्वविशिष्टद्रव्ये वर्तमानेऽवयविवाचकसुबन्तेन पूर्वापराधरोत्तरशब्दाः सुबन्ताः समस्यन्ते, स तत्पुरुष इत्यर्थः। फलितमाह-अवयविना सहेत्यादिना। ननु पूर्वश्चासौ कायश्चेति कर्मधारयेणैव "पूर्वकाय" इत्यादि सिद्धम्। भक्त्या कायशब्दस्य कायावयववाचित्वेन सामानाधिकरण्योपपत्तेरित्यत आह--षष्ठीसमासापवाद इति। पूर्वं कायस्येति विग्रहे "षष्ठी"ति सूत्रे समासे सति षष्ठ()न्तस्य समासविधौ प्रथमानिर्दिष्टत्वात्पूर्वनिपातः स्यात्तन्निवृत्त्यर्थमिदं वचनमित्यर्थः। पूर्वं कायस्येति। अत्र पूर्वं कायस्येति विग्रहवाक्यम्। "अर्ध"मिति गम्यम्। विसेष्याभिप्रायान्नपुंसकत्वम्। "तस्य परमाम्रेडित"मिति निर्देशादवयववृत्तिदिक्शब्दयोगे पञ्चम्यभावात्षष्ठी। पूर्वकाय इति। पूर्वशब्दस्य समासविधौ प्रथमानिर्धिष्टत्वात् पूर्वनिपातः। "परवल्लिङ्ग"मिति पुंस्त्वमिति भावः। "यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते" इति "पारे मध्ये षष्ठ()आ वे"त्यत्रोक्तम्। ततश्च एकदेशिसमासाऽभावे षष्ठीसमासो न भवति।

अपरकाय इति। अपरं कायस्येति विग्रहः। अपरकायः। उत्तरकायः। एकदेशिना किमिति। एकद्रव्यवाचिना पूर्वादयः समस्यन्त इत्येवास्त्वित्यर्थः। पूर्वं नाभेः कायस्येति। अत्र "नाभे"रिति पूर्वशब्देऽन्वेति। दिग्योगे पञ्चमी। नाभ्यपेक्षया यत् पूर्वमर्द्धं तत् कायावयवभूतमित्यर्थः। अत्र नाभिशब्दस्य पूर्वांशेऽन्वयः। अत्र पूर्वस्यांशय नाभिरवधिरेव, न त्ववयवी। अतो नाभिशब्देन पूर्वशब्दस्य समासो न भवतीत्यर्थः। पूर्वश्छात्राणामिति। अत्र छात्रशब्दः छात्रसमुदायपरः। उद्भूतावयवसमुदायापेक्षं बहुवचनम्। अवयवावयविभावसम्बन्धे षष्ठी। छात्रसमुदायस्य पूर्वमर्धमित्यर्थः। अत्र छात्रसमुदायस्य एकत्वेऽपि उद्भूताववयकतया बहुत्वादेकसंख्यावैशिष्ट()आऽभावान्न समास इति भावः। ननु अह्नो मध्यं मध्याह्न इत्यत्र कथमेकदेशिसमासः, मध्यशब्दस्य पूर्वादिष्वनन्तर्भावादित्यत आह--सर्वोऽप्येकदेश इति। पूर्वादिभिन्नोऽपीत्यर्थः। ज्ञापकादिति। "तत्पुरुषस्ये"ति "अहस्सर्वैकदेशसंख्यातपुण्याच्चे"ति च प्रकृते,-"अह्नोऽह्न

एतेभ्यः" इत्येकदेशवाचकात्परस्याऽहन्शब्दस्याऽह्नादेशो विधीयते। ततश्चाह्नः साय इति विग्रहे अवयविवृत्तिना अहन्शब्देन षष्ठ()न्तेन अवयववृत्तिसायशब्दस्य तत्पुरुषसमासे सति प्रतमानिर्दिष्टत्वात्सायशब्दस्य पूर्वनिपाते सति एकदेशवृत्तिसायशब्दात्परस्याऽहन्शब्दस्याऽह्नादेशे रात्राह्नाहाः पुंसीति पुंस्त्वे"सायाह्न" इति भवति। तस्मात्सप्तम्येकवचने परे "सङ्ख्याविसाये"ति सायशब्दपूर्वकस्याह्नशब्दस्याऽहन्नादेशविकल्प उक्तः। सायाह्नि, सायाहनि, सायाह्ने इत्युदाहरणम्। तत्र अह्नः साय इति विग्रहे यदि सायशब्दस्य पूर्वाद्यप्रविष्टत्वादहन्शब्देन समासो न स्यात् तदा "षष्ठी" इति सूत्रेण अहन्शब्दस्य षष्ठ()न्तस्य सायशब्देन समासे सति षष्ठ()न्तस्यैव समासशास्त्रे प्रतमानिर्दिष्टत्वात् पूर्वनिपाते सति सायशब्दात्परस्याह्नशब्दस्याऽहन्नादेशविधानं निर्विषयं स्यात्, अतः "सर्वोऽप्येकदेशोऽह्ना समस्यते" इति विज्ञायते इत्यर्थः। मध्याह्न इति। अह्नो मध्यमिति विग्रहेऽयं समासः। "राजाहःसखिभ्यष्टच्" इति टच्। "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशः। सायाह्न इति। अह्नः साय इति विग्रहः। मध्याह्नवत्। ननु "सर्वोऽप्येकदेशः कालेन समस्यते" इत्ययुक्तं, "संख्याविसाये"ति सूत्रेऽहन्तशब्दस्यैवौपात्ततया तदितरकालवाचिना सर्वस्यैकदेशस्य समासज्ञापन#आऽनुपपत्तेरित्यत आह--ज्ञापकस्येति। अहन्शब्देन सह सायशब्दस्य एकदेशिसमासं सिद्धवत्कृत्य सायशब्दादह्नशब्दोपादानात्सर्वेणाप्यवयविवृत्तिकालवाचिना सर्वस्यैकदेशस्य समासो ज्ञाप्यते, ज्ञापकस्य सामान्या पेक्षत्वात्, नत्वहन्शब्देन सायशब्दस्यैव पूर्वाद्यप्रविष्टत्वेऽपि समासो ज्ञाप्यत इति भावः। मध्यरात्र इति। रात्रेर्मध्यमित्यर्थः। पश्चिमरात्रेति। रात्रेः पश्चिममिति विग्रहः। "अहः सर्वैकदेशे"त्यच्समासान्तः।

तत्त्व-बोधिनी

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ६२५, २।२।१

पूर्वापर। "एकदेश"शब्दोऽवयवे रूढः। अतएव तस्य कर्मधारायत्वेऽपि ततो मत्वर्थीयः। "कृष्णसर्पवा"नित्यत्रेव "न कर्मधारयान्मत्वर्थीयः"इति निषेधस्य रूढेष्वप्रवृत्तेः। यद्यपीह "एकगोपूर्वादि"ति ठञ् प्राप्तः, तथाप्यत एव निर्देशादिनिः। तदेतदाह--अवयविनेति। नन्विदं सूत्रं व्यर्थं, "पूर्वकाय"इत्यादिप्रयोगाणां कर्मधारयेणैव सिद्धेः, "ऊध्र्वकाय"इतिवत्, "समुदाये हि वृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्ते"इति न्यायादत आह--षषाठछीसमासापवाद इति। तथा च "कायपूर्वं"इत्याद्यनिष्टप्रयोगनिवृत्तये सूत्रमिति भावः। पूर्वं कायस्येति। यद्यपि "अन्यारा"दिति सूत्रे "दिशि दृष्टः शब्दो दिक्शब्द"इति व्याख्यानेन संप्रत्यदिग्वृत्तिनापि योगे पञ्चमी स्वीकृतेति षष्ठीह दुर्लभा, तथापि "तस्य परमाम्रेडित"मिति लिङ्गात् "अवयववाचिदिक्शब्दयोगे पञ्चमी ने"त्युक्तत्वात्षष्ठ()एव भवतीति भावः। पूर्व नाभेरिति। नाभेर्यः पूर्वो भागः स कायस्यावयव इत्यर्थः। "नामे"रिति दिग्योगलक्षणा पञ्चमी। तेनाऽत्र पूर्वस्य भागस्य नाभिरवधिः, न त्वेकदेशिनीति नाभ्या सह समासो नेत्यर्थः। कायेन तु स्यादेव "पूर्वकायो नाभेः"इति। पूर्वशब्दस्य नित्यसापेक्षत्वात्प्रधानत्वाच्च। पूर्वश्छात्राणामिति। नासौ निर्धारणे षष्ठी, किं तु समुदायसमुदायिसंबन्धे। बहुवचनं तद्भूतावयवभेदसमुदायविवक्षया। ततश्छात्राणामेकदेशित्वे सत्यप्येकत्ववैशिष्ट()आऽभावान्न समासः। सर्वोऽपीति। पूर्वादिभिन्नोऽपीत्यर्थः। ज्ञापकादिति। अन्यथा अह्नस्य सायपूर्वत्वं न स्यादिति भावः। मध्याह्न इति। "राजाहःसखिभ्याः"इति टच्। "अह्नोह्न"इत्यह्ना देशःष। अयं चादेशो मध्याह्नसायाह्नशब्दयोरूध्र्वकायवत्कर्मधारयेण न निर्वहति, तस्यैकदेशिसमासप्रयुक्तत्वात्, अतोऽत्र ज्ञापकाश्रयणं युक्तमेवेति बोध्यम्। इत्याहुरुतु। न चैवं "दिनमध्यो" "रात्रिमध्य"इत्यादि न सिध्येदिति वाच्यम्। ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अर्धं १।१ नपुंसकम् १।१ एकदेशिना ३।१ १ एकाधिकरणे ७।१ १ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
अर्धं नपुंसकम् २।२।२

एकदेशिना एकाधिकरणे इति वर्तते। समप्रविभागे ऽर्धशब्दो नपुंसकम् आविष्टलिङ्गः, तस्य इदं ग्रहनम्। अर्धम् इत्येतद् नपुंसकम् एकदेशिनाएकाधिकरणेन समस्यते, तत्पुरुषश्च समासो भवति। षष्ठीसमासापवादो ऽयम् योगः। अर्धं पिप्पल्याः अर्धपिप्पली। अर्धकोशातकी। नपुंसकम् इति किम्? ग्रामार्धः। नगरार्धः। एकदेशिना इत्येव, अर्धं पसोर् देवदत्तस्य। देवदत्तेन सह समसो न भवति। एकाधिकरणे इत्येव, अर्धं पिप्पलीनाम्।
लघु-सिद्धान्त-कौमुदी
अर्धं नपुंसकम् ९३६, २।२।२

समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत्। अर्धं पिप्पल्याः अर्धपिप्पली।
न्यासः
अर्द्धं नुपंसकम्। , २।२।२

"समप्रविभागे त्वद्र्धशब्दो नपुंसकमाविष्टलिङ्गस्तस्येदं ग्रहणम्" इति। यद्येवम्, समग्रहणमेव कत्र्तव्यम्? नैवं शक्यम्, अनेकार्थत्वात् समशब्दस्य। तथा हि--स निम्नोन्नतादिरहितेऽपि देशे वत्र्तते-- यथा--समे यजेतेति, निम्नोन्नतादिरहिते देशे यजेतेत्यर्थः। अथापि समप्रविभाग इच्युच्यते, एवमपि गुरुत्वं स्यात्, तस्मान्नपुंसकग्रहणं कत्र्तव्यम्? न कत्र्तव्यम्; अद्र्धमिति नपुंसकलिङ्गेन निर्देशादेव हि नपुंसकस्य ग्रहणं भविष्यति, नैतदस्ति; असति हि नपुंसकग्रहणं शब्दरूपापेक्षया नपुंसकनिर्देश इति विज्ञायेत, यथा-- "स्वमज्ञातिधनाख्यायाम्" १।१।३४, "बन्थुनि बहुव्रीहौ" ६।१।१४ इति च; ततश्चाद्र्धशब्दस्य नपुंसकलिङ्गत्वताऽनाश्रिता स्यात्। एवमनुपंसकलिङ्गोऽपि समस्येत। तस्मादद्र्धशब्दस्य नपुंसकलिङ्गत्वमाश्रयितुं नपुंसकमिति वक्तव्यम्। "अद्र्धपिप्पली" इति। "परवलिङ्गम्" २।४।२६ इति स्त्रीलिङ्गता। अथात्र "गोस्त्रियोरुपसर्जनस्य" (१।२।४८) इति ह्रस्वत्वं कस्मान्न भवति? अनुपसर्जनत्वात्। उपसर्जनत्वं तु "एकविभक्ति च" १।२।४४ इति। अत्र "विभाषा छन्दसि" १।२।३६ इत्यतो विभाषाग्रहणमनुवत्र्तते। सा च व्यवस्थितविभाषा प्रतिपादिता। "ग्रामार्द्धः" इति। ग्रामस्यैकदेश इत्यर्थः। "अद्र्ध पशोर्देवदत्तस्य" इति। देवदत्तशब्देन सह समासो न भवति। अनेकदेशित्वाद्देवदत्तस्य। न ह्रसावेकदेशः, किन्तर्हि? स्वामी। यस्त्वेकदेशी पशुशब्दः, तेन सह भवत्येव समासः। सत्यपि पशुशब्दस्य सापेक्षत्वे पशोः प्राधान्यात् समासो भवत्येव-- अद्र्धपशुर्देवदत्तस्येति॥
बाल-मनोरमा
अर्द्धं नपुंसकम् ७०४, २।२।२

अर्धं नपुंसकम्। अर्धमिति नपुंसकलिङ्गनिर्देशादेव नपुंसकत्वे लब्धे पुनर्नपुंसकग्रहणं नित्यनपुंसकलिङ्गस्य ग्रहणार्थमित्यभिप्रेत्याह--समांशवाच्यर्धशब्दो नित्यं क्लीबे इति। "वर्तते" इति शेषः। "वा पुंस्यर्धोऽर्धं समेंऽशके" इति कोशादिति भावः। अंशसामान्यवाची अर्धशब्दः पुंसि वा नपुंसके वा भवति। समे त्वंशे अर्धशब्दो नपुंसकलिङ्ग एवेत्यर्थः। भाष्ये तु समप्रविभागे नपुंसकलिङ्गोऽर्धशब्दः, अंशसामान्यवाची तु पुंलिङ्ग इत्युक्तम्। स प्राग्वदिति। स नित्यनपुंसकलिङ्गोऽर्धशब्दोऽवयविवाचिना समस्यत इत्यर्थः।

अर्धशब्दस्य पूर्वाद्यनन्तर्भावात्पूर्वेण न प्राप्तिः। नन्वर्धं पिप्पल्या अर्धपिप्पलीत्युदाहरणं वक्ष्यति। तत्र अर्धं पिप्पल्याः अर्धपिप्पली, अर्धेन पिप्पल्या अर्धपिप्पल्या, अर्धाय पिप्पल्याः अर्धपिप्पल्यै, अर्धात्पिप्पल्याः, अर्धस्य पिप्पल्याः अर्धपिप्पल्याः, अर्धे पिप्पल्याः अर्धपिप्पल्यामिति विग्रहेषु पिप्पलीशब्दस्य नियतविभक्तिकतया "एकविभक्ति चापूर्वनिपाते"इत्युपसर्जनत्वात् "गोस्त्रियोः" इति ह्रस्वः स्यादित्यत आह--एकविभक्ताविति। "एकविभक्ति चापूर्वनिपाते" इति सूत्रे "अषष्ठ()न्त"मिति वक्तव्यमित्यर्थः। ततश्च पिप्पलीशब्दस्य षष्ठ्न्यतत्वान्नोपसर्जनत्वमिति न ह्रस्व इत्यर्थः। नन्वेवं सति पञ्चानां खट्वानां समाहारः समाहारं समाहारेणेत्यादिविग्रहेषु खट्वाशब्दस्य नियतविभक्तिकत्वेऽपि षष्ठ()न्तत्वादनुपसर्जनत्वात् "गोस्त्रियो"रिति ह्रस्वाऽभावेऽदन्तत्वाऽभावेन "द्विगो"रिति ङीबभावे पञ्चखट्वेति स्यात्, पञ्चखट्वीति न स्यादित्यत आह--एकदेशिसमासेति। "अपथं नपुंसक"मिति सूत्रभाष्ये पञ्चखट्वीत्युदाहरणमत्र लिङ्गमिति भावः। अर्धपिप्पलीति। "प्रथमानिर्दिष्ट"मित्यर्धशपब्दस्योपसर्जनत्वात्पूर्वनिपातः। प#इप्पलीशब्दस्य तु विग्रहे नियतविभक्तिकत्वेऽपि "एकविभक्तौ" इति निषेधादुपसर्जनत्वाऽभावान्न ह्रस्व इति भावः। ग्रामार्ध इति। ग्रामस्याऽर्ध इति विग्रहः। ग्रामस्यांश इत्यर्थः। अर्धशब्दस्य समांशवाचित्वाऽभावेन नित्यनपुंसकत्वाऽभावान्नायं समास, किन्तु "षष्ठी"इत्येव समास इति षष्ठ()न्तस्य पूर्वनिपातः। द्रव्यैक्य एवेति। एकाधिकरण इत्यनुवर्तत एवेत्यर्थः। अर्धं पिप्पलीनामिति। अत्र द्रव्यैक्याऽभावान्न समासः। सति समासेऽर्धपिप्पलीत्येव स्यात्, विशेष्यैक्यात्। इदं सूत्रं "परवल्लिङ्ग"मिति सूत्रभाष्ये प्रत्याख्यातम्।

तत्त्व-बोधिनी

अद्र्ध नपुंसकम् ६२६, २।२।२

अर्ध नपुंसतम्। खण्डावाच्यद्र्धशब्दो न नित्यनपुंसकः, ग्रामार्द्धो नगराद्र्ध इति यथा। समांशवाची तु नित्यनपुंसकः। स एवेह गृह्नते, "पूर्वसूत्रे एवाद्र्धशब्दे पठनीये "अर्ध"मितचि योगविभागेन निर्देशान्नपुंसकत्वे लब्धे, पुनर्नपुंसकगिरहणादित्याशयेन व्याचष्टे--नित्यं क्लीबे स इति। यो नित्यनपुंसकलिङ्गिः स इत्यर्थः। प्राग्वदिति। एकत्वविशिष्टेनावयविना समस्यत इत्यर्थः। अन्ये तु व्याचख्युः--"अर्ध"मिति निर्देशादेव नपुंसकत्वे सिद्धे नपुंसकग्रहणं "सूत्रेषु लिङ्गनिर्देशो न विवक्षितः"इति ज्ञापयितुम्। "तेन तस्येद"मित्यादि लिङ्गत्रयेऽपि भवतीति। "अर्धपिप्पली"त्यत्र "एकविभक्ति चापूर्वनिपाते"इत्युपसर्जनसंज्ञायां "गोस्त्रीयो"रिति ह्रस्वः स्यादित्याशङ्क्य समाधत्ते--अषठ()न्तवचनमिति। तेन पिप्पलीशब्दस्याऽनुपसर्जनत्वातन्न दोष इति भावः। नन्वेवं पञ्चानां खट्वानां समाहारः पञ्चखट्वीति न सिध्येत्, उपसर्जनसंज्ञानिषेधेन खट्वेत्याकारे ह्रस्वाप्रवृत्तेरदन्तत्वाभावेन "द्विगोः"इति ङीपोऽप्रवृत्तेरत आह--।

एकविभक्तावषष्ठ()न्तवचनम्। एकदेशिसमासविषयकोऽमिति। "पञ्चखठ्वी"ति भाष्योदाहरणमेव "अषठ()न्तो"त्यस्य संकोचे लिङ्गमितिओओ भावः। अर्धपिप्पलीति। परवल्लिङ्गत्वात्लस्त्रीत्वम्। अर्ध पिप्पलीनामिति। सति समासे "अर्धपिप्पली"त्येव स्यात्, विशेष्यैक्यात्। "परवल्लिङ्ग"मिति लिङ्गातिदेशेऽपि वचनातिदेशाऽभावाच्चेति भावः। "अर्धपिपल्यः"इति प्रयोगस्तु "अर्धानि पिप्पलीना"मिति विग्रहे असाधुश्चेदपि खण्डसमुच्चये साधुरेव, अर्धं पिप्पल्या अर्धपिप्पली, अर्धपिप्पली च अर्धपिप्पली चेत्यादिविग्रहात्। एकदेशिना किम्()। अर्धं पशोर्देवदत्तस्य। अत्र देवदत्तः स्वामी, न त्ववयवीति न तेन समासः। इदं सूत्रं "परवल्लिङ्ग"मित्यत्र भाष्ये प्रत्याख्यातम्। तद्यथा--अर्धपिप्पलीति हि कर्मधारयेण सिद्धम्। "समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्तन्ते"इति न्यायात्। समप्रविभागादन्यत्र तवाप्येषैव गतिः, "अर्धाहारः"अर्धोक्तम्" "अर्धविलोकितम्" इत्यादिप्रयोगदर्शमात्। न च समप्रविभागे षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यम्, षष्ठीसमासस्यापूष्टत्वात्। अतएव कालिदासः प्रायुङ्क्त--"प्रेम्णा शरीरार्धहरां हरस्ये"ति।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्वितीयतृतीयचतुर्थतुर्याणि १।३ अन्यतरस्याम् ० ४ एकदेशिना ३।१ १ एकाधिकरणे ७।१ १ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

द्वितियतृतीयचतुर्थतुर्याण्यन्य्तरस्याम् २।२।३

एकदेशिना एकाधिकरने इति वर्तते। षस्ठीसमासापवादो ऽयं योगः। अन्यतरस्यां ग्रहणात् सो ऽपि षष्ठीसमासो भवति। पूरणगुण २।२।११ इति प्रतिषेधश्च अत एव अन्यतरस्यां ग्रहणसामर्थ्यान् न प्रवर्तते। द्वितीयं भिक्षायाः चतुर्थभिक्षा, भिक्षाचतुर्थं वा। तुर्यं भिक्षायाः तुर्यभिक्षा, भिक्षातुर्यं वा। तुरीयशब्दस्य अपीष्यते। तुरीयं भिक्षायाः तुरीयभिक्षा, भिक्षातुरीयं वा। एकदेशिना इत्येव, द्वितीयं भिक्षाया भिक्षुकस्य। एकाधिकरणे इत्येव, द्वितीयां भिक्षाणाम्।

न्यासः

द्वितीयतृतीयचतुर्थतुर्याण्यन्तरस्याम्। , २।२।३

"अन्यतरस्यां ग्रहणात् सोऽपि षष्ठीसमासो भवति" इति। ननु च पूरणप्रत्ययान्ता एते द्वितीयादयः शब्दाः। तत्र पूरणेत्यादिना समासनिषेधेन भवितव्यम्, तत्कथं सोऽपि भवतीत्याह-- "पूरण" इत्यादि। यद्यत्र षष्ठीसमास्य प्रतिषेधः स्यात् तदाऽन्यतरस्यां ग्रहणमनर्थकं स्यात्। वाक्यस्य तु महाविभाषयैव सिद्धत्वादिति भावः। "द्वितीयं भिक्षायाः" इति। भिक्षाया द्वितीयो भाग इत्यर्थः। "द्वितीयं भिक्षाया भिक्षकस्य" इति। भिक्षुकेण सहात्र समासो न भवति। न ह्रसावेकदेशी, किं तर्हि? स्वामी। तुर्यशब्दः "चतुरश्छयतावाद्यक्षरलोपश्च" (वा।५७१) इति यत्प्रत्ययान्तः पूरणार्थस्य प्रतिपादकः॥

बाल-मनोरमा

द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ७०५, २।२।३

द्वितीयतृतीय। द्वितीयं भिक्षाया इति। विग्रहोऽयम्। भिक्षाया द्वितीयमर्धमित्यर्थः। द्वितीयभिक्षेति। द्वितीयशब्दस्य प्रथमानिर्दिष्टत्वात्पूर्वनिपातः। "परवल्लिङ्ग"मिति स्त्रीत्वम्। द्वितीयं भिक्षाया भिक्षुकस्येति। भिक्षाया द्वितीयं भागं भिक्षुकस्येत्यन्वयः। "भिक्षाया" इत्यवयवषष्ठी "द्वितीय" मित्यत्रान्वेति। "द्वितीय"मित्येतत्तु "भिक्षुकस्ये"त्यत्र कर्मत्वेनान्वेति। " न लोके"ति निषेधान्न षष्ठी। अत्र "द्वितीय"मित्यस्य "भिक्षुकस्ये"त्यनेन समासो न भवति, द्वितीयं प्रति भिक्षुकस्य एकदेशित्वाऽभावादित्यर्थः। ननु विभाषाधिकारेण विकल्पे सिद्धेऽन्यतरस्याङ्ग्रहणं व्यर्थमित्यत आह--अन्यतरस्यामिति। अन्यतरस्याङ्ग्रहणसामश्र्यात्पक्षे षष्ठीसमास इत्यन्वयः। अन्यथा षष्ठ()पवादभूतेनानेन समासेन मुक्ते उत्सर्गो न प्रवर्तेत। महाविभाषाधिकारे "अपवादेन मुक्ते उत्सर्गो न प्रवर्तते, इति "पारेमध्ये षष्ठ()आ वे"ति वाग्रहणेन ज्ञापितत्वादिति भावः। ननु "पूरणगुणे"ति निषेधात्कथमिह षष्ठीसमास इत्यत आह--पूरणगुणेति निषेधं बाधित्वेति। अन्यथा अन्यतरस्याङ्ग्रहणवैयश्र्यादिति भावः। [इत्येकदेशिसमासनिरूपणम्]।

तत्त्व-बोधिनी

द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ६२७, २।२।३

द्वितीयतृतीया। षष्ठीसमासा पवादोऽयं योग इति वृत्तिकृतोक्तमयुक्तमति ध्वनयन्नाह--निषेधं बाधित्वेति।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्राप्तापन्ने १।२ च ० द्वितीयया ३।१ अन्यतरस्याम् ० ३ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
प्राप्तापन्ने च द्वितीयया २।२।४

एकदेशिनाएकाधिकरणे इति निवृत्तम्। द्वितीयासमासे प्राप्ते वचनम् इदम्। समासविधानात् सो ऽपि भवति। प्राप्त आपन्न इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति। प्राप्तो जीविकाम् प्राप्तजीविकः, जीविकाप्राप्तः इति वा। आपन्नो जीविकम् आपन्नजीविकः, जीविकापन्नः इति वा।
लघु-सिद्धान्त-कौमुदी
प्राप्तापन्ने च द्वितीयया ९६६, २।२।४

समस्येते। अकारश्चानयोरन्तादेशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै - अलंकुमारिः। अत एव ज्ञापकात्समासः। निष्कौशाम्बिः॥
न्यासः
प्राप्तापन्ने च द्वितीयया। , २।२।४

"द्वितियासमासे प्राप्ते" इति। "द्वितीया श्रित" २।१।२३ इत्यादिना। "समासविधानात्सोऽपि भवति" इति। अपिशब्दादयमपि भवति। "प्राप्तजीविकः"इति। "एकविभक्ति च" १।२।४४ इत्यादिनोपसर्जनत्वम्। ह्रस्वत्वं तु "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति। अत्र च "परवल्लिङ्गम्" २।४।२६ इत्यादिना जीविकाया यल्लिङगं तत् समुदायस्य कस्मान्न भवति? "द्विगुप्राप्तापन्नलंपूर्वगतिसमासेषु प्रतिषेदो वक्तव्यः"(वा।१६३) इति वचनात्। तेन प्राप्तापन्योर्यल्लिङ्गं तत् समुदायस्य भवति। अथ यदा प्राप्ताजीविकामिति विगृह्य समासः क्रियते तदा किमुदाहरणम्? प्राप्तजीविक इति। टापः श्रवणं कस्मान्न भवति? "स्त्रियाः पुंवत्" ६।३।३३ इति योगविभागात् पुंवद्भावेन टापो निवर्तितत्वात्॥
बाल-मनोरमा
प्राप्तापन्ने च द्वितीयया ७०६, २।२।४

प्राप्तापन्ने च। प्राप्त आपन्न एतौ शब्दौ द्वितीयान्तेन समस्येते इत्यर्थः। चकारो द्वितीयासमाससमुच्चयार्थः। तदाह-पक्ष इति। वस्तुतस्तु "द्वितीया श्रिते"ति सूत्रे "प्राप्तापन्नशब्दाभ्यां द्वितीयायाः समासविधानमपि निरवकाशमेव इति तत्समुच्चयस्य सिद्धत्वाच्चकारो न तत्समुच्चयार्थः" इति भाष्ये स्थितम्। तत्र प्रकृतसूत्रेण समासे प्राप्तापन्नयोः पूर्वनिपातः। "द्वितीया श्रिते"ति समासे तु द्वितीयान्तस्य पूर्वनिपातः। तदाह प्राप्तजीविक इत्यादि। अथ जीविकां प्राप्ता स्त्री जीविकामापन्ना स्त्री इति विग्रहे प्रकृतसूत्रेण समासे सति पूर्वपदयोरकारमन्तादेशं साधयितुमाह--इह सूत्रे इति। अकारोऽपीति। "प्राप्तापनने द्वितीयया समस्येते, तयोरकारोऽन्तादेशश्चे"त्यर्थलाभादिति भावः। तेनेति। प्राप्तापन्नयोराकारस्यान्तस्य स्थाने अकारविधानेनेत्यर्थः।

तत्त्व-बोधिनी

प्राप्तापन्ने च द्वितीयया ६२८, २।२।४

प्राप्तजीविक इति। "गोस्त्रियो"रित्युपसर्जनह्रस्वः। "द्विगुप्राप्तापन्ने"ति वक्ष्यमाणेन परवल्लिङ्गनिषेधः। न चेदं बहुव्रीहिणा गतार्थमिति शङ्क्यम्, स्वरे विशेषात्। "प्राप्तसुखं"इत्यादौ निष्टान्तस्य "जातिकालसुखादिभ्य-"इति परनिपातापत्तेश्च। "प्राप्तापन्ने चे"ति चकारेण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानात्, प्राप्तापन्ने समस्येते, अ च, अत्वं च तयोः स्यादिति भाष्ये स्थितम्। तत्र चकारात्पूर्वमेवाऽकारं छित्वा सौत्रत्वात्प्रकृतिभावो नेति प्राञ्चः। इमं क्लेशं परिहरन्नाह--द्वितीयया अ इति। प्राप्ता स्त्रीति। एकादेश्य पूर्वान्तत्वेन ग्रहणाल्लिङ्गविशिष्टपरिभाशषया वा टाबन्तयोरपि प्राप्तापन्नयोः समासः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कालाः १।३ परिमाणिना ३।१ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

कालाः परिमाणिना २।२।५

परिमाणमस्य अस्ति इति परिमाणी, तद्वाचिना सुबन्तेन सह सामर्थ्यात् परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति। षष्ठीसमासविषये योगारम्भः। मासो जातस्य मासजातः। संवत्सरजातः। द्व्यहजातः। त्र्यहजातः।

न्यासः

कालाः परिमणिना। , २।२।५

"सामथ्र्यात् परिमाणवचनाः" इत। एवं ह्युत्तरपदस्य परिमणिवाचित्वं गम्यते यदि कालशब्दाः परिमाणवचना भवन्ति, नान्यथा। तस्मात् काला इत्येविशेषाभिधानेऽपि सामथ्र्यात् "परिमाणवचनः कालशब्दाः समस्यन्ते" इति विज्ञायते। ननु चकालः परिमाणेव भवति; अनवधित्वात्, तत् कथं तदभिधायिनः शब्दाः परिमाणवचना भवन्ति? नैष दोषः; यद्यपि मुख्यस्य परिमाणस्य वाचका न भवन्ति, गौणस्य तु भवत्येव। इह हि मुख्यं परिमाणत्वं कालस्य मासदेर्न भवतीति सामथ्र्यात् परिच्छेदहेतुमात्रपरिमाणसाधम्र्यमुपादायोपचारेण कालाः परिमाणतवेनाभिमताः। मासादयोऽपि हि जातादेः सम्बन्धिनीरादित्यगतीर्गमयन्ति, अतो भवन्ति परिच्छेदहेतवः। "षष्ठीसमासविषये योगारम्भः" इति। परिमाणपरिमाणिसम्बन्धे हि परिमाणवाचिनः षष्ठ()आ भवितव्यम्। यत्र च षष्ठी भवति स षष्ठीसमासस्य विषयः,तेनायं षष्ठीसमासस्य विषयो योग आरभ्यते। "मासजातः" इत्यत्र जातः परिमाणी। तस्य परिमाँ मासः। "द्वयहजातः" इति। द्वयोरह्नोः समाहार इति द्व्यहः। "राजाहःसखिभ्यष्टच्" ५।४।९१। "अह्नष्टखोरेव" ६।४।१४५ इति टिलोपः। "न संख्यादेः समाहारे" ५।४।८९ इत्यह्नादेशप्रतिषेधः। द्व्यहो जातस्य द्व्यहजातः। अथ "कालाः" इति बहुवचननिर्देशः किमर्थः? स्वरूपविधिनिरासार्थ इति चेत्; नैतदस्ति; न हि स्वरूपग्रहणे सत्युत्तरपदस्य परिमाणिवाचित्वं गम्यते, कालशब्दस्यापरिमाणवाचित्वात्। तस्मात् परिमाणिग्रहणादेव कालविशेषवाचिनां मासादीनां ग्रहणं भविष्यति। एवं तर्हि बहुवचननिर्देशोऽयं मात्राधिक्येन सूत्रप्रबन्धस्यार्थाधिक्यसूचनार्थः। तथा चोक्तम्-- "इङ्गितेनोन्मिषितेन महता

सूत्रप्रबन्धेनाचार्याणामबिप्राया लक्ष्यन्ते" इति। तेन संख्यापूर्वपदस्त्रिपदोऽप्ययं परिमाणिना तत्पुरुषसमासो भवतीत्येषोऽर्थो लभ्यते। तेन द्व्यह्नजात इत्येवमादि सिद्धं भवति। द्वे अहनी जातमस्येति विगृह्य त्रिपदे तत्पुरुषे कृते जातशब्द उत्तरपदे पूर्वयोः पदयोः "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति द्व्यवयवस्तत्पुरुषो भवति, पूर्वषट्टच्, "अह्नोह्न एतेभ्यः" ५।४।८८ इत्यह्नादेशः॥

बाल-मनोरमा

कालाः परिमाणिना ७०७, २।२।५

कालाः परिमाणिना। परिमाणिपदं व्याचष्टे--परिच्छेद्यवाचिनेति। "काला"इति बहुवचनात्कालविशेषवाचका इत्यर्थः। मासजात इति। अत्र विग्रहे मासः प्रधानम्। समासे तु जातः प्रधानम्। "मासजातो दृश्यता"मित्यादौ जातस्यैव दर्शनकर्मत्वादिप्रतीतेः। विशेषणविशेष्यभावस्तु एकार्थीभावसम्बन्धसाध्यः। एतदेवाभिप्रेत्य मूले क्वचित् पुस्तके "मासो जातस्य यस्य स" इति पठितम्। तत्र विग्रहे जातस्येति परिच्छेद्यपरिच्छेदकभावे षष्ठी। जातपरिच्छेदको मास इति विग्रहवाक्ये बोधः। मासपरिच्छेद्यो जात इति समासाद्बोधः। तत्र मासस्तावज्जननं साक्षात्परिच्छिनत्ति। जननाश्रयं तु देवदत्तं जननद्वारां परिच्छिनत्ति। तथाच "मासपरिच्छेद्यजननाश्रयो देवदत्त" इति समासाद्बोधः फलति। षष्ठीसमासापवादोऽयम्। षष्ठीसमासे तु "जातमास" इति स्यात्। न च मासो जातस्य यस्य स मासजात इति बहुव्रीहिणैवैतत्सिद्धमिति वाच्यं, समानाधिकरणानामेव बहुव्रीहिविधानात्। "निष्ठे"ति जातशब्दस्य पूर्वनिपातापत्तेश्च। "जातिकालसुखादिभ्यः परा निष्ठा वाच्ये"ति जातशब्दस्य परनिपातस्तु न, सुखादावस्य पाठकल्पनायां प्रमाणाऽभावादित्यलम्। द्व्यहो जातस्येति। "तद्धितार्थ" इति समाहारे द्विगुः" "राजाहःसखिभ्यः" इति टच्। "रात्राह्नाहाः पुंसी"ति पुंस्त्वम्।

उत्तरपदेनेति। "तद्धितार्थ" इति सूत्रभाष्ये इदं वार्तिकं पठितम्। तेन हि सूत्रेण उत्तरपदे परे दिक्सङ्ख्ययोस्सुबन्तेन द्विगुसमासो विहितः। उत्तरशब्दश्च समासस्य चरमावयवे रूढः। ततश्च द्वे अहनी जातस्य यस्येति विग्रहे त्रयाणां समासे सति जातशब्दे उत्तरपदे संपन्ने पूर्वयोः सुबन्तयोर्द्विगुसमासप्रवृत्तिर्वक्तव्या। सच समासस्त्रयाणां "कालाः परिमाणिने"ति पूर्वसूत्रेण न सम्भवति, "सुप्सुपे"त्येकत्वस्य विवक्षितत्वात्। अत उत्तरपदेन परिमाणिना परिच्छेद्यवाचिना परनिमित्तभूतेन हेतुना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसङ्ख्यानं वक्तव्यमित्यर्थः। उत्तरपदभूतपरनिमित्तकद्विगुसिद्धये त्रिपदतत्पुरुषो वाच्य इति यावत्। "सुप्सुपे"त्येकत्वलं विवक्षितमित्यत्र इदमेव लिङ्गम्। द्वे अहनी इति। द्वे अहनी जातस्येति विग्रहे त्रयाणां समासे सुब्लुकि "द्व्यहन्-जात" इति जातशब्दे उत्तरपदे परे द्वि-अहन् इत्यनयोः "तद्धितार्थ"इति द्विगुसमासे "राजाहःसखिभ्यः" इति टचि "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशे "द्यह्नजात" इति रूपमित्यर्थः। अत्र पूर्वयोर्द्विगुतत्पुरुषत्वाऽभावे टच्, अह्नादेशश्च न स्यातामिति भावः। ननु द्वयोरह्नोः समाहारो द्व्यह इति कथं पूर्वमुक्तं, तत्राप्यह्नादेशप्रसङ्गादित्यत आह--पूर्वत्र त्विति। निषेध इति। अह्नादेशनिषेध इत्यर्थः।

तत्त्व-बोधिनी

कालाः परिमाणिना ६२९, २।२।५

कालाः परिमाणिना। परिमीयते परिच्छिद्यते येन तत्परिमाणं=परिच्छेदकं, तद्वान्परिमाणी, तदाह--परिच्छेद्यवाचिनेति। काला इति। कालविशेषवाचका इत्यर्थः। सूत्रे बहुवचननिर्देशात्कालसामान्यस्याऽपरिच्छेदकत्वाच्च। मासो जातस्येति। षष्ठीसमासे प्राप्ते वचनम्। ननु जातः पुरुषस्तस्य तु हस्तवतस्त्यादिकं परिच्छेदकं, न तु कालः, तस्य क्रियामात्रपरिच्छदकत्वादिति चेत्। अत्राहुः--साक्षात्क्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परिच्छिनति। यस्य हि जननादूध्र्वं मासो गतः स "मासजात" इति व्यवह्रियते। तत्र व्यवहारकालजननक्षणयोरन्तलभावी मासो जननद्वारा

जातमपि परिच्छिनत्त्येवेति। इह विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यं द्योतयितुं "यस्य [सः"]इत्युक्तम्। अलौकिके तु प्रक्रियावाक्ये नास्य प्रवेशः। एवं बहुव्रीहावपीति बोध्यम्। ननु "जातस्य मासः" इति विग्रहे वृत्तौ मासशब्दस्य पूर्वपातार्थमेतत्सूत्रारम्भस्यावश्यकत्वेऽपि मासविशेष्यकबोध एवत्रोचित इति किमनेन "जातस्य यस्य सः"इति कथनेनेति चेत्। अत्राहुः--"मासजातो मृतः"इत्यादिप्रयोगानुरोधेन विग्रहे "यस्य सः" इति स्वीक्रियत इति। मासजात इति। यद्यपि मासो जातो यस्येति बह#उव्रीहिणापीदं सिध्यति, "जातिकालसुखादिभ्यः परा निष्ठा वाच्ये"ति वचनात्। न च स्वरे विशेषः। " वा जाते"इत्यन्तोदात्तत्वस्यापि सिद्धेः, तथापि षष्ठीसमासापवादार्थमिदमारम्भणीयमेव। किं च मासो जातवतो यस्य सामासजातवानित्येतदर्थमपीदमवश्यारम्भणीयमिति।

उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसङ्ख्यानम्। उत्तरपदेनेति। परिमाण्युत्तरपदहेतुकद्विगुसिद्धये त्रिपदतत्पुरुषो वक्तव्य इत्यर्थः। "सुप्सुपे"त्येकत्वस्य विवक्षितत्वादप्राप्ते वचनम्। अस्मादेव वार्तिकारम्भात् "सुप्सुपे" त्येकत्वं विवक्षितमिति ज्ञायते। अह्नादेश इति। त्रपदतत्पुरुषे सत्युत्तरपदे परतः "तद्धितार्थ"इत्यवान्तरद्विगौ सतीति भावः। पूर्वत्रेति। व्यहजात इत्यत्रेत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नञ् ० तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
नञ् २।२।६

नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। न ब्राह्मणः अब्राह्मणः। अवृषलः।
न्यासः
नञ्। , २।२।६

नञो ञकारः "नलोपो नञः" ६।३।७२ इति विशेषणार्थः, पामनपुत्रादिषु मा भूत्। "लोमादिपामादिपिच्छादिभ्यः शनेलचः" ५।२।९९। अथाब्राआह्मण इति किंप्रधानोऽयं समासः? उत्तरपदार्थप्रधानस्तत्पुरुषः, यथा-- राजपुरुष इति। पूर्वपदार्थप्रधानोऽव्ययीभावः, यथा-- अमक्षिकमिति। अन्यपदार्थप्रधानो बहुव्रीहिः, यथा--अब्राआह्मणको देश इति। यद्येवम्, अब्राआह्मणमानयेत्युक्ते ब्राआह्मणमात्रस्यानयनं प्राप्नोति? अथ निवृत्तिपदार्थकोऽयं ब्राआह्मणशब्दः, सा च निवृत्तिः स्वाभाविकी नञा द्योत्यत इति मतम्, एवं च सत्यभाव एवास्यार्थ इत्यब्राआह्मणमानयेत्युक्ते न कस्यचिदानयनं प्राप्नोति? नैष दोषः;सर्वं हि पदं स्वार्थे प्रयुज्यमानं प्रयोगप्रतिज्ञानमपेक्षते। तथा चोक्तम्-- "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया" इति। तच्च द्विविधं ज्ञानम्-- सम्यक्, मिथ्या चेति। उभयमप्येतत् ब्राआह्मणशब्दः प्रवत्र्तयति। यत्र सम्यग्ज्ञानपूर्वके ब्राआह्मणशब्दप्रयोगे नास्ति नञो व्यापारः, न हि तत्र नञा किञ्चित क्रियते। मिख्याज्ञानपूर्वके तु विद्यत एव तस्य व्यापारः। तत्र हि तेन मिथ्याज्ञानप्रभावता परस्याख्यायते। मिथ्याज्ञानं च दुष्टेन्द्रियहेतुकम्। तच्चसादृश्याद्दृते न सम्भवतीति प्रतिषेधे सत्यत्तरपदार्थसदृशः समासार्थो जायते। तथा चोक्तम्-- "नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" (व्या।प।६५) इति। तस्मादब्राआह्मणमानयेत्युक्ते ब्राआह्मणसदृशे क्षत्रियादौ प्रतीतिर्भवतीति न भवति पूर्वोक्तदोषावसरप्रसङ्गः॥

बाल-मनोरमा

नञ् ७४६, २।२।६

नञ्। इदं समानाधिकरणाधिकारस्थं नेत्यभिप्रेत्याह-सुपा समस्यत इति।

तत्त्व-बोधिनी

नञ् ६६०, २।२।६

नञ्। इह "नलोपो नञः"इत्यत्र विशेषणार्थो ञकारः। तत्फलं च नैकदेत्यत्राऽलोपः। "अव्यये नञ्कुनिपाताना"मित्यव्ययपूर्वपदप्रकृति स्वरार्थं ञकतारोच्चारणमित्यन्ये। सुपा सह समस्यत इति। उतरपदार्थप्रधानोऽयं समासः। तथाहि आरोपितत्वं नञा द्योत्यते। तथा च अब्राआह्मणशब्दादारोपितो ब्राआह्मण इति बोधे अर्थाद्ब्राह्मणभिन्न इति पर्यवस्यति। अतएवाऽनुसर्जनत्वादतस्मिन्नस इत्यादौ सर्वनामकार्यं सिध्यति। तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम्। "एतत्तदो"रिति सूत्रेऽनञ्समासग्रहणं चेह लिङ्गमित्यादि मनोरमायानुसन्धेयम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ईषत् ० अकृता ३।१ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

ईषदकृता २।२।७

ईषतित्ययं शब्दो ऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। ईषद्गुणवचनेन इति वक्तव्यम्। ईषत्कडारः। ईषत्पिङ्गलः। ईषद्विकटः। ईषदुन्नतः। ईषत्पीतम्। ईषद्रक्तम्। गुणवचनेन इति किम्? इह न भवति, ईषद् गार्ग्यः।

न्यासः

ईषदकृता। , २।२।७

"ईषद्गुणवचनेनति वक्तव्यम्" इति। ईषदित्येतदव्ययं समस्यते, न सर्वेणाकृदन्ेतनेत्येतद्रूपं व्याख्येयमित्यर्थः। त्तरेदं व्याख्यानम्-- विभाषेत्यनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन गुणवचनेनैव समासो भविष्यति, नान्येन। "ईषद्गार्ग्यः" इति। गार्ग्यशब्दऽयं जातिवचनः, न गुणवचनः। नन्वकृतेत्युच्यते, त्तर ईषत्पीतः, ईषदुन्न त इत्यादि न सिध्यति; पीतादिशब्दस्य कृदन्तत्वात्? नैष दोषः; अव्युत्पन्ना ह्रेते पीतादिशब्दा वेदितव्याः; न तु कृदन्ताः॥

बाल-मनोरमा

ईषदकृता ७४५, २।२।७

ईषदकृता। ईषच्छब्दोऽकृदन्तप्रकृतिकसुबन्तेन समस्यते स तत्पुरुष इत्यर्थः। ईषत्पिङ्गलं इति। पिङ्गलशब्दोऽव्युत्पन्नप्रातिपदिकमिति भावः।

ईषद्गुणवचनेनेति। "अकृतेत्यपहाये"ति शेषः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षष्ठी १।१ १७ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

षष्ठी २।२।८

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। राज्ञः पुरुषः राजपुरुषः। ब्राह्मणकम्बलः। कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्। इध्मप्रव्रश्चनः। पलाशशातनः। किम् अर्थम् इदम् उच्यते? प्रतिपदविधाना च षष्ठी न समस्यते इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः।

लघु-सिद्धान्त-कौमुदी

षष्ठी ९३४, २।२।८

सुबन्तेन प्राग्वत्। राजपुरुषः॥

न्यासः

षष्ठी। , २।२।८

"कृद्योगा च" इत्यादि। "कृद्योगलक्षणा षष्ठी समस्यते" इति व्याख्येयम्। तत्रेदं व्याख्यानम्-- यदयं "क्तेन च पूजायाम्" २।२।१२ "अधिकरणवाचिना च" २।२।१३ "कर्मणि च" २।२।१४ "तृजकाभ्यां कर्तरि च {च नासति सूत्रे}" इति निषेधमारभते, तज्ज्ञापयति -- "कृद्योगा या षष्ठी सा समस्यते" इति ; अन्यथा प्रतिषेधारम्भोऽनर्थकः स्यात्; प्राप्त्यभावात्। "इध्मप्रव्रश्चः" इति। करण ल्युट्। "कृत्युल्युटो बहुलम्" ३।३।११३ इति कत्तरि वात। "कर्त्तृकर्मणोः कृति" २।३।६५ इति कर्मणि षष्ठी। पलाशशातनः" इति। शदेण्र्यन्तस्य "शदेरगतौ तः" ७।३।४२ इति दकारस्य तकारः। पूर्ववल्ल्युट्, षष्ठी च। किमर्थमित्युच्यते, यावता षष्ठीत्यनेनैव कृद्योगलक्षणाया अपि षष्ठ्याः समासः सिद्धः एवेत्यत आह- "प्रतिपदविधाना च" इत्यादि। सुबोधम्।

बाल-मनोरमा

षष्ठी ६९३, २।२।८

षष्ठी। षष्ठ()न्तं सुबन्तेन समस्यते, स तत्पुरुष इत्यर्थः। राजपुरुष इति। राजन् अस् पुरुष स् इत्यलौकिकविग्रहवाक्ये समासे सति सुब्लुकि अन्तर्वर्तिनीं विभकिं()त प्रत्ययलक्षणेनाश्रित्य नलोपः। नच लुका लुप्तत्वान्न प्रत्ययलक्षणमिति वाच्यं, पदत्वस्य सुब्घटितसमुदायधर्मत्वेन तस्याऽङ्गकार्यत्वाऽभावादिति भावः।

तत्त्व-बोधिनी

षष्ठा ६१५, २।२।८

राजपुरुष इति। राजन् अस्--पुरुष सु इत्यलौकिकविग्रहे समासे कृते सुपो लुक्यन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्न

लोपः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ याजकादिभिः ३।३ च ० षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ विभाषा १।१ २।१।११ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
याजकाऽदिभिश् च २।२।९

पूर्वेण समासः सिद्ध एव, तस्य कर्तरि च २।२।१६ इति प्रतिषेधे प्राप्ते वचनम् इदम् आरभ्यते प्रतिप्रसवार्थम्। याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। ब्राह्मणयाजकः। क्षत्रिययाजकः। याजक। पूजक। परिचारक। परिषेचक। स्नातक। अध्यापक। उत्सादक। उद्वर्तक। होतृ। पोतृ। भर्तृ। रथगनक। पत्तिगणक। तत्स्थैश्च गुणैः षष्ठी समस्यते इति वक्तव्यम्। चन्दनगन्धः। कपित्थरसः। गुणात्तरेण तरलोपश्चेअ ई वक्तव्यम्। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां सहत्तरः सर्वमहान्। न निर्धारणे २।२।१० इति प्रतिषेधे प्राप्ते वचनम् इदम्। सर्वशुक्ला गौः।
न्यासः
याजकादिभिश्च।, २।२।९

चकारोऽनुक्तसमुच्चयार्थः। तेन "तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम्" (इति) इति न वक्तव्यं भवति;अनेनैव सिद्धत्वात्। तस्मिन् स्थिताः = तत्स्थाः। प्रकृतस्यान्यस्याभावात् तदित्यनेन गुणा एव प्रत्यवमृश्यन्ते। तेन गुणात्मन्येव ये गुणा वत्र्तन्ते , न कदाचिद्द्रव्यात्मनि, तैः षष्ठी समस्यते। यद्यपि नास्त्येव हि स गुणो यो द्रव्ये न वत्र्तते, सर्वनस्य गुणस्य द्रव्याश्रितत्वात्; तथापि गुणशपब्दास्तु केचित् मतुब्लोपादबेदोपचाराद्वा तद्वति द्रव्ये वत्र्तमाना गुणमाधारानुगतं गमयन्ति, यथा-- शुक्लः पटः, लोहितः कम्बल इति। अपरे त्वाश्रयाद्विभक्तं द्रव्यं प्रत्यनुपसर्जनीभूतं गुणमाहुः, यथा-- चन्द्रनस्य गन्धः, कपिस्थस्य रस इति। तस्मादभिधानशक्तव्यापारापेक्षया तत्स्थैरिति विशेषणं युक्तम्। तदेतदुक्तं भवति-- ये गुणाः स्वशब्दैद्र्रव्यं प्रत्यनुपसर्जनभावापन्ना एव प्रत्याय्यन्ते, तैः सह षष्ठी समस्यत इति चन्दनस्य गन्धशब्दनगन्धः, कपित्थस्य रसः कपित्थरसः। गन्धादयो हि स्वशब्दैराधारविभक्ता एव प्रत्याय्यन्ते, न तु कदाचिदाश्रयानुगता द्रव्यं प्रति विशेषणीभूताः॥
बाल-मनोरमा
याजकादिभिश्च ६९४, २।२।९

याजकादिभिश्च। ननु "षष्ठी "ति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह तृजकाभ्यामिति। ब्राआहृणयाजक इति। ब्राआहृणस्य याजक इति विग्रहः। यजतेण्र्यन्तात्कर्तरि ण्वुल्। अकादेशः। "कर्तृकर्मणोः कृती"ति कर्मणि षष्ठी। देवपूजक इति। देवानां पूजक इति विग्रहः। पूजकशब्दो याजकादिरिति भावः। "भूभर्ते"ति तृजन्तस्योदाहार्यम्। भर्तृशब्दस्य याजकादित्वात्।

गुणात्तरेणेति। वार्तिकमिदं सर्वं गुणे"ति सूत्रे भाष्ये स्थितम्। गुणवाचकाद्विहितो यस्तरप्तदन्तेन षष्ठी वा समस्यते, तरपो लोपश्चेत्यर्थः। फलितमाह--तरबन्तं यदिति। ननु "षष्ठी"ति सूत्रेणैव सिद्धे किमर्थमिदमित्यत आह--न निर्धारणे इति।

"सर्वं गुणे"ति सूत्रे भाष्ये तु "पूरणगुणेत्यस्यापवाद"इत्येवोक्तम्। सर्वशब्दानुवृत्तेः सर्वशब्द एवेदं वार्तिकमित्यभिप्रेत्योदाहरति--सर्व()ओत इति। "वकानां गुण" इति शेषः। द्रव्यान्तरवृत्ति()ओतरूपापेक्षया सर्वेषां वकानां ()ओतगुणोऽयमधिक इत्यर्थः। "द्विवचनविभज्य" इति विभक्तव्योपपदे तरप्। अत्र सर्वेषामिति षष्ठ()न्तस्य ()ओततरशपब्देन समासे तरपो लोपे "सर्व()ओत इति रूपम्। सर्वमहानिति। "ई()आर" इति शेषः। पूर्ववत्तरप्। "सर्वेषां महत्तरः" इति विग्रहः। इतरसंबन्धिमहत्तावापेक्षया ई()आरस्य महत्त्वमधिकमित्यर्थः।

कृद्योगेति। कृता योगो यस्या इति विग्रहः। "कर्तृकर्मणोः कृतीति विहिते"ति भाष्यम्। इध्मप्रव्रश्चन इति। "कुठार" इति शेषः। प्रवृश्च्यतेऽनेनेति प्रव्रश्चनः"। करणे ल्युट्। इध्मानां प्रव्रश्चन इति विग्रहः। कर्मणि षष्ठी। "प्रतिपदविधाने"ति वक्ष्यमाणनिषेधस्यापवादोऽयम्।

तत्त्व-बोधिनी

याजकादिभिश्च ६१६, २।२।९

याजकादिभिश्च। याजक। पूजक। परिचारक। परिवेषक। स्नातक। अध्यापक। उत्पादक। होतृष। पोतृ। भर्तृ। रथगणक। पत्तिगणक। वृत्।

गुणात्तरेण तरलोपश्चेति वक्तव्यम्। गुणात्तरेणेति। एतच्च वार्तिकं "सर्वं गुणकात्स्न्र्ये"इत्यत्र पठितम्।

कृद्योगा[च] षष्ठी समस्यत इथि वाच्यम्।कृद्योगा षष्ठीति। "कर्तृकर्मणोः कृती"ति कृत्सनियोगेन कृतेत्यर्थः। यदा तु "प्रतिपदविधाने"त्यादिनिषेधवचनमारभ्यते, तदेदं तद्बाधनायारब्धव्यम्। तस्यैवाऽनारभ्यत्वमनुपदं वक्ष्यामः। इध्मव्रश्चन इति। वृक्ष्यते छिद्यतेऽनेनेति व्रश्चनः=कुठारादिति। करणे ल्युट्। इध्मानामिति कर्मषष्ठ()न्तस्यानेन समासः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० १६ निर्धारणे ७।१ षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

न निर्धारणे २।२।१०

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते। निर्धारने या षष्ठी सा न समस्यते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारनम्। क्षत्रियो मनुष्याणाम् शूरतमः। कृष्णा गवां सम्पन्नक्षीरतमा। धवन्नध्वगानां शीघ्रतमः। प्रतिपदविधाना च षष्ठी न समस्यते इति वक्तव्यम्। सर्पिषो ज्ञानम्। मधुनो ज्ञानम्।

न्यासः

न निद्र्धारणे। , २।२।१०

"मनुष्याणां क्षत्रियः शूरतमः" इति। "यतश्च निद्र्धराणम्" २।३।४१ इति षष्ठी। "प्रतिपदविधाना च" इत्यादि। "षष्ठी शेषे" २।३।५० इति सामान्यलक्षणविहितां षष्ठीं त्यक्त्वा याऽन्या विशेषलक्षणाविहिता षष्ठी सा प्रतिपदविधाना,क सा च षष्ठी न

समस्यत इत्येतद्रूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- नेति योगविभागः क्रियते, तेन प्रतिपदविदाना षष्ठी न समस्यत इति।यद्येवम्, कथं गृहस्वामी, विद्यादायादः, पृथ्वी()आर इति, प्रतिपदविधाना ह्येषा षष्ठी बाधिष्यत इति चकारेण पुनः षष्ठीप्रतिप्रसवः क्रियते। न ह्येवंविदा षष्ठी प्रतिपदविधाना भवति। अत व "न निद्र्धारणे" इति निषेधो विधीयते। "यतश्च निद्र्धारणम्" २।३।४१ इत्यत्रापि चकारेण सैव शेषलक्षणा षष्ठी प्रतिप्रसूयते, अन्यथा हीयमपि प्रतिपदविधानैव षष्ठीति समासो न स्यात्। ततश्च "न निद्र्धारणे"इति प्रतिषेधोऽनर्थकः स्यात्।"सर्पिषो ज्ञानम्" इति। "ज्ञोऽविदर्थस्य" २।३।५१ इति करणे षष्ठी॥

बाल-मनोरमा

न निर्धारणे ६९५, २।२।१०

न निर्धारणे। नृणां द्विजः श्रेष्ठ इति। अत्र "नृणा"मिति षष्ठ()न्तस्य द्विजशब्देन समासो न भवति। पुरुषाणामुत्तमः पुरुषोत्तम इत्यत्र तु शेषषष्ठ()एव न तु निर्धारणषष्ठी। "यतो निर्धारणं यच्च निर्धायते यश्च निर्धारणहेतुः-एतत्त्रितयसंनिधान एव तस्याः प्रवृत्ते"रिति कैयटः। "गुणेन निषेधस्त्वनित्य" इति तरप्सूत्रे कैयटः। केचित्तु "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति गीतावाक्यात्कर्मधारय एव। उत्तमशब्दस्य विशेषणत्वेऽपि राजदन्तादित्वात् परनिपात इत्याहुः।

प्रतिपदविधानेति। पदं पदं प्रतीति वीप्सायामव्ययीभावः। प्रतिपदं विधानं यस्याः सा प्रतिपदविधाना। "षष्ठी शेषे" इति शेषलक्षणां षष्ठीं वर्जयित्वा सर्वा षष्ठी प्रतिपदविधानेति भाष्यम्। सर्पिषो ज्ञानमिति। अत्र "ज्ञोऽविदर्थस्य करणे" इति विहितषष्ठ्याः समासो न भवति, "न निर्धारणे" इति प्रत्याख्येयमेवेति भाष्ये स्पष्टमित्यलम्।

तत्त्व-बोधिनी

न निर्धारणे ६१७, २।२।१०

नृणामिति। "यतश्च निर्धारण"मिति षष्ठी। द्विजशब्देनात्र समासप्रसङ्गस्तदपेक्षा हि षष्ठी। श्रेष्टत्वं द्विजेतरमनुष्येभ्यः, तेषां समान्यशब्देनोपस्थिततया। तान्विहायानुपस्थितकल्पनाया अन्याय्यत्वात्। अथं कथं पुरषोत्तम इति()। यस्मान्निर्धार्यते, यश्चैकदेशो निर्धार्यते, यश्च निर्धारणहेतुः--एतत्त्रितयसंनिधाने सत्येवायं निषेध इति "द्विवचनविभज्योपे"ति सूत्रे कैयटः। अन्ये तु--पुरुषेषूत्तम इति निर्धारणसप्तम्याः "संज्ञाया"मिति समासः। न चैवं "न निर्धारणे"इति व्यर्थम्। स्वरे भेदात्। सप्तमीसमासे हि " तत्पुरुषे तुल्यार्थे"त्यादिना पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे तु "समासस्ये"त्यन्तोतात्तत्वं स्यात्तच्चाऽनिष्टमित्याहुओः। तन्मन्दम्। "संज्ञाया"मिति समासस्य नित्यत्वेन स्वपदविग्रहाऽसंङ्गतिप्रसङ्गात्। तस्मात्कैयटोक्तसमाधानमेव समीचीनमिति नव्याः।

प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्। प्रतिपदविधानेति। पदं पदं प्रति विहिता प्रतिपदविधान। "षष्ठी शेषे" इथि विहायाऽन्येन "ज्ञोऽविदर्थस्ये"त्यादिना विहिता सर्वैव षष्ठीत्यर्थः। धातुकारकविशेषं गृहित्वैव "ज्ञोऽविदर्थस्य"इत्यादिना षष्ठी विधीयत इति भवति तस्याः प्रतिपदविधानत्वम्। नन्वनेनैव गतार्थत्वा"न्न निर्धारणे" इति व्यर्थमिति चेत्। अत्राहुः--"यतश्च निर्धारण"मिति सूत्रं न षष्ठीं विधत्ते, किं तु सप्तमीमेव। षष्ठी तु तया मा बाधीति प्रतिप्रसूयत इत्यन्यदेतत्। एवं "स्वमी()आराधिपती"त्यादिष्वपि। तेन "गृहस्वामी""सर्वे()आरः" "निषादाधिपति"रित्यादि सिद्धमिति। वस्तुतस्तुप "ज्ञोऽविदर्थस्ये"त्यादिचतुर्दशसूत्रीमध्ये "दिवस्तदर्थस्ये"त्यादिषट्सूत्रीं विहायाविशिष्टायाममष्टसूत्र्यां "शेषे"इति वर्तते, तथा च न माषाणामाश्नीया"दित्यादाविव "षष्ठी शेषे" इत्येवसिद्धे नियमार्थं प्रकरणम्--इह षष्ठ()एव न तु तल्लुगिति। तथा च लुकः प्रयोजकीभूतः समास एव नेति फलितोऽर्थः। ततश्च "प्रतिपदविधाने"ति वचनं न कर्तव्यम्। एवं स्थिते "कृद्योगा

षष्ठी"ति वचनमपि मास्तु। "कर्तृकर्मणोः कृती"त्यत्र हि "शेषे" इति निवृत्तम्। तथा चाऽप्राप्तषष्ठीविधानार्थमेव तदिति समासनिवृत्तिप्रसङ्गाऽभावात् "षष्ठी"इत्यनेनैव समाससिद्धेः। सर्पिषो ज्ञानमिति। वस्तुतः करणस्य संबन्धमात्रविवक्षया "ज्ञोऽविदर्थस्य"इति षष्ठी। सर्पिःसंबन्धि प्रवर्तनमित्यर्थः। पूरणगुण। अर्थशब्दस्य त्रिषु संबन्धादाह।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पूरणगुण॰करणेन ३।१ न ० १० षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरनेन २।२।११

पूरण गुन सुहितार्थ सतव्यय तव्य समानाधिकरण इत्येतैः सह षष्ठी न समस्यते। अर्थशब्दः प्रत्येकम् अभिसम्बध्यते, तेन स्वरूपविधिर् न भवति। पूरणार्थे धात्राणां पञ्चमः। छात्राणां दशमः। गुण बलाकायाः शौक्ल्यम्। काकस्य काष्ण्र्यम्। सुहितार्थास् तृप्त्यर्थाः फलानां सुहितः। फलानां तृप्तः। सत् ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। अव्यय ब्राह्मणस्य कृत्वा। ब्राह्मणस्य हृत्वा। तव्य ब्राहमणस्य कर्तव्यम्। तव्यता सानुबन्धकेन समासो भवत्येव, ब्राह्मणकर्तव्यम्। समानाधिकरण शुकस्य माराविदस्य। राज्ञः पाटलिपुत्रकस्य। पाणिनेः सूत्रकारस्य। किं च स्यात्? पूर्वनिपातस्य अनियमः स्यात्। अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां विशेषणं विशेष्येण बहुलम् २।१।५६ इति भवत्येव समासः। पुर्वनिपातश्च तदा दियोगतो विशेषणस्य एव।
न्यासः
पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन।, २।२।११

"छात्राणां पञ्चमः" इति। "तस्य पूरणे डट्" ५।३।४८ "नान्तादसंख्यादेर्मट्" ५।३।४९ समुदायसमुदायिसम्बन्धे शेषलक्षणा षष्ठी। एवं "वलाकायाः शौक्ल्यम्", "काकस्य काष्ण्र्यम्" इत्यत्र गुणगुणिसम्बन्धे शेषलक्षणैव षष्ठी वेदितव्या। ब्राआह्णस्य कत्र्तव्यमित्यत्र "कृत्यानां कत्र्तरि वा"२।३।७१ इति षष्ठी। अथ कथं गोर्विंशतिरिति षष्ठीसमासः, यावता संख्याया गुणत्वात् प्रतिषेधेन भवितव्यम्? नैष दोषः; यदयं " शतसहस्तरान्ताच्च निष्कात्" ५।२।११८ इत्याह, तज्ज्ञापयति-- संख्यायाः समासो भवतीति। न हि तेना विना शतसहरुआआन्तता निष्कस्य प्रातिपदिकस्य सम्भवति। "तव्यता सानुबन्धकेन समासो भवत्येव" इति। निरनुबन्धकपरिभाषया तस्याग्रहणात्। "ब्राआह्णकत्र्तव्यम्" इति। "गतिकारकोपपदात् कृत्" ६।२।१३८ इति प्रकृतिस्वरेणान्तस्वरितमुत्तरपदं भवति। यदि तर्हि निरनुबन्धकेनापि समासः स्यात् प्रकृतिस्वरे कृते प्रत्ययस्वरेण मध्योदात्तः स्यात्, स चानिष्टः; अतो निरनुबन्धकेन समासः प्रतिषिध्यते, न तु सानुबन्धकेन। किञ्च स्यादिति? एवं मन्यते-- क्रियमाणेऽप्येतस्मिन् प्रतिषेधे विशेषणसमासेनात्र भवितव्यमेव। तदवस्यम्भाविनि समासे यदि षष्ठीसमासः स्यात् तदा को दोषः स्यात्, यत्परिह्नतयेऽयं षष्ठीसमासः प्रतिषिध्यत इति? -- "{पूर्वनिपातस्यानियमः--काशिका}पूर्वनिपातानियः" इत्यादिना दोषमाह। यदि षष्ठीसमासः स्यात् तदा द्वयोरपि पदयोः प्रथमानिर्दिष्टत्वादुपसर्जने सति पक्षे विशेषणस्यापि पूर्वनिपातः स्यात्, स च नेष्यते। विशेषणसमासे सति विशेषणस्यैव समासशास्त्रे प्रथमानिर्दिष्टत्वात् पूर्वनिपातो भवतीति न भवत्येष दोषप्रसङ्ग॥
बाल-मनोरमा

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ६९६, २।२।११

पूरणगुण। पूरणगुणसुहितानि अर्था येषां ते पूरणगुणसुहितार्थाः, ते च सच्च अव्ययं च तव्यश्च समानाधिकरणं चेति समाहारद्वन्द्वात्तृतीया। तदाह--पूरणाद्यर्थैरिति। पूरणे इति। "उदाहरणं वक्ष्यते" इति शेषः। सतां षष्ठ इति। षण्णां पूरण इत्यर्थे "तस्य पूरणे डट्" "षट्कतिकतिपयचतुरां थुक्"। नच "कुम्भपूरण"मित्यत्रापि निषेधः स्यादिति वाच्यम्, "सोऽचि लोपे चेत्पादपूरण"मिति निर्देशेन पूरणार्थकप्रत्ययस्यैव ग्रहणात्। "उञ्छषष्ठाङ्कितसैकतानी"त्यत्र तूञ्चात्मकः षष्ठ इति व्याख्येयम्। गुणे इति। "उदाहरणं वक्ष्यते" इत्यर्थः। प्रधानत्वेन वा , उपसर्जनत्वेन वा गुणवाची गुणशब्दः, व्याख्यानात्। तदाह--काकस्य कार्ष्ण्यं ब्राआह्मणस्य शुक्ला इति। कृष्णशब्दात् "गुणवचनब्राआह्मणादिभ्यः" इति भावे ष्यञ्। शुक्लशब्दात्तु "गुणवचनेभ्यो मतुपो लु"गिति लुक्। ननु "दन्ता" इति शेष पूरणेन "ब्राआह्मणस्य दन्ताः शुक्ला" इत्यर्थे ब्राआह्मणशब्दस्य दन्तशब्देनैवान्वयाच्छुक्लशब्देनान्वयाऽभावादसामथ्र्यात्कथमिह समासप्रवृत्तिरित्यत आत-यदा प्रकरणादिनेति। प्रकरणादर्थाद्वेत्यर्थः। दन्ताः संयुक्ताः शुभावहा न तु, विरला इत्यादिदन्तवर्णने प्रकृते यदा "ब्राआह्मणस्य शक्ला" इत्युच्यते, तदा प्रकरणादर्थाद्वेत्यर्थः। दन्ताः संयुक्ताः शुभावहा न तु, विरला इत्यादिदन्तवर्णने प्रकृते यदा "ब्राआह्मणस्य शुक्ला" इत्युच्यते, तदा प्रकरणाद्दन्त #आ इति विशेष्योपस्थितिः। यदा वा सर्ववर्णेषु दन्तवस्त्रभूषणेषु प्रकृतेषु "ब्राआह्मणस्य शुक्ला" इत्युच्यते, तदाऽर्थाद्दन्ता इति विशेष्योपस्थितिस्तत्र सामथ्र्यसत्त्वात्समासे प्राप्ते निषेध इत्यर्थः। अत्र "आकडारा"दिति सूत्रोक्तगुणवचनसंज्ञकानां "तृतीया तत्कृते"ति सूत्रे प्रपञ्चितानां गुणानां न ग्रहणम्, अत्र गुणवचनशब्दाभावात्। किंतु "वोतो गुणवचना"दिति सूत्रभाष्ये तद्धितान्तस्य गुणवचनत्वपर्युदासात्कथं काष्र्ण्यादिशब्दानां गुणवचित्वमिति निरस्तम्। अथ "अर्थगौरव"मित्यादौ षष्ठीसमासं साधयितुमाह--अनित्योऽयमिति। संज्ञाप्रमाणत्वादिति। संज्ञायाः प्रमाणत्वं-संज्ञाप्रमाणत्वं, तस्मादिति विग्रहः। अत्र प्रमाणत्वस्य गुणत्वात्तेन षष्ठीसमासनिषाधत्समासनिर्देशोऽनुपपन्नः स्यादतो गुणेन निषेध इत्ययमर्थो भाष्ये न दृश्यते। न च कृष्णैकत्वमित्यादौ समासानुपपत्तिरिति वाच्यं, "पङ्क्तिविशती"ति सूत्रे "विंशत्यादिशब्दा भाववचना भवन्ती"त्युक्त्वा गवां विशतिगवां सहरुआमित्यर्थे गोर्विशतिर्गोसहरुआमित्यादिप्रयोगात्। "अर्थगौरव"मित्यादौ त्वर्थगतं गौरवमिति मध्यमपदलोपिसमासो बोध्य इति शब्देन्दुशेखरे प्रपञ्चितम्। "सुहित"पदं व्याचष्टे--सुहितार्तास्तृप्त्यर्था इति। नपुंसके भावे क्त इति भावः।

फलानां सुहित इति करणत्वस्याऽविवक्षायां संबन्धविवक्षायां षष्ठी। अर्थग्रहणात्फलानां तृप्तिरित्यादावपि न समासः। "फलसुहित"मिति कथं समास इत्यत आह--तृतीयासमासस्त्विति। करणत्वविवक्षायां तृतीया। "कर्तृकरणे कृता बहुल"मिति समास इति भावः। तर्हि सुहितयोगे षष्ठीसमासनिषेधो व्यर्थ इत्यत आह--स्वरे विशेष इति। तृतीयासमासे "तृतीया कर्मणी"ति पूर्वपदप्रकृतिस्वरः। षष्ठीसमासे तु "समासस्ये"त्यन्तोदात्तत्वमिति फलभेद इति भावः। सदिति। सद्योगे षष्ठीसमासनिषेध उदाह्यियत इत्यर्थः। "तौ स"दिति शतृशानचोः सदिति संज्ञा वक्ष्यते। ननु "द्विजस्य कुर्व"न्निति न कर्मणि षष्ठी, "न लोके"ति निषेधात्। नापि "द्विजस्य घटं कुर्व"न्नितिघटाद्यपेक्षया शेषषष्ठी, तर्हि सापेक्षत्वेनाऽसामथ्र्यात्कुर्वन्नित्यनेन समासाऽप्रवृत्तेरित्यत आह--किङ्कर इत्यर्थ इति। द्विजं परिचरन्नित्यर्थ इति यावत्। कुञ्धातुरिह परिचरणे वर्तत इति फलितम्। अव्ययमिति। "उदाहरणं वक्ष्यते" इति शेषः। पूर्वोत्तरेति। सत्तव्याभ्यां कृद्भ्यामित्यर्थः। "अनेकमन्यपदार्थे" इति सूत्रभाष्ये "सर्वपश्चा"दिति प्रयोगश्चेह लिङ्गम्। तव्य इति। उदाहरणं वक्ष्यते इत्यर्थः। ब्राआह्मणस्य कर्तव्यमिति। "अर्हे कृत्यतृचश्च" "तव्यत्तव्यानीयरः" इति कृत्यस्तव्यः। "कृत्यानां कर्तरि वे"ति षष्ठी। तव्यता तु भवत्येवेति। "षष्ठीसमास" इति शेषः। तकारानुबन्धरहितस्येव तव्यस्य सूत्रे ग्रहणात्तव्यतो न ग्रहणमिति भावः। स्वकर्तव्यमिति। स्वस्य कर्तव्यमिति विग्रहः। "कृत्यानां कर्तरि वे"ति षष्ठी। अत्र तव्यता योगात्समासनिषेधो नेति भावः। ननु तव्यत्प्रत्ययमाश्रित्य "ब्राआह्मणकर्तव्य"मिति समाससंभवा()त्क तव्ययोगे तन्निषेधेनेत्यत आह--स्वरे

भेद इति। तव्यति कृते कृदुत्तरपद प्रकृतिस्वरः, तव्ये तु नेति फलभेद इति भावः। समानाधिकरण इति। समानाधिकरणेन षष्ठ()न्तं न समस्यते इत्यत्रोदाहरणं वक्ष्यत इत्यर्थः। तक्षकस्य सर्पस्येति। अत्र समासे सति पुनः समासात् षष्ठ्युत्पत्तौ तक्षकसर्पस्येति न भवतीत्यर्थः। ननु षष्ठीसमासस्य निषेधेऽपि "विशेषणं विशेष्येणे"ति कर्मधारयसमासो दुर्वारोऽतः किं षष्ठी समासनिषेधेनेत्यत आह--विशेषणसमासस्त्विति। ननु षष्ठीसमासनिषेधसामश्र्यादेवात्र कर्मधारयो न भविष्यति, तत्किमगतिकगत्या बहुलग्रहणाश्रयणेन?। न च कर्मधारयस्वर एव यथा स्यान्नतु षष्ठीसमासस्वर इत्येतदर्थः षष्ठीसमासनिषेध इति वाच्यम्, उभयथापि "समासस्ये"त्यन्तोदात्तस्याऽविशिष्टत्वादिति चेत्, मैवम्-कर्मधारये हि सति "गमनस्य श्रेयस" इत्यादौ "श्रज्यावमकन्पापवत्सु भावे" इति पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्, तन्माबहुलग्रहणमाश्रितम्। न चैवमपि तक्षकः सर्प इति प्रथमान्तविग्रहे कर्मधारये सति "तक्षकसर्पस्ये"ति दुर्निवारमिति वाच्यं, निषेधसामश्र्यादेव प्रथमान्तकर्मधारयमाश्रित्य तक्षकसर्पस्येत्येवंजातीयकप्रयोगाऽभावोन्नयनात्।?थ समानाधिकरणे निषेधे उदाहरणान्तरमाह--गोर्धेनोरिति। गोर्धोनोरित्यादिषु षष्ठीसमासः प्राप्तः, सोऽप्यनेन वार्यत इत्यन्वयः। आदिना यूनः खलतेरित्यादिसङ्ग्रहः। ननु षष्ठीसमास एवात्र न प्रसज्यते, "पोटायुवति", युवा खलती"त्यादि विसेषविहितकर्मधारयेणाऽत्र परस्यापि षष्ठीसमासस्य बाधितत्वादित्यत आह--पोटायुवतीत्यादि। "पोटायुवति" "युवा खलती"त्यादिविधयो "गौर्देनुः" "युवा खलति"रित्यादिषु प्रतमाविभक्त्यन्तेषु सावकाशाः। षष्ठीसमाससस्तु "राज्ञः पुरुषः" इत्यादावसमानाधिकरणे सावकाशः। "गोर्धेनोः", "यूनः खलते"रित्यादिषूभयं प्राप्तम्। तत्र "पोटायुवति", "युवा खलती"त्यादिसमासे तु गोयुवादिशब्दस्यैवेति फलभेदस्य स्पष्टत्वात्। समानाधिकरणेन निषेधश्चायं क्वाचित्क एव,अन्यस्य पदस्यार्थ इत्यर्थेऽन्यपदार्थ इति निर्देशात्। तेन "नीलोत्पलस्य गन्ध" इत्यादिः सिद्धः।

तत्त्व-बोधिनी

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ६१८, २।२।११

पूरणाद्यर्थैरिति। अत्र प्राचोक्तम् "एतदर्थैः षष्ठी न समस्यते" इति तन्न्यूनम्। तथा हि सति सुहितान्तानामेव ग्रहणं स्यात्, तावतामेवाऽर्थशब्देन समस्तत्वादिति ध्वनयन्नाह--सदादिभिश्चेति। षष्ठ इति। षण्णां पूरणः षष्ठः। "तस्य पूरणे डट्", "षट्कतिकतिपयचतुरां थुक्"। कथं तर्हि "तान्युञ्छषष्ठाङ्कितसैकतानी"ति()। प्रमाद एवायमित्येके। उञ्छेषु षष्ठः, उञ्छात्मकऋः षष्ठ इति वा व्याख्येयमिति मनोरमायां स्थितम्। गुणे इति। "सत्त्वे निविशतेऽपैती"त्यादिलक्षणलक्षैतो गुणोऽत्र गृह्रते, न त्वदेङ्लक्षणः, अर्थग्रहणात्। नापि सङ्ख्या, "क्रोशशतयोजनशतयो"रिति वार्तिके निर्देशात्। काकस्य काष्ण्र्य। ब्राआह्णस्य शुक्ला इति। व्याप्तिन्यायात्केबवगुणवाची गुणोपसर्जनद्रव्यवाची च गुणशब्देन गृह्रत इति भावः। ननु "ब्राआह्णस्य शुक्ला"इत्यत्र समासप्रसङ्ग एव नास्ति, ब्राआह्()मणशब्दस्य दन्तैरेवान्वयादद्राह्णस्य ये दन्तास्ते शुक्ला इत्यर्थादत आह--यदेति। शुक्लशब्द एवेह विशेष्यसमर्पक इति भावः। "चन्दनगन्धः"घटरूप"मित्यादावनेन निषेधे प्राप्ते "तत्स्थैश्च गुणैः समासो वक्तव्यः"इति वार्तिकेन समासः प्रतिप्रसूयते। गन्धगत्वेन प्रतीयमानो गन्धो न कदापि गुणिसमानाधिकरणः, किंतु स्वप्रधानः। इदमेव हि तात्स्थ्यं नाम। ननु "पिनष्टि गन्धा"निति प्रयोगदर्शनाच्छुक्लशब्दादितुल्य एव गन्धशब्दो न तत्स्थगुणवचन इति चेत्। न। "पिनष्टी"ति प्रयोगे हि "गन्धा"मिति न गुणशब्दः, मालतीकुसुमादिषु गन्धशब्दप्रयोगदर्शनात्। किंतु चन्दनत्वादिजातिनिमित्तकोऽन्य एव सः। तरमाच्चन्दनगन्ध इत्यादौ तत्स्थत्वं सुस्थमेव। एवं "घटरूप"मित्यादावपि। नन्वेवमपि "बलाकायाः शौक्ल्यं", "केशस्य नैल्य"मित्यादावतिप्रसङ्ग इति चेत्। अत्राहुः--"गुणिवचनादुत्पन्नस्य शुक्लादिगुणस्यैवाभिधानात्तद्वाचतपदानां गुणिसामानाधिकरण्यसत्त्वान्न दोषः। तथा च प्राधान्येनाऽप्रधान्येन वा द्रव्याऽप्रति पादकत्वे सति गुणप्रतिपादकत्वंम तत्स्थगुणमित्यर्थ इति। फलानामिति। करणस्य शेषत्वविवक्षायां षष्ठी।

स्वरे विशेष इति। "तत्पुरुषे तुल्यार्थे"ति पूर्वपदप्रकृतिस्वरं बाधित्वा "थाथा"दिसूत्रेणान्तोदात्तत्वे प्राप्ते तदपवादेन "तृतीया कर्मणी"त्यनेन पूर्वपदप्रकृतिस्वरे सत्याद्युदात्त इष्टः, षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्तच्च नेष्यत इचि भावः। तृपिश्च सकर्मकोऽप्यस्ति" "पितृ()नताप्सींत्सममंस्त बन्धू"निति भट्टिप्रयोगातो। तेनाऽस्मात्कर्मणि क्तोस नास्तीति न शङ्कनीयम्। द्विजस्य कुर्वन्कुर्वाण इति। नेयं घटाद्यपेक्षया षष्ठी, "द्विजस्य घटं कुर्व"न्निति। तथा हि सत्यसामथ्र्यादेव समासाऽप्रसक्ती निषेधोऽयं व्यर्थः स्यादतो व्याचष्टे--किङ्कर इत्यर्थ इति। ब्राआह्णस्य कृत्वेति। तादथ्र्यरूपसंबन्धस्य सामान्यरूपेण विवक्षायां षष्ठी। भाह्णसंबन्धिनी या क्रिया तदनन्तरमित्यर्थः। कृदव्ययमेवेति। "अनेकमन्यपदार्थे"इति सूत्रे "सर्वपश्चा"दिति भाष्यप्रयोगादिति भावः। इत्यादिति। तथा च भट्टिः प्रायुङ्क्त--"यत्कृतेऽरीन्निगृह्णीमः"। "आदेयाः किङ्कृते भोगाः कुम्भकर्ण। त्वया विना"इति। रक्षित इति। कैयटहरदत्तौ त्वव्ययप्रतिषेधे "वृक्षस्योपरी"त्युदाहरन्तावकृदव्ययेनापि निषेधं मन्येते, तौ च प्रागुक्तभाष्यप्रयोगविरोधादुपेक्ष्याविति भावः। तव्यता तु भवत्येवेति। सूत्रे निरनुबन्धग्रहणादिति भावः। स्वकर्तव्यमिति। कर्तृषष्ठ()आ समासः। स्वरे भेद इति। कृदत्तरपदप्रकृतिस्वरेण तित्स्वरस्यावस्थानादन्तस्वरित इष्टः। तव्येन तु समासे मध्योदात्तत्वं स्यात्तच्च नेष्यत इति भावः। सोऽप्यनेनेति। षष्ठीसमासेन "पोटायुवती"ति समासो वारितः, सोऽपि षष्ठीसमासः "प#ऊरणगुणे"त्यनेन वार्यत इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्तेन १।३ १३ च ० पूजायाम् ७।१ न ० १० षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

क्तेन च पूजायाम् २।२।१२

मतिबुद्धिपूजाऽर्थेभ्यश्च ३।२।१८८ इति वक्ष्यति, तस्य इदं ग्रहणम्। पूजाग्रहणम् उपलक्षणार्थम्। क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। पूजायाम् इति किम्? छात्रस्य हसितम् छात्रहसितम्।

न्यासः

क्तेन च पूजायाम्। , २।२।१२

""मतिबुद्धिपूजार्थेभ्यश्च" इति वक्ष्यति"इति। क्तमिति वाक्यशेषः। "तस्येदं ग्रहणम्" इति। "मतिबुद्धि" ३।२।१८८ इत्यादिना सूत्रेण यो विहितः क्तः, तस्य पूजायामन्यत्र च सर्वस्य विहितस्येदं ग्रहणम्। न केवलं पूजायां यो विहितस्त्सयैवेष्यत इत्यभिप्रायः। अत एवाह-- "पूजाग्रहणमुपलक्षणार्थम्" इति। कस्योपलक्षणार्थम्? "मतिबुद्धि" ३।२।१८८ इत्यादौ सूत्रे निर्दिष्टार्थस्य यः क्तो विधीयते तस्य मत्यादेः। तेन न केवलं पूजायां यः क्तो विहितस्तेन षष्ठीसमासप्रतिषेधो भवति, अपि तु मतिबुद्धयोरपि यो विहितस्तेनापि। "राज्ञां मतः" इति। "क्तस्य च वत्र्तमाने" २।३।६७ इति षष्ठी। पूजायां किम्? छात्रस्य हसितं छात्रहसितम्। "नपुंसके भावे क्तः" ३।३।११४ शेषलक्षणा षष्ठी॥

बाल-मनोरमा

क्तेन च पूजायाम् ६९७, २।२।१२

क्तेन च। अत्र पूजाग्रहणं "मतिबुद्धिपूजार्थेभ्यश्चे"ति सूत्रोपलक्षणं। तदाह--मतिबुद्धीति सूत्रेणेति। राज्ञा मतो बुद्धः पूजितो वेति। राज्ञा इष्यमाणो ज्ञायमानः पूज्यमान इति क्रमेणार्थः। "मतिबुद्धिपूजार्थेभ्यश्चे"ति वर्तमाने क्तः। "क्तस्य च वर्तमाने" इति षष्ठी। नन्वेवं सति "राजपूजितः" "राजमतः" "राजबुद्ध" इति कथं समास इत्यत आह-राजपूजित इत्यादाविति।

तत्त्व-बोधिनी

क्तेन च पूजायाम् ६१९, २।२।१२

क्तेन पूजायाम्। सूत्रे उपलक्षणं पूजाग्रहणं, व्याख्यानादित्याह--मतिबुद्धीति। राज्ञामिति। "क्तस्य च वर्तमाने"इति कर्तरि षष्ठी। भूत इति। न च तक्रकौण्डिन्यायेन मत्यादिब्यः क्तस्य वर्तमानकालो भूतकालतां बाधत इति वाच्यं, "तेनैकदि"दित्यतः "तेन" इत्याधिकारे "उपज्ञाते"इति निर्देशेन भूतकालस्याऽबाधज्ञापनात्। "उपज्ञाते"इत्यत्र हि भूते क्तो, न तु वर्तमाने। अन्यथा "क्तस्य च वर्तमाने"इति षष्ठीविधानादुपज्ञतशब्दस्य तेनेति। तृतीयायोगो न स्यात्। न चैवमपि ज्ञानार्थेष्वेव ज्ञापकत्वमस्त्विवति वाच्यं, "पूजितोः यः सुरासुरैः"इति प्रयोगानुरोधेन सामान्यविषयज्ञापकत्वस्यैव न्याय्यत्वात्। अन्ये तु कारकषष्ठ()आ एव समासनिषेधोऽयम्, शेषषष्ठ()आ तु समासः स्यादेवेत्याहुः। एतेन "कलहं स राममहितः कृतवा"निति सभट्टिप्रयोगो व्याख्यातः। "राममहितः स, कलहं कृतवा"नित्यन्वयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अधिकरणवाचिना ३।१ च ० क्तेन १।३ १२ न ० १० षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

अधिकरणवाचिना च २।२।१३

क्तो ऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३।४।७६ इति वक्ष्यति, तस्य इदं ग्रहणम्। अधिकरणवाचिना क्तेन षष्ठी न समस्यते। इदम् एषां यातम्। इदम् एषाम् भुक्तम्।

न्यासः

अधिकरणवाचिना च। , २।२।१३

"इदमेषामासिम्" इति। अस्यतेऽस्मिन्नित्यधिकरणे क्तः। "अधिकरणवाचनिश्च" २।३।६८ षष्ठी। एवं पीतमित्यादावपि। अधिकरणवाचिनेति किम्? छात्रस्()य हसितं छात्रहसितमिति॥

बाल-मनोरमा

अधिकरणवाचिना च ६९८, २।२।१३

अधिकरण। शेषपूरणेन सूत्रं व्याचष्टे-क्तेनेति। इदमेषामासितं शयितं गतं भुक्तं वेति। "क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इत्यधिकरणे क्तः। "अधिकरणवाचिनश्चे"ति षष्ठी।

तत्त्व-बोधिनी

अधिकरणवाचिना च ६२०, २।२।१३

अधिकरणवाचिना च।"वाचि"द्रहणं चन्त्यप्रयोजनमिति हरदत्तादयः। इदमेषामिति। "क्तोऽधिकरणे चे"त् क्तः। "अधिकरणवाचिनश्चे"ति कर्तरि षष्ठी। "अधिकरणे चे"त्येव सिद्धे सूत्रद्वयेऽपि "वाचि"ग्रहणं स्पष्टार्थमित्याहुः। ननु "किवृत्तं "यद्वृत्त"मित्यत्र न कर्मणि क्तः, वृतेरकर्मकत्वात्। तथा चाधिकरणक्तान्तेन कथमिह समास इतिचेत्। मैवम्। नायमधिकरणे क्तः, किं तु "गत्यर्थाकर्मके"ति कर्तरि। किमा वृत्तं निष्पन्नमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्मणि ७।१ १५ च ० न ० १० षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
कर्मणि च २।२।१४

क्तेन इति निवृत्तम्। कर्मग्रहणं षष्ठीविशेषणम्। कर्मणि च या षष्ठी सा न समस्यते। उभयप्राप्तौ कर्मणि २।३।६६ इति षष्ठ्या इदं ग्रहनम्। आश्चर्यो गवां दोहो ऽगोपालकेन। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना।
न्यासः
कर्मणि च। , २।२।१४

""उभयप्राप्तौ कर्मणि" २।३।६६ इत्यस्याः षष्ठ()आ इदं ग्रहणम्" इति। एतच्च् पुनः "कत्र्तरि चट २।२।१६ इति प्रतिषेधाद्विज्ञायते। यदि हि कर्मणि या काचित् षष्ठी तस्याः सर्वस्या इदं ग्रहणं स्यात् तदा "कत्र्तरि च" २।२।१६ इति पुनः प्रतिषेधं न कुर्यात्; अनेनैव सिद्धत्वात्। यत्र हि कत्र्तरि तृजकौ विहितौ तत्र नियोगतः कर्मणि षष्ठ()आ भवितव्यम्। तस्मात् "कत्र्तरि च" २।२।१६ इति पुनः प्रतिषेधवचनादुभयप्राप्तौ कर्मणि या षष्ठी विहिता तस्या अत्र ग्रहणमवसीयते। "उभयप्राप्तौ कर्मणि" २।३।६६ इति षष्ठ()आ इह ग्रहणादिध्मव्रश्च्नः; पलाशशातनः, इक्षुभक्षिकां मे धारयसीति समासनिषेधो न भवति॥
बाल-मनोरमा
कर्मणि च ६९९, २।२।१४

कर्मणि च। क्तेनेति निवृत्तम्। कर्मणि या षष्ठी सा न समस्यते इत्यर्थे अपां रुआष्टेत्यादावपि निषेधसिद्धेः "तृजकाभ्यां कत्र्तरी"ति व्यर्थं स्यात्। किं तु चकार इतिपर्यायः। कर्मणीति सप्तम्येकवचनमुच्चार्य यां षष्ठी विहिता सा न समस्यत इत्यर्थः। फलितमाह--उभयेत्यादिना। आश्चर्य इति। यद्यप्यत्र "कर्तृकर्मणोः कृती"त्येव कर्मणि षष्ठी, न तु "उभयप्राप्तौ कर्मणी"ति सूत्रेण, तस्य सूत्रस्य कर्मण्येव षष्ठी, न तु कर्तरीति नियमपरत्वात्, तथापि नियमसूत्राणां विधिरूपेण निषेधरूपेण च द्वेधा प्रवृत्तेः स्वीकारान्न दोषः। "शब्दानुशासन"मित्यत्र तु वस्तुत आचार्यस्य कर्तृत्वेऽपि तस्यानुपादानादुभयप्राप्तावित्यस्याऽप्रवृत्तेर्नायं निषेधः, "कृत्वोऽर्थप्रयोगे" इत्यनुवृत्त्या कर्तृकर्मणोरुभयोः प्रयोग एव तस्य प्रवृत्तेः। यद्वा शेषे विभाषा अविशेषेण विभाषेत्याश्रित्य उभयप्राप्तावित्यभावपक्षे "कर्तृकर्मणोः कृती"त्येव षष्ठ्याः प्राप्तेर्नायं निषेध इत्यलम्।

तत्त्व-बोधिनी

कर्मणि च ६२१, २।२।१४

कर्मणि च। क्तेनेति नानुवर्तते, "क्तेन च पूजाया"मति निषेधवैयश्र्यप्रसङ्गात्। षष्ठी त्वनुवर्तते, किंतु सापि या काचित्कर्मणि षष्ठी न गृह्रते। "अपां रुआष्टे"त्यादावनेनैव सिद्धौ "तृजकाभ्यां कर्तरी"ति निषेधवैयश्र्यापत्तेः। किं च "इध्मव्रश्चनः"इत्यादौ समाससिद्धये वचनं कर्तव्यं स्यात्। न च "कृद्योगलक्षमा षष्ठी समस्यते"इति वार्तिकमस्त्येवेति वाच्यं, तस्य सिद्धान्ते प्रत्याख्यानात्। ततश्च निपातानामनेकार्थत्वादितीत्यर्थे चशब्दोऽयं, तदाह कर्मणीति या षष्ठीति। सप्तम्येकवचनान्तं पदमुच्चार्य या षष्ठी विहिता परिषेषिता वेत्यर्थः। मियमसूत्राणां विधिरूपेण निषेधरूपेण वेति द्वेधा प्रवृत्तेः स्वीकृतत्वात्। गवां दोह इति। "अगोपेने"त्युपन्यासस्त्विह उभयप्राप्तिप्रदर्शनार्थः। अथ कथं "शब्दानुशासन"मिति()। अत्र व्याचख्युः--शब्दानामितीयं षष्ठी "कर्तृकर्मणो"रिति विहिता, न तु "उभयप्राप्तौ"इत्यनेन, आचार्यस्य कर्तुः वस्तुतः सत्त्वेऽपीहानुपादानात्। "कृत्वोर्थप्रयोगे---"इत्यतः "प्रयोगे" इत्यनुवर्तनात्कर्तृकर्मणोरूपादान एवायं नियम इति स्वीकारात्। "आश्चार्यो गवां दोहोऽगोपेने"त्यत्र हि आश्चर्यं प्रतिपाद्यं तच्च यद्यशिक्षितो दोग्धा दुर्दोहा गावश्च दोग्धव्यास्तदैव निर्वहति न त्वन्यथा। अतः कर्तृकर्मणोर्विशिष्योपादानादस्तूभयप्राप्तिः, इह तु "शब्दानामिदमनुशासनं, न त्वर्थाना"मित्यर्थनिवृत्तिपरं वाक्यं, न तु कर्तृविशेषनिवृत्तिपरमतो नास्त्युभयप्राप्तिः। अस्तु यथाकथंचिदुभयप्राप्तिः, तथापि न क्षतिः, "उभयप्राप्तौ"इति सूत्रे "अविशेषेणविभाषे"ति पक्षस्यापि विद्यमानतया नियमाऽप्रवृत्तिपक्षे"आचार्यस्य शब्दानुसासनमि"ति प्रयोगसम्भवात्। यदि वा शेष लक्षणा षष्ठीति व्याख्यायते, तदा तु समासनिषेधशङ्कैवात्र नास्तीति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तृजकाभ्यां ३।२ (अका) ३।१ १७ कर्तरि ७।१ कर्मणि ७।१ १४ न ० १० षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

तृजकाभ्यां कर्तरि २।२।१५

कर्तृग्रहणं षष्ठीविशेषणम्। कर्तरि या षष्ठी सा तृचा अकेन च सह न समस्यते। भवतः शायिका। भवत आसिका। भवतोऽग्रगामिका। तृच् चर्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी न अस्ति। तस्मात् तृज्ग्रहनम् उत्तरार्थम्। कर्तरि इति किम्? इक्षुभक्षिकां मे धारयसि।

न्यासः

तृजकाभ्यां कत्र्तरि। , २।२।१५

भवतः शायिकेत्यादौ भावे "पर्यायार्हणोत्पत्तिषु ण्वुच्"३।३।१११ भवतीति " कर्तृकर्मणो कृति" २।३।६५ इति कत्र्तरि षष्ठी। तृचा योगे कत्र्तरि षष्ठी नास्ति, तेनैव कर्त्तृरभिहितत्वात्। तर्हि किमर्थं तृचो ग्रहणमित्याह-- "तस्मत्" इत्यादि। "इक्षुभक्षिकां मे धारयति" इति। पूर्ववण्ण्युच्। अत्रेक्षुशब्दात् कृद्योगे कर्मणि षष्ठी। "मे"इति कत्र्तरि षष्ठी कृद्योगैव। "उभयप्राप्तौ कर्मणि" २।३।६६ इत्यत्र न प्रवर्तते; "अकाकारयोः प्रतिषेधः" (वा।१४३) इति वचनात्॥

बाल-मनोरमा

तृजकाभ्यां कर्तरि ७००, २।२।१५

तृजकाभ्यां कर्तरि। कर्तरीति तृजकयोरेव विशेषणं, श्रुतत्वात्, नतु षष्ठ्याः। तदाह--कत्र्रर्थतृजकाभ्यामिति। अपां रुआष्टा वज्रस्य भर्तेति। "ण्वुल्तृचौ" इति कर्तरि तृच्। "कर्तृकर्मणोः" इति कर्मणि षष्ठी। एवमोदनस्य पाचक इति पचेः कर्तरि ण्वुल्। अकादेश इति विशेषः। इक्षुभक्षिकेति। "स्त्रियां क्ति"न्नित्यदिकारे धात्वर्थनिर्देसे ण्वुल्। कर्मणि षष्ठ()आ समासः। "कर्मणि चे"ति निषेधस्तु न, कर्तुः प्रयोग एव तत्प्रवृत्तेः। ननु भुवो भर्ता भूभर्तेत्यत्रापि निषेधः स्यात्। न च भर्तृशब्दस्य याजकादौ पाठाद्भवत्येव षष्ठीसमासः, "याजकादिभिश्चे"त्यस्य प्रतिप्रसवार्थत्वादिति वाच्यम्, एवं तति "वज्रस्य भर्ते"त्यत्रापि समासप्रसङ्गादित्यत आह--पत्यर्थेति। याजकादौ पत्यर्थकस्यैव भर्तृशब्दस्य ग्रहणं, व्याख्यानात्। ततश्च "वज्रस्य भर्ते"त्यत्र "याजकादिभिश्चे"ति समासो नेति भावः। कथं तर्हीति। त्रायाणां भुवनानां समाहारस्त्रिभुवनं। "तद्धितार्थे"ति द्विगुः। "अकारान्तोत्तरपदो द्विगुः स्त्रिया"मिति तु न भवति, "पात्राद्यन्तस्य ने"त्युक्तेः। "त्रिभुवनस्य विधाते"ति तृचो योगे कथं कर्मणि षष्ठ()आ समास इत्याक्षेपः। परिहरति--शेषषष्ठ()एति। प्रत्यासत्या कारकषष्ठ()आ एवायं निषेध इति बहुष्विति सूत्रे कैयट आहेत्यर्थः।

तत्त्व-बोधिनी

तृजकाभ्यां कर्तरि ६२२, २।२।१५

तृजकाभ्यामिह "कर्तृषष्ठ()आ तृजकाभ्या"मिति वृत्तिकारव्याख्यानमयुक्तमिति ध्वयन्नाह--कत्र्रपर्थतृजकाभ्यामिति। "कर्तृ"ग्रहणं तृजकयोरेव विशेषणमिति युक्तं, तयोः श्रुतत्वात्, न तु षष्ठ()आ इति भावः। यद्यपि "कर्तरी"ति तृचो न विशेषणमव्यभिचारात्, तथाप्यकस्य विशेषणत्वेन तदावश्यकमित्याह--इक्षुभक्षिकेति। "पर्यायार्हणे"ति भावे ण्वुच्। कर्मणि षष्ठ()आ समासः। ननु "वज्रस्य भर्ते" त्युदाहरणयुक्तम्, भर्तृशब्दस्य याजकादित्वेन समासाऽवश्यम्भावादित्याशङ्क्याह--पत्यर्थभर्तृशब्दस्येति। यद्यपि याजकादिष्वर्थविशेषविशिष्टतया भर्तृशब्दो न पठितः, तथापि रूढेर्बलीयस्त्वात्पतिपर्यायस्यैव तत्र ग्रहणम्, न तु यौगिकस्येति भावः। शेषषष्ठ()एति। न्यासकारस्तु तृन्नन्तमेतत् "न लोके"ति निषेधस्त्वनित्यः, "त्रकाभ्या"मिति वक्तव्ये तृचः सानुबन्धग्रहणाज्ज्ञापकादित्याह। केचुत्तु--"जनिकर्तुः", "तत्प्रयोजको हेतुश्चे"ति निर्देशादनित्योऽयं समासनिषेधैत्याहुः। तन्मन्दम्। शेषषष्ठीसमासेनोक्तनिर्देशोपपत्तेः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तरि ७।१ च ० अका ३।१ १५ न ० १० षष्ठी १।१ ८ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

कर्तरि च २।२।१६

कर्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते। सामर्थ्यादकस्य विशेषणार्थं कर्तृग्रहणम्, इतरत्र व्यभिचाराभावात्। अपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता। ननु च भर्तृशब्दो ह्ययं याजकादिषु पठ्यते? सम्बन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहनम्। अकः खल्वपि ओदनस्य भोजकः। सक्तूनां पायकः।

न्यासः

कत्र्तरि च। , २।२।१६

"इतरत्र व्यभिचाराभावात्" इति। तृचि। सामथ्र्यादकस्येदं विशेषणम्। कर्त्()तृग्रहणमित्यत्र हेतुः। सम्भवव्यभिचारे हि विशेषणविशेष्यभावो भवति। न हि तृच् कत्र्तारं व्यभिचरति; तस्य कत्र्तर्यैव विधानात्। अकस्तु व्यभिचरति; तस्य भावेऽपि विधानात। अतः सामथ्र्यादकस्यैव विशेषणं कर्तृग्रहणम्; न तृचः। "अपां स्रष्टा" इति। अपामैति कर्मणि षष्ठी। "अपां स्रष्टा" इति तृच्; व्रश्चादिना [८।२।३६](#) षत्वम्। "सृजिदृशोर्झल्यमकिति" [६।१।५७](#) इत्यमागमः। "ननु च" इत्यादि। याजकादिपाठाद्भवितव्यमेवात्र समासनेनेत्यभिप्रायः।"सम्बन्धिशब्दस्य" इत्यादिना परीहारः। होतृशब्देन सम्बन्धिशब्देन सम्बन्धिशब्देन साहचर्याद्भवर्तृशब्दोऽपि सम्बन्धिशब्दस्तत्र गृह्रते; अयन्तु क्रियाशब्दः-- बिभत्र्तीति भत्र्ता। "सक्तूनां पायकः" इति। "आतो युक् चिण्कृतोः" [७।३।३३](#) इति युक्। अथ किमर्थं तृचः सानुबन्धकस्योच्चारमम्? तृनो निवृत्त्यर्थमिति चेत्, नैतदस्ति; तद्योगे "न लोकाव्ययनिष्ठा" [२।३।६९](#) इत्यादिना षष्ठीप्रतिषेधात्। एवं तह्र्रेतदेव ज्ञापकम्--तृन्योगेऽपि क्वचित् भवतीति। तेन "भीष्मः कुरुणां भशोकहत्र्ता" इत्यादि सिद्धं भवति॥

बाल-मनोरमा

कर्तरि च ७०१, २।२।१६

कर्तरि च। कर्तरीत्येतत्षष्ठीत्यनुवृत्तेऽन्येति। तदाह--कर्तरि षष्ठ()आ इति। अकेनेति। "तृजकाभ्यां कर्तरी"त्यतस्तदनुवृत्तेरिति भावः। भवतः शायिकेति। "स्त्रियां क्ति"न्नित्यधिकारे धात्वर्थनिर्देशे ण्वुल्, अकादेशः, टाप्। "कर्तृकर्मणो"रिति कर्तरि षष्ठी। अत्र अकस्य कत्र्रर्थकत्वाऽभावात् "तृजकाभ्या"मित्यस्य न प्राप्तिः। ननु पूर्वसूत्रे "तृजकाभ्या"मिति समस्तपदोपादानात्कथमिहाऽकस्यैवानुवृत्तिः, न तु तृच इत्यत आह-नेहेति। तद्योगे इति। तृचः कर्तरि विहितत्वेन "स्रष्टां कृष्ण" इत्यादौ कर्तुः कृताभिहिततया तत्र कर्तरि षष्ठ()आ एवाऽप्रसक्त्या तत्समासनिषेधस्य "शशश्रृङ्गेण कण्डूयनं न कर्तव्य"मितिवदसंभवपराहतत्वादित्यर्थः।

तत्त्व-बोधिनी

कत्र्तरि च ६२३, २।२।१६

नेह तृजिति। न चोत्तरार्थत्वं शङ्क्यम्। तृच्क्रीडाजीविकयोर्नास्तीति जयादित्येनोक्तत्वादिति भावः। व्वामनस्तु--"अके जीविकार्थे" इत्यत्र "अतके" इति किम्()। "रमणीयकते"ति प्रत्युदाहरञ्जीविकायां तृचमिच्छति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नित्यं १।१ [१९](#) क्रीडाजीविकयोः ७।२ अका ३।१ [१५](#) षष्ठी १।१ [८](#) तत्पुरुषः १।१ [२।१।२१](#) सह ० [२।१।४](#) सुपा ३।१ [२।१।४](#) समासः १।१ [२।१।३](#) सुप् १।१ [२।१।२](#)

काशिका-वृत्तिः

नित्यं क्रीडाजीविकयोः २।२।१७

न इति निवृत्तम्, न तृजकौ। नित्यं समासो विधीयते। क्रिडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो

भवति। तृच् क्रिडाजीविकयोर् न अस्ति इत्यक एव उदाह्रियते। उद्दालकपुष्पभञ्जिका। वारनपुष्पप्रचायिका। जीविकायाम् दन्तलेखकः। नखलेखकः। क्रिडाजीविक्योः इति किम्? ओदनस्य भोजकः।

न्यासः

नित्यं क्रीडाजीविकयोः। , २।२।१७

"उद्दालकपुष्पभञ्जिका" इति। "रोगाख्यायां ण्वुल् बहुलम्" ३।३।१०८ इत्यनुवर्त्तमाने "संज्ञायाम्" ३।३।१०९ इति ण्वुल्। उद्दालकपुष्पादिषु कर्मणि षष्ठी। "दन्तलेखकः, नखलेखकः" इति। "ण्वुल्तृचौ"३।१।१३३ इति ण्वुल्। क्रीडायां विषये "षष्ठी" २।२।८ इति सूत्रेण महाविभाषया विकल्पेन समासे प्राप्ते जीविकायाञ्च "कत्र्तरि च" २।२।१६ इति निषेधे प्राप्तेऽयमारम्भः। तत्र नित्यग्रहणं किमर्थम्? जीविकार्थम्। इतरत्र त्वारम्भसामथ्र्यान्नित्योऽयं भविष्यति। जीविकायां त्वसति नित्यग्रहणे महाविभाषाधिकाराद्विकल्पेन समासः स्यादिति तदर्थं नित्यग्रहणं कृतम्, उत्तरार्थञ्च॥

बाल-मनोरमा

नित्यं क्रीडाजीविकयोः ७०२, २।२।१७

नित्यं क्रीडा। उद्दालकपुष्पभञ्जिकेति। उद्दालकः=श्लेष्मातकः, तस्य पुष्पाणि, तेषां भञ्जनमित्यस्वपदविग्रहः। संज्ञायामिति। "स्त्रियां क्तिन्" इत्यधिकारे "संज्ञाया"मिति भावे ण्वुलित्यर्थः। अत्र कर्मणि षष्ठ्याः समासः। वस्तुतस्तु "स्त्रियां क्ति" न्नित्यधिकारे "धात्वर्थनिर्देशे ण्वु"लिति भावे ण्वुलित्येव युक्तम्। "संज्ञाया"मिति त्वधिकरणार्थमिति कृदन्ते वक्ष्यते। तथा सति उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति विग्रहः। जीविकायामिति। उदाहरणं वक्ष्यत इत्यर्थः। दन्तलेखक इति। दन्तानां लेखनेन जीवतीत्यस्वपदविग्रहः। लिखेः कर्तरि ण्वुल्। अकादेशः। जीविका समासगम्या। ननु "षष्ठी"ति सूत्रेणैवात्र षष्ठीसमाससिद्धेः किमर्थमिदमित्यत आह--तत्रेति। तत्र=तस्मिन्नुदाहरणद्वये, क्रीडाबाधके "उद्दालकपुष्पभञ्जिके"त्यत्र विभाषाधिकारात् षष्ठीसमासनिषेधे प्राप्ते, जीविकाबोधकेतु "दन्तलेखक" इत्यत्र "तृजकाभ्याम्" इति षष्ठीसमासनिषेधे प्राप्ते इदं सूत्रमारब्धमित्यर्थः।

तत्त्व-बोधिनी

नित्यं क्रीडैजीविकयोः ६२४, २।२।१७

नित्यंक्री। भावे ण्वुलिति। भञ्जनं भञ्जिता। "पुष्पाणा"मिति कर्मणि षष्ठी। "भावे"इत्युपलक्षणम्, अधिकरणे ण्वुल्यपि बाधकाभावादिति मत्वा "संज्ञाया"मिति सूत्रे कृदन्ते मनोरमायामुक्तम् "उद्दालकः श्लेष्माकतसत्स्य पुष्पाणि भज्यनते यस्यां क्रीडायां सा उद्दालकपुष्पभञ्जिके"ति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कुगतिप्रादयः १।३ नित्यं १।१ १७ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

कुगतिप्राऽदयः २।२।१८

नित्यम् इति वर्तते। कुशब्दो ऽव्ययं गृह्यते गत्यादिसाहचर्यात्, न द्रव्यवचनः। कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति। कुः पापार्थे कुपुरुषः। गति उररीकृतम्। यदूरीकरोति। प्रादयः दुर्निन्दायाम् दुष्पुरुषः। स्वती पूजायाम् सुपुरुषः। अतिपुरुषः। आङीषादर्थे आपिङ्गलः। प्रायिकं च एतदुपाधिवचनम्। अन्यत्र अपि हि समासो दृश्यते। कोष्णम्। कदुष्णम्। कवोष्णम्। दुष्कृतम्। अतिस्तुतम्। आबद्धम् इति। प्रदयो गताद्यर्थे प्रथमया। प्रगत आचार्यः प्राचार्यः। प्रान्तेवासी। अत्यादयः क्रान्ताद्यर्थे द्वितीयया। अतिक्रान्तः खट्वाम् अतिखट्वः। अतिमालः। अवादयः क्रुष्टाद्यर्थे तृतीयया। अवक्रुष्टः कोकिलया अवकोकिलः। पर्यादयो ग्लानाद्यर्थे चतुर्थ्या। परिग्लानो ऽध्ययनाय पर्यध्ययनः। अलं कुमार्यै अलंकुमारिः। निरादयः क्रान्ताद्यर्थे पञ्चम्या। निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। निर्वाराणसिः। इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्। वाससी इव। वस्त्रे इव। प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः। वृक्षं प्रति विद्युत्। साधुर्देवदत्तो मातरं प्रति।

लघु-सिद्धान्त-कौमुदी

कुगतिप्रादयः ९५२, २।२।१८

एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः॥

न्यासः

कुगतिप्रादयः। , २।२।१८

"कुशब्दोऽव्ययं परिगृह्रते" इति। अलिङ्गसंख्यत्वादव्ययत्वम्, न तु निपातेषु पाठात्। न ह्रयं तत्र पठ()ते। "न द्रव्यवचनः" इति। पृथिव्यादौ यो द्रव्ये वत्र्तते तस्यात्र ग्रहणं न भवति। कुत एतदित्याह-- "गत्यादिभिः साहचर्यात्" इति। गतार्थम्। "कोष्णम्" इति। "ईषदर्थे च" ६।३।१०४ इति कोः कादेशः। "कवोष्णम्" इति। "कव()?चोष्णे" ६।३।१०६ इति कवादेशः। "कदुष्णम्" इति। "कोः कत्तत्पुरुषेऽचि" ६।३।१०० इति कत्। "कुपुरुषः" इति पापार्थे। "दुष्कृतम्" इति। "दुस्" कृच्छ्रार्थे वत्र्तते। "इदुदुपधस्य चाप्रत्ययस्य" ८।३।४१ इति षत्वम्। "{नास्ति काशिकायाम्; पदमञ्जर्यां दृश्यते-- सुष्टुतम् इति।}सुस्तुतम्" इति। सुशब्दोऽतिशये वत्र्तते। "अतिस्तुतम्" इति। अतिरक्रमणे। "{आबद्धम्-काशिका}आविद्धम्" इति। आङ क्रियायोगे, मर्यादायां वा। "पर्यायदयो ग्लानाद्यर्थे" इति। पर्यादिराकृतिगणः। "पर्यध्ययनः" इति। परिग्लानोऽध्ययनायेत्यर्थः। "वापसी इव" इत्यादि। "सर्वधातुभ्योऽसुन्" (द।उ।९।४९) इत्यनुवत्र्तमाने "वसेर्णिच्च" (द।उ।९।७७) इत्यसुन्प्रत्ययान्तो वासःशब्दो व्युत्पादितः, वस्त्रशब्दोऽप्यौगणादिकष्ट्रन्प्रत्ययान्तः, तेन द्वावप्येतौ "ञ्नत्यादिर्नित्यम्" ६।१।१९१ इत्याद्युदात्तौ। "प्रादिप्रसङ्गे" इत्यादि। प्रादिग्रहणे यः प्रसङ्गः समासशास्त्रस्य तत्र कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- लक्षणादिष्वर्थेषु कर्मप्रवचनीयसंज्ञा भवति। न च तेऽर्थाः समासेन गम्यन्त इत्यनभिधानात् कर्मप्रवचनीयानां समासो न भवति। यत्र तेऽर्था गम्यन्ते तत्र भवत्येव समासः -- अतिस्तुतमिति॥

बाल-मनोरमा

कुगतिप्रादयः ७५०, २।२।१८

कुगतिप्रादयः। समस्यन्त इति। स तत्पुरुष इत्यपिज्ञेयम्। कुत्सितः पुरुष इति। नित्यसमासत्वादस्वपदविग्रहः। कुत्सितार्थकस्य "कु" इत्यव्ययस्यैवात्र ग्रहणं, न तु पृथ्वी पर्यायस्य, गत्वादिसाहचर्यात्। गतिश्चेत्यनुवर्तमान इति। क्रियायोग इति चेति बोध्यम्।

तत्त्व-बोधिनी

कुगति प्रादयः ६६४, २।२।१८

कुगति। "कु"शब्दोऽत्राव्ययं गृह्रते, न तु पृथिवीवाचको, गत्यादिसाहचर्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपपदम् १।१ २२ अतिङ् १।१ नित्यं १।१ १७ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः
उपपदम् अतिङ् २।२।१९

नित्यम् इति वर्तते। उपपदम् अतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति। कुम्भकारः। नगरकारः। अतिङिति किम्? एधानाहारको व्रजति। ननु च सुप् सुपा इति वर्तते, तत्र कुतस् तिङन्तेन समासप्रसङ्गः? एवं तर्हि ज्ञापयति एतयोर् योगयोः सुप् सुपेति न सम्बध्यते इति। तेन गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इत्येतदुपपन्नं भवति। अश्वक्रीती। अश्वक्रीती। धनक्रीती।
लघु-सिद्धान्त-कौमुदी
उपपदमदिङ् ९५७, २।२।१९

उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भम् करोति कुम्भकारः। अतिङ् किम्? मा भवान् भूत्। माङि लुङिति सप्तमीनिर्देशान्माङुपपदम्। (प।) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः। व्याघ्री। अश्वक्रीती। कच्छपीत्यादि॥
न्यासः
उपपदमतिङ्। , २।२।१९

"एधानाहारको व्रजति" इति। "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ३।३।१० इति ण्वुल्। "एतयोर्योगयोः सुप्सुपेति "{न सम्बध्यते इति मूलपाठः} नाभिसम्बध्यते" इति। ननु चास्मिन्नव योगे तदनभिसम्बन्दो युक्तो यत्रातिङ्ग्रहणमस्ति, न तु पूर्वसूत्रेण, न हि तत्रातिङित्येतदस्ति? एवं मन्यते-- "अतिङ" इति योगविभागः क्रियते, स च पूर्वसूत्रस्यापि शेषभूतो विज्ञायते। नन्वेवमप्यतिङिति प्रथमान्तेन निर्देशात् प्रथमान्तस्यैव सुबित्यस्य निवृत्तिर्युक्ता, न तृतीयान्तस्य सुपेत्यस्य? नैतदस्ति; समान्येन सुबधिकारनिवृत्त्युपलक्षणार्थत्वायुक्ता द्वयोरपि निवृत्तिः। "तेन" इत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। पूर्वयोगेऽप्यतिङ्ग्रहणात् "गत्युपसर्गसंज्ञकानांकृद्भिः सह प्राक् सुबुत्पतेः समासो भविष्यति" (व्या।प।१३८) इत्येतदुपपन्नं भवति। तथा हि तत्र गतयः कृद्भिः सह समस्यन्ते, अस्मिंस्तु योगेऽतिङ्ग्रहणात् कारकोपपदानां कृद्भिः समासः सुबुत्पत्तेः प्रागुपपन्नो भवति। तथा ह्रत्र कारकं कृद्भिः सह समस्यते प्राक् सुबुत्पत्तेः। समासे सति यदिष्टं सिध्यति तद्दर्सयन्नाह-- "अ()आक्रीती" इति। अत्रा()आः करणं कारकम्, तद्वाचिनोऽ()आशब्दस्य "कर्तृकरणे कृता बहुलम्" २।१।३१ इति समासः। सुबुत्पत्त्यां स्तायं यदि स समासः स्यात् तदा प्रागन्तरङ्गत्वाट्टाप स्यात्, ततः सुप्, पश्चात् समासः, ततश्च "क्रीतात् करणपूर्वात्" ४।१।५० इति ङीष् न स्यात् ; अत इत्यधिकारात्। ङीषस्त्ववकाशः--धनेन क्रीतं क्रयणं यस्याः। प्राक्सुबुत्पत्तेः समासे सति टाप्न क्रियते, प्रथमतः समास एव भवति, तेनादन्तत्वान्ङीष् सिद्धो बवति। कथं पुनर()आदेरुपपदत्वम्। यावता द्वितीयधात्वधिकारे सप्तम्या निर्देशः कृतः? नैष दोषः; न हि द्वितीयधात्वधिकारे यत् सप्तम्या निर्दिष्टं तदेवोपपदसंज्ञं भवति। अपि तु यदप्युपोच्चारितं पदं तदप्युपपदं भवत्येव,

तदपि शास्त्रे "इतरेतरान्योन्योपपदाच्च" १।३।१६ इत्यादौ सूत्रे क्वचिदाक्षीयत #एव।
तस्माद()आआदिकमप्युच्चारितपदत्वादुपपमिह विवक्षितम्। पद्यं पुनस्तस्य पद्यते गम्यतेऽनेनार्थ इत कृत्वा; न तु सुबन्तत्वात्; इह सुपोऽसम्भवात्। सुबनुत्पत्तेः प्राक् समासात्। यदि तर्हि यदुपोच्चा४रितं पदं तदपीहोपपदं गृह्रते, तदातिप्रसङ्गः स्यात्; राजश्रितम#इत्यत्रापि प्राक् सुबुत्पत्तेः समासप्रसङ्गात्, तदतश्च पदत्वाभावान्नलोपो न भवति? असर्वविषयत्वादस्य ज्ञापकस्येत्यदोषः। न ह्रनेन सर्वत्र "गतिकारकोपपदानां कृद्भिः प्राक् सुबुत्पत्तेः समासो भवतिट इ#इत ज्ञाप्यते, किं तर्हि? क्वचिदेवेष्टविषये। कथमेतज्ज्ञायते? "तत्पुरुषे कृति बहुलम्" ६।३।१३ इति कृदन्त उत्तरपदे सप्तम्या अलुग्विधानात्। यदि तर्हि सर्वत्रैव गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः स्यात् तदा सप्तम्याः कृदन्त उत्तरपदेऽलुग्विधानं नोपपद्यते-- बिलेशय इत्यादौ, सप्तम्या असम्भवात्। तस्मात् क्वचिदेव प्राक् सुबुत्पत्तेः समासः, न सर्वत्रेति।एवञ्च कृत्वा "सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी" इत्यादौ टाबन्तेन समास उपपन्नो भवति॥

बाल-मनोरमा

उपपदमतिङ् ७७२, २।२।१९

उपपदमतिङ्। सुबन्तमिति। "सुबामन्त्रिते" इत्यतस्तदनुवृत्तेरिति भावः। समर्तेनेति। प्रथमान्तं समर्थग्रहणं तृतीयान्ततया विपरिणम्यत इति भावः। अतिङन्तश्च समास इति। सूत्रे तिङिति तदन्तग्रहणमिति भावः। समासः तिङन्तघटितो न भवतीत्यर्थः। अतिङ् किम्?, कारको व्रजति। "तुमुन्ण्वुलो क्रियायां क्रियार्थाया"मिति व्रजतावुपपदे कृञो ण्वुल्, अकादेशः। "उपपदं समर्थेने"त्येतावत्युक्ते इहाप्युपपदसमासः स्यात्। अतोऽतिङ्ग्रहणम्। नचैवं सुबित्यनुवृत्तेः प्रयोजनाऽभाव इति वाच्यं, "चर्मकार" इत्यत्र नलोपार्थकत्वात्। "उपपदमतिङन्तं समर्तेन समस्यते" इति व्याख्याने तु सुबिति नानुवर्तेत। ततश्च "चर्मकार" इत्यत्र नलोपो न स्यादिति भावः। कुम्भिमिति। कुम्भं करोतीत्यर्थः। "कर्मण्य"णिति कर्मीभूतकुम्भवाचकपदे उपपदे कृञ्धातोः कर्तरि अण्प्रत्यये "अचो ञ्णिती"ति वृद्धौ रपरत्वे कारशब्दः। तेन कुम्भशब्दस्य समासे कुम्भकारशब्द इत्यर्थः। ननु कुम्भं करोतीति कथं विग्रहप्रदर्शनम्, "अतिङन्तः समास" इत्युक्तत्वादित्यत आह--कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यमिति। लोके प्रयोगानर्हत्वमलौकिकत्वम्। "प्रत्ययोत्तरपदयोश्चे"ति सूत्रभाष्यरीत्या अलोकिकविग्रहवाक्य एव समासप्रवृत्तिः। कुम्भं करोतीति तदर्थप्रदर्शनमात्रमिति भावः। कुम्भ अम्-कार इत्यपपाठः, कृद्योगे षष्ठ()आ विधानात्। मा भवान्भूदिति। अत्र भूदिति तिङन्तेन माङः समासनिवृत्त्यर्थमतिङ्ग्रहणमिति भावः। भवानिति पदं तु समासाऽभावसूचनाय मध्ये प्रयुक्तम्। ननु माङस्तृतीयधात्वधिकारे सप्तमीनिर्दिष्टत्वं तु अदृष्टं येन तस्य उपपदत्वात्समासः प्रसज्यत इत्यत आह--माङिति। ननु अतिङ्ग्रहणं व्यर्थं, मा भवान्भूदित्यत्र सुपेत्यनुवृत्त्यैव समासनिवृत्तिसंभवादित्यत आह--अतिङ्ग्रहणमिति। एवंच उपपदमसुबन्तेन समस्यत इति फलितम्। गतिसमासोऽप्यसुबन्तेनेत्याह--पूर्वसूत्र इति। उत्तरसूत्रात्पूर्वसूत्रेऽनुवृत्तिरपकर्षः। "कुप्रादयः" इति "गति"रिति च योगो विभज्यते। कुप्रादयः सुबन्तेन समस्यन्ते। गतिस्तु समर्थेन समस्यते। अतिङन्तश्च समास इति व्याख्येयमिति यावत्। ततः किमित्यत आह--तथा चेति। "गतिकारकोपपदानां कृदन्तैः सह सुबुत्पत्तेःप्राक्समासो वक्तव्य" इति प्राचीनव्याकरणोक्तं सिद्धं भवतीत्यर्थः। यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः, तथाप्येकदेशानुमतिद्वारा प्राचीनपरिबाषेयं सिध्यति। अथ परिभाषायाः फलं दर्शयितुं गतिसमासमुदाहरति--व्याघ्रीति। व्याजिघ्रतीति व्याघ्रः। "व्याङ्पूर्वाद्घ्राधातोः "आतश्चोपसर्गे" इति कः, "आतो लोप इटि चे"त्याल्लोपः। "पाघ्राध्मादेट्दृशः शः" इति तु न भवति, "जिघ्रतेः संज्ञायां नेति वाच्य"मिति निषेधात्। आङो घ्रशब्देन गतिसमासः। आघ्रशब्देन वेर्गतिसमासः। तत्र यदि घ्रशब्दस्य सुबन्तत्वमपेक्ष्येत, तर्हि स्त्रीप्रत्यये उत्पन्ने सुबुत्पत्तिः स्यात्, स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्य "कुत्सिते"इति सूत्रस्थभाष्यदर्शितस्य

"ङ्याप्प्रातिपदिका"दित्यत्रास्माभिः प्रपञ्चितत्वात्। ततश्च सुबुतपत्तये लिङ्गसङ्ख्याकारकं क्रमेणाऽपेक्ष्यमिति प्रथमं लिङ्गसंयोगे सति अदन्तत्वाट्टाप्स्यात्। न तु जातिलक्षणङीष्, घ्रशब्दमात्रस्य जातिवाचित्वाऽभावात्। ततश्च घ्राशब्देन सुबन्तेन समासे सति व्याघ्राशब्दस्याऽदन्तत्वाऽभावाज्जातिलक्षणो ङीष् न स्यादिति भावः। यद्यप्युपपदत्वेनाप्येतत्सिद्धं, तथापि गतित्वसंभवमात्रेणेदमित्याहुः। वस्तुतस्तु आङो घ्राशब्देन उपपदसमासः, "आतश्चोपसर्गे" इति सप्तमीनिर्देशात्। वेस्तु आघ्रशब्देन गतिसमास इति तदंशे गतिसमासोदाहरणमित्याहुः। अथ कारकसमासमुदाहरति--अ()आक्रीतीति। अ()ओन क्रीतेति विग्रहे "कर्तृकरणे कृता" इति समासः। "क्रीतात्करणपूर्वा"दिति ङीष्। सुबन्तेन समासे तूक्तरीत्या पूर्वं टापि अदन्तत्वाऽभावान्ङीष् न स्यादिति भावः। उपपदसमासमुदाहरति-कच्छपीति। कच्छः=तीरं, तेन तस्मिन्वा पिबतीतिकच्छपो। "सुपि स्थः" इत्यत्र सुपी"ति योगविभागात्कः, उपपदसमासः,। तस्य सुबन्तापेक्षायामुक्तरीत्या टाबेव स्यान्न तु जातिलक्षण ङीषिति भावः।

तत्त्व-बोधिनी

उपपदमतिङ् ६८१, २।२।१९

समर्थेनेति। तेन "महान्तं कुम्भं करोती त्यादी नातिप्रसङ्गः। अतिङन्तश्चेति। सुबिति तु अनुवर्तत एवेति अतिङन्तमिति नोक्तमिति भावः। कुम्भ असिति। अमिति तु नोक्तं, कृद्योगे षष्ठीविधानात्। अतिङ् किमिति। सुपेत्यधिकारात्किमनेनेति प्रश्नः।इतरो वक्ष्यमाणं ज्ञापकं मनसि निधाय प्रत्युदाहरति---मा भवानिति। समासाऽभावसूचनाय "भवा"निति मध्ये प्रयुक्तम्। पूर्वसूत्र इति। "कुप्रादयः" "गतिः"इति योगं विभज्य "कुप्रादयश्च सुबन्ताः सुबन्तेन समस्यन्ते, गतिस्तु सुबन्तोऽतिङन्तेन समस्यते"इति व्याख्येयमित्यर्थः। तथाचेति। यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः, तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः। कारकांशे तु "कर्तृकरणे कृते"ति सूत्रस्थबहुलग्रहणमुक्तार्थे साधकमित्यपि मनोरथायां स्थितम्। प्रागिति। कृदन्ताच्चरमपदात्सुबुत्पत्तेः पूर्वं समास इत्यर्थः। प्रथमान्तसुब्ग्रहणं त्विहानुवर्तत एव, तेन "राजदर्शी" त्यादौ पूर्वपदे नलोपादि कार्य सिद्ध्यति। परिभाषाफलं दर्शयन् गतिमुदाहरति--व्याघ्रीति। व्याजिघ्रतीति व्याघ्री। "आतश्चोपसर्गे"इति इति कः। "पाघ्राध्माधे"डिति शस्तु संज्ञायां न भवति, व्याघ्रादिभिरिति निर्देशादिति वक्ष्यते। व्याङो "घ्र"शब्देन गतिसमासः। स यदि घ्रशब्दस्य सुबन्ततामापेक्षेत, तर्हि सुबुत्पत्तये सङ्ख्याद्यपेक्ष्यं, ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्यं न तु ङूषा। घ्र शब्दमात्रस्य जातिवाचित्वाऽभावात्, ततो घ्राशब्देन समास इत्यदन्तत्वाऽभाबाज्जातिलक्षणो ङीष् न स्यादिति भावः। यद्यप्युपपदत्वेनाप्येतत्सिद्धं तथापि गतिग्रहणमाङो घ्रशब्देन समासे पश्चादाघ्रशब्देन विशब्दस्य समासार्थमावश्यकमेव। आङ्पूर्वाद्घ्रातोः कप्रत्ययविधानादाङ्युपपदसंज्ञाभ्युपगमेऽपि विशब्दे तदनभ्युपगमादिति बोध्यम्। कारकमुदाहरति--अ()आक्रीतीति। अ()ओन क्रीति। "कर्तृकरणे कृते"ति समासः। "क्रीतात्करणपूर्वा"दिति ङीष्। सुबन्तेन समासे तु टापा भाव्यमित्यदन्तत्वाऽभावात् "क्रीतात्करण---" इत्ययं ङीष् न स्यादिति ज्ञेयम्। उपपदमुदाहरति--कच्छपीति। कच्छेन पिबतीति कच्छमी। "सुपि"इति योगविभागात्कः। इहापि समासस्य सुबन्ततापेक्षायां टाबेव स्यान्न ङीषित्यादि व्याघ्रात्यत्रेव बोध्यम्। प्राचातु"उपपदमतिङन्तं समस्यते"इत्युक्तं, तदसत्, तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्यापत्त्या "राजदर्शी""चर्मकार"इत्यादौ नलोपो न स्यात्, पदान्तत्वात्। प्राटितेत्यादौ "अतो गुणे" इति पररूपं च स्यात्। स्यादेतत्--कच्छेन साधनेन पिबतीतियर्थाभ्युपगमे कच्छस्य कारकत्वेन कच्छपीति रूपसिद्धौ नेदमुपपदस्याऽसाधारणोदाहरणमिति चेत्, एवं तर्हि "भाषवापिणी"त्युदाहर्तव्यम्। "सुप्यजातौ"इति णिनौ कृते माषोपपदस्य कृदन्तेन समासे "प्रातिपदिकान्ते"त्यादिनापूर्वपदस्थान्निमित्तात्परस्या समासप्रतिपदिकान्तनकारस्य णत्वं सिद्ध्यति। सुबन्तेन समासे त्वन्तरङ्गत्वान्नान्तलक्षणे ङीपि पश्चाद्वापिनीशब्देन समासे गर्गभगिनीत्यत्रेव णत्वं न स्यादित्येके। अन्ये तु कच्छेन हेतुना पिबतीत्यर्थविवक्षायां

कच्छस्याऽकारकत्वात्कच्छपूत्युपपदस्योदाहरणं सम्यगेवेत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अमा ३।१ २१ एव ० २१ अव्ययेन ३।१ २१ उपपदम् १।१ १९ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

अमाएव अव्ययेन २।२।२०

पूर्वन समासे सिद्धे नियमार्थं वचनम्। अव्ययेनौपपदस्य यः समासः सो ऽमा एव भवति, न अन्येन। स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारम् भुग्क्ते। लवनङ्कारं भुङ्क्ते। अमा एव इति किम्? कालसमयवेलासु तुमुन् ३।३।१६७ काले भोक्तुम्। एवकारकरणम् उपपदविशेषनार्थम्। अमा एव यत् तुल्यविधानम् उपपदं तस्य समासो यथा स्यात्, अमा च अन्येन च यत् तुल्यविह्धानं तस्य मा भूत्। अग्रे भुक्त्वा, अग्रे भोजम्।

न्यासः

अमैवाव्ययेन। , २।२।२०

"स्वादुङ्कारं भुङ्क्ते" इति। "स्वादुभि" ३।४।२६ इति णमुल्। स्वादुमीत्यतस्मादेव मान्तनिर्देशादुपपदस्य मकारान्तत्वं निपात्यते। यदि पूर्वेणैव समासे सिद्धे नियमार्थम् वचनम्; एवञ्च सति सद्धे विधिरारभ्यमाणोऽन्तेरणाप्येवकारकरणं नियमार्थो भविष्यति, तत्किमर्थमेवकारकरणमित्याह-- "एवकारककरणम्" इत्यादि किमर्थं पुनस्तदुपपदविशेषणार्थं क्रियत इत्यत आह-- "अमैव तुल्यविधानम्" इत्यादि। येन वाक्येनायमेव प्रत्ययो विधीयते न तु प्रत्ययान्तरम्; तेन यदुपपदं निर्दिश्यते तदमैव तुल्यविधानम्, तस्यैव समासो यथा स्यादित्येवमर्थमेवकारकरणमुपपदविशेषणार्थं क्रियते। स च समासः प्रत्यासत्तेरमैव भवति, न प्रत्ययान्तरेणेति विज्ञायते। "अग्रे भुक्त्वा, अग्रे भोजम्" इति। अत्राग्रेशब्द उपपदम् "विभाषाग्रेप्रथमपूर्वेषु" २।४।२४ इत्यमा क्त्वाप्रत्ययेन च तुल्यविधानमिति न समस्यते। अव्ययग्रहणं स्पष्टार्थम्। न ह्यनव्ययममन्तमस्ति यन्निवृत्त्यर्थमव्ययग्रहणमर्थवद्भवति॥

बाल-मनोरमा

अमैवाव्ययेन ७७३, २।२।२०

अमैवाऽव्ययेन। "अमैवे"त्यनन्तरं तुल्यविधानमित्यध्याहार्यम्। तुल्यार्थैरतुलोपमाभ्या"मिति तृतीया। अमैव तुल्येति। अम्प्रत्ययमात्रविधायकशास्त्रेण अमैव सह यस्य उपपदसंज्ञा विधीयते तदुपपदमव्ययेन समस्यत इति यावत्। पूर्वसूत्रेणैव सिद्धे नियामार्थमिदमित्याह--तदेवेति। विवरणवाक्ये द्वितीय एवकारो नियमलभ्यः, न तु सूत्रस्थः, तस्य अप्राप्ते अमा तुल्यविदानत्वेऽवधारणार्थत्वात्। स्वादुङ्कारमिति। स्वादुंकृत्वेत्यर्थः। "ओदनं भुङ्क्ते" इति शेषः। "स्वादुमि णमु"लिति णमुल्। स्वादुशब्दस्य मान्तत्वं निपातनात्। "कृन्मेजन्तः" इत्यव्ययत्वम्। "तदेवे"ति नियमस्य प्रयोजनमाह--नेहेति। "उपपदसमास" इति शेषः। भोक्तुमिति। यद्यपि"कालसमयवेलासु" इति सप्तमीनिर्देशात्कालसमयवेलानामुपपदत्वन्तथापि कालादीनामुपपदसंज्ञा तुमुना तुल्यविधानैव, न त्वमा। अतः कालदीनामुपपदत्वेऽपि न समास इत्यर्थः। अमैवेति किमिति। अमैवेत्येकारः किमर्थ इति प्रश्नः। अमा चान्येन चेति। अम्प्रत्ययेन क्त्वाप्रत्ययेन च सह उपपदसंज्ञा अग्रेप्रथमपूर्वशब्दानां विहिता, ततश्च उपपदत्वस्य अमैव

तुल्यबिधानत्वाऽभावान्नोपपदसमास इति भावः।

तत्त्व-बोधिनी

अमैवाव्ययेन ६८२, २।२।२०

अमैवाव्ययेन। पूर्वेण सिद्धे नियमार्थमिदम्। तुल्यविधनमिति। एतच्चाध्याहारे लभ्यम्। तदेवेति। यस्मिन्नुपपदेयेन वाक्येन अमेव विहितस्तदेवोपपदमव्ययेन समस्यते नान्यदित्यर्थः। नियमबललभ्योऽयमेवकारो न तु सूत्रस्थः। स्वादुङ्कारमिति। "स्वादुमि णमुल्"। अव्ययेनेति किम्()। कुम्भकारः। असति ह्वव्ययग्रहणे अमैव यत्तुल्यविधानं तदेव केनचित्समर्थेन समस्येत। तथा सति "स्वादुङ्कारः"इत्यत्रैव समासः स्यान्न तु "कुम्भकार"इत्यत्र अथ पूर्वसूत्रवैयथ्र्यभीत्याऽब्ययविषयकनियम एव इति चेतर्हि अम्न्तविषयक एव किं न स्यात् "अमन्तेन यः समासः सोऽमैव तुल्यविधानस्ये"ति। तथा चाग्रेभोजमित्यत्र समासो मा भूत्, अग्रे भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भावः। तदेवेति किम्()। कालो भोक्तुम् समयोभोक्तुम्। "अमैवे"त्येवकारेणाऽमा चान्येन च तुल्यविधानस्योपपदस्य समासनिवारणेऽपि तुमुना तुल्यविधानस्य स्यादेवातस्तन्निवरणाय तदेवेत्युक्तम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तृतीयाप्रभृतीनि १।३ २२ अन्यतरस्याम् ० २२ अमा ३।१ २० एव ० २० अव्ययेन ३।१ २० उपपदम् १।१ १९ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

तृतीयाप्रभृतीन्यतरस्यम् २।२।२१

अमा एव इत्यनुवर्तते। उपदंशस् तृतीयायाम् ३।४।४७ इत्यतः प्रभृति यान्युपपदानि तानि अमा एव अव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उभयत्रविभाशेयम्। यदमा एव तुल्यविधानम् उपपदं तस्य प्राप्ते, यथा उपदंशस् तृतीयायाम् ३।४।४७ इति। यत् पुनरमा च अन्येन च तुल्यविधानं तस्य प्राप्ते, यथा अव्यये ऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ (*३,४॥५९) इति। मूलकोपदंशं भुङ्क्ते, मूलकेन उपदंशं भुङ्क्ते। उच्चैःकारम् आचष्टे, उच्चैः कारम्। अमा एव इत्येव, पर्यप्तिवचनेष्वलमर्थेषु ३।४।६६, पर्याप्तो भोक्तुम्। प्रभुर्भोक्तुम्।

न्यासः

तृतीयराप्रभृतीन्यन्यतरस्याम्। , २।२।२१

"पर्याप्तो भोक्तुम्" इति। "पर्याप्तवचनष्वलमर्थेषु" ३।४।६६ इत्यत्र "शकधृषज्ञाग्लाघटरभ" ३।४।६५ इत्यादेः सूत्रात् तुमुन्ग्रहणानुवृत्तेस्तुमुन्प्रत्ययः॥

बाल-मनोरमा

तृतीयाप्रभृतीन्यन्यतरस्याम् ७७४, २।२।२१

तृतीयाप्रभृतीनि। तृतीयाशब्देन "उपदंशस्तृतीयाया"मित्यारभ्य"अन्वच्यानुलोम्ये" इत्यन्तसूत्रोपात्तान्युपपदानि विवक्षितानि। अमेति, अव्ययेनेति चानुवर्तते। एवकारस्तु नानुवर्तते, अस्वरितत्वात्। अमेत्येतदव्ययविशेषणम्। तदाह--

उपदंशस्तृतीयायामित्यादिना। मूलकोपदंशमिति। "उपदंशस्तृतीयाया"मिति णमुल्। अमैव तुल्यविधानत्वात्पूर्वसूत्रेण नित्ये प्राप्ते विकल्पोऽयम्। ननु "मूलकेने"त्यस्य "भुङ्क्ते" इत्यत्रैवान्वयादुपदंश इत्यत्रानन्वयादसामर्थ्यात्कथमिह समास इति चेत्, मैवम्--उपदंशनक्रियां प्रति हि मूलकस्य आर्थकं कर्मत्वमादाय सामर्थ्यमुपपाद्यम्। तृतीया तु प्रधानक्रियानुरोधात्परत्वाच्चोपपाद्येत्यन्यत्र विस्तरः। उच्चैःकारमिति। उच्चेःकृत्वेत्यत्र तु "अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ"। "तत्र "उच्चैःकार"मित्यत्र उपपदत्वस्य अमैव तुल्यविधानत्वाऽभावात् "अमैवाव्ययेने"त्यप्राप्तेऽनेन विकल्पः। समासपक्षे "आदिर्णमुल्यन्यतरस्या"मिति कृदुत्तरपदप्रकृतिस्वर आद्युदात्तत्वम्। असमासपक्षे तु उच्चैरिति फिट्सूत्रेणाऽन्तोदात्तत्वमिति फले भेदः। अमन्तेनेति किम्?। पर्याप्तो भोक्तुम्। "पर्याप्तिवचनेषु" इति तुमुन्।

तत्त्व-बोधिनी

तृतीयाप्रभृतीन्यन्यतरस्याम् ६८३, २।२।२१

तृतीयाप्रभृतीन्यन्यतरस्याम्। उभयत्रविभाषेयम्। अमैव तुल्यविधानस्य प्राप्तेऽमा चान्येन च तुल्यविधानस्याऽप्राप्ते चारम्भात्। प्राप्ते यथा---"उपदशस्तृतीयायाम्"। मूलककेनोपदंशं। मूलकोपदंशम्। अप्राप्ते यथा--"अव्ययेऽयथाभिप्रेताख्याने"ति क्त्वाणमुलौ। उच्चैःकारम्। इह समासपक्षे कृद्दत्तरपदप्रकृतिस्वरः--"आदिर्ण मुल्यन्यतरस्या"मित्याद्युदात्तत्वम्। असमासे तु उच्चैरित्यन्तोदात्तत्वम्। "उदि चेर्डैं सिः"इति व्युत्पत्तिपक्षे प्रत्ययस्वरस्य, अव्युत्पत्तिपक्षे तु "फिषः"इत्यस्य च प्रवृत्तेरित्याहुः। मनोरमायां तूच्चैरित्यन्तोदात्तः, स्वरादिषु तथा पाठादिति स्थितम्। "अमे"त्यनुवर्तत इत्याह--अमन्तेनेति। तेनेह न--पर्याप्तो भोक्तुम्। "पर्याप्तिवचनेष्वि"ति तुमुन्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्त्वा ३।१ च ० तृतीयाप्रभृतीनि १।३ २१ अन्यतरस्याम् ० २१ तत्पुरुषः १।१ २।१।२१ सह ० २।१।४ सुपा ३।१ २।१।४ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

क्त्वा च २।२।२२

अमा एव इति पूर्वयोगे ऽनुवृत्तम्। तेन अन्यत्र न प्राप्नोति इति वचनम् आरभ्यते। क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीनि उपपदान्यन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उच्चैः कृत्य। उच्चैः कृत्वा। अव्यये ऽयथाभिप्रेताऽख्याने ३।४।५९ इति क्त्वाप्रत्ययः। समासपक्षे ल्यबेव। तृतीयाप्रभृतीनीत्येव, अलं कृत्वा। खलु कृत्वा।

न्यासः

क्त्वा च। , २।२।२२

"अलं कृत्वा, खलु कृत्वा " इति। "अलंखल्योः प्रतिषेधयोः प्राचां क्त्वा" ३।४।१८ स च तृतीयप्रभृतिभ्यः पूर्वः॥

बाल-मनोरमा

क्त्वा च। ७७५, २।२।२२

क्त्वा च। "तृतीयाप्रभृतीनी"ति पूर्वसूत्रमनुवर्तते। क्त्वेति तृतीयार्थे प्रथमा। टायां "सुपां सुलुक्पूर्वसवर्णे"ति पूर्वसवर्णदीर्घ

इत्यपरे। तदाह--तृतीयेति। ननु "उपदंशस्तृतीयाया"मित्यतः प्रागेव "समानकर्तृकयो"रिति क्त्वाविधेः पाठात्कथमुच्चैः कृत्वेत्युदाहरणमित्यत आह--अव्ययेऽयथेति। "अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" इति सूत्रेणेत्यर्थः। अलं कृत्वेति। "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" इत्येतत् "उपदंशस्तृतीयाया"मित्यतः पूर्वमेव पठितम्। अतस्तद्विहितक्त्वो मान्तेन सह समासाऽभावान्न ल्यबिति भावः। इत्युपपदसमासाः।

तत्त्व-बोधिनी

क्त्वा च ६८४, २।२।२२

क्त्वा च। क्त्वेति तृतीयान्तम्। "आतः"इति योगविभागादालोपः, "क्त्वि स्कन्दिस्यन्दोः" इतिवदिति हरदत्तः। तन्न। सवर्णदीर्घोणापि तृतीयान्तत्वोपपत्तेः। अलं कृत्वेति। "अलङ्खल्वोः प्रतिषेधयो"रिति सूत्रस्य "उपदंशस्तृतीयाया"मित्यस्मात्पूर्वत्वान्नेह समासः। तत्पुरुषेऽसाधारणान्समासान्तानाह।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शेषः १।१ बहुव्रीहिः १।१ २८

काशिका-वृत्तिः

शेषो बहुव्रीहिः २।२।२३

उपयुकतादन्यः शेषः। षेशः समासो बहुव्रीहिसंज्ञो भवति। कश्च शेषः समासो न उक्तः। वक्ष्यति अनेकम् अन्यपदार्थे २।२।२४ चित्रगुः। शबलगुः। कृष्णोत्तरासङ्गः। शेषः इति किम्? उन्मत्तगङ्गम्। लोहितगङ्गम्। बहुव्रीहिप्रदेशाः न बहुव्रीहौ १।१।२८ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

शेषो बहुव्रीहिः ९६८, २।२।२३

अधिकारोऽयं प्राग्द्वन्द्वात्॥

न्यासः

शेषो बहुव्रीहिः। , २।२।२३

"उपयुक्ताद्योऽन्यः" इति। अभिहितादन्य इत्यर्थः। "यद्यान्यः समासो नोक्तः" इति। यत्रान्या समाससंज्ञा न विहितेत्यर्थः। "चित्रगुः" इति। अत्र बहुव्रीहित्वे सति "बहुव्रीहौ प्रकृत्या पूर्वपदम्" ६।२।१ इत्येष विधिर्भवति। "उन्मत्तगङ्गम्" इति। "अन्यपदार्थे च संज्ञायाम्" २।१।२० इत्यव्ययीभावः। असति हि शेषग्रहण इहापि बहुव्रीहिः स्यात्। ननु च बहुव्रीहौ प्राप्तेऽव्ययीभावस्त्वारभ्यमाणस्तस्यैव बाधको भविष्यति, तत्कुतो बहुव्रीहिप्रसङ्गः? "प्राक्कडारात् परं कार्यम्" इत्यस्मिन् पक्ष इदं प्रत्युदाहरणमुपन्यस्तम्। तत्र हि पक्षे कयदि शेषग्रहणं न क्रियेत, ततः अन्यपदार्थेच संज्ञायाम्" २।१।२० इति वचनप्रामाण्यदव्ययीभावः स्यात्। परत्वाद्बहुव्रीहिरित्येके। अयन्तु पक्षो वृत्तिकारेण नाश्रित इत्ययुक्तमेतत्। तस्मात् "आकडारादेका संज्ञा" १।४।१ इत्यस्मिन् पक्षे "व्यक्तिः पदार्थः" इत्येद्दर्शमाश्रित्येदं प्रत्युदाहरणमुपन्यस्तम्। व्यक्तौ हि पदार्थे प्रतिलक्ष्ये लक्षणं प्रवत्र्तते। अत्रासति शेषग्रहणे यदेसद्विषयं लक्षणं तदकृतार्थमित्यवश्यं तेन

प्रवर्त्तितव्यम्। एकसंज्ञाधिकाराच्च योगपद्यं न सम्भवतीति वचनप्रामाण्यादुभयप्रसङ्गः, उभे अपि पर्यायेण स्यातामित्यपरे॥

बाल-मनोरमा

शेषो बहुव्रीहिः ८१९, २।२।२३

शेषो बहुव्रीहिः। त्रिकस्येति। विभक्तेरित्यर्थः। ननु "द्वितीया श्रिते"ति "तृतीया तत्कृते"ति "चतुर्थी तदर्थे"ति "पञ्चमी भयेने"ति, "षष्ठी"ति, "सप्तमी शौण्डै"रिति च द्वितीयादिविभक्तीनां षण्णां समासो विहितः। "विशेषणं विशेष्येणे"त्यादिना तु प्रथमाया अपि समासो विहितः, अतः शेषविभक्तिर्दुर्लभेत्यत आह--विशिष्येति। विशेषणसमासस्य वस्तुतः प्रथमाविभक्तौ प्रवृत्तावपि प्रतमाविभकिं()त विशिष्य उच्चार्य विधानाऽभावात्समासविधिषु विसिष्यनिर्दिष्टद्वितीयादिविभक्तिषट्कापेक्षया शेषः प्रथमाविभक्तिरित भावः। तदाह--प्रथमान्त इत्यर्थ इति। एतच्च भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

शेषो बहुव्रीहिः ७१९, २।२।२३

शेषो बहुव्रीहिः। "शिष् असर्वोपयोगे" कर्मणि घञ्। अत्र वृत्तिकृत्---, "यत्रान्यः समासो नोक्तः स शेष" इत्याह। "येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिसंज्ञकः समासो न विहितः स शेष इत्यर्थ"इति हरदत्तो व्याख्यात्। एतच्च "प्राक्कडारात्परं कार्य"मिति पाठाभिप्रायेण बोध्यम्। अस्मिंस्तु पक्षे शेषग्रहणाऽभावे उन्मत्तगङ्गमित्यत्र परत्वाद्बहुव्राहिः स्यात्, निरवकाशत्वाच्चाऽव्ययीभाव इत्युन्मत्तगङ्ग इत्याद्यनिष्टं पक्षे प्रसज्यते। "आ कडारादेके"ति पाठाभ्युपगमपक्षे त्वेकसंज्ञाऽधिकारेणावेन्मत्तगङ्गमित्यादिसिद्धेः शेषग्रहणं व्यर्थम्। निरवकाशतयाऽव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधात्। अतस्तत्रापि प्रयोजनमाह--द्वितीया श्रितेत्यादिनेति। सेषधिकारस्थबहुव्रीहेरेव "शेषाद्विभाषे"ति कप्प्रत्ययो नान्यस्माद्बहुव्रीहोरित्येतल्लाभार्थमपि शेषग्रहणमावश्यकमिति बोध्यम्। यस्य त्रिकस्येति। यद्यपि "प्रादयो गताद्यर्थे प्रथमये"त्युक्तम्, तथापि "द्वितीया श्रितादिभिः"इतिवत् "प्रथमा केनचित्सह समस्यते"इति नोक्तमित्यर्थः। वार्तिककृता प्रथमयेत्युक्तावपि सूत्रकृता नोक्तमिति वा। प्रथमान्तमिति। "कण्ठेकाल"इत्यादिबहुव्रीहिस्तु ज्ञापकसाध्य इति भावः। अन्यस्य पदस्यार्थ इति। समस्यमानपदातिरिक्तस्य पदस्याऽर्थ इत्यर्थः। पदेन हि प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः कर्मकत्रादिरभिधीयते। प्रथमान्तेन तु प्रातिपदिकार्थमात्रम्। यद्यपि त्रिकपक्षे सङ्ख्या प्रत्ययार्थस्तथापि तस्याः प्रकृत्यर्थं प्रति विशेषणत्वान्न प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः प्रथमान्तस्यास्ति। एवं च "द्वितीयान्ताद्यर्थे"इति फलितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनेकम् १।१ अन्यपदार्थे ७।१ बहुव्रीहिः १।१ २३ विभाषा १।१ २।१।११ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

अनेकम् अन्यपदार्थे २।२।२४

अनेकं सुबन्तमन्यप्दार्थे वर्तमानं सुपा सह समस्यते, बहुव्रीहिश्च समासो भवति। प्रथमार्थम् एकं वर्जयित्वा सर्वेषु

विभक्त्यर्थेषु बहुव्रीहिर् भवति। प्राप्तम् उदकं यं ग्रामं प्राप्तोदको ग्रामः। ऊढरथो ऽनड्वान्। उपगृतपशू रुद्रः। उद्धृतौदना स्थाली। चित्रगुर्देवदत्तः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न भवति। वृष्टे देवे गतः। अनेकग्रहनं किम्? बहूनाम् अपि यथा स्यात्, सुसूक्ष्मजटकेशेन सुगजाजिनवाससा। समन्तशितिरन्ध्रेण द्वयोर् वृत्तौ न सिध्यति। बहुव्रीहिः समानाधिकरणानम् इति वक्तव्यम्। व्यधिकरणानां मा भूत्, पञ्चभिर् भुक्तमस्य। अव्ययानां च बहुव्रीहिर् वक्तव्यः। उच्चैर् मुखः। नीचैर् मुखः। सप्तम्युपमानपूर्वपदस्य उत्तरपदलोप श्च वक्तव्यः। कण्ठे स्थितः कालो ऽस्य कण्ठेकलः। उरसिलोमा। उष्ट्रस्य मुखम् इव मुखं यस्य स उष्ट्रमुखः। खरमुखः। समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्च इति वक्तव्यम्। केशानां सङ्घातः केशसङ्घातः, केशसङ्घातः चूडा ऽस्य केशचूडः। सुवर्णस्य विकारो ऽलङ्कारो ऽस्य सुबर्णालङ्कारः। प्रादिभ्यो धतुजस्य उत्तरपदस्य लोपश्च वा बहुव्रीहिर् वक्तव्यः। प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः। प्रतितं पलाशमस्य प्रपलाशः, प्रपतितपलाशः। नञो ऽस्त्यर्थानां बहुव्रीहिर् वाचोत्तरपदलोपश्च वक्तव्यः। आविद्यमानः पुत्रो यस्य अपुत्रः, अविद्यमानपुत्रः। अभार्यः, अविद्यमानभार्यः। सुबधिकारे ऽस्तिक्षीरादीनां बहुव्रीहिर् वक्तव्यः। अस्तिक्षीरा ब्राह्मणी। अस्त्यादयो निपाताः।

लघु-सिद्धान्त-कौमुदी

अनेकमन्यपदार्थे ९६९, २।२।२४

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः॥

बाल-मनोरमा

अनेकमन्यपदार्थे ८२०, २।२।२४

अनेकमन्य। प्रथमान्तमिति। शेषग्रहणानुवृत्तिलभ्यमिदम्। एवं च सुप्सुपेति नानुवर्तते, प्रयोजनाऽभावात्। "अनेकं सुबन्त"मिति पाठेऽपि प्रथमान्तमित्यर्थः। अन्येति। उपस्थितप्रथमान्तातिरिक्तेत्यर्थः। एवंच पञ्चभिर्भुक्तमन्नं यस्य सः "पञ्चभुक्त" इति बहुव्रीहिनिवृत्त्यर्थं "बहुव्रीहिः समानाधिकरणानामिति वक्तव्य"मिति वार्तिकं यद्भाष्ये स्थितं, यच्च वृष्टे देवे यो गतः स वृष्टदेव इति बहुव्रीहिनिवृत्त्यर्थम् "अप्रथमाविभक्त्यर्थे बहुव्रीहिर्वक्तव्यः" इति वार्तिकं तदुभयमपि न कर्तव्यमित्याह--अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति। समानाधिकरणानामिति च फलितमिति। "शेषग्रहणा"दिति शेषः। "शेषग्रहणात् प्रथमान्त इति लभ्यते" इति हि भाष्यम्। "पञ्चभिर्भुक्तमस्ये"त्यत्र च समस्यमानपदयोरेकस्याऽप्रथमान्तत्वान्न बहुव्रीहिरिति फलितम्। प्रथमान्तातिरिक्तस्य पदस्यार्थे वर्तमानं समस्यते इत्यर्थाश्रयणाद्वृष्टे देवे गत इत्यत्रापि न बहुव्रीहिरिति फलितम्। प्रतमान्तातिरिक्तस्य पदस्यार्थे वर्तमानं समस्यते इत्यर्थाश्रयणाद्वृष्टे देवे गत इत्यत्रापि न बहुव्रीहिरिति फलितमिति भावः।

तत्र द्वितीयार्थबहुव्रीहिमुदाहरति--प्राप्तमिति। "गत्यर्थाकर्मके"ति कर्तरि क्तः। अत्र विग्रहवाक्ये ग्रामकर्मकप्राप्तिकर्तृ उदकमित्येवं ग्रामस्य विसेषणतया, विशेष्यत्वेन तु प्राप्तस्य उदकस्य बोधः। समासे तु एकार्थीभावमहिम्ना उदककर्तृकप्राप्तिकर्मीभूतो ग्राम इत्येवं ग्रामस्य विशेष्यतया, तद्विशेषणतया तु प्राप्तस्य उदकस्य बोधः। एवमुत्तरत्रापि विशेषणविशेष्यभावव्यत्यासो ज्ञेयः। अथ तृतीयार्थबहुव्रीहिमुदाहरति--ऊढरथोऽनड्वानिति। ऊढो रथो येनेति विग्रहः। अथ चतुर्थ्यर्थबहुव्रीहिमुदाहरति--ऊढरथोऽनड्वानिति। ऊढो रथो येनेति विग्रहः। अथ चतुर्थ्यर्थबहुव्रीहिमुदाहरति--उपह्यतपशू रुद्र इति। उपह्यतः पशुर्यस्मै इति विग्रहः। अथ पञ्चम्यर्थबहुव्रीहिमुदाहरति---उद्धृतौदना स्थालीति। उद्धृत ओदनो यस्या इति बहुव्रीहिः। अथ षष्ठ()र्थबहुव्रीहिमुदाहरति--पीताम्बरो हरिरिति। पीतमम्बरं यस्येति विग्रहः। अथ सप्तम्यर्थबहुव्रीहिमुदाहरति--वीरपुरुषको ग्राम इति। वीराः पुरुषा यस्मिन्निति विग्रहः। "शेषाद्विभाषा" इति कप्। अत्र कर्मादीनां समासेनाभिहितत्वात्प्रथमैव। प्रथमार्थे तु नेति। "अन्यपदार्थ"शब्देन प्रथमान्तातिरिक्तद्वितीयाद्यन्तार्थस्यैव विवक्षितत्वादिति भावः। व्यधिकरणानामपि नेति। "अनेकं प्रथमान्त"मित्युक्तेरिति भावः।

प्रादिभ्यः। प्रादिभ्यः परं यद्धातुजप्रकृतिकप्रधमान्तं तस्य अन्येन प्रथमान्तेन बहुव्रीहिर्वाच्यः। तत्र बहुव्रीहौ प्रादिभ्यः परस्य उत्तरपदस्य धातुजस्य लोपश्च विकल्पेन वाच्य इत्यर्थः। अत्र "बहुव्रीहि"रित्यनुवादः, लोपस्यैव विधिः। प्रपतितपर्ण इति। प्रकृष्टं पतितं--प्रपतितम्। प्रादयो गताद्यर्थे" इति समासः। प्रपतितं पर्णं यस्मादिति विग्रहः। प्रपर्ण इति। प्रपतितेति पूर्वपदे धातुजस्य उत्तरपदस्य लोपे रूपम्।

नञोऽस्त्यर्थानां। नञः परेषामस्त्यर्थवाचिना सुबन्तानां बहुव्रीहिर्वाच्यः, त[था]त्रास्त्यर्थवाचिनामुत्तरपदभूतानां लोपश्च वा वक्तव्य इत्यर्थः। अविद्यमानपुत्र इति। न विद्यमान इति नञ्समासः। नञो नलोपः। अविद्यमानः पुत्रो यस्येति विग्रहः। अपुत्र इति। अस्त्यर्थकविद्यमानशब्दस्य लोपे रूपम्। अत्रापि बहुव्रीहिरित्यनुवादः। अव्ययानां चेति। "बहुव्रीहिर्वाच्य" इति शेषः। उच्चैर्मुख इति। उच्चैरित्यस्याधिकरणशक्तिप्रधानतया सप्तम्यन्ततत्वेन प्रथमान्ततत्वाऽभावादप्राप्ते बहुव्रीहौ वचनम्।

सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्चेति। सप्तम्यन्तोपमानसहिते पूर्वपदे यस्य तत् सप्तम्युपमानपूर्वपदम्, तस्य समस्तपदस्य पदान्तरेण बहुव्रीहिर्वाच्यः। समस्तपदात्मके पूर्वपदे यदुत्तरपदं तस्य लोपश्च वक्तव्य इत्यर्थः। तत्र सप्तम्यन्तसहितसमस्तपूर्वपदकं बहुव्रीहिमुदाहरति--कण्ठेस्थ इत्यादि। "सुपि स्थः" इति कः। कण्ठे तिष्ठतीति कण्ठेस्थः। उपपदसमासः। "अमूद्र्धमस्तका"दिति सप्तम्या अलुक्। "कण्ठेस्थ" इति समस्तपद्रम्। तस्य कालशब्देन बहुव्रीहिरित्यनुवादः। सुपो लुक्। त्तर कण्ठेस्थेत्येतद्बहुव्रीहेः पूर्वपदं सप्तम्यन्तपदसहितं, तस्मिन् यदुत्तरपदं स्थेत्येतत्, तस्य लोपो वाचनिकः। "कण्ठेकाल" इति सप्तम्यन्तपदघटितसमासगर्भो बहुव्रीहिः। तदवयवभूतसप्तम्याः "अमूर्धमस्तका"दित्यलुक्। अथ उपमानसहितसमस्तपूर्वपदकं बहुव्रीहिमुदाहरति--उष्ट्रमुख इति। उष्ट्रस्य मुखमिवेति विग्रहे षष्ठीतत्पुरुषः। मुखशब्दो मुखसदृशे लाक्षणिक इति सूचयितुमिवशब्दः। उष्ट्रमुखिमिव मुखं यस्येति विग्रहे बहुव्रीहिरित्यनुवादः। तत्र "उष्ट्रमुखेत्येतद्बहुव्रीहेः पूर्वपदं, तस्मिन्नुत्तरपदस्य मुखशब्दस्य लोपो वाचनिकः।

सङ्घातविकारेति। षष्ठ()न्तात्परस्य उत्तरपदस्य पदान्तरेण बहुव्रीहिर्वाच्यः, षष्ठ()न्तादुत्तरपदस्य लोपश्च। केशचूड इति। सङ्घातशब्दस्यो लोपे रूपम्। सुवर्णालङ्कार इति। अत्र विकरशब्दस्य उत्तरपदस्य लोपे रूपम्।

अस्तिक्षीरादयश्चेति। अस्तिक्षीरादयो बहुव्रीहावुपसङ्ख्येया इत्यर्थः। "अस्तिक्षीरागौ"रित्यत्र अस्तीत्यस्य तिङन्ततया प्रथमाविभक्त्यन्ततत्वाऽभावादप्राप्ते बहुव्रीहाविदं वचनम्। वस्तुतस्तु वचनमिदं नारब्धव्यमित्याह--अस्तीति विभक्तिप्रतिरूपकमव्ययमिति। विभक्तिप्रतिरूपकत्वेन निपातितत्वादस्तीति "स्वरादिनिपातमव्यय"मित्यव्ययं विद्यमानार्थकम्। ततः सोः "अव्ययादाप्सुपः" इति लुकि प्रत्ययलक्षणेन प्रथमान्ततत्वादेव सिद्धेरिदं वचनं न कर्तव्यमिति भावः। तदुक्तं भाष्ये--"अस्तिक्षीरादिवचनं, न वाऽव्ययत्वा"दिति।

तत्त्व-बोधिनी

अनेकमन्यपदार्थे ७२०, २।२।२४

अप्रथमाविभक्त्यर्थ इति। समानेति। एतच्च शेषग्रहणाल्लब्धम्। अनेकं किं()। बहूनामपि यथा स्यात्। एतच्च मूल एव स्फुटिभविष्यति। अनिज्विधौ केवलग्रहणं ज्ञापकीकृत्याऽनेकग्रहणमिह सुत्यजमित्याहुः। अन्यग्रहणं किम्()। बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत, स्वपदार्थे हि सावकाशं तत्पुरुषं परत्वादन्यपदार्थे बहुव्रीहिर्बाधते। असति त्वन्यग्रहणे "कण्ठेकाल" इत्यादौ व्यधिकरणपदे, बहूनां समुदाये च सावकाशं बहुव्राहि स्वपदार्थ इवान्यपदार्थेऽपिल "नीलोत्पलं सर " इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत। पदग्रहणं किम्()। वाक्यार्थे मा भूत्। ग्राह वती नदी। इह मा स?नासीरिति वाक्यार्थो गम्यते। अर्थग्रहणं किम्()।, यावता पदेन पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति()।

अत्राहुः-- प्रकृत्यर्थविशिष्टप्रत्ययार्थाभिधानं यथा स्यात्। अन्यथा प्राधान्यात्प्रत्ययार्थमात्रं गृह्णेत। इष्टापत्तौ तु चित्रगुरित्येतत्षष्ठर्थसम्बन्धमात्रपरं स्यात्। तथा च देवदत्तादिभिः सामानाधिकरण्यं न स्यादिति। अत्रेदमवधेयम्---"सुपा"इत्यतन्नानुवर्तते। तेनाऽत्रानेकं प्रथमान्तं मिथः समस्यते इथि पर्यवसन्नोऽर्थः। एवं च द्विपदबहुव्रीहिरबाध एव। य#ए तु "सुप्सुपा"इत्यनुवत्र्य "अनेकं सुबन्तं सुपा सहे"ति व्याचक्षते, तेषां तु द्विपदबहुव्रीहिर्दुर्लभ एवेति।द्वितियादिविभक्त्यर्थक्रमेणोदाहरति----प्राप्तमित्यादि। ग्रामकर्मकप्राप्तिकर्तृ उदकं विग्रहार्थः। उदककर्तृकप्राप्तिकर्मेति समासार्थः। विग्रहवाक्ये स इति प्रयोगे तु तस्याप्ययमेवार्थः। अनडुत्कर्तृकोद्वहनकर्मीभूतोरथः। रथकर्मकोद्वहनकर्ता तु समासार्थः। रुद्रसंप्रादनकोपहरणकर्मीभूतः पशुः। पशुकर्मककोपहरणसंप्रदानं तु समासार्थः। स्थाल्यधिकोद्धरणकर्म ओदनः। ओदनकर्मकोद्धकरणावधिः स्थाली समासार्थ इत्यादि। इह कर्मादीनां समाससेनाभिहितत्वात्प्रथमा। ननु वाक्ये धात्वर्थं प्रति क्तप्रत्ययार्थस्य कर्तुः कर्मणो वा विशेष्यत्वाद्वृत्तावपि तथैवोचितेति प्राप्तोदकोढरथादौ उदककर्तृकप्राप्तीत्यादिवर्णनं [तु] न युज्यते इति चेत्। उच्यते---एकार्थीभावादिभिर्वृत्तौ विशिष्टार्थविषयकं शक्त्यान्तरमेव स्वीक्रियते, न त्ववयवशक्तिरिति नानुपपत्तिः। व्यपेक्षावादिभिस्त्वगत्या भिन्नैव व्युत्पत्तिः स्वीकार्या। किञ्च कर्तृविशिष्()टप्राप्तेः पदार्थत्वे तस्यैव नामार्थत्वादुदकस्य तदभेदो वाच्यः, स च बाधितः, न हि कर्तृविशिष्टा प्राप्तिरुदकमिति सम्भवति। अतएव " बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महन्दौरवमि"त्यादिना समर्थसूत्रे एकार्थीभावपक्ष एवप्रबल इत्यवोचाम। प्रथमार्थे तु नेति। शेषपदेन वा, अन्यपदार्थ इत्यनेन वा अति प्रसङ्गवारणात् "अप्रथमाविभक्त्यर्थे"इति वचनं न कर्तव्यमिति भावः। व्यधिकरणानामित्यादि। इह शेषपदेनैव वारिकोऽतिप्रसङ्ग इति "समानाधिकरणानां बहुव्रीहि"रित्यपि न कर्तव्यमिति भावः। "यत्रान्यसमासो नोक्तः स शेषः" इति वृत्तिकारादीनां मते तु "प्रथमान्तानामेव बहुव्रीहिः" इत्यलाभात्कर्तव्यमेवेदं वचनमिति बोध्यम्।

प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः। प्रादिभ्य इति। प्रादिभ्य इति। प्रादिभ्यः परं यद्धातुजं तदन्तस्य पदान्तरेण बहुव्रीहिव्र्याख्येय इति सूत्रसिद्धान्तनुवादः। वा चेति। इदं तु वाचनिकम्। पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य लोपो वाच्य इत्यर्थः। एतच्च प्रादीनामेव वृत्तौ विशिष्टार्थवृत्तितामाश्रित्य सुत्यजम्।

नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः। नञोऽस्त्यर्थानामिति। नञः परेषामस्त्यर्थवाचिनां पदान्तरेण बहुव्रीहिव्र्याख्येयः, अस्त्यर्थवाचिनां तु लोप इत्यर्थः। अस्त्यर्थानां किम्()। अनुपनीतपुत्रः। नञः किम्()। निर्विद्यमानपुत्रः। नन्विह "सुपा"इत्यनुवृत्तावपि सुबित्येतदनुवर्तते, तथा चाऽस्तिक्षीरेति प्रयोगो दुर्लभ इत्याशङ्क्यं साधयति---विभक्तिप्रतिरूपकमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संख्यया ३।१ अव्ययासन्नादूराधिकसङ्ख्याः १।३ सङ्ख्येये ७।१ बहुव्रीहिः १।१ २३ विभाषा १।१ २।१।११ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

सङ्ख्यया ऽव्ययाऽसन्नादूराधिकसङ्ख्याः सङ्ख्येये २।२।२५

सङ्ख्येये या सङ्ख्या वर्तते तया सह अव्ययाऽसन्नादूराधिकसङ्ख्याः समस्यन्ते बहुव्रीहिश्च समासो भवति। अव्यय उपदशाः। उपविंशाः। आसन्नदशाः। आसन्नविंशाः। अदूरदशाः। अदूरविंशाः। अधिकदशाः। अधिकविंशाः। सङ्ख्या

द्वित्राः। त्रिचतुराः। द्विदशाः। सङ्ख्यया इति किम्? पञ्च ब्राह्मणाः। अव्ययाऽसन्नादूराधिकसङ्ख्याः इति किम्? ब्राह्मणाः पञ्च। सङ्ख्येये इति किम्? अधिका विंशतिर् गवाम्।

न्यासः

संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये। , २।२।२५

"उपदशाः" इति। "बहुव्रीहौ संख्येये डजबहुगणात्" ५।४।७३ इति डच् समासान्तः, टिलोपश्च। दशानां समीपे ये वत्र्तन्ते ते तथोच्यन्ते, ते पुनर्नवैकादश वा। पूर्वपदार्थप्रधानोऽयं समासः। यद्येवम्, कस्तह्र्यव्ययीभावस्यास्य च विषयविभागः; सोऽव्ययीभावोऽवव्ययस्य समीपे वत्र्तमानस्य "अव्ययं विभक्ति" (२।१।६) इत्यादिना पूर्वपदार्थप्रदान एव विधीयते? उच्यते-- यदा समीपिनः प्राधान्यं तदा बहुव्रीहिः,यदा तु समीपस्य प्राधान्यं तदाव्ययीभावः- इत्येष विषयविभागः। "उपविंशाः" इति। पूर्ववड्डच्। "तिर्विंशतेर्डिति" ६।४।१४२ इति टिलोपः। "आसन्नदशाः" इति। दशानामासन्ना आसन्नदशाः। ते च पूर्ववन्नवैकादश वा। "अदूरदशाः" इति। दशानामदूरा ये, ते पुनः पूर्वोक्ता एव। "अधिकदशाः" इति। दशानामधिकाः , ते पुनरेकादशादयः। "द्वित्राः" इति। द्वौ वा त्रयो वति विग्रहः। वार्थेचायं समासः। वार्थश्चायं संशयः, न विकल्पः। यदि वार्थ इह विकल्प आश्रीयते ततो यदा द्वौ भवतः, तदा बहुवचनं न स्यात्। तस्मात् संशयोऽत्र वार्थः। संशयिते चार्थे बहुवचनं भवति, यथा-- कित भवतः पुत्राः। उक्तञ्च भाष्ये-- "अविज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यम्" इति। तत्कथम्? संशयज्ञ#आनस्योभयपक्षरामर्शित्वेन बह्वर्थविषयत्वात्। उभयपक्षापरामर्शित्वे संशय एव न स्यात्। अथ वा-- पञ्चैवात्र सदा भवन्ति, न कदाचिद्द्वौ त्रयो वेति। तथा च "द्वित्रा" इत्युक्ते पञ्चैवेति गम्यते। सैषा पञ्चाधिष्ठानावागिति ततो युक्तं बहुवचनम्। यदि तर्हि वार्थेऽयं समासः, तस्यार्थस्यान्यपदार्थत्वात् पूर्वेणैव सिद्धः समासः? न सिद्ध्यति, मत्वर्थे हि पूर्वयोगः; अमत्वर्थोऽयं योगः। अथ वा-- प्रथमार्थे वर्जयित्वाऽन्यत्र विभक्त्यर्थे पूर्वेण समासः। प्रथमार्थमिदं वचनम्। "त्रिचतुराः" इति। "चतुरोऽच्प्रकरणे चतुरस्त्र्युपाभ्यामुपसंख्यानम्" (वा।६३९) इत्यच् समासान्तः। "द्विदशाः" इति। द्विर्दशेति विग्रहः। सुजर्थेऽयं समासः। दशसम्बन्धिनी याऽऽवृत्तिर्दशशब्देन लक्ष्यमाणा सा द्विशब्देनाख्यायते। सुजर्थश्च प्रत्ययार्थो नान्यपदार्थ इति पूर्वेण न सिद्ध्यति। अथ वा-- प्रथमार्थेऽपिचायम्, अमत्वर्थेऽपि; अतः पूर्वेण न सिध्यति। समास एव सुजर्थं गमयितुं समर्थ इति वृत्तौ सुज् न प्रयुज्यते। "अधिका विंशतिर्गवाम्" इति। विंशतिशब्दोऽत्र संख्यान एव वत्र्तते; न तु संख्येये द्रव्ये॥

बाल-मनोरमा

सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये ८३३, २।२।२५

सङ्ख्यया। शेषग्रहणम्, "अनेकमन्यपदार्थे" इति च निवृत्ते। "बहुव्रीहि"रित्यनुवर्तते। "सुप्सुपा" इति च। "सङ्ख्येये" इतयेतत्सङ्ख्ययेत्यत्रान्वेति। सङ्ख्यया परिच्छेद्यं-सङ्ख्येयम्। "तत्रार्थे विद्यमानया सङ्ख्यये"ति लभ्यते। सङ्ख्या शब्दश्चायं न स्वरूपपरः, किंतु एकादिशतान्तशब्दपरः। तदाह--सङ्ख्येयार्थया सङ्क्ययेति। एकादिशब्देन सुबन्तेनेत्यर्थः। अव्ययादय इति। अव्यय-आसन्न-अदुर-सङ्ख्या एते सुबन्ता इत्यर्थः। अत्रापि सङ्ख्याशब्दो न स्वरूपपरः, किंतु एकादिशब्दपर एव। अत्रेदमवधेयम्-विशतेः प्रागेकादिशब्दाः सङ्ख्येयेषु वर्तन्ते, विशेष्यलिङ्गाश्च। दसादयो नित्यबहुवचनान्ताः। विंशत्यादिशब्दास्तु नित्यमेकवचनान्ताः, सङ्ख्यायां सङ्ख्येये च वर्तन्ते, नवतिपर्यन्ताः नित्यस्त्रीलिङ्गाश्च। यता विंशतिब्र्राआह्णाः, ब्राआह्णानां विंशतिरिति। यदा विंशत्यादिः सङ्ख्या, ततो द्वित्वबहुवचने स्तः। यथा गवां द्वे विंशती इति। चत्वारिंशदिति गम्यते। गवां तिरुआओ विंशतय इति। षष्ठिरिति गम्यते। "विंशत्याद्याः सदैकत्वे सङ्ख्याः सङ्ख्येयसङ्क्ययोः। सङ्ख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः।" "इत्यमरः। अत्राव्ययस्योदाहरति--उपदशा इति। उपशब्दस्य समीपार्थकस्याव्ययीभाव उक्तः। इह तु समीपवर्तिनि उपशब्दो वर्तते। दशसमीपवर्तिन इत्यर्थः। ततश्च अन्यपदार्थवृत्तित्वाऽभावादप्रथमान्तत्वाच्च "अनेकमन्यपदार्थे" इत्यप्राप्ते वचनमिदम्।

तस्य दशानां वृक्षादीनां समीपवर्तिनो गवादय इत्यर्थभ्रमं वारयति--नवैकादश वेत्यर्थ इति। सामीप्यमिह दशन्शब्दार्थगतदशत्वापेक्षम्, एकार्थीभावबलात्। तथाच दशत्वसमीपवर्तिसङ्ख्यावत्सु उपशब्द इति फलति। ततश्च दशत्वसमीपवर्तिसङ्ख्यावन्त इति बोधपर्यवसानं भवति। डजिति। उपदशन्शब्दाड्डचि "नस्तद्धिते" इति टिलोप इति भावः।

तत्त्व-बोधिनी

सङ्ख्यायाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये ७३०, २।२।२५

यः स्त्रीप्रत्यय इति। टाबादिः। प्राचा तु ङीषेवोपत्तस्तदयुक्तमिति ध्वनयन्नुदाहपरति--शूद्राभार्य इति। ब्राआहृणीति। शाङ्गरवादितवीन्ङीन्। प्राचा तु "ङीष् न पुंव"दिति व्याख्याय "ब्राआहृणीभार्य"इत्युदाह्रतं, तद्रभसात्। सौत्रस्यैवेति। व्याख्यानादिति भावः। "न कोपधायाः"इति निषेधस्तु "भस्याढे"इति प्राप्तस्यापि भवत्येव। तेन विलेपिकाया धर्म्यं वैलेपिकमिति सिद्धम्। यदि "अण्पहिष्यादिभ्यः"इत्यणि पुंवद्भावः स्यात्तर्हीकारोऽत्र न श्रूयेत। एतच्च "न कोपधायाः"इति सूत्रे भाष्ये स्पष्टम्। प्रासङ्गिकं समाप्य प्रकृतमनुसरति--सङ्ख्ययेति। सामानाधिकरण्यास्यान्यपदार्थवृत्तेश्च विरहात्पूर्वोणाऽप्राप्तौ वचनम्। दशानामिति। उपगता दश येषामिति न विगृहितं, पूर्वेणैव सिद्धेः। उपदशा इति। उपशब्दः समीपे समीपिनि च वरितते। आद्येऽव्ययीभावः, द्वितीये तु बहुव्रीहिरिति विवेकः। नव एकादश वेत्यर्थ इति। सङ्ख्याद्वारकसम्बन्धस्याऽन्तरङ्गत्वादिति भावः। तेन दशानां वृक्षादीनां समीपे ये सन्ति गवादयस्ते "उपदशा" इति न प्रयुज्यन्ते। सूत्रे तीति लुप्तषष्ठीकमित्याशयेनाह--।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दिङ्नामानि १।३ अन्तराले ७।१ बहुव्रीहिः १।१ २३ विभाषा १।१ २।१।११ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

दिङ्नामान्यन्तराले २।२।२६

दिशां नामानि दिग्नामानि। दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति। दक्षिणस्याश्च पूर्वस्याश्च दिशोर् यदन्तरालं दक्षिणपूर्वा दिक्। पूर्वोत्तरा। उत्तरपश्चिमा। पश्चिमदक्षिणा। सर्वनम्नो वृत्तिमात्रे पुंवद्भावः। नामग्रहणं रूढ्यर्थम्। इह म भूत्, ऐन्द्र्याश्च कौबेर्याश्च चिशोर् यदन्तरालम् इति।

लघु-सिद्धान्त-कौमुदी

रलो व्युपधाद्धलादेः संश्च ८८४, २।२।२६

इवर्णोवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा। व्युपधात्किम्? वर्तित्वा। रलः किम्? एषित्वा। सेट् किम्? भुक्त्वा॥

न्यासः

दिङ्नामान्यन्तराले। , २।२।२६

"दक्षिणपूर्वा" इति। प्रथमार्थेऽप्ययं समास इष्यते, अमत्वर्थेऽपि तत्पूर्वेण न सिध्यतीत्यममत्वर्थं आरम्भः प्रतिपदविधानार्थश्च। "विभाषा दिक्समासे" १।१।२७ इत्यत्र दिशां यः समासः प्रतिपदविहितस्तस्य ग्रहणमिष्यते। प्रतिपदविहितश्च समासो दिशामेव भवति यद्ययं योग आरभ्यते, नान्यथा। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति। स पुनः "स्त्रियां पुंवत्" ६।३।३३ इति योगविभागेन सिध्यतीति वेदितव्यम्। "नामग्रहणं रूढ()र्थम्" इति। लोके ये रूढत्रा दिक्शब्दास्तत्परिहार्थमित्यर्थः। "ऐन्द्र()आश्च कौबेर्याश्च" इति। नेमौ रूढिशब्दौ, किं तर्हि? योगिकौ-- इन्द्रस्येयमैन्द्री, कुबेरस्येयं कौबेरी। "तस्येदम्" ४।३।१२० इत्यण्॥

बाल-मनोरमा

दिङ्नामान्यन्तराले ८३५, २।२।२६

दिङ्नामानि। नामानीत्यनन्तरं "सुबन्तानि परस्पर"मिति शेषः। प्राग्वदिति। समस्यन्ते, स च बहुव्रीहिरित्यर्थः। "नामानी"ति बहुत्वविवक्षितमित्यभिप्रेत्योदाहरति--दक्षिणस्याश्चेति। दक्षिणपूर्वेति। स्त्रीत्वं लोकात्। यद्वा अन्तरालमिह दिगेव गृह्यते। "सर्वनाम्नो वृत्तिमात्रे पुंवत्त्व"मिति भाष्यम्। यद्यप्युपसर्जनत्वान्न सर्वनामत्वन्तथापि भूतपूर्वगत्या सर्वनामत्वमादाय पुंवत्त्वं भवति,अत एव भाष्यात्। ननु दिसोरन्तराले इत्येव सिद्धे नामग्रहणं किमर्थमित्यत आह--नामग्रहणादिति। दिक्षु रूढाः शब्दाः "दिङ्नामानी"त्यनेन विवक्षिताः। ऐन्द्रीशब्दः कोबैरीशब्दश्चेन्द्रसंबन्धात्कुबेरसंबन्धाच्च प्रवृत्तौ यौगिक एव, न रूढ इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तत्र ० तेन ३।१ इदम् १।१ इति ० सरूपे १।२ बहुव्रीहिः १।१ २३ विभाषा १।१ २।१।११ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

तत्र तेन इदम् इति सरूपे २।२।२७

तत्र इति सप्तम्यन्तं गृह्यते। तेन इति तृतीयान्तम्। सरूपग्रहनं प्रत्येकम् अभिसम्बध्यते। तत्र इति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदम् इत्येतस्मिन्नर्थे संस्येते, बहुव्रीहिश्च समासो भवति। इतिकरनश्च इह विवक्षार्थो लौकिकम् अर्थम् अनुसारयति। ततो ग्रहणं, प्रहरनं कर्मव्यतीहारो, युद्धं च समासार्थः इति सर्वम् इतिकरनाल्लभ्यते। यत् तत्र इति निर्दिष्टं ग्रहणम् चेत् तद् भवति, यत् तेन इति निर्दिष्टं प्रहरनं चेत् तद् भवति, यतिदम् इति निर्दिष्टं युद्धं चेत् तद् भवति। केशेषु केशेषु च गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रगृत्य इदं युद्धं प्रवृत्तं दण्डादण्डि। मुसलामुसलि। इच् कर्मव्यतीहारे ५।४।१२७ इति इच् समासान्तः, स च अव्ययम्। अन्येषाम् अपि दृश्यते ६।३।१३६ इति पूर्वपदस्य दीर्घत्वम्। सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम्।

न्यासः

तत्र तेनेदमिति सरूपे , २।२।२७

"इतिकरणः" इत्यादि। समासादभिमतेऽर्थे इतिकरणो यमर्थं प्रतिपादयति तं दर्शयितुमाह-- "लौकिकमर्थमनुसारयति" इति। अनुगमयति प्रबोधयतीति यावत्। स पुनर्लौकिकोऽर्थो ग्रहणादिरिति दर्शयन्नाह "ततः" इत्यादि। यस्मादितिकरणो लौकिकमर्थमनुसारयति ततो हेतोर्ग्रहणादिरिति सर्वं लभ्यते। "यत्तत्रेत्यादिना" कर्मव्यतीहार इति

परस्परग्रहणम्, परस्परग्रहणञ्चेतिकरणादेव लभ्यत इति वेदितव्यम्। स्वरूपविधिरत्रेतिकरणादेव न भवतीति वेदितव्यम्। दण्डैश्चेति करणे तृतीया। "स चाव्ययम्" इति। तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावः; "अव्ययीभावश्च" १।१।४० इत्यव्ययसंज्ञाविधानात्। "सरूपम्" इति। समानस्य "ज्योतिरवचनस्य" ६।३।८४ इत्यादिना सभावः॥

बाल-मनोरमा

तत्र तेनेदमिति सरूपे ८३६, २।२।२७

तत्र तेन। समास इति, बहुव्रीहिरिति चाधिकृतम्। "तत्रे"त्यनेन सप्तम्यन्ते पदे विवक्षिते। "ग्रहणविषये" इति प्रथमाद्विवचनान्तं तद्विशेषणमध्याहार्यम्। "तेने"त्यनेन तु तृतीयान्ते पदे विवक्षिते। "प्रहरणविषये"इति, प्रथमाद्विवचनान्तं तद्विशेषणमध्ताहार्यम्। "सरूपे" इति प्रथमाद्विवचनान्तं पदविशेषणम्। "ग्रहणविषये" इति "प्रहरणविषये" इति तु सप्तम्यन्तयोस्तृतीयान्तयोश्च यथासङ्ख्यमन्वेति। "इद"मित्यर्थनिर्देशः। "युद्धं प्रवृत्त"मिति तद्विशेष्यमध्याहार्यम्। कर्मव्यतिहारे द्योत्ये"इत्यपयध्याहार्यम्। तदाह--सप्तम्यन्ते इति। प्रथमाद्विवचनमिदम्। ग्रहणविषये इति। गृह्यते अस्मिन्निति ग्रहणं=केशादि। अधिकरणे ल्युट्, तत् विषयः=वाच्यं ययोस्ते ग्रहणविषये। ग्रहणवाचके इति यावत्। प्रहरणविषये इति। प्रह्रियते अनेनेति प्रहरणं =दण्डादि। तत्-विषयः=वाच्यं ययोस्ते प्रहरणविषये। प्रहरणवाचके इति यावत्। अत्रापि "सरूपे"पदे इन्यन्वेति। इदं युद्धं प्रवृत्तमित्यर्थे इति। "इद"मिति सामान्यार्थनिर्देशः। "युद्ध"मिति विशेषनिर्देशः। अतः केशाकेशि युद्धिमिति न पुनरुक्तिः। परस्परग्रहणं परस्परप्रहरणं च कर्मव्यतिहारः। ननु "ग्रहणविषये" "प्रहरणविषये"इत्यध्याहारे किं प्रमाणमित्यत आह--इतिशब्दादिति। इतिशब्दो लौकिकप्रसिद्धप्रकारवचनः। "केशाकेशी"त्यादिलौकिकप्रयोगे यावानर्थः प्रसिद्धस्तावत्यर्थेऽयं बहुव्रीहिर्भवतीत्यर्थः।

तत्त्व-बोधिनी

तत्र तेनेदमिति सरूपे ७३२, २।२।२७

तत्र तेनेदं। ग्रहण विषय इति। गृह्यते अनेनेति ग्रहणं=केशादि। तद्विषयो=वाच्यो ययोस्ते सरूपे। प्राह्यियते अनेनेति प्रहरणं=दण्डादि, तद्विषयो=वाच्यो ययोरिति प्राग्वत्। कर्मव्यतिहारः=परस्परग्रहणं, परस्परप्रहरणं च। ननु "ग्रहणविषये सप्तम्यन्ते समस्येते, प्रहरणविषये तृतीयान्ते चे"त्यादिविषयविशेषः सूत्राक्षरैः कथं लभ्यत इत्यत आह---इति शब्दादिति। स हि लौकिकीं विवक्षां दर्शयति। लोके केशाकेशीत्यादिप्रयोगे यावानर्थः प्रतीयते तावत्यर्थे बहुव्रीहिर्भवतीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तेन ३।१ सह ० इति ० तुल्ययोगे ७।१ बहुव्रीहिः १।१ २३ विभाषा १।१ २।१।११ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

तेन सह इति तुल्ययोगे २।२।२८

सह इत्येतच् छाब्दरूपं तुल्ययोगे वर्तमानं तेन इति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति। सह पुत्रेणागतः सपुत्रः। सच्छात्रः। सकर्मकरः। तुल्ययोगे इति किम्? सहैव दशभिः पुत्रैर्भारं बहति गर्दभी। विद्यमातैरेव

दशभिः पुत्रैर्भारं वहति इत्यर्थः। कथं सकर्मकः, सलोमकः, सपक्षकः इति? न ह्यत्र तुल्ययोगो गम्यते। किं तर्हि? विद्यमानता। प्रायिकं तुल्ययोगे इति विशेषनम्। अन्यत्र अपि समासो दृश्यते।

न्यासः

तेन सहेति तुल्ययोगे। , २।२।२८

"तुल्ययोगे वर्त्तमानम्" इत्यादि। तुल्योगः = समानसम्बन्धः। तं यदा सहशब्दोद्योतयति तदासौ तत्र वर्त्तते। "सपुत्रः" इति। सह पुत्रेणेति विग्रहः कर्त्तव्यः। "सहयुक्तेऽप्रधाने" २।३।१९ इति तृतीया। "वोपसर्जनस्य" ६।३।८१ इति सहस्य सभावः। अत्र सपुत्र आगतो देवदत्त इति देवदत्तस्य पुत्रस्य चागमनेन तुल्यसम्बन्()धः सहशब्देन द्योत्यते। अथ कथं पुनः सकर्मक इत्यादौ स्यात्? कथञ्च न स्यादित्याह-- "न ह्त्र" इत्यादि। "प्रायिकम्" इति।असर्वविषयमित्यर्थः। कुतः पुनः प्रयिकत्वमस्य लभ्यते? इतिकरणात्। ननु चान्यदितिकरणस्य प्रयोजनमस्ति, किं तत्? सहशब्दः स्वरूपपदार्थको यथा गम्येत; अन्यथा ह्र्थनिर्देशोऽयं विज्ञायेत। ततश्च साकं साद्र्धमित्यादयोऽपि समस्येरन्? नैवं ब्राउमः; -- इह सूत्रे य इतिकरणस्ततो लभ्यत इति, किं तर्हि? पूर्वसूत्राद्योऽनुवर्त्तते तत इति॥

बाल-मनोरमा

तेन सहेति तुल्ययोगे ८३९, २।२।२८

तेन सहेति। तुल्ययोगे इति। युगपत्कालिकक्रियायोगे इत्यर्थः। तृतीयान्तेनेति। तेनेत्यनेन तल्लाभादिति भावः। प्राग्वदिति समस्यते स बहुव्रीहिरित्यर्थः। असामानाधिकरण्यार्थं कबभावार्थं चेदम्।

तत्त्व-बोधिनी

तेन सहेति तुल्ययोगे ७३५, २।२।२८

तेन सहेति। तुल्ययोगे किम्()। "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी"। इह सहशब्दो न तुल्ययोगवचनः, भारकर्मकवहनक्रियायं पुत्राणामनन्वयात्। किं तु विद्यमानवचनः, दशसु पुत्रेषु विद्यमानोष्वित्यर्थः, एतच्च सहशब्दस्य विद्यमानर्थत्वमप्यस्तीति वक्तुमुक्तम्। प्रत्युदाहरणशरीरं तु "सह पुत्रै"रित्येवेति बोध्यम्। तृतीया तु "सहयुक्ते"इत्यनेनैव।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चार्थे ७।१ द्वन्द्वः १।१ विभाषा १।१ २।१।११ समासः १।१ २।१।३ सुप् १।१ २।१।२

काशिका-वृत्तिः

चार्थे द्वन्द्वः २।२।२९

अनेकम् इति वर्तते। अनेकं सुबन्तं चार्थे वर्तमानम् समस्यते, द्वन्द्वसंज्ञश्च समासो भवति। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्च अर्थाः। तत्र समुच्चयान्वाचययोरसामर्थ्यात् न अस्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः। वाक् च त्वक् च वाक्त्वचम्। वाग्दृषदम्। द्वन्द्वप्रदेशाः द्वन्द्वे च १।१।३० इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

चार्थे द्वन्द्वः ९८८, २।२।२९

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेत रेतरयोगसमाहाराश्चार्थाः। तत्र [ ]ईश्वरं गुरुं च भजस्व' इति परस्परनिरपेक्षस्यानेक स्यैकस्मिन्नन्वयः समुच्चयः। [ ]भिक्षामट गां चानय' इत्यन्यतरस्यानुषङ्गिकत्वेन अन्वयोऽन्वाचयः। अनयोरसामर्थ्यात्समासो न। [ ]धवखदिरौ छिन्धि' इति मिलितानामन्वय इतरेतरयोगः। [ ]संज्ञापरिभाषम्' इति समूहः समाहारः॥

न्यासः

चार्थे द्वन्द्वः। , २।२।२९

कः पुनरयं चार्थो नामेत्याह-- "समुच्चयाऽन्वाचय" इत्यादि। समुच्चितिः = समुच्चयः। साधनमेकं क्रियां वा प्रति क्रियासाधनानामात्मरूपभेदनेन चीयमानताऽनेकत्वमिति यावत्। स पुनस्तुल्यबलानामनियतक्रमयोगपद्यानामेव भवति, यथा-- गाम()आं पुरुषं पशुञ्चाहरहर्नयमानो वैवस्वतस्तृ()प्त नोपयातीति। अन्वाचयोऽपि यत्रैकस्य प्राधान्यम्, इतरदप्रधानम्, तदनुरोधेनान्वाचीयमानता, यथा-- भो वटो भिक्षामट गाञ्चानयेति। इतरेतरयोगः समाहारश्च समुच्चयस्यैव प्रभेदः। स एव हि परस्परापेक्षाणामवयवभेदानुगत इतरेतरयोगः, यथा-- देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कत्र्तव्यम्। उभावपि तत्कार्यं प्रति परस्परापेक्षौ। तथा हि तदेकस्याप्यभावे न क्रियते। अवयवप्रधानश्चायमिति द्वित्वाद्द्विचवचनं भवति। परस्परापेक्षाणामेव तिरोहितावयवभेदः संहतिप्रधानः समाहारः; यथा-- छत्रोपानहमतिति। अत्रापि कस्याञ्चित् क्रियायां छत्त्रादेः परस्परापेक्षत्वम्। संहतिप्रधानत्वाच्चैकवचनम्। यदि तर्हि समुच्चयान्वाचयावपि चार्थौ तदा तयोरपि समासः प्राप्नोतीत्तयत आह-- "तत्र" इत्यादि। समुच्चये तावत् परस्परानभिसम्बन्धा एव गवादयो नयनादिभिः सम्बध्यमानाः समुचीयन्त इत्यासामथ्र्यात् सत्यपि चार्थे तस्मिन् न भवति समासः। अन्वाचयेऽप्येकं सापेक्षं नेतरत्, यथा-- पूर्वोक्त उदाहरणे। त्तर हि गवानयनं भिक्षाटनमपेक्षते, न तु भिक्षाटनं गवानयनम्,; विनापि तेन तदनुष्ठानात्। स यदि गां पश्यति तदा तामप्यानयति, न चेत् भिक्षामेवाटतीत्यन्यतरापेक्षारहिते चार्थे न भवति समासः। "इतरेतरयोगे समाहारे च विधीयते" इति। तत्र सर्वेषां सामथ्र्यस्य विद्यामानत्वात्। "वाक्त्वचम्, वाग्दृषदम्" इति। "द्वन्द्()वाच्चुदषहान्तात् समाहारे" ५।४।१०६ इति टच्। समासान्तः। "जातिरप्राणिनाम्" २।४।६ इत्येकवद्भावः॥

बाल-मनोरमा

चार्थे द्वन्द्वः ८९१, २।२।२९

अथ द्वन्द्वसमासनिरूपणम्। चार्थे द्वन्द्वः। "सुबामन्त्रिते" इत्यतः "सुबिति, "अनेकमन्यपदार्थे" इत्यतोऽनेकमिति चानुवर्तते। समास इति विभाषेति चाधिकृतं। तदाह--अनेकमित्यादिना। कश्चार्थ इत्यत आह--समुच्चयेति। "चाऽन्वाचयसमाहारेतरेतरसमुच्चये"इत्यमरः। तत्र समुच्चयं निर्वक्ति--परस्परेति। एकस्मिन्निति। अकस्मिन् क्रियापदे आवृत्ते एकस्य असमस्यमानपदस्य प्रथममन्वयः, तदनन्तरमन्यस्यान्वयो यत्र, तत्र समुच्चयश्चार्थं इत्यर्थः। यथा ---"ईस्वरं गुरुं च भजस्वे"ति। तत्र हि चशब्दयोगाद्गुरोरी()आरसापेक्षत्वम्, न त्वी()आरस्य गुरुसापेक्षत्वं, तस्य चकारयोगाऽभावात्। अत एवात्र एक एव चशब्दः प्रयुज्यते। एवंच "ई()आरं च भजस्व" गुरुं च भजस्वे"ति वाक्यद्वयं पर्यवस्यति। अथाऽन्वाचयं लक्षयति--अन्यतरस्येति। यत्राऽन्यतरस्य पदस्यैकस्मिन् क्रियापदे आनुषङ्गिकत्वेन परार्थप्रवृत्तिविशषयत्वेनान्वयः, इतरस्य यतु पदस्यान्यस्मिन् क्रियापदे उद्देश्यत्वेनान्वयश्च तत्रान्वाचयश्चार्थ इत्यर्थः। यथा--"भिक्षामट गां चानये"ति। "अट गतौ"। भिक्षामटनेन प्राप्नुहीत्यर्थः। भिक्षामट, तदा गौः सङ्गता चेत्तामप्यानय, नतु गवानयने ऐदंपर्येण प्रयतितव्यमिति तात्पर्यार्थः। इतरेतरयोगं लक्षयति--मिलितानामिति। परस्परापेक्षितानां समुदितानामेकस्मिन् क्रियापदेऽन्वयो यत्र, तत्रेतरेतरयोगः परस्परसाहर्यं चार्थः प्रत्येतव्य इत्यर्थः। यथा धवश्च खदिरश्च

धवखदिराविति। अत्र परस्परसाहित्यसूचनाय चकारद्वयप्रयोगः। अथ समाहारं लक्षयति--समूहः समाहार इति। परस्परसाहित्यमित्यर्थः। यथा संज्ञापरिभाषयोः समूहः संज्ञापरिभाषमिति। तत्रेतरेतरयोगद्वन्द्वे साहित्यं द्रव्यविशेषणम्। यता धवखदिरौ छिन्द्धीति। समिदिताविति गम्यते। समाहारद्वलन्द्वे तु समूहो विशेष्यम्। यता "संज्ञापरिभाष"मिति। तयोः समूह इति गम्यते। "संज्ञापरिभाषमधीयते" इत्यादौ समूहस्य क्रियान्वयस्तु समूहिद्वारा बोध्य इत्यल्म्। तत्रेति। तेषु चार्थेषु समुच्चयेऽन्वाचये च न द्वन्द्वसमास इत्यन्वयः। ई()आरं गुरुं च भजस्वेति। समुच्चयोदाहरणमिदम्। "भिक्षामट गां चानये"त्युदाहरणं चानुपदमेव व्याख्यातम्। असामथ्र्यादिति। "ई()आरं गुरुं चे"त्यत्रोक्तरीत्या ई()आरगुरुशब्दयोः परस्परनिरपेक्षयोरावृत्ते "भजस्वे"ति पदे क्रमेणान्वयात्परस्परमन्वयाऽभावादसामथ्र्यम्। "भिक्षामट गां चानये"त्यत्र तु भिक्षागवोरटने आनयने च क्रमेण परस्परवार्तानभिज्ञयोरेवान्वयात्परस्परान्वयाभावादसामथ्र्यं स्पष्टमेव। ततश्च इतरेतरयोगसमाहायोरेव चार्थयोः परस्परसाहित्यसत्त्वात्समर्थत्वेन द्वन्द्वसमासः। विस्तरस्तु मञ्()जूषायाः द्रष्टव्यः।

इतरेतरयोगमुदाहरति-धवखदिराविति। धवश्च खदिरश्चेति द्वन्द्वः। धवो-वृक्षविशेषः, खदिरः-प्रसिद्धः, तौ समुदिताविति बोधः। समाहारे तूदाहरति--संज्ञेति। संज्ञा च परिभाषा च तयोः समाहार इति विग्रहः। समाहारस्यैकत्वादेकवचनम्। "स नपुंसक"मिति नपुंसकत्वम्। ननु "चार्थे द्वन्द्वः" इत्यत्र "सुप्सुपे"त्यनुवृत्त्यैव धवखदिरावित्यादिसिद्धेरनेकग्रहणानुवृत्तिर्वयर्थेत्यत आह--अनेकोक्तेरिति। होतृपोत्रिति। होता च पोता च नेष्टा च उद्गता चे"ति विग्रहे वहूनामपि द्वन्द्वार्थमनेकग्रहणमिति भावः। "आनङृतो द्वन्द्वे" इति नेष्टृशब्दस्यैव उत्तरपदपरकत्वादानङ्, नतु होतृपोतृशब्दयोरपि, उत्तरपदस्य मध्यमपदव्यवहितत्वेन होतृपोतृशब्दयोरुत्तरपदपरकत्वाऽभावात्। ननु तर्हि "होतापोतानेष्टोद्गातार" इति कथमित्यत आह--द्वयोरिति। होता च पोता चेति द्वयोद्र्वन्द्वः। होतृशब्दस्य आनङ्। ततश्च नेष्टा च उद्गाता चेति द्वयोद्र्वन्द्वः। नेष्टृशब्दस्यानङ्। ततो होतापोतारौ च नेष्टोद्गातारो चेति द्वन्द्वद्वयगर्भो द्वन्द्वः। तत्र नेष्टोद्गातृशब्द उत्तरपदे होतापोतृशब्दस्य आनङित्यर्थः। आनङि ङकार इत्। ङित्त्वादन्तादेशः। अकार उच्चारणार्थः। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नस्य लोपः।

तत्त्व-बोधिनी
चार्थे द्वन्द्वः ७६८, २।२।२९

चार्थे द्वन्द्वः। "अनेकमन्यपदार्थे"इत्यतोऽनेकमित्यनुवर्तते, "सुबामन्त्रिते---"इत्यस्मात्सुबपि।"समासः"इति , "विभाषा"इति चाऽधिकियत एव। तदाह---अनेकं सुबन्तमित्यादि। चार्था इति। चशब्दद्योत्या इत्यर्थः। एकस्मिन्निति। भजनादावित्यर्थः। ई()आरं गुरुंत भजस्वेति। क्रियायां द्रव्ययोः समुच्चयोऽयम्। तथा राज्ञो गजश्चा()आश्चेति द्रव्ये द्रव्ययोः समुच्चयः। पटः शुक्लो रक्तश्चेति द्रव्ये गुणयोः। रक्तः पटः कुण्डलं चेति गुणे द्रव्ययोरित्यूह्रम्। भिक्षामट गां चानयेति। अत्र ह्रदर्शनाद्गामनानयन्नपि भिक्षामटत्येव। अनटंस्तु भिक्षां न गामानयति। तथा अटन्नपि नाऽन्विष्य गामानयति। अतो भिक्षाऽटनस्यैब प्राधान्यं, ग्वानयनस्य त्वानुषङ्गिकता। असामथ्र्यादिति। एकार्थीभावाऽभावादित्यर्थः। तथाहि बहुव्रीहिघटकपदानां कर्माद्यन्तर्भावेणेव द्वन्द्वघटकपादानां चार्थान्तर्भावेण एकार्थीभाव आवश्यकः, "समर्थः पदविधिः"इति परिभाषितत्वात्, "चार्थे द्वन्द्वः" इत्युक्तेश्च। न चेतरेतरान्वये परस्परनिरपेक्षाणामेकार्थीभावः संभवति येन समुच्चयान्वाचयावेकार्थीभावान्तर्भूतौ स्याताम्। ततश्चेतरयोगे समाहारे च परस्परसाहित्यसत्त्वात्समासो भवति, न तु समुच्चयान्वाचययोः। परं त्वितरेतरयोगे साहित्यं विशेषणं, द्रव्यं तु विशेष्यं, समाहारे तु साहित्यं प्रधानं, द्रव्यं विशेषणमिति विवेक्तव्यम्। ननु "नीलोत्पल"मित्यादौ चशब्दान्तर्भावेण विग्रहदर्शनादेकार्थीभावसत्त्वाच्च द्वन्द्वो दुर्वारः स्यात्। मैवम्। "विशेषणं विशेष्येणे"ति सामानाधिकरण्ये विहिरतया

तत्पुरुषसंज्ञया द्वन्द्वसंज्ञाया बाधात्। तस्यास्त्वसामानाधिकरण्ये सावकाशत्वात्। सामानाधिकरण्याऽभावविवक्षायां तु "प्रमाणप्रमेये"त्यदाविव नीलोत्पलादावपि द्वन्द्वे इष्टापत्तिरेव। होतृपोत्रिति। उत्तरपदपरत्वाऽभावादनयोरानङ् न।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपसर्जनम् १।१ ३१ पूर्वम् १।१ ३८ समासः १।१ २।१।३

काशिका-वृत्तिः
उपसर्जनं पूर्वम् २।२।३०

समासे इति वर्तते। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्। अनियमो हि स्यात्। द्वितीया कष्टश्रितः। तृतीया शङ्कुलाखण्डः। चतुर्थी यूपदारु। पञ्चमी वृकभयम्। षष्ठी राजपुरुषः। सप्तमी अक्षशौण्डः।
लघु-सिद्धान्त-कौमुदी
उपसर्जनं पूर्वम् ९१३, २।२।३०

समासे उपसर्जनं प्राक्प्रयोज्यम्। इत्यधेः प्राक् प्रयोगः। सुपो लुक्। एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः। अव्ययीभावश्चेत्य व्ययत्वात्सुपो लुक्। अधिहरि॥
न्यासः
उपसर्जनं पूर्वम्। , २।२।३०

"पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्" इति। ननु च परप्रयोगविपर्ययो लोके न दृष्ट एव; तत्कथं परप्रयोगनिवृत्त्यर्थेन पूर्वग्रहणेनेत्यत आह-- "अनियमो हि स्यात्" इति। सम्भावनायां लिङ। एवं मन्यते-- यद्यपि परप्रयोगविपर्ययो न दृष्टः, तथाप्यसति नियामके वाक्ये पुरुषापराधाद्विपरीतप्रयोगोऽपि सम्भाव्येत। येषाञ्च वाक्यमेव समासीभवतीति दर्शनम्, तेषां वाक्यस्यानितयतक्रमत्वात् तद्विकारोऽपि समासोऽनियतक्रमः स्ादिति सूत्रारम्भः॥
बाल-मनोरमा
उपसर्जनं पूर्वम् ६४६, २।२।३०

उपसर्जनं पूर्वम्। प्राक्कडारात् समास इत्यदिकृतम्। समास इति प्रथमान्तं योग्यतया सप्तम्यन्तं विपरिणम्यते। तदाह--समासे उपसर्जनं प्राक् प्रयोज्यमिति। पूर्वमित्यस्य पूर्वं प्रयोज्यमित्यर्थ इति भावः। एवंच प्रकृते अपेत्यस्य पूर्वं प्रयोगनियमः सिद्धः। अप दिशा इति स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ राजदन्तादिषु ७।१ परम् १।१ उपसर्जनम् १।१ ३०

काशिका-वृत्तिः

राजदन्ताऽदिषु परम् २।२।३१

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम्। राजदन्ताऽदिषु उपसर्जनं परम् प्रयोक्तव्यम्। न केवलम् उपसर्जनस्य, अन्यस्य अपि यथा लक्षणं विहितस्य पूर्वनिपातस्य अयम् अपवादः परनिपातो विधीयते। दन्तानां राजा राजदन्तः। वनस्य अग्रे अग्रेवणम्। निपातनादलुक्। राजदन्तः। अग्रेवनम्। लिप्तवासितम्। नग्नमुषितम्। सिक्तसंमृष्टम्। मृष्टलुञ्चितम्। अवक्लिन्नपक्वम्। अर्पितोप्तम्। उप्तगाढम्। पूर्वकालक्षय् परनिपातः। उलूखलमुसलम्। तण्डुलकिण्वम्। दृषदुपलम्। आरग्वायनबन्धकी। चित्ररथबह्लीकम्। आवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्षेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्। शब्दार्थौ। धर्मार्थौ। कामार्थौ। अनियमश्च अत्र इष्यते। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। तत् कथम्? वक्तव्यम् इदम्। धर्माऽदिषु उभयम् इति। वैकारमतम्। गजवाजम्। गोपालधानीपूलासम्। पूलासककरण्डम्। स्थूलपूलासम्। उशीरबीजम्। सिञ्जास्थम्। चित्रास्वाती। भार्यापती। जायापती। जम्पती। दम्पती। जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। पुत्रपती। पुत्रपशू। केशश्मश्रू। श्मश्रुकेशौ। शिरोबीजम्। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृद्धी। वृद्धिगुणौ।

लघु-सिद्धान्त-कौमुदी

राजदन्तादिषु परम् ९८९, २।२।३१

एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजानो राजदन्ताः। (धर्मादिष्वनियमः)। अर्थधर्मौ। धर्मार्थावित्यादि॥

न्यासः

राजदन्तादिषु परम्।, २।२।३१

"पूर्वस्य परनिपात" इति। लिप्तवासिताद्युप्तगाढपर्यन्तेषु। उदूखलमसलादयो ये द्वन्द्वाः, तत्र क्वचिदल्पाच्तरत्वात् पूर्वनिपातः प्राप्नोति, क्वचिद् ध्यन्तत्वात् पूर्वनिपातः, क्वचिदजाद्यन्तत्वात्; क्वचितुल्यादनियमः। "दृष्दुपलम्" इति प्रमादाच्चायं पाठो लक्ष्यते। अल्पाच्तरत्वाददृषच्छब्दस्य पूर्वनिपातः सिद्धः। "अक्षिभ्रुवम्, दारगवम्" इति। अचतुरादिसूत्रेणाच् ५।४।७९ समासान्तः। "स्थूलपूलासम्" इति। प्रमदपाठोऽयं लक्ष्यते;पूर्वोक्तादेव कारणात्॥

बाल-मनोरमा

राजदन्तादिषु परम् ८९२, २।२।३१

नेष्टोद्गातृशब्दे आद्गुणश्च। राजदन्तादिषु परम्। "उपसर्जनं पूर्व"मित्यनुवर्तते। तदाह--एष्विति। राजदन्तादिष्वित्यर्थः। पूर्वप्रयोगर्हमित्यतः प्राक् "उपसर्जनं"मिति सेषः। राजदन्त इति। दन्तशब्दस्य षषष्टीतत्पुरुषेऽप्रदानतयोपसर्जनत्वेऽपि परनिपातः। इह गणे राजदन्ताग्रेवणादिशब्दास्तत्पुरुषाः,विष्वक्सेनार्जुनादयो द्()वन्द्वश्च पठिता अतो द्वन्द्वप्रकरणे तदुपन्यासः। वि()आक्सेनार्जुनावित्यत्र "अजाद्यदन्त"मित्यर्जुनशब्दस्य पूर्वनिपाते प्राप्ते परनिपातः। धर्मादिष्वनियम इति। गणसूत्रमिदम्। अन्यतरस्य पूर्वनिपात इत्यर्थः। अर्थधर्माविति। अजाद्यदन्तशब्दस्य पूर्वनिपातनियमे प्राप्ते तदनियमो वक्तव्य इत्यर्थः। निपात्यत इति। पाक्षिको राजदन्तादिगण इत्यर्थः। पत्युरभ्यर्हितत्वेऽपि परनिपातश्च। आकृतिगणोऽयमिति। वृत्तौ तु कृत्स्नोऽयं गणः पठितः।

तत्त्व-बोधिनी

राजदन्तादिषु परम् ७६९, २।२।३१

राजदन्तादिषु। इह द्वन्द्वतत्पुरुषयोः पाठेऽपि "अर्थ धर्मौ"इत्याद्यभिप्रायेणाऽस्य द्वन्द्वेषूपन्यासः।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्वन्द्वे ७।१ ३४ घि १।१ पूर्वम् १।१ ३०

काशिका-वृत्तिः

द्वन्द्वे घि २।२।३२

पूर्वम् इति वर्तते। द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्। पटुगुप्तौ। मृदुगुप्तौ। अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः। द्वन्द्वे इति किम्? विस्पष्टपटुः।

लघु-सिद्धान्त-कौमुदी

द्वन्द्वे घि ९९०, २।२।३२

द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ॥

न्यासः

द्वन्द्वे घि। , २।२।३२

"उपसर्जनम्" इत्यन्वर्थसंज्ञाविधानादप्रधानस्योपसर्जनसंज्ञा विहिता। द्वन्द्वे च सर्वेषां पदानां प्राधान्यम्। न कस्यचिदप्राधान्यमित्युपसर्जनसंज्ञाया अभावादनियमे प्राप्ते वचनमिदम्। अत्र यत्र बहूनां पूर्वनिपातप्रसङ्गस्तत्र किमेकस्यानियमो भविष्यति, उत सर्वेषामित्याह-- "अनेकप्राप्तावेकस्य" इत्यादि। एव चार्थो जातिपदार्थस्याश्रयणाल्लभ्यते व्यक्तौ तु पदार्थे प्रतिव्यक्ति शास्त्रप्रवृत्या भवितव्यम्, ततः सर्वेषां नियमः स्यात्। आकृतौ तु पदार्थे लक्ष्य एकं लक्षणं सकृदेव प्रवत्र्तते। तेन चैकस्य पूर्वनिपाते जातिः कृतार्थेति शेषाणामनियमो भवति। एवमुत्तरत्राप्येकस्य नियमः, शेषाणान्त्वनियम इति वेदितव्यम्। "विस्पष्टपटुः" इति। विस्पष्टः पटुः, मयूरव्यंसकादित्वात्समासः॥

बाल-मनोरमा

द्वन्द्वे घि ८९३, २।२।३२

द्वन्द्वे घि। "पूर्व"मित्यनुवर्तते। तदाह--पूर्वं स्यादिति। हरिहरापिति। हरिशब्दस्य घित्वात्पूर्वनिपातः।

ननु "हरिहरगुरव" इत्यत्र गुरुशब्दस्यापि घित्वात्पूर्वनिपातः। स्यादित्यत आह--अनेकेति। अनेकस्य घिसंज्ञकपदस्य द्वन्द्वप्राप्तौ सत्यामेकस्य घिसंज्ञकस्य पूर्वनिपातनियमः। शेषेऽन्यस्मिन् घिसंज्ञकपदविषये पूर्वनिपातस्य विकल्प इत्यर्थः। इदं "अल्पाच्तर"मिति सूत्रे भाष्ये स्पष्टम्। जातिपक्षे तावदाकृतिं पुरस्कृत्य सर्वासु व्यक्तिषु तत्तच्छास्त्राणि सकृदेव प्रवर्तन्ते, "सकृच्छ()तत्वात्, न तु प्रतिव्यक्ति, तथा सति प्रतिव्यक्त्यावृत्तिप्रसङ्गात्। ततश्च अनेकघिसंज्ञकसमवाये एकस्य घिसंज्ञकस्य पूर्वनिपाते सति पुनः शास्त्रं न प्रवर्तते, सकृत्प्रवृत्त्यैव शास्त्रस्य शान्ताकाङ्क्षत्वात्। व्यक्तिपक्षस्तु नेहाश्रीयते, लक्ष्यानुरोधादित्याहुः। हरिहरगुरव इति। हरगुरुशब्दयोर्न नियम इति भावः।

तत्त्व-बोधिनी

द्वन्द्वे घि ७७०, २।२।३२

द्वन्द्वे घि। "अनेक"मिति सर्वेषामेव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वाऽविशेषादनियमप्रापतावयमारम्भः। यत्र त्वनेकं ध्यन्तं तत्र द्वयोरपि पूर्वनिपातनियमः स्यादत आह----।

अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे। अनेकप्राप्तावेकत्रेति। अत्र व्याचख्युः--आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते, न प्रतिव्यक्त्यावृत्त्या। तत्रैकस्य पूर्वनिपाते सति जातौ लक्षणं प्रवृत्तमेवेति न पुनः प्रवर्तते। व्यक्तिपक्षस्त्विह नाश्रीयते, लक्ष्यानुरोधादिति। हरिहर गुरव इति। हरगुरुशब्दयोर्न नियमः प्रवर्तत इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अजाद्यदन्तम् १।१ द्वन्द्वे ७।१ ३२ पूर्वम् १।१ ३०

काशिका-वृत्तिः

अजाद्यदन्तम् २।२।३३

द्वन्द्वे इति वर्तते। अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। उष्ट्रखरम्। उष्त्रशशकम्। बहुष्वनियमः। अश्वरथेन्द्राः। इन्द्ररथाश्वाः। द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन। इन्द्राग्नी। इन्द्रवायू। तपरकरणं किम्? अश्वावृषौ, वृषाश्वे इति वा।

लघु-सिद्धान्त-कौमुदी

अजाद्यदन्तम् ९९१, २।२।३३

द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ॥

न्यासः

अजाद्यदन्तम्। , २।२।३३

"द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन" इति। "द्वन्द्वे घि" २।२।३२ इति तस्मादजाद्यदन्तमित्येतद्भवति विप्रतिषेधेन। "द्वन्द्वे घि"इत्यस्यावकाशः-- पटुशुक्लौ,पटुगुप्तौ। "अजाद्यदन्तम्" इत्यस्यावकाशः-- उष्ट्रशशौ, उष्ट्रखरौ। इन्द्राग्नी इत्यत्रोभयं प्राप्नोति, अजाद्यदन्तं भवति विप्रतिषेधेन॥

बाल-मनोरमा

अजाद्यदन्तम् ८९४, २।२।३३

अजाद्यदन्तम्। इदमिति। अजादित्वे सत्यदन्तमित्यर्थः। ईशकृष्णाविति। अत्र कृष्णस्याऽदन्तत्वेऽप्यजादित्वाऽभावान्न पूर्वनिपातः।

बहुष्वनियम इति। वक्तव्य" इति शेषः।

ननु इन्द्राग्नी इत्यत्र घित्वादग्निशब्दस्य पूर्वनिपातः किं न स्यादित्यत आह--ध्यन्तादिति। ध्यन्तशब्देन "द्वन्द्वे घी"ति सूत्रं विवक्षितम्। ल्यब्लोपे पञ्चमी। विप्रतिषेधसूत्रेण "द्वन्द्वे घी"त्येतद्बाधित्वा "अजाद्यदन्त"मिति प्रवर्तते इत्यर्थः।

तत्त्व-बोधिनी

अजाद्यदन्तम् ७७१, २।२।३३

अजाद्यदन्तं। "समुद्राभ्राद्घः" "लक्षणहेत्वोः क्रियायाः" इत्यादिनिर्देशादनित्यमिदं प्रकरणम्। तेन "स सौष्ठवौदार्यविशेषशालिनी"मिति भारविप्रयोगः सङ्गच्छते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अल्पाच्तरम् १।१ द्वन्द्वे ७।१ ३२ पूर्वम् १।१ ३०

काशिका-वृत्तिः
अल्पाच्तरम् २।२।३४

द्वन्द्वे इति वर्तते। अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम्। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवखदिरपलाशाः। बहुष्वनियमः शङ्खदुन्दुभिवीणाः, वीणाशङ्खदुन्दुभयः। ऋतुनक्षत्राणामानुपूर्व्येण समानक्षरानां पूर्वनिपातो वक्तव्यः। हेमन्तशिशिरवसन्ताः। चित्रास्वाती। कृत्तिकारोहिण्यौ। समानाक्षराणाम् इति किम्? ग्रीष्मवसन्तौ। लघ्वक्षरं पूर्वं निपतति इति वक्तव्यम्। कुशकाशम्। शरशादम्। अभ्यर्हितं च पूर्वं निपतति इति वक्तव्यम्। मातापितरौ। श्रद्धमेधे। दीक्षातपसी। वर्णानामानुपूर्व्येण पूर्वनिपातः। ब्राह्मणक्षत्रियविट्शूद्राः। समानाक्षराणाम् इत्यत्र न अस्ति। भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः। युधष्ठिरार्जुनौ। सङ्ख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः। द्वित्राः। त्रिचतुराः। नवतिशतम्।
लघु-सिद्धान्त-कौमुदी
अल्पाच्तरम् ९९२, २।२।३४

शिवकेशवौ॥
न्यासः
अल्पाच्तरम्। , २।२।३४

"ऋतुनक्षत्राणाम्" इत्यादि। ऋतूनामानुपूर्व्य प्रादुर्भावकृतम्, नक्षत्राणामुदयकृतम्। ऋतुनक्षत्राणामित्यत्रैव वर्णग्रहणं कस्मान्न कृतमिति पर्यनुयोगदोषमाशङ्क्याह-- "समानाक्षराणाम्" इत्यादि। असमानाक्षराणामपि वर्णानामानुपूर्व्येण पूर्वनिपात इष्यत इति पृथग्वचनम्। आनुपूर्व्यञ्च वर्णानां जन्मकृतमिति लोकव्यवहारे प्रसिद्धम्। प्रसिद्धिश्च श्रुतिकृता। श्रुतौ हि पठ()ते "मुखते ब्राआहृणमसृजत्, बाहुभ्यां राजनयम्, ऊरुभ्यां वैश्यम्, पद्भ्यां शूद्रम्" इति। "संख्याया अल्पीयस्याः" इति द्वन्द्वे चेति वक्तव्यम्। "द्वित्राः,त्रिचतुराः" इति बहुव्रीहिः। "नवतिशतम्" इति द्वन्द्वः॥
बाल-मनोरमा
अल्पाच्तरम् ८९५, २।२।३४

अल्पाच्तरम्। अल्पः=अल्पसङ्ख्योऽच्यस्य तदल्पाच्, तदेवाऽल्पाच्तरम्। अत एव निपातनात्स्वार्थे तरप्, कुत्लाऽभावश्च। अल्पसङ्ख्याऽच्कं पदं द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः। शिवकेशवाविति। हरिहरयोरन्यतरोत्कर्षवादस्य पाषण्जवादत्वादिति भावः। यदि तु "द्विवचनविभज्य" इत्यादिशयार्थे तरप्स्यात्, तदा "धवखदिरपलाशा" इत्यत्र बहुषु न

स्यादिति प्राञ्चः। शब्देन्दुशेखरे तु प्रकर्षार्थक एवायं तरबिति स्थितम्।

ऋतुनक्षत्राणामिति ष समानसङ्ख्याऽच्कानाम् ऋतूनां नक्षत्राणां च द्वन्द्वे आनुपूव्र्येण=क्रमेण पूर्वनिपातो वक्तव्य इत्यर्थः। हेमन्तशिशिरबसन्ता इति। त्रयाणामृतूनामानुपूर्व्यं लोकप्रसिद्धम्। एवं कृत्तिकादिनक्षत्राणामपि। ग्रीष्मवसन्ताविति। विषमाक्षरत्वान्न वसन्तस्य पूर्वनिपातः, किंतु अल्पाच्त्वाद्ग्रीष्मस्य पूर्वनिपातः।

लघ्वक्षरं पूर्वं। लघु अक्षरमच् यस्य तदद्वन्द्वे पूर्वं प्रयोज्यमिति वक्तव्यमित्यर्थः। कुशकाशमिति। समाहारद्वन्द्वोऽयम्।

अभ्यर्हितं चेति। श्रेष्ठः पूर्वं प्रयोज्य इति वक्तव्यमित्यर्थः। तापसपर्वताविति। पर्वतस्य स्थावरजन्मतया तापसस्य तदपेक्षया अभ्यर्हितत्वं बोध्यम्। भाष्ये तु मातापितरावित्युदाह्मतम्। "गर्भधारणपोषाभ्यां पितुर्माता गरीयसी"त्यादिस्मृतेरिति तदाशयः।

वर्णानामानुपूव्र्येणेति। एषां क्रमेण पूर्वनिपातः। "ब्राह्क्षत्रियविट्छूद्वा वर्णाः" इत्यमरः। तेषामानुपूर्व्यं तु "प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृत्तं निरमिभीते"त्यादितैत्तिरीयब्राआह्णादिसिद्धम्।

भ्रातुज्र्यायस इति। ज्येष्ठभ्रातुः पूर्वनिपात इत्यर्थः। "अत्र "द्वन्द्वे घि" "अजाद्यदन्त"मिति विधिद्वयम् "अल्पाच्तरं" "लघ्वक्षरं पूर्वम्", "ऋतुनक्षत्राणाम्", "अभ्यर्हितं च" "भ्रातुज्र्यायसः" इति विधिभिः परत्वाद्बाध्यते। भाष्ये तु "सर्वत एवाभ्यर्हितं पूर्वं निपतती"ति मतान्तरं स्थितम्।

तत्त्व-बोधिनी
अल्पाच्तरम् ७७२, २।२।३४

अल्पाच्तरम्। अतएव निपातनात्स्वार्थे तरप्, कुत्वचुत्वयोरभावश्च। यदि तु प्रकर्षे तरप् स्यात्तदाद्वयेरेव नियमः स्यात्, द्विवचनान्तोपपदत्वविषय एव तरपो विधानात्।ततश्च "धरवदिरपलाशा"इत्यादौ बहुषु नियमो न स्यात्। ऋतुक्षत्राणामिति। ऋतूनामानुपूर्व्यं प्रादुर्भावकृतं, नक्षत्राणां तूदयकृतम्।

अभ्यर्हितं च। अभ्यर्हितं च। "वासुदेवार्जुनाभ्यां वुनि"ति निर्देशेनेदं ज्ञाप्यत इति चतुर्थे भाष्यम्। "अल्पाच्तरम्" "अजाद्यदन्त"मिति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति "सर्वतोऽभ्यहितं पूर्व"मिति तत्रैव सूत्रे वक्ष्यते।

भ्रातुज्र्यायसः। युधिष्ठिरार्जुनाविति। इन्द्रपुत्रत्वाद्विष्णोरंशत्वाच्छूरत्वाद्वाऽभ्यर्हितत्वमर्जुनेऽप्यस्तीति न तेन नियमः सिध्यतीति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सप्तमीविशेषणे १।२ बहुव्रीहौ ७।१ ३७ पूर्वम् १।१ ३०

काशिका-वृत्तिः
सप्तमीविशेषने बहुव्रीहौ २।२।३५

सर्वोपसर्जनत्वाद् बहुव्रीहेरनियमे प्राप्ते नियमार्थं वचनम्। सप्तम्यन्तं विशेषणं च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्।

क्ण्ठेकालः। उरसिलोमा। विशेषनम् चित्रगुः। शबलगुः। सर्वनामसङ्ख्ययोरुपसङ्ख्यानम्। सर्वश्वेतः। सर्वकृष्णः। द्विशुक्लः। द्विकृष्णः। अनयोरेव मिथः संप्रधारणायां प्रत्वात् सङ्ख्यायाः पूर्वनिपातः। द्व्यन्यः। त्र्यन्यः। वा प्रियस्य पूवनिपातः। गुडप्रियः, प्रियगुडः। सप्तम्याः पूर्वनिपाते प्रप्ते गड्वादिभ्यः सप्तम्यन्तं परम्। गडुकण्ठः। गडुशिराः। कथं वहेगडुः? प्राप्तस्य चाबाधा व्याख्येया।

लघु-सिद्धान्त-कौमुदी

सप्तमीविशेषणे बहुव्रीहौ ९७०, २।२।३५

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात्। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः॥

न्यासः

सप्तमीविशेषणे बहुव्रीहौ। , २।२।३५

"सर्वनामसंख्ययोः" इति। यत्र गुणवचनेन सह समासः सोऽस्य विषयः। यत्र तु द्रव्यवाचिना तत्र सर्वनामंख्ययोर्विशेषणत्वादेव पूर्वनिपातः सिद्धः। "सप्तम्याः पूर्वनिपाते" इत्यादि। सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते गड्वादिभ्यः परवचनं कत्र्तव्यमिति। सप्तम्य्नतं परमुच्यते = कथ्यते येन व्याख्यानेन तत् परवचनम्। तत्रेदं व्याख्यानम्-- आहितादेराकृतिगणत्वाद् गडुककण्ठप्रभृतयस्तत्रैव द्रष्टव्याः,तेन गड्वादिभ्यः परं सप्तम्यन्तं भविष्यति। "कथं वहेगडुः" इति। यदि गड्वादिभ्यः सप्तम्याः परवचनमिति भावः। "प्राप्तस्य च बाधा व्याख्येया" इति। तत्रेदं व्याख्यानम्-- "वाहिताग्न्यादिषु" २।२।३७ इत्यतो वाग्रहणं क्रियते, सा च व्यवस्थितविभाषा विज्ञायते। तेन प्राप्तस्य परनिपातस्य बाधनं भविष्यति॥

बाल-मनोरमा

सप्तमीविशेषणे बहुव्रीहौ ८८९, २।२।३५

सप्तमीविशेषणे। "उपसर्जनं पूर्व"मित्यतः पूर्वमित्यनुवर्तते। प्रत्ययग्रहणपरिभाषया सप्तमीति तदन्तग्रहणं। तदाह-- सप्तम्यन्तमिति। कण्ठेकाल इति। "कण्ठे तिष्ठतीति कण्ठेस्थः, स कालो यस्येति विग्रहः। "सुपी"ति योगविभागात्कः। "सप्तम्युपमानपूर्वपदस्ये"ति बहुव्रीहि समासः, स्थशब्दलोपश्चे"ति "अनेकमन्यपदार्थे" इति सूत्रे भाष्ये स्पष्टम्। "अमूर्धमस्तका"दिति सप्तम्या अलुक्। अत एवेति। यद्यपि कण्ठेस्थशब्दः प्रथमान्त एवात्र बहुव्रीहौ पूर्वपदं, तस्य कालशब्देन सामानाधिकरण्यमस्त्येवेति कथं सप्तमीग्रहणं व्यधिंकरणपदबहुव्रीहिज्ञापकम्। किंच विशेषणत्वादेव सिद्धे किं वा सप्तमीग्रहणेन?। तथापि यदा स्थपदमनादृत्य "कण्ठे" इत्यस्याधिकरणत्वं, तस्य च कालरूपे उत्तरपदार्थे उपसङ्क्रमस्तदा "कण्ठे" इत्यस्याऽप्रथमान्तत्वाद्बहुव्रीहेरप्रसक्तेस्तत्र सप्तम्यन्तस्य पूर्वनिपातविधिरभित्तिचित्रायितः स्यात्। ततश्च सप्तमीग्रहणादप्रथमान्तोऽपि बहुव्रीहिः क्वचिदस्तीति विज्ञायते इति योज्यम्। तेन "सच्चास्त्रजन्मा हि विवेकलाभः" इत्यादि सिद्धम्। चित्रगुरिति। उभयोरपि प्रथमानिर्दिष्टत्वेन विग्रहे नियतविभक्तिकत्वेन चान्यतरस्य प#ऊर्वनिपाते प्राप्ते उत्तरपदविशेषणस्यैव पूर्वनिपातार्थं विशेषग्रहणमिति भावः।

सर्वनामसङ्ख्ययोरिति। "बहुव्रीहौ पूर्वनिपातस्ये"ति शेषः। सर्व()ओत इति। रार्वः ()ओतो यस्येति विग्रहः। उभयोरपि गुमवचनत्वेन विशेषणविशेष्यभावे कामचारादन्यतरस्य पूर्वनिपाते प्राप्ते सर्वनामत्वात्सर्वशब्दस्यैव पूर्वनिपातः। उपसर्जनत्वेऽपि भूतपूर्वगत्या सर्वनामत्वम्। त्रिशुक्ल इति। त्रयः शुक्ला यस्येति विग्रहः। उभयोरपि कामचारेण पूर्वनिपाते प्राप्ते सङ्ख्यात्वत्रिशब्दस्यैव पूर्वनिपातः। "द्विशुक्ल" इत्यत्र तु सर्वनामत्वादेव सिद्धम्।

ननु द्वौ अन्यौ यस्य द्व्यन्य इति बहुव्रीहौ सर्वनामसङ्ख्ययोरन्त्यतरस्य पाक्षिकः पूर्वनिपातः स्यादित्यत

आह--मिथोऽनयोरिति। सर्वनामसङ्ख्ययोरित्यर्थः। सङ्ख्या पूर्वमिति। "प्रयोज्ये"ति शेषः। शब्दपरेति। एकस्मिन्नेव सूत्रे सर्वनामसङ्क्ययोः समासोपात्तत्वेऽपि सर्वनामसङ्क्याशब्दयो सङ्ख्याशब्दस्य पाठतः परत्वमादाय विप्रतिषेधसूत्रप्रवृत्तेरित्यर्थः।

सङ्क्याया अल्पीयस्या इति। न्यूनाधिकसङ्ख्यावाचकशब्दानां समासे न्यूनसङ्ख्यायाः पूर्वप्रयोग इति वक्तव्यमित्यर्थः। द्वित्रा इति। द्वौ वा त्रयो वेति विग्रहे "सङ्ख्ययाव्यये"ति बहुव्रीहिः।

ननु "द्वन्द्वे घी"त्यतो "द्वन्द्वे" इत्यनुवृत्तौ "अल्पाच्तर"मिति सूत्रभाष्येऽस्य वार्तिकस्य पाठाद्बहुव्रीहौ कथमस्य प्रवृत्तिरित्यत आह--द्वन्द्वेऽपीति। इदंच वार्तिकं द्वन्द्वेऽद्वन्देऽपि प्रवर्तत इत्यर्थः। द्वादसेति। द्वौ च दश चे"ति द्वन्द्वः। तत्पुरुषे तु शतानां विंशतिः विंशतिशतमित्युदाहार्यम्। "तदस्मिन्निधिकमिति दशान्ताड्डः" इति सूत्रबाष्ये सहरुआआणां शतमित्यर्थे शतसहरुआमिति भाष्यकैयटयो प्रयोगोऽत्रमानमिति शब्देन्दुशेखरे स्थितम्।

वा प्रियस्येति। बहुव्रीहौ पूर्वं प्रयोगो वक्तव्य इत्यर्थः।

गड्वादेः परा सप्तमीति। "बहुव्रीहौ योज्येति वक्तव्य"मिति शेषः। गडुकण्ठ इति। गडुः कण्ठे यस्येति विग्रहः। गडुर्नाम ग्रीवादिगतो दुर्मांसगोलः। असंज्ञात्वात् "हलदन्तात्" इत्यलुङ् न। क्वचिन्नेति। व्याख्यानमेवात्र शरणम्। वहेगडुरिति। वहः=स्कन्धः, तन्मिन् गडु-दुर्मांसग्रन्तिर्यस्येति विग्रहः। निष्ठा। निष्ठान्तमिति। "क्तक्तवतूनिष्ठे"ति वक्ष्यति, तदन्तमित्यर्थः। कृतकृत्य इति। कृतं कृत्यं येनेति विग्रहः। उभयोरपि क्रियाशब्दात्वाद्विशेषणत्वे कामचारादन्यतरस्य पूर्वनिपाते प्राप्ते निष्ठान्तस्य पूर्वनिपातः।

जातिकालेति। "जातिकालसुखादिभ्योऽनाच्छादनात्क्तः, इति स्वरविधिना ज्ञापितमिदमिति भाष्ये स्पष्टम्। जातिपूर्वस्योदाहरणमाह--सारङ्गजग्धीति सारङ्गः=हरिणः, जग्धः=भक्षितो यया इति विग्रहः। "अस्वाङ्गपूर्वपदाद्वे"ति ङीष्। कालपूर्वस्योदाहरति--मासजातेति। मासो जातो यस्या इति विग्रहः। टाप्। सुखपूर्वस्योदाहरति--सुखजातेति। सुखं जातं यस्या इति विग्रहः। प्रायिकमिति। व्याख्यानमेवात्र शरणम्। कृतकट इति। कृतः कटो येनेति विग्रहः। उदकत्वस्य जातित्वेऽपि न पीतशब्दस्य परनिपातः।

तत्त्व-बोधिनी
सप्तमीविसेषणे बहुव्रीहौ ४७६, २।२।३५

सप्तमीविशेषणे। यदा कण्ठे किंचिदस्तीति ज्ञायते, तस्य विशेषणं काल इथि, तदेदं सप्तमीग्रहणम्। अन्यदा तु तेन विनापि विसेषणत्वादेव सिद्धम्। चुत्रगुरिति। न च "उपसर्जनं पूर्व"मित्येवेदं सिध्यतीति वाच्यं, "बहुव्रीहौ सप्तमी"त्युक्ते तक्र कोण्ढिन्यन्यायेनोपसर्जनपूर्वत्वस्य बाधापत्तेरतो विशेषणग्रहणं कृतम्।

सर्वनामसङ्ख्योरुपसङ्ख्यानम्। सर्वनामेति। कथं तर्हि "तः परो यस्मात्सतपरः"इति , कथं च "जहत्स्वार्थे वृत्तिः"इति()। इह हि जहस्त्वं पदं यं स जहत्स्वः, सोऽर्थधो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहिः। तथा च स्पपरशब्दयोः सर्वनामत्वात्पूर्वनिपातेन भाव्यमिति चेत्। अत्राहुः--सूत्र भाष्यप्रयोगात्स्वपरशब्दयोर्न पूर्वनिपातः। राजदन्तादित्वाद्वा सिद्धिमिति। द्विशुक्ल इति। यद्यपि सर्वनामत्वेनैव द्विशब्दस्य पूर्वनिपातत्वं सिध्यति, तथापि "त्रिशुक्ल"इत्यादिसिद्धये वार्तिके सङ्ख्याग्रहणं कृतम्। ननु सङ्ख्याया अल्पाच्तरत्वेन "सङ्ख्यासर्वनाम्नो"रिति वाच्ये विपरीतोच्चारणमयुक्तमित्याशङ्क्याह--।

मिथोऽनयोः समासे सङ्ख्या पूर्वम्। मिथोऽनयोरिति। विपरीतोच्चारणमेवात्र लिङ्गमिति भावः।

सङ्ख्याया अल्पीयस्याः। अल्पीयस्या इति। अल्पार्थवाचिकाया इत्यर्थः।

गड्वादेः परा सप्तमी। गड्वादेरिति। आदिशब्दः प्रकारवाची। तेन पद्मं नाभौ यस्य पद्मनाभः। ऊर्णा नाभौ यस्य। "ङ्यापोः--"इति ह्रस्वः। ऊर्णनाभ इति सिद्ध्यतीत्याहुः।

जातिकालसुखादिभ्यः परा निष्ठा वाच्या। जातिकालेति। एतच्च "जातिकालसुखादिभ्योऽनाच्छादना"दित्यनेन ज्ञापितमिति भावः। सारङ्गजग्धीति। सारङ्गो जग्धो यया सा। "अस्वाङ्गपूर्वपदाद्वे"ति ङीष्॥ कथं तर्हि "चारुस्मितश्चारुहसितः"इत्यादि ()। अत्राहुः--"नपुंसके भावे क्तः"इति क्तस्य न पूर्वनिपातः, निष्ठाशब्देन विहितस्यैवेह ग्रहणागदिति।

प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ। क्विचिन्नेति। आहिताग्न्यीदित्वकल्पनादनभिधानद्वेति भावः।

इति तत्त्वबोधिनीव्याख्यायां बहुव्रीहिप्रकरणम्।

अथ भावकर्मप्रक्रिया।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ निष्ठा १।१ ३७ बहुव्रीहौ ७।१ ३५ पूर्वम् १।१ ३०

काशिका-वृत्तिः
निष्ठा २।२।३६

निष्ठन्तं च भुव्रीहिसमासे पूर्वं प्रयोक्तव्यम्। कृतकटः। भिक्षितभिक्षिः। अवमुक्तोपानत्कः। आहूतसुब्रह्मण्यः। ननु च विशेषणम् एव अत्र निष्ठा? न एष नियमः, विशेषणविशेष्यभवस्य विवक्षा निबन्धनत्वात्। कथे कृतम् अनेन इति वा विग्रहीतव्यम्। निष्थायाः पूर्वनिपाते जातिकालसुखादिभ्यः प्रवचनम्। शार्ङ्गजग्धी। पलाण्डुभक्षिती। मासजातः। सम्बत्सरजातः। सुखजातः। दुःखजातः। कथं कृतकटः, भुक्तौदनः? प्राप्तस्य चाबाधा व्याख्येया। प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्। अस्युद्यतः। दण्डपाणिः। कथम् उद्यतगदः, उद्यतासिः? प्राप्तस्य चाबाधा व्याख्येया।
लघु-सिद्धान्त-कौमुदी
निष्ठा ९८६, २।२।३६

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। युक्तयोगः॥
न्यासः
निष्ठा। , २।२।३६

"ननु विशेषणमेवात्र निष्ठा" इति। कृतशब्दः क्रियाशब्दः। कटशब्दो द्रव्यवचनः। तत्र यथा गुणो द्रव्यस्य विशेषणं तथा क्रियाऽपि। तथा सति निष्ठान्तस्य विशेषणत्वात् पूर्वेणैव पूर्वनिपातः सिद्धः। कटेकृतमनेनेत्यादिना विग्रहभेदेन निष्ठाया

विशेषणत्वाभावं दर्शयति। अत्र विग्रहे सप्तम्यन्तमेव विशेषणम्, निष्ठान्तं विशेष्यम्, सामानाधिकरण्ये हि क्रियागुणौ विशेषणविशेष्यभावौ नियमेनानुभवतः, न हि वैयधिकरण्ये। तथा हि-- पटस्य शुक्लः, काकस्य गतिरित्यत्र गुणादेर्विशिष्येत्वम्, व्यवच्छेद्यत्वात्; द्रव्यस्य तु विशेषणत्वम्, व्यवच्छेदकत्वात्। "निष्ठायाः पूर्वनिपाते" इत्यादि। जात्यादिभ्यो निष्ठान्तं परमुच्यते, तेन तद्व्याख्यानं कत्र्तव्यम्। तत्रेदं व्याख्यानम्-- सारङ्गजग्धी-मासजाता-सुखजातादयः शब्दाः आहितादेराकृतिगणत्वात् तदन्तःपातिनः, तेन जातिकालसुखादिभ्यो निष्ठान्तं परं भवतीति। "सारङ्गजग्धी" इति। सारङ्गशब्दो जातिवचनः। ततः "क्तादल्पाख्यायाम्" ४।१।५१ इत्यनुवत्र्तमाने "अस्वाङ्गपूर्वपदाद्वा" ४।१।५३ इति ङीष्। "कथं कृतकटः" इति। कटशब्दस्य जातिवाचित्वादिति प्रश्नः। "प्राप्तस्य चाबाधा व्याख्येया" इति। तेन कृतकट इत्यत्र#आपि भविष्यतीति भावः। सा पुनरप्राप्तस्य चाबाधा पूर्ववदेव व्याख्येया। एवमुत्तरत्रापि व्याख्येया। "प्रहरणार्थेभ्यः" इत्यादि। प्रहरणमर्थो येषां ते तथोक्ताः। तेभ्य परे निष्ठासप्तम्यौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- अस्युद्यतः, दण्डपाणिरित्येवमादिनां शब्दानामाहिताग्न्यादिषु पाठात् परे निष्ठासप्तम्यौ भवत इति॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वा ० ३८ आहिताग्न्यादिषु ७।३ निष्ठा १।१ ३६ बहुव्रीहौ ७।१ ३५ पूर्वम् १।१ ३०

काशिका-वृत्तिः
वा आहिताग्न्यादिषु २।२।३७

निष्ठा इति पूर्वनिपाते प्राप्ते विकल्प उच्यते। आहिताग्न्यादिषु निष्ठान्तं पूर्वं वा प्रयोक्तव्यम्। अग्न्याहितः। आहिताग्निः। जातपूत्रः, पुत्रजतः। जातदन्तः। जातशमश्रुः। तैलपीतः। घृतपीतः। ऊढभार्यः। गतार्थः। आकृतिगनश्च अयम्, तेन गडुकण्ठप्रभृतय इह एव द्रष्टव्याः।
न्यासः
वाऽऽहिताग्न्यादिषु , २।२।३७

बाल-मनोरमा
वाऽऽहिताग्न्यादिषु ५८०, २।२।३७

वाऽऽहिताग्न्यादिषु। "निष्ठायाः पूर्वं प्रयोग" इति शेषः। आहिताग्निरिति। आहिताः=आधानेन संस्कृता अग्नयो येनेति विप्रहः। प्रहरणार्थेभ्य इति। आयुधार्थेभ्य इत्यर्थः। निष्ठायामुदाहरति - अस्युद्यत इति। असिः उद्यतो येनेति विग्रहः। सप्तम्या उदाहरति--दण्डपाणिरिति। दण्डः पाणौ यस्येति विग्रहः। "निष्ठे"त्यस्य "सप्तमीविशेषणे" इत्यस्य चा।डयमपवादः। क्वचिन्नेति। व्याख्यानमेवात्र शरणम्। विवृतासिरिति। विवृतः=कोशान्निष्कासितोऽसिर्येनेति विग्रहः। एवंजातीयान्याहिताग्न्यादित्वकल्पनया समाधेयानीत्याहुः।

*****इति बालमनोरमायां बहुव्रीहिसमासः*****

अथ भावकर्मप्रक्रिया।

अथ भावकर्मतिङ्प्रकरणं निरूप्यते। "लः कर्मणी"त्यत्र सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च, अकर्मकेभ्यस्तु भावे कर्तरि च लकारा विहिताः। तेषु कर्तरि लकारा निरूपिताः। अथेदानीं भावकर्मणोर्लकारा निरूप्यन्ते इति प्रतिजानीते-- अथेति। "निरूप्यन्ते" इति शेषः। तत्र "शेषात्कर्तरि परस्मैपदम्",नुपराभ्यां कृञः" इत्यादिपरस्मैपदविधिषु प्राप्तेष्वाह-- भावकर्मणोरिति तङिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कडाराः १।३ कर्मधारये ७।१ वा ० ३७ पूर्वम् १।१ ३०

काशिका-वृत्तिः

कडाराः कर्मधारये २।२।३८

गुनशब्दानां विशेषनत्वात् पूर्वनिपाते प्राप्ते विकल्प उच्यते। कडारादयः कर्मधारये समासे वा पूर्वं। प्रयोक्तव्याः। कडारजैमिनिः, जैमिनिकडारः। कडार। गुडुल। काण। खञ्ज। कुण्ठ। खञ्जर। खलति। गौर। वृद्ध। भिक्षुक। पिङ्गल। तनु। वटर। कर्मधरये इति किम्? कडारपुरुषो ग्रामः। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य द्वितीय पादः। द्वितीयाध्यायस्य तृतीयः पादः

न्यासः

कडाराः कर्मधारये। , २।२।३८

कडारादयो ये गुणशब्दास्तेषां विशेषणत्वं भवतीत्याह-- "गुणशब्दानाम्" इत्यादि। गतार्थम्॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य द्वितीयः पादः ----------------- अथ द्वितीयाध्यायस्य तृतीयः पादः

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अनभिहिते ७।१ ७३

समासः॥

न अभिहितः अनभिहितः, तस्मिन् ॰ नञ्तत्पुरुषः

अर्थः॥

अनभिहिते अकथिते, अनुक्ते, अनिर्दिष्टे कर्मादौ विभक्तिः भवति इति अधिकारः वेदितव्यः॥ सामान्येन आपादपरिसमाप्तेः, अधिकारः अयं वेदितव्यः, विशेषस्तु कारकविभक्तिषु एव प्रवर्तते न तु उपपदविभक्तिषु, तत्र अनावश्यकत्वात्॥ केन अनभिहितम्? तिङ्कृत्तद्धितसमासैः॥

उदाहरणम्॥

कटं करोति, ग्रामं गच्छति॥ कटम्, ग्रामम् -- इत्यत्र अनभिहितत्वात् {कर्मणि द्वितीया (२।३।२)} इति द्वितीया भवति॥
काशिका-वृत्तिः
अनभिहिते २।३।१

अनभिहिते इत्यधिकारो ऽयं वेदितव्यः। यदित ऊर्ध्वम् अनुक्रमिष्यामः, अनभिहिते इत्येवं तद् वेदितव्यम्। अनभिहिते अनुक्ते, अनिर्दिष्टे कर्मादौ विभक्तिर् भवति। केन अनभिहिते? तिङ्कृत्तद्धितसमासैः परिसङ्ख्यानम्। वक्ष्यति, कर्मणि द्वितीया २।३।२ कटं कर्तोति। ग्रामं गच्छति। अनभिहिते इति किम्? तिङ् क्रियते कटः। कृत् कृतः कटः। तद्धितः शत्यः। शतिकः। समासः प्राप्तम् उदकं यं ग्रामं प्राप्तोदको ग्रामः। परिसङ्ख्यानं किम्? कटं करोति भीष्ममुदारं दर्शनीयम्। वहुषु बहुवचनम् इत्येवम् आदिना सङ्ख्या वच्यत्वेन विभक्तीनाम् उपदिष्टाः, तत्र विशेषणार्थम् इदम् आरभ्यते अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो वेदितव्याः इति।
न्यासः
अनभिहिते।, २।३।१

दधातेर्हिनोतेर्वाऽनभिहित इत्यस्य रूपम्; समानत्वात्, अनेकार्थत्वाच्च धातूनाम्। न ज्ञायते किमर्थस्यानभिहितशब्दस्य ग्रहणमिति सन्देहः स्यात्, अतस्तं निराकर्त्तुमाह-- "अनभिहितेऽनुक्ते" इत्यादि। यद्यनभिहिते कर्मादौ द्वितीयादयो विभक्तयो भवन्तीति सामान्येनोच्येत; ततो यथा "कृतः कटः" इत्यत्र क्तप्रत्ययेन कर्मणोऽभिहितत्वात् कटशब्दाद्()द्वितीया न भवति, तथा "कटं करोति", "भीष्ममूदारं शोभनं दर्शनीयम्" इत्यत्र कटशब्दादुत्पद्यमानया द्वितीयया भीष्मादिगतस्य कर्मणोऽभिहितत्वाद्भीष्मादिभ्यो द्वितीया न प्राप्नोति। तस्मात् कश्चिद्विशेषोऽत्राभिमत इति मत्वा तं विशेषं पृच्छति-- "केनानभिहितते"? इति। इतरो विदिताभिप्राय आह-- "तिङ्कृत्तद्धितसमासैः" इत्यादि। क्रियत इति कर्मणि लकारः। "सार्वधातुके यक्" ३।१।६७। "रिङ शयग्लिङ्शु" ७।४।२८ इति रिङादेशः। "शत्यः, शतिकः" इति। "शताच्च ठन्यतावशते" ५।१।२१ इति ठन्यतौ भवतः। "बहुषु बहुवचनम्" इत्येवमादि। तत्रेदमुक्तम्- कर्मादयोऽव्यपरे विभक्तीनां वाच्याः, अत स्तदीये बहुत्वे बहुवचनं भवतीति। एवञ्च ब्राउवता वृत्तिकृता कर्माद्याश्रितायां संख्यायां द्वितीयादयो विभक्तयो भवन्तीत्येतदुक्तं भवति। न च तत्र कश्चिद्विशेष उपात्तः। सन्ति च कर्मादयोऽभिहिताः, अनभिहिताश्च। तत्र विशेषानुपादान्त, यथा अनभिहितकर्माद्याश्रयेष्वेकत्वादिषु द्वितीयादयो विभक्तयो भवन्ति, तथाऽभिहितकर्माद्याश्रयेष्वपि स्युः। अतोऽनभिहिता ये कर्मादयस्तदाश्रयेष्वेकत्वादिषु यथा विभक्तयः स्युरन्यत्र मा भूवन्नित्यनभिहित इत्येतद्विशेषणमारभ्यते। "अनभिहितकर्माद्याश्रयेषु" इति। अनभिहिताः कर्मादय आश्रया येषामिति बहुव्रीहिः। एतेन "बहुषु बहुवचनम्" १।४।२१ इत्यादेः शास्त्रस्य, अनभिहित इत्येतस्य च "कर्मणि द्वितीया" २।३।२ इत्येवनमादिभिः सहैकवाक्यतां दर्शयति-- अनभिहिते कर्मणि द्वितीया बहुषु बहुवचनमिति। एवमन्यत्राप्येकवाक्यता वेदितव्या। एकवाक्यता च गुणप्रधानभावमन्तरेण न सम्भवतीत्येकस्य गुणभावेन भवितव्यम्, अपरस्य प्रधानभावेन। तत्र विशेषणत्वादनभिहित इत्यस्य कर्माद्येपेक्षया गुणबावः, कर्मादीनां तु विशेष्यत्वात् प्राधान्यम्, एकत्वाद्यपेक्षया कर्मादीनान्तु विशेषणत्वादप्राधान्यम्। एकत्वादीनां विशेष्यत्वात् प्रधानभावः। अथ कथं कटशब्दादुत्पद्यमाना द्वितीया मीष्मादिपदानुगतं कर्माभिदधाति, यथा-- निष्ठेति चेत्? स्याददत्-- "यथा कटः कृतो भीष्म उदारः शोभनो दर्शनीय इत्यत्र करोतेः कर्मण्युत्पद्यमाना निष्ठा सर्व भीष्मादिकमपि कर्माभिदधाति,तथा कटशब्दादुत्पद्यमाना द्वितीया" इति, वात्त्रमेतत्; कृत इति क्रियाकारकसम्बन्धनिमित्तकभिधानम्। क्रिया चोत्पद्यमाना सामर्थ्यात् सर्वाणि कारकद्रव्याण्याक्षिपति। ततः कृञ उत्पद्यमानः क्तः साधारणतया यावत् करोतेरुयाति कर्मतां तावत् सर्वमेवाभिदधातीति युक्तम्। भीष्मादिगताया अपि कर्मतायाः क्तप्रत्ययेनाभिधानम्। कटस्तु विशिष्टद्रव्यवचनः, तत उत्पद्यमाना द्वितीया तद्गतमेव कर्म शक्नोत्यभिधातुम्, नान्यगतं किञ्चित्, तत्कथं तया भीष्मादिगतमपि कर्माभिधीयते? तथा च निरर्थकं

परिगणनम्। तस्मात् तिङकृत्तद्धितसमासैरेवाभिधानं सम्भवतीति सम्भवदुदाहरणप्रदर्शनमपरमेतत् परिसंख्यानं वेदितव्यम्, न परिगणनम्॥

बाल-मनोरमा

अनभिहिते ५२८, २।३।१

अनभिहिते। इत्यधिकृत्येति। द्वितीयादि वक्ष्यत इत्यर्थः।

तत्त्व-बोधिनी

अनभिहिते ४७५, २।३।१

अनभिहिते इतचि। ननु "बहुपटु"रित्यादौ बहुच्प्त्ययेनोक्तार्थत्वात्कल्पबादयो यथा न प्रवर्तन्ते तथा "क्रियते कट"इत्यादावपि तिङादिभिरुक्तार्थत्वाद्द्वितीया न भविष्यति। किञ्च "कटं करोती"त्यादौ सावकाशा द्वितीया "कृतः कट"इत्यादौ निरवकाशया प्रथमाया बाधिष्यते। न च वृक्षः प्लक्ष इत्यादौ प्रथमाया अवकाशः, तत्रापि प्रतीयमानामस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात्। अथोच्यते---"नीलमिदं न तु रक्त"मित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्ति क्रियाया अनावश्याकत्वात्प्रथमाया अस्त्येवाऽवकाश इति, तर्हि उभयोः सावकशत्वे परत्वात्प्रथमैव स्यात्।तथा चाऽनभिहिताधिकारो वृथैवेति चेत्। अत्राहुः--"सङ्ख्या विभक्त्यार्थः"इति पक्षे सूत्रारम्भ आवश्यकः। तथाहि सूत्रारम्भे "कर्मणि द्वितीये"त्यस्याऽनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थः। सूत्राऽनारम्भे च कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति हि वाक्यार्थः। तथा च सति कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्याऽनुक्ततया अम् दुर्वारः स्यचात्। न च परत्वात्प्रथमैव स्यादित वाच्यम्। "कर्यव्यः कट"इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। "कारकं विभक्त्यर्थः"इति पक्षे तु कारकस्य क्तप्रत्यया दिनैवोक्तत्वात्प्रातिपदिकार्थे प्रवृत्तायाः प्रथमाया एकत्वादिबोधनसम्भवाच्चाऽमादिविभक्तेरप्रवृत्तौ "अनभिहिते"इति सूत्रं प्रत्याख्यातमाकरे इति।पक्षे तु कारकस्य क्तप्रत्ययादिनैवोक्तत्वात्प्रातिपदिकार्थे प्रवृत्तायाः प्रथमाया एकत्वादिबोधनसम्भवाच्चाऽमादिविभक्तेरप्रवृत्तौ "अद्योत्ये "इत्यर्थः। तथा च क्तप्रत्ययादिभिरद्योत्ये कर्मणि द्वितीयत्येदिवाक्यार्थः। तत्राप्येकेन द्योतिते द्योतकान्तरं न प्रवर्तत इत्यभ्युपगमेत्वनभिहिताऽधिकारो नातीवोपयुज्यत इति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्मणि ७।१ ३ द्वितीया १।१ ५ अनभिहिते ७।१ १

अर्थः॥

अनभिहिते कर्मणि द्वितीया विभक्तिः भवति।

उदाहरणम्॥

ग्रामं गच्छति। कटं करोति।

काशिका-वृत्तिः

कर्मणि द्वितीया २।३।२

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु समर्यन्ते, तैरेव अत्र व्यवहारः। कर्मणि कारके या सङ्ख्या तत्र द्वितीया विभक्तिर्भवति। कटं करोति। ग्रामं गच्छति। उभसर्वतसोः कार्या धिगुपर्यादिषु क्रिषु। द्वितीया आम्रेडितान्तेषु ततो ऽन्यत्र अपि दृश्यते। उभयतो ग्रामम्। सर्वतो ग्रामम्। धिग् देवदत्तम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधो ऽधो ग्रामम्। अभितःपरितःसमयानिकषाहाप्रतियोगेषु च दृश्यते। अभितो ग्रामम्। परितो ग्रामम्। समया ग्रामम्। निकाषा ग्रामम्। हा देवदत्तम्। बुभुक्षितं न प्रति भाति किञ्चित्।

लघु-सिद्धान्त-कौमुदी

कर्मणि द्वितीया ८९४, २।३।२

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति। अभिहिते तु कर्मादौ प्रथमा - हरिः सेव्यते। लक्ष्म्या सेवितः॥

न्यासः

कर्मणि द्वितीया। , २।३।२

द्वितीया तिङविभक्तिरप्यस्तीति तस्या अप्यत्र ग्रहणमिति कस्यचिदाङ्का स्यात्, अतस्तन्निराकर्तुमाह-- "द्वितीयादयः शब्दाः" इत्यादि। कर्मशब्देनेह साधनं कर्म गृह्यते, न तु क्रियाकर्म। तथा हि - ये विभक्त्यर्था एकत्वादयस्तेषां विशेषणत्वेनैव कर्मादयोऽनुक्रंस्यन्ते। न च क्रियाकर्मणि द्वित्वबहुत्वे स्तः; साधनकर्मणि तु विद्येते, तस्मात् तस्यैव ग्रहणं युक्तम्, नेतरस्य। "उभसर्वतसोः"इत्यादि। उभसर्वशब्दयोस्तसिप्रत्ययान्तयोः प्रयोगे द्वितीयाविभक्तिः कार्याः। शेषलक्षणायां षष्ठ()आं प्राप्तायामयमारम्भः। उभसर्वतसोरित्यत्र यद्युप्यभशब्दः पठितस्तथापि सामथ्र्यादुभयशब्दो गृह्यते; साधम्र्यात्। न ह्युभशब्दस्तसिप्रत्ययान्तोऽस्ति; तस्य नित्य्दविवचनटाब्विषयत्वात्। तथा चोक्तम्-- "अन्यभावो नि#ए()त्यद्विवुचनटाब्विषयत्वादुभयोऽन्यत्र" (१।१।२७-वा।८,९) इति। "उभयतः, सर्वतः" इति। "पञ्चम्यास्तसिल्" ५।३।७। धिक्शब्दयोगेऽपि द्वितीया कार्या। तथोपर्यादिषु त्रिषु योगे द्वितीया कार्या। "आम्रेडितान्तेषु"इति। कृतद्विर्वचनेष्वित्यर्थः। "उपर्युयरि ग्रामम्" इत्यादौ "उपर्यध्यधसः सामीप्ये" ८।१।७ इति द्विर्वचनम्। "ततोऽन्यत्रापि दृश्यते" इति। यथोक्तादन्यत्रापि दृश्यते द्वितीयेति सम्बन्धः। क्व चान्यत्र दृश्यत इत्यत आह-- "अभितः" इत्यादि। "प्रयभिभ्याञ्च" ५।३।९ इति तसिः। अपिशब्दो विकल्पार्थः। अपि दृश्यतेऽपि न दृश्यतेच। तेन हा तात हा मातरित्यादि सिध्यति॥

बाल-मनोरमा

कर्मणि द्वितीया ५२९, २।३।२

कर्मणि द्वितीया। "अनभिहिते" इत्यनुवृत्तं व्याचष्टे--अनुक्ते इति। हरिं भजतीति। तुष्ट()नुकूलपरिचरणात्मकव्यापारो भजेरर्थः। पूजादिव्यापारेण हरि #ं तोषयतीत्यर्थः। कर्तृनिष्ठपूजनादिव्यापारप्रयोज्यतुष्टिरूपफलाश्रयत्वाद्धरिः कर्म। हरिनिष्ठतुष्ट()नुकूल एकदेवदत्तनिष्ठो वर्तमानो व्यापार इति बोधः। "बावप्रधानमाख्यात"मिति निरुक्तकारयास्कवचनात्। क्रियाप्रधानं तिङन्तमिति तदर्थः। एवं च हरिनिष्ठतुष्ट()नुकूलव्यापाराश्रयो देवदत्त इति प्रथमान्तविशेष्यकबोधस्तार्किकसंमतो नादर्तव्य इति मञ्जूषादौ प्रपञ्चितम्। अबिहिते त्विति। "हरिः सेवय्ते" इत्यादा"विति शेषः। प्रथमैवेति। तद्विधावनभिहिताधिकाराऽभावात् "अबिहिते प्रथमे"ति वार्तिकाच्चाति भावः। अत्र भाष्ये "कटं करोति भीष्ममुदारं दर्शनीयं शोभन"मित्यत्र कटशब्दादुत्पाद्यमानया द्वितीयया कर्मणोऽभिहितत्वाद्भीष्मादिभ्यो द्वितीया न प्राप्नोतीत्याशङ्क्य "तिङ्कृत्तद्धितसमासैरबिधान"मिति परिगणितम्। तत्र "प्रायेणे"त्यध्याह्यत्याह--अभिधानं चेति। "समासै"रित्यनन्तरं "विवक्षित"मिति शेषः। तिङिति। अविभक्तिकनिर्देशोऽयं

तिङभिधानप्रधर्शनाय। हरिः सेव्यत इति। "लः कर्मणी"ति कर्मणि" लकारः। "भावकर्मणोः" इत्यात्मनेपदम्। तिङन्तेनाऽभिहितत्वाद्धरेः कर्मणो न द्वितीयेति भावः। हरिं भजतीति वाक्यार्थः। कर्तृकर्मलकारयोरेकरूप एव वाक्यार्थबोध इति वैयाकरणसमयः। कृदिति। तिङितिवदयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय। लक्ष्म्या सेवित इति। "हरि"रिति शेषः। भूते कर्मणि क्तः , कर्तरि तृतीया। लक्ष्मीनिष्ठपरिचरणजनिततुष्ट()आश्रयो हरिरिति बोधः। सत्त्वप्रधानानि नामानीति यास्कस्मृतिमनुरुध्य प्रातिपदिकेषु प्रथमान्तोपात्तविशेष्यक बोधस्यैव सर्वसंमतत्वात्। अत्र सेवितहरेः कर्मणः कृता अभिहितत्वान्न द्वितीया। तद्धितेति। अयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय। शत्य #इति। पटादिरिति शेषः। "शताच्च ठन्यतावशते" इति यत्प्रत्ययस्तद्धितः। अत्र कर्मणस्तद्धितेनोक्तत्वान्न द्वितीया। समासेति। अयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय। प्राप्तानन्द इति। देवदत्तादिरिति शेषः। "गत्यर्थाकर्मके"त्यादिना प्राप्तेति कर्तरि क्तः। अन्यपदार्थस्य कर्मणो बहुव्रीहिसमासेनाभिहितत्वान्न द्वितीयेति भावः। आनन्दकर्तृकप्राप्तिकर्मीभूत इति बोधः। "प्रायेणे"त्यस्य फलं दर्शयति-क्वचिदिति। "विषवृक्षो।()पी"ति "असाम्प्रत"मित्यत्रान्वेति। "संबध्र्ये"त्यत्र "छेत्तु"मित्यत्र चान्वये द्वितीयापत्तेः। तत्रत्वर्थाद्विषवृक्षमिति गम्यते। न सांप्रतमिति विग्रहे नञ्तत्पुरुषः। युज्यत इत्यर्थ इति। युजिर्योगे कर्मणि लकारः। औचित्या न युज्यते। औचित्ययुक्तो न भवतीति यावत्। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। अत्र वृक्षस्य कर्मणो निपातेनाभिहितत्वान्न द्वितीयेति भावः। वस्तुतस्तु "छेत्तु"मिति तुमुन्नत्र दुर्लभः। "कृष्णं द्रष्टुं याती"त्यत्रेव क्रियार्थक्रियोपपदत्वाऽभावेन "तुमुन्ण्बुलौ क्रियायां क्रियार्थाया"मित्यस्याऽप्रवृत्तेः। "शकधृषे"त्यादिनापि तुमुन्न, शकादियोगाऽभावात्। किंतु "इच्छार्थेषु" इत्यनुवृत्तौ "समानकर्तृकेषुतुमुन्", इति तुमुन्। अक्रियार्थोपपदत्वेऽपि तस्य प्रवृत्तेः। यथा "इच्छति भोक्तु"मित्यादि। एवंच तुमुनः साधुत्वाय इष्यत इत्यध्याहार्यम्। विषवृक्षोऽपि संबध्र्य छेत्तुमिष्यत इति यत्तदसांप्रतम्ायुक्तमित्यर्थः। एवं चात्रापि तिङाभिहितत्वादेव द्वितीयानिवारणात्तिङ्कृद्धितसमासैरभिधानमिति परिगणनवार्तिके "प्रायेणे"त्यध्याहारो विफल इति शब्देन्दुशेखरे स्थितम्। पक्वमोदनं भुङ्क्त इत्यत्र तु पचिभुजिक्रियानिरूपिते द्वे कर्मत्वशक्ती। तत्र गुणभूतपचिनिरूपितकर्मत्वशक्तेः क्तप्रत्ययाभिहितत्वेऽपि प्रधानभूतभुजिक्रियानिरूपितामनभिहितां कर्मत्वशक्तिमादाय द्वितीया निर्बाधेति भाष्ये स्पष्टम्। ननु यथा "बहुपटु"रित्यादौ तद्धितेन बहुच्प्रत्ययेन उक्तत्वात्कल्पबादयो न भवन्ति तथा "क्रियते कट" इत्यादावपि तिङादिभिरुक्तत्वाद्द्वितीयादयो न भविष्यन्ति, "उक्तार्थानामप्रयोगः" इति न्यायात्। किंच "कटं करोती"त्यादौ सावकाशा द्वितीया "कृतः कटः" इत्यादौ न भवत्येव, अनवकाशया प्रथमया बाधात्। नच वृक्षः प्लक्ष इत्यादिः प्रथमाया अवकाश इति वाच्यं, तत्र गम्यमस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात्। अस्तु वा तत्र प्रथमाया अवकाशः, तथाप्युभयोः सावकाशत्वे परत्वात्प्रथमैव स्यात्। एवं चानभिहीताधिकारो व्यर्थ इति चेत्, मैवम्-"कर्मणि द्विताये"त्यादीनां "द्व्येकयोर्द्विवचनैकवचने" "बहुषु बहुवचन"मित्यनयोश्चएकवाक्यतया कर्मणि यदेकत्वं द्वित्वं बहुत्वं वा तत्र एकद्विबहुवचनानीति लभ्यते। तत्र "अनभिहिते"इत्यारम्भे अनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयेत्येवमर्थः स्यात्। "अनभिहिते"इत्यभावे तु कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्येव पर्यवस्येत्। तथा सति "कृतः कट" इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया द्वितीयैकवचनं दुर्वारं स्यात्। न च प्रथमाया निरवकाशत्वं शङ्क्यं, नीलमिदं नतु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यकेऽस्तिक्रियाया अनावश्यकत्वेन तत्र प्रथमायाः सावकाशत्वात्। नापि तत्र परत्वात्प्रथमैव भविष्यतीति वाच्यं, "कर्तव्यः कटः" इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। एवं च संख्या विभक्त्यर्थ" इत्याश्रीयते, तदा कारकस्य क्तप्रत्ययादिनोक्तत्वान्न द्वितीयादिविभक्तिप्रसक्तिः। एकत्वादिसङ्ख्याबोधश्च प्रातिपदिकार्थमात्रे प्रवृत्तया प्रथमयैव सम्भवति। अतः "अनभिहिते" इति नारब्धव्यमिति भाष्यकैयटकौस्तुभादिषु स्पष्टम्। अतिविस्तरस्तु मञ्जूषायामनुसन्धेयः।

तत्त्व-बोधिनी

कर्मणि द्वितीया ४७६, २।३।२

हरिं भजतीति। भजनक्रियया हरौ प्रीतेरुत्पादात्प्रीतिविशिष्टतया कियाव्याप्यत्वेन हरिः कर्म, तद्विशिष्टं भजनं वाक्यार्थः। हरिनिष्ठप्रीत्यनुकूल एकद्वदत्तादिनिष्ठो वर्तमानो व्यापार इति निष्()ष्टोऽर्थः। "हरिः सेव्यत"इत्यत्राप्येवमेव, "क्रियाप्रधानमाख्यातम्िति सिद्धान्तात्। धातूपस्थिता क्रिया तिङ्र्थं प्रति विशेष्या, न तु कृदर्थं प्रतीव विशेषणमिति हि तस्यार्थः। अतएव "पाचको व्रजती"तिवत्पचति व्रजतीति नैकं वाक्यम्। पाककर्तृकर्तृकं गमनं हि "पाचको व्रजतो"त्यस्यापर्थः। एककर्तृका पचिक्रिया, एक कर्तृका गमिक्रियेति पचतिव्रजत्योः पृथगेवाऽर्थः। एवं च प्रथमान्तविशेष्यको बोध इति नैयायिकोद्घोषो भाष्याद्यनुसारिभिर्नादर्तव्यः। तन्मते हि पाककर्ता व्रजनानुकूलकृतिमानिति "पाचको व्रजती"त्यस्यार्थः। पचतिव्रजत्योस्तु पाकानुकूला कृतिव्र्रजतीत्यर्थ इत्येवं रूपेण वाक्यार्थपर्यवसानात्, तस्य च भाष्यादिग्रन्थविरोधात्। किञ्च हरिं भजति देवदत्तः, हरि सेव्यते देवदत्तेनेत्यत्र चैकरूप एव शाब्दबोध इत्युक्तम्। नैयायिकानां मते तु भिद्यत एव, "हरिनिष्ठप्रीत्यनुकूलकृत्याश्रयो देवदत्तः" "देवदत्तनिष्ठकृतिजन्यप्रीत्याश्रयो हरि"रित्युभयत्र भेदेन वाक्यार्थपर्यवसानात्। तस्मात्प्रथमान्तविशेष्यकबोधोभाष्याद्यनुसारिभिर्नादत्र्तव्य एव। यास्कोऽप्याह----"भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि"इति। "पश्य मृगो धावती"त्यादौ तु भृगकर्तृकं गमनं दृशिक्रियैव। उक्तं च---"सुबन्तं हि यथाऽनेकं, तिङ्न्तस्य विशेषणम्। तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्िति। न च लौकिकप्रयोगेषु तिङन्तस्य कतिङन्तविशेषणत्वं दुर्लभमिति मन्तव्यम्। "पुरीमवस्कन्द लुनीहि नन्दनम्िति माघश्लोकस्य पुर्यवस्कन्दननन्दनलवनादिरूपा अस्वास्थ्यक्रियेत्यर्थ इति "समुच्चयेऽन्यतरस्याम्िति सूत्रे मूले स्फुटीभविष्यमाणत्वात्। एवं च "पचति--भवती"त्यस्य पचिक्रिया भवतीत्यर्थो भाष्यमते बोध्य इति दिक। अभिहिते त्विति। नन्वेवं "पक्वमोदनं भुङ्क्ते"इत्यत्रापि द्वितीया न स्यादिति चेत्। मैवम्। इह हि पाचेभुजिनिरूपिते द्वे कर्मत्वशक्ती, तत्र प्रधानभूतभुजिक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयत्पत्तेः। अतएव "आसने आस्ते"इत्यत्र सप्तमी सङ्गच्छते। ल्युटाऽधिकरणत्वस्योक्तत्वेऽपि तिङन्तोपस्थाप्यक्रियानिरूपिताधिकरणत्वस्यानुक्तत्वात्। शत्य इति। "शताच्च ठन्यताशते"इति यत्। प्राप्तानन्द इति। इह "गत्यर्थाकर्मके"ति कर्तरि क्तः। आनन्दकर्तृकप्राप्तिकर्मीभूतैत्यर्थः। यदुक्तं "प्रायेण"ति तस्य फलमाह--क्वचिन्निपातेनेति। विषवृक्ष इति। "संवध्र्ये"त्यत्र "छेतुमित्यत्र चार्थद्विषवृक्षमिति गम्यत इत् ध्येयम्। युज्यत इत्यर्थ इति। एतेन निपातानां द्योतकत्वमेवेति नियमो नास्तीति ध्वनितम्। तथा युक्तम्। तथेत्युक्ते कथं युक्तमिति जिज्ञासायामाह--।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तृतीया १।१ च ० होः ६।१ छन्दसि ७।१ कर्मणि ७।१ २ द्वितीया १।१ २ अनभिहिते ७।१ १

काशिका-वृत्तिः
तृतीया च होश् छन्दसि २।३।३

कर्मणि इति वर्तते। द्वितीयायां प्राप्तायां तृतीया विधीयते। चशब्दात् सा च भवति। छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर् भवति, द्वितीया च। यवाग्वा ऽग्निहोत्रं जुहोति। यवागूम् अग्निहोत्रं जुहोति। छन्दसि इति किम्? यवागूम् अग्निहोत्रं जुहोति।

न्यासः

तृतीया च होश्छन्दसि। , २।३।३

"यवाग्वाऽग्नहोत्रं जुहोति" इति। यद्यप्यत्र "सुपां सुपो भवन्ति" (वा।८१८) इति द्वितीयास्थाने तृतीयादेशविधानेऽप्येतत् सिध्यति; तथापि पयसा जुहोति, आज्येन जुहोतीत्येवमादि न सिध्यति। तथा हि-- स्थानिवद्भावात् "स्वमोर्नपुंसकात्" ७।१।२३ इत्येकस्य लुक् प्राप्नोति। अपरस्य "अतोऽम्" ७।१।२४ इत्यम्भावः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अन्तराऽन्तरेणयुक्ते ७।१ द्वितीया १।१ २

काशिका-वृत्तिः

अन्तरा ऽन्तरेण युक्ते २।३।४

द्वितीया स्वर्यते, न तृतीया। अन्तरान्तरेण शब्दौ निपातौ साहचर्याद् गृह्येते। आभ्यां योगे द्वितीया विभक्तिर् भवति। षष्ठ्यपवादो ऽयम् योगः। तत्र अन्तराशब्दो मध्यमाधेयप्रधानम् आचष्टे। अन्तरेण शब्दस् तु तच् च विनार्थं च। अन्तरा त्वां च मां च कमण्डलुः। अन्तरेण त्वां च मां च कमण्डलुः। अन्तरेण पुरुषकारं न किंचिल् लभ्यते। युक्तग्रहणं किम्? अन्तरा तक्षशिलां च पाटलिपुत्रं स्रुघ्नस्य प्राकारः।

न्यासः

अन्तरान्तरेण युक्ते। , २।३।४

"अन्तरान्तरेणशब्दौ निपातौ साहचर्याद्गृह्येते" इति। अयमन्तराशब्दो यद्यपि स्त्रीप्रत्ययान्तोऽस्ति, तथाऽस्त्रीप्रत्ययान्तोऽपि;अन्तरेणशब्दस्त्वस्त्रीप्रत्ययान्तो गृह्यते। यश्चास्त्रीप्रत्ययान्तोऽन्तराशब्दः स निपात एवेत्यन्तराशब्दस्य तावन्निपातस्य ग्रहणम्। अतस्तेन निपातेन साहचर्यादन्तरेणशब्दस्यापि तस्यैव ग्रहणम्। तेनानिपातो यस्तृतीयान्तोऽन्तरेणशब्दः, यश्च टाबन्तोऽन्तराशब्दस्ताभ्यां योगे द्वितीया न भवति। किं ते बाभ्रावाणां शालङ्कायमानाञ्चान्तरेण गतेन? ग्रामयोरन्तरायां पुरि वसतीत्यन्तरशब्दोऽत्र विशेषवचनः। गमिरपि ज्ञानवचनः। किं ते विशेषण ज्ञानेनेत्यर्थः। "षष्ठ()पवादोऽयं योगः" इति।र शेषलक्षणायां षषठ()आं प्राप्तायामस्यारम्भात्। षष्ठ()आपवादत्वमस्य योगस्यान्तरान्तरेणशब्दार्थप्रदर्शनद्वारेण विस्पष्टीकर्त्तुमाह-- "तत्र" इत्यादि। मध्यं हि सम्बन्धिशब्दत्वादमध्यभूतं द्वितीयं सम्बन्धिनमपेक्ष्य भवति। तत्र यदपेक्षं मध्यत्वं ततो मध्येन व्यतिरेके समुपजनिते षष्ठी प्राप्नोति। विनार्थोऽपि शेष एव। अत्रापि षष्ठ()एव प्राप्नोति। "अन्तरा त्वाञ्च माञ्च कमण्डलुः" इति। तव मम मध्ये कमण्डलुरित्यर्थः। अथ कमण्डलुशब्दाद्द्वितीता कस्मान्न भवति? सत्यप्यन्तरान्तरेणयोगे तस्य प्राधान्यात्। तथा हि-- कमण्डलोः स्वार्था प्रवृत्तिः , युष्मदस्मदोस्तु परार्था; कमण्डलुविशेषणत्वेन तयोः प्रवृत्तत्वात्। तत्र कमण्डलोः स्वार्थे वर्त्तमानात् प्राधान्येनावस्थितत्वात् प्रातिपदिकार्थादप्रच्युतत्वात् परत्वात् प्रथमैव भवति। द्वितीयायास्त्वप्रधाने युष्मदस्मच्छब्देऽवकाश इति ताभ्यां तेनेव प्रथमान्तेन कमण्डलुनोपजनिते व्यतिरेके षष्ठ()आं प्राप्तायां द्वितीया विधीयते। "अन्तरेण पुरुषकारम्" इति। विना पुरुषकारेणेत्यर्थः। "अन्तरा तक्षशिलां पाटलिपुत्रञ्च रुआउघ्()नस्य प्राकारः" इति। अत्र रुआउघ्नः प्राकारविशेषणत्वेनोपक्षीणसामथ्र्य इति न भवति त्सयान्तराशब्देन योगः॥

बाल-मनोरमा

अन्तराऽन्तरेण युक्ते ५३७, २।३।४

अन्तरान्तरेणयुक्ते। "अन्तरा" इत्याकारान्तमव्ययं, नतु टाबन्तम्। अन्तरेणेत्यप्यव्ययमेव, नतु तृतीयान्तमिति भाष्ये स्थितम्। अन्तरा त्वां मां हरिरिति। तव च मम च मध्ये हरिरित्यर्थः। "अन्तरा मध्ये" इत्यमरः। अन्तरेण हरिमिति। हरेर्वर्जने सुखं नास्तीत्यर्थः। "पृथिग्विनान्तरेणर्ते हिरुङ्नाना वर्जने इत्यमरः। "किमनयोरन्तरेण गतेने"त्यत्र तु अन्तरशब्दो विशेषवाची। अनयोर्विशेषेण ज्ञातेनेत्यर्थः। अत्र अन्तरेणेत्यस्य तृतीयान्तत्वादव्ययत्वाऽभावान्न तद्योगे द्वितीया। नचैवं सति "हलोऽनन्तराः संयोगः" इत्यत्र द्वयोश्चैवान्तरा कश्चि"दिति भाष्यप्रयोगः कथमिति शङ्क्यम्, मध्यत्वनिमित्तमवधित्वं हि ययोर्निर्णीतं तत्र द्वितीया। ययोस्तु न तन्निर्णयस्तत्र संबन्धसामान्ये षष्ठ()एव भवति युक्तग्रहणादिति कैयटः।

तत्त्व-बोधिनी
अन्तराऽन्तरेण युक्ते ४८३, २।३।४

अन्तरान्तरेण। प्रतिपदोक्तत्वान्निपातयोरेव ग्रहणं न तु टाबन्ततृतीयान्तयोः, परस्परसाहचर्याच्च। तद्यथा गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्न त्वाचर्यपरशुरामयोः। तेन किमनयोरन्तरेणावगतेनेति सिद्धम्। किमनयोर्विशेषण ज्ञातेनेत्यर्थः। अन्तरा त्वां मामिति। तव मम च मध्ये इत्यर्थः। हरिशब्दात्तु द्वितीया न भवति, अन्तरङ्गतया प्रथमाया एवोत्पत्तेः। अन्तरेण हरिमिति। हरिं विनेत्यर्थः। "मध्ये"इत्यर्थेऽप्यन्तरेणशब्दो वर्तते, "मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोद्र्वयं सः" इति। चलच्चामरयोद्र्वयं यस्य मध्ये इत्यर्थः। युक्ताग्रहणान्नेह,--"अन्तरा त्वां मां कृष्णस्य मूर्तिः"। इह कृष्णान्न द्वितीया, अन्तराशब्दप्रयोगेऽपि अन्तरेत्यनेनाऽनन्वयात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कालाध्वनोः ७।२ ७ अत्यन्तसंयोगे ७।१ द्वितीया १।१ २

समासः॥

कालश्च अध्वा च कालाध्वानौ, तयोः कालाध्वनोः, इतरेतरद्वन्द्वः
अत्यन्तं संयोगः, अत्यन्तसंयोगः, तस्मिन् ॰ कर्मधारयतत्पुरूषः

अर्थः॥

कालवाचिनि शब्दे, अध्ववाचिनि शब्दे च, अत्यन्तसंयोगे गम्यमाने द्वितीया विभक्तिः भवति।

उदाहरणम्॥

मासम् अधीतः अनुवाकः। संवत्सरम् अधीतः अष्टकः। संवत्सरं कल्याणी। अध्वनि - क्रोशं कुटिला नदी। क्रोशं रमणीया वनराजी॥
काशिका-वृत्तिः
कालाध्वनोरत्यन्तसंयोगे २।३।५

कालशब्देभ्यो ऽध्वशब्देभ्यश्च द्वितीया विभक्तिर् भवति अत्यन्तसंयोगे गम्यमाने। क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः सम्बन्धः अत्यन्तसंयोगः। मासम् अधीते। संवत्सरम् अधीते। मासं कल्याणी। संवत्सरं कल्याणी। मासं गुडधीनाः। संवत्सरं गुडधानाः। अध्वनः खल्वपि क्रोशम् अधीते। योजनम् अधीते। क्रोशं कुटिला नदी। योजनं कुटिला नदी। क्रोशं पर्वतः। योजनं पर्वतः। अत्यन्तसंयोगे इति किम्? मासस्य द्विरधीते। क्रोशस्य एकदेशे पर्वतः।

न्यासः

कालाध्वनोरत्यन्तसंयोगे। , २।३।५

कालाध्वनोरित्यर्थग्रहणम्। अत आह-- "कालशब्देभ्योऽध्वशब्देभ्यश्च" इत्यादि। "मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः। योजनस्यैकदेशे पर्वतः" इति। नात्र "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया भवति॥

बाल-मनोरमा

कालाध्वनोरत्यन्तसंयोगे ५५०, २।३।५

कालाध्वनोः। इहेति। कालाध्वनोरत्यन्तसंयोगे इत्यर्थः। निरन्तरसंयोगः=अत्यन्तसंयोगः। अन्तो विच्छेदः, तमतिक्रान्तोऽत्यन्तः, स चासौ संयोगश्चेति विग्रहः। गुणक्रियाद्रव्यैरित्यौचित्याद्गम्यते। गुणक्रियाद्रव्यैः कालाध्वनोरविच्छिन्नसंयोगे गम्ये द्वितीया स्यादित्यर्थः। सा च कालाध्वभ्यामेव भवति, श्रुतत्वात्। तत्र गुणात्यन्तसंयोगे उदाहरति--मासं कल्याणीति। "भवती"ति शेषः। तिं()रशद्दिनात्मको मासः। तस्मिन्नविच्छिन्नमङ्गलवानित्यर्थः। क्रियात्यन्तसंयोगे उदाहरति--मासमधीते इति। तिं()रशद्दिनात्मके प्रतिदिनमुचितकाले निरन्तरमधीत इत्यर्थः। द्रिव्यात्यन्तसंयोगे उदाहरति--मासं गुडधाना इति। मासे प्रतिदिनं निरन्तरं गुडधानाः सन्तीत्यर्थः। कालात्यन्तसंयोगमुदाह्मत्य अध्वात्यन्तसंयोगे उदाहरति--क्रोशं कुटिलेत्यादि। मासस्य द्विरिति। मासे तिं()रशद्दिनात्मके द्वयोर्दिनयोः प्रतिदिनमेकवारमित्येव द्विरधीत इत्यर्थः। "द्वित्रिचतुभ्र्यः सुच्" इति द्विशब्दात्कृत्वोऽर्थे सुच्। "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" इति षष्ठी। शेषषष्ठीति केचित्। "शिवरात्रौ जागृयात्" इत्यत्र त्वधिकरणत्वस्य विवक्षितत्वात्सप्तमीत्याह#उ#ः। उपपदविभक्तीनां शेषत्वविवक्षायामेव प्रवृत्तेरिति तदाशयः। इति द्वितीया।

तत्त्व-बोधिनी

कालाध्वनोरत्यन्तसंयोगे ४९३, २।३।५

तालाध्वनोः। अन्तं विराममतिक्रान्तोऽत्यन्तः, स चासौ संयोगश्चाऽत्यन्तसंयोगः। निरन्तरसंन्निकर्ष इत्यर्थः। केनेत्याकाङ्क्षायां गुणक्रियाद्रव्यैरित्यौचित्याद्बोध्यम्। द्वितीया स्यादिति। श्रुतत्वात्कालाध्ववृत्तिभ्यामेव। स्वरूपग्रहणं त्विह न भवति, "कालाः," "अत्यन्तसंयोगे च "इति समासविधायके "कालाः"इति बहुवचननिर्देशेन द्वितायाविधौ स्वरूपविधिर्नेति ज्ञापनात्। अतएव "मासप्रमितः," "मुहूर्तसुख"मिति द्वितीयासमासविधावुदाहरिष्यति। मासं कल्याणीत्यादी। अकर्मकधातुभिर्योग एव देसकालादीनां कर्मसञ्ज्ञाविधानान्नेह "कर्मणि द्वितीय"इति द्वितीया प्राप्नोतीति भावः। मासस्य द्विरिति। "कृत्वोर्थप्रयोगे कालेऽधिकरणे"इत्यनेन षष्ठीति प्राञ्चः। तन्न। तत्र शेषग्रहणाऽनुवृत्त्या "द्विरह्नो भोजन"मिति कृदन्तेन सह समासनिवृत्तेरेव फलत्वात्। तस्मादिह "षष्ठी शेषे"इति सूत्रेणैव षष्ठी भवत्यन्तरङ्गत्वादित्याहुः। अन्यर्थमारब्धस्याऽपि "कृत्वोर्थप्रयोगे"इति सूत्रस्य द्विरह्नो भुङ्क्त इत्यत्र विशेषविहितत्वात्प्रवृत्तौ बाधकं नास्तीति केचित्। इति द्वितीया।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपवर्गे ७।१ तृतीया १।१ कालाध्वनोः ७।२ ५ अत्यन्तसंयोगे ७।१ ५

अर्थः॥

अपवर्गे अर्थे कालाध्वनोः अत्यन्तसंयोगे तृतीया विभक्तिः भवति।

उदाहरणम्॥

मासेन अनुवाकः अधीतः, संवत्सरेण अनुवाकः अधीतः। अध्वनः - क्रोशः अनुवाकः अधीतः। योजनेन अनुवाकः अधीतः।
व्याख्या (काशिका)
काल-अध्वनोर् अत्यन्तसंयोगे इति वर्तते / अपवर्गः फल-प्राप्तौ सत्यां क्रियापरिसमाप्तिः / अपवर्गे गम्यमाने काल-अध्वनोर् अत्यन्तसंयोगे तृतीया विभक्तिर् भवति / मासेन अनुवाको ऽधीतः / संवत्सरेण अनुवाको ऽधीतः / अध्वनः - क्रोशेन अनुवाको ऽधीतः / योजनेन अनुवाको ऽधीतः / अपवर्गे इति किम् ? क्रोशम् अधीतो ऽनुवाकः / मासम् अधीतः / कर्तव्याद्दत्तौ फल-सिद्धेर् अभावात् तृतीया न भवति / मासम् अधीतो ऽनुवाकः, न च अनेन गृहीतः //
काशिका-वृत्तिः
अपवर्गे तृतीया २।३।६

कालाध्वनोरत्यन्तसंयोगे इति वर्तते। अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः। अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर् भवति। मसेन अनुवाको ऽधीतः। संवत्सरेण अनुवाको ऽधीतः। अध्वनः क्रोशेन अनुवाको ऽधीतः। योजनेन अनुवाको ऽधीतः। अपवर्गे इति किम्? क्रोशम् अधीतो ऽनुवाकः। मासम् अधीतः। कर्तव्याद्दत्तौ फलसिद्धेरभावात् तृतीया न भवति। मासम् अधीतो ऽनुवाकः, न च अनेन गृहीतः।
न्यासः
अपवर्गे तृतीया। , २।३।६

"अपवर्गः"इति। अत्यन्तसंयोगस्य फलरूपमेतद्विशेषणमुपात्तम्। तच्च क्रियात्यन्तसंयोगस्यैव सम्भवति, नान्यस्यति सामर्थ्यादत्र क्रियात्यन्तसंयोग एव गृह्रते। सर्वस्याश्च क्रियायाः परिसमाप्तिरस्ति; तस्माद्विशेषणोपादानसामर्थ्यात् फलप्राप्तौ सत्यां क्रियायाः परिसमाप्तिरिहापवर्गो विज्ञायत इत्यत आह-- "फलप्राप्तौ" इत्यादि। "कर्तृव्यावृतौ" इति। न हि मासमधीतोऽनुवाको न चानेन गृहीत इत्युक्तेऽपवर्गो गम्यते, किं तर्हि? कर्तुरशक्तिमात्रम्। न च तत्रापवर्गव्यपदेशः॥
बाल-मनोरमा
अपवर्गे तृतीया ५५५, २।३।६

अपवर्गे तृतीया। अपवर्द समाप्तिः, "कर्मापवर्गे लौकिका अग्नयः" इत्यादौ दर्शनात्। इह तु फलप्राप्तिपर्यन्तत्वात् प्रायेण क्रियायाः। तदाह-अपवर्गः फलप्राप्तिरिति। कालाध्वनोरिति। अनेन "कालाध्वनोः" इति द्वितीयाय अयमपवाद इति सूचितम्। अह्नेति। अह्नि कोशे वा निरन्तरमनुवाकोऽध्ययनेन गृहीत इत्यर्थः। नायात #इति। न गृहीत इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सप्तमीपञ्चम्यौ १।२ कारकमध्ये ७।१ कालाध्वनोः ७।२ ५

काशिका-वृत्तिः
सप्तमीपञ्चम्यौ कारकमध्ये २।३।७

कालाध्वनोः इति वर्तते। कारकयोर् मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः। अद्य भुक्तवा देवदत्तो द्व्यहे भोक्ता द्व्यहाद् वा भोक्ता। त्र्यहे त्र्यहाद् वा भोक्ता। कर्तृशक्त्योर् मध्ये कलः। इह स्थो ऽयम् इष्वासः क्रोशे लक्ष्यं विध्यति। क्रोशाल् लक्ष्यं विधियति। कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर् वा मध्ये क्रोशः। सङ्ख्यातानुदेशो न भवति, अस्वरितत्वात्।
न्यासः
सप्तमीपञ्चम्यौ कारकमध्ये। , २।३।७

"अद्य भुक्त्वा देवदत्तो द्व्यहे भोक्ता, द्व्यहाद्भोक्ता" इति। ननु चात्र एक एव कत्र्ता, कारकभेदे सति तन्निबन्धनो मध्यव्ययपदेशो भवति, तत् कथमसति कारकभेदे कारकयोर्मध्ये कालो भवतीत्यत आह-- "कर्त्तृशक्त्योः"इत्यादि। न हि द्रव्यं कारकम्, किं तर्हि? शक्तिः, सा चेह भिद्यते। तथा हि-- देवदत्ते द्वे शक्ती व्यवस्थिते; एकाद्य भुजेः साधनम्, अपरा द्व्यहेऽतीति इति कर्त्तृशक्तिभेदे सति युक्तो मध्यव्यपदेशः। "कर्त्तृकर्मणोः" इत्यादि। इष्वासः कत्र्ता, लक्ष्यं कर्म। "कर्मापादानयोः" इति। कर्म तदेव। अपादानं यतः परो निर्याति। "कर्माधिकरणयोर्वा" इति। इहेत्यनेन यन्निर्दिश्यतेतदधिकरम्। कर्म च तदेव। "तयोर्मध्ये क्रोशः" इति। क्रोशस्येहापादानाधिकरमत्वाभावात् सप्तमीपञ्चम्यौ न भवतिः। न हि क्रोशाच्छरोऽपैति, किं तर्हि? तदेकदेशात्। नापि क्रोशे व्यवस्थितं लक्ष्यम्, किं तर्हि? तदेकदेश एव। तस्मात् क्रोशस्य शेषत्वात् षष्ठ()आं प्राप्तायां सप्तमीपञ्चम्यौ विधीयेते। अथात्र संख्यातानुदेशः कस्मान्न भवति? यावता कालाध्वनौ हि द्वौ, सप्तमीपञ्चम्यावपि द्व, अत एव सामात् संख्यातनुदेशेन भवितव्यम्- कालात् सप्तमी, अध्वनः पञ्चमीत्यत आह-- "संख्यातानुदेशः" इत्यादि। "स्वरितेनाधिकारः" १।३।११ इत्यत्र स्वरितेनेति योगविभागः कृतः, तत पूर्वेणापि सम्बध्यते। यत्र स्वरितत्वं प्रतिज्ञायते तत्र यथासंख्यं यथा स्यात्। इह तु स्वरितत्वं नास्ति, अतो न भवति संख्यातानुदेशः॥
बाल-मनोरमा
सप्तमीपञ्चम्यौ कारकमध्ये ६३५, २।३।७

सप्तमीपञ्चम्यौ। कारकशब्दः कर्तृत्वादिशक्तिपरः, न तु कत्र्रादिपरः, व्याख्यानात्। मध्यस्यावधिद्वयसापेक्षत्वात्कारकयोर्मध्यमिति विग्रहः। तदाह--शक्तिद्वयमध्ये इति। "कालाध्वनोः" इत्यनुवृत्तं पञ्चम्यन्ततया विपरिणम्यत इत्याह--यौ कालाध्वानाविति। अद्य भुक्त्वेति। सामीपिकाधिकरणत्वे सप्तम्यामेव प्राप्तायां वचनम्। अद्य भुक्त्वा द्व्यहे अतीते तत्समीपे तृतीयेऽह्नि भोक्तेत्यर्थः। भविष्यति लुट्। कर्तृशक्त्योरिति। अद्यतनभुजिक्रियानिरूपितकर्तृत्वस्य, द्व्यहोत्तरदिनगतभुजिक्रियागिरूपितकर्तृत्वस्य चेत्यर्थः। कारकशब्दस्य कत्र्रादिपरत्वे त्विह न स्यात्, क्त्वाप्रत्ययस्य कत्र्रेकत्वे विधानात्। कर्तृशक्तिस्तु भुजिक्रियाभेदाद्भिद्यत एव। कारकद्वयमध्येऽप्युदाहरति--इहस्थोऽयमिति। इहापि देशतः सामीपिकमधिकरत्वं पञ्चमीसप्तम्योरर्थः। इहतिष्ठन्नयमिष्वास इषुणा क्रोशोत्तरसमीपदेशे लक्ष्यं विध्येदित्यर्थः। कर्तृकर्मशक्त्योरिति। कर्तृत्वकर्मत्वरूपशक्त्योर्मध्य इत्यर्थः। कारकशब्दस्य कत्र्रादिपरत्वे त्विहैव स्यात्। अद्य भुक्त्वायमित्यत्र न स्यादिति सूचयितुमिदमप्युदाहृतम्। ननु लोके लोकाद्वा अधिको हरिरित्यत्र अवधित्वसंबन्धे शेषषष्ठ()एवोचितेत्याशङ्क्याह--अधिकशब्देनेति। लोके लोकाद्वेति। अवधित्वसंबन्धः सप्तमीपञ्चम्योरर्थः। लोकापेक्षया श्रेष्ठ इत्यर्थः।

तत्त्व-बोधिनी

सप्तमीपञ्चम्यौ कारकमध्ये ५६५, २।३।७

सप्तमीपञ्चम्यौ। "कालाध्वनो रत्यन्तसंयोगे " इत्यतः कावाध्वनोरित्यनुवर्तते, तच्च पञ्चम्या विपरिणम्यते, तदाह---यौ कावाध्वानौ ताभ्यामिति। इह कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवत्यस्वरितत्वात्। अद्य भुक्त्वाऽयमिति। नन्वत्र कर्ता एक एव, तत्कथं कारकयोर्मध्ये कालः()। सत्यम्। नात्र शक्त्याश्रयं द्रव्यं कारकमिति व्यवह्रियते, किंतु शक्तिरेव। सा च कालबेदाद्भिद्यत एव। एका हि अद्य भुजेः साधनम्, अपरा व्यहेऽतीते भुजेः। तदेतव्द्याचष्टे----कर्तृशक्त्योर्मध्येऽयं काल इति। (५६४) यस्मादधिकं यस्य चे()आरवचनं तत्र सप्तमी।२।३।९।

यस्मादधिकम्। उप परार्ध इति। "उपोऽधिके चे" त्यनेन "उपे"त्यस्य कर्मप्रवचनीयसंज्ञा। "यस्य चे()आरवचन"मित्यस्य तन्त्रादिना अर्थद्वयं विवक्षितम्। तथा हि यस्येत्यनेन स्वं निर्दिश्यते, यस्य स्वस्य संबन्धी ई()आर उच्यते ततः सप्तमीति व्याख्याने स्वावा चकात्सप्तमीत्येकोऽर्थः। "ई()आर" शब्दो भावप्रधानः। यन्निष्ठमी()आरत्वमुच्यते ततः सप्तमीति व्याख्याने स्वाभिवाचकात्सप्तमीत्यपरः। एवं स्थिते फलितमाह--स्वस्वामिभ्यां पर्यायेणोति। अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसंबन्थस्याप्युक्तत्याद्युगपदुभाभ्यां न सप्तम स्यादिति भावः। रामाधीनेति। विभक्त्यर्थेऽव्ययभावे त्वधिरामम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्मप्रवचनीययुक्ते ७।१ ११ द्वितीया १।१

काशिका-वृत्तिः

कर्मप्रवचनीययुक्ते द्वितीया २।३।८

कर्मप्रवचनीयैर् युक्ते द्वितीया विभ्क्तिर् भवति। अनुर् लक्षणे १।४।८३ शाकल्यसय संहिताम् अनुप्रावर्षत्। आगस्त्यम् अन्वसिञ्चत् प्रजाः।

न्यासः

कर्मप्रवचनीययुक्ते द्वितीया। , २।३।८

"शाकल्यस्य संहितामनु प्रावर्षत्" इति। "अनुर्लक्षणे" १।४।८३ इति कर्मप्रवचनयीसंज्ञा।

बाल-मनोरमा

कर्मप्रवचनीययुक्ते द्वितीया ५४०, २।३।८

कर्मप्रवचनीय। युक्ते इति भावे क्तः। तदाह--एतेन योगे इति जपमन्विति। कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम्। अत्र वृष्टिकाल उपदेश्यः, स च दुर्ज्ञानत्वात्"शाखाग्रं प्रति द्विकलश्चन्द्र" इतिवत्प्रज्ञानं किंचिदवलम्ब्यैव ज्ञाप्यः। जपोऽत्र प्रज्ञानम्, तत्र जपकाले पर्जन्यः प्रावर्षदिति संभवति। हेतुभूतजपो ह्त्र लक्षणम्। हेतुत्वं च पूर्वकालवृत्तित्वघटितम्। एवंच वर्षहेतुभूतवरुणजपोत्तरकाले पर्जन्यः प्रावर्षदित्युत्तरं पर्यवस्यति। तत्र लक्षणत्वं हेतुत्त्वं चेति द्वयं द्वितीयार्थः। तदुभयमनुना द्योत्यते। लक्षणत्वं च ज्ञानजनकज्ञानविषयत्वम्। जपज्ञानेन तदुत्तरकालविशिष्टा वृष्टिर्ज्ञाप्यते। ततस्च

जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः। तदाह--हेतुभूतेति। अनभिहिताधिकारान्न पर्जन्यात्तृतीया, तस्य तिङा अभिहितत्वात्। ननु हेतुत्वाऽविवक्षायां "वृक्षमनु विद्योतते विद्यु"दित्यत्र "अनुर्लक्षणे"इत्यत्र तदनुपादानात्। एवंच हेतुत्वाऽविवक्षायां "वक्षमनु विद्योतते विद्यु"दित्यत्र "अनुर्लक्षणे" इति सावकाशम्। "हेतौ" इति तृतीया तु "धनेन कुल"मित्यादौ सावकाशा। "पर्जन्यो जपमनु प्रावर्ष"दित्यत्र तु तदुभयमपि प्रसक्तम्। तत्र परत्वाद्धेतुतृतीयैव स्यादित्यत आह--परापीति। "अनुर्लक्षणे" #इति कर्मप्रवचनीयत्वप्रयुक्तद्वितीयाविधिनेत्यर्थः। पुनः संज्ञेति। "वृक्षमनु विद्योतते विद्यु" दित्यत्र हि "अनुर्लक्षणे" इत्यस्य न प्रयोजनम्, "लक्षणेत्थ"मित्येव सिद्धेः। ततश्च "अनुर्लक्षणे" इत्यारम्भसामथ्र्याद्धेतुभूते लक्षणेऽनोः कर्मप्रवचनीयत्वलब्धया द्वितीयया हेतौतृतीया बाध्यत इति विज्ञायते इत्यर्थः। ततश्च हेतुत्वमपि शाब्दबोधे विषय इति फलति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यस्मात् ५।१ अधिकम् १।१ यस्य ६।१ च ० ईश्वरवचनम् १।१ तत्र ० सप्तमी १।१ कर्मप्रवचनीययुक्ते ७।१ ८

काशिका-वृत्तिः

यस्मादधिकं यस्य च ईश्वरवचनं तत्र सप्तमी २।३।९

कर्मप्रवचनीययुक्त इति वर्तते। यसमा दधिकं यस्य च ईश्वरवचनं कर्मप्रवचनीयैर् युक्ते तत्र सप्तमी विभक्तिर् भवति। उप खार्यं द्रोणः। उप निष्के कार्षापणम्। यस्य च ईश्वरवचनम् इति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर् भवति। अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः इति। द्वितीयापवादो योगः।

न्यासः

यस्मादधिकं यस्य चे�आरवचनं तत्र सप्तमी। , २।३।९

"उपखार्यां द्रोणः" इति। खार्या अधिको द्रोण इत्यर्थः। "उपोऽधिके च" १।४।८६ इत्युपशब्दस्य कर्मप्रवचनीयसंज्ञा। "यस्य चे()आरवचनम्" इति। यस्य चे()आरव्यपदेश इत्यर्थः। ई()आरव्यदेशस्तु स्वामिन एव सम्भवति। तत्रैव सप्तम्या भवितव्यमिति कस्यचिद्भ्रान्ति स्यात्, अतस्तान्निराकर्त्तुमाह-- "यस्य चे()आरवचनम्" इत्यादि। यस्य चे()आरवचनमित्यनेन द्वयोरपि = स्वस्वामिनोः पर्यायेण सप्तमी भवतीति। कथम्, यावता "अधिरी()आरे" १।४।९६ इत्यनेनाधिकशब्दस्य कर्मप्रवचनीयसंज्ञा विहिता, ई()आरस्तु स्वमी, स च स्वमपेक्ष्य भवति? स्वस्वामिसम्बन्धेऽधिशब्दः कर्मप्रवचनीयसंज्ञो भवति। तत्र कदाचित् स्वामी कर्मप्रवचनीयविभक्तया युज्यते, कदाचित् स्वमित्येतत् प्रतिपादितं प्रागेव। कथं पुनर्यस्य चे()आरवचनमित्युच्यमाने स्वमपि कर्मप्रवचनीयविभक्त्या युज्यते, न हि तस्ये()आरव्यपदेशोऽस्ति? एवं तर्हि अनुक्तसमुच्चयार्थश्चकारः क्रियते, तेन यस्ये()आरव्यपदेशो नास्ति तत्रापि सप्तमी विज्ञायत इत्यदोषः॥

बाल-मनोरमा

यस्मादधिकं यस्यचे�आरवचनं तत्र सप्तमी ६३७, २।३।९

यस्मादधिकम्। "कर्मप्रवचनीययुक्ते" इत्यनुवर्तते। तदाह--अत्र कर्मप्रवचनीयेति। शेषषष्ठ()पवादः। उप पराध इति। अवधित्वं सप्तम्यर्थः। तदाह--परार्धादधिका इत्यर्थ इति। यस्मादधिकं संख्यान्तरं न विद्यते तत्परार्धम्। तदपेक्षयेत्यर्थः। "उपोऽधिके च" इति उपेत्यस्य कर्मप्रवचनीयत्वस्येदं फलम्। यस्ये()आरवचनमित्यस्य यत्सम्बन्धी ईस्वर उच्यते तत

सप्तमीत्येकोऽर्थः। इह यच्छब्देन स्वमुच्यते। #एवंच स्ववाचकात्सप्तमीति लभ्यते। ई()आरशब्दो भावप्रधानः। यस्ये()आरत्वमुच्यते ततः सप्तमीत्यन्योऽर्थः। यन्निष्ठमी()आरत्वमुच्यते ततः सप्तमीति यावत्। स्वामिवाचकात्सप्तमीति लभ्यते। तदाह--ऐ()आर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमीति।

अधि भुवि राम इति। अधिरी()आरपर्यायः। संबन्धः सप्तम्यर्थः। भुवः स्वामी राम इत्यर्थः। अत्र स्ववाचकात्सप्तमी। अधि रामे भूरिति। अत्र अधिः स्वशब्दपर्यायः। सम्बन्धः सप्तम्यर्थः। रामस्य स्वभूता भूरित्यर्थः। अत्र स्वामिवाचकात्सप्तमी। समासपक्षे त्विति। शौण्डादिगणे अधिशब्दस्य पठितत्वेन तेनाऽधिशब्देन रामे इति सप्तम्यन्तस्य समासे सति "सुपो धातु" इति सुब्लुकि रामाधिशब्दात् "अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः" इति खप्रत्यये "आयनेयीनीयियः" इति तस्य ईनादेशे रामाधीना भूरिति सिध्यति। रामस्वामिकेत्यर्थः। विभक्त्यर्थे अव्ययीभावे त्वधिरामं भूः। रामाधिकरणिका भूरित्यर्थः। खप्रत्ययस्तु न, अध्युत्तरपदत्वाऽभावात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पञ्चमी १।१ ११ अपाङ्परिभिः ३।३ कर्मप्रवचनीययुक्ते ७।१ ८

काशिका-वृत्तिः

पञ्चम्यपाऽङ्परिभिः २।३।१०

अप आङ् परि इत्येतैः कर्मप्रवचनीयैर् योगे पञ्चमी विभक्तिर् भवति। अप त्रिगर्तेभ्यो वृष्टो देवः। आ पाटलिपुत्राद् वृष्टो देवः। परि त्रिगर्तेभ्यो वृष्तो देवः। अपेन साहचर्यात् परेर्वर्जनार्थस्य ग्रहणम्, तेन इह न भवति, वृक्षं परि विद्योतते विद्युत्।

न्यासः

पञ्चम्यापाङपिरभिः।, २।३।१०

अपपरिशब्दयोः "अपपरी वर्जने" १।४।८७ इत्यनेन कर्मप्रवचनीयसंज्ञा विहिता, आङश्च "आङमर्यादावचने" १।४।८८ इत्यनेन। "वृक्षं परि विद्योतते" इति। परिः "लक्षणेत्यम्भूतख्यान"१।४।८९ इत्यादिना॥

बाल-मनोरमा

पञ्चम्यपाङ्परिभिः ५९०, २।३।१०

पञ्चम्यपाङ्परिभिः। एतैरिति। अप आङ् परि-इत्येतैरित्यर्थः। कर्मप्रवचनीयैरिति। "कर्मप्रवचनीययुक्ते" इत्यतस्तदनुवृत्तेरिति भावः। अप हरेः परि हरेः संसार इति। अपहरेः संसारः, परिहरेः संसार इत्यन्वयः। हरिं वर्जयित्वा जनिमृतिचक्रात्मकं संसरणमित्यर्थः। ननु "वृक्षं प्रति विद्योतते", "भक्तो हरिं प्रति" इत्यादौ "लक्षणेत्थंभूते"ति कर्मप्रवचनीयत्वात् "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीयां परत्वादपवादत्वाच्च बाधित्वा "पञ्चम्यपाङ्परिभि"रिति पञ्चमी स्यादित्यत आह--परिरत्रेति "पञ्चम्यपाङ्परिभिः" इत्यत्र वर्जनार्थकेनाऽपेन साहचर्यात् परिरपि वर्जनार्थकं एव गृह्र्त इत्यर्थः। आ मुक्तेरिति। मुक्तेः प्रागिति यावत्। आ सकलादिति। ब्राह्र सकलमभिव्याप्य वर्तत इत्यर्थः।

तत्त्व-बोधिनी

पञ्चम्यापाङ्परिभिः ५२९, २।३।१०

परिहरेरिति। हरिं वर्जयित्वेत्यर्थः। "परेर्वर्जने वा वचनम्" इति वार्तिकात्पक्षे द्विर्वचनाऽभावः। परिरत्रेति। अत्र=पञ्चमीविधौ। वर्जनार्थेनाऽपेन साहचर्यादिति भावः। आ मुक्तेरिति। मुक्िं()त मर्यादीकृत्येत्यर्थः। आ सकलादिति। सकलमभिव्याप्येत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रतिनिधिप्रतिदाने १।२ च ० यस्मात् ५।१ पञ्चमी १।१ १० कर्मप्रवचनीययुक्ते ७।१ ८

काशिका-वृत्तिः
प्रतिनिधिप्रतिदाने च यस्मात् २।३।११

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। यस्मात् प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर् भवति। अभिमन्युरर्जुनतः प्रति। प्रद्युम्नो वासुदेवतः प्रति। माषानस्मै तिलेभ्यः प्रति यच्छति। ननु च प्रतिनिधिप्रतिदाने कर्मप्रवचनीययुक्ते, न तु यतः प्रतिनिधिप्रतिदाने? न एष दोषः, सम्बन्धसम्बन्धात् तस्य अपि योगो ऽस्त्येव।
न्यासः
प्रतिनिधिप्रतिदाने च यस्मात्। , २।३।११

"मुख्यसदृशः प्रतिनिधिः" इति। मुख्यो यः कश्चित् कार्ये रूढः = समर्थः, प्रसिद्धः = प्रधानभूतस्तेन सदृशो यस्तदभावे तस्य कार्यस्य सिद्ध्यर्थमुपादीयते स प्रतिनिधिः। "अभिमन्युरर्जुनतः प्रति" इति। मुख्यादर्जुनादभिमन्युः प्रतिनिधिस्ततः पञ्चमीविभक्तिर्भवति। प्रतियोगे पञ्चम्यास्तसिः। "माषानस्मै तिलेभ्यः प्रतियच्छति" इति। ये तिलाः पूर्वं दत्तास्तेभ्यो माषाणां प्रतिदानम्। तिलेभ्य इति पञ्चमी भवति। तिलान् गृहीत्वा माषान् ददातीत्यर्थः। ननु च "प्रतिः प्रतिनिधिप्रतिदानयोः" १।४।९१ इति प्रतेः प्रतिनिधिप्रतिदानरोरेवार्थयोः कर्मप्रवचनीयसंज्ञा, तयोरेव प्रतिना योग उपपद्यते, न तु यतस्ते तस्येति मन्यमान आह-- "ननु च" इत्यादि। "सम्बन्धसम्बन्धात्" इति। सम्बध्यत इति सम्बन्धः=प्रतिनिधिः, प्रतिदानञ्च, तदुभयमयि कर्मप्रवचनीयेन प्रतिना युज्यते। तेन सम्बन्धेन यः सम्बन्धः स सम्बन्धसम्बन्धः। कस्यपुनस्तेन सम्बन्धः? यतः प्रतिनिधिः प्रतिपादनञ्च तस्य। सम्बन्धिशब्दौ हि प्रतिनिधिप्रतिदानशब्दौ। तौ च नासति पूर्वविज्ञाते मुख्ये पूर्वदत्ते च भवति इति प्रतिनिधिप्रतिदानाभ्यां यस्य सम्बन्धस्तस्य ताभ्यां सम्बन्धोऽस्तीति ते अपि कर्मप्रवचनीयैर्युक्ते भवत इति। क्वचित् "सम्बन्धिसम्बन्धात्" इति पाठः। तत्रापि प्रतिनिधिः हूतिदानञ्च सम्बन्धिशब्देनोच्यते; तदुभयस्यापि कर्मप्रवचनीयेन सम्बन्धात्। तेन सम्बन्धिना यः सम्बन्धः स सम्बन्धिसम्बन्ध इति स एवार्थः॥
तत्त्व-बोधिनी
प्रतिनिधिप्रतिदाने च यस्मात् ५३०, २।३।११

प्रतिनिधिप्रतिदाने। अस्मादेव निर्देशाल्लिङ्गादाभ्यां योगे पञ्चमी। "ज्ञापकासिद्धं न सर्वत्र" इति "कृष्णस्य प्रतिनिधि"रित्यपि सिद्धमित्याहुः। मुख्यस्याऽभावे सति तत्सदृश उपादीयते स प्रतिनिधिः। देयस्य प्रतिनिर्यातनं प्रतिदानम्। #एअकर्तरि। हेतुभूतमिति। "हेतौ"इत्यनुवर्तते इथि भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ गत्यर्थकर्मणि ७।१ द्वितीयाचतुर्थ्यौ १।१ चेष्टायामम् ७।१ अनध्वनि ७।१ अनभिहिते ७।१ १

काशिका-वृत्तिः
गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायाम् अनध्वनि २।३।१२

गत्यर्थानां धातूनां चेष्ताक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारके ऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति, ग्रामाय गच्छति। ग्रामं व्रजति, ग्रामाय व्रजति। गत्यर्थग्रहणं किम्? ओदनम् पचति। कर्मणि इति किम्? अश्वेन व्रजति। देष्टायम् इति किम्? मनसा पाटलिपुत्रं गच्छति। अनध्वनि इति किम्? अध्वानं गच्छति। अध्वनीत्यर्थग्रहनम्। पन्थानं गच्छति। मार्गं गच्छति। आस्थितप्रतिषेधश्चायं विज्ञेयः। आस्थितः सम्प्राप्तः, आक्रान्त उच्यते। यत्र तु उत्पथेन पन्थानं गच्छति, तत्र भवितव्यम् एव चतुर्थ्या, पथे गच्छति इति। द्वितीयाग्रहनं किम्? न चत्र्थ्येव विक्ल्प्येत, अपवादविषये ऽपि यथा स्यात्। ग्रामम् गन्ता ग्रामाय गन्ता। कृद्योगलक्षणा षष्ठी न भवति।
न्यासः
गत्यर्थकर्मणि द्वितीयाचतुथ्यौ चेष्टायामनध्वनि। , २।३।१२

यदि क्रियामात्रमिह चेष्टाशब्देनोच्यते तदा चेष्टाग्रहणमपार्थकम्। सर्वो हि धातुः क्रियावचनः। तस्माद्विशेषणं पादानसामथ्र्यात् परिस्पन्दवचनोऽयं चेष्टाशब्दो विज्ञायते, इत्याह-- "परिस्पन्दक्रियाणाम्" इति। परिस्पन्दः = शरीरव्यापारः, सा क्रिया येषां ते तथोक्ताः। "अध्वनीत्यर्थग्रहणम्" इति। अर्थप्रधानत्वन्निर्देशस्य, सप्तमीनिर्देशाच्च। यदीह स्वरूपग्रहणं स्यात् "अनध्वनः" इति कुर्यात्। "आस्थितप्रतिषेधश्चायं {विज्ञेयः- काशिका।} विज्ञायते इति। येन देशविशेषेण प्राप्यं ग्रामादिकं प्राप्यते स देशविशेषो लोकेऽध्वेति रूढः। केन च प्राप्यं प्राप्यते? यः पन्था आक्रान्तस्तेन। तस्मात् तस्यैवायं प्रतिषेधः। यदा तु स एवोत्पथेन प्राप्यते तदा तस्य पथोऽध्वव्यपदेशो न भवतीति भवत्येव तत्र चतुर्थी। "द्वितीयाग्रहणं किम्" इति। कर्मणि कारके चतुर्थ्यां विकल्पितायां पक्षे न्यायप्राप्तैव द्वितीयेति भावः। तत् क्रियते बाधकबाधनार्थम्। "अपवादविषयेऽपि यथा स्यात्" इति। अथार्थग्रहणं किमर्थम्, न गतिकर्मणीत्येवोच्येत, यावता गतिरर्थ एव? नैतदस्ति; या गतिर्गमिनैव शब्दान्तरसन्निधानाद्यनपेक्षतयोच्यते तत्र यथा स्यात्। पादविहरणात्मिका च या गतिः प्रधानभूता तस्या एवग्रहणं यथा स्यादित्येवमर्थम्। तेनेह न भवति-- स्त्रियं गच्छति, अजां ग्रामं नयति। अत्र हि गमेमँथुनमथः स्त्रीशब्दसन्निधानाद्गम्यते, न तु गमेः केवलात्। नयतेश्च प्रापणमेवार्थः प्रदानभूतः, तद्विशेषणन्तु प्रादविहणमप्रधानम्। यद्येवम्,ग्रामं गमयति ग्रामाय गमयतीति णन्ते गुणभूतत्वाद्गमर्न सिध्यति, गमेरत्र प्रेषणाध्येषणादिको ह्यर्थः प्राधान्यमनुगच्छति, नैष दोषः ; न ह्यत्र ग्रामो ण्यन्तस्य कर्म, किं तर्हि? गमेरेव॥
बाल-मनोरमा
गत्यर्थकर्मणि द्वितीयाचतुथ्यौ चेष्टायामनध्वनि ५७७, २।३।१२

गत्यर्थ। शारीरपरिस्पन्दः-चेष्टा। मनसेति। अत्र शारीरचेष्टाया अभावान्न द्वितीयाचतुथ्यौ, किन्तु द्वितीयैवेति भावः। "आस्थितप्रतिषेधो वक्तव्यः" इति वार्तिकमर्थतः सङ्गृह्णाति-गन्त्राऽधिष्ठिते इति। गन्त्राक्रान्ते अध्वन्येव अनध्वनीत्ययं निषेध इत्यर्थः। यथा-पन्थानं गच्छतीति। पन्थानं प्राप्नोतीत्यर्थः। अत्र पथः प्राप्त्याश्रयत्वेन गन्त्राधिष्ठित्वान्निषेधः। अस्य वार्तिकस्य प्रयोजनमाह-यदा त्विति। उत्पथादिति। अमार्गादित्यर्थः। ल्यब्लोपे पञ्चमी। उज्जयिनीं प्राप्तुं प्रस्थितो

मोहात्तन्मार्गात्प्रच्युतो मार्गान्तरं प्रविष्टः। तं परित्यज्य पुनरुज्जयिनीमार्ग आक्रमितुमिष्यते, तदाऽनध्वनीति निषेधाऽभावाच्चतुर्थ्यपि भवत्येवेत्यर्थः। तादृशं लक्ष्यं दर्शयति--उत्पथेन पथे गच्छतीति। "उत्पथेने"त्यनन्तरं "गन्तुमशक्त" इति शेषः। उत्पथेन उज्जयिनीं प्राप्तुमशक्त उत्पथं परित्यज्य उज्जयिनीमार्गं प्रवेष्टुं तदीयं मार्गमनुसरतीत्यर्थः। अत्र उज्जयिनीमार्गस्य गन्त्राधिष्ठितत्वाऽभावादनध्वनीति निषेधो न भवति, अतश्चतुर्थी भवति, पक्षे द्वितीया चेति भावः। इति चतुर्थी।

तत्त्व-बोधिनी
गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ५१८, २।३।१२

गत्यर्थकर्मणि। गत्यर्थेति किम्()। ओदनं पचति। कर्मणीति किम्()। अ()ओन व्रजति। "अनध्वनि" इत्यत्राध्वनीति न स्वरूपग्रहणम्। तथा हि सति "अनध्वनः" इत्येवाऽवक्ष्यत्। किं त्वर्थग्रहणं, सप्तमीनिर्देशात्, कर्मणीत्यनेन सामानाधिकरण्यात्। अर्थस्यैव हि कर्मत्वं संभवति न शब्दस्वरूपस्य, तेनाऽध्ववचिनां सर्वेषामेव निषेधः। तथा च वार्तिकम्---अध्वन्यर्थग्रहणमिति। गन्त्राधिष्ठित एवेति। "आस्थितप्रतिषेधो वक्तव्यः" इति वार्तिकादिति भावः। आस्थितः--संप्राप्तः। पन्थानां गच्छतीत्यत्र हि पन्थाः प्राप्त एवेति न पक्षे चतुर्थी। यदा त्वप्राप्तत्वेन विवक्षा तदा पक्षे भवत्येव सा। इह अनध्वनीत्यपनीय "असंप्राप्ते" इति पूर्यते। तेन "स्त्रियं गच्छती"त्यत्र स्त्री प्राप्तैवेति न चतुर्थी। अत्र व्याचक्षते--"अजां नयति ग्राम"मित्यत्र तु न भवत्येव चतुर्थी, अगत्यर्थत्वात्। आक्षेपादिना ह्यत्र प्रतीयते गतिर्न त्वसौ नयतेरर्थः, प्रापणवाचित्वादिति। "गत्यर्थकर्मणि [चतुर्थी] वा" इति वक्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीया यथा स्यादित्येतदर्थं, तेन "ग्रामं गन्ते" त्यत्र कृद्योगलक्षणा षष्ठी न भवतीति वृत्तिकृतोक्तम्। इति चतुर्थी।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चतुर्थी १।१ १८ सम्प्रदाने ७।१ अनभिहिते ७।१ १

काशिका-वृत्तिः
चतुर्थी सम्प्रदाने २।३।१३

सम्प्रदाने कारके चतुर्थी विभक्तिर् भवति। उपध्यायाय गां ददाति। मानवकाय भिक्षां ददाति। देवदत्ताय रोचते। पुष्पेभ्यः स्पृहयति इत्यादि। चतुर्थीविधाने तादर्थ्य उपसङ्ख्यानम्। यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाय स्थाली। अवहननायोलूखलम्। क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या। मूत्राय कल्पते यवागूः। उच्चाराय कल्पते यवागूः। क्लृपि इत्यर्थनिर्देशः। मूत्राय सम्पद्यते यवागूः। मूत्राय जायते यवगूः। उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या। वाताय कपिला विद्युदातपायातिलोहिनी। पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्। हितयोगे चतुर्थी वक्तव्या। गोभ्यो हितम्। अरोचकिने हितम्।
लघु-सिद्धान्त-कौमुदी
चतुर्थी सम्प्रदाने ९००, २।३।१३

विप्राय गां ददाति॥
न्यासः

चतुर्थी सम्प्रदाने। , २।३।१३

"देवदत्ताय रोचते" इति। "रुच्यर्थानां प्रीयमाणः" १।४।३३ इति संप्रदानसंज्ञा। "पुष्पेभ्यः स्पृहृति" इति। अत्र "स्पृहेरीप्सितः" १।४।३६ इत्यनेन। "तादर्थ्ये उपसंख्यानम्" इति। तच्छब्देन चतुर्थ्यन्तस्यार्थो निर्दिश्यते। तस्मा इदं तदर्थम्, तस्य भावस्तादर्थ्यम्। तत्र चतुर्थ्या उपसंख्यानम् = प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्-- "चतुर्थी" इति योगविभागः क्रियते, तेन तादर्थ्ये चतुर्थी भवतीति। अथवा "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः"२।१।३५ इति तादर्थ्ये चतुर्थ्याः समासवचनं ज्ञापकं भवति-- तादर्थ्येऽपि चतुर्थीति। "क्लृपि सम्पद्यमाने" इत्यादि। क्लृप्यर्थानां धानूनां प्रयोगे सम्पद्यमाने कर्त्तरि संपादनक्रियाविशिष्टे चतुर्थी वक्तव्या, व्याख्येयेत्यर्थः। व्याख्यानं तु तमेव योगविभागमाश्रित्य। तथा "उत्पातेन ज्ञाप्यमाने" इत्यादावपि। "मूत्राय कल्पते यवागूः" इति। यवागूर्मूत्रविकाररूपेण भवतीत्यर्थः। विकाररूपापत्तौ चतुर्ती विज्ञेया। तेनेह न भवति-- देवदत्तस्य शालयः संपद्यन्त इति। यदा चाभेदविवक्षा तदा परत्वात् प्रथमैव भवति, न चतुर्थी-- मूत्रमिदं संपद्यते यवागूरिति, उच्चारोऽयं सम्पद्यते यवौदन इति। यदा तु "जनिकर्त्तृः प्रकृतिः" १।४।३० इति प्रकृतेरपादानात्वं विवक्ष्यते तदा यवाग्वा इति पञ्चम्येव स्यात्-- मूत्रं सम्पद्यते यवाग्वा इति। "वाताय कपिला विद्युत्" इति। अत्र कपिलाविद्युदुत्पातो वातस्य लक्षणम्। तेन ज्ञाप्यमाने वाते चतुर्थी भवति। "अरोचकिने" इति। "अत इनिठनौ" ५।२।११४ इतीनिः॥

बाल-मनोरमा

चतुर्थी संप्रदाने ५६२, २।३।१३

चतुर्थी सम्प्रदाने। विप्रायेति। विप्रमुद्दिश्य गां ददातीत्यर्थः। अनभिहित इत्येवेति। अनुवर्तत एवेत्यर्थः। दानीयो विप्र इति। दानोद्देश्य इत्यर्थः। "कृत्यल्युटो बहुल"मिति बहुलग्रहणात्संप्रदानेऽनीयर्। तेन कृता संप्रदानस्य विप्रस्याऽभिहितत्वान्न चतुर्थीति भावः। ननु दानक्रियाकर्मोद्देश्यस्यैव संप्रदानत्वे "पत्ये शेते" इत्यत्र अकर्मकशयनक्रियोद्देश्यस्य पत्युः कथं संप्रदानत्वमित्याशङ्कायां "क्रियाग्रहणमपि कर्तव्य"मिति वार्तिकं प्रवृत्तम्।

तदेतदर्थतः सङ्गृह्णाति-क्रियया यमिति। क्रियोद्देश्यमपि संप्रदानमिति यावत्। पत्ये शेते इति। पति मुद्दिश्य शेते इत्यर्थः॥ नन्वेवमपि ओदनं पचतीत्यादावपि संप्रदानत्वप्रसङ्गः। न च कर्मसंज्ञाविधिवैयर्थ्यं शङ्क्यम्, अत एव तत्र कर्मत्वसंप्रदानत्वयोर्विकल्पोपपत्तेरिति चेन्न, "पत्ये शेते" इत्यकर्मकस्थले सावकाशायाः संप्रदानसंज्ञायाः सकर्मकस्थले कर्मसंज्ञया बाओधात्। तथाच अकर्मकक्रियोद्देश्यमपि संप्रदानमिति फलतीति भावः।

कर्मणः करण संज्ञेत्यादि। वार्तिकमिदम्। "एकस्मिन्वाक्ये कर्मणः संप्रदानस्य च समवाये सती"ति शेषः। यजधातुविषयमेवेदमित्यभिप्रेत्योदाहरति--पशुना रुद्रं यजत इति। अत्र यजधातुर्दानार्थक इत्यभिप्रेत्याह--ददातीत्यर्थ इति। इदं वार्तिकं छान्दसमेवेति कैयटः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्रियार्थोपपदस्य ६।१ च ० कर्मणि ७।१ स्थानिनः ६।१ चतुर्थी १।१ १३ अनभिहिते ७।१ १

काशिका-वृत्तिः

क्रियार्थोपपदस्य च कर्मणि स्थानिनः २।३।१४

क्रियार्था क्रिया उपपदं यस्य सो ऽयं क्रियार्थोपपाः। तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१० इत्येष विषयो लक्ष्यते। क्रियार्थोपपदस्य च स्थानिनो ऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर् भवति। द्वितीयापवादो योगः। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति क्रियार्थोपपदस्य इति किम्? प्रविश पिण्डीम्। प्रविश तर्पनम्। भक्षिरत्र स्थानी, न तु क्रियार्थोपपदः। कर्मणि इति किम्? एधेभ्यो व्रजति शकटेन। स्थानिनः इति किम्? एधानाहर्तुं व्रजति।

न्यासः

क्रियार्थोपपदस्य च कर्मणि स्थानिनः। , २।३।१४

"क्रियार्था क्रियोपपदं यस्य" इत्यादि। कथं पुनरयमर्थो लभ्यते, यावता नेह सूत्रे द्वितीयं क्रियाग्रहणमुपात्तमस्तीत्याह-- "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ३।३।१० इत्यस्मिन् विषये क्रियार्थोपपदं सम्भवतीति यदत्र क्रियार्थोपपदं तत् क्रियैवेति गम्यते। "स्थानिनः"इति। शब्दास्तिष्ठन्त्यस्मिन्निति स्थानम्। तदस्यास्तीति स्थानि। एतदुक्तं भवति-- यस्यार्थः प्रतीयते, न तु प्रयोगोऽस्ति, स स्थानीत्युच्यत इति। "एधेभ्यो व्रजति"इति। आङ्पूर्वो हरतिरत्र स्थानी, तत्कर्म त्वेधाः। एधानाहर्तु व्रजतीत्यर्थः। ननु चात्र तादर्थ्यमस्ति, अतस्तादर्थ्यं इत्येवं सिद्धा चतुर्थी, तत्किमर्थमिदं वननम्? नियमार्थम्- स्थानिनोऽप्रयुज्यमानस्यैव कर्मणि यथा स्यात्, प्रयुज्यमानस् मा भूत्। "भक्षिरत्र स्थानी" इति। प्रविश गृहं पिण्डीं भक्षयेति गम्यमानत्वात्। प्रविश तर्पणमित्यत्रापि पिबतिः स्थानी। "न तु क्रियार्थोपपदः" इति। तुमुन्नादिविशिष्टप्रत्ययान्तो हि क्रियार्थोपपदो भवति। अयन्तु लोडन्तः। न च लोट् क्रियार्थोपपदे विधीयत इति न भवति भक्षिरत्र क्रियार्थोपपदः॥

बाल-मनोरमा

क्रियार्थोपपदस्य च कर्मणि स्थानिनः ५७३, २।३।१४

क्रियार्थ। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था। "क्रिये"ति विशेष्यमध्याहार्यम्। क्रियाफलकक्रियावाचकमिति यावत्। क्रियार्था क्रिया उपपदं यस्येति विग्रहः। तुमुनो विशेषणमेतत्। उपोच्चारितं पदम्-उपपदम्। "स्थानिन" इत्यपि तद्विशेषणम्। स्थानं प्रसक्तिरस्यास्तीति स्थानी, तस्येति विग्रहः। अप्रयुज्यमानस्येति यावत्। तादृशस्य तुमुन्नन्तस्य कर्मणि चतुर्थीति फलितम्। "तुमुन्ण्वुलौ क्रियायां क्रियार्थाया"मिति तुमुन्विधिमहिम्ना क्रियाफलकमुपपदं क्रियावाच्येव लभ्यते। तदाह--क्रियार्था क्रियेति। "स्थानिन" इत्यस्य व्याख्यानम्-अप्रयुज्यमानस्येति। "फलेभ्यो याती"त्यत्र कस्य तुमुन्नन्तस्य प्रसक्तिरित्यत आह--फलान्याहर्तुमिति। इह फलाहरणक्रियार्था यानक्रिया, तद्वाचने उपपदे आहर्तुमित्यध्याहारलभ्यतुमुन्नन्तार्थाहरणक्रियां प्रति फलानां कर्मत्वाच्चतुर्थी द्वितीयापवादः। नच तादर्थ्यचतुर्थ्या गतार्थता शङ्क्या, नहि यानक्रिया फलार्था, किन्तु फलकर्मकाहरणक्रियार्थैव, अतो न फलेभ्यस्तादर्थ्यचतुर्थीप्रसक्तिः। एवं च फलकर्मकाहरणक्रियार्था यानक्रियेति बोधः। उदाहरणान्तरमाह--नमस्कुर्म इति। तुमुन्नन्तार्थाध्याहारं दर्शयति--नृसिंहमनुकूलयितुमिति। नचात्र "नमःस्वस्ती"त्येव चतुर्थी सिद्धेति वाच्यम्, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति द्वितीयापत्तेः। एतत्सूचनार्थमेवेदमुदाहरणान्तरं दर्शितम्।

तत्त्व-बोधिनी

क्रियार्थोपपदस्य च कर्मणि स्थानिनः ५१५, २।३।१४

क्रियार्था क्रियते। स्थानिन इत्यस्यैवार्थकथनम्--अप्रयुज्यमानस्येति। तुमुन इति। ण्वुलोऽप्युपलक्षणम्, फलभ्यो यातीत्यस्य फलान्याहारक इति विवरणे बाधकाऽभावात्। कर्मणीति। तथा च द्वितीयापवादेऽयमिति भावः। यत्तु प्रसादकृता व्याख्यातम्प्रयुज्यमानस्यैव कर्मणि यथा स्यात्, प्रयुज्यमानस्य कर्मणि मा भूदिति नियमार्थं सूत्र"मिति, तदसत्, अप्राप्तस्य नियमाऽयोगात्। न चेह "तादर्थ्य" इति प्राप्तिः शङ्क्या, यानक्रियायाः फलार्थत्वाऽभावात्। आहरणार्था

हि यानक्रिया। आहरणं तु फलकर्मकमिन्त्यन्यदेतत्। क्रियार्थोपपदस्य किम्()। प्रविश पिण्डिम्। गृहप्रवेशनं यद्यपि भक्षणार्थं तथापि भकिं()ष प्रति कृत्रिमोपपदत्वं नास्ति। न च तुमुनः कर्मणीत्।युक्तत्वाद्भक्षिकर्मणि चतुर्थ्याः प्रसक्तिरेव नास्तीति प्रत्युदाहरणमिदं न सङ्गच्छत इति वाच्यम्, सति तु "क्रियार्थोपपदस्य" इति पदे "तुमुन्ण्वुलौ क्रियायाम्" इत्येतद्विषयकमेवेदं सूत्रमिति "तुमुनः" इति लभ्यते नान्यथेति प्रत्युदाहरणस्याऽसङ्गतत्वाऽभावात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तुमर्थात् ५।१ च ० भाववचनात् ५।१ चतुर्थी १।१ १३ अनभिहिते ७।१ १

काशिका-वृत्तिः

तुमर्थाच् च भाववचनात् २।३।१५

तुमुना समानार्थस् तुमर्थः। तुमर्थभाववचनप्रत्ययान्तात् प्रातिपदिकाच् चतुर्थी विभक्तिर् भवति। भाववचनाश्च ३।३।११ इति वक्ष्यति, तस्य इदं ग्रहनम्। पाकाय व्रजति। त्यागाय व्रजति। भूतये व्रजति। संपत्तये व्रजति। तुमर्थातिति किम्? पाकः। त्यागः। रागः। भाववचनातिति किम्? कारको व्रजति।

न्यासः

तुमर्थाच्च भाववचनात्। , २।३।१५

"तुमुना समानार्थः" इति। वृत्तौ गम्यमानत्वात् समानशब्दो न प्रयुक्तः। "तुमर्थभाववचनप्रत्ययान्तात्" इति। तुमर्थो भाववचनप्रत्ययोऽन्तो यस्य स तथोक्तः। "भाववचनाश्चेति वक्ष्यति, तस्येदं ग्रहणम्" इति। स एव हि तुमर्थो भाववचनः सम्भवति, नान्यः। "पाकाय व्रजति" इति। यद्यप्यत्र तादर्थ्यं गम्यते तथापि चतुर्थी न भवति; तस्मिन्नेव तादर्थ्यं विहितेन भावप्रत्ययेन तस्योक्तत्वात्,यथा-- पाचको व्रजतीत्यत्र न भवति। तेन चतुर्थीविधानार्थमिदमारब्धम्। अथ वा-- भाववचनादेव यथा स्यात्, इह मा भूत्-- पाचको व्रजतीति नियमार्थमेतत्। "पाकः, त्यागः, रागः" इति भावे घञ्। ननु च क्रियार्थोपपदग्रहणमनुवर्तिष्यते, तदर्थाद्विभक्तेर्विपरिणामं कृत्वैवमभिसम्बन्धः करिष्यते-- क्रियार्थोपपदाद्भाववचनादिति। यस्तु क्रियार्थोपपदो भाववचनः स तुमर्थ एवेति किं तुमर्थग्रहणेन? नैतदस्ति; न हि क्रियार्थोपपदग्रहणं भाववचनस्य विशेषणं सम्भवति। किं तर्हि? धातोरेव। तस्मात् तुमर्थग्रहणं कत्र्तव्यमेव। "कारको व्रजति"इति-- "तुमुन्ण्वुलौ" ३।३।१० इति ण्वुल्। भवत्ययं तुमर्थो न तु भाववचनः, किं तर्हि? कर्तृवचनः, तेन तदन्तान्न भवति॥

बाल-मनोरमा

तुमर्थाच्च भाववचनात् ५७४, २।३।१५

तुमर्थाच्च। "तुमुन्ण्वुलौ क्रियायां क्रियार्थाया"मिति सूत्रम्। क्रियार्थानां क्रियायामुपपदभूतायां भविष्यति काले तुमुन्ण्वुलौ स्तः। भोक्तुं व्रजति, भोजको व्रजति। भविष्यद्भुजिक्रियार्थो व्रजतिरत्रोपपदम्। अस्य तुमुनोऽर्थ इवार्थो यस्य तस्मादिति विग्रहः। भावः=क्रिया। उच्यते अनेनेति वचनः, भावस्य वचनो भाववचनः, तस्मादिति विग्रहः। क्रियावाचिन इति यावत्। "प्रत्यया"दिति शेषः। तत्र "अव्ययकृतो भावे" इति तुमुनो भाव एव विहितत्वेन तुमर्थकस्य प्रत्ययस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहणार्थमित्याह--भाववचनाश्चेति। "भावे"इत्यधिकृत्य ये घञादिप्रत्यया विहितास्ते क्रियार्थक्रियायामुपपदभूतायां भविष्यति स्युरिति तदर्थः। "यागाय याती"त्याद्युदाहरणम्।

#एवं च क्रियार्थक्रियोपपदत्वलाभार्थं तुमर्थादिति विशेषणम्। अत्र तादर्थ्यस्य तुमुनेव घञा द्योतितत्वात् "उक्तार्थानामप्रयोगः" इति न्यायेन तादर्थ्यचतुर्थ्या अप्राप्तौ प्रथमायाः प्राप्ताविदं वचनम्। तुमर्थादिति किम्?। पाकः त्याद इत्यादौ घञो भावे इत्यधिकारस्थत्वेऽपि न चतुर्थी। क्रियार्थक्रियोपपदत्वाऽभावेन तुमर्थकत्वाऽभावात्। भ#आववचनादिति किम्?। पाचको व्रजति। पक्तुं व्रजतीत्यर्थः। "तुमुन्ण्वुलौ" इति ण्वुल्। तस्य तुमर्थकत्वेऽपि "भावे" इत्यधिकारे विध्यभावान्न चतुर्थी। तादर्थ्यस्य ण्वुलैवोक्तत्वान्न तादर्थ्यचतुर्थी, किंतु प्रथमैव।

तत्त्व-बोधिनी
तुमर्थाञ्च भाववचनात् ५१६, २।३।१५

तुमर्थात्। "अव्ययकृतो भावे" इति तुमुनो भावे एव विधानात्तदर्थस्य भाववचनत्वे सिद्धे पुनर्भाववचनग्रहणं सूत्रविशेषपरिग्रहार्थमित्याह---भाववचनाश्चेतीति। न च "तादर्थ्ये" इत्येव गतार्थता शङ्क्या। क्रियार्थक्रियोपपदकेन "भाववचनादेव यथा स्यात्, पाचको व्रजतीति ण्वुलन्तान्मा भूदिति नियमार्थमिदं सूत्रमिति। तन्न, ण्वुलः कर्तृवाचकतया तुमर्थकत्वाऽभावेन नियमार्थत्वाऽयोगात्। ण्वुलन्तो कर्तुः प्राधान्यात्, कर्तारं प्रति च तादर्थ्याऽभावात्, गुणीभूत[तया]पातं प्रति तादर्थ्यसंभवेऽपि पातवाचकधातोश्चतुर्थ्ययोगाच्च। तुमर्थात्किम्()। पचनं वर्तते। भाववचनात्किम्()। पाकः। त्यागः। अत्र वदन्ति--"क्रियार्थोपपदस्य---" इत्यनुवर्त्त्य पञ्चम्या विपरिणमय्य व्याख्याने बाधकाऽभावाद्भाववचनादिति त्युक्तं शक्यम्। न चैवं "तुमर्थात्---" इत्येव वक्तव्यमिति वाच्यम्। वर्णलाघवसम्भवे गौरवाश्रयणाऽयोगादिति।

उपपदविभक्तेः कारकविभक्तिर्बलियसी॥ वलीयसीति। हरये नम इत्यत्र तूद्देशनक्रियाद्वारा हरिमनस्कारयोः सम्बन्धः--हर्युद्देश्यको नमस्कार इति। एवं चोद्देशनक्रियावगतौ विलम्ब इति कारकविभक्तेर्बलीयस्त्वमित्येके। अन्ये तूपपदविङक्त्या संबन्धसामान्यमवगम्यते, तद्विशेषावगमस्त्वर्थप्रकरणादिपर्यालोचनाऽधीनः। कारकविभक्त्या तु कर्मत्वादिसंबन्धविशेषे झटित्येवाऽवगम्यत इति तस्या बलीयस्त्वमित्याहुः। षष्ठ()पीति। ननु प्रभ्वादियोगे षष्ठ()एवास्तु, अलंशब्दस्तु पर्याप्तीतरार्थक एव गृह्रतामित्याशङ्क्याह---तस्मै प्रभवतीति। न त्वां तृणमित्यादि। ननु तृणादिवद्युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यम्। मैवम्, "अनादरे" इत्यस्य कर्मविशेषणत्वेन अनादरद्योतकं यत्कर्म तत्र चतुर्थीति व्याख्यानात्। तृणं ह्नत्राऽनादरद्योकतं न तु युष्मदर्थः। स्यादेतत्---त्वां तृणं मन्ये तृणाय वेत्युदाह्रियतां, किमनेन नञः प्रयोगेण()। अत्राहुः--"प्रकृष्य कुत्सित ग्रहणं कर्तव्यम्" इति वार्तिकमस्ति, तेन यद्वाचिनश्चतुर्थी विधीयते ततो निकृष्टत्वेन यदि कुत्सा प्रतिपाद्यते, तदा चतुर्थी भवति न तु साम्यविवक्षायाम्। तादृशी च कुत्साप्रतीतिर्नञः प्रयोग#ए झटित्येव भवतीति "न त्वा" मित्युक्तमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ५।१ च ० चतुर्थी १।१ १३

काशिका-वृत्तिः
नमःस्वस्तिस्वाहास्वधा ऽलंवषड्योगाच् च २।३।१६

नमः स्वस्ति स्वाहा स्वधा अलम् वषटित्येतैर् योगे चतुर्थी विभक्तिर् भ्वति। नमो देवेभ्यः। स्वस्ति प्रजाभ्यः। स्वाहा

अग्नये। स्वधा पितृभ्यः। अलं मल्लो मल्लाय। अलम् इति पर्याप्त्यर्थग्रहणम्। प्रभुर्मल्लो मल्लाय। शक्तो मल्लो मल्लाय्। वशडग्नये। वषडिन्द्राय। चकारः पुनरस्य एव समुचयार्थः। तेन आशीर्विवक्षायाम् अपि षष्ठीं वाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्। स्वस्ति ब्राह्मणेभ्यः।

लघु-सिद्धान्त-कौमुदी

नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च ९०१, २।३।१६

एभिर्योगे चतुर्थी। हरये नमः। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा। अलमिति पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि॥ इति चतुर्थी।

न्यासः

नमःस्वस्तिस्वाहास्वधालंवषड�आगाच्च। , २।३।१६

"अलमिति पर्याप्त्यर्थस्य ग्रहणम्" इति। "तस्मै प्रभवति सन्तापादिभ्यः" ५।१।१०० इत्यलंशब्दसमानार्थेन प्रभवतिशब्देन योगे चतुर्थीनिर्देशाल्लिङ्गात्। ननु चास्माल्लिङ्गादर्थस्येदं ग्रहणम्, न तु शब्दस्येत्येषोऽर्थः प्रतीयते; न तु पर्याप्त्यर्थस्येत्येषोऽर्थः। तथा च भूषणप्रतिषेदयोरपि ग्रहणं स्यात्। एवञ्च कन्यामलंकुरुते, अलं बाले रोदनेनेत्यादावपि चतुर्थी स्यात्; नैष दोषः; सामथ्र्यात् पर्याप्त्यर्थस्यैव ग्रहणं भविष्यति, कथम्? कन्यामलङ्कुरुते इत्यत्र "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" (चां।प।६९) इति "कर्मणि द्वितीया" २।३।२ इति द्वितीययैव भवितव्यम्। "अलं बाले रोदनेन" इत्यत्राप्यत एव हेतोः करणे तृतीययैव। अत्र हि रोदनं करणभावमापन्नमेव प्रतिषेधेन सम्बध्यत इति सामथ्र्यात् पर्याप्त्यर्थस्य ग्रहणं सम्पद्यते। "चकारः पुनरस्यैव समुच्चयार्थः" इति। यदेतन्नमःप्रभृतियोगे चतुर्थीविधानं तत्समुच्चयार्थश्चकारः। तेन पुनर्विध्नात् "चतुर्थी चाशिष्यायुष्य" २।३।७३ इत्यादिनाशीर्विवक्षायां पक्षे या षष्ठी विधीयते तामपि बाधित्वा चतुर्थ्येव भवति। यद्यवम्, कारकविभक्तिमपि बाधित्वा "कन्यामलङ्कुरुते" इत्यादौ चतुर्थ्येव स्यात्, ततश्च यदुक्तम्- सामथ्र्यात् पर्याप्त्यर्थस्यैव ग्रहणं भविष्यतीति, तन्नोपपद्यते? नैष दोषः; कारकविभक्तेर्बलीयस्त्वात्, पुनर्विधानस्य चान्यत्र चरितार्थत्वात्। अथ वा-- वक्ष्यमाणा विभाषा सिंहावलोकितन्यायेनेहाप्युपतिष्ठते। तेन "कन्यामलङ्कुरुते इत्यादौ चतुर्ती न भवति॥

बाल-मनोरमा

नमःस्वस्तिस्वाहास्वधाऽलंवषड�ओगाच्च ५७५, २।३।१६

नमःस्वस्ति। युज्यत इति योगः। कर्मणि घञ्। "नमस्" इत्यादिभिर्युक्तादित्यर्थः। फलितमाह--एभिर्योगे इति। न च तादथ्र्यचतुथ्र्या गतार्थत्वं शङ्क्यं, तादथ्र्यस्य शेषत्वविवक्षायां षष्ठीनिवारणार्थत्वात्। तादथ्र्यं हि उपकार्योपकारकभावः, तस्य यदा सम्बन्धत्वेन भानं तदा षष्ठी, यता "गुरोरिदं गुर्वर्थ"मिति भाष्ये स्पष्टम्। एवंच नमःस्वस्त्यादियोगे तादथ्र्यस्य शेषत्वविक्षायामपि चतुर्थ्येवेत्येतदर्थमिदं सूत्रम्।

ननु नमस्करोति देवानित्यत्रापि चतुर्थी स्यादित्यत आह--उपपदविभक्तेरिति। पदान्तरयोगनिमित्तिका विभक्तिः- उपपदविभक्ति, तदपेक्षया कारकविभक्तिर्बलीयसीत्यर्थः। "अन्तरान्तरेणे"ति सूत्रे भाष्ये पठितमिदं वचनम्। तच्च न्यायसिद्धम्। क्रियाकारकयोर्हि सम्बन्धः-अन्तरङ्गः। उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति कैयटः। अन्ये तूपपदविभक्त्या सम्बन्धसामान्यमवगम्यते, विशेषावगमस्तु प्रकरणादिपर्यालोचनया लभ्यः। कारकविभक्त्या तु कर्मत्वादिसम्बन्धविशेषो झटित्येवावगम्यत इति सा बलीयसीत्याहुः। नमस्करोति देवानिति। कारशिरःसंयोगादिना तोषयतीत्यर्थः। करशिरःसंयोगादिमात्रार्थत्वेऽकर्मकत्वापातात्। प्रजाभ्यः स्वस्तीति। प्रजासम्बन्धि कुशलमित्यर्थः। अग्नये स्वाहेति।

अग्न्युद्देश्यकं द्रव्यदानमित्यर्थः। पितृभ्यः स्वधेति। पितुद्देश्यकं द्रव्यदानमित्यर्थः। स्वं रूपं शब्दस्य" इति अलशब्दस्यैव ग्रहणे "कुमारीणामलङ्कार" इत्यत्रातिव्याप्तिः। किंच दैत्येभ्यो हरिरलमित्यत्रैव स्यात्, "दैत्येभ्यो हरिः प्रभु"रित्यादौ न स्यादित्यत आह--अलमितीति। वार्तिकमेतत्। अलमित्यनेन पर्याप्त्यर्थकशब्दानां ग्रहणमित्यर्थः। तेनेति। पर्याप्त्यर्थग्रहणेनेत्यर्थः। इत्यादीति। आदिना "कुमारीणामलङ्कार" इत्यत्रातिव्याप्तिनिरासस‌ङ्ग्रहः। ननु "प्रभुर्बुभूषुर्भुवनत्रयस्ये"त्यादौ कथं षष्ठीत्यत आह--प्रभ्वादियोगे षष्ठीति। कुत इत्यत आह--स एषां ग्रामणारात निर्देशादिति। नन्वेवं सति "दैत्येभ्यः प्रभु"रिति चतुर्थी न स्यात्। अलंशब्दस्तु पर्याप्तीतरार्थक एव भविष्यतीत्यत आह--तस्मै प्रभवतीति। वषडिन्द्रायेति। इन्द्रोद्देश्यकं हविर्दानमित्यर्थः। ननु स्वस्ति गोभ्यो भूयादित्याशीर्वाक्ये चतुर्थ्येवेष्यते। तत्र "चतुर्थी"चाशिष्यायुष्ये"त्यादिना परत्वात्पक्षे षष्ठीप्रसङ्गः इत्यत आह--चकारः पुनर्विधानार्थ इति। तेनेति। पुनर्विधानसामर्थ्येनेत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ मन्यकर्मणि ७।१ अनादरे ७।१ विभाषा १।१ अप्राणिषु ७।३ चतुर्थी १।१ १३

काशिका-वृत्तिः
मन्यकर्मण्यनादरे विभाषा ऽप्राणिषु २।३।१७

मन्यतेः कर्मणि मन्यकर्मणि। मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर् भवति अनादरे गम्यमाने। अनादरस्तिरस्कारः। न त्वा तृणं मन्ये, न त्वा तृणाय मन्ये। न त्वा बुसं मन्ये, न त्वा बुसाय मन्ये। मन्यतिग्रहणं किम्? न त्वा तृणं चिन्तयामि। विकरणनिर्देशः किम् अर्थः? न त्वा तृणं मन्वे। अनादरे इति किम्? अश्मानं दृषदं मन्ये मन्ये कष्ठमुलूखलम्। अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति। अप्रानिषु इति किम्? न त्वा शृगालं मन्ये। यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम्। व्यवस्थितविभाषा च ज्ञेया। न त्वा नावं मन्ये यावदुत्तीर्णं न नाव्यम्। न त्वा ऽन्नं मन्ये यावन् न भुक्तं श्राद्धम्। प्राणिषु तूभयम्। न त्वा काकं मन्ये। न त्वा शृगालं मन्ये। इह चतुर्थी द्वितीया च भवतः न त्वा श्वानं मन्ये, न त्वा शुने मन्ये। युष्मदः कस्मान् न भवति चतुर्थी, एतदपि हि मन्यतेः कर्म? व्यवस्थितविभाषाविज्ञानादेव न भवति।
न्यासः
मन्यकर्मण्यनादरे विभाषाऽप्राणिषु। , २।३।१७

"अनादरस्तिरस्कारः" इति। अत्रैवानादरशब्दस्य रूढत्वात्। तिरस्कारः = परिभवः, अवज्ञानमित्यर्थः। " न त्वा तृणाय मन्ये" इति। तृणादपि निकृष्टतरं त्वामहं इत्यर्थः। " विकरणनिर्देशः किमर्थः" इति। "मनिकर्मणि" इति कस्मान्नोक्तम्? एव हि लघु सूत्रं भवतीति? "मन ज्ञाने" (धा।पा।११७६) इत्यस्य दैवादिकस्य ग्रहणं यथा स्यात्, "मनु बोधने" (धा।पा।१४७१) इत्यस्य तानादिकस्य ग्रहणं मा भूदित्येवमर्थो विकरणनिर्देश इति दर्शयितुमाह- "न त्वां तृणं मन्वे" इति। "अश्मानं दृषदं मन्ये" इत्यादौ यथाव्यवस्थितस्य वस्तुनः स्वरूपमाविष्क्रियत इत्यत्रानादरो न गम्यते। "येदतदप्राणिष्विति तदनावादिष्विति वक्तव्यम्" इति। अप्राणिग्रहणपनीयनावादिग्रहणं कर्त्तव्यमित्यर्थः। यथान्यासे हि न त्वा नावं मन्य इत्यत्र चतुर्थी स्यात्। न त्वा शुने मन्य इत्यत्र चतुर्थी न स्यादित्यभिप्रायः॥
बाल-मनोरमा

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ५७६, २।३।१७

मन्यकर्मणि। "अप्राणिष्वि"ति च्छेदः। "मन ज्ञाने" दिवादिः, श्यन्विकरणः, "मनु अवबोधने" तनादिरिविकरणः। तत्र मन्येति श्यना निर्देशाद्दैवादिकस्य ग्रहणमित्याह-मन्यतेरिति। कर्मणीति। अतो द्वितीयां बाधित्वा पक्षे चतुर्थीति सूचितम्। तिरस्कारे इति। "अनादारे" इत्यस्य व्याख्यानमेतत्। "अनादरः परिभवः परीभावस्तिरस्क्रिया" इत्यमरः। न त्वां तृणमिति। हे देवदत्त त्वां तृणत्वेनापि न मन्ये इत्यर्थः। नञुपादानादयमर्थो लभ्यते। तृणाद्पयधमत्वप्रतीतेस्तिरस्कारातिशयः फलितः। "तृणं त्वां मन्ये तृणाय वे"त्युक्तौ तु तृणसाम्यमेव प्रतीयेत। न तु ततोऽप्यपकृष्टत्वम्। एतदेवाभिप्रेत्य भाष्येऽपि नञुपात्तः। न च मन्यकर्मत्वाऽविशेषात्त्वमिति युष्मच्छब्दादपि चतुर्थी शङ्क्या, अनादरद्योतके कर्मणीत्यर्थस्य विवक्षितत्वात्। तृणमेव ह्त्रानादरद्योतकं, न तु युष्मदर्थः। श्यनेति। तानादिकमनुधातुकर्मणि द्वितीयैव, नतु पक्षे चतुर्थीति भावः। न त्वां तृणं मन्वे इति। मनुधातोरुविकरणस्य लडुत्तमपुरुषैकवचनम्। ननु "न त्वां नावमन्नं मन्ये" इत्यत्रापि चतुर्थीविकल्पः स्यादित्यतिव्याप्तिः, "न त्वां शुने मन्ये" इत्यादौ तु प्राणित्वाच्चतुर्थीविकल्पो न स्यादित्यव्याप्तिः , कर्मणः प्राणित्वादित्यत आह--अप्राणिष्वित्यपनीयेति। न त्वां नावं मन्ये इति। जीर्णां नावं प्रति वाक्यमेतत्। न त्वामन्नं मन्ये इत्यप्युदाहार्यम्। कुत्सितमन्नं प्रति वाक्यमेतत्। उभयत्राप्यप्राणित्वेऽपि न चतुर्थीविकल्पः, किंतु द्वितीयैवेति भावः। न त्वां शुने मन्ये इति। हे देवदत्त। त्वां ()आत्वेनापि न मन्ये इत्यर्थः। न त्वां काकं मन्ये, न त्वां शुकं मन्ये, न त्वां सृगालं मन्ये इत्यप्युदाहार्यम्। एषु प्राणित्वेऽपि न चतुर्थीविकल्प इति भावः।

तत्त्व-बोधिनी
मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ५१७, २।३।१७

श्यना निर्देशादिति। न च मन्य इति यका निर्देशः किं न स्यादिति वाच्यम्, अनभिहित इत्यधिकारात्। न हि यका योगे अनभिहितं कर्म संभवति। श्यन्नपि दैवादिकारधातूपलक्षणमात्रं, न तु स्वयं विवक्षितः। तेन "तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थत्" इति भट्टिप्रयोगः सङ्गच्छते।

नौकाकान्नशुकश्रृगालवर्ज्येष्विति वाच्यम्। नौकाकान्नेति। व्यवस्थितविभाषा विज्ञातव्येति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तृकरणयोः ७।२ तृतीया १।१ २३ अनभिहिते ७।१ १

काशिका-वृत्तिः
कर्तृकरणयोस् तृतीया २।३।१८

कर्तरि करणे च कारके तृतीया विभक्तिर् भवति। देवदत्तेन कृतम्। यज्ञदत्तेन भुक्तम्। करणे दात्रेण लुनाति। परशुना छिनत्ति। तृतीयाविधाने प्रकृत्यादीनाम् उपसङ्ख्यानम्। प्रकृत्या ऽभिरूपः। प्रकृत्या दर्शनीयः। प्रायेण याज्ञिकः। प्रायेण वैयाकरणः। गार्ग्यो ऽस्मि गोत्रेण। समेन धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् क्रीणाति। साहस्रेण अश्वान् क्रीणाति।

न्यासः

कर्तृकरणयोस्तृतीया। , २।३।१८

"तृतीयाविधाने {प्रकृतयादीनाम्िितवृत्तौ पाठः} प्रकृत्यादिभ्य उपसंख्यानम्" इति। किं पुनः कारणम्? न सिद्ध्यति, कर्तृकरणयोरभावात्। तयोस्त्वभावः प्रकृत्याऽभिरूप इत्यादौ क्रियाया अविद्यमानत्वादित्यभिप्रायः। प्रातिपदिकेनात्र सम्बन्दमात्रं प्रतीयते, न तु काचन क्रिया। न च तया विना कर्तृकरणे सम्भवतः; तयोः क्रियापेक्षत्वात्। ततश्च सम्बन्धलक्षणा षष्ठी स्यात्-- प्रकृतेरभिरूपः, प्रायस्य याज्ञिकः, गोत्रस्य गार्ग्य इति। "समेन धावति, विषमेण धावति" इति। यद्यप्यत्र क्रियाऽप्यस्ति, तथाऽपि नात्र समविषमशब्दौ करणत्वेन विवक्षितौ, किं तर्हि? कर्मत्वेन, ततश्च द्वितीया स्यात्। "द्विद्रोणेन धान्यं क्रीणाति" इत्यादावपि द्विद्रोणात्येषोऽर्थो विवक्षितः। "पञ्चकेन पशून् क्रीणाति" इति। पञ्च परिमाणमस्य पशुसंघस्य पञ्चकः सङ्घः। पञ्चकं सङ्घं कृत्वा पशून् क्रीणातीत्यर्थः। एवं "साहरुओणा()आआन् क्रीणाति"इति साहरुआं सङ्घं कृत्वा। सहरुआं सहरुआं कृत्वेत्यर्थः। उपसंख्यानशब्दस्य प्रतिपादनार्थः। तत्रेदं प्रतिपादनम्-- प्रतीयमानाऽपि क्रिया कारकाणां निमित्तं भवत्येव। इह च प्रकृत्याऽभिरूप इत्यत्रापि करोत्यर्थो भवत्यर्थो वा गम्यते। गार्ग्योऽस्मि गोत्रेणेत्यत्रापि ज्ञाने भवने वा गम्यमाने गोत्रस्य करणत्वं प्रतीयते। समेन धावतीत्यदौ समेन विषमेण वा पथा करणेनेति गम्यते। द्विद्रोणेनेत्यत्रापि तृतीया न कर्मत्वं बोधयति। किं तर्हि? करणत्वम्। अत्र हि द्विद्रोणाद्यर्थं हिरण्यादिकं मूल्यभूतं तादर्थ्याद्द्विद्रोणादिशब्देनोक्तम्। तस्यापि करणत्वमस्त्येवेति करण इत्येवं सर्वत्र तृतीया सिद्ध्यति॥

बाल-मनोरमा

कर्तृकरणयोस्तृतीया ५५३, २।३।१८

कर्तृकरणयोस्तृतीया। "अनभिहिते" इत्यदिकारादाह-अनभिहित इति। रामेणेति। रामकर्तृकबाणकरणकहिंसाक्रियाविषयो वालीत्यर्थः।

प्रकृत्यादिभ्य उपसंख्यानमिति। "तृतीयाया" इति शेषः। उपपदविभक्तिरियम्। यथायोगं सर्वविभक्त्यपवादः। प्रकृत्या चारुरिति। संबन्धस्तृतीयार्थः। प्रकृतिः=स्वभावः, तत्संबन्धिचारुत्ववानित्यर्थः। यदा तु स्वभावेनैवाऽयमभिरूपो न त्वलङ्कारादिनेति करणान्तरव्युदासाय प्रकृतेः करणत्वं विवक्ष्यते तदा "कर्तृकरणयो"रित्येव सिद्धमिति भाष्यम्। प्रायेण याज्ञिक इति। प्रायशब्दो बहुलवाची। बहुलाचारसंबन्धियाज्ञिकत्ववानित्यर्थः। संबन्धश्च ज्ञाप्यज्ञापकभावः। बहुलेन आचारेण हेतुना ज्ञाप्ययाज्ञिकत्ववानित्यर्थे तु इत्थंभूतलक्षणे" इत्येव सिद्धम्। बहुलेन आचारेम संपन्नयाज्ञिकत्ववानित्यर्थे तु करणत्वादेव सिद्धमिति भाष्यम्। गोत्रेण गार्ग्य इति। गोत्रमस्य गार्ग्य इत्यर्थः। अत्र प्रथमा प्राप्ता। गोत्रेण हेतुना ज्ञाप्यगार्ग्यत्ववानित्यर्थे तु इत्थभूतलक्षणे" इत्येव सिद्धमिति भाष्यम्। समेनैति विषमेणैतीति। क्रियाविशेषणमेतत्। समं विषमं च गमनं करोतीत्यर्थः। कर्मणि द्वितीया प्राप्ता। समेन विषमेण वा पथा एतीत्यर्थे तु करणत्वादेव सिद्धमिति भाष्यम्। द्विद्रोणेनेति। द्वयोद्र्रोणयोः समाहारो द्विद्रोणम्। पात्रादित्वान्न स्त्रीत्वम्। द्विद्रोणसंबन्धि धान्यमित्यर्थः। षष्ठी प्राप्ता। द्विद्रोणपरिमितधान्यमूल्यं हिरण्यं द्विद्रोणं, तेन क्रीणातीत्यर्थे तु करणत्वादेव सिद्धमिति भाष्यम्। सुखेनेति। सुखजनकं यानं करोतीत्यर्थः। क्रियाविशेषणम्। द्वितीया प्राप्ता। इत्यादीति। "नाम्नासुदीक्ष्णः"। नामसंबन्धिसुतीक्ष्णत्ववानित्यर्थः। नामज्ञाप्यसुतीक्ष्णत्ववानित्यर्थे तु "इत्थंभूतलक्षणे" इत्येव सिद्धम्। "धान्येन धनवा"नित्यत्र तु अभेदस्तृतीयार्थः। नामज्ञाप्यसुतीक्ष्णत्ववानित्यर्थे तु "इत्थंभूतलक्षमे" इत्येव सिद्धम्। "धान्येन धनवा"नित्यत्र तु अबेदस्तृतीयार्थः। धान्याऽभिन्नधनवानित्यर्थः। "बह्नित्वेन व()ह्न जानामी"त्यत्र तु प्रकारत्वं तृतीयार्थः। बह्नित्वप्रकारकबह्निज्ञानवानस्मीत्यर्थ इत्याद्यूह्यम्।

तत्त्व-बोधिनी

कर्तृकरणयोस्तृतीया ४९६, २।३।१८

रमेणेति। यद्यपि विभक्त्युपस्थितानां कारकाणां क्रियां प्रति विशेषणतैव, तथापि कृदुपस्थितानां विशेष्यतैव, "सत्त्वप्रधानानि नामानी"त्युक्तेः। धातूपस्थाप्ययोः फलव्यापारयोर्हन्यत इत्यादिकर्माख्यातसमभिव्याहारे विशेषणविशेष्यभावव्यत्यासाऽभावेऽपि "हत" इत्यादिकर्मकृत्समभिव्याहारे व्यत्यासोऽस्त्येव। तथा च रामनिष्ठो यो व्यापारो धनुराकर्षणादिस्तद्विषयीभूतो यो बाणव्यापारः शरीरभेदनादिस्तत्साध्यप्राणवियोगाश्रायो वालीति वाक्यार्थः। "वालिनं हन्ति" "वाली हन्यते"इत्यादौ तु वालिनिष्ठप्राणवियोगानुकूलो यः शरीरभेदनादिर्बाणव्यापारस्तद्विषयको रामनिष्ठधनुराकर्षणादिव्यापार इत्यर्थो बोध्यः। अत्रेदमवधेयं---"फलव्यापारयोर्धातुराश्रये तु तिङः स्मृतः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्"। इह "धातुः स्मृत"इत्यन्वयः। "वाचकेत्वेने"ति शेषः। "आश्रये तु तिङः"इत्यत्र विभक्तिविपरिणामेन "स्मृता"इति सम्बन्धते। वाचकत्वेनेति पूर्ववत्। तिङ इत्युपलक्षणं, द्वितीयातृतीयादीनामपि केषाञ्चिदाश्रयमात्रार्थकत्वात्। नन्वेवमाधारार्थकत्वे द्वितीयातृतीयासप्तमीनां साङ्कर्यं स्यात्। मैवम्। निरूपपकभेदेनादारभेदात्। फलनिरूपित आधारो द्वितीय#आर्थः। व्यापारनिरूपितस्तु तृतीयार्थः। स्वाश्रयद्वारा व्यापारनिरूपितः फलनिरूपितः फलनिरूपितश्च सप्तम्यर्थ इति ह्रभ्युहगम्यते। "फले प्रधान"मिति। एतच्च प्रायिकम्। कर्मकृत्समभिव्याहारे तु व्यत्यासोऽस्त्येवेत्युक्तत्वात्। "हरिं भजति देवदत्तः"इत्यादौ तु व्यापारस्य प्राधान्यमस्त्येव। प्रकृतिप्रत्ययार्थयोर्हर्याधारयोर्देवदत्ततिङ्वाच्याधारयोश्चाऽभेद इहं संसर्गः। तथा च हर्याधारिका या प्रीतिस्तदनुकूल एकदेवदत्ताधारको वर्तमानो यो व्यापार इति वाक्यार्थः। न चाऽऽधारतैव वाच्येति मन्तव्यं, तन्निष्ठधर्मस्याधारत्वस्य वाच्यतावच्छेदकत्वापत्त्याऽतिगौरवात्। "कर्मणि द्वितीये"त्यादिसूत्रस्वरसभङ्गापत्तेश्च। अतएव भाष्यकारोऽप्याह--"सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथास तिङा"मिति। अनभिहिते किम्? हरिः करोति। पाचकः। कर्तरि ण्वुल्। शाब्दिकः। "शब्ददर्दुरं करोति"इति ठक्। कृतं वि()आं येन कृतवि()आः, वि()आकर्मककृत्याश्रय इत्यर्थः। जीवन्त्येन जीवनः। करणे ल्युट्।

प्रकृत्यादिभ्य उपसङ्ख्यानम्। प्रकृत्यादिभ्य इति। आकृतिगणोऽयम्। तेन "नाम्ना सुतीक्ष्णश्चरितेन दान्तः"इत्यादि सिद्धम्। चारिरिति। अभिरूप इत्यर्थः। क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठीह प्राप्ता। एतच्च गम्यमानकरोतिक्रियाकरणत्वासिद्धं, करणान्तरव्युदासाय हि प्रकृतेरेव करणत्वं विवक्षितम्। स्वभावेनायमभिरूपः कृतो, न त्वलङ्कारादिनेत्यर्थात्। प्रायेण याज्ञिक इति। एतदपि गम्यमानज्ञानक्रियां प्रति करणत्वात्सिद्धिम्, आचारादिबाहुल्येन याज्ञिकोऽयमिति जनैर्ज्ञायत इत्यर्थात्। गौत्रेण गाग्र्य इति। गार्ग्यौऽस्य गोत्रमित्यर्थः। प्रथमाऽत्र प्राप्ता। गोत्रेणाहं गग्र्यं इतिल ज्ञाये इत्यर्थादिहापि तृतीया सिद्धा। समेनैतीत्यादि। सममेतीत्याद्यर्थे समविषमाभ्यां कर्मणि द्वितीया प्राप्ता। इहापि तृतीया सिद्धा, पथोऽपि गमने करणत्वाब्युपगमात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सहयुक्ते ७।१ अप्रधाने ७।१ तृतीया १।१ १८

काशिका-वृत्तिः

सहयुक्ते ऽप्रधाने २।३।१९

सहार्थेन युक्ते अप्रधाने तृतीया विभक्तिर् भवति। पुत्रेण सहागतः पिता। पुत्रेण सह गोमान्। पितुरत्र क्रियादिसम्बन्धः शब्देन उच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्। सहार्थेन च योगे तृतीयाविधानात् पर्यायप्रयोगे ऽपि भवति, पुत्रेण सार्धम् इति। विना ऽपि सहशब्देन भवति, वृद्धो यूना १।२।६५ इति निदर्शनात्। अप्रधाने इति किम्? शिष्येण सहोपाद्यायस्य गौः।

न्यासः

सहयुक्तेऽप्रधाने। , २।३।१९

क्रियागुणद्रव्यसम्बन्धे हि सति सहयोगो भवति। अतः "पुत्रेण सहागतः" इत्यादीनि क्रियादिसम्बन्धे यथाक्रमुदाहरणानि वृत्तिकृतोपन्यस्तानि। सर्वत्र च पुत्रस्यात्राप्रधान्यमिति ततस्तृतीया भवति। ननु चोभयोरपि पितापुत्रयोः क्रियादिसम्बन्धः प्रतीयते, तत्कुतः पुत्रस्याप्राधान्यमितरस्य प्रधानभाव इत्याह-- "पितुरत्र" इत्यादि। "यद्य्प्युभयगतः क्रियादिसम्बन्धः प्रतीयते, तथाऽप्युपात्तशब्दव्यापारापक्षया प्रधानाप्रधानव्यवस्थाः-- शब्देन यस्य क्रियादिसम्बन्धः प्रत्याय्यते तत् प्रधानमितरदप्रधानमिति। इह तु पितुरव क्रियादिसंबन्धः प्रत्याय्यते शब्देन, न तु पुत्रस्य। कुत एतत्? शब्दशक्तस्वाभाव्यात्। तथाविधा हि शब्दशक्तिर्यतः पितुरेवात्र क्रियादिसम्बन्धं श्नोति प्रतिपादयितुम्, न पुत्रस्येति; एवञ्चागत इत्यादवेकवचनमुपपद्यते; अन्यथा हि द्वित्वाद्द्विवचनं स्यात्, यथा-- पितितापुत्रावागताविति। "पुत्रस्य तु प्रतीयमानत्वादप्राधान्यम्" इति। अर्थात्स पुनरर्थः सहार्थयोगः। स च भेदाधिष्ठानत्वात् पुत्रस्य क्रियादिसम्बन्धमन्तरेण न सम्भवतीति सम्बन्धस्य नान्तरीयकत्वात् पुत्रस्यापि क्रियादिसम्बन्धं प्रत्याययति। "सहार्थेन योगे तृतीयाविधानात्" इति। कुतः पुनरेतदवगतं सहार्थेन योगे तृतीयाविधानमिति? युक्तग्रहणात्। तस्य चैतदेव प्रयोजनम्-- सहार्थेन योगे तृतीया यथा स्यात्, नान्यत्। "शिष्येण सहोपाध्यायस्य गौः" इति। अत्र द्रव्यसम्बन्धः षष्ठ()ऐवोपाध्यायस्योच्यत इत्यस्य प्राधान्यात्। तत्रासत्यप्रधानग्रहणे प्रधानेऽप्युपाध्याये स्यात्। ननु च परत्वात् षष्ठी भविष्यति? न भविष्यति; अशेषत्वात्। सति त्वप्रधानग्रहणे शेषोऽयं सम्पद्यत इति षष्ठी॥

बाल-मनोरमा

सहयुक्तेऽप्रधाने ५५६, २।३।१९

सहयुक्ते। "पृथग्विनानानाभिः" इतिवत् सहेनेत्येव सिद्धे युक्तग्रहणं सहार्थकशब्दानां साकमित्यादीनामपि ग्रहणार्थमित्याह--सहार्थेनेति। पुत्रेणेति। पितुरत्रागमनक्रियासंबन्धः शाब्दः, पुत्रस्य तु तत्साहित्यगम्य आर्थिक इति तस्याऽप्राधान्यम्। यद्यप्यागमनक्रियाकर्तृत्वादेव पुत्रात्तृतीया सिद्धा तथापि "पुत्रेण सह स्थूल" इत्याद्येवास्य मुख्योदाहरणमिति भाष्ये स्पष्टम्। अर्थग्रहणस्य प्रयोजनमाह--एवं साकमिति। ननु "पुत्रेणागतः पिते"त्यत्र सहादिशब्दाऽभावात्कथं तृतीयेत्यत आह--विनापीति। वृद्धो यूना तल्लक्षणश्चेदि"ति सूत्रे सहादिशब्दाऽभावेऽपि तदर्थावगमेऽपि तृतीयानिर्देशदर्शनादित्यर्थः।

तत्त्व-बोधिनी

सहयुक्तेऽप्रधाने ४९८, २।३।१९

सहयुक्ते। "सहेनाऽप्रधाने"इत्येव वाच्ये युक्तग्रहणार्थग्रहणमित्याह--सहार्थेनेति। सहार्थकशब्देनसह--साकं--सार्धमित्यादिनेत्यर्थः। पुत्रेणेति। पितुरेवागमनक्रियासम्बन्धः शाब्दः, पुत्रस्य त्वार्थ इत्येतावतौवाऽस्याऽप्राधान्यमुच्यते। अप्रधानग्रहणं त्युक्तं शक्यम्। न चैवं पितुरपि तृतीयापत्तिः, तत्र प्रातिपदिकार्थमात्रे अन्तरङ्गत्वात्प्रथमोपपत्तेः। न च यत्र प्रथमा न प्राप्नोति "पुत्रेण सह पितुरागमन"मित्यादौ तत्र प्रधानात्पितुरपि तृतीया

स्यादतस्तद्वारणायाऽप्रधानग्रहणमावश्यकमिति वाच्यम्। कारकव्भक्तेर्बलीयस्त्वात् "कर्तृकर्मणोः कृति"इति षष्ठ()आ एव तत्र प्रवृत्तेरिति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ येन ३।१ अङ्गविकारः १।१ तृतीया १।१ १८

काशिका-वृत्तिः

येन अङ्गविकारः २।३।२०

अङ्गशब्दो ऽत्र अङ्गसमुदाये शरीरे वर्तते, येन इति च तदवयवो हेतुत्वेन निर्दिश्यते। येन अङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते, ततस् तृतीया विभक्तिर् भवति। अक्ष्णा काणः। पादेन खञ्जः। पाणिना कुन्ठः। अवयवधर्मेण समुदयो व्यपदिश्यते। अङ्गविकारः इति किम्? अक्षि काणमस्य।

न्यासः

येनाङ्गविकारः। , २।३।२०

अयमङ्गशब्दोऽवयवे प्रसिद्धः। स यदि तत्रैव वत्र्तमान इह गृह्नते तदाऽत्रैव स्यात्-- अक्षि काणमस्येति; अत्र ह्रक्ष्णः शरीरावयवस्य विकारः काणेन गुणेन द्योत्यत इति। इह तु न स्यात्-- अक्ष्णा काण इति। न ह्रत्रावयवस्याक्ष्णो विकारो लक्ष्यते, किं तर्हि? अङ्गनः समुदायस्येत्यत आह-- "अङ्गशब्दोऽत्र"इत्यादि। अङ्गमस्यास्तीत्यङ्गः, अर्श आदित्वादच्प्रत्ययान्तोऽङ्गशब्द उपात्त इति दर्शयति; अङ्गिनोऽङ्गापेक्षत्वात्। यदपेक्षयाऽङ्गिनोऽङ्गित्वं तदेव येनेत्यनेन निर्दिश्यत इति दर्शयितुमाह-- "येन" इत्यादि। विकृतेनेति सामथ्र्याल्लब्धमर्थं दर्शयति। न ह्रविकृतेनाङ्गनिनोऽङ्गेन विकारो लक्ष्यते। "लक्ष्यते" इति। द्योत्यत इत्यर्थः। "अक्ष्णा काणः" इति। अत्राक्ष्णाऽवयवेन विकृतेनाङ्गिनो देवदत्तस्य विकारो लक्ष्यत इति तत्सतृतीया। विभक्तिर्भवति। कथं पुनरवयवेन विकृतेन समुदायस्तथा व्यपदिश्यत इत्याह-- "अवयवधर्मेण" इत्यादि। याथाऽढ()मिदं नगरमित्यवयवधर्मेणाढ()त्वेनात्र समुदायो व्यपदिश्यते, तथेहाप्यवयवेन विकृतन समुदायो व्यपदिश्यत इति। कथं पुनरत्राक्षिशब्दस्य प्रयोगः क्रियते, यावता विनाऽपि तेन काणत्वं गुणः समुदायस्य प्रत#ईयत एव? सत्यमेतत्; लौकिके शब्दप्रयोगे गुरुलाघनं प्रत्यनादरात्। यस्तु तदाद्रियते सोऽक्षिशब्दं न प्रयुङ्क्त एव। "अक्षि काणमस्य" इति। अत्रासत्यङ्गग्रहणे काणशब्दात् तृतीया स्यात्। लक्ष्यते हि काणत्वेन गुणेनाक्ष्णो विकारः समुदायस्यावयवस्य॥

बाल-मनोरमा

येनाङ्गविकारः ५५७, २।३।२०

येनाङ्गविकारः। अङ्गान्यस्य सन्तीत्यङ्गं=शरीरम्। अर्शाअद्यच्। तस्य विकार इति विग्रहः। येनेत्यनेन प्रकृत्यर्थभूतमङ्गं परामृश्यते। नह्रविकृतेन अङ्गेन अङ्गिनो विकारः संभवति। तदाह--येनाङ्गेनेत्यादिना। अक्ष्णा काण इति। काणशब्दः काणत्ववति वर्तते। संबन्धस्तृतीयार्थः। स च काणत्वेऽन्वेति। तदाह--अक्षिसंबन्धीति। संबन्धश्च विकारप्रयुक्तत्वरूपः। अक्षिविकारप्रयुक्तकाणत्ववानिति यावत्। यद्यपि एकमक्षि विकलं काणमित्युच्यते, तथाप्यवयवधर्मस्य शरीरे तदवच्छिन्नात्मनि व्यवहारो निरूढः। द्वौ विप्राविितिवत् अक्ष्णेति पदस्य प्रयोगः समर्थ्यः।

तत्त्व-बोधिनी

येनाङ्गविकारः ४९९, २।३।२०

येनाङ्गेति। येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्रते, संनिधानात्। स चाऽर्थाद्विकृत एव। न ह्यविकृकेनावयवेन शरीरस्य विकारः संभवति, तदेतदाह--येनाङ्गेन विकृतेनेति। अङ्गिन इति। सूत्रेऽङ्गशब्दोऽर्शाअद्यजन्त इति भावः।

तत्त्व-बोधिनी

येनाङ्गविकारः ५०२, २।३।२०

येनाङ्गेति। येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयव एव गृह्रते, संनिधानात्। स चाऽर्थद्विकृत एव। न ह्यविकृतेनावयवेन शरीरस्य विकारः संभवति, तदेतदाह--येनाङ्गेन विकृतेनेति। अङ्गिन इति। सूत्रेऽङ्गशब्दोऽर्शाअद्यजन्त इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इत्थंभूतलक्षणे ७।१ तृतीया १।१ १८

काशिका-वृत्तिः

इत्थम्भूतलक्षणे २।३।२१

कञ्चित् प्रकारं प्राप्तः इत्थम्भूतः। तस्य लक्षणम् इत्थम्भूतलक्षणम्। ततस् तृतीया विभक्तिर् भवति। अपि भवान् कमण्डलुना छात्रमद्राक्षीत्? छात्रेणोपाध्यायम्। शिखया परिव्राजकम्। इह न भवति, कमण्ड्लुपानिश्छात्रः इति, लक्षणस्य समासे ऽन्तर्भूतत्वात्। इत्थम्भूतः इति किम्? वृक्षं प्रति विद्योतनम्।

न्यासः

इत्थम्भूतलक्षणे। , २।३।२१

कञ्चित् प्रकारमित्यनेन इत्यमित्यस्यार्थमाचष्टे। तथा हि प्रकारवचने "इदमस्थमुः" ५।३।२४ इति थमुप्रत्यये विहिते इत्थमित्येद्रूपं भवति। सामान्यस्य भेदको विशेषः प्रकार उच्यते। आपन्न इत्यनेन भूतशब्द्सयार्थमाचष्टे। तथा हि-- "भू प्राप्तावात्मनेपदी" (धा।पा।१८४४) इत्यस्य चौरादिकस्य "आ धृषाद्वा" (धा।पा।८०५) इत्यस्यानन्तरम्) इति यदा णिज् नास्ति तदा क्तप्रत्यये "भूत" इति रूपं भवति। तस्येतीत्वम्भूतस्य। "लक्षणम्" इति। लक्ष्यते चिह्न्यतेऽनेनेति लक्षणम् = चिह्नम्। "अपि भवान् कमण्डलुना छात्रमाद्राक्षीत्" इति। अत्र मनुष्यत्वं सामान्यम्, तस्य च्छात्रत्वं प्रकारःच; तं प्राप्तस्य च्छात्रस्य कमण्डलुर्लक्षणम्। "छात्रेणोपाध्यायम्" इति। मनुष्यत्वं सामान्यम्, तस्योपाध्यायत्वं प्रकारः; तं प्राप्तस्योपाध्यायस्य लक्षणं छात्रः। "शिखया परिव्राजकम्" इति। मनुष्यत्वं सामान्यम्, परिव्राजकत्वं प्रकारः। तं प्राप्तस्य परिव्राजकस्य लक्षणं शिखा। "लक्षणस्य समासेऽन्तर्भूतत्वात्" इति। एकार्थीभावद् बहुव्रीह्यर्थेन लक्षणार्थस्यापृथग्भावादित्यर्थः। बहुव्रीहावेव वाच्यत्वेनान्तर्भावो लक्षणस्येति गतार्थत्वात् तृतीया न भवति। इत्थम्भूतलक्षण इति किम्? वृक्षं परि विद्योतते वियुत्। नात्र विद्योतनत्वप्राप्तस्य कस्यचिद्वृक्षेण लक्षणम्। किं तर्हि? विद्योतनस्यैव॥

बाल-मनोरमा

इत्थंभूतलक्षणे ५५८, २।३।२१

इत्थंभूतलक्षणे। अयं प्रकार इत्थं, तं भूतः=प्राप्तः-इत्थंभूतः। "भू प्राप्तौ" इति चौरादिकात् "आधृषाद्वा" इति णिजभावे गत्यर्थाकर्मकेत्यादिना कर्तरि क्तः। लक्षणं=ज्ञापकम्। प्रकारविशेषं प्राप्तस्य ज्ञापके इत्यर्थः। तदाह--कंचित्प्रकारमिति। जटाभिस्तापस इति। तपोऽस्यास्तीति तापसः। "तपस्सहरुआआभ्यां विनीनी" "अण्चे"ति मत्वर्थीयोऽण्प्रत्ययः। तापसत्ववति वर्तते। लक्ष्यलक्षणभावस्तृतीयार्थः। तदाह--जटाज्ञाप्येति। नच ज्ञाने करणत्वादेव तृतीया सिद्धेति वाच्यं, करणत्वाऽविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थत्वात्।

तत्त्व-बोधिनी
इत्थंभूतलक्षणे ५००, २।३।२१

जटानामित्थंभूलक्षणत्वमुपपादयति---जटाज्ञाप्येति। जटाभिज्ञ्राप्यं यत्तापसत्वं, तद्विशिष्ट इत्यर्थः।

तत्त्व-बोधिनी
इत्थंभूतलक्षणे ५०३, २।३।२१

जटानामित्थंभूतलक्षणत्वमुपपदयति---जटाज्ञाप्येति। जटाभिज्ञ्राप्यं यत्तापसत्वं, तद्विशिष्ट इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संज्ञः ६।१ अन्यतरस्यां ० कर्मणि ७।१ तृतीया १।१ १८ अनभिहिते ७।१ १

काशिका-वृत्तिः
संज्ञो ऽन्यतरस्यां कर्मणि २।३।२२

सम्पूर्वस्य जानातेः कर्मणि करके द्वितीयायां प्राप्तायाम् अन्यतरस्यां तृतीयाविभक्तिर् भवति। पित्रा सञ्जानीते, पितरं सञ्जानीते। मात्रा सञ्जानीते, मातरं सञ्जानीते।
न्यासः
संज्ञोऽन्यतरस्यां कर्मणि। , २।३।२२

"मात्रा सञ्जानीते" इति। "ज्ञाननोर्जा" ७।३।७९ इति जादेशःक, "ई हल्यघोः" ६।४।११३ इतीत्वम्, "संप्रतिभ्यामनाध्याने" १।३।४६ इत्यात्मनेपदम्। आध्याने तु "अधीगर्थदयेशां कर्मणि" २।३।५२ इति परत्वात् षष्ठी भवति-- मातुः सञ्जानातीति। कृत्प्रयोगे चानाध्यानेऽपि "कर्त्तृकर्मणोः कृति" २।३।६५ इति परत्वात् षष्ठ()एव भवति-- संज्ञातेति॥
बाल-मनोरमा
संज्ञोऽन्यतरस्यां कर्मणि ५५९, २।३।२२

संज्ञोऽन्यतरस्यां। संपूर्वस्य ज्ञाधातोरनुकरणात् षष्ठ()एकवचनं "संज्ञ" इति, तदाह--संपूर्वस्य जानातेरिति। द्वितीयापवादोऽयं तृतीयाविकल्पः। संजानीते इति। सम्यक् जानीते इत्यर्थः। "संप्रतिभ्यामनाध्याने" इत्यात्मनेपदम्।

तत्त्व-बोधिनी
संज्ञोऽन्यतरस्यां कर्मणि ५०१, २।३।२२

संज्ञो। "ज्ञा अवबोधने"इत्ययमेव गृह्रते न तु "जनी प्रादुर्भावे"इति तस्याऽकर्मकत्वात्। ङसः प्राग्भागस्य "ज्ञ"इत्यस्य "अल्लोपोऽनः"इत्यल्लोपेन निष्पन्नतया लाक्षणिकत्वाच्चेत्याशयेनाह--जानातेरिति। संजानीत इति। "संप्रतिभ्यामनाध्याने"इति तङ्। कृद्योगे परत्वात् "कर्तृकर्मणोः" इति षष्ठ()एव, "पितुः संज्ञाता"। आध्याने तु "पित्रा पितरं वा सञ्जानाति"। हरदत्तस्त्वाह--आध्याने तु परत्वादधीगर्थेति षष्ठी--मातुः संजानातीति, तन्न। तत्र शेषाधिकारादिति मनोरमायां स्थितम्।

तत्त्व-बोधिनी
संज्ञोऽन्यतरस्यां कर्मपि ५०४, २।३।२२

संज्ञो। "ज्ञा अवबोधने"इत्ययमेव गृह्रते न तु "जनी प्रादुर्भावे"इति, तस्याऽकर्मकत्वात्। ङसः प्राग्भागस्य "ज्ञ"इत्यस्य "अल्लोपोऽनः"इत्यल्लोपेन निष्पन्नतया लाक्षणिकत्वाच्चेत्याशयेनाह--जानातेरिति। संजानीत इति। "संप्रतिभ्यामनाध्याने"इति तङ्। कृद्योदे परत्वात् "कर्तृकर्मणोः" इति षष्ठ()एव, "पितुः संज्ञाता"। आध्याने तु "पित्रा पितरं वा सञ्जानाति"। हरदत्तस्त्वाह--आध्याने तु परत्वादधीगर्थेति षष्ठी--मातुः संजानातीति, तन्न। तत्र शेषाधिकारादिति मनोरमायां स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हेतौ ७।१ २७ तृतीया १।१ १८

काशिका-वृत्तिः
हेतौ २।३।२३

फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते। तद्वाचिनस् तृतीया विभक्तिर् भवति। धनेन कुलम्। कन्यया शोकः। विद्यया यशः।
न्यासः
हेतौ। , २।३।२३

हेतुर्द्विविधः-- शास्त्रीयः,लौकिकश्च। तत्र शास्त्रीयः " तत्प्रयोजको हेतुश्च" १।४।५५। लौकिकः फलसाधनयोग्यः पदार्थः। तत्र शास्त्रीये हेतौ "कर्तृकरणयोस्तृतीया" २।३।१८ इत्येवं सिद्धा तृतीया। तस्माल्लौकिकस्य हेतोरिदं ग्रहणमित्यत आह--"फलसाधनयोग्यः" इत्यादि। अनिष्पादयन्नपि फलं तासाशनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति योग्यग्रहणम्। "धनेन कुलम्" इत्यादौ कुलादीन्यकुर्वन्त्यपि धनादीनि तत्करणयोग्यतया लोके हेतुवय्पबदेशमासादयन्तीति तेभ्यस्तृतीया। इह यूपाय दार्विति सदपि दारुणो हेतुत्वं न विवक्षितम्। किं तर्हि? कारणस्यान्यथात्वम्। तेन तादर्थ्ये चतुर्थी भवति॥
बाल-मनोरमा

हेतौ ५६०, २।३।२३

हेतौ। हेत्वर्थे इति। हेतुरिह कारणपर्यायो लौकिक एव विवक्षितो, नतु "तत्प्रयोजको हेतुश्चे"ति कृत्रिमः, तस्य चकारेण कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः। ननु हेतोरपि करणत्वादेव तृतीया सिद्धेत्याशङ्क्य हेतुत्वकरणत्वयोर्भेदमाह--द्रव्यादिसाधारणमिति। आदिना गुणक्रियासङ्ग्रहः। द्रव्यं गुणं क्रियं च प्रति यज्जनकं, तत्र सर्वत्र विद्यमानमित्यर्थः। निर्वापारसाधारणं चेति। द्वारीभूतव्यापारवति तद्रहिते च विद्यमानं चेत्यर्थः। एवं च द्रव्यगुणक्रियात्मककार्यत्रयनिरूपितं निव्र्यापारसव्यापारवृत्ति च यत्तद्धेतुत्वमिति फलति। करणत्वं त्विति। क्रियाजनकमात्रवृत्ति व्यापारवद्वृत्ति च यत्तदेव करणत्वमित्यर्थः। एवं च हेतुत्वकरणत्वयोर्भेदादन्यतरेण अन्यतरस्य नान्यथासिद्धिरिति भावः। तत्र द्रव्यं प्रति हेतुमुदाहरति--दण्डेन घट इति। दण्डहेतुको घट इत्यर्थः। दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाऽभावान्न करणत्वमिति भावः। क्रियां प्रति हेतुमुदाहरति-पुण्येन दृष्टो हरिरिति। वागादिना स्वर्गादिफले जननीये यदवान्तरव्यापारभूतमपूर्वं तत् पुण्यमित्युच्यते। तस्य हरिदर्शनजनकत्वेऽपि निव्र्यापारत्वान्न करणत्वमिति भावः। गुणं प्रति हेतुत्वे तु "पुण्येन ब्राह्नवर्चस"मित्याद्युदाहार्यम्। नन्वध्ययनेन वसतीत्यत्र कथं तृतीया, अध्ययनस्य गुरुकुलवासं प्रति हेतुत्वाऽभावात्, प्रत्युत अध्ययनस्य वाससाध्यत्वादित्यत आह--फलमपीह हेतुरिति। अध्ययनं यद्यपि वासफलं तथापि वासं प्रति हेतुरपि भवति, इष्टसाधनताज्ञानस्य प्रवृत्तिहेतुतया अध्ययनस्य फलस्य स्वज्ञानद्वारा वासजनकत्वात्। यदा त्वध्ययने फले एतादृशं हेतुत्वमविवक्षित्वा अध्ययनार्थमेव वासो विवक्ष्यते, तदा चतुर्थ्येव भवति-अध्ययनाय वसतीति। एतच्च प्रकृतसूत्रे कैयटे स्पष्टम्।

ननु अलं श्रमेण इत्यत्र कार्यस्य कस्यचिदप्यश्रवणात्करणत्वहेतुत्वयोरसंभवात्कथं तृतीयेत्यत आह-गम्यमानाऽपीति। न केवलं श्रूयमाणैव क्रिया विभक्तौ प्रयोजिका, किं तु गम्यमानाऽपीत्यर्थः। करणतृतीयैवेयमित्यभिप्रेत्याह--अलं श्रमेणेति। ऊषरक्षेत्रं परिष्कुर्वाणं प्रतीदं वाक्यं प्रवृत्तम्। अत्र अलमिति नञर्थे निषेधे वर्तते। "अलं भूषणपर्याप्तिशक्तिवारणवाचक"मित्यमरः। "साध्य"मित्यष्याहारलभ्यम्। तदाह--श्रमेण साध्यं नास्तीति। सद्यः खेदाधायकत्वात्साधने व्यापृतिरेव श्रम इत्युपचर्यते। नन्वेवमपि साधनीयस्य व्रीह्यादिफलस्य क्रियारूपत्वाऽभावात्कथं श्रमस्य तत्र करणत्वमित्यत आह--इहेति। "साध्य"मित्यत्र प्रकृतिभूतो यो धातुस्तदर्थः साधनक्रिया उत्पत्त्यात्मिका, तां प्रतीत्यर्थः। एतेन श्रमस्य साधनक्रियायाश्चाऽभेद इति निरस्तम्, श्रमशब्देन व्रीह्याद्युत्पत्त्यनुकूलकर्षणादिव्यापारस्य, "साधनक्रियां प्रती"त्यनेन व्रीह्याद्युत्पत्तेश्च विवक्षितत्वात्। "गम्यमानापि क्रिया विभक्तौ प्रयोजिके"त्यत्र उदाहरणान्तरमाह--शतेनेति। वीप्सायां द्विर्वचनम्। एकैकेन शतेन सङ्ख्यया वत्सान्पाययतीति प्रतीयमानार्थः। तत्र वत्सनिष्ठशतसङ्ख्यायाः पायने करणत्वाऽभावात्परिच्छिद्येति गम्यते। एकैकशतसङ्ख्यया वत्सान्परिच्छिद्य=तदधिकवत्सेभ्यो व्यावर्त्य पाययतीत्यर्थः। तथाच शतसङ्ख्यायाः परिच्छेदं प्रति करणत्वमिति भावः।

अशिष्टेति। इदंच "दाणश्च सा चेच्चतुर्थ्यर्थे" इत्यनेन ज्ञाप्यत इति पदव्यवस्थायां वक्ष्यते। वैदिकमार्गानुयायिनः शिष्टाः, वेदमार्गादपेता अशिष्टाः, तेषां व्यवहारः= आचारः, तस्मिन्विषये दाण्धातो प्रयोगे सति चतुर्थ्यर्थे संप्रदाने तृतीया वाच्येत्यर्थः। दास्येति। दास्यै कामुकः प्रयच्छतीत्यर्थः। "कामुक" इत्यनेन रत्यर्थमिति गम्यते। दास्यां रतिर्धमशास्त्रनिषिद्धत्वादशिष्टव्यवहार इति भावः। असिष्टपदप्रयोजनमाह-धम्र्ये त्विति। धर्मादनपेत इत्यर्थः। "न तृतीये"ति शेषः। "धर्मपथ्यर्थन्यायादनपेते इति य"दिति रत्नाकरः। धर्मे त्विति पाठस्तु सुगम एव। इति तृतीया।

तत्त्व-बोधिनी

हेतौ ५०५, २।३।२३

हेतौ। हेतुरिह लौकिकः फलसाधनीभूतो गृह्रते, न तु "तत्प्रत्ययोजको हेतुश्चे"ति कृत्रिमः। तस्य चकारेण कर्तृसंज्ञाविधानात्कर्तृत्वादेव तृतीयासिद्धेरत आह--हेत्वर्थे इत्यादि। ननु लौकिकहेतोरपि करणत्वादेव तृतीयसिद्धौ किमनेनेत्याशङ्क्य हेतुत्वकरणत्वयोर्भेदमाह--द्रव्यादीति। "आदि"शब्देन गुणक्रिये ग्राह्रे। द्रव्यगुणक्रियानिरूपितं निव्र्यापारसव्यापारवृत्ति च यत्तद्धेतुत्वमित्यर्थः। करणत्वं त्विति। क्रियामात्रनिरूपितं व्यापारवद्वृत्ति च यत्तत्करणत्भित्यर्थः। एवं च हेतुत्वकरणत्वयोर्भेदादन्यतरेणान्यस्यान्यथासिद्धिर्न शङ्क्येति भावः। उक्तं च--द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्। अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते"इति। द्रव्यविषये हेतुत्वमुदाहरति--दण्डेन घट इति। दण्डहेतुको घट इत्यर्थः। अत्र हि व्यापारोऽस्तु वा, मा वा, साक्षात्क्रियान्वयित्वाऽभावात्करणत्वं नास्तीति भावः। क्रियाविषये उदाहरणमाह--- पुण्येन दृष्ट इति। पुण्यशब्देनेह परमाऽपूर्वमुच्यतेत, तस्य च हरिदर्शनरूपक्रियान्वयित्वसंभवे।ञपि व्यापारवत्त्वाऽभावन्न करणत्वमिति भावः। यदा तु यागादिकमेव पुण्यशब्देन विवक्ष्यते, तदा तस्य व्यापारवत्त्वमस्त्येवेति "कर्तृकरणयो"रित्यनेनैव तृतीया सिद्धा। गुणविषये तु "पुण्येन गौरवर्ण"इत्याद्युदाहार्यम्। "जटाभिस्तापस"इत्यादौ तु लक्ष्यलक्षणभावविवक्षायां हेतुत्वाऽविवक्षणादनेनाऽप्राप्ता तृतीयेति "इत्थम्भूतलक्षणे"इत्यारब्धमित्याहुः। अत्र केचिदुत्प्रेक्षन्ते द्रव्यादिसाधारणत्वाद्धेतुत्वस्य "हेतौ"इत्यनेनैव "बाणेन हत" इत्यादिप्रयोगसिद्धेः "कर्तृकरणयो"रिति सूत्रे करणग्रहणं त्यक्तुं शक्यम्, करणसंज्ञा तु आवश्यकी "करणाधिकरणयोश्चे"त्याद्यर्थमिति। अन्ये तु क्रियासाधकतमं यत्तद्व्यापारवत्त्वेन विवक्षितं चेत् करमं, नो चेद्धेतुः। द्रव्यसाधकतमस्य दण्डादेस्तु व्यापारवत्त्वेऽपि हेतुत्वमेव। एवं च "रामेण बाणेन हत"इत्यादौ हनने बाणादिर्निमित्तमित्येतावदेव यदा विवक्ष्यते, तदा "हेतौ" इत्यनेनैव तृतीया। "बाणव्यापारसाध्यप्राणवियोगाश्रयः"इत्येवं व्यापाराविष्टत्वेन विवक्षायां तु हेतुत्वाऽविवक्षणात् "कर्तृकरणयोः---"इति करणे तृतीया आरब्धेत्याहुः। फलमपीति। एतच्च "प्रत्ययः"इत् सूत्रे कैयटे स्पष्टम्। अध्ययनेनेति। तादथ्र्यविवक्षायां चतुथ्र्यपि भवतीति चतुथ्र्या सहेयं तृतीया विकल्प्यते। अध्ययनाय वसति। अत्र केचित्परिष्कुर्वन्ति---"अध्ययनेन वसती"त्यत्र "दण्डहेतु को घट"इतिवदध्ययनहेतु को निवास इत्यर्थस्वीकारेऽप्ययं विशेषः,---अध्ययनस्या फसेन सहाऽभेदः संसर्गः, उपकारकत्वेन सह तु निरूपकता। ततश्च फलाभिन्नाऽध्ययननिरूपितोपकारकत्वाश्रयनिवसनानुकूलो व्यापारः"इत्यर्थः। "दण्डेन घटः"इत्यत्र तु दण्डनिष्ठोपकारकत्वनिरूपितोपकार्यत्वाश्रयो घट इत्यर्थः। उपकार्यं हि साध्यम्। फलमपि तदेवेति। गम्यमानापीति। "अपि"शब्देन श्रूयमाणक्रिया समुच्चयते। नकेवलं श्रूयमाणैव क्रिया विभक्तौ प्रयोजिका, किंतु गम्यमानाऽपीति भावः। साधनेति। "साध्य।"मित्यत्र प्रकृतिभूतो यो धातुस्तदर्थंत प्रतीति भावः। अशिष्टेति। एतच्च "दाणश्च सा चेच्चतुथ्र्यर्थ"इत्यनेन ज्ञाप्यते इति मनोरमायां स्थितम्। केचिदिह परिष्कुर्वन्ति--"अशिष्टव्यवहार"इत्यंशो वाचनिक एव, अन्यांशस्तु ज्ञापकसिद्धः"इति। दास्या संयच्छते इति। "दाणश्च सा चे"दिति तङ्। "पाघ्रध्मे"ति यच्छादेशः। कामुक इति। "लषपतपदे"त्यादिना कमेरुकञ्। इति तृतीया।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अकर्तरि ७।१ ऋणे ७।१ पञ्चमी १।१ २५ हेतौ ७।१ २३

काशिका-वृत्तिः
अकर्तर्यृणे पञ्चमी २।३।२४

हेतौ इति वर्तते। कर्तृवर्जितं यदृणं हेतुः, ततः पञ्चमी विभक्तिर् भवति तृतीया अपवादो योगः। शताद् बद्धः। सहस्राद्

बद्धः। अकर्तरि इति किम्? शतेन बन्धितः। शतमृणं च भवति, प्रयोजकत्वाच् च कर्तृसंज्ञकम्।

न्यासः

अकत्र्तर्यृणे पञ्चमी। , २।३।२४

"शतेन बन्धितः"इति। बन्धेण्र्यन्तस्य निष्ठायामेतद्रूपम्। "शतमृणञ्च भवति"इति। उत्तमर्णाय देयत्वात्। प्रयोजकत्वात् कर्तृसंज्ञेति, "तत्प्रयोजको हेतुश्च" १।४।५५ इति चकारात् कर्तृसंज्ञाविधानात्। ननु लौकिको हेतुः पूर्वसूत्रे गृहीतः, स चेहानुवत्र्तत इति तत एव पञ्चमी विधीयते, न चात्र लौकिको हेतुः, किं तर्हि? पारिभाषिक इति प्राप्त्यभावादकत्र्तरीति प्रतिषेधोऽनर्थकः? नैतदस्ति;तत्र हि शास्त्रीये हेतौ तृतीया सिद्धेवेति लौकिकस्य हेतोग्र्रहणम्, इह तु पञ्चमी विधीयते। न चातर्ासौ शास्त्रीये हेतौ केनचित् सिध्यति। द्वावपीह हेतू गृह्र्येते। अथ वा शास्त्रीयस्यापि हेतोर्लौकिकं हेतुत्वमविरुद्धमेव। यो हि बन्धने प्रयुङ्क्ते स तत्साधनयोग्यो भवत्येव॥

बाल-मनोरमा

अकर्तर्यृणे पञ्चमी ५९३, २।३।२४

अकत्र्तर्यृणे। "हेतौ" इति सूत्रमनुवर्तते। अकर्तरि हेतुभूते ऋणे विद्यमानादित्यर्थः। फलितमाह-कर्तृवर्जितमिति। कर्तृसंज्ञारहितमित्यर्थः। शताद्बद्ध इति। नियमितकाले प्रत्यर्पणाऽभावे सति सुवर्णादिशतेन ऋणेन हेतुना अधर्मणो बद्ध इत्यर्थः। हेतुतृतीयापवादः। शतेन बन्धित इति। "अधर्मण उत्तमर्णेने"ति शेषः। बन्धेर्हेतुमण्ण्यन्तात्कर्मणि क्तः। अधमर्ण उत्तमर्णेन बद्ध इत्यण्यन्तस्यार्थः। शतेन ऋणेन प्रयोजककत्र्रा उत्तमर्णेन प्रयोज्यकत्र्रा बन्धनं कारितोऽधर्मण इति ण्यन्तस्यार्थः। अत्र शतमृणं प्रयोजकत्वात् कर्तृसंज्ञं हेतुसंज्ञे च, "तत्प्रयोजको हेतुश्चे"त्यत्र चकारेण कर्तृसंज्ञाया अपि विधानात्। ततश्च शतशब्दात् कर्तरि तृतीयां बाधित्वाऽपवादत्वात्पञ्चमी स्यात्, अतोऽकर्तरीत्युक्तमिति भावः। शतस्य हेतुत्वेऽपि कर्तृत्वान्न ततः पञचमीति भावः।

तत्त्व-बोधिनी

अकर्तर्यृणे पञ्चमी ५३१, २।३।२४

पञ्चमी स्यादिति। तृतीयापवादोऽयम्। शतेनेति। शतमिह उत्तमर्णाय धार्यमाणत्वादृणं,"तत्प्रयोजको हेतुश्च" इति चकारात्कर्तृसंज्ञं च। बन्धित इति। ण्यन्ते प्रयोजककर्तुः शतस्य हेतुसंज्ञाप्यस्तीति पञ्चम्यत्र स्यादेवातोऽत्राऽकर्तरित्युक्तमिति भावः। योगविभागादिति। एतच्च "हेतुमनुष्येभ्यः--" इति सूत्रे पदमञ्जर्यां स्पष्टम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ गुणेऽस्त्रियाम् ७।१ अस्त्रियाम् ७।१ पञ्चमी १।१ २४ हेतौ ७।१ २३

काशिका-वृत्तिः

विभाषा गुणे ऽस्त्रीयाम् २।३।२५

हेतौ इति वर्तते। गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर् भवति। जाड्याद् बद्धः, जाड्येन बद्धः। पाण्डित्यान् मुक्तः, पाण्डित्येन मुक्तः। गुणग्रहनं किम्? धनेन कुलम्। अस्त्रियाम् इति किम्? बुद्ध्या मुक्तः। प्रज्ञया मुक्तः।

न्यासः

विभाषा गुणेऽस्त्रियाम्। , २।३।२५

"धनेन कुलम्" इति। धनं द्रव्यम्, न गुणः। द्रव्याश्रितो हि गुणो भवति, न द्रव्यमेव ! गुणशब्देन चात्र सम्बन्धिमात्रं परार्थरूपापन्नमुच्यते, तेनाग्निरत्र धूमादित्याद्यपि सिद्धं भवति। ननु चास्त्रियामित्युच्यते, तेन नास्तीह घटोऽनुपलब्धेरित्यादि न सिध्यति? नैतदस्ति;"विभाषा गुणे" इति योगविभागः कत्र्तव्यः।तेन यत्रेष्यते तत्रय योगविभागादिष्टसिद्धिरिति स्त्रियामपि भवत्येव॥

बाल-मनोरमा

विभाषा गुणेऽस्त्रियाम् ५९४, २।३।२५

विभाषा। हेतावित्यनुवर्तते। तदाह--गुणे हेतावस्त्रीलिङ्गे इति। "विद्यमाना"दिति शेषः। जाड()आदिति। जडस्य भावो जाड()म्। "गुणवचनब्राआह्मणादिभ्यः कर्मणि चे"ति ष्यञ्। ननु धूमादग्निमानित्यादौ कथं पञ्चमी, धूमादेरगुणत्वादित्यत आह--योगविभागादिति। "विभाषा" इति योगो विभज्यते। हेतावित्यनुवर्तते, पञ्चमीति च। हेतौ पञ्चमी वा स्यादिस्यर्थः। ततश्च धूमादग्निमानित्यादि सिद्धम्। ततः-"गुणेऽस्त्रिया"मिति। तत्र विभाषेत्यनुवर्तते पञ्चमीति च। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यादित्युक्तोऽर्थः। ततश्च "जाड()आद्बद्ध" इत्यादि सिद्धम्। ननु विभाषेत्येव सिद्धे गुणेऽस्त्रियामिति व्यर्थमित्यत आह--अगुणे स्त्रियां च क्वचिदिति। योगविभागस्य इष्टसिद्ध्यर्थत्वादिति भावः। अत्राऽगुणे उदाहरति--धूमादिति। "अग्निमा"नित्यनन्तरं""ज्ञायते" इति शेषः। धूमस्य अग्निज्ञानहेतुत्वादत्र धूमस्य अगुणत्वेऽपि हेतुत्वात्ततः पञ्चमीति भावः। स्तिरायमुदाहरति--नास्ति घट इति। "घट" इत्यनन्तरं "इति ज्ञायते" इति शेषः। अनुपलब्धेरपि। उपलब्धिः=ज्ञानम्, तस्या अभावः-अनुपलब्धिः। नञ्तत्पुरुषः। न चार्थाऽभावेऽव्ययीभावः शङ्क्यः, अर्थाऽभावे तयोर्विकल्पस्य वक्ष्यमाणत्वात्।

तत्त्व-बोधिनी

विभाषा गुणेऽस्त्रियाम् ५३२, २।३।२५

स्त्रियां चेति। "बाहुलकं प्रकृतेस्तनुदृष्टेः" इति वार्तिकनिर्देशोऽपीह ज्ञापकः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षष्ठी १।१ २७ हेतुप्रयोगे ७।१ २७ हेतौ ७।१ २३

काशिका-वृत्तिः

षष्ठी हेतुप्रयोगे २।३।२६

हेतोः प्रयोगः हेतुप्रयोगः। हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर् भवति। अन्नस्य हेतोर् वसति।

न्यासः

षष्ठी हेतुप्रयोगे। , २।३।२६

प्रयोगस्य शब्दधर्मत्वात् हेतुरित्यनेन हेतुशब्द एव विज्ञायत इत्यत आह--"{हेतुशब्दस्य प्रयोगे--काशिका}

हेतुशब्दप्रयोगे" इति। एवञ्च हेतुशब्दस्य स्वरूपग्रहणे सति तत्पर्याणां निमित्तकारणादीनां प्रयोगे षष्ठी न भवतीति किमर्थं पुनरिदमुच्यते, यावता शेषविवक्षयैवात्राध्ययनादिभ्यः षष्ठी भविष्यति, तत्समानाधिकरण्याच्च हेतुशब्दादपि? एवं तर्हि सैव शेषविवक्षाऽस्मिन् विषये वचनेनाख्यायते मन्दधियामनुग्रहाय॥

बाल-मनोरमा

षष्ठी हेतुप्रयोगे ५९९, २।३।२६

षष्ठीहेतुप्रयोगे। हेतावित्यनुवर्तते। तदाह--हेतौ द्योत्ये इति। हेतुत्वे द्योत्ये इत्यर्थः। हेतुवाचकात्षष्ठीति फलितम्। "हेतौ" इति तृतीयां बाधित्वा षष्ठी। हेतुप्रयोगे किम्?। अन्नेन वसति। हेतौ द्योत्ये इति किम्?। अन्नस्य हतोस्तुभ्यं नमः। अत्र युष्मच्छब्दान्न भवति।

तत्त्व-बोधिनी

षष्ठी हेतुप्रयोगे ५३७, २।३।२६

षष्ठी हेतु। अत्र "हेतौ" इत्यनुवर्तते, तदाह---हेतौ द्योत्य इति। अन्नस्येति। "हेतौ" इति तृतीयायां प्राप्तायामनेन षष्ठी। हेतुप्रयोगे किम्()। अन्ने वसति। हेतौ द्येत्ये किम्। अन्नशब्दात्षष्ठी यथा स्यादित्येके। "अन्नस्य हेतोस्तुभ्यं नम" इत्यत्र युष्मच्छब्दान्मा भूदित्यन्ये।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सर्वनाम्नः ६।१ तृतीया १।१ च ० षष्ठी १।१ २६ हेतुप्रयोगे ७।१ २६ हेतौ ७।१ २३

काशिका-वृत्तिः

सर्वनाम्नस् तृतीया च २।३।२७

सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर् भवति, षष्ठी च। पूर्वेण षष्ठ्याम् एव प्राप्तायाम् इदम् उच्यते। केन हेतुना वसति, कस्य हेतोर् वसति। येन हेतुना वसति, यस्य हेतोर् वसति। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्। किंनिमित्तं वसति, केन निमित्तेन वसति, कस्मै निमित्ताय वसति, कस्मान् निमित्ताद् वसति, कस्य निमित्तस्य वसति, कस्मिन् निमित्ते वसति। एवं कारणहेत्वोरप्युदहार्यम्। अर्थग्रहनं च एतत्। पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायि इति। तेन इह अपि भवति किं प्पयोजनं वसति, केन प्रयोजनेन वसति, कस्मै प्रयोजनाय वसति, कस्मात् प्रयोजनाद् वसति, कस्य प्रयोजनस्य वसति, कस्मिन् प्रयोजने वसति।

न्यासः

सर्वनाम्नस्तृतीया च। , २।३।२७

"निमित्()तकारणहेतुषु सर्वासां विभक्तीनां प्रायदर्शनम्" इति। एतच्चकारस्यानुक्कतसमुच्चयार्थत्वल्लभ्यत इति वेदितव्यम्। यदर्थग्रहणमेतत कस्मात् पर्यायोपादानं कृतमित्माह-- "पर्यायोपादानम्" इत्यादि। असति पर्यायग्रहण एतत् स्वरूपग्रहणमिति कस्यचिद्भ्रान्ति स्यात्। अतस्तन्निराकर्तु पर्यायग्रहणम्॥

बाल-मनोरमा

सर्वनाम्नस्तृतीया च ६००, २।३।२७

सर्वनाम्नस्तृतीया च। सर्वनाम्न इति षष्ठी। तदाह--सर्वनाम्नो हेतुशब्दस्य चेति। कस्माद्भवतीत्यपेक्षायां सन्निहितत्वात्सर्वनामहेतुभ्यामिति गम्यते इत्यभिप्रेत्योदाहृति--केन हेतुनेति। सर्वनाम्न इति यदि पञ्चमी स्यात्तदा हेतुशब्दात् षष्ठी न स्यादिति बोध्यम्।

तत्त्व-बोधिनी
सर्वनाम्नस्तृतीया च ५३८, २।३।२७

सर्वनाम्नस्तृतीया च। इह सर्वनाम्न इति प्रयोगापेक्षया षष्ठी, पञ्चाम्यां तु हेतुशब्दात्षष्ठीतृतीये न स्यातामित्याशयेनाह---सर्वनाम्नो हेतुशब्दस्य चेति। कस्माद्भवतीत्यपेक्षायामर्थात् सर्वनामहेतुभ्यामिति सम्बध्यते।अत्र व्याचख्युः--यद्यपि सर्वनाम्न इति पदस्य पञ्चम्यन्तत्वेऽपि हेतुशब्दस्य विशेषणत्वे सामानाधिकरण्यादप्युपपद्यत इति न क्षतिः, तथापि विशेष्यत्वे त्वयं विधिर्न स्यादिति बोध्यमिति।

निमित्तपर्यायप्रयोगे सर्वासां प्रायगर्शनम्। निमित्तपर्यायेति। पर्यायग्रहणस्य फलमाह---एवमित्यादिना। एतद्वार्तिकेन "षष्ठी हेतुप्रयोगे", "सर्वनाम्नस्तृतीया च" इति सूत्रद्वयं गतार्थमिति बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अपादाने ७।१ पञ्चमी १।१ ३५ अनभिहिते ७।१ १

अर्थः॥

अनभिहितेऽपादाने कारके पञ्चमी विभक्तिर्भवति।

उदाहरणम्॥

वृक्षात् पर्णानि पतन्ति। ग्रामाद् आगच्छति।
काशिका-वृत्तिः
अपादाने पञ्चमी २।३।२८

अपादाने कारके पञ्चमी विभक्तिर् भवति। ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात् पराजयते। पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसङ्ख्यानम्। प्रासादम् आरुह्य प्रेक्षते, प्रासादात् प्रेक्षते। अधिकरणे च उपसङ्ख्यानम्। आसने उपविष्य प्रेक्षते, आसनात् प्रेक्षते। शयनात् प्रेक्षते। प्रष्नाख्यानयोष् च पञ्चमी वक्तव्या। कुतो भवान्? पाटलिपुत्रात्। यतष्चाध्वकालनिर्माणम् तत्र पञ्चमी वक्तव्या। गवीधुमतः साङ्काश्यं चत्वारि योजनाऽनि। कार्तिक्या आग्रहायणी मासे। तद्युक्तात् काले सप्तमी वक्तव्या। कार्तिक्या आग्रहायणी मासे। अध्वनः प्रथमा सप्तमी च वक्तव्या। गवीधुमतः साङ्काश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा।
लघु-सिद्धान्त-कौमुदी
कर्तृकरणयोस्तृतीया ८९८, २।३।२८

अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली॥ इति तृतीया।

लघु-सिद्धान्त-कौमुदी

अपादाने पञ्चमी ९०३, २।३।२८

ग्रामादायाति। धावतोऽश्वात्पततीत्यादि॥ इति पञ्चमी।

न्यासः

अपादाने पञ्चमी। , २।३।२८

"वृकेभ्यो बिभेति" इति। "भीत्रार्थानां भयहेतुः" १।४।२५ इत्यपादानत्वम्। अध्ययनात् पराजयत इत्यत्र "पराजेरसोढः" १।४।२६ इत्यपादानत्वम्। "विपराभ्याञ्जेः" १।३।१९ इत्यात्मनेपदम्। "पञ्चमीविधाने इत्यादि। यदेतत् पञ्चमीविधानमत्र ल्यब्लोपे पञ्चमो स्यादित्युपसंख्यानम् = व्याख्यानं कत्र्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्-- इह पूर्वसूत्राच्चकारोऽनुवत्र्तते। स चानुक्तसमुच्चयार्थः। तेन ल्यब्लोपे कर्मणि पञ्चमी भविष्यति। "अधिकरणे चोपसंख्यानम्" इत्यादि। अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु पूर्ववच्चकारानुक्तसमुच्चयार्थत्वमाश्रित्य कत्र्तव्यम्। "प्रश्नाख्यानयोश्च" इत्यादि। वक्तव्येति व्याख्यातव्येत्यर्थः। व्याख्यानन्तु तामेव चकारानुवृत्तिमाश्रित्य कत्र्तव्यम्। अथ वा-- अत्रापादान इत्येवं सिद्धा पञ्चमी। तथा हि कुतो भवानित्यतरागच्छतीति प्रतीयते, पाटलिपुत्रादित्यत्राप्यगच्छामीति; अतः स्फुटमेवापादानत्वम्। "यतश्चाष्वकाल" इत्यादि। यतः प्रभृत्यध्वनः कालसय् निर्माणमियत्तापरिच्छेदस्तत्र पञ्चमी वक्तव्या। एतदुक्तं भवति-- अध्वनि काले च निर्मीयमाणे यदवश्रिभूतत्वेन विवक्ष्यते तत्र पञ्चमी वक्तव्या = व्याख्येया। व्याख्यानन्तु पूर्ववच्चाकारानुवृत्तिमाश्रित्य कत्र्तव्यम्। अथ वा- अध्वनि निर्मीयमाणे अपादान इत्येवं सिद्धा पञ्चमी। तथा हि-- गवीधुमतः साङ्काश्यं चत्वारि योजनानीत्यत्र निःसृत्येति क्रिया गम्यते। अतो युक्तमेवापादानत्वम्। कार्त्तिक्या आग्रहायणी मास इत्यत्रापि परेणेति शब्दो गम्यते। तत्रोत्तरसूत्रेण दिग्योलक्षणा पञ्चमी भविष्यति। "तद्युक्तात्काले" इत्यादौ तदित्यनेन पञ्चमी सम्बध्यते। पञ्चमीयुक्तात् परो यः कालस्तत्र सप्तमी वक्तव्या = व्याख्येया। व्याख्यानं तु कार्त्तिक्या आग्रहायणी मास इत्यत्र "यस्य च भावेन भावलक्षणम्"२।३।३७ इत्यनेन सप्तमी सिद्धा। कार्त्तिक्याः परो यो मासस्तत्सत्तयाऽऽग्रहायण्या भावो लक्ष्यते। "अध्वनः प्रथमा" इत्यादि। तद्युक्तादिति वत्र्तते। तत्र यदा साङ्काश्यस्य योजनादभेदो विवक्ष्यते तदा प्रथमा। "गवीषुमतः साङ्काश्यं चत्वारि योजनानि" इति। भेदविवक्षायान्तु "यस्य च भावेन भावलक्षणम्" २।३।३७ इति सप्तमी। तथा हि गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु सत्सु भवतीत्येषोऽर्थः प्रतीयते। तत्र योजनस्य सम्बन्धि सम्बन्धि गमनं साङ्काश्यभावस्य लक्षणं भवति॥

बाल-मनोरमा

अपादाने पञ्चमी ५७९, २।३।२८

अपादाने पञ्चमी। स्पष्टत्वान्न व्याख्यातम्। ग्रामादायातीति। आगच्छतीत्यर्थः। कस्मादित्याकाङ्क्षाविषयत्वाद्ग्रामोवधिरिति अपादानत्वात्पञ्चमी। "माथुराः पाटलीपुत्रकेभ्य आढ()तराः" इत्यादौ बुद्धिकल्पितविशेषावधित्वमादाय अपादानत्वमिति भाष्ये स्पष्टम्। ननु विश्लेषानुकूलचलनाऽनाश्रयभूतं यत्तदेव ध्रुवमिति व्याख्यायताम्, किमवधित्वविवक्षयेत्यत आह--धावतोऽ()आआत्पततीति। अ()आस्य चलनाश्रयत्वेऽपि पतनक्रियां प्रति कस्मादित्याकाङ्क्षाविषयत्वलक्षणमवधित्वं न विरुद्धमिति भावः।

जुगुप्सेति। जुगुप्साद्यर्थकधातुभिर्योगे जुगुप्सादिविषयस्यापादानत्वमित्यर्थः। पापाज्जुगुप्सत इति। पापविषये कुत्सितत्वबुद्ध्या न रमते इत्यर्थः। विरमतीति। "पापा"दित्यनुषज्यते। पापविषये न प्रवर्तत इत्यर्थः। धर्मात्प्रमाद्यतीति।

धर्मविषये मुह्यतीत्यर्थः। वास्तवसंयोगविश्लेषयोरभावाद्वचनमिदम्। यदा तु "जुगुप्सते" इत्यादेर्जुगुप्सादिभिर्निवर्तत इत्यर्थ आश्रीयते, तदा बुद्धिकल्पितविश्लेषावधित्वमादायापादानत्वं सिद्धमिति इदं सूत्रं भाष्ये प्रत्याख्यातम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अन्या॰हियुक्ते पञ्चमी १।१ २८

काशिका-वृत्तिः
अन्याऽरादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते २।३।२९

अन्य आरातितर ऋते दिक्शब्द अञ्चूत्तरपद आचाहि इत्येतैर् योगे पञ्चमी विभक्तिर् भवति। अन्य इत्यर्थग्रहनम्। तेन पर्यायप्रयोगे ऽपि भवति। अन्योदेवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरं देवदत्तात्। विलक्षणे देवदत्तात्। आराच्छब्दो दूरान्तिकार्थे वर्तते। तत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् २।३।३४। इति प्राप्ते पञ्चमी विधीयते। आराद् देवदत्तात्। आराद् यज्ञदत्तात्। इतर इति निर्दिश्यमानप्रतियोगी पदार्थ उच्यते। इतरो देवदत्तात्। ऋते इति अव्ययं वर्जनार्थे। ऋते देवदत्तात्। ऋते यज्ञदत्तात्। दिक्शब्दः पूर्वो ग्रामात् पर्वतः। उत्तरो ग्रामात्। पूर्वो ग्रीष्मात् वसन्तः। उत्तरो ग्रीष्मो वसन्तात्। द्विक्शब्द इत्यत्र शब्दग्रहनं देशकालवृत्तिना ऽपि दिक्शब्देन योगे यथा स्यात्, इतरथा हि दिग्वृत्तिनैव स्यात्, इत्यमस्याः पूर्वा इति। इह तु न स्यात्, अयम् अस्मात् पूर्वः कालः इति। अञ्चूत्तरपद प्राग् ग्रामात्। प्रत्यग् ग्रामात्। ननु चायम् अपि दिक्शब्द एव। षष्ठ्यतसर्थप्रययेन २।३।३० इति वक्ष्यति, तस्य अयं पुरस्तादपकर्षः। आच् दक्षिणा ग्रामात्। उत्तरा ग्रामात्। आहि दक्षिणाहि ग्रामात्। उत्तराहि ग्रामात्।
न्यासः
अन्यारादित्तरऱ्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। , २।३।२९

"अन्य इत्यर्थग्रहणम्" इति। अर्थद्वारक एव हि शब्दस्य शब्दान्तरणे योगो भवति। तस्मादर्थस्येदं ग्रहणं विज्ञायते। तेनेत्यादिनाऽर्थग्रहणस्य फलं दर्शयति। अथान्यो देवदत्ताद्यज्ञदत्त इति यज्ञदत्तशब्दादपि पञ्चमी कस्मान्न भवति? देवदत्तादुत्पन्नया पञ्चम्योभयगतस्याप्यन्यत्वस्य प्रतिपादित्वात् तद्विशिष्टमन्यत्वमेकत एवोत्पाद्यमानया पञ्चम्या शक्यं प्रतिपादयितुमिति द्वितीयसम्बन्धिनः पञ्चमी न भवति। "इतर इति निर्दिश्यमानस्य प्रतियोगी पदार्थ उच्यते" इति।यथा क्वचित्प्रकरणे द्वौ प्रकृतौ -- देवदत्तः, अन्यश्च कश्चित्। तत्रैकस्तावन्निर्दिश्यते-- देवदत्तः शूर इति। तस्य निर्दिश्यमानस्य योऽसौ द्वितीयः सम्बन्धी प्रतियोगी स इतरशब्देनोच्यते, यथा--इतरः कातर इति। "शब्दग्रहणम्ित्यादि। शब्दग्रहणे सति दिशि दृष्टः शब्दो दिक्शब्द इतेषोऽर्थो लभ्यते। तेन योऽपि सम्प्रति दिक्शब्दो देशे काले च वऱ्तते, सोऽपि दिशि दुष्ट इति तद्योगे पञ्चमी भवति। तत्र देशवृत्तिना पञ्चमी-- पूर्वो ग्रामात् पर्वत इति। कालवृत्तिनाऽपि-- पूर्वो ग्रीष्माद्वसन्त इति। "इतरथा हि दिग्वृत्तिनैव योगे स्यात्" इति। तत्रैव दिक्शब्दस्य मुख्यत्वात्। "प्राग्ग्रामात्" इति। प्रपूर्वादञ्चतेरृत्विगादिसूत्रेण ३।२।५९ क्विन्प्रत्ययः। तदन्ताद्यदादिशब्देभ्यः "सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकाल" ५।३।२७ इत्यादिना विहितस्य स्तातेः "अञ्चेर्लुक्" ५।३।३० इति लुक्; लुकि कृते तदेदमुदाहरणम्। "दक्षिणा ग्रामादुत्तरा ग्रामात्। "दक्षिणाहि ग्रामादुत्तराहि ग्रामात्" इति। "दक्षिणादाच" "आहि च दूरे" ५।३।३७ "उत्तराच्च" ५।३।३८ इत्याजाही प्रत्ययौ॥
बाल-मनोरमा

अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ५८७, २।३।२९

अन्यारात्। युक्त इति भावे क्त इत्याह-एभिर्योगे इति। अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि एतैरष्टभिर्योगे सतीत्यर्थः। भिन्नादिशब्दयोगे पञ्चमीं साधयितुमाह--अन्येत्यर्थग्रहणमिति। व्याख्यानादिति भावः। अन्यार्थकशब्दयोगे पञ्चमीति फलितम्। तर्हितरग्रहणं व्यर्थमन्यार्थकत्वादेव सिद्धेरित्यत आह--इतरग्रहणं प्रपञ्चार्थमिति। "पचि विस्तारे"। अन्यशब्दस्य अन्यार्थकशब्दग्रहणोपलक्षणार्थत्वकथनस्य प्रयोजनकथनार्थमिति यावत्। अन्यो भिन्न इतरो वेति। भेदवान्विलक्षण इत्याद्युपलक्षणमिदम्। कृष्णप्रतियोगिकभेदवानित्यर्थः। षष्ठ()पवादोऽयम्। अन्यादिशब्दानामवधिनियमसत्त्वेऽपि संयोगविश्लेषाऽभावादपादानत्वस्य न प्रसक्तिः। एवमग्रेऽपि। आराद्वनादिति। वनस्य दूरं समीपं वेत्यर्थः। "आराद्दूरसमीपयोः" इत्यमरः। ऋते कृष्णादिति। "ऋते" इत्येकारान्तमव्ययम्। "ऋते वर्जने" इत्यमरः। कृष्मस्य वर्जने सुखं नास्तीत्यर्थः। "क्व कर्मप्रध्वंसः फलति पुरुषाराधनमृते" इति शिवरहस्यान्तर्गतस्तुतिगतः प्रयोगस्त्वार्षः। "ततोन्यत्रापि दृश्यते" इति वा द्वितीया। "ऋते द्वितीया चे"ति चान्द्रं सूत्रम्। अथ दिक्छब्दयोगे उदाहरति--पूर्वो ग्रामादिति। ग्रासावधिकपूर्वदिग्वर्ती ग्राम इत्यर्थः। ननु "चैत्रात्पूर्वः फाल्गुन" इत्यत्र पूर्वशब्दस्य कालवाचकतया दिग्वाचकत्वाऽभावात्कथं तद्योगे पञ्चमीत्यत आह--दिशि दृष्ट इति। रूढ()आ दिग्विशेषवाचकाः पूर्वादय एव गृह्न्ते नत्वैन्द्रीककुबादयः। संप्रतीति। कदाचिद्दिग्वाचकानामिदानीं कालवाचकानामपि योगे पञ्चमी भवतीत्यर्थः। नन्वेवं सति पूर्वं कायस्येत्यत्रापि स्यादित्यत आह--अवयववाचीति। तस्य परमिति। तस्येति हि प्रकृतं द्विरुक्तं पराभृशति। द्विरुक्तस्य परं=परावयवभूतमाम्रेडितमिति तदर्थः। पूर्वं कायस्येति। शसीरस्य पूर्वावयव इत्यर्थः। अञ्चुधातुरुत्तरपदं यस्य स अञ्चूत्तरपदः=प्रागादिदिक्छब्दः, नतु सध्र्यङ् इत्यादिशब्दोऽपि, दिक्शब्दसाहचर्यात्। तेन सध्र्यङ् देवदत्तेनेत्यत्र न पञ्चमी। ननु दिक्शब्दत्वादेव सिद्धे अञ्चूत्तरपदग्रहणं व्यर्थमित्यत आह--अञ्चूत्तरपदस्येति।"षष्ठ()तसर्थे"त्रन्तरं "परत्वात्प्राप्ता"मिति शेषः। प्राक् प्रत्याग्वा ग्रामादिति। ग्रामावधिक इत्यर्थः। आजिति। अच्प्रत्ययान्तयोगे उदाहरणं वक्ष्यत इति सूचनमिदम्। दक्षिणा ग्रामादिति। ग्रामावधिकायां दक्षिणस्यां दिशीत्यर्थः। आहीति। आहिप्रत्ययान्तयोगे उदाहरणसूचनमिदम्। दक्षिणाहि ग्रामादिति। ग्राभावधिकायां दक्षिणस्यां दिशि दूर इत्यर्थः। "आहि च दूरे" इत्याहिप्रत्ययः। आजाहिप्रत्ययान्तयोर्दिक्शब्दत्वेऽपि "षष्ठ()तसर्थे"ति षष्ठीं बाधितुं पृथग्ग्रहणम्। नन्वेवमपि "भवात्प्रभृत्यारभ्य वा सेव्यो हरिः" इत्यादौ कथं पञ्चमी, अन्यादिशब्दयोगाऽभावादित्यत आह--अपादाने इति। प्रभृतियोगे इति। प्रभृत्यर्थकशब्दयोगे इत्यर्थः। तथा हि--"अपादाने पञ्चमी"ति सूत्रे भाष्ये "यतश्चाध्वकालनिमानमि"ति वार्तिकं पठित्वा कार्तिक्या आग्रहायणी मासे इत्युदाहृत्य "इदं न वक्तव्यमि"ति तद्वार्तिकप्रत्याख्यानमुपक्षिप्य "इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते, कार्तिक्याः प्रभृत्याग्रहायणी मासे" इत्युक्तम्। प्रभृतिशब्दाऽभावेऽपि तदर्थसत्तया पञ्चमी सिद्धेत्यर्थः। एवं वदता भाष्यकृता "प्रभृत्यर्थकशब्दयोगे पञ्चमी"ति वचनं ज्ञाप्यते। अन्यथा पञ्चम्यर्थं वार्तिकस्यावश्यकत्वात्तदसङ्गतिः स्पष्टैव। एवंच प्रभृतिशब्दपर्यायशब्दयोगेऽपि पञ्चमी भवति। अत एव च "कार्तिक्याः प्रभृति" इति भाष्यव्याख्यावसरे "तत आरभ्येत्यर्थ" इति कैयट आह। तत्र हि तत इति पञ्चम्यास्तसिः। एतत्सर्वमभिप्रेत्योदाहरति--भवात्प्रभृत्यारभ्य वेति। भवः=उत्पत्तिः। आरभ्येत्यस्यावधिं परिगृह्येत्यर्थः। प्रभृतीत्यव्ययमप्येतदर्थकमेव। भवमवधिं परिगृह्य हरिः सेव्य इत्यर्थः। उत्तपत्तिक्षणात्मकपूर्ववधिकोत्तरकाले सर्वदा आमरणं हरिः सेव्य इति यावत्। अत्रारभ्येति क्रियापेक्षया कर्मत्वविवक्षायां द्वितीयैव, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"त्युक्तेः। यथा "सूर्योदयमारभ्य आऽस्तमयाज्जपती"त्यादौ। शेषत्वविवक्षायां द्वितीयैव, "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"त्युक्तेः। यथा "सूर्योदयमारभ्य आऽस्तमयाज्जपती"त्यादौ। शेषत्वविवक्षायां तु षष्ठी बाधित्वा भवशब्दात्पञ्चमी। प्रभृतिशब्दयोगे तु आरभ्येत्यर्थे कदापि न द्वितीया, प्रभृतिशब्दार्थस्यावधिं परिगृह्येत्यस्यावध्यादिघटित्वेन क्रियात्वाऽभावात्। अपपरीति।

बहिश्शब्दयोगे पञ्चमीं सिद्धवत्कृत्य "अपपरिबहिरञ्चवः पञ्चम्या" इति समासविधानाद्बहिश्शब्दयोगे पञ्चमी विज्ञायते इत्यर्थः। इदंच "अपपरी"ति सूत्रे भाष्ये स्पष्टम्। "करस्य करमो बहिः" इति त्वसाध्वेव। "ज्ञापकसिद्धं न सर्वत्रे"ति वा कथञ्चित्समाधेयम्।

तत्त्व-बोधिनी

अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ५२७, २।३।२९

अन्यो भिन्न इतरो वेति। न चैवं"घटः पटो ने"त्यत्रातिप्रसङ्गः, नञोऽपि भेदे शक्तत्वादिति वाच्यम्, निपातानां द्योकत्वमेव न तु वाचकत्वमित्युभ्युपगमात्ा। आराद्वनादिति। इह "दूरान्तिकार्थैः षष्ठ()न्यतरस्याम्" इति प्राप्तम्। ऋते कृष्णादिति। कथं तर्हि "फलति पुरुषाराधनमृते" इति प्रयोग इति चेत्। प्रमादोऽयमिति हरदत्तः। अन्ये तु----"ततोऽन्यत्रापि दृश्यते" इतिं दृशिग्रहणाच्चैत्रं यावच्छीतमित्यादाविव ऋतेयोगे द्वितीयाऽपि साधुरित्याहुः। अस्मिन् व्याख्याने "ऋते द्वितीया च" इति चान्द्रसूत्रमनुकूलम्। दिशि दृष्ट इति। "रुढये" ति शेषः। तेनैन्यादयो नात्र गृह्न्ते। नन्वेवं ककुबादिग्रहणप्रसङ्ग इति चेत्। अत्राहुः---अन्यतरसाहचार्योव्याख्यानाद्वा दिग्भिन्नेर्थे यो न दृष्टः सोऽत्र गृह्त इति। दिक्शब्दत्वेऽपीति। यद्यपि अदिक्शब्दोऽप्यञ्चूत्तरपदमस्ति सध्र्यङित्यादिः, तथापि दिक्शब्दसाहचर्यादञ्चूत्तरपदेन प्रागित्यादिदिक्शब्द एव गृह्ते। तेन सध्र्यङ् देवदत्तेनेत्यत्र नातिप्रसङ्ग इति भावः। दक्षिणा ग्रानादिति। दिक्शब्दत्वेनैव सिद्धे आजाहिग्रहणं चिन्त्यप्रयोजनमित्याहुः। प्रभृतियोग ति। प्रभृत्यर्थेर्योग इत्यर्थः। तथा च "कार्तिक्या प्रभृति" इति भाष्यं विवृण्वता कैयटेन "तत आरभ्य इत्यर्थ" इति प्रयुक्तम्। ग्रामाद्बहिरिति। "ज्ञापकसिद्धं न सर्वत्र"। तेन "करस्य करभो बहिः" इति सिद्धम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षष्ठी १।१ अतसर्थप्रत्ययेन ३।१

काशिका-वृत्तिः

षष्ठ्यतसर्थप्रत्ययेन २।३।३०

दक्षिणौत्तराभ्याम् अतसुच् ५।३।२८ इति वक्ष्यति, तस्य इदं ग्रहनम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर् भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। पुरस्ताद् ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद् ग्रामस्य।

न्यासः

षष्ठ�तसर्थप्रत्ययेन। , २।३।३०

बाल-मनोरमा

षष्ठ�तसर्थप्रत्ययेन ६०१, २।३।३०

षष्ठ()तसर्थ। एतद्योगे इति। "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिः" इत्यारभ्य "आहि च दूरे" "उत्तराच्चे"त्यन्तैः सूत्रैर्दिग्देशकालवृत्तिभ्यः शब्देभ्यः स्वार्थे प्रत्यया विहिताः। तत्र "दक्षिणोत्तराभ्यामतसुच्" इति विहितो योऽतसुच्प्रत्ययः, तस्यार्थः=दिग्देशकालरूपः, स एवार्थो यस्य स-अतसर्थप्रत्ययः, तद्योगे इत्यर्थः।

यद्यप्यतसर्थप्रत्ययेषु अस्तातिरेव प्रथमस्थापि लाघवादतसर्थेत्युक्तम्, न त्वस्तात्यर्थेति, संयुक्ताक्षरघयितत्वेन गौरवात्। दिक्शब्देतीति। "अन्यारादि"ति सूत्रे दिक्शब्देत्यनेन या पञ्चमी विहिता तदपवाद इत्यर्थः। दक्षिणत इति। सप्तमीपञ्चमीप्रथमान्तात् स्वार्थे दिग्देशकालवृत्तेर्दक्षिणशब्दादतसुच्। दक्षिणस्यां, दक्षिणस्याः, दक्षिणा वा दिगित्यर्थः। एवं देशे काले च। पुर इति। पूर्वाशब्दादस्तात्यर्थे"पूर्वाधरावराणामसि पुरधवश्चैषाम्" इत्यसिप्रत्ययः प्रकृतेः पुरादेशश्च। पूर्वस्यां, पूर्वस्याः, पूर्वा वेत्यर्थः। पुरस्तादिति। पूर्वशब्दादस्तातिप्रत्यये सति "आस्ताति चे"ति प्रकृतेः पुरादेशः। पुरश्शब्दसमानार्थकमिदम्। उपरीति। "उपर्युपरिष्टादि"ति सूत्रेण ऊध्र्वशब्दाद्रिल्प्रत्ययो शिष्टातिल्प्रत्ययः प्रकृतेरूपादेशश्च निपातितः। ऊध्र्वायां दिशि, ऊध्र्वाया दिशः, ऊध्र्वादिगिति वा अर्थः। एवं देशे कालेऽपि।

तत्त्व-बोधिनी

षष्ठ�तसर्थप्रत्ययेन ५३९, २।३।३०

षष्ठ()सर्थ। "दक्षिणोत्तराभ्यामतसुच्" इत्यस्य योऽर्थे दिग्देशकालरूपः सोऽर्थे यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः, अस्तातिप्रभृतियञ्च, तदन्तेन योगे इत्यर्थः। अचसुचोऽस्तात्यनन्तरत्वेपि लाघवानुरोधेन अस्तात्यर्थेति नोक्तमित्याहुः। पञ्चाम्या अपवाद इति। "ततः पश्चात्स्त्रंस्यते ध्वंस्यते च" इति भाष्यप्रयोगात्पश्चाच्छब्दयोगे तु पञ्चम्यपि साधुः। अस्मादेव भाष्यप्रयोगात्पश्चाच्छब्देनाऽव्ययीभावो न भवतीति वक्ष्यते। प्रत्ययग्रहणं किम्()। इह मा भूत्, प्राग्ग्रामात्। प्रत्यग्ग्रामात्। कृतेऽपि प्रत्ययग्रहणे कृतो नेति चेत्। अत्राहुः कैयटादयः--प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति लुप्तेऽस्तातौ षष्ठ()भावः। "अन्यारात्---"इत्यत्राञ्चूत्तरपदस्यापीदं प्रयोजनमुक्तम्। तत्रान्यतरच्छक्यमवक्तुम्, एक प्रयोजनत्वादिति। प्रत्ययग्रहणं चिनत्यप्रयोजनमिति तु मनोरमायां स्थितम्। पुर इति। "पीर्वाधरावराणाम्" इत्यसिप्रत्यये पुरादेशः। पुरस्तादिति।"दिक्शब्देभ्यः" इत्यादिनाऽस्तातिः, "अस्ताति च" इति पूर्वस्य पुरादेशः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एनपा ३।१ द्वितीया १।१

काशिका-वृत्तिः

एनपा द्वितीया २।३।३१

एनबन्यतरस्याम् अदूरे ऽपञ्चम्याः ५।३।३५ इति वक्ष्यति। तेन युक्ते द्वितीया विभक्तिर् भवति। पूर्वेण षष्ठ्यां प्राप्तायाम् इदं वचनम्। दक्षिणेन ग्रामम्। उत्तरेण ग्रामम्। षष्ठ्यापीष्यते। दक्षिणेन ग्रामस्य। उत्तरेण ग्रामस्य। तदर्थं योगविभागः कर्तव्यः।

न्यासः

एनपा द्वितीया। , २।३।३१

"पूर्वेण षष्ठ()आं प्राप्तायां वचनमिदम्िति। एनपोऽतसर्थत्वात्। "तदर्थो योगविभागः कत्र्तव्यः" इति। एनपेति पृथयोगः कत्र्तव्यः,एनपा षष्ठी यथा स्यात्। अन्यथा हि द्वितयीयासौ बाध्येत। ततो द्वितीयेति द्वितीयो योगः, अत्र चैनपेति वत्र्तते॥

न्यासः

पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्। , २।३।३१

"पञ्चमीग्रहणमनुवत्र्तते" इति। स्वरितत्वात्। इमे सर्वे पृथगादयोऽसहायेऽर्थे वत्र्तन्ते। भेदेनोपादानन्तु पर्यायान्तरनिवृत्त्यर्थम्। इह तृतीयापञ्चम्यौ मा भूताम्-- हिरुग् देवदत्तस्य। विष्वग् देवदत्तस्येति। तत्रासत्यां पञ्चमीग्रहणानुवृत्तौ यथा हिरुगित्यादिना पर्यायान्तरेण योगे षष्ठी भवति, तथा पृथगादिभिर्योगे पक्षे षष्ठी स्यात्, न पञ्चमी। तस्मात् पञ्चमीग्रहणमनुवत्र्तनीयम्, अनुवृत्तेरेव पक्षे भविष्यति, तत् किमर्थमन्यतरस्यां ग्रहणम्? सत्यम्; तत् कृतञ्च तस्या एवानुवृत्तेः सूचनार्थमुत्तरार्थञ्च॥

बाल-मनोरमा

एनपा द्वितीया ६०२, २।३।३१

एनपा द्वितीया। "षष्ठ()तसर्थे"ति षष्ठ()आ नित्य बाधे प्राप्ते आह--योगविभागादिति। एनपेति योगो विभज्यते। "षष्ठ()तसर्थे"ति पूर्वसूत्रात्षष्ठीत्यनुवर्तते। एनबन्तेनयोगे षष्ठी स्यादित्यर्थः। द्वितीयेति योगान्तरम्। एनपेत्यनुवर्तते। एनबन्तेन योगे द्वितीया स्यादित्युक्तोऽर्थः। दक्षिणेनेति। "एनबन्यतरस्यामदूरेऽपञ्चम्याः" इत्येनप्। एवमुत्तरेणेति। उत्तरेण ग्रामं ग्रामस्य वेत्युदाहरणमित्यर्थः। पूर्वेण ग्रामं ग्रामस्य वेत्याद्यपि बोध्यचम्, दिक्शब्देभ्यः एनब्विधेः। भाष्ये तु "षष्ठ()तसर्थे"ति सूत्रात्प्राक् "एनपा द्वितीया" इत्यस्य पाठ इति "पृथग्विना" इति सूत्रे उक्तम्। अतोऽत्र सत्यपि योगविभागे षष्ठीग्रहणानुवृत्तेरसंभवादेनपायोगे षष्ठ()साधुरेवेति युक्तम्।

तत्त्व-बोधिनी

एनपा द्वितीया ५४१, २।३।३१

एवपा। कथं तर्हि "तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्" इति। उत्तरेणेत्येतत् "दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तेरणेन" इति तोरणसमानाधिकरणं तृतीयान्त न त्वेनबन्तमित्याहुः। "धनपतिगृहानुत्तरेणास्मदीयम्" इति कैश्चित्पट()ते, तदा तु सम्यगेव। दक्षिणेनेति। दक्षिणस्यामदूर इत्यर्थे "एनबन्यतरस्याम्" इत्यादिना एनप्। (५४०) दूरान्तिकार्थैः षष्ठ()न्यतरस्याम्।२।३।३४।

दूरान्तिकार्थैः। षष्ठ()आं प्राप्तायां पक्षे पञ्चम्यर्थं वचनम्। इहान्यतरस्यांग्रहणं समुच्चयार्थं, तेन विप्रकृष्टापि पञ्चमी समुच्चीयते व्याख्यानात्, न तु सन्निहिते अपि द्वितीयातृतीये, तदेतदाह--पञ्चमी चेति। सर्पिषो ज्ञानमिति। वस्तुतः करणीभूतं यत्सर्पिः तत्सम्बन्धिनी प्रवृत्तिरित्यर्थः। ज्ञानपूर्वीकायां प्रवृत्तौ जानातेर्लक्षणा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पृथग्विनानानाभिः ३।३ तृतीया १।१ ३३ अन्यतरस्याम् ० पञ्चमी १।१ २८

काशिका-वृत्तिः

पृथग्विनानानाभिस् तृतीया ऽन्यतरस्याम् २।३।३२

पञ्चमीग्रहणम् अनुवर्तते। पृथक् विना नाना इत्येतैर् योगे तृतीया विभक्तिर् भवति, अन्यतरस्यां पञ्चमी च। पृथग् देवदत्तेन, पृथग् देवदत्तात्। विना देवदत्तेन, विना देवदत्तात्। नाना देवदत्तेन, नाना देवदत्तात्। पृथग्विनानानाभिः इति

योगविभागो द्वितीयाऽर्थः। विना वातं विना वर्षं विद्युत्प्रपतनं विना। विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ।
बाल-मनोरमा
पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ५९५, २।३।३२

पृथग्विना। पञ्चमीद्वितीये चेति। "तृतीयाऽभावपक्षे" इति शेषः। "अपादाने पञ्चमी" "षष्ठ()तसर्थप्रत्ययेन" "एनपा द्वितीया" "पृथग्विना" इति सूत्रक्रमः। तत्र षष्ठीत्यस्वरितत्वान्नानुवर्तते, पञ्चमी द्वितीयेति चानुवर्तते। तथाच तृतीयाऽभावपक्षे पञ्चमी द्वितीया चेति भावः। ननु तृतीयाऽभावपक्षे द्वितीयैव संनिहितत्वात् स्यात्, नतु पञ्चम्यपि, षष्ठ()तसर्थेत्यत्र तदनुवृत्तेरभावात्। अतोऽत्र पञ्चम्याः समावेशोऽनुपपन्न इत्यत आह--अन्यतरस्याङ्ग्रहणमिति। तृतीया चेत्येताबतैव संनिहितद्वितीयासमुच्चयसिद्धेरन्यतरस्यामिति गुरुयत्नकरणं व्यवहिताया अपि पञ्चम्याः समुच्चयार्थम्, अव्ययानामनेकार्थकत्वादिति भावः। ननु पञ्चम्याः "षष्ठ()तसर्थे"त्यत्राननुवृत्ताया इहानुवृत्तेरसम्भवात्कथमिह तदुपस्थितिरित्यत आह--पञ्चमीद्वितीये चानुवर्तेते इति। "मण्डूकप्लुत्ये"ति शेषः। पृथग्रामेणेति। रामप्रतियोगिकभेदवानित्यर्थः। एवं विना नानेति। विना रामेण, रामात्, रामम्,। नाना रामेण, रामात्, रामं वा। पृथिग्विनानानास्त्रयोऽपि भेदार्थका इति केचित्। "पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने" इत्यमरः। रामस्य वर्जने सुखं नास्तीत्यर्थः।

तत्त्व-बोधिनी
पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ५३३, २।३।३२

पृथग्विना। ननु तृतीयाऽभावपक्षे "एनपा द्वितीया" इति प्रकृता द्वितीयैव स्यात्। यदि तु द्वितीया विकल्पेन भवेत्, तदा पञ्चम्यपि स्यात्। सा तु नित्यैव। तस्माद्विभक्तित्रयसमवेशो दुरुपपाद इत्यत आह---अन्यतरस्याङ्ग्रहणं समुच्चयार्थमिति। निपातानामनेकार्थत्वादिति भावः। पञ्चमिति। तत्र भण्डूकप्लुत्या पञ्चमी। द्वितीया तु संनिहितैव। इह पृथगर्थैरिति सूत्रयितव्ये पर्यायत्रयोपादानं पर्यायान्तरनिवृत्त्यर्थम्, तेन हिरुग्देवदत्तस्येत्यत्र नेत्याहुः। "पृथङ्नानाञ्भिस्तृतीयान्यतरस्याम्" इति सुवचम्। नानाञिति प्रत्ययग्रहणे तदन्तयोर्विनानानाशब्दयोर्लाभात्। नानेति। "हिरुङ्नाना च वर्जने" इत्यमरः। "नानानारीं निष्फला लोकयात्रा" इति प्रयोगः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ करणे ७।१ च ० स्तोकाल्पकृच्छ्रकतिपयस्य ६।१ असत्त्ववचनस्य ६।१ तृतीया १।१ ३२ पञ्चमी १।१ २८

काशिका-वृत्तिः
करेण च स्तोकाल्पकृच्छ्रकतिपयस्य असत्त्ववचनस्य २।३।३३

स्तोक अल्प कृच्छ्र कतिपय इत्येतेभ्यो ऽसत्त्ववचनेभ्यः करणे कारके ऽन्यतरस्यां तृतीया भवति। पञ्चम्यत्र पक्षे विधीयते, तृतीया तु करणे इत्येव सिद्धा। यदा तु धर्ममात्रं करणाया विवक्ष्यते न द्रव्यम्, तदा स्तोकाऽदीनाम् असत्त्ववचनता। स्तोकान् मुक्तः, स्तोकेन मुक्तः। अल्पान् मुक्तः, अल्पेन मुक्तः। कृछ्रान् मुक्तः, कृच्छ्रेण मुक्तः। कतिपयान् मुक्तः, कतिपयेन मुक्तः। असत्त्ववचनस्य इति किम्? स्तोकेन विषेण हतः। अल्पेन मधुना मत्तः। करणे इति किम्? क्रियाविशेषणे कर्मणि मा भूत्, स्तोकं मुञ्चति।

बाल-मनोरमा

करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य ५९६, २।३।३३

करणे च। एभ्य इति। स्तोक अल्प कृच्छ्र कतिपय-एभ्यश्चतुभ्र्य इत्यर्थः। असत्त्वपदं व्याचष्टे--अद्रव्येति। अन्यतरस्यामित्यनुवर्तते, पञ्चमीति च। ततश्च करणे पञ्चमी वेति लभ्यते। तदभावे तु तृतीया सिद्धैव। तदाह--तृतीयापञ्चम्याविति। स्तोकेन स्तोकाद्वामुक्त इति। लघुना आयासेन मुक्त इत्यर्थः। आयासो न द्रव्यमिति भावः। द्रव्ये त्विति। द्रव्ये वृत्तौ स्तोकेन विषेण हत इति तृतीयैवेत्यर्थः। अल्पेनाल्पाद्वा मुक्तः, कृच्छ्रेण कृच्छ्राद्वा मुक्तः। कष्टेनेत्यर्थः। कतिपयेन कतिपयाद्वा मुक्तः। अकृत्स्नेन साधनेनेत्यर्थः।

तत्त्व-बोधिनी

करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य ५३४, २।३।३३

करणे च। अन्यतरस्यामिति वर्तते, पञ्चमीति च, तेन करणे तृतीयायां प्राप्तायां पक्षे पञ्चमी विधीयते, तया मुक्ते करणत्वादेव तृतीया सिद्धेत्याशयेनाह---तृतीयापञ्चम्यौ स्त इति। स्तोकेनेति। अनायासेन मुक्त इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दूरान्तिकार्थैः ३।३ षष्ठी १।१ ३५ अन्यतरस्याम् ० ३५ पञ्चमी १।१ २८

काशिका-वृत्तिः

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् २।३।३४

पञ्चमी अनुवर्तते। दूरान्तिकार्थैः शब्दैर् योगे षष्थी विभक्तिर् भवति, अन्यतरस्यां पञ्चमी च। दूरं ग्रामस्य, दूरं ग्रामात्। विप्रकृष्टं ग्रामस्य, विप्रकृष्टं ग्रामात्। अन्तिकं ग्रामस्य, अन्तिकं ग्रामात्। अभ्याशं ग्रामस्य, अभ्याशं ग्रामात्। अन्यतरस्याम् ग्रहणं पञ्चम्यर्थम्। इतरथा हि तृतीया पक्षे स्यात्।

न्यासः

दूरान्तिकार्थैः षष्ठ�न्तरस्याम्। , २।३।३४

विकल्पेन पञ्चम्यां विहितायां पक्षे शेषत्वादेव यद्यपि सिध्यति, तथाऽपि तदिह षष्ठीग्रहणं कृतं तत् "चतुर्थी चाशिष्य" २।३।७३ इत्यादिनाऽऽशिषि या चतुर्थी विधीयते तामपि बाधित्वा षष्ठ()एव यथा स्यादित्येवमर्थम्-- दूरं हितं ग्रामस्य, अन्तिकं हितं ग्रामस्येति। ननु चान्यतरस्यांग्रहणं प्रकृते पुनरन्यतरस्यांग्रहणं किमर्थमित्याह-- "अन्यतरस्यांग्रहणम्" इत्यादि। यदीहान्यतरस्यांग्रहणं न क्रियेत तदा पक्षे तृतीया स्यात्; तस्या एवानन्तरसूत्रे श्रुतत्वात्। पुनरन्यतरस्यांग्रहणं क्रियमाणं पञ्चमीविधानार्थं विज्ञायते; प्रयोजनान्तराभावात्। तथा हि-- तृतीयाविकल्पार्थं तावदेतन्न भवति। तृतीयाविकल्पो हि पूर्वकेणान्यतरस्यांग्रहणेन सिध्यति। न चान्या काचिद्विभक्तिः प्रकृता, किं तर्हि? पञ्चमी। तस्मात् पञ्चमीविकल्पार्थमेतद्विज्ञायते॥

बाल-मनोरमा

दूरान्तिकार्थैः षष्ठ�न्यतरस्याम् ६०३, २।३।३४

दूरान्तिकार्थैः। एतैरिति। दूरार्थकैरन्तिकार्थकैश्च शब्दैर्योगे इत्यर्थः। पञ्चमी चेति। षष्ठ()भावे "अपादाने पञ्चमी"त्यतोऽनुवृत्ता पञ्चमीति भावः। "एनपा द्वितीया"इति "पृथग्विनानानाभिस्तृतीया" इति द्वितीयातृतीया संनिहिते अपि न समुच्चीयेते, व्याख्यानात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दूरान्तिकार्थेभ्यः ५।३ ३६ द्वितीया १।१ च ० षष्ठी १।१ ३४ अन्यतरस्याम् ० ३४ पञ्चमी १।१ २८

काशिका-वृत्तिः
दूरान्तिकार्थेभ्यो द्वितीया च २।३।३५

पञ्चमी अनुवर्तते। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर् भवति, चकारात् पञ्चमी तृतीया ऽपि समुच्छीयते। दूरं ग्रामस्य, दूराद् ग्रामस्य, दूरेण् ग्रामस्य। अन्तिकं ग्रामस्य, अन्तिकाद् ग्रामस्य, अन्तिकेन ग्रामस्य। प्रातिपदिकार्थे विधानम्। असत्त्ववचनग्रहणं च अनुवर्तते। सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति। दूरः पन्थाः, दूराय पथे देहि, दूरस्य पथः स्वम्।
न्यासः
दूरदान्तिकार्थभ्यो द्वितीया च। , २।३।३५

"{एवम्प्रकारकं वाक्यं वृत्तौ नास्ति}पञ्चमी च" इति। तदनुवृत्तिसामथ्र्यात्। "तृतीयाऽपि समुच्चीयते" इति। चकारेण। "यथायथम्" इति। यथास्वं यो यस्यात्मीयो विषयस्तत्रासौ भवति, न विभक्त्यन्तरमित्यर्थः॥
बाल-मनोरमा
दूरान्तिकार्थेभ्यो द्वितीया च ५९७, २।३।३५

दूरान्तिक। एभ्य इति। दूरार्थकेभ्योऽन्तिकार्थकेभ्यश्चेत्यर्थः। चकारो व्यवहितयोरपि पञ्चमीतृतीययोः समुच्चयार्थः, नतु "दूरान्तिकार्थैः षष्ठ()न्तरस्या"मिति संनिहितषष्ठ()आ अपि, व्याख्यानात्। तदाह--चात्पञ्चमीतृतीये चेति। प्रातिपदिकार्थमात्रे विधिरयमिति। व्याख्यानादिति भावः। तथाच प्रथमापवाद इति फलितम्। "दूरादावसथान्मूत्रं दूरात्पादावनेजनम्" इति भाष्यप्रयोगात्सप्तम्यर्थेऽधिकरणेऽप्ययं विधिः। ननु दूरः पन्था इत्यत्र कथं न पञ्चमीत्यत आह--असत्त्ववचनस्येति। "दूरः" "पन्था" इत्यत्र पन्था द्रव्यम्। तद्विशेषणं दूरशब्दः सत्त्ववचन इति भावः॥ इति पञ्चमी।

तत्त्व-बोधिनी
दूरान्तिकार्थेभ्यो द्वितीया च ५३५, २।३।३५

दूरं दूराद् दूरेण वेति। इह सप्तम्यपि वक्ष्यते। किंच "दूरान्तिकार्थेभ्यः" इति सूत्रस्य "सप्तम्यधिकरणे च" इत्युत्तरसूत्रेऽप्यनुवर्तनादधिकरणेऽप्येभ्यो विभक्तिचतुष्टयं बोध्यम। तथा च प्रयुज्यते "दूरादावसथान्मूत्रं दूरात्पादावसेचनम्" इति। आवसथस्य दूरे इत्यर्थः। असत्त्ववचनस्येति। सत्त्ववचनत्वमिह सत्त्वविशेषकत्वम्। एवं च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते। तदाह--दूरः पन्था इति। एतेन "करणे च स्तोके"ति सूत्रे---"करणे

किम्()" क्रियाविशेषणे कर्मणि मा भूत्। स्तोकं पचति। क्रिया न द्रव्यम" इति प्राचां ग्रन्थोऽपि व्याख्यातः। न च क्रियाया विशेष्यत्वेन द्रव्यत्वाऽवश्यंभावान्नैतत्प्रत्युदाहरणं युक्तमिति वाच्यम्, धातुवाच्यायाः क्रियाया असत्त्वरूपत्वस्याकरे प्रसिद्धत्वात्। न च विशेष्यत्वे तदनुपपत्तिः। कर्तृकर्मेतरकारकलिङ्गानन्वयित्वमात्रेणाऽसत्त्लरूपत्वोपपत्तेः। उक्तं च ---"क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः। असत्त्वरूपता तस्या इयमेवावधर्यताम्"। इति। फलं व्यापारश्च क्रिया, फलाधारकारकं कर्म, व्यापाराधारकारकं कर्तेति विवेकओः। पञ्चमी।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सप्तमी १।१ ४१ अधिकरणे ७।१ च ० दूरान्तिकार्थेभ्यः ५।३ ३५ अनभिहिते ७।१ १

अर्थः॥

अनभिहिते अधिकरणे सप्तमी विभक्तिः भवति, चकारात् दूरान्तिकार्थेभ्यः च।

उदाहरणम्॥

कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति॥ दूरान्तिकार्थेभ्यः - दूरे ग्रामस्य। विप्रकृष्टे ग्रामस्य। अन्तिके ग्रामस्य। अभ्याशे ग्रामस्य॥

काशिका-वृत्तिः

सप्तम्यधिकरने च २।३।३६

सप्तमी विभक्तिर् भवत्यधिकरणे कारके, चकाराद् दूरान्तिकार्थेभ्यश्च। कटे आस्ते। शकटे आस्ते। स्थाल्यां पचति। दूरान्तिकार्थेभ्यः खल्वपि दूरे ग्रामस्य। अन्तिके ग्रामस्य। अभ्याशे ग्रामस्य। दूरन्ति कार्थेभ्यश्चतस्रो विभक्तयो भवन्ति, द्वितीयातृतीयापञ्चमीसप्तम्यः। सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्। अधीती व्याकरणे। परिगणिती याज्ञिके। आम्नाती छन्दसि। साध्वसाधुप्रयोगे च सप्तमी वक्तव्या। साधुर्देवदत्तो मातरि। असाधुः पितरि। कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या। ऋद्धेषु भुञ्जानेषु दरिद्रा आसते। ब्राह्मणेषु तरत्सु वृषला आसते। अकारकार्हाणां चाकरकत्वे सप्तमी वक्तव्या। दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास् तरन्ति। तद्विपर्यासे च सप्तमी वक्तव्या। ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते। ब्राह्मणेष्वासीनेषु वृषलास् तरान्ति। निमित्तात् कर्मसंयोगे सप्तमी वक्तव्या। चर्मणि द्वीपिनं हन्ति दन्तयोर् हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः।

लघु-सिद्धान्त-कौमुदी

सप्तम्यधिकरणे च ९०६, २।३।३६

अधिकरणे सप्तमी स्यात्, चकाराद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिको ' भिव्यापकश्चेत्याधारस्त्रिधा। कटे आस्ते। स्थाल्यां पचति। मोक्षे इच्छास्ति। सर्वस्मिन्नात्मास्ति। वनस्य दूरे अन्तिके वा॥ इति सप्तमी।इति विभक्त्यर्थाः॥

लघु-सिद्धान्त-कौमुदी

अथ समासाः ९०६, २।३।३६

लघु-सिद्धान्त-कौमुदी

तत्रादौ केवलसमासः। समासः पञ्चधा। तत्र समसनं समासः। स च विशेषसंज्ञा विनिर्मुक्तः केवलसमासः प्रथमः १ प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः २ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः तत्पुरुषभेदः कर्मधारयः। कर्मधारयभेदो द्विगुः ३ प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः ४ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ५ ९०६, २।३।३६

न्यासः

सप्तम्यधिकरणे च। , २।३।३६

"दूरान्तिकार्थेभ्यश्चतरुआओ विभक्तयो भवन्ति" इति। पूर्वसूत्रेण द्वितीयादयस्तिरुआः, अनेन सप्तमी। "सप्तमीविधाने क्तस्येन्विषयस्य" इत्यादि। इन्विषयो यः क्तस्तदीये कर्मणि सप्तमी। विधेया। कश्चेन्विषः क्तः? यस्तदन्तस्तेनैव सह प्रयुज्यत इत्यर्थः। अनन्यत्रभावार्थत्वादत्र विषयशब्दस्य। "अधीती व्याकरणे" इति। अधीतं व्याकरणमनेनेति। "श्राद्धमनेन भुक्तम्" ५।२।८४ इत्यतोऽनेनेत्यनुवत्र्तमाने "पूर्वादीनिः" ५।२।८५ इत्यत इनिरित्यनुवत्र्तमाने च "इष्टादिभ्यश्च" ५।२।८७ इतीनिप्रत्ययः। अत्र यद्यपि कर्मण्येव क्तो विहितस्तथापि तद्धित उत्पन्नेऽधीतव्याकरणोरभिसम्बन्धो निवत्र्तते। अस्ति च धात्वर्थस्य व्याकरणेन सम्बन्ध इति कर्मैव व्याकरणं भवतीत्यतो द्वितीया स्यात्, यथा-- कृतपूर्वी कटमिति। तस्मात् सप्तम्या उपसंख्यानम् = प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()-- योऽसावधीती कत्र्ता तस्य व्याकरणं विषमत्वेन विवक्ष्यते। तस्मादधिकरण इत्येवं सिद्धा सप्तमी॥ "साध्वसाधुप्रयोगे" इत्यादि। अनर्चार्थमिह साधुशब्दस्य ग्रहणम्। अर्चायां हि "साधुनिपुणाभ्यामर्चायाम्" २।३।४३ इत्यनेनैव सिद्धा सप्तमी। "साधुर्देवदत्तो मातरि" इत्यादि। अत्राप्यधिकरण एव सप्तमी। तथा ह्त्र मातृस्थासु क्रियासु मातृशब्दो वर्तते, पितृस्थासु क्रियासु पितृशब्दः; तासाञ्च क्रियाणां साध्वसाधुतां प्रति विषयभावोऽस्तीति वैषयिकाधिकरण एव सप्तमी। वक्तव्यशब्दस्तु व्याख्येय इत्यर्थे वत्र्तते। एवमुत्तरत्रापि। "कारकार्हाणाञ्च" इत्यादि। भावप्रधानोऽत्र कारकशब्दः। क्रियां प्रति येषां कारकत्वं साधनत्वं न्याय्यं ते कारकार्हाः, तेषां कारकार्हत्वे सप्तमी वक्तव्या। "ऋद्धेषु" इत्यादि। ऋद्धा हि भुजिक्रियां प्रति साधनभावमर्हिन्ति। तेषामेव चेह कारकत्वं विवक्षितम्। एतदनुसारेण कारकार्हाणाञ्चाकारकत्व इत्येवमादेरर्थो वेदितव्यः। अत्रापि सर्वत्र "यस्य च भावेन भावलक्षणम्" २।३।३७ इत्येनैव सिद्धा सप्तमी। तथा हि-- ऋद्धादिसम्बन्धिना भुजिक्रियादिलक्षणेनात्र भावेन दरिद्रादिसम्बन्ध्यासनादिभावो लक्ष्यते। "चर्मणि द्वीपिनं हन्ति" इत्यत्र द्वीपिननस्य निमित्तं चर्म, तस्य द्वीपिना कर्मणा सह संयोगः। अत्रापि चकारस्यानुक्तसमुच्चयार्थत्वात् सिद्धा सप्तमी। ननु च दूरान्तिकार्थानुकर्षणार्थश्चकारःच नार्थस्तदनुकर्षणार्थेन चकारेण, सप्तमीति योगविभगादेव दूरान्तिकार्थेभ्यः सप्तममी भविष्यति। अथ वा-- उत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् सप्तमी वेदितव्या॥

बाल-मनोरमा

सप्तम्यधिकरणे च ६२५, २।३।३६

सप्तम्यधिकरणे च। चकाराद्दूरेति। "दूरान्तिकार्थेभ्यो द्वितीया चे"ति पूर्वसूत्रात् "दूरान्तिकार्थेभ्यः" इत्यस्य चकारेणानुकर्षणादिति भावः। औपश्लेषिक इति। उपश्लेषः=संयोगादिसंबन्धः, तत्प्रयोज्य आधारः प्रथम इत्यर्थः। वैषयिक इति। विषयतासंबन्धकृत आधारो द्वितीय इत्यर्थः। अभिव्यापक इति। सकलावयवव्याप्तिकृत आधारस्तृतीय इत्यर्थः। तत्र औपश्लेषिकं कर्तृद्वारकमाधारमुदाहरति--कटे आस्ते इति। "देवदत्तः" इति शेषः। तत्र साक्षाद्देवदत्तात्मककर्तृगतामासनक्रियां प्रति कटस्य संयोगसम्बन्धं पुरस्कृत्य देवदत्तद्वारा तदाधारत्वादधिकरणत्वम्। अथ कर्मद्वारकमौपश्लेषिकमाधारमुदाहरति-स्थाल्यां पचतीति। "तण्डुला"निति शेषः। अत्र साक्षात्तण्डुलात्मककर्मगतां पाकक्रियां प्रति स्थाल्याः संयोगसम्बन्धं पुरस्कृत्य तण्डुलद्वारा आधारत्वादधिकरणत्वम्। रूपे रूपत्वमस्ति, शरीरे

चेष्टास्तीत्यादौ समवायेन औपश्लेषिकमाधारत्वमित्यादि ज्ञेयम्। अथ वैषयिकमाधारमुदाहरति--मोक्षे इच्छास्तीति। अत्र कर्तृभूतेच्छागतां सत्ताक्रियां प्रति मोक्षस्य विषयतासम्बन्धपुरस्कारेण इच्छाद्वाराऽऽधारत्वादधिकरणत्वम्। अथाऽभिव्यापकमाधारमुदाहरति--सर्वस्मिन्नात्मास्तीति। अत्र आत्मरूपकर्तृगतां सत्ताक्रियां प्रति कृत्स्नव्या()प्त पुरस्कृत्य आत्मद्वारा सत्ताधारत्वात्सर्वस्याधिकरणत्वम्। अथ चकारानुकृष्टदूरान्तिकार्थेभ्य उदाहरति--वनस्य दूरे अन्तिके वेति। दूरमन्तिकमित्यर्थः। प्रातिपदिकार्थमात्रे विधिरयम्। विभक्तित्रयेणेति। द्वितीयापञ्चमीतृतीयाभिरित्यर्थः। वस्तुतस्तु उप समीपे श्लेषः संबन्धः, तत्कृतमौपश्लेषिकमिति व्युत्पत्त्या सामीपिकमेवाधारत्वमौपश्लेषिकम्। अत एव "अधिकरणं नाम त्रिप्रकारं, व्यापकमोपश्लेषिकं वैषयिकमिति। शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति अन्यदत उपश्लेषात्। "इको यणचि" अच्युपश्लिष्टस्ये"ति "संहितायाम्" इत्यत्र भाष्यं सङ्गच्छते। अच्युपश्लिष्टस्य=अच्समीपोच्चारितस्येत्यर्थ इति कैयटः। अत एव मासेऽतिक्रान्ते दीयत इत्यत्र मास औपश्लेषिकमधिकरणमिति "तत्र च दीयते कार्यं भववत्" इत्यत्र भाष्यं सङ्गच्छते। अत एव च "तदस्मिन्नधिकमिति दशान्ताड्डः" इत्यत्र एकादश भाषा अधिक अस्मिन् कार्षापणशते इत्यत्राधिकानां एकादशानां कथं शतरुआधिकरणमित्याक्षिप्य व्यापकवैषयिकाधिकरणसंभवादौपश्लेषिकमधिकरणं विज्ञायत इति भाष्यं सङ्गच्छते। एवंच "कटे आस्ते" इत्यादौ औपश्लेषिकाधारोदाहरणं मूलोक्तमनुपपन्नमेव, उक्तभाष्यविरोधात्। एवंच "कटे आस्ते" इत्यादौ एकदेशव्याप्त्या गौणमभिव्यापकाधारत्वम्। सर्वावयवव्याप्तिकृताधिकरणत्वमेव मुख्यम्, वैषयिकमौपश्लेषिकं च गौणमित्यर्थस्य भाष्यसंमतत्वात्। अत एव "स्वरितेनाधिकारः" इति सूत्रे "साधकतमं करण"मिति सूत्रे च भाष्ये "अधिकरणमाचार्यः किं मन्यते?। यत्र कृत्स्नमाधारात्मा व्याप्तो भवति। तर्हि इहैव सप्तमी स्यात्-तिलेषुतैलं, दध्निसर्पिरिति। गङ्गायां घोषः, कूपे गर्गकुलमित्यत्र तु न स्यात्, मुख्य एव कार्यसंप्रत्यया"दित्याशङ्क्य स्वरितेनाधिकं कार्यं भवतीति वचनात्तमब्ग्रहणाच्च न दोष इति समाहितम्। एवंच "कटे आस्ते, गङ्गायां घोषः" इत्यादौ गौणमप्यधिकरणं सप्तम्यर्थं एव। यदि तु "गङ्गायां घोषः" इत्यादौ सामीपिकमधिकरणत्वं न विवक्ष्यते तदा लक्षणेति बोध्यम्। विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्यः। क्तस्येन्विषयस्येति। न च "कृतपूर्वी कट"मित्यत्रापि सप्तमी शङ्क्या, इन्प्रत्ययान्तो यः क्तप्रत्ययान्तस्तस्य कर्मणीत्यर्थाभ्युपगमात्। कर्तरीनिरिति। भावक्तान्तादधीतशब्दात् कर्तरीनिप्रत्यये कृते अधीतीत्यस्याधीतवानित्यर्थः पर्यवस्यति। किम् अधीतवानिति कर्मविशेषजिज्ञासायां व्याकरणमध्ययने कर्मत्वेनान्वेति। तच्च व्याकरणकर्मत्वं न केनाप्यभिहितमिति कृतपूर्वी कटमितिवत् द्वितीयायां प्राप्तायामनेन सप्तमीति भावः।

साध्वसाधुप्रयोगे चेति। "सप्तमी वक्तव्ये"ति शेषः। साधुरिति। हितकारीत्यर्थः। असाधुरिति। अहितकारीत्यर्थः। उभयत्र शेषषष्ठ()पवादः। "साधुनिपुणाब्यामर्चाया"मित्येव सिद्धे इह साधुग्रहणमनर्चार्थम्। यथा साधुर्मृत्यो राजनि। इह तत्त्वकथने तात्पर्यम्। साधुनिपुणाभ्यामित्यत्र साधुग्रहणमस्य प्रयोजनं वक्ष्यते।

निमित्तादिति। कर्मयोगे हेतुवाचकाच्छब्दात् सप्तमी वाच्येत्यर्थः। ननु "जाड()एन बद्ध" इत्यत्रापि सप्तमी स्यादित्यत आह--निमित्तमिह फलमिति। फलमेवेत्यर्थः। इष्टसाधनताज्ञानस्य प्रवर्तकतया फलस्यापि हेतुत्वं बोध्यम्। जन्यजन्कत्वादिसंबन्धं व्यावर्तयितुमाह--योगः संयोगेति। अयुतसिद्धयोः संबन्धः समवायः। अन्ययोस्तु संयोगः। चर्मणीति। चर्मार्थं व्याघ्रं हन्तीत्यर्थः। अत्र द्वीपिना कर्मणा चर्मणः समवाय एव, अवयवावयविनोरयुतसिद्धत्वात्। दन्तयोरिति। दन्तार्थमित्यर्थः। अत्र कुञ्जरेण कर्मणा दन्तयोः समवाय एव। केशेष्विति। केशार्थमित्यर्थः। चमरी-मृगविशेषः। सीम्नीति। सीमार्थमित्यर्थः। हेतुतृतीया प्राप्तेति। तादर्थ्यचतुर्थ्यपीति बोध्यम्। सीमा अण्डकोश इति। "सीमा घट्टस्थितिक्षेत्रे()आण्डकोशेषु च स्त्रियाम्" इति मेदिनी। पुष्कलको गन्धमृग इति। "अथ पुष्कलको गन्धमृगे क्षपणकीलयोः" इति मेदिनी। अत्रापि पुष्कलकेन कर्मणा सीम्नः समवाय एव। हरदत्तस्तु-सीमा ग्रामादिमर्यादा, तस्या

ज्ञानार्थं पुष्कलकः=शङ्कुर्हतः=निखात इति व्याचष्ट। अत्र पुष्कलकेन कमणा सीम्नः संयोगो बोध्यः। वेतनेनेति। अत्र वेतनं भृतिद्रव्यम्, तदर्थमित्यर्थः। अत्र वेतनस्य लूयमानस्य धान्यस्य च तादर्थ्यमेव संबन्धो, न तु संयोगः, नापि समवाय इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यस्य ६।१ ३८ च ० ३८ भावेन ३।१ ३८ भावलक्षणम् १।१ ३८ सप्तमी १।१ ३६

काशिका-वृत्तिः

यस्य च भावेन भावलक्षणम् २।३।३७

सप्तमी इति वर्तते। भावः क्रिया। यस्य च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते, ततो भाववतः सप्तमी विभक्तिर् भवति। प्रसिद्धा च किया क्रियान्तरं लक्षयति। गोषु दुह्यमानासु गतः, दुग्धास्वागतः। अग्निषु हूयमानेषु गतः, हुतेष्वागतः। भावेन इति किम्? यो जटाभिः स भुङ्क्ते। पुनर् भावग्रहणं किम्? यो भुङ्क्ते स देवदत्तः।

न्यासः

यस्य च भावेन भावलक्षणम्। , २।३।३७

कीदृशी पुनः क्रिया क्रियान्तरं लक्षयतीत्य त आह-- "प्रसिद्धा च" इत्यादि। चकारोऽवधारणार्थः, प्रसिद्धैवेत्यर्थः। न हि स्वयमप्रसिद्धं परस्य लक्षणमुपपद्यते। अथ कथं फलायामानेष्वाम्रेषु गतः, पक्तेवष्वागत इत्यत्र सप्तमी, न हीह भावः श्रूयते? यद्यपि न श्रूयते? तथाऽपि गम्यते। फलायमानेषु जातेष्वित्यर्थः॥

बाल-मनोरमा

यस्य च भावेन भावलक्षणम् ६२६, २।३।३७

यस्य च। भावशब्दौ क्रियापर्यायावित्यभिप्रेत्य व्याचष्टे--यस्य क्रिययेति। क्रिया च कत्राश्रया कर्माश्रया च। तत्र कर्माश्रयामुदाहरति--गोष्विति। देवदत्तः कदा गत इति प्रश्ने उत्तरमिदम्। अत्र लक्षकत्व संबन्धे सप्तमी। शेषषष्ठ()पवादः। वर्तमानदोहनविशिष्टाभिर्गोभिज्ञ्राप्यगमनवानित्यर्थः। अत्र दोहनक्रियायाः साक्षाल्लक्षकता। गवां तु तदाश्रयतया। ततश्च गोदोहनदशायां गत इत्युत्तरं पर्यवस्यति। "दुग्धासु गत" इत्यत्र तु अतीतदोहनविशिष्टाभिर्गोभिज्ञ्राप्यमानगमनवानित्यर्थः। गोदोहोत्तरकाले गत इति फलितम्। कर्तृगतक्रियायास्तु ब्राआह्मणेष्वधीयानेषु हगत इत्युदाहार्यम्। अत्र यदवश्यं पुनः पुनर्लक्ष्यज्ञापकं तदेव न लक्षणम्। किंतु सकृज्ज्ञापकमपि। यथा-यं कमण्लुपाणिं भवानद्रीक्षीत्स छात्र इति। यद्यपि सकृदसौ कमण्डलुपाणिर्दृष्टस्तथापि तस्य कमण्डलुर्लक्षणं भवत्येवेति प्रकृतसूत्रे भाष्ये स्पष्टम्। "उदिते आदित्ये जुहोती"त्यत्र तु सामीपिकमधिकरणत्वं सप्तम्यर्थः। उदितादित्यसमीपकाल इत्यर्थः। आदित्योदयोत्तरसमीपकाल इति पर्यवसन्नोऽर्थः। "उपरागे रुआआयात्" इत्यत्र तु उपरागपदेन उपरागाश्रयकालो लक्ष्यत इत्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

यस्य च भावेन भावलक्षणम् ५५७, २।३।३७

यस्य च। निज्ञातकाला हि क्रिया अनिज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणं, तत्र प्रसिद्धक्रियाश्रययोः कर्तृकर्मणोर्वाचकाद्ब्राआह्मणादिशब्दाल्लक्ष्यलक्षणभावसम्बन्धे षष्ठ()आं प्राप्तायामियं सप्तमी। लक्षणकत्वमिह क्रियायाः साक्षात्, आश्रयस्य तु ब्राआह्मणादेः क्रियाद्वारेणेति बोध्यम्। "ब्राआह्मणेष्वधीयानेषु गत" इति कर्तृर्युदाहरणम्। कर्मण्याह--गोष्विति।

अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैवरीत्ये च। अर्हाणामित्यादि। यस्यां क्रियायां ये उचितास्ते अर्हाः। तेषां कर्तृत्वे विवक्षिते सति तत्र सप्तमी वाच्या। तथा यस्यां क्रियायां येषां कर्तृत्वमनुचितं तेषामकर्तृत्वे विवक्षिते च सप्तमी वाच्या। तथा तद्वैपरीत्ये=येषां कर्तृत्वमुचितं तेषामकर्तृत्वे, येषां तु नोचितं तेषां कर्तृत्वे च सप्तमी वाच्येत्यर्थः। आद्यमुदाहरति---सत्सु तरत्स्विति। सन्तो हि तरणक्रियाऽर्हाः कर्तराश्चष द्वितीयमुदाहरति---असुत्सु तिष्ठत्स्विति। अत्र तरणक्रियायामसतामनर्हत्वमकर्तृत्वं च तिष्ठत्स्वित्यनेन द्योत्यते। तद्वैपरीत्ये प्रथममुदाहरति-सत्सु तिष्ठत्स्विति। सतां हि तरणमुचितं, तेषां चाऽर्तृत्वं तिष्ठत्स्वित्यनेन गम्यते। द्वितीयमुदाहरति--असत्सु तरत्()स्वति। असतां हि तरणमनुचितं, तेषां च कर्तृत्वं तरत्सु इत्यनेन गम्यते। यद्यपीदं"यस्य च भावेन---"इत्येव सिद्धं, तथापि लक्ष्य लक्षणभावाऽविवक्षायां सप्तम्यर्थमिदमिति कैयटादयः। तत्त्वतस्तु व्यर्थमेवेदमित्यन्ये।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षष्ठी १।१ ४१ च ० अनादरे ७।१ यस्य ६।१ ३७ च ० ३७ भावेन ३।१ ३७ भावलक्षणम् १।१ ३७ सप्तमी १।१ ३६

काशिका-वृत्तिः

षष्ठी च अनादरे २।३।३८

पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते, चकारात् सा ऽपि भवति। अनादराधिके भावलक्षने भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः। रुदतः प्राव्राजीत्, रुदति प्राव्राजीत् क्रोशतः प्राव्राजीत्, क्रोशति प्राव्राजीत्। क्रोशन्तमनादृत्य प्रव्रजितः इत्यर्थः।

न्यासः

षष्ठी चानादरे। , २।३।३८

अनादरः तिरस्कारः, परिभव इत्यर्थः। "रुदतः" इति। "रुदिर् अश्रुविमोचने" (धा।पा।१०६७) शतृप्रत्ययः॥

बाल-मनोरमा

षष्ठी चाऽनादरे ६२७, २।३।३८

षष्ठी चानादरे। चातसप्तमीत्यनुकृष्यते। अनादरे इति विषयसप्तमी। यस्य चेति पूर्वसूत्रमनुवर्तते। अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठी सप्तमी चेत्यर्थः। फलितमाह--अनादराधिक्ये इति। अनादरोऽधिको यस्मादिति विग्रहः। रुदति रुदत इति। "कदा संन्यस्तवा"निति प्रश्ने उत्तरमिदम्। अत्र लक्षकत्वं षष्ठीसप्तम्योरर्थः। अनादरविशिष्टं प्रव्रजनं धात्वर्थः। षष्ठीसप्तम्यौ तात्पर्यग्राहिके। अनादरश्च लक्षकक्रियाश्रयपुत्रादिविषयः। वर्तमानरोदनक्रियाविशिष्टपुत्रादिज्ञाप्यमनादरविशिष्टं प्रव्रजनमित्यर्थः।

तत्त्व-बोधिनी

षष्ठी चाऽनादरे ५५८, २।३।३८

षष्ठी चानादरे। अनादर इति। "यस्य च भावेन" इत्यनेन सप्तमी। अनादरे सति यो भावं लक्षयतीति। तदेत्फलितमाह अनादराधिक्य इति। केवलभावलक्षणे सप्तम्येव, अनादराधिक्ये तु षष्ठीसप्तम्याविति निष्कर्षः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वामीश्वर॰प्रसूतैः ३।३ च ० षष्ठी १।१ ३८ सप्तमी १।१ ३६

काशिका-वृत्तिः
स्वामीइश्वराधिपतिदायादसाक्षिप्रतिभूप्रसुतैश् च २।३।३९

षष्ठीसप्तम्यौ वर्तते। स्वामिनीश्वर अधिपति दायाद साक्षिन् प्रतिभू प्रसूत इत्येतैर् योगे षष्ठीसप्तम्यौ विभक्ती भवतः। गवां स्वामी, गोषु स्वामी। गवामीश्वरः, गोष्वीश्वरः। गवामधिपतिः, गोष्वधिपतिः। गवां दायादः, गोषु दायादः। गवां साक्षी, गोषू साक्षी। गवां प्रतिभूः, गोषु प्रतिभूतः। गवां प्रसूतः, गोषु प्रसूतः। षष्ठ्याम् एव प्राप्तयां पक्षे सप्तमीविधानार्थं वचनम्।
न्यासः
स्वामी�आराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च। , २।३।३९

स्वामी()आराधिपतीनामेकार्थत्वेऽपि भेदेनोपादानं पर्यायान्तरनिवृत्त्यर्थम्। इह मा भूत्-- ग्रामस्य राजेति। "षष्ठ()आमेव प्राप्तायाम्" इति। शेषलक्षणायां षष्ठ()आं प्राप्तायाम्॥
बाल-मनोरमा
स्वामी�आराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ६२८, २।३।३९

फलितमाह--रुदन्तं पुत्रादिकमिति। स्वामी()आर। षष्ठीसप्तम्याविति। चकारेण तदुभयानुकर्षणादिति भावः। ननु शेषषष्ठ()ऐव सिद्धे किमर्थमिह षष्ठीविधानमित्यत आह--षष्ठ()आमेवेति। गवां गोषु वेति। गोसंबन्धीत्यर्थः। गवां गोषु वा ई()आरः। गवां गोषु वा अधिपतिः। गवा गोषु वा दायादः। पुत्रादिभिग्र्रहीतुं योग्यः पित्राद्यर्जितधनांशो दायः। तमादत्त इति दायादः। "आतोऽनुपसर्गे" इति कविधौ अनुपसर्गग्रहणे सत्यपि अत एव निपातनात्कः। गोसंबन्धिदायाद इत्यर्थः। गवां च दाये अन्वयः नित्यसाकाङ्क्षत्वाद्वृत्तिः। गवात्मकस्यांशस्य आदातेति फलितोऽर्थः। "यस्मादधिकम्" इति सूत्रभाष्ये तु दायादशब्द स्वामिपर्याय इति स्थितम्। गवां गोषु वा प्रसूत इति। गोसंबन्धीत्यर्थः। संबन्धश्च भोक्तृत्वरूपः। तदाह--गा एवेति। एवशब्दान्महिषादिव्यावृत्तिः।

तत्त्व-बोधिनी
स्वामी�आराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ५५९, २।३।३९

स्वामी()आर। "स्वाम्यर्थे"ति वक्तव्ये स्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम्। "विरूपाणामपि समानार्थानाम्" इत्येकशेषोऽत्र न भवति, स्वरूपपरत्वेन समानार्थकत्वाऽभावात्। दायाद इति। दायमादत्ते इति दायादः। सोपसर्गादप्यादन्तादत एव निपातनात्कः। "गवां गोषु वा दायाद" इत्यत्र यद्यपि गवाभित्येतत्समुदायस्य विशेषणं, तथापि दीयतेऽसौ दाय इति व्युत्पत्त्या अवयवार्थभूतमंशं स्पृशत्येव, तथा चात्र गवात्मकस्यांऽशस्य आदातेति फलितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आयुक्तकुशलाभ्याम् ३।२ च ० आसेवायाम् ७।१ षष्ठी १।१ ३८ सप्तमी १।१ ३६

काशिका-वृत्तिः
आयुक्तकुशलाभ्यां च आसेवायाम् २।३।४०

षष्ठीसप्तम्यौ वर्तते। आयुकतः व्यापारितः, कुशलः निपुणः, ताभ्यां योगे आसेवायां गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः। आसेवा तत्पर्यम्। आयुक्तः कटकरणस्य, आयुक्तः कटकरणे कुशलः कटकरनस्य, कुश्लः कटकरणे। आसेवायाम् इति किम्? आयुक्तो गौः शकटे। तत्र सप्तम्येव अधिकरणे भवति।
न्यासः
आयुक्तकुशलाभ्यां चासेवायाम्। , २।३।४०

आयुक्तता निपुणता च कटादिकरणविषयैवेति सप्तम्यामेव प्राप्तायां पक्षे षष्ठीविधानार्थं वचनम्। "आसेवायामिति किम्? आयुक्तो गौः शकटे" (इति)। ईषद्युक्त इत्यर्थः॥
बाल-मनोरमा
आयुक्तकुशलाभ्यां चाऽऽसेवायाम् ६२९, २।३।४०

आयुक्त। आसेवापदं व्याचष्टे--तात्पर्ये इति। औत्सुक्ये इत्यर्थः। "तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः" इत्यमरः। आयुक्तपदं व्याचस्टे--व्यापारित इति। प्रवर्तित इत्यर्थः। आयुक्तः कुशलो वेति। हरिपूजनविषये आयुक्तः=प्रवर्तित इत्यर्थः। अत्र वैषयिकाधिकरणत्वविवक्षायां तु षष्ठ()आमेव प्राप्तायां वचनम्। आयुक्तो गौरिति। आङीषदर्थे। "युजिर्योगे"। तदाह--ईषद्युक्त इत्यर्थ इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यतः ० ४२ च ० ४२ निर्धारणम् १।१ ४२ षष्ठी १।१ ३८ सप्तमी १।१ ३६

काशिका-वृत्तिः
यतश् च निर्धारनम् २।३।४१

षष्ठीसप्तम्यौ वर्तते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक् करनं निर्धारनम्। यतो निर्धारनं ततः षष्ठी सप्तम्यौ विभक्ती भवतः। मनुष्याणाम् क्षत्रियः शूरतमः, मनुष्येषु क्षत्रियः शूरतमः। गवं कृष्णा सम्पन्नक्षीरतमा, गोषु कृष्णा सम्पन्नक्षीरतमा अध्वगानां धवन्तः शीघ्रतमा, अध्वगेषु धावन्तः शीघ्रतमाः।
न्यासः
यतश्च निर्धारणम्। , २।३।४१

किमर्थं पुनरिदम्? यावता निर्धार्यमाणोऽवयवः समुदायान्तर्भूतः; तत्र यदा समुदायास्याधिकरणत्वं विवक्ष्यते तदा सप्तमी सिद्धैवेति, यथा-- वृक्षे शाखेति; यदा त्ववयवावयविसम्बन्धस्तदा षष्ठी, यथा-- वृक्षस्य शाखेति? सत्यमेतत्; प्रपञ्चार्थ वचनम्॥

बाल-मनोरमा

यतश्च निर्धारणम् ६३०, २।३।४१

यतश्च निर्धारणम्। जातिगुणेति। "यतः" इति "ततः" इति च पञ्चम्यर्थे तसिः। यस्मात्समुदायादेकदेशस्य जातिगुणक्रियासंज्ञाभिः पृथक्करणं=स्वेतरव्यावृत्तधर्मविशेषवत्त्वबोधनं निर्धारणशब्दवाच्यं गम्यते तस्मात्षष्ठीसप्तम्यावित्यर्थः। अत्र स्वशब्देन एकदेश उच्यते। तत्र जात्या पृथक्करणमुदाहरति--नृणा नृषु वेति। नृशब्दो मनुष्यसमुदाये वर्तते। उद्भूतावयवभेदविवक्षायां बहुवचनम्। द्विज इति तु जात्यभिप्रायमेकवचनम्। षष्ठीसप्तम्योरवयवावयविभावः संबन्धोऽर्थः, उदाह्रतनिर्धारणविषयत्वरूपश्च। ततश्च मनुष्यसमुदायैकदेशभूतो द्विजः स्वेतरव्यावृत्तश्रैष्ठ()रूपधर्मक इत्यर्थः। गुणेन पृथक्करणमुदाहरति--गवां गोषुवेति। गोसमुदायैकदेशभूता कृष्णा गौः स्वेतरव्यावृत्तबहुक्षीरत्वरूपधर्मिकेत्यर्थः। क्रियया पृथक्करणमुदाहरति--गच्छतां गच्छत्सु वेति। गच्छत्समुदायैकदेशभूतो धावन्स्वेतरव्यावृत्तशैघ्र्यधर्मक इत्यर्थः। संज्ञया पृथक्करणमुदाहरति--छात्राणामिति। छात्रसमुदायैकदेशभूतो मैत्रनामा स्वेतरव्यावृत्तपटुत्वधर्मक इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पञ्चमी १।१ विभक्ते ७।१ यतः ० ४१ च ० ४१ निर्धारणम् १।१ ४१

काशिका-वृत्तिः

पञ्चमी विभक्ते २।३।४२

यतश्च निर्धरनम् इति वर्तते। षष्ठीसप्तम्यपवादो योगः। विभागः विभक्तम्। यस्मिन् निर्धारणाऽश्रये विभक्तम् अस्य अस्ति ततः पञ्चमी विभक्तिर् भवति। माथुराः पाटलिपुत्रकेभ्यः सुकुमारतराः, आढ्यतराः।

न्यासः

पञ्चमी विभक्ते।, २।३।४२

"विभागो विभक्तम्" इति। "नपुंसके भावे क्तः" ३।३।११४। " यस्मिन्निर्धारणाश्रये" इति। यतो निर्धारयते स इह निर्धारणाश्रय इति सर्वस्मिन्नेव निर्धारणाश्रये विभागोस्तीति विशेषणोपादानसाश्र्याद्विभाग एव यत्र स निर्धारणाश्रयो विज्ञायते; तेन कृष्णा गवां सम्पन्नक्षीरतमेत्यत्र न भवति। तथा हि-- गोषु निर्धार्यमाण एकदेशो यस्मात् गोत्वेनान्तर्भूतः प्रतीयते तस्मान्नास्ति विभाग इति। यदा तु कृष्णेन गुणेन पथग्भूतः प्रतीयते तदास्ति विभाग इति। नात्र निर्धारणाश्रयो विभाग एव। इह पुनर्माथुराः पाटलिपुत्रकेभ्य आढ()तरा इति माथुरत्वेन नाप्याढ()तरत्वेन माथुराणामन्तर्भावः। तस् #आदत्र विभाग एवेत्ययमस्य योगस्य विषयः। अन्ये त्वाहुः-- यत्र राशीकृत्य पृथक्करणं स पूर्वस्य योगस्य विषयः; यत्र तु पृथग्भूतस्यैव गुणान्तराविष्करणं सोऽस्य; तत्र द्वयोरप्यवस्थयोर्विभाग एवेति कृत्वा अयमपि योगः प्रपञ्चार्थ एव। विभागो हि सम्नब्धात्प्रच्युतिः। पाटलिपुत्रकाश्च सम्बन्धात् प्रच्यवमानानां माथुराणां सम्बन्धे प्रच्युतेरवधिभावमुपवान्तीत्यपादान इत्येवं पञ्चमी सिद्धा॥

बाल-मनोरमा

पञ्चमी विभक्ते ६३१, २।३।४२

पञ्चमी विभक्ते। विभागो विभक्तिमिति। भावे क्तप्रत्ययाश्रयणादिति भावः। "यतश्चनिर्धारण"मित्यनुवर्तते। निर्धारणावधिभूतानां मनुष्यादीनां निर्धार्यमाणानां द्विजानां च सामान्यात्मनाऽभेदो, विशेषात्मना भेदश्च स्थितः। एवं च निर्धारणे सर्वत्र कथंचिद्भेदस्य सत्त्वाद्विभक्त इत्यनेन भेद एवेत्यर्थो विवक्षितः। ततश्च यत्र निर्धारणावधेर्निर्धार्यमाणस्य च भेद एव, न तु केनाप्युपात्तरूपेणाऽभेदस्तत्रैवास्य प्रवृत्तिरित्यभिप्रेत्याह--निर्धार्यमाणस्येति। "निर्धारणावधे"रिति शेषः, "यतश्च निर्धारण"मित्यनुवृत्तेः। अत्रावधिव्यवृत्तधर्मवत्त्वबोधनमेव , न तु समुदायादेकदेशस्येत्यंशो विवक्षितः, असम्भवादित्यभिप्रेत्योदाहरति--माथुरा इति। अवधित्वं पञ्चम्यर्थं मथुरादेशीयाः पाटलीपुत्रदेशीयापेक्षया अतिशयेनाढ()आ धनिन इत्यर्थः। अत्र मथुरादेशीयत्वपाटलीपुत्रदेशीयत्वयोर्गोत्वाऽ()आत्ववद्विरोधात्कथञ्चिदपि तद्रूपेण नाऽभेद इति निर्धारणावधेः पञ्चमीति भावः।

तत्त्व-बोधिनी

पञ्चमी विभक्ते ५६०, २।३।४२

पञ्चमी विभक्ते। भेद एवेति। न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः। तत्र पञ्चमी स्यादिति। नन्वेवं माथुरा इत्यत्रापि पञ्चमी स्यात्। मैवम्। पूर्वसूत्रमिहानुवर्तते। तेन यतो निर्धार्यते तत एवेत्यर्थात् निर्धारणावधेरेव पञ्चमीप्रवृत्तेः। अनभिहिताधिकारान्माथुरा इत्यत्र नातिप्रसङ्ग इत्यन्ये। माथुरा इति। न ह्त्र निर्धारणावधेर्निर्धार्यमाणस्य च गवां कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति, किन्तु शब्दोपात्तयोद्र्वयोर्विरोध एव। इदं च सूत्रं बुद्धि परिकल्पितापायमाश्रित्यापादानप्रकरणे भाष्ये प्रत्याख्यातम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ साधुनिपुणाभ्याम् ३।२ अर्चायां ७।१ सप्तमी १।१ ४५ अप्रतेः ६।१

काशिका-वृत्तिः

साधुनिपुणाभ्याम् अर्चायां सप्तम्यप्रतेः २।३।४३

साधु निपुण इत्येताभ्याम् योगे ऽर्चायां गम्यमानायां सप्तमी विभक्तिर् भवति, न चेत् प्रतिः प्रयुज्यते। मातरि साधुः। पितरि साधुः। मातरि निपुणः। पितरि निपुणः। अर्चायाम् इति किम्? साधुर्भृत्यो राज्ञः। तत्त्वकथने न भवति। अप्रतेः इति किम्? साधुर् देवदत्तो मातरं प्रति। अप्रत्यादिभिरिति वक्तव्यम्। साधुर्देवदत्तो मातरम् परि। मातरमनु।

न्यासः

साधुनिपुणाभ्यमर्चायां सप्तम्यप्रतेः। , २।३।४३

"{अप्रत्यादिभिरहित वक्तव्यम्" इति वृत्तौ पाठः।} अप्रत्यादेरिति वक्तव्यम्" इति। के पुनः प्रत्यादयः? येषां "लक्षणेत्थम्भूताख्यान" १।४।८९ इत्यादिना कर्मप्रवचनीयसंज्ञा विहिता ते प्रतिपर्यनवः इत्यादयः॥ प्रसितशब्दोऽयं गुणवचनोऽप्यस्ति-- प्रकृष्टः सितः प्रसितः, क्रियाशब्दोऽप्यस्ति-- "षिञ् बन्धने" (धा।पा।१४७७) इत्यस्य प्रपूर्वसय्

निष्ठायां व्युत्पाद्यते, तत्रेहोत्सुकशब्देन क्रियाशब्देन साहचर्यात् क्रियाशब्दो विज्ञायत इत्यत आह-- "प्रसितः प्रसक्तः" इति। "यस्तत्र नित्यमेवाबद्धः स प्रसितशब्देनोच्यते" इति। आबद्ध इवाबद्धः, यो हि यत्र प्रसक्तः स तत्राबद्ध इव भवति। "केशैः प्रसितः, केशेषु प्रसितः" इत्यादि। प्रसितत्वमुत्सुकत्वञ्च केशविषयमिति "सप्तम्यधिकरणे" २।३।३६ इत्येव सिद्धा सप्तमी पक्षे तृतीयाविधानार्थं वचनम्॥

बाल-मनोरमा

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ६३२, २।३।४३

शादुनिपुणाभ्याम्। शेषषष्ठ()पवादः। मातरिसाधुरिति। हितकारीत्यर्थः। निपुणो वेति। मातरि कुशल इत्यर्थः। "शुश्रूषाया"मिति शेषः। निपुणो राज्ञ इति। साधुशब्दप्रयोगे तु अर्चा विनापि सप्तमी भवत्येव, "साध्वसाधुप्रयोगे चे"त्युक्तेः। इह साधुग्रहणं तु अर्चायां प्रत्यादियोगे सप्तमीनिवृत्त्यर्थम्।

अप्रत्यादिभिरिति। प्रति, परि, अनु एतैर्योगे सति साधुनिपुणाभ्यां योगेऽपि न सप्तमीति भावः।

तत्त्व-बोधिनी

साधुनिपुणभ्यामर्चायां सप्तम्यप्रतेः ५६१, २।३।४३

साधुनिपुणाभ्यामर्चायां। "पुण कर्मणि शुभे" अस्मान्निपूर्वादिगुपधलक्षणः कः। "अर्च पूजायाम्" अस्माद्भौवादिकात् "गुरोश्च हलः" इत्यप्रत्यये टाप्। चौरादिकात्तु "ण्यासश्रन्थ---" इति युचि--अर्चनेति स्यात्। निपुणो राज्ञ इति। साधुशब्दप्रयोगे त्वर्चां विना सप्तमी भवत्येव, "साध्वसाधुप्रयोगे च"इति वार्तिकात्।

अप्रत्यादिभिरिति वक्तव्यम्॥ अप्रत्यादिभिरिति। "लक्षणेत्थम्---" इति सूत्रोपात्ताः प्रत्यादयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रसितोत्सुकाभ्याम् ३।२ तृतीया १।१ ४५ च ० सप्तमी १।१ ४३

काशिका-वृत्तिः

प्रसितौत्सुकाभ्यां तृतीया च २।३।४४

प्रसित उत्सुक इत्येताभ्यां योगे तृतीया विभक्तिर् भवति, चकारात् सप्तमी च। प्रसितः प्रसक्तः, यस् तत्र नित्यम् एव अवबद्धः स प्रसितशब्देन उच्यते। केशैः प्रसितः केशेषु प्रसितः। केशैरुत्सुकः, केशेषु उत्सुकः।

बाल-मनोरमा

प्रसितोत्सुकाभ्यां तृतीया च लुपि ६३३, २।३।४४

प्रसितोत्सुकाभ्याम्। "तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः" इत्यमरः। वैषयिकाधिकरणत्वे सम्यम्यामेव प्राप्तायामिदं वचनम्।

तत्त्व-बोधिनी

प्रसितोत्सुकाभ्यां तृतीया च ५६२, २।३।४४

प्रसितोत्सुकाभ्यां। "तत्परे प्रसिताऽऽसक्तौ" इत्यमरः। उत्सुकसाहचर्यात् प्रसितोऽपि तत्पर एवेह गृह्यते, रूढ()आ च। तेन प्राकर्षेण सितः=शुक्ल इत्यर्थे न भवति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नक्षत्रे ७।१ च ० लुपि ७।१ तृतीया १।१ ४४ सप्तमी १।१ ४३

काशिका-वृत्तिः
नक्षत्रे च लुपि २।३।४५

तृतीयासप्तम्यावनुवर्तते। लुबन्तात् नक्षत्रशब्दात् तृतीयासप्तम्यौ विभक्ती भ्वतः। पुष्येण पायसमश्नीयात्, पुष्ये पायसमश्नीयात्। मघाभिः पललौदनम्, मघसु पललौदनम्। नक्षत्र इति किम्? पञ्चालेषु वसति। लुपि इति किम्? मघासु ग्रहः। इह कस्मान् न भवति, अद्य पुस्यः, अद्य कृत्तिका? अधिकरणे इति वर्तते। वचनं तु पक्षे तृतीयाविधानार्थम्।
न्यासः
नक्षत्रे च लुपि। , २।३।४५

नक्षत्रे च लुपीति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमीविधानम्। अत एवाह-- "लबन्तान्नक्षत्रशब्दात्" इत्यादि। "पुष्येण" इत्यादि। "नक्षत्रेण युक्तः कालः" ४।२।३ इति विहितस्याणः "लुबविशेषे" ४।२।४ इति लुप्। पञ्चालेषु वसतीत्यत्रापि "तस्य निवासः" २।३।३६ इति विहितस्याणः "जनपदे लुप्" ४।२।८० इति लुप्()। "मघासु ग्रहः" इति। सामीप्येऽधिकरण एव सप्तमी। अत्र "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यस्यार्थस्याविवक्षितत्वादण् न भवति। "अद्य पुष्यः" इति। पूर्ववदण्, लुप्। "अधिकरणे" २।३।३६ इत्यनुवत्र्तते। न चेहाधिकरणत्वं विवक्षितमिति भावः॥
बाल-मनोरमा
नक्षत्रे च लुपि ६३४, २।३।४५

नक्षत्रे च लुपि। "नक्षत्रे " इत्यनन्तरं "प्रकृत्यर्थे सती"ति शेषः। लुप्शब्देन लुप्संज्ञाया लुप्तप्रत्ययार्थो विवक्षितः। तदाह--नक्षत्रे प्रकृत्यर्थे इति। अधिकरण इति। "सप्तम्यधिकरणे चे"त्यत मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। मूलेनेति। मूलनक्षत्रयुक्तकाल इत्यर्थः। "नक्षत्रेण युक्तः कालः" इत्यण्। "लुबविशेषे" इति तस्य लुप्। अधिकरणे किम्?। मूलं प्रतीक्षते। नक्षत्र इति किम्?। पञ्चालेषु तिष्ठति। इह "जनपदे" इति लुप्।

तत्त्व-बोधिनी
नक्षत्रे च लुपि ५६३, २।३।४५

नक्षत्रे च लुपि। लुप्शब्दोऽत्रार्थविशेषे लाक्षणिक इत्याशयेनाह--यो लुप्संज्ञयेत्यादि। अधिकरण इति। एतच्च "सप्तम्यधिकरणे च" इत्यतो मण्डूकप्लुत्यानुवर्तत इति भावः। अधिकरणे किम्, मूलं प्रतीक्षते, मूलाय स्पृहयति। मूलेनेति। "नक्षत्रेण युक्तः कालः" इत्यणो "लुबविशेषे" इति लुप्। नक्षत्र इति किम्()। पञ्चालेषु तिष्ठति। इह "जनपदे लुप्" इथि लुप्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे ७।१ प्रथमा १।१ ४८

समासः॥

प्रातिपदिकस्य अर्थः प्रातिपदिकार्थः, षष्ठीतत्पुरुषः॥
प्रातिपदिकार्थं च, लिङ्गं च, परिमाणं च, वचनं च, प्रातिपदिकार्थलिङ्गपरिमाणवचनं, समाहारः द्वन्द्वः
प्रातिकदिकार्थलिङ्गपरिमाणवचनं च अदः मात्रं च, प्राति॰वचनमात्रं, तस्मिन्, प्राति॰वचनमात्रे, कर्मधारयतत्पुरुषः,
द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकम् अभिसम्बध्यते, इत्येतस्मात् नियमात् मात्रशब्दः प्रयेकम् अभिसम्बध्यते॥

अर्थः॥

प्रातिपदिकार्थः=सत्ता। लिङ्गं=स्त्रीपुंनपुंसकानि। परिमाणं=तोलनम्। वचनम्ेकः, द्वौ, बहवः। प्रातिपदिकार्थमात्रे,
लिङ्गमात्रे, परिमाणमात्रे, वचनमात्रे च प्रथमा विभक्तिः भवति॥

उदाहरणम्॥

प्रातिपदिकार्थमात्रे - उच्चैः, नीचैः। लिङ्गमात्रे - कुमारी, वृक्षः, कुण्डम्। परिमाणमात्रे - द्रोणः, खारी, आढकम्। वचनमात्रे
- एकः, द्वौ, बहवः॥
काशिका-वृत्तिः
प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २।३।४६

प्रातिपदिकार्थः सत्ता। लिङ्गं स्त्रीलिङ्गपुंलिङ्गनपुंसकानि। परिमणं द्रोणः, खारी, आढकम्। वचनम्
एकत्वद्वित्वबहुत्वानि। मात्रशब्दः प्रत्येकम् अभिसम्बध्यते। प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, प्रिमाणमात्रे, वचनमात्रे
प्रथमा विभक्तिर् भवति। प्रातिपदिकार्थमात्रे उच्चैः। नीचैः। लिङ्गग्रहणं किम्? कुमारी, वृक्षः, कुण्डम् इत्यत्र अपि यथा
स्यत्। परिमाणग्रहणं किम्? द्रोणः, खारी, आढकम् इत्यत्र अपि यथा स्यात्। वचनग्रहनं किम्? एकत्वाऽदिषु उक्तेष्वपि
यथा स्यात्। एकः, द्वौ, बहवः। प्रातिपदिकग्रहनं किम्? निपातस्य अनर्थकस्य प्रातिपदिकत्वम् उक्तं, ततो ऽपि यथा
स्यात्। प्रलम्बते। अध्यागच्छति।
लघु-सिद्धान्त-कौमुदी
८९१, २।३।४६

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा॥ नियतोपस्थितिकः प्रातिपदिकार्थः। मात्रशब्दस्य प्रत्येकं योगः।
प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्। प्रातिपदिकार्थमात्रे - उच्चैः। नीचैः।
कृष्णः। श्रीः। ज्ञानम्। लिङ्गमात्रे - तटः, तटी, तटम्। परिमाणमात्रे - द्रोणो व्रीहिः। वचनं संख्या। एकः, द्वौ, बहवः॥
न्यासः
प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा। , २।३।४६

"प्रातिपदिकार्थः सत्ता"इति। यदि जातिस्तदा देवदत्तादौ न स्यात्। अथ सतो भावः सत्ता, तदाकाशकुसुमादौ न
स्यादित्याह-- प्रादिपदिकार्थः सत्तेति। यत्रार्थान्तरनिरपेक्षा शब्दस्य प्रवृत्तिः स सर्वः प्रातिपदिकार्थः।

सत्ताग्रहणन्तूपलक्षणार्थम्। उच्चैर्नीचैः" इति। अत्रोच्चैः शब्दस्य स्वार्थे जात्याद्यर्थान्तनिरपेक्षः वृत्तिः। अत्र च प्रथमायाः प्रयोजनम्-- "सपूर्वायाः प्रथमाया विभाषा" ८।१।२६ इति विकल्पेन तेमयादिविधिर्यथा स्यात्-- ग्राम उच्चैस्ते स्वम्, ग्राम उच्चैस्तव स्वमिति। पदसंज्ञा तु षष्ठ()आऽपि स्यादेव। "कुमारी, वृक्षः, कुण्डम्" इति। ननु चात्रापि प्रातिपदिकार्थ इत्येवंसिद्धा प्रथमा; लिङ्गमपि प्रातिपदिकार्थ एव भवति। तथा च वक्ष्यत "स्त्रियाम्" ४।१।३ इत्यत्र "सिद्धास्तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः" (वा।४।१३) इति? नैतदस्ति; इदमपि हि तत्र वक्ष्यति-- "अथ वा पुनरिदमस्तु। स्त्रियामभिधेयायाम्" (म।भा।४।१।३) इति। किञ्च-- स्त्रीतवं प्रत्येषा गतिः स्यात्, पुंनपुंसके तु नियोगतो विभक्तिवाच्ये एव। तथा हि-- विना विभक्त्या तटशब्दाः प्रत्युज्यमानः किं पुंस्त्वमाचष्टे? उत नपुंसकत्वम्? इति सन्देहः स्यात्। तत्र यथा राज्ञः पुरुषः इत्यत्र प्रातिपदिकार्थेनानुपात्ते स्वस्वामिकसम्बन्धे तस्य चाभिधाने विभक्त्यपक्षया षष्ठी भवति, तथा पुंनपुंसकयोरपि षष्ठी स्यात्। तस्माल्लिङ्गग्रहणं कत्र्तव्यम्। "द्रोणः, खारी, आढकम्" इति। ननु चात्रापि प्रातिपदिकार्थत्वादेव सिध्यति प्रथमा, तथा हि -- द्रोणादयः शब्दाः परिमाणे लौहे दारुमये वा अर्थान्तरनिपेक्षा एव वत्र्तन्ते? सत्यम्; सिध्यति तदा यदा परिमाण एव वत्र्तन्ते, यदा तु पुनः परिमेये वर्तन्ते तदा न सिध्यति। तथा हि-- द्रोणादयः शब्दा द्रोणादिकं परिमाणमर्थान्तरं प्रवृत्तिनिमित्तमुपादाय व्रीह्यादौ परिमेयं वत्र्तन्ते। कथं पुनस्ते तत्र वत्र्तन्ते? सोऽयमित्यबेदसम्बन्धात्- द्रोणपरिमितो व्रीहिद्र्रोण इति। यद्येवम्, निमित्तरूपेण निमित्तनोऽभिधानादव्यतिरिक्त एव प्रातिपदिकार्थ इति प्रातिपदिकार्थ इत्येव सिद्धा प्रथमा? न सिध्यति, न हि मुख्ये सति गौणस्याश्रयणं युक्तम्। नन्वेवमपि लिङ्गग्रहणादेवात्र प्रथमा भविष्यति, त()त्क परिमाणग्रहणेन? नैतदस्ति; तस्य हि यत्र परिमाणं नास्ति सोऽवकाश इति। अत्र परिमाणाधिक्ये षष्ठ()एव स्यात्। तस्मात् परिमाणग्रहणं कत्र्तव्यम्। परिमाणग्रहणञ्च यत्र निमित्तादर्थान्तरे सोऽयमित्यभेदसम्बन्धाच्छब्दः प्रवत्र्तते, तदुपलक्षणार्थ वेदितव्यम्। तेन परिमाणवदर्थान्तरभूतेष्वप्युन्मानादिषु प्रथमा भवति। घृतम्, पलम्, दीर्घ काष्ठम्, शुक्लः पटः, हस्तो मुष्टिर्वितस्तिरित्येवमादि सिद्धं भवति। कुत एतत्? मात्रशब्दात्। स ह्रत्र व्याप्तिवचनो गृह्रते, यथा-- कन्यामात्रं वरयति, ब्राआह्णमात्रं भोजयतीति। तेन परिमाणग्रहणस्यैवोपलक्षणार्थता विज्ञायते यदि तु यथा "पयोमात्रं भुङ्क्ते" इत्यत्र मात्रशब्दो नियमार्थः, तथेहापि नियमार्थ एव स्यात्; ततश्चोन्मानादिषु प्रथमा न स्यात्; तस्य परिमाणादन्यत्वात्-- उक्तेष्वप्येकत्वादिषु प्रथमा यथा स्यादिति। वचनग्रहणे त्वसत्युक्तेष्वेकत्वादिषु प्रथमा न स्यात्। "अनभिहिते" २।३।१ इत्यधिकारात्। ननु च परिगणनं तत्र कृतम्, तत् कुतोऽयं प्रसङ्गः? नैतदस्ति; प्रत्याख्यातं हि तत्र परिगणनम्। तथा हि--रूढः कर्म, भीष्मादयोऽपि कर्मणि, तत्र कर्माणि, तत्र कर्मणीत्येव द्वितीया सिद्धा। कटशब्दादुत्पद्यमाना द्वितीयया सामान्यकर्मोक्तम्, न विशेषकर्म। तत्रावश्यं विशेषो वक्तव्य इति भीष्मादिभ्योऽपि विशेषाभिधानार्थ द्वितीया भविष्यति। अथ वा-- कट एव कर्म, तत्सामानाधकरण्यात् भीष्मादिभ्योऽपि द्वितीया भविष्यति; नार्थः परिगणनेन। यत्पुनरिदं "तिङकृत्तद्धितसमासैः परिसंख्यानम्" २।३।१ इति वृत्तावुपन्यसत्म्, तदेभिरेवाभिधानं सम्भवतीति सम्भवप्रदर्शनार्थपरं वेदितव्यम्। यद्यप्येकादिभिरपि संख्याशब्दैरेक्तवादीनामभिधानं सम्भवति, तथाऽप्यभिहितेऽपि तैरेत्कत्वादावर्थे वचनग्रहणात् यत्नात् विभक्त्येति। तैरप्यभिधानस्य सम्भवप्रदर्शनार्थ यत्नः कृतः। "निपातरस्यानर्थकस्य" इत्यादि। अथार्थविशेषणार्थ प्रातिपदिकग्रहणं कस्मान्न विज्ञायते? असति हि तस्मिन् न ज्ञायते-- कस्यार्थ इति, तथा चार्थमात्रे प्रथमा स्यात्? नैतदस्ति;प्रातिपदिकाद्धि प्रथमा विधीयते। तत्रासति प्रातिपदिकग्रहणे प्रातिपदिकार्थ एव भवतीति विज्ञायते। तस्याद्वृत्तिकारोक्तमेव प्रातिपदिकग्रहणस्य प्रयोजनं न्याय्यम्॥

बाल-मनोरमा

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ५२५, २।३।४६

तदेवं "ङ्याप्प्रातिपदिका"दित्यधिकृत्य विहिताः स्वादिप्रत्ययाः सप्रपञ्चं निरूपिताः। तत्र

प्रथमादिसप्तम्यन्तसप्तविभक्तीनामर्थविशेषव्यवस्थां दर्शयितुमुपक्रमते-प्रातिपदिकार्थ। ननु "प्रवृत्तिनिमित्तं व्यक्तिश्चेति द्विकं प्रातिपदिकार्थः", "प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं चेति त्रिकं प्रातिपदिकार्थः", प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं संख्या चेति चतुष्कं प्रातिपदिकार्थः, प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं सङ्ख्या कारकं चेति पञ्चकं प्रातिपदिकार्थः" इत्येते पक्षा "सरूपाणामेकशेष एकविभक्तौ" "स्त्रिया"मित्यादिसूत्रेषु भाष्ये स्थिता मञ्जूषायां प्रपञ्चिताश्च। तत्र त्रिकादिपक्षेषु लिङ्गस्यापि प्रातिपदिकार्थत्वात्पृथग्ग्रहणं व्यर्थमित्यत आह--नियतेति। नियता उपस्थितिर्यस्येति विग्रहः। यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः। एवंच तटः तटी तटमित्याद्यनियतलिङ्गेषु नियमेन कस्यापि लिङ्गस्योपस्थित्यभावात्प्रातिपदिकार्थशब्देनाऽग्रहणात्पृथग्लिङ्गग्रहणमावश्यकमिति भावः। मात्रशब्दस्य वचनशब्देनैवान्वयभ्रमं वारयति--मात्रशब्दस्येति। प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं चेति द्वन्द्वः। प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्र"मित्यस्वपदविग्रहः। मात्रशब्दोऽवधारणे। "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः। "मयूरब्यंसकादयश्चेति नित्यसमासः। मात्रशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रातिपदिकार्थे, लिङ्गे, परिमाणे, वचने, च प्रत्येकमन्यवय इत्यर्थः। वचनं सङ्ख्येति वक्ष्यति। ननु प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे सङ्ख्यामात्रे च प्रथमेत्यनुपपन्नं, लिङ्गादीनां केवलानां प्रातिपदिकार्थं विना क्वाप्यनुपस्थितेरित्याशङ्क्य-"अत एव बाधकाल्लिङ्गमात्रेऽधिके इति विवक्षित"मित्यभिप्रेत्य व्याचष्टे--लिङ्गमात्राद्याधिक्ये इति। लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये चेत्यर्थः। प्रातिपदिकार्थमात्र #इत्यस्योदाहरति--उच्चैरित्यादि। नन्वव्ययेषु "सामान्ये नपुंसक"मिति नपुंसकत्वस्य च कृष्णशब्दे पुंस्त्वस्य च श्रीशब्दे स्त्रीत्वस्य च ज्ञानशब्दे नपुंसकत्वस्य च भानात्कथं प्रातिपदिकार्थस्योदाहरणान्येतानीत्यत आह--अलिङ्गा इत्यादि। "अव्ययादाप्सुपः" इति सूत्रे "आब्ग्रहणं व्यर्थमलिङ्गत्वा"दिति भाष्योक्तरीत्याऽव्यये कस्यापि लिङ्गस्यानुपस्थ#इतिरिति प्रातिपदिकार्थमात्रे इत्यस्य भवत्यव्ययमुदाहरणम्। कृष्णशब्दे पुंस्त्वस्य श्रीशब्दे स्त्रीत्वस्य ज्ञानशब्दे नपुंसकत्वस्य च नियमेन भानमस्ति तेषां नियतलिङ्गत्वात् अतस्तेषु लिङ्गनामपि प्रातिपदिकार्थान्तर्भावात्तेषामपि प्रातिपदिकार्थमात्रे इत्युदाहरणत्वं निर्बाधमिति भावः। यद्यपि "कृष्णः पटः" "कृष्णा पटी" "कृष्णं वस्त्र"मित्यादौ कृष्णशब्दस्त्रिलिङ्गः, तथापि भगवत्पर एवात्र कृष्णशब्दो विवक्षित इति भावः। नच प्रातिपदित्तोक्तार्थे किं प्रथमयेति वाच्यम्, एकत्वादिसंख्याबोधार्थत्वात्। नचाऽव्ययात्प्रथमोत्पत्तेः फलाऽभावः "अव्ययादाप्सुप" इति लुकोऽवश्यं प्रवृत्तेरिति वाच्यं, पदत्वार्थं सुबुत्पत्तेरावश्यकत्वात्। नचाऽव्ययात्प्रथमोत्पत्तेः फलाऽभावः "अव्ययादाप्सुप" इति लुकोऽवश्यं प्रवृत्तेरिति वाच्यं, पदत्वार्थं सुबुत्पत्तेरावश्यकत्वात्। तेन उच्चैरित्यादौ रुत्वविसर्गौ "उच्चैस्ते सम्यगुच्चारण"मित्यादौ तेमयादिसिद्धिश्च भवति। अनियतेति। अनियतलिङ्गास्तु तटादिशब्दा लिङ्गमात्राधिक्यस्योदाहरणम्। तत्र लिङ्गानामनियतोपस्थितिकतया प्रातिपदिकार्थनन्तर्भावादित्यर्थः। तटः तटी तटमिति। "तटं त्रिषु" इत्यमरः। परिमाणमात्रे इति। उदाहरणं वक्ष्यते इत्यर्थः। द्रोणो व्रीहिरिति। द्रोणः परिमाणविशेषः। "जालसूर्यमरीचिस्थं त्रसरेणुरिति स्मृतम्। तेऽष्टौ लिक्षा तु तास्तिरुआओ राजसर्षप उच्यते। गौरस्तु ते त्रयः, षट् ते यवो, मध्यस्तु ते त्रयः। कृष्णलः, पञ्च ते माषः, ते सुवर्णस्तु षोडश। बलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्। पलद्वयं तु प्रसृतं, द्विगुणं कुडबं मतम्। चतुर्भिः कुडवैः प्रस्थः, प्रस्थाश्चत्वार आढकः। आढकैस्तैश्चतुर्भिस्तु द्रोण इत्यभिधीयते। कुम्भो द्रोणद्वयं शूर्पः, खारी द्रोणास्तु षोडश। " #इति स्मरणात्। "ब्राईहिरिति। जातावेकवचनं "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" इति वचनात्। व्रीहिराशिरिति यावत्। नह्येकस्या व्रीहिव्यक्तेद्र्रोणपरिमाणं संभवति। ननु द्रोणाख्यापरिमाणविशेषस्य व्रीहिव्यक्तेश्च कथमभेदान्वयः, धर्मधर्मिणोर्भेदादित्यत आह--द्रोणरूपमिति। तथाचाऽभेदान्वयवस्य बाधादेव द्रोणपरिमाणस्य व्रीहिव्यक्तेश्च परिच्छेदकभावेनान्वयाभ्युपगमान्नोक्तदोष इति भावः।

ननु द्रोणशब्दस्य परिमाणविशेषवाचिनो नियतपुंलिङ्गत्वे प्रातिपदिकार्थमात्रे इत्येव सिद्धम्। यदि तु "अस्त्रियामाढकद्रोणौ" इति द्विलिहगता, तर्हि लिङ्गमात्राधिक्ये इत्येव सिद्धं। त()त्क परिमाणग्रहणेनेति चेत्तत्राह--प्रत्ययार्थे परिमाणे इति। न हि द्रोणत्वेन रूपेम परिमाणविशेषवाचिद्रोणशब्दात्स्वार्थे प्रथमाविभक्तिरिष्यते, येन प्रातिपदिकार्थमात्रे इत्यनेनेन गतार्थता स्यात्। किं तु द्रोणत्वेन परिमाणवाचिनो द्रोणशब्दात्परिमाणत्वसामान्यरूपेण द्रोणपरिमाणे विवक्षिते प्रथमा विभक्तिर्विधीयते। ततश्च प्रत्ययार्थे परिमाणसामान्ये द्रोणशब्दार्थात्भकप्रकृत्यर्थः परिमाणविशेषः सामान्यविशेषात्मकाऽभेदसंसर्गेणान्वेति। परिमाणसामान्यात्मकप्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वेति। तथाच द्रोणाक्यपरिमाणविशेषात्मकं यत्सामान्यपरिमाणं तत्परिच्छिन्नो व्रीहिरिति बोधः फलति। अन्यथा द्रोणाक्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरिति बोधः स्यात्। परिमाणसामान्यात्मकप्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वेति। तथाच द्रोणाख्यपरिमाणविशेषात्मकं यत्सामान्यपरिमाणं तत्परिच्छिन्नो व्रीहिरिति बोधः फलति। अन्यथा द्रोणाख्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरिति बोधः स्यात्। परिमाणसामान्यं न प्रतीयते। तदर्थमिह परिमाणग्रहणमित्यर्थः।

वचनं सङ्ख्येति। पूर्वाचार्यैस्तथा संज्ञाकरणादिति भावः। तथाच सङ्ख्यमात्रे प्रथमेति लभ्यते। नच लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये इतिवत्सहख्यामात्राधिक्ये इति कुतो न व्याख्यातमिति वाच्यं, केवललिङ्गपरिमाणयोः क्वाप्युपस्थित्यभावेन तथा व्याख्यानेऽपि एकद्विबहुशब्देष्वेकत्वद्वित्वबहुत्वानां केवलानां नियतोपस्थितिसत्त्वेन सङ्ख्यामात्रे इत्येव व्याख्यातुमुचितत्वात्। अत एव भाष्ये वचनग्रहणांशे एको द्वौ बहव इत्युदाह्रतम्।

ननु एको द्वौ बहव इत्यत्र एकत्वद्वित्वबहुत्वानां नियमनोपस्थित्या "प्रातिपदिकार्थे " इत्येव सिद्धे वचनग्रहणं व्यर्थमित्यत आह--इहेति। प्रकृतिभिरेवैकत्वादीनामुक्तत्वात् "उक्तार्थानामप्रयोगः" इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं वचनग्रहणमित्यर्थः। तथाच विभक्तिरिहानुवादिका शब्दसाधुत्वार्थं प्रयोज्या, "न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः" इत्यनभिहितसूत्रभाष्यसिद्धन्यायादिति भावः। इदमेवाभिप्रेत्योक्तं भाष्ये--"उक्तेष्वप्येकत्वादिषु प्रथमा" इति। मात्रग्रहणात्कारकाद्याधिक्ये प्रथमा न भवति। अत्र "अर्थे प्रथमे"त्येव सूत्रयितुमुचितमिति प्रौढमनोरमादौ प्रपञ्चितम्।

तत्त्व-बोधिनी

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ४७२, २।३।४६

"स्वौजसमौट्"---इत्यादिना तावत् स्वादयो ङ्याप्प्रातिपदिकाद्दर्शिताः। तेषामर्थविशेषे व्यवस्थां दर्शयितुमारभते--प्रातिपदिकार्थत्यादिना। प्रथमादयः सप्तम्यन्ताः प्राचां सञ्ज्ञास्तचाभिरिहापि व्यवहार इति "स्वौजसमौट्"---इति सूत्रे मूलकृतोक्तम्। कौस्तुभे तु---इह प्रथमादयः शब्दाः सुपां त्रिकेषु वर्तन्ते, "समं स्यादश्रुतत्वात्ि इति न्यायादित्युक्तम्। तथा च न्यायसिद्धत्वादस्मिञ्शास्त्रे प्रथमादिसञ्ज्ञानामकरणेऽपि न क्षतिरिरिति ज्ञेयम्। यदा हि "पञ्चकं प्रातिपदिकार्थः"इति गृह्रते ततो लिङ्गवचनग्रहणमनर्थकम्, "प्रातिपदिकार्थे"इत्येव सिद्धेः, मात्रग्रहणाच्च कर्मादिव्यवच्छेदो न स्यात्, प्रातिपदिकार्थादनतिरिक्तत्वात्। त्रिकपक्षेऽपि लिङ्गग्रहणमनर्थकमेवेत्याशङ्क्य विवितं दर्शयतिनियतोपस्थितिक इति। यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः। शक्य इति यावत्। नन्वेवं सिंहो माणवक इत्यदौ पर्थमा न स्यात्।अत्राहुः--शक्यार्थमादाय प्रथमाविभक्तेत्पत्तौ सत्यां पश्चात् पदान्तरसमभिव्याहारे लक्ष्यार्थबोधेऽपि क्षत्यभावादिति मात्रशब्दस्येति। तस्य चाऽत्राऽवधारणमात्रमित्येवकारेणाऽस्वपदविग्रहः। समासस्तु मयूरव्यंसकादित्वाद्बोध्यः। प्रत्येकमिति। द्वन्द्वान्ते श्रूयमाणत्वादिति भावः। ननु वूरः पुरुष इत्यादावभेदसंसगस्याऽधिकस्य भानात्प्रथमा न स्यात्। न च "पूर्वाऽपरे त्यादिना वीरशब्दस्य समासविधानं प्रथमोत्पत्तौ लिङ्गमिति वाच्यं, द्वितायद्यन्तानामपि वीरं पुरुषमानयेत्यादौ तद्विधानस्य चरितार्थत्वादिति चेन्न;

संसर्गस्य,वाक्यार्थत्वेन बहिरङ्गत्वात्प्रथमप्रवृत्तसंस्कारबाधाऽनुपपत्तेः। पदसंस्कारपक्षस्यैवेहाभ्युपगमात्। मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेत्तथापि लिङ्गपरिमाणग्रहणाल्लिङ्गाधिक्ये परिमाणाधिक्ये च भवेदेवेत्याह---- लिङ्गमात्राद्याधिक्ये इति। यद्यपि "लिङ्गमात्रे""परिमाणमात्रे"इत्येवाऽक्षरार्थस्तथापि प्रातिपदिकार्थं विना लिङ्गादिप्रतीतेरसम्भवादिति "तदाधिक्ये"इत्युक्तम्। उच्चैरिति। पदत्वादिह रुत्वविसर्गौ भवतः। किञ्च अस्य पर्थमान्तत्वाद्राम उच्चैस्तव स्वम्, ग्राम उच्चैस्ते स्वमिति "सपूर्वायाः"इति सूत्रेण तेमयादेशयोर्विकल्पसिद्धिरपि फलम्॥ कृष्ण इति। यद्यपि नीलद्रव्येऽयमियतलिङ्ग, तथापि वासुदेवे भगवति नियतपुंलिङ्ग इति भावः। ज्ञानमिति। भावे ल्युट्। तटः तटी तटमिति। द्विकपक्षे नियतलिङ्गं न प्रकृत्यर्थः, त्रिकपक्षे तु यद्यपि प्रकृत्यर्थः, तथापि तत्तल्लिङ्गस्य पाक्षिकोपस्थितिकत्वान्न "प्रातिपदिकार्थे"त्यनेन गतार्थता। द्रोण इति। न चेह "प्रातिपदिकार्थमात्र"इत्येव प्रथमाऽस्त्विति वाच्यं, तथा सति परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानाऽयोगात्। नामार्थयोरभेदसंसर्गस्य व्युत्पन्नत्वात्। व्रीहिरिति। जातावेकवचनम्। व्यक्तिविवक्षायां तु "द्रोणो व्रीहयः"इति भवत्येव॥अभेदेनेति। न च प्रकृतिप्रत्ययार्थयोभेदान्वयो दुर्लभः, "पचति" "पाचकः""औपगव"इत्यादौ सर्वत्र भेदान्वयस्यैव दृष्टत्वादिति वाच्यं, देवतार्थकतद्धितादावभेदान्वयस्य दृष्टत्वात्। "ऐन्द्र हवि"रित्यत्र हि इन्द्रदेवताकं हविरिति बोधः सर्वैरेवाभ्युपगम्यत इथि नास्ति शङ्कावसर इति भावः। वचनं सङ्ख्येति। वाच्यवाचकयोरभेदाध्यवसायेन तथैव पूर्वाचार्याणां व्यवहारादिति भावः। अप्राप्तौ वचनमिति। सूत्रे वचनग्रहणमित्यर्थः। वस्तुतस्तु सूत्रे मात्रग्रहणं व्यर्थम्। विशेषविहितैः "कर्मणि द्वितीये"त्यादिभिर्बाधितत्वेन कर्मादौ प्रथमाया अप्रवृत्तेः। "कर्मणि द्वितीये"त्यादिषु "कर्मणि द्वितीयैव""कर्तृकरणयोरेव तृतीय नान्यत्रे"ति प्रत्ययनियमपक्षे प्रथमाया अपि कर्मादौ प्रवृत्तिसम्भवान्मात्रग्रहणमावश्यकमेवेति वाच्यं, प्रत्ययनियमपक्षे हि "प्रातिपदिकार्थं एव प्रथमा, नान्यत्रे"त्यर्थपयवसानात्कर्मादौ प्रथमाया अप्रवृत्तौ वचनग्रहणमपि व्यर्थं, "न केवला प्रकृतिः पयोक्तव्ये"ति निषेधादेव पर्थमोत्पत्तिसिद्धेः। न चैवं "द्विशब्दाद्बहुशब्दाच्चैकवचनम्, एकशब्दाद्द्विवचनम्" इत्येवमव्यवस्था स्यादिति वाच्यम्, अनन्वितार्थकविभक्तिप्रयोगाऽपक्षेया अनुवादकविभक्तिप्रयोगस्य न्याय्यत्वात्। "गौर्वाहीक"इतिवद्द्रोणब्दस्य तत्परिमिते उपचाराद्द्रोणो व्रीहिरित्यभेदान्वयः, नामार्थयोरभेदान्वयात्। "परिमाणं प्रत्ययार्थः"इति पक्षे तु द्रोणरूपं यत्परिमामं तत्परिच्छिन्नो व्रीहिरित्यभेदान्वयः, नामार्थयोरभेदान्वयस्तथा च फलभेदे कथं प्रत्ाख्यानमिति चेदत्राहुः--शाब्दबोधप्रयुक्तं वैलक्षण्यमिहाऽनादृत्य परिमाणग्रहणं स्याख्यातम्। अतएव औपगवादौ "तस्येदम्ित्यनेनैवाऽण्प्रत्ययसिद्धेः "तस्यापत्य"मिति सूत्रं किमर्थमित्याक्षेपः, मत्वर्थीयेनिनैव सिद्धेः "परिवृत्तो रथः"इत्यधिकारे "पाण्()डुकम्बलादिनिः"इतीनिप्रत्ययविधानं किमर्थमित्याक्षेपश्च वक्ष्यमाणः सङ्गच्छते। यदि तु सर्वत्रैव शाब्दबोधप्रयुक्तं वैलक्षण्यं स्वीक्रियते तर्हि "बाधनार्तं कृतं भवे"दिति समाधानस्याऽणो बाधनार्थमिनिप्रत्ययविधानमिति समाधानस्य च वैयथ्र्यापत्तेरिति। ननु क्वचित् पञ्चकं प्रातिपदिकार्थः, क्वचित्त्रिकं, क्वचिद्द्विकं प्रातिपदिकार्थ इत्यादि व्यवह्रियते। त एते पक्षाः केषाममिमताः, कथं वाऽमीषामुपपत्तिरिति चेत्। अत्र व्याचख्युः---स्वार्थद्रव्यलिङ्गसङ्ख्याकारकात्मकः पञ्चकं प्रातिपदिकार्थः, धि मध्वित्यादौ विनापि विभकिं()त प्रातिपदिकादेव तावतामर्थानां प्रतीतेः। वृक्षौ वृक्षाः वक्षं वृक्षेणेत्यादौ यद्यपि विभक्त्यन्वयेऽपि प्रतीयन्ते नेयता पर्कृत्यर्थत्वहानिः, द्योतकत्वेनैवोपयोगादिति भाष्यकारो मन्यते। आदितश्चतुष्कमिति कैयटः। "तत्रोपपदं सप्तमीस्थं"मित्यत्र चतुष्कपक्षे, पञ्चकपक्षे वा कारकं प्रातिपदिकार्थ इत्यभिधानात्। आदितस्त्रिकमिति वृत्तिकारः। अन्वयव्यतिरेकाभ्यां सङ्ख्याकारकादेर्विभक्त्यर्थत्वनिश्चयात्। यद्यपि "दधि""मधु"इत्यादौ विनापि विभकिं()त सङ्ख्याकारकं च प्रतीयते, नेयता वृक्षौ वृक्षा इत्यादावपि विभक्त्यर्थत्वं हीयते। न हि "गर्गा"इत्यादौ विनापि यञा अपत्यं गम्यत इथि तदपि प्रकृत्यर्थः। न चा।()विभरित्यादौ अन्तरेणाऽपि प्रत्ययं कर्ता प्रतीयत इति भेत्तेत्यादावपि कर्ता प्रकृत्यर्थ एवेति युज्यते वक्तुम्। अतस्त्रिकमेव प्रातिपदिकार्थः, सङ्ख्याकर्मादयस्तु विभक्त्यर्था इति। लिङ्गं

टाबादिवाच्यमिति पक्षे आदितो द्विकमेवेत्यन्ये। तत्र स्वार्थो---विशेषणम्। द्रव्यं--विशेष्यम्। लिङ्गं--स्त्रीत्वादि। सङ्ख्य--एकात्वादिः। कारकं--कर्मादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सम्बोधने ७।१ च ० प्रथमा १।१ ४६

काशिका-वृत्तिः
सम्बोधने च २।३।४७

आभिमुख्यकरणं, तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोति इति वचनम् आरभ्यते। सम्बोधने च प्रथमा विभक्तिर् भवति। हे देवदत्त। हे देवदत्तौ। हे देवदत्ताः।
लघु-सिद्धान्त-कौमुदी
सम्बोधने च ८९२, २।३।४७

प्रथमा स्यात्। हे राम। इति प्रथमा।
न्यासः
सम्बोधने च। , २।३।४७

सम्बोधनम् = अभिमुखीकरणम्, "तदधिके प्रातिपदिक्रथा" इति। अभिमुखीकरणस्य क्रियापरत्वात् प्रातिपदिकार्थे तस्यान्तर्भावो नास्ति, त्सयातदात्मकत्वात्, तस्मात तेनाधिकः प्रातिपदिकार्थो भवति। अथ कथमिह प्रथमा-हे-पचनम्, हे पचमानेति? कथञ्च न स्यात्? शतृशानज्भ्यामुक्तत्वात् सम्बोधनस्य। एतावपि "सम्बोधने च" इति सम्बोधन एव वक्ष्यते। मा भूदनेन, पूर्वसूत्रेण भविष्यति? सम्बोधनार्थस्येह "कृत्तद्धितसमासाश्च" १।२।४६ इत्यनेन प्रातिपदिकार्थत्वात्। योगविभाग उत्तरार्थः॥
बाल-मनोरमा
सम्बोधने च ५२६, २।३।४७

संबोधने च। इहेति। संबोधनेऽधिके गम्येऽपि प्रथमा स्यादित्यर्थः। संबोधमभिमुखीकृत्य ज्ञापनम्। हे रामेति। "मां पाही"ति शेषः। इह रामं प्रति मद्रक्षणं ज्ञाप्यम्। नच "हे राजन्सार्वभौमो भव" इत्यत्र सार्वभौमशब्दादपि संबोधने प्रथमा स्यादिति वाच्यं, सम्यग्बोधनमेव हि संबोधनं, समित्युपसर्गबलात्। श्रोतरि विसिष्य राजत्वादिना ज्ञाते सत्येव तं प्रति कश्चिदर्थौ ज्ञापयितुं शक्यः, नान्यथा। ततश्च संबोधनविभक्तिरियमनुवाद्यविषयैवेति लभ्यते। न तु विधेयविषया। तथाच सार्वभौमत्वस्य विधेयस्य इदानीमसिद्धत्वेन अनुवाद्यत्वाऽभावान्न सार्वभौमशब्दात्संबोधनविभक्तिरिति मञ्जूषायां विस्तरः। [इति प्रथमा]।

तत्त्व-बोधिनी
सम्बोधने च ४७३, २।३।४७

सम्बोधने च। मात्रग्रहणात्तत्प्रत्याख्यानपक्षेऽपि प्रातिपदिकार्थे एव प्रथमेति नियमाद्वा

सम्बोधनाधिक्येऽप्राप्तावस्यारम्भः। इह सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं, क्रिया प्रति विशेषणम्। तथा च "व्रजानि देवदत्त"इत्यादौ "एकतङ् वाक्य"मिति वाक्यत्वे सिद्धे "आमन्त्रतस्य चे"ति निघातो भवति, क्रियां प्रत्यविशेषणत्वे तु भिन्नवाक्यत्वान्नैतत्सिद्धेत्, "समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः"इति वार्तिकात्। तथा चोक्तं---"संबोधनपद"यच्च तत् क्रियाया विशेषणम्। व्रजानि देवदत्तेति निघातोऽत्र तथा सति" इति। एवं च "राम मां पाही"ति वाक्यस्य रामसम्बन्धिसम्वोधनविषयो मत्कर्तृकं रक्षणमर्थः। "व्रजानि देवदत्ते त्यत्र तु देवदत्तसम्बन्धिसंबोधनविषयो मत्कर्तृकं गमनमर्थः। इति प्रथमा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सा १।१ आमन्त्रितम् १।१ ४९ प्रथमा १।१ ४६

काशिका-वृत्तिः
सा आमन्त्रितम् २।३।४८

सम्बोधने या प्रथमा तदन्तं शब्दरूपम् आमन्त्रितसंज्ञं भवति। तथा च एव उदाहृतम्। आमन्त्रितप्रदेशाः आमन्त्रितं पूर्वम् अविद्यमानवत् ८।१।७२ इत्येवम् आदयः।
न्यासः
साऽऽमन्त्रितम्।, २।३।४८

"तदन्तं शब्दरूपम्" इति। ननु च "संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति" (पु।प।वृ।८१) इति ज्ञापितमेतत् "सुप्तिङन्तं पदम्" १।४।१४ इत्यत्रान्तग्रहणेन। इह च संज्ञाविधौ प्रत्ययग्रहणम्, तत् कथं तदन्तस्य संज्ञा विधीयते? नैतदस्ति; यद्यपि संज्ञाविधौ प्रत्ययग्रहणमिह, तथाऽपि तदन्तस्यैवेयं संज्ञा विधीयते। यदीह प्रत्ययमात्रस्य संज्ञाग्रहणं स्यात् तदा प्रदेशेषु तस्यैव ग्रहणं स्यात्, तथा च संज्ञाकरणमनर्थकं स्यात्। प्रदेशेषु सम्बोधन इत्येवं ब्राऊयात्। एवमपि प्रत्ययमात्रस्य ग्रहणं लभ्यत एव। तस्यैव सम्बोधने विहितत्वात्। तस्मात् संज्ञाकरणादेव तदन्तस्य संज्ञा लभ्यते। सेति वचनं पूर्वसूत्रेणापि सम्बोधने या विहिता तस्या अपीयं संज्ञा यथा स्यात्-- हे पचन्, हे पचमानेत्यत्र। असति त्वस्मिन् "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति पूर्वसूत्रेणैव या विहिता तस्या एव स्यात्; सेत्येतदुच्यमानं सर्वनामपदं सामान्येन प्रवत्र्तत इति कृत्वा। अतः सम्बोधनमात्रे या प्रथमा तां प्रतिपादयति, तेन सर्वत्र संज्ञा सिद्धा भवति। आमन्त्रितसंज्ञायां सत्यां हे देवदत्त इत्यादौ "आमन्त्रितस्य" ६।१।१९२ इत्याद्युदात्तत्वं भवति। "आमन्त्रितम्" इति महत्याः संज्ञायाः करणं वैचित्र्यार्थम्॥
बाल-मनोरमा
सामन्त्रितम् , २।३।४८

सामन्त्रितं। प्रातिपदिकार्तसूत्रोपात्ता प्रथमा "सा" इत्यनेन परामृश्यते। "संबोधने चे"त्यतः "संबोधने" इत्यनुवर्तते। तदाह-संबोधने इत्यादिना। "तदन्त"मिति प्रत्ययग्रहणपरिभाषालभ्यम्। महासंज्ञाकरणात्संज्ञाविधावपि तदन्तग्रहणम्। अत एव हे है भो इत्यादीनामपि संज्ञा सिद्धा।

तत्त्व-बोधिनी

सामन्त्रितम् ३६२, २।३।४८

सामन्त्रितम्। "सम्बोधने चे"त्यतः "सम्बोधने"इत्यनुवर्तते। "से"त्यनेन प्रथमा निर्दिश्यते। महासंज्ञाकरणसामर्थ्यात्संज्ञाविधावपरि तदन्तग्रहणम्। आमन्त्रणमामन्त्रितम्। उपचारात्तत्साधने वृत्तिः। विभक्त्यन्तेन चामन्त्र्यते न केवलया विभक्त्येत्याशयेनाह---तदन्तमिकि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एकवचनम् १।१ संबुद्धिः १।१ आमन्त्रितम् १।१ ४८

काशिका-वृत्तिः

एकवचनं सम्बुद्धिः २।३।४९

आमन्त्रितप्रथमाया यदेकवानं, तत् सम्बुद्धिसंज्ञं भवति। हे पटो। हे देवदत्त। सम्बुद्धिप्रदेशाः एङ्ह्रस्वात् सम्बुद्धेः ६।१।६७ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

एकवचनं सम्बुद्धिः १३२, २।३।४९

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात्॥

न्यासः

एकवचनं सम्बुद्धिः। , २।३।४९

"हे पटो, हे देवदत्त" इति। अत्र सम्बुद्धिसंज्ञायां सत्याम्, "सम्बुद्धौ च" ७।३।१०६ इत्यधिकृत्य "ह्रस्वस्य गुणः" ७।३।१०८ इति गुणे "एङ ह्रस्वात् सम्बुद्धेः" ६।१।६७ इति सोर्लोपो यथायोगं भवति। अथ सुग्रहणमेव कस्मान्न कृतम्, न च सप्तमीबहुवचनस्य प्रसङ्गः, सम्बोधनप्रथमाधिकारात्? सत्यम्; किन्तु नैतदस्ति; प्रत्ययमात्रस्य संज्ञाविधानार्थमेकवचनग्रहणं कृतम्-- हे पचनम्, हेपचमानेति; अन्यथा हि पूर्वेण यथा तदन्तस्य संज्ञा विहिता तथेहापि स्यात्। न चेहासंज्ञिनः कश्चिद्विशेषोऽङ्गीक्रियत इति सुशब्देन तदन्तमेव लक्ष्यते, ततश्च तदन्तकस्यैव संज्ञा स्यात्। तथा "एङ ह्रस्वात् सम्बुद्धेः" ६।१।६७ इति सोर्लोपो विधीयमानः "आदेः परस्य" १।१।५३ इत्यादेरेव स्यात्; प्रत्ययमात्रस्य न स्यात्। तस्मात् प्रत्ययमात्रस्य संज्ञा यथा स्यादित्येवमर्थमेकवचनग्रहणम्॥

बाल-मनोरमा

एकवचनं संबुद्धिः १९१, २।३।४९

हे रामसिति स्थिते, "एङ्ह्रस्वात्संबुद्धेः" इति लोपं विधास्यन् संबुद्धिसंज्ञामाह--एकवचनम्। "प्रातिपदिकार्थलिङ्गे"त्यतः "प्रथमे"त्यनुवृत्तं षष्ठ()आ विपरिणम्यते। "संबोधने चे"त्यतः संबोधने इत्यनुवर्तते। तदाह-संबोधने इति। "सुः संबुद्धि"रित्येव सुवचम्। प्रथमाग्रहणानुवृत्तेः सप्तमीबहुवचनस्य सुपो न ग्रहणम्। नचात्र प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं शङ्क्यम्। "ह्रस्वस्य गुणः" इति संबुद्धौ परतोऽङ्गस्य गुणविधिबलात्, संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधाच्च। एतेन तदन्तसंज्ञानिवृत्त्यर्थमेकवचनग्रहणमित्यपास्तम्।

तत्त्व-बोधिनी

एकवचनं संबुद्धिः। १५९, २।३।४९

एकवचनम्। "सुः संबुद्धि"रित्येव सुवचम्। न च सप्तमीबहुवचनेऽतिप्रसङ्गः। "संबोधने प्रथमे"त्यधिकारादेव तदभावादिति नव्याः। अत्र व्याचख्युः--"सुः संबुद्धि"रिति वाच्ये एकवचनग्रहणमेकोऽर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम्। अन्यथा "सामन्त्रित"मिति पूर्वसूत्रे तदन्तस्यामन्त्रितसंज्ञा कृतेति प्रक्रमाऽभेदाय इयमपि संज्ञा तदन्तस्यैव स्यादिति। एङ्ह्रस्वात्संबुद्धेः। यद्यत्र "हल्ङ्याब्भ्य" इत्यतो हलमननुवर्त्य "एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परस्याः संबुद्धेरलोप" इति व्याख्यायेत, हलनुवृत्तावप्यङ्गात्परा या संबुद्धिः तस्या यद्धलिति वा, उभयथापि "हे ज्ञाने"ति न सिध्येत्। लोपात्परत्वात्सोरतोऽभि कृते परत्वान्नित्यत्वाच्च अमि पूर्वत्वे च कृते एकादेशस्य परादिवद्भावे ह्रस्वान्तात्परत्वाभावात्, पूर्वान्तवद्भावे अम एवाभावादुभयत आश्रयणे नान्तादिवदिति निषेधादतो व्याचष्टे-एङन्तादित्वादिना चेदित्यन्तेन।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ षष्ठी १।१ ७३ शेषे ७।१ ७३

काशिका-वृत्तिः

षष्ठी शेषे २।३।५०

कर्माऽदिभ्यो ऽन्यः प्रातिपदिकार्थव्यतिरेकः स्वस्वामिसम्भन्धाऽदिः शेषः, तत्र षष्ठी विभक्तिर् भवति। रज्ञः पुरुषः। पशोः पादः। पितुः पुत्रः।

लघु-सिद्धान्त-कौमुदी

षष्ठी शेषे ९०४, २।३।५०

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी। राज्ञः पुरुषः। कर्मादीनापि संबन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधोदकस्योपस्कुरुते। भजे शम्भोश्चरणयोः॥ इति षष्ठी।

न्यासः

शेषे षष्ठी। , २।३।५०

कर्मादीनां प्रकृतत्वात् तदपेक्षया शेषत्वं विज्ञायत इत्याह-- "कर्मादिभ्यो योऽन्यः" इति। कर्मादयः कारकविशेषास्तस्य सम्बन्धस्य हेतुभूताः, स तु फलभूतः। हेतुफलयोश्च प्रसिद्धमन्यत्वमिति तेभ्योऽन्यो भवति। प्रातिपदिकार्थ{व्यतिरिक्तः- काशिका।पदमञ्जरी च} व्यतिरेकः। व्यतिरेकः = आधिक्यम्। अथ वा-- येन प्रातिपदिकार्थो व्यतिरिच्यते = व्यतिरेकीक्रियते स व्यतिरेकः। प्रातिपदिकार्थस्य व्यतिरेकः = प्रातिपदिकार्थव्यतिरेकः। स शेषः। कः पुनरसावित्याह-- "स्वस्वामिकसम्बन्धादिः" इति। आदिशब्देनोवयवावयविप्रभृतेः सम्बन्धस्य ग्रहणम्। सम्बन्धश्च यद्यपि द्विष्ठस्तथापि तस्यैकत्वादेकत एव सम्बन्धिन उत्पद्यमानया षष्ठ()आ विभक्त्याऽभिहितत्वात् द्वितीयासम्बन्धिनःषष्ठी न भवति। एकस्मादुत्पद्यमानाऽपि षष्ठी विशेषणादेव भवति ; न विशेष्यात्। विशेष्यात्तु प्रथमैव भवति; यस्माच्छेषशब्दोऽयंयथा

प्रकृतादन्यविशेषणमाचष्टे तथा परार्थमपि। एवं ह्यभियुक्ताः पुरुषा उपदिशन्ति-- शेषः परार्थ इति। राज्ञा पुरुष इति स्वस्वामिकसम्बन्दस्योदाहरणम्। अत्र पुरुषस्य प्रादान्यम्, विशेष्यत्वात्। राज्ञोऽप्राधान्यम्, विशेषणत्वात्। विशेषणस्य परार्थत्वात् शेषभाव इति ततः षष्ठी भवति। यदा तु द्वावपि विशेषणभूतौ तृतीये सम्बन्धिन्यपेक्षितौ भवतः, तदा द्वाभ्यामपि षष्ठी भवति "राज्ञः पुरुषस्य गृहम्" इति। "पशोः पादः" इति। अत्रावयवावयिसम्बन्धे षष्ठी। "पितुः पुत्रः" इत्यत्र जन्यजनकसम्बन्धे षष्ठी। अथ शेषग्रहणं किमर्थम्, यावता "कर्मणि द्वितीया" २।३।२ इत्येवमादौ प्रत्यनियमोऽर्थनियमश्चेति द्वावपि पक्षौ। तत्र प्रत्ययनियमपक्षे यदि शेषग्रहमं न क्रियेत तदा कर्मण्येव द्वितीयेति कर्मानियतम्, द्वितीया तु नियता; अतस्तत्रापि षष्ठी स्यादिति शेषग्रहणं कत्र्तव्यम्। शेष एव यथा स्यादन्यत्र माभूदिति अर्थनियमपक्षे तु शेषग्रहमं शक्यमकर्तुम्। यावता कर्मणि द्वितीयैवैति कर्म नियतम्, द्वितीया त्वनियता; तस्यामन्यत्रापि प्राप्तायां षष्ठीत्युच्यमानं सूत्रमिदं नियमार्थं भविष्यति-- यत्र षष्ठी चान्या च प्राप्नोति तत्र षष्ठ()एव भवति। एवमन्यत्रापि वेदितव्यम्॥

बाल-मनोरमा

षष्ठी शेषे ५९८, २।३।५०

अथ षष्ठी। षष्ठी शेषे। उक्तादन्यः शेषः। "कर्मणि द्वितीया" इत्यादिसूत्रेषु द्वितीयादिविधिषु हि कर्मकर्तृकरणसंप्रदानापादानाधिकरणकारकाण्यनुक्रान्तानि। प्रथमाविधौ प्रातिपदिकार्थोऽनुक्रान्तः। एतेभ्योऽन्यः स्वस्वामिभावादिसंबन्धः शेषपदार्थ इत्यर्थः। तत्राऽसति बाधके संबन्धो विशेषरूपेण सामान्यरूपेण च भासते, "न हि निर्विशेषं सामान्यमि"ति न्यायात्। सति तु बाधके "मातुः स्मरती"त्यादौ संबन्धत्वेनैव भानम्। कर्मत्वादिविशेषरूपेणापि भाने द्वितीयादिप्रसङ्गादिति स्थितिः। "राज्ञ पुरुष" इत्यत्र स्वस्वामिभावरूपविशेषात्मना संबन्धत्वरूपसामान्यात्मना च संबन्धः षष्ठ()र्थः। राजाश्रितस्वामित्रिरूपितस्वत्वात्मकसंबन्धाश्रयः पुरुष इति बोधः। आश्रयत्वादि तु संसर्गमर्यादया भासते। तत्र पुरुषो मुख्यं विशेष्यम्। संबन्धस्त्वाधेयतया पुरुषविशेषणम्। राजा तु आश्रयतया संबन्धविशेषणम्। संबन्धस्त्वाधेयतया राजानं प्रति विशेष्यं, "प्रधानप्रत्ययार्थवचनमि"ति वचनेन प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यावगमात्। अत एव पुरुषशब्दादपि न षष्ठी, राजनिरूपितसंबन्धाश्रयः पुरुष इति बोधे संबन्धस्य प्रकृत्यर्थपुरुषं प्रति विशेषणत्वेन विशेष्यत्वेन च भानानुपपत्तेः। यदा तु पुरुषगतस्वत्वनिरूपितस्वामित्यरूपसंबन्धाश्रयो राजेति बोधः, तदा पुरुषस्य राजेति पुरुषशब्दात् षष्ठी भवत्येवेत्यन्यत्र विस्तरः। सतां गतमित्यादौ कर्तृतृतीयादिकमाशङ्क्याह--कर्मादीनामपीति। कर्मत्वकर्तृत्वादीनामपि संबन्धत्वसामान्यात्मना विवक्षायां षष्ठ()एव, नतु कारकविभक्तय इत्यर्थः। तथाच "क्तस्य च वर्तमाने" इति सूत्रे भाष्यं--"कर्मत्वादीनामविवक्षा शेषः" इति। सतांगतमिति। भावे क्तः। सत्संबन्धि गमनमित्यर्थः। कर्तृत्वविवक्षायां तु सद्भिर्गतमिति तृतीया भवत्येव। कृद्योगलक्षणा षष्ठी तु न भवति, "न लोके"ति निषेधात्। सर्पिषो जानीते इति। करणत्वविवक्षायां सर्पिषा उपायेन प्रवर्तते इत्यर्थः। करणत्वस्य संबन्धत्वविवक्षायां तु षष्ठी, कत्र्राश्रिता सर्पिःसम्बन्धिनी प्रवृत्तिरिति बोधः। मातुः स्मरतीति। कर्मत्वविवक्षायां मातरं स्मरतीत्यर्थः। कर्मत्वस्य शेषत्वविवक्षायां तु देवदत्तकर्तृकं मातृसम्बन्धि स्मरणमित्यर्थः। एधो दकस्योपस्कुरुते इति। एधशब्दोऽकारान्तः पुंलिङ्गः, "कारके" इति सूत्रे "एधाः पक्ष्यन्ते" इति भाष्यप्रयोगात्। एधाश्च उदकानि चेति द्वन्द्वात् षष्ठी। "जातिरप्राणिना"मित्येकद्भावः। कर्मत्वविवक्षायां एदोदकं शोषणगन्धद्रव्याधानादिना परिष्कुरुते इत्यर्थः। कर्मत्वस्य शेषत्वविवक्षायां तु एधोदकसम्बन्धि परिष्करणमिति बोधः। एधश्शब्दः सकारान्तोऽप्यस्ति नपुंसकलिङ्गः। "काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्" इति कोशात्। "यथैधांसि समिद्धोऽग्निः" इत्यादिदर्शनाच्च। तथा सति "एधः-दकस्ये"तिच्छेदः। उदकशब्दसमावेशे एध उदकस्येत्यापत्तेः। उदकशब्दपर्यायो दकशब्दोऽप्यस्ति, "भुवनममृतं

जीवनं स्याद्दकं च" इति हलायुधकोशात्। तथाच एधः कर्तृ उदकं परिष्कुरुते इत्यर्थः। कर्मत्वस्य शेषत्वविवक्षायां तु षष्ठी, निम्बकरञ्जादिकाष्ठविशेषप्रज्वलिताग्नितप्तोदकस्य गुणविशेषो वैद्यशास्त्रप्रसिद्धः। भजे शम्भोश्चरणयोरिति। अत्र चरणयोः कर्मत्वस्य शेषत्वविवक्षायां षष्ठी। शम्भुचरणसंबन्धि भजनमित्यर्थः। फलानां तृप्त इति। अत्रापि करणत्वस्य शेषत्वविवक्षायां षष्ठी। फलसंबन्धिनी तृप्तिरिति बोधः।

तत्त्व-बोधिनी

षष्ठी शेषे ५३६, २।३।५०

षष्ठी शेषे। उक्तादन्यः शेषः। कर्मादयश्च प्रातिपदिकार्धपर्यन्ता उक्ताः, तत्र द्वितीयादीनां विधानात्, अतो प्रति प्राधान्यादप्रधानादेव षष्ठी। प्रत्ययार्थस्त्विह पुरुषविशेषणम्। राजनिरूपितसेवकत्वसम्बन्धवान् पुरुष इत्यर्थविवक्षायां प्रधानात्पुरुषशब्दान्न षष्ठी, उक्तन्यायविरोधात्, शेषत्वाऽभावाच्च। "राज्ञः पुरुषस्तिष्ठकती"त्यादौ पुरुषशब्दो हि प्रातिपदिकार्थमात्रवृत्तिः। "राज्ञः पुरुषेण कृत"मित्यादौ तु कारकार्थकः। यदा तु पुरुषनिरूपित सेव्यत्वसम्बन्धवान् राजेत्यर्थविवक्षा तदा पुरुषशब्दादपि षष्ठी भवत्येव पुरुषय राजेति। यत्तु "अप्रधानं शेष"इति कैश्चिदुक्तम्। तन्न। प्रातिपदिकार्थमात्रे शुक्लः पटः श्यामो घट इत्यादौ विशेषणे षष्ठीप्रसङ्गात्। न च प्रथमाया बाधः, तस्याः प्रधाने चरितार्थत्वात्। कर्मादीनामपीति। यथा विशेषाऽविवक्षायां रूपवानिति प्रयुज्यते, विशेषविवक्षायां तु नीलः पीत इत्यादि, तथेदमपि न्यायसिद्धमिति भावः। सतां गतमिति। सत्पुरुषसम्बन्धि गमनमित्यर्थः। सन्तो गच्छन्तीत्यत्र त्वाख्यातेन कर्तृत्वसम्बन्धस्योक्तत्वात्सम्बन्धमात्रविवक्षां कर्तुं न शक्यते इति षष्ठीह न भवति, किंन्तु प्रातिपदिकार्थम#आत्रे प्रथमैवेत्याहुः। सर्पिषो जानीते इति। वस्तुतः करणस्य सम्बन्धमात्रविवक्षायां षष्ठी। सर्पिः--सम्बन्धि प्रवर्तनमित्यर्थः। "अकर्मकाच्च" "अनुपसर्गाज्ज्ञः" इत्यनेन वा जानातेस्तङ्। अन्ये तु व्याचख्युः--कर्मणः शेषत्वविवक्षाया षष्ठी। सर्पिःसम्बन्धि ज्ञानमित्यर्थ इति। एधोकस्येति। एधाश्च उदकं चैषां समाहार एधोदकम्।"जातिरप्राणिनाम्" इत्येकवद्भावः। यद्वा च दकं चेति विग्रहे पूर्ववदेकवद्भावः। यद्वा एधांसि च दकं चेति वुग्रहे पूर्ववदेकवद्भावः। उदकपर्यायो दकशब्दोऽप्यस्ति। तथा च हलायुधः---"भुवनममृतं जीवनीयं दकं चे"ति। उपस्कुरुते इति। गन्धनादिसूत्रेणात्मनेपदम्। "उपात्प्रतियत्ने"ति सुट्। नचैवं "ज्ञोऽविदर्थस्य करणे", "अधीगर्थदयेशां कर्मणि", "कृञः प्रतियत्ने", "रुजार्थानां भाववचनानामज्वरेः", "आशिषि नाथः", "जासिमिप्रहणनाटक्राथपिषां हिंसायाम्","व्यवह्मपणोः समर्थयोः", "कृत्वोर्थप्रयोगे कालेऽधिकरणे" इति शेषषष्ठीविधानार्थेयमष्टसूत्री निष्फला स्यादिति वाच्यम्, "सर्पिषो ज्ञान"मित्यादौ तस्याः समासनिवृत्तिफलकत्वात्। तथा हि "ज्ञोऽविदर्थस्य--" इत्यादौ "शेषे" इत्यनुवर्तते, शेषत्वेन विवक्षते तु करणादौ षष्ठी सिद्ध#ऐव। तदमर्थः--इह षष्ठ()एव न तु तल्लुक्। तथा च लुकः प्रयोजकीभूतः समास एव न भवतीति। न चाष्टसूत्र्या लुङ्बात्रनिवृत्तिफलकत्वमेवास्तु, समासस्तु स्वीक्रियतामिति वाच्यम्। इष्टानुरोधेन समास एव न भवतीति व्याख्यानस्योचितत्वात्। तथा च वार्तिकं"प्रतिपदविधाना षष्ठी न समस्यते" इति। हरिश्चाह---"कारकैव्र्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये" इति। एवं च शेषत्वविवक्षायां सर्पिषो ज्ञानं, मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि। "हरिस्मरण"मित्यादीनि तु शेषत्वाऽविवक्षायां कृद्योगषष्ठ()आ समासे बोध्यानि। तत्र च कारकपूर्वकत्वात् "गतिकारक---" इत्यादिना कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वं भवति। शेषषष्ठ()आ समासे तु अन्तोदात्तत्वं स्यात्तच्चाऽनिष्टम्। तथा च स्वरार्थेयमष्टसूत्रीति निष्कर्षः। किं च "मातुः स्मृत" मित्यादौ समासाऽभावोऽपि फलम्, न हि तत्र कारकषष्ठी लभ्यते, "न लोके" ति निषेधात्। आह च--" निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते। शेषलक्षणया षष्ठ()आ समासस्तत्र नेष्यते" इति। एतच्च मनोरमायां स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ज्ञः ६।१ अविदर्थस्य ६।१ करणे ७।१ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः
ज्ञो ऽविदर्थस्य करणे २।३।५१

जानातेरविदर्थस्य अज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर् भवति। सर्षिषो जानीते। मधुनो जानीते। सर्पिषा करणेन प्रवर्तते इत्यर्थः। प्रवृत्तिवचनो जानतिरविद्र्थः। अथ व मिथ्याज्ञानवचनः। सर्पिषि रक्तः प्रतिहतो वा। चित्तभ्रान्त्या तदात्मना सर्वम् एव ग्राह्यं प्रतिपद्यते। मिथ्याज्ञानम् अज्ञानम् एव। अविदर्थस्य इति किम्? स्वरेण पुत्रं जानाति।
न्यासः
ज्ञोऽविदर्थस्य करणे। , २।३।५१

यद्यपि बहवो विदयः सन्ति, तथापि यस्यार्थे जानातर्वृत्तिः सम्भवति तस्यैव विदेः प्रतिषेधकरणं युक्तम्, "विद ज्ञाने" (धा।पा।१०६४) इत्यस्यैवार्थे जानातेर्वृत्तिः सम्भवति, तस्मादविदर्थस्येत्यनेन ज्ञानार्थस्यैव प्रतिषेधो विज्ञायत इत्याह-- "अज्ञानार्थस्य" इत्यादि। "सर्पिषो जानीते, मधुनो जानीते" इति। "अपह्नवे ज्ञः" १।३।४४ इत्यनुवत्र्तमाने, "अकर्मकाच्च" १।३।४५ इत्यात्मनेपदम्। धुन इति-- " इकोऽचि विभक्तौ" (र७।१।७३) इति नुम्। सर्पिषा करणभूते प्रवत्र्तत इत्यर्थः। यस्य प्रियतमं सर्पिस्तस्य प्रवृतिं प्रति सर्पिषः करणभूतत्वात्। धातूनामनेकार्थत्वाज्जानातिरिह प्रवृत्त्यर्थः। "सर्पिषिरक्तः प्रतिहतो वा" इति। सर्पिषि रक्तत्वं प्रतिहतत्वं च चित्तभ्रान्तेः कारणमाह। यदि सर्वमेव ग्राह्रं तदात्मना सर्पिःस्वभावतया प्रतिपद्यते। एवं सत्यविदर्थता नोपपद्यते, ज्ञानार्थत्वादित्यत आह-- "मिथ्याज्ञानमज्ञानमेव" इति। ज्ञानकार्याकरणादिति भावः। अविपरीतविषयपरिच्छेदो हि ज्ञानकार्यम्, कतच्च मिथ्याज्ञानेन न क्रियत इति मिथ्याज्ञानमज्ञानमुच्यते, यथा-- पुत्रकार्याकरणात् पुत्रोऽपुत्र इति॥
बाल-मनोरमा
ज्ञोऽविदर्थस्य करणे ६०४, २।३।५१

ज्ञोऽविदर्थस्य। ज्ञः-अविदर्थस्येति च्छेदः। "ज्ञ" इति ज्ञाधातोरनुकरणात्षष्ठ()एकवचनम्। वित्=ज्ञानं अर्थो यस्य विदर्थः, स न भवतीति अविदर्थः। ज्ञानार्थकभिन्नस्येति यावत्। तदाह--जानातेरज्ञानार्थस्येति। शेषत्वेनेति। संबन्धत्वेनेत्यर्थः। शेष इत्यनुवृत्तेरिति भावः। सर्पिषो ज्ञानमिति। वस्तुतः करणीभूतं यत्सर्पिस्तत्संबन्धिनी प्रवृत्तिरित्यर्थः। अविदर्थस्येति लिङ्गादेव "ज्ञा अवबोधने" इति धातोः प्रवृत्तौ वृत्तिः। "षष्ठी शेषे" इति सिद्धेऽपि "प्रतिपदविधाना षष्ठी न समस्यते" इत्येतदर्थं वचनम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अधीगर्थदयेशाम् ६।३ कर्मणि ७।१ ६१ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः
अधीगर्थदयैइशाम् कर्मणि २।३।५२

शेषे इति वर्तते। अधीगर्थाः स्मरनार्थाः, दय दानगतिरक्षनेषु, ईश एश्वर्ये, एतेषं कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर् भवति। मातुरध्येति। मातुः समरति। सर्पिषो दयते। सर्पिष ईष्टे। मधुन ईष्टे। कर्मणि इत्येव, मातुर् गुणैः स्मरति। शेषे किम्? मातरं स्मरति।

न्यासः

अधीगर्थदयेशां कर्मणि। , २।३।५२

"अधीक" इति। "इक् स्मरणे" (धा।पा।१०४७) इत्यस्याधिपूर्वस्य ग्रहणम्। अधीगित्यनेन समानार्था अधीगर्थाः। ककारानुबन्धकरणमस्य धातोरत्रैव सूत्रे विशेषणार्थम्। अध्ययनार्थानामित्युच्यमाने सन्देहः स्यात्-- कोऽयं धातुरिति। अधिपूर्वस्योच्चारणेनाधिपूर्वस्यैवास्य प्रयोग इति दर्शयति। "कर्मणि कारके" इत्यादि। यदा तदेव कर्म शेषकार्यत्वाच्छेषत्वेन विवक्ष्यते न कर्मत्वेन, तदा तत्र षष्ठी भवति। "अध्येति" इति। अदादित्वाच्छपो लुक्। एवम् "ईष्टे" इति। व्रश्चादिसूत्रेण ८।२।३६ षत्वम्। "मातुर्गुणैः स्मरति" इति। अत्र कर्मग्रहणाद्गुणानां करणभूतानां शेषविवक्षायामपि षष्ठी न भवति॥

बाल-मनोरमा

अधीगर्थदयेशां कर्मणि ६०५, २।३।५२

अधीगर्थ। एषामिति। "इक्स्मरणे"नित्यमधिपूर्वः, तस्यार्थ इवार्थों यस्य सोऽधीगर्थः। स्मरणार्थक इति यावत्। शेष इति। "षष्ठी शेषे" इत्यतस्तदनुवृत्तेरिति भावः। मातुः स्मरणमिति। वस्तुतःकर्मीभूतमातृसंबन्धि स्मरणमित्यर्थः। सर्पिषो दयनमिति। वस्तुतः कर्मीभूतसर्पिःसंबन्धि दयनमित्यर्थः। "दय दानगतिरक्षणहिंसादानेषु"। दीनान्दयते इत्यत्र दुःखाद्वियोजयितुमिच्छतीत्यर्थः। परदुःखापहरणेच्छा दया। ईशनं वेति। "सर्पिष" इत्यनुषज्यते। वस्तुतः कर्मीभूतसर्पिःसंबन्धी यथेष्टविनियोग इत्यर्थः। इदमपि समासनिषेधार्थमेव। "लोकानीष्टे" इत्यत्र तु यथास्वेच्छमाज्ञापयतीत्यर्थः।

तत्त्व-बोधिनी

अधीगर्थदयेशां कर्मणि ५४२, २।३।५२

अधीगर्थ। अधिशब्दोच्चारणम् "इङिकावध्युपसर्गं न व्यभिचरतः"इति ज्ञापनार्थम्। अन्यथा "स्मृत्यर्थदयेशाम्" इत्येव ब्राऊयात्, "इगर्थे"ति वा। इङंशे नेदं ज्ञापकमिति चेत्तर्हि तदंशे "णेरध्ययने वृत्तम्" इत्यत्राऽधिशब्दोच्चारणं ज्ञापतमस्तु। अत्र व्याचख्युः--कर्मणि किम्()। करणे शेषत्वविवक्षायां मा भूत्। मातुर्गणस्मरणम्। अत्र माता कर्म, गुणास्तु करणम्, उभयत्र शेषत्वविवक्षायमपि मातृशब्दादेवानेन सूत्रेण षष्ठी, गुणशब्दात्तु "षष्ठी शेषे"इत्यनेन। तेन "गुणस्मरण"मितित समासो भवतीति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृञः ६।१ प्रतियत्ने ७।१ कर्मणि ७।१ ५२ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः

कृञः प्रतियत्ने २।३।५३

सतो गुणान्तराधानं प्रतियत्नः। करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर् भवति। एधोदकस्योपस्कुरुते। शस्त्रपत्रस्योपस्कुरुते प्रतियत्ने इति किम्? कटं करोति। कर्मणि इति किम्? एधोदकस्योपस्कुरुते प्रज्ञया। शेषे इत्येव, एधोदकमुपस्कुरुते।

न्यासः

कृञः प्रतियत्ने। , २।३।५३

"एथो दकस्योपस्कुरुते" इति। गन्धनादि १।३।३२ सूत्रेणात्मनेपदम्, "उपात्प्रतियत्न" ६।१।१३४ इत्यादिना सुट्॥

बाल-मनोरमा

कृञः प्रतियत्ने ६०६, २।३।५३

कृञः प्रति। कर्मणीति, शेष इति चानुवर्तते। प्रतियत्नो गुणाधानम्। तदाह--कृञः कर्मणीति। एधोदकस्योपस्करणमिति। एधश्शब्दः सकारान्तो नपुंसकलिङ्गः। दकशब्द उदकवाची। एधश्च दकं चेति द्वन्द्वः। यद्वा एधशब्दोऽकारान्तः पुंलिङ्गः। एधश्च उदकं चेति द्वन्द्व इत्यनुपदमेवोक्तम्। वस्तुतःकर्मीभूतैधोदकसंबन्धि परिष्करणमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ रुजार्थानाम् ६।३ भाववचनानाम् ६।३ अज्वरेः ६।१ कर्मणि ७।१ ५२ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः

रुजाऽर्थानां भाववचनानाम् अज्वरेः २।३।५४

रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर् भवति। चौरस्य रुजति रोगः। चौरस्यामयत्यामयः। रुजार्थानाम् इति किम्? एति जीवन्तमानन्दो नरं वर्षशतादपि। जीव पुत्रक मा मैवं तपः साहसमाचर। भाववचनानाम् इति किम्? नदी कूलानि रुजति। अज्वरेः इति किम्? चौरं ज्वरयति ज्वरः। अज्वरिसन्ताप्योरिति वक्तव्यं। चौरं सन्तापयति तापः। शेषे इत्येव, चौरं रुजति रोगः।

न्यासः

रुजार्थानां भाववचनानामज्वरेः। , २।३।५४

रुजेति केचिद्भिदादिषु पठन्ति। ये न पठन्ति तेऽपि "चिन्तिपूजिकथिकुम्बचर्चश्च" ३।३।१०५ इति चकारस्यानुक्तसमुच्चयार्थत्वादस्मादेव निपातनाद्वा रुजाशब्दस्य साधुत्वं वर्णयन्ति। रुजा अर्थो येषां ते रुजार्थाः। "भाववचनानाम्" इति। यदि भावार्थाभिधायिनां रुजार्थानामित्येषोऽर्थो विवक्षितः स्यात्, तदाऽनर्थकमिदं वचनं स्यात्। सर्व एव हि रुजार्था भाववचनाः। तस्मान्नातर् धातुवाच्यो भावो विवक्षितः, किं तर्हि? प्रतययवाच्यः, यत्र "भावे" ३।३।१८ इति धञ् विधीयते। वचनशब्दोऽयं कर्तृसाधनः, वक्तीति वचनः, "कृत्यल्युटो बहुलम्" ३।३।११३ इति कत्र्तरि ल्युट्। न च रुजार्थानां यो भावस्तस्य वचनक्रियां प्रति कर्तृत्वं सम्भवतीति सामथ्र्यादवचनशब्देन प्रकृत्यर्थं परित्यज्य प्रत्ययार्थो विवक्षित इति प्रतीयते। स पुनः कर्तृशक्तिः। भाववचनानामिति बहुव्रीहिः-- भावो वचनः कत्र्ता येषां ते भाववचनाः। भावकर्तृका इत्यर्थः। एतत्सर्वं चेतसि कृत्वाऽऽह-- "भावकर्तृकाणाम्" इति। भावकर्तृकाणामित्येवं नोक्तं वैचित्र्यार्थम्। "चौरस्य रुजति" इति। "रुजो भङ्गे" (धा।पा।१४१६), तौदीदिकः। अत्र रोगो भावः कत्र्ता। "चौरस्यामयति"

इत्यत्राप्यामयः। "अम रोगे" (धा।पा।१७२०), चौरादिकः। "एति जीवन्तमनन्दो नरं वर्षशतादपि" इति। अस्त्यत्रानन्दो भावः कत्र्ता। न त्वेतिर्धातू रुजार्थः, किं तर्हि? गत्यर्थः। "नदी कूलानि रुजति" इति। रुजिरत्र द्रव्यकर्तृकः, न भावकर्त्तृकः, नद्या द्रव्यत्वात्। नैतद्युक्तं प्रत्युदाहरणम्, रुजाशब्दो हि रुढिशब्दत्वात् व्याधिमेवाचष्टे; न चात्र व्याधिवचनः, किं तर्हि? भङ्गवचनो रुजिः। एवं तर्हि प्रत्युदाहरणदिगियं दर्शिता वृत्तिकृता। इदन्त्वत्र प्रत्युदाहरणम्-- श्लेष्मा पुरुषं रुजतीति। व्याधिना ग्राहयतीत्यर्थः। ज्वरयतीति। "ज्वर योगे" (धा।पा।७७६), हेतुमण्णिच्। घटादित्वान्मित्त्वम्। "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वः। "सन्तापयति" इति। "तप सन्तापे" (धा।पा।९८५), हेतुमण्णिच्। सन्तापोऽत्र भावः कत्र्ता॥ "सर्पिषो नाथते" इति। सर्पिर्यस्य नास्त्यतोऽर्थित्वादाशास्ते सः-- सर्पिर्मे भूयादिति। "आशिषि नाथः" इत्युपसंख्यानादात्मनेपदम्। "माणवकमुपनाथति" इति। याचत इत्यर्थः॥

बाल-मनोरमा

रुजार्थानां भाववचनानामज्वरेः ६०७, २।३।५४

रुजार्थानाम्। रुजा पीडा रोग इत्यर्थो येषामिति विग्रहः। भाववचनानामित्येतद्व्याचष्टे--भावकर्तृकाणामिति। वक्तीति वचनः, कर्तरि ल्युट्। प्रकृत्यर्थौ न विवक्षितः। भावो=धात्वर्थो, वचनः=कर्ता येषामिति विग्रहः। भावकर्तृकाणामिति फलितमिति भाष्ये स्पष्टम्। शेष इति कर्मणीति चानुवर्तते। तदाह--कर्मणि शेष इति। इदमपि समासाऽभावार्थमेव। चौरस्य रोगस्य रुजेति। अत्र रुजेति व्याधिकृतसन्तापादिपीडोच्यते। रोगश्चौरं संतापादिना पीडयतीति पर्यवसन्नोऽर्थः। रोगकर्तृका वस्तुतःकर्मीभूतचौरगता सन्तापादिपीडेत्यर्थः। अत्र भावघञन्तेन रोगशब्देन शारीरक्षयादिविकारविशेषो विवक्षितः। सच रुजायां कर्ता। तत्कर्मश्चौरस्य शेषत्वविवक्षायां षष्ठी। "रोगस्य चोररुजे"ति समासो न भवतीति बोध्यम्।

अज्वरिसंताप्योरिति। "रुजार्थानां भाववचनानां ज्वरिसंतापिवर्जिताना"मिति सूत्रं वक्तव्यमित्यर्थः। रोगस्य चौरज्वर इति। अत्र चौरज्वरशब्दे शेषषष्ठ()आ समासो भवत्येव, शेषषष्ठ्याः पुनर्विध्यभावात्। एवं "रोगस्य चौरसंताप" इत्यत्रापि बोध्यम्। अत्राऽज्वरिसंताप्योरित्यनुक्तौ तु रुजार्थानां भाववचनानां कर्मणि शेषे चौरशब्दात्षष्ठी स्यादित्यतिव्या()प्त दर्शयितुमाह--रोगकर्तृकमिति। रोगकर्तृको वस्तुतःकर्मीभूतचौरसंबन्धी ज्वरः संतापो वेति यावत्। एवंच ज्वरिसंताप्योः रुजार्थकत्वाद्रोगात्मकभावकर्तृकत्वाच्च तत्कर्मणश्चौरस्य शेषत्वविवक्षायां नाऽनेन षष्ठी, किन्तु कृद्योगे षष्ठी, षष्ठी शेषे इत्येव षष्ठी वा। अतः-चौरज्वरः चौरसन्ताप इति समासो भवत्येवेति भावः।

तत्त्व-बोधिनी

रुजार्थानां भाववचनानामज्वरेः ५४३, २।३।५४

रुजार्थानाम्। "रुजो भङ्गे"। भिदादिपाठादत एव निपातनाद्वा अङि टाप्। रुजा व्याधिरर्थो येषां तेषां रुजार्थानां धातूनां भाववाचकत्वाऽव्यभिचाराद्भावशब्देनाऽत्र घञादिवाच्यः सिद्धरूपो भाव उच्यते। वक्तीति वचनः। बाहुलकात्कर्तरि ल्युट्। प्रकृत्यर्थस्तु न विवक्षितः, नहि भावो वक्ता सम्भवति। तस्मात्प्रत्ययस्य साधुत्वनिर्वाहायैव वचिरिति बोध्यम्। तथा चायमर्थः,---भावो वचनः=कर्ता येषां तेषां भाववचनानामिति, तदेतव्द्याचष्टे---भावकर्तृकाणामिति। "रुजार्थानां भावकर्तृकाणाम्" इत्येव सूत्रयितुं युक्तम्। चौरस्येति। चुरा शीलमस्य चौरः। अत्र कर्मणि शेषत्वविवक्षायामनेन षष्ठी।

अज्वरिसंताप्योरिति वाच्यम्। रोगस्येति। "पदरुज--" इति घञा रोगो भावोऽभिधीयते, स च रुजायां कर्ता। "कर्तृकर्मणोः--" इति रोगशब्दात्षष्ठी। भावाकर्तृकाणां किम्()। श्लोष्ममश्चौररुजा। "मायुः पित्तं कफः श्लेष्मा" इत्यमरः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आशिषि ७।१ नाथः ६।१ कर्मणि ७।१ ५२ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः
आशिषि नाथः २।३।५५

नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु पथ्यते, तस्याशीःक्रियस्य कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर् भवति। सर्पिषो नाथते। मधुनो नाथते। आशिषि इति किम्? मानवकम् उपनाथति अङ्ग पुत्रकाधीष्व।
बाल-मनोरमा
आशिषि नाथः ६०८, २।३।५५

आशिषि नाथः। शेषे, कर्मणि इति चानुवर्तते। तदाह--आशीरर्थस्येति। इदमपि समासाऽभावार्थमेव। सर्पिषो नाथनमिति। इदं मे भूयादितीच्छा आशासनम्। तदेवाशीर्नाथतेरर्थः। वस्तुतःकर्मीभूतसर्पिः सम्बन्धि आशासनमित्यर्थः।

तत्त्व-बोधिनी
आशिषि नाथः ५४४, २।३।५५

चौरज्वर इति। इह चौरशब्दात् "रुजार्थानाम्--" इति षष्ठ()आ अप्रवृत्तौ "षष्ठी शेषे" इत्यनेन षष्ठ()आं" षष्ठीति समासो भवत्येवेति भावः। सर्पिषो नाथनमिति। सर्पिर्मे भूयादित्याशासनमित्यर्थः। माणवकनाथनमिति। यद्यपि कर्मत्वविवक्षायां "कर्तृकर्मणोः" इति यदा षष्ठी, तदा आशिष्यपि समासोऽस्त्येव, तथापि तत्र "गतिकारकेपपदात्कृत्" इति कृदुत्तरपदप्रकृतिस्वरः। समासान्तोदात्तत्वं तु याच्ञादावेव न त्वाशिषीति निष्कर्ष इति कौस्तुभे स्थितम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ जासि॰पिषाम् ६।३ हिंसायाम् ७।१ कर्मणि ७।१ ५२ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः
जासिनिप्रहणनाटक्राथपिषां हिंसायाम् २।३।५६

जासि निप्रहण नाट क्राथ पिषित्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके षष्ठी विभक्तिर् भवति। जसु हिंसायाम्, जसु ताडने इति च चुरादौ पठ्यते, तस्य इदं ग्रहणं, न दैवादिकस्य जसु मोक्षणे इत्यस्य। चौरस्य उज्जासयति। वृषलस्य उज्जासयति। निप्रहण इति सग्घातविगृहीतविपर्यस्तस्य ग्रहणम्। चौरस्य निप्रहति। चौरस्य निहन्ति। चौरस्य प्रहन्ति। चौरस्य प्रणिहन्ति। चौरस्य उन्नाटयति। वृषलस्य उन्नाटयति। चौरस्य उत्क्राथायति। वृषलस्य क्राथयति। निपातनाद् वृद्धिः। अयं हि घटादौ पठ्यते, श्रथ क्नथ क्रथ क्लथ हिंसार्थाः इति। तत्र घटादयो मितः इति मित्संज्ञायां मितां ह्रस्वः ६।४।९२ इति ह्रस्वत्वं स्यात्। चौरस्य पितष्टि। वृषलस्य पिनष्टि। हिंसायाम् इति किम्? धानाः पिनष्टि। शेषे इत्येव, चौरम् उज्जासयति। एशाम् इति किम्? चौरं हिनस्ति। निप्रहण इति किम्? चौरं विहन्ति।
न्यासः

जासिनिप्रहणनाटक्राथपिषां हिंसायाम्। , २।३।५६

"न दैवादिकस्य" इति। हिंसायामिति वचनात्। अस्य च तत्राप्रवृत्तेः। अत एव हि ण्यन्तस्यैव ग्रहणं भविष्यति, तत्किमर्थो ण्यन्तस्य निर्देश इति? कः पुनराह च्यन्तस्य निर्देश इति? अत्र हीकारोऽयं धातुनिर्देशार्थः कृतः, "इक्श्तिपौ धातुनिर्देशे" (वा।३१९) इति। यद्येवम्, जासीत्याकारः कथं श्रूयते? उच्यते-- आकारमुच्चार्य विकृतनिर्देशः कृतः, विकृतनिर्देशस्तू यत्रास्यैतद्रूपं भवति तत्रैव यथा स्यादिह मा भूत्,-- दस्युमजीजसदिति। लुङ्, "णिश्रि"३।१।४८ इत्यादिना च्लेश्चङ, "णौ चङ्युपधाया ह्रस्वः" ७।४।१, "चङि" ६।१।११ इति द्विर्वचनम्, "सन्वल्लघुनि" ७।४।९३ इत्यादिना सन्वद्भावः, "सन्यतः" ७।४।७९ इतीत्वम्, "दीर्घो लघोः" ७।४।९३ इति दीर्घः। नाटक्राथयोरपि वकृतानिर्देशस्यैतदेव प्रयोजनम्। इह मा भूत-- दस्युमनीनटदिति, दस्युमचिक्रथदिति। क्रथेर्वृद्धिश्च प्रयोजनम्, एतच्च "निपातनाद्वृद्धिः" इति ब्राउवता वृत्तिकारेण दर्शितम्। "{निप्रहन्ति"इति वृत्तौ पाठः} निप्रहन्" इति। धातूपसर्गानिर्देशमात्रमिह तन्त्रम्। न तूपसर्गसयोः संघातः, नाष्यानुपूर्वी; तयोरविवक्षितत्वात्। तेन निप्रशब्दयोर्व्यस्तसमस्तयोर्विपरीतानुपूर्वीकयोश्च ग्रहणं विज्ञायत इत्याह-- "संघातविगृहीतविपर्यस्तस्य ग्रहणम्" इति। "चौरस्य प्रणिहन्ति" इति। नेर्गदनद" ८।४।१७ इत्यादिना णत्वम्। "चौरस्योन्नाटयति" इति। "नट अवस्पन्दने" (धा।पा।७।२।११६ इति वृद्धि सिद्धा; तत्किमर्थमुच्यते-- निपातनाद्वृद्धिरिति? अत आह-- "अयं हि" इत्यादि। "ह्रस्वस्य स्यात्" इति। "मितां ह्रस्वः" ६।४।९२ इत्यनेन। "चौरस्य पिनष्टि" इति। " पिष्लृ सञ्चूर्णने" (धा।पा।१४५२) रुधादित्वात् श्नम्। "धानाः पिनष्टि" इति। अत्र हिंसा नास्ति; तस्या प्राणिधर्मत्वात्। इदञ्चाभावकर्त्तृकाणामपि यथा स्यादित्येवमर्थमारब्धम् चौरस्योजासयति देवदत्तः॥

बाल-मनोरमा

जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ६०९, २।३।५६

जासिनिप्र। कर्मणि शेषे इत्यनुवर्तते। तदाह--हिंसार्थानामित्यादिना। इदमपि समासाऽभावार्थमेव। चौरस्योज्जासनमिति। "जसु ताडने" "जसु हिसायाम्" इति चुरादौ। वस्तुतः कर्मीभूतचौरसंबन्धिनी हिंसेत्यर्थः। "जसु मोक्षणे" इति दैवादिकस्य तु न ग्रहणम्, हिंसार्थत्वाऽभावात्, जासीति निर्देशाच्च। निप्राविति। निप्रहणेति निप्रपूर्वस्य हनधातोर्निदेशः। तत्र नि प्र इत्येतौ समस्तौ गृह्लेते, प्रनीत्येवं व्युक्रमेण च गृह्लेते, प्रेति नीति च पृथगपि गृह्लेते, व्याख्यानादित्यर्थः। समस्तावुदाहरति--चौरस्य निप्रहणनमिति। वस्तुतःकर्मीभूतचौरसंबन्धि हननमित्यर्थः। "हन्तेरत्पूर्वस्ये"ति णत्वम्। विपर्यस्तावुदाहरति--प्रणिहननमिति। "नेर्गदे"ति णत्वम्। हन्तेर्नकारस्य तु न णत्वम्, "अट्कुप्वाङ्" इति नियमात्, नेर्नकारस्य तदनन्तर्भावात्। व्यस्तावुदाहरति--निहननं प्रहणमनं वेति। निमित्ताऽभावान्निहननमित्यत्र "बन्तेरत्पूर्वस्य" इति णत्वं न। चुरादिरिति। "नट नृत्तौ" इति तु न गृह्लते, नाटेति दीर्घोच्चारणादिति भावः। चौरस्योन्नाटनमिति। उपसर्गवशान्नाटेर्हिसायां वृत्तिरिति भावः। चौरस्य क्राथनमिति। "क्रथ हिंसायाम्" इति घटादौ। "घटादयो मितः" इति तस्य मित्त्वेऽपि "मितां ह्रस्वः" इति न भवति, इह दीर्घनिपातनात्। वृषलस्य पेषणमिति। हिसेत्यर्थः। व्यपह्मपणोः। शेषपूरणेन सूत्रं व्याचष्टे--शेषे कर्मणि षष्ठी स्यादिति। समौ तुल्यौ अर्थौ ययोरिति विग्रहः। शकन्ध्वादित्वात्पररूपम्। एकार्थकस्य व्यवपूर्वकह्मञ्धातोः पणधातोश्च कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थः। इदमपि समासनिवृत्त्यर्थमेव। ननु "पण व्यवहारे स्तुतौ चे"ति पणधातुः स्तुतावपि वर्तते, नतु व्यवहार एव, तत्कथमनयोरेकार्थकत्वमित्यत आह--द्यते इति। द्यूते=अक्षैः क्रीडने, क्रयविक्रयविषयकमूल्यसंवादे चानयोः=व्यवह्मपणोरेकार्थकत्वमित्यर्थः। तथाच एतादृशव्यवहारार्थकयोरिति फलतीति भावः। शतस्य व्यवहरणं पणनं वेति। द्यूतव्यवहारेण क्रयविक्रयव्यवहारेण वा गृह्लातीत्यर्थः। केवलव्यवहारार्थकत्वेऽकर्मकत्वापातात्। तथाच वस्तुतः कर्मीभूतशतसंबन्धि अक्षक्रीडनेन ग्रहणं, क्रयविक्रयविषयकमूल्यसंवादेन ग्रहणं वेत्यर्थः।

तत्त्व-बोधिनी

जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ५४५, २।३।५६

जासि। "जसु ताडने," "जसु हिंसायाम्" इति च चुरादिस्तस्येदं ग्रहणं न तु दैवादिकस्य "जसु मोक्षणे" इत्यस्य, जासीति निर्देशात्, "हिंसायाम्" इति वचनाच्च। निप्रहणनमिति। "हन्तेरत्पूर्वस्य"इति णत्वम्। प्रणीति। "नेर्गद--"इति णत्वम्। चुरादिरिति। "नट नृत्तौ" इति तु गृह्रते, दीर्घनिर्देशादिति भावः। क्राथनमिति। "क्रथ हिंसायाम्िति घटादौ पठ()ते, तस्य मित्त्वेऽपि इह निपातनाद्वृद्धिः। मित्त्वफलं तु निपातनात्परत्वात् "चिण्णमुलोः" इति दीर्घे चरितार्थमिति घटादौ वक्ष्यति। यत्तु हरदत्तेनोक्तम्---""घटादिपाठो "घटादयः षितः"इत्यातिदेशिकषित्वे अङ्यथा स्यादित्येतदर्थ""इति। तन्मन्दम्। "घटादयः षितः" इति हि मध्ये सूत्रितम्। तेन पूर्वेषां त्वरत्यन्तानामेव षित्वं, न तु ज्वरा दीनां परेषामिति। अतएव "त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च" इति घटादौ वक्ष्यति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ व्यवहृपणोः ६।२ समर्थयोः ६।२ कर्मणि ७।१ ५२ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः

व्यवहृपणोः समर्थयोः २।३।५७

व्यवहृ पण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठी विभक्तिर् भवति। द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः। शतस्य व्यवहरति। सहस्रस्य व्यवहरति। शतस्य पणते। सहस्रस्य पणते। आयप्रत्ययः कस्मान् न भवति? स्तुत्यर्थस्य पनतेरायप्रत्यय इष्यते। समर्थयोः इति किम्? शलाकां व्यवहरति। विक्षिपति इत्यर्थः व्राहमणान् पणायते। स्तौति इत्यर्थः। शेषे इत्येव, शतं पणते।

न्यासः

व्यवह्मपणोः समर्थयोः। , २।३।५७

"शतस्य व्यवहरति" इति। शतं क्रयविक्रयेण विनियुङ्क्ते, दीव्यतीति वेत्यर्थः। "शतस्य पणते" इत्यत्रापि स एवार्थः। अनुदात्तेत्वादात्मनेपदम्,। "आयप्रत्ययः कस्मान्न भवति" इति। "गकपूधूप"३।१।२८ इत्यादिना प्राप्नोतीति भावः। "स्तुत्यर्थस्य" इत्यादि। यद्यपि "पण व्यवहारे स्तुतौ च"(धा।पा।४३९) इति स्तुतिव्यवहारयोः पणिः पठ()ते; तथापि स्तुत्यर्थस्यैव पणतेरायप्रत्यय इष्यते, न व्यवहारार्थस्य। तत्र वृत्तिकारः स्वयमेव युकिं()त वक्ष्यति। स्तुत्यर्थ्येन पणिना साहचर्यात् तदर्थ एव पणिरायमुत्पादयति,न व्यवहारार्थ इति। "शलाकां व्यवहरति" इति। परिगणयतीत्यर्थः। अत्र व्यवहारार्थे वत्र्तत इत्यसमानार्थत्वम्। "ब्राआहृणान् पणयति" इति। स्तौतीत्यर्थः। पणयीत्यस्यार्थे व्यवहरतेर्वृत्तिर्नास्तीत्यसमानार्थता।ओ।

बाल-मनोरमा

व्यवह्मपणोः समर्थयोः ६१०, २।३।५७

समर्थयोः किमिति। व्यवहारार्थकयोरिति किमर्थमित्यर्थः। शलाकाव्यवहार इति। प्रत्युदाहरणे व्यवहरतेर्न व्यवहारार्थकत्वमित्याह--गणनेत्यर्थ इति। वस्तुतःकर्मीभूतशलाकासंबन्धिगणनेति फलितम्। अत्र षष्ठ्याः

पुनर्विध्यभावादस्त्येव समास इति भावः। ब्राआह्मणपणनमिति। पणतेः प्रत्युदाहरणम्। अत्र पणिर्न व्यवाहारार्थ इत्याह-- स्तुतिरित्यर्थ इति। वस्तुतःकर्मीभूतब्राआह्मणसम्बन्धिनी स्तुतिरित्यर्थः। अत्रापि अस्त्येव समास इति भावः।

तत्त्व-बोधिनी

व्यवह्मपणोः समर्थयोः ५४६, २।३।५७

पणनमिति। "स्तुतावेव" इति वक्ष्यमाणत्वादायस्याऽभावः। ब्राआह्मणपणनमिति। "आयादय आद्र्धधातुके वा" इत्यायस्य विकल्पः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दिवः ६।१ ६० तदर्थस्य ६।१ ६० कर्मणि ७।१ ५२ षष्ठी १।१ ५०

काशिका-वृत्तिः

दिवस् तदर्थस्य २।३।५८

व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर् भवति। शतस्य दीव्यति। सहस्रस्य दीव्यति। तदर्थस्य इति किम्? ब्राह्मनं दीव्यति। योगविभाग उत्तरार्थः।

न्यासः

दिवस्तदर्थस्य। , २।३।५८

"ब्राआह्मणान् दीव्यति" इति। स्तौतीत्यर्थः। "हलि च" ८।२।७७ इति दीर्घः। यदि तदर्थस्यैव भविष्यति, पूर्वयोग एव दिवो ग्रहणं कर्त्तुं युक्तं स्यात्। तत्किमर्थो योगविभाग इत्यत आङ-- "योगविभाग उत्तरार्थः" इति॥

बाल-मनोरमा

दिवस्तदर्थस्य ६११, २।३।५८

दिवस्तदर्थस्य पूर्वसूत्रे निर्दिष्टव्यवह्मपणौ तच्छब्देन परामृश्येते। तयोः=व्यवह्मपणोरर्थ एवार्थो यस्येति विग्रहः। तदाह-- द्यूतार्थस्येति। द्यूतमक्षक्रीडनेन ग्रहणमर्थो यस्य दिव इति विग्रहः। क्रयेति। क्रयविक्रयविषयकमूल्यसंवादोऽर्थो यस्यदिव इति बहुव्रीहिः। कर्मणि षष्ठीति। इह शेष इति नानुवर्तते, व्याख्यानादिति भावः। तथाच कर्मणः शेषत्वविवक्षाऽभावात् "षष्ठी शेषे" इत्यप्राप्तौ इदं वचनम्, नतु कृदन्तयोगे समासनिवृत्त्यर्थम्। तद्ध्वनयन्नुदाहरति--शतस्य दीव्यतीति। शतमक्षक्रीडनेन, क्रयविक्रयविषयकमूल्यसंवादेन वा गृह्णातीत्यर्थः। अत्र शेष इत्यननुवृत्तेः कर्मत्वप्रकारक एव बोधः। अत एव "द्वितीया ब्राआह्मणे" इत्युत्तरसूत्रे "गामस्य तदहः सभायां दीव्येयुः" इत्यत्र नित्यषष्ठीप्राप्तौ द्वितीयार्थ"मित्युक्तं भाष्यकैयटयोः सङ्गच्छत इत्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

दिवस्तदर्थस्य ५४७, २।३।५८

दिवस्तद। तच्छब्देन व्यवह्मपणौ परामृश्येते, तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वऽसूत्रे गृहीतावित्याशयेनाह---

द्यूते इति। पूर्वसूत्रे एव दिवेः पाठे तदर्थस्येति न कर्तव्यमिति यद्यपि लाघवं, तताति योगाविभाग उत्तरार्थः। कर्मणीति। इह शेष इति न सम्बध्यते, उत्तरसूत्रे विकल्पारम्भासामश्र्यात्। अन्यथा षष्ठ()आ विकल्पितायां तया मुक्ते शेषे विभक्त्यन्तरस्याऽप्रास्या वृथैव विकल्पारम्भः स्यादिति भावः। अन्ये त्वाहुः--लाघवात्पूर्वसूत्रे एव दिवो ग्रहणे कर्तव्ये पृथग्योगकरणसामश्र्यादत्र शेष इति न सम्बध्यते। न चोत्तरार्थत्वापृथग्योगस्य नोक्तार्थज्ञापकत्वमिति वाच्यम्। सङ्कोचे मानाऽभावेन फलद्वयस्यापि सुवचत्वादिति। शेष इत्यस्याऽसम्बन्धादिह त्रिसूत्र्यं तिङन्तमुदाहरति--शतस्य दीव्यतीति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ उपसर्गे ७।१ दिवः ६।१ ५८ तदर्थस्य ६।१ ५८ कर्मणि ७।१ ५२ षष्ठी १।१ ५०

काशिका-वृत्तिः
विभाषौपसर्गे २।३।५९

दिवस् तदर्थस्य २।३।५८ इति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते। उपसर्गे सति दिवस् तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर् भवति। शतस्य प्रतिदीव्यति। सहस्रस्य प्रतिदीव्यति। शतं प्रतिदीव्यति। सहस्रं प्रतिदीव्यति। उपसर्गे इति किम्? शतस्य दीव्यति। तदर्थस्य इत्येव शलाकां प्रतिदीव्यति।
न्यासः
विभाषोपसर्गे। , २।३।५९

"शलाकां प्रति दीव्यति" इति। अर्थान्तरे क्रीडादौ दीव्यतिर्वत्र्तते॥
बाल-मनोरमा
विभाषोपसर्गे ६१२, २।३।५९

विभाषोपसर्गे। उपसर्गे सति व्यवह्मपणार्थस्य दिवः कर्मणि षष्ठी वा स्यादित्यर्थः।

बाल-मनोरमा
प्रेष्यब्राउवोर्हविषो देवतासंप्रदाने ६१३, २।३।५९

प्रेष्यब्राउवोः। देवतासप्रदानके इति। देवता संप्रदानं यस्य तस्मिन्नित्यर्थः। प्रेष्यब्राउवोरिति। "ईष गतौ" दिवादिः श्यन्नन्तः, उपसर्गवशात्प्रेरणे वर्तते। प्रेष्यश्च ब्राऊश्चा तयोरिति विग्रहः। कर्मण इति। "अधीगर्थे"त्यतः कर्मणीत्यनुवृत्तं षष्ठ()आ विपरिणम्यत इति भावः। हविष इति। हविश्शब्दो न स्वरूपपरः किंतु हविर्विशेषवाचकशब्दपरः , व्याख्यानात्। तथाच देवतासंप्रदानकक्रियावाचिनोः प्रेष्यब्राउवोः कर्मीभूतो यो हविर्विशेषवाचकशब्दपरः, व्याख्यानात्। तथाच देवतासंप्रदानकक्रियावाचिनोः प्रेष्यब्राउवोः कर्मीभूतो यो हविर्विशेषवाचकशब्दपरः, व्याख्यानात्। तथाच देवतासंप्रदानकक्रियावाचिनोः प्रेष्यब्राउवोः कर्मीभूतो यो हविर्विशेषस्तद्वाचकाच्छब्दात्षष्ठीति फलितम्। अत्रापि शेष इति नानुवर्तते, व्याख्यानात्। तथाच द्वितीयापवादोऽयम्। अग्नये छागस्येति। मैत्रावरुणं प्रति अध्वर्युकर्तृकोऽयं सम्प्रैषः। हे मैत्रावरुण। अग्न्युद्देशेन प्रदास्यमान छागसम्बन्धि यद्धविः वपाख्यं मेदोरूपं तत्प्रेष्य। "होता यक्षद()ग्न छागस्य वपाया"मेदसो जुषतां हविर्होतर्यजे"ति प्रैषेण प्रकाशयेत्यर्थः। अत्र यद्यपि "अग्नये छागस्य वपाया मेदसः प्रेष्ये"त्येव

कल्पसूत्रेषु दृश्यते, नतु हविष इत्यपि, तथापि तथाविधः प्रैषो भाष्योदाहरणात्क्वचिच्छाखायां ज्ञेयः। मेदश्शब्देन वस्त्रखण्डतुल्यो मांसविशेष उच्यते। अनुब्राऊहि वेति। "अग्नये छागस्य हविषो वपाया मेदसः प्रेष्ये"त्येव कल्पसूत्रेषु दृश्यते, नतु हविष इत्यपि, तथापि तथाविधः प्रैषो भाष्योदाहरणत्क्वचिच्छाखायां ज्ञेयः। मेदश्शब्देन वस्त्रखण्डतुल्यो मांसविशेष उच्यते। अनुब्राऊहि वेति। "अग्नये छागस्य हविषो वपाया मेदसः प्रेष्ये"त्येव कल्पसूत्रेषु दृश्यते, नतु हविष इत्यपि, तथापि तथाविधः प्रैषो भाष्योदाहरणात्क्वचिच्छाखायां ज्ञेयः। मेदश्शब्देन वस्त्रखण्डतुल्यो मांसविशेष उच्यते। अनुब्राऊहि वेति। "अग्नये छागस्य हविषो वपाया मेदसोऽनुब्राऊही"त्युदाहरम्। हे मैत्रावरुण ! अगन्युद्देशेन प्रदास्यमानं छागसम्बन्धि यद्धविः-वपाख्यं मेदोरूपं--तत्पुरोऽनुवाक्यया प्रकाशयेत्यर्थः। प्रेष्यब्राउवोः किम्?। अग्नये छागस्य हविर्वपां मेदो जुहुधि। हविषः किम्?। अग्नये गोमयानि प्रेष्य। देवतासंप्रदाने किम्?। माणवकाय पुरोडाशं प्रेष्य। "हविषः प्रस्थितत्वविशेषणे प्रतिषेधो वक्तव्यः"। इन्द्राग्निभ्या#ं छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य। प्रस्थितमिति। अव्यक्तमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्वितीया १।१ ब्राह्मणे ७।१ दिवः ६।१ ५८ तदर्थस्य ६।१ ५८ कर्मणि ७।१ ५२ षष्ठी १।१ ५०

काशिका-वृत्तिः

द्वितीया ब्राह्मणे २।३।६०

ब्राह्मणविषये प्रयोगे दिवस् तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर् भवति। गामस्य तदहः सभायां, दीव्येयुः। अनुपसर्गस्य षष्ठ्यां प्राप्तायाम् इदं वचनम्। सोपसर्गस्य तु छन्दसि व्यवस्थितविभाशाया ऽपि सिध्यति।

न्यासः

द्वितीया ब्राआह्रणे। , २।३।६०

"ब्राआह्रणे; इति। ब्राआह्रणशब्दः शथपथस्याख्या। "ग्रामस्य" इति। शेषषष्ठी। सभायामित्येतदपेक्षया। "तदहः" इति। एतदुहारणम्। "स्वमोर्नपुंसकात्" ७।१।२३ इत्यमो लुक्। "अहन्" ८।२।६८ इत्यनुवर्त्तमाने "रोऽसुपि" ८।२।६९ इति नकारस्य रेफः, विसर्जनीयः। "दीव्येयुः" इति। लिङ, झेर्जुस्, "अतो येयः" ७।२।८० इतीयादेशः, "लिङ सलोपोऽनन्तयस्य" ७।२।७९ इति सलोपः। सोपसर्गस्य विभाषया षष्ठ()आं प्राप्तायां नित्यं द्वितीयाविधानार्थं वचनं कस्मान्न भवतीत्याह-- "सोपसर्गस्य" इति। "विभाषोपसर्गे" २।३।५९ इत्यनेन व्यवस्थितविभाषयापि च्छन्दसि नित्यं द्वितीया भविष्यतीति तदर्थकमिदं वचनं नोपपद्यते॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रेष्यब्रुवोः ६।२ हविषः ६।१ देवतासम्प्रदाने ७।१ कर्मणि ७।१ ५२ षष्ठी १।१ ५०

काशिका-वृत्तिः

प्रेष्यब्रुवोर् हविषो देवतासम्प्रदाने २।३।६१

प्रेष्य इति इष्यतेर् दैवादिकस्य लोण्मध्यमपुरुषस्य एकवचनम्, तत्साहचर्याद् ब्रुविरपि तद्विषय एव गृह्यते। प्रेष्यब्रुवोर्हविषः कर्मणः षष्थी विभक्तिर् भवति देवतासम्प्रदाने सति। अग्नये छागस्य हविषो वपाया मेदसः प्रे३ष्य। अग्नये छागस्य हविषो वपायै मेदसो ऽनुब्रूहि३। प्रेष्यब्रुवोः इति किम्? अग्नये छागं हविर्वपां मेदो जुहुधि। हविषः इति किम्? अग्नये गोमयानि प्रेष्य। देवतासम्प्रदाने इति किम्? माणवकाय पुरोडाशं प्रेष्य। हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः। इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य३।

न्यासः

प्रेष्यब्राउवोर्हविषो देवतासम्प्रदाने। , २।३।६१

"इष्यतेर्दैवादिकस्य" इति। "इष गतौ" (धा।पा। ११२७) इत्यस्य श्यना निर्देश इष्यन्तराणां निवृत्त्यर्थः। लोण्मध्यमपुरुषैकवचनेन निर्देशस्तु लकारान्तरस्य पुरुषान्तरस्य वचनान्तरस्य च निवृत्त्यर्थः। "तद्विषय एव" इति। लोण्मध्यमपुरुषैकवचनविषय एव। "अग्नये छागस्य" इत्यादि। छागस्य विकारश्चछागः। तत्राग्निर्देवता सम्प्रदानम्। कछागविकारो वपादि सम्प्रदेयं हविः कर्म। "{नास्ति-काशिका, पदमञ्जरी च} ननु प्रेष्य" इति। "अतो हेः" ६।४।१०५ इति हर्लुक्। " अनुब्राऊहि" इति। "सेह्र्यपिच्च" ३।४।८७ इति हिरादेशः। अदादित्वाच्छपो लुक्। भाषाविषयेऽप्ययं योगः; उत्तरसूत्रे छन्दोग्रहणात्। "जुहुधि" इति। "हुझल्भ्यो हेर्धिः" ६।४।१०१ इति धिभावः। "अग्नये गोमयानि प्रेष्य" इति। ननु च गोमयानि हर्वीषि भवन्त्येव, तत्कथं प्रत्युदाहरणम्? नैवम्; देवतासम्प्रदानग्रहणादेव सम्बन्धिशब्दात्वाद्धविग्र्रहणे सिद्धे पुनर्हविग्र्रहणादभ्यवहार्यस्य हविषो ग्रहणं विज्ञायते। न च गोमयान्यभ्यवहार्याणि भवन्तीति युक्तं प्रत्युदाहरणम्। "हविषः प्रस्थितस्य" इत्यादि। प्रस्थितशब्देन यद्विशिष्यते हविस्तत् प्रस्थितम्। तस्य षष्ठ्याः प्रतिषेधो वक्तव्यः। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम् --"विभाषोपसर्गे" २।३।५९ इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेन हविषः प्रस्थितस्य न भवति॥

तत्त्व-बोधिनी

प्रेष्यब्राउवोर्हविषो देवतासंप्रदाने ५४८, २।३।६१

प्रेष्यब्राउवोः। इष्यतेक्दैवादिकस्य लोटो मध्यमपुरुषैकवचनं---प्रेष्यति। तत्साहचर्याद्द्र विरपि तथाभूत एव गृह्रते। अत एवेह शेषग्रहणं न सम्बध्यते। तिङन्तेन सह समासस्याऽप्रसक्तत्वात्। प्रेष्याब्राउवोः किम्()। अग्नेय छागस्य हहविर्वपां मेदो जुहुधि। हविषः किम्()। अग्नये गोमयानि प्रेष्य। देवता सम्प्रदाने किम्()। माणवकाय पुरोडाशान्प्रेष्य। "हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः"। इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रेष्य।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चतुर्थ्यर्थे ७।१ बहुलम् १।१ ६३ छन्दसि ७।१ ६३ षष्ठी १।१ ५०

काशिका-वृत्तिः

चतुर्थ्यर्थे बहुलं छन्दसि २।३।६२

छन्दसि विषये चतुर्थ्यर्थे षष्थी विभक्तिर् भवति बहुलम्। पुरुषमृगश्चन्द्रमसः। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम्। ते वनस्पतिभ्यः। बहुलग्रहणं किम्? कृष्णो रात्र्यै। हिमवते हस्ती। षष्ठ्यर्थे चतुर्थी वक्तव्या। या खर्वेण पिवति तस्यै खर्वो जायते। या दतो धावते तस्यै श्यावदन्। या नखानि निकृन्तते तस्यै कुनखी। या ऽङ्क्ते तस्यै

काणः। या ऽभ्यङ्क्ते तस्यै दुश्चर्मा। या केशान् प्रलिखते तस्यै खलतिः। अहल्यायै जारः।

न्यासः

चतुर्थ्यर्थे बहुलं छन्दसि।, २।३।६२

"बहुलग्रहणं किम्" इति। विभाषाग्रहणानुवृत्तेरेव सिध्यतीति मन्यमानस्य प्रश्नः। "कृष्णो रात्र्यै, हिमवतो हस्ती" इति। अत्र बहुलग्रहणात् सप्तम्यर्थेऽपि चतुर्थी भवति। "वक्तव्या" इति। व्याख्यातव्येत्यर्थः। तत्रेदं प्रतिपादनम्-- बहुलग्रहणमिह क्रियते। तेन क्वचित् षष्ठ()र्थेऽपि चतुर्थी भवति। क्वचिदन्यदेवेत्येषोऽपि बहुलगर्हणस्यार्थोऽभिमत एव॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यजेः ६।१ च ० करणे ७।१ बहुलम् १।१ ६२ छन्दसि ७।१ ६२ षष्ठी १।१ ५०

काशिका-वृत्तिः

यजेश् च करणे २।३।६३

यजेर् धातोः करणे कारके छन्दसि बहुलं षष्थी विभक्तिर् भवति। घृतस्य यजते, घृतेन यजते। सौम्यस्य यजते, सोमेन यजते।

न्यासः

यजेश्च करणे।, २।३।६३

"धृतस्य यजते" इति। यजिरत्र देवपूजायां वत्र्तते, तत्र च घृतस्य करणभावः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत्वोऽर्थप्रयोगे ७।१ काले ७।१ अधिकरणे ७।१ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः

कृत्वो ऽर्थप्रयोगे काले ऽधिकरणे २।३।६४

छन्दसि बहुलम् इति निवृत्तम्। कृत्वो ऽर्थानां प्रयोगे काले ऽधिकरणे षष्ठी विभक्तिर् भवति। पञ्चकृत्वो ऽह्नो भुङ्क्ते। द्विरह्नो ऽधीते। कृत्वो ऽर्थग्रहणं किम्? आह्नि शेते। रात्रौ शेते। प्रयोगग्रहणं किम्? अहनि भुक्तम्। गम्यते हि द्विस् त्र्श्चतुर् वेति, न त्वप्रयुज्यमाने भवति। कालग्रहणम् किम्? द्विः कांस्यपात्र्यां भुङ्क्ते। अधिकरणे इति किम्? द्विरहो भुङ्क्ते। शेषे इत्येव, द्विरहन्यधीते।

न्यासः

कृत्वोऽर्थप्रयोगे कालेऽधिकरणे।, २।३।६४

"पञ्चकृत्वः" इति। "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" ५।४।१७ " द्विरह्नः" इति। "द्वित्रिचतुर्थ्यः सुच्" ५।४।१८।

"गम्यते हि द्विस्त्रिश्चतुर्वा" इति। प्रकरणादेरिति भावः। ननु च बहिरङ्गः प्रकरणाद्यर्थ इति पञ्चकृत्व इत्यमत्र च वचनस्य चरितार्थत्वादिह न भविष्यति? एवं तह्र्येतज्ज्ञापयति-- प्रकरणाद्यर्थोऽपि विभक्तीनां निमित्तमिति। तेन "वृद्धो यूना" १।२।६५ इति " सहयुक्तेऽप्रधाने" २।३।१९ इति सहार्थे गम्यमाने तृतीया भवतीति॥

बाल-मनोरमा

कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ६१४, २।३।६४

कृत्वोऽर्थ। कृत्वोऽर्थानामिति। कृत्वसुच्प्रत्ययस्यार्थ एवार्थो येषां ते कृत्वोऽर्थाः, तेषां प्रयोग इत्यर्थः। शेषे षष्ठीति। "दिवस्तदर्थस्ये"त्यादिपूर्वसूत्रे विच्छिन्नमपि शेषग्रहणं मण्डूकप्लुत्या इहानुवर्तते, व्याख्यानात्। पञ्चकृत्वोऽह्नो भोजनमिति। पञ्चवारं वस्तुतोऽधिकरणीभूतं यदहस्तत्संबन्धि भोजनमित्यर्थः। "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्"। इह षष्ठ्याः शेषे पुनर्विधानान्न समासः। द्विरहन्यध्ययनमिति। "द्वित्रिचतुभ्र्यः सुच्" इति कृत्वोऽर्थे सुच्। अत्र अधिकरणस्य विवक्षितत्वात्सप्तम्येव,नतु षष्ठी।

तत्त्व-बोधिनी

कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ५४९, २।३।६४

कृत्वोर्थ। कृत्वसुचोऽर्थ इवार्थो येषांप्रत्ययानां ते कृत्वोर्थाः। शेषे इति। इह "दिवस्तदर्थस्य"इत्यादिसूत्रषट्के विच्छिन्नमपि शेषग्रहणमनुवर्तते, व्याख्यानात्। पञ्चकृत्व इति। "सङ्ख्यायाः क्रिया---" इत्यादिना कृत्वसुच्। द्विरिति। "द्वित्रिचतुभ्र्यः सुच्"।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तृकर्मणोः ७।२ कृति ७।१ ६६ षष्ठी १।१ ५० अनभिहिते ७।१ १

काशिका-वृत्तिः

कर्तृकर्मणोः कृति २।३।६५

कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर् भवति। भवतः शायिका। भवत आसिका। कर्मणिअपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता। कर्तृकर्मणोः इति किम्? शस्त्रेण भेत्ता। कृति इति किम्? तद्धितप्रयोगे मा भूत्, कृतपूर्वी कटम्। भुक्तपूर्व्योदनम्। शेषे इति निवृत्तम्, पुनः कर्मग्रहणात्। इतरथा हि कर्तरि च कृति इत्येवं ब्रूयात्।

न्यासः

कर्तृकर्मणोः कृति। , २।३।६५

"आसिका" इति। भावे "पर्यायार्हणोत्पत्तिषु ण्वुच्" ३।३।१११। "रुआष्टा" इति। सृजेस्तृच्"। "सृजिदृशोर्झल्यमकिति" ६।१।५७ इत्यम्, "व्रश्चादिना ८।२।३६ षत्वम्। "तद्धितप्रयोगे मा भूत्" इति। अथ तिङप्रयोगे मा भूदित्येवमर्थमपि कृद्ग्रहणं कस्मान्न भवति? तत्र "न लोकाव्ययनिष्ठा" २।३।६९ इत्यनेन षष्ठीप्रतिषेधात्। " कृतपूर्वी कटम्" इति। "पूर्वादिनिः" ५।२।८५ इत्यत्र इनिरित्यनुवत्र्तमाने "सपूर्वाच्च" ५।२।८६ इतीनिप्रत्ययः। अत्र कत्र्ता तद्धितेनैवोक्त इत्यत्र वाक्यमेवैतन्नोपप्रसङ्गो नास्ति, कर्म तु तेनानभिहितमित्यसति कृद्ग्रहणे कटादेः कर्मणः षष्ठी स्यात्। ननु चात्र

वाक्यमेवैतन्नोपपद्यते, तथा हि-- कर्मणो निष्ठयाऽभिहितत्वात् द्वितीययाऽत्र न भवितव्यम्, नापि तद्धितेन, असमाथ्र्यात्। तत्पुनरसामथ्र्य सापेक्षत्वात्। तथा हि-- कृतः कटः पूर्वमनेनेति कृतशब्दः कटमपेक्षते, नैवम्; धातोरुत्पद्यमाना निष्ठा कथं कटशब्दस्य कर्मतामभिदध्यात्। तस्या हि कर्मसामान्यमेवाभिधातुं सामथ्र्यम्, न कर्मविशेषम्। वाक्ये तर्हि कथं तया कटशब्दस्य कर्मत्वमभिधीयते? तत्र युक्तमभिधानम्; कृत इत्यनेन सामानाधिकरण्यात्। तद्धिते तूत्पन्न एकार्थीभावात्सामानाधिकरण्यं निवृत्तमिति केन कटादेः कर्मभावोऽभिधीयते? क्रिया तु प्रकृत्यर्थत्वाद्यथा वाक्ये गुणीभूता साधनसम्बन्धमनुभवति, तथा वृत्तावपीति करोत्यर्थापेक्षं कटशब्दस्य कर्मत्वमुपपद्यते। तस्माद्भवितव्यमेव द्वितीयया। किञ्च वृत्तिसमानार्थेन वाक्यन भवितव्यम्। न च वृत्तौ बाह्नं कटादिकं कर्म गम्यते येन प्रत्यय उत्पादयिष्यते। वाक्ये कटादिकर्मापेक्षा निष्प्रयोजनेति गम्यते। तस्मादेवं विग्रहः कत्र्तव्यः-- कृतं पूर्वमनेनेति। ततश्च नास्ति सापेक्षत्वमिति भवत्येव तद्धितः। "इतरथा हि" इति। यदि शेषगर्हणमनुवत्र्तत इत्यर्थः। "कत्र्तरि च कृतीत्येवं ब्राऊयात्" इति। एवमपि ह्रुच्यमाने शेष इत्यनुवृत्तौ चकारकरणात् कर्मणीत्येतल्लभ्यत एव, किं कर्मग्रहणेन? तस्मात् पुनः कर्मग्रहणं शेषाधिकरानिवृत्त्यर्थम्। पुनः कर्मग्रहणेन हि पूर्वस्य कर्मग्रहणस्य निवृत्तिराख्यायते। तन्निवृत्तौ तत्सम्बद्धमनुवृत्तमपि शेषग्रहणं निवत्र्तते॥

बाल-मनोरमा

कर्तृकर्मणोः कृति ६१५, २।३।६५

कर्तृकर्मणोः कृति। कृत्प्रत्यये प्रयुज्यमाने सतीत्यर्थः। फलितमाह--कृद्योग इति। तत्र कर्तर्यु दाहरति--कृष्णस्य कृतिरिति। भावे स्त्रियां क्तिन्। कृष्णक्रतृका सृष्टिरित्यर्थः। कर्मण्युदाहरति-जगत इति। जगत्कर्मकसृष्ट()नुकूलव्यापारवानित्यर्थः। गुणकर्मणीति। कृदन्तद्विकर्मकधातुयोगेऽप्रधानकर्मणि षष्ठीविकल्प इष्यत इत्यर्थः। प्रधानकर्मणि तु नित्यैव षष्ठी। "अकथितं चे"त्यत्र भाष्ये स्थितमेतत्। नेताऽ()आस्येति। "अकथितं चे"त्यत्र "ग्राममजां नयती"त्युदाहरणे अजा प्रदानं कर्म, ग्रामस्तु गुणकर्मेति प्रपञ्चितं प्राक्। तद्रीत्या अत्र अ()आः प्रधानकर्म, रुआउघ्नस्तु गुणक्रमेति ज्ञेयम्। स्यादेतत्--कृतीति व्यर्थम्। नच तिङ्व्यावृत्त्यर्थं तदिति वाच्यम्, "ओदनं पचती"त्यादौ "न लोके"ति लादेशयोगे षष्ठीनिषेधादेव षष्ठ()भावसिद्धेः। "शतेन क्रीतः शत्योऽ()आः" इत्यादौ तु तद्धितयप्रत्ययाभिहितत्वादेवाऽ()आआदेः षष्ठी न भविष्यति। न च देवदत्तं हिरुगित्यादौ हिरुगाद्यव्ययबोध्यवर्जनादिक्रियां प्रति कर्मत्वादनेन षष्ठी शङ्क्या, "न लोकाव्यये"ति तन्निषेधात्। शेषत्वविवक्षायां तु षष्ठ()त्र इष्यत एव। एवञ्च परिशेष#आत्कृद्योग एवेयं षष्ठी पर्यवस्यतीति किं कृद्ग्रहणेनेति पृच्छति--कृति किमिति। उत्तरमाह--तद्धिते इति। तद्धितयोगे षष्ठीनिवृत्त्यर्थमिति यावत्। कृतपूर्वी कटमिति। कटः पूर्वं कृतोऽनेनेति लौकिकविग्रहः। तत्र पूर्वमिति क्रियाविशेषणं। "सुप्सुपा" इति समासः। अनेनेत्यनुवृत्तौ क-तपूर्वशब्दात् "पूर्वादिनः" "सपूर्वाच्चे"ति इनिप्रत्ययस्तद्धितः। तत्र करोतिक्रियापेक्षया कटस्य कर्मत्वादनेन षष्ठीप्राप्तौ तद्धितयोगान्न भवति। ननु कृतः कटः पूर्वमनेनेति विग्रहे कृतशब्दस्य पूर्वशब्देन समासो न संभवति, कृतशब्दस्य कटशब्दापेक्षत्वेन सामथ्र्यविरहात्। अत एव तद्धितैनिप्रत्ययोऽपि दुर्लभः। किञ्च कृतमिति क्तप्रत्ययेन कटस्य कर्मणोऽभिंहितत्वेन ततः षष्ठ्याः प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन कृद्ग्रहणेन?। क्तप्रत्ययेन कुता अभिहितत्वादेव कटाद्द्वितीयापि दुर्लभेति चेत्, मैवम्, कृत अम् पूर्वं अम् इत्यलौकिकविग्रहवाक्ये कटस्याऽसंनिहिततया कर्मत्वेनान्वयाऽसंभवेन कृञ्धातोस्तदानीमकर्मकतया कर्मणि क्तप्रत्ययस्याऽसंभवे सति "नपुंसके भावे क्तः" इति भावे क्तप्रत्यये कृते सति कृतशब्दस्य कटशब्दसापेक्षत्वाऽभावात्समासतद्धितौ निर्बाधौ। ततश्च कृतपूर्वीति तद्धितान्तस्य पूर्व कृतवानित्यर्थः पर्यवस्यति। किं कृतवानिति कर्मजिज्ञासायां कटमित्यन्वेति, गुणभूतयापि क्रियया कारकसंबन्धस्य कटं कृतवानित्यादौ दर्शनात्। तच्च कर्मत्वं न क्तप्रत्ययेनाभिहितम्, तस्य भावे विधानात्। नापीनिप्रत्ययेन, तस्य कर्तरि विधानात्। तथाच असति कृद्ग्रहणे

षष्ठी स्यात्। तन्निवृत्त्यर्थं कृद्ग्रहणमिति भाष्ये स्पष्टम्। न च निष्ठायोगे निषेधादेवात्र षष्ठी न भविष्यतीति वाच्यं, "नपुंसके क्ते भावे षष्ठ()आ उपसङ्ख्यान"मिति "क्तस्य च वर्तमाने" इति सूत्रस्थवार्तिकेन निष्ठायोगे षष्ठीनिषेधस्यात्राऽप्रसक्तेः। तथाच षष्ठ()भावे उक्तरीत्याऽनबिहितत्वाद्द्वितीया सुलभैव। नच कृतेऽपि कृद्ग्रहणे षष्ठी दुर्वारा, कृतेति क्तप्रत्ययात्मककृद्योगस्य सत्त्वादिति वाच्यं, कृद्ग्रहणसामर्थ्येन भाष्योदाहरणेन च वृत्त्यन्तर्भावानापन्नकृद्योगस्य विवक्षितत्वात्। प्रकृते च कृतेत्यस्य तद्धितवृत्त्यन्तर्भूतत्वान्न तद्योगः षष्ठीनिमित्तम्। नचैवं सति "ओदनस्य पाचकतमः" "ओदनस्य पाचकग्रहण"मित्यादौ षष्ठी न स्यात् , वृत्त्यनन्तर्भूतकृद्योगाऽभावात्। तथाच ओदनं पाचकतमः, ओदनं पाचकग्रहणमिति द्वितीयैव स्यादिति वाच्यम्, इष्टापत्तेः। अत एव मतुबधिकारे "प्रज्ञाश्रद्धार्चाभ्यो णः" इत्यत्र "प्राज्ञो व्याकरण"मित्युदाहरिष्यते मूलकृता। नचैवं "घटः क्रियत" इत्यत्रापि कर्मणो विवक्षाऽभावमाश्रित्य भावलकारे सति अनन्तरं घटस्य कर्मत्वेनाऽन्वयसंभवादनभिहितत्वाद्द्वितीया दुर्वारेति वाच्यं, वैषम्यात्। कृतपूर्वीत्यत्र हि अलौकिकविग्रहदशायां कटशब्दस्याऽसंनिधानात् कर्मणो विवक्षा न संभवतीति भावे क्तप्रत्यय इति युक्तमाश्रयितुम्। "क्रियते" इत्यत्र तु न संभवत्येवाऽविवक्षा, कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपवृत्तिपञ्चकानन्तर्भूतत्वेन वृत्तिशून्यतया विग्रहाऽभावात्। तथाच वृत्तिविषयएवायं व्युत्पत्तिप्रकार इति प्राचीनमतानुसारी पन्थाः। शब्देन्दुशेखरे तु "ओदनं पाचकतम" इत्यादौ द्वितीयाऽसाधुरेव, षष्ठ()एव साधुरिति प्रपञ्चितम्। विस्तरभयान्नेह तल्लिख्यते। ननु भट्टिकाव्ये"ददैर्दुःखस्यमादृग्भ्यो धायैरामोदमुत्तमम्। लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न कः" इति श्लोकोऽस्ति। श्रीरामस्य विरहार्तस्य वाक्यमेतत्। अत्र दुःखस्येति तनोरिति च कर्मणि षष्ठी। मादृग्भ्यो दुःखं ददैः=ददद्भ#इ#ः, पुष्पादीनाम् आमोदं=परिमलं धायैः=पोषकैः, तनोः=तनुं शरीरं लिम्पैः=लिम्पद्भिः कः चेतयः=प्राणी, ज्वलः=ज्वलन्निव न स्यादित्यर्थः। अत्रामोदस्योत्तमस्येति कर्मणि षष्ठ()आ भाव्यम्। धायशब्दस्य पोषणार्थकधाञ्धातोः "ददातिदधात्योः" इति णप्रत्ययात्मककृदन्तत्वादिति चेत्, न, उत्तममामोदं पुष्पादीनां गृहीत्वा दुःखस्य पौषकैरित्येवं गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीयाया उपपत्तेः।

तत्त्व-बोधिनी

कर्तृकर्मणोः कृति ५५०, २।३।६५

कर्तृकर्मणोः कृति। शेष इति निवृत्तं, "कर्तरि च कृति" इति सूत्रे कृते चकारेण "अधीगर्थ---"इति सूत्रात् "चतुर्थ्यर्थे बहुलं छन्दसि" इति पर्यन्तमनुवर्तमानस्य कर्मणीत्यस्यानुकर्षणसम्भवेऽपि पुनरत्र कर्मग्रहणात्। तस्माव्द्याख्यानमेवात्र शरणमित्यपरे। कर्तृकर्मणोः किम्()। शस्त्रेण भेत्ता। कृतिरिति। करणं कृतिः। "स्त्रियां क्तिन्"। कृष्णोऽत्र कर्ता। कर्मण्युदाहरति---जगत इति। कृष्णस्य तृचाऽभिहितत्वात्ततः षष्ठी न भवति। कृति किमिति। नन्विह कर्तृकर्मभ्यां क्रिया आक्षिप्यते, तद्वाची तु धातुरेव। धातोश्च द्वये प्रत्ययाः, कृतस्तिङश्च। तत्र तिङ्प्रयोगे कटं करोतीत्यादौ "न लोका---"इति प्रतिषेधेन भाव्यम्। ततश्च परिशेषात्कृद्योगे एव षष्ठी भविष्यति, त[स्मा]()त्क कृद्ग्रहणेनेति प्रश्नः।

गुणकर्मणि वेष्यते। कृतपूर्वी कटमिति। अत्र करोतिक्रियापेक्षमनभिहितं कर्मत्वं कटस्याऽस्त्येवेति षष्ठी स्यात्। तद्धिताधिक्ये तु सा मा भूदित्येतदर्थं कृद्ग्रहणमिति भावः। ननु कृतः कटः पूर्वमनेनेत्यस्मिन् विग्रहे क्तस्य कर्मणि विधानात्तेनैवाऽभिहितं कर्मेति नैव द्वितीया प्राप्नोति, नापि तदपवादभूता षष्ठी, इहाप्यनभिहिताधिकारात्। किञ्च कृतशब्दस्य कटसापेक्षतया समासो दुर्लभ एव, एवं तद्धितोऽपीति चेत्। अत्राहुः--पूर्वं कृतमनेनेति विग्रहे अविवक्षितकर्मतया भावे क्तप्रत्यये कृते कृतशब्दस्य कटसापेक्षत्वाऽभावात्समासतद्धितौ भवत एव। तथाच "कृपूर्वी"त्ययं पूर्वं कृतवान् इत्यनेन समानार्थः सम्पद्यते, गुणभूतयापि क्रियया कारकाणां सम्बन्धस्य कटं कृतवानित्यादौ दर्शनादत्रापि करोति क्रियापेक्षं कर्मत्वं कटस्याभ्युपगम्यते। तच्च कर्मत्वें न केनाप्यभिहितम्।भावे क्तस्य, कर्तरि इनिप्रत्ययस्य च

विधानात्। अतोऽसति कृद्र्()रहणे षष्ठी स्यादेवेति। एवं च "ओदनस्य पाचकतम"इत्यत्र षष्ठ()आ असाधुत्वे इष्टापत्तिरेव शरणम्। "कृतपूर्वी"त्यत्र समासतद्धितौ भवत एवेत्युक्तम्।तत्र समासः "सुप्सुपा" इति बोध्यः। तद्धितस्तु "पूर्वादिनिः" "सपूर्वाच्च" इति कर्तरि इनिः, तद्विधौ "श्राद्धमनेन"इति सूत्रादनेनेत्यनुवृत्तेः। स्यादेतत्-भिदेण्यन्तात् "पर्यायार्हणोत्पत्तिषु"इति ण्वुचि "भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना"मित्युभाभ्यामप्यनेन कृद्योगषष्ठी जायते, तत्र मुख्याऽमुख्यसन्निधौ मुख्ययस्यैव कार्ये सम्प्रत्ययात्प्रयोजककर्तृवाचकादेव स्यात्। अन्यथा "पाचयत्योदनं देवदत्तेन यज्ञदत्त" इत्यत्र प्रयोज्यप्रयोजकयोरुभयोरपि लकतारवाच्यत्वे उभाभ्यामपि कर्तृवाचकाङ्यां प्रथमा स्यात्। मैवं। प्रयोज्यप्रयोजकवाचकाभ्यां भेदेन षष्ठी जायते न त्वेकैवेति नेह मुख्याऽमुख्यान्यायप्रवृत्तिः। तत्र तु लकारस्यैकत्वात्कर्तुस्तद्वाच्यत्वकल्पनायामुक्तन्यायः प्रवर्तत इति वैषम्यात्। एवं चस "ओदनः पाच्यते देवदत्तेन यज्ञदत्तेने"त्यादावुभाभ्यमपि तृतीया स्यादेवेति बोध्यम्। अत्र व्याचक्षते--"तदर्हमि"ति निर्देशात्"कर्तृकर्मणोः कृति" इत्येतदनित्यम्। तथाच"धायैरामोदमुत्तमम्" इति भट्टिप्रयोगः सङ्गच्छति इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उभयप्राप्तौ ७।१ कर्मणि ७।१ कृति ७।१ ६५ षष्ठी १।१ ५० अनभिहिते ७।१ १

काशिका-वृत्तिः
उभयप्राप्तौ कर्मणि २।३।६६

पूर्वण षष्ठी प्राप्ता नियम्यते। उभयप्राप्तौ इति बहुव्रीहिः। उभयोः प्राप्तिर् यस्मिन् कृति, सो ऽयम् उभयप्राप्तिः। तत्र कर्मण्येव षष्थी विभक्तिर् भवति, न कर्तरि। आश्चर्यो गवां दोहो ऽगोपालकेन। रोचते मे ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं यज्ञदत्तेन। बहुव्रीहिविज्ञानादिह नियमो न भवति, आश्चर्यम् इदम् ओदनस्य नाम पाको ब्राह्मणानं च प्रादुर्भावः इति। अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे न इति वक्तव्यम्। भेदिका देवदत्तस्य काष्ठानाम्। चिकिर्षा देवदत्तस्य कटस्य। शेषे विभाषा। अकाकारयोः स्त्रीप्रत्यययोर्ग्रहनात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते। शोभना हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा। केचिदविशेषेणैव विभाषाम् इच्छन्ति, शब्दानाम् अनुशासनम् आचार्यण आचार्यस्य इति वा।
न्यासः
उभयप्राप्तौ कर्मणि। , २।३।६६

"उभयप्राप्ताविति बहुव्रीहिः" इति। तेन तत्पुरुषशङ्कां निरस्यति। बहुव्रीहेराश्रयणस्य प्रयोजनं वक्ष्यति। उभयग्रहणमेन प्रकृतत्वात् कर्तृकर्मणी सम्बध्येते। "उभयोः प्राप्तिर्यस्मिन् कृति"इत्यनेनैकस्मिन्नेवेत्यभिप्रायः। "कर्मण्येव" इति नियमस्य स्वरूपं दर्शयति। उभयप्राप्तावेव कर्मणीत्येष तु विपरीतनियमो न भवति। मा भूत् पूर्वसूत्रेण कर्मणि षष्ठीविधानस्य वैयथ्र्यमिति। "आश्चर्यो गवां दोहोऽगोपालकेन" इति। दुहेर्भावे घञ्। तत्रोभयोप्राप्तौ कर्मण्येव गोषु षष्ठी भवति; नाऽगोपालके कत्त्तरि। अत्र च "कृत्वोऽर्थप्रयोगे" २।३।६४ इत्यतः प्रयोगग्रहणं नानुवत्त्तते। तेन गम्यमानेऽपि कर्मणि षष्ठी भवति, यथा-- "अन्तर्धौ येनादर्शनमिच्छति" १।४।२८ इत्यत्र ह्रप्रयुज्यमानस्यात्मनः कर्मत्वं गम्यते। "पानम्" इति। "ल्युट् च" ३।३।११५ इति भावे ल्युट्। इह तु न भवति-- आश्चर्यमिदमोदनस्य च पाको ब्राआह्णानाञ्च पादुर्भाव इति। न ह्रत्रैकस्मिन् कृत्युभयोः प्राप्तिः। तथा ह्रोदनस्य पाक इत्यत्र कर्मण्येवौदने प्राप्तिः, न तु ब्राआह्णेषु कर्त्तुषु। न हि पाकस्य कर्तृत्वेन विवक्षिता ब्राआह्णाः, किं तर्हि? प्रादुर्भावस्य कर्तृत्वेन। ब्राआह्णानां नच प्रादुर्भाव इत्यत्रापि

प्रादुर्भाव इत्येतस्मिन् कृति कर्तृष्वेव ब्राआह्मणेषु प्राप्तिः, न कर्मण्योदने। न हि प्रादुर्भावस्योदनः कर्म; भवतेरकर्मकत्वात्। पाकस्यैव त्वोदनः कर्मत्वेन विवक्षितः। "अकाकारयोः"इत्यादि। नियमस्यायं प्रतिषेधः। अकाकारयोः प्रयोगे नियमो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "चतुर्थ्यर्थे बहुलं छन्दसि" २।३।६२ इत्यतो बहुलग्रहणमनुवत्र्तते, तेनाकाकारयोः प्रयोगे नियमो न भविष्यतीति। "शेषे विभाषा" इति। अस्याप्यर्थो बहुलग्रहणसमाश्रयणेन व्याख्यातव्यः। "भेदिका" इति। पूर्ववद्भावे ण्वुच्। "चिकीर्षा" इति। "अ प्रत्ययात्" ३।३।१०२ इत्यकारप्रत्ययः॥

बाल-मनोरमा

उभयप्राप्तौ कर्मणि ६१६, २।३।६६

उभयप्राप्तौ कर्मणि। पूर्वसूत्रात्कृतीत्यनुवर्तते। उभयप्राप्ताविति बहुव्रीहिः। अन्यपदार्थः कृत्। तदाहः-उभयोः प्राप्तिर्यस्मिन्कृतीति। एकस्मिन्कृति उभयोः=कर्तृकर्मणोः षष्ठीप्रसक्तौ कर्मण्येव षष्ठी स्यात्, नतु कर्तरीति यावत्। आश्चर्य इति। अगोपकर्तृको गोकर्मको यो दोहः सोऽद्भुत इत्यर्थः। उभयोः प्राप्ताविति षष्ठीसमासाश्रयणे तु ओदनस्य पाको ब्राआह्मणानां च प्रादुर्भाव इत्यत्रापि कर्मण्येव षष्ठी स्यान्न तु कर्तरि बहुव्रीह्याश्रयणे तु एकस्यैव कृतो निमित्तत्वलाभाद्भिन्नक्रियानिरूपितकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति फलति।

स्त्रीप्रत्यययोरिति। वार्तिकमेतत्। "स्त्रियां क्ति"न्नित्यधिकारविहितयोरकाऽकारप्रत्यययोः कृतोः प्रयोगे "कर्मण्येवे" त्युक्तनियमो नास्तीत्यर्थः। कर्तर्यपि षष्ठी भवतीति फलितम्। भेदिकेति। धात्वर्थनिर्देशे ण्वुल्। अकादेशः, टाप्, "प्रत्ययस्थादि"तीत्त्वम्। विभित्सेति। भिदेः सन्नान्तात् "अ प्रत्यया"दित्यकारप्रत्ययष्टाप्। रुद्द्रकर्तृकं जगत्कर्मकं भेदनं, भेदनेच्छा वेत्यर्थः।

शेषे विभाषेति। इदमपि वार्तिकम्। अकाऽकारप्रत्ययव्यतिरिक्तप्रत्ययोगे "उभयप्राप्तौ" इति नियमो विकल्प्य इत्यर्थः। स्त्रीप्रत्यये इत्येके इति। उक्तो विकल्पः स्त्रीप्रत्यययोगे सत्येव भवतीति केचिन्मन्यन्ते इत्यर्थः। विचित्रेति। हरिकर्तृका जगत्कर्मिका कृतिरित्यर्थः। केचिदविशेषेणेति। अकाऽकारभिन्नस्त्रीप्रत्यये इत्यर्थः। विचित्रेति। हरिकर्तृका जगत्कर्मिका कृतिरित्यर्थः। केचिदविशेषेणेति। अकाऽकारभिन्नस्त्रीप्रत्यये अस्त्रीप्रत्यये च कृति प्रयुज्यमाने उक्तविकल्प इत्यर्थः। शब्दानामिति। आचार्यकर्तृकं शब्दक्रमकमनुशासनमित्यर्थः। अनुशासनमसाधुभ्यो विवेचनम्।

तत्त्व-बोधिनी

उभयप्राप्तौ कर्मणि ५५१, २।३।६६

उभयप्राप्तौ। कृतीत्यनुवर्तते। तेनान्यपदार्थत्वाद्बहुव्रीहिरित्याह--उभयोः प्राप्तिर्यस्मिन्निति। उभयशब्देन कर्तृकर्मणी परामृश्येते। तेनैकस्मिन् कृति कर्तृकर्मणोः प्राप्तिलाभादाश्चर्यमिदमोदनस्य पाको ब्राआह्मणानां च प्रादुर्भाव इत्यत्र नायं नियमः प्रवर्तते। तत्पुरुषे तु स्यादेवाऽत्रातिप्रसङ्ग इति भावः। पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमिति ध्वनयति--- कर्मण्येवेति। एवं च कर्तरि षष्ठी प्रतिषेदोऽस्य सूत्रस्य फलं, न तु कर्मणि षष्ठीविधानमिति स्थितम्।

स्त्रीप्रत्यययोरकाऽकारयोर्नायं नियमः। स्त्रीप्रत्यययोरिति। "स्त्रियां क्तिन्" इत्यधिकारे विहितयोरित्यर्थः। नायं नियम इति। "अकाऽकारयोः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरी"ति यो नियम उक्तः स न प्रवर्तते, किन्तु कर्तर्यपि षष्ठी प्रवर्तत इति। फलितोऽर्थः। कथं तर्हि "सुट्()तिथोः" इति सूत्रे "सुटासीयुटो बाधोन" इति वृत्तिः()। अत्राहुः--कर्तुः करणत्वविवक्षया तृतीया बोध्येति। भेदिकेति। भेदनं भेदिका। "पर्यायार्हणोत्पत्तिषु"इति ण्वुच्। "धात्वर्थनिर्देशे ण्वुल् वक्तव्यः" इत्यनेन

ण्वुलित्येके। "युवोरनाकौ"। स्त्रियां टापि "प्रत्ययस्थात्---"इति इत्वम्। बिभित्सेति। भेत्तुमिच्छा। भिदेः सनि "हलन्ताच्च इति कित्त्वाद्गुणाऽभावः। "अ प्रत्ययात्" इत्यकारप्रत्यये टाप्।

शेषे विभाषा। शेषे इति। अकाऽकाराभ्यामन्यस्मिन् क्तिनादावित्यर्थः। कर्तरि षष्ठीनिषेधफलकस्य "उभयप्राप्तौ" इति सूत्रस्य, तत्रैव कर्तरि षष्ठीसम्पादनफलकस्य "स्त्रीप्रत्यययोरकाऽकारयोः" इति वचनस्य च प्राक् स्थितत्वात्कर्तर्येव विभाषा अनेन शेषवचनेन क्रियते, न तु कर्मणीत्याशयेनोदाहरति--जगतः कृतिर्हरेर्हरिणा वेति। अविशेषेणेति। अकाऽकारभिन्ने कृन्मात्रे इत्यर्थः। अनुशासनमिति। अनुशासनमिति। अनुशिष्यन्ते असाधुशब्देभ्यः प्रविभज्य बोध्यन्ते येनेति करणे ल्युट्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्तस्य ६।१ ६८ च ० वर्तमाने ७।१ षष्ठी १।१ ५०

काशिका-वृत्तिः

क्तस्य च वर्तमाने २।३।६७

न लौउकाव्यय। निष्ठाखलर्थतृनाम् २।३।६९ इति प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते। क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर् भवति। रज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। क्तस्य इति किम्? ओदनं पचमानः। वर्तमाने इति किम्? ग्रामं गतः। नपुंसके भाव उपसङ्ख्यानम्। छात्रस्य हसितम्। मयूरस्य नृत्तम्। कोकिलस्य व्याहृतम्। शेषविज्ञानात् सिद्धम्। तथा च कर्तृविवक्षायां तृतीया ऽपि भवति, छाऽत्रेण हसितम् इति।

न्यासः

क्तस्य च वर्त्तमाने। , २।३।६७

"राज्ञां मतः" इति। "मतिबुद्धि" ३।२।१८८ इत्यादिना क्तः। राज्ञामिति कर्त्तरि षष्ठी। कर्म तु निष्ठयाभिहितम्। अथेह कस्मान्न भवति-- शीलितो देवदत्तेन, रक्षितो देवदत्तेनेत्यादि, शीलितादिष्वपि "मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८) इति चकारस्यानुक्तसमुच्चयार्थत्वनाद्वर्तमान एव क्तो विधीयते? यद्यप्येवम्, तथापि बहुलग्रहणानुवृत्तेरिह न भविष्यतीत्यदोषः। अथ वा-- प्रकरणादेवात्र वर्त्तमानकालता गम्यते। पदार्थस्तु भूतत्वमेव प्रतिपादयति, न वर्त्तमानताम्। यस्य तु पदार्थो वर्त्तमानस्तत्प्रयोगे भवत्येव षष्ठी, यथा-- "कान्तो हरिश्चन्द्र इव प्रजानाम्" इति। "शेषविज्ञानात् सिद्धम्" इति। उपसंख्यानं स्याचष्टे-- "तथा च" इत्यादिना। यस्तूपसंख्यानमारभते, तस्य कर्त्तृत्वाविवक्षायामपि षष्ठ()एव भवति, न तृतीयेति दर्शयति॥

बाल-मनोरमा

क्तस्य च वर्तमाने ६१७, २।३।६७

क्तस्य च वर्तमाने। ननु "कर्तृकर्मणोः कृती"त्येव सिद्धे किमर्थमिदमित्यत आह-न लोकेति। राज्ञां मतो बुद्धः पूजितो वेति। मनुधातोः बुधधातोः पूजधातोश्च "मतिबुद्धिपूजार्थेभ्यश्चे"ति वर्तमाने क्तप्रत्ययः। तत्र मतिरिच्छा, बुद्धेः पृथग्ग्रहणात्। राजकर्तृकवर्तमानेच्छाविषयः, राजकर्तृकवर्तमानज्ञानविषयः, राजकर्तृकवर्तमानपूजाश्रय इति क्रमेणार्थः। "पूजितो यः सुरासुरैः" "त्वया ज्ञातो घटः" इत्यत्र तु भूते क्तप्रत्ययो बोध्यः।

तत्त्व-बोधिनी

क्तस्य च वर्तमाने ५५२, २।३।६७

अधिकरण। अयमपि निषेधापवादः। आसितमिति। आस्यते अस्मिन्नित्यासितं, "क्तोऽधिकरणे च---" इत्यधिकरणे क्तः। इदमेषामिति। कर्तरि षष्ठीयम्। सकर्मकेभ्यस्त्वधिकरणे क्ते कृते कर्तृकर्मणोद्र्वयोरपि षष्ठी, अनभिहितत्वाऽविशेषात्। इदमेषां भुक्तमोदनस्य। "उभयप्राप्तौ कर्मणि" इत्ययं नियमस्तु नेह प्रवर्तते, "कर्तृकर्मणोः कृति"इत्यनन्तरस्या एव षष्ठ()आस्तन्निमाभ्युपगमात्। एतच्च कौस्तुभे स्पष्टम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अधिकरणवाचिनः ६।१ च ० क्तस्य ६।१ ६७ षष्ठी १।१ ५०

काशिका-वृत्तिः

अधिकरणवाचिनश् च २।३।६८

क्तो ऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३।४।७६ इति वक्ष्यति। तस्य प्रयोगे षष्ठी विभक्तिर् भवति। अयम् अपि प्रतिषेधापवादो योगः। इदम् एषाम् आसितम्। इदम् एषां शयितम्। इदम् हेः सृप्तम्। इदं वनकपेर्यातम्। इदम् एषां भुक्तम्। इदम् एषाम् अशितम्। द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठी द्वितीयावत्। नेता ऽश्वस्य ग्रामस्य चैत्रः। अन्ये प्रधाने कर्मण्याहुः। तदा, नेता ऽश्वस्य ग्रामं चैत्रः।

न्यासः

अधिकरणवाचिनश्च। , २।३।६८

"तस्य प्रयोगे षष्ठी विभक्तिर्भवति" इति। यथासम्भवं यत्र कर्त्तैव संभवति तत्र कर्तरि भवति; यथा-- इदमेषामासितमिति। अत्रासेरकर्मकत्वात् कर्त्तैव सम्भवति, न कर्म। यत्र तु कर्म कत्र्तापि सम्भवति तत्रोभयत्रापि, यथा-- इदमेषां भुक्तमोदनस्येति। भुजेः सकर्मकत्वात् कर्माप्यस्त्येवौदनः। "उभयप्राप्तौ कर्मणि" (२।३।६६) इति नियमः कस्मान्न भवति? "कर्तृकर्मणो कृतिः" २।३।६५ इत्यस्याः षष्ठ्याः प्राप्तेरेव नियमो विज्ञायते। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति, "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" (व्या।प।१०) इति वा। अधिकरणे चेति वक्तव्ये वाचिग्रहणमिधकरणक्तोपलक्षणं मा विज्ञायीत्येवमर्थम्। उपलक्षणार्थत्वे हि तस्यार्थान्तरवृत्तेरपि ध्रौव्यगतिप्रत्यवसानार्थेभ्य उत्पन्नस्य क्तस्य प्रयोगे षष्ठी स्यात्। वाचिग्रहणे तु यदा भावे क्तप्रत्ययो भवति तदा षष्ठी न भवति। तदा कत्र्तरि तृतीयैव भवति -- हहानेनासितमिति। न ह्त्राधिकरणवाची क्तः; "{क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेऽभ्यः" इति सूत्रम्।} क्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानाथभ्यश्च" ३।४।७६ इति चकारात् यथाप्राप्तञ्चेति भावे कर्तरि च विधानात्। यदा तु कत्र्तरि क्तो भवति तदा तेनैवाभिहतत्वात् तत्र षष्ठी न भवति। इहेम आसिता इति चकारः पूर्वापेक्षया समुच्चयार्थः॥

बाल-मनोरमा

अधिकरणवाचिनश्च ६१८, २।३।६८

अधिकरणवाचिनश्च। शेषपूरणेन सूत्रं व्याचष्टे--क्तस्य योगे षष्ठीति। शयितमिति। शेतेऽस्मिन्निति शयितम्। "शीङ्

स्वप्ने" "क्तोऽधिकरणे च ध्रौव्ये"ति क्तप्रत्ययः। तत्र एषामिति कर्तरि षष्ठी। "न लोके"निषेधापवादः। भुजेस्तु प्रत्यवसानार्थकत्वादधिकरणे क्तप्रत्ययः। "इदमेषां भुक्तमोदनस्ये"त्यत्र तु कर्तृकर्मणोद्वयोरपि षष्ठी। "उभयप्राप्तौ" इति नियमस्तु न प्रवर्तते, मध्येऽपवादन्यायेन "कर्तृकर्मणोः कृती"ति षष्ठ()आ एव तन्नियमाभ्युपगमात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ न ० ७० लोकाव्ययनिष्ठाखलर्थतृनाम् ६।३ षष्ठी १।१ ५०

काशिका-वृत्तिः

न लौउकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९

कर्तृकर्मणोः कृति २।३।६५ इति प्राप्ता षष्ठी प्रतिषिध्यते। ल उ उक अव्यय निष्ठा खलर्थ तृनित्येतेषां प्रयोगे षष्ठी विभक्तिर् न भवति। ल इति शतृशानचौ, कानच्क्वसू, किकिनौ च गृह्यन्ते। ओदनं पचन्। ओदनं पचमानः। ओदनं पेचानः। ओदनं पेचिवान्। पपिः सोमं ददिर्गाः। उ कटं चिकीर्षुः। ओदनं बुभुक्षुः। कन्यामलङ्करिष्णुः। इष्णुचो ऽपि प्रयोगे निषेधः। उक आगामुकं वाराणसीं रक्ष अहुः। उकप्रतिषेधे कमेर् भाषायाम् अप्रतिषेधः। दास्याः कामुकः। अव्यय कटं कृत्वा। ओदनं भुक्त्वा। अव्ययप्रतिषेधे तोसुङ्कसुनोरप्रतिषेधः। व्युष्टायां पुरा सूर्यस्योदेतोरधेयः। पुरा क्रूरस्य विसृपो विरप्शिन्। निष्ठा ओदनं बुक्तवान्। देवदत्तेन कृतम्। खलर्थ ईषत्करः कटो भवता। ईषत्पानः सोमो भवता। तृनिति प्रयाहारग्रहणम्। लटः शतृशानचावप्रथमा। समानाधिकरणे ३।२।१२४ इत्यारभ्य आ तृनो नकारात्। तेन शानञ्चानश्शतृतृनाम् अपि प्रतिषेधो भवति। सोमं पवमानः। नडमाघ्नानः। अधीयन् पारायनम्। कर्ता कटान्। वदिता जनापवादान्। द्विषः शतुर्वाव्चनम्। चौरं द्विषन्, चौरस्य द्विषन्।

न्यासः

न लोकाव्ययनिष्ठाखलर्थतृनाम्। , २।३।६९

"किकिनौ च गृह्नेते" इति। यद्यपि किकिनोरलादेशत्वात् स्थानिवद्भावेन लग्रहणेन तयोग्र्रहणं नास्ति, तथापि "लिट् च" ३।२।१७१ इत्यतिदेशेन भवितव्यम्। विशेषातिदेशे हि नान्तरीयकः सामान्यातिदेश इति; विशेषस्य सामान्येनाविनाभावादिति। तेन सामान्यनिबन्धनः प्रतिषेधः किकिनोरपि सिध्यतीति युक्तं तयोरपि ग्रहणम्। "पचमानः" इति शानच्। स्वरितेत्त्वादात्मनेपदम्। "पेचानः" इति। "लिटः कानज्वा" ३।२।१०६ इति वचनात्, कानच्। द्विर्वचनम्। "अत एक" ६।४।१२० इत्यादिनैत्वाभ्यासलोपौ। "पेचिवान्" इति। "क्वुश्च" ३।२।१०७ इति क्वसुः। एत्वाभ्यासलोपयोः कृतयोः "वस्वेकाजाद्धसाम्" ७।२।६७ इतीट्। "उगिदचाम्" ७।१।७०इति नुम्। "सान्तमहसः" ६।४।१० इत्यादिना दीर्घः। "ददिः। पपिः" इति। "आदृगमहनजनः किकिनौ लिट् च" ३।२।१७१ इति किकिनोरन्यतरः। लिट् चेत्यतिदेशाद्द्विवनम्। "आतो लोप इटि च" ६।३।६३ इत्याकारलोपः। "चिकीर्षुः" इति। "सनासंसभिक्ष उः" ३।२।१६८। "अलङ्करिष्णुः"इति। "अलंकृञ्" ३।२।१३६ इत्यादिनेष्णुच्। "{आगामुकम्- काशिका, पदमञ्जरी च।} आगामुकः" इति। "लषपतपद"३।२।१५४ इत्यादिनोकञ्। "उकप्रतिषेधे" इत्यादि। प्रतिपाद्यत इति शेषः। प्रतिपादनन्तु बहुलग्रहणानुवृत्तिमाश्रित्य कत्र्तव्यम्। "कृत्वा" इति। "समानकर्तृकयोः" ३।४।२१ इति क्त्वा। "अव्ययप्रतिषेधे" इत्यादि। अत्रापि पूर्ववद्वाक्यशेषो वेदितव्यः। प्रतिपादनञ्च पूर्ववदेव। अथ वा -- "अव्ययीभावश्च" १।१।४० इत्यत्र "सर्वमिदं काण्डं स्वरादिषु पठ()ते" (१।१।४१ काशिका) इत्यादिना वृत्तिकारेण प्रतिपादनं कृतम्। "संज्ञापूर्वको विधिरनित्यः" (व्या।प।६४)

इति वा। "उदेतोः" इति। उत्पूर्वादिणो "भावलक्षणे स्थेण्कृञ्वदिचरि" ३।४।१६ इत्यादिना तोसुन्। "विसृपः" इति। "सृपितृदोः कसुन्" ३।४।१७। " ईषत्करः" इति। "ईषद्" ३।३।१२६ इत्यादिना खल्। "ईषत्पानः" इति। "आतो युच्" ३।३।१२८। "आतृनो नकारात्" इति। ताच्छीलिकस्य तृनः सम्बन्धिनो नकारादित्यर्थः। " पवमानः" इति। "पूङ पवने" (धा।पा।९६६), "पूङ्यजोः शानन्" ३।२।१२८। "नडमघ्नानः" इति। "ताच्छील्यवयोवचनशक्तिषु चानश् ३।२।१२९। "गमहन" ६।४।९८ इत्यादिनोपधालोपः। "हो हन्तेः"७।३।५४ इत्यादिना कुत्वम्। "अधीयन्" इति। "इङ धार्योः शत्रकृच्छ्रिणि" ३।२।१३० इति शत्रादेशः। इयङादेशः। उपसर्गेण सह दीर्घः। "कञ्ता" इति। "आ क्वेस्तच्छील" ३।२।१३४ इत्यादिना तृन्। "द्विषः शतुर्वावचनम्" इति। द्विषः परो यः शतृप्रत्ययस्य प्रयोगे वावचनं कञ्तव्यम्; अभिधानाभिधेययोरभेदोपचारात्। वेत्यनेन वार्थ उक्तः। वार्थोऽपि विकल्पः। विकल्प उच्यते = प्रत्याय्यते येन तद्वावचनम्। तस्य व्याख्यानं कञ्तव्यमित्यर्थः। तत्रेदं व्याख्यानं -- बहुलग्रहणमिहानुवञ्तते, तेन द्विषः शतुर्विकल्पेन प्रतिषेधो भविष्यति। "द्विषन्" इति। "द्विषोऽमित्रे" ३।२।१३१ इति शतृप्रत्ययः॥

बाल-मनोरमा

न लोकाव्ययनिष्ठाखलर्थतृनाम् ६१९, २।३।६९

न लोक। एषामिति। ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन् एषामित्यर्थः। उ, उक इत्यत्र सवर्णदीर्घे सति ऊकेति भवति। ततो ल-ऊकेत्यत्र आद्गुणे लोकेति भवति। लादेशेति। अविभक्तिकनिर्देशोऽयं लादेशोदाहरणसूचनार्थः। ल इति लडादीनां सामान्येन ग्रहणम्। तेषां च साक्षात्प्रयोगाऽभावात्तदादेशग्रहणमिति भावः। कुर्वन्कुवाणो वेति। लटः शतृशानचौ। इह कर्मणि षष्ठीनिषेधाद्द्वितीया। उ इति। उदाहरणसूचनमिदम्। उ इत्यनेन कृतो विशेषणात्तदन्तविधिः। हरिं दिदृक्षुरिति। दृशेः सन्नन्तात् "सनाशंसभिक्ष उः" इति उप्रत्ययः कृत्। व्यपदेशिवत्त्वेन उकारान्तोऽयं कृत्। हरिकर्मकदर्शनेच्छावानित्यर्थः। अलङ्करिष्णुर्वेति। हरिमित्यनुषज्यते। "अलं कृञि"त्यादिना ताच्छील्यादाविष्णुच्। उवर्णस्यैव ग्रहणे त्वत्र निषेधो न स्यात्। उक इति। इदमपि तदुदाहरणसूचनार्थम्। दैत्यान्घातुको हरिरिति। "आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु" इत्यधिकारे "लषपतपदस्थाभूवृषहनकमगमशृ()भ्य उकञि"ति तच्छीलादिषु हनधातोः कर्तरि उकञ्प्रत्ययः, उपधावृद्धिः। "हो हन्तेः" इति हस्य घत्वम्। "हनस्तोऽचिण्णलोः" इति नकारस्य तकारः। घातनशीलः, घातनधर्मा घातनसाधुक#आरी वेत्यर्थः।

कमेरिति। वार्तिकमिदम्। उकान्तकमेर्योगे षष्ठ()आ निषेधो नास्तीत्यर्थः। लक्ष्म्याः कामुक इति। "लषपते"त्यादिना उकञ्। अव्ययमिति। उदाहरणसूचमिदम्। जगत्सृष्ट्वेति। "हरिरास्ते"इति शेषः। "समानकर्तृकयोः" इति क्त्वाप्रत्ययः। क्त्वातोसुन्कसुनः" इति अव्ययत्वम्। सुखं कर्तुमिति। "भक्तस्य हरिः प्रभवती"ति शेषः। "तुमिन्ण्वुलौ क्रियायां क्रियार्थाया"मिति तुमुन्। "कृन्मेजन्तः" इत्यव्ययत्वम्। इह कृदव्ययमेव गृह्यत इति केचित्। वस्तुतस्त्वविशेषादकृदन्तमपीति तत्त्वम्। देवदत्तं हिरुक्। तत्कर्मकं वर्जनमित्यर्थः। निष्ठेति। उदाहरणसूचनमिदम्। "क्तक्तवतू निष्ठा"। विष्णुना हता इति। अत्र भूते इति कर्मणि क्तः। कर्तरि षष्ठीनिषेधात्तृतीया दैत्यान्हतवानिति। भूते कर्तरि क्तवतुः। कर्मणि षष्ठीनिषेधाद्द्वितीया। खलर्था इति। उदाहरणसूचनमिदम्। ईषत्कर इति। "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति कर्मणि खल्। अर्थग्रहणात् "आतो युच्" इति खलर्थको युजपि गृह्यते। ईषत्पानः सोमो भवता। ननु तृन्नित्यनेन यदि तृनेव गृह्येत तर्हि "सोमं पवमान" इत्यादौ निषेधो न स्यादित्यत आह--तृन्निति प्रत्याहार इति। कुत आरभ्य किमन्तानामित्यत आह--तृशब्दादारभ्य तृनो नकारादिति। लटः शतृशानचावित्यत्र शत्रादेशस्य एकदेशस्तृशब्दः, तत आरभ्य "तृन्" इति सूत्रस्थनकारपर्यन्तानामित्यर्थः। "लटः शतृशानचावप्रथमासमानाधिकरणे," "सम्बोधने च," "तौ सत्," "पूङ्यजोः शानन्", "ताच्छील्यवयोवचनशक्तिषु चानश" , "इङ्धार्योःशत्रकृच्छ्रिणि", "द्विषोऽमित्रे," "सुञो यज्ञसंयोगे," "अर्हः प्रशंसायाम्", "आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु", "तृन्" इति सूत्रक्रमः। अत्र

शानन्नादितृन्नन्तानां ग्रहणं, नतु "लटः शतृ" इति तृशब्दस्यापि शत्रादेशैकदेशस्य, तस्य क्वापि पृथक् प्रयोगानर्हत्वात्। नापि शानचः, लादेशत्वादेव सिद्धे इति स्थितिः। शानन्निति। उदाहरणसूचनमिदम्। सोमं पवमान इति। "पूयङ्यजोः शानन्"। आत्मानं मण्डयमान इति। "मडि भूषायाम्" "ताच्छील्यवयोवचन"इति चानश्। शतृ इति। उदाहरणसूचनमिदम्। वेदमधीयन्निति। "इङ्धार्योः" इति शतृप्रत्ययः। तृन्निति। उदाहरणसूचनमिदम्। कर्ता लोकानिति। तृन्निति सूत्रेण तच्छीलादिषु तृन्प्रत्ययः शानन्नादितृन्नन्तानां लादेशत्वाऽभावात्प्रत्याहाराश्रयणमिति बोध्यम्।

द्विषः शतुर्वेति। शत्रन्तद्विषधातुयोगे षष्ठीनिषेधो वा वक्तव्य इत्यर्थः। मुरस्य मुरं वा द्विषन्निति। द्विषोऽमित्रे " इति शतृप्रत्ययः। तस्य तृन्प्रत्याहारप्रविष्टत्वान्नित्यनिषेधे प्राप्ते विकल्पोऽयम्। सर्वोऽयमिति। "अनन्तरस्ये"ति न्यायादिति भावः। शेषे षष्ठी त्विति। शब्दबोधे प्रकारवैलक्षण्यं फलमिति भावः। ब्राआह्मणस्य कुर्वन्निति। "हरि"रिति शेषः। लटः शत्रादेशः। मुखतो ब्राआह्मणसंबन्धिसृष्ट()नुकूलव्यापारवानित्यर्थः। कर्मत्वविवक्षायां तु द्वितीयैव। नरकस्य जिष्णुरिति। "ग्लाजिस्थश्च ग्स्नुः" इति तच्छीलादिषु ग्स्नुप्रत्ययः। नरकसंबन्धिजयवानित्यर्थः। कर्मत्वविवक्षायां तु द्वितीयैव।

तत्त्व-बोधिनी

न लोकाव्ययनिष्ठाखलर्थतृनाम् ५५१, २।३।६९

न लोका। जिघृक्षितरूपविनाशप्रसङ्गात्तृनामित्यत्र णत्वं न कृतम्। उश्च उकश्च ऊकौ, लश्च ऊकौ चेति विग्रहः। ल इति लडादीनां सामान्यग्रहणं। तेषां च साक्षात्प्रयोगो न सम्भवतीति तदादेशा गृह्न्त इत्याह--लादेशा इथि। उदाह्रियन्त इति शेषः। कटं कारयाञ्चकारेत्यत्र कृत्सञ्ज्ञकलिङन्तामन्तेन योगेऽपि कटस्य "कर्तृकर्मणोॠ कृति" इति षष्ठी न भवति, "आमः" इति लुकोऽपि लादेशत्वादित्याहुः। नन्वेवमपि "बभ्रिर्वज्रं पपिः सोमं ददिर्गाः" इत्यत्र "न लोका---" इति निषेधाऽप्रवृत्तेः षषाठी दुर्वारैव, न हि किकिनौ लकारौ, नापि तदादेशौ। नैष दोषः। "किकिनौ लिट् च" इत्यनेन लिट्कार्यातिदेशः क्रियते, न तु लिट्सञ्ज्ञा। तथा च विशेषातिदेशे च सामान्यमप्यतिदिश्यत इथि नानुपपत्तिः। दिदृक्षुरिति। "सनाशंतभिक्ष उः"। उकारेण कृतो विशेषणात्तदन्तमपि लभ्यत इत्याशयेनाह---अलङ्करिष्णुरिति। "अलङ्कृञ्निराकृञ---" इत्यादिना इष्णुच्। घातुका इति। "लषपते" त्यादिना उकञ्।

कमेरनिषेधः॥ ईषत्कर इति। "ईषद्दुस्सुषु--"इत्यादिना खल्। अर्थग्रहणादीषत्पानः सोमो भवतेत्यप्युदाहार्यम्। अव्या()स परिहर्तुमाह---प्रत्याहार इति। पवमान इति। "पूङ्यजोः शानन्"। मण्डयमान इति। "मडि भूषायाम्"। इदित्त्वान्नुम्। "ताच्छील्यवयोवचन---" इति चानश्। अधीयन्निति। "इङ्धार्योः" इति शता। शाननादिषु "लटः" इत्यननुवृत्त्या लादेश इत्यसिद्धेः प्रत्याहारग्रहणमाश्रीयत इति भावः। तृन्निति। तच्छीलादिषु "तृन्िति विहितस्तृन् प्रत्ययः। तृन्निति प्रत्याहारग्रहणान्नित्यं निषेधे प्राप्ते विकल्पमाह---।

द्विषः शतुर्वा। द्विष इति। "द्विष अप्रीतौ" इत्यस्मात् "द्विषोऽमित्रे"इति विहितोः यः शतृप्रत्ययस्तत्प्रयोगे वा षष्ठीनिषेद इत्यर्थः। सर्वोऽयमिति। "अनन्तरस्य इति न्याया"दिति शेषः। शेषः षष्ठी त्विति। शाब्दबोधे वैलक्षण्यमस्तीति भावः। एवं चाश्चर्यो गवां दोगोऽगोपेनेत्यत्र शेषत्वविवक्षायां कर्तर्यपि षष्ठी भवत्येवेति बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अकेनोः ६।२ भविष्यदाधमर्ण्ययोः ७।२ न ० ६९ षष्ठी १।१ ५०

काशिका-वृत्तिः
अकैनोर् भविष्यदाधमर्ण्ययोः २।३।७०

अकस्य भविष्यति काले विहितस्य, इनस् तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे षष्थी विभक्तिर् न भवति। कटं कारको व्रजति। ओदनं भोजको व्रजति। इनः खल्वपि ग्रामं गमी। ग्रामं गामी। शतं दायी। सहस्रं दायी। भविष्यदाधमर्ण्ययोः इति किम्? यवनां लावकः। सक्तूनां पायकः। अवश्यंकारी कटस्य। इह कस्मान् न भवति, वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शकः इति? भविष्यदधिकारे विहितस्य अकस्य इदं ग्रहणम्।
न्यासः
अकेनोर्भविष्यदाधमण्र्ययोः। , २।३।७०

"अकस्य भविष्यति काले" इति। नाधमण्र्ये, तस्य तत्रासम्भवात्। "इनस्तु भविष्यदाधमण्र्ययोः" इति। तस्योभयोरपि सम्भवात्। ननु च साम्यादिह संख्यातानुदेशेन भवितव्यम्? नैतदस्ति; स्वरितेन हि संख्यातानुदेशो भवति, न चेह तदर्थं स्वरितत्वं प्रतिज्ञायते। "कटं कारको व्रजति" इति। "तुमुन्ण्वुलौ" ३।३।१० इत्यादिना ण्वुल्। "ग्रामं गमी" इति। गमेरिनिः। स च "भविष्यति गम्यादयः" ३।३।३ इति वचनाद्भविष्यत्कालविषयः। "शतं दायी" इति। "आवश्यकाधमण्र्ययोर्णिनिः" ३।३।१७०। "यवानां लावकः" इति। "ण्वुलतृचौ" ३।१।१३३ इति ण्वुल्। "अवश्यं कारी" इति। आवश्यके णिनिः। "वर्षशतस्य पूरकः" इति। "पूरी आप्यायने" (धा।पा।११५१) चौरादिकः। तस्मात् "ण्वुल्तृचजौ" ३।१।१३३ इति भविष्यत्काले ण्वुल्। स हि त्रिषु कालेषु भवति। "भविष्यदधिकारविहितस्याकस्येदं ग्रहणम्" इति। इह हि भविष्यदिति स्वर्यते। स्वरितेनाधिकारावगतिर्भवति। तेन भविष्यदधिकारविहितस्येदमकस्य ग्रहणम्, न सर्वस्य॥
तत्त्व-बोधिनी
अकेनोर्भविष्यदाधमण्र्ययोः ५५२, २।३।७०

अकेनोः। आधमण्र्ये अकस्याऽसम्भवाह---भविष्यत्यकस्येति। इनस्तु उभयोः सम्भवादाह--भविष्यदाधमण्र्यार्थेनश्च योग इति। यथासंख्यं तु न भवति, भाष्ये "अकस्य भविष्यति" "इन आमण्र्ये च "इति योगं विभज्य व्याख्यानात्।इह भविष्यदिति स्वर्यते, तेन "भविष्यति गम्यादयः"इत्यधिकारे विहितः "तुमुन्()ण्वुलौ--" इति ण्वुलेव गृह्रत इत्याशयेनोदाहरति---सतः पालक इतिष सत इति शत्रन्तम्। यस्तु कालसामान्ये "ण्वुल्तृचौ--"इति ण्वुलुक्तस्त्तर न निषेधः, "ओदनस्य पाचकः" "पुत्रपौत्राणां दर्शक"इतीति भावः। व्रजं गामीति। "आवश्यकाधमण्र्ययोर्णिनिः" इत्यावश्यके णिनिः। यद्यप्ययं कालसामान्ये विहिकस्तथापि "भविष्यति गम्यादयः" इत्युक्तेर्भविष्यदर्थकः। गम्यादयः केचिदुणादयः, केचिदष्टाध्यायीगता इति हरदत्तः। ननु "गत्यर्थकर्मणि चतुर्थी च" इत्येव सिद्धे द्वितीय ग्रहणमपवादविषयेऽपि द्वितीयाप्रवृत्त्यर्थमिति व्रजङ्घगमिति सिध्यत्येवेति चेत्, अत्राहुः--इहैव सूत्रे ग्रामङ्गमीति भाष्योदाहरणात्तत्सूत्रं नाङ्गीक्रियते। तेन ग्रामस्य गन्तेति षष्ठ()एव साध्वी, न तु ग्रामं गन्तिति द्वितीयते। शतंदायीति। "आवश्यके"त्याधर्मण्ये णिनिः। "भविष्यदाधर्मण्यार्थेनश्च योग" इत्युक्तत्वान्नेह निषेधः। अवश्यं करोत्य वश्यङ्कारी कटस्य। गम्यादित्वाऽभावाद्वर्तमानेऽप्ययम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत्यानाम् ६।३ कर्तरि ७।१ वा ० षष्ठी १।१ ५० अनभिहिते ७।१ १

काशिका-वृत्तिः

कृत्यानां कर्तरि वा २।३।७१

कर्तृकर्मणोः कृति २।३।६५ इति नित्यं षष्थी प्राप्ता कर्तरि विकल्प्यते। कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर् भवति, न कर्मणि। भवता कटः कर्तव्यः, भवतः कटः कर्तव्यः। कर्तरि इति किम्? गेयो माणवकः साम्नाम्। उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः। क्रष्टव्या ग्रामं शाखा देवदत्तेन। नेतव्या ग्राममजा देवदत्तेन।

न्यासः

कृत्यानां कत्तरि वा। , २।३।७१

"गेयो माणवकः साम्नाम्िति। "भव्यगेय" ३।४।६८ इत्यादिना कत्तरि गेयशब्दो व्युत्पादितः। गायतीति गेयः साम्नामिति कर्मणि षष्ठी नित्यमेव भवति। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- "न लोकाव्ययनिष्ठा" २।३।६९ इत्यत्र नेति योगविभागः कत्तव्यः, तेनोभयप्राप्तौ कृत्ये षष्ठ()आप्रतिषेधो भविष्यति। तेन क्रष्टव्या शाखा ग्रामं देवदत्तेनेति। कृषेः "अनुदात्तस्य चर्दुपधस्यान्तरस्याम्" ६।१।५८ इत्यमागमो भवति। देवदत्ते कत्तरि षष्ठी मा भूदिति। एवमुभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्य इत्युक्तम्। कर्मणि तु शाखायां कृत्येनाभिहित्वादेव षष्ठी न भविष्यति। ग्राम्यस्याप्रधानत्वादेव यथैव हि कृत्याः प्रधाने कर्मणि भवन्ति नाप्रधाने तथा षष्ठ()पि। न चेह ग्रामः प्रधानं कर्म, किं तर्हि? शाखेति॥

बाल-मनोरमा

कृत्यानां कर्तरि वा ६२१, २।३।७१

कृत्यानाम्। शेषपूरणेन सूत्रं व्याचष्टे--षष्ठी वा स्यादिति। "कृत्या" इत्यधिकृत्य विहिताः कतिपयकृत्प्रत्ययविशेषाः, तद्योगे कर्तरि षष्ठी वा स्यादित्यर्थः। कर्तृकर्मणोः" इति नित्यं प्राप्ते विकल्पोऽयम्। मया मम वा सेव्यो हरिरिति। "षेवृ सेवायाम्" "ऋहलोण्र्य"दिति कर्मणि ण्यत्प्रत्ययः। अस्मच्छब्दार्थस्य कर्तुरनभिहितत्वात्षष्ठींतृतीये। गेय इति। नन्विह साम्नः कर्मत्वस्य "अचो य"दिति यत्प्रत्ययाभिहितत्वात्कथं षष्ठीप्रसक्तिरित्यत आह--भव्येति। ननु "नेतव्या व्रजं गावः कृष्णेने"त्यत्र कृत्यसंज्ञकतव्यप्रत्यययोगात् "उभयप्राप्तौ" इति बाधित्वा कृष्णात्षष्ठीविकल्पः स्यात्, व्रज्रात्तु "कर्तृकर्मणोः कृती"ति नित्यं स्यादित्यत आह-अत्र योगो विभज्यत इति। विभागप्रकारं दर्शयति--कृत्यानामिति। अनुवर्तत इति। तथाच कृत्ययोगे कर्तृकर्मणोरुभयोः प्रसक्ता षष्ठी नेत्यर्थः फलति। नेतव्या व्रजमिति। "गुणकर्मणि वेष्यते" इति व्रजाद्विकल्पस्तु न भवति, नेता अ()आस्य रुआउघ्नस्य रुआउघ्नं वेति उभयप्राप्तिरहिते कृत्यव्यतिरेक्ते चरितार्थस्य "दोग्धव्या गाः पयः कृष्णेने"त्यादौ गुणकर्मण उक्तत्वेन प्रधानकर्मणि चरितार्थेनान#एन परत्वाद्बाधात्। ततः कर्तरि वेति। "कृत्याना"मिति सूत्रप्रणयनानन्तरं कर्तरि वेति पृथक्प्रेणतव्यमित्यर्थः। उक्तोऽर्थ इति। "कृत्याना"मित्यनुवर्त्त्य कृत्ययोगे कर्तरि षष्ठी वा स्यादिति व्याख्येयमित्यर्थः। उक्तोऽर्थ इति। "कृत्याना"मित्यनुवर्त्त्य कृत्ययोगे कर्तरि षष्ठी वा स्यादिति व्याख्येयमित्यर्थः। अनुभयप्राप्तिविषये "मया मम वा सेव्यो हरि"रित्यादाविदमवतिष्ठते।

तत्त्व-बोधिनी

कृत्यानां कर्तरिवा ५५३, २।३।७१

कृत्यानाम्। "कर्तृकर्मणोः" इति नित्ये प्राप्ते विभाषेयम्। सेव्य इति। "षेवृ सेवायाम्" , ऋहलोः--" इति कर्मणि

निषेधार्थमिदम्। "गुणकर्मणि वेष्यते " इति तूभयप्राप्तिरहितस्थले नेताऽ()आरस्येत्यादौ चरितार्थमिति दिक्। तुल्यार्थैः। शेषषष्ठ()आं प्राप्तायां विकल्पेन तृतीया अनेन विधीयते, तया मुक्ते षष्ठ()एव भवेत्तदाह---पक्षे षष्ठीति। बहुवचननिर्देशादेव पर्यायग्रहणे सिद्धे"तुल्यार्थैः" इत्यर्थग्रहणं पदान्तरनैरपेक्ष्येण ये तुल्यार्थास्तेषां ग्रहणार्थं, तेन गौरवि गवय इत्यादौ नेत्याहुः। कथं तर्हि "तुलां यदारोहति दन्तवाससा" इति कालिदासः, "स्फुटोपमं भूतिसितेन शम्भुना" इति माघश्च()। उच्यते--"सहयुक्तेऽप्रधाने" इति तृतीया। न चात्र सहशब्दयोगो नेति शङ्क्यम्, विनापि तद्योगं तृतीयेत्यभ्युपगमात्। वेति वर्तमानेऽन्यतरस्याङ्ग्रहणमुत्तरसूत्रे चकारेण स्वस्यानुकर्षणार्थम्। अन्यथा हि तृतीयैवानुकृष्येत, संनिहितत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तुल्यार्थैः ३।३ अतुलोपमाभ्यां ३।२ तृतीया १।१ अन्यतरस्याम् ० ७३ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः
तुल्यार्थैरतुलाउपमाभ्यां तृतीया ऽन्यतरस्याम् २।३।७२

तुल्यार्थैः शब्दैर् योगे तृतीया विभक्तिर् भवत्यन्यतरस्याम्, पक्षे षष्थी च, तुलाउपमाशब्दौ वर्जयित्वा। शेषे विषये तृतीयाविधानात् तया मुक्ते षष्थ्येव भवति। तुल्यो देवदत्तेन, तुल्यो देवदत्तस्य। सदृशो देएवदत्तेन, सदृशो देवदत्तस्य। अतुलोपमाभ्याम् इति किम्? तुला देवदत्तस्य न अस्ति। उपमा कृष्णस्य न विद्यते। वा इति वर्तमाने ऽन्यतरस्यां ग्रहनम् उत्तरसूत्रे तस्य चकारेन अनुकर्षणार्थम्। इतरथा हि तृतीया ऽनुकृष्येत।
न्यासः
तुल्यार्थैरतुलोपमाभ्मां तृतीयाऽन्यतरस्याम्। , २।३।७२

तुल्यार्थैः सदृशार्थैरित्यर्थः। अर्थग्रहणं पदान्तरनिरपेक्षया ये तुल्यार्थतामाहुस्तत्परिग्रहार्थम्। तेन पदान्तरसान्निध्येन द्योतका इवादयो निवर्तिता भवन्ति-- गौरिव गवय इति, यथा गौस्तथा गवय इति। स्वरूपनिवृत्त्यर्थत्वर्थग्रहणं न भवति; बहुवचननिर्देशादेव स्वरूपविधेर्निरस्तत्वात्। इहापि पितुस्तुल्यः प्रज्ञयेति प्रज्ञाशब्दात् षष्ठी न भवति हेतुत्वन करणत्वेन वा प्रज्ञाया विवक्षितत्वात् "इतरथा हि तृकतीयानुकृष्येत" इति। तस्या अनन्तरसूत्रे श्रुतत्वात्। अन्यतरस्यांग्रहणस्य त्वेतदेव प्रयोजनमिति। तदेव चकारेणानुकृष्यत इति॥ "तृतीयानिर्देशादेवार्थग्रहणे सिद्धेऽर्थग्रहणादर्थशब्दः पृथगेव निमित्तं विज्ञायते। कथं पुनस्तृतीयाग्रहणादर्थग्रहणं सिध्यति? अपरिसमाप्तत्वादस्य योग इत्यध्याह्रियते। स चार्थैरेव सम्भवति, न शब्दैरिति सामथ्र्यादर्थग्रहणं सिध्यति॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेदन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य तृतीयः पादः ----------------- अथ द्वितीयाध्यायस्य चतुर्थः पादः
बाल-मनोरमा
तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ६२२, २।३।७२

अथोपपदविभक्तयः। तुल्यार्थैः। शेषषष्ठ()आं नित्यं प्राप्तायां तृतीयाविकल्पोयम्। तुल्यैरिति बहुवचनादेव पर्यायग्रहणे सिद्धेऽर्थग्रहणं पदान्तरनिरपेक्षश्चेत्तुल्यार्थस्तेषां ग्रहणार्थम्। तेन "गौरिव गवय" इत्यादौ नेत्याहुः। अतुलोपमाभ्यामिति पर्युदासादनव्यययोग एवेदमित्यन्ये।

तत्त्व-बोधिनी

तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ५५४, २।३।७२

तुल्य इति। तुलया संमितस्तुल्यः। "नौवयोधर्म--"इत्यादिना यत्। तुला उपमा वेति। तोलनं तुला। अस्मिन्नेव सूत्रे णिलुगङोर्निपातनात्साधुरिति माधवः। उपमितिरुपमा। "आतश्चोपसर्गे"इत्यङ्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चतुर्थी १।१ च ० आशिषि ७।१ आयुष्यमद्रभद्रकुशलसुखार्थहितैः ३।३ अन्यतरस्याम् ० ७२ षष्ठी १।१ ५० शेषे ७।१ ५०

काशिका-वृत्तिः
चतुर्थी च आशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः २।३।७३

आशिषि गयमानायाम् आयुष्य मद्र भद्र कुशल सुख अर्थ हित इत्येतैर् योगे चतुर्थी विभक्तिर् भवति। चकारो विकल्पानुकर्षणार्थः। शेषे चतुर्थीविधानात् तया मुक्ते षष्ठी विभक्तिर् भवति। अत्र आयुष्याऽदीनां पर्यायग्रहणं कर्तव्यम्। आयुष्यं देवदत्ताय भूयात्, आयुष्यं देवदत्तस्य भूयात्। चिरं जीवितं देवदत्ताय देवदत्तस्य वा भुयात्। मद्रं देवदत्ताय देवदत्तस्य वा भूयात्। भद्रं देवदत्ताय, भद्रं देवदत्तस्य। कुशलं देवदत्ताय, कुशलं देवदत्तस्य। निरामयं देवदताय, निरामयं देवदत्तस्य। सुखं देवदत्ताय, सुखं देवदत्तस्य। शं देवदत्ताय, शं देवदत्तस्य। अर्थो देवदत्ताय, अर्थो देवदत्तस्य। प्रयोजनं देवदत्ताय, प्रयोजनं देवदत्तस्य। हितं देवदताय, हितं देवदत्तस्य। पथ्यं देवदत्ताय, पथ्यं देवदत्तस्य। आशिषि इति किम्? आयुष्यं देवदत्तस्य तपः। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य तृतीयः पादः। द्वितीयाध्यायस्य चतुर्थः पादः।
बाल-मनोरमा
चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ६२३, २।३।७३

चतुर्थी च। एतदर्थैरिति। आयुष्य, मद्र भद्र, कुशल, सुख, अर्थ, हित-एतदर्थकैरित्यर्थः। पक्षे षष्ठीति। चकारेण तत्समुच्चायावगमादिति भावः। आयुष्यपर्यायश्चिरञ्जीवितमिति। कुशलं निरामयमिति मद्रभद्रपर्यायौ। शमिति सुखपर्यायः। प्रयोजनमित्यर्थपर्यायः। पथ्यमिति हितपर्यायः। "हितयोगे चे"ति नित्यचतुर्थी तु नाशिषि ज्ञेया। ननु "स्वं रूपमि"ति परिभाषया आयुष्यादिशब्दानामेव ग्रहणमुचितमित्यत आह--व्याख्यानादिति। ननु मद्रभद्रयोः पृथग्ग्रहणादेतदर्थैरिति व्याख्यानमयुक्तमित्यत आह--मद्रभद्रयोरिति। इति षष्ठी।

तत्त्व-बोधिनी
चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुकार्थहितैः ५५५, २।३।७३

हितमिति। "हितयोगे च" इत्यनाशिषि चरितार्थमित्याशिष्ययं विकल्प इथि भावः। व्याख्यानादिति। सूत्रेऽर्थशब्दोऽपि पृथङ् निमित्तं, तथा च द्वन्द्व एवाऽयं न त्वर्थशब्देन बहुव्रीहिरिति भावः। इति षष्ठी।

---

सूत्रम्
काशिका-वृत्तिः

द्विगुरेकवचनम् २।४।१

द्विगुः समासः एकवचनं भवति। एकस्य वचनम् एकवचनम्। एकस्य अर्थस्य वाचको भवति इत्यर्थः। तदनेन प्रकारेण द्विग्वर्थस्य एकवद् भावो विधीयते, द्विग्वर्थ एकवद् भवति इति। समाहारद्विगोश्च इदं ग्रहणम्, न अन्यस्य। पञ्चपूलाः समाहृताः पञ्चपूली। दशपूली। द्विग्वर्थस्य् ए)कत्वादनुप्रयोगे ऽप्येकवचनं भवति, पञ्चपूलीयं शोभना इति।
लघु-सिद्धान्त-कौमुदी
द्विगुरेकवचनम् ९४५, २।४।१

द्विग्वर्थः समाहार एकवत्स्यात्॥
न्यासः
द्विगुरेकवचनम्। , २।४।१

अत्र यदि पारिभाषिकमेकवचनं गृह्येत तदानुप्रयोग एकवचनं न स्यात्-- पञ्चपूलीयं शोभनेति, अनुप्रयोगस्याद्विगुत्वात्। यदि पारिभाषिकमेकवचनमिहाभिप्रेतं स्यात् तदा द्विगोरेकवचनमित्येवं ब्राऊयात्, तस्मादन्वर्थस्यैकवचनस्येदं ग्रहणं न पारिभाषिकस्येति मनसि कृत्वाह-- "एकस्य वचनमेकवचनम्" इति। एतेनैकवचनशब्दस्य षष्ठीसमासतां दर्शयन्नन्वर्थतां दर्शयति। एकस्य वचनं वाचकमेकवचनमिति। वक्तीति वचनम्, "कृत्यल्युटो बहुलम्" ३।३।११३ इति कत्र्तरि ल्युट्। एकवचनस्यैवार्थं पर्यायान्तरेण स्पष्टीकर्तुमाह-- "एकार्थस्य" इत्यादि। ननु चैकवचनमिति पुंल्लिङ्गेन भवितव्यम्; कथम्? द्विगोः पुंल्लिङ्गत्वात्; न; लिङ्गसामान्यस्य विवक्षितत्वान्नपुंसकलिङ्गेनैव सामान्येन निर्देशः कृत इत्यदोषः। "तदनेन प्रकारेण" इति। अन्वर्थस्यैकवचनशब्दग्रहणात्मकेनेत्यर्थः। नचानेकार्थाभिधायिनः शब्दस्य वचनशतैरप्येकार्मथाभिधायित्वं शक्यते कर्तुम्; शब्दानामर्थाभिधायित्वस्य स्वाभाविकत्वात्; उच्यते चेदं वचनम्, ततः सामथ्र्यादतिदेशोऽयं विज्ञायत इत्यत आह-- "द्विग्वर्थस्यैकवद्भावो विधीयते" इति। अस्यैवार्थं स्पष्टीकत्र्तमाह-- "द्विग्वर्थ एकवद्भवति" इति। यद्येवम्, तद्धितार्थो यो द्विगुस्तस्याप्यकवद्भावः प्राप्नोति-- पञ्चसु कपालेषु संस्कृतौ संस्कृता वा पञ्चकपालौ पञ्चकपाला वेत्यत आह-- "समाहारद्विगोश्च" इत्यादि। चकारोऽवधारणे। समाहारद्विगोरेवेति यावत्। कथं पुनः समाहारद्विगोरेव ग्रहणं लभ्यते? एवं मन्यते-- "द्वन्द्वश्च" २।४।२ इत्यत्र चकारेण द्विगुरनुकृष्यते। यस्मिन्नर्थे द्वन्द्व एकार्थीभवति तस्मिन्नेवार्थे द्विगोरप्येकवद्भावो यथा स्यादिति। द्वन्द्वश्च समाहार एवैकार्थीभवति, नान्यत्र। तस्मात् द्विगोरप्येकवद्भावस्तत्रैव भवति; अतः समाहारद्विगोरेवेदं ग्रहणं युक्तं भवति। यदि तर्हि समाहारद्विगोरेवेदं ग्रहणं तदा निष्प्रयोजनोऽतिदेशः, तथा हि-- समाहारो द्विगोरर्थः, समाहारश्च भावसाधनः, समाहरणं समाहारः = समुदायः, स चैक एव। तत्र न्यायप्राप्तमेवैकवचनमिति निष्फलः सूत्रारम्भः? नैतदस्ति; यतः "समुदायिभ्योऽनन्यः समुदायः" इत्यस्मिन् दर्शनेऽनेकद्रव्यात्मकत्वात् समुदायस्यैकवचनं न सिद्ध्यतीतीदमारब्धम्। तथा चोक्तं भाष्ये-- "प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचने विधानम्" इति। प्रत्यधिकरणम् = प्रतिद्रव्यम्। वचनस्योत्पत्तौ प्रत्यभिधेयद्रव्यसमवायिनी संख्याविभक्तिः प्रयोजिकोत्पद्यते। द्विगोश्च योऽर्थः सोऽनेकद्रव्यात्मकः। तथा हि-- पञ्च समाह्यताः। समाह्रियमाणानां पूलानां पञ्चसंख्यावच्छिन्नत्वात् संख्यासामानाधिकरण्याच्च पञ्चैतानि द्रव्याणीति कृत्वा समुदायस्यैकवचनं न सिद्ध्यति। तत्रासत्यस्मिन् वचने बहुत्वात् बहुवचनं स्यात्। अत एवद्भावो विधीयत इति वाक्यार्थः। "समुदायिभ्योऽन्यः समुदायः" इत्यस्मिन् दर्शने सूत्रमिदं प्रत्याख्यातव्यमेव। तथा चोक्तं भाष्ये-- "न वा समाहारैकत्वात्" इति। न वा योगारम्भेणैवार्थः। यस्मादेकोऽयमर्थः समाहारो नाम। तत्रैकत्वादेकवचनं भविष्यतीति वाक्यार्थः। "पञ्चपूली" इति। "अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते" (वा।१५६) इति स्त्रीत्वे सति द्विगोः" ४।१।२१ इति ङीप्। "अर्थस्यैकत्वात्" इत्यादिनाऽर्थातिदेशस्य फलं दर्शयति॥

बाल-मनोरमा

द्विगुरेकवचनम् ७२१, २।४।१

द्विगुरेकवचनम्। अत्र "समाहारग्रहणं कर्तव्य"मिति वार्तिकात्समाहार इति लभ्यते। वक्तीति वचनम्। बाहुलकः कर्तरि ल्युट्। सामान्ये नपुंसकम्। समाहारे द्विगुरेकार्थप्रतिपादकः स्यादिति लभ्यते। तत्र यदि समाह्रियत इति कर्मणि घञि समाहारशब्दः समाहृतप्रधानः तदा समाहृतगतद्वित्वबहुत्वयोः एकत्वानुपपत्तेरतिदेशः सम्पद्यते। तदाह--द्विग्वर्थः समाहार एकवदिति। यदा समाहरणं समाहारः=समूहः, तदा तस्यैकत्वादेव सिद्धमिति नेदं सूत्रमारम्भणीयमिति भाष्ये स्पष्टम्। केचित्तु समूहस्य वस्तुत एकत्वेऽपि उद्भूतावयवभेदविवक्षया द्विबहुवचनव्यावृत्त्यर्थमिदम्। एवं चात्र उद्भूतावयवभेदविवक्षा न कर्तव्येति फलतीत्याहुः।

स नपुंसकमिति। समाहारे द्विगुद्र्वन्द्वश्च नपुंसकं स्यादिति तदर्थो मूले वक्ष्यते।[इति द्विगुसमासः]।

तत्त्व-बोधिनी

सङ्ख्यापूर्वो द्विगुः ६३९, २।४।१

द्विगुरेकवचनम्। वक्तीति वचनम्। बाहुलकात्कर्तरि ल्युट्। "सामान्ये नपुंसकम्"। द्विगुः समास एकर्थप्रतिपादको भवतीत्यर्थः। न च वस्तुतोऽनेकार्थस्यैकार्थत्वं कथंचिदुपपद्यत इति सामथ्र्यादतिदेशः संपद्यत इत्याह--एकवत्स्यादिति। "समाहारे"इति तूपसङ्ख्यानाल्लभ्यते। समाहारे यो द्विगुस्तदर्थ एकवदित्यवयः। समाहारे किम्()। तद्धितार्थे माभूत्। पञ्चसु कपालेषु संस्कृताः पञ्चकपालाः, पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटाः। पञ्चगवे पञ्चगवानीत्यत्र तु प्रथम् द्विगर्थस्यैकवद्भावे कृते योऽयमेकशेषे कृते द्विगर्थसमुदायस्तस्याऽद्विगर्थत्वाद्बहिरङ्गत्वाच्चैतवद्भावो न भवतीति स्थितमाकरे। यदा "तद्धितार्थ"इति सूत्रे "समाहारे"इति कर्मसाधनस्तदा समाहृतप्रधानो द्विगुरिति बहुत्वे प्राप्तेऽनेन एकवद्भावः क्रियते। यदा तु भावसाधन एव समाहारस्तदा समूहप्रधानत्वाद्द्विगोः, समूहस्य चैकत्वात्सिद्धमेकत्वमिति नास्य प्रयोजनम्। न च "स नपुंसक"मिति नपुंसकत्वार्थमेकत्वविधानमितिवाच्यं, समुदायवाचकेषु "सामान्ये नपुंसक"मित्यभ्युपगमे बाधकाऽभावादित्याहुः। वस्तुतस्तु "तद्धितार्त"इति सूत्रे समाहार इति भावे घञ्न तु कर्मणि। "पञ्चगव"मित्यत्र पञ्च गव#ः समाहृता इत्यर्थाभ्युपगमे समाह्रियमाणानां बहुत्वेन एकवचनानुपपत्तेः। न च "द्विगुरेकवचन"मिति सूत्रान्नैवमिति वाच्यम्, पञ्चखट्वीत्यसिद्धेः। तत्र हि पञ्च खट्वाः समाहृताः, पञ्चसु खट्वासु समाहृतास्वित्येवं विग्रहसंभवेन नियतविभक्तित्वाऽभावादेविभक्ति चापूर्वनिपाते इत्यप्रवृत्तेरनुपसर्जनत्वात् "गोस्त्रियो"रिति ह्यस्वो न स्यात्। ततश्च "आबन्तो वे"ति स्त्रीत्वपक्षे "द्विगोः"इत्यदन्तलक्षणो ङीब्न स्यात्। भावसाधनत्वे त्वेकविभक्तित्वादुपसर्जनत्वमव्याहतमेव। समाहारापेक्षया नियमेन वर्तिपदानां षष्ठ()न्तत्वात्, तथा च पञ्चखट्वीत्यादिरूपं निर्बाधमेवेति दिक्। स नपुंसकमिति। एतस्यार्थो मूल एव स्फुटीभविष्यति।

---

सूत्रम्

काशिका-वृत्तिः

द्वन्द्वश् च प्राणितूर्यसेनाऽङ्गानाम् २।४।२

एकवचनम् इति वर्तते। अङ्गशब्दस्य प्रत्येकं वाक्यपरिसमाप्त्या त्रीणि वाक्यानि सम्पद्यन्ते। प्राण्यङ्गानां द्वन्द्व एकवद् भवति, तथा तूर्याङ्गानां सेनाऽङ्गानां च। प्राण्यङ्गानां तावत् पाणिपादम्। शिरोग्रीवम्। तूर्याङ्गानाम् मार्दङ्गिकपाणविकम्। वीणावदकपरिवादकम्। सेनाऽङ्गानाम् रथिकाश्वारोहम्। रथिकपादातम्। हस्त्यश्वाऽदिषु परत्वात्

पशुद्वन्द्वे विभाषया एअक्वद् भवति। इतरेतरयोगे समहारे च द्वन्द्वो विहितः। तत्र समाहारस्य एकत्वात् सिद्धम् एव एकवचनम्। इदं तु प्रकरणं विषयविभागार्थम्, प्राण्यङ्गाऽदीनां समाहार एव द्वन्द्वः, दधिपयाऽदीनाम् इतरेतरयोग एव, वृक्षमृगाऽदीनाम् उभयत्र इति।

लघु-सिद्धान्त-कौमुदी

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ९९४, २।४।२

एषां द्वन्द्व एकवत्। पाणिपादम्। मार्दङ्गिकवैणविकम्। रथिकाश्वारोहम्॥

न्यासः

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्। , २।४।२

अत्राङ्गशब्दः समुदाये परिसमाप्यते? प्रत्येकं परिसमाप्यते वा? तत्र यदि समुदाये परिसमाप्येत तदैकमेवेदं वाक्यं स्यात्, तथा च व्यतिकरः प्रसज्येत। प्राणितूर्यसेनाङ्गानां परस्परसहितानां यो द्वन्द्वो व्यतिकीर्णावयवस्तस्यैकवद्भावः स्यात्। प्रत्येकं परिसमाप्तौ त्वेष दोषो न भवति। तत्र हि प्राण्यङ्गानां द्वन्द्व एकवद्भवतीत्येवमादीनि त्रीणि वाक्यानि सम्पद्यन्ते। स्वविषये यत्र बहुवचनान्तं वाक्यं क्रियते तत्र प्रथमेन वाक्येन प्राण्यङ्गानां प्राण्यङ्गैरेव यः समासस्तस्यैकवद्भावो विधीयते। द्वितीयेन वाक्येन तूर्याङ्गानां तूर्याङ्गैः। तृतीयेन सेनाङ्गानां सेनाङ्गैरिति न भवति सङ्करप्रसङ्गः। न हि चतुर्थं वाक्यमस्ति येन व्यतिकीर्णावयवस्य द्वन्द्वस्यैकार्थता स्यादिति मन्यमानः प्रत्येकं वाक्यपरिसमाप्तिपक्षमाश्रित्याह-- "अङ्गशब्दस्य" इत्यादि। तथा तूर्याङ्गानामिति द्वन्द्व एकवद्भवतीत्येपेक्षते। एवं सेनाङागनाञ्चेत्यत्रापि। "पाणिपादम्" इति। अत्र यदि प्राण्यङ्गमपि प्राणिग्रहणेन गृह्यते तदा "जातिरप्राणिनाम्" २।४।६ इत्येवं सिद्धम्। यथा-- पणवमृदङ्गमिति। "रथिका()आआरोहम्" इति। रथिकाश्वा()आआरोहाश्चेति वृत्तिपदार्थस्य बहुत्वं दर्शयितव्यम्। यस्माद्बहुत्वमेव सेनाङ्गत्वे कारणम्। बहुत्वाभावे सेनाङ्गत्वन्नास्तीति रथिका()आआरोहाविति भवितव्यम्। "हस्त्य()आआदिषु परत्वात् पशुद्वन्द्वविभाषयैव भवितव्यम्" इति। "विभाषा वृक्षमृग" २।४।१२ इत्यादिना। "इतरेतरयोगे" इत्यादिना द्वन्द्वप्रकरणस्य प्रयोजनं दर्शयति। "प्राण्यङ्गादीनां समाहार एव" इत्यादिना विषयविभाषागार्थतां स्पष्टीकरोति॥

बाल-मनोरमा

द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम् ८९६, २।४।२

द्वन्द्वश्च प्राणि। "प्राणितूर्यसेनाङ्गानी"ति द्वन्द्वगर्भषष्ठीसमासः। द्वन्द्वान्ते श्रूयमाणोऽङ्गशब्दः प्रत्येकं संबध्यते, इत्यभिप्रेत्याह--एषामिति। प्राण्याङ्गानां तूर्याङ्गानां सेनाङ्गानां चेत्यर्थः। द्वन्द्व इति। समाहारद्वन्द्व इत्यर्थः। "द्विगुरेकवचन"मिति पूर्वसूत्रे "समाहारग्रहणं कर्तव्य"मिति वार्तिकस्यात्राप्यनुवृत्तेः। एकवदिति। "एकवचन"मित्यनुवर्तते। एकं वक्तीत्येकवचनम्। ल्युट्। सामान्याभिप्रायं नपुंसकम्। पाणिपादमिति। पाण्योः पादयोश्च समाहार इति विग्रहः। अत्र समाहारे एकवत्त्वं, "स नपुंसक"मिति नपुंसकत्वं च। पाण्योः पादयोश्च प्राण्यवयवत्प्राण्यङ्गोदाहरणमिदम्।

अत तूर्याङ्गद्वन्द्वे उदाहरति--मार्दङ्गिकपाणविकमिति। मृगङ्गपणवशब्दौ वाद्यविशेषपरौ। इह तु तद्वादनेऽपि वर्तेते। मृदङ्गवादनं शिल्पमस्येत्यर्थे "शिल्प"मिति ठक्। मार्दङ्गिकपाणविकयोः समाहार इति विग्रहः। तूर्याङ्गत्वादेकवचनम्। तूर्याङ्गत्वं च तद्वादकतया बोध्यम्। "स नपुंसक"मिति नपुंसकत्वम्।

सेनाङ्गद्वन्द्वे उदाहरति--रतिका()आआरोहमिति। रथेन चरन्तीति रथिकाः। "पर्पादिभ्यः ष्ठन्"।

रथिकानाम()आआरोहाणा च समाहार इति विग्रहः। सेनावयवत्वादेकवत्त्वम्। पूर्ववन्नपुंसकत्वम्। ननु समाहारद्वन्द्वे समाहारस्य इति विग्रहः। सेनावयवत्वादेकवत्त्वम्। पूर्ववन्नपुंसकत्वम्। ननु समाहारद्वन्द्वे समाहरस्य विशेष्यत्वात्तस्य चैकत्वादिदं सूत्रं व्यर्थमित्यत आह--समाहारस्यैकत्वादिति। समाहार एवेति। न त्वितरेतरयोगः। एषां द्वन्द्वे नियमार्थं सूत्रमित्यर्थः। एवमुत्तरसूत्राण्यपि समाहर एवेति नियमार्थानि। नचेतरेतरयोगद्वन्द्वे एषामेकवत्त्वविधानार्थमिदं सूत्रमस्तु। तथा च "पाणिपाद" इति पुंलिङ्गमेकवचनान्तं रूपं फलमिति वाच्यं, "समाहारग्रहणं कर्तव्य"मिति पूर्वसूत्रस्थवार्तिकस्यात्रानुवृत्तेः, एकवद्भावप्रकरणेऽस्मिन् सर्वत्र समाहारद्वन्द्वानामेव भाष्ये उदाह्मतत्वाच्चा। नच रथिकमार्दङ्गिकावित्यादावतिप्रसङ्गः शङ्क्यः, प्राण्यङ्गानां परस्परद्वन्द्व एकवत्, तूर्याङ्गानां परस्परद्वन्द्व एकवत्, सेनाह्गानां परस्परद्वन्द्व एकवदित्यभ्युपगमादिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

द्वन्द्वश्च प्राणिसूर्यसेनाऽङ्गानाम् ७७३, २।४।२

द्वन्द्वश्चप्राणि। प्राणितूर्यसेनानामङ्गानीति बहुवचनान्तेनाऽङ्गशब्देन षष्ठीसमासः। अङ्गशब्दश्च प्रत्येकमन्वेति। तेन प्राण्यङ्गानां प्राण्यह्गैरेव, तूर्याङ्गेरैव, सेनाङ्गैरेव यो द्वन्द्वः स एकवद्भवति न तु व्यतिरेकेण। तेनेह न--मार्दङ्गिका()आआरोहौ। अत्र प्राणिसेनयोरङ्गं नामाऽवयवः। तूर्यस्य त्वङ्गं नामोपकारकं बोध्यम्। एषां द्वन्द्व इति। प्राण्यङ्गानां द्वन्द्वः, तूर्याङ्गानां द्वन्द्वः, सेनाङ्गानां द्वन्द्व इत्यर्थधः। "द्विगुरेकवचन"मित्यत एकवचनं वर्तते। तत्रैकं वक्तीति व्युत्पत्त्या एकत्वविशिष्टः समाहाररूपो योऽर्थस्तत्प्रतिपादकः स्यादित्यर्थं मन्वानः फलितमाह--एकवत्स्यादिति। पाणिपादमिति। यद्यप्यत्र "जातिरप्राणिना"मित्येव सिद्धं, तथापि द्रव्यप्राधान्येऽपि भवत्विति प्राणिग्रहणमित्येके। प्राणिपणवाविति व्यतिकरे मा भूदिति नियमार्थं वचनमित्यन्ये। मार्दङ्गिकेति। मृदङ्गवादनं शिल्पमस्येत्यर्थे "तदस्य शिल्प"मिति ठक्। एवं "पाणविक"इत्यपि। रथिका()आआरोहमिति। रथेन चरन्तीति रथिकाः। "पर्पादिभ्यः ष्ठ"न्निति ष्ठन्। ते चा()आरोहाश्चा तेषां समाहारः। ननु "चार्थे द्वन्द्वः"इत्यनेन समाहारद्वन्द्वः सिद्धः तस्य चैकत्वादेकवचनमपि सिद्धमिति किमनेनेत्याशङ्क्याह--नियमार्तमिति। समाहार एवेति। "समाहारे प्राण्यङ्गादीनामेवे"ति विपरीतनियमोऽत्र न भवति, "तिष्यपुनर्वस्वो"रिति सूत्रे बहुवचनग्रहणात्। तद्धि समाहारे एकवचनस्य द्विवचनं मा भूदिति कृतम्। अन्यथा "तिष्यपुनर्वस्वि"ति न स्यादिति। एवं च "द्वन्द्वश्च प्राणिसूत्रेय"ति प्रकरणबहुर्भूतानामपि लसमाहारद्वन्द्वो भवत्येव, तेन "सर्वो द्वन्द्वो विभाषैकवद्भवती"ति पठ()मानं नाऽपूर्वं वचनमिति ज्ञेयम्।

---

सूत्रम्

काशिका-वृत्तिः

अनुवादे चरणानाम् २।४।३

चरणशब्दः शाखानिमित्तकः पुरुषेषु वर्तते। चरणानां द्वन्द्वः एकवद् भवति अनुवादे गम्यमाने। प्रमाणान्तरावगतस्य अर्थस्य शब्देन सङ्कीर्तनमात्रम् अनुवादः। उदगाद् कठकालापम्। प्रत्यष्ठात् कठकौथुमम्। कठकालापाऽदीनाम् उदयप्रतिष्ठे प्रमाणान्तरवगते यदा पुनः शब्देन अनूद्येते तदा एवम् उदाहरणम्। यदा तु प्रथमत एव उपदेशस्तदा प्रत्युदाहरणम्। अनुवादे इति किम्? उदगुः कठकालापाः। प्रत्यष्ठुः कठकौथुमाः। स्थेणोरद्यतन्यां चेति वक्तव्यम्। स्थेणोः इति किम्? अनन्दिषुः कठकालापाः। अद्यतन्याम् इति किम्? उद्यन्ति कथकालापाः।

न्यासः

अनुवादे चरणानाम्।, २।४।३

"चरणशब्द" इत्यादिना सूत्रस्य विषयं दर्शयति। तथा हि-- यो हि कठादिप्रोक्ताध्ययनविशेषः शाखा, तत्र यदा चरणशब्दो वत्र्तते तदा "जातिरप्राणिनाम्" २।४।६ इत्येव सिद्धम्। यदा तु शाखानिमित्तकः" इति। शाखा निमित्तम्सयेति बहुव्रीहिः। "प्रमाणान्तरावगतस्य" इति। शब्दात् प्रमाणाद्यदन्यत् प्रमाणं तत् प्रमाणान्तरम्, तत्पुनःप्रत्यक्षादि। तेनावगतस्य परिच्छिन्नस्य शब्देन रसङ्कीर्तनमात्रमिति मात्रशब्दोऽर्थावगतिव्युदासार्थः। "उदगात्,प्रत्यष्ठात्" इति। उत्पूर्वादिणः प्रतिपूर्वात्तिष्ठतेर्लुङ, "इषो गा लुङि" २।४।४५ इति गादेशः, "गातिस्था" २।४।७७ इति सिचो लुक्। "कठकालापम्" इति। कठेन प्रोक्तमधीयत इति कठाः। कठशब्दात् प्रोक्तार्थे "कलापिवैशम्पायनान्तेवासिभ्यश्च" ४।३।१०४ इति णिनिः, तस्य "कठचरकाल्लुक्" ४।३।१०७ , ततः " तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य "प्रोक्ताल्लुक्" ४।२।६३ , "छन्दोब्राआह्मणानि च तद्विषयाणि" ४।२।६५ इति तद्विषयता। कलापिना प्रोक्तमधीयत इति कलापाः। प्रोक्तार्थे कलापिनोऽण्, "इनण्यनपत्ये" ६।४।१६४ इति प्रकृतिभावे प्राप्ते "सब्राह्चारिपीठसर्पिकलापिकुथुमितैरतितिलिजाजलिलाङ्गलिशिलालिशिखष्टिश#ऊकरसद्मसुपर्वणामुपसंख्यानम्" (वा। ७९८) इति टिलोपः। ततः "तदधीते तद्वेद" ४।२।५८ इत्यण्। तस्य "प्रोक्ताल्लुक्" ४।२।६३ इति लुक्। पूर्ववत् तद्विषता च। कठाश्च कालापाश्च कठकालापम्। " यदा तु प्रथमत एवोपदेशः" इति। अनवगतस्यैव प्राक् प्रमाणान्तरेण शब्देनाद्यं प्रत्यायनमर्थस्य प्रश्ने प्रतिवचने वोपदेशः, स यदा भवति तदात्र प्रत्युदाहरणम्। " उदगुः" इति। "आतः" ३।४।११० इति झर्जुस्। "उस्यपदान्तात्" ६।१।९३ इति पररूपत्वम्। "स्थेणोरद्यतन्याञ्चेति वक्तव्यम्" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "तुल्यार्थैरतुलोपमाभ्याम्" २।३।७२ इत्यतः सूत्रादन्यतरस्यामित्यनुवत्र्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन स्थेणोरद्यतन्यामनुवादे चरणानामेकवद्भावो भविष्यति, नान्यत्रेति। "अद्यतनी" इति लुङः पूर्वाचार्यप्रणीतैषा संज्ञा। "अनन्दिषुः" इति। "टुनदि समृद्धौ" (धा।पा।६७), "सिजब्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुस्। "उद्यन्ति" इति। "इको यण्" ६।४।८१ इति यणादेशः॥

बाल-मनोरमा

अनुवादे चरणानाम् ८९७, २।४।३

अनुवादे चरणानाम्। चरणानां द्वन्द्व एकवदिति। शाखाध्येतृविशेषणास्चारणाः। तद्वाचिना परस्परद्वन्द्वः। एकवदित्यर्थः। "अनुवादे" इत्येतद्व्याचष्टे--सिद्धस्योपन्यासे इति। अवगतार्थस्य प्रतिपादने इत्यर्थः।

स्थेणोरिति। लुङीति प्रत्येकमन्वयाभिप्रायमेकवचनम्। लुङन्ते स्थाधातौ, लुङन्ते इण्धातौ च प्रयुज्यमान एव अनुवादे चरणानां द्वन्द्व एकवदिति वक्तव्यमित्यर्थः। उदगादिति। प्रादुरभूदित्यर्थः। इण्धातोर्लुङि रूपम्। कठकालापमिति। कठेन प्रोक्तमधीयते इति कठाः। वैशम्पायनान्तेवासित्वाण्णिनिः। तस्य "कठचरका"दिति लुक्। ततोऽध्येतृप्रत्ययस्य "प्रोक्ताल्लु"गिति लुक्। कलापिना प्रोक्तमधीयते इति कालापाः। प्रोक्तार्थे "कलापिनोऽण्"। सब्राह्चारिपीठसर्पित्यापिना टिलोपः। ततोऽध्येत्रणः "प्रोक्ताल्लु"गिति लुक्। कठानां कालापानां च समाहार इति विग्रहः। प्रत्यष्ठादिति। प्रतिपूर्वात्स्ताधातोर्लुङि रूपम्। कठकौतुममिति। कठेन प्रोक्तमधीयत इति कठाः। कौथुमिना प्रोक्तमधीयते इति कौथुमाः। प्रोक्तेऽर्थे "तेन प्रोक्त"मित्यण्। "सब्राह्चारी"त्यनेन टिलोपः। ततोऽध्येत्रणो लुक्। कठानां कौथुमानां च समाहार इति विग्रहः। यदा कठाः कलापाश्च उदिताः, यदा कठाः कौथुमाश्च प्रतिष्ठिताः, तदा किञ्चिदिदं वक्तव्यमिति कृतसङ्कतयोरिदं वाक्यद्वयम्। अत्रोदयप्रतिष्ठयोः पूर्वसिद्धयोरनुवादादेकत्वम्। स्थेणोः किम्?। अभूवन्कठकालापा#ः। लुङि किम्?। अतिष्ठन्कठकालापाः।

तत्त्व-बोधिनी

अनुवादे चरणानाम् ७७४, २।४।३

चरणानामिति। शाखाध्येतृवाचिनामित्यर्थः।

स्थेणोर्लुङीति वक्तव्यम्। स्थेणोरिति। "ष्ठा गतिनिवृत्तौ"। "इण् गतौ"। स्थाप्रकृतिकैण्प्रकृतिकलुङन्ते उपपदे सतीत्यर्थः। स्थेणोः किम्()। अभूवन् कठकालापाः। लुङिकिम्()। तिष्ठन्तु कठकालापाः। उदगादिति। इह यदा कठेषु कालापेषु च प्रतिष्ठितेषु उदितेषु चाऽऽवाभ्यां तत्र गन्तव्यमिति संकेतयित्वा तत्सङ्केतं विस्मृत्यासीनं प्रतिदमुच्यते। कठेन प्रोक्तमधीयते कठाः। वैशंपायनान्तेवासित्वाण्णिनिः। तस्य "कठचरका"दिति लुक्। अध्येत्रणस्तु "प्रोक्ताल्लु"गिति लुक्। "कलापिनोऽणं"। "सब्राह्मचारी" त्याद्युपसङ्ख्यानाट्टिलोपः। यजुरिति। सूत्रे अध्वर्युशब्दो यजुर्वेदलक्षक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अध्वर्युक्रतुरनपुंसकम् २।४।४

अध्वर्युवेदे यस्य क्रतोर् विधानं सो ऽध्वर्युक्रतुः। अध्वर्युक्रतुवाचिनां शब्दानाम् अनपुंसकलिङ्गानां द्वन्द्वः एकवद् भवति। अध्वर्युक्रतुरनपुंसकं द्वन्द्वः इति गौणो निर्देशः। अर्काश्वमेधम्। सायाह्नातिरात्रम्। अध्वर्युक्रतुः इति किम्? इषुवज्रौ। उद्भिद्बलभिदौ। अनपुंसकम् इति किम्? राजसूयवाजपेये। इह कस्मान् न भवति, दर्शपौर्णमासौ? क्रतुशब्दः सोमयागेषु रूढः।

न्यासः

अध्वर्युक्रतुरनपुंसकम्। , २।४।४

"अध्वर्युवेदे" इति। ऐतेनाध्वर्युशब्दनात्र यजुर्वेदो लक्ष्यत इति दर्शयति। अथाष्वर्योरृत्विग्विशेषस्य यः क्रतुरिति क्रतुविशेषणमेवाध्वर्युग्रहणं कस्मान्न विज्ञायते? असम्भवात्; को हि तस्य क्रतुर्भवति ! अपि तु घनव्ययशीलस्य। यद्यपि तस्य क्रतौ कर्त्तृत्वमस्ति तदपि ऋत्विगन्तरेण साधारणमित्यध्वर्युणैकेन तस्य विशेषणमयुक्तम्। ननु चाथर्ववेदविहितो यः क्रतुस्तन्निवृत्त्यर्थमध्वर्युणैकेन कथं विशेषणं न स्यात्; न हि तराध्वर्यवः सन्ति? नैतदस्ति; यदि ह्येतावत् प्रयोजनमभिहितं स्यात् तदाऽनथर्वण इति प्रतिषेधमेव कुर्यात्। लघीयसी हि साक्षात् प्रतिषेधे प्रतीतिर्भवति। त्रयीग्रहणं वा कुर्यात्। यदि चाध्वर्युणा क्रतुर्विशेष्येत तदेषुवज्रावित्यत्रापि स्यात्? इषुवज्रावपि ह्यध्वर्योः क्रतू भवतः; तयोरपि तत्कर्तृकत्वात्। तस्मादध्वर्यूणां यजुर्वेदविदां यो वेदः सोऽध्वर्युशब्देनोपलक्ष्यते। स पुनर्यजुर्वेदः। तत्राध्वर्युवेदे यस्य क्रतोर्विधानं सोऽध्वर्युक्रतुरिति। इतिकत्र्तव्यतोपदेशः प्रयोगश्चानुष्ठानात्मको विधानशब्देनोक्तः। यदि तह्यरध्वर्युक्रतुवाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवद्भवतीति सूत्रार्थस्तदा सूत्रेऽध्वर्युक्रतुशब्दस्यानपुंसकमित्यस्य च द्वन्द्व इ()तयनेन प्रकृतेन सामानाधिकरण्येन निर्देशो नोपपद्यते। अतोऽध्वर्युक्रतुवाचिनामनपुंसकलिङ्गानामिति वक्तव्यं स्यादित्यत आह-- "अध्वर्युक्रतुरनपुंसकम्" इति। "गौणोऽयं निर्देशः" इति। गौण इत्यमुख्य औपचारिक इत्यर्थः। अध्वर्युक्रत्ववयवो द्वन्द्व उपचारेणाध्वर्युक्रतुरित्युक्तः। स एवानपुंसकलिङ्गावयवोऽनपुंलकमिति। गौणन्र्दिएशस्तु लाघवार्थो वेदितव्यः। यदि पुनरनपुंसकमित्यनेन मुख्यया वृत्त्या द्वन्द्व एवोच्येत तदा "स नपुसंकम्" २।४।१७ इत्यस्यापवादोऽयं विज्ञायेत। "अर्का()आमेधम्" इत्यादि। अर्कश्चा()आमेधश्चेत्यर्का()आमेधम्। सायाह्नश्चातिरात्रश्चेति "सायाह्नातिरात्रम्"। "इषुवज्रौ" इत्यादि। इषुवज्रप्रभृतयोऽध्वर्युक्रतवो न सम्भवति, न हि तेषामध्वर्युवेदे विधानम्। किं तर्हि? सामवेदे। "राजसूयवाजपेये" इति। एतौ राजसूयवाजपेयशब्दौ पुंल्लिङ्गावपि स्तः। तत्र यदा नपुंसकलिङ्गौ प्रयुज्येते तत्रेदं प्रत्युदाहरणम्। "सोमयागेषु" इति। यत्र यत्र सोमपानं विहितं ते सोमयागाः। तेष्वेव क्रतुशब्दो रूढः। न च दर्शपौर्णमासौ सोमयागौ। "अनपुंसकम्" २।४।४ इत्युपादानात् स्वरूपग्रहणमिह न भवति। न हि क्रतुसामान्यो

नपुंसकलिङ्गो भवति॥

बाल-मनोरमा

अध्वर्युक्रतुरनपुंसकम् ८९८, २।४।४

अध्वर्युक्रतुः। अध्वर्युशब्दोऽत्राध्वर्युकर्मविधायकजुर्वेदपरः। तदाह--यजुर्वेद इति। अर्का()आमेधमिति। अर्को--महाक्रतुः। अ()आमेधो नाम प्रसिद्धः। उभौ यजुर्वेदविहितक्रतू। अर्कस्य च अ()आमेधस्य च समाहार इति विग्रहः। इषुवज्राविति। क्रतुविशेषावेतौ न यजुर्वेदविहिताविति भावः। तर्हि कस्मिन्वेदे विहितावित्यत आह--सामेति। राजसूयवाजपेये इति। एतयोर्यजुर्वेदविहितत्वेऽपि नपुंसकत्वान्नैकवत्त्वमिति भावः। राजसूयवाजपेययोः पुंलिङ्गतया प्रसिद्धेराह--अर्धर्चादी इति। अध्ययनतः। "अविप्रकृष्टाख्याना"मिति च्छेदः। "अध्ययनत" इति तृतीयार्थे तसिः।

---

सूत्रम्

काशिका-वृत्तिः

अध्ययनतो ऽविप्रकृष्टाऽख्यानाम् २।४।५

अध्ययनेन निमित्तेन येषाम् अविप्रकृष्टा प्रत्यासन्ना आख्या, तेषां द्वन्द्वः एकवद् भवति। पदकक्रमकम्। क्रमकवार्तिकम्। सम्पाठः पदानां क्रमस्य च प्रत्यासन्नः। अध्ययनतः इति किम्? पितापुत्रौ। अविप्रकृष्टाऽख्यानाम् इति किम्? याज्ञैकवैयाकरणौ।

न्यासः

अध्ययनतोऽविप्रकृष्टाख्यानाम्। , २।४।५

अधीतिरध्ययनमिति भावसाधनोऽध्ययनशब्दः, कर्मसाधनो वा -- अधीयत इत्यध्ययनमिति। "अध्ययनतः" इति। "आद्यादिभ्यस्तस्युपसंख्यानम्" (वा। ६३४) इति हेतुतृतीयान्तात् तसिः। अत आह-- "अध्ययनेन निमित्तेन" इति। "अविप्रकृष्टा" इति। अविप्रकृष्टाऽऽख्या येषां तेऽविप्रकृष्टाख्याः। निमित्तस्य साधारणत्वादिविप्रकृष्टता। तत्पुनर्निमित्तं सूत्रोपात्तमेवाध्ययनमाख्यानामधेयम्। "पदकक्रमकम्" इति। पदमधीते, क्रममधीते इति "क्रमादिभ्यो वुन्" ४।२।६०। "क्रमकवार्तिकम्" इति। वृत्तिमधीत इति वार्तिकः। क्रतूक्थादिसूत्रान्ताट्ठक् ४।२।५९। कथं पुनः पदस्याध्येतुः क्रमस्य चाध्ययनेन निमित्तेनाविप्रकृष्टता भवतीत्याह-- "सम्पाठः" इत्यादि। यस्मात् पदानां क्रमस्य च यः पाठः स नातिभिन्नः। ग्रन्थोऽपि तादृश एव, अतः प्रत्यासन्नः। यतश्च पदान्यधीत्य क्रमोऽध्येतव्यः, ततोऽपि सम्पाठस्तयो। प्रत्यासन्नः, ततश्च तेन सम्पाठेनाध्ययनेन निमित्तेन पदक इति क्रमक इति च याऽध्येतुराख्या साऽपि प्रत्यासन्ना भवतीत्यभिप्रायः। "पितापुत्रौ" इति। "आनङ ऋतो द्वन्द्वे" ६।३।२४ इत्यानङादेशः। तत्र हि "पुत्रेऽन्यतरस्याम्" ६।३।२१ इत्यतः पुत्र इत्यनुवत्र्तते। अत्रापि पितेति पुत्र इति चाख्ये प्रत्यासन्ने साधारणत्वान्निमित्तस्य। तथा हि-- जन्यजनकभावो द्वयोरपि तयोर्निमित्तम्। "याज्ञिकवैयाकरणम्" इति। यज्ञमधीते याज्ञिकः। क्रतूक्थादिना ४।२।५९ ठक्। व्याकरममधीते वैयाकरणः। "तदधीते तद्वेद" ४।२।५८ इत्यण्। अस्त्यत्राध्ययननिमित्तत्वमनयोराख्ययोः, न तु प्रत्यासतिः। न हि यज्ञाध्ययनेन व्याकरणाध्ययनेन वा तयोः क्रियाप्रत्यासत्तिर्नापि ग्रन्थप्रत्यासत्तिः॥

बाल-मनोरमा

अध्ययनतोऽविप्रकृष्टाख्यानाम् ८९९, २।४।५

तदाह--अध्ययनेन प्रत्यासन्नेति। संनिकृष्टेत्यर्थः। पदककक्रमकमिति। पदान्यधीयते पदकाः। क्रमान् अधीयते क्रमकाः। "क्रमादिभ्यो बुन्"। पदकानां क्रमकाणां च समाहर इति विग्रहः। पदाध्ययनानन्तरं क्रमाध्ययनमित्यद्ययनगता

प्रत्यासत्तिरध्येतर्यारोप्यत इति भावः। पदक्रममिति नोदाह्मतम्, "जातिरप्राणिना"मित्येव सिद्धेः। तदध्येतृत्वे तु न जातिरिति भावः।

तत्त्व-बोधिनी

अध्ययनतोऽविप्रकृष्टाख्यानाम् ७७५, २।४।५

पदकेति। पदान्यधीते पदकः। "क्रमादिभ्यो वुन्"। एवं क्रमकोऽपि। पदान्यधीत्यक्रमोऽद्येतव्य इति स्पष्टा प्रत्यासत्तिः। अध्यनतः किम्()। पितापुत्रौ। अविप्रकृष्टेति किम्()। याज्ञिकनैयायिकौ।

---

सूत्रम्

काशिका-वृत्तिः

जातिरप्राणिनाम् २।४।६

जातिवाचिनां शब्दानां द्वन्द्व एकवद् भवति प्राणिनो वर्जयित्वा। आराशस्त्रि। धानाशष्कुलि। जातिः इति किम्? नन्दकपाञ्चजन्यौ। अप्राणिनाम् इति किम्? ब्राह्मणक्षत्रियविट्शूद्राः। नञिवयुक्तन्यायेन द्रव्यजातीनाम् अयम् एकवद्भावः, न गुणक्रियाजातीनाम्। रूपरसगन्धस्पर्शाः। गमनाकुञ्चनप्रसारणानि। जाति परत्वे च जातिशब्दानाम् अयम् एकवद्भावो विधीयते, न नियतद्रव्यविवक्षायाम् इह कुण्डे बदरामलकानि तिष्ठन्ति इति।

न्यासः

जातिरप्राणिनाम्। , २।४।६

अयमपि गौण्या वृत्त्या जातिद्र्वन्द्व इति सामानाधिकरण्येन निर्देशः कृतः। जातिवाच्यवयवो द्वन्द्वो जातिरित्युक्तः। जातेश्च स्वरूपग्रहणं न भवति, अप्राणिनामिति प्रतिषेधात्। "आराशस्त्रि" इति। "ह्मस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्मस्वः। "नन्दकपाञ्चजन्यौ" इति। संज्ञाशब्दयोरेव द्वन्द्वोऽयम्, न जातिशब्दयोः। अनेनाप्राणिनामित्यस्य पर्युदासतां दर्शयति। तेनायमर्थो भवतीत्याह-- "नञिवयुक्त" इत्यादि। "रूपरसगन्धस्पर्शाः" इत्यादि गुणजातिः। "गमनाकुञ्चनप्रसारणानि" इति क्रियाजातिः। "जातिपरत्वे च" इति। यदा जातेः प्राधान्येन विवक्षा तदा जातेःपरत्वे प्रधानत्वे सति जातिशब्दानाममेकवद्भावो भवति। "न नियतद्रव्यविवक्षायाम्" इति। यदा क्वचिद्देशादौ नियतानां द्रव्यविशेषाणां विवक्षा भवति तदा जातिशब्दस्य प्रयोगेऽप्येकवद्भावो न भवति। कुत एतत्? जातिरित्यभिधानान्मुख्या जातिराश्रीयते; न गौणी। एतच्च प्रधाने कार्यसम्प्रत्ययाल्लभ्यते। एतदुक्तं भवति-- यदा जातिरेव व्यक्तिविशेषमाश्रित्य प्रयुज्यते तदा नैकवद्भावः। यदा तु व्यक्तिविशेषमनाश्रित्य प्रयुज्यते तदैवैकवद्भाव इति। "बदरामलकानि" इति। अत्र बदरामलकानाञ्च व्यक्तिप्रयुक्तानां प्रतीतिः; न जातिशब्दानाम्। अत एव व्यक्त्याश्रयं बहुवचनम्; अन्यथा जातेर्द्वित्वाद्दविवचनमेव स्यात्, न बहुवचनम्। अप्राणिनामिति पर्युदासोऽयम्। तेनायमर्थो लभ्यते-- नञिवयुक्तन्यायेन (व्या।प।६५) रूपरसस्पर्शादीनान्नैकवद्भाव इति। अप्राण#इनामिति प्रतिषेधे बहुत्वं श्रूयमाणं विधावपि बहुत्वं गमयति। तेन बहुप्रकृतेरेव द्वन्द्व एकदवद्भवति, न द्विप्रकृतेः-- आराशस्त्र्याविति॥

बाल-मनोरमा

जातिरप्राणिनाम् ९००, २।४।६

जातिरप्राणिनां। "जाति"रिति षष्ठीबहुवचनस्थाने व्यत्ययेन प्रथमा जातिवाचिनामित्यर्थः। धानाशुष्कुलीति। धानाश्च शष्कुल्यश्च तासां समाहार इति विग्रहः। जातिवाचित्वादेकवत्त्वम्, नपुंसकत्वाद्ध्रस्व इति भावः। विट्छूद्रा इति। विशश्च

शूद्राश्चेति विग्रहः। द्रव्यजातीयानामेवेति। "अप्राणिना"मिति पर्युदासे सति नञिवयुक्तन्यायादिदं लभ्यत इति भावः। रूपरसाविति। गुणगतजातिवचावेतौ। गमनाकुञ्चने इति। क्रियागतजातिविशेषवाचिनावेतौ। ननु बदर्याः फलानि बदरामि, आमलक्याः फलान्यामलकानि। "फले लु"गिति विकारप्रत्ययस्य लुकि "लुक्तद्धितलुकी"ति स्त्रीप्रत्ययस्य लुक्। फलत्वव्याप्यजातिविशेषवाचिनावेतौ। ततश्च बदराणि चामलकानि च बदरामलकं, बदरामलकानीति कथं रूपद्वयम्?, "जातिरप्राणिना"मित्येकवत्त्वस्य नित्यत्वादित्यत आह--जाति प्राधान्ये इति। व्यक्तिविशेषाऽनादरेण सकलतत्तद्व्यक्त्यनुस्यूतजातिविवक्षायामित्यर्थः। "घटमानये"त्यादौ हि घटादिशब्दानामाकृत्यधिकरणन्यायेन घटत्वादिजातिरर्थः। जातेश्च निराश्रयाया उपस्थित्यसंभवादाश्रयभूतव्यक्त्याकाङ्क्षायामविशेषात्कृत्स्नाप्युपस्थिता। तत्र घटमानयेत्यादिप्रयोगेषु जातेरतीतानागतवर्तमानकृत्स्नव्यक्तीनां च क्रियान्वयाऽसंभवाद्ध्यक्तिविशेषमेव कञ्चिदादाय क्रिया विश्राम्यति। इदमेव च जातेः प्राधान्यं, तत्तज्जात्याश्रयसकलतत्तद्व्यक्तिबोधकत्वात्मकम्। "घटाः शुक्लाः" इत्यादिप्रयोगेषु पदान्तरसमभिव्याहारादिवसाद्व्यक्तिविशेषामेव जातिरुपस्थापयतीति जातेरप्रधान्यम्, जात्याश्रयसकलव्यक्त्यनुपस्थधापकत्वादिति "तस्यादितः" इति सूत्रे कैयटे स्पष्टम्। ततश्च फलत्वव्याप्यया बदरत्वजात्या, आमलकत्वजात्या चाऽविशेषात्तदाश्रयसकलव्यक्त्युपस्थितौ बदरामलकमित्येकवद्भावः। द्रव्यविशेषेति। "आरण्यानि बदरामलकानी"त्यादौ फलत्वव्याप्यबदरत्वामलकत्वादिजातिभ्यामारण्यत्वादिविशेषितकतिपयव्यक्तीनामेवोपस्थितिः, ग्राम्याणां व्यक्तीनामनुपस्थितेस्तयोर्जात्योरप्राधान्यान्ना।ऽयमेकवद्भाव इत्यर्थः। "क्षीरोदके संपृक्ते"इत्यन्तादिवत्सूत्रभाष्यप्रयोगोऽत्र लिङ्गमित्याहुः।

तत्त्व-बोधिनी

जातिरप्राणिनाम् ७७६, २।४।६

जातिर। जातिवाच्यवयवकद्वन्द्वोऽपि जातिरित्युपचर्यत इत्याशयेनाह--जातिवाचिनामिति। विट्()शूद्रा इति। जातिप्राधान्येऽपि बहुवचनमुपपद्यते, "जात्याख्यायामेकस्मि"न्निति विधानात्। तेनात्र व्यङ्गविकलं नेति भावः। द्रव्यजातीयानामेवेति। "अप्राणिना"मिति पर्युदासात् "नञिवयुक्त न्यायेन द्रव्यजातीयानामेकवद्भावो, न तु गुणक्रियाजातीयानामिति भावः। जातिः किम्()। नन्दकपाञ्चजन्यौ। संज्ञाशब्दावेतौ। जातिप्राधान्य एवेति। एतच्च जातिग्रहणाल्लब्धम्। अन्यथा पर्युदासेनैव जात्युपसर्जनद्रव्यवाचिनोऽपि ग्रहणोपपत्तौः किं तेनेति भावः। द्रव्यविशेषेति। नन्वेवं "रञ्जिता नु विविधास्तरुशैलाः"इति भारविप्रयोगः सङ्गच्छत एवेति किमिति तरुसहिताः शैला इति मनोरमायां समर्थितमिति चेत्। अत्राहुः--सकलतरुशैलरञ्जनं तत्र विवक्षितं, न तु केषांचित्तरुशैलविशेषणामिति जातिप्राधान्यादेकवद्भावमशङ्क्यो तथोक्तमिति। बदरामलकानिति। "फले लु"गिति लुक्। "लुक्तद्धितलुकी"ति स्त्रीप्रत्यस्यापि लुकि फलत्वजात्युपसर्जनद्रव्यवचनावेतौ। "विभाषा वृक्षमृगे"ति सूत्रे बदराणि चामलकानि च बदरामलकम्। "जातिरप्राणिना"मित्येकवद्भाव"इति वक्ष्यति, तत्तु नाऽनेन ग्रन्थेन व#इरुध्यते। "फलत्वजातिवाचिनां बहुवचनान्तानामेव द्वन्द्व एकवद्भवति, न त्वेकवचनान्तां द्वन्द्व" इति "फलसेनावनस्पती"ति वार्तिकोक्तनियममुपेत्य तत्प्रवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

विशिष्टलिङ्गो नदी देशो ऽग्रामाः २।४।७

विशिष्तलिङ्गानां भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवचिनां च ग्रामवर्जितानं द्वन्द्व एकवद् भवति। नद्यवयवो द्वन्द्वो नदी इत्युच्यते। देशावयवश्च देशः। नदी देशः इत्यसमासनिर्देश एव अयम्। उद्ध्यश्च इरावती च उद्ध्येरावति। गङ्गाशोणम्। देशः खल्वपि कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम्। कुरुकुरुजाङ्गलम्। विशिष्टलिङ्गः इति किम्? गङ्गायमुने। मद्रकेकयाः। नदी देशः इति किम्? कुक्कुटमयूर्यौ। अग्रामाः इति किम्? जाम्बवश्च शालूकिनी च जाम्बवशालूकिन्यौ। नदीग्रहणमदेशत्वात्। जनपदो हि देशः। तथा च पर्वतानां ग्रहणं न भवति, कैलासश्च गन्धमादनं च कैलासगन्धमादने। अग्रामा इत्यत्र नगरानां प्रतिषेधो वक्तव्यः। इह मा भूत्, मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्रम्। उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः। सौर्यं च नगरं, केतवतं च ग्रामः सौर्यकेतवते।

न्यासः

विशिष्टलिङ्गो नदीदेशोऽग्रामाः। , २।४।७

विशिष्टशब्दोऽयं भेदवचनः। योऽत्रऽपि "क्तेन नञ्विशिष्टेनानञ्" (२।१।क६०) इत्यत्र सावधारणाधिक्ये विशिष्टशब्दो व्याख्यातः; सोऽपि भेद्वारेणैव प्रतिपत्तयः। तेनेह वृत्तिकारोऽपि "भिन्नलिङ्गाना{अपि नास्ति--काशिका}मपि" इत्याह। "अग्रामाः" इति। प्रतिषेधादनयोः स्वरूपग्रहणं न भवतीत्याह-- "नदीवाचिनाम्" इत्यादि। यदि नदीवाचिनां द्वन्द्वो देशवाचिनाञ्चैकवद्भवतीत्ययमत्र सूत्रार्थोऽभिमतः, तत्कथं नदीदेश इत्ययं द्वन्द्व इत्यनेन प्रकृतेन सामानाधिकरण्येन निर्देश इत्याह-- "नद्यवयवो द्वन्द्वोनदीत्युच्यते" इत्यादि। एतेन गौणः सूत्रे निर्देश इति दर्शयति। नदीदेश इत्ययं यदि द्वन्द्वसमासस्तदा व्यतिकीर्णावयवो द्वन्द्वो यस्य कश्चिदवयवो नदी कश्चिद्देशस्तस्यैकवद्भावः स्यात्। किञ्च, द्वन्द्वो भवन्नेष समाहारे वा स्यात्? इतरेरतरयोगे वा? तत्र पूर्वस्मिन् पक्षे "स नपुंसकम्" २।४।१७ इति नपुंसकत्वं स्यात्, इतरत्र तु द्विवचनमितीमं दोषं दृष्ट्वाऽऽह-- "नदीदेश" इति। "असमास एवायं निर्देशः" इति। "मद्रकेकयाः" इति। मद्राश्च केकयाश्च मद्रकेकयाः। अथ नदीग्रहणं कस्मात् क्रियते? न देशग्रहणादेव नदीग्रहणं सिद्धमित्यत आह-- "नदीग्रहणमदेशत्वात्" इति। कस्मात् पूनर्नदी देशो न भवतीत्याह-- "जनपदो हि देशः" इति। तत्रैव देशशब्दस्य रूढत्वात्। यत् पुनर्नदी देश इत्युच्यते तत् तात्स्थ्यात्। भवति हि तात्स्थ्यात् ताच्छब्द्यम्, यथा- मञ्चाः क्रोशन्तीति। "तथा च" इत्यादि। तस्माज्जनपद एव देशो नान्यः पर्वतादिः। एवञ्च कृत्वा देशग्रहणेन पर्वतादीनां ग्रहणं न भवति। "अग्रामा इत्यत्र " इत्यादि। लोके हि ग्रामग्रहणेन नगरग्रहणं भवति, तथा ह्यभक्ष्यो ग्राम्यशूकर इत्युक्ते नागरोऽपि न भक्ष्यते। ततश्चेहाग्रामा इति प्रतिषेधः क्रियमाणो नगराणामपि प्राप्नोति, तस्मादग्रामा इति प्रतिषेधे नगरप्रतिषेधो वक्तव्यः, अग्रामा इत्यनेन नगराणां यः प्रतिषेधः प्राप्नोति तस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः, व्याख्येय इत्यर्थः। तेन नगराणां विधिरेव भवति। तत्रेदं व्याख्यानम्-- यदयम् "प्राचां ग्रामनगराणाम्" ७।३।१४ इत्यत्र ग्रामनगरयोर्भेदेनोपदानं करोति कज्ज्ञापयति-- इह शस्त्रे ग्रामग्रहणेन नगराणां ग्रहणं न भवतीति। तेनाग्रामा इति प्रतिषेधो नगराणां न भवति। "उभयतच्च" इत्यादि। उभयस्मिन्नित्यर्थः उभयतः। यत्र कश्चिदवयवो ग्रामः कश्चिन्नगरं तत्र ग्रामाणां यः प्रतिषेध उच्यते स एव वक्तव्यः, व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- अग्रामा इति प्रसज्य प्रतिषेधोऽयं विज्ञेयः, नचेत् द्वन्द्वे ग्रामा विद्यन्त इति। तेन यत्र ग्रामगन्धोऽप्यस्ति तत्राप्येकवद्भावो न भवतीति॥

बाल-मनोरमा

विशिष्टलिङ्गो नदीदेशोऽग्रामाः ९०१, २।४।७

विसिष्टलिङ्गो नदीदेशोऽग्रामाः। अग्रामा" इति च्छेदः। व्यत्ययेन बहुत्वे एकवचनम्। विपूर्वकशिषधातुर्भेदेवर्तते "विशेषणं विशेष्येणे"त्यादौ यथा। विशिष्टं लिङ्गं येषामिति विग्रहः। तथा च ग्रामवाचकभिन्ना भिन्नलिङ्गका ये नदीवाचिनो, ये देशवाचिनश्च तेषा द्विन्द्व एकवत्स्यादिति लभ्यते। तदाह--ग्रामवर्जेति। समाहारे द्वन्द्वः स्यादिति। एकवत्त्वविधेः फलाभिप्रायमेतत्। अस्यैकवद्भावप्रकरणस्य समाहार एव द्वन्द्व इति नियमार्थताया अनुपदमेवोक्तत्वात्।

उदध्यश्चेति। उद्ध्यो ना नदविशेषः। इरावती नाम कचिन्नदी। तयोर्नदीविशेषवाचकत्वादेकवत्त्वम्, नदीशब्देन नदस्यापि ग्रहणात्, अन्यथा भिन्नलिङ्गत्वाऽसम्भवादिति भावः। जाम्बवशालूकिन्याविति। "अग्रामाः" इत्यनेन ग्रामावयवकद्वन्द्वपर्युदासो विवक्षितः। अयं च द्वन्द्वे नगरग्रामोभयावयवकोऽपि ग्रामावयवक इति तस्य पर्युदास इति भावः।

तत्त्व-बोधिनी

विशिष्टलिङ्गो नदीदेशोऽग्रामाः ७७७, २।४।७

विशिष्टलिङ्गो। सूत्रे चत्वारोऽपि शब्दा अवयवधर्मेणाऽवयविद्वन्द्वे वर्तन्त इत्याशयेनाह---ग्रामेत्यादि। इह "नदीवाचिनां द्वन्द्वः, "देशवाचिनां द्वन्द्व" इति वाक्यभेदेन व्याख्येयम्। तेन "गङ्गाकुरुक्षेत्रे"इत्यत्र न भवति। देशशब्देनात्र प्रसिद्ध एव जनपदो गृह्रते, नद्याः पृथग्ग्रहणात्। तेन पर्वतानां न, कैलासश्च गन्धमादनं च कैलासगन्धमादने। नदीदेश इति किम्()। कुक्कुट मयूर्यौ। विशिष्टपदस्यऽर्थमाह---भिन्नलिङ्गानामिति। विपूर्वो हि शिषिर्भेदार्थः। अतएव "विशेषणं विश्ष्येणे"ति सूत्रे भेदकं भेद्येनेति व्याख्यातम्। समाहारे द्वन्द्वः स्यादिति। निष्कर्षाभिप्रायेणेयमुक्तः। यथाश्रुताभिप्रायेण तु "द्वन्द्व एकवत्स्या"दिति केषु चित्सूत्रेषु व्याख्यायत इति ज्ञेयम्। उद्ध्येरावतीति। उव्द्यो नदः, सोऽपि नदीविशेषत्वान्नदीशब्देन गृहीतः। एवं शोणोऽपि। "अग्रामा इत्यत्र नगरप्रतिषेधो वक्तव्यः"। तेन "मथुरापाटलिपुत्र"मित्यत्र निषेधो न भवति, उभयोरपि नगरत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

क्षुद्रजन्तवः २।४।८

अपचितपरिमाणः क्षुद्रः। क्षुद्र जन्तुवाचिनां द्वन्द्वः एकवद् भवति। दंशमशकम्। यूकालिक्षम्। क्षुद्रजन्तवः इति किम्? ब्राह्मणक्षत्रियौ। क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः। शतं वा प्रसुऋतौ येषां केचिदा नकुलादपि। आ नकुलादपि इति इयम् एव स्मृतिः प्रमाणम्, इतरासां तद्विरोधात्।

न्यासः

क्षुद्रजन्तवः। , २।४।८

क्षुद्रशब्दोऽयमस्त्येव यः कार्पण्यवति पुरुषे वर्त्तते; यथा-- क्षुद्रो देवदत्त इति, कृपण इति गम्यते। अस्ति च शीलहीनेऽङ्गहीने च, यथा --क्षुद्राभ्यो वेति। अत्र ह्यनियतपुंस्का विकलाङ्गाश्च स्त्रियः क्षुद्राग्रहणेन गृह्रन्ते। अस्ति च परिमाणापचये, यथा-- क्षुद्रास्तण्डुला इति। इह तु जन्तुशब्दसन्निधानात् प्राणिशरीरस्याल्पतामाचष्टे। तेन परिमाणापचये वर्त्तमानस्य क्षुद्रशब्दस्य ग्रहणं विज्ञायत इत्याह-- "अपचितपरिमाणः क्षुद्रः" इति। अल्पशरीर इत्यर्थः। अपचितपरिमाणता चापेक्षाभेदादनवस्थितेति। अस्थिरेत्यर्थः। क्षुद्रजन्तुशब्दस्याभिधेयं प्रति स्म-तीरुपन्यस्यति-- "क्षुद्रजन्तुरनस्थिः स्यात्" इति। "क्षुदिर् सम्पेवणे" (धा।पा।१४४३) क्षुद्यत इति क्षुद्रः। औणादिकः "स्फायीतञ्चि" (द।उ।८।३१) इत्यादिना रक्। क्षुद्रश्चासौ जन्तुश्चेति क्षुद्रजन्तुः। "अनस्थिः" इति। यस्यास्थीनि न विद्यन्ते। कवलं यस्य चर्मशोणितमांसमस्ति स क्षुद्रश्चासौ जन्तुश्चेति क्षुद्रजन्तुः। "अथ वा क्षुद्र एव यः" इति स्मृत्यन्तरमाह। क्षोदयितुं यः शक्यते स क्षुद्रजन्तुः। शब्दार्थवशात् प्रसिद्ध एव लोके क्षुद्रजन्तुग्र्राह्यः। स पुनर्मशकादिरङ्गे यस्यात्मीयं शोणितं नास्ति। येषां वा गोचर्ममात्रं राशिहत्वापि नरः पतितो न भवति ते प्रसिद्धाः क्षुद्रजन्तव उच्यन्ते। "शतं वा प्रसृतौ येषाम्" अपरा स्मृतिः। प्सृतौ अञ्जलौ बद्धं येषां प्राणिनां शतं प्रसृतिर्भवति शतेन वा प्रसृतिः पूर्यते ते क्षुद्रजन्तवः।

"केचिदानकुलादपि" इति। ककेचिद्वर्णयन्ति-- नकुलपर्यन्ताः क्षुद्रजन्तव इति। "इयमेव स्मृतिः प्रमाणम्" इति। अस्याः सर्वस्मृत्यनुग्राहिणीत्वात्। तथा ह्येतदुपलक्षितेषु क्षुद्रजन्तुषु स्मृत्यन्तरदर्शिता अपि क्षुद्रजन्तवोऽन्तर्भवति। इतरा अपि स्मृतयः प्रमाणं कस्मान्न भवन्तीत्याह-- "इतरासाम्" इत्यादि। अनस्थ्यादीनां स्मृतीनामा नकुलादपीति स्मृत्या विरोधः। तस्मान्नैताः प्रामाण्येनाभ्युपगम्यन्ते, तेन सर्वत्रेदं सिद्धं भवति। "क्षुद्रजन्तवः" इति बहुवचननिर्देशात् बहुवचननिर्देशात् बहुप्रकृतेरेवैकवद्भावो यथा स्यात्। तनेह न भवति-- यूकालिक्षे, दंशमशकाविति। अयञ्च प्राणिजात्यर्थ आरम्भः। "क्षुद्रजन्तव इति किम्" इति? ननु च सूत्रास्याभावे किं प्रत्युदाहरणं स्यात्? एवं मन्यते-- अन्यथा हि जन्तव इति सूत्रं कत्र्तव्यम्, ततश्चातिप्रसङ्ग स्यादिति॥

बाल-मनोरमा

क्षुद्रजन्तवः ९०२, २।४।८

क्षुद्रजन्तवः। एतेषां द्वन्द्व एकबदित्यर्थः। फलितमाह--एषां समाहारे [एव ]द्वन्द्व इति। यूकालिक्षमिति। यूकाश्च लिक्षाश्चेति विग्रहः। केशबहुले शिरःप्रदेसे स्वेदजा जन्तविशेषा यूकाः। लिक्षाश्च प्रसिद्धाः। एकवत्त्वं, नपुंसकह्यस्वत्वं च। आ नकुलादिति। "नकुलपर्यन्ताः क्षुद्रजन्तवः" इति भाष्यादिति भावः।

तत्त्व-बोधिनी

क्षुद्रजन्तवः ७७८, २।४।८

क्षुद्र। अपचितपरिमाणत्वं क्षुद्रत्वम्। तच्चापेक्षिकत्वादनवस्थितम्। यच्च स्मर्यते---"क्षुद्रजन्तुरनस्थिः स्यादथ वा क्षुद्र एव यः। शतं वा प्रसृतौ येषां, केचिदानकुलादपि"इति। तत्र सर्वपक्षसाधारण्येनोदाहरति--यूकालिक्षमिति। आ नकुलादिति। नकुलपर्यन्ता इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

येषां च विरोधः शाश्वतिकः २।४।९

विरोधो वैरम्। शाश्वतिको नित्यः। येषां शाश्वतिको विरोधः तद्वाचिनां शब्दानां द्वन्द्व एकवद् भवति। मार्जारमूषकं। अहिनकुलम्। शाश्वतिकः इति किम्? गौपालिशालङ्कायनाः कलहायन्ते। चकारः पुनरस्य एव समुच्चयार्थः। तेन पशुशकुनिद्वन्द्वे विरोधिनाम् अनेन नित्यम् एकवद् भावो भवति अश्वमहिषम्। श्वशृगालम्। काकोलूकम्।

न्यासः

येषां च विरोधः शा�आतिकः। , २।४।९

प्रतिपक्षभावमात्रं लोके विरोधशब्देनोच्यते। तस्येह ग्रहणे सति छायातपौ, अग्निजले इत्यत्रापि स्यादिति मत्वा वैरमिह विरोधोऽभिमत इति दर्शयितुमाह-- "विरोधो वैरम्" इति। एवं मन्यते-- "क्षुद्रजन्तवः" २।४।८ इत्यतो जन्तुग्रहणमनुवत्र्तते। तेन जन्तूनां यो विरोधस्तस्येह ग्रहणं विज्ञायते। स च वैरस्वभाव एवेति। "शा()आतिको नित्यः" इति। शस्वदिति त्रैकल्यमुच्यते। तत्र भवः शा()आतिकः। "कालाटठञ्"४।३।११। अस्मादेव निपातनात् तान्तादपि को न भवति। यश्च त्रैकल्ये भवति स नित्यः। "गोपालिशालङ्कायनाः" इति। गोपालयश्च शालङ्कायनाश्च गोपालिशालङ्कायनाः। नात्र शा()आतिको विरोध इत्येकवद्भावो न भवति। "चकारः पुनरस्यैव समुच्चयार्थः" इति। प्रकृतस्यान्यस्य समुच्चेतव्यस्याभावादस्यैकवद्भावस्य समुच्चयार्थश्चकारो विज्ञायते। तेन किं भवतीत्याह-- "तेन

पशुशकुनि" इत्यादि। पशुशकुनिविभाषाया अवकाशः--महाजोरभ्रम्, महाजोरभ्राः, हंसचक्रवाकम्, हंसचक्रवाका इति। नित्यविरोधिनामेकवद्भावस्यावकाशः-- ब्राआहृणनास्तिकमिति, ()आशृगालम्, अ()आमहिषम्। काकोलूकमित्यत्रोभयप्राप्तौ परत्वात् पशुशकुनिविभाषा स्यात्। चकारस्य पुनरस्यैव समुच्चयार्थत्वादनेन नित्यमेकवद्भवति॥

बाल-मनोरमा

येषा च विरोधः शा�आतिकः ९०३, २।४।९

येषां च। शेषपूरणेन सूत्रं व्याचष्टे--एषां प्राग्वदिति। समाहारद्वन्द्व एकवदित्यर्थः। "श()आ"दित्यव्ययं सदेत्यर्थे वर्तते। ततो भवार्थे ठञ्। निपातनादव्ययानां भमात्रे टिलोपः, "इसुसुक्तान्तात्कः" इति कादेशस्च न भवति। स्वाभाविक इत्यर्थः। अहिनकुलमिति। अहयो नकुलाश्चेति विग्रहः। अनयोः स्वभाविको विरोधः प्रसिद्धः। विरोधो--वैरं, नतु सहानवस्थितिः तेन छायातपावित्यत्र न भवति। "देवाऽसुराः" इत्यत्र तु नायमेकवद्भावः, तद्विरोधस्य कादाचित्कत्वात्। अमृतादिप्रयुक्तः कादाचित्क एव हि तेषां विरोधः, अमृतमथनादि काले तेषां विरोधाऽभावात्। ननु "विभाषा वृक्षमृगे"ति सूत्रे पशुशकुनिद्वन्द्वयोरेकवद्भावविकल्पो वक्ष्यते। तस्य तावद्गोमहिषु गोमहिषाः, हंसचक्रवाकं, हंसचक्रवाका इत्यत्रावकाशः। "येषां चे"त्यस्य-अहिनकुलमित्यवकाशः गोव्याघ्रं काकोलूकमित्यादौ तदुभयं प्रसक्तम्। तत्र परत्वाद्क्ष्यमाणविभाषा प्राप्नोतीत्याशङ्क्याह--गोव्याघ्रमिति। चकारेणेति। "येषां चे"ति चकारेणेत्यर्थः। एतच्च भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

येषां च विरोधः शा�आतिकः ७७९, २।४।९

येषां च विरोधः। विरोधो वैरं, न तु सहानवस्थानम्। तेनेह न---छायातपौ। "श()आ"दित्यव्ययं त्रैकाल्ये वर्तते, तत्र भवः शा()आतिकः। "कालाट्ठञ्"। अतएव निपातनात् "इसुसुक्तान्ता"दिति कादेशः, "अव्ययानां भमात्रे"इति इति टिलोपश्च न। शा()आतिकः किम्()। देवासुरैरमृतमम्बुनिधिर्ममन्थे"। तेषां ह्ममृतादिप्रयुक्तः कादाचित्को विरोधो न तु नित्यः, मन्थनप्रवृत्तिकाले तद्विरहात्। परत्वादिति। पशुशकुनिद्वन्द्वस्यावकाशो--गोमहिषं गोमहिषाः। हंसचक्रवाकं हंसचक्रवाकाः। "येषां चे"त्यस्यावकाशः--मार्जारमूषकं श्रमणब्राआहृणमित्यादौ ज्ञेयः। चकारेण बाध्यत इति। चकारः पुनर्विधायक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

शूद्राणाम् अनिरवसितानाम् २।४।१०

निरवसानं बहिष्करणम्। कुतो बहिष्करणम्? पात्रात्। यैर् भुक्ते पात्रं संस्कारेण अपि न शुध्यति ते निरवसिताः। न निरवसिताः अनिरवसिताः। अनिरवसितशूद्रवाचिनां शब्दानां द्वन्द्व एकवद् भवति। तक्षायस्कारम्। रजकतन्तुबायम्। अनिरवसितानाम् इति किम्? चण्डालमृतपाः।

न्यासः

शूद्राणामनिरवसितानाम्। , २।४।१०

यद्यपि "षिञ् बन्धने" (धा।पा। १२४८) इति सिनोतिर्बन्धने वत्र्तते; तथापि निरवपूर्वो बहिष्करणे वत्र्तत इत्याह-- "निरवसानं बहिष्करणम्"। यैर्भुक्ते पात्रं संस्कारेणापि न शुद्ध्यति तस्मात् ते ततो बहिष्कृताः = पृथक्कृताः। न लभन्ते

तत्र भोक्तुमित्यर्थः॥

बाल-मनोरमा

शूद्राणामनिरवसितानाम् ९०४, २।४।१०

शूद्राणाम्। "अनिरवसित"शब्दं व्याचष्टे--अबहिष्कृतानामिति। "यैर्भुक्तं पात्रं क्षारोदकप्रक्षालनेन संस्कारेणापि न शुध्यत ते निरवसिताः,--चण्डालादयः। यैस्तु भुक्तं पात्रं संस्कारेण शुध्यति तेऽनिरवसिताः"इति भाष्ये स्पष्टम्य। शूद्राणामिति।त्रैवर्णिकेतरः शूद्रशब्देन विवक्षितः, "अनिरवसिताना"मिति लिङ्गात्। प्राग्वदिति। समाहरद्वन्द्व एकवदित्यर्थः। तक्षायस्कारमिति। तक्षाणश्च अयस्काराश्चेति विग्रहः। "अनिरवसिताना"मित्यस्य प्रयोजनमाह--पात्रादिति। चण्डालमृतपा इति। #एतद्भुक्तपात्रस्य संस्कारेणापि नास्ति शुद्धिरिति-अत एव भाष्याद्विज्ञेयम्। धर्मशात्रेषु च प्रसिद्धमेतत्।

तत्त्व-बोधिनी

शूद्राणामनिरवसितानाम् ७८०, २।४।१०

शूद्राणां। "त्रैवर्णिकेतरमनुष्यपरः शूद्रशब्दो न तु शूद्रत्वजातिपरः, "अनिरवसिताना"मिति निषेधात्। पात्रादिति। यैर्भुक्ते"भस्मना शुध्यते कांस्य"मित्यादिस्मृत्युक्तसंस्कारेणापि पात्रं न शुध्यति तेषामित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

गवाश्वप्रभृतीनि च २।४।११

गवाश्वप्रभृतीनि च कृतएकवद्भावनि द्वन्द्वरूपाणि साधूनि भव्न्ति। गवाश्वम्। गवाविकम्। गवैडकम्। अजाविकम्। अजैडकम्। कुब्जवामनम्। कुब्जकैरातकम्। पुत्रपौत्रम्। श्वचण्डालम्। स्त्रीकुमारम्। दासीमाणवकम्। शाटीपिच्छकम्। उष्ट्रखरम्। उष्त्रशशम्। मूत्रशकृत्। मूत्रपुरीषम्। यकृन्मेदः। मांसशोणितम्। दर्भशरम्। दर्भपूतीकम्। अर्जुनशिरीषम्। तृणोलपम्। दासीदासम्। कुटीकुटम्। भागवतीभागवतम्। गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम्। रूपान्तरे तु न अयं विधिर् भवति। गो ऽश्वम्, गो ऽश्वौ। पशुद्वन्द्वविभाषा एव भवति।

न्यासः

गवा�आप्रभृतीनि च। , २।४।११

गवाश्वादीनि कृतैकवद्भावानि गणे पठ()न्ते। तेषाममनेन साधुत्वमात्रं विधीयते। न त्वेकवद्भाव इति दर्शयन्नाह--"गवा()आआदीनि" इति। ग्वा()आमित्येवमादीनामजैडकपर्यन्तानां पशुद्वन्द्वविकल्पे वचनमिदम्। कुब्जवामनप्रभृतीनां त्रयाणामप्राप्ते। ()आचाण्डालस्याविरोधः? यदा विरोधं द्वन्द्वो नाचष्टे केवलञ्चार्थमात्रे वत्र्तते तदा ()आचाण्डालमिहास्तीति। "स्त्रीकुमारं दासीमाणवकम्" इत्यप्राप्ते वचनम्। "शाटीपिच्छकम्" इति "जातिरप्राणिनाम्" २।४।६ इति सिद्धे, अबहुप्रकृत्यर्थः पाठः। "उष्ट्रखरमुष्ट्रशशम्" इति। पशुद्वन्द्वविभाषाप्राप्तौ नित्यार्थम्। मूत्रशकृदादीनां मांसशोणितपर्यन्तानामप्राणिजातीनामबहुप्रकृत्यर्थः पाठः। दर्भशरप्रभृतीनां तृणविभाषायां प्राप्तायां वचनम्। दासीदासादीनां त्रयाणामप्राप्ते। "पुमान् स्त्रिया" १।२।६७ इत्येकशेषो न भवत्यस्मादेव निपातनात्। "गवा()आप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तम्" इति। कथम्? तथा रूप्सयाश्रयणात्। गणपाठे हि यदेषां शब्दानां रूपं तदाश्रितम्। येन यथोच्चारितानामेकवद्भावलक्षणं द्वन्द्ववृतं भवति। "रूपान्तरे तु नायं विधिः" इति। यदा "अवङ स्फोटायनस्य " ६।१।११९

इत्यवङ नास्ति तदा रूपान्तरे जातेऽनेन सूत्रेण यो विधिः क्रियते स न भवति। पशुद्वन्द्वविभाषैव प्रवत्र्तते॥

बाल-मनोरमा

गवा�आप्रभृतीनि च ९०५, २।४।११

गवाशम्वप्रभृतीनि च। यथागणे गणितानि तथैव साधीनित्यर्थः। गवा()आमिति। गावश्चा()आआश्वेति विग्रहः। अत्र "विभाषा वृक्षे"ति पशुद्वन्द्वत्वाद्विकल्पे प्राप्ते नित्योऽयं विधिः।अत्र "सर्वत्र विभाषे"ति प्रकृतिभावे पूर्वरूपे च गो-अ()आं, गोऽ()आमिति नैकवत्त्वनियमः, "यथोच्चारितानी"त्युक्तेः, गणे च गवा()आमित्येव निर्देशात्। गवा()आआदिषु "यथोच्चारितं द्वन्द्ववृत्तमिति वार्तिकमत्र मानम्। दासीदासमिति। अत्रैकवत्त्वनियमः। पुमान्स्त्रिये"त्येकसेषस्तु निपातनान्न। इत्यादिति। गवाविकं गवैडकमित्यादि वृत्तौ स्पष्टम्।

तत्त्व-बोधिनी

गवा�आप्रभृतीनि च ७८१, २।४।११

गवा()आ। यथोच्चारितानीति। गणपाठे पाणिनिना यथा पाठितानि तथैव साधूनीत्यर्थः। तेनाऽवङः पाक्षिकत्वाद्यदा नावङ् तदा उत्तरसूत्रेण विकल्पो न भवति। गोअ()आम्। "अपशवो वा अन्ये गोअ()ओभ्यः, पशवो गोअ()आआः"। गवा()आमिति। इह पशुद्वन्द्वे विभाषा प्राप्ता। दशीदासमिति। अत्र "पुमान्स्त्रिये"त्येकशेषो बाध्यते।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्वबडवपूर्वापराधरोत्तराणाम् २।४।१२

वृक्ष मृग तृण धन्य व्यञ्जन पशु शकुनि अश्वबडव पूर्वापर अधरोत्तर इत्येतेषाम् द्वन्द्वो विभाषा एकवद् भवति। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। तित्तिरिकपिञ्जलम्, तित्तिरिकपिञ्जलाः। अश्वबडवम्, अश्वबडवौ। पूर्वापरम्, पूर्वाप्रे। अधरोत्तरम्, अधरोत्तरे। बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्। एषां बहुप्रकृतिरेव द्वन्द्व एकवद् भवति, न द्विप्रकृतिः। बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। रुरुपृषतौ। हंसचक्रवाकौ। यूकालिक्षे व्रीहियवौ। कुशकाशौ।

न्यासः

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्य�आवडवपूर्वापराधरोत्तराणाम्। , २।४।१२

वृक्षादिग्रहयणेनेह वक्षादिविशेषवाचिनां ग्रहणम्। कथम्? यस्मादत्र हि वृक्षादिभिद्र्वन्द्वः प्रत्येकं विशिष्यते, तेनैषा विभाषा तुल्यजातीयेष्वेवावतिष्ठते। विरूपेषु तुल्यजातीयेष्वपि, न स्वरूपेषु। तेषां द्वन्द्वो नास्ति; एकशेषविधानात्। विरूपेष्वपि न पर्यायेषु। तेषां द्वन्द्वाभावात्। द्वन्द्वाभावश्च युगपत्प्रयोगाभावात्, युक्तार्थाभावाच्च। चार्थाभावस्त्वर्थभेदाभावात्। भिन्नाधिष्ठाना हि चार्थता। न च पर्यायाणां भिन्नार्थता सम्भवति; तस्माद्विरूपेष्वेव वृक्षादिविशेषवाचिष्वस्या विभाषाया उपस्थानम्। तेन विशेषग्रहणं वृक्षादिषु विज्ञायते, न स्वरूपग्रहणम्, नापि पर्यायग्रहणम्। अथ सामान्यविशेषवाचिनां ग्रहणं कस्मान्न विज्ञायते, सम्भवति हि सामान्यविशेषवाचिनां द्वन्द्वः, यथा-- गोवलीवर्दमिति? न; अनभिधानात्। न हि वृक्षधवमित्येवं लोकेऽभिधानमस्ति; धवशब्दादेव तदर्थाभिधायिनो वृक्षशब्दस्यार्थस्यावगत्वात्, धवादिशब्दप्रयोगे वृक्षादिशब्दस्य प्रयोगानर्हत्वात्। गोवलीवर्दमित्यत्र तु बलीवर्दसन्निधाने

गोशब्दस्य स्त्रीगवीष्वेव वृत्तेद्र्वावपि विशेषवाचिनाविति युक्तो द्वन्द्वः। येऽत्राप्राणिवाचिनस्तेषां "जातिरप्राणिनाम्" २|४|६ इत्येकवद्भावे नित्ये प्राप्ते वचनमिदं विभाषार्थम्। परिशिष्टानामप्राप्ते। पशुग्रहणेनैव मृगादिग्रहणे सत्यपि प()आन्तरेणेषां किमर्थम्? तुल्यजातीयानां द्वन्द्वोऽयमेकवद्भवतीत्युक्तम्, अत्र पशुग्रहणेनैव सिद्धे मृगादिग्रहणे सत्यपि प()आन्तरेणेषां परस्परेण वा द्वन्द्वो मा भूदित्येवमर्थम्। "पशुद्वन्द्व" इत्येवं सिद्धेऽ()आवडवग्रहणं नियमार्थम्। योऽन्य एतयोः पर्यायस्तत्र मा भूत्-- हयवडवे इति। "बहुप्रकृतिः" इति। बह्वर्था बहुवचनान्ता वा प्रकृतिर्यस्य स बहुप्रकृतिः। बह्वर्थानां फलादीनामेषां बहुवचनान्तानां वा द्वन्द्व एकवद्भवतीत्यर्थः॥

बाल-मनोरमा

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्य�आवडवपूर्वापराधरोत्तराणाम् ९०६, २।४।१२

विभाषा वक्ष। द्वन्द्व" इत्यनुवृत्तम्। एकापि षष्ठी विषयभेदाद्भिद्यते। वृक्षादिसप्तानामवयवत्वेनान्वयः--वृक्षादीनां द्वन्द्व" इति। वृक्षाद्यवयवको द्वन्द्व इति लभ्यते। अ()आबहबादियुगलत्रयस्य त्वभेदेनान्वयः-"अ()आवडव", "पूर्वापर," "अधरोत्तरे"त्यात्मको द्वन्द्व" इति।

तदाह--वृक्षादीनामिति। प्राग्वदिति। विकल्पेन एकवदित्यर्थः। वृक्षादाविति। वृक्षविशेषवाचिनां, तृणविशेषवाचिनां, धान्यविसेषवाचिनां पशिविशेषवाचिनां चेत्यर्थः। "स्वं रूप"मिति सूत्रे भाष्यवार्तिकयोस्तथोक्तत्वादिति भावः। तथा च वृक्षाश्च धवाश्चेत्यादौ नायं विधिरिति फलितम्। किं तु "जातिरप्राणिना"मिति नित्यमेवैकवत्त्वम्। तत्र वृक्षाद्यवयवकद्वन्द्वेषु सप्तसु वृक्षद्वन्द्वमुदाहरति--प्लक्षेति। प्लक्षाश्च न्यग्रोधाश्चेति विग्रहः। मृगद्वन्द्वमुदाहरति--रुरुपृषतमिति। रुरवश्च पृषताश्चेति विग्रहः। तृणद्वन्द्वमुदाहरति--कुशेति। कुशास्च काशाश्चेति विग्रहः। धान्यद्वन्द्वमुदाहरति--व्रीहिति। व्रीहयश्च यवाश्चेति विग्रहः। व्यञ्जनद्वन्द्वमुदाहरचि--दधीति। दधि च घृतं चेति विग्रहः। पसुद्वन्द्वमुदाहरति-गोमहिषमिति। गावस्च महिषाश्चेति विग्रहः। शकुनिद्वन्द्वमुदाहरति--शुकेति। शुकाश्च बकाश्चेति विग्रहः। अ()आवडवादिद्वन्द्वमुदाहरति-अ()आवडवमिति। अ()आआश्च वडवाश्चेति विग्रहः। "पूर्वपद()आवडवौ" इति अ()आवडवादित्यत्र पूर्वपदवत्पुंलिङ्गता।

फलसेनेति। एकवद्भावप्रकरणशेषभूतमिदं वार्तिकम्। द्वन्द्वश्च प्राणी"त्यादिसूत्रैः फलसेनादीनां द्वन्द्व एकवद्भवन् बहुवचनान्तावयवक एव एरवद्भवति, नत्वेकद्विवचनान्तावयवक इत्यर्थः। तत्र फलद्वन्द्वमुदाहरति--बदराणि चेति। बदरीफलानि आमलकीफलानि चेत्यर्थः। विकारतद्धितस्य फले लुक्। "सुक्तद्धितलुकी"ति स्त्रीप्रत्ययस्य लुक्। जातिरिति। बहुवचनान्तावयवकद्वन्द्वत्वात् "जातिरप्राणिना"मित्येकवत्त्वमित्यर्थः। "बहुप्रकृतिरेवे"त्यस्य प्रयोजनमाह--नेहेति। बदरामलके इति। बदरं चामलकं चेति विग्रहः। बहुवचनान्तावयवकद्वन्द्वत्वाऽभावान्न "जातिरप्राणिना"मित्येकवत्त्वम्। रतिका()आआरोहाविति। अत्र सेनाङ्गत्वेऽपि नैकवत्त्वम्। प्लक्षन्यग्रोधाविति। इह वृक्षद्वन्द्वत्वेऽपि "विभाषा वृक्षे"त्येकवत्त्वं न। इत्यादीति। रुरुपृषतौ।अत्र मृगद्वन्द्वत्वेऽपि नैकत्त्वम्। हंसचक्रवाकौ। अत्र शकुनिद्वन्द्वत्वेऽपि नैकवत्त्वम्। यूकालिक्षे। अत्र क्षुद्रजन्तुद्वन्द्वत्वेऽपि नैकवत्त्वम्। व्रीहियवौ। अत्र धान्यद्वन्द्वत्वेऽपि नैकवत्त्वम्। कुशकाशौ। अत्र तृणद्वन्द्वत्वेऽपि नैकवत्त्वम्। ननु "चार्थे द्वन्द्वः" इत्यनेन#एतरेतरयोगसमाहारद्वन्द्वाभ्यामेव एकवत्त्वविकल्पस्य सिद्धत्वात् "विभाषा वृक्षे"ति सूत्रंव्यर्थमित्याशङ्क्याह--विभाषेत्यादि, विकल्पार्थमित्यन्तम्। वृक्षमृगतृणधान्यव्यञ्जनद्वन्द्वेषु प्लक्षन्यग्रोधं, रुरुपृषतं, कुशकाशं, व्रीहियवं, दधिघृतमित्येतेषु "जातिरप्राणिना"मिति नित्यविहितैकवत्त्वाऽनित्यत्वार्थमप्राणिवृक्षादिग्रहणमित्यर्थः।

नन्वेवमपि पशुग्रहणं व्यर्थं, तदुदाहरणे "गोमहिष"मित्यत्र "जातिरप्राणिना"मिति नित्यैकवत्त्वनियमस्याऽप्राप्त्या तन्निवृत्त्यर्थत्वाऽयोगादित्यत आह--पशुग्रहणं हस्त्य()आआदिषु सेनाङ्गत्वान्नित्यं प्राप्ते इति।

"विकल्पार्थ"मित्यनुषज्यते। नन्वेवमपि मृगशकुनिग्रहणं व्यर्थं, तदुदाहरणे रुरुपृषतं शुकबकमित्यादौ "जातिप्राणिना"मित्येकवत्त्वस्य सेनाङ्गनिबन्धनैकवत्त्वस्य च अप्राप्त्या तन्निवृत्त्यर्थत्वाऽभावेन "चार्थे द्वन्द्वः" इत्येवेतरेतरयोगसमाहारद्वन्द्वाभ्यामेकवत्त्वविकल्पसिद्धेरित्यत आह--मृगाणां मृगौरैवेत्यादि, मृगशकुनिग्रहणमित्यन्तम्। मृगाणां मृगैरेव सह उभयत्र=इतरेतरयोगे समाहारे च "चार्थे"इति द्वन्द्वः। यथा--शुकबकं, शुकबकाविति। मृगाणां तदितरैः शकुनीनां तदन्यैश्च सह इतरेतरयोगद्वन्द्व एव भवति, न समाहारद्वन्द्वः। यता--रुरुशुका इति। एतादृशनियमार्थं मृगशकुनिग्रहणमित्यर्थः। ननु पूर्वापरग्रहणमधरोत्तरग्रहणं च व्यर्थंस "चार्थे"इत्येव सिद्धेः। "जातिरप्राणिना"मित्यादिनित्यैकवत्त्वस्य तत्राऽप्रवृत्त्या तन्निवृत्त्यर्थत्वाऽसंभवादित्यत आह--एवं पूर्वापरमधरोत्तरमित्यपीति। यथा मृगशकुनिग्रहणं मृगैर#एव मृगाणां, शकुनीनां तैरेव उभयत्र द्वन्द्वः, एवं पूर्वशब्दस्य अपरशब्देनैव, अधरशब्दस्य उत्तरशब्देनैव उभयत्र=इतरेतरयोगे समाहारे च द्वन्द्वः, अन्येन तु सह पूर्वोत्तरावित्यादौ इतरेतरयोगे एवेति नियमार्थं पूर्वापरग्रहणमधरोत्तरग्रहणं चेत्यर्थः। नन्व()आवडवग्रहणं व्यर्थं, सेनाङ्गत्वेऽपि पशुद्वन्द्वत्वादेव एकवद्भावविकल्पसिद्धेरित्यत आह--अ()आवडवेति। नपुंसकत्वविकल्पार्थमित्यर्थः। ननु समाहारस्य एकत्वादेव एकवत्त्वसिद्धेरिदमेकवत्त्वप्रकरणं समाहार एव द्वन्द्व इति नियमार्थमित्युक्तम्। तथा च पशुद्वन्द्वत्वादेकवत्त्वविकल्पे सति समाहारे वा, इतरेतरयोगे वा द्वन्द्व इत्यनियमः पर्यवस्यति। एवंच समाहारद्वन्दवपक्षे "स नपुंसक"मिति नपुंसकत्वम्, इतरेतरयोगे तु नेति नपुंसकत्वविकल्पस्य सिद्धत्वाद()आवडवग्रहणं व्यर्थमेवेत्यत आह--अन्यथेति। इह नपुंसकत्वविध्यभावे समाहारद्वन्द्वपक्षेऽपि "स नपुंसक"मिति नपुंसकत्वं बाधित्वा परत्वात् "पूर्वपदस्ववडवौ" इह पुंस्त्वं स्यात्। नपुंसकविधौ तु तत्सामथ्र्यात्समाहारद्वन्द्वपक्षे "पूर्वपद()आवडवौ" इत्येतद्बाधित्वा नपुंसकत्वं भवत्येव। अधिकारप्राप्तपूर्ववद()ओत्येतत्तु इतरेतरयोगद्वन्द्वे सावकाशमिति भावः।

तत्त्व-बोधिनी

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्य�आवडवपूर्वापराधरोत्तराणाम् ७८२, २।४।१२

बिभाषा। विशेषणामेवेति। अयं भावः--वृक्षादिशब्दैः प्रत्येकं द्वन्द्वो विशेष्यते, न चैको वृक्षशब्दो द्वन्द्वः , न च द्वयोः सह प्रयोगः, "सरूपाणा"मित्येकशेषात्। नापि पर्यायाणां, "विरूपाणामपि समानार्थाना"मित्येकशेषात्। नापि वृक्षश्च धवश्चेत्यादिसामान्यविशेषयोः, अनभिधानात्तत्र द्वन्द्वस्यैवाऽभावादिति सर्वप्रकरणशेषतया नियममाह।

फलेसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्। फलसेनेत्यादि। फलसेनादीनां द्वन्द्वो "विभाषा वृक्षमृगे"त्यनेन, लक्षणान्तरेण वा एकवद्भवन्बहुप्रकृतिरेव एकवद्भवतीत्यर्थः। बहवो वर्तिपदार्थाः, बहुवचनान्ता वा--प्रकृतिः=कारणं यस्य स बहुप्रकृतिः। बदराणि चामलकानि चेति। "जात्याख्यायामेकस्मि"न्निति वैकल्पिकं बहुवचनम्। बदरामलके इति। जातिप्राधान्येऽप्येकवचनान्तर्योद्वन्द्व इति नास्त्येकवद्भाव इति भावः। पशुग्रहणमिति। "विकल्पार्थ"मित्यनुषज्यते। "चार्थे द्वन्द्वः"इत्यनेनैव सिद्धे मृगशकुनिग्रहणं व्यर्थमित्याशङ्ख्याह--मृगाणां मृगैरेवेत्यादि। नपुंसकत्वार्थमिति। अयं भावः--पशुत्वाद्विकल्पे सिद्धे अ()आवडवग्रहणं प्रतिपदविधानार्थम्। तेना()आवडवमित्येकवद्भावपक्षे "पूर्ववद()आवडवौ" इत्यतब्दाधित्वा "स नपुंसक"मित्येतदेव भवति। "स" इति तच्छब्देन ह्येकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वमेकवद्भाववदेव प्रतिपदविहितं भवति। तथा च प्रतिपदेक्तस्य बलीयस्त्वान्नपुंसकत्वं सिध्यतीति।

---

सूत्रम्

काशिका-वृत्तिः

विप्रतिषिद्धं च अनधिकरणवाचि २।४।१३

परस्परविरुद्धं विप्रतिषिद्धम्। विप्रतिषिद्धार्थानां शब्दानाम् अनधिकरणवाचिनाम् अद्रव्यवाचिनां द्वन्द्व एकवद् भवति। विभाषानुकर्षणार्थश्चकारः। शीतोष्णम्, शीतोष्णे। सुखदुःखम्, सुखदुःखे। जीवितमरणम्, जीवितमरणे। विप्रतिषिद्धम् इति किम्? कामक्रोधौ। अनधिकरणवाचि इति किम्? शीतोष्णे उदके।
न्यासः
विप्रतिषिद्धं चानधिकरणवाचि। , २।४।१३

"अद्रव्यवाचिनाम्" इति। एतेनाधिकरणशब्दोऽत्र द्रव्ये वत्र्तते नाधार इति दर्शयति। न हि विप्रतिषिद्धवाचिनां शब्दानामाधारे वृत्तिरस्तिः; विभक्त्यर्थत्वादाधारशक्तेः। "शीतोष्णे" इति। शीतोष्णयोः सहानवस्थानलक्षणेनैव विरोधेन विरुद्धत्वाद्विप्रतिषिद्धवाचित्वम्। तथा सुखदुःखयोरपि॥ "कामक्रोधौ" इति। क्रुद्धोऽपि काममाचरतीति नानयोर्विप्रतिषिद्धत्वम्॥
बाल-मनोरमा
विप्रतिषिद्धं चानधिकरणवाचि ९०७, २।४।१३

विप्रतिषिद्धं च। "विभाषे"त्यनुवर्तते। विप्रतिषेधो विरोधः, सहानवस्थानलक्षणः। अधिकरणं-द्रव्यम्। अद्रव्यवाचि विरुद्धार्थकं च यदनेकं सुबन्तं तदवयवको द्वन्द्वो विभाषैकवद्भावक इत्यर्थः। फलितमाह--विरुद्धार्थानामिति। गोत्वा()आत्वम्। गोत्वा()आत्वे। सुखदुःखं सुखदुःखे इत्याद्युदाहरणम्। ननु "चार्थे" इति इतरेतरयोगसमाहाराभ्यामेवात्र एकवत्त्वविकल्पसिद्धेरिदं व्यर्थम्। नच "जातिरप्राणिना"मिति नित्यं प्राप्तं विकल्पार्थमिति वाच्यं, जातिप्रवृत्तिनिमित्तकद्रव्यवाचिनां द्वन्द्व एव तत्प्रवृत्तेरित्यत आह--वकल्पिक इत्यादि, नियमार्थमिदमित्यन्तम्। तेनेति। उक्तनियमेनेत्यर्थः। शीतोष्णे उदके स्त इति। अत्र विरुद्धार्थकत्वेऽपि द्रव्यवाचित्वान्न समाहारद्वन्द्व इति भावः। नन्दकपाञ्चजन्यमिति। विष्णोः कङ्गो नन्दकः, शङ्खस्तु पाञ्चजन्यः, तयोरेकत्र विष्णौसहावस्थानान् विरुद्धत्वमिति स्थितिः। इह विप्रतिषिद्धग्रहणाऽभावे "चार्थे" इति समाहारद्वन्द्वोऽद्रव्यवाचिनामेवेति नियमो लभ्येत। एवं सति नन्दकपाञ्चजन्यमिति पाक्षिकसमाहारद्वन्द्वो न स्यात्, समाहारद्वन्द्वस्य सर्वस्यापि अद्रव्यवाचिनामेवे"ति नियमो लभ्यते। एवं सति नन्दकपाञ्चजन्यमिति पाक्षिकसमाहारद्वन्द्वो न स्यात्, समाहारद्वन्द्वस्य सर्वस्यापि अद्रव्यवाचिष्वेव नियमितत्वात्। "विप्रतिषिद्ध"मित्युक्तौ तु "विरुद्धार्थानां समाहारद्वन्द्वश्चेत्तर्हि अद्रव्यवाचिनामेवे"ति नियमो लभ्यते। नन्दकपाञ्चजन्ययोश्चाऽविरुद्धत्वादयं नियमो न प्रवर्तते। ततश्च द्रव्यवाचित्वेऽपि "चार्थे" इति रदाचित्समाहारद्वन्द्वः, कदाचिदितरयोगद्वन्द्वश्च भवत्येव। तदाह--इह पाक्षिकः समाहारद्वन्द्वो भवत्येवेति।

तत्त्व-बोधिनी
विप्रतिषिद्धं चानधिकरणवाचि ७८३, २।४।१३

विप्रतिषिद्धम्। अधिकरणमिह द्रव्यम्। चकारो विभाषानुकर्षणार्थः। तदेतद्व्याचष्टे विरुद्धार्थानामित्यादि। उदजाहरणं तु---शीताष्णं, शीतोष्णे, सुखदुःखं, सुखदुःखे इत्यादि। विरोधोऽत्र सहानवस्थानलक्षणः। भवत्येवेति। विप्रतिषिद्धग्रहण #आऽभावे तु स न स्यात्, "अद्रव्यवाचिनामेवे"ति नियमादिति भावः। अनधिकरणवाचीति किम्()। शीतोष्णे उदके स्तः। इह पाक्षिकः समाहारद्वन्द्वोऽपि स्यादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

न दधिपयाऽदीनि २।४।१४

यथायथम् एकवद् भावे प्राप्ते प्रतिषेध आरभ्यते। दधिपयाऽदिनि शब्दरूपाणि न एकवद् भवन्ति। दधिपयसी। सर्पिर्मधुनी। मधुसपिषी। ब्रह्मप्रजापती। शिववैश्रवणौ। स्कन्दविशाखौ। परिव्राट्कौशिकौ प्रवर्ग्योपसदौ। शौक्लकृष्णौ। इध्माबर्हिषी। निपातनाद् दीर्घः। दीक्षातपसी। श्रद्धातपसी। मेधातपसी। अध्ययनतपसी। उलूखलमुसले। आद्यावसाने। श्रद्धामेधे। ऋक्षामे। वाङ्मनसे।

न्यासः

न दधिपयाअदीनि। , २।४।१४

"यथायथम्" इति। यथास्वं यस्य यदात्मीयं लक्षणं तेनेत्यर्थः। तत्र दधिपयसी इत्यादीनां त्रयाणां व्यञ्जनवाचित्वाद्विभाषैकवद्भावप्राप्तिः। ननु च सर्पिर्मधुनी, मधुसर्पिषी इति राजदन्तादिष्वनयोर्निपातनादेवैकवद्भावो न भविष्यति? नैतदस्ति; पाक्षिको हि व्यञ्जनैकवद्भावः। तत्र यस्मिन् पक्षे स नास्ति तस्मिन्निपातनं पूर्वनिपात्व्यभिचारार्थं स्यात्। इतरस्मिन्नपि पक्ष एकवद्भावनिषेधार्थोऽत्र पाठः। यद्येवम्, अनेनैव सिद्धत्वाद्राजदन्तादिषु पाठोऽनर्थकः स्यात्? नानर्थकः; बहुवचनार्थत्वात्। "सर्पिर्मधुनी, मधुसर्पिषी" इति। ननु तत्रापि द्ववचनान्तावेव पठ()एते? यद्यप्येवम्, तथापि शब्दाश्रयत्वात् परनिपातस्यार्थधर्मत्वाद्द्वित्वं नापेक्ष्यते। अर्थाश्रयस्त्वेकवद्भाव इति तत्प्रषेधे युज्यते संख्यां विवक्षितुम्। "ब्राह्रप्रजापती" इत्यादीनां पञ्चानां समाहारैकत्वात् प्राप्तिः। "शुक्लकृष्णौ" इति। "विप्रतिषिद्धम्" २।३।१३ इत्यादिना। "इध्माबार्हिषी" इत्यादीनां समाहारैकत्वात् प्राप्तिः॥

बाल-मनोरमा

न दधिपयाअदीनि ९०८, २।४।१४

न दधिपयाअदीनि। नैकवत्स्युरिति। एषां समाहारद्वन्द्वो नास्तीत्यर्थः। दधिपयसी इति। दधि च पयश्चेति विग्रहः। "जातिरप्राणिना"मिति नित्यमेकवत्त्वं प्राप्तं बाधित्वा व्यञ्जनद्वन्द्वात्वाद्विकल्पः प्राप्तः, सोऽपि न भवति। इध्माबर्हिषी इति। इध्मं च बर्हिश्चेति विग्रहः। दीर्घ इति। "इध्मशब्दस्ये"ति शेषः। ऋक्सामे इति। ऋक्च साम चेति विग्रहः। "अचतुरे"त्यादिनाऽच्समासान्तः। वाङ्मनसे इति। वाक्च मनश्चेति विग्रहः। पूर्ववत्समासान्तः। अत्र गणे "ब्राह्रप्रजापती"इत्यादि पठितम्। "समाहारद्वन्द्व एवे"ति नियमप्रकरमेपि नानेन नियमस्यैव निषेधः, "ब्राह्रप्रजापती" इत्यादौ नियमस्याऽप्राप्तेः। किंत्वेकवत्त्वस्यैव। तथाच "चार्थे" इति समाहारद्वन्द्वस्य निषेधः फलति।

तत्त्व-बोधिनी

न दधिपयाअदीनि ७८४, २।४।१४

न दधिपय। दधिपयसी इति। व्याञ्जनत्वाद्विकल्पः प्राप्तः। एवं "मधुसर्पिषी, "सर्पिर्मधुनी"इत्यत्रापि बोध्यम्। इह "ब्राआह्र प्रजापती" "शिववैश्रबणौ"इत्यादौ समाहारद्वन्द्वनिषेधमुखेनेतरेतरयोगद्वन्द्वोऽनेन व्यावस्थाप्यते। तत्साहचर्याद्दधिपयसी इत्यादवपि ततैव। तेन तत्र व्यञ्जनत्वप्रयुक्तविकल्पे निषिद्धेऽपि जातिलक्षणो नित्यमेकवद्भावोऽस्त्विति न शङ्कनीयम्। किं च नेह लक्षणविशेषे आग्रहः, "एतानि नैकत्स्युः"इत्येकवद्भावमात्रस्य निषेधात्, यथा "न षट्()स्वरुआआदिभ्यः"इत्यत्र ङीप्टापोरुभयोरपि निषेधसिद्धये "स्त्रियां यदुक्तं तन्ने"ति सामान्यतो निषिध्यते इति दिक्। ऋक्सामेवाङ्मनसे इति। "अचतुरे"त्यादिनाऽत्र समासान्तोऽच्निपात्यते। अधिकरणौ। समासार्थस्याश्रयोऽधिकरणं=वर्तिपदार्थः, तस्यैतावत्त्वं =परिगणननियमः, तस्मिन्गन्यमान इति व्याचष्टे--

द्रव्यसङ्ख्यावगमे इति।

---

सूत्रम्

काशिका-वृत्तिः

अधिकरनएतावत्त्वे च २।४।१५

न इति वर्तते। अधिकरणं वर्तिपदार्थः। स हि समासस्य अर्थस्य अधारः। तस्य एतावत्त्वे परिमाणे गम्यमाने द्वन्द्वो न एकवद् भवति। यथायथम् एकवद् भावः प्राप्तः प्रतिषिध्यते। दश दन्तोष्ठाः। दश मार्दङ्गिकपाणविकाः।

न्यासः

अधिकरणैतावत्त्वे च। , २।४।१५

अधिकरणं वर्त्तिपदार्थः" इति। वत्र्तन वर्त्तः = समासः। भावे घञ्। वर्त्तोऽस्यास्तीति वर्ति = समासावयवभुतम। वर्त्तिश्च तत् पदञ्चेति वर्त्तिपदं तस्य पदस्यार्थोऽधिकरणमित्युच्यते। कथं पुनस्तस्याधिकरणत्वामित्यत आह-- "स हि" इत्यादि। आधारो ह्रधिकरणम्। वर्त्तिपदार्थश्च समासार्थस्याधारो भवति; तत्र तस्य समवायात्। वर्त्तिपदार्थैह्र्रवयवैरवयवी समासार्थ आरभ्यते, अवयवी चावयवेषु कसमवैति। "तस्य " इति। वर्त्तिपदार्थस्य। "दश {इमे नास्ति--काशिका, पदमञ्जरी च} इमे दन्तौष्ठाः}" इति। "द्वन्द्वश्च" २।४।२ इत्यादिना प्राप्तिः॥

बाल-मनोरमा

अधिकरणैतावत्त्वे च ९०९, २।४।१५

अधिकरणैतावत्त्वे च। अधिकरणं-द्रव्यं, तस्य एतावत्त्वम्-इयत्ताविशेषः। तदाह--द्रव्यसङ्ख्यावगमे इति। समस्यमानपदार्थस्येयत्ताविसेषे पदान्तरसमभिव्याहारगम्ये इत्यर्थः। नियमो नेति। "ब्राह्मप्रजापती" इत्यादौ समाहार एव द्वन्द्व #इति नियमस्य प्रकृतस्याऽप्रवृत्तेरेकवत्त्वनिषेधः पूर्वसूत्रे आश्रितः। इह तु बाधकाऽभावात्प्रकृतस्य नियमस्यैव निषेध आश्रित इति भावः। दश दन्तोष्ठा इति। दन्ताश्च ओष्ठाश्चेति विग्रहः। इतरेतरयोगद्वन्द्वोऽयं, न तु समाहार द्वन्द्वः। समासार्थसमाहारविशेषणीभूतसमस्यमानपदार्थानां पदान्तरलभ्यदशत्वसापेक्षत्वेनाऽसामथ्र्यात्। इतरेतरयोगद्वन्द्वस्तु भवत्येव, तत्र समस्यमानपदार्थानामेव प्रधानत्वात्। "उपमितं व्याघ्रादिभिः" इति सूत्रभाष्ये प्रदानस्य सापेक्षत्वेऽपि समासाभ्युगमात्। ततश्चात्रैकवदेवेति नियमाऽभावे सति असामथ्र्यात्समाहारत्वे निवृत्ते परिशेषादितरेतरयोगत्वमेवावतिष्ठते। यदि त्वेकवन्न स्यादित्येव व्याख्यायेत, तर्हि समाहारद्वन्द्वो नेत्यर्थः पर्यवस्येत्। तथा सति "दश दन्तोष्ठाः" इतीतरेतरयोगद्वन्द्वो न स्यात्, "द्वन्द्वश्च प्राणितूर्य"ेति तन्निषेधात्। तताच वाक्यमेव स्यात्। किंच समाहारद्वन्द्वनिषेधोऽयं व्यर्थ एव, उक्तरीत्या सापेक्षत्वेनाऽसामथ्र्यादेवऽप्राप्तेः। अत एकवदिति नियमो न स्यादित्येव व्याख्ययेम्। एवं च प्राण्यङ्गनिबन्धनस्य एकवदेव स्यादिति नियमस्य इतरेतरयोगद्वन्द्वनिवृत्तिफलकस्याऽनेन निषेधे सति इतरेतरयोगद्वन्द्वस्यावस्थितिः फलतीति पदमञ्जर्या स्पष्टम्।

तत्त्व-बोधिनी

अधिकरणैतावत्त्वे च ७८५, २।४।१५

नियमो न स्यादिति। न चेह प्राण्यङ्गत्वात्प्राप्तस्य "एकवदेवे"ति नियमस्य प्रतिषेधेऽपि "चार्थे द्वन्द्वः"इति समाहारेद्वन्द्वः स्यादिति वाच्यं, "सविशेषणानां वृत्तिर्ने"त्यभ्युपगमेन समाहारेद्वन्द्वस्य प्राप्तयभावात्। न चोक्तन्यायेनेतरयोगद्वन्द्वोऽपि न स्यादिति वाच्यं, "सामान्याऽप्रयोगे"इति लिङ्गत्प्राधानस्य सापेक्षत्वेऽपि तदभ्युपदमात्। उक्तं हि भाष्ये--भवति वै

प्रधानस्य सावेक्षस्यापि वृत्तिः"इति। स्यादेतत्--समाहारद्वन्द्वस्याऽत्र प्रास्यभावे "द्वन्द्वश्च प्राणितूर्ये"ति नियमाऽप्रवृत्त्या इतरेतरयोगद्वन्द्वो निर्बाध एवेति सूत्रमिदमकिंचित्करमिति चेदत्राहुः--"नियमसूत्राणां निषेधमुखेन प्रवृत्ति"रिति पक्षे "द्वन्द्वश्च प्राणितूर्ये"ति सूत्रं केवलमितरेतरयोगद्वन्द्वनिषेधपरम्। तथा चेतरेतरयोगनषेधस्य निषेधद्वारा इतरेतरयोगद्वन्द्वप्रापणार्थमिदमिति। एवं च निषेधमुखप्रवृत्तिपक्षस्य ज्ञापनायेदमिति फलितमिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा समीपे २।४।१६

अधिकरणएतावत्त्वस्य समीपे विभाषा द्वन्द्वः एकवद् भवति। उपदशं दन्तोष्ठम्, उपदशाः दन्तोष्ठाः। उपदशं मार्दङ्गिकपाणविकम्, उपदशा मार्दङ्गिकपाणविकाः। अव्ययस्य सङ्ख्यया अव्ययीभावो ऽपि विहितः, बहुव्रीहिरपि। तत्र एकवद्भावपक्षे ऽव्ययीभावो ऽनुप्रयुज्यते, इतरत्र बहुव्रीहिः।

न्यासः

विभाषा समीपे। , २।४।१६

अधिकरणैतावत्त्वस्य प्रकृतत्वात् तदपेक्षयैव समीपत्वं विज्ञायत इत्यत आह-- "अधिकरणैतावत्त्वस्य समीपे" इति। "उपदशं दन्तौष्ठम्िति। अत्राधिकरणैतावत्त्वं दशसंख्या, तत्समीपं नवैकादश वा। तत्र दशशब्द एतावत्त्वमाचष्टे। उपशब्दः सामीप्यम्। कथं पुनद्र्वन्द्वैकवद्भावो विकल्प्यमानोऽनुप्रयोगस्य लभ्यत इत्यत आह-- "अव्ययस्य" इत्यादि। यद्यप्यर्थातिदेशादनुप्रयोगस्यापि विकल्पो लभ्यते, तथापि परीहारान्तरमप्यस्तीति दर्शनार्थमस्योपन्यासः। तत्राव्ययस्य संख्याया अव्ययीभावो विहितः--"अव्ययं विभक्ति" २।१।६ इत्यादिना। बहुव्रीहिरपि विहितः-- "संख्यायाव्ययासन्न" २।२।२५ इत्यादिना। अत्रैकवद्भावपक्ष एकार्थस्य द्वन्द्वस्यैकार्थ एवाव्ययीभावोऽनुप्रयुज्यते। एकार्थत्वं पुनस्तस्य सामीप्यप्रधानसत्वात्। यद्यप्यव्ययीभावोऽव्ययम्, तथाप्यभेदैकत्वं भेदाभावलक्षणं तस्यास्त्येव सामानाधिकरण्यम्। इतरत्र तु बह्वर्थस्य द्वन्द्वस्य बह्वर्थ एव बहुव्रीहिरनुप्रयुज्यते। बह्वर्थं पुनर्बहुव्रीहेः समीपिनः प्राधान्यात्। बहुव्रीहिर्हि समीपी प्रधानत्वाद्भेदसंख्यामुपादत इति बह्वर्थो भवति। "उपदशम्" इति। "अव्ययीभावे शरत्प्रभृतिभ्यः" ५।४।७ इत्यनुवत्र्तमाने "अनश्च" ५।४।१०८ इति टच् समासान्तः। "नस्तद्धिते" ६।४।१४४ इति टिलोपोः। "उपदशाः" इति। बहुव्रीहौ संख्येये डजबहुगणात्" ५।४।७३ इति डच्॥

बाल-मनोरमा

विभाषा समीपे ९१०, २।४।१६

विभाषा समीपे। "अधिकरणैतावत्त्वे" इत्यनुवर्तते। "समीपे" इत्यस्य सामीप्येन परिच्छिन्ने सतीत्यर्थः। फलितमाह-- अधिकरणेति। उपदशं दन्तोष्ठमिति। दशानां समीपे इत्यर्थेऽव्ययीभावः। उक्तरीत्याऽसामर्थ्येऽपि वचनसामश्र्यात्समाहारद्वन्द्वः। समानलिङ्गवचनत्वादव्ययीभावस्यैवाऽनुप्रयोग इति भाष्यम्। अत एवोपदशं दन्तोष्ठेनेत्यादि सिद्धम्। समीपसमीपिनोरभेदविवक्षायां सामानाधिकरण्यम्। नवत्वसङ्ख्ययदन्तोष्ठसमूहः, एकादशत्वसङ्ख्यदन्तोष्ठसमूह इति वा बोधः। उपदशा दन्तोष्ठा इति। इतरेतरयोगद्वन्द्वोऽयम्। दशानां समीपे ये सन्ति ते उपदशा इति बहुव्रीहिः। नव एकादश वेत्यर्थः। "बहुव्रीहेरेवात्राऽनुप्रयोगः, समानलिङ्गवचनत्वा"दिति भाष्यम्।

तत्त्व-बोधिनी

विभाषा समीपे ७८६, २।४।१६

विभाषा समीपे। यद्यपीह "समाहारद्वन्द्व एवे"ति व्याख्यानेऽपि न क्षतिस्तथापि पूर्वसूत्रे नियमनिषेधस्योक्तत्वात्तदनुरोधेनाह नियमो वा स्यादिति। उपदसं दन्तोष्ठमिति। एकवद्भावपक्षेऽव्ययीभावस्यैवानुप्रयोगः। यदि तु बहुव्रीहिस्तदा "उपदशस्य दन्तोष्ठस्ये"ति षष्ठी स्यात्, "उपदशं दन्तोष्ठस्ये"त्येवेष्यत इत्याकरः। "दन्तोष्ठस्य दश"मित्यभिप्रायेण षष्ठ()आं कृतायामपि उपदशशब्देन षष्ठी नेष्यते। अतो बहुव्रीहेर्नानुप्रयोगः, किं त्वव्ययीभावस्यैवेति तदाशयः।

---

सूत्रम्

काशिका-वृत्तिः

स नपुंसकम् २।४।१७

यस्य अयम् एकवद् भावो विहितः स नपुंसकलिङ्गो भवति द्विगुर् द्वन्द्वश्च। पञ्चगवम्। दशगवम्। द्वन्द्वः खल्वपि पाणिपादम्। शिरोग्रीवम्। परलिङ्गतापवादो योगः। अकारान्तौत्तरपदो द्विगुः स्त्रियां भाष्यते। पञ्चपूली। दशरथी। वा आबन्तः स्त्रियाम् इष्टः। पञ्चखट्वम्, पञ्चखट्वी। अनो नलोपश्च वा च द्विगुः स्त्रियाम्। पञ्चतक्षम्, पञ्चतक्षी। पात्रादिभ्यः प्रतिषेधो वक्तव्यः। पञ्चपात्रम्। चतुर्युगम्। त्रिभुवनम्।

लघु-सिद्धान्त-कौमुदी

स नपुंसकम् ९४६, २।४।१७

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम्।

न्यासः

स नपुंसकम्। , २।४।१७

"पञ्चगवम्" इति। "गोरतद्धितलुकि" ५।४।९२ इति टच्। सग्रहणं द्विगोरपि यथा स्यादित्येवमर्थम्। इतरथा हि "अनन्तरस्य विधिर्वा भवति प्रतिषेदो वा" (व्या।प।१९) इत्यनन्तरस्यैव द्वन्द्वस्य स्यान्न व्यवहितस्य द्विगोः, नैतदस्ति; एकवचनमित्यनुवत्र्तते, तस्य "नपुंसकम्" इत्यनेन सम्बन्धे सति कुतो व्यवधानम् ! न ह्यत्रैकरवचनेन विशेषो द्वन्द्वोऽनेनापेक्ष्यते, किं तर्हि? एकवचनमात्रम्। प्रसिद्ध्युपसंग्रहार्थं तर्हि सग्रहणम्। स इत्येतदनुवादो भविष्यति, अनुवादश्च प्रसिद्धस्यैव भवति। तथा च यथादर्शनमियं लिङ्गव्यवस्थाऽऽख्यायत इति। तेन द्वन्द्वैकवद्भावे नित्यं नपुंसकत्वं विज्ञायते। द्विगोश्चानियता। तेन "अकारान्तोत्त्रपदो द्विगुः स्त्रियां भाष्यते" (वा।१५६) इत्येतदुपपन्नं भवति। "पञ्चपूली" इति। "द्विगोः" ४।१।२१ इति ङीप्। एतदेव द्विगोः स्त्रीप्रकरणे ङीब्विधानं ज्ञापकम्-- "क्वचित् स्त्रियां द्विगुर्भाष्यते" इति। "पञ्चखट्वम्, पञ्चखट्वी" इति। उपसर्जनह्यस्वत्वे कृते पक्षे ङीप्। "पञ्चतक्षम्, पञ्चतक्षी" इति। नलोपे कृते पक्षे ङीप्॥

बाल-मनोरमा

स नपुंसकम् ८११, २।४।१७

स नपुंसकं। "द्विगुरेकवचन"मिति द्विगुः, द्विगुः, "द्वन्द्वश्च प्राणी"ति द्वन्द्वश्च तच्छब्देन परामृश्येते। तौ च समाहारार्थावेव विवक्षितौ, व्याख्यानात्। तदाह--समाहारे इति। पञ्चगवमिति। पञ्चानां गवां समाहार इति द्विगुः। दन्तोष्ठमिति। दन्ताश्च ओष्ठौ चेति विग्रहः। "द्वन्द्वश्च प्राणी"ति समाहारद्वन्द्वः।

अकारान्तेति। अकारान्तमुत्तरपदं यस्येति विग्रहः। "स नपुंसक"मित्यस्यापवादः। पञ्चमूलीति। समाहारद्विगुः, स्त्रीत्वं,

"द्विगोः" इति ङीप्।

आबन्तो वेति। "स्त्रियां वे"ति वक्तव्यमित्यर्थः। पञ्चखट्वमिति। समाहारद्विगुः। नपुंसकत्वे ह्रस्वः। पञ्चखट्वीति। उपसर्जनह्रस्वत्वे अदन्तत्वात्, "द्विगोः" इति ङीप्।

अनो नलोपश्चेति। "अन" इत्यावर्तते। एकं प्रथमया विपरिणतं द्विगुरित्यत्रान्वेति। तदन्तविधिः। अन्नन्तो द्विगुः स्त्रियां वा स्यात्, अनो नस्य लोपः स्यादित्यर्थः। वाग्रहणं स्त्रियामित्यत्रैव संबध्यते, न तु नलोपेऽपि तेन स्त्रीत्वाऽभावेऽपि नलोपः। पञ्चतक्षीति। पञ्चानां तक्ष्णां समाहार इति द्विगुः, स्त्रीत्वं नलोपः, "द्विगोः" इति ङीबिति भावः। पञ्चतक्षमिति। समाहारद्विगुः। स्त्रीत्वाऽभावपक्षे "स नपुंसक"मिति नपुंसकत्वं, नलोप इति भावः। न चान्तर्वर्तिनीं विभक्तिमाश्रित्य तक्षन्शब्दस्य सुबन्तत्वेन पदत्वात् "न लोपः प्रातिपदिके"त्यनेन नलोपो भविष्यतीति वाच्यम् "उत्तरपदत्वे चे"ति प्रत्ययलक्षणनिषेधात्।

पात्राद्यन्तस्य नेति। पात्रादिर्गणः। तदन्तस्य समाहारद्विगोर्न स्त्रीत्वमिति वक्तव्यमित्यर्थः। पञ्चपात्रं त्रिभुवनं चतुर्युगमिति। स्त्रीत्वाऽभावे "स नपुंसक"मिति नपुंसकत्वमिति भावः।

पुण्येति। पुण्यसुदिनाभ्यां परो योऽहन्शब्दस्तदन्तस्य तत्पुरुषस्य नपुंसकत्वं वक्तव्यमित्यर्थः। "रात्राह्ने"त्यस्यापवादः। पुण्याहमिति। पुण्यम् अहरिति कर्मधारयः, "राजाहः" इति टच्, टिलोपः। "उत्तमैकाभ्यां चे"त्यत्यह्नादेशनिषेधः। सुदिनाहमिति। सुदिनम् अहरिति कर्मधारयः, टच्, टिलोपः। प्रशस्तपर्यायः सुदिनशब्द इति न पौनरुक्त्यम्।

पथः सङ्ख्याव्ययादेरिति। "नपुंसकत्वं वक्तव्य"मिति शेषः। संख्याव्ययेति समाहारद्वन्द्वः। संख्याव्ययमादिरिति कर्मधारयः, दिग्योगे पञ्चमी। पर इति शेषः। पथ इति कृतसमासान्तादकारान्तात्प्रथमा। तदाह--सङ्ख्याव्ययादेरिति। परवल्लिङ्गतापवादः। त्रिपथमिति। "ऋक्पूः" इति अप्रत्ययः, टिलोपः। एवं विपथमित्यपि। "प्रादयो गताद्यर्थे" इति समासः। सुपन्था अतिपन्था इति। "स्वती पूजाया"मिति समासः। "न पूजना"दिति समासान्तनिषेधः। आवश्यकत्वादनेन सिद्धे अपथं नपुंसक"मिति न कार्यम्।

सामान्ये नपुंसकमिति। न्यायसिद्धमेतत्, विशेष्यविशेषणसंनिधाने सति स्त्रीत्वपुंस्तवयोरनभिव्यक्तौ "उभयोरन्तरं यच्च तदभावे नपुंसक"मिति लक्षणलक्षितनपुंसकत्वस्यैव न्याय्यत्वात्।अत एव "दाण्डिनायने"ति सूत्रभाष्ये "एकश्रुतिः स्वरसर्वनाम, नपुंसकं लिङ्गसर्वनामे"त्युक्तम्। मृदु पचतीति। क्रियाविशेषणमिदं द्वितीयान्तम्। पचेर्हि विक्लित्त्यनुकूलव्यापारोऽर्थः। तत्र विक्लित्त्यंशे मृदुत्वमन्वेति। विक्लित्तिश्चव्यापारे साध्यत्वेनान्वेति। तथाच धातूपात्तव्यापारं प्रति कर्मीभूतेन विक्लित्त्यंशेन सामानाधिकरण्यान्मृद्विति द्वितीया। यत्र तु धात्वर्थः करणत्वेनान्वेति "यजेत स्वर्गकामः" इत्यादौ, तत्र हि यागेन स्वर्गं कुर्यादित्यर्थः। तत्र क्रियाविशेषणस्य तृतीयान्तत्वमेव "ज्योतिष्टोमेन यजेत स्वर्गकामः" इत्यादावित्यन्यत्र विस्तरः। प्रातः कमनीयमिति। रमणीयमित्यर्थः। अत्रापि "प्रात"रित्यव्ययस्य विशेष्यस्याऽलिङ्गत्वात्तद्विशेषणस्य कमनीयशब्दस्यानव्ययस्य लिङ्गविशेषावगमकत्वाऽभावान्नपुंसकत्वमेवेति भावः। इदं चाऽनियतलिङ्गविषयम्। तेन आदिं पचति, प्रातरादिरित्यत्र न भवति, आदिशब्दस्य नियतलिङ्गत्वात्।

तत्त्व-बोधिनी

स नपुंसकम् ७१२, २।४।१७

स नपुंसकम्। "अनन्तरस्ये"ति न्यायोऽत्र नाश्रीयते, तथात्वे द्विहुसङ्ग्रहो न स्यादित्याशयेनाह---द्विगुद्र्वन्द्वश्चेति।अत्र

व्याचक्षते--प्रकरणादेवानुवाद्यलाभे "स" ग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य सङ्ग्रहार्थम्, तेन "सञ्ज्ञापरिभाष"मित्यादि सिद्धमिति। पञ्चगवमिति। "तद्धितार्थ"इत्यादिना समाहारे द्विगुः। दन्तोष्ठमिति। "द्वन्द्वश्च प्राणी"त्यादिना समाहारे द्वन्द्वः।

आबन्तो वा। पञ्चखट्वमिति नपुंसकह्रस्वः। पञ्चखट्वीति। उपसर्जनह्रस्वस्वत्वे सत्यदन्तत्वात् "द्विगो"रिति स्त्रीत्वपक्षे ङीप्।

अनो नलोपश्च वा द्विगुः स्त्रियाम्। अनो नलोपश्चेति। "उत्तरपदत्वे चापदादिविधौ"इति प्रत्ययलक्षणप्रतिषेधादप्राप्ते नलोप इति भावः। इह वाशब्दः स्त्रियामित्यनेन संबध्यते, नतु पूर्वेण। तेन नित्यो नलोप इत्याह--पञ्चतक्षमित्यादि।

पात्राद्यन्तस्य न। पात्राद्यन्तस्येति। "स्त्रीत्व"मिति शेषः। आकृतिगणोऽयम्।

पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा। सुदिनाहमिति। प्रशस्तपर्यायः सुदिशब्दः, "सुदिनासु समासु कार्यमेतत्प्रविचिन्वीत विशेषतः स्वयं च"इत्यादिप्रयोगात्।

पथः सङ्ख्याव्ययादेः। पथः सङ्ख्याव्ययेति। संख्याव्ययरूपो य आदिस्तस्मादित्यर्थः। त्रपथं विपथमिति,---"ऋक्पूरब्धूः"इत्यप्रत्ययः। सुपन्थाः अतिपन्था इति। "न पूजना"दिति समासन्तनिषेधः। कथं तर्हि "व्यध्वो दुरध्वा विपथः तदध्वा कापथः समाः"इत्यमर इति चेत्, प्रमाद एवायमिति बहवः। मनोरमायां तु "पथे गतौ"इत्यस्मात्पचाद्यचि पथति व्याप्नोतीति व्युत्पादितः पथशब्दोऽस्ति। तथा च त्रिकाण्डशेषः---"वाटः पथश्च मार्गः स्या"दिति। तेन पथशब्देन समासे पुंस्त्वमुपपन्नम्। न चैवं विपथसिद्धावपि कापथो न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम्, "ईषदर्थे चे"ति तत्सम्भवात्, कुत्सायामर्थतः पर्यवसानादिति स्थितम्। केचित्तु---"पथः संख्ये"ति वार्तिके कृतसमासान्तस्यैव ग्रहणं न तु पचाद्यजन्तस्येत्यत्र बीजाऽभावाद्विपथः कापथ इति प्रयोगो दुरुपपाद एवेत्याहुः। अत्र माधवः--"परवल्लिङ्गापवादत्वात्तत्पुरुष एवेदं प्रवर्तते नान्यत्र। विपथा नगरी। बहुव्रीहिरयम्। पन्तानमतिक्रान्ता अतिपथा। इहापि न, "द्विगुप्राप्ते"त्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति।

सामान्ये नपुंसकम्। सामान्ये नपुंसकमिति। अनियतलिङ्गविषयकमिदम्। तेनादिं पचति, प्रातरादिरिति पुंस्त्वमेव। मृदु पचतीति। क्रियाविशेषणत्वाद्द्वितीयान्तम्। धातुपात्तभावनां प्रति हि फलांशः कर्मीभूतः। तथा च फलसामानाधिकरण्येद्वितीया। अतएव सकृल्ल्वावित्यादौ कारकपूर्वकत्वाद्यण्। यत्र तु भावनां प्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव, "ज्योतिष्टोमेन यजेते"त्यत्र यथा। एतच्च "तरणे यजः" इति सूत्रे वृत्तिपदमञ्जर्योः स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

अव्ययीभावश् च २।४।१८

अव्ययीभावश्च समासो नपुंसकलिङ्गो भवति। अधिस्त्रि। उपकुमारि। उन्मत्तगङ्गम्। लोहितगङ्गम्। पूर्वपदार्थप्रधानस्य अलिङ्गता एव प्राप्ता, अन्यपदार्थप्रधानस्य अभिधेयवल्लिङ्गता, अत इदम् उच्यते। अनुक्तसमुच्चयार्थश्चकारः। पुण्यसुदिनाभ्यामह्नः क्लीबतेष्यते। पुण्याहम्। सुदिनाहम्। पथः सङ्ख्याव्ययाऽदेः क्लीबतेष्यते। त्रिपथम्। चतुष्पथम्। विपथम्। सुपथम्। क्रियाविशेषणानां च क्लीबतेष्यते। मृदु पचति। शोभनं पचति।

लघु-सिद्धान्त-कौमुदी

अव्ययीभावश्च ९१४, २।४।१८

अयं नपुंसकं स्यात्॥

न्यासः

अव्ययीभावश्च। , २।४।१८

"अधिस्त्रि" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिनाऽव्ययीभावः। "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्रस्वत्वम्। "उन्मत्तगङ्गम्, लोहितगङ्गम्" इति। "अन्यपदार्थे च सञ्ज्ञायाम्" २।१।२० इति समासः। पूर्ववद्ध्रस्वत्वम्। "पूर्वपदार्थप्रधानस्यालिङ्गतैव प्राप्ता" इति। अधिस्त्रीत्यादौ पूर्वपदस्यालिङ्गत्वात्। "अन्यपदार्थप्रधानस्याभिधेयलिङ्ता" इति। उन्मत्तगङ्गेत्यादौ देशोऽभिधेयः, स च पुंल्लिङ्ग इति पुंल्लिङ्गत्वं प्राप्तम्। "पुण्याहम्" इति। कर्मधारयः। "राजाहःसखिभ्यष्टच्" ५।४।९१ इति टच् समासान्तः। "रात्राह्नाहाः पुंसि" २।४।२९ इति पुल्लिङ्गतायां वचनम्। "विपथम्" इति। "पथः संख्याव्ययादेः" (वा। १६१) इति परवल्लिङ्गतायां प्राप्तायां वचनम्। "कुगतिप्रादयः" २।२।१८ इतकि समासः। "चतुष्पथम्" इति। षष्ठीसमासः। समाहारद्विगौ तु पूर्वेणैव सिद्धम्। "ऋक्पूरब्धूःपथामानक्षे" ५।४।७४ इत्यकारः समासान्तः॥ नञ्मात्रस्य तत्पुरुषस्याभावन्नत्रात्र नञ्समासो लक्ष्यत इत्याह-- "नञ्समासम्" इति। "वक्ष्यति-विभाषा सेनासुराच्छाया" इति। अनन्तरयोगेय्वस्याधिकारस्य प्रयोजनं नास्तीत्यस्तानुल्लङ्घ्य व्यवहितस्य "विभाषा सेनासुरा" २।४।२५ इत्यादियोगस्योपन्यासः। इत उत्तरेष्वनन्तरेषु योगेष्वस्य प्रयोजननाभावः "न हि संज्ञायां कन्थोशीनरेषु तत्पुरुष नञ्समासः, कर्मधारयो वाऽस्ति" इत्यादिना भाष्ये प्रतिपादितः। "दृढसेनः" इति। बहुव्रीहिः। अथानञ्कर्मधारय इति कोऽयन्निर्देशः? यदि ह्यत्र नञ्कर्मधारययोर्वदन्द्वः, तदा समाहारे वा स्यादितरेतरयोगे वा? तत्र पूर्वस्मिन् पक्षे नपुंसकत्वं प्रसज्येत; इतरत्र तु द्विवचनम्। निर्देशस्य सौत्रत्वादुभयथाप्यदोषः। तथा हि-- च्छन्दोवत् सूत्राणि भवन्तीति। छन्दसि च लिङ्गवचनव्यत्ययं तृतीयेऽध्याये वक्ष्यति॥

बाल-मनोरमा

अव्ययीभावश्च ६५१, २।४।१८

अव्ययीभावश्च। अयं नपुंसकमिति। "स नपुंसक"मित्यतस्तदनुवृत्तेरिति भावः।

नपुंसकत्वस्य फलमाह-ह्रस्वो नपुंसक इति। गोपायतीति। रक्षतीत्यर्थः। "गुपू रक्षणे"विच्। "आयादय आर्धधातुके वा" इत्यायप्रत्ययः। "लोपो व्योः" इति यलोपः। "वेरपृक्तस्ये"ति वकारलोपः। गोपाशब्द अकारान्तः। गाः पातीति। पातेर्विचि उपपदसमासे गोपाशब्द इति भावः।

अधिगोपमिति। विभक्त्यर्थेऽव्ययीभावसमासे सुब्लुकि नपुंसकत्वे ह्रस्वत्वे सति "नाव्ययीभावात्" इत्यमिपूर्वरूपमिति भावः। "गोस्त्रियोः" इति तु नात्र प्रसज्यते, स्त्रीप्रत्ययान्तत्वाऽभावात्। समीपे इति। समीपार्थकाव्ययस्य समासे उदाहरणं वक्ष्यत इत्यर्थः। कृष्णस्य समीपमिति। लौकिकविग्रहवाक्यमेतत्। अत्र समस्यमानस्य उपशब्दस्य स्थाने समीपमिति प्रयुक्तम्। कृष्णस्य-उप इति तु न विग्रहः नित्यसमासत्वेनाऽस्वपदविग्रहौचित्यात्।

ननु समया ग्रामं, निकषा लङ्कामाराद्वनादित्यत्रापि समयाद्यव्ययानां समीपार्थकत्वादव्ययीभावः स्यात्, ततश्च "ग्रामं समया, ग्रामं निकषा, वनादारा"दिति च प्रयोगो न स्यात्। अव्ययीभावसमासेऽव्ययस्य पूर्वनिपातनियमादित्यत आह समयेति। विधानसामथ्र्यादिति। समया ग्रामं, निकषा लङ्कामाराद्वनादित्यत्र शेषषष्ठ()आं सत्यामपि अव्ययीभावसमासे

सति प्रातिपदिकावयवत्वादुपपदविभक्त्योः द्वितीयापञ्चम्योः षष्ठ()आ वा लुकि समासात्प्रातिपदिकार्थादिविवक्षायां सर्वासु विभक्तिषु जातासु यथायथसम्भावे तद्विकल्पे च "समयाग्रामं", "निकषालङ्कमाराद्वनं," "समयाग्रामेण", निकषालङ्केन, "आराद्वनेन" "समयाग्रामे", "निकषालङ्के", "आराद्वने" इति स्यादेव। ततश्च द्वितीयापञ्चम्योर्विधिव्यर्थः स्यात्। षष्ठ()ऐव गतार्थत्वात्। नच समासात्पुनरुपपदविभक्ती द्वितीयापञ्चम्यौ शङ्क्ये, सकृत्प्रवृत्तयोः पुनः प्रवृत्त्य योगात्। वस्तुतस्तु मध्यार्थकसमयाशब्दयोगे द्वितीयाविधानस्य दूरार्थकाराच्छब्दयोगे पञ्चमीविधानस्य चरितार्थत्वादिदमयुक्तम्। नचैवं सति "समया ग्राम"मित्यादावव्ययीभावः शङ्क्यः, अब्भक्ष इत्यादाविव विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव ग्रहणात्, समयानिकषाऽऽराच्छब्दानां चाधिकरणशक्तिप्रधानतया समीपमात्रवृत्तित्वाऽभावात्। ग्रामस्य समीपे इति हि तेषामर्थः। उपशब्दस्तु तन्मात्रवाची। "उपकृष्णं भक्ता" इत्यत्र कृष्णसामीप्यवन्त इति बोधात्। मद्राणां समृद्धिरिति। " स"मित्यव्ययपर्यायः समृद्धिशब्दो विग्रहवाक्ये ज्ञेयः। एतत्सूत्रविहितसमासस्य नित्यतयाऽस्वपदविग्रहः। एवमग्रेऽपि ज्ञेयम्। संमद्रमिति। सर्वत्र सुब्लुगादि पूर्ववज्ज्ञेयम्। समृद्धा मद्राः संमद्रा इत्यादौ तु नाव्ययीभावः, वचनग्रहणसामर्थ्येनाव्ययार्थप्राधान्य एव तत्प्रवृत्तेरिति भाष्ये स्पष्टम्। यवनानां व्यृद्धिः दुर्यवनमिति। दुर्शब्दार्थको व्यृद्धिशब्दो विग्रहे ज्ञेयः। विगतेति। अभावप्रतियोगिनीत्यर्थः। ऋद्धेरभावो व्यृद्धिरिति यावत्। नचार्थाभावेऽयमिति भ्रमितव्यं, समस्यमानपदार्थाऽभावस्यैव तत्र विवक्षितत्वात्। इह च यवनाऽभावस्याऽप्रतीतेः। यवनीयवृद्ध्यभावस्यैव प्रतीतेः। तद्ध्वनयन्नर्थाऽभावे उदाहरति--मक्षिकाणामभावो निर्मक्षिकमिति। विग्रहे निर्शब्दसमानार्थकमभावपदमिति भावः। घटः पटो नेत्यत्र तु नाव्ययीभावः, अर्थग्रहणसामर्थ्येनात्यन्ताऽभावस्यैव विवक्षितत्वात्। हिमस्यात्ययोऽतिहिममिति। अतीत्यव्ययपर्यायोऽत्ययशब्दो विग्रहे ज्ञेयः। अर्थाभावेत्यनेन पौनरूक्त्यं निरस्यति-अत्ययो ध्वंस इति। अर्थाऽभावशब्देनाऽत्यन्ताभाव एव विवक्षितः। तेन पटस्य प्रागभावो निष्पटमिति न भवतीति भावः। सूत्रे असंप्रतीत्यस्य संप्रति न युज्यते इत्यर्थः। "एतर्हि संप्रतीदानी"मित्यमरः। युजिक्रियान्तर्भावेण एकार्थीभावान्नञ्समासः। तदाह--निद्रा संप्रति न युज्यते इत्यतिनिद्रमिति। अतीत्यव्ययस्याऽसंप्रत्यर्थकस्य स्थाने "संप्रति न युज्यते" इति विग्रहवाक्यं ज्ञेयम्। सूत्रे "शब्दप्रादुर्भाव" इत्यनेन शब्दस्य प्रकाशनं विवक्षितं, तदाह--हरिशब्दस्य प्रकाश इतिहरि इति। "इती"त्यव्ययं शब्दप्रकाशे वर्तते। तस्य हरिशब्देन स्वरूपपरेण षष्ठ()न्तेन समास इति भावः। विष्णोः पश्चादनुविष्णु इति। "अनु" इत्यव्ययं पश्चादर्ते वर्तते इत्यर्थः। भाष्येति। "अचः परस्मिन्" इति सूत्रभाष्ये इत्यर्थः। "ततः पश्चात्" इत्यत्राव्ययीभावे तु पश्चाच्छब्दस्य पूर्वनिपातः स्यादिति भावः। एतद्भाष्यप्रयोगादेव एतत्सूत्रे तत्तदर्थबोधकपदघटकतया गृहीताव्ययेन तत्तदर्थकेनाऽयं समासो नेति विज्ञायते। अत एव "यथाऽसादृश्ये" इति सूत्रे "सादृश्यसंपत्तीति प्राप्नोती"त्येवोक्तं भाष्ये। यथाशब्देन तु भवत्येव समासः, उत्तरसूत्रारम्भात्। सूत्रे यथाशब्देन तदर्थो लक्ष्यते। यथार्थे विद्यमानमव्ययं समस्यते इति लभ्यत इत्यभिप्रेत्याह--योग्यतेति। अनुरूपमिति। अत्रानु इत्यव्यय योग्यतायाम्, अतो यथार्थे वर्तत इति भावः। अर्थमर्थं प्रतीति--लौकिकविग्रहवाक्यम्। अत्र वीप्सायां द्विर्वचनम्। "लक्षणेत्थंभूताख्यान" इति वीप्सायां द्योत्यायां प्रतेः कर्मप्रवचनीयत्वात्तद्योगे द्वितीया। समासे तु द्विर्वचनं न, समासेन वीप्साया द्योतितत्वात्--इति "हयवरट्" इति सूत्रे कैयटः। प्रतिना तस्योक्तत्वादिति तु तत्त्वम्। प्रतिना तस्योक्तत्वादिति तु तत्त्वम्। नन्वर्थमर्थं प्रतीति लौकिकविग्रहप्रदर्शनं न संभवति। नित्यसमासत्वादित्यत आह--प्रतिशब्दस्येति। सामर्थ्यादिति। अव्ययीभावसमासस्य नित्यत्वे तु शेषषष्ठ()आमपि अव्ययीभावे सुब्लुकि समासात् सर्वविभक्तीनामम्भावे तद्विकल्पे च प्रत्यर्थं प्रत्यर्थेनेत्यादिसिद्धे द्वितीयाफलकं प्रते कर्मप्रवचनीयत्वविधानमर्थकं स्यादिति भावः। वस्तुतस्तु प्रतिस्थानमित्यादौ "उपसर्गात्सुनोति" इति षत्वाऽभावसंपादन#एन कर्मप्रवचनीयत्वं चरितार्थमेव। "अर्थमर्थं प्रति प्रत्यर्थ"मिति "सरूपाणा"मिति सूत्रे भाष्ये प्रयोगदर्शनादिह वैकल्पिकसमास इति तत्त्वम्। शक्तिमनतिक्रम्येति। "परावरयोगे चे"ति क्त्वाप्रत्ययः। परावरत्वं च बौद्धम्। अत् यथेत्यव्ययं पदार्थानतिक्रमे वर्तत इत्यर्थः। हरेः सादृश्यं सहरीति। अत्र सहेत्यव्ययं सादृश्ये वर्तत इति भावः।

वक्ष्यमाणनेति। "अव्ययीभावे चाकाले" इत्यनेनेत्यर्थः। ज्येष्ठस्यानुपूर्व्येणेति। "कार्यं कृ"मिति शेषः। तत्तद्विभक्त्या विग्रह इति पक्षाभिप्रायेणेदम्। पूर्वस्य क्रमेण इत्यनुपूर्वं। ततः स्वार्थे यञ्। एतत्सूत्रगृहीताव्ययेन समासो नेत्यनुपदमेवोक्तम्। तथापि सूत्रगृहीतानुनाऽप्यनुज्येष्ठमिति समासः, अनुपूर्वेति निर्देशात्। सूत्रे युगपच्छब्दात्स्वार्थे ष्यञि यौगपद्यशब्दः। तद्ध्वनयन्नाह--चक्रेण युगपदिति। युगपत्पर्यायस्य सहशब्दस्य चक्रेण इत्यनेन समासे कृते सतीत्यर्थः। युगपच्छब्देन तु न समासः, सूत्रे गृहीतत्वादिति भावः।

तत्त्व-बोधिनी

अव्ययीभावश्च ५७६, २।४।१८

नपुंसकं स्यादिति। एतच्च"स नपुंसक"मित्यतो लभ्यते। समीप इति।"अव्ययीभाव" इत्यन्वर्थसंज्ञाश्रयणात्सप्तमीरूपाव्ययार्थप्राधान्य एवायं समासः। समीपवर्तिप्रधान्ये तु "संख्ययाव्ययासन्ने"ति बहुव्रीहिर्वक्ष्यति---"उपदशाः"इति यथा। विधानसामर्थ्यादिति। ननु "समया ग्राम"मित्यादौ द्वितीयाविधानसामर्थ्यान्मास्त्वव्ययीभावः,आराद्वनादित्यत्र तु भवेदेव। "अन्यारा"दिति पञ्चमीविधानस्य दूरार्थकाराच्चब्दयोगे सावकाशत्वादिति चेत्। अत्र केचिदुत्प्रेक्षयन्ति--"दूरान्तिकार्थैः षष्ठ()न्यतरस्या"मिति षष्ठीपञ्चम्योः प्राप्तयोस्तदपवादतया पञ्चम्येव तेन विधीयते। तथा चाऽन्तिकार्थकाऽऽराच्छब्दयोगे षष्ठ()पवादतया पञ्चमीविधानं निरवकाशमेवेति तत्समाश्र्या द्वययीभावो नेत्युक्तिः सम्यगेवेति। तदपरे न क्षमन्ते। अन्तिकार्थाऽऽराच्छब्दयोगे विशिष्य पञ्चमीविधानाऽभावात्, "अन्यारा"दिति सूत्रस्य त्वन्यत्र कृतार्थत्वाच्च, सामीप्ये आराद्वनमित्यव्ययीभावो दुर्वार एव"इति। एवं हि व्याकुर्वतां पदस्येत्यपकर्षाऽभावे भृशार्थे सावकाशोऽयं यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येतेति "नित्यवीप्सयो"रिति सूत्रस्थमनोरमाग्रन्थोऽनुकूल इति दिक्। सुमद्रमिति। उत्तरपदार्थप्राधान्ये तु "कुगती"ति तत्पुरुषः---समृद्धा मद्राः सुमद्राः। दुर्यवनमिति। न चार्थाऽभावेनेह सिद्धिः, येन समस्यते तदीयार्थभावे तत्र समासस्वीकारात्। न चेह यवनानामभावो, येनार्थाऽभावे समासः स्यात्, किंतु तदीयाया ऋद्धेरभाव इति। निर्मक्षिकमिति। संसर्गाऽभावेऽयं समासो, न त्वन्योन्याऽभावेऽपि। अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्रतीतिविशेष्यविरोधिन एवाऽभावस्य ग्रहणात्। अन्योन्याऽभावस्य तु प्रतियोगितावच्छेदकेनैव विरोधात्, तस्य च प्रकारत्वेऽप्यविशेष्यत्वात्। ये तु वदन्ति "घटः पटो नेत्यत्रापि पटत्वात्यन्ताऽभाव एवार्थः, आकृत्यधिकरणन्यायेन जातेः पदार्थत्वा"दिति, तेषामपि मते अर्थग्रहणसामर्थ्यादेवाक्षिप्तधर्म्यभावेऽयं समासो न तु धर्माभाव इति न दोषः। अत्यय इथि। स्पष्टार्थमेतत्। अर्थाभावेन गतार्थत्वात्। अर्थाऽभावेन संसर्गाऽभावो विवक्षितो न त्वन्योन्याभावः। घटः पटो नेत्यत्रातिप्रसङ्गादिति निष्कर्षात्। संप्रति नेति। "संप्रतीत्य"व्ययमिदानीमित्यर्थे। "एतर्हि संप्रतीदानी"मित्यमरोक्तेः। तच्चाधिकरणशक्तिप्रधानत्वात्क्रियापदेनैवान्वयार्हम्। निषेषोऽपि क्रियाया एवोचितः। तदेतदाह--युज्यत इति। असंप्रतीति सौत्रप्रयोगे तु युजिक्रियान्तर्भावेण नञ्समास इति बोध्यम्। यत्तु प्रसादकृतोक्तम्--"असंप्रति। संप्रत्ययभाव इत्यर्थः। अनेन उपयोग्यवस्तुनो यो वर्तमानः कालः स निषिध्यत"इति। तन्न। अधिकरणशक्तिप्रधानस्य क्रियायैवान्वयार्हस्य निषेधं प्रति प्रतियोगित्वेनान्वयस्याऽयुक्तत्वात्। न हि "भूतले घटो नास्ती"त्यनेन भूतलं निषिध्यत इति कश्चिदभ्युपैति, येनात्र वर्तमानकालनिषेधो युक्त्यर्हः स्यात्। इतिहरीति। स्वरूपपरेण षष्ठ()न्तेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः। ततः पश्चादिति। सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वमिपातः स्यादिति भावः। भाष्यप्रयोगादिति। "अनेकमन्यपदार्थे"इति सूत्रे "सर्वपश्चा"दिति भाष्यप्रयोगाच्चेत्यपि बोध्यम्। प्रत्यर्थमिति। वृत्तौ वीप्सान्तर्भावान्न द्विर्वचनम्। प्रतिशब्दस्येति। यत्त्वाहुः--"ग्रामस्य वृक्षं वृक्षं प्रतीत्यत्र सापेक्षत्वेन समासाऽभावे द्वितीयाविधानं सावकाश"मिति। तन्न। नित्यसमासेषु "सविशेषणानां वृत्तिर्ने"त्यस्याऽप्रवृत्तेः। आनुपूर्व्येणेति। अनुपूर्वस्य भाव आनुपूर्व्यं। ब्राआह्मणादित्वात् ष्यञ्।

सूत्रम्

काशिका-वृत्तिः

तत्पुरुषो ऽनञ्कर्मधारयः २।४।१९

अधिकारो ऽयम् उत्तरसूत्रेषु उपतिष्ठते। नञ्समासं कर्मधारयं च वर्जयित्वा ऽन्यस् तत्पुरुषो नपुंसकलिङ्गो भवति इत्येतदधिकृतं विदितव्यम्, यदित ऊर्ध्वम् अनुक्रमिष्यामस् तत्र। वक्ष्यति विभाषा सेनासुराच्छायाशालानिशानाम् २।४।२५। ब्राह्मणसेनम्, ब्राह्मणसेना। तत्पुरुषः इति किम्? दृढसेनो राजा अनञिति किम्? असेना। अकर्मधार्यः इति किम्? परमसेना।

बाल-मनोरमा

तत्पुरुषोऽनञ्कर्मधारयः ८१२, २।४।१९

तत्पुरुषोऽनञ। नञ्समासकर्मधारयाभ्यां भिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभागित्यर्थः। तदाह--अधिकारोऽयमिति। "परवल्लिङ्गमित्यतः प्रा"गिति शेषः।

तत्त्व-बोधिनी

तत्पुरुषोऽनञ्कर्मधारयः ७१३, २।४।१९

तत्पुरुषोऽनञ्। नञ्समासकर्मधारयभिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभाग्भवतीति सूत्रार्थः।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां कन्ताउशीनरेषु २।४।२०

संज्ञायां विषये कन्थाऽनतस् तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् कन्था उशीनरेसु भवति। सौशमिकन्थम्। आह्वरकन्थम्। संज्ञायाम् इति किम्? वीरणकन्था। उशीनरेषु इति किम्? दाक्षिकन्था। परविल्लिङ्गता पवाद इदं प्रकरनम्।

न्यासः

संज्ञायां कन्थोशीनरेषु। , २।४।२०

प्रकृते न तदन्तविधिरिति प्रकृतस्य तत्पुरुषस्य कन्यया तदन्तविधिर्वज्ञायत इत्याह-- "कन्थान्तस्तत्पुरुषः" इति। "सौशमिकन्थम्" इति। सौशमीनां कन्था इति षष्ठीसमासः। "दाक्षिकन्था" इति। अस्तीयं ग्रामस्य संज्ञा; न तूशीनरेषु किं तर्हि? ततोऽन्यत्रेति॥

बाल-मनोरमा

संज्ञायां कन्थोशीनरेषु ८१३, २।४।२०

संज्ञायां कन्थो। सुगममेव। उपज्ञा। उपज्ञायते=प्रथमं ज्ञायत इत्युपज्ञा। "स्त्रियां क्ति"न्नित्यधिकारे "आतश्चोपसर्गे" इति कर्मण्यङ्। उपक्रम्यते=आरभ्यते इत्युपक्रमः। कर्मणि घञ्। "नोदात्तोपदेशस्ये"ति वृद्धिनिषेधः। उपज्ञा चोपक्रमश्चेति समाहारद्वन्द्वः। "तत्पुरुष" इत्यस्य विशेषमिदम्। तदन्तविधिः। "स नपुंसक"मित्यतो "नपुंसक"मित्यनुवर्तते।

---

सूत्रम्

काशिका-वृत्तिः

उपज्ञाउपक्रमम् तदाद्याचिख्यासायाम् २।४।२१

उप्ज्ञायते इत्युपज्ञा। उपक्रम्यते इत्युपक्रमः। उपज्जा च उपक्रमश्च उपज्ञोपक्रमम्। तदन्तस् तत्पुरुषो नपुंसकलिङ्गो भवति तदाद्याचिख्यासायाम्, तयोरुपज्ञोपक्रमयोरादेराचिख्यासायां गम्यमानायाम्। आख्यातुम् इच्छा आचिख्यासा। यद्युपज्ञेयस्य उपक्रम्यस्य च अर्थस्य आदिराख्यातुम् इष्यते तत एतद् भवति। पाणिन्युपज्ञमकालकं व्याकरणम्। पाणिनेरुपज्ञानेन प्रथम् अतः प्रणीतम् अकालकं व्याकरणम्। व्याड्युपज्ञं दशहुष्करणम्। आद्योपक्रमं प्रासादः। नन्दोपक्रमाणि मानानि। दर्शनीयोपक्रमं सुकुमारम्। उपज्ञाउपक्रमम् इति किम्? वाल्मीकिश्लोकाः। तदाद्याचिख्यासायाम् इति किम्? देवदत्तोपज्ञो रथः। यज्ञदत्तोपक्रमो रथः।

न्यासः

उपज्ञोपक्रमं तदाद्याचिख्यासायाम्। , २।४।२१

"उपज्ञायत इत्युपज्ञा" इति। "आतश्चपसर्गे" ३।३।१०६ इति कर्मण्यङ। "उपक्रम्यत इत्युपक्रमः"। अत्र "अकत्र्तरि च कारके संज्ञायाम्" ३।३।१९ इति कर्मणि घञ्। "नोदात्तोपदेशस्य" ७।३।३४ इत्यादिना वृद्धिनिषेधः। "यद्यप्युपज्ञेयस्योपक्रम्यस्य च" इत्यादि। उपज्ञेयः = परिज्ञेयः। उपक्रमः = उपक्रमितव्यः। आदिः = प्राथम्यम्। "पाणिन्युपज्ञम्" इति। षष्ठीसमासः। तेन तत्प्रथमतः प्रणीतम्। "अकालम्" इति। स स्वस्मिन् व्याकरणे कालाधिकारं न कृतवान्। "व्याड()उपज्ञं दशहुष्करणम्" इति। व्यडिरप्यत्र युगपत्कालभाविनां विधीनां मध्ये दश हुष्करणानि कृत्वा परिभाषितवान् पूर्वं पूर्वं कालमिति। वाल्मीकेः श्लोका वाल्मीकिश्लोका इति षष्ठीसमासः॥

बाल-मनोरमा

उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ८१४, २।४।२१

तदाह--उपज्ञान्त उपक्रमान्तश्चेति। तच्छब्देन उपज्ञोपक्रमौ विवक्षितौ। आदिशब्दो भावप्रधानः प्राथम्ये वर्तते। तयोरादिः=प्राथम्यं--तदादिः। तस्य आचिख्यासा=आख्यातुमिच्छा। विवक्षायामिति यावत्। तदाह--तयोरादिरित्यादि। पाणिनेरुपज्ञेति। कर्तरि षष्ठी। पाणिन्युपज्ञं ग्रन्थ इति। पाणिनिना प्रथमं ज्ञायमान इत्यर्थः। इदं प्रकरणं परवल्लिङ्गत्वस्य विशेष्यनिघ्नत्वस्य चापवादः। नन्दोपक्रमं द्रोण इति। नन्देनारभ्यमाण इत्यर्थः। कर्तरि षष्ठ()आ समासः।

तत्त्व-बोधिनी

उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ७१४, २।४।२१

उपज्ञो। उपज्ञायत इत्युपज्ञा। "आतश्चोपसर्गे"इति कर्मण्यङ्। उपक्रम्यत इत्युपकमः। कर्मणि घञ्। "नोदत्तोपदेशस्ये"ति वृद्धिप्रतिषेधः। उपज्ञा च उपक्रमश्चेति समाहारद्वन्द्वः। स चानुवर्तमानस्य तत्पुरुषस्य विशेषणम्। तच्छब्देन उपज्ञोक्रमौ परामृश्यते। तदेतत्सकलमभिप्रेत्याह---उपज्ञान्त इत्यादि। आख्यातुमिच्छा आचिख्यासेतीच्छसना इह विवक्षैव शब्दप्रवृत्तौ नियामिका, न चु वस्तुस्थितिरिति ज्ञाप्यते। तेन "त्वदुपक्रमं सौजन्य]मित्याद्यपि सिध्यति। पाणिनेरिति। कर्तरि पष्ठी। नन्दोपक्रममिति। नन्दस्योपक्रममिति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

छाया बाहुल्ये २।४।२२

विभाषा सेनासुराच्छाया। शालानिशानाम् २।४।२५। इति विभाषां वक्ष्यति। नित्यार्थम् इदं वचनम्। छायाऽन्तस् तत्पुरुषो नपुंसकलिङ्गो भवति बाहुल्ये गम्यमाने। पूर्वपदार्थधर्मः बाहुल्यम्। शलभादीनां हि बहुत्वं गम्यते। शलभच्छायम्। इक्षुच्छायम्। बहुल्ये इति किम्? कुड्यच्छाया।
न्यासः
छाया बाहुल्ये।, २।४।२२

"पूर्वपदार्थधर्मो बाहुल्यम्" इति। अत्र हेतुमाह-- "शलभादीनाम्ित्यादि। शळभादीनां बहुत्वं शलभच्छायमित्यादौ हि गम्यते, न हि तेन विना छाया सम्भवति। अतः पूर्वपदार्थस्य शलभादेर्बाहुल्यं धर्मः॥
बाल-मनोरमा
छाया बाहुल्ये ८१५, २।४।२२

छाया बाहुल्ये। छायया तत्पुरुषस्य विशेषणात्तदन्तविधिमभिप्रेत्याह--छायान्त इति। पूर्वपदार्थेति। कस्य बाहुल्ये इत्याकाङ्क्षायामापादकद्रव्यनिमित्तकत्वाच्छायायास्तद्बाहुल्ये इति गम्यते। तच्चापादकद्रव्यमर्थात्पूर्वपदार्थभूतमिति भावः। बाहुल्ये किम्?। कुड()स्य छाया कुड()च्छाया।

तत्त्व-बोधिनी
छाया बाहुल्ये ७१५, २।४।२२

छाया बाहुल्ये। बाहुल्ये सति या छाया तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः। इह कस्य बाहुल्य इत्यपेक्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्यैति गम्यते। तच्चावरकं पूरीवपदार्थभूतमेवेत्याशयेनाह--- पूर्वपदार्थबाहुल्ये इति। पूर्वपदार्थबाहल्ये किम्()। कुड()स्य छाया कुड()छाया। प्रश्लेषो बोध्य इति। केचित्तु--"इक्षुच्छायनिषादिन्यः"इत्येवं पठन्ति।

---

सूत्रम्
काशिका-वृत्तिः
सभा राजा ऽमनुस्यपूर्वा २।४।२३

सभान्तस् तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् सभा राजपूर्वा, अमनुस्यपूर्वा च भवति। इनसभम्। ईश्वरसभम्। इह कस्मान् न भवति, राजसभा? पर्यायवचनस्य एव इष्यते। तदुक्तम् जित्पर्यायस्य एव राजाध्यर्थम् इति। अमनुष्यपूर्वा रक्षःसभम्। पिशाचसभम्। इह कस्मान् न भवति, काष्ठसभा? अमनुष्यशब्दो रूढिरूपेण् रक्षःपिशाचादिष्वेव वर्तते। राजा अमनुष्यपूर्वा इति किम्? देवदत्तसभा।
न्यासः
सभा राजाऽमनुष्यपूर्वा।, २।४।२३

"इह कस्मान्न भवति-- राजसभा" इति। "स्वं रूपं शब्दस्याशब्दसंज्ञा" १।१।६७ इति वचनदिहैव युक्तं भवितुमित्यभिप्रायः। "तदयुक्तम्" इत्यादि। एतेन "पर्यायवचनस्यैवेष्यते" (का।वृ।२।४।२३) इत्येतदाप्तवचनेन द्रढयति। यतः पर्यायवचनस्यैवेष्यते तस्मादेव हेतोरिदमुक्तम्। "{जित्पर्यायवचनस्यैव-काशिका। जदित्पर्यायवनस्यैव" इत्यादि।

कथं पुनः पर्यायवचनस्यैव भवतीत्येषोऽर्थः, यावता नेह सूत्रे तथाविधं वचनमस्ति? एवं मन्यते-- ननु च पूर्वग्रहणमस्ति, अतः पूर्वग्रहणादेषोऽर्थो लभ्यते, कथम्? यदि स्वरूपग्रहणं स्यात् "राजाऽमनुष्यात्" इत्येवं ब्राऊयात्, पञ्चम्येव हि दिक्शब्दमध्याहरयिष्यति, न च सभान्तस्य तत्पुरुषस्य पूर्वशब्दादन्यो दिक्शब्दोऽध्याहर्तुं शक्यत इति किं पूर्वग्रहणेन? तत् क्रियतेऽर्थग्रहणं यथा स्यात्। अर्थग्रहणे च सत्यराजाऽमनुष्यपूर्वा इति द्विष्प्रतिषेधो वण्र्यते-- अराजपूर्वा, अमनुष्यपूर्वेति। तदनेन नञिवयुक्तन्यायेन (व्या।प।६५) तत्सदृशा राजपर्याया गृह्यन्ते, न तु तद्विशेषाश्चन्द्रगुप्तादयः, न हि ते राजार्थस्य वाचका इति। अथ वा-- अर्थग्रहणेऽस्मिन् "विभाषा समीपे" २।४।१६ इत्यतो विभाषागर्हणमनुवत्र्तते मण्डूकप्लुतिन्यायेन, सा च व्यवस्थितविभाषा विज्ञायते। तेनेह प्रयायवचनस्यैवे()आरादेग्र्रहणं भविष्यति, नान्यस्य। "अमनुष्यशब्दो {हि-- वृत्तौ नास्ति} हि रूढिरूपेण रक्षः पिशाचादिषु वत्र्तते" इति। यद्येवम्, "अनुष्यकर्तृके च" ३।२।५३ इत्यत्र यदुदाहरिष्यति-- जायाघ्नस्तिलकालकः, पतिघ्नी पाणिरेखा, श्लेष्मघ्नं मधु, पित्तघ्नं घृतमिति,तद्व्याहन्यते? नैष दोषः; अत्र हि चकार क्रियते, तस्यैव विधेः समुच्चयार्थः। तेन पुनर्विधानात्, "कृत्यल्युटो बहुलम्" (३।३।क११३) इति वचनाद्वा रक्षः पिशाचादिभ्योऽन्यत्रापि भविष्यति। अथ वा-- अमनुष्यशब्दोऽयं द्विविधः-- अस्त्येवायमव्युत्पन्नो यो रक्षः पिशाचादिषु वत्र्तते, अस्ति च व्युत्पन्नो नञ्समासः; तत्रेहाव्युत्पन्नस्य रूढिशब्दस्य ग्रहणम्। "अमनुष्यकर्तृके च"३।२।५३ इत्यत्र व्युत्पन्नस्यारूढिशब्दस्य ग्रहणमित्यविरोधः। "देवदत्तसभा" इति। देवदत्तशब्दो न राजपर्यायः; नाप्यमनुष्यवचनः॥

बाल-मनोरमा

सभाराजाऽमनुष्यपूर्वा ८१६, २।४।२३

सभा। राजा च अमनुष्यश्च राजाऽमनुष्यौ, तौ पूर्वौ यस्याः सा-राजाऽमनुष्यपूर्वा इति विग्रहः। सभया तत्पुरुषविशेषणात्तदन्तविदिः। राजशब्देन राजपर्याय एव विवक्षितः, न तु राजन्शब्दः। तदाह--राजपर्यायपूर्व इति। इनसभम् ई()आरसभमिति। इनस्य ई()आरस्य वा सभेति विग्रहः। इनेस्वरशब्दौ राजपर्यायाविति भावः।

पर्यायमात्रग्रहणे प्रमाणं दर्शयति--पर्यायस्यैवेष्यत इति। "भाष्यकृते"ति शेषः। "स्वं रूप"मिति सूत्रे "जित्पर्यायवचनस्यैव राजाद्यर्थ"मिति वार्तिकं भाष्ये पठितमिति भावः। राजसभेति। राजन्शब्दपूर्वकत्वेऽप्यत्र राजपर्यायपूर्वकत्वं नास्तीति भावः। चन्द्रगुप्तसभेति। "चन्द्रगुप्त" इति राजविशेषस्य नाम, न तु तत्पर्याय इति भावः। नन्वमनुष्यपूर्वकत्वाद्देवसभेत्यादावपि स्यादित्यत आह--अमनुष्यशब्दो रूढ()एति। असुरशब्दो दैत्यानिवेति भावः।

तत्त्व-बोधिनी

सभा राजाऽमनुष्यपूर्वा ७१६, २।४।२३

सभा। इनसभमित्यादि। इनशब्दोऽत्र राजपर्यायः, ई()आरशब्दश्च। ननु "स्वं रूप"मिति वचनाद्राजशब्दस्यैव ग्रहणं युक्तं, नपर्यायस्येत्यत आह--।

पर्ययस्यैवेष्यते। पर्यायस्यावेष्यत इति एवकारेण स्वरूपस्य विशेशणां च निरासः। कथं तर्हि "नृपतिसभामगमन्न वेपमानः"इति कीचकवधे। अत्र केचित्--ना पतिर्यस्यां सभायामिति बहुव्रीहौ कृते पश्चात्कर्मधारयः। "अनञ्कर्मधारयः"इत्युक्तेर्न क्लीबत्वमित्याहुः। रक्षितस्त्वाह---गजपतिवन्नृपतिरपि राजविशेषस्तेनात्र नानुपपत्तिरिति।

---

सूत्रम्

काशिका-वृत्तिः

अशाला च २।४।२४

अशाला च या सभा तदन्तस् तत्पुरुषो नपुंसकलिङ्गो भवति। सङ्घातवचनो ऽत्र सभाशब्दो गृह्यते। स्त्रीसभम्। दासीसभम्। दासीसङ्घातः इत्यर्थः। अशाला इति किम्। अनाथकुटी इत्यर्थः।
न्यासः
अशाला च। , २।४।२४

सभाशब्दोऽयमस्त्येव कुटीवचनः-- कदीर्घा सभा,ह्रस्वा सभेति। अस्ति च सङ्घातवचनः, यथा-- ब्राआह्मणानां सभा, स्त्रीणां सभेति; इह चाशालेति कुटीवचनप्रतिषेधादितरो गृह्यत इत्यत आह-- "सङ्घातवचनः" इत्यादि॥
बाल-मनोरमा
अशाला च ८१७, २।४।२४

अशाला च। अशालार्थकेत्यर्थः। सभाशब्दः शालायां, सङ्घातार्थे च वर्तते। तत्र राजाऽमनुष्यपूर्वकस्य शालावाचिनः सभाशब्दस्य पूर्वसूत्रे क्लीबत्वमुक्तम्, संप्रति सङ्घातवाचिनः सभाशब्दस्य क्लीबत्वमुच्यत इत्याह--सङ्घातार्था या सभेति। सभाशब्द इत्यर्थः।

तत्त्व-बोधिनी
अशाला च ७१७, २।४।२४

अशाला च। शालावाची सङ्घातवाची च सभाशब्दस्तत्र राजमनुष्यपूर्वत्वे शालावाचिनः क्लीबत्वमुक्तम्, अनेन तु सङ्घातवाचिनो विधीयत इत्याह---सङ्घातार्थेति।

---

सूत्रम्
काशिका-वृत्तिः
विभाषा सेनासुराच्छायाशालानिशानाम् २।४।२५

सेना सुरा छाया शाला निशा इत्येवम् अन्तस् तत्पुरुषो नपुंसकलिङ्गो भवति विभाषा। ब्राह्मणसेनम्, ब्राहमणसेना। यवसुरम्, यवसुरा। कुड्यच्छायम्, कुड्यच्छाया। गोशालम्, गोशाला। श्वनिशम्। श्वनिशा।
न्यासः
विभाषा सेनासुराच्छायाशालानिशानाम्। , २।४।२५

"()आनिशम्" इति। यस्यां निशायां ()आआनो मत्ता विहरन्ति सा ()आनिशम्; ()आनिशेति चोच्यत इति॥
बाल-मनोरमा
विभाषा सेनासुराच्छायाशालानिशानाम् १५२६, २।४।२५

विभाषा सेना। प्रथमार्ते षष्ठी। "तत्पुरुष" इत्यनुवृत्तं सेनादिभिर्विशेष्यते। तदन्तविधिः। तदाह--एतदन्त इति। प्रत्येकाभिप्रायमेकवचनम्। ()आनिशमिति। शुनो निशेति विग्रहः। कृष्णचतुर्दशीत्याहुः। "शुनश्चतुर्दश्यामुपवसतः पश्यामः" इति तिर्यगधिकरणे शाबरभाष्ये स्थितम्। दृढसेन इति। दृढा सेना यस्येति बहुव्रीहिः। तत्पुरुषत्वाऽभावान्न क्लीबत्वविकल्पः। असेनेति। तत्पुरुषत्वेऽपि नञ्समासत्वान्न क्लीबत्वविकल्पः। परमसेनेति। कर्मधारयत्वान्न

कील्बत्वम्। "तत्पुरुषोऽनञ्कर्मधारयः" इत्यदिकारस्याऽत्रैव प्रयोजनमिति कैयटे प्रपञ्चितम्।

*****इति तत्पुरुषसमासः*****

टित्ले :वैयाकरण-सिद्धान्त-कौमुदी,

श्रीमज्ज्ञानेन्द्रभिक्षुविरचितया तत्त्वबोधिनीटीकया, श्रीवासुदेवभट्टदीक्षितविरचितया बालोपकारिण्या बालमनोरमाख्यया व्याख्यया, (तत्पुरुषादारभ्य) महामहोपाध्याय-श्रीनागेशभट्टविरचितया लघुशब्देन्दुशेखरटीकया च समन्विता।

टीकत्रयोपेता

आउथोर्: महामहोपाध्यायश्रीभट्टोजिदीक्षित

फुब्लिचतिओन्: भ्हरथिय भोओक् चर्पोरतिओन्,

१,ऊ।भ्।झवहेर् णगर्, भन्ग्लो Rओअद्,

डेल्हि-११०००७।

आच्चेस्सिओन् णो : ५१४७१

येअर् ओf Eदितिओन् : १९९७ (Fइर्स्त्)

फगेस् : ७६८प्।

शिऽए : २४च्म्।

ईश्भ्ण् : ८१-८५१२२-२२-७

ळन्गुअगे : शन्स्क्रित्

श्चिप्त् : डेवनगरि

शुब्जेच्त् ःएअदिन्ग्स् : शन्स्क्रित्_ग्रम्मर्

Cलस्सिfइचतिओन् णो : फ्१५, Cक्ष्१,१,६,५

भोओक् णो : ण् ९७

फ्रिचे : ५००।०० Rस्/-

अथ ठगधिकार प्रकरणम्।

------------------

तत्त्व-बोधिनी

विभाषा सेनासुराच्छायाशालानिशानाम् ११८७, २।४।२५

विभाषा सेना। प्राथमार्थे षष्ठीति सेनादिभिस्तत्पुरुषो विशेष्यते। विशेषणेन तदन्तविधिस्तदाह--एतदन्त इति। ()आनिशमिति। कृष्णचतुर्दशी। तस्यां किल केचिच्छवान उपवसन्ति। एतच्च शावरभाष्ये तिर्यगधिकरणे स्पष्टम्। "तत्पुरुष"इत्याद्यधिकारसूत्रस्यात्रैव प्रयोजनं, न तु "संज्ञायां कन्थोशीनरेषु"इत्यादिपञ्चसूत्र्याम्। अतत्पुरुषस्यच नञ्समासस्या कर्मधारयस्य च तत्राऽसम्भवादित्याकरे स्थितम्। तथैव प्रत्()युदाहरति----दृढसेन इत्यादि। ननु बहुव्रीहौ विशेष्यनिन्घता न्याय्यैवेति किमनेन तत्पुरुषग्रहणेन()। मैवम्। न्यायापेक्षया वचनस्य बलीयस्त्वात्। किं चाऽसति तद्ग्रहणे द्वन्द्वे नपुंसकता स्यात्परवल्लिङ्गापवादत्वादस्य प्रकरणवादत्वादस्य प्रकरणस्येति दिक्। इति तत्पुरुषः॥

---

सूत्रम्

काशिका-वृत्तिः

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २।४।२६

समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वादितरेतरयोगद्वन्द्वस्य इदं ग्रहणम्। परस्य यल् लिङ्गं तत् भवति द्वन्द्वस्य तत्पुरुषस्य च। उत्तरपदलिङ्गं द्वन्द्वतत्पुरुषयोर् विधीयते। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तत्पुरुषस्य अर्धं पिप्पल्याः अर्धपिप्पली। अर्धकोशातकी। अर्धनखरञ्जनी। द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः। द्विगुः पञ्चसु कपालेसु संस्कृतः पुरोडाशः पञ्चकपालः। प्राप्तो जीविकाम् प्राप्तजीविकः। आपन्नो जीविकाम् आपन्नजीविकः। अलं जीविकायै अलंजीविकः। गतिसमासः निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः।

लघु-सिद्धान्त-कौमुदी

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ९६५, २।४।२६

एतयोः परपदस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। (द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः)। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः॥

न्यासः

कपरवल्लिङ्गं द्वन्द्वतत्पुरुषयोः। , २।४।२६

किमर्थमिदम्? इहायं द्वन्द्वः रुआवपदार्थप्रधानः, स यदा भिन्नलिङ्गवयवो भवति तदा पूर्वोत्तरयोः पदयोर्भिन्नलिङ्गयोरनुग्राहकमेकं लिङ्गं नास्ति येन समुदायो व्यपदिश्यते। उभाभ्याञ्च युगपदसम्भवादशक्यो व्यपदेशः कर्तृम्। अतः पर्यायः स्यादिति द्वन्द्वे नियमार्थं वचनम्। तत्पुरुषोऽपि द्विविधः-- पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधानश्चेति। ततो य उत्तरपदार्थप्रधानस्तत्पुरुषस्तस्य प्रधानत्वादेव परस्य यल्लिङ्गं तत्समुदायस्य भविष्यतीति तं प्रत्यनर्थकं वचनम्। यस्तु पूर्वपदार्थप्रधानस्तस्य पूर्वपदस्य यल्लिङ्गं तस्मिन् प्रसक्त उत्तरपदस्य यल्लिङ्गं तद्विधीयत इति तत्र विध्यर्थमेतद्भवति। "द्वन्द्वस्य तत्पुरुषस्य च" इति। द्वन्द्वतत्पुरुषयोरिति षष्ठीयपरशब्दस्य सम्बन्धिशब्दत्वात्। तथा च मयूरीकुक्कुटावित्यत्र पूर्वपदस्य स्त्रीप्रत्ययो निवर्त्तेत, तत्पुरुषेऽप्यर्थपिप्पलीत्यत्र पूर्वपदस्यापि स्त्रीप्रत्ययः स्यात्; तस्मात षष्ठीयम्। तथा च सति समासार्थस्यायमतिदेशो विज्ञायते। पूर्वपद्सय न प्रतिषिध्यते; नापि विधीयत इति न भवति पूर्वोक्तदोषावसरप्रसङ्गः। समासार्थस्य लिङ्गातिदेशादनुप्रयोगोऽपि समासार्थस्यैव विशेषणमिति तल्लिङ्गमेव भवति। क"कुक्कुटमयूर्याविमे" इति। उपसर्जनह्रस्वत्वं न भवति, उपसर्जनसंज्ञाया अभावात्। उक्तं ह्येतत् प्राक्-- "उपसर्जनमिति महत्याः संज्ञायाः प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत-- अप्रधानमुपसर्जनम्" इति। द्वन्द्वश्च सर्वपदार्थप्रधान इति नास्त्युपसर्जनसंज्ञा। अर्धपिप्पलीत्यादावपि सत्येकविभक्तियोगे

यथा पिप्पल्यादेरुपसर्जनसंज्ञा न भवति, तथोपसर्जनसंज्ञाविधावेव तत्प्रतिपादितम्। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- "तत्पुरुषः" २।४।१९ इत्यनुवर्तमाने पुनस्तत्पुरुषग्रहणस्यैतत् प्रयोजनम्-- तत्पुरुषविशेषस्य परवल्लिङ्गता यथा स्यादिति। तेन द्विगुप्राप्तापन्नलम्पूर्वगतिसमासेषु परवल्लिङ्गता न भवति; अन्यथा यदि सर्वस्थेयं तत्पुरुषस्य परवल्लिङ्गता स्यात् तदा "परकवल्लिङ्गं द्वन्द्वस्य च" इत्येवं ब्राऊयात्। चकाराद्धि प्रकृतस्य तत्पुरुषस्येति विज्ञास्यत एवेति। "पञ्चकपालः" इति। तद्धितार्थे द्विगुः। संस्कृतार्थ उत्पन्नस्याणः "द्विगोर्लुगनपत्ये"४।१।८८ इति लुक्। "प्राप्तजीविकः" इति। प्राप्तापन्ने च द्वितीयया" २।२।४ इति समासः। "अलञ्जीविकः" इति। "पर्यादयो ग्लानाद्यर्थे चतुर्थ्या" (वा। ९३) इति समासः। निष्कौशाम्बिः" इति। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वा।९४) इति॥

बाल-मनोरमा

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ८०२, २।४।२६

परवल्लिङ्गं। "परहव"दिति षष्ठ()न्ताद्वतिः। तदाह--एतयोः परपदस्येवेति। द्व्न्द्वपदमत्र इतरेतरयोगद्वन्द्वपरं, समाहाद्वन्द्वे "स नपुंसक"मित्यस्य तदपवादत्वात्। कुक्कुटमयूर्याविमे इति। अत्र द्वन्द्वे अवयवलिङ्गनाऽनियमे प्राप्ते नियमार्थमिदम्। अर्धपिप्पलीति। "अर्धं नपुंसकम्" इति तत्पुरुषः। अस्यैकदेशिसमासस्य पूर्वपदार्थप्रधानतया पूर्वपदलिङ्गे प्राप्ते उत्तरपदलिङ्गार्थं विधिः। अत्र "द्वन्द्वतत्पुरुषयोः" इति षष्ठ()न्तमर्थपरम्। द्वन्द्वतत्पुरुषार्थयोरित्यर्थः। एवंच "कुक्कुटमयूर्याविमे" इत्यनुप्रयोगेऽपि तदेव लिङ्गम्।

द्विगुप्राप्तेति। "द्विगु" "प्राप्त" "आपन्न" "अलंपूर्व" "गतिसमास"-एतेषु परवल्लिङ्गस्य प्रतिषेधो वक्तव्यः इत्यर्थः। पञ्चस्विति। उत्तरपदस्य नपुंसकत्वात्समासस्य नपुंसकत्वं प्राप्तं, न भवति, किन्तु विशेष्यलिङ्गमेव प्राप्तजीविक इति। अत्रोत्तरपदस्य जीविकाशब्दस्य यल्लिङ्गं तत्समासस्य न भवति। अलंपूर्वस्योदाहरति--अलंकुमारिरिति। अत्र उत्तरपदकुमारीलिङ्गं समासस्य न भवति। नन्वत्र तदर्थादियोगाऽभावान्न चतुर्थीसमासः। "पर्यादयो ग्लानाद्यर्थे" इत्यपि न भवति, तस्य समासस्य नित्यत्वेन "अलं कुमार्यै" इति भाष्ये विग्रहप्रदर्शनानुपपत्तेरित्यत आह--अत एवेति। "एकविभक्ति चे"ति कुमारीशब्दस्योपसर्जनत्वाद्ध्रस्वः। गतिसमासमुदाहरति--निष्कौशाम्बिरिति। अत्र कौशाम्बीशब्दलिङ्गं समासस्य न भवति। यद्यपि निरादिसमास एवायं, न तु गतिसमासः, प्रादिग्रहणमगत्यर्थमित्युक्तेः, तथापि गतिसमासग्रहणं प्रादिसमासोपलक्षणमित्याशयः।

तत्त्व-बोधिनी

तत्पुरुषयोः ७०५, २।४।२६

परवल्लिङ्गम्। इतरेतरयोगे द्वन्द्वोऽत्र गृह्यते न समाहारे द्वन्द्वः, "स नपुंसक"मित्यपवादस्य वक्ष्यमाणत्वात्। सूत्रे "द्वन्द्वतत्पूरुषयो"रिति न सप्तमीद्विवचनम्, तथात्वे द्वन्द्वे तत्पुरुषे च यत्परपदं तद्वल्लिङ्गं पूर्वपदस्यातिदिश्येत, परपदस्य संबन्धिशब्दत्वेन पूर्वपदाक्षेपकत्वात्, ततश्च मयूरी कुक्कुटावित्यत्र पूर्वपदे ईकारनिवृत्तिप्रसङ्गः। कुक्कुटमयूर्यौ, अद्र्धपिप्पलीत्यादौ तु पूर्वपदे स्त्रीप्रत्यय उत्पद्येत। किं तु षष्ठीद्विवचनमित्याशयेनाह--एतयोरिति। द्वन्द्वतत्पुरुषार्थयोरित्यर्थः। एवं चानुप्रयोगेऽपि तदेव लिङ्गं सिद्धम्। उपमेये षष्ठ()भ्युपगमाद्वतिरपि षष्ठ()न्तादेवेत्याशयेनाह--परपदस्येवेति। भाष्ये तु "लिङ्गमशिष्यं, लोकाश्रयत्वाल्लिङ्गस्ये"ति प्रत्याख्यातमिदं सूत्रम्। अ()स्मश्च प्रत्याख्याने तुल्यन्यायत्वाल्लिङ्गनुशासनं सर्वमेव प्रत्याख्यातं, तथापि तत्प्रौढिवादमात्रम्। अन्यथा व्याकरणस्यैव वैयथ्र्याप्रसङ्गात्।

द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः। गतिसमासेष्विति। गतिग्रहणं प्रादीनामुपलक्षणं प्रादीनामुलक्षणं,

मुख्यस्य गतेरसंभवादित्याशयेनोदाहरति---निष्कौशाम्बिरिति। अतन्त्रमिति। अत्र च लिङ्गं "पूर्वव"द्ग्रहणम्। अन्यथा निपातनादेव सिद्धे किं तेनेति भावः। इह समासार्थस्य वा पूर्ववल्लिङ्गातिदेशः, उत्तरपदार्थस्य वा, उभयथाप्य()आवडवौ शोभनावित्यनुप्रयोगेऽपि पुंस्त्वं सिध्यति। ननु समासार्थस्य पुंस्त्वेऽपि स्वाश्रयस्त्रीत्वस्याऽनिवर्तनाट्टापः श्रवणप्रसङ्गः। न चातिदेशवैयथ्र्यं, शसि नत्वप्रवृत्त्या, अनुप्रयोगे पुंलिङ्गत्वलाभेन च तत्सार्थक्यादिति चेदत्राहुः--इहैव निपातनात्, "अ()आवडवपूर्वापराधरोत्तराणा"मित्यत्र निपातनाद्वा टापो निवृत्तिरिति।

---

सूत्रम्

काशिका-वृत्तिः

पूर्ववदश्वबडवौ २।४।२७

अश्वबडवयोर् विभाषएकवद्भावः उक्तः। तत्र एकवद्भावादन्यत्र परवल्लिङ्गतायां प्राप्तायाम् इदम् आरभ्यते। अश्वबडवयोः पूर्ववल्लिङ्गं भवति। अश्वश्च बडवा च अश्वबडवौ। अर्थातिदेशश्च अयम्, न निपातनम्। तत्र द्विवचनमतन्त्रम्। वचनान्तरे ऽपि पूर्ववल्लिङ्गता भवति, अश्वबडवान्, अश्वबडवैः इति।

न्यासः

पूर्ववद�आवडवौ। , २।४।२७

"अ()आवडवयोर्विभाषैकवद्भावो विहितः"इति। "विभाषा वृक्षमृग" २।४।१२ इत्यादिना। "अर्थातिदेशश्चायम्, न निपातनम्" इति। निपातने हि पूर्ववदिति वचनमनर्थकं स्यात्, अ()आवडवावित्येवं ब्राऊयात्। तेन "द्विवचनमतन्त्रम्" इत्यादिनाऽर्थातिदेशस्य फलं दर्शयति। निपातने हि वचनान्तरे पूर्ववल्लिङ्गता न स्यात्॥

बाल-मनोरमा

पूर्वपद�आवडवौ ८०३, २।४।२७

पूर्वपद()आवडवौ। "अ()आश्च बहवा चे"ति द्वन्द्वे परवल्लिङ्गं बाधित्वा पूर्ववल्लिङ्गार्थमिदम्। "अ()आवडवाविति द्वन्द्वः पूर्वपदस्य लिङ्गं लभते" #इत्यर्थे बहुवचने विभक्त्यन्तरे च न स्यादित्यत आह--द्विवचनमतन्त्रमिति। उपलक्षममिदम् द्विवचनं विभक्तिश्चेति द्वयमपि अविवक्षितमित्यर्थः। "पूर्वव"द्ग्रहणमत्र लिङ्गम् अन्यथा निपातनादेव सिद्धे किं तेनेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

हेमन्तशिशिरावहोरात्रे च छन्दसि २।४।२८

पूर्ववतिति वर्तते। हेमन्तशिशिरौ अहोरात्रे इत्येतयोश् छन्दसि विषये पूर्ववल्लिङ्गं भवति। हेमन्तशिशिरावृतूनां प्रीणामि। अहोरात्रे इदं व्रूमः। परवल्लिङ्गतापवादो योगः। अर्थातिदेशश्च अयं न निपातनं, तेन द्विवचनमतन्त्रम्। वचनान्तरे ऽपि पूर्ववल्लिङ्गता भवति। पूर्वपक्षाश्चितयः। अपरपक्षाः पुरीषम्, अहोरात्राणीष्टकाः। छन्दसि इति किम्? दुःखे हेमन्तशिशिरे। अहोरात्राविमौ पुण्यौ। छन्दसि लिङ्गव्यत्यय उक्तः, तस्य एव अयं प्रपञ्चः।

न्यासः

हेमन्तशिशिरावहोरात्रे च च्छन्दसि। , २।४।२८

परवल्लिङ्गतापवादोऽयं योग इति हेमन्तशिशिरावित्यत्र नपुंसकत्वापवादः, परस्य शिशिरशब्दस्य नपुंसकत्वात्। "अहोरात्रे" इति। पुंल्लिङ्गत्वापवादोऽयम्। "रात्राह्नाहाः पुंसि" २।४।२९ इति पुंल्लिङ्गत्वे प्राप्ते छन्दसि लिङ्गव्यत्यय उक्त इति-- "व्यत्ययो बहुलम्" ३।१।८५ इत्यनेन॥

---

सूत्रम्

काशिका-वृत्तिः

रात्राह्नाहाः पुंसि २।४।२९

कृतसमासान्तानां निर्देशः। रात्र अह्न अह इत्येते पुंसि भाष्यन्ते। परवल्लिङ्गतया स्त्रीनपुंसकयोः प्राप्तयोरिदं वचनम्। द्विरात्रः। त्रिरात्रः। चतूरात्रः। पूर्वाह्णः। अपराह्णः। मध्याह्नः। द्व्यहः। त्र्यहः। अनुवाकादयः पुंसीति वक्तव्यम्। अनुवाकः। शंयुवाकः। सूक्तवाकः।

लघु-सिद्धान्त-कौमुदी

रात्राह्नाहाः पुंसि ९६०, २।४।२९

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अहश्च रात्रिश्चाहोरात्रः। सर्वरात्रः। संख्यातरात्रः। (संख्यापूर्वं रात्रं क्लीबम्)। द्विरात्रम्। त्रिरात्रम्॥

न्यासः

रात्राह्नाहाः पुंसि। , २।४।२९

"परवल्लिङ्गतया स्त्रीनपुंसकयोः प्राप्तयोः" इति। रात्रिशब्दस्य स्त्रीलिङ्गत्वादहः शब्दस्य च नपुंसकत्वात्। "द्विरात्रः" इति। द्वयो रात्र्योः समाहारः। "तद्धितार्थ" २।१।५० इत्यादिना समाहारे द्विगुः। "अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः" ५।४।८७ इत्यच् समासान्तः। अत्र हि "अच् प्रत्यन्ववपूर्वात् सामलोम्नः" ५।४।७५ इत्यतोऽजित्यनुवर्त्तते। "पूर्वाह्णः" इति।र अह्नः पूर्वमिति विगृह्य "पूर्वापर" २।२।१ इत्यादिना समासः, "राजाहःसखिभ्यष्टच्" ५।४।९१ इति टच्, "अह्नोऽह्न एतेभ्यः" ५।४।८८ इत्यह्नादेशः; "अह्नोऽदन्तात्" ८।४।७ इति णत्वम्। "द्व्यहः" इति। पूर्ववत् समाहारे द्विगुः। पूर्ववत् टच्। "न संख्यादेः समाहारे" ५।४।८९ इति प्रतिषेधावह्नदेशो न भवति। "अह्नष्टखोरेव" ६।४।१४५ इति टिलोपः। "अनुवाकादयः" इति। केचिदाहः-- बहुव्रीहिरयम्, अनुक्रान्तो वाकोऽनयानेन वाऽनुवाकः। स्त्रीलिङ्गे नपुंसकलिङ्गे च प्राप्ते वचनम्। अन्ये च मन्यन्ते-- योऽयं घञ् स सामर्थ्यात् पुंल्लिङ्गः। तस्य हि नपुंसके भावे क्तोऽपवादः, स्त्रियाञ्च क्तिन्। तेनासौ सामर्थ्यात् पुंस्यवावतिष्ठते। यस्त्वकर्त्तरि कारके विधीयते स पुंसि नपुंसके च वर्त्तते; बाधकाभावात्। स्त्रियान्तु न भवति; यतः "स्त्रियां क्तिन्" ३।३।९४ इत्यकर्त्तरि च कारके विदीयते, स विशेषविहितो घञं बाधते। इह च वचेः "अकर्त्तरि च कारके संज्ञायाम्" ३।३।१९ इति घञ् विहितः। अनूच्यते यत् पदं तदनुवाकः। "कुगतिप्रादयः" २।२।१८ इति समासः। अस्मिन् पक्षे नपुंसके प्राप्ते वचनम्॥

बाल-मनोरमा

रात्राह्नाहाः पुंसि ८०४, २।४।२९

रात्राह्नाहाः। "द्वन्द्वतत्पुरुषयो"रित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणतं रात्रादिभिर्विशेष्यते, तदन्तविधिः। रात्राह्नाहान्तद्वन्द्वतत्पुरुषाः पुंसीत्यर्थः। फलितमाह--एतदन्ताविति। परवल्लिङ्गतापवादः। नन्वहोरात्र इति समाहारद्वन्द्वेः "स नपुंसक"मिति नपुंसकत्वप्रसङ्गः। नच नपुंसकत्वस्याप्ययं पुंस्त्वविधिरपवाद इति वाच्यं, "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा"निति न्यायेनऽनस्य पुंस्त्वविधेः परवल्लिङ्गतामात्रापवादत्वात्।

तस्मादहोरात्राविति इतरेतरद्वन्द्व एवेहोदाहर्तुमुचित इत्यत आह-अनन्तरत्वादिति। अयमिति। "पुंस्त्वविधि"रिति शेषः। अहोरात्र इति। अहश्च रात्रिश्च तयोः समाहार इति द्वन्द्वे परत्वान्नपुंसकत्वम्। अपवादत्वात्परवल्लिङ्गमपि बाधित्वाऽनेन पुंस्त्वम्। "अहःसर्वैकदेशे"त्यच्। पूर्वाह्न। इति अह्नः पूर्वमित्येकदेशिसमासः। "राजाहःसखिभ्यः" इति टच्। "अह्नोऽहः" #इत्यह्नादेशः। परवल्लिङ्गं नपुंसकं च बाधित्वा पुंस्त्वम्। द्व्यह इति द्वयोरह्नोः समाहार इति विग्रहे द्विगुः, टच्, "न सङ्ख्यादेः समाहारे" इत्यह्नादेशनिषेधः। परवल्लिङ्गं बाधित्वा पुंस्त्वम्।
उत्तरपदस्याऽहन्शब्दस्य#आऽकारान्तत्वाऽभावान्न स्त्रीत्वं, समासन्तस्य समासभक्तत्वात्।

सङ्ख्यापूर्वं। लिङ्गानुशासनसूत्रमिदम्। न त्वाष्टाध्यायीस्थं सूत्रं, नापि वार्तिकम्, भाष्ये अदर्शनात्। "रात्राह्नाहाः पुंसी"त्यस्यायमपवादः। द्विरात्रमिति। समाहारद्विगुः। "अहःसर्वैकदेशे"त्यच्। गणरात्रमिति। गणशब्दो बहुपर्यायः, "बहुगणवति" इति सङ्ख्यात्वम्। गणाना रात्रीणां समाहार इति द्विगुः। अच्।

तत्त्व-बोधिनी

रात्राह्नाहाः पुंसि ७०६, २।४।२९

अहोरात्र इति। प्राचा तु अहोरात्रमित्युदाह्मतं, तन्नेति प्रागेवोक्तम्। अत्र वदन्ति--"रात्राह्नाहा-"इत्यनेन रात्रादीनामेव पुंस्त्वं विधीयते। तदन्तस्य तु "परवल्लिङ्ग"मित्येव सिध्यति। अतएव भिन्नविषयत्वात् "विप्रतिषेधे परं कार्य"मिति न प्रवर्तते। एवं च "रात्राह्नाहाः"इति पुंस्त्वाऽप्रवृत्त्या समाहारे "स नपुंसक"मित्येव भवति, परवल्लिङ्गापवादत्वादिति। तन्न। उक्तरीत्या व्यहत्र्यहादावपि नपुंसकत्वप्रसङ्गात्। न चेष्टपत्तिः। द्व्यहस्त्र्यह इति प्राचाप्युदाह्मतत्वेन स्वमूलग्रम्थेन सह विरोधापत्तेः। "ते तु तिं()रशदहोरात्रः"इत्यादिकोशविरोदाच्च। तस्माद्रात्र्याद्यन्तस्यैवायां पुंस्त्वविधिः "द्वन्द्वतत्पुरुषयो"रिति प्रकमणात्, तथा च भिन्नविषयात्वाऽभावात् "रात्राह्नाहाः"इति पुंस्त्व समाहारनपुंसकतां परत्वेन बाधत एव।

सङ्ख्यापूर्व रात्र क्लीबम्।सङ्ख्यापूर्वमिति। अत्र च "अपथपुण्याहौ नपुंसकौ" "सङ्ख्यापूर्वा रात्रिः"इति लिङ्गानुशासनसूत्रं मूलम्। सङ्ख्याग्रहणेषु कृत्रिमाऽकृत्रिमन्यायो न प्रवर्तते "व्यष्टनः सङ्ख्याया"मिति सूत्रेऽशीतिपर्युदासादित्याशयेनोदाहरति---द्विरात्रम् गणरात्रमिति। गणानां बहूनां रात्रीणां बहूनां रात्रीणां समाहार इति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

अपथं नपुंसकम् २।४।३०

अपथशब्दो नपुंसकलिङ्गो भवति। अपथम् इदम्। अपथानि गाहते मूढः। इह कस्मान् न भवति, अपथो देशः, अपथा नगरी? तत्पुरुषः इति वर्तते।

न्यासः

अपथं नपुंसकम्। , २।४।३०

"अपधम्" इति। "पथो विभाषा" ५।४।७२ इति यदा समासान्तप्रतिषेधो नास्ति तदा "ऋक्पूरब्धूपथामानक्षे" ५।४।७४ इत्यकारः समासान्तः। समासान्तनिर्देशाद्यदा समासान्तो नास्ति तदा पुंल्लिङ्गतैव भवति-- अपन्था इति॥

बाल-मनोरमा

अपथं नपुंसकम् ८०५, २।४।३०

अपथं नपुंसकं। न-पन्था इति विग्रहे नञ्समासे नञो नस्य लोपे "ऋक्पूः" इत्यप्रत्यये टिलोपे अपथशब्दः, स नपुंसकमित्यर्थः। परवल्लिङ्गतापवादः। तत्पुरुष इत्येवेति। "परवल्लिङ्ग"मित्यतस्तदनुवृत्तेरिति भावः। द्वन्द्वग्रहणं तु नानुवर्तते, अयोग्यत्वात्। अन्यत्र त्विति। बहुव्रीहावित्यर्थः। अपन्था इति। "पथो विभाषा" इति समासान्तविकल्पः। "पथः संख्याव्ययादेः" इति वक्ष्यमाणवार्तिकेन गतार्थमेवेदं सूत्रम्।

तत्त्व-बोधिनी
अपथं नपुंसकम् ७०७, २।४।३०

अपथं नपुंसकम्। तत्पुरुष इत्येवेति। द्वन्द्व ग्रहणं तु नानुवर्तते, अयोग्यत्वादिति भावः। अपन्था इति। "पथो विभाषा" इति समासान्तविकल्पः। इदं सूत्रं शक्यमकर्तुम्। "पथः सङ्ख्याव्ययादेः"इति वक्ष्यमाणवार्तिकेन गतार्थत्वात्। प्रसङ्गादाह--।

---

सूत्रम्
काशिका-वृत्तिः
अर्धर्चाः पुंसि च २।४।३१

अर्धर्चादयः शब्दाः पुंसि नपुंसके च भाष्यन्ते। अर्धर्चः। अर्धर्चम्। गोमयः। गोमयम्। शब्दरूपाऽश्रया च इयं द्विलिङ्गता क्वचिदर्थभेदेन अपि व्यवतिष्ठते, यथा पद्मशङ्खशब्दौ निधिवचनौ पुंलिङ्गौ, जलजे उभयलिङ्गौ। भूतशब्दः पिशाचे उभयलिङ्गः, क्रियाशब्दस्य अभिधेयवल्लिङ्गम्। सैन्धवशब्दो लवणे उभयलिङ्गः, यौगिकस्य अभिधेयवल्लिङ्गम्। सारशब्द उत्कर्षे पुंलिङ्गः, न्यायादनपेते नपुंसकम्, नैतत् सारम् इति। धर्मः इत्यपूर्वे पुंलिङ्गः, तत्साधने नपुंसकम्। तानि धर्माणि प्रथमान्यासन्। अर्धर्च। गोमय। कषाय। कार्षापण। कुतप। कपाट। शङ्ख। चक्र। गूथ। यूथ। ध्वज। कबन्ध। पद्म। गृह। सरक। कंस। दिवस। यूष। अन्धकार। दण्ड। कमण्डलु। मन्ड। भूत। द्वीप। द्यूत। चक्र। धर्म। कर्मन्। मोदक। शतमान। यान। नख। नखर। चरण। पुच्छ। दाडिम। हिम। रजत। सक्तु। पिधान। सार। पात्र। घृत। सैन्धव। औषध। आढक। चषक। द्रोण। खलीन। पात्रीव। षष्टिक। वार। बान। प्रोथ। कपैत्थ। शुष्क। शील। शुल्ब। सीधु। कवच। रेणु। कपट। सीकर। मुसल। सुवर्ण। यूप। चमस। वर्ण। क्षीर। कर्ष। आकाश। अष्टापद। मङ्गल। निधन। निर्यास। जृम्भ। वृत्त। पुस्त। क्ष्वेडित। शृङ्ग। शृङ्खल। मधु। मूल। मूलक। शराव। शाल। वप्र। विमान। मुख। प्रग्रीव। शूल। वज्र। कर्पट। शिखर। कल्क। नाट। मस्तक। वलय। कुसुम। तृण। पङ्क। कुण्डल। किरीट। अर्बुद। अङ्कुश। तिमिर। आश्रम। भूषण। इल्वस। मुकुल। वसन्त। तडाग। पिटक। विटङ्क। माष। कोश। फलक। दिन। दैवत। पिनाक। समर। स्थाणु। अनीक। उपवास। शाक। कर्पास। चशाल। खण्ड। दर। विटप। रण। बल। मल। मृणाल। हस्त। सूत्र। ताण्डव। गाण्डीव। मण्डप। पटह। सौध। पार्श्व। शरीर। फल। छल। पूर। राष्ट्र। विश्व। अम्बर। कुट्टिम। मण्डल। ककुद। तोमर। तोरण। मञ्चक। पुङ्ख। मध्य। बाल। वल्मीक। वर्ष। वस्त्र। देह। उद्यान। उद्योग। स्नेह। स्वर। सङ्गम। निष्क। क्षेम। शूक। छत्र। पवित्र। यौवन। पानक। मूषिक। वल्कल। कुञ्ज। विहार। लोहित। विषाण। भवन। अरण्य। पुलिन। दृढ। आसन। ऐरावत। शूर्प। तीर्थ। लोमश। तमाल। लोह। दण्डक। शपथ। प्रतिसर। दारु। धनुस्। मान। तङ्क। वितङ्क। मव। सहस्र। ओदन। प्रवाल। शकट। अपराह्ण। नीड। शकल। इति अर्धर्चादिः।
लघु-सिद्धान्त-कौमुदी
अर्धर्चाः पुंसि च ९६७, २।४।३१

अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः। अर्धर्चम्। एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः। सामान्ये नपुंसकम्। मृदु पचति। प्रातः कमनीयम्॥

लघु-सिद्धान्त-कौमुदी

इति तत्पुरुषः ३ ९६७, २।४।३१

लघु-सिद्धान्त-कौमुदी

अथ बहुव्रीहिः ९६७, २।४।३१

न्यासः

अद्र्धर्चाः पुंसि च। , २।४।३१

अद्र्धर्चा इति बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह-- "अद्र्धर्चादयः" इत्यादि। "शब्दरूपाश्रया चेयम्" इति। शब्दरूपमाश्रयो यस्याः सा तथोक्ता। शब्दरूपमाश्रित्यार्थमनपेक्ष्यद्विलिङ्गतेयं विधीयत इत्यर्थः। क्रियाशब्दस्याभिधेयवल्लिङ्गमिति भूतं कुण्डम्, भूता शाटी, भूतो घट इति। यौगिकस्याभिधेयवल्लिङ्गमिति लवणं शाकम्, लवणा यवगूः, लवणः सूपः इति। लवणेन संसृष्टमिति "संसृष्टे" (४।४।क२२) इति ठक्। तस्य "लवणाल्लुक्" ४।४।२४ इति लुक्। अत एव तद्धितार्थयोगे भूतत्वात् अपूर्वशब्दोऽयं धर्माधर्मयोर्वत्र्तते। "तत्साधने" इति। अदृष्टोपार्जनं प्रति यस्याङ्गभावः स तत्साधनमित्यर्थः, स पुनर्यागादिः। कर्मशब्दो नकारान्त एवोभयलिङ्ग इति क्रम कर्मा चेति॥

बाल-मनोरमा

अद्र्धर्चाः पुंसि च ८०६, २।४।३१

अर्धर्चाः। बहुवचनात्तदादीनां ग्रहणमित्याह--अर्धर्चादय इति। अर्धर्चमिति। ऋचोऽर्धमिति विग्रहे "अर्द्धं नपुंसक"मिति समासः। "ऋक्पूः" इति अच्। परवल्लिङ्गं स्त्रीत्वं बाधित्वा पुंनपुंसकत्वविकल्पः।

तत्त्व-बोधिनी

अद्र्धर्चाः पुंसि च ७०८, २।४।३१

अद्र्धर्चा इति। इह केषांचिदर्थभेदेन व्यवस्थेष्यते। सा च व्यवस्था,---मद्यमकरन्दमाक्षिकाणां वाची मधुशब्दो द्विलिङ्गः, चैत्रादिवाची तु पुंलिङ्गः, भूतः पिशैचे द्विलिङ्गः, क्रियावचनस्तु विशेष्येलिङ्ग इत्येवं यथायथं ज्ञेया। "अद्र्धर्चाः पुंसि च " "स नपुंसक"मित्यनयोर्मध्ये "जात्याख्याया"मिति चतुःसूत्र्याः सङ्गतिरिह चिन्त्या। बहूनां वचनं प्रतिपादनमिति व्याख्या नात्फलितोऽत्रातिदेश इत्याशयेनाह--।

---

सूत्रम्

काशिका-वृत्तिः

इदमो ऽन्वादेशे ऽशनुदात्तस् तृतीयाऽअदौ २।४।३२

आदेशः कथनम्। अनवादेशो ऽनुकथनम्। इदमो ऽन्वादेशविषयस्य अशादेशो भवत्यनुदात्तः, तृतीयादौ विभक्तौ परतः। आभ्यां छात्राभ्यं रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। अस्मै छात्राय कम्बलं देहि, अथो ऽस्मै शाटकम् अपि देहि। अस्य छात्रस्य शोभनं शीलम्, अथो ऽस्य प्रभूतं स्वम्। अशादेशवचनं साकच्कार्थम्। इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। नेह पश्चादुच्चारणमात्रम् अन्वादेशः। किं तर्हि? एकस्य एव अभिधेयस्य पूर्वं शब्देन

प्रतिपादितस्य द्वितीयं प्रतिपादनम् अन्वादेशः। तेन इह न भवति, देवदत्तं भोजय, इमं च यज्ञदत्तम् इति।

न्यासः

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ। , २।४।३२

"आदेशः कथनम्" इति। प्रथमतः प्रतिपादनम्, शब्देन। "अनवादेशोऽनुकथम्" इति। पश्चात्प्रतिपादनम्। तच्च याद्दशमिहाभिप्रेतं ताद्दशं पश्चाद्वक्ष्यति। "आभ्यां छात्राभ्याम्" इत्यादि। आदेश एषः। "अथो आभ्याम्" इत्याद्यन्वादेशः एषः। अथोशब्देनात्रान्वादेश उच्यते। ननु च त्यादाद्यत्वे कृते हलि लोपे ७।२।११३ चाथो आभ्यामित्यादिरूपं सिध्यत्येव, तस्मादनुदात्तमेव केवलं विधेयम्, आदेशवचनं त्वनर्थकमित्यत आह-- "आदेशवचनम्" इत्यादि। "अव्ययसर्वनाम्नामकच् प्राक् टेः" ५।३।७१ इत्यकरच्प्रत्यये कृते सत्यपि "अनाप्यकः" ७।२।११२ इत्यधिकारादिद्रूपस्य लोपो नास्तीत्यस्तयादेशवचने रूपं न सिध्यति। ननु च "हलि लोपः" (७।२।११३) इत्यनेन हलादाविद्रूपस्य लोपेऽनेनाजादौ यथा स्यादित्यवेवमर्थं कस्मान्न भवति? नैतदस्ति; सामर्थ्याद्धि हलादावेव भवितव्यम्, तत्र स्मैभावादिषु कृतेषु। तस्मात् साकच्कार्थमादेशवचनम्। साकच्कार्थे चास्मिन्नारब्धे शित्करणं सर्वादशार्थम्; अन्यथा ह्लोऽन्त्स्य स्यात्। प्रयोजनाभावान्न भविष्यतीति चेत्, न; अकारस्य त्वकारवचनं दीर्घादेशनिवृत्त्यर्थं विज्ञायते। अथानुदात्तवचनं किमर्थम्, यावता "ऊडिदम्पदाद्यप्पुमैद्युभ्यः" ६।१।१६५ इति विभक्तेरुदात्तत्वे कृते "आनुदात्तं पदमेकवर्जम्" (६।१।१५८) इति प्रकृतेरनुदात्तत्वं भविष्यति? नैतदस्ति; सविभक्त्यर्थमनुदात्तवचनम्, सविभक्तिकस्यानुदात्तत्वं यथा स्यात्। तेन सर्वानुदात्तमेवाभ्यामिति पदमन्वादेशे भवति। यदि पश्चादुच्चारणमात्रमन्वादेशस्तदेह कस्मान्न भवति-- देवदत्तं भोजय, इमञ्च यज्ञदत्तमिति? अस्ति ह्त्राप्यन्वादेशः, ततश्च "द्वितीयाटौस्स्वेनः" २।४।३४ इत्येनादेशः प्राप्नोतीत्यत आह-- "नेह पश्चादुच्चारणमात्रम्" इत्यादि। "तेनेह न भवति" इति। न ह्त्रैकस्याभिधेयस्य पूर्वं शब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनम्, किं तर्हि? अभिधेयान्तरस्य। तथाहि पूर्वं देवदत्तस्य प्रतिपादनम्, उत्तरकालं यज्ञदत्तस्य। कथं पुनरयं विशेषो लभ्यते, यावतापश्चादुच्चारणमात्रेऽन्वादेशशब्दः प्रसिद्धः, न च सामान्यशब्दः शब्दान्तसन्निधानादिकरमन्तेरण विशेषेऽवतिष्ठते? नैष दोषः; यस्मात् "विभाषा सेना" २।४।२५ इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनैवंविधविषय एवान्वादेशोऽत्र ग्रहीतव्यः, नान्वादेशमात्रम्। तसमाद्विशिष्टस्यान्वादेशस्य ग्रहणं युक्तमिति भावः। यदपि च वक्ष्यति तत्र-- "यत्र किञ्चिद्विधाय" इत्यादि, तदपीममेव न्यायं ह्यदि कृत्वेति बोद्धव्यम्॥

तत्त्व-बोधिनी

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ३१०, २।४।३२

इदमोऽन्वादेशे। नन्विदमोऽनुदात्तमात्पविधावपि हलि लोपेन "आभ्या"मित्यादि समीहितरूपं सिध्यति, "एनयो"रित्यत्र तु विशिष्यैनादेशो विहितः, किमनेनाऽ()आचनेनेत्यत आह--साकच्कार्थमिति। यद्यपीह शित्करणं व्यर्थम्, अकारस्याऽकारविधानसामर्थ्यादेव सर्वादेशासिद्धेः, तथाप्यनुदात्तत्वार्थमेवाऽकारविधानमित्याशङ्का स्यात्तन्निवारणाय शित्करणमित्याहुओः। "अ--अ"इति प्रश्लिष्य निर्देशे त्वनेकाल्वादेव सर्वादेशसिद्धेः सिद्ग्रहणं त्युक्तं शक्यमित्याकरः।

---

सूत्रम्

काशिका-वृत्तिः

एतदस् त्रतसोस् त्रतसौ च अनुदातौ २।४।३३

अन्वादेश अनुदात्त इति वर्तते। एतदो ऽन्वादेशविषयस्य अशादेशो भवति अनुदात्तः त्रतसोः परतः। तौ च अपि त्रतसावनुदात्तौ भवतः। एतस्मिन् ग्रामे सुखं वसामः, अथो अत्र युक्ता अधीमहे। एतस्माच् छात्राच्छन्तो ऽधीष्व, अथो अतो

व्याकरणम् अप्यधीष्व। सर्वानुदात्तं पदं भवति। एतदो ऽशित्यादेशे लभे पुनर् वचनम् अनुदात्तार्थम्।

न्यासः

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ। , २।४।३३

"अथो अत्र" इति। "सप्तम्यास्त्रल्" ५।३।१०। "अथो अतः" इति। "पञ्चम्यास्तसिल्" ५।३।७। "पुनर्वचनमनुदात्तार्थम्" इति। "एतदोऽश्" ५।३।५ इति यः पाञ्चमिकोऽशादेशः स उदात्तः स्यात्। अनुदात्तश्चेष्यत इत्यनुदात्तार्थं वचनम्। अथ त्रतसोरिति किमर्थम्, यावता "त्रतसौ चानुदात्तौ" इति वचनात् तयोरेव निमित्तभावो विज्ञास्यते? नैतदस्ति; अन्वाचयोऽपि विज्ञायेत, यथा-- "कर्त्तुः क्यङ सलोपश्च" ३।१।११ इति। अत्राविशेषेण क्यङ भवति। तथाऽत्राविशेषेण तावदशादेशो भवति। यत्र तु त्रतसौ दृश्येते तत्र तावनुदात्तौ भवतः, तस्मात् तावन्निमितभावार्थं त्रतसोरितिवक्तव्यम्। अथ त्रतसोरनुदात्तत्वं किमर्थम्, यावता लित्स्वर एव तयोरनुदात्तत्वं करिष्यति? नैतदस्ति; न ह्यत्र लित्स्वरोऽस्ति, अनुदात्तस्यादेशस्य विधानात्। ननु च लितस्वरे कृत आदेशस्वरः क्रियते; यद्येवम्, लित्स्वरापवाद आदेशस्वरो विज्ञायेत, न चापवादविषयमनुत्सर्गोऽभिनिविशते? तस्माद्यथा गोष्पदप्रमित्यत्र लिति पूर्वमनुदात्तभावो नास्तीति प्रत्तयस्वर एव भवति; तथेहापि स्यादिति त्रतसोरनुदात्तार्थं वचनम्। ततश्चैतदपि सर्वमनुदात्तं पदं भवति। ताविति वक्तव्ये त्रतसोरिति वचनं स्पष्टार्थम्। गोषपदप्रमिति। "यावति विन्दरजीवोः" ३।४।३०। "चर्मोदयोः पूरेः" ३।४।३१। "वर्षप्रमाण ऊलोपश्चादन्यतरस्याम्" ३।४।३२ इति णमुल्, ऊलोपश्च॥

बाल-मनोरमा

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ १९३७, २।४।३३

एतदस्त्रतसोः। "इदमोऽन्वादेशे" इत्यस्मादन्वादेशे अशनुदात्त इत्यनुवर्तते। तदाह--अन्वादेशेत्यादिना। अतोऽत्रेति। एतच्छब्दात्तसिल्, प्रकृतेरशादेशः। एतदोऽ"न्नित्येव सिद्धेऽनुदात्तार्थं वचनम्। नच लित्स्वरे सति शेषनिघातेन त्रतयसोरनुदात्तत्वं सिद्धमिति शङ्क्यं, लित्स्वरापवादेऽशोऽनुदात्तत्वे कृते लित्स्वराऽप्रास्या प्रत्ययस्वरेण त्रतसोरुदात्तत्वे प्राप्ते तद्विधानार्थत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

द्वितीयाटाओस्स्वेनः २।४।३४

अन्वादेशे ऽनुदात्तः इति वर्तते। द्वितीया टा ओसित्येतेषु परत इदम् एतदोरन्वादेशविषययोः एनशब्द आदेशो आदेशो भवति अनुदात्तः। इदमो मण्डूकप्लुतिन्यायेन अनुवृत्तिः। इमं छात्रं छन्दो ऽध्यापय, अथो एनं व्याकरणमध्यापय। अनेन छात्रेण रात्रिरधीता, अथो एनेनाहरप्यधीतम्। अनयोश्छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्। एतदः खल्वपि एतं छात्रं छन्तो ऽध्यापय, अथो एनं व्याकरणमप्यध्यापय। एतेन छात्रेन रात्रिरधीता, अथो एनेनाहरप्यधीतम्। एतयोश् छात्रयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्। एनदिति नपुंसकैकवचने वक्तव्यम्। प्रक्षालयैनत्। परिवर्तयैनत्। इह कस्मान् न भवति, अयं दण्डो हरानेन, एतमातं ङितं विद्यातिति? यत्र किन्चिद् विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सो ऽन्वादेशः। इह तु वस्तुनिर्देशमात्रं कृत्वा एकम् एव विधानम्।

लघु-सिद्धान्त-कौमुदी

द्वितीयाटौस्स्वेनः २८२, २।४।३४

इदमेतदोरन्वादेशे। किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथा - अनेन

व्याकरणमधीत मेनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वामिति॥ एनम्। एनौ। एनान्। एनेन। एनयोः। एनयोः॥ राजा॥

न्यासः

द्विदीयाटौस्स्वेन।, २।४।३४

"इदमेतदोः" इत्यादि। ननु चानन्तरत्वादेतद एवात्रानुवृत्तिः प्राप्नोति, नेदमः; व्यवहितत्वादित्यत आह-- "मण्()डूकप्लुतिन्यायेन" इत्यादि। "एकमेवेदं विधानम्" इति। अयं दण्ड इत्यनेन दण्डस्य सत्तोपलक्षणमात्रं कृत्वा "हरानेन" इत्यनेनैव हरणक्रियां प्रति दण्डस्य करणभावो निर्दिश्यत इत्येकं विधानम्। "एतमातं ङितं विद्यात्" इत्यत्रापि "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः" (म।भा।१।७१) इतीषदाद्यर्थस्याकारस्य निर्देशामात्रं कृत्वा "एतमातं ङितं विद्यात्" इत्यनेन वेदनक्रियां प्रत्याकारमात्रस्य कर्मभाव एव विधीयत इत्येकमेव विधानम्॥

बाल-मनोरमा

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ , २।४।३४

इदमोऽन्वादेशे। "अन्वादेशे अश" इतिच्छेदः। अन्वादेशे इदमोऽश् स्यात्तृतीयादिविभक्तौ, स चानुदात्त इति स्पष्टोऽर्थः। "आशास्ते यं यजमानोऽसौ। आयुराशास्ते" इति प्रस्तुत्य "तदस्मै देवा राधन्ता"मित्युदाहरणम्। तत् आयुरादि अस्मे यजमानाय देवाः साधयन्त्वित्यर्थः। अत्र अस्मै इत्यादहरणम्। इद-स्मै इति स्थिते प्रकृतेरशादेशे अनुदात्ते सति "अनुदात्तौ सुप्पितौ" इति स्मै इत्यैकारोऽनुदात्तः। तथाच अस्मै इति सर्वानुदात्तः। एवमाभ्यामित्यादावपि हलादावुदाहरणम्। द्वितीयादावचि टौसोरेनादेशस्य विशिष्ट विधानात्। ननु अनुदात्तत्वमेवात्र विधीयतां न त्वशादेशोऽपि। त्यदाद्यत्वे हलि लोपे च अस्मै, आभ्यामित्यादिरूपस्या।ञन्वादेशेऽपि सिद्धेरत आह-अ()आचनं साकच्कार्थमिति। "इमकाभ्यां रात्रावधीतमाभ्यामहरप्यधीत" मित्यत्रान्वादेशे इमकाभ्यामिति न भवति। अत्र अ अ इति प्रश्लिष्टनिर्देशादनेकाल्त्वात्सर्वादेशत्वसिद्धेः शित्करणं न कर्तव्यमिति भाष्ये स्पष्टम्।

बाल-मनोरमा

द्वितीयाटौस्स्वेनः , २।४।३४

द्वितीयाटौस्स्वेनः। द्वितीया च टाश्च ओश्च द्वितीयाटौसः, तेष्विति द्वन्द्वः। "इदमोऽन्वादेशे" इत्यत "इदम" इति, "अन्वादेशे" इति चानुवर्तते। "एतदस्त्रतसोः" इत्यत "एतद" इति च। तदाह--द्वितीयायामित्यादिना। "अनावादेश" शब्दं व्याचष्टे-किञ्चिदिति। विधातुमिति। अपूर्वं बोधयितुमित्यर्थः। अन्वादेशमुदाहृत्य दर्शयति -यथेति। उदाहरणप्रदर्शने यथाशब्द। "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" इत्यत्र तु एनादेशो न, पूर्वार्धस्य यच्छब्दयोगेनानुवादत्वात्। किञ्चित् कार्यं विधातुमुपात्तस्य इत्यत्र च पूर्ववाक्ये यथाकथंचित्तदुपादानं विवक्षितं, न त्विदमैवेत्याग्रह इति भाष्ये स्पष्टम्। इति मान्ताः। अथ णकारान्ताः। गणयतेर्विजिति। "गण सङ्ख्याने" इति चुरादिरदन्तः। ततः सुपूर्वात्स्वार्थे णिच्। अल्लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः। तस्माद्विच्, "अन्येभ्योऽपि दृश्यते" इति वचनाण्णिलोपः, अपृक्तलोपः, ततः सुबुत्पत्तिः, हल्ङ्यादिना सुलोपः। सुगण् इति रूपम्। सुगणौ, सुगण इत्याद्यविकृतमेव। सुपि "ङ्णोः कुक्टुक्शरी"ति टुग्विकल्पः। "चयो द्वितीयाः" इति टस्य ठ इत्यभिप्रेत्याह--सुगण्ठ्सु इति। द्वितीया।ञभावे रूपमाह--सुगण्ट्सु इति। टुगभावे रूपमाह--सुगण्सु इति। सुगाणिति। गणधातोरदन्ताण्णिच्, अल्लोपः। तस्य स्थानिवत्त्वान्नोपधावृद्धिः। तस्मात्क्विप्, णिलोपः अपृक्तलोपः। "अनुनासिकस्य क्विझलो"रिति दीर्घः। सुगाणिति रूपम्। सुगाणौ सुगाण इत्यादि। नच दीर्घे कर्तव्ये णिलोपाऽल्लोपयोः स्थानिवत्त्वं शङ्क्यं, दीर्घविधौ तन्निषेधात् , क्वौ विधिं प्रति तन्निषेधाच्च। इति आन्ताः। अथ नान्ताः। राजन्शब्दे विशेषमाह--परत्वादिति।

हल्ङ्यादिलोपापेक्षया परत्वात्पूर्वमेव "सर्वनामस्थाने चाऽसंबुद्धौ" इति दीर्घः। ततो हल्ङ्यादिलोप इत्यर्थः। नच "विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न्यायात्कथमिह हल्ङ्यादिलोप इति वाच्यं, "पुनः प्रसङ्गविज्ञानात्सिद्ध"मिति। विप्रतिषेधे यद्बाधितं"मित्यस्याऽसार्वत्रिकत्वादिति भावः। नलोप इति। "न लोपः प्रातिपदिकान्तास्ये"ति नकारस्य लोप इत्यर्थः।

तत्त्व-बोधिनी

द्वितीयाटौस्स्वेनः ३११, २।४।३४

द्वितीयाटौस्सु। "इदमोऽन्वादेशे"इत्यतः "इदम"इत्यनुवर्तते, "अन्वादेश"इति च। "एतदस्त्रतसो"रित्यत "एतद"इत्यपि, तदाह--इदमेतदोरेनादेश इत्यादि। "अनुदात्त"इत्यनुवर्तनादेनादेशोऽनुदात्त इति ज्ञेयः। कार्यं विधातुमिति। अपूर्वं बोधयितुमित्यर्थः। ईषदर्थेक्रियायोगे मर्यादाङिविधौ च यः। एतमातं "ङितं विद्या"दित्यत्र तु ईषदर्थादयो न विधीयन्ते किंत्वनूद्यते इति न तत्रैनादेशः। एतेन "नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापये"त्यपि व्याख्यातम्। भीरुत्वस्याऽनुवाद्यकत्वेन विवक्षितत्वात्।इति मान्ताः। सुदाणिति। क्विप्। न च "अनुनासिकस्य क्वी"ति दीर्घे कर्तव्ये अल्लोपणिलोपयोः--स्थानिवद्भावः शङ्क्यः, दीर्घविधौ तन्निषेधात्। क्वौ विधिं प्रति निषेधाच्च। इति णान्ताः।

---

सूत्रम्

काशिका-वृत्तिः

आर्धधातुके २।४।३५

आर्धधातुके इत्यधिकारो ऽयम्, ण्यक्षत्रियाऽर्षञितो यूनि लुगणिञोः २।४।५८ इति यावत्। यदित ऊर्ध्वम् अनुक्रमिष्यमस्तदार्धधातुके वेदितव्यम्। वक्ष्यति हनो वध लिङि २।४।४२ वध्यात्। आर्धधातुके इति किम्? हन्यात्। विषयसप्तमी च इयं, न परसप्तमी। तेन आर्धधातुकविवक्षायाम् आदेशेषु कृतेषु पश्चाद् यथाप्राप्तं प्रत्यया भवन्ति। भव्यम्। प्रवेयम्। आख्येयम्।

लघु-सिद्धान्त-कौमुदी

आर्धधातुके ५६५, २।४।३५

इत्यधिकृत्य॥

न्यासः

आर्धधातुके। , २।४।३५

"दध्यात्" इति। आशिषि लिङ। "लिङाशिषि" ३।४।११६ इत्यार्धधातुकसंज्ञा। "हन्यात्" इति। "विधिनिमन्त्रण" ३।३।१६१ इत्यादिना लिङ। "विषयसप्तमी चेयम्" इति। यदि परसप्तमी स्यात् तदा भव्यमित्यादि न सिद्ध्यति। तथा हि-- हलन्तत्वादस्त्यादीनाम् "ऋहलोर्ण्यत्" ३।१।१२४ इति ण्यति कृते तस्मिन् परतः "अस्तेर्भूः" २।४।५२, "अजेर्व्यघञपोः" २।४।५६ "चक्षिङः ख्याञ्" २।४।५४ इत्येते आदेशाः स्युतः। तत्र द्वयोर्वृद्धौ कृतायां तृतीयस्य युकि कृते भाव्यं प्रवैयमाख्याय्यमित्यनिष्टं रूपं स्यात्। विषयसप्तम्यां त्वस्यामाद्र्धधातुकत्वे विवक्षिते प्रागेव प्रत्ययोत्पत्तेरादेशाः स्युः। ततोऽजन्तत्वात् "अचो यत्" ३।१।९७ इति यति "ईद्यति" ६।४।६५ इतीत्वे कृते सर्वेषां गुणेऽस्त्यादेशस्य "धातोस्तन्निमित्तस्यैव" ६।१।७७ इत्यवादेशे च भव्यं प्रवेयमाख्येयमिति सिद्ध्यति। तस्माद्विषयसप्तमीयम्, न परसप्तमी। कथं पुनर्विषयसप्तमीयं लभ्यते, यावता "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति परिभाषोपस्थानात्

परसप्तम्येव न्याय्या, न विषयसप्तमी? नैतदस्ति; "आर्धधातुके" २।४।३५ इति सामान्यनिर्देशात्, न च सामान्ये पौर्वापर्यमस्ति। ब#उद्ध्या पौर्वापर्यमस्तीति चेत्? नैवम्; एवं हि गौरवं स्यात्। अथ वा-- "अचो यत्" ३।१।९७ इत्यज्ग्रहणं ज्ञापकम्-- विषयसप्तमीयमिति। "पश्चाद्यथाप्राप्तम्" इत्यादि। आदेशेषु कृतेषूत्तरकालं यो यतः प्राप्नोति स ततो भवतीत्यर्थः॥

बाल-मनोरमा

आर्द्धधातुके २६३, २।४।३५

आर्द्धधातुके। इत्यधिकृत्येति। "अदो जग्धि"रित्यादिविधयो वक्ष्यन्ते" इति शेषः। तदधिकारस्थं सूत्रमाह--

---

सूत्रम्

काशिका-वृत्तिः

अदो जग्धिर् ल्यप् ति किति २।४।३६

अदो जग्धिः आदेशो भवति ल्यपि परतः, तकारादौ च किति प्रत्यये। प्रजग्ध्य। विजग्ध्य। जग्धः। जग्धवान्। इकार उच्चारणार्थः, न अनुबन्धः। तेन नुम् न भवति। एवं वच्यादीनाम् अपि। इह कस्मान् न भवति, अन्नम्? अन्नाण्णः ४।४।८५ इति निपातनात्। जग्धौ सिद्धे ऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते। ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्। ति इति किम्? अद्यते। किति इति किम्? अत्तव्यम्।

न्यासः

अदो जग्धिर्ल्यप्ति किति। , २।४।३६

"प्रजग्ध्य" इति। "समानकर्त्तृकयोः पूर्वकाले" ३।४।२१ इति क्त्वा। "कुगतिप्रादयः" २।२।१८ इति समासः। "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ७।१।३७। "जग्धः" इति। "झषस्तथोर्द्धोऽधः" ८।२।४० इति तकारस्य धकारः। "झलां जश् झशि" ८।४।५२ इति जश्त्वम्-- धकारस्य दकारः। "झरो झरि सवर्णे" ८।४।६४ इति लोपः। अथेह "इदितो नुम् धातोः" ७।१।५८ इति नुम् कस्मान्न भवतीत्यत आह-- "इकार उच्चारणार्थः" इति। यथा-- "अद भक्षणे" (धा।पा।१०११) इत्यत्राकार उच्चारणार्थः, तथेहापीकारो वेदितव्यः। अथ ल्डग्रहणं किमर्थम्, ति कितीत्येवं सिद्धम्? न सिध्यति; यस्मात् क्त्वाप्रत्ययस्य परत्वाल्ल्यवादेशः प्राप्नोति, नैतदस्ति; अन्तरङ्गत्वाज्जग्ध्यादेशेन भवितव्यम्। अन्तरङ्गत्वन्तु तस्यैकपदाश्रयत्वात्। ल्यबादेशस्य तु बहिरङ्गत्वम्; समासाश्रयत्वात्; समासस्य चानेकपदाश्रयत्वात्। एवं तर्हि--- जग्धौ सिद्धेऽन्तरङ्गत्वात् ति किति यल्ल्यबुज्यते। (तज्) ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्॥इति। तेन दधातेः, जहातेश्च संपूर्वाद्विपूर्वाच्च क्त्वाप्रत्यये कृते "द्यतिस्यतिमास्थामिति किति" ७।४।४० इत्यतस्ति कितीत्यनुवत्र्तमाने "दधातेर्हिः" ७।४।४२ "जहातेश्च क्त्वि" ७।४।४३ इति हिरादेशो ल्यबादेशं बाधित्वं प्राप्तः। अस्मादेव ज्ञापकाल्ल्यपा बाधितत्वान्न भवति-- संधाय, विहायेति। एवं निर्दाय दुर्दायेति "दो दद् घोः" ७।४।४६ इति ददादेशो न भवति। प्रस्थायेत्यत्र "द्यतिस्यातिमास्थामितित किति" ७।४।४० इतीत्वं न भवति। प्रखन्य प्रखायेति "जनसनखनां सञ्जलोः" ६।४।४२ इति नित्यमात्त्वं न भवति, "ये विभाषा" ६।४।४३ इति विभाषैव भवति। तत्र हि "विह्ननोरनुनासिकस्यात्" ६।४।४१ इत्यत आद्ग्रहणनुवत्र्तते। "प्रक्रम्य" इति "क्रमश्च क्त्वि" ६।४।१८ इति दीर्घत्वं न भवति। तत्र हि "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इत्यतो दीर्घग्रहणम्, "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इत्यतो झल्ग्रहणं क्ङिति चानुवत्र्तते। आपृच्छ्येति "च्छ्वोः शूजनुनासिके च" ६।४।१९ इति शकारो न भवति। प्रदीव्येत्यत्रानेनैव सूत्रेणोठ् न भवति। "हलि च" ८।२।७७ इति दीर्घत्वम्। प्रपठ()एत्यत्र "आर्द्धधातुकस्य" ७।२।३५ इतीड्

न भवति॥

बाल-मनोरमा

अदो जग्धिर्ल्यप्ति किति ८८६, २।४।३६

अदो जग्धिः। धत्वमिति। जघ्ध् त इति स्थिते "झषस्तथो"रिति तकारस्य धकार इत्यर्थः। झरो झरीति। अनेन पाक्षिको धकारलोप इत्यर्थः। आदिकर्मणि क्त इति। व्याख्यातं प्राक्। उदाहरणान्तरविवक्षया पुनरुपन्यासः। प्रकृतः कटं स इति।कर्तुमारब्धवानित्यर्थः। कटस्य कर्मणोऽनभिहितत्वाद्द्वितीया। कर्तुरभिहित्वात्तच्छब्दात्प्रथमा। चकाराद्भावे कर्णणि चेत्युक्तम्। तत्र कर्मण्युदाहरति-- प्रकृतः कटस्तेनेति। प्रक्षीणः स इति। आदिकर्मणि क्तः।

तत्त्व-बोधिनी

अदो जग्धिर्ल्यप्ति किति ७३०, २।४।३६

उच्चारणार्थ इति। इदित्त्वे तु नुम् स्यादिति भावः। घत्वमिति। "झषस्तथो"रित्यनेन। झरो झरीति। अनेन पाक्षिको धलोप इत्यर्थः। इदानीं क्तार्थान्प्रपञ्चयति-- आदिकर्मणि। व्याख्यातम्। प्रकृतः कटमिति। कटं कर्तुमारब्धवानित्यर्थः। "प्र"शब्द आदिकर्मद्योतनार्थः। क्तेनोक्तत्कर्तरि प्रथमा। कुशल इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

लुङ्सनोर् घस्लृ २।४।३७

लुङि सनि च परतो ऽदो घस्लृ आदेशो भवति। लृदित्करणम् अङर्थम्। लुङि अघसत्, अघसताम्, अघसन्। सनि जिघत्सति, जिघत्सतः, जिघत्सन्ति। घस्लृभावे ऽच्युपसङ्ख्यानम्। प्रात्ति इति प्रघसः।

लघु-सिद्धान्त-कौमुदी

लुङ्सनोर्घसॢ ५६०, २।४।३७

अदो घसॢ स्याल्लुङि सनि च। ॡदित्वादङ्। अघसत्। आत्स्यत्॥ हन हिंसागत्योः॥ २॥ हन्ति॥

न्यासः

लुङसनोर्घस्लृ।, २।४।३७

"अघसत्" इति। लृदित्त्वात् पुषादिसूत्रेण 3।१।५५ च्लेरङ्गादेशः। "जिघत्सति" इति। "सः स्याद्र्धधातुके" ७।४।४९ इति सकारस्य तकारः। "घस्लृभावेऽच्युपसंख्यानम्" इति। घस्लृभावे कत्र्तव्येऽचि तस्योपसंख्यानम् = प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्-- उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन घस्लृभावेऽच्यपि भवति। "प्रघसः" इति। पचाद्यच्॥

बाल-मनोरमा

लुङ्?सनोर्घस्लृ २५८, २।४।३७

लुङ्सनोर्घस्लृ। "अदो जग्धिः इत्यतोऽद इत्यनुवर्तते। तदाह--अद इति। लृदित्वस्य प्रयोजनमाह-- लृदित्()त्वादिति। हनधातुरिनिट्। प्रणिहन्तीति। शपो लुक्। नस्याऽनुस्वारपरसवर्णौ। "नेर्गदे"ति णत्वम्।

तत्त्व-बोधिनी

लुङ्?सनोर्घस्लृ २२७, २।४।३७

जिघत्सति। प्रणिहन्तीति। "नेर्गदे"ति णत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

घञपोश् च २।४।३८

घञि अपि च परतः अदो घस्लृ आदेशो भवति। घासः। प्रघसः। उपसर्गे ऽदः ३।३।५९ इत्यप्।

न्यासः

घञपोश्च।, २।४।३८

"घासः" इति। भावे घञ्। "प्रघसः" इति। "उपसर्गेऽदः" ३।३।५९ इत्यप्। "लुङसन्घञप्सु घस्लृ" इत्येकयोगे कत्र्तव्ये योगविभागो वैचित्र्यार्थः॥

तत्त्व-बोधिनी

घञपोश्च १५४४, २।४।३८

व्यद्यते विशेषेण भक्ष्यते इति विघसः = वै()आदेबशिष्टमन्नम्। घासश्चतुष्पदां भक्ष्यम्। "शष्पं बालतृणं घासः"इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि २।४।३९

छन्दसि विषये बहुलम् अदो घस्लृ आदेशो भवति। घस्तां नूनम्। सग्धिश्च मे। न च भवति। आत्तामद्य मद्यतो मेद उद्भृतम्। अन्यतरस्य अंग्रहणम् एव कस्मान् न क्रियते तदेव उत्तरार्थम् अपि भविष्यति? कार्यान्तरार्थं बहुलग्रहणम्। घस्ताम् इत्यत्र उपधालोपो न भवति।

न्यासः

बहुलं छन्दसि।, २।४।३९

"घस्ताम्" इति। लङ, तसस्ताम्, आदादिकत्वाच्छपो लुक्। "बहुलं छन्दस्यामाङ्योगेऽपि" ६।४।७५ इत्यहागमाभावः। अथ वा लुङ्युदाहरणमेतत्। "मन्त्रे घसह्वर" २।४।८० इत्यादिना च्लेर्लुक्। "सग्धिः" इति। स्त्रियां क्तिन्" ३।३।९४। "घसिभसोर्हलि च" ६।४।१०० इत्युपधलोपः। "झलो झलि" ८।२।२६ इति सकारलोपः। अथ तु सिचोऽनेन लोपो विधीयते तदा च्छान्दसी वर्णलोपो द्रष्टव्यः-- यथा इष्कत्र्तारमध्वर इति। पूर्ववत् तकारस्य धकारः। घकारस्य जश्त्वम्()। समाना ग्धिरिति "पूर्वापरप्रथम" २।१।५७ इत्यादिना समासः, "समानस्य च्छन्दस्यमूद्र्धप्रभृकत्युदर्केषु" ६।३।८३ इति सभावः। "अत्ताम्" इति। "झलो झलि" ८।२।२६ इति सिचो लोपः। तसस्ताम्। "खरि च" ८।४।५४ इति दकारस्य तकारः। अथ वा लङ्युदाहरणमेतत्। अथ बहुलग्रहणं किमर्थम्, अन्यतरस्यांग्रहणमेव कस्मान्न क्रियते इत्युच्यते कः पुनरेवं सति गुणे भवतीति पर्यनुयोगमाशङ्क्याह-- "तदेवोत्तरार्थमपि भविष्यति" इति। एतेनेहान्यतरस्यांग्रहणे सत्युत्तरसूत्रेऽन्यतरस्यांग्रहणं न कत्र्तव्यं भवतीतीमं गुणं दर्शयति। तर्हीहैवान्यतरस्यांग्रहणमुत्तरसूत्रेऽनुवर्तिष्यते। यदि

पुनरुत्तरसूत्रे बहुलग्रहणमनुवर्त्तेत तदा किं स्यात्? अन्यदपि किञ्चित कार्यं भवतीत्याशङ्क्येत। क्वचिदन्यदेवेत्येषोऽप्यर्थो हि बहुलग्रहणस्याभीष्ट एव। "घस्तामित्यत्रोपधालोपो न भवति" इति। "घसिभसोर्हलि च" ६।४।१०० इति प्राप्तः। स बहुलग्रहणान्न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

लिट्यन्तरस्याम् २।४।४०

लिटि परतो ऽदो ऽन्यतरस्यां घस्लादेशो भवति। जघास, जक्षतुः, जक्षुः। आद, आदतुः, आदुः।

लघु-सिद्धान्त-कौमुदी

लिट्यन्यतरस्याम् ५५५, २।४।४०

अदो घसॢ वा स्याल्लिटि। जघास। उपधालोपः॥

न्यासः

लिट�न्यतरस्याम्। , २।४।४०

"लिटि परतः" इति। ननु च "आर्धधातुके" २।४।३५ इति वत्र्तते, "आर्धधातुके" इति च विषयसप्तमीयमित्युक्तम्, तदयुक्तं लिटि परत इति वचनम्? नेदमयुक्तम्; आर्धधातुकशब्दस्यार्धधातुकत्वमनेकप्रत्ययसाधारणं सामान्यमर्थः, तेन च पौर्वापर्यं न सम्भवति। तद्धि देशतो वा भवति कालतो वा, सामान्यस्य चादेशत्वात् कालत्वान्नित्यत्वाच्च तेन सह देशकृतं कालकृतञ्च पौर्वापर्यं नोपपद्यते, अतो युक्ता "आर्धधातुके" इति विषयसप्तमी। इह तु "लिटि" इत्यार्धधातुक उपात्तः, सम्भवति चानेन पौर्वापर्यम्। किञ्च-- लिटि रभूते घस्लृ- आदेशे विधीयमाने न किञ्चिदनिष्टमापद्यते। तस्मात् परसप्तम्येवैषा युक्ता। "जक्षतुः" इति। "गमहन" ६।४।९८ इत्यादिनोपधालोपः, "शासिवसिघसीनाञ्च" ८।३।६० इति षत्वम्, "खरि च" ८।४।५४ इति चत्र्वम्। "आद, आदतुः, "आदुः" इति। "अत आदेः" ७।४।७० इत्यभ्यासस्य दीर्घः। ननु च "घस्लृ अदने" (धा।पा।७१५) इत्येतस्य जाघास, जक्षतुः, जक्षुरिति भविष्यति; "अद भक्षणे" (धा।पा।त१०११) इत्यस्य आद, आदतुः, आदुरिति; अस्ति घसिः प्रकृत्यन्तरम्, "सृघस्यदः क्मरच्" ३।२।१६० इति क्मरज्विधानात्, तत् कथमिह लिटि विकल्पविधानम्? घसेः प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थम्। तेन तस्य सार्वधातुक आर्धधातुके च यत्र लिङ्गं नास्ति वचनञ्च, तत्र प्रयोगो न भवति॥

बाल-मनोरमा

लिट�न्यतरस्याम् २५५, २।४।४०

लिट()न्यतरस्याम्। "अदो जग्धि" रित्यतोऽद इति, "लुङ्सनोर्घस्लृ" इत्यतो घस्लृ इति चानुवर्तते। तदाह--अद इति। आदेशे लृकार इत्। घसादेशोऽत्राऽनिट्। जघासेति। अकित्त्वात् "गमहने"त्युपधालोपो नेति भावः। जघस् अतुसिति स्थिते आह--गमहनेत्युपधालोप इति। "असंयोगा"दिति कित्वादिति भावः। जघ्()स् अतुसिति स्थिते घकारस्य चर्त्वं वक्ष्यन्नुपधालोपस्य स्थानिवत्त्वमाशङ्क्याह-- तस्येति। उपधालोपस्येत्यर्थः। जघ्()स् अतुसिति स्थिते सकारस्य आदेशप्रत्यययावयवत्वाऽभावादाह-- शासीति। थलितु क्रादिनियमान्नित्यमिट्। "उपदेशेऽत्वतः" इति निषेधस्य तासौ नित्याऽनिड्विषयत्वात्। रघस् तु तासौ न विद्यत एव, कुतस्तस्य तासावनिट्कत्वम्। "यस्तासावस्ति अनिट् चे"ति हि भाष्यम्। तदाह--घसेस्तासाविति। जघसिथेति। जक्षयुः जक्ष। जघासजघस जक्षिव जक्षिम। घसादेशाऽभावपक्षे त्वाह-- आदेति। थलि भारद्वाजनियमादिड्विकल्पे प्राप्ते इडत्यर्तीति। आदिथेति। आदथुः आद। आद आदिव आदिम। अत्ता।

अत्स्यतीति। अनिट्। दस्य तः। अत्तु अत्तात् अत्ताम् अदन्तु। अद्--हि इति स्थिते "झयो होऽन्यतरस्या"मिति हकारस्य पूर्वसवर्णविकल्पेन धकारविकल्पे प्राप्ते--

---

सूत्रम्

काशिका-वृत्तिः

वेञो वयिः २।४।४१

लिट्यन्यतरस्याम् इति वर्तते। वेञो वयिः आदेशो भवति अन्यत्रस्यां लिटि परतः। इकार उच्चारणार्थः। उवाय, ऊयतुः, ऊयुः। पक्षे ऊवतुः, ऊवुः। लिटि वयो यः ६।१।३७ इति यकारस्य सम्प्रसारणं प्रतिषिध्यते। वश्च अन्यतरस्यां किति ६।१।३८ इति वकारो विधीयते ववौ, ववतुः, ववुः। वेञः ६।१।३९ इति सम्प्रसारणं न भवति।

लघु-सिद्धान्त-कौमुदी

हनो वध लिङि ५६६, २।४।४१

न्यासः

वेञो वयिः।, २।४।४१

"इकार उच्चारणार्थः" इति। नानुबन्धः। तेन नुम् न भवतीति भावः। "उवाय" इति। "लिट()भ्यासस्योभयेषाम्" ६।१।१७ इति सम्प्रसारणम्। "ऊयतुः, ऊयुःक" इत्यत्रापि ग्रहादिसूत्रेण ६।१।१६ सम्प्रसारणम्। अथ यकारस्य सम्प्रसारणं कस्मान्न भवतीत्याह-- "लिटि वयो यः" इत्यादि। "वेञ इति सम्प्रसारणं न भवति" इति। वच्यादिसूत्रेण प्राप्तम् "वेञः" ६।१।३९ इति प्रतिषेधान्न भवति। तत्र हि "न सम्प्रसारणे सम्प्रसारणम्" ६।१।३६ इत्यतो नेति वत्र्तते। उवाय इत्यादि रूपं वयेरात्मनेपदित्वान्न सिद्ध्यतीति सूत्रारम्भः॥

---

सूत्रम्

काशिका-वृत्तिः

हनो वध लिङि २।४।४२

हन्तेर् धातोः वध इत्ययम् आदेशो भवति लिङि परत आर्धधातुके। वध्यात्, वध्यास्ताम्, वध्यासुः। अकारान्तश्च अयम् आदेशः। तत्र अकारस्य लोपो भवति। तस्य स्थानिवद्भावादवधीतिति हलन्तलक्षना वृद्धिः न भवति।

न्यासः

हनो वध लिङि।, २।४।४२

"अकारान्तश्चायमादेशः" इति। कुत एतत्? शैलीयमाचार्यस्य यत्रेह प्रकरणे व्यञ्जनान्त आदेशः, तत्रोच्चारणार्थमिकारं करोति, यथा--जग्धिरित्यादौ। तस्मादिकारान्ताकरणादकारान्तोऽयमादेश इति विज्ञायते। "हलन्तलक्षणा" इति। "वदव्रजहलन्तस्याचः" ७।२।३ इत्यनेन या वृद्धिर्विधीयते सा हलन्तलक्षणा।

बाल-मनोरमा

हनो वध लिङि २६४, २।४।४२

हनो वध। "वधे"ति लुप्तप्रथमाकम्। हनो वधादेशः स्यादाद्र्धधातुके लिङीत्र्थः।

तत्त्व-बोधिनी

संज्ञायाम् १६२१, २।४।४२

संज्ञायाम्। अनधिकरणार्थ आरम्भः।

---

सूत्रम्

काशिका-वृत्तिः

लुङि च २।४।४३

लुङि च परतः हनो वध इत्ययम् आदेशो भवति। अवधीत्, अवधीष्टाम्, अवधिषुः। योगविभाग उत्तरार्थः। आत्मनेपदेषु लुङि विकल्पो यथा स्याल् लिङि मा भूत्।

लघु-सिद्धान्त-कौमुदी

लुङि च ५६७, २।४।४३

वधादेशोऽदन्तः। अर्धधातुके इति विषयसप्तमी, तेन आर्धधातुकोपदेशे अकारान्तत्वादतो लोपः। वध्यात्। वध्यास्ताम्। आदेशस्यानेकाच्त्वादेकाच इतीण्निषेधाभावादिट्॥आतो हलादेः' इति वृद्धौ प्राप्तायाम् ----।

न्यासः

लुङि च। , २।४।४३

"आत्मनेपदेषु लुङि विकल्पो यथा स्याल्लुङि मा भूत्" इति। अनेन योगविभागस्योत्तरार्थतां दर्शयति। एकयोगे हि सति लिङोऽप्युत्तरत्रानुवृत्तेस्तत्राप्यात्मनेपदेषु विकल्पः स्यात्॥

बाल-मनोरमा

लुङि च २६५, २।४।४३

लुङि च। हनो वधादेशः स्याल्लुङीत्यर्थः स्पष्टः। वधादेशोऽदन्त इति। धकारादकारो न सुखोच्चारमार्थ इति भावः। तत्प्रयोजनं तु अनुपदमेव अवधीदित्यत्र वक्ष्यते। ननु आशीर्लिङि हन्यादिति स्थिते आद्र्धधातुके परे कृतस्य वधादेशस्य आद्र्धधातुकोपदेशे अकारान्तत्वाऽभावात्कथं वध्यादित्यत्र अल्लोप इत्यत आह-- विषयसप्तमीति। तथा च आद्र्धधातुके विवक्षिते तत्प्रवृत्तेः प्रागेव वधादेशे कृते आद्र्धधातुकप्रवृत्तिरिति फलितम्। ततश्च आद्र्धधातुकोपदेशे वधादेशस्य अकारान्तत्वादल्लोपो निर्बाधः। तदाह--तेनेति। अवधीदिति। सिचि अल्लोपे कृते वधादेशस्य धकारान्ततया एकाच्त्वेऽप्यादेशोपदेशेऽनेकाच्त्वेन "एकाच उपदेशे" इति निषेधाऽभावात्सिच् इट्। "अतो हलादे"रिति वृद्धिस्तु न भवति, "अचः परस्मिन्नि" त्यल्लोपस्य स्थानिवत्त्वात्। एतदर्थमेव हि वधादेशस्य अदन्तत्वमाश्रितम्। स्वरितेत इति। उभयपदिन इति फलितम्। द्विष अप्रीताविति। अनिट्। द्वेष्टीति। पित्त्वेन ङित्त्वाऽभावाल्लघूपधगुण इति भावः। द्विष्टः द्विषन्ति। द्वेक्षि द्विष्ठः द्विष्ठ। द्वेष्मि द्विष्वः द्विष्मः। तङि उदाहरति-- द्विष्टे इति। ङित्वान्न गुणः। द्विषाते द्विषते। द्विक्षे द्विषाथे द्विड्ढ्वे। द्विषे द्विष्वहे द्विष्महे। षढोरिति षस्य कत्वं मत्वा आह-- द्वेक्ष्यतीति। द्विड्ढीति। हेर्धिः, षस्य जश्त्वेन डः, ष्टुत्वेन ढः। द्विष्टात्,द्विष्टम्, द्विष्ट। द्वेषाणीति। आटः पित्त्वेन ङित्त्वाऽभावाद्गुणः, षात्परत्वाण्णत्वम्। द्वेषाव द्वेषाम। द्विष्टाम् द्विषाताम् द्विषताम्। द्विक्ष्व द्विषाथाम् द्विड्ढ्वम्। द्वैषे इति। आटः पित्त्वेन ङित्त्वाऽभावाद्गुण इति भावः। अद्वेडिति। लङस्तिप्। गुणः। इकारलोपः। हल्ङ्यादिलोपः। "वाऽवसाने" इति "झलां ज" शिति च चर्त्वजश्त्वे इति भावः। अद्विष्टाम्।

तत्त्व-बोधिनी

लुङि च २३१, २।४।४३

वधादेशोऽदन्त इति। तेन आदेशोपदेशेऽनेकाच्त्वादवधीदित्यत्र "एकाचः" इतीण्निषेधाऽप्रवृत्ताविडादौसिचि "अतो हलादे"रिति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्त्वान्नेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

आत्मनेपदेष्वन्यतरस्याम् २।४।४४

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। आत्मनेपदेषु परतो हनो लुङ्यन्यतरस्यां वध इत्ययमादेशो भवति। आवधिष्ट, आवधिषाताम्, आवधिषत। न च भवति। आहत, आहसाताम्, आहसत।

न्यासः

आत्मनेपदेष्वन्यतरस्याम्। , २।४।४४

"आवधिष्ट" इति। "आङो यमहनः" १।३।२८ इत्यात्मनेपदम्। "आफधिषत" इति। "आत्मनेपदेष्वनतः" ७।१।५ इत्यवादेशः। "आहत" इति। "हनः सिच्" १।२।१४ इति कित्त्वम्, "अनुदात्तोपदेश" ६।४।३७ इत्यादिनाऽनुनासिकलोपः, "ह्रस्वादङ्गात्" ८।२।२७ इति सिचो लोपः॥

तत्त्व-बोधिनी

आत्मनेपदेष्वन्यतस्याम् ४४५, २।४।४४

आत्मनेपदेष्विति। "तङी"त्येव सुवचम्। "समो गम्यृच्छिस्वरत्यर्तिविदिभ्यः" इति वृत्तिस्थं पाठमुपेक्ष्य भाष्यर्थं पाठमनुसरति--समोगम्यृच्छिभ्यामिति।

---

सूत्रम्

काशिका-वृत्तिः

इणो गा लुङि २।४।४५

इणः गा इत्ययम् आवेशो भवति लुङि परतः। अगात्, अगाताम्, अगुः। लुङि इति वर्तमाने पुनर् लुङ्ग्रहणम् आत्मनेपदेष्वन्यतरस्याम् २।४।४४ इत्येतन् मा भूत्। इह त्वविशेषेण नित्यं च भवति। अगात्। अगायि भवता। इण्वदिक इत वक्तव्यम्। अध्यगात्, अध्यगाताम्, अध्यगुः।

लघु-सिद्धान्त-कौमुदी

इणो गा लुङि ५८५, २।४।४५

गातिस्थेति सिचो लुक्। अगात्। ऐष्यत्॥ शीङ् स्वप्ने॥ १९॥

न्यासः

इणो गा लुङि। , २।४।४५

"अगात्" इति। "गतिस्था" २।४।७७ इत्यादिना सिचो लुक्। "अगुः" इति। "आतः" ३।४।११० इति झेर्जुस, "उस्यपदान्तात्" ६।१।९३ इति पररूपत्वम्। "लुङीति वत्र्तमाने" इत्यादि। "लुङि च" २।४।४३ इत्योत

लुङ्गर्हणेऽनुवर्त्तमाने यत्पुनः लुङ्ग्रहणं कृतं तस्यैततप्रयोजनम्-- परस्मैपदेष्वपि यथा स्यात्। नित्यञ्चात्मनेपदेषु। एतेनैतद्दर्शयति-- पूर्वकं हि लुङ्ग्रहणमात्मनेपदग्रहणेनान्यतरस्याग्रहणेन च सम्बद्धम्, अतस्तदनुवृत्तौ तयोरप्यनुवृत्तिः स्यात्। तथा चात्मनेपदष्वेव विकल्पेनादेशः स्यात्। तस्मादविशेषेण, नित्यञ्च यथा स्यादित्येवमर्थं पुनर्लुङ्ग्रहणं क्रियते। "अगायि" इति। "चिण् भावकर्मणोः" ३।१।६६ इति चिण्। "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्। "चिणो लुक्"६।४।१०४ इति तकारस्य लुक्। "इण्वदिक इति वक्तव्यम्" इति। यथेणो गादेशो लुङि भवति, तथा "इक् स्मरणे" (धा।पा।१०४७) इत्यस्यापि भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "बहुलं छन्दसि" २।४।३९ इत्यतो बहुलग्रहणमनुवर्त्तते मण्डूकप्लुतिन्यायेन। तेनेकोऽपि लुङि गादेशो भविष्यतीति॥

बाल-मनोरमा

इणो गा लुङि २८९, २।४।४५

इणो गा। इण्धातोर्गा इत्यादेश स्याल्लुङीति सूत्रार्थः स्पष्टः। अगा स् त् इति स्थिते आह-- गातिस्थेतीति। लृङि ऐष्यते। इङ् अध्ययने इति। अधिरुपरिभावे। "उपरिभावश्च पठने नियमपूर्वकत्व"मिति भूवादिसूत्रे भाष्ये स्पष्टम्। नित्यमधिपूर्व इति। धातुपाठे वचनमिदम्। अधीते इत्यत्र धातुरुपसर्ग न व्यभिचरतीति भूवादिसूत्रे भाष्ये। अधीते इति। "सार्वधातुकमपि"दिति ङित्त्वाद्गुणनिषेध सवर्णदीर्घः। अजादौ तु इयङ्।तदाह--अधीयाते अधीयते इति। अधीषे अधीयाथे अधीध्वे। अधीये अधीवहे अधीमहे।

---

सूत्रम्

काशिका-वृत्तिः

णौ गमिरबोधने २।४।४६

णौ परतः इणो ऽबोधनार्थस्य गमिरादेशो भवति। इकार उच्चारणार्थः। गमयति, गमयतः, गमयन्ति। अबोधने इति किम्? प्रत्याययति। इण्वदिक इत्येव, अधिगमयति।

न्यासः

णौ गमिरबोधने। , २।४।४६

"गमयति" इति। "जनीजृ()ष्क्नसुरञ्जोऽमन्ताश्च" (धा।पा।ग।सू।८१७) इति मित्त्वात् ह्रस्वत्वम्॥

बाल-मनोरमा

णौ गमिरबोधने १६३९, २।४।४६

णौ गमिरबोधने। "इणो गा लुङी"त्यत इण इत्यनुवर्तते। तदाह --इणो गमिरिति। मकारादिकार उच्चारणार्थः। गमयतीति। प्रापयतीत्यर्थः। प्रत्याययतीति। बोधयतीत्यर्थः। लुङि- प्रत्यायियत्। इणो णिचि "इणो य"णिति यणं बाधित्वा परत्वाद्वृद्धावायादेशो आय् इ अ त् इति स्थिते "यी"त्यस्य द्वित्वम्। न च द्वित्वे कार्ये णावजादेशस्य निषिद्धत्वाद्वृद्धेर्निषेधः शङ्क्यः, "अजादेर्द्वितीयस्य" इति णिचो द्वित्वे उत्तरखण्डे अवर्णाऽभावात्। "इक स्मरणे" इत्यस्य इण्वत्त्वमुक्तं स्मारयति-- इण्वदिक इति।अधिगमयतीति। स्मारयतीत्यर्थः। हन्तेर्ञिति णिति च तकारादेशमुक्तं णौ स्मारयति-- हनस्तोऽतचिण्णलोरिति। कुत्वमिति। "हस्ये"ति शेषः। उपधावृदिं()ध मत्वाह-- घातयतीति। लुङि अजीघतत्। ईर्ष्ययतीति। ईर्ष्यतेर्णौ रूपम्। वक्तव्यमिति। "द्वित्व"मिति शेषः। इति वाऽर्थ इति। "न न्द्राः" इति सूत्रभाष्ये स्पष्टमिदम्। आद्ये इति। "तृतीयस्य व्यञ्जनस्ये"ति पक्षे इत्यर्थः। षकारस्येति। अन्यथा इर्ष्य् इ अ त् इति स्थिते "न न्द्राः" इति रेफं वर्जयित्वा षकारसहितस्य "ष्यि" इत्यस्य द्वित्वं स्यात्। ततश्च उत्तरखण्डे णिलोपे ऐर्षिष्यदिति स्यात्।

ऐष्र्य्यदितीष्टं न स्यात्। अतस्तृतीयव्यञ्जनस्येत्युक्तम्। एवं च यकारद्वित्वे णिलोपे संयुक्तद्वियकारमिष्टं सिध्यतीत्यर्थः। द्वितीये इति। "तृतीयैकाच"इति व्याख्याने इत्यर्थः। सन्नन्ते प्रवर्तते इति। "उक्तवार्तिक"मिति शेषः। सनि इटि ईर्ष्य् इस इति स्थिते ईर्ष्य् इति प्रथमैकाच्, "ष्यिस्" इति द्वितीयैकाच्" स इति तृतीयैकाजिति स्थितिः। तत्र तृतीयैकाचः संभवात्तस्य द्वित्वविधिः। अन्यथा "अजादेर्द्वितीयस्ये"ति स्यादिति भाव)। ऐष्र्य्यदिति। यकारमात्रस्य द्वत्वे णिलोपे संयुक्ताद्वियकारकं रूपम्ऽथ द्वितीयव्याख्यायां रूपमाह-- ऐर्षिष्यदिति। तदुपपादयति-- द्वितीयव्याख्यायामिति। ण्यन्ताच्चङि ईर्ष्य् इ अ त् इति स्थिते "न न्द्राः" इति निषेधाद्रेफं वर्जयित्वा "अजादेर्द्वितीयस्ये"ति "ष्यि" इत्यस्य द्वित्वं न तु यकारमात्रस्य, प्रथमव्याख्याने एव तृतीयव्यञ्जनस्येत्युक्तेः। तत्र "ष्यि" इत्यस्य द्वित्वे कृतेऽपि अभ्यासे षकारएव हल् इकारशिरस्कः श्रूयते, न तु यकारोऽपीत्यर्थः। कुत इत्यत आह-- हलादिशेषादिति। नतु तृतीयस्यैकाच द्वितीयव्याख्यायामिह द्वितीयस्यैकाचः कथं द्वित्वमित्यत आह-- द्वित्वं तु द्वितीयस्यैवेति। "एकाच" इति शेषः। कुत इत्यत आह-- तृतीयाभावेनेति। ईर्ष्य् इ अ त् इत्यत्र ईर्ष्य् इति प्रथमैकाच्, ष्यि इति द्वितीयैकाच् , न तु चङि परे तृतीयैकाजस्ति। अतोऽत्र "तृतीयैकाच" इति वार्तिकं न प्रवर्तते। तस्माद्द्वितीयस्यैव एकाचो द्वित्वमित्यर्थः। एवं च "तृतीयस्यैकाच" इति वार्तिकं सन्नन्त एव प्रवर्तते। ईष्र्यतेरामः सत्त्वेन ततः परस्यलिटोऽभावादिति बोध्यम्। ननु "प्रार्थयन्ति शयनोत्थितं प्रियाः" इति माघकाव्ये प्रार्थयन्तीति न चौरादिकस्वार्थिकणिजन्तं, तस्याऽऽगर्वीयतया आत्मनेपदप्रसङ्गात्। नापिहेतुमण्ण्यन्तं ,स्वाभीष्टं याचते इत्यर्थे तदसंभवात्। नहि प्रयोजकव्यापाराऽभावे तत्प्रवृत्तिरस्तीत्यत आह-- निवृत्तेति। निवृत्तं प्रेषणं यस्मात् स निवृत्तप्रेषमः। संप्रति अविवक्षितप्रेषण इत्यर्थः। त्समाद्धातोर्भूतपूर्वगत्या प्रेषणमादाय हेतुमण्णौ कृते शुद्धेन णिज्विहीनेन धातुना तुल्योऽर्थः प्रतीयते इत्यर्थः। तदुक्तं--"निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते"इति। इदं च "णेरणौ" इति सूत्रे भाष्ये स्पष्टम्।

॥ इति बालमनोरमायाम् हेतुमण्णिचप्रक्रिया॥

अथ पाञ्चमिकास्तत्र छयद्विधिः।

---------------------

तत्त्व-बोधिनी
णौ गमिरबोधने १३७०, २।४।४६

प्रत्याययतीति। प्रतिपूर्वस्येणो ज्ञानार्थता। लुङि-- प्रत्यायियत्। इह इणो णिचि कृते "इणो य"णिति यणं बाधित्वा परत्वाद्वृद्धिः। न च "ओः पुयण्जी"ति ज्ञापकात्पूर्वं द्वित्वं, पश्चाद्वृद्धिरिति शङ्क्यम्, "अजादेर्द्वितीयस्ये"ति णिचो द्वित्वेऽब्यासोत्तरखण्डस्याऽवर्णपरत्वाऽभावात्। इति वाऽर्थ इति। व्याख्यानद्वयमप्याकरारूढमिति भावः।

* ईष्र्यतेस्तृतीयस्येति वक्तव्यम्। षकारस्येति। रेफस्य तु "न न्द्राः" इत्यनेन निषेधादिति भावः। द्वितीये त्विति। "तृतीयस्यैकाच " इति पक्षे। सन्नन्ते प्रवर्तत इति। वचनसामथ्र्यादिति भावः। ऐर्ष्यियदिति। "तृतीयव्यञ्जनस्ये"ति पक्षे इदमुदाहरणम्। "ऐर्षिष्य"दिति रूपस्याऽसाधुत्वमाशङ्क्योपपादयति-- द्वितीयव्याख्यायामित्यादिना। द्वितीयस्यैवेति। "एकाच" इति शेषः। अप्रवृत्तेरिति। किंतु सन्नन्त एव प्रवर्तते। तत्र ह्ननुपदमीर्ष्यियिषतीत्युदाहरिष्यति। "अर्थ उपयाच्ञाया"मित्यस्य आगर्वीयत्वादात्मनेपदेन भाव्यमिति "प्रार्थयन्ती"ति माघकाव्यादिप्रयोगोऽसाधुरित्याशङ्क्य तत्समर्थनायाह-- निवृत्तप्रेषणादिति। उक्तं च-- "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इति। तेनेत्यादि। "प्रार्थना कुर्वन्ती" ति विवक्षितार्थे प्रयोगः सिद्ध इति भावः। केचित्तु परस्मैपदसिद्ध्यर्थं-- प्रार्थनं प्रार्थः, तं कुर्वन्ति प्रार्थयन्तीति वयाचक्षते, तदसत्। धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षिते उपसर्गाणां पृथक्करमस्य वक्ष्यमाणतया "अर्थवेदे"

त्यापुगागमस्य दुर्वारत्वात्। इति ण्यन्तप्रक्रिया॥

---

सूत्रम्

काशिका-वृत्तिः

सनि च २।४।४७

सनि परतः इणो ऽबोधनार्थस्य गमिरादेशो भवति। जिगमिषति, जिगमिषतः, जिगमिषन्ति। अबोधने इत्येव, अर्थान् प्रतीषिषति। इण्वदिक इत्येव, अधिजिगमिषति। योगविभाग उत्तरार्थः। इङश्च २।४।४८ इति सन्येव यथा स्यात्।

न्यासः

सनि च। , २।४।४७

"जिगमिषति" इति। "गमेरिट् परस्मैपदेषु" ७।२।५८ इतीट्। "प्रतीषिषति" इति। "अजादेर्द्वितीयस्य" ६।१।२ इति "सन्यङोः" ६।१।९ इत्यनेन स इत्यस्य द्वर्वचनम्। "सन्यतः" ७।४।७९ इतीत्त्वम्। उपसर्गेकारस्य धातोरिकारेण सह "अकः सवर्णे दीर्घः" ६।१।९७। "इङश्च" २।४।४८ इत्यादिना योगविभागस्योत्तरार्थतां दर्शयति। एकयोगे हि णेरप्युत्तरत्रानुवृत्तिः स्यात्, ततश्च तत्राप्ययमादेशः प्रसज्येत॥

बाल-मनोरमा

सनि च ४४२, २।४।४७

सनि च। "इणो गा लुङी"त्यत इण इति, "णौ गमिरबोधने" इत्यतो "गमिरबोधने" इति चानुवर्तते। तदाह-- इणो गमिरित्यादि। जिगमिषतीति। "गमे"रिति इट्। अत्र "अज्झनगमा"मिति दीर्घो स्थिते "अजादेर्द्वितीयस्ये"ति सनो द्वित्वे अभ्यासेत्त्वम्। प्रतिना सवर्णदीर्घे सकारद्वयस्यापि षत्वमिति भावः। "इक स्मरणे" इत्यस्याह-- इण्वदिक इति। अनेन वार्तिकेन इक्धातुरिण्वद्भवतीत्यर्थः। ततस्च "सनि चे"ति गमिरादेश इति भावः। कर्मणि तङिति। इण्धातोरिग्धातोश्च सन्नन्तात्कर्मणि लटस्तङित्र्थः। "भावकर्मणो"रित्यनेनेति भावः। परस्मैपदेष्विति। "गमेरिट्परस्मैपदेषु" इत्युक्तेस्तङि नेडित्यर्थः। झलादाविति। "अज्झने"ति झलादौ सनि वहितो दीर्घ इत्यर्थः। जिगांस्यते इति। गन्तुमिष्यते इत्यर्थः। इणो रूपम्। अधिजिगांस्यते इति। स्मर्तुमिष्यत इत्यर्थः। इको रूपम्। जिगंस्यते इति। गम्लृधातोः सन्नन्तात्कर्मणि तङि रूपम्। गमेरजादेशत्वाऽभावान्न दीर्घः।

तत्त्व-बोधिनी

सनि च ३८६, २।४।४७

सनि च। "णौ गमिरबोधने"इत्यतोऽबोधन इत्यनुवर्तते। प्रतीषिषतीति।
तक्रकौण्डिन्यन्यायस्याऽनित्यत्वात्सन्नूपस्याभ्यासस्येत्वम्। अनित्यत्वे लिङ्गं तु "नित्यं कौटिल्ये गतौ"इत्यत्र नित्यग्रहणमिति वक्ष्यते। संजिगंसते इति। "समो गम्यृच्छिभ्या"मिति तङ् "पूर्ववत्सनः" इति सन्नन्तादपि भवति।

---

सूत्रम्

काशिका-वृत्तिः

इङश् च २।४।४८

इङश्च सनि परतो गमिरादेशो भवति। अधिजिगांसते, अधिजिगांसेते, अधिजिगांसन्ते।

न्यासः

इङश्च। , २।४।४८

"अधिजिगांसते" इति। "पूर्ववत् सनः" १।३।६२ इत्यात्मनेपदम्। "अज्झनगमां सनि" ६।४।१६ इति दीर्घः॥

बाल-मनोरमा

इङश्च ४४३, २।४।४८

इङश्च। गमिः स्यात्सनीति। "णौ गमि"रित्यतः, "सनि चे"त्यतश्च तदनुवृत्तेरिति भावः। इङो ङित्त्वात् "पूर्वक्त्सनः" इति तङ्। परस्मैपदेष्वित्युक्तेर्नेट्। "अज्झने"ति दीर्घ इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

गाङ् लिटि २।४।४९

गाङदेशो भवति इङो लिटि परतः। अधिजगे, अधिजगाते, अधिजगिरे। गाङो ऽनुबन्धग्रहणं विशेषनार्थम्, गाङ् कुटादिभ्यो ऽञ्णिन् ङित् १।२।१ इत्यत्र अस्य ग्रहणं यथा स्यात्। न हि स्थानिवद्भावेन गाङिति रूपं लभ्यते।

लघु-सिद्धान्त-कौमुदी

गाङ् लिटि ५८८, २।४।४९

इङो गाङ् स्याल्लिटि। अधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अधीताम्। अधीयाताम्। अधीयताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै। अध्ययावहै। अध्ययामहै। अध्यैत। अध्यैयाताम्। अध्यैयत। अध्यैथाः। अध्यैयाथाम्। अध्यैध्वम्। अध्यैयि। अध्यैवहि। अध्यैमहि। अधीयीत। अधीयीयाताम्। अधीयीरन्। अध्येषीष्ट॥

न्यासः

गाङ् लिटि। , २।४।४९

"अधिजगे" इति। "लिटस्तझयोरेशिरेच्" ३।४।८१ इत्येश्। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। गा इत्येतस्य द्विर्वचनम्। ननु लिटि परभूते तशब्दस्य परत्वात् प्रगेवैशादेशेन भवितव्यम्; पश्चात् गाङादेशेन, ततश्च द्विर्वचने निमित्तेऽच्ययं गाङादेश इति "द्विर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावादिवर्णस्य द्विर्वचनं प्राप्नोति, तत्कथं गा इत्येतस्य द्वर्वचनम्? नैतदस्ति; यस्मात् लिण्मात्रापेक्षत्वात् गाङादेशोऽन्तरङ्गः, लिडादेशविशेषाश्रयत्वादेशादेशो बहिरङगः, तस्मादन्तरङ्गत्वादेशादेशात् प्रागेव गाङ्गादेशेन भवितव्यम्, ततश्च द्विर्वचननिमित्तेनायमच्यजादेश इति स्थानिवद्भावो न भवति, तत्कुत इवर्णस्य द्विर्वचनप्रसङ्गः। "गाङोऽनुबन्धकरणं विशेषणार्थम्" इति। गाङ्कुटादिसूत्रे १।२।१ "गाङ्कुटादिभ्यः" इत्युच्यमाने "कै गै शब्दे" (धा।पा।९१६,९१७) इत्यस्यापि ग्रहणं स्यात्, ततश्चागासीन्नट इत्यत्र ग्रहणं कस्मान्न भवति? येन हेतुना न भवति स हेतुर्गाङ्कुटादिसूत्रे एव दर्शितः। ननु चेङो ङितस्तत्र स्थानिवद्भावेनैव ग्रहणं भविष्यति, त()त्क ङकारेणेत्यत आह-- "न हि" इत्यादि। तत्र हि गाङित्येतस्य स्वरूपस्य ग्रहणम्। न च तत् स्थान#इवद्भावेन लभ्यते। किं तर्हि? कार्यम्। यस्मात् "स्थानिवदादेशः" १।१।५५ इति कार्यातिदेशोऽयम्, न रूपातिदेशः॥

बाल-मनोरमा

गाङ् लिटि २९०, २।४।४९

गाङ् लिटि। इङ इति। "इङश्चे"त्यतस्तदनुवृत्तेरिति भावः। स्थनिवत्त्वादेव ङित्त्वे सिद्धे ङित्करणं "गाङ्कुटादिभ्यः" इत्यत्र "इणो गा लुङी"त्यस्य ग्रहणाऽभावार्थमिति भाष्यम्। ननु कृते गाङादेशे द्वित्वेऽभ्यासजश्त्वे आल्लोपे अधिजगे इति रूपं वक्ष्यति। तदयुक्तम्। "द्विर्वचनेऽचीति गाङादेशनिषेधाद्गाङादेशात् प्रागेव द्वित्वे सति उत्तरखण्डस्य गादेशे अधीगे इति रूपापत्तेरित्यत आह-- लावस्थायां, विवक्षिते वेति। तत्र "लावस्थाया"मिति वार्तिकमते गाङ्गादेशात्प्रागेव "द्विर्वचनेऽची"ति सूत्रं न प्रवर्तते, द्वित्वनिमित्ताऽचोऽभावात्। "विवक्षिते" इति भाष्यमते तु सुतरां "द्विर्वचनेऽची"ति न प्रवर्तते, अनैमित्तिकत्वादिति भावः। अधिजगिरे इति। अधिजगिषे अधिजगाथे अधिजगिध्वे। अधिजगे अधिजगिवहे अधिजगिमहे। लोटि--अधीताम् अधीयाताम् अधीयताम्। अधीष्व अधीयाथाम् अधीध्वमिति सिद्धवत्कृत्य आह-- अध्ययै इति। तत्र प्रक्रियां दर्शयति-- गुणाऽयादेशयोरिति। "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति "सुट्कात्पूर्वः इति सूत्रसिद्धान्तादिति भावः। तथा च इट् एत्वे आटि वृद्धौ अधि इ ऐ इति स्थिते गुणेऽयादेशे यणिति फलितम्। ननु "पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने"त्यपि पक्षः "सुट्कात्पूर्वः" इति सूत्रभाष्ये स्थितः, तथा च अधि इ ऐ इति स्थिते पूर्वसवर्णदीर्गे सति गुणाऽयादेशयोः कृतयो अधयै इति स्यादित्याशङ्क्य निराकरोति--पूर्वं धातुरिति। साधनेनत्यस्य कारकबोधकेनेत्यर्थः। प्रत्ययेनेति यावत्। दर्शन इत्येतस्य मते इत्यर्थः। "पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने"ति पक्षे पर्वप्रवृत्तिकत्वेन अन्तरङ्गत्वात् "सार्वधातुकाद्र्धधातुकयो"रिति गुणं बाधित्वा सवर्णदीर्घः प्राप्तो न भवतीत्यन्वयः। कुत इत्यत आह-- णेरध्ययने वृत्तमिति निर्देशादिति। अन्यथा ल्युटि अनादेशे अधि इ अन इति स्थिते पूर्वं सवर्णदीर्घे ततो गुणाऽयादेशयोः कृतयोरधयनमिति प्रसङ्गादिति भावः। वस्तुतस्तु "पूर्वं धातुः साधनेन युज्यते" इत्येव भाष्यसंमतं, "पूर्वं धातुरुपसर्गेण। नैतत्सार"मिति भाष्योक्तेरित्यन्यत्र विस्तरः। अध्ययावहै अध्ययामहै। लङ()आह-- अध्यैतेति। अधि आ इ त इति स्थिते "आटश्चे"ति वृद्धौ यणिति भावः। अधि इ आतामिति स्थिते आटि वृद्धौ यण अध्यैतामिति प्राप्ते आह-- परत्वादियङिति। आटः प्रागेव परत्वादिकारस्य इयङि तत आटि वृद्धौ यणि "अध्यैयाता"मिति रूपमित्यर्थः। अध्यैयतेति। "आत्मनेपदेष्वनतःट इत्यदादेशः। अध्यैथाः अध्यैयाथाम् अध्यैध्वमिति सिद्धवत्कृत्याह-- अध्यैयि अध्यैवहि अध्यैमहीति। विधिलिङ्याह-- अधीयीतेति। अधि इ त इति स्तिते सीयुटि सुटि सलोपे अधि इ ईत इति स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घ इति भावः। अधीयीयातामिति। अधि इ आतामिति स्थिते सीयुटि सुटि सलोपे अधि इ ईयातामिति स्थिते धातुभूतस्येकारस्य इयङि सवर्णदीर्घ इति भावः। झस्य रन्भावे सीयुटि सकारयकारलोपे अधि इ ई रन् स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घे - अधीयीरन्, अधीयीथाः, अधीयीयाथामिति सिद्धवत्कृत्य आह-अधीयीध्वमिति। ध्वमि सीयुटि सलोपे यलोपे अधि इ ई ध्वमिति स्थिते इङ इयङि सवर्णदीर्घ इति भावः। अधीयीयेति। "इटोऽत्"। सीयुट्। सलोपः। अधि इ ईय इति स्थिते इङ इयङि सवर्णदीर्घ इति भावः। अधीयीवहि अधीयीमहि। आशीर्लिङ्याह-- अध्येषीष्टेति। सीयुटि गुणः। यण् षत्वम्। अध्येषीयास्ताम्- -- अध्येषीरन्। अध्येषीष्टाः अध्येषीयास्थाम् अध्येषीढ्वम्। अध्येषीय अध्येषीवहि अध्येषीमहि।लुङि आटि अधि आ इ त इति स्थिते--

तत्त्व-बोधिनी

गाङ् लिटि २५१, २।४।४९

गाङ् लिटि। लावस्थायामिति। वार्तिकमते तु एकादेशात्प्रागेव गाङ्गादेशे "द्विर्वचनेऽचि" इति सूत्रं न प्रवर्तते, द्वित्वनिमित्ताऽचोऽभावात्। विवक्षित इति। भाष्यमते तु सुतरां न प्रवर्तते, अनैमित्तिकत्वादिति भावः। निर्देशान्न भवतीति। "वार्णादाङ्गं बलीयः" इति समाधानं तु न प्रवर्तते, व्याश्रयत्वादिति भावः। अध्यैयतेति। "आत्मनेपदेष्वनतः" इति झस्य अत्। लङ्मध्यमे तु -- अध्यैथाः। अध्यैयाथाम्। अध्यैध्म्। अध्येषीष्टेति। लिङः सीयुट्। अध्यैषीयास्ताम्। अध्यैषीरन्।

सूत्रम्

काशिका-वृत्तिः

विभाषा लुङ्लृङोः २।४।५०

लुगि लृङि च परत इङो विभाषा गाङादेशो भवति। आदेशपक्षे गाङ् कुटादिभ्यो ऽञ्णिन् ङित् १।२।१ इति ङित्त्वम्, घुमास्थागापाजहातिसां हलि ६।४।६६ इति ईत्वम्। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। न च भवति। अध्यैष्ट, अध्यैषाताम्, अध्यैषत। लृङि खल्वपि अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त। न च भवति। अध्यैष्यत, अध्यैष्येताम्, अध्यैष्यन्त।

लघु-सिद्धान्त-कौमुदी

विभाषा लुङ्लृङोः ५८९, २।४।५०

इङो गाङ् वा स्यात्॥

न्यासः

विभाषा लुङ्लृङोः। , २।४।५०

"अध्यैष्ट" इति। "आडजादीनाम्" ६।४।७२ इत्याट्। "आटश्च" ६।१।८७ इति वृद्धिः।

बाल-मनोरमा

विभाषा लुङ्लृङोः २९१, २।४।५०

विभाषालुङ्लृङोः। शेषं पूरयति-- इङोगाङ्वा स्यादिति। "इङश्चे"त्यतो, "गाङ् लिटी"त्यतश्च तदनुवृत्तेरितिभावः। सिचि अधि अ गा स् त इति स्थिते ---

बाल-मनोरमा

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ११३६, २।४।५०

आगस्त्य। अगस्तयः। कुण्डिना इति। अगस्त्यशब्दादृष्यणो लुक्। प्रकृतेरगस्त्यादेशः। कौण्डिन्यशब्दो गर्गादियञन्तः। बहुत्वे यञो लुक्। प्रकृतेः कुण्डिनादेशश्च। "यस्कादिभ्यो गोत्रे" इत्यारभ्य "आगस्त्यकौण्डिन्ययोः" इत्यन्तं द्वैतीयीकम्। अथ प्रकृतं चातुर्थिकम्-।

तत्त्व-बोधिनी

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ९४७, २।४।५०

आगत्स्य। आगस्त्यशब्दादृष्यण्। , कुण्डिनीशब्दात्तु गर्गाद्यञ। ननु कुण्डिनीशब्दस्य यञि "भस्याढे"इति पुंवद्भावे "नस्तद्धिते"इति टिलोपः प्राप्नोति। न च "संयोगादिश्चे"ति प्रकृतिभावः शङ्क्यः, "अणी"ति तत्रानुवर्तनात्। मैवम्। अस्मादेव निपातनात्तम्याऽप्रवृत्तेः कौण्डिन्यः सिध्यति। चकारस्त्वन्तोदात्तार्थः। मध्योदात्तोहि कुण्डिनीशब्दः। कुण्डमस्त्यस्या इति मत्वर्थीयस्यनेरुदात्तत्वादादेशस्यापि कुण्डिनशब्दस्यान्तरतम्यान्मध्योदात्तत्वात्। अवशिष्टस्य प्रकृतिभागस्येति। न च प्रत्ययविशिष्टस्यादेशमात्रम विधीयतां किं लुग्विधानेनेति वाच्यम्, अगस्तीयाश्छात्रा इत्यनापत्तेः, लुकि हि सति "गोत्रेऽलुगची"ति लुकि प्रतिषिद्धे वृद्धत्वाच्छः सिध्यति। प्रत्ययविशिष्टस्यादेशविधौ तु वृद्धत्वापगमे शौषिको।ञणेन स्यात्। कौण्डिनाश्छात्रा इति तूभयथापि सिद्ध्यत्येव। छापवादस्य "कण्वादिभ्यो गोत्रे"

इत्यण्()प्रत्ययस्य प्रवृत्या तत्र विशेषाऽभावात्।

---

सूत्रम्

काशिका-वृत्तिः

णौ च संश्चङोः २।४।५१

इङो गाङ् विभाषा इति वर्तते। णौ इति इङपेक्षया परसप्तमी, संश्चङोः इति च ण्यपेक्षया। णौ सन्परे चङ्परे च परतः इङो विभाषा गाङादेशो भवति। अधिजिगापयिषति। न च भवति। अध्यापिपयिषति। चङि खल्वपि अध्यजीगपत्। न च भवति। अध्यापिपत्।

न्यासः

णौ च संश्चङोः। , २।४।५१

"णावितीङपेक्षया" इत्यादि। णावितीयं या परसप्तमीङपेक्षया सा। "संश्चङोः" इतीयं या परसप्तमी सा ण्यपेक्षयेत्यर्थः। "अधिजिगापयिषति" इति। णिच्। "अर्तिह्री" ७।३।३६ इत्यादिना पुक्, सन्, इट्, गुणायादेशौ। अध्यापिपयिषति" इति। "क्रीङजीनां णौ" ६।१।४७ इत्यात्त्वम्, पुक्, "अजादेर्द्वितीयस्य" ६।१।२ इति "पा" इत्यस्य द्विर्वचनम्। "अध्यजीगपत्" इति। "णिश्रि" ३।१।४८ इत्यादिना चङ। "णौ चङ्युपधाया ह्रस्वः" ७।४।१। "सन्वल्लघुनि" ७।४।९३ इति सन्वद्भावात् "सन्यतः" ७।४।७९ इतीत्त्वम्। "दीर्घो लघोः" ७।४।९४ इती दीर्घः॥

बाल-मनोरमा

णौ च संश्चङोः ४२९, २।४।५१

णौ च संश्चङोः। विषयसप्तमीयमित्याकरे स्पष्टम्। णौ विवक्षिते इति लभ्यते। "इङश्चे"त्यत इङ इति, "गाङ् लिटी"त्यतो गाङिति, "विभाषा लुङ्लृङो"रित्यतो विभाषेति चानुवर्तते। तदाह -- सन्परे चङ्परे चेत्यादि। सन्परे चङ्परे च णौ विवक्षिते इत्यर्थः। अध्यजीगपदिति। णौ इङो गाङादेशे पुकि उपधाह्रस्वे अधि गप् इ अ त् स्थिते गप् इत्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे सन्वत्त्वादित्वे दीर्घे अभ्यासचुत्वे रूपम्। नच "द्वित्वे कार्ये णावजादेशो ने"ति द्वित्वात् प्राग्गाङादेशनिषेधः शङ्क्यः, अभ्यासोत्तरखण्डे अवर्णसत्त्व एव तन्निषेधप्रवृत्तेरुक्तत्वात्। द्वित्वे कार्ये गाङादेशस्य निषेधे सति गाङः पूर्वम् "अजादेर्द्वितीयस्ये"ति णिच एव द्वित्व सति प्रक्रियायां परिनिष्ठिते वा धातोरुत्तरखण्डेऽवर्णाऽभावादिति रूपमिति भावः। अध्यापिपदिति। गाङभावे "क्रीङ्जीनां णौ" इत्यात्त्वे पुकि अधि आ प् इ अ त् इति स्थिते "पी"त्यस्य द्वित्वे रूपमिति भावः। सिध्येतरपारलौकिके। "आदेच उपदेशे" इत्यस्मादादेच इति, "क्रीङ्जीनामित्यस्माण्णाविति चानुवर्तते। तदाह -- ऐहलौकिके इत्यादि। अन्नमिति। तन्निष्पादनं तृप्त्यर्थत्वादैहलौकिकमिति भावः। तत्त्वमिति। आत्मस्वरूपमित्यर्थः। सेधयति तापसं तप इति। तत्त्वं निश्चाययतीत्यर्थः। आत्मतत्त्वनिश्चय आमुष्मिकफलक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अस्तेर् भूः २।४।५२

अस्तेर् धातोर् भूः इतयम् आदेशो भवति आर्धधातुके। भविता। भवितुम्। भवितव्यम्। इह कस्मान् न भवति, ईहामास, ईहामासतुः, ईहामासुः? कृञ् च अनुप्रयुज्यते लिटि ३।१।४० इति प्रत्याहारग्रहणेन अस्तेर् ग्रहणसामर्थ्यात्। तथा चोच्यते अनुप्रतोगे तु भुवा ऽस्त्यबाधनम् स्मरन्ति कर्तुर् वचनान् मनीषिणः। इति।

लघु-सिद्धान्त-कौमुदी

अस्तेर्भूः ५७९, २।४।५२

आर्धधातुके। बभूव। भविता। भविष्यति। अस्तु, स्तात्। स्ताम्। सन्तु॥

न्यासः

अस्तेर्भूः। , २।४।५२

"ईहामास" इति। ईहतेः "इजादेश्च गुरुमतोऽनृच्छः" ३।१।३६ इत्याम्। "आमः" २।४।८१ इति लेर्लुक्; "कृञ्चानुप्रयुज्यते लिटि" ३।१।४० इत्यस्तेर्लिट्परस्यानुप्रयोगः। "प्रत्याहरग्रहणेनास्तेग्र्रहणसामथ्र्यात्" इति। "कृञ्चानुप्रयुज्यते लिटि" ३।१।४० इत्यत्र कृञिति प्रत्याहारग्रहणम्, "अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि" ५।४।५० इति कृशब्दादारभ्य "कृञो द्वितीयतृतीयशम्बबीजात्" ५।४।५८ इत्याकृञो ञकारात्। तेन च प्रत्याहारग्रहणेनास्तेरपि ग्रहणम्; तस्यैतदेव प्रयोजनम्-- आसेत्ेयतदनुप्रयोगे रूपं यथा स्यादिति। यदि चास्तेरनुप्रयोगेऽपि भूभावः स्यात्, तदासेत्येतदनुप्रयोगे रूपं न स्यादिति प्रत्याहारग्रहणमनर्थकम्। ततश्च"कृभ्वनुप्रयुज्यते लिटि" इत्येवं ब्राऊयात्। तत्राप्ययमर्थः-- किमिदं प्रत्याहारग्रहणमुत करोतेरित्येव सन्देहः परिह्रतो भवति, कृतञ्च प्रत्याहारग्रहणम्, तस्मात् प्रत्याहारग्रहणसामथ्र्यादनुप्रयोगेऽपि भूभावोऽस्तेर्न भवति। "तथा चोच्यते" इत्यादिनाऽनन्तरोक्तमेवार्थमाप्तवचनेन द्रढयति। भूरिति दीर्घोच्चारणं निष्ठायां ह्रस्वश्रवणं मा भूत्-- भूतो भूतवानिति, अस्तेरिति श्तिपा निर्देशोऽस्यतेर्मा भूत्; नैतदस्ति, निरनुबन्धक(व्या।प।५३) पिरभाषयैवास्यतेर्न भविष्यति। तस्य ह्रुकारोऽनुबन्धः "इदितो वा" ७।२।५६ इति विशेषणार्थः कृतः। अस्तेस्त्वकार उच्चारणार्थः, नानुबन्धः। एवं तर्हि श्तिपा निर्देशो वैचित्र्यार्थ इत्येके। निरनुबन्धकपरिभाषायाः प्रत्ययविधिविषयत्वादित्यपरे॥

बाल-मनोरमा

अस्तेर्भूः ३०१, २।४।५२

अस्तेर्भूः। असधातोर्भूभावः स्यादाद्र्धधातुके परे इत्यर्थः। अस् हि इति स्थिते--

---

सूत्रम्

काशिका-वृत्तिः

ब्रुवो बचिः २।४।५३

ब्रुवो वचिरादेशो भवति आर्धधातुकविषये। इकार उच्चारणार्थः। वक्ता। वक्तुम्। वक्तव्यम्। स्थानिवद्भावेन कर्त्रभिप्रायक्रियाफलविवक्षायाम् आत्मनेपदं भवति। ऊचे। वक्ष्यते।

लघु-सिद्धान्त-कौमुदी

ब्रुवो वचिः ५९९, २।४।५३

आर्धधातुके। उवाच। ऊचतुः। ऊचुः। उवचिथ, उवक्थ। ऊचे। वक्तासि, वक्तासे। वक्ष्यति, वक्ष्यते। ब्रवीतु, ब्रूतात्। ब्रुवन्तु। ब्रूहि। ब्रवाणि। ब्रूताम्। ब्रवै। अब्रवीत्, अब्रूत। ब्रूयात्, ब्रुवीत। उच्यात्, वक्षीष्ट॥

न्यासः

ब्राउवो वचिः। , २।४।५३

"वक्ता" इति। "चोः कुः" ८।२।३० इति कुत्वम्। "ऊचे" इति। वच्यादिसूत्रेण ६।१।१५ सम्प्रासारणम्॥

बाल-मनोरमा

ब्राउवो वचिः २८४, २।४।५३

ब्राउवो वचिः। ब्राउवो वचिरादेशः स्यादाद्र्धधातुके इत्यर्थः। इकार उच्चारणार्थः। उवाचेति। अकिति द्वित्वे कृते "लिट()भ्यासस्ये"ति संप्रसारणमिति भावः। ऊचतुरिति। किति द्वित्वात्प्राक् "वचिस्वपियजादीना"मिति संप्रसारणे द्वित्वे कृते हलादिशेषे सवर्णपरत्वात् "अभ्यासस्याऽसवर्णे" इत्युवङभावे सवर्णदीर्घ इति भावः। वचिर्()निट्सु परिगणितः। तस्य भारद्वाजनियमात्थलि वेट्। तदाह--उवचिथ उवक्थेति। इडभावे "चोः कुः। "ब्राउव ई"डित्यत्र "नाभ्यस्तस्ये"त्यतः सार्वधातुकग्रहणस्याप्यनुवृत्तेरीण्न। ऊचथुः ऊच। उवाच--उवच ऊचिम ऊचिम। क्रादिनियमादिट्। ऊचे इति ऊचाते ऊचिरे। ऊचिषे ऊचाथे ऊचिध्वे। ऊचे ऊचिवहे ऊचिमहे। वक्तेति। वच्यादेशे इण्निषेधः। वक्ष्यति वक्ष्यते। ब्रावीतु ब्राऊतादिति। ननु तिबादेशस्य तातङ पित्वात् "ब्राउव ई"डिति ईडागमः स्यादित्यत आह-- ङिच्चेति। ब्राऊताम् ब्राउवन्तु। ब्राऊहि ब्राऊतात् ब्राऊतम् ब्राऊत। ब्रावाणीति। आटः पित्त्वेन ङित्त्वाऽभावान्न गुणनिषेध इति भावः। ब्रावाव ब्रावाम। ब्राऊताम् ब्राउवाताम् ब्राउवताम्। ब्राऊष्व ब्राउवाथाम् ब्राऊध्वमिति सिद्धवत्कृत्य आह--ब्रावै इति। आटः पित्त्वेन ङित्त्वाऽभावाद्गुणः। ब्रावावहै ब्रावामहै। लङि--अब्रावीत् अब्राऊताम् अब्राउवन्। अब्रावीः अब्राऊतम् अब्राऊत। अब्रावम् अब्राऊव अब्राऊम। विधिलिङ्याह--ब्राऊयादिति। ब्राऊयादिति। ब्राऊयातामित्यादि। आशीर्लिङ्याह-- उच्यादिति। वच्यादेशे "वचिस्वपी"ति संप्रसारणमिति भावः। उच्यास्तामित्यादि। आत्मनेपदे आशीर्लिङि--वक्षीष्ट वक्षीयास्तामित्यादि। अकित्त्वान्न संप्रसारणम्। लुङि सिचि वच्यादेशे अवच् स् त् इति स्थिते आह-- अस्यतीति। अवच् अ त् इति स्थिते--

---

सूत्रम्

काशिका-वृत्तिः

चक्षिङः ख्याञ् २।४।५४

चक्षिङः ख्याञादेशो भवति आर्धधातुके। आख्याता। आख्यातुम्। आख्यातव्यम्। स्थानिवद्भावेन नित्यम् आत्मनेपदं न भवति, ञकारानुबन्धकरणसामर्थ्यात्। आख्यास्यति। आख्यास्यते। क्शादिरप्ययम् आदेश इष्यते। आक्शाता। आक्शातुम्। आक्शातव्यम्। वर्जने प्रतिषेधो वक्तव्यः। दुर्जनः संचक्ष्याः। वर्जनीयाः इत्यर्थः। असनयोश्च प्रतिषेधो वक्तव्यः। नृचक्षा रक्षः हिंसार्थो ऽत्र भातुः। अने खल्वपि विचक्षणः पण्डितः। बहुलं संज्ञाछन्दसोरिति वक्तव्यम्। अन्नवधकगात्रविचक्षणाजिराद्यर्थम्।

लघु-सिद्धान्त-कौमुदी

तृतीयासप्तम्योर्बहुलम् ९१६, २।४।५४

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। अधिगोपम्, अधिगोपेन, अधिगोपे वा। कृष्णस्य समीपम् उपकृष्णम्। मद्राणां समृद्धिः सुमद्रम्। यवनानां व्यृद्धिर्दुर्यवनम्। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्यात्ययोऽतिहिमम्। निद्रा संप्रति न युज्यत इत्यतिनिद्रम्। हरिशब्दस्य प्रकाश इतिहरि। विष्णोः पश्चादनुविष्णु। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। रूपस्य योग्यमनुरूपम्। अर्थमर्थं प्रति प्रत्र्षथम्। शक्तिमनतिक्रम्य यथाशक्ति॥

न्यासः

चक्षिङः ख्याञ्। , २।४।५४

"नित्यमात्मनेपदं न भवति" इति। यदि हि स्यात्, अकारानुबन्धकरणमनर्थकं स्यात्। तस्मात् कर्त्रभिप्राये क्रियाफले विवक्षित आत्मनेपदं स्यान्नान्यत्र। "क्शादिरपि" इति। ककारशकारयोरकार उच्चारणार्थः। क्()श् ख्यात्रित्येवंरूप आदेशो वक्तव्यः। कथं पुनरिष्यमाणोऽप्येवंविध आदेशो लभ्यते? पूर्वोक्तस्य बहुलग्रहणस्यानुवृत्तेः। अत ए बहुलग्रहणस्यानुवृत्तेर्वर्जनेऽसनयोश्चादेशप्रतिषेधो भवतीति व्याख्यानं कर्त्तव्यम्। "संचक्ष्या" इति। "ऋहलोर्ण्यत्" ३।१।१२४। "नृचक्षा" इति। "सर्वधातुभ्योऽसुन्" (द।उ।९।४९), "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "विचक्षणः" इति। "कृत्यल्युटो बहुलम्" ३।३।११३ इति कर्त्तरि ल्युट्। "बहुलम्" इत्यादि। संज्ञायां छन्दसि च जग्ध्यादेशादिकार्यं बहुलं न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्? अन्नाद्यर्थम्। अन्नादयः शब्दा साधवो यथा स्युः। व्याख्यानन्तु तदेव बहुलग्रहणमाश्रित्य कर्त्तव्यम्। "अन्नम्" इति। अदो जग्धिरादेशो न भवति; बहुलग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तेः। "वधक" इति। "हनो वध" २।४।४२ इत्यादिना वधादेशो लिङ्युटच्यमानो हन्तेर्ण्वुल्प्रत्यये कृतेऽपि भवति। "गात्रम्" इति। औणादिकः ष्ट्रन्। "इणो गा लुङि" २।४।४५ इति लुङ्युच्यमानो गादेशोऽत्रापि भवति। "विचक्षणः" इति। चक्षिङ ख्यात्रादेशो न भवति ल्युटि। अजिरशब्दस्तु "अजिरशिशिरशिथिर" (द।उ।८।२७) इति किरच्प्रत्ययान्त औणादिको निपातितः। तस्यात एव निपातनात् "अजेघञपोः" २।४।५६ इति विधीयमानो वीभावो न भवति। आदिशब्देन "प्रघस" इत्यादेग्र्रहणम्॥

बाल-मनोरमा

चक्षिङः ख्यात्र् २६७, २।४।५४

चक्षिङः ख्यात्र्। चक्षिङः ख्यात्र् स्यादाद्र्धधातुके परे इत्यर्थः।

तत्त्व-बोधिनी

चक्षिङः ख्शात्र् २३३, २।४।५४

ख्शादिरिति। तेन "पुंख्यान"मित्यत्र "पुमः खय्यम्परे" इति रुत्वं नेत्यादि पूर्वार्धे एवोक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

वा लिटि २।४।५५

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। लिटि परतश्चक्षिङः ख्यात्रादेशः वा भवति। आचख्यौ, आचख्यतुः, आचख्युः। न च भवति। आचचक्षे, आचचक्षाते, आचचक्षिरे।

न्यासः

वा लिटि। , २।४।५५

बाल-मनोरमा

वा लिटि २६८, २।४।५५

वा लिटि। चक्षिङः ख्यात्र् वा स्याल्लिटीत्यर्थः। अत्रेति। "चक्षिङः ख्या"ञिति सूत्रभाष्ये "ख्शादिरयमादेश" इति, "पूर्वत्रासिद्ध"मित्यधिकारे "ख्शात्रः शस्य यो वा वक्तव्यः इति च सित्थमित्यर्थः। तेन "पुंख्यान"मित्यत्र यत्वस्याऽसिद्धत्वात् "पुनः खय्यम्परे" इति रुत्वं नेति हल्सन्धिनिरुपणे प्रपञ्चितम्। ञित्त्यात्पदद्वयमिति। परस्मैपदमात्मनेपदं चेत्यर्थः। चख्यौ इति। ख्शादेशस्य शस्य वत्वपक्षे "आत औ णलः" इति भावः। चख्यतुः चख्युः।

भारद्वाजनियमात्थलि वेट्--चख्यिथ-चख्याथ, चख्यथुः चख्य। चख्यौ चख्यिव चख्यिमाक्रादिनियमादिट्। लिटि तङि ख्शात्रादेशस्य शस्य वत्वपक्षे आह--- चख्ये इति। चख्याते चख्यिरे। चख्यिषे चख्याते [चख्यिढवे] चख्यिध्वे चख्ये। चख्यिवहे। चख्यिमहे। शस्य वत्वाऽभावपक्षे त्वाह--- चक्शौ चक्शे इति। खस्य चर्त्वेन क इति भावः। कृते चर्त्वे तस्य "चयो द्वितीयाः शरि" इति खकारमाशङ्क्य निराकरोति-- खय इति। अथ ख्यानादेशाऽभावपक्षे आह--चचक्षे इति। चचक्षिषे चचक्षिध्वे। चचक्षिवहे। ख्यास्यतीति। चष्टाम् चक्षाताम् चक्षताम्। चक्ष्व चक्षाथाम् चड्ढ्वम्।चक्षै चक्षावहै चक्षामहै। लङ()आह--अचष्टेति। अचक्षाताम् अचक्षत।अचष्ठ#आ#ः अचक्षाथाम् अचड्ढ्वम्। अचक्षि अचक्ष्वहि अचक्ष्महि। विधिलिङ()आह-- चक्षीतेति। आशीर्लिङि ख्शादेशस्य शस्य यत्वपक्षे आह--- ख्यायात् ख्येयादिति। "वाऽन्यस्ये"त्येत्वविकल्पः। शस्य यत्वाऽभावपक्षे आह-- क्शायात् क्शेषादिति। लुङि च्लेः सिचि प्राप्ते आह--

तत्त्व-बोधिनी

वा लिटि २३४, २।४।५५

असिद्धकाण्डे इति। "णत्वप्रकरणानन्तर"मिति शेषः। तेन "पर्याख्यान"मित्यत्र शकारेण व्यवधानात् "कृत्यचः इति णत्वं न। तथा सुप्रख्येन निर्वृत्तं सौप्रख्यं,तत्र भवः सौप्रख्यीयः। यत्वस्याऽसिद्धत्वात् "धन्वयोपधा"दिति वुञ् न, किं तु छ एवेति बोध्यम्। अचष्टेति। "स्को"रिति कलोपः। ष्टुत्वम्। "अस्यतिवक्तिख्याती"त्यत्र विधिसामर्थ्याद्यत्वं नाऽसिद्धम्। स्वतन्त्रस्य ख्याधातोः सार्वधातुकमात्रविषयतया वक्ष्यमाणत्वात्। अस्यतेः पुषादिपाठादङि सिद्धं तङर्थं ग्रहणमित्यादि पुषादिषु वक्ष्यति।

---

सूत्रम्

काशिका-वृत्तिः

अजेर् व्यघञपोः २।४।५६

अजेर् धातोः वी इत्ययम् आदेशो भवत्यार्धधातुके परतो घञपौ वर्जयित्वा। प्रवयणीयः। प्रवायकः। अघञपोः इति किम्? समाजः। उदाजः। अपि तु समजः। उदजः। समुदोरजः पशुषु 3।3।६९ इत्यप्। दीर्घोच्चारणम् किम्? प्रवीताः। भञपोः प्रतिषेधे क्यप उपसङ्ख्यानम् कर्तव्यम्। समज्या। वलादावार्धधातुके विकल्प इष्यते। प्रवेता, प्राजिता। प्रवेतुम्, प्राजितुम्।

न्यासः

अजेर्व्यघञपोः। , २।४।५६

"प्रवायकः" इति। ण्वल्। "प्रवयणीयम्" इति। अनीयर्। "कृत्यचः" ८।४।२८ इति णत्वम्। "घञपोः प्रतिषेधे क्यप उपसंख्यानं कत्र्तव्यम्" इति। घञपोः कत्र्तव्ये क्यपः प्रतिषेधस्योपसंख्यानं प्रतिपादनं कत्र्तव्यमित्यर्थः। क्यपः प्रतिषेधनिमित्तत्वेन प्रतिषेधं प्रति सम्बन्धित्वेन विवक्षितत्वात् क्यप इति षष्ठी। तत्रेदं प्रतिपादनम्-- "संज्ञायां समजनिपतमनविद" ३।३।९९ इत्यादिना संज्ञायां गम्यमानायामजेः क्यप् विधास्यते। नियतवर्णानुपूर्वीका च संज्ञा भवति, न चादेशे कृते संज्ञा गम्यते, तस्मात् संज्ञायां विधानात् क्यपि वीभावो न भवति। "वलादावद्र्धधातुके विकल्प इष्यते" इति। कथं पुनरिष्यमाणोऽपि लभ्यते? अजेरुदात्तत्वात्, स हीडर्थो धातुषूदात्तः पठ()ते। यदि चास्य नित्यं वीभावः स्यात्, तदा तस्योदात्तपाठोऽनर्थकः स्यात्। न हि वीभावे विहित इट् प्राप्नोति;तस्यानुदात्तत्वात्।

तत्त्व-बोधिनी

अजेर्व्यघञपोः ११०, २।४।५६

अजेव्र्य। वी- इति च्छेदः। तेन संवीतः संवीतिरित्यादि सिध्यति। आद्र्धधातुकविषय इति। तेन वीभावोत्तरं यङि वेवीयते इत्यादि सिध्यति, परसप्तम्यां तु हलादित्वाऽभावाद्यह् न स्यादिति भावः। यङ्लुक् त्वस्मान्न भवति, लुका यङोऽपहारे आद्र्धदातुकविषयत्वाऽभावान्नाद्र्धधातुकाभिव्यक्तिरित वीभावस्यैवाऽप्रसक्तेः। एतच्च "न लुमते"ति सूत्रे कैयटे स्पष्टम्। अघञपोः किम्?। समाजः। "समुदोरजः पशुषु" इत्यप्। समजः। उदजः। विव्यतुरिति। "एरनेकाचः र" इति यण्। लोपाजादेश एवेति। एतच्च " न पदान्ते" ति सूत्रएवास्माभिरुपपादितम्। एकाच इतीति। अजेरुदात्तत्वेऽपि वीभावोऽनुदात्तः, ऊदृ()दन्तादिभिन्ना एकाचोऽजन्ताः सर्वेऽप्यनुदात्ता इत्यभ्युपगमात्।

---

सूत्रम्

काशिका-वृत्तिः

वा यौ २।४।५७

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। यु इति ल्युटो ग्रहणम्। यौ प्रभूते अजे र्वा वी इत्ययम् आदेशो भवति। प्रवयणो दण्डः, प्राजनो दण्डः। प्रवयणमानय, प्राजनमानय।

न्यासः

वा यौ। , २।४।५७

"यु" इति ल्युटो ग्रहणम्" इति। अन्यस्यासम्भवात्। "प्रवयणो दण्डः" इति। प्राज्यतेऽनेनेति करणे ल्युट्। पूर्ववण्णत्वम्॥

---

सूत्रम्

काशिका-वृत्तिः

ण्यक्षत्रियाऽर्षञितो यूनि लुगणिञोः २।४।५८

ण्याऽदयो गोत्रप्रत्ययाः। ण्यान्तात् क्षत्रियगोत्रादार्षाद् ञितश्च प्रयोः अण्डञोर्यूनि लुग् भवति। ण्यान्तात् तावत् कुर्वादिभ्यो ण्यः ४।१।१५१ , तस्माद् यूनि इञ्, तस्य लुक्। कौरव्यः पिता। कौरव्यः पुत्रः। ननु च कौरव्यशब्दः तिकादिषु पठ्यते, ततः फिञा भवितव्यम्, कौरव्यायणिः इति? क्षत्रियगोत्रस्य तत्र ग्रहणम्, कुरुनादिभ्यो ण्यः ४।१।१७० इत्यनेन विहितस्य, इदं तु ब्राह्मणगोत्रम्, कुर्वादिभ्यो ण्यः ४।१।१५१ इति। क्षत्रिय ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४ इत् यण्, तस्माद् यूनि इञ्, तस्य लुक्। श्वाफल्कः पिता। श्वाफल्कः पुत्रः। आर्ष ऋष्यण् ४।१।११४, तस्माद् यूनि इञ्, तस्य लुक्। वासिष्ठः पिता। वासिष्ठः पुत्रः। ञित् अनृष्यानन्तर्ये विदाऽदिभ्यो ऽञ् ४।१।१०४, तस्माद् यूनि इञ्, तस्य लुक्। बैदः पिता। वैदः पुत्रः। अणः खल्वपि तिकाऽदिभ्यः फिञ् ४।१।१५४, तस्माद् यूनि प्राग् दीव्यतो ऽण् ४।१।८३, तस्य लुक्। तैकायनिः पिता। तैकायनिः पुत्रः। एतेभ्यः इति किम्? शिवाऽदिभ्यो ऽण् ४।१।११२, तस्माद् यूनि अत इञ् ४।१।९५, तस्य लुग् न भवति। कौहडः पिता। कौहडि पुत्रः। यूनि इति किम्? वामरथ्यस्य छात्राः वामरथाः। कुर्वादिभ्यो ण्यः ४।१।१५१ इति ण्यः, तस्मात् कण्वाऽदिभ्यो गोत्रे ४।२।११० इति शैषिको ऽण्। तस्य लुग् न भवति। अणिञोः इति किम्? दाक्षेरपत्यं युवा दाक्षायणः। अब्राह्मणगोत्रमात्रमात्राद्युवप्रत्ययस्तोपसङ्ख्यानम्। बौधिः पिता। बौधिः पुत्रः। जाबालिः पिता। जाबालिः पुत्रः। औदुम्बरिः पिता। औदुम्बरिः पुत्रः। भाण्डीजङ्घिः पिता। भाण्डीजङ्घिः पुत्रः। शाल्वावयवलक्षन इञ्, तस्मात् फक्, तस्य लुक्। पैलादिदर्शनात् सिद्धम्।

न्यासः

ण्यक्षत्त्रियार्षञितो यूनि लुगणिञोः। , २।४।५८

"ण्यादयो गोत्रप्रत्ययाः" इति। "गोत्राद्यून्यस्त्रियाम्" ४।१।९४ इति गोत्रप्रत्ययान्तादेव युवप्रत्ययविधानात्। "तस्माद्यूनीञ्" इति। "अत इञ्" ४।१।९५ इत्यनेन। "कौरव्यशब्दस्तिकादिषु पठ()ते" इति। औरसशब्दादनन्तरम्। "क्षत्रियगोत्रस्य तत्र ग्रहणम्" इति। औरसशब्देन क्षत्रियगोत्रप्रत्ययान्तेन साहचर्यात्। औरसशब्दो हि जनपदशब्दात् क्षत्त्रियादञ् ४।१।१६६ इति क्षत्त्रियगोत्रप्रत्ययान्तः॥ "ऋष्यण्" इति। "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ४।१।११४ इत्यनेन। "कुर्वादिभ्यो ण्यः" इति। वमरथ्यशब्दं व्युत्पादयति। तस्मात् "कण्वादिभ्योगोत्रे इति शैषिकोऽण्" इति। ननु च वामरथ्यशब्दः कुर्वादिषु पठ()ते, न कण्वादिषु, तत्कथमेवमुक्तम्? यद्यपि न पठ()ते, तथापि वामरथ्यस्य कण्वादिवत् स्वरवर्जमिति पाठात् कण्वादिवद्भावोऽस्ति, अत एवमुक्तमित्यदोषः। "दाक्षायणः" इति। "यञिञोश्च" ४।१।१०१ इति फक्। "अब्राआह्णगोत्रमात्रात्" इति। इह कैश्चिदुक्तम्-- "अणिञोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्" इति। तेषां वैश्यगोत्रान्न प्राप्नोति; तस्माद्वैश्यगोत्रादपि यथा स्यादित्येवमर्थं मात्रग्रहणम्। ब्राआह्णक्षत्रियवैश्यानां हि गोत्राणि सम्भवन्ति, तत्र ब्राआह्णगोत्रं वर्जयित्वाऽन्यतः सर्वस्माद्भवति। पूर्वके तु वाक्येऽतद्राजादपि क्षत्रियगोत्राद्यथा स्यादित्येवमर्थं मात्रग्रहणम्। तथा हि "अणिञोर्लुकि तद्राजाद्युप्रत्ययस्योपसंख्यान्" दर्शयति। "भाण्डीजङ्घिः" इत्येवमादिना वैश्यगोत्रोदाहरणम्। ब्राआह्णगोत्रप्रतिषेधादिह न भवति--दाक्षायण इति। "शाल्वावयवलक्षणः" इति। क्षत्रियगोतर्मधिकृत्येदमुक्तम्। भाण्डीजङ्घिरित्यत्र वैश्यगोत्रे "अत इञ्" ४।१।९५ इत्यनेनेञेव भवतीति वेदितव्यम्। "पैलादिदर्शनात् सिद्धम्" इति। पैलादेराकृतिगणत्वात् तत्रेते द्रष्टव्या इति दर्शयति॥

बाल-मनोरमा

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः १२५७, २।४।५८

अत्र इञो लुकमाशङ्कितुमाह--ण्यक्षित्रियार्ष। ण्यादयः सर्वे गोत्रप्रत्यया एव गृह्न्ते, "गोत्राद्यूनी"त्युक्तेः। तदाह--गोत्रप्रत्ययान्तादित्यादि। ण्यप्रत्ययस्योदाहरति--कौरव्य इति। कुरोर्गोत्रापत्यं कौरव्यः। "कुर्वादिभ्यो ण्यः"। कौरव्यस्यापत्यं युवेत्यर्थेऽत इञ्। तस्यानेन लुक्। क्षत्रियप्रत्ययस्योदाहरति--()आआफल्क इति। ()आफल्कस्य गोत्रापत्यं ()आआफल्कः। "ऋष्यन्धके"त्यण्। ()आआफल्कस्यापत्यं युवेत्यर्थे "अत इञ्"। तस्याऽनेन लुक्। आर्षप्रत्ययस्योदाहरति--वासिष्ठ इति। वसिष्ठस्य गोत्रापत्यं वासिष्ठः। ऋष्यण्। वासिष्ठस्यापत्यं युवेत्यर्थे इञ्। तस्यानेन लुक्। ञित उदाहरति--तैकायनिरिति। तिकस्य गोत्रापत्यं तैकायनि। तिकादिभ्यः फिञ्। तैकायनेरपत्यं युवेत्यर्थे तस्यापत्यमित्यण्। तस्यानेन लुक्। वामरथ्यस्येति। वामरथस्य गोत्रापत्यं वामरथ्यः। "कुर्वादिभ्यो ण्यः" वामरथ्यस्य छात्रा इत्यर्थे "कण्वादिभ्यो गोत्रे" इति छापवादोऽण्, तस्यानेन लुङ्ग भवति, तस्य युवार्थकत्वाऽभावादिति भावः। इत्यणो लुक्तु न भवतीति। "ण्यक्षत्रिये"ति सूत्रेण पाणिनिरित्यत्र [अणः परस्य]इणो लुङ्न भवतीत्यर्थः। कुत इत्यत आह--आर्षग्रहणेनेति। पाणिनिशब्दे पणिन्शब्दादणप्रत्ययस्य औत्सर्गिकस्य वस्तुगत्या ऋषिवाचित्वेऽपि ऋषौ प्रतिपदोक्तत्वाऽभावान्न ततः परस्य इञो लुगिति भावः। नच पणिन्शब्दाद्गोत्रापत्ये "ऋष्यन्धके"त्यणेव कुतो न स्यादिति वाच्यं, यत्र औत्सर्गिकस्य अण इञादिना बाधः प्रसक्तः, तत्रैव तद्बाधनार्थभृष्यणः प्रवृत्तेः। वस्तुतस्तु "वाऽन्यस्मिन्सपिण्डे" इति सूत्रभाष्येऽत्रिशब्दात् "इतश्चानिञः" इति ढकि आत्रेयशब्दादिञो "ण्यक्षत्रियार्षे"ति लु"गित्युक्तत्वादिदमुपेक्ष्यम्। "ण्यक्षत्रिये"त्यत्र तु ऋशिवाचकस्य रूञस्यैव ग्रहणम्। पणिन्शब्दः, तदपत्ये पाणिनशब्दश्च न ऋषिवाचकौ। अत औत्सर्गिकाणन्त एव पाणिनशब्द इति शब्देन्दुशेखरे प्रपञ्चितम्। पाणिनिनेति। पाणिनिना प्रोक्तमित्यर्थे "तेन प्रोक्त"मित्यणं बाधित्वा"वृद्धाच्छः" इति छप्रत्यये ईयादेशे पाणिनीयशब्द इत्यर्थः। ननु पाणिनिशब्दात्तद्धिते विवक्षिते "यूनिलुगितीञो लुकि सत्यपि प्रत्ययलक्षणेन इञन्तत्वमाश्रित्य छापवादोऽण्स्यादित्यत आह--इञश्चेत्यण्तु नेति। पाणिनिशब्दे इञ् युवापत्यार्थक एव, न तु गोत्रार्थकः, युवसंत्रया गोत्रसंज्ञाया बाधादिति भावः। अद्यपि अपत्याधिकारादन्यत्र न पारिभाषिकं गोत्रमित्युक्तं, तथाप्यत्र पारिभाषिकमेव गोत्रं गृह्नते इत्युपरिष्टात् "इञश्चे"ति

सूत्रे वक्ष्यते। तत इति। पाणिनीयशब्दादित्यर्थः। पाणिनीयमधीते वेति वेत्यर्थे पाणिनीयशब्दादणि "प्रोक्ताल्लु"गिति तस्य लुगिति भावः। ननु असत्यपि अध्येतृवेतितृप्रत्ययस्याऽणो लुकि पाणिनीयशब्दः सिध्यत्येवेत्यत आह--स्वरे स्त्रियां च विशेष इति। अध्येतृवेदितृप्रत्ययस्याऽणो लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप्स्यात्। लुकि तु सति छादेशस्य ईयादेशस्य ईकारः। प्रत्ययस्वरेणोदात्तः टाप्च सिध्यति। तदाह--पाणिनीयः पाणिनीयेति।

तत्त्व-बोधिनी

ण्यक्षत्त्रियार्षञितोयूनि लुगणिञोः १०२१, २।४।५८

ण्यक्षत्रियार्ष। कौरव्य इति। "कुर्वादिभ्यो ण्यः"। तत इञो लुक्। कौरव्यः पुत्रः। ननु तिकादिषु कौरव्यशब्दः पठ()ते, तथा च कौरव्यायणिरिति फञा भाव्यं, नत्विञेति चेत्सत्यम्। "कुरुनादिभ्यो ण्यः" इति क्षत्रियगोत्रे विहितो यो ण्यस्तदन्तं तत्र पठ()ते। प्रकृते तु ब्राआह्णगोत्रप्रत्ययान्तमित्यवधेयम्। ()आआफल्क इति। "ऋष्यन्धके"त्यण्। तत इञो लुक्, ()आआफल्कः पुत्रः। वासिष्ठ इति। ऋष्यञ्। तत इञो लुक्। वासिष्ठः पुत्रः। तैकायनिरिति। "तिकादिभ्यः फिञ्"। ततोऽणो लुक्। तैकायनिः पुत्रः। वामरथा इति। कुर्वादित्वाण्ण्यः। ततो वृद्धाच्छं बाधित्वा "कण्वादिभ्यो गोत्रे" इति शैषिकोऽण्। इतीति। "ण्यक्षत्रियार्षे"त्युदाह्रतसूत्रेणेत्यर्थः। ऋष्यण एवेति। पाणिनशब्दे तु औत्सर्गिक एवाऽणिति भावः। नन्विदं "वान्यस्मिन् सपिण्डे"इति सूत्रस्थभाष्यकैयटाभ्यां विरुध्यते। अत्रेर्युवापत्यानि पुमांसोऽत्रयः। इनश्चानिञः "इति ढक्। तदन्ताद्यूनि "अत इञ्"। तस्य "ण्यक्षत्रिये"ति लुक्, "अत्रिमृगुकुत्से"ति ढकोऽपि लुक्" इत्युक्तत्वात्ष। "ऋष्यन्धके"त्यण एव ग्रहणे तु ढकोऽग्रहणात्ततः परस्येञो लुङ्न स्यादित्याहुओः। वस्तुतस्तु "दाक्षीपुत्रस्य पाणिने"रिति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयम्। इञश्चेतीति। "यूनि लु"गिति लुक्यपि प्रत्ययलक्षणेन इञन्तमस्तीति भावः। गोत्रे य इञिति। "गोत्रमिह शास्त्रीयं, न तु लौकिक"मिति तत्र वक्ष्यते इति भावः। स्वरे इति। लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप्स्यात्। लुकि सति त्वोकार उदात्तः, टाप् च सिध्यतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पैलाऽदिब्यश् च २।४।५९

पैल इत्येवम् आदिभ्यश्च युवप्रत्ययस्य लुग् भवति। पीलाया वा ४।१।११८ इत्यण्, तस्मदणो द्व्यचः ४।१।१५६ इति फिञ्, तस्य लुक्। पैलः पिता। पैलः पुत्रः। अन्ये पैलाऽदयः इञन्ताः तेभ्यः इञः प्राचाम् २।४।६० इति लुकि सिद्धे ऽप्रागर्थः पाठः। पैल। शालङ्कि। सात्यकि। सात्यकामि। दैवि। औदमज्जि। औदव्रजि। औदमेघि। औदबुद्धि। दैवस्थानि। पैङ्गलायनि। राणायनि। रौहक्षिति। भौलिङ्गि। औद्राहमानि। औज्जिहानि। तद्राजाच्चाणः। आकृतिगणो ऽयम्।

न्यासः

पैलादिभ्यश्च। , २।४।५९

"पीलाया वेत्यण्" इति। तत्र हि "शिवादिभ्योऽण्" ४।१।११२ इत्यतोऽण्ग्रहणानुवृत्तेः। "अन्ये पैलादयः इञन्ताः" इति। अत्रौदञ्चिशब्दो बाह्वादित्वादिञन्तः। बाह्वादिषु ह्रुदञ्चुशब्दः पठ()ते। उकारोच्चारणमतन्त्रम्। धातुप्रदर्शनार्थत्वात्। उदञ्चतीति "ऋत्विक्" ३।२।५९ इत्यादिना सूत्रेण क्विन्। उदचोऽपत्यमौदञ्चिः। निपातनात् "अनिदिताम्" ६।४।२४ इत्यादिना नलोपो न भवति, "अचः" ६।४।१३८ इत्यकारलोपश्च। भौलिङ्गिशब्दः शाल्वावयव इञन्तः। शेषास्तु "अत इञ्" ४।१।९५ इतीञन्ता वेदितव्याः। शालङ्किरिति पठ()ते, स कथम्, यावता नडादिषु "शलङ्कु शलङ्कञ्च" (ग।सू।६७) इति पाठात् शालङ्कायन इत भवितव्यम्? प्रकृत्यन्तरं शलङ्कुशब्दोऽस्ति, ततोऽयमिञ् विहित इत्येके।

अस्मादेव निपातनाच्छलङ्कुशब्दादिञिति विज्ञायते, तत्सन्नियोगे च शलङ्कादेश इत्यपरे। "तद्राजाच्चाणः" इति। तद्राजसंज्ञकाच्चाण उत्तरस्य युवप्रत्ययस्य लुग् भवति। अङ्गस्यापत्यमिति "द्वयञ्मगध" ४।१।१६८ इति फिञ्, तस्यानेन लुक्॥

बाल-मनोरमा

पैलादिभ्यश्च १०६७, २।४।५९

पैलादिभ्यश्च। "ण्यक्षत्रियार्षे"त्यतो यूनि लुगित्यनुवर्तते। तदाह--एभ्यां युवप्रत्ययस्य लुगिति। अजादिप्रत्यये अविवक्षितेऽपि प्राप्त्यर्थमिदम्। पीलाया इति। पीलाया गोत्रापत्यमित्यर्थे "स्त्रीभ्यो ढ"गिति ढकं बाधित्वा "पीलाया वे"त्यणित्यर्थः। तस्मादिति। पैलस्यापत्यं युवेत्यर्थे पैलादिभ्यश्चे"ति लुक् "अमो द्व्यचः" इति फिञित्यर्थः। पीलाया गोत्रापत्यस्यापत्यं। पीलाया युवापत्यमिति पर्यवस्यति। तस्येति। तस्य-युवार्थकफिञ्प्रत्ययस्य अनेन लुगित्यर्थः। पीलाया गोत्रापत्ये, युवापत्ये च पैलशब्द इत्याह--पैलः पिता पुत्रश्चेति। यूनः पिता, युवा चेत्यर्थः। "तद्राजाच्चाऽणः"इति पैलादिगणसूत्रम्। तद्राजप्रत्ययात्परस्य युवप्रत्ययस्याऽणो लुगित्यर्थः। द्व्यञ्मगधेति। अङ्गशब्दो देशविशेषे तस्य राजा आङ्गः। तस्य गोत्रापत्यमप्याङ्गः। "द्व्यञ्मगधे"त्यण्। तस्यापत्यं युवाप्याङ्ग एव। "अणो द्व्यचः" इति फिञ्, तस्यानेन लुक्।

तत्त्व-बोधिनी

पैलादिभ्यश्च ८९४, २।४।५९

युवप्रत्ययस्येति। वक्ष्माण इति। "प्राचामवृद्धात्फिन्बहुल"मिति वक्ष्यमाणः। अजादौ किम्()। ग्लौचुकायनरूप्यम्। प्राग्दीव्यटतीये किम्()ष ग्लौचुकायनीयम्। "तस्मै हित"मिति छः। इह "द्विगोर्लुग नपत्येऽचि" "यूनि गोत्रे ने"त्येव सूत्रयितव्यम्। तथा च "लुगलुग्ग्रहणं शक्यमकर्तुं"मिति मनोरमायां स्थितम्। तत्र "फिक्फिञो"रिति सूत्रे "यूनी"त्यस्य मण्डूकप्लुतिराश्रयणीयेति क्लेशोऽयं लाघवानुरोधेन सोढव्य इति भावः। पैलदिभ्यश्च। "ण्यक्षत्रियार्षे"त्यतो "यूनि लु"गिति वर्तते। तदाह---।

---

सूत्रम्

काशिका-वृत्तिः

इञः प्राचाम् २।४।६०

गोत्रे य इञ् तदन्ताद् युवप्रत्ययस्य लुग् भवति। गोत्रविशेषनं प्राग्ग्रहनम्, न विकल्पार्थम्। पान्नागारेरपत्यं युवा। यञिञोश्च ४।१।१०१ इति फक्, तस्य लुक्। पान्नागारिः पिता। पान्न्नगारिः पुत्रः। मन्थरैषणिः पिता। मान्थरैषणिः पुत्रः। प्राचाम् इति किम्? दाक्षिः पिता। दाक्षायणः पुत्रः।

न्यासः

इञः प्राचाम्। , २।४।६०

अन्यत्र प्राग्ग्रहणं विकल्पार्थं दृष्टम्, अत इहापि विकल्पो मा विज्ञायीत्याह-- "गोत्रविशेषणम्" इत्यादि॥

बाल-मनोरमा

इञः प्राचाम् १०६८, २।४।६०

इञः प्राचाम्। "इञः" इति पञ्चमी। प्रत्ययत्वात्तदन्तग्रहणम्। "ण्यक्षत्रिये"त्यतो यूनि लुगित्यनुवर्तते। इञन्तात्परस्य

युवप्रत्ययस्य लुगित्यर्थः। अर्थादिञो गोत्रार्थकत्वं लभ्यते। तदाह--गोत्रे य इञ्तदन्ताद्युवप्रत्ययस्य लुगिति। प्राचामिति गोत्रविशेषणं, न तु विकल्पार्थं, व्याख्यानात्। तदाह--तच्चेद्()गोत्रं प्राचां भवतीति। प्राग्देशीयमित्यर्थः। पन्नागारस्येति। प्राग्देशे पन्नागारो नाम कश्चित्, तस्य गोत्रापत्यमित्यर्थे "अत इ"ञिति इञि पान्नागारिः। पान्नागारेरपत्यं युवेत्यर्थे पान्नागारिशब्दात् "यञिञोश्चे"ति फक्। तस्यानेन लुक्। एवंच पन्नागरस्य गोत्रापत्ये युवापत्ये च पान्नागारिरित्येव रूपमित्यर्थः। प्राचां किमिति। गोत्रविशेषणं किमर्थमित्यर्थः। दाक्षिः पिता, दाक्षायणः पुत्र इति। दक्षस्य गोत्रापत्यं दाक्षिः। "अत इञ्"। तस्यापत्यं युवादाक्षायणः। "यञिञोश्चे"ति फक्। तस्य लुङ् न भवति, दाक्षिशब्दस्य प्राग्देशीयगोत्रप्रत्ययान्तत्वाऽभावेन न युवप्रत्ययस्य फकः प्राग्देशीयगोत्रार्थकादिञः परत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

न तौल्वलिभ्यः २।४।६१

अनन्तरेण प्राप्तो लुक् प्रतिषिध्यते। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुग् भवति। तौल्वलिः पिता। तौल्वलायनः पुत्रः। तौल्वलि। धारणि। रावणि। पारणि। दैलीपि। दैवलि। दैवमति। दैवयज्ञि। प्रावाहणि। मान्धातकि। आनुहारति। श्वाफल्कि। आनुमति। आहिंसि। आसुरि। आयुधि। नैमिषि। आसिबन्धकि। बैकि। आन्तरहाति। पौष्करसादि। वैरकि। वैलकि। वैहति। वैकर्णि। कारेणुपालि। कामालि।

न्यासः

न तौल्वलिभ्यः।, २।४।६१

तौल्वल्यादिष्वान्तरहातिशब्दः पौष्करसादिशब्दश्च बाह्वादी इञन्तौ। बाह्वादिषु ह्नन्तरहच्छब्दः पुष्करसच्छब्दस्य पठ()एते; अत्रोभयपदवृद्धिकश्चानुरशतिकादित्वात्। शेषास्तु "अत इञ्" ४।१।९५ इति इञन्ताः॥

बाल-मनोरमा

न तौल्वलिभ्यः १०६९, २।४।६१

न तौल्वलिभ्यः। बहुवचनात्तौल्वल्यादीनां ग्रहणमित्याह--तौल्वल्यादिभ्यः परस्येति। पूर्वेणेति। "इञः प्राचा"मित्यनेन प्राप्तो लुगनेन प्रतिषिध्यत इत्यर्थः। तुल्वल इति। तुल्वलो नाम प्राच्यः कश्चित्। तस्य गोत्रापत्यं तौल्वलिः। "अत इञ्"। तस्यापत्यं युवा तौल्वलायनः। "यञिञोश्चे"ति फक्।

तत्त्व-बोधिनी

न तौल्वलिभ्यः ८९५, २।४।६१

युवप्रत्ययस्य लुगिति। पीलाया वेत्यादि। अपत्येऽणि विहिते गोत्रापत्येऽप्यणेव, "एको गोत्रे"इति वक्ष्यमाणत्वात्। ततोऽणन्तात्पैलशब्दादपत्येऽपि विधीयमानः फैञ् युवापत्ये पर्यवस्यति। तस्य च फिञोऽनेन लुगित्यर्थः। एवं च पीलाया अपत्ये गोत्रापत्ये युवापत्ये चाऽवैरूप्येण पैलशब्दः प्रयुज्यत इत्याह---पैलः पिता पुत्रश्चेति। पैलादिषु ये इञन्ता शालङ्किसात्यकिऔदमेयिपैङ्गलिप्रभृतयस्तेभ्यः "इञः प्राचा"मिति लुकि सिद्धे अप्राचामर्थः पाठ इति ज्ञेयम्। तद्राजाच्चाणः। गणसूत्रमिदम्। तद्राजसंज्ञाकात्परस्य युवप्रत्ययस्य लुगित्यर्थः।तच्चेद्गोत्रं प्राचां भवतीति। इह प्राचाङ्ग्रहणं गोत्रविशेषणं, न तु "प्राचामवृद्धा"दित्यादिवग्विकल्पार्थमित्यर्थे व्याख्यानं शरणम्। दाक्षिः पितेत्यादि। दक्षस्यापत्यं गोत्रापत्यं च पुमान्दाक्षिः। युवापत्यं तु दाक्षयण तु दाक्षायण इति भावः। न तोल्वलिभ्यः।

बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिरित्यभिप्रेत्याह---तोल्वल्यादिभ्य इति। देवमित्र। देवयज्ञि। ()आआफल्कि। आसुरि। नैमेषि। पौष्करसादि। वैकर्णीत्यादि तौल्वल्यादिः।

---

सूत्रम्

काशिका-वृत्तिः

तद्राजस्य बहुषु तेन एव अस्त्रियाम् २।४।६२

ते तद्राजाः ४।१।१७०, ञ्याऽदयस् तद्राजाः ५।३।११९ इति वक्ष्यति, तस्य तद्राजसंज्ञस्य प्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुग् भवति, तेन एव चेत् तद्राजेन कृतं बहुत्वं भवति। अङ्गाः। वङ्गाः। पुण्ड्राः। सुह्माः। मगधाः। लोहध्वजाः। व्रीहिमन्तः। तद्राजस्य इति किम्? औपगवाः। बहुषु इति किम्? आङ्गः। तेन एव ग्रहणं किम्? प्रियो वाङ्गो येषां ते इमे प्रियवाङ्गाः। अस्त्रियाम् इति किम्? आङ्ग्यः स्त्रियः।

लघु-सिद्धान्त-कौमुदी

तद्राजस्य बहुषु तेनैवास्त्रियाम् १०३४, २।४।६२

बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः। पञ्चालाः इत्यादि॥

न्यासः

तद्राजस्य बहुषु तेनैवास्त्रियाम्। , २।४।६२

"बहुषु वत्र्तमानस्य" इति। बहुष्वर्थेषु वत्र्तमानस्येत्यर्थःर। अथ "बहुवचने परतः" इत्येवं कस्मान्न व्याख्यायते? अशक्यमेवं वक्तुम्; यतः संख्यावाची बहुशब्दो न बहुवचनवाची। यदि तु "बहुवचने परतः" इत्ययमर्थोऽत्राभिमतः स्यात्, अस्त्रियामिति प्रतिषेधे न कुर्यात्; प्राप्त्यभावात्। न हि तद्राजान्तदुत्पन्नेन स्त्रीप्रत्ययेन व्यवहिते बहुवचने परतो लुकः प्राप्तिरस्ति। किञ्च, अत्त्रय इत्यत्र बहुचने परतो लुकि विधीयमाने उदात्तनिवृत्तिस्वरः प्रसज्येत। कथम्? अत्त्रेरपत्यानि बहूनीति "इतश्चानिञः" ४।१।१२२ इति ढकि तस्य "तद्धितस्य", "कितः" (६।१।१६४,१६५) इत्यन्तोदात्तत्वे कृते बहुवचने जसि परतः "अत्त्रिभृगुकुत्सवसिष्ठ" २।४।६५ इत्यादिना लुकि कृते "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इति विभक्तेरुदात्तत्वं प्राप्नोति। तस्मात् बहुषु वत्र्मानस्येत्ययमेवार्थः। बहुष्विति च तद्राजान्तस्य विशेषणम्, न तद्राजस्य; अन्यथा हि द्वन्द्वे दोषः प्रसज्येत-- आङ्गश्च वाङ्गश्च सौह्मश्चाऽङ्गवाङ्गसुह्मआ इत्यत्र हुङ् न स्यात्; न ह्मत्र तद्राजो बहुषु वत्र्तते। तदन्तस्तु वत्र्तते, युगपदधिकरणवचनो हि द्वन्द्व इति कृत्वा। तस्मात् तद्राजान्तस्यैवेदं विशेषणम्, न तद्राजस्य। "तद्राजसंज्ञकस्य प्रत्ययस्य बहुषु वत्र्तमानस्यास्त्रीलिङ्गस्य लुग्भवति" इत्ययं तु वृत्तिग्रन्थ एवमुन्नेयः-- बहुषु वत्र्तमानस्यास्त्रीलिङ्गस्य तद्राजान्तस्य यः सम्बन्धी तद्राजसंज्ञकः प्रत्ययस्तस्य तद्राजसंज्ञकस्य प्रत्ययस्य लुग्भवति। कथम्? तद्राजान्तस्यैवैतत् सामथ्र्यं लब्धम्। न ह्मतद्राजान्तस्य तद्राजसंज्ञकः प्रत्ययः सम्बन्धी भवति। सूत्रेऽप्यन्तग्रहणं न कृतम्; प्रत्ययग्रहणपरिभाषयैव तदन्त स्य लब्धत्वात्। तथापि प्रत्ययान्तस्य लुगुच्यमानः प्रत्ययमात्रस्यैव विज्ञायते; "प्रत्ययस्य लुक्श्लुलुपः" १।१।६० इति प्रत्ययादशनस्यैव लुक्संज्ञाविधानात्। "तेनैव चेत्" इति। तद्राजप्रत्ययान्तेनैवेत्यर्थः। "अङ्गाः, वङ्गाः, सुह्माः" इति। अङ्गस्यापत्यानि बहुनि। "द्वयञ्मगध" ४।१।१६८ इत्यादिनाऽण्, तस्य लुक्। "लोहध्वजाः, व्रीहिमन्तः" इति। "पूगात्()ञ्योऽग्रामणीपूर्वात्" ५।३।११२ इति ञ्यप्रत्ययः, तस्य लुक्। "औपगवाः" इति। "प्राग्दीव्यतोऽण" ४।१।८३ "प्रियवाङ्गाः" इति। बहुव्रीहिः। नात्र तद्राजप्रत्ययेन बहुत्वं किं तर्हि? समासेन। न चासौ तद्राजप्रत्ययान्तःच ततस्तद्राजस्याविहितत्वात्। तद्येवम्, द्वन्द्वोऽपि, तद्राजप्रत्ययान्तो न भवतीति तत्रापि लुङ न स्यात्? नैतत् ; यदि द्वन्द्वोऽपि तद्राजप्रत्ययान्तो न भवति, तथापि प्रत्येकं

द्वन्द्वावयवास्तद्राजप्रत्ययान्ता गह्वर्थाश्चेति तत्र भवत्येव लुक। न च बहुष्वित्यर्थग्रहणम्, यश्च बह्वर्थस्तत्रावश्यमेव तत्कृतेन बहुत्वेन भवितव्यम्, त()त्क तेनैवेत्यनेन? एवं मन्यते-- अन्तरङ्गत्वात् तद्राजप्रत्ययोत्पत्तिवेलायां यद्बहुत्वमुपजायते तदेव यदि गृह्यते, न तु तत्पदान्तरापेक्षम्, ततश्च द्वन्द्वेषु लुग् न स्यात्। तेनैवग्रहणं तु द्वितीयोऽयं यत्र इति-- यः प्रत्ययान्तस्य बहुत्वं तेनैव क्रियते, यच्च पदान्तरापेक्षेणापि तत्र सर्वत्र भवतीति। यद्येवम्, इहापि प्राप्नोति-- प्रियवाङ्गा इति? नैष दोषः; एवकारो ह्यत्र क्रियते। स तुल्यजातीयापेक्षयैव नियमं करोति, लोपिबिरेव यत् कृतं बहुत्वमिति। न च प्रियवाङ्गा इत्यत्र लोपिभिरेव कृतं बहुत्वम्, यस्मादत्र किञ्चिल्लोपि पदं किञ्चिदलोपि, एवञ्च नियमे सति द्वन्द्वे सति द्वन्द्वेऽपि यत्र लोप्यलोपिनां तत्रापि न भवति-- "गार्ग्यकाश्यपगालवानाम्" ८।४।६६ इति, अत्र गार्ग्यकाश्यपयोः "यञिञोश्च" ४।१।१०१ इति लोपः प्राप्नोति। गालवस्य तु ऋष्यणन्तत्वान्नास्ति लुकः प्राप्तिः। "आङ्ग्यः" इति। "टिड्ढाणञ्" ४।१।१५ इति ङीप्॥

बाल-मनोरमा

तद्राजस्य बहुषु तेनैवाऽस्त्रियाम् ११७५, २।४।६२

तद्राजस्य। "ण्यक्षत्रियार्ष"त्यतो "लु"गित्यनुवर्तते। "तेने"त्यनन्तरं कृते बहुत्वे "इत्यध्याहारः। तदाह--बहुष्विति। तदर्थकृतबहुत्वे इति। अञादिप्रत्ययान्तमात्रार्थगतबहुत्वे सतीत्यर्थः। तेनेति किम्?। प्रियो वाङ्गो येषां ते प्रियवाङ्गा इत्यत्र बहुत्वस्यान्यपदार्थगतत्वाद्वाङ्गशब्दात्परस्य न लुक्। यद्यपि वर्तिपदार्थविसिष्टान्यपदार्थगतं बहुत्वं वर्तिपदार्थगतमपि भवति, ततापि अञ्प्रत्ययान्तार्थवाङ्गमात्रगतं न भवतीति न लुक्। एतदर्थमेवकारग्रहणम्। इक्ष्वाकबः षञ्चाला इति। "जनपदशब्दा"दिति विहिस्य अञो लुकि आदिवृद्धिनिवृत्तिः। इत्यादीति। अङ्गाः वङ्गा इत्यादि बोध्यम्। कतं तर्हीति। "कौरव्या" इत्यत्र ण्यप्रत्ययस्य, "पाण्ड()" इत्यत्र ड()ण्प्रत्ययस्य च तद्राजतया बहुषु लुक्प्रसङ्गादित्यर्थः। साधव इतीति। कौरव्यशब्दात्, पाण्ड()आशब्दाच्च "तत्र साधुः" इति यत्प्रत्यये "यस्येति चे"त्यकारलोपे यत्प्रत्ययस्य तद्राजत्वाऽभावान्न लुगित्यर्थः। ननु रघुयदुशब्दयोर्जनपदवाचित्वाऽभावात्प्राग्दीव्यतीयेऽणि तस्य तद्राजत्वाऽभावात्कथं बहुषु तस्य लुगित्याशङ्क्यपरिहरति-रघूणामिति। लक्षणयेति। "प्रयोग" इति शेषः। ततश्च नेदमपत्यप्रत्यान्तमिति भावः। लक्षणाबीजं तु रघुयदुसमानवृत्तिकत्वं बोध्यम्।

तत्त्व-बोधिनी

तद्राजस्य बहुषु तेनैवाऽस्त्रियाम् ९७१, २।४।६२

तद्राजस्य। तदर्थेति। तद्राजप्रत्ययार्थेन कृत इत्यर्थः। तेनैवेति किम्()। प्रियपाञ्चालाः। साधव इतीति। तथाच "तत्र साधु"रिति यत्प्रत्ययस्य तद्राजत्वाऽभावल्लुङ् नेति भावः। रघुयदुशब्दयोक्जनपदवाचित्वाऽभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्रवृत्त्या राघवाणां यादवैरित्येव भवतिव्यमित्याशङ्क्याह---रघुयदुशब्दयोरिति। लक्षणयेति। ततश्चोक्तार्थत्वादपत्यप्रत्ययो नाऽत्रोत्पन्न इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

यस्काऽदिभ्यो गोत्रे २।४।६३

बहुषु तेन एव अस्त्रियाम् इति सर्वम् अनुवर्तते। यस्क इत्येवम् आदिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुग् भवति, तेन एव चेद् गोत्रप्रत्ययेन कृतं बहुत्वं भवति। प्रत्ययविधेश्च अन्यत्र लौकिकस्य गोत्रस्य ग्रहणम् इत्यनन्तरापत्ये ऽपि लुग् भवत्येव। यस्काः। लभ्याः। बहुषु इत्येव, यास्काः। तेन एव इत्येव, प्रिययास्काः।

अस्त्रियाम् इत्येव, यास्क्यः स्त्रियः। गोत्रे इति किम्? यास्काश्छात्राः। यस्क। लभ्य। दुह्य। अयःस्थूण। तृणकर्ण। एते पञ्च शिवादिसु पठ्यन्ते। ततः परेभ्यः षड्भ्यः इञ्। सदामत्त। कम्बलभार। बहिर्योग। कर्णाटक। पिण्डीजङ्घ। बकसक्थ। ततः परेभ्यश्चतुर्भ्यः गृष्ट्यादिभ्यश्च ४|१|१३६ इति ढञ्। बस्ति। कुद्रि। अजबस्ति। मित्रयु। ततः परेभ्यो द्वादशभ्य इञ्। रक्षोमुख। जङ्घारथ। उत्कास। कटुकमन्थक। पुष्करसत्। विषपुट। उपरिमेखल। क्रोष्टुमान्। क्रोष्टुपाद। क्रोष्टुमाय। शीर्षमाय। पुष्करसच्छब्दाद् बाह्वादिपाठादिञ्। खरपशब्दो नडादिषु पथ्यते, ततः फक्। पदक। वर्मक। एताभ्याम् अत इञ् ४|१|९५। भलन्दनशब्दात् शिवादिभ्यो ऽण् ४|१|११२। भडिल। भण्डिल। भदित। भण्डित। एतेभ्यश्चतुर्भ्यः अश्वाऽदिभ्यः फञ् ४|१|११०।

न्यासः

यस्कादिभ्यो गोत्रे।, २।४।६३

"अपत्यं पौत्रप्रभृति गोत्रम्" ४|१|१६२ इति पारिभाषिकमेवेदं गोत्रं गृह्रते, न लौकिकमिति कस्यचिद्भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह-- "प्रत्ययविधेयश्चान्यत्र " इत्यादि। एतच्चोभयगतिरिह शास्त्रे संभवतीति लभ्यते। लौकिके गोत्रे गृह्रमाणे शास्त्रीयमपि तत्रान्तर्भवति; प्रत्ययविधौ तु लौकिकगोत्रस्य ग्रहणं न भवतीति ज्ञापकात्। यदयम्-- "गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजादवुञ" ४|२|३८ इत्यत्र गौत्रग्रहणं कृत्वा राजन्यग्रहमं करोति, तज्ज्ञापयति-- प्रत्ययविधौ लौकिकगोत्रग्रहणं न भवतीति। "यास्काश्छात्राः" इति। "तस्येदम्" ४|३|१२० इत्यण्। पुष्करच्छब्दोऽप्यत्र पठ()ते, स किमर्थः; यावता "बह्वच इञ् प्राच्यभरतेषु" (२।४।६६) इत्येवं सिध्यति? न सिध्यति; "न गोपवनादिभ्यः" २|४|६७ इति प्रतिषेधः प्राप्नोति। गोपवनादिषु हि कैश्चित् तौल्वल्यादयश्चेति पठ()ते, तौल्वल्यादिषु पुष्करसच्छब्दः पठ()ते, तौल्वल्यादीनाञ्च गोपवनादिषु पाठोऽस्तीत्ययमेव यस्कादिषु पुष्करसच्छब्दपाठो ज्ञापयति॥

बाल-मनोरमा

यस्कादिभ्यो गोत्रे ११३०, २।४।६३

यस्कादिभ्यो। नेदं सूत्रमपत्याधिकारस्थं, किंतु द्वैतीयीकम्। अतो गोत्रशब्देन प्रवराध्यायप्रसिद्धमेव गोत्रमिह विवक्षितम्, "अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्रते" इति "यूनि लुक्" इति स्त्रीपुसाभ्या"मित्यादिसूत्रभाष्ये सिद्धान्तितत्वात्। "ण्यक्षत्रियार्षे"त्यतो सुगित्यनुवर्तते। "तद्राजस्य बहुषु तेनैवास्त्रिया"मिति सूत्रं तद्राजवर्जमनुवर्तते। तदाह-- एभ्योऽपत्यप्रत्ययस्येति। मित्रयव इति। मित्रयोरपत्यानि पुमांस इत्यर्थः। गृष्ट()आदिढको लुकि आदिवृद्धिनिवृत्तिः।

तत्त्व-बोधिनी

यस्कादिभ्यो गोत्रे ९४१, २।४।६३

यस्कादिभ्यो। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्रत इत्याशयेनाह--अपत्यप्रत्ययस्येति। "ण्यक्षत्रियार्षे"त्यतो लुगित्यनुवर्तते, "तद्राजस्ये"ति सूत्रात् "बहुषु तेनैवास्त्रिया"मिति च, तदाह----लुक् स्यादित्यादि। तत्कृते इति किम्()। प्रिययास्काः। बहुत्वे किम्()। यास्कः। शिवद्यण्। यस्क, लुह्र, द्रुह्र, कर्णाटक, वस्ति, कुद्रि, मित्रयु--इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

यञञोश् च २।४।६४

बहुषु तेन एव अस्त्रियाम्, गोत्रे इति च अनुवर्तते। यञो ऽञ्श्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्य अस्त्रीलिङ्गस्य लुङ् भवति।

गर्गाऽदिभ्यो जञ् ४।१।१०५ गर्गाः। वत्साः। अञः खल्वपि, अनृष्यानन्तर्ये बिदाऽदिभ्यो ऽञ् ४।१।१०४ बिदाः। उर्वाः। बहुष्वित्येव, गार्ग्यः। बैदः। तेनैव इत्येव, प्रियगार्ग्याः। प्रियबैदाः। अस्त्रियाम् इत्येव, गार्ग्यः स्त्रियः। बैद्यः स्त्रियः। गोत्रे इत्येव, द्वीपादनुसमुद्रं यञ् ४।३।१० द्वैप्याः। उत्सादिभ्यो ऽञ् औत्साश्छात्राः। यञादीनाम् एकद्वयोर् वा तत्पुरुषे षष्ठ्या उपसङ्ख्यानम्। गार्ग्यस्य कुलम् गार्ग्यकुलं गर्गकुलं वा। गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलं वा। एवं बैदस्य कुलं बैदकुलं बिदकुलं वा। बैदयोः कुलं बैदकुलं बिदकुलं वा। यञादीनाम् इति किम्? आङ्गकुलम्। एकद्वयोः इति किम्? गार्गाणां कुलं गर्गकुलम्। तत्पुरुषे इति किम्? गार्गस्य समीपम् उपगार्ग्यम्। षष्ठ्या इति किम्? परमगार्ग्यः।

लघु-सिद्धान्त-कौमुदी

यञञोश्च १०१२, २।४।६४

गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः॥

न्यासः

यञञोश्च। , २।४।६४

"गार्ग्यः" इति। "यञश्च" ४।१।१६ इति ङीप्। "यस्येति च" ६।४।१४८ इत्यकारलोपः, "हलस्तद्धितस्य" ६।४।५० इति यकारस्य च। तत्र हि "सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः" ६।४।१४९ इत्यतः "य" इत्यनुवत्र्तते, "अल्लोपोऽनः" ६।४।१३४ इत्यतो लोप इति च। "वैद्यः" इति। "शाङ्र्गरवाद्यञो ङीन्" ४।१।७३। "द्वैप्याः, औत्साः" इति। जातादौ शैषिकेऽर्थे यञञो। "यञादीनाम्" इत्यादि। यञादीनां बहुषु लुगुच्यमान एकत्वे द्वित्वे च प्राप्नोतीति वचनम्। एकद्वयोरिति च संख्याप्रधानोऽयं निर्देशः, यथा-- "द्वयेकयोर्द्विचवनैकवचने" १।४।२२ इति, एकत्वद्वित्वयोरिति यावत्; उपसंख्यानशब्दस्य प्रतिपादनमर्थः। कत्र्तव्यमित्यध्याहार्यम्। तत्रेदं प्रतिपादनम्-- "वा यौ" २।४।५७ इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणमनुवर्तते। चकारो वात्रानुक्तसमुच्चयार्थः क्रियते। तेन यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ()आ लुग्भवतीति। यदि वेत्यनुवत्र्तते तदा बहुष्वपि विकल्पः स्यात्। व्यवस्थिविभाषाविज्ञानान्न भविष्यतीत्यदोषः। "आङ्गकुलम्" इति। अत्राङ्गशब्दात् तद्राजसंज्ञकोऽण्, स च यञादिर्न भवति तस्येह प्रकरणे यञादिभ्यः प्राङ्निर्देशात्। "उपगाग्र्यम्" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिनाव्ययीभावः। "परमगार्ग्यः" इति। "सन्महत्" २।१।६० इत्यादिना प्रथमान्तयोस्तत्पुरुषः॥

बाल-मनोरमा

यञञोश्च १०९२, २।४।६४

यञञोश्च। द्वितीयचतुर्थपादे इदं सूत्रं न त्विदं चातुर्थिकमपत्याधिकारस्थम्। तत्र प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। "तद्राजस्य बहुषु तेनैवाऽस्त्रिया"मिति सूत्रं तद्राजस्येतिवर्जमनुवर्तते। "ण्यक्षत्रिये त्यतो "लु"गिति, "यस्कादिभ्यो गोत्रे" इत्यतो "गोत्रे" इति च। तदाह--गोत्रे यदिति। एतयोरिति। यञञोरित्यर्थः। प्रत्ययाऽदर्शनस्यैव लुक्त्वादिति भावः। तत्कृते इति। यञ्प्रत्ययार्थगतबहुत्वे इति यावत्। गर्गाइति। गर्गस्यापत्यानीत्यादिविग्रहः। प्रियागाग्र्या इति। प्रियो गाग्र्यो येषामिति विग्रहः। अत्र यञर्थगतबहुत्वाऽभावान्न लुगिति भावः। द्वैप्या इति। द्वीपे भवा इत्यर्थः। "द्वीपादनुसमुद्र"मिति यञ्। औत्सा इति। उत्से भवा इत्यर्थः। "उत्सादिभ्योऽञ्"। इहोभयत्रापि यञञोर्गौत्रवाचित्वाऽभावान्न लुगिति भावः। ननु पौत्रा दौहित्रा इत्यत्राप्यनृषिविदादिलक्षणाऽञो लुक्स्यात्। नच तस्यानन्तरापत्यवाचित्वाऽभावान्न लुगिति भावः। ननु पौत्रा दौहित्रा इत्यत्राप्यनृषिविदादिलक्षणाऽञो लुक्स्यात्। नच तस्यानन्तरापत्यवाचित्वाद्गोत्रवाचित्वाऽभावान्न लुगिति वाच्यं, "यूनि लु"गिति सूत्रभाष्ये अपत्य#आधिकारादन्यत्र लौकिकमेव गोत्रं गृह्रते इति सिद्धान्तित्वादित्यत आह--प्रवरेति। "कश्यपोऽत्रिर्भरद्वाजो वि()आआमित्रोऽथ गौतमः।

जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः। "तेषां यदपत्यं तद्गोत्रमित्याचक्षते" इति बोधायनीयादिप्रवराध्यायप्रसिद्धा भार्गवादय एवैह गोत्रत्वेन विवक्षिता इत्यर्थः। कैयटेन "लौकिकस्य गोत्रस्य ग्रहण"मिति भाष्यमुपादाय तथैव व्याख्यातत्वादिति भावः। एवंच पौत्रा दौहित्रा इत्यादौ पौत्रदौहित्रयोस्तथाविधगोत्रवाचित्वाऽभावान्न लुगिति स्थितम्। विस्तरस्तु शब्देन्दुशेखरे ज्ञेयः।

तत्त्व-बोधिनी

यञञोश्च ९१३, २।४।६४

यञञोश्च। "ण्यक्षत्रियार्ष"त्यतो लुगिति, तद्राजस्ये"ति सूत्राद्बहुषु तेनैवाऽस्त्रियामिति चानुवर्तते, "यस्कादिभ्यो गोत्रे"इत्यतो गोत्र इति च।

---

सूत्रम्

काशिका-वृत्तिः

अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश् च २।४।६५

अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति। अत्रिशब्दादितश्च अनिञः ४।१।१२२ इति ढक्। इतरेभ्यः ऋष्यण्। अत्रयः भृगवः। कुत्साः। वसिष्ठाः। गोतमाः। अङ्गिरसः। बहुषु इत्येव, आत्रेयः। भर्गवः। तेन एव इत्येव, प्रियात्रेयाः। प्रियभार्गवाः। अस्त्रियाम् इति किम्? आत्रेय्यः स्त्रियः।

न्यासः

अत्त्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च। , २।४।६५

"{आत्रेय्यः-- इति मुद्रितः पाठः"आत्त्रेयः" इति। "टिड्ढाणञ्" ४।१।१५ इति। ङीप्॥

बाल-मनोरमा

अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ११३१, २।४।६५

अत्रिभृगु। पूर्वसूत्राद्गोत्र इति, तत्र यदनुवृत्तं तच्च सर्वमिहानुवर्तते। तदाह--एभ्यो गोत्रेति। अत्रेः, भृगोः, कुत्सस्य, वसिष्ठस्य, गोतमस्य, अङ्गरसश्च अपत्यानि पुमांस इति विग्रहाः। तत्र अत्रेः "इतश्चाऽनिञः" इति ढको।ञनेन लुक्। इतरेभ्यस्तु ऋष्यण इति बोध्यम्। लुकि आदिवृद्धेर्निवृत्तिः।

तत्त्व-बोधिनी

अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ९४२, २।४।६५

अत्रि। गोत्रप्रत्ययस्येति। अत्रि शब्दात् "इतश्चाऽनिञः"इति ढिक्।इतरेभ्यस्तु ऋष्यणिति बोध्यम्। भारतगोत्रे उदाहरति।

---

सूत्रम्

काशिका-वृत्तिः

बह्वचिञः प्राच्यभ्रतेषु २।४।६६

बह्वचः प्रातिपदिकात् य इञ् विहितः प्राच्यगोत्रे भरतगोत्रे च वर्तते, तस्य बहुषु लुग् भवति। पन्नागाराः। मन्थरैषणाः। भरतेषु खल्वपि युधिष्ठिराः। अर्जुनाः। बह्वचः इति किम्? बैकयः। पौष्पयः। प्राच्यभरतेषु इति किम्? बालाकयः।

हास्तिदासयः। भरताः प्राच्या एव, तेषां पुनर् ग्रहणं ज्ञापनार्थम् अन्यत्र प्राग् ग्रहणे भरतग्रहणं न भवति इति। तेन इञः प्राचाम् २।४।६० इति भरतानां युवप्रत्ययस्य लुग् न भवति। अर्जुनिः पिता। आर्जुनायनः पुत्रः।

न्यासः

बह्वच इञः प्राच्यभरतेषु। , २।४।६६

"भरताः" इति। येषां भरत आद्यः संज्ञाकारी ते भरताः। "पन्नागाराः" इत्यादिषूहाहरणेषु "अत इञ्" ४।१।९५, तस्य लुक्। "बालाकयः" इति। बाह्वादित्वादिञ्। "हास्तिदासयः" इति। "अत इञ्" ४।१।९५। "आर्जुनायनः" इति। "यञिञोश्च" ४।१।१०१ इति फक्॥

बाल-मनोरमा

बह्वच इञः प्राच्यभरतेषु ११३२, २।४।६६

बह्वच इञः। प्राच्ये उदाहरति--पन्नागारा इति। पन्नागारस्यापत्यानीति विग्रहः। अत इञो लुक्। भरतगोत्रे उदाहरति--युधिष्ठिरा इति। युधिष्ठिरस्यापत्यानीति विग्रहः। कुरुलक्षणं ण्यं बाधित्वा बाह्वादित्वादिञ्। तस्य लुक्।?बहुत्वे तु यौधिष्ठिरिः।

तत्त्व-बोधिनी

बह्वच इञः प्राच्यभरतेषु ९४३, २।४।६६

युधिष्ठिरा इति। बहुष्वेव लुक्। नेह--यौधिष्ठिरिः। कुरुलक्षणं ण्यं बाधित्वा बाह्वादित्वादिञ्।

---

सूत्रम्

काशिका-वृत्तिः

न गोपवनाऽदिभ्यः २।४।६७

गोपवनाऽदिभ्यः प्रस्य गोत्रप्रत्ययस्य लुग् न भवति। बदाद्यनतर्गणो ऽयम्। ततो ऽञो गोत्रप्रत्ययस्य यञञोश्च २।४।६४ इति लुक् प्राप्तः प्रतिषिध्यते। गौपवनाः। शैग्रवाः। गोपवन। शिग्रु। बिन्दु। भाजन। अश्व। अवतान। श्यामाक। श्वापर्ण। एतावन्त एव अष्टौ गोपवनाऽदयः। परिशिष्टानां हरितादीनं प्रमादपाठः। ते हि चतुर्थे बिदाऽदिषु पठ्यन्ते। तेभ्यश्च बहुषु लुग् भवत्येव, हरितः, किंदासाः इति।

न्यासः

न गोपवनादिभ्यः। , २।४।६७

विदाद्यन्तर्गणोऽयमिति लुक्प्रा()प्त दर्शयति। "शैग्रवाः" इति। "ओर्गुणः" ६।४।१४६। ननु चान्येऽपि हरितादयोऽत्र पठ()न्ते, तत्किमित्यवधार्यत एतावन्त इत्यत आह-- "परिशिष्टानाम्" इत्यादि। "प्रमादपाठः" इति। अनार्षः पाठः इत्यर्थः। यदि तेषां प्रमादपाठः, एवं तह्रविदादित्वादञप्येभ्यो न प्राप्नोतीत्यत आह-- "ते हि" इत्यादि। ते हि चतुर्थेऽध्याये बिदादिषु गोपवनादिभ्यः पर्वे पठ()न्त इति न भवत्येष दोषप्रसङ्गः। यस्त्विह गोपवनादिभ्योऽष्टभ्यः पर एषां पाठः, स प्रमादपाठ इत्युच्यते॥

बाल-मनोरमा

न गोपवनादिभ्यः ११३३, २।४।६७

न गोप। बिदाद्यन्तर्गणोऽयमिति। ततश्च अत्रः "यञञोश्चे"ति प्राप्तस्य लुङ् नेति भावः।

तत्त्व-बोधिनी

न गोपवनादिभ्यः ९४४, २।४।६७

विदाद्यन्तर्गणोऽयमिति। "यञञोश्चे"ति लुगत्र प्राप्नोतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तिककितवाऽदिभ्यो द्वन्द्वे २।४।६८

तिकाऽदिभ्यः कितवाऽदिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषु लुग् भवति। तैकायनयश्च कैतवायनयश्च, तिकाऽदिभ्यः फिञ् ४।१।१५८, तस्य लुक्, तिककितवाः। वाङ्खरयश्च भान्डीरथयश्च, अत इञ् ४।१।९५, तस्य लुक्, वङ्खरभण्डीरथाः। औपकायनाश्च लामकायनाश्च, नडादिभ्यः फक् ४।१।९९, तस्य लुक्, उपकलमकाः। पाफकयश्च नारकयश्च, अत इञ् ४।१।९५, तस्य लुक्, पफकनरकाः। बाकनखयश्च श्वागुदपरिणद्धयश्च, अत इञ् ४।१।९५, तस्य लुक्, बकनखश्वगुदपरिणद्धाः। उब्जशब्दातत इञ् ४।१।९५, ककुभशब्दात् शिवादिभ्यो ऽन् ४।१।११२ तयोर् लुक्, औब्जयश्च काकुभाश्च उब्जककुभाः। लाङ्कयश्च शान्तमुखयश्च, अत इञ् ४।१।९५ तस्य लुक्, लङ्कशान्तमुखाः। उरसशब्दस्तिकादिषु पठ्यते, ततः फिञ्, लङ्कटशब्दादिञ्, तयोर् लुक्, औरसायनश्च लाङ्कटयश्च उरसलङ्कटाः। भ्राष्टकयश्च कापिष्ठलयश्च, अत इञ् ४।१।९५, तस्य लुक्, भ्रष्टकक्पिष्ठलाः। कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च, अत इञ् ४।१।९५, तस्य लुक्, कृष्णाजिनकृष्णसुनदराः। आग्निवेश्यश्च दासेरकयश्च, अग्निवेशशब्दात् गर्गादिभ्यो यञ् ४।१।१०५, दासेरकशब्दातत इञ् ४।१।९५, तयोर्लुक्, अग्निवेशदासेरकाः।

न्यासः

तिककितवादिभ्यो द्वन्द्वे। , २।४।६८

किमर्थं पुनस्तिककितवाभ्यां द्वाभ्यां गण उपलक्ष्यते, नैकेनैवोपलक्ष्येत? नैतत्; कार्यिणा हि गण उपलक्षणयितुं युक्तः, द्वन्द्वश्चात्र कार्यी, तेनैवोपलक्षयितुं युक्तः॥

न्यासः

उपकादिभ्योऽन्यतरस्यामद्वन्द्वे। , २।४।६८

यदि द्वन्द्वे च भवत्यद्वन्द्वग्रहणं तर्हि किमर्थमित्याह-- "अद्वन्द्वग्रहणम्" इत्यादि। द्वन्द्वग्रहणे नात्र द्वन्द्वाधिकारः सम्बध्यते-- द्वन्द्वे द्वन्द्वाधिकार इति, तस्य नञा सम्बन्धे च द्वन्द्वाधिकारनिवृत्तिः प्रतीयते।?थ विषयोपग्रहणार्थमद्वन्द्वग्रहणं कस्मान्न विज्ञायते-- अद्वन्द्वेऽद्वन्द्वविषय इति? यद्ययमर्थोऽभीष्टः स्यादद्वग्रहणं न कुर्यात्; विनापि तेनार्थस्य प्रतीतेः। कथम्? तिककितवादयोऽपीह त्रयः पठ()न्ते-- उपकलमकाः, भ्रष्टककपिष्टलाः, कृष्णाजिनकृष्णसुन्दरा इति, तेषाञ्चाद्वन्द्व एव ग्रहणं प्रयोजयति न द्वन्द्वः; पूर्वेणैव सिद्धत्वादिति। तेषां तावन्नियमेनाद्वन्द्वार्थं ग्रहणम्, तत्साहचर्यादितरेषामप्यद्वन्द्वार्थं ग्रहणं युक्तमिति निष्फलमेवाद्वन्द्वग्रहणं स्यात्। तस्माद् द्वन्द्वाधिकारनिवृत्त्यर्थमेतद्युक्तमिति। "तेषां पूर्वेण नित्यमेव लुग्भवति" इति। अन्यथा हि तिककितवादिषु तेषां पाठोऽनर्थकः स्यात्। "अद्वन्द्वे त्वनेन विकल्पः" इति। प्रकृतत्वाल्लुको विज्ञेयः। तत्रोपकलमशब्दाभ्यां नडादिफग्विधानात् तस्य लुग्विकल्पः, ततः परेभ्यः प्राक् कपिष्ठलशब्दात् इञः। कपिष्ठलमयूरकर्ण-- इत्येतेभ्यः

शिवादिभ्योऽणः। खारीजङ्घादिभ्यः प्राक् कठेरणिशब्दादत इञः। कठेरणिशब्दादौत्सर्गिकस्याणः। कुषीतकादिभ्यः कृष्णपिङ्गलपर्यन्तेभ्योऽत इञः। अनुलोमशब्दात् बाह्वादीञः। बाह्वादिषु हि लोमशब्दः पठ()ते, स च तदन्तविधिं प्रयोजयति। अनुगतानि लोमान्यस्येत्यनुलोमा, तस्यापत्यानुलोमयः, अनुलोमान इति। शेषाणामत इञः॥

बाल-मनोरमा

तिककितवादिभ्यो द्वन्द्वे ११३४, २।४।६८

तिककितव। तैकायनयश्च कैतवायनयश्चेति। द्वन्द्वविग्रहप्रदर्शनम्। तिककितवा इति। "द्वन्द्वे" इति सप्तमीनिर्देशात्पदद्वयादपि फिञो लुक्।

तत्त्व-बोधिनी

तिककितवादिभ्यो द्वन्द्वे ९४५, २।४।६८

तिककितवादिभ्यो। यद्यपि द्वन्द्वरूपाण्येव गणे पठ()न्ते तिकादीनि पूर्वपदानि कितवादिन्युत्तरपदानि, तथापि "तिकादिभ्यः"इत्युक्ते पुर्वपदेष्वेव लुगाशङ्क्येत, इष्यन्ते तूत्तरपदेष्वपि, अतः "तिककितवादिभ्यः"इत्युक्तम्। तिककितवा इति। अन्येऽप्यत्रोदाहर्तव्याः---औपकायनाश्च लामकायनाश्च। "नडादिभ्यः फक्" तस्य लुक्। उपकलमकाः। भ्राष्ट्रकयश्च कापिष्ठलयश्च। "अत इञ"तस्य लुक्। भ्राष्ट्रककपिष्ठलाः। काष्र्णाजिनयश्च कार्ष्णसुन्दरयश्च। "अत इञ्"तस्य लुक्। कृष्णाजिनकृष्णसुन्दरा इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

उपकाऽदिभ्यो ऽन्यतरस्याम् अद्वन्द्वे २।४।६९

उपक इत्येवम् आदिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति अन्यतरस्यां द्वन्द्वे च अद्वन्द्वे च। अद्वन्द्वग्रहनं द्वन्द्वाधिकारनिवृत्त्यर्थम्। एतेषं च मद्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते उपकलमकाः, भ्रष्टककपिष्ठलः, कृष्णाजिनकृष्णसुन्दराः इति। तेषां पूर्वेण एव नित्यम् एव लुग् भवति। अद्वन्द्वे त्वनेन विकल्पः उपकाः, औपकायनाः। लमका, लामकायनाः। भ्रष्टकाः, भ्राष्टकयः। कपिष्ठलाः, कापिष्ठलयः। कृष्णाजिनाः, कार्ष्णाजिनयः। कृष्णसुन्दराः, कार्ष्णसुन्दरयः इति। परिशिष्टानां च द्वन्द्वे ऽद्वन्द्वे च विकल्पः इति। पण्डारक। अण्डारक। गडुक। सुपर्यक। सुपिष्ठ। मयूरकर्ण। खारीजङ्घ। शलावल। पतञ्जल। कण्ठेरणि। कुषीतक। काशकृत्स्न। निदाघ। कलशीकण्ठ। दामकण्ठ। कृष्णपिङ्गल। कर्णक। पर्णक। जटिलक। बधिरक। जन्तुक। अनुलोम। अर्धपिङ्गलक। प्रतिलोम। प्रतान। अनभिहित।

बाल-मनोरमा

उपकादिब्योऽन्यतरस्यामद्वन्द्वे ११३५, २।४।६९

उपकादिभ्यो। चकारमध्याह्रत्याह--द्वन्द्वे चेति। एवं च अस्वरितत्वादेव पूर्वसूत्राद्द्वन्द्वग्रहणाननुवृत्त्यैव सिद्धे अद्वन्द्वग्रहणं स्पष्टार्थमेव। नच "द्वन्द्वे ने"ति निषेध एव किं न स्यादिति वाच्यं, द्वन्द्वानामपि गणे पाठात्। तदेतत्सूचयन्द्वन्द्वमुदाहरति--भ्राष्ट्रककपिष्ठला इति। इञो वा लुक्। अद्वन्द्वे उदाहरति-लमकाः लामकायना इति। अ()आआदि()ओ लुग्विकल्पः। "उपका" "औपकायना" इत्याद्यप्युदाहार्यम्।

तत्त्व-बोधिनी

उपकादिभ्योऽन्यतरस्याम द्वन्द्वे ९४६, २।४।६९

उपकादिभ्यो। अद्वन्द्वग्रहणं "द्वन्द्वे"इत्येतन्नाधिक्रियत इति स्फुटिकरणार्थम्। [उपकादीनां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ()न्ते "उपकलमकाः"इत्यादयस्येषां पूर्वेण नित्यमेव लुक्, अद्वन्द्वे त्वनेन विकल्प इति ज्ञेयम्]। भाष्ये "भ्राष्ट्रकिकापिष्ठलयः"इत्युदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति कैयटः। तेनात्र द्वन्द्वेऽपि विकल्प एवोचित इत्याशयेनोदाहरति--भ्राष्ट्रककपिष्ठला इत्यादि। तिककितवादिषु पठितानामनेनाऽद्वन्द्व एव विकल्प एवोचित इत्याशयेनोदाहरति---भ्रा,()ट्रककपिष्ठला इत्यादि। तिककितवादिषु पठितानामनेनाऽद्वन्द्व एव विकल्प इत्याशयेनोदाहरति----लमकाः। लामकायना इति। एवमन्येऽप्युदाहर्तव्याः। उपकाः औपकायनाः, भ्राष्ट्रकाः भ्राष्ट्रकायना इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् २।४।७०

आगस्त्यकौण्डिन्ययोर् गोत्रप्रत्यययोः अणो यञश्च बहुषु लुग् भवति, परिशिष्टस्य च प्रकृतिभागस्य यथासङ्ख्यम् अगस्ति, कुण्डिनचित्येतावादेशौ भवतः। अगस्तयः। कुण्डिनाः। चकारः स्वरार्थः। मद्योदात्तो हि कुण्डिनीशब्दस् तदादेशो ऽपि तथा स्यात्। अगस्त्यशब्दादृष्यण्, कुण्डिनीशब्दाद् गर्गादित्वाद् यञ्। तयोः गोत्रे ऽलुगचि ४।१।८९ इति लुकि प्रतिषिद्धे आगस्तीयाः छत्राः इति वृद्धलक्षणश्छो भवति। कौण्डिन्ये त्वणैव भवितव्यम्, कण्वादिभ्यो गोत्रे ४।२।११० इति। तत्र विशेषो न अस्ति। कौण्डिनाश्छात्राः।

न्यासः

आगस्त्यगौण्डिन्ययोरगस्तिगुण्डिनच्।, २।४।७०

यद्यपि प्रत्ययान्तात् षष्ठ्युच्चारिता, तथापि प्रत्ययस्यैव लुग्विज्ञायते, न तदन्तस्य; यस्मात् प्रत्ययादर्शनस्य लुगित्येषा संज्ञा विहिता, न तदन्तस्येत्यालोच्याह-- "आगस्त्यकौण्डिन्ययोर्गोत्रप्रत्यययोः" इति। व्यधिकरणे षष्ठ्यौ। आगस्त्यकौण्डिन्ययोर्यावयवौ गोत्रप्रत्ययौ तयोरित्यर्थः। तावेव प्रत्ययौ स्वरूपेण दर्शयन्नाह-- "अणो यञश्च" इति। यञो यद्यपि लुक् सिद्धस्तथापि पुनर्विधीयते कुण्डिनजादेशेन तस्य बाधा मा विज्ञायीति। "मध्योदात्तो हि कुण्डिनीशब्दः" इति। कुण्डमस्यास्तीति "अत इनिठनौ" ५।२।११४ इतीनिप्रत्यये कृते प्रत्ययस्वरेण। "तदादेशोऽपि तथा स्यात्" इति। स्थानिवद्भावेन मध्योदात्तः स्यात्। चित्करणान्मध्योदात्तत्वं न बवति। किमर्थं पुनः प्रत्ययान्तरयोरेवायमादेशो न क्रियत इत्याह--- "तयोः" इत्यादि। यदि प्रत्ययान्तयोरेवायमादेशः स्यात "गोत्रेऽलुगचि" ४।१।८९ इति प्रतिषधो न स्यात्। यस्माल्लुकोऽसौ प्रतिषेधो नादेशस्येति स्यादेवात्रादेशः, ततश्चावृद्धादणेव स्यात्; एवं चागस्ता इत्यनिष्टं रूपं स्यात्। यद्यपि वृद्ध्सयादेशः स्यानिवद्भावाद् वृद्धग्रहणेन गृह्रते तथाप्यगस्तीया इति स्यात्, आगस्तीया इति न सिध्यति। न च स्थानिवद्भावो लभ्यते; वृद्धसंज्ञाया अल्विधित्वात्। इह प्रत्ययस्य तु लुकि परिशिष्टस्यादेशे विहिते "गोत्रेऽलुगचि" ४।१।८९ इति लुकि च प्रतिषिद्धे "वृद्धाच्छः" ४।२।११३ सिद्धो भवति। "तत्र विशेषो नास्ति" इति। सत्यामपि वृद्धसंज्ञायां "कण्वादिभ्यो गोत्रे" ४।२।११० इति च्छापवदेनाणैव भवितव्यमिति नास्ति कौण्डिन्ये विशेषः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सुपः ६।१ धातु-प्रातिपदिकयोः ६।२ लुक् ?

समासः॥

धातुश्च प्रातिपदिकश्च धातुप्रातिपदिके, तयोः ़ इतरेतरद्वन्द्वः।

अर्थः॥

धात्ववयवस्य, प्रातिपदिकावयवस्य च सुपः लुक् भवति।

उदाहरणम्॥

पुत्रीयति, घटीयति। प्रातिपदिके - कष्टश्रितः, राजपुत्रः॥

काशिका-वृत्तिः

सुपो धातुप्रातिपदिकयोः २।४।७१

सुपो विभक्तेर्धातुसंज्ञायाः प्रातिपदिकसंज्ञायाश्च लुग् भवति। तदन्तर्गतास्तद्ग्रहणेन गृह्यन्ते। धातोस्तावत् पुत्रीयति। घटीयति। प्रातिपदिकस्य कष्टश्रितः। राजपुरुषः। धातुप्रातिपदिकयोः इति किम्? वृक्षः। प्लक्षः।

लघु-सिद्धान्त-कौमुदी

सुपो धातुप्रातिपदिकयोः ७२४, २।४।७१

एतयोरवयवस्य सुपो लुक्॥

न्यासः

सुपो धातुप्रातिपदिकयोः। , २।४।७१

"धातुप्रातिपदिकयोः" इति। यदीयं सप्तमी स्यात् तदाऽयमर्थो विज्ञायेत-- धातौ च प्रातिपदिके च या सन्निकृष्टा विभ्कतिस्तस्या लुग्भवतीति। सन्निकृष्टत्वञ्चोपश्लेषमन्तरेण न सम्भवतीतीहापि स्यात्--- वृक्षः प्लक्ष इति, अस्ति ह्त्रापि प्रादिपदिकेन विभक्तेरुपश्लेषः। तस्मात् षष्ठीयं युक्तेति मत्वाह-- "सुपो विभक्तेर्धातुसंज्ञायाः" इत्यादि। कथं पुनविभक्तेर्धातुसंज्ञा प्रातिपदिकसंज्ञा च भवतीत्यत आह-- "तदन्तर्गता" इत्यादि। नन्वेमपि धातुप्रातिपदिकयोरेवकदेशीभूता विभक्तयः स्युः, न धातुसंज्ञकाः, नापि प्रातिपदिकसंज्ञकाः? समुदायेषु हि प्रवृत्ताः शब्दा अवयेवष्वपि वत्र्तन्त इत्यदोषः। "पुत्रीयती" #इति। आत्मनः पुत्रमिच्छतीति "सुप आत्मनः क्यच्" ३।१।८ "क्यचि च" ७।४।३६ इतीत्त्वम्, "सनाद्यन्ता धातवः" ३।१।३२ इति धातुसंज्ञा, सा च सुबन्तात् क्यज्विहित इति ससुप्कस्यैव भवतीति तेनात्र विभक्तिर्धात्वन्तर्गता भवति। "कष्टश्रितः" इति। कष्टं श्रित इति "द्वितीया श्रित" २।१।२३ इत्यादिना समासः। "कृत्तद्धितसमासाश्च" १।२।४६ इति प्रातिपदिकसंज्ञा, सापि सुबन्तानां समासो भवतीति ससुप्कस्यैव भवति। तेनात्रापि विभक्तिः प्रातिपद#इकान्तर्गता भवति। वृक्षः, प्लक्ष इत्यत्राप्यप्रत्यय इति प्रातिपदिकसंज्ञाप्रतिषेधात् सविभक्तिकस्य प्रातिपदिकसंज्ञा नास्तीति नास्ति विभक्तेः प्रातिपदिकान्तर्भावः॥

बाल-मनोरमा

सुपोधातुप्रातिपदिकयोः ६४२, २।४।७१

सुपो धातु। "धातुप्रातिपदिकयो"रित्यवयवषष्ठीत्याह--एतयोरवयवस्येति। लुक्स्यादिति। "ण्यक्षत्रियार्षञितो यूनि लुक्" इत्यतस्तदनुवृत्तेरिति भावः। न च "सुप" इत्यनेन सप्तमीबहुवचनस्यैव ग्रहणं किं न स्यादिति वाच्यम्, "पञ्चम्याः स्तोकादिभ्यः" इत्यलुग्विधानात्सुप्प्रत्याहारस्यैवात्र ग्रहणमिति ज्ञापनात्। नचैव मपि पूर्वं भूत इति लोकिकविग्रहवाक्ये

परिनिष्ठितसन्धिकार्ययोः सुबन्तयोः समासे सति पूर्वमित्यत्र अमि पूर्वरूपस्य एकादेशस्य परादित्वमाश्रित्य अमो लुकि समासदशायां वकारादकारो न श्रूयेत। पूर्वान्तत्वे तु परिशिष्टस्य मकारस्य सुप्त्वाऽभावात् कथं लुगिति वाच्यं, "सुपो धातु" इति लुग्विषये "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते" #इत्याश्रित्य सन्धिकार्यप्रवृत्तेः प्रागेवाऽलौकिकविग्रहवाक्ये समासप्रवृत्तिरिति "प्रत्ययोत्तरपदयोश्च" इति सूत्रभाष्ये स्थितम्। "कृत्तद्धितसमासाश्च" इत्यत्र प्रौढमनोरमायामपि परिष्कृतमिदम्। "भस्त्रैषा" इति सूत्रव्याख्यावलरे प्रपञ्चितं चास्माभिः। एवंच पूर्व अम् भूत सित्यलौकिकविग्रहदशायामेव अमो लुक्प्रवृत्तेर्नोक्तदोषः। तथाच सुपो लुकि भूतपूर्वेति स्थितम्। ननु "सुबन्तं सुबन्तेन समस्यते" इति समासशास्त्रे सुबन्तं प्रथमानिर्दिष्टम्। सुबन्तत्वं च द्वयोरप्यविशिष्टम्। ततश्च "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति वक्ष्यमाणोपसर्जनत्वस्य द्वयोरप्यविशिष्टत्वात् "उपसर्जनं पूर्व"मित्यन्यतरस्य पूर्वनिपाते विनिगमनाविरह इत्यत आह--भूतपूर्वे चरडिति। पूर्वं भूत इति। लौकिकविग्रहोऽयम्। पूर्वमिति क्रियाविशेषणम्। भूतपूर्व इति समासत्वेन प्रातिपदिकत्वात्समुदायात्पुनर्यथायथं सुबुत्पत्तिरिति भावः।

इवेनेति। इवेत्यव्ययेन सुबन्तस्य समासः। "सुपो धातु" इति लुगभावः। पूर्वपदस्य प्रकृतिसिद्धस्वरश्च भवति, न तु समासस्वर इति वक्तव्यमित्यर्थः। "सह सुपा" इति सिद्धे समासविधानमिवशब्दस्य पूर्वनिपातनिवृत्त्यर्थम्। अन्यथा अत्र इवशब्दस्यापि सुबन्तत्वाऽविशेषात्समासशास्त्रे प्रतमानिर्दिष्टत्वेनोपसर्जनत्वात्पूर्वनिपातः स्यात्। जीमूतस्येवेति। अत्र जीमूतशब्दस्य पूर्वपदस्य फिट्स्वरेणान्तोदात्तत्वमेव , न तु समासस्येत्यन्तोदात्तत्वम्। अत्र यथार्थत्वप्रयुक्तोऽव्ययीभावस्तु न, "तत्र तस्येवे"ति निर्देशात्। क्वाचित्कश्चायं समासः। अत एव बह्वृचा एव पदपाठे अवगृह्णन्ति। याजुषास्तु भिन्ने एव पदे पठन्ति। "उद्वाहुरिव वामनः" इत्यादिव्यस्तप्रयोगाश्च सङ्गच्छन्ते। "हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणी"मित्यत्र तु मातरमिवेति भवितव्यम्। "तिङ्समानाधिकरणे प्रथमा" "अभिहिते प्रथमा" इति वार्तिकस्वारस्येन प्रथमायाः कारकविभक्तित्वोक्तिपरभाष्येण च क्रियायोग एव प्रथमायाः प्रवृत्त्या मातेति प्रथमाया मातृसदृशीमित्यर्थे असाधुत्वादित्यस्तां तावत्।

तत्त्व-बोधिनी
सुपो धातुप्रातिपदिकयोः ५७०, २।४।७१

सुपो धातु। सुप इति प्रत्याहारस्य ग्रहणं, "पञ्चम्याः स्तोकादिभ्यः" इत्याद्यलुक्समासविधानाज्ज्ञापकात्। निर्देशादिति। अन्यथा हि प्रथमानिदिष्टत्वाऽविशेषेऽपि उपसर्जनसंज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः।

इवेन समासो विभक्त्यलोपश्च। इवेनेति। अयमपि समासः पूर्ववत्क्वाचित्क एव। तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां पृथक्पदत्वन पाठः। "उद्वाहुरिव वामनः" इत्यादौ व्यस्तप्रयोगश्च सङ्गच्छत इति मनोरमायां स्थितम्। विभक्त्यलोपश्चेति। समासावयस्य सुपोऽलोपविधानेऽपि समासादुत्पन्नस्य सोरव्ययादिति लुग्भवत्येव, अनुपसर्जने तदन्तस्याप्यव्ययत्वादिति बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अदिःप्रभृतिभ्यः ५।३ ७३ शपः ६।१ ७६ लुक् १।१ ५८

समासः॥

अदिप्रभृति येषां ते अदिप्रभृतयः, तेभ्यः, बहुव्रीहिः॥

अर्थः॥

अदादिगणपठितेभ्यो धातुभ्य उत्तरस्य शपो लुग् भवति॥

उदाहरणम्॥

अत्ति। हन्ति। द्वेष्टि॥

काशिका-वृत्तिः

अदिप्रभृतिभ्यः शपः २।४।७२

अदिप्रभृतिभ्य उत्तरस्य शपो लुग् भवति। अत्ति। हन्ति। द्वेष्टि।

लघु-सिद्धान्त-कौमुदी

अदिप्रभृतिभ्यः शपः ५५४, २।४।७२

लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः।

न्यासः

अदिप्रभृतिभ्यः शपः। , २।४।७२

बाल-मनोरमा

अदिप्रभृतिभ्यः शपः २५४, २।४।७२

अदिप्रभृतिभ्यः। "ण्यक्षत्रियार्षञितः" इत्यतो लुगित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- लुक् स्यादिति। अदिप्रभृतिभ्यः परस्य शपो लुगिति फलितम्। अत्तीति। शपो लुकि दस्य चर्त्वेन तकारः। एवमत्त इत्यपि। अदन्तीति। तदर्थमेव "झोऽन्तः" इत्यत्र अकारादिरादेश आश्रितः। अत्सि अत्थः अत्थ। अद्मि अद्वः अद्मः।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि २।४।७३

छन्दसि विषये शपो भौलं लुग् भवति। अदिप्रभृतिभ्य उक्तस् ततो न भवत्यपि वृत्रं हन्ति। अहिः शयते। अन्येभ्यश्च भवति त्राध्वं नो देवाः।

न्यासः

बहुलं छन्दसि। , २।४।७३

"त्राध्वम्" इति। "त्रैङ पालनै" (धा।पा।९६५) भौवादिकः, लोट, ध्ममादेशः, टेरेत्त्वम्, "सवाभ्यावामौ" ३।४।९१ इत्यमादेशः॥

---

सूत्रम्

काशिका-वृत्तिः

यङो ऽचि च २।४।७४

यङो लुग् भवति अचि प्रत्यये परतः। चकारेन बहुलग्रहनम् अनुकृष्यते, न तु छन्दसि इति। तेन छन्दसि भाषायां च यङो लुग् भवति। लोलुवः। पोपुवः। सनीस्रंसः। दनीध्वंसः। बहुलग्रहणादञ्च्यपि भवति। शाकुनिको लालपीति। दुन्दुभिर्ववदीति।

लघु-सिद्धान्त-कौमुदी

यङोऽचि च ७२१, २।४।७४

यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं विनापि क्वचित्। अनैमित्तिकोऽय मन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। शेषात्कर्तरीति परस्मैपदम्। चर्करीतं चेत्यदादौ पाठाच्छपो लुक्॥

न्यासः

यङोऽचि च। , २।४।७४

"अचि प्रत्यये परतः" इति। प्रत्ययग्रहणमचीति न प्रत्याहारग्रहणमिति प्रदर्शनार्थम्। यदि हि प्रत्याहारग्रहणभिमतं स्यात् तदाऽणीति णकारेणैव कुर्यात्। न हि यङन्तादणोऽन्येऽचः परे सम्भवन्तीत्यभिप्रायः। इदमेवाज्ग्रहणं ज्ञापकम्-- सर्वे धातवः पचाद्यन्तःपातिन इति। "लोलुवः"इति। "धातोरेकाचो हलादेः क्रियासमभिहारे" ३।१।२२ इति यङ्, द्वर्वचनं "सन्यङोः" ६।१।९ इत्यनेन, "गुणो यङलुकोः" ७।४।८२ इति गुणः। लोलू य इति स्थिते पचाद्यच्, यङो लुक्, "न धातुलोप" १।१।४ इत्यादिना गुणप्रतिषेधः। "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङ। "सनीरुआंसः। दनीध्वंसः" इति। "रुआन्सु ध्वन्सु अवरुआंसने" (धा।पा।७५४,७५५), पूर्ववद्यङ्दिकार्यम्। " न लुमताङ्गस्य" १।१।६२ इति प्रतिषेधात् प्रत्ययलक्षणेन "अनिदिताम्" ६।४।२४ इत्यादिनाऽनुनासिकलोपो न भवति। "नीग्वञ्चु" ७।४।८४ इत्यादिनाऽभ्यासस्य नीगागमः। "लालपीति।वावदीति" इति। लपेर्वदेश्च "दीर्घोऽकितः" ७।४।८३ इत्यभ्यासस्य दीर्घः। "यङो वा" ७।३।९४ इतीट्॥

तत्त्व-बोधिनी

यङोऽचि च ४०९, २।४।७४

यङोऽचि च। यङा साहचर्यादचीति प्रत्ययो गृह्रते न तु प्रत्याहारः। "ण्यक्षत्रियार्षे" त्यतोऽत्र लुगनुवर्तते। तदाह-- अच्प्रत्यये लुक् स्यादिति। चकारेण "बहुलं छन्दसी"त्यतो बहुलमित्यनुकृष्यत इत्याह-- बहुलं लुक स्यादिति। केचित्तु "छन्दसी"त्यनुकर्षन्ति,तेषामपि मते क्वचिद्भाषायां यङ्लुग्भवत्येव। "भूसुवो"रिति गुणनिषेधे सिद्धे बोभूत्विति छन्दसि निपातनाज्ज्ञापकात्। एतच्च मूले एव स्फुटीभविष्यति। अनैमित्तिकोऽयमिति। अच्प्रत्यये विधीयमानो यङ्लुक्तु तन्निमित्त एव।तेन लोलुवः पोपुव इत्यादौ "न धातुलोपे"ति निषेधः सिद्ध्यति। यङन्तत्वादिति। "सन्यङो"रिति षष्ठी, न तु सप्तमी, अन्यथा यङो लुका लुप्तत्वेन प्रत्ययलक्षणाऽप्रवृत्तेद्र्वत्वं न स्यादिति भावः। न चाऽङ्गाधिकारविहितकार्यस्यैव "न लुमते"ति निषेधाद्द्वित्वमत्र स्यादेवेति सप्तमीपक्षोऽपि निर्दुष्ट इति वाच्यं, "न लुमते"त्यत्राऽङ्गाधिकारो न गृह्रते किं तु आङ्गमनाङ्गं वा प्रत्यये परतः पूर्वस्य विधीयमानं सर्वमिति सिद्धान्तात्। अन्यथा "राजपुरुष" इत्यादौ नलोपो न स्यात्, त्वदुक्तरीत्या प्रत्ययलक्षणप्रवृत्तौ भत्वेन पदत्वबाधात्। यद्यपि "एकाच" इति विधीयमानं द्व#इत्वं "श्तिपा शपे" त्यादिना निषिध्यते तथापि तत्स्यादेव। "गुणो यङ्लुकोः", "रुग्रिकौ च लुकी"त्याद्यभ्यासकार्यविधिभिर्द्वित्वाऽनिषेधस्य ज्ञापनात्। प्रत्ययाप्रत्ययेति। प्रत्यये ङित्त्वं दृश्यते "ऋतेरीय"ङित्यादिषु, अप्रत्ययेऽपि दृश्यते-- चित्रङादिषु। एवं च यङो लुकि प्रत्ययलक्षणेन यङाश्रितङित्त्वप्रयुक्तकार्यमात्मनेपदमत्र न शङ्क्यमिति बावः। "ङित इत्यनुबन्धनिर्देशा"दिति परिहारस्त्वत्र नोक्कतः, शीङादीनामिव भू इत्यादिधातूनामनुबन्धेनाऽनिर्दिष्टत्वात्। यङो ङकारस्य प्रत्ययाऽनुबन्धत्वेन

समुदायाऽननुबन्धत्वाद्यङन्तोऽपि धातुरनुबन्धेनाऽनिर्दिष्ट इति बोध्यम्। सुदृषदिति। शोभना दृषदोऽस्मिन्नतिति बहुव्रीहौ दृषच्छब्दो जसन्तः। दीर्घो नेति। "अ"सिति प्रत्ययोऽप्रत्ययश्चास्तीति प्रत्ययस्याऽसाधारणरूपानाश्रयणात्प्रत्ययक्षणेनाऽसन्तत्वाऽभावादिति भावः। तेभ्योऽपीति। ये त्वनुदात्तेतः, प्रत्ययलक्षणं विनैव ङितश्च तेभ्योऽपीत्यर्थः। अदादौ पाठादिति। तथा च "आदिप्रभृतिभ्यः शपः" इत्यनेन यङ्लुगन्तात्परस्य शपो लुगित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ जुहोत्यादिभ्यः ५।३ ७६ श्लुः १।१ ७६ शपः ६।१ ७२

समासः॥

जुहोति आदिर्येषां ते जुहोत्यादयः, तेभ्यः, बहुव्रीहिः॥

अर्थः॥

जुहोत्यादिभ्यो धातुभ्य उत्तरस्य शपः श्लुर्भवति॥

उदाहरणम्॥

जुहोति। बिभर्ति। नेनेक्ति॥

काशिका-वृत्तिः

जुहोत्यादिभ्यः श्लुः २।४।७५

शपनुवर्तते, न यङ्। जुहोत्यादिभ्यः उत्तरस्य शपः श्लुर् भवति। लुकि प्रकृते श्लुविधानां द्विर्वचनार्थम्। जुहोति। विभर्ति। नेनेक्ति।

लघु-सिद्धान्त-कौमुदी

जुहोत्यादिभ्यः श्लुः ६०७, २।४।७५

शपः श्लुः स्यात्॥

न्यासः

जुहोत्यादिभ्यः श्लुः।, २।४।७५

"शबनुवत्र्तते, न यङ" इति। शब एव स्वरितत्वप्रतिज्ञानात्। "जुहोति" इति। "श्लौ" ६।१।१० द्विर्वचनम्। बिभर्ति" इति। "उरत्ट ७।४।६६ इत्यत्त्वम्। "रपरत्वम्। "भृञामित्" ७।४।७६ इतीत्त्वम्। "नेनेक्ति" इति। "णिजिर् शौचपोषयोः" (धा।पा।१०९३), "निजां त्रयाणां गुणः" ७।४।७५, "श्लौ" ६।१।१० इति द्वर्वचनम्॥

बाल-मनोरमा

जुहोत्यादिभ्यः श्लुः ३१९, २।४।७५

जुहोत्यादिभ्यः श्लुः। शप इति। "अदिप्रभृतिभ्यः" इत्यस्तदनुवृत्तेरिति भावः। हु अ इति स्थिते शपः श्लौ कृते हु ति इति स्थिते श्लुः। शप इत। "अदिप्रभृतिभ्यः"इत्यतस्दनुवृत्तेरिति भावः। हु अ स्थिते शपः श्लौ कृते हु ति इति स्थिते--

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि २।४।७६

छन्दसि विषये बहुलं शपः श्लुर् भवति। यत्रोक्तं तत्रं न भवति, अन्यत्र अपि भवति। जुहोत्यादिभ्यस्तावन् न भवति दाति प्रियाणि। धाति देवम्। अन्येभ्यश्च भवति पूर्णां विवष्टि। जनिमा विवक्ति।

न्यासः

बहुलं छन्दसि। , २।४।७६

"दाति, धाति" इति। ददातिदधात्योः पूर्वसूत्रेण श्लौ प्राप्ते बहुलं प्रतिषिध्यते। शपो लुक्। "विवष्टि" इति। "वश कान्तौ" (धा।पा।१०८०), अदादित्वाच्छपो लुकि प्राप्ते श्लुः, "श्लौ" ६।१।१० इति द्वर्वचनम्, "भृञामित्" ७।४।७६ इत्यनुवर्त्तमाने "बहुलं छन्दसि" ७।४।७८ इतीत्त्वम्, व्रश्चादिसूत्रेण ८।२।३६ षत्वम्। "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्। "विभक्ति" इति। "भज सेवायाम्" (धा।पा।९९८) भौवादिकः,शपः श्लुः, पूर्ववदित्त्वम्, "चोः कुः" ८।२।३) इति कुत्वम्। "विवक्ति" इति क्वचित्पाठः। स च "वच परिभाषणे" (धा।पा।१०६३) इत्येतस्यादादिकस्य वेदितव्यः॥ "अगात्" इति। "इमो गा लुङि" २।४।४५ इति गादेश-। "अपात्" इति। "पा पाने" (धा।पा।९२५)। "अभूत्" इति। "भू सुवोस्तिङि" ७।४।८८ इति गुणप्रतिषेधः॥ "गापोग्र्रहणे इण्पिवत्योग्र्रहणम्" इति। इणादेशस्य ग्रहणं तावद्गातीत्यत एव श्तिपा निर्देशाद्वि ज्ञायते। श्तिपा हि विकरणशून्य एवमर्थो निर्देशः क्रियते--लुग्विकरणस्यैव ग्रहणं यथा स्यादिति; अन्यथा हि यदि गायतेग्र्रहणमिष्टं स्यात् तदा गा इत्येवं ब्राऊयात्। एवं तर्हि "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इत्युभयोरपि ग्रहणं भविष्यति, किं श्तिपा निर्देशेन? तस्मादयमेव श्तिपा निर्देशो ज्ञापयति-- इमादेश्सयैवेदं ग्रहणम्, न गायतेरिति। पाग्रहणे पिबतेरेव गर्हणमित्येतदपि "लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्" (व्या।प।५०) इत्यनया परिभाषया विज्ञायते। "अघासीत्" इति। "कै गै शब्दे" (धा।पा।९१६,९१७) "यमरमनमातां सक् च" ७।२।७३ इति सगागमः। सिच्, इट् च। "अस्तिसिचोऽपृक्ते ७।३।९६ इतीट्। "इट ईटि" ८।२।२८ इति सिचो लोपः। "अपासीत्" इति। "पा रक्षणे" (धा।पा। १०५६) पूर्ववत् सगादिकार्यम्। "आगासाताम्" इति। कर्मण्यात्मनेपदम्। आताम्। किमर्थं पुनः सिचो लुगुच्यते, न लेरित्येवोच्येत? अत्राप्ययमर्थः सम्पाद्यते, उत्तरसूत्रे लिग्रहणं न कत्र्तव्यं भवति? नैतदस्ति; इह लेर्हि लुकि विज्ञायमाने मा हि गातामिति "आदिः सिचोऽन्यतरस्याम्" ६।१।१८१ इत्यादिः स्वरो न सिद्ध्येत्,स पुनरुदात्तः। अगुरित्यत्रापि "आतः" ३।४।११० इति "सिजभ्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुस्भावो न सिद्ध्यति। तस्मात् सिच एव लुग् वक्तव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७

लुकनुवर्तते, न श्लुः। गाति स्था घु पा भू इत्येतेभ्यः। परस्य सिचो लुग् भवति, परस्मैपदेषु परतः। अगात्। अस्थात्। अदात्। अधात्। अपात्। अभूत्। गापोर्ग्रहने इण्पिबत्योर्ग्रहणम्। गायतेः पातेः च न भवति। अगासीन्नटः। अपासीन् नृपः। परस्मैपदेषु इति किम्? अगासातां ग्रामौ देवदत्तेन।

लघु-सिद्धान्त-कौमुदी
गातिस्थापाभूभ्यः सिचः परस्मैपदेषु ४४१, २।४।७७

एभ्यः सिचो लुक् स्यात्। गापाविहेणादेशपिबती गृह्यते॥

बाल-मनोरमा
गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ७१, २।४।७७

गातिस्थाघु। गाति स्था घु पा भू एषां द्वन्द्वात्पञ्चमीबहुवचनम्। परस्येति शेषः। सिच इति षष्ठी। गातीति श्तिपा निर्देशाद्गाधातग्र्रहणम्। घु इत्येन दाधा घ्वदाबिति घुसंज्ञकयोर्दाधातोर्धाधातोश्च ग्रहणम्। "ण्यक्षत्रियार्षञितो यूनि लुगणिञो"रित्यस्माद्व्यवहितादपि लुगित्यनुवर्तते, "जुहोत्यादिभ्यः श्लु"रित्यव्यवहितमपि श्लुग्रहणं नानुवर्तते, व्याख्यानात्। तदाह-- एभ्यः सिच इत्यादिना। गापाविहेति। इह = गातिस्थेति, सूत्रे गातीत्यनेन पाग्रहणेन च इणो गा लुङीति लुग्विकरणस्येणो गादेशः, शब्विकरणः पिबादेशयोग्यः पाधातुश्च गृह्हेते इत्यर्थः। "गापोग्र्रहणे इण्पिबत्योग्र्रहण"मिति भाष्यादिति भावः। तथा च लुङस्तिबादेशे इतश्चेति इकारलोपे शबपवादे च्लिप्रत्यये तस्य सिचि तस्य लुकि अडागमे अभू-त् इति स्थिते पित्वान्ङित्त्वाऽभावे सार्वधातुकाद्र्धधातुकयोरिति गुणे प्राप्ते--

तत्त्व-बोधिनी
गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ५४, २।४।७७

इह व्यवहितोऽपि लुगनुवर्तते, न तु श्लुः व्याख्यानादित्याशयेनाह-- लुगिति। गापाविति। गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरण इणादेशो गृह्नते, "लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य ग्रहण"मिति परिभाषया पिबतिर्गृह्नते न तु पातिरित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
विभाषा घ्राधेट्शाच्छासः २।४।७८

घ्रा घेट् शा छा सा इत्येतेभ्य उत्तरस्य सिचः प्रस्मैपदेषु विभाषा लुग् भवति। धेटः पूर्वेण प्राप्ते विभाषार्थं वचनम्, परिशिष्टानाम् अप्राप्ते। अघ्रात्, अघ्रासीत्। अधात्, अधासीत्। अशात्, अशासीत्। अच्छात्, अच्छासीत्। असात्, असासीत्। परस्मैपदेषु इत्येव, अघ्रासातां सुमनसौ देवदत्तेन।

लघु-सिद्धान्त-कौमुदी
विभाषा घ्राधेट्शाच्छासः ६३६, २।४।७८

एभ्यस्सिचो लुग्वा स्यात्परस्मैपदे परे। अशात्। अशाताम्। अशुः। इट्सकौ। अशासीत्। अशासिष्टाम्॥ छो छेदने॥ ६॥ छ्यति॥ षोऽन्तकर्मणि॥ ७॥ स्यति। ससौ॥ दोऽवखण्डने॥ ८॥ द्यति। ददौ। देयात्। अदात्॥ व्यध ताडने॥ ९॥

न्यासः
विभाषा घ्राधेट्?शाच्छासः। , २।४।७८

"घ्रा गन्धोपादाने" (धा।पा।९२६), "धेट् पाने" (धा।पा।९०२), "शो तनूकरणे" (धा।पा।११४५), "छो छेदने" (धा।पा।११४६), "षोऽन्तकर्मणि" (धा।पा।११४७)। "धेटः पूर्वेण नित्ये प्राप्ते" इति। घुसंज्ञकत्वात्। अलुक्पक्षे पूर्ववत् सगादिकार्यम्। धेटः

सानुबन्धकस्य निर्देशो धाञ्परीहारार्थः। यदि कृतात्वो निर्दिश्येत तदा धाञोऽपि ग्रहणं स्यात्। "अध्रासाताम्" इति।
कर्मण्यात्मनेपदम्॥

बाल-मनोरमा

विभाषा घ्रादेट्शाच्छासः २१३, २।४।७८

चङभावपक्षे विशेषमाह-- विभाषा घ्रा। "ण्यक्षत्रियार्षे"त्यतो लुगित्यनुवर्तते, "गातिस्थे"त्यतः सिचः परस्मैपदेष्विति, तदाह-- एभ्य इति। "घ्रा गन्धोपादाने" "धेट् पाने" "शो तनूकरणे" "छो छेदने" "षो अन्तकर्मणि--एषां समाहारद्वन्द्वत्पञ्चम्येकवचनम्। शोप्रभृतीनां कृतात्त्वानां निर्देशः। धेटः "गातिस्थाघुपे"ति नित्यं प्राप्ते, अन्येषामप्राप्ते वचनम्। अधुरिति। "उस्यपदान्ता"दिति पररूपम्। अधाः अधातम् अधात। अधाम् अधाव अधाम।

तत्त्व-बोधिनी

विभाषा घ्राधेट्शाच्छासः १८५, २।४।७८

विभाषा घ्रा। इह "ण्यक्षत्रियार्षे"त्यतो लुगनुवर्तते, "गातिस्थे"त्यतः सिचः परस्मैपदेष्विति च। तदाह--सिचो लुग्वेत्यादि। अधुरिति। "आतः" इति झेर्जुस्। परस्मैपदे किम्?। व्यत्यघ्रास्त।

---

सूत्रम्

काशिका-वृत्तिः

तनादिभ्यस् तथासोः २।४।७९

तनादिभ्य उत्तरस्य सिचः तथासोः परतो विभाषा लुग् भवति। अतत, अतथाः। अतनिष्ट, अतनिष्ठाः। असात, असाथाः। असनिष्ट, असनिष्ठाः। जनसनखनां संज्झलोः ६।४।४२ इत्यात्वम्। थासा साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहनम्। प्रस्मैपदे न भवति, अतनिष्त यूयम्।

लघु-सिद्धान्त-कौमुदी

तनादिभ्यस्तथासोः ६७७, २।४।७९

तनादेः सिचो वा लुक् स्यात्तथासोः। अतत, अतनिष्ट। अतथाः, अतनिष्टाः। अतनिष्यत्, अतनिष्यत॥ षणु दाने॥ २॥
सनोति, सनुते॥

न्यासः

तनादिभ्यस्तथासोः। , २।४।७९

"अतत" इति। "स्वरितञितः" १।३।७२ इत्यात्मनेपदम्। "अनुदात्तोपदेश" (६।४।३७ इत्यादिनाऽनुनासिकलोपः।
"अतनिष्ट ययम्" इति। मध्यमपुरुषबहुवचनान्तमेतत्॥

बाल-मनोरमा

तनादिभ्यस्तथासोः ३७७, २।४।७९

तनादिभ्यस्तथासोः। "गातिस्ते"त्यतः सिच इति, "ण्यक्षत्रियार्षे" त्यतो लुगिति, "विभाषा घ्राधे"डित्यतो विभाषेति चानुवर्तते। तदाह--- तनादेरित्यादिना। एकवचनशब्दो गृह्रत इति। नतु
लुङादेशपरस्मैपदमध्यमपुरुषबहुवचनतादेशोऽपीत्यर्थः। यूयमिति। लुङि मध्यमपुरुषबुहवचने सिचि वृद्धिविकल्पे सति

अतनिष्ट अतानिष्टेत्यत्र सिचो नायं लुग्विकल्प इत्यर्थः। तदेवं प्रत्युदाहरममुक्त्वा सूत्रस्योदाहरणं वक्ष्यन्प्रक्रियां दर्शयति-- अनुदात्तोदेशेत्यनुसाकिलोपस्तङीति। तङि प्रथमैकवचने, तशब्दे मध्यमपुरुषैकवचने, तशब्दे मध्यमपुरुषैकवचने थासि च सिचो लुकि "अनुदात्तोपदेसे"ति नकारस्य लोप इत्यर्थः। तदाह-- अतत अतनिष्टेति। अतथाः अतनिष्ठा इति च। अतनिषातामित्यादि सुगमम्। षणु दाने। षोपदेशोऽयम्()। तनुवद्रूपाणि। असातेति। सिचो लुक्पक्षे रूपम्। असनिष्टेति। इट्। झलादिपरकत्वाऽभावादात्त्वं नेति भावः। क्षणुधातुरदुपधः। "वज्रेऽध्वर्युः क्षण्वीते"ति तैत्तिरीये। क्षिणु चेति। इदुपधः। अयमपि हिंसायमित्यर्थः। "वज्रेऽध्वर्युः क्षिण्वीते"ति शाखान्तरं शाबरभाष्ये उदाह्मतम्। ननु क्षिणोतीत्यत्र उप्रत्ययमाश्रित्य इकारस्य लघूपधगुणः कस्मान्नेत्यत आह-- उप्रत्ययनिमित्त इति। ऋणु गतौ। अत्रापि क्षिणुवन्मतभेदाल्लघूपधगुणतदभावौ। तदाह -- ऋणोति अर्मोतीति।एवमग्रेऽपि। अर्ण्वन्तीति। "इको यणची"ति यणिति भावः। डु कृञ् करणे। करोतीति। उप्रत्यमाश्रित्य ऋकारस्य गुणः। रपरत्वम्। उकारस्य तु तिपमाश्रित्यगुणः। कुरुत इति। तसो ङित्त्वादुकारस्य न गुणः। रकुरु अन्तीति स्थिते आह-- यणिति। "इको यणचीत्यनेने"ति शेषः। उकारस्य यणि कुर्व् अन्ति इति स्थिते "हलि चे"ति दीर्घमाशङ्क्याह-- नभेति। वसि मसि च "लोपस्चास्यान्यतरस्या"मित्युकारलोपविकल्पे प्राप्ते -- नित्यं करोतेः। "उतश्च प्रत्यया"दित्यनुवर्तते, "लोपश्चास्यान्यतरस्या"मित्यतो लोपः, म्वोरिति च। तदाह- - करोतेरिति। चकर्थेति। "कृ()सृ()भृ()वृ()"इति नेडिति भावः। अजन्तत्वेऽपि ऋदन्तत्वाद्भारद्वाजमतेऽपि नेट्। करिष्यतीति। करोतु- कुरुतात्। कुरु। करवाणि। कुरुताम्। कुर्वाताम्। करवै करवावहै करवामहै। अकरोत् अकुरुताम्। अकुरुत अकुर्वाताम्। विधिलिङि कुरु यात् इति स्थिते-- ये च। "लोपश्चास्यान्यतरस्या"मित्यतो लोप इति, अस्येति चानुवर्तते। अस्येत्यनेन पूर्वसूत्रे उत इत्युपात्त उत्परामृस्यते। "नित्यं करोते"रित्यतः करोतेरित्यनुवर्तते। अङ्गाक्षिप्तः प्रत्ययो यकारेण विशेष्यते, तदादिविधिः। तदाह - कृञ उलोप इति। आशिषि क्रियादिति। "रिङ् शयग्लिङ्क्षु" इति रिङिति भावः। कृषीष्टेति। "उश्चे"ति कित्त्वान्न गुण इति भावः। अकार्षीदिति। सिचि वृद्धौ रपरत्वमिति भावः। ननु लुङ्स्तङि अकृ स् त इति स्थिते "तनादिभ्यस्तथासो"रिति सिचो लुकि अकृतेतीष्टं सिद्ध्यति। सिचो लुगभावे तु सकारः श्रूयेतेत्यत आह - तनादिभ्य इत्यादि।

तत्त्व-बोधिनी

तनादिभ्यस्तथासोः ३३१, २।४।७९

अतनिष्ट अतानिष्टेति। "तस्थस्थमिपा"मिति तादेशः। "अतो हलादे"रिति वा वृद्धिः। अततेति। "तनादिभ्यस्तथासो"रिति सिज्लुक्यनुनासिकलोपः। अतनिष्टेति। लुगभावपक्षे इट्। षणु दाने। नान्तोऽयम्। णकारस्तु लाक्षणिकः।तेन यङ्लुकि "संसन्ति संसन्त" इत्यादावनुस्वारपरसवर्णौ। क्षणु हिंसायाम्। क्षिणु च। इमावपि लाक्षिकणकारौ। तेन चङ्क्षन्ति,चेक्षेति इत्यत्रानुस्वारपरसवर्णौ।

---

सूत्रम्

काशिका-वृत्तिः

मन्त्रे घसह्वरनशवृदहाऽद्वृच्कृगमिजनिभ्यो लेः २।४।८०

मन्त्रविषये घस ह्वर नश वृ दह आत् वृच कृ गमि जनि इत्येतेभ्यः उत्तरस्य लेः लुग् भवति। घस अक्षन् पितरो ऽमीमदन्त पितरः। ह्वर इति ह्वृ कौटिल्ये मा ह्वार्मित्रस्य त्वा। णश धूर्तिः प्रणङ् मर्त्यस्य। वृ इति वृङ्वृञोः सामान्येन ग्रहनम् सुरुचो वेन आवः। दह मा न आ धक्। आतिति आकारान्तग्रहनम्। प्रा पूरने आप्रा द्यावापृठीवी अन्तरिक्षम्। वृच् मा नो अस्मिन् महाधने परा वृग् भारभृद्यथा। कृ अक्रन् कर्म कर्मकृतः। गमि {सद्यः पुंष्टि निरुन्धानासो} अग्मन्। जनि अज्ञत वा अस्य

दन्ताः। ब्राह्मने प्रयोगो ऽयम्। मन्त्रग्रहणं तु छन्दस उपलक्षणार्थम्।

न्यासः

मन्त्रे घसह्वरणशवृदहाद्?वृच्?कृगमिजनिभ्यो लेः। , २।४।८०

सिच इत्यनुवत्र्तमाने पुनर्लिग्रहणं "आदिः सिचोऽन्यतरस्याम्" ६।१।१८१ इत्यादेःसिच्कार्यस्य निवृत्त्यर्थम्, उत्तरार्थञ्च। "अक्षन्" इति। "अद भक्षणे" (धा।पा।१०११) लुङ, "लुङसनोर्धस्लृ" २।४।३७ इति घस्लादेशः। ततः "च्लि लुङि" ३।१।४३ इ#इत च्लिः, तस्यानेन लुक्, झेरन्तादेशः, "इतश्च" ३।४।१०० इकतीकारलोपः, "संयोगान्तस्य" ८।२।२३ इति तकारलोपः, "गमहन" ६।४।९८ इत्यादिनोपधालोपः, "शासिवसिघसीनाञ्च" ८।३।६० इति षत्वम्, "झलां जश् झशि" ८।४।५२ इति जश्त्वम्, "खरि च" ८।४।५४ इति चत्र्वम्। ह्वरेत्यागन्तुकेनाकारेण निर्देशः। "मा ह्वः" इति। लुङ, तिङगुणरपरत्वानि, हल्ङ्यादिलोपः, ६।१।६६, "न माङ्योगे" ६।४।७४ इत्यडागमाभावः। "प्राणड्" इति। "णश अदर्शने" (धा।पा।११९४), पूर्ववल्लुङादिकार्यम्, व्रश्चादिसूत्रेण ८।२।३६ षत्वम्, "झलां जशोऽन्ते" ८।२।३९ इति जस्त्वम्-- षकारस्य डकारः, तस्य "वावसाने" ८।४।५५ इति चर्त्वं टकारः,"उपसर्गादसमासेऽपि" ८।४।१४ इति णत्वम्। क्वचित् "प्राणग्" इति पाठः। तत्र "क्विन्प्रत्ययस्य कुः" ८।२।६२ इत्यतः कुरित्यनुवत्र्तमाने "नशेर्वा" ८।२।६३ इति कुत्वम्। "आवः" इति। वृञस्तिप्, गुणो रपरत्वम्, हल्ङ्यादिना ६।१।६६ सिपो लोपः। "धक्" इति। "दह भस्मीकरणे" (धा।पा।९११), सिप्,हल्ङ्यादिना ६।१।६६ सिपो लोपः। "दादेर्धातोर्घः" ८।२।३२ इति हस्य घः। "एकाचो बशो भष्" ८।२।३७ इत्यादिना दकारस्य धकारः, धकारस्य जश्त्वम्-- गकारः, तस्य चत्र्वम्-- ककारः, आडागमस्य "बहुलं छन्दस्यामाङ्योगेऽपि" ६।४।७५ इति निषेधः। "आप्रात्" इति। "प्रा पूरणे" (धा।पा।१०६१) इत्यस्मात् तिप्। "परावर्क" इति। वृजेस्तिप्, लघूपधगुणः,हल्ङ्यादिना ६।१।६६ लोपः। "रात्सस्य" ८।२।२४ इति नियमात् संयोगान्तलोपाभावः। जकारस्य पूर्ववत् कुत्वं गकारः, तस्य चर्त्वं ककारः। "अक्रन्" इति। कृञो झेरन्तादेशः, संयोगान्तलोपः। "अज्ञत" इति। जनेर्झस्य "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः, पूर्ववदुपधालोपः, "स्तोः श्चुना श्चुः" ८।४।३९ इतिश्चुत्वम्। क्वचित् "अज्ञन्" इति पाठः। तत्र झिः, ततः परस्मैपदं वधेयम्। "ब्राआह्णे प्रयोगोऽयम्" इति। योऽयमनन्तरं मन्त्रे जनेरुक्तः स ब्राआह्णो मन्त्रव्याख्यानग्रन्थः। मन्त्रे जनेर्लुक् च दृश्यत इति तद्विषयमुदाहरणं नोपन्यस्तम्। यदि तह्र्रमन्त्रे लुग्भवति मन्त्रग्रहणं किमर्थमित्याह-- "मन्त्रग्रहणम्" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

आमः २।४।८१

आमः परस्य लेः लुग् भवति। ईहाञ्चक्रे। ऊहाञ्चक्रे। ईक्षाञ्चक्रे।

लघु-सिद्धान्त-कौमुदी

आमः ४७३, २।४।८१

आमः परस्य लुक्॥

न्यासः

आमः। , २।४।८१

"ईहाञ्चक्रे" इति। "ईह चेष्टायाम्" (धा।पा।६३२), लिट्, "इजादेश्च" ३।१।३६ इत्यादिनाऽऽम्। तस्य कृत्वे मकारान्तस्य कृदन्तत्वात् प्रातिपदिकसंज्ञा, सुः, आमः स्वरादिपाठादव्ययत्वम्, "अव्ययादाप्सुपः" २।४।८२ इति सुलोपः, "कृञ्च"

३।१।४० इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः, "आम्प्रत्ययवत्"१।३।६३ इत्यादिनाऽऽत्मनेपदम्, तत एशादेशः, द्विर्वचनम्, अभ्यासकार्यम्। आमो मकारस्यानुस्वारः, "अनुस्वारस्य ययि परसवर्णः" ८।४।५७। अथेह कस्मान्न भवति-- जगाम, शशामेति? अर्थवदामो ग्रहणात्, अस्य चानर्थकत्वात्। प्रत्ययस्तु "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (पु।प।पा।९०) इत्यर्थवान्। इह तर्हि कस्मान्न भवत्यम् रोग इति-- आमेति? "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" (व्या।प।३), अस्य तु लाक्षणिकत्वात्॥

बाल-मनोरमा

आमः ८४, २।४।८१

आमः। "मन्त्रे घसह्वरे"त्यतो लेरिति, "ण्यक्षत्रियार्षञित" इत्यतो लुगिति चानुवर्तते। तदाह-- आमः परस्य लेरिति। अत्रेदमवधेयम्-- "कृन्मेजन्त" इत्यत्र कृद्यो मान्तस्तदव्ययमिति व्याख्याने एधामित्यादि नाऽव्ययं , लिट एव कृत्वात्, तस्य च मान्तत्वाऽभावात्। तथा च प्रत्ययलक्षणेन कृदन्तत्वात्प्रातपदिकत्वे स्वाद्युत्पत्तौ "आम" इति लुक्। लेरित तु नानुवर्तते। "मान्तं कृदन्तमव्यय"मिति व्याख्याने तु प्रत्ययलक्षणेन कृदन्तत्वादेधामिति मान्तमव्ययम्। ततः सुबुत्पत्तावव्ययादाप्सुप इति लुक्। "आम" इत्यनेन तु परिशेषाल्लेरेव लुक्सिद्धेर्लेरितिनानुवर्तनीयम्। "आमः परस्य ले"रिति विवरणवाक्ये तु लेरिति स्पष्टार्थमेव। एवं च एधामित्यव्ययं न वेति पक्षद्वयम्, उभयथापि सुबन्तं पदमिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

आमः ६५, २।४।८१

"लक्षणप्रतिपदोक्त"परिभाषया, "प्रत्ययग्रहण"परिभाषया च नेह- आम। आमतुः। परसय् लुगिति। "मन्त्रे घसे"ति सूत्राल्लेरित्यनुवर्त्य "लेर्लु"गिति काशिकादौ व्याख्यातं, तदत्रोपेक्षितं, व्यावर्त्याऽलाभात्। तिङाद्यपवादत्वाल्लावस्थायायमेवायं लुक्। तेन आमन्तस्याऽतिङ्न्तत्वाद्देवदत्तादिपदात्परत्वेऽपि "तिङ्ङतिङः" इति न निघातः। आमन्तात्परस्य निघातश्च तिङन्तस्येत्यर्थः। न चाऽतिङन्तत्वे पदत्वाऽभावादामन्तात्परस्य निघातो न सिध्यतीति शङ्क्यं, लिटः कित्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वे सोरुत्पत्तावामन्तस्याऽव्ययत्वात्सुपो लुक्यपि प्रत्ययलक्षणेन सुबन्ततया पदत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

अव्ययादाप्सुपः २।४।८२

अव्ययादुत्तरस्य आपः सुपश्च लुग् भवति। तत्र शालायाम्। यत्र शालायाम्। सुपः खल्वपि कृत्वा। हृत्वा।

लघु-सिद्धान्त-कौमुदी

अव्ययादाप्सुपः ३७३, २।४।८२

अव्ययाद्विहितस्यापः सुपश्च लुक्। तत्र शालायाम्॥सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा॥वगाहः, अवगाहः। पिधानम्, अपिधानम्॥

लघु-सिद्धान्त-कौमुदी

इत्यव्ययानि ३७३, २।४।८२

लघु-सिद्धान्त-कौमुदी
अथ तिङन्ते भ्वादयः ३७३, २।४।८२

लघु-सिद्धान्त-कौमुदी
लट्, लिट्, लुट्, ऌट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, ऌङ्। एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ३७३, २।४।८२

न्यासः
अव्ययादुप्सुपः। , २।४।८२

"तत्र शालायाम्" इति। तच्छब्दात् सप्तम्यास्त्रल्। तस्य "प्राग्दिशो विभक्ति" ५।३।१ इति। विभक्तिसंज्ञा, त्यदाद्यत्वम्,टाप्, "तसिलादिष्वाकृत्वसुचः" ६।३।३४ इति पुंवद्भावः। "तद्धितश्चासर्वविभक्तिः" १।१।३७ इति त्रलोऽव्ययत्वम्, ततौत्पन्नस्य टापो लुक्। केन पुनरव्ययाट्टाबुत्पद्यते? "अजाद्यतष्टाप्" ४।१।४ इति चेत्, नच स्त्रियां टापो विधानात्, अव्ययस्य चालिङ्गत्वात्। तस्मादव्ययाट्टापः सम्भव एव नास्तीत्यव्ययादपार्थकं टापो लुग्वचनम्? नापार्थकम्; "स्त्रियाम्" ४।१।३ गुणिप्रधाननिर्देशः-- स्त्रीत्ववति पदार्थे टाबादय इति। स्त्रीत्ववति च तस्यां शालायमित्येतस्मिन् पदार्थे तत्रेत्येतदव्ययं वत्र्तते। यद्यपि वाक्यार्थोऽत्र स्त्रीत्वम्; तथापि वाक्यार्थतयैव तसय् स्त्रीप्रत्ययो द्योत्यते, सति च स्त्रीप्रत्यये पदार्थ एव स्त्रीत्वं भवति, ततष्टापो लुग्वक्तव्यः। "कृत्वा, ह्मत्वा" इति। "क्त्वातोसुन्कसुनः" १।१।३९ इति क्त्वाप्रत्ययस्याव्ययत्वम्, तत उत्पन्नस्य सुपो लुक्। केन पुरव्ययात् सुबुत्पत्तिः? स्वादि ४।१।२ सूत्रेणेति चेत्, न; तत्र "बहुषु बहुवचनम्" १।४।२१ इ()तयादिना शास्त्रान्तरेणैकवाक्यतायां स्वादीनां नियत्वात्, अव्ययानाञ्चासंख्यत्वात्। स्यादेतत्-- यत्र संख्यास्ति तत्र "बहुषु वहुवचनम्()" १।४।२१ इत्येवमादिना स्वादिनियः कृतः, अव्ययेभ्यस्तु निःसंख्येभ्यः समान्यविहिताः स्वादयो विद्यन्त एवेति?वात्र्तमेतत्; स्वादिसूत्रेण ४।१।२ हि "बहुषु बहुवचनम्" १।४।२१ इत्यादिना शास्त्रान्तरेणैकवाक्यतायां स्वादीनां विधानात्। तथा हि-- तत्रोक्कतं संख्याकर्मादयश्च स्वादीनामर्थाः शास्त्रान्तरेण विहिताः, तेन सहास्यैकवाक्यतेति। एकवाक्यतायाञ्च कुतः स्वादीनां सामान्येन विधानाम्। न ह्मपरं लक्षणमस्ति येन स्वादयः सामान्येन विहिताः। एवं तह्र्येतदेवाव्ययादुत्पन्नस्य सुपो लुग्वचनं ज्ञापकम्-- भवन्त्यवययात् स्वादय इति। न ह्मनुत्पन्नस्य लुगुपपद्यते। एतदेव ज्ञापकं ह्मदि कृत्वोक्तम्-- "अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव" इति॥

बाल-मनोरमा
अव्ययादाप्सुपः ६३८, २।४।८२

अव्ययादाप्सुपः। आप्च सुप्च आप्सुप्, तस्य आप्सुपः, समाहारद्वन्द्वात्षष्ठी। "ण्यक्षत्रियार्षे त्यतो "लु"गित्यनुवर्तते। तदाह--अव्ययाद्विहितस्येति। तत्र शालायामिति। तत्रेत्यस्याव्ययत्वादापो लुक्। स्त्रीत्वबोधनाय "शालाया"मिति। अथेति। अत्र सुपो लुक्। विहितेति। अव्ययात्परस्येत्यनुक्त्ता अव्ययाद्विहितस्येति व्याख्यानादिति भावः। अत्युच्चैसाविति। उच्चैरतिक्रान्त इति विग्रहे "अत्यादयः क्रान्ताद्यर्थे" इति समासः। अधिकरणशक्तिप्रधानान्यव्ययानिरेवृत्तिविषये शक्तिमत्प्रधानानि भवन्ति। यता "दोषामन्यमहः, "दिवाभूता रात्रि"रिति। अतो द्वितीयासम्भवात् "अत्यादयः" इति द्वितीयासमासस्याऽविरोधः। अत्र समासाद्विहितस्य सुपोऽव्ययभूतादुच्चेश्शब्दात्परत्वे।ऽपि ततो विहतत्वाऽभावान्न लुक्। "अत्युच्चे"रिति समुदायस्य तु नाव्ययत्वं, स्वरादिगणे उच्चेश्शब्दस्य केवलस्य पाठादिति भावः। ननु स्वरादिगणे केवलोच्चैश्शब्दस्य पाठेऽपि

"स्वरादिनिपातमव्यय" मित्यव्ययसंज्ञा भवत्येव, "प्रयोजनं सर्वनामाव्ययसंज्ञाया"मिति वचनादित्याशङ्कते--अव्ययसंज्ञायामिति। परिहरति--तथापीति। सर्वनामसंज्ञायामुपसर्जनस्य नेति प्रकृतः प्रतिषेधोऽव्ययसंज्ञाविधावनुवर्तत इति "तद्धितश्चासर्वविभक्तिः" इति सूत्रे भाष्ये स्पष्टमिति भावः। व्यर्थमिति। "अव्ययादाप्सुपः" इति सूत्रे" इति शेषः। अलिङ्गत्वादिति। अव्ययानां लिङ्गाऽभावादित्यर्थः। तथाच वार्तिकम्,-"अव्ययादाब्लुग्वचनानर्थक्यं, लिङ्गाऽभावात्" इति। तथा "तद्धिताश्चासर्वविभक्तिः" इति सूत्रे भाष्येऽप्युक्तम्--स्त्रीनपुंसकत्वानि सत्त्वगुण एकत्वद्वित्ववहुत्वानि च-एतानर्थान् ये न वियन्ति तदव्ययमितित। ननु अव्ययानां लिङ्गाऽभावे "सदृशं त्रिषु लिङ्गेषु" इत्याथर्वणश्रुतिविरोध इत्याशङ्क्य परिहरति-सदृशमिति। त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु, सर्वेषु वचनेषु च यत् न व्येति=विकारं न प्राप्नोति, किन्तु सदृशम्ैकप्रकारमेव भवति तदव्ययमिति आथर्वणश्रुतियोजना। अत्र विभक्तिवचनशब्दौ कारकसङ्ख्यापरौ नतु प्रत्ययपरौ, अन्यतरग्रहणवैयथ्र्यात्। लिङ्गकारकेति। लिङ्गकारकसङ्ख्याऽभावः परः=तात्पर्यविषयभूतो यस्या इति विग्रहः। लिङ्गेष्वित्यादिषु सप्तमी हि "षष्ठी चानादरे" इति विहिता। तथाच लिङ्गकारकसङ्ख्या अनादृत्य यन्न व्येति विकारं न प्राप्नोति, किन्तु सदृशम्ैकप्रकारमेव भवति, तदव्ययमित्युदाहृतश्रुतेरर्थः। "तद्धितश्चासर्वविभक्तिः" इति सूत्रभाष्ये "स्त्रीपुंनपुंसकत्वानि सत्त्वगुणा एकत्वद्वित्वबहुत्वानि च। एतानर्थान् ये न वियन्ति तदव्ययम्" इत्युपक्षिप्य तत्र प्रमाणतया अस्याः श्रुतेरुदाहृतत्वादिति भावः। अयं च लिङ्गकारकसङ्ख्याऽभावनियमो निपातानामेव, स्वरादीनां तु कतिपयानां लिङ्गकारकसङ्ख्यान्वयोऽस्त्येव, "स्वरादिनिपातमव्यय"मिति सूत्रे भाष्ये "चादीनामसत्ववचनानामेव संज्ञा। स्वरादीनां तु सत्त्ववचनानामसत्त्ववचनानां चे"त्युक्तत्वात्, "स्वस्ति वाचयति", "स्वस्ति वाच्य" इति, "क्षीणे पुण्ये स्वः पतति", "प्रातर्यजते" इत्यादौ कर्मकारकयोगदर्शनाच्च। अथ प्रसङ्गादाह--वष्टीति। अव अपि इकत्युपसर्गयोरकारस्य लोपं, हलन्तानाम् आपं च भागुरिनामक आचार्यो वष्टि -इच्छतीत्यर्थः। एवशब्दस्तु पादपूरणः अवेत्युपसर्गे आदेरेवाकारस्य लोपो नान्त्यस्य, अपिना साहचर्यात्। भागुरिशब्दं दन्त्योष्ठ()आदिं केचित्पठन्ति। तत्त्वबोधिन्यां तु पव्गचतुर्थादिः पठितः। शब्देन्दुशेखरेऽप्येवम्। यथा वाचेति। परिगणनमिति केचित्। उदाहरणमात्रमित्यन्ये। यद्यपि "वश क्रान्तौ" इत्यस्य छन्दोमात्रविषयत्वं वक्ष्यते, तथापि अस्माद#एव लिङ्गाल्लोकेऽपीत्याहुः। वस्तुतस्तु "वष्टि भागुरि"रिति श्लोको भाष्ये न दृश्यते। प्रत्युत "ङ्याप्प्रातिपदिका"दिति सूत्रस्थभाष्यपर्यालोचनया नास्तीत्येव युक्तम्। तत्र ह्येवमुक्तम्-"आब्ग्रहणं न कार्यं, खट्वा मालेत्यादौ अन्तवत्त्वेन प्रातिपदिकत्वादेव सिद्धम्" इत्युक्त्वा, क्रुञ्चा उष्णिहा देवविशेति हलन्ताट्टापः स्वाद्यर्थमाब्ग्रहणस्त्वि"ति आक्षिप्य "क्रुञ्चानालभेत उष्णिहककुभौ देवविशं चे"ति अकारान्तादेव तत्रापि टा"बित्युक्त्वा "डाबुभाभ्यामन्यतरस्या"मिति बहुराजा, बहुराजे, बहुराजाः--इत्यर्थमाब्ग्रहण"मिति समाहितम्। तस्मात् "आपं चैव हलन्ताना"मित्याश्रित्य वाचा निशा दिशेत्ययुक्तम्। अत्र निश्दिशोरिगुपधलक्षणे के अदन्तत्वाट्टापि निशेत्यादिरूपसंभवेऽपि वाचाशब्दोऽसाधुरेवेति शब्देन्दुशेखरे स्थितम्।

***इति बालमनोरमायामव्ययानि।***

सिद्धान्तकौमुद्याम्।

-------------

अव्ययीभावप्रकरणम्।

---------------

तत्त्व-बोधिनी

अब्ययादाप्सुपः ५६६, २।४।८२

अव्ययादाप्सुपः। "ण्यक्षन्त्रियार्षे"ति सूत्राल्लुगत्रानुवर्तत इत्याह--लुक्स्यादिति। "अव्यय"मिति महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम्। न व्येति--विविधं विकारं न गच्छति। सत्त्वधर्मान् लिङ्गसङ्ख्यादीन्न गृह्णातीति यावत्। तेनात्युच्चैसौ अत्युच्चैस इत्यादि सिद्धम्। अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरग्रहादव्ययसंज्ञाया अत्राऽभावात्। नन्वेमप्युच्चैः--शब्दस्याव्ययत्वानपायात्सुपो लुग्दुर्वार इत्यत आह--विहितविशेषणादिति। अत्युच्चैसाविति। ननु अत्यादयः क्रान्ताद्यर्थे द्विती।यान्तेन समस्यन्ते, उच्चैःशब्दस्त्वधिकरणशक्तिमत्प्रधान इति कर्मत्वाऽयोगान्न तस्य द्वितीयान्तता। सत्यम्। शक्तिप्रधानान्यपि कानिचिदव्ययामि वृत्तिविषये शक्तिमत्प्रधानानि क्वचिद्भवन्ति। यथा दोषामन्यमहः। दिवामन्या रात्रिरिति। ततश्च प्रक्रियादशायमुच्चैःशब्दस्य द्वितीयान्तत्वं संभवतीति दिक्। ननु स्वरादिषु उच्चैःशब्दः पट()ते तत्र कथं तदन्तस्य प्रसङ्ग इति चेन्न, अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात्। अन्यथा उपसर्जने प्रसङ्गाऽभावेन तन्निवृत्त्यर्थाया अन्वर्थसंज्ञाया वैयथ्र्यापत्तेः। तेन "परमस्वः""परमोच्चै"रित्यादौ सत्त्वधर्मापरिग्रह#आदव्ययत्वं सिद्धम्। तदेतदाह--अव्ययसंज्ञायां यद्यपीत्यादि। "अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाऽभावा"दिति वार्तिकं मनसि निधायाह--अब्ग्रहणं व्यर्थमिति। सूत्रस्योक्तिसंभवस्तु "स्त्रिया"मिति सूत्रे स्त्रीसमानाधिकरणादिति पक्षं गृहीत्वेति बोध्यः। स च न स्थितः, "भूतमियं ब्राआह्मणी"त्यादावतिव्याप्तेः। यदि तु "आमः"इति सूत्रानन्तरं "सुपो धातुप्रातिपदिकयोपव्यया"दिति सूत्र्यते तदा सुब्ग्रहममपि व्यर्थं, "सुप्" इत्यनुवृत्तिसंभवादिति नव्याः। अलिङ्गत्वे आथर्वणप्रणवविद्यागतश्रुतिविरोधमाशङ्क्याह--सदृशमिति। एतेषु यन्न व्येति किंतु सदृशम् एकप्रकारं तदव्ययमिति योजना। यद्वा--यस्मान्न व्येति तस्मात्तदव्ययम्। लिङ्गकारकेति। विभक्तिवचनशब्दौ कारकसङ्ख्यापराविति भावः। यद्यप्यव्ययीभावस्य लिङ्गसङ्ख्याकारकयोगोऽस्ति तथापि वचनादव्ययत्वेम्। अव्ययविशेषे कार्यान्तरमाह--वष्टीति। भादुरिः आचार्यः। आपं चैवेति। "वष्टी त्यनुषज्यते। यथा वाचेति। परिगणनमिदमित्येके। अन्ये तूदाहरणमात्रमित्याहुः। वगाह इति। अपिना साहचर्यादादिरेवाऽकारो लुप्यते नान्त्य इति भावः।

इति तत्त्वबोधिन्याम् अव्ययप्रकरणम्॥

---

सूत्रम्
काशिका-वृत्तिः
न अव्ययीभावादतो ऽम् त्वपञ्चम्याः २।४।८३

पूर्वेण लुक् प्राप्तः प्रतिषिध्यते। दन्तादव्ययीभावादुत्तरस्य सुपो न लुग् भवति, अमादेशस् तु तस्य सुपो भवत्यपञ्चम्याः। एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवनम् एव भवति। उपकुम्भं तिष्ठति। उपकुम्भं पश्य। उपमणिकं तिष्ठति। उपमणिकं पश्य। अतः इति किम्? अधिस्त्रि। अधिकुमारि। अपञ्चम्याः इति किम्? उपकुम्भादानय।
लघु-सिद्धान्त-कौमुदी
नाव्ययीभावादतोऽम्त्वपञ्चम्याः ९१५, २।४।८३

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमी विना अमादेशश्च स्यात्॥ गाः पातीति गोपास्तस्मिन्नित्यधिगोपम्॥
न्यासः
नाव्ययीभावदतोऽमत्वपञ्चम्याः। , २।४।८३

"एतस्मिन् प्रतिषिद्धे पञ्चम्याः श्रवणमेव भवति" इति। कथम्? इह द्वोयरर्थयोर्विधानात्, विधायके च वाक्ये द्वे एव। तत्र "नाव्ययीबावादतः" इत्येतत् प्रतिषेधस्य विधायकमेकं वाक्यम्। "अम् त्वपञ्चम्याः" इत्येतदमो विधायकं द्वितीयं वाक्यम्, तत्र चात इत्येतदपेक्षते। अत एव वृत्तौ वाक्यद्वयमुपन्यस्तम्-- "अदन्तादवययीभावदुत्तरस्य सुपो न लुग्भवति" इत्येकं वाक्यम्, "अमादेशस्तु तस्य भवत्यपञ्चम्याः" इति द्वितीयम्। तत्रापञ्चम्या इत्यनेन "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति पञ्चम्या अमादेश एव प्रतिषिध्यते, न त्वलुक् पूर्ववाक्येन विहितः। अत एवालुकि सति पञ्()चम्याः श्रवणमेव बवति। एकवाक्यतायां हि सत्यां कार्यद्वयस्यैकया पाठप्रवृत्या विधीयमानत्वात् कार्यद्वयस्यापञ्चम्या इति प्रतिषेधः स्यात्। पञ्चमीं वर्जयित्वैतत् कार्यद्वयं वेदितव्यम्। वाक्यभेदे त्वपञ्चमम्या इत्येतत् प्रत्यासन्नममादेशमपेक्षते, न तु वाक्यान्तरविहितमलुकम्। तेनापञ्चम्या इत्यनेन सम्बध्यमानः सामान्येन विधीयमानः सन्नलुक् पञ्चमीमप्यवगाहते; तस्मात् पञ्चम्याः श्रवणमेव युक्तम्। तुशब्देनाप्ययमर्थो लभ्यते। ननु च क्रियायाः कारकाणि भवन्ति, पूर्वपदार्थप्रधानश्चाव्ययीभाव उक्तः,पूर्वपदार्थस्य चासत्त्वभूतत्वात् क्रियामन्तरेण सम्बन्धाभावादपादानादिभावो नास्ति, तत् कुतोऽव्ययीभावात् पञ्चम्यादयो विभक्तयो भवेयुः?नैतदस्ति; पूर्वपदार्थप्राधान्येऽपि गुणभूतोत्तरपदार्थपेक्षः क्रियायोग उपपद्यते, यथा-- पञ्चपूलीमानयेति। तत्र भावप्राधान्येऽपि गुणभूत द्रव्यापेक्षः क्रियासम्बन्धः॥

बाल-मनोरमा

नाव्ययीभावादतोऽम्त्वपञ्चम्याः ६४९, २।४।८३

तथाच अव्ययीभावसमासादुत्पन्नानां सुपामव्ययादाप्सुप इति लुक् स्यादिति शङ्कायामाहनाव्ययीभावात्। "अम् तु अपञ्चम्या" इति छेदः। "नाव्ययीभावदतः" इत्येकं वाक्यम्। "ण्यक्षत्रियार्षे"त्यतो लुगित्यनुवर्तते। "अव्ययादाप्सुपः" इत्यतः "सुप" इति च। अता अव्ययीभावो विशेष्यते। तेन तदन्तविधिः। तदाह अदन्तादव्ययीभावात्सुपो न लुगिति। "अम् तु अपञ्चम्याः" इति वाक्यान्तरम्। पञ्चमीभिन्नस्य तु सुपोऽमादेशः स्यात्। पञ्चम्यास्तु अम्न भवतीति लभ्यते। तदाह--तस्य पञ्चमीं विना अमादेश इति। अत्राऽपञ्चम्या इति प्रतिषेधोऽयमनन्तरत्वादम एव भवति, न तु लुङ्निषेधस्यापि। एवंचाऽदन्तादव्ययीभावात्परस्य सुपो न लुक्, किंत्वमादेशः। पञ्चम्यास्तु लुगमादेशश्च न भवतीति स्थितिः। सूत्रे एतत्सूचनार्थमेव तुशब्दः। "अव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्येवोक्तौ तु अदन्तादव्ययीभावात्परस्य पञ्चमीभिन्नस्य सुपो लुकोऽपवादोऽमादेशः स्यादित्येव लभ्येत। एवं सति पञ्चम्या अमोऽभावे "अव्ययादाप्सुपः" इति लुक् स्यात्। अतो लुङ् निषिध्यत इत्यास्तां तावत्। अपदिशमिति। पञ्चमीभिन्नविभक्तीनामुदाहरणम्। पञ्चम्यास्तु अपदिशादित्युदाहार्यम्। यद्यपि नपुंसकह्रस्वत्वेनाऽप्येतत्सिध्यति, "अव्ययीभावश्चे"ति नपुंसकत्वस्य वक्ष्यमाणत्वात्। तथापि "गोस्त्रियो"रिति सूत्रं चित्रगु अतिखट्व इत्याद्यर्थमावश्यकमितीहापि न्याय्यत्वादुपन्यस्तम्। तदेवमव्ययमिति भाष्याऽदृष्टेनापि योगविभागेनाऽपदिशमिति रूपसाधनं वृद्धसंमतमित्याह-क्लीबेऽव्ययमिति।

तत्त्व-बोधिनी

नाव्ययीभावादतोऽम्त्वपञ्चम्याः ५७४, २।४।८३

नाव्ययी। अत्र "अपञ्चम्याः" इथि प्रतिषेधोऽनन्तरत्वादम एव न तु व्यवहितस्याऽलुकोऽपि। अमुमेवार्थं द्योतयितुं सूत्रे "तु" शब्दः। तस्य पञ्चमीं विनेति। एवं चाऽदन्तादव्ययीभावात्परस्य पञ्चमभिन्नस्य सुपो लुङ् न, पञ्चम्यास्तु लुगमादेशावुभावपि न भवत इति स्थितम्। अतः किम्()। अधिहरि। दिशयोरिति। दिशोरिति हलन्तेन विग्रहेऽपि एतदेव रुपम्। दिश्शब्दस्य शरदादिषु पाठाट्टच्।

सूत्रम्

काशिका-वृत्तिः

तृतीयासप्तम्योर् बहुलम् २।४।८४

पूर्वेण नित्यम् अम्भावे प्राप्ते वचनम् इदम्। तृतीयासप्तम्योः विभक्त्योर् बहुलम् अम्भावो भवति अव्ययीभावे। उपकुम्भेन कृतम्, उपकुम्भं कृतम्। उपकुम्भे निधेहि, उपकुम्भं निधेहि। सपम्या ऋद्धिनदीसमाससङ्ख्यावयवेभ्यो नित्यम् इति वक्तव्यम्। सुमद्रम् सुमगधम्। उन्मत्तगङ्गम्। लोहितगङ्गम्। एकविंशतिभारद्वाजम्। बहुलवचनात् सिद्धम्।

न्यासः

तृतीयासप्तम्योर्बहुलम्। , २।४।८४

"सुमद्रम्" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिना समृद्धावव्ययीभावः। " उन्मत्तगङ्गम्" इति। "अन्यपदार्थे च संज्ञायाम्" २।१।२० इत्यनेन। "एकविंशतिभारद्वाजम्" इति। "संख्या वंश्येन" २।१।१८ इति॥

बाल-मनोरमा

तृतीयासप्तम्योर्बहुलम् ६५०, २।४।८४

तृतीया। "नाव्ययीभावा"दित्यस्मादत इत्यनुवर्तते, तदाह--अदन्तादिति। अमादेशाऽभावे तु "नाव्ययीभावा"दित्यलुक्। ननु वेति सिद्धे किं बहुलग्रहणेनेत्यत आह--बहुलग्रहणादिति। तदेवमव्ययमिति योगं विभज्य व्याख्याय तदुत्तरखण्डं व्याख्यातुमुपक्रमते-विभक्तीत्यादेरयमर्थ इति। विभक्तीत्यनेन विभक्त्यर्थो विवक्षितः। उच्यन्त इति वचनाः। कर्मणि ल्युट्। विभक्ति-समीप समृद्धि-व्यृद्धि-अर्था-ऽभावाऽत्यया-ऽसंप्रति-शब्दप्रादुर्भाव-पश्चात्-यथा-ऽऽनुपूर्व्य-यौगपद्य-सादृश्य-संपत्ति-साकल्य-अन्त"--एतेषां षोडशानां द्वन्द्वः। ते च ते वचनाश्चेति विग्रहः। विभक्त्यर्थादिषु वाच्ये()इआत्यर्थः। "अव्यय"मित्यनुवर्तते। "अव्ययीभावः" "समास" इति चाधिकृतं। तदाह--विभक्त्यर्थादिष्विति। विभक्तौ तावदिति। विभक्त्यर्थे प्रथममुदाह्रियत इत्यर्थः। हरौ इत्यधिहरीति। हरौ इति लौकिकविग्रहः। तेन यावदवगम्यते तावदेवाधिहरीति समासेनाप्युच्यत इत्यर्थः। अधिशब्दस्य हरावित्यनेन अव्ययीभावसमासे सुब्लुकि समासविधावव्ययमिति प्रथमानिर्दिष्टत्वादधेः पूर्वनिपाते समासादुत्पन्नस्य सुपः "अव्ययादाप्सुपः"इति लुगिति भावः। ननु लौकिकविग्रहे समस्यमान#ओऽधिशब्दः कुतो नोपात्त इत्यत आह--सप्तम्यर्थस्यैवात्रेति। तथाचाऽधिद्योत्यार्थस्याऽधिकरणत्वस्य सप्तम्यैव उक्तत्वादधिशब्दो न पृथगुपात्तः, नित्यसमासताया वक्ष्यमाणत्वेन स्वपदविग्रहानोचित्यादिति भावः। ननु हरौ इति परिनिष्ठितसन्धिकार्यस्य समासे सति "औ" इत्यस्य सुपो लुकि समासे रेफादिकारः कुतः श्रूयेतेत्यत आह-हरि ङि इति। संधिकार्यात्प्रागलौकिकविग्रहवाक्य एव समासप्रवृत्तेः "प्रत्ययोत्तरपदयोश्चे"ति भाष्यसंमतत्वादिति भावः। यथा चैत्तथा "भूतंपूर्व" इत्यत्रानुपदमेवोक्तम्। नन्वधिना निपातेनाकरणत्वस्योक्तत्वात् कथं हराविति सप्तमीत्यत आह-अत्र निपातेनेति। वचनेति। सुप्तेयनुवर्त्य सुबन्तेनाऽत्र समासविधिसामथ्र्यात् सप्तमी स्यादेवेति भावः। वस्तुतस्तु अनभिहितसूत्रभाष्ये तिङ्कृत्तद्धितसमासैरित्येव परिगणमनं दृष्टम्। अतो निपातेनाऽधिना अभिहितेऽप्यधिकरणत्वे सप्तमी निर्बाधा। "विषवृक्षोऽपि संबध्र्य स्वयं छेत्तुमसांप्रत"मित्यत्र तु "एष्टव्य" इत्यध्याहार्यम्। कृताऽभिधानाद्विषवृक्षाद्द्वितीया न भवति। नच कृत्तद्धितसमासैरिति परिगणनं भाष्ये प्रत्याख्यातमिति वाच्यम्, "कटं करोति भीष्ममुदारं दर्शनीय"मित्यत्र परिगणनफलस्याऽन्यथासिद्धेरेव तत्रोक्तत्वादित्यास्तां तावत्।

तत्त्व-बोधिनी

तृतीयासप्तम्योर्बहुलम् ५७५, २।४।८४

अपदिशमिति। पञ्चमीव्यतिरिक्तविभक्तीनामुदाहरणमिदम्। पञ्चम्यास्तु अपदिशादित्युदाहार्यम्। विभक्तौ तावदिति। तावच्छब्दः क्रमार्थः। लौकिकं विग्रहवाक्यं प्रदर्शयति--हराविति। प्राचा तु "हरौ अधिकृत्ये"ति विगृहितं, तदसत्। अधिहरीत्यत्र अधिकृत्येत्यर्थस्याऽप्रतीतेः। हरि ङीति। अलौकिके ङिशब्दस्यैव प्रवेश उचितः, "अन्तरङ्गानपि---"इति न्यायात्। अन्यथा ङेरौत्त्वे कृते अधिहरीति समासे हरिशब्देकारो दुर्लभः स्यादिति भावः। इह"हरावधी"ति स्थिते"इति प्राचोक्तमुपेक्षितं, नित्यसमासेषु अस्वपदविग्रहस्यैवोचितत्वात्। अभिहितेऽपीति। द्योतितेऽपीत्यर्थः। वचनसामर्थ्यादिति। "सुपे"त्यनुवर्त्य सुबन्तेन समासविधानसामर्थ्यात्सप्तमी स्यादेवेति भावः। नन्वभिहितेऽधिकरणे "प्रतिपदिकार्थमात्रे"ति प्रथमैव स्यान्न तु सप्तमीति चेत्। अत्राहुः--अचीत्यस्य सुबन्तेन समासस्यावश्यकत्वेऽधिशब्दद्योत्यादिकरणार्थवाचकविभाक्तेरेवेह स्वीकर्तुमुचितत्वादिति। यत्तु प्रसादकृता व्याख्यातं--"तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाऽभिहितेऽपि सप्तमी स्यादेवे"तिष। तन्न। परिगनस्याकरे प्रत्याख्यातत्वात्। "कर्मणि द्वितीया"इति सूत्रे स्वयमपि तथैवोक्तत्वात्। "क्रमादमुं नारद इत्यबोधि सः" इति प्रयोगविरोधाच्च। अत्र व्याचक्षते---"वचनग्रहणं विभक्त्यादिभिः प्रत्येकं संबध्यते", "साकल्यान्तेषु"इत्येव वक्तव्ये वचनग्रहणात्। एवं च तत्सामर्थ्याद्विङक्त्यर्थमात्र वृत्तेरव्ययस्येह ग्रहणम्। तेन वृक्षस्योपरि वृक्षस्य पुर इत्यत्र समासो न भवति। उपर्यादयो हि दिग्देशकालेष्वपि वर्तन्ते, न तु विभक्त्यर्थमात्रे। अतएव "क्रमादमुं नारद इत्यूबोधि सः" इत्यादौ नातिप्रसङ्गः, इतिशब्दस्य सर्वनामवत्प्रकृतपरामर्शकत्वेन कर्मत्वमात्रनभिधायकत्वात्। एवं च विभक्तिशब्दं प्रायुङ्क्त"ति। अन्ये तु---"लाघवात् "ङिसमीपसमृद्धी"ति वक्तव्ये विभक्तिग्रहणाद्विभक्तिशब्दो न सप्तम्यां पर्यवस्यति। ततश्च कर्मत्वमात्रद्योतकतायाम् "इतिनारद"मिति समासो भवत्येव"इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

लुटः प्रथमस्य डारौरसः २।४।८५

लुडादेशस्य प्रथमपुरुषस्य प्रस्मैपदस्य आत्मनेपदस्य च यथाक्रमम् डा रौ रसित्येते आदेशा भवन्ति। कर्ता, कर्तारौ, कर्तारः। आत्मनेपदस्य अध्येता, अध्येतारौ, अध्येतारः। प्रथमस्य इति किम्? श्वः कर्तासि। श्वो ऽध्येतासे। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः। तृतीयो ऽद्यायः प्रथमः पादः।

लघु-सिद्धान्त-कौमुदी

लुटः प्रथमस्य डारौरसः ४०७, २।४।८५

डा रौ रस् एते क्रमात्स्युः। डित्वसामर्थ्यादभस्यापि टेर्लोपः। भविता॥

न्यासः

लुटः प्रथमस्य डारौरसः।, २।४।८५

परस्मैपदस्यात्मनेपदस्य च यथाक्रमं डारौरस्-- इत्येत आदेशा भवन्ति" इति। यद्ैयवम्, परस्मैपदेषु तिप् तस् झीत्येतत् प्रत्येकं प्रथमपुरुषसंज्ञा, आत्मनेपदेष्वपि त आतां झ इति; तत्र स्थानिनः षट्, त्रय आदेशा इति वैषम्यात् संख्यायानुदेशाभावादेकैकस्य पर्यायेण सर्व आदेशाः स्युः? नैष दोषः; आनन्तर्यतो हि व्ययस्था भविष्यति। तच्चार्थकृतमानन्तर्यम्---" एकार्थस्यैकार्थः, द्वयर्थस्य द्व्यर्थः, बह्वर्थस्य बह्वर्थ इति। "कत्र्ता" इति। "अनद्यतने लुट्" ३।३।१५, तिप्, तस्यानेकाल्त्वात् डा इत्ययं सर्वादेशः। ननु च नानुबन्धकृतमनेकाल्त्वम् (व्या।प।१४), डकारश्चानुबन्धः,तत् कुतोऽनेकाल्त्वं यतः सर्वादेशः स्यात्? नैष दोषः; न ह्यकृते सर्वादेशे "चुटू" १।३।७ इतीत्संज्ञा भवति।

इत्संज्ञाया अभावे चानुबन्धो न भवतीत्यनेकाल्त्वात् सर्वादेशो भवति। डित्यभस्यापि "टेः" ६।४।१४३ इति टिलोपः। "कर्त्तारौ, कार्त्तारः" इति। "रिच" ७।४।५१ इति सकारलोपः। एवमध्येतेत्येवमादीनि रूपाणि "इङ अध्ययने" (धा।पा।१०४६) इत्येतस्य। अत्र परमपि टेरेत्वं बाधित्वाऽन्तरङ्गत्वात् डादय आदेशा भवन्ति। अन्तरङ्गत्वं पुनस्तेषां स्थानिमात्रापेक्षत्वात्। टेरेत्वन्तु बहिरङ्गम्; तद्धि धातुमप्यपेक्षते, न केवलं स्थानिनम्; आ तृतीयाध्यायपरिसमाप्तेः "धातोः" ३।१।७ इत्यस्याधिकृतत्वात्। "थासः से" ३।४।८० इति ज्ञापकम्-- तिङादेशस्य टेरेत्वं न भवतीति। तेन कृतेष्वपि डारौरस्स्वेत्त्वं न भवति। "कर्त्तासि" इति। "तासस्त्योर्लोपः"७।४।५० इति सकारलोपः॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य चतुर्थः पादः समाप्तश्चायं द्वितीयोऽध्यायः॥ --------------------------------- श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचिता न्यासापरपर्याया काशिकाविवरणपञ्जिकाख्या काशिकाव्याख्या तृतीयोऽध्यायः प्रथमः पादः

बाल-मनोरमा

लुटः प्रथमस्य डारौरसः ३७, २।४।८५

भू इ तास् इति स्थिते-- उकारस्य गुणेऽवादेशे च भविता स् इति स्थिते--लुटः प्रथमस्य। डा रौ रस् एषां द्वन्द्वात्प्रथमाबहुवचनम्। "लुट" इति स्थानषष्ठी। लुडादेशस्य प्रथमपुरुषस्येत्यर्थः। क्रमादिति -- यथासङ्ख्यलभ्यम। ननु परस्मैपदस्य त्रयः प्रथमाः, आत्मनेपदस्य च त्रयः प्रथमा इति स्थानिनः षट्, आदेशास्तु त्रय इति कथं यथासङ्ख्यमिति चेन्न, डाश्च रौश्च रस् चेति कृतद्वन्द्वानां डारौरसश्च डारौरसश्चेत्येकशेषमाश्रित्य भाष्ये समाहितत्वात्। डाभावस्य चादेशत्वात् प्राक् प्रत्ययत्वाऽभावेन "चुटू" इत्यस्याऽप्रवृत्त्या सर्वादेशत्वम्। सति च तस्मिन् प्रत्ययत्वच्चुटू इति टकारस्येत्संज्ञेति भाष्ये स्पष्टम्। एवं च भू तास् आ इति स्थिते प्रक्रियां दर्शयति--डित्त्वसामर्थ्यादिति। डाभावस्य कप्रत्ययावधिषु स्वादिष्वनन्तर्भूतत्वेन तस्मिन् परे भत्वाऽभावेऽपि डित्त्वसामर्थ्याट्टेरिति टिलोप इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्रत्ययः १।१ ५।४।१६०

अर्थः॥

इतः अग्रे आपञ्चमाध्यायपरिसमाप्तेः ५।४।१६० इति यावत् {प्रत्ययः} इति संज्ञात्वेन अधिक्रियते

उदाहरणम्॥

कर्तव्यम्, करणीयम्

काशिका-वृत्तिः

प्रत्ययः ३।१।१

अधिकारो ऽयम्। प्रत्ययशब्दः संज्ञात्वेन अधिक्रियते। आ पञ्चमाद्यायपरिसमाप्तेर्यानित ऊर्ध्वम् अनुक्रमिष्यमः, प्रत्ययसंज्ञास्ते वेदितव्याः, प्रकृत्युपपादोपाधिविकारागमान् वर्जयित्वा। वक्ष्यति तव्यत्तव्यानीयरः ३।१।९६। कर्तव्यम्। करणीयम्। प्रत्ययप्रदेशाः प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६१ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

प्रत्ययः १२०, ३।१।१

न्यासः

प्रत्ययः। , ३।१।१

"प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते" इति। शास्त्रस्य लाघवार्थम्। यदि सन्प्रत्ययः, क्यच्प्रत्ययः, क्यङ्प्रत्ययः इत्येवमेकैकं संज्ञिनमुपादायानकेषां भिन्नवाक्यैः प्रत्ययसंज्ञा विधीयेत् तदा शास्त्रसय् गौरवं स्यात्; संज्ञिनां बहुत्वात्। न हि तेषां तथाविधं सायान्यमभिन्नमस्ति यदुपादायैकेन वाक्येनानेकेषां संज्ञा कविधीयेत् यथा--- "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" १।१।७२ इति। ननु चेदमस्ति समान्यं सविति, एवञ्च सूत्रं करिष्यते-- "सप्()प्रत्ययः" इति, सविति प्रत्याहारग्रहणं च सनः सकारादारभ्य कपः पकारेण? नैतदस्ति; अन्येऽपि बहवः पकाराः सन्ति-- "सिब्बहुलं लेटि" ३।१।३४, "वदः सुपि क्यप् च" ३।१।१०६ इत्येवमादयः तत्र यदि प्रत्यासत्तिमाश्रित्यानन्तरः पकारः प्रत्याहारार्थ गृह्रते,तदा सिपः पकारेमैव प्रत्याहारग्रहणं विज्ञायेत। अथ व्याप्तिर्गृह्रते? तदा "तप्तनप्तनथनाश्च" ७।१।४५ इति तनपः पकारेणैव स्यात्। स्यादेतत्-- व्याप्तेरेव न्याय आश्रयितव्यः। न च तनपः पकारेण प्रत्याहारगर्हणं भविष्यति, अपि तु कप एव, "इच एकाचोऽम्प्रत्ययवच्च" ६।३।६७ इति वचनाज्ज्ञापकात्; अन्यथा षष्ठेऽपि प्रत्ययसंज्ञाव्यापारादपार्थकमिदं स्यात्? नैतदस्ति; असति हि प्रयोजने ज्ञापकं भवति, अस्ति ह्रस्य प्रयोजनम्, किं तत्? अम्प्रत्ययप्रतिबद्धं विशिष्टमेव यथा स्यात्। प्रत्ययमात्रप्रतिबद्धं मा भूदिति नियमार्थमेतत् स्यात्, तत्कुतो वैयर्थ्यम्। अथापि कथञ्चित् कपः पकारेणैव प्रत्याहारो लभ्येत, एवमपि प्रतिपत्तिगौरवं स्यात्। अतो लाघवार्थमधिकारेणैवेयं संज्ञा विधातुं युक्तेति मत्वाऽऽह-- "प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते" इति। यद्येवम्, प्रतियोगं तेनोपस्थातव्यम्, तत्रासावुपस्थितः सन्नादिभिरेव सम्बध्यते, न प्रकृत्यादिभिरिति नियमहेतुर्नास्ति। अतः प्रकृत्युपपदोपाधिविकारागमानामप्येषा संज्ञा स्यात्। तत्र प्रकृतिः-- "गुप्तिज्किद्भ्यः सन्" ३।१।५, उपपदम्-- "स्तम्बकर्णयो रमिजपोः" ३।२।१३, उपाधिः-- "हरतेर्दतिनाथयोः पशौ" ३।२।२५। यद्यपि प()आर्थस्य संज्ञायाः प्रयोजनं नास्ति, तथापि तद्वाचिनोऽस्तीति तस्य स्यादेव। विकारः-- "हनस्त च" ३।१।१०८, आगमः--"त्रपुजतुनोः षुक्" ४।३।१३६। प्रत्ययसंज्ञायाञ्चैषां परत्वमाद्युदात्तत्वञ्च स्यात्। यद्यपि युगपदगुपादीनां परस्परापेक्षया सनादीनाञ्च परत्वं न सम्भवति, तथापि पर्यायेण स्यात्--- कदाचित् गुपादयः परे स्युः, कदाचित् सन्नादयः, अन्यतो वा कुतश्चिद्गुपादयः परे भवेयुरित्यत आह-- "प्रकृत्युपपद" इत्यादि। एतच्च न्यायप्राप्तमेवोक्तम्। कथम्? प्रकृत्युपपदोपाधयस्तावत् परकार्यसिद्धये भूतविभक्त्या पञ्चम्यादिकया निर्दिश्यन्त इति तेषां पञ्चम्यादिविभक्त्यन्तं शब्दरूपं संज्ञासंज्ञिसम्बन्धं प्रतिपत्तुमयोग्यम्। तथा हि-- प्रथमान्तसय् वा सामानाधिकरण्येन संज्ञासंज्ञिसम्बन्धो भवति यत्र बुद्ध्याहितसंज्ञारूपः सोऽयमित्यभेदसम्बन्धमुपगतः संज्ञी संज्ञया सह निर्दिश्यते, यथा-- "वृद्धिरादैच्" १।१।१ इति; षष्ठ()न्तस्य वा यत्र संज्ञासंज्ञिनोर्भेदविवक्षायां संज्ञाशब्देन स्वरूपपदात्मकेनोपादीयमानेनोपजनितव्यतिरेकः षष्ठ()आ संज्ञी निर्दिश्यते, यथा-- "स्वं रूपं शब्दस्याशब्दसंज्ञा" १।१।६७ इति। प्रकृत्यादयस्तु परोपकारयोग्यं विभक्तिविशेषमुपादाय वत्र्तन्त इत्यशक्य एषां संज्ञासम्बन्धः कर्त्तुम्। न च संज्ञासंज्ञिसम्बन्धयोग्यविभक्त्यध्याहारे सत्येषां संज्ञा भविष्यतीति युक्तं परिकल्पियितुम्। असति हि वचनस्यावकाशेऽध्याहारो युक्तः, न तु सति। अस्ति चावकाशः सन्नादिः। अप्राधान्याच्च प्रकृत्यादीनामयुक्ता संज्ञा। प्रधाने ह#इ कार्यसम्प्रत्ययो लोके दृष्टः, यथा-- बहुषु गच्छत्सु कश्चित् पृच्छति कोऽयं याति? स आह-- राजेति। तत्र यः पृच्छति, यश्चाचष्टे-- तयोरुभयोरपि प्रधाने राजनि सम्प्रत्ययो भवति। तस्मादिहापि प्रधाने सन्नादौ कार्यसम्प्रत्ययात् तस्यैव संज्ञा भविष्यति। प्राधान्यं पुनस्तस्यापूर्वस्य विधानात्। प्रकृत्यादीनां धात्वदिपाठे निज्ञ्ज्ञातस्वरूपाणां सन्नाद्यर्थोपादानादप्राधान्यम्, तत् कुतस्तेषां

संज्ञा? आगमविकारयोर्यद्यपि संज्ञासंज्ञिसम्बन्धयोग्यतया प्रथमया निर्देशः, विधेयत्वाच्च प्राधान्यम्, तथापि न भवति संज्ञा;यस्मात्प्रत्यय इति महती संज्ञा क्रियते। तस्या एतत्प्रयोजनमन्वर्थसंज्ञा यथा स्यात्--- प्रतियनत्यनेनार्थानिति प्रत्ययः। न च विकारागमाभ्यां कञ्चनार्थं प्रतियन्ति। यदि तह्रन्वर्थसंज्ञेयम्, "अवेः कः" ५।४।२८ "यावादिभ्यः कन्" ५।४।२९ इत्येवमादीनां प्रत्ययसंज्ञा न प्राप्नोति; अर्थाभावात्। द्विवधो ह्रर्थः--लौकिकः, शास्त्रीयश्च; तत्र पूर्वः पदेनैव प्रतीयते, द्वितीयस्त्वन्वयव्यतिरेकाभ्याम्; स च तेषां नास्ति, विना प्रत्ययैः प्रकृतेरेव तदर्थस्य प्रतीतेः? नैष दोषः; यद्यपि तेषामन्वयव्यतिरेकाभ्यामर्थो न समधिगम्यते, तथापि "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (पु।प।९०) इत्यस्मादेवाप्तवचनात् समधिगम्यते। तस्मात् तैरपि स्वार्थं प्रतियन्तीति तेऽपि प्रत्यया इत्लमतिप्रसङ्गेनेति स्थितमेतत्-- प्रकृत्यादीनां प्रत्ययसंज्ञा न भवतीति। "कत्र्तव्यम्, करणीयम्" इति। तव्यदादेः प्रत्ययसंज्ञायां "यस्मात्प्रत्ययविधिः" १।४।१३ इति तस्मिन् परतोऽङ्गसंज्ञा भवति। अथ कथं तदनन्तरं सन्नादिमतिक्रम्य व्यवहित एव तव्यदादिरुदाह्मतः? तत्राद्युदात्तादेरपि प्रत्ययसंज्ञाकार्यस्य सम्भवात्। सन्नादौ तु तन्न सम्भवति; धातुस्वरेणैव बाधितत्वात्॥

बाल-मनोरमा

प्रत्ययः १७९, ३।१।१

प्रत्ययः। तृतीयाध्यायस्यादिमं सूत्रमिदम्। इत ऊध्वमा पञ्चमाध्यायपरिसमाप्तेः प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः। "हनश्च वधः", "ई च खनः", "नडादीनां कुक्चे"त्यादीनामादेशागमानां तु न प्रत्ययसंज्ञा, महासंज्ञाकरणात्।

तत्त्व-बोधिनी

प्रत्ययः १४९, ३।१।१

अधिकारोऽयमिति। प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ परः १।१ ५।४।१५० च ० प्रत्ययः १।१ १

अर्थः॥

यस्य प्रत्ययसंज्ञा विहिता सः प्रत्ययः परश्च भवति, इति अधिकारः वेदितव्यः, आपञ्चमाध्यायपरिसमाप्तेः

उदाहरणम्॥

कर्त्तव्यम्, तैत्तिरीयम्॥

काशिका-वृत्तिः

परश् च ३।१।२

अयम् अप्यधिकारो योगे योगे उपतिष्ठते, परिभाषा वा। परश्च स भवति धातोर् वा प्रातिपदिकाद् वा यः प्रत्ययसंज्ञः। कर्तव्यम्। तैत्तिरीयम्। चकारः पुनरस्यैव समुच्चयार्थः। तेन उणादिषु परत्वं न विकल्प्यते।

लघु-सिद्धान्त-कौमुदी

परश्च १२१, ३।१।२

इत्यधिकृत्य। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः॥

न्यासः

परश्च।, ३।१।२

"अयमप्यधिकारः" इति। न केवलं प्रत्यय इत्यपिशब्दार्थः। "योगे योगे उपतिष्ठते" इति। परिभाषाया अधिकारस्य भेदं दर्शयति। परिभाषा ह्येकदेशस्थैव सर्वत्र शास्त्रे व्याप्रियते, न तु प्रतियोगमुपतिष्ठते। "परिभाषा वा" इति। पक्षान्तरं दर्शयति। एकदेशस्यैव सर्वत्र शास्त्रे व्याप्रियत इत्येष परिभाषाधर्मो वृत्तौ न दर्शितः; अधिकारधर्मप्रदर्शनद्वारेणावगम्यमानत्वात्। यदि हि प्रयोगमुपतिष्ठमाना परिभाषा कार्यसिद्धौ व्याप्रियेत तदाऽधिकारपरिभाषयोर्भेदो न स्यात्, तथा च तयोरिह भेदेनोपन्यसो निष्फलः स्यात्। लिङ्गवती चेयं परिभाषा, लिङ्गञ्चास्याः प्रत्ययसंज्ञैव। धातोर्वेति क्रियावाचिन्या प्रकृतेरिदमुपलक्षणम्, तेन तिङन्तमपि गृह्रते। तदपि क्रियाप्रधानत्वात् क्रियावाचीति शक्यते व्यपदेष्टुम्। प्रधानेन हि व्यपदेशा भवन्ति, यथा--- राजधानीति। "प्रातिपदिकाद्वा" इति। अक्रियाभिधायिन्याः प्रकृतेरिदमुपक्षणम्, तेन ङ्यापावपि गृह्येते। "तैत्तिरीयम्" इति। प्रोक्तार्थे "तित्तिरवरतन्तुखण्डिकोखाच्छण्" ४।३।१०२ इति छण्। तदन्तात् "तदधीते तद्वेद" २।४।५९ इत्यण्। तस्य "प्रोक्ताल्लुक्" ४।२।६३ इति लुक्। अथ चकारः किमर्थः; यावता नात्र किञ्चित् प्रकृतमस्ति यच्चकारेण समुच्चीयते? इत्याह-- "चकारः पुनः" इत्यादि। अन्यस्य समुच्चेतव्यस्याभावादस्यैव समुच्चयार्थश्चकारो विज्ञायते, तेन बहुलाधिकारेऽपि ये प्रत्यया विधीयन्ते तेष्वप्यृणादिषु परत्वं न विकल्प्यते। किमर्थं पुनरिदमुच्यते? परो यथा स्यात्, पूर्वो मा भूदिति। नैतदस्ति प्रयोजनम्, तथा हि-- यमिच्छति पूर्वं तमाह--- "अव्ययसर्वनाम्नामकच् प्राक्टेः" ५।३।७१ इति। य इदानीमतोऽन्यः प्रत्ययः सोऽन्तरेणापि वचनं पर एव भविष्यति? नैतदस्ति; येषामेव हि प्रत्ययानां देशो नियम्यते त एव नियतदेशाः स्युः। य इदानीमतोऽन्योऽनियतदेशः स कदाचित् परे, कदाचित् पूर्वे, कदाचिन्मध्ये स्यात्, तस्मात् परश्चेति वक्तव्यम्? न वक्तव्यम्; यस्मात् धातोः प्रतिपदिकादिति च दिग्योगलक्षमेयं पञ्चमी; अन्यस्यापादानादेः पञ्चमीनिमित्तस्याभावात्। तस्मादेषैव परदिक्शब्दाध्याहारं करिष्यति? नैतदस्ति; पूर्वदिक्शब्दाध्याहारः स्यात्, तथा च पूर्वेऽपि कदाचित् सन्नादयः स्युः। "तस्मादित्युत्तरस्य" (१।१।६७) इत्यनया परिभाषया तर्हि व्यवस्था भविष्यति? नैतदस्ति; यत्र पञ्चमीनिर्दिष्टात् परस्य षष्ठीनिर्देशस्य कार्यं विधीयते सोऽस्य विषयः, न च सन्नादयः षष्ठ()आ निर्दिश्यन्ते, तनापि तेषां सम्बन्धिकार्यं विधीयते, तेषामेव भाव्यमानत्वात्। ननु च प्रत्ययसंज्ञाकार्यं विधीयते? नैवम्, कथं पुनरसतां तेषां शक्यं संज्ञाकार्यं विधातुम्? किञ्च येषां प्रत्ययसंज्ञैव न विधीयते-- "कणेष्ठः" (द।उ। ५।६) "शमेर्ढः" (५।११), इत्येवमादीनाम्, तत्र का गतिः स्यात्? न ह्येषां प्रत्ययसंज्ञेष्यते, तथा हि-- कण्ठः, शण्ढ इत्यत्र प्रत्ययस्योच्यमानमिकादेशादिकार्यं न भवति। यद्येवम्, प्रत्ययस्योच्यमानं परत्वमपि न स्यात्? परश्चेत्यधिकारसामथ्र्याद्भविष्यति। असति ह्येतस्मिन् वचने सत्यपि तस्याः परिभाषाया उपस्थाने बहुलाधिकारे विधीयमानत्वादुणादिषु परत्वं विकल्प्येत। तस्मात् कत्र्तव्यमेतत्॥

बाल-मनोरमा

परश्च १८०, ३।१।२

परश्च। तृतीयाध्यायस्य द्वितीयसूत्रमेतत्। अयमपि तथेति। अयमपि योग आ पञ्चमपरिसमाप्तेरधिकार इत्यर्थः। अवधिनियमे तु व्याख्यानमेव शरणम्।

---

सूत्रम्

काशिका-वृत्तिः

आद्युदात्तश् च ३।१।३

अयम् अप्यधिकारः परिभाषा वा। आद्युदात्तश्च स भवति। आद्युदात्तश्च स भवति यः प्रत्ययसंज्ञः। अनियतस्वरप्रत्ययप्रसङ्गे ऽनेकाक्षु च प्रत्ययेषु देशस्य अनियमे सति वचनम् इदम् आदेरुदात्तार्थम्। कर्तव्यम्। तैत्तिरीयम्।

न्यासः

आद्युदात्तश्च।, ३।१।३

"अनियतस्वरप्रत्ययप्रसङ्गे" इत्यादिना सूत्रारम्भस्य प्रयोजनं दर्शयति। अनियतोऽव्यवस्थितः स्वरो यस्य स तथा, स चासौ प्रत्ययश्चेति कर्मधारयः, तस्य प्रसङ्गशब्देन षष्ठीसमासः। अनियतस्वरो यः प्रत्ययस्तस्य प्रसङ्गे सति वचनमिदमादेरुदात्तार्थम्। "अनियतस्वरप्रसङ्गे" इति क्वचित्पाठः। तत्रानियतशब्दस्य स्वरशब्देन विशेषमसमासं कृत्वा प्रसङ्गशब्देन षष्ठीसमासः। अनियतानामुदात्तादीनां स्वराणां प्रसङ्गे सत्यादेरुदात्तार्थं वचनम्। "अनेकाक्षु च" इत्यादि। अनेकेऽचो येषां तेऽनेकाचः। तेष्वनेकाक्षु प्रत्ययेषु देशस्यानियमे सति वचनमादेरुदात्तार्थम्-- आदेरेवोदात्तत्वं यथा स्यात्, मध्येऽन्ते च मा भूदिति। ये ह्येकाचः प्रत्ययास्तत्र देशस्याभावादसत्यप्यादिग्रहणे देश्यानियमो न सम्भवति, अतोऽनेकाक्षु चेत्युक्तम्। अनेकाचां ह्यसत्यादिग्रह आदिमध्यान्तानामनियमेन स्वरः प्रसज्येतनेकाचः प्रत्ययादेर्यद्याद्युदात्तार्थवचनं नार्थं एतेन; यस्मादादेरनुदात्तादीनां मध्यान्तयोश्चोदात्तस्य प्रसङ्ग एव नास्ति। तथा हि-- यमनुदात्तमिच्छति, करोति तत्र पकारमनुबन्धम्, आह च-- "अनुदात्तौ सुप्पितौ" ३।१।४ इति; स्वरितमपि यमिच्छति, करोति तत्र तकारमनुबन्धम्, आह च-- "तित् स्वरितम्" ६।१।१७९ इति; एकश्रुतिं यमिच्छति तत्रैकश्रुतिग्रहणं करोति, आह च-- "एकश्रुति दूरात्सम्बुद्धौ" १।२।३३ इति; अन्तोदात्तमपि यमिच्छति करोति तत्र चकारमनुबन्धम्, आह च-- "चितोन्त उदात्तो रित" (का।६।१।१६३) इति; मध्योदात्तमपि यमिच्छति, करोति तत्र रेफमनुबन्धम्, आह-- "उपोत्तमं रिति" ६।१।२११ इति; य इदानीमतोऽन्यः प्रत्ययः सोऽन्तरेणापि वचनमाद्युदात्त एव भविष्यति? नैतदस्ति; येषामेव हि स्वरो नियम्यते त एव नियतस्वराः स्युः, यस्त्वनियतस्वरः प्रत्ययस्तस्यानियमेनैव स्वरः प्रसज्येत-- कदाचिदुदात्तः कदाचित् स्वरान्तरम्। उदात्तोऽपि भवन् कदाचिदादौ, कदाचिन्मध्ये, कदाचिदन्ते स्यात्। तस्मात् कत्र्तव्यमेतत्॥

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तौ सुप्पितौ ३।१।४

पूर्वस्य अयम् अपवादः। सुपः पितश्च प्रत्यया अनुदात्ता भवन्ति। दृषदौ। दृषदः। पितः खल्वपि पचति। पठति।

न्यासः

अनुदात्तौ सुप्पितौ।, ३।१।४

"पूर्वस्यायमपवादः" इति। नाप्राप्ते तस्मिन्नस्यारम्भात्। सुबिति प्रत्याहारस्य ग्रहणम्, न सप्तमीबहुवचनस्य; तस्य पित्त्वादेवानुदात्तस्य सिद्धत्वात्। अत एव वृत्तौ "सुपः" इति बहुवचनेन निर्देशः कृतः। प्रत्याहारग्रहणञ्चेदं सुप एव पकारेण नान्येन; तस्यानन्यार्थत्वात्। "पचति, पठति" इति। शबत्रोदाहरणम्, न तिप; तस्य "तास्यनुदात्त" ६।१।१८० इत्यादिनैव सिद्धत्वात्॥

सूत्रम्

काशिका-वृत्तिः

गुप्तिज्किद्भ्यः सन् ३।१।५

गुप गोपने, तिज निशाने, कित निवासे एतेभ्यो धातुभ्यः सन् प्रत्ययो भवति। प्रत्ययसंज्ञा च अधिकृतैव। जुगुप्सते। तितिक्षते। चिकित्सति। निन्दाक्षमाव्याधिप्रतीकारेषु सन्निषते ऽन्यत्र यथा प्राप्तं प्रत्यया भवन्ति। योपयति। तेजयति। सङ्केतयति। गुपादिष्वनुबन्धकरणम् आत्मनेपदार्थम्।

न्यासः

गुप्तिज्किद्भ्यः सन्। , ३।१।५

"प्रत्ययसंज्ञा चाधिकृतैव" इति। विस्पष्टार्थमेतत्। प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते; "आ पञ्चमाध्यायपरिसमाप्तेः" (का।३।१।१) इत्यतो वचनादेव प्रतिपाद्यस्यावगतत्वात्। ननु च सत्यपि प्रत्ययसंज्ञाया इहोपस्थाने नैव तया सनो भवितव्यम्; यतः प्रत्यय इत्यन्वर्थसंज्ञेयम्-- प्रतियन्त्यनेनार्थानिति प्रत्ययः, न च सना कञ्चनार्थं प्रतियन्ति; तस्यानर्थकत्वात्, न हीह सनः कश्चनार्थो निर्दिश्यते। न च "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भविष्यति" (पु।प।पा।९०) इतिस्वार्थ एव सन् भविष्यतीति युक्तं परिकल्पयितुम्; गोपनादेः स्वार्थस्य सन्नन्तादप्रतीतेः। अथानर्थकस्यापि प्रत्ययाधिकारे विधानसामर्थ्यात् संज्ञा भविष्यतीति चेत्? न; एवञ्च "हनस्त च" ३।१।१०८ "त्रपुजतुनोः षुक्" ४।३।१३६ इति विकारागमयोरपि स्यात्। नैष दोषः; अस्त्येव सनोऽर्थः, कः पुनरसो? निन्दादिः। यदाह-- "निन्दाक्षमाव्याधिप्रतीकारेषु सनिष्यते" (वा। १७८) इति। कुतः पुनरेतदवसितम्-- सनोऽर्था निन्दादय इति? अन्वयव्यतिरेकाभ्याम्। सति हि सनि जुगुप्सत इत्यादौ तेऽर्थाः प्रतीयन्ते, असति तु सनि सत्स्वपि गुपादिषु गोपयतीत्यादौ ते न प्रतीयन्ते। तस्मादर्थवानेव सन्निति भवत्येव प्रत्ययसंज्ञा। "जुगुप्सते" इत्यार्धधातुकत्वाभावादिण् न भवति। आर्धधातुकत्वाभावस्तु सनो धातोरित्यविधानात्। "कुहोश्चु" ७।४।६२ इति चुत्वम्-- जकारः। "तितिक्षते" इति। जकारस्य "चोः कुः" ८।२।३० कुत्वम्-- गकारः। तस्य "खरि च" ८।४।५४ इति चर्त्वम्-- ककारः। "निन्दाक्षमा" इत्यादि। कथं पुनर्निन्दादिष्विष्यमाणो लभ्यते? वक्ष्यमाणं वाग्रहणं सर्वस्य शेषो विज्ञायते, सा च व्यवस्थितविभाषा। तेन निन्दादिषु नित्यं सन् भवति, अन्यत्र न भवति। प्रायिकञ्चैतत् व्याधिप्रतीकारस्यार्थमन्यथा व्याख्यास्यति। अथ वा-- क्षेत्रियाणि च तृणानि शस्यार्थे क्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि। अथ वा-- क्षेत्रियः पारदारिकः। परदाराः परक्षेत्रम्,तत्र चिकित्स्यो निग्रहीतव्य इत्यर्थः। संशयेऽपि दृश्यते-- "विचिकित्सति मे मनः" इति। यद्यप्यत्रोपसर्गसम्बन्धात् संशयः प्रतीयते, तथापि धातोरेव वाच्य इष्यते, उपसर्गस्य तु द्योत्यः। तस्मात् प्रायिकं व्याधिप्रतीकारग्रहणम्। प्रायेण हि लोके व्याधिप्रतीकारे चिकित्सतीति प्रयुज्यते। "अन्यत्र" इति। गोपनादौ। "गोपयति" इति। हेतुमण्णिच्। तेजयति, "सङ्केतयति"इति। हेतुमण्णिच्, चुरादिण्ज्वाः; भ्वादौ चुरादौ चानयोः पाठात्। अथ जुगुप्सत इत्यादौ कथमात्मनेपदं सन्नन्ताद्विधीयते, न च गुपादिभ्य प्राक् सन आत्मनेपदं पश्यामः? इत्याह-- "गुपादिष्वनुबन्धकरणम्" इत्यादि। आत्मनेपदं यथा स्यादिति। गुपादिष्वनुबन्धोऽनुदात्तार्थः कृतः तस्मात् "अनुदात्तङितः" १।३।१२ इत्यात्मनेपदं भवतीति भावः। ननु च कृतेऽप्यनुबन्धे न भवितव्यमेव तेभ्य आत्मनेपदेन; सना व्यवहितत्वात्? नैतदस्ति; अनुबन्धकरणसामर्थ्याद्भविष्यति। अथ वा-- "अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति" (है।ग।प।१०७) इति जुगुप्सादय एव समुदाया अनुदात्तेतः, तेनावयवधानेनैव तेभ्य आत्मनेपदं भविष्यति। एवं स्थिते यदत्र द्वेष्यमापद्यते तत् "पूर्ववत्सनः" १।३।६२ इत्यत्रोपन्यस्तमपास्तञ्च। अथ किमर्थं सनोऽकार उपदिश्यते, यावता तस्यार्धधातुके "अतो लोपः" ६।४।४८ इति लोपेन भवितव्यम्, सार्वधातुकेऽपि शपा सहैकादेशेन, तत्र सत्यसति

वाऽकारोपदेशे नास्ति कश्चिद्विशेषः? नैतदस्ति; इह प्रतीषिषतीति प्रपूर्वादिणः सनि विहिते यद्यकारोपदेशो न स्यात् "अजादेर्द्वितीयस्य" ६।१।२ इति द्वितीयस्यैकाचो द्वर्वचनं विधीयमानं स इत्यस्य न स्यात्, अनच्कत्वात् सनः। अकारोपदेशे सति स इत्यस्य द्वितीयस्यैकाचो भवति। तदर्थोऽपकारोपदेशः॥

बाल-मनोरमा

गुप्तिडज्किद्भ्यः सन् २२९, ३।१।५

गुप्तिज्किद्भ्यः।

---

सूत्रम्

काशिका-वृत्तिः

मान्बधदान्शान्भ्यो दीर्घश् च अभ्यासस्य ३।१।६

मान् पूजायाम्, बध बन्धने, दान अवखण्डने, शान अवतेजते, इत्येतेभ्यो धातुभ्यः सन् प्रत्ययो भवति, अभ्यासस्य च इकारस्य दीर्घादेशो भवति। मीमांसते। बीभत्सते। दीदांसते। शीशांसते। उत्तरसूत्रे वाग्रहणं सर्वस्य शेषो विज्ञायते, तेन क्वचिन् न भवत्यपि। मानयति। बाधयति। दानयति। निशानयति। अत्र अपि सन्नर्थविशेष इष्यते। मानेर् जिज्ञासायाम्, बधेर् वैरूप्ये, दानेरार्जवे, शानेर् निशाने।

न्यासः

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य।, ३।१।६

मान्बन्धी अनुदात्तेतौ, शेषौ स्वरितेतौ। इह दीर्घग्रहमात् "अचश्च" (१।२।२८ इति परिभाषोपस्थानादचाऽभ्यासो विशिष्यत इत्यजन्तस्याभ्यासस्य दीर्घो विधीयमानो नियतं हलादिशेषमपेक्षते; विना तेनाजन्तत्वाभावात्। त()स्मस्तु सति न किञ्चित् प्रतीक्षणीयमिति तत्समनन्तरमेव दीर्घेण भवितव्यम्, ततश्चाभ्यासस्यावर्णस्य स्थाने भवन् ब्धेरित्त्वस्य बाधकः स्यात्, शेषाणान्तु ह्यस्वस्य, ततश्चानिष्टं रूपं स्यादिति यो मन्येत तं प्रत्याह-- "अभ्यासस्य चेकारस्य दीर्घो भवति" इति।कथं पुनरिकारस्य दीर्घो लभ्यते, यावता विशेषविधिः सामान्यविधेर्बाधको भवति, विशेषविहितश्च दीर्घः, ततोऽयं सामान्यविहितमित्त्वं बाधित्वाऽकारस्यैव प्राप्नोति? अत एवं मन्यते-- "दीर्घोऽकितः ७।४।८३ इत्यत्र ज्ञापितमेतत् स्यात्-- "अभ्यासविकारेष्वपवादानोत्सर्गान् विधीन्बाधन्ते" (व्या।प।२३) इति। अकिद्ग्रहणस्यैतत् प्रयोजनम्, इह मा भूत्-- यंयम्यते, रंरम्यते इति। यदि चाभ्यासविकारेष्वपवादैरुत्सर्गा बाध्येरन्नेवं सत्यपवादत्वान्नुकि कृतेऽनजन्तत्वादेव दीर्घो न भविष्यति, किमकित इत्यनेन। कृतञ्च; अतस्ततो ज्ञापयति-- नाभ्यासविकारेषु बाध्यबाधकभाव इति। "बीभत्सते" इति। "एकाचो बशो भष्" ८।२।३७ इति बकारस्य भकारः, धकारस्य "खरि च" ८।४।५४ इति तकारः। "उत्तरसूत्रे" इत्यादि। अत्र हि सनो विधिमात्रमपेक्ष्यते वावचनेन, न त्वनन्तर एव विधिः। तेन त्रयाणामपि योगानां शेषो विज्ञायते। सर्वग्रहणं गुपादिसूत्रस्यापि ३।१।५ शेषो विज्ञायत इति ज्ञापनार्थम्, अन्यथा ह्यनन्तरस्यैव सूत्रस्य शेषो विज्ञायेत। "मानयति" इति। हेतुमण्णिच्, चुरादिणिज्वा, चुरादावप्यस्य पाठात्। "{निशानयति-- काशिका} निशानम्" इति। पचाद्यच्॥

बाल-मनोरमा

मान्बधदान्?शानभ्यो दीर्घश्चाऽऽभ्यासस्य २३०, ३।१।६

मान्बध। गुप्तिजी इह पठितौ। "कित निवासे" इत्यनुपदमेव परसमैपदिषु पठिष्यते। एभ्यस्त्रिभ्यो धातुभ्यः सन्प्रत्ययः स्यादिति प्रथमसूत्रार्थः। मानधातुर्बधधातुश्च इह पठितौ। दान खण्डने, शान तेजने इत्यनुपदमेव स्वरितेत्सु पठिष्येते।

एभ्यश्चतुर्भ्यः सन् स्यादिति द्वितीयसूत्रे प्रथमखण्डस्याऽर्थः। "आभ्यासस्ये"ति च्छेदः। अभ्यासस्य विकारः आभ्यासः। स च "सन्यतः" इति इत्त्वमेव,न तु ह्रस्व इति "गुणो यङ्लुको"रिति सूत्रे भाष्ये स्पष्टम्। ततश्च मान्बधदान्शानामब्यासावयवस्य इकारस्य सन्--संनियोगशिष्टो दीर्घश्च स्यादिति द्वितीयसूत्रे द्वितीयखण्डस्यार्थः। इत्यभिप्रेत्य सूत्रद्वयस्य फलितमर्थमाह--सत्रद्वयेति। अथ उक्तसनोर्वृत्तिकृदात्युपनिबद्धानर्थविशेषानाह--गुपेर्निन्दायामित्यादिना, शानेर्निशाने इत्यन्तेन। अत गोपानाद्यर्थकानां निन्दादौ वृत्तिस्त्वर्थनिर्देशस्योपलक्षणत्वाद्बोध्या। जिज्ञासाशब्देन जिज्ञासाप्रयोज्यो विचारो लक्ष्यते। "मानेर्विचारे" इत्येव वृत्तिकृत्। सन्नन्तस्य धातुकार्यप्राप्त्यर्थमाह--सनाद्यन्ता इति।

तत्त्व-बोधिनी

मान्बधदान्?शान्?भ्यो दीर्घश्चाऽऽभ्यासस्य २०२, ३।१।६

मान्बध। "आभ्यासस्ये" ति च्छेदः। अभ्यासस्य विकार आभ्यासः। स चाऽत्र "सन्यतः" इतीत्त्वमेव। यदि तु ह्रस्व इत्यव गृह्येत तर्हि तद्धितनिर्देशो व्यर्थः स्यात्। तदेतदाह-- अभ्यासेकारस्येति। वृत्तिकाराद्युपनिबद्धार्थान्दर्शयति- गुपेर्निन्दायामित्यादिना।

---

सूत्रम्

काशिका-वृत्तिः

धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७

इषिकर्म यो धतुरिषिणैव समानकर्तृकः, तस्मादिच्छायाम् अर्थे वा सन् प्रत्ययो भवति। कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकम्। कर्टुम् इच्छति। चिकीर्षति। जिहीर्षति। धातुग्रहनं किम्? सोपसर्गादुत्पत्तिर् मा भूत्। प्रकऋतुम् ऐच्छत् प्राचिकीर्षत्। कर्मणः इति किम्? करणान् मा भूत्। गमनेन इच्छति। समानकर्तृकतिति किम्? देवदत्तस्य भोजनम् इच्छति यज्ञदत्तः। इच्छायाम् इति किम्? कर्तुं जानाति। वावचनाद् वाक्यम् अपि भवति। धातोः इति विधानादत्र सनः आर्धधातुकसंज्ञा भवति, न पूर्वत्र। आशङ्कायाम् उपसंख्यानम्। आशङ्के पतिष्यति कूलम्, पिपतिषति कूलम्। श्वा मुमूर्षति। इच्छासन्नन्तात् प्रतिषेधो वक्तव्यः। चिकीर्षितुम् इच्छति। विशेषणं किम्? जुगुप्सिषते। मीमांसिषते। शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्टः सनन्तान् न सनिष्यते।

लघु-सिद्धान्त-कौमुदी

धातोः कर्मणः समानकर्तृकादिच्छायां वा ७०८, ३।१।७

इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्॥ पठ व्यक्तायां वाचि॥

न्यासः

धातोः कर्मणः समानकर्तृकादिच्छायां वा। , ३।१।७

कर्तृः क्रियया व्याप्तुमिष्टतमस्य कर्मभाव उपपद्यते। नान्यथेत्यवश्यं या काचित् क्रियाऽपेक्षितव्येति। इह चान्या न श्रूयते, प्रत्ययार्थत्वेन चेच्छा सन्निधापिता, अतः सैवापेक्षितुं युक्ता; प्रत्यासत्तेन्र्यायात्,तस्मात्, तयैव व्याप्यमानस्य कर्मभावो विज्ञायत इत्याह-- "इषिकर्म" इत्यादि। इषेः कर्मेति षष्ठीसमासः। प्रतियोग्यपेक्षत्वात् समानत्वस्य नियोगतः प्रतियोग्यपेक्षितव्यः, न च सूत्रे प्रतियोगी श्रूयते, तत्र पूर्वोक्तन्यायेनेषेरेव प्रतियोगित्वं विज्ञायत इत्याह--- "इषिणैव" इत्यादि। समान एकः कत्र्तास्येति बहुव्रीहिः, एककर्त्तृक इत्यर्थः। ननु चट धातोः कर्मत्वं नोपपद्यते, तस्यार्थधर्मत्वात्,

धातोश्च शब्दात्मकत्वात्। अथ करोति धातुमिच्छतीत्यादौ प्रयोगे धातोरपि कर्मता दृष्टेति चेत्? न ब्राऊमः-- सर्वथा धातोः कर्मत्वं न भवतीति, किं तर्हि? य इह सन्नुत्पत्तिनिमित्तभावनोपात्तः समानकर्तृकः, तस्य न सम्भवतीति ब्राऊमः; यस्मात् समानकर्तृकत्वं साध्यमानस्यार्थस्य भवति, कर्मत्वं तु सिद्धस्वभावस्य। अङ्गीकृत्य च समानकर्तृकत्वं धातोः कर्मत्वे दोष उक्तः इदानीं तदपि न सम्भवत्येव। तथा हि-- धातुः शब्दः क्रिय#आयाश्च कत्र्ता भवति, न शब्दस्येतत् आह-- "कर्मत्वम्" इत्यादि। "अर्थद्वारकम्" इति। अर्थो द्वारमुपायो यस्य तदर्थद्वारकमिति। अर्थस्य कर्मत्वात् समानकर्तृकत्वाच्च तद्वचनोऽपि धातुरर्थधर्मेणोपचारात् कर्मसमानकर्तृकश्चोच्यते, यथा--- "द्वन्द्वश्च प्राणितूर्य" २।४।२ इत्यत्रार्थस्य प्राण्यङ्गत्वात् तद्वचनोऽपि प्रामायङ्गमित्युच्यत इति भावः। "चिकीर्षति" इत्यत्र करोतेरर्थ इच्छया व्याप्यमानत्वात् समानत्वात् कर्मसमानकर्तृकश्चेषिणा; यस्मात् य एवेषेः कत्र्ता स एव तस्यापि। अतस्तदद्वारेण करोतिरपि कर्मसमानकर्तृकश्चेति भावः। ततः सन्, "इको झल्" १।२।९ इति सनः कित्वात् गुणभावः, "अज्झनगमां सनि" (६।४।१६ इति दीर्घः, "ऋत इद्धातोः" ७।१।१०० इतीत्वम्, रपरत्वम्, "हलि च" ८।२।७७ इति दीर्घः, "इण्कोः" ८।३।५७ इत्यनुवत्र्तमाने "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्, द्विर्वचनम्, अभ्यासकार्यम्। धातुग्रहणं किमिति। धातुग्रहणं ह्येवमर्थं क्रियते-- गमनमिच्छतीति सुबन्थान्मा भूदिति। ननु चासत्यपि धातुग्रहणे ततः सन् भवितुं नोत्सहते; "सुप आत्मनः क्यच्" ३।१।८ इत्पपवादेन बाधितत्वात्, तस्मात् पारिशेष्याद्विनापि धातुग्रहणेन धातोरेव भविष्यतीत्यभिप्रायेणाह-- "सोपसर्गादुत्पत्तिर्मा भूत्" इति। यदोपसर्गविशिष्टो धात्वर्थ इषिणा व्याप्यते तदासावुपसर्गविशिष्ट एव कर्मत्वमनुभवतीति तदद्वारेणासौ सोपसर्ग एव धातुः। कर्मेति सोपसर्गादुत्पत्तिः स्यात्,ततश्च प्राचिकीर्षदित्यत्र द्विर्वचनं क्रियमाणं सन्नन्तस्यैकाचः प्रथमस्य द्विर्वचनं भवतीति "सन्यङोः" ६।१।९ इति समुदायादेः प्रशब्दस्य स्यात्। लङि च सोपसर्गस्याङ्गसंज्ञायां ततः प्रागडागमः स्यात्। यदि तर्हि सोपसर्गः, कर्मधातोरुत्पत्तिर्न स्यात्, तस्याकर्मकत्वात्? नैतदस्ति, समुदायस्य हि कर्मत्वेऽवयवा अपिक्मत्वमनुभवन्ति;अवयवात्मकत्वात् समुदायस्य। अभ्युपाय एव ह्यवयवकर्मता समुदायकर्मतायाः; अन्यथा यदि समुदाये कर्मण्यवयवाः कर्मभावापन्ना न भवेयुः, तदा महान्तं पुत्रमिच्छतीत्यत्र कर्मलक्षणावयवा द्वितीया न स्यात्। " गमेनेनेच्छति" इति। करणत्वप्रदर्शनार्थं ल्युहन्तोपन्यासः। धातोरेव हि सनोऽनुत्पत्तिः प्रत्युदाहरणम्। अस्त्यत्र समानकर्तृकत्वम्। तथा हि--- य एवेषेः कत्र्ता स एव गमनस्य, स ह्यात्मीयेन गमनेन करणभावमापन्नेन किमपि वस्त्विवच्छति। क्मत्वं तु गमेरर्थद्वारकं नास्तीति न भवत्यतः सन्। "देवदत्तस्य भोजनमिच्छति" इति। देवदत्तस्येति "कत्र्तकर्मणोः कृति" २।३।६५ इति कत्र्तरि षष्ठी। अत्र हि भोजनस्य देवदत्तः कत्र्ता, इषेस्तु यज्ञदत्त इति समानकर्तृकत्वं नास्ति। "कर्तुं जानाति" इति। इच्छाग्रहणादिह ज्ञानेऽर्थे सन्न भवति। ननु चेषिकर्मा यो धातु रिषिणैव समानकर्तृकस्तत इच्छाया वा सन् भवतीत्युक्तम्। इह च यथेच्छा प्रत्ययार्थो नास्ति तथा धातोरिषिकर्मत्वमपि, इषिणा समानकर्तृकत्वञ्च, तदयुक्तं प्रत्युदाहरणम्, अङ्गत्रयवैकल्यात्? नैतदस्ति, सति हीच्छाग्रहणे तद्विशेषणद्वयं प्रत्यासत्तेर्लभ्यते। असति तु तस्मिन् यां काञ्चित् क्रियां प्रति धातोः कर्मत्वं विज्ञायते, प्रतियोगिमात्रापेक्षया च समानकर्तृकत्वमिति काऽत्रायुक्तता ! "वावचनाद्वाक्यमपि भवति" इति। उत्तरसूत्र इति शेषः। इह तु "समानकर्तृकेषु तुमुन्" ३।३।१५८ इत्यत एव विधानात् कर्तृमिच्छतीति वाक्यं भविष्यति। नित्यत्वेहि सनस्तस्य वचनस्यानर्थक्यं स्यात्। अन्यदपि वावचनप्रयोजनमुक्तमेव, तस्यै समुच्चयार्थोऽपिशब्दः। "धातोरिति विधानात्" इत्यादि। "आर्धधातुके शेषः" ३।४।११४ इत्यनेन धातोरित्येवं धातुशब्दमुच्चार्य विहितस्य प्रत्ययस्यार्धधातुकसंज्ञाविधानात्। इह धातोरित्येव सनो विधानमित्यार्धधातुकसंज्ञा न भवति, न हि तस्य तथा विधानमस्ति। "आशङ्कायामुपसंख्यानम्" इति। आशङ्का = सम्भावना, सा च प्रयोक्तृधर्मः। "नदीकूलं पिपतिषति" इत्यचेतनत्वात् कूलस्येच्छा न सम्भवतीति न प्राप्नोति। "आशङ्के कूलं पतिष्यति" इत्यस्मिन् विषय एवं प्रयोगः। "()आआ मुमूर्षति" इति। पूर्ववत् कित्त्वदीर्घत्वे। "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युक्तम्; रपरत्वञ्च। अत्र सत्यपि चेतनत्वे जीनस्य प्रियत्वाच्छुनो मर्तुमिच्छा न सम्भवतीति न प्राप्नोति। एष च प्रयोगः "अहमाशङ्केमरिष्यति ()आआ" इत्यत्रार्थे

वेदितव्यः। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। कत्र्तव्य इत्यव्याहार्यम्। प्रतिपादनं तु-- धातोरिति योगविभागः कत्र्तव्यः, तेनाशङ्कायामपि सन् भविष्यति। "इच्छासनन्तात्" इत्यादि। इच्छायामर्थे यो विहितः सन् तदन्तात् सनः प्रतिषेधो व्याख्येयः। व्याख्यानं तूत्तरत्र करिष्यामः। स्वार्थे यः सन् तदन्तात् सनिष्यत एवेतीच्छाविशेषणं कृतम्। "जुगुप्सिषते" इति। "अतो लोपः" ६।४।४८ इत्यकारलोपः। "शैषिकात्" इत्यादि। अ()आप्तयादिभ्योऽर्थेभ्योऽदूरभव इत्येतत्पर्यन्तेभ्योऽन्यो योऽर्थः स शेषः, तत्र भवः शैषिकः, "अध्यात्मादिभ्यष्ठञ्" (वा।४५६)। तस्माच्छैषिकः सरूपः प्रत्ययो नष्टः। शालायाम्भव इति "वृद्धाच्छः" ४।२।११३ शालीयः, शालीये भव इति पुनश्छो न भवति। विरूपस्तु भवत्येव-- अहिच्छत्रे भव आहिच्छत्रः, "प्राग्दीव्यतोऽण्" ४।१।८३ आहिच्छत्रे भव आहिच्छत्रीयः-- अणन्ताद्वृद्धाच्छो ४।२।११३ भवति। मतुबर्थे भवः प्रत्ययो मतुबर्थीयः, "गहादिभ्यश्च" ४।२।१३७ इति च्छः, मतुबर्थोऽस्यास्तीति मतुबर्थिकः प्रत्ययः, "अत इनिठनौ" ५।२।११४ इति ठन्। मतुबर्थोऽस्यास्तीतिमतुबर्थीयात् प्रत्ययान्मतुबर्थिकः सरूपः प्रत्ययो नेष्टः। दण्डोऽस्यास्तीति दण्डिकः, पूर्ववद्ठन्, दण्डिकोऽस्यास्तीति मतुबर्थीयात् पुनष्ठन् न भवति। विरूपस्तु भवत्येव-- दण्डोऽस्यास्तीति दण्डी, दण्डिनोऽस्यां शालायां सन्तीति दण्डमती शाला, इन्नन्तान्मतुप् भवति। "सन्नतान्न सनिष्यते" इति। "सरूपः" इति सम्बध्यते। तत्र यद्यपि सनो रूपसारूप्यव्यभिचारो नास्ति, तथापि विशेषणसामथ्र्यादर्थसारूप्यमाश्रीयते। तेनेच्छासनन्तादिति गम्यते, पूर्वम् "इच्छासनन्तात्प्रतिषेधो वक्तव्यः" (वा।१८१) इत्यभिधानाच्च। यस्तु निन्दादिषु गुपादिभ्यः सन् तत् इच्छासन् भवत्येव। तथा चैवं वृत्तादुदाह्मतम्।एतत्सर्वं न्यायप्राप्तमेवोदाह्मतम्। कथम्? निष्पन्ना हि प्रकृतिः प्रत्ययविधेर्निमित्तं भवति। न च सरूपशैषिकप्रत्ययविधानकाले तथाविधप्रत्ययानता निष्पन्ना प्रकृतिरस्ति, नापि सरूपमतुबर्थिकप्रत्ययविधानकाले तथाविधप्रत्ययान्ता निष्पन्ना प्रकृतिः, नापीच्छासनि विधीयमान इच्छासनन्तात् प्रकृतिर्लब्धसत्ताकास्ति; इदानीमेव हि "तत्र भवः" ४।३।५३ इत्यादिभिर्लक्षणैः सरूपाणां शैषिकादीनां भाव्यमानत्वात्। तस्मादविद्यमानप्रकृतिकत्वात् ते यथोक्तप्रकारायाः प्रकृतेर्न सम्भवन्तीति॥

बाल-मनोरमा

धातोः कर्मणः समानक्रतृकादिच्छायां वा ४३५, ३।१।७

धातोः कर्मणः। "गुप्तिज्किद्भ्यः" इत्यतः सन्नित्यनुवर्तते। इच्छायाः श्रुतत्वात्तां प्रत्येव कर्मत्वं विवक्षितम्। तथा समानकर्तृकत्वमपि इच्छानिरूपितमेव विवक्षितम्। कर्मेति स्ववाचकशब्दद्वारा धातौ सा मानाधिकरण्येनान्वेति। एवं च इच्छासमानकर्तृकत्वे सति इच्छाकर्मीभूतो यो व्यापारस्तद्वाचकाद्धातोरिच्छायां सन् वा स्यादिति फलति। तदाह -- इषिकर्मण इत्यादि। इषिरिच्छा। इषिणा एककर्तृकतत्वादिषैकर्मीभूतव्यापारवाचकाद्धातोरित्यर्थः। ननु समानकर्तृकादित्युक्त्यैव धातोरिति लब्धम्, धात्वर्थव्यापाराश्रयस्यैव कर्तृत्वादित्यत आह-- धातोरिति। धातोरिति विहितस्यैव प्रत्ययस्याद्र्धधातुकत्वं, नतु धातोः परस्य। अन्यथा जुगुप्सते इत्यत्र आद्र्धधातुकत्वे फलमाह -- इडिति। द्वित्वमिति। "सन्यङो"रित्यनेनेति भावः। अभ्यासस्य इत्वविधिं स्मारयति-- सन्यत इति। पठितुमिच्छतीति। भावस्तुमुनर्थः। "अव्ययकृतो भावे" इत्युक्तेः। धात्वर्थ एव भाव इत्युच्यते। तथा च पठितुमित्यस्य पठनक्रियैऽवार्थः। तस्मिन् पठने #इच्छाकर्मत्वम्, इच्छासमानकर्तृकत्वं च सना गम्यते। तथा च स्वकर्तृकं फटनमिच्छतीत्यर्थे पिपठिषतीति शब्दो वर्तत इत्युक्तं भवति। अथ "अद भक्षणे" इति धातोः सनि घस्लृभावं स्मारयति-- लुङ्सनोर्घस्लृ इति। घस् स इति स्थिते इटमाशङ्क्य आह-- एकाच इति नेडिति। घस् स इति स्थिते आह-- सस्य तत्वमिति। "सः स्याद्र्धधातुके" इत्यनेनेति भावः। जिघत्सतीति। द्वित्वे अभ्यासजश्त्वचुत्वे इति भावः। य्सनोर्द्वित्वमिति। "तृतीयस्य व्यञ्जनस्ये" ति पक्षे ईर्ष्य् इस इत्यत्र यकारमात्रस्य द्वित्वे, सनः षत्वेसं युक्तद्वियकारं रूपमिति भावः। तदाह -- ईर्ष्ययिषतीति। तथा च सन्नन्ते ईकाररेफषकारयकारद्वित्वेकारषकाराः। "तृतीयस्यैकाच" इति पक्षे ईर्ष्य इ स इत्यत्र स

इत्यस्य द्वित्वे अभ्यासेत्()तवे सकारद्वयस्यापि षत्वे रूपं मत्वा आह-- ईर्ष्यिषिषतीति। अत्र तु सन्नन्ते ईकाररेफषकारयकारेकारषकारेकारषकाराऽकाराः।

तत्त्व-बोधिनी

धातोः कर्मणः समानकर्तृकादिच्छायां वा ३७९, ३।१।७

धातोः कर्मणः। इषिकर्मण इत्यादि। इच्छायामिति श्रुतत्वात्कर्मत्वं कर्तृत्वं च तदपेक्षमेव गृह्रत इति भावः। पठितुमिच्छतीति। एकनिष्ठा पाठगोचरा वर्तमानेच्छेत्यर्थः। यिसनोरिति। "तृतीयव्यञ्जनस्ये"ति पक्षे यकारस्य द्वित्वं, "तृतीयस्यैकाच" इति पक्षे तु सन इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सुप आत्मनः क्यच् ३।१।८

कर्मणः इच्छायां वा इत्यनुवर्तते। इषिकर्मणः एषितुः एव आत्मसम्बन्धिनः सुबन्तादिच्छायाम् अर्थे वा क्यच् प्रत्ययो भवति। आत्मनः पुत्रम् इच्छति पुत्रीयति। सुब्ग्रहणं किम्? वाक्यान् मा भूत्। महान्तं पुत्रम् इच्छति। आत्मनः इति किम्? राज्ञः पुत्रम् इच्छति। ककारः नः क्ये १।४।१५ इति सामान्यग्रहणार्थः। चकारस् तदविघातार्थः। क्यचि मान्ताव्ययप्रतिषेधो वक्तव्यः। इदम् इच्छति। उच्चैरिच्छति। नीचिअरिच्छति। छन्दसि परेच्छायाम् इति वक्तव्यम्। मा त्वा वृका अघायवो विदन्।

लघु-सिद्धान्त-कौमुदी

सुप आत्मनः क्यच् ७२३, ३।१।८

इषिकर्मण एषितुः संबन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात्॥

न्यासः

सुप आत्मनः क्यच्। , ३।१।८

आत्मशब्दः परस्य व्यावृतिं()त कुर्वाणो यस्तत्प्रतियोगिनमर्थमाचष्टे स इह परिगृह्रते, न तु योऽन्तव्र्यापारवति पुरुषे भोक्तरि वत्र्तते; स इह गृह्रमाणोऽकिञ्चित्करः स्यात्। तेनेच्छा विशिष्येत, सुबन्तं वा; तत्रेच्छा तावदात्मनः, अन्यस्य न सम्भव्तयेवेति तद्विशेषणता तस्यायुक्ता। सुबन्थमप्येषित्रान्येन वा सम्बध्यमानमात्मसम्बद्धमेव भवति; उभयोरपि तयोरात्मसम्बन्धित्वात्। तस्मात् सुबन्तविशेषणत्वमपि तस्यायुक्तमिति परप्रतियोगिवचन एव गृह्रते। एवं हि कपरनिवृत्तिः शक्यते कर्त्तुम्, नान्यथा। अत्रापीच्छायाः सन्निधानात् तयैव व्याप्यमानस्य कर्मत्वं विज्ञायते, इत्याह-- "इषिकर्मणः" इति। आत्मग्रहणेन यदीच्छा विशिष्येत तदेहापि स्यात्-- राज्ञः पुत्रमिच्छतीति। राज्ञोऽपि पुत्र इष्यमाणे सत्यात्मन एवैषितुरिच्छा भवति। तस्मासुबन्तमेवात्मगर्हणेन विशेषयितुं युक्तमिति मत्वाऽऽह-- "एषितुरात्मसम्बन्धिनः" इति। आत्मसम्बन्धित्वं तु सुबन्तस्यार्थद्वारकं वेदितव्यम्। अथैषितुरेवैतत् कुतो लभ्यते? इच्छया सन्निधीयमानयेहैषितुः सन्निधापितत्वात्। एतदपि कुतः? तेन विना तदभावात्। "पुत्रीयति" इति। "क्यचि च" ७।४।३३ इतीत्वम्। सब्ग्रहणमिह प्रातिपदिकनिवृत्त्यर्थं वा स्यात्? धातुनिवृत्त्यर्थं वा? तत्र प्रातिपदिकनिवृत्त्यर्थं तावन्नोपपद्यते, न हि सुबन्तात् प्रत्ययोत्पत्तौ प्रातिपदिकाद्वा कश्चिद्विशेषोऽस्ति। धातुनिवृत्त्यर्थमपि न युज्यते, ततो विहितस्य सनो बाधकत्वादित्यभिप्रायेणाह-- "सुब्ग्रहणं किम्" इति, "वाक्यान्मा भुत्" इति। सुब्ग्रहणप्रयोजनमाह--

असति सुब्राग्रहणे वाक्यादपि स्यात्, अतस्तन्निवृत्यर्थं कृतं सुब्ग्रहणम्। अथ किमिदानीं न भवितव्यमेव महापुत्रीयतीति? भवितव्यं यदा समासे कृत एतद्वाक्यं भवति-- महापुत्रमिच्छतीति, यदात्वेतद्वाक्यं भवति-- महान्तं पुत्रमिच्छतीति, तदा न भवितव्यम्। पदसमुदायोपलक्षणञ्च वाक्यग्रहणं वेदितव्यम्। तस्मान्महान्तं पुत्रमित्यतः समुदायात् प्राप्तिराशङ्क्यते, न चैतद्वाक्यम्; अपरिसमास्यर्थत्वात्। किञ्च स्यात् यद्यतः स्यात्? प्रत्ययार्थे गुणीभूतयोर्महत्पुत्रशब्दयोरसत्येकार्थीभावलक्षणेऽसामार्थ्ये समासो न स्यात्। ततश्चोत्तरपदे विधीयमानं "आन्महतः समानाधिकरणजातीययोः" ६।३।४५ इत्यात्त्वं न स्यात्। अथ वा-- प्रत्ययार्थे गुणीभूतस्य पुत्रशब्दस्य पूज्यमानताविशेषणं न स्यादिति "सन्महत्" २।१।६० इत्यादिना समासो न स्यात्, तदभावादात्वमपि न स्यात्। अथ क्रियमाणे सुब्ग्रहणे कस्मादेवात्र न भवति, सुबन्तं ह्रेतत्? नैतत्; प्रत्ययग्रहणपरिभाषया यतः सुबूत्पन्नः सुब्ग्रहणे सति तदादेरेव ग्रहणं भवति। न चेह वाक्यात् सुबुत्पन्नः, किं तर्हि? अवयवात्। तेन वाक्यादुत्पत्तिर्न भवति। अवयवात् तर्हि पुत्रशब्दात् कस्मान्न भवति? अगमकत्वात्। वृत्तिसमानार्थेन हि वाक्येन प्रत्ययान्तेन भवितव्यम्। यश्चेह महान्तं पुत्रमिच्छतीति वाक्यनार्थः प्रतीयते नासौ प्रत्ययान्तेन। {तथा हि महान्तं पुत्रमिच्छतीति वाक्येनार्थः कञ्चित्--वाराणसीमुद्रणम्} तथा हि महान्तं पुत्रीयतीत्युक्ते महान्तं कञ्चित् पुत्रमिवाचरतीत्येषोऽर्थो वाक्यार्थद्भिन्नजातीय ए गम्यते। "राज्ञः पुत्र मिच्छति" इति। ननु च सापेक्षत्वादसामर्थ्ये सति न भविष्यति, किमात्मग्रहणेन,कथमसामथ्र्यम्? सापेक्षमसमर्थं भवति" (चां।प।२७) इति वचनात्? नैतत्। यदा तह्रर्थात् प्रकरणाद्वाऽनपेक्षं निज्ञ्ज्ञातं भवति तदा प्राप्नोति। इह च प्राप्नोति-- पापमिच्छति, अघमिच्छतीति। अत्र हि तृतीयस्य परपदस्य प्रयोगमन्तरेणापि परस्येति गम्यते, न हि कश्चिदात्मनः पापमिच्छति। "ककार#ः" इत्यादि। असति ककारेऽस्य ग्रहणं न स्यात्; "नः क्ये" १।४।१५ इत्यत्र ककारानुबन्धवतो ग्रहणात्। चकारस्तदविघातार्थः। असति चकारे तु सति क्यच्क्यङक्यषो द्वनुबन्धका भवन्तीति सामान्यग्रहणस्य विघातो न भवति। अन्तोदात्तार्थस्तु चकारो न भवति; "घातोः" ६।१।१५६ इति तस्य सिद्धत्वात्। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। व्याख्यानन्तु-- वेत्यनुवत्र्तमानस्य व्यवस्थितविभाषात्वमाश्रित्य कत्र्तव्यम्। तेन मान्ताव्ययेभ्यएः क्यज्न भवति। "छन्दसि" इत्यादि। छन्दसि परेच्छायामपि क्यज्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं पुनर्यद्यं क्यचि कृते "अ()आआद्यस्यात्" ७।४।३७ इतीत्वबाधनार्थमघशब्दस्येत्त्वं शास्ति तज्ज्ञापयति-- छन्दसि परेच्छायामपि क्यज्भवति। न हि कश्चिदात्मनोऽघमिच्छति। "अघायवः" इति। ज्ञापकसुत्रेणात्वम्, "क्याच्छन्दसि" ३।२।१७० इत्युप्रत्ययः, "जसि च" ७।३।१०९ इति गुणः, अवादेशः॥

बाल-मनोरमा

सुप आत्मनः क्यच् ४८२, ३।१।८

अथ नमधातुप्रक्रिया निरूप्यन्ते। सुप आत्मनः। प्रत्ययग्रहणपरिभाषया सुबन्तादिति लभ्यते। सन्निधानादिच्छां प्रत्येव कर्मत्वं विवक्षितम्। आत्मन्शब्दः स्वपर्यायः। तादथ्र्यस्य शेषत्वविवक्षायां षष्ठी। स्वर्थात्कर्मण इति लभ्यते। स्वश्च इच्छायां सन्निधापितत्वादेषितैव विवक्षितः। तथा च स्वस्मै यदिष्यते कर्मकारकं तद्वृत्तेः सुबन्तादिच्छायां क्यज्वा स्यादिति फलति। तदिदमभिप्रेत्य आह--इषिकर्मण एषितृसम्बन्धिन इत्यादिना। एषित्रर्थादिषिकर्मण इत्यर्थः। एषित्रा स्वार्थं यदिष्यते कर्मकारकं।द्वाचकात्सुबन्तादिति यावत्। धात्ववयवत्वादिति। सुबन्तात्क्यचि कृते तदन्तस्य "सनाद्यन्ता" इति धातुत्वादिति भावः।

तत्त्व-बोधिनी

सुप आत्मनः क्यच् ४१५, ३।१।८

सुप आत्मनः क्यच्। "धातोः कर्मणः" इति पूर्वसूत्रात्कर्मण इच्छायां वेत्यनुवर्तते। ततश्च सन्निधानादिच्छाकर्मण एव

भवतीत्याह-- इषिकर्मण इति। "परस्य पुत्रमिच्छती"त्यत्रातिप्रसङ्गवारणाय सूत्रे आत्मशब्द उपात्तः। स तु स्वशब्दपर्याय। स्वश्च क इत्याकाङ्क्षायामिच्छायाः सन्निधापितत्वादेषितैव गृह्रते। तदाह--एषितृसंबन्धिन इति। सुबन्तस्योक्तविशेषणद्वयमर्थद्वारकं बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

काम्यच् च ३।१।९

सुबन्तात् कर्मणः आत्मेच्छायां काम्यच् प्रत्ययो भवति। आत्मनः पुत्रम् इच्छति पुत्रकाम्यति। वस्त्रकाम्यति। योगविभाग उत्तरत्र क्यचो ऽनुवृत्त्यर्थः। ककारस्य इत्सज्ञा प्रयोजनाभावान् न भवति, चकारादित्वाद् व काम्यचः। उपयट्काम्यति।

लघु-सिद्धान्त-कौमुदी

काम्यच्च ७२८, ३।१।९

उक्तविषये काम्यच् स्यात्। पुत्रमात्मन इच्छति पुत्रकाम्यति। पुत्रकाम्यिता॥

न्यासः

काम्यच्च। , ३।१।९

ननु च द्वावप्येतौ क्यच्काम्यचौ सुबन्तात् कर्मण आत्मेच्छायां विधीयेते, तदेकयोग एव कथं न कृत इत्याह--- "योगविभागः" इत्यादि। "सुप आत्मनः क्यच्काम्यचौ" (इत्येक योगे सत्युत्तरत्र द्वयोरप्यनुवृत्तिः स्यात्। ननु च योगविभागेऽप्यानन्तर्यात् काम्यच एवानुवत्तिः स्यात्, न क्यचः? नैष दोषः; चकारोऽत्र क्रियते क्यचोऽनुकर्षणार्थः; क्यचोऽनुकर्षणस्यैतत्प्रयोजनम्-- उत्तरसूत्रेऽनुवृत्तिर्यथा स्यात् इह योजनाभावात्। काम्यजपि कस्मान्नानुवत्र्तत इति चेत्, न; योगविभागसामथ्र्यात्। अथ "लशक्वतद्धिते" १।३।८ इति ककारस्येत्संज्ञा कस्मान्न भवतीत्याह-- "ककारस्येत्संज्ञा" इत्यादि। ननु च लोप एव कार्यम्? न कार्यम्; लोप इह हि वर्णस्य कार्यार्थो भव्तयुपदेशः, श्रवणार्थो वा। कार्यं तावदिह नास्ति। तत्रि यदि श्रवणार्थो न स्यादुपदेशोऽनर्थकः स्यात्। इदं तर्हि कार्यम्-- अग्निकाम्यतीति गुणप्रतिषेधो यथा स्यात्? नैतत् प्रयोजनम्, सार्वधातुकार्धधातुयोरङ्गस्य गुण उच्यते। धातोर्विहितश्च प्रत्ययः शेष आर्धधातुकसंज्ञो भवति; न चायं धातोर्विधीयते, किं तर्हि? सुबन्तात्। इदं तर्हि प्रयोजनम्-- उपयट्काम्यतीति, वच्चादिना (६।१।१५) संप्रसारणं यथा स्यात्? नैतदपि; यस्मात् तत्र यजादिभिः किद्विशिष्यते-- यजादीनां यः किदिति। कश्च यजादीनां कित्? यो यजादिभ्यो विहितः, न चायं तथा विहितः। अभ्युपगम्यापि प्रयोजनं परीहारान्तरमाह-- "चकारादित्वात्" इति। एवं मन्यते-- क्रियते विन्यास एवम्, द्विचकारो निर्देशः, सुप आत्मनः क्यच्च काम्यच्चेति; स इत्संज्ञकश्चकारः ककारस्यत्संज्ञापरित्राणार्थो भविष्यतीति। अथ द्वितीयश्चकारः किमर्थः, यावता "धातोः" (६।१।१६२) इत्येवमन्तोदात्तत्वं सिद्धम्? इह पुत्रकाम्यिष्यीतति सतिशिष्टस्वरमपि बाधित्वा चित्करणसामथ्र्यात् काम्यच एव स्वरो यथा स्यात्। "उपयट्काम्यति" इति। "विजुपे छन्दसि" ३।२।७३ इति विच्, उपयजमिच्छतीति काम्यच्, व्रश्चादिना ८।२।३६ षत्वम्, तस्य जश्त्वं डकारः, तस्यापि "वावसाने" ८।४।५५ इति चर्त्वं टकारः॥

बाल-मनोरमा

काम्यच्च ४८८, ३।१।९

"सुप आत्मनः क्य"जित्युत्तरमिदं सूत्रम्। तदाह-- उक्तविषये इति। पुत्रकाम्यतीति। कस्येत्संज्ञा तु न, फलाऽभावात्।

अनर्थकत्वादिति। काम्यच एकदेशस्य यकारस्य अर्थाऽभावादित्यर्थः। ननु बेभिदितेत्यत्राऽपि यकारस्य अनर्थकत्वाल्लोपो न स्यादित्यत आह--यस्येतीति। "यस्य हलः" इत्यत्र "यस्ये"त्यनेन यकाराऽकारसङ्घातग्रहणमित्यनुवपदमेवोक्तमित्यर्थः। तथा च बेभिद्य इता इति स्थिते यङो यस्य सङ्घातस्याऽर्थवत्त्वाद्यकारलोपो निर्बाधः। प्रकृते तु काम्यजेकदेशस्य यस्याऽनर्थकत्वाल्लोपो नेति भावः। यशस्काम्यतीति। "सोऽपदादौ" इति सत्वम्। ननु किमात्मन इच्छति किंकाम्यति, स्वःकाम्यतीति कथम्? "मान्ताव्ययानां ने"त्यनुवृत्तेरित्यत आह-- मान्ताव्ययेभ्योऽप्ययमिति।

तत्त्व-बोधिनी

काम्यच्च ४१९, ३।१।९

काम्यच्च। उच्चारणसामर्थ्यान्न कस्येत्संज्ञा। "मान्ताव्ययेभ्यः प्रतिषेधः" इत्यस्यानुवृत्त्यभां सूचयति-- अयं स्यादेवेति। आचरतीति। व्यवहरतीत्यर्थः।

*अधिकरणाच्चेति वक्तव्यम्। अधिकरणाच्चेति। सप्तम्यन्तरूपात्सुबन्तादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

उपमानादाचारे ३।१।१०

क्यचनुवर्तते, न काम्यच्। उपमनात् कर्मणः सुबन्तादाचारे ऽर्थे वा क्यच् प्रत्ययो भवति। आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैव उपमानस्य कर्मता। पुत्रमिव आचरति पुत्रीयति छात्रम्। प्रावारीयति कम्बलम्। अधिकरणाच् चेति वक्तव्यम्। प्रासादीयति कुट्याम्। पर्यङ्कीयति मञ्चके।

लघु-सिद्धान्त-कौमुदी

उपमानादाचारे ७२९, ३।१।१०

उपमानात्कर्मणः सुबन्तादाचारेर्ऽथे क्यच्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्॥ (सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः)। अतो गुणे। कृष्ण इवाचरति कृष्णति। स्व इवाचरति स्वति। सस्वौ॥

न्यासः

उपमानादाचारे। , ३।१।१०

"क्यजनुवत्र्तते न काम्यच्" इति। अत्र च कारणं पूर्वमुक्तम्। आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयवोपमानस्य कर्मता; पूर्ववत् प्रत्यासत्तेः। "अधिकरणाच्च" इत्यादि। अधिकरणादाचारे क्यज्भवतीत्येतदर्थरूपं व्याख्येमित्यर्थः। व्याख्यानन्तु पूर्ववच्चकारकरणमनुवर्त्त्य तस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कत्र्तव्यम्॥

बाल-मनोरमा

उपमानादाचारे ४८९, ३।१।१०

उपमानादाचारे। "सुप आत्मनः क्य"जित्यतः सुप इत्यनुवर्तते। "धातोः कर्मणः समानकर्तृका"दित्यतः कर्मण इति। तदाह - उपमानात्कर्मण इत्यादिना। उपमां यत्कर्मकारकं तद्वृत्तेः सुबन्तादित्यर्थः। पुत्रमिवेति। "धातोः कर्मणः" इत्यतो वेत्यनुवृत्तिरनेन सूचिता। छात्रं पुत्रत्वेन उपचरतीत्यर्थः। विष्णूयतीति। द्विजं विष्णुत्वेन उपचरतीत्यर्थः।

अधिकरणाच्चेति। उपमानभूताधिकरणवृत्तेरपि सुबन्तादाचारे क्यजिति वक्तव्यमित्यर्थः। प्रासादीयति कुट()आमिति। प्रासादे इव कुठ()आं ह्मष्टो वर्तते इत्यर्थः। कुटीयति प्रासादे इति। कुट()आमिव प्रासादे क्लिष्टो वर्तते इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कर्तुः क्यङ् सलोपश् च ३।१।११

आचारे इत्यनुवर्तते। उपमानात् कर्तुः सुबन्तादाचारे ऽर्थे वा क्यङ्प्रत्ययो भवति, सकारस्य च लोपो भवति। अन्वाचयशिष्तः सलोपः, तदभावे ऽपि क्यङ् भवत्येव। श्येन इवाचरति काकः श्येनायते। कुमुदं पुष्करायते। सलोपविधावपि वाग्रहणं सम्बध्यते, सा च व्यवस्थितविभाषा भवति। ओजसो ऽप्सरसो नित्यं पयसस्तु विभाषया। {सकारस्येष्यते लोपः शब्दशास्त्रविचक्षनैः} ओजायमानं यो अहिं जघान। ओजायते, अप्सरायते। पयायते, पयस्यते। सलोपविधौ च कर्तुः इति स्थानषष्ठी सम्पद्यते, तत्र अलो ऽन्त्यनियमे सति हंसायते, सारसायते इति सलोपो न भवति। आचारे ऽवगल्भक्लीबहोडेभ्यः क्विब् वा वक्तव्यः। अवगल्भते, अवगल्भायते। क्लीबते, क्लीबायते। होडते, होडायते। सर्वप्रातिपदिकेभ्य इत्येके। अश्व इव आचरति अश्वायते, अश्वति। गर्दभायते, गर्दभति।

न्यासः

कर्तु- क्यङ् सलोपश्च। , ३।१।११

सलोपसन्नियोगेन चायं क्यङ विधीयते। तेन यत्रैव सलोपस्तत्रैव स्यात्-- पयायत इत्यादौ, इह तु न स्यात्-- काकः श्येनायत इत्यादौ। एकं हीदं वाक्यम्,चकारश्च समुच्चये, तेनैतदुक्तं भवति-- क्यङसलोपौ भवत इति। तथा च युगपदनयोर्विधानात् सलोपाभावे क्यङा न भवितव्यम्। युगपदनयोर्विधाने हि नान्यतराभावे कार्यमुपयुज्यते, यथा-- "स्थाध्वोरिच्च" १।२।१७, इत्यत आह-- "अन्वाचशिष्टः" इत्यादि। एतदनेन हि। नायं समुच्चये चकारः, किं तर्हि? अन्वाचये। तत्र द्वे वाक्ये भवतः-- कर्तुः भवति सर्वत्र, यत्र त्वस्ति सकारस्तत्र तस्यापि लोपः। तत्राद्येन वाक्येन सलोपमनपेक्ष्य प्राधान्येन विधीयमानः क्यङ सलोपविधावपि प्रवत्र्तते। "श्येनायते" इति। "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। "सलोपविधावपि वाग्रहणं सम्बध्यते" इति। अन्यथा पयस्यत इति न सिध्येत्। "सा च व्यवस्थितविभाषा" इति। अन्यथौजसोऽप्सरसोरपि विभाषा सलोपः स्यात्। "ओजसोप्सरसोर्नित्यं पयसस्तु विभाषया" (वा।१८५-- (जै।सू।२।१।९१) इति यदुक्तम्, सा च व्यवस्थितविभाषा भवतीति, तदनेन विस्पष्टीकरोति। अथ हंसायते सारसायत इत्यत्र सलोपः कस्मान्न भवतीत्याह-- "सलोपविधौ च" इत्यादि। यदि सलोपविधावपि कर्तुरित्येषा पञ्चमी स्यात तदा हि "अलोऽन्त्यस्य" १।१।५१ इत्यस्यानुपस्थानात् यत्रतत्रस्थस् सलोपो भवन्निहापि स्यात्। न च सलोपविधौ कर्तुरित्येषा पञ्चमी, किं तर्हि? षष्ठी। यस्मादर्थाद्विभक्तिपरिणामो भवतीति स्थानषष्ठी सम्पद्यते। स्थानषष्ठ()आं च "अलोऽन्त्यस्य" १।१।५१ इत्युपस्थानेऽन्त्यस्यैव लोपेन भवितव्यम्। तेन हंसायत इत्यादौ न भवति लोपः। "आचारे" इत्यादि। क्यङविषयोपलक्षणार्थम्; तेन क्यङपवादः क्विब्दिधीयते। अत्र चावगल्भादीनामनुदात्तमकारमनुबन्धमासज्य निर्देशादवगल्भत इत्यात्मनेपदं भवति, पुनरवल्भादिभ्यो विकल्पेन क्विब् विधीयते, यावता "{गल्भ धार्ष्ट()ए-- धा।पा।} अवगल्भ आ धृष्टे" (धा।पा।३९२), "क्लीबृ {अधार्ष्ट()ए-- धा।पा।) मदे" (धा।पा।३८१), "हुडृ होडृ गतौ" (धा।पा।३५२, ३५४) इत्यात्मनेपदिनः, तत्रैतेभ्यो यदा लकारस्तदावगल्भत इत्यादि भविष्यति, यदा तु कृतमुत्पाद्याचं प्रातिपदिकानि कृत्वा क्यङुत्पाद्यते तदावगल्भायत इति भविष्यति? इदं प्रयोजनं विकल्पेन क्विब्विधानस्य-- अवगल्भाञ्चक्र इति "कास्प्रत्ययादाममन्त्रे" ३।१।३५ इत्यां यथा स्यात्। अन्यथा ह्मप्रत्ययान्तात् प्रत्ययान्ताद्धातोरामुच्यमानो न स्यात्। "सर्वप्रातिपदिकेभ्यः" इति। तरप्यवगल्भाद्यनुकर्षणं कत्र्तव्यम्-- अनुबन्धासञ्जनार्थम्। इह चाचारे क्विब् वेत्यपेक्षते।

तेन सर्वप्रातिपदिकेभ्य आचार एव क्विब् भवतीति वाक्यं निष्पद्यते। अथ किमर्थं ककारपकारौ क्विपोऽनुबन्धावासज्येते, यावताककारस्य गुणप्रतिषेधः प्रयोजनम्, न चेह गुणप्राप्तिरस्ति? क्विपो धातोरित्यविधानात् सार्वधातुकत्वाभावात्। सार्वधातुकार्धधातुकयोर्हि गुण उच्यते। पकारस्य चानुदात्तत्वं प्रयोजनं, तच्च क्विपो न सम्भवति; अनच्कत्वात्, सर्वलोपित्वाच्च "वेरपृक्तस्य" ६।१।६५ इति। तर्हि द्वावेतौ सामान्यग्रहणाविघातार्थौ, न; अन्यतरेणैव सामान्यग्रहणाविघातस्य सिद्धत्वात। अन्यथा विज्()विटोरपि तदर्थोऽनुबन्धः कत्र्तव्यः स्यादिति चिन्त्यमेतत्॥

बाल-मनोरमा

कर्तुः क्यङ् स लोपश्च ४९०, ३।१।११

कर्तुः क्यङ्। "कर्तु"रित्यावर्तते। "कर्तुः क्य"ङित्येकं वाक्यम्। अत्र कर्तुरिति पञ्चम्यन्तम्। उपमानादाचारे इत्यनुवर्तते। "धातोः कर्मणः" इत्यतो वेति च। तदाह-- उपमानादिति। उपमानं यत्कर्तृकारकं तद्वृत्तेः सुबन्तादित्यर्थः। "कर्तुः सलोपश्चे"ति द्वितीयं वाक्यम्। चकारः "तु"पर्यायो भिन्नक्रमः। "स" इति लुप्तषष्ठीकं पृथक्पदं। "कर्तु"रिति षष्ठ()न्तस्य विशेषणम्। तदन्तविधिः। तदाह-- सान्तस्य त्विति। पक्षे इति। क्यङभावपक्षे इत्यर्थः। क्यङभावपक्षे सकारलोप इति भ्रमं वारयति-- सान्तस्य लोपस्त्विति। एतच्च महाभाष्ये स्पष्टम्। क्यङि सलोपविकल्पः सर्वत्र स्यादित्यत आह-- स च व्यवस्थित इति। सान्तस्य सलोप इत्यर्थः। व्यवस्थामेव दर्शयति-- ओजसोऽप्सरस इति। इदं वार्तिकम्। ओजश्शब्द इति। क्यङन्तोऽयम्। "सनाद्यन्ता" इति धातुत्वाद्वृत्तिः। तत्र ओजश्शब्द ओजस्विनि वर्तत इत्यर्थः। ओजायते इति। अप्सरश्शब्दात्क्यङि सलोपदीर्घौ। क्यङो ङित्त्वादात्मनेपदम्। "इतरेषां विभाषये"त्यस्योदाहरति --यशायते यशस्यते इति। यशस्वीवाचरतीत्यर्थः। विद्वायते विद्वस्यते इति। विद्वानिवाचरतीत्यर्थः। विद्वच्छब्दात्क्यङि सलोपविकल्पः। त्वद्यते मद्यते इति। त्वमिव अहमिव आचरतीत्यर्थः। युष्मदस्मच्छब्दात्क्यङि "प्रत्ययोत्तरपदयोश्चे"ति मपर्यन्तस्य त्वमौ। युष्मद्यते अस्मद्यते इति। यूयमिव वयमिव आचरतीत्यर्थः। "त्वमावेकवचने" इत्यस्मात् "प्रत्ययोत्तरपदयोश्चे"ति सूत्रे "एकवचने" इत्नुवृत्तेरेकत्वविशिष्टार्थवृत्तित्वे सत्येव युष्मदस्मादोस्त्वमाविति भावः। कुमार्यादिशब्दात्क्यङि पुंवत्त्वं स्मारयति-- क्यङ्मानिनोश्चेति। कुमारायते इति। पुंवत्त्वेन ङीषो निवृत्तौ दीर्घः। हरितायते इति। हरिणीशब्दात् क्यङि पुंवत्त्वेन "वर्णादनुदात्ता"दिति नत्वस्य ङीषश्च निवृत्तौ दीर्घः। गुरूयते इति। गुर्वीशब्दात्क्यङि ङीषो निवृत्तौ दीर्घः। सपत्नायते इति। शत्रुपर्यायात् सपत्नशब्दाच्छाङ्गरवादित्वेन ङीनन्तात्पुंवत्त्वेन ङीनो निवृत्तौ दीर्घ इति भावः। सपतीयते इति। समानः पतिः स्वामी यस्या इति बहुव्रीहौ सपतिशब्दस्य नत्वे ङीपि च निष्पन्नात्सपत्नीशब्दात्क्यङि पुंवत्त्वेन ङीब्नत्वयोर्निवृत्तौ दीर्घ इति भावः। सपत्नीयते इति। युवायते इति। युवतिशब्दात्क्यङि पुंवत्त्वे तिप्रत्ययस्य निवृत्तौ नलोपे दीर्घ इति भावः। वयोवाचिनां जातिकार्यं वैकल्पिकमिति "जातेरस्त्रीविषया"दित्यत्र भाष्ये स्पष्टम्। एतेन "जातेश्चे"ति निषेधादिह पुंवत्त्वं दुर्लभमित्यपास्तमिति शब्देन्दुशेखरे स्थितम्। पट्वीमृदूयते इति। "आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वे"ति वार्तिकम्। उपमानादित्यनुवर्तते। "धातोः कर्मणः" इत्यतो वाग्रहणस्याऽस्मिन्प्रकरणे अनुवृत्त्यैव सिद्धे वागरहणं व्यर्थमित्यत आह-- वाग्रहणात्क्यङपीति। अन्यथा विशेषविहितत्वात्क्विपा क्यङो बाधः स्यादिति भावः। तथाचाऽत्र वाशब्दो विकल्पार्थक इति फलितम्। अत्र सुप इति नानुवर्तते। प्रातिपदिकात् क्यङोऽप्राप्तौ वाग्रहणात्समुच्चीयते इति केचित्। अवगल्भादयत इति। "गल्भ अवगल्भ इति इवाचरति, क्लीब इवाचरति, होड इवाचरतीत्यर्थे अवगल्भादिशब्देभ्यः क्विप्क्यङाविति स्थितम्। अवगल्भते इत्यात्मनेपदलाभायाह-- क्विप्संनियोगेनेति। अन्त्यस्य अकारस्य अनुदात्तत्वमनुनासिकत्वं चाऽत्र प्रतिज्ञायते। ततश्च तस्य इत्संज्ञायां लोपे अनुदात्तेत्त्वादात्मनेपदं लभ्यते। तदाह--तेन तङिति अवगल्भते इति। क्विपि भकारादकारस्य लोपे हल्नताल्लडादौ तङि शविति भावः। ननु अवगल्भांचक्रे, क्लीबाञ्चक्रे, होडांचक्रे इत्यतर् कथमाम्? अन्त्यस्य च इत्संज्ञालोपाभ्यामपहारेण धातूनामेकाच्त्वेन "कास्यनेका"जित्यस्याऽप्रवृत्तेः। न च "अवगल्भे"त्यस्य क्विबन्तस्य धातोरनेकाच्कत्वमस्तीति

वाच्यम्, "उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्()क्रियते" इत्यनुपदमेव वक्ष्यमाणत्वादित्यत आह--भूतपूर्वादपीति। क्विबुत्पत्तेः प्राक्तनमनेकाच्त्वं भूतपूर्वगत्या आश्रित्येत्यर्थः। भूतपूर्वगत्याश्रयणे प्रमाणमाह-- एतद्वार्तिकेति। "सर्वप्रातिपदिकेभ्यः क्विब्वे"ति वक्ष्यमाणवार्तिकादेव अवगल्भते, अवजगल्भे इत्यादिसिद्धौ पुनरेभ्यः क्विब्विधां तत्संनियोगेन अन्त्यवर्णस्य अनुदात्तत्वानुनासिकत्वप्रतिज्ञानार्थं सद्भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञापयतीत्यर्थः।

नन्वनुदात्तत्वानुनासिकत्वप्रतिज्ञानस्यात्मनपदसिद्धावुपक्षीणत्वात्कथमुक्तज्ञापकतेत्याशङ्क्य निराकरोति-- नचेत्यादि। कुत इत्यत आह-- केवलानामिति। अच्प्रत्ययरहितानां धातुपाठसिद्धानामनुदात्तेतामेव गल्भादिधातूनामवगल्भ इवाचरतीत्याद्यर्थेषु वृत्तिसंभवात्। तच्च कुत इत्यत आह-- धातूनामनेकार्थत्वादिति। एवं च "आचारेऽवगल्भे"ति क्विब्विधानमनुबन्धासञ्जनार्थं सद्भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञापयतीति सिद्धम्। न च "सर्वप्रतापिदकेभ्यः" इति क्विपि अवगल्भतीत्यादिवारणाय अनुबन्धासञ्जनमुपक्षीणमिति कथं तस्य उक्तज्ञापकतेति वाच्यं, "सर्वप्रातिपदिकेभ्यः" इति वार्तिकेन क्विपि तथा प्रयोगे इष्टापत्तेः, भूतपूर्वाश्रयणपरभाष्यप्रामाण्येन "सर्वप्रातिपदिकेभ्यः" इति वार्तिकस्य अवगल्भादिभ्योऽप्रवृत्तिविज्ञानाद्वेत्यास्तां तावत्। आचारेऽवगल्भे"त्यत्र अवेत्यस्य प्रयोजनमाह-- अवेत्युपसर्गेति। केवलादिति। उपसर्गविहीनाद्गल्भशब्दादित्यर्थः। उपसर्गान्तरेति। प्रगल्भाऽनुगल्बादिशब्दादित्यर्थः। क्यङेवेति। न तु क्विबित्यर्थः। माधवादय इत्यस्वरसोद्भावनम्। तद्बीजमाह-- तङ् नेति तूचितमिति। केवलादुपसर्गान्तरविशिष्टाच्च गल्भशब्दात्, प्रगल्भादिशब्दाच्च अनेन क्विबभावेऽपि "सर्वप्रातिपदिकेभ्यः" इति वार्तिकेन क्विब्निर्बाधः। परन्तु अवपूर्वत्व एवानुबन्धासञ्जनादात्मनेपदमेव तत्र नेति वक्तुमुचितमित्यर्थः। सर्वप्रातिपदिकेभ्यः इति। "आचारे" इति शेषः। नन्वनेनैव वार्तिकेन सिद्धे "आचारेऽवगल्भे"ति वार्तिकं व्यर्थमित्यत आह-- पूर्ववार्तिकं त्विति। अन्त्यवर्णस्य इत्संज्ञासिद्ध्यर्थमित्यर्थः। तर्हि तत्र क्विब्ग्रहणं व्यर्थमित्यत आह-- तत्र क्विबनूद्यते इति। तत्संनियोगेनानुबन्धासङ्गार्थमित्यर्थः। पदकार्यं नेति। "राजानती"त्यादौ नलोपादिकं नेत्यर्थः। अन्यथा अन्तर्वर्तिविभक्त्या पदत्वान्नलोपादिकं स्यादिति भावः। पररूपमिति। कृष्णशब्दात् क्विबन्ताल्लडादौ शप "अतो गुणे" इति पररूपमित्यर्थः। कृष्णांचकार। कृष्णिता। कृष्णिष्यति। कृष्णतु। अकृष्णत्। कृष्णेत्। कृष्णायात्। अतो लोपात्परत्वात् "अकृत्सार्वे"ति दीर्घः। पूर्वविप्रतिषेधस्य विहितत्वादतो लोप इत्यन्ये। अ इवेति। अः = विष्णुः। स इवेत्यर्थः। अतीति। शपा पररूपम्। असि अथः अथ। आमि आवः आमः। क्विप्प्रत्ययान्तत्वाल्लिटि "कास्प्रत्ययात्" इत्याम्प्रत्ययमाशङ्क्य आह-- प्रत्ययग्रहणमपनीयेति। औ अतुः उरिति सिद्धरूपप्रदर्शनम्। तत्र प्रक्रियां दर्शयति-- द्वित्वमिति। णलि "द्विर्वचनेऽची"ति लोपस्य निषेध इति भावः। अतोगुणे इति। द्वित्वे कृते अ अ अ इति स्थिते अन्तरङ्गत्वादतो लोपं बाधित्वा पररूपमिति भावः। अत आदेरिति। न च परत्वान्नित्यत्वादपवादत्वाच्च "अतो गुणे" इत्यस्मात्प्राक् "अत आदे"रित्यस्य प्रवृत्तिरिति वाच्यं, तस्य बहिरङ्गत्वात् "अत आदे"रित्स्यापवादत्वेऽपि आनर्देत्यत्र हलादिशेषात्प्रागेव परत्वात् "अत आदे"रित्यस्य चरितार्थत्वेन बाधकत्वाऽसंभवात् , "अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते" इत्युक्तेरित्यन्यत्र विस्तरः। यद्यप्यत्र प्रक्रियाव्युत्क्रमे फलविशेषो नास्तितथापि न्याय्यत्वादेवमुक्तम्। णल औ इति। पररूपे दीर्घे च आ अ इति स्थिते "आत औ णलः इत्यौत्वमिति भावः। वृद्धिरिति। आ औ इति स्थिते "वृद्धिरेची"ति वृद्धिरित्यर्थः। तथा च "औ" इति रूपं परिनिष्ठितम्। अतुसादिष्विति। अ अतुस्, अ उस्, इति स्थिते द्वित्वे पररूपे "अत आदेः" इति दीर्घे आतो लोप इत्यर्थः। अतुः उरिति प्रत्ययमात्रं शिष्यते। थलि इटि द्वित्वे दीर्घे आल्लोपे, - इथ अथुः अ। औ इव इम। वस्तुतस्तु "कास्यनकाज्ग्रहण"मिति वार्तिकव्याख्यावसरे प्रत्ययग्रहणमपनीयेति भाष्ये नोक्तम्। कासेश्च, प्रत्ययान्ताच्च आमिति लभ्यते। अत एव "आचारेऽवगल्भक्लीबहोडेभ्यः" इति वार्तिके "अवगल्भांचक्रे" इत्यादौ अन्त्यवर्णस्यानुबन्धत्वेन एकाच्त्वेऽपि "कास्प्रत्यया"दित्यामित्युक्तं भाष्ये इति शब्देन्दुशेखरे प्रपञ्चितम्। इता। इष्यति। अतु- अतात् अताम् अन्तु अ-अतात्

अतम् अत। आनि आव आम। आत् आताम् आन्। आः आतम् आत। आम् आव आम। विधिलिङि एत् एताम् एयुः। एः एतम् एत। एयम् एव एम। यात् यास्ताम् यासुः। लुङि "इट ईटि" इति सिज्लोपे "आटश्चे"ति वृदिं()ध बाधित्वा परत्वादतो लोपे इटा सह आटो वृद्धौ ऐत् ऐष्टाम् ऐषुरित्यादीति केचित्। आद्र्धधातुकोपदेशकाले एव परत्वादतो लोपे अङ्गस्याऽभावादाण्णेत्यन्ये। ईत् इष्टामित्यादि। ऐष्यत्। ननु मालाशब्दस्य टाप्प्रत्ययान्तत्वेन प्रासिपदिकत्वाऽभावात्ततः कथं क्विबित्यत आह-- लिङ्गविशिष्टेति। वस्तुतस्तु आबन्तेभ्य आचारे क्विब्नास्त्येवेति वि()आपाशब्दनिरूपणे प्रपञ्चितम्। ङीप्साहचर्यादिति। ङ्यन्तादाचारक्विबन्ताद्गौरीशब्दाल्लुङि अगौरयदित्यादौ तिस्योडर्()न्तात्परत्वाऽसंभवात्तत्साहचर्यादाबन्तादपि न तयोर्लोप इत्यर्थः। कवयतीति। शपि गुणाऽयादेशौ। कवीयादिति। "अकृत्सार्वे"ति दीर्घः। लुङि अकवि ईत् स्थिते सिचि वृद्धिमाशङ्क्य आह-- सिचि वृद्धिरित्यत्रेति। सिचा धातोराक्षेपतो लाभेऽपि "ॠत इद्धातो"रित्यतस्तदनुवृत्तेर्धातुरेव यो धातुरिति लभ्यते इति भावः। कैयटादय इति। "इको गुणवृद्धी"ति सूत्रे गोशब्दादाचारक्विपि अगवीदित्युपक्रम्य तथोक्तत्वादिति भावः। माधवस्त्विति। "सिचि वृद्धि"रित्यत्र "ॠत इद्धातो"रित्यतो धातुग्रहणानुवृत्तौ मानाऽभावेन धातुरेव यो धातुरित्युक्तार्थाऽलाभादिति तदाशयः। वस्तुतस्तु "इको गुणवृद्धी" "वदव्रजहलन्तस्याऽचः" इत्यादिसूत्रस्थभाष्ये सिचि परत एजन्तं नास्तीत्युक्तत्वादेजन्तेभ्य आचारक्विब्नास्त्येवेति शब्देन्दुशेखरे प्रपञ्चितम्। विरिवेति। विः = पक्षी, स इवेत्यर्थः। अभिव्यक्तत्वेनेति। "अभिव्यक्तपदार्था ये"इति न्यायेनेति भावः। बुभावेति। इह न वुक्। अभ्यासस्य अत्त्वं च न। अभावीदिति। इह "गातिस्थे"ति सिचो न लुक्। चङ् नेति। "णिश्री"ति सूत्रे द्रुग्रहणेन धातुपठास्थस्यैव ग्रहणादिति भावः।

तत्त्व-बोधिनी

कर्तुः क्यङ् स लोपश्च ४२०, ३।१।११

कर्तुः क्यङ् स लोपश्च। "धातोः कर्मणः" इतिसूत्राद्वेत्यनुवर्तत इत्याह--क्यङ्वा स्यादिति। "से"ति लुप्तषष्ठीकं कर्तृविशेषणमित्याह-- सान्तस्येति। चकारस्तु अन्वाचये बोध्यः।

* ओजसोऽप्ससो नित्यमितरेषां विभाषया। तद्वतीति। तथा च "ओजायते " इत्यत्र ओजस्वीवाचरतीति विग्रहो बोध्यः। विद्वस्यत इति। नान्तस्यैव पदत्वात्सस्य रुत्वं न। पुंवद्भावं स्मारयति-- क्यङ्मानिनोश्चेति। सपत्नीवेति--त्रितयसाधारणं विग्रहवाक्यम्। सपत्नायत इति। विवाहजन्यसंस्कारविसेषनिमित्तकेन पतिशब्देन समासे सति नित्यस्त्रीत्वान्न पुंवत्। युवायत इति। न च ङ्याप्सूत्रे भाष्ये युवतितरेत्युदाहरणाद्यौवननं जातिरिति "जातेश्चे"ति निषेधे "युवतीयते" इत्युदाहरणमिहोचितमिति वाच्यं,वयसोऽनित्यत्वेनाऽजातित्वात्। अन्यथा "युवजानि" रिति "अचः परस्मि"न्निति सूत्रस्थभाष्यग्रन्थो विरुध्येत।युवतितरेति भाष्यस्य तु का गतिरिरिति चेत्। अत्राहुः-- "तसिलादिषु" इति पुंवद्भावे प्राप्ते भाष्यनिर्देशादेव न पुंवदिति। "युवती"शब्दस्य तु तरपि "घरूपे"ति ह्यस्वे "युवतितरे" ति भवत्येव। पट्वीमृदूयत इति। पूर्वशब्दस्य क्यङ्परत्वाऽभावान्न पुंवत्। पाचिकायत इति। पुंवद्भावे सति कात्पूर्वस्येत्वं न श्रूयेतेति भावः। एवं -- पञ्चमीयते। स्नौग्ध्नीयते। सुकेशीयते। ब्राआह्मणीयत इत्यादि। आचारेऽवगल्भ। गल्भ धार्ष्ट()ए। क्लीबृ--- अधार्ष्ट()ए। होड्ट अनादर#ए। क्यङपीति। अपिशब्दाद्वाक्यम्। तत्तु "सर्वप्रातिपदिकेभ्यः" इत्यत्र वाग्रहणाल्लभ्यते इत्याहुः। क्विप्सन्नियोगेनेत्यादि। तेन क्यङ्सन्नियोगेनाऽनुदात्तत्वानुनासिकत्वायोरभावदित्संज्ञालोपौ न स्त "अकृत्सार्वे"ति दीर्घे सति अवगल्भायते क्लीबायत इत्यादि भवति। तेन तङिति। आत्मनेपदमित्यर्थः। तथा च अवगल्भमानः क्लीबमान इत्यादि सिध्यति। माधवादय इति। केचित्तेषामाशयमाहुः-- "आचारेऽगल्भे" इत्यत्र सुप इत्यनुवर्तते। तथा च केवलादुपसर्गान्तरविशिष्टादवगल्भप्रगल्भादिसुबन्तात्क्यङेव, न तु क्विप्। तङ् नेति तूचितमिति। उत्तर वार्तिकेन प्रातिपदिकमात्रात्क्विब्विधीयत इति एतेभ्योऽपि त्रिभ्यः क्विपि सिद्धे

तत्सन्नियोगेनानुदात्तत्वानुनासिकत्वमात्रमचप्रत्ययस्य "आचारेऽवगल्भे"त्यवगल्भादिषु प्रतिज्ञायते। लाघवात्। अन्यत्र तु गल्भप्रगल्भादिप्रातिपदिकेषु क्विपि परस्मैपदमेव भवति न तु तङिति भावः। नन्वेवम् "आचारेऽवगल्भे" त्यत्र वाग्रहणात्क्यङमनुवर्त्य अवगल्भादिप्रातिपदिकेभ्यः क्यङ्()विधानेऽप्यन्यत्र सुबन्तादेव क्यङिति क्यङो विषय एव नास्ति, तथा च केवलादुपसर्गान्तरविशिष्टाच्च क्यङप्ययुक्त इति चेत्। अत्र वदन्ति-- प्रातिपदिकेभ्यः क्विप्, सुबन्तेभ्यः क्यङिति विषयभेदनापि गल्भति गल्भायते प्रगल्भति प्रगल्भायते इत्यादि सिध्यत्येवेति। स्यादेतत्-- "गल्भ धार्ष्ट्()ए" इत्यादीनामनुदात्तत्वादवगल्भते इत्यादिप्रयोगसिद्धावपि अवगल्भादिषूत्तरवार्तिकेन क्विपि सत्यवगल्भतीत्याद्यनिष्टप्रयोगः स्यात्तद्वारणार्थम् "आचारेऽवगल्भे"ति वार्तिकारम्भस्यावश्यकतया सामर्थ्यस्योपक्षीणत्वात् "भूतपूर्वादप्यनेकाच आ" मित्येतदप्युक्तमिति चेत्। सत्यम्। अत्र ह्रयमाशयः-- "सर्वप्रातिपदिकेभ्यः" इति वार्तिके वाग्रहणेन व्यवस्थिविभाषाश्रीयते।तथा च अवगल्भक्लीबहोडेभ्यः क्विपोऽभावादनिष्टप्रयोगो न भविष्यतीति स्वीकृते सामर्थ्यं नोपक्षीणमिति दिक्। पदकार्यं नेति। सवर्णदीर्घो यद्यपि पदमात्रकार्यं न भवति तथापि पदस्य जायमानं कार्यं नेत्यत्र तात्पर्यं बोध्यम्। तनोतीति तत्। स इव आचरति तताति। अत्र जश्त्वं न। त्वगिव आचरति। त्वचरि। अत्र कुत्वं नेत्याद्यपि बोध्यम्। द्वित्वमिति। अ णल् इति स्थिते "द्विर्वचनेऽची"ति निषेधादतो लोपो न भवतीति भावः। "अतो गुणे" इति द्वित्वे कृतेऽप्यतो लोपो न भवति, अन्तरङ्गेणाऽनेन बाधितत्वादिति भावः। यद्यप्यत्र फले विशेषो नास्ति तथापि शास्त्रप्राप्तिकमनुरुध्योक्तम्। यद्यप्यत्र "वार्णादाङ्गं बलीयः" इति परिभाषयाऽतो लोप एवोचित इति चेन्मैवम्। तस्याः समानाश्रये कारश्चकारेत्यादौ प्रवृत्तिस्वीकारान्न तु व्याश्रयेऽपि। नच परत्वान्नित्यत्वाच्च "अत आदे"रित्यनेनैव प्रथमं भाव्यमिति वाच्यं, तस्य बहिरङ्गत्वेनाऽसिद्धत्वात्। न चापवादत्वात् "अत आदे"रित्यनेन भाव्यमिति वाच्यम्, अपवादो यद्यन्यत्र चरितार्तस्तर्हि अन्तरङ्गेण बाध्यत इत्युक्तत्वात्, आनर्देत्यादौ तस्य चरितार्थत्वात्। तत्र हलादिः शेषात्प्रागेव परत्वात् "अत आदे"रित्यस्य प्रवृत्तेः। न च नित्यत्वादद्धलादिः शेष एव प्रथमं स्यादिति वाच्यं , नित्यत्वस्य "अत आदे" रित्यस्य आनर्देत्यादौ चरितार्थत्वादन्तरङ्गमेव भवतीति मनोरमोक्कतं चिन्त्यम्। स्वविषयमध्ये एकत्रोदाहणे चरितार्थस्योदाहरणान्तरेऽपि प्रवृत्त्यभ्युपगमात्। न हि "गोद" इत्यत्र "आतोऽनुपसर्गे कः" इति चरितार्थमिति "गोप" इत्यादौ न प्रवर्तते। तस्मादणं बाधित्वा कप्रत्ययो यथा स्वविषये सर्वत्र प्रवर्तते तथेहापि प्रवर्तत इति। तदपरेन क्षमन्ते। गोदगोपादौ सर्वत्राऽणः कस्य च प्राप्तिसंभवे विनिगमनाविरहादणं बाधित्वा कप्रत्यय एव भवति। प्रकृतेत्वानर्देत्यादौ हलादिः शेषात्प्राक् "अतो गुणे" इत्यस्य प्राप्त्यभावाद्वैषम्यमस्तीति। ननु "अत आदे"रित्यस्य पररूपाऽपवादत्वमेधामासेत्यत्र यदुक्तं तत्कथं सङ्गच्छते, आनृधतुरित्यादौ "आद्गुणः" इति गुणस्याऽपि प्राप्तेः। न च यथा सवर्णदीर्घो यण्गुणयोरपवादस्तथाऽयमप्युभयोरवाद इति वाच्यम्, एवमप्यानर्देत्यत्रेव हलादिः शेषात्प्रागेवाऽऽसेत्यत्रापि "अत आदे"रित्यस्य प्रवृत्तौ किं तेन पररूपापवादत्वकथनेनेति चेत्। अत्र केचिदाहुः-- "द्वन्द्वापवाद एकशेष" इति केषांचित्प्रवादे यथाऽपवादशब्दो बाधकपरः, "सरूपाणा"मित्येकशेषानारम्भे हि स्वाद्युत्पत्तौ द्वन्द्वस्य प्रवृत्तेरेकशेषसूत्रारम्भे तु पदान्तराऽभावेन तदप्रवृत्तेस्तथाऽत्रत्याऽपवादशब्दोऽपि बाधकपरः। "अत आदे"रित्यनाररम्भे हि हलादिः शेषे पररूपप्रवृत्तावेधामासेति न स्यात्। आरब्धे तु तत्सूत्रे तथा स्यादेव, परत्वाद्धलादिःशेषात्प्रागेव दीर्घप्रवृत्त्या पररूपस्याऽप्रसक्तेरिति। यद्यप्यासेत्यादौ प्रथमतः "अत आदे" रिति दीर्घाऽकरणेऽपि हलादिःशेषे पररूपे च कृते तस्य पूर्वान्तवद्भावे सति अभ्यासग्रहणेन ग्रहणात् "अत आदे"रिति दीर्घप्रवृत्त्या समीहितरूपसिद्धिस्तथाप्य#आनर्देत्यादि न सिध्यत्येव। तत्र हि "तस्मान्नुड् द्विहलः" इति दीर्घीभूतादकारान्नुटि सिचि वृद्धिरित्यत्रेति। सिचा धातोराक्षेपात्, "ऋत इद्धातो"रित्यतो धातोरित्यनुवर्तनाच्च धातुरेव यो धातुरिति व्याख्या लभ्यत इति ज्ञेयम्। विरिवेति। विः-- पक्षी।

---

सूत्रम्

काशिका-वृत्तिः

भृशादिभ्यो भुव्यच्वेर् लोपश् च हलः ३।१।१२

भृश इत्येवम् आदिभ्यः प्रातिपदिकेभ्यो ऽच्व्यन्तेभ्यो भुवि भवत्यर्थे क्यङ् प्रत्ययो भवति, हलन्तानां च लोपः। अच्वेः इति प्रत्येकम् अभिसम्बध्यते। किम् अर्थं पुन रिदम् उच्यते, यावता भवति योगे च्विर् विधीयते, तेनोक्तार्थत्वाच् च्व्यन्तेभ्यो न क्यङ् भविष्यति? तत्सादृश्यप्रतिपत्त्यर्थं तर्हि च्विप्रतिषेधः क्रियते। अभूततद्भावविषयेभ्यो भृशादिभ्यः क्यङ् प्रत्ययः। अभृशो भृशो भवति भृशायते। शीघ्रायते। भृश। शीघ्र। मन्द। चपल। पण्डित। उत्सुक। उन्मनस्। अभिमनस्। सुमनस्। दुर्मनस्। रहस्। रेहस्। शश्वत्। बृहत्। वेहत्। नृषत्। शुधि। अधर। ओजस्। वर्चस्। भृशादिः। अच्वेः इति किम्? भृशीभवति।

न्यासः

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः। , ३।१।१२

"भुवि" इति। भवनं भूः, सम्पदादित्वाद्भावे क्विप्। इह हल्ग्रहणेन यथासम्भवं भृशादयो विशिष्यन्ते, विशेषणेन न तदन्तविधिर्भवतीत्याह-- "हलन्तानाञ्च" इत्यादि। इहापि पूर्ववदन्वाचयशिष्टो हलो लोपः, तेन तदभावेऽपि क्यङ भवत्येव। हलो लोपविधौ भृशादिभ्य इति स्थानषष्ठी सम्पद्यते, अर्थाद्विभक्तिविपरिणामात्। तत्र "अलोऽन्त्यस्य " १।१।५१ इति नियमे सति भृशायत इत्यादावहलन्त्यस्य हलो लोपो न भवति। ननु च भृशादीनां बहुत्वात् तत्सम्बन्धेनाच्विभ्य इति बहुवचनेन भवितव्यम्, तत्कथमच्वेरित्येकवचनेन निर्देश इत्याह--- "अच्वेः" इत्यादि। भृशादच्वेः, शीघ्रादच्वेरिति प्रत्येकमभिसम्बध्यते। तस्मादेकवचनं न्याय्यम्। "किमर्थं पुनः " इत्यादि। अच्वेरित्यधिकृत्य प्रश्नः। कस्मान्न कत्त्तव्यमित्याह-- "यावता" इत्यादि। "अभूततद्भाव" इत्यादिना भवतिप्रयोगे च्विर्विधीयते। तत्र तेनैवोक्तार्थत्वाच्च्व्यन्तेभ्यः क्यङ न भविष्यति, "उक्तार्थानामप्रयोगे" (व्या।प।६०) इति कृत्वा। ननु चानुप्रयोगं बाधित्वा क्यङेव स्यात्? नैतदस्ति; अनवकाशा हि विधयो बाधका भवन्ति, सावकाशश्च क्यङ। क्व? अच्च्व्यन्ता ये भुशादयस्तत्र; अच्व्यन्तात् च्वेर्विकल्पेन विधानात्। तत्राच्वेरित्यनुवत्र्तमाने ज्व्यन्तेषूभयप्रसङ्गे परत्वादनुप्रयोगेणैव भवितव्यम्, अत एवाह-- "तत्सदृश" इत्यादि। "नञिवयुक्तमनयसदृशाधिकरणे तथा ह्यर्थगतिः" (व्या।प।६५) इति च्व्यन्तसदृशाभृशादयः कथं नाम प्रतीयेरन्नित्येवर्थोऽच्वेरिति प्रतिषेधः। तत्सांदृश्यं च्व्यन्तस्याभूततद्भावविषयत्वात् अर्थकृतमेवाश्रीयते, न शब्दादिकृतमित्याह-- "अभूततद्भावविषयेभ्यः" इत्यादि। इह भृशादिषु कैश्चिन्मनस्प्रभृतयः सोपसर्गाः पठ()न्ते, तेभ्यः सोपसर्गेभ्य एव प्रत्ययः स्यात्। ततशचोदमनायतेति सोपसर्गस्याङ्गसंज्ञात्वादुपसर्गात् प्रागडागमः स्यात्। सुमनाय्य गत इत्यत्र सोपसर्गस्य क्वान्तेऽनुप्रवेशात् तद्व्यतिरिक्त उपसर्गो नास्तीति समासो न स्यात्, ततश्च लब्न स्यात्? नैतदस्ति; यथैव हि प्रकृर्त्तुमैच्छदिति सोपसर्गस्यापि कर्मत्वे धातुग्रहणेनोपसर्गान्निष्कृष्य धातुमात्रात् प्रत्ययो भवति, तथेहापि भविष्यति। ननु तत्र धातुग्रहणमस्तीति चेत्? इहापि सुब्ग्रहणमनुवत्र्तत इति हेतुः। सुमनस् इत्यादीनि सुबन्तसमुदायानि। तेन सुबन्तसमुदायात् क्यङ। लङ कस्मान्न भवति? उच्यते-- लङविधावपि धातुग्रहणमनुवत्र्तते। अथ "लोपः" (३।१।११) इत्यनुवत्र्तमाने पुनर्लोपग्रहणं किमर्थम्? सकारनिवृत्त्यर्थम्। पूर्वकं हि लोपग्रहणं सकारेण सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्, ततश्च तस्यानन्तस्यापि लोपः प्रसज्येत; इतरथा हि तदनुवृत्तिरपार्थिका स्यात्॥

बाल-मनोरमा

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ४९२, ३।१।१२

भृशादिभ्यो। भवनं भूः, भावे क्विप्। तदाह-- भवत्यर्थे इति। भवने इत्यर्थः। क्यङ् स्यादिति। "कर्तुः क्यङ् स

लोपश्चे"त्यतस्तदनुवृत्तेरिति भावः। हलन्तानामेषामिति। भृशादिषु ये हलन्तास्तेषां लोपः, क्यङ् चेत्यर्थः। ननु "अभूततद्भावे" इतिकुतो लब्धमित्यत आह-- अच्वेरिति पर्युदासबलादिति। "अभूततद्भावग्रहण"मिति वार्तिकमेतल्लब्धार्थकथनपरमिति भावः। ये रात्रौ भृशा इति। प्रकाशाऽतिशयवन्त इत्यर्थः। भृशादिषु हलन्तमुदाहरति-- सुमनसिति। सुमनायते इति। असुमनाःसुमना भवतीत्यर्थः। यद्यपि स्त्रियामित्यधिकारे "अप्सुमनस्समासिकतावर्षाणां बहुत्वं चे"ति लिङ्गानुशासनसूत्रे सुमनश्शब्दस्य नित्यं बहुवचनं विहितं, तथापि तद्देवादिपर्यायरूढविषयम्। सु = शोभनं मनो यस्येति सुमना इति बहुव्रीहिर्यौगिक इति भावः। सुमनायते इति। क्यङि सलोपे "अकृत्सार्वे"ति दीर्घः। ननु लङि मनश्शब्दात्प्रागटि "स्वमनायते"ति वक्ष्यमाणमनुपपन्नम्, अङ्गस्य अड्विधानात्सुमनश्शब्दस्य समस्तस्यैव लङं प्रत्यङ्गत्वात्, "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहण"मिति न्यायादित्याशङ्क्याह-- चुरादौ सङ्ग्राम युद्धे इति पठ()ते इति। ततश्च क्वचित्सोपसर्गपाठबलादन्यस्मात् सोपसर्गादाचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इति विज्ञायते इत्यर्थः। ननु चुरादौ "सङ्ग्रामे"ति समस्तो धातुः, नतु सोपसर्गो ग्रामशब्दः। एवं चास्य प्रातिपदिकत्वाऽभावात्सोपसर्गात्क्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यत्र कथमिदं गमकमित्यत आह-- तत्र सङ्ग्रामेति प्रातिपदिकमिति। "ग्रसेरा"चे"त्यौणादिके मन्प्रत्ययेनिष्पन्नस्य ग्रामशब्दस्य "कृत्तद्धिते"ति प्रातिपदिकत्वम्। अव्युत्पत्तिपक्षे "अर्थवदधातु"रिति प्रातिपदिकत्वमित्यर्थः। ननु चुरादावस्य पाठो धात्वधिकारविहितचौरादकणिजर्थः। एवं च प्रातिपदिकत्वेन चुरादौ तस्य पाठो व्यर्थ इत्यत आह--तस्मादिति। तस्मात्सङ्ग्रामेति प्रातिपदिकाच्चौरादिकणिजसंभवेऽपि "तत्करोती"त्यर्थे णिच् सिद्ध इत्यर्थः। ननु "तत्करोती"त्यनेनैव सङ्ग्रामशब्दात्प्रातिपदिकाण्णिच्सिद्धे किमर्थमिह चुरादौ तस्य पाठ इत्यत आह-- तत्संनियोगेनेति। णिच्संनियोगेन अकारस्य इत्संज्ञकस्य अनुदात्तेत्त्वार्थकस्य आसञ्जनार्थ इत्यर्थः। न च मकारादकारस्य इत्संज्ञकत्वे अल्लोपस्य णिनिमित्तकत्वाऽभावादससङ्ग्रामत्येत्यत्र "णौ चङ्युपधायाः" इत्युपधाह्रस्वः स्यादिति वाच्यं, सङ्ग्रामेत्ययं हि कथादित्व#आददन्तः। तस्मादकारो भिन्न एव अनुबन्धत्वेनासज्यते इत्यर्थः। एवं च णौ अतो लोपे सति णावग्लोपित्वान्नोपधाह्रस्वः। कथादित्वलक्षणाऽदन्तत्वलाभायैवाऽस्य चुरादौ पाठ इति भावः। ननु चुरादौ सङ्ग्रामशब्दस्य "तत्करोती"ति णिचि परे अस्त्वनुबन्धाऽऽसङ्गः, तथापि आचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यतर् कथमस्य ज्ञापतेत्यत आह--युद्धे इति। सामथ्र्यादिति। "ग्राम युद्धे" इत्येतावतैव सङ्ग्रामशब्दो लभ्यते, केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाऽभावादित्यर्थः। विशिष्टपाठ इति। सङ्ग्रामशब्दपाठ इत्यर्थः। ज्ञाप्यमर्थमाह-- सामानाकारमिति। सङ्ग्रामशब्दे युद्धवाचिनि "स"मित्यस्य क्रि#आययोगाऽभावात्समानाकारमित्युक्तम्। धातुसंज्ञाप्रयोजके इति। "क्विबादा"विति शेषः। पृथक्क्रियते इति। तथा च न तस्य धातुसंज्ञाप्रवेश इत्यर्थः। ततः किमित्यत आह-- तेनेति। "स"मित्यस्य धातुसंज्ञाप्रवेशाऽभावेनेत्यर्थः। तथा च सुमनश्शब्दादाचारक्विपि विवक्षिते मनश्शब्दमात्रस्य धातुत्वात्ततो लङि मनश्शब्दस्यैवाङ्गत्वात्तः प्रागेव अट्, न तु सुमनसिति समुदायात्प्रागित्यर्थः। एतेन "सङ्ग्रामयतेरेव सोपसर्गान्नाऽन्यास्मा"दित्यादि भाष्यं "भृषादिभ्य" इति सूत्रस्थं व्याख्यातमिति बोध्यम्। उन्मनायते इति। भृशादित्वात् क्यङि सलोपः। एवं चेति। एवमुक्तरीत्या "आचारेऽवगल्भे"ति क्विब्विधावपि अवेत्यस्य पृथक्करमाद्गल्भशब्दात्प्रागेव अडित्यर्थः। ननु आ ऊढः ओढः। "कुगती"ति समासः। अस्माद्भृशादित्वात्क्यङि "ओढायते" इत्यादि रूपम्। अत्रापि आङो धातुसंज्ञाप्रवेशो न स्यात्, तत्र यद्यपि लङि ऊढशब्दाद्वा आङो वा प्रागाटि न रूपे विशेषः, उभयथापि औढायतेत्येव रूपं सिद्धमेव। तथापि ओढायेति क्यङन्तात्क्वाप्रत्ययेअतो लोपे ओढायित्वेत्येवेष्यते। अत्र क्यङि चिकीर्षिते उक्तरीत्या पृथक्करणे पृथक्कृतस्य आङः "कुगतिप्रादयः" इति क्त्वाप्रत्ययान्तेन अतो लोपे ओढायित्वेत्येवेष्यते। अत्र क्यङि चिकीर्षिते उक्तरीत्या पृथक्करणे पृथक्कृतस्य आङः "कुगतिप्रादयः" इति क्त्वापत्र्ययान्तेन समासे सति "समासेऽनञ्पूर्वे क्त्वो ल्य"बिति ल्यप् स्यादित्यत आह-- ज्ञापकं च सजातीयविषयमिति। तदेवोपपादयति-- तेनेति। चुरादौ "सङ्ग्राम युद्धेट इति सम्ग्रहणस्य उक्तार्थे पृथक्कृतिरिति

ज्ञापकस्य सजातीयविषयकत्वाश्रयणेन यत्र उपसर्गस्वरूपमविकृतं श्रूयते नत्वेकादेशेनापह्नतं तत्रैव उपसर्गस्य पृथक्कृतिरिति विज्ञायते इत्यर्थः, सङ्ग्रामे सम्ग्रहणस्य ज्ञापकस्य एवंविधत्वादिति भावः। ततः किमित्यत आह-- एवं चेति। ओढायित्वेति। ओढशब्दाद्भृशादित्वात् क्यङि ओढायेत्यस्मात्क्यङ्नतात्क्वाप्रत्यये अतो लोपे रूपम्। अत्रेति। अत्र न ल्यबित्यन्वयः। क्यङि विवक्षिते आङ एकादेशेनापह्नत्वेन पृथक्करणाऽभावे सति तस्य आङः क्त्वाप्रत्ययान्तेन समासाऽभावान्न ल्यबिति भावः। उन्मनाय्य, अवगल्भ्येतिवदिति व्यतिरेकदृष्टान्तः। उन्मनस्शब्दाद्भृशादित्वादाचारे क्यङि सकारलोपे "अकृत्सार्वे"ति दीर्घे उन्मनायेत्यस्मात्क्त्वोल्यपि, अतो लोपे, उन्मनाय्येति रूपम्। अवगल्भशब्दादाचारेऽवगल्भेति क्विबन्तात्क्वो ल्यपि रूपम्। अत्र "उ"दित्यस्य "अवे"त्यस्य च उपसर्गस्वरूपस्य अनपगृतत्वेन क्यङि क्विपि च विवक्षिते पृथक्कृततया तयोः क्त्वान्तेन समासे सति ल्यबुचितः। इह तु ओढायित्वेत्यत्र न ततेति व्यतिरेकदृष्टान्तोऽयम्। ज्ञापकस्य सजातीयत्वे प्रमाणं दर्शयति-- ज्ञापकस्येति। षाष्ठं वार्तिकं दर्शयति-- उस्योमाङ्क्ष्विति। उसि, ओम्, आङ् एषां द्वन्द्वः। षष्ठस्य प्रथमे पादे "ओमाङोश्चे"ति सूत्रे इदं वार्तिकं पठतिम्। तद्व्याचष्टे-- उस्योमाङोश्च परयोरिति। "एङि पररूप"मित्यत#ः पररूपग्रहणानुवृतिं()त मत्वा आह-- पररूपं नेति। उसि तावदुदाहरति-- औरुआईयदिति। उरुआआमात्मन ऐच्छदित्यर्थे "सुप आत्मनः" इति क्यजन्ताल्लङि उरुआईयशब्दादङ्गात्प्रागटि कृते "उस्यपदान्ता"दिति पररूपं प्राप्तमनेन निषिध्यते। अर्थवद्ग्रहणपरिभाषा त्वनित्या, अस्मादेव भाष्योदाहरणात्। अन्यथा भिन्द्युरित्यादौ पररूपं न स्यात्, क्यजन्ताल्लङि अङ्गस्य आटि कृते "ओमाङोश्चे"ति पररूपं प्राप्तमनेन निषिध्यते। आङि उदाहरति-- औढीयदिति। आ ऊढः ओढः, तस्मात् क्यजन्ताल्लङि अङ्गस्य ओढशब्दस्य आटि कृते "ओमाङोश्चे"ति पररूपं प्राप्तमनेन निषिध्यते। उदाहरणत्रयमिदं भाष्ये स्थितम्। तत्र यदि उपसर्गस्वरूपस्य एकादेशेनापहारेऽपि पृथक्करणं स्यात्तर्हि क्यचि विवक्षिते आङः पृथक्कृतौ सत्यां धातुबहिर्भावादूढशब्दात् प्रागाङः परत्र आटि सति पररूपस्याऽप्रसक्कतेराङि पररूपप्रतिषेधो व्यर्थः स्यात्। उक्तज्ञापकस्य सजातीयविषयत्वे तु अत्र आङ एकादेशेनापहारात्पृथक्करणाऽभावादोढशब्दात् प्रागाडागमे सति आङि पररूपप्राप्तेस्तन्निषेधोऽर्थवान् भवति। अतो ज्ञापकस्य सजातीयविषयत्वे "उस्योमाङ्क्षु" इत्याङ्ग्रहणम्, औढीयदिति तदुदाहरणपरभाष्यं च अत्र प्रमाणमिति भावः। ज्ञापकस्य सजातीयविषयत्वे प्रमाणान्तरमाह-- आटश्चेति चशब्देनेति। "आटश्चे"ति सचकारः पुनर्वृद्धिविधानार्थः। तथा च आटोऽचि वृद्धिरेव यता स्यान्नाऽन्यत्पररूपमितिलभ्यते इत्यपि षष्ठाध्याये "ओमाङोश्चे"ति सूत्रे, "आटश्चे"ति सूत्रे च भाष्ये स्थितमित्यर्थः। एवं च एतद्वार्तिकप्रत्याख्यानपरः सौत्रश्चकारस्तद्भाष्यं चाऽत्र ज्ञापकमित्युक्तं भवति।

तत्त्व-बोधिनी
भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ४२२, ३।१।१२

भृशादिभ्यो। "भुवी"त्येतद्व्याचष्टे-- भवत्यर्थ इति। भृश, शीघ्र, मन्द, पण्डित, दुर्मनस्ष सुमनस्, उन्मनस्, इत्यादयो भृशादयः। "क्व दिवे"त्यादि भाष्यकारीयं प्रत्युदाहरणं व्याचष्टे--- ये रात्रावित्यादिना। प्रातिपदिकमिति। न त्वयं धातुः, "ग्रसेरा च" इत्यौणादिकेन मन्प्रत्ययान्ततया निष्पादितत्वात्। एवं च वक्ष्यमाणज्ञापकं सङ्गच्छत इति भावः। अनुबन्ध इति। सङ्ग्रामेति मशब्दाकाराद्भिन्नोऽकारोऽनुबन्ध इत्यर्थः। तथा च अत्र "अतो गुणे" इति पररूपं ज्ञेयम्। यदि तु मकारादकारोऽनुबन्धः स्यात्तर्हि असङ्ग्रमतेत्यत्र "णौ चङी"त्युपधाह्रस्वः स्यात्। णिच्सन्नयोगेनाऽनुबन्धकरणे तु अनुदात्तेत्वलक्षणस्यात्मनेपदस्याऽप्रवृत्तया "णिचश्चे"ति कर्तृगामिनि क्रियाफल एवात्मनेपदं स्यान्न तु परगामिनीति विवेकः। सामथ्र्यादिति। केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाऽभावादिति भावः। क्रियायोगाऽभावादुपसर्गो नेत्यभिप्रेत्याह----समामाकारमिति। पूर्वपदमिति। तच्च समास एवं संभवति। तेन आन्दोलयित्वा प्रेङ्कोलयित्वेत्यादौ आ--प्रेत्यादीनां न पृथक्करणम्। अन्यथा तेषां क्त्वाप्रत्ययान्तेन समासे सति ल्यप् स्यादिति भावः। पृथक्करणस्य

फलमाह-- तेन#एति। सुमिमनायिषति उन्मिमनायिषतीत्यादौ मनश्शब्दस्य द्विर्वचनं पृथक्करणस्य फलमिति बोध्यम्। अवागल्भतेति। "आचारेऽवगल्भे"ति क्विब्विधौ अवेत्यस्य पृथक्करणाद्गल्भशब्दात्प्रागट्। किं तत्साजात्यमित्यत आह-- तेनेति। उरुआआमिति। "माहेयी सौरभेयी गौरुरुआआ माता च शृङ्गिणी"त्यमरः। औरुआईयदिति। क्यज्नतादुरुआआशब्दाल्लङि अङ्गसयाऽऽटि च कृते "उस्यपदान्ता"दिति पररूपं प्राप्तम्। न चानर्थकोऽमुस् न ग्रहीष्यत इति वाच्यं, छिन्द्युर्भिन्द्युरित्यादावप्सुसोऽनर्थकत्वादागमसहितस्यैवार्थवत्त्वात्। तथा चाऽयः, अपुरित्यादावेव स्यात्। एवं चाऽयमेवाऽऽडागमस्य उसि परे प्रतिषेधोऽर्थवद्ग्रहपरिभाषाया अत्राऽप्रवृत्तौ ज्ञापक इति स्थितम्। अतएव "उस्यपदान्ता" दित्यत्राऽपदान्तात् किं, कोरुओति भाष्ये प्रत्युदाह्मतम्।

*उस्योमाङ्क्ष्वाटः प्रतिषेधः। औङ्कारीयदिति। "ओमाङोश्चे"ति पररूपं प्राप्तम्। आडागमस्याऽऽङि परे उदाहरणमाह-- औढियदिति। यत्रादेशेनाऽपह्मतं तत्रापि यदि पृथक्कृतिस्तदा आङः परत्राऽऽटा भाव्यमित्याडागमस्याऽऽङि परे पररूपनिषेधो व्यर्थः स्यात्। तथा च ज्ञापकस्य विशेषविषयत्वे प्रमाणमयमेव निषेध इति भावः। "च"शब्दं प्रयुञ्जानः सूत्रकारोऽपि ज्ञापकस्य विशेषविषयत्वेऽनुकूल इत्याह--- चशब्देनेति। षाष्ठे स्थितमिति। भाष्यकारोऽप्युक्तार्थे प्रमामभूत इति भावः। स्यादेतत्--- "अवधीरयती" त्यादाववशब्दस्य पृथक्करणमस्ति वा, न वा?। आद्ये बोपदेवेनाऽवशब्दात् प्रागाडागमं वकारद्वित्वं च कृत्वा चङि आववधीरदित्युदाह्मतं, तन्न संङ्ग्छेत्। द्वितीये तु ""इतीव धारामवधीर्य मण्डलीक्रियाश्रियाऽभण्डि तुरङ्गमैर्मही"ति श्रीहर्षप्रयोगो न सङ्गच्छेतेति चेत्। अवधीरेत्यस्यापि। प्रयोगद्वयप्रामाण्यान्मुनित्रयविरोधाऽभावाच्च। यदा त्ववधीरेति विशिष्टस्यैव धातुत्वं तदाऽवधीरयित्वेति साधुः। धीरेत्यस्यैव धातुत्वे तु अवधीर्येत्यस्य साधुत्वमिति। तस्येति

---

सूत्रम्

काशिका-वृत्तिः

लोहितादिडाज्भ्यः क्यष् ३।१।१३

लोहितादिभ्यो डाजन्तेभ्यश्च भवत्यर्थे क्यष् प्रत्ययो भवति। लोहितायति, लोहितयते। डाजन्तेभ्यः पटपटायति, पटपटायते। लोहितडाज्भ्यः क्यष् वचनम्, भृशादिष्वितराणि। यानि लोहितादिषु पठ्यन्ते तेभ्यः क्यङेव, अपरिपठितेभ्यस् तु क्यषेव भवति। वर्मायति, वर्मायते। निद्रयति, निद्रायते। करुणायति, करुणायते। कृपायति, कृपायते। आकृतिगणो ऽयम्। यथा च ककारः सामान्यग्रहणार्थो ऽनुबध्यते नः क्ये १।४।१५ इति। न हि पठितानां मध्ये नकारान्तः शब्दो ऽस्ति। कृभ्वस्तिभिरिव क्यषा ऽपि योगे डाज् भवति इत्येतदेव वचनम् ज्ञापकम्। अच्वेः इत्यनुवृत्तेरभूततद्भावे क्यष् विज्ञायते। लोहित। नील। हरित। पीत। मद्र। फेन। मन्द। लोहितादिः।

न्यासः

लोहितादिडाज्भ्यः क्यष्। , ३।१।१३

"लोहितयाते" इति। "वा क्यषः" १।३।९० इत्यात्मनेपदम्। "पटपटायते" इति। पटच्छब्दात् "अव्यक्तानुकरणात्" ५।४।५७ इति डाच्। "डाचि बहुलं द्वे" (वा।८८८) इति द्विर्वचनं डाचः प्रागेव भवति; डाचीत्यस्य हि विषयसप्तमीत्वात्। डाचि कृते टिलोपः। द्विर्वचने योऽच्छब्दस्तदवयवस्य तकारस्य "नित्यमाम्रेडिते डाचि" ६।१।९६ इति पररूपम्-- पकारः। "लोहितडाज्भ्यः क्यष्वचनम्" इत्यादि। लोहितादिसूत्रेण यदेतत् क्यषो विधानं तल्लोहितात्, डाजन्तेभ्यश्चेत्यर्थः। ननु चान्यान्यपि नीलादिशब्दरूपाणि लोहितादिषु पठ()न्ते, अतस्तेभ्योऽपि क्यषा भवितव्यमित्याह-- "भृषादिषु" इत्यादि। लोहितशब्दादितराणि यानि तानि भृशादिषु द्रष्टव्यानि। यस्त्विह तेषां पाठः, स प्रमादतः। अर्वाक्कालभावित्वादनार्ष

इत्यभिप्रायः। यदि तर्हि भृशादिष्वितराणि पठ()न्ते, एवमादिशब्दस्यानर्थक्यम्, न हि किञ्चिदस्ति यत् तेनोपादीयेत? अत आह-- "यानि" इत्यादि। यानि प्रामादाल्लोहितादिषु पठ()न्ते तेषां भृशादिषु पाठो वेदितव्यः। न त्वपरिपठितानां वर्मादीनाम्। अतस्तेषामादिग्रहणेन ग्रहणे सति क्यषेव भवति। "वर्मायते" इति। "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नलोपः, "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। निद्रादयोऽत्र शब्दाः पठ()न्ते, ते यद्यपि धरममात्रवचनास्तथापि क्यष्()वृत्तिविषये तद्वपि द्रव्ये वत्र्तन्ते; शब्दशक्तिस्वाभाव्यात्। "निद्रायते" इति। अनिद्रावान् निद्रावान् भवतीत्यर्थः। कथं पुनरपरिपठितानां लोहितादित्वं भवतीत्याह-- "आकृतिगणश्चायम्" इति। कथमेतज्ज्ञायत इत्याह-- "तथा च" इत्यादि। केयति सामान्यग्रहणार्थमित्याह-- "नः क्ये" इति। तत्रैतत् स्यात्। परिपठितानां मध्ये यो नकारान्तस्तस्य पदसंज्ञार्थः ककारोऽनुबध्यत इत्याह-- "न हि" इत्यादि। कथं पुनः क्यषा योगे डाज्भवति, यावता "कृभ्वस्तियोगे" इत्यनुवृत्तेः करोत्यादियोगे डाज् विधीयते, न क्यषा? इत्याह--- "{कृभ्वस्तिभिरेव" इति मुद्रितः पाठः}कृभ्वस्तिभिरिव" इत्यादि। यदेतत् डाजन्तेभ्यः क्यषो विधानमेतदेव ज्ञापयति-- यथा कृभ्वस्तिभिर्योगे डाज्भवति तथा क्यषापीति। अन्यथा डज्ग्रहणमनर्थकं यदि क्यषा योगे डाज् न स्यात्। ननु च यदा भवतियोगे डाज्भवति तदा तदन्तात् क्यष् भविष्यति, त्तकुत आनर्थक्यम्? नैतत्; न हीदानां क्यष् भवितुमर्हति, भुवो भवतिनैवोक्तार्थत्वात्। "अच्वेरित्यनुवृत्तेरभूततद्भावे क्यष्विज्ञायते" इति। मत्रिवयुक्तन्यायेनेति भावः। यथैव हि पूर्वसूत्रेऽच्वेरिति प्रतिषेधादमुना न्यायेनाभूततद्भावविषये क्यङ विधीयते, तथेहापि क्यषिति॥

बाल-मनोरमा

लोहितादिडाज्भ्यः क्यष् ४९३, ३।१।१३

लोहितादि। भवत्यर्थे इति। "भृशादिभ्यो भुवी"त्यतो भुवीत्यनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कष्टाय क्रमणे ३।१।१४

क्यङनुवर्तते, न क्यष्। कष्टशब्दाच् चतुर्थीसमर्थात् क्रमणे ऽर्थे ऽनार्जवे क्यङ् प्रत्ययो भवति। कष्टाय कर्मणे क्रामति कष्टायते। अत्यल्पम् इदम् उच्यते। स्त्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम् इति वक्तव्यम्। कन्वचिकीर्षा पापचिकीर्षा, तस्यामेतेभ्यः क्यङ् प्रत्ययो भवति। स्त्रायते। कष्टायते। कक्षायते। कृच्छ्रायते। गहनायते। कण्वचिकीर्षायाम् इति किम्? अजः कष्टम् क्रामति।

न्यासः

कष्टाय क्रमणे। , ३।१।१४

"क्यङनुवत्र्तते, न क्यष्" इति। क्यङ एव स्वरितत्वात्। "चतुर्थी समर्थात्" इति कष्टायेति निर्देशादेव चतुर्थी समर्थविभक्तिर्लभ्यते, अतस्तत्समश्र्यात् प्रत्ययो विज्ञायते। क्रमणशब्दोऽयमस्ति पादविहरणे, असति चानार्जवे; तत्र क्रमण इत्यविशेषाभिधाने पादविहरणे प्रत्ययो मा विज्ञायीति विशेषणमुपात्तम्। जिह्मम्, पापम्, अनार्जवमित्यनर्थान्तरम्। ततोऽनार्जव इत्यनेन क्रमेण विशेषिते सत्यानार्जवलक्षणं यत्क्रमणं तत्रैव प्रत्ययो विज्ञायते, न क्रमणमात्रे। एतच्च "धातोः कर्मणः" ३।१।७ इत्यादेः सूत्राद्वाग्रहणस्यानुवत्र्तमानस्य व्यवस्थितविभाषात्वाल्लभ्यते। "कष्टाय क्रमणे" इति तादर्थ्ये चतुर्थी। "कष्टायते" इति। कष्टाय क्रमणमनार्जवं करोतीत्यर्थः। "अत्यल्पमिदमुच्यते" इति। सर्वलक्ष्यासंग्रहात्। कथं तर्हि वक्तव्यमित्याह- "{सत्त्रकक्ष" इति मुद्रितः पाठः} सत्रकष्ट" इत्यादि। अस्मिन् न्यसान्तरे

यद्यपि समर्थविभक्तिनिर्दशो नास्ति, तथापि सुबधिकारात् तत्समर्थयोग्या विभक्तिरध्याहऱ्त्तव्या। सत्रं चिकीर्षतीति सत्त्रायते, पापं कर्तुमिच्छीत्यर्थः। "अजः कष्टं क्रामति" इति। क्रमिरत्र पादविहरणे। कष्टमिति कर्मपदमेतत्। कष्टं देशं गहनं क्रामतीत्यर्थः। अथ वा-- कष्टमिति क्रियाविशेषणमेतत्। अजः कष्टं यथा भवति तथा सञ्चरतीत्यर्थः। क्रियाविशेषमपक्षेऽपि कष्टमिति द्वितीयान्तमेतत्। प्रसिपादितं हि "करणे च स्तोकाल्प" [२।३।३३](#) इत्यादौ सूत्रे-- क्रिया विशेषाणानां कर्मतेति। तेनात्र सूत्रे प्रत्युदाहरणे द्वितीयान्तस्य कष्टशब्दस्य निर्देशः। मूलोदाहरणेष्वपि द्वितीया समर्थविभक्तिरध्याहऱ्त्तव्येति विज्ञायते॥

बाल-मनोरमा

कष्टाय क्रमणे ४९५, ३।१।१४

कष्टाय क्रमणे। "क्रमण"शब्दं विवृणोति उत्साहे इति। अस्वरितत्वात् क्यषिति नानुवर्तते इति भावः। "क्रियार्थोपपदस्ये"ति चतुर्तीति मत्वा आह-- पापं कर्तुमिति। क्रमते इत्यत्र "वृत्तिसर्गतायनेषु क्रमः" इति तङ्। "कण्वचिकीर्षाया"मित्यत्र कण्वपदं व्याचष्टे-- कण्वं पापमिति। सत्रादिशब्दान्विवृणोति-- सत्रादय इति। द्वितीयान्तेभ्य इति। चिकीर्षायां द्वितीयान्तस्यैवाऽन्वययोग्यत्वादिति भावः। कण्वशब्दस्तु सत्रादिशब्दानां कण्वपरत्वे तात्पर्यग्राहकः। केचित्तु "कण्वे"त्यविभक्तिकम्। कण्वर्तिभ्य इति व्याचक्षते। अस्वपदविग्रह इति। वृत्तावेव सत्रादिशब्दानां पापवाचित्वादिति भावः। इदं कष्टं शब्दाद्रयत्रैव। "कष्टाय क्रमते" इति तु स्वपदविग्रहोऽस्त्येव। भाष्ये एवं विग्रहं प्रदश्र्य सत्रादिषु विग्रहाऽप्रदर्शनादित्याहः।

तत्त्व-बोधिनी

कष्टाय क्रमणे ४२४, ३।१।१४

कष्टाय क्रमणे। क्यङेवानुवर्तते, स्वरितत्वात्, न तु क्यष्। कष्टायेति निर्देशादेव चतुथ्र्यनतं लभ्यते। क्रमणमुत्साहः। "वृत्तिसर्गतायनेषु" इति कर्मेरात्मनेपदविदायकसूत्रे "सर्ग उत्साह" इति सर्वैव्र्याख्यातत्वात्।

* सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्। कण्वं। कष्टं--- कृच्छ्रम्। "कृच्छ्रगहनेयोः कषः" इति इडभावः। न च दुःखं कर्तुमुत्साहः संभवतीति तत्साधनं पापमिह गृह्रत इत्याह---- पापं कर्तुमिति। द्वितीयान्तेभ्य इति। चिकीर्षायां द्वितीयान्तस्यैवान्वययोग्यत्वादेवमुक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ३।१।१५

रोमन्थशब्दात् तपःशब्दाच् च कर्मणो यथाक्रमं वर्तिचरोरर्थयोः क्यङ् प्रत्ययो भवति। रोमन्थं वर्तयति रोमन्थायते गौः। हनुचलने इति वक्तव्यम्। इह मा भूत्, कीटो रोमन्थं वर्तयति। तपसः परस्मैपदम् च। तपशचरति तपस्यति।

न्यासः

कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः।, ३।१।१५

कर्मण इति पञ्चमी; रोमन्थतपोभ्यां पञ्चम्यन्ताभ्यां सामानाधिकरण्यात्। सत्यपि ताभ्यां सामानाधिकरण्ये द्विवचनं न भवति, प्रत्येकं वाक्यपरिसमाप्तेः। " वर्त्तिचरोः" इति। वत्र्तनं वर्त्तिः, ण्यन्तात् स्त्रियां क्तिन्। ननु च क्तिना न भवितव्यम्, "ण्यासश्रन्थो युच्" [३।३।१०७](#) इति युचा बाधितत्वात्। अस्मादेव निपातनात् क्तिन् भविष्यतीत्यदोषः। चरणं चरिति

सम्पदादित्वात् क्विप्। "हनुचलने" इत्यादि। अभ्यवहृतस्य यत् पुनरुद्गीर्य चर्वणं हनुचलनम्। अत्रार्थे रोमन्थशब्दात् क्यङ भवतीत्येतदर्थरूपं व्याख्येयम्। व्याख्यानं तु वाग्रहणमनुवर्त्त्य तद्व्यवस्थितरकविभाषात्वमाश्रित्य कत्र्तव्यम्। वाग्रहणं त्ववश्यमनुवत्र्तयितव्यम्, रोमन्थं वत्र्तयतीति वाक्यं यथा स्यात्। "कीटो रोमन्थं वत्र्तयति" इति। उद्गीर्णं वहिर्निरस्तमवगीर्णं वा पृष्ठान्तेन निर्गतं रोमन्थाख्यं द्रव्यं वत्र्तयति, गुटिकां करोतीत्यर्थः। तेनात्र हनुचलनं न विद्यते। मूलोदाहरणे तु विद्यत एव, तथा हि रोमन्थायत इति। अभ्यवहृतं पुनराकृष्य चर्वयीत्यर्थः। तच्चर्वणं हनुचलनात्मकमेव। अन्ये तु हनुचलने प्रत्ययमन्यथा प्रतिपादयन्ति। अस्ति चायं रोमन्थशब्दः क्रियापदार्थको यो रोमन्थशब्दात् प्रातिपदिकाद्धात्वर्थ इत्यादिना णिचमुत्पाद्य घञन्तो व्युत्पाद्यते, स ह्यभ्यवहृतस्य द्रव्यस्य पुनराकृष्य यच्चर्वणं तत्र वर्तते। अस्ति च द्रव्यवचनोऽयं य उद्गीर्णमवगीर्णं वा रोमन्थक्रियाविशिष्टं द्रव्यमाह। तत्र यः क्रियावचनस्तस्येदं ग्रहणम्, यतो द्रव्येऽप्ययं वत्र्तमानः क्रियाद्वारेणैव वत्र्तते। अतो द्रव्ये गौणः, क्रियायां मुख्यः; गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः (व्या।प।४)। तेन क्रियावचनादेव भवति, न द्रव्यवचनादिति। "तपसः परस्मैपदं च" इति। वक्तव्यमित्यपेक्षते। ङित्वादात्मनेपदे प्राप्ते परस्मैपदं वक्तव्यम् = व्याख्येयम्। व्याख्यानं तु "अनुदात्तङितः" १।३।१२ इति सूत्रे "नपुंसकमनपुंसकेन" १।२।६९ इत्यादेः सूत्रान्मण्डूकप्लुतिन्यायेनानुवत्र्तमानस्यान्थतरस्यांग्रहणस्य व्यवस्थितविभाषात्वमाश्रित्य कत्र्तव्यम्। तेन तपसः क्यङन्तादात्मनेपदं न भवति। तदभावात् "शेषात् कत्र्तरि परस्मैपदम्" १।३।७८ इति परस्मैपदमेव भवति।

बाल-मनोरमा

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ४९६, ३।१।१५

कर्मणो रोमन्थ। वृतुधातोण्र्यन्तात् "धात्वर्थनिर्देशे इग्वक्तव्यः" इति इकि वर्तिशब्दः। आवर्तनमर्थः। चरेः संपदादित्वाद्भावे क्विप्। वर्ति चर अनयोद्र्वन्द्वात्सप्तमी। आवर्तने चरणे चेति लभ्यते। कर्मशब्देन कर्मकारकं विवक्षितम्। तपोभ्यामिति। रोमन्थमिति। उद्गीर्णस्य निगीर्णस्य वा मन्थो रोमन्थ इति भाष्यम्। उद्गीर्णस्य = उदरादुपरि कण्ठ्दवारा निर्गतस्य, निगीर्णस्य = अपानद्वारा निर्गतस्य च मन्थः = चर्वणं रोमन्थ इत्यर्थः। वर्तयतीति। आवर्तयतीत्यर्थः। हनुचलन इति। हनु = तालु, तच्चलने सत्येव अयं विधिरित्यर्थः। तथा च उदरगतं भक्षितं द्रव्यं तृणादिकं पुनःपुनराकृष्य तालुचलनेन चूर्णितस्य पुनः पुनः प्राशने रोमन्थशब्दात्क्यङिति फलितम्। तदाह--चर्वितस्येति। हनुचलनेन भक्षितस्य उदरं प्रविष्टस्य पुनः पुनराकृष्य हनुचलनेन भक्षणे गम्ये इति फलितमित्यर्थः। कीट इति। इह हनुचलनाऽभावान्न क्यङिति भावः। तदेवोपपादयति--अपानेति। तपसः परस्मैपदं चेति-- वार्तिकम्। तपश्शब्दः कर्मकारकवृत्तिः पूर्वसूत्राच्चरणे क्यङं लभते, ङित्वप्रयुक्तमात्मनेपदं बाधित्वा परस्मैपदमेव च लभते इत्यर्थः। तपस्यतीति। प्रातिपदिकादेवास्य क्यङुत्पत्तेरन्वर्वर्तिविभक्त्यभावात् "नः क्ये" इति नियमाच्च पदत्वाऽभावान्न रुत्वमिति भावः।

तत्त्व-बोधिनी

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ४२५, ३।१।१५

कर्मणो। "रोमन्थतपोभ्या"मित्यनेन सामानाधिकरण्यात्कर्मण इति पञ्चमी। प्रत्येकं संबन्धादेकवचनमित्याह--कर्मभ्यामिति। वर्तनायां चरण इति। सूत्रे "वर्ती"ति ण्यन्ताद्वृतेः "ण्यासश्रन्थे"ति युचं बाधित्वाऽस्मादेव निपातनात्क्तिन्। चर्तेस्तु संपदादित्वाद्भावे क्विबिति भावः। केचित्तु वर्तिशब्दो वर्तयतेः "इक्श्तिपौ" इति इकि रूपम्। लक्षणया चाऽर्थलाभ इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

बाष्पौउष्मभ्याम् उद्वमने ३।१।१६

कर्मणः इति वर्तते। बाष्पशब्दादूष्मशब्दाच् च कर्मन उद्वमने ऽर्थे क्यङ् प्रत्ययो भवति। बाष्पम् उद्वमति बाष्पायते। ऊष्मायते। फेना च्चेति वक्तव्यम्। फेनम् उद्वमति फेनायते।

न्यासः

बाष्पोष्मभ्यामुद्ववने। , ३।१।१६

"फेनाच्चेति वक्तव्यम्" इति। फेनशब्दाद्वमनेऽर्थे वत्र्तमानात् क्यङ भवतीत्येतदर्थरूपं व्याख्येयम्। व्याख्यानं तु-- "भृशादिभ्यः" ३।१।१२ इत्यतः सूत्राच्चकारमनुक्तसमुच्चयार्थमनुवर्त्य कत्र्तव्यम्॥ करणशब्देनात्र क्रियोच्यते, न साधकतमम्। यस्मात् "कर्मणः" ३।१।१५ इत्यधिकाराच्छब्दादिभ्यः कर्मभ्य एव प्रत्ययेन भवितव्यम्। तत्र यदि साधकतमे प्रत्ययः स्यात् प्रकृतिप्रत्यययावसम्बद्धौ स्याताम्, क्रियापेक्षत्वाच्च कर्मत्वस्य क्रियाया अभावे कर्मत्वं न स्यात्। तस्मात् क्रियावचन एव करणशब्दं निश्चित्याह-- "करणे करोत्यर्थे"इति। "सुदिन" इत्यादि। सुदिनादिभ्यः कर्मभ्यः करमए करोत्यर्थे क्यङप्रत्ययो भवति#ईत्येतदर्थरूपं व्याख्येयम्। व्याख्यानं तु-- इहापि तमेवानुक्तसमुच्चयार्थं चकारमनुवर्त्य कत्र्तव्यम्। अत एवानुक्तसमुच्चयार्थाच्चाकारादटादीनामपि ग्रहणम्। तेनटायत इत्याद्यपि सिद्धं भवति। "अटाट्ट" इत्यादि। अटादीनां ग्रहणमुपादानमित्यर्थः। अयञ्च "तत्करोति" (वा।२००) इति णिचि प्राप्त आरम्भः; सोऽपीष्यते-- शब्दयति, वैरयतीति। तस्मादेतदर्थापि चकारानुवृत्तिर्वेदितव्या॥

बाल-मनोरमा

बाष्पोष्मभ्यामुद्वमने ४९७, ३।१।१६

बाष्पोष्मभ्यामुद्वमने। आभ्यां कर्मभ्यामिति। "कर्मणो रोमन्थे"त्यतः कर्मकारकवृत्तिभ्यामित्यर्थः। फेनायते इति। फेनमुद्वमतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३।१।१७

शब्द वैर कलह अभ्र कन्व मेघ इत्येतेभयः करणे करोत्यर्थे क्यङ् प्रत्ययो भवति। शब्दम् करोति शब्दायते। वैरायते। कलहायते। अभ्रायते। कण्वायते। मेघायते। सुदिनदुर्दिननीहरेभ्यश्चेति वक्तव्यम्। सुदिनायते। दुर्दिनायते। नीहारायते। अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्। अटायते। अट्टायते। शीकायते। कोटायते। पोटायते। सोटायते। प्रुष्टायते। प्लुष्टायते।

लघु-सिद्धान्त-कौमुदी

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ७३२, ३।१।१७

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते॥ (ग।सू) तत्करोति तदाचष्टे; इति णिच्॥ (ग।सू) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिपदिकाद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य पुंवद्भाव-रभाव-टिलोप-विन्मतुब्लोप-यणादिलोप-प्रस्थस्फाद्यादेश-भसंज्ञास्तद्वण्णावपि स्युः। इत्यल्लोपः। घटं करोत्याचष्टे वा घटयति॥

लघु-सिद्धान्त-कौमुदी

इति नामधातवः ७३२, ३।१।१७

लघु-सिद्धान्त-कौमुदी

अथ कण्ड्वादयः ७३२, ३।१।१७

बाल-मनोरमा

शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे ४९८, ३।१।१७

शब्दवैर। करणं - क्रिया। तदाह-- करोत्यर्थे इति। "तत्करोती"ति णिचोऽपवादः। पक्षे इति। कदाचिदित्यर्थः। न्यास इति। भाष्याऽनारूढत्वमत्र अरुचिबीजम्।

सुदिनदुर्दिन इति- वार्तिकम्। "करोत्यर्थे क्य"हिति शेषः।

तत्त्व-बोधिनी

शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे ४२६, ३।१।१७

शब्दवैर। कर्मण इत्यनुवर्तत इत्याह-- एभ्यः कर्मभ्य इति।

---

सूत्रम्

काशिका-वृत्तिः

सुखादिभ्यः कर्तृवेदनायाम् ३।१।१८

कर्मग्रहणसनुवर्तते। सुख इत्येवम् आदिभ्यः कर्मभ्यः वेदनायाम् अर्थे ऽनुभवे क्यङ् प्रत्ययो भवति, वेदयितुश्चेत् कर्तुः सम्बन्धीनि सुखादीनि भवन्ति। सुखं वेदयते सुखायते। दुःखायते। कर्तृग्रहणं किम्? सुखं वेदयते प्रसाधको देवदत्तस्य। सुख। दुःख। तृप्त। गहन। कृच्छ्र। अस्र। अलीक। प्रतीप। करुण। कृपण। सोढ। सुखादिः।

न्यासः

सुखादिभ्यः कर्त्तृवेदानायाम्। , ३।१।१८

"वेदनायामर्थेऽनुभवे" इति। प्रत्यक्षेण वस्तुन उपलब्धिः = अनुभवः। ननु च वेदनाशब्द उपलब्धिमातर्वचनो लोके दृष्टः, तत्कथमेष विशेषो लभ्यते? यथा लभ्यते तथोत्तरसूत्रे प्रतिपदायिष्यामः। कत्र्ता कारकम्, कारकञ्च क्रियापेक्षं क्रियाया एव भवति। वेदना चेह क्रिया श्रूयते, नान्या। तस्मात् तस्या एव कत्र्ता विज्ञायते। तस्याश्च सो वेदयिता स एव विज्ञायते। तस्मादविशेषाभिधानेऽपि वेदयितरि कत्र्तरि वत्र्तमानः कर्त्तृशब्दः गृह्यत इति-- "वेदयितुश्चेत् कर्त्तुः" इत्यादि। एतेन कर्त्तृग्रहणेन सुखादयो विशिष्यन्ते, न तु वेदनेति दर्शयति। यदि कर्त्तृग्रहणेन वेदना विशिष्येत-- कर्त्तुः सम्बन्धिनी चेद्वेदना भवतीति, तदेहापि स्यात्--- देवदत्तस्य सुखं वेदयति प्रसाधक इति। प्रसाधकस्यापि सम्बन्धिनी वेदना भवत्येव, तथा हि सोऽपि तस्याः कत्र्ता। यथैव हि प्रसाध्यः सुखं वेदयते तथा प्रसाधकोऽपि। एतावांस्तु विशेषः-- एकः प्रत्यक्षेण वेदयते, अपरश्चानुमानेन; सर्वथा हि तदकर्त्तृकत्वे वेदयत इत्येतन्न स्यात, न ह्यकत्र्ता वेदयत इत्युच्यते। तस्मात् सुखादीनामेव कर्त्तृग्रहणं विशेषणं युक्तिमिति भावः। ननु च सुखादिविशेषणत्वेऽपि स एव दोषः, यस्मात् प्रसाधकस्यापि जन्यजनकभावलक्षणेन सम्बन्धेन सुखादयः सम्बन्धिनो भवन्ति? नैतत्; सर्वत्रैव हि कर्तृसम्बन्धिनः सुखादयः, क्रियते

चेदं कर्तृग्रहणम्। अतः कर्तृग्रहणसामर्थ्याद्विशिष्टो यः कर्त्ता सुखादीनामाश्रयः समवायिकारणं स एव गृह्यते। तेनाश्रयाश्रयिभावेन सम्बन्धेन कर्तृसम्बन्धिभ्यः सुखादिभ्यः प्रत्ययो विज्ञायते। न च प्रसाधकः सुखादीनां समवायिकारणम्, किं तर्हि? निमित्तकारणम्। सुखादिसमवायिकारणस्य कर्तुर्ये सुखादय आश्रयाश्रयिभावेन सम्बन्धिनस्ते प्रत्यक्षेणोपलभ्यन्ते। तेन तदुपलब्धिरनुभवस्वभावा भवतीति युक्तमुक्तम्-- वेदनायामर्थेऽनुभव इति। यदि तर्हि कर्तृग्रहणेन सुखादयो विशिष्यन्ते, न वेदना, ततश्च कर्तृवेदनायामिति षष्ठीसमासो न प्राप्नोति, असामर्थ्यात्? सौत्रत्वान्निर्देशस्य सत्यप्यसामर्थ्ये समासो भविष्यतीत्यदोषः। अथ वा-- असमास एव, षष्ठ()आस्त्वश्रवणम्; "सुपां सुलुक्" ७।१।३९ इति लुप्तत्वात्॥

बाल-मनोरमा

सुखादिभ्यः कर्तृवेदनायाम् ४९९, ३।१।१८

सुखादिभ्यः। "कर्मणो रोमन्थे"त्यतः कर्मग्रहणाऽनुवृत्तिं()त मत्वा आह-- एभ्यः कर्मभ्य इति। वेदनायामिति। ज्ञाने इत्यर्थः। कर्तृत्वं च वेदनां प्रत्येव विवक्षितम्, उपस्थितत्वात्। वेदनाकर्तृवृत्तिवाचिभ्यः सुखादिशब्देभ्य इति लभ्यते। फलितमाह-- वेदनाकर्तुरेव चेदिति। सुखं वेदयते इति। जानातीत्यर्थः। "विद चेतनाया"मिति चुरादौ।

तत्त्व-बोधिनी

सुखादिभ्यः कर्तृवेदनायाम् ४२७, ३।१।१८

सुखादिभ्यः। "कर्तु" इति पृथक्पदं लुप्तषष्ठीकम्। "विद चेतनाख्याननिवासेष्वि"ति चौरादिकाद्युचि "वेदना"शब्दो ज्ञानवाची, तदपेक्षमेव कर्तृत्वम्। कर्ता च सुखादिभिरन्वेति। तदेतदाह--- वेदनाकर्तुरेवेति। परस्य सुखमिति। इह यन्निष्ठं सुकं तद्भिन्नो वेदनाकर्तेति वाक्यमेव। सुखादयः सुखदुःखतृप्रकृच्छ्रादयः।

---

सूत्रम्

काशिका-वृत्तिः

नमोवरिवश्चित्रङः क्यच् ३।१।१९

करणे इति वर्तते। नमस् वरिवस् चित्रङित्येतेभ्यो वा क्यच् प्रत्ययो भवति, करणविशेषे पूजादौ। नमसः पूजायाम् नमस्यति देवान्। वरिवसः परिचर्यायाम् वरिवस्यति गुरून्। चित्रङ आश्चर्ये चित्रीयते। ङकार आत्मनेपदार्थः।

न्यासः

नमोवरिवश्चित्रङः क्यच्।, ३।१।१९

"करणविशेषे पूजाद्वौ" इति। आदिशब्देन परिचर्याश्चर्ययोग्र्रहणम्। "नमसः" इत्यादिनाऽनन्तरस्योक्तार्थस्य विषयविभागं दर्शयति। एष चार्थो यद्यपि करण इति करणसामान्यमनुवत्र्तते, तथाप्यभिधानशक्तिस्वाभाव्यल्लभ्यते विनापि वचनेन, यथा--- पचादीनां विक्लेदादिषु वृत्तिः, बहुव्रीहेश्च मत्वर्थे। "नमस्यति देवान्" इति। ननु च नमस्यतिशब्दे नमःशब्दोऽस्ति, अतस्तद्योगे "नमः स्वस्ति" (२।३।१६) इत्यादिना चतुथ्र्या भवितव्यम्? नैतदस्ति; "अर्थवद्ग्रहणे नानर्थकस्य" (व्या।प।१) इत्यर्थवतो नमःशब्दस्य कर्तुमशक्यत्वात्। अथ वा-- "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" (चां।प।६९) इति द्वितीयैव भवति। उपपदसम्बन्धनिरपेक्षत्वात् कारकविभक्तेर्बलीयस्त्वम्। उपपदविभक्तेस्तु पदान्तरसापेक्षत्वाद्दुर्बलत्वम्। "नमस्यति" इति। नमस्कारं करोतीत्यर्थः। "वरिवस्यति"। परिचरीत्यर्थः। "चित्रीयते" इति। विस्मापयत इत्यर्थः॥

बाल-मनोरमा

नमोवरिवश्चित्रङः क्यच् ५००, ३।१।१९

नमोवरिवस्। नमस्, वरिवस्, चित्रङ् एषां समाहारद्वन्द्वात्पञ्चमी। आत्मनेपदार्थं चित्रशब्दो ङिन्निर्दिष्टः। "शब्दवैरे"त्यतः करणे इत्यनुवर्तते। करणं - क्रिया। सा च पूजापरिचर्याऽऽश्चर्यात्मिका विवक्षिता, "नमसः पूजायां"वरिवसः कारकविभक्तेर्बलीयस्त्वाद्द्वितीया। परिचर्या शुश्रूषेति मत्वाह-- शुश्रूषते इत्यर्थ इति। आश्चर्यशब्दो विस्मयवाचीति मत्वाह- विस्मयते इत्यर्थ इति। विस्मापयते इत्यन्ये इति। आश्चर्यशब्दो विस्मापनपर इति भावः। "ततश्चित्रीयमाणोऽसा"विति भट्टिः। असौ-- मायामृगो विस्मयमुत्पादयन्नित्यर्थः।

तत्त्व-बोधिनी

नमोवरिवश्चिवङः क्यच् ४२८, ३।१।१९

नमोवरिवः। चित्रङः क्य्जविधानामीत्वार्थं, ङित्करणं तु तङर्थम्। विस्मापयत इत्यन्य इति। तथा च भट्टिः-- "ततश्चित्रीयमाणोऽसौ" इति। असौ = मायामृगश्चित्रीयमाणो = विस्मयमुत्पादयन्नित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

पुच्छभान्डचीवराण् णिङ् ३।१।२०

करणे इति वर्तते। पुच्छ भाण्ड चीवर इत्येतेभ्यो णिङ् प्रत्ययो भवति करणविशेषे। पुच्छादुदसने पर्यसने वा। उत्पुच्छयते। परिपुच्छयते। भाण्डात् समाचयने। सम्भान्डयते। चीवरादर्जने परिधाने वा। सञ्चीवरयते भिक्षुः। ङकार आत्मनेपदार्थः। णकारः सामान्यग्रहणार्थः, णेरनिटि ६।४।५१ इति।

न्यासः

पुच्छभाण्डचीवराण्णिङ्। , ३।१।२०

"पुच्छात्" इत्यादि। उदसनम् = ऊध्र्वक्षेपणम्, पर्यसनम् = परितः क्षेपणम्। यदोदसने प्रत्ययस्तदा तस्य द्योतनार्थ उच्छब्दः प्रयुज्यते--- "उत्पुच्छयते" इति। यदा पर्यसने प्रत्ययस्तदा परिशब्दः-- "परिपुच्छयते" इति। "णाविष्ठवत् कार्यम् प्रातिपदिकस्य" (वा।८१३) इतीष्ठवद्भाववाट्टिलोपः। समाचयनम्-- राशीकरणम्। अर्जनम् = अलब्धस्य लाभः। परिधानम् = आच्छादनम्॥

बाल-मनोरमा

पुच्छभाण्डचीवराण्णिङ् ५०१, ३।१।२०

पुच्छभाण्ड। पुच्छादुदसने इति वार्तिकम्। उत्पुच्छयते इति। विविधं विरुद्धं वा पुच्छमुत्क्षिपतीत्यर्थः। भाण्डात्समाचयने - इत्यपि वार्तिकम्। समबभाण्डतेति। उपसर्गसमानाकरां पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते इत्युक्तत्वात्संभाण्डशब्दात्क्यङ्यपि भाण्डशब्दात्प्रागेवाऽडिति भावः। एवम् उदपुपुच्छतेत्यादावपि। चीवरादर्जने इत्यपि वार्तिकम्।

तत्त्व-बोधिनी

पुच्छभाण्डचीवराण्णिङ् ४२९, ३।१।२०

पुच्छभाण्ड। "करणे" इत्यनुवृत्तेरत्रापि क्रियाविशेष एव णिङ्। तमेव विशेषं दर्शयति-- पुच्चादित्यादिना। ङकारोऽत्र "णेरनिटी"ति णिङ्णिचोः सामान्यग्रहणार्थो, नित्यात्मनेपदार्थश्च। उदपुपुच्छत।

---

सूत्रम्

काशिका-वृत्तिः

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ३।१।२१

मुण्ड मिश्र श्लक्ष्ण लवण व्रत वस्त्र हल कल कृत तूस्त इत्येतेभ्यः करणे णिच् प्रत्ययो भवति। मुण्डं करोति मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। व्रतात् भोजने तन्निवृत्तौ च पयो व्रतयति। वृषलान्नं व्रतयति। वस्त्रात् समाच्छादने संवस्त्रयति। हलिं गृह्णाति हलयति। कलिं गृह्णाति कलयति। हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्यम्। अजहलत्। अचकलत्। कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति वितूस्तयति केशान्। विशदीकरोति इत्यर्थः।

न्यासः

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्। , ३।१।२१

"प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (धा।पा।ग।सू।१८६) इत्यनेन मुण्डादिभ्यः सिद्धो णिच्। अयञ्च तस्यैव प्रपञ्चः। यद्यपि तस्य तत्करोतीत्यादिः प्रपञ्च उक्तः, तथापीह मन्दबुद्धीनामनुग्रहाय पुनरुच्यते। "तन्निवृत्तौ वा" इति। भोजननिवृत्तौ। "पयो व्रतयति" इत। पयो भुङ्क्त इत्यर्थः। "वृषलान्नं व्रतयति" इति वृवलान्नं न भुङ्क्त इत्यर्थः। "हलिं गृह्णाति हलयति, कलिं गृह्णाति कलयति" इति। ननु चेह हलकलशब्दयोः एतेनैतद्दर्शयति-- सूत्रेऽपि हलिकल्योरेव ग्रहणम्, तयोस्त्वत्त्वनिपातनं कृतम्, "सन्वल्लघुनि" ७।४।९३ इत्यादिना सन्वद्भावो मा भूदिति। अतो युक्तं हलिकल्योग्र्रहणम्। तथा हि-- नात्र णिज् दुर्लभः, गणसुत्रेणैव सिद्धत्वात्। केवलं प्रपञ्चार्थमिदमुच्यते। स च प्रपञ्चो हलिकल्योरपि ग्रहण उपपद्यत एव। अयन्तु विशेषः-- अकारान्तयोग्र्रहणे सतीकारान्ताभ्यामपि गणसूत्रेणैव णिच् प्राप्नोति, तत्र कृते सतीष्ठवद्भावेन टिलोपः प्राप्नोति, "अचो ञ्णिति" ७।२।११५ इति वृद्धिश्च,उभयोरपि तयोरनित्यत्वम्। तथा हि, टिलोपस्य सत्यपि कृताकृतप्रसङ्गित्वे शब्दान्तरप्राप्त्याऽनित्यत्वम्। तथा हि, कृतायां वृद्धावैकारस्य प्राप्नोति, अकृताय#आन्त्विकारस्य; वृद्धेस्तु टिलोपे सत्यप्राप्त्याऽनित्यम्। अप्राप्तिस्त्वनजन्तत्वात्। उभयोरनित्ययोः परत्वाद्()वृद्धिः, तस्यां कृतायां टिलोपः, तत्राप्यग्लोप्यङ्गं न भवति। तथा च सति "सन्वल्लघुनि" ७।४।९३ इति सन्वद्भावेऽभ्यासस्येत्वे "दीर्घो लघोः" ७।१।९४ इति दीर्घत्वे च अचीकलत्, अजीहलदित्यनिष्टं रूपं प्रसज्येत। हलिकलिशब्दयोस्तु कृतात्त्वयोग्र्रहणे सति यद्यपि परत्वाद्()वृद्धिर्भवति, तथापि सत्यामपि तस्यामगेव लुप्यत इत्यग्लोप्यङ्गं भवति। ततश्च सन्वद्भावात् अचकलत्, अजहलदितीष्टं रूपं सिध्यति। तत्र ययोग्र्रहणे सतीष्टं सिध्यति तयोरेव ग्रहणम्, न तु ययोग्र्रहणेऽनिष्टं प्राप्नोति। नह्यनिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता॥

बाल-मनोरमा

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ४०२, ३।१।२१

मुण्डमिश्र। कृत्रर्थे इति। शेषपूरणमिदम्, "शब्दवैरे"त्तः करणे इत्यनुवृत्तेरिति भावः। व्रताद्भोजनेति वार्तिकम्। पयः शूद्रान्नं वा व्रतयतीति। पयो भुङ्क्ते, शूद्रान्नं वर्जयतीत्यर्थः। वरुआआत्समाच्छादने -- इत्यपि वार्तिकम्। भाष्ये तु न दृश्यते। संवरुआयतीति। वरुओण सम्यगाच्छादयतीत्यर्थः॥ वरुआं परिधत्ते इति वा। हल्यादिभ्यो घणे-- इति वार्तिकम्। भाष्ये तु न दृश्यते। हलिकल्योरिति। हलिकली इदन्तौ। हलकलशब्दावदन्तौ, अकारे इष्ठवत्त्वेन टेर्लोपे हलि कलि इति ण्यन्ताब्यां लडादीति भावः। महद्धलं हलिरिति। अत्र वृद्धप्रयोगोऽन्वेषणीयः। अचकलदित्यत्र सन्वत्त्वाऽप्रवृत्तये

अग्लोपित्वाय तयोरदन्तत्वमिति वाच्यम्, इकारलोपेऽप्यग्लोपित्वसिद्धेरित्यत आह-- परत्वादिति। इकारस्य णौ इष्ठवत्त्वे टिलोपात्प्रागेव परत्वात् "अचो ञ्णिती"ति वृद्धौ कृतायामैकारस्य इष्ठवत्त्वाट्टिलोपेऽग्लोपित्वं न स्यात्। इकारयोरत्त्वे तु अकारस्य टिलोपात् प्राक् परत्वाद्वृद्धौ सत्यामप्याकार एव इष्ठवत्त्वाल्लुप्यते इत्यर्थः। अत इति। अग्लोपित्वात्सन्वत्त्वम्, "दीर्घो लघो"रिति दीर्घश्च नेत्यर्थः। कृतं गृह्णातीति। उपकारं स्वीकरोतीत्यर्थः। पठितुं य#उक्ता इति। लाघवादेकसूत्रत्वं युक्तमित्यर्थः। केषांचिदिति। मुण्डादीनामित्यर्थः। सापेक्षेभ्योऽपीति। अन्यथा णिजन्तस्याऽस्य सनाद्यन्तवृत्तित्वाद्विशेषणसापेक्षत्वे मुण्डादिभ्यो णिज्न भवेत्, सविशेषमानां वृत्तिनिषेधात्। इह मुण्डादीनां पुनग्र्रहणे तु तत्सामथ्र्यात् सापेक्षेभ्योऽपि मुण्डादिभ्यो णिच् सिध्यतीत्यर्थः। स्पष्टं चेदं "सुप आत्मनः" इत्यत्र भाष्यकैयटयोः। मुण्डयति माणवकमिति। अत्र माणवकं मुण्डं करोतीत्यर्थ मुण्डशब्दस्य माणवकसापेक्षत्वेऽपि णिच् सिध्यति। अन्यथा यदा प्रकरणादिना माणवकादिविशेषो ज्ञायते तदैव मुण्डयतीति णिच् स्यादिति भावः। "सुप आत्मनः" इत्यत्र भाष्यकैयटयोः। मुण्()डयति माणवकमिति। अत्र माणवकं मुण्डं करोतीत्यर्थे मुण्डशब्दस्य माणवकसापेक्षत्वेऽपि णिच् सिध्यति। अन्यथा यदा प्रकरणादिना माणवकादिविशेषो ज्ञायते तदैव मुण्डयतीति णिच् स्यादिति भावः। "सुप आत्मनः इति सूत्रभाष्ये तु "मुण्डयति माणवक"मित्यत्र गमकत्वाण्णिच्, "महान्तं पुत्रमिच्छती"त्यादौ त्वगमकत्वान्न क्यजित्युक्तम्। तदा प्रपञ्चार्थमेव मुण्डादिग्रहणमिति शब्देन्दुशेखरे स्थितम्। श्लक्ष्णयति वरुआमिति। निर्मलं करोतीत्यर्थः। लवणयति व्यञ्जनमिति। लवणयुक्तं करोतीत्यर्थः। हलिकल्योरिति। एवं च ताभ्यां सापेक्षभ्यां न णिच्, तद्ग्रहणस्य अदन्तत्वनिपातनेन चरितार्थत्वादिति भावः। ननु सत्यशब्दा"त्तत्करोती" त्यादिनैव णिच् सिद्धेः "सत्यापे"ति सूत्रे सत्यग्रहणं व्यर्थमित्यत आह- सत्यस्यापुगर्थमिति। केषांचिदिति। पाशादीनामित्यर्थः। सत्यापयतीति। आपुग्विधिसामथ्र्यान्न टिलोपः। पाशं विमुञ्चतीत्यादौ "प्रातिपदिकाद्धात्वर्थे" इति णिच्। अभिषिषेमयिषतीति। अभिषेणि इति ण्यन्तात्सनि रूपम्। ननु त्वचं गृह्णाति त्वचयतीति कथम्?। त्वच्छब्दाच्चकाराण्णिचि टिलोपे त्वयतीत्यापत्तेरित्यत आह-- त्वचेति। "त्वच संवरणे" इत्यस्मात् "पुंसि संज्ञायां घः प्रायेणे"ति घप्रत्ययय इत्यर्थः। पुंवद्भावादय इति।आदिना रभावटिलोपादिग्रहणम्। एतयतीति। "भस्याऽढे" इति पुंवत्त्वस्य इष्ठनि प्रवृत्तेर्णावपि तस्याऽतिदेशात् "वर्णादनुदात्तादिति स्त्रीप्रत्ययस्य, तत्संनियोगशिष्टनत्वस्याऽपि निवृत्तौ एतयतीति सिध्यतीत्यस्वरसात्पुंवद्भावे उदाहरणान्तरमाह--- दरदमिति। दरदिति कश्चिद्राजा, तस्यापत्यं दारदः। "द्व्यञ्()मगधे"त्यण्। स्त्र्यपत्ये तु दरदोऽपत्यं स्त्री दरत्। "अतश्चे"त्यणो लुक्। तामाचष्टे इत्यर्थे दरच्छब्दाण्णौ इष्टवत्त्वात्?पुंवत्त्वेन स्त्रियामित्यनुवृत्तौ "अतश्चे"ति स्त्रियां विहितस्य अण्प्रत्ययलुको निवृत्तौ दारदशब्दे टेर्लोपे दादयतीति रूपं सिध्यति। पुंवद्भावाऽभावे तु दरच्छब्दस्य टिलोपे सति दरयतीति स्यादिति भावः। टिलोपस्य अजादेशत्वेन स्थानिवत्त्वान्नोपधावृद्धि। "पृथुं मृदुं भृशं चैव, कृशं च दृढमेव च। परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत्"। इति। क्रमेणोदाहरति--पृथुमिति। "आचष्टे" इति शेषः। प्रथयति। तत्र प्रक्रियां दर्शयति-- वृद्धौ सत्यामिति। पृथु इ इति स्थिते परत्वाद्वृद्धौ कृतायां टिलोपः। अथवा कृतायामकृतायां च वृद्धौ प्रवृत्त्या नित्यत्वाद्वृद्धेः प्राक्()टिलोपः। उभयथापि "र ऋतः इति रभावे प्रथयतीति रूपमिति भावः। वस्तुतस्त्वकृतायां वृद्धौ उकारस्य लोपः, कृतायां तु औकारस्य लोपः। तथा च "शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः" इति टिलोपोऽनित्यः। ततश्च परत्वाट्टिलोपात् प्राग्वृद्धिरेवेति "मुण्डमिश्रे"ति सूत्रे भाष्ये स्थितम्। "वृद्धौ सत्यां पूर्वं वा टिलोप" इति मूलं तु कृताऽकृतप्रसङ्गित्वाट्टिलोपस्य नित्यत्वमभिप्रेत्येति बोध्यम्। अपिप्रथदिति। वृद्धौ सत्यां टिलोप#ए अग्लोपित्वाऽभावात् सन्वत्त्वे "सन्यतः" इति इत्त्वमिति भावः। अपप्रथदिति। वृद्धेः पूर्वं टिलोपेन उकारस्य निवृत्तावग्लोपित्वात्सन्वत्त्वान्वत्त्वाऽभावे रूपम्। अबभ्रशदित्यादौ वृद्धेः पूर्वं पश्चाद्वा टिलोपेऽपि अग्लोपित्वान्न सन्वत्त्वमिति भावः। औजिढदिति। वहधातोः क्तिनि ढत्वधत्वष्टुत्वढलोपेषु ऊढिः। तस्माण्णौ टिलोपे ऊढि इतिण्यन्ताल्लुहि चङि आटि वृद्धौ औढि अ त् इति स्थिते प्रक्रियां दर्शयति- ढत्वादीनामिति। ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् "अजादेर्द्वितीयस्ये"ति ह्()तशब्दस्य द्वित्वमित्यर्थः। इत्युक्तमिति।

"लुग्विकरणप्रक्रियायां ऊर्णुञ्धाता"विति शेषः। एवं च ह्? तिशब्दस्य द्वित्वे हलादिशेषे "कुहोश्चु"रिति हस्य चुत्वमिति भावः। ढिशब्दस्येति। "पूर्वत्रासिद्धीयमद्वित्वे" इत्स्य क्वचिदनित्यत्वेऽप्यत्र तदप्रवृत्तौ मानाऽभावादिति भावः। ऊढमाख्यदिति। वहधातोः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपेषु ऊढशब्दाण्ण्यन्ताल्लुङि चङि ढत्वादीनामसिद्धत्वात् "ह्? ते"त्यस्य द्वित्वे हलादिशेषे अभ्यासस्य चुत्वे रूपम्। औडढदिति। "पूर्वत्रासिद्धीयमद्वित्वे" इति ढत्वादीनामसिद्धत्वाऽभावपक्षे ढशब्दस्य द्वित्वे रूपम्। नन्विह परत्वाट्टिलोपे सति णिच्सहितस्य ह्? तीति ढीत्यस्य वा द्वित्वे कृते अभ्यासे इकार एव श्रूयेत नत्वकार इत्यत आह-- ओः पुयणित्यादि। स्वशब्दाण्णिचि टिलोपमाशङ्क्याह-- प्रकृत्यैकाजिति। प्रकृतिभावाट्टिलोपाऽभावे अकारस्य वृद्धौ आकारे पुगागमः। तदाह-- वृद्धिपुकाविति। त्वापयति मापयतीत्यत्र प्रक्रियां दर्शयति-- मपर्यन्तस्येति। युष्मदस्मद्भ्यां णौ "प्रत्ययोत्तरपदयोश्चे"ति मपर्यन्तसय् त्वमौ। त्व अद् इ, म अद् इ, इति स्थिते आह-- पररूपादिति। कृते अकृते च पररूपे टिलोपस्य प्रवृत्तेर्नित्यत्वं बोध्यम्। त्व इ म इ इति स्तिते आह-- वृद्धिरिति। अकारस्य आकारः। टिलोपस्य स्थानिवत्तवं तु न शङ्क्यम्, अजादेशत्वाऽभावात्। पुगिति। "अर्ती"त्यनेनेति भावः। तदेवं प्राचीनमतमुपन्यस्यस्वमतमाह-- त्वादयतीत्यादिना। तदेवोपपादयति --अन्तरङ्गत्वादिति। त्व अद् इ, म अद् इ, इति स्थिते नित्यमपि टिलोपं बाधित्वा अन्तरङ्गत्वात्पररूपे कृते "प्रकृत्यैका"जिति प्रकृतिभावे टिलोपस्याऽप्रवृत्तौ उपधावृद्धिरिति भावः। ननु इष्ठेमेयस्सु किमुदाहरणमिति प्रश्ने प्रेयान् प्रेमा प्रेष्ट इत्युदाहरणानि प्रदश्र्य, "नैतदस्ति प्रयोजनं "प्रस्थस्फे"ति विहित प्रादीनामाभीयत्वेनाऽसिद्धतया तत्र टिलोपाऽप्रसक्ते" रित्युक्त्वा, श्रेयान् श्रेष्ठ इत्यत्र "प्रशस्यस्य श्रः" इति श्रादेशस्य पाञ्चमिकतया आभीयत्वाभावेनाऽसिद्धत्वाऽभावाट्टिलोपे प्राप्ते प्रकृतिभावविधि "रित्युदाहरणान्तरं प्रदश्र्य" "श्रादेशे अकारोच्चारणसामथ्र्याट्टिलोपो न भविष्यती"त्युक्त्वा, रुआग्वितमः रुआजिष्ठ इत्यत्र "विन्मतोर्लु"गिति लुकि टिलोपनिवृत्त्यर्थं प्रकृतिभावविधानमित्युक्त्वा, प्राप्त एव टिलोपे आरभ्यमाणस्य लुकस्तदपवादतया लुका टिलोपस्य बाधो भविष्यती"ति "प्रकृत्यैका" जित्यसय् भाष्ये प्रत्याख्यातत्वात्त्वादयति मादयतीत्यत्र प्रकृतिभावोपन्यासो न युज्यते इत्याशङ्क्य निराकरोति -- न चेत्यादि। कुत इत्यत आह-- भाष्यस्येति। उदाह्मतभाष्यस्य हि प्रेयान् प्रेष्ठ इत्यादीनां प्रकृतिभावं विनाऽपि साधने तात्पर्यं, न तु प्रकृततिभावप्रत्याख्यानमभिमतम्, स्वमाचष्टे स्वपायतीत्यादौ तदावश्यकत्वात्। अत एव "प्रकृत्यैकाजिष्ठेमेयस्सु चेन्नैकाच उच्चारणसामथ्र्यादवचनात्पर्कृतिभावः" इति वार्तिकव्याख्यावसरे "अन्तरेणापि वचनं प्रकृतिभावो भविष्यती"ति भाष्ये उक्तम्। अन्यथा "अन्तरेणैव वचन" मित्युच्येतेत्यास्तां तावत्। "प्रत्ययोत्तरपदयोश्चे"त्यत्र "एकवचने" इत्यनुवृत्तम्। तच्च यौगिकमाश्रीयते। तेन एकत्वविशिष्टवाचिनोर्युष्मदस्मदोरिति लभ्यते इति मत्वाऽऽह युवामावां वेति। न च द्वयोरुक्तौ युवावादेशौ शङ्क्यौ, विभक्तेर्लुका लुप्तत्वात्। न च लुकः प्रागेव युवावौ किं न स्यातामिति वाच्यम्। "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते" इत्युक्तेरिति भावः। शावयतीति। ()आआनमाचष्टे इत्यर्थः। ()आन्शब्दाण्णौ ()आन् इ इति स्थिते आह-- नस्तद्धिते इति। "प्रकृत्यैका"जिति प्रकृतिभावमाशङ्क्याह-- प्रकृतिभावस्तु नेति। कुत इत्यत आह-- येनेति। "टे"रिति टिलोपे प्राप्ते सत्येव "प्रकृत्यैका"जित्यारभ्यते, "नस्तद्धिते" इत्यस्य रुआजिष्ठ इत्यादावप्राप्तावपि प्रकृतिभाव आरभ्यते इति भावः। भत्वादिति। इष्ठवत्त्वेन भत्वात् "()आयुवे"त संप्रसारणमित्यर्थः। तथा च ()आन् इ इति स्थिते टिलोपे सति तस्याभीयत्वेनाऽसिद्धत्वादन्नन्तत्वाद्वस्य संप्रसारणे पूर्वरूपे उकारस्य वृद्धावावादेशः। अन्येत्विति। इष्ठनि दृष्टस्यैव इष्ठवदित्यतिदेशः। टेरित्येव टिलोप इष्ठनि दृष्टो, न तु" "नस्तद्धिते" इति। अतो नाऽस्यातिदेश इत्यर्थः। नन्वतिशयेन ब्राह्मआ ब्राहिऋष्ठ इत्यत्र नस्तद्धिते इति टिलोपो दृष्ट इत्यत आह-- ब्राहिऋष्ठ इत्यादाविति। तेनेति। "नस्तद्धिते" इत्यस्याऽप्रवर्तनेनेत्यर्थः। ततश्च प्रकृतिभावात् "टेः" इति लोपस्याऽभावे संप्रसारणे शुनयतीति रूपमित्यर्थः। आहुरित्यस्वरसोद्भावनम्। तद्बीजं तु ब्राह्मवच्छब्दादिष्ठानि टेरिति टिलोपापवादे "विन्मतोर्लु"गिति मतुपो लुकि "नस्तद्धिते" इति टिलोपो दृष्ट एव। ततश्च "इष्ठनि तस्याऽदृष्टत्वा" दित्यत्युक्तम्। किं च "ब्राहिऋष्ठ इत्यादौ

परत्वाट्टेरित्यस्य प्रवृत्ति"रित्ययुक्तम्, केवलस्य ब्राह्मन्शब्दस् वेदादिवचनस्य गुणवचनत्वाऽभावेन इष्ठनो दुर्लभत्वात्, "अजादी गुणवचनादेवे"त्युक्तेः। मत्वन्तादिष्ठनि तु मतोर्लुकि तेन "टे"रित्यस्य प्रवृत्तिबाधेन लुगुत्तरं तदप्रवृत्त्या परत्वादित्यप्यसङ्गतिरिति शब्देन्दुशेखरे स्थितम्। विद्वयतीति। विद्वस् शब्दाण्णौ टिलोपः। ननु इष्ठवत्त्वाद्भत्वे "वसोः संप्रसारण्मित्याशङ्क्याह-- अङ्गवृत्तेति। "अङ्गवृत्ते पुनर्वृत्तावविधि"रिति परिभाषयेत्यर्थः। अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति तदर्थः। वस्तुतस्तु विद्वयतीत्यत्र "टे"रित्यसो लोपे वस्वन्तत्वाऽभावात्संप्रसारणाऽप्रसक्तेरङ्गवृत्तपरिभाषोपन्यासो वृथेत्यस्वरसं सूचयति-- इत्येके इति। संप्रासरणे इति। विद्वच्छब्दाम्णौ इष्ठवत्त्वेन टिलोपे कृते वकारस्य संप्रसारणे पूर्वरूपे उकारस्य वृद्धौ आवादेशे विदावयतीत्यन्ये मन्य्नते इत्यर्थः। अत्रापि पूर्ववदेवाऽस्वरसः, टिलोपे सति वस्वन्तत्वाऽभावात्। नित्यत्वादिति। टिलोपे कृते अकृते च प्रवृत्तेः संप्रसारणं नित्यम्। टिलोपस्तु कृते संप्रसारणे पूर्वरूपे च कृते उसो भवति, अकृते तु अस इत्यनित्यः, "शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः" इति न्यायादिति भावः। ननु कृतेऽपि संप्रासरणे पररूपात्प्राक् अस एव टिलोप इति तस्यनित्यत्वमित्यत आह-- अन्तरङ्गत्वात्पूर्वरूपं टिलोप इति। संप्रसारणे पूर्वरूपे च कृते उसो लोपेऽपि वस्वन्तत्वस्य विनङ्क्ष्यत्त्वान्न संप्रसाणमित्यस्वरसं सूचयति-- इत्यपरे इति। एवं च विद्वयतीति प्रथमपक्ष एव स्थितः। तत्राङ्गवृत्तपरिभाषोपन्यास एव वृथेति स्थितम्। उदीचयतीति। उत्पूर्वकादञ्चेः ऋत्विगित्यादिना क्विनि "अनिदिता"मिति नलोपे उदच्शब्दः। तस्माण्णौ इष्ठवत्त्वेन भत्वादच इत्यकारलोपं बाधित्वा "उद ई"दिति ईत्वे "उदीची"ति ण्यन्ताल्लडादय इति भावः। उदैचिदिति। लुङि "द्विर्वचनेऽची"ति णिलोपनिषेधाच्चिशब्दस्य द्वित्वम्। "उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते" इत्युक्तेरुद उपर्याडिति भावः। एवं च उदः पृथक्करणेन "प्रकृत्यैकाजिति प्रकृतिभावान्न टिलोपः। प्रतीचयतीति। "अच" इत्यल्लोपे "चौ" इति पूर्वस्य दीर्घः। प्रत्यचिचदिति। इह अच इत्यल्लोपे चिशब्दात्प्रागटि तकारादिकारस्य यण् अच इत्यकारलोपस्याभीयत्वेऽपि असमानाश्रयत्वान्नाऽसिद्धत्वम्, लोपस्य णिनिमित्तत्वात्, आटस्तु लुङ्()निमित्तत्वात्। इकोऽसवर्णे इतीति। "न समासे" इति तु न, पृथक्करणेन समासनिवृत्तेः। समीचयतीति। "समःसमि" इति सम्यादेशः। "अच" इति लोपे "चा" विति दीर्घः। सम्यचिचदिति। सम्यादेशस्य स्थानिवत्त्वेनोपसर्गत्वात् पृथक्करणम्, पृथक्करणेन उत्तरपदपरत्वाऽभावेऽप्य्नतरङ्गत्वाज्जातः सम्यादेशो न निवर्तते। तिराययतीति। "तिर"सित्यव्ययम्। तत्पूर्वादञ्चेः क्विनि नलोपे तिरस् अच् इत्यस्माण्णौ टिलोपेन धातोर्निवृत्तौ "तिरसस्तिर्यलोपे" इति तिरिभावे इकारस्य वृद्धावायादेशे "तिरायी" त्यस्माण्ण्य्नताल्लडादीति भावः। न च तिरसः पृथक्करणे सति धातोः "प्रकृत्यैका"जिति प्रकृतिभावात्कथं टिलोप इति वाच्यं, तिरसित्यस्य कदाप्यनुपसर्गतया उपसर्गसमानाकारत्वाऽभावेन पृथक्करणाऽभावात्। नन्वेवं सति अञ्चतेष्टिलोपेनापहारे सति अञ्चतपरकत्वविरहात्कथमिह तिरसस्तिरिभाव इत्यत आह-- अञ्चेष्टिलोपेनेति। बहिरङ्गत्वेनेति। बहिर्भूतणिनिमित्तकत्वादिति भावः। न च तिरसः पृथक्करणे सति धातोः "प्रकृत्यैका"जिति प्रकृतिभावात्कथं टिलोप इति वाच्यं, तिरसित्यस्य कदाप्यनुपसर्गतया उपसर्गसमानाकारत्वाऽभावेन पृथक्करणाऽभावात्। नन्वेवं सति अञ्चतेष्टिलोपेनापहारे सति अञ्चतिपरकत्वविरहात्कथमिह सति अञ्चतिपरकत्वविरहात्कथमिह तिरसस्तिरिभाव इत्यत आह-- अञ्चेष्टलोपेनेति। बहिरङ्गत्वेनेति। बहिर्भूतणिनिमित्तकत्वादिति भावः। नन्वस्तु तिरसस्तिरिः, तत्र रेफादकारस्य टेरिति लोपः स्यादित्यत आह-- असिद्धवदवेति। प्रथमटिलोपोऽसिद्ध इत्यन्वयः। तिरस् अच् इ इति स्थिते प्रथमप्रवृत्तः अच् इत्येवंरूपटेर्लोपःतिरे टिलोपे कर्तव्ये आभीयत्वादसिद्ध इत्यर्थः। ननु प्रथमटिलोपस्य कथं तिरेष्टिलोपे कर्तव्ये असिद्धत्वं, टिलोपशास्त्रस्य एकत्वादित्यत आह-- चिणो लुङ्()न्यायेनेति। पचधातोर्भावकर्मणोर्लुङस्तङि प्रथमपुरुषैकवचने तशब्दे परे "चिण् भावकर्मणो"रिति च्लेश्चिणि उपधावृद्धौ अटि अपाचि त इत्यस्मात् "तिङश्चे"ति तरपि तदन्तात् "किमेत्तिङव्ययघादा"मित्याम्प्रत्यये अपाचिततरामिति स्थिते "चिणो लु"गिति प्रथमस्य तशब्दस्य लुकि कृते

पुनस्तरप्प्रत्ययतशब्दस्य लुङ् न भवति, स्थानिभेदेन लुको भेदमाश्रित्य प्रथमलुकोऽसिद्धत्वेन व्यवधानादिति स्थितिः। एवमिहापीत्यर्थः। अत इति। प्रतमटिलोपस्याऽसिद्ध्त्वादित्यर्थः। अङ्गवृत्तपरिभाषया वेति। "पुनष्टिलोपे ने"त्यनुषज्यते। न च तिरेरिकारस्याङ्गवृत्तपरिभाषया "टे"रिति लोपाऽभावे तिरायय्तीति वृद्धिरपि तस्य न स्यादिति वाच्यम्, अङ्गवृत्तपरिभाषाया अनित्यत्वेन वृद्धिविषये तदप्रवृत्तेः। अग्लोपित्वादिति। तिरस् अच् इ इति स्थिते "टे"रित्यचो धातोर्लोपे सति तिरि इत्यस्य अग्लोपित्वम्चो धातोर्लोपे अकारस्यापि लोपसत्त्वादित्यभिमानः। सध्राययतीति। सहस्य सध्रिः। तिराययतीतिवद्रूपम्। सहेत्यस्य उपसर्गत्वाऽभावान्न पृथक्करणम्। तदाह-- अससध्रायदिति। विष्वद्र()ञ्चमिति। विष्वक् अच् इ इति स्थिते "विष्वग्देवयोश्चे"ति विष्वक्शब्दटेरद्र()आदेशे टेरित्यचो धातोर्लोपे विष्वद्रि इ इति स्थिते वृद्धौ आयादेशे विष्वद्रायि इति ण्यन्ताल्लटि विष्वद्राययतीति रूपम्। देवद्र()ञ्चमिति। देवशब्दस्य टेरद्र()आदेशे देवद्राययतीति सिद्धवत्कृत्य लुङ्याह-- अदिदेवद्रायदिति। अतितिरायदितिवद्रूपम्। आददद्रायदिति। सर्वनामत्वाददस्शब्दस्य टेरद्र()आदेशः। "त्यदाद्यत्वे सत्येव उत्वमत्वे" इति पक्षे इदम्, अदस्शब्दाद्विभक्तेर्लुका लुप्तत्वेन विभक्तिपरकत्वाऽभावेन त्यदाद्यत्वाऽप्रवृत्तेः। "त्यदाद्यत्वाऽविषयत्वेऽपि उत्त्वमत्त्वे स्त" इति मतमाश्रित्य आह-- अमुमुयञ्चमिति। अदस् अच् इ इति स्थिते टेरद्र()आदेशे अच् इत्यस्य टेर्लोपे अदद्रि इ इति स्थिते "अदसोऽद्रेः पृथङ्मुत्व"मिति मते दकाराऽकारयोर्दकाररेफयोश्च मत्वेत्त्वयोःकृतयोः अमुमु इ इति स्तिते प्रथमस्य इकारस्य णिचि वृद्धौ आयादेशे अमुमु आयीति ण्यन्ताल्लडादीति भावः। मुत्वस्याऽसिद्धत्वान्न यण्। अदमुआययतीति। "केचिदन्त्यसदेशस्ये"ति मते इदम्। भुवमिति। भुमाचष्टे इत्यर्थ भूशब्दाण्णिच्। वृद्ध्यावादेशौ, भावीत्यस्माल्लडादीति भावः। अबीभवदिति। " ओः पुयण्जी"ति इत्त्वम्। अबुभ्रवदिति। अवर्णपरकपवर्गादिपरत्वाऽभावात् "ओः पुयण्जी"ति न। स्व()आमिति। सुशोभनः अ()आ इति विग्रहः। स्वाशश्()वदिति। उपसर्गसमानाकारस्य पृथक्करणाद()आशब्दस्य "अजादेर्द्वितीयस्ये"ति द्वित्वमाडागमश्च। स्वरिति। स्वरित्यस्माण्णिचि "अव्ययानां भमात्रे" इति टिलोपः, इष्ठवत्त्वेन भत्वात्। "प्रकृत्यैकाजिति प्रकृतिभावस्तु येन नाप्राप्तिन्यायेन "टे"रित्यस्यैव बाधकः। असस्वदिति। द्वित्वे कार्ये णावजादेशस्य निषेधात् टिलोपं बाधित्वा स्वर्()शब्दस्य द्वित्वम्, "अ" रित्यस्य लोपे अकारस्यापि लोपसत्त्वेन अजादेशत्वादिति भावः। असिस्वदिति। अर्लोपस्य अजादेशत्वं नेति मते द्वित्वे कार्ये णौ टिलोपस्य निषेधाऽभावाट्टिलोपे कृते णिचा सह स्विशब्दस्य द्वित्वमिति भावः। बहूनिति। बहुशब्दाण्णिचि "णाविष्ठव"दित्यतिदेशात् "बहोर्लोपो भू च बहो"रिति बहोर्भूभावः। "इष्ठस्य यिट् चे"ति यिडागमस्तु न, "णाविष्ठव" दिति सप्तम्या इष्ठनि परे दृष्टस्यैव कार्यस्यातिदेशादिति भावः। बहयतीति। यिडभावे तत्संनियोगशिष्टस्य भूभावस्याप्यभावादिति भावः। रुआजयतीति। इष्ठवत्वात् "विन्मतो"रिति लुक्। नचाऽजादी गुणवचनादेवेति इष्ठन्प्रत्ययः रुआग्विन्()शब्दाद्दुर्लभ इति इष्ठवत्त्वमत्र कथमिति शङ्क्यं, "विन्मतो"रिति लुग्विधानेन रुआग्विन्()शब्दादिष्ठवत्त्वसिद्धरिति भावः। उपधावृद्धिमाशङ्क्याह-- संज्ञापूर्वकत्वान्न वृद्धिरिति। "णाविष्ठव"दित्येनातिदेशेन विनो लुकः सत्त्वादङ्गवृत्तपरिभाषया न वृद्धिरिति कैयटः। श्रीमतीमिति। श्रीमतीशब्दाण्णिचि "णाविष्ठव"दित्यतिदेशेन "भस्याऽढे" इति पुंवत्त्वे "विन्मतोः" इति मतो लुकि रेफादिकारस्य वृद्ध्यादेशयोः "श्रायी" त्यरमाल्लडादीति भावः। अशिश्रयदिति। णावच आदेशो नेति वृद्ध्यायादेशयोः प्रागेव श्रीशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायादेशयोः कृतयोरुपधाह्रस्वः इति माधवः। मतुपो लुकि अकारस्यापि लोपसत्त्वेन अग्लोपित्वान्नोपधाह्रस्व इत्यन्ये। पयस्विनीमिति। णिचि इष्ठवत्त्वाद्विन्मतोरिति मतुपो लुगिति भावः। पयसयतीत्यत्र इष्ठवत्त्वाट्टिलोपमाशङ्क्य आह-- इह टटिलोपो नेति।कुत इत्यत आह-- तदपवादस्येति। न च टिलोपं बाधित्वा मतुपो लुकि कृते पयसष्टेर्लोः कुतो न स्यादिति वाच्यं, "सत्यपि संभवे बाधन"मिति न्यायेन पयसष्टिलोपस्यापि मतुपो लुका बाधात्। स्थवयतीति। स्थूलशब्दाण्णिचि इष्ठवत्त्वात्स्थूलदूरेति स्थूलशब्दस्य यणादेर्लोपे #ऊकारस्य गुणे अवादेशे स्थवि इत्यस्माल्लडादीति भावः। गुणे ओकारस्याऽचो ञ्णितीति वृद्धिस्तु न शङ्क्या, अङ्गकार्ये कृते पुनरङ्गकार्यस्याऽप्रवृत्तेः। दवयतीति।पूर्ववद्यणादिलोपो गुणश्च।कथं तर्हीति। "स्थूलदूरे"ति यणादिलोपस्य

टिलोपाऽपवादत्वादिति भावः। दूरमततीति। "अत सातत्यगमने" इति धातोः "अन्येभ्योऽपि दृश्यते" इति क्विपि दूरादिति रूपम्। अय गतावित्यस्मात् क्विपि "लोपो व्यो"रिति यलोपे "ह्रस्वस्य पिती"ति तुकि दूरादित्येव रूपम्। तस्माण्णौ टिलोपे "दूरी"ति ण्यन्तात् शतृप्रत्यये शपि इकारस्य गुणे अयादेशे दूरयच्छब्दस्य दूरयतीति सप्तम्यन्तमिति भावः। तदाह--दूरातं कुर्वतीत्यर्थ इति। "कुर्वती"ति सप्तम्यन्तम्। यवयतीति। युवन्शब्दाण्णौ स्थूलदूरेति वनो यणादेर्लोपः। पूर्वस्य उकारस्य गुणे अवादेशः। यवि इत्यस्माल्लडादि। कनयतीति। युवन्शब्दस्य कनादेशपक्षे रूपम्। तदाह-- युवाल्पयोरिति। नेदयतीति। अन्तिकशब्दस्य णौ नेदादेशः, "अन्तिकबाढयोर्नेदसाधा"वित्युक्तेः। साधयतीति। बाढशब्दस्य णौ साधादेशः। इहेति। प्रशस्ययतीत्यत्र "प्रशस्यस्य श्रः" "ज्य चे"ति श्रज्यौ नत्यर्थः। कुत इत्यत आह-- उपसर्गस्येति। तत्पृथक्करणे सति विशिष्टस्य स्थानिनोऽभावान्नादेशाविति भावः। वृद्धं-- ज्यापयतीति। "वृद्धस्य चे"ति वृद्धशब्दस्य ज्यादेशे वृद्धौ पुगिति भावः। "प्रियस्थिरे"ति सूत्रक्रमेणोदाहरति-- प्रियं-- प्रापयतीति। प्रियशब्दस्य प्रादेशे वृद्धिः पुक्। स्थापयतीति। स्थिरशब्दस्य स्थादेशे वृद्धिपुकौ।वरयति वारयतीति। उरुशब्दस्य वर्। संज्ञापूर्वकविधेरनित्यत्वादुपधावृद्धिविकल्प इति माधवः। बंहयतीति। बहुलस्य बंहादेशः। गरयतीति। गुरोर्गुर्। वृद्धं वर्षयतीति। वृद्धस्य वर्षादेशः "वृद्धस्य चे"ति ज्यादेशेन विकल्प्यते। त्रपयतीति। तृप्रस्य त्रप् आदेशः। अदुपधः। संज्ञापूर्वकत्वान्न वृद्धिः। गरयतीत्यादिवत्। "त्रापयती"ति क्वचित्पाठः। द्राघयतीति। दीर्घस्य द्राघादेशः। वृन्दयतीति। बृन्दारकस्य बृन्दादेशः। इति नामधातुक्रिया।

अथ ण्यन्तप्रक्रिया।

तत्त्व-बोधिनी

मुण्डमिश्रश्लक्ष्णलवणव्रतवरुआहलकलकृततूस्तेभ्यो णिच् ३५१, ३।१।२१

कृञर्थ इति। क्वचित्क्रियासामान्ये ,प्राचुर्येण तु क्रियाविशेषे। व्रतादीति। पयो व्रतयति। अश्नातीत्यर्थः। शूद्रान्नं व्रतयति। वर्जयतीत्यर्थः। वरुआआदिति। समाच्छादने यो वरुआशब्दस्तस्मात्करोत्यर्थे णिजित्यर्थः। संवरुआयतीति। वरुआआच्छादनं करोतीत्यर्थः। अदन्तत्वमिति। अयमेव निपातो "वृद्धौ सत्यां टिलोप" इत्यत्र ज्ञापकः। यदि पूर्वं लोपो भवेत्तदाऽग्लोपकार्यसिद्धौ किमनेन निपातनेन?। तथा च अपपटदिति सिद्ध्यतीत्यादि चुरादिष्वेवोपपादितम्। कृतयतीति। उपकारं स्वीकरोतीत्यर्थः। पठितुं युक्ता इति। एकसूत्रकरणे लाघवमिति भावः। सापेक्षेभ्योऽपीति। विदानसामथ्र्यादिति भावः। अन्यत्र तु "रमणीयं पटुमाचष्टे" इत्येव न तु "पटयती"ति वृत्तिः। सापेक्षत्वमेव दर्शयति-- माणवकमित्यादिना। अयं भावः-- द्वितीयान्ताद्विधीयमानस्य णिचः पदविधित्वत्सापेक्षेभ्यो न भवेत्, किं तु यदा प्रकरणादिना माणवकस्येति ज्ञायते तदैव मुण्डयतीति वृत्तिः स्यान्न तु माणवकादिप्रयोगे। णिजन्तसय् सनाद्यन्तवृत्तित्वात्सविशेषणानां वृत्त्यभावाच्चेति। घ इति। "पुंसि संज्ञाया"मित्यनेन। पुंवद्भावादय इति। आदिशब्देन-- रभावटिलोपादयः। टिलोपेनैवैतयतीत्यादिरूपसिद्धौ प#उ#ंवद्भावग्रहणं दारदयतीति सिद्ध्यर्थमिति चुरादिष्वेवास्माभिरुक्तम्। दरदोऽपत्यं दारदः। "द्व्यञ्मगधे"त्यण्। तस्य रिउआयाम् "अतश्चे" इति लुकि दरद् तामाचष्टे दारदयति। इह पुंवद्भावाऽभावे टिलोपे सति दरयतीति स्यात्। प्रथयतीति। "र ऋतो हलादे"रिति रभावः। अपिप्रथदिति। वृद्धौ सत्यां टिलोपेनाग्लोपित्वात्सन्वद्भावे सति "सन्यतः" इतीत्वम्। वृद्धेः पूर्वं टिलोपे तु-- अप्रप्रथत्। औजढदिति। इह टिलोपे सति णिच्सहितस्य द्वित्वे पश्चादभ्यासेऽकारो दुर्लभ इत्यत आह-- ओः पुयण्जीत्यादि। त्वमाविति। "प्रत्ययोत्तरपदयोश्चे"त्यनेन। अन्तरङ्गत्वादिति। न च "वार्णादाङ्ग"मिति टिलोपस्यैव प्रवृत्तिरुचितेति वाच्यं, व्याश्रयत्वात्। भाष्यस्येति। वृत्तिकारैर्हि "प्रकृत्यैका"जिति सूत्रे प्रेयान् प्रेष्ठ इत्यादय उदाहृतः। ते च प्रस्थाद्यादेशविधायकस्य "प्रियस्थिरे" त्यादि शास्त्रस्य "असिद्धवदत्राभा"दित्यसिद्धवद्भावेन

प्रस्थादावसकारोच्चारणसामर्थ्याद्वा भाष्ये प्रकृतिभावं विनैव साधिताः। रुआग्वान् रुआजिष्ठ इत्यादावपि टिलोपो न भविष्यति, लोपापवादस्य विन्मतोर्लुकस्तत्र प्रवर्तनात्। एषैवाऽनेकाक्षु पयस्वान् पयसिष्ठः चम्पकरुआजिष्ठ इत्यादिष#उ गतिः, न चैतावता "प्रकृत्यैका"जिति सूत्रं प्रत्याख्यातमिति मन्तव्यम्। स्वापयतीत्यादौ तस्यावश्यकत्वादिति भावः। युवामावामिति। युष्मानस्मानिति विग्रहेऽपि युष्मयति अस्मयतीत्येव रूपम्। न च द्वयोरुक्तौ युवावौ भवत इति रूपे विशेषः शङ्क्यः, विभक्तिपरत्वाऽभावात्। न च प्रत्ययलक्षणं, लुका लुप्तत्वात्। न च प्रागेवादेशोऽस्त्विति वाच्यम्, "अन्तरङ्गानपि विधीन्बहिरङ्गो लुक् बाधते" इति न्यायात्। अकृतव्यूहपरिभाषाया जागरूकत्वाच्च। येन नाप्राप्तीति। यत्र यत्र "पर्कृत्यैका"मित्यस्य प्रवृत्तिस्तत्र टेरित्यस्य प्रवृत्तिर्न तु "नस्तद्धिते" इत्यस्य, "रुआजिष्ठ" इत्यादौ तस्याऽप्रवृत्तैरिति भावः। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे"ति न्यायेनेत्यन्ये। संप्रसारणमिति। न च टिलोपे सत्यन्नन्तत्वाऽभावात् "()आयुवमघोना"मिति कथमिहि संप्रसारमप्रवृत्तिरित शङ्क्यं, स्थानिवत्त्वादसिद्धवदत्रेत्यसिद्धत्वाद्वा टिलोपे।()प्यन्नन्तत्वलाभात्। अतद्धित इति हि तत्र पर्युदासो न तु प्रतिषेधः। तेन तद्धिते न विधिर्न निषेधः, किं तु तद्धितभिन्ने परे विधिः। तद्धितभिन्नत्वं तु णिचोऽस्त्येवेति न संप्रसारणप्रतिबन्धः, नापि दविष्ठ इत्यादाव#इष्ठनि ओर्गुणो दृष्ट इतीहापि वृ()धिं बाधित्वा गुणः स्यादिति वाच्यं, जातेऽपि गुणे पुनर्वृद्धौ रूपसिद्धेः। अथवा टिलोपंप्रसारणयोर्गुणं प्रति "असिद्धवदत्रे"त्यसिद्धत्वादिष्ठवद्भावन नास्ति गुणप्रसङ्गः। शुनयतीति। इष्ठवद्भावेन भत्वात्संप्रसारणम्। "प्रकृत्यैका"जिति प्रकृतिभावः। नित्यत्वादिति। शब्दान्तरप्राप्त्या तु टिलोपस्याऽनित्यत्वमिति भावः। उदीचयतीति। #उपसर्गं पृथक्कृत्याऽच्शब्दादेव णिजिति। प्रकृत्यैका"जितिप्रवृत्तेष्टिलोपो न। "उद ईत्" इतीत्वम्। "अनदिता"मिति क्विन्नमितो नलोपः। उदैचिचदिति। लुङि "द्विर्वचनेऽची"ति णिलोपस्य निषेधाच्चिशब्दस्य द्वित्वम्। प्रतीचयतीति। "अच" इत्यल्लोपे "चौ" इति पूर्वस्य दीर्घः। प्रत्यचिचदिति। इह धात्वकारस्याऽच इति लोपे चिशब्दात्प्रागटि पूर्वस्य यण्। न चास्तामासन्नित्यादिवदलोपस्याऽसिद्धात्वादाट् स्यादिति वाच्यं, व्याश्रयत्वात्। णिनिमित्तो हि लोपो, लुङ्निमित्तश्चाट्। आसन्नित्यादौ तु न तथेति वैषम्यम्। तिराययतीति। उपसर्गसमानाकारत्वाऽभावादिह तिरसः पृथक्करणं नास्ति, तेन "प्रकृत्यैका"जित्यप्रवृत्तेष्टिलोपः। तदाह-- अञ्चेरिति। चिणोलुङ्()नयायेनेति। यथाऽपाचितरामित्यत्र च#इणःपरसय् तशब्दस्य लुकि पुनस्तरप्रत्ययस्य लुङ् न भवति, प्रथमलुकोऽसिद्धत्वन व्यवधानात्, ततेत्यर्थः। पुनष्टिलोप नेति। तिर्यादेशस्येकारस्य लोपो नेत्यर्थः। अगल्पित्वादिति। अनग्लोपिनोऽप्यग्लोपित्वस्वीकारादिति भावः। देवनद्यञ्चमिति॥ ननु "आख्यानात्कृतस्तदाटचष्टे" इति कारकस्य पृथक्करणाद्देवानञ्चयतीति प्रसज्येत, बलिबन्धनमाचष्टे-- बलिं बन्धयतीतिवत्, इष्यते तु देवद्राययतीत्येव रूपम्। किंच कारकसय् पृथक्करणेऽदिदेवद्रायदित्याद्यपि न सिध्येत्। न च पुराणप्रसिद्धाख्यान एव कारकस्य पृथक्करणादिकमिति वाच्यं, राजानमागमयतीत्यत्राऽव्याप्तेरिति चेत्। अत्राहुः-- यत्राख्याने कृच्छ()यते तत्रैवेदं प्रवर्तते, कृल्लुगितिसं नियोगशिष्टविधानात्। किंच आख्यानग्रहणसामर्थ्यान्महाजनप्रवादविषयीभूतार्थविषयकमेव तत्, भाष्यादौ तादृशानामेवोदाह्मतत्वात्। यदि तु देवाञ्चनमाचष्टे इत्यादौ महाजनप्रसिद्धिरस्ति तदा देवानञ्चयतीति भवत्येवेति। अमुमुआयदिति। "पूर्वत्राऽसिद्धीयमद्विर्वचने" इत्यसिद्ध्तवनिषेधान्मुशब्दस्य द्वित्वम्। अबीभवदिति। "ओः पुयण्जी"त्यभ्यासोवर्णस्येत्वम्। "दीर्घो लघो"रिति दीर्घः। ननु परत्वात्प्रथमं दीर्घे कृते पश्चादित्वं स्यात्। न चैवं "दीर्घो लघो"रित्यस्य वैयर्थ्यमिति वाच्यम्, अजूहवदित्यादौ तस्य सावकाशत्वादिति चेत्। अत्राहुः-- - "विप्रतिषेधे पर"मित्यत्र परशब्दस्येष्टवाचित्वाल्लक्ष्यानुरोधेन दीर्घात्प्रागित्वमेव भवति, लक्ष्यभेदात्पुनरिकारस्य दीर्घो वा भवतीति। अबुभ्रवदिति। "इहाऽभ्यासात्परो यः पवर्गः स त्ववर्णपरो न, यस्त्ववर्णपरो यण्, नासावभ्यासात्पर, इत्यभ्यासोकारस्येत्वं न। गा-गावयति। स्व()आमिति। शोभनोऽ()आः स्व()आः। शोभनोऽ()आओ यस्येति बहुव्रीहिर्वा। स्वाश()आदिति। उपसर्गसमानाकारस्य पृथक्करणादजादेरिति द्वितीयस्य द्वितवाडागमस्च। स्वयतीति। "प्रकृत्यैका"जिति प्रकृतिभावस्तु

येन नाप्राप्तिन्यायाट्टेरित्यस्यैव बाधको न तु "अव्ययानां भमात्रे टिलोपः" इत्यस्येति भावः। असस्वदिति। "ओः पुयण्जी" ति ज्ञापकेन द्वित्वे कारेयऽजादेशस्य स्थानिवत्त्वान्निषेधाद्वा स्वरशब्दस्य द्वित्वमिति मतेनेदम्। अन [ग्लोपित्वाभ्युपगमेऽप्यज्झलादेशेऽरजादेशत्वव्यवहारो नास्तीति मते तु णिच्सहितस्यैव द्वित्वं। तदाह-- असिस्वदिति। भावयतीति। "बहोर्लोपो भू च बहोः" "इष्ठस्य यिट् चे" ति भूभावः। न चैवं यिडागमोऽपि णेरस्त्विति वाच्यं, णावित्युपमेये सप्तमीनिर्देशादिष्ठवदित्यत्र सप्तम्यन्ताद्वतिरित्यभ्युपगमात्। एवं चेष्ठनि परे पूर्वस्य यत्कार्यं तदेवातिदिश्यते न त्विष्ठनोऽपि कार्यमिति स्थितम्। बहयतीत्यन्य इति। यिडभावे तत्सन्नियोगशिष्टस्य भूभावस्याप्यभाव इति भावः। नन्वेवमन्यमतत्वेन किमर्थमिदमुपन्यस्तमिति चेत्। अत्राहुः-- प्राधान्यदिष्ठवदिति कार्यातिदेशो, न त्वयं शास्त्रातिदेशः। तथा चेष्ठनि दृष्टं भूभावं स एवातिदेशो विधत्त इति नात्र सन्नयोगशिष्टपिरभाषायाः प्रवृत्तिः। इत्थं च भावयीत्येव रूपं सम्यगिति। रुआजयतीति। इष्ठवद्भावेन "विन्मतो" रिति लुक्। ननु "अजादी गुणवचनादेवे" त्युक्तत्वादिष्ठन्प्रत्ययः रुआग्विन्शब्दाद्दुर्लभ इति इष्ठवद्भावोऽत्राऽयुक्त इति वाच्यम्, अस्म्ादेव लुग्वचनाज्ज्ञापकाद्विन्नन्तान्मतुबन्ताच्च अजादी भवत इत्यभ्युपगमात्। श्रीमतीमिति। मतुपो लुक्। श्राययति। अशिश्रयदिति। द्वित्वे णिनिमित्तगुणे सत्यायादेशः। एतेन "स संचरिष्णुर्भुवनान्तरेषु यां यदृच्छयाशिश्रयदाश्रयः श्रिया"मिति माघश्लेके" "अशिश्रय"दिति प्रचुरः पाठो व्याख्यातः, श्रीमतीमकरोदित्यर्थादिति मनोरमायां स्थितम्। अत्र केचित्-- सापेक्षाणां वृत्त्यभावान्मनोरमोक्तं यत्तदयुक्तम्। नहि कश्चिद्यं घटं करोति तमानयेत्यर्थे "यं घटयति तमानये"ति प्रयुङ्क्ते। अत एव "तत्करोती"त्यनेनैवसिद्धे मुण्डादिग्रहणं सापेक्षेभ्योऽपि णिजर्थ"मिति पूर्वोक्तं सङ्गच्छते। यद्यन्यत्रापि सापेक्षेभ्यो णिच् स्यात्तर्हि तन्न सङ्गच्छेत। न चाऽत्र सापेक्षत्वं नेतिविवदितव्यम्, यां दिशं श्रीमतीमकरोदिति स्वयमेव व्याख्याततत्वात्। नापि सविशेषणानं वृत्यभावेऽपि विशेष्ययोगे स्यादेव वृत्तिरिति नात्रानुपपत्तिः, श्रीमतीमित्यर्थं प्रति दिशो विशेष्यत्वादिति वाच्यम्, विशेष्ये (हि) बहिर्भूते विशेषणानां वृत्तिर्नाङ्गीक्रियते। न हि कश्चित् श्रीमतो राज्ञ इदमित्यर्थे राज्ञः श्रैमतमिति वृत्तिमभ्युपैति। किं च माघश्लोके अशिश्रियदित्येव पाठो बहुषु पुस्तकेषु दृश्यते, न त्वशिश्रयदित्यलं शुद्धे ग्रन्थसमर्थनाऽभिनिवेशेनेत्याहुः। पयसयतीति। इह विन्मतोर्लुकि अग्लोपात्सन्वदित्त्वादिकं च न। अनग्लोपेऽपि सन्वद्भावाऽभावात्। "णौ चङी" ति सूत्रे अत्रराजदिति भाष्यमिह प्रमाणम्। लुङि-- अपपयसत्। एवं रुआग्विणमाख्यत् असरुआजदित्यत्रापि सन्वदित्वं न। गोमन्तं-- गवयति। लुङि अजुगवत्। इहाऽग्लोपात् "दीर्घो लघो"रिति दीर्घ#ओ न। गां रुआजं पय इति विग्रहे तु-- अजूगवत्। असिरुआजत्। [पययति] अपपयत्। टेर्लोपस्य बहिरङ्गत्वेन असिद्धत्वादिह वृद्धिर्न। अग्लोपित्त्वात्तु सन्वद्भावदीर्घौ न। तदपवादस्येति। येन नाप्राप्तिन्यायेन टिलोपापवादो लुक्। स्थवयतीति। "स्थूलदूरे"ति यणादिलोपो , गुणश्च। न च गुणस्य "अचोऽञ्णिती"ति वृद्धिः स्यादिति वाच्यम्, अङ्कार्ये कृते पुनरङ्गकार्यस्याऽप्रवृत्तेः। "प्रातिपदिकाद्धात्वर्थे" इति बहुलग्रहणाद्वा। लुङि--अतुस्थवत्। दवयति। यवयतीत्यादि। इहापि पूर्ववद्वृद्ध्यभावः। लुङि-- अदूदवत्। अयूयवत्। अचीकनत्। नेदयतीति। "अन्तिकबाढ()ओर्नेदसाधौ"। टिलोपः। लुङिः अनिनेदत्। अससाधत्। प्रशसय् --प्राशशस्यत्। पृथक्कृतेरिति। तेन विशिष्टस्य स्थानिनोऽभावान्नादेशविमौ भवत इत्यर्थः। ज्यापयतीति। "वृद्धस्य चे"ति ज्यादेशः। स च "प्रयस्थिरे" ति वर्षादेशेन सह विकल्प्यत इत्याह-- वर्षयतीति। लुङि अजिज्यपत्। अववर्षत्। प्रियम्-- अपिप्रपत्। स्थिरम्-- अतिस्थपत्। सस्यादेशावयवत्वात्षत्वं न। स्फिर--अपिस्फपत्। उरुमिति। वरादेशे कृते संज्ञापूर्वकाविधेरनित्यत्वाद्बाहुलकाद्वा माधवेन विकल्पेन उपधावृद्धिरुदाहृतेति स्वयमपि तथैवाह-- वरयति।वारयतीति। अवीवरत्। बंहयतीति। अग्लोपित्वात्--अबबहत्। गरयतीति। अजीगरत्। त्रायतीति। अतित्रपत्। द्राघयीति। अदद्राघत्। वृन्दयतीति। अववृन्दत्।

इति तत्त्वबोधिन्याम् नामधातुप्रक्रिया।

अथ ण्यन्तप्रक्रिया।

तत्त्व-बोधिनी

द्विगोः ४२६, ३।१।२१

त्रिलोकीतिष त्रयाणां लोकानां समाहारे "तद्धितार्थ"इति द्विगुः। "अकारान्तोत्तरपदो द्विगु"रिति स्त्रित्वम्। त्रिफलेति। अत्र "द्विगो"रिति ङीप्प्राप्नोति नतु "पाककर्णे"ति ङीष्, तत्र "जाते"रित्यनुबृत्तेः। त्र्यनीकेति। अनीकम्--अग्रता। त्रयाणामनीकानां समाहारः। "अजादेराकृतिगणत्वाट्टा"बिति त्र्यनीकाधिकरणे मीमांसकाः।

---

सूत्रम्

काशिका-वृत्तिः

धातोरेकाचो हलाऽदेः क्रियासमभिहारे यङ् ३।१।२२

एकाज् यो धातुर् हलादिः क्रियासमभिहारे वर्तते तस्माद् यङ् प्रत्ययो भवति। पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः। नः पुनः पचति पापच्यते। यायज्यते। भृशं ज्वलति जाज्वल्यते। देदीप्यते। धातोः इति किम्? सोपसर्गादुत्पत्तिर् मा भूत्, भृशं प्राटति। एकाचः इति किम्? भृशं जागर्ति। हलादेः इति किम्? भृशमीक्षते। सूचिसूत्रमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहनं यङ्विधानवेकाजहलाद्यर्थम्। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते। अटाट्यते। अरार्यते। अशाश्यते। प्रोर्णोनूयते। भृशं शोभते, भृशं रोचते इत्यत्र नेष्यते, अनभिधानात्।

लघु-सिद्धान्त-कौमुदी

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ७१४, ३।१।२२

पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात्॥

न्यासः

धातोरेकाचो हलादेः क्रियासमाभिहारे यङ्।, ३।१।२२

"एकाच्" इति। बहुव्रीहिरयं न तत्पुरुषः; "हलादेः" इति विशेषणात्। "क्रियासमभिहारे वत्र्तते" इति। एतेन क्रियासमभिहारस्य प्रकृतिविशेषणत्वं दर्शयति। "तस्माद्यङप्रत्ययो भवति" इति। क्व? "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति"(पु।प।पा।९०) इति तत्रैव क्रियासमभिहारे। विप्रकीर्णानामकेत्र राशीकरणं समुदायभावापत्तिर्मुख्यः समभिहारः। स च क्रियागामुत्पन्नापवर्गिणीनां सहानवस्थानादेकेन च धातुनाऽनकस्याः क्रियाया युगपदनभिधानान्न सम्भवतीति गौणं समभिहारं दर्शयतुमाह--"पौनः पुन्यम्" इत्यादि। उभयमपि ह्येतत् समभिहारसादृश्यादुपचारेण समभिहारे व्यपदेशमासादयति। यथा द्रव्याणां समाह्रतानां द्रव्यान्तरैरव्यपेतानां समाहारो भवति, तथा क्रियाणामपि क्रियान्तरैरव्यपेतानामेतदुभयं भवतीति सादृश्यम्। क्रिया च द्विप्रकारा--- प्रधाना,अप्रधाना च। तत्र प्रधानक्रिया विक्लेदनादिः, गुणक्रिया चाधिश्रयणादिः। तत्र यः फलान्तं पाकमवसाय्य क्रियान्तरमनारभ्य पुनः पाकमेवारभते स प्रधानक्रियां समभिहरति, तासां पौनःपुन्यं समभिहारः। यस्त्वधिश्रयणादीरेव क्रियाः क्रियान्तरैरव्यपेताः साकल्येन करोति स गुणक्रियाः समभिहरति, तासां भृशार्थता समभिहारः। फलातिरेको वा भृशार्थता। तथा हि--- यो ज्वलनफलमवाप्य ज्वलति, दीप्यते वा, स जाज्वल्यते देदीप्यते इति चोच्यते। "पापच्यते" इति। "सन्यङोः" ६।१।९ इति द्विर्वचनम्, "दीघोऽकितः" ७।४।८३ इति दीर्घः। अत्र "क्रियासमभिहारे द्वे भवतः" (वा।८८६) इति द्वित्वं न भवति; क्रियासमभिहारे विधीयमानस्य यङः स्वयमेव तदभिव्यक्तौ सामथ्र्यात्। यस्तु "क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः" ३।४।२ इति लोड् वक्ष्यते स क्रियासमभिहारव्यक्तौ स्वयमशक्त इत्यपेक्षते द्विर्वचनम्। न ह्यसौ क्रियासमभिहारे विधीयते, किं तर्हि? कर्मादिषु; "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इति वचनात्। तेन तस्य प्रयोगे द्विर्वचनं

भवत्येव-- "लुनीहि लुनीहीत्येवायं लुनाति। "देदीप्यते" इति। "गुणो यङ लुकोः" ७।४।८२ इति गुणः। "भृशं प्राटति" इति। असति धातुग्रहणे, एकाज् यः शब्दो हलादिः क्रियासमभिहारे वत्र्तते तस्माद्यङ प्रत्ययो भवतीत्ये। सूत्रार्थः स्यात्। ततश्च प्रपूर्वादटतेर्यङ प्रसज्येत; प्रपूर्वस्याटतेर्यः समुदायस्तस्य यथोक्तविशेषणविशिष्टत्वात्। धातुग्रहणे सत्येष प्रसङ्गो न भवति। न ह्रयं धातुः, किं तर्हि? धातूपसर्गसमुदायः। "जागर्ति" इति। आदादित्वाच्छपो लुक्। अथ क्रियाग्रहणं किमर्थम्, न समभिहार इत्येवोच्येत? नैवम्। साधनसमभिहारेऽपि स्यात्। नैतदस्ति, प्रकृतिविशेषणं ह्रेतत्। न च प्रकृतेः साधनसमभिहारे वृत्तिः सम्भवति। अपि च "करणे" ३।१।१७ इति वत्र्तते, तेन समभिहारो विशेषयिष्यते-- करणसम्बन्धी चेत् समभिहारः, तत् कुतः साधनसमभिहारे प्रसङ्गः? इदं तर्हि प्रयोजनम्--- क्रियामात्रसमभिहारे यथा स्यात्; अन्यथा प्रधाने कार्यसम्प्रत्ययात् प्रधानक्रियासमभिहार एव स्यात्, न गुणक्रियासमभिहारे। "सूचि" इत्यादि। "सूच पैशून्ये" (धा।पा।१८७३), "सूत्र {वेष्टने" धा।पा।} अवमोचने" (धा।पा।१९०८), "मूत्र प्ररुआवणे" (धा।पा।१९०९) "अट गतौ" (धा।पा।२९५), "ऋ गतौ" (धा।पा।१०९८), "अश भोजने" (धा।पा।१५२३) "ऊर्णूञ् आच्छादने" (धा।पा।१०३९),-- आसां प्रकृतीनां यङविधौ ग्रहणं कत्र्तव्यम्, तच्च पूर्वस्यैव चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यते, किमर्थं पुनरासां प्रकृतीनां ग्रहणमित्याह--- "अनेकाजहलाद्यर्थम्" इति। अनेकाज् अहलादिरर्थः प्रयोजनं यस्य तत्तथोक्तम्। सूच्यदीनां तिसृणां चुरादिणिजन्तानामनेकार्थं ग्रहणम्, ऊर्णोतेस्त्वनेकाजर्थमहलाद्यर्थञ्च, शेषाणां तु अहलाद्यर्थमेव। "सोसूयते" इति। "णेरनिटि" ६।४।५१ इति णिलोपः, पूर्ववदभ्यासस्य गुणः। "अटाटयते" इति। "अजादेर्द्वितीयस्य" ६।१।२ इति ट()कारस्य द्विर्वचनम्, हलादिः शेषः, दीर्घश्च। "अरार्यते" इति। "यङि च" ७।४।३० इति गुणः। द्वितीयस्यैकाचो र्यशब्दस्य द्वर्वचनम्। "न न्द्राः संयोगादयः" ६।१।३ इति तु नास्ति, "यकारपरस्य रेफस्य प्रतिषेधः" (वा। ६५१) इति वचनात्। "अशाश्यते" इति। द्वितीयस्यैकाचः "श्य" इत्यस्य द्विर्वचनम्। "प्रोर्णुनूयते" इति। अत्रापि नुशब्दस्य द्विर्वचनम्। रेफस्तु न द्विरुच्यते, तथैव प्रतिषेधात्। "भृशं रोचते, भृशं शोभत इत्यत्र नेष्यते" इति। तदर्थं वेत्यनुवृत्तस्य व्यवस्थितविभाषात्वं व्याख्येयम्॥

---

सूत्रम्

काशिका-वृत्तिः

नित्यं कौटिल्ये गतौ ३।१।२३

गतिवचनाद् धतोः कौटिल्ये गम्यमाने नित्यं यङ् प्रत्ययो भवति। कुटिलं क्रामति चङ्क्रम्यते। दन्द्रम्यते। नित्यग्रहणं विषयनियमार्थं, गतिवचनान् नित्यम् कौटिल्य एव भवति, न तु क्रियासमभिहारे। भृशं क्रामति।

लघु-सिद्धान्त-कौमुदी

नित्यं कौटिल्ये गतौ ७१६, ३।१।२३

गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे॥

न्यासः

नित्यं कौटित्ये गतौ। , ३।१।२३

धातोरित्येव। "गतौ" इति। प्रकृतिविशेषणमेतत्। गतौ वत्र्तमानाद्धातोरित्यर्थः। अमुमेवार्थं पर्यायान्तरेणाचष्टे--- "गतिवचनाद्धातोः" इति। "चंक्रकम्यते, दंद्रम्यते" इति। "क्रमु पादविक्षेपे" (धा।प।४७३), द्रम हम्म मीमृ गतौ (धा।पा।४६६, ४६७, ४६८) "नुगतोऽनुनासिकान्तस्य" ७।४।८५ इति नुमागमः। योऽल्पीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयन् चंक्रभ्यते देद्रम्यत इति चोच्यते। अथ नित्यग्रहणं किमर्थम्, यावताऽनभिदानादेवात्र वाक्यं न

भविष्यति? न हि चङ्क्रम्यत इति वृत्तेरर्थं कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुम्। तथा हि कुटिलं क्रामतीति वाक्यात् संशयो भवति-- किं गतिकौटिल्यम्? उत मनः-- कौटिल्यमिति? चंक्रम्यत इति वृत्तौ त्वसंशयं गतिकौटिल्यमेव गम्यते, इत्याह-- "नित्यग्रहणम्" इत्यादि। गतिकौटिल्यं विषयः। तत्र यङो नियमोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। "गतिवचनात्" इत्यादिना नियमस्य प्रयोजनं दर्शयति। "न तु" इत्यादिना तद्व्यवच्छेद्यम्। नित्यम् = सर्वकालं गतिवचनात् कौटिल्य एव भवति, न तु कदाचित् क्रियासमभिहारे। तेन "भृशं क्रामति" इति क्रियासमभिहारे पूर्वेण प्राप्तो यङ् न भवति।

तत्त्व-बोधिनी

नित्यं कौटिल्ये गतौ ४०१, ३।१।२३

नित्यं कौटिल्ये। "नित्यं" शब्दोऽवधारणार्थक इत्याह-- कौटिल्य एवति। तक्रकौण्डिन्यन्यायेनैवेष्टे सिद्धे नित्यग्रहणं तस्य न्यायस्याऽनित्यत्वज्ञापनार्थम्। तेन "मतिबुद्धिपूजार्थेभ्यश्चे"ति वर्तमाने क्तेनाऽबाधनात्पूजार्थेभ्यो भूते क्तः सिध्यति। ततश्च "क्तस्य च वर्तमाने" इति षष्ठी न प्रवर्तत इति "पूजितो यः सुरासुरै"रिति तृतीया साधुरेव। इत्यादीति। जंजभ्यते। दंदह्यते। दंदश्यते। बंभज्यते। "पस"धातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति स्पश बाधनस्पर्सनयोरित्यत्र माधवः। पंपस्यते। काशिकायां तु तालव्यान्तः क्वचिद्दृश्यते। एवं जञ्()जभीति। दन्दहीतीत्यादि यङ्लुकि उदाहर्तव्यम्।

---

सूत्रम्

काशिका-वृत्तिः

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ३।१।२४

लुप सद चर जप जभ दह दश गृ इत्येतेभ्यो भावगर्हायां धात्वर्थगर्हायां यङ् प्रत्ययो भवति। गर्हितं लुम्पति लोलुप्यते। एवं सासद्यते। पञ्चौउर्यते। जञ्जप्यते। जञ्जभ्यते। दन्दह्यते। दन्दश्यते। निजेगिल्यते। भावगर्हायाम् इति किम्? साधु जपति। भावग्रहणम् किम्? साधनगर्हायां मा भूत्, मन्त्रं जपति वृषलः। नित्यग्रहणं विषयनियमार्थम् अनुवर्तते। एतेभ्यो नित्यं भावगर्हायाम् एव भवति, न तु क्रियासमभिहारे। भृशं लुम्पति।

न्यासः

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्। , ३।१।२४

"लुप्लृ छेदने" (धा।पा।१४३१), "षद्()लृ विशरणगत्यवसादनेषु" (धा।पा।१४२७), "अभ्र वभ्र चर गत्यर्थाः" (धा।पा।५५६, ५५७, ५५९), "जप जल्प व्यक्तायां वाचि" (धा।पा।३९७, ३९८), "{जभी धा।पा।}जभ {जृभि-धा।पाक} गात्रविनामे" (धा।पा।३८८,३८९), "दह भस्मीकरणे" (धा।पा।९९१), "दन्श दंशने" (धा।पा।९८९), "गृ? निगरणे" (धा।पा।१४१०)। "धात्वर्थगर्हायाम्" इत्यनेन भावगर्हायामित्यस्यार्थमाह। "गर्हितं लुम्पति" इति। गर्हितमिति क्रियाविशेषणमेतत्। तेन भावगर्हात्र गम्यते। गर्हितत्वं छेदनसय् निरर्थकत्वात्, दोषदुष्टत्वाच्च। एवमुत्तरत्रापि गर्हितत्वं वेदितव्यम्। "चञ्चूर्यते" इति। "चरफलोश्च" ७।४।८७ इति नुक्। "उत्परस्यातः" ७।४।८८ इत्युत्वम्, "हलि च" ८।२।७७ इति दीर्घः। "जञ्जप्यते" इति। "जपजभ" ७।४।८६ इत्यादिना नुक्। "ऋत इद्धातोः" ७।१।१०० इतीत्त्वम्, रपरत्वम्, द्विर्वचनम्। गिर्याशब्दस्य रेफयकारयोस्तु हलादिशेषेण निवृत्तिः, पुर्ववद्()गुणः, "ग्रो यङि" ८।२।२० इति लत्वम्। "साधु जपति" इति। नात्र धात्वर्थस्य गर्हा, किं तर्हि? प्रशंसा। "मन्त्रं जपति वृषलः" इति। अत्र साधनस्य वृषलस्य गर्हा गम्यते; वृषलस्य = शूद्रस्य वैदिकमन्त्रजाप्यं प्रत्यनधिकारात्॥

---

सूत्रम्

काशिका-वृत्तिः

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५

सत्याऽदिभ्यश्चूर्णपर्यन्तेभ्यः, चुरादिभ्यश्च णिच् प्रत्ययो भवति। सत्यम् आचष्टे सत्यापयति। अर्थवेदसत्यानाम् आपुग् वक्तव्यः। अर्थम् आचष्टे अर्थापयति। देवापयति। आपुग्वचनसामर्थ्याट्टिलोपो न भवति। पाशाद् विमोचने विपाशयति। रूपाद् दर्शने रूपयति। वीणयोपगायति उपवीणयति। तूलेनानुकुष्णाति अनुतूलयति। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाभियाति अभिषेणयति। लोमान्यनुमार्ष्टि अनुलोमयति। त्वचं गृह्णाति त्वचयति। अकारान्तस् त्वचशब्दः। वर्मणा सन्नह्यति संवर्मयति। वर्णम् गृह्णाति वर्णयति। चूर्णैः अवध्वंसयति अवचूर्णयति। चुरादिभ्यः स्वार्थे। चोरयति। चिन्तयति। स्वाभाविकत्वादर्थाभिधानस्य यथास्वं प्रत्ययार्था निर्दिश्यन्ते।

न्यासः

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्। , ३।१।२५

चुरादिभ्योऽन्येषामिह ग्रहणं प्रपञ्चार्थम्। "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (वा।८१३) इति सिद्धत्वात्। "अर्थवेद" इत्यादि। वक्तव्यशब्दस्य व्याख्येयमित्यर्थः। व्याख्यानं तु-- प्रातिपदिकाद्धात्वर्थे बहुलमिति कार्यान्तरविधानार्थाद्बहुलणादेषां णिच्सन्नियोगेनापुग्भवतीति। सत्यशब्दस्य तु "सत्याप" इत्यत एव निपातनादापुग्भवतीति वेदितव्यम्। "विपाशयति" इति। पाशं विमोचयतीत्यर्थः। "निरूपयति" इति। रूपं पश्यतीत्यर्थः। "अभिषेणयति" इति। "उपसर्गात्" ८।३।६५ इत्यादिना षत्वम्। "त्वचयति" इति। ननु च त्वच्शब्दो हलन्तः, तस्मात् णिचि "णाविष्ठवत्" (वा।८१३) इतीष्ठवद्भावाट्टिलोपे प्राप्ते तत्र "प्रकृत्यैकाच्" ६।४।१६३ इति प्रकृतिवद्भावे कृते "अत उपधायाः" ७।२।११६ इति वृद्धिः प्राप्नोति, तत् कथं त्वचयतीति हि भवितव्यमित्याह-- "अकारान्तोऽयं त्वचशब्दः" इति। शब्दान्तरमेवेदमकारान्तं त्वच्शब्दसमानार्थम्। अत एव त्वच इत्यकारान्तस्य सूत्रे निर्देशः, तस्यकारस्य लोपे कृते स्थानिवद्भावाद्वृद्धिर्न भवति। "चुरादिभ्य स्वार्थ" इति। स्तेयादौ। ननु च नेह सूत्र आख्यानादयोऽर्था उपात्ताः, तत्कथं ते लभ्यन्ते? अलब्धाश्च कथं निर्दिश्यन्ते? इत्याह-- "स्वाभाविकत्वात्" इत्यादि। शब्दानामर्थाभिधानं स्वाभाविकम्,न तु वाचनिकम्; तस्याशक्यत्व#आदिति प्रागेवोक्तम्। तस्मात् स्वभावत एव यो यस्यार्थस्याभिधायकः स सूत्रानुपात्तोऽर्थो युक्त एव निर्देष्टुम्। "यथायथम्" इति। यो यस्यात्मीय इत्यर्थः॥

बाल-मनोरमा

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवमवणचूर्णचुरादिभ्यो णिच ३९०, ३।१।२५

सत्याप। सत्याप पाश रूप वीणा तूल श्लोक सेना लोमन् त्वच वर्मन् वर्ण चूर्ण चुरादि-- एषां द्वन्द्वात्पञ्चमी। तदाह - एभ्यो णिच्स्यादिति। कस्मिन्नर्थे इत्याकाङ्क्षायामाह-- चूर्णान्तेभ्य इति। सत्यादिभ्यश्चूर्णान्तेभ्यो द्वादशभ्यः करोत्याचष्टे इत्याद्यथ "प्रातिपदिकाद्धात्वर्थे बहुल"मिति वक्ष्यमाणेन सिद्धमेवाऽर्थनिर्देशनमित्यर्थः। ननु तेनैव सिद्धत्वादिह चूर्णान्तानुक्रमणं व्यर्थमित्यत आह - तेषामिह ग्रहणं प्रपञ्चार्थमिति। नच तेभ्यः स्वार्थे एव णिज्विधिरस्त्विति वाच्यं, "सत्यस्यतु कृञ्यापुङ्नपात्यते। सत्यं करोति सत्यापयती"त्यादिभाष्यविरोधादिति भावः। नामधातुप्रकरणे सत्यादिचूर्णान्तानामुदाहरणानि मूल एव स्फुटीभविष्यन्ति। चुरादिभ्यस्तु स्वार्थे इति। अर्थान्तरस्याऽनिर्देशादिति भावः। अत्र "धातोरेकाचः" इत्यतो धातोरित्यनुवर्तते। चुरादिभ्यो धातुभ्यो णिजिति फलितम्। ततश्च णिच आर्द्धधातुकत्वं सिध्यति। अन्यथा धातोरिति विहितत्वाऽभावादार्द्धधातुकत्वं न स्यादिति बोध्यम्। तदाह -- पुगन्तेति गुण इति। णिचि कृते चुर् इ इति स्थिते णिच आर्द्धधातुकत्वात्तस्मिन् चकारादुकारस्य "पुगन्तलघूपधस्ये"ति गुण इत्यर्थः।

तत्त्व-बोधिनी

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवमवणचूर्णचुरादिभ्यो णिच ३४१, ३।१।२५

सत्यापपाश। एतस्योदाहरणानि अग्रे नामधातुषु स्फुटीभविष्यन्तीति नास्माभिरुपपाद्यन्ते। त्वचशब्दोऽकारान्तः। प्रपञ्चार्थमिति। "सत्याप"ग्रहणं तु आपुगर्थमिति ज्ञेयम्। अन्ये त्वाहुः-- सापेक्षेभ्योऽपि णिजर्थमेषामुपादानम्। अन्यथा "रमणीयं घटं करोती"त्यादाविव "रमणीयं रूपयती"त्यादावपि णिज्न स्यादिति।

---

सूत्रम्

काशिका-वृत्तिः

हेतुमति च ३।१।२६

हेतुः स्वतन्त्रय कर्तुः प्रयोजकः, तदीयो व्यापारः प्रेषनादिलक्षणो हेतुमान्, तस्मिन्नभिधेये धातोः णिच् प्रत्ययो भवति। कटं कारयति। ओदनं पाचयति। तत् करोति इत्युपसङ्ख्यानं सूत्रयति इत्याद्यर्थम्। सूत्रं करोति सूत्रयति। आख्यानात् कृतस् तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच् च कारकम्। आख्यानात् कृदन्तण् णिच् वक्तव्यः तदाचष्टे इत्येतस्मिन्नर्थे, कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृतिवच् च कारकं भवति। कंसवधम् आचष्टे कंसं घातयति। बलिबन्धम् आचष्टे बलिं बन्धयति। राजागमनम् आचष्टे राजानम् आगमयति। आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्। आरात्रि विवासम् आचश्टे रात्रिं विवासयति। चित्रीकरणे प्रापि। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते सूर्यम् उद्गमयति। नक्षत्रयोगे ज्ञि। पुष्ययोगं जानाति पुष्येण योजयति। मघभिर् योजयति।

लघु-सिद्धान्त-कौमुदी

हेतुमति च ७०३, ३।१।२६

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति भावयति॥

न्यासः

हेतुमिति च। , ३।१।२६

फलसाधनयोग्यः पदार्थो लोके हेतुरित्युच्यत इति तस्य यदीह ग्रहणं स्यादिहापि णिच् स्यात्-- अध्ययनेन वसतीति। तस्मात् पारिभाषिकस्य हेतोग्र्रहणमिति दर्शयितुमाह= "हेतुः स्वतन्त्रस्य प्रयोजकः" इति। स पुनर्यस्य "तत्प्रयोजको हेतुश्च" १।४।५५ इति हेतुसंज्ञा विहिता। कुतः पुनरेतदवगम्यते? हेतुमद्()ग्रहणात्, पूर्वसूत्रे चुरादिग्रहणाच्च। इह हि "करणे" ३।१।१७ इति वत्र्तते, धात्वधिकाराच्च धातोः करणे क्रियायां णिचप्रत्ययेन भवितव्यम्। यदि च लौकिकस्य हेतोग्र्रहणं स्यात् "हेतुमति" इति करणविशेषणं न कुर्यात्; व्यावत्र्याभावात्-- सर्वेव हि क्रिया हेतुमतीति। पूर्वसूत्रे च चुरादिगर्हमं न कुर्यात्, चुरादयोऽपि धातव एव। तदर्थश्च क्रियालक्षण एव। "सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णेभ्यश्च णिच्" इत्येकयोगं कुर्यात्। एवं हि चकाराद्धातोः प्रकृतत्वात् करणे प्रत्ययो भविष्यतीति विज्ञास्यते। सोऽयमेकयोगेनैव सिद्धे यत् पृथग्योगमारभते, पूर्वसूत्रे च चुरादिग्रहणं करोति, ततोऽवसीयते पारिभाषिकस्य हेतोग्र्रहणमिति। "तदीयः" इति। तत्सम्बन्धी क्रियात्मको व्यापारः। कः पुनरसावित्यत आह-- "प्रेषण" इत्यादि। भृत्यादेर्निकृष्टस्य क्वचिदर्थे नियोजनम् = आदेशः, प्रेषणम्। गुर्वादेराराध्यस्य सत्कारपूर्वव्यापारणमध्येषणम्। आदिशब्देन तत्समर्थाचरणस्य। एतत् प्रेषणादिकं लक्षणं स्वभावो यस्य स तथोक्तः। ननु च चत्वारोऽत्र हेतुमन्तः सम्भवनति-- प्रयोज्यः, प्रयोज्यव्यापारोऽधिश्रयणादिः, सर्वसाधनसाध्यश्च प्रधानक्रिया विक्लेदादिः, प्रयोजनकव्यापारश्च प्रेषणाध्येषणादिः। चतुर्णामपि ह्येषां हेतुना सह सम्बन्धोऽस्ति। तत्र प्रथमस्य

तदधिष्ठितस्य प्रवत्र्तनात्, तदभिप्रायसम्पादनाच्च। द्वितीयस्य सम्बन्धाय हेतोः प्रवृत्तेः। तृतीयस्य तत्प्रवर्त्तितेन प्रयोज्येनाधिश्रयणादिक्रियां कुर्वाणेन साधनात्। चतुर्थस्य तु तन्निर्वर्तितत्वात् तत्र च समवायात्। तत्र "करणे" इत्यधिकारादयुक्तं प्रयोज्यस्य ग्रहणम्, इतरेषामेव ग्रहणं क्रियात्मकत्वात् सर्वेषां न्याय्यम्, तत् कस्मात् प्रयोजनकव्यापार एव गृह्यते? सत्यपि सर्वेषां क्रियात्मकत्वे तदग्रहणस्यैव न्याय्यत्वात्। तथा हि-- हेतुरिति कारकविशेषस्यैषा संज्ञा, कारकञ्च क्रियानिमित्तम्, तच्च तस्य निमित्तं भवति यद् यस्मिन् सत्येव भवति, असति तु तस्मिन् न भवत्येव। न च प्रयोज्यव्यापारः प्रयोजके सत्येव भवति; व#इनापि तेनार्थित्वादेव प्रयोज्यस्याधिश्रयणादिव्यापारस्य सम्भवात्। सत्यपि च तस्मिन् प्रयुक्तस्यापि स्वार्थमपश्यतः प्रयोज्यस्याप्रवृत्तेः। तस्मात् प्योज्यस्य व्यापारं प्रति प्रयोजकस्य कारकत्वाभावाद्धेतुत्वं नास्तीति न स हेतुमान्। एतेन विक्लेदनादिरपि प्रधानक्रियाविशेषो हेतुमान्न भवतीति वेदितव्यम्। भवतु नाम तौ प्रति कथञ्चित् तस्य हेतुत्वम्, तथापि न तयोर्हेतुमत्त्वं युक्तम्; यस्मात्--- भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः॥ इति वचनात् भूमादिविशिष्टस्यार्थस्य सत्तायां मतुबादयः प्रत्यया विधीयन्ते, इह च नित्ययोगादन्ये भूमादयोऽर्था न सम्भवन्ति; अप्रतीतेः। न हि यथा गोमानित्यत्र बहुत्वं प्रतीयते, यथा च ककुदावत्रीत्यत्र च निन्दा, यथा च रूपवानित्यत्र प्रशंसा, यथा चोदरिणी कन्येत्यत्रातिशयः, तथा "हेतुमति" इत्यत्र। संसर्गोऽपीह न सम्भाव्यते--- संसर्गो हि संयोगः,स च द्रव्ययोरेव परस्परं सम्भवति, यथा-- दण्डीत्यत्र दण्डपुरुषयोः। न च व्यापारो द्रव्यम्, अतो नास्ति केनचित् संसर्गः।तस्मान्नित्ययोगे एवायं मत्वर्थीयः, यथा-- क्षीरिणो वृक्षा इति। न च प्रयोज्यव्यापारस्याधिश्रयणादेर्विक्लेदादेश्च हेतुना नित्ययोगोऽस्ति; उपरतेऽपि तस्मिन् प्रयोक्तरि तयोः सम्भवात्। सत्यपि तस्मिन् विरोधिसन्निधानात्, असम्भवाच्च। न चान्यतरासन्निधाने सम्बन्धो युज्यते; तस्य द्विष्ठत्वादिति। न तौ हेतुमन्तौ। प्रेषणादेस्तु प्रयोजको भवति निमित्तम्च तेन विना तदसम्भवात्, सति च त()स्मस्तत् सम्भवात्; अतस्तं प्रति कारकत्वं तस्योपद्यते। तेन तस्य हेतुसंज्ञा। नित्योगेऽपि मतुपो निमित्तमस्त्येव; उत्पत्तेः प्रभृत्याविनाशात्, प्रेषणादेव्र्यापारस्य हेतौ समवायात्। तस्मात् स एव हेतुमानिति तस्यैव ग्रहणं न्याय्यम्। "तस्मिन्नभिधेये" इति। प्रत्ययेन वाच्ये। एतेन प्रत्ययार्थविशेषणं हेतुमद्()ग्रहणं न प्रकृत्यर्थविशेषणमिति दर्शयति। तेन प्रकत्यर्थविशेषणपक्षे ये दोषास्ते तत्पक्षानङ्गीकारेणैव निरस्ताः। येऽपि प्रत्ययार्थविशेषणपक्षे दोषाः सम्भाव्यन्ते,ते भाष्ये एवोद्भाविताः, परिह्यताश्च। इह त्वतिग्रन्थविस्तरभयान्न लिखिताः। अथेह कथं णिज्भवति-- भिक्षा वासयति, कारीषो।त्र्ग्निरध्यापयतीति? कथञ्च न स्यात्? अचेतनत्वात्, चेतनवतो ह्येतद्भवति प्रेषणमध्येषणं वा? नैष दोषः; उक्तं ह्येतत्-- "आदिग्रहणेन तत्समर्थाचरणस्य ग्रहणम्" इति। तच्छब्देन यत्र वसनादौ प्रयोज्यो नियुज्यते तत्सम्बध्यते तत्र वासादौ। ये समर्थाः = योग्याः, अनुकूलास्तृप्तिविशेषादयस्तेषामाचरणं सम्पादनम् = तत्समर्थाचरणम्, तदपि प्रयोजकव्यापार एव। भिक्षा हि प्रचुरतरव्यञ्जनवत्यो लभ्यमाना रसानुकूलं तृप्तिविशेषमुपजनयन्त्येव। कारीषोऽग्निरपि निर्वातप्रदेशेषु सुप्रज्वलितोऽध्ययनविरोधिनं शीतादिकृतमुपद्रवमुपशमयन्नध्ययनानुकूलं सामथ्र्यमादधाति। अतस्तयोरपि युक्तं प्रयोजकत्वम्। "तत्करोति" इत्यादि। तदिति कर्मपदम्। एतत् करोतीत्यर्थनिर्देशः। तदिति कर्मणः प्रातिपदिकात् करोतीत्यस्मिन्नर्थे णिच उपसंख्यानं प्रतिपादनं कत्र्तव्यमित्यर्थः। किमर्थमित्याह--- "सूत्रयतीत्याद्यर्थम्" इति। तत्रेदं प्रातिपादनम्-- चुरादौ "प्रातिपदिकद्धात्वर्थे" इत्यस्य "तत्करोतति" इत्ययं प्रपञ्चः पठ()ते। तेन सूत्रादिभ्यः प्रातिपदिकेभ्यः कर्मभ्यः करोत्यर्थे णिज् भवतीति। "आख्यानात् कृतः" इत्यादिकं वाक्यम् "आख्यानात् कृदन्तात्" इत्यादिना व्याचष्टे। आख्यायत इत्याख्यानम्। यत् किञ्चिदाख्यायते तत् सर्वं राजागमनादिकमपीहाख्यानमभिप्रेतम्, न तु संज्ञाभूतमेव कंसवधादिकम्। तस्य यो वाचकः शब्दः सोऽप्यभिधानेऽभिधेयोपचारादाख्यानमित्युच्यते। कृदिति प्रत्ययग्रहमम्, प्रत्ययग्रहणे च तदन्तविधिर्भवतीत्याह--- "कृदन्तात्" इत्यादि। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। "तत्" इति। कर्मपदमेतत्। "आचष्टे" इति। प्रत्ययार्थः। "कुल्लुक्" इति। येन कृता तदन्तमाख्यानमुच्यते तस्य

लुग्भवतीत्यनेन वक्ष्यमाणेन सम्बन्धः। "प्रकृतिप्रत्यापत्तिः" इति। यासौ प्रकृतिः प्रत्ययमुत्पादितवती साऽविकृतार्थैनैव रूपेणावतिष्ठत इत्यर्थः। "प्रकृतिवच्च कराम्" इति। चकारो भिन्नक्रमः कारकस्यानन्तरं द्रष्टव्यः। कार्यशब्दश्चात्राध्याहार्यः। तेनायमर्थो भवति-- कृतो या प्रकृतिर्हन्यादिस्तस्या यथा कार्यमडागमादि, तथा ण्यन्ताया अपि भवतीति। किञ्च कारकञ्च प्रकृतिवद्भवतीति? कृतः प्रकृतेर्यादृशं कारकमभूत् ण्यन्ताया अपि प्रकृतेस्तादृशमेव भवतीति। तत्रेदं व्याख्यानम्-- चुरादौ "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (वा। ८१३) इति पठ()ते, "तत्करोति" इत्यादिकञ्च तस्यैव प्रपञ्चः। बहुलं तत्राधिकविधानार्थमिति सर्वमेतद्यथोक्तं भविष्यतीति। एवमुत्तरत्रापि व्याख्यानं कत्र्तव्यम्। किमर्थं पुनः कार्यशब्दमध्याहृत्य कार्यातिदेशो वण्र्यते? आख्यानावयवभूतायाः प्रकृतेरडागमादिकार्यं यथा स्यात्। अन्यथा हि यदि प्रकृतिवच्च कारकं भवतीति कारकातिदेश एव क्रियेत तदा "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" (व्या।प।१२६) इति कंसवधादिभ्यो णिचि कृतेऽङ्गसंज्ञा नामधातुत्वञ्च तेषामेव स्यात् ततश्चाड्()द्विर्वचने तेषामेव स्याताम्। किञ्च-- धातोः स्वरूपग्रहणे तत्प्रत्यये तत् कार्यं विज्ञायेत, कंसवधशब्दाच्च णिचि विहिते तत्वकुत्वे न स्याताम्, ततश्च कसंमघातद्राजानमजीगमदित्यादि न सिध्येत्। कार्यातिदेशे यद्यपि समुदायेभ्यः कंसवधादिभ्यो णिज्विहितः, तथापि कृतो या प्रकृतिर्हन्यादिस्तस्याः केवलाया अकृदन्ताया यथाऽडागमादिकार्यं भवति, तथा कृदन्ताया अपि णिचि विहिते भवतीति न भवत्येष दोषः। तस्मात् कार्यमतिदिश्यते। "कंसं घातयति" इति। हन्तेर्भावे "हनश्च वधः" ३।३।७६ इत्यप्प्रत्ययः, तत्सन्नियोगेन वधादेशः। हननं वधः, कंसस्य वध इति षष्ठीसमासः। रककंसवधशब्दाण्णिच, अपो लुक्। प्रकृतेः प्रत्यापत्तिः वधादेशपरित्यागेन हन्तेः स्वरूपेणावस्थानम्। "अत उपधायाः"७।२।११६ इति वृद्धिः, "हो हन्तेञ्र्णिन्नेषु" ७।३।५४ इति हकारस्य घकारः, "हनस्तोऽचिण्णलोः" ७।३।३२ इति तत्वम्। कारकञ्च कंसवध इत्यस्याः प्रकृतेर्यादृशमासीत् तादृशमेव भवति, कर्म च कारकं कंस आसीत्। तथा च कृद्योगलक्षणायाः कर्मषष्ठ()आ कंसवध इति समासः। स कंस आख्यानक्रियायामप्यतिदेशात् कर्मैव भवति। असत्यतिदेशे, आख्याक्रियायाः कंसवधशब्दस्तदर्थो वा कर्म स्यात्; तयोरेव तथा व्याप्यमानत्वात्। कंसस्त्वाख्यानक्रियायामुज्झितव्यापार एवेति कर्मभावं न प्रतिपद्येत्। तस्मात् कारकातिदेशः। "बलिं बन्धयति" इति। बन्धनं ब्नधः, भावे घञ्। राज्ञ आगमनमिति कत्र्तरि कृद्चयोगलक्षणाया षष्ठ्याः समास। शेषं कृल्लुगादिकं यथायोगं पूर्ववत्। अथ राजानमिति कथं द्वितीया, यावता राजागमनमित्यस्याः कृदन्तायाः प्रकृते राजा कत्र्तासीत्, तत्र "प्रकृतिवच्च कारकम्" (२।३।६५) इति षष्ठ()ऐव भवितव्यम्? अथ "न लोकाव्यय" २।३।६९ इति षष्ठीनिषेधः; एवं तर्हि तृतीया प्राप्नोति? नैष दोषः; "गतिबुद्धि" १।४।५२ इत्यादिना गमेर्गत्यर्थत्वाद्राजोऽत्र कर्मसंज्ञा। तेन द्वितीयैव न्याय्या। अन्ये त्वस्यैव चोद्यस्य परिहारर्थं कारकातिदेशमन्यथा वर्णयन्ति-- नैवं विज्ञायते प्रकृतिरिव प्रकृतिवत्, प्रकृतेर्यत् कार्यमिष्टं तत् णिजन्तस्यैव भवतीति; न ह्यत्र "तत्र तस्येव" ५।१।११५ इति वतिः, किं तर्हि? "तेन तुल्यम्" ५।१।११४ इत्यादिना। तस्मादेव विज्ञायते-- प्रकृत्या तुल्यं वत्र्तत इति प्रकृतिवदिति। प्रकृतिशब्देनेह णिचो या प्रकृतिः कंसवध इत्यादिः सा विवक्षिता।तस्याश्चाख्यानक्रियया व्याप्यमानत्वात् कत्र्तव्यम्। अतः प्रकृतिवच्च कारकं भवतीत्यस्यायमर्थः-- यथा णिच्प्रकृतेराख्यानभूतायाः कर्मत्वं तथा कारकस्यापीति, तेन कर्तुः कर्मत्वं सिद्धं भवति। यद्येवम्, पुष्ययोगं जानाति पुष्येण योजयतीत्यत्रापि कर्मत्वं पुष्यस्य स्यात्? नैतदस्ति; यतः प्रकृतिवच्च कारकं भवतीत्युच्यते, न च पुष्यस्य कारकत्वं भवति; सहयोगे तृतीया विधानात् पुष्येण सह चन्द्रमसो यो योगस्तं जानाति पुष्येण योजयति। "आङलोपश्च" इत्यादि। मर्यादावाची य आङ तस्य लोपो वक्तव्यः। चकारात् पूर्वोक्तञ्च णिजादिकार्यम्। "कालात्यन्तसंयोगे" इति। कृत्स्नस्य कालस्य व्याप्तिः = कालात्यन्तसंयोगः, तस्मिन् गम्यमाने। "आरात्रिविवासमाचष्टे" इति। विवसनं विवासः, भावे घञ्। रात्रेर्विवास इति षष्ठीसमासः। पश्चात् "आह मर्यादाभिविध्योः" २।१।१२ इत्यवय्यीभावसमासः। रात्रिशब्दश्चेह रात्रिसहचरितासु क्रियासु वत्र्तते, वसिरपि विपूर्वोऽतिक्रमे। तेनायमर्थो भवति-- असत्मयनात् प्रभृति याः प्रवृत्ताः क्रियास्ता यावदतिक्रान्ता रात्रिः साकल्येन कथयीति। "प्रकृतिवच्च कारकम्" इत्यतिदेशात् कृल्लक्षणायां कत्र्तरि षष्ठ()आं प्राप्तायां रात्रौ कर्मणि द्वितीया

भवति। अतिक्रमणे हि रात्रिः कत्र्री। कर्मत्वञ्च तस्याः पूर्ववद्गत्यादि १।४।५२ सूत्रेण। "चित्रीकरणे प्रापि" इति। चित्रीकरणम् = तस्मिन् गम्यमाने णिच्। कृल्लुगादिकञ्च पूर्ववत्। उज्जयिन्या माहिष्मती विदूरदेश इति तावतो देशस्याल्पकालेनातिक्रमणमाश्चर्यम्। "सूर्योद्गमनम्" इति। कत्र्तरि कृद्योगलक्षणायाः षष्ठ्याः समासः। सूर्य उद्गमने कत्र्ता। "सम्भावयते" इति। प्राप्नोतीत्यर्थः। "भू प्राप्तावात्मनेपदी" (धा।पा।८४४) चुरादौ पठ()ते, तस्येदं रूपम्। "सूर्यमुद्गमयति" इति। सूर्योद्गमनशब्दाण्णिच्, ल्युटो लुक्। "प्रकृतिवच्च कारकम्" इत्यतिदेशात् पूर्ववत् कत्र्तरि षष्ठ()आं प्राप्तायां तस्य कर्मसंज्ञकत्वाद्द्वितीया। कर्मसंज्ञा तु पूर्ववत्। "नक्षत्रयोगे ज्ञि" इति। नक्षत्रयोगे यत् प्रातिपदिकं वत्र्तते तस्मान्नक्षत्रयोगवाचिनो णिच्। कृल्लुगादिकं यथायोगं पूर्ववत्। ज्ञीति सप्तम्या धात्वर्थो निर्दिश्यते, तेन जानात्यर्थे णिज् भवति। पुष्येण करणभूतेन चन्द्रमसो योगः पुष्ययोगस्तस्माण्णिच्, घञ्, कृतो लुक्, प्रकृतिप्रत्यापत्तिः। "प्रकृतवच्च कारकम्" इत्यतिदेशात् ज्ञानक्रियायामकारकस्यापि पुष्यस्य करणत्वमिति करणे तृतीया। यदा तु पुष्येण सह चन्द्रमसो योग इत्यर्थो विवक्ष्यते, तदा कारकातिदेशस्य विषयो न भवति,पुष्यस्याकारकत्वात्। पुष्येणेति तृतीया सहार्थं एव वेदितव्या॥

बाल-मनोरमा

आसुयुवपिरपि[लपि]त्रपिचमश्च। ७०४, ३।१।२६

आसुयुवपि।आसु, यु, वपि, रपि, त्रपि, चम् एषां समाहारद्वन्द्वः। "ण्य"दिति शेषः। आसाव्यमिति। आङ्पूर्वस्य सुञो ग्रहणमिति भावः।

बाल-मनोरमा

हेतुमति च ४०४, ३।१।२६

हेतुमति च। "सत्यापपाशे"त्यतो णिजित्यनुवर्तते।हेतुः प्रयोजकः = आधारतया अस्यास्तीति हेतुमान् = प्रयोजकनिष्ठः प्रेषणादिव्यापारः, तस्मिन् वाच्ये णिच् स्यादित्यर्थः। "धातोरेकाचो हलादे"रिति धातोरित्यनुवर्तते। तदाह - प्रयोजकव्यापार #इति। प्रेषणादावित्यादिशब्देन अध्येषणानुमत्युपदेशादीनां ग्रहणम्। तत्र भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणम्। आज्ञेत्यर्थः। समानस्याऽधिकस्य च सख्याचार्यादेः प्रवर्तना- अध्येषणा। अनुमति -- राजादेः समंतिः। ज्वरितस्य कषायपाने हितावबोधनेन प्रवर्तना-- उपदेशः। हननाद्भीत्या पलायमानस्य निरोधाचरणमपि प्रयोजकव्यापारः। प्रयोजकनिष्ठप्रवर्तनायां णिजिति फलितम्। एते तु विशेषाः प्रकरमादिना अवगम्यन्ते। "कुलालो घटं करोती" त्यत्र तु न णिच्, प्रयोज्यप्रयोजकोभयसमभिव्याहार एव तत्प्रवृत्तेरित्यन्यत्र विस्तरः। भवन्तमिति। देवदत्तो यज्वा भवति। तं प्रेरयति याजक इत्याद्यर्थे भूधात्वर्थस्यभवनस्य मुख्यकर्ता यज्वा, तस्य यज्वभवने प्रवर्तयिता याजकादिः प्रयोजकः, तन्निष्ठ()आं प्रेरणायां भूधातोर्णिच्। वृद्ध्यावादेशौ। भावीति णिजन्तम्। तस्माद्भवनानुकूलव्यापारार्थकाल्लटि "भावयती"ति रूपम्। भवन्तं प्रेरयतीति फलितोऽर्थः। भावयांबभूवेति। कर्तृगामिन्यपि क्रियाफले भूधातोरनात्मनेपदित्वादनुप्रयुज्यमानादपि नात्मनेपदमिति भावः।

तत्त्व-बोधिनी

आसुयुवपिरपि[लपि]त्रपिचमश्च ५८५, ३।१।२६

आसु। षुञ् आसाव्यमिति। "षुञ् अभिषवे" इत्ययं गृह्रते, न तु "षु प्रसवै()आर्ययो"रिति। "कृत्यल्युटो बहुल"मति बहुलग्रहणादिति भावः। यु मिश्रण इति। "युञ् बन्धने" इति तु न गृह्रते, सानुबन्धकत्वादिति भावः। अत्र युप्रभृतीनां द्वन्द्वं कृत्वा पश्चादासुशब्देन द्वन्द्वः। तेन "अल्पाच्तर"मिति युशब्दस्य न पूर्वनिपातः शङ्क्यः। इहाद्ययोः "अचो "दित्यनेन,

रपित्रपिचमां तु "पोरदुपधा"दित्यनेन यत्प्रत्यये प्राप्तेऽयमारम्भः। अनित्यमात्रे यदि प्रयोगस्तर्हि घटादावतिप्रसङ्ग इत्यत आह-- दक्षिणाग्निविशेष इत्यादि।

तत्त्व-बोधिनी
हेतुमति च ३५३, ३।१।२६

हेतुमति च। स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यत्रास्ति स हेतुमान् = व्यापारः, तस्मिन्वाच्ये णिजित्याह-- प्रयोजकव्यापार इति। प्रयोजकश्चेतनाऽचेतनसाधारण्येन विवक्षितः। स च क्वचित्फलरूपः। "देवदत्तः गमयती" त्यादौ सिद्धः। "भिक्षा वासयति" "सङ्ग्रामो वासयती"त्यादौ तु फलरूपः। प्रेषणादाविति। भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेरणा। आज्ञेत्यर्थः। आदिशब्देनाऽध्येषणानुमत्यादीनमुपादानाम्। समानस्याऽधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना--- अध्येषणम्। प्रार्थनेत्यर्थः। अनुमतिस्तु राजादेः संमतिः, तां विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादिः प्रयोजकः। "अनुमत्यादी"त्यादिशब्देनात्रोपदेशानुग्रहयोरुपादानम्। "ज्वरितः कषायं पिबे"दित्युपदेशमात्रेण वैद्यादिः प्रयोजकः। यस्तु केनचिद्धन्तुमिष्टं पलायमानं निरुणद्धि सोऽपि हन्तुरनुग्राहकत्वेन प्रयोजकः। सर्वेऽप्येते विशेषाः कथं णिच्प्रत्ययगम्या इति चेत्। अत्राहुः-- सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः, विशेषास्त्वर्थप्रकरणादिगम्या इति। नन्वेवं णिचो लोडादीनां च पर्यायता स्यात्ततश्च "इदानीं पृच्छतु भवा"निति वक्तवये "प्रच्छयती"ति णिजप प्रयुज्येतेति चेत्। मैवम्। कर्तुः प्रयोजको हि हेतुः, प्रैषविषयो यः संबोध्यो दैवदत्तादिः स तु नाद्यादि प्रश्नकर्तृत्वेनावधारितः। तथा च प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा णिजर्थः, तदनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः। उक्तं च --- द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोङ् विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः"।इति। अस्यार्थः--- कर्तृत्वेनाऽनवधारितस्य देवदत्तदेस्तु प्रैषे "प्रच्छ ज्ञीप्सायाटमित्यादेर्लोड्भवति। प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा सा णिचो विषय इति। किं च प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः, प्रयोक्रप्रयोक्तृकर्तका तु णिजर्थः। "पच देवदत्ते"त्यत्र हि वक्तैव प्रेरकः। "पाचयती"त्यादौ वक्तृभिन्नः, "पाचयामी"त्यादौ तु वक्तेति दिक्।

---

सूत्रम्
काशिका-वृत्तिः
कण्ड्वादिभ्यो यक् ३।१।२७

कण्डूञित्येवम् आदिभ्यो यक् प्रत्ययो भवति। द्विवधाः कण्ड्वादयो, धातवः प्रातिपादिकानि च। तत्र धात्वधिकाराद् धतुभ्यः एव प्रत्ययो विधीयते, न तु प्रातिपदिकेभ्यः। तथा च गुणप्रतिषेधार्थः ककारो ऽनुबध्यते। धातुप्रकरणाद् धातुः कस्य चासञ्जनादपि। आह च अयम् इमं दीर्घं मन्ये धतुर् विभाषितः। कण्डूञ् कण्डूयति, कण्डूयते। ञित्वात् कर्त्रभिप्राये क्रियाफले १।३।७२ इत्यात्मनेपदम्। कण्डूञ्। मन्तु। हृणीङ्। वल्गु। अस्मनस्। महीङ्। लेट्। लोट्। इरस्। इरज्। इरञ्। द्रवस्। मेधा। कुषुभ। मगध। तन्तस्। पम्पस्। सुख। दुःख। सपर। अरर। भिषज्। भिष्णज्। इषुध। चरण। चुरण। भुरण। तुरण। गद्गद। एला। केला। खेला। लिट्। लोट्।
लघु-सिद्धान्त-कौमुदी
कण्ड्वादिभ्यो यक् ७३३, ३।१।२७

एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे। कण्डूञ् गात्रविघर्षणे॥ १॥ कण्डूयति। कण्डूयत इत्यादि॥
लघु-सिद्धान्त-कौमुदी
इति कण्ड्वादयः ७३३, ३।१।२७

लघु-सिद्धान्त-कौमुदी
अथात्मनेपदप्रक्रिया ७३३, ३।१।२७

न्यासः
कण्ड्वादिभ्यो यक्।, ३।१।२७

किं पुनरिमे कण्ड्वादयो धातवः? उत प्रातिपदिकानि? तत्र यदि धातवः, यकि कृते कण्डूरिति न सिध्यति। कण्डूयेति प्राप्नोति। ननु च वेत्यनुवर्तिष्यते, ततर् यदा यङ नास्ति तदा कण्डूरिति भविष्यति? नैतदस्ति; न हि धातोः सुब्विभक्तिरुत्पत्तुमुत्सहते; तस्याः प्रातिपदिकाद्विधानात्। स्यादेतत्-- यगन्तात् "अन्यभ्योऽपि" ३।२।१७८ इति क्विपि कृते अतो लोपे ६।४।४८ वलि यकारलोपे (६।१।६६) च कण्डूरिति भविष्यति? असदेतत्; कत्र्तरि क्विब् विधीयते, कण्डूरिति च वेदनामात्रमुच्यते, न कर्ता; तथापि सम्पदादेराकृतिगणत्वात् भावे क्विपं विधाय कण्डूरिति व्युत्पाद्यते। एवमपि मन्तुः, वल्गुरिति न सिध्येत्। यदि तावद्वेत्यनुवृत्त्या मनुवल्गुशब्दाभ्यां पक्षे यग्न भवति तदा विभक्तिस्ताभ्यां नोपपद्येत, तथा च मन्तु, वल्गु इत्यविभक्तिकं रूपं स्यात्। अथापि ताभ्यां यकं विधाय क्विप् क्रियते? एवमपि मन्तूर्वल्गुरित्यनिष्टं रूपं स्यात्। अवश्यं यकि कृते "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घत्वेन भवितव्यम्। अथ प्रातिपदिकानि कण्डवादयस्तदा यकः करारोऽनर्थकः स्यात्, स हि "सार्वधातुकार्धधातुकयोः" ७।३।८४ इति प्राप्तस्य गुणस्य "क्ङिति च" १।१।५ इति प्रतिषेधो यथा स्यादित्येवमर्थं क्रियते। प्रातिपदिकत्वे तेषामेतत्प्रयोजनं नोपपद्यते, न हि प्रातिपदिकाद्विहितः प्रत्यय अर्धधातुकसंज्ञां लभत इति यो देशयेत्, तं प्रत्याह-- "द्विविधाः" इत्यादि। तत्रेति निर्धारणे सप्तमी। तेषु धातुप्रातिपदिकेषु मध्ये ये धातवः कण्ड्वादयस्तेभ्यो यक्। "धात्वधिकारात्" इत्यत्रवोपपत्तिः। एवमेवार्थं द्रढयितुमाह-- "तथा च" इत्यादि। यत एवं धातुभ्यः प्रत्ययो विधीयते; धात्वधिकारात् , प्रातिपदिकेभ्यः। एवञ्च कृत्वा यकः ककारोऽनुबध्यते गुणप्रतिषेधात्। यदि तु प्रतिपदिकेभ्यो यक् स्यात् तस्यानार्धधातुकत्वाद्()गुणस्य प्राप्तिरेव नास्ति, तत्प्रतिषेधार्थं ककारानुबन्धकरणमनर्थकं स्यात्। "धातुप्रकरणाद्धातुः" इति। प्रत्ययमुत्पादयतीति शेषः। "धातोरेकाचः" ३।१।२२ इत्योत धातुग्रहणमनुवर्तते। तेन धातुरेव कण्ड्वादिशब्दः प्रत्ययमुत्पादयति, न प्रातिपदिकम्। "कस्य" इत्यादि। यच्चेदं ककारानुबन्धासञ्जनमतोऽपि हेतोरेव धातुः प्रत्ययमुत्पादयति। अन्यथा ककारानुबन्धकरणं पूर्वोक्तया रीत्या निरर्थकमेव स्यात्। अतएव धातुभूतेभ्यः कण्डवादिभ्यो यग्विधानात् ककारानुबन्धासञ्जनाच्च तेषां धातुत्वं विज्ञायते। न ह्यधातुभूतेभ्यो यग्विधानमुपपद्यते, नापि ककारानुबन्धकरणम्; प्रयोजनाभावात्। अथ प्रातिपदिकत्वं कण्डवादीनां कथमवसीयते? इत्याह-- "आह चायम्" इत्यादि। चकारो हेतौ। यद्येते धातव एव स्युस्ततो यकि कृते "अकृत" ७।४।२५ इति दीर्घत्वस्य सिद्धत्वात् कण्डूञ्, ह्रणीङ्, महीङिति दीर्घं नोच्चारयेत्, उच्चारयति च दीर्घम्, अतोऽवसीयते-- "धातुर्विभाषितः" इति। धातुत्वमेषां विकल्पितमित्यर्थः। ननु च पक्षे यत्र यङ नास्ति तत्रायगन्तेभ्यः क्विबादौ प्रत्यय उत्पन्ने कण्डूः, कण्डूतिः, कण्डूतवानिति दीर्घस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घोच्चारणं स्यात्। तत् कुतस्तस्यानर्थक्यम्! कथं पुनरयगन्तेभ्यः क्विबादयो भवन्ति, यकः पाक्षिकत्वात्, तदपि कुतः? वेत्यनुवृत्तेः, नैतत्; नित्यत्वादस्य विधेः। नित्यत्वन्तु वाग्रहणस्य निवर्तितत्वात्। कुतः पुनस्तन्निवृत्तिरवीसयते? "आयादयः" ३।१।३१ इत्यादेः सूत्रारम्भात्। यद्यत्र वेत्यनुवृत्तिस्तदोत्तरत्राप्यनुवत्र्तनादायादयो वा भविष्यन्तीत्येतन्नारभेत। न च तदनारम्भे सार्वधातुकेऽप्यायादयो विकल्पेन प्राप्नुवन्ति; वाग्रहणस्य व्यवस्थितविभाषात्वात्। तस्मादायादय इत्यादेरारम्भाद्वाग्रहणनिवृत्तिरवसीयत इति नित्यं यका भवितव्यम्। ततश्च यद्येषां पक्षे प्रातिपदिकत्वं न स्याद्दीर्घोच्चारणमनर्थकं स्यात्। तस्माद्दीर्घोच्चारणसामथ्र्यात् प्रातिपदिकत्वमेषामस्तीत्येकान्त एष पक्षः। तत्र धातुपक्षे कण्डूयत इत्यादयः सिध्यन्ति, प्रातिपदिकपक्षे त्वसति यकि कण्डूर्मन्तुर्वल्गुरित्यादयः। मगध इत्यादयो येऽकारान्ताः कण्ड्वादिषु पठ()न्ते तेषां "अतो लोपः" ६।४।४८

इत्यकारलोपः--- मगध्यति, सुख्यति, दुःख्यति। लेट्()लोटौ शब्दौ पठ()एते, तयोः ल्वरूपेणैव ग्रहणम्, न तु प्रत्ययत्वेन, कण्ड्वादिभिः स्वरूपशब्दैः साहचर्यात्॥

बाल-मनोरमा

कण्ड्वादिभ्यो यक् ५२४, ३।१।२७

अथ कण्वादिप्रक्रिया निरूप्यन्ते। कण्ड्वादिभ्यो यक्। धातुभ्य इति। "धातोरेकाचः" इत्यतस्तदनुवृत्तेरिति भावः। नित्यमिति। वाग्रहणं तु निवृत्तमिति भावः। अन्यथा कण्डवतीत्याद्यपि स्यादिति भावः। द्विधा हीति। एतच्च भाष्ये स्पष्टम्। तेन कण्डूरित्याद्यविगृहीतरूपसिद्धिः। लेटितेति। "यस्य हलः" इति यलोपः। मेधा आशुग्रहणे इति। आशुग्रहणँ त्वरया बोधः। "सुग्रहणे" इति पाठान्तरम्। सुख्यतीति। यकि अतो लोपः। प्रातिपदिकेभ्यो यकि तु आद्र्धधातुकत्वाऽभावादल्लोपो न स्यादिति बोध्यम्। चौरादिकयोस्तु सुखयति दुःखयतीत्युक्तम्। अरर आराकर्मणीति। आरा = प्रतोदः, तत्करणकं कर्म- आराकर्म। भिषज् चिकित्सायाम्। जान्तोयऽयम्। भिषज्यति। लेखा स्खलने चेति। लेखायति।लेख्यतीति। अदन्ताद्यकि अतो लोपः। आकृतिगणोऽयमिति। कण्ड्वादिरित्यर्थः। तेन दुवस् संदीपने इत्यादिसङ्ग्रहः। "समिधाऽ()ग्न दुवस्यते"। इति कण्ड्वादयः।

अथ कारकप्रकरणम्।

---------------

तत्त्व-बोधिनी

कण्ड्वादिभ्यो यक् ४७१, ३।१।२७

कण्ड्वादिभ्यो यक्। "धातोरेकाच" इत्यस्माद्धातोरिति वर्तते। वेति निवृत्तम्। अन्यथा कण्डवतीति स्यात्तदाह--- धातोर्नित्यमिति। केचित्तु "नित्यं कौटिल्ये गतौ" इत्यतो नित्यमित्यनुवर्तत इत्याहुः। तच्चिन्त्यम्। तत्र हि नित्यग्रहणमेवकारार्थे वर्तते तक्रकौण्डिन्यन्यायस्याऽनित्यतां ज्ञापयितुमिति प्राग्व्याख्यातत्वात्।किं च "नित्यं कौटिल्ये गतौ" इत्यत्रापि वेत्यनुर्तते। अन्यथा गत्यर्थेभ्यो नित्यं यङ् स्यादिति। स्वार्थे इति। इति कण्ड्वादिभ्यो यक्स्यात्कृञर्थे इति प्राचोक्तमयुक्तमिति भावः। द्विधा हीति। यकः कित्त्वेन धातव इति ज्ञायते। कण्डूञिति दीर्घपाठेन प्रातिपदिकान्यपीति। यदि तु धातव एव स्युस्तर्हि ह्रस्वान्ते पठितेऽपि यकि परे "अकृत्सार्वे"ति दीर्घेण कण्डूयतीत्यादिसिद्धेः किं तेन दीर्घपाठेन?। द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्त्वं सार्थकम्। "कण्डू"रित्यादियग्रहितरूपसिद्ध्या दीर्घपाठोऽपि सार्थकः। अत एवोक्तं भाष्ये--- धातुप्रकरणाद्धातुः कस्यचाऽसञ्जनादपि। आह चायमिममं दीर्घं मन्ये धातुर्विभाषितः"। इति।एतेन कण्डूं करोति कण्डूयतीति प्राचोक्तविग्रहोऽपि परास्तः। कण्ड्वादयः प्रातिपदिकान्येवेत्यनभ्युपगमात्। न च द्वैविध्याभ्युपगमेऽपि प्रातपदिकादेव यक् स्यादिति वाच्यं, तथाहि सति दातोर्लडादौ कण्डवतीत्याद्यनिष्टप्रसङ्गात्। सुखदुःखादिप्रात्तिपदिकेभ्यो यकि अल्लोपाऽसंभवन सुख्यतीत्याद्यसिद्धिप्रसङ्गाच्च। यत्तु कैश्चित् "शब्दवैरकलहे"ति सूत्रात्करणे इत्यनुर्तनात्कृञर्थे यगिति प्राचोक्तव्याख्यायां न किंचिद्बाधकमित्युक्तं,तच्चिन्त्यम्, अनुधृत्तौ मानाऽभावात्। अन्यथा णिजन्तेष्विव प्रकृतिप्रत्ययाभ्यां व्यापारद्वयापत्तेरिति दिक्। पूर्वभाव इति। पूर्वत्वमित्यर्थः। लेटितेति। "यस्य हलः" इति यलोपः। सुख्यतीति। चुरादौ तु "सुख दुःख तत्क्रियायां। सुखयती"त्याद्युदाह्रतम्। सपर। यगन्तात् "अ प्रत्ययात्" "गुरोश्च हलः" इत्यनेन वा अप्रत्यये टाप्। सपर्या। अरर। आरा = प्रतोदः। तत्करणकं कर्म आराकर्म। अदन्तोऽयमिति। लेख्यति। आदन्तपक्षे तु लेखायति। महीङ्। "प्रेत्य स्वर्गे महीयते" इति रामायणम्। प्रसृताविति। प्रसृतिः-- परिमाणविशेषः।

प्रभतूभावे इति। बाहुल्य इत्यर्थः। "प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु"इत्यमरः। संभूयस्यति। असंभूयसीत्।नेह संशब्दसय् पृथक्कृतिः, यत्र प्रातिपदिकाद्धातुसंज्ञाप्रयोजकप्रत्ययस्य विधानं तत्रैव पृथक्कृतिरित्याहुः। आकृतिगण इति। तेन दुवस् सन्दीपने इत्यादि सिद्धम्। प्रयुज्यते च "समिधाऽग्नि दुवस्यते"त्यादि।

इति तत्त्वबोधिन्याम् कण्ड्वादिप्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८

गुपू रक्षणे, धूप सन्तापे, विच्छ गतौ, पण व्यवहारे स्तुतौ च, पन च इत्येतेभ्यो धातुभ्यः आयप्रत्ययो भवति। तोपायति। धूपयति। विच्छायति। पणायति। पनायति। स्तुत्यर्थेन पनिना साहचर्यात् तदर्थः पणिः प्रत्ययम् उत्पादयति न व्यवहारार्थः। शतस्य पणते। सहस्रसय पणते। अनुबन्धश्च केवले चरितार्थः, तेन आयप्रत्ययान्तान्नात्मनेपदं भवति।

लघु-सिद्धान्त-कौमुदी

गुपूधूपविच्छिपणिपनिभ्य आयः ४६९, ३।१।२८

एभ्य आयः प्रत्ययः स्यात् स्वार्थे॥

न्यासः

गुपूधूपविच्छिपणिपनिभ्य आयः। , ३।१।२८

"स्तुत्यर्थेन" इत्यादि। "पण व्यवहारे स्तुतौ च" (धा।पा। ४३९) "पन च" (धा।पा।४४०) इत्यनयाऽनुपूव्र्या गणे पाठः। तत्र "पन च" (धा।पा।४४०) इत्यत्र स्तुतावित्यनुवत्र्तते, न व्यवहारार्थः तेन पणिव्र्यवहारार्थः, स्तुत्यर्थश्च,पनिः स्तुत्यर्थ एव। तदिह स्तुत्यर्थेन पणिना साहचर्यात् पनेरपि स्तुत्यर्थ एव गृह्रते। तेनासौ स्तुतावेव वत्र्तमानः प्रत्ययमुत्पादयति, न तु व्यवहारे। "शतस्य" इति। "व्यवह्मपणोः समर्थयोः" २।३।५७ इति कर्मणि षष्ठी। अत्र पणायतीत्यत्रात्मनेपदं कस्मान्न भवति, यावता पणिरयमनुदात्तेत् पठ()ते? तत्र "अनुदात्तङितः" १।३।१२ इति यथा केवलादात्मनेपदं भवति तथायपत्प्रत्ययान्तादपि तेन भवितव्यमित्यत आह-- "अनुबन्धः" इत्यादि। यो हि तस्यानुबन्धः स आयप्रत्ययरहिते पणतौ चरितार्थः = कृतात्मनेपदकार्यः, तेनायप्रत्ययान्तादात्मनेपदं न भवति; तस्य धात्वन्तरत्वात्॥

बाल-मनोरमा

गुपूधूपविच्छिपणिपनिभ्य आयः १४६, ३।१।२८

गुपूधूप। एभ्य इति। गुपू धूप विच्छि पणि पनि इत्येभ्य इत्यर्थः। अर्थनिर्देशाऽभावादाह-- स्वार्थ इति। आयप्रत्ययः अकारान्तः। तत्फलं तु "गोपायतं नः सुमनस्यमान" इत्यत्र गोपायेत्यस्य धातुस्वरेणान्तोदात्तत्वेन शबकारेण एकदेशस्यापि "एकादेश उदात्तेनोपादात्तः" इत्युदात्तत्वे, "त"मित्यस्य अदुपदेशात् परलसार्वधातुकत्वेन अनुदात्तस्य "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितत्वमिति बोध्यम्। "धातोरेकाच" इत्यतो धातोरित्यनुवृत्या धातोरिति विहितत्वादायप्रत्ययस्याद्र्धधातुकत्त्वात्कार्यं गुणादि भवति। तदाह--- पुगन्तेति गुण इति।

---

सूत्रम्

काशिका-वृत्तिः

ऋतेरीयङ् ३।१।२९

ऋतिः सौत्रो धतुः धृणायां वर्तते, ततः ईयङ् प्रत्ययो भवति। ङकार आत्मनेपदार्थः। ऋतीयते, ऋतीयेते, ऋतियन्ते। ईयङ्वचनं ज्ञापनार्थं, धातुविहितानां प्रत्ययानाम् आयनादयो न भवन्ति इति।

न्यासः

ऋतेरीयङ्। , ३।१।२९

"सौत्रः" इति। सूत्रे परिपठितत्वात्। सूत्रे भवः सौत्रः। "घृणायां वत्तते" इति। घृणा = जुगुप्सा। तस्यामयं स्वभावत एव वत्तते। अथ कस्मादीयङुच्यते, न च्छङित्येवोच्येत, तस्येयादेशे ऋतीयत इति सिध्यति? न सिध्यति; परत्वादिडागमे कृते सत्यप्रत्ययादित्वादीयादेशो न स्यात्। ननु चान्तरङ्गत्वादीयादेश एव भविष्यति, अन्तरङ्गत्वन्तु तस्यायन्नादिषु "उपदेशिवद्वचनमिष्टस्वरसिद्ध्यर्थम्" (७।१।२।वा।१) इति वचनात्; एवं तह्र्येतज्ज्ञापयति-- "धातुप्रत्ययानामायन्नादयो न भवन्ति" इति। तेन शमेर्ढप्रत्यये कृते शण्ढः इत्येवमादयः सिद्धा भवन्ति। अथ वा-- स्वरविधावुपदेशिवद्भावः स्वरसिध्यर्थमिति वचनात्। तेन नास्त्यन्तरङ्गतेति परत्वादिडागमः स्यात्, तस्मादीयङ् विधीयते॥

बाल-मनोरमा

ऋतेरीयङ् २५३, ३।१।२९

ऋतेरीयङ्। ऋतेर्धातुपाठेऽदर्शनादाह-- ऋतिः सौत्र इति। स्वार्थे इति। अर्थविशेषस्याऽनिर्देशादिति भावः। तकारान्तो धातुरयमिका निर्दिष्टो न त्विकारान्तः। इदन्तत्व हि सवर्णदीर्घेणैव सिद्धे ईयङिति ईकारोच्चारणवैयर्थ्यात्। नच इदन्तत्वे सति "एरनेकाचः" इति यण् स्यादिति वाच्यम्, एवमपि "ऋतेर्ङ्यः" इति ङ्यप्रत्यये कृते "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घेणैव सिद्धे इयङ्विधिवैयर्थ्यात्। एके इति। अन्ये इत्यर्थः। ऋतीयते इति। ईयङोऽदन्तत्वाच्छपि पररूपम्। ऋतीयांचक्रे इति। "कास्प्रत्यया"दित्याम्। ऋतीयिता। ऋतीयिष्यते। ऋतीयताम्। आर्तीयत। ऋतीयेत। ऋतीयिषीष्ट। आर्तीयिष्ट। आर्तीयिष्यत। आनर्तेति। ऋत् इति तकारान्ताल्लिटि णलि द्वित्वे उरदत्त्वे रपरत्वे हलादिशेषे "अत आदे"रित्यभ्यासस्य दीर्घे "तस्मान्नुड्()द्विहलः" इति नुट्, "नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्रते" इत्युक्तेरिति भावः। आनृततुः आनृतुः। अनिट्सु अस्याऽपाठात् थलि नित्यमिट्। आनर्तिथ आनृतथुः आनृत। आनर्त। आनृतिव आनृतिम। अर्तिता। अर्तिष्यति। ऋत्यात्। आर्तीदिति। "इट ईटि" इति सिज्लोपः। आडागमः। आर्तिष्यत्। अथ लुगविकरणान् धातून्निरूपयितुमुपक्रमते-- अद भक्षणे इति। अनिडयम्।

तत्त्व-बोधिनी

ऋतेरीयङ् २२४, ३।१।२९

ऋतेरीयङ्। तान्तोऽयं धातुरिका निर्दिष्टो न त्विकारान्तः, "वञ्चिलुञ्च्यृतश्चे"ति निर्देशात्। केचित्तु ईयङिति दीर्घोच्चारणात्तान्तोऽयमिति ज्ञायते। इदन्तत्वे हि सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यादित्याहुस्तञ्चन्त्यम्। इदन्तत्वे तु "एरनेकाच" इति यणा सवर्णदीर्घस्य बाधात्। न च ऋतेर्यङ्विधावकृत्सार्वेति दीर्घोपपत्तेरीयङ्विधानं तान्तत्वेलिङ्गं भवत्येवेति वाच्यं, यङ्विधौ "सन्यङो"रिति द्वित्वापत्तेः। कृपायां चेति। "अर्तनं च ऋतीया च ह्रिणीया च घृणार्थकाः" इति, "जुगुप्सा करुणा घृणे"ति चाऽमरः।

---

सूत्रम्

काशिका-वृत्तिः

कमेर् णिङ् ३।१।३०

कमेर् धातोः णिङ् प्रत्ययो भवति। णकारो वृद्ध्यर्थः। ङकार आत्मनेपदार्थः। कामयते, कामयेते, कामयन्ते।
लघु-सिद्धान्त-कौमुदी
क्रमेर्णिङ् ५२७, ३।१।३०

स्वार्थे। ङित्त्वात्तङ्। कामयते॥
न्यासः
कर्मर्णिङ्।, ३।१।३०

"णकारो वृद्ध्यर्थः" इति "अच उपधायाः"७।२।११६ इति वृद्धिर्यथा स्यात्। यद्येवम्, किमर्थं "न कम्पमिचमाम्" (धा।पा।८१७) इति कमेर्मित्संज्ञा प्रतिषिध्यते "मितां ह्रस्वः" (६।४।९२) इति ह्रस्वो मा भूदिति? नैतदस्ति; णित्करणसामर्थ्यादेव तन्न भविष्यति; अन्यथा णित्करणमनर्थकं स्यात्। नानर्थकम्? "णेरनिटि" ६।४।५१ इति सामान्यग्रहणार्थत्वात्। यदा च "आयादय आर्धधातुके वा" ३।१।३१ इति णिङ् नास्ति, तदा हेतुमण्णिचि ह्रस्वत्वं मा भूदिति मित्संज्ञा प्रतिषिध्यते॥
बाल-मनोरमा
कमेर्णिङ् १५१, ३।१।३०

कमेर्णिङ्। शेषपूरणेन सूत्रं व्याचष्टे---स्वार्थे इति। अर्थविशेषाऽनिर्देशादिति भावः। णङावितौ। "णेरनिटी"त्यत्रोभयोग्र्रहणायाऽनुबन्धकरमम्। ङित्त्वात्तङिति। अनुदात्तेत्वं तु णिङभावे "चकमे" इत्यादौ चरितार्थमिति भावः। कामयत इति। णिङि "अत उपधाया" इति वृद्धौ "कामी"ति णिङन्तम्। "क्ङिति चे"ति निषेधस्तु न,अनिग्लक्षणत्वात्। णिङन्तस्य धातुत्वाल्लडादयः। तत्र लटि शपि गुणेऽयादेशे कामयते इति रूपम्। कामयेति इत्यादि सुगमम्। लिटि "कास्यनेकाच" इत्यामि, "आम" इति लिटो लोपे " कामि-आम्" इति स्थिते, सार्वधातुके"ति गुणं बाधित्वा "णेरनिटी"ति वक्ष्यमाणे णिलोपे प्राप्ते।

---

सूत्रम्
काशिका-वृत्तिः
आयादय आर्धधातुके वा ३।१।३१

आर्धधातुकविषये आर्धधातुकविवक्षायाम् आयादयः प्रत्यया वा भवन्ति। गोप्ता, गोपायिता। अर्तिता, ऋतीयिता। कमिता, कामयिता। नित्यं प्रत्ययप्रसङ्गे तदुत्पत्तिरार्धधातुकविषये विकल्प्यते, तत्र यथायथं प्रत्यया भवन्ति। गुप्तिः। गोपाया।
लघु-सिद्धान्त-कौमुदी
आयादय आर्धधातुके वा ४७१, ३।१।३१

आर्धधातुकविवक्षायामायादयो वा स्युः। (कास्यनेकाच आम् वक्तव्यः)। लिटि आस्कासोराम्विधानान्मस्य नेत्त्वम्॥
न्यासः
आयादय आर्धधातुके वा।, ३।१।३१

"आर्धधातुकविषये" इत्येतेनार्धधातुक इत्यस्य विषयसप्तमीत्वं दर्शयति। आर्धधातुकविषयत्वं तु तद्विवक्षायां सत्यां

बुद्धिस्थे तस्मिन् सम्भवति,नान्यथेत्याह-- "आर्धधातुकविवक्षायाम्" इति। केन पुनरभिसन्धिना विषयसप्तमीत्वमाश्रीयत इति? एवं मन्यते-- परसप्तम्यामुत्पत्तिर्वा विकल्प्यते? निवृत्तिर्वा? यद्युत्पत्तिस्तदा गुपेः स्त्रियां क्तिनि विहिते तत्र यदायप्रत्ययो नोत्पद्यते तदा कामं गुप्तिरितीष्टं सिध्यति। यदा तूत्पद्यते, तदातो लोपे ६।४।४८ वलि लोपे ६।१।६४ इत्यकारे कृते तत्र परतो यदा निवृत्तिर्न भवति तदा कामं गोपायेतीष्टं सिध्यति। यदा तु भवति तदा गोपेत्यनिष्टं प्राप्नोति। गुप्तिरिति सत्यामसत्यां वा निवृत्ताविष्टं न सिध्यति; विषयसप्तम्यां तूत्पत्तौ विकल्पितायामुत्पत्स्यते। अर्धधातुकमिति आर्धधातुकविवक्षायामादावेव विकल्पः। तत्रानुत्पत्तिपक्षे स्त्रियां क्तिनि विहिते गुप्तिरिति सिध्यति, उत्पत्तिपक्षे गोपायेति। न च गोपातिरित्यनिष्टमपि; आयप्रत्ययान्तात् क्तिनोऽभावात्। नापि गोपेत्यनिष्टमापद्यते, आयप्रत्ययस्यानुत्पत्तेः। "नित्यप्रत्ययप्रसङ्गे" इति। पूर्वकैस्त्रिभिः सूत्रैर्नित्यमायादिषु प्राप्तेष्वित्यर्थः। "तदुतप्त्तौ" इत्यादि। तेषामायादीनामार्धधातुकविषय उत्पत्तिर्विकल्प्यते, न तूत्पन्नानां निवृत्तिः। यदि हि निवृत्तिर्विकल्प्येत तदार्धधातुके विषयभूते सत्यायप्रत्यये निवृत्ते प्रत्ययलक्षणेन "अ प्रत्ययात्" ३।३।१०२ इत्यकारप्रत्यये विहिते विषयसप्तम्यामपि गोपेत्यनिष्टं स्यादित्यभिप्रायः। "यथायथम्" इति। यो यतः प्राप्नोति स पश्चादुत्पत्तिविकल्पादुत्तरकालं ततो भवतीत्यर्थः॥

बाल-मनोरमा

आयादय आर्द्धधातुके वा १४८, ३।१।३१

आयादयः। आय आदिर्येषां ते आयादयः। "आय ईयङ्णिङ् चेति त्रय आयादयो मताः"। गुपूधूपविच्छिपणिपनिभ्य आयः, ऋतेरीयङ्, कमेर्णिङित्युत्तरमस्य सूत्रस्य पाठात्। विवक्षायामिति। "आर्द्धधातुके" इति विषयसप्तमीति भावः। परसप्तमीत्वे तु गोपायितेत्यत्र अतो लोपो न स्यात्, आर्द्धधातुकोपदेशकालेऽदन्तत्वाऽभावादिति भावः।

तत्त्व-बोधिनी

आयादय आर्द्धधातुके वा १२१, ३।१।३१

आयादयः। आयेयङ्()णिङ इत्यर्थः। विवक्षायामिति। परसप्तम्यां तु आर्द्धधातुकोपदेशकाले यददन्तमित्यनुपदं वक्ष्यमाणं न सङ्गच्छेतेति भावः। अन्ये तु "गुपू रक्षणे" इत्यस्मात् क्तिनि पश्चादाय्()प्रत्यये गोपायतिरित्यनिष्टप्रसज्येत। विवक्षायामित्युक्ते तु आय्()प्रत्यये कृते क्तिनं बाधित्वा "अप्रत्यया" दित्यकारप्रत्यये टापि च "गोपाया" "धूपाये"ति सिद्ध्यतीत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

सनाद्यन्ता धातवः ३।१।३२

सनादिर्येषां ते सनादयः। सनादयो ऽन्ते येषं ते सनाद्यन्ताः। सनाद्यन्ताः समुदायाः धातुसंज्ञाः भवन्ति। प्रत्ययग्रहणपरिभाषा एव पदसंज्ञायाम् अन्तवचनेन लिङ्गेन प्रतिषिद्धा सती पुनरिह अन्तवचनेन प्रतिप्रसूयते। चिकीर्षति। पुत्रीयति। पुत्रकाम्यति।

लघु-सिद्धान्त-कौमुदी

सनाद्यन्ता धातवः ४७०, ३।१।३२

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः। धातुत्वाल्लडादयः। गोपायति॥

न्यासः

सनाद्यन्ता धातवः। , ३।१।३२

"सनादयोऽन्ते येषाम्" इति वाक्यविशेषेण बहुव्रीहि दर्शयति। गमकत्वन हि व्यधिकरणानामपि बहुव्रीहिर्भवत्येव, यथा--कण्ठेकालः, उरसिलोमेति। आदिशब्देन क्यजादीनां णिङपर्यन्तानां ग्रहणम्। "समुदायाः" इति। प्रकृतिप्रत्ययसमुदायाः। एतेन तद्गुणसंविज्ञानबहुव्रीहि दर्शयति; अन्यथा सनाद्युपलक्षितानां प्रकृतीनामेव धातुसंज्ञा विधीयेत। "{धातुसंज्ञाः--काशिका, पदमञ्जरी च।}धातुसंज्ञकाः" इति। धातुः संज्ञा येषां ते धातुसंज्ञकाः। धातुशब्दश्चात्र स्वरूपपदार्थकः, न भूवादिपदार्थकः, अन्यथा भूवादयः सनाद्यन्तानां संज्ञाः स्युः, तच्चायुक्तम्, न हि तावतीनां संज्ञानां करणे किञ्चित् प्रयोजनमस्ति। आवर्तिन्यश्च संज्ञा भवन्ति। न हि भूवादीनामेव सर्वेषामावृत्तिः क्वचिच्छास्त्रेऽस्तीति न तत्पदार्थको धातुशब्दः। इह हि संज्ञाविधौ सनादीनां प्रत्ययनां ग्रहणम्। "सुप्तिङन्तं पदम्" १।४।१४ इत्यत्र चान्तग्रहणेन ज्ञापितमेतत-- "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य" (पि।प।वृ।४४) इति। एषा परिभाषा संज्ञाविधौ प्रत्ययग्रहणे प्रतिषिद्धा। तत्रासत्यन्तग्रहणे तदन्तविधिर्न स्यात्, इष्यते च, अतस्तदर्थमन्तग्रहणं कृतम्, तत्रानेनान्तग्रहण#एनापूर्व एव तदन्तविधिः क्रियत इति मन्यमानो यो देशयेत् तं प्रत्याह--- यदि तर्हि सनाद्यन्तानामियं संज्ञा विधीयते तदा देवदत्तः प्राचिकीर्षदित्यत्र देवदत्तस्य सोपसर्गस्य च संज्ञा प्रसज्येतेति। अत आह--"प्रत्ययग्रहणपरिभाषयैव" इत्यादि। न ह्यनेनान्तग्रहणेनापूर्व एव तदन्तविधिः क्रियते, किं तर्हि? पदसंज्ञाविधादन्तग्रहणेन प्रतिषिद्धा सती प्रत्ययग्रहणपरिभाषयैव पुनरिह प्रतिप्रसूयते। कृतप्रवृत्तिविधाता सती पुनः प्रवत्र्तत इत्यर्थः। ततश्च यतः सनादयो विहितास्तदादेरेव समुदयस्य संज्ञा भवति, न शब्दान्तरादेरिति भावः। अथ "भूवादयो धातवः" १।३।१ इत्यस्यानन्तरं "सनाद्यन्ताश्च इति कस्मान्नोक्तम्; एवं हि धातुग्रहणं द्विर्न कत्र्तव्यं भवति? नैवं शक्यम्, एवं हि क्रियमाणे सनादीनामियत्तापरिच्छदो न स्यात्। इह तु क्रियमाणे णिङपर्यन्तानां ग्रहणं विज्ञायते। तर्हि "सनाद्यन्ता धातवः" (३।१।३२) इत्यस्यानन्तरं "भूवादयश्च" इति कस्मान्नोक्तम्? एतदपि न; एवं हि क्रियमाणे सनाद्यन्तस्यानुक्रान्तापेक्षित्वात् भूवादीनामप्यनुक्रान्तापेक्षित्वं स्यात्; ततश्चानुक्रान्तानामेव गुपादीनां धातुसंज्ञा स्यात्, नान्येषां भूवादीनाम्। अथ भूवादीनामनुक्रान्तापेक्षा न भवति सनादीनामपि न स्यात्, ततश्च सनादयः कप्पर्यन्ता गृह्येरन्निति सन्देहः स्यात्। तस्माद्यथान्यासमेव न्याय्यम्॥

बाल-मनोरमा

सनाद्यन्ताः धातवः १४७, ३।१।३२

नन्वायप्रत्ययान्तस्य भ्वादिषु पाठाऽभावेन धातुत्वाऽभावात् कथमस्माल्लडादय इत्यत आह-- सनाद्यन्ताः। "गुप्तिज्किद्भ्यः स"नित्यारभ्य "कमेर्णि"ङित्यन्तैः सूत्रैः सनादिप्रत्ययान्विधाय सूत्रमिदं पठितम्। सन् आदिर्येषां ते सनादयो णिङ्प्रत्ययपर्यन्ताः, ते अन्ते येषां ते सनाद्यन्ता इति विग्रहः। तदाह---सनादयः इति। "सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब्णिज्यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशाऽमी सनादयः" इति। सङ्ग्रहः। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणप्रतिषेधादिह तदन्तग्रहणम्। धातुत्वादिति। आयप्रत्यान्तस्येत्यर्थः। गोपायतीति। शपि "अतो गणे" इति पररूपम्।

तत्त्व-बोधिनी

सनाद्यन्ता धातवः १२०, ३।१।३२

सनाद्यन्ताः। सदनादय इति। "सन्()क्यच्()काम्यचज्()क्यङ्()क्यषोऽथाचारक्विप्()णिज्()यङौ तथा। यगाय णिङ् चेति द्वादशीमी सनादयः"। धातुत्वादिति। प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः। "सुप्तिङन्त"मित्यनेन "संज्ञाविधौ प्रत्ययग्रहणे

तदन्तग्रहणं नास्ती"तिज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञालाभाय अस्मिन् सूत्रे अन्तग्रहणं कृतम्। "भूवादयो धातवः" इत्यस्यानन्तरं "सनाद्यन्ताश्चे"ति न सूत्रितं, सनादयो द्वादशेवेति निर्धारणाऽलाभापत्तेः। निर्धारणाऽलाभापत्तेः। "सनाद्यन्ता धातवः" इत्यस्यानन्तरं तु "भूवादयंश्चे"ति पठित्वा "धातव" इत्येतत्तन्न त्यक्तुं शक्यम्।

---

सूत्रम्

काशिका-वृत्तिः

स्यतासी लृलुटोः ३।१।३३

लृरूपम् उत्सृष्टानुबन्धं सामान्यम् एकम् एव। तस्मिन् लुटि च परतो धातोर् यथासङ्ख्यं स्यतासी प्रत्ययौ भवतः। करिष्यति। अकरिष्यत्। श्वः कर्ता। इदित्करणम् अनुनासिकलोपप्रतिषेधार्थम्। मन्ता। सङ्गन्ता।

लघु-सिद्धान्त-कौमुदी

स्यतासी लृलुटोः ४०५, ३।१।३३

धातोः स्य तासि एतौ प्रत्ययौ स्तो लृलुटोः परतः। शबाद्यपवादः। लृ इति लृङ्लृटोर्ग्रहणम्।

न्यासः

स्यतासी लृलुटोः। , ३।१।३३

इह द्वे लृरूपे--- एकं लृटः सम्बन्धिः, द्वितीयं लृङ। द्वयोरपि तेयोग्र्रहणम्िष्टत्वात्, विशेषानुपादानाच्च। ततश्चैते द्वे तृतीयञ्च लुडिति त्रीणि निमित्तानि भवन्ति। निमित्तिनौ तु द्वौ स्यातासी इति वैषम्यम्। अतः संख्यातानुदेशो न स्यादिति यो देशयेत्, तं प्रत्याह-- "लृरूपम्ित्यादि। टकारङकारयोरनुबन्धयोः परित्यागेन ततकृत्यस्य भेदस्याभावाल्लृरूपं लृङलृटोः सामान्यमेकमेवेति निमित्तयोरपि द्वित्वम्। तेन संख्यतानुदेशो न विरुध्यत इत्यभिप्रायः। अत एवाह-- "यथा संख्यम्" इति। "करिष्यति" इति। "लृट् शेषे च" ३।३।१३ इति लृट्, ऋद्धनोः स्ये" ७।२।७० इतीट्। "अकरिष्यत्" इति। लृङ, अडागमः, "इतश्च" ३।४।१०० इतीकारलोपः। "कत्र्ता" इति। "अनद्यतने लृट्", ३।३।१५ "लुटः प्रथमस्य" २।४।८५ इत्यादिना तिपो डादेशः,टिलोपः। "इदित्करणम्" इत्यादि। इच्चासावित् इत्संज्ञकश्चेतीति,तस्य करणमिदित्करणम्। इकारस्येत्संज्ञकस्य करणित्यर्थः। अथ वा-- इदित् यस्य तासेः स इदित् तासिः, तस्य करणमिदित्करणसंज्ञकेकारस्य तासेः करणमित्यर्थः। "अनुनासिकलोपप्रतिबन्धार्थम्" इति। असति तु तस्मिन् "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः स्यात्। अतस्तस्य प्रतिबन्धः प्रवृत्तिविघातो यथा स्यादित्येवमर्थमिदित्करणम्। "मन्ता" इति। "मन ज्ञाने" (धा।पा।११७६), "मनु अवबोधने"(धा।पा।१४७१) इति वा। "अनुदात्तङितः"१।३।१२ इत्यात्मनेपदम्। "संगन्ता" इति। अत्रापि संपूर्वाद्गमेः "समो गमि" १।३।२९ इत्यादिना अत्रोभयत्रापि टिलोपे कृते ङित्वादात्मनेपदमाश्रित्यानुनासकिलोपः प्राप्नोति, स इदित्करणेन प्रतिषिध्यते। यदि तर्हि तासेरिदित्करणमनुनासिकलोपप्रतिबन्धार्थम्, एवं सति "इदितो नुम् धातोः" (७।१।५८) इत्यत्र यद्वक्ष्यति "तासिसिचोरिदित्कार्यं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ()ते" इति तद्विरुध्यते? नास्ति विरोधः, भिन्नकर्त्तृकत्वात्। इदं हि जयादित्यवचनम्, तत् पुनर्वामनस्य। वामनवृत्तौ तु तासिसिचोरिकार उच्चारणार्थो नानुबन्धो पठ()ते, तेन विरोधो नाशङ्कनीयः। केन पुनरभिसन्धिना जयादित्यस्तासेरिकारस्यानुनासिकलोपप्रतिबन्धार्थतां कृतवान्? वामनस्तूच्चारणर्थताम्? येनाभिसन्धिना स तावच्छरूयताम्-- आभाच्छास्त्रीयमसिद्धत्वमनित्यम्, अनित्यत्वं तु तस्य तत्रैव प्रतिपादयिष्यते जयादित्येन। आभाच्छास्त्रीयस्य टिलोपस्यासिद्धत्वमिह नास्ति। अनित्यत्वादित्यभिप्रेत्य तासेरिकारस्यानुनासिकलोपे प्रतिबन्धार्थतोक्ता। वामनेनत्वसिद्धत्वमिहास्त्येवेति

मन्यमानेनोच्चारणार्थतोक्ता। न हि टिलोपस्यासिद्धत्वे सत्यनुनासिकलोपः प्राप्नोति। तदयुक्ता तत्प्रतिबन्धार्थतेकारस्य। यथैव हि गोनर्द्दीय आचार्यः-- सन्निपातलक्षणपरिभाषाया उपस्थानमाश्रित्यातिजरं ब्राआह्णकुलं तिष्ठति, अतिजरैब्र्राआह्णकुलैरिति भवितव्यमित्याह; अन्ये त्वनित्यत्वादस्याः परिभाषाया अनुपस्थानमाश्रित्यातिजरसं ब्राआह्णकुलमतिजरसैरिति भवितव्यमित्याहुः, तथेदमपि प्रयोजनद्वयमाभाच्छास्त्रीय्सयास्तित्वञ्चाश्रित्य वृत्तिकारावुक्तवन्ताविति वेदितव्यम्। अन्ये चाचक्षते-- प्राग भादसिद्धाधिकार इतीमं पक्षमाश्रित्येकारस्यानुनासिकलोपप्रतिबन्धार्थतोक्ता। सह तेनासिद्धाधिकार इत्यश्रित्योच्चारणार्थतेति। एतच्चाशक्यं विज्ञातुम्; प्राग् भादसिद्धाधिकार इत्यस्य पक्षस्य जयादित्यवामनाभ्यामनाश्रित्वात्। अनाश्रितत्वंतु तत्रैव वृत्तावभिव्यक्तमिति तत एवावगन्तव्यम्। एते च स्वादयो येननाप्राप्तिन्यायेनान्तरङ्गत्वाच्च सर्वेषां यगादीनामपवादाः; अन्तरङ्गत्वं तु तेषां लावस्थायामेव विधानात्॥

बाल-मनोरमा

स्यतासी लृलुटोः ३५, ३।१।३३

भू-ति इति स्थिते "कर्तरि शबि"ति शपि प्राप्ते-- स्यतासी लृ। स्यश्च तासिश्चेति द्वन्द्वात्प्रथमाद्विवचनम्। तासेरिकार उच्चारणार्थः। लृ लुट् अनयोद्र्वन्द्वात्सप्तमीद्विवचनम्। ग्रहणमिति। लृस्वरूपस्योभयत्राऽविशिष्टत्वादिति भावः। धातोरित्यधिकृतम्। तदाह--धातोरिति।

---

सूत्रम्

काशिका-वृत्तिः

सिब्बहुलं लेति ३।१।३४

धातोः सिप् प्रत्ययो भवति बहुलं लेति परतः। जोषिषत्। तारिषत्। मन्दिषत्। न च भवति। पताति दिद्युत्। उदधिं च्यावयाति।

न्यासः

सिब्बहुलं लेटि। , ३।१।३४

"जोषिषत्" इति।"जुषी प्रीतिसेवनयोः" (धा।पा।१२८८) लिङर्थे लेट्। सिप इकार उच्चारणार्थः, पकारः स्वरार्थः, "लेटोऽडाटौ" ३।४।९४ इत्यट्। "इतश्च लोपः परस्मैपदेषु" ३।४।९७ इतीकारलोपः, "आर्धधातुकस्येडवलादेः" ७।२।३५ इतीट्, लघूपधगुणः, "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्। "तारिषत्" इति। "तॄ? प्लवनतरणयोः" (धा।पा।९६९) "सार्वधातुकार्धधातुकयोः" ७।३।८४ "व्यत्ययो बहुलम्" ३।१।८५ इति वर्णव्यत्ययेन धात्वकारस्याकारः। शेषं पूर्ववत्। "मन्दिषत्" इति। "मदि {स्तुतिमोदमदस्वप्नकान्तिगतिषृ" धा।पा।} स्तुतिमोदनस्वप्नगितषृ" (धा।पा।१३), "इदितो नुम् धातोः" ७।१।५८ इति नुम्। "पदाति" इति। "पद गतौ" (धा।पा।११६९), दिवादिरनुदात्तेत्, व्यत्ययेन परस्मैपदम्, शप्()प्रत्ययश्च, अटा सह सवर्णदीर्घत्वम्। तिप इकारलोपोऽत्र न भवति; तद्विधौ "वैतोऽन्यत्र" ३।४।९६ इत्यतो वेत्यनुवृत्तेः। "च्यावयाति" इति। "च्यङ {न स्तो धातुपाठे} छ्युङ ज्युङ {न स्तो धातुपाठे} झयुङ प्रुङ प्लुङ गतौ" (धा।पा।९५५,९५६,९५७,९५८)। हेतुमण्णिच्। सिपः पित्करणं बोभूयिषातामित्यत्रोदात्तनिवृत्तिस्वरेणोदात्तत्वे प्राप्तेऽनुदात्तार्थम्। यङन्तात् बोभूयशब्दाल्लेट आत्मनेपदम्, त, टेरेत्वम्()। "एत ऐ" ३।४।९३ "लेटोऽडाटौ" ३।४।९४ इत्याट् "तस्यानुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमहन्विङोः" ६।१।१८० इति सार्वधातुकस्यानुदात्तत्वं पित्करणसामथ्र्यादन्तरङ्गोऽपि सिप्स्वरं प्रतीक्षते। तेन कृते तस्मिन् सिप इडागमः। स चागमानुदात्तत्वेनानुदात्तः।

"अतो लोपः" ६।४।४८ इति यङोऽकारस्योदात्तस्य लोपः। उदात्तत्वं तु तस्य धातुस्वरेण च। "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इत्युदात्तत्वे प्राप्ते पित्करणादनुदात्तत्वमिटो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

कास्प्रत्ययादाम् अमन्त्रे लिटि ३।१।३५

कासृ शब्दकुत्सायाम्, ततः प्रत्ययान्तेभ्यश्च धातुभ्यः आम् प्रत्ययो भवति लिटि परतो ऽमन्त्रविषये। कासाञ्चक्रे। प्रत्ययान्तेभ्यः लोलूयाञ् चक्रे। अमन्त्रे इति किम्? कृष्णो नोनाव। कास्यनेकाचः इति वक्तव्यम् चुलुम्पाद्यर्थम्। चकासाञ्चकार। दरिद्राञ्चकार। चुलुम्पाञ्चकार। आमो ऽमित्वम् अदन्तत्वादगुणत्वं विदेस् तथा। आस्कासोरां विधानाच् च पररूपं कतन्तवत्।

न्यासः

कास्प्रत्ययादाममन्त्रे लिटि। , ३।१।३५

प्रत्ययग्रहणेनेह सन्नादीनां प्रत्यायानां ग्रहणम्। "प्रत्ययग्रहणे यस्मात्" (पु।प।वृ।४४) इति परिभाषया "येन विधिस्तदन्तस्य" १।१।७१ इति वा तदन्तविधिर्विज्ञायते।धात्वधिकाराच्च प्रत्ययग्रहणेनेह धातवो विशिष्यन्त इत्याह--- "प्रत्ययान्तेभ्यो धातुभ्यः" इति। आम्प्रत्ययो भवतीति हलन्तपक्षमाश्रित्योक्तम्। अदन्तपक्षे त्वामः प्रत्ययो भवतीत्येवं वक्तव्यम्, तच्च नोक्तम्; वक्ष्यमाणादामोऽमित्त्वमदन्तत्वादित्यत एवावगम्यमानत्वात्। "अमन्त्रे" इति विषयसप्तमीयम्, न परसप्तमी, तेन मन्त्रप्रतिषेधात् भाषायां ब्राआह्णे च विषयेऽयं विधिर्विज्ञायते। ब्राआह्णो नाम मन्त्राणामेव व्याख्यानग्रन्थः। न च नत्रिवयुक्तन्यायेन (व्या।प।६५) ब्राआह्ण एव भवितव्यम्, न भाषायाम्? नैतत्; यदि भाषायामपि न स्यात् ब्राआह्ण इत्येवं ब्राऊयात्। "कासाञ्चक्रे" इति। "आमः" २।४।८१ इति लेर्लुक्। लिटः कृत्तवाल्लुप्ते तस्मिन् "कृत्तद्धितसमासाश्च" १।२।४६ इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा, सुः, स्वरादिपाठात् " तद्धितश्चासर्वविभक्तिः" १।१।३७ इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वाऽव्ययसंज्ञायां सोर्लुक्। अथ "हल्ङ्याब्भ्यः" ६।१।६६ इत्यनेन#आत्र सोर्लोपो भविष्यति, किमत्राव्ययसंज्ञया। "लोलूयाञ्चक्रे" इति। लोलूयशब्दाद्यङन्तादाम्। "नोनाव" इति। "णु स्तुतौ" (धा।पा।१०३५), "णो नः" ६।१।६३ इति नत्वम्, यङ, नोनूयत इति स्थिते "यङोऽचि च" २।४।७४ इति यङो लुक्, लिट्, तिप्, "परस्मैपदानाम्" ३।४।८२ इति णल्, वृद्धिः। अत्र प्रत्ययलक्षणेन प्रत्ययान्तादाम् स्यात्, अमन्त्र इति वचनान्न भवति। "कास्यनेकाचः" इत्यादि। प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कत्र्तव्यमित्यर्थः। किमर्थमित्याह-- "चुलुम्पाद्यर्थम्" इति। यथान्यासं हि क इत्यस्मात् प्रजापतिवाचिनो विष्णुवाचिनोऽशब्दादाचारक्विपि तदन्तादप्याम् प्रसज्येत, चकासृप्रभृतिभ्योऽप्रत्ययान्तेभ्यश्च न स्यात्, तस्मादिदं न्यासान्तरं द्रष्टव्यम्। अन्ये तु प्रत्ययग्रहणस्यानेकाजुपलक्षणान्न कत्र्तव्यमेतदिति मन्यन्ते, एतच्चायुक्तम्; न हि प्रत्ययग्रहणमनेकाजुपलक्षणार्थमुपपद्यते, एकाचामपि प्रत्ययानां धातूनां विद्यमानत्वात्। यथा त्वेतन्न्यासान्तरं प्रत्याख्येयं भवेत् तथोत्तरत्र दर्शयिष्यामः। "चकासाञ्चकार, दरिद्राञ्चकार" इति। "चकासृ दीप्तौ" (धा।पा।१०७४), "दरिद्रा दुर्गतौ" (धा।पा।१०७३)। "चुलुम्पाञ्चकार" इति। चुलुम्पतेर्धातुष्वपरिपठितस्यापि कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति कात्यायनवचनप्रामाण्यात् धातुत्वं वेदितव्यम्। अथामो मकारस्य "हलन्त्यम्" १।३।३ इतीत्संज्ञा कस्मान्न भवतीत्याह-- "आमोऽमित्तवम्" इत्यादि। मकार इद्यस्य सोऽयमित्, न मिदमित्, तस्य भावोऽमित्त्वम्। कथममित्तवमित्याह-- "अदन्तत्वात्" इत्यादि। मकारान्तत्वे हि सति मकार्सयेत्संज्ञा स्यात्। न चास्य मकारान्तत्वम्, किं तर्हि? अदन्तत्वम्। तेनाकार एव "उपदेशेऽजनुनासिक इत्" ((१।३।२#ः इतीत्संज्ञामनुभवन् मकारस्येत्संज्ञां

प्रतिबध्नाति। यथा चामेऽमित्तवमदन्तत्वादगुणत्वं विदेस्तथा। गुणाभावोऽपि हि विदेर्विदाञ्चकारेत्यत्राकारान्तत्वादावेव भवति। अथाकारान्तत्वे सत्यतो लोपे ६।४।४८ तस्याः "अचः परस्मिन् पूर्वविधौ" १।१।५६ इति स्थानिवद्भावादिकार उपधा न भवति, तेन लघूपपधगुणो न भवति। अदन्तत्वं तु विदेः "उषविदजागृभ्योऽन्यतरस्याम्" ३।१।३८ इत्यनेनाम्प्रत्ययसन्नियोगेनाकारान्तत्वनिपातनात्। अभ्युपेत्यामो मकारान्तत्वममित्त्वं प्रतिपादयितुमाह-- "आश्चकासोर्विधानाच्च" इति। आमोऽमित्त्वमिति प्रकृतेन सम्बन्धः,"दयायासश्च"( ३।१।३७) इत्यास आमो विधानात्। कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्युपसंख्यानाच्चकासेः। आदिग्रहणेन हि चकासेरपि ग्रहणम्। मकारस्येत्संज्ञैयतत् प्रय#ओजनम्-- अचोऽन्त्यात् परो यथा स्यादिति। यदि चामोऽमित्त्वं स्यात् तदाऽऽश्चकासोरामो विधानमनर्थकं स्यात्। न हि तयोरचोऽन्त्यात् प आशि भवत्यभवति वा कश्चिद्विशेषः। उभयथा हि "अकः सवर्णे" ६।१।९७ इति दीर्घत्वे तदेव रूपं स्यात्, तदेतदाश्चकासोरामो विधानं कथमर्थवद्भवति? यद्यमित्तवमामो भवति नान्यथा। न ह्न्यत् किञ्चित्प्रयोजनमस्तीति प्रयोजनाभावादित्संज्ञा न भविष्यति। आश्चकासोर्विधानसमाश्र्यात् सवर्णदीर्घत्वमिह न भविष्यति। "मिदचोऽन्त्यात् परः" १।१।४६ इति परिभाषा वा नोपस्थास्य इत्येतच्च नाशङ्कनीयं लक्ष्यविरोधमनिच्छता। एवं ह्निष्टं रूपं स्यात्। न चानिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता। यदि तह्र्रमोऽदन्तत्वमेवं सत्याममन्त्र इति निर्देशो नोपपद्यते, सवर्णदीर्घत्वे "आमामन्त्रे" इति भवितव्यमित्याह-- "पररूपं कतन्तवत्" इति। यथा" सर्वत्र लोहितादिकतन्तेभ्यः" ४।१।१८ इत्यत्र पररूपं तथेहापीति न भवति निर्देशानुपपत्तिः॥

बाल-मनोरमा

कास्प्रत्ययादाममन्त्रे लिटि १४९, ३।१।३५

तथा च लिटि आयप्रत्ययस्य विकल्पः स्थितः। तत्र आयप्रत्ययपक्षे आह---कास्प्रत्ययात्। आम्--अमन्त्रे इति च्छेदः। चकासृ दीप्तौ, जागृ निद्राक्षये इत्यादिभ्योऽपि लिटि आमिष्यते। प्रत्ययान्ताच्चेति लभ्यते। ततश्च अ इवाचरति अति। क्विबन्ताल्लडादयः। लिटि औ अतुरित्यादीष्टं न सिध्येत्, प्रत्ययान्तत्वेन आमः प्रसङ्गात्। यदि तु कासृधातोश्च, अनेकाचः प्रत्ययान्ताच्चेति व्याख्यायेत, तदा चकासृजाग्रादिभ्यो न स्यादित्यत आह--प्रत्ययग्रहणमपनीयेति। तथाच कास्धातोरनेकाचश्च आमित्येतावदेव लभ्यत इति नोक्तदोषद्वयमिति भावः। वस्तुतस्तु अ इवाचरति अतीत्यादि नास्त्येवेति सुब्धातुनिरूपणे वक्ष्यते। तथा च गोपया-- आमिति स्थितम्।

तत्त्व-बोधिनी

कास्प्रत्ययादाममन्त्रे १२२, ३।१।३५

कास्प्रत्यया। अमन्त्रेति किम्?। कृष्णो नोनाव। अच्छन्दसीति तु नोक्तं, मन्त्रभिन्ने छन्दसि आम इष्टत्वात्। यथा-- "पुत्रमामन्त्रयामास"। प्रत्ययान्तत्वादाम्। "अथ ह शुनः शेप ईक्षांचक्रे"। "इजादेश्चे"त्याम्। इह चुलुम्पचकासृदरिद्रादिब्य आमोऽप्राप्तौ "कास्यनेकाच" इति वार्तिकमारभ्यते।

कास्यनेकाज्ग्रहणं कर्तव्यम्। प्रत्ययग्रहणमपनीयेति। अन्यथा अ इवाचरति अति। अस्य लिटि औ अतुरित्यादि वक्ष्यमाणं न सिध्येदिति भावः। अन्ये तु भाष्यावार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुतया प्रत्ययान्तादेकाचोप्याम् भवत्येव। अ इवाचरति इत्याचारक्विपि लिटि आंचकार आंचक्रतुरित्यादीत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

इजादेश् च गुरुमतो ऽनृच्छः ३।१।३६

इजादिर् यो धातुर् गुरुमानृच्छतिवर्जितः, तस्माच् च लिटि परत आम् प्रत्ययो भवति। ईह चेष्टायाम्। ऊह वितर्के। ईहाञ्चक्रे। ऊहाञ्चक्रे। इजादेः इति किम्? ततक्ष। ररक्ष। गुरुमतः इति किम्? इयज। उवप। अनृच्छः इति किम्? आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। ऊर्णोतेश्च प्रतिषेधो वक्तव्यः। प्रोर्णुनाव। अथ वा वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थम् एकाचश्चेडुपग्रहात्।

लघु-सिद्धान्त-कौमुदी

इजादेश्च गुरुमतोऽनृच्छः ५१३, ३।१।३६

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि॥

न्यासः

इजादेश्च गुरुमतोऽनृच्छः।, ३।१।३६

"{यजादेः इति मुद्रितः पाठः।} इजादेः" इति। आदिर्यस्येति बहुव्रीहिः। "इच्" इति प्रत्याहारग्रहणम्। गुरुरस्यास्तीति गुरुमान्। "ऋच्छतिवर्जितः" ऋच्छिना त्यक्तः। तद्रूपरहित इत्यर्थः। "ईहाचञ्क्रे" इति। "ईह चेष्टायाम्" (धा।पा।६३२) "ऊहाञ्चक्रे" इति। "ऊह वितर्के" (धा।पा।६४८)। "ततक्ष, ररक्ष" इति। "तक्षू त्वक्षू तनूकरणे" (धा।पा।६५५, ६५६), "रक्ष पालने" (धा।पा।६५८)। "इयज; उवप" इति। यजिवप्योरुत्तमे णलि "णलुत्तमो वा" ७।१।९१ इति णित्त्वाभावपक्षे वृद्ध्यभावाद्गुरुमत्ताभावः। केचित् इयेष, उवोषेति प्रत्युदाहरन्ति। "{इष धा।पा।} इषु इच्छायाम्" (धा।पा।१३५१) "उष दाहे" (धा।पा।६९६), णलि लघूपधगुणःष द्विर्वचनम्, "अभ्यासस्यासवर्णे" ६।४।७८ इतीयङुवङौ। ननु च गुणे कृत एतावपि गुरुमन्तो भवत इति भवितव्यमेवामात्र? न भवितव्यम्; "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।प।१२) इति लिट्सन्निपातो गुरुमत्ताया हेतुः। गुरुमत्ता च "आमः" २।४।८१ इति लिटमेव विहन्ति। अथ वा-- गुरुमत इति नित्ययोगे मतुप्, तेन नित्यं यस्य गुरुमा योगस्ततो भवितव्यम्, न चेषेरुषेश्च नित्यं गुरुणा सह योगः। यद्येवम्, "उछी विवासे" (धा।पा।२१६) -- उच्छाञ्चकारेत्यत्र तुकि कृते न प्राप्नोति? नैष दोषः; ऋच्छिप्रतिषेधो हि ज्ञापयति-- आगमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीति। "आनच्छ" इति। "ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु" (धा।पा।१२९६), "छे च" ६।१।७१ इति तुक्, "ऋच्छत्यृ()ताम्" ७।४।११ इतिगुणः, द्विर्वचनम्, हलादिशेषः, "अत आदेः" ७।४।७० इति दीर्घः, "तस्मान्नुड् द्विहलः" ७।४।७१ इति नुट्। ननु च "ऋच्छत्यृ()ताम्"७।४।११ इति ऋच्छतेरनन्तरे लिटि गुणवचनं ज्ञापकम्-- ऋच्छेराम् न भवति। सति हि तस्मिन्नागमनिमित्ता गुरुमत्ता यस्य ततोऽपि भवतीत्येतज्ज्ञापितं न स्यात्। तस्मादनृच्छ इति प्रतिषेधः कत्र्तव्यः। "ऊर्णोतेः" इत्यादि। इजादित्वाद्गुरुमत्त्वाच्च प्राप्नोत्याम्। तस्मात् प्रतिषेधो वक्तव्यः, व्याख्येय इत्यर्थः। व्याख्यानं तु-- वक्ष्यमाणस्यान्यतरस्यांग्रहणस्य सिंहावलोकितन्यायेनानुवर्त्तितस्य व्यवस्थितविभाषात्वविज्ञानात् कत्र्तव्यम्। "प्रोर्णुनाव" इति। "अजादेर्द्वितीयस्य" ६।१।२ इति "नु"इत्यस्य द्विर्वचनम्। रेफस्तु न द्विरुच्यते; "न न्द्राः संयोगादयः" ६।१।३ इति प्रतिषेधात्। "अथ वा" इत्यादि। "णु स्तुतौ" (धा।पा।१-३५)। "तेन तुल्यं वत्र्तते" इति नुपवत्, तस्य भावो नुवद्भाव इति। नौतिना तुल्यं वत्र्तत इत्यर्थः। किं पुनस्तस्य प्रयोजनम्, येनासौ तथा वाच्यः? इत्याह--- "यङप्रसिद्धिः प्रयोजनम्" इति। नुवद्भावे सति यथा नौतेः "धातोरेकाचः" ३।१।२२ इतियङ भवति नोनूयत इति, एवमूर्णोतेरपि- प्रोर्णोनूयत इति। "आमश्च प्रतिषेधार्थम्" इति नुवद्भावो वाच्य इत्यपेक्षते। तस्मिन् सति यथा नौतेरनिजादित्वाद्गुमत्ताभावाच्चाम् न भवति, तथोर्णोतेरपि-- प्रोर्णुनावेति। "एकाचश्चेडुपग्रहात्" इति। "नुवद्भावो वाच्यः" इति सम्बध्यते। कर्मणि "ल्यब्लोपे" (वा।१२७) इति पञ्चमी, यथा-- प्रासादात् प्रेक्षते, आसनात् प्रेक्षत इति। इडुपग्रह इति इट्प्रतिषेधः। एतदुक्तं भवति-- एकाचः" ७।२।१० इत्यनुवत्र्तमाने "श्रयुकः किति" ७।२।११ इति य इडुपघः क्रियते तदुद्दिश्य प्रयोजनमूर्णोतेर्नुवद्भावो वाच्य इति। तेन यथा नौतेः "श्रयुकः किति" इतीट्प्रतिषेधः-नुतः, नुतवानिति, तथोर्णोतेरपि-- प्रोर्णुतः, प्रोर्णुतवानिति। अथ वा-- इडुपग्रहादिति हेतावियं पञ्चमी, यथा-- "तदशिष्यं संज्ञाप्रमाणत्वात्"

१।२।५३ इति। एकाचो यत इड्उपग्रहो विधीयते तस्मात् प्रयोजनाद्धेतोरूर्णोतेर्नुवद्भावो वाच्य इत्यर्थः। अथ "इजादेश्च" इति किमर्थश्चकारः? अनुक्तसमुच्चयार्थः , तेन "कास्यनेकाचः" (वा। २०५) इति वक्तव्यं न भवति। यथान्यासेऽपि चकारेण चकासाञ्चकारेत्यादेः सिद्धत्वात्। ननु च यदीदं नोच्येत, तदा प्रत्ययान्तोऽपि यो धातुरेकाच् ततोऽपि प्रसज्येत्? यदि नेष्यते, तदा वक्ष्यमाणमन्तयतरस्यांगर्हणमनुवर्त्यं व्यवस्थितविभाषात्वमङ्गीकत्र्तव्यम्॥

बाल-मनोरमा

इजादेश्च गुरुमतोऽनृच्छः ८३, ३।१।३६

इजादेश्च। नञ ऋच्छ इत्यनेन समासेऽनृच्छ इत्यस्मात्पञ्चमी। "धातोरेकाच" इत्यतो धातोरित्यनुवर्तते। "कास्प्रत्यया"दित्यत आमिति,लिटीति चानुवर्तते तदाह-- इजादिरित्यादिना। आस्कासोरिति। "कास्प्रत्ययादाममन्त्रे लिटी"ति , "दयायासश्चे"ति च कास्धातोः, आस्धातोश्चलिटि आम्विहितः। तत्र मकारस्य इत्संज्ञकत्वे "मिदचोऽन्त्यात्पर" इति आकारादाकारान्तरं स्यात्। ततश्च सवर्णदीर्घे कृते कास् आस् इत्येव भवतीति आम्विधिरनर्थकः स्यात्। अत आमो मकारस्य नेत्संज्ञेति विज्ञायत इत्यर्थः। तथा च एध् आम् ल इति स्थिते--

तत्त्व-बोधिनी

इजादेश्च गुरुमतोऽनृच्छः ६४, ३।१।३६

"धातोरेकाचः" इत्यतो धातुग्रहणं "कास्()प्रत्यया"दित्यत आम् लिटीति चानुवर्तत इत्याह--- इजादिर्यो धातुरित्यादि। गुरुमान् किम्?। इयेष। ऋच्छेस्त्वानच्छ॥

---

सूत्रम्

काशिका-वृत्तिः

दयायाऽसश् च ३।१।३७

दय दानगतिरक्षणेषु, अय गतौ, आस उपवेषने, एतेभ्यश्च लिटि परत आम् प्रत्ययो भवति। दयञ्चक्रे। पलायाञ् चक्रे। आसाञ् चक्रे।

लघु-सिद्धान्त-कौमुदी

दयायासश्च ५३८, ३।१।३७

दय् अय् आस् एभ्य आम् स्याल्लिटि। अयाञ्चक्रे। अयिता। अयिष्यते। अयताम्। आयत। अयेत। अयिषीष्ट। विभाषेटः। अयिषीढ्वम्, अयिषीध्वम्। आयिष्ट। आयिढ्वम्, आयिध्वम्। आयिष्यत॥ द्युत दीप्तौ॥ ४॥ द्योतते॥

न्यासः

दयायासश्च। , ३।१।३७

"पलायाञ्चक्रे" इति। परापूर्वस्यायतेः "उपसर्गास्यायतौ" ८।२।१९ इति लत्वम्।

बाल-मनोरमा

दयायासश्च १६४, ३।१।३७

दायायासश्च। दय अय आस् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। "कास्प्रत्यया"दित्यत आम् लिटीत्यनुर्तते। तदाह--एभ्य आम् स्याल्लिटीति।

सूत्रम्

काशिका-वृत्तिः

उषविदजागृभ्यो ऽन्यतरस्याम् ३।१।३८

उष दाहे, विद ज्ञाने, जगृ निद्राक्षये, एतेभ्यो लिटि परतो ऽन्यतरस्याम् आम् प्रत्ययो भवति। ओषाञ्चकार, उवोष। विदाञ्चकार, विवेद। जागराञ्चकार, जजागार। विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवति।

लघु-सिद्धान्त-कौमुदी

उषविदजागृभ्योऽन्यतरस्याम् ५७२, ३।१।३८

एभ्यो लिटि आम्वा स्यात्। विदेरन्तत्वप्रतिज्ञानादामि न गुणः। विदाञ्चकार, विवेद। वेदिता। वेदिष्यति॥

न्यासः

उषविदजागृभ्योऽन्यतरस्याम्। , ३।१।३८

उषजागृभ्यां साहर्याद्विदेरपि परस्मैपदिनो ज्ञानार्थस्य ग्रहणम्, न तु सत्ताविचारणार्थं योरात्मनेपदिनोः, नापि लाभार्थस्योभयपदिनः; जागर्त्तिनाऽऽदादिकेन वा साहचर्याद्विदेरादादिकस्यैव ग्रहणमित्याह-- "विद ज्ञाने" इति। विवेदेत्यत्रादन्तत्वाभावाद्गुणो भवत्येव। आम्सन्नियोगेन विदेरदन्तत्वं विज्ञायते, तेन तत्रैव गुणाभावो नान्यत्रेति। अत आह-- "विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवति" इति॥

बाल-मनोरमा

उषविदजागृभ्योऽन्यतरस्याम् १८०, ३।१।३८

उषविद। "कास्प्रत्यया" दित्यत आम् लिटीत्यनुवर्तते। तदाह--एभ्यो लिटीति। आमभावपक्षे आह--- उवोषेति। "अभ्यासस्याऽसवर्णे" इति उवङादेशः। जिषु विषु मिषु सेचन इति। द्वितीयो दन्त्योष्ठ()आदिः। थलि वसि मसि च विशेषमाह--क्रादिनियमादिडिति। विवेषिथेति। अजन्ताकारवत्त्वाऽभावेन भारद्वाजनियमाऽप्रवृत्तेस्थल्यपि क्रादिनियमान्नित्यमिट्। वेष्टेति। तासि ष्टुत्वेन तकारस्य टः। वेक्ष्यतीति। "षढो"रिति षस्य कः, सस्य षः। अविक्षदिति। "शल इगुपधा"दिति क्सः, षस्य कः, सस्य षः, कित्वान्न गुणः। पुषधातु सेडिति मत्वाह-- पोषितेति। अपोषीदिति। "नेटी"ति वृद्धिनिषेधः। नन्विट्सु पुषेः पाठात् कथं सेट्कत्वमित्यत आह---अनिट्केष्विति। अत इति। सेट्कत्वात् क्सो नेत्यर्थः। ननु पुषादित्वलक्षणः अङ्कुतो नेत्यत आह-- अङ्विधाविति। एतच्चानुपदमेव पुषादिसूत्रव्याख्यावसरे स्पष्टीभविष्यति। अयमपीति। पुषधातुवत् श्लिषधातुरपि भौवादिकः सेडित्यर्थः। कैयटादय इति। "श्लिष आलिङ्गने" इति सूत्रे कैयटहरदत्तादिभिस्तथा प्रपञ्चितत्वादिति भावः। द्वयोग्र्रहणमिति। भौवादिकदैवादिकयोरित्यर्थः। स्वोक्तीति। "श्लिष आलिङ्गने" इति सूत्रे दैवादिकश्लिषेरनिट्केषु ग्रहणमिति न्यासकृता कैयटादिभिश्चोक्तत्वादिति भावः। पृषु वृषु इत्यारभ्य ह्मषुपर्यन्ता ऋदुपधाः। अलीकं-- मिथ्याभवनं, मिथ्योक्तिर्वा। तुस ह्यसेत्यारभ्य णश गतावित्यतः प्राक् सकारान्ताः। घस्लृ धातुरनिट्कः। अयमिति। घस्लृधातुः, सर्वेषु न प्रयोज्य इत्यर्थः। कुत इत्यत आह--लिटीति। यद्ययं सार्वत्रिकः स्यात्तदा लिट()पि प्रयुज्येत ततश्च "अद भक्षणे" इति धातोर्लिट()न्यतरस्यामिति घस्लृभावविधिव्र्यर्थः स्यादिति भावः। असार्वत्रिकत्वे सति क्व प्रयोगः क्व नेत्यत आह--ततश्चेति। यत्र घस्लृधातोः प्रयोगे ज्ञापकं प्रत्यक्षवचनं वास्ति तत्रैवास्य प्रयोग इत्यर्थः। ततर् तावल्लिङ्गं दर्शयति-- अत्रैवेति। भ्वादिगणे अत्रैव क्रमे अस्य पाठः शपि परस्मैपदे प्रयोगे लिङ्गमित्यर्थः। न च धातुसंज्ञार्थः पाठ इति शङ्क्यं, द्युत दीप्तावित्यतः प्राक्। ["अनुदात्तेत इत्यतोग्रे"[ पाठेनैव सिद्धे अत्र क्रमे तत्पाठवैयथ्र्यादिति भावः। लृदित्करणमङीति। "प्रयोगे लिङ्ग"मिति शेषः।

अनिट्कारिकास्विति। अनुदात्तोपदेशेषु घस्लृधातोः पाठो वलाद्यार्द्धधातुके प्रयोगे लिङ्गमित्यर्थः। अथ क्वचिदस्य प्रयोगे प्रत्यक्षवचनं दर्शयति-- क्मरचीति। "सृघस्यदः क्मरः" जित्यत्र विशिष्य घसेरुपादानं क्मरचि प्रयोगे प्रमाणमित्यर्थः। घसतीति। लटि तसाद्युपलक्षममिदम्। लिटि अस्य प्रयोगाऽभावाल्लुट()दाहरति-- घस्तेति।

तत्त्व-बोधिनी

उषविदजागृभ्योऽन्यतरस्याम् १५३, ३।१।३८

उवोषेति। "पुगन्ते"ति गुणः। "अब्यासस्याऽसवर्णे" इत्युवङ्। घृषु संघर्षे। ल्युटि -- घर्षणम्। घस्लृ अदने। अयमिति। यद्ययं सार्वत्रिकः स्यात्तदा लिट()पि प्रयुज्येत, ततश्च "लिट()न्यतरस्या"मिति विकल्पेनादेशविधानं व्यर्थं भवेदिति भावः। अत्रैव पाठ इति। भ्वादौ परस्मैपदे पाठ इत्यर्थः। क्मरचीति। "सृघस्यदः क्मर" जिति सूत्रे।

---

सूत्रम्

काशिका-वृत्तिः

भीह्रीभृहुवां श्लुवच् च ३।१।३९

ञिभी भये, ह्री लज्जायाम्, डुभृञ् धारणपोषणयोः, हु दानादानयोः, एतेभ्यो लिटि परतः आम् प्रत्ययो भवति अन्यतरस्याम्, श्लाविव च अस्मिन् कार्यं भवति। किं पुनस् तत्? द्वित्वम् इत्वं च। बिभायाञ् चकार, विभाय। जिह्रयाञ् चकार, जिह्राय। बिभराञ् चकार, बभार। जुहवाञ् चकार, जुहाव।

लघु-सिद्धान्त-कौमुदी

भीह्रीभृहुवां श्लुवच्च ६१०, ३।१।३९

एभ्यो लिटि आम् वा स्यादामि श्लाविव कार्यं च। जुहवाञ्चकार, जुहाव। होता। होष्यति। जुहोतु, जुहुतात्। जुहुताम्। जुह्वतु। जुहुधि। जुहवानि। अजुहोत्। अजुहुताम्॥

न्यासः

भीह्रीभृहुवां श्लुवच्च। , ३।१।३९

"भीह्रीभृहुवाम्" इति। पञ्चम्यर्थे षष्ठी। सुपां सुपो भवन्तीति। "श्लुवत्" इति। श्लविव श्लुवत्। "तत्र तस्येव" ५।१।११५ इति सप्तमीसमर्थाद्वतिः। कार्यातिदेशश्चायम्। अत एवाह--- "श्लुवच्चास्मिन् कार्यं भवति" इति। "द्वित्वमित्त्वञ्च" इति। "श्लौ" ६।१।१० इति द्विर्वचनम्, "भृञामित्" ७।४।७६ इतीत्त्वम्। असति ह्यतिदेशे लिडाश्रयं द्विर्वचनमामा व्यवधाने न स्यात्। इत्त्वमपि नैव स्यात्, तद्विधौ हि "णजां त्रयाणां गुणः श्लौ" ७।४।७५ इत्यतः श्लावित्यनुवत्र्तते। तस्मात् तस्योभयस्य सिद्धये "श्लुवच्च" इत्यतिदेशः॥

बाल-मनोरमा

भीह्रीभृहुवां श्लुवच्च ३२१, ३।१।३९

भीहि। भी ह्री भृ हु एषां द्वन्द्वात्पञ्चम्यर्थे षष्ठी। "कास्प्रत्यया"दित्यत आम् लिटीत्यनुवर्तते। तदाह--एतेभ्य इति। "श्लुव"दिति सप्तम्यन्ताद्वतिरित्यभिप्रेत्य आह--आमि श्लाविव कार्यं चेति। जुहवामनिति। आमि श्लाविव द्वित्वे गुण इति भावः। जुहावेति। जुहुवतुः। जुहविथ जुहोथ। जुहुधि। हेर्धिरिति। "हुझल्भ्यो हेर्धि"रित्यनेनेति भावः। "जुहवानी"त्यत्र आटः पित्त्वेन अङित्()तवाद्गुणे प्राप्ते तं बाधित्वा "हुश्नुवो"रिति यणि प्राप्ते आह--आटि परत्वादिति। "हुश्नुवो"रित्यपेक्षया गुणः परत्वाद्भवतीत्यर्थः। लङि--अजुहोत् अजुहुतामिति सिद्धवत्कृत्य "सिजभ्यस्ते"ति जुसि "हुश्नुवो"रिति

यणमाशङ्क्याह-- परत्वाज्जुसि चेति गुण इति अजुहवुरिति। अजुहोः अजुहुतम् अजुहुत अजुहवम् अजुहुव अजुहुम। अहौषीदिति। सिचि वृद्धिः। अहौष्टामित्यादि। अहोष्यत्। ञि भी भये इति। अनिट्। ईदन्तः। शपः स्लौ द्वित्वादि मत्वाह-- बिभेतीति।

तत्त्व-बोधिनी

भीह्रीभृहुवां श्लुवच्च २७७, ३।१।३९

आटीति। "आडुत्तमस्ये"त्यनेन। परत्वादिति। "हुश्नुवो"रिति यणपेक्षया परत्वादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कृञ् च अनुप्रयुज्यते लिटि ३।१।४०

आम्प्रत्ययस्य पश्चात् कृञनुप्रयुज्यते लिटि परतः। कृञिति प्रत्याहारेण कृभ्वस्तयो गृह्यन्ते, तत् सामर्थ्यादस्तेर् भूभावः न भवति। आचयाञ् चकार। पाचयाम् बभूव। पाचयाम् आस।

लघु-सिद्धान्त-कौमुदी

कृञ् चानुप्रयुज्यते लिटि ४७४, ३।१।४०

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। तेषां द्वित्वादि॥

न्यासः

कृञ्चानुप्रयुज्यते लिटि। , ३।१।४०

"अनुप्रयुज्यते" इति। अनुप्रशब्दौ प्रत्येकं प्रथमान्ते पदे। "युज्यते" इत्यात्ममनेपदे प्रथमपुरुषैकवचनान्तं पदम्। "आम्प्रत्ययस्य" इति। आम् प्रत्ययो यस्मादिति बहुव्रीहिः। पश्चादित्यनेनानुशब्दस्यार्थमाचक्षाणः प्राक् प्रयोगं निराकरोति। सावधारणफलत्वाच्च सर्ववाक्यानामाम्प्रत्ययस्यैव पश्चात् कृञ् प्रयुज्यते-- इत्यवधारणमिहाश्रितम्, तेन व्यवधाने प्रयोगो निराकृतो भवति। न हि व्यवधाने कृञनुप्रयुज्यमान आम्प्रत्ययस्यैवानुप्रयुक्तो भवति, अपि तु शब्दान्तरस्यापि।"लिटि परतः" इत्यनेन प्रत्ययान्तरे परे प्रयोगाभावमाह। ननु च "आमः" २।४।८१ इति लिटो लुका भवितव्यम्, तत्कथं लिटि परतः कृञ नुप्रयुज्यते? नैष दोषः; न ह्ययमत्रार्थः-- लक्षणान्तरेण यो विहितो लिट्परः कृञनुप्रयुज्यत इति यावत्। ननु च कृञित्युच्यते, पाचयाम्बभूव पाचयामासेति भवतेरस्तेश्चानुप्रयोगो न सिध्यतीत्याह-- "कृञिति प्रत्याहारेण" इत्यादि।"अभूततद्भावे कृभ्वस्तियोगे" ५।४।४० इतीतं कृशब्दं गृहीत्वा "कृञो द्वितीयतृतीयशम्बबीजात् कृषौ" ५।४।५८ इति ञकारेण प्रत्याहारग्रहणमेतत्। तेन प्रत्याहारग्रहणेन कृभ्वस्तयस्त्रयो गृह्न्ते। तत्र च त्रयाणामप्यन्तर्भावादित्यदोषः। एवमप्यस्तेरनुप्रयोगो न सिध्यति, यस्मात् "अस्तेर्भूः" २।४।५२ इति भूभावेन भवितव्यमित्याह-- "तत्सामथ्र्यात्" इति। प्रत्याहेरण कृभ्वस्तीनां ग्रहणसामथ्र्यादस्तेर्भूभावो न भवति। तेषां प्रत्याहारगर्हणस्यैतत् प्रयोजनम्-- अस्तेरनुप्रयोगो यथा स्यात्। यद्यस्तेरनुप्रयोगस्य भूभावः स्यात् निष्फलं प्रत्याहारग्ररहणं स्यात्, "कृभ्वनुप्रयुज्यते लिटि" इत्येवं ब्राऊयात्। तत्राप्ययमर्थः-- किमिदं करोतेग्र्रहणम्? उत प्रत्याहारस्य? इति सन्देहः परिह्मतो भवति। यदि तर्हि कृञिति प्रत्याहारग्रहणम्, एवं सति "अभिविधौ सम्पदा च" ५।४।५३ इति सम्पदानुप्रयोगः प्राप्नोति; तस्य प्रत्याहारेऽन्तर्भूतत्वात्? नैष दोषः; "सनाद्यन्ता धातवः" ३।१।३२ इत्यतो धातुग्रहणमनुवत्र्तते, तेन च कृञ् विशिष्यते--कृञ् यो धातुरिति, न च सम्पदेत्यं धातुः, किं तर्हि? धातूपसर्गसमुदायः,

तस्मान्नानुप्रयुज्यते। "पाचयाम्बभूव" इति। पचेण्र्यन्तादाम्। "अयामन्ताल्वाय्येत्न्विष्णुषु" ६।४।५५ इति णेरयादेशः। "भवतेरः" ७।४।७३ इत्यभ्यासस्यात्वम्। "भुवो वुग् लुङ्लिटोः" ६।४।८८ इति वुगागमः। किमर्थं पुनरिदमुच्यते, यावताऽमन्तमिदम्, अनभिव्यक्तक्रियापदार्थम्। अतो हि क्रियाकालमात्रस्याभिव्यक्तिर्भवति, न साधनपुरुषसंख्यानम्। न हि विना तिङन्तपदेन तासामभिव्यक्तिर्भवति। तस्मादपरिसमाप्त्यर्थत्वादेवामन्तस्यानुप्रयोगो भविष्यति? कृभ्वस्तीनामनुप्रयोगो यथा स्यात्, "{पचादीनां मा भूत्। पचादीनामिति चेन्न"} इति मुद्रितः पाठः} पचादीनां मा भूदिति चेत्, न; पचादीनां विशेषवाचित्वादनुप्रयोगस्यानुपपत्तेः। विशेषवाची ह्नुप्रयुज्यमानः सामान्यवाचिनो ह्यामन्तस्यानुप्रयुज्यते? विशेषवाचिनो वा? तत्र न तावत् सामान्यवाचिन आमन्तस्य विशेषवाच्यनुप्रयोगमर्हति, तस्यासम्भवात्। कृभ्वस्तयो हि सामान्यवाचिनः, न च तेभ्यः केनचिदाम् विहितः। विशेषवाचिनोऽप्यामन्तस्य विशेषवाची समानार्थोऽनुप्रयुज्येत? भिन्नार्थो वा? तत्र समानार्थस्तावन्नानुप्रयुज्यते; उक्तार्थत्वात्। त()स्मश्चानुप्रयोक्तुमिष्ट आमन्तस्य सकलक्रियाकालाद्यर्थाभिव्यक्तिर्भवति। सामर्थ्यात् स एवानुप्रयोक्तव्यो यत्र सर्वाभव्यक्तिर्भवति। तत्र क्रियामन्तेन समानार्थेन पूर्वेण ! भिन्नार्थोऽपि नानुप्रयोगमर्हति; तदर्थानभिव्यक्तेः। अनुप्रयोगो ह्यामन्तस्यार्थस्य#आभिव्यक्तये क्रियते, न चात्यन्तभिन्नार्थेनामन्तवाच्यस्यार्थस्य सम्बन्धिनः साधनादयः शक्यन्तेऽभिव्यङ्क्तुम्। सामान्यवाचिना तु शक्यन्तेऽभिव्यङ्क्तुम्। विशेषसन्निधौ हि सामान्यशब्दस्य विशेषेऽवस्थानादामन्तस्य सन्निधौ सामान्यशब्दाः कृभ्वस्तयोऽनुप्रयुज्यमानास्तद्वाच्य एवार्थविशेषे वत्र्तन्ते, तस्मादेषामेव कृभ्वस्तीनामनुप्रयोगो भविष्यतीति नारब्धव्यमिदम्? नैतदस्ति; यथैव हि कृभ्वस्तयः क्रियासामान्यवचनाः, एवं विद्यतिरपीति तस्याप्यनुप्रयोगः स्यात्। तस्मात् तन्निवृत्त्यर्थमिदमारब्धम्। व्यवहितप्रयोगनिवृत्त्यर्थञ्च, पाचयां देवदत्तश्चकारेति मा भूत्। व्यवहितप्रयोगानिवृत्तिस्त्ववधारणविशेषाल्लभ्यते। अवधारणं तु सर्ववाक्यानां व्यवच्छेदफलत्वात् सावधारणफलत्वाच्चकारस्यानुक्तसमुच्चयार्थत्वाद्वा लभ्यते। विपर्ययनिवृत्त्यर्थश्चारब्धव्यः, विपर्ययनिवृत्तिस्त्वनोः पश्चादर्थत्वाल्लभ्यते॥

बाल-मनोरमा

कृञ्चानुप्रयुज्यते लिटि ८५, ३।१।४०

कृञ्चानु। "कास्प्रत्ययादा" मित्यत आमित्यनुवृत्तं पञ्चम्या विपरिणम्यते। प्रत्ययग्रहणपरिभाषया तदन्तं गृह्रते।लिटि परे यः कृञ् सोऽनुप्रयुज्यत इत्यन्वयः। फलितमाह-- आमन्ताल्लिट्परा इति। लिट्()शिरस्का इत्यर्थः। कृभ्वस्तय इति। "कृ"ञित्यनेन कृभ्वस्तीनां ग्रहणमिति भावः। अनुप्रयुज्यन्त इति। प्रशब्दादनुशब्दाच्चाऽव्यवहिताः पश्चात्पयुज्यन्त इत्यर्थः। "विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्यर्थं चे"ति वार्तिकाद्भाष्याच्च। एवं च "तं पातयां प्रथममास पपात पश्चात्" "प्रभ्रंशयां यो नहुषं चकारे"त्यादिप्रयोगाः प्रामादिका एव। धातोराम् स्यात्, कृञ्चानुप्रयुज्यत इत्युक्तसमुच्चयार्थश्चकारः। ननु कृञ एवाऽनुप्रयोगश्रवणात्कथं भ्वस्त्योरप्यनुप्रयोग इत्यत आह-- आम्प्रत्ययवदित्यादिना। "कृञ्चानुप्रयुज्यत" इत्यत्र कृञ एकस्यैवानुप्रयोगविधौ सति "आम्प्रत्यव"दिति सूत्रे अनुप्रयुज्यमानस्येत्यस्य कृञ इति विशेषणं व्यर्थं स्यात्, धात्वन्तरस्याऽनुप्रयोगाऽप्रसक्तेः। ततश्च "कृञ" इति विशेषणादन्यस्ाप्यनुप्रयोगो विज्ञायत इत्यर्थः। ननु कृञोऽन्यस्याऽप्यनुप्रयोगो विज्ञायतां, भ्वस्त्योरपीत्येव कुत आयातमित्यत आह-- तेनेति। कृञ्ग्रहणेनेत्यर्थः। प्रत्याहाराश्रयणादिति। एतच्च भाष्ये स्पष्टम्। नन्वनुप्रयुज्यमानानां कृभ्वस्तीनामाम्प्रकृतिभूतानां च कथमन्वय इत्यत आह-- तेषामित्यारभ्याभेदेनान्वय इत्यन्तेन। सामान्यविसेयोरभेदान्वयस्य न्याय्यत्वादिति भावः। कृञ इव भ्वस्त्योरपि क्रियासामान्यवाचित्वात्, धातूनामनेकार्थत्वादिति ज्ञेयम्। ननु "कृभ्वस्तियोगे" इत्यस्य, "कृञो द्वितीये" त्यस्य च सूत्रस्य मध्ये "अभिविधौ संपदा चे"ति पठितम्। एवं च कृञ्प्रत्याहारे संपदोऽपि कुतो न ग्रहणमित्यत आह-- संपदिस्त्विति। अनन्वितार्थत्वादिति। सिद्धस्य वस्तुनो रूपान्तरापत्तिः सम्पदेरर्थः। एधादिधातोस्त्वाम्प्रकृतिभूतस्य

वृद्ध्यादिरर्थः। तयोरुभयोरपि विशेषरूपत्वेन सामान्यविशेषभावाऽभावेन अभेदान्वयाऽसंभवादित्यर्थः। अत एव कृभ्वस्तीनां ग्रहणमिति भाष्यं सङ्गच्छत इति भावः। ननु आम्प्रत्ययवदिति कृञ आत्मनेपदविधायकसूत्रं वक्ष्यमाणं व्यर्थं, "स्वरितञित" इत्येव तत्सिद्धेरित्याशङ्क्याह---कृञस्त्विति।

तत्त्व-बोधिनी

कृञ्चानुप्रयुज्यते लिटि ६६, ३।१।४०

कथं तर्हि "तं पातयां प्रथममास पपात पश्चात्"। "प्रभ्रंशयां यो नहुषं चकारे"ति?। प्रमाद एवायम्। न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात्पश्चात्प्रयोगो व्यवहितोऽपि न दुष्यतीति वाच्यम्, "विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चे"ति वार्तिकविरोधात्। अन्यस्यापीति। यदीह कृञ्शब्देन एक एव धातुर्गृह्येत तदा धात्वन्तरस्य प्राप्त्यभावात्ाम्प्रत्ययव"दिति सूत्रेऽनुप्रयुज्यमानस्य कृञ इति विशेषणं व्यर्थं स्यादिति भावः। न चात्र "कृञ्चे"ति चकारेणैवाऽनुप्रयोगोऽन्यस्यापीति ज्ञायत इति शङ्क्यं, "धातोराम्? स्यात्, अनुप्रयुज्यते च लिट्परः कृञित्यर्थसमर्पकतया तस्योपक्षीणत्वात्। अभेदान्वय इति। सामान्यविशेषयोरभेदान्वयो लोकसिद्ध इति भावः। एवं च एंधाचक्रे एधांबभूवे इत्यादौ एककर्तृका भूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः। ननु करोतिः सकर्मको भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेत्?। अत्राहुः-- यदा हि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते-- घटं चक्रे राज्यं चकारेति, तदा नियमेन सकर्मकत्वम्। यदा तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते-- जुहवांचकारेत्यादौ, तदा यत्समानाध#इकरणः करोतिस्तस्य सकर्मकत्वाऽकर्मकत्वाभ्यां स्वयमपि तथाबावं भजते। एवं भ्वस्त्योरप्याम्प्रकृतिसामानाधिकरण्येन क्वचित्सकर्मकत्वं बोध्यम्। अत एवाऽनुप्रयुज्यमानाद्भवतेः सकर्मकत्वात्कर्मणि लिट्। तथा च माघः-- "तस्यातपत्रं बिभरांबभूवे"इति, श्री हर्षश्च। "तपर्त्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे" इति। अत्रेदमवधेयं-- जुहाव जुहवां चकार जुहवांबभूवेत्यादौ केवलो होमो गम्यते, इतरत्र तु होमरूपा क्रियेति बोधः। फले तु न कश्चिद्विशेषः, घटमानय द्रव्यघटमानयेत्यत्र यथा। एवं चाऽऽम्प्रकृत्यर्थगतिकारकसङ्ख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति। अनन्वितेति। संपद्यर्थस्याऽऽम्प्रकृत्यर्थस्य चाऽभेदान्वयो न संभवति, उभयोरपि विशेषरूपत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३।१।४१

विदाङ्कुर्वन्तु इत्येतदन्यतरस्यां निपात्यते। किं पुनरिह निपात्यते? विदेर् लोटि आम् प्रत्ययः, गुणाभावः, लोटो लुक्, कृञश्च लोट्परस्य अनुप्रयोगः। अत्र भवन्तो विदाङ्कुर्वन्तु, विदन्तु। इतिकरणः प्रदर्शनार्थः, न केवलं प्रथमपुरुषबहुवचनं, किं तर्हि सर्वाण्येव लोड्वचनान्यनुप्रयुज्यन्ते, विदाङ् करोतु, विदाङ् कुरुतात्, विदाङ् कुरुताम्, विदाङ् कुरु, विदाङ् कुरुतम् इत्यादि।

लघु-सिद्धान्त-कौमुदी

विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ५७३, ३।१।४१

वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते पुरुषवचने न विवक्षिते॥

न्यासः

विदाङ्कुर्वन्त्वित्यन्यतरस्याम्।, ३।१।४१

"विदेर्लोट()आम्प्रत्ययः" इति। विदेर्लिट()आम् विहितो लोटि न प्राप्नोतीत्यतोऽपि निपात्यते। अममाश्रित्य लघूपधगुणः प्राप्नोतीति तदभावश्च। "आमः" २।४।८१ इति लेर्लुग्विधीयमानो लोटो न सिध्यतीत्यतो लोटो लुक्। लिट्परस्य कृञोऽनुप्रयोग उक्तो लोट्परस्य न प्राप्नोति, सोऽपि निपात्यत इति सर्वत्र सम्बन्धनीयम्। "कुर्वन्तु" इति। बहुवचनम्, झेरन्तादेशः, "एरुः" ३।४।८६, विकरणमश्रित्य धातोर्गुणः, " अत उत् सार्वधातुके" ६।४।११० इत्युत्वम्, विकरणस्य यणादेशः। "इतिकरणः" इत्यादि। लोड्वचनानामुपलक्षणार्थत्वे सतीतिकरणस्य यदिष्टं तद्दर्शयितुमाह-- "न केवलम्" इत्यादि। "कुरुताम्" इति। "तस्थस्" ३।४।१०१ इत्यादिना तसस्ताम्। "कुरु" इति। "सेह्र्रपिच्च" ३।४।८७ इति हिः, "उतश्च प्रत्ययात्" ६।४।१०६ इत्यादिना हेर्लुक्। "कुरुतम्" इति। तसस्तम्॥

बाल-मनोरमा

विदाङ्कुर्वन्त्वत्यन्यतरस्याम् २९६, ३।१।४१

विदाङ्कुवन्त्वित्यन्तयतरस्याम्। "कृञ् चानुप्रयुज्यते लिटी"त्युत्तरमिदं सूत्रम्। इतिशब्दः प्रकारे। एवंजातीयकं वैकल्प्येन प्रत्येतवयमित्यर्थः। वेत्तेरिति। लुगविकरणाद्विदधातोः लोटिपरे आम्प्रत्ययो निपात्यते इत्यर्थः। लोडन्तेति। आम्न्ताद्विदेर्लोडनतकृञ्धातोनुप्रयोगश्च निपात्यतैत्यर्थः। ननु "विदाङ्कुर्वन्तु"ति लोटि प्रथमपुरुषबहुवचनस्यैव सूत्रे निर्देशात्कतं लोडन्तसामान्यानुप्रयोग इत्यत आह-- पुरुषेति। कुर्वन्त्विति प्रथमपुरुषो बहुवचनं च न विवक्षितमित्यर्थः। तयोस्तु नान्तरीयकमुच्चारणमिति भावः। इति शब्दादिति। तस्य प्रकारवचनस्य लोकप्रयोगानुसारित्वादिति भावः।

तत्त्व-बोधिनी

विदाङ्कुर्वन्त्वित्यन्यतरस्याम् २५६, ३।१।४१

लोटो लुगिति। "आमः" इति सूत्रे "मन्त्रे घसे"त्यतो लेरित्यनुवर्त्य आमः परस्य लेर्लुगितिव्याकुर्वतां मतेनेदमुक्तम्। निष्कर्षे तु तेनैव लुगिति बोध्यम्। पुरुषवचने इति। प्रथमपुरुषो, बहुवचनं चेत्यर्थः। "परस्मैपदमप्यविवक्षितमेवे"ति केषांचिन्मते कर्मव्यतिहारे तङि-- व्यतिविदाङ्कुरुताम्। व्यतिविदाङ्कुर्वातामित्यादि ज्ञेयम्।

---

सूत्रम्

काशिका-वृत्तिः

अभ्युत्सादयांप्रजनयाम्चिकयांरमयामकः पावयाम्क्रियाद् विदामक्रन्निति च्छन्दसि ३।१।४२

अभ्युत्सादयाम् इत्येवम् आदयः छन्दसि विषये ऽन्यतरस्यां निपात्यन्ते। सदिजनिरमीणां ण्यन्तानां लुङि आम् प्रत्ययो निपात्यते। चिनोतेरपि तत्र एव आम्प्रत्ययो द्विर्वचनं कुत्वं च। अकरिति चतुर्भिरपि प्रत्येकम् अनुप्रयोगः सम्बध्यते। पावयाम् क्रियातिति पवतेः पुनातेर् वा ण्यन्तस्य लिङि आम् निपात्यते, गुणाभावश्च, अक्रनिति च अस्य अनुप्रयोगः। विदामक्रनिति विदेर् लुङि आम् निपात्यते, गुनभावश्च, अक्रनिति च अस्य अनुप्रयोगः। अभ्युत्सादयाम् अकः। अभ्युदसीषदतिति भाषायाम्। प्रजनयाम् अकः। प्राजीजनतिति भाषायाम्। चिकयाम् अकः। अचैषीतिति भाषायाम्। रमयाम् अकः। अरीरमतिति भाषायाम्। पावयाङ्क्रियात्। पाव्यातिति भाषायाम्। विदाम् अक्रन्। अवेदिषुः इति भाषायाम्।

न्यासः

अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि। , ३।१।४२

"अभ्युत्सादयाम्" इति। "कुगतिप्रादयः" २।२।१८ इति समासे कृत एकमेवेदं प्रथमान्तम्। एवं "प्रजनयाम्" इत्येतदपि।

शेषाण्यप्यामन्तानि प्रथमान्तान्येव। "अकः" इति। करोतेर्लुङ। प्रथमपुरुषैकवचनान्तम्। "अक्रन" इति। प्रथमपुरुषबहुवचनान्तम्। "सदिजनिरमीणाम्" इति। "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।१४२७), "जनी प्रादुर्भावे" (धा।पा।१४४९), "रमु क्रीडायाम्" (धा।पा।८५३)। "ण्यन्तानाम्िति। हेतुमण्णिजन्तानाम्। "पचतेः" इति। लिटि विहितत्वाल्लिङि न प्राप्नोति, ततो निपात्यते। "अस्य" इति। पुनातेः पवतेर्वा ण्यन्तस्य। "लृङ्याम् निपात्यते" इति। पूर्ववन्न प्राप्नोतीति कृत्वा। "विदेरपि गुणाभावश्च" इति। "पुगन्तलघूपधस्य" ७।३।८६इति गुणः प्राप्नोति, अत्सतदभावो निपात्यते। "अभ्युत्सादयाम्" इति। पूर्ववण्णेरयादेशः। लुङो लुक्। "अकः" इति। करोतेर्लुङ, अडागमः, तिप्, च्लिः, तस्य "मन्त्रे घसह्वर" २।४।८० इति लुक्, गुणः, रपरत्वम्, "हल्ङ्याब्भ्यः" ६।१।६६ इति तिलोपः, रेफस्य विसर्जनीयः। "अभ्युदसीषदत्" इति। "णिश्रि" ३।१।४८ इत्यादिना चङ, "णौ चङ्युपधायाः" ७।४।१ इति ह्रस्वः, "चङि" ६।१।११ इति द्विर्वचनम्, हलादिशेषः, "सन्वल्लघुनि" ७।४।९३ इति सन्वद्भावे सतीत्त्वम्, "दीर्घो लघोः" ७।४।९४ इति दीर्घः। एषा प्रक्रिया यथायोगमुत्तरत्रापि वेदितव्या। "प्रजनायाम्" इति। "जनीजृ()ष्()क्नसुरञ्जोऽमन्ताश्च" (धा।पा।८१७) इति मित्त्वात् ह्रस्वत्वम्। "चिकयाम्" इति। ककारोऽप्यत्र निपात्यते। गुणायादेशौ। "अचैषीत्" इति। "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्, सिचि वृद्धिः। "रमयाम्" इति। "मितां ह्रस्वः" ६।४।९२। "पावयाम्" इति। "आमः" २।४।८१ इति लिङो लुक्। "क्रियात्" इति। कृञ आशिषि लिङ, तिप्, "इतश्च" ३।४।१०० इतीकारलोपः, यासुट्, "रिङ शयग्लिङक्षु" ७।४।२८ इति रिङादेशः; "स्को संयोगाद्योरन्ते च" ८।२।२९ इति सलोपः। "पाव्यात्" इति। पूर्ववल्लिङ, "लिङाशिषि" ३।४।११६ इत्यार्धधातुकत्वाच्छपोऽभावः, "णेरनिटि" ६।४।५१ इति णिलोपः। "विदाम्" इति। विदेर्लुङ, आम्, गुणाभावः, लुङो लुक्। "अक्रन्" इति। कृञो लुङ, च्लिः, झेरन्तादेशः, "इतश्च" ३।४।१०० इतीकारलोपः, संयोगान्तलोपः, च्लेः "मन्त्रे घसह्वर" २।४।८० इति लुक्, अट, यणादेशः। "अवेदिषुः" इति। सिच इट्, "सिजभ्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुस्। " इतिकरणः प्रयोगदर्शनार्थः" इति। अन्येऽप्येवंजातीयाश्छन्दसि वेदितव्या इत्यर्थः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ च्लि १।१ लुङि ७।१ ६६ धातोः ? प्रत्ययः ? परश्च ?

अर्थः॥

लुङि परतः धातोः च्लि-प्रत्ययः भवति

उदाहरणम्॥

च्लेः स्थाने अग्रे सिजादीन् आदेशान् वक्ष्यति, तत्रैव उदाहरिष्यामः।
काशिका-वृत्तिः
च्लि लुङि ३।१।४३

धातोः च्लिः प्रत्ययो भवति लुङि परतः। इकार उच्चारणार्थः, चकारः स्वरार्थः। अस्य सिजादीनादेशान् वक्ष्यति। तत्र एव उदाहरिस्यामः।
लघु-सिद्धान्त-कौमुदी
च्लि लुङि ४३९, ३।१।४३

शबाद्यपवादः॥

न्यासः

च्लि लुङि॥ , ३।१।४३

"इकार उच्चारणार्थः" इति। उच्चारणमेवास्यार्थो नान्यत् किञ्चित् प्रयोजनमित्यर्थः। एतेनेत्संज्ञाकार्यं न भवतीति दर्शयति। "चकारः स्वरार्थः" इति। "चितः" ६।१।१५७ इत्यन्तोदात्तत्वं यथा स्यात्। अथ "मन्त्रे घसह्वरणशवृदहाद्()वृच्कृगमिजनिभ्यो लेः" २।४।८० इत्येकारः सामान्यग्रहणार्थः, चकारस्तदविघातार्थः कस्मान्न विज्ञायते? एवं मन्यते-- मन्त्रेघसादिभ्यो नैवाभ्यो लिरस्ति यस्य सामान्यग्रहणार्थोऽयमिकारः स्यात्, त()स्मश्चासति सामान्यग्रहणार्थे तदविघातार्थतापि चकारस्य नोपपद्यते। "आमः" २।४।८१ इत्यत्र तर्हीकारचकारौ कस्मान्न सामान्यग्रहणाविघातार्थौ भवतः, तत्र हि मन्त्रेघसादि २।४।८० सूत्राल्लेरित्यनुवत्र्तते, तत्रेकारचकारयोरभावे "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति तस्यैव ग्रहणं स्यात्, न लिङलिटोः? नैतदस्ति; अत्र मा भूल्लिग्रहणानुवृत्तिः,अविशेषेणापि प्रत्ययमात्रस्य लुग् भवष्यति; नैवं सति किञ्चिदनिष्टमापद्यते। न हि सोऽस्ति प्रत्ययो यस्य लुकि सति किञ्चिदनिष्टं भवेत्। सत्यामपि लिग्रहणानुवृत्तौ न दोषः, अनेकस्मिन् ग्राह्ये सति सामान्यग्रहणं भवति, न चामः परस्यानेकं ग्राह्यमस्ति। न हि क्वचिदामः परो लिटोन्यः प्रयोगोऽस्ति, तस्मादन्याभावाल्लिट एव ग्रहणम्। तत्र नार्थः सामान्यग्रहणार्थेनेकारेण,नापि तदविघातार्थेन चकारेण। ननु च पावयाङ्क्रियादित्यत्रान्योऽपि लिरस्ति? नैतदस्ति; निपातनादेव तत्सिद्धम्।तच्चावश्यं निपातनमाश्रयितव्यम्; अन्यथा क्रियमाणेऽपीकारे तदविघाता()रएथे च चकारे अब्युत्सादयामिति न सिद्ध्येत्। तस्मात् पूर्वोक्तमेव प्रयोजनं न्याय्यम्। यथोत्तरार्थश्चकारस्तथोत्तरत्र प्रतिपादयिष्यामः। अथ किमर्थं च्लिप्रत्ययमासज्य तस्य सिजादय आदिश्यन्ते, न सिचमेवोत्सर्गं विधाय तस्य क्सादय आदेशा विधीयेरन्निति?नैवं शक्यम्; एवं हि "शल इगुपधादनिटः क्सः" ३।१।४५ इत्यत्र च्लेरभावादनिड्ग्रहणं धातोर्विशेषणं विज्ञायेत- धातोरनिट इति। तथा च गुहेर्न सिद्ध्येत-- अघुक्षदिति।तस्य हि ऊदित्त्वात् स्वरत्यादिना ७।२।४४ विकल्पेड्विधानान्नास्त्यनिट्त्वम्। च्लौ सत्यनिड्ग्रहणेन स एव विशिष्यते-- च्लेरनिट इति। गुहेश्च परस्य च्लेर्विभाषितेट्त्वात् यदेण् नास्ति तदा च्लेरनिट्त्वात् क्सः सिद्धो भवति॥

बाल-मनोरमा

च्लि लुङि ६९, ३।१।४३

च्लि लुङि। च्लीति लुप्तप्रथमाकम्। लुङि परे धातोश्च्लिप्रत्ययः स्यादित्यर्थः। शबाद्यपवाद इति। आदिना श्यनादिविकरणसङ्ग्रहः।

तत्त्व-बोधिनी

च्लि लुङि ५२, ३।१।४३

"इकार उच्चारणार्थ" इति मनोरमा। न च "मन्त्रे घसे"ति सूत्रे लेरिति स्थाने ल इत्युच्यमाने च्लिभिन्नस्यापि लकारस्य लुक् स्यादिति शङ्क्यं,, "गातिस्थे"ति सूत्रात्सिच् इत्यनुवत्र्य सिच्स्थानिनः = स्थान्यर्हसय् लस्य लुगिति व्याख्यायामतिप्रसङ्गाऽभावद्विभाषानुवृत्तेर्लुको वैकल्पिकतया छन्दसि रूपान्तरस्याऽनापाद्यतया च सिजनुवृतिं()त विनापि नातिप्रसङ्ग इत्याहुः। शबाद्यपवाद इति। आदिशब्दात्तत्त्दगणप्रयुक्तानां श्यन्नादीनां ग्रहणम्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ च्लेः ६।१ ६६ सिच् १।१ लुङि ७।१ ४३

अर्थः॥

च्लेः स्थाने सिच् आदेशः भवति, लुङि परतः

उदाहरणम्॥

अकार्षीत्, अहार्षीत्।

काशिका-वृत्तिः

च्लेः सिच् ३।१।४४

च्लेः सिजादेशो भवति। इकार उच्चारणार्थः, चकारः स्वरार्थः। अकार्षीत्। अहार्षीत्। आगमानुदात्तत्वं हि प्रत्ययस्वरम् इव चित्स्वरम् अपि बधेत इति स्थानिन्यादेशे च द्विश्चकारो ऽनुबध्यते। स्पृशमृशकृषतृपदृपां सिज्वा वक्तव्यः। अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्। अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। अकार्षीत्, अक्राक्षीत्, अकृक्षत्। अत्राप्सीत्, आताप्र्सीत्, अतृपत्। अद्राप्सीत्, अदार्प्सीत्, अदृपत्।

लघु-सिद्धान्त-कौमुदी

च्लेः सिच् ४४०, ३।१।४४

इचावितौ॥

न्यासः

च्लेः सिच्।, ३।१।४४

"इकार उच्चारणार्थः" इति। एतेनेहोच्चारणादन्यप्रयोजनं नास्तीति दर्शयन्नित्संज्ञायां अभावमाह। ननु चासतीकारेऽनुबन्धे "अनिदिताम्" ६।४।२४ इत्यनेनामंस्तेत्यत्रानुनासिकलोपः प्राप्नोति, ततस्तत्प्रतिषेधार्थोऽयमित्संज्ञकः कस्मान्न भवति? एवं मन्यते-- असत्यपीकारेऽनुबन्धेनैव सिजन्तस्यानुनासिकलोपेन भवितव्यम्; "हन सिच्" १।२।१४ इति कित्करणाज्ज्ञापकात्। तथा हि हन्तेः कित्करणस्यैतत् प्रयोजनम्-- आहतेत्यत्रानुनासिकलोपो यथा स्यात्। यदि सिजन्तस्यानुनासिकलोपः स्यात् हन्ते सिचः कित्करणमनर्थकं स्यात्। "चकारः स्वरार्थः" इति। अन्तोदात्तार्थः। ननु च सिचोऽनच्कत्वाच्चकारस्य स्वरार्थता नोपपद्यते? इटि कृते साच्को भवतीत्यदोषः। नन्वेवमपि लुङ्यत्राडागमस्योदात्तत्वे सतिशिष्टस्वरेणाद्युदात्तत्वेन भवितव्यम्, किमर्थश्चकारः? यत्र तर्हि "न माङ्योगे" ६।४।७४ इत्यडागमः प्रतिषिध्यते तत्र चकारस्य स्वरार्थता भविष्यति। ननु तत्रापि "तिङ्ङतिङः" (८।१।२८) इति निघातेन भवितव्यम्? तर्हि यत्र "हि च" ८।१।३४ इति निघातः प्रतिषिध्यते-- मा हि लावीदित्यादौ , तत्र स्वरार्थो भविष्यति। ननु च च्लेस्तत्र स्थानिवद्भावादेव चित्सरो भविष्यत#ईतिकिमादेशे चकारोऽनुबध्यते? इत्याह-- "आगमानुदात्तत्वं हि" इत्यादि। यासुट उदात्तवचनेनागमानुदात्तत्वं ज्ञापयिष्यते। तच्च नाप्राप्ते स्वरान्तरे विधीयते। तथा हि-- ये प्रकृतिभक्ता आगमा अडानुकप्रभृततयस्तेषां प्रकृतिस्वरः प्राप्नोति, ये च प्रत्ययभक्ता इडादयस्तेषां प्रत्ययस्वरः; तस्मादगमानुदात्तत्वं सर्वस्य स्वरान्तरस्य बाधकम्। ततश्चैव तद्यथा प्रत्ययस्वरं बाधते तथा चित्स्वरमपि स्थानिवद्भावकृतं बाधेत। तस्मादादेशेऽपि चकारोऽनुबध्यते।

हि-शब्दोयस्मादर्थे,इतिशब्दस्तस्मादर्थे। यस्मादेवं चितस्वरमपि बाधेत तस्मात् स्थानिन्यादेशेऽपि द्विश्चकारोऽनुबध्यते। ननु च मा हि लावीत्यादावागमानुदात्तत्वं यदि स्यात् च्लेश्चित्करणमनर्थकं स्यात्, प्रयोजनाभावात्; तस्मात् च्लेश्चित्करणसामर्थ्यादागमानुदात्तत्वेन चित्स्वरो न बाधिष्यते-- इत्यपार्थकं सिचश्चित्करणम्? नापार्थकम्; पक्षे सार्थकत्वात्। कथम्? इह हि यथा व्यक्तिपदार्थपक्षमाश्रित्य "सरूपाणामेकशेषः" १।२।६४ इत्येतत्सूत्रमारब्धम्, तथा व्यक्तिपदमार्थक्षाश्रयत्पद्विश्चकारोऽनुबध्यते। व्यक्तौ हि पदार्थे यथा चित्स्वरलक्षमं प्रतिलक्ष्यं प्रवत्र्तते तथागानुदात्तत्वज्ञापकमपि यासुट उदात्तवचनम्। ततश्च मा हि लावीदित्यत्रागमानुदात्तत्वं तेन ज्ञापितमेव। तथा च-- यथेह चित्स्वरो भवति तथागमानुदात्तत्वेनापि भवितव्यम्; अन्यथा ह्येतद्विषयस्य ज्ञापकस्य वैयथ्र्यं स्यात्। न च द्वयोरप्यनुदात्तयोर्यौगपद्यं सम्भवतीति पर्यायः स्यात्। तत्र पक्षे स्थानिनश्चकारस्य पक्षान्तर आगमानुदात्तत्वेन बाध्येत। द्विरनुबध्यमाने तु चकारे यद्यपि पक्षेऽनुदात्तोऽभिनिर्वत्र्तते, तथाप्यभिनिर्वृत्ते तस्मिन् द्विश्चकारा४नुबन्धकरणसामर्थ्यात् पुनश्चित्स्वरोऽभिनिर्वत्र्तते, अतो न दोषः। "स्पृशमृश" इत्यादि। स्पृशिमृशिकृषिभ्यः "शल इगुपधादनिटः क्सः" (३।१।४५) इति क्से प्राप्ते, तृपिदृपिभ्यां पुषादित्वादङि प्राप्ते सिज्वा वक्तव्यः = व्याख्येयः। तत्रेदं व्याख्यानम्--- क्सविधौ "विदांकुर्वन्त्वित्यन्यतस्याम्" ३।१।४१ इत्यतो मण्डूकप्लुतिन्यायेनान्यतरस्यांग्रहणमनुवर्तते, पुषादिसूत्रेऽपि "आत्मनेपदेषु" ३।१।५४ इत्यतः। सा च व्यवस्थित विभाषितोभयत एव विज्ञायते। तेन स्पृशिमृशिकृषिभ्यो विकल्पेन क्सो भविष्यति, अन्येभ्यस्तु नित्यम्। तृपिदृपिभ्यामन्यतरस्यामङ् च भविष्यति, अन्येभ्यस्तु पुषादिभ्यो नित्यमेव। तेन यस्मिन् पक्षे क्साङोरभावस्तस्मिन् पक्षे सामान्यविहितः सिजेव भवति। "अस्पृक्षत्" इति। "स्पृश संस्पर्शे" (धा।पा।१४२२), क्सः, व्रश्चादिना ८।२।३६ षत्वम्, "षढोः कः सि" ८।२।४१ इति कत्वम्, "आदेशप्रत्ययोः" ८।३।५९ इति षत्वम्। "अस्प्राक्षीत्" इति। "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ६।१।५८ इत्यमागमः; "वदव्रज" ७।२।३ इत्यादिना वृद्धिः, ऋकारस्य यणादेशः। "अस्पाक्षीत्" इति। सिच्। यदाऽमागमो नास्ति तदा ऋकारस्यैव वृद्धिः।एवं "मृश आमर्शने" (धा।पा।१४२५), "कृष विलेखने" (धा।पा।१२८६) इत्येतयोरपि रूपद्वयं, वेदितव्यम्। "अतु पत्" इति। "तृप प्रीणने" (धा।पा।११९५)। "अत्राप्सीत्, अताप्सीत्" इति। पूर्ववत्। एवं "दुप हर्षणमोचनयोःट (धा।पा।११९६) इत्यस्यापि रूपत्रयं वेदितव्यम्॥

बाल-मनोरमा

च्लेः सिच् ७०, ३।१।४४

च्लेः सिच्। इचाविति। चित्स्वरश्चित्त्वस्य प्रयोजनम्। इदित्त्वस्यतु अमंस्तेत्यत्र "अनिदितां हल उपधाया" इत्युपधालोपस्याऽप्रवृत्तिः प्रयोजनम्।

तत्त्व-बोधिनी

च्लेः सिच् ५३, ३।१।४४

इचाविताविति। तत्रेदित्त्वे प्रयोजनममंस्तेत्यत्र "अनिदिता"मित्युपधालोऽभावः॥

---

सूत्रम्

काशिका-वृत्तिः

शल इगुपधादनिटः क्षः ३।१।४५

शलन्तो यो धातुरिगुपधस् तस्मात् परस्य च्लेः अनिटः क्ष आदेशो भवति। दुह अधुक्षत्। लिह अलिक्षत्। शलः इति किम्? अभैत्सीत्। अच्छैत्सीत्। इगुपधातिति किम्? अधाक्षीत्। अनिटः इति किम्? अकोषीत्। अमोषीत्।

लघु-सिद्घान्त-कौमुदी

शल इगुपधादनिटः क्सः ५९३, ३।१।४५

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात्। अधुक्षत्॥

न्यासः

शल इगुपधादनिटः क्सः।, ३।१।४५

"अघुक्षत्" इति। "दुह प्रपूरणे" (धा।पा।१०१४), "दादेर्धातोर्घः" ८।२।३२, "एकाचो बशो भष्" ८।२।३७ इत्यनेन दकारस्य भष्भावेन धकारः, धकारस्य "खरि च" ८।४।५४ इति चत्र्वम्-- ककारः। "अलिक्षत्" इति। "लिह आस्वादने" (धा।पा।१०१६), "हो ढः" ८।२।३१ इति ढत्वम्, पूर्ववत् षत्वकत्वे। "अधाक्षीत्" इति।" दह भस्मीकरणे" (धा।पा।९९१), पूर्ववत् ढत्वकत्वषत्वभष्भावचत्र्वानि। "अकोषीत्" इति। "कुष निष्कर्षे" (धा।पा। १५१८) लघूपधगुणः॥

बाल-मनोरमा

शल इगुपधादनिटः क्सः १७५, ३।१।४५

शल इगुपधा। शलन्त इति। "धातोरेकाचः" इत्यतोऽनुवृत्तधातुविशे,णत्वात्तदन्तविधिरिति भावः। सिचोऽपवादः। क्सादेशोऽदन्तः। ककार इत्। अघृक्षतेति। च्लेः क्सः। तस्य कित्वाद्दकारस्य न गुणः। हस्य ढः, भष्भावः, ढस्य कः, षत्वमिति भावः।

तत्त्व-बोधिनी

शल इगुपधादनिटः क्सः १४९, ३।१।४५

शल इगुपधा। "शल" इति धातोर्विशेषणात्तदन्तलाभः। शल इति किम्?। अतिप्त। इगिति किम्?। अगाढ। अनिटः किम्। औहिष्ट। क्सस्याचि। अजादाविति। अङ्गाक्षिप्तप्रत्ययोऽत्र विशेष्यः। "तङी"ति तु केषांचित्प्रक्षेपस्तस्य काशिकादावनुक्तत्वादित्याहुः। अन्ये तु "लुग्वा दुहे"त्यत्र आत्मनेपदे इत्यपकर्षणात्तङीति लभ्यते। तेन "दृशे क्सः" इति वार्तिकोक्तक्सप्रत्ययस्य लोपो न भवति, सदृक्षा अन्यादृक्षा इत्यत्रेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

श्लिष आलिङ्गने ३।१।४६

श्लिषेः धातोः आलिङ्गनक्रियावचनात् परस्य च्लेः क्षः आदेशो भवति। आलिङ्गनम् उपगूहनं, परिष्वङ्गः। अत्र नियमार्थम् एतत्। आश्लिक्षत् कन्यां देवदत्तः। आलिङ्गने इति किम्? समाश्लिषज्जतु काष्ठम्।

न्यासः

श्लिष आलिङ्गने।, ३।१।४६

"अत्र" इति। आलिङ्गने। "नियमार्थमेतत्" इति। पूर्वेण सिद्धे सत्यारम्भात्। "अश्लिक्षत्" इति। पूर्ववत् कत्वम्। "समाश्लिषज्जतु काष्ठम्" इति। पुषादित्वादङ्। प्रत्यासत्तिरत्र नैरन्तर्यलक्षणा श्लिषेरर्थः, न त्वालिङ्गनम्। यद्ययं पुषादौ पठ()ते, कथमिदं नियमार्थम्; सिद्धे सत्यारम्भो नियमाय भवति, न च पूर्वेण क्सः सिद्धः, अङा वाधितत्वात्? मन्यते-- "श्लिषः" इति योगविभागः कत्र्तव्यः। किमर्थम्? अङबाधनार्थम्-- क्स एव भवति, नाङ्। ततः। "आलिङ्गने" इति

किमर्थम्? नियमार्थम्-- आलिङ्गन एव क्सो भवति, अन्यत्राङेवेति। यद्येवम्, "श्लिषः" इत्येवं योगविभागो यथाङं बाधते तथा "चिण्भावकर्मणोः" (३।१।६६) इति चिणमपि बाधेत-- उपाश्लेषि कन्या देवदत्तेनेति? नैतदस्ति; "पुरस्तादप वादा अनन्तरान् विदीन् बाधन्ते नोत्तरान् (व्या।प।९) इत्ययमङं बाधते, न चिणम्। अथ वा-- "चिण्भावकर्मणोः" ३।१।६६ इत्यत्र "चिण् ते पदः" ३।१।६० #इत्यतश्चिणित्यनुवर्तमाने पुनश्चिण्()ग्रहाहणस्यैतत्प्रयोजनम्-- चिणेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति। अथ "श्रिषु श्लिषु प्रुषु प्लुषु दाहे" (धा।पा।७०१,७०४) इत्येतस्य श्लिषो ग्रहणं कस्मान्न भवति? आलिङ्गने तस्य वृत्त्यसम्भवात्, "अनिटः" ३।१।४५ इत्यधिकाराच्च, अस्य सेट्त्वात्॥

बाल-मनोरमा

श्लिषः ३४३, ३।१।४६

श्लिषः। "च्ले"रिति "शल इगुपधा"दित्यतोऽनिटः क्स इति चानुवर्तते। तदाह-- अस्मात्परस्येत्यादिना। ननु "शल इगुपधा"दित्येव क्से सिद्धे किमर्थमिदमित्यत आह-- पुषाद्यङोऽपवाद इति। "शल इगुपधा"दिति क्सं बाधित्वा परत्वात्पुषाद्यङ् स्यात्, तन्निवृत्तये पुनः क्सविधिरित्यर्थः। ननु "श्लिष" इति क्सोयथा परमपि पुषाद्यङं बाधते तथा "चिण्भावकर्मणो"रिति चिणमपि परं बाधते, एवं सति "उपाश्लेषि कन्या देवदत्तेने"त्यत्र कर्मणि लुङि "चिण्भावकर्मणो"रिति च्लेश्चिण्न स्यादित्यत आह-- नतु चिण इति। "श्लिषः" इति क्सविधिः "चिण् भावकर्मणो"रिति चिण्विधेर्न बाधक इत्यर्थः। कुत इत्त आह-- पुरस्तादिति। "शल इगुपधादनिटः क्सः" "श्लिषः" "पुषादिद्युताद्यलृदितः परस्मैपदेषु" "चिण् भावकर्मणो"रिति सूत्रक्रम इति भावः।

बाल-मनोरमा

आलिङ्गने ३४४, ३।१।४६

आलिङ्गने। "श्लिष" इति पूर्वसूत्रे यदनुवृत्तं तत्सर्वमिहानुवर्तते, श्लिष इति च। तथाच आलिङ्गने विद्यमानात् श्लिषेः परस्य च्लेः क्सः स्यादिति लभ्यते। "श्लिषः" इति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम्। तदाह-- श्लिषश्च्लेरालिङ्गने एव क्सो नान्यत्रेति। नन्वयं नियमः "अनन्तरस्येटति न्यायात् "श्लिष" इति सूत्रप्राप्तस्यैव स्यान्नतु "शल इगुपधा"दित्यस्यापीत्यत आह-- शल इगुपधादित्यस्याप्ययं नियम इति। कुत इत्यत आह-- योगविभागसमाश्र्यादिति। यदि "श्लिष" इति प्राप्तएव क्स आलिङ्गन एव इति नियम्येत तर्हि योगविभागो व्यर्थः स्यात्, "श्लिष् आलिङ्गने" इत्येकसूत्रत्वे सत्यपि अनालिङ्गने क्सो नेत्यस्यार्थस्य सिद्धत्वात्। अतः "शल इगुपधा"दिति क्सोऽपि श्लिषेरालिङ्गने एव न त्वनालिङ्गनेऽपि इति नियमो विज्ञायत इत्यर्थः। अश्लिक्षत्कन्यां देवदत्त इति। आलिङ्गदित्यर्थः। अत्र पुषाद्यङं बाधित्वा अनेन क्सः। समाश्लिषज्जतु काष्ठमिति। जतु = लाक्षा। सा च काष्ठलग्नैवोत्पद्यते इति स्थितिः। जतु च काष्टं चेति समाहारद्वन्द्वः। "उपाश्लिषज्जतु काष्ठं चे"त्येव भाष्यम्। अत्र श्लिषेरालिङ्गनार्थकत्वाऽभावान्न क्सः, किन्तु पुषाद्यङेवेति बावः। नन्वजादित्वाऽभावेन आडागमस्याऽसंभवात्समाश्लिषदित्ययुक्तमित्यत आह-- आङिति। समाश्लिषदित्यत्र श्लिषेः प्रागाङुपसर्ग एव, न त्वाडागम इति भ्रमितव्यमित्यर्थः। नन्वालिङ्गनं समाश्लेषणं, तथा च समाश्लिषज्जतु काष्ठमित्यत्रापि श्लिषेरालिङ्गनार्थकत्वात्क्सो दुर्वार इत्यत आह-- प्रत्यासत्ताविहेति। इह = समाश्लिषज्जतु काष्ठमित्यत्र, श्लिषिः प्रत्यासत्तौ = संयोगे वर्तते, नतु बाह्वादिना संवलनात्मकसंबन्धविशेषरूपे आलिङ्गने इत्यर्थः। नन्वालिङ्गने एव श्लिषश्च्लेः क्सो, न त्वनालिङ्गने इति नियमादनालिङ्गने "शल इगुपधा" दित्यपि क्सो न भवतीत्युक्तमयुक्तं, समाश्लिषज्जतु काष्ठमित्यत्राऽनालिङ्गने "शल इगुपधा"दितक्सं बाधित्वा परत्वात्पुषाद्यङ एव प्राप्त्या क्सस्याऽप्रसक्तेरित्यत आह--- कर्मणीति। अनालिङ्गनवृत्तेः श्लिषधातोः कर्मणि लुङि च्लेः सिजेव भवति, न तु पुषाद्यङ्, तस्य परस्मैपदविषयत्वात्, कर्मणि लुङश्च "भावकर्मणो"रित्यात्मनेपदनियमात्। तस्य च "शल इगुपधा" दिति प्राप्तः

क्स उक्तेन नियमेन अनालिङ्गनेऽपि वार्यते इति युक्तमित्यर्थः। यदुक्तम्--- "आलिङ्गने श्लिषश्च्लेः क्सः पुषाद्यङ एवापवादो नतु चिण"इति, तस्य प्रयोजनमाह--एकवचने चिणिति। तदेवोदाहृत्य दर्शयति-- अश्लेषीति। आलिङ्गिता कन्या देवदत्तेनेत्यर्थः। श्लिषेरालिङ्गनार्थकात्कर्मणि लुङिप्रथमैकवचने तशब्दे परे "चिण भावकर्मणो"रिति च्लेश्चिणि कृते "चिणो लु"गिति तशब्दस्य लुक्। अत्र "श्लिष" इति क्सस्य पुषाद्यङ्मात्रापवादत्वाच्चिणपवादत्वाऽभावाच्चिण् निर्बाध इति भावः। "समाश्लेषि जतुना काष्ठ"मित्यत्र त्वनालिङ्गनाच्च्लेश्चिणो निर्बाधत्वादश्लेषीति निर्बाधमेव। एवं च आलिङ्गने अनालिङ्गनेऽपि श्लिषः कर्मणि लुङि एकवचने तशब्दे परे च्लेश्चिणेवेति स्थितम्। अथाऽनालिङ्गने श्लिषः कर्मणि लुङ आतामि च्लेः क्साऽभावात्सिचि "षढो"रिति षस्य कत्वे सस्य षत्वे रूपमिति भावः। नन्वश्लिक्षामित्यत्र सत्यपि क्से "कस्स्याची"त्यकारलोपे इष्टं सिद्धमित्यस्वरसात्कर्मणि लुङि झादावुदाहरति-- अश्लिक्षतेत्यादि। अश्लिष् स् झेति स्थिते जोऽन्तादेशं बाधित्वा "आत्मनेपदेष्वनतः" इत्यदादेशे षस्य कत्वे सिचः सस्य षत्वे अश्लिक्षतेतीष्यते। च्लेः क्से तु सति अश्लिष् स् झ इति स्थिते "क्सस्याची"त्यकारलोपाऽप्रसक्तेरतः परत्वात् "आत्मनेपदेष्वनतः" इत्यदादेशो न स्यादिति भावः। अश्लिष्ठा इति। श्लिषेः कर्मणि लुङ्स्थासि च्लेः सिचि "झलो झली"ति सिचो लोपे ष्टुत्वे "अश्लिष्ठा" इति रूपमिष्यते। क्से तु "झलो झली" त्यसंभवादश्लिक्षथा स्यादिति भावः। अश्लिड्ढ्वमिति। श्लिषः कर्मणि लुङो ध्वमि सिचि "झलो झली"ति सस्य लोपे स्य झश्त्वेनन डकारे ष्टुत्वेन धस्य ढः। क्से तु सति अश्लिक्षध्वमिति स्यादिति भावः। शक विभाषित इति। मर्षणेऽर्थे शकधातुरविकल्पित इत्यर्थः। विकल्पश्च प्रकृतपरस्मैपदविषयक एव, न तु दिवादिपाठविषयकः, व्याख्यानात्। तदाह-- उभयपदीति। मर्षणमिह--सामथ्र्यम्। शक्यति शक्यते वेति। समर्थो भवतीत्यर्थः। सेट्कोऽयमित्येके इति। स्वमते त्वनिट्क एवेति भावः। नन्वनिट्कारिकासु लृदितः शकेः पाठात्कथमनिट्कत्वमित्यत आह-- तन्मतेनेति। ये सेट्त्वं शकेर्वदन्ति तन्मतमवलम्ब्याऽनिट्कारिकासु शकि र्लृदित्पठित इत्यर्थः। संपदादिक्विबन्तादिति। रक्षुध्यत इति क्षुध्, भावे क्विप्। क्षुध् अस्य संजाता क्षुधित इति विग्रहः। वसतिक्षुधोरिति। वसेः क्षुधेश्च क्त्वानिष्ठयोरिडागमः स्यादिति तदर्थः। वक्ष्यते इति। "कृत्स्वि"ति शेषः। षिधु संराद्धाविति। निष्पत्तावित्यर्थः। प्रामादिक इति। माधवादिसंमत्वादिति भावः। रध हिंसेति। सेट्। चतुर्थाऽन्तोयम्। ररन्धतुरिति। एत्वाभ्यासलोपौ बाधित्वा परत्वान्नुमि संयोगात्परत्वेन अकित्त्वान्नलोपो नेति भावः।

तत्त्व-बोधिनी

श्लिषः ३००, ३।१।४६

अनिटश्च्लेः क्स इति। एतच्च "च्लेः सिच्", "शल इगुपधा"दित्यतोऽनुवर्तत इति भावः। अनिटः किम्?। "श्लिषु दाहे" इति भौवादिकस्य सेटो माभूत्। अश्लेषीत्। "शल इगुपधे"ति सिद्धे पुनः क्सविधे फलमाह-- पुषाद्यङ इति।

तत्त्व-बोधिनी

आलिङ्गने ३०१, ३।१।४६

सामथ्र्यादिति। यदि हि "श्लिष" इति प्राप्त एव क्सो नियम्येत तर्हि योगविभागो व्यर्थः स्यादिति भावः।

शल इगुपधादित्यस्यापीति। तेन कर्मण्यातांप्रभृतिष्वनालिङ्गने सिजेव भवति न तु क्सः। "समाश्लिक्षत जतूनि काष्ठै"रिति क्सप्रत्यये सति तु समाश्लिक्षन्तेति स्यादिति भावः। प्रत्यासत्ताविति। आलिङ्गनं हि प्राणिकर्तृकं न तु काष्ठादिकर्तृकमिति भावः। "श्लिषश्च्लेरालिङ्गन एव क्स" इति व्याख्यानसय् फलं दर्शयति-- कर्मणीत्यादिना। अश्लिक्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो नास्ति "क्सस्याची"त्यकारलोपात्, तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति-- अश्लिष्ठः। अश्लिड्ढ्वमिति। न्यासकारादय इति। तथा च तन्मते "ञीतः क्तः" इति वर्तमाने क्तो भवति।

आदित्त्वान्निष्ठायां नेट्। स्विन्नः। "विभाषा भावादिकर्मणोः"। स्विन्नम्। स्वेदितमित्यादि सिद्धम्। षिधु। संराद्धिर्निष्पत्तिः। "उदितो वे"ति क्त्वायामिड्विकल्पः। इट्पक्षे "रलो व्युपधा"दिति वा कित्वम्। सिधित्वा। सेधित्वा। सिद्ध्वा। प्रामादिक इति। ऊदित्त्वेत्वनुदात्तेषु सिध्यतेः पाठो व्यर्थः स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

न दृशः ३।१।४७

पूर्वेण क्षः प्राप्तः प्रतिषिध्यते। दृशेः धातोः परस्य च्लेः क्षाऽदेशो न भवति। अस्मिन् प्रतिषिद्धे इरितो वा ३।१।४५ इति अङ्सिचौ भवतः। अदर्शत्, अद्राक्षीत्।

न्यासः

न दृशः।, ३।१।४७

"अदर्शत्" इति। अङ्। "ऋदशोऽङि गुणः" ७।४।१६ इति गुणः। अद्राक्षीत्" इति। "सृजिदृशोर्झल्यमकिति" ६।१।५७ इत्यमागमः। "वदव्रज" ७।२।३ इत्यादिना वृद्धिः, पूर्ववत् षत्वकत्वे॥

बाल-मनोरमा

न दृशः २४०, ३।१।४७

न दृशः। "च्लेः सि"चित्यत श्च्लेरिति, "शल इगुपधा" दित्यतः क्स इति चानुवर्तते। तदाह-- दृशश्च्लेः क्सो नेति। क्सादेशे तु "अदृश" दिति स्यादिति भावः। अद्राक्षीदिति। सिचि अमागमे ऋकारस्य यणि अकारस्य हलन्तलक्षणवृद्धौ शस्य षत्वे तस्य कत्वे सस्य षत्वमिति भावः। अद्रक्ष्यत्। दंश दशने इति। अयमनिट्, नोपधश्च। कृतानुस्वारनिर्देशः। दंष्ट्राव्यापार इति। हनुमूलगताः स्थूलदन्ता दंष्ट्राः, तद्व्यापारः = क्षतक्रियादिरूप इत्यर्थः। ननु दंशधातोर्ल्युटि दशनशब्दः। तत्र "अनिदिता"मिति नकारस्य लोपो न संभवति, ल्युटः क्ङित्त्वाऽभावात्। "दंशसञ्जे"त्यपि नस्य लोपो न संभवति, तस्य शप्येव प्रवृत्तेः। तथा च दशन इत्यर्थनिर्देशः कथमित्यत आह---पृषोदरादित्वादिति। अत एवेति। दशनशब्दनिर्देशादेव नकारस्य लोप इत्यन्ये मन्यन्त इत्यर्थः। तेषामपीति। "निपातनान्नकारलोप" इति वदतामपि पृषोदरादिषु निपातनादित्यर्थ एव तात्पर्यं, न तु धातुपाठे "दंशदशने" इत्यर्थनिर्देशे इति भावः। विनिगमनाविरहमाशङ्क्याह-- अर्थनिर्देशस्याधुनिकत्वादिति। सर्वधातुष्वर्थनिर्देशस्य अपाणिनीयत्वादित्यर्थः। क्वचिदेव धातुष्वर्थनिर्देशः पाणिनीय इति भूधातौ निरूपितम्। अथ दशतीत्यादौ शपः पित्त्वेन अकित्त्वात् "अनिदिता"मिति शपीत्युक्तेरार्द्धधातुके नलोपो न। संयोगात्परत्वेन लिटः कित्त्वाऽभावादनिदितामित्यपि न। ददंश ददंशतुः ददंशुः। भारद्वाजनियमात्थलि वेट्। तदाह-- ददंशिथ ददंष्ठेति। अनिट्पक्षे व्रश्चादिना शस्य षः। थस्य ष्टुत्वेन ठ इति भावः। दंष्टेति। तासि व्रश्चादिना शस्य षत्वे तकारस्य ष्टुत्वमिति भावः। दङ्क्ष्यतीति। व्रश्चादिना शस्य षत्वे तस्य कत्वे अनुस्वारस्य परसवर्णे ङकारे सस्य षत्वमिति भावः। दशतु। अदशत्। दशेत्। दश्यादिति। आशीर्लिङि "अनिदिता"मिति नलोप इति भावः। अदाङ्क्षीदिति। सिचि हलन्तलक्षणा वृद्धिः, शस्य षः, तस्य कः अनुस्वारस्य परसवर्णेन ङः, सस्य षत्वमिति भावः। अदङ्क्ष्यत्। कृष विलेखने इति। अनिडयम्। कर्षति। चकर्ष चकृषतुः चकृषुः। थलि अजन्ताऽकारवत्त्वाऽभावात् क्रादिनियमान्नित्यमिट्-- चकर्षिथ कृषथुः चकृष। चकर्ष चकृषिव चकृषिम। इति सिद्धवत्कृत्याह--क्रष्टा कर्ष्टेति। "अनुदात्तस्ये चे"ति अम्विकल्पः। तकारस्य ष्टुत्वम्। क्रक्ष्यति कर्क्ष्यतीति। षस्य कत्वे सस्य षः। कर्षतु। अकर्षत्। कर्षेत्। कृष्यात्। "शल इगुपधा"दिति च्लेः क्सादेशे प्राप्ते आह-- स्पृशमृशेति। अक्राक्षीदिति। च्लेः क्सादेशाऽभावे सिचि "अनुदात्तस्य चर्दुपधस्ये" त्यमि ऋकारस्य यणि

हलनतलक्षणवृद्धौ "षढोः कः सी"त्यनेन षस्य कतवे ससय् षत्वमिति भावः। अकार्क्षीदिति। अमभावे सिचि वृद्धौ रूपम्। पक्षे क्स इति। च्लेः सिजभावपक्षे "शल इगुपधा"दिति क्स इत्यर्थः। अकृक्षदिति। क्से सति, कित्त्वाद्गुणाऽभावे षस्य कः, ससय् ष इति भावः। अक्रक्ष्यत्-- अकक्ष्यत्। दह भस्मीकरणे इति। अनिट्। दहति। ददाह देहतुः देहुः। थलि तु भारद्वाजनियमाद्वेडित्याह-- देहिथ ददग्धेति। इट्पक्षे "थलि च सेटी"त्येत्वाभ्यासलोपौ। अनिट्पक्षेतु "दादे"रिति हस्य घः, "झषस्तथो"रिति थस्य धः, घस्य जश्त्वेन ग इति भावः। धक्ष्यतीति। हस्य घः, दस्य भष्, घस्य गः, तस्य चर्त्वेन कः, सस्य ष इति भावः। दहतु। अदहत्। दहेत्। दह्यात्। अधाक्षीदिति। सिचि हलन्तलक्षणा वृद्धिः। हस्य घः, दस्य भष्, घस्य ग-, तस्य कः, सस्य ष इति भावः। अदाग्धामिति। सिचि वृद्धिः, हस्य घः, "झलो झली"ति सलोपः, "झषस्तथो"रिति तकारस्य धः, घस्य ग इति भावः। अधाक्षुरिति। सिचि वृद्धिः, हस्य घः, दस्य भष्, घस्य गः, तस्य कः, सस्य ष इति भावः। अधाक्षीःअदाग्धम् अदाग्ध। अधाक्षम् अधाक्ष्व अधाक्ष्म। अधक्ष्यत्। मिह सेचने इति। अनिट्। मेहति। मिमेह मिमिहतुः मिमिहुः। अजन्ताऽकारवत्त्वाऽबावाक्रादिनियमान्नित्यमिट्। तदाह-- मिमेहिथेति। मिमिहथुः मिमिह। मिमेह मिमिहिव मिमिहिम। मेढेति। तासि ढत्वधत्वष्टुत्वढलोपाः। मेक्ष्यतीति। हस्य ढः, तस्य कः, सस्य षः। तदाह-अमिक्षदिति। अमेक्ष्यत्। कित निवासे रोगापनयने चेति। परस्मैपदषु पाठादयं परस्मैपदी। अर्थद्वयमात्रमत्र निर्दिष्टम्। अर्थनिर्देशस्य उपलक्षणत्वादर्थान्तरेषु वृत्तिः। तत्र "कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये चे"ति निबद्धेष्वर्थेषु "गुप्तिज्किद्भ्यः स"न्निति सन्विहितः। तदाह--चिकित्सतीति। "सन्यतः इति इत्त्वे हलादिशेषे अभ्यासचुत्वे चिकित्सेति सन्नन्तं, तस्माल्लिटि शपि "चिकित्सती"ति रूपम्। अस्य सनः "धातो"रिति विहितत्वाऽभावादनाद्र्धधातुकत्वान्न लघूपधगुणो, नापि इडागम इति प्रागुक्तम्। चिकित्सांचकारेत्यादि सुगमं जुगुप्सतिवत्। संशये इत्यादि। व्यक्तम्। निवासे त्विति। व्याधिप्रतीकाराद्यर्थपञ्चकादर्थपञ्चकादर्थान्तरे चुरादित्वस्योक्तत्वादिति भावः। दान खण्डने। शान तेजने इति। तेजनं--तीक्ष्णीकरणम्। इत इति। "दान खण्डने" इत्यारभ्य "वह प्रापणे" इत्येतत्पर्यन्ताः स्वरितेत इत्यर्थः। तत्र धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वाद्यदा दानधातुरार्जवे, शानधातुस्तु निशाने वर्तते तदा "मान्बधदान्शा"निति सनि, "सन्यङो"रिति द्वित्वे, अभ्यासह्रस्वे, तस्य "सन्यतः" इति इत्त्वे, तस्य "मान्बधे"ति दीर्घे सति, नकारस्याऽनुस्वारे, दीदांस शीशांसाभ्यां लटि स्वरितानुबन्धस्य केवलयोरचरितार्थत्वात्, कर्तृगे फले तङि शपि दीदांसते शीशांसते इति रूपम्। परगामिनि तु फले परस्मैपदे तिपि शपि दीदांसति शीशांसतीति रूपम्। तदाह--दीदांसते इत्यादि। शीशांसतीति। तीक्ष्णीकरोतीत्यर्थः। अर्थविशेषे इति। आर्जवे निशाने चार्थे सनित्यर्थः। अन्यत्रेति। आर्जवनिशानाभ्यामन्यत्र णिजन्तात्परस्मैपदमेवेत्र्थः। "अर्थान्तरे अननुबन्धकाश्चुरादय" इत्युक्तेरिति भावः। डु पचष् पाके इति। डुः, षकारश्चकारादकारश्च इत्। स्वरितेत्त्वादुभयपदी। तदाह--पचति पचते इति। पपाच पेचतुः पेचुः। भारद्वाजनियमात्थलि वेट्।तदाह--पेचिथ पपक्थेति। इट्पक्षे "थलि च सेटी"त्येत्वाभ्यासलोपौ। अनिट्पक्षे तु "चोः कु"रिति भावः। पेचे पेचिवहे पेचिमहे। क्रादिनियमादिट्। पक्तेति। तासि "चोः कुः"। पक्ष्यति पक्ष्यते। पचतु पचताम्। अपचत् अपचत। पचेत्। पक्षीष्टेति। आशीर्लिङि तङि सीयुटि "चोः कुः"। षत्वम्। अपाक्षीत्। अपक्त। अपक्षाताम्। अपक्ष्यत् अपक्ष्यत। षचधातुः षोपदेशः। तदाह--सचति सचते इति। सेडयम्। ससाच सेचतुः सेचुः। सेचिथ सेचथुः सेच। ससाच-ससच, सेचिव सेचिम। सेचे। सेचिषे सेचिवहे सेचिमहे। सच्यात् सचिषीष्ट। असाचीत्--असचीत्। असचिष्ट। भजधातुरनिट्। भजति। किति लिटि वैरूप्यापादकादेशादित्वात् "अत एकहल्मध्ये"इत्यप्राप्तौ "तृ()फले"त्येत्वाभ्यासलोपौ। तदाह--भेजतुरिति। भारद्वाजनियमात्थलि वेट्। तदाह-- भेजिथ बभक्थेति। इट्पक्षे "थलि च सेटी"त्येत्वाभ्यासलोपाविति भावः। भेजिव भेजिम। क्रादिनियमादिट्। भेजे। भेजिषे। भेजिवहे। भक्तेत्यादि। सुगमम्। रञ्ज रागे इति। नोपधोऽयम्। कृतानुस्वारपसवर्णनिर्देशः। अनिडयम्। शपः पित्त्वेन ङित्त्वाऽभावात् "अनिदिता"मित्यप्राप्तावपि "रञ्जेश्चे"ति शपि नलोपः। तदाह--रजति रजते इति। संयोगात्परत्वाल्लिटो न कित्त्वम्। ररञ्ज ररञ्जतुः। भारद्वाजनियमात्थलि वेट्। ररञ्जिथ--ररङ्क्थ। अनिट्पक्षे जस्य कुत्वेन गः।

ततोऽनुस्वारपरसवर्णञकारनिवृत्तौ गस्य चर्त्वेन कः। नस्यानुस्वारे तस्य परसवर्णो ङकार इति भावः। ररञ्जिव ररञ्जिम। क्रादिनियमादिट्। रङ्क्ता। रङ्क्ष्यति। रङ्क्ष्यते।रजतु रजताम्। अरजत् अरजत। रजेत् रजेत। आशीर्लिङ यासुटः कित्त्वात् "अनिदिता"मिति नलोपः।तदाह--रज्यादिति। रङ्क्षीष्टेति। आत्मनेपदे लिङः सीयुटि जस्य कुत्वेन गः, ततः परसवर्णसंपन्नञकारनिवृत्तिः, गस्य कः, नस्य परसवर्णेन ङः, षत्वमिति भावः। अराङ्क्षीदिति। सिचि हलतन्तलक्षणवृद्धौ कुत्वादि पूर्ववत्। अनेकहल्व्यवधानेऽपि हलन्तलक्षणा वृद्धिः प्रवर्तते इति भाष्ये स्पष्टम्। अराङ्क्तामिति। "झलो झली"ति सलोपः। कुत्वादि पूर्ववत्। अरङ्क्तेति। लुङस्तङि प्रथमपुरुषैकवचने "झलो झलीति सलोपे कुत्वादि। शप आक्रोशे इति। अनिडयम्। भारद्वाजनियमात्थलि वेट्। वमादौ तु क्रादिनियमादिट्। अशाप्सीदिति। हलन्तलक्षणा वृद्धिः। अशप्तेति। "झलो झली"ति सलोपः। अशप्साताम्। त्विषधातुरनिट्। शपि लघूपधगुणः। तदाह--त्वेषति त्वेषते इति। तित्वेष तत्विषतुः तित्विषुः। तित्वेषिथ तित्विषथुः तित्विष। तित्वेष तित्विषिव तित्विषिम। क्रादिनियमादिट्। तित्विषे इति। तित्विषाते तत्विषिरे। तित्विषिषे तित्विषाथे तित्विषिध्वे। तित्विषे तित्विषिवहे तित्विषिमहे। त्वेष्टेति। तासि तकारस्य ष्टुत्वम्। त्वेक्ष्यति त्वेक्ष्यते इति। स्ये कत्वषत्वे। त्वेषतु त्वेषताम्। अत्वेषत् अत्वेषत। त्वेषेत् त्वेषेत। त्विष्यादिति। यासुट आशीर्लिङि कित्त्वान्न लघूपधगुणः। त्विक्षीष्टेति। "लिङ्सिचावात्मनेपदेषु" इति कित्त्वान्न गुणः। लुङि परस्मैपदे "शल इगुपधा" दिति च्लेः क्सः। कित्त्वान्न गुणः। तदाह--अत्विक्षदित्यादि। लुङि आत्मनेपदे च्लेः क्सादेशं मत्वा "आत्मनेपदष्वनतः" इत्यदादेशाऽसंभवादन्तादेशे क्सस्याऽन्त्यलोपे पररूपे वा रूपमिति भावः। यज देवपूजेति। अनिडयम्। यजति यजते इति। देवान् पूजयति सङ्गमयति ददाति वेत्यर्थः।

तत्त्व-बोधिनी

न दृशः २१२, ३।१।४७

क्रष्टा। कर्ष्टेति। "अनुदात्तस्य चे"त्यम् वा।

*स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः। धक्ष्यतीति। घत्वषत्वभष्भावाः। अधाक्षीदिति। "अस्तिसिचः" इतीट्। वृद्धिः। घत्वादि प्राग्वत्। मिह सेचने। सेचनमिह मिश्रीकरणकं विवक्षितं, न तु सेचनमात्रम्। "मेढ्रं मेहनशेफसी" इत्यमरः। कित निवासे। कितेर्व्याधिप्रतीकारादावेव सन्नित्युक्तं। तदुदाहरति-- चिकित्सतीति। रोगमपनयतीत्यर्थः। शत्रुं चिकित्सति। निगृह्णातीत्यर्थः। क्षेत्रे तृणं चिकित्सति। अपनयति, नाशयति वेत्यर्थः। अर्थान्तरे चुरादिरित्युक्तं। तदुदाहरति-- केतयतीति। षच समवाये। समवायः-- सम्बन्धः। भेजतुरिति। "तृ()फलभजे"त्येत्वम्। भक्ष्यतीति। कुत्वषत्वे। त्विष दीप्तौ। अत्विक्षदिति। "शलैगुपधादिति क्सः। कत्वषत्वे। अत्विक्षातामिति। "क्सस्याची"ति लोपः। यज देवादेवपूजा त्विह देवतोद्देशेन विधिबोधितो द्रव्यत्यागः।

---

सूत्रम्

काशिका-वृत्तिः

णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८

सिजपवादश्चङ् विधीयते। ण्यन्तेभ्यो धातुभ्यः, श्रि द्रु स्रु इत्येतेभ्यश्च परस्य च्लेः चङादेशो भवति कर्तवाचिनि लुङि परतः। ङकारो गुणवृद्धिप्रतिषेधार्थः, चकारः चङि ६।१।११ इति विशेषणार्थः। अचीकरत्। अजीहरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। कर्तरि इति किम्? अकारयिषातां कटौ देवदत्तेन। कमेरुपसङ्ख्यानम्। आयादयः आर्धधातुके वा ३।१।३१ इति यदा णिङ् न अस्ति तदा एततुपसङ्ख्यानम्। अचकमत। णिङ्पक्षे सन्वद्भावः। अचीकमत। नाकमिष्टसुखं

यान्ति सुयुक्तैर् वडवारथैः। अथ पत्कषिणो यान्ति ये ऽचीकमतभाषिणः।

लघु-सिद्धान्त-कौमुदी

णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ५३०, ३।१।४८

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे। अकामि अ त इति स्थिते --।

न्यासः

णिश्रिद्रुरुआउभ्यः कत्र्तरि चङ्। , ३।१।४८

"चकारो विशेषणार्थः" इति। "चङि" ६।१।११ इत्यत्राङीत्यच्यमाने "अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२ इत्यनेनापि विहितेऽङि द्विर्वचनं स्यात्। "अचीकरत्, अजीहरत्" इति। "चङि" ६।१।११ इति द्विर्वचनं कृह्मशब्दयोः उरत्वम्, "कुहोश्चुः" ७।४।६२ इति चुत्वम्-- ककारस्य चकारः, हकारस्यापि झकारः, "अभ्यासे चर्च" ८।४।५३ इति झकारस्य जकारः। शेषमभ्युदसीषददित्यनुसारेण वेदितव्यम्। "अशिश्रियत्" इत्यादि। "श्रिञ् सेवायाम्" (धा।पा।८९७), "दु द्रु गतौ" (धा।पा।९४४, ९४५), "रुआउ गतौ" (९४०), "अचि श्नुधातु" ६।४।७७ इत्यादिना यथायोगमियङुवङौ। "अकारयिषताम्" इति। कर्मणि द्विवचनम्, आताम्, इड्गुणायादेशषत्वानि। "कमेरुपसंख्यानम्" इति। ननु "कमेर्णिङ्" ३।१।३० इति णिङि कृते ण्यन्तत्वादेव कमेश्चङ्, सिद्धः, तत् कथमुपसंख्यायत इत्याह-- "आयादयः" इत्यादि। "अचकमत"इति। अनुदात्तेत्त्वादात्मनेपदम्, पूर्ववदभ्यासस्य कुत्वम्। "णिङ्भावपक्षे सन्वद्भावः" इति। न त्वणिङ्पक्षे इति दर्शयति; यस्मात् "सन्वल्लघुनि चङ् परे" ७।४।९३ इत्यस्य चङ् परो यस्माण्णेः स चङ्परो तस्मिन् परतो यदङ्गं तस्याभ्ययासस्य सन्वत् कार्यं भवतीत्येषोऽर्थः, न चायमर्थो णिङभावपक्षे सम्भवति॥ "अदधत्" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। पूर्ववदभ्यासस्य जश्त्वं दकारः। "अधासीत्" इति। लुङ्, सिच्, "यमरमनमातां सक् चट ७।२।७३ इतीट्, प्रकृतेश्च सगागमः, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्, "इट ईटि" ८।२।२८ इति सिचो लोपः। "अशि()इआयत्" इति। पूर्ववदियङ्। "अङ्प्यत्र विकल्प्यते" इति। "जॄ()स्तम्भु" ३।१।५८ इत्यादिसूत्रेण। "अ()आत्" इति। "()आयतेरः" ७।४।१८ इत्यत्वम्, "अतो गुणे" ६।१।९४, पररूपत्वम्। "अ()आयीत्" इति। ह्मन्तक्षणा()आस" ७।२।५ इत्यादिना वृद्धिप्रतिषेधे कृते गुणेऽयादेशः। "अधिषाताम्" इति। कर्मणि द्विवचनम्, आताम्, "स्थाघ्वोरिच्च" १।२।१७ इति कित्त्वमित्त्वञ्च।

बाल-मनोरमा

णिश्रिद्रुरुआउभ्यः कर्तरि चङ् १५३, ३।१।४८

अथ णिङन्तात्कामीत्यरस्माल्लुङस्तादेशे च्लेः सिजादेशे प्राप्ते-- णिश्रि। णि श्रि द्रु रुआउ एषां द्वन्द्वः। प्रत्ययग्रहणपरिभाषया णीति तदन्तस्य ग्रहमम्। "च्लि लुङी"त्यतो लुङीति, "च्लेः सि"जित्यतश्च्लेरिति चानुवर्तते। तदाह-- ण्यन्तादित्यादिना। चङावितौ।

तत्त्व-बोधिनी

णिश्रिद्रुरुआउभ्यः कर्तरि चङ् १२७, ३।१।४८

णिश्रिद्रु। च्लेः सिचोऽपवादः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा धेट्श्व्योः ३।१।४९

धेट् पाने, टुओश्वि गतिवृद्ध्योः, एताभ्याम् उत्तरस्य च्लेर् विभाषा चङादेशो भवति। धेटस्तावत् अदधात्। सिच्पक्षे विभाषा घ्राधेट्शाच्छासः २|४|७८ इति लुक्। अधात्। अधासीत्। श्वयतेः खल्वपि। अशिश्वियत्। अङो ऽप्यत्र विकल्प इष्यते। अश्वत्। अश्वयीत्। कर्तरि इत्येव, अधिषातां गवौ वत्सेन।

बाल-मनोरमा

विभाषा धेट् २१२, ३|१|४९

लुङि च्लेः सिचि प्राप्ते-- विभाषा धेट्। "च्लि लुङी"त्यनुवर्तते। "णिश्रिद्रुरुआउभ्यःरर" इत्यतः कर्तरि चङिति च। तदाह-- आभ्यामिति। धेट् ()इआ आभ्यामित्यर्थः। अदधदिति। चङि द्वित्वे आल्लोप इति भावः। अदधताम्। अदधन्। अदधः अदधतम् अदधत। अदधम् अदधाव अदधाम।

तत्त्व-बोधिनी

विभाषा धेट्श्व्योः १८४, ३|१|४९

विभाषा धेट्। "च्लि लुङी"त्यनुवर्तते, "णिश्री"त्यस्मात्कर्तरीति च। तदाह--च्लेश्चङ् वेत्यादि। अदधदिति। चङि आतो लोपः। ()आयतेरुदाहरणम्-- अशि()इआयत्।

---

सूत्रम्

काशिका-वृत्तिः

गुपेश् छन्दसि ३|१|५०

गुपेः परस्य च्लेः छन्दसि विषये विभाषा चङादेशो भवति। यत्र आयप्रत्ययो नास्ति तत्र अयं विधिः। इमान् मे मित्रावरुणौ गृहञ्जुगुपतम् युवम्। अगौप्तम्, अगोपिष्टम्, अगोपायिष्टम् इति वा। भाशायां तु चङन्तं वर्जयित्वा शिष्टं रूपत्रयं भवति।

न्यासः

गुपेश्छन्दसि। , ३|१|५०

"यत्रायप्रत्ययो नास्ति तत्रायं विधिः" इति। अनायप्रत्ययान्तकस्योपादानात्। आयप्रत्ययान्तस्य धात्वन्तरत्वात्। "अझूगुपतम्" इति। "गुपू रक्षणे" (धा|पा|३९५), लुङ्, द्विर्वचनम्,थस्, "तस्थस्थ" ३|४|१०१ इत्यादिना तम् "दुजादीनां दीर्घोऽभ्यासस्य" ६|१|७ इति दीर्घः। "अगौप्तम्" इति। "झलो झलि" ८|२|२६ इति सिचो लोपः,तस्यासिद्धत्वात् "वदव्रज" ७|२|३ इत्यादिना वृद्धिः। "अगोपिष्टम्" इति। ऊदित्वात् "स्वरति" ७|२|४४ इत्यादिना पक्षे इट्, "नेटि" ७|२|४ इति वृद्धौ प्रतिषिद्धायां लघूपधगुणः। "अगोपायिष्टम्" इति। आयप्रत्ययान्तात् सिच्, इट्, "अतो लोपः" ६|४|४८|"रूपत्रयम्" इति। पाश्चात्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

नौनयतिध्वनयत्येलयत्यर्दयतिभ्यः ३|१|५१

ऊन परिहाणे, ध्वन शब्दे, इल प्रेरणे, अर्द गतौ याचने च, एतेभ्यो धातुभ्यः ण्यन्तेभ्यः पूर्वेण च्लेश्चङि प्राप्ते छन्दसि विषये न भवति। काममूनयीः। औनिनः इति भाषायाम्। मा त्वाग्निर्धवनयीत्। अदिध्वनतिति भषायाम्। काममिलयीत्। ऐलिलतिति भाषायाम्। मैनमर्दयीत्। आर्दिदतिति भाशायाम्।

न्यासः

नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः। , ३।१।५१

"एभ्यो ण्यन्तेभ्यः" इति। ऊनयत्येलयतिभ्यां चुरादिण्यन्ताभ्यम्। "पूर्वेण" इति। "श्रिणि" इत्यादिना। "औनयीत्" इति। तिप्, सिच्, "इट ईटि" ८।२।२८ इति सिचो लोपः, तस्यासिद्धत्वाद्वृद्धौ प्राप्तायां "ह्म्यन्तलक्षण" ७।२।५ इति प्रतिषेधः, गुणायादेशौ, "आडजादीनाम्" ६।४।७२ इत्याट्, "आटश्च" ६।१।८७ इति वृद्धिः। "औनिनत्" इति। "अजादेर्द्वितीयस्य" ६।१।२ इति द्विर्वचनम्। णिलोपः। "ध्वनयीत्" इति। ध्वनयीदित्यतदेव निपातनाददन्तत्वम्, "अतो लोपः" ६।४।४८, तस्य स्थानिवद्भावात् "अत उपाधायाः" ७।२।११६ इति वृद्धिर्न भवति। "बहुलं छन्दत्यमाङ्योगेऽपि" ६।४।७५ इत्यड्निषेधः। "अदिध्वनत्" इति। सन्वद्भावादित्त्वम्। "ऐलिलत्" इति। "अजादेर्द्वितीयस्य" ६।१।२ इति लिशब्दस्य द्विर्वचनम्, पूर्ववदाट्। "आर्दिदत्" इति। इहापि द्वितीयस्यैकाचो द्ववचनं पूर्ववत्। रेफस्तु न द्विरुच्यते; " न न्द्राः संयोगादयः" ६।१।३ इति प्रतिषेधात्। आट्, वृद्धिः॥

---

सूत्रम्

काशिका-वृत्तिः

अस्यतिवक्तिख्यातिभ्यो ऽङ् ३।१।५२

असु क्षेपने, वच परिभाषणे ब्रूञादेशो वा, ख्या प्रकथने चक्षिङादेशो वा, एभ्यः परस्य च्लेरङादेशो भवति कर्तृवाचिनि लुगि परतः। अस्यतेः पुषादिपाठादेवाङि सिद्धे पुनर् ग्रहणम् आत्मनेपदार्थम्। पर्यास्थत, पर्यास्थेताम्, पर्यास्थन्त। वक्ति अवोचत्, अवोचताम्, अवोचन्। ख्याति आख्यत्, आख्यताम्, आख्यन्। कर्तरि इति किम्? पर्यासिषातां गावौ वत्सेन।

लघु-सिद्धान्त-कौमुदी

अस्यतिवक्तिख्यातिभ्योऽङ् ६००, ३।१।५२

एभ्यश्चलेरङ् स्यात्॥

न्यासः

अस्यतिवक्तिख्यातिभ्यऽङ्। , ३।१।५२

"ब्राऊञादेशो वा" इति। ब्राऊवो वचिः" २।४।५३ इति। "चक्षिङादेशो वा" इति। " चक्षिङः ख्याञ्" २।४।५४ इति। "पर्यास्थत" इति। "उपसर्गादस्यत्यूह्योर्वचनम्" (वा।४९) इत्युपसंख्यानात्मनेपदम्। "अस्यतेस्थुक्" ७।१।१७। "अवोचत्" इति। "वच उम्" ७।४।२० "आख्यत्" इति। पूर्ववदाकारलोपः॥

बाल-मनोरमा

अस्यतिवक्तिख्यातिभ्योऽङ् २६९, ३।१।५२

अस्यतिवक्ति। "च्लेः सिजित्यतश्च्लेरित्यनुवर्तते। तदाह--एभ्यश्च्लेरिति। अस्यत् अस्यतेति। यत्वपक्षे रूपम्। आल्लोपः। ञित्त्वादुभयपदित्वादात्मनेपदेऽपि रूपम्। क्शादेशपक्षे परस्मैपदपक्षे तु आह-- अक्शासीदिति। अङ्()विधौ ख्यातीति आत्मनेपदे लुङि रूपम्। अक्शासातामित्यादि। अख्यास्यत् अख्यास्यत। अक्सास्यत्। अक्शास्यत। वर्जने क्शाञ् नेष्ट इति। इत्येतत्पर्यन्ता इत्यर्थः। ईर् गसाविति। सेट्। ईर्ते इति। ईराते ईरते। ईर्षे ईराधेईध्र्वे। ईरे ईर्वहे ईर्महे। ईराथामित्यपि ज्ञेयम्। ईध्र्वमिति। ई रै ईरावहै ईरामहै। ऐर्त ऐराताम् ऐरत। ऐर्याः ऐराथाम् ऐध्र्वम्। ऐरि ऐर्वहि ऐर्महि। ईरीत। ईरिषीष्ठ। ऐरिष्ठ। ऐरिष्यत। ईड स्तुतौ। ईड्डे इति। तकारस्य ष्टुत्वेन टः, जस्य चर्त्वेन ट इति भावः। ईडाते ईडते। ईड्-से इति स्थिते

सार्वधातुकत्वादिडागमे अप्राप्ते--

तत्त्व-बोधिनी

अस्यतिवक्तिख्यातिभ्योऽङ् २३५, ३।१।५२

वक्तीति। "ब्राउवो वचिः" "वच परिभाषणे" इति उभयोग्र्रहणम्। ईर। ईरिता। ईरिष्यते। लङि। एर्त। ऐराताम्। ऐरत। ऐरि। ऐर्वहि। ऐर्महि।

---

सूत्रम्

काशिका-वृत्तिः

लिपिसिचिह्वश् च ३।१।५३

लिप उपदेहे षिच क्षरने, ह्वेञ् स्पर्धायाम्, एतेभ्यश्च परस्य च्लेः अङादेशो भवति। अलिपत्। असिचत्। आह्वत्। पृथग्योग उत्तरार्थः।

लघु-सिद्धान्त-कौमुदी

लिपिसिचिह्वश्च ६५८, ३।१।५३

एभ्यश्च्लेरङ् स्यात्। असिचत्॥

न्यासः

लिपिसिचिह्वश्च।, ३।१।५३

"अह्वत्" इति। पूर्ववदाकारलोपः। अथ किमर्थो योगविभागः, न "अस्यतिवक्तिख्यातिलिपिसिचिह्वश्च" इत्येक एव योगः कियतामित्याह-- "पृथक्" इत्यादि। उत्तरसूत्रे लिपिप्रभृतिभ्य एवात्मनेपदेष्वङ्विकल्पो यथा स्यादित्येवमर्थो योगविभागः। एक योगे ह्रस्यत्यादीनामप्युत्तरत्रानुवृत्तिः स्यात् तथा च तेभ्योऽपि विकल्पेनाङ् प्रसज्येत॥

बाल-मनोरमा

लिपिसिचिह्वश्च २४९, ३।१।५३

लिपिसिचि। लिपि सिचि ह्वा एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। "च्लेः सि"जित्यतश्च्लेरिति, "अस्यतवक्तिख्यातिभ्यः" इत्यतोऽङिति चानुवर्तते। तदाह--एभ्य इति। इदं परस्मैपदविषयम्, आत्मनेपदे विकल्पविधानात्। तदाह--

तत्त्व-बोधिनी

लिपिसिचि ह्वश्च २२०, ३।१।५३

लिपिसिचि। लिप उपदेहे। षिच क्षरणे।अलिपत्। असिचत्।

---

सूत्रम्

काशिका-वृत्तिः

आत्मनेपदेष्वन्यतरस्याम् ३।१।५४

पूर्वेण प्राप्ते विभषा आरभ्यते। लिपिसिचिह्व आत्मनेपदेषु परतः च्लेः अङादेशो भवति अन्यतरस्याम्। स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२ इत्यात्मनेपदम्। अलिपत, अलिप्त। असिचत, असिक्त। अह्वत्, अह्वास्त।

लघु-सिद्धान्त-कौमुदी

आत्मनेपदेष्वन्यतरस्याम् ६५९, ३।१।५४

लिपिसिचिह्वः परस्य च्लेरङ् वा। असिचत, असिक्त॥ लिप उपदेहे॥ १०॥ उपदेहो वृद्धिः। लिम्पति, लिम्पते। लेप्ता। अलिपत्, अलिपत, अलिप्त॥इत्युभयपदिनः।कृती छेदने॥ ११॥ कृन्तति। चकर्त। कर्तिता। कर्तिष्यति, कर्त्स्यति। अकर्तीत्॥ खिद परिघाते॥ १२॥ खिन्दति। चिखेद। खेत्ता॥ पिश अवयवे॥ १३॥ पिंशति। पेशिता॥ ओव्रश्चू छेदने॥ १४॥ वृश्चति। वव्रश्च। वव्रश्चिथ, वव्रष्ठ। व्रश्चिता, व्रष्टा। व्रश्चिष्यति, व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्, अव्राक्षीत्॥ व्यच व्याजीकरणे॥ १५॥ विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्, अव्यचीत्। व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात्॥ उछि उञ्छे॥ १६॥ उञ्छति। ऽउञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्।' इति यादवः॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु॥ १७॥ ऋच्छति। ऋच्छत्यृतामिति गुणः। द्विहल् ग्रहणस्य अनेक हलुपसक्षणत्वान्नुट्। आनर्च्छ। आनर्च्छतुः। ऋच्छिता॥ उज्झ उत्सर्गे॥ १८॥ उज्झति॥ लुभ विमोहने॥ १९॥ लुभति॥

न्यासः

आत्मनेपदेष्वन्यतरस्याम्। , ३।१।५४

"स्वरितञिचः" इत्यात्मनेपदम् इति। लिपिसिच्योः स्वरितेत्त्वात्, ह्वयतेस्तु ञित्त्वात्। "अलिप्त, असिक्त" इति। "झलो झलि" ८।२।२६ इति सिचो लोपः, तस्या ८।२।२६ सिद्धत्वाल्लघूपधगुणः प्राप्तः, स "लिङ्सिचावात्मनेपदेषु" १।२।११ इति कित्वान्न भवति, "चोः कुः" ८।२।३० इति कुत्वम्॥

बाल-मनोरमा

आत्मनेपदेष्वन्यतरस्याम् २५०, ३।१।५४

आत्मनेपदेषु। आतो लोप इति अह्वा अ त् इति स्थिते "आतो लोप इटि चे"त्यालोप इत्यर्थः। अह्वदिति। अह्वताम्। अह्वन्नित्यादि। अह्वतेति। लुङि आत्मनपदे अङि रूपम्। अह्वेताम् अह्वन्तेत्यादि। अङभावपक्षे त्वाह--अह्वास्तेति। अह्वासाताम् अह्वासत। इत्यादि। अह्वास्यत् अह्वास्यत। वद व्यक्तायां वाचीति। अज्झल्विभागेन स्पष्टोच्चारणे इत्यर्थः। सेडयम्। अच्छ वदतीति। "अच्छे" त्यव्ययमाभिमुख्ये। अभिमुखं वदतीत्यर्थः। "अच्छ गत्यर्थवदेषु" इति गतित्वादच्छेत्यस्य धातोः प्रागेव प्रयोग इति भावः। अकिति लिटि द्वित्वे "लिट()भ्यासस्ये"ति संप्रसारणमिति मत्वा आह-- उवादेतिकिति लिटि तु "वचिस्वपियजादीना"मिति द्वित्वात्प्राक् संप्रसारणे कृते द्वित्वे सवर्णदीर्घ इति मत्वाह-- ऊदतुरिति। उवदिथेति। द्वित्वे अभ्यासस्य संप्रसारणमिति भावः। ऊदथुः ऊद। उवाद--उवद ऊदिव ऊदिम। वदितेति। तासि इट्। वदिष्यति। वदतु। अवदत्। वदेत्। उद्यादिति। आशीर्लिङि यासुटः कित्त्वात् "वचिस्वपी"ति संप्रसारणमिति भावः। "अवादी"दित्यत्र हलन्तलक्षमवृद्धेः "नेटी"ति निषेधेऽपि "अतो हलादे"रिति वृद्धिविकल्पमाशङ्क्य वदधातोः पृथग्ग्रहणाद्वृद्धिरित्यभिप्रेत्याह-- वदव्रजेति वृद्धिरिति। एतदर्थमेव "वदव्रजहलन्तस्ये"त्यत्र वदधातोः पृथग्ग्रहणमिति भावः। टु ओ ()आईति। टुरोकारश्चेत्। ()आयतीति। शपि गुणाऽयादेशौ। लिटि तु अकिति णलादौ "लिट()भ्यासस्ये"त्यभ्यासस्य नित्यं संप्रसारणे प्राप्ते, किति तु अतुसादौ द्वित्वात्प्राक् "वचिस्वपी"ति नित्यं संप्रसारणे प्राप्ते आह--

तत्त्व-बोधिनी

पदेष्वन्यतरस्याम् २२१, ३।१।५४

अच्छ वदतीति। "अच्छे"त्यस्य वदयोगे गतित्वाद्धातोः प्राक् प्रयोगः।

---

सूत्रम्

काशिका-वृत्तिः

पुषादिद्युताद्य्लृदितः प्रस्मैपदेषु ३।१।५५

द्युतादिभ्यश्च धातुभ्यः परस्य च्लेः परस्मैपदेषु परतः अङादेशो भवति। पुषादिर् दिवाद्यन्तर्गणो गृह्यते, न भ्वादिक्र्याद्यन्तर्गणः। पुष अपुषत्। द्युतादि अद्युतत्। अश्वितत्। लृदिद्भ्यःगम्लृ अगमत्। शक्लृ अशकत्। परस्मैपदेसु इति किम्? व्यद्योतिष्ट। अलोटिष्ट।

लघु-सिद्धान्त-कौमुदी

पुषादिद्युताद्ऌदितः परस्मैपदेषु ५०९, ३।१।५५

श्यन्विकरणपुषादेर्द्युतादेरॣदितश्च च्लेरङ् परस्मैपदेषु। अगमत्। अगमिष्यत्॥इति परस्मैपदिनः।एध वृद्धौ॥ १॥

न्यासः

पुषादिद्युताद्य्?लृदितः परस्मैपदेषु। , ३।१।५५

लृकार इद्येषां ते लृदितः। पुषादिरस्त्येव भावाद्यन्तर्गणः-- पुष पुष्टौ" (धा।पा।७००) श्रिषु श्लिषु प्रुषु प्लुषु दाहे" (धा।पा।७०१-७०४) इत्येवमादिः, अस्ति च दिवाद्यन्तर्गणः--"पुष पुष्टौ" (धा।पा।११८२), "शुष शोषणे" (धा।पा।११८३) इत्येवमादिः, अस्ति च क्र्याद्यन्तर्गणः-- पुष पुष्टौ" (धा।पा।१५२९), "मुष स्तेये" (धा।पा।१५३०) इत्येवमादिः, तदिह कस्य ग्रहणमित्याह-- "पुषादिर्दिवाद्यन्तर्गणः" इत्यादि। यदि भ्वाद्यन्तर्गणो गृह्हते, पुषाद्यनन्तरं द्युतादीनां पाठात् पृथग्ग्रहणं न कुर्यात्; पुषादिग्रहणेनैव गृहीतत्वात्, तस्मात् स तावन्न गृह्हते। क्र्याद्यन्तर्गणोऽपि नैव गृह्हते, तत्र हि चत्वार एव पठ()न्ते धातवः-- पूर्वोक्तौ द्वौ "खच भूतप्रादुर्भावे" (धा।पा।१५३१), "ग्रह उपादाने" (धा।पा।१५३३) इत्येतौ, यदि चैते जिघृक्षिताः स्यर्लृदित यएवैतान् कुर्यात्, एवं पुषादिग्रहणं न कत्तव्यं भवति। तस्मात् पारिशेष्याद् दिवाद्यन्तर्गणानां पुषादीनां ग्रहणं विज्ञायते। अथ पुषादय लृदितः कस्मान्न कृताः? न; न हि ते लृदितः शक्यन्ते कर्त्तुम्। लृदित्वे हि तेषां उदित आदितश्च पठ ()यन्ते तेषाम् "उदितो वा" ७।२।५६ "आदितश्च" ७।२।१६ इत्येतयोः कार्ययोरभावः स्यात्। अथ द्युतादयः कस्मात् लृदितो न कृताः? यत एव हेतोः पुषादय लृदितो न कृतास्तत एव द्युतादयश्च। तेष्वपि हि केचिदुदित आदितश्च पठ()न्ते। तत्र पुषादय आदिवादि परिसमाप्तेः। यत्तु "ष्णिह प्रीतौ" (धा।पा।१२००) इत्यनन्तरं वृदिति वृत्करणं तद् रवादीनां परिसमाप्त्यर्थम्, न पुषादीनामित्याचार्याणां स्मृतिः। द्युतादयस्तु "कृपू सामर्थ्ये" (धा।पा।७६२) इत्येवंपर्यन्ताः, तदनन्तरं वृत्; "घट चेष्टायाम्" (धा।पा।७६३) इति वृत्करणात्। "अद्युतत्" इति। "द्युद्भ्यो लुङि" १।३।९१ इति पक्षे परस्मैपदम्। "अ()आतत्" इति। ()इआता वर्णे" (धा।पा॥७४२)। "अगमत्, अशकत्" इति। "गम्लृ गतौ" (धा।पा।९८२), "शक्लृ शक्तौ" (धा।पा।१२६१)। "व्यद्योतिष्ट" इति। अनुदात्तेत्त्वादात्मनेपदम्। "अलोटिष्ट" इति। "रुट लुट् प्रतीघाते" (धा।पा।७४७,७४८)॥

बाल-मनोरमा

पुषादिद्युताघ्?लृदितः परस्मैपदेषु १८२, ३।१।५५

लुङि च्लेः सिचि प्राप्ते--पुषादि। "च्लेः सि"जित्यतः च्लेरिति, "अस्यतिवक्तिख्यातिभ्यः" इत्यतोऽङिति चानुवर्तते। पुषादि द्युतादि लृदित् एषां समाहारद्वन्द्वत्पञ्चमी। तत्र पुषधातुस्तु भ्वादौ क्र्यादौ चुरादौ दिवादौ चास्ति। तत्र यदि भौवादिकः

पुषादिगमो गृह्येत तर्हि द्युतादिग्रहणमनर्थकं स्यात्, पुषादिगणोत्तरमेवात्र द्युतादिगणपाठात्। नापि क्र्याद्यन्तर्गणः। तत्र ह "मुष स्तेये" "खच भूतप्रादुर्भावे" "हेठ च " "ग्रह उपादाने" इति चत्वार एव पठ()न्ते। यदि त एवात्र पुषादयो विवक्षिताः स्युस्तर्हि लाघवात् लृदित एव ते क्रियेरन्। नाप्यत्र चौरादिकः पुषादिर्गृह्यते, णिचा च्लेव्र्यवहितत्वात्। अतः परिशेषाद्दिवाय एव गृह्नन्ते। तदाह--श्यन्विकरमेति। जर्ज चर्च झर्झेति। एतेषां चवर्गीयान्तेष्वेव पाठ उचितः। हसे हसन इति। एदिदयम्। न वृद्धिरिति। "ह्म्यन्तेत्यनेने"ति शेषः। णिश समाधाविति। णोपदेशत्वनादुपसर्गादसमासेऽपीति नस्य णत्वम्। तदाह-- प्रणेशतीति। "शसु हिंसाया"मित्यतः प्राक् शकारान्ताः। शवतिस्तु वान्तः। शंस्विति। नोपधः। कृतानुस्वारस्य निर्देशः। "चह परिकल्पने" इत्यारभ्य अर्हतिपर्यन्ता हकारान्ताः। रह त्यागे इति। न#आऽयमिदित्। रहि गताविति। अयमिदित्। द्दह द्दहीति। ऋदुपधा एते। द्वितीयचतुर्थाविदितौ। अवृहत्। अवर्हीदिति। इरित्त्वादङ्()विकल्प इति भावः। उवोहेति। उहिधातोर्लिटि द्वित्वे हलादिशेषे पुगन्तलक्षणे गुणे "अभ्यासस्यासवर्णे" इत्युवङ्। मा भवानुहदिति। इरित्त्वादङि रूपम्। औहीदिति। अङभावपक्षे च्लेः सिचि तस्य इटि "अस्तिसिचः" इति तकारस्य ईटि "इट ईटी"ति सिचो लोपे "आडजादीना"मिति आटि वृद्धिः। माङ्योगे तु मा भवानुहीत्। आनर्हेति। "अत आदेः" इति दीर्घे नुट्। कृपूपर्यन्ता इति। "द्युते"त्यारभ्य कृपूपर्यन्ता इत्यर्थः।

तत्त्व-बोधिनी

पुषादिद्युताद्यलृदितः परस्मैपदेषु १५५, ३।१।५५

पुषादिद्युता। पुष धातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च पठ()ते। यदि तु "पुष पुष्टा" विति भौवादिकधातुमारभ्य पुषादिगणो गृह्येत तदा द्युतादिग्रहणमनर्थकं भवेत्, पुषेरुत्तरत्र द्युतादीनां पाठात्। नापि क्राद्यन्तर्गणः, तत्र हि पुषधातोरग्रे "मुष स्तेये", "खच भूतप्रादुर्भावे" "हेठ च" "ग्रह उपादाने" इति चत्वार एव पठ()न्ते। यदि तु त एव जिघृक्षिताः स्युस्तर्हि लाघवाल्लृदित एव क्रियेरन्। ग्रहेः स्वरितेत्त्वेऽपि लृकारेणैव तन्निर्वाहादनेकानुबन्धासङ्गगौरवशङ्काया अप्यभावात्। नापि चुरादिः, णिचा व्यवधानेन ततोऽन्यतरस्य च्लेरसंभवात्। अतः परिशेषाद्दिवादय एव गृह्नन्त इत्याह-- श्यन्विकरणपुषादेरिति। केचित्तु दिवाद्यन्तर्गत एव पुषादिर्गृह्यते, व्याख्यानादित्याहुः। चुरादीनां सर्वेषां णिज्वकल्प इति पक्षे चौरादिकपुषादेरपि परः च्लिः संभवतीति तेषामाशयः। "नन्दिग्रहिपचादिभ्यः" इतवत् "पुषद्युताद्यलृदितः" इति सूत्रयितुमुचितम्। ननु पुषादयो द्युतादयश्च लृदित एव कुतो न कसृता इति चेत्। अत्राहुः-- निरनुबन्धेषु सानुबन्धेषु च प्रत्येकं लृकारपाठे विपरीत गौरवं स्यात्। न च अनुबन्धान्तरस्य यत्प्रयोजनमात्मनेपदं तत्तु लृदित्करण#एऽपि सिध्यतीत्यनेकानुबन्धासङ्गगौरवदोषो नास्तीत्यपि शङ्क्यम्। आदितामीदितामूदितां च तेषु सत्त्वात्लृकारेण तत्तत्कार्यामामनिर्वाहादनेकानुबन्धासङ्गगौरवस्य दुर्निवारत्वादिति। जर्ज चर्च झर्झ। एषां परिभाषणादिभिः सह यथासङ्ख्यं नास्ति, व्याख्यानादित्याहुः। परिभाषणं सनिन्दोपालम्भः। त्रयाणामपि चवर्गीयान्तेषु पाठ उचितो, न त्विहोष्मान्तेषु। णिश समाधौ। समाधिः-- अन्तः करणनिरोधः। प्रणेशतीति। "उपसर्गादसमासेऽपीति णत्वम्। रोषकृते चेति। चकारात्समादौ। शश प्लुतगतौ। "नशसददे"ति प्रतिषेधसूत्रे सान्तस्य ग्रहणमित्यभिप्रेत्य व्याचष्टे-- शेशतुरिति। प्राचा तु "शशशतु"रित्युक्तं , तदयुक्तमिति भावः। अचहीदिति। "हयन्ते"ति न वृद्धिः। रह त्यागे। अयं कथादावपि। "ज्ञप मिच्चे" ति मित्प्रकरणेऽप्ययमेकीयमतेन पठितः। नेच्छन्तीति। व्याख्यानमेवात्रावलम्बनम्। माभवानुहदिति। "न माङ्योगे" इत्याडभावः। "इरितो वे"त्यङ्वा। अत द्युतादिः। द्युत दीप्तौ।

---

सूत्रम्

काशिका-वृत्तिः

सर्तिशास्त्यर्तिभ्यश् च ३।१।५६

सृ गतौ, शासु अनुशिष्टौ ऋ गतौ इत्येतेभ्यः परस्य च्लेः अङादेशो भवति। असरत्। अशिषत्। आरत्। पृथग्योगकरणम् आत्मनेपदार्थम्। समरन्त। चकारः परस्मैपदेषु इत्यनुकर्षणार्थः तच्चोत्तरत्रोपयोगं यास्यति।

न्यासः

सर्त्तिशास्त्यत्तिभ्यश्च। , ३।१।५६

"असरत्" इति। "ऋदृशोऽङि गुणः" ७।४।१६। "अशिषत्" इति। "शास इदङ्()हलोः" ६।४।३४ इतीत्त्वम्, "शासिवसि" ८।३।६० इति षत्वम्। "आरत्" इति। पूर्ववद् गुणः, अजादित्वादाट्, सवर्णदीर्घः। "पृथक" इत्यादि। यदि "पुषादिद्युताद्()लृदित्सर्त्तिशास्त्यसर्तिभ्यश्च" इत्येकयोग एव क्रियेत; सर्त्तिप्रभृतिभ्य परस्मैपद एव स्यात्, नात्मनेपदे। तस्मादेभ्य एवात्मनेपदेऽपि यथा स्यादित्येवमर्थं पृथग्योगकरणम्। "समरन्त" इति। सम्पूर्वादर्त्तेः "समो गमि" १।३।२९ इत्यादिनात्मनेपदम्। "बहुलं छन्दस्यमाङ्योगेऽपि" ६।४।७५ इत्यडागमाभावः; छान्दसत्वादयस्य प्रयोगस्य। ननु च यद्यात्मनेपदेष्वङ भवत्येव, तत् किं परस्मैपदेष्वित्यनुकर्षणार्थेन चकारेणेत्याह-- "तच्च" इत्यादि। तदिति परस्मैपदेष्वित्येतदपेक्षते। "उत्तरत्रोपयोगं यास्यति" इति। न त्विहैवोपयोगं याति; अन्यथा पृथग्योगकरणमनर्थकं स्यात्॥

बाल-मनोरमा

सर्तिशास्त्यर्तिभ्यश्च २१९, ३।१।५६

अत्र च्लेरङमाशङ्कितुमाह--सर्ति। च्लि लुङीत्यनुवर्तते। "णिश्रिद्रुस्रुभ्यः" इत्यतः कर्तरि चङिति। तदाह--एभ्य इति। ततश्च प्रकृते असार्षीदित्यत्र अङ् स्यादिति शङ्का सूचिता। तां परिहरति-- इह लुप्तेत्यादिना। इह अङ्विधौ शास्तीत्यनेन लुप्तविकरणः शासिर्गृह्यते इति निर्विवादं, तस्य विकरणान्तराऽभावात्। एवं च तत्साहचर्यात्सृधातुरृधातुश्च जौहोत्यादिकौ श्लुविकरणावेव नेत्यर्थः। तदेवं सृदातोर्गतिसामान्यवृत्तेरुक्तानि रूपाणि। यदि शीघ्रगतौ सृधातुस्तदा तस्य विशेषमाह-- शीघ्रगतौ त्विति। धौरादेश इति। धौशब्दस्य "धौ"रिति प्रथमान्तम्। "धौ"इत्यौकारान्त आदेश इत्यर्थः। "पाघ्रे"ति सूत्रे सर्तीति श्तिपा निर्देशः। लुप्तविकरणनिर्देशस्तु अविवक्षित इति भावः। सर्तेर्वेगितायां गतौ धावादेशः" इति वार्तिकमभिप्रेत्येदम्। धावतीति। शपि सृधातोर्धौभावे आवादेशः। धावतु। अधावत्। धावेत्। ऋ गतिप्रापणयोः। अनिट्। "पाघ्राध्मे"ति शिद्विषये ऋच्छादेशः। तदाह--ऋच्छतीति।

तत्त्व-बोधिनी

सर्तिशास्त्यर्तिभ्यश्च १९१, ३।१।५६

सर्तिशास्त्यर्ति। परस्मैपदेष्विति न संबद्ध्यते, पुषादियोगादस्य पृथक्करणात्। "आङः शासु इच्छाया"मित्यस्यात्र न ग्रहणं, किं तु सत्र्यर्तिभ्यां साहचर्यात्परस्मैपदिनः शासेरेवेत्याहुः। असरत्। अशिषत्। आरत्।

---

सूत्रम्

काशिका-वृत्तिः

इरितो वा ३।१।५७

इरितो धातोः परस्य च्लेः अङादेशो वा भवति। भिदिर् अभिदत्, अभैत्सीत्। छिदिर् अच्छिदत्, अच्छैत्सीत्। परस्मैपदेषु इत्येव, अभित्त। अच्छित्त।

न्यासः

इरितो वा। , ३।१।५७

इश्च रश्च इरौ, इतौ यस्य त इरित्। तत्रेकारस्य "उरजेषेऽजनुनासिक इत्" १।३।२ इतीत्संज्ञा, रेफस्य "हलन्त्यम्" १।३।३ इति।अथ वा इरित् यस्यैव समुदायस्य तत्येत्संज्ञा, न प्रत्येकमवयवस्य? इरित्ययं समुदाय इत्संज्ञको यस्य स इरित्। समुदायस्येत्संज्ञाऽस्मादेव वचनाद्वेदितव्या। न ह्यन्येन केनचित् तस्येत्संज्ञा विहिता। "अभैत्सीत्" इति। "वदव्रज" ७।२।३ इत्यादिना वृद्धिः, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्। "अरुद्ध, अभित्त" इति। स्वरितेत्त्वादात्मनेपदम्,पूर्ववत् सिचो लोपः॥

बाल-मनोरमा

इरितो वा ११३, ३।१।५७

इरितो वा। "धातोरेकाच" इत्यतो धातोरिति, "च्लेः सि"जित्यतश्च्लेरिति, "अस्यतिवक्तिख्यातिब्य" इत्यतोऽङिति, "पुषादिद्युतादी"त्यतः परस्मैपदेष्विति चानुवर्तते। तदाह--इरितो धातोरित्यादिना। अच्युतदिति। अङि सति ङित्त्वान्न गुणः। अच्युतताम् अच्युतन्। अच्युतः अच्युततम् अच्युतत। अच्युतम् अच्युताव अच्युताम। अङभावे त्वाह--अच्योतीदिति। "इट ईटी"ति सिज्लोपः। अच्योतिष्टामित्यादि। श्च्युतिरिति।च्युतिवद्रूपाणि। चुश्च्योतेति। "शर्पूर्वा" इति चकारः शिष्यते। यकाररहितोऽपीति। "मधुश्चुतं घृतमिव सुपूत"मित्यादौ तथा दर्सनादिति भावः। मन्थेति। विलोडलनम्-- आस्फालनम्। मन्थतीत्यादि। सुगमम्। आशीर्लिङि विशेषमाह-- यासुट इति। कुथीति। चत्वारोऽपि द्वितीयान्ताः। इदित्त्वान्नुमि कुन्थतीत्यादि सुगमम्। आशीर्लिङि यासुटः कित्त्वेऽपि इदित्त्वेन अनिदितामिति पर्युदासन्नलोपो नेत्याह-- इदित्त्वादिति। कुन्थ्यादिति। पुन्थ्यात् लुन्थ्यात् मन्थ्यात्। एतदर्थमेव मन्थदातोः पृथङ् मथीति निर्देशः। षिध गत्यामिति। अच्परकषकारादित्वात्षोपदेशोऽयम्। ततश्च धात्वादेरिति सः। तदाह--सेधतीति। सिषेधेति। आदेशसकारत्वात्षत्वम्। अनिट्सु श्यन्विकरमस्यैव सिधेग्र्रहणात्सेट्कोऽयम्। असेधीदिति। "इट इटी"ति सिज्लोपः। नेटीति निषेधान्न हलन्तलक्षणा वृद्धिः। असेधिष्टामित्यादि। अथ निषेधतीत्यादौ "उपसर्गात्सुनोती"ति षत्वं वक्ष्यति तत्किमर्थम्, आदेशप्रत्ययो"रित्येव सिद्धेरित्याशङ्क्याह-- सात्पदाद्योरिति।

तत्त्व-बोधिनी

इरितो वा ८८, ३।१।५७

चुश्र्योतेति। "शर्पूर्वाः खयः" । यकाररहितोऽप्ययमिति। तथा च प्रयुज्यते "मधुश्चुतं घृतमिव सुपूत"मिति। मन्थ। अयं त्रयादावपि। "षिध गत्याम्"। अयमुदिदिति केचित्। तत्तु सिध्यतिबुध्यत्योः श्यना निर्देशात् सिधितं बुधितमिति वृत्तिग्रन्थविरुद्धम्। उदित्त्वे हि "उदितो वे"ति क्त्वायामिड्विकल्पान्निष्ठायामिण्न स्यात्, "यस्य विभाषेति"निषेधात्। सिषेधेति। "आदेशप्रत्यययो"रिति षत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश् च ३।१।५८

वा इति वर्तते। जृष् वयोहानौ, स्तम्भुः सौत्रो धातुः, म्रुचु, म्लुचु गत्यर्थे, ग्रुचु, ग्लुचु स्तेयकरणे, ग्लुञ्चु, षस्ज गतौ, टुओश्वि गतिवृद्ध्योः, एतेभ्यो धातुभ्यः परस्य च्लेर् वा अङादेशो भवति। अजरत्, अजारीत्। अस्तभत्, अस्तम्भीत्। अम्रुचत्, अम्रोचीत्। अम्लुचत्, अम्लोचीत्। अग्रुचत्, अग्रोचीत्। अग्लुचत्, अग्लोचीत्। अग्लुञ्चत्, अग्लुञ्चीत्। अश्वत्,

अश्वयीत्, अशीश्वियत्। ग्लुचुग्लुञ्च्वोरन्यतरोपादाने ऽपि रूपत्रयं सिध्यति, अर्थभिदात् तु द्वयोरुपादानं कृतम्। केचित् तु वर्नयन्ति द्वयोरुपादानसामर्थ्याद् ग्लुञ्चेरनुनासिकलोपो न भवति, अग्लुञ्चतिति।

लघु-सिद्धान्त-कौमुदी

जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ६९१, ३।१।५८

च्लेरङ् वा स्यात्॥

न्यासः

जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुढञ्चु�इआभ्यश्च।, ३।१।५८

स्तम्भेरुदित्करणम् "उदितो वा" ७।२।५६ इति विशेषणार्थम्। "अस्तभत्" इति। "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः। "अ()आत्" इत्यादि। रूपत्रयं "विभाषा धेट्श्व्योः" ३।१।४९ इत्यत्र व्युत्पादितम्। "ग्लुचुग्लुञ्स्वोरन्यतरोपादाने रूपत्रयं सिध्यति" इति। कथं कृत्वा? यदि तावत् ग्लुचिरुपादीयेत तस्याङि सिचि चाग्लुचत्, अग्लोचीदित्येतद्रूपद्वयं सिध्यति; ग्लुञ्चेस्तु सिचि तृतीयमग्लुञ्चीदिति। अथ ग्लुञ्चिरुपादीयेत, तस्याङि सिचि चाग्लुचत्, अग्लुञ्चीदिति रूपद्वयं सिध्यति। ग्लुचेस्तु सिचि तृतीयमग्लोचीदिति। यद्येवम्, किमर्थमुभयोरुपादानम्, रूपत्रयं हि साध्यम्, तच्चान्यतरोपादानेऽपि सिध्यत्येवेत्यत आह-- "अर्थभेदात्" इत्यादि। तुशब्दोऽवधारणे। भिन्नो ह्नयोरर्थः। तत्रान्यतरस्योपादाने य एव नोपादीयेत तत्रैवार्थेऽग्लुचदिति न सिध्येत्। तस्माद्भिन्नार्थत्वाददव्योरुपादानम्। "केचित्" इत्यादि। अनेकार्थत्वाद्धातूनामभिन्नार्थता न विरुद्ध्यते। तस्मादुभयोरुपादानग्लुञ्चदिति सिद्ध्य इति॥

बाल-मनोरमा

जृ?स्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चु�इआभ्यश्च १३५, ३।१।५८

जृ()स्तन्भु। "च्लेः सि"जित्यतश्च्लेरिति, "अस्यतिवक्तिख्यातिभ्यः" इत्यतोऽङिति, "इरितो वेत्यतो वेति चानुवर्तते। तदाह--एभ्यश्च्लेरङ् वेति। "जृ()ष् वयोहानौ", "स्तम्भुः"सौत्रो धातुः, "म्रचुम्लुचू गत्यर्थौ""ग्रुचु ग्लुचु स्तेयकरणे", "ग्लुञ्चु गतौ, --इत्येतेभ्य इत्यर्थः। अम्रुचदिति। च्लेरङि सति ङित्त्वान्न लघूपधगुणः। अम्रोचीदिति। अङभावे "इट ईटी"ति सिज्लोपः। ग्रुचु ग्लुचु इति। "जृ()स्तन्भु"इत्यङ् वेत्याह--अग्रुचत् अग्रोचीदिति। आद्यस्य रूपे। अथ द्वितीयस्य अङ्विकल्पमुदाहरति--अग्लुचत् अग्लोचीदिति। अङि सति ङित्त्वान्न लघूपधगुणः। अङभावे सिज्लोपः। ग्लुञ्चु षस्जेति। आद्यो नोपधः, द्वितीयस्तु षोपदेशः, अच्परकसादित्वात्। तर आद्यस्य लुङि विशेषमाह--अङ्वेति। "जृ()स्तम्भ्वित्येनेने"ति शेषः। ग्लुचुग्लुञ्च्वोः पृथग्ग्रहणसामथ्र्यान्नलोपो नेति वृत्तिकृतम्। ग्लुञ्च्यात्। सस्येति। धात्वादेः षस्य सत्वे सस्ज् स्थिते, द्वितीयस्य सकारस्य श्चुत्वेन शकार इत्यर्थः। तस्येति। शकारस्य "झलां जश् झशी"ति जकार इत्यर्थः। गुजीति। इदित्त्वादाशीर्लिङि नलोपो नेत्याह-- लच्छतीति रूपम्। ललच्छ ललच्छतुः। आछीति। लिटि णलि द्वित्वे हलादिशेषे अभ्यासह्रस्वे अ आञ्छ् अ इति स्थिते "अत आदे"रिति दीर्घ, "तस्मान्नुड्()द्विहल" इति च नुटमाशङ्क्याह-- अत आदेरिति। तत्र हि दीर्घस्याकारस्य दीर्घविधौ प्रयोजनाऽभावादेव ह्रस्वाकारस्य दीर्घेति सिद्धावत इति तपरकरणं स्वाभवाकिस्यैव ह्रस्वाकारस्य परिग्रहार्थमित्यर्थः। ततः किमित्यत आह-- तेनेति। "अत आदे"रिति दीर्घविधौ स्वाभाविकह्रस्वाकारस्यैव ग्रहणेन, "अत आदे"रिति दीर्घस्याऽभावान्न नुडित्यर्थः। आञ्छेति। द्वित्वे हलादिशेषेऽभ्यासह्रस्वे सवर्णदीर्घ इति भावः। मुखसुखार्थमिति। तथा च ह्रस्वस्थानिकदीर्घाकारादपि परसय् नुड् भवत्येवेति भावः। "ह्रीछ लज्जाया"मित्यादि स्पष्टम्। युछ प्रमाद इति। यकारादिरुदुपधोऽयम्। युच्छतीति। अन्तरङ्गत्वात् "छे चे"ति तुकि लघूपधत्वाऽभावान्न गुणः। उञ्छांचकारेति। नुमि कृते "संयोगे गुरु" इत्युकारस्य

गुरुत्वात् "इजादेश्चे"त्यामिति भावः। धृजेति। आद्यौ ऋदुपधौ। इतरे चत्वारोऽदुपधाः। द्वितीयचतुर्थषष्ठा इदितः। धर्जतीति। शपि लघूपधगुणः। रपरत्वम्। दधर्ज दधृजतुः। धृज्यात्। अधर्जीत्। धृञ्जतीति। इदित्त्वान्नुम्। दधृञ्ज। इदित्त्वान्नलोपो न। धृञ्ज्यात्। अधृञ्जीत्। ध्रजतीति। णलि--दध्राज दध्रजतुः। अध्राजीत्--अध्रजीत्। ध्रञ्जतीति। अदुपधोऽयम्। दध्रञ्ज। इदित्त्वान्नलोपो न-- दध्रञ्जतुः। ध्वजतीति। दध्वाज। ध्वञ्जतीति। दध्वञ्ज। कूज अव्यक्त इति। स्पष्टम्। सर्जतीत्यत्र षोपदेशत्वात्षत्वम्। अज गतीति। लटि अजतीत्यादि सिद्धवत्कृत्य लिटि विशेषमाह-- अजेव्र्यघञपोः। "वी"ति दीर्घान्तं लुप्तप्रथमाकम्। "आद्र्धधातुके" इत्यधिकृतं। विषयसप्तम्येषा, नतु परसप्तमी, व्याख्यानात्। तदाह--आद्र्धधातुकविषय इत्यादि। अजेरिति इका निर्देशः। अजधातोरित्यर्थः। आद्र्धधातुक इति परसप्तम्याश्रयणेतु वेवीयत इति न स्यात्, वीभावात्प्रागजादित्वाद्यङसंभवात्। विषयसप्तम्याश्रयणे तु यङि विवक्षिते वीभावे सति हलादित्वाद्यङ् निर्बाधः। अघञपोः किम्?। घञि समाजः। "समुदोरजः पशुषु" इत्यपि समजः। अत्र "अघञपोरिति न वक्तव्यं। "वा लिटी"त्यतो वेत्यनुवर्तते। व्यवस्थितविभाषेयं। घञि अपि च न भवति। ल्युटि वलादावाद्र्धधातुके च विकल्पः। अन्यत्र तु आद्र्धधातुके नित्य"मिति भाष्यकयटयोः स्थितं। तदाह-- वलादावाद्र्धधातुके वेष्यत इति। उक्तव्यवस्थितविभाषोपलक्षणमिदं। विवायेति। लिटो णलि विवक्षिते वीभावे सति णलि द्वित्वेऽभ्यासह्रस्वे "अचो ञ्णिति" इति व#ऋद्धावायादेश इति भावः। विव्यतुरिति। वीभावे सति अतुसि द्वित्वेऽभ्यासह्रस्वे "असंयोगा"दिति कित्त्वाद्गुणाऽभावे इयङपवादे "एरनेकाचः" इति यणि रूपम्। एवमुसि विव्युरिति रूपं। ननु विव्यतुः विव्युरित्यत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वात् "उपधायां चे"तीकारस्य दीर्घः स्यादित्याशह्क्य ईकारस्थानिकस्य यकारस्य "अचः परस्मि"न्नति स्थानिवत्त्वेन द्वितीयवकारस्य हल्परकत्वाऽभावात्तस्मिन्वकारे परे इकारस्य न दीर्घ इति परिहरति-- अत्र वकारस्येत्यादि अच्पर[क]त्वमित्यन्तम्। ननु दीर्घविधौ "न पदान्ते"ति निषेधात्कथमिह यकारस्य स्थानिवत्तवमित्याशङ्क्य निराकरोति--न च न पदान्तेति निषेध इति। "शङ्क्य" इति शेषः। कुत इत्यत आह-स्वरदीर्घेति। इत्युक्तेरिति। "वार्तिककृते"ति शेषः। थलि एकाच इति। अजधातोरनुदात्तोपदेशानन्तर्भावेऽपि "वी"ति तदादेशोऽनुदात्तः, अजन्तेषु ऊद्द()दन्तादिचतुर्दशभिन्नधातूनामनुदात्तत्वाभ्युपगमादिति भावः।

तत्त्व-बोधिनी

जृ?स्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चु�इआभ्यश्च १०९, ३।१।५८

जृ()स्तन्भु। स्तन्भुः सौत्रः। अजरत्। अजारीत्। अस्तभत्। अस्तम्भीत्। अ()आत्। अ()आताम्। अ()आन्। अ()आयीत्। "विभाषा धेट्()श्व्यो"रिति चङि--अशि()इआयत्। अर्च पूजायाम्। अयं युजादौ स्वरितेत्। इह पाठस्तु कर्तृगेऽपि फले परस्मैपदार्थः। दीर्घाऽभावादिति। स्वाभाविकह्रस्वस्थानिकदीर्घाऽभावादित्यर्थः। मुखसुखार्थमिति।कृतह्रस्वस्थानिकदीर्घाकारात्परस्यापि नुड्भवत्येवेति भावः। युछ प्रमादे। युच्छतीति। अन्तरङ्गत्वात् "छे चे"ति तुकि लघूपधत्वाऽभावान्न गुणः। न च वार्णादाङ्ग बलीय इति वाच्यम्, आङ्गवार्णयोर्युगपत्प्रवृत्तावेव आङ्गस्य बलीयस्त्वात्। न च युच्छेति चकारछकारावुच्चार्येतां किमनेन तुग्विधिनेति शङ्क्यं, बहुषु धातुरूपेषु चकारछकारयोरुच्चारणे गौरवात्, "छे चे" त्यस्य शिवच्छायेत्यादावावश्यकत्वाच्च।

---

सूत्रम्

काशिका-वृत्तिः

कृमृद्दरुहिभ्यश् छन्दसि ३।१।५९

कृ मृ दृ इत्येतेभ्यः परस्य च्लेः छन्दसि विषये अङादेशो भवति। शकलाङ्गुष्ठको ऽकरत्। अथो ऽमर। अदरदर्थान्। सानुमारुहत्। अन्तरिक्षाद् दिवमारुहम्। छन्दसि इति किम्? अकार्षीत्। अमृत। अदारीत्। अरुक्षत्।

न्यासः

कृमृदृरुहिभ्यश्छन्दसि।, ३।१।५९

"डुकृञ् करणे" (धा।पा।१४७२), "मृङ प्राणत्यागे" (धा।पा।१४०३), "दृ विदारणे" (धा।पा।१४९३), "हुह {बीजजन्मणि प्रादुर्भावे च धा।पा।} जन्मनि" (धा।पा।८५९)। तत्राद्यानां त्रयाणां सिचि प्राप्ते, रुहेश्च "शल इगुपधादनिटः" ३।१।४५ इति क्से प्राप्ते। "अकरत्" इति। पूर्ववद्()गुणः। "अमरत्" इति। व्यत्ययेन परस्मैपदम्। भाषायां तु अकार्षीत्, अमृत, अदारीत्, अरुक्षदिति भवति॥

---

सूत्रम्

काशिका-वृत्तिः

चिण् ते पदः ३।१।६०

पद गतौ, अस्माद् धातोः परस्य च्लेः चिणादेसो भवति तशब्दे परतः। समर्थ्यादात्मनेपदएकवचनं गृह्यते। उदपादि सस्यम्। समपादि भैक्षम्। त इति किम्? उदपत्साताम्। उदपत्सत।

लघु-सिद्धान्त-कौमुदी

चिण् ते पदः ६४६, ३।१।६०

पदश्च्लेश्चिण् स्यात्तशब्दे परे। अपादि। अपत्साताम्। अपत्सत॥ विद सत्तायाम्॥ २२॥ विद्यते। वेत्ता। अवित्त॥ बुध अवगमने॥ २३॥ बुध्यते। बोद्धा। भोत्स्यते। भुत्सीष्ट। अबोधि, अबुद्ध। अभुत्साताम्॥ युध संप्रहारे॥ २४॥ युध्यते। युयुधे। योद्धा। अयुद्ध॥ सृज विसर्गे॥ २५॥ सृज्यते। ससृजे। ससृजिषे॥

न्यासः

चिण् ते पदः।, ३।१।६०

"सामथ्र्यात्" इत्यादि। तशब्दो। ञयमस्त्येवात्मनेपदैकवचम्, अस्ति च परस्मैपदमध्यमपुरुषबहुवचनं यस्यस्य स्थाने विधीयते; तत्रास्य धातोरात्मनेपदित्वात् परस्मैपदबहुवचनं न सम्भवति, अतः पारिशेष्यावात्मनेपदैकवचनस्य ग्रहणम्। इयमेव च पारिशेष्यसिद्धिः सामथ्र्यम्। "उदपादि" इति। "चिणो लुक्" ६।४।१०४ इति तशब्दस्य लुक्। "उदपत्साताम्" इति। आताम्, "खरि च" ८।४।५४ इति चत्त्वम्। "उदपत्सत" इति। झे "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः। इह वेति निवृत्तम्। उत्तरत्रान्यतरस्यांग्रहणात्॥

बाल-मनोरमा

चिण् ते पदः ३४२, ३।१।६०

चिण् ते पदः। पदश्च्लेरिति। "च्लेः सि"जित्यत श्च्लेरित्यनुवर्तते इति भावः। तशब्दे इति। आत्मनेपदप्रथमैकवनचने इत्यर्थः। इदं च भाष्ये स्पष्टम्। प्रण्यपादीति। श्लेश्चिणि उपधावृद्धौ "चिणो लु"गितितशब्दस्य लोपः। "नेर्गदे"ति णत्वमिति भावः। विद सत्तायाम्। वेत्तेति। अनिडिति भावः। लिटि क्रादिनियमादिट्। एवं बुधष्टेति। "लिङ्()सिचौ" इति कित्त्वम्। "दीपजने"ति चिण्विकल्पं मत्वा आह-- अबोधि अबुद्धेति। कथं युध्यतीति। आत्मनेपदित्वादिति भावः। समाधत्ते-- युधमिति। युध्()शब्दो भावक्विबन्तः। युधमिच्थीत्यर्थे "सुप आत्मनः" इति क्यजन्तात्परस्मैपदमित्यर्थः।

"अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्य"मिति समाधानं त्वनुचितं, तस्य भाष्याऽदृष्टत्वेनाऽप्रामाणिकत्वात्। अत एव "व्यत्ययो बहुल"मिति सूत्रभाष्ये "प्रतीपमन्य ऊर्मिर्युध्यती"त्यत्र व्यत्ययेन परस्मैपदमित्येव समाहितम्। अनो रुधेति। अनु इत्युपसर्गात्परो रुधधातुः कामे वर्तत इत्यर्थः। युज समाधौ। अनिट्। अकर्मक इति। चित्तवृत्तेर्धात्वर्थान्तर्भावादिति भावः। अर्थान्तरे तु सकर्मकोऽपि भवति, "सृजियुज्योः सकर्मकयोः कर्मवद्भाव" इति कर्मवत्सूत्रवार्तिकात्। एतच्च कर्मकर्तृप्रक्र#इयायां वक्ष्यते। लिट()आह --ससृजिषे इति। क्रादिनियमादिडिति भावः। रुआष्टेति। "सृजिदृशोर्झल्यमकिती"त्यमागमे ऋकारस्य यणि व्रश्चादिना जस्य षः। ष्टुत्वेन तकारस्य ट इति भावः। रुआक्ष्यते इति। पूर्वपदमि जस्य षत्वे "षढो"रिति षस्य कत्वे सस्य षत्वमिति भावः। आशीर्लिङि आह--सृक्षीष्टेति। अत्र लघूपधगुणमाशङ्क्याह---लिङ्()सिचाविति। नाप्यमिति। "सृजिदृशोर्झल्य"मित्यमपि नास्तीत्यर्थः। अकित्ये तद्विधानादिति भाव। लुङ्याह-- असृष्टेति। "झलो झली"ति सिचो लोपः। "लिङ्सिचावात्मनपदेषु" इति सिचः कित्त्वान्न गुणो नाप्यमिति भावः। लिश अल्पीभावे। लिक्षीष्टेति। "लिङ्सिचौ" इति कित्वान्न गुणः। अलिक्षतेति। "शल इगुपधा"दिति क्सः। आगणान्तादिति। दिवादिगसमाप्तिपर्यन्तमित्यर्थः। राधोऽकर्मकाद्वृद्धावेवेति। श्य"न्निति शेषः। राधधातोरकर्मकाद्वृद्धावेवाऽर्थे श्यनिति प्रतीयमानोऽर्थः। एवं सति अकर्मकादिति व्यर्थम्। राधेरर्थान्तरे च श्यन् स्यात्। इष्यते हि "अपराध्यती"त्यादौ द्रोहाद्यर्थेऽपि श्यन्। तत्राह-- एवकारो भिन्नक्रम इति। यस्मिन् कमे वृद्धावित्यत ऊध्र्वम एवकारः पठितः, ततोऽन्यः कमो यस्य स भिन्नक्रम इत्यर्थः। "वृद्धा"वित्यत ऊध्र्वं पठित एवाकरोऽन्यत्र निवेशनीय इति यावत्। तदेव दर्शयति--राधोऽकर्मकादेव श्यनिति। एवं चार्थान्तरेऽपि श्यन् सिध्यति। "शत्रुं हिनस्ती"त्यर्ते शत्रुमपराध्नोतीत्यत्र सकर्मकत्वान्न श्यन्निति भाव-। तर्हि वृद्धावित्यस्य किं प्रयोजनमित्याशङ्क्य अकर्मकक्रिया एवं विधेति प्रदर्शनार्थं तत्, नतु परिसङ्ख्यानार्थमित्याह--उदाहरणमाह--वृद्धावितीति। एवं च वृद्धिग्रहणमकर्मकक्रियामात्रोपलक्षणमिति भावः। तथाविधाऽर्थान्तराण्युदाहरति--यन्मह्ममित्यादिना। "क्रुधद्रुहे"ति संप्रदानत्वम्। कृष्णाय राध्यतीति। "राधीक्ष्योर्यस्य विप्रश्नः" इति संप्रदानत्वम्। दैवमिति। कृष्णस्य किमिदानां शुभमशुभं वेति पृष्टो दैवज्ञस्तस्य शुभाऽशुभसूचकादित्यादिग्रहस्थितिं ज्योतिश्शास्त्रतः परीक्षते इति यावत्। ननु पर्यालोचने दैवस्य कर्मत्वात्कथमिह अकर्मकतेत्यत आह-- दैवस्येति। ननु "राधोऽकर्मकाद्वृद्धावेवे"त्यत्र वृद्धिग्रहमस्यौपलक्षणतया हिंसार्थकस्यापि राधेर्दैवादिकतवाद्रराधतुरित्यादौ "राधो हिंसाया"मिति वक्ष्यमाणावेत्त्वाऽभ्यासलोपौ स्यातामित्यत आह--राध इति। इह नेति।रराधतुरित्यादौ राधेर्हिंसार्थकत्वे "राधो हिंसाया"मिति वक्ष्यमाणावेत्त्वाभ्यासलोपौ न स्त इत्यर्थः। कुत इत्यत आह--हिंसार्थस्येति। नोन्मिषत्येवैषा शङ्का, राधेरकर्मकस्यैव दैवादिकत्ववचनात्। हिंसार्थकस्य च राधेः सकर्मकतया दैवादिकत्वाऽभावादुक्तशङ्काया अनुन्मेषादित्यर्थः। ननु राध्नोति राधयतीति कथमित्यत आह-- अयं स्वादिश्चुरादिश्चेति। रराधिथ। क्रादिनियमान्नित्यमिट्, दीर्घाकारवत्त्वेन "उपदेशेऽत्वतः" इत्यस्याऽप्रवृत्तेः, अजन्तोऽकारवानित्यत्र च ह्रस्वाऽकारस्यैव विवक्षितत्वात्। राद्धा। अरात्सीत्। व्यध ताडने इति। चतुर्थान्तोऽयम्। अनिट्। विध्यतीति। श्यनो ङित्त्वात् "ग्रहिज्ये"ति यकारस्य संप्रसारणे पूर्वरूपे विध्यतीति रूपमित्यर्थः। वकारस्य तु न संप्रसारणं , "न संप्रासरणे संप्रसारण"मिति निषेधात्। विव्याधेति। द्वित्वे कृते अभ्यासस्य "लिट()भ्यासस्ये"ति संप्रसारणमिति भावः। विविधतुरिति। परत्वात् "ग्रहिज्ये"ति संप्रसारणे कृते द्वित्वमिति भावः। भारद्वाजनियमात्थलि वेडित्याह-- विव्यधिथ विव्यद्धेति। "लिट()भ्यासस्ये"ति संप्रसारणम्। अनिट्पक्षे "झषस्तथो"रिति धः। अव्यात्सीदिति। हलन्तलक्षणा वृद्धिः। पुष पुष्टौ। अनिट्। पुपोषिथेति। अजन्ताऽकारवत्त्वाऽभावाक्रादिनियमान्नित्यमिट्। अपुषदिति। पुषाद्यङ्।ङित्त्वान्न गुणः। शुष धातुरनिट्। अशुषदिति। पुषाद्यङिति भावः। एवमग्रेपि। तुष् दुष् श्लिष्-- एतेऽनिटः। लुङि स्लिषश्च्लेः सिजादेशे प्राप्ते---

तत्त्व-बोधिनी

चिण् ते पदः २९९, ३।१।६०

चिण् ते पदः। तशब्द इति। सामथ्र्यादात्मनेपदप्रथमपुरुषैकवचनम्। तशब्दे किम्?। अपत्थाः। प्रण्यपादीति। "चिणो लु"गिति तशब्दस्य लुक्। "नेर्गदे"ति णत्वम्। अबोधीति। "दीपजनबुधे"ति चिण्। अनो रुध कामे। अनोः परो रुधधातुः कामे इच्छा। दिवादिषु पाठसामथ्र्यात् "रुधादिभ्यः" इति श्नमं बाधित्वा श्यन्। नाप्यमिति। "सृजिदृ()शोर्झल्यमकिती"त्यकित्येव विधानात्। लिश। आतपादिनाऽनल्पस्य अल्पभावोऽल्पीभावः। लिक्षीष्टेति। "लिङ्सिचावात्मनेपदेषु" इति कित्वान्न गुणः। अलिक्षतेति। "शल इगुपधे"ति क्सः। राधोऽकर्मकात्। भिन्नक्रमं दर्शयति-- अकर्मकादेवेति। "राधो वृद्धावेव श्य"न्निति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्यात्, वृद्धावस्याऽकर्मकत्वात्। अकर्मकात्किम्?। शत्रुमपराध्नोति। हिनस्तीत्यर्थः। राध संसिद्धाविति स्वादौ। "राधो हिसाया"मित्यनुवादाद्धिंसायामप्ययम्। उदाहरणमाहेति। अकर्मकत्वप्रयोजकस्य यस्य कस्यचिदर्थस्येति भावः। अकर्मके श्यन्नन्तस्य प्रयोगान्दर्शयति- यन्मह्रमित्यादिना। कृष्णायेति। राधीक्ष्यो"रिति चतुर्थी। अपुषदिति। ङित्तवाद्गुणाऽभावः। शुष। शोष्टा। शोक्ष्यति। "श्लिष आलिङ्गने" इति सूत्रं योगविभागेन व्याचष्टे--- श्लिष इति।

---

सूत्रम्

काशिका-वृत्तिः

दीपजनबुधपूरितायिप्यायिभ्यो ऽन्यतरस्याम् ३।१।६१

चिण् ते इति वर्तते। दीपी दीप्तौ, जनी प्रादुर्भावे, बुध अवगमने, पूरी आप्यायने, तायृ सन्तानपालनयोः, ओप्याऽयी वृद्धौ, एतेभ्यः परस्य च्लेः तशब्दे परतो ऽन्यतरस्यां चिणादेशो भवति। अदीपि, अदीपिष्ट। अजनि, अजनिष्ट। अबोधि, अबुद्ध। अपूरि, अपूरिष्ट। अतायि, अतायिष्ट। अप्यायि, अप्यायिष्ट।

लघु-सिद्धान्त-कौमुदी

दीपजनबुधपूरितायिप्यायिभ्योऽन्यरतस्याम् ६४३, ३।१।६१

एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे॥

न्यासः

दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्। , ३।१।६१

"जनी प्रादुर्भावे" (धा।पा।११४९), "बुध अवगमने" (धा।पा।११७२) इति। एतेन "जन जनने" (धा।पा।११०५), "{ बुधिर् बोधने धा।पा।८७५ भ्वादिगतः (८५८) दिवादिगतश्च (११७२) "बुध अवबोधने" इत्येव पठ()ते। "अदुग्ध" इति। "शल इगुपधादनिटः क्सः" ३।१।४५ इति क्सः, तस्य "क्सस्याचि" ७।३।७२ इत्यतः "क्सस्य" इत्यनुवत्र्तमाने "लुग्वा दुहदिह" ७।३।७३ इति लुक्। "दादेर्धातोर्घः" ८।२।३२ पूर्ववज्जश्त्वम्। "अदोहि" इति। शुद्धे कर्मणि तशब्दः, तेनात्र नित्यं चिण् भवति॥

बाल-मनोरमा

दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् १६८, ३।१।६१

दीपजन। "च्लेः सि"जित्यत च्लेरिति, "चिण् ते पदः" इत्यस्माच्चिण् ते इति चानुवर्तते। तदाह--एभ्यश्च्लेरिति। एकवचन इति। दीपादीनामात्मनेपदित्वेन तेभ्यस्तशब्दस्य एकवचनत्वनियमादिति भावः।

तत्त्व-बोधिनी

दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् १४१, ३।१।६१

दीपजन। "दीपी दीप्तौ", "जनी प्रादुर्भावे", "बुध अवगमने", "पूरी आप्यायने"। एते दिवादयः।

---

सूत्रम्

काशिका-वृत्तिः

अचः कर्मकर्तरि ३।१।६२

अजन्ताद् धातोः परस्य च्लेः कर्मक्रतरि तशब्दे परतः चिणादेषो भवति। प्राप्तविभाषेयम्। अकारि कटः स्वयम् एव, अकृत कटः स्वयम् एव। अलावि केदारः स्वयम् एव, अलविष्ट केदारः स्वयम् एव। अचः इति किम्? अभेदि काष्ठं स्वयम् एव। कर्मकर्तरि इति किम्? अकारि कटो देवदत्तेन।

तत्त्व-बोधिनी

अचः कर्मकर्तरि ४८८, ३।१।६२

अचः कर्म। "चिण् ते पदः" इत्यतश्चिण्तेशब्दावनुवर्तेते,"दीपजने"त्यतोऽन्यतरस्यामिति च। तदाह--अजन्तादित्यादि। अचः किम्?। अभेदिकाष्ठम्। अत्र नित्यं चिण्। कर्मकर्तरि किम्?। अकारि घटः कुलालेन। अत्रापि नित्यमेव। दुहश्च। कर्मकर्तरीत्येव। अदोहि गौर्गोपेनेत्यत्र तु नित्यम्। उदुम्बरः फलमिति। "कालः उदुम्बरं फलं पचती"ति स्थिते गौणकर्मण उदुम्बरस्य कर्तृत्वविवक्षायामिह कर्मवद्भावः। ननु द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति ये वदन्तितेषामयं ग्रन्थः कथं सङ्गच्छत इति चेत्। अत्राहुः-- "उदुम्बरः फलं पचती"त्यत्र "कर्मवत्कर्मणे"त्यस्याऽप्राप्तौ "दुहिपच्यो"रित्यनेन कर्मवद्भावो बहुलं विधीयते सृजियुज्योरिवेति न काप्यनुपपत्तिरिति।

*सृजियुज्योः श्यंस्तु। श्यनो नित्त्वमाद्युदात्तार्थम्। यकि तु "तास्यनुदात्ते"दित्यादिना लसार्वधातुकानुदात्तत्वे कृते यक उदात्तत्वं श्रूयेत। श्रद्धोपपन्न इति। अश्रद्धायुक्ते कर्तरि तु यगेव।

* भूषामकर्मेति। कर्मशब्दः क्रियावाचीत्याह-- भूषावाचिनामिति। अन्यत्रेति। आत्मनेपदादन्यस्य निषेध आत्मनेपदमेव भवतीत्यर्थस्तदेतदाह-- यक्चिणाविति। अवाकीर्ष्टेति। "लिङ्सिचौ" इति वेट्। आद्रियत इति। तुदादित्वाच्छे "रिङ् शयग्लिङ्क्षु" इति रिङि इयङ्। आदृतेति। "उश्चे"ति कित्त्वम्। "ह्रस्वादङ्गा"दिति सिचो लोपः।

---

सूत्रम्

काशिका-वृत्तिः

दुहश् च ३।१।६३

दुह प्रपूरणे, अस्मात् परस्य च्लेः चिणादेशो भवत्यन्यतरस्याम्। अदोहि गौः स्वयम् एव, अगुग्ध गौः स्वयम् एव। कर्मकर्तरि इत्येव, अदोहि गौर्गोपालकेन।

बाल-मनोरमा

दुहश्च ५९३, ३।१।६३

दुहश्च। "अच" इतिवर्जं पूर्वसूत्रं तत्रानुवृत्तं यत्तत्सर्वमिहानुवर्तते। कर्मकर्तरि तशब्दे परे दुहेश्चिण्वा स्यादित्यर्थः स्पष्ट इति न व्याख्यातम्। अनुवृत्तिसौकर्यार्थमेव पूर्वसूत्रं प्रकृतदुहधातावनुपयुक्तमप्युपन्यस्तम्। अदोहीति। दुहेः कर्मकर्तरि लुङ्।

"स्वयमेव गौः पय" इति शेषः। चिण्पक्षे लघूपधगुणः। चिणभावपक्षे आह--पक्षे क्स इति। "शल इगुपधा"दित्यनेनेति भावः। लुग्वेति। "लुग्वा दुहदिहलिहगुहा"मिति क्सस्यपाक्षिको लुगित्यर्थः। अथ "दुहपच्यो"रित्यत्र पचेरुदाहरति--उदुम्बरः फलं पच्यतेइति। "उदुम्बरवृक्षं फलं पचति कालविशेष" इत्यत्र द्विकर्मकः पचिः। इह तु उदुम्बरो वृक्षः स्वयमेव कालविशेषमनपेक्ष्य फलं पक्वाश्रयं करोतीत्यर्थः। अत्र उदुम्बरस्यगौणकर्मणः कर्तृत्वेन विवक्षायां फलेन प्रधानकर्मणा सकर्मकत्वात् "सकर्मकाणां प्रतषेधः" इति कर्मवत्त्वस्य प्रतिषेधे प्राप्ते "दुहिपच्यो"रिति कर्मवत्त्वस्य प्रतिप्रसवाद्यगादिकमिति भावः। वस्तुतस्तु भाष्ये द्विकर्मकेषु पचेरपरिगणनान्न द्विकर्मकत्वमिति कारकाधिकारे प्रपञ्चितमस्माभिः। तथा च कर्मकर्तरि "फलं पच्यते" इत्यत्र फलस्यैव कर्मतया तस्यकर्तृत्वविवक्षायां पचेरकर्मकत्वात् "सकर्मकाणा"मिति प्रतिषेधस्याऽप्रसक्तेः प्रतिप्रसवविधिरयं व्यर्थं इति यद्यपि, तथाप्यत्र मते "उदुम्बरः फलं पचती"त्यत्र कर्तृलकारे पचेः कर्तृस्थक्रियत्वात् कर्मस्थक्रियत्वाऽभावादुदुम्बरः फलं पच्यतिति कर्मकर्तरि "कर्मवत्कर्मणेति कर्मवत्त्वस्याऽप्राप्तौ "दुहिपच्यो"रिति कर्मवत्त्वस्य बहुलं पचेरपूर्वविधिरित्यन्यत्र विस्तरः। "सृजियुज्योः श्यस्तु" इति वार्तिकम्। "अनयोः सकर्मकयो"रित्यादि तद्भाष्यम्। अत्र सृजियुज्योर्दैवादिकयोर्न ग्रहणं,तयोरकर्मकताया उक्तत्वात्, किंतु "सृज विसर्गे" इति तौदादिकस्य, "युजिर्योगे" इति रौधादिकस्य च ग्रहणं, तत्र विसर्गः = उत्पादनम्। यथा प्रजाः सृजतीति।योगः-- संयोजनम्। यता अ()आं युनक्तीति। रथादिना संयोजयतीति गम्यते। सृजेः श्रद्धोपपन्ने इति। श्रद्धायुक्ते मुख्यकर्तर्येव उक्तो विधिरित्यर्थः। तत्र मुख्यकर्तरि अत्यन्ताऽप्राप्तं कर्मवत्त्वमिह बहुलं विधीयते। "यजेस्तु कर्मकर्तर्येव उक्तविधि" रिति भाष्यात्तत्रापि कर्मणि क्रियाकृतवैलक्षण्याऽभावादप्राप्तं कर्मत्वमिह बहुलं विधीयते। कर्मत्वे सति यकि प्राप्ते तदपवादः श्यन्विधीयते। तेन "ञ्नित्यादिर्नित्य"मित्याद्युदात्तत्वं सिध्यति। यकि तु "तास्यनुदात्तेदित्यादिना लसार्वधातुकानुदात्तत्वे प्रत्ययस्वरेण यक उदात्तत्वं स्यात्। सृज्यते रुआजं भक्त इति। अत्र मुख्यकर्तरि लकारः। कर्मवत्त्वादात्मनेपदम्। यगपवादः श्यन्। श्रद्धया निष्पादयतीत्यर्थ इति। धातूनामनेकार्थत्वादित भावः। "सृज्यते रुआजं भक्त" इत्यत्र यदा तु निष्पादयतीत्येवाऽर्थः, नतु श्रद्धयेति दा सृजति रुआजमित्येव भवति।अथ युजेरुदाहरति--युज्यते ब्राह्मचारी योगमिति। अत्र "कर्मकर्तरि यगपवादः श्यन्नि"ति भाष्यम्। योगश्चित्तवृत्तिनिरोधः योगशास्त्रप्रसिद्धः। ब्राह्मचर्यं--स्त्रीसङ्गराहित्यम्। तद्योगाङ्गमिति च योगशास्त्रप्रसिद्धम्। स योगः ब्राह्मचारिणं युनक्ति = आत्मदर्शनेन संयोजयतीति कर्तृलकारे संयोजनक्रियायां योगो मुख्यकर्ता, ब्राह्मचारी तु कर्मेति स्थितिः। तत्र कर्मणो ब्राह्मचारिणः कर्तृत्वविवक्षायां "युज्यते ब्राह्मचारी योग"मिति कर्मकर्तरि ब्राह्मचारिणि लकारः, कर्मवत्त्वात्तदैव यगपवादः श्यन्। ब्राह्मचारी प्राणायामाभ्यासादिश्रमबाहुल्यं विना स्वयमेव योगेन संबध्यते इत्यर्थः। तत्र ब्राह्मचारिणि कर्मकर्तरि धात्वर्थसंबन्धोऽनुयोगितया वर्तते, योगे तु प्रतियोगितया वर्तत इति स्थितिः। तत्र यद्यपि प्रतियोगिनो योगात् "सहयुक्तेऽप्रधाने" इति तृतीयया भवितव्यं, तथापि युजेः प्रतियोगित्वावच्छिन्नसंबन्धोऽर्थः। तत्र प्रतियोगित्वं फलं, संबन्धो व्यापारः। प्रतियोगित्वरूपफलाश्रयत्वाद्द्वितीयेति समाहितं शब्देन्दुशेखरे। अत्र भाष्यप्रयोगादेव योगाद्द्वितीयेत्यन्ये। भूषाकर्मेति वार्तिकम्। भूषाकर्म, किरादि, सन् एषां द्वन्द्वः। अन्यत्रेति। प्रथमान्तात्स्वार्थे त्रल्। आत्मनेपदादन्यत्कर्मकार्यमिति लभ्यते। भूषा कर्म क्रिया येषां वाच्यतया ते भूषाकर्माणो धातवः। भूषणक्रियावाचिनामिति यावत्। तदाह-- भूषावाचिनामित्यादिना। अलङ्कुरुते कन्येति। स्वयमेव अन्यप्रयत्नं विना भूषणक्रियावतीत्यर्थः। अत्र भूषार्थकत्वात्कर्मकर्तरि तङेव, न तु यक्। अलमकृतेति। अत्र तङेव नतु चिण्। लुटि तु अलङ्कर्तेत्येव, नतु चिण्वदिटौ। अवकिरते हस्तीति। हस्तिनमवकिरति कुसुमादिरित्यत्र मुख्यकर्तरि लकारः। तत्र हस्ती कर्म। तस्यकर्तृत्वविवक्षायां स्वयमेव पुरुषप्रयत्नं विना वृक्षादिसमीपं गच्छन् पुष्पादिभिरवकीर्णवान् भवतीत्यर्थः। अत्रापि तङेव, नतु यगादि। अवाकीर्ष्टेति। "लिङ्()सिचोरात्मनेपदेषु" इति वेट्। गिरते इति। "ओदनं स्वयमेव#ए"ति शेषः। "गृ? निगरणे" अयं किरादिः। शप्रत्यये "रिङ् शयग्लिङ्क्षु" इति रिङ्। अतिथिमाद्रियते इति मुख्यकर्तरि। आद्रियतेऽतिथिरिति कर्मकर्तरि। स्वयमेव आदरणाश्रय इत्यर्थः। अत्र यद्यपि शे यकि च न विशेषस्तथापि न्याय्यः श एव, यको निषिद्धत्वात्।

स्वरे वा विशेषः। तङ् तु ङित्त्वादेव सिद्धः। अतिथेरभिहितत्वात् प्रथमेति विशेषः। आदृतेति। चिणोऽनेन निषेधे "ह्रस्वादङ्गा"दिति सिचो लोपः। "उश्चे"ति कित्त्वम्। अथ सन्नन्तस्योदाहरति-- चिकीर्षते कट इति। स्वयमेव कर्तुमिच्छाविषय इत्यर्थः। नन्विच्छायाः पुरुषरूपकर्तृनिष्ठत्वात्कृटरूपकर्मनिष्ठत्वाऽभावादित्छायां सत्यामसत्यां च कटे कर्मणि वैलक्षण्याऽदर्शनाच्च कर्मस्थक्रियत्वाऽभावादिह कर्मवत्त्वस्याऽप्रसक्तेस्तन्निषेधो व्यर्थ इत्यत आह--इच्छाया इति।

---

सूत्रम्

काशिका-वृत्तिः

न रुधः ३।१।६४

रुधिरावरणे, अस्मात् परस्य च्लेः कर्मक्र्तरि चिणादेशो न भवति। अन्ववारुद्ध गौः स्वयम् एव। कर्मकर्तरि इत्येव, अन्ववारोधि गौः गोपालकेन।

न्यासः

न रुधः। , ३।१।६४

कर्मवदित्यतिदेशे प्राप्तस्य चिणोऽयं प्रतिषेधः। "अरुद्ध" इति। "झलो झलि" ८।२।२ इति सिचो लोपः; तस्यासिद्धत्वाल्लघूपधगुणः प्राप्तः "लिङसिचावात्मनेपदेषु" १।२।११ इति कित्वान्न भवति। पूर्ववद्()धत्वजश्त्वे॥

बाल-मनोरमा

न रुधः ५९४, ३।१।६४

न रुधः। अस्माच्चेश्चिण्नेति। अवारुद्ध गौरिति। "स्वयमेवे"ति शेषः। कर्मकर्तरीत्येवेति। "अचः कर्मकर्तरी"त्यतस्तदनुवृत्तेरिति भावः। अवारोधि गौर्गोपेनेति। इह गोः कर्मणः कर्तृत्वविवक्षाया अभावान्न चिण्निषेध इति भावः।

तत्त्व-बोधिनी

न रुधः ४८९, ३।१।६४

न रुधः। "चिण् ते पदः" इत्यतश्चिणनुवर्तते। "अचः कर्मकर्तरीत्येवेति।

---

सूत्रम्

काशिका-वृत्तिः

तपो ऽनुतापे च ३।१।६५

न इति वर्तते। तप सन्तापे, अस्मात् परस्य च्लेः चिणादेशो न भवति कर्मकर्तरि अनुतापे च। अनुतापः पश्चात्तपः। तस्य ग्रहणम् कर्मकर्त्रर्थं, तत्र हि भावकर्मणोरपि प्रतिषेधो भवति। अतप्त तपस्तापसः। अन्ववातप्त पापेन कर्मणा।

लघु-सिद्धान्त-कौमुदी

तपोऽनुतापे च ७५९, ३।१।६५

तपश्च्लेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च। अन्वतप्त पापेन। घुमास्थेतीत्त्वम्। दीयते। धीयते। ददे॥

न्यासः

तपोऽनुतापे च। , ३।१।६५

"तपस्तपः कर्मकस्यैव" ३।१।८८ इत्यतिदेशात् "चिण् भावकर्मणोः" ३।१।६६ इति प्राप्तस्य चिणोऽयं प्रतिषेधः। "अतप्त तपस्तापसः" इति। उपवासादिलक्षणं तपस्तापसं तपति दुःखयतीत्यर्थः। तपसोऽत्र कर्त्तृत्वम्, तापसस्य तु कर्मत्वम्। यदा तु स तापस्त्वगस्थीभूतः स्वर्गाय तपस्तप्यते, तदायं प्रयोगः- अतप्त तपस्तापस इति। इदानां तपसः कर्मत्वं तापसस्य कर्त्तृत्वम्। तपःशब्दश्चेह ज्ञानविशेषे स्वर्गाद्यवाप्तिहेतौ वत्र्तते। तपिरप्यर्जने। अर्जितवान् ज्ञानविशेषं तापस इत्यर्थः। "अन्ववातप्त पापेन कर्मणा" इति। यत् पूर्वं पापकर्म कृतं तेन पश्चात् तप्तोऽभ्याहत इत्यर्थः। कर्मण्यत्र लकारः॥

तत्त्व-बोधिनी

तपोऽनुतापे च ४८१, ३।१।६५

तपोऽनु चकारेण "अचः कर्मकर्तरी" त्यतः कर्मकर्तरीत्येतदनुकृष्यते। कर्मण्युदाहरणमिति ध्वनयति-- अभ्याहत इत्यर्थ इति। भावेऽपीदमुदाहरणमित्याह-- पापेन पुंसेति। अविचार्य कर्म कृत्वा पश्चादशोचीत्यर्थः। कर्मकर्तरि तु तत्प्रक्रियायामुदाहरिष्यति।

---

सूत्रम्

काशिका-वृत्तिः

चिण् भावकर्मणोः ३।१।६६

धातोः परस्य च्लेः चिणादेशो भवति भावे कर्मणि तशब्दे परतः। भावे तावत् अशायि भवता। कर्मणि खल्वपि अकारि कटो देवदत्तेन। अहारि भारो यज्ञदत्तेन। चिण्ग्रहणं विस्पष्टार्थम्।

लघु-सिद्धान्त-कौमुदी

चिण् भावकर्मणोः ७५७, ३।१।६६

च्लेश्चिण्स्याद्भावकर्मवाचिनि तशब्दे परे। अभावि। अभाविष्यत, अभविष्यत। अकर्मकोऽप्युपसर्गवशात्सकर्मकः। अनुभूयते आनन्दश्चैत्रेण त्वया मया च। अनुभूयेते। अनुभूयन्ते। त्वमनुभूयसे। अहमनुभूये। अन्वभावि। अन्वभाविषाताम्, अन्वभविषाताम्। णिलोपः। भाव्यते। भावयाञ्चक्रे, भावयाम्बभूवे, भावयामासे। चिण्वदिट्। आभीयत्वेना सिद्धत्वाण्णिलोपः। भाविता, भावयिता। भाविष्यते, भावयिष्यते। अभाव्यत। भाव्येत। भाविषीष्ट, भावयिषीष्ट। अभावि। अभाविषाताम्, अभावयिषाताम्॥ बुभूष्यते॥ अकृत्सार्वधातुकयोर्दीर्घः। स्तूयते विष्णुः। स्ताविता, स्तोता। स्ताविष्यते, स्तोष्यते। अस्तावि। अस्ताविषाताम्, अस्तोषाताम्॥ ॠ गतौ। गुणोर्ऽतीति गुणः। अर्यते॥ स्मृ स्मरणे। स्मर्यते। सस्मरे। उपदेशग्रहणाच्चिण्वदिट्। आरिता, अर्ता। स्मारिता, स्मर्ता। अनिदितामिति नलोपः। त्रस्यते। इदितस्तु नन्द्यते। संप्रसारणम्। इज्यते॥

न्यासः

चिण् भावकर्मणोः। , ३।१।६६

"भावकर्मणोरर्थयोः" इति। तशब्दस्येदं विशेषणम्। "भावकर्मणोर्यस्तशब्दः" इति। अथ चिण्ग्रहणं किमर्थम्? यावता "चिण् ते पदः" (३।१।६०) इत्यतश्चिण्ग्रहणमनुवत्र्तत एव? स्यादेतत्-- "दीपजन" ३।१।६१ इत्यन्यतरस्यांग्रहणेन "न रुधः" ३।१।६४ इति निषेधेन च सम्बद्धं तत्, अतो यदि तदनुवत्र्तेत तत्सम्बद्धमेवानुवत्र्तेतेति, एतच्च नास्ति;

अनयतरस्यांग्रहणस्य पूर्वयोरेव योगयोर्निवर्तितत्वात्, प्राप्तिपूर्वकत्वाच्च निषेधस्य। यदि भावकर्मणोश्चिणः प्राप्तिः स्यात्, तदा तत्प्रतिषेधार्थं नेत्यस्यानुवृत्तिः स्यात्। न च तयोस्तस्य केनचित् प्राप्तिः; चिण्विधौ सर्वत्र कत्र्तरित्यनुवृत्तेः। तदपार्थकं पुनश्चिण्ग्रहणमित्याह-- "चिण्ग्रहणं विस्पष्टार्थम्" इति। असति चिण्ग्रहणे मन्दधियः प्रतिपत्तिगौरवं स्यात्, अतस्तमनुग्रहीतुं न्यायप्राप्तस्यैवार्थस्य स्पष्टीकरणाय पुनश्चिण्ग्रहणम्॥

बाल-मनोरमा

चिण् भावकर्मणोः ५८३, ३।१।६६

चिण्भावकर्मणोः। च्लेरिति। "च्लेः सि"जित्यतस्तदनुवृत्तेरिति भावः। तशब्दे परे इति। तशब्दे परे इति। "चिण् ते पदः" इत्यतस्तदनुवृत्तेरिति भावः अभावीति। च्लेश्चिणि कृते "चिणो लु"गिति तशब्दस्य लोपः। चिण्विधौ तशब्दे किम्?। अभाविषात्। अथ अनुपूर्वाद्भूधातोरुपभोगार्थकात्सकर्मकात्कर्मणि लकारे विशेषमाह--- तिङोक्तत्वादिति। कर्तुस्त्वनभिहित्वात्तृतीयैवेति भावः। युष्मदस्मदुपात्तयोः कत्र्रोस्त्वनभिहितत्वाततृतीया। अनूभूयेते इति। "सुखदुःखे" इति शेषः। अनुभूयन्ते इति। "सुखानी"ति शेषः। णिलोप इति। भूधातोर्णौ वृद्धौ आवादेशे भावीति ण्यन्तात्कर्मणि लटस्तादेशे यकि णिलोप इत्यर्थः। भावयामासे इति। प्रथमपुरुषैकवचने, उत्तमपुरुषैकवचने च रूपम्। इहेति। "भावयामासे" इत्यत्र प्रथमैकवचनतशब्दस्य "लिटस्तझयो"रिति एशादेशे उत्तमपुरुषैकवचनस्य इटश्च "टित आत्मनेपदाना"मित्येत्त्वे च कृते भावयमामास् ए इति स्थिते "ह एती"ति सकारस्य हकारः प्राप्तो न भवतीत्यर्थः। कुत इत्यत आह-- तासीति। "ह एती"त्यत्र तासस्त्योरित्यनुवर्तते। तत्र एधिताहे इत्यादौ तासेः सार्वधातुक एव एति परे हकार इति निर्विवादम्। तथाविधतासिसाहचर्यादस्तेरपि सकारस्य "व्यत#इहे" इत्यादौ सार्वधातुक एव परे प्रवृत्तिः। अतो "भावयामासे इत्यत्र नाऽस्तेः सकारस्य हकारः, एकारस्याद्र्धधातुकत्वादित्यर्थः। भावितेति। ण्यन्तात् भावि- ता इति स्थिते परत्वाद्वलादिलक्षणमिटं बाधित्वा चिण्विदिटि तस्याऽऽभीयत्वेनाऽसिद्धत्वादनिटीति निषेधाऽभावाण्णिलोपे भावितेति रूपम्। अतएव चिण्वदिड्विधौ "उपदेशे योऽ"जित्येव व्याख्यातम्, नतु "उपदेशे अजन्तस्ये"ति, तथा सति हि णिजन्तस्य उपदेशाऽभावान्न स्यादिति भावः। वलादिलक्षणे इटि कृते तु तस्य अनाभीयत्वेन असिद्ध्तवाऽभावादनिटीति निषएधाण्णिलोपाऽभावे णेर्गुणाऽयादेशयोः कृतयोर्भावयितेति रूपमिति मत्वा आह-- पक्षे भावयितेति। अथ सन्न्नताद्भूधातोर्भावलकारे उदाहरति-- बूभूष्यते इति। यकि सनोऽकारस्य "अतो लोपः" इति लोपः। बूभूषिता। बुभूषिष्यते इति। चिण्वदिटि वलादिलक्षणे इटि च रूपं तुल्यम्। चिण्वदिड्भावपक्षे।ञपि तदतिदेशेन प्राप्तां वृदिं()ध बाधित्वा परत्वादतो लोपः। अथ यङन्ताद्भूधातोर्भावलकारे उदाहरति-- बोभूय्यते इति। यकि यङोऽकारस्य पूर्ववदतो लोपः। द्वियकारकं रूपम्। यङलुगन्ताद्बोभूयते इति एकयकारं रूपम्। ष्टुञ्धातोः कर्मलकारे यकि तस्याद्र्धधातुकत्वात् "अतो दीर्घो यञी"त्यप्राप्तावाह-- अकृत्सार्वेति। स्ताविता स्तोतेति। चिण्वदिडभावपक्षेऽनिट्कत्वान्नेट्। अथ ऋधातोः कर्मणि लकारे यकि कृते कित्त्वाद्गुणनिषेधे प्राप्ते आह--- गुणोऽर्तीति। अर्यते इति। गुणे कृते रपरत्वम्। "स्मृ"धातोः कर्मणि लकारे आह-- -- स्मर्यते इति। "गुणेऽर्ती"ति संयोगादित्वाद्गुणे रपरत्वमिति भावः। ननु लुटि ऋ ता, स्मृ इति स्थिते चिण्वदिटं बाधित्वा परत्वाद्गुणः प्राप्नोति, नित्यत्वाच्च, अकृते कृते च चिण्वदिटिगुणस्य प्राप्तेः। कृते तु गुणे रपरत्वेऽजन्तत्वाभावच्चिण्वदिडभावे अनिट्त्वाद्वलादिलक्षणेऽभावे अत स्मर्तेत्येव स्यात्, आरिता स्मारितेति न स्यादित्यत आह-- परत्वादित्यादि। कृते गुणे रपरत्वे अजन्तत्वाऽभावेऽपि उपदेशे योऽच् तदन्तस्येत्युक्तेश्चिण्वदिण्निर्बाध इत्यर्थः। आरितेति। कृतेऽपि गुणे रपरत्वे चिण्वदिटि उपधावृद्धिः। अत्रेति। चिण्वदिडभावे रूपम्। एवं स्मारिता स्मर्तेत्यपि। ननु संपूर्वात्कृञः कर्मणि लकारे यकि "रिङ् शयग्लिङक्षुट इति रिङादेशे "संपरिभ्यां करोतौ भूषणे, समवाये चे"ति सुटि संस्क्रियते इति वक्ष्यते। तत्र "गुणोऽर्ती"ति संयोगादित्वाद्गुणः स्यादित्यत आह-- नित्यग्रहणानुवृत्तेरिति। "नित्यं छन्दसी"त्यतो नित्यमित्यनुवृत्तेः गुणो"र्ती"त्यत्र नित्यं यः

संयोगादित्यस्यैव संयोगादिस्तस्यैव संयोगादिलक्षणो गुण इति लभ्यते। कृन्तु न नित्यं संयोगादिः, संपरिपूर्वकत्वाऽभावे तदभावादिति भावः। अथ रुआंस्धातोर्भावलकारे यकि विशेषमाह-- अनिदितामिति नलोप इति। इदितस्त्विति। "टु नदि समृद्धौ" इत्यस्माद्भावलकारे यकि इदित्त्वान्नलोपो नेत्यर्थः। अथ यजधातो कर्मलकारे यकि विशेषमाह-- संप्रसारणमिति। "वचिस्वपियजादीना"मित्यनेनेति भावः। शीङ्धातोर्भावलकारे यकि विशेषमाह-- अयङि() क्ङितीति।

तत्त्व-बोधिनी

चिण् भावकर्मणोः ४७९, ३।१।६६

चिण्भावकर्मणोः। "च्लेः सि"जित्यश्च्लेरिति, "चिण्ते पदः" इत्यतस्ते इति चानुवर्तते। तत्रत्यं तु चिण्ग्रहणं "न रुवः" इति निषेधेन तिरोहितमिति पुनरत्र चिण्ग्रहणं कृतम्। तशब्दे किम्?। अभाविषाम्। चिण्वदिट इति। ण्यन्तस्य धातोरुपदेशाभावेऽप्युपदेशे योऽजिति व्याख्यानाच्चिण्वदिडिह प्रवर्तत एवेति भावः। परत्वादिति। चिण्विदिडपेक्षया। नित्यत्वादिति। न च कृते चिण्वदिटि वृद्धिप्रवृत्त्या गुणस्य नित्यत्वं नेति शङ्क्यम्, "अचो ञ्णिती" ति वृदिं()ध बाधित्वा परत्वाद्गुणे रपरत्वे च पश्चात् "अत उपधायाः" इति वृद्धिप्रवृत्त्या गुणस्य नित्यत्वाऽनपायात्। उपदेशग्रहणादिति। तत्सामथ्र्यादुपदेशे योऽच्, तदन्तत्वमृधातोव्र्यपदेशिवद्भावेन यत्स्थितं तदादाय ण्यन्तादप्यारितेत्यादौ चिण्वदिट् प्रवर्तत इति भावः। नन्वेवं स्मारितेत्यादिर्न सिध्येत्, "स्म" इत्यस्य उपदेशे योऽच् तदन्तत्वाऽभावात्। "उपदेशेऽजन्ताना"मिति व्याख्याने तु ण्यन्तस्य न स्यादित्युक्तत्वादिति चेत्। सत्यम्। अत एवाऽपरितोषामन्मनोरमायामुक्तम्-- "अस्तु वा उपदेशे यदजन्तं तस्ये"ति व्याख्यानम्। "अङ्गस्ये"ति व्यधिकरणषष्ठी। "अङ्गावयवस्याजन्तस्येत्यर्थ" इति। एवं च णिजन्तेऽपि शामितेत्यादौ चिण्वदिट् सिध्यति, व्यपेशिवद्भावेन णिजेव णिजन्तः, तदवयवकं शामीत्यङ्गमित्याश्रयणात्। आरिता स्मारितेत्याद्यपि सिध्यति। ऋधातुः स्मृधातुश्चोपदेशेऽजन्तस्तदवयवकं भवत्यार् स्मारित्यङ्गमिति दिक्। नित्यग्रहणानुवृत्तेरिति। "नित्यं छन्दसी"ति सूत्रात्। काशिकायां तु --सुटो बहिरङ्गलक्षणस्याऽसिद्धत्वादभक्ताद्वा संयोगादिंत्वमङ्गस्य नास्तीति गुणोऽत्र न प्रवर्तत इत्युक्तम्। "सुट्कात्पूर्व" इति विधीयमानः कभक्तो, न त्वङ्गभक्तस्तेनाऽसंयोगाद्येव अङ्गमित्यभक्तत्वादित्यस्याशयः।

---

सूत्रम्

काशिका-वृत्तिः

सार्वधातुके यक् ३।१।६७

भावकर्मवाचिनि सार्वधातुके परतो धतोः यक् प्रत्ययो भवति। आस्यते भवता। शय्यते भवता। कर्मणि क्रियते कटः। गम्यते ग्रामः। ककारो गुणवृद्धिप्रतिषेधार्थः। यग्विधाने कर्मक्र्तर्युपसङ्ख्यानम्। विप्रतिषेधाद् धि यकः शपो वलीयस्त्वम्। क्रियते कटः स्वयम् एव। पच्यते ओदनः स्वयम् एव।

लघु-सिद्धान्त-कौमुदी

सार्वधातुके यक् ७५५, ३।१।६७

धातोर्यक् भावकर्मवाचिनि सार्वधातुके। भावः क्रिया। सा च भावार्थकलकारेणानूद्यते। युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः। तिङ्वाच्यक्रियाया अद्रव्य रूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किंत्वेकवचनमेवोत्सर्गतः।त्वया मया अन्यैश्च भूयते। बभूवे॥

न्यासः

सार्वधातुके यक्। , ३।१।६७

भावकर्मणोरित्यनुवर्त्तते,तच्चेह सार्वधातुकस्य विशेषणमिति दर्शयन्नाह-- "भावकर्मवाचिनि" इत्यादि। भावकर्मणोरर्थयोर्वर्त्तते यत् सार्वधातुकं तद्भावकर्मवाचि। ताच्छील्य आवश्यके णिनिः। अथैवं कस्मान्न भवति-- भावकर्मणोरभिधेययोः सार्वधातुके परतो यग्भवतीति? अशक्यमेवं वक्तुम्; सार्वधातुकवाच्यत्वेन भावकर्मणोः शास्त्रे प्रतिज्ञानात्। कुत एतदिति चेत्? "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इति वचनात्। ननु चाकारि कटो भवता, अशायि भवता, अबिभर्भवानित्यादौ सार्वधातुकाभावेऽपि कर्मादीनां प्रतीयमानत्वात् सार्वधातुकार्थता नोपपद्यते; न हि यो यदभावे प्रतीयते स तस्यार्थो युज्यते, अन्वयव्यतिरेकसमधिगम्यत्वादर्थस्य? नैष दोषः; न ह्ययं नियमः-- अन्वयव्यतिरेकसमधिगम्यत्वादर्थवत्तया। भवितव्यमिति, किं तर्हि? प्रतिज्ञा। प्रापिता च सा भवति यथा क्विबादीनाम्। अस्ति च सार्वधातुकस्येति यत्किञ्चिदेतत्। "शय्यते" इति।"अयङ्यि क्ङिति" ७।४।२२ इत्ययङादेशः। "यग्विधाने" इत्यादि। ननु च कर्मवदित्यतिदेशादेव यग्भविष्यतीति किमुपसंख्यानेनेत्यत आह-- "विप्रतिषेधाद्धि" इत्यादि। "कर्त्तरि शप्" ३।१।६८ इत्यस्यावकाशः-- शुद्धः कर्त्ता भवतीति; "सार्वधातुके यक्" ३।१।६७ इत्यस्यावकाशः- शुद्धं कर्म, पच्यत ओदन इति। पच्यत ओदनः स्वयमेवेत्यत्र कर्मवद्भावाद्यक्? प्राप्नोति, वत्करणात् स्वाश्रयकमपि यथा स्यादिति कर्त्तृत्वस्य सम्भवाच्छबपि, तत्र परत्वाच्छबेव स्यात्। शशास्त्रं यक्शास्त्रात् परं भवति, तस्मात् कर्मकर्त्तरि यक उपसंख्यानम् = प्रतिपादनं कर्त्तव्यम्। प्रतिपादनं त्विदम् -- ज्ञापकात् कर्मकर्त्तर्यपि यग्भविष्यतीति। किं तज्ज्ञापकम्? "न दुहस्नुनमां यक्चिणौ" ३।१।८९ इति प्रतिषेधः। यदि हि कर्मकर्त्तरि यग्न स्यात् प्रतिषेधोऽनर्थकः स्यात्। विप्रतिषेधाद्धि शपो बलीयस्त्वं शास्त्रातिदेशत्वमभ्यपेत्योक्तम्, न त्वसौ शास्त्रातिदेशः, किं तर्हि? कार्यातिदेशः। कार्यातिदेशसूत्रमेव स्वतन्त्रं यगादेः कार्यस्य विधायकम्, तच्च परम्; अतो विप्रतिषेधाद्यक एव बलीयस्त्वम्॥

बाल-मनोरमा

सार्वधातुके यक् ५८१, ३।१।६७

सार्वधातुके यक्। धातोरिति। "धातोरेकाचः" इत्यतस्तदनुवृत्तेरिति भावः। भावकर्मवाचिनीति। "चिण्भावकर्मणो"रित्यतस्तदनुवृत्तेरिति भावः। घटस्य भावो घटत्वमित्यादौ प्रकृतिज्नयबोधे प्रकारो भावः। कवेरयं भाव इत्यादौ अभिप्रायः। "भावः पदार्थसत्तायां क्रियाचेष्टात्मयोनिषु। विद्वल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु" इति नानार्थरत्नमाला। "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्तुषु" इत्यमरः। इह तु "लः कर्मणि" इत्यत्र भावशब्दो भावनायां यौगिक इत्याह-- भावो भावनेति। लः कर्मणी"त्यत्र भावशब्देन भावना विवक्षितेति भावः। भावनाशब्दस्य चिन्तायामपि प्रसिद्धत्वादाह-- उत्पादनेति। उत्पत्त्यनुकूलो व्यापार इत्यर्थः। एवं च भूधातोरुत्पत्त्यर्थकाद्धेतुमण्णौ वृद्ध्यावादेशयोर्भाविशब्दात् "एर"जिति भावे अचि णिलोपे भावशब्दः, भावयतेरुत्पत्त्यर्थकाद्धेतुमण्ण्यन्तात् स्त्रियामित्यधिकारे "ण्यासश्रन्थो यु"जिति युचि अनादेशे टापि भावनाशब्द इति बोध्यम्। उत्पादना चेयं धात्वर्थान्नातिरिच्यते इति दर्शयतुमाह-- क्रियेति। धात्वर्थात्मकक्रियैव उत्पादनेत्यर्थः। तथाहि "फलव्यापारयोर्धातु"रिति सिद्धान्तः। पचधातोः पाकोऽर्थः। पाको--विक्लित्त्यनुकूलव्यापारः। तत्र विक्लित्त्यंशः फलम्। अधिश्रयणादिस्तदनुकूलो व्यापारः। तथाविधव्यापाराश्रयो देवदत्तादिः कर्ता, "धातूपात्तव्यापाराश्रय कर्ते"ति सिद्धान्तात्। अधिश्रयणादिव्यापारजन्या विक्लत्तिः फलं, तदाश्रयत्वादोदनं कर्म, "व्यापारजन्यफलशालि कर्मे"ति सिद्धान्तात्। एवं सकर्मकेषु सर्वत्र ज्ञेयम्। "एध वृद्धौ"इत्यस्मिन्नकर्मकेऽपि वृद्ध्यनुकूलव्यापारो धात्वर्थः। नचैवं सति "एधते देवदत्त" इत्यत्र धातूपात्तव्यापाराश्रयत्वाद्व्यापारव्यधिकरणफलाश्रयत्वं कर्मत्व"मिति सिद्धान्तात्। एवं च फलोत्पत्त्यनुकूलव्यापारात्मिका क्रिया धात्वर्थ इति सिद्धम्। एतेन क्रियावाची धातुः, धातुवाच्या क्रियेत्यन्योन्याश्रयोऽपि निरस्तः। उत्पत्त्यनुकूलव्यापारस्यैव क्रियात्वात्। तदुक्तं-- "व्यापारो भावना सैवोत्पादना सैव च क्रिये"ति।

ननूत्पत्त्यनुकूलव्यापारस्यैव सर्वत्र धातुवाच्यत्वे सर्वेषां धातूनामेकार्थत्वापत्तिः। विक्लित्त्यादितत्तत्फलोत्पत्त्यनुकूलव्यापार्थकत्वं तु न संभवति, एकैकस्य धातोर्विक्लित्त्यादितत्तत्फलांशे, तदनुकूलव्यापारात्मकव्यापारसामान्ये च वाचकत्वानुपपत्तेरित्यत आह-- सा चेत्यादि। पच्यादयो धातुत्वेन रूपेण उत्पत्त्यनुकूलव्यापारात्मिकं क्रियामाहुः। पचित्वादितविशेषरूपेण तु विक्लित्त्यादितत्तत्फलांशमाहुः। तथा च वाचकतावच्छेदकबेदाद्विक्लित्त्यादिफलविशेषस्य, क्रियासामान्यस्य च वाच्यता सङ्गच्छते इति भावः। तथा च भट्टिराह-- "विभज्य सेनां परमार्थ सेनापतींश्चापि पुरन्दरोऽथ। नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून्॥" इति। अस्तिभवतिविद्यतीनामपि सत्तानुकूलव्यापार एवार्थः। तत्र सत्ता आत्मभरणम्। तदनुकूलव्यापारस्तु जायते, अस्ति, विपरिणमते, वद्र्धते, अपक्षीयते, विनश्यतीति वाष्र्यायणिप्रणीतषड्भावविकारेष्वन्यतमो यथायथं ज्ञेयः। भूवादिसूत्रे भाष्ये स्पष्टमेतत्। प्रपञ्चतं च मञ्जूषायामित्यलम्। ननूत्पादनात्मकक्रियारूपस्य भावस्य धातुवाच्यत्वे "लः कर्मणि च भावे चे"ति भावे कथं लकारविधिः। अनन्यलभ्यस्यैव शब्दार्थत्वादित्यत आह-- भावार्थकलकारेणानूद्यते इति। "द्वौ" "त्रयः" इत्यादौ द्विवचनबहुवचनवदति भावः। युष्मदस्मद्भ्यामिति। युष्मदि अस्मिद च तिङ्समानाधिकरणे उपपदे मध्यमोत्तमपुरुषौ विहितौ। युष्मदस्मदोस्तिङ्सामानाधिकरण्यं च तिङ्वाच्यकारकवाचित्वमेव। भावे लकारे तु "आस्यते त्वया" "आस्यते मये"त्यादौ भाव एव तिङ्वाच्यो नतु युष्मदस्मदर्थौ, अतो न मध्यमोत्तमावित्यर्थः। कर्मलकारे तु "त्वं वन्द्यसे","अहं वन्द्ये" इत्यादौ लकारस्य, युष्मदस्मदोश्च सामनाधिकरण्यसंभवात्पुरुषत्रयमपि यथायथमुदाहरिष्यते। तिङ्वाच्येति। सत्त्वं = द्रव्यं-- लिङ्गसङ्क्यान्वययोग्यम्। तिङ्वाच्या या भावना क्रिया सा असत्त्वरूपा = लिङ्गसङ्ख्यान्वयाऽयोग्या, शब्दशक्तिस्वभावात्। ततश्च तस्यां तिङ्वाच्यभावनायां द्वित्वबहुत्वयोरप्रतीतेर्युवाभ्यां युष्माभिर्वा आस्यते इत्यादौ न द्विवचनं, बहुवचनं चेत्यर्थः। तिङ्वाच्येत्यनेन कृद्वाच्यायाः क्रियाया लिङ्गसङ्ख्यान्वयित्वात्मकं सत्त्वरूपत्वमस्तीत्युक्तं भवति। तद्यथा - पाकौ पाका इत्यादि। तदुक्तं --"सार्वधातुके य"गिति सूत्रे भाष्ये - "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति। द्रव्यवल्लिङ्गसङ्ख्यान्वयं लभते इत्यर्थः, शब्दशक्तिस्वभावादिति भावः। ननु तिङ्वाच्यभावनाया असत्त्वरूपतया द्विवहुवचनाऽभावे आस्यते इत्यादौ एकवचनं च न स्यादित्यत आह-- किं त्वेकवचनमेवेति। "तिङ्वाच्यभावलकारस्ये"ति शेषः। तस्येति। "द्वेयकयोर्द्विवचनैकवचने" "बहुषु बहुवचन"मिति सूत्रन्यासं भङ्क्त्वा "एकवचनं" द्विबहुषु द्विबहुवचने" इति सूत्रन्यासः कर्तव्यः। तत्र द्वित्वबहुत्वयोर्द्विबहुवचननियमे सति तयोरविषये एकवचनमिति लभ्यते इति भाष्ये स्पष्टम्। एवं च एकवचनस्य एकत्वमुत्सृज्य द्विबहुवचनान्यविषये विहितत्वेन औत्सर्गिकतया एकत्वसङ्ख्यानपेक्षत्वाद्भावलकारस्य असत्त्वरूपभाववाचित्वेऽप्येकवचनमेवेति भावः। अनभिहिते इति। भावलकारे कर्तुस्तिङ्वाच्यत्वाऽभावेन अनभिहितत्वात्तृतीयेत्यर्थः। त्वया मयेति। त्वत्कर्तृकं मत्कर्तृकम् अन्यकर्तृकं भवनमित्यर्थः।

तत्त्व-बोधिनी

सार्वधातुके यक् ४७७, ३।१।६७

सार्वधातुके यक्। "धातोरेकाचः" इत्यतो धातोरिति, "चिण् भावकर्मणो"रित्यतो बावकर्मणोरिति चानुवर्तते। भावो भावनेति। उत्पत्त्यर्थद्भवतेर्णिजन्तादेरजिति भावः। "एरजण्यन्ताना"मिति त्वनार्षमिति तस्मिन्नेव सूत्रे कैयटः। भवतेरुत्पत्त्यर्थत्वं, ण्यन्तस्य भवतेः शुद्धेन करोतिना तुल्यार्थत्वं च दर्शयति-- उत्पादना क्रियेति। यथा करोति घटमित्यादावुत्पत्त्यनुकूलो व्यापारः कुलालनिष्ठः, तथा भावयति घटमित्यादावपि। भवति घट इत्यत्रापि घटनिष्ठ उत्पत्त्यनुकूलो व्यापारोऽस्त्येव, परंतु फलसमानाधिकरणः सः, कुलालनिष्ठस्तु फलव्यधिकरण इतीयान्भेदः। अत एव फलव्यापरयोः सामानाधिकरण्याद्भवत्यादिरकर्मकः, तयोस्तु वैयधिकरण्यात्करोत्यादिः सकर्मक इत्याहुः। एतेन "भावो भावने" त्यादिग्रन्थेन "भूवादयो धातवः" इत्यत्र क्रियावाचिनः किम्?। विकल्पार्थकवाशब्दाद्भावे लिण् माभूत्। अन्यथा

भ्वादिगणे वाशब्दमात्रपठनादक्रियावाचिनोऽपि वाशब्दस्य धातुत्वे "धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते" इति विकल्पस्यापि बावत्वापत्त्या तद्वाचकवाशब्दाल्लिट् स्यादेवेति केषांचिद्व्याख्यानं परास्तम्, भावनावाचकादेव भावे लिटः स्वीकारात्। विकल्पस्य तु भावनाभिन्नत्वात्। अन्यथा "क्रियावाचिन" इति विशेषणे दत्तेऽपि तद्दोषतादवस्थ्यात्। विकल्पवाचकाल्लिडभावेऽपि लडादयः स्युरिति तु न शङ्कनीयमेव, वर्तमानक्रियादिवृत्तेरेव लडादीनां विधानात्। किमर्थं तर्हि क्रियावाचिनो भ्वादय इति सर्वैरेव तत्र व्याख्यातम्()। "याः पश्यसी"त्यत्रापि लक्षणप्रतिपदोक्तपरिभाषया याशब्दस्य धातुत्वाऽसंभवात् "आतो धातोः" इति तत्राऽऽल्लोपाप्रसक्तिरिति चेत्। अत्राहुः-- "कार्यकालं संज्ञापरिभाष"मिति पक्षे "आतो धातुत्वाऽसंभवात् "आतो धातोः" इति तत्राऽल्लोपाप्रसक्तिरिति चेत्। अत्राहुः-- "कार्यकालं संज्ञापरिभाष"मिति पक्षे "आतो धातो"रिति कार्यप्रदेशे भ्वादयो धातव इत्युपतिष्ठते भ्वादिषु याशब्दमातर्पठनाद्द्रव्यवाचकोऽपि याशब्दस्तत्रोपतिष्ठते। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः, "आतो धातो"रित्यत्र त्वात् इति वर्णग्रहणात्। तस्माद्द्व्यवचाकस्य याशब्दस्य धातुसंज्ञा माभूदिति क्रियावाचिन इति विशेषणमवश्यं वक्तव्यमेवेति। "उत्पादना क्रिये"त्यनेन तु क्रियावाची धातुर्धात्वर्थः क्रियेत्यन्योन्याश्रयोऽत्र दुष्परिहर इति केषांचिदाक्षेपो निरस्तः। उत्पत्त्यनुकूलव्यापारस्य क्रियात्वात्। तद#उक्तम्-- "व्यापारो भावना सैवोत्पादना सैव च क्रिये"ति। धातुत्वेनेति। सकलधातुषु धातुत्वं जातिरखण्डोपाधिर्वेत्यन्यदेतत्। तच्च वाचकतावच्छेदकम्। क्रियात्वं तु वाच्यतावच्छेदकमिति भावः। धातुवाच्येति। नन्वेवं पचतीत्यादावेककर्तृका वर्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात्, प्रत्ययार्थं प्रति प्रकृत्यर्थस्यविशेषणताया औपगवादौ क्लृसत्वात्। तथा च "भावना तिङ् प्रत्ययवाच्ये"ति मीमांसकमतमेव रमणीयमिति चेत्। अत्राहुः-- "प्रत्ययार्थः प्रधान"मिति उत्सर्गः, स चेह त्यज्यते,"क्रियाप्रधानमाख्यात"स्मरात्। टाबाद्यर्थत्वेन मीमांसकैरभ्युपगतस्य स्त्रीत्वस्य पाचिकादौ विशेषणत्वाब्युपगमात्प्रत्ययार्थः प्रधानमिति नियमस्य त्यक्तत्वाच्च। किंच भोक्तव्यमित्यादौ तिङं विनापि भावना प्रतीयते, कारकापेक्षा च दृश्यते। अस्ति च करोतिसामानाधिकरण्यम्। किं च भोक्तव्यमित्यादौ तिङं विनापि भावना प्रतीयते, कारकापेक्षा च दृश्यते। अस्ति च करोतिसामानाधिकरण्यम्। किं कर्तव्यं?, भोक्तव्यम्, किं कृतवान्?, भुक्तवानिति। नच कृतामपि तव्यदादीनां भावनावाचकत्वमस्त्विति शङ्क्यम्, नामार्थयोरभेदान्वयानुरोधेन "कर्तरि कृ"दिति तव्यदादयः कर्म#आदाविति परैरप्यभ्युपगमात्। अन्यथा पाचको देवदत्तः, पक्तव्य ओदन इत्यत्राऽभेदबोधो न स्यात्। तथा च धातुवाच्यत्वं भावनाया इत्येव मतं रमणीयतरमिति। लकारस्य सामानाधिकरण्यं कर्तृकर्माभिधायिन एव संभवति न भावाभिधायिन इत्याशयेन व्याचष्टे-- सामानाधिकरणयाभावादिति। न चैवं युष्मदस्मद्भिन्नोपपदे समानाधिकरणे देवदत्तः पतीत्यादाविव प्रथमपुरुषेण भाव्यमिति प्रथमपुरुषोऽप्यत्र न स्यादिति वाच्यं, "शेषे प्रथमः" इत्यत्र "मध्यमोत्तमयोरविषये प्रथमः स्या"दिति व्याख्यानात्। तिङ्वाच्येति। घञादितवाच्यायास्तु सत्त्वरूपत्वमिष्टमेवेति पाकं पाकेनेत्यादौ यथायथं द्वितीयादयः प्रवर्तन्ते। अत एव भाष्यकृतोक्तं "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति। द्रव्यधर्माल्लिङ्गसङ्ख्याकारकादीन् गृह्णातीत्यर्थः। एकवचनमेवेति। प्रायोवादोऽयम्। अन्यथा "उष्ट्रासिका आस्यन्ते" "हतशायिकाः शय्यन्ते" इति भाष्ये धात्वर्थनिर्देशे ण्वुलि कृदभिहितो भावो द्रव्यवत्प्रकाशत इत्यासिकाः शायिका इत्यत्र बहुवचनसिद्धावपि आस्यन्ते शय्यन्ते इत्यत्र तन्न सिध्येत्। न च कर्मण्येवाऽत्र लकारोऽस्त्विति शङ्क्यम्, धातुद्वयस्याप्यकर्मकत्वेन तदसंभवात्, अर्थाऽसङ्गतेश्च। तत्र हुष्ट्राणां यादृशान्यासनानि हतानां यादृशानि शयनानि तादृशानि देवदत्तादि कर्तृकान्यासनादीनीत्यर्थः। सादृश्यावगमादिह आख्यातवाच्यस्यापि भावस्य भेदाऽवभासाद्बहुवचनम्। न चैवं सङ्क्यान्वयित्वे असत्त्वरूपता न स्यादिति वाच्यम्, लिङ्गक्रियाऽनाधारकारकयोगाऽभावमात्रेणाऽसत्त्वरूपत्वमुपपद्यत इति कारकेषूक्तत्वात्। केचिदिह उष्ट्रासिका-- हतशायिकाशब्दयोस्तत्सदृशे लक्षणां स्वीकृत्य आस्यन्त इत्यादिना अभेदान्वयमाहुः। मनोरमायां तु आसिकाः शायिका इति च द्वितीयाबहुवचनं, क्रियाविशेषणत्वेन कर्मत्वात्। न चैवं क्लीबत्वमेकवचनान्तत्वं च स्यादिति वाच्यम्, "स्त्रियां क्त"न्नित्यधिकारात्स्त्रीत्वाऽवधारणेन "सामान्ये

नपुंसक"मित्यस्याऽप्रवृत्तेः। बहुवचनत्वावधारणेनैकवचनाप्रवृत्तेश्चेत्युक्तम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तरि ७।१ ८८ शप् १।१ सार्वधातुके ७।१ ६७ धातोः ५।१ २२ प्रत्ययः १।१ १ परश्च १।१ २

अर्थः॥

कर्तृवाचिनि सार्वधातुके परतः धातोः शप् प्रत्ययः परश्च। लट्, लोट्, लङ्, विधिलिङ्, इत्येते लकाराः {तिङ्शित् सार्वधातुकम् (३।४।११३)} इत्येस्मात् सार्वधातुकसंज्ञकाः भवन्ति, शप्-प्रत्ययः भवति च।

उदाहरणम्॥

भवति, पठति। भवतु, पठतु। अभवत्, अपठत्। भवेत्, पठेत्।
काशिका-वृत्तिः
कर्तरि शप् ३।१।६८

कर्तृवाचिनि सार्वधातुके परतो धातोः शप् प्रत्ययओ भवति। पकारः स्वरार्थः। शकारः सार्वधातुकसंज्ञार्थः। भवति। पचति।
लघु-सिद्धान्त-कौमुदी
कर्तरि शप् ३८९, ३।१।६८

कर्त्रर्थे सार्वधातुके परे धातोः शप्॥
न्यासः
कत्र्तरि शप्। , ३।१।६८

" पकारः स्वरार्थः" इति। "अनुदात्तौ सुप्पितौ" ३।१।४ इत्यनुदात्तत्वं यथा स्यात्। "शकारः सार्वधातुकसंज्ञार्थः" इति। "तिङशित्सार्वधातुकम्" ३।४।११३ इति सार्वधातुकत्वं यथा स्यात्। श्यन्प्रभृतीनामपि शकारस्यैतत् प्रयोजनं वेदितव्यम्॥
बाल-मनोरमा
कर्तरि शप् १७, ३।१।६८

कर्तरि शप्। "सार्वधातुके य"गित्यस्मात्सार्वधातुक इत्यनुवर्तते। "धातोरेकाचो हलादे"रित्यस्माद्धातोरिति। तदाह--कत्र्रर्थ इत्यादिना। तिङि परे धातोर्विहितानां प्रत्यायानां शबादीनां विकरणसंज्ञा प्राचीनाचार्यसिद्धा। शपाविताविति। शकारपकारौ "लशक्वतद्धिते" इति "हलन्त्य"मिति चेत्संज्ञकावित्यर्थः। ततश्च शपि शकारपकारयोर्लोपेऽकारमात्रं शिष्यत इत्यर्थः।

तत्त्व-बोधिनी
कर्तरि शप् १४, ३।१।६८

"सार्वधातुके य" गित्यतः सार्वधातुक इत्यनुवर्तते, "धातोरेकाचः र" इति सूत्राद्धातोरिति च, तदाह-- कत्र्रर्थ इत्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ दिवादिभ्यः ५।३ श्यन् १।१ ७२ सार्वधातुके ७।१ ६७ कर्तरि ७।१ ६८ धातोः ५।१ २२ प्रत्ययः १।१ १ परश्च १।१ २

समासः॥

दिव आदिः येषां ते दिवादयः, तेभ्यः ॰ बहुव्रीहिः।

अर्थः॥

दिवादिभ्यः धातुभ्यः श्यन् प्रत्ययः भवति, कर्त्तरि सार्वधातुके परतः।

उदाहरणम्॥

दीव्यति, सीव्यति।

काशिका-वृत्तिः

दिवादिभ्यः श्यन् ३।१।६९

दिवित्येवम् आदिभ्यः धातुभ्यः श्यन् पर्त्ययो भवति। शपो ऽपवादः। नकारः स्वरार्थः। शकारः सार्वधातुकार्थः। दीव्यति। सीव्यति।

लघु-सिद्धान्त-कौमुदी

दिवादिभ्यः श्यन् ६३२, ३।१।६९

शपोऽपवादः। हलि चेति दीर्घः। दीव्यति। दिदेव। देविता। देविष्यति। दीव्यतु। अदीव्यत्। दीव्येत्। दीव्यात्। अदेवीत्। अदेविष्यत्॥ एवं षिवु तन्तुसन्ताने॥ २॥ नृती गात्रविक्षेपे॥ ३॥ नृत्यति। ननर्त। नर्तिता॥

न्यासः

दिवादभ्यः श्यन्। , ३।१।६९

"शपोऽपवादः" इति। तत्प्राप्तावेवास्यारम्भात्। "नकारः स्वरार्थः" इति। "ञ्नित्यादिर्नित्यम्" ६।१।१९१ इति पदस्याद्युदात्तत्वं यथा स्यात्। "दीव्यति" इति। "हलि च" ८।२।७७ इति दीर्घः॥

बाल-मनोरमा

दिवादिभ्यः श्यन् ३३४, ३।१।६९

दिवादिभ्यः। "कर्तरि श"बित्यतः कर्तरिति, "सार्वधातुके य"गित्यतः सार्वधातुके इति चानुवर्तते इत्यभिप्रेत्याह-- शपोऽपवाद इति। शकारनकारावितौ। दिव् यतीति स्थिते आह-- हलि चेति दीर्घ इति। श्यनोऽपित्त्वेन ङित्त्वान्न गुण इति भावः। दीव्यतः दीव्यन्तीत्यादि सुगमम्। दिदेवेति। दिदिवतुः। दिदेविथ। दिदिविव। सेट्त्वं सूचयति--देवितेति। षिनुधातुरपि सेट्। षोपदेशः। दिवुधातुवदस्य रूपाणि।परिषीव्यतीति। "परिनिविभ्यः सेवे"ति षत्वमिति भावः।

परिषिषेवेति। "स्थादिष्वेवाभ्यासस्ये"ति नियमस्तु न, तत्र "प्राक्सिता"दित्यनुवृत्तेरितिभावः। "सिवादीनां वाऽड्व्यवायेऽपी"ति मत्वाह--न्यषेवीत् न्यसेवीदिति। रिउआवुधातुस्तु रेफवान्। ष्ठिवु निरसने इति। "सुब्दातुष्वक्कष्ठीवा"मिति न सत्वम्। ष्ठीव्यतीत्यादि सुगमम्। आद्र्धदातुकेषु तु शब्विकरणस्थष्ठिबुधातुवद्रूपाणि। ष्णसुधातुश्च षोपदेशः। नृती गात्रेति। "()आईदितः" इत्याद्यार्थमीदित्त्वम्। सेडयम्।

---

सूत्रम्

काशिका-वृत्तिः

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुतिलषः ३।१।७०

उभयत्र विभाषेयम्। टुभ्राशृ, टुभ्लाशृ दीप्तौ, भ्रमु अनवस्थाने, भ्रमु चलने, द्वयोरपि ग्रहणम्, क्रमु पादविक्षेपे, क्लमु ग्लानौ, त्रसी उद्वेगे, त्रुटी छेदने, लष कान्तौ, एतेभ्यो वा श्यन् प्रत्ययो भवति। भ्राश्यते, भ्राशते। भ्लाश्यते, भ्लाशते। भ्राम्यति, भ्रमति। क्राम्यति, क्रामति। क्लाम्यति, क्लामति। त्रस्यति, त्रसति। त्र्युट्यति, त्रुटति। लष्यति, लषति।

लघु-सिद्धान्त-कौमुदी

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ४८७, ३।१।७०

एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे। पक्षे शप्॥

न्यासः

वा भ्राशभ्लाशभ्रमुत्रसित्रुटिषः।, ३।१।७०

"सनोति, क्षणोति" इति। "षणु दाने (धा।पा।१४६४), क्षणु हिंसायाम्" (धा।पा।१४६५)। "नियमार्थम्" इति।एतदेव तनादिकार्यं यथा स्यादित्येष नियमो यथा स्यात्। अन्यत् तनादिकार्यं तदभावम्। असति हि नियमार्थे यथान्येभ्यस्तनादिभ्यो विभाषा सिचस्तथासोर्लुग् भवति-- अतत, अतथाः, अतनिष्ट, अतनिष्ठाः, तथा करोतेरपि स्यात्। अ()स्मस्तु सति न भवति, तदभावे च "ह्रस्वादङ्गात्" ८।२।२७ इत्याष्टमिक एव लोपो भवति-- अकृत, अकृथाः। ननु सत्यपि त()स्मस्तनादिकार्ये नैव किञ्चिदनिष्टमापद्यते, अलुक्पक्षेऽपि "ह्रस्वात्" (८।२।२७) इति लोपप्रवृत्तेः? नैतत्; नाप्राप्ते सिचो लोपे लुगारभ्यमाणस्तस्य बाधकः स्यात्। "पूर्वत्रासिद्धम्" ८।२।१ इत्यासिद्धत्वादयुक्ता लोपबाधेत्येतन्ाशङ्कनीयम्; यस्माद्वक्ष्यत्येतत्()-- "नास्त्यपवादेष्वसिद्धत्वम्, अपवादवचनप्रामाण्यात्" इति। यदि तर्हि करोतेरन्यत् तनादिकार्यं नेष्यते, कस्मात् तर्हि भ्वादावेव पठितः? कः पुनरेवं लाघवकृतो विशेषः। भ्वादावपि पाठे नियोगतोऽस्य विकरणविधौ ग्रहणं कत्र्तव्यमित्यदेश्यमेतत्॥

बाल-मनोरमा

वा भ्राशभ्लासभ्रामुक्रमुक्लमुवसिवुटिलषः १६१, ३।१।७०

वा भ्राश। "दिवादिब्यः श्य" न्नित्यतः श्यन्निति, "कर्तरि श"बित्यतः कर्तरीति, "सार्वधातुके य"गित्यतः सार्वधातुक इति चानुवर्तते। तदाह---एभ्यः श्यन्वेत्यादि।

तत्त्व-बोधिनी

वा भ्राशभ्लासभ्रमुक्रमुक्लमुवसिवुटिलषः १३५, ३।१।७०

उभयत्रविभाषेयम्। अनवस्थानर्थो भ्रमिः, क्लमित्रसी च-- दिवादयः, तेभ्यो नित्यं प्राप्ते। इतरेषामप्राप्ते चारम्भात्। "भ्राश्रृ भ्लाश्रृ दीप्तौ"। फणादावेतौ। "भ्रमु चलने" ब्वादिः, ज्वलादिः। "फणादि"रित्यपि?मनोरमायां पठ()ते, तद्रभसादिति

नव्याः। "भ्रमु अनवस्थाने" दिवादिः, पुषादिः, शमादिः। तत्र ब्वादेः-- भ्रम्यति भ्रमति। शमादेस्तु श्यनि दीर्घे भ्राम्यीति त्रैरूप्यम्। "क्लमु ग्लानौ", "त्रसी उद्वेगे", "त्रुट छेदने", "लष कान्तौ"।

---

सूत्रम्

काशिका-वृत्तिः

यसो ऽनुपसर्गात् ३।१।७१

यसु प्रयत्ने दैवादिकः। तस्मान् नित्यं श्यनि प्राप्ते ऽनुपसर्गाद् विकल्प उच्यते। यसो ऽनुपसर्गाद् वा श्यन् प्रत्ययो भवति। यस्यति, यसति। अनुपसर्गातिति किम्? आयस्यति। प्रयस्यति।

बाल-मनोरमा

यसोऽनुपसर्गात् ३५१, ३।१।७१

यसोऽनुपसर्गात्।

तत्त्व-बोधिनी

यसोऽनुपसर्गात् ७६७, ३।१।७१

यसोऽनुप। अत्र वदन्ति-- "यस" इत्येवास्तु। ततः "समः"। नियमार्थमिदम्, -- सोपसर्गाद्यसश्चेत्संपूर्वकादेवेति। एवं च पूर्वसूत्रेऽनुपसर्गादिति ग्रहणमुत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति। दाहे पठित इति। व्युष दाह इति-- अस्मिन्नेव गणे पठित इत्यर्थः। अङर्थमिति। दाहे पठितस्य तु सिजेव। अव्योषीत्।

इति तत्त्वबोधिन्याम् दिवादयः।

---

सूत्रम्

काशिका-वृत्तिः

संयसश् च ३।१।७२

सोपसर्गार्थ आरम्भः। सम्पूर्वाच् च यसेः वा श्यन् प्रत्ययो भवति। संयस्यति, संयसति।

बाल-मनोरमा

संयसश्च ८९०, ३।१।७२

संयसश्च। सूत्रद्वमिदम्। श्यन् वा स्यादिति। शेषपूरणमिदम्। "दिवादिभ्यः श्यन्" इत्यतो, "वा भ्राशे"त्यतश्च तदनुवृत्तेरिति भावः। अनुपसर्गाद्यसः श्यन्वा स्यादिति प्रथमसूत्रार्थः। सोपसर्गात्तु नित्य एव श्यन्, अनुपसर्गादिति पर्युदासात्। संपूर्वाद्यसेर्नित्यमेव श्यनः प्राप्तौ द्वितीयसूत्रम्। रव्युष विभागे। अयमिति। दिवादिगण एव पुषादिभ्यः प्रागयं धातुः पठित इत्यर्थः। पौनरुक्त्यमाशङ्क्याअह-- अर्थबेदेन त्वङर्थं पठ()ते इति। विभागात्मके अर्थविशेषे एव पुषाद्यङर्थमिह पुनः पाठ #इत्यर्थः। अव्युषदिति। "व्युष दाहे" इति पूर्वं पठितस्य तु सिजेव। अव्योषीत्। ओष्ठ()आदिरिति। दन्त्योष्ठ()आदिर्दन्त्योष्मान्तोऽयमिति केचिन्मन्यन्त इत्यर्थः। अयकार इति। दन्तोष्ठ()आदिर्दन्त्योष्मान्तो यो दातुरुक्तः स एवायं यकाररहित इत्यन्ये मन्यन्त इत्यर्थः। "अयकार"मिति पाठे क्रियाविशेषणम्। प्लुष दाहे। ननु दिवादिगणे परस्मैपदिषु पुषादिभ्यः प्रागस्य पाठः क्वचित् दृस्यते तत्र पौनरुक्त्यशङ्कां परिहरति-- पूर्वत्र पाठः सिजर्थ

इति।पुषादावेव पाठे सति अङेव श्रूयेत नतु सिच्। पुषादेः प्रागपि पाठे तु तस्य अङभावात्सिच् श्रूयेत। तथा च सिचः कदाचिच्छ्रवणार्थः पूर्वं पाठ इत्यर्थः। आहुरित्यस्वरसोद्भावनम्। तद्बीजं दर्शयति-- तद्भ्वादीति। तत् = दिवादिगणे पुषादिभ्यः पूर्वमस्य पठनं, भ्वादिपाठेनैव संपन्नप्रयोजनकमिति सुष्ठु वक्तुं शक्यमित्यर्थः। एवं च भ्वादिपाठाच्छब्विकरमो, लुङि सिचः श्रवणं च सिध्यति। पुषादौ पाठात्तु श्यन्विकरणः, अङ् च सिध्यति। अतो दिवादिगणे पुषादिभ्यः प्रागस्य पाठो व्यर्थ एवेति भावः। एतदेवाभिप्रेत्य मूले दिवादिगणे पुषादिगणात्प्राक् "प्लुष दाहे" इति न पठितमिति बोध्यम्। मसी परिणामे इति। ईदित्त्वं "()आईदितः"इत्येतदर्थम्। मस्यति। समी इत्येके इति। सम्यति। भृशु भ्रंशु। द्वितीयधातोराह---अनिदितामिति। युप रुप लुप। धातुवृत्त्यादिविरोधादुदित्पाठो लेखकप्रमादायातः। इह पाठस्त्विति। क्षुभिनभितुभीनां इह दिवादिगणे पाठस्य श्यनेव प्रयोजनमित्यर्थः। वस्तुतस्तु पुषादेः प्रागेव एषां त्रयाणां पाठो युक्त इति भावः। ञि मिदा। अमिददिति। ननु भ्वाद्यन्तर्गणे द्युतादौ "ञि मिदा स्नेहने" इत्यात्मनेपदिषु पठितः। लुङि तु "द्युद्भ्यो लुङी"त्यत्र परस्मपैदविकल्प उक्तः। द्युताद्यङ् तु परस्मैपद एव, न तु तङि। एवं च द्यातादिपाठादेव परस्मैपदपक्षे अङि अमिददिति, तङ#इ तु अङभावे अमेदिष्टेति सिद्धम्। तथा च पुषादावस्य पाठो व्यर्थः। तद्बहिर्दिवादौ पाठादेव श्यन्सिद्धेरित्याशङ्क्ये-- द्युतादिपाठादेवेत्यादिना, सिद्धे इत्यन्तेन। तामिमां शङ्कां परिहरति-- इह पाठोऽमेदीदिति मा भूदितीति। पुषादावस्य पाठोऽमेदीदिति व्यावृत्त्यर्थ इत्यर्थः। पुषादिभ्यः प्रागेव दिवादावस्य पाठे तु तस्माल्लुङि अङसंभवादमेदीदिति स्यादिति भावः। रनन्वेवं सति भवाद्यन्तर्गणे द्युतादावस्य पाठो व्यर्थः, द्यातादिभ्यो बहिरेवात्मनेपदिषु पठ()ताम्। एवं च अमेदिष्टेति सिद्धम्। इह पुषादौ पाठात्तु अमिददिति सिद्धमित्याशङ्क्येष्टापत्त्या परिहरति-- बहिरेवेति। "सूचितः" इतिपाठे तु सुतरामुचित इति व्याख्येयम्। ञि क्ष्विदेत्यादि। व्यक्तम्। इति दिवादयः।

॥ इति बालमनोरमायाम् दिवादयः॥

*****अथ द्वन्द्वः।*****

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वादिभ्यः ५।३ श्नुः १।१ ७६ सार्वधातुके ७।१ ६७ कर्तरि ७।१ ६८ धातोः ५।१ २२ प्रत्ययः १।१ १ परश्च १।१ २

समासः॥

सु(षुञ्) आदिर्येषां ते स्वादयः, तेभ्यः, बहुव्रीहिः॥

अर्थः॥

षुञ् अभिषवे इत्येवमादिभ्यो धातुभ्यः श्नुप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः॥

उदाहरणम्॥

सुनोति। सिनोति॥

काशिका-वृत्तिः

स्वादिभ्यः श्नुः ३।१।७३

षूञभिषवे, इत्येवम् आदिभ्यो धातुभ्यः श्नुप्रत्ययो भवति। शपो ऽपवादः। सुनोति। सिनोति।

लघु-सिद्धान्त-कौमुदी

स्वादिभ्यः श्नुः ६४८, ३।१।७३

शपोऽपवादः। सुनोति। सुनुतः। हुश्नुवोरिति यण्। सुन्वन्ति। सुन्वः, सुनुवः। सुनुते। सुन्वाते। सुन्वते। सुन्वहे, सुनुवहे। सुषाव, सुषुवे। सोता। सुनु। सुनवानि। सुनवै। सुनुयात्। सूयात्॥

बाल-मनोरमा

स्वादिभ्यः श्नुः ३५३, ३।१।७३

स्वादिभ्यः श्नुः। कत्त्रर्थे सार्वधातुके स्वादिभ्यः श्नुः स्यादित्यर्थः। शपोऽपवादः। सुनोतीति। लटस्तिपि श्नुः, शकार इत्। शित्त्वेन सार्वधातुकत्वात् "सार्वधातुकमपित्" इति ङित्त्वातत्स्मिन् परे धातोर्न गुणः। श्नोस्तु तिपमाश्रित्य गुण इति भावः। सुनुत इति। तसो ङित्त्वात् स्नोर्न गुण इति भावः। सुनु-- अतीति स्थिते "अचि श्नुधातु" इति उवङमाशङ्क्याह-- हुश्नुवोरिति। सुनोषि सुनुथः सुनुथ। सुनोमि। वसि मसि च "लोपश्चास्यान्यतकरस्यां म्वो"रित्युकारलोपविकल्पं मत्वाह-- सुन्वः सुनुव इति। सुन्मः सुनुम इत्यपि ज्ञेयम्। अथ लटस्तङि-- सुनुते सुन्वाते सुन्वते। सुनुषे सुन्वाथे सुनुद्वे। सुन्वे। इति सिद्धवत्कृत्य आह-- सुन्वहे सुनुवहे इति। "लोपश्चास्ये"त्युकारलोपविकल्प इति भावः। सुन्महे सुनुमहे इत्यपि ज्ञेयम्। सुषावेति।सुषुवतुः सुषुवुः। सुषविथ--सुषोथ सुषुवथुः सुषुव। सुषाव--सुषव सुषुविव सुषुविम। अथ लिटस्तङ्ाह-- सुषुवे इति। सुषुवाते सुषुविरे। सुषुविषे सुषुवाथे [सुषुविढवे] सुषुविधवे। सुषुवे सुषुविवहे सुषुविमहे।सोतेति। अनिट्त्वसूचनमिदम्। सोष्यति सोष्यते। सुनोतु--सुनुतात् सुनुताम् सुन्वन्तु। इतिसिद्धवत्कृत्य आह-- स#उनु इति। "उतश्च प्रत्यया"दिति हेर्लुक्। सुनुतात् सुनुतम् सुनुत। सुनवानीति। "हुश्नुवो"रिति यणं बाधित्वा परत्वाद्गुणः, आटः पित्तवेनाऽङित्त्वादिति भावः। सुनवाव सुनवाम। लोटस्तङि सुनुताम् सुन्वाताम् सुन्वताम्। सुनुष्व सुन्वाथाम् सुनुध्वम्। इति सिद्धवत्कृत्य आह-- सुनवै इति। "हुश्नुवो"रिति यणं बाधित्वा परत्वाद्गुणः, आटः पित्वेन ङित्त्वाऽभावादिति भावः। सुनवावहै सुनवामहै। असुनोत् असुनुताम् असुन्वन्। असुनोः। असुनवम् असुनुव असुन्व। असुनुत असुन्वाताम् असुन्वत। इत्याद्यूह्यम्। विधिलिङ्याह-- सुनुयादिति। यासुटो ङित्त्वात्श्नोर्न गुण इति भावः। सूयादिति। आशीर्लिङि "अकृत्सार्वधातुकयो"रिति दीर्घ इति भावः। सोषीष्ट। लुङि परस्मैपदे सिच इण्निषेधे प्राप्ते आह-- स्तुसुधूञ्भ्य इतीडिति। असाविष्टामित्यादि। लुङस्तङ्याह--असोष्टेति। असोषातामित्यादि। असोष्यत् असोष्यत "उपसर्गात्सुनोती"ति षत्वं मत्वा आह-- अभिषुणोतीति। षात्पर्तवाण्णत्वम्। अभ्यषुणोदिति। "प्राक् सितादड्व्यवायेऽपी"ति षत्वम्। अभिसुषावेति। "स्थादिष्वभ्यासेने"ति नियमादभ्यासस्य न षः। "आदेशप्रत्यययो"रित्युत्तरखण्डस्य षः।

तत्त्व-बोधिनी

स्वादिभ्यः श्नुः ३०८, ३।१।७३

सुनवानीति। "आडुत्तमस्ये"त्याटि कृते "हुश्नुवो" रिति यणं बाधित्वा परत्वाद्गुणः।

---

सूत्रम्

काशिका-वृत्तिः

श्रुवः शृ च ३।१।७४

श्रुवः श्नुप्रत्ययो भवति, तत्संनियोगेन श्रुवः शृ इत्ययम् आदेशो भवति। शृणोति, शृणुतः, शृण्वन्ति।

बाल-मनोरमा

श्रुवः शृ च २२३, ३।१।७४

श्रुवः शृ च। "शृ" इति लुप्तप्रथमाकम्। चकारेण "स्वादिभ्यः श्नु"रिति सूत्रस्थः श्नुः समुच्चीयते। तदाह--श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्चेति। शपोऽपवाद इति। अनेन शब्विषये कत्र्रर्थसार्वधातुक एवास्य प्रवृत्तिः सूचिता। श्नोर्ह्रित्त्वादिति। "सार्वधातुकमपि"दित्यनेनेति भावः। शृणोतीति। तिपमाश्रित्य श्नोर्गुणः। तसादीनं ङित्त्वात् श्नोर्न गुणः। तदाह--शृणुत इति।

तत्त्व-बोधिनी

श्रुवः शृ च १९५, ३।१।७४

श्रुवः शृ च। यद्ययं श्रुधातुः स्वादौ पठ()एत तर्हि चकारो न कर्तव्य इति लाघवमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अक्षो ऽन्यतरस्याम् ३।१।७५

अक्षू व्याप्तौ। भौवादिकः। अस्मादन्यतरस्यां श्नुप्रत्ययो भवति। अक्ष्णोति, अक्षति।

बाल-मनोरमा

अक्षोऽन्यतरस्याम् १७७, ३।१।७५

अक्षोऽन्यतरस्याम्। "अक्ष" इति पञ्चमी। "स्वादिभ्यः श्नु"रित्यतः श्नुरिति,"कर्तरि श"बित्यतः कर्तरीति, "सार्वधातुके ये"गित्यतः सार्वधातुक इति चानुवर्तते। तदाह-- अक्षो वेति। श्नुप्रत्ययस्य शित्त्वं सार्वधातुकत्वार्थम्। तत्फलं तु "स्वादिभ्यः श्नु"रित्यत्र वक्ष्यते। अक्ष्णोतीति। तिपि श्नुः। तस्य तिपः पित्त्वेन ङित्त्वाऽभावात् "सार्वधातुके"ति गुणः। णत्वम्। अक्ष्णुत इति। तसोऽपित्त्वेन ङित्त्वात् श्नोर्न गुणः। अक्ष्णुवन्तीति। ङित्त्वाद्गुणाऽभावे उवङ्। अक्ष्णोषि अक्ष्णुथ। अक्ष्णोमि अक्ष्णुवः अक्ष्णुमः। अक्षतीति। शप्पक्षे रूपम्। आनक्षेति। णलि द्विहल्त्वान्नुट्। आनक्षतुः आनक्षुः। ऊदित्त्वादिट्पक्षे आह-- आनक्षिथेति। इडभावे आह--आनष्ठेति। आनक्ष् थ इति स्थिते "स्को"रिति कलोपः। थस्य ष्टुत्वेन ठः। अष्टेति। लुटि तासि इडभावपक्षे "स्को"रिति कलोपे तकारस्य ष्टुत्वेन टः। अक्ष् स्य तीति स्थिते प्रक्रियां दर्शयति-- स्कोरिति कलोपः, षढोः कः सीति। कात्परत्वात् सस्य षत्वं च। अक्ष्णोत्विति। अक्ष्णोतु अक्ष्णुतात्-अक्ष्णुताम्। अक्ष्णुवन्तु। अक्ष्णुहीति। संयोगपूर्वत्वादुतश्चेति हेर्लुक् न। हेरपित्त्वेन ङित्त्वात् श्नोर्न गुणः। अक्ष्णुतात् अक्ष्णुतम् अक्ष्णुत। अक्ष्णवानीति। आटः पित्त्वेन ङित्वाऽभावान्न गुणनिषेधः। गुणेऽवादेशः। आक्ष्णुवन्। आक्ष्णोः आक्ष्णुतम् आक्ष्णुत। आक्ष्णवमिति। मिपोऽम्। श्नोर्गुणः। अवादेशः। आक्ष्णुव आक्ष्णुम। अक्ष्णुयादिति। विधिलिङि यासुटो ङित्वात् श्नोर्न गुणः। अक्ष्णुयुरिति। "लिङः सलोपः" इति सलोपे "उस्यपदान्ता"दिति पररूपमिति भावः। अक्ष्णुयाः अक्ष्णुयातम् अक्ष्णुयात। अक्ष्णुयाम् अक्ष्णुयाव अक्ष्णुयाम। शप्पक्षे अक्षेदित्यादि। अक्ष्यादिति। आशीर्लिङ आद्र्धधातुकत्वान्न श्नुः, नापि शप्। लुङि सिचि विशेषमाह-- ऊदित्त्वाद्वेडिति। तत्र इट्पक्षे आह--नेटीति। हलन्तलक्षणा वृद्धिर्नेत्यर्थः। नच अभैत्सीदित्यादावेकेन हला व्यवधाने हलन्तलक्षणवृद्धेश्चरितार्थत्वादत्र न तत्प्रसक्तिरिति शङ्क्यं, रञ्जेरराङ्क्षीदित्यत्र वृद्धिसिद्धये अनेकाल्व्यवधानेऽपि हलन्तलक्षणवृद्धिप्रवृत्तेर्भाष्यादौ प्रपञ्चितत्वादिति भावः। मा भवानक्षीदिति। आटि सति हलन्तलक्षणवृद्धौ सत्यामसत्यां च रूपे भेदाऽभावात् "मा भवा"नित्युपात्तम्। अक्षिष्टाम्। अक्षिषुरिति। अत्रापि "मा"

इति संबध्यते। इडभावे त्विति। लुङस्तिपि अक्ष् स् ईदिति स्थिते इडभावान्नेटीति निषेधाऽप्रसक्त्या हलन्तलक्षणवृद्धौ "स्को"रिति कलोपे "षढो"रिति कत्वे षत्वमिति भावः। अत्र "नेटी"ति निषेधाऽभावेन हलन्तलक्षणवृद्धिर्निर्बाधेति स्पष्टयितुमेव "मा भवान्" इत्यत्राप्युपात्तमिति बोध्यम्। आष्टामिति। अक्ष् स् ताम् इति स्थिते हलन्तलक्षणवृद्धौ "झलो झली"ति सिज्लोपे "स्को"रिति कलोपे तकारस्य ष्टुत्वम्। आक्षुरिति। अक्ष् स् उस् इति स्थिते हलन्तलक्षणवृद्धौ "स्को"रिति कलोपे षस्य कत्वे सस्य षत्वमिति भावः। आक्षीः आष्टम् आष्ट। आक्षम् आक्ष्व आक्ष्म। आक्षिष्यत्-- आक्ष्यत्, आक्ष्यताम् आक्ष्यन्। आक्ष्यः आक्ष्यतम् आक्ष्यत। आक्ष्यम् आक्ष्याव आक्ष्याम। तक्षू त्वक्षू इति। स्थूलस्य काष्ठादेः कतिपयावयवापनयनेन सूक्ष्मीकरणं तनूकरणम्।

---

सूत्रम्

काशिका-वृत्तिः

तनूकरणे तक्षः ३।१।७६

तक्षू त्वक्षू तनूकरणे, अस्मात् तनूकरणे वर्तमानातनतरस्यां श्नुप्रत्ययो भवति। अनेकार्थत्वाद् धातूनां विशेषणौपादानम्। तक्ष्णोति काष्ठम्, तक्षति काष्ठम्। तनूकरणे इति किम्? संतक्षति वाग्भिः।

बाल-मनोरमा

तनूकरणे तक्षः १७८, ३।१।७६

तनूकरणे। शेषपूरणेन सूत्रं व्याचष्टे--श्नुः स्याद्वा शब्विषये इति। "स्वादिभ्यः श्नु"रित्यतः श्नुरिति, "कर्तरि श"बित्यतः कर्तरीति, "सार्वधातुके य"गित्यतः सार्वधातुक इति चानुवर्तते। तनूकरणेऽर्थे विद्यमानात्तक्षधातोः श्नुः स्यात्कत्र्रर्थे सार्वधातुके इति फलितम्। नच तक्षूधातोस्तनूकरणार्थकत्वाऽव्यभिचारात् श्नुविधौ तनूकरणग्रहणं व्यर्तमिति वाच्यम्, अत एव धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वावगमात्। तक्ष्णोतीत्यादि। अक्षूवद्रूपाणि। लुङि सिचि इट्पक्षे "नेटी"ति वृद्धिनिषेधे अतक्षीदिति, इडभावे तु अताक्षीदिति च रूपमक्षवत्। एवं त्वक्षूधातुरपि। णिक्षधातुर्णोपदेशः। प्रक्षिणतीति। "उपसर्गादसमासेऽपी"ति णत्वम्। त्रण ष्ट्रक्ष गताविति। त्रयोऽप्यकारमध्याः। द्वितीयः षोपदेशः। तदाह-- रुआक्षतीति। षस्य सत्वे ष्टुत्वनिवृत्तिरिति भावः। णक्षदातुर्णोपदेशः। सिचि "नेटी"ति हलन्तलक्षणवृद्धिनिषेधः। वक्ष रोष इति। वक्ष रोष इति। दन्त्योष्ठ()आदिः। म्रक्षधातुरकारमध्यः। त्वचनशब्दस्य विवरणं-- संवरणमिति। सूक्ष्षदातू रेफमध्यः। अपपाठत्वे हेतुमाह-- अवज्ञेति। सूक्ष्षधातोरनादरार्थकत्वे असूक्ष्षणमित्यस्य आदरार्थकत्वापत्त्या अमरकोशे अवज्ञापर्यायत्वावगमविरोध इति भावः। घोरवाशिते चेति। चात् काङ्क्षायामपि। घोरवाशितं-- क्रूरशब्दः। चूषेत्यारभ्य ऊष रुजायामिति यावदूदुपधाः। ईष उञ्छ इति। ईदुपधः। कषेत्यारभ्य दश धातवः। तत्र तृतीयो दशमश्च इदुपधः। शिषधातुरनिट्कः। क्रादिनियमात्थलि वसि मसि च नित्यमिट् अजन्ताकारवत्त्वाऽभावेन थलि वेट्कत्वाऽभावात्। शिशेषिथ। शिशिषिव शिशिषिम। अशिक्षदिति। "शल इगुपधा" दिति च्लेः क्सादेशे कित्त्वाल्लघूपधगुणनिषेधे षस्य कत्वे सस्य षत्वमिति भावः। ववषतुरिति। "न शसददे"ति निषेधादेत्तवाभ्यासलोपौ न। रुषधातुः सेट्कः। रोषति। रुरोष रुरुषतुः रुरुषुः। रुरोषिथ रुरुषथुः रुरुष। रुरोषिव रुरुषिम।

तत्त्व-बोधिनी

तनूकरणे तक्षः १५१, ३।१।७६

अतक्षीदिति। "नेटि" इति वृद्धिनिषेधः। इडभावे तु-- अताक्षीत्। प्रणिक्षतीति। "उपसर्गादसमासेऽपी"ति नित्यं णत्वम्। "वा निंसनिक्षनिन्दा"मिति तु कृद्विषयम्। "ण्वुलतृचौ"। प्रणिक्षिकः। प्रनिक्षकः। प्रणिक्षिता। प्रनिक्षिता। अवज्ञेत्यादि।

सूक्ष्मणमादरस्ततोऽन्यदसूक्ष्मणित्यमरग्रन्तार्थः। यदि तु सूक्ष्मणमनादर इत्युच्येत तर्हि असूक्ष्मणमवज्ञापर्यायो न स्यादिति भावः। काक्षि। काङ्क्षा -इच्छा। द्राक्षि ध्राक्षि ध्वाक्षि। घोरवासितं-- घोरशब्दः। वासृ शब्दे। ध्वाङ्क्षतीति। ध्वाङ्क्ष--- काकः। द्राक्षि। धातोः "गुरोश्च हलः" इति "अ" प्रत्यये द्राक्षा। यवादिगणे निपातनान्नलोपः। द्राक्षामान्। इह मतोर्वत्वं तु न भवति, "अयवादिभ्य" इत्युक्तेः। तूष तुष्टौ। दिवादौ तु ह्रस्वोपधः। मूष स्तेये। संज्ञायां क्वुनि "मूषकः"। क्र्यादौ तु ह्रस्वोपधोऽयम्। भूष अलङ्कारे। अयं चुरादावपि। ईष उच्छे। "गुरोश्च हलः" इत्यप्रत्यये "ईषा लाङ्गलदण्डः"। कष खष। षान्तौ। "शिषे"त्ययमप्यनिक्टो न तु रौधादिक एव, संकोचे मानाऽभावादित्यभिप्रेत्योदाहरति-- शेष्टा। अशिक्षदित्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तुदादिभ्यः ५।३ शः १।१ सार्वधातुके ७।१ ६७ कर्तरि ७।१ ६८ धातोः ५।१ २२ प्रत्ययः १।१ १ परश्च १।१ २

समासः॥

तुद आदिर्येषां ते तुदादयः, तेभ्यः, बहुव्रीहिः॥

अर्थः॥

तुद व्यथने इत्येवमादिभ्यो धातुभ्यः शः प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः॥

उदाहरणम्॥

तुदति। नुदति॥

काशिका-वृत्तिः

तुदादिभ्यः शः ३।१।७७

तुद व्यथने इत्येवम् आदिभ्यो धातुभ्यः शप्रत्ययो भवति। शपो ऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। तुदति। नुदति।

लघु-सिद्धान्त-कौमुदी

तुदादिभ्यः शः ६५४, ३।१।७७

शपोऽपवादः। तुदति, तुदते। तुतोद। तुतोदिथ। तुतुदे। तोत्ता। अतौत्सीत्, अतुत॥ णुद प्रेरणे॥ २॥ नुदति, नुदते। नुनोद। नोत्ता। भ्रस्ज पाके॥ ३॥ ग्रहिज्येति सम्प्रसारणम्। सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति, भृज्जते॥

बाल-मनोरमा

तुदादिभ्यः शः ३६४, ३।१।७७

तुदादिभ्यः शः। कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः शः स्यात्स्वार्थे इत्यर्थः। शबपवादः। तुदतीति। लघूपधगुणं बाधित्वा नित्यत्वात् शे कृते तस्य अपित्वात् "सार्वधातुकमपि" दिति ङित्त्वान् गुण इति भावः। अजन्ताऽकारवत्त्वाऽभावात्क्रादिनियमाल्लिटिथल्यपि नित्यमिट्।तदाह-- तुतोदिथेति। तोत्तेति। अनिडिति भावः। अतौत्सीदिति। हलन्तलक्षणा वृद्धिः। णुदधातुर्णोपदेशः। अनिट्।दिशधातुरप्यनिट्। देष्टेति। व्रश्चेति षत्वे ष्टुत्वम्। स्ये तु

"षढो"रिति षस्य कत्वं च-- देक्ष्यति। दिक्षीष्टेति। "लिङ्सिचौ" इति कित्त्वान्न गुणः। "शल इगुपधा" दिति क्सं मत्वाह-- अदिक्षत्। अदिक्षतेति। भ्रस्ज पाके। अनिट्। भ्रस्ज अ ति इति स्थिते आह -- ग्रहिज्येति। ङित्त्वाद्रेफस्य संप्रसारममृकारः, पूर्वरूपं चेति भावः। भृस्ज् अ ति इति स्थिते आह -- सस्येत्यादि। णलि भ्रस्ज् अ इति स्थिते --

तत्त्व-बोधिनी

तुदादिभ्यः शः ३१८, ३।१।७७

तुदतीति। परमपि लघूपधगुणं बाधित्वा नित्यत्वाच्छ इत्येके। अकृतव्यूहपरिभाषया गुणो न प्रवर्तते इत्यन्ये। भ्रस्ज पाके। भर्जनरुपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकः, तत्र प्रयोगाऽभावादित्याहुः। "भ्रस्जो" इति केषांचित्पाठे तु "ओदितश्चे"ति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ रुधादिभ्यः ५।३ श्नम् १।१ सार्वधातुके ७।१ ६७ कर्तरि ७।१ ६८ धातोः ५।१ २२ प्रत्ययः १।१ १ परश्च १।१ २

समासः॥

रुध् आदिर्येषां ते रुधादयः, तेभ्यः, वहुव्रीहिः॥

अर्थः॥

रुधादिभ्यो धातुभ्यः श्नम् प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः॥

उदाहरणम्॥

रुणद्धि। भिनत्ति॥

काशिका-वृत्तिः

रुदादिभ्यः श्नम् ३।१।७८

रुधिरावरणे इत्येवम् आदिभ्यो धातुभ्यः श्नम् प्रत्ययो भवति। शपो ऽपवादः। मकारो देशविध्यर्थः। शकारः श्नान् नलोपः ६।४।२३ इति विशेषणार्थः। रुणद्धि। भिनत्ति।

लघु-सिद्धान्त-कौमुदी

रुधादिभ्यः श्नम् ६६९, ३।१।७८

शपोऽपवादः। रुणद्धि। श्नसोरल्लोपः। रुन्धः। रुन्धन्ति। रुणत्सि। रुन्धः। रुन्ध। रुणध्मि। रुन्ध्वः। रुन्ध्मः। रुन्धे। रुन्धाते। रुन्धते। रुन्त्से। रुन्धाथे। रुन्ध्वे। रुन्धे। रुन्ध्वहे। रुन्ध्महे। रुरोध, रुरुधे। रोद्धासि, रोद्धासे। रोत्स्यसि, रोत्स्यसे। रोत्स्यति, रोत्स्यते। रुणद्धु, रुन्धात्। रुन्धाम्। रुन्धन्तु। रुन्धि। रुणधानि। रुणधाव। रुणधाम। रुन्धाम्। रुन्धाताम्। रुन्धताम्। रुन्त्स्व। रुणधै। रुणधावहै। रुणधामहै। अरुणत्, अरुणद्। अरुन्धताम्। अरुन्धन्। अरुणः, अरुणत्, अरुणद्। अरुन्ध। अरुन्धाताम्। अरुन्धत। अरुन्धाः। रुन्ध्यात्। रुन्धीत। रुध्यात्, रुत्सीष्ट। अरुधत्,

अरौत्सीत्। अरुद्ध। अरुत्साताम्। अरुत्सत। अरोत्स्यत्, अरौत्सीत्। अरुद्ध। अरुत्साताम्। अरुत्सत। अरोत्स्यत्, अरोत्स्यत॥ भिदिर् विदारणे॥ २॥ छिदिर् द्वैधीकरणे॥ ३॥ युजिर् योगे॥ ४॥ रिचिर् विरेचने॥ ५॥ रिणक्ति, रिङ्क्ते। रिरेच। रेक्ता रेक्ष्यति अरिणक्। अरिचत्, अरैक्षीत्, अरिक्त॥ विचिर् पृथग्भावे॥ ६॥ विनक्ति विङ्क्ते॥ क्षुदिर् संपेषणे॥ ७॥ क्षुणत्ति, क्षुन्ते। क्षोत्ता॥ अक्षुदत्, अक्षौत्सीत्, अक्षुत्त। उच्छृदिर् दीप्तिदेवनयोः॥ ८॥ छृणत्ति छृन्ते। चच्छर्द। सेऽसिचीति वेट्। चच्छृदिषे, चच्छृत्से। छर्दिता। छर्दिष्यति, छर्त्स्यति। अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट॥ उत्तृदिर् हिंसानादरयोः॥ ९॥ तृणत्ति, तृन्ते॥ कृती वेष्टने॥ १०॥ कृणत्ति॥ तृह हिसि हिंसायाम्॥ ११-१२॥

बाल-मनोरमा

रुधादिभ्यः श्नम् ३७३, ३।१।७८

रुधादिभ्यः श्नम्। कत्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम्प्रत्ययः स्यात्स्वार्थे इत्यर्थः। तदाह-शपोऽपवाद इति। श्नमि शमावितौ। मित्त्वस्य फलमाह - मित्त्वादन्त्यादचः पर इति। प्रत्ययत्वाच्छकारस्येत्संज्ञा। शकारनिर्देशस्तु "श्नसोरल्लोपः" "श्नान्नलोपः" इत्यत्र विशेषणाऽर्थः, नतु सार्वधातुकसंज्ञार्थः, फलाऽभावात्। न च "सार्वधातुकमपि" दिति ङित्त्वे गुणनिषेधः फलमिति शङ्()कयं, श्नमः पूर्वस्य इगन्तस्य अङ्गत्वाऽभावादेव गुणाऽप्रसक्तेः। ननु श्नमः प्राक् परत्वाल्लघूपधगुणे कृते पश्चात् श्नमि रोणद्धीति स्यादित्यत आह - नित्यत्वाद्गुणं बाधते इति। कृते अकृते च गुणे प्रवृत्तेः श्नम् नित्यः। तस्मिन् सति लघूपधत्वाऽभावान्न गुण इति भावः। रुणद्धीति। रुनध् ति इति स्थिते "झषस्तथो" रितधत्वे णत्वमिति भावः। रुनध् तस् इति स्थिते प्रक्रियां दर्शयति - श्नसोरल्लोप इति। क्ङिति सार्वधातुके तद्विधेरिति भावः। रुन्()ध् तस् इति स्थिते नस्य णत्वमाशङ्क्याह - मत्वस्यासिद्धत्वादिति। ननु कृते परसवर्णे तस्य नस्य णत्वमस्त्वित्यत आह - तस्यासिद्धत्वादिति। परसवर्णसंपन्नस्येत्यर्थः। नन्विह अल्लोपस्य "अचः परस्मि"न्निति स्थानिवत्त्वात् कथमनुस्वारपरसवर्णावित्यत आह - न पदान्तेति। रुन्द्ध इति। "झषस्तथो"रिति धः। रुन्धन्तीति। रुणत्सि रुन्द्धः रुन्द्ध। रुणध्मि रुन्ध्वः रुन्ध्मः। रुन्द्धे इति। रुन्धाते रुन्धते। रुन्त्से रुन्धाथे रुन्द्ध्वे। रुन्धे रुन्ध्वहे रुन्ध्महे। रुरोध। रुरोधिथ। अरुणदिति। लङि हल्ङ्यादिना तिपो लोपः। धस्य चत्र्वविल्पः। सिपि तु हल्ङ्यादिना लुप्ते "दश्चे"ति रुत्वविकल्पं मत्वाह -अरुणत् अरुण इति। रुन्ध्यात्। रुन्धीत। रुत्सीष्ट। इरित्त्वादङ्विकल्पं मत्वाह -- अरुधत् अरौत्सीदिति। अङभावे सिचि हलन्तलक्षणा वृद्धिः। लुङस्तङ्याह - अरुद्धेति। "जलो झली"ति सिज्लोपः। भिनत्तीति। भिन्त्तः भिन्दन्ति। भिनत्सि भिन्त्थः भिन्त्थ। भिनद्मि भिन्द्वः भिन्द्मः। भिन्त्ते इति। भिन्दाते भिन्दते। भिन्त्से भिन्दाथे। भिन्द्ध्वे। भिन्दे भिन्द्वहे। बिभेद। बिभेदिथ। बिभिदिव। बिभिदे। बिभिदिषे। अभिनत् अभिन इति। "दश्चे" ति रुर्वेति भावः। अभिन्त्तेति। लङि तङि रूपम्।?लुङः परस्मैपदे आह - अभिदत् अभैत्सीदिति। इरित्त्वादङ्()वेति भावः। लुङि तङ्याह अभित्तेति। "झलो झली" ति सिज्लोपः। अभित्सातामित्यादि। उच्छृदिरिति। उकार इत्। "उदितो वे"ति क्त्वायामिड्विकल्पार्थः। ञि इन्धी दीप्तौ। ईदित्त्वं "()आईदितः" इत्येतदर्थम्। श्नमि कृते इन न् ध् ते इति स्थिते -

तत्त्व-बोधिनी

रुधादिभ्यः श्नम् ३२७, ३।१।७८

रुधादिभ्यः श्नम्। प्रत्ययत्वेऽपि मित्त्वादन्त्यादचः परः। प्रत्ययसंज्ञाफलं तु शस्येत्संज्ञा। शस्योच्चारमं तु "श्नसोरल्लोपः", "श्नान्नलोपः", इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं, फलाऽभावात्। न चाऽपित्सार्वधातुकस्य ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम्िगन्तस्याङ्गत्वाऽभावात्। अरुण इति। सिपि " दश्चे"ति रुर्वा। एवमभिन इत्यत्रापि। उच्छृदिर्। उकारः क्त्वायामिड्विकल्पार्थः। छृत्वा। छर्दित्वा। इट्पक्षे "न क्त्वा से" डिति कित्त्वनिषेधाद्गुणः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तनादिकृञ्भ्यः ५।३ उः १।१ सार्वधातुके ७।१ ६७ कर्तरि ७।१ ६८ धातोः ५।१ २२ प्रत्ययः १।१ १ परश्च १।१ २

समासः॥

तन् आदिर्येषां ते तनादयः, तनादयश्च कृञ् च तनादिकृञ्भ्यः, तेभ्यः, बहुव्रीहिगर्भेतरयोगद्वन्द्वः॥

अर्थः॥

तनादिभ्यो धातुभ्यो कृञश्च उः प्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः॥

उदाहरणम्॥

तनोति, सनोति॥ करोति॥

काशिका-वृत्तिः

तनादिकृञ्भ्यः उः ३।१।७९

तनु विस्तारे इत्येवम् आदिभ्यो धातुभ्यः कृञश्च उप्रत्ययो भवति। शपो ऽपवादः। तनोति। सनोति। क्षणोति। कृञः खल्वपि करोति। तनादिपाठादेव उप्रत्यये सिद्धे करोतेरुपादानं नियमार्थम्, अन्यत् तनादिकार्यं मा भूतिति। तनादिभ्यस् तथासोः २।४।७९। इति विभाषा सिचो लुग् न भवति। अकृत। अकृथाः।

लघु-सिद्धान्त-कौमुदी

तनादिकृञ्भ्य उः ५७४, ३।१।७९

तनादेः कृञश्च उः प्रत्ययः स्यात्। शपोऽपवादः। गुणौ। विदाङ्करोतु॥

बाल-मनोरमा

तनादिकृञ्भ्य उः २९७, ३।१।७९

तनादिकृञ्भ्यः उः। शपोऽपवाद इति। अनेन शब्विषय एवास्य प्रवृत्तिरिति सूचितम्। "सार्वधातुके य"गित्यतः सारवधातुकग्रहणस्य "कर्तरि श"बित्यतः कर्तरीत्यस्य चानुवृत्तेरिति भावः। तेनेति। गणकार्यस्याऽनित्यतया "()आसे" दित्यत्र अदादिगणकार्यं शपो लुङ्न भवतीत्यर्थः। वस्तुतस्तु कृञ्ग्रहणस्यात्र भाष्ये प्रत्याख्यातत्वादुक्तज्ञापनाऽभावाद्वि()आसेदित्यसंबद्धमेवेत्याहुः। "वि()आस्त"मित्यत्र तुआगमशास्त्रस्याऽनित्यत्वान्नेडित्याहुः। विदांकरोत्विति। अत्र विदेर्लोटि आमि लोटोलुकिआमन्ताद्विदेः कृञो लोडन्तस्यानुप्रयोगः।तत्र लोटस्तिपि "एरु" रित्युत्वे शपं बाधित्वा उप्रत्यये ऋकारस्य गुणे रपरत्वे उकारस्य तिब्निमित्तो गुणः। तातङि तु ऋकारस्य गुणे रपरे तातङो ङित्त्वादुकारस्य गुणाऽभावे विदाङ्करुतादिति स्थिते--

तत्त्व-बोधिनी

तनादिकृञ्भ्यः उः २५७, ३।१।७९

तेनेति "वि()आसे"दित्यत्र शपो लुगभावः सिद्ध इति भावः। एवमप्यवि()आस्तमित्यत्रेडभावः कथमिति

चेदागमशास्त्रस्याऽनित्यत्वादिति गृहाण।

---

सूत्रम्

काशिका-वृत्तिः

धिन्विकृण्व्योर च ३।१।८०

हिवि, धिवि जिवि प्रीणनार्थाः, कृवि हिंसाकरणयोः, इत्येतयोः धात्वोः उप्रत्ययो भवति, अकारश्च अन्तादेशः। धिनोति। कृणोति। अतो लोपस्य स्थानिवद्भावात् गुणो न भवति।

न्यासः

धिन्विकृण्व्योर च। , ३।१।८०

भ्वादित्वाच्छपि प्राप्ते वचनम्। "अकारादेशो भवति" इति। अलोऽन्त्यस्य १।१।५१ परिभाषया। "धिनोति" इति। "अतो लोपः" ६।४।४८। अथ लघूपधगुणोऽत्र कस्मान्न भवतीत्याह-- "अल्लोपस्य" इत्यादि। "अचः परस्मिन् पूर्वविधौ" १।१।५६ इत्यल्लोपस्य स्थानिवद्भावनादनुपधत्वादिकारस्य गुणो न भवति। लाघवारथं "धिविकृव्योः" इति वक्तव्ये नुमनुषक्तयोग्रहणं कृतमुपदेशावस्थायामेव नुम्भवतीति ज्ञापनार्थम्। तेन नुम्विधावुपदेशिवद्वचनमिष्टस्वरसिद्ध्यर्थमिति न वक्तव्यं भवति॥

बाल-मनोरमा

धिन्विकृण्व्योर च १७१, ३।१।८०

धिन्विकृण्व्योः। "अ" इति लुप्तप्रथमाकम्। धिविकृव्योः कृतनुमोर्धिन्विकृण्वीत निर्देशः। "तनादिकृञ्भ्यः उः" इत्यत उरिति चकारादनुकृष्यते। "कर्तरि श"बित्यतः कर्तरीति, "सार्वधातुके य"गित्यतः सार्वधातुक इति च। तदाह-- अनयोरित्यादिना। वकारस्याऽकारः। दिन् अ उ ति इति स्थितम्। अतो लोप इति। युगपत्संनियोगशिष्टतया उप्रत्ययाऽकारयोर्विधानेऽपि श्रुतक्रमानुरोधेन प्रवृत्त्या आद्र्धधातुकोपदेशकाले "धिन" इत्यस्याऽदन्तत्वमिति भावः। नन्वत्र वकारस्य लोप एव विधीयतां किमकारविधिनेत्यत आह--तस्येति। वकारस्य लोपाविधौ तु अजादेशत्वाऽभावात्स्थानिकवत्त्वं न स्यादिति भावः। तथा च धिनु ति इति स्थिते आह--उप्रत्ययस्येति। धिनुत इति। धिविधातोरनुमि तसि उप्रत्यये वकारस्य अकारादेशे अतो लोपः। तसो ङित्त्वादुकारस्य न गुणः। धिन्वन्तीति। धिन्व् इत्यस्माज्झिः। झोऽन्तः। उप्रत्ययः। वकारस्य अकारः। अतो लोपः। उकारस्य यणिति भावः। अत् वकारस्य स्थानिवत्त्वेन आद्र्धधातुकत्वेऽपि नेट्। उकारवृत्त्याद्र्धधातुकत्वस्य अल्धर्मत्वेन अनल्विधाविति निषेधात्। तदिदं "भोभगो" इति सूत्रभाष्ये स्पष्टम्। धिनोषि धिनुथः धिनुथ। धिनोमि।

तत्त्व-बोधिनी

धिन्विकृष्व्योर च १४५, ३।१।८०

धिन्विकृष्व्योर च। "अलोऽन्त्यस्ये"ति वकारस्याऽकारादेशः। चकारेण तु उप्रत्ययोऽनुकृष्यते। बोपदेवेन त्वनयोस्तनादित्वं स्वीकृतम्। तन्मते तु चकारं विनाप्युप्रत्ययलाभः। अतो लोप इति। यद्यप्युपदेशेऽदन्तत्वं नास्ति तथाप्याद्र्धधातुकोपदेशे तदस्त्येव। "धिन्विकृण्व्योर चे"ति श्रुतत्वादकारादेशे कृते चानुकृष्टस्य पश्चाज्जायमानत्वादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ क्र्यादिभ्यः ५।३ श्ना सार्वधातुके ७।१ ६७ कर्तरि ७।१ ६८ धातोः ५।१ २२ प्रत्ययः १।१ १ परश्च १।१ २

समासः॥

क्रीः आदिर्येषां ते क्र्यादयः, तेभ्यः, बहुव्रीहिः॥

अर्थः॥

श्ना इति लुप्तप्रथमान्तनिर्देशः॥ डुक्रीञ् इत्येवमादिभ्यो धातुभ्यः श्नाप्रत्ययो भवति कर्तृवाचिनि सार्वधातुके परतः॥

उदाहरणम्॥

क्रीणाति। क्रीणीतः॥

काशिका-वृत्तिः

क्र्यादिभ्यः श्ना ३।१।८१

डुक्रीञ् द्रव्यविनिमये इत्येवम् आदिभ्यः धातुभ्यः श्ना प्रत्ययो भवति। शपो ऽपवादः। शकारः सार्वधातुकसंज्ञार्थः। क्रीणाति। प्रीणाति।

लघु-सिद्धान्त-कौमुदी

क्र्यादिभ्यः श्ना ६८७, ३।१।८१

शपोऽपवादः। क्रीणाति। ई हल्यघोः। क्रीणीतः। श्नाभ्यस्तयोरातः। क्रीणन्ति। क्रीणासि। क्रीणीथः। क्रीणीथ। क्रीणामि। क्रीणीवः। क्रीणीमः। क्रीणीते। क्रीणाते। क्रीणते। क्रीणीषे। क्रीणाथे। क्रीणीध्वे। क्रीणे। क्रीणीवहे। क्रीणीमहे। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रयिथ, चिक्रेथ। चिक्रिय। चिक्रिये। क्रेता। क्रेष्यति, क्रेष्यते। क्रीणातु, क्रीणीतात्। क्रीणीताम्। अक्रीणात्, अक्रीणीत। क्रीणीयात्, क्रीणीत। क्रीयात्, क्रेषीष्ट। अक्रैषीत्, अक्रेष्यत॥ प्रीञ् तर्पणे कान्तौ च॥ २॥ प्रीणाति, प्रीणीते॥ श्रीञ् पाके॥ ३॥ श्रीणाति, श्रीणीते॥ मीञ् हिंसायाम्॥ ४॥

न्यासः

क्र्यादिभ्यः श्ना। , ३।१।८१

बाल-मनोरमा

क्र्यादिभ्यः श्ना ३८२, ३।१।८१

क्र्यादिभ्यः श्ना।कर्त्र्यर्थे सार्वधातुके परे क्र्यादिभ्यः श्नाप्रत्ययः स्यात्स्वार्थे इत्यर्थः। शपोऽपवादः। क्रीणातीति। श्नाप्रत्ययस्य अपित्सार्वधातुकत्वेन ङित्त्वादीकारस्य न गुण इति भावः। ई हल्यघोरिति। हलादौ क्ङिति सार्वधातुके ईत्त्वमिति भावः। क्री णा झीति स्थिते "ई हल्यघो"रिति ईत्वमाशङ्क्य आह -- ईत्वात्पूर्वमिति। नित्यत्वादिति। अकृते कृते च ईत्वे अन्तादेशस्य प्रवृत्तेरिति भावः। एवं झस्येति। क्री णा झ इति स्थिते "आत्मनेपदेष्वनतः" इत्यदादेशोऽपि ईत्वात्पूर्वमित्यर्थः। तत इति। अन्तादेशाददादेशाच्च पश्चादित्यर्थः। अजादौ क्ङिति सार्वधातुके श्नाप्रत्ययस्य आल्लोपः।

भारद्वाजनियमात्थलि वेडिति मत्वाऽऽह -- चिक्रयिथ चिक्रेथेति। चिक्रियिवेति। क्रादिनियमादिडिति भावः। क्रीणातु। क्रीणीहि। अक्रीणात्। अक्रीणीत। क्रीणीयात्। क्रीणीत।

तत्त्व-बोधिनी

क्र्यादिभ्यः श्ना ३३३, ३।१।८१

एवं झस्याऽद्भाव इति। "आत्मनेपदेष्वनतः" इत्यनेन। सौत्रा इति। नकारोपदा इत्यपि ज्ञेयम्। विष्टभ्नोतीति। "अनिदितमिति नलोपः। "स्तन्भे"रिति षत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश् च ३।१।८२

आद्याश्चत्वारो धातवः सौत्राः, स्कुञाप्रवणे, एतेभ्यः श्ना प्रत्ययो भवति, श्नुः च। स्तभ्नाति, स्तभ्नोति। स्तुभ्नाति, स्तुभ्नोति। स्कभ्नाति, स्कभ्नोति। स्कुभ्नाति, स्कुभ्नोति। स्कुनाति, स्कुनोति। उदित्त्वप्रतिज्ञानात् सौत्राणाम् अपि धातूनां सर्वार्थत्वं विज्ञायते, न एतद् विकरणविषयत्वम् एव।

लघु-सिद्धान्त-कौमुदी

स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ६८९, ३।१।८२

चात् श्ना। स्कुनोति, स्कुनाति। स्कुनुते, स्कुनीते। चुस्काव, चुस्कुवे। स्कोता। अस्कौषीत्, अस्कोष्ट॥ स्तन्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्थाः परस्मैपदिनः॥

न्यासः

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च। , ३।१।८२

चकारः श्नानुकर्षणार्थः। "स्तभ्नाति" इति। आदौ "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः। श्नुश्नाभ्यां सह निर्देशात् तद्विषयतैवैषां धातूनामिति कस्यचिद्भ्रान्ति स्यात्। अतस्तन्निराकर्त्तुमाह-- "उदित्त्वप्रतिपादनात्" इत्यादि। एषां ह्रुकार इत्संज्ञकः प्रतिज्ञायते, तस्य क्त्वाप्रत्यय इड्()विकल्पः फलम्। यदि त एतद्विकरणविषयाः स्युः, उदित्करणमनर्थकं स्यात्। तस्मादुदित्करणप्रतिज्ञानात् सर्वार्थत्वमेषामवसीयते। अर्थशब्दोऽयं विषयवाची। सर्वविषयत्वमित्यर्थः॥ "पुषाण, मुषाण" इति। विध्यादौ लोट्, "सेह्रूरपिच्च" ३।४।८७, क्र्यादित्वाच् श्ना, तस्यानेन शानच्। चकारोऽन्तोदात्तार्थः। "अतो हेः" ६।४।१०५ इति हेर्लुक्। "क्रीणीहि" इति। "ई हल्यघोः" ६।४।११३ इतीत्त्वम्। ननु च श्नाप्रत्ययस्य प्रकृतत्वात् स एवेह स्थानित्वेन विज्ञास्यते, तत् किमर्थः "श्नः" इति निर्देश इत्याह-- "श्न इति स्थानिनिर्देशः" इत्यादि। शानच्शब्दोऽयमादेश इत्येष संप्रत्ययो यथा स्थादित्येवमर्थः श्न इति निर्देशः। किं पुनः कारणमसति तस्मिन्नेव संप्रत्ययो न स्यादित्यत आह-- "प्रत्ययान्तरं हि" इत्यादि। सर्वे धातवोऽन्यगणपठिता अपि विषयो यस्य तत्तथोक्तम्।"श्नः" इत्यस्मिन् ह्रसति स्थानिर्देशे श्नाप्रत्ययस्यानुवृत्तिर्न ज्ञायेत्। ततश्च सर्वेभ्यो धातुभ्यो हलन्तेभ्यः शानजपवादः प्रत्ययो भवति तस्य च शानजादेशः, तदा मिदेर्गुणो मा भूत्; इतरथा ह्रयं गुणः प्रतिषेधविषय आरभ्यमाणो यथेह भवति-- मेध्यतीति, तथेहापि स्यात्-- मिदान इति। पुनः शित्करणे तु "सार्वधातुकमपित्" १।२।४ इति ङित्त्वमपि पुनः प्रवत्र्तते। तेन मिदेः प्रतषेधविषयेऽपि गुण आरभ्यमाण इह न भवति॥

बाल-मनोरमा

स्तन्भुसतुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ३८३, ३।१।८२

सौत्रा इति। नोपधा इत्यपि ज्ञेयम्। नलोप इति। "अनिदिता"मित्यनेनेति भावः। विष्टभ्नोतीति। "स्तन्भे"रिति षत्वम्। अवष्टभ्नोतीति। "अवच्चालम्बनाविर्दूययो"रिति षत्वम्। अवतष्टम्भेति। "स्थादिषवभ्यासेने"ति षत्वम्। व्यष्टभदिति। "प्राक्सितादिति षत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

हलः श्नः शानज्ज्ञौ ३।१।८३

हल उत्तरस्य श्नाप्रत्ययस्य शनजादेशो भवति हौ परतः। मुषाण। पुषाण। हलः इति किम्? क्रीणीहि। हौ इति किम्? मुष्णाति। श्नः इति स्थानिनिर्देशः आदेशसम्प्रत्ययार्थः। इतरथा हि प्रत्ययान्तरम् एव सर्वविषयं विज्ञायेत।

लघु-सिद्धान्त-कौमुदी

हलः श्नः शानज्झौ ६९०, ३।१।८३

हलः परस्य श्नः शानजादेशः स्याद्धौ परे। स्तभान॥

बाल-मनोरमा

हलः श्नः शानज्झौ ३८४, ३।१।८३

स्तभानेति श्नाप्रत्ययस्य शानजादेसे कृते "अतो हे" रिति लुक्।

तत्त्व-बोधिनी

हलः श्नः शानज्झौ ३३५, ३।१।८३

हलः श्नः। स्तभानेति। "अतो हे" रित्यारम्भसामथ्र्यात्संनिपातपरिभाषाया अप्रवृत्तेर्लुक्। अत एव "जही"त्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः। यत्तु कैश्चिच्छानजादेशो धातुपाठपठितेभ्यः परस्य श्नो भवति न तु सोत्रेभ्य इति व्याख्या स्तभ्नीहीत्युदाह्मतं तन्निष्प्रमाणं, माधवादिग्रन्थविरुद्धं च।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि शायजपि ३।१।८४

छन्दसि विषये श्नः शायचादेशो भवति, शानजपि। गृभाय जिह्वया मधु। शानचः खल्वपि बधान देव सवितः।

न्यासः

छन्दसि शायजपि। , ३।१।८४

"अत्रापि चित्-- शित्()करणयोः पूर्वोक्तमेव प्रयोजनम्। "{नास्ति काशिकायाम्।} गृहाण्" इति। "ग्रहण उपादाने" (धा।पा।१५३३) लोट्, सिप्; हिः, ततः श्ना,तस्य शानच्, हेर्लुक् ६।४।१०५, ग्रह्मादीना ६।१।१६ सम्प्रसारणम्। "गृभाय" इति, क्वचित् पाठः। तत्र "ह्मग्रहोर्भश्छन्दसि" (वा। ८।२।३२) इति भत्वम्। "बधान"इति। "बन्ध बन्धने" (धा।पा।१५०८) "अनिदिताम्" ६।४।२४ इति नलोपः। शेषं पूर्ववत्॥

सूत्रम्

काशिका-वृत्तिः

व्यत्ययो बहुलम् ३।१।८५

यथायथं विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति। व्यतिगमनं व्यत्ययः, व्यतिहारः। विषयान्तरे विधानम्, क्वचिद् द्विविकरणता, क्वचित् त्रिविकरणता च। आण्डा शुष्णस्य भेदति। भिनत्ति इति प्राप्ते। ताश्विन्नौ न मरन्ति। न म्रियन्ते इति प्राप्ते। द्विविकरणता इन्द्रो वस्तेन नेषतु। नयतु इति प्राप्ते। त्रिविकरणता इन्द्रेण युजा तरुषेम वृत्रम्। तीर्यस्म इति प्राप्ते। बहुलग्रहणं सर्वविधिव्यभिचारार्थम्। सुप्तिङुपग्रलिङ्गनरणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सो ऽपि च सिध्यति बहुलकेन।

न्यासः

व्यत्ययो बहुलम्। , ३।१।८५

"यथायथम" इति। यो यस्यात्मीयो विषयः = यथायथम्। यस्मिन् यस्मिन् विषय इत्यर्थः। किं पुनरयं व्यत्ययो नामेत्याह--- "व्यतिगमनं व्यत्ययः" इति। तमेव व्यत्ययं स्पष्टीकर्त्तुमाह-- "{व्यतिहारः-काशिका} व्यतिकरः" इत्यादि। "क्वचित्" इत्यादिना व्यत्यस्य प्रकारान्तरं दर्शयति। "भेदति" इति। श्नमो विषये शपो विधानम्। "मरति" त्यत्रापि शविषये शप्, परस्मैपदञ्च व्यत्ययेनैव। "म्रियते" इति। पूर्ववद्रिङ, तस्येयङ। "नेषतु" इति। नयतेर्लोट्, तिप्, "एरुः" ३।४।८६ सिप्, तस्मात् परः शप्, धातोर्गुणः, सिपः षत्वम्। त्रिविकरणतायास्तूदाहरणम्-- "{तरुषेम वृत्रम्()" --काशिका} तरुषेम दृषदम्" इति। तरतेराशिषि लिङ्, मस्, "नित्यं ङित्, ३।४।९९ इतिवस्मसोः सलोपः, यासुट्, "छन्दस्युभयथा" ३।४।११७ इति सार्वधातुकत्वाल्लिङ उप्रत्ययः, तस्मात् परः सिप्, तस्मादपि परोऽङ, धातोर्गुणः, सिपः षत्वम्, "अतो येयः" ७।२।८०इतीयादेशः। अङा सह "आद्गुणः" ६।१।८४, "लिङः सलोपोऽनन्तस्य" ६।१।७६ इति सलोपः। "लोपो व्योर्वलि" ६।१।६४ इति यलोपः। अथ "व्यत्ययः" इत्येतावत् कतं नोक्तम्,किं बहुलग्रहणेन, पूर्वसूत्राद्ध्यपिशब्दस्यानुवृत्तौ सत्यां छन्दसि व्यत्ययो भवति, अपिशब्दाद्यथाप्राप्तञ्चेति, एवमभिसम्बन्धे क्रियमाणेऽन्तरेणापि बहुलग्रहणं सर्वमिष्टं सिध्ययत्येवेत्यत आह-- " बहुलग्रहणम्" इत्यादि। सर्वस्य प्रकृतस्याप्रकृतस्य विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थ बहुलम्, इतरथा ह्रसति बहुलग्रहणे प्रकृतानामेव स्यादीनां शानच्()पर्यन्तानां स्यात्, नान्येषां श्नम्प्रभृतीनाम्, इष्यते च तेषामपि। स बहुलग्रहण एव सति लभ्यते। एतमेवार्थं दर्शयितुमाह--- "सुप्तिङुपग्रह" इत्यादि। ततर् सुपां व्यत्ययः-- धुरि दक्षिणायामिति प्राप्ते सप्तम्या विषये षष्ठी। तिङाम्-- ये यूपाय तक्षति। तक्षन्तीति प्राप्ते। लादेशव्यङ्ग्यक्रियाविशेषो मुख्य उपग्रहः। इह तु तद्व्यक्तिनिमित्तत्वात् परस्मैपदात्मनेदयोरुपग्रहशब्दो वत्र्तते। एतदुक्तं भवति-- आत्मनेपदपरसमैपदयोव्र्यत्यय इति। स ब्राह्मचारिणमिच्छते, प्रतीतमन्यद()ग्न युध्यति। इच्छति, बध्यत इति प्राप्ते। लिङ्गस्य-- मधोस्तृप्ता इवासत इति। मधुन इति प्राप्ते। नरस्य = प्रथमपुरुषादेः-- अतोपचारैर्दशभिर्वियूयाय इति। वियूयादिति प्रथमपुरुषविषये मध्यमपुरुषः, "यु मिश्रणे" (धा।पा। १०३३), विपूर्वादाशिषि लिङ, सिप्, यासुट्, "अकृत्सार्व धातुकयोः" ७।४।२४ इति दीर्घः, "स्कोः संयोगाद्योरन्ते च" ८।२।२९ इति सलोपः। कालस्य-- सोऽग्नीनाधास्यमानेन। लुटो विषये लुट्; कालशब्दोऽत्र कालविषयत्वाल्लुडादिप्रत्ययेषु वत्र्तते। न हि मुख्यकालस्य व्यत्ययः शक्यते कर्त्तुम्। हलाम्-- शुफितं मुखबीजम्। शुभितमिति प्राप्ते। "शुभ शुम्भ शोभार्थे" (धा।पा।१३२१,१३२२) निष्ठा, इट्, भकारसय् फकारः। अचाम्-- उपगायन्तु मां पत्नयो गर्भिणयः। पत्न्यो गर्भिण्य इति प्राप्ते। ईकारस्य इकारः। स्वराणाम्-- "अन्तोऽवत्या" ६।१।२१४ इत्यन्तोदात्तत्वं यथेह भवति-- अ()आवतीं सोमवतीं प्रजावतीं सूर्यवतीं दृषदमित, तथेहापि स्यात्-- अ()आवती सोमवती प्रजावती। व्यत्यये तु सत्य()आशब्दस्य प्रकृतिस्वर

एव भवति। कः पुनः प्रकृतिस्वरः? आद्युदात्तत्वम्। तथा हि ङीपोऽनुदात्तत्वं पित्त्वात्। मतुपोऽप्यत एव। "{अशूप्रुषिप्लुषिलटिकटिकणिखटिविशिभ्यः क्वन्" इति द।उ।सूत्रम्} अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" (द।उ।८।१२५) इति क्वन्प्रत्ययान्तत्वात् नित्स्वरेणाद्युदात्तोऽ()आशब्दः। कर्तृगर्हणं कारकोपलक्षणार्थम्। कारकाणां व्यत्यय इत्यर्थः। आसादयद्भिरुभयोर्वेदाः। आसादयद्भ्य इति प्राप्ते सम्प्रदानस्य करणत्वम्। "यङ" इति प्रत्याहारग्रहणार्थम्-- "सार्वधातुके यक्" ३।१।६७ इति यक आरभ्य "लिङ्याशिष्यङ" ३।१।८६ इत्यतो ङकारेण। यगादीनां प्रत्ययानामङपर्यन्तानां व्यत्यय इत्यर्थः। मुण्डा शुष्मस्य भेदतीति। श्नमि प्राप्ते शप्। एषां शप्प्रभृतीनां व्यत्ययमिच्छति शास्त्रकृत्-- पाणिनिः। "सोऽपि च सिध्यति बाहुलकेन" अपिशब्दात् स्यादिव्यत्ययः। बाहुलस्य भावो बाहुलकम्, द्वन्द्वमनोज्ञादित्वाद्वुञ् ५।१।१३२। चशब्दो हेतौ। यस्मादेवं प्रकृतानामप्रकृतानाञ्तच बाहुलकेन व्यत्ययः सिध्यति तस्माद्बहुलग्रहणं कृतमिति॥

---

सूत्रम्

काशिका-वृत्तिः

लिङ्याशिष्यङ् ३।१।८६

आशिषि विषये यो लिङ् तस्मिन् परतः छन्दसि विषये अङ् प्रत्ययो भवति। शपो ऽपवादः। छन्दस्युभयथा ३।४।११७ इति लिङः सार्वधातुकसंज्ञाप्यस्ति। स्थागागमिवचिविदिशकिरुहयः प्रयोजनम्। स्था उपस्थेषं वृषभं तुग्रियाणाम्। गा सत्यम् उपगेषम्। गमि गृहं गमेम। वचि मन्त्रं वोचेमाग्नये। विदि विदेयमेनां मनसि प्रविष्टाम्। शकि व्रतं चरिष्यामि तच्छकेयम्। रुहि स्वर्गं लोकम् आरुहेयम्। दृशेरग् वक्तव्यः। पितरं दृशेयं मातरं च।

न्यासः

लिङ्याशिष्यङ्।, ३।१।८६

"शपोऽपवादः" इति। ननु चाशिषि यो लिङ विहितस्तस्य "लिङाशिषि" ३।४।११६ इत्यार्थधातुकसंज्ञा, सार्वधातुके च शब्()विहितः, तत्कथं शपोऽपवाद इत्याह-- "छन्दस्युभयथा" इत्यादि। स्थादिभ्य एवात्र दृश्यते,नान्येभ्य इत्यभिप्रायेणाह-- "स्थागागमि" इत्यादि। "उपस्थेयम्" इति।उपपूर्वात्तिष्ठतेराशिषि लिङ, मिप्, तस्य "तस्थस्" ३।४।१०१ इत्यादिनाऽमादेशः, यासुट्, उभयसंज्ञात्वेन सार्वधातुकत्वात् "लिङ सलोपोऽनन्त्यस्य" ७।२।७९ इति सलोपः। क्वचित् "उपस्थेषम्" इति पाठः। तत्राद्र्धधातुकत्वात् सलोपाभावः, वलि यलोपः। "उपगेयम्" इति। "गै शब्दे" (धा।पा।९१७) "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्वम्। शेषं पूर्ववत्। "गमेम" इति। गमेः परस्य लिङो मस्, "नित्यं ङितः" ३।४।९९ इति सलोपः। यासुडादि सर्वं पूर्ववत्। "वोचेयम्" इति। "वच भाषणे" (धा।पा।१८४२)। सिप्, तस्याम्, अङ, अङि परतः "वच उम्" ७।४।२०, "या" इत्यस्य इय्, उभयत्र "आद्गुणः" ६।१।८४। "विदेयम्" इति। "विद ज्ञाने" (धा।पा।१०६४)। "शकेयम्" इति। "शक्लृ शक्तौ" (धा।पा।१२६१)। "आरुहेयम्" इति। "रुह {बीजजन्मणि प्रादुर्भावे-- धा।पा।} जन्मनि (ध।पा।८५९) इयादेशादि सर्वं पूर्ववत्। "दृशेरग्वक्तव्यः" इति। अङि हि सति "ऋदृशोऽङि गुणः" ७।४।१६ इति गुणः स्यात्। तथा च दृशेयमिति न सिध्येत्। अकि तु सति कित्त्वाद्गुणाभावो भवति। तस्मादग्वक्तव्यः = व्याख्येयः। व्याख्यानं तु बहुलग्रहणानुवृत्तेर्वक्तव्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

कर्मवत् कर्मणा तुल्यक्रियः ३।१।८७

कर्मणि क्रिया कर्म, कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद् भवति। यस्मिन् कर्मणि कर्तृभूते ऽपि तद्वत् क्रिया लक्ष्यते यथा कर्मणि, स कर्ता कर्मवद् भवति। कर्माश्रयाणि कार्याणि प्रतिपद्यते। कर्तरि शप् ३।१।६८ इति कर्तृग्रहणम् इह अनुवृत्तं प्रथमया विपरिणम्यते। यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्। भिद्यते काष्ठं स्वयम् एव। अभेदि काष्ठं स्वयम् एव। कारिष्यते कटः स्वयम् एव। वत्करणं स्वाश्रयम् अपि यथा स्यात्, भिद्यते कुसूलेन इति। अकर्मकाणां भावे लः सिद्धो भवति। लिङ्याशिष्यङ् ३।१।८६ इति द्विलकारको निर्देशः। तत्र लानुवृत्तेर् लान्तस्य कर्ता कर्मवद् भवति इति कुसूलाद् द्वितीया न भवति। कर्मणा इति किम्? करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत्। साध्वसिश्छिनत्ति। साधु स्थाली पचति। धात्वधिकारात् समाने धातौ कर्मवद्भावः। इह न भवति, पचत्योदनं देवदत्तः, राध्यन्त्योदनं स्वयम् एव इति। कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति, न कर्तृस्थाभावकानां न वा कर्तृस्थक्रियाणाम्। कर्मस्थः पचतेर् भावः कर्मस्था च भिदेः क्रिया। मासासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया।

लघु-सिद्धान्त-कौमुदी

कर्मवत्कर्मणा तुल्यक्रियः ७६३, ३।१।८७

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात्। कार्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्वदिटः स्युः। पच्यते फलम्। भिद्यते काष्ठम्। अभेदि। भावे, भिद्यते काष्ठेन॥

लघु-सिद्धान्त-कौमुदी

इति कर्मकर्तृप्रक्रिया ७६३, ३।१।८७

लघु-सिद्धान्त-कौमुदी

अथ लकारार्थप्रक्रिया ७६३, ३।१।८७

न्यासः

कर्मत्कर्मणा तुल्यक्रियः। , ३।१।८७

"कर्मवत्" इति। "तेन तुल्यं क्रिया चेद्वतिः" ५।१।११४ इति; न तु "तत्र तस्येव" ५।१।११५ इति; तुल्यक्रिय इति प्रथमानिर्देशात्। अन्यथा तुल्यक्रिये, तुल्यक्रियस्यति सप्तम्या षष्ठ()आ वा निर्देशं कुर्यात्। तुल्याक्रियाऽस्येति तुल्यक्रियः। केन तुल्यक्रियः? कर्मणा। सापेक्षत्वेऽपि गमकत्वात् समासः। तुल्यशब्दोऽयं सदृशवचनः। न च साधनस्य कर्मणः क्रियया सादृश्यमुपपद्यते; अत्यन्तभेदात्। तथा हि-- कर्म द्रव्यं परिनिष्पन्नम्। त्दविपरीतस्वभावा क्रिया। तस्मात् कर्मणेति कर्मशब्दोऽयं गौणस्तात्स्थ्यादुपचारेण कर्मस्थायां क्रियायां वत्र्तते, यथा-- मञ्चाः क्रोशन्तीति, अत्र मञ्चशब्दः पुरुषेषु। उपचारस्तु कर्मस्थबावकानां कर्मस्थक्रियाञ्च कर्मवद्भावो यथा स्यात्, कर्तृस्थभावकानां कर्तृस्थक्रियाणां च मा भूदित्येवमर्थः। एतत्सर्वं चेतसि कृत्वाह-- "कर्मणि क्रिया कर्म" इति। एतेन कर्मशब्दोऽयं कर्स्थक्रियावाचीत्याचष्टे। कर्मस्थक्रियावाचिनि च कर्मशब्दे यः सूत्रार्थः सम्पद्यते तं दर्शयितुमाह-- "कर्मस्थया" इत्यादि। एवं स्थिते सूत्रार्थे तुल्यशब्दोऽयं साधारणवचन इति मन्यमानो यो देशयेत्-- "यदि कर्मस्थया क्रियया तुल्यक्र#इयः साधारणक्रियः कत्र्ता कर्मवद्भवति तदा पचत्योदनं देवदत्त इत्यत्रापि स्यात्; यस्मादिहापि यासौ प्रधानक्रिया तामुद्दिश्य सर्वाणि कारकद्रव्याणि प्रवत्र्तन्ते, तयाकर्मस्थया प्रवत्र्तन्ते, तयाकर्मस्थया साधारणक्रियः कत्र्ता भवति, यथैव ह्रसावन्येषां कारकाणां सम्बन्धिनी तथा कर्तुरपि" इति, तं प्रत्याह-- "यस्मिन् कर्मणि" इत्यादि। तद्वद्यथाशब्दौ सादृश्यार्थौ प्रयुञ्जानः "सदृशवचनोऽयं तुल्यशब्द-,न साधारणवचनः" इत्याचष्टे। यस्मिन् कर्मणि कर्तृभूतेऽपि कत्र्रवस्थां प्रतपन्नेऽपि तादृशी क्रिया लक्ष्यते यादृशी कर्मावस्थायां स कर्ता कर्मवद्भवति। सादृश्यञ्च कञ्चिद्भेदाधिष्टानमित्यसाधारण एवाधिश्रयणादिलक्षणः कर्तृव्यापारो गृह्रते, न तु साधारणो विक्लेदादिलक्षणः। स

चासाधारणः पचच्योदनं देवदत्त इत्यत्र कारकान्तरव्यापारविसदृशो देवदत्तस्य कर्त्तृव्यापार इति न भवति कर्मवद्भावः। अथ वा-- कर्मस्थया क्रियया तुल्यक्रियः कत्र्ता कर्मवद्भवतीत्युक्ते सदृशवचनस्तुल्यशब्द इति मन्यमानो यो देशयेत्-- "यद्येवम्, भिद्यमानः कुसूलः पात्राणि भिनत्तीत्यत्रापि प्राप्नोति, तथा हि यादृशी पात्रेष्ववयवविभागात्मिका क्रिया तादृश्येव कुसूले कत्र्तरि लक्ष्यते" इत्यस्मिन् पूर्वपक्ष इदमाह-- "यस्मिन् कर्मणि" इत्यादि। स इत्यनेन यस्मिन्नित्यनेन योऽर्थो निर्दिष्टः स एव प्रत्यवमृश्यते। एतेनैकद्रव्याधारयैव कर्मस्थयाक्रियया तुल्यक्रियः कत्र्ता कर्मवद्भवतीति दर्शयन् पूर्वपक्षं प्रतिक्षिपति। एवच्च प्रत्यासत्तेन्र्यायाल्लभ्यते। एकद्रव्यसमवायिनो हि क्रिया प्रत्यासन्ना, द्रव्यान्तरसमवेता तु विप्रकृष्टा। ननु च शक्तिः कारकमिति दर्शनम्, न च कर्मशक्तिः कदापि कर्त्तृभावमापद्यते, तदयुक्तमुक्तम्-- यस्मिन् कर्मणि कर्त्तृभूतेऽपीति? शक्तिशक्तिमतोर्भेदस्याविवक्षायां शक्त्याधारं द्रव्यमेवैतदुक्तमित्यदोषः। इदं तह्र्रयुक्तमुक्तम्-- "तद्वत् क्रिया लक्ष्यते यथा कर्मणि" इति। यस्माद्य एव कर्मावस्थायां व्यापारः स एव कत्र्रवस्थायामपीति सादृश्यं नोपपद्यते, तस्य भेदाधिष्ठाने सति सत्त्वात्? नैष दोषः; अवस्थाभेदेन क्रियाबेदाद्यद्यप्यवस्थावद्()द्रव्यमभिन्नम्, तथाप्यवस्थाभेदोऽस्ति-- अन्यैव हि कत्र्रवस्था,अन्या च कर्मावस्था। अवस्थाभेदेन क्रियाभेद इति तदधिष्ठानं सादृश्यं भवति। इहातिदेशो निमित्त-- व्यपदेश--शास्त्र-- कार्यभेदादनेकविधः। तत्रेह निमित्तातिदेशो न भवति, न हि कर्मणो यन्निमित्तं कर्त्तुरोप्सिततमत्वं तत् कत्र्तर्यतिदेष्टुं शक्यते; वस्त्वन्तरधर्माणां वस्त्वन्तरेण विरुद्धधर्मिणा सम्बन्धाभावात्। व्यपदेशातिदेशस्तु संज्ञापक्षान्न भिद्यते। संज्ञापक्षे तु वक्ष्यमाणो दोषः, वतिग्रहणञ्चानर्थकं स्यात्। शास्त्रातिदेशपक्षे तु शास्त्रमतिदिश्यते, तस्मिन्नतिदिष्टे तैरेव शास्त्रैर्यगादयः प्राप्यन्ते; ततश्च यद्ययं शास्त्रातिदेशः स्यात् कर्मकर्तरि परत्वाच्छबादयो बाधकाः स्युः, तत्र प्रतिविधेयं स्यात्। कार्यातिदेशे त्वनेनैव यगादयो विधीयन्ते। तेन येन कत्र्राश्रयाः कर्मकत्र्तरि शबादयः प्राप्नुवन्ति ते परत्वाद्यगादिभिर्बाध्यन्त इति न किञ्चित्प्रतिविधातव्यम्। प्रधानं तु कार्यातिदेशः; तदर्थत्वनादतिदेशशास्त्राणाम्। अतः कार्यातिदेशतामस्य दर्शयन्नाह-- "कर्माश्रयाणि" इत्यादि। ननु च "तुल्यक्रियः" इति प्रथमानिर्देशात् तदन्तस्य कर्तुरतिदेशो विज्ञायते, न च सूत्रे कर्त्तृग्रहणमस्ति। यद्यपि च प्रकृतं तदपि सप्तम्यन्तम्, प्रथमानिर्दिष्टेन चेहार्थः तत्कथं प्रथमान्तकर्त्तृग्रहणमन्तरेण शक्यतेऽतिदेशः कर्त्तुमित्याह-- "कत्र्तरि" इत्यादि। किं पुनरस्यातिदेशस्य प्रयोजनमित्याह-- "यगात्मनेपद" इत्यादि। "भिद्यते" इति यक उदाहरणम्। "अभेरि" इति चिणः। "कारिष्यते" इति चिष्वद्भावस्य। कर्मणि हि "स्यसिच्सीयुट्" ६।४।६२ इत्यादिना चिण्वद्भावो विहितः। आत्मनेपदस्य तु सर्वाण्येवैतान्यदाहरणानि। "स्वाश्रयमपि" इत्यादि। यद्विनाप्यतिदेशो न भवति तत् स्वाश्रयम्, तद्यथा स्यादित्येवमर्थं वत्करणम्। असति हि तस्मिन् संज्ञासूत्रमिदं स्यात्, ततश्च कर्मणा तुल्यक्रियः कत्र्ता कर्मसंज्ञकः स्यात्। एवञ्च सति सकर्मकत्वात् "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इति भावे लकारो न स्यात्। वत्करणे तु सत्यतिदेशो भवति। तेन चाप्राप्तमेव कर्त्तुः कर्म कार्यं भवति, न स्वाश्रयं कर्त्तृत्वम्। अकर्मकस्वभावत्वमपनीयते, तत्र तस्या व्यापारात्। एतेनाकर्मकाणां भावे लः सिद्धो भवति-- भिद्यते कुसूलेनेति। अथ भिद्यते कुसूलः स्वयमेवेत्यत्र कुसूलशब्दाद्द्वितीया कस्मान्न भवति, एतदपि कर्म कार्यं भवत्यत आह-- "लिङ्याशिष्यङिति" इत्यादि। द्वौ लकारौ यस्मिन् स द्विलकारो निर्देशः। यदि द्विलकारको निर्देशस्तदा किमित्याह-- "तत्र" इत्यादि। कार्यं प्रतीत्यध्याहार्यम्। द्विलकारनिर्देशे सति "लिङ्याशिष्यङ" ३।१।८६ इत्यतो लानुवृत्तेलन्तिस्यैव कार्यं प्रति कत्र्ता कर्मवद्भवति, न तु प्रातिपदिकस्य। इतिकरणो हेतौ। यत एवं तस्मात् कुसूलाद्द्वितीया न भवति। "करणाधिकरणाभ्याम्" इति। कर्मणेत्यसत्यस्मिन् करणाधिकरणस्थयापि क्रियया तुल्यक्रियः कत्र्ता कर्मवत् स्यात्, अ()स्मस्तु सति न भवति। "साध्वसिश्छिनत्ति" इति। कणस्य कर्त्तृत्वविवक्षायां करणस्थयापि क्रियया छेद्यद्रव्यान्तःप्रवेशलक्षणया तुल्यक्रियोऽत्रासिः कत्र्ता। "साधु स्थाली पचति" इति। अत्राधिकरणस्य कर्त्तृत्वविवक्षायामधिकरणस्थया क्रियया सम्भवति धारणात्मिकया तुल्यक्रियः कत्र्ता। अथेह कस्मान्न भवति-- पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेति; भवति ह्यत्रापि कर्मस्थया क्रियया तुल्यक्रियः कत्र्ता, तथा हि यादृश्योदेने कर्मभूते क्रिया विक्लेदनलक्षणा लक्ष्यते

तादृश्येव कर्तृभूतेऽपि, पचतिराध्यत्योरेकार्थत्वादित्याह--- "धात्वधिकारात्" इत्यादि। समानशब्दोऽयमेकपर्यायः, यथा-- देवदत्तयज्ञदत्तयोः समाना मातेति। एका मातेति गम्यते। "धातोरेकाचः" ३।१।२२ इत्यतो धातुग्रहणमनुवत्र्तते। कर्मादिशब्दाश्च सम्बन्धिशब्दाः,ये च सम्बन्धिशब्दास्ते प्रकृत्यैव नियतरूपं सम्बन्धिनमुपस्थापयन्ति। तथा हि-- मातरि भक्त्या प्रवर्तितव्यामित्युक्तेऽन्तरेणापि स्वस्यामिति वचनं स्वस्यां मातरीति गम्यते। तेन यं धातुमपेक्ष्य तस्य कर्मणः कर्तृत्वं तमेव धातुं सन्निधापयति, नान्यम्। ततश्च धातुग्रहणेऽनुवत्र्तमाने सत्ययमर्थो लभ्यते। यस्मिन् धातौ कर्मणोपस्थापिते यत् करम तस्मिन्नेव धातौ स यदि कत्र्ता भवत्येवं सत्ययमतिदेशः, नान्यथा। तेन पचत्योदनं देवदत्तः,राध्यत्योदनः स्वयमेवेत्यत्र न भवति, भिन्नयोर्धात्वोरोदनस्य कर्मकर्तृत्वासम्भवात्। अथ वा-- धातोरिति येयमेका संख्या सा विवक्षिता, तेनैकस्मिन्नेव धातौ कर्मवद्भावो भवति। "कर्मस्थभावकानाम्" इत्यादिना न्यायप्राप्तमेवार्थं दर्शयति।तथा हि-- कर्मस्थया क्रियया तुल्यक्रियस्य कर्तुः कर्मवद्भावो भवति। न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां कत्र्ता तथाविधोऽस्ति। यद्यपि क्रियाप्युपादीयते, "लक्षणहेत्वोः क्रियायाः" ३।२।१२६ इत्यत्र च भावोऽपि परिगृह्रते; तथापीह द्वयोरुपादानसामथ्र्यादर्थभेदो द्रष्टव्यः। सा परिस्पन्दनसाधनसाध्या क्रिया क्रियाशब्देनोच्यते, अपरिस्पन्दनसाध्या तु भावशब्देन। येषां कर्मस्थोभावः कर्मस्था च क्रिया; येषां कर्तृस्थो भावः कत्र्तस्था च क्रिया, तेषामुदाहरणं दर्शयितुमाह-- "कर्मस्थः पचतेर्भावः" इति। पच्यते घटः स्वयमेवेत्यत्र यदा तद्देशस्थघटकर्मकपाको निष्पद्यते तदाऽपरिस्पन्दनसाधनसाध्यस्वभावः पाकः कत्र्तस्थो भवति, यदा तु देशान्तरं गच्छतः पाकद्रव्यस्य पाकाभिनिर्वृत्तिर्भवति तदा कर्मस्थैव पचेः क्रिया, यथा -- पच्यत ओदन इत्यत्रोदाहरणे। "कर्मस्था टच भिदेः क्रिया" इति। भिद्यते कुसूलः-- स्वयमेवेति। अवयवविभागलक्षणा हि भिदेः क्रिया,सा च दशान्तरप्राप्तौ सत्यां भवतीति भिद्यते परिस्पन्दः,तेन कर्मस्था क्रिया भवति। "मासासिभावः कत्र्तस्थः" इति। आसेर्धातोर्भाव असिभावः। आसनं हि भावः; तस्याः परिस्पन्दनसाधनसाध्यत्वात्। तथा हि-- व्यापारोपरतावास्त इति प्रयुज्यते। माससहचरित आसिभावः। शाकपार्थिवादित्वात् समासः-- मासासिभावः। कदा स माससहचरित आसिभावो भवति? यदा मासमास्त इति प्रयुज्यते। मासमिति कर्मणि द्वितीया। कर्मसंज्ञा तु "कालभावाध्वगन्तव्याः क्रमसंज्ञा ह्रकर्मणाम्" (वा।१।४।५१) इति वचनात्। मासासिभावः कत्र्तस्थो भवति, आसितरि समवायात्। तेनास्यते मासः स्वयमेवेति न भवति। "कर्तृस्था च गमेः क्रिया" #इति। गमनं पाद विहरणात्मकम्। तच्च परिस्पन्दनसा नसाध्यत्वाच्च क्रिया, सा च गन्तरि देवदत्तादौ समवेता, न कर्मणि ग्रामादौ। तेन कर्मस्थक्रियाभावाद्गम्यते ग्रामः स्वयमेवेति न भवति॥

बाल-मनोरमा

कर्मवत्कर्मणा तुल्यक्रियः ५९१, ३।१।८७

कर्मवत्कर्मणा। "कर्तरि श"बित्यतः कर्तरीत्यनुवृत्तं प्रथमया विपरिणम्यते।तुल्या क्रिया यस्य स तुल्यक्रियः कर्ता। "कर्मणे"त्यनेन कर्मकारकस्था क्रिया विवक्षिता, क्रियायाः कर्मकारकेण तुल्यत्वस्य तत्स्थक्रियामादायैव उपपाद्यत्वात्। तदाह-- कर्मस्थयेत्यादिना। कर्मणः कर्तृत्वेन विवक्षायां कर्ता कर्मवदिति यावत्। वत्करणाऽभावे तु कर्मसंज्ञक इत्यर्थशङ्का स्यात्।तथा सति सकर्मकत्वात्पच्यते ओदनेन भिद्यते काष्ठेनेति भावे लो न स्यात्। कार्यातिदेशोऽयमिति। यद्यपि शास्त्रातिदेशे कार्यातिदेशे वा न फलभेदः, तथापि शास्त्रातिदेशस्यापि कार्यातिदेशार्थत्वातन्मुख्यत्वात्कार्यातिदेश एवाश्रयणीय इत्यर्थः। तेनेति। "स्यु"रित्यत्रान्वेति। कर्मवत्त्ववचनेन कर्मकार्याणि "सार्वधातुके य"गिति यक्, "भावकर्मणो"रित्यात्मनेपदम्, "चिण् भावकर्मणो"रिति चिण्, "स्यसिच्सीयुट्तासिषु" इति चिण्वत्त्वं, तत्संनियोगाशिष्ट इट् च स्युरित्यर्थः। कर्मणः कर्तृत्वविवक्षायां कत्र्तरि विहितानि शास्त्राण्येव न स्युरिति भावः। कर्तुरिति। कर्मणः कर्तृत्विविक्षायां कर्तरि लकारे सति तदादेशतिङा कर्तुरभिहितत्वादित्यर्थः। पच्यते ओदन इति। फूत्कारादिपुरुषश्रमातिशयविशेषं विना विक्लित्त्याश्रयो भवतीत्यर्थः। भिद्यते काष्ठमिति। कुठारादिदृढाघातं पुरुषश्रमं

विना द्विधा भवतीत्यर्थः। अत्र कर्मणः कर्तृत्वेऽपि कर्मत्वाऽतिदेशाद्यक्। अपाचि अभेदीति। अत्र कर्मवत्त्()वाच्चिण्। ननु कर्मणः कर्तृत्वविवक्षायां भावलकारे पच्यते ओदनेन , भिद्यते काष्ठेनेत्यत्र कर्मकर्तुस्तिङाऽनभिहितत्वाद्द्वितीया स्यात्, कर्मवत्त्वातदेशादित्याशङ्कते-- नन्विति। परिहरति-- नेति। नायमाक्षेप उन्मिषतीत्यर्थः। कुत इत्यत आह-- लकार वाच्य एवेति। तच्च कुत इत्यत आह-- लिङ्याशिषीति। "व्यत्ययो बहुलँल्लिड()आशिष्य"ङ्ङिति संहितया पाठे लकारात् पूर्वं लकारान्तरं "हलो यमा"मिति लुप्तं प्रश्लिष्यते। ततस्च ल् ल् इति द्विलकारात्सूत्रात् ल् इति षष्ठ()न्तं "कर्मवत्कर्मणा" इत्यत्रानुवर्तते। तथाच लः कर्ता कर्मवदिति लभ्यते। वाच्यत्वं षष्ठ()र्थः। तथा च लकारवाच्यः कर्ता कर्मवदिति पर्यवस्यतीत्यर्थः। अस्त्वेवं, प्रकृते किमायातमित्यत आह-- भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेरिति। तत्र भावस्यैव तद्वाच्यत्वादिति भावः। अत एवेति। लकारवाच्यस्यैव कर्मकर्तुः कर्मवत्त्वविधानादेव कृत्यक्तखलर्थाः प्रत्ययाः कर्मणि विहिताः कर्मकर्तरि न भवन्ति, तस्य लकारवाच्यत्वऽबावेन कर्मवत्त्वस्य तत्राऽप्रवृत्तेरित्यर्थः। एतच्च भाष्ये स्पष्टम्। ननु "सिनोतेग्र्रासकर्मकर्तृकस्ये"ति निष्ठानत्ववार्तिके "सिनो ग्रासः स्वयमेवे"ति भाष्येकथमुदाह्मतं, क्तप्रत्ययस्य कर्मकर्तर्यभावादिति चेदुच्यते--- अत एव भाष्यात् "निष्ठे"ति सूत्रविहितकर्मार्थकक्तप्रत्ययस्यैव कर्मकर्तर्यभाव इति विज्ञायते। "सिनो ग्रासः स्वयमेवे"त्यत्र तु "गत्यर्थाऽकर् मके"त्यादिना कर्तरि विहितः क्तप्रत्ययः कर्मकर्तरि भवत्येवेति शब्देन्दुशेखरे विस्तरः। भेत्तव्यं कुसूलेनेति। पुरुषप्रयत्नमनपेक्ष्य कुसूलकर्तृका भिदिक्रियेत्यर्थः। शङ्कते-- नन्विति। इदानीमिति। कर्मणः कर्तृत्वविवक्षादशायामित्यर्थः। नतु तत्तुल्येति। तुल्यत्वस्य भेदघटित्त्वादिति भावः। अद्र्धाङ्गोकारेण परिहरति-- सत्यमिति। विक्लित्तिर्द्विधाभवनं च कर्मस्थमेव संप्रति कर्तृस्थमिति युक्तं तथापि तयोस्तुल्यत्वाऽभावस्तु नेत्यर्थः। कर्मत्वेपि। कर्मत्वकर्तृत्वे अवस्थे = धर्मविशेषौ तयोर्भेदः स एव उपाधिः = निमित्तं यस्य तताविधं कर्मत्वकर्तृत्वसमानाधिकरणक्रियाभेदमाश्रित्य तुल्यत्वव्यवहार इत्यर्थः। वास्तवभेद#आऽभावेऽपि औपाधिकभेदात्कर्मस्थक्रियातुल्यक्रियत्वं कर्मकर्तृरिति भावः। करणाधिकरणाभ्यामिति। "असिना छिनत्ति" स्थाल्यां पचती"त्यत्र करणाऽधिकरणयोर्यो व्यापारः स एव "असिश्छिनत्ति" स्थाली पचती" त्यत्र कर्तृस्थ इति तत्रापि कर्मवत्त्वं स्यात्, तन्निवृत्त्यर्थं कर्मणेति पदमित्यर्थः। ननु "कर्मवत्कर्मणे"त्यत्र "धातोरेकाच" इत्यतो धातोरित्यनुवर्तते। धातोर्वाच्यया क्रियया तुल्यक्रिय इत्यर्थः। करणत्वाद्यवस्थायां वस्तुतः सन्नपि असिस्थाल्योव्र्यापारो न धातूपात्त इति नोक्तदोष इत्यस्वरसादाह-- किंचेति। गच्छति ग्राम इति। मार्गस्य अविषमनिष्कण्टकतया प्रत्यासन्नतया च श्रमं विना प्राप्त्याश्रयो भवतीत्यर्थः। आरोहति हस्तीति। अङ्कुशाऽऽघातादिहस्तिपकव्यापारं विना स्वयमेव न्यग्भवन् आरोहणाश्रयो भवतीत्यर्थः। अधिगच्छतीति। पूर्वाद्र्धमिदम्। "यत्कृपालेशतस्तस्मै नमोऽस्तु गुरवे सदा" इत्युत्तराद्र्धम्। गुरुकृपालेशादेव श्रमं विना स्वयमेव शास्त्रार्थोऽधिगच्छति = निश्चयविषयो भवति, स्मृतिविषयो भवति, श्रद्धाविषयो भवतीत्यर्थः। अत्र कर्मकर्तुग्र्रामादेः कर्तृस्थक्रियावत्त्वेन कर्मस्थक्रियावत्त्वाऽभावान्न कर्मवत्त्वम्। अतो न कर्मकार्यम् यगादि।किंतु कर्तृकार्यं शबाद्येवेति भावः। ननु कर्मकर्तुग्र्रामादेः प्राप्त्याद्याश्रयत्वेन कर्मस्थक्रियत्वमस्त्येवेत्यत आह-- यत्रेति। यत्रक्रियाकृतो विशेषो = वैलक्षण्यं दृश्यते = प्रत्यक्षमुपलभ्यते, तत्र कर्मणि विद्यमाना क्रिया कर्मस्थक्रियेत्युच्यते इत्यन्वयः। तदुदाह्मत्य दर्शयति--- यथा पक्वेषु तण्डुलेष्विति। "तण्डुलावस्थापेक्षया विक्लित्तिकृतो विशेषो दृश्यते" इति शेषः। अन्यत्रापि क्रियाकृतं वैलक्षण्यमुदाह्मत्य दर्शयति-- यथा वा छिन्नेषु काष्ठेष्विति। "अच्छिन्नापेक्षया वैलक्षण्यं दृश्यते" इति शेषः। "गच्छति ग्राम" इत्यादौ तु नैवमित्याह-- न हीति। ग्रामेष्विति। उपलक्षणमिदम्। पक्वाऽपक्वतण्डुलेषु यथा क्रियाकृतं वैलक्षण्यमुपलभ्यते तथा गताऽगतग्रामे आरूढाऽनारूढहस्तिनि अधिगताऽधिगते स्मृताऽस्मृते श्रद्धिताऽश्रद्धिते च शास्त्रार्थे क्रियाकृतवैलक्षण्यं न दृश्यते इत्यर्थः। ग्रामगमनादौ कर्तर्येव श्रमादिवैलक्षण्यदर्शनादिति भावः। ननु ज्ञानेच्छयोरिव यत्नस्याऽपि कर्तृस्थत्वात्तद्वाचिनः कृञोऽपि कर्ता न कर्मवत्स्यात्। ततश्च "क्रियते घटः स्वयमेवे"ति यगादिर्न सिद्ध्येदित्याशङ्क्य कृञो न यत्नार्थत्वमित्याह-- करोतिरुत्पादनार्थ इति। उत्पत्त्यनुकूलव्यापारार्थक इत्यर्थः। एतच्च भूवादिसूत्रे भाष्ये स्पष्टम्। करोतेरुत्पादनार्थकत्वे तु कर्मस्थक्रियत्वं

तत्कर्तुरुपपादयति-- उत्पत्तिश्च कर्मस्थेति। उत्पन्ने अनुत्पन्ने च वैलक्षण्यस्य प्रत्यक्षत्वादिति भावः। तेनेति। कृञः कर्तुः कर्मस्थक्रियत्वेनैत्यर्थः। तथा च "क्रियते घटः स्वयमेवे"त्यत्र यक्। तासि तु चिण्वदिट्पक्षे कारिता, तदभावे तु कर्तेति सिद्धवत्कृत्याह--करिष्यते घट इत्यादीति। चिण्वदिट्पक्षे "कारिष्यते" इति रूपं, तदभावपक्षे तु "ऋद्धनोः स्ये" इतीट्--करिष्यते। सीयुटश्चिण्वदिटि--कारिषीष्ट। तदभावे तु --कृषीष्ट। लुङि-- अकारि अकृत। नैतदिति। कर्मवत्वं न सिद्ध्येदित्यर्थः। "यततेट इतिवत्सकर्मकत्वमेव न स्यादित्यपि बोध्यम्। एतेनेति। ज्ञानस्य कर्तृस्थत्वव्युत्पादनेनेत्यर्थः। अनुव्यवस्यमानेऽर्थे इति। अर्ते स्वयमेव निश्चयविषयतां संपद्यमाने इत्यर्थः। व्याख्यातमिति। समर्थितमित्यर्थः। कथं समर्थितमित्यत आह-- कर्तृस्थत्वेन यगभावादिति। अनुव्यवसायः = निश्चयः, तत्र कर्मकर्ता अर्थः, स न कर्मस्थक्रियः, अर्थे अनुव्यवसायकृतवैलक्षण्याऽभावात्, किंतु कर्तृस्थक्रिय एव, अनुव्यसायकर्तरि देवदत्ते हर्षादिदर्शनात्। ततश्चकर्मवत्त्वाऽभावान्न यक्।यकि तु कित्वात् "घुमास्थागापाजहातिसा"मिति ईत्वे "अनुव्यवसीयमान" इति स्यादित्यर्थः। ननु यगभावे कथं यकारश्रवणमित्यत आह-- श्यनीति। "षो अन्तकर्मणि" इति धातोरनुव्यवपूर्वादुपसर्गवशेन निश्चयवृत्तेराने कृते श्यनि "ओतः श्यनी" त्योकारलोपे "अनुव्यवस्यमान" इति रूपसिद्धेरित्यर्थः। ननु कर्मवत्त्वाऽभावे "भावकर्मणो" रित्यात्मनेपदाऽभावात्कथमिह लटः शानच्, तस्यात्मनेपदत्वादित्यत आह-- ताच्छील्यादाविति। "ताच्छील्यवयोवचनशक्तिषु चान"शित्यनेन चानशित्यर्थः। तस्य च लादेशत्वाऽभावेन आत्मनेपदत्वाऽभावात् करमवत्त्वाऽभावेऽपि कर्मकर्तरि प्रवृत्तिर्निर्बाधा। तदाह-- न त्वात्मनेपदमिति। ननु "अन्योन्यं स्पृशतः स्वयमेव यज्ञदत्त देवदत्ता"वित्यत्रापि कर्मत्वाद्यगादि स्यात्। तत्र हि स्पृशिः संयोगानुकूलव्यापारार्थकः। उभावपि कर्तारौ, कर्मभूतौ च। स्पर्शनक्रियाया एकत्वेऽपि आश्रयभेदात्तद्भेदमाश्रित्य यज्ञदत्तनिष्ठां स्पर्शनक्रियां प्रति देवदत्तस्य कर्मत्वम्। एवं देवदत्तनिष्ठां स्पर्शनक्रियां प्रति यज्ञदत्तस्य कर्मत्वम्।एवं कर्तृत्वप्युभयोज्ञ्ञेयम्। एवंच उभयोः कर्तृत्वकर्मत्वसत्त्वादेकस्मिन् कर्तरि कर्मणि वा स्पृशिक्रिया सैवेतरस्मिन् कर्तरि कर्मणि वा वर्तते इति कर्मवत्त्वं स्यात्, आश्रयनिबन्धनं भेदमाश्रित्य तुल्यक्रियत्वोपपत्तेः। स्पृष्टाऽस्पृष्टयोरन्योन्यसंयोगकृतहर्षादितदभावर्सनाचच्चेत्यत आह-- सकर्मकाणां प्रतिषेध इति। एककर्मकाणां छिदिभिदिप्रभृतीनां कर्मणः कर्तृत्वविवक्षया अकर्मकाणां कर्तुः कर्मवत्त्वमुक्तम्। ये तु द्विकर्मकाः कर्मणः कर्तृत्वविवक्षायामपि सकर्मका धातवस्तेषां धातूनां कर्मकर्तुः कर्मवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः। अन्योन्यं स्पृशत इति। कर्मवत्त्वे तु यकि तङि च "स्पृश्येते" इति स्यादिति भावः। "सकर्मकाणां प्रतिषेधः इत्यस्योदाहरणान्तरमाह-- अजा ग्रामं नयतीति। अजा ग्रामं स्वयमेव प्राप्नोतीत्यर्थः। अत्र नयनं प्रत्यजायाः कर्मणः कर्तृत्वविववक्षायामपि ग्राममादाय सकर्मकत्वान्न कर्मवत्त्वमिति भाव-। वस्तुतस्तु गते अगते चग्रामे वैलक्षण्याऽभावादेवाऽत्र क्मवत्त्वस्याऽप्राप्तिरिति नेदमस्य वार्तिकस्योदाहरणम्। अत एव भाष्ये अन्योन्यमाश्लिष्यतः, अन्योन्यं स्पृशतः, अन्योन्यं सङ्गृहीत इत्येवोदाह्रतमिति शब्देन्दुशेखरे स्पष्टम्। दुहिपच्योरिति। "कर्मवत्त्व"मिति शेषः। अनयोर्द्विकर्मकत्वादेकस्य कर्मणः कर्तृत्वविवक्षायामपि अन्यकर्मणा सकर्मकत्वात्पूर्ववार्तिकेन कर्मवत्त्वनिषेधे प्राप्ते प्रतिप्रवसोऽयम्।

तत्त्व-बोधिनी

कर्मवत्कर्मणा तुल्यक्रियः ४८६, ३।१।८७

कर्मवत्कर्मणा। वत्करणं किमर्थम्?। यथा अब्राह्दत्ते प्रयुज्यमानो ब्राह्दत्तशब्दः ब्राह्दत्तवदित्यर्थं वदति तथा कर्मेत्युच्यमानेऽपि कर्मवदित्यर्थलाभात्। सत्यम्। कर्मणा तुल्यक्रियः कर्ता कर्मेत्युच्यमने कर्मसंज्ञक इत्यर्थः स्यात्। तथा हि सति अकर्मकव्यपदेशाऽभावाद्भावे लकारो न स्यात्-- किं तु कर्मणि स्यात्-- "पच्यते ओदनः भिद्यते काष्ठ"मिति। यद्यप्ययं प्रयोगः सिद्धान्ते इष्ट एव तथापि "पच्यते ओदनेन, भिद्यते काष्ठेने"ति भावे न स्यादिति बोध्यम्। कर्मशब्देनाऽत्र

कर्मस्थक्रिया लक्ष्यत इत्याह-- कर्मस्थयेति। कर्मकारकस्थयेत्यर्थः। "कर्तरि श"बित्यतः कर्तरीत्यनुवर्त्य प्रथमया विपरिणम्यते। सच विशेष्यस्तदाह-- तुल्यक्रियः। कर्तेति। कार्यातिशेधोऽयमिति। यद्यपि शास्त्रातिदेशेऽपि लक्ष्यं सिध्यति तथापि शास्त्रस्यापि कार्यार्थतया मुख्यत्वात्कार्यातिदेश एवाश्रितः। भावे लकारे इति। तत्र कर्तुरनभिहितत्वादिति भावः। द्विलकारकादिति। "व्यत्ययो बहुललँ-ल्लिड()आशिष्य" क्ङिति संहितया पाठेऽनुस्वारस्य परसवर्णेन जाते लकारे तस्योपरि लद्वयमित्यर्थः। तेन "लकारवाच्यः कर्ता तत्रैव कर्मवत्त्वमिति व्युत्पादनस्य फलमाह-- अत एवेति। न भवन्तीति। लकारेणैव कर्मकर्तुरुपस्थानात्कृत्यादीनां प्रसक्तिर्नास्ति, उक्तार्थानामप्रयोगात्। लविधेः पूर्वं तु सुतरां नास्ति, लकारोपस्थाप्यकर्तुरभावेन कर्मत्त्वाऽभावादिति भावः। अत्रेदं बोध्यं--- "कृत्यक्तखलर्था" इत्यत्र क्तग्रहणं त्युक्तमुचितं , तस्य कर्मकर्तरि इष्टत्वात्-- "भिन्नः कुसूलः स्वयमेवे"ति। वक्ष्यति च स्वयमपि--"सिनोतेग्र्रासकर्मकर्तृकस्ये"ति वार्तिके-- "सिनो ग्रासः स्वयमेवे"ति। ननु "गत्यर्थाऽकर्मके"त्यत्राऽविवक्षितकर्माणोऽकर्मका इति न गृह्रन्ते, दत्तवान् पक्ववानित्यर्थे दत्तः पक्व इत्यापत्तेरिति चेत्। अत्राहुः-- "सिनोतेग्र्रासकर्कर्तृकस्ये"ति निष्ठातकारस्य नकारविधानसामथ्र्यादविवक्षितकर्माणोऽपि क्वचिद्गृह्रन्ते। अन्यथा निष्ठातकारस्तत्र न लभ्येत, तेन "सिनो ग्रासः स्वयमेव, "भिन्नः कुसूलः स्वयमेवे"त्यादि सङ्गच्छते इति। अत्र केचिद्वदन्तिलकारवाच्यस्यैव कर्तुः कर्मवत्त्वे "कर्मवत्कर्मणे"त्यत्र वद्ग्रहणं व्यर्थम्। न च कर्तुः कर्मसंज्ञायां भवे लकारो न स्यादित्युक्तमिति वाच्यं, कर्मणः कर्तृत्वविवक्षायां धातुरकर्मक इत्यकर्मकात्कर्तरीव भावे लकारस्य निर्बाधत्वात्। लकारवात्यस्य कर्मसंज्ञायामपि केवलकर्तुस्तदनभ्युपगमात्। न हि भावे लकारः कर्तारं वक्ति। न च वत्करणाऽभावे कर्तुः कर्मसंज्ञायां कर्तृव्यपदेशाऽभावान्नमते दण्ड इत्यत्र "न दुहरुआउनमा"मिति यको निषेधेऽपि शब्न स्यात्, वत्करणे कृते तु कर्तृकार्यमपि स्यादिति वाच्यम्, एकसंज्ञाधिकारादन्यत्र संज्ञाद्वयसमावेशादिष्टसिद्धेरिति। न तु ततुल्येति। तुल्यत्वं हि साद्दश्यम्। तच्च भेदनिबन्धनम्, नच प्रकृते भेदोऽस्ति,कर्मणः कर्तृत्वविवक्षायां कर्मस्थफलरूपक्रियाया एव कर्तृस्थत्वात्, तथा च सूत्रमिदमसमञ्जसमिति भावः। वास्तविकभेदाभावेऽप्यौणपाधिकभेदोऽस्तीत्याह-- कर्मत्वेति। कर्मत्वकर्तृत्वाऽवस्थयोर्भेदस्तद्भेदोपाधिकरमवस्थभेदसमानाधिकरणं क्रियाभेदमाश्रित्येत्यर्थः। एवं चावस्थाभेदेन क्रियाबेदात्कर्मस्थक्रियातुल्यक्रियत्वं कर्तुरस्तीति भावः। करणाधिकरणाभ्यामिति। "तुल्यक्रिय कर्ते"त्येतावत्युच्यमाने "असिना छिनत्ति" "स्थाल्यां पचती"त्यादौ करणाधिकरणयोर्यो व्यापारः स एवेदानामसिश्छिनत्ति स्थाली पचतीत्यादौ कर्तृस्थ इत्यतिप्रसङ्गः स्यात्, तन्माभूदित्यथः। नच कर्मत्वाऽवस्थायां विक्लित्यादिरिव करणत्वाद्यवस्थायामपि स्थाल्या व्यापारो वस्तुतः सन्नपि धातुना नोपात्त इति कथमतिप्रसङ्ग इति वाच्यं, साद्दश्यप्रतियोगिक्रियाया धातूपात्तत्वेनाऽविशएषितत्वात्। न ह्वेतस्मिन्सूत्रे धातूपात्तक्रियया तुल्यक्रिय इत्युक्तमस्ति येनातिप्रसङ्गो न भवेत्। ननु तुल्यक्रियः कर्ता कर्मवद्भवतीत्युक्ते केनेत्याकाङ्क्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्यासत्त्या कर्मणेति लभ्यत एवेत्यत आह--किं चेति। अधिगच्छतीत्यादिश्लोकस्योत्तराद्र्धन्तु "यत्कृपालेशतस्तस्मै नमोऽस्तु गुरवे सदा"। ननु फलं व्यापारश्च धात्वर्थः, स एव क्रियाशब्दवाच्यः। तत्र व्यापाराश्रयः कर्ता, फलाश्रयस्तु कर्म। एं च पचिभिदिप्रभृतीनां , गमिरुहिप्रभृतीनां च सकर्मकत्वे फलस्य कर्मनिष्ठत्वे च तुल्ये कर्तृस्थभावका गम्यादय इति कथं ज्ञातव्या इत्यत आह-- यत्र र्मणीति। ग्रामेष्विति। आरूढाऽनारूढहस्तिषु अधिगतानधिगतशास्त्रार्थेष्वित्यादावपि वलक्षण्यं नोलभ्यत इति बोध्यम्। कारिष्यते इति। "स्यसिच्सीयु"डिति वैकल्पकश्चिण्वदिट्। पक्षे "ऋद्धनोः स्ये" इतीट्। करिष्यते। एवं लृङि अकारिष्यत। सिचश्चिण्वदिटि-- अकारिष्ट। पक्षे अकृत। सीयुटश्चिण्वदिटि--कारिषीष्ट। पक्षे--कृषीष्ट। तासि तु कारिता कर्ता। यक्चिणोस्तु क्रियते घटः स्वयमेव, अकारीत्यादि। नैतत्सिध्येदिति। "कर्मवत्कर्मणे"ति कर्मवत्त्वं न सिध्येदित्यर्थः। एतेन पचति पाकं करोतीति विवकरणादाख्यातस्य यत्ने शक्तिरित नैयायिकोक्तिः पारस्ता। करोतेर्यत्नार्थत्वे तु यतते इति वत्सर्मकतापि न स्यादिति। एतेनेति। ज्ञानसय् कर्तृस्थत्वाभ्युपगमेनेत्यर्थः। यगभावादिति। सति तु यक्यनुव्यवसीयमान इति स्यादिति भावः। ओल्लोप इति। "ओतः श्यनी"त्यनेन। ननु

कर्मवत्त्वाऽभावे कथमिह शानजित्यत आह--ताच्छील्यादाविति। न त्विति। शानज्न भवतीत्यर्थः। "देवदत्तयज्ञदत्तावन्योन्यं स्पृशत" इत्यत्र तयोरेव कर्मत्वं कर्तृत्वं चास्तीति कर्मस्थक्रियायाः कर्तृस्थत्वात्कर्मवद्भावप्राप्तिमाशङ्क्याह-- सकर्मकाणामिति। न चाऽत्र "देवदत्तो यज्ञदत्तं स्पृशति, यज्ञदत्तस्तुदेवदत्त"मिति क्रियाभेदोऽवश्यमाश्रयितव्यः। तथा च स्वनिष्ठां क्रियां प्रति कर्तृत्वम्, इतरक्रिया प्रति तु कर्मत्वं भवति। अन्यथा द्वयोरपि कर्तृत्वमेव स्यात्िमौ गङ्गां स्पृशत" इत्यत्र यथा। एवं च कर्मस्थक्रियायाः कर्तृस्थत्वाऽभावात्कर्मवद्भावो न प्राप्नोति। न च संयोगस्य द्विष्ठत्वात्कर्मस्थफलस्य कर्तृस्थत्वाऽच्चास्त्येवेति शङ्क्यं, तत्तन्निरूपितसंयोगस्य भिन्नत्वात्। अन्यथा फलव्यापारयोरेकाश्रयत्वे सकर्मकत्वमेव न लभ्येत्। किंच रुहिगम्योः कर्तृस्थक्रियत्वादारोहते हस्ती, गच्छति ग्राम इत्यत्र कर्मवद्भावो नेति भाष्यकैयटादिसंमतम्। तथाच संयोगरूपफलस्य सर्वत्र तुलयतया रुहिगमिभ्यां स्पृशेर्वैषम्यं दुरुपपादमिति नाऽत्रकर्मवत्त्वप्रसक्तिरित्युदाहणान्तरमाह-- अजा ग्रामं नयतीति। इह प्रतिषेधाऽभावे यक् स्यात्, क्रियाफलस्याऽकर्तगामित्वेऽप्यात्मनेपदं स्यादिति भावः। नन्विहापि कर्मणि क्रियाकृतो विशेषो नोपलभ्यत इति कर्मस्थक्रियत्वं दुरुपपादमिति चेत्। अत्राहुः-- क्रियाकृतविशेषोपलम्भाऽनुपलम्भवदुद्देश्यताऽपि नियामिका। यत्र क्रमस्थांऽशस्योद्देशयता सा कर्मस्थक्रिया, यत्र तु व्यापारांऽशस्यसा कर्तृस्थेति। तथा हि--दर्शनारोहणाभ्यां विषये न्यग्भूतेच विशेषानुपलम्भात्कर्तृस्थता। उद्देशानुरोधाच्च अहं पश्येयमित्युद्देशो, न त्वयं विषयो भवत्विति। एवमहमुपरिगच्छेयमित्युद्देशो न तु हस्तनो न्यग्भावो भवत्विति। ऊध्र्वदेशसंयोगानुकूलव्यापारविशेष उपरिगमनं, तदेव रुहेरर्थो न तु न्यग्भावमात्रम्। वृक्षस्यशाखां हस्ताभ्यामवनमयत्यपि भूमिष्ठे पुर#उष आरोहतीत्यप्रयोगात्। अतएव हि "यद्धितुपरं छन्दसी"त्यत्र भाष्यं "रुहिर्गत्यर्थ" इति। अत एव चारोहन्ति हस्तिनं हस्तिपकास्तानारोहयति महामात् इत्यादिप्रोगेष्वणौ कर्तुर्णौ क्मत्वं सङ्गच्छते। पचिभिद्योस्तु विक्लित्तिर्द्विधाभवनरूपो विशेषः कर्मणि दृष्टस्तदुद्देशेनैव कारकव्यापार इति कर्मस्थक्रियत्वात्पच्यते ओदनः, भिद्यते काष्ठमित्यत्र कर्मवद्भावो भवत्येव। अजा ग्रामं नयतीत्यत्रापि कर्मस्थांऽशस्य संयोगस्योद्देश्यता, न तु व्यापारांशस्येति कर्मवद्भावे प्राप्ते प्रतिषेधोऽयमावश्यक इति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

तपस् तपःकर्मकस्य एव ३।१।८८

तप सन्तापे, अस्य कर्ता कर्मवद्भावति, स च तपःकर्मकस्य एव न अन्यकर्मकस्य। क्रियाभेदाद् विध्यर्थम् एतत्। उपवासादीनि तपांसि तापसं तपन्ति। दुःखयन्ति इत्यर्थः। स तापसस्त्वगस्थिभूतः स्वर्गाय तपस्तप्यते। अर्जयति इत्यर्थः। पूर्वेण अप्राप्तः कर्मवद्भावो विधीयते। तप्यते तपस्तापसः। अतप्त तपस्तापसः। तपःकर्मकस्य एव इति किम्? उत्तपति सुवर्णं सुवर्णकारः।

न्यासः

तपस्तपः कर्मकस्यैव। , ३।१।८८

"तपः कर्मकस्यैव" इति। एवकारो विस्पष्टार्थः; व्यवच्छेदफलत्वात्, सर्ववाक्यानामित्येवं तदर्थस्य लब्धत्वात्। यदि ह्तपःकर्मकस्यापि स्यात्, तपःकर्मग्रहणमनर्थकं स्यात्। "नान्यकर्मकस्य" इत्यवधारणेन यद्व्यवच्छिन्नं तद्दर्शयति। "क्रियाभेदात्" इति। क्रियाविसदृशत्वादित्यर्थः। पूर्वं हि क्रियासादृश्ये कर्मवद्भावो विहित इति वैसदृश्येन प्राप्नोति, अतो विध्यर्थमेतत्। अत एव कर्मस्थया क्रियया तुल्यत्वं न सम्भवतीति "कर्मणा तुल्यक्रियः" ३।१।८७ इत्येतन्नानुवत्र्तते। "उपवासादीनि" इत्यादिना तमेव क्रियाभेदं दर्शयति। उपवासादिशब्देन तपः शब्दस्यार्थमाचष्टे। "दुःखयन्तीत्यर्थः" इत्यनेन तापसस्य कर्मावस्थायां तपेर्दुःखनमर्थ इति दर्शयति। "स्वर्गाय तपस्तप्यते" इति। तपःशब्दोऽत्र ज्ञानविषेय

स्वर्गाद्यवाप्तिहेतौ वर्त्तते। "अर्जयीत्यर्थः"इत्यनेन तापसस्य कर्त्रवस्थायां तपिरर्जने वर्त्तत इति दर्शयति। निवर्त्तयतीत्यर्थ इति, न दुःखयतीति; तपसोऽचेतनत्वाद्दुःखासम्भवात्॥ "उत्तपति सुवर्णम्" इत्यादौ सुवर्णकर्मकत्वात् तपेः कर्मवद्भावो न भवति॥

बाल-मनोरमा

तपस्तपः कर्मकस्यैव ५९५, ३।१।८८

तपस्तपः कर्मकस्यैव। आद्यं तप इति षष्ठ()न्तम्। तपः कर्मकस्यैव तपधतोरिति लभ्यते। "कर्त्तरिश"बित्यतः "कर्तरीत्यनुवृत्तं प्रथमया विपरिणम्यते। "कर्मवत्कर्मणे"त्यतः कर्मवदित्यनुवर्तते इति मत्वा सूत्रशेषं पूरयति -- कर्ताकर्मवदिति। विध्यर्थमिदमिति। एतच्चानुपदमेव उदाहरणव्याख्यावसरे स्पष्टीभविष्यति। ननु विद्यर्थत्वे एवकारो व्यर्थ इत्यत आह-- एवकारस्त्विति। तप्यते तपस्तापस इति। अत्र तपिरर्जनार्थक इत्याह-- अर्जयतीत्यर्थ इति। प्राजापत्यचान्द्रायणादिकृच्छ्राद्यात्मकं तपः संपादयतीत्यर्थः। मुख्यकर्तरि लः। मुख्यकर्तरि लः। संपादनस्य तापसात्मककर्तृस्थत्वात्तपोरूपकर्मस्थत्वाऽभावात् "कर्मवत्कर्मणे"त्यप्राप्तं कर्मवत्त्वमनेन सूत्रेण विधीयते। तेन यगात्मनेपदादि। यदा तु तदपि दुःखजननात्मके संतापे वर्तते तदा "तापसं तपस्तपती"त्येव भवति। दुःखयतीत्यर्थः। अत्र मुख्यकर्तृ तपः। तापसस्तु कर्म। अत्रापि दुःखजननव्यापारस्य तपोरूपकर्तृस्थतया तापसरूपकर्मस्थत्वाऽभावात् "कर्मवत्कर्मणे"त्यनेन कर्मवत्त्वं न भवति। तपः कर्मकत्वाऽभावादनेनापि न कर्मवत्त्वम्। अतो यगादि कर्मकार्यम्। अथ लुङि अतप्तेत्यत्र कर्मवत्त्वाच्चिणमाशङ्क्य आह-- तोपऽनुतापे चेति चिण्निषेधात्सिजिति। तस्य "झलो झली"ति लोपे परिनिष्ठितमाह-- अतप्तेति। उत्तपति सुवर्णं सुवर्णकार इति। अत्र तपः कर्मकत्वाऽभावान्न कर्मवत्त्वमपि भावः। भाष्ये तु एवकारादिदं सूत्रं नियमार्थमित्युक्तमिति शब्देन्दुशेखरे प्रपञ्चितमेतत्। वृत्त्यनुसारिण इत्यनेन भाष्यविरोधः सूचित इत्यलम्। "दुहिपच्योर्बहुल"मिति कर्मवत्त्वविधिस्थदुहिप्रसङ्गात् "न दुहस्नुनमामिति सूत्रमुपन्स्तं प्राक्। इदानां सिंहावलोकनन्यायेन स्नु धातुः क्षीरप्ररुआवणसूत्रमुपन्यस्यति- न दुहस्नुनमां यक्चिणाविति। तत्र स्नुधातोरुदाहरति-- प्रस्नुते इति। स्नुधातुः क्षीरप्ररुआवणविषये उत्कण्ठीकरणे वर्तते। वत्सो गां प्रस्नौतीति मुख्यकर्तरि लकारे वत्सो गां क्षीरप्ररुआवणविषये उत्कष्ठयतीत्यर्थः। अन्तर्भावितण्यर्थोऽत्र स्नुधातुः। अत्र गौः कर्म। उत्कण्ठव्यापारस्तु कर्तृभूतवत्सनिष्ठः। उत्कण्ठा तु गोरूपकर्मनिष्ठा। गोः कर्मणः कर्तृत्वविवक्षायां तु-- प्रकृते गौः। स्वयमेव क्षीरप्ररुआवणविषये उत्कण्ठावतीत्यर्थः। तत्र उत्कण्ठा पूर्वं कर्मप्राप्तेऽनेन निषेधः। प्रास्नाविष्टेति। अत्र कर्मवत्त्वात्प्राप्तश्चिण् न। किंतु चिण्वदिटौ पक्षे स्तः। चिण्वदिडभावे तु "स्नुक्रमो" रिति निमाद्वलादिलक्षण इण्न। तदाह-- प्रास्नोष्टेति। णम उदाहरति-- नमते दण्ड इति। नमति दण्डं कश्चित्। नमयतीत्यर्थः। कर्मणः कर्तृत्वविक्षायां तु "नमते दण्डः"। अत्र कर्मवत्त्वेऽपि न यक्। अनंस्तेति। अत्र कर्मवत्त्वेऽपि न चिण्। ननु णमधातोः प्रह्वीभावार्थकस्याऽकर्मकत्वात्कर्यवत्त्वाऽप्रसक्तेर्यक्चिणोर्न प्रसक्तिरित्यत आह-- अन्तर्भावितण्यर्थोऽत्र नमिरिति। धातूनामनेकार्थकत्वादिति भावः। यक्चिणोरिति। "न दुहस्नुनमा"मिति यक्चिणोः प्रतिषेधसूत्रे दुहस्नुनमां, हेतुमण्णिश्रिब्राऊञामिति च वाच्यमित्यर्थः। कारयते इति। "स्वयं देवदत्त" इति शेषः। करोति देवदत्तः, तं प्रेरयति यज्ञदत्त इति ण्यन्तान्मुख्यकर्तरि लकारः। अत्र ण्यन्तकर्मणो देवदत्तस्य यज्ञदत्तप्रेरणमनपेक्ष्य कर्तृत्वविवक्षायां कर्मकर्तरि लकारः। कर्मवत्त्वेऽपि तङेव, न यगिति भावः। अचीकरतेति। अत्र कर्मवत्त्वेऽपि न चिण्, "णिश्रीति चङेव। उच्छ्रयते दण्ड इति। "स्वयमेवे"ति शेषः। "दण्डमुच्छ्यति कश्चि"दिति मुख्यकर्तरि लकारः। तत्र कर्मणो दण्डस्य कर्तृव्यापारमनपेक्ष्य कर्तृत्वविवक्षायां कर्मकर्तरि लकारः। कर्मवत्त्वेऽपि न यक्, तङेव। उदशिश्रियतेति। कर्मवत्त्वेऽपि चिणभावात् "णिश्री"ति चङ्। ननु "कारिष्यते" इत्यत्र कथं चिण्वदिटौ, ण्यन्तस्याऽजन्तस्य उपदेशाऽभावादित्यत आह-- चिण्वदिट् तु स्यादेवेति। "स्यसिच्सीयुट्तासिषुट इत्यत्र हि उपदेशे अजन्तस्येति नाऽर्थः, किंतु उपदेशे योऽच् तदन्तस्येत्यर्थः। तथा

च णिजन्तस्योपदेशाऽभावेऽपि णेरुपदेशसत्त्वान्न दोष इति भावः। उच्छ्रायिष्यते इति। श्रिञ उपदेशे योऽच् तदन्तत्वाच्चिण्वदिटौ। ब्राऊते कथेति। "स्वयमेवे"ति शेषः। कथां ब्रावीति कश्चिदित मुख्यकर्तृलकारे कथा कर्म, तस्य पुरुषप्रयत्नाऽविवक्षायां क्मकर्तरि लकारः। कर्मवत्त्वात्तङ्। न कथां ब्रावीति कश्चिदिति मुख्यकर्तृलकारे कथा कर्म, तस्य पुरुषप्रयत्नाऽविवक्षायां कर्मकर्तरि लकारः। कर्मवत्त्वात्तङ्। न यक्। अवोचतेति। कर्मवत्त्वेऽपि न चिण् किंतु "ब्राऊवो वचिः" "अस्यतिवक्तिख्यातिभ्योऽङ्ट "वच उ" मिति भावः। उच्चारणएन शब्देषु प्राकट()रूपविशेषदर्शनात् कर्मस्थक्रियत्वं बोध्यम्। णिश्रन्थीति। ण्यन्तस्ये श्रन्थेः ग्रन्थेः ब्राऊञ आत्मनेपदविधावकर्मकस्य च यक्चिणोः प्रतिषेधो भारद्वाजीयाऽभिमत इत्यर्थः। अत्र णीति सामान्यस्य ग्रहणं न तु हेतुमण्णिच एव। ततश्च णिङन्तस्यापि न यक्चिणाविति मत्वाऽऽह--पुच्छमुदस्यति उत्पुच्छयते गौरिति। "पुच्छादुदसने इति णिङ्। नन्वत्र उदसने पुच्छं कर्म, गौर्मुख्यकत्र्री, नतु कर्मकत्र्री।ततश्च नाऽत्र यक्चिणोः प्रसक्तिरित्यत आह-- अन्तर्भावितण्यर्थतायामिति। "उदस्यती"त्यस्य उदासयतीत्यन्तर्भावितण्यर्थताश्रयणे उत्पुच्छयते गां देवदत्त इत्यत्र गौः कर्म, तस्यगोरूपकर्मणः प्रेयितृपुरुषप्रयत्नानपेक्षया कर्तृत्वविवक्षायां कर्मकर्तरि लकारे उत्पुच्छयते गौरिति भवतीत्यर्थः। स्वयमेव पुच्छमुदस्यतिगौरिति बोधः।उदपुपुच्छतेति। अत्र न चिण्। श्पचङाविति। "उत्पुच्छयते गौ"रित्यत्र यकः प्रतिषेधाच्छप्। उदपुपुच्छतेत्यत्र चिणः प्रतिषेधाच्चङित्यर्थः। ननु "श्रन्थ मोक्षणे, ग्रन्थ ग्रथने" इति श्रन्थिग्रन्थ्योश्चौरादिकतया। णिग्रहणेनैव सिद्धेः पुनग्र्रहणं वयर्थमित्यत आह-- श्रन्थिग्रन्थ्योरिति। ग्रन्थति ग्रन्थमिति। रचयतीत्यर्थः। श्रन्थति मेखलां देवदत्त इति। विरुआंसयतीत्यर्थः। "देवदत्त" इत्युभयत्रान्वेति। अत्र कर्मणो ग्रन्थस्य, मेखलायाश्च कर्तृत्वविवक्षायं ग्रन्थते ग्रन्थः, श्रन्थते मेखलेति च भवति। स्वयमेव ग्रन्थरचनाश्रयः, रुआंसनाश्रयश्चेत्यर्थः। तत्र कर्मवत्त्वेऽपि न यगिति भावः। अग्रन्थिष्ट, अश्रन्थिष्टेत्यत्र च न चिण्। क्रैयादिकयोस्त्विवति। कर्मवत्त्वेऽपि तयोर्यकि निषिद्धे श्नाविकरण इति भावः। आत्मनेपदविधावकर्मको यस्तमुदाहरति-- विकुर्वते सैन्धवा इति। सैन्धवाः = अ()आआः। अत्र विपूर्वः कृञ् वल्गने वर्तते, उपसर्गवशात्। तदाह-- वल्गन्तीति। शब्दं कुर्वन्तीत्यर्थः। धात्वर्थेनोपसङ्ग्रहादकर्मकोऽयम्।मुख्यकर्तरि लकारः। वेरिति। "वेः शब्दकर्मणः" इत्यन्तरं पठितेन "अकर्मकाच्चे"ति सूत्रेण परगामिन्यपि फेल तङित्यर्थः। नन्वस्याऽकर्मकतया अ()आआनां कर्मकर्तृत्वाऽभावान्न यकः प्रसक्तिरित्यत आह-- अन्र्तभावितेति।विपूर्वकः कृञ् शब्दं कुर्वाणस्य प्रेरणे यदा वर्तते तदा विकुर्वते सैन्धवानिति भवति। अ()आआन् शब्दायतीत्यर्थः। तत्र सैन्धवानां कर्मणां पुरुषप्रेरणाऽविवक्षया कर्तृत्वविवक्षायां विकुर्वते सैन्धवा इति भवति। वल्गन्तीत्यर्थः। अत्र सैन्धवानां कर्मकर्तृ()णां कर्मवत्त्वेऽपि न यगित्यर्थः। व्यकारिष्टति। चिणि निषिद्धे ण्यन्तत्वाऽभावाच्चङभावे सिचश्चिण्वदिटि वृद्दिरिति भावः। चिण्वदिडभावपक्षे आह-- व्यकृतेति। "ह्रस्वादङ्गा"दिति सिचो लोपः।

तत्त्व-बोधिनी

तपस्तपः कर्मकस्यैव ५४०, ३।१।८८

अतप्तेति। तपस्तापस इत्यनुषज्यते। न दुहस्नु। ननु दोग्धिपर्थायत्वेन रुआऔतेरपि द्विकर्मकत्वाद्गोरूपकर्मणः कर्तृत्वविवक्षायामपि पयोरूपकर्मणो विद्यमानत्वात्सकर्मकाणां प्रतिषेधेन यक्()चिणोः प्राप्तिरेव नास्तीति चेत्। अत्राहुः-- वत्सादियोगेन क्षीरप्ररुआवणानुकूला उत्कण्ठा स्नुधातोरर्थः। सा च गोनिष्ठा। स्नु प्ररुआवणे इत्यत्रापि करणे ल्युट्। प्ररुआऊयतेऽनेनेति प्ररुआवणं। सा चोत्कण्ठा। "स्वयं प्दुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनीटति प्रयोगे उपस्नुता = उत्कण्ठितेत्यर्थः। वत्सो गां प्रस्नौति = उत्कण्ठयति। अन्तर्बावितण्यर्थोऽत्र स्नौतिः। गोः कर्तृत्वविक्षायां प्रस्नुते गौरिति। प्रारस्नाविष्टेति। चिण्वदिट्। न च चिणि निषिद्धे चिण्वदिडपि न स्यादिति शङ्क्यं, "चिण्व"दित्यनेन हि चणीव कार्यमतिदिश्यते। न च चिण्नेत्युक्त्या सोऽतिदेशो निषेद्धुं शक्यते येन चिण्वदिटो निषेधः स्यात्। प्रारुआओष्टेति। "स्नुकमोरनात्मनेपदनिमित्ते" इति नियमाद्वलादिलक्षण इण्न। नमते दण्ड इति। इह

नमिताऽनमितयोर्विशेषदर्शनादुद्देशानुरोधाच्च कर्मस्थक्रियत्वमस्ति। कर्मस्थांशस्य उद्देश्यता न तु तदनुकूल व्यापारस्येति कर्मवद्भावस्य प्राप्तिरस्तीति भावः। अचीकरतेति। चिणि प्रतिषिद्धे "णिश्री"ति चङ्।

* णिश्रन्थिग्रन्थिब्राऊञात्मनेपदाऽकर्मकाणामुपसङ्ख्यानम्। णिश्रन्थीति। णेः सामान्यग्रहणस्य फलमाह-- पुच्छमुदस्यतीत्यादि। "पुच्छभाण्डे"ति णिङ्। आत् मनेपदविधौ योऽकर्मकस्तमुदाहरति-- विकुर्वते सैन्धवा इति। कुषिरञ्जोः। "न दुहस्नुनमा"मित्यतो नेति वर्तते। तदाह--न यगिति। किन्तु श्यन्निति। तस्मिन्नेव विषय इति भावः। "न गिरा गिरेति ब्राऊयादेरं कृत्वोद्गेय"मित्यत्र गिरापदं प्रतिषिध्येरापदं विधीयमानं गिरापदस्थान एव यथा भवत्येवमिहापि यकः प्रतिषेदं कृत्वा विधीयमानः श्यन् तदीयस्थान एव भवत्यतो व्याचष्टे--- यगविषये तु नास्येति। श्यना सन्नियोगशिष्टं परस्मैपदंश्यनभावे न भवतीत्यात्मनेपदमेवोदाहरति-- कोषिषीष्टेति। कोषिष्यते। चुकुषे। कोषिष्यते। अकोषि। अकोषिष्यत। ररञ्जोरङक्ष्यते। अरञ्जि। अरङ्क्ष्यत। इत्याद्यपि ज्ञेयम्। श्यन्पक्षे कुष्यन्तीत्यत्र नित्यं नुम्,। यक्पक्षे तु "आच्छीनद्यो"रिति विकल्पः। स्वरे विशेषोऽप्यस्त्येव।इह प्रकरमे "भिद्यते काष्ठं स्वयमेवे"ति वृत्त्यादौ प्रयुज्यते तत्र स्वयंशब्दः करणार्थको ज्ञेयः। आत्मना करणेनेति। कत्र्रर्थत्वे तु कर्मणि लः स्यात्। स्पष्टं चेदं कैयटादौ।

इति तत्त्वबोधिन्याम् कर्मकर्तृप्रक्रिया।

अथ पूर्वकृदन्ते कृत्यप्रकरणम्।

समस्तजगतामीशौ जगदानन्दकारकौ।

जगतीजनकौ वन्दे पार्वतीपरमे()आरौ॥१॥

"कृदिति"ङिति तिङ्()भिन्नप्रत्ययस्य कृत्संज्ञाकरणात् कृतां तिङ्ज्ञानाधीनज्ञानत्वात्तिङ्निरूपणानन्तरमेव कृतां निरूपणमुचितमिति तिङो निरूप्य कृतो निरूपयितुमाह--

---

सूत्रम्
काशिका-वृत्तिः
न दुहस्नुनमां यक्चिणौ ३।१।८९

दुह सनु नम् इत् येतेषं कर्मकर्तरि यक्चिणौ कर्मवद्भावापदिष्टौ न भवतः। दुहेरनेन यक् प्रतिषिध्यते। चिण् तु दुहश्च ३।१।६३ इति पूर्वम् एव विभाषितः। दुग्धे गौः स्वयम् एव। अदुग्ध गौः स्वयम् एव। अदोहि गौः स्वयम् एव। प्रस्नुते गौः स्वयम् एव। प्रास्नोष्ट गौः स्वयम् एव। नमते दण्डः स्वयम् एव। अनंस्त दण्डः स्वयम् एव। यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञ्। आत्मनेपदाकर्मकाणाम् उपसङ्ख्यानम्। कारयति कटं देवदत्तः। कारयते कटः स्वयम् एव। अचीकरत् कटं देवदत्तः। अचीकरत कटः स्वयम् एव। उत्पुच्छयते गां गोपः। उत्पुच्छयते गौः स्वयम् एव। उदपुपुच्छत गौः स्वयम् एव। श्रथ्नाति ग्रन्थं देवदत्तः। श्रथ्नीते ग्रन्थः स्वयम् एव। अश्रन्थिष्ट ग्रन्थः स्वयम् एव। ग्रथ्नाति श्लोकं देवदत्तः। ग्रथ्नीते श्लोकः स्वयम् एव। अग्रन्थिष्ट श्लोकः स्वयम् एव। ब्रवीति श्लोकं देवदत्तः। ब्रूते श्लोकः स्वयम् एव। अवोचत् श्लोकं देवदत्तः। अवोचत श्लोकः स्वयम् एव। आत्मनेपदविधाने ऽकर्मकाणाम् आहन्ति माणवकं देवदत्तः। आहते माणवकः स्वयम् एव। आवधिष्ट मानवकः स्वयम् एव, आहत इति वा। विकुर्वते सैन्धवाः स्वयम् एव। व्यकृषत सैन्धवः स्वयम् एव।
न्यासः

न दुहस्नुनमां यक्चिणौ। , ३।१।८९

"कर्मकत्र्तरि यक्चिणानुपदिष्टौ न भवतः" इति। कर्मकत्र्तरीति विशेषणम्। "कर्मवत् कर्मणा तुल्यक्रियः" ३।१।८७ इति प्राप्तयोर्यक्चिणोरयं प्रतिषेधः, न तु चिण्वद्भावकर्मणोः। "सार्वधातुके यक्" ३।१।६७ इति च। शुद्धे कर्मणि यौ प्राप्तौ तयोरपीति दर्शनार्थम्। एतच्च "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति परिभाषया लभ्यते। "दुग्धे" इति। यकि प्रतिषिद्धे शप्, तस्यादादित्वाल्लुक्। पूर्ववद् घत्वधत्वजश्त्वानि। "अदुग्ध" इति। लुङ्। चिणि प्रतिषिद्धे क्सः, तस्य "लुग्वा" ७।३।७३ इत्यादिना लुक्। "प्रस्नुते" इति। "{ष्णु प्ररुआवणे" धा।पा।} स्नु प्ररुआवणे" (धा।पा।१०३८), पूर्ववच्छपो लुक्। "प्रास्नोष्ट" इति। लुङ्। "नमते" इति। "णम प्रह्वत्वे शब्दे" (धा।पा।९८१)। अन्तर्भावितण्यर्थोऽत्र नमिः कर्मणि वत्र्तत इति वेदितव्यम्। एवं हि कर्मस्थक्रियो भवति; अन्यथा कर्त्तृस्थक्रियत्वात् प्राप्तिर्नास्त्येवेति प्रतिषेधोऽनर्थकः स्यात्। अन्तर्भावितव्यर्थस्तु कर्मस्थक्रियो भवति-- नमति दण्डं देवदत्तः। "नमते दण्डः स्वयमेव" इति। यथा ण्यन्तावस्थायाम्। "यक्चिणोः प्रतिषेधे" इत्यादि। यक्चिणोः प्रतिषेधे कत्र्तव्ये श्रन्थ्यादीनामपि तस्य प्रतिषेधस्योपसंख्यानम् = प्रतिपादनं कत्र्तव्यमित्यर्थः। प्रतिपादनं तु नेति योगविभागादिष्टसिद्ध्यर्थात् कत्र्तव्यम्। णीति हेतुमण्णिच इतरस्य च णेग्र्रहणम्। हेतुमण्णिच्। "कारयति" कटं देवदत्तः। कारयते कटः स्यवमेव" इति। यकि प्रतिषिद्धे शप्। "अचीकरत कटः स्वयमेवट इति। चिणि प्रतिषिद्धे "णिश्रि" ३।१।४८ इत्यादिना चङ्,णौ चङ्युपधाया ह्रस्वः" ७।४।१ इति ह्रस्वः। "चङि" ६।१।११ इति द्विर्वचनम्, अभ्यासकार्यम्। इतरो णिः-- "पुच्छभाण्ड चीवराण्णिङ" ३।१।२०। "उत्पुच्छयते गां गोपः। उत्पुच्छयते गौः स्वयमेव" (इति)। यकि प्रतिषिद्धे शप्। एवमुत्तरत्रापि वेदितव्यम्। "उदपुपुच्छत गौः स्वयमेव" इति। चिणि प्रतिषिद्धे पूर्ववच्चङ। एवमुत्तरत्रापि वेदितव्यम्। "श्रन्थ ग्रन्थ सन्दर्भे" (धा।पा।१५१२,१५१३)। चुरादौ ग्रन्थिश्रन्थी पठ()एते (धा।पा।१८३७,१८३८)। "आ धृषाद्वा" (धा।पा।१८०५ अनन्तरम्) इति विभाषाणिचौ। तयोर्यदा णिज् नास्ति तदोदाहरणे; अन्यथा णीत्येवं सिद्धिः। ग्रन्थि ग्रन्थं देवदत्तः। ग्रन्थते ग्रन्थः स्वयमेव। अग्रन्थिष्ट ग्रन्थः स्वयमेव। श्रन्थति मेखलां देवदत्तः। श्रन्थते मेखला स्वयमेव। "श्रन्थ ग्रन्थ सन्दर्भे" (धा।पा।१५१२,१५१३) इतिक्र्यादावपि पठ()एते, तयोरप्ययं प्रतिषेधः--- श्रथ्नीते मेखलां देवदत्तः, श्रन्थीते मेखला स्वयमेव। "ई हल्यघोः" ६।४।११३ इतीत्त्वम्। अश्रन्थिष्ट मेखला स्वयमेव। ग्रथ्नीते ग्रन्थं देवदत्तः। ग्रन्थीते ग्रन्थः स्वयमेव। अग्रन्थिष्ट ग्रन्थः स्वयमेव। ब्राऊते कथां देवदत्तः। ब्राऊते कथा स्वयमेव। पूर्ववच्छपो लुक्। अवोचत कथां देवदत्तः। अवोचत कथा स्वयमेव। "ब्राउवो वचिः" २।४।५३ इति वचिरादेशः, "अस्यतिवक्तिख्यातिभ्योषऽङ" ३।१।५२ इत्यङादेशः; "वच उम्" ७।४।२०। अन्तर्भावितण्यर्थत्वात् कर्मस्थक्रियात्वं वेदितव्यम्। "आत्मनेपदाकर्मकाणाम्" इति। आत्मनेपदविधावकर्मका ये धातवो गृह्न्ते त आत्मनेपदाकर्मकाः। "विकुर्वते सैन्धवाः स्वयमेव" इति। "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः। "व्यकृषत सैन्धवाः स्वयमेव" इत्यत्रापि कृञो विपूर्वात् "अकर्मकाच्च" १।३।३५ इत्यात्मनेपदविधानादात्मनेपदाकर्मकत्वम्। अत्रापि वल्गने वत्र्तमानः करोतिरन्तर्भावितण्यर्थः कर्मस्थकियो भवति॥

बाल-मनोरमा

न दुहस्नुनमां यक्चिणौ ५९२, ३।१।८९

न दुह। दुह स्नु नम् एषां द्वन्द्वः। कर्मकर्तरीति। एतत्तु नाऽनुवृत्तिलभ्यं, पूर्वत्रानुपलम्भात्। किंतु "कर्मवत्कर्मणा तुल्यक्रियः" इति समभिव्याहारलभ्यमेव। "अचः कर्मकर्तरी"त्यतो मण्डूकप्लुत्या तदनुवृत्तिर्वा। दुहेरनेनेति। "न दुहस्नुनमा"मित्यनेन दुहेः कर्मकर्तरि यक एव निषेधः। चिण्तु "दुहश्चे"ति वक्ष्यमाणसूत्रेण विकल्पितो वक्ष्यते इत्यर्थः। कर्मकर्तरि तशब्दे परे दुहेश्चिण्वेति तदर्थः। "चिण्तु विकल्पेनेष्यते" इति क्वचित्पाठः। दुग्धे इत्यत्र प्रक्रियां दर्शयति-- शप् लुगिति। दुहेः कर्मकर्तरि यकि निषिद्धे शप्प्रवर्तते, तस्य "अदिप्रभतिभ्यः" इति लुगित्यर्थः। "गौः पयो दुग्धे इति।

गौः स्वयमेव पय उत्सृजतीत्यर्थः। कर्मकर्तृभूतायां गवि लट्। स्वरितेत्त्वेऽपि "भावकर्मणो"रित्यात्मनेदमेव। "न दुहेति न यक्। गांपयो दुग्धे इति तु नोदाह्मतम्, "गौणे कर्मणि दुह्रादेर्लादयो मताः"इत्युक्तेः। अचः कर्मकर्तरि। "च्लेः सि"जित्यतश्च्लेरिति, "चिण् ते पदः"इत्यतश्चिण्ते इति, "दीपजने"त्यतोऽन्यतरस्यामिति चानुवर्तते। "धातोरेकाचः" इत्यतोऽनुवृत्तस्य धातुग्रहणस्य अचा विशेषतत्वात्तदन्तविधिः। तदाह-- अजन्तादित्यादिना। अकारीति। "कटः स्वयमेवे"ति शेषः। कर्मकर्तरि लुङ्। च्लेश्चिण्। वृद्धिः। रपरत्वम्। "चिणो लु"गिति तशब्दस्य लुक्। अकृतेति। चिणभावपक्षे "ह्यस्वादङ्गा"दिति सिचो लोपः।

तत्त्व-बोधिनी

न दुहस्नुनमां यक्चिणौ ४८७, ३।१।८९

दुहिपच्योरिति। द्विकर्मकत्वादनयोरेकस्य कर्मणः कर्तृत्वविवक्षायाममि सकर्मकत्वान्निषेधे प्राप्तेऽयमारम्भः। गौः पयो दुग्धे इति। अत्र कर्मवद्भावेनात्मनेपदं नित्यं। "गौणे कर्मणि दुह्रादेः" इत्युक्तत्वान्मुख्यकर्मणः कर्तृत्वविवक्षायां पयो गां दुग्धे इति नोदाह्मतमित्याहुः। एवं च "प्रधाने नीहकृष्वहा"मित्युक्तत्वात्तुल्यन्यायेन न्यादीनां मुख्यकर्मण एव कर्तृत्वविवक्षेति फलितम्।

---

सूत्रम्

काशिका-वृत्तिः

कुषिरजोः प्राचां श्यन् परस्मैपदं च ३।१।९०

कुष निष्कर्षे, रञ्ज रागे, अनयोर् धात्वोः कर्मकर्तरि प्राचाम् आचार्याणां मतेन श्यन् प्रत्ययो भवति, परस्मैपदं च। यगात्मनेपदयोरपवादौ। कुष्यति पादः स्वयम् एव। रज्यति वस्त्रं स्वयम् एव। प्राचां ग्रहणं विकल्पार्थम्। कुष्यते। रज्यते। व्यवस्थितविभाषा च इयम्। तेन लिट्लिङोः स्यादिविषये च न भवतः। चुकुषे पादः स्वयम् एव। ररञ्जे वस्त्रं स्वयम् एव। कोषिषीष्ट पादः स्वयम् एव। रङ्क्षीष्ट वस्त्रं स्वयम् एव। कोषिष्यते पादः स्वयम् एव। रङ्क्ष्यते वस्त्रं स्वयम् एव। अकोषि पादः स्वयम् एव। अरञ्जि वस्त्रं स्वयम् एव।

न्यासः

कृषिरजोः प्राचां श्यन्परस्मैपदं च। , ३।१।९०

रञ्जेः कृतानुनासिकलोपनिर्देशो लाघवार्थः। "यगात्मनेपदयोरपवादौ" इति। श्यन् यकोऽपवादः; परस्मैपदं त्वात्मनेपदस्य। "रज्यति" इति। "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः। "प्राचां ग्रहणं विकल्पार्थम्" इति। एतेन पूजार्थतामपनयति। पूजार्थे तस्मिन् विकल्पो न लभ्येत। "कुष्यते" इत्यादिना विकल्पार्थे प्राग्ग्रहणे यदिष्टं सिध्यति तद्दर्शयति। "स्यादिविषये च" इत्यादि। आदिशब्देन तासिप्रभृतीनां ग्रहणम्। "चुकुषे, ररञ्जे" इति। लिट्, आत्मनेपदम्, तप्रत्ययः, तस्यैशादेशः। "कोषिषीष्ट" इति। आशिषि लिङ, सीयुट्, "सुट् तिथोः" ३।४।१०७ इति सुट्, लघूपधगुणः, षत्वम्, ष्टुत्वञ्च। "रङक्षीष्ट" इति। "एकाचः" ७।२।१० इतीट्प्रतिषेधः, "चोः कुः" ८।३।३० इति कुत्वम्-- गकारः। "खरि च" ८।४।५४ इति चर्त्वम्--ककारः। "अकोषि, अरञ्जि" इति। लुङ,चिण्॥

बाल-मनोरमा

कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च ६४९, ३।१।९०

कुषिरञ्जोः। अनयोरिति। "कुष निष्कर्षे" "रञ्ज रागे"इत्यनयोरित्यर्थः। कर्मकर्तरीति। "अचः कर्मकर्तरी" त्यतो

मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। "न दुहस्नुनमा"मित्यतो नेति, यगिति चानुवर्तते। तदाह-- न यगिति। किंतु श्यन्निति। यग्विषये इत्यर्थः। एवं च यग्विषयादन्यत्र न श्यः प्रवृत्तिः। "न य"गित्यनुक्ताव श्यनो विधाने तु यग्विषयादन्यत्राद्र्धधातुकेऽपि श्यन् स्यादिति भावः। "प्राचां"ग्रहणाद्विकल्पः। तदाह--कुष्यति कुष्यते वा पाद इति। "स्वयमेवे"ति शेषः। कुष्णाति पादं देवदत्त इति मुख्यकर्तृलकारे पादः कर्म। तस्य पुरुषप्रयत्नमनपेक्ष्य कर्तृत्वविवक्षायां श्यनि परस्मैपदे च कुष्यतीति रूपम्। तदुभयाऽभावे यकि आत्मनेपदे च कुष्यते इति रूपमिति भावः। यक्श्यनोः स्वरे विशेषः। श्यनि "कुष्यन्ती वधू"रित्यत्र "शप्श्यनोर्नित्य"मिति नित्यं नुम्। यकि तु "आच्छीनद्यो"रिति विकल्पः स्यात्। रज्यति रज्यते वा वरुआमिति। अन्तर्भावितण्यर्थतायां दैवादिकत्वाच्छ्यनि "रज्यति वरुआ"मित्यत्र रञ्जयतीत्यर्थः। मुख्ये कर्तरि लः। कर्मणः कर्तृत्वविवक्षायां तु रज्यति रज्यते वा वरुआमिति भवतीत्यर्थः। यगवि,ये तु नास्त्येवेति। "श्य"निति शेषः। यक#ं प्रतिषिध्य तत्स्थाने श्यनो विधिसामथ्र्यादित्यर्थः। कोषिषीष्टेति। आद्र्धातुकत्वेन यगविषयत्वान्न श्यन्। तत्संनियोगशिष्टत्वात् परस्मैपदं च श्यनभावे सति न भवतीति भावः। रङ्क्षीष्टेति। रञ्जेः सीयुटि जस्य कुत्वेन गः। तस्य चर्त्वेन कः। अनुस्वारपरसवर्णौ। अत्र कर्मकर्तृप्रकरणे सर्वत्र पच्यते ओदनः स्वयमेवेति, भिद्यते काष्ठं स्वयमेवेत्यादौ स्वयंशब्दस्य आत्मना करणेनेत्यर्थः, न त्वात्मना कत्र्रेति, तथा सति कर्मण्येव लः स्यादिति "णेरणौ" इति सूत्रे कैयटे स्पष्टम्। इति कर्मकर्तृप्रक्रिया।

अथ पूर्वकृदन्ते कृत्यप्रकरणम्।

अथ कृदन्तप्रक्रिया निरूप्यन्ते। तदेवं "प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः"इति प्रतिज्ञातेषु तृतीयाध्यायस्थप्रत्ययेषु प्रथमपादे "प्रत्ययः", "परश्चे"त्यारभ्य "कुषिरञ्जोः प्राचां श्य"न्नित्यन्तैः सूत्रैर्विहिताः कतिचित्प्रत्यया निरूपिताः। अथतदुत्तरसूत्रविहितान्निरूपयितुमुपक्रमते--

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ धातोः ५।१ ३।४।११७

अर्थः॥

आ तृतीयाध्यायपरिसमाप्तेः (३।४।११७) धातोः इति अयम् अधिकारः वेदितव्यः। {तव्यत्तव्यानीयरः ३।१।९६} इत्यादिकं वक्ष्यति, ते धातोः एव उत्पत्स्यन्ते॥
काशिका-वृत्तिः
धातोः ३।१।९१

धातोः इत्ययम् अधिकारो वेदितवय्H। आतृतीयाध्यायपरिसमाप्तेः यदित ऊर्ध्वम् अनुक्रमिष्यामो धातोः इत्येवं तद् वेदितव्यम्। वक्ष्यति तव्यत्तव्यानीयरः ३।१।९६ इति। कर्तव्यम्। करणीयम्। धातुग्रहनम् अनकर्थकं यङ्विधौ धात्वधिकारात्। कृदुपपदसज्ञार्थं तर्हि, अस्मिन् धात्वधिकारे ते यथा स्यातां, पूर्वत्र मा भूताम् इति। आर्धधातुकसंज्ञार्थं च द्वितीयं धातुग्रहणं कर्तव्यम्। धातोः इत्येवं विहितस्य यथा स्यात्। इह मा भूत्, लूभ्याम्, लूभिः इति।
लघु-सिद्धान्त-कौमुदी
धातोः ७६९, ३।१।९१

आतृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः। कृदतिङिति कृत्संज्ञा॥

न्यासः

धातोः। , ३।१।९१

"यङविधौ धातोरित्यधिकारात्" इति। "धातोरेकाचः" ३।१।२२ इति यङविधौ यत् धातुग्रहणं तस्येहाधिकारादित्यर्थः। इयञ्च धातुग्रहणस्यानर्थकत्वे युक्तिः। "कृदुपपदसंज्ञार्थं तु" इति। आनर्थक्यमपाकरोति। ननु च पूर्वेणापि धातुग्रहणेन कृदुपपदसंज्ञे सिध्यत स्याताम्, इह करिष्यतीति स्यप्रत्ययस्य "कृदतिङ" ३।१।९३ इति कृत्संज्ञा स्यात्। ततश्च "कृत्तद्धितसमासाश्च" १।२।४६ इति प्रातिपदिकसंज्ञा प्रसज्येत, तस्याञ्च सत्यां सुबुत्पत्तिः। "च्लि लुङि" ३।१।४३ इत्यत्र च "तत्रोपपदम्" ३।१।९२ इति लुङोऽप्यपपदसंज्ञा स्यात्, ततश्च लुङ्युपपदे च्लिरित्ययमर्थश्च सम्भाव्येत। तसमादिह धात्वधिकारे कृदुपपदसंज्ञे यथा स्यातां पूर्वत्र मा भूतामिति पूनर्धातुग्रहणम्। अथाधिकारेणैते संज्ञे विधास्येते प्रत्ययसंज्ञावत्, तेन पूर्वत्र न भविष्यतीति चेत्? न हि; सिंहावलोकितन्यायोप्यस्ति। अधिकारेण विधाने पूर्वत्रापि सम्भाव्येयाताम्। तत्र व्याख्यानं कत्त्तव्यं भवेत्। व्याख्यानाच्च लघु धातुग्रहणं भवति। अवश्यञ्चान्यार्थं धातुग्रहणं कत्त्तव्यम्, तदन्यार्थ क्रियमाणं कृदुपपदसंज्ञाविधावपि विस्पष्टार्थं भविष्यति। तामेव चान्यार्थतां दर्शयितुमाह--- "आर्धधातुकसंज्ञार्थम्" इत्यादि। चशब्दाद्वाऽसरूपविधानार्थञ्चेत्ययमत्रार्थो वेदितव्यः। "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ इत्यस्मिन् धात्वधिकारेऽसरूपोऽपवादो बाधको यथा स्यात्, पूर्वत्र मा भूत्। तेन क्सादिभिः सिचः समावेशो न भवति। ननु च पूर्वेणापि धातुग्रहणेनार्धधातुकसंज्ञा सेत्स्यति, किं द्वितीयधातुग्रहणेन? इत्यत आह-- "धातोरित्येवम्" इत्यादि। धातोरित्येवं धातुशब्दमुच्चार्य विहितस्यार्धधातुकसंज्ञा यथा स्यादित्येवमर्थं पुनर्धातुकृग्रहणमित्यर्थः। किमर्थं पुनर्धातोरित्येवं विहितस्यार्धधातुकसंज्ञोच्यते? इत्याह-- "इह मा भूत्" इतति।असति द्वितीये धातुग्रहणे लूभ्याम्, लूभिरित्यत्रार्धधातुकसंज्ञा स्यात्। भवति ह्यत्र धातोः परः प्रत्ययः-- "क्विबन्ता धातुत्वं न जहति" (व्या।प।१३२) इति कृत्वा। आर्धधातुकत्वे सत्यार्धधातुकलक्षण इट् प्रसज्येत। द्वितीयं तु धातुग्रहणं क्रियमामं सामश्र्याद्छबन्दपदात्मकं भवति। तेनायमर्थो लभ्यते-- धातोरित्येवं धातुसंशब्दनेन यो विहितः स अर्धधातुकसंज्ञो भवतीति। तेन लूभ्यामित्यादावार्धधातुकत्वं न भवति। न हीह धातोरित्येवं प्रत्ययो विहितः, किं तर्हि? प्रातिपदिकादित्येवम्॥ "सप्तम्या निर्दिष्टम्" इत्यनेन सप्तमीस्थमित्यस्यार्थमाचष्टे। शब्दस्य हीयं संज्ञा विधीयते, स च कः सप्तमीस्थो भवति? यस्याः सप्तम्या निर्देशः। "कुम्भकारः" इति। उपपदसंज्ञायां "उपपदमतिङ" २।२।१९ इति समासः, "गतिकारकोपपदात् कृत्" ६।२।१३८ इत्युत्तरपदस्य प्रकृतिस्वरत्वं भवति। "स्थग्रहणम्" इत्यादि। निर्दिश्यतेऽनेनेति निर्देशः। सप्तमी निर्देशो यस्य स सप्तमीनिर्देशः। तत्प्रतिपत्त्यर्थं स्थग्रहणम्। एतदुक्तं भवति-- सूत्रे यत् सप्तम्या निर्दिष्टं तस्य संज्ञित्वेन प्रतिपत्तिर्यथा स्यादित्येवमर्थं स्थग्रहणम्। यदि पुनः स्थग्रहणं न क्रियते, ततः किं स्यादित्यत आह-- "इतरथा हि" इत्यादि। इतरथा ह्यक्रियमाणे स्थग्रहणे "संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति" (पु।प।वृ।८१) इतिसैव सप्तम्युपपदसंज्ञां प्रतिपद्येत। न चासतः संज्ञिनः संज्ञा युक्तेति यत्र श्रूयते सप्तमी-- स्तम्बेरम इत्यादौ तत्रैव स्यात्। स्यादेतत्-- नैतत् प्रत्ययग्रहणम्,किं तर्हि? सप्तमीशब्दस्य स्वरूपस्य ग्रहणमित्याह-- "यत्र" इत्यादि। गतार्थम्। "स्थग्रहणात्तु" इत्यादि। स्थग्रहणे तु क्रियमाणे ग्रन्थाधिक्यात् सूत्रे यस्य सप्तम्या निर्देशस्तत् संज्ञित्वेन निर्दिश्यते, तेनु सर्वं सिद्धं भवति; येषामियं संज्ञेष्यते तेषां सर्वेषामेव सूत्रे सप्तमीनिर्देशात्। तथा हि-- "स्तम्बकर्णयोः" ३।२।१३ इत्यत्र स्तम्बकर्णशब्दौ सूत्रे सप्तम्या निर्दिष्टौ। "सप्तम्यां जनेर्डः" ३।२।९७ इत्यत्राप्युपसरादयः। "कर्मण्यण्" ३।२।१ इत्यत्रापि कर्माभिधायिनः कुम्भप्रभृतयः। ननु च लाघवार्थं संज्ञाकरणम्, तत्किमर्थं गुर्वी संज्ञा क्रियते? इत्याह-- "गुरुसंज्ञाकरणम्" इत्यादि। उपशब्दः सामीप्ये। उपोच्चारितं पदमुपपदमित्यन्यर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारो यथा स्यादित्येवमर्थं गुरुसंज्ञाकरणम्। समर्थपरिभाषोपस्थाने सति यदिष्टं सम्पद्यते तद्दर्शयितुमाह-- "पश्य कुम्भम्" इत्यादि। अन्वर्थसंज्ञायां हि

सत्यामुपपदाश्रयः प्रत्ययः पदविधिर्भवति। यत्र च पदगन्धोऽप्यस्ति तत्र समर्थपरिभाषोपतिष्ठते। तेन पश्य कुम्भं करोति कटमित्यत्र "कर्मण्यण्" ३।२।१ न भवति। न हीह कुम्भस्य करोतिना सामर्थ्यम्, किं तर्हि? पश्येत्यनेन। पदशब्दोऽप्यत्रान्वर्थ एव, न पारिभाषिकः। तथा हि सुबन्तस्य पदसंज्ञा टचोपपदसंज्ञाविधनकाले सुबन्ततयास्ति; यस्मादुपपदसंज्ञायां विहितायामुपपदाश्रयेऽपि प्रत्यय उपपदसमासोऽपि "गतिरकारकोपपदानां कृद्भिः समासवचनं प्राक्()सुबुत्पत्तेः" (व्या।प।वृ।१३८) इति सुबुत्पत्त्या भवितव्यः। तस्मादन्वर्थोऽयं पदशब्दः-- पद्यते गम्यतेऽर्थो येन तत् पदमिति। "तत्र" ग्रहणं सप्तमीस्थस्य प्रत्योत्पत्तिं()त प्रति निमित्तभावे सत्युपपदसंज्ञा यथा स्यादित्येवमर्थम्। असति हि तत्र ग्रहणे कर्मण्युपपदेऽनुपपदेऽपि प्रत्ययः स्यात्। यस्तु कर्मणीति सप्तम्या निर्देशः, स यदा सप्तम्यन्तः सम्भवति, तदा तस्योपपदसंज्ञार्थः स्यात्; न तु तस्मिन् सत्येव प्रत्ययेन भवितव्यमित्येषोऽर्थो लभ्यते। तस्मात् यथोक्तप्रयोजनार्थं तत्रग्रहणम्। ननु चानन्तरस्य धात्वदिकारस्य निर्देशार्थं तत्रग्रहणं कस्मान्न भवति, तत्रैतस्मिन् धात्वधिकारेऽनन्तर उपपदसंज्ञा यथा स्यादिति? नैतदस्ति; अधिकारादप्येतत् सिद्धम्। उपपदसंज्ञाधिकरिष्यते, तेन वक्ष्यमाणेषु संज्ञिषु संज्ञा भविष्यतीति नार्थ एतदर्थेन तत्रग्रहणेन। "तत्रैतस्मिन्" इत्यादिस्तु वृत्तिग्रन्थ एवमुन्नीयते-- एतस्मिन् धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति। तत्र च निमित्ते प्रत्यय इत्येषोऽर्थः सोपस्कारत्वाद्()वृत्तिग्रन्थस्य लभ्यते॥

बाल-मनोरमा

धातोः ६५०, ३।१।९१

धातोः। आ तृतीयेति। आतृतीयाध्यायपरिसमाप्तेरित्यर्थः। एतच्च भाष्ये स्पष्टम्। तत्रोपपदं कृदतिङिति। व्याख्यातं प्राक्।

तत्त्व-बोधिनी

धातोः ५४१, ३।१।९१

धातोः। ननु तिङ्निरूपणात्प्रागेव "स्पृशोऽनुदके क्विन्" "ऋत्विग्दधृ"गित्यादिना क्विन्नादिनिरूपणं कृतमिति कथमियं भवदुक्तसङ्गतिः सङ्गच्छत इतिचेत्। अत्राहुः-- क्विन्नादिनिरूपणस्य तत्र प्रासङ्गिकत्वात्, प्राधान्येन च कृतामत्रैव निरूपणान्नोक्तशङ्कावकाशैति। यद्यपि "धातोरेकाचो हलादे"रिति सूत्राद्धातोरित्यनुवर्तत एव तथापि आद्र्धातुकसंज्ञाया आश्रितशब्दव्यापारत्वलाभाय पुनर्धातोरिति ग्रहणं कृतम्। अन्यथा "आद्र्धधातुकं शेषः" इत्यनेन तिङ्शिद्भिन्नस्य धातोर्विहितप्रत्ययमात्रस्याद्र्धधातुकसंज्ञायां लूभ्यां पूभ्यामित्यादाविड्गुणो स्यातां, धातोर्विहितत्वेन ब्यामादेराद्र्धधातुकत्वात्, पुनर्धातुग्रहणे कृते तु तव्यतव्यादय इव धातोरित्यवमविधानाद्भ्यामादेराद्र्धधातुकत्वं नेति दिक्। "प्राग्लादेशाद्धात्वधिकारः" इति पक्षोऽयुक्त इत्याशयेनाह-- आतृतीयसमाप्तेरिति। तृतीयाध्यायसमाप्तिपर्यन्तमित्यर्थः। "प्राग्लादेशा"दिति पक्षे तु "तिङ्शित्सार्वधातुक"मित्यत्र धातोरित्यधिकाराऽभावात् शित्प्रत्ययमात्रस्य सार्वधातुकत्वेन शसोऽपि सार्वधातुकत्वे "सार्वधातुकमपि"दिति ङित्त्वे च हरीनित्यादौ "घेर्ङिती" ति गुणः स्यादिति ज्ञेयम्। स्यादेतत्--- धातोर्लकारे सति तस्मिन् परतो नित्यत्वात्करिष्यतीत्यादौ प्रथमं स्यप्रत्ययप्रवृत्तौ तिबाद्यप्रसङ्गः, यत्र तु तिबाद्याश्रयो विकरणस्तत्रैव व्यवधानाऽभावाद्भवतित्यादौ तिबादयः स्युरिति चेत्। मैवम्। "विकरणेभ्यो नियमो बलीया" निति स्वीकारात्। अथवा विहितविशेषणाश्रयणेन धातोर्विहितस्य लस्येति व्याख्यानादिष्टसिद्धेः। नन्वेवं विहितविशेषणाश्रयणे "विद्लृ लाभे" इत्यस्माद्धातोर्विहितस्य लटः शब्विकरणव्यवायेऽपि "विदो लटो वा" इति णलादयः स्युरिति चेत्। अत्राह हरदत्तः-- धातुनाऽत्र विहितं विशेष्यते, विदना त्वानन्तर्यमिति। तथा चायमर्थः संपद्यते --धातोर्विहितस्य विदोऽनन्तरस्य लटो णलादय इत्यब्युपगमाद्वेत्तेरेव विहितस्य लटो णलादयो भवन्ति न तु विदन्तेर्लडिति दिक्। विधेयाऽनिर्देशात्स्वरितत्वाच्चाधिकारसूत्रमिदमित्याह---अधिकारोऽयमिति। तत्रोपपदमित्यादि। एतेन कृत्संज्ञोपपदसंज्ञयोरिह विधानसौष्ठवाय द्वितीयो धात्वधिकार आवश्यक इति ध्वनितम्। अयं

भावः-- यदि द्वितीयधात्वधिकारो न स्यात्तदा पूर्वधात्वधिकारेऽपि कृदुपपदसंज्ञे स्याताम्। इष्टापत्तौ तु सप्तमीनिर्दिष्टमात्रस्योपपदत्वेन "च्लि लुङी" त्यादौ लुङन्त#ए उपपदे च्लिरित्यवमनिष्टोऽर्थः प्रसज्येत। तिङ्बिन्नधात्वधिकारप्रत्ययस्य कृत्संज्ञायां करिष्यतीत्यादौ स्यप्रत्ययस्य कृत्त्वेन "कृत्तद्धिते" तिप्रापतिपदिकत्वादौत्सर्गिकमेकवचनमिति सर्वसंमतत्वेन सुप्रत्ययप्रसङ्गाच्च, तस्मादधिकारविशेषे अनयोः संज्ञयोर्विधानार्थमयमधिकार इति।

---

सूत्रम्

काशिका-वृत्तिः

तत्र उपपदं सप्तमीस्थम् ३।१।९२

तत्र एतस्मिन् धात्वधिकारे तृतीये यत् सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवति। वक्ष्यति कर्मण्यण् ३।२।१। कुम्भकारः। स्थग्रहणं सूत्रेषु सप्तमीनिर्देशप्रतिपत्त्यर्थम्। इतरथा हि सप्तमी श्रूयते यत्र तत्र एव स्यात्, स्तम्बेरमः, कर्णेजपः इति। यत्र वा सप्तमीश्रुतिरस्ति सप्तम्यां जनेर् डः ३।२।९७ इति, उपसरजः, मन्दुरजः इति। स्थग्रहणात् तु सर्वत्र भवति। गुरुसंज्ञाकरणम् अन्वर्थसंज्ञाविज्ञाने सति समर्थपरिभाषाव्यापारार्थम्। पष्य कुम्भं, करोति कटम् इति प्रत्ययो न भवति। उपपदप्रदेशाः उपपदम् अतिङ् २।२।१९ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तत्रोपपदं सप्तमीस्थम् ९५६, ३।१।९२

सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्॥

बाल-मनोरमा

तत्रोपपदं सप्तमीस्थम् ७७१, ३।१।९२

अथोपपदसमासं वक्ष्यन्नुपपदसंज्ञामाह--तत्रोपपदं सप्तमीस्थम्। अधिकाऽयम्। "सप्तमी"ति तदन्तग्रहणम्। सप्तम्यन्ते पदे वाच्यवाचकभावसंबन्धेन तिष्ठतीति सप्तमीस्थम्। सप्तम्यन्तवाच्यमिति यावत्।
धातोरित्यधिकारसूत्रादुत्तरसूत्रमिदम्। ततश्च तदधिकारान्तर्गतेषु "कर्मण्य"णित्यादिसूत्रेषु यत्सप्तम्यन्तमुच्चारितं तदेव इह विवक्षितम्। एवंच तदुदाहरणे कुम्भं करोति कुम्भकार इत्यत्र सप्तम्यन्तवाच्यं कुम्भादीति पर्यवसन्नम्। कुम्भादेश्च उपपदसंज्ञायां प्रयोजनाऽभावात्तद्वाचकपदेषु विश्राम्यति। तथाच धातोरित्यधिकारान्तर्गते कर्मणीत्यादिसूत्रे यत्सप्तम्यन्तं "कर्मणी"त्यादि, तद्वाच्यं यत्कुम्भादि, तद्वाचकं पदम् उपपदसंज्ञं स्यादित्यधिकृत वेदितव्यमित्यर्थः फलितः। तदाह--सप्तम्यन्ते पद इत्यादिना। तत्र "धातोः कर्मणः समानकर्तृकात्" इति, "धातोरेकाचो हलादेः" इति, "धातो"रिति च क्रमेण त्रयो धात्वधिकाराः। तत्र प्रत्यासत्त्या तृतीयधात्वधिकारस्थसप्तम्यन्तस्यैव ग्रहणात् "धातोरेकाचः" इत्याधिकारे "च्लि लुङी"त्यत्र सप्तम्यन्तं न गृह्रते। अन्यथा कर्मणीत्यादाविव लुङन्ते अभूदित्यादावुपपदो धातोः च्लिरित्यर्थः स्यात्। ननु तत्रेति व्यर्थं, तृतीयधात्वधिकारस्य प्रकृतत्वादेव ग्रहणसंभवादित्याशङ्क्या--त()स्मश्च सत्येवेति। अयमाशयः--तत्रेति भिन्नं वाक्यं क्रमव्यत्यासेन योज्यम्। सप्तमीस्थमुपपदसंज्ञं स्यात्, "तत्र"=तस्मिन्सति इति चाधिकृतं वेदितव्यमिति। तथाचोपपदे सति वक्ष्यमाणः प्रत्ययः स्यादिति "तत्रे"त्यस्यार्थः फलति। तथाच "कर्मण्य णित्यत्र इदं सूत्रमुपस्थितम्। कर्मणीति सप्तम्यन्तं प्रथमान्तत्वेन विपरिणम्यते। सप्तमीनिर्देशस्तु उपपदसंज्ञाप्रवृत्त्यर्थः। "धातोरण्स्यात्कर्तर्यर्थे, कर्मवाचकं तु कुम्भादिपदमुपपदसंज्ञं प्रत्येतव्यम्, तस्मिन्नपपदे सत्यव अण्स्या"दिति फलति। "तस्मिन्सत्येवाऽण्स्या"दित्यभावे तु कारेत्येवं केवलादपि धातोः कर्तर्यर्थे अण्प्रत्ययः स्यात्। कर्मणीति

सप्तम्यन्तनिर्देशस्तु कुम्भकार इत्यादौ उपपदसंज्ञां प्रापय्य"उपपदमति"ङिति नित्यसमाससंपादनेन कुम्बे त्यस्य कारेत्यस्य च साधुत्वप्रापणार्थतया चरितार्थः। "तस्मिन्नुपपदे सत्येवाण्स्या"दित्युक्ते तु कुम्भाद्युपपदस्य अम्प्रत्ययोत्पत्तौ निमित्तत्वावगमान्न केवलादण्प्रत्ययः, उपपदसंज्ञायाः प्रत्ययविधिसंनियोगशिष्टत्वलाभात्। "धः कर्मणि ष्ट्रन्" "भुवो भावे" इत्यादौ सप्तम्यन्तमर्थनिर्देशपरमेव, व्याख्यानादिति भाष्यकैयटादिषु स्पष्टम्।

तत्त्व-बोधिनी

तत्रोपपदं सप्तमीस्थम् ६८०, ३।१।९२

तत्रोपपदम्। "सप्तमीस्थ"मित्येतव्द्याचष्टे--सप्तम्यन्त इत्यादिना। तद्वाचकं पदमिति। एतच्चोपपदमित्यन्वर्थसंज्ञाबलाल्लभ्यते। अतएव संज्ञाविधवपि सप्तमीग्रहणेन सप्तम्यन्तं गृह्रते। "धातोः"इति पृथगधिकारबलात् "संनिहिते धात्वधिकारे"इति लभ्यते। तेन "च्लि लुङी"त्यस्य लुङन्तेऽभूदित्यादावुपपदे धातोश्चिलरित्यर्थो न भवति "तत्र ग्रहणं व्याचष्टे---तस्मिन् सत्येवेति। उपपदे सत्येवेत्यर्थः। तत्रग्रहणाऽभावे तु "धः कर्मणि ष्ट्र"न्नित्यादाविव "कर्मण्य"णित्यादावपि कर्मण्यभिधेयेऽणित्याद्यर्थः स्यात्। किंच सप्तम्यन्तनिर्देशस्योपपदसंज्ञार्थतया चरितार्थत्वात्केवलादपि धातोः कर्तर्यण्प्रत्ययः संभाब्येत। कृते तु "तत्र"ग्रहणे कुम्बाद्युपपदस्य प्रत्ययोत्पत्तौ निमित्तत्व प्रतीत्या केवलादण्()प्रत्ययशङ्कैव नास्ति। एवं स्थितेः "धः कर्मणी"त्यादौ क्वचिदर्थग्रहणं व्याख्यानादित्याहुः। अन्ये तु "तत्रोपपद"मित्यस्य "कर्मण्य" णित्यादेश्चैकवाक्यतया प्रवृत्तावुपपदसंज्ञाया निपर्विषयत्वापत्तेस्तत्रग्रहणं विनाप()ष्ट सिद्ध्यत्येवेत्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कृत् १।१ अतिङ् १।१ तत्र ० ९२ धातोः ५।१ ९१ प्रत्ययः ?

अर्थः॥

अस्मिन् धात्वधिकारे तिङ् भिन्नाः प्रत्ययाः कृत्संज्ञकाः भवन्ति

उदाहरणम्॥

कर्त्ता, कारकः, कर्त्तव्यम्

काशिका-वृत्तिः

कृदतिङ् ३।१।९३

अस्मिन् धात्वधिकारे तिङ्वर्जितः प्रत्ययः कृत्सज्ञको भवति। कर्तव्यम्। करणीयम्। अतिङ इति किम्? चीयात्। स्तूयात्। कृत्प्रदेशाः कृत्तद्धितसमासश्च १।२।४६ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

कृदतिङ् ३०४, ३।१।९३

अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्॥

लघु-सिद्धान्त-कौमुदी
तव्यत्तव्यानीयरः ७७४, ३।१।९३

धातोरेते प्रत्ययाः स्युः। एधितव्यम्, एधनीयं त्वया। भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया (केलिमर उपसंख्यानम्) पचेलिमा माषाः। पक्तव्या इत्यर्थः। भिदेलिमाः सरलाः। भेत्तव्या इत्यर्थः। कर्मणि प्रत्ययः॥
न्यासः
कृदतिङ्। , ३।१।९३

"कत्र्तव्यम्" इति। कृत्संज्ञायां सत्यां "कृत्तद्धितसमासाश्च" १।२।४६ इति प्रातिपदिकसंज्ञा। "चीयात्" इति। आशिषि लिङ,"लिङाशिषि" ३।४।११६ इत्यार्धधातुकसंज्ञा। अतिङिति यदि नोच्येत, तिङोऽपि कृत्संज्ञा स्यात्; ततश्च "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घत्वं न भवेत्। अतिङिति तु सत्यकृद्यकारत्वाद्भवति॥
बाल-मनोरमा
कृदतिङ् , ३।१।९३

अथ क्विन्नन्तस्य "कृत्तद्धिते"ति प्रातिपदिकत्वं वक्तुं क्विनः कृत्संज्ञां दर्शयति--कदतिङ्। "धातो"रित्यधिकृतं, "प्रत्यय" इति च। "धातो"रिति च विहितविशेषणम्। तेन धातोर्विहितः प्रत्यय इत्यर्थो लभ्यते। "धातो"रित्यधिकृत्य विहित इति यावत्। तदाह--संनिहिते इति। तेन णिजादिनिरासः। युज् व् इति स्थिते।

तत्त्व-बोधिनी
कृदतिङ् ३३५, ३।१।९३

संनिहित इति। प्राचा तु "तृतीये धात्वधिकारे"इत्युक्तं, तदसत्, "धातोः कर्मणः"इति सन्बिधौ धातुग्रहणस्योत्तरत्रानुवृत्तेरभावेनाधिकारत्रयाऽभावात्।

---

सूत्रम्
काशिका-वृत्तिः
वा ऽसरूपो ऽस्त्रियाम् ३।१।९४

अस्मिन् धात्वधिकारे ऽस्मानरूपः प्रत्ययो ऽपवादो वा बाधको भवति स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वा। ण्वुल्तृचौ ३।१।१३३ उत्सर्गौ, इगुपधज्ञाप्रीकिरः कः ३।१।१३५ इत्यपवादः, तद्विषये ण्वुल्तृचौ ३।१।१३३ अपि भवतः। विक्षेपकः, विक्षेप्ता, विक्षिपः। असरूप इति किम्? कर्मण्यण् ३।२।१ इत्युत्सर्गः, आतो ऽनुपसर्गे कः ३।२।३ इत्यपवादः, सनित्यं बाधको भवति। गोदः। कम्बलदः। न अमुबन्धकृतम् असारूप्यम्। अस्त्रियाम् इति किम्? स्त्रियां कितन् ३।३।९४ इत्युत्सर्गः, अ प्रत्ययात् ३।३।१०२ इत्यपवदः, स बाधक एव भवति। चिकीर्षा जिहीर्षा।
लघु-सिद्धान्त-कौमुदी
वासरूपोऽस्त्रियाम् ७७०, ३।१।९४

अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना॥
न्यासः

वाऽसरूपोऽस्त्रियाम्। , ३।१।९४

अपवादविषयमुत्सर्गो नाबिनिविशत इत्येष उत्सर्गधर्मः, कृताञ्च केषाञ्चिदुत्सर्गाणामपवादविषये प्रवृत्तिरिष्यते, सा च वचनमन्तरेण न सिद्ध्यतीति तदर्थमिदम्। ननु चारभ्यमाणेऽप्येतस्मिन् नैवायमर्थः सम्पद्यते, तथा हि-- अस्योत्सर्गेण वा सम्बन्धः स्यात्, अपवादेन वा, उभाभ्यां वा? तत्र यदि पूर्वकल्प आश्रीयेत तदा वाशब्देन विकल्पार्थेनोपस्थापितयोर्भावाभावयोरस्यायमर्थः स्यात्-- उत्सर्गोऽसरूपोऽस्त्रियां पक्षे भवतीति, पक्षे न भवतीति। तथा चापवादस्य स्वस्मिन् विषये नित्याप्राप्तिः स्यात्। न ह्यनेनापवादस्य किञ्चित्कृतम्; तेन सहास्यासम्बन्धात्। न च बाधकेऽपवादेऽविकल्पां प्रवृत्तिमनुभवति सति तत्रोत्सर्गः प्रवर्तितुमुत्सहत इति स्वविषय एव विकल्पः प्रवर्तेत। अथ द्वितीयः, तदायमर्थः स्यात्-- असरूपोऽपवादोऽस्त्रियां विकल्पेन भवतीति। एवमपि नैवोत्सर्गस्यापवादविषये प्रवृत्तिर्लभ्यते। उत्सर्गोऽपवादोऽस्त्रियां विकल्पेन भवतीति। एवमपि नैवोत्सर्गस्यापवादविषये प्रवृत्तिर्लभ्यते। उत्सर्गोऽपवादविषयं परिहति, तदापवादस्य बाधकत्वात्। तच्च बाधकत्वमस्मिन्नपि पक्षे तदवस्थमेव, न ह्यनेन तदपनीतम्, किं तर्हि? स्वस्मिन् विषये तस्य भावाभावौ प्रतिपादितौ-- पक्षे भवति,पक्षे न भवति। न चान्यद्वचनमस्ति; यतोऽपवादविषयमुत्सर्गोऽव्यास्ते। अपवादस्याभावपक्षे प्रापकवचनमन्तरेणापि उत्सर्गो भविष्यति। प्रतिबन्धाभावादिति चेत्? सत्यमेतत् कार्यबाधायाम्; शास्त्रबाधायान्तु यत् कार्यस्य विधायकं तदपवादेन बाध्यमानं तद्विषपरीहारेणैव प्रवर्तेत, तस्मिन् प्रवृत्ते पश्चापदवादे विकल्पेन प्रवृत्तिमनुबव्तयपि तद्विषय उत्सर्गप्रवृत्तिर्न सम्भवति, सामान्यशास्त्रसयातद्विषयत्वात्। अस्तु कार्यवधापक्ष इति चेत्? न; अयुक्तत्वात्। न ह्रबाधिते विधायके शास्त्रे तत्कार्यबाधा युज्यते। निदानोच्छेदेन हि निदानिन उच्छेदः शक्यते कर्त्तुम्, नान्यथा। न हि प्रदीपेऽनुच्छिन्ने तत्प्रभोच्छिद्यते। तस्मादपवादः शास्त्रमेव बाधते,तस्मिश्च बाधिते सत्यपवादाभावपक्षेऽपि नैवोत्सर्गस्यापवादविषये प्रवृत्तिः स्यात्। अथ तृतीयः पक्षः, तदायमर्थः स्यात्-- उत्सर्गोऽसरूपोऽस्त्रियां वा भवति, अपवादोऽपीति। एवमपि तयोः स्वस्मिन् विषये विकल्पेन प्रवृत्तिः स्यात्, न तूत्सर्गस्यापवादविषये; पूर्वोक्तादेव हेतोः। तस्मात् क्रियमाणेऽप्येतस्मिन् नैवाभिमतोऽर्थः सम्पद्यत इति देशयेत्, तं प्रत्याह-- "असरूपोऽपवादप्रत्ययो वा बाधको भवति" इति। एतेनापवादस्यानेन सम्बन्धः, न तु भावाभावौ विकल्प्येते, किं तर्हि? पक्षे बाधकत्वमिति दर्शयति। एवञ्च यस्मिन् पक्षेऽपवादो बाधको न भवति, तस्मिन् विषये प्रतिबन्धाभावादुत्सर्गः प्रवत्र्तत इति सिध्यति समावेशः। "स्त्र्यधिकारविहितं प्रत्ययं वर्जत्वा" इति।कथं पुनः "अस्त्रियाम्" इति वचनादेषोऽर्थो लभ्यते? एवं मन्यते-- "स्त्रीग्रहणमिह स्वर्यते, स्वरितेन चाधिकारावगतिर्भवति; तेन स्त्रयधिकारविहितमाश्रित्य यावुत्सर्गापवादौ विहितौ तद्वि,ये प्रतिषेधो विज्ञायते" इति। अथैवं कस्मान्न विज्ञायते-- स्त्रियामभिधेयायामसरूपोऽपवादो बाधको वा न भवतीति? एवमशक्यं विज्ञातुम्; एवं हि विज्ञायमाने लव्या लवितव्येति यद्विषये तव्यो न स्यात्। एवं तर्हि कस्मान्न विज्ञायते-- स्तिरयामित्येवं स्त्रीशब्दसंशब्दनेन यः प्रत्ययो विहितः स इह स्त्रीशब्देनोक्तः, तत्र स्त्रियामित्येवं विहितेऽसरूपोऽपवादो बाधको वा न भवतीति? एवमशक्शं विज्ञातुम्; एवं हि विज्ञायमाने व्यावक्रोशी, व्यावक्रुष्टिरिति णचो विषये क्तिनः प्रवृत्तिर्न स्यात्,; यस्मात् "कर्मव्यतीहारे णच् स्त्रियाम्" ३।३।४३ इति णज्विहितः, स्त्रियां क्तिन्नपि; तस्मात् पूर्वोक्त एवार्थः। यद्येवम्, "क्तल्युट्तुमुन्खलर्थेषु" (पु।प।वृ।७६) इति परिभाषा न प्राप्नोतिच तेषामस्त्र्यधिकारविहितत्वात्? "नपुंसके भावे क्तः" ३।३।११४, "ल्युट् च" ३।३।११५-- हसितम्, हसनम्, तयोर्विषये "भावे" ३।३।१८ इति घञपि प्राप्नोति। "समानकर्तृकेषु तुमुन्" ३।३।१५८ -- इच्छति भोक्तुम्,तस्य विषये "इच्छार्थेषु लिङलोटौ" (३।३।१५७)अपि प्राप्नुतः? "आतो युच्" ३।३।१२८ --ईषत्पानम्, तस्य विषये "ईषव्()दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (३।३।१२६) इति खलपि प्राप्नोति? वावचनस्य व्यवस्थितविभाषात्वान्न भवतीत्यदोषः। "ण्वुल्तृचावित्युत्सर्गा" इति। सामान्यविहितत्वात्। "इगुपधापीकिरः कः इत्यपवादः" इति। विशेषविहित्वात्। "कर्मण्यण्" ३।२।१ इत्युत्सर्गः, "आतश्चोपसर्गे" ३।१।१३६ इति कप्रत्ययोऽपवादः। ननु चानुबन्धकृतेनासारूप्येण

सोऽप्यसरूप इत्याह-- "नानुबन्धकृतम्" इत्यादि। अत्र "ददातिदधात्योर्विभाषा" 3।1।139 इति विभाषाग्रहणं ज्ञापकम्। यदि ह्यनुबन्धकृतमसारूप्यं स्याद्विभाषाग्रहणमनर्थकं स्यात्। अनुबन्धकृतादसारूप्यादेव हि "श्याऽऽद्व्यध" 3।1।141 इत्यादिसूत्रेण पक्षे णो भविष्यति॥

बाल-मनोरमा

वाऽसरूपोऽरिउआयाम् ६५१, ३।१।९४

वाऽसरूपोऽरिउआयाम्। "असरूप"इति छेदः। परिभाषेयमिति। अधिकारत्वे स्वरितत्वकल्पनागौरवादिति भावः। असरूप इति लिङ्गनिर्देशः। यत्र असरूपप्रत्ययो विधास्यते तत्र वेत्युपतिष्ठते। "वे"त्यतः प्राक् "बाधक" इति शेषः। असरूपो वा बाधको भवतीति यावत्। कस्य बाधको वेतयाकाङ्क्षायामुत्सर्गस्येत्यर्थाल्लभ्यते। फलितमाह-- अस्मिन् धात्वधिकारे इत्यादिना। स्त्रीशब्दः स्वर्यते। तदाह-- स्त्र्यधिकारोक्तं विनेति। "स्त्रियां क्तिन् इति वक्ष्यमाणस्त्र्यधिकारस्थमपवादं विनेत्यर्थः। स्त्र्यधिकारस्थस्तु असरूपः प्रत्यय उत्सर्गस्य नित्यमेव बाधक इतिभावः। "ण्वुल्तृचौ" इत्युपसर्गः। "इगुपधज्ञाप्रीकिरः कः" इत्यपवादः। तद्विषये ण्वुल्तृचवावपि भवतः। विक्षिपः। विक्षेपकः। विक्षेप्ता। असरूप इति किम्?। "कर्मण्यण्" इत्युत्सर्गः। "आतोऽनुपसर्गे कः" इत्यपवादः। स तु सरूपत्वान्नित्यं बाधक एव। गोदः। कम्बलदः। "नानुबन्धकृतमसारूप्य"मिति वचनादनुबन्धो न सारूप्यप्रतिबन्धकः। अस्त्रियां किम्?। "स्त्रियां क्तिन्" इत्युत्सर्गः। "अ प्रत्यया"दिति प्रत्ययान्तद्विहितोऽकारप्रत्ययः, तस्याऽपवादो बाधक एव भवति। चिकीर्षा। व्यावक्रोशी व्याक्रुष्टिरित्यत्र तु "कर्म व्यतिहारे णच् स्त्रिया"मिति णच् क्तिनो बाधको वा भवत्येव। "अस्त्रिया"मिति निषेधस्तु नास्ति, "तस्य "णचः स्त्रिया"मित्यधिकारोक्तत्वाऽभावात्।

तत्त्व-बोधिनी

वाऽसरूपोऽस्त्रियाम् ५४२, ३।१।९४

वासरूपो [ऽस्त्रियाम्]। अपवादेन नित्यं बाधे प्राप्ते क्वचिदुपसर्गस्यापि प्रवृत्त्यर्थमिदं सूत्रम्। अतएव "अचो यत्" , "ऋहलोण्र्यत्" इत्याद्यपवादविषयेतव्यदादयोऽपि प्रयुज्यन्ते--भव्यम्, भवितव्यम्। कार्यं, कर्तव्यं,करणीयम्। वाच्यम्, वक्तव्यमित्यादि। परिभाषेति। अधिकारसूत्रमिति। स्वीकृते तु स्त्र्यधिकारेण विच्छेदाद्वासरूपसूत्राऽप्रवृत्त्या "आसित्वा भुङ्क्ते" "आस्यते भोक्तु"मित्यादिरूपाणि न सिध्यन्ति। इह हि भोजनार्थत्वादासनस्य पूर्वकालता गम्यते, क्त्वाप्रत्ययश्च तुमर्थाधिकाराद्भावे भवति, लकारोऽपि तत्रैवेति समानविषयत्वादुभयोर्बाध्यबाधकभावः स्यात्। किंच वर्णात्कार इत्युत्सर्गः, सच "रादिफः" इत्यनेन बाध्येत। न चेष्टापत्तिः। "रकारादीनि नामानि शृण्वतो मम पार्वति" इत्यादिप्रयोगविरोधात्। अमुमेवार्थं मनसि निधाय हरदत्तादिभिः परिभाषेयमित्युक्तम्। एतेन "शकि लिङ् चे"ति ज्ञापकाद्वासरूपविधेरनित्यत्वेन स्त्र्यधिकारादुत्तरेषु क्तल्युट्()तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति सिद्धान्तः सङ्गच्छत इति दिक्। "वासरूपे" त्यत्राऽसरूप इति च्छेदः। अन्यथा लाघवेविशेषाऽभावेनाऽसंदेहाय "सरूपो वे"ति ब्राऊयादित्याशयेनाह--असरूपैति। असरूप इति किम्?। "कर्मण्यण्" इत्युसर्गः। "आतोऽनुपसर्गे कः" इत्यपवादः। स तूत्सर्गस्य नित्यं बाधको यथा स्यात्। गोदः। कम्बलदः। न च कृतेऽप्यसरूपग्रहणे अण्कयोरप्यसरूपत्वान्नेष्टसिद्धिरिति वाच्यं, "नाऽनुबन्धकृतमसारूप्य"मिति सिद्धान्तात्। "अस्त्रिया"मित्यत्र स्त्रीशब्दः स्वर्यते। स्वरितेन चाधिकारावगतिरित्याशयेनाह-- स्त्र्यदिकारोक्तं विनेति। तेन "स्त्रियां क्तिन्" इत्युत्सर्गम् अप्रत्यया" दित्यपवादो नित्यं बाधते। चिकीर्षा। जिहीर्षा। नन्वस्त्रियामित्यत्र स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञाय स्वरितेनाऽधिकारावगतिरित्यादिव्याख्यां विहाय स्त्रियामभिधेयायां वासरूपविधिर्नेति, स्त्रियामित्येवं शब्दमुच्चार्य विहिते वासरूपविधिर्नेति वा व्याख्यायतामितिचेत्। अत्राहुः-- "स्त्रियां वाच्याया"मिति पक्षे लव्या लवितव्येति यतो विषये तव्यो न स्यात्, द्वयोरपि इह

स्त्रीवाचकत्वात्। "स्त्रिया"मिति शब्दोच्चारणपक्षे तु व्यावक्रोशी व्यावक्रुष्टिरिति कर्मव्यतिहारे णचो विषये क्तिन् स्यात्। द्वयोरपि स्त्रियामित्युच्चार्य विधानात्। ततश्च "स्त्र्यधिकारोक्तं विने"ति व्याख्यैव ज्यासीति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

कृत्याः प्रग्ण् वुलः ३।१।९५

ण्वुल्तृचौ ३।१।१३३ इति वक्ष्यति। प्रागेतस्माण् ण्वुल्संशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामः, कृत्यसञ्जकस्ते वेदितव्याः। तत्र एव उदाहरिस्यामः। कृत्यप्रदेशः कृत्यैरधिकाऽर्थवचने २।१।३२, कृत्यानां कर्तरि वा २।३।७१ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

कृत्याः ७७१, ३।१।९५

ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः॥

न्यासः

कृत्याः प्राङ् ण्वुलः। , ३।१।९५

"कृत्याः" इति बहुवचनेन निर्देशो बहुत्वात् संज्ञिनाम्। अथ वा-- अनुक्तकृत्प्रत्ययसंग्रहार्थं बहुवचनम्। तेन "केलिमर उपसंख्यानम्" (वा।१२१) इत्येतत् कत्र्तव्यं न भवति। "ण्वुल्तृचाविति वक्ष्यति" इति। अथ रोगाख्यायां ण्वुल् बहुलम्" (३।३।१०८) इत्यस्य ण्वुलोऽवधित्वं कस्मान्न विज्ञायते? ज्ञापकात्। यदयम् "अर्हे कृत्यतृचश्च" ३।३।१६९ इति कृत्यग्रहणं कृत्वा तृज्ग्रहणं करोति, ततो ज्ञायते-- नास्यावधित्वमिति; अन्यथा तृचोऽपि कृत्यत्वाद्भदेनोपादानमनर्थकं स्यात्। यद्येवम्; प्राग्वचनमनर्थकं स्यात्, अत एव ज्ञापकात् तृच इयं संज्ञा न भविष्यति? नैतदस्ति; असति ह्येतस्मिन्, ज्ञापकात् तृच एव न स्यात्। ण्वुलस्तु स्यादेव। स्यादेतत्-- योगापेक्षं ज्ञापकम्, एतस्मिन् योगे कृत्यसंज्ञा भवति-- एषोऽर्थस्तृज्ग्रहणेन ज्ञाप्यते, तेन ण्वुलोऽपि न भविष्यतीति? एवमन्येषामजादीनां स्यात्, प्रतिपत्तिगौरवञ्च स्यात्, योगापेक्षस्य ज्ञापकस्य दुर्विज्ञानत्वात्॥

बाल-मनोरमा

कृत्याः ६५२, ३।१।९५

कृत्याः। कृत्यसंज्ञका इत्यर्थः। ततश्च "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च","अर्हे कृत्यतृचश्च", "शकि लिङ् चे"त्यादिषु प्रवर्तते। ण्वुलः प्रागिति। "ण्वुल्तृचौ" इत्यतः प्रागित्यर्थः। एतच्च भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

कृत्याः ५४३, ३।१।९५

कृत्याः। अत्र "प्रत्ययः" इत्यादिवत्कृत्य इत्यधिकारेणापीष्टसिद्धेर्बहुवचनमनुक्तप्रत्ययसमुच्चायार्थं, तेन केलिमरादयो ज्ञापकसिद्धा इति नोपसङ्ख्येया इत्याहुः। ण्वुलः प्रागिति। "ण्वुलतृचौ" इत्यतः प्रागित्यर्थः। "रोगाख्यायां ण्वुल् बहुल"मिति नावधिः, प्रत्यासत्तिन्यायात्। अवदिविशेषे ज्ञापकं तु "अर्हे कृत्यतृचश्चे"त्यत्र कृत्यात्पृथक्तृचो ग्रहणमेव। न चैवं तृचोऽकृत्यत्वेऽपि ण्वुलः कृत्यत्वं दुर्वारं स्यात्, इष्टापत्तौ तु "तयोरेवे"ति भावकर्मणोरेव ण्वुल् प्रग्ण्वुल इतिप्रचिक्षेप।

---

सूत्रम्

काशिका-वृत्तिः

तव्यत्तव्यानीयरः ३।१।९६

धातोः ३।१।९१ इति वर्तते। धातोः तव्यत्, तव्य, अनीयरित्येते प्रयया भवन्ति। तकाररेफौ स्वरार्थौ। कर्तव्यम्। कर्तव्यम्। कर्णीयम्। वसेस्तव्यत् कर्तरि णिच्च। वास्तव्यः। केलिमर उपसङ्ख्यानम्। पचेलिमाः माषाः। भिदेलिमानि काष्ठानि। कर्मकर्तरि च अयम् इष्यते।

न्यासः

तव्यत्तव्यानीयरः। , ३।१।९६

"तकाररेफौ स्वरार्थौ" इति। तकारः "तित्स्वरितम्" ६।१।१७९ इति स्वरितार्थः। रेफः "उपोत्तमं रिति" ६।१।२११ इतिमध्योदात्तार्थः। "वसेस्तव्यत् कत्तरि णिच्च" इति।"वस निवासे" (धा।पा।१००५) इत्यस्मात् कत्तरि तव्यप्रत्ययो भवति, स च णिद्भवतीति। न चैतद्वक्तव्यम्; "कृत्यल्युटो बहुलम्" (३।३।११३) इति सिद्धत्वात्। वसतीति वास्तव्यः। णित्वाद्दृद्धिः। "केलिमर उपसंख्यानम"इति। उपसंख्यानशब्दसय् प्रतिपादनमर्थः। प्रतिपादनं तु प्रागेव कृतम्। पुनरपि क्रियते-- "कृत्यल्युटो बहुलम्" ३।३।११३ इतिबहुलवचनात् केलिमप्र्रत्ययोऽपि कृत्यो भविष्यति। ककारः कित्कार्यार्थः, रेफः स्वरार्थः। स्वयमेव पच्यन्ते "पचेलिमा माषाः"। शब्दशक्तिस्वाभाव्यादत ए बहुवचनाच्च कर्मकत्तर्येव भवति नान्यत्र॥

बाल-मनोरमा

तव्यत्तव्यानीयरः ६५५, ३।१।९६

तव्यत्तव्यानीयरः। तव्यत् तव्य अनीयर् एषां द्वन्द्वः। प्रत्ययाः स्युरिति। ते कृत्संज्ञकाः, कृत्यसंज्ञकाश्च इत्यपि ज्ञेयम्। स्वरार्थाविति। "तित्स्वरित"मिति, "उपोत्तमं रिति" इति च स्वरविशेषार्थावित्यर्थः। निरनुबन्धकस्य तु तव्यस्य प्रत्ययस्वरेण आद्युदात्तत्वमेवेति बोध्यम्। भावे उदाहरति-- एधितव्यमिति। त्वत्कर्तृका एधनक्रियेत्यर्थः। ननु "लः कर्मणि चे"त्यत्र असत्त्वभूतस्यैव भावस्य ग्रहणम्, तिङ्()वाच्यभावनाया असत्त्वरूपताया उक्तत्वात्। ततश्च तस्य भावस्य असत्त्वरूपस्याऽत्र "तयोरेव कृत्ये"ति तच्छब्देन परामर्शात्तव्यदादीनामसत्त्ववाचितया लिङ्गसङ्ख्यान्वयोऽनुपपन्न इत्यत आह-- भावे औत्सर्गिकमेकवचनमिति। "एकवचनम्", "द्विबहुषु द्विबहुवचने" इति सूत्रपाठमभ्युपगम्य द्वित्वबहुत्वाऽभावे एकवचनमिति भाष्यसिद्धान्तादिति भावः। क्लीबत्वं चेति। "एकश्रुतिः स्वरसर्वनाम, लिङ्गसर्वनाम नपुंसक"मिति "दाण्डिनायने" ति सूत्रस्थभाष्यादिति भावः। कर्मण्युदाहरति-- चेतव्य इति। "वसेस्तव्यत्कर्तरि णिच्चेति वार्तिकम्। वास्तव्य इति। वस्तेत्यर्थः। णित्त्वादुपधावृद्धिः। केलिमर इति। धातोरित्येव। भावकर्णोरिवेदम्। केलिमरि ककाररेफावितौ। भिदेलिमा इति। कित्त्वान्नोपधागुणः। सरलाः = वृक्षविशेषाः। तद्भाष्येति। भाष्ये भिदेलिमा इत्युदाहृत्य "भेत्तव्या" इत्येव विवरणादिति भावः।

तत्त्व-बोधिनी

तव्यत्तव्यानीयरः ५४५, ३।१।९६

स्वरार्थाविति। तकारः "तित्स्वरित"मिति स्वरिततत्वार्थः। रेफस्तु "उपोत्तमं रिती"ति मध्योदात्तार्थः।

---

सूत्रम्

काशिका-वृत्तिः

अचो यत् ३।१।९७

अजन्ताद् धातोः यत् प्रत्ययो भवति। तकारो यतो ऽनावः ६।१।२०७ इति स्वरार्थः। गेयम्। पेयम्। चेयम्। जेयम्। अज्ग्रहणं किं यावता हलन्ताण् ण्यतं वक्ष्यति? अजन्तभूतपूर्वादपि यथा स्यात्, दित्स्यम्, धित्स्यम्। तकिशसिचतियतिजनीनाम् उपसङ्ख्यानम् तकि तक्यम्। शसि शस्यम्। चति चत्यम्। यति यत्यम्। जनि जन्यम्। हनो वा वध च। वध्यम्, घात्यम्।

लघु-सिद्धान्त-कौमुदी

अचो यत् ७७६, ३।१।९७

अजन्ताद्धातोर्यत् स्यात्। चेयम्॥

न्यासः

अतो यत्।, ३।१।९७

"तकारः "यतोऽनावः" इति {स्वरार्थः-- काशिका} विशेषणार्थः" इति। आद्युदात्तार्थः। "गेयम्" इति। "कै गै शब्दे" (धा।पा।९१६,९१७), "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्वम्, "ईद्यति" ६।४।६५ इतीत्वम्, गुणः। "यावता" इत्यादि। इह द्विविधा धातवः-- हलन्ता अजन्ताश्च; तत्र "ऋहलोर्ण्यत्" ३।१।१२४ इति ण्यतं हलन्तादिच्छति।अतः परिशेष्यादेवाज्ग्रहणमन्तरेणाप्यजन्तादेव यद्()भविष्यतीत्यतोऽज्ग्रहणमपार्थकमित्यभिप्रायः। "अजन्तभूतपूर्वात्" इति। अजन्तश्चासौ भूतपूर्वश्चेति कर्मधारयः। यः प्रागजन्त आसीत् संप्रति तु हलन्तः, ततोऽपि यथा स्यादित्येवमर्थमज्ग्रहणम्। "दित्स्यम्"। "धित्स्यम्"। दाञो धाञश्च सन्, द्विर्वचनम्। "सनि मीमा" ७।४।५४ इतीस्। "अत्र लोपोऽभ्यासस्य" ७।४।५८ इत्यभ्यासलोपः। "सः स्यार्धधातुके" ७।४।४९ इति तत्वम्। अनुत्पन्न एवार्धधातुके विषयभावेन विवक्षिते "अतो लोपः" ६।४।४८ इत्यकारलोपः। अस्यामवस्थायामसत्यज्गर्हणे न स्यात्; अनजन्तत्वात्। त()स्मस्तु सति भूतपूर्वमजन्तत्वमाश्रित्य भवति। पाक्षिकञ्चैतत् प्रयोजनं वेदितव्यम्। क्व तस्मिन्पक्षे? यदार्धधातुके विषयभावन विवक्षिते "अतो लोपः" ६।४।४८ विधीयते। यदाऽऽर्धधातुकः, तदा नेदं प्रयोजनम्। विस्पष्टार्थं त्वज्ग्रहणं वेदितव्यम्। "तकिशसि" इत्यादि। "तक { सहने इति मुद्रितः पाठः} हसने(धा।पा।११७), "शसु हिंसायाम्" (धा।पा।७२७), "चते चदे याचने" (धा।पा।८६५,८६६) , "यती प्रयत्ने" (धा।पा।३०), "जनी प्रादुर्भावे" (धा।पा।११४९)--एषां यत्प्रत्ययस्योपसंख्यानम् = प्रतिपादनं कत्र्तव्यम्। प्रतिपादनं तु बहुलग्रहणमाश्रित्य कत्र्तव्यम्। "हनो वा वध च" इति। हन्तेर्धातोर्यत्प्रत्ययो भवति, ण्यतोऽपवादः। वावचनात् पपक्षे ण्यद्भवत्येव। यत्प्रत्ययस्तु तत एव बहुलवचनाल्लभ्यते। यदा यद्भवति तदा हन्तेर्बधादेशः। सोऽपि "हनो वध लिङि" २।४।४२ इत्यत्र "बहुलं छन्दसि" २।४।३९ इत्यतो बहुलग्रहणानुवृत्तेर्लभ्यते। घात्य इति। "हनस्तः" ७।३।३२ इति तत्वम्, "हो हन्तेः" ७।३।५४ इति कुत्वम्॥

बाल-मनोरमा

अचो यत् ६६३, ३।१।९७

अचो यत्। शक्यमकर्तुमिति। "ऋहलोण्र्य"दिति ऋहलन्ताद्विशिष्य ण्यतो विहितत्वेन हलन्तेभ्यो यत्प्रत्ययस्याऽप्रवृत्तिरित्यर्थः। वासरूपविधिस्तु सरूपत्वान्न भवति। योगविभागोऽप्येवमिति। कर्तुमशक्य इत्यर्थः। कुत इत्यत आह-- तव्यदादिष्वेवेति। "तव्यत्तव्यानीयर्यतः इत्येकसूत्रत्वेनैव पठितुं शक्यत्वादित्यर्थः।

तत्त्व-बोधिनी

अचो यत् ५५२, ३।१।९७

अचो यत्। धातोरिति वर्तते। अज्ग्रहणं च धातोर्विशेषणं, विशेषणेन तदन्तविधिस्तदाह--अजन्तादिति। शक्यमकर्तुमिति। अत्र केचिदज्ग्रहणमजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थपेक्षितम्। तेन दित्स्यं धित्स्यमित्त्र यति कृते "यतोऽनावः" इत्याद्युदात्तत्वं सिध्यति, ण्यति कृतेतु "तित्स्वरितम्" इति प्रसज्येत। न च दित्स्यं धित्स्यमित्यत्र "ऋहलोः" इति ण्यतः प्रसक्तिरेव नास्तीति वाच्यम्, आद्र्धदातुकविवक्षायामेव अतो लोपे कृते हलन्तत्वेन तत्संभवादित्याहुस्तदापाततः। आद्र्धधातुके विवक्षिते यद्यतो लोपः स्यात्तदा हीदं संभवेत्। लोपस्तु आद्र्धधातुके पर एवोचितः। अन्यथा परनिमित्तत्वाऽभावेन स्थानवत्त्वाऽभावे गणयतीत्यादावुपधावृद्धिप्रसङ्गादिति भावः। सुपठत्वादिति। द्वये धातवोऽजन्ता हलन्ताश्च। तत्र हलन्ताण्ण्यन्तं वक्ष्यतीति परिशेषादज्तादेव यद्भविष्यतीति भावः। तकिशसीति। तक हसने। शसु हिंसायाम्। चते याचने। यत्तु केचिच्छंसीति सानुस्वारं पठन्ति तदुपेक्ष्यम्, "ईडवन्दवृशंसदुहां ण्यत" इति सूत्राऽविरोधेन शंसेण्र्यत एव स्वीकर्तव्यत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

पोरदुपधात् ३।१।९८

पवर्गान्ताद् धातोः अकारोपधात् यत् प्रययो भवति। ण्यतो ऽपवादः। शप् शप्यम्। लभ लभ्यम्। पोः इति किम्? पाक्यम्। वाक्यम्। अदुपधातिति किम्? कोप्यम्। गोप्यम्। तपरकरणं तत्कालार्थम्। आप्यम्।

लघु-सिद्धान्त-कौमुदी

पोरदुपधात् ७७८, ३।१।९८

पवर्गान्तादतुपधाद्यत्स्यात्। ण्यतोऽपवादः। शप्यम्। लभ्यम्॥

न्यासः

पोरदुपधात्। , ३।१।९८

"प्राक्यम्। वाक्यम्" इति। "चजोः" ७।३।५२ इति कुत्वम्। "कोप्यम्। गोप्यम्" इति। "कुप क्रोधे" (धा।पा।१२३३), "गुप {गोपने इत्येव-धा।पा।} गोपनकुत्सनयोः" (धा।पा।९७०), "गुप व्याकुलीकरणे" (धा।पा।१२३४)। आप्यमिति। "आप्लृ व्याप्तौ" (धा।पा।१२६०)॥

बाल-मनोरमा

पोरदुपधात् ६६५, ३।१।९८

पोरदुपधात्। ननु शप्यं लभ्यमित्यत्र "ऋहलोण्र्य"दिति कदाचिण्ण्यदपि स्यात्, यण्ण्यतोरसारूप्येण वाऽसरूप इत्यस्य प्रवृत्तेरित्यत आह-- - नानुबन्धकृतमसारूप्यमिति। वाऽसरूपसूत्रे भाष्ये स्थिमिदम्। अनुबन्धविनिर्मुक्तस्यैव असारूप्यं विविक्षितमित्यर्थः। प्रकृते च यण्ण्यतोरनुबन्दरहितयोः सारूप्याद्वासरूपविधेरप्रवृत्तेः शप्यमित्यादौ ण्यदपवादो यदेवेति भावः।

तत्त्व-बोधिनी

पोरदुपधात् ५५४, ३।१।९८

पोः किम्?। पाक्यम्। अदुपधात्किम्?। कोप्यम्। तपरकरमं किम्?। आप्लृ व्याप्तौ। आप्यम्। नानुबन्धेति। अनुबन्धानामनवयवत्वत्तत्कृतमसारूप्यं नाश्रीयते। एकान्तत्वपक्षेऽपि "ददातिदधात्योर्विभाषा" इति विभाषाग्रहणाल्लिङ्गन्नाश्रीयते। अन्यथा अनुबन्धकृतादसारूप्यादेव शविषये णो भविष्यतीति किं तेन विभाषाग्रहणेन?। ततश्च पक्षद्वयेऽपि शप्यमित्यादौ ण्यन्न भवतीति भावः। एतच्च ददातीत्यादिसूत्रे विभाषाग्रहणमनुबन्धानामेकान्तत्वपक्षे शविषये णस्याऽप्राप्तौ विभाषा, एकान्तत्वपक्षे तु प्राप्तविभाषेति पक्षद्वयसाधारणं विभाषाग्रहणं लिङ्गं मनोरमायामेकान्तत्वपक्ष एवोपन्यस्तमिति तदनुसारेणेहाप्युक्तम्। अनेकान्तत्वपक्षे त्वसाधारणं लिङ्गम् "उदीचां माङः" इति सूत्रे माङो ग्रहणम्। मेङ इत्यत्र हि सत्यपि ङकारानुबन्धे तस्यानवयवत्वदेजन्तत्वमविहतमिति "आदेच उपदेशे" इत्यात्वस्वीकारादिति दिक्। ण्यदेवेति। तेन "तित्स्वरित"मिति स्वरिते सति आलम्भ्य इत्यत्र समासान्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण स्वरितान्तत्वमिष्टं सिध्यति, यति तु "यतोऽनावः" इत्याद्युदात्तत्वेनोत्तरपदाद्युदात्तत्वं प्रसज्येत, तच्चाऽनिष्टमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

शकिसहोश् च ३।१।९९

शक्लृ शक्तौ, षह मर्षणे, अनयोर्धात्वोः यत् प्रययो भवति। शक्यम्। सह्यम्।

न्यासः

शकिसहोश्च।, ३।१।९९

बाल-मनोरमा

शकिसहोश्च ६६८, ३।१।९९

शकिसहोश्च। पञ्चम्यर्थे षष्ठी। आभ्यां यदित्यर्थः। ण्यतोऽपवादः।

---

सूत्रम्

काशिका-वृत्तिः

गदमदचरयमश् च अनुपसर्गे ३।१।१००

गद व्यक्तायां वाचि, मदी हर्षे, चर गतिभक्षणयोः, यम उपरमे, एतेभ्यश्च अनुपसर्गेभ्यो यत् प्रत्ययो भवति। गद्यम्। मद्यम्। चर्यम्। यम्यम्। अनुपसर्गे इति किम्? प्रगाद्यम्। प्रमाद्यम्। यमेः पूर्वेण एव सिद्धे अनुपसर्गनियमार्थं वचनम्। चरेराङि चागुरौ। आचर्यो देशः। अगुरौ इति किम्? आचार्य उपनेता।

न्यासः

गदमदचरयमश्चानुपसर्गे।, ३।१।१००

"अनुपसर्गे" इति। सुज्व्यत्ययेन पञ्चम्यर्थे सप्तमी। अत एवाह-- "अनुपसर्गेभ्यः" इति। अविद्यमानोपलसर्गेभ्य इत्यर्थः। अथैवं कस्मान्न विज्ञायते-- उपसर्गादन्योऽनुपसर्ग इति? अशक्यमेवं विज्ञातुम्; एवं हि विज्ञायमाने केवलेभ्यो न स्यात्। नञिवयुक्त (है।प।९४) न्यायेनोपसर्गसदृशस्य सुबन्तस्य ग्रहणे सति "वदः सुपि क्यप् च" ३।१।१०६ इत्यत्र पुनः सुब्ग्रहणमनर्थकं स्यात्, अस्यैवानुपसर्गस्य तत्रानुवृतेः। तस्मात् पूर्वोक्त एवार्थो युक्तः। "नियमार्थम्" इति। अनुपसर्गादेव

यथा स्यात्, सोपसर्गानमा भूदिति। "चरेः" इत्यादि। सोपसर्गार्थमिदम्- चरेर्धातोराङि चोपपदे यद्भवतीति, अगुरावभिधेये। स तु ज्ञापकादेव सिध्यतीति नोपसंख्येयः, यदयम् "आश्चर्यमनित्ये" ६।१।१४२ "सम्माननोत्सञ्जनाचार्यकरण" १।३।३६ इत्यादि करोति, ततो ज्ञायते-- चरेराङि चागुरौ यद्भवतीति। "आचार्यो देशः" इति गन्तव्य इत्यर्थः। गुरुः= उपनेता॥

बाल-मनोरमा

गदमदचरयमश्चानुपसर्गे ६६९, ३।१।१००

गदमद। गद, मद, चर, यम् एषां चतुर्णां द्वन्द्वः। अनुपसर्ग इति सप्तमी पञ्चम्यर्थे। एभ्योऽनुपसर्गेभ्यो यदित्यर्थः। ण्यतोऽपवादः। उपसर्गाण्ण्यदेव। प्रगाद्यमित्यादि। चरेराङिचाऽगुराविति। वार्तिकमिदम्। आङि उपसर्गे सत्यपिचरेर्यत्स्यादगुरौ इत्यर्थः। आचार्यो गुरुरिति। शुश्रूषणीय इत्यर्थः। ननु "पोरदुपधा" दित्येव सिद्धे यमेरिह ग्रहणं व्यर्थमित्यत आह-- यमेर्नियमार्थमिति। अनुपसर्गादेव यमेण्र्यदिति नियमार्थमित्यत्यर्थः। तत्फलमाह-- सोपसर्गान्मा भूदिति। ननु "अनियम्यस्य नाऽयुक्तिः" इत्यत्र, "त्वया नियम्या ननु दिव्यचक्षा" इत्यादौ च निपूर्वनाद्यमेः कथं यत्, अनुपसर्गादिति निषेधादित्यत आह-- निपूर्वात्स्यादेवेति। "य" दिति शेषः। कुत इत्यत आह-- तेन न तत्रेति। प्रकारान्तरेण समाधत्ते-- नियमे साधुरिति वेति। "यमः समुपनिविषु चे"ति निपूर्वाद्यमेर्भावे अप्प्रत्यये नियमशब्दः। नियमे साधुरित्यर्थः "तत्र साधुः" इति प्राग्घितीये यत्प्रत्यये नियम्यशब्दो व्युत्पाद्य इत्यर्थः।

तत्त्व-बोधिनी

गदमदचरयमश्चानुपसर्गे ५५६, ३।१।१००

गदमद। व्यत्ययेन पञ्चम्यर्थे सप्तमी। एभ्योऽनुपरुआगेभ्यो यत्स्यात्। ण्यतोऽपवादः। अनुपसर्गे किम्?। "न नैषधे कार्यमिदं निगाद्य" मिति श्रीहर्षः।

* चरेराङि चाऽगुरौ। यमेरिति। "पोरदुपधा"दित्यनेनैव सिद्धेरिति भावः। नियमे साधुरिति। "यमः समुपनिविषु च" इति वैकल्पिकेऽप्प्रत्यये कृते "तत्र साधुः" इति तद्धितो यदित्यर्थः। यद्यप्यस्मिन्पक्षे "कृत्यानां कर्तरि वा" इत्यस्याऽप्रवृत्तेः कर्तरि तृतीया दुर्लभा तथापि त्वयेति च तेनेति चकरणत्वविवक्षया तृतीयेति स्थितस्य गतिर्बोध्या। केवलाद्यतं कृत्वा निशब्देन समास इत्यपरे। यद्वा "यमोऽपरिवेषणे मि"दिति मतमाश्रित्य "पर्यवसितं नियमय"न्नित्यादाविव मित्त्वं स्वीकृत्य ण्यन्ताद्यद्बोध्यः। अथ वा संज्ञापूर्वकविधेरनित्यत्वाण्ण्यत्येव वृद्धिर्न प्रवृत्तेति दिक्। एवं च वार्तिकप्रयोगोऽप्यन्यथासिद्ध इति तद्बलेननिपूर्वाद्यदिति न कल्पनीयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ३।१।१०१

अवद्य पण्य वर्या इत्येते शब्दा निपात्यन्ते गर्ह्य पणितव्य अनिरोध इत्येतेष्वर्थेषु यथासङ्ख्यम्। अवध्यम् इति निपात्यते गर्ह्यं चेत् तद् भवति। अवद्यं पापम्। अनुद्यम् अन्यत्। वदः सुपि क्यप् च ३।१।१०६। पण्यम् इति निपात्यते, पणितव्यं चेत् तद् भवति। पण्यः कम्बलः। पण्या गौः। पाण्यम् अन्यत्। वर्या इति स्त्रियां निपात्यते, अनिरोधश्चेद् भवति। अनिरोधो ऽप्रतिबन्धः। शतेन वर्या। सहस्रेण वर्या। वृत्या अन्या। स्त्रीलिङ्गनिर्देशः किम् अर्थः? वार्या ऋत्विजः।

न्यासः

अवद्यपण्यवर्या गह्नरपणितव्यानिरोधेषु। , ३।१।१०१

"अवद्यम्" इति। वदेर्नञ्युपपदे "वदः सुपि क्यप् च" ३।१।१०६ इति यत्क्यपोः प्राप्तयोर्यदेव निपात्यते। "अनुद्यम्" इति। यजादित्वात् संप्रासरणम्, "नलोपो नञः" ६।३।७२, "तस्मान्नुडचि" ६।३।७३ इति नुट्। "पण्यम्" इति। पणेर्व्यवहारार्थस्य ण्यति प्राप्ते यन्निपात्यते। "पाण्यम्" इति। स्तोतव्यमित्यर्थः। "वर्या" इति। वृङो ण्यति प्राप्ते यन्निपात्यते। स्त्रियामित्यनेन सूत्रे लिङ्गनिर्देशस्य तन्त्रतां दर्शयति। "अप्रतिबन्धः" इति। अनेनानिरोधशब्दस्यार्थमाचष्टे। अप्रतिबन्धः प्रसराभिघात इत्यर्थः। "वृत्या" इति। निरोधनीया। प्रसरविघातोऽस्याः कत्र्तव्य इत्यर्थः। एतच्च वृञः "एतिस्तृशासु" ३।१।१०९ इति क्यपि कृते "ह्रस्वस्य पिति कृति" ६।१।६९ इति तुकि च रूपम्। "वार्या ऋत्विजः" इति। वृङ एतद्रूपम्। ऋत्विजो हि धनेन संविभक्तव्या इत्यस्त्यनिरोधः। स्त्रीलिङ्गता तु नास्तीति ण्यदेव भवति। ननु "एतिस्तुशास्वृ" (३।१।१०९) इति क्यपा भवितव्यम्? नैतदस्ति; वृञो हि तत्र ग्रहणम्, वृङश्चात्रोदाहरणम्॥

बाल-मनोरमा

अवद्यपण्यवर्या गह्र्यपणितव्याऽनिरोधेषु ६७०, ३।१।१०१

अवद्यपण्य। अवद्य, पण्य, वर्य एषां द्वन्द्वात्प्रथमाबहुवचनम्। गह्र्य, पणितव्य,अनिरोध एषां द्वन्द्वात्सप्तमीबहुवचनम्। अवद्यादयरुआयः क्रमाद्गह्र्यादिषु त्रिष्वर्थेषु निपात्यन्ते इत्यर्थः। ननु "वदः सुपि" इत्येव सिद्धे अवद्यग्रहणं व्यर्थमित्यत आह-- नञ्युपपदे इति। यत्क्यपोः स्वरे विशेषः,संप्रसारणतदभावौ चेति भावः। अवद्यं पापामिति।गर्हितत्वादवाच्यमित्यर्थः। अनुद्यं गुरुनामेतव। अत्र नञि उपपदे "वदः सुपीटति क्यपि "वचिस्वपियजादीनां किती"ति संप्रसारणे रूपम्। वचनाऽनर्हमित्यर्थः। अत्र गर्हाया अप्रतीतेर्यदेवेदित न नियम इति भावः। ननु गुरुनाम्नोऽगह्र्यत्वातकथं वचनानर्हत्वमित्यत आह-- तद्धि न गर्ह्यं वचनानर्हं चेति।कुत इत्यत आह-- आत्मनामेति। पण्या गौरिति। पणधातोर्व्यवहारार्थकाद्यन्निपात्यते इति भावः। यद्यपि "पण व्यवहारे स्तुतौ च" इति धातोर्र्थद्वयमस्ति, तथापि पण्यशब्दस्य प्रयोगबलेन व्यवहर्तव्य एव रूढत्वादिह व्यवहारार्थक एव गृह्रते। तदाह-- व्यवहर्तव्येति। क्रेतव्येत्यर्थः। पाण्यमन्यदिति। ण्यति उपधावृद्धिरिति भावः। व्यवहर्तव्यादन्यदित्यर्थः। तदाह-- स्तुत्यर्हमिति।?प्रतिबन्ध इति। अनियम इत्यर्थः। वृङो यदिति। "वृङ् संभक्तौ" इति क्रैयादिकस्यैवाऽत्र ग्रहणं, नतु "वृञ् वरणे" इत्यस्य, अनिरोधरूपार्थस्य संभक्तिवाचित्व एव सामञ्जस्यादिति भावः। शतेन वर्याकन्येति। पुरुषशतेन परिग्रहीतुमर्हा। अनेनैव वरणीयेति नियमो नास्तीत्यर्थः। वृत्या अन्येति। अनुरूपेण वरणीयेत्यर्थः। "एतिस्तुशास्वृदृजुषः क्य"बिति तुक्। अत्र अनियमस्य अप्रतीतेर्न यत्। अत्र वर्याशब्दस्य स्त्रीलिङ्गस्य ग्रहणात्पुंसि "वार्या ऋत्विज" इति वृत्तिः।

तत्त्व-बोधिनी

अवद्यपण्यवर्या गह्र्यपणितव्याऽनिरोधेषु ५५७, ३।१।१०१

अनुद्यमिति। अत्र वदेः क्यबेव भवति।यजादित्वात्संप्रसारणम्। "नलोपो नञः"। "तस्मान्नुडचि"। व्यवहर्तव्येति। यद्यपि पणितव्यशब्दोऽर्थद्वयसाधारणस्तथापि निपातनस्येह रूढ()र्थत्वद्व्यवहर्तव्य एवाऽयं निपात्ते। उक्तंच हरिणा-- "धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च। अनुबन्धविकाराणां रूढ()र्थं च निपातन"मिति। अनुबन्धविकाराणां नियमस् च प्राप्त्यर्थमिति पूर्वेणान्वयः। शतेनेति। शतशब्दोऽनियतपरः। कन्याय वरणे वरयितृ()णां नियमो नास्तीत्यर्थः। वर्येति। संभक्तव्येत्यर्थः। वृङ् संभक्तावित्स्येदं निपानम्, तत्रैवाऽनिरोधरूपस्याऽर्थस्य संभवादिति भावः। अनिरोदेष्वित्यस्याऽनुक्तौ वृञोऽपि स्यादिति ध्वनयति-- वृत्येति। "एतिस्तुशास्" इत्यादिना वृञः क्यप्। इह सूत्रेऽवद्यादीनि निर्विभक्तिकानि पृथक्पदानि,तत्र वर्याशब्दष्टाबन्तोऽनुक्रियते। न त्वयं द्वन्द्वेन जसन्तेन निर्देशः। तेन

वर्येति स्त्रियामेव निपात्यते। अस्त्रियां तु वृङः "ऋहलोण्र्यत्"। वार्या ऋत्विजः। ऋत्विजामपि यज्ञमात्रे वरणीयत्वादनिरोधोऽस्ति, स्त्रीत्वं तु नास्तीति ण्यदेव भवति। एतच्च वृत्तिकारमतम्। न चाऽत्र"एतिस्तु" इतिक्यप् शङ्क्यः, तत्र वृञ एव ग्रहणं न तु वृङ इति सिद्धान्तात्। भट्टिस्तु द्वन्द्वाज्जसा निर्देश इति मत्वा पुंलिङ्गेऽपि यतं प्रायुङ्क्त----"सुग्रीवो ममवर्योऽसौ" इति।

---

सूत्रम्

काशिका-वृत्तिः

वह्यं करणम् ३।१।१०२

वहेर् धातोः करणे यत् प्रत्ययो निपात्यते। वहत्यनेन इति वह्यं शकटम्। करणे इति किम्? वाह्यम् अन्यत्।

न्यासः

वह्हं करणम्।, ३।१।१०२

बाल-मनोरमा

वह्हं करणम् ६७१, ३।१।१०२

वह्हं करणम्। वहेः करणे यन्निपात्यते। ण्यतोऽपवादः।

तत्त्व-बोधिनी

अह्हं करणम् ५५८, ३।१।१०२

वाह्हमिति। वहनकर्मेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अर्यः स्वमिवैश्ययोः ३।१।१०३

ऋ गतौ, अस्माण् ण्यति प्राप्ते स्वामिवैश्ययोः अभिधेययोः यत् प्रत्ययो निपत्यते। अर्यः स्वामी। अर्यो वैश्यः। यतो ऽनावः ६।१।२०७ इत्याद्युदात्तत्वे प्राप्ते स्वामिन्यन्तोदात्तत्वं च वक्तव्यम्। स्वामिवैश्ययोः इति किम्? आर्यो ब्राह्मणः।

न्यासः

अर्यः स्वामिवैश्ययोः।, ३।१।१०३

"वक्तव्यम्" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- तन्त्रेणेह द्वावर्यशब्दावुच्चारितौ,तत्रैक आद्युदात्तः,अपरोऽन्तोदात्तः। य आद्युदात्तः स वैश्ये निपात्यते, इतरस्तु स्वामिनीति॥

बाल-मनोरमा

अर्य स्वामिवैश्ययोः ६७२, ३।१।१०३

अर्यस्वामिवैश्ययोः। अस्माद्यदिति। निपात्यत इति शेषः। ण्यतोऽपवाद इति। "ऋहलो"रिति प्राप्तस्य ण्यतोऽपवाद इत्यर्थः। यति ऋकारस्य गुणे रपरत्वम्। तदाह-- अर्यः स्वामीति। आर्यो ब्राआह्हण इति। ण्यति वृद्धौ रपरत्वमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्या काल्या प्रजने ३।१।१०४

उपसर्या इति निपात्यते काल्या चेत् प्रजने भवति। उपपूर्वात् सर्तेः यत् प्रत्ययः। प्राप्तकाला काल्या। प्रजनः प्रजननं, प्रथमगर्भग्रहणम्। गर्भग्रहणे प्राप्तकाला। उपसर्या गौः। उपसर्या वडवा। काल्या प्रजने इति किम्? उपसार्या शरदि मधुरा।

न्यासः

उपसर्या काल्या प्रजने।, ३।१।१०४

"प्राप्तकाला काल्या" इति। "तदस्य प्राप्तस्य" ५।१।१०३ इत्यनुवर्त्तमाने "कालाद्यत्" ५।१।१०६ इति यत्। प्रजननम् = प्रजनः, भावे घञ्, "जनिवध्योश्च" ७।३।३५ इति वृद्धिप्रतिषेधः। "उपसार्या" इति। उपसंक्रमणीत्येत्यर्थः।

बाल-मनोरमा

उपसर्या काल्या प्रजने ६७३, ३।१।१०४

उपसर्या। प्रजननं प्रजनः = गर्भग्रहणम्। भावे घञ्। "जनिवध्योश्चे"ति वृद्धिनिषेधः। कालः प्राप्तोऽस्याः काल्या। "तदस्य प्राप्त"मित्यनुवर्तमाने "कालाद्य"दिति यत्। चेदित्यध्याहार्यम्। तदाह-- गर्भग्रहणे प्राप्तकाला चेदिति। गर्भग्रहणे प्राप्तकाला स्त्रीपशुव्यक्तिर्विवक्षिता चेदुपसर्या इति निपात्यते इत्यर्थः। उपपूर्वात् सृधातोर्यदिति फलितम्। ण्यतोऽपवादः।

तत्त्व-बोधिनी

उपसर्या काल्या प्रजने ५५९, ३।१।१०४

उपसर्या। उपपूर्वात्सरतेः सर्तेर्वा यन्निपात्यते। कालः प्राप्तोऽस्याः काल्या। "तदस्य प्राप्त"मिति वर्तमाने "कालाद्यत्" इति यत्। प्रजननं प्रजनो = गर्भग्रहणम्। भावे घञ्। "जनिवध्योश्च" इति वृद्धिनिषेधः। उपसार्येति। कर्मणि ण्यत्। कर्तरि यदिति। "तयोरेव" इति भावे प्राप्ते कर्तरि यन्निपात्यत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अजर्यं सङ्गतम् ३।१।१०५

अजर्यम् इति निपात्यते, सङ्गतं चेद् भवति। जीर्यतेः नञ्पूर्वात् सङ्गते सङ्गमने कर्तरि यत् प्रययो निपात्यते। न जीर्यति इति अजर्यम्। अजर्यम् आर्यसङ्गतम्। अजर्यं नो ऽस्तु सङ्गतम्। सङ्गतम् इति किम्? अजरिता कम्बलः।

न्यासः

अजंर्य सङ्गतम्।, ३।१।१०५

"जीर्यतेः" इति। "जृ()ष् झृ()ष् वयोहानौ" (धा।पा।११३०, ११३१)। "सङ्गमन" इति। सङ्गमनम् = सङ्गतिः। "ल्युट् च" ३।३।११५ इति ल्युट्। एतेन सङ्तमित्यत्र "नपुंसके भावे क्तः" ३।३।११४ इति दर्शयति। "कत्र्तरि यत्प्रत्ययो निपात्यते"इति। तृजादीनामपवादः। "अजरिता" इति। तृच्॥

बाल-मनोरमा

अजर्यं सङ्गतम् ६७४, ३।१।१०५

अजर्यम्। कर्तरि यदिति। "कर्तरीति वक्तव्य"मिति वार्तिकम्। निपातनात्कर्तरीति लभ्यत इति तदाशयः। सङ्गतमिति। सङ्गतं = सङ्गमः। न जीर्यतीत्यजर्यमिति। "मित्रत्व"मिति शेषः। जरितृ न भवतीत्यर्थः। अत्र भट्टिप्रयोगमाह-- तेनेति। हे राम ! तेन आर्येण अजर्यम् = अन()आरं, सङ्गतं- सङ्गमं द्रुतं कुरु इत्यन्वयः। ननु "मृगैरजर्यं जरसा" इत्यत्र सङ्गतशब्दाऽभावात्कथं यदित्यत आह-- मृगैरित्यादि। कालिदासकाव्यमिदम्। अजरितेति। तृजऽभावान्न यदित्यर्थः।

तत्त्व-बोधिनी

अजर्यं सङ्गतम् ५६०, ३।१।१०५

संगतं चेदिति। नपुंसके भावे क्तः। विशेष्यमिति। इहाऽजर्यमिति समुदायस्य सङ्गतं वाच्यमित्यर्थो न ग्राह्यः, पर्यायाणां युगपत्प्रयोगाऽसंभवेनाऽजर्यंसतां सङ्गतमिति प्रयोगाऽनापत्तेः, "तेन सङ्गत"मिति भट्टिप्रयोगानुपपत्तेश्च।

---

सूत्रम्

काशिका-वृत्तिः

वदः सुपि क्यप् च ३।१।१०६

अनुपसर्गे इति वर्तते। वदेर् धातोः सुबन्तोः उपपदे अनुपसर्गे क्यप् प्रत्ययो भवति, चकाराद् यत् च। ब्रह्मोद्यम्, ब्रह्मवद्यम्। सत्योद्यम्, सत्यवद्यम्। सुपि इति किम्? वाद्यम्। अनुपसर्गे इत्येव, प्रवाद्यम्।

न्यासः

वदः सुपि क्यप् च। , ३।१।१०६

"अनुपसर्ग इति वत्र्तते" इति। ननु च "सत्सूद्विष" ३।२।६१ इत्यादौ सूत्रे वक्ष्यति-- एतदुपसर्गग्रहणं ज्ञापनार्थम्, अन्यत्र सुब्ग्रहण उपसर्गग्रहणं न भवतीति; एवञ्च तत एव ज्ञापकादुपसर्गे न भविष्यतीति किमिहानुपसर्गग्रहणानुवृत्त्या? विस्पष्टार्थमित्येके। तत्र वाज्ञापनार्थमुपसर्गग्रहणं कत्र्तव्यम्; इह वानुपसर्गमनुवत्र्यमिति विकल्पदर्शनार्थमित्यपरे। "ब्राह्ओद्यम्" इति। ब्राह्णो वदनमित्यर्थः। भावे क्यप्, पूर्ववत् संप्रसारणम्, "आद्गुणः" ६।१।८४, उपपदसमासः॥

बाल-मनोरमा

वदः सुपि क्यप् च ६७५, ३।१।१०६

वदः सुपि। उत्तरेति। "भुवो भावे" इत्यत्तरसूत्राद्भावे इत्यपकृष्यते इत्यर्थः। भूधातोरकर्मकत्वेन उत्तरसूत्रे भावग्रहणस्य वैयथ्र्यादिति भावः। अनुपसर्गे इति। "वृः सुप्यनुसर्गग्रहण"मिति भाष्यादिति भावः। ब्राह्ओद्यमिति। वदेः क्यपि " वचिस्वपी"पि संप्रसारणम्। "वस्तुतस्तु नेह भावग्रहणमपकृष्यते, तत्र भावग्रहणमुत्तरार्थमिति भाष्या"दिति मतमनुसृत्य आह-- कर्मणि प्रत्ययावित्येके इति। क्यब्यतावित्यर्थः।

तत्त्व-बोधिनी

वदः सुपि क्यप् च ५६१, ३।१।१०६

वदः। सकर्मकत्वाद्भावे कृत्यप्रत्ययो दुर्लभः, "लः कर्मणि" इति सूत्र इव "तयोरेव" इत्यत्रापि सकर्मकेभ्यः कर्मणि, अकर्मकेभ्य एव भावे इति सिद्धान्तात्। अत आह----भाव इत्याकृष्यत इति। "भुवो भावे" इत्यत्राऽनुपसर्ग इत्यनुवर्तनात्, निरुपसर्गस्य भवतेरकर्मकत्वात् "तयोरेव कृत्ये" ति भावे कृत्यप्रत्ययसिद्धौ भावग्रहणस्य वैयथ्र्यशङ्कायां भावग्रहणमुत्तरार्थमिति भाष्ये स्थितम्। तद्भाष्यस्वारस्यग्रहिणां मतमाह--- कर्मणीति। अनुपसर्ग इति। सुपि किम्?।

"हनस्तोऽचिण्णलोः"घातः। अनुपसर्गे किम्?। प्रघातः। भावे घञ्।

---

सूत्रम्

काशिका-वृत्तिः

भुवो भावे ३।१।१०७

सुप्यनुपसर्गे इत्यनुवर्तते। भवतेर् धातोः सुबन्ते उपपदे ऽनुपसर्गे भावे क्यप् प्रत्ययो भवति। यत् तु न अनुवर्तते। ब्रह्मभूयं गतः ब्रहंत्वं गतः। देवभूयं, देवत्वं गतः। भावग्रहणम् उत्तरार्थम्। सुपि इत्येव, भव्यम्। अनुपसर्गे इत्येव, प्रभव्यम्।

न्यासः

भुवो भावे। , ३।१।१०७

"यत् तु नानुवत्र्तते" इति। पूर्वसूत्रे चानुकृष्टत्वात्। "ब्राह्मभूयं गतः" इति। ब्राह्त्वं प्राप्त इत्यर्थः। ननु च "तयोरेव कृत्यक्तखलर्थाः" 3।4।70 इति भावकर्मणोः कृत्वा विधीयन्ते, अनुपसर्ग इति चानुवत्र्तते, अनुपसर्गश्च भवतिरकर्मक इतिसामथ्र्याद्भाव एव भविष्यति, न कर्मणि, किं भावग्रहणेन? इत्याह-- "भावग्रहणेन? इ()तयाह-- "भावग्रहणमुत्तरार्थम्" इति। एतेन "हनस्त च" 3।1।108 इत्यत्रोपयोगमाह-- तत्र भाव एव यथा स्यात्। "भव्यम्" इति। अचो यत्" 3।1।97, धातोर्गुणः, "धातोस्तन्निमित्तस्यैव" 6।1।77 इत्यवादेशः॥

बाल-मनोरमा

भुवो भावे ६७६, ३।१।१०७

भुवो भावे। ब्राह्मभूयमिति। कित्त्वान्न गुणः। क्लीबत्वं लोकात्। भव्यमिति। भाव इत्यर्थः। अत् सुबुपपदत्वाऽभावाद्यदेव, गुणः, "वान्तो यी"त्यवादेशः। प्रभव्यमिति। प्रभाव इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

हनस् त च ३।१।१०८

सुप्यनुपसर्गे इति वर्तते, भावे इति च। हन्तेर् धातोः सुबन्त उपपदे ऽनुपसर्गे भावे क्यप् प्रत्ययो भवति, तकारश्चान्तादेशः। ब्रहमहत्या। अश्वहत्या। सुपि इत्येव, घातः। ण्यत् तु भावे न भव्त्यनभिधानात्। अनुपसर्गे इत्येव, प्रघातो वर्तते।

न्यासः

हनस्त च। , ३।१।१०८

"ब्राह्महत्या" इति। ब्राह्मणो हननमित्यर्थः। "धातः" इति। पूर्ववत् तत्वकत्वे। किमर्थं पुनर्धञ् प्रत्युदाह्रियते, न ण्यदित्याह-- "ण्यत्" इत्यादि। तत्रैव युक्तिमाह-- "अनभिधानात्" इति।अबिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति, न च हन्तेर्विहितेन ण्यता भावः शक्यतेऽभिधातुम्। तथा हि धात्य इत्युक्ते कर्मैव प्रतीयते, न भावः॥

बाल-मनोरमा

हनस्त च ६७७, ३।१।१०८

हनस्त। अन्तादेश इति। "प्रकृते"रिति शेषः। भावे किम्?। घात्यो वृषलः। अनुपसर्गे किम्?। प्रघातः। निरुपपदं हत्येति

त्वसाध्वेव।

---

सूत्रम्

काशिका-वृत्तिः

एतिस्तुशास्वृदृजुषः क्यप् ३।१।१०९

सुप्यनुपसर्गे भावे इति निवृत्तम्। सामान्येन विधानमे तत्। एति स्तु शास् वृ दृ जुषित्येतेभ्यः क्यप् प्रत्ययो भवति। इत्यः। स्तुत्यः। शिष्यः। वृत्यः। आदृत्यः। जुष्यः। क्यपिति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम्। ओरावश्यके ३।१।१२५ इति ण्यतं बाधित्वा क्यबेव भवति। अवश्य् स्तुत्यः। वृग्रहणे वृञो ग्रहणम् इष्यते, न वृङः। वार्याः ऋत्विजः। शंसिदुहिगुहिभ्यो वेति वक्तव्यम्। शस्यम्, शंस्यम्। दुह्यम्, दोह्यम् , गुह्यम्, गोह्यम्। आङ्पूर्वादञ्जेः संज्ञायाम् उपसङ्ख्यानम्। आज्यं घृतम्। कथम् उपेयम्? एः एतद् रूपं, न इणः।

लघु-सिद्धान्त-कौमुदी

एतिस्तुशास्वृदृजुषः क्यप् ७७९, ३।१।१०९

एभ्यः क्यप् स्यात्॥

न्यासः

एतिस्तुशास्वृदृजुषः क्यप्। , ३।१।१०९

"शिष्यः" इति। "शासु अनुशिष्टौ" (धा।पा।१०७५)," शास इदङहलोः" ६।४।३४ इतीत्त्वम्, "शासिवसि"८।३।६० इति षत्वम्। "आदृत्यः" इति। "दृङ आदरे" (धा।पा।१४११), आङपूर्वः। "जुष्यः" इति। "जुषी प्रीतिसेवनयोः" (धा।पा।१२८८)। अथ किमर्थं क्यब्ग्रहणम्, यावता "वदः सुपि क्यप् च" ३।१।१०६ इत्यतः क्यब्ग्रहमनुवत्र्तत एवेत्यत आह-- "क्यबिति वत्र्तमाने" इत्यादि। "बाधकबाधनार्थम्" इति। एतद्विस्पष्टीकर्तुमाह-- "ओरावश्यके" इति। स्तुग्रहणस्यावकाशो यत्रावश्यकं न विवक्ष्यते-- स्तुत्य इति, " ओरावश्यके" ३।१।१२५ इत्यस्यावकाशोऽन्यो धातुः-- अवश्यलाव्यमिति; इहोभयं प्राप्नोति-- अवश्यस्तुत्य इति, परत्वाद्बाधको ण्यत् स्यात्। पुनः क्यब्ग्रहणात् तमपि बाधित्वा क्यब्भवति। "वृग्रहणेन वृञो ग्रहणमिष्यते, न वृङः" इति। तत्कथम्? "कृषिरजोः" ३।१।९० इत्यादेः सूत्रादिह परस्मैपदग्रहणमनुवत्र्तते, तेन वृशब्दो विशिष्यते-- परसमैपदंस्य यो वृशब्द इति। कश्च परस्मैपदस्य वृशब्दः? यस्य परस्मैपदं प्रति निमित्तभावो दृष्टः। वृञ एवोभयपदिनः स दृष्टः, न वृङः; तस्य नित्यात्मनेपदित्वात्। तेन वृञ एव ग्रहणं भवति, न वृङः। "शंसिदुहि" इत्यादि। एभ्यः शंसिप्रभृतिभ्यो वा क्यब्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु तदेव बहुलग्रहणमाश्रित्य कत्र्तव्यम्। "शस्यम्" इति। "शन्सु स्तुतौ" (धा।पा।७२८), "अनिदिताम्" ६।४।२४ इति नलोपः। "गुह्मम" इति। "गुहू संवरणे" (धा।पा।८९६)। "अःङपूर्वादञ्जेः" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तच्च पूर्ववत्। "अञ्जू व्यक्तिभ्रमणकान्तिगतिषु" (धा।पा।१४५८)। पूर्ववन्नलोपः। इयं च सर्पिषः संज्ञा। "कथमुपेयम्" इति। इण एतद्रूपमिति मन्यमानस्य प्रश्नः। "ईङ एतद्रूपम्" इति। "ईङ गतौ" (धा।पा।११४३) इत्यस्य "अचो यत्" ३।१।९७ इति यति सत्येतद्रूपम्, न त्विणः। तस्य हि क्यपि सत्युपेत्यमिति भवितव्यम्॥

बाल-मनोरमा

एतिस्तुशास्वृदृजुषः क्यप् ६७८, ३।१।१०९

एतिस्तु। एति, स्तु, शास्, वृ , दृ, जुष् एषां षण्णां समाहारद्वन्द्वात्प्रञ्चमी। सुप्यनुपसर्गे भाव इति निवृत्तम्। तदाह-- एभ्यः क्यप्स्यादिति।

तत्त्व-बोधिनी

एतिस्तुशास्वृदृजुषः क्यप् ५६२, ३।१।१०९

एतिस्तु। एभ्य इति, सुप्यनुपसर्गे भावे इति च निवृत्तमिति भावः। एतीतीण एव ग्रहणं, नेङिकोः, तयोरधिपूर्वयोरेव ग्रहणादेतीति निर्देशानुपपत्तेः। तथा च "रक्षार्थं वेदानामध्येयं व्याकरण"मिति भाष्ये यदेव प्रयुक्तः। "इण्वदिक इति वक्तव्यम्" इति वचनादिकोऽपि भवतीत्यधीत्या मातेत्युदाहरन्ति। [ अधीत्या = स्मर्तव्या]।

---

सूत्रम्

काशिका-वृत्तिः

ऋदुपधाच् च अक्लृपिचृतेः ३।१।११०

ऋकारौपधाच् च धातोः क्यप् प्रत्ययो भवति क्लृपिचृती वर्जयित्वा। वृतु वृत्यम्। वृधु वृध्यम् अक्लृपिचृतेः इति किम्? कल्प्यम्। चर्त्यम्। तपरकरणम् किम्? कृत संशब्दने। ण्यदेव भवति कीर्त्यम्। पाणौ सृजेर् ण्यद् वक्तव्यः। पाणिसर्ग्या रज्जुः। समवपूर्वाच् च। समवसर्ग्या।

न्यासः

ऋदुपधाच्चाक्लृपिचृतेः। , ३।१।११०

"क्लृपिचृतौ वर्जयित्वा" इति। "कृपू सामर्थ्ये" (धा।पा।७६२), "चृती {हिंसाश्रन्थनयोः" धा।पा।} हिंसाग्रन्थनयोः" (धा।पा।१३२४) इत्येतौ त्यक्त्वा। कृपेर्लत्वस्यासिद्धत्वादृदुपधत्वम्। "कल्प्यम्" इति। लत्वस्यामिद्ध्तवादृकारस्यैवाकारो गुणः। "ण्यदेव भवति-- कीर्त्यम्" इति। आर्धधातुकविवक्षायां चुरादिणिचः "णेरनिटि" ६।४।५१ इति णिलोपे कृ-ते हलन्ततोपजायत इति कृत्वा "ऋहलोर्ण्यत्" ३।१।१२४ इति ण्यदेव भवति। "हलि च" ८।२।७७ इति दीर्घः। ननु च "अचो यत्" ३।१।९७ इत्यत्राज्ग्रहणस्य प्रयोजनमुक्तम्-- अजन्तभूतपूर्वादपि यथा स्यात्, दित्स्यम्, धित्स्यमिति;एवञ्चेहापि णिचि यतैव भवितव्यम्? एवं तर्ह्यनित्यण्यन्ताश्चुरादय इत्यण्यन्तादेवात्र ण्यद्भवतीत्यदोषः। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। व्याख्यानं तु पूर्ववत्। पाणिभ्यां रुआष्टव्या "पाणिसग्र्या रज्जुः"। "उपपदमतिङ्ट २।२।१९ इति समासः। "समवपूर्वाच्च" इति। सृजेर्ण्यद्भवतीति सम्बध्यते। चकारः समुच्चये।न केवलं पाणावुपपदे ण्यद्वक्तव्यः; अपि तु समवपूर्वाच्च॥

बाल-मनोरमा

ऋदुपधाच्चाऽक्लृपिचृतेः ६८०, ३।१।११०

ऋदुपधाच्चा। क्लृप्()चृती वर्जयित्वा ऋदुपधाद्धातोः क्यबित्यर्थः। ननु तपरकरममिह व्यर्थमित्यत आह-- अनित्यण्यन्ता इति। णिजन्तात्तु यदेवेति। "अचो य"दित्यनेनेति भावः।

तत्त्व-बोधिनी

ऋदुपधाच्चाऽक्लृपिचृतेः ५६४, ३।१।११०

क्लृपिचृत्योस्त्विवति। कृपू सामर्थ्ये। चृती हिंसाग्रन्थनयोः। कल्प्यमिति। कृपेर्लत्वस्याऽसिद्धत्वात्, ऋलृवर्णयोः सावर्ण्यविधानाच्च ऋदुपधत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

ई च खनः ३।१।१११

खनेर् धातोः क्यप् प्रत्ययो भवति, ईकारश्च अन्तादेशः। खेयम्। दीर्घनिर्देशः प्रश्लेषार्थः। तत्र द्वितीय इकारो ये विभाषा ६।४।४३ इति आत्त्वबाधनार्थः।

न्यासः

ई च खनः। , ३।१।१११

"खेयम्" इति। "खनु अवदारणे" (धा।पा।८७८), नकारस्य ईकारः, "आद्गुणः" ६।१।८४। अथ किमर्थं दीर्घ आदिश्यते, यावता ह्रस्वेऽपि कृते आद्गुणेन भवितव्यम्। न च ह्रस्वस्याद्गुणे कृते कश्चिद्विशेषः? स्यादेतत्-- एकादेशस्तु तुग्विधावसिद्धो वक्तव्यः, तत्र यदि ह्रस्व आदिश्यते तदा ह्रस्वसयाद्गुणे कृते तुग्विधावसिद्धत्वाद् ह्रस्वाश्रयस्तुक् स्यात्; दीर्घादेशे तु न भवति, अतो दीर्घादेशो वक्तव्य इति? एतच्च नास्ति; यस्मात् पदान्तपदाद्योयं एवादेशः स तुग्विधावसिद्धो वक्तव्यः, न सर्वत्रेत्याह-- "दीर्घनिर्देशः। किमर्थं पुनर्द्वितीय सवर्णदीर्घत्वेन ६।१।९७ द्व्योरिवर्णयोः प्रश्लेषो यथा स्यादित्येवमर्थो दीर्घनिर्देशः। किमर्थं पुनिर्द्वितीय इवर्णः, यावतैकेनैव खेयमिति रूपं सिध्यतीत्यत आह--" तत्र " इत्यादि। द्वयोरिकारयोः प्रश्लेषनिर्देशः। तत्र यो द्वितीय इवर्णः सः "ये च" ६।४।१०९ इत्यात्त्वबाधा यथा स्यादित्येवमर्थः। "ये विभाषा" ६।४।४३ इत्यस्यावकाशः-- खायते, खन्यते, इसि, अस्यादेशस्यावकाशो यस्मिन् पक्ष आत्वं नास्ति; आत्तवपक्षे तूभयं प्राप्नोति। उभयप्राप्तावसतीकारे पर्तवादन्तरङ्गत्वाच्चात्वं स्यात्, अ()स्मश्च सत्यात्त्वं बाधित्वेकार एव भवति। अन्तरङ्गत्वं पुनरात्त्वस्य यकारसामान्यमाश्रित्य विधानात्। इत्त्वस्य बहिरङ्गत्वम्; क्यब्विशेषमाश्रित्य विधानात्॥

बाल-मनोरमा

ई च खनः ६८१, ३।१।१११

ई च खनः। चात्क्यविति। खनेः क्यप् स्यात्प्रकृतेरीकारोऽन्तादेशश्चेत्यर्थः। ह्रस्व सुपठ इति। ह्रस्वस्य इकारस्य आद्गुणेन "खेय"मिति सिद्धेरिति भावः।

तत्त्व-बोधिनी

ई च खनः ५६५, ३।१।१११

ह्रस्वः सुपठ इति। दीर्घं पठतः सूत्रकृतस्त्वयमाशयः- दीर्घनिर्देशः इ-इ इति प्रश्लेषार्थस्तत्र द्वितीय इकारो "ये विभाषा" इत्यात्वबाधनार्थः। अन्यथा "ये विभाषा" इत्यस्यावकाशः-- खायते खन्यते। इत्वस्यावकाशो यस्मिन्पक्षे आत्वंनास्ति। आत्वपक्षे तु उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात्। "ये विभाषा" इत्यत्र हि ये इति विषयसप्तमी। तथा च यकारादौ बुद्धिस्थे एव प्राप्तमात्वमन्तरङ्गम्। इकारस्तु क्यपा सह विधानाद्बहिरङ्गः। तथा चान्तरङ्गस्यात्वस्य बाधनाय प्रश्लेषेण द्वितीय इकारविधिरावश्यक इति ई चेति दीर्घोच्चारणं कृतमिति। आत्वं तु बहिरङ्गं , ये इति परसप्तम्याश्रयात्। एवं च इत्वेनाऽऽत्वबाधो न्याय्य एवेति दीर्घो न पठनीयः। ह्रस्वपाठे मात्रालघवमस्तीति तदनुरोदेन ये इतिपरसप्तम्याश्रयणमपि युक्तमिति। स्यादेतत्-- इ चेति ह्रस्वादेशाभ्युपगमे तस्यादेशस्य पूर्वेण सह आद्गुणे तस्याऽसिद्धतया "ह्रस्वस्य पिति इति तुक् स्यात्, "षत्वतुकोरसिद्धः" इति षत्वे तुकि चकर्तव्ये एकादेशशास्त्रस्याऽसिद्धत्वस्वीकारात्। अतो दीर्घ एव विधेय इति चेत्। मैवम्। "पदान्तपदाद्योरादेशोऽसिद्धो न त्वन्योऽपी"ति सिद्धान्तात्। अन्यथा व#ऋक्षे छत्रमित्यत्र ङावाद्गुणस्याऽसिद्धतया छे चेति ह्रस्वाश्रयो नित्यस्तुक् स्यात्।

इष्यते तु दीर्घात्पदान्ताद्वेति वैकल्पिक इति दिक्। "भृञोऽसंज्ञाया"मित्यसंज्ञाग्रहणसामर्थ्याद्भार्येत्यत्र सूत्रान्तरेणापि क्यब्न भविष्यतीत्यत आह--- पुंसि चरितार्थ इति। भार्या नाम क्षत्रिया इत्यत्रेत्यर्थः। तदनुबन्धेति। डुभृञ् इत्यनेकानुबन्धत्वाद्बिभर्तेः क्यपोऽप्रसङ्ग इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

भृञो ऽसंज्ञायाम् ३।१।११२

भृञो धतोः असंज्ञायां विषये क्यप् प्रययो भवति। भृत्याः कर्मकराः। भर्तव्याः इत्यर्थः। असंज्ञायाम् इति किम्? भार्यो नाम क्षत्रियः। सम्पूर्वाद् विभाषा। सम्भृत्याः, सम्भार्याः। संज्ञायां पुंसि दृष्टत्वान् न ते भार्या प्रसिध्यति। स्त्रियां भावाधिकारो ऽस्ति तेन भार्य प्रसिध्यति।

लघु-सिद्धान्त-कौमुदी

अभिज्ञावचने लृट् ७६४, ३।१।११२

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट्। लङोऽपवादः॥ वस निवासे॥ स्मरसि कृष्ण गोकुले वत्स्यामः। एवं बुध्यसे, चेतयसे, इत्यादिप्रयोगेऽपि॥

न्यासः

भृञोऽसंज्ञायाम्। , ३।१।११२

"भर्तव्या इत्यर्थः" इति। एतेन क्रियाशब्दत्वं भृत्यशब्दस्य दर्शयन् संज्ञाशब्दत्वमपाकरोति। "संपूर्वाद्विभाषा" इति। असंज्ञायामेवायं क्योप नित्यं प्रसक्तस्य क्यपो नित्यं प्रसक्तस्य विकल्पः। एतद्वक्ष्यमाणस्य विभाषाग्रहणस्योभयोरपि योगयोः शेषभूतत्वादव्यवस्थितविभाषाविज्ञानाच्च लभ्यते। "संज्ञायां पुंसि" इत्यादि। असंज्ञायामित्यस्य प्रतिषेधस्येति शेषः। एतेन पुंसि प्रतिषेधस्य चरितार्थतामाह-- यत एवं पुंसि चरितार्थः प्रतिषेधस्ततो न ते भार्या प्रसिध्यति। भार्याशब्दस्तव सूत्रकारस्य मते न प्रसिध्यतीत्यर्थः। पुंसि प्रतिषेधे हि चरितार्थे स्त्रियां क्यपा भवितव्यम्। ननु चासंज्ञायामित्युच्यते, संज्ञाशब्दश्च भार्याशब्दः, तथा हि अबिभ्रत्यपि देवदत्ते तस्य पत्नी भार्येत्युच्यते, तत्कुतः क्यप्प्रसङ्गः? न ब्राऊमः-- अनेन सूत्रेण क्यपा भवितव्यमिति किं तर्हि? "संज्ञायां समजनिषद" ३।३।९९ इत्यनेन, तत्र उत्तरमाह-- "स्त्रियां भावाधिकारोऽस्ति" इति। भावाधिकारशब्देनात्र भावस्याभिधेयभावोपगमलक्षणो व्यापारो विवक्षितः, न तु शास्त्रीयोऽधिकारः। स्त्रियाम् = स्त्रीप्रकरणे, "संज्ञायां समजनिषद" ३।३।९९ इत्यादिना क्यपि विधीयमाने भावस्याधिकारः, शब्दशक्तिस्वाभाव्यात्। तत्र क्यब्()विधीयमानो भाव एव भवति, न कर्मणि। "तेन भार्या सिध्यति" इति। कर्मणीत्यभिप्रायः। यस्मात् स्त्रियां भावाधिकारोऽस्ति। भाव एव वाच्यत्वेन व्याप्रियते, न कर्म,तेन कर्मणि भार्याशब्दः प्रसिध्यति। स्त्रियां भावाधिकारे हि भाव एव क्यपा भवितव्यम्। कर्मणि तु ण्यतैव॥

बाल-मनोरमा

भृञोऽसंज्ञायाम् ६८२, ३।१।११२

भृञोऽसंज्ञायाम्। "क्य"बिति शेषः। भृत्याः कर्मकुर्वाणा इत्यर्थः। "कर्मणि भृतौ" इति कृञष्टः। भर्तव्या इति। वेतनदानेन परार्थे कर्मणि प्रेषयितव्या इत्यर्थः। ननु भृत्यशब्दस्य कर्मकरेषु रूढत्वात्संज्ञाशब्दत्वमेवेत्यत आह-- क्रियाशब्दिति। भार्या नाम क्षत्रिया इति। क्षत्रियविशेषेषु रूढः संज्ञाशब्दोऽयमिति भावः। अथ कथं भार्येति। क्यपा भवितव्यमित्याक्षेपः। ननु बध्वां भार्याशब्दस्य संज्ञाशब्दत्वात् "भृञोऽसंज्ञाया"मित्यत्र असंज्ञायामिति व्यर्थमित्यत आह--

संज्ञापर्यादुसत्विति। समाधत्ते-- सत्यमिति। "डु भृञ् धारणपोषणयोः" इति जुहोत्यादौ ह्रस्वान्तो ड्वित्, ञिच्च। "भृ? भर्त्सने, भरणेऽपी"ति क्र्यादौ दीर्घान्तः। आभ्यामृहलोण्र्यदिति ण्यदेवेत्यर्थः। क्यप्तु भरतेरेवेति। "भृञ् भरणे" इति भ्वादौ ह्रस्वान्तो ञित्। अस्यैव "संज्ञायां समजनिषदे"त्त्र, "भृञोऽसंज्ञाया"मित्यत्र च भृञ्ग्रहणेन ग्रहणम्, नतु डुभृञौ जौहोत्यादिकस्य। न च क्रैयादिकस्य निरनुबन्धकस्य दीर्घान्तस्येति भावः। कुत इत्यत आह-- तदनुबन्धकेति। "तदनुबन्धकग्रहणे नातदनुबन्धकस्ये"ति परिभाषयेत्यर्थः। बिभर्तेः क्यबभावे बीजमिदम्। क्रैयादिकस्य दीर्घान्तत्वान्न क्यबिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

मृजेर् विभाषा ३।१।११३

मृजेर् धातोः विभाषा क्यप् प्रत्ययो भवति। ऋदुपधत्वात् प्राप्तविभाषेयम्। परिमृज्यः, परिमार्ग्यः।

लघु-सिद्धान्त-कौमुदी

न यदि ७६५, ३।१।११३

यद्योगे उक्तं न। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि॥

लघु-सिद्धान्त-कौमुदी

मृजेर्विभाषा ७८२, ३।१।११३

मृजेः क्यब्वा। मृज्यः॥

न्यासः

मृजेर्विभाषा। , ३।१।११३

ऋदुपधत्वात् प्राप्तविभाषेयम्। "ऋदुधाच्चाक्लृपिचृतेः" 3।1।110 इति क्यपो विधानात्। "परिमार्ग्यः" इति। पूर्ववत् कुत्वम्, "गृजेर्वृद्धिः" 7।2।114॥

बाल-मनोरमा

मृजेर्विभाषा ६८३, ३।१।११३

मृजेर्विभाषा। क्यप्पक्षे उदाहरति-- मृज्य इति। कित्त्वान्न गुणः।

तत्त्व-बोधिनी

मृजेर्विभाषा ५६६, ३।१।११३

मृजेर्विभाषा। ऋदुपधत्वान्नित्यं क्यपि प्राप्तेऽयमारम्भः।

---

सूत्रम्

काशिका-वृत्तिः

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ३।१।११४

राजसुय सुर्य मृषोद्य रुच्य कुप्य कृष्टपच्य अव्यथ्य इत्येते शब्दाः क्यपि निपात्यन्ते। राज्ञा सोतव्यः, राजा वा इह सूयते

राजसूयः क्रतुः। सूसर्तिभ्यां क्यप्, सर्तेरुत्वं, सुबतेर् वा रुडागमः। सरति सुवति व सूर्यः। मृषापूर्वस्य वदतेः पक्षे यति प्राप्ते नित्यं क्यब् निपात्यते। मृषापूर्वस्य मृषोद्यम्। रोचते ऽसौ रुच्यः। कर्तरि क्यप्। गुपेरादेः क्त्वं च सञ्ज्ञायाम्। कुप्यम्। गोप्यम् अन्यत्। कृष्टे पच्यन्ते कृष्टप्च्याः। कर्मकर्तरि निपातनम्। न व्यथते अव्यथ्यः।

न्यासः

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः।, ३।१।११४

"राज्ञा सोतव्यः" इति। वाक्यविशेषेण राजनि तृतीयान्त उपपदे कर्मणि निपातनमिति दर्शयति। "राजा वेह सूयते" इत्यनेनापि राजनि प्रथमान्त उपपदेऽधिकरणे निपातनमिति। "षुञ् अभिषवे" (धा।पा।१२४७) इत्यस्मात् क्यप्। तत्र चास्य तुगभावो दीर्घत्वञ्च निपात्यते। "सूसर्तिभ्याम्" इति। "षू प्ररणे" (धा।पा।१४०८), "सृ गतौ" (धा।पा।९३५)- आभ्यां यथाक्रमं "अचो यत्" ३।१।९७ इति यति प्राप्ते "ऋहलोण्र्यते" ३।१।१२४ इति च क्यब् निपात्यते। "सुवति" इति। कर्मणि। कार्ये लोकान्" प्रेरयतीति। तस्मिन् ह्रुदिते लोकस्य क्रियाप्रवृत्तिः। "पक्षे यति प्राप्ते" इति। "वदः सुपि क्यप् च" ३।१।१०६ इत्यनेन। मृषाववनम् = मृषोद्यम्। क्यप्, सम्प्रसारणम्; "आद्गुणः" ६।१।८४, उपपदसमासः। "रोचतेऽसौ"इति। कर्तृप्रत्ययान्तेनार्थमुपदर्शयन् कत्र्तरि निपातनं दर्शयति। तृजादौ प्राप्ते क्यब् निपात्यते। "गुपेः" इति। "गुप गोपने" (धा।पा।९७०), "गुपू रक्षणे" (धा।पा।३९५) इत्यस्य वा। "अव्ययः" इति। "व्यण {भयसंचलनयो धा।पा।} भयचलनयोः" धा।पा।७६४)--अस्मात् कत्र्तरि तृजपवादः क्यब् निपात्यते॥

बाल-मनोरमा

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः ६८५, ३।१।११४

राजसूय। राज्ञेति। क्षत्रियेणेत्यर्थः। अभिषवेति। ग्रावभी रसनिष्पत्त्यर्थं सोमलातानां कुट्टनमभिषवः, तत्प्रणाडिकया निष्पादयितव्यो यज्ञविशेषो राजसूय इत्यन्वयः। यद्वेति। लताविशेषात्मकः सोमो राजशब्देन विवक्षितः, "राजानं क्रीणाती"त्यादौ तथा प्रसिद्धेः। स राजा सूयते = अभिषूयते अत्र यज्ञविशेषे इति व्युत्पत्या राजसूय इत्यन्वयः। "कर्तरि कृ"दित्यधिकारात्कथमधिकरणव्युत्पत्तिरित्यत आह-- अधिकरणे क्यबिति। कुत इत्यत आह-- निपातनादिति। ननु षुञ्धातोः क्यपि कथं दीर्घः, "अकृत्सार्वधातुकयो"रित्यतस्य कृत्यप्रवृत्तेरित्यत आह-- निपातनाद्दीर्घ इति। निपातनादित्युभयत्रान्वेति। उत्वमिति। तस्य रपरत्वे "हलि चे"ति दीर्घ इत्यपि बोध्यम्। मृषोद्यमिति। क्यपि "वचिस्वपी"ति संप्रसारणम्। रोचतेरिति। रुचदातोः क्यपि "रुच्य" इति रूपमित्यर्थः। गुपेरिति। गुब्धातोः क्यप्, प्रकृतेरादिवर्णस्य ककारश्च संज्ञायां निपात्यते इत्यर्थः। सुवर्णरजतभिन्नं धनं कुप्यमिति ज्ञेयम्। तथा च "हेमरूपे कृताऽकृते" इत्युक्त्वा अमर आह-- "ताभ्यां तदन्यत्तत्कुप्यमिति। कृष्ट इति। कृष्टप्रदेशे ये स्वयं पच्यन्ते = फलन्ति ते कृष्टपच्या इत्यर्थः। कर्मकर्तरीति। अत्र कर्मकर्तरि क्यबित्यर्थः। निपातनादिति भावः। शुद्धे त्विति। मुक्यकर्मणि तुण्यति उपधावृद्धौ "चजो"रिति कुत्वे "कृष्टपाक्य" इति रूपमित्यर्थः। अव्यथ्य इति। अत्र निपातनात्कर्तरि क्यबिति भावः।

तत्त्व-बोधिनी

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः ५६९, ३।१।११४

राजसूय। यद्वेति। "राजानं क्रीणन्ति" इत्यादौ तथा दर्शनादिति भावः। षुञ् अभिषव इत्यस्य ह्मस्वान्तत्वादाह-- निपातनाद्दीर्घ इति। निपातनं च रूढ()र्थमपि।तेनाद्यपक्षे अ()आमेघादौ, द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः। उत्वमिति। तस्य रपरत्वात् "हलि च" इति दीर्घ इति भावः। नित्यं क्यबिति। तेन "वदः सुपि क्यप्च" इति यत्प्रत्ययो नेति भावः।

सूत्रम्

काशिका-वृत्तिः

भिद्यौद्ध्यौ नदे ३।१।११५

भिदेरुज्झेश्च क्यप् निपात्यते नदे ऽभिधेये। उज्झेर् धत्त्वं च। भिनत्ति कूलं भिद्यः। उज्झति उदकम् उद्ध्यः। नदे इति किम्? भेत्ता। उज्झिता।

न्यासः

भिद्योद्ध्यौ नदे। , ३।१।११५

"उज्झेश्च" इति। "उज्झ उत्सर्गे" (धा।पा।१३०४)। "कर्त्तरि क्यब् निपात्यते" इति। तृजादेरपवादः॥

बाल-मनोरमा

भिद्योद्ध्यौ नदे ६८६, ३।१।११५

भिद्योध्यौ नदे। क्यबिति। "नद विशेषे कर्तरि निपात्यते" इति शेषः।

तत्त्व-बोधिनी

भिद्योद्भ्यौ नदे ५७०, ३।१।११५

भिद्योद्भ्यौ। क्यबिति। "कर्तरी"ति शेषः। उद्ध्य इति। "तोयदागम इवोद्ध्यभिद्ययोर्नामधेयसदृशं विचेष्टित"मिति रघुः।

---

सूत्रम्

काशिका-वृत्तिः

पुष्यसिद्ध्यौ नक्षत्रे ३।१।११६

पुषेः सिधेश्च अधिकरणे क्यप् निपात्यते नक्षत्रे अभिधेये। पुष्यन्ति अस्मिन्नर्थाः इति पुष्यः। सिध्यन्ति अस्मिन्निति सिद्ध्यः। नक्षत्रे इति किम्? पोषणम्। सेधनम्।

न्यासः

पुष्यसिद्ध्यौ नक्षत्रे। , ३।१।११६

"पुषेः सिद्धेश्च" इति। "पुष पुष्टौ" (धा।पा।११८२) "{षिधु धा।पा।}सिधु संराद्धौ (धा।पा।११९२)। "अधिकरणे क्यब् निपात्यते" इति। ल्युटोऽपवादः।

बाल-मनोरमा

पुष्यसिद्ध्यौ नक्षत्रे ६८७, ३।१।११६

पुष्यसिध्यौ। "निपात्येते" इति शएषः। नक्षत्रविशेषे गम्ये इत्यर्थः।

तत्त्व-बोधिनी

पुष्यसिद्ध्यौ नक्षत्रे ५७१, ३।१।११६

पुष्यसिद्ध्यौ। नक्षत्रे किम्?। पोषणं, सेधनम्। अधिकरणे ल्युट्। पुष्यसिध्ययोः पर्यायत्वेऽपि स्वरूपपरत्वात्सूत्रे द्वन्द्वः।

"पुष्ये तु सिध्यतीष्यौ" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

विपूयविनीयजित्या मुङ्जकल्कहलिषु ३।१।११७

निपूय विनीय जित्य इत्येते शब्दा निपात्यन्ते यथासङ्ख्यं मुञ्ज कल्क हलि इत्येतेषु अर्थेषु वोध्येषु। विपूर्वात् पवतेर् नयतेश्च तथा जयतेर् यति प्राप्ते कर्मणि क्यब् निपात्यते। विपूयो मुञ्जः। विपाव्यम् अन्यत्। विनीयः क्ल्कः। विनेयम् अन्यत्। जित्यो हलिः। जेयम् अन्यत्।

न्यासः

विपूयविनीयजित्या मुञ्जककल्कहलिषु। , ३।१।११७

"विपूर्वात् पवतेः" इति। "पङ पवने" (धा।पा।९६६)। "नयतेश्च" इति। विपूर्वादित्यपेक्षते। "यति प्राप्ते" इति। त्रयाणामप्यजन्तत्वात्। विपूयते विपूयः। विनीयते = सिद्धत्वं प्राप्यते विनीयः। तैलेन घृतेन वा त्रिफलादिद्रव्यसमवेतेन साध्यः कश्चिदौषधविशेषः कल्क इत्युच्यते। जेतव्यो "जित्यः"। बृहद्धलम् = हलिः॥

बाल-मनोरमा

विपूयविनीयजित्या मुञ्जकल्कहलिषु ६८८, ३।१।११७

विपूय। विपूय, विनीय, जित्य - एते यथाक्रमं मुञ्जुकल्कहलिषु क्यबन्ता निपात्यन्ते। तदाह-- पूङित्यादिना। न्यादिसाहचर्याद्धौवादिकस्यैव पूधातोग्र्रहणमिति भावः। हलिशब्दस्य विवरणं - कृष्टेति।

तत्त्व-बोधिनी

विपूयविनीयजित्या मुञ्जकल्कहलिषु ५७२, ३।१।११७

पापमिति वेति। "तपो न कल्कोऽध्ययनं न कल्कः" इत्युपक्रम्य "तान्येव बावोपहतानि कल्कः" इति भारते दर्शनात्। "कल्कः पापाशये पापे दम्बे विट्किट्टयोरपि" इति कोशाच्चेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

प्रत्यपिभ्यां ग्रहेश् छन्दसि ३।१।११८

प्रति अपि इत्येवं पूर्वाद् ग्रहेः क्यप् प्रत्ययो भवति छन्दसि विषये। मत्तस्य न प्रतिगृह्यम्। तस्मान् न अपिगृह्यम्। छन्दसि इति किम्? प्रतिग्राह्यम्। अपिग्राह्यम्।

न्यासः

प्रत्यपिभ्यां ग्रहेश्छन्दसि। , ३।१।११८

"प्रतिगृह्रम्" इति। "ग्रहिज्या" ६।१।१६ इत्यादिना संप्रसारणम्। "कुगतिप्रादयः" २।२।१८ इति समासः॥

बाल-मनोरमा

प्रत्यपिभ्यां ग्रहे ६८९, ३।१।११८

प्रत्यपिभ्यां ग्रहे। छन्दसीति। वार्तिकमिदम्। वृत्तिकृता तु सूत्रे प्रक्षिप्तम्। ननु छान्दसस्य किमर्थमिहोपन्यास इत्यत आह-- लोके त्विति।

तत्त्व-बोधिनी

प्रत्यपिभ्यां ग्रहेः ५७३, ३।१।११८

*छन्दसीति वक्तव्यम्। वक्तव्यमिति। वृत्तिकृता तु सूत्रे प्रक्षिप्तम्। क्यप उदाहरणं तुछन्दस्येव। "मत्तस्य न प्रतिगृह्यं तस्मान्नाऽपिगृह्यम्"। लोके त्विति। ण्यदेवेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पदास्वैरिबाह्यापक्ष्येषु च ३।१।११९

पदे अस्वैरिणि बाह्यायां पक्ष्ये चर्थे ग्रहेर् धातोः क्यप् प्रत्ययो भवति। पदे तावत् प्रगृह्यं पदम्, यस्य प्रगृह्यसंज्ञा विहिता। अवगृह्यं पदम्, यस्य अवग्रहः क्रियते। अस्वैरी परतन्त्रः। गृह्यका इमे। गृहीतका इत्यर्थः। बाह्यायम् ग्रामगृह्या सेना। नगरगृह्या सेना। ग्रामंअगराभ्यां बहिर्भूता इत्यर्थः। स्त्रीलिङ्गः निर्देशादन्यत्र न भवति। पक्षे भवः पक्ष्यः। वासुदेवगृह्याः। अर्जुनगृह्याः। तत्पक्षाश्रिताः इत्यर्थः।

न्यासः

पदास्वैरिबाह्यापक्ष्येषु च। , ३।१।११९

"अस्वैरी" इति।"ईर {गतौ कम्पने च -- धा।पा।}(धा।पा।१०१८)। स्वेन स्वयमीरितुं गन्तूं शीलमस्येति ताच्छीलिको णिनिः। निपातनाद्()वृद्धिः स्वरी = स्वतन्त्रः। अस्वैरी उच्यते। "बाह्यायाम्" इति। बहिर्भूतायामित्यर्थः। "बहिषष्टिलोपश्च" (वा।३७८) इत्युपसंख्यानाद्यञ्, तत्र च टिलोपः। "पक्ष्ये चार्थे" इति। पक्ष्यशब्दो वर्गमाचष्टे। पक्षे भवः पक्ष्य इति। दिगादित्वाद्यत्। प्रगृह्यत इति प्रगृह्यं पदम्। असननिकर्षोऽत्र गृह्णातेरर्थः। स्वरा हि तत्र न सन्निकृष्यन्ते सन्निधीयन्त इत्यसन्निकर्षः। अवगृह्यत इत्यवगृह्यम्। "यस्यावग्रहः क्रियते" इति। तत्र समुदायपदेऽवयवपदानि विविधान्यवगृह्य विच्छिद्याख्यायन्ते। तेनावयवानामवगृह्यत्वादवगृह्यमित्युच्यते। "गृह्यकाः" इति। "अनुकम्पायाम्" ५।३।७६ इति कन्। "गृहीतकाः" इति। संयताः परतन्त्रीकृता इति यावत्। "अन्यत्र" इति। पुंसि नपुंसके च। "वासुदेवगृह्याः" इति। षष्ठीसमासः॥

बाल-मनोरमा

पदाऽस्वैरिबाह्यापक्ष्येषु च ६९०, ३।१।११९

पदाऽस्वैरि।पद, अस्वैरि, बाह्या, पक्ष्य एष्वर्थेषु ग्रहेः क्यबित्यर्थः। अवगृह्यं प्रगृह्यं वा पदमिति। समस्तपदस्य अवान्तरपदविच्छेदोऽवग्रहः। "अप्रावेत्यादिपदमितिशिरस्कं प्रग्रहः" इति प्रातिशाख्ये प्रसिद्धम्। "ईदूदेद्द्विवचनं प्रगृह्य"मिति सूत्रोदाहरणं च प्रगृह्यम्।

तत्त्व-बोधिनी

पदाऽस्वैरिबाह्यापक्ष्येषु च ५७४, ३।१।११९

पदास्वैरि। एष्वर्थेषु ग्रहेः क्यप् स्यात्। अवगृह्यमिति। यस् पदस्याऽवग्रहः क्रियते तत्पदम्। अवग्रहो = विच्छेदः।

अवान्तरपदसंज्ञां सूचयितुं पाठकाले किंचित्कालमवसनाम्। प्रगृह्यमिति। यस्य प्रग्रहस्तत्पदम्। प्रग्रहस्तु प्रकृतिभावात् यणाद्यभावे परस्परमचोरसन्नकर्षः। "यस्य प्रगृह्यसंज्ञा विहिता तत्प्रगृह्य"मिति वृत्तिः। यद्पि पदावयवस्य द्विवचनादेः प्रगृह्यसंज्ञा न तु पदस्य, तथाप्यवयवधर्मस्य समुदाये उपचारो बोध्यः। अवगृह्यप्रगृह्यशब्दौ प्रातिशाख्यादिषु पदविशेषपरतया निरूढौ। अस्वैरीति। स्वेन ईरितुं शीलमस्य स्वैरी = स्वतन्त्रः। "स्वादीरेरिणोः" इति वृद्धिः। नञ्पूर्वस्तु अस्वैरी। गृह्यका इति। "अनुकम्पाया"मिति कन्। गृहासक्ताः पक्षमृगाश्छेकास्ते गृह्यकाश्च ते" इत्यभरः। विभाषा कृ। करोतेः क्यप्यप्राप्ते, वृषेस्तु ऋदुपधत्वान्नित्यं प्राप्तेऽयमारम्भः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा कृवृषोः ३।१।१२०

कृञो वृषश्च विभाषा क्यप् प्रत्ययो भवति। करोतेर् ण्यति प्राप्ते वर्षतेः ऋदुपधत्वात् नित्ये क्यपि प्राप्ते विभाषाभ्र्यते। कृत्यम्, कार्यम्। वृष्यम्, वर्ष्यम्।

न्यासः

विभाषा कृवृषोः। , ३।१।१२०

"वृषेश्च" इति। वृषु {प्लुषु दाहे-धातु पाठः-७०३} प्लुषु मृषु मेचने" (धा।पा।७०६,७०७)॥

बाल-मनोरमा

विभाषा कृवृषोः ६९१, ३।१।१२०

विभाषा कृवृषोः। पञ्चम्यर्थे षष्ठी। कृञ ऋदन्तत्वान्नित्यं ण्यति प्राप्ते, वृषेरृदुपधत्वान्नित्यं क्यपि प्राप्ते च क्यब्विकल्पोऽयम्। पक्षे इति। क्यबभावपक्षे विशेषो वक्ष्यते इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

युग्यं च पत्रे ३।१।१२१

युग्यम् इति निपात्यते पत्रं चेत् तद् भवति। पतत्यनेन इत् पत्रं वाहनम् उच्यते। युग्यो गौः। युग्यो ऽश्वः। युग्यो हस्ती। युजेः क्यप् कुत्वं च निपात्यते। पत्रे इति किम्? योग्यम् अन्यत्।

न्यासः

युग्यं च पत्त्रे। , ३।१।१२१

"पतन्त्यनेनेति पत्त्रम्" इति। "दाम्नीशस" [३।२।१८२](#) इत्यादिना ष्ट्रन्। " युग्यम्" इति। "युजिर् योगे" (धा।पा।१४४४)। योजनीर्ये --- युज्यते वाहनेन {गमनमिति इति मुद्रितः पाठः} गवादिकमिति युग्यम्॥

बाल-मनोरमा

युग्यं च पत्रे ६९३, ३।१।१२१

युग्यं च पत्रे। क्यबन्तं निपात्यते। ण्यतोऽपवादः। युग्यो गौरिति। शकटादिना योक्तव्य इत्यर्थः। क्यपि कुत्वं निपातनात्। पत्रं वाहनमिति। पतन्ति गच्छन्त्यनेनेत्यर्थे "दाम्नीशसे" त्यादिना करणे ष्ट्रन्। ण्यति तु योग्यमिति स्यात्।

तत्त्व-बोधिनी

युग्यं च पत्रे ५७४, ३।१।१२१

पत्रं वाहनमिति। पतन्त्यनेनेत्यर्थे "दाम्नीशसे"त्यादना करणे ष्ट्रन्। युग्यो गौरिति। यद्यपि "तद्वहति रथयुगप्रासङ्ग"मिति तद्धितयताऽपि इदं सिध्यति तथापि ण्यतं व्यावर्तयितुमिदं सूत्रम्। अन्यथा हि योग्यो गौरिति स्यात्। अन्ये त्वाहुः-- युग्यो हस्तीति हि वृत्तावुदाह्मतं,तत्तु तद्धितेन न सिध्यति। न हि हस्तीयुगं वहति। कृता तु सिध्यति। युज्यते संबध्ते ह्रसौ कुथादिनेति। ततश्चात्र वैयथ्र्यशङ्कैव नास्तीति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

अमावस्यदन्यतरस्याम् ३।१।१२२

अमाशब्दः सहार्थे वर्तते। तस्मिन्नुपपदे वसेर् धातोः काले ऽधिकरणे ण्यत् प्रत्ययो भवति, तत्र अन्यतरस्यां वृद्ध्यभावो निपात्यते। सह वसतो ऽस्मिन् काले सूर्याचन्द्रमसौ इति अमावास्य, अमावस्या। एकदेशविकृतस्य अनन्यत्वादमावास्याया वा ४।३।३० इत्यत्र अमावस्याशब्दस्य अपि ग्रहणं भवति। अमावसोरहं ण्यतोर् निपातयाम्यवृद्धिताम्। तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति।

न्यासः

अमावस्यदन्तरस्याम्। , ३।१।१२२

"अमावस्यत्" इति। ण्यत्प्रत्ययान्तमेतन्निपातनम्, न क्यप्प्रत्ययान्तमिति ज्ञापनार्थं तकारानुबन्धोच्चारणम्; अन्यथा क्यपः प्रकृतत्वात् क्यप्प्रत्ययान्तमेतदिति सम्भाव्येत। स चापि तित्प्रत्ययो ण्यदिहाभिप्रेतः, न यत्; अन्यथा हि निपातनमर्थकं स्यात्। यत्प्रकरणे "अमावसेरन्यतरस्याम्" इत्येव ब्राऊयात्। दोषवत्त्वाच्च यत्प्रत्ययान्तनिपातस्य। दोषस्तूत्तरत्राविष्करिष्यते। यश्च यत्प्रत्ययान्तनिपातने दोषः स क्यबन्तेऽपि सम्प्रसारणाभावश्च निपातयितव्यतामापद्येत; तस्माण्ण्यत्प्रत्ययान्तमेतन्निपातनमिति मत्वाह-- "कालेऽधिकरणे ण्यत्प्रत्ययो भवति" इति। एकदेशविकृतत्वादिना ण्यत्प्रत्ययान्तनिपातनस्य गुणं दर्शयति। वृद्ध्यभावो हि ण्यति निपातितोऽमावस्याशब्द एव। अमावस्याशब्दो नात्रोपतिष्ठते वृद्ध्यभावपक्षे। ततश्च "एकदेशविकृतमनन्यवद्भवति" (व्या।प।१६) इत्यमावस्याशब्दे गृह्रमाणेऽमावास्याशब्दस्यापि ग्रहणं भवति। तेन "पू()रवाह्णापराह्णाद्रामूलप्रदोषावस्काराद्()वुन्" ४।३।२८ इत्यनुवत्र्तमाने "अमावास्याया वा" ४।३।३० इत्यमावास्याशब्दे वुन्नणौ विधायमानावमावस्याशब्दस्यापि सिध्यत #ः। "अमावसेः" इत्यादि। एकस्या अपि प्रकृतेर्वृद्धिभाक्त्वावृद्धिभाक्त्वधर्मभेदेन भेदस्य विवक्षितत्वाद्द्विवचने निर्देशः। अहमित्यात्मानं व्यपदेशयन्नपरेऽन्यथा कुर्वन्तीति सूचयति। "ण्यतोः" इति। ण्यत्प्रत्ययान्तयोरित्यर्थः। "निपातयाम्यवृद्धिताम्" इति। अन्यतरस्यामिति शेषः। तेन किं सिध्यीत्याह-- "तथैकवृत्तिता तयोः" इति। प्रसिद्ध्यतीति वक्ष्यमाणेन सम्बन्धः। क्वचित् "तथैकवृत्तिताम्िति पाठः। तत्र निपातयामीति प्रकृतेन सम्बन्धः। निपातयामीत्यस्य च साधयामीत्येषोऽर्थः। "तयोः" इति। अमावास्याऽमावस्ययोः प्रत्यवमर्शः। वृत्तिः पुनर्वुन्नणोः प्रत्यययोरुत्पत्तिः। एका तुल्या ययोर्वृत्तिस्तावेकवृत्ती,तद्भाव एकवृत्तिता। सा ण्यत्प्रत्ययमुत्पाद्य तत्र वृद्ध्यभावनिपातनेन सिध्यतीति;एकदेशविकृतस्यानन्यत्वात्। "स्वरश्च मे प्रसिध्यति" इति। "तित् स्वरितम्" ६।१।१७९ इति। अन्तस्वरितत्वचेष्टम्। "सिध्यति" इति। ये त्वमापूर्वस्य वसेर्यतं निपातयन्ति, अन्यतरस्यांग्रहणाच्च पक्षे ण्यतमिच्छन्ति,तेषां यद्यप्यमावस्येति रूपं सिध्यति तथापि यत्प्रत्ययपक्षे स्वरो न सिध्यति; "यतोऽनावः" ६।१।२०७

इति स्वरितत्वापवाद आद्युदात्तत्वं वस्याशब्दस्य प्राप्नोति। अमाशब्देनापि समासे कृते "गतिकारकोपपदात् कृत्" ६।२।१३८ इतिकृदन्तस्योत्तरपदस्य प्रकृतिस्वरे कृते वस्याशब्द एवाद्युदात्तः स्यात्। अन्तस्वरितस्चेष्यते। एकवृत्तितापि पूर्वोक्ता न सिध्यति;शब्दान्तरत्वात्। एको हि यत्प्रत्ययान्तः अपरश्च ण्यत्प्रत्ययान्त इति ण्यति वृद्ध्यभावो निपात्यते॥

बाल-मनोरमा

अमावस्यदन्ततरस्याम् ६९४, ३।१।१२२

अमावस्यद। अधिकरणे इति। निपातनलभ्यमिदम्। "अमे"त्यस्य विवरणम् -- सहेति। "ऋहलोण्य"दित्यनुपदमेव प्राक् प्रसङ्गाद्व्याख्यातमपि सूत्रक्रमात्पुनरुपात्तम्। कुत्वमिति। पचेण्र्यति "चजो"रिति कुत्वमिति भावः। ननु "पाणौ सृजेण्र्य"दिति व्यर्थम्, "ऋहलो"रित्येव सिद्धेरित्यत आह-- ऋदुपधलक्षणस्येति। "ऋदुपदाच्चाऽक्लृपिचृतेः" इति ण्यदपवादस्य क्यपो बाधनाथमतित्यर्थः। पाणिसग्र्या रज्जुरिति। ण्यति "चजो"रिति कुत्वम्। समवपूर्वाच्चेति। वार्तिकमिदम्। "सृजेण्र्य"दिति शेषः।

तत्त्व-बोधिनी

अमावस्यदन्यतरस्याम् ५७५, ३।१।१२२

वृद्धौ सत्यामिति। तेन "अमावास्याया वे"ति विहितस्तद्धितो ह्रस्वपक्षेऽपि सिध्यति, एकदेशविकृतरयाऽनन्यत्वात्। यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत तदा यता मुक्तेऽधिकरणे ण्यदेव तावद्दुर्लभः। अथापि बाहुलकाल्लभ्येत, एवमपि ण्यदन्तमनूद्य विहितस्तद्धितो यदन्तान्न स्यादिति दिक्। ऋहलोः। पञ्चम्यर्थे षष्ठी। "ऋ" इति ऋधातोर्न ग्रहमं किंतु ऋवर्णस्य, हला साहचर्यात्, परं कार्यमिति निर्देशात्, "ईडवन्दे" इत्यादिलिङ्गाच्च। "ऋहलो"रित्येतदनुवर्तमानस्य धातोर्विशेषणं। विशेषणेन तदन्तविधिस्तदेतदाह--- ऋवर्णान्तादिति। अत्रेदमवधेयं-- मूलपुस्तकेषु सर्वत्र "विभाषा कृवृषो"रित्यत्र पक्षे ण्यद्भवतीति वक्तुं "ऋहलोण्र्य"दिति सूत्रं पठित्वा पश्चात् "युग्यं च पत्रे", "अमावस्यदन्यतस्या"मिति पठितम्। मनोरमायां तु सूत्रपाठक्रमेण "युग्यं च पत्रे", "अमावस्यदन्यतरस्या"मिति व्याख्याय "ऋहलोण्र्य"दितिसूत्रं व्याख्यातं तथैवात्रापि व्याख्यातमिति।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि

निष्टक्र्यदेवहूयप्रणीयौन्नीयौच्छिष्यमर्यस्तर्यध्वर्यखन्यखान्यदेवयज्याऽअपृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्यौपचाय्यपृ

३।१।१२३

निष्टक्र्याऽदयः शब्दाश् छन्दसि विषये निपात्यन्ते। यदिह लक्षणेन अनुपपन्नं तत् सर्वं निपातनात् सिद्धम्। निष्टक्र्यः इति कृती छेदने इत्यस्मान् निस्पूर्वात् क्यपि प्राप्ते ण्यत्, आद्यन्तविपर्ययश्च, निसश्च षत्वं निपात्यते। निष्टक्र्यं चिन्वीत पशुकामः। देवशब्दे उपपदे ह्वयतेर् जुहोतेर् वा क्यप्, दीर्घस्तुगभावश्च। देवहूयः। प्रपूर्वादुत्पूर्वाच् च नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच् छिषेः क्यप्। उच्छिष्यः। मृङ् प्राणत्यागे, स्तृञाच्छन्दने, ध्वृ हूर्च्छने, एतेभ्यो यत् प्रत्ययः। मर्यः। स्तर्या। स्त्रियाम् एव निपातनम्। ध्वर्यः। खनेर्यत्। खन्या। एतस्मादेव ण्यत्। खान्यः। देवशब्दे उपपदे यजेर्यत्। देवयज्या। स्त्रीलिङ्गनिपातनम्। आङ्पूर्वात् पृच्छेः क्यप्। आपृच्छ्यः। प्रतिपूर्वत् सीव्यतेः क्यप् षत्वम् च। प्रतिषीव्यः। ब्रह्मण्युपपदे वदेर् ण्यत्। ब्रहमवाद्यम्। भवतेः स्तौतेश्च ण्यत्, आवदेशश्च भवति। भाव्यम्। स्ताव्यः। उपपूर्वस्य चिनोतेः ण्यदायादेशौ। उपचाय्यपृडम्। पृडे चोत्तरपदे निपातनमेतत्। हिरण्य इति वक्तव्यम्। हिरण्यादन्यत्र उपचेयपृडम् एव।

निष्टर्क्ये व्यत्ययं विद्यान् निसः षत्वं निपातनात्। ण्यदायादेश इत्येतावुपचाय्ये निपाततौ। ण्यदेकस्माच् चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः। ण्यदेकस्माद् यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः।

न्यासः

छन्दसि

निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छयप्रतिषीव्यब्राहवाद्यभाव्यस्ताव्योपचाय्यपृडानि , ३।१।१२३

"क्यपि प्राप्ते" इति। ॠदुपधत्वात्। "आद्यन्तविपर्ययः" इति ककारस्यादेरन्तत्वं निपात्यते। तकारस्यान्तस्यादित्वम्। "ह्वयतेः" इत्यादि। यदा "ह्वेञ् स्पद्र्धायाम्" (धा।पा।१००८) इत्यस्मात् क्यप् तदा यजादित्वात् ६।१।१५ सम्प्रसारणम्, "हलः" ६।४।२ इति दीर्घः। यदा तु "{हु दानादनयोः" धा।पा।}हु दाने" (धा।पा।१०८३) इत्यसमात्, तदा तुगभावो निपात्यते दीर्घत्वं च। देवा हूयन्तेऽस्मिन्निति देवहूवः। "{उच्छिष्यम् इति काशिका} अच्छिव्यः" इति। "शिष्लृ {विशेषणे-धा।पा।} विशरणे" (धा।पा।१४५१)। "शश्छोऽटि" ८।४।६२ इति छकारः, "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वम्। " आभ्यां यत्प्रत्ययः" इति। ॠकारान्तत्वाण्ण्यति प्राप्ते। "स्त्रियामव निपातनम्िति। अन्यथा स्तर्येति स्त्रीलिङ्गनिर्देशोऽपार्थकः स्यात्। "आपृच्छ्यः" इति। ग्रहादिना ६।१।१६ सम्प्रसारणम्। "प्रतिषीव्यः" इति। "हलि च" ८।२।७७ इत दीर्घः" "वदेण्र्यत्" इति। "वदः सुपि क्यप् च" ३।१।१०६ इति क्यपि यति च प्राप्ते। "भाव्यः, स्ताव्यः" इति। भवतेः स्तौतेश्च यदपवादो ण्यत्। "निष्टर्क्ये" इत्यादि। सुखोपग्रहणार्थौ सङग्रहश्लोकौ। "व्यत्ययम्" इति। आद्यन्तविपर्ययमित्यर्थः। "ण्यदेकस्मात" इति। कर्मणि ल्यब्लोप एषा पञ्चमी। एकं निष्टर्क्यशब्दमुद्दिश्य ण्यद्भवति। एकं शब्दं साधयितुं ण्यद्भवतीति यावत्। "चतुभ्र्यः क्यप्" इति। तादथ्र्य एषा चतुर्थी। ये देवहूयादयोऽनन्तराश्चत्वारस्तदर्थ तत्सिद्ध्यर्थ क्यब् भवतीति। "चततुभ्र्यश्च यतो विधिः" इति। एषापि तादथ्र्यं एव चतुर्थी। तदनन्तरा ये चत्वारो मर्यादयः खान्यपर्यन्तास्तदर्थम् = तत्सिद्ध्यर्थं यतो विधिर्भवति। "णय्देकस्मात्" इति। एषामपि ल्यब्लोपे कर्मणि पञ्चमी। खान्यमेकं शब्दमुद्दिश्य ण्यद्भवति। खान्यशब्दं साधयितुमित्यर्थः। "यशब्दश्च" इति। एकस्मादित्यनुकर्षणार्थः। देवयज्याशब्दमुद्दिश्य यशब्दो भवति। "द्वौ क्यपौ" इति। आपृच्छ्यप्रतीषीव्यशब्दयोः सिद्ध्ये द्वौ क्यपौ भवतः। "ण्यद्विधिश्चतुः" इति। चतुरो वारान् ण्यद्भवतीत्यर्थः। स पुनः परिशिष्टेषु ब्राह्वाद्यादिषु। अथ वा-- "ण्यदेकस्मात्" इत्येकस्माद्धातोरित्यर्थः। "चतुभ्र्यः क्यप्" इति। चतुभ्र्यो धातुभ्यः क्यब् भवतीति। ननु च नयतिरेकएव धातुः, तत्कथं चतुभ्र्यो धातुभ्य इत्युच्यते? उपसर्गभेदादेकस्यापि भेदो विवक्षित इत्यदोषः। "चतुभ्र्यश्च यतो विधिः" इति। तदनन्तरेभ्यश्चतुभ्र्यो धातुभ्यो यतो विधिरित्यर्थः। "ण्यदेकस्मात्" इति। खन एकस्माद्धातोण्र्यद्विधिः। "यशब्दश्च" इति। देवयज्याशब्द एकस्माद्धातोर्यशब्दो भवति। "द्वौ क्यपौ" इति। आपृच्छ्यप्रतिषीव्यशब्दयोः सिद्ध्य आप्रच्छिसिषिवशब्दाभ्यां द्वौ क्यपौ भवतः॥

---

सूत्रम्

काशिका-वृत्तिः

ॠहलोर् ण्यत् ३।१।१२४

पञ्चम्यर्थे षष्ठी। ॠवर्णान्ताद् धातोर् हलन्ताच् च ण्यत् प्रत्ययो भवति। कार्यम्। हार्यम्। धार्यम् वाक्यम्। पाक्यम्।

लघु-सिद्धान्त-कौमुदी

ॠहलोर्ण्यत् ७८३, ३।१।१२४

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्। कार्यम्। हार्यम्। धार्यम्॥

न्यासः

ऋहलोर्ण्यत्। , ३।१।१२४

"पञ्चम्यर्थे षष्ठी" इति। "व्यत्ययो बहुलम्" ३।१।८५ इत्यनेन। कस्याः पुनः पञ्चम्या अर्थे षष्ठी? दिग्योगलक्षणायाः। प्रत्ययविधौ हि "परश्च" ३।१।२ इति सम्बन्धात् पञ्चम्या भाव्यम्॥

बाल-मनोरमा

ऋहलोर्ण्यत् ६९२, ३।१।१२४

ऋहलोर्ण्यत्। पञ्चम्यर्थे षष्ठी। तदाह-- ऋवर्णान्तादिति।

---

सूत्रम्

काशिका-वृत्तिः

ओरावश्यके ३।१।१२५

अवश्यं भावः आवश्यकम्। उवर्णान्ताद् धातोः ण्यत् प्रययो भवति आवश्यके द्योत्ये। यतो ऽपवादः। लाव्यम्। पाव्यम्। अवश्यके इति किम्? लव्यम्। आवश्यके द्योत्ये इति वेत्, स्वरसमासानुपपत्तिः, अवश्यलाव्यम्, अवश्यपाव्यम् इति? नैष दोषः। मयूरव्यं सकादित्वात् समासः। उत्तरपदप्रकृतिस्वरे च यत्नः करिष्यते।

न्यासः

ओरावश्यके। , ३।१।१२५

"अवश्यम्भाव आवश्यकम्" इति। मनोज्ञादित्वाद्()वुञ्। एतदेव ज्ञापकम्-- अव्ययानां भमात्रे टिलोपो भवतीति। अत्र द्वयं सम्भाव्यते-- उपपदत्वम्, आवश्यक उपपद इति; उपाधिकत्वञ्च, आवश्यके द्योत्य इति। तत्र यद्येवं ज्ञाप्यते-- आवश्यकौपपद इति, तदोपपदरहितादावश्यके द्योत्ये न स्यात्()। "लाव्यं पाव्यम्" इति। आवश्यके द्योत्य इत्येवं विज्ञायत इत्याह-- "आवश्यके द्योत्ये" इति। एतच्च प्रत्यासत्या लभ्यते। उपाधिर्हि प्रत्ययान्तद्योत्यत्वादन्तरङ्गः, उपपदेन च सम्बन्धो बहिरङ्गः, तदर्थस्य पदान्तरवाच्यत्वात्। "स्वरसमासानुपपत्तिः" इति। उपपदे ह्यावश्यके विज्ञायमाने "उपपदमतिङ" २।२।१९ इति समासो भवति। त()स्मश्च सति "गतिकारकोपपदात् कृत्" ६।२।१३८ इत्युपपदाश्रय उत्तरपदप्रकृतिस्वरत्वम्, न तित्स्वरो भवति। द्योत्यपक्षे तु समासो न स्यात्; लक्षणाभावात्। अथापि कथञ्चिदुपपदसमासादन्यः समासः स्यात्? एवमप्युपपदसमासाश्रयः स्वरो न स्यात्; ततश्च तित्स्वरो न लभ्येत्, समासान्तोदात्तत्वं हि स्यात्। "अवश्यलाव्यम्" इति। "लुम्पेदवश्यमः कृत्ये" इति मलोपः। "मयूरव्यंसकादित्वात्" इत्यादि। मयूरव्यंसकादेराकृतिगणत्वादवश्यलाव्यप्रभृतलाव्यप्रभृतयस्तत्र द्रष्टव्या इति दर्शयति। स्वरः कथमित्याह-- "उत्तरपदप्रकृतिस्वरत्वे च" इत्यादि। तत्रायं यत्नः-- "गतिकारकोपपदात् कृत्" ६।२।१३८ इत्यत्र "षट् च काण्डादीनि" ६।२।१३४ इत्यतश्चकारोऽनुवर्त्तिष्यते, स चानृक्तसमुच्चयार्थः। तेनावश्यलाव्यमित्यादावपि प्रकृतिस्वरो भवतीति॥

तत्त्व-बोधिनी

ओरावश्यके ५८४, ३।१।१२५

लाव्यमिति। "आवश्यके उपपपदे" इति व्याख्याने तु नेदं सिध्यतीति भावः। क्वचित्तु लाघवं प्रत्यनादराद्व्यतिसे इत्यादौ व्यतिशब्दवद्द्()योतितार्थस्याऽपि प्रयोगो दृश्यते। अवश्यलाव्यम्। अत्रोपपदसमासाऽसंभवेऽपि

मयूरव्यंसकादेराकृतिगणत्वात्समासः।

---

सूत्रम्

काशिका-वृत्तिः

आसुयुवपिरपिलपित्रपिचमश् च ३।१।१२६

आङ्पूर्वात् सुनोतेः यु वपि रपि लपि त्रपि चम इत्येतेभ्यश्च ण्यत् प्रत्ययो भवति। यतो ऽपवादः आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्। अनुक्तसमुच्चयार्थश्चकारः। दभि दाभ्यम्।

न्यासः

आसुयुवपिरपिलपित्रपिचमश्च। , ३।१।१२६

"यतोऽपवादः" इति। "षृञ् अभिषवे" (धा।पा।१२४७), "यु मिश्रणे" (धा।पा।१०३३) अनयो रजन्त्वात्। "डुवप बीजतन्तुसन्ताने" (धा।पा।१००३), "रप लप व्यक्तायां वाचि" (धा।पा।४०१,४०२), "त्रपूष् लज्जायाम्" (धा।पा।३७४), "चमु अदने" (धा।पा।४६९)--एषामदुपधत्वनात् पवर्गान्तत्वात्। "दाभ्यम्" इति। दभिर्धातुष्वपठित एव प्रकृत्यन्तरमस्ति चुलुम्पवत्॥

---

सूत्रम्

काशिका-वृत्तिः

आनाय्यो ऽनित्ये ३।१।१२७

आनाय्यः इति निपात्यते अनित्ये ऽभिधेये। नयतेराङ्पूर्वाण् ण्यदायादेशौ निपात्येते। आनाय्यो दक्षिणाग्निः। रूढिरेषा। तस्माद् नित्यविशेषे दक्षिणाग्नावेव अवतिष्ठते। तस्य च अनित्यत्वं नित्यम् अजागरणात्। यश्च गार्हपत्यादानीयते दक्षिणाग्निराहवनीयेन सह एकयोनिः, तत्र तन् निपातनं, न दक्षिणाग्निम् आत्रे। तस्य हि योनिर् विकल्प्यते वैश्यकुलाद् वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद् वा इति। आनाय्यो ऽनित्य इति चेद् दक्षिणाग्नौ कृतं भवेत्। एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत्।

न्यासः

आनाय्योऽनित्ये। , ३।१।१२७

"ण्यन्निपात्यते" इति। यति प्राप्ते। यद्यनित्ये निपात्यते घटादिष्वप्यतिप्रसङ्गः, तेषामनित्यत्वादित्याह-- "रूढः" इत्यादि। सत्यपि प्रवृत्तिनिमित्तत्वे रूढ()आ नियतविषयत्वाच्()शब्दा विशिष्ट एवार्थे वर्त्तन्ते, नाविशिष्टे, मयूरादिशब्दवत्। न हि मह्यां रौतीति सर्वो मयूर इत्युच्यते, नापि गच्छतीति सर्वो गौरित्युच्यते, किं तर्हि? विशिष्ट एव प्राणी। तस्माद्रूढिशब्दाद्दक्षिणाग्नावेव वर्त्तते, न घटादिषु। "नित्यमजागरणात्" इति। सततमज्वलनादित्यर्थः। ज्वलनमेव हि तस् जागरणम्। दक्षिणाग्नावपि विशिष्ट एवावतिष्ठते न सर्वत्रेति दर्शयितुमाह-- "यश्च" इत्यादि। किं पुनस्तस्य योनिविकल्पोऽस्ति, येनैवं विशिष्यते? इत्याह-- "तस्य हि" इत्यादि। योनिः = कारणमित्यर्थः। "वै()आकृलात्" इत्यादिना योनिविकल्पं दर्शयति। "आनाय्योऽनित्य इति चेत्" इति। घटादिष्वपि प्राप्नोतीति शेषः। "दक्षिणाग्नौ कृतं भवेत्" इति। "आनाय्यः" इत्येतस्मिन्निपातनं दक्षिणाग्नावेव विशिष्टे कृतं भवेत्, नान्यत्र। लिङ सम्भावनायाम्। एतत् सम्भाव्यते, नान्यथेत्यर्थः। "एकयोनौ च तं विद्यात्" इति। तमानाय्यशब्दमाहवनीयेन य एकयोनिर्दक्षिणाग्निस्तत्र विद्याजानीयादित्यर्थः। चशब्दोऽवधारणे-- एकयोनावेव। "आनेयो ह्न्यथा भवेत्" इति। घटादावनित्ये दक्षिणाग्नौ

चाहवनीयेन भिन्नयोनौ "अचो यत्" ३।१।९७ इति यति कृत आनेय इत्येवं भवति॥।

बाल-मनोरमा

अनाय्योऽनित्ये ७०५, ३।१।१२७

अनाय्योऽनित्ये। "अनित्ये" इति च्छेदः। दक्षिणाग्निविशेषएवेति। वार्तिकमिदम्। स हीति। दक्षिणाग्निर्ह अग्निहोत्रार्थमहरगार्हपत्यादेः प्रणीयत इत्यर्थः। एतेन आङ्पूर्वकस्य नयतेरर्थ उक्तः। अनित्यश्चेति। गार्हपत्यवन्नित्यधारणाऽभावादिति भावः। तदाह-- सततमिति। सततं धारणाऽभावादित्यर्थः। प्रमैइतस्य दक्षिणाऽग्नेस्तत्तत्कर्मणि समाप्ते लौकिकत्वमुक्तं कल्पसूत्रेषु -- "अप्रवृत्ते कर्मणि लौकिकं संपद्यतेट इति। ततश्चपुनःपुनः प्रणयनादनित्यत्वं दक्षिणाग्नेरिति बोध्यम्। यद्यप्याहवनीयस्यापि पुनःपुनः प्रणयनमस्ति, तथापि "दक्षिणाऽग्निविशेष एवे"ति वार्तिकान्नाहवनीयस्य ग्रहणमित्यर्थः। विशेषग्रहणान्नित्यधारणपक्षे दक्षिणाग्निरिह न गृह्रते इति सूचितम्, गतश्रियां दक्षिणाग्नेरपि नित्यधार्यत्वात्, "गतश्रियो नित्यधार्या अग्नयः"इति वचनादित्यलं पल्लवितेन। वैश्यकुलादानीत इति। दक्षिणा()ग्न प्रकृत्यहि श्रूयते-- "अहरहरेवैनं वैश्यकुलादाहरन्ि‍ति। तथाविधदक्षिणाग्नौ वाच्ये आनेयशब्द एवेति भावः।

तत्त्व-बोधिनी

आनाय्योऽनित्ये ५८६, ३।१।१२७

वैश्यकुलादेरिति। दक्षिणाग्नेर्हि योनिर्विकल्प्यते,--- "वैश्यकुलाद्वित्तवतोभ्राष्ट्राद्वा गार्हपत्याद्वे"ति।

---

सूत्रम्

काशिका-वृत्तिः

प्रणाय्यो ऽसम्मतौ ३।१।१२८

अविद्यमाना सम्मतिरस्मिनित्यसम्मतिः। सम्मननं सममतिः, सम्मतता, पूजा। प्रणाय्यः इति निपात्यते ऽसम्मतावभिधेये। प्रणाय्यश्चोरः। असम्मतौ इति किम्? प्रणेयो ऽन्यः। यद्येवं कथम् एतत्, ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्यान्तेवासिने, न अन्यस्मै कस्मैचन इति? सम्मतिरभिलाषो ऽप्युच्यते। तदभावेन निष्कामतया असम्मतिरन्तेवासी भवति। तस्मै निष्कामाय मोक्षार्थं यतमानायान्तेवासिने प्रणाय्याय ब्रह्म ब्रूयातिति युज्यते।

न्यासः

प्रणाय्योऽसम्मतौ। , ३।१।१२८

अविद्यमाना सम्मतिरित्यनेन वाक्यविशेषेण बहुव्रीहिं दर्शयंस्तत्पुरुषाशङ्कां निराकरोति-- "सम्मतिः सम्मतता" इति। सम्मत इति पूजित इत्युच्यते। सम्मतस्य भावः सम्मतता। एतेन सम्मतिशब्देनेह पूजिताभिधेयतेति दर्शयति। "यद्येवम्" इत्यादि। अविद्यमानपूजे चौरादौ प्रणाय्यशब्दस्यान्तेवासिनि प्रयोगो नोपपद्यते। न हि पूजाऽन्तेवासिनि न विद्यत इत्यभिप्रायः। "ब्राह्त प्रब्राऊयात्" इति ब्राहमशब्देनात्र वेद उच्यते। "सम्मतिरभिलोषोऽप्युच्यते" इति। न केवलं पूजेत्यपिशब्देन दर्शयति। "तदभावेन" इति। अभिलाषाभावेन। "निष्कामतया" इति। भावभोगाभिलाषरहिततयेत्यर्थः॥

बाल-मनोरमा

प्रणाय्योऽसमंतौ ७०६, ३।१।१२८

प्रणाय्योऽसमंतौ। असंमतौ गम्यायां "प्रणाय्य" इति निपात्यते। तत्र असंमतिशब्दैकदेशं समंतिशब्दं विवृणोति--

प्रीतिविषयीभवनमिति। तच्च कर्मनिष्ठमित्याह-- कर्मव्यापार इति।तथेति। भोगेषु = सुखदुःखानुभवेषु आसक्तिरपि संमतिरित्यर्थः। एवंविधा संमतिर्न भवतीति असंमतिरिति फलितम्। प्रणाय्यश्चोर इति। ण्यति वृद्धौ आयादेशः।

तत्त्व-बोधिनी

प्रणाय्योऽसमंतौ ५८७, ३।१।१२८

कर्मव्यापार इति।तथा चायमर्थः-- लोकानां या प्रीतिस्तद्विषयीभवनं यस्मिन्नास्ति चोरादौ सोऽसंमतिरिति। वस्तुतस्तु प्रीतिविषयीभवनापेक्षया लाघवात्प्रीतिरेव संमतिः,सा यस्मिन् चोरादौ नास्ति लोकानं सोऽसंमतिः। यद्वा संमतिः प्रीतिविषयेषु यस्य नास्ति स विरक्कतोऽसंमति। तन्त्रेणाऽर्थद्वयमपि गृह्रते।

---

सूत्रम्

काशिका-वृत्तिः

पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ३।१।१२९

पाय्यादयः शब्दा निपात्यन्ते यथासङ्ख्यं माने हविषि निवासे सामिधेन्यां च अभिधेयायाम्। पाय्य इति माङो ण्यत्प्रत्ययः, आदेः पत्वं च निपात्यते माने। पाय्यं मानम् मेयम् अन्यत्। सम्पूर्वान्नयतेर् ण्यदायादेशावुपसर्गदीर्घत्वं च निपात्यते। सानाय्यं हविः। संनेयमन्यत्। रूढित्वाच् च हविर्विशेष एव अवतिष्ठते। निपूर्वाच् चिनोतेः ण्यदायादेशावादिकुवं च निपात्यते। निकाय्यो निवासः। निचेयम् अन्यत्। सामिधेनीशब्द ऋग्विशेषस्य वाचकः। तत्र च धाय्या इति न सर्वा सामिधेनी उच्यते, किं तर्हि, काचिदेव। रूधिशब्दो ह्ययम्। तथा च असामिधेन्याम् अपि दृश्यते, धाय्याः शंसत्यग्निर्नेता तं सोमक्रतुभिः इति।

न्यासः

पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिदेनीषु। , ३।१।१२९

"पाय्य" इति।" आतो युक्" ७।३।३३ "हविर्विशेषेष्वतिष्ठते" इति। यत्रैवायं रूढस्तत्रैवावतिष्ठते। न हविर्मात्रे। "धाय्या" इति। पूर्ववत् युक्। "ऋग्विशेषस्य वाचकः" इति। सर्वा ऋचो न सामिधेनीशब्देनोच्यते, किं तर्हि? समिदाधानमन्त्रः। तथा हि समिदाधानमन्त्रे सामिधेनीशब्दो व्युत्पाद्यते। सामिधेन्यपि न सर्वा ऋगभिधीयते, किं तर्हि? काचिदेवेति दर्शयन्नाह-- "तत्र" इत्यादि। कथं पुनः सामान्येन निपातनां क्रियमाणं विशेषविषयं लभत इत्याह-- "रूढिशब्दो ह्रमम् " इति।धाय्याशब्दो रूढिशब्द ऋग्विशेषस्य वाचकः। सैवानेनोच्यते, नान्या। कथं पुनर्ज्ञायते रूढिशब्दोऽयमित्यत आह-- "तथा च" इत्यादि। यदि रूढिशब्दोऽयं न स्यात् सामिधेन्यां निपातितत्वाद् धाय्याः शंसतित्यत्र ऋग्विशेषे न दृश्येत, दृश्यते चासौ। तसमाद्रूढिशब्दोऽयमित्यवसीयते। यदि तह्रसामिधेन्यामपि दृश्यते, सामिधेनीग्रहणमनर्थकं स्यात्? नानर्थकम्; रूढिविशेषोपलक्षणार्थत्वात्॥।

बाल-मनोरमा

पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ७०७, ३।१।१२९

पाय्यसांनाय्य। पाय्य, सांनाय्य, निकाय्य, धाय्य--एषां द्वन्द्वात्प्रथमाबहुवचनम्। मान,हविः, निवास, सामिधेनी - एषां द्वन्द्वात्सप्तमी। मानादिषु गम्येषु क्रमात् पाय्यादयो निपात्यन्ते। मीयते अनेनेति। माधातोः करणे ण्यत्,धात्वादेर्मकारस्य पत्वं च निपात्यते इत्यर्थः। आत इति।ण्यति "मीनातीत्यात्त्वे कृते आतो युगिति भावः। ण्यदिति। संपूर्वान्नीदातोः कर्मणि निपात्यत इत्यर्थः। आयादेशिति। सननीय इतिस्थिते आयादेशो निपात्यते इत्यन्वयः। निवास

इति। कुसलादिरित्यर्थः। अधिकरणे इति। चिञ्धातोरधिकरणे ण्यन्निपात्यते इत्यन्वयः। आयिति। अच्()परकत्वाऽभावादायादेशोऽप्राप्तो निपात्यते इत्यन्वयः। धाय्या ऋगिति। धाधातोः करणे ण्यति आयादेशो निपात्यते इति भावः। सामिधेन्यो नाम समिदाधानार्था ऋग्विशेषाः। तत्र "समिध्यमानो अध्वरे" इति ऋच उपरि प्रक्षेप्या "पृथुपाजा अमर्त्यः इत्याद्या ऋक्प्रसिद्धा।

तत्त्व-बोधिनी

पाय्यसान्नय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ५८८, ३।१।१२९

पाय्यसान्नाय्य। चतुर्षु अर्थेषु चत्वारो निपात्यन्ते। पीयतेऽनेनेति माङः करणे ण्यत्। पेयमन्यत्। हविर्विशेष इति। "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया"मिति विहितो दधिपयोविशेषरूपः। धीयते अनयेति। अत्र सर्वा सामिधेनी न ग्राह्या, किंतु समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा "पृथृपाजा अमर्त्यः" इत्यादिकैव। अयं च विशेषो निपातनस्य रूढ()र्थत्वाल्लभ्यते। नन्वेवं निपातनात्सामिदेनीविसेषवाचकत्वे सामिधेनीग्रहणं व्यर्थमिति चेत्। अत्राहुः- सूत्रे सामिधेनीग्रहणं प्रयोगविशेषोपक्षणार्थम्। तथा चाऽसामिधेन्यामपि दृश्यते-- "धाय्या शंसती"ति। न हि शस्त्रेण समित् प्रक्षिप्यते।

---

सूत्रम्

काशिका-वृत्तिः

क्रतौ कुण्डपाय्यसञ्चाय्यौ ३।१।१३०

कुण्डपाय्य सञ्चाय्य इत्येतौ शब्दौ निपात्येते क्रतावभिधेये। कुण्डशब्दे तृतीयान्त उपपदे पिबतेर् धातोरधिकरणे यत् प्रत्ययो निपात्यते युक् च। कुण्डेन पीयते ऽस्मिन् सोमः इति कुण्डपाय्यः क्रतुः। यतो ऽनावः इति स्वरः। सम्पूर्वाच् चिनोतेः ण्यदायादेशौ निपात्येते। सञ्चीयते ऽस्मिन् सोमः इति सञ्चाय्यः क्रतुः। क्रतौ इति किम्? कुण्डपानम्। सञ्चेयः।

न्यासः

क्रतौ कुण्डपाय्यसञ्चाय्यौ। , ३।१।१३०

"पिबतेः" इति। "पा पाने" (धा।पा।९२५)। "अधिकरमे यत्प्रत्ययः" इति। ल्युटि प्राप्ते। किं पुनः कारणं ण्यतं त्यक्त्वा यत्प्रत्ययान्तः कुण्डपाय्यशब्दो निपात्यते? अत आह-- "यतोऽनाव इति स्वरः" इति। यत्प्रत्ययान्तत्वे ह्युत्तरपदाद्युदात्तत्वं भवति। ण्यत्प्रत्ययान्तत्वेऽन्तस्वरितत्वं स्यात्। "कुण्डपानम्" इति। क्रतोरन्यत्र ल्युडेव भवति॥

बाल-मनोरमा

क्रतौ कुण्डपाय्यसंचाय्यौ ७०८, ३।१।१३०

क्रतौ कुण्डपाय्य। ऋतुविशेषे गम्ये एतौ निपात्येते। कुण्डेनेति। अत्सरुकैश्चमसैरित्यर्थः। सामान्येनैकवचनम्। "यदत्सरुकैश्चमसैर्भक्षयन्ति तदेषां कुण्ड"मिति श्रुतिः। कुण्डपाय्य इति। सत्रविशेषात्मकः ऋतुः। कुण्डेनेति तृतीयान्ते उपपदे अधिकरणे ण्यत्। आतो युक्। संचाय्य इति। संपूर्वाच्चिञः कर्मणि ण्यत्, आयादेशश्च निपात्यते इति भावः। संचाय्यो नाम ऋतुविशेषः क्वचिच्छाखायामन्वेषणीयः।

तत्त्व-बोधिनी

क्रतौ कुण्डपाय्यसंचाय्यौ ५८९, ३।१।१३०

कुण्डपाय्य। कुण्डशब्दे तृतीयान्ते उपपदे पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते। नन्वत्र ण्यदेव निपात्यतां प्रकृत्वात्, एवं च "आतो युक् चिण्कृतो"रितिसिद्धत्वद्युक् न निपातनीय इतिलाघवमस्तीति चेत्। मैवम्। तित्स्वरप्रसङ्गात्। इष्यते तु "यतोऽनावः" इत्याद्युदात्तः कृदुत्तरपदप्रकृतिस्वरः।तथा च प्रयुज्यते "प्रणाय्यात् कुण्डपाय्य" इति। संपूर्वाच्चिनोतेस्तु ण्यदायौ निपात्येते। क्रतौ किम्?। कुण्डपानम्। संचेयम्।

---

सूत्रम्

काशिका-वृत्तिः

अग्नौ परिचाय्यौपचाय्यसमूह्याः ३।१।१३१

परिचाय्य उपचाय्य समूह्य इत्येते शब्दा निपात्यन्ते अग्नावभिधेये। परिपूर्वतुपपूर्वाच् च चिनोतेर् ण्य दायादेशौ निपात्येते। परिचाय्यम्। उपचाय्यः। सम्पूर्वाद् वहेः सम्प्रसारणं दीर्घत्वं च निपात्यते। समूह्यं चिन्वीत पशुकामः। अग्नौ इति किम्? परिचेयम्। उपचेयम्। संवाह्यम्।

न्यासः

अग्नौ परिचाय्योपचाय्यसमूह्लाः। , ३।१।१३१

"संपूर्वाद्वहेः" इत्यादि। हलन्तत्वाण्ण्यत् सिद्ध एव; त()स्मस्तु सति सम्प्रसारणं न प्राप्नोति; अकित्त्वात्। ण्यतः कृतेऽपि सम्प्रसारणे "हलः" ६।४।२ इति दीर्घत्वं न प्राप्नोति; यसमादङ्गावयवाद्धल उत्तरं यत् सम्प्रसारणं तदन्तस्याङ्गस्य दीर्गत्वं विधीयते; न चायमेवम्प्रकारोऽस्ति,अत उभयं निपात्यते। न सम्पूर्वादूहेः सामान्यविहितेन ण्यतैव सिध्यति। अग्नावेव वहेः सम्पूर्वाण्ण्यद्यथा स्यात्, इह मा भूत्-- संवोढव्यो ब्राआह्मण इति॥

बाल-मनोरमा

अग्नौ परिचाय्योपचाय्यसमूह्लाः ७०९, ३।१।१३१

अग्नौपरिचाय्य। अग्नौ गम्ये --परिचाय्य, उपचाय्य, समूह्य एते निपात्यन्ते। अग्निशब्द इष्टकारचितस्थण्डिलविशेषे वर्तते, यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दांसी तस्मादग्निरुच्यतेऽथो इयं वा अगनिर्वै()आआनरो यन्मृदा चिनोति तस्मादग्निरुच्यते" इति वाक्यशेषाच्च। तदाह-- अग्निधारणेति। तत्र परिपूर्वादुपपूर्वाच्च चित्रः कर्णि ण्यत्, आयादेशश्च निपात्यते। संपूर्वस्य वहेस्तु कर्मणि ण्यति संप्रसारणं, दीर्घश्च निपात्यते। "समूह्लं चिन्वीत पशुकामः, परिचाय्यंचिन्वीत ग्रामकामः"इति तैत्तिरीयश्रुतौ परिचाय्यसमूह्लौप्रसिद्धौ। उपचाय्यस्त्वग्निःक्वचिच्छाखायामन्वेषणीयः।

तत्त्व-बोधिनी

अग्नौ परिचाय्योपचाय्यसमूह्लाः ५९०, ३।१।१३१

अग्नौ परि।अग्निरिह न ज्वलनः,किं तु तद्धारणार्थमिष्टकाचयनेन निर्मितं स्थलं, तदाह--स्थलविशेष इति। एते साधव इति। स्थलविशेषेऽभिधेये परिपूर्वाच्चिनोतेण्र्यदायादेशयोः, संपूर्वस्य वहेस्तु संप्रसारणदीर्घयोश्च निपातनादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

चित्याग्निचित्ये च ३।१।१३२

चित्यशब्दो ऽग्निचित्याशब्दश्च निपात्येते। नीयते ऽसौ चित्यो ऽग्निः। अग्निचयनम् एव अग्निचित्या। भावे यकरप्रत्ययः तुक् च। तेन अनतोदात्तत्वं भवति। अग्नावित्येव। चेयम् अन्यत्।

न्यासः

चित्याग्निचित्ये च। , ३।१।१३२

"तेनान्तोदात्तत्वं भवति" इति। यत्प्रत्ययान्तनिपातने हि प्रत्ययस्वरेणान्तोदात्तत्वं पदस्य भवति। ण्यति तु सति तित्स्वरितत्वं भवति। तस्मात् प्रकृतं त्यक्त्वा यप्रत्ययो निपात्यत इति भावः॥

बाल-मनोरमा

चित्याग्निचित्ये च ७१०, ३।१।१३२

चित्याग्निचित्ये च। चित्यश्च अग्निचित्या चेति द्वन्द्वः। अग्नौ निपात्येते। चित्योऽग्निरिति। कर्मणि ण्यत्,तुकच निपात्यते। अग्नेश्चयमिति। अग्निशब्दे षष्ठ()न्ते उपपदे चिणो ण्यत्,तुक् च। स्त्रीत्वं लोकात्। "प्रैषातिसर्गे"ति व्याख्यातमपि स्मार्यते। गम्यमिति। "पोरदुपधा"दिति ण्यदपवादः क्यप्। ननु सामान्येन बावकर्मणोर्विहितानां कृत्यानां प्रैषादिषु तदभावे च सिद्धेः प्रैषादिषु कृत्यविधिव्र्यर्थ इत्यत कृत्यानां प्रेषाद्यभावे भावकर्मणोश्चरितार्थत्वात्। अतः प्रैषादिषु कृत्यानां लोटा कृत्यानां बाधनिवृत्त्ये पुनः कृत्यविधिरित्यर्थः। ननु वासरूपविधिनैव लोटा प्रैषादिषु कृत्यानां बाधो न भविष्यतीत्यत आह-- स्त्र्यधिकारादूध्र्वमिति। "स्त्रियां क्ति"न्नित्यत ऊध्र्वमित्यर्थः। "प्राक् स्त्रिया वासरूपविधिः" इति भाष्यम्। ननु स्त्र्यधिकारादूध्र्वं वाऽसरूपवदेरप्रवृत्तौ "स्त्रियां क्ति"न्निति सामान्यविहितस्य कित्रः "षिद्भिदादिभ्योऽभि"ति विशेषविहितेन नित्यबाधः स्यात्, ततः -- क्षमा क्षान्ति, भिदा भित्तिरित्यादि न स्यादित्यत आह-- क्वचिन्नेति। "क्वचि"दित्यस्याऽनिर्धारणादाह-- तेनेति। सिद्धमिति। एषु वासरूपविधित्यत्र सङ्कोच इति भावः। अत्र व्याख्यानमेव शरणम्। अर्हे कृत्यतृचश्चेति। प्राग्व्याख्यातं विशेषविवक्षया स्मार्यते। "लिङ्यदी"त्यतो लिङनुकर्षार्थश्चकार इत्युक्तं प्राक्। ननु अर्हे अनर्हे च सामान्यविधानादेव अर्हेऽपि कृत्यतृचोः सिद्धयोः पुनस्तद्विधिव्र्यर्थ इत्यत आह-- लिङा बाधेति। "अर्हे चे"त्येतावत्येव उक्ते चकारानुकृष्टस्य लिङ एवार्हे विधिः स्यात्, तथा च अर्हे कृत्यतृचोर्विधिर्न स्यात्, अर्हे विशेषविहितेन लिङा बाधात्, अनर्हे कृत्यतृचोश्चरितार्थत्वात्। वासरूपविधिस्तु स्त्र्यधिकारादूर्द्ध्वं न प्रवर्तते इत्युक्तमेव। अतो लिङा बाधा मा भूदिति कृत्यतृचोर्विधिरित्यर्थः।

तत्त्व-बोधिनी

चित्याग्निचित्ये च ५९१, ३।१।१३२

चित्योऽग्निरिति। चिनोतेः कर्मणि क्यप्। यतोऽपवादः। इह सूत्रे अग्नावित्यनुवर्तते, तच्च चित्यशब्दस्यैव विशेषणं, न द्वितीयस्य। तस्य भावार्थकत्वेनाऽग्निवाचकत्वाऽसंभवात्। अग्नेरन्यत्र चेयमित्येव। शब्दकौस्तुभादौ तु अग्निचित्येत्यत्र भावे यकारप्रत्ययस्तुक् च निपात्यते न तु क्यप्। तेनान्तोदात्तत्वं भवति। क्यपि तुकृते क्यपः पित्त्वादनुदात्तत्वे धातुस्वरेण चित्य इवाद्युदात्तः स्यादिति स्थितम्। ननु वासरूपविधना कृत्या अपि भविष्यन्तीत्यत आह-- स्त्र्यधिकारादूध्र्वमित्यादि। क्तल्युडिति। हसितं हसनं छात्रस्य। "नपुंसके भावे क्तः" "ल्युट् चे" त्यनयोर्विषये भावे इति घञ्न। इच्छति भोक्तुम्। अत्र "इच्छार्थेषु लिङ्लोटौ" इति लोण्न। लिङ् तु भवत्येव,"समानकर्तृकेषु तुमुन्" लिङ् चे"ति वचनात्। ईषत्पानः। "अतो यु"जिति युच्। अत्र "ईषद्दुःसुषु"इति खल् न। लिङा बाधेति। चकारेण "लिङ् यदी"त्यतो लङनुकृष्यत इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ण्वुल्तृचौ १।२ धातोः ? प्रत्ययः ? परश्च ?

समासः॥

ण्वुल् च तृच्च ण्वुल्तृचौ, इतरेतरद्वन्द्वः

अर्थः॥

धातोः ण्वुल्-तृचौ प्रत्ययौ भवतः

उदाहरणम्॥

कारकः, हारकः, पाठकः, कर्ता, हर्ता, पठिता

काशिका-वृत्तिः

ण्वुल्तृचौ ३।१।१३३

धातोः इति वर्तते। सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः। कारकः। कर्ता। हारकः। हर्ता। चकारः सामान्यग्रहणाविधातार्थः, तुश् छन्दसि ५।३।५९, तुरिष्ठेमेयस्सु ६।४।१५४ इति।

लघु-सिद्धान्त-कौमुदी

ण्वुल्तृचौ ७८७, ३।१।१३३

धातोरेतौ स्तः। कर्तरि कृदिति कर्त्रर्थे॥

न्यासः

ण्वुल्?तृचौ। , ३।१।१३३

"चकारः सामान्यग्रहणार्थः" इत्यादि। तृज्तृनोः सामान्यग्रहणं यथा स्यादिति। असति तु तस्मिन् "निरनुबन्धकरणे न सानुबन्धकस्य" (व्या।प।५३) इति तृनो ग्रहणं न स्यात्। अथान्तोदात्तार्थः कस्मान्न भवति? तस्य प्रत्ययस्वरेणैव सिद्धत्वात्॥

बाल-मनोरमा

ण्वुल्तृचौ ७१२, ३।१।१३३

अथ कृदन्तप्रकरणं। ण्वुल्तृचौ। अनयोर्वर्तमानकालादन्यत्र न प्रयोग इति भाष्यम्। वोढुमर्ह इति। "अर्हे कृत्यतृचश्चे"त्युक्तेरिति भावः। वोढेति। वहेस्तृच्यनुदात्तत्वादिडभावे ढत्वधत्वष्टुत्वढलोपेषु "सहिवहो"रित्योत्वम्। कुटितेत्यत्र लघूपधगुणमाशङ्क्याह-- गाङिति। तर्हि ण्वुलि कोटक इत्यत्रापि गुणो न स्यादित्यत आह-- अञ्णिदित्युक्तेरिति। विजितेत्यत्र लघूपधगुणमाशङ्क्याह-- विज इडिति। "इति ङित्त्व"मिति शेषः। विजितेति। ङित्त्वान्न गुणः अनिट्स्त्विति। तस्यानुदात्तोपदेशत्वादिति भावः। "जनक" इत्यत्रोपधावृद्धिमाशङ्क्य वृद्धिनिषेधं स्मारयत-- जनिवध्योश्चेति। वध हिंसायामिति,- धात्वन्तरं भौवादिकं,भ्वादेराकृतिगणत्वात्। नत्वयं हन्तेर्वधादेशः। तथा सति "जनिवध्योश्चे"ति वृद्धिनिषेधसूत्रे वधिग्रहणवैयथ्र्यात्, वधादेशस्याऽदन्ततया अल्लोपस्य स्थानिवत्त्वादेव वृद्ध्यभावसिद्धेः। वधक इति। "जनिवध्योश्चे"ति वृद्धिनिषेधः। रन्धकः जम्भक इत्यत्र इदित्त्वाऽभावादप्राप्ते नुमि तद्विधिं

स्मारयति-- रधिजभोरचीति। रधितेत्यत्र "रधिजभो"रिति नुममाशङ्क्याह-- नेट()लिटीति। रधिता रद्धेति। "रधादिभ्यश्चे"ति वेट्। मस्()ज्? तृ इति स्थिते आह-- मस्जिनशोरिति। नुम्विधिरयम्। मङ्क्तेति। मस्()ज्? तृ इति स्थिते "मस्जेरन्त्यात् पूर्वो नुम् वाच्यः" इतिसकारादुपरि जकारात् प्राङ्()नुम्। मस्()न्?ज्? तृ इति स्थिते "स्को"रिति सलोपः, जस्य कुत्वेन गः, तस्य चर्त्वेन कः, अनुस्वारः, परसवर्णेन ङ इति भावः। नंष्टा नशितेति। रधादित्वाद्वेट्। इडभावपक्षे "मस्जिनशो"रिति नुमि, नन्()श्? तृ इति स्थिते "व्रश्चे"ति शस्य षः। नस्याऽनुस्वारः। ष्टुत्वम्। रमेरशब्लिटोरिति नुम्विधिरयम्। लब्धेति। "झषस्तथो"रिति तस्य धः, जश्त्वेन भस्य बः। तीषसहेति। इड्विकल्पोऽयम्। सोढेति। ढत्वधत्वष्टुत्वढलोपाः। "सहिवहो"रित्योत्त्वम्। दरिद्रातेरालोप इति। "दरिद्रातेरालोपो वक्तव्यः" इत्यनेनेति भावः। ण्वुलि नेति। दरिद्रातेर्ण्वुलि आलोपो नेत्यर्थः। "न दरिद्रायके लोपः" इति वार्तिकादिति भावः। दरिद्रायक इति। "अतो यु"गिति युगिति भावः। पादाभ्यां ह्रियते पादहारक इत्यत्र कर्मणि ण्वुलं साधयितुमाह-- कृत्यल्युट इत्येवेति। "कृत्यल्युटः" त्येतावतैव पुनर्वचबलाद्येष्वर्थेषु ते कृत्यल्युटो विहितास्ततोऽन्यष्वप्यर्थेषु भवन्तीत्यर्थलाभाद्बहुलग्रहणं योगविभागार्थं-- "कृत्प्रत्यया येष्वर्थेषु विहितास्ततोऽन्यत्रापि क्वचिद्भवन्ती"ति। एवं च कर्मण्यपि ण्वुल् सिध्यतीत्यर्थः। "कृतो बहुल"मिति वार्तिकं तु एतद्योगविभागसिद्धकथनपरमिति भावः। क्रमेरिति। आत्मनेपदविषयात्क्रमेः परस्य कर्तरि कृतो नेडित्यर्थः। "स्नुक्रमो"रिति सूत्रस्थमिदं वार्तिकम्। प्रक्रन्तेति। "प्रोपाभ्यां समर्थाभ्या"मित्यात्मनेपदविषयोऽयम्। नन्वेवं सति क्रमितेत्यत्र कथमिडित्यत आह-- अनन्यभावे विषयशब्द इति। "वर्तते" इति शेषः। आत्मनेपदाऽविनाभाव इति यावत्। "क्रमेः कर्तर्यात्मनेपदिन" इत्येतावतैव सिद्धे विषयपदोपादानादयमर्थो लभ्यते इति भावः। तथा च नित्यमात्मनेपदिन इति फलितम्। तेनेति। "क्रमिते"त्यत्र क्रमेः "अनुपसर्गाद्वे" त्यात्मनेपदविकल्पविधानान्नित्यमात्मनेपदित्वाऽभावादिण्निषेधो नेत्यर्थः। मतान्तरमाह-- तदर्हत्वमेवेति। आत्मनेपदार्हत्वमेवात्मनेपदविषयत्वम्। ततश्च आत्मनेपदपक्षे इण्निषेधे सति कन्र्तेति रूपम्, आत्मनेपदाऽभावपक्षे तु क्रमं इटि क्रमितेति रूपमिति केचिदाहुरित्यर्थः। अत्र पक्षे विषयपदस्य न प्रयोजनमित्यस्वरसः। ननु संजिगमिषितेत्यत्र सनः कथमिट्, कगमेरनिट्सु पाठात्, सनः परस्मैपदपरत्वाऽभावेन "गमेरिट् परस्मैपदेषु" इत्यस्याऽप्रवृत्तेरित्यत आह-- गमेरिडित्यत्रेति। एवमिति। "न वृद्ध्यश्चतुभ्र्यः" इत्यत्रापि परस्मैपदग्रहणमनुवृत्तं तङानयोरभावं लक्षयतीत्यर्थः। विवृत्सितेति। वृतेः सनि रूपम्। "हलन्ताच्चे"ति कित्त्वान्न गुणः। यङन्तादिति। पचिधातोर्यङन्तात् पापच्येत्यस्माण्ण्वुलित्यर्थः। तस्य अकादेशे "यस्य हलः" इति यकारलोपे अतो लोपे पापच् अक इति स्थिते उपधावृद्धिमाशङ्क्याह-- स्थानिवत्त्वान्न वृद्धिरिति। यङ्लुगन्तात्त्विति। यङः सङ्घातस्य लुकोऽजादेशत्वाऽभावेन स्थानिवत्त्वाऽसंभवादुपधावृद्धिर्निर्बाधा। "न धातुलोपे" इति निषेधस्तु न, यङ्लुकोऽनैमित्तिकत्वादुपधावृद्धेरिग्लक्षणत्वाऽभावाच्च।

तत्त्व-बोधिनी

ण्वुल्तृचौ ५९३, ३।१।१३३

णकारो वृद्ध्यर्थः। लकारो "लिती"ति स्वरार्थः। तृचश्चकारस्तु "तुरिष्ठेमेयस्सु", "तुश्छन्दसि" इत्यादौ सामान्यग्रहणाऽविघातार्थः। "चितः" इत्यन्तोदात्तार्थस्तु न भवति, "आद्युदात्तश्चे"त्येनेनैव सिद्धेः। एवं च "अप्तृन्" इति सूत्रे तृन्तृचो पृथग्ग्रहणं विहाय "अप्तृस्वसृ" इत्येव सुवचमित्येके। अन्ये तु "सामान्यग्रहणेऽपि क्वचिद्विशेषस्यैव ग्रहणं भवती"ति ज्ञापनार्थम् "अप्तृन्नि"ति सूत्रे तृन्()तृचोरुभयोग्र्रहणम्। तेन "कोपधग्रहणे तद्धितवुग्रहण"मित्येतत्सिद्धमित्याहुः। वोढेति। "अर्हे कृत्यतृचश्चे"ति तृच्, ढत्वादयस्तु वोढव्य इत्यत्रेवात्राऽप्यूह्राः। रधितेति। "रधादिभ्यश्चे"ति वेट्। रद्धेति। इह "नेट()लिटी"ति निषेधाऽप्रवृत्तावपि "रधी"त्यनेन अच्परत्वाऽभावान्नुम्न। मङ्क्तेति। "टुमस्जो शुद्धौ" अस्मात्तृच्। "मस्जीट ति नुम्न्त्यात्पूर्वः। "स्को"रिति सलोपः। जस्य कुत्वे चत्र्वम्।

अनुस्वारपरसवर्णौ। "बहूनां समवाये द्वयोद्र्वयोः संयोगः" इति पक्षे तु नुमागमस्याऽच्परत्वेऽपि "स्को"रिति सलोपो भवत्येवेति ज्ञेयम्। नंष्टेति। रधादित्वादिङभावपक्षे नुम्।लब्धेति। "झषस्तथो"रिति धः भकारस्य जश्त्वम्। "लभेश्चे"ति नुम् तु न भवति, अचीत्यनुवर्तनात्। ण्वुलि ल्युटि च ने"ति वचनात्। योगविभागेनेति। "कृत्यकल्युटो बहुल"मिति सूत्रे "कृतो बहुल"मित्येवाकरे स्थितम्। तथा च योगविभागं विनैव सर्वेष्टसिद्धिरित्याहुः।

* क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्चः। प्रक्रन्तेति। "प्रोपाभ्यां समर्थाभ्या"मिति क्रमेरत्मनेपदविषयता। अनन्यभावे विषयशब्द इति। तदन्याऽविषयत्वे सति तद्विषयत्वमनन्यभावः। तथा च विकल्पार्हस्य क्रमेः परस्मैपदात्मनेपदोभयप्राप्तिविषयत्वान्निषेधो नेति भावः। संजिगमिषितेति। संपूर्वाद्गमेः सन्। "सन्यङो"रिति द्वित्वे हलादिः शेषे "सन्यतः" इत्यभ्यासस्येत्वम्। "आद्र्धधातुकस्ये"ति सन इट्, षत्वं, सन्नन्तात्तृच्। पुनरिट्। अल्लोपस्येति। प्राचां तु "न धातुलोपे" इति सूत्रे "इक" इत्यनुवृत्तेर्वृद्धेरनिषेधः--- "पापाचक" इत्युक्तं, तन्न, यङन्ते अल्लोपस्य स्थानिवत्त्वेन वृद्धिः प्राप्त्यभावात्। ननु यङ्लुगन्तपापाचकरूपाभिप्रायेण तथोक्तम्, तत्र हि अकारविशिष्टस्यैव यङो लुगिति सर्वसंमतत्वेन स्थानिवत्त्वाऽभावादिति चेत्। मैवम्। एवंतर्हि आद्र्धधातुकस्य धात्ववयवलोपनिमित्तत्वाऽभावेन यङ्लुगन्ते "न धातुलोपे" इति निषेधस्य प्रसक्तेरभावात्।

---

सूत्रम्
काशिका-वृत्तिः
नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४

आदिशब्दः प्रयेकं सम्बध्यते। त्रिभ्यो गणेभ्यः त्रयः प्रत्यया‌ः यथासङ्ख्यं भवन्ति। नन्द्याऽदिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्यो ऽच्। नन्दिग्रहपचादयश्च न धातुपाठतः सन्निविष्टा गृह्यन्ते, किं तर्हि, नन्दन रमण इत्येवम् आदिषु प्रातिपदिकगणेषु अपोद्धृत्य प्रकृतयो निर्दिश्यन्ते। नन्दिवासिपदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्। नन्दनः। वासनः। मदनः। दूषणः। साधनः। वर्धनः। शोभनः। रोचनः। सहितपिदमेः संज्ञायाम्। सहनः। तपनः। दमनः। जल्पनः। रमणः। दर्पणः। सङ्क्रन्दनः। सङ्कर्षणः। जनार्दनः। यवनः। मधुसूदनः। विभीषणः। लवणः। निपातनाण् णत्वम्। चित्तविनाशनः। कुलदमनः। शत्रुदमनः। इति नन्द्यादिः। ग्रह। उत्सह। उद्दस। उद्भास। स्था। मन्त्र। सम्मर्द। ग्राही। उत्साही। उद्दासो। उद्भासी। स्थायी। मन्त्री। सम्मर्दी। रक्षश्रुवसवपशां नौ। निरक्षी। निश्रावी। निवासी। निवापी। निशायी। याचिव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्। अयाची। अव्याहारी। असंव्याहारी। अव्राजी। अवादी। अवासी। अचामचित्तकर्तृकाणाम्। प्रतिषिद्धानाम् इत्येव। अकारी। अहारी। अविनायी। अविशायी। विशयी। विशयी देशे। विशयो, विषयी देशः। अभिभावी भूते। अभिभावी। अपराधी। उपरोधी। परिभवी। परिभावी। इति ग्रह्यादिः। पच। वप। वद। चल। शल। तप। पत। नदट्। भषट्। वस। गरट्। प्लवट्। चरट्। तरट्। चोरट्। ग्राहट्। जर। मर। क्षर। क्षम। सूदट्। देवट्। मोदट्। सेव। मेष। कोप। मेधा। नर्त। व्रण। दर्श। दंश। दम्भ। जारभरा। श्वपच। पचादिराकृतिगणः। अज्विधिः सर्वधातुभ्यः पठ्यन्ते च पचादयः। अण्बाधनार्थम् एव स्यात् सिध्यन्ति श्वपचादयः।
लघु-सिद्धान्त-कौमुदी
नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ७८९, ३।१।१३४

नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात्। नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। लवणः। ग्राही। स्थायी। मन्त्री। पचादिराकृतिगणः॥
न्यासः

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः।, ३।१।१३४

"प्रत्यासत्त्या पचिनैवादिशब्दस्य सम्बन्धो मा विज्ञायीत्यत आह-- "प्रत्येकम्" इत्यादि। "नन्दिवाशि" इत्यादि। "टुनदि समममृद्धौ" (धा।पा।६७), "वाशृ शब्दे" (धा।पा।११६३), "मदी हर्षे" (धा।पा।१२०८), "दुष वैकृत्ये" (धा।पा।११८५), "राध साध संसिद्धौ" (धा।पा।१२६२,१२६३), "शुभ शुम्भ शोभायाम्" (धा।पा।१३२१,१३२२), "रुच दीप्तौ" (धा।पा।७४५)-- एभ्यो धातुभ्यो ण्यन्तेभ्यः संज्ञायां ल्युर्भवति। नन्दयतीति। नन्दनमित्येवमाद्युदाहरणम्। "दूषणम्" इति। "दोषो णौ" ६।४।९० इत्यूत्त्वम्। अण्यन्तानां त्वेषामसंज्ञायां संज्ञायां च तृजादय एव भवन्ति। ग्रहादीनां नन्द्यादीनाञ्च गणे पाठस्येदमेव प्रयोजनम्-- संज्ञाविशिष्टविषये तेषां साधुत्वं यथा स्यात्। अन्यथा हि प्रकृतीरेव गणे पठित्वेह चादिशब्देन ता उपलक्ष्य प्रत्ययं विदध्यात्। "सहितपि" इत्यादि। "षह मर्षणे" (धा।पा।१८०९), "तप सन्तापे" (धा।पा।९८५), "दमु उपशमे" (धा।पा।१२०३) - एभ्यः संज्ञायामण्यन्तेभ्यो ल्युः। "जल्पनः" इत्यादि। "जप जल्प व्यक्तायां वाचि" (धा।पा।३९७,३९८), "रमु क्रीडायाम्" (धा।पा।८५३), "दृप {हर्षमोहनयोः-धा।पा।} हर्षणमोचनयोः" (धा।पा।११९६), "कदि क्रदि आह्वाने रोदने च" (धा।पा।७०,७१), "कृष विलेखने" (धा।पा।९९०) ह्मषु अलोके" (धा।पा।७०९),"अर्द हिंसायाम्" (धा।पा।१८२८), जनमर्दयतीति जनार्दनः, कर्मण्यणि प्राप्ते ल्युः। "यु {मिश्रणेऽमिश्रणे च-धा।पा।} मिश्रणे" (धा।पा। १०३३), "षूद क्षरणे" (धा।पा।१७१७), मधुं सूदयतीति मधुसूदनः। अत्रापि कर्मण्यणि प्राप्ते ल्युः। "ञिभी भये" (धा।पा। १०८४)। विपूर्वात् "हेतुमति च" ३।१।२६ इति णिच्; "भियो हेतुभये षुक्" ७।३।४०।"लवणः" इति। "लूञ् छेदने" (धा।पा।१४८३)। "निपातनाण्णत्वम्" इति। कृतणत्वस्य गणे पाठो निपातनम्। "णश अदर्शने" (धा।पा।११९४) विपूर्वः, "दमु उपशमे" (धा।पा।१२०३)- द्वावप्येतौ हेतुमण्णिजन्तौ। वित्तं विनाशयतीति वित्तविनाशनः। कुलं दमयतीति कुलदमनः। "मितां ह्रस्वः"६।४।९२ इति ह्रस्वः, कर्मण्यणि प्राप्ते ल्युः। "ग्रह" इत्यादि। "ग्रह उपादाने" (धा।पा।१५३३), "षह मर्षणे" (धा।पा।१८०९) उत्पूर्वः। "तसु {उपक्षये--धा।पा।}क्षेपणे" (धा।पा।१२१२), "दसु च" (धा।पा।१२१३),दसिवत् पूर्वः। "भस भत्र्सनदीप्त्योः" (धा।पा।११००) उत्पूर्वः। "ष्ठा गतिनिवृत्तौ" (धा।पा।९२८), "आतो युक्"७।३।३३। स्थायी। "मत्रि {गुप्तपरिभाषणे" धा।पा।} गुप्तभाषणे" (धा।पा।१६७९), चुरादिणिजन्तः। "मृद क्षोदे" (धा।पा।१५१५) संपूर्वः। संमृद्()नातीति संपूर्वादेव यथा स्यात्। "रक्षश्रुवसवपशां नौ" इति। "रक्ष पालने" (धा।पा।६५८), "श्रु श्रवणे" (धा।पा।९४२), "डुवप बीजतन्तुसन्ताने" (धा।पा।१००३), "शो तनूकरणे" (धा।पा।११४५)-- एषां निशब्द उपपदे णिनिः। "निशायी" इति। पूर्ववद्युक्। "याचि" इत्यादि। "टुयाचृ याच्ञायाम्" (धा।पा।८६३), "ह्मञ् हरणे" (धा।पा।८९९) , व्याङ्पूर्वः, पुनः स एव संपूर्वः, "वज व्रज गतौ" (धा।पा।२५२,२५३), वद व्यक्तायां वाचि" (धा।पा।१००९), "वस निवासे" (धा।पा।१००५) --एषां प्रतिषिद्धानां णिनिर्भवति। "प्रतिषिद्धानाम्" इति। "प्रतिषिद्धार्थानामित्यर्थः। प्रतिषिद्धार्थतांच नञ्पूर्वाणामेव भवतीति नञ्पूर्वेभ्यो णिनिर्विज्ञायते। कथं पुनः प्रतिषिद्धानां प्रयोग#ः? उपचारसत्तयामप्रतिषेधाददोषः। न हि मुख्यैव पदार्थानां सत्ता; किन्तूपचरिताऽपि यथोक्तमर्थद्वारेण पदार्थानामन्या सत्तौपचारिकीति। तत्र मुख्या या सत्ता तस्या एव प्रतिषेधः, न तु बुद्धिस्थाया औपचारिक्या इति तन्निबन्धनप्रयोगो न विरुध्यते। "अचाम्" इत्यादि। अजन्तानां धातूनामचित्तकर्त्तृकाणां प्रतिषिद्धानां णिनिर्भवति। अविद्यमानं चित्तमस्येति अचित्तः स कत्र्ता येषां ते तथोक्ताः। अर्थद्वारकं चेदं विशेषणम्। अर्थस्य ह्रचित्तकर्तृकत्वात् तदभिधायिनो धातव उपचारेण तथोच्यन्ते। "विशयी विषयी देशे" इति। विशयिविषयिशब्दौ देशेऽभिधेये णिनिप्रत्ययान्तौ साधू भवतः। "शीङ स्वप्ने"((धा।पा।१०३२), "षिञ् बन्धने" (धा।पा।१४७७)--एतयोर्विपूर्वयोर्णिनिः। वृद्ध्यभावश्च निपातनात्। अभिभावी भूते" इति। अभिभाविशब्दो भूतकाले णिनिप्रत्ययान्तः साधुर्भवति। भवतेरभिपूर्वात् णिनिः। अभिभूतवानित्यभिभावी। "अपराधी, उपरोधी" इति। "राध साध संसिद्धौ" (धा।पा।१२६२,१२६३), "रुधिर् आवरणे" (धा।पा।१४३८)- आभ्यामपोपपूर्वभ्यां णिनिः। "परिभावी, परिभवी" इति। भवतेः परिपूर्वस्य। पक्षे वृद्धयभावः। "पच" इत्यादि। "डुपचष् पाके" (धा।पा।९९६), "वच परिभाषणे"

(धा।पा।१८४२), "डुवपबीजतन्तुसन्ताने {छेदनेऽपि--धा।पा।}"(धा।पा।१००३), "वद व्यक्तायां वाचि" (धा।पा।१००९), "चल कम्पने"(धा।पा।८३२), "शल गतौ" (धा।पा।८४३), "पत्लु गतौ" (धा।पा।८४५)। "नदट्" इति। "{णद" -धा।पा।}नद अवक्ते शब्दे" (धा।पा।५४)। टकारानुबन्धो ङीबर्थः। "{भषट्-काशिका} भसट्" इति। "{भष भत्र्सने"} भस भत्र्सनदीप्त्योः" (धा।पा।११००) टकारो ङीबर्थः। "गृ निगरणे" (धा।पा।१४१०), "मिष स्पद्र्धायाम्" (धा।पा।१३५२), "कुप क्रोधे" (धा।पा।१२३३), "मिह सेचने" (धा।पा।९९२), "तृ? प्लवनतरणयोः" (धा।पा।९६९), "चुर स्तेये" (धा।पा।१५३४), "गाहू विलोडने" (धा।पा।६४९), "जृ()ष् झृ()ष् वयोहानौ" (धा।पा।११३०,११३१), "मृङ प्राणत्यागे" (धा।पा।१४०३), "क्षमूष् सहने" (धा।पा।४४२), "तुद व्यथने" (धा।पा।१२८१), "मृद् क्षोदे" (धा।पा।१५१५), "दिवु क्रीडादौ" (धापा।११०७), "नृती गात्रविक्षेपे" (धा।पा।१११६), "व्रण गात्रचूर्णने" (धा।पा।१९३७) चुरादिः; "दृशिर् प्रेक्षणे" (धा।पा।९८८)। "डुभृञ् धारणपोषणयोः" (धा।पा।१०८७)- अस्माज्जारशब्द उपपदेऽच्। जारं बिभर्तीति "जारभरः"। पचेः शुन्युपपदे कर्मण्यणपदादोऽच्-- ()आआनं पचतीति "()आपचः"। "आकृतिगणः" इति। पचादिसम्बन्धिन आदिशब्दस्य प्रकारार्थत्वात्। आकृतिगणत्वे चास्य चक्रधरादयः सिद्धा भवन्ति॥

बाल-मनोरमा

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ७१३, ३।१।१३४

नन्दिग्रहि। नन्दि,ग्रहि, पच एषां द्वन्द्वः। नन्दिग्रहिपचा आदिर्येषामिति विग्रहः। आदिशब्दस्य प्रत्येकमन्वयः फलति। ल्यु , ण्नि, अच्? - एषां द्वन्द्वात्प्रथमा। यथासङ्ख्यमन्वयः। तदाह-- न्द्यादेरित्यादि। नन्दीति ण्यन्तग्रहणम्। तदाह-- नन्दयतीत्यादि। ल्योरनादेशः, "णेरनिटी"ति णिलोपः। मधुं सूदयतीति। मधुरसुरविशेषः, तं सूदयति = केचिदण्यन्ताः। सूत्रे "ग्रह उपादाने" इत्यस्य ग्रहीति इका निर्देशः। सौत्रत्वात् "ग्रहिज्ये" ति संप्रसारणं न। ग्राहीति। ग्रहधातोरदुपधाण्णिनिः। नकारादिकार उच्चारणार्थः। उपधावृद्धिः। विशयीति। विपूर्वात् "शीङ् स्वप्ने" इति धातोर्णिनिः। गुणाऽयादेशौ। "अचोऽञ्णिती"ति वृद्धिमाशङ्क्याऽऽह-- वृद्ध्यभाव इति। विषयीति। "षिञ् बन्धने" अस्मात्कृतषत्वाण्णिनिः। गुणाऽयादेशौ। नन्विह कतं न वृद्धिः, कथं च षत्वं, पदादित्वादित्यत आह-- षत्वमपीति। निपातनाद्वृद्ध्यभावः षत्वं चेत्यर्थः। परिभावी परिभवीत्यत्र णित्त्वान्नित्यवृद्धिमाशङ्क्य आह-- पाक्षिक इति। ग्रह्रादयो वृत्तौ पठिताः। पचादिराकृतिगण इति। पच वप इत्यादिकतिपयधातून् पठित्वा आकृतिगण इति गणपाठे वचनादिति भावः। गणपाठे आकृतिगणत्ववचनाऽभावेऽप्याह-- शिवशमिति। सूत्रे करशब्दस्य पचादिगणेऽपठितस्य कृञोऽच्प्रत्ययान्तस्य, "कर्मणि घट" इति सूत्रे घटेरचि घटशब्दस्य च प्रयोगदर्शनादित्यर्थः। अच्प्रत्यय इति। यङन्तादच्प्रत्यये परे "यङोऽचि चे"ति यहो लुग्विधीयते। नहि पचादिगणे यङन्तं पठितमस्ति। अतोऽपि पचादेराकृतिगणत्वं विज्ञायते इत्यर्थः। पचादेराकृतिगणत्वे नदट् चोरडित्यादीनं तत्र पाठो व्यर्थ इत्यत आह--- केषांचिदिति। टकारानुन्धासञ्जानार्थ इत्यर्थः। नन्वेमपि वद चल इत्यादीनामनुबन्धरहितानां तत्र किमर्थः पाठ इत्यत आह-- केषांचित्प्रपञ्चार्थ इत। बाधकेति। "जारभर" "()आपचे"त्यादौ पचाद्यजपवादस्य कर्मण्यणो बाधनार्थं भरपचादीनां पाठ इति भाष्यम्। देवः सेव इत्यादौ "इगुपधज्ञाप्रीकिरः कः" इति विशिष्य विहितस्य कस्य बाधनार्थं च। तदेतदुपपादयति-- नदडित्यादि। ननु पचादिगणे ()आपचशब्दस्य बाधकबाधनार्थत्वे ()आपाक इति कथमित्यत आह-- न्यङ्क्वादिषु पाठाच्छ्वपाकोऽपीति। कदाचिदण्प्रत्ययः,कुत्वं चेत्यर्थः। चेक्रियः, मरीमृज इत्यादौ प्रक्रियां दर्शयति-- यङोऽचि चेति। क्रीञादिधातोरचि यङो लुगित्यर्थ-। द्वित्वादौ चेक्री अ इत्यादिस्थितौ आह-- न धातुलोप इति। चेक्रिय इति। गुणाऽभावे संयोगपर्वत्वान्न यण्। नेन्य इति। "एरनेकाचः" इति यण्। लोलुव इति। उवङ्। यण्तु न, "ओः सुपी"त्युवक्तेः। मरीमृज इति। अत्र "न धातुलोपे" इति निषेधान्न मृजेर्वृद्धिः। चरिचलीति। एषामच्प्रत्यये परे द्वित्वम्, अभ्यासस्य आगागमश्चेत्यर्थः। ननु "चराचर" इत्यत्राऽभ्यासे रेफादाकारस्य ह्रस्वः स्यात्, हलादिशेषेण तत्र रेफस्यापि

निवृत्तिः स्यादित्यत आह-- आगागमस्येति। ह्रस्वत्वे सत्यागागमे दीर्घोच्चारणं व्यर्थम्, आगागमस्यैव विधातुं शक्यत्वात्। तथा हलादिशेषेण रेफस्य निवृत्तौ ह्रस्वत्वेऽपि सवर्णदीर्घेण "चाचर" इति सिद्धेर्धीर्घोच्चारणं हलादिशेषाऽभावं गमयतीत्यर्थः। हन्तेरितति। वार्तिकमिदम्। हनधातोरचि घत्वं द्वित्वमापक् चेत्यर्थः। ननूत्तरखण्डे "अभ्यासाच्चे"ति कुत्वसिद्धिः किमर्थमिह घत्वविधानमित्यत आह-- घत्वमभ्यासस्येति। "इह विधीयतेट इति शेषः। पाटेरिति। वार्तिकमिदम्। पाटेर्णौ पाटि इत्यस्मादचि णेर्लुक्, द्वित्वम्, अभ्यासस्य ऊगागमः। अभ्यासस्य आकारस्य ह्रस्वे तसय् दीर्घश्चेत्यर्थः। वृद्धिनिवृत्तये णेर्लुग्विधिः। आगमे दीर्घोच्चारणाद्धलादिशेषेण टकारस्य न निवृत्तिः, हलादिशेषे तु आद्गुणे पोपट इति रूपस्य उगागमेऽपि सिद्धेः।

तत्त्व-बोधिनी

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ५९४, ३।१।१३४

नन्दिग्रहि। द्वन्द्वान्ते श्रूयमाण आदिशब्दः प्रत्येकं संबध्यते। तदाह-- नन्द्यादेर्ल्युरित्यादि। मधुसूदन इति। मधुं दैत्यं सूदयतीति विग्रहः। षूद क्षरणे। इह अर्दिसूदिभ्यां कर्मण्यणि प्राप्ते नन्द्यादिपाठाल्ल्युः। विभाषण इति। "भियो हेतुभये षुक्"। ग्राहीति। णिनेर्णिदत्त्वादुपधावृद्धिः। स्थायीति। आतो युक्। मन्त्रीति। "मत्री"ति चुरादाविदित्पाठान्नुम्, "णेरनिटी"ति णिलोपः। विषयीति। षिञ् बन्धने। "धात्वादे"रिति षस्य सत्वे "आदेशप्रत्यययो" रिति प्राप्तस्य षत्वस्य "सात्पदाद्योरिति निषेधादाह--इह षत्वमपीति। "निपातना"दित्यनुषज्यते। "परिनिविभ्यः" इति सूत्रे "सितसये"ति क्तान्ताऽजन्तसिनोतेग्र्रहणाण्णिन्यन्तसिनोतेर्निपातनं विना षत्वं दुर्लभमिति भावः। जारभरेत्यादि। जारं बिभर्ति, ()आआनं पचतीति विग्रहः। ()आपाकोऽपीति। कर्मण्यणपि पक्षे भवतीति भावः। चेक्रिय इति। संयोगपूर्वत्वात् "एरनेकाचः" इति न यण्। लोलुव इति। इह सुबभवात् "ओः सुपी"ति यणनेति "अचि श्नुधातु" इत्युवङ्। मरीमृज इति। "रीगृदुपधस्ये चे"ति रीगागमः।

*चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्। हलादिः शेषश्च नेति। सति तु हलादिःशेषे आगमस्य आदेशस्य वा विशेषो नास्तीत्या-चाऽभ्यासस्येत्येव ब्राऊयादिति भावः।

* पाटेर्णिलुक्चोक्च दीर्घश्चाभ्यासस्य। पाटेर्णिलुगिति। "णेरनिटी"ति लोपे हि प्रत्ययलक्षणन्यायेन "पाटूपट" इत्यत्रोपधावृद्धिः स्यादिति भावः। इहापि पूर्ववद्ध्रस्वहलादिः शेषयोरभावः।

---

सूत्रम्

काशिका-वृत्तिः

इगुपधज्ञाप्रीकिरः कः ३।१।१३५

इगुपधेभ्यः जानातेः प्रीणातेः किरतेश्च कप्रत्ययः भवति। विक्षिपः। विलिखः। बुधः। कृशः। जानाति इति ज्ञः। प्रीणाति इति प्रियः। किरति इति किरः। देवसेवमेषादयः पचादौ पठितव्याः।

लघु-सिद्धान्त-कौमुदी

इगुपधज्ञाप्रीकिरः कः ७९०, ३।१।१३५

एभ्यः कः स्यात्। बुधः। कृशः। ज्ञः। प्रियः। किरः॥

न्यासः

इगुपधज्ञाप्रीकिरः कः। , ३।१।१३५

"विक्षिपः" इति। कित्त्वाद्गुणाभावः। "ज्ञः" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "प्रियः" इति। "प्रीञ् तर्पणे" (धा।पा।१८३६), इयङ। "किरः" इति। "कृ? विक्षेपे" (धा।पा।१४०९), "ऋत इद्धातोः" ७।१।१०० इतीत्त्वम्, रपरत्वम्। अथ कथं देवादयः सिध्यन्ति, यावता दिवादीनामिगुपधत्वात् के कृते दिवः, सिव इत्येवमादिना रूपेण भवितव्यम्?? अत आह-- "देवसेव" इत्यादि। आदिशब्दः प्रकारे॥

बाल-मनोरमा

ओरावश्यके ७०३, ३।१।१३५

ओरावश्यके। लाव्यं पाव्यमिति। "अचो ञ्णिती"ति वृद्धौ "वान्तो यी" त्यवादेशः।

बाल-मनोरमा

इगुपधज्ञाप्रीकिरः कः ७१४, ३।१।१३५

इगुपधज्ञा। "कृ? विक्षेपे" इत्यस्य इत्त्वे रपरत्वे च किरिति रेफान्तम्। इगुपध, ज्ञा, प्री, किर् एषां द्वन्द्वात्पञ्चमी। कित्त्वं गुणनिषेधार्थम्। ज्ञ इति। आतो लोपः। प्रिय इति। प्रीञ् के इयङ्। किर इति। कृ()धातोः कप्रत्यये इत्त्वे रपरत्वम्।

तत्त्व-बोधिनी

इगुपधज्ञाप्रीकिरः कः ५९५, ३।१।१३५

इगुपध। इक् उपधा यस्य सः। ज्ञा अवबोधने, प्रीञ् तर्पणे, कृ? विक्षेपे। एषामितरेतरयोगद्वन्द्वे व्यत्ययेन पञ्चम्येकवचने कशब्दस्य धात्वनुकरणत्वेन "प्रकृतिवदनुकरण"मित्यतिदेशात् "ऋत इद्धातो"रिति इत्वम्। समाहारद्वन्द्वे तु नपुंसकह्यस्वत्वे सति इत्वं न स्यात्। ज्ञ इति। जानातीति ज्ञः। "आतो लोप इटि चे"त्यालोपः।

---

सूत्रम्

काशिका-वृत्तिः

आतश् च उपसर्गे ३।१।१३६

आकारान्तेभ्यो धातुभ्यः उपसर्ग उपपदे कप्रत्ययो भवति। णस्यापवादः। प्रस्थः। सुग्लः। सुम्लः।

लघु-सिद्धान्त-कौमुदी

आतश्चोपसर्गे ७९१, ३।१।१३६

प्रज्ञः। सुग्लः॥

न्यासः

आतश्चोपसर्गे। , ३।१।१३६

"णप्रत्ययस्यापवादः" इति। "श्याद्व्यध" ३।१।१४१ इत्यादिना प्राप्तस्य। "सुग्लः" इति। "ग्लै म्लै हर्षक्षये" (धा।पा।९०३,९०४)॥

बाल-मनोरमा

आतश्चोपसर्गे ७१५, ३।१।१३६

आतश्चोपसर्गे। कः स्यादिति। शेषपूरणम्। उपसर्गे उपपदे आदन्ताद्धातोः कः स्यादिति फलति। णस्यापवाद इति। तस्य

उपसर्गेऽनुपसर्गे च आदन्तसामान्यविहितत्वादिति भावः। सुग्ल इति। ग्लैधातोः "आदेचः" इत्यात्वे कृते कप्रत्यये आतो लोप इति भावः। प्रज्ञ इति। ज्ञाधातोरातो लोपः।

---

सूत्रम्

काशिका-वृत्तिः

पाघ्राध्माधेट्दृशः शः ३।१।१३७

पादिभ्यो धातुभ्यः उपसर्गे उपपदे शप्रत्ययो भवति। उत्पिबः। विपिबः। उज्जिघ्रः। विजिघ्रः। उद्धमः। विधमः। उद्धयः। विधयः। उत्पश्यः। विपश्यः। उपसर्गे इति केचिन् न अनुवर्तयन्ति। पश्यति इति पश्य। जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्यः। व्याघ्रः।

न्यासः

पाघ्राध्माधेट्दृशः शः।, ३।१।१३७

"पा पाने" (धा।पा।९२५), "घ्रा गन्धोपादाने" (धा।पा।९२६), "ष्मा शब्दाग्निसंयोगयोः" (धा।पा।९२७) "ध्ट् पाने" (धा।पा।९०२)- एषामाकारान्तलक्षणे के णे च प्राप्ते शो विधीयते। यद्युपसर्ग इत्यनुवत्र्तते तदा के; अथ निवृत्तम्-- के प्राप्त इत्यनुपसर्गेभ्यो णे। दृशेस्त्विगुपधलक्षणे के। "उत्पिब" इत्यादिषु प्रत्ययस्य शित्त्वात् सार्वधातुकसंज्ञायां "कत्र्तरि शप्" ३।१।६८। प्राघ्रादिना ७।३।७८ यथायोगं पिबादयः। "संज्ञायां प्रतिषेधः" इति। प्रकृतत्वाच्शप्रत्ययस्य। तस्य प्रतिषेधस्य "व्याघ्रादिभिः" २।१।५५ इति वचनं लिङ्गम्॥

बाल-मनोरमा

प्राघ्राध्माधेट्?दृशः शः ७१६, ३।१।१३७

प्राघ्रा। अत्र "लुग्विकरणाऽलुग्विकरणयोरलुगविकरणस्ये ग्रहण" मिति मत्वाऽऽह-- पिबतीति पिब इति। पाधातोः शप्रत्यये तस्य शित्त्वेन सार्वदातुकत्वात् "पाघ्राध्मे"ति पिबादेशः। स चाऽदन्त इत्युक्तम्। शप्। पररूपम्। जिघ्र इति। "प्राघ्रे"ति घ्राधातोर्जिघ्रादेशः। धम इति। ध्माधातोर्धमार्देशः। धय इति। धेटः शः, शप्, अयादेशः, पररूपमिति भावः। धया कन्येति। अत्र धेट्()धातुष्टित्। स अदन्तो न भवति, यस्त्वदन्तो धयशब्दः, स न टित्, अतोऽत्र "टिड्ढाण"ञिति न ङीबिति भावः। धेटष्टित्त्वादित्यारभ्य हरदत्तमतम्। स्तनन्धयीतीति। स्तनशब्दे उपपदे धेट्()धातोः "नासिकास्तनयो"रिति खशि कृते "खत्यनव्ययस्ये"ति मुमि स्तनन्धयशब्दः। तत्र खशि कृते धेटष्टित्त्वमाश्रित्य यथा "टिड्ढाम"ञिति ङीप्, तथा धया कन्येत्यत्रापि ङीप् प्राप्तः, स ङीप् खशोऽन्यत्र नेष्यते इति हरदत्त आहेत्यर्थः। वस्तुतस्तु "डिड्ढाण"ञिति सूत्रे टिदाद्यवयवाऽकारस्यैव ग्रहणमिति भाष्यविरोधादिदं चिन्त्यम्। नच टित्त्वसामथ्र्यादेव स्तनन्धयीशब्दान्ङीबिति वाच्यं, धया कन्येत्यत्रापि ङीप्प्रसङ्गात्, खशोऽन्यत्र नेष्यते इत्यत्र प्रमाणाऽभावात्। त्समात्स्तनन्धयीत्यप्रामाणिकमेव। तस्य प्रामाणिकत्वे गौरादित्वं कल्प्यम्, ङीप्यप्युदात्तनिवृत्तिस्वरप्राप्त्या स्वरे विशेषाऽभावादिति शब्देन्दुशेखरे स्थितम्। दृश उदाहरति-- पश्य इति। "पाघ्रे"ति पश्यादेशः। घ्रः संज्ञायां नेति। घ्राधातोः संज्ञायां शो नेत्यर्थः। कुत इत्यत आह-- व्याघ्()रादिभिरिति। अन्यथा "व्याजिघ्रादिभि"रिति निर्दिशेदिति भावः।

तत्त्व-बोधिनी

पाघ्राध्माधेट्दृशः शः ५९६, ३।१।१३७

पाघ्राध्मा। पा पाने। पा रक्षणे इत्ययं तु न गृह्वते, लुग्विकरणत्वात्। इह सूत्रे उपसर्ग इति केचिदनुवर्तयन्ति,

तद्बहूनामसंमतम्। तथा च श्रीहर्षः-- "फलानि धूमस्य धयानधोमुखा"निति। श्रूयते च-- "यदा पश्यः पश्यते रुक्मवर्ण"मिति

---

सूत्रम्

काशिका-वृत्तिः

अनुपसर्गाल् लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश् च ३।१।१३८

अनुपसर्गेभ्यो लिम्पाऽदिभ्यः शप्रत्ययो भवति। लिम्पति इति लिम्पः। विन्दति ति विन्दः। धारयति इति धारयः। पारयति इति पारयः। वेदयति इति वेदयः। उदेजाति इति उदेजयः। चेतयति इति चेतयः। सातिः सौत्रो धातुः। सातयः। साहयः। अनुपसर्गातिति किम्। प्रलिपः। नौ लिम्पेरिति वक्तव्यम्। निलिम्पा नाम देवाः। गवादिषु विन्देः संज्ञायाम्। गोविन्दः। अरविन्दः।

न्यासः

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च। , ३।१।१३८

"अनुपसर्गात्" इति। सुब्व्यत्ययेन बहुवचनस्य स्थान एकवचनम्। "लिम्पः,विन्दः" इत्यादि। "लिप उपदाहे" (धा।पा।१४३३), "विद्लृ लाभे" (धा।पा।१४३२)। सनुम्कयोग्रहणमुपदेशावस्थायामेव "नुम्" भवतीति ज्ञापनार्थम्। "धृञ् धारणे" (धा।पा।९००), हेतुमण्णिजन्तः। "पारयः" इति। "पार तीर कर्मसमाप्तौ" (धा।पा।१९११,१९१२) चुरादिः। अथ वा "पृ पालनपूरणयोः" (धा।पा।१४८९) इति हेतुमण्णिजन्तः। "विद {चेतनाख्यान धा।पा।पदमंजरी } वेदनाख्याननिवासेषु" (धा।पा।१७०८), चुरादिण्यन्तः। अथ वा-- ज्ञानाद्यर्थानां बिदादीनामन्यतमो हेतुमण्ण्यन्तः। "एजृ कम्पने" (धा।पा।२३४), हेतुमण्णिजन्तः। "चिती संज्ञाने" (धा।पा।३९) चुरादिण्यन्सः। "षह मर्षणे" (धा।पा।१८०९) हेतुमण्ण्यन्तः, चुरादिण्यन्तो वा। "लिम्पः, विन्दः" इति। "तुदादिभ्यः शः" ३।१।७७, "शे मुचादीनाम्" ७।१।५९ इति नुम्। "प्रलिपः, {नास्ति-काशिका}प्रविदः" इति। इगुपधलक्षमः क एव। "नौ लिम्पेः"इत्यादि। निशब्द उपपदे लिम्पेर्धातोः शप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्वत्रस्थस्य चकारस्यानुक्तसमुच्चयार्थत्वात् कत्र्तव्यम्। "गवादिषु" इत्यादि। गवादिषूपपदेषु संज्ञायां विषये शो भवति। कर्मण्यणोऽपवादःऋ। स च चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यते॥

बाल-मनोरमा

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेसातिसाहिभ्यश्च ७१७, ३।१।१३८

अनुपसर्गात्। शः स्यादिति। शेषपूरणम्। लिम्पः विन्द इति। "लिप उपदेहे "विद्लृ लाभे" इति तुदादौ, ताभ्यां शः। "शे मुचादीना"मिति नुम्। सूत्रे कृतनुमौ लिम्पविन्दौ निर्दिष्टौ, अतस्तौदादकयोरेव ग्रहणम्। धारय इति। "धृञ् धारणे" "धृङ् अवस्थाने" आभ्यां हेतुमण्ण्यन्ताभ्यां शः शप्, गुणाऽयादेशौ। पारय इति। पृ()धातोण्र्यन्ताच्छः, शप्, गुणाऽयादेशौ। विद वेदनाख्यादिषु, चुरादिण्यन्ताच्छः, शप् गुणाऽयादेशौ। उदेजय इति। उत्पूर्वादेजधातोण्र्यन्ताच्छः, शप् गुणाऽयादेशौ। चेतय इति। "चिती संज्ञाने" ण्यन्ताच्छः, शप्,गुणाऽयादेशौ। एवं सातयः। सादिति रूपं साधयितुमाह-- वासरूपनयायेन क्विबिति। सातयति सुखयतीत्यर्थे क्विप्। णिलोपः। यद्यपि क्विप् सामान्यविहितः सातेः शप्रत्ययस्तु तदपवादः, तथापि वासरूपविधिना क्विबपि भवतीत्यर्थः। सात्परमात्मेति। "एष ह्वेवानन्दयती"ति श्रूतेः तस्यसुखयितृत्वावगमादिति भावः। सात्वन्त इति। सात् = परमात् मा भजनीय एषामित्यर्थे मतुप्। "मादुपधायाः" इति मस्य वः। "तसौ मत्वर्थे" इति बत्वात्पदत्वाऽभावान्न जश्त्वम्। साहय इति। साहेः शः। शप्। गुणाऽयादेशौ। प्रलिप इति। इगुपधलक्षणः कः। नौ लिम्पेरिति। वार्तिकमिदम्। "नी"त्युपसर्गे उपपदे लिम्पेः शो वाच्य #इत्यर्थ-। "अनुपसर्गा" दित्युक्तेः पूर्वेणाऽप्राप्तौ

वचनम्। गवादिष्विति। वार्तिकमिदम्। गवादिषु उपपदेषु विन्देः शो वाच्य इत्यर्थः। "संज्ञायामेवे"ति नियमार्थमिदम्। गोविन्द इति। गाः = उपनिषद्वाचः प्रमाणतया विन्दतीत्यर्थः। अरविन्दिमिति। चक्रे नाभिनेम्योरन्तरालप्रोतानि काष्ठानि अराणि, तत्सदृशानि दलानि विन्दतीत्यर्थः। कर्मण्यणोऽपवादः शः।

तत्त्व-बोधिनी

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ५९७, ३।१।१३८

अनुपसर्गाल्लिम्पविन्द। इह लिम्पविन्देति भाविना नुमा सनुम्कौ निर्दिष्टौ। तेन लाभार्थस्यैव विन्देग्र्रहणं, न तु सत्ताद्यर्थकानाम्। धारय इति। धृञ् धारणे, धृङ् अवस्थाने, ण्यनतयोद्र्वयोरपि ग्रहणम्। अथ कथं "नमह्नमत्रोत्तरधारयस्य ते" इति श्रीहर्षः। परत्वाद्धि सूत्रधारादिष्विव कर्मण्यणा भाव्यम्। तथा च वार्तिकम्--- "अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेने"ति। सत्यम्। कर्मणः शेषत्वविवक्षायामणोऽप्राप्त्या शे कृते शेषषष्ठ()न्तेन समासो भविष्यति। एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः। पारय इति। पार कर्मसमाप्तौ चुरादिण्यन्तः। पृ? पालनपूरणयोरिति वा हेतुमण्ण्यन्तः। वेदय इति। विद चेतनाख्यानादिषु चुरादिः, ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्न्तः। इहोदाहरणेषु लिपिविदिभ्यां "तुदादिभ्यः शः"। "शे मुचादीना"मिति नुम्। धार्यादिभ्यस्तु शप्, गुणायाऽदेशौ।

* गवादिषु विन्देः संज्ञायाम्। अरविन्दमिति। चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अराः, तदाकाराणि दलानि तत्सादृश्यादराः, तान् विदन्ति लभते इत्यर्थे कर्मण्यणो बाधनायेदम्।

---

सूत्रम्

काशिका-वृत्तिः

ददातिदधात्योर् विभाषा ३।१।१३९

दाञो धाञश्च विभाषा शप्रत्ययो भवति। णस्य अपवादः। ददः, दायः। दधः, धायः। अनुपसर्गातित्येव, प्रदः, प्रधः।

न्यासः

ददातिदधात्योर्विभाषा। , ३।१।१३९

"णस्यापवादः" इति। "श्याद्व्यध" ३।१।१४१ इत्यादिना प्राप्तस्य। कस्य त्वपवादो न भवति; अनुपसर्गादित्यनुवृत्तेः। "ददः,दधः" इति। शे कृते शप्। तस्य जुहोत्यादित्वात् श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्, "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपः। "दायः" इति। "आतो युक्" ७।३।३३। "प्रदः" इति। "आतश्चोपसर्गे" ३।१।१३६ इति कः। ननु च "दद दाने" (धा।पा।१७), "दध धारणे" (धा।पा।८)- इत्येताभ्यमचि कृते ददो दध इति, दा धा--इत्येताभ्यामपि णे कृते दायो धाय इति भविष्यति, तत्किमित्यनेन सूत्रेण? नैतदस्ति; अचि हि सति "अच्कावशक्तौ"६।२।१५६ इत्यन्तोदात्तत्वं स्यात्। शे तु नञ्स्वर एव भवति-- अददः, अदध इति॥

बाल-मनोरमा

ददातिदधात्योर्विभाषा ७१८, ३।१।१३९

ददातिदधात्योर्विभाषा। दाञ्, धाञ्, आभ्यां शो वा स्यात्। ददः दध इति। शः, शप्, श्लुः। "श्लौ" इति द्वित्वम्। आतो लोपः। वक्ष्यमाण इति। "स्याद्व्यदे" त्यनेनेति भावः। प्रदः प्रध इति। "आतश्चोपसर्गे" इति कः।

तत्त्व-बोधिनी

ददातिदधात्योर्विभाषा ५९८, ३।१।१३९

ददातिदधात्योर्विभाषा। ददः दध इति। शे परे "जुहोत्यादिभ्य" इति श्लु, "श्लौ" इति द्वित्वम्। अपित्सार्वदातुकस्य शस्य ङित्त्वात् "आतो लोपः" इत्यालोपः। वक्ष्यमाणो ण इति। "श्याद्व्यधे"ति णप्रत्यये आतो युकि-- दायः धायः। प्रदः प्रध इति। "आतश्चोपसर्गे" इति कः। स्यादेतत्-- दद दाने, दध धारणे, आभ्यामचि ददो दध इति सिद्धम्, दाधाभ्यामादन्तलक्षणे णप्रत्यये दायो धाय इत्यपि, ततश्चेदं सूत्रं व्यर्थमिति चेत्। सत्यम्। स्वरार्थमिदं सूत्रम्। अददः अदधः। इह हि अव्ययपूर्वपदप्रकृतिस्वर इष्यते। अजन्तत्वे तु "अच्कावशक्ता" वित्यन्तोदात्तत्वं स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

ज्वलितिकसन्तेभ्यो णः ३।१।१४०

इतिशब्दः आद्यर्थः। ज्वल दीप्तौ इत्येवम् आदिभ्यो धातुभ्यः कस गतौ इत्येवम् अन्तेभ्यो विभाषा णप्रत्ययो भवति। अचोऽपवादः। ज्वालः, ज्वलः। चालः, चलः। अनुपसर्गातित्येव, प्रज्वलः। तेनोतेर्णस्य उपसङ्ख्यानं कर्तव्यम्। अवतनोति इति अवतानः।

न्यासः

ज्वलितिकसन्तेभ्यो णः।, ३।१।१४०

"ज्वलिति" इति। ज्वल् इति = आदि येषामिति बहुव्रीहि। विभक्तेस्त्वश्रवणम्, "सुपां सुलुक्" ७।१।३९ इति लुप्तत्वात्। "कसन्तेभ्यः" इति। कसोऽन्ता इति तत्पुरुषः, अन्तशब्द समीपवाची। अथ वा -- कसोऽन्त एषामिति बहुव्रीहिः। अन्तशब्दः समीपवाची, मर्यादावाची वा। "ज्वल दीप्तौ" (धा।पा।८०४,८३१) इति द्विष्पठ()ते-- घटादिषु , परस्ताच्च। "तेभ्यः" इति। तत्रासत्यस्मिन् विशेषणे सन्देहः स्यात्केभ्यो ज्वलादिभ्य इति? अतस्तन्निरासार्थं ज्वलादयो विशिष्यन्ते-- कसन्ता ये ज्वलादय इति। न घटाद्यन्तर्गणः पर्युदस्तो भवति। कसेः परत्वाद्ये पठ()न्ते तन्निवृत्त्यर्थं कसग्रहणं न भवति, कसमधीत्य वृदिति पाठात्। ननु च घटादिषु ज्वलादीनां पाठो मित्संज्ञार्थः, तत्र विनापि कसन्तग्रहणं कसन्ता एव ग्रहीष्यन्ते,तदनर्थकमिदं विशेषणम्? नैतदस्ति; असति हि तस्मिन् पूर्वेषां ज्वलादीनामुभयार्थः पाठः स्यात्-- मित्त्वार्थः प्रत्ययार्थश्च। इतरेषां तु प्रत्ययार्थ एव। तस्मात् कसग्रहणं कत्र्तव्यम्। "अचोऽपवादः" इति। ज्वलादीनां पचाज्यन्तः पातित्वात्। "तनोतेर्णस्योपसंख्यानं कत्र्तव्यम्" इति। णे विधातव्ये तनोतेरपि णस्य प्रतिपादनं कत्र्तव्यम्। प्रतिपादनं तूत्तरत्र चकारस्यानुक्तसमुच्चयार्थत्वात् कत्र्तव्यम्॥

बाल-मनोरमा

ज्वलितिकसन्तेभ्यो णः ७१९, ३।१।१४०

ज्वलिति। आद्यर्थ इति। तथा च ज्वल् इति = आदिर्येषां ते ज्वलितयः, ते च ते कसन्ताश्चेति ज्वलितिकसन्ताःष तेभ्य इति विग्रहः। तदाह-- ज्वलादिभ्य इति। "ज्वल दीप्तौ इत्यारभ्य "कस गतौ" इत्येवमन्तेभ्य इत्यर्थः। वा णः स्यादिति।विभाषेत्यनुवर्तते इति भावः। पक्षेऽजिति। "इगुपधेभ्यः कः" इत्यपि बोध्यम्। उपसङ्ख्यानमिति। "णस्ये"ति शेषः। न संबध्यते इति। "अवतानः" इत्येव भाष्ये उदाहरणादिति भावः।

तत्त्व-बोधिनी

ज्वलितिकसन्तेभ्यो णः ५९९, ३।१।१४०

इतिशब्द आद्यर्थ इति। निपातानामनेकार्थत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

श्याऽअद्व्यधाऽस्रुसंस्र्वतीणवसाऽवहृलिहश्लिषश्वसश् च ३।१।१४१

अनुपसर्गातिति, विभाषा इति च निवृत्तम्। श्यैङः, आकारान्तेभ्यश्च धातुभ्यः, व्यध आस्रौ संस्रौ अतीणवसा अवहृ लिह श्लिष श्वस इत्येतेभ्यश्च ण प्रत्ययो भवति। आकारान्तत्वादेव श्यायतेः प्रत्यत्ये सिद्धे पुनर् वचनं बाधकबाधनार्थम्। उपसर्गे कं बाधित्वा ऽयम् एव भवति। अवश्यायः। प्रतिश्यायः। दायः। धायः। व्याधः। आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः।

न्यासः

श्याऽऽद्वयधारुआऊसंरुआवतीणवसावह्मलिहश्लिष�आसश्च।, ३।१।१४१

"श्येङ गतौ" (धा।पा।९६३)। आदित्याकारान्तानां दाधाप्रभृतीनां ग्रहणम्। "व्यध ताडने" (धा।पा।११८१), "रुआउ गतौ" (धा।पा।९४०) आङ्पूर्वः, पुनः स एव संपूर्वः। "इण् गतौ" (धा।पा।१०४५) अतिपूर्वः,"षोऽन्तकर्मणि" (धा।पा।११४७) अवपूर्वः। "ह्मञ् हरणे" (धा।पा।८९९) अवपूर्वः। "लिह आस्वादने" (धा।पा।१०१६), "श्लिष आलिङ्गने" (धा।पा।११८६), "()आस प्राणने" (धा।पा।१०६९)। अत्र ये सोपसर्गाः पठितास्तेभ्यः सोपसर्गेभ्य एव भवति; शेषेभ्यस्तु सोपसर्गेभ्यः, अनुपसर्गेभ्यश्च। "अनुपसर्गादिति निवृत्तम्" इति। पुनरुत्तरत्रानुपसर्गग्रहणात्। "बिभाषेति च" इति। निवृत्तमिति सम्बध्यते। विभाषाग्रहणं ह्यनुपसर्गेण सम्बद्धम्। अतस्तन्निवृत्तौ तस्यापि निवृत्तिर्भवति। "बाधकबाधनार्थम्" इति। "आतश्चोपसर्गे" ३।१।१३६ इति विशेषविहितत्वात् कः सामान्यविहितस्य णस्य बाधकः,?तस्तद्बाधनार्थम्। अवश्यतेरप्युपादानस्यैतत् प्रयोजनं वेदितव्यम्। अथ वा-- उपसर्गनियमार्मथ तस्य ग्रहणम्, अवपूर्वादेव यथा स्यात्। "अवश्यायः" इति। "आतो युक्" ७।३।३३॥

बाल-मनोरमा

श्याद्व्यधारुआउसंस्व्रतीणवसावह्मलिहश्लिष�आसश्च ७२०, ३।१।१४१

श्याद्व्यधारुआउ। श्या, आत् , व्यध, आरुआउ, संरुआउ, अतीण्, अवसा, अवह्म, लिह, श्लिष, स्वस् एषामेकादशाद्यां समाहारद्वन्द्वात्पञ्चमी। अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रेऽनुपसर्गग्रहणात्। एवं च तत्सम्बद्धं विभाषाग्रहणं च नानुवर्तते। तदाह-- नित्यमिति। श्यैङ इति। श्यैङ्धातोरवपूर्वस्य षोधातोश्च कृतात्त्वयोः सूत्रे निर्देशः। तयोरादन्तत्वादेव सिद्धे पुनग्ररहणम् "आतश्चोपसर्गे" इति कप्रत्ययबाधनार्थमित्यर्थः। अवश्यायः प्रतिश्याय इति। श्यैङ आत्त्वे कृते णः। आतो युक्। आदिति। आदन्तस्योदाहरणसूचनम्। दायः धाय इति। णे आतो युक्। व्याध इति। अतिपूर्वादिण्धातोर्णे वृद्ध्यायादेशौ। अवसाय इति। अवपूर्वात् "षोऽन्तकर्मणि" इत्यस्माण्णे आतो युक्। लेहः श्लेष इति। णे लघूपधगुणः। ()आआस इति। णे उपधावृद्धिः।

तत्त्व-बोधिनी

श्याद्व्यधारुआउसंस्व्रतीणवसावह्मलिहश्लिष�आसश्च ६००, ३।१।१४१

श्याद्व्यधा। अनुपसर्गादिति निवृत्तम्, उत्तरसूत्रे पुनरनुपसर्गग्रहणात्। एवं च तत्सम्बद्धं विभाषाग्रहणमपि निवृत्तं।तदाह-- नित्यमिति। इह सूत्रे श्यैङ् गतावित्यस् आत्वे शया आदिति प्रश्लेषो, न तु शीङो यणादेशेन, नाप्यततेः, अच्छब्दान्तानां वा

यतिप्रभृतीनां, नाप्यकारान्तानां वा प्रश्लेषेण ग्रहणं, व्याख्यानादिति भावः। कं बाधितुमिति। अन्यथा "आतश्चोपसर्गे" इति विशेषविहितः कः सामान्यविहितस्य णस्य बाधकः स्यादित्यर्थः। रुआउ गतौ। प्राचा तु सूत्रे आश्रु संश्रु इति तालव्यं पठित्वा शृणोतिरुदाहृतस्तदनाकरम्। तथाच प्रयुञ्जते-- "अनाश्रवा वः किमहं" कदापि वक्तुं विशेषः परमस्ति शेषः"इति नैषधादौ। अमरोऽप्याह--"वचने स्थित आश्रवः" इति। यदि तु सूत्रे अस्मिन् शृणोतेग्र्रहणं स्यात्तर्हि "ऋदोर"बिति सामान्यविहितमपं बाधित्वा आङ्पू()रवकाच्छृणोतेर्विशेषविहितो ण एव स्यात्, [तथा च "आश्रव" इति रूपं न स्यात्, किंत्वाश्राव इति स्यादिति दिक्। लेहः श्लेष इति। "इगुपधे"ति कप्रत्यये गुणो न स्ादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दुन्योरनुपसर्गे ३।१।१४२

दुनोतेर् नयतेश्च अनुपसर्गे णप्रत्ययो भव्ति। दुनोति इति दावः। नयति इति नायः। अनुपसर्गे इति किम्? प्रदवः। प्रणयः।

न्यासः

दुन्योरनुपसर्गे।, ३।१।१४२

"दुन्योः" इति सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी। "अनुपसर्गे" इत्यपि पञ्चम्यर्थे सप्तमी। अत एवाह-- "दुनोतेर्नयतेश्चानुपसर्गात्" इति। "दावः" इति। "टु दु उपतापे" (धा।पा।१२५६)। "नायः" इति। "णीञ् प्रापणे" (धा।पा।९०१)। "प्रदवः, प्रणयः"इति। पचाद्यच्, "उपसर्गादसमासेऽपि" ८।४।१४ इति णत्वम्॥

बाल-मनोरमा

दुन्योरनुपसर्गे ७२१, ३।१।१४२

दुन्योरनुपसर्गे। दुनोतेर्नयतेश्चेत्यर्थः। "दव"शब्दं साधयितुमाह-- नी साहचर्यादिति। नीञ्धातुः सानुबन्धकः, तत्साहचर्यात् "टु दु उपतापे" इति स्वादिगणस्थादेव णप्रत्यय इत्यर्थः। दवतेस्त्विति। "दु द्रु गतौ" इति भौवादिकान्निरनुबन्धकात्पचाद्यजित्यर्थः।

तत्त्व-बोधिनी

दुन्योरनुपसर्गे ६०१, ३।१।१४२

दुनोतेरिति। टुदु उपतापे इत्यस्मात्। दवतेरिति। दु गतावित्यस्मात्। दव इति। "दवदावौ वनारण्यवह्नी" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

विभाशा ग्रहः ३।१।१४३

विभाषा ग्रहेः धातोः णप्रत्ययो भवति। अचः अपवादः। ग्राहः, ग्रहः। व्यवस्थितविभाषा च इयम्। जलचरे नित्यं ग्राहः। ज्योतिषि नेस्यते, तत्र ग्रहः एव। भवतेश्च इति वक्तव्यम्। भवति इति भावः, भवः।

न्यासः

विभाषा ग्रहः।, ३।१।१४३

"व्यवस्थितविभाषा चेयम्" इति। एतत् "जलचरे" इत्यादिना स्पष्टीकरोति। "भवतेश्चेति वक्तव्यम्" इति। भवतेश्च विभाषा णो भवतीत्येतदर्थरूपं व्याख्येयम्। व्याख्यानं तु विभाषेति योगविभागात् कत्र्तव्यम्॥

बाल-मनोरमा

विभाषा ग्रहः ७२२, ३।१।१४३

विभाषा ग्रहः। व्यवस्थितविभाषेयमिति। इदं "शाच्छो"रिति सूत्रे भाष्ये स्पष्टम्। तेनेति। जलचरे मत्स्यादौ वाच्ये णप्रत्यये उपधावृद्धौ "ग्राह" इत्येव भवति, ज्योतिषि सू()रयचन्द्रादौ वाच्ये अच्प्रत्यये "ग्रह" इत्येव भवतीत्यर्थः। भवतेश्चेति। "णो वे"ति शेषः। पक्षे अच्। काशिकेति। भाष्ये तु न दृस्यते इति बावः। इयमपि व्यवस्थिविभाषैव। तदाह-- भवो देव इति। महादेव इत्यर्थः। अत्र अजेवेति भावः। भावाः पदार्था इति। अत्र ण एवेति भावः। ननु "भवतेश्चे"ति णविकल्पस्य भाष्ये अदर्शनात् कथं भाष्यमते भावशब्द इत्यत आह-- भाष्यमते त्विति। भावयति प्रापयति स्वस्वकार्यमित्यर्थे "भृ प्राप्तौ" इतिचुरादिण्यन्ताद्भावीत्यस्मादच्प्रत्यये णिलोपे भावशब्द इत्यर्थः।

तत्त्व-बोधिनी

विभाषा ग्रहः ६०२, ३।१।१४३

काशिकेति। भाष्ये त्वेतद्वार्तिकं नास्तीति तन्मते भावशब्दोऽसाधुरित्यतत आह--- भाष्यमते त्विति।

---

सूत्रम्

काशिका-वृत्तिः

गेहे कः ३।१।१४४

ग्रहेर् धातोः कप्रत्ययो भवति गेहे कर्तरि। गृहं वेश्म। तात्स्थ्यात् दाराश्च। गृह्णन्ति इति गृहाः दाराः। गृहाणि वेश्मानि।

लघु-सिद्धान्त-कौमुदी

गेहे कः ७९२, ३।१।१४४

गेहे कर्तरि ग्रहेः कः स्यात्। गृहम्॥

न्यासः

गेहे कः।, ३।१।१४४

"गेहे कत्र्तरि" इति। एतेन "गेहे" इति प्रत्ययार्थस्य कर्त्तुरुपाधिरयम्, न तूपपदमिति दर्शयति। एतच्चा()आपत्यादौ गृहपतिशब्दपाठाद्विज्ञायते। "तात्स्थ्याद्दाराश्च" इति। गेहमिति प्रकृतेन सम्बन्धः। एतेन गौणेऽपि गेहे प्रत्ययो भवतीत्याचष्टे। एतच्च तन्त्रेण गेहशब्दस्य द्वितीयस्योच्चारणाल्लभ्यते। "गृहम्िति। ग्रहादिना ६।१।१६ सम्प्रसारणम्॥

बाल-मनोरमा

गेहे कः ७२३, ३।१।१४४

गेहे कः। "विभाषा ग्रहः" इत्यस्यापवादः। गृहमिति। "ग्रहिज्ये"ति संप्रसारणं, पूर्वरूपं च॥ ननु "गृहा दारा" इति कथम्, गेहे कर्तर्येव वाच्ये कप्रत्ययविधानादित्यत आह-- तात्स्थ्यादिति। गृहशब्दो गेहस्थे लाक्षणिक इति भावः। गृहा दारा इति। "दारेष्वपि गृहाः" इत्यमरः।

तत्त्व-बोधिनी

गेहे कः ६०३, ३।१।१४४

गेहे कः। गेह इति स्ययार्थस्य कर्तुर्विशेषणं, नोपपदम्, "गृहपतिना संयुक्ते ञ्यः" इति निर्देशादित्यभिप्रेत्याह--- गेहे कर्तरीति। एतत्सूत्रं तु शक्यम कर्तुम्। गृहू ग्रहणे इति भ्वादेरिगुपधलक्षमे कप्रत्यये कृते गृहशब्दस्य सिद्धेः। तात्स्थ्यादिति। भवति हि तात्स्थ्यात्ताच्छब्द्यम्। "मञ्चाः क्रोशन्ती" त्यादौ मञ्चशब्देन पुरुषा अपि व्यपदिश्यन्ते। एवं च गृहशब्दो वेश्मनि मुख्यो, दारेषु त्वौपचारिक इत्यर्थः। अत्रेदमवधेयम्-- गृहशब्दोऽयमद्र्धर्चादित्वादुभयलिङ्गः। तत्र नपुंसकलिङ्गोऽभिधेयवचनः पुँल्लिङ्गस्तु बहुवचनान्त एव। "गृहाः पुंसि च भूम्न्येवे"त्यमरोक्तेरिति।

---

सूत्रम्

काशिका-वृत्तिः

शिल्पिनि ष्वुन् ३।१।१४५

धातोः ष्वुन् प्रत्ययो भवति शिल्पिनि कर्तरि। नृतिखनिरञ्जिभ्यः परिगणनं कर्तव्यम्। नर्तकः। खनकः। रजकः। नर्तकी। खनकी। रजकी। रञ्जेरनुनासिकलोपश्च।

न्यासः

शिल्पिनि ष्वुन्। , ३।१।१४५

"शिल्पिनि कत्र्तरि" इति। पूर्ववदुपाधित्वं दर्शयन्नुपपदत्वमपाकरोति। एतच्च रजकस्य वस्त्रं ददातीति भाष्यकारप्रयोगाल्लभ्यते। "नृतिखनिरञ्जिभ्यः परिगणनम्" इति। एतच्च विभाषेत्यनुवृत्तेव्र्यवस्थितविभाषात्वाल्लभ्यते। "रञ्जेरनुनासिकलोपश्च" इति। एषोऽपि तत एव भाष्यकारप्रयोगाल्लभ्यते। किञ्च "जनीजॄ()ष्()क्नसुरञ्जोऽमन्ताश्च" (धा।पा।८१९ तः पश्चात्) इति यद् रञ्जेर्मित्त्वं शास्ति, तज्ज्ञापयति-- अक्ङित्यपि रञ्जेरनुनासिकलोपो भवतीति। मित्त्वस्य ह्रेतदेव प्रयोजनम्- "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वत्वं यथा स्यात्, न चासत्यस्मिन्ननुसाकिलोपे वृद्धिरस्ति। न चासत्यां वृद्धौ ह्रस्वभाविन्युपधा भवति। तेन णौ रञ्जेर्यथानुनासिकलोपो भवति, तथा ष्वुनि च। परिगणनात् ह्वाता, ह्वायक इत्यत्र न भवति। ष्वुनो नित्करणमाद्युदात्तार्थम्, षकारो ङीषर्थः॥

बाल-मनोरमा

शिल्पिनि ष्वुन् ७२४, ३।१।१४५

शिल्पिनि ष्वुन्। नृतिखनिरञ्जिभ्य एवेति। वार्तिकमिदम्। नर्तकीति। षित्वान्ङीषिति भावः। "दंशसञ्जस्वञ्जां शपी"ति सूत्रे "रजकरजनरजः सूपसङ्ख्यान"मिति वार्तिकम्। तदर्थतः सङ्गृह्णाति-- असि अके अने चेति। रजक इति। रञ्जेः शिल्पिनि ष्वुनि अकादेशे नलोपः। रजकीति। षित्वान्ङीष्। "नृतिखनिरञ्जिभ्य एवे"ति परिगणनात् "वेञ् तन्तुसन्ताने " इत्यस्मात् कृतात्त्वात् "श्याद्व्यधे"ति णप्रत्यये आतो युकि "वाय"इति सिध्यति। भाष्यमते तु नृतिखनिभ्यामेवेति। इदं च "दंशसञ्जस्वञ्जां शपीटति सूत्रे भाष्ये स्पष्टम्। ननु भाष्यमते क्वुनि "रजकी"ति कथमित्यत आह-- पुंयोगे तु रजकीति।

तत्त्व-बोधिनी

शिल्पिनि ष्वुन् ६०४, ३।१।१४५

शिल्पिनि ष्वुन्। पूर्वेण साहचर्याच्छिल्पिनीत्यपि प्रत्ययार्थस्य विशेषणं न तूपपदमित्याह-- तद्वति कर्तरीति। भाष्यमते त्विति। तथा च षष्ठे "रजकरजनरजः सूपसङ्ख्यान"मिति वार्तिकं प्रत्याख्यातुं भाष्यकृतोक्तकम्--"रजकरजनरजःसु कित्त्वात्सिद्धं। कित एवैते औणादिका" इति। तत्र कैयट आह-- "रजक इति। "क्वुन् शिल्पी"ति क्वुन्। रजनमिति। "रञ्जेः क्यु"न्निति क्युन्। रज इति। "भूरञ्जिभ्यां कि" दित्यसन् प्रत्यय" इत्ादि।

---

सूत्रम्

काशिका-वृत्तिः

गस्थकन् ३।१।१४६

गायतेः थकन् प्रत्ययो भवति शिल्पिनि कर्तरि। गाथकः, गाथिका।

न्यासः

गस्थकन्। , ३।१।१४६

"गः" इति। "आतो धातोः" ६।४।१४० इत्याकारलोपं कृत्वा "गै शब्दे" (धा।पा।९१७) इत्यस्यायं निर्देशः। अत एवाह-- "गायतेः"इति। ननु च "गामादाग्रहणेष्वविशेषणः" (व्या।प।१२४) इति "गाङ् गतौ" (धा।पा।९५०) इत्यास्यपि ग्रहणेन भवितव्यम्? नैतत्; यस्माद् गाथक इति थकन्प्रत्ययान्तेन गायत्यर्थविशेष एव शिल्पिनि कर्तृत्वं विज्ञायते; न तु गाङर्थविषये। थकनो नकार आद्युदात्तार्थः॥

बाल-मनोरमा

गस्थकन् ७२५, ३।१।१४६

गस्थकन्। "गः - थक्"न्निति च्छेदः। गैधातोः कृतात्वस्य "ग" इति पञ्चम्यन्तम्। तदाह--गायतेरिति।

तत्त्व-बोधिनी

गस्थकन् ६०५, ३।१।१४६

गस्थकन्। गामादागर्हणेष्वविशेषेऽपि गै शब्द इत्ययमेवेह गृह्रते न तु गाङ् गताविति, थकन् प्रत्ययो हि गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थं इत्याशयेनाह-- गायतेरिति।

---

सूत्रम्

काशिका-वृत्तिः

ण्युट् च ३।१।१४७

चकारेण गः इत्यनुकृष्यते। गायतेः ण्युट् प्रत्ययो भवति शिल्पिनि कर्तरि। गायनः, गायनी। योगविभागः उत्तरार्थः।

न्यासः

ण्युट् च। , ३।१।१४७

"गायनः" इति। "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्। "गायनी"। टित्त्वान्ङीप्। "योगविभाग उत्तरार्थः" इति। उत्तरत्र चकारेण ण्युट एवानुवृत्तिर्यथा स्यात्, थकनो मा भूदिति। "गो ण्युट्()थकनौ" इत्येकयोगे थकन्नप्यनुकृष्येत॥

बाल-मनोरमा

ण्युट् च ७२६, ३।१।१४७

ण्युट् च। चकार उक्तसमुच्चये। गायतेर्ण्युट्, थकन् च शिल्पिनि कर्तरि। गायन इति। आत्वे युक्। "आदेचः" इत्यात्वस्य अनैमित्तिकत्वेन वृद्ध्यपेक्षया अन्तरङ्गत्वात्। यद्यपि "गस्थकन्()- ण्युट् चे"त्येकमेव सूत्रमुचितम्, तथापि ण्युट एवोत्तरसूत्रे अनुवृत्त्यर्थो योगविभागः।

तत्त्व-बोधिनी

ण्युट् च ६०६, ३।१।१४७

ण्युट् च। योगविभाग उत्तरत्र अस्यैवाऽनुवृत्त्यर्थः। गायन इति। "आतो युक्"।

---

सूत्रम्

काशिका-वृत्तिः

हश् च व्रीहिकालयोः ३।१।१४८

चकारेण गः इत्यनुकृस्यते। गायतेः ण्युट् प्रत्ययो भवति शिल्पिति कर्तरि। गायनः, गायनी। योगविभागः उत्तरार्थः।

न्यासः

हशच् व्रीहिकालयोः। , ३।१।१४८

"जहातेः" इति। ओहाक् त्यागे" (धा।पा।१०९०)। "जिहातेश्च" इति। "ओहाङ गतौ" (धा।पा।१०८९)। अस्यात्र ग्रहणमिष्यते। तयोः सामान्यग्रहणार्थ एव ककारो जहातेर्निर्दिश्यते। असति हि तस्मिन् यदीदमेकानुबन्धग्रहणम्(), तदुपादाने द्वयनुबन्धकस्य जिहातेर्न स्यात्। अथ द्वयनुबन्धकस्य जहातेर्न स्यात्। ककारे तु सति द्वयोरपि सानुबन्धकत्वात् सामान्येन ग्रहणमुपपद्यते। "व्रीहौ काले च कत्तरि" इति। एतेन व्रीहिकालयोः प्रत्यार्थविशेषणं दर्शयति। उपपदत्वं तु निरस्यति। एतच्च "दामहायनान्ताच्च" ४।१।२७ इति निर्देशाद्विज्ञायते। "हायनाः" इति। "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्। "जहत्युदकमिति कृत्वा" इति। व्रीहिषु हायनशब्दस्य प्रवृत्तिनिमित्तं दर्शयति। "जिहीते भावान्" इति। "जिहीते भावान्" इति। एतेनापि संवत्सरे॥

बाल-मनोरमा

हश्च व्रीहिकालयोः ७२७, ३।१।१४८

हश्च। "ओ हाक् त्यागे" इत्यस्य "ओ हाङ् गतौ" इत्यस्य च "ह" इति पञ्चम्यन्तम्। तदाह-- हाको हाङश्चेति।

तत्त्व-बोधिनी

हश्च व्रीहिकालयोः ६०७, ३।१।१४८

जहात्युदकमिति। उदकाधिक[म्] वद्र्धनात्। भावानिति। भावाः पदार्थाः, तान् जिहीते इति। ओहाङ् गतौ। "भृञामि"दित्यभ्यासस्येत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रुसृल्वः समभिहारे वुन् ३।१।१४९

प्रु सृ लू इत्येतेभ्यः धातुभ्यः समभिहारे वुन् प्रत्ययो भवति। प्रवकः। सरकः। लवकः। समभिहारग्रहणेन अत्र सधुकारित्वं लक्ष्यते। साधुकारिणि वुन् विधानात् सकृदपि यः सुष्ठु करोति तत्र भवति। बहुशो यो दुष्टं करोति तत्र न भवति।
न्यासः
प्रुसृल्वः समभिहारे वुन्। , ३।१।१४९

"प्रसृल्वः" इति समभिहारं कृत्वा निर्देशः। नुमागमस्तु सत्यपि नपुंसकत्वे न कृतः, अनित्यत्वादागमशासनस्य। "समभिहारे वुन्" इति। अन्यत्र समभिहारशब्दस्य पौनः पुन्यादिकमर्थ इति, इहापि स एवार्थ इति कस्यचित् भ्रान्तिः स्यात्, अतस्तन्निराकर्त्तुमाह-- "समभिहारग्रहणेन" इत्यादि। लक्ष्यते प्रदश्र्यत इत्यर्थः। एतच्चानेकार्थत्वाद्धातूनां लभ्यते। शिल्पिनीत्यनुवृत्तेरित्यपरे। शिल्पी = साधुकारी। "साधुकारिणि वुन्विधानम्" साधुकारित्वोपलक्षणस्य फलं दर्शयति। "सकृदपि" इत्यादि। अनन्तरस्यैव स्पष्टीकरणम्॥
बाल-मनोरमा
प्रुसृल्वः समभिहारे वुन् ७२८, ३।१।१४९

प्रुसृल्वः। लक्ष्यते इति। एतच्च भाष्ये स्पषमट्। प्रु, सृ, लू एषां समाहारद्वन्द्वात्पञ्चमी।

तत्त्व-बोधिनी
प्रुसृल्वः समभिहारे वुन् ६०८, ३।१।१४९

प्रुसृल्वः। पञ्चमीस्थाने व्यत्ययेन जस्। "ओः सुपी"ति यण्। लक्ष्यत इति। भूयः सहचारात्। यो हि यां क्रियां पुनः पुनरनुभवति स तत्र प्रायेण कौशलं लभते, तेन सकृदपि यःसुष्ठु करोति तत्र वुन्, यस्तु बहुशोऽपि दुष्टं करोति तत्र नेति भावः।

---

सूत्रम्
काशिका-वृत्तिः
आशिषि च ३।१।१५०

आशिषि गम्यमानायां धातुम् आत्रात् वुन् प्रत्ययो भवति। जीवतात् जीवकः। नन्दतात् नन्दकः। आशीः प्रार्थनाविशेषः। स च इह क्रियाविषयः। अमुष्याः क्रियायः कर्ता भवेतित्येवम् आशास्यते। इति श्रीज्यादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य प्रथमः पादः। तृतीयाध्यायस्य द्वितीयः पादः।
न्यासः
आशिषि च। , ३।१।१५०

"आशिषि गम्यमानायाम्" इति। न वाच्यायाम्। "कत्त्तरि कृत्" ३।४।६७ इति कर्त्तुरेव प्रत्ययान्तवाच्यत्वात्। "धातुमात्रात्" इति। धातुसामान्यविवक्षितत्वात्, प्रुसृल्वाञ्च निवर्तितत्वात्। अन्यस्य चेह धातुविशेषस्यानाश्रयणात्। धातुमात्राश्रयो भवति, न तु कुतश्चिदेव विशेषात्। "जीवतात्, नन्दतात्" इति। आशिषि लोट्()प्रयोगेण जीवकनन्दयोस्तत्समानार्थतां दर्शयति। का पुनरियमाशीर्नामेत्याह-- "आशीः प्रार्थनाविशेषः" इति। अप्राप्तस्याभीष्टस्य वस्तुनः प्रार्थना = आशीः। "सा चेह क्रियाविषया"इति। क्रिया विषयोऽस्या इति बहुव्रीहिः। एष चार्थो धातुग्रहणात्, धातोश्च क्रियावाचित्वाद्विज्ञायते। "अमुष्याः क्रियायाः" इति। जीवनक्रियाया नन्दनक्रियायाश्च कत्त्ता भवेदित्येवमाशास्यते-- जीवनं नन्दनञ्च ते भूयादिति॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां

तृतीयस्याध्यायस्य प्रथमः पादः -------------------- अथ तृतीयाध्यायस्य द्वितीयः पादः

बाल-मनोरमा

आशिषि च ७२९, ३।१।१५०

आशिषि च। जीवक इत। आशास्यमानजीवनक्रियाश्रय इत्यर्थः। एवं नन्दकः। आशीरिति। आशासनम् = अयमित्थं भूयादिति प्रार्थनं, शब्दप्रयोक्तृकर्तृकमिति यावत्। तत आशासितुः पित्रादेरियमुक्तिः। इयं = नन्दकशब्दप्रयोगः। औचित्यादिति भावः। [इति तृतीयाध्यायस्य प्रथमः पादः]। अथ तृतीयाध्यायस्य द्वितीयः पादः।

तत्त्व-बोधिनी

आशिषि च ६०९, ३।१।१५०

आशिषि च। अप्राप्तप्रार्थनमाशीः। सा च प्रयोक्तृधर्मो न प्रत्ययार्थः, "कर्तरि कृ"दिति कत्र्रर्थे विधानादित्याशयेनाह--आशीर्विषयार्थेत्यादिना। जीवतादिति। जीवनं तव भूयादित्यर्थः। जीवक इति। स्त्रियां तु टापि "आशिषि वुनश्च ने"ति निषेधात् "प्रत्ययस्था"दिति इत्त्वाऽभावः। जीवका। कर्मण्यण्। उपपदसमास इति। "तत्रोपपदम"मिति कर्मादिवाच्यकुम्भादिवाचकपदस्योपपदसंज्ञायाम् "उपपद[मति" ङिति] समास इत्यर्थः। कुम्भकार इति। अणि कृते "कर्तृकर्मणोः कृतिर" इति षष्ठ()न्तस्य कुम्भशब्दस्य कारशब्देन समासः।

*ईक्षिक्षमिभ्यां च। शेषत्वविवक्षायामिति। पदसंस्कारपक्षे तु धरतीति धरः, गङ्गाया धर इति कर्मणि या षष्ठी तदन्तेन समास इति सुवचम्। स्यादेतत्-- धातोर्विधीयमानस्याऽणादेः पदविधित्वाऽभावेन समर्थपरिभाषाया अनुपस्थानात्पश्यति कुम्भं, करोति कटमित्यादावसमर्थादपि धातोरणादयः स्युरिति चेत्। अत्राहुः-- कुम्भाद्युपपदे विधीयमानस्याऽणादेरपि पदाश्रितारविधित्वात्समर्थपरिभाषोपस्थानान्नोक्तदोषः। उपोच्चारितं पपदं ह्युपपदं, पदं च सुप्तिङन्तमिति प्रागेवोक्तत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

कर्मण्यण् ३।२।१

त्रिविधं कर्म, निर्वर्त्यं, विकार्यं, प्राप्यं च इति। सर्वत्र कर्मणि उपपदे धातोः अण् प्रत्ययो भवति। निर्वर्त्यं तावत् कुम्भकारः। नगरकारः। विकार्यम् काण्डलावः। शरलावः। प्राप्यम् वेदाध्यायः। चर्चापारः। ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोति इत्यत्र न भवति, अनभिधानात्। शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्। मांसशीलः, मांसशीला। मांसकामः, मांसकामा। मांसभक्षः, मांसभक्षा। कल्याणाचारः, कल्याणाचारा। ईक्षक्षमिभ्यां च इति वक्तव्यम्। सुखप्रतीक्षः, सुखप्रतीक्षा। बहुक्षमः, बहुक्षमा।

लघु-सिद्धान्त-कौमुदी

कर्मण्यण् ७९३, ३।२।१

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। कुम्भं करोतीति कुम्भकारः॥

न्यासः

कर्मण्यण्। , ३।२।१

"कर्यणि" इति नेदं स्वरूपग्रहणम्; "अशब्दसंज्ञा" १।१।६७ इति प्रतिषेधात्। यदि च कर्मप्रदेशेषु स्वरूपमेव गृह्रते,तदा संज्ञाविधानमनर्थकं स्यात्; नापि क्रियाग्रहणम्, तस्य हि ग्रहणे "कत्र्रभिप्राये" १।३।७२ इति निर्देशो नोपपद्यते, क्रियाकर्मणो हि ग्रहणे क्रियावाच्युपपदे प्रत्ययेन भवितव्यम्, न चेह क्रियावाच्युपपदमस्ति तस्मात् "कर्त्तुरीप्सिततमं कर्म" १।४।४९ इति कर्म गृह्रते। तस्य प्रभेदं दर्शयितुमाह-- "त्रिविधम्" इत्यादि। तत्र निर्वर्त्यं यदसदेवोत्पद्यते, तथा--कुम्भं करोति,नगरं करोतीति। कुम्भादिकं ह्रविद्यमानमेवोत्पद्यत इति निर्वर्त्यं कर्म। विकार्यम्-- यस्य सत एव कश्चिदद्विकारो विधीयते, तद्यथा-- काण्डं लुनाति, नगरं लुनातीति। सत एव काण्डादेर्लवनेन विकारो विधीयत इति विकार्यं कर्म। प्राप्यम्-- नासत एवोत्पादनं क्रियते, नापि सत एव विकाराधानम्, केवलं क्रियासम्बन्धमात्रं प्रतीयते, तद्यथा-- वेदमधीते, चर्च्चां परयतीति। अत्रह्रव्ययनादिना वेदादेः सम्बन्धमात्रं प्रतीयते, न त्वसत एवोत्पादनम्। नापि सत एवान्यथालक्षणो विकार इति प्राप्यमेतत् कर्म। "सर्वत्र" इत्यादि। त्रप्रकारे विशेषानुपादानात्। "कर्मण्युपपदे" इति नाभिदाने कुतो मा भूत्? "कत्र्तरि कृत्" ३।४।६७ इत्यस्य बाधा इति। "शीलिकामि" इत्यादि। "{शील उपधारणे इति धा।पा। चुरादौ पठ()ते; "शील समाधौ" इति च धा।पा।भ्वादौ पठ()ते} शील समाधौ" (धा।पा।१८७८) चुरादिण्यन्तः। "कमु कान्तौ" (धा।पा।४४३) कमिर्णिङन्तः। "भक्ष अदने" (धा।पा।१५५७), चुरादिण्यन्तः। "चर गत्यर्थः" (धा।पा।५५९) आङ्पूर्वः। इकारोऽस्य धातुनिर्देशार्थः। एभ्योऽणि प्राप्ते णो वक्तव्यः = व्याख्येयः। तत्रेदं व्याख्यानम्-- "ज्वलितिकसन्तेभ्यो णः" ३।१।१४० इत्यतो मण्डूकप्लुतिन्यायेन णोऽनुवत्र्तते, "विभाषा ग्रहः" ३।१।१४३ इत्यतश्च विभाषाग्रहणम्, द्वावपीह कर्मण्युपपदे णाणौ विधीयते। अत्र विभाषाग्रहणानुवृत्तेव्र्यवस्थितविभाषाविज्ञानाच्छीलीत्यादिभ्यो ण एव भविष्यतीति, परिशिष्टेभ्यस्त्वणेवेति। एतयोस्तु स्त्रियां विशेषः - अणि हि ङिब् भवति, णे तु टाप्। णकारः "अचो ञ्णिति" ७।२।११५ वृद्ध्यर्थः। "पूर्वपदप्रकृतिस्वरत्वञ्च" इति।"गतिकारकोपपदानां कृत्" (६।२।१३९) इत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते पूर्वपदप्रकृतिस्वरत्वञ्च वक्तव्यम् = व्याख्येयम्। तत्रेदं व्याख्यान म्-- "{तत्पुरुषे तुल्यादौ" मु।पाठः} तुल्यार्थ" ६।२।२ सूत्रे "तत्पुरुषे"इति योगविभागः कत्र्तव्यः तेन मांसशीलादिभ्यः पूर्वपदप्रकृतिस्वरत्वञ्च भविष्यतीति। मांसशब्दोऽन्तोदात्तः-- "वृतृवदिहनिकमि{कषियुमुचिभ्यः द।उ।} कषिभ्यः सः" (द।उ।९।२१) इत्यनुवत्र्तमाने "मनेर्दीर्घश्च" (द।उ।९।२३) इति सप्रत्ययान्तत्वात्प्रत्ययस्वरेण। कल्याणशब्दो मध्योदात्तः-"लघावन्ते द्वयोश्च बह्रषो गुरुः" (फिट्। २।४२) इत्यनेन। अस्यायमर्थः-- अन्ते लघौ परतौ द्वयोश्चान्तयोर्लघ्वोः परतो बह्रच्शब्दस्य यो गुरुः स उदात्तो भवति। "बह्रष्" इति बह्वजित्यर्थः। ननु च शील्यादिभ्यः कर्मणि घञ्ं कृत्वा तदन्तेन बहुव्रीहौ कृते सिध्यत्वेव मांसशीलादि, त()त्क णविधानेन? नैतदस्ति; बहुव्रीहौ सति बहुभक्षा इत्यत्र "वहोर्नञ्चदुत्तरपदभूम्नि" ६।२।१७४ इत्युत्तरपदान्तोदात्तत्वं स्यात्। अवश्यञ्चाणबाधनार्थो णो वक्तव्यः, अन्यथा हि यदा "मांसं कामयते" इतीदं वाक्यं भवति तदाऽणपि स्यात्। "ईक्षिक्षमिभ्याश्च"इति। "ईक्ष दर्शने" (धा।पा।६१०), "{क्षमू-धा।पा।}क्षमु सहने" (धा।पा।१२०६)- आभ्यां णो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्ववदेव कत्र्तव्यम्॥

बाल-मनोरमा

कर्मण्यण् ७३०, ३।२।१

कर्मण्यण्। कर्मण्युपपदे इति। "तत्रोपपदं सप्तमीस्थ"मित्यत्र "तत्रे"त्यनेनदं लभ्यत इति तत्रैवोक्तम्। प्रत्ययस्तु कर्तर्येव। उपपदसमास इति। "उपपदमति"ङित्यनेनेति भावः। कुम्भं करोतीति। अस्वपदो लौकिकविग्रहोऽयम्। कुम्भ अस् कार इत्यलौकिकविग्रह वाक्ये सुबुत्पत्तेः प्रागेव कारशब्देन कृदन्तेन कुम्भ अस् इति षष्ठ()न्तस्य समास इति प्रागेवोक्तम्। ननु आदित्यं पश्यतीत्यादित्यदर्शः, हिमवन्तं शृणोतीति हिमवच्छ्रावः, ग्रामं गच्छतीति ग्रामगाम इत्यादि स्यादित्यत आह-- आदित्यं पश्यतीत्यादावनभिधानान्नेति। एतच्च भाष्ये स्पष्टम्। शालीति। शीलि, कामि, भक्षि, आचरि एभ्यो णप्रत्ययो

वाच्य इत्यर्थः। ननु "कर्मण्य" णित्यणैव सिद्धे किमर्थमिदत्यत आह-- अणोऽपवादार्थमिति। अण्णन्तत्वे तु ङीप् स्यात्, तन्निवृत्यर्थं णविधानमिति भावः। तदाह-- मांसशीलेति। "शील समाधौ" इति भ्वादिः। इह तु स्वभावतः सेवने वर्तते। मांसं स्वभावतः सेवमानेत्यर्थः। मांसकामेति। मांसकामेति। मांसं कामयते इति विग्रहः। मांसभक्षेति। मांसं भक्षयते इति विग्रहः। कल्याणाचारेति। कल्याणमाचरतीति विग्रहः। सर्वत्र टाप्। ईक्षिक्षमिभ्यामिति। वार्तिकमिदम्। "ण" इति शेषः। कथमिति। कर्मण्यणि गङ्गाधार इत्यादि स्यादित्याक्षेपः। "कर्मणः शेषत्वेति। तथा च कर्मोपपदाऽभावान्नाऽणिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ह्वावाऽमश् च ३।२।२

ह्वेञ् स्पर्धायां शब्दे च, वेञ् तन्तुसन्ताने, माङ् माने इत्येतेभ्यश्च कर्मण्युपपदे अण् प्रत्ययो भवति। कप्रत्ययस्य अपवादः। स्वर्गह्वायः। तन्तुवायः। धान्यमायः।

न्यासः

ह्वावामश्च। , ३।२।२

"ह्वेञ् स्पद्र्धायाम्"। "वेञ् तन्तुसन्ताने" इति। अथ "वा गतिगन्धनयोः" (धा।पा।१०५०) इत्यस्य ग्रहणं कस्मान्न भवति? अकर्मकत्वात्। कर्मणि चेहानुवत्र्तते। "माङ माने" इति। ङकारानुबन्धवतो मा इत्यस्योपलक्षणार्थमेतत्। "मेङ प्रणिदाने" (धा।पा।९६१) इत्यस्यापि ग्रहणमिष्यते; "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति वचनात्। ननु यदि गामादाग्रहणेष्वविशेषस्तदा "मीञ् हिंसायाम्" (धा।पा।१४७६), "डुमिञ् प्रक्षेपणे"(धा।पा।१२५०) इति तयोरप्येज्विषय आत्त्वे कृते मेत्येतद्रूपं सम्पद्यते? भवत्येवाभ्यामणेवेति पूर्वसूत्रेण प्राप्तस्य। "स्वर्गह्वायः" इति। "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्॥

बाल-मनोरमा

ह्वावामश्च ७३१, ३।२।२

ह्वावामश्च। "ह्वेञ् स्पर्धायाम्" "वेञ् तन्तुसन्ताने" अनयोः कृतात्वयोर्निर्देशः, "माङ् माने" एषां द्वन्द्वात्पञ्चम्येकवचनम्। एभ्य इति। कर्मण्युपपदे एभ्योऽण् स्यादित्यर्थः। ननु "कर्मण्य"णित्येव सिद्धे किमर्थमिदमित्यत आह-- कापवाद इति। "आतोऽनुपसर्गे कः" इत्यस्याऽणपवादस्य वक्ष्यमाणस्य बाधनार्थमित्यर्थः। माङ्मेङोरिह ग्रहणं, नतु "मा माने" इत्यस्य, अकर्मकत्वात्। स्वर्गह्वाय इति। यद्यपि पराभिभवेच्छायां स्पद्र्धायां परिभिभवस्य कर्मणो धात्वर्थत्वेनोपसङ्ग्रहादकर्मक इत्युक्तम्, तथापि इहाऽभिभवेच्छा धात्वर्थः। स्वर्गमभिभवितुं वाञ्छतीत्यर्थः। अन्तरङ्गत्वादात्वे कृते आतो युक्। एवमग्रेऽपि।

तत्त्व-बोधिनी

ह्वावामश्च ६१०, ३।२।२

ह्वावामश्च। कापवाद इति। "आतोऽनुपसर्गे" इति प्राप्तिर्बोध्या। स्वर्गह्वाय इत्यादि। ह्वेञ्वेञोः "आदेचः" इत्यात्वे "आतो यु"गिति युक्। माङ् माने, मेङ् प्रणिदाने अनयोरिह ग्रहणं, न तु मा माने इत्यस्य, अकर्मकत्वात्। कविधानस्य फलमाह---आतो लोप इति।

---

सूत्रम्

काशिका-वृत्तिः

आतो ऽनुपसर्गे कः ३।२।३

आकारान्तेभ्यः अनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवति। अणो ऽपवादः। गोदः। कम्बलदः। पार्ष्णित्रम्। अङ्गुलित्रम्। अनुपसर्गे इति किम्? गोसन्दायः। वडवासन्दायः।

लघु-सिद्धान्त-कौमुदी

आतोऽनुपसर्गे कः ७९४, ३।२।३

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्। अणोऽपवादः। आतो लोप इटि च। गोदः। धनदः। कम्बलदः। अनुपसर्गे किम्? गोसन्दायः। (वा।) मूलविभुजादिभ्यः कः। मूलानि विभुजति मूलविभुजो रथः। आकृतिगणोऽयम्। महीध्रः। कुध्रः॥

न्यासः

आतोऽनुपसर्गे कः। , ३।२।३

"अनुपसर्गे" इति। व्यत्ययेन पञ्चमीप्रसङ्गेऽपि सप्तमी। धातुविशेषणञ्चैतत्। अत एवाह-- "आकारान्तेभ्योऽनुपसर्गेभ्यः"इति च। "गोदः" इति। पूर्ववलदाकारलोपः। "पा()ष्णम्" इति। "त्रैङ पालने" (धा।पा।९६५)॥

बाल-मनोरमा

आतोऽनुपसर्गे कः ७३२, ३।२।३

आतोऽनुपसर्गे कः। पा()ष्णत्रमिति। पा()ष्णः-- पादमूलभागः। तं त्रायते विग्रहः। "त्रैङ् पालने" आत्वे कृते कः। गोसंदाय इति। अणि - आतो युक्। कविधौ सर्वत्रेति। वार्तिकमिदम्। सर्वत्र कप्रत्ययविधौ संप्रसारणार्हेभ्यः कापवादो डप्रत्ययो वाच्य इत्यर्थः। ब्राह्मज्य इति। "ज्या वयोहानौ" अस्माड्डः। डित्त्वसामथ्र्यादभस्यापि टेर्लोपः। अत्र कप्रत्यये सति कित्त्वात् "ग्रहिज्ये" ति संप्रसारणं प्रसक्तम्, अतो ड एव, नतु कः। सर्वत्रेति। उपसर्गे उपपदे आतोऽपि ड एव, नतु "आतश्चोपसर्गे" इति कः,"सर्वत्र" ग्रहणादित्यन्वयः। अन्यथा "अनन्तरस्य विधि"रिति न्यायात् "आतोऽनुपसर्गे"इति कं बाधित्वा ड एव। तस्य अकित्त्वाद्यजादिलक्षणं संप्रसारणं न। सुपि स्थः। योगो विभज्यते इति। इदं भाष्ये स्पष्टम्। तत्र "सुपी"त्यंशं व्याचष्टे-- सुप्युपपदे इति इदं केवलोपसर्ग व्यर्थम्, "आतश्चोपसर्गे" इत्येव सिद्धेः, कर्मण्युपपदेऽप्येतद्व्यर्तमेव, "आतोऽनुपसर्गे कः" इत्यारम्भादिति मत्वोदाहरति-- द्वाभ्यामिति। तत इति। "सुपी"त्यंशस्य व्याख्यानान्तरं "स्थ" इत्यंशो व्याख्यायत इत्यर्थः। ननु "सुपी"त्यंशेनैव सिद्धे किमर्थमिदमित्यत आह-- आरम्भसामथ्र्यादिति। कर्तरि "सुपि" इति पूर्वेण स्दधे "कर्तरि कृ"दिति नानुवर्तते। अनिर्दिष्टार्थत्वात् "गुप्तिज्किद्भ्यः स" नित्यादिवत्स्वार्थिकोऽयम्, स्वार्थश्च भाव एवेति भाष्ये स्पष्टम्। न च एवं सति "घञर्थे कविधान"मित्येव सिद्धमिति वाच्यम्, नित्योपपदसमासार्थत्वात्। अत एव ल्युडन्तेन अस्वपदविग्रहं दर्शयन्नाह--- आखूनामुत्थानमाखूत्थ इति।

तत्त्व-बोधिनी

आतोऽनुपसर्गे कः ६११, ३।२।३

पा()ष्णत्रमिति। पार्ष्णं त्रायत इति। त्रैङ् पालने। गोसंदाय इति। अण्। युक्।

* कविधौ सर्वत्र प्रसारणिभ्यो डः। प्रसारणिभ्य इति। प्रसारणमिति संप्रसारणपर्यायः। जिनातीति। ज्या वनोहानौ।

"क्र्यादिभ्य" इति श्नाप्रत्यये "ग्रहिज्ये" ति संप्रसारणे पूर्वरूपे "हलः" इति दीर्घे च कृते "प्वादीना"मिति ह्रस्वः। ब्राह्वज्य इति। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। पूर्वेण के हि सति कित्त्वात्संप्रसारणादौ च "ब्राह्मजिय" इति स्यात्। आह्वः प्रह्व इति। के हि सति "वचिस्वपी"त्यादिना ह्वेञः संप्रसारणे सति आहुवः प्रहुव इति स्यादिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

सुपि स्थः ३।२।४

सुबन्ते उपपदे तिष्ठतेः कप्रत्ययो भवति। समस्थः। विषमस्थः। अत्र योगविभागः कर्तव्यः सुपि इति। सुपि आकारान्तेभ्यः कप्रत्ययो भवति। द्वाभ्याम् पिबति इति द्विपः। पादपः। कच्छपः। ततः स्थः इति। स्थश्च सुपि कप्रत्ययो भवति। किमर्थम् इदम्? कर्तरि पूर्वयोगः। अनेन भावे ऽपि यथा स्यात्। आखूनाम् उत्थानम् आखूत्थः। शलभोत्थः। इति उत्तरं कर्मणि इति च सुपि इति च द्वयम् अप्यनुअवर्तते। तत्र सकर्मकेषु धातुषु क्रमणि इत्येतदुपतिष्ठते। अन्यत्र सुपि इति।

न्यासः

सुपि स्थः। , ३।२।४

सुपीति ग्रहणात् कर्मणीति न सम्बध्यते, तिष्ठतेरकर्मकत्वाच्च। "समस्थः" इत्यादौ सप्तम्यन्त उपपदे "अत्र" इत्यादि। सुपीत्येको योगः, तत्र चात इत्यनुवत्र्तते। "सुपीत्यादिना" अस्य योगस्यार्थमाचष्टे। "ततः स्थ इत" इति। द्वितीयो योग इति। "स्थश्च सुपि" इति विवरणम्। "किम्ित्यादि। पूर्वेण सिद्धमिति मन्यमानस्य प्रश्नः। "भावेऽपि यथा स्यात्" इति। आरम्भसामर्थ्यात् कत्र्तरि तावन्न भविष्यति। न चार्थान्तरं निर्दिश्यते, तत्र "अनिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (पु।प।पा।९०) इति भाव एव स्यात्। स एव हि धातूनां स्वार्थः। "{आखूत्थः-काशिका} आखूत्थम्" इति। "उदः स्थास्तम्भोः पूर्वस्य" ८।४।६० इति पूर्वसवर्णः॥

तत्त्व-बोधिनी

सुपि स्थः ६१२, ३।२।४

सुपि स्थः। "सु"पिति प्रत्याहारो गृह्रते, न तु सप्तमीबहुवचम्। कृत्रिमाऽकृत्रिमयोः कृत्रिमस्यैव ग्रहणात्। आरम्भसाश्र्यादिति। कर्तरि पूर्वेणैव सिद्धत्वादिह "कर्तरि कृ"दिति न संबध्यते, अनिर्दिष्टार्थश्चस्वार्थे, धातोः स्वार्थो भाव एव। नन्वेवं "घञर्थे कविधान" मित्यनेन गतार्थतेति चेत्। न। वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः। किं च "षष्ठी"ति सूत्रेण पाक्षिकसमासे प्रसक्ते "उपपदमति"ङिति नित्यसमासार्थमिदम्। अतएव ल्युडन्तेनाऽस्वपदविग्रहमाह-- आखूनामुत्थानमिति। नन्वेवं "घञर्थे कविधाने स्थारुआआपाव्यधिहनियुध्यर्थ"मिति वार्तिके स्थाग्रहणं व्यर्थमिति चेत्। अत्राहुः-- "अकर्तरि कारके विधानार्थं तत्र स्थाग्रहण"मिति। आखूत्थ इति। स्था इत्यस्य के परे "आतो लोपः" इत्यालोपः, "उदः स्थास्तम्भो"रिति उदः परस्य सस्य थः, उदो दस्य चत्र्वम्। अत्र प्राचा आखूत्थं वर्ततैति नपुंसकं पठितं, तदुपेक्ष्यमिति मनोरमायामुक्तम्, भाष्यादौ सर्वत्र पुंलिङ्गस्यैवोदाह्मतत्वात्। "ल्युः कर्तरीमनिज् भावेको घोः किः प्रादितोऽन्यतः" इत्यमरकोशे बावे कस्य पुंस्त्वविधानात्, "भावे नणकचिद्भ्योऽन्ये" इति नपुंसकविधाने कस्य पर्युदासाच्चेति। "नणकचिद्भ्य" इत्यत्र चकार इद्यस्य स चित्, नश्च णश्च कश्च चिच्च नणकचितस्तेभ्योऽन्य इति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

तुन्दशोकयोः परिमृजापनुदोः ३।२।५

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदोः धात्वोः कप्रत्ययो भवति। तुन्दपरिमृज आस्ते। शोकापनुदः पुत्रो जातः। आलस्य सुखाहरणयोः इति वक्तव्यम्। अलसस् तुन्दप्रिमृज उच्यते। तुन्दपरिमार्जः एव अन्यः। सुखस्य अहर्ता शोकापनुदः। शोकापनोदः एव अन्यः। कप्रकरणे मूलविभुजादिभ्यः उपसङ्ख्यानम्। मूलानि विभुजादिभ्यः उपसङ्ख्यानम्। मूलानि विभुजति इति मूलविभुजो रथः। नखमुचानि धनूंषि। काकनुहस्तिलाः। कौ मोदते कुमुदम्।

न्यासः

तुन्दशोकयोः परिमृजापनुदोः। , ३।२।५

"परिमृजापनुदोः" इति। सुब्व्यत्येन पञ्चम्यर्थे षष्ठी। "मृजू शुद्धौ" (धा।पा।१०६६) पूरिपूर्वः। "नुद प्रेरणे" (धा।पा।१४२६) अपपूर्वः। "आलस्य" इत्यादि। प्रत्ययार्थोपाधिरयम्। अलस एवालस्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। आहरतीत्याहरणः। "कृत्यल्युटो बहुलम्" ३।३।११३ इति कत्र्तरि ल्युट्। सुखस्याहरणः सुखाहरणः। आलस्यकत्र्तरि सुखस्याहरणेऽनेन को भवति, नान्यत्रेत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- अत्रापि पूर्ववद्वविभाषागर्हणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेनालस्यसुखाहरणयोरेव कर्त्तोः को भवति, नान्यत्रेति। "तुन्दपरिमार्ज एवान्यः" इति। अनालस्ये त्वण् भवति। "मृजेर्वृद्धिः" ७।२।११४। "शोकापनोदः" इति। यः प्रतिपक्षोपदेशेन शोकं केवलमपनुदति, न तु सुखमुत्पादयति। अत्राणेव तु भवति। "कप्रकरणे" इत्यादि। मूलविभुजादिब्यस्तदर्थे चतुर्थी। आदिशब्दः प्रकारवचनः। मूलविभुजाद्यर्थ मूलविभुजादयः साधवो यथा स्युरित्येवमर्थ कप्रत्ययस्योपादानं प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्-- "ह्वावामश्च" ३।२।२ इत्यतः "आतोऽनुपसर्गे कः" ३।२।३ इत्यत्र चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन मूलविभुजादिभ्यः कप्रत्ययो भविष्यतीति। मूलं विभुजति। "{भुजो-धा।पा।} भुज कौटिल्ये" (धा।पा।१४१७)। नखानि मुञ्चन्तीति नखमुचानि। "मुच्लृ मोक्षणे" (धा।पा।१४३०)। " काकगृहास्तिलाः" इति। "गुहू संवरणे" (धा।पा।८९६)। काकेभ्यो गूहितव्याः।तव्यदाद्यपवादः। कर्मणि कः। "कौ मोदते कुमुदम्" इति। तृजाद्यपवादः॥

बाल-मनोरमा

तुन्दशोकयोः परिमृजापनुदोः ७३५, ३।२।५

तुन्दशोकयोः। तुन्दशोकयोरिति सप्तमी। परिमृज, अपनुद, अनयोद्र्वन्द्वात्पञ्चम्यर्थे षष्ठी। तदाह-- उपपदयोराभ्यामिति। तुन्दपरिमृज इति। तुन्दम् = उदरम्। अत्र "मृजेरजादौ" इति पाक्षिकवृद्धिर्न भवति, व्यवस्थितविभाषाश्रयणादित्याहुः। मूलानि विभुजतीति। विमर्दयतीत्यर्थः। "भुजो कौटिल्ये" तुदादिः। इहोपसर्गबलादन्मर्दने वृत्तिः। महीध्र इति। महीं धरतीति विग्रहः। कित्वान्न गुणः। ऋकारस्य यण् रेफः। अणि तु "महीधार" इति स्यात्। कुध्र इति। कुः = पृथ्वी, तां धरतीति विग्रहः। गिल इति। "गृ? निगरणे" अस्मात्कः, कित्वान्न गुणः, इत्त्वं, रपरत्वम्। "अचि विभाषे"ति लत्वम्।

तत्त्व-बोधिनी

तुन्दशोकयः परिमृजापनुदोः ६१४, ३।२।५

तुन्दपरिमृज इति। अत्र "मृजेरजादा"विति वैकल्पिकी वृद्धिव्र्यवस्थितविभाषा नेत्येके। स्यादेवेत्यन्ये।

* कप्रकरणे मूलविभुजादिभ्यः उपसङ्ख्यानम्। मूलविभुजादिभ्यु इति। तादर्थ्ये एषा चतुर्थी।

मूलविभुजादिसिद्ध्यर्थमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

प्रे दाज्ञः ३।२।६

सोपसर्गार्थ आरम्भः। ददातेः जानातेश्च धातोः प्रेणोपसृष्टात् कर्मण्युपपदे कप्रत्ययो भवति। अणो ऽपवादः। सर्वप्रदः। पथिप्रज्ञः। प्रे इति किम्? गोसन्दायः।

न्यासः

प्रे दाज्ञः। , ३।२।६

"सोपसर्गार्थं आरम्भः" इति। अनुपसर्गात् "आतोऽनुपसर्गे कः" ३।२।३ इत्येवं सिद्धत्वात्। "ददातेः" इति। दारूपाणां धातूनामुपलक्षणमेतत्। अन्येषामपि दारूपाणां ग्रहणमिष्यमे; "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति वचनात्। "प्रेणोपसृष्टात्" इति। प्रेणोपसर्गेण सम्बद्धादित्यर्थः। सूत्रे "प्रे" इति सुब्व्यत्ययेन तृतीयार्थे सप्तमी वेदितव्या। "पथिप्रज्ञः" इति। पन्थानं प्रजानातीत्यर्थः॥

बाल-मनोरमा

प्रे दाज्ञः ७३६, ३।२।६

प्रे दाज्ञः। "प्रे" इति सप्तमी पञ्चम्यर्थे। दा, ज्ञा-- अनयोद्र्वन्द्वात्पञ्चम्येकवचम्। प्रोपसृष्टादिति। प्रेत्युपसर्गपूर्वकादित्यर्थः। सोपसर्गार्थ आरम्भः।

तत्त्व-बोधिनी

प्रे दाज्ञः ६१५, ३।२।६

प्रे दा। गामादाग्रहणेष्वविशेषादाह--दारूपादित। पथिप्रज्ञ इति। पन्थानं प्रकर्षेण जानातीत्यर्थः। प्रादन्यस्मिन्निति। प्रशब्दमात्रोपपदे अस्य सूत्रस्य चरितार्थत्वादुपसर्गान्तरे सति "आतोऽनुपसर्गे" इत्यनेनापि न भवतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

समि ख्यः ३।२।७

सोपसर्गार्थः आरम्भः। संपूर्वात् ख्या इत्येतस्माद् धातोः कर्मण्युपपदे कप्रत्ययो भवति। अणो ऽपवादः। गां संचष्टे गोसङ्ख्यः।

न्यासः

समि ख्यः। , ३।२।७

"गां सञ्चष्टे" इति। वाक्यविशेषेण "चक्षिङः ख्याञ्" २।४।५४ इति ख्याञादेशस्य ग्रहणम्, न "ख्या प्रकथने" (धा।पा।१०६०) इत्येतस्येति दर्शयति। एतच्च संपूर्वस्य ख्यातेः प्रयोगासम्भवाल्लभ्यते॥

बाल-मनोरमा

समि ख्यः ७३७, ३।२।७

समि ख्यः। "समी"ति पञ्चम्यर्थे सप्तमी। गोसङ्ख्य इति। गाः संचष्ट इति विग्रहः। संपूर्वाच्चक्षिङः ख्यात्रि रूपम्। "ख्या प्रकथने" इत्यस्य तु संपूर्वस्य प्रयोगाऽभावात्, सार्वधातुकमात्रविषयत्वाच्च नेह सम्बध्यते।

तत्त्व-बोधिनी

समि ख्यः ६१६, ३।२।७

गोसङ्ख्य इति। गाः संचष्टे इति विग्रहः। "चक्षिङः ख्यात्र्"। ख्या प्रकथन इत्यस्य तु संपूर्वस्य प्रोयगो नास्तीति न्यासकारः। सार्वधातुकमात्रविषयोऽसौ धातुरिति च मनोरमादौ स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

गापोष् टक् ३।२।८

कर्मण्यनुपसर्गे इति वर्तते। गायतेः पिबतेश्च धातोः कर्मण्युपपदे ऽनुपसर्गे टक् प्रत्ययो भवति। कस्य अपवादः। शक्रं गायति शक्रगः, शक्रगी। सामगः, सामगी। सुराशीध्वोः पिबतेरिति वक्तव्यम्। सुरापः, सुरापी। शीधुपः, शीधुपी। सुराशीध्वोः इति किम्? क्षीरपा ब्राह्मणी। पिबतेः इति किम्? सुरां पाति इति सुरापा। अनुपसर्गे इत्येव, शक्रसङ्गायः। सामसङ्गायः। बहुलं छन्दसि इति वक्तव्यम्। या बाह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति। या ब्रह्मणी सुरापा भवति नैनां देवाः पतिलोकं नयन्ति।

न्यासः

गापोष्टक्। , ३।२।८

"लुग्विकरणालुग्विकरणयोर्लुक्विकरणस्यैव ग्रहणम्" (व्या।प।५०) इति "पा" इति पानार्थस्य ग्रहणमम्, रक्षणार्थस्य न। यद्यपि "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) उच्यते, तथापि पिबतिना साहचर्यात् "गा" इत्यस्यालुग्विकरणस्य ग्रहणम्, न गत्यर्थस्येत्याह--"गायतेः, पिबतेश्च" इति। टकः कित्करणमातो लोपार्थम्। टित्करणं ङीबर्थम्; न तु "आद्यन्तौ टकितौ" १।१।४५ इत्येवमर्थम्। कुत एतत्? आद्यन्तयोरवयवत्वात्। न च प्रत्ययोऽवयवो युज्यते, "परश्च" ३।१।२ इति वचनात्। ननु च गापोरिति षष्ठी टकोऽवयवत्वञ्च बोधयिष्यते? नैतदस्ति; पञ्चम्यर्थे त्वेषा षष्ठी, कर्तृविशेषणार्था वा-- गापोः कत्त्ररीति। युक्तञ्चैतत्, एवं हि प्रत्ययपरत्वं बाधितं न भवति। किञ्चादित्वे हि टकः कित्करणमनर्थकं स्यात्। पिबतेरूपपदान्तस्य निवृत्त्यर्थमाह-- "सुराशीध्वोः" इत्यादि। तत्र पिबतेरिह ग्रहणम्, न पातेरित्येतत् प्रागेव व्यवस्थापितम्। इह "विभाषा" ३।१।१४३ इत्यनुवत्र्तते, सा तु व्यवस्थितविभाषा; तेन सुराशीध्वोरुपपदयोर्भविष्यति, नान्यत्र। "क्षीरपा" इति। स्त्रीलिङ्गोदाहरणं स्त्रियां विशेष इति प्रदर्शनार्थम्। "बहुलम्" इत्यादि। पिबतेश्छन्दसि बहुलं टग्भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु -- तस्यैव विभाषाग्रहणानुवृत्तस्य व्यवस्थितविभाषात्वमाश्रित्य कत्र्तव्यम्। तस्य तु फलं सुरापेति पक्षे कप्रत्ययो भवति॥

बाल-मनोरमा

गापोष्टक् ७३८, ३।२।८

गापोष्टक्। "गै शब्दे" "पा पाने" इत्यनयोः टक् स्यात्कर्मण्युपपदे। आतो युकि रूपम्। पिबतेरिति। वार्तिकमिदम्। पाधातोः सुराशीध्वोरुपपदयोः टक् स्यादित्यर्थः। क्षीरपेति। क्षीरं पिबतीत्यर्थे सुराशीध्वोर्नयतरत्वाऽभावात्

"आतोऽनुपसर्गे कः" इति कप्रत्यये टाप्। पाति रक्षतीति। अजित्यर्थः। उद्यमनम् - उद्ग्रहणम्। अंशहर इति। अंशस्य स्वीकर्तेत्यर्थ-। भारहार इति। भारम् उद्गृह्णातीत्यर्थः। ग्रहेरुपसङ्ख्यानमिति। "अच्प्रत्ययस्ये"ति शेषः। "ग्रह उपादाने" अदुपधऋ। "गृहे"रिति पाठे तु कृतसंप्रसारणस्य इका निर्देशो बोध्यः। शक्तिग्रह इति। अकित्त्वान्न संप्रसारणम्। लाङ्गलग्रह इति। एवम् -- "अङ्कुशग्रह" इत्याद्यप्युदाहार्यम्। सूत्रे चेति। वार्तिकमिदम्। सूत्रे कर्मण्युपपदे धारणार्थकादग्रहधातोजित्यर्थः।

तत्त्व-बोधिनी

गापोष्टक् ६१७, ३।२।८

गापोष्टक्। इहगामादग्रहणेष्वविशेषेऽपि गायतेरेव ग्रहणं, न तु गाङ् गतौ, गा स्तुतौ इत्यनयोः, अनभिधानात्। सामगः समगीति। एतेन टकः कित्तवमालोपार्थं टित्त्वं नु ङीबर्थमिति ध्वनितम्। प्रत्ययाऽधिकाराट्टकः प्रत्ययत्वेन "प्रत्ययः" "परश्चे" ति धातोः पर एव स्यादिति "आद्यन्तौ टकितौ" इत्यस्याऽत्र आशङ्कैव नास्तीति बोध्यम्। सामसङ्गाय इति। कर्मण्यणि सति "आतो यु"गिति युक्।

*पिबतेः सुराशीध्वोरिति वाच्यम्। पिबतेरिति। "लुग्विकरणाऽलग्विकरणयोः" इति पिरभाषलभ्यार्थकथनम्, उपपदपरिगणनं तु वाचनिकमेव। क्षीरपेति। क्षीरं पिबतीत्यातोऽनुपसर्गे कः।

* शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानम्। शक्तीति। घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थं, तेन मद्रराज्ञीत्यत्र टज्न, "द्विषतीताप" इत्यत्र "द्विषत्परयो"रिति खच् नेति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

हरतेरनुद्यमने ऽच् ३।२।९

हरतेर् धातोरनुद्यमने वर्तमानात् कर्मणि उपपदे अच् प्रत्ययो भवति। अणो ऽपवादः। उद्यमनम् उत्क्षेपणम्। अंशं हरति अंशहरः। रिक्थहरः। अनुद्यमने इति किम्? भारहारः। अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधौष्षु ग्रहेरुपसङ्ख्यानम्। शक्तिग्रहः। लाङ्गलग्रहः। अङ्कुशग्रहः। यष्टिग्रहः। तोमरग्रहः। घटग्रहः। घटीग्रहः। धनुर्ग्रहः। सूत्रे च धार्यर्थे। सूत्रग्रहः। सूत्रं धारयति इत्यर्थः। सूत्रग्राहः एव अन्यः।

न्यासः

हरतेरनुद्यमनेऽच्। , ३।२।९

"उद्यमनमुत्क्षेपणम्" इति। अधः स्थितस्य व्सतुन ऊध्र्वं नयनमित्यर्थः। "अंशहरः" इति। अंशं स्वीकरोतीत्यर्थः, न तूत्क्षेपयति। "अच्प्रकरणे" इत्यादि। "प्रातिपदिकग्रहणे {लिङ्गिविशिष्टस्य" इति मुद्रितः पाठः।} लिङ्गविशिष्टस्यापि ग्रहणम्" (व्या।प।२९) इति घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्। तस्य तु प्रयोजनम् -- "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः"४।१।८५ इत्यत्र वक्ष्यते। उपसंख्यानशब्दस्य प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम्-- उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन शक्त्यादिषूपपदेषु ग्रहेरज्भविष्यति। "सूत्रे च" इत्यादि। धारेरर्थो धाय्र्यर्थः। तत्र वर्तमानाद्()ग्रहेः सूत्रे चोपपदेऽच उपसंख्यानं प्रतिपादनं कत्र्तव्यम्। प्रतिपादनं तावत्तदेव। "सूत्रग्राह एवान्यः" इति। यः सूत्रं केवलमुपादत्ते न धारयति, तत्राणेव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

वयसि च ३।२।१०

वयसि गम्यमाने हरतेः कर्मण्युपपदे अच् प्रत्ययो भवति। उद्यमनार्थो ऽयम् आरम्भः। कालकृता शरीरावस्था यौवनादिर् वयः। यदुद्यमनं क्रियमाणं सम्भाव्यमानं वा वयो गमयति, तत्र अयं विधिः। अस्थिहरः श्वा। कवछरः क्षत्रियकुमारः।

न्यासः

वयसि च। , ३।२।१०

"उतद्यमनार्थोऽयमारम्भः" इति। अनुद्यमने पूर्वेणैव सिद्धत्वात्। "अस्थिहरः"इति। अस्थ्युत्क्षेपणसमर्थे वयसि वत्र्तत इत्यर्थः॥

बाल-मनोरमा

वयसि च ७३९, ३।२।१०

वयसि च। कर्मण्युपपदे वयसि गम्ये हरतेरजित्यर्थः। ननु "हरतेरनुद्यमनेऽ"जित्येव सिद्धे किमर्थमिदमित्यत आह-- उद्यमनार्थमिति।

तत्त्व-बोधिनी

वयसि च ६१८, ३।२।१०

कवचहर इति। कवचोद्यमनं क्रियमाणं, संभाव्यमानं वा वयो गमयति। तनाऽसत्यपि कवचग्रहणे "कवचहर" इति भवत्येव।

---

सूत्रम्

काशिका-वृत्तिः

आङि ताच्छील्ये ३।२।११

आङ्पूर्वाद् हरतेः कर्मण्युपपदे अच् प्रत्ययो भवति ताच्छील्ये गम्यमाने। ताच्छील्यं तत्स्वभावता। पुष्पाहरः। फलाहरः। पुष्पाद्याहरने स्वाभाविकी फलानपेक्षा प्रवृत्तिरस्य इत्यर्थः। ताच्छीओये इति किम्? भारम् आहरति इति भाराहारः।

न्यासः

आङि ताच्छील्ये। , ३।२।११

अनुद्यमनमिति निवृत्तम्। तेनाविशेषाल्लभ्यते-- उद्यमने चायं विधिरिति। ननु चानुद्यमने पूर्वेणैव सिद्धम्, परत्वाद्धि तृन् प्राप्नोति, वासरूपविधानादजपि भवति? नैतदस्ति; वक्ष्यति ह्रेतत्-- ताच्छीलिकेषु वासरूपेण तृजादयो न भवन्तीति। "ताच्छील्यं तत्स्वभावता" इति। तत् पुनर्मानसो धर्मः। फलनिरपेक्षया प्रवृत्तिरनुमीयते। "पुष्पाहरः"इत्यादिना ताच्छील्यमुदाहरति॥

बाल-मनोरमा

आङि ताच्छील्ये ७४०, ३।२।११

आङि ताच्छील्ये। आङ्()पूर्वाद्धरतेः कर्मण्युपपदे अच् स्यात्ताच्छील्ये गम्ये। ताच्छील्यं - तत्स्वभावता। पुष्पाहर इति। पुष्पाहरणे फलानपेक्षमेव स्वाभाविकी प्रवृत्तिरस्येत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अर्हः ३।२।१२

अर्ह पूजायाम्, अस्माद् धातोः कर्मण्युपपदे अच्प्रत्ययओ भवति। अणो ऽपवादः। स्त्रीलिङ्गे विशेषः। पूजार्हा। गन्धार्ह। मालार्हा।

न्यासः

अर्हः। , ३।२।१२

"{स्त्रीलिङ्गे इति मूलपाठः} स्त्रियां विशेषः" इति। अणि हि सति ङीब्भवति, अचि तु सति टाप्॥

बाल-मनोरमा

अर्हः ७४१, ३।२।१२

अर्हः। अणोऽपवाद इति। यद्यपि अणि अचि च पूजार्हरूपे न विशेषः, अदुपधत्वाऽभावेन वृद्धेरप्रसक्तेः, तथापि स्त्रियामण्णन्तत्वे ङीप्स्यात्, तन्निवृत्तये अज्विधिः। तदाह-- पूजार्हेति।

---

सूत्रम्

काशिका-वृत्तिः

स्तम्बकर्णयो रमिजपोः ३।२।१३

स्तम्ब कर्ण इत्येतयोः सुबन्तयोरुपपदयोर् यथासङ्ख्यं रमिजपोः धात्वोः अच्प्रत्ययो भवति। रमेः अकर्मकत्वात्, जपेः शब्दकर्मकत्वात् कर्म न सम्भवति इति सुपि इत्येतदिह अभिसम्बध्यते। हस्तिसूचकयोरिति वक्तव्यम्। स्तम्बे रमते इति स्तम्बेरमः हर्ती। कर्णे जपति इति कर्णेजपः सूचकः। हस्तिसूचकयोः इति किम्? स्तम्बे रन्ता। कर्णे जपिता मशकः।

न्यासः

स्तम्बकर्णयो रमिजपोः। , ३।२।१३

"जपेः शब्दकर्मकत्वात्" इति गायत्रीं जपति;अनुवाकं जपतीत्यत्र शब्दकर्मकस्यैव प्रयोगदर्शनात्। "कर्म न सम्भवति" इति। कर्णस्याशब्दात्मकत्वादित्यभिप्रायः।इतिकरणो हेतौ। यत एव कर्णशब्दः कर्म न सम्भवति तेन सुपीत्येतदिह सम्बध्यते,न कर्मणीति। "हस्तिसूचकयोः" इत्यादि। हस्तिसूचकग्रहणं प्रत्ययार्थस्यैव कर्त्तुर्विशेषणम्। "स्तम्बकर्णयो रमिजपोः" इति योऽयमज्विधिः स हस्तिसूचकयोः कत्र्रोर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु-- तस्यैव विभाषाग्रहणानुवृत्तस्य व्यवस्थितविभाषात्वमाश्रित्य कत्र्तव्यम्। "स्तम्बेरमः कर्णेजपः" इति। "तत्पुरुषे कृति बहुलम्" ६।३।१३ इति सप्तम्या अलुक्। "सूचकः"इति। पिशुनक इत्यर्थः॥

बाल-मनोरमा

स्तम्बकर्णयो रमिजपोः ७४२, ३।२।१३

स्तम्बकर्णयोः। रम जप अनयोरकर्मकत्वात्कर्मणीति न संबध्यते। जपेः शब्दोच्चारणार्तकस्य धात्वर्थोपसङ्ग्रहादकर्मकत्वं बोध्यम्। दर्भादितृणनिचयः - स्तम्बः। सूचकः - पिशुनिः। हस्तिसूचकयोः किम्?। स्तम्बे रन्ता गौः कर्णे जपिता गुरुः, मशको वा।

तत्त्व-बोधिनी

स्तम्बकर्णयो रमिजपोः ६१९, ३।२।१३

* हस्तिसूचकयोरिति वक्तव्यम्। हस्तसूचकयोरिति। अन्यत्र तु स्तम्बे रन्ता। कर्णे जपिता।

---

सूत्रम्

काशिका-वृत्तिः

शमि धातोः संज्ञायाम् ३।२।१४

शम्युपपदे धातुमात्रात् संज्ञायां विषये अच्प्रत्ययओ भवति। शङ्करः। शंभवः। शंवदः। धातुग्रहणं किं यावता धातोः इति वर्तत एव? शमिसंज्ञायाम् इति सिद्धे धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्। शङ्करा नाम परिव्राजिका। शङ्करा नाम शकुनिका। तच्छीला च।

न्यासः

शमि धातोः संज्ञायाम्। , ३।२।१४

"धातुमात्रात्" इति। धातुमात्रग्रहणेनापवादविषयेऽपि विधानं दर्शयति। एवं हि धातुमात्राद्भवति, यद्यप्यपवादं बाधित्वा तद्विषयेऽपि भवति। एष चार्थो धातुग्रहणाल्लभ्यते। "शमि संज्ञायाम्" इत्यादिना धातुग्रहणस्य प्रयोजनं दर्शयनम्, धातुप्रतिपादितमर्थं स्पष्टीकरोति-- "शमि संज्ञायाम्" इति। सूत्रोपलक्षणमेतत्। "शमि धातोः संज्ञायाम्" इत्यस्मिन् सूत्र इत्यर्थः। "हेत्वादिषु" इति। आदिशब्देन ताच्छील्यानुलोम्ययोग्रहमम्। शम्युपपदे करोतेः संज्ञायां हेत्वादिषु विवक्षितेषु "कृञो हेतुताच्छील्यानुलोम्येषु" ३।२।२० इति टः प्राप्नोति, अतस्तद्बाधनार्थं धातुग्रहणम्। शमि धातोरित्य्सयावकाशः करोतेरन्यो धातुः शम्युपपदः सम्भवति-- शंवद इति, "कृञो हेतुताच्छील्यानुलोम्ये" ३।२।२० इत्यस्यावकाशः करोतिः शब्दान्तरोपपदः-- श्राद्धं करोतीति श्राद्धकर इति; करोतेः शम्युपपदे संज्ञायायमुभयमेव प्राप्नोति--शङ्करा नाम शकुनिकेति। सा हि तच्छीला, तत्संज्ञा च, तत्र परत्वाट्टः प्राप्नोति, पुनर्धातुग्रहणाद्धातु मात्राद्विधीयमानं टं बाधित्वाऽजेव भवति॥

बाल-मनोरमा

शमि धातोः संज्ञायाम् ७४३, ३।२।१४

शिमि दातोः। "शमी"ति सप्तम्यन्तम्। "श" मिति सुखार्थकमव्ययम्। तस्मिन्नुपपदे दातोरच् स्यात्संज्ञायाम्। ननु धातुग्रहणं व्यर्थम्, न च रमिजपोरननुवृत्त्यर्थं तदिति वाच्यम्, अस्वरितत्वादेव तदननुवृत्तिसिद्धेरित्यत आह-- पुनर्धातुग्रहणमिति। "कृञो हेतुताच्छील्यानुलोम्येषु" इति टप्रत्यययोऽच्प्रत्ययबाधको वक्ष्यते, तद्बाधनार्थमित्यर्थः।

तत्त्व-बोधिनी

शमि धातोः संज्ञायाम् ६२०, ३।२।१४

शमि धातोः। शमि उपपदे धातुमात्रात्संज्ञायामच् स्यात्। पुनर्धातुग्रहणमिति। असति धातुग्रहणे "शमि

संज्ञाया"मित्यस्यावकाशः, --संभवः। शंवदः। "कृञो हेतुताच्छील्ये"त्यस्यावकाशः--"श्राद्धकरः"। "शङ्कर" इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात्। धातुग्रहणे कृते तु तत्सामर्थ्यादजेव भवति। तदाह--शङ्करा नामेत्यादि। अनधिकरणार्थमुपसङ्ख्यानमिति दर्शयति--

---

सूत्रम्

काशिका-वृत्तिः

अधिकरणे शेतेः ३।२।१५

सुपि इति सम्बध्यते। शेतेर् धातोरधिकरणे सुबन्त उपपदे अच् प्रत्ययो भवति। खे शेते खशयः। गर्तशयः। पार्श्वादिषु उपसङ्ख्यानम्। पार्श्वाभ्यां शेते पार्श्वशयः। उदरशयः। पृष्ठशयः। दिग्धसहपूर्वाच् च। दिग्धेन सह शेते दिग्धसहशयः। उत्तानादिषु कर्तृषु। उत्तानः शेते उत्तानशयः। अवमूर्धा शेते अवमूर्धशयः। गिरौ डश्छन्दसि। गिरौ शेते गिरिशः।

न्यासः

अधिकरणे शेतेः।, ३।२।१५

"सुपीति सम्बध्यते" इति।शेतेरकर्मकत्वात्। अधिकरणस्य चाकर्मकत्वे सम्भवति सुपीतीह सम्बध्यते, न कर्मणीति। "पार्(ाआदिषूपसंख्यानम्" इति। आरम्भोऽयमनधिकरणार्थः। पार्(ाआभ्यामिति तृतीयान्तमुपपदं दर्शयति। उरःशः, पृष्ठशय इत्यत्रापि तृतीयान्तमेवोपपदं वेदितव्यम्। "दिग्धसहशयः" इति। दिग्धेन सह शेत इति "तृतीया" २।१।२९ इति योगविभागेन समासः। दिग्धस्य सहेन प्राक् प्रत्ययोत्पत्तेः पश्चादुपपदसमासः। "गिरौ" इत्यादि। गिरावुपपदे शेतेश्छन्दसि विषये डो भवति। "गिरिशः"इति। डित्त्वाट्टिलोपः। एतत् सर्वं "व्यत्ययो बहुलम्" ३।१।८५ इति बहुलवचनात् सिद्धम्॥

बाल-मनोरमा

अधिकरणे शेतेः ७४४, ३।२।१५

अधिकरणे। सुबन्तेऽधिकरणवाचिन्युपपदे शीङ्धातोरच् स्यादित्यर्थः। पार्(ाआदिष्विति। अत्राऽधिकरणवाचनिनीति न संबध्यते। तद्ध्वनयन्नुदाहरति-- पार्(ाआभ्यामिति। उत्तानादिषु कर्तृष्विति। वार्तिकमिदम्। उत्तानादिशब्देषु कर्तृवाचिषूपपदेषु शीङोऽजित्यर्थः। गिराविति। वार्तिकमिदम्। गिरावुपपदे शीङो दभस्यापि टेर्लोपः। यद्यपि वैदिकप्रक्रियायामेवेदं व्याख्येयम्, तथापि लोके डप्रत्ययस्य न प्रवृत्तिः कि त्वजेवेति प्रदर्शनार्थमिह तद्व्याख्यानमित्यभिप्रेत्य लोके अच्प्रत्ययमुदाहरति-- गिरिशय इति। कथमिति। लोके डप्रत्ययाऽसंभवादिति भावः। समाधत्ते-- गिरिरस्यास्तीत्यादि।

बाल-मनोरमा

हरतेर्दृतिनाथयोः पशौ ७५२, ३।२।१५

हरतेर्दृतिनाथयोः। दृतिः चर्मभस्त्रिका। दृतिहरिः ()आआ इति वृत्तिः। "नाथ" शब्दस्य विवरणम्--नासारज्जुमिति। नासिकाप्रोतरज्जुमित्यर्थः। नाथहरिरिति। नासिकाप्रोतरज्जुके पशुविशेषे रूढोऽयम्।

तत्त्व-बोधिनी

अधिकरणे शेते ६२१, ३।२।१५

* पार्(ाआदिषूपसङ्ख्यानम्। पार्(ाआभ्यामित्यादिना।

---

सूत्रम्

काशिका-वृत्तिः

चरेष् टः ३।२।१६

अधिकरणे इति वर्तते। चरेर् धातोरधिकरणे सुबन्त उपपदे टप्रत्ययो भवति। कुरुषु चरति कुरुचरः। मद्रचरः। कुरुचरी। मद्रचरी। प्रत्ययान्तरकरणं ङीबर्थम्।

लघु-सिद्धान्त-कौमुदी

चरेष्टः ७९५, ३।२।१६

अधिकरणे उपपदे। कुरुचरः॥

न्यासः

चरेष्टः। , ३।२।१६

"प्रत्ययान्तरकरणं ङीबर्थम्" इति। टित्त्वान्ङीब्भवति॥

बाल-मनोरमा

चरेष्टः ७४५, ३।२।१६

चरेष्टः। ट इति च्छेदः। "अधिकरणे उपपदे" इति शेषः। "अधिकरणे शेते" रित्यतस्तदनुवृत्तेरिति भावः। कुरुचर इति। कुरुषु चरतीति विग्रहः। न च "अकर्मकधातुभिर्योगे" इति कर्मत्वं शङ्क्यं, तस्य वैकल्पिकतयायास्तत्रैव प्रपञ्चितत्वात्। तत्र अत्रत्यमपि भाष्यं प्रमाणम्।

तत्त्व-बोधिनी

चरेष्टः ६२२, ३।२।१६

कुरुचर इति। कुरुषु देशेषु चरति। अटतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

भिक्षासेनाऽअदायेषु च ३।२।१७

अनधिकरणार्थः आरम्भः। भिक्षा सेना आदाय इत्येतेषु उपपदेषु चरेः धतोः टप्रत्ययो भवति। भिक्षाचरः। सेनाचरः। आदायचरः।

लघु-सिद्धान्त-कौमुदी

भिक्षा सेनादायेषु च ७९६, ३।२।१७

भिक्षाचारः। सेनाचारः। आदायेति ल्यबन्तम्। आदायचरः॥

न्यासः

भिक्षासेनादायेषु च। , ३।२।१७

"अनधिकरणार्थ आरम्भः" इति। अधिकरणे पूर्वेणैव सिद्धम्। भिक्षाञ्चरतीति "भिक्षाचरः" सेनाञ्चरतीति "सेनाचरः"। "आदाय" इति ल्यबन्तमेतत्। आदाय चरतीति "आदायचरः" अत्रादातव्यकर्मणोऽविवक्षितत्त्वात् पूर्वाकालमात्रे विवक्षिते प्रत्ययः। आदानं कृत्वा चरतीति यावत्। तेन सापेक्षत्वादसामर्थ्ये सति प्रत्ययो न सिध्यतीत्येतदचोद्यम्। अथापि कर्मापेक्षते? एवमपि न दोषः; वचनसामश्र्यादसामर्थ्येऽपि प्रत्ययो भवति॥

बाल-मनोरमा

भिक्षासेनादायेषु च ७४६, ३।२।१७

भिक्षासेना। भिक्षा, सेना, आदाय- एषु चोपदेषु चरेष्टः स्यादित्यर्थः। भिक्षां चरतीति। चरतिरत्र चरणपूर्वके आर्जने वर्तते। चरणेन भिक्षा मार्जयतीत्यर्थ-। सेनाचर इति। सेनां प्रापयतीत्यर्थः। ल्यबन्तमिति। अत्र व्याख्यानमेव शरणम्। आदाय चरतीति। लब्धं द्रव्यं गृहीत्वा चरतीत्यर्थः। कथमिति। अधिकरणे भिक्षासेनाऽऽदायेषु उपपदेषु च विहितस्य टप्रत्ययस्य सहपूर्वाच्चरेसंभवादिति भावः। समाधत्ते-- पचादिष्विति। यद्यपि "भिक्षाचर" इत्यादौ पचाद्यचि रूपसिद्धिः, तथापि नित्योपपदसमासार्थमज्विधानमित्याहुः।

तत्त्व-बोधिनी

भिक्षासेनादायेषु च ६२३, ३।२।१७

भिक्षासेना। अनधिकरणार्थ आरम्भः। भिक्षां चरतीति। चरतिरत्र चरणपूर्वके अर्जने वर्तते। चरणेन भिक्षामर्जयतीत्यर्थः। सेनाचर इति। सेनां चरति = प्रविशतीत्यर्थः। पचादिष्विति। टविधानं तु "उपपदमति" ङिति नित्यसमासार्थम्। सहचरः। सहचतीत्यत्र तु सुप्सुपेति वैकल्पिकः समासः।

---

सूत्रम्

काशिका-वृत्तिः

पुरो ऽग्रतो ऽग्रेषु सर्तेः ३।२।१८

पुरसग्रतसग्रे इत्येतेषु उपपदेषु सर्तेः धातोः टप्रत्ययो भवति। पुरः सरति पुरःसरः। अग्रतःसरः। अग्रेसरः।

न्यासः

पुरोऽग्रतोऽग्रेषु सर्त्तेः।, ३।२।१८

पुरःशब्दः "पूर्वाधरावराणामसि पुरधवश्चैषाम्" ५।३।३९ इत्यसिप्रत्ययान्तो व्युत्पादितः। अग्रतःशब्दोऽपि "तसिप्रकरण आद्यादिभ्य उपसंख्यानम्" (वा।६३४) इति तसिप्रत्ययान्तः। "अग्रे" इति। अग्रशब्दस्यैकारान्तत्वं निपात्यते--अग्रेसर इत्येतद्रूपं यथा स्यात्। ननु च सप्तम्या अलुकाप्येतत् सिध्यति? सत्यम्; यदा सिध्यति तदा सप्तम्यन्त उपपदे प्रत्ययः। यदाग्रः सरतीति, अग्रेण वा सरतीत्यसप्तम्यन्तस्तदा न सिध्यति; तदर्थमेकारान्तत्वं निपात्यते॥

बाल-मनोरमा

पुरोऽग्रततोऽग्रेषु सर्तेः ७४७, ३।२।१८

पुरोऽग्रतः। पुरस्, अग्रतस्, अग्रे-- एषूपपदेषु सर्तेः टः स्यादित्यर्थः। अग्रेसर इति। ननु समासाऽवयवत्वात्सुपो लुकि अग्रसर इति स्यादित्यत आह-- सूत्र इति। कथमिति। एदन्तत्वनिपातनात्कथमग्रसरशब्द इत्यर्थः। समाधत्ते-- बाहुलकादिति। पूर्वे कर्तरि। कर्तृशब्दः कर्तृवाचिनि गौणः। तदाह-- कर्तृवाचिनीति।

---

सूत्रम्

काशिका-वृत्तिः

पूर्वे कर्तरि ३।२।१९

पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेर् धातोः टप्रत्ययः भवति। पूर्वः सरति इति पूर्वसरः। कर्तरि इति किम्? पूर्वं देशं सरति इति पूर्वसारः।

न्यासः

पूर्वे कत्र्तरि। , ३।२।१९

"पूर्वशब्दे कर्त्तृवाचिन्युपपदे प्रत्ययः" इति। एतेन कत्र्तरीत्यनेनोपपदं विशिष्यते, न कत्र्ता। प्रत्ययार्थो निर्दिश्यत इति दर्शयति; तस्य "कत्र्तरि कृत्" ३।४।६७ इत्यनेनैव निर्देशात्। अयुक्तत्वादिह निर्देशस्येत्यभिप्रायः। ननु च पूर्वः सरतीत्यत्रासामथ्र्यमस्ति, तथा हि-- पूर्वशब्दोऽयं व्यवस्थावचनः, अवयववाची वा। तत्र पूर्वस्मिन् कल्पेऽवधिरपेक्षणीय-- अस्मादयं पूर्व इति। इतर()स्मस्त्ववयवी पदार्थः, यथा -- पूर्व कायस्येति, उभयोरपि सापेक्षितत्वात्, असामर्थ्ये सति प्रत्ययानुत्पत्तिः? नैष दोषः; पूर्वशब्दः सम्बन्धिशब्दः। सापेक्षेऽपि वृत्तिर्ननु भवत्येव, यथा-- देवदत्तस्य गुरुकुलमिति॥

---

सूत्रम्

काशिका-वृत्तिः

कृञो हेतुताच्छील्याऽनुलोम्येषु ३।२।२०

कर्मणि उपपदे करोतेः धातोः टप्रत्ययो भवति हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने। हेतुः ऐकान्तिकं करणम्। ताच्छील्यं तत्स्वभावता। आनुलोम्यम् अनुकूलता। हेतौ तावत् शोककरी कन्या। यशस्करी विद्या। कुलकरं धनम्। ताच्छील्ये श्राद्धकरः। अर्थकरः। आनुलोम्ये प्रैषकरः। वचनकरः। एतेसु इति किम्? कुम्भकारः। नगरकारः।

लघु-सिद्धान्त-कौमुदी

कृञो हेतुताच्छील्यानुलोम्येषु ७९७, ३।२।२०

एषु द्योत्येषु करोतेष्टः स्यात्॥

न्यासः

कृञो हेतुताच्छील्यानुलोम्येषु। , ३।२।२०

हेत्वादय एते, नोपपदानि। यदि ह्युपपदानि स्युः, "शमि धातोः संज्ञायाम्" ३।२।१४ इत्यत्र धातुग्रहणमनर्थकं स्यात्। तद्धि कृञो हेत्वादिषु टप्रतिषेधार्थं कृतम्। यद्येषामुपपदत्वं स्याट्टप्रत्ययस्य प्राप्तिरेव नास्तीति धातुग्रहणमनर्थकं स्यात्।अतो नैवामुपपदत्वम्, नापि प्रत्ययार्थत्वम्; "कत्र्तरि कृत्" ३।४।६७ इति कर्त्तुः प्रत्ययार्थत्वात्। न च तैर्बाधा युक्ता, विरोधाभावात्। तस्मात् प्रत्ययार्थविशेषमत्वमेषां युक्तम्। तत्र कत्र्तरि प्रत्ययो भवति यस्मिन्नभिधीयमाने तद्विशेषो हेत्वादयो गम्यन्ते। अत एवाह-- "हेतौ ताच्छील्ये आनुलोम्ये च गम्यमाने" इति। "हेतुरैकान्तिकं कारणम्" इति। एतेन लौकिकहेतोग्र्रहणम्, न पारिभाषिकस्येति दर्शयति। पारिभाषिको हेतुः स्वतन्त्रस्य कर्त्तुः प्रयोजकः, यदि तस्येह ग्रहणं स्यात कृञ इति नोपपद्यते; न ह्यण्यन्तात् प्रयोजककत्र्तरि प्रयोजक इत्पद्यते, अपि तु ण्यन्तादन्तर्भावितण्यर्थात् प्रत्यय उत्पद्यत इति चेत्? नैतदस्ति; टप्रत्ययान्तण्ण्यर्थस्याप्रतीतेः। ननु च लौकिकस्य हेतोग्र्रहणे सति निमित्ततया कत्र्ता विशिष्यते, तच्चायुक्तम्; न हि कर्त्तुरनिमित्वमस्ति यद्विशेषणेन व्यावर्त्येत? नैष दोषः सिद्धे कर्त्तुर्हि निमित्तत्वे

पुनर्हेतुशब्द उपादीयमान ऐकान्तिकत्वं बोधयतीति--यः कत्र्ता यस्याः ऐकान्तिको हेतुरिति। अत एवोक्तम्-- "हेतुरैकान्तिकं कारणम्" इति। आनुलोम्यम् = अनुकूलयामीत्याराध्यचित्तानुप्रवत्र्तनम्। "यशस्करी"इति। "अतः कृकमिकंस" ८।३।४६ इत्यादिना विसर्जनीयस्य सत्वम्॥

बाल-मनोरमा

कृञो हेतुताच्छील्यानुलोम्येषु ७४८, ३।२।२०

कृञो हेतु। हेतुः-- कारणम्। आनुलोम्यम्-- आराध्यचित्तानुवर्तनम्। द्योत्येष्विति। कर्तुरेव प्रत्ययवाच्यत्वादिति भावः। हेत्वादिषूपपदेष्विति तु नार्थः, व्याख्यानात्। कर्मण्युपपदे इत्यपि द्रष्टव्यम्। "कुप्वो"रिति जिह्वामूलीयमाशङ्क्याह-- अत-कृकमीति। हेतावुदाहरति-- यशस्करी विद्येति। विद्या यशोहेतुः। श्राद्धकर इति। श्राद्धक्रियाशील इत्यर्थः। वनकर इति। गुर्वादिवचनानुवर्तीत्यर्थः।

बाल-मनोरमा

नाडीमुष्ट�ओश्च ७५८, ३।२।२०

नाडीमुष्ट()ओश्च। यथासङ्ख्यं नेष्यते इति। इदं तु भाष्ये स्पष्टम्। घटीखारीत्यादि स्पष्टम्।

तत्त्व-बोधिनी

कृञो हेतुताच्छील्यानुलोम्येपु ६२४, ३।२।२०

कृञो हेतु। हेतुरिह लोकिको न तु तत्प्रयोजको हेतुश्चे"ति कृत्रिमः, केवले कृञि तदसंभवात्। द्योत्येष्विति। न तु वाच्येषु, "कर्तरि कृ" दित्यस्य बाधानुपत्तेरिति भावः। हेत्वादिषु क्रमेणोदाहरति-- यशस्करीत्यादि। एषु किम्?। कुम्भकारः। इह प्रसिद्धतरत्वाद्व्यनुबन्धोऽपि करोतिरेव गृह्रते, न तु कृञ् हिंसायामिति। हेतुः-- कारणम्। आनुलोम्यमाराध्यित्तानुवर्तनम्।

---

सूत्रम्

काशिका-वृत्तिः

दिवाविभानिशाप्रभाभास्कारान्तानन्ताऽदिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ३।२।२१

कर्मणि सुपि इति च द्वयम् अप्यनुवर्तते। तत्र यथायोगं सम्बन्धः। दिवाऽअदिषु उपपदेषु करोतेर् धातोः टप्रत्ययो भवति। अहेत्वाद्यर्थ आरम्भः। दिवाशब्दो अधिकरणवचनः सुपि इत्यस्य विशेषणम्। दिवा करोति प्राणिनशचेष्टायुक्तानिति दिवाकरः। विभां करोति इति विभाकरः। निशाकरः। प्रभाकरः। भास्करः। सकारस्य निपातनाद् विसर्जनीयजिह्वामूलीयौ न भवतः। कारकरः। अन्तकरः। अनन्तकरः। आदिकरः। बहुकरः। नान्दीकरः। किङ्करः। लिपिकरः। लिबिकरः। बलिकरः। भक्तिकरः। कर्तृकरः। चित्रकरः। क्षेत्रकरः। सङ्ख्या एककरः, द्विकरः, त्रिकरः। जङ्घाकरः। बाहुकरः। अहस्करः। यत्करः। तत्करः। धनुष्करः। अरुष्करः। किंयत्तद्बहुषु कृञो ऽज्विधानम्। किङ्करा। यत्करा। तत्करा। बहुकरा। अथवा अजादिषु पाठः करिस्यते।

न्यासः

दिवाविभानिशाप्रबाभास्करान्तानन्तादिबहुनान्दीकिंकृलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु। , ३।२।२१

"यथायोगम्" इति। दिवाशब्दस्य सुपीति सम्बन्धः, तस्याधिकरणस्य प्रधानत्वात् कर्मत्वानुपपत्तेः। शेषाणां तु सत्त्वप्रधानत्वात् करोतिसम्बन्धे कर्म चोपपद्यत इति कर्मणीत्यनेन सम्बन्धः। "अहेत्वाद्यर्थ आरम्भः" इति। हेत्वादिषु पूर्वेणैव सिद्धत्वात्। "भास्करः" इति। कथं पुनरत्र सकारः, यावता सकारस्य रुत्वविसर्जनीययोः "कुप्वो क पौ च" ८।३।३७ इति विसर्जनीयजिह्वामूलीययोरन्यतरेण भवितव्यमित्याह-- "सकारस्य निपातनात्" इत्यादि। भास्करान्तेति यत्सकारस्योच्चारणं तदेव निपातनम्। "बहुकरः" इति। बहुशब्दो वैपुल्यवाची। "अहस्करः" इति। अहन्नित्यस्य "रोऽसुपि" ८।२।६९ इति नकारस्य रेफः, तस्य विसर्जनीयः। तस्य "अतः कृकमि" ८।३।४६ इत्यादिना सत्वम्। "धनुष्करः, अरुष्करः" इति। "इसुसोः सामर्थ्ये" ८।३।४४, "नित्यं समासेऽनुत्तरपदस्थस्य" ८।३।४५ इति षत्वम्। अथानन्तग्रहणं किमर्थम्, अन्तग्रहणादेवानन्तशब्देऽपि तदन्तविधिना भविष्यति? नैतदस्ति; सर्वस्मिन्नुपपदविधौ न हि तदन्तविधिरिष्यते। तथा हि "{ वार्तिककारः} पदकारः पठति-- "उपपदविधौ भयाढ()आदिग्रहणं तदन्तविधिं प्रयोजयति" (१।१।७२ वा।९) इति। एवं तर्हि नानतकरोऽनन्तकर इत्यन्तशब्देनापि नञ्समासो भविष्यति? नैवं शङ्क्यम्;स्वरे दोषः स्यात्। सति शिष्टे हि "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना प्रकृतिस्वरे हि नञ्स्वरः प्रसज्येत। तथा चानन्तकरशब्द आद्युदात्तः, "निपाता आद्युदात्ताः" (फि।सू।४।८०) इति नञ उदात्तत्वात्िष्यते च "{ गतिकारककोपपदात् कृत् इति सूत्रम्} गतिकारकोपपदानां कृत्" ६।२।१३८ इत्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। तस्मादनन्तग्रहणं कत्र्तव्यम्। "किंयत्तद्बहुष्वज्विधानम्" इत्यादि। किमित्यादिषूपपदेष्वज्विधानं कत्र्तव्यम्, तत्कथमिह टोऽप्यनुवत्र्तते? माण्डूकल्पुतिन्यायेनाजपि, विभाषाग्रहणमपि। तद्व्यवस्थितविभाषाविज्ञानात् किंयत्तद्बहुषु कृञोऽजेव भवति, शेषेषु दिवादिषु ट एव। अहेत्वाद्यर्थत्वाच्चारम्भस्य यदा हेत्वादयो विशेषा न विवक्ष्यन्तेतदा किंयत्तद्बहुषु कृञोऽज्विधानम्, तेषु विवक्षितेषु पूर्वसूत्रेण ट एव भवति। तथायं प्रयोग उपपन्नो भवति-- जातिरियं किंकरीति। किंकरणशीला किंकरी, न किञ्चिदपि करोति। निष्प्रयोजननेति यावत्॥

बाल-मनोरमा

दिवाविभानिशाप्रबाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ७४९, ३।२।२१

दिवाविभा। दिवा, विभाष निशा, प्रभा, भास्, कार, अन्त,अनन्त, आदि, बहु, नानदी, किम् लिपि लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र , सङ्ख्या, जङ्घा, बाहु, अहर्, यद् , तद्, धनुस्रुस्-- एषां सप्तमविंशतेद्र्वन्द्वात्सप्तमी। एष्विति। "उपपदेष्वि"ति शेषः। अहेत्यादिष्वपीति। हेतुताच्छील्यानुलोम्येषु अगम्येष्वपीत्यर्थः। हेत्वादिग्रहणस्य अननुवृत्तेरिति भावः। एतेन अहेत्वाद्यर्थमिदं सूत्रमुक्तं भवति। अत्र कर्मणीति सुपति चानुवृत्तं यथायोगमन्वेति। दिवाकर इति। दिवेत्याकारान्तमव्ययमह्नीत्यर्थे। तस्याऽधिकरणशक्तिप्रधानस्यापि वृत्तिविषये कर्मत्वं बोध्यम्। दिवा = अहनि अर्थात् प्राणिनश्चेष्टायुक्तान् करोतीति वा विग्रहः। विभाकर इति। विभां करोतीति विग्रहः। निशाकर इति। निशां करोतीति विग्रहः। एवं प्रभाकरः। भाः करोतीति विग्रहे "अतः कृकमी"त्यत्राऽत इति तपरकरणात्सत्वस्याऽप्राप्तेः "कुप्वो"रिति जिह्वामूलीयविसर्गावाशङ्क्याह-- कस्कादित्वादिति। कारकरः, अन्तकरः, अनन्तकरः, आदिकर इति सिद्धवत्कृत्य आह-- बहुकर इति। ननु सङ्ख्याग्रहणेनैव सिद्धे बहुग्रहणं व्यर्थमित्यत आह-- बहुशब्दस्येति। वैपुल्यवाचिनस्तस्य न सङ्ख्याशब्दत्वमित "बहुगमवतुडति सङ्ख्ये"त्यत्रोक्तम्। नान्दीकरः किहकर इति सिद्धवत्कृत्य आह-- लिपिलिशब्दाविति। तथा च लिपिकरः लिबिकरः क्षेत्रकर इत्यन्तं सिद्धवत्कृत्य आह-- सङ्ख्येति। "उदाह्रियते" इति शेषः। जङ्घाकरः बाहुकर इति सिद्धवत्कृत्य अहस्करशब्दे "कुप्वो"रिति जिह्वामूलीयविसर्गावाशङ्क्याह-- कस्कादित्वादिति। नञि जहातेरुत्पन्ने अहन्शब्दे हन्शब्दस्योत्तरपदतया तद्विसर्गस्य उत्तरपदस्थत्वात् "अतः कृकमी"त्यस्य न प्राप्तिरिति भावः। धनुष्करशब्दे आह-- नित्यं समास इति। प्रत्ययवयवत्वात् "इदुदुपधस्य चे"त्यस्य न

प्राप्तिरिति भावः। कृञोऽज्विधानमिति। टस्याऽपवादः। किङ्करेति। टप्रत्यये तु टित्त्वान्ङीपस्यादिति भावः। हेत्वादिषु पूर्वविप्रतिषेधाश्रयणस्य निर्मूलत्वादिति भावः। तर्हि किङ्करीति कथमित्यत आह-- पुंयोगे ङीषिति। कर्मणि भृतौ। कर्मणीत्यनुवृत्तौ पुनः कर्मग्रहणं तु कर्मशब्दस्वरूपग्रहणाऽर्थम्। कर्मकरो भृतक इति। वेतनं गृहीत्वा यः परार्थं कर्म करोति स भृतक इत्युच्यते।

तत्त्व-बोधिनी

दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ६२५, ३।२।२१

दिवाविभा। ननु अन्तकरशब्देन नञ्समासे स्वीकृतेऽपीष्टसिद्धौ सूत्रे त्वन्तशब्दात्पृथगनन्तग्रहणं व्यर्थमिति चेत्। अत्राहुः-- स्वरे तु विशेषोऽस्ति। नञ्समासे हि अव्ययपूर्वपदप्रकृतिस्वरेणाऽन्तोदात्त्वमिति। दिवाकर इति। दिवा = दिवसं करोतीति विग्रहः। दिवाभूता रात्रिरित्यादाविव दिवाशब्दस्य वृत्तिविषये शक्तिमत्परत्वात्। मूलेऽनुक्तान्यपि कानिचिदुदाहरणानि ऊह्यानि। कर एव कारः। प्रज्ञादित्वादण्। कारं करोतीति कारकरः,आदिकरः, नान्दीकरः, किंकरः, बलिकरः भक्तिकरः कर्तृकरः चित्रकरः, क्षेत्रकरः, जङ्घाकरः , बाहुकर इति।

* किंयत्तद्बहुषु कृञोऽज्विधानम्। वार्तिकमिति-- कैयटहरदत्तादिरीत्योक्तम्। माधवस्तु इष्टिरियमित्याह। पुंयोगे ङीषिति। यत्तु न्यासकृतोक्तं-- "हेत्वादिषु पूर्वसूत्रेण ट एव भवति, तेन किङ्करणशीला किङ्करीत्युपपन्नं भवतीत"ति तन्नादर्तव्यम्, परत्वादचा टचो बाधितत्वात्, पूर्वविप्रतिषेधस्य निर्मूलत्वाच्चेति भावः। वृत्तौ तु पक्षान्तरमप्युक्तम्-- "अथवा पचादिषु पाठः करिष्यते" इति। "दिवाविभे"त्यस्मिन् सूत्रे किमादिग्रहणमनीय पचादिष्वेव "किंयत्तद्बुहुषु कृञः" इति पठितव्यं, वार्तिकमपीत्थमेव नेयमिति तस्याशयः। अस्मिन्पक्षे कर्मण्यणं बाधित्वा चरितार्थमिदं वनं हेत्वादिविवक्षायां परत्वाट्टेन बाध्यते, तेन पुंयोगं विनापिकिङ्करी स्यादेव, पुंयोगविवक्षायां तु निर्विवादो ङीष्, "किंयत्तद्बहुष्वज्वे"ति प्रक्रियायां विकल्पोक्तिस्त्वाकरविरुद्धत्वात्कर्मण्यणोऽपि पक्षे प्रसङ्गाचाचऽयुक्तैव। न चाऽजभावे "दिवाविभे"ति टः स्यादिति वाच्यम्, सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात्। अथवा सूत्रे किमाद्यपनयनं मास्त्विति प्रौढिवादेन प्रक्रियाग्रन्थः प्रवृत्त इति स्वीक्रियते। तथा च हेत्वाद्यविवक्षायां "किंयत्त" दिति व#आर्तिकेनाऽच्, तद्विवक्षायां तु परत्वाट्ट इति विषयविशेषे व्याख्याभेदात् फलितं विकल्पमाश्रित्य प्रक्रियायामज्वेति प्राचोक्तमिति स्थितस्य गतिः समर्थनीया।

---

सूत्रम्

काशिका-वृत्तिः

कर्मणि भृतौ ३।२।२२

कर्मणि इति स्वरूपग्रहनम्। करमशब्दे उपपदे कर्मवाचिनि करोतेः टप्रत्ययो भवति भृतौ गम्यमानायाम्। भृतिः वेतनं, कर्मनिर्वेशः। कर्म करोति इति कर्मकरः भृतकः इत्यर्थः। भृतौ इति किम्? करकारः।

न्यासः

कर्मणि भृतौ। , ३।२।२२

"कर्मणीति स्वरूपग्रहणम्" इति। कुत एतत्? कर्मग्रहणसमाथ्र्यात्। यदि पारिभाषिकस्य कर्मणो ग्रहणमिह स्यात् कर्मग्रहणमनर्थकं स्यात्; कर्माधिकारात्। करोतेश्च सकर्मकत्वात् तेनैव सम्बद्धो भविष्यति। तथा च प्रागुक्तम्-- कर्मणि

सुपीति द्वयमप्यनुवत्र्तते, तत्र सकर्मकेषु कर्मणीत्येतदुपतिष्ठते, अन्यत्र सुपीति। तस्मात् स्वरूपग्रहणमेवैतत्। "कर्मनिर्देशः"इति। कर्म व्यापारः, तस्य निर्देशः = मूल्यम्॥

तत्त्व-बोधिनी

कर्मणि भृतौ ६२६, ३।२।२२

कर्मणि भृतौ। भृतिर्वेतनम्। कर्मानुवृत्तौ पुनः कर्मग्रहणात्स्वरूपपरतेत्याह--कर्मशब्द इति।

---

सूत्रम्

काशिका-वृत्तिः

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ३।२।२३

शब्दादिषु उपपदेषु करोतेः टप्रत्ययो न भवति। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकारः। चाटुकारः। चटुकारः। सूत्रकारः। मन्त्रकारः। पदकारः।

न्यासः

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु। , ३।२।२३

"हेत्वादिषु टः प्राप्तः" इति। "कृञो हेतु" ३।२।२० इत्यादिना॥

बाल-मनोरमा

न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ७५०, ३।२।२३

न शब्दश्लोक। शब्द, श्लोक, कलह, गाथा, वैर, चाटु, सूत्र, मन्त्र, पद- एषां नवानां द्वन्द्वः। हेत्वादिष्विति। "कृञो हेतुताच्छील्यानुलोम्येषु" इति प्राप्तः टप्रत्ययोऽनेन प्रतिषिध्यते इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

स्तम्बशकृतोरिन् ३।२।२४

स्तम्ब शकृतित्येतयोः कर्मणोरुपपदयोः इन्प्रत्ययो भवति। व्रीहिवत्सयोरिति वक्तव्यम्। स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः। व्रीहिवत्सयोः इति किम्? स्तम्बकारः। शकृत्करः।

न्यासः

स्तम्बशकृतोरिन्। , ३।२।२४

"व्रीहिवत्सयोरिति वक्तव्यम्" इति। कर्तृविशेषमं व्रीहिवत्सग्रहणम्। अनेन सूत्रेण य इन् विधीयते स व्रीहिवत्सयोः कत्र्रोर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- इहापि विभाषेत्यनुवत्र्तते, सा च व्यवस्थितविभाषा। तेन व्रीहिवत्सयोः कत्र्रोरेव भविष्यति, नान्यत्र। नित्यत्वादुत्तरपदादाद्युदात्तत्वम्॥

बाल-मनोरमा

स्तम्बशकृतोरिन् ७५१, ३।२।२४

स्तम्बशकृतोरिन्। स्तम्बे शकृति च कर्मण्युपपदे कृञ इन् स्यात्। नकार इत्। व्रीहिवत्सयोरिति। व्रीहौ वत्से च

कर्तरीत्यर्थः। स्तम्बशकृतोर्यथासङ्ख्यमन्वयः। स्तम्बकरिर्व्रीहिरिति।स्तम्बं तृणनिचयं करोतीति विग्रहः।

तत्त्व-बोधिनी

स्तम्बशकृतोरिन् ६२७, ३।२।२४

* व्रीहिवत्सयोरिति वक्तव्यम्। स्तम्बकरिरित्यादि। इनो नित्त्वात् कृदुतत्रपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तम्।

---

सूत्रम्

काशिका-वृत्तिः

हरतेर् दृतिनाथयोः पशौ ३।२।२५

दृति नाथ इत्येतयोः कर्मणोरुपपदयोः हरतेर् धातोः पशौ कर्तरि इन् प्रत्ययो भवति। दृतिं हरति दृतिहरिः पशुः। नाथहरिः पशुः। पशौ इति किम्? दृतिहारः। नाथहारः।

न्यासः

हरतेर्दृतिनाथयोः पशौ। , ३।२।२५

"पशौ कत्र्तरि" इति। एतेन पशुग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणमिति दर्शयति। प्रत्ययार्थत्वं तु "कत्र्तरि कृत्" ३।४।६७ इति वचनात्। कुतः पुनरेतदवसितम्-- प्रत्ययार्थस्य विशेषणमेवेति, न पुनर्बाधकमेवेति? तदुच्यते-- धातोः प्रत्ययस्य विधानात् तदर्थस्य येन सम्बन्धस्तत्र वाच्ये प्रत्ययेन भवितव्यम्। धात्वर्थः = क्रिया तस्याश्च साधनेन सम्बन्धः, न वस्तुस्वरूपेण। साधनञ्च शक्तिः, न वस्तुस्वरूपम्। पशुशब्देन वस्तुस्वरूपेण स्वार्थमाचष्टे। न शक्तिस्वरूपेणेति। तेनाशक्तिस्वरूपे प्रत्याय्यमानः पशुर्नार्हति प्रत्ययार्थो भवितुम्। सोऽप्रत्ययार्थः सन्नशक्तित्वात् कथमिमं प्रत्ययार्थ बाधेत। तस्मात् प्रत्ययार्थः, तेन कत्र्तरि विशिष्यत इति युक्तमुक्तम्-- पशौ कत्र्तरीति। एष न्यायोऽन्यत्रापि प्रत्ययार्थविशेषणे द्रष्टव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

फलेग्रहिरात्मम्भरिश् च ३।२।२६

फलेग्रहिः आत्मम्भरिः इत्येतौ शब्दौ निपात्येते। फलशब्दस्य उपपदस्य एकारान्तत्वम् इन्प्रत्ययश्च ग्रहेर् निपात्यते। फलानि गृह्णाति इति फलेग्रहिर् वृक्षः। आत्मशब्दस्य उपपदस्य मुमागम इन्प्रत्ययश्च भृञो निपात्यते। आत्मानं बिभर्ति आत्मम्भरिः। अनुक्तसमुच्चयार्थश्चकारः। कुक्षिम्भरिः। उदरम्भरिः।

न्यासः

फलेग्रहिरात्मम्भरिश्च। , ३।२।२६

बाल-मनोरमा

फलेग्रहिरात्मम्भरिश्च ७५३, ३।२।२६

फलेघिः। ग्रहेरिन्निति। नतु "गृहू ग्रहणे" इति ऋदुपधादित्यर्थः। मुमागम इति। आत्मन्शब्दस्य नलोपे कृते अकारादुपरि मुमित्यर्थः। चकारोऽनुक्तसमुच्चयार्थ इति मत्वा आह-- चात्कुक्षम्भरिरिति। भाष्ये तु "भृञः कुक्ष्यात्मनोर्मुम् चेति

वक्तव्य"मिति स्थितम्। "स्यादवन्ध्यः फलेग्रहिः" इति वृक्षपर्याये अमरः। "उभावात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके" इति विशेष्यनिघ्नवर्गे। उदरम्भरिशब्दं समर्थयितुमाह-- चान्द्रास्त्विति।

तत्त्व-बोधिनी

फलेग्रहिरात्मम्भरिश्च ६२८, ३।२।२६

कुक्षिम्भरिरिति। एवं च "गिरिस्तु कनकाचलः, कति न सन्ति चाश्मव्रजाः, किटिस्तु धरणीधरः,कति न सन्ति भूदारकाः। मरुत्तु मलयानिलः, कति न सन्ति झञ्झानिलाः,प्रभुस्तु विबुधाश्रयः, कति न सन्ति कुक्षिम्भराः"इति केषांचित्प्रयोगः प्रामादिक एव।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि वनसनरक्षिमथाम् ३।२।२७

वन षण सम्भक्तौ, रक्ष पालने, मन्थ विलोडने, एतेभ्यः कर्मण्युपपदे छन्दसि विषये इन्प्रत्ययो भवति। ब्रह्मवनिं त्वा क्षत्रवनिं सुप्रजावनिं रायस्पोषवनिं पर्यूहामि। गोसनिं वाचमुदेयम्। यौ पथिरक्षी श्वानौ। हविर्मथीनामभ्या ३ विवासताम्।

न्यासः

छन्दसि वनसनरक्षिमथाम्। , ३।२।२७

"ब्राह्मवनिं त्वा क्षत्रवनिम्िति। ब्राह्म वनति, क्षत्रं वनतीत्यर्थविवक्षायामिन्प्रत्ययः। तदन्ताद्द्वितीया, तस्याः "सुपां सुलुक्" ७।१।३९ इति लुक्। युष्मच्छब्दाद्द्वितीयादिभक्तेः "त्वामौ द्वितीयायाः" ८।१।२३ इति त्वादेशः। "गोसनिम्" इति। गां सनतीत्यर्थ इन्प्रत्ययः। तदन्तादमि परे पूर्वरूपत्वम्। पन्थानं रक्षत इति "पथिरक्षी"। द्विवचनमेतत्। पूर्वसवर्णदीर्घत्वम्। "हविर्मथीनाम्" इति। हविर्मथन्तीति विगृह्य प्रत्ययः। तदन्तात् षष्ठ()आ बहुवचनम्॥

---

सूत्रम्

काशिका-वृत्तिः

एजेः खश् ३।२।२८

एजृ कम्पने इत्यस्मात् ण्यन्तात् कर्मण्युपपदे खश् प्रत्ययो भवति। खकारो मुमथः। शकारः सार्वधातुकसंज्ञार्थः। अङ्गमेजयति अङ्गमेजयः। जनमेजयः। खश्प्रयये वात्शुनीतिलशर्धेष्वजधेट्तुदजहातीनाम् उपसङ्ख्यानम्। वातमजा मृगाः। शुनिन्धयः। तिलन्तुदः। शर्धञ्जहा माषाः।

लघु-सिद्धान्त-कौमुदी

एजेः खश् ७९९, ३।२।२८

ण्यन्तादेजेः खश् स्यात्॥

न्यासः

एजेः खश्। , ३।२।२८

ण्यन्तात्" इति। एतेन प्रकृत्यन्तरस्यायमेजेरिका निर्देश इत्याशङ्कां निरस्यति। कुतः पुनण्र्यन्तमवसितम्? खशः

शित्करणात्। प्रकृत्यन्तरस्य ग्रहणे शित्करणमनर्थकं स्यात्। तद्धि सार्वधातुके सति तदाश्रयस्य शपो विधिर्यथा स्यादित्येवमर्थं क्रियते। न चैजेः प्रकृत्यन्तरस्य सत्यसति वा शपि कश्चिद्विशेषोऽस्ति, ण्यग्रहणे तु सति शित्करणमर्थवद्भवति। असति तस्मिन् णिलोपः स्यात्, त()स्मस्तु सति सार्वधातुनिबन्धने शपि णिलोपो न भवति। आर्धधातुकत्वं णिलोप इत्येके, एतच्चायुक्तम्; उत्तरार्थं हि शित्करणं स्यात्। असति हि तस्मिन्नुत्तरसूत्रे धेट आत्त्वं स्यात्, ध्मश्च धमादेशो न स्यात्। तथा च स्तनन्धयः, नासिकन्धम इति न सिध्येत्। तस्माद्व्याख्यानादेव ण्यन्तत्वमवसेयम्। "खकारोऽयं मुमर्थः"इति। "खित्यनव्ययस्य" ६।३।६५ इत्यधिकृत्य "अरुर्द्विषदजन्तस्य" ६।३।६६ इति मुमागमो यथा स्यात्। "शकारः सार्वधातुकसंज्ञार्थः" इति। "तिङशित् सार्वधातुकम्" ३।४।११३ इति सार्वधातुकसंज्ञा यथा स्यात्। "अङ्गमेजयः" इति। शप्, गुणायादेशौ। "खश्प्रकरणे" इत्यादि। वातादिषूपपदेषु "अज गतिक्षेपणयोः" (धा।पा।२३०), "धेट् पाने" (धा।पा।९०२), "तुद व्यथने" (धा।पा।१२८१),"ओहाक् त्यागे" (धा।पा।१०९०)--इत्येभ्यो धातुभ्यः खश्प्रकरण उपसंख्यानं कत्र्तव्यम्। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम् -- "नाडीमुष्ट()ओश्च" ३।२।२० इत्यत्र चकारः, स चानुक्तसमुच्चयार्थः। तेन वातादिषूपपदेष्वजादिभ्यो धातुभ्यः खश् भविष्यति। "शुनिन्धयः" इति। "खित्यनव्ययस्य" ६।३।६५ इति ह्रस्वत्वम्। "शद्र्धञ्जहाः" इति। जुहोत्यादिभ्यः शपः श्लुः, "श्लौ"६।१।१० इति द्विर्वचनम्, "श्नाभ्यसत्योरातः" ६।४।११२ इत्याकारलोपः॥

बाल-मनोरमा

एजेः खश् ७५४, ३।२।२८

#एजेः खश्। एजेरिति ण्यन्तस्य एजृधातोग्र्रहणम्, न त्विका निर्देशः, व्याख्यानादिति भावः। खकारशकारावितौ। कर्मण्युपपदे इत्यपि ज्ञेयम्।

तत्त्व-बोधिनी

एजेः खश् ६२९, ३।२।२८

एजेः खश्। एजृ कम्पने। एजेरिति ण्यन्तस्य निर्देशो, न तु शुद्धस्येका निर्देशः, खशः शित्करणाल्लिङ्गात्। तद्धि सार्वधातुकत्वे सति शब्यथा स्यादिति। न चशुद्धस्य [शब्दस्य] शपि सत्यसति वा विशेषोऽस्ति। न चोत्तरार्थं शित्त्वमिति वाच्यम्, इहाऽर्थवत्त्वे संभवति केवलोत्तरार्थत्वस्याऽन्याय्यत्वात्। तदेतदाह--- ण्यन्तादेजेरिति।

---

सूत्रम्

काशिका-वृत्तिः

नासिकास्तनयोर् ध्माधेटोः ३।२।२९

नासिकास्तनयोः कर्मणोरुपपदयोः ध्माधेटोर्धात्वोः खश् प्रत्ययो भवति। यथासङ्ख्यमत्र नेष्यते। स्तने धेटः। सत्नन्धयः। नासिकायां तु ध्मश्च धेटश्च। नासिकन्धमः, नासिकन्धयः। तच् च एतन् नासिकस्तनयोरिति लक्षणव्यभिचारचिह्नादल्पाच्तरस्य अपूर्वनिपातनाल् लभ्यते। धेटः टित्वात् स्त्रियां ङीप् प्रत्ययो भवति। स्तनन्धयी।

न्यासः

नासिकास्तनयोर्ध्माधेटोः। , ३।२।२९

"स्तने धेटः" इत्यादिना यथायोगमुपपदसम्बन्धं दर्शयन्नुदाहरणानि दर्शयति। "नासिकन्धमः" इति। पाघ्रादिसूत्रेण ७।३।७८ धमादेशः। "तच्चैतत्" इत्यादि। यथासंख्याभावे हेतुमाह। स्तनशब्दो हि नासिकापेक्षयल्पाच्तरः, तस्य

पूर्वनिपाते कर्त्तव्ये योऽयमपूर्वनिपातः कृतः सलक्षमव्यभिचारं सूचयति। यथेह पूर्वनिपातशास्त्रं व्यभिचरति, स्वविषये न प्रवर्तते, तथा यथासंख्यलक्षणमपीति। अतोऽस्माल्लक्षणव्यभिचारचिह्नाद्यथासंख्याभावो लभ्यते॥

बाल-मनोरमा

नासिकास्तनयोर्ध्माधेटोः ७५७, ३।२।२९

नासिका। नसिका, स्तन अनयोर्द्रवन्द्वात्सप्तमी। ध्मा, धेट् अनयोः द्वन्द्वात्पञ्चम्यर्थे षष्ठी। "ख"शिति शेषः। यथासङ्ख्यमन्वये प्राप्ते आह-- अत्र वार्तिकमिति। धेटष्टित्त्वादिति। यद्यपि "टिड्ढे"त्यत्र टिदाद्यन्तं यददन्तं प्रातिपदिकमिति व्याख्यातम्, तथापि टित्त्वस्यावयवे अचरितार्थत्वान्ङीबिति हरदत्तः। अत्र यद्वक्तव्यं तत् "प्राघ्राध्माधेट्()दृशः शः" इत्यत्रोक्तम्। नासिकन्धम इति। ह्रस्वे कृते मुम्। नासिकाया ध्मश्चेति। चकाराद्धेटश्चेति लभ्यते। तस्योदाहरति-- नासिकन्धय इति।

तत्त्व-बोधिनी

नासिकास्तनयोर्ध्माधेटोः ६३२, ३।२।२९

* स्तने धेटोनासिकायां ध्मश्चेति वाच्यम्। धेटष्टित्त्वादिति। अवयवे अचरितार्थत्वादिति भावः। खश्प्रत्यन्तादेव धेटो ङीबिष्टो नान्यत इति वद्र्धमानक्षीरस्वामिहरदत्तायः। तेन "पाघ्राध्माधे" डिति शप्रत्यये "आतोऽनुपसर्गे कः" इति कप्रत्यये च टाबेव। धया--कन्या। गां धयतीति गोधा। अत्र च संप्रदाय एव शरणम्। नासिकंधम इति। "पाघ्राध्मे"ति धमादेशः।

---

सूत्रम्

काशिका-वृत्तिः

नाडीमुष्ट्योश् च ३।२।३०

नाडी मुष्ति इत्येतयोः कर्मणोरुपपदयोः ध्माधेटोः खश्प्रत्ययो भवति। अत्र अपि घ्यन्तस्य अपूर्वनिपातो लक्षणव्यभिचारचिह्नम्। तेन सङ्ख्यातानुदेशो न भवति। नाडिन्धमः। मुष्टिन्धमः। नाडिन्धयः। मुष्टिन्धयः। अनुक्तसमुच्चयार्थश्चकारः। घटिन्धमः। घटिन्धयः। खारिन्धमः। खारिन्धयः। वातन्धमः पर्वतः। वातन्धयः।

न्यासः

नाडीमुष्ट�ओश्च।, ३।२।३०

"अत्रापि"इत्यादिना नाडीमुष्टिशब्दो हि ध्यन्तः तस्य हि "द्वन्द्वे घि" २।२।३२ इति पूर्वनिपाते प्राप्ते योऽयमपूर्वनिपातः कृतः स पूर्वनिपातलक्षणव्यभिचारचिह्नम्, अत इहापि संख्यातानुदेशो न भवितीत्यपि सूचयति। अथ प्रत्येकमुपपदाभ्यां धातोः प्रत्येकं सम्बन्धः। स चोदाहरणेनैव वृत्तावभिव्यक्तः। "अनुक्तसमुच्चयार्थश्चकारः" इति। तेन घटीखारीवातशब्देष्वप्युपपदेषु ध्माधेटोः खश् भवति। यद्येवम्, वैषम्यादेव संख्यातानुदेशो न भविष्यतीति निरर्थकस्तदभावार्थो घ्यन्तस्यापूर्वनिपातः? उच्यते-- वाक्ये भेदेन द्वे ह्त्र, एकेन वाक्येन नाडीमुष्टी-- इत्येतयोर्ध्माधेटोः खश् भवतीति। अतः "नाडीमुष्ट्योः" इत्येकं वाक्यम्, चकारस्यानुक्तसमुच्चयार्थत्वात् घटीखारीवातशब्देष्वप्युपपदेषु ध्माधेटोः खश् भवतीति द्वितीयम्। तत्र पूर्वस्मिन् वाक्ये समानत्वमस्तीति स्यादेव संख्यातानुदेशः॥

तत्त्व-बोधिनी

कमेर्णिङः १२६, ३।२।३०

आम्- कारयामास। अन्त-- गण्डयन्तो मण्डयन्तः। "तृ()भूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चे"त्यौणादिको

झच्। "झोऽन्तः"। "स्पृहिगृही"त्यालुच्। स्पृहयालुः। "श्रुदक्षिस्पृहिगृहिभ्यः" इत्यौणादिक आय्यः। "स्पृयाय्यः"। "स्तनिह्मषिपुषी"त्यौणादिक एव इत्नुच्। स्तनयित्नुः। "णेश्छन्दसीति" इष्णुच्। "वीरुधः पारयिष्णवः"।

तत्त्व-बोधिनी

नाडीमुष्ट�ओश्च ६३३, ३।२।३०

नाडीमुष्ट()ओश्च। यथासङ्ख्यनेति। एतच्चेहैव सूत्रे भाष्ये, वृत्तौ च स्थितम्। यत्तु "यथासङ्ख्य"मिति सूत्रे नाडीमुष्ट()ओरित्युदाह्मतं भाष्ये तत्प्राप्तमात्राभिप्रायेणेत्येके। शब्दकौस्तुभे तु मतभेदेन तद्बोध्यमिति स्थितम्।

* घटीखारीखरीषूपसङ्ख्यानम्। घटीखारीखरीष्वति।जयादित्यस्तु वातशब्दमप्युदाजहार-- वातंधमः वातंधय इति, तत्तु भाष्यादौ न दृश्यत इति मूलेऽत्रोपेक्षितम्।

---

सूत्रम्

काशिका-वृत्तिः

उदि कूले रुजिवहोः ३।२।३१

रुजो भङ्गे, वह प्रापणे इत्येताभ्याम् उत्पूर्वाभ्यां कूले कर्मणि उपपदे खश् प्रत्ययो भवति। कूलम् उद्रुजति इति कूलमुद्रुजो रथः। कूलमुद्वहः।

न्यासः

उदि कूले रुजिवहोः , ३।२।३१

"उदि" इति। सप्तमीयम्- उदि सति। तत्रोत्कूलशब्दयोर्विषयव्यवस्था द्रष्टव्या। "ते प्राग्धातोः" १।४।७९ इति वचनाद्धातोरनन्तरमुत्शब्दः, तस्मात् पूर्वः कूलशब्द इति। अथ वा-- "{ उदिति-- मुद्रितः पाठः} उदीति परसप्तमी-- उदि परतः कूलशब्दस्योपपदत्व इति। अथोच्छब्दस्याप्युपपदसंज्ञा कस्मान्न भवति, प्रत्येकं सप्तम्युच्चारणात्? एषा ह्माचार्यस्य शैली यत्र प्रत्येकमुपपदत्वमस्ति तत्र समुदायात् सप्तमीमुच्चारयति, यथा-- "नाडीमुष्ट्योः ३।२।३० इति। इह तु विपर्ययः कृत इति न भवत्युपपदत्वम्। अपि च रुजिवहोः सकर्मकत्वात् कर्मणीतीहोपतिष्ठते। न चोच्छब्दसय् कर्मत्वं सम्भवति असत्त्ववाचित्वात्। कुतस्तस्योपपदत्वम्। "कूलमुद्रुजः" इति। तुदादित्वाच्छः" "कूलमुद्वहः" इति। शप्॥

बाल-मनोरमा

उदि कूले रुजिवहोः ७५९, ३।२।३१

उदि कूले। उदीति दिग्योगपञ्चम्यर्थे सप्तमी। रुजिवहोरिति पञ्चम्यर्थे षष्ठी। "रुजो भङ्गे" तुदादिः। अत्र रुजेः सकर्मकत्वात्कर्मण्युपपदे इति लब्धं, तेन कूलं विशेष्यते, न तू च्छब्दः, तस्याऽसत्त्ववाचित्वात्। तदाह-- उत्पूर्वाभ्यामित्यादि। कूलमुद्रुज इति। सुपो लुकि मुमिति भावः।

तत्त्व-बोधिनी

उदि कूले रुजिवहोः ६३४, ३।२।३१

उदि कूले। ननु कूलस्येवोच्छब्दस्यापि सप्तम्यन्त्वादुपपदत्वं सयात्ततश्च रुजिवहिभ्यां सह यथासङ्ख्यं स्यादिति चेत्। अत्राहुः- नाडीमुष्ट()ओरितिवल्लाघवादुत्कूलयोरिति वक्तव्ये उदीति व्यस्तोच्चारणान्नोपपदम्। एवं चोदीति पञ्चम्याः

स्थानेसप्तमी, रुजिवहोरिति तु पञ्चम्याःस्ताने षष्ठीति। एतच्च यथासङ्ख्यसूत्रे कैयटे स्पष्टम्। किंच रुजेः सकर्मकत्वात्कर्मणीत्युपतिष्ठते, तेन कूलं विशेष्यते, नोच्चबद्दः, असत्त्ववाचित्वनाऽसंभवात्। तदेतदाह-- उत्पूर्वाभ्यामित्यादिना।

---

सूत्रम्

काशिका-वृत्तिः

वहाभ्रे लिहः ३।२।३२

वह अभ्र इत्येतयोः करम्णोरुपपदयोः लिहेर् धातोः खश् प्रत्ययो भवति। वहं लेढि इति वहंलिहो गौः। अभ्रंलिहो वायुः।

न्यासः

वहाभ्रे लिहः। , ३।२।३२

"वहंलिहः" इति। "लिह आस्वादने" (धा।पा।१०१६) अदादित्वाच्छपो लुक्, "सार्वधातुकमपित्" १।२।४ इति ङित्वाद्गुणाभावः॥

बाल-मनोरमा

वहाभ्रे लिहः ७६०, ३।२।३२

वहाभ्रे लिहः। वहे अभ्रे च कर्मण्युपपदे लिहः खशित्यर्थः। वहशब्दस्य विवरणम्-- स्कन्ध इति। शपो लुगिति। खशः शित्त्वेन सार्वधातुकत्वात्कृतस्य शपो लुगित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

परिमाणे पचः ३।२।३३

परिमाणं प्रस्थादि, तस्मिन् कर्मण्युपपदे पचेः खश् प्रत्ययो भवति। प्रस्थं पचति प्रस्थंपचा स्थाली। द्रोणंपचः। खारिंपचः कटाहः।

न्यासः

परिमाणे पचः। , ३।२।३३

"प्रस्थम्पचा,द्रोणम्पचा" इति। प्रस्थद्रोणपरिमिते व्रीह्यादौ प्रस्थद्रोणशब्दावुपचारेण वत्र्तेते; न प्रस्थादावेव परिमाणविशेषे काष्ठादिमये। क्लेदवाची ह्यत्र पचिः। न च मुख्यस्य प्रस्थादेर्विक्लेदः सम्भवति, अतो न तस्य सम्बन्ध उपपद्यते। स्वरूपग्रहणमप्यत एव न भवति; न हि स्वरूपप्रधानेन परिमाणेन विक्लेदवचनस्य पचेः सम्बन्धः सम्भवति। यद्यपि हि प्रस्थादिशब्दः परिमेये वत्र्तते, तथापि परिमाणव्यपदेशो न तस्य विरुध्यते, प्रथमं परिमाणवृत्तित्वात्॥

बाल-मनोरमा

परिमाणे पचः ७६१, ३।२।३३

परिमाणे पचः। परिमाणं प्रस्थादि। तस्मिन् कर्मण्युपपदे पचेः खशित्यर्थः। खारिम्पच इति। "खित्यनव्ययस्य" इति ह्रस्वः। मुम्।

---

सूत्रम्

काशिका-वृत्तिः

मितनखे च ३।२।३४

मित नख इत्येतयोः कर्मणोरुपपदयोः पचेः खश् प्रत्ययो भवति। अपरिमाणार्थः आरम्भः। मितं पचति मितम्पचा ब्राह्मणी। नखंपचा यवागूः।

न्यासः

मितनखे च।, ३।२।३४

"अपरिमाणार्थ आरम्भः" इति। परिमाणे पूर्वेणैव सिद्धत्वात्। मितनखशब्दयोरपरिमाणवचनत्वात्। सर्वदैव हि मितशब्दः परिमेयद्रव्यवचनः , नखशब्दो हि प्राण्यङ्गवचनः॥

बाल-मनोरमा

मितनखे च ७६२, ३।२।३४

मितनखे च। मिते नखे च कर्मण्युपपदे पचेः खशित्यर्थः। नखानां विक्लित्त्यसंभवादाह-- पचिरत्रेति।

---

सूत्रम्

काशिका-वृत्तिः

विध्वरुषोस् तुदः ३।२।३५

विधु अरुसित्येतयोः कर्मणोरुपपदयोः तुदेर् धातोः खश् प्रत्ययो भवति। विधुन्तुदः राहुः। अरुन्तुदः।

न्यासः

विध्वरूषोस्तुदः।, ३।२।३५

"अरुन्तुदः" इति। अरुश्शब्दस्य "अरुर्द्विषदजन्तस्य" ६।३।६६ इत्युकारात् परो मुमागमः, संयोगान्तलोपः ८।२।२३, "मोऽनुस्वारः" ८।३।२३, "अनुस्वारस्य ययि परसवर्णः"८।४।५७ इतिपरसवर्णः॥

बाल-मनोरमा

वध्वरुषोस्तुदः ७६३, ३।२।३५

विध्वरुषोस्तुदः। विधु, अरुस् अनयोः कर्मणोरुपपदयोस्तुदः खशित्यर्थः। विधुंतुद इति। विधुश्चन्द्रः, तं तुदतीति विग्रहः। राहुरित्यर्थः। अरुस्शब्दे उकारादुपरि मुमि कृते सकारस्य संयोगान्तलोप इत्यर्थः। अरुन्तुद इति। अरुर्मर्म, तत्तुदन्तीति विग्रहः।

तत्त्व-बोधिनी

विध्वरुषोस्तुदः ६३५, ३।२।३५

विधुन्तुद इति। "अरुर्द्विषदजन्तस्य" इत्युकारात्परो मुम्। "तमस्तुराहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः"इत्यमरः। अरुन्तुद इति। "अरुन्तुदं तु मर्मस्पृक्" इत्यमरः। "व्रणोऽस्त्रियामीर्ममरुः" इति च।

---

सूत्रम्

काशिका-वृत्तिः

असूर्यललाटयोर् दृशितपोः ३।२।३६

असूर्य ललाट इत्येतयोः कर्मणोरुपपदयोः दृशितपोः धात्वोः खश् प्रत्ययो भवति। असूर्यंपश्या राजदाराः। ललाटंतपः आदित्यः। असूर्य इति च असमर्थसमासो ऽयं, दृशिना नञः सम्बन्धात्, सूर्यं न पश्यन्ति इति। गुप्तिपरं चैतत्। एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यम् अपि न पश्यन्ति इति।

न्यासः

असूर्यललाटयोर्दृशितपोः। , ३।२।३६

"असूर्यम्पश्याः" इति। प्राघ्रादिसूत्रेण ७।३।७८ पश्यादेशः। "दृशिना नञः सम्बन्धात्" इति। असामर्थ्य हेतुः। अत्र हि दर्शनं प्रतिषिध्यते,न तु सूर्य एव। तस्माद्()दृशिनैव नञः सम्बन्धः, न सूर्येणेत्यसामर्थ्यम्। "सूर्यं न पश्यन्ति" इति दृशिना नञः सम्बन्धं दर्शयति। यदा सूर्यः प्रतिषध्यते तदा न भवितव्यमेव प्रत्ययेन, अनभिधानात्। समासश्चायमसामर्थ्येऽपि भवति, गमकत्वात्। अस्मादेव वचनाद्वा। ननु च यथा राजदाराः सूर्यं न पश्यन्तीति तथान्यदपि परपुरुषादिकम्, तत्रायुक्तं सूर्येणैकेन विशेषणेनेत्यत आह-- "गुप्तिपरञ्चैतत्" इति। यतेतदसूर्यम्पश्या राजदारा इति वचनमेतद्()गुप्तिप्रधानम्; गुप्तिप्रतिपादनाय प्रयुक्तत्वात्। "एवं नाम" इत्यादिना गुप्तिपरत्वमस्य दर्शयति॥

बाल-मनोरमा

असूर्यललाटयोर्दृशितपोः ७६४, ३।२।३६

असूर्यललाट। दृशितपोरिति पञ्चम्यर्थे षष्ठी। असूर्ये ललाटे च कर्मण्युपपदे दृशेस्तपेश्च खशित्यर्थः। असूर्यमितीति। "असूर्यपश्या"इत्युदाहरणे असूर्यमित्यसमर्थसमासः सौत्र इत्यर्थः। कुतोऽसामर्थ्यमित्यत आह-- दृशिनेति। सूर्यं न पश्यन्तीत्यर्थे नञो दृशिनाऽन्वितत्वेन सूर्यशब्देनाऽन्वयाऽभावादित्यर्थः। ललाटन्तपःसूर्य इति। ललाटं तपतीति विग्रहः। सूर्य पश्यतो ललाटस्य अवश्यं तापादिति भावः।

तत्त्व-बोधिनी

असूर्यललाटयोर्दृशितपोः ६३६, ३।२।३६

असूर्यंपश्या इति। "पाघ्राध्मे"ति पश्यादेशः। गुप्तिपरं चेदम्। एवं नाम राजदारा गुप्ताः, यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति, किं पुनः परपुरुषमिति। तेन सत्यपि सूर्यदर्शन प्रयोगो न विरुध्यते। यदा तु सूर्याऽभावदर्शनमात्रं, सूर्येतरचन्द्रादेर्दर्शनं वा विवक्षितं तदा खश् न भवत्यनभिधानादिति न्यासकारादयः।

---

सूत्रम्

काशिका-वृत्तिः

उग्रम्पश्यैरम्मदपाणिन्धमाश् च ३।२।३७

उग्रम्पश्य इरम्मद पाणिन्धम इत्येते शब्दा निपात्यन्ते। उग्रं पश्यति इति उग्रम्पश्यः। इरया माद्यति इति इरम्मदः। पाणयो ध्मायन्ते एषु इति पाणिन्धमाः पन्थानः।

न्यासः

उग्रम्पश्येरम्मदपाणिन्धमाश्च। , ३।२।३७

"उग्रम्पश्य" इति। "कर्मण्यण्" ३।२।१ इति प्राप्ते दृशेः खश् निपात्यते। पूर्ववत् पश्यादेशः। "इरम्मदः"इति। "इरया माद्यति"इति। "मदी हर्षे" (धा।पा।१२०८)। तृजादिषु प्राप्तेषु खश् निपात्यते। तत्र दिवादित्वाच्छ्यनि प्राप्ते तदभावो निपात्यते। "पाणिन्धमाः" इति। अधिकरणे ल्युटि प्राप्ते खश् निपात्यते। पूर्ववद्धमादेशः।

बाल-मनोरमा

उग्रंपश्येरंमदापाणिन्धमाश्च ७६५, ३।२।३७

उग्रम्पश्य इति। खशि शप्, पश्यादेशः। इराशब्दस्य विवरणम्-- उदकमिति। इरम्मद इति। "खित्यनव्ययस्ये"ति ह्रस्वः। मदेर्दैवादिकत्वच्छ्यनमाशङ्क्य आह-- निपातनाच्छ्यन्नेति। पाणिन्धम इति। शपि "पाघ्रे"ति धमादेशः।

---

सूत्रम्

काशिका-वृत्तिः

प्रियवशे वदः खच् ३।२।३८

प्रिय वश इत्येतयोः करम्णोः उपपदयोः वदेः धातोः खच् प्रत्ययो भवति। प्रियं वदति इति प्रियंवदः। वशंवदः। चकारः खचि ह्रस्वः ६।४।९४ इति विशेषणार्थः। खकारो मुमर्थः। प्रत्ययान्तरकरणमुत्तरार्थम्। खच्प्रकरणे गमेः सुप्युपसङ्ख्यानम्। मितङ्गमो हस्ती। मितङ्गमा हस्तिनी। विहायसो विह च। विहायसा गच्छति विहङ्गमः। खच्च डिद्वा वक्तव्यः। विहङ्गः, विहङ्गमः। डे च विहायसो विहादेशो वक्तव्यः। विहगः।

लघु-सिद्धान्त-कौमुदी

प्रियवशे वदः खच् ८०१, ३।२।३८

प्रियंवदः। वशंवदः॥

न्यासः

प्रियवशे वदः खच्। , ३।२।३८

"चकारः "खचिह्रस्वः" इति विशेषणार्थः"इति। "खे ह्रस्वः" इत्युच्यमाने खश्यपि स्यात्। ननु चैकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति (व्या।प।५२) न भविष्यति? एवं तर्हि परिभाषाश्रयणाच्चकारकरणमेव लघ्विति च मन्यते। ननु च प्रियंवदो वशंवद इति खश्यपि सिद्ध्यति, किमर्थं प्रत्ययान्तरकरणमित्याह-- "प्रत्ययान्तरकरणमुत्तरार्थम्िति। "द्विषत्परयोस्तापेः" ३।२।३९ इत्यत्र खचि ह्रस्वस्तापेर्यथा स्यात्। णिलोपश्चेत्याद्यर्थं प्रत्ययान्तरं क्रियते। अथोत्तरत्रैव खच् कस्मान्न क्रियते? अत्रापि खज्भवतीति विज्ञानार्थम्। तेन गमेरपि सुप्युपपदे खच् सिद्धो भवति। यदि "खच्()प्रकरणे गमेः सुप्यपसंख्यानम्" (वा।२४७), तत्रोपसंख्यानशब्दस्य प्रतिपादनार्थं प्रत्ययान्तरं क्रियते। प्रतिपादनन्त्विदमेव वेदितव्यम्। "विहायसो विह च" इति। गमेर्विहायःशब्द उपपदे खच्प्रत्ययः, तत्सन्नियोगेन विहायःशब्दस्य विहादेशः। "खच्च डिद्वा वक्तव्यः" इति। डित्त्वाट्टिलोपः स्यात्, "विहायसो विह च" (वा।२४८) इत्यतोऽस्य भेदेन पाठात्। डित्त्वस्यानित्यत्वज्ञापानार्थम्; अन्यथा विहङ्गम इति न सिध्येत्। "डे च" इत्यादि। डप्रत्यये च गमेर्विहायसो विहादेशः। "विहगः" इति। न पुनरत्र डप्रत्ययः? अस्मादेव वचनाद्भवति। अथ वा वक्ष्यत्युत्तरतः "डप्रकरणेऽन्येष्वपि दृश्यते" (वा।२५६) इति॥

बाल-मनोरमा

प्रियवशे वदः खच् ७६६, ३।२।३८

प्रिये वशे च कर्मण्युपपदे वदधातोः खजित्यर्थः। खशि प्रकृते खज्विधेरुत्तरसूत्रे प्रयोजनं वक्ष्यते। गमेः सुपि वाच्य इति। "ख" जिति शेषः। ननु संज्ञायामित्यनुवृत्तौ "गमश्चे"ति वक्ष्यमाणसूत्रेणैव सिद्धे किमर्थमिदं वार्तिकमित्यत आह--- असंज्ञार्थमिदमिति। विहायस इति। विहायः शब्दः आकासे वर्तते। तस्मिन्नुपपदे गमेः खच्। "गमश्चे"ति वक्ष्यमाणसूत्रेण , पूर्ववार्तिकेन वा सिद्धः खच् "चे"त्यनूद्यते। प्रकृतेर्विहायश्शब्दस्य विहादेशो वाच्यः, सच खच् डिद्वा वाच्य इत्यर्थः। विहङ्ग इति। डित्त्वपक्षे तत्सामथ्र्यादभस्यापि टेर्लोपः। विहङ्गम इति। विहायसा गच्छतीति विग्रहः। भुजङ्गम इति। भुजैर्गच्छतीति विग्रहः। द्विषत्परयोः। "तप दाहे" चुरादिः, "तप सन्तापे" भ्वादिः। द्वयोरपि ण्यन्तयोस्तापेरिति निर्देशः। खच् स्यादिति। द्विषत्, पर अनयोः कर्मणोरुपपदयोस्तापेः खजित्यर्थः। द्विषत् तापि अ इति स्थिते आह--

तत्त्व-बोधिनी

प्रियवशे वदः खच् ६३७, ३।२।३८

प्रियवशे वदः खच्। खकारो मुमर्थः, चकारस्तु "खचि ह्रस्वः" इति विशेषणार्थ इति वृत्तिः। खे ह्रस्व इत्युच्यमाने एजेः खश जनमेजय इत्यत्रापि स्यादिति तदाशयः। "एकानुबन्धग्ररणे द्व्यनुबन्धस्य न ग्रहण"मिति खशि न भविष्यतीत्यादिना वृत्तिग्रन्थस्याऽयुक्तत्वमाहुः। खशि प्रकृते प्रत्ययान्तकरणमुत्तरार्थम्, द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप् च माभूदिति। नन्वेवमुत्तरत्रैव क्रियतामिति चेत्। सत्यम्। इह करणमन्यतोऽपि क्वचिद्भवतीति ज्ञापनार्थं तेन "गमेः सुपी"ति नाऽपूर्वं वार्तिकं, किंतु ज्ञापकसिद्धमेव।

* गमेः सुपि वाच्यः। असंज्ञार्थमिति। संज्ञायां तु वक्ष्यमाणेन "गमश्चे"ति सूत्रेणैव सिद्धमिति भावः।

* खच्च डिद्वा वाच्यः। विहङ्गम् इति। विहायसा = आकाशेन गच्छतीति विग्रहः। पूर्ववार्तिकेनैवक्यमकृत्वा "खच्च डिद्वे" ति पृथक्करणसामथ्र्यादन्यत्रापि क्वचिद्भवतीत्याशयेनोदाहरति-- भुजङ्गमः। भुजङ्ग इति। इह "गमेः सुपी"ति खच्।

---

सूत्रम्

काशिका-वृत्तिः

द्विषत्परयोस् तापेः ३।२।३९

द्विषत्परयोः कर्मणोरुपपदयोः तापेः छातोः खच् प्रत्ययो भवति। तप दाहे चुरादिः, तपसन्तापे भ्वादिः, द्वयोरपि ग्रहणम्। द्विषन्तं तापयति द्विषन्तपः। परन्तपः। द्विषत्परयोः इति द्वितकारको निर्देशः। तेन स्त्रियां न भवति। द्विषतीं तापयति द्विषतीतापः।

न्यासः

द्विषत्परयोस्तापे। , ३।२।३९

"द्वयोरपि ग्रहणम्" इति। ण्यन्तावस्थायां विशेषाभावात्। "द्वितकारको निर्देशः"इति। "द्विषत्परयोः"इति निर्देशे द्वौ तकारौ,तत्रैको द्विषच्छब्दस्यावयवः, तेन द्विषच्छब्दो विशिष्यते-- द्विषच्छब्द उपपदे तकारान्त इति। "तेन स्त्रियां न भवति" इति। स्त्रीप्रत्ययान्तस्तकारान्तो न भवति। असति तु द्वितीये तकारे "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति" (व्या।प।२९) इति स्त्रयियामपि स्यात्। "{द्विषतीकाशिका} द्विषती" इति। "उगितश्च" ४।१।६ इति ङीप्। उगित्त्वन्तु द्विषच्छब्दस्य "द्विषोऽमित्रे" ३।२।१३१ इति शत्रन्तत्वात्॥

बाल-मनोरमा

द्विषत्परयोस्तापेः ७६८, ३।२।३९

द्विषन्तप इति। "अरुर्द्विष" दित तकारात्प्राक् मुम्। परन्तप इति। परः - शत्रुः। ननु लिङ्गविशिष्टपरिभाषया द्विषतीशब्देऽप्युपपदे तापेः खचि "द्विषतीतप" इति स्यात् "द्विषतीताप" इत्यण्णन्तं न स्यादित्यत आह-- घटघटीति। "शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसङ्ख्यान"मित्यत्र घटग्रहणेनैव लिङ्गविशिष्टपरिभाषया घटीशब्दस्यापि सिद्धे पुनर्घटीग्रहणाल्लिङ्गविसिष्टपरिभाषा अनित्येति विज्ञायते इत्यर्थः। "उपपदविधौ लिङ्गविशिष्टपरिभाषा ने"ति ङ्याप्पसूत्रे भाष्याच्चेत्यपि द्रष्टव्यम्।

तत्त्व-बोधिनी

द्विषत्परयोस्तापेः ६३८, ३।२।३९

द्विषन्तप इति। "अरुर्द्विषदि"ति मुमि कृते संयोगान्तलोपः।

---

सूत्रम्

काशिका-वृत्तिः

वाचि यमो व्रते ३।२।४०

वाक्शब्दे कर्मणि उपपदे यमेः धातोः खच् प्रययो भवति व्रते गम्यमाने। व्रत इति शस्त्रितो नियमः उच्यते। वाचंयमः आस्ते। व्रते इति किम्? वाग्यामः।

न्यासः

वाचि यमो व्रते।, ३।२।४०

"शास्त्रितः" इति। शास्त्रे कृत इति विगृह्य शास्त्रशब्दात् प्रतिपदिकाद्धात्वर्थे णिच्, तदन्तात् क्ते विहते शास्त्रित इति। शास्त्रविहित इत्यर्थः। अथ वा शास्त्रिण इतः शास्त्रितः, शास्त्रविद इतः = जातः, प्रवृत्तः। अथ वा-- शास्त्रशब्दस्तारकादिषु द्रष्टव्यः। शास्त्रमस्य सञ्जातमिति शास्त्रितः। "वाचंयमः" इति। वाचं यच्छतीति विगृह्य खचि "वाचंयमपुरन्दरौ च" ६।३।६८ इति पूर्वपदस्य मुमभावो निपात्यते। ननु च प्रत्ययोऽपि तेनैव निपातनेन भविष्यति, तत्किमनेन? नैतदस्ति; यच्छतीति पचाद्यचि विहिते ततश्च "वाचो यमः" इति षष्ठीसमासे कृते वाचंयम इति सिध्यति। सम्पद्यत एव, तत्र तु निपातनमनर्थकं स्यात्। एवञ्च सति नित्यमुपपदसमासो न स्यात्। अतः खच्प्रत्ययो विधेयः, निपातनमपि कत्र्तव्यम्॥

बाल-मनोरमा

वाचि यमो व्रते ७६९, ३।२।४०

वाचि यमो व्रते। इत्यादि व्यक्तम्।

तत्त्व-बोधिनी

वाचि यमो व्रते ६३९, ३।२।४०

वाचि यमो व्रते।

---

सूत्रम्

काशिका-वृत्तिः

पूःसर्वयोर् दारिसहोः ३।२।४१

पुर् सर्व इत्येतयोः करमणोः उपपदयोः यथासङ्ख्यं दारिसहोः धात्वोः खच् प्रत्ययो भवति। पुरं दारयति पुरन्दरः। सर्वंसहो राजा। भवे च दारेरिति वक्तव्यम्। भगन्दरः।

न्यासः

पूःसर्वयोर्दारिसहोः। , ३।२।४१

"दारि" इति। "दृ? विदारणे" (धा।पा।१४९३) इत्यस्य णिचा निर्देशः। "पुरन्दरः" इति। पूर्वपदे मुम्भावो निपात्यते। "भगे च दारेरिति वक्तव्यम्" इति। भगे चोपपदे दारेः खज्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्--"उग्रम्पश्येरम्मदपाणिन्धमाश्च" ३।२।३७ इत्यतश्चकारोऽनुवत्र्तते, न चानुक्तसमुच्चयार्थः, तेन भगे चोपपदे दारेः खज्भवतीति॥

बाल-मनोरमा

पूःसर्वयोर्दारिसहोः ७७१, ३।२।४१

पूः सर्वयोर्दारिसहोः। दारिसहोरिति पञ्चम्यर्थे षष्ठी। पुर्()शब्दे सर्वशब्दे च कर्मवाचिन्युपपदे दारेः सहेश्च खजित्यर्थः। यथासङ्ख्यमन्वयः। "दारी"ति ण्यन्तस्य ग्रहणम्। पुरन्दर इति। पुरं दारयतीति विग्रहे दारेः खचि णिलोपे "खचि ह्यस्वः" इत्युपधाह्यस्वे सुपी लुकि "वाचंयमपुरन्दरौ चे"ति खचो विकल्पविधौ खजभावे "कर्मण्य"णित्यस्य सिद्धत्वादण्ग्रहमं व्यर्थमित्यत आह-- असंज्ञार्थमिति। भगे चेति। इत्यादि स्पष्टम्। ऋतिहकर इति। ऋतिर्गमनम्। अभयहकरशब्दं साधयितुमाह--भयशब्देन तदन्तविधिरिति। इदं च "येन विधि"रित्यत्र भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

पूः सर्वयोर्दारिसहोः ६४१, ३।२।४१

पूः सर्वयोः। दृ? विदारणे अयमव गृह्रते, न तु दृ? भये दृङ् आदर इत्येताविति संप्रदायः। असंज्ञार्थमिति संज्ञायां तु "शंज्ञायां भृतृ()वृजि" इति वक्ष्यमाणेन सिध्यतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सर्वकूलाभ्रकरीषेषु कषः ३।२।४२

सर्वकूल अभ्र करीर इत्येतेषु कर्मसु उपपदेषु कषेः धातोः खच् प्रत्ययो भवति। सर्वं कषति सर्वंकषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो गिरिः। करीषङ्कषा वात्या।

न्यासः

सर्वकूलाभ्रकरीषेषु कषः। , ३।२।४२

"सर्वङ्कषः" इति। "कष खष शिष जष जष {शक इति मु।पाठः} शष वष मष रुष रिष हिंसार्थाः" (धा।पा।६८५-६९४)॥

---

सूत्रम्

काशिका-वृत्तिः

मेघर्तिभयेषु कृञः ३।२।४३

मेघ ऋति भय इत्येतेषु कर्मसु उपपदेषु कऋञः खच् प्रत्ययो भवति। मेघङ्करः। ऋतिङ्करः। भयङ्करः। उपपदविधौ भयादिग्रहणं तदन्तविधिं प्रयोजयति। अभयङ्करः।

न्यासः

मेघर्त्तिभयेषु कृञः। , ३।२।४३

"उपपदविधौ" इत्यादि। ननु चाभयशब्दो नञ्समासे सिध्यत्येव? नैवं शक्यम्, सतिशिष्टत्वाद्धि "तत्पुरुषे तुल्यार्थ" ६।२।२ इति पूर्वपदप्रकृतिस्वराद्युदात्तत्वं स्यात्, "{गतिकारकोपपदात् कृत्" इति सूत्रम्} गतिकारकोपपदानाम्" ६।२।१३८ इत्यादिनान्तोदात्तत्वं चेष्यते। तस्मात् कञ्तव्यम्। अपवादत्वात् खजयमणं बाधते, हेत्वादिविवक्षायाञ्च परत्वाट्टप्रत्ययमपि॥

---

सूत्रम्

काशिका-वृत्तिः

क्षेमप्रियमद्रे ऽण् च ३।२।४४

क्षेम प्रिय मद्र इत्येतेषु कर्मसु उपपदेषु करोतेः अण् प्रत्ययो भवति, चकारात् खच् च। क्षेमकारः, क्षेमङ्करः। प्रियकारः, प्रियङ्करः। मद्रकारः, मद्रङ्करः। वा इति वक्तव्ये पुनरण्ग्रहनं हेत्वादिषु टप्रतिषेधार्थम्।

न्यासः

क्षेमप्रियमद्रेऽण् च। , ३।२।४४

अथ "क्षेमप्रियमद्रे वा" इत्येवं कस्मान्नोक्तम्? किमण्ग्रहणेन? खचि विकल्प्यते, "कर्मण्यण्" (३।२।१) इत्यनेनैवाण् भविष्यीत्यत आह-- "वेति वक्तव्ये" इत्यादि। "क्षेमप्रियमद्रे वा" इत्युच्यमाने पक्षे वाग्रहणाद्यथाप्राप्तमपीष्यते। ततो हेत्वादिषु विवक्षितेषु "कृञो हेतुताच्छील्य" ३।२।२० इत्यादिना टः स्यात्; अतस्तद्बाधनार्थम्। तेन हेत्वादिविवक्षायां टप्रत्ययं बाधित्वाऽण् भवति॥

बाल-मनोरमा

क्षेमप्रियमद्रेऽण् च ७७२, ३।२।४४

क्षेमप्रिय। ननु "क्षेमप्रियमद्रवे"ति खचो विकल्पविधौ खजभावे "कर्मण्य"णित्यस्य सिद्धत्वादण्ग्रहणं व्यर्थमित्यत आह-- वेति वाच्ये इति। हेत्वादिष्विति। "कृञो हेतुताच्छील्यानुलोम्येषु इति विहित इत्यर्थः। कथं तर्हीति। "कृञो हेतु" इत्यस्य अणा बाधात् क्षेमकार इति भवितव्यम्, खचि तु मुम् स्यादित्याक्षेपः। समाधत्ते-- कर्मणः शेषत्वेति। तथा च कर्मोपपदाऽभावादणभावे चाऽजिति भावः। क्षेमङ्करीति तु गौरादित्वान्ङीषित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

आशिते भुवः करणभावयोः ३।२।४५

अत्र सुपि इत्युपतिष्ठते। आशितशब्दे सुबन्ते उपपदे भवतेर् धातोः करणे भावे चार्थे खच् प्रत्ययो भवति। आशितो भवति अनेन आशितम्भव ओदनः। भावे आशितस्य भवनम् आशितम्भवं वर्तते।

न्यासः

आशिते भुवः करणभावयोः । , ३।२।४५

अत्र सुपीत्युपतिष्ठते, न कर्मणीति; भवतेरकर्मकत्वात्। "आशितशब्दे सुबन्ते" इत्यादि। अथ विपर्ययः कस्मान्न वति, करणभावयोरुपपदयोराशिते प्रत्ययार्थ इति? असम्भवात्। आशित इत्यश्नातेः कत्र्तोच्यते, तस्य भवतिना सम्बन्धो नोपपद्यते। न हि योऽश्नातेः कत्र्ता स भवतेः प्रत्ययार्थो भवतुमुत्सहते। तस्मादाशितशब्दस्योपपदत्वम्, इतरयोस्तु प्रत्ययार्थत्वम्। एवञ्च घञ्ल्युटोरपवादो भवति। वाऽसरूपविधिना ल्युडपि भवत्येव-- आशितभवन ओदन इति। घञस्तु स्वरूपत्वाद्बाधख एव॥।

बाल-मनोरमा

आशिते भुवः करणभावयोः ७७३, ३।२।४५

#आशिते। करणे उदाहरति-- आशितो भवत्यनेनेति। भावे उदाहरति-- आशितस्य भवनमिति।

तत्त्व-बोधिनी

आशिते भुवः करणभावयोः ६४२, ३।२।४५

आशितंभव इति। यावता ओदनेन अतिथ्यादिर्भोजितो बवति स एवमुच्यते। इह वासरूपविधिना ल्युडपि। [आशित भवनः।भावे]-आशितभवनम्। घञ् तु बाध्यत एव, सरूपत्वादित्याहुः। नचाऽत्र क्तल्युट्तुमुन्()खलर्थेषु वासरूपविधिर्नेति ल्युटो निषेधः शङ्क्यः। यत्र हि घञादेर्बाधकत्वेन क्तल्युडादयः प्रसक्तास्तत्र नित्यं बोधो न तु विकल्पेनेति तस्यार्थः। इह तु ल्युटोऽप्यपवादः खच्। अत्र वासरूपन्यायो निर्बाध एव। एतच्च आशितभवनमित्युदाहरतो जयादित्यस्यापि संमतमेवेति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां भृतृवृजिधारिसहितपिदमः ३।२।४६

कर्मणि इति सुपि इति च प्रकृतं सज्ञावशाद् यथासम्भवं सम्बध्यते। भृ तृ वृ जि धारि सहि तपि दम इत्येतेभ्यो धातुभ्यः संज्ञायां विषये खच् प्रत्ययो भवति। विश्वम्भरा वसुन्धरा। रथन्तरं साम। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुंतपः। अरिंदमः। सज्ञायाम् इति किम्? कुटुम्बं बिभर्ति इति कुटुम्बभारः।

न्यासः

संज्ञायां भृतृवृधारिसहितपिदमः। , ३।२।४६

"संज्ञावशात्" इति। संज्ञाशब्दा हि द्विविधा भवन्ति-- केचिदवयवार्थानुगताः,यथा-- सप्तवर्ण इति; केचित्तु विपरीताः, यथा तैलपायिकेति। तदिह यत्रावयवार्थानुगमोऽस्ति वि()आम्भरः, शत्रुन्तप इत्यादिषु , तत्र कर्मणीति सम्बध्यते-- वि()आं बिभत्र्तीति वि()आम्भरः। यत्र त्ववयवार्थानुगमो नास्ति, यथा-- रथन्तरं सामेति, तत्र व्युत्पत्त्यर्थं सुपीति सम्बध्यते-- रथेन तरतीति, रथे तरतीति वा। "पतिंवरा" इति। "वृञ् वरणे" (धा।पा।१२५४), "वृङ सम्भक्त्रौ"(धा।पा।१५०९)। पतिं वृणीते, पतिं वृणुत इति विग्रहः। शत्रुं जयतीति "शत्रुञ्जयः"। "धारि" इति। धृञो ण्यन्तस्य ग्रहणम्। युगं धारयतीति "युगन्धरः"। पूर्वपदध्रस्वत्वम्। शत्रुं सहत इति "शत्रुंसहः"। शत्रुं तपतीति "शत्रुंतपः"। अरिं दाम्यतीति "अरिन्दमः"। यद्यपि दमिरकर्मकः, तथाप्यन्तर्भावितण्यर्थत्वात् सकर्मको भविष्यति। अरिं दमयतीत्यर्थः॥

बाल-मनोरमा

संज्ञायां भृतॄवृजिधारिसहितपिदमः ७७४, ३।२।४६

संज्ञायाम्। "ख"जिति शेषः। भृ, तृ? , वृ ,जि, धारि, सहि, तपि, दमि- एषामष्टानं समाहारद्वन्द्वात्पञ्चमी। वि()आम्भर इति। विष्णोरियं संज्ञा। वि()आम्भरेति। पृथिव्याः संज्ञा इयम्। रथन्तरमिति। तृ()धातोः खच्। रथेन तरितृत्वस्य सामविशेषे असंभवादाह-- इहेति। वृधातोरुदाहरति-- पतिंवरेति। शत्रुञ्जय इति। जिधातोः खच्। "धारी"ति ण्यन्तग्रहण, तस्योदाहरति-- युगन्धर इति। युगं धारयतीति विग्रहः। "खचि ह्रस्वः" इत्युपधाह्रस्वः। णिलोपः। शत्रुंसह इति। शत्रून् सहते विग्रहः। ह्रस्वादि पूर्ववत्। एवमग्रेऽपि। शत्रुन्तप इति। शत्रून् तपतीति विग्रहः। अरिन्दम इति। अरिषु निग्रहविषये शाम्यतीत्यर्थः। दमिः शमनायामिति। "दमु उपशमे" इति धातुपाठे उपशमशब्दे शमेण्र्यन्ताद्घञ्। तथा च दाम्यतीत्यस्य उपशमयतीत्यर्थाश्रयणात्सकर्मकत्वमिति माधवादिमते सकर्मकोऽयमित्यर्थः। मतान्तरे त्विति। "दमु उपशमे" इत्युपशमार्थस्य दमेरकर्मकत्वमिति हरदत्तादिभिरुक्तमित्यर्थः।

तत्त्व-बोधिनी

संज्ञायां भृतृ?वृजिधारिसहितपिदमः ६४३, ३।२।४६

संज्ञायां भृतृ()। "वि()आम्भरः कैटभजित्"। "रसा वि()आम्भरा स्थिरा" इत्यमरः। व्युत्पत्तिमात्रमिति। तत्फलं तु स्वरावग्रहौ। "रथन्तरमाजभारा वसिष्ठः" इत्यत्र हि रथमित्यवगृह्णन्ति। कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं चाधीयते। अखण्डत्वे त्ववग्रहो न स्यात्, "नब्विषयस्ये"त्याद्युदात्तश्च स्यात्। इत्युक्तमिति। माधवाद्यनुरोधेनेत्यर्थः। मतान्तरे त्विति। हरदत्तादिमत इत्यर्थः। चित्तव्यापारोपरमः शमः, इन्द्रियव्यापारोपरमस्तु दम" इत्यादि वेदान्तग्रन्थाश्चेहानुकूलाः। संज्ञायां किम्?। कुटुम्बं बिभर्तीति कुटुम्बभारः।

---

सूत्रम्

काशिका-वृत्तिः

गमश् च ३।२।४७

गमेः धातोः सुपि उपपदे संज्ञायां विषये खच् प्रत्ययो भवति। सुतङ्गमो नाम, यस्य पुत्रः सौतङ्गमिः। योगविभागः उत्तरार्थः।

न्यासः

गमश्च।, ३।२।४७

"यस्य सौतङ्गमिः पुत्रः" इति। पुत्रस्य सौतङ्गमित्वव्यपदेशेन पितुः सुतङ्गमसंज्ञानुमीयत इति दर्शयति। सत्यां हि पितुः सुतङ्गमसंज्ञायां तत्पुत्रस्य सौतङ्गमिशब्देनाभिधानं भवति, नासत्याम्। अथ योगविभागः किमर्थः, पूर्वसूत्र एव गमेग्र्रहणं क्रियातमित्याह-- "योगविभाग उत्तरार्थः" इति। गमेरेवोत्तरत्रानुवृत्तिर्यथा स्यात्, भृञादीनां मा भूत्। एकयोगे हि तेऽप्यनुवत्र्तेरन्॥

बाल-मनोरमा

गमश्च ७७५, ३।२।४७

गमश्च। "संज्ञायां ख"जिति शेषः।

तत्त्व-बोधिनी

गमश्च ६४४, ३।२।४७

गमश्च। पूर्वसूत्र एव गमिर्नोक्तः,उत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात्, भृतृ()प्रभृतीनां माभूदिति।

---

सूत्रम्

काशिका-वृत्तिः

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ३।२।४८

संज्ञायाम् इति न अनुवर्तते। अन्त अत्यन्त अध्वन् दुर पार सर्व अनन्त इत्येतेषु कर्मसु उपपदेषु गमेः डप्रत्ययो भवति। अन्तगः अत्यन्तगः। अध्वगः। दूरगः। पारगः। सर्वगः। अनन्तगः। अनन्तगः। डकरः टिलोपार्थः, डित्यभस्य अप्यनुबन्धकरणसामर्थ्यातिति। डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानम्। सर्वत्रगः। पन्नगः। उरसो लोपश्च। उरसा गच्छति इति उरगः। सुदुरोरधिकरणे। सुखेन गच्छत्यस्मिनिति सुगः। दुर्गः। निरो देशे। निर्गो देशः। अप्र आह डप्रकरणे ऽन्येष्वपि दृश्यते इति। स्त्र्यगारगः। ग्रामगः। गुरुतल्पगः।

न्यासः

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः।, ३।२।४८

"डकारष्टिलोपार्थः"इति। डिति "टेः" ६।४।१५५ इति टिलोपो यथा स्यात्। कथं पुनः सत्यपि डकारे टिलोपो लभ्यते, यावता भसंज्ञकस्य हि टिलोप उच्यते, न चेह भसंज्ञाऽस्तीत्याह-- "डित्यभस्यापि" इत्यादि। यदि सत्यपि डिति टिलोपो मा भूत्, तदा तस्य वैयर्थ्यं स्यादिति भावः। ननु चश्रवणार्थ भविष्यति, तत्कुतो वैयर्थ्यं स्यात्? एवं मन्यते-- "प्रावृट्()शरत्कालदिवाञ्जे" ६।३।१४ इति कृतटिलोपस्य जनेर्डप्रत्ययान्तस्यायं निर्देशं करोति, ततोऽवसीयते डकारस्याश्रवणार्थतेति। "सर्वत्र" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्-- "गमश्च" ३।२।४७ इत्यतश्चकारोऽनुवत्र्तते। तस्यानुक्तसमुच्चयार्थत्वात् सर्वत्रेत्यादानुपपदे डो भविष्यतीति। सर्वत्रशब्दश्चात्र सुपीत्यनेन सम्बध्यते, न तु कर्मणीत्यनेन; तस्याधिकरणशक्तिप्रधानत्वात् कर्मत्वानुपपत्तेः। पन्नशब्दः क्रियाविशेषणत्वात् कर्मणीत्यनेन सम्बध्यते। प्रतिपादितं हि "करणे च स्तोकाल्प" २।३।३३ इत्यादिसूत्रे क्रियाविशेषणस्य कर्मत्वम्। "उरसो लोपश्च" इति। "अलोऽन्त्यस्य" १।१।५१ इति सकारस्य। "सुदुरोरधिकरण" इति। ल्युडपवादो डो विधीयते। वाऽसरूपविधिना सोऽपि भवति-- सुगमनम्, दुर्गमनमिति। अधिकरण इति किम्? कर्मणि मा भूत्। "ईषद्()दुःसुषु" ३।३।१२६ इत्यादिना खलेव भवति-- सुगमः, दुर्गम इति। "निरो देशे" इति। निर्()शब्द उपपदे गमेर्डो भवति देशेऽधिकरणे। निर्गम्यतेऽस्मिन् देशे निर्गो देशः। देशादन्यत्र ल्युडेव-- निर्गमनमिति॥

बाल-मनोरमा

अन्ताऽत्यन्ताऽध्वदूरपारसर्वानन्तेषु डः ७७६, ३।२।४८

अन्तात्यन्त। इत्यादि व्यक्तम्। सर्वत्रपन्नयोरिति। सर्वत्रशब्दे, पन्नशब्दे चोपपदे गमेर्डस्योपसङ्ख्यानमित्यर्थः उरस इति। उरसि उपपदे गमेर्डः, उरः शब्दान्त्यस्य लोपश्चेति वक्तव्यमित्यर्थः। सुदुरोरिति। सु, दुर्-- अनयोरुपपदयोर्गमेर्डः स्यात् अधिकरणे वाच्ये इत्यर्थः। अन्यत्रापि दृश्यत इति। अन्येष्वप्युपपदेषु अन्येभ्योऽपि धातुभ्यो डो दृश्यते इत्यर्थः। अनेनैव सिद्दे "सर्वत्रपन्नयो"रित्यादि प्रपञ्चार्थमेव। एवं च "सप्तम्यां जनेर्डः" इत्यत्रापि "अन्येष्वपि दृश्यते" इति प्रपञ्चार्थमेव। डे चेति। "विहायसो विहे"त्युक्तस्य खज्विषयत्वादिदं वचनम्। विहग इति। खचि तु मुमि विहङ्गम इति रूपम्।

तत्त्व-बोधिनी

अन्ताऽत्यन्ताऽध्वदूरपारसर्वानन्तेषु डः ६४५, ३।२।४८

* सुदुरोरधिकरणे। कर्मणि तु "ईषद्दुःसुषु" इति खलेव। सुखेन गम्यत इति सुगमः पन्थाः। दुर्गमः।

* दारावाहनोऽणन्तस्य च टः संज्ञायाम्। दाराविति शब्दापेक्षया पुंलिङ्गता। तदाह-- दारुशब्दे इति। "कष्ठं दार्विन्धनं त्वेधः" इत्यमरः। टविधानार्थमिदम्। अण् तु "कर्मण्य"णित्येव सिद्धः। "अलोऽन्त्यस्ये"त्येव सिद्धेरन्तग्रहणं स्पष्टार्थम्। अन्यथा हि टप्रत्ययः संभाव्येत। दार्वाहन्तीति दार्वाघाटः। "गोधाकालकादार्वाघाटस्ते वनस्पतीनाम्"

---

सूत्रम्

काशिका-वृत्तिः

आशिषि हनः ३।२।४९

ड इति वर्तते। आशिषि गम्यमानायां हन्तेर् धातोः कर्मण्युपपदे डप्रययो भवति। तिमिं वध्यात् तिमिहः। शत्रुहः। आशिषि इति किम्? शत्रुघातः। दारावाहनो ऽणन्तस्य च टः संज्ञायाम्। दारावुपपदे आङ्पूर्वाद् हन्तेः अण् प्रत्ययो भवति, अन्तस्य च ट कारादेशो भवति, संज्ञायां विषये। दारु आहन्ति दार्वाघाटः। चारौ वा। आङ्पूर्वात् हन्तेश्चारावुपपदे अण्, अन्तस्य वा टकारादेशः। चार्वाघाटः, चार्वाद्घातः। कर्मणि समि च। कर्मण्युपपदे सम्पूर्वात् हन्तेः धातोः अण् प्रत्ययो भवति, अन्तस्य च वा टकारदेशः। वर्णान् संहन्ति वर्णसङ्घाटः, वर्णसङ्घातः। पदानि संहन्ति पदसङ्घाटः, पदसङ्घातः।

न्यासः

आशिषि हनः। , ३।२।४९

"आशिषि" इति। प्रत्ययार्थमेतत्। तस्मिन् कत्र्तरि प्रत्ययो भवति यस्मिन् विधीयमान आशीर्गम्यते। "तिमिं वध्यात्" इति। आशीर्लिङ। प्रयोगवतो वाक्यस्योपन्यासस्तु समानार्थत्वात् तिमिहशब्दस्य प्रख्यानार्थः। "दारावाहन" इत्यादि। टकारादेश एवोपसंख्यायते। अण्प्रत्ययस्तु "कर्मण्यण्" ३।२।१ इत्यनेनैव सिद्धः। अथान्तग्रहणं किमर्थम्, यावता "अलोऽन्त्यस्य" (१।१।५२) इत्यन्तस्य भविष्यतीति? नच षष्ठीनिर्दिष्टस्यालोन्त्यविषयो भवन्ति। न चेह हन्तेः षष्ठ()आ निर्देशः, किं तर्हि? पञ्चम्या। नन्वर्थाद्विभक्तिविपरिणामो भविष्यति-- हन इत्यस्याः षष्ठी सम्पद्यते? एवं तर्हि विस्पष्टार्थमन्तग्रहणम्। "दार्वाहन्ति" इति।दारुशब्दोऽत्र द्वितीयान्तः। "स्वमोर्न्पुंसकात्" ७।१।२३ इति लुग्त्वान्न द्वितीया श्रूयते। "चारौ वा" इति।अत्राऽप्यादेशो विकल्पेन विधीयते। अण् तु "कर्मण्यण्" ३।२।१ इति नित्यमेव सिद्धः। "चार्वाघाटः"इति। "हो हन्तेर्ञ्णिन्नेषु" इति कुत्वम्। "हनस्तोऽचिण्णलोः"७।३।३२ इति तत्वम्। "कर्मणि समि चि" इत्येतद्वाक्यं कर्मण्युपपद इत्यस्यैव विशेषणम्॥

बाल-मनोरमा

आशिषि हनः ७७७, ३।२।४९

आशिषि हनः। कर्मण्युपपदे हन्तेर्डः स्यादाशिषि गम्यायामित्यर्थः। शत्रुघात इति। आसीरभावाड्डाऽभावे अण्। "हनस्त" इति तत्वम्। दारावाहन इति। वार्तिकमिदम्। दारौ, आहनः, अण्(), अन्तस्येति च्छेदः। अण्संनियोगेन टत्वविधानार्थमिदम्। चारौ वेति। वार्तिकमिदम्। चारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण्, अन्तस्य टो वा स्यादित्यर्थः। कर्मणणि समि चेति। वार्तिकमिदम्। उक्तं वेति। अण्, अन्तस्य ट इत्यर्थः। चारावित्यस्यानुवृत्तिनिवृत्तये कर्मणीत्युक्तिः।

---

सूत्रम्

काशिका-वृत्तिः

अपे क्लेशतमसोः ३।२।५०

अपपूर्वात् हन्तेः धातोः क्लेशतमसोः कर्मणोरुपपदयोः डप्रत्ययो भवति। क्लेशापहः पुत्रः। तमोपहः सूर्यः। अनाशीरर्थ आरम्भः।

न्यासः

अपे क्लेशतमसोः। , ३।२।५०

"उदि कूले रुजिवहोः" ३।२।३१ इत्यत्रोच्छब्दस्योपपदत्वे यो न्याय उक्तः स इहाप्यपशब्दस्य वेदितव्यः। "अनीशीरर्थ आरम्भः"इति। आशिषि पूर्वेणैव सिद्धत्वात्॥

बाल-मनोरमा

अपे क्लेश्तमसोः ७७८, ३।२।५०

अपे क्लेशतमसोः। "आशिषि हनः" इत्येव सिद्धे किमर्तमिदमित्यत आह-- अनाशीरर्थमिति।

---

सूत्रम्

काशिका-वृत्तिः

कुमारशीर्षयोर् णिनिः ३।२।५१

हन इति वर्तते। कुमार शीर्ष इत्येतयोः उपपदयोः हन्तेः णिनिः प्रत्ययो भवति। कुमारघाती। शीर्षघाती। निपातनाच् छिरसः शीर्षभावः।

न्यासः

कुमारशीर्षयोर्णिनिः। , ३।२।५१

"कुमारघाती" इति। पूर्ववत् तत्वकुत्वे। "निपातनाच्छिरसः शीर्षभावः" इति। कुमारशीर्षयोरित्यत एव निपातनाच्छिरसः शीर्षभावो भवति, न पुनः "शीर्षश्छन्दसि"६।१।५९ इत्यनेन। तत्र हि शीर्षन्निति शिरःशब्दसमानार्थं शब्दान्तरं निपात्यते,अन्यथा शीर्षघातीति च्छन्दस्येव स्यात्,न भाषायाम्। "कुमारशीर्षयोः" इति च निर्देशो नोपपद्यते, स हि नकारान्तः; अकारान्तेन चायं निर्देशो भवति, न नकारान्तेनेति। णिनेर्द्वितीय इकारो नकारस्येत्संज्ञापरित्राणार्थः, णकारो वृद्ध्यर्थः॥

बाल-मनोरमा

कुमारशीर्षयोर्णिनिः ७७९, ३।२।५१

कुमारशीर्षयोर्णिनिः। अनयोरुपपदयोर्हन्तेर्णिनिः स्यादित्यर्थः। नकारादिकार उच्चारणार्थः।

तत्त्व-बोधिनी

ऋत्विग्दधृक्रुआग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३३४, ३।२।५१

ऋत्विग्दधृत्। किञ्चिदिति। ऋतावुपपदे यजेः क्विन्। धृष्णोतेर्द्वित्वमन्तोदात्तत्वं च। सृजेः कर्मणि क्विन्, अमागमश्च।

दिशेः कर्मणि क्विन्। उत्पीर्वात्स्निहेः क्विन्, उपसर्गान्तलोपः, षत्वं च। अञ्चेः सुप्युपपदे क्विनत्यर्थः। निरुपपदाद्युजेरिति। क्रुञ्चेरप्येवम्। नलोपाऽभावस्त्वधिकः। कनाविताविति। इकारस्तूच्चारणार्थ इति भावः।

तत्त्व-बोधिनी

कुमारशीर्षयोर्णिनिः ६४६, ३।२।५१

कुमारशीर्षयोर्णिनि)। एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात्। "सुप्यजातौ" इत्यादिभिः सिद्धे ताच्छील्यावश्यकाऽधमर्ण्यविरहेऽपि णिन्यर्थं, शिरसः शीर्षभावार्थं च वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

लक्षणे जायापत्योष् टक् ३।२।५२

हन्तेः जायापत्योः कर्मणोः उअपपदयोः लक्षणवति कर्तरि टक् प्रत्ययो भवति। जायाघ्नो ब्राह्मणः पतिघ्नी वृषली। अथ वा लक्षणे द्योत्ये टक् प्रत्ययः।

न्यासः

लक्षणे जायापत्योष्टक्। , ३।२।५२

लक्ष्यते चिहन्यतेऽनेनेति लक्षणम्। तदस्यास्तीति तस्मिन् लक्षणवति। एतेन मत्वर्थीयाकारप्रत्ययान्तो लक्षणशब्दः सूत्र उपात्त इति दर्शयति, स च कर्त्तुः प्रत्ययस्य विशेषणमिति दर्शयन्नाह-- "लक्षमवति कत्त्तरि" इति। अथ लक्षणशब्दस्योपपदत्वं कस्मान्न भवति? केचिदाहुः- "हन्तेः सकर्मकत्वात् कर्मणीतीहोपतिष्ठते;तत्र यदीह लक्षणस्योपपदत्वं स्यात्, तत् कर्मणा विशिष्येत। न च लक्षणं हन्तेः कर्मोपपद्यते, स हि हिंसायां वत्र्तते, हिंसा च प्राणिविषया। जायापत्योः प्राणिधर्मत्वात् कर्मत्वमुपपद्यते"इति, एतच्चानुपपन्नम् ; मत्वर्थीयाकारप्रत्ययान्तस्य लक्षणशब्दस्य प्राणिन्यपि वृत्तेः। व्याख्यानादेव लक्षणस्यानुपपदत्वं विज्ञायते। अनभिधानाद्वा। जायापत्योः कत्र्रोरभिधानं दृष्टम्। "जायाघ्नः"इति। क्त्त्वात् "गमहन" ६।४।९८ इत्यादिनोपधालोपः, पूर्ववत् कुत्वम्। "पतिघ्नी"इति। टित्त्वान्ङीप्॥

बाल-मनोरमा

लक्षणेजायापत्योष्टक् ७८०, ३।२।५२

लक्षणे। लक्षणवतीति। सूत्रे लक्षणशब्दोऽर्शाअद्यजन्त इति भावः। जायाघ्नो नति। जायाहननसूचकलक्षणवान् पुरुष इत्यर्थः। "गमहने"त्युपधालोपः। पतिघ्नी स्त्रीति। पतिहननसूचनलक्षणवतीत्यर्थः। टित्त्वान्ङीप्।

तत्त्व-बोधिनी

लक्षणेजायापत्योष्टक् ६४७, ३।२।५२

लक्षणवतीति। सूत्रे लक्षणशब्दोऽर्शाअद्यजन्त इति भावः। जायाघ्न इति। जायामरणसूचकं पाणिरेखाविशेषादिकं यस्यास्ति स तां हन्तीति गौणो व्यवहारः। एवं पतिघ्नीत्यत्रापि बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः
अमनुष्यकर्तृके च ३।२।५३

अमनुष्यकर्तृके वर्तमानाद् हन्तेः धातोः कर्मणि उपपदे टक् प्रत्ययो भवति। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। श्लेष्मघ्नं मधु। पित्तघ्नं घृतम्। अमनुष्यकर्तृके इति किम्? आखुघातः शूद्रः। इह कर्मान् न भवति, चौरघातो हस्ती? कृत्यल्युटो बहुलम् ३।३।११३ इति बहुलवचनादण् भवति।
न्यासः
अमनुष्यकर्तृके च। , ३।२।५३

"अमनुष्यकर्तृके" इति। अमनुष्यः कत्र्ता यस्य स तथोक्तः एतच्च धात्वर्थविशेषणम्, धात्वर्थो हन्तेरित्यत आह-- "{ एवंप्रकारा पंक्तिर्मूलपाठे नास्ति} अमनुष्यकर्तृके धात्वर्थे" इत्यादि। अथामनुष्यकर्तृकग्रहणमुपपदविशेषणं कस्मान्न भवति? कर्मणीत्यनुवत्र्तते, कर्मणश्चामनुष्यकत्र्रा सह सम्बन्धानुपपत्तेः। साधनस्य हि क्रियायाः सम्बन्धः, न कारकान्तरेण। प्रत्ययार्थस्य कर्तृरिदं विशेषणं कस्मान्न विज्ञायते? तस्यामनुष्यकर्तृकत्वाभावात्। न हि कर्तुः कत्र्ता सम्भवति, अपि तु क्रियायाः। ननु च कर्तृग्रहणं न कत्र्तव्यम्, विनापि हि तेनामनुष्यकत्र्तरि प्रत्ययो लभ्यत एव? नैवं शक्यम्; कर्तृग्रहणमन्तरेणामनुष्यग्रहणं केवलमुपादीयमानमुपपदविशेषणमपि विज्ञायते। तस्मात् कर्तृग्रहणं कत्र्तव्यम्। तस्मिन् सत्यमनुष्यकर्तृग्रहणं तस्य विशेषणं न सम्भवतीत्यतो धात्वर्थ एव तेन विशेषयितुं युक्तः। "इह कस्मान्न भवति" इति। हस्तिकर्तृकत्वादमनुष्यकर्तृको धात्वर्थः। एतस्माद्भवतिव्यमेव टक्प्रत्ययेनेति मन्यते॥
बाल-मनोरमा
अमनुष्यकर्तृके च ७८१, ३।२।५३

अमनुष्य। अमनुष्यकर्तृके धात्वर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टगित्यर्थः। जायाघ्नस्तिलकालक इति। तिलाकृतकृष्णबिन्दुरित्यर्थः। पूर्वसूत्रस्य लक्षणवति कर्तरि प्रवृत्तिरिति भावः। अथ कथमिति। प्रलम्बघ्नादौ हन्तेर्मनुष्यकर्तृकतया टकोऽसंभवादित्याक्षेपः। समाधत्ते-- मूलविभुजादित्वात्सिद्धमिति। कप्रत्ययेनेति भावः। ननु "चोरघातो हस्ती"त्यादि कथम्, अमनुष्यकर्तृकत्वेन हन्तेष्टको दुर्वारत्वादित्यत आह-- चोरघात इत्यादीति। बाहुलकादणीति। "कृत्यल्युटो बहुल"मिति बहुलग्रहणादणि समाधेयमिति भावः।

तत्त्व-बोधिनी
अमनुष्यकर्तृके च ६४८, ३।२।५३

अमनुष्यकर्तृके च। मनुष्यभिन्नकर्तृकेऽर्थे वर्तमानाद्धन्तेः कर्मणयुपपदे टक् स्यात्। यद्यप्यमनुष्यशब्दो रूढ()आ रक्षः पिशाचादीनाहेति प्रागुक्तं,तथापीह लक्ष्यानुरोधेन व्याख्यातव्यमित्याशयेनाह--- तिलकालक इत्यादि। "तिलकालक इत्यादि। "नानुबन्धकृतमसारूप्य"मिति टगणोः सारूप्याद्वासरूपविध्यप्रवृत्तेराह-- बाहुलकादिति।

---

सूत्रम्
काशिका-वृत्तिः
शक्तौ हस्ति कपाटयोः ३।२।५४

शक्तौ गम्यमानायां हस्ति कपाटयोः कर्मणोरुपपदयोः हन्तेः टक् प्रत्ययो भवति। मनुष्यकर्तृकार्थ आरम्भः। हस्तिनं हन्तुं शक्तः हस्तिघ्नः मनुष्यः। कं पाटयति प्रविशत इति कपाटघ्नश्चौरः। शक्तौ इति किम्? विषेण हस्तिनं हन्ति हस्तिघातः।

न्यासः

शक्तौ हस्तिकपाटयोः , ३।२।५४

"शक्तौ गम्यमानायाम्" इति। अनेनोपपदत्वं शक्तेर्निराकरोति। "हस्तिकपाटयोः कर्मणीरुपपदयोः"इत्यनेनापि हस्तिकपाटयोः प्रत्ययार्थविशेषणम्। अथैवं कस्मान्न विज्ञायते-- शक्तावुपपदे हस्तिकपाटयोः कत्र्रोरिति? आरम्भसामथ्र्यादेव हि विज्ञायमाने हस्तिकपाटयोर्मनुष्यकर्तृके धात्वर्थे हन्तिर्वत्र्तते। तथा च पूर्वेणैव सिद्धेऽस्यारम्भवैयथ्र्यं स्यात्। उपपदत्वे तु तयोः शक्तौ गम्यमानायां मनुष्ये कत्र्तरि विज्ञायत इति न भवत्येष दोषः। "विशेष हस्तिनं हन्ति"इति। विषेणेत्यशक्तिकत्वं दर्शयति। यो हि स्वयं हन्तुं न समर्थः स विषादिनोपायान्तरेण हन्ति॥

बाल-मनोरमा

शक्तौ हस्तिकवाटयोः ७८२, ३।२।५४

शक्तौ हस्तिकवाटयोः। हस्तिघ्न इति। हस्तिनं हन्तुं शक्त इत्यर्थः। एवं कवाटघ्नः।

तत्त्व-बोधिनी

शक्तौ हस्तिकपाटयोः ६४९, ३।२।५४

शक्तौ हस्ति। शक्तौ किम्?। विषेण हस्तिनं हन्तीति हस्तिघातः। यद्यपीह शक्तिरस्ति, अशक्तस्य कर्तृत्वानुपपत्तेस्तथापि शक्तिग्रहणसामथ्र्यात्प्रकर्षो विज्ञायते, तेन स्वबलेनैव हन्तुं या शक्तिः सा गृह्रते। कपाटघ्न इति। कं = शिरः पाटयति प्रविशत इति कपाटम्। पाठान्तरे तु अटतेः पचाद्यच्। "कवं चोष्णे" इत्यत्र योगविभागात्कोः कवादेश इति हरदत्तः।

---

सूत्रम्

काशिका-वृत्तिः

पाणिघताडघौ शिल्पिनि ३।२।५५

पाणिघ ताडघ इत्येतौ शब्दौ निपात्येते शिल्पिनि कर्तरि। पाणि ताड इत्येतयोः कर्मणोः उपपदयोः हन्तेः धतोः टक् प्रत्ययो भवति,तस्मिंश्च परतो हन्तेः टिलोपो घत्वं च निपात्यते। पाणिघः। ताडघः। शिल्पिनि इति किम्? पाणिघातः। ताडघातः। राजघ उपसङ्ख्यानम्। राजानं हन्ति राजघः।

न्यासः

पाणिघताडघौ शिल्पिनि। , ३।२।५५

"पाणिघताडघौ" इति। टप्रत्ययो घत्वं टिलोपश्च निपात्यते॥

बाल-मनोरमा

पाणिघताडघौ शिल्पिनि ७८३, ३।२।५५

पाणिघताडघौ। पाणिना हन्तीति पाणिघः। ताडः = ताडनं, तेन हन्तीति ताडघः = मल्लादिः। राजघ उपसङ्ख्यानमिति। राजघशब्दे उक्तनिपातनस्य उपसङ्ख्यानमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ३।२।५६

आढ्यादिषु कर्मसु उपपदेषु च्व्यर्थेषु अच्व्यन्तेषु करोतेः धातोः करणे कारके ख्युन् प्रत्ययो भवति। च्वेर् विकल्पेन विधानाद् द्विविधाः च्व्यर्थाः, च्व्यन्ता अच्व्यन्ता श्च। तत्र च्व्यन्ताः पर्युदस्यन्ते। अनाढ्यं आढ्यं कुर्वन्ति अनेन आढ्यङ्करणम्। सुभगङ्करणम्। स्थूलङ्करणम्। पलितङ्करणम्। नग्नङ्करणम्। अन्धङ्करणम्। प्रियङ्करणम्। च्व्यर्थेषु इति किम्? आढ्यं तैलेन कुर्वन्ति अभ्यञ्जयन्ति इत्यर्थः। प्रकृतेरविवक्षायाम् अभूतप्रादुर्भावे ऽपि प्रत्युदाहरणं भवति। अच्वौ इति किम्? आढ्यीकुर्वन्त्यनेन। ननु च ख्युना मुक्ते ल्युटा भवितव्यम्, न च ल्युटः ख्युनश्च विशेषो ऽस्ति, तत्र किं प्रतिषेधेन? एवं तर्हि प्रतिषेधसामर्थ्यात् ख्युनि असति ल्युडपि न भवति, तेन ल्युटो ऽप्ययम् अर्थतः प्रतिषेधः। उत्तरार्थश्च च्विप्रतिषेधः क्रियते।

न्यासः

आढ�सुभगस्थूलपलितनग्नान्धिप्रयेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्। , ३।२।५६

"अच्चौ"इति। बहुव्रीहिः-- न विद्यते च्विर्यस्मिस्तत्राच्चौ। तत्पुरुषो वा -- च्वेरन्योऽच्विः। अच्व्यन्त इत्यर्थः। अच्वादित्याढ()आदीनां विशेषणम्। एकवचनं तु प्रत्येकं तैरभिसम्बध्यते। "आढ()आदिषु" इत्यादिना कर्त्तृविषणत्वमाढ()आदीनपाकरोति। "करणे कारके"इत्यनेनापि करणस्योपपदत्वं निरस्यति। अथैवं कस्मान्न विज्ञायते-- करण उपपदे आढ()आदिषु कर्त्तृष्विति? तत्र केचिदाहुः-- आढ()आदयोऽत्र शब्दप्रधानाः, न च तथाभूतानां कर्त्तृत्वमुपपद्यते। शब्दप्रधानत्वं पुनस्तेषां च्व्यन्तेष्वच्वाविति प्रतिषेधाद्विज्ञायते। शब्द एव हि च्व्यन्तो भवति, नार्थः। च्व्यन्तता शब्दस्यैव विद्यते, नार्थस्य। तत्र यद्येतेऽर्थप्रधानाः स्युः; च्व्यर्थेष्विति विशेषणमनुपपन्नं स्यात्, अच्वाविति च प्रतिषेधोऽनर्थकः स्यात्। पर्युदासोऽप्यनर्थकः स्यात् ; न; त्सयाप्याढ() इत्येवंशब्दः सुखति, सुभगशब्दः सुखयीत्यादिप्रयोगेषु कत्र्तत्वदर्शनात्। व्याख्यानादेवार्थनिश्चयोऽद्वेष्यः। करणस्य प्रत्ययार्थत्वेन निर्देशात् "कत्र्तरि कृत्" ३।४।६७ इति न व्याप्रियते। ननु च नेमे च्व्यर्थाः, ते नियोगत एव च्व्यन्ताः, इह त्वच्व्यन्ता आढ()आदयो न सम्भवन्त्येव, त()त्क पर्युदस्यन्त इत्याह-- "च्वेर्विकल्पेन विधानात्" इत्यादि। विकल्पेन विधानं तु "समर्थानां प्रथमाद्वा" ४।१।८२ इत्यतो वाग्रहणानुवृत्तेः। "आढ()ं तैलेन कुर्वन्ति" इत्यादि। न ह्रसौ प्रागनाढ()स्तैलेनाढ्यः क्रियते, किं तर्हि? आढ()स्तैलेनाभ्यज्यते। अनेकार्थत्वाद्धातूनां करोतिरत्राभ्यञ्जने वत्र्तते। तेनाभूतप्रादुर्भावे नास्तीति भवति प्रत्युदाहरणम्। अथ वा-- भवतु नामाभूतप्रादुर्भावः, तथापि युक्तमेवेदं प्रत्युदाहरणमिति दर्शयितुमाह-- "प्रकृतेरविवक्षायाम्" इत्यादि। न ह्रभूतप्रादुर्भावः इत्येवं सर्वोऽभूतप्रादुर्भावश्च्व्यर्थो भवति, किन्तु विशिष्ट एव; यस्मात् तत्र प्रकृतिग्रहणं दर्शयिष्यते। प्रकृतिः कार्यस्य पूर्वावस्था। तेन यत्राश्रितं कार्यं पूर्वारम्भश्च कार्यसय् भाव्यमानतया विवक्ष्यते तत्र स अभूतप्रादुर्भावः, स एव च्व्यर्थः। एतदुक्तं भवति-- यदा कार्यस्य पूर्वावस्था विवक्ष्यते तदा च्व्यर्थो भवति, नाभूतप्रादुर्भावविवक्षायामिति। इह तु पूर्वावस्थामपरामृश्यानाश्रितपूर्वारम्भे कार्येऽभूततद्भावमात्रं विवक्षितम्। तेन सत्यप्यभूततद्भावे च्व्यर्थो न भवति। अतो भवत्येतत् प्रत्युदाहरणम्-- "आढ्यीकुर्वन्ति" इति। "अभूततद्भावे कृभ्वस्थियोगे" ५।४।५० इत्यादिना च्विः, "अस्य च्वौ"७।४।३२ इतीत्वम्। "ल्युटा भवितव्यम्" इति। "करणाधिकरणयोश्च" ३।३।११७ इत्यनेन ल्युड्()विधानात्। यदि ल्युटा भवितव्यं ततः किमित्याह-- "न च" इत्यादि। उभयत्रापि तदेव रूपम्, स एव स्वरः। रूपं तावदभिन्नम्, उभयत्रापि समासस्य नित्यार्थत्वात्; तथा हि ख्युन्युपपदसमासेन भवितव्यम्, ल्युट()पि गतिसमासेन? "अनव्ययस्य" ६।३।६५ इति च प्रतिषेधान्मुमा नि भवितव्यमिति रूपभेदो नास्ति। स्वरोऽपि न भवति भेदकः; ख्युनि सति यत्रैव नित्स्वरो भविष्यति, ल्युट()पि लित्स्वरस्तत्रैव। "प्रतिषेधसामथ्र्यात्" इति। आढ्यीकरणमित्यस्य रूपस्य निरासाय "अच्वौ" ३।२।५६ इति प्रतिषेधः क्रियते। एवं तस्य निरासः कृतो भवति यदि ख्युना मुक्ते ल्युडपि भवति, अन्यथा हि स्यादेव। तदेव रूपमिति प्रतिषेधः

स्यादिति वैयर्थ्यमिति भावः। "अर्थतः" इति। न शब्दतः। अर्थस्तु प्रतिषेधसामर्थ्यमेव। "उत्तरार्थश्च" इति। उत्तरसूत्रस्योपयोगं दर्शयति। तत्र खिष्णुच्खुकञ्भ्यां मुक्ते तृजादिभिर्भवितव्यमित्यस्ति विशेषः।ख्युनः खकारो मुमर्थः, नकारः स्वरार्थः॥

बाल-मनोरमा

आढ�सुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ७८४, ३।२।५६

तत्त्व-बोधिनी

आढ�सुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ६५०, ३।२।५६

आढ()ङ्करणमिति।लिङ्गविशिष्टिपरिभाषया आढ()शब्देऽप्युपपदे यदा ख्युन् तदापि "खित्यनव्ययस्ये"ति ह्रस्वेन एतदेव रूपम्। आढ्यीकुर्वन्त्यनेनेति। नन्विह ख्युनोऽभावेऽपि "करणाधिकरणयोश्चे"ति ल्युटा भवितव्यमित्यत आह---प्रतिषेधसामर्थ्यादिति। तथाहि आढ्यीकरणमिति रूपं ल्युट्ख्युनोस्तुल्यम्। न च ख्युनि मुम्ह्रस्वौ स्यातामिति वाच्यम्, "अनव्ययस्ये"ति पर्युदासात्। "ऊर्यादिच्विडाचश्चे"ति निपातसंज्ञकत्वेन च्व्यन्तस्य अव्ययत्वात्। न च ख्युनि सति "उपपदमति"ङिति नित्यसमासो लभ्यते, ल्युटि तु नेति वाच्यं, ल्युट()पि गतिसमासस्य संभवात्। तस्यापि नित्यसमासत्वात्। न च स्त्रीप्रत्यये विशेषः, ल्युटि "टिड्ढे"ति सूत्रेण,ख्युनि तत्रत्येन ख्युन उपसङ्ख्यानेन च ङीपस्तुल्यत्वात्। नापि स्वरे विशेषः, ल्युटि लित्स्वरेण, ख्युनि नित्स्वरेण कृञ उदात्तत्वाऽविशेषात्। न चोत्तरार्थमच्वावित्युक्तमिति वाच्यं, केवलोत्तरार्थत्वे हि तत्रैव ब्राऊयात्। तदेतदुक्तम् ल्युडपि नेति। भाष्यमते त्विति। भाष्यवार्तिकस्वरसेन ल्यडिष्ट इति केवलोत्तरार्थत्वं लभ्यते। अतस्तद्विरोधाद्वृत्तिकृन्मतमयुक्तमिति कैयटः।

---

सूत्रम्

काशिका-वृत्तिः

कर्तरि भुवः खिष्णुच्खुकञौ ३।२।५७

आढ्यादिसु सुबन्तेषु उपपदेषु च्व्यर्थेषु अच्व्यन्तेषु भवतेर् धातोः कर्तरि कारके खिष्णुच्, खुकञित्येतौ प्रत्ययौ भवतः। अनाढ्य आढ्यो भवति आढ्यंभविष्णुः, आढ्यंभावुकः। सुभवंभविष्णु, सुभगंभावुकः। स्थूलंभविष्णुः, स्थूलंभावुकः। पलितंभविष्णुः, पलितंभावुकः। नग्नंभविष्णुः, नग्नंभावुकः। अन्धंभविष्णुः, अन्धंभावुकः। प्रियंभविष्णुः, प्रियंभावुकः। कर्तरि इति किम्? करणे मा भूत्। च्व्यर्थेसु इत्येव, आढ्यो भविता। अच्वौ इत्येव, आढ्यीभविता। उदात्तत्वाद् भुवः सिद्धम् इकारादित्वम् इष्णुचः। नञ्स्तु स्वरसिद्ध्यर्थम् इकारादित्वम् इष्यते।

लघु-सिद्धान्त-कौमुदी

इरितो वा ६३१, ३।२।५७

इरितो धातोश्च्लेरङ् वा परस्मै पदेषु। अनिजत्, अनैक्षीत्, अनिक्त। अनेक्ष्यत्, अनेक्ष्यत॥

लघु-सिद्धान्त-कौमुदी

इति जुहोत्यादयः ३ ६३१, ३।२।५७

लघु-सिद्धान्त-कौमुदी

अथ दिवादयः ६३१, ३।२।५७

लघु-सिद्धान्त-कौमुदी

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु १ ६३१, ३।२।५७

न्यासः

कत्र्तरि भुवः खिष्णुच्खुकञौ। , ३।२।५७

"कत्र्तरि कारके" इति। कर्त्तृग्रहणं करणनिवृत्त्यर्थम्। ननु चास्वसितत्वादेवानुवृत्तिर्न स्यात्? सत्यमेतत्; द्वेष्यमपि कश्चिदविजानीयात्-- यथैवाढ()आदयोऽनुवत्र्तन्ते तथा तत्सम्बन्धकरणमपीति। उत्तरार्थञ्च कर्त्तृग्रहणम्। "उदात्तत्वात्" इत्यादि। उदात्तादितरोऽनुदात्तः, तेन भवतेर्विहितस्याद्र्धधातुकस्य "एकाच उपदेशेऽनुदात्तात्" ७।२।१० इतीट्()प्रतिषेधो न भवति। बलादिलक्षणेटा ७।२।३५ भवितव्यम्, ततश्च तेनैवेकारादित्वं सिद्धम्,ततो न कत्र्तव्यं खिष्णुच इकारादित्वमिति भावः। इकारादित्वकरणस्य प्रयोजनमाह-- "नञस्तु" इत्यादि। यदि। खिष्णु च इकारादित्वं न क्रियते ततो यद्यपीटि कृते सतीकारदित्वं तस्य भवति, तथापि तस्य लाक्षणिकत्वात् "कृत्योकेष्णुच्चार्वादयश्च" ६।२।६० इत्यत्रेष्णुज्ग्रहणेन न ग्रहणं स्यात्। ततश्चानाढ()म्भविष्णुरिति नञ उत्तरस्योत्तरपदस्यान्तोदात्तत्वं न स्यात्िष्यते च। अतो नञ उत्तरस्योत्तरपदान्तोदात्तत्वंम्, तेनेकारादित्वमिष्णुचः क्रियते। ननु च सत्यपीकारादित्वे अलंकृञादिसूत्रे ३।२।१३६ विहितस्यैवेष्णुचो ग्रहणेन भवितव्यम्(), नेतरस्य , तस्यैकानुबन्धकत्वात्, अस्य द्वयनुबन्धकत्वात्? इकारोच्चारणसामथ्र्यादस्यापि ग्रहणं भविष्यतीत्यदोषः। खकारो मुमर्थः; चकारः स्वरार्थः, ञकारो वृद्ध्यर्थः॥

बाल-मनोरमा

कर्तरि भुवः खिष्णुच्खुकञौ ७८५, ३।२।५७

कर्तरि भुवः। खिष्णुचि खचावितौ। खुकञि खञावितौ। आढ()म्भविष्णुरिति। अनाढ() आढ()ओ भवतीति विग्रहः। आढ()म्भावुक इति। ञित्त्वाद्वृद्धिः। करणग्रहणाऽनुवृत्तिनिवृत्तये कर्तृग्रहणमम्। खिष्णुचि इकारस्तु व्यर्थ एव, इटा सिद्धेः। अच्वौ किम्?। आढ्यीभविता। स्पृशोऽनुदके क्विन्निति-- व्याक्यातं हलन्ताधिकारे। निवृत्तिमिति। अत्र व्याख्यानमेव शरणम्। समानान्ययोश्चेति। अनयोरुपपदयोर्दृशः क्विन्कञावित्यर्थः। सदृक् सदृश इति। समानो दृश्यते इति न विग्रहः, कर्तर्येव क्विन्विधानात्। किन्तु कर्मकर्तरि क्विन्()कञौ॥ समानः पश्यतीति विग्रहः। समानत्वेन ज्ञानविषयो भवतीत्यर्थ इति भाष्ये स्पष्टम्। "दृग्दृशवतुषु" इति समानस्य सभावविकल्पश्च। तत्र "विभाषोदरे" इत्यतो विभाषानुवृत्तेः, "समानदृक् सदृक्। समानसदृशः सदृश" इति भाषाच्च। अन्यादृगिति। "आ सर्वनाम्नः" इत्यात्वम्। क्सोऽपीति। त्यदादिषु समानान्ययोश्च दृशेः क्सोऽपि वाच्य इत्यर्थः।

तत्त्व-बोधिनी

कर्तरि भुवः खिष्णुच्खुकञौ ६५१, ३।२।५७

कर्तरि भुवः। अच्व्यन्तेष्विति। अच्व्य्नतेष्विति। अच्वावित्यनुवर्तते। अन्यथा आढ्यीभविष्णुः आढ्यीभावुक इति स्यादिति भावः। "कर्तृग्रहणं करणाऽनुवृत्तिभ्रमनिरासार्थमुत्तरार्थ चे"ति प्राञ्चः। वस्तुतस्तु व्यर्थमेव, अस्वरितत्वादेवाऽननुवृत्तिसिद्धेः, उत्तरत्राप्युपयोगो नेति स्पष्टीकरिष्यमाणत्वाच्च। खकारो मुमर्थः। चकारः "चितः" अस्वरितत्वादेवाऽननुवृत्तिसिद्धेः, इकारादित्वसिद्धये इडागमे कृतेऽपि "आगमा अनुदात्ताः" इति तस्याऽनुदात्तत्वात्। न च "कृत्योकेष्णुच्चार्वादयश्चे" ति स्वरसूत्रे अस्य ग्रहणं न स्यात्, चकारानुबन्धाऽभावादिकारस्य लाक्षणिकत्वात्षत्वणत्वयोरसिद्धत्वेनेष्णु इतिरूपाऽभावाच्चेति वाच्यम्, कृतेऽपि इकारे "तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये"ति परिभाषया अलङ्कृञादीष्णुच एव ग्रहणं स्यान्न त्वेतस्य। इकारोच्चारणसामथ्र्यादस्याऽपि ग्रहणमिति चेद्धन्तैवं खष्णुजयमस्तु, तत्रेटि कृते चकारानुबन्धसामथ्र्यादस्यापि ग्रहणमस्त्विति किमिकारेणेति

चिन्त्यमेतत्। न चेह लाघवाऽभावादिकारोऽस्तु, चकार एव मास्त्विति शङ्क्यम्, "एकमात्रो ह्रस्वो व्यञ्जनं त्वद्र्धमात्रक"मिति सर्वसंमतत्वात्। यत्तु हरदत्तेनोक्तं--षत्वणत्वयोः सामथ्र्यादस्य ग्रहणमिति , तदापाततः, रुआउजपेक्षया ष्णुजुक्तौ प्रत्युत प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामथ्र्याऽयोगादिति दिक्। निवृत्तमिति। ननु स्पृशेः सकर्मकत्वात्कर्मण्युपद इत्येव प्राप्येतेति चेत्। अत्र प्राञ्चः-- पूर्वसूत्रात्कर्तर इत्यनुवर्तते, सा चानुवृत्तिः "कर्तरि कृ"दित्यनेनैव कर्तरि क्विनः सिद्धत्वाद्व्यर्था सती कर्तृप्रचयार्था, कर्मण्युपपदे एकः कर्ता, करणादौ चाऽपर इत्येवं कर्तृप्रचयः, तथा च "सुबन्ते उपपदे" इति फलितं भवतीति मन्त्रस्पृगित्यादेः क्विपाऽपि सिद्धेः। न च क्विपि कुत्वं न स्यादिति वाच्यं, "क्विन्प्रत्ययो यस्मा"दिति बहुव्रीहिबलादेवकुत्वसंभवादिति दिक्। सदृगिति। तमिवेमं पश्यन्ति जनाः, स इवायं पश्यति = ज्ञानविषयो भवतीति व्युत्पत्त्या कर्मकर्तर प्रत्ययः, रूढ()र्थानुगुणत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

स्पृशो ऽनुदके क्विन् ३।२।५८

स्पृशे र्धातोरनुदके सुबन्त उपपदे क्विन् प्रत्ययो भवति। ननु सकर्मकत्वात् स्पृशेः कर्मैवोपपदं प्राप्नोति? न एष दोषः। कर्तरि इति पूर्वसूत्रादनुवर्तते, तत् कर्तृप्रचयार्थं विज्ञायते। सुबन्तमात्रे च उपपदे कर्तृपचयो लभ्यते घृतं स्पृशति घृतस्पृक्। मन्त्रेण स्पृशति मन्त्रस्पृक्। जलेन स्पृशति जलस्पृक्। अनुदके इति किम्? उदकस्पर्शः। नकारः क्विन्प्रत्ययस्य कुः ८।२।६२ इति विशेषणार्थः।

लघु-सिद्धान्त-कौमुदी

स्पृशोऽनुदके क्विन् ३५२, ३।२।५८

अनुदके सुप्युपपदे स्पृशेः क्विन्। घृतस्पृक्, घृतस्पृग्। घृतस्पृशौ। घृतस्पृशः॥ दधृक्, दधृग्। दधृषौ। दधृग्भ्याम्॥ रत्नमुषौ। रत्नमुड्भ्याम्॥ षट्, षड्। षड्भिः। षड्भ्यः। षण्णाम्। षट्सु॥ रुत्वं प्रति षत्वस्यासिद्धत्वससजुषो रुरिति रुत्वर्म्॥

,

न्यासः

स्पृशोऽनुदके क्विन्। , ३।२।५८

"सुपि स्थः" ३।२।४ इत्यत्रोक्तम्-- "कर्मणि" "सुपि"इति द्वयमनुवत्तते, तत्र सकर्मकेषु कर्मणीत्युपतिष्ठते, अन्यत्र सुपीति। स्पृशिरयं सकर्मकः, अतः स्पृशेर्धातोरनुदके सुबन्त उपपद इत्युक्ते पूर्वापरव्याहति मन्यमान आह-- "ननु च" इत्यादि।"नैषः" इत्यादिना परिहारः। कथं पुनः कर्तृग्रहणे कर्त्तुश्च प्रचयार्थे विज्ञायमाने सुबन्त उपपदे प्रत्ययो लभ्यत इत्याह-- "सुबन्तमात्रे" इत्यादि। सुबन्तमात्र उपपदे सत्येकः प्रचयार्थः कत्र्ता कर्मण्युपपदे सति भवति, अपरः करणादावुपपदे; तत्र भेदे सति तत्सम्बन्धभेदेन भिद्यमानस्य कर्त्तुः प्रचयो लभ्यते। "घृतस्पृक्" इति। "क्विन्प्रत्ययस्य कुः" इत्यादि। "क्विप्रत्ययस्य कुः" इत्युच्यमाने क्विपोऽपि ग्रहणं स्यात्तो नकारोऽनुबध्यते। प्रकृतेराद्युदात्तार्थो नकारो न भवित; स्पृशेरेकाच्त्वात्,तत्स्वरेणैव सिद्धत्वात्। ककारो गुणप्रतिषेधार्थः, वकारः "वेरपृक्तस्य" ६।१।६५ इति विशेषणार्थः॥

बाल-मनोरमा

स्पृशोऽनुदके क्विन् , ३।२।५८

स्पृशोऽनुदके। अनुदके सुपीति। उदकशब्दबिन्ने सुबन्ते इत्यर्थः। "सुपि स्थः" इत्यतः "सपी"त्यनुवर्तते इति भावः।

घृतस्पृगिति। घृतं स्पृशतीति विग्रहे क्विन्। उपपदसमासः। सुब्लुक्। घृतस्पृशशब्दात्सुबुत्पत्तिः। सोर्हल्ङ्यादिलोपः। "क्विन्प्रत्ययस्ये"ति कुत्वस्याऽसिद्धत्वात् पूर्वं "व्रश्चे"ति षः।तस्य जश्त्वेन डः। तस्य कुत्वेन गः। तस्य चर्त्वाविकल्प इति भावः। घृतस्पृग्भ्याम्। घृतस्पृक्षु। अथ "क्विन्प्रत्ययस्य कुः" इत्यत्र "क्विनः कुः" इत्यतावतैव क्विन्नन्तस्येति लब्धे प्रत्ययग्रहणं क्विन् प्रत्ययो यस्मादिति बहुव्रीहिलाभायेत्युक्तं युक्शब्दनिरूपणावसरे, तस्य प्रयोजनमाह--क्विप्यपिकुत्वमिति। "सति भवती"ति शेषः। अनुदके सुप्युपपदे तावत् स्पृशेः क्विन् विहितः। अतो निरुपसर्गात् स्पृशेः क्विबेव। तस्य संप्रति क्विन्नन्तत्वाऽभावेऽपि कुत्वं भवत्येव, बहुव्रीह्याश्रयणेन कदाचित् क्विन्नन्तत्वमात्रेणापि क्विन्प्रत्ययान्तत्वयोग्यतालाभादिति भावः। षडगकाः प्राग्वदिति। षत्वजश्त्वकुत्वचर्त्वैरिति भावः। इति शान्ताः। अथ षान्ताः। दधृष्शब्दस्य व्युत्पतिं()त दर्शयति--ञि धृषेति। "आदिर्ञिटुडवः" इति ञिरित्। आकारस्तु "उपदेशेऽजनुनासिक" इति इत्। ऋत्विगादिनेति। क्विन्नादित्रयं निपात्यते। क्पिनि लुप्ते धृष् इत्यस्य द्वित्वं। "उरत्" रपरत्वम्। "हलादिः शेषः"। कित्त्वान्न लघूपधगुणः, दधृष् इति रूपम्। ञ्नित्यादिर्नित्य"मित्याद्युदात्तनिवृत्यर्थमन्तोदात्तनिपातनम्। कुत्वात्पूर्वमिति। जश्त्वं प्रति कुत्वस्याऽसिद्धत्वात्प्रथमं जस्त्वेन षस्य डकार इत्यर्थः। गः क इति। "क्विन्प्रत्ययस्ये"ति डस्य कुत्वेन गकारः, तस्य चर्त्वेन ककार इत्यर्थः। रत्नमुडिति। "मुष स्तेये"क्विप्, उपपदसमासः सुब्लुक्, हल्ङ्यादिलोपः, जश्त्वचर्त्वे इति भावः। षष्शब्दो नित्यं बहुवचनान्तः। तस्य बहुवचनेष्वेव रूपाणि दर्शयति--षड्भ्यो लुगिति। "अनेन जश्शसोर्लुकि जश्त्वचर्त्वे" इति शेषः। तदन्तविधिरिति। "षड्भ्यो लुक्, षट्चतुर्भ्यश्चे"त्यनयोराङ्गत्वादिति भावः।

प्रिया षट् यस्येति बहुव्रीहौ प्रियषष्शब्दस्य एकद्विबहुवचनानि सन्ति। प्रियषट-प्रियषड्, प्रियषषौ, प्रियषष इत्यादि रत्नमुषशब्दवत्। तत्र "षड्भ्यो लुक्" इति "षट्चतुर्भ्यश्चे"ति च लुङ्नुटोः प्रवृत्तेरिति भावः। पठितुमिच्छतीत्यर्थे "पठ व्यक्तायां वाचि"-इति धातोः "धातोः कर्मणः" इति सन्प्रत्यये "सन्यङीः" इति द्वित्वे हलादिशेषे "सन्यतः" इत्यब्यासस्य इत्त्वं, सन इट्, षत्वं, "सनाद्यन्ताः" इति धातुत्वम्। "पिपठिष" इत्यस्मात् क्विप्, "अतो लोपः", पिपठिष् इति षकारान्तम्। कृदन्तत्वात्प्रातिपदिकत्वं, ततः सुः। तत्र विशेषं दर्शयति-रुत्वं प्रतीति। "क्वौ लुप्तं न स्थानिवत्" इति निषेधाद्धल्ङ्यादिलोपे कृते "ससजुषो रुः" इति रुत्वम्। न च सकाराऽभावः शङ्क्यः, रुत्वं प्रति षत्वस्याऽसिद्धत्वादित्यर्थः।

तत्त्व-बोधिनी
स्पृशोऽनुदके क्विन् ३८४, ३।२।५८

स्पृशोऽनुदके क्विन्। ककारो गुणाऽभावार्थः। नकारस्तु "क्विन्प्रत्ययस्य कुः"इति विशेषणार्थः। वस्तुप्रयोजनं, क्विनः प्रकृतीनामेकाच्त्वाद्धातुस्वरेणाऽपि तत्सिद्धेः। "दधृ"गित्यत्र त्वन्तोदात्तत्वनिपातनादद्यदात्तत्वं नापेक्षितमेवेति दिक्। अत्र "सुपी"त्यनुवर्तते, "कर्मणी"ति तु निवृत्तमित्याशयेनाह---अनुदके सुप्युपपदे इति। घृतस्पृगिति। घृतं घृतेन वा स्पृशतीति विग्रहः। अनुदके किम्(), उदकं स्पृशतीति उदकस्पर्शः। निषेधसामर्थ्यादिह क्विबपि न भवति, तस्मिन्ह सति क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणेन कुत्वस्याऽवर्जनीयतया "अनुदके"इति निषेधस्य फलाऽभावात्। केचित्तु "उदाकस्पृ"डिति प्रत्युदाहरन्ति, निषेधसामर्थ्यात्कुत्बं माऽस्तु, क्विप्स्यादेवेति तेषामाशयः। इति शान्ताः। गौणत्वे त्विति।

---

सूत्रम्
काशिका-वृत्तिः

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९

ऋत्विगादयः पञ्चशब्दाः क्विन्प्रत्ययान्ताः निपात्यन्ते, अपरे त्रयो धात्वो निर्दिष्यन्ते। ऋतुशब्द उपपदे यजेर् धतोः क्विन् प्रत्ययो निपात्यते। ऋतौ यजति, ऋतुं वा यजति, ऋतुप्रयुक्तो वा यजति ऋत्विक्। रूढिरेषा यथा कथंचिदनुगन्तव्या। धृषेः क्विन् प्रत्ययः, द्विर्वचनम्, अन्तोदात्तत्वं च निपात्यते। धृष्णोति इति दधृक्। सृजेः कर्मणि क्विन्, अमागमः च निपात्यते। सृजन्ति तम् इति स्रक्। दिषेः कर्मणि क्विन् निपात्यते। दिशन्ति ताम् इति दिक्। उत्पूर्वात् स्निहेः क्विन्, उपसर्गान्तलोपः, षत्वं च निपात्यते। उष्णिक्। अञ्चु युजि क्रुञ्च इत्येतेषां धातूनां क्विन् प्रत्ययो भवति। निपातनैः सह निर्देशातत्र अपि किंचिदलाक्षणिकं कार्यम् अस्ति। अञ्चतेः सुब्नतमात्र उपपदे क्विन् प्रत्ययो भवति। प्राङ्। प्रत्यङ्। उदङ्। युजेः क्रुञ्चेश्च केवलादेव। युङ्, युञ्जौ, युञ्जः। सोपपदात् तु सत्सूद्विष ३।२।६१ इत्यादिना क्विप् भवति। अश्वयुक्, अश्वयुजौ, अश्वयुजः। क्रुङ्, क्रुञ्चौ, क्रुञ्चः। नलोपः कस्मान् न भवति? निपातनसाहचर्यात्।
लघु-सिद्धान्त-कौमुदी
ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३०३, ३।२।५९

एभ्यः क्विन्, अञ्चेः सुप्युपपदे, युजिक्रुञ्चोः, केवलयोः, क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ॥
न्यासः
ऋत्विग्दधृक्रुआग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च। , ३।२।५९

"ऋतौ यजति" इति। वसन्तादिक ऋतौ यजति, यस्मिन् ऋतुर्देवता स याग ऋतुस्तं यजतीति। "ऋतुप्रयुक्तो वा यजति" इति। यस्मिन् याग ऋतुः प्रयोजकस्तमृतुप्रयुक्तो यजतीति। अस्मिन् पक्षे प्रयुक्तमात्रस्य लोपो निपात्यते। "ऋत्विक्ि ति। यजादित्वात् ६।१।१५ सम्प्रसारणम्। "यथाकथञ्चिदनुगन्तव्या" इति। येन केनचित् प्रकारेण व्युत्पादयितव्यम्, न त्ववयवार्थस्तन्त्रमिति दर्शयति। "अन्तोदात्तत्वं निपात्यते" इति। नियतस्वरबाधनार्थम्। "दधृक्" इति। अभ्यासस्य "उरत्" ७।४।६६ इत्यत्त्वम्, हलादिःशेषः, ७।४।६० जश्त्वम्। "षत्वञ्च निपात्यते" इति। "सात्पदाद्योः" ८।३।१११ इति प्रतिषेधान्न प्राप्नोतीति कृत्वा। "ष्णिह प्रीतौ" (धा।पा।१२००), उत्स्निह्नतीत्युष्णिक्। "निपातनैः" सह निर्देशात्" इत्यादिना निपातनैः सहैषां यो निर्देशः स एषामपि किञ्चिदलाक्षणिकं कार्यं यथा स्यादित्येवमर्थः। तेनैषु किञ्चिदलाक्षणिकं कार्यं भवति। इदं त्वलाक्षणिकम्-- यः सकर्मकस्यापि सुबन्तमात्र उपपदे भवति। "प्राङ" इति। "उगिदचां सर्वनामस्थानेऽधातोः" ७।१।७० इति नुम्, हल्ङ्यादि ६।१।६६ संयोगादि ८।२।२३ लोपौ,नकारस्य पूर्ववत् कुत्वम्। "केवलात्" इति। सत्यपि कर्मणि सुपीत्यधिकारे निरुपपदादेव भवति; निपातनैः सहेति निर्देशात्। क्विन्विधानसामर्थ्याद्वा। उपपदे हि सदादिसूत्रेण ३।२।६१ क्विपा भवितव्यम्। "सोपपदात्" इत्यादि। न च सोपपदाद्युजेः क्विपि क्विना वा विशेषोऽस्ति; "चोः कुः" ८।२।३० इति कुत्वस्य सिद्धत्वात्। अनुपपदत्वे "युजेरसमासे" ७।१।७१ इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं सार्थकं भवति॥
बाल-मनोरमा
ऋत्विग्दधृक्रुआग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च , ३।२।५९

अथ जान्ताः। अथ युज्शब्दस्य व्युत्पत्तिं()त दर्शयितुमाह-ऋत्विग्दधृक्। "धातो"रित्यधिकृतं। "स्पृशोऽनुदके क्विन्" इत्यतः क्विन्नित्यनुवर्तते। पञ्चम्यर्थे षष्ठी। तदाह-एभ्य इति। ऋतौ उपपदे यज्धातोः, धृष्धातोः, सृज्धातोः, दिश्धातोः ष्णिधातोः, अञ्चुधातोः, युज्धातोः, क्रुञ्च्धातोश्चेत्यर्थः। ननु ऋत्विक्, दधृगित्यादौ कुत्वद्वित्वादि कुत इत्यत आह--अलाक्षणिकमपीति। लक्षणानि=सूत्राणि तद्विहितं कार्यं लाक्षणिकम्। सूत्रतः प्रतय्क्षानुपदिष्टमपि कार्यं निपातनात्सिद्धरूपनिर्देशाल्लभ्यत इत्यर्थः। तत्र ऋतावुपपदेः यजेः क्विन्। तस्य कित्त्वात् "वचिस्वपियजादीना"मिति

संप्रसारणं, "व्रश्चे"ति षत्वापवादः कुत्वं च। धृषेः क्विनि द्वित्वमन्तोदात्तत्वं च। सृजेः कर्मणि क्विन्, अमागमश्च। दिशेः कर्मणि क्विन्। उत्पूर्वात्स्निहेः क्विन्, उदोदलोपः, षत्वं च। अञ्चेः सुप्युपपदे क्विन्। युजे केवलात् क्विन्। क्रुञ्चेः क्विन्, नलोपाऽभावश्च निपात्यते। यद्यपि अञ्चे केवलस्यैवोपादानं तथाप्युष्णिक्शब्दसाहचर्यात्सोपपदस्यैवाञ्चेग्र्रहणमित्याहुः। निरुपपदादिति। क्विन्विधिफलं हि नुमो नस्य कुत्वमेव। नुम् च असमासे एव वक्ष्यते। समासे तु सुयुगित्यादौ जस्य "चोः कु"रिति कुत्वेनैव सिद्धतया क्विनि क्विपि च विशेषाऽभावादिति भावः। कनाविताविति। "लशक्वतद्धिते" इति हलन्त्य"मिति च सूत्राभ्या"मिति शेषः। वकारादिकारस्तूच्चारणार्थः।

---

सूत्रम्

काशिका-वृत्तिः

त्यदादिषु दृशो ऽनालोचने कञ् च ३।२।६०

त्यदादिषु उपपदेषु दृशेर् धातोरनालोचने ऽर्थे वर्तमानात् कञ् प्रत्ययो भवति, चकारात् क्विन् च। त्यादृशः, त्यादृक्। तादृशः, तादृक्। यादृशः, यादृक्। कञो ञकारो विशेषणार्थः, ठक् ठञ् कञिति। अनालोचने इति किम्? तं पश्यति तद्दर्शः। तादृगादयो हि रूढिशब्दप्रकाराः, न एव अत्र दर्शनक्रिया विद्यते। समानान्ययोश्चेति वक्तव्यम्। सदृशः, सदृक्। अन्यादृशः, अन्यादृक्। दृशेः क्षश्च वक्तव्यः। तादृक्षः। यादृक्षः। अन्यादृक्षः। कीदृक्षः।

लघु-सिद्धान्त-कौमुदी

त्यदादिषु दृशोऽनालोचने कञ्च ३४९, ३।२।६०

त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेः कञ् स्यात्। चात् क्विन्॥ ,

न्यासः

त्यदादिषु दृशोऽनालोचने कञ्च। , ३।२।६०

अनालोचनमिह चक्षुर्ज्ञानमात्रमभिप्रेतम्। यदि तत्र दृशिर्न वर्त्तत एवं प्रत्ययो भवति, नान्यथा। "त्यादृक्, त्यादृशः" इति। "दृक्दृशवतुषु" ६।३।८८ इत्यनुवर्त्तमाने "आ सर्वनाम्नः" ६।३।९० इत्यात्वम्। "कञो ञकारः "टिड्ढाणञ" इति विशेषणार्थः इति। यदि कञो ञकारो न कर्त्तव्यस्तदोदात्तार्थो नकारः कर्त्तव्यः। एवञ्च कञ्कन्नित्येवं ४।१।१५ कर्त्तव्यम्। ततश्चैवमुच्यमाने "यावादिभ्यः कन्" ५।४।२९ यादिकेत्यत्रापि ङीप् प्रसज्यते, अतस्तद्विशेषणार्थो ञकारः कर्त्तव्यः इति। ननु च दृशेर्दर्शनक्रियत्वात् तादृक् तादृश इत्यादिषु दर्शनक्रियाऽस्त्येव, तथा ह्येषां व्युत्पत्तौ तं पश्यत्येवंप्रकारं वाक्यमुपदिश्याचार्याः प्रत्ययं कुर्वन्ति। वाक्यसमानार्था वृत्तिर्भवति, सा च दर्शनक्रिया ज्ञानार्थिका। तत्कथमत्र दृशिरनालोचने वर्त्तत इत्याह-- तादृगादयो हि रूढिशब्दप्रकाराः"इत्यादि। रूढिशब्देषु नावयवार्थेन भवितव्यम्,किं तर्हि? समुदायार्थेन। अत एवात्रावयवार्थो नोपदीयते। व्युत्पत्त्यर्थस्तु विद्यमानोऽप्यवयवार्थ नोपादत्ते, यथा-- व्याजिघ्रतीति व्याघ्र इत्यादौ। तस्मादिह यद्यपि व्युत्पत्त्यर्थं वाक्यस्य दर्शनक्रियोपादीयते, तथाप्यसौ वृत्तौ नास्त्येव। तथा हि-- तादृक् तादृश इत्यादिभ्यः शब्देभ्यः सदृशवस्तुविषये प्रत्यय उपजायते, न तु दर्शनक्रियाविषय इति युक्तैव दृशेरनालोचने वृत्तिः। "समानान्ययोश्चेति वक्तव्यम्" इति। समानान्ययोश्च शब्दयोरुपपदयोर्दृशेः क्विन्कञौ प्रत्ययौ भवव इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्--- पू()रवसूत्रादिह चकारोऽनुवर्त्तते, स चानुवतसमुच्चयार्थः। तेन समानान्ययोरुपपदयोर्दृशेः प्रत्ययौ भविष्यतः। "सदृशः" इति। "समानस्य" ६।३।८३ इत्यनुवर्त्तमाने " दृग्दृशवतुषु" ६।३।८८ इति सभावः॥

बाल-मनोरमा

त्यदादिषु दृशोऽनालोचने कञ्च , ३।२।६०

अथ शान्ताः। तादृक्शब्दं व्युत्पादयितुमाह--त्यदादिषु। चकारात् "स्पृशोऽनुदके क्विन्" इत्यतः "क्विन्" इत्यनुकृष्यते। आलोचनमिह ज्ञानसामान्यं विवक्षितं, तदाह--त्यदादिष्वित्यादि। अनालोचने किम्?। तं पश्यति तद्दर्शः। कर्मण्यण्। कञि तु कित्त्वाद्गुणो न स्यात्। तद् शब्दे उपपदे क्विनि उपपदसमासे सुब्लुकि तद्-दृश् इति स्थिते।

तत्त्व-बोधिनी

त्यदादिषु दृशोऽनालोचने कञ्च ३८१, ३।२।६०

त्यदादिषु। कञन्तस्य तूदाहरणं "तादृशो" "यादृश"इत्यादि, तच्चाऽत्र नोक्तं, हलन्तेष्वनुपयोगात्। अनालोचने किम्()। तं पश्यतीति तद्दर्शः। कर्मण्यण्। तादृशादयस्तु रूढशब्दत्वादसताप्यवयवार्थेन व्युत्पाद्यान्ते। अतएवाऽज्ञानार्थाद्दृशेरिति सङ्गच्ते। भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता--"तभिवेमं पश्यन्ति जनाः, स इवायं पश्यति"। ज्ञानविषयो भवतीत्यर्थात्। अज्ञानार्थादिति तु सङ्गच्छते, तत्र दृशेर्ज्ञानविषयत्वापत्तिमात्रवृत्तित्वेऽपि विषयीकरणाऽवृत्तित्वात्।

---

सूत्रम्

काशिका-वृत्तिः

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजाम् उअसर्गे ऽपि क्विप् ३।२।६१

सुपि इत्यनुवर्तते। कर्मग्रहणं तु स्पृशो ऽनुदके क्विन् ३।२।५८ इत्यतः प्रभृति न व्याप्रियते। सदादिभ्यः धातुभ्यः सुबन्ते उपपदे उपसर्गे ऽपि अनुपसर्गे ऽपि क्विप् प्रत्ययो भवति। उपसर्गग्रहणम् ज्ञापनार्थम्, अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवति इति, वदः सुपि क्यप् च ३।१।१०६ इति। सू इति द्विषा साहचर्यात् सूतेः आदादिकस्य ग्रहणं, न सुवतेः तौदादिकस्य। युजिर् योगे, युज समाधौ, द्वयोरपि ग्रहणम्। विद ज्ञाने, विद सत्तायाम्, विद विचारणे, त्रयाणाम् अपि ग्रहणम्। न लाभार्थस्य विदेः, अकारस्य विवक्षतत्वात्। सद् शुचिषत्। अन्तरिक्षसत्। उपसत्। सू अण्डसूः। शतसूः। प्रसूः। द्विष मित्रद्विट्। प्रद्विट्। द्रुह मित्रध्रुक्। प्रध्रुक्। दुह गोधुक्। प्रधुक्। युज अश्वयुक्। प्रयुक्। विद वेदवित्। प्रवित्। ब्रह्मवित्। भिद काष्ठभित्। प्रभित्। छिद रज्जुच्छिद्। प्रच्छिद्। जि शत्रुजित्। प्रजित्। नी सेनानीः। प्रणीः। ग्रामणीः। अग्रणीः। कथम् अत्र णत्वम्? स एषां ग्रामणीः ५।२।७७ इति निपातनात्, नयतेः पूर्वपदात् सञ्ज्ञायाम् अगः ८।४।३ इति णत्वम्। राज राट्। विराट्। सम्राट्। मो राजि समः क्वौ ८।२।३५ इति मत्वम्। अन्येभ्यो ऽपि दृश्यते ३।२।१७८, क्विप् च ३।२।७६ इति सामान्येन वक्ष्यति, तस्य एव अयं प्रपञ्चः।

न्यासः

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्। , ३।२।६१

"कर्मग्रहणं तु "स्पृशोऽनुदके क्विन्" इत्यतः प्रभृति न व्याप्रतियते" इति। ननु सकर्मका अपि धातवः सन्ति, तत्कथं न व्याप्रियत इति? एवं मन्यते-- स्पृशोऽनुदके क्विन्" ३।२।५८ इत्यादिषु यत् "कत्तरि" ३।२।५७ इत्यनुवत्तते तत् कर्तृप्रचयार्थं विज्ञायते, तेन सुपीति व्याप्रियते, न कर्मणीति। एवं हि कर्तृप्रचयो लभ्यते, नान्यथा। अथ उपसर्गग्रहणं किमर्थम? यावतोपसर्गाः सुबन्ता एव, तत्र सुब्ग्रहणेनैवोपसर्गग्रहणं सिद्धमित्याह-- "उपसर्गग्रहमं ज्ञापनार्थम्िति। "अन्यत्र सुब्ग्रहण उपसर्गग्रहणं न भवति" इति। क्वान्यत्र सुब्राग्रहण उपसर्गग्रहणं न भवतीत्याह-- "वदः सुपि क्यप् च" इति। ननु च "वदः सुपि क्यप् च" ३।१।१०६ इत्यत्र "गदमदचरयमश्चानुपसर्गे" ३।१।१००

इत्यतोऽनुपसर्गग्रहणमनुवत्र्तते। एवञ्चोपसर्गग्रहणं नानुवत्र्तयितव्यमिति वा ज्ञापनार्थमुपसर्गग्रहणम्। विकल्पप्रदर्शनार्थं कत्र्तव्यमित्यन्ये। "अपूरे त्वाहुः-- ज्ञापकप्रयोजनदिगियमिति वृत्तिकारो दर्शयति। इदं तु स्पष्टं ज्ञापकस्य प्रयोजनम्-- "स्पृशोऽनुदके क्विन्" ३।२।५८ इत्यत्र "सुपि" ३।२।४ इत्यधिकारादसति ज्ञापक उपसर्गग्रहणे सुबन्तेऽप्युपसर्गे स्यात्-- उपस्पृशति, संस्पृशतीति; अस्मात् ज्ञापकान्न भवति। "साहचर्यात्ित्यादि। यदि "सू"इत्ययं धातुरादादिकत्वं व्यभिचरति "द्विष अप्रीतौ"(धा।पा।१०१३) इत्येष तु न व्यभिचरति, अतोऽनेन साहचर्यात् "सू" इत्यादादिकस्य "षूङ प्राणिगर्भविमोचने" (धा।पा।३०३१) इत्यस्य ग्रहणम्, न "षू प्रेरणे" (धा।पा।१४०८) इत्यस्य तौदादिकस्य। ननु च सदिना तौदादिकसाहचर्यादस्यापि ग्रहणं भवति? नैतदस्ति; यथैव हि "सू" इत्येष तौदादिकतवं व्यभिचरति,तथा सदिरपि, तस्य भ्वादिषु पाठात्, तत्कथं तेन साहचर्यात् तौदादिकस्येह ग्रहणं स्यात्। "न सुबतेः" इति। अनादादिकसूरूपस्य धातोरुपलक्षममेतत्। "{षूङ्-धा।पा।}षञ् प्राणिप्रसवे" (धा।पा।११३२) इत्येतस्यापि दैवादिकस्य ग्रहमं न युक्तम् ; न्यायस्य च तुल्यत्वात्। "द्वयोरपि ग्रहणम्" इति। विशेषानुपादानात्। "न लाभार्थस्य" इति। "विद्()लृ लाभे" (धा।पा।१४३२) इत्येतस्य। "अकारस्य विवक्षितत्वात्" इति। इह लाभार्थस्यानुपादाने हेतुः "विदः" इति सूत्रेऽकारान्तोच्चारणं विवक्षितमिति,तेन विदेरकारान्तस्य गणे पाठात् स एव गृह्रते, न लृकारान्तः। "शृचिषत्" इति। "{षद्()लृ-धा।पा।} सद्()लृ विशरणार्थः (धा।पा।८५४)। "मित्रध्रुक्िति। "द्रुह जिघांसायाम्" (धा।पा।११९७) "वा द्रुहमुह" ८।२।३३ इति ककारः, "एकाचो बशो भष्" ८।२।३७ इत्यादिना भष्भावः। "गोधुक्" इति। " दुह प्रपूरणे" (धा।पा।१०१४) "दादेर्धातोर्घः"८।२।३२ इति घत्वम्। "अ()आयुक्" इति। "चोः कुः" ८।२।३० इति कुत्वं गकारः, तस्य पूर्ववत् ककारः। "शत्रुजित्" इति। "ह्मस्वस्य पिति कृति तुक्" ६।१।६९। "कथमत्र णत्वम्" इति। "पूर्वपदात् संज्ञायामगः" ८।४।३ इति संज्ञायां विधीयमानेन णत्वेनासंज्ञायामिह न भवितव्यमिति भावः। "सम्राटः"इति। "राजृ दीप्तौ" (धा।पा।८२२), "व्रश्चभ्रस्ज" ८।२।३६ इति चर्त्वं टकारः, "मो राजिसमः क्वौ" ८।३।२५ इति मकारः। क्विपः ककारो गुणवृद्धिनिषेधार्थः। पकारस्तुगर्थः। "वेरपृक्तस्य" ६।१।६५ इति वकारलोपः। इकारः "वेरपृक्तस्य" इति सामान्यग्रहणार्थः॥

बाल-मनोरमा

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ७८६, ३।२।६१

सत्सूद्विष। सद्, सू, द्विष,द्रुह, दुह, युज, विद, भिद, छिद, जि , नी, राज् एषां द्वन्द्वात्पञ्चम्यर्थे षष्ठी। "अनुपसर्गे" इत्यस्य निवृत्त्यैव सिद्धे "उपसर्गेऽपी"ति वचनमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति ज्ञापनार्थम्। तेन "वदः सुपि क्यप् चे" ति विधिरुपसर्गे न भवतीति भाष्ये स्पष्टम्। द्युसदिति। दिवि सीदतीति विग्रहः। "सात्पदाद्यो"रिति न षत्वम्। "पूर्वपदा"दिति षत्वं तु न भवति, तस्य च्छान्दसत्वात्।"आदितेया दिविषदः" इत्यत्र सुषामादित्वात्वमित्याहुः। उपनिषदिति। "सदिरप्रते"रिति षत्वम्। इत्यादीति। काष्ठभित्, रज्जुच्छित्। शत्रुजित्। अत्र "ह्मस्वस्य पिती"ति तुक्। सेनानीः। विराट्। अंशभागीति। णित्त्वादुपधावृद्धिः।

तत्त्व-बोधिनी

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ६५२, ३।२।६१

सत्सूद्विष। षद्लृ विशरणादौ। "सू" इति द्विषा साहचर्यात्सूतेरादादिकस्य ग्रहणं न तु सुवतिसूयत्योः। युजिर् योगे, युज समाधौ, द्वयोरपि ग्रहणम्। विद ज्ञाने, विद विचारणे, विद सत्तायां, --त्रयाणामपि ग्रहणम्। विद्लृ लाभे इत्यस्य तु न ग्रहणम्, विदेत्यकारस्य विवक्षितत्वात्। द्युसदिति "पूर्वपदा"दिति षत्वं तु न भवति, छन्दसीत्यनुवृत्तेः। तथा च माघः--"मनस्सु येन द्युसदां न्यधीयते" ति। "आदितेया द्विषदः" इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः। उपनिषदित्यत्र तु "सदिरप्रते" रिति षः। अग्रग्रामाभ्यामिति। "स एषां ग्रामणी"रिति निर्देशेन ज्ञापितपपदादपि णत्वं,

तेनाऽग्रणीरित्यपि सिद्धमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

भजो ण्विः ३।२।६२

उपसर्गे सुपि इति वर्तते। भजेर् धातोः सुबन्त उपपदे उपसर्गे ऽपि प्रभाक्।

न्यासः

भजो ण्विः। , ३।२।६२

"अर्धभाक्" इति। "वेरपृक्तस्य" ६।१।६५ इति वकारलोपः। प्रत्ययलोपलक्षणेन "अत उपधायाः" ७।२।११६ इति वृद्धिः, "चोः कुः" ८।२।३० इति कुत्वम्। णकारो वृद्ध्यर्थः। इकारः "वेरपृक्तस्य" ६।१।६५ इति सामान्यग्रहणार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि सहः ३।२।६३

उपसर्गे सुपि इत्येव। छन्दसि विषये सहेर् धातोः सुबन्ते उपपदे ण्विप्रत्ययो भवति। तुराषाट्। सहेः साडः सः ८।३।५६ इति षत्वम्, अन्येषाम् अपि दृश्यते ६।३।१३६ इति दीर्घत्वम्।

न्यासः

छन्दसि सहः। , ३।२।६३

"जलाषाट्" इति। "हो ढः" ८।२।३१ इति ढत्वम्, तस्य जश्त्वम्-- डकारः,तस्य "वाऽवसाने" ८।४।५५ इति टकारः॥

---

सूत्रम्

काशिका-वृत्तिः

वहश् च ३।२।६४

वहेर् धातोः छन्दसि विषये सुबन्त उपपदे ण्विप्रत्ययो भवति। प्रष्ठवाट्। दिव्यवाट्। योगविभाग उत्तरार्थः।

न्यासः

वहश्च। , ३।२।६४

"पृष्ठवाट्" इति। पूर्ववद्()वृद्धिः, ढत्वजश्त्वचर्त्वानि। योगविभागं उत्तरार्थः-- उत्तरत्र बहेनुवृत्तिर्यथा स्यात्, सहेर्मा भूत्। एकयोगे हि सति द्वयोरप्यनुवृत्तिः स्यात्॥

---

सूत्रम्

काशिका-वृत्तिः

कव्यपुरीषपुरीष्येषु ञ्युट् ३।२।६५

कव्य पुरीष पुरीष्य इत्येतेषु उपपदेषु छन्दसि विषये वहेर् धातोः ण्युट् प्रत्ययो भवति। कव्यवाहनः पितृणाम्।

पुरीषवाहणः। पुरीष्यवाहनः।

न्यासः

कव्यपरीषपरीष्येषु ञ्युट्। , ३।२।६५

पूर्वेण च्वौ प्राप्ते ञ्युड्विधीयते। टकारो ङीबर्थः, ञकारः स्वरार्थो वृद्ध्यर्थश्च। युमात्रं प्रत्ययः, तस्य "युवोरनाकौ"७।१।१ इत्यनादेशः॥

---

सूत्रम्

काशिका-वृत्तिः

हव्ये ऽनन्तःपादाम् ३।२।६६

हव्यशब्दे उपपदे छन्दसि विषये वहेर् धातोः ञ्युट् प्रत्ययो भवति, अनन्तःपादं चेद् वहिर्वर्तते। अग्निश्च हव्यवाहनः अनन्तःपादम् इति किम्? हव्यवाडग्निरजरः पिता नः।

न्यासः

हव्येऽनन्तःपादम्। , ३।२।६६

"अनन्तःपादम्" इति। अन्तः शब्दो मध्यशब्देन समानार्थः। अन्तःपादमिति पादस्य मध्य इत्यर्थ-। "अव्ययं विभक्ति" २।१।६ इत्यादिना विभक्त्यर्थेऽव्ययीभावः-- न अन्तःपादमनन्तःपादमिति। एतच्च वहेः प्रकृतत्वात् तस्यैव विशेषमं विज्ञायत इत्यत आह-- "अनन्तःपादञ्चेद्वहिर्वत्र्तते"इति। छन्दसीत्यनुवृत्तेः पादशब्द ऋक्पादं बोधयति। ऋक्पादमध्ये वहिर्न वत्र्तत इत्यर्थः। प्रत्युदाहरणे पादमध्ये वहिर्वत्र्तत इति तेन "वहश्च" ३।२।६४ इति ण्विरेव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

जनसनखनक्रमगमो विट् ३।२।६७

छन्दसि उपसर्गे सुपि इति अनुवर्तते। जन जनने, जनी प्रदुर्भावे, द्वयोरपि ग्रहणम्। तथा षणु दाने, वन षने संभक्तौ, द्वयोरपि ग्रहणम्। जनादिभ्यः धातुभ्यः सुबन्त उपपदे छन्दसि विषये विट् प्रत्ययो भवति। टकारः सामान्यग्रहणाविघातार्थः वेरपृक्तस्य ६।१।६७ इति, विषेषणार्थश्च विड्वनोरनुनासिकस्यात् ६।४।४१ इति। जन अब्जाः गोजाः। सन गोषा इन्दो नृषा असि। खन बिसखाः। कूपखाः। क्रम दधिक्राः। गम अग्रेगा उन्नतृणाम्।

न्यासः

जनसनखनक्रमगमो विट्। , ३।२।६७

"द्वयोरपि ग्रहणम्" इति। विशेषानुपादानात्। "तथा" इत्यादि। यथानन्तरयोर्धात्वोरुभयोग्र्रहणमिति, तथानयोरपि सम्भवक्तार्थयोरित्यर्थः। "टकारः सामान्यग्रहणविघातार्थः"इति। असति टकारे "वेरपृक्तस्य" ६।१।६७ इत्यत्रैकानुबन्धपरिभाषया (व्या।प।५२) अस्यैवं ग्रहणं स्यात्, न विजादीनाम्। टकारे त्वस्यापि द्वयनुबन्धकत्वात् सर्वेषां ग्रहणमुपपद्यते। "विशेषणार्थश्च" इति। "विड्()वनोरनुनासिकस्यात्" ६।४।४१ इत्यत्र विशेषणार्थष्टकारः, "विवनोः" इत्युच्यमाने हि क्विबादीनामपि ग्रहणं स्यात्, तथा चाकरोदित्येवमादौ लोपः स्यात्। "अब्जाः" इति। अप्सु जायत इति अब्जाः। एवं "गोजाः"। गां सनोतीति "गोषाः"। "सनोतेरनः" ८।३।१०८ इति षत्वम्। नरं सनोतीति "नृषाः"। विलं खनतीति "विलखाः"। दधि क्रामतीति "दधिक्राः"। अग्रे गच्छतीति "अग्रेगाः"। "तत्पुरुषे कृति बहुलम्" ६।३।१३ इति

ससम्या अलुक्। सर्वत्र "वेरपृक्तस्य" ६।१।६७ इति लोपः, "विड्()वनोः" ६।४।४१ इत्यात्त्वम्॥

---

सूत्रम्

काशिका-वृत्तिः

अदो ऽनन्ने ३।२।६८

छन्दसि इति निवृत्तम्। अदेर् धातोरनन्ने सुप्युपपदे विट् प्रत्ययो भवति। आममत्ति आमात्। सस्यात्। अनन्ने इति किम्? अन्नादः।

न्यासः

अदोऽनन्ने। , ३।२।६८

बाल-मनोरमा

अदोऽनन्ने ७८७, ३।२।६८

अदोऽनन्ने। विट् स्यादिति। शेषपूरणमिदम्। अन्नशब्दभिन्ने सुप्युपपदे अदेर्विट् स्यादिति फलितम्। "जनसनखनक्रमगमो वि"जिति छान्दससूत्राद्विडित्यनुवर्तते। सस्यादिति। सस्यमत्तीति विग्रहः। अन्नाद इति। कर्मण्यण्।

तत्त्व-बोधिनी

अदोऽनन्ने ६५३, ३।२।६८

अदोऽनन्ने। विट् स्यादिति। "जनसनखनक्रमगमो विट्िति पूर्वसूत्रादनुवृत्तेः। पूर्वसूत्रं त्विह नोपन्यस्तम्, तत्र हि "छन्दसि सहः" इत्यश्छन्दसीत्यनुवर्तनात्।

---

सूत्रम्

काशिका-वृत्तिः

क्रव्ये च ३।२।६९

क्रव्यशब्द उपपदे अदेर् धातोः विट् प्रत्ययो भवति। क्रव्यमत्ति क्रव्यात्। पूर्वेण एव सिद्धे वचनम् असरूपबाधनार्थम्। तेन अण् न भवति। कथं तर्हि क्रव्यादः? कृत्तविकृत्तशब्दे उपपदे अण्, तस्य च पृषोदरादिपाठात् क्रव्यभावः। कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद उच्यते, आममांसभक्षः क्रव्यातिति।

बाल-मनोरमा

क्रव्ये च् ७८८, ३।२।६९

क्रव्ये च। अदेर्विडिति। शेषपूरणमिदम्। अण्बाधनार्थमिति। क्रव्ये अदेर्विडेव, न त्वणित्यर्थलाभादिति भावः। कथं तर्हीति। "क्रव्ये उपपदे अदेर्विडेवे"ति नियमादणोऽसंभवादित्याक्षेपः। समाधत्ते-- पक्वमांसशब्ददिति। तर्हि "पक्वमांसाद" इति स्यादित्यत आह--उपपस्य क्रव्यादेश इति। कुत इत्येत आह-- पृषोदरादित्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

दुहः कब् घश् च ३।२।७०

दुहेर् धातोः सुप्युपपदे कप् प्रत्ययो भवति, घकारश्चान्तादेशः। कामदुघा धेनुः। अर्घदुघा। धर्मदुघ।

न्यासः

दुहः कब्घश्च। , ३।२।७०

"कामदुधा"। "घर्मदुघा"। कामं दोग्धीति कामदुघा। गर्मं दोग्धीति घर्मदुधा॥

बाल-मनोरमा

दुहः कब्धश्च ७८९, ३।२।७०

दुहः कुब्धश्च। सुप्युपपदे दुहेः कप्स्यात्, प्रकृतेर्घश्चान्तादेश इत्यर्थ-। कामदुघेति। "धेनु"रिति शेषः। कामम् = अपेक्षितं दुग्धे इति विग्रहः।

तत्त्व-बोधिनी

दुहः कः द्व्यश्च ६५४, ३।२।७०

कामदुघेति। "धेनु"रिति शेषः। कामं दोग्धीति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

मन्त्रे श्वेतवहौक्थशस्पुरोडाशो ण्विन् ३।२।७१

श्वेतवह उक्थशस् पुरोडाशित्येतेभ्यो ण्विन् प्रत्ययो भवति मन्त्रे विषये। धातूपपदसमुदाया निपात्यन्ते अलाक्षणिककार्यसिद्ध्यर्थम्। प्रत्ययस् तु विधीयत एव। श्वेतशब्दे कर्तृवाचिनि उपपदे वहेर् धातोः करणि कारके ण्विन् प्रत्ययो भवति। श्वेता एनं वहन्ति श्वेतवा इन्द्रः। उक्थशब्दे कर्मणि करणे वा उपपदे शंसतेर् धातोः ण्विन् प्रत्ययो भवति, नलोपश्च निपात्यते। उक्थानि शंसति, उक्थैर् वा शंसति, उक्थशा यजमानः। दाशृ दाने इत्येतस्य पुरःपूर्वस्य डत्वम्, कर्मणि च प्रत्ययः। पुरो दाशन्त एनं प्रोडाः। श्वेतवहादीनां डस्पदस्य इति वक्तव्यम्। श्वेतवोभ्याम्। श्वेतवोभिः। पदस्य इति किम्? श्वेतवाहौ। श्वेतवाहः।

न्यासः

मन्त्रे �ओतवक्थशस्पुरोडाशो ण्विन्। , ३।२।७१

"एतेभ्यः" इति। ()ओतव इत्येवमादिभ्यः प्रकृत्युपपदसमुदायेभ्यः। "धातुपपदसमुदाया निपात्यन्ते" इति। ()ओतवा इत्येवादयः। किं पुनः कारणं धातूपपदसमुदाया निपात्यन्ते, न पुनः पृथगेवोपपदानि धातवश्च निर्दिश्यन्ते? इत्याह-- "अलाक्षणिककार्यसिद्ध्यर्थम्" इति। ()ओतवा इत्येवमादिषु "अवयाः ()ओतवाः पुरोडाश्च" इति रुत्वं निपात्यते। "उक्थशाः"इति। "ससजुषो रुः" ८।२।६६ इतिरुत्वमस्त्येव। "शंसतेः"इति। "{शंसु-धा।पा।} शन्स स्तुतौ" (धा।पा।७२८) इत्यस्य। ण्विनौ नित्करणमाद्युदात्तार्थम्। णित्करणं वृद्ध्यर्थम्। इकारः "वेरपृक्तस्य" ६।१।६५ इति विशेषणार्थः। "()ओतवाहादीनाम्()" इत्यादि। यदि तर्हीदमुच्यते, नार्थः "अवयाः ()ओतवाः पुरोडाश्च"इत्यनेन वचनेन, रुत्वार्थेन तस्य दीर्घत्वात्त? ननु च "अत्वसन्तस्य चाधातोः"(६।४।१४) इति दीर्घत्वं सिद्धमेव? यत्र तर्हि तेन न सिध्यति तदर्थं यथा स्यात्। क्व पुनस्तेन न सिध्यति? सम्बुद्धौ। यदि तर्हि तदुच्यते तदा डस् न वक्तव्यः,तेनैव निपातनेन

()ओतवहादीनामसन्तता निपातयिष्यते? नैतदस्ति; सम्बुद्धौ दीर्घत्वं न स्यादित्युक्तम्। अथासन्तता निपातयिष्यत इति वक्तव्यम्, तथा च सति ()ओतवोभ्यामित्यत्रोत्वं स्यात्। तस्मात् डस् वक्तव्यः, निपातनमपि कत्र्तव्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

अवे यजः ३।२।७२

अवे उपपदे यजेः धातोः ण्विन् प्रत्ययो भवति मन्त्रे विषये। त्वं यज्ञे वरुणस्य अवया असि। योगविभाग उत्तरार्थः।

न्यासः

अवे यजः।, ३।२।७२

"योगविभाग उत्तरार्थः"इति। उत्तरसूत्रे यजरेवानुवृत्तिर्यथा स्यात्॥

---

सूत्रम्

काशिका-वृत्तिः

विजुपे छन्दसि ३।२।७३

उपे उपपदे यजेः छन्दसि विषये विच् प्रत्ययो भवति। उपयड्भिरूर्ध्वं वहन्ति। उपयट्त्वम्। छन्दोग्रहणं ब्राह्मणार्थम्। विचः चित्करणं सामान्यग्रहणाविघातार्थम् वेरपृक्तस्य ६।१।६५ इति। किम् अर्थम् इदम् उच्यते, यावत अन्येभ्यो ऽपि दृश्यन्ते ३।२।७५ इति यजेरपि विच् सिद्ध एव? यजेर् नियमार्थम् एतत्, उपयजेः छन्दस्य इव, न भाषायाम् इति।

न्यासः

विजुपे छन्दसि।, ३।२।७३

"उपयड्()भीः"इति। "व्रश्चादिना" ८।२।३६ षत्वम्, पूर्ववज्जश्त्वम्-- डकारः। "उभयट्()त्वम्" इति। त्वप्रत्यये परतः "खरि च" ८।४।५४ इति चर्त्वं टकारः। ननु च "मन्त्रे" ३।२।७१ इत्यनुवर्त्तिष्यते, मन्त्रश्च च्छन्द एव, तत् किमर्थं छन्दसिग्रहणं क्रियत इत्याह-- "छन्दोग्रहणं ब्राआह्मणार्थम्" इति। असति च्छन्दोग्रहणे मन्त्रग्रहणानुवृत्तेरपि ब्राआह्मणे न स्यात्, न हि मन्त्रग्रहणेन ब्राआह्मणं गृह्यते;तस्य ग्रन्थान्तरत्वात्। मन्त्रव्याख्याने ग्रन्थविशेषे ब्राआह्मणशब्दो वत्र्तते, न तु मन्त्रे ; तसमाद्()ब्राआह्मणेऽपि यथा स्यादित्येवमर्थं छन्दसीत्युक्तम्। "विचश्चित्करणम्" इत्यादि। असति चित्करण एष एकानुबन्धः स्यात्। ततश्च "वेरपृक्तस्य" ६।१।६५ इत्यत्रैकानुबन्धकपरिभाषया (व्या।प।५२) अस्यैव ग्रहणं स्यात्, न क्विबादीनाम्। चित्करणे तु सत्येकानुबन्धो न कश्चिदस्तीति सर्वे गृह्यन्ते॥

---

सूत्रम्

काशिका-वृत्तिः

आतो मनिन्क्वनिब्वनिपश् च ३।२।७४

छन्द्सि इति वर्तते, सुपि उपसर्गे ऽपि इति च। आकारान्तेभ्यो धातुभ्यः सुपि उपप्दे छन्द्सि विषये मनिन् क्वनिप् वनिपित्येते प्रत्यया भवन्ति। चकरात् विच् भवति। सुदामा। अश्वत्थामा। क्वनिप् सुधीवा। सुपीवा। वनिप् भूरिदावा। घृतपावा। विच् खल्वपि कीलालपाः। शुभंयः। रामस्य उपदाः।

न्यासः

आतो मनिन्क्वनिब्वनिपश्च। , ३।२।७४

मनिनो नकार आद्युदात्तार्थः। क्वनिब्वनिपोः पकारानुदात्तार्थौ, इकार उच्चारणार्थः। क्वनिपः पकारः पित्कार्यार्थः, चकारो विचोऽनुकर्षणार्थः। शोभनं ददातीति "सुदामा"। "सर्वनामस्थाने च"६।४।८ इत्यादिना दीर्घः। अ()आ इव तिष्ठतीत्य()आत्थामा। पृषोदरादित्वात् सकारस्य तकारः। शोभनं दधातीति "सुधीवा"। शोभनं पिबतीति "सुपीवा"। धुमादिनेत्त्वम् ६।४।६६। भूरि ददातीति "भूरिदावा"। घृतं पिबतीति "घृतपावा"। कीलालं पिबतीति "कीलालपाः"॥

---

सूत्रम्

काशिका-वृत्तिः

अन्येभ्यो ऽपि दृश्यन्ते ३।२।७५

छन्दसि इति निवृत्तम्। अन्येभ्यो ऽपि धातुभ्यो ऽनाकारान्तेभ्यो मनिन् क्यनिप् वनिपित्येते प्रत्यया दृश्यन्ते, विच् च। सुशर्मा। क्वनिप् प्रातरित्वा। प्रातरित्वानौ। वनिप् विजावाग्ने। अग्रेयावा। विच् खल्वपि रेडसि। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। निरुपपदादपि भवति। धीवा। पीवा। दृशिग्रहणं प्रयोगानुसरणार्थम्।

लघु-सिद्धान्त-कौमुदी

अन्येभ्योऽपि दृश्यन्ते ८०२, ३।२।७५

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः॥

न्यासः

अन्येभ्योऽपि दृश्यन्ते। , ३।२।७५

"सुशर्मा" इति। "शृ? हिंसायाम्" (धा।पा।१४८८) शोभनं शृणातीति विग्रहः। "प्रातरित्वा" इति। इणः प्रातः शब्द उपपदे क्वनिप्, "ह्रस्वस्य पिति कृति" ६।१।६९ इति तुक्। "विजावा" इति। "जनी प्रादुर्भावे" (धा।पा।११४९), विजायत इति वनिप्, "विड्()वोरनुनासिकस्य" ६।४।४१ इत्यात्त्वम्। "अग्रेगावा" इति। "गम्लृ सृप्लृ गतौ" (धा।पा।९८२,९८३) पूर्ववदात्त्वम्। "रेडसि" इति। "रिष हिंसायाम्" (धा।पा।६९४), पूर्ववज्जश्त्वं डकारः। "दृशिग्रहणं प्रयोगानुसरणार्थम्" इति।तेन प्रयोगे गम्यमाने यत्र दृश्यन्ते मनिन्नादयस्तत्रैवैते साधवः, अतो नापूर्वतमः क्रियते। एतेन "ते न सर्वतो विधेयाः" इत्युक्तं भवति। यद्यन्येभ्योऽपि दृश्यन्ते, पूर्वसूत्रमनर्थकम्, मनिन्नादयः सर्वधातुभ्यो दृश्यन्त इत्येवं वाच्यम्? नैतदस्ति; आकारान्तेभ्यो धातुभ्यो नियोगतस्ते भवन्ति, अनाकारान्तेभ्यः क्वचिदेय। अपि तु पूर्वयोगश्छन्()दसि, वयं तु भाषायामपि॥

बाल-मनोरमा

अन्येभ्योऽपि दृश्यन्ते ७९०, ३।२।७५

अन्येभ्योऽपि दृस्यन्ते। "विजुपे छन्दसि" "आतोमिन्()क्वनिब्वनिपश्चे"त्यधिकारे इदं इत्, इकार उच्चारणार्थः। विचि चकार इत् इकार उच्चारणार्थः।

तत्त्व-बोधिनी

अन्येभ्योऽपि दृश्यन्ते ६५५, ३।२।७५

अन्येभ्योऽपि दृश्यन्ते। इह "विजुपे छन्दसि" इत्यतो विच्प्रत्ययः। "आतो मनि"न्निति सूत्रान्मनिनादयश्चानुवर्तन्ते।

तदाह-- मनिन्क्वनिबित्यादि।

---

सूत्रम्

काशिका-वृत्तिः

क्विप् च ३।२।७६

सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि भाषायां च क्विप् प्रत्ययो भवति। उखायाः स्रंसते उखास्रत्। पर्णध्वत्। वाहात् भ्रश्यति, वाहाभ्रट्। अन्येषम् अपि दृश्यते ६।३।१३६ इति दीर्घः।

लघु-सिद्धान्त-कौमुदी

क्विप् च ८०५, ३।२।७६

अयमपि दृश्यते। उखास्रत्। पर्णध्वत्। बाहभ्रट्॥

न्यासः

क्विप् च। , ३।२।७६

"निरुपपदेत्रभ्यश्च" इति। एतदपिशब्दस्य सर्वोपाधिव्यभिचारार्थस्यानुवृत्तेर्लभ्यते। "उखारुआत्। प्रर्णध्वत्" इति। "रुआन्सु ध्वन्सु अवरुआन्सने" (धा।पा७५४,७५५) , "अनिदिताम्" ६।४।२४ इत्यादिनानुनासिकलोपः। "वसुरुआन्सुध्वंस्वनडुहां दः" ८।२।७२ इति दत्वम्, "वाऽडवसाने" ८।४।५५ इति चत्र्वम्। "वाहाभ्रट्" इति। "भ्रन्शु अधः पतने" (धा।पा।१२२५), व्रश्चादिसूत्रेण ८।२।३६ षत्वम्, पूर्ववज्जश्त्वम्, चत्र्वम्, "अन्येषामपि दृश्यते" ६।३।३६ इति दीर्घः॥

बाल-मनोरमा

क्विप् च ७९३, ३।२।७६

क्विप् च। अयमपीति। सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि लोके च क्विप् दृश्यते इत्यर्थः। नन्वनेनैव सिद्धे "सत्सूद्विषे"ति सूत्रं व्यर्थमित्यत आह-- सत्सूद्विषेति। "सत्सूद्विषे"ति सूत्रं तु "क्विप् चे"त्यस्यैव प्रपञ्च इत्यर्थः। उखारुआदिति। उखायाः रुआंसत इति विग्रहः। रुआंसेः क्विप्, "अनिदिता"मिति नलोपः, "वसुरुआंसु" इति दत्वम्। एवं पर्णध्वत्()। पर्णात् द्वंसत इति विग्रहः। वाहभ्रडिति। वाहात् भ्रश्यति इति विग्रहः। व्रश्चादिना षः।

तत्त्व-बोधिनी

क्विप् च ६५८, ३।२।७६

वाहभ्रडिति। वाहाद()आआद्भ्रश्यतीति विग्रहः। वृत्तौ तु वहाभ्रडिति पाठः। वहः = स्कन्धः, "अन्येषामपि दृश्यते" इति पूर्वपदान्तस्य दीर्घ इति हरदत्तः।

---

सूत्रम्

काशिका-वृत्तिः

स्थः क च ३।२।७७

सुपि उपसर्गे ऽपि इति च वर्तते। स्था इत्येतस्माद् धातोः सुपि उपपदे कप्रत्ययो भवति, क्विप् च। किमर्थम् इदम् उच्यते,

यवता सुपि स्थः ३।२।४ इति कः सिद्ध एव, अन्येभ्यो ऽपि दृश्यते ३।२।१७८ इति क्विप्? बाधकबाधनार्थं पुनर् वचनम्। शमि धातोः संज्ञायाम् ३।२।१४ अचं बाधते शंस्थः। शंस्थाः।

न्यासः

स्थः क च। , ३।२।७७

"बाधकबाधनार्थम्" इत्यादि। कक्विपोर्बाधकोऽच्, तस्यापि बाधनार्थम्। अचस्तु बाधकत्वं "शमि धातोः संज्ञायाम्" ३।२।१४ इत्यत्र धातुग्रहणम्। तद्धि यतोऽपवादो विहितस्ततोऽपि शम्युपपदे संज्ञायामजेव यथा स्यादित्येवमर्थं कृतम्। एवञ्च "स्थः क च" इत्येतद्यदि नोच्येत, ततो यथा कृञो हेत्वादिषु टप्रतिषेधार्थं धातुग्रहणं तथा तिष्ठतेरपि कक्विपोर्बाधनार्थं विज्ञायते। तथा च सति शम्युपपदे संज्ञायां तिष्ठतेरजेव स्यात्, न कक्विपौ। अ()स्मस्तु योगे सत्यचं बाधित्वोभावेव भवतः। "शंस्थः" इति। " आतो लोप इटि च" ६।४।६४ इत्याकारलोपः॥

बाल-मनोरमा

स्थः च क ७९७, ३।२।७७

स्थः क च। "के"त्यविभक्तिकम्। स्थ इति पञ्यम्यन्तम्।चात् क्विबिति। उपसर्गे अनुपसर्गे च सुबन्धे उपपदे स्थाधातोः कप्रत्ययः स्यात्, क्विप् चेति फलितम्। शंस्थ इति। शमित्यव्ययं सुखे। तत्पूर्वात्स्थाधातोः कप्रत्यये आतो लोपः। शंस्था इति, - क्विपि रूपम्।सुखं स्थापयतीत्यर्थः। तिष्टितरन्तर्भावितण्यर्थः। "शंस्थाट इति भाष्यप्रयोगात्पृषोदरादित्वाच्च "घुमास्थे"ति ईत्वं न। केचित्तु "क चे"ति चकाराद्विजेवानुकृष्यते इत्याहुः। ननु "सुपि स्थः" इति कप्रत्यये "क्विप् चे"ति क्विपि च सिद्धे किमर्थमिदमित्यत आह-- शमिधातोरित्यचमिति। अन्यथा धातुग्रहणसामर्थ्यात्कृञो हेत्वादिषु ट

प्रत्ययमिव शम्पूर्वात् स्थाधातोः कं क्विपं च अच्प्रत्ययो बाधेतेति भावः।

तत्त्व-बोधिनी

स्थः च क ६६०, ३।२।७७

स्थः क च। शंस्था इति। क्विपि लुप्ते "घुमास्थे" ति ईत्वं न, स्थानिवद्भावस्य अनल्विधादिति निषेधात्। प्रत्ययलक्षणसूत्रं तु प्रत्ययस्याऽसाधारणं रूपं यत्राश्रीयते तत्रैवेति नियमार्थमिति निष्कर्षात्। यत्तु कैयटेनोक्तम्-- "ईत्वमवकारादावादविति वचनाद्भाष्यकारीयोदाहणप्रामाण्याद्वा प्रत्ययलक्षणेन ईत्वं ने"ति, तत् "अतृणेडित्यादिसिद्धये प्रत्ययप्राधान्ये अल्विध्यर्थं प्रत्ययलक्षणसूत्र"मिति पक्षमभिप्रेत्य। तत्राप्यवकारादाविति वचनस्वीकारे सुधीवेति न सिध्येदित्यपरितोषेण पक्षान्तरस्वीकार इति बोद्ध्यम्। ननु "नियमार्थ"मिति निष्कर्ष पक्षे तु प्रागुक्तं मत्रशीरित्यत्र कथमित्त्वं भवेदिति चेत्। अत्राहुः-- शास इदिति। ततः -- अङि। नियमार्थमिदम्। अजादौ चेदित्त्वं स्यादड()एव नान्यत्रेति हल्ग्रहणं मास्त्विति ज्ञेयमिति। नचैवमपि हलादौ पिति सार्वधातुके तृणह इमो विधानादतृणेडित्यादि तु नियमपक्षे न सिध्यतीत्यल्विध्यर्थमिति पक्षोऽपि स्वीकर्य इति वाच्यम्, "उतो वृद्धि"रिति सूत्राद्धल्ग्रहणमनुवर्त्य तृणहानीत्यत्राऽनिष्टवारणाय "नाभ्यस्तस्याची"ति सूत्रादचि नेत्यनुवर्त्य व्याख्यानात्। एतच्च रुधादिगण एव व्याख्याताम्। स्यादेतत्-- "सुपि स्थः" "क्विप् चे"ति सूत्राभ्यां कक्विपौ सिद्धौ। शमीत्यादि। धातुग्रहणसामर्थ्याद्धिधातुमात्राद्भवन्नच्()प्रत्ययो हेत्वादिषु कृञष्टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेतेति "स्थः क चे"त्यारम्भ इति भावः। नन्वेवं "शमि धातो"रित्यस्याऽनन्तरं "स्थः क चे"ति सूत्र्यतां, चकारेणाऽचि समुच्चिते सवर्णदीर्घे शंस्था इति भविष्यत, एवं चोत्सर्गापवादयोः समानदेशतया संदर्भशुद्धरपि लभ्यते, इत्वाऽभावार्थं चन यतनीयमिति महल्लाघवमिति चेत्। अत्राहुः-- अशं स्था इत्यत्र "अच्कावशक्तौ" इति सूत्रेणोत्तरपदमन्तोदात्तं स्यात्।

"कृद्ग्रहणे गतिकारकपूर्वस्यापी"ति शंस्थाशब्दस्याजन्तत्वात्। क्विबन्तेन नञ्समासे नञ्पूर्वपदप्रकृतिस्वरः सिध्यतीति।

---

सूत्रम्
काशिका-वृत्तिः
सुप्यजातौ णिनिस् ताच्छील्ये ३।२।७८

अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये गम्यमाने धातोः णिनिः प्रत्ययो भवति। उष्णभोजी। शीतभोजी। अजातौ इति किम्? ब्राह्मणानामन्त्रयिता। ताच्छील्ये इति किम्? उष्णं भुङ्क्ते कदाचित्। सुपि इति वर्तमाने पुनः सुब्ग्रहणम् उपसर्गनिवृत्त्यर्थम्। उत्प्रतिभ्याम् आङि सर्तेरुपसङ्ख्यानम्। उदासारिण्यः। प्रत्यासारिण्यः। साधुकारिणि च। सधुकारी। साधुदायी। ब्रह्मणि वदः। ब्रह्मवादिनो वदन्ति।
लघु-सिद्धान्त-कौमुदी
सुप्यजातौ णिनिस्ताच्छील्ये ८०६, ३।२।७८

अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये। उष्णभोजी॥
न्यासः
सुप्यजातौ णिनिस्ताच्छील्ये। , ३।२।७८

"ब्राआह्मणानामन्त्रयिता" इति। "मत्रि गुप्तभाषणे" (धा।पा।१६७९), "इदितो नुम् धातोः" ७।१।५८ इति नुम्, चुरादिणिच्, ततः "तृन्" ३।२।१३५ इति ताच्छीलिकस्तृन्। "सुपि" इत्यादि। ननु च "सुपि" ३।२।४ इत्यनुवत्र्तमाने पुनः सुब्ग्रहणमनर्थकम्?नानर्थकम्; पूर्वकं हि सुब्ग्रहणमुपसर्गेण सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। अत उपसर्गनिवृत्त्यर्थं पुनः सुब्ग्रहणं क्रियते। "उत्प्रतिभ्याम्" इत्यादि। सुब्ग्रहणस्य चोपसर्गनिवृत्त्यर्थत्वादुपसर्गे न प्राप्नोतीति वचनम्। उत्प्रतिभ्यां परो य आङ,तस्मिन्नुपपदे सत्र्तेर्धातोरुपसंख्यानम् = प्रतिपादनं कत्र्तव्यम्। तत्रेदं प्रतिपादनम्-- "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इत्यतोऽत्रापिशब्दः सर्वोपाधिव्यभिचारार्थोऽनुवत्र्तते, तेन "उदासारिण्यः"इत्यत्रोपसर्गे णिनिर्भवति। "साधुकारिणि च"इति। अताच्छील्यार्थ आरम्भः। चकारेणोपसंख्यानमित्यनुकृष्यते, तस्य प्रतिपादनमेवार्थः। प्रतिपादनं तु-- पूर्ववदपिशब्दं सर्वोपाधिव्यभिचारार्थमाश्रित्य कत्र्तव्यम्। अथ वा-- यदयम् "तच्छीलतद्धर्मत्साधुकारिषु" ३।२।१३४ इति तच्छीलेत्यभिधाय तत्साधुकारिग्रहणं करोरति,तज्ज्ञापयति--साधुकारिण्यताच्छील्येऽपि णिनिर्भवतीति। "ब्राह्मणि वदः" इति। अयमप्यताच्छील्यार्थ आरम्भः, जात्यर्थो वा। ताच्छील्येऽजातौ पूर्वेणैव सिद्धत्वात् वाऽसरूपनिवृत्त्यर्थो न हि भवति। ब्राह्आणं वदित "ब्राह्वादी"इति। णिनेर्णकारो वृद्ध्यर्थः। द्वितीय इकारो नकारस्येत्संज्ञापरित्राणार्थः॥
बाल-मनोरमा
सुप्यजातौ णिनिस्ताच्छील्ये ७९८, ३।२।७८

सुप्यजातौ। "सुपि स्थः" इत्यतः सुपीत्यनुवृत्तौ पुनः सुब्ग्रहणमुपसर्गेऽपि विधानार्थमम्()। अन्यथा "आतोऽनुपसर्गे" इत्यतोऽनुपसर्गे इत्यनुवर्तेत। तद्ध्वनयन्नुदाहरति-- उष्णभोजीति। उष्णभोजनशील इत्यर्थः। उपसर्गभिन्न एवेति। अनुपसर्ग इत्यनुवर्तते। सुब्ग्रहणं तु "सत्सूद्विषे"ति सूत्रादुपसर्गेऽपीत्यनुवृत्तिनिवृत्तये इति भावः। उपसर्गभिन्न एवेति। अनुपसर्ग इत्यनुवर्तते। सुब्ग्रहणं तु "सत्सूद्विषे"ति सूत्रादुपसर्गेऽपीत्यनुवृत्तये इति भावः। उत्प्रतिभ्यामिति। उत्प्रतिभ्यां परे आङि प्रयुज्यमाने सति तत्पूर्वात्सर्तेर्णिनेरुपसङ्ख्यानमिति तदर्थः। उदासारिणी प्रत्यासारिणीत्युदाहरणम्।

भाष्यविरोधादिति। सुब्ग्रहणमुपसर्गग्रहणाऽनुवृत्तिनिवृत्त्यर्थम्, उपसर्गे अनुपसर्गे च सुबन्ते उपपदे धातोर्णिनिरित्येव भाष्ये उदाह्मतत्वादिति भावः। तथा च "उत्प्रतिभ्यामाङि सत्र्ते"रिति वचं नादर्तव्यम्। भाष्ये तत्पाठस्तु प्रक्षिप्त एवेति भावः। अत एव "अनुगादिनष्ठ" गिति सूत्रप्रयोगश्च सङ्गच्छते इति ज्ञेयम्। "उपसर्गभिन्न एव सुपि णिनि"रिति मतं शिष्टप्रयोगविरुद्धं चेत्याहु---- प्रसिद्धश्चोपसर्गेऽपि णिनिरिति। "इत्यादा"वित्यत्रान्वयः। साधुकारिणीति। कृञ्ग्रहणं सर्वधातूपलक्षणम्। साधुकारीत्यात्युदाहरणात्। ब्राह्मणि वद इति। "णिनेरुपसङ्ख्यान"मिति शेषः।
"णिनेरुपसङ्ख्यान"मिति शेषः। ननु "सुप्यजातौ" इत्येव सिद्धे किमर्थमिदं वार्तिकमित्यत आह-- अताच्छील्यार्थमिति। साधुदायीति। आतो युक्। ब्राह्मवादीति। ब्राह्म - वेदः।

तत्त्व-बोधिनी

सुप्यजातौ णिनिस्ताच्छील्ये ६६१, ३।२।७८

उष्णभोजीति। उष्णं भोक्तुं शीलमस्य। आमन्त्रयितेति। मत्रि गुप्तपरिभाषणे, चुरादिराङ्पूर्वः। इदित्त्वान्नुम्, ताच्छील्यस्य विवक्षितत्वातृ()न्। अतएव "न लोके"ति निषेधात् "ब्राआह्मणा"नित्यत्र कर्मणि षष्ठी न कृता। उपसर्गभिन्न एवेति। "सत्सूद्विषे"ति सूत्रे "उपसर्गेऽपी"त्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायाऽस्मिन्सूत्रे पुनः सुब्ग्रहणं कृतमिति भावः। भाष्यविरोधादिति। उक्तं च भाष्ये-- "सुबिति वर्तमाने पुनः सुब्गर्हणं किमर्थमनुपसर्ग इत्यव तदभूत्, इदं तु सुब्मात्रे यथा स्यादुदासारिण्यः प्रत्यासारिण्य" इति। अस्यायमाशयः--- "सत्सूद्विषे" ति सूत्रे "सुपि स्थः" इत्यतः सुपीत्यनुवर्तते, तच्चौपसर्गेतरपरम्, उपसर्गेऽपीति पृथगुक्तेः। तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादिति। निष्कर्षे तु मा भूदिह सुब्वचनग्रहणम्, उपसर्गेऽपीत्यं शस्याप्यनुवृत्त्या निर्वाहात्। सर्वथापि सुब्मात्रे उपपदे णिनिर्नत्वनुपसर्ग एवेति सिद्धान्तः। एतच्च प्रायुङ्क्त-- लिङ्गशेषविधिव्रयापी विशेषैर्यद्यबाधितः" इ [ ती] ति दिक्।

* साधुकारिण्युपसङ्ख्यानम्। साधुकारिणीति। एतच्च ज्ञापकसिद्धम्। "आ क्वे"रिति सूत्रे हि तच्चीलात्पृथक् साधुकारी गृह्यते, तच्च ताच्छील्यं विनापि णिनौ सत्येव सङ्गच्छते।

* ब्राह्मणि वदः। ब्राह्मणि वद इति। इदं तु वाचनिकमेव। अताच्छील्यार्थमिति। एतच्च कैयटहरदत्तादिग्रन्थे स्पष्टम्। यत्तु भट्टवार्तिके ब्राह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतम्। "आ क्वे"रित्यधिकारे तु ब्राह्मणि वदेर्णिनिविधायकं वचनं नास्त्येवेति कथमिदं सङ्गच्छेतेति चेत्, अत्राहुः-- भट्टापादानामयमाशयः-- "सुप्यजातौ" इति सूत्रेण ताच्छील्ये णिनिः। उपसङ्ख्यानेन ज्ञापकेन वा साधुकारिणि णिनिः। "आवश्यकाधमण्र्ययोर्णिनि"रित्यावश्यके णिनिस्तु तद्धर्मे पर्यवस्यति न त्विह "आ क्वेट रिति सूत्रस्य व्यापारोऽस्तीति। ननु ब्राह्मवादिनो वदन्ति इत्यत्र ब्राह्म वेद इति ब्राह्मशब्दस्यापि जातिवाचकत्वात्कथमिह ताच्छील्ये णिनिरिति समर्थनमितिचेत्। अत्र नव्याः-- "सुप्यजातौ" इत्यत्र प्राणिजातिरेव पर्युदस्यते, ताच्छील्यसमभिव्याहारात्, "ब्राआह्मणानामन्त्रयिते"प्रत्युदाहरणानुगुण्याच्चेति न काप्यनुपपत्तिरिति।

---

सूत्रम्

काशिका-वृत्तिः

कर्तर्युपमामे ३।२।७९

कर्तृवाचिनि उपमाने उपपदे धातोः णिनिप्रत्ययो भवति। उपपदकर्ता प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थ आरम्भः, जात्यर्थो वा। कर्तरि इति किम्? अपूपानिव भक्षयति माषान्। उपमने

इति किम्? उष्ट्रः क्रोशति।

न्यासः

कर्त्तर्युपमाने। , ३।२।७९

धातोः कर्त्तरि प्रत्ययविधानात् तस्यैवोपपदकर्त्तोपमानं विज्ञायत इत्याह-- "उपपदकर्त्ता"इत्यादि। उपपदवाच्यः कर्त्रा = उपपदकर्त्ता, शाकपार्थिवादित्वन्मध्यमपदलोपी समासः। "उष्ट्रक्रोशी" इति। "क्रुश आह्वाने रोदने च"च(धा।पा।८५६)। "ध्वाङ्क्षरावी" इति।"रु शब्दे" (धा।पा।१०३४)। अताच्छील्यार्थ आरम्भजात्यर्थो वेति; ताच्छील्येऽजातौ च पूर्वेणैव सिद्धत्वात्। "भक्षयति" इति। "भक्ष अदने" (धा।पा।१५५७) चौरादिकः॥

बाल-मनोरमा

कर्त्तर्युपमाने ७९९, ३।२।७९

कर्त्तर्युपमाने। कर्तुरुपमानमिति। "चे"दित्यध्याहार्यम्। ननु "सुप्यजातौ" इति सिद्धे किमर्थमिदमित्यत आह-- अताच्छील्यार्थमिति।

---

सूत्रम्

काशिका-वृत्तिः

व्रते ३।२।८०

व्रत इति शास्त्रतो नियम उच्यते व्रते गम्यमाने सुबन्त उपपदे धातोः णिनिः प्रत्ययो भवति। समुदायोपधिश्च अयम्। धतूपपदप्रत्ययसौदयेन व्रतं गम्यते। स्थण्डिलशायी। अश्राद्धभोजी। कामचारप्राप्तौ नियमः। सति शयने स्थण्डिल एव शेते न अन्यत्र। सति भोजने ऽश्राद्धम् एव भुङ्क्ते न श्राद्धम् इति। व्रते इति किम्? स्थाण्डिले शेते देवदत्तः। अतच्छील्यार्थ आरम्भः, जात्यर्थो वा।

न्यासः

व्रते। , ३।२।८०

"समुदायोपाधिश्चायम्" इति। प्रत्ययार्थविशेषणशङ्कां निराकरोति। प्रत्ययार्थविशेषणे हि तस्मिन् व्रत एव कर्त्तरि प्रत्ययः प्रसज्येत,न तद्वति देवदत्ते। "धातूपपद" इत्यादिना समुदायोपाधित्वं व्रतस्य दर्शयति। "कामचारप्राप्तौ नियमः"इति। कामचारः = इच्छाप्रवृत्तिः, तत्प्राप्तौ सत्यां नियमः। अनियमत्वाद्यथेष्टं सामान्येन शयने भोजने च प्रवृत्तौ प्राप्तायामयमर्थान्तराद्वयावर्त्त्यविशेषे स्थण्डिलादौ न प्राप्नोति, तस्माद्वयवस्थाप्यते। नियमश्चात्र द्विविधः सम्भवति-- स्थण्डिले शेत एवाश्राद्धं भुङ्क्तं एवेत्येयंरूपो वा स्यात्, स्थण्डिल एव शेतेऽश्राद्धमेव भुङ्क्ते इत्येवंरूपो वा,तत्र पूर्वके नियमे यदैव स्थण्डिले न शेतेऽश्राद्धञ्च न भुङ्क्ते तदैव व्रतलोपः प्राप्नोति। तस्माद् द्वितीयो नियमो युक्त इति मन्यमान आह-- "सति शयने"इत्यादि॥

बाल-मनोरमा

व्रते ८००, ३।२।८०

व्रते। णिनिः स्यादिति। सुप्युपपदे णिनिः स्याद्व्रते गम्ये इति यावत्। स्थण्डिलेशायीति। "तत्पुरुषे कृती"ति [सप्तम्या] अलुक्।

---

सूत्रम्

काशिका-वृत्तिः

बहुलम् आभीक्ष्ण्ये ३।२।८१

आभीक्ष्ण्ये गम्यमाने धातोः बहुलं णिनिः प्रत्ययो भवति। अभीक्ष्ण्यं पौनःपुन्यम्। तात्पर्यम् आसेवैव, ताच्छील्यादन्यत्। कषायपायिणो गन्धाराः। क्षीरपायिणः उशीनराः। सौवीरपायिणो बाह्लीकाः। बहुलग्रहणत् कुल्माषखादः इत्यत्र न भवति।

न्यासः

बहुलमाभीक्ष्ण्ये।, ३।२।८१

"आभीक्ष्ण्यं पौनःपुन्यम्" इति। पुनः पुनर्भावः पौनःपुन्यमिति, अव्ययानां भमात्रे टिलोपः। "तात्पर्यमासेवैव" इति। तदेवाभीक्ष्ण्यम्। पर्यायान्तराभ्यां स्पष्टीकरोति-- "{ताच्छील्यादन्यत्--काशिका, पदमंजरी च।} ताच्छील्यादन्यः" इति। एतेन "सुप्यजातौ" ३।२।७८ इत्यादिनाऽऽभीक्ष्ण्ये न सिध्यतीत्यसामथ्र्यमुद्भावयन्नस्य योगस्य फलं दर्शयति-- "कषायपायिणः"इति। यत्र देशे कषायं पुनः पुनः पिबतामारोग्यं भवति, अतस्ते कषायं पिबन्तीति, न तु ताच्छील्यात्। "क्षीरपायिणः"इति। तेऽपि तथोक्तादेव कारणात् पानान्तराभावाद्वा ताच्छील्याभावेऽप्यगत्या क्षीरं पिबन्ति। "सौवीरपायिणः" इति। अत्राप्येतदेवानन्तरोक्तं पुनः पुनः सौवीरपानस्य कारणम्। सर्वत्र "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्। "प्रातिपदिकान्तनुम्" ८।४।११ इत्यादिना णत्वम्। "कुल्माषखादः" इति। "कर्मण्यण्" ३।२।१॥

बाल-मनोरमा

बहुलमाभीक्ष्ण्ये ८०१, ३।२।८१

बहुलमाभीक्ष्ण्ये। जातावप्युपपदे प्राप्त्यर्थमिदम्। तद्ध्वनयन्नुदाहरति-- क्षीरपायिण इति।

---

सूत्रम्

काशिका-वृत्तिः

मनः ३।२।८२

सुपि इति वर्तते। मन्यतेः सुबन्ते उपपदे णिनिः प्रत्ययो भवति। दर्शनीयमानी। शोभनमानी। बहुलग्रहणानुवृत्तेः मन्यतेः ग्रहणं न मनुतेः। उत्तरसूत्रे हि खशप्रत्यये विकरणकृतो विशेषः स्यात्।

लघु-सिद्धान्त-कौमुदी

मनः ८०७, ३।२।८२

सुपि मन्यतेर्णिनिः स्यात्। दर्शनीयमानी॥

न्यासः

मनः।, ३।२।८२

"मन्यतेग्र्रहणम्" इति। "मन ज्ञाने" (धा।पा।११७६) इत्येतस्य दैवादिकस्य। "न मनुतेः" इति। "मनु अवबोधने" (धा।पा।१४७१) इत्येतस्य तानादिकस्य ग्रहणं न भवति। नन #उ च यदेव मन्यतेर्णिनिप्रत्यये कृते दर्शनीयमानीति रूपं भवति, तदेव मनुतेरपि,तत् कोऽत्र विशेषो यतो मन्यतेग्र्रहणमिष्यते,न मनुतेरित्यत आह-- "उत्तरसूत्रे हि" इत्यादि। यद्यपीह विशेषो नास्ति, उत्तरसूत्रे तु विकरणकृतो विशेषोऽस्ति, तत्र हि मन्यतेः खशि कृते दिवादित्वाच्छ्यन् भवति, मनुतेस्तु तनादित्वादुप्रत्ययः॥

बाल-मनोरमा

मनः ८०२, ३।२।८२

मनः। दैवादिकस्यैव मनेग्र्रहणं न तु तानादिकस्य, बहुलग्रहणाऽनुवृत्तेः। तदाह--मन्यतेरिति। मनुतेग्र्रहणे तु बाधकमुत्तरसूत्रे वक्ष्यते।

तत्त्व-बोधिनी

मनः ६६२, ३।२।८२

मनः। बहुलग्रहणानुवृत्तेरिह मन ज्ञान दैवादिकस्यैव ग्रहणं न तु मनु अवबोधन इति तानादिकस्य। तेन उत्तरसूत्रे खशि श्यनेव भवति न तूप्रत्ययः। तदाह-- मन्यतेरिति।

---

सूत्रम्

काशिका-वृत्तिः

आत्ममाने खश् च ३।२।८३

आत्मनो मननम् आत्ममानः। आत्ममाने वर्तमानान् मन्यतेः सुप्युपपदे खश्प्रत्ययो भवति। चकाराण् णिनिः च। यदा प्रत्ययार्थः कर्ता आत्मानम् एव दर्शनीयत्वादिना धर्मेण युक्तं मन्यते, तदा ऽयं विधिः। दर्शनीयम् आत्मानं मन्यते दर्शनीयंमन्यः, दर्शनीयमानी। पण्डितं मन्यः, पण्डितमानी। आत्ममाने इति किम्? दर्शनीयमनी देवदत्तस्य यज्ञदत्तः।

लघु-सिद्धान्त-कौमुदी

आत्ममाने खश्च ८०८, ३।२।८३

स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुपि खश् स्यात् चाण्णिनिः। पण्डितमात्मानं मन्यते पण्डितंमन्यः। पण्डितमानी॥

न्यासः

आत्ममाने खश्च। , ३।२।८३

"आत्ममाने" इति। मननम् = मानः, भावे घञ्। आत्मनो मानः आत्ममानः। "कर्त्तृकर्मणोः कृति" २।३।६५ इति षष्ठी, "कृद्योगा च षष्ठी समस्यते"(वा। ८३) इति समासः। अथ कत्र्तरि षष्ठी कस्मान्न भवति? आत्मग्रहणसामथ्र्यात्। न ह्रात्मनोऽन्यस्य पदार्थस्य मतिः सम्भवति, तस्या आत्मगुणत्वात्। अथात्मशब्दोऽयं न सुखादिगुणमाचष्टे, किं तर्हि? पराभावम्। परो यो न भवति स आत्मेति, तथाप्यात्मग्रहणमनर्थकम्। एवं हि मन्तुर्या मतिर्या मतिस्त्तत्र वत्र्तमानादित्येषोऽर्थः स्यात्, स चायुक्तः,क सर्वा हि मतिः परमपि मन्यमानस्य मन्तुरेव भवति, तस्मात् कर्मण्येव षष्ठी। "यदा प्रत्ययार्थः कत्र्ता" इत्यादि। कथं पुनरेष एवार्थः, कर्म कत्र्ता च युज्यते? शक्तिभेदात्, यथा-- पीयमानं मधु मदयतीति। खशः खकारः "अरुर्द्विषदजन्तस्य" ६।३।६६ इति मुमर्थः। शकारः सार्वधातुकसंज्ञार्थः॥

बाल-मनोरमा

आत्ममाने खश्च ८०३, ३।२।८३

आत्मामने खश्च। आत्मनः = स्वस्य, मानः = मननम् - आत्ममानः। तदाह-- स्वकर्मके मनने इति। पण्डितम्भन्य इति। खशः शित्त्वेन सार्वधातुकत्वाच्छ्यन्। खित्त्वात् "अरुर्द्विषटदिति मुम्। तानादिकस्य मनेग्र्रहणे तु उविकरणः स्यात्। कालीमात्मानं मन्यते इत्यर्थे खशि श्यनि कृते आह-- खित्यनव्ययस्येति। "स्त्रियाः पुंव"दिति पुंवत्त्वं बाधित्वा

परत्वाद्ध्रस्व इत्यर्थः। दिवामन्येति। अधिकरणशक्तिप्रधानस्यापि दिवाशब्दस्य वृत्तिविषये कर्मत्वं बोध्यम्।

तत्त्व-बोधिनी

आत्ममाने खश्च ६६३, ३।२।८३

आत्ममाने। मननं मानः, भावे घञ्, आत्मनो मान इति कर्मणि षष्ठ()आ समासः। स्वपर्याय आत्मशब्दः प्रत्ययार्थत्वेन सन्निहितः कर्ता स्वपदार्थस्तदाह-- स्वकर्मक इत्यादि। चादिति। ननु वासरूपविधिना लभ्यत एव णिनिरिति किमर्थश्चकार इति चेत्। अत्राहुः-- चकारेणाऽवच्छेदाय णिनिः समुच्चीयते। तेन "करणे यजः" इत्यादौ णिनिरेवाऽनुवर्तते न तु खश्ष एवं चोक्तप्रयोजनानुरोधेन "चानुकृष्टं नोत्तरत्रे" तीह न प्रवर्तते इति। पण्डितमात्मानमिति। एकस्याप्यात्मनः स्वरूपेण कर्तृत्वं, पण्डितत्वविशिष्टरूपेण च कर्मत्वं बोध्यम्। आत्ममाने किम्?। दर्शनीयमानी देवदत्तो यज्ञदत्तस्य। कालिंमन्येति। "स्त्रियाः पुंव"दिति प्राप्तं पुंवद्भावं बाधित्वा पर्तवाद्ध्रस्वः। यत्त्वत्र "क्यङ्मानिनो"रिति प्राप्तः पुंवद्भाव इति प्रसादकृतोक्तं, तद्भ्रभसोक्तमेव, मानिन्नूपाऽभावस्य स्पष्टत्वात्। दिवामन्येति। अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात्कर्मत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भूते ७।१ १२३

अर्थः॥

{वर्तमाने लट् (३।२।१२३)} इत्यतः पूर्वं पूर्वं ये प्रत्ययाः विधीयन्ते, ते भूते काले भवन्ति, इति अधिकारः वेदितव्यः।

उदाहरणम्॥

अग्रे उदाहरिष्यामः।

काशिका-वृत्तिः

भूते ३।२।८४

भूते इत्यधिकारो वर्तमने लट् ३।२।१२३ इति यवत्। यदित ऊर्ध्वम् अनुक्रमिष्यामः भूते इत्येवं तद् वेदितव्यम्। धात्वधिकाराच् च धात्वर्थे भूते इति विज्ञायते। वक्ष्यति करणे यजः ३।२।८५, अग्निष्टोमेन इष्टवानग्निष्टोमयाजी। भूते इति किम्? अग्निष्टोमेन यजते।

न्यासः

भूते। , ३।२।८४

भूतशब्दोऽयमतिक्रान्तवचनः, अस्ति च स्वरूपवचनः, तत्र न ज्ञायते-- कस्मिन् भूते प्रत्यय इति? अतस्तत्पज्ञानायाह-- "धात्वधिकाराच्च"इत्यादि। चशब्दो हेतौ। यस्माद् धातोरिति वत्र्तते तस्माद्धात्वर्थभूत इति विज्ञायते। ननु च धात्वधिकाराद्धातोरेव भूत इत्येतद्विशेषणं युक्तम्? न; असम्भवात्। धातोह्र्यस्मिन्नभिधेये गुणीभूतस्य भूत इत्येतद्विशेषणमनुपपन्नम्। अतस्तत्रासम्भवात् तदर्थस्यैव तद्विशेषणं विज्ञायते॥

बाल-मनोरमा
भूते ८०५, ३।२।८४

भूते। अधिकारोऽयमिति। धातोरित्यधिकृतम्। ततश्च भूतार्थवृत्तेर्धातोरित्युत्तरत्राऽनुवर्तते इति फलति। वर्तमाने इति। "वर्तमाने ल"डित्यतः प्रागित्यर्थः। अत्र व्याख्यानमेव शरणम्।

तत्त्व-बोधिनी
भूते ६६५, ३।२।८४

भूते। धातोरित्यधिकाराद्धात्वर्थस्य विशेषणमिद्। भूतेऽर्थे विद्यमानाद्धातोरित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
करणे यजः ३।२।८५

णिनिः अनुवर्तते, न खश्। यजतेर् धातोः करणे उपपदे णिनिप्रत्ययो भवति भूते। अग्निष्टोमयाजी। अग्निष्तोमः फलभावनायां करणं भवति।
लघु-सिद्धान्त-कौमुदी
करणे यजः ८१०, ३।२।८५

करणे उपपदे भूतार्थे यजेर्णिनिः कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी॥
न्यासः
करणे यजः।, ३।२।८५

"णिनिरनुवत्र्तते, न खश्िति। णिनेरेव स्वरितत्वात्। क्व पुनर्यागः करणमित्याह-- "अग्निष्टोमः फलभावनायाम्" इत्यादि। फलं स्वर्गः, तस्य या भावनोत्पादना = यजमानसम्बन्धी व्यापारः, तत्राग्निष्टोमयागः करणं भवति। ननु चाग्निष्टोमव्यतिरेकेण यजमानसय् व्यापारो भावनाख्यो नास्त्येव, यत्र यागः करणमिष्यते, तथाह्रग्निष्टोमाख्येनैव ह्रसौ यागेन स्वर्गाख्यं फलमुत्पादयति? नैतदेवम्; विशेषव्यापारे हि सामान्यव्यापारोऽस्ति, विक्षेषस्य सामान्यव्यभिचारात्। सामान्यव्यापार एव ह्रादौ फलार्थिनो बुद्धौ सन्निविशते। तथा हि-- प्रतिपत्ता फळं समीहमानः स्वयमेव फलकामः सन् "स्वर्गो मनसि कत्र्तव्यः"इति सामान्यव्यापारं बुद्धावारोपयति, ततः " अग्निष्टोमेन स्वर्गकामो यजेत"इति शास्त्रस्याग्निष्टोमेन करणेन स्वर्ग भावयेदितीममर्थ प्रतिपाद्य, स्वर्गभावनां प्रति करणत्वेनाग्निष्टोममाश्रयति। तस्मात् सामान्यव्यापारे स्वर्गस्योत्पादो विशेषव्यापारोऽग्निष्टोमाख्यो यागः स्वर्गाभावनायां करणं भवति। ननु चानुष्ठीयमानः कर्मत्वमनुभवति, तथापि तस्य शक्तिभेदात् करणत्वं न विरुध्यते, यथा -- "निपीयमानेन मधुना मत्तः" इत्यत्र कर्मभावमनुभवतोऽपि मधुनः करणभावो भवति। तदेवमग्निष्टोमयाजीत्यस्यायमर्थः-- अग्निष्टोमेन करणेन स्वर्ग भावितवानिति। स्वर्गशब्दस्तु वृत्तादन्तर्हितत्वान्न प्रयुज्यते॥
बाल-मनोरमा
करणे यजः ८०६, ३।२।८५

करणे यजः। सोमेनेति। सोमाख्यलताविशेषरसेन यागं कृतवानित्यर्थः। सोमलतारसद्रव्यकेन यागेन

अपूर्वमुत्पादितवानिति मीमांसकाः। एतच्च द्वितीयस्य द्वितीये "द्रव्यसंयोगाच्चोदना पशुसोमयो"रित्यधिकरणेऽध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः। अग्निष्टोमयाजीति। अग्निष्टोमाख्ययागेन अपूर्वं भावितवानित्यर्थः।

तत्त्व-बोधिनी

करणे यजः ६६६, ३।२।८५

करणे। स्वरितत्वाण्णिनिरेवानुवर्तते, न तु खशित्याह-- णिनिः स्यादिति। सोमेन लताविशेषेण यागं कृतवानित्यर्थः। अग्निष्टोमेति। अग्निष्टोमस्तोत्रेण समाप्यमानो यो यागः स लक्षणयाऽग्निष्टोमस्तेनाऽपूर्वं भावितवानित्यर्थः। उक्तं च काशिकायाम्-- अग्निष्टोमः फलभावनायां करण"मिति।

---

सूत्रम्

काशिका-वृत्तिः

करमणि हनः ३।२।८६

करणि उपपदे हन्तेर् धातोः णिनिः प्रत्ययो भवति भूते कले। पितृव्यघाती। मातुलघाती। कुग्सितग्रहणं कर्तव्यम्। इति मा भूत्, चौरं हतवान्।

न्यासः

कर्मणि हनः। , ३।२।८६

"पितृव्यघाती" इति। "हनस्तोऽचिण्णलोः" ७।३।३२ इति तत्वम्। "हो हन्तेर्ञ्णिन्नेषु" ७।३।५४ इति घत्वम्, "सौ च" ६।४।१३ इति दीर्घत्वम्। "कुत्सितग्रहणं कत्र्तव्यम्िति प्रत्ययर्थस्य विशेषणम्। गृह्तेऽनेनेति ग्रहणम्। तत् पुनव्र्याख्यानम्। एतदुक्तं भवति-- येन कुत्सितः कत्र्ता प्रत्ययार्थो गृह्तते तद्व्याख्यानं कत्र्तव्यमिति। तत्रेदं व्याख्यानम्-- वक्ष्यमाणबहुलग्रहणमपकृष्येह सम्बन्धः क्रियते, तेन पितृव्यवधादिकां प्रतिषिद्धां क्रियां कुर्वाणो यः कत्र्ता कुत्स्यते, तत्रव, नान्यत्र॥

बाल-मनोरमा

कर्मणि हनः ८०७, ३।२।८६

कर्मणि हनः। कर्मण्युपपदे भूतार्थाद्धनेर्णिनिः स्यात्। पितृव्यघातीति। पितृव्यं हतवानित्यर्थः। "हनस्तः" इति तः, "हो हन्ते"रिति हस्य घः।

तत्त्व-बोधिनी

कर्मणि हनः ६६७, ३।२।८६

कर्मणि हनः। पितृव्यघातीति। अत्र काशिका "कुत्सितग्रहणं कर्तव्यम्। इह माभूत्, चोरं हतवा"निति। यद्यपीदं भाष्ये नास्ति तथापि शब्दशक्तिस्वाभाव्यदिदं लभ्यत इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

ब्रह्मभ्रूणवृत्रेषु क्विप् ३।२।८७

कर्मणि इति वर्तते। ब्रह्मादिषु कर्मसु उपपदेषु हन्तेर् धातोः क्विप् प्रत्ययो भवति भूते। ब्रह्महा। ब्रूणहा। वृत्रहा। किमर्थम् इदम् उच्यते यावता सर्वधातुभ्यः क्विप् विहित एव? ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम्। चतुर्विधश्च अत्र नियम इष्यते। ब्रह्मादिष्वेव हन्तेः, न अन्यस्मिन्नौपपदे, पुरुषं हतवानिति। ब्रह्मादिषु हन्तेरेव, न अन्यस्मात् स्यात्, ब्रह्म अधीतवानिति। ब्रह्मादिषु हन्तेर् भूतकाले क्विपेव न अन्यः प्रत्ययः, तथा भूतकाले एव न अन्यस्मिन्, ब्रह्माणं हन्ति हनिष्यति वा इति। तदेतद् वक्ष्यमाणबहुलग्रहणस्य पुरस्ताऽदपकर्षणाल् लभ्यते।

न्यासः

ब्राह्मभ्रूणवृत्रेषु क्विप्। , ३।२।८७

"ब्राह्महः"इति। पूर्ववद्दीर्घत्वम्। "सर्वधातुभ्यः क्विब्विहित एव" इति। "क्विप् च" ३।२।७६ इत्यनेन। "चतुर्विधश्चात्र नियमः" इति। धातुनियः, उपपदनियमः, प्रत्ययनियमः, कालनियमः। चकारोऽवधारणे -- चतुर्विध एव। "ब्राह्मआदिष्वेव हन्तेर्नान्यस्मिन्नुपपदे"इति धातुनियमं दर्शयति। अत एव यतएवकारकरणं ततोऽन्यत्रावधारणमिति। उपपदेभ्यः पर एवकारः प्रयुज्यमानो ह()न्त नियमयति। प्रायिकश्चायं नियमः, क्वचिदन्यस्मिन्नुपपदे दृश्यते-- मधुहेतु। प्रायिकत्वञ्च तस्य वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते। "ब्राह्मआदिषु हन्तेरेव नान्यस्मात्" इति उपपदनियमः। अत्र हि हन्तेः एकारः श्रूयमाण उपपदं नियमयति-- ब्राह्मआदिषु हन्तेर्भूते क्विबेव। "नान्यः प्रत्ययः" इति कालनियमः। ब्राह्मआद्युपपदे हन्तेः क्विपि विहिते भूतकालस्य नियमितत्वात्। यदि ब्राह्मआदिषु क्विबेव नान्यः प्रत्ययः इति, तदा निष्ठापि न प्राप्नोति-- ब्राह्मआणं हतवानिति? नैष दोषः; "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते, नोत्तरान्"(व्या।प।१०) इत्यणादय एव बाध्यन्ते, न निष्ठा। एवमपीह वृत्रस्याहन्तुरिति तृज् न प्राप्नोति? प्रायिकत्वान्नियमस्य न दोषः। "तथा भूतकाल एव नान्यस्मिन्" इति प्रत्ययनियमः, भूतकाले प्रत्ययो नियम्यत इति कृत्वा। कथं पुनरेकदा चत्वारो नियमा लभ्यन्त इत्याह-- "तदेतत्ित्यादि। "बहुलं छन्दसि" ३।२।८८ इति वक्ष्यमाणं बहुलग्रहणं पुरस्तादपकृव्यानेन योगेन सम्बध्यते-- ब्राह्मभ्रूणवृत्रेषु क्विब्()बहुलमिति, तेनायं चतुर्विधो नियमो लभ्यते॥

बाल-मनोरमा

ब्राह्मभ्रूणवृत्रेषु क्विप् ८०८, ३।२।८७

ब्राह्मभ्रूण। पूर्वसूत्रात्कर्मग्रहमाऽनुवृत्तेराह-- कर्मस्विति। हन्तेभूते इति। भूतार्थवृत्तेर्हन्तेरित्यर्थ-। चतुर्विध इति। पुनर्विधानलब्धस्य एवकारस्य विनिगमनाविरहाच्चतुष्र्वपि निवेश इति भावः। तत्र "ब्राह्मआदिष्वेव हन्ते"रिति नियमात् पुरुषं हतवानित्यत्र न क्विप्। "ब्राह्मआदिषु हन्तेरेवे"ति नियमाद्ब्राह्म अधीतवानित्यत्र न क्विप्। "ब्राह्मआदिषु हन्तेर्भूतकाले एवे"ति नियमाद्ब्राह्म हन्ति हनिष्यति वेत्यत्र न क्विप्। "क्विबेवे"ति नियमाद्ब्राह्म हतवानित्यतर् अण् न भवति, किंतु "ब्राह्मभ्रूणे"ति क्विबेव। निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैव नियमेन व्यावृत्तेः। द्विविध इति। "उभयतो नियमोऽयम्" - ब्राह्मआदिष्वेव" "क्विबेवे"ति च भाष्यमित्यर्थः। एवं च "हन्तेरेव", "भूत एवे"ति नियमद्वयमुपेक्ष्यमिति भावः।

तत्त्व-बोधिनी

ब्राह्मभ्रणवृत्रेषु क्विप् ६६८, ३।२।८७

चतुर्विध इति। अयमाशयः-- इह सूत्रे श्रुतत्वात्पूर्वं ब्राह्मआदय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद्धन्तिस्ततः परिशेषाद्भूत इति। क्विप् तु सर्वान्ते निर्देष्टव्यः, विधेयत्वात्। तदेवं वचनव्यक्तिः--"ब्राह्मआदिषूपपदेषु हन्तेर्भूते क्वि" बिति। एवं स्थिते

"यत्रैवकरास्ततोऽन्यत्र नियम" इतिन्यायेन नियमोऽत्र भवन्ननन्तरे भवति। ततश्च ब्राह्नआदिष्वेवेत्यवधारणे हन्तेस्तदनन्तरनिर्द्दिष्टत्वादुपपदान्तरनिवृत्तिफलः [प्रकृति] नियमो भवति। "ब्राह्नआदिषु हन्तेरेव भूते" इत्यवधारणे त्वनन्तरत्वाऽविशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः। "ब्राह्नआदिषु हन्तेर्भूते एव क्वि" बित्यवधारणे तु क्विभन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात्कालान्तर संबन्धानवृत्तिफलकः प्रत्ययनियमः। "ब्राह्नआदिषु हन्तेर्भूते क्विबेवे"ति वचनव्यक्तौ प्रत्ययान्तरसंबन्धनिवृत्तिफलकः कालनियमः। सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः। अगृह्नमाणविशेषत्वात्तुचतुर्विधस्यापीह ग्रहणम्। तत्र "ब्राह्नआदिष्वेव हन्ते"रिति प्रकृतिनियमे भूतैत्याश्रयणाद्वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा। "अरिहयोऽरहयोगविचक्षणः"। अरीन् हन्तीति अरिहा, स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः। प्रकृतिनियमफलं तु पुरुषं हतवान् पुरुषहा इति भूतार्थे प्रयोगाऽभावः। "ब्राह्नआदिषु हन्तेरेव"त्युपपदनियमेऽपि भूत इत्याश्रयणाद्वर्तमानभविख्यत्कालयोर्धात्वन्तरादपि भवत्येव,-- वृत्रं जयति जेष्यति वा वृत्रजिदिति। उपपदनियमफलं तु वृत्रं जितवान् वृत्रजदिति प्रयोगाभावः। "भूत एव क्वि" बिति प्रत्ययनियमेऽपि ब्राह्नआदिष्वित्युक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विब्भवत्येव। पुरुषं हनति हनिष्यति वा पुरुषहा। अरिहेति प्राग्वत। प्रत्ययनियमफलं तु ब्राह्नआणं हन्ति ब्राह्नहेत्यादिप्रयोगाऽभावः। "भूते क्विबेवे"ति कालनियमेऽपि ब्राह्नआदिष्वित्युक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव, -- पितृव्यं हतवान् पितृव्यघाती। इह "कर्मणि हनः" इति भूते णिनिः। कालनियमफलंतु ब्राह्नआणं हतवान् ब्राह्नघातीति प्रयोगाऽभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते, निष्ठा तु भवत्येव वृत्रं हतवानिति। भाष्यकारस्तु प्रकृतिकालनियमावेवाऽशिश्रियत्। तस्यायमाशयः-- धातुकालौ हि नेह सूत्रे श्रुतौ, किं तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ। अतस्तयोरेवोपरोधो न्याय्यो न तूपपदप्रत्ययोः, श्रुत्युपस्थापितत्वात्। एवं न्यायोपष्टब्धेन भाष्येण सह विरोधाद्वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यत्त्विह हरदत्तेनोक्तं-- धातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति,तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहमं प्रामादिकमित्यवधेयम्।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि ३।२।८८

पूर्वेण नियमादप्राप्तः क्विप् प्रत्ययः विधीयते। छन्दसि विषये उपपदन्तरेष्वपि हन्तेर् बहुलं क्विप् प्रत्ययो भवति। मतृहा सप्तमं नरकं व्रजेत्। पितृहा। न च भवति। मातृघातः। पितृघातः।

न्यासः

बहुलं छन्दसि। , ३।२।८८

---

सूत्रम्

काशिका-वृत्तिः

सुकर्मपापमन्त्रपुण्येषु कृञः ३।२।८९

कर्मणि इति वर्तते। तदसम्भवात् सुशब्दम् वर्जयित्वा परिशिष्टानां विशेषणं भवति। स्वादिषु कर्मसु उपपदेषु करोतेर् धातोः क्विप् प्रत्ययो भवति। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। अयम् अपि नियमार्थ आरम्भः। त्रिविधश्च अत्र नियम इष्यते। धातुनियमं वर्जयित्वा कालोपपदप्रत्ययनियमः। धतोरनियतत्वादन्यस्मिन्नुपपदे अपि भवति। शास्त्रकृत्। भाष्यकृट्।

न्यासः

सुकर्मपापमन्त्रपुण्येषु कृञः। , ३।२।८९

"सुशब्दं वर्जयित्वा"इति। तस्यासत्त्ववचनात् कर्मत्वानुपपत्तेः। "स्वादिषु कर्मसु" इति। बाहुल्यमाश्रित्योक्तम्, यथा-- "ब्राआह्णग्रामः, भट्टग्रामः" इति। कुत एतत्? सुशब्दं वर्जयित्वेत्यनन्तराणामेवाभिधानात्। "त्रिविधश्चात्र नियमः" इति। एतदपि बहुलग्रहणानुवृत्तेर्लभ्यते। "कालोपपदप्रत्यय{नियमः-काशिका}विषयः" इति। कालोपपदप्रत्यया विषया यस्य स तथोक्तः। स पुनः कालनियमः, उपपदनियमः, प्रत्ययनियमश्चेति। तत्र कालनियमः--स्वादिषु कृञो भूत एव क्विबेव बवति, नान्यः प्रत्यय इति; न भवति-- कर्म कृतवान् कर्मकार इति। उपपदनियमः--स्वादिषु कृञ एव, नान्यस्माद्धातोरिति; न हि भवति क्विप्-- मन्त्रमधीतवानिति, अणेव भवति मन्त्राध्याय इति। प्रत्ययनियमः-- स्वादिषु कृञो भूत एव क्विप्, न वर्त्तमाने, भविष्यत् इवा, तेन मन्त्रं करोति, मन्त्रं करिष्यतीति वेत्यर्थविवक्षायां मन्त्रकृदिति न भवति। "शास्त्रकृत्" इति। "क्विप् च" ३।२।७६ इति क्विप्॥

बाल-मनोरमा

सुकर्मपापमन्त्रपुण्येषु कृञः ८०९, ३।२।८९

सुकर्म।सु, कर्म, पाप, मन्त्र, पुण्य एषां पञ्चानां द्वन्द्वः। त्रिविध इति। "सुकर्मादिषु भूते कृञः क्विबेवे"ति, "सुकर्मादिषु भूते कृञ एव क्विबिति, "सुकर्मादिषु भूते कृञ एव क्वि"बिति "सुकर्मादिषु भूत एव कृञ" इति त्रिविध इत्यर्थः। अण् नेति। क्तवतुस्तु भवत्येव, सोपपदप्रत्ययस्यैव नियमेन व्यावृत्तेरिति भावः। स्वादिष्वेवेति। सुकर्मादिषु पञ्चस्वित्यर्थः।

तत्त्व-बोधिनी

सुकर्मपापमन्त्रपुण्येषु कृञः ६६९, ३।२।८९

सुकर्म। त्रिविध इति। धातुनियमस्त्विह नेष्त इति भावः। क्विबेवेतीति। "भूते क्विबेवे"ति प्रत्ययान्तरसंबन्धनिवृत्तिफलककालनियमादित्यर्थः। कृञ एवेतीति। "सुकर्मादिषु कृञ एवे"ति धात्वन्तरसंबन्धनिवृत्तिफलकोपपदनियमादित्यर्थः। भूत एवतीति। "भूत एव क्वि"बिति कालान्तरसंबन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः। स्वादिष्वेवेतीति। "स्वादिष्वेव कृञ" इत्युपपदान्तरसंबन्धनिवृत्तिफलकधातुनियमाऽभावादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सोमे सुञः ३।२।९०

कर्मणि इति वरते। सोमे कर्मणि उपपदे सुनोतेर् धातोः क्विप् प्रत्ययो भवति। सोमसुत्, सोमसुतौ, सोमसुतः। अयम् अपि नियमार्थ आरम्भः। चतुर्विधश्च अत्र नियमः इष्यते, धातुकालौपपदप्रत्ययविषयः।

न्यासः

सोमे सुञः। , ३।२।९०

"धातुकालोपपदप्रत्यय विषयः"इति। पूर्ववद्बहुव्रीहिः। कालादिनियमोऽन्यपदार्थः। तत्र कालनियमः-- सोमे सुनोतेः क्विबेव भूते, नान्यः प्रत्ययः; न हि-- सोमं सुतवान् सोमसाव इति। धातुनियमः--सोम एव सुनोतेः क्विप्, नान्यस्मिन्नुपपद इति;इह न भवति--सुरां सुतवान् सुरासुदिति। उपपनियमः--सोमे सुनोतेरेव,

नान्यस्माद्धातोरितित;इह न भवति क्विप्-- सोमं क्रीतवानिति , सोमक्राय इत्यणेव तु भवति। प्रत्ययनियमः-- सोमे सुनोतेर्भूत एव क्विप्, नान्यत्रेति;तेन सोमं सुनोति, सोष्यति वेत्यर्थविवक्षायां सोमसुदिति न भवति॥
बाल-मनोरमा
समोमे सुत्रः ८१०, ३।२।९०

समो सुत्रः। सोमे कर्मण्युपपदे भूते सुनोतेः क्विबित्यर्थः। चतुर्विध इति। पूर्ववद्व्याख्येयम्। एवमिति। "अग्नौ चे"रित्युत्तरसूत्रेऽपि चतुर्विधो नियम इत्यर्थः।

तत्त्व-बोधिनी
सोमे सुत्रः ६७०, ३।२।९०

सोमे सुत्रः। इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात्सोमं सुतवान् सोमसावः, अ()ग्न चितवान् अग्निचाय इत्यण्न भवति। सुनोतेः सोम एव उपपदे नियतत्वाच्चिनोतेस्त्वग्नावेवोपपदे नियत्वात् सुरां सुतवान् सुरासुत्, इष्टकाश्रितवानिष्टकाचिदिति न भवति, किं तु सुरासावः इष्टकाचाय इत्यणेव भवति। सोमस्य सुनोतावेव धातोर्नियतत्वात्, अग्नेस्तु चिनोतावेव नियतत्वात्--सोमं क्रीतवान् सोमकीः, अ()ग्न भृतवान् अग्निभृदिति क्वब्नि भवति, किं तुसोमक्रायः अग्निभार इत्यणेव भवति। भूत एव क्विपो नियतत्वात्सोमं सुनोति सोष्यति वेत्यर्थे क्विब्न भवति। तथा अ()ग्न चिनोति चेष्यति वेत्यर्थे क्विबभावः, किंत्वणेव। कर्मणीनि। कुत्सितग्रहणमिति। एतच्च वार्तिकं पुनः कर्मग्रहणसामश्र्याल्लभ्यते, यत्कर्म क्रियया संबध्यमानं कर्तृकुत्सामावहति तत्रेत्यर्थः। सोमादयश्च विक्रीयमाणाः शास्त्रे प्रतिषेधात्कुत्सावहाः। कुत्सितग्रहणान्नेह, -धान्यविक्रायः।

---

सूत्रम्
काशिका-वृत्तिः
अग्नौ चेः ३।२।९१

कर्मणि इत्येव। अग्नौ कर्मण्युपपदे चिनोतेर् धातोः क्विप् प्रत्ययो भवति। अग्निचित्, अग्निचितौ, अग्निचितः। अत्र अपि पूर्ववच् चतुर्विधो नियम इष्यते।
न्यासः
अग्नौ चेः। , ३।२।९१

"अत्रापि पूर्ववत्ित्यादि। तत्र कालनियमः-- अग्नौ चिनोतेर्भूते क्विबव, नान्य इति; तेना()ग्न चितवानित्यर्थविवक्षायामग्निचाय इति न भवति। धातुनियमः-- अग्नावेव चिनोतेर्नान्यस्मिन्नुपपद इति; तेनेष्टकाचिदितति न भवति। उपपदनियमः-- अग्नौ चिनोतेरेव नान्यस्माद्धातोरिति; तेनाग्निकृदिति न भवति। प्रत्ययनियमः-- अग्नौ चिनोतेर्भूत एव क्विप्, नान्यस्मिन् काले; तेन वत्र्तमानभविष्यतोरग्निचिदिति न भवति॥
बाल-मनोरमा
अग्नौ चेः ८११, ३।२।९१

अग्नौ चेः। ग्नौ कर्मण्युपपदे भूतार्थवृत्तेश्चिनोतेः क्विप् स्यादित्यर्थ-। अग्निचिदिति। अग्न्याख्यं स्थण्डिलविशेषमिष्टकाभिश्चितवानित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कर्मण्यग्न्याख्यायाम् ३।२।९२

चेः कर्मणि इति वर्तते। कर्मणि उपपदे चिनोतेः कर्मण्येव कारके क्विप् प्रत्ययो भवति अग्न्याख्यायां, धातूपपदप्रत्ययसमुदायेन चेदग्न्याख्या गम्यते। श्येन इव चीयते श्येनचित्। कङ्कचित्। आख्याग्रहणं रूढिसम्प्रत्ययार्थम्। अग्न्यर्थो हि इष्टकाचय उच्यते श्येनचितिति।

न्यासः

कर्मण्यग्न्याख्यायाम्। , ३।२।९२

"कर्मणि हनः" ३।२।८६ इत्यत उपपदविशेषमे कर्मग्रहणेऽनुवत्र्तमाने यत् पुनरिह कर्मग्रहणं तस्य प्रत्ययार्थत्वं विज्ञायत इत्याह-- "कर्मण्येव कारके" इति। "धातूपपद" इत्यादिना समुदायोपाधित्क्मेतदग्न्याख्याग्रहणस्य दर्शयति। "आख्याग्रहणं रूढिसम्प्रत्ययार्थम्" इत्यादि। अग्निशब्दोऽयमग्निसामान्यवाची, अत्रासत्याख्याग्रहणे विशेषो न विज्ञायते-- कस्येह ग्रहणमिति, रूढिसम्प्रत्ययार्थमाख्याग्रहणं क्रियते। किं पुनः कारणं तदर्थमाख्याग्रहणं क्रियत इत्याह-- "अग्न्यर्थो हि" इत्यादि। अग्न्यर्थो य इष्टकानां रचनाविशेषः स श्येनचिदित्युच्यते, तत्रैवायं प्रत्यय इष्यते। स कथं तत्रैव लभ्यते? यस्य ग्रहणं क्रियते, त()स्मश्च सति प्रसिद्धो गृह्माणोऽग्न्यर्थो य इष्टकानां रचनाविशेषः स एव प्रत्ययार्थो वाच्यतया विज्ञायते, नान्यः॥

बाल-मनोरमा

कर्मण्यग्न्याख्यायाम् ८१२, ३।२।९२

कर्मण्यग्न्याख्यायाम्। कर्मणीत्यनुवृत्तमुपपदसमर्पकम्। अत्रत्यं तु कर्मणीत्येतत्प्रत्ययार्थसमर्पकम्। तथा चाऽत्र कर्तरीति न सम्बध्यते। तदाह--कर्मण्युपपदे इत्यादि। चिनोतेरिति। भूतार्थादित्यपि बोध्यम्। श्येन इवेति। श्येनशब्दः श्येनसदृशे लाक्षणिक इति भावः। श्येनाकृतिक इति यावत्।

---

सूत्रम्

काशिका-वृत्तिः

कर्मणि इनिर् विक्रियः ३।२।९३

कर्मणि उपपदे विपूर्वत् क्रीणातेर् धातोः इनिः प्रत्ययो भवति। कर्मणि इति वर्तमाणे पुनः कर्मग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात्, कर्ममात्रे मा भूत्। सोमविक्रयी। रसविक्रयी। इह न भवति, धान्यविक्रायः।

न्यासः

कर्मणीनिर्विक्रियः। , ३।२।९३

"कर्मणीति वत्र्तमाने" इत्यादि। "कर्मणिहनः" ३।२।८६ इत्यतः। "पुनः कर्मग्रहणम्" इत्यादि। यत् कर्म क्रियासम्बन्धमनुभवत् कर्तुः कुत्सामावहति,तत् कुत्सानिमित्तं कर्म यथा स्यादित्येवमर्थम्। कर्मग्रहणेऽनुवत्र्तमाने पुनः कर्मग्रहणमनन्तरसूत्रे यत् कर्मप्रत्ययार्थत्वेऽनिष्टं कर्मग्रहणं तन्निवृत्त्यर्थम्। कर्मग्रहणं कस्मान्न भवति? तस्य स्वरितत्वादेवानुवृत्तेः। "सोमविक्रयी" इति। सोमविक्रयणं शास्त्रे प्रतिषिध्यत इति सोमाख्यं कर्म विक्रयणक्रियया सम्बध्यमानं विक्रेतुः कुत्सामावहति। "धान्यविक्रायः" इति। "कर्मण्यण्" ३।२।१॥

बाल-मनोरमा

कर्मणीनि विक्रियः ८१३, ३।२।९३

कर्मणीनि विक्रियः। "इनि" इत्यविभक्तिकम्। विपूर्वस्य क्रीञ्धातोर्विक्रिय इति पञ्चम्यन्तम्। कुत्सितेति। कुत्सिते कर्मण्युपपदे उक्तविधिर्भवतीत्यर्थः। सोमविक्रयीति। सोमद्रव्यं च विक्रीयमाणं विक्रेतुः कुत्सामावहति, तद्विक्रयस्य निषिद्धत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दृशेः क्वनिप् ३।२।९४

कर्मणि इत्येव। दृशेः धातोः कर्मणि उपपदे क्वनिप् प्रत्ययो भवति। मेरुदृश्वा। परलोकदृश्वा। अन्येभ्यो ऽपि दृश्यन्ते ३।२।७५ इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थम्।

लघु-सिद्धान्त-कौमुदी

दृशेः क्वनिप् ८११, ३।२।९४

कर्मणि भूते। पारं दृष्टवान् पारदृश्वा॥

न्यासः

दृशेः क्वनिप्। , ३।२।९४

"प्रत्ययान्तरनिवृत्त्यर्थम्" इति। प्रत्ययान्तरमणादि, तस्य निवृत्त्यर्थम्। निवृत्ते सत्यपि प्रत्ययः प्रत्ययान्तरत्वे भवत्येव--परलोकं दृष्टवानिति। अत्र च कारणं "ब्राह्मभ्रूण" ३।२।८७ सूत्र एव उक्तम्॥

बाल-मनोरमा

दृशेः क्वनिप् ८१४, ३।२।९४

दृशेः क्वनिप्। "आतो मनिन्क्वनिब्वनिपश्च", "अन्येभ्योऽपि दृश्यन्ते" इत्येव क्वनिपि सिद्धे तत्सहचरितमनिनादिव्यावृत्त्यर्थमिदं, सोपपदाऽणादिबाधनार्थं च। निष्ठा तु भवत्येव, सोपपदप्रत्ययस्यैवाऽत्र पुनः क्विब्ग्रहणेन निवृत्तेः। पारं दृष्टवान्।

तत्त्व-बोधिनी

दृशेः क्वनिप् ६७१, ३।२।९४

दृशेः क्वनिप्। "अन्येब्योऽपि दृश्यन्ते" इति सिद्धे नियमार्थमिदं-- "क्वनिबेव यथा "स्यात्तत्सहनिर्दिष्टौ मनिन्वनिपौ माभूतां, न वा अणादय" इति। सोपपदप्रत्ययस्यैव नियमेव निवर्तनान्निष्ठा तु भवत्येव --पारं दृष्टवानिति। एवं स्थिते "वि()आदृ()आनयना वयमेवे"त्यादौ वि()आं पश्यन्ति वि()आदृ()आआनि, तानि नयनानि येषां ते वि()आदृ()आनयना इत्येवं क्वनिबन्तस्य लटा विग्रहेऽपि न क्षतिः। प्रत्ययान्तरनिवृत्त्यर्थं सूत्रमित्येवं वृत्तिकारादिभिर्व्याख्यातत्वात्, कालान्तरनिवृत्त्यर्थमिदमिति कैरप्यभियुक्तैरनुक्तत्वादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

राजनि युधिकृञः ३।२।९५

कर्मणि इत्येव। राजन्शब्दे कर्मणि उपपदे युध्यतेः करोतेश्च क्वनिप् प्रत्ययो भवति। ननु च युधिरकर्मकः?
अन्तर्भावितण्यर्थः सकर्मको भवति। राजयुध्वा। राजानं योधितवानित्यर्थः। राजकृत्वा।

लघु-सिद्धान्त-कौमुदी

राजनि युधि कृञ ८१२, ३।२।९५

क्वनिप्स्यात्। युधिरन्तर्भावितण्यर्थः। राजानं योधितवान् राजयुध्वा। राजकृत्वा॥

न्यासः

राजनि युधिकृञः।, ३।२।९५

ननु च युधिरयमकर्मकः, तत्कथं तस्य कर्मणीत्युपपद्यत इत्यभिप्रायेणाह--"अन्तर्भावितण्यर्थः" इत्यादि। अन्तर्भावितः = तनुप्रवेशितो ण्यर्थो यस्मिन्निति बहुव्रीहिः। राजा युध्यते, तं प्रयुङ्क्ते पुरुषो योद्धुं वेति। तत्रासौ पुरुषस्य व्यापारः प्रेषणादिकोऽर्थो ण्यर्थो यदा बुद्ध्या युध्यतेरन्तर्भाव्यते, तदासौ प्रयोज्यकर्मणा सकर्मको भवति। "योधितवान्" इति। ण्यन्तस्य प्रयोगः। "निष्ठायां सेटि" ६।४।५२ इति णिलोपः॥

न्यासः

सहे च।, ३।२।९५

"असत्त्ववाचित्वान्नोपपदं कर्मणा विशेष्यते"इति। तदर्थस्य कर्मत्वानुपपत्तेः॥

बाल-मनोरमा

राजनि युधि कृञः ८१५, ३।२।९५

राजनि युधि कृञः। युधि, कृञ् अनयोः समाहारद्वन्द्वात्पञ्चमी। क्वनिप् स्यादिति। राजनि कर्मण्युपपदे भूतार्थाद्युधेः कृञश्च क्वनिबित्यर्थः। ननु युधेरकर्मकत्वात्तत्र कर्मण्युपपदे इत्यस्य कथमन्वय इत्यत आह-- युधिरन्तर्भावितेति। राजकृत्वेति।राजानं कृतवानित्यर्थः।

तत्त्व-बोधिनी

राजनि युधि कृञः ६७२, ३।२।९५

राजनि युधि कृञः।

---

सूत्रम्

काशिका-वृत्तिः

सहे च ३।२।९६

सहशब्दे च उपपदे युधिकृञोः धात्वोः क्वनिप् प्रत्ययो भवति। असत्त्ववाचित्वान् न उपपदं कर्मणा विशेष्यते। सहयुध्वा। सहकृत्वा।

लघु-सिद्धान्त-कौमुदी

सहे च ८१३, ३।२।९६

कर्मणीति निवृत्तम्। सह योधितवान् सहयुध्वा। सहकृत्वा॥

बाल-मनोरमा

सहे च ८१६, ३।२।९६

सहे च। सहशब्दे उपपदे युधिकृञ्भ्यां क्वनिबित्यर्थः।

तत्त्व-बोधिनी

सहे च ६७३, ३।२।९६

इदमपि सूत्रद्वयं "दृशेः क्वनि" बितिवन्नियमार्थमिति न्याय्यम्। वस्तुतस्तु दृशिग्रहणेन निर्वाहस्याऽगतिकत्वादियं त्रिसूत्री विधात्रीत्यपि सुवचम्। प्राचां ग्रन्थास्त्विवहोदासीना एवेति शब्दकौस्तुभे स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

सप्तम्यां जनेर् डः ३।२।९७

सप्तम्यन्त उपपदे जनेर् धतोः डः प्रत्ययो भवति। उपसरे जातः उपसरजः। मन्दुरजः।

लघु-सिद्धान्त-कौमुदी

सप्तम्यां जनेर्डः ८१४, ३।२।९७

न्यासः

सप्तम्यां जनेर्डः। , ३।२।९७

सप्तमीति प्रत्ययग्रहणम्।तत्र प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं भवतीत्याह-- "सप्तम्यन्त उपपदे" इति। स्वरूपग्रहणमत एव न भवति। "उपसरजः" इति। डित्करणसामर्थ्यादभसंज्ञकस्यापि टिलोपः। "मन्दुरजः" इति। "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" ६।३।६२ इति ह्रस्वः॥

बाल-मनोरमा

सप्तम्यां जनेर्डः ८१७, ३।२।९७

सप्तम्यां जनेर्डः। सप्तम्यन्ते उपपदे जनेर्भूताऽर्थाड्ड इत्यर्थः। सरसिजमिति। डित्वसामर्थ्यादभस्यापि टेर्लोपः। "हलदन्ता"दिति, "तत्पुरुषे कृतीटति वा अलुक्। मन्दुरज इति। "वाजिशाला तु मन्दुरे"त्यमरः।

तत्त्व-बोधिनी

सप्तम्यां जनेर्डः ६७४, ३।२।९७

मन्दुरायामिति। "वाजिशाला तु मन्दुरा" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

पञ्चम्याम् अजातौ ३।२।९८

पञ्चम्यन्त उपपदे जातिवर्जिते जनेर् डः प्रत्ययो भवति। बुद्धिजः। संस्कारजः। दुःखजः। अजातौ इति किम्? हस्तिनो जातः। अश्वाजातः।

न्यासः

पञ्चम्यामजातौ। , ३।२।९८

"बुद्धिजः" इति। "जनिकर्तुः प्रकृतिः" १।४।३० इति बुद्धेरपादानत्वादपादाने पञ्चमी।, तदस्योपपदत्वम्। बुद्ध्यादिशब्दा जातिशब्दा न भवन्ति; बुद्ध्यादीनामात्मगुणत्वात्॥

बाल-मनोरमा

पञ्चम्यामजातौ ८१८, ३।२।९८

पञ्चम्यामजातौ। जनेरिति। "भूतार्था"दिति शेषः। संस्कारज[म] इति। संस्काराज्जात[म] इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गे च संज्ञायाम् ३।२।९९

उपसर्गे च उपपदे जनेः डः प्रत्ययो भवति संज्ञायां विषये। समुदायोपाधिः संज्ञा। अथेमा मानवीः प्रजाः।

लघु-सिद्धान्त-कौमुदी

उपसर्गे च संज्ञायाम् ८१६, ३।२।९९

प्रजा स्यात्संततौ जने॥

न्यासः

उपसर्गे च संज्ञायाम्। , ३।२।९९

"समुदायोपाधिः"इति। धातूपसर्गप्रत्ययसमुदायेन यदि संज्ञा गम्यत इएवं प्रत्ययार्थो भवति, नान्यथेति दर्शयति-- "{प्रजाः- काशिका} प्रजाः" इति। प्राणिसमुदायस्यैषा संज्ञेति। यद्यस्य सूत्रस्य प्रजेत्येतदेवोदाहरणम्, तदा "प्रे जनः संज्ञायाम्िति वक्तव्ये प्रजेति सिध्यत्येव, किमुपसर्गग्रहणेन? उपसर्गग्रहणमुत्तरार्थम्; "अनौ कर्मणि"(३।२।१००) इत्युपसर्गे यथा स्यात्, कर्मप्रवचीये मा भूत्। अथानन्त्यस्य प्रयोगविषयस्यान्यस्मिन्नुपपदे कदाचित् प्रत्ययो दृश्यते यदि, तदैतदर्थमपि॥

बाल-मनोरमा

उपसर्गे च संज्ञायाम्। ८१९, ३।२।९९

उपसर्गे च। "जनेर्ड" इति शेषः। संज्ञायामिति समुदायोपाधिः।

---

सूत्रम्

काशिका-वृत्तिः

अनौ कर्मणि ३।२।१००

अनुपूर्वात् जनेः कर्मणि उपपदे डः प्रत्ययो भवति। पुमांसमनुजातः पुमनुजः। स्त्र्यनुजः।

न्यासः

अनौ कर्मणि। , ३।२।१००

"अनुपूर्वाज्जनेः" इत्यादि। अथानुशब्दस्योपपदत्वं कस्मान्न भवति? यतो न भवति स हेतुः "उदि कूलेरुजिवहोः" ३।२।३१ इत्यत्र व्याख्यात इति पुनर्नाख्यायते। "पुममुजः" इति। लुप्तेऽपि सुपि प्रत्ययलक्षणेन पदत्वम्, तेन संयोगान्तलोपो ८।२।२३ भवति॥

बाल-मनोरमा

अनौ कर्मणि ८२०, ३।२।१००

अनौ कर्मणि। ननु जनेरकर्मकत्वात्तत्र कर्मण्युपपदे इत्थस्य कथमन्वय इत्यत आह-- पुमांसमनुरुध्येति। अनुरुध्य जननं धात्वर्थ इति भावः। पुमनुजेति। पुंसिति पूर्वपदे संयोगान्तलोप इति भावः।

तत्त्व-बोधिनी

अनौ कर्मणि ६७५, ३।२।१००

पुमनुजेति। इह जनिः सकर्मकः, अनुरोधविशिष्टजननवृत्तित्वात्।

---

सूत्रम्

काशिका-वृत्तिः

अन्येष्वपि दृश्यते ३।२।१०१

अन्येष्वपि उपपदेषु कारकेषु जनेः डः प्रत्ययो दृश्यते। सप्तम्याम् इत्युकतम सप्तम्याम् अपि दृश्यते। न जायते इति अजः। द्विर्जाताः द्विजाः। पञ्चम्याम् अजातौ ३।२।९८ इत्युक्तं, जातवपि दृश्यते। ब्राह्मणजो धर्मः। क्षत्रियजं युद्धम्। उपसर्गे च संज्ञायाम् ३।२।९९ इत्युक्तम्, असंज्ञायाम् अपि दृश्यते। अभिजाः, परिजाः केशाः। अनु कर्मणि ३।२।१०० इत्युक्तम्, अकर्मण्यपि दृश्यते। अनुजातः अनुजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि भवति, कारकन्तरे ऽपि। परितः खाता परिखा। आखा।

न्यासः

अन्येष्वपि दृश्यते। , ३।२।१०१

"अपिशब्दः" इत्यादि। सर्व उपाधय उपपदादयः, तेषां व्यभिचारो यथा स्यादित्येवमर्थोऽपिशब्दः। "धात्वन्तरादपि"इति। "खनु अवदारणे"(धा।पा।८७८) इत्येतस्मात्। "कारकान्तरेऽपि" इति। कर्त्तुरन्यस्मिन् कारके कर्मणि॥

बाल-मनोरमा

अन्येष्वपि दृश्यते ८२१, ३।२।१०१

अन्येष्वपि दृश्यते। अज इति। न जात इत्यर्थः। द्विजो ब्राआह्मण इति। द्विर्जात इत्यर्थ-। "मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धना"दित्यादिस्मृतेरिति भावः। अपि शब्द इति। "सप्तम्यां जनेर्डः" इत्यादिसूत्रेषु डविधिषु यानि

विशेषणान्युपात्तानि प्रकृतिविशेषरूपाणि, भूते कर्तरीति प्रत्ययार्थविशेषणं च तदतिक्रमार्थ इत्यर्थः।

तत्त्व-बोधिनी
अन्येष्वपि दृश्यते ६७६, ३।२।१०१

अन्येष्वपि दृश्यते। "सप्तम्यां जने"रित्युक्तमसप्तम्यामपि दृश्यत इत्याह --अजः। द्विज इति। न जायत इत्यजः। द्विर्जातो द्विजः।"जन्मना जायते शूद्रः कर्मणा जायते द्विजः" इत्यभियुक्तोक्तेः। "पञ्चम्यामजातौ"इत्युक्तं, जातावपि दृश्य त इत्याह ब्राआह्णज इति। अपिशब्द इति। यत्तु "अन्तात्यन्ताध्वे"ति प्रकरणे "अन्यत्रापऽपि दृश्यते" इत्युपसङ्ख्यातं तद्भूतकालं विनापि यथा स्यादित्येवमर्तम्। वस्तुतस्तु प्रकृतसूत्रस्थस्याऽपिग्रहणस्य सर्वपादिव्यभिचारार्थत्वात्तद्वार्तिकमेनैव गतार्थम्। विभावितं चेदं "इको गुणवृद्धी" इति सूत्रे जनेर्ड प्रक्रम्य "गमेरप्ययं डो वक्तव्यः" इति वदता भाष्यकारेण। एवं च प्रकृतसूत्रस्थम् संज्ञासिद्धिः, सिद्धायां निष्ठासंज्ञायां क्तक्तवत्वोर्विधानमित्यन्योन्याश्रय इति चेत्। अत्राहुः--भाविनी संज्ञाऽत्र विज्ञायते,-- "स भूते भवति यस्योत्पन्नस्य निष्ठेति संज्ञा भवतीत"त्याश्रयणे सामथ्र्यात् रक्तक्तवत्वोर्विधानमेतदिति नास्त्युक्तदोष इति।

---

सूत्रम्
काशिका-वृत्तिः
निष्ठा ३।२।१०२

क्तक्तवतू निष्ठा १।१।२५ इत्युक्तं, स निष्ठसंज्ञकः प्रत्ययो भूते भवति। कृतम्। कृतवान्। भुक्तम्। भुक्तवान्। निष्ठायाम् इतरेतराश्रयत्वादप्रसिद्धिः। संज्ञायां क्तक्तवतू भाव्येते, सतोश्चानयोः संज्ञाया भाव्यम्। न एष दोषः। भाविनी संज्ञा विज्ञायते। स भूते भवति, यस्योत्पन्नस्य निष्ठा इत्येषा संज्ञा भवति। समर्थ्यात् क्तक्तवत्वोर् विधानम् एतत्। आदिकर्मणि निष्ठ वक्तव्या। प्रकृतः कटं देवदत्तः। प्रकृतवान् कटं देवदत्तः।
लघु-सिद्धान्त-कौमुदी
निष्ठा ८१८, ३।२।१०२

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र तयोरेवेति भावकर्मणोः क्तः। कर्तरि कृदिति कर्तरि क्तवतुः। उकावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विश्वं कृतवान् विष्णुः॥
न्यासः
निष्ठा। , ३।२।१०२

"कृतम्" इति। अत्र कित्त्वाद् गुणाभावः। "कृतवान्" इति। "उगिदचाम्" ७।१।७० इति नुम्। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः, हल्ङ्यादि ६।१।६६ संयोगान्तलोपौ ८।२।२३। "निष्ठायाम्" इत्यादि। निष्ठासंज्ञके प्रत्यये विधातव्येऽप्रसिद्धनिष्पत्तिकस्य निष्ठासंज्ञकस्य प्रत्ययस्य निष्ठेति चास्याः संज्ञाया अप्रसिद्धिः, कुतः? इतरेतराश्रयत्वात्। कथमितरेतराश्रयत्वमित्याह-- "संज्ञायाम्" इत्यादि। निष्ठेत्येवं संज्ञामुच्चार्य क्तक्तवत्वोरिह भूते विधानम्, विद्यमानयोश्च तयोः संज्ञया भवितव्यमितीतरेतराश्रयत्वम्, "इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्प्यन्ते"(व्या।प।२८)। यदितो क्तक्तवतू स्वरूपेण विज्ञातौ भवत एवञ्च "क्तक्तवतू निष्ठा" १।१।२५ इत्यन्यस्य संज्ञा विधातुं शक्यते,नान्यथा। अतः संज्ञाया अप्रसिद्धिः, तस्याश्चाप्रसिद्धौ तयोरप्रसिद्धिः। "भाविनी" इति। भविष्यन्तीत्यर्थः। यथा-- अस्य सूत्रस्य शाटकं वयेति। भाविनीशब्दोऽयम् "गमेरिनिः"(द।उ।६।५७) "आङि णित्" (द।उ।६।५८) "भुवश्च" (द।उ।६।५९)

इतीनिप्रत्ययान्तो व्यत्पादितः। स च "भविष्यति गम्यादयः" [३।३।३] इति भविष्यत्काले विहितः। तेन भाविनीत्यस्य भविष्यन्तीत्येवार्थो लभ्यते। "सामथ्र्यात्" इत्यादि। स भूते भवति यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति। न चान्यस्योत्पन्नस्य निष्ठेत्येषा संज्ञा भवति। अपि तु क्तक्तवत्वोरेवेति सामथ्र्यम्। "आदिकर्मणि" इत्यादि। कर्मशब्दोऽत्र क्रियावाची। आदिभूते क्रियारम्भादिभूते प्रथमे क्रियालक्षण इत्यर्थः। यावत्क्रियालक्षणैः सकलः कटः परिसमाप्तिमुपैति क्रियालक्षणानां तावतामपवर्गे भूतकालो भवति। आद्ये क्रियालक्षणे समुदायस्यापरिनिष्पन्नत्वात् वत्र्तमानकाल एवेति। तत्र वत्र्तमाने निष्ठा न प्राप्नोति, अतो वक्तव्यो व्याख्येयः। तत्रेदं व्याख्यानम्-- यदयं "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" [१।२।२१] इत्यादिकर्मणि कर्मणि निष्ठा विकल्पयति। यद्वा-- "आदिकर्मणि क्तः कत्र्तरि च" [३।४।७१] इत्यादि, तज्ज्ञापयति-- आदिकर्मणि निष्ठा भवतीति। "प्रकृतः कटम्" इति। प्रशब्दोऽत्रादिकर्म द्योतयति। य एवार्थः प्रकरोति कटं देवदत्त इति, स एवार्थः प्रकृतः कटं देवदत्त इति॥ "सुत्वा" इति। "ह्यस्वस्य पिति कृति" [६।१।६९] इति तुक्, "सर्वनामस्थाने च" [६।४।८] इत्यादिना दीर्घः, "नलोपः प्रातिपदिकान्तस्य" [८।२।७] इति नकारलोपः॥

बाल-मनोरमा

निष्ठा ८२३, ३।२।१०२

निष्ठा। भूते इति धातोरिति चाधिकृतम्। तदाह-- भूतार्थेत्यादि। भावकर्मणोः क्त इति। तथा च क्तप्रत्ययविषये कर्तरीति न संबध्यते इति भावः। कर्तरि क्तवतुरिति। कृत्यक्तखलर्थानामेव भाव कर्मणोर्विधानादिति भावः। "तयोरेव कृत्यक्ते"त्यत्र "लः कर्मणी"त्यस्मात्सकर्मकेभ्यः कर्णि कर्तरि च अकर्मकेभ्यो भावे कर्तरि चेत्यनुवर्तते। ततश्च अकर्मकेभ्यो भावे क्तः, सकर्मकेभ्यस्तु कर्मणीति व्यवस्था लभ्यते इति मत्वोदाहरति-- स्नातं मयेति। अकर्मकत्वाद्भाव क्तः। स्तुतस्त्वया विष्णुरिति। सकर्मकत्वात्कर्मणि क्तः। कर्तरि क्तवतुमुदाहरति-- विष्णुर्वि()आमिति।

---

सूत्रम्

काशिका-वृत्तिः

सुयजोर् ङ्वनिप् ३।२।१०३

सुनोतेर् यजतेश्च ङ्वनिप् प्रत्ययो भवति। सुत्वा। यज्वा।

बाल-मनोरमा

सुयजोर्ङ्वनिप् ८९४, ३।२।१०३

सुयजोर्ङ्वनिप्। पञ्चम्यर्थे षष्ठी। सुनोतेर्यजेश्च ङ्वनिबित्यर्थः। भूते इति। अस्य भूताधिकारस्थत्वादिति भावः। सुत्वा सुत्वानाविति। ङ्वनिपि ङपावितौ , इकार उच्चारणार्थः। ङित्त्वान्न गुणः।

तत्त्व-बोधिनी

सुयजोर्ङ्वनिप् ७३५, ३।२।१०३

सुयजोर्ङ्वनिप्। सुनोतेरिति। षुञ् अभषवे। यद्यपीह सु गतौ , षु प्रसवैवै()आर्ययोरिति निरनुबन्धकयोरेव ग्रहणं न्याय्यं, तथाप्यनभिधानादुभयपदिना साहचर्याद्वा तयोग्र्रहणं न भवतीति भावः। ङकारः सुनोतेर्गुणप्रतिषेधार्थः। पकारस्तु स्वरार्थस्तुगर्थश्च।

---

सूत्रम्

काशिका-वृत्तिः

जीर्यतेरतृन् ३।२।१०४

भूते ३।२।७४ इति वर्तते। जीर्यतेः अतृन् प्रत्ययो भवति भूते। जरन्, जरन्तौ, जरन्तः। वा असरूपेण निष्ठा, जीर्णः, जीर्णवानिति।

न्यासः

जीर्यतेरतृन्। , ३।२।१०४

"जरन्" इति। अतृनो नित्त्वादाद्युदात्तत्वं भवति। "उगिदचाम्" ७।१।७० इति नुम्॥

बाल-मनोरमा

जीर्यतेरतृन् ८९५, ३।२।१०४

जीर्यतेरतृन्। भूते इत्येवेति। भूतार्थवृत्तेर्जॄ()धातोरतृन् स्यादित्यर्थः। ऋकारनकारावितौ। अत्प्रत्ययः शिष्यते। जरन्निति।उगित्त्वान्नुम्। जीर्ण इति। "ऋत इत्"। रपरत्वम्। " हलि च" इति दीर्घः। निष्ठानत्वम्।

तत्त्व-बोधिनी

जीर्यतेरतृन् ७३६, ३।२।१०४

जरन्निति। ऋकारस्य गुणे रपरोऽकारः। "उगितदचा"मिति नुम्। संयोगान्तलोपस्याऽसिद्धत्वान्न दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि लिट् ३।२।१०५

भूते इत्येव। छन्दसि विषये धातोः लिट् प्रत्ययो भवति। अहं सूर्यमुभयतो ददर्श। अहं ध्यावापृथिवी आततान। ननु च छन्दसि लुङ्लङ्लिटः ३।४।६ इति सामान्येन लिट् विहित एव? धातुसम्बन्धे स विधिः, अयं त्वविषेषेण।

न्यासः

छन्दसि लिट्। , ३।२।१०५

"ददर्श" इति। दर्शेर्लिट, णल्, द्विर्वचनम्(), "उरत्" ७।४।६६ इत्यत्त्म्, रपरत्वम्, हलादिशेषः ७।४।६०, लघूपधगुणः ७।३।८६। "आततान" इति। "तनु विस्तारे" (धा।पा।१४६३) आङ्पूर्वः, "अत उपधायाः" ७।२।११६ इति वृद्धिः। "धातुसम्बन्धे स विधिः" इति। "धातुसम्बन्धे प्रत्ययाः" ३।४।१ इत्यतो धातुसम्बन्धग्रहणानुवृत्तेः। "अयं त्वविशेषणेण" इति। भूतमात्रे। लिट इकारटकारावुत्तरसूत्रे विशेषणार्थौ। "लः कानज्वा" इत्युच्यमाने लकाराणां ग्रहणं स्यात्। टकारष्टेरेत्वार्थः॥

बाल-मनोरमा

छन्दसि लिट् ८९६, ३।२।१०५

छन्दसि लिट्।

तत्त्व-बोधिनी

छन्दसि लिट् ७३८, ३।२।१०५

छन्दसि लिडिति सूत्रस्यार्थमाह--भूतसामान्ये इति। न च "छन्दसि लुङ्लङ्लिटः" इत्यनेन गतार्थता शङ्क्या, धातुसंबन्धाधिकारे हि स विधिः, इदं तु धातुसंबन्धं विनापि भवतीति विशेषात्। अत्र व्याचख्युः--कानचः कित्करणं तिस्तिराण इत्यत्र "ऋच्छत्यृ()ता"मिति गुणस्य निषेधार्थं सति प्रतिषेधविषये आरभ्यते। "चक्राण" इत्यत्र तु "असंयोगाल्लिट्व"दित्येव सिद्धं कित्त्वमिति।

त्रिमुनिमतमिति। सूत्रकृता छन्दसीति प्रक्रान्तत्वादुत्तरसूत्रे भाषाग्रहणाच्च, भाष्यवार्तिकयोरपि क्वसुकानचोः "छन्दस्युभयथे"ति वचनात्सार्वधातुकत्वेन "सार्वधातुकमपि" दिति ङित्त्वादेव आजिवानित्यादौ नलोपादीनां कित्कार्याणामन्यथासिद्धिमाशङ्क्य तितीर्वान् तिस्तिराण इत्यादौ "ऋच्छत्यृ()ता"मिति प्राप्तस्य गुणस्य बाधानार्थं कित्करणमिति सिद्धान्तिततत्वात्। अत एव कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इति केषांचिदुत्प्रेक्षा नादर्तव्येति हरदत्तमाधवादिग्रन्थे स्पष्टमिति भावः। कवयरित्वति। गतानुगतिकतयेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

लिटः कानज् वा ३।२।१०६

छन्दसि लिटः कानजादेशो भवति वा। अग्निं चिक्यानः। सोमं सुषुवाणः। वरुणं सुषुवानम्। न च भवति। अहं सूर्यमुभयतो ददर्श। अहं द्यावापृथिवी आततान। लिड्ग्रहणं किम्, न पूर्वस्य एव प्रकृतस्य आदेशाविधाने विभक्तिविपरिणामो भविष्यति? लिण्मात्रस्य यथा स्यात्, यो ऽपि परोक्षे विहितस् तस्य अप्ययम् आदेशो भवति।

लघु-सिद्धान्त-कौमुदी

लिटः कानज्वा ८३१, ३।२।१०६

न्यासः

लिटः कानज्वा। , ३।२।१०६

कानचश्चिकरणमन्तोदात्तार्थम्। कित्करणं कित्कार्यार्थम्। तत्पुनः "बन्ध बन्धने" (धा।पा।१५०८) इत्येवमादयः संयोगान्ताः प्रयोजन्ति,नान्ये। असंयागान्तेभ्यः "असंयोगाल्लिट् कित्" १।२।५ इति सिद्धः, संयोगान्ता अपि कित्त्वं भाषायां प्रयोजयन्ति, न छन्दसि। तत्राह-- "छन्दस्युभयथा" ३।४।११७ इति लिटः सार्वधातुकत्वात् "सार्वधातुकमपित्" १।२।४ इति ङित्त्वमस्त्येव। न कित्त्वे ङित्त्वे वा च्छन्दसि कश्चिद्विशेषोऽस्ति। भाषायां तु यद्यसंयोगान्तेभ्यः कित्त्वं न स्याद्योऽयं "ऋच्छत्यृताम्"७।४।११ इति गुणः प्रतिषेधविषय आरभ्यते स यथेह न भवति-- निपपरतुः, निपपरुरिति;तथेहापि स्यात्-- निपपुराण इति; कित्त्वे च सति न भवति। भाषायां तु कित्त्वमर्थवद्भवति। "पृ पालन पूरणयोः" (धा।पा।१०८६), निपूर्वात् कानच्। द्विर्वचनात् परत्वात् "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्त्वम्, रपरत्वञ्चेति। "द्विर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावात् पृशब्दो द्विरुच्यते। उरत्त्वरपरत्वहलादिशेषाः, अट्()कुप्वादिना ८।४।२ णत्वम्। भाषायां कानज्भवीत्यस्मादेव ज्ञापकादवसीयते। "चिक्यानःट इति। अभ्यासादुत्तरस्य चिनोतेश्चकारस्य "विभाषा चेः" ७।३।५८ इति कुत्वम्, "एरनेकाचः" ६।४।८२ इत्यादिना यणादेशः। "सुषुवाणः" इति। "{सुनोतेरिति-इति मुद्रितः पाठः।} सुनोतेरिति; "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङादेशः, "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्। "विभक्तिविपरिणामो भविष्यति" इति। यद्यपि लिडिति प्रथमान्तं प्रकृतं तथाप्यर्थाद्विभक्तिविपरिणामो भविष्यति।

आदेशम्बन्धादुत्तरस्य लिटः षष्ठ()न्तता भविष्यति।तस्मादन्तरेणापि लिड्()ग्रहणं प्रकृत्वाल्लिट एव कानजादेशो भविष्यतीति लिड्()ग्रहणं न कत्र्तव्यमिति भावः। "योऽपि" इत्यादि। योऽपि "परोक्षे लिट्()" ३।२।११५ इत्यनेनलिड्()विहितस्तस्यापि लिड्()ग्रहणे सति कानजादेशो भवति। असति तु तस्मिन् "अनन्तरस्य विधिर्वा प्रतिषेधो वा" (व्या।प।१९) इत्यस्यैव स्यात्, न परोक्षे लिटः। अथासति लिड्()ग्रहणे प्रत्ययान्तरं कानच् कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्, प्रत्ययान्तरे हि "न लोकाव्ययनिष्ठाखलर्थतृनाम्" २।३।६९ इति षष्ठीप्रतिषेधो न स्यात्। ततश्चा()ग्न चिक्यान इत्यत्राग्निशब्दात् षष्ठी स्यात्॥।

बाल-मनोरमा

लिटः कानज्वा ८९७, ३।२।१०६

लिटः कानज्वा।

---

सूत्रम्

काशिका-वृत्तिः

क्वसुश् च ३।२।१०७

छन्दसि लिटः क्वसुरादेशः भवति। जक्षिवान्। पपिवान्। न च भवति। अहं सूर्यमुभयतो ददर्श। योगविभाग उत्तरार्थः।

लघु-सिद्धान्त-कौमुदी

क्वसुश्च ८३२, ३।२।१०७

लिटः कानच् क्वसुश्च वा स्तः। तङानावात्मनेपदम्। चक्राणः॥

न्यासः

क्वसुश्च।, ३।२।१०७

क्वसोरुगित्करणं नुमर्थम्। कित्करणं कानच इव द्रष्टव्यम्। असति हि तस्मिन् "ऋच्छत्यृनाम्"७।४।११ इति यथेह गुणो न भवति-- तेरतुः, तेरुरिति; तथेहापि ततीर्वानिति। "तॄ प्लवनतरणयोः" (धा।पा।९६९), "ऋत इद्धातोः" ७।१।१०० इतीत्वम्, "हलि च" ८।२।७७ इति दीर्घः, द्विरवचनमभ्यासकार्यम्। "जक्षिवान्" इति। "लिट()न्यतरस्याम्" २।४।४० इत्यदेर्घस्लादेशः। "वस्वेकाजाद्घसाम्" ७।२।६७ इतीट्, "घसिभसोर्हलि च" ६।४।१०० इत्युपधालोपः, "खरि च" ८।४।५४ इति घकारस्य ककारः, "शासिवसिघसीनाञ्च"८।३।६० इति षत्वम्, "कुहोश्चुः" ७।४।६२ इत्यभ्यासस्य चुत्वम्---झकारः, "अभ्यासे चर्च" ८।४।५३ इति झकारस्य जकारः। "पपिवान्" इति। "पा पाने" (धा।पा।९२५)। पूर्ववदिट्। "आतो लोप इटि च" ६।४।६४ इत्यकारलोपः। "योगविभाग उत्तरार्थः" इति। उत्तरसूत्रे क्वसोरेवानुवृत्तिर्यथा स्यात्, कानचो मा भूत्॥

बाल-मनोरमा

क्वसुश्च ८९८, ३।२।१०७

क्वसुश्च। त्रीणीमानि सूत्राणि। अत्र प्रथम सूत्रे भूत इत्यनुवृत्तिमभिप्रेत्य व्याचष्टे-- भूतसामान्ये छन्दसि लिडिति। अनद्यतनपरोक्षत्वं छन्दसि न विवक्षितमिति भावः। "लिटः कानज्वे"ति द्वितीयं सूत्रम्। तत्र छन्दसीत्यनुवर्तते, भूते इति च। छन्दसि भूते लिटः कानजादेशः स्यादित्यर्थः। लिड्ग्रहणं लिण्मात्रस्य ग्रहणार्थम्। तेन "परोक्षे लि" डिति यो लिड्विहितस्तस्यापि ग्रहणार्थः। अन्यथा "अनन्तरस्ये"ति न्यायेन प्रकृतस्यैव लिटो ग्रहणं स्यादिति वृत्तौ स्पष्टम्। वाग्रहणं तु पक्षे लिटः श्रवणाअर्थं, वासऽरूपविधिर्लादेशेषु नेति ज्ञापनार्थं वा। तत्प्रयोजनं तु "भाषायां सदवसे"त्यत्र

क्वसोरेवानुवृत्त्यर्थः। इमौ कानच्क्वसू आदेशौ छन्दसि भूते लिटः क्वसुश्चादेशः स्यादित्यर्थः। योगविभागस्तु उत्तरसूत्रे क्वसोरेवानुवृत्त्यर्थः। इमौ कानच्क्वसू आदेशौ छान्दसाविति--अत्रैव भाष्यकैटयोः स्पष्टम्। तदाह--तस्येत्यादि, त्रिमुनिमतमित्यन्तम्। "विभाषा पूर्वाह्णाऽपराह्णे"ति सूत्रभाष्ये तु पपुष आगतं पपिवद्रूप्यमिति प्रयुक्तम्। तेन लोकेऽपि क्वचिक्त्वसोः साधुत्वं सूचितम्। तदाह--- कवयस्त्विति। तस्थिवांसमिति। स्थाधातोर्लिटः क्वसुः। द्वितीयैकवचने "अत्वसन्तस्ये"ति दीर्घः। उगित्()त्वान्नुम्। अधिजग्मुष इति। अधिपूर्वाद्गमेर्लिटः क्वसुः, आङोयमहने"त्युपधालोपः, शसि वसोः संप्रसारणं, पूर्रूपम् , षत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

भाषायां सदवसश्रुवः ३।२।१०८

सद वस श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति। आदेशविधानादेव लिडपि तद्विषयो ऽनुमीयते। उपसेदिवान् कौत्सः पाणिनिम्। तेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति। उपासदत्। उपासीदत्। उपससाद। अनूषीवान् कौत्सः पाणिनिम्। अन्ववात्सीत्। अन्ववसत्। अनूवास। उपशुश्रुवान् कौत्सः पाणिनिम्। उपाश्रौषीत्। उपाशृणोत्। उपशुश्राव। लुङ्लङ्विषये परस्तादनुवृत्तेः क्वसुर् भवति।

न्यासः

भाषायां सदवश्रुवः। , ३।२।१०८

ननु चेह प्रकरणे भूतसामान्ये लिड् विहितः, तेनासौ भाषायां नास्त्येव, तदसतस्तस्य कथं क्तसुरादेशः शक्यते विज्ञातुमित्याह-- "आदेशविधानादेव" इत्यादि। यदेतद्भाषायां लिटः क्वसोरादेशविधानमत एव विज्ञानाद् भूतसामान्ये भाषायां लिडित्वनुमीयते; अन्यथा ह्यादेशविधानमनर्थकं स्यात्। न ह्यविद्यमानस्य स्थानिन आदेश उपपद्यते। यदि तह्र्यादेशविधानाल्लिङ्? भाषायामनुमीयते, ततश्च सदादिभ्यो भाषायां नित्यं लिट् प्राप्नोति, तस्य "विभाषा क्वसुः" इति पक्षे तिङः श्रवणं प्रसज्येत, लुङादेशश्च स्वविषये पाक्षिको न स्यात्, नित्यत्वाल्लिटः? नैष दोषः;आदेशेन हि लिङ्गेन लिडनुमीयते, तेन यदादेशो नास्ति तदा तदनुमानमपि नास्त्येव। तदसत्त्वे लिटः कुत आदेशा येषां श्रवणं प्रसज्येत ! यत्र पक्षे लिट् नास्ति तत्र स्वविषये लुङादयो भवन्तः केन निवार्यन्ते ! "उपसेदिवान्" इति। "षद्()लृ विशरणे" (धा।पा।८५४)। "अत एकहल्मध्ये" ६।४।१२० इत्यादिनैत्वाभ्यासलोपौ, "वस्वेकाजाद्घसाम्" ७।२।६७ इतीट्, नुम्, "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः, हल्ङ्यादि ६।१।६६ संयोगान्तलोपौ ८।२।२३। "उपासदत्" इति। वाग्रहणाद्यस्मिन् पक्षे लिड् नास्ति तस्मिन् पक्षे भूतसामान्ये लुङ्, तिप्, "इतश्च" ३।४।१०० इतीकारलोपः, पुषादिना ३।१।५५ च्लेरङ्। "उपासीदत्" इति। "अनद्यतने लङ्" ३।२।१११, प्राघ्रादिसूत्रेण ७।३।७८ सीदादेशः। "उपससाद" इति। "परोक्षे लिट्" ३।२।११५, तिप्, णल्, "अत उपधायाः" ७।२।११६ इति वृद्धिः। "अनूविषान्" इति। "वस निवासे" (धा।पा।१००५), लिटः क्वसूर्द्विर्वचनम्, वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्। "लिट()भ्यासस्योभयेषाम्" ६।१।१७ इत्यभ्यासस्य सम्प्रसारणम्, "शासिवसिघसीनाञ्च" ८।३।६० इति षत्वम्, "अकः सवर्णे दीर्घः" ६।१।९७ अनुशब्देन सह पुनर्दीर्घः। "अन्ववात्सीत्िति। लुङ्, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्, "एकाचः" ७।२।१० इतीट्प्रतिषेधः, "सः स्याद्र्धधातुके" ७।४।४९ इति तत्वम्, "वदव्रज" ७।२।३ इत्यादिना वृद्धिः। "अन्ववसत्" इति। लङ्। "अनूवास" इति। लिट, पूर्ववत् सम्प्रसारणादिकार्यम्। "उपशुश्रुवान्" इति। "श्रु श्रवणे" (धा।पा।९४२), लिटः क्वसुः, द्विर्वचनम्। "उपाश्रौषीत्" इति। लुङ् "सिचि वृद्धिः परस्मैपदेषु" ७।२।१ इति वृद्धिः, पूर्ववदिट्()प्रतिषेधः, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्, उपसर्गेण "अकः सवर्णे दीर्घः" ६।१।९७। "उपाशृणोत्" इति। लङ्, "श्रुवः शृ च" ३।१।७४ इति श्नुप्रत्ययः, शृभावश्च,

"सार्वधातुकार्थधातुकयोः" ७।३।८४ इति गुणः। "उपशुश्राव" इति। लिट्, तिप्, णल्, "अचो ञ्णिति" ७।२।११५ इति वृद्धिः, आवादेशः। इहानेन सूत्रेण यत्कार्यं विधीयते तद्भूतसामान्ये। "{इयं पंक्तिर्मुद्रिते नास्ति} लुङ्" ३।२।११० इत्यनेन लुङ्। "अनद्यतने लुङ्" ३।२।१११ इत्यनेन लङ्, "परोक्षे लिट्" ३।२।११५ इत्यनेन लिट्, भूतानद्यतनपरोक्षे परौ च लङिलिटौ भवतः। विशेषविहितत्वाच्च लङलिटोरस्य सदादिकार्यस्य बाधकौ प्राप्नुतः। तस्य कार्यस्य भूतसामान्यमवकाशः; लङलिटोः सदादिभ्योऽन्येभ्यो धातुभ्यः, सदादिभ्यो भूतविशेषे भूतानद्यतनपरोक्षे; भूतानद्यतने चोभयप्राप्तौ यथोक्तकारणद्वयात् लङलिटौ स्याताम्। न चैतत् सूत्रविहितं कार्यमपीति यश्चोदयेत्, तं प्रत्याह-- "लुङलङविषयेऽपि" इत्यादि। लिड्()ग्रहणस्य वाग्रहणस्य चास्य सूत्रस्य पुरस्तात् "अनद्यतने लङ" ३।२।१११ , "परोक्षे लिट्" ३।२।११५ इत्यत्र चानुवृत्तिः क्रियते। तत्र चानुवृत्तिसामर्थ्यात् लङ्यप्येतत् भवति। अत्रैवं सम्बन्धः कत्र्तव्यः-- अनद्यतने लङ भवति, सदादिभ्यो वा लिट्, लिटश्च क्वसुरादेशो नित्यमिति। परोक्षे लिङ्? भवति, सदादिभ्यो वा, लिटः क्वसुरिष्यते, सूत्रान्तरविहितश्चायम्॥

बाल-मनोरमा

भाषायाम् सदवसश्रुवः ९००, ३।२।१०८

भाषायाम्। सद, वस, श्रु एषां द्वन्द्वात्पञ्चमी। पुंस्त्वमेकवचनं चार्षम्। तस्य च नित्यं क्वसुरिति। वाग्रहणं लिटैव संबध्यते, तस्य क्वसुस्तु नित्य इति भाष्ये स्पष्टम्। पक्षे लुङ्, तसय् भूतसामान्ये विहितत्वात्। वाग्रहणाननुवृत्तौ तु भूतसामान्ये लिडयं नित्यं लुङपवादः स्यात्, सरूपत्वात्। अस्य च भूतसामान्ये लिटो न तिङ्, अस्य क्वसोस्तदपवादत्वात्। वासरूपविधिस्तु लोदेशेषु नेति "लिटः कानज्वे"त्यत्र उक्तमिति शब्देन्दुशेखरे विस्तरः। निषेदुषीमिति। निपूर्वात्सदेर्लिटः क्वसुः, द्वित्वम्, "अत एकहल्मध्ये" इत्येत्वाभ्यासलोपौष वसोः संप्रसारणं, पूर्वरूपं, षत्वम्। अध्यूषुष इति। अधिपूर्वाद्वसधातोर्लिटः क्वसुः, याजित्वाद्धातोर्वस्य संप्रसारणम्। पूर्वरूपम्। उस् इत्यस्य द्वित्वं, हलादिशेषः, सवर्णदीर्घः। शसि वसोः संप्रसारणं, पूर्वरूपम्()। शुश्रुवानिति। श्रुधातोर्लिटः क्वसुः। द्वित्वम्।

तत्त्व-बोधिनी

भाषायां सदवसश्रुवः ७४०, ३।२।१०८

निषेदुपीमिति। षद्लृ विशरणादौ। "लिटि धतो"रिति द्वित्वे "अत एकहल्मध्ये" इत्येत्त्वाभ्यासलोपौ। "उगितश्चे"ति ङीपि "वसो"रिति सम्प्रसारमए वलादित्वाऽभावान्नेट्। "सदिरप्रते"रिति षत्वम्। पुंसि तु निषेदिवान्। अध्यूषुष इति। वस निवासे अधिपूर्वः। "वचिस्वपी"ति संप्रसारणं। द्वित्वहलादिशेषसवर्णदीर्घाः। ङसि भत्वात्संप्रसारणम्। प्रथमैकवचने तु अध्यूषिवान्।

---

सूत्रम्

काशिका-वृत्तिः

उपेयिवाननाश्वाननूचानश् च ३।२।१०९

उपेयिवाननाश्वाननूचान इत्येते शब्दा निपात्यन्ते। उपपूर्वादिणः क्वसुः, द्विर्वचनम् अभ्यासदीर्घत्वं तत्सामर्थ्यादेकादेशप्रतिबन्धः, तत्र वस्वेकाजाद्घसाम् ७।२।६७ इत्यनेकाच्त्वादिण् न प्राप्नोति, स निपात्यते, अभ्यासस्य श्रवणं धातुरूपस्य यणादेशः। उपेयिवान्। क्रादिनियमात् प्राप्तश्च वस्वेकाजाद्घसाम् ७।२।६७ इति प्रतिषिद्धः, स पुनरिट् प्रतिप्रसूयते, तेन अजादौ न भवति। उपेयुषः। उपेयुषा। न च अत्र उपसर्गास् तन्त्रम्, अन्योपसर्गपूर्वान् निरुपसर्गाच् च भवत्येव। समीयिवान्। ईयिवान्। वावचनानुवृत्तेश्च पूर्ववल् लुडादयो ऽपि भवन्ति। उपागात्। उपैत्। उपेपाय। अश्नातेर्

नञ्पूर्वात् क्वसुर् निपत्यते, इडभावश्च। अनाश्वान्। नाशीत्। नश्नात्। नाश। वचेरनुपूर्वात् कर्तरि कानज् निपात्यते। अनूचानः। अन्ववोचत्। अन्वब्रवीत्। अनूवाच।

न्यासः

उपेयिवाननना�आआननूचानश्च। , ३।२।१०९

"उपपूर्वादिणः क्वसुः" इति। लिडादेश इति वेदितव्यः। "अभ्यासदीर्घत्वम्" इति। "दीर्घ इणः किति" ७।४।६९ इत्यनेन। "तत्सामथ्र्यात्" इत्यादि। दीर्घत्वविधानसामथ्र्यादकः सवर्णे दीर्घ्तवमेकादेशः प्रतिषिध्यते, प्रवृत्तिविघातोऽस्य क्रियत इत्यर्थः। यदि ह्रेकादेशः स्यात्, दीर्घत्वभिधानमनर्थकं स्यात्; एकादेशेनैव दीर्घत्वसिद्धेः। ननु चाभ्यासदीर्घस्येयतुः, इयुरित्ययमवकाशः स्यात्-- यत्र धातुरूपस्य "इणो यण्" (६।४।८१) इति यणादेशः क्रियते? नैषोऽस्यावकाशः, अत्र हि "अचः परस्मिन् पूर्वविधौ" १।१।५६ इति स्थानिवद्भावेन भवितव्यम्। कथम्? सवर्णदीर्घत्वे हि पूर्वापरविधितवात् पूर्वविधिरिति शक्यते व्यपदेष्टुम्। यो ह्रुभयस्थानी निष्पद्यते लभतेऽसावन्यतरव्यपदेशम्। न चात्र "न पदान्त" १।१।५७ इत्यादिसूत्रेण दीर्घविधिं प्रति स्थानिवद्भावप्रतिषेधोऽस्ति; यस्मात् "स्वरदीर्घयलोपेषु लोपाजादेशौ न स्थानिवदेव" (काशिका।१।१।५८) इत्यादिसूत्रेण दीर्घविधिं प्रति स्थानिवद्भावप्रतिषेधोऽस्ति; यस्मात् "स्वरदीर्घयलोपेषु लोपाजादेशौ न स्थानिवदेव" (काशिका।१।१।५८) इति स्थानिवद्भावादकः सवर्णे दीर्घत्वेनात्र भवितव्यम्। तदेतदभ्यासदीर्घत्वमनवकाशत्वात् सवर्णदीर्घत्वं बाधत इति स्थितमेतत्-- सामथ्र्यादेकादेशः प्रतिषिध्यत इति। "तत्र" इत्यादि। एकादेशप्रतिबन्धके हि सत्यनेकाच्त्वं भवति, तेन "वस्वेकाजाद्()घसाम्" ७।२।६७ इत्यनेनेडागमो न प्राप्नोतीति स निपात्यते। "धातुरूपकस्य यणादेशः" इति। "इणो यण्" ६।४।८१ इत्यनेन, तर्दीदं निपातनमेव। सत्यजादावपि परतो वसोः सम्प्रासरणमिति। सम्प्रसारणे कृते सतीट् प्राप्नोति स "वस्वेकाजाद्घसाम्" ७।२।६७ इति प्रतिषिद्धः, स एवानेन निपातनन प्रतिप्रसूयते। प्रतिषिद्धः स पुनः प्रवत्र्तते, न त्वपूर्व विधीयते। "तेनाजादौ न भवति" इति। अपिपूर्वस्य हि विधानेन विशेषानुपादानादजादावपि प्रसङ्गः स्यात्; न तु लक्षणप्रतिषेधस्येटः प्रसवे; तस्य वलादित्वात्। "उपेयुषा" इति। सम्प्रसारणे कृते धातोर्यणादेशः, "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्। "न चात्रोपसर्गस्तन्त्रम्" इति। उपस्र्गोऽत्र न प्रधानमित्यर्थः। तन्त्रत्वं तस्य "बहुलं छन्दसि" ३।२।८८ इत्यतो बहुलग्रहणानुवृत्तेर्लभ्यते। "उपागात्" इति। लुङ, "इणो गा लुङि" २।४।४५ इति गादेशः। "गातिस्था"( २।४।७७) इत्यादिना सिचो लुक्। "उपैत्" इति। लङ, तिप्, अदादित्वाच्छपो लुक्, "आडजादीनाम्" ६।४।७२ इत्याट्, "आटश्च" ६।१।८७ इति वृद्धिः। "उपेयाय"इति। लिट्, तिप्, णल्, "अचो ञ्णिति" ७।२।११५ इति वृद्धिः, आयादेशः, स्थानिवद्भावादद्विर्वचनमिकारस्येति; "अभ्यासस्यासवर्णे"६।४।७८ इतीयङ, इकारेण सह "आद्गुणः" ६।१।८४। "अना()आआन्" इति। "अश भोजने" (धा।पा।१५२३) लिट्, क्वसुः, द्विर्वचनम्, "अश"इत्यस्य "अत आदेः" ७।४।७० इत्यभ्यासस्य दीर्घत्वम्, इडभावश्च,"वस्वेकाजाद्घसाम्" ७।२।६७ इत्यनेन प्राप्तस्येटोऽभावो निपात्यते। न आ()आआन् अना()आआन्-- नञ्समासः, "नलोपो नञः" ६।३।७२ इति नलोपः;"तस्मान्नुडचि" ६।३।७३ इति नुडागमः। "नाशीत्" इति। लुङ, "च्लेः सिच्" ३।१।४४, "इट ईटि" ८।२।२८ इति सिचो लोपः, पूर्ववदाट्, वृद्धिः, नञा सह सवर्णदीर्घत्वम्। "नाश्नात्" इति। लङ्, क्र्यादित्वात् श्ना, आडागमः। "नाश" इति। लिट्, तिप्,णल्, द्विर्वचनम्, पूर्ववदभ्यासदीर्घत्वम्, धातुना नञा सहाकः सवर्णे दीर्घत्वम्। "वचेः"इत्यादि। "वच परिभाषणे" (धा।पा।१०६३)-- इत्यस्मात् "ब्राउवो वचिः"२।४।५३ इति वच्यादेशाद्वा वचेरनुपूर्वात्, कानच् कत्र्तर्यात्मनेपदसंज्ञको न प्राप्नोति;परस्मैपदित्वात्, इतरस्मात् कत्र्त्रभिप्रायफलस्य विवक्षितत्वात्, अतः स निपात्यते। वच्यादिसूत्रेण ६।१।१५ धातोः सम्प्रसारणम्, "लिट()भ्यासस्योभयेषाम्" ६।१।१७ इत्यभ्यासस्य पश्चादनुशब्देन सहाकः सवर्णे दीर्घत्वम्। "अन्ववोचत्" ६।१।८४। "अन्वब्रावीत्" इति। ब्राउवो लङ,शपो लुक्, "ब्राउव ईट्" ७।३।९३। "अनूवाच" इति। लिट्, णल्, "अत उपधायाः" ७।२।११६

इति वृद्धिः, पूर्ववदभ्यासस्य सम्प्रासरमेकादेशः॥

बाल-मनोरमा

उपेयिवाननाआआननूचानश्च ९०१, ३।२।१०९

उपेयिवान। इडिति। उपपूर्वादिण्धातोर्लिटः क्वसुः, नित्यत्वाद्द्वित्वम्। वलादिलक्षण इट् "नेड्वशि कृती"ति प्रतिषिद्धः, स तावत्कादिनियमात्पुनरुत्थितः। पुनश्च "वस्वेकाजाद्धसा"मिति "सूत्रेण एकाच्श्च आदन्ताच्च घसेश्च परस्य वसोरिट् स्यान्नान्येभ्य" इत्यर्थकेन द्वित्वनन्तरमनेकाच्त्वात्प्रतिषिद्धः, सोऽयमिट् अनेन निपातनेन प्रतिसूयते इति भाष्ये स्पष्टम्। इटि कृते उत्तरखण्डस्य इकारस्य यण्। अभ्यासस्य दीर्घस्तु न निपात्यते। नन्वत्र अपूर्व इट् निपात्यतामित्यत आह-- उपेयुषीति। उगित्वान्ङीपि वसोः संप्रसारणम्। प्रतिसूतो वलादिलक्षण इट् तु न, तन्निमित्तस्य वकारस्य संप्रसारणेन विनाशोन्मुखत्वात्। अत्र अपूर्वस्य इटो निपातने तु अत्रापि इट् स्यादिति भावः। उपेत्यविवक्षितमिति। अत्र व्याख्यानमेव शरणम्। अश्नातेरिति। "अश भोजने" श्नाविकरणः क्र्यादिः, लिटः क्वसुः, द्वित्वम्, "अत आदे"रिति दीर्घः, सवर्णदीर्घः, द्वहल्त्वाऽभावान्न नुट्। "अश्नोतेश्चे"त्यपि न नुट्, श्नुविकरणस्थस्यैव तत्र ग्रहणात्। नञ उपपदसमासः। "नलोपो नञः" "तस्मान्नुडची"ति भावः। वचेः कर्तरीति। न तु भावकर्मणोरिति भावः। कानचि यजादित्वात्संप्रसारणं, पूर्वरूपं, सवर्णदीर्घः। "विभाषा गमहने"त्यादि स्पष्टम्।

तत्त्व-बोधिनी

उपेयिवाननाआआननूवानश्च ७४१, ३।२।१०९

उपेयिवानना। इडिति। वलादिलक्षण एवेट् "नेड्वशि कृती"ति निषिद्धः। क्र्यादिनियमात्पुनः प्राप्तः "वस्वेकाजाद्धसा"मिति सूत्रेण कृतद्वित्वानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषामिति नियच्छता प्रतिषिद्धः, नित्यत्वाद्द्वित्वे कृतेऽनेकाच्त्वात्। न च सवर्णदीर्घेणैकाच्त्वम्। "दीर्घ इणः किती"त्यभ्यासस्य दीर्घे कृते तत्सामर्थ्यात्सवर्णदीर्घाऽभाव इति पक्षाश्रयणात्। स एव वलादिलक्षण इडिह प्रतिप्रसूयते, नाऽपूर्वो विधीयते, तेन संप्रसारणविषये न भवति। अत एवोदाहरति-- उपेयुष इति। सति त्विटि तस्य यणादेशे उपेय्युष इति स्यादिति भावः। अविवक्षितमिति। व्याख्यानमेवाऽत्र शरणम्। ईयिवानिति। इणो द्वित्वे सवर्णदीर्घं बाधित्वा आङ्गत्वात् "इणो य"णिति यण् भवति, वसोरिडागमे हि परत्राऽजादिप्रत्ययस्य सत्त्वात्। वचेरिति। वच परिभाषणे इत्यस्माद्ब्राउवो वचेर्वा कर्तरि, न तु भावकर्मणोः। एतच्च निपातनाल्लब्धम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लुङ् १।१ भूते ? धातोः ? प्रत्ययः ? परश्च ?

अर्थः॥

धातोः भूते (सामान्ये) काले लुङ्-प्रत्ययः परश्च भवति।

उदाहरणम्॥

अकार्षीत्, अहार्षीत्

काशिका-वृत्तिः

लुङ् ३।२।११०

भूते इत्येव। बूते ऽर्थे वर्तमानाद् धातोः लुङ् प्रत्ययो भवति। अकार्षीत्। अहार्षीत्। वसतेर् लुङ् रात्रिविशेषे जागरणसन्ततौ वक्तव्यः। क्व भवानुषितः। अहमत्रावात्सम्।

लघु-सिद्धान्त-कौमुदी

लुङ् ४३६, ३।२।११०

भूतार्थे धातोर्लुङ् स्यात्॥

न्यासः

लुङ्। , ३।२।११०

ङकारः "नित्यं ङितः" ३।४।९९ इति विशेषणार्थः। उकारः "लुङलङलृङक्ष्वडुदात्तः"६।४।७१ इति विशेषणार्थः। भूतसामान्ये चायं लुङ वेदितव्यः; भूतविशेषणेऽनद्यतन्यां लङलिटोर्विधानात्। "अकार्षीत्" इति। "सिचि वृद्धिः परस्मैपदेषु" ७।२।१ इति वृद्धिः; पूर्ववदीट्। "वसतेः" इत्यादि। "वस निवासे" (धा।पा।१००५) इत्यस्मादनद्यतने लङि प्राप्ते लुङ वक्तव्यः। दिवसः सकलोऽतिक्रान्ताया रात्रेश्चतुर्थो याम आगामिन्याश्च प्रथमो यामः-- इत्येषोऽनद्यतनः कालः। तत्र रात्रिविशेषेऽतिक्रान्ताया रात्रेश्चतुर्थे यामे प्रत्युत्थितः क्व भवानुषितः? इति केनचित् पृष्टः कश्चित्, स तस्मिन् रात्रविशेषे दिवा वा प्रतिवचनं प्रयच्छन् लुङं प्रयुङ्क्ते-- "अहमत्रावात्सम्" इति। स च न प्राप्नोति; यस्मादसौ ततो रात्रिशेषात् पूर्वभागं प्रहरत्रयलक्षमधिशयितः, सोऽस्यानद्यतनकालः, ततश्चानद्यतने लङ स्यात्; तसमाल्लुङ् वक्तव्यः = व्याख्येयः। व्याख्यानं त्विहापि बहुलग्रहणमाश्रित्य कत्र्तव्यम्। "जागरणसन्ततौ" इति। यद्यसौ रात्रिशेषं सकलं सन्तत्याऽविच्छेदेन जागरितवानेवं लुङ् भवति। मुहूत्र्तमपि यद्यस्मिन् रात्रिविशेषे शयितवांस्ततो लङेव-- आहमत्रावसमिति। "अवात्सम्" इति। लुङ्, मिप्, "तस्थस्थ" ३।४।१०१ इत्यादिनाम्भावः, "वदव्रज" ७।२।३ इत्यादिना वृद्धिः; "सः स्यार्धधातुके"७।४।४९ इति सकारस्य तत्वम्॥

बाल-मनोरमा

लुङ् ६६, ३।२।११०

लुङ्। धातोरिति भूत इति चाधिकृतम्। तदाह-- भूतार्थवृत्तेरिति।

---

सूत्रम्

काशिका-वृत्तिः

अनद्यतने लङ् ३।२।१११

भूते इत्येव। अनद्यतने इति बहुव्रीहिनिर्देशः। अविद्यमानाद्यतने भूते ऽर्थे वर्तमानाद् धातोर् लङ् प्रत्ययो भवति। अकरोत्। अहरत्। बहुव्रीहिनिर्देशः किम् अर्थः? अद्य ह्यो वा अभुक्ष्महि इति व्यामिश्रे मा भूत्। परोक्षे च लोकविज्ञाते प्रयोक्तुर् दर्शनविषये लङ् वक्तव्यः। अरुणद्यवनः साकेतम्। अरुणद् यवनो माद्यमिकानिति।

लघु-सिद्धान्त-कौमुदी

अनद्यतने लङ् ४२४, ३।२।१११

अनद्यतन भूतार्थ वृत्तेर् धातोर् लङ् स्यात्॥

न्यासः

अनद्यतने लङ्। , ३।२।१११

"अनद्यतने" इति। यद्ययं तत्पुरुषः स्यात् तदा पर्युदासो वा स्यात्, प्रसज्यप्रतिषेधो वा। तदा पूर्वस्मिन् पक्षेऽद्यतनाद्योऽन्यस्तस्मिन् भवितव्यम्। एवञ्च "अद्य ह्यो वाभुक्ष्महि" इत्यत्राप्यद्यतनव्यामिश्रे प्राप्नोति। अस्ति ह्यद्यतनानद्यतनसमुदायोऽनद्यतनादन्यः, इतरस्त्वद्यतने न भवतीत्येषोऽर्थो जायते, ततश्च भूतसामान्ये स्यात्। अनद्यतन इति अद्यतनभूतविशेषे प्रतिषेधः,न भूतसामान्ये। न हि भूतसामान्यं भूतविशेषः, तस्मात् तत्पुरुषपक्षो दोषवानिति मत्वाऽऽह-- "अनद्यतन इति बहुव्रीहिनिर्देशः" इति। अविद्यमानोऽद्यतनो यस्मिन्निति सोऽनद्यतनभूतधात्वर्थः, अत्र वत्र्तमानाल्लङ भवति, न त्वद्यतनानद्यतनसमुदाये, तत्राद्यतनैकदेशस्य सद्भावात्। भूतसामान्येऽपि न भवत्येव, विद्यते हि सामान्ये विशेषः; तस्यान्तर्भूतविशेषत्वात्। यत्राद्यतनगन्धोऽप्यस्ति तत्र लङा न भवितव्यमित्येषोऽर्थो बुहव्रीहौ सति लभ्यते। यदि तर्हि बहुव्रीहिरयम्, एवं सत्यद्यतनेऽपि प्राप्नोति, न ह्यद्यतने द्वितीयोऽद्यतनोऽस्ति? नैतदेवम्; अद्यतनसामान्ये मुहूत्र्तादेरद्यतनविशेषस्य विद्यमानत्वात्। तस्मादद्यतनोऽविद्यमानाद्यतन इति न शक्यते वक्तुम्। "अद्य ह्यो वा भुक्ष्महि" इति। लुङ्, "भुजोऽनवने" १।३।६६ इत्यात्मनेपदम्, महिङ्, "लिङसिचोरात्मनेपदेषु"७।२।४२ इति सिचः कित्त्वाद्गुणाभावः। "चोः कुः" ८।२।३० इति कुत्वम्-- जकारस्य गकारः, तस्य "खरि च" ८।४।५४ इति चर्त्वं ककारः,पूर्ववत् षत्वम्। "परोक्षे च" इत्यादि। परोक्षशब्दो रूढिशब्द इन्द्रियातिक्रान्तेऽर्थे वत्र्तते। परोक्षे लोकविज्ञाते = लोकप्रसिद्धे प्रयोक्तुर्दर्शनविषये लङन्तस्य यः प्रयोक्ता तस्य दर्शनविषये लङ् वक्तव्यः = व्याख्येयः। व्याख्यानं तु-- तस्यैव बहुलग्रहणमाश्रित्य कत्र्तव्यम्। ननु च विप्रतिषिद्धमिदमुच्यते-- परोक्षेऽर्थे दर्शनविषय इ#इत,परोक्षो ह्यर्थोऽतीन्द्रिय उच्यते, इन्द्रियविषयभावापन्नस्तु दर्शनविषयः, ततो यदि परोक्षः, कथं दर्शनविषयः। यदि दर्शनविषयः कथं परोक्षः? नैतदस्ति; शक्यदर्शनविषय इत्युक्तम्ननुभूतत्वात् परोक्ष इत्यविरोधः। अरुणत्िति। "रुधिर् आवरणे" (धा।पा।१४३८), रुधादित्वात् श्नम्, तिप्, हल्ङ्यादिना ६।१।६६ तिलोपः। साकेतावरोधस्तदानीन्तनप्रयोक्तुर्दर्शनविषयत्वात् लोकप्रसिद्धश्च,कार्यव्यासङ्गदननुभूतत्वात् परोक्षश्च। परोक्ष इति किम्? उदगादादित्यः। "गातिस्था" २।४।७७ इत्यादिना सिचो लुक्। पूर्ववदादेशादि कार्यम्। लोकविज्ञात इति किम्? चकार कटं देवदत्तः। प्रयोक्तुर्दर्शनविषय इति किम्? जघान कंसं किल वासुदेवः। हन्तेः परोक्षे लिट्; द्विर्वचनम्, "अभ्यासाच्च" ७।३।५५ इति कुत्वम्-- हकारस्य घकारः। कंसवधश्चिकारालवृत्तत्वादिदानीन्तनप्रयोक्तुर्दर्शनविषयो न भवति। यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स लङमेव प्रयुक्तवान्--अहन् कंसं वासुदेव इति। मूलोदाहरणेऽपि प्रयोक्ता साकेतावरोधतुल्यकालो वेदितव्यः। तस्यैव ह्यसौ दर्शनविषयः,नान्यस्य॥

बाल-मनोरमा

अनद्यतने लङ् ५४, ३।२।१११

अनद्यतने लङ्। धातोरिति, भूत इति चाधिकृतम्। भूत इति धात्वर्थेऽन्वेति। तदाह--अनद्यतनभूतार्थवृत्तेरिति।

---

सूत्रम्

काशिका-वृत्तिः

अभिज्ञावचने लृट् ३।२।११२

अभिज्ञा स्मृतिः। तद्वचने उपपदे भूतानद्यतने लृट् प्रत्ययो भवति। लङो ऽपवादः अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः। वचनग्रहणं पर्यायार्थम्, अभिजानासि, स्मरसि, बुद्यसे, चेतयसे इति।

न्यासः

अभिज्ञावचने लृट्। , ३।२।११२

"वत्स्यामः" इति। लृट्, मस्, "स्यतासी लृलुटोः" ३।१।३३ इति स्य, पूर्ववत् सकारस्य तत्वम्, "अतो दीर्घो यञि" ७।३।१०१ इति दीर्घः। "वचनग्रहणम्" इत्यादि। असति हि वचनग्रहणेऽभिज्ञाशब्द एवोपपदे स्यात्। त()स्मस्तु यावन्तोऽभिज्ञावचनास्तेषु सर्वेषु भवति॥

बाल-मनोरमा

अभिज्ञावचने लृट् ५९७, ३।२।११२

अभिज्ञावचने लृट्। अभिज्ञा = स्मृतिः, सा उच्यते बोध्यते अनेनेति विग्रहः। तदाह--स्मृतिबोधिन्युपपदे इति। स्मृतिबोधकपदे समीपे प्रयुज्यमाने सतीत्यर्थः। "भूते" इत्यधिकृतम्। "अद्यतने ल"ङित्यतोऽनद्यतने इत्यनुवर्तते। तदाह--- भूतानद्यतने इति। लङ इति। "अनद्यतने ल"ङित्यस्यापवाद इत्यर्थः। स्मरसीति। हे कृष्ण ! गोकुले अवसामेति यत्तत्स्मरसीत्यर्थः। अत्र वाक्यार्थः कर्म। कृतं गोकुलवासं स्मरसीति यावत्। एवमिति। समरसीति पदयोग इव बुध्यसे इत्यादिस्मृतिबोधकपदयोगेऽपि लृडित्यर्थः। ननु बुध्यत्यादेः स्मृत्त्विएन रूपेण स्मृत्यर्थकत्वाऽभावात्कथमिहि लृडित्यत आह-- तेषामपीति। पर्यवसानगत्या स्मृतिबोधकत्वात्तद्योगेऽपि लृट्। एतदर्थमेव वचनग्रहणमिति भावः।

तत्त्व-बोधिनी

अभिज्ञावचने लृट् ४९१, ३।२।११२

अभिज्ञा। भूते इत्यधिक्रियते। "अनद्यतने ल"डित्यतोऽनद्यतन इति वर्तते। अभिज्ञा - स्मृतिः, सा उच्यते बोध्यतेऽनेनेति विग्रहः। तदाह--स्मृतिबोधिनीत्यादि। वत्स्याम इति। अवसामेत्यर्थः। "पश्य मृगो धावती"त्यत्र वाक्यार्थरूपमृगकर्तृकधावनमिव स्मरसीत्यत्र गोकुलाधिकरणकाऽस्मत्कर्तृकभूतानद्यतनवासो वाक्यार्थः कर्म। कृष्णेति संबोधनं स्मरणक्रियायां विशेषणम्। तथाच पूर्वोक्तनिवासकर्कं कृष्णसंबोध्यकं स्मरणमिति फलितोऽर्थः।

---

सूत्रम्

काशिका-वृत्तिः

न यदि ३।२।११३

यच्छब्दसहिते अभिज्ञावचन उपपदे लृट् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। अभिजानासि देवदत्त यत् कश्मीरेष्ववसाम। वासमात्रं स्मर्यते, न तु अपरं किंचिल् लक्ष्यते। तेन उत्तरसूत्रस्य न अयं विषयः।

न्यासः

न यदि। , ३।२।११३

"यदि" इति। सती सप्तमीयम्। अभिज्ञावचनञ्चानुवत्र्तते। तेन यत्र यच्छब्दोऽस्ति तत्र नियोगतोऽभिज्ञावचनं तत्सहितं न भवतीत्याह-- "यच्छब्दसहिते"इत्यादि। "अवसाम" इति। वसेर्लङ्, "नित्यं ङितः"३।४।९९ इति सलोपः, पूर्ववद्दीर्घः। "वासमात्रम्ित्यादिना उत्तरसूत्रस्य नायं विषय इति दर्शयति। यदि हि तत्रापरं लक्षणमपेक्ष्यते तदोत्तरसूत्रे पाक्षिको विधिः स्यात्, स नेष्यते, तस्मान्नापेक्षते॥

बाल-मनोरमा

न यदि ५९८, ३।२।११३

न यदि। "यदी"ति सप्तमीति मत्वाह--- यद्योगे इति। उक्तं नेति। "अभिज्ञावचने" इति लृण्न भवतीत्यर्थः। अभिजानासीति। वने अभुञ्जमहीति यत्तस्मरसीत्यर्थः।

तत्त्व-बोधिनी

न यदि ४९२, ३।२।११३

न यदि। लृटः प्रतिषेधे उत्सर्गो लङ्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा साकाङ्क्षे ३।२।११४

यदि इति न अनुवर्तते। उभयत्र विभाशेयम्। अभिज्ञावचने उपपदे यच्छब्दसहिते केवले च विभाषा लृट् प्रत्ययो भवति, साकाङ्क्षश्चेत् प्रयोक्ता। लक्ष्यलक्षणयोः सम्बन्धे प्रयोक्तुराकाङ्क्षा भवति। अभिजानसि देवदत्त कश्मीरेषु वत्स्यामस् तत्र उदनं भोक्ष्यामहे। अभिजानासि देवदत्त मगधेषु वत्स्यामः, तत्र उदनं भोक्ष्यामहे। यदि खल्वपि अभिजानासि देवदत्त यत् कश्मीरेषु वत्स्यामः, यत् तत्र उदनं भोक्ष्यामहे। अभिजानसि देवदत्त यत् कश्मीरेष्ववसाम, यत् तत्र उदनम् अभुञ्ज्महि। वासो लक्षणं, भोजनं लक्ष्यम्।

न्यासः

विभाषा साकाङ्क्षे। , ३।२।११४

"उभयत्रविभाषेयम्" इति। प्राप्ते चाप्राप्ते च। असति हि यच्छब्दे " अभिज्ञावचने लृट्" ३।२।११२ इति प्राप्ते, सति यच्छब्दे "न यदि" ३।२।११३ इति प्रतिषेधादप्राप्ते। आकाङ्क्षणम् = आकाङ्क्षा,आकाङ्क्षया सह वत्र्तते साकाङ्क्षः। आकाङ्क्षा च सम्बन्धज्ञानमुच्यते, तच्चेतनावतो धर्मः, तस्मात् साकाङ्क्ष इति प्रयोक्तुर्विशेषणं विज्ञायत इत्याह-- "साकाङ्क्षश्चेत् प्रयोक्ता"इति। अस्यैवार्थ स्पष्टीकर्त्तुमाह--"साकाङ्क्षश्चेत प्रयोक्ता" इति। अस्यैवार्थ स्पष्टीकर्त्तुमाह-- "लक्ष्यलक्षणयोः" इत्यादि। तत्र यदि ह्येतदपेक्ष्यत एतदुक्तं भवति-- लक्ष्यलक्षणयोर्यः सम्बन्धस्तद्विषयज्ञानं यदि प्रयोक्तुरुपपन्नं भवति। यदि प्रयोक्ता लक्ष्यलक्षणयोः सम्बन्धमपेक्षत इति यावत्। "भोक्ष्यामहे" इति। भुजः पूर्ववदात्मनेपदम्, स्यप्रत्ययश्च, टेरेत्वम्, "चोः कुः" ८।२।३० इति कुत्वम्-- जकारस्य गकारः, "खरि च" ८।४।५४ इति चत्र्वम्-- ककारः, सकारस्य षत्वम्। किं पुनर्लक्ष्यं लक्षणञ्च, ययोः सम्बन्धे प्रयोक्तुराकाङ्क्षेत्याह-- "वासो लक्षणम्िति। परिज्ञातत्वाल्लक्षणम्, तेन हि जनो लक्ष्यते। "भोजनं तु लक्ष्यम्" इति। अपरिज्ञातत्वात्; न तु लक्षणम्। परिज्ञातं लक्षणमिति भवति, यथा-- अग्नेर्धुम इति॥

बाल-मनोरमा

विभाषा साकाङ्क्षे ५९९, ३।२।११४

विभाषा। उक्तविषये इति। अभिज्ञाबोधिन्युपपदे इत्यर्थः। लक्ष्यलक्षणभावेनेति। ज्ञाप्यज्ञाप्यकभावेनेत्यर्थः। अत्र व्याख्यानमेव शरणम्। स्मरसीति। पूर्वं वने अवसाम, तत्र वने गा अचारयामेति यत्तत् हे कृष्ण ! स्मरसीत्यर्थः। अत्र यदित्यस्य गम्यत्वेऽपि तस्य प्रयोगाऽभावान्न यद्योगः। वासो लक्षणमिति। "चारणस्ये"ति शेष-। उभयत्रापि लृड्विकल्पः, अभिज्ञावचनयोगस्य अविशिष्टत्वादिति भावः। न च यद्योग एव "विभाषा साङ्काक्षे" इति विकल्पोऽस्त्विति भ्रमितव्यं, "यदि च अयदि चाऽयं विकल्प" इति भाष्यात्तदाह-- यच्छब्दयोगेऽपीति। "परोक्षे लि"डिति

प्राग्व्याख्यातमपि विशेषविवक्षया स्मार्यते। अहमर्थस्य प्रत्यक्षत्वात् परोक्षत्वाऽभावात्कथमस्य लिट उत्तमपुरुष इत्यत आह-- उत्तमपुरुषे चित्तेति। सुप्त इति। सुप्तत्वादहं विललापेत्यर्थः। अत्र स्वापाच्चित्तविक्षेपः। बहु जगदेति। मत्तत्वात्तस्य पुरस्तादहं बहु जगदेत्यर्थः। अत्र उन्मादाच्चित्तविक्षेपः। आदिना व्यासङ्गसङ्ग्रहः। अत्यन्तापह्नवे इति। अपरोक्षार्थमिदम्। कलिङ्गेष्ववात्सीरिति। अतस्त्वं न सहवासयोग्य इति प्रश्नः। "अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना यातः पुनः संस्कारमर्हति।" इति वचनादिति भावः। नाहं कलिङ्गान् जगामेत्युत्तरम्। कलिङ्गशब्दस्य जनपदविसेषवाचित्वाद्बहुवचम्। अत्र तद्देशगमनोत्तरकालिकववासविषयकप्रश्ने कारणीभूतगमनस्यैवापलापादत्यन्तापह्नवो ज्ञेयः। कलिङ्गेष्ववात्सीरित्यत्र "अकर्मकधातुभिर्योगे देशः कालो भावः" इति कर्मसंज्ञायाः पाक्षिकत्वान्न द्वितीयेति कारकाधिकारे निरूपितम्।

तत्त्व-बोधिनी

विभाषा साकाङ्क्षे ४९३, ३।२।११४

वासो लक्षणमिति। प्रसिद्धत्वाज्ज्ञापकमित्यर्थः।चारणं लक्ष्यमिति। सहसा बुद्ध्यनारोहाज्ज्ञाप्यम्। पक्षे लङिति। वने अवसाम, गा अचारयाम। यच्छब्दयोगेऽपीति। अतएव "न यदी"ति योगात्पूर्वं "विभाषा साकाङ्क्षे" इतिन कृतमिति भावः।

*अत्यन्तापह्नवे लिड्वक्तव्यः। अत्यन्तापह्नव इति। अपह्नवोऽपलापस्तत्र आत्यन्तिकत्वं नामैवं यदभियुक्तस्तद्धेतोरप्यपहुतिः। नाहमित्यादि। कलिङ्गो नाम निषिद्धो देशः, "अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति" इति स्मरणात्, तस्मिन्देशे त्वया गत्वा चिरं स्थितमिति केनचित्कश्चिदुक्तः सन्नाह--"नाहं कलिङ्गाञ्जगामे"ति। नकेवलमवस्थानमेव निषिध्यते किं तर्हि तद्धेतुभूतं गमनमपीति भवत्यत्यन्ताऽपह्नवः। यदा तु कलिङगेष्वगम इत्युक्तः सन्गमनमेवापलपति न तदात्यन्तापह्न इति लङेव भवति, "न कलिङ्गेष्वगच्छ" मिति।

---

सूत्रम्

काशिका-वृत्तिः

परोक्षे लिट् ३।२।११५

भूतानद्यतने इति वर्तते। तस्य विशेषणं परोक्षग्रहणम्। घूतानद्यतनपरोक्षे ऽर्थे वर्तमनाद् धातH लिट् प्रत्ययो भवति। ननु धात्वर्थः सर्वः परोक्ष एव? सत्यम् एतत्। अस्ति तु लोके धात्वर्थेन अपि कारकेषु प्रत्यक्षाभिमनः। स यत्र न अस्ति तत् परोक्षम् इत्युच्यते। चकार। जहार। उत्तमविषये ऽपि चित्तव्याक्षेपात् परोक्षता सम्भवत्येव। तद् यथा सुप्तो ऽहं किल विललाप। अत्यन्तापह्नवे च लिड् वक्तव्यः। कलिङ्गेषु स्थितो ऽसि? हानं कलिङ्गञ् जगाम। दक्षिणापथं प्रविष्टो ऽसि? नाहं दक्षिणापथं प्रविवेश।

लघु-सिद्धान्त-कौमुदी

परोक्षे लिट् ३९३, ३।२।११५

भूतानद्यतन परोक्षार्थवृत्तेर् धातोर्लिट् स्यात्। लस्य तिबादयः।

न्यासः

परोक्षे लिट्। , ३।२।११५

"ननु च" इत्यादि। धात्वर्थो हि पूर्वापरीभूतावयवा साध्यमाना क्रिया। यच्च साध्यमानं तदसत्। तच्चासदिन्द्रियाणामविषयः, तेषां सद्विषयत्वात्। यच्चेन्द्रियाणामविषयः तत् परोक्षमिति स एव हि धात्वर्थः परोक्षः, ततः परोक्षग्रहणमनर्थकम्, व्यवच्छेद्याभावादिति भावः। "सत्यमेतत्" इति। यदनन्तरमुक्तम्। यदि सत्यमेतत् तदा कस्य व्यवच्छेदार्थं परोक्षग्रहणं कृतमित्याह-- "अस्ति तु" इत्यादि। यत्र साध्यानि प्रत्यक्षाणि तत्रानिष्पन्ने क्रियात्मनि धात्वर्थे प्रत्यक्षाभिमानो लोकस्य भवति। ननु च सावधानान्यपि नैव प्रत्यक्षाणि;शक्तिस्वभावत्वात्, शक्तेश्च कार्यानुमेयत्वात्, न ह्यशक्तौ कार्यं करोतीति कार्यकरणे शक्तिरनुमीयते; तत् किमुच्यते साधनानि प्रत्यक्षाणि? नैष दोषः;"द्रव्याश्रिता हि शक्तयः"इति द्रव्यस्य प्रत्यक्षत्वादाश्रयधममाश्रितेषु शक्त्यात्मकेषूपचार्याण्येतान्यपि प्रत्यक्षाणीत्युच्यन्ते। अथ वा-- तदपि साधनाश्रयं द्रव्यशक्तिमतोर्भेदस्याविवक्षितत्वात् साधनशब्देनोच्यते; तदनेन परोक्षग्रहणेन प्रत्यक्षाभिमानोऽस्ति, स एव परोक्ष इच्युच्यते-- तदाह-- "स यत्र नास्त" इति। आत्मविषय उत्तमस्य च धात्वर्थस्य परोक्षत्वं नोपपद्यते; तत्साधनानां प्रत्यक्षत्वात्। तत्र लोकस्य प्रत्यक्षत्वात्, ततश्चोत्तमेन सिध्यतीति चोद्यमाशङ्क्याह-- "उत्तमविषये" इत्यादि। आत्मसाध्या हि क्रिया, यत्र चित्तविक्षेपान्नोपपद्यते, तदासौ परोक्षा भवति, तेनोत्तमविषयेऽपि परोक्षभावः। तद्भवत्येव। "विललाप" इति। लपेर्विपूर्वस्योत्तमे णलि रूपम्। "अत्यन्तापह्नवे" इति। प्रत्यक्षमेतत्। अपह्नवः = अपलापः। स क्चिदत्यन्तो भवति यः सर्वापह्नवः, क्वचिदनत्यन्तो य एकदेशापह्नवः। तत्र योऽत्यन्तः स सर्वापह्नवः, तत्र लिड्()वक्तव्य, व्याख्येय इत्यर्थः। व्याख्यानं त्विहापि बहुलग्रहणमाश्रित् कत्र्तव्यम्। कश्चित् केनचित् पृष्टः-- "कलिङ्गेषु प्रस्थितोऽसि"इत्यादि। स एवमाह-- "नाहं कलिङ्गान् जगाम्" इति। अत्र केवलं न कलिङ्गविषयस्यापह्नवोऽपि तु गमनस्यापीति विद्यतेऽत्यन्तापह्नवः। यस्तु स्थानमात्रस्यापह्नवो न गमनस्यापि , तदानत्यन्तापह्नवे लङेव भवति-- न हि कलिङ्गेषु प्रत्यतिष्ठ इति। तथा कश्चित् केनचित् पृष्टः दक्षिणापथं प्रविश्य त्वयेदं कार्यं कृतमिति। स एवमाह-- "नाहं दक्षिणापथं प्रविवेश" इति। अत्रापि विद्यतेऽत्यन्तापह्नवः। तथा हि-- न केवलं दक्षिणापथपिषयं कार्यं प्रतिषिध्यते, अपि तु प्रवेशमपि॥

बाल-मनोरमा

परोक्षे लिट् २१, ३।२।११५

परोक्षे लिट्। "अनद्यने ल"डित्यस्मादनद्यतन इत्यनुवर्तते। "भूते" इत्यधिकृतम्। परोक्षत्वं धात्वर्थविशेषमं, तदाह-- भूतानद्यतनेत्यादिना। अतीतरात्रेरन्त्ययामेन आगमिरात्रेराद्ययामेन सहितो दिवसोऽद्यतन इति लुङ्()सूत्रभाष्ये कैयटे स्थितम्। परोक्षत्वं तु वर्षशतवृत्तत्वमित्येके। वर्षसहरुआवृत्तत्वमित्यपरे। द्व्यहवृत्तत्वं, त्र्यहवृत्तत्वं, त्र्यहवृत्तत्वं चेत्यन्ये। कुड()कटाद्यन्तरितत्वमितीतरे। एते पक्षा भाष्ये स्थिताः। तत्र प्रयोक्तुरिन्द्रियाऽगोचरत्वं परोक्षत्वमित्येव सर्वसंमतमित्यलम्। लस्य तिबादय इति। तिबादिनवकमित्यर्थः।

तत्त्व-बोधिनी

परोक्षे लिट् १७, ३।२।११५

यद्यप्यधिश्रयणादिव्यापाररूपा क्रिया सर्वा परोक्षैव।उक्तं हि भाष्ये-- "क्रिया नामेयमत्यन्ताऽपरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितु"मिति, तथापि तदनुकूलशक्तिमतां व्यापाराऽविष्टानां साधनानां परोक्ष्यमिह विव७#इतम्। तेन क्रियाऽनाविष्टसाधनमात्रप्रत्यक्षेऽपि लिङ्भवत्येव। अयं पपाच। त्वं पेचिथ॥ ननु क्रियाशब्दवाच्यादिश्रयणा[धः श्रयणा]दिव्यापाराणां युगपत्प्रत्यक्षविषयत्वेऽपि क्रमशः प्रत्यक्षविषयत्वमस्ति, यत्र तु क्रमशोऽपि प्रत्यक्षविषयत्वं नास्ति तत्र हि पारोक्ष्यं क्रियायाः, ततश्च लिडुत्तमपुरुषो दुर्लभ इति चेत्। अत्राहु--- स्वव्यापारस्यापि वर्तमानतादशायां व्यासहृगादिना स्वयमप्रतिसन्धाने ततः कार्येणानुमितौ भवत्येव, "बहु जगद पुरस्तात्तस्य मत्ता किलाह"मितिवदिति।

सूत्रम्

काशिका-वृत्तिः

हशश्वतोर् लङ् च ३।२।११६

भूतानद्यतनपरोक्षे ऽर्थे लिटि प्राप्ते हाश्वतोः उपपदयोः लङ् प्रत्ययो भवति, चकाराल् लिट् च। इति ह अकरोत्, इति ह चकार। शश्वदकरोत्, शश्वच् चकार।

न्यासः

हश�आतोर्लङ च। , ३।२।११६

बाल-मनोरमा

हश�आतोर्लङ् च ६००, ३।२।११६

हश()आतोर्लङ् च। स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रश्ने च आसन्नकले ३।२।११७

भुतानद्यतनपरोक्षे इति वर्तते। तस्य विशेषणम् एतत्। प्रष्टव्यः प्रश्नः। आसनकाले पृच्छ्यमने भूतानद्यतनपरोक्षे ऽर्थे वर्तमानाद् धातोः लङ्लिटौ प्रत्ययौ भवतः। कश्चित् कञ्चत् पृच्छति। अगच्छद् देवदत्तः? जगाम देवदत्तः? अयजद् देवदत्तः? इयाज देवदत्तः? प्रश्ने इति किम्? जगाम देवदत्तः। आसनकाले इति किम्? भवन्तं पृच्छामि, जघान कंसं किल वासुदेवः?।

न्यासः

प्रश्ने चासन्नकाले। , ३।२।११७

"प्रष्टव्यः प्रश्नः" इत्यनेन प्रश्नशब्दं कर्मसाधनं दर्शयति। करणसाधने हि पृच्छ्यतेऽनेनेति शब्दः प्रश्नशब्देनोच्यते। तथा च सति तस्योच्चर्यमाणत्वादात्मलाभस्य सर्वदैवासन्नकाल इत्यासन्नकालग्रहणमनर्थकं स्यात्। भावसाधनेऽप्यर्थान्तरवाचिभ्यो धातुभ्यो न स्यात्। "अगच्छत्ि ति। "गम्लृ सृप्लृ गतौ" (धा।पा।९८२, ९८३), "इषुगमियां छः" ७।३।७७ इति छत्वम्। "इयाज" इति। "लिट()भ्यासस्योभयेषाम्"६।१।१७ इति सम्प्रसारणम्। "जघान" इति। कंसवधोऽत्र पृच्छमानः। स चेदानीन्तनप्रयोक्तुरपेक्षया विप्रकृष्टकालः। पञ्चवर्षाभ्यन्तरमासन्नकाल इति नैयायिका वर्णयन्ति। पञ्चवर्षातीतस्तु विप्रकृष्ट इति भवति। कंसवधोऽत्र विप्रकृष्टकालः॥

बाल-मनोरमा

प्रश्ने चासन्नकाले ६०१, ३।२।११७

प्रश्ने चासन्नकाले। "प्रश्ने इत्यनेन प्रश्नविषयो विवक्षित इत्याह-- प्रष्टव्यः प्रश्न इति। अर्थे इत्यन्तरं "वर्तमानाद्धातो"रिति शेषः। प्रयोक्तृदृष्टिपथातिक्रान्तत्वमनासन्न्कालत्वम्। वृत्तौ तु पञ्चवर्षातीतकालोऽनासन्नकाल इत्युक्तम्।

तत्त्व-बोधिनी

प्रश्ने चासन्नकाले ४९४, ३।२।११७

प्रश्ने चा। भूतानद्यतनपरोक्षे तु विप्रकृष्टकालमित्याहुः। पृच्छ्यमानैति। आसन्नकालिके भूतानद्यतनपरोक्षार्थवृत्तिधात्वर्थे प्रष्टव्ये सतीत्यर्थः। प्रश्ने किम्?। भूतानद्यतनपरोक्षे लिडेव। जगाम चैत्रः।

---

सूत्रम्

काशिका-वृत्तिः

लट् स्मे ३।२।११८

भूतानद्यतनपरोक्षे इति वर्तते। स्मशब्दे उपपदे भूतानद्यतनपरोक्षे लट् प्रत्ययो भवति। लिटो ऽपवादः। नडेन स्म पुराधीयते। ऊर्णया स्म पुराधीयते।

लघु-सिद्धान्त-कौमुदी

लट् स्मे ७६६, ३।२।११८

लिटोऽपवादः। यजति स्म युधिष्ठिरः॥

न्यासः

लट् स्मे। , ३।२।११८

"नडेन स्म पुराधीयते" इति। इङोऽधिपूर्वाल्लट्, "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्, टेरेत्वम्, "सार्वधातुके यक्" ३।१।६७, "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। उपसर्गेण सहाकः सवर्णे ६।१।९७ दीर्घत्वम्। अथ वा--कत्र्तर्यात्मनेपदम्, अदादित्वाच्छब्दो लुक्, "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः, धातोरियङ यथायोगं पूर्ववत्॥

बाल-मनोरमा

लट् स्मे ६०२, ३।२।११८

लट् स्मे। "स्मे"त्यव्ययम्। तद्योगे लिड्विषये लट् स्यादित्यर्थः। यजति स्मेति। स्मशब्दो भूतकालद्योतकः।

तत्त्व-बोधिनी

लट् स्मे ४९५, ३।२।११८

लट् स्मे। "स्मे" इत्यव्ययं भूतकालद्योतकम्।

---

सूत्रम्

काशिका-वृत्तिः

अपरोक्षे च ३।२।११९

अपरोक्षे च भूतानद्यतने ऽर्थे वर्तमानाद् धातोः स्मे उपपदे लट् प्रत्ययओ भवति। एवं स्म पिता ब्रवीति। इति स्मौपाद्यायः कथयति।

न्यासः

अपरोक्षे च। , ३।२।११९

"ब्रावीति" इति। "ब्राउव ईट्" ७।३।९३। "कथयति" इति। "कथ वाक्यप्रबन्धे" (धा।पा।१८५१), चुरादावदन्तः, तस्माण्णिच्, "अतो लोपः" ६।४।४८ , "अचः परस्मिन् पूर्वविधौ" १।१।५६ इति स्थानिवद्भावात् "अत उपधायाः"

७।२।११६ इति वृद्धिर्न भवति। अथ किमर्थं पुनरिदमारब्धम्? पूर्वेण परोक्षे विधानादपरोक्षे न प्राप्नोति, अतस्तत्रापि यथा स्यादित्येवमर्थम्। ननु च पूर्वयोगे परोक्षग्रहणं निवर्तिष्यते, तस्मिन् निवृत्ते पूर्वेणैव परोक्षे चापरोक्षे च भविष्यति? सत्यमेतत्; चोद्यमपि कश्चिद्विजानीयाद्यदि परोक्षग्रहणं निवृत्तं तत्सम्बद्धमनद्यतनग्रहणमपि निवृत्तमिति, तदन्यथा मा विज्ञायीति पूर्वसूत्रे परोक्षग्रहणमनुवर्त्तते, त()स्मश्चानुवर्त्तमाने कर्त्तव्यमेतत्, अन्यथा ह्यपरोक्षे न स्यात्॥
बाल-मनोरमा
अपरोक्षे च ६०३, ३।२।११९

अपरोक्षे च। एवं स्मेति। पिता एवमुक्तवानित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
ननौ पृष्टप्रतिवचने ३।२।१२०

अनद्यतने परोक्षे इति निवृत्तम्। भूतसामान्ये विधिरयम्। ननुशब्दे उपपदे प्रश्नपूर्वके प्रतिवचने भूते ऽर्थे लट् प्रययो भवति। लुङो ऽपवादः। अकार्षीः कटं देवदत्त? ननु करोमि भोः। अवोचस् तत्र किंचिद् देवदत्त? ननु ब्रवीमि भोः। पृष्टप्रतिवचने इति किम्? ननु अकार्षीत् माणवकः।
न्यासः
ननौ पृष्टप्रतिवचने। , ३।२।१२०

"पृष्टप्रतिवचने" इति। प्रश्नः = पृष्टम्, भावे निष्ठा। पृष्टपूर्वकप्रतिवचनं पृष्टप्रतिवचनम्, शाकपार्थिवादित्वन्मध्यमपदलोपी समासः। "अनद्यतने परोक्ष इति निवृत्तम्" इति। अस्वरितत्वात्। "अकार्षीः कटं देवदत्त" इत्येष प्रश्नः। "ननु करोमि भोः"इत्येतत् प्रश्नपूर्वकं प्रतिवचनम्। "अवोचस्तत्र किञ्चिद्देवदत्त"इत्येष प्रश्नः। "ननु करोमि भोः"इत्येतत् प्रश्नपूर्वकं प्रतिवचनम्। "नन्वकार्षीत्" इति। प्रश्नपूर्वकं प्रतिवचनं न भवतीति लुङेव भवति। ननु च प्रतिवचनं सर्वं प्रश्नपूर्वकमेवु, तदनर्थकं पृष्टग्रहणम्, व्यवच्छेद्याभावात्? नैतदिष्टम् ;प्रतिवचनशब्दोऽयमस्त्येव पृष्टान्वाख्याने-- यः प्रश्नमन्तरेण न भवति; अस्त्यव्ययीभावे-- वचनं वचनं प्रतिवचनम्, यथार्थे "अव्ययम्" २।१।६ इति वीप्सायामव्ययीभावः;अस्ति समाधिवचनः-- प्रतिपूर्वस्य वचेः समाधाविति दर्शनात्, तथा हि वक्तारो वदन्ति-- यदननाभिहितं तन्मया प्रयुक्तमिति, परिष्कृतमित्यर्थः; तदेवमनेकार्थे प्रतिवचनशब्द-, यदि पृष्टग्रहणं न क्रियते सर्वेष्वर्थेषु स्यात्। अ()स्मस्तु क्रियमाणे प्रश्नपूर्वो यः प्रतिवचनशब्दः, स एव गृह्रते, नान्य इति न भव्तयानर्थक्यम्॥ "नाकर्षम्िति। पूर्ववदम्भावः॥
बाल-मनोरमा
ननौ पृष्टप्रतिवचने ६०४, ३।२।१२०

ननौ पृष्ट। निवृत्तमिति। व्याख्यानादिति भावः। अकार्षीः किमिति प्रश्नः। ननु करोमीत्युत्तरम्। अकार्षमित्यर्थः। नन्विति संबोधने।

तत्त्व-बोधिनी
ननौ पृष्टप्रतिवचने ४९६, ३।२।१२०

ननौ। पृष्टस्यप्रतिवचनमिति विग्रहः। समाहारद्वन्द्वे तूभयत्र स्यात्िष्यते च प्रतिवचने एव लट्। तदाह-- ननु करोमीति। न च पृष्टग्रहणं व्यर्थं यावता प्रश्नपूर्वकमेव प्रतिवचनं भवतीति वाच्यम्, विरुद्धमपि वचनं प्रतिवचनं , चवनाभिमुख्यमपि

प्रतिवचनमिति पृष्टग्रहणं कर्तव्यमिति कैयटे स्थितत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

नन्वोर् विभाषा ३।२।१२१

भूते इत्येव। नशब्दे नुशब्दे च उपपदे पृष्टप्रतिवचने विभषा लट् प्रत्ययो भवति भूते। अकार्षीः कटं देवदत्त? न क्रोमि भोः, नाकार्षम्। अहं नु करोमि, अहं नु अकार्षम्।

बाल-मनोरमा

नन्वोर्विभाषा ६०५, ३।२।१२१

नन्वोर्विभाषा। न नु अनयोद्र्वन्द्वः। तदाह-- नशब्दे नुशब्दे चेति। लड्वा स्यादिति "भूते" इति शेषः। अकार्षीः किमिति प्रश्नः। न कोरमि, नाकार्षमित्युत्तरम्। अहं नु करोमि, अहं न्वकार्षमिति च। "तर्के नु स्या"दित्यमरः।

तत्त्व-बोधिनी

नन्वोर्विभाषा ४९७, ३।२।१२१

नन्वोः। भृत इत्येव। पक्षे लुङ्। अनद्यतने तु लङ्। पक्षे यथाप्राप्तमिति। लुङ्लटोरभावपक्षे लङ्, पारोक्ष्ये तु लिडित्यर्थः। भविष्यतीति। "भविष्यति गम्यादयः" इति सूत्रात्।

---

सूत्रम्

काशिका-वृत्तिः

पुरि लुङ् च अस्मे ३।२।१२२

अनद्यतनग्रहणम् इह मण्डूकप्लुत्या ऽनुवर्तते। पुराशब्दे उपपदे स्मशब्दवर्जिते भूतानद्यतने ऽर्थे विभाषा लुङ् प्रत्ययो भवति, लट् च। ताभ्यां मुक्ते पक्षे यथाविषयमन्ये ऽपि प्रत्यया भवन्ति। वसन्ति इह पुरा छात्राः, अवात्सुरिह पुरा छात्राः, अवसन्निह पुरा छात्राः, ऊषुरिह पुरा छात्राः। अस्मे इति किम्? नडेन सम् पुरा अधीयते।

न्यासः

पुरि लुङ् चास्मे। , ३।२।१२२

"पुराशब्दे" इति। एतेन पुराशब्द इहोपपदत्वेनोपात्तो न पुरिति दर्शयति। यद्येतदेव, अस्याकारान्तत्वात् पुरीति सप्तम्यन्तो निर्देशो नोपपद्यते? "आतो धातोः" ६।४।१४० इति योगविभागादाकारलोपाददोषः। अथ "पृ पालनपूरणयोः"(धा।पा।१०८६) इत्येतस्माद्भ्राजादिसूत्रेण ३।२।१७७ क्विपि विहितः "उदोष्ठ()पूर्वस्य" (७।१।१०२) इत्युत्त्वे रपरत्वे च कृते यः पूःशब्द सम्पद्यते तस्येहाप्युपपदत्वेनोपादानमिति कस्मान्न विज्ञायते? तस्यानद्यतनवृत्त्यसम्भवात्। पुराशब्दस्तु तत्रैव वत्र्तत इति तस्यैव ग्रहणं युक्तम्। "लुङ च" इति चकारेण लडनुकृष्यत इति दर्शयति। "यथाविषयम्" इति। "यथाऽसादृश्ये" २।१।७ इति वीप्सायामव्ययीभावः। "अन्येऽपि"इति। लङादयः। "वसन्ति" इति। लट्। "अवात्सुः" इति। लुङ, "सिजभ्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुसादेशः, "वदव्रज" ७।२।३ इत्यादिना वृद्धिः, पूर्ववत् सकारस्य तत्वम्। "अवसन्" इति। लङ। "ऊषुः" इति। लिट्, "परस्मैपदानाम्" ३।४।८२ इत्यादिना झेर्जुस्, द्विर्वचनम्, वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्, "लिट()भ्यासस्योभयेषाम्" ६।१।१७ इत्यभ्यासस्य च; "शासिवसिघसीनाञ्च" ८।३।६० इति

षत्वम्॥

बाल-मनोरमा

पुरि लुङ् चाऽस्मे ६०६, ३।२।१२२

पुरि लुङ् चास्मे। "अस्मे इति च्छेदः। पुरेत्याकारान्तमव्यम्। पुरीति तस्य सप्तम्येकवचनम्। आत इति योगविभाघादाल्लोपः। मण्डूकप्लुत्येति। अत्र व्याख्यानमेव शरणम्। चाल्लडिति। तथा च लुङ् लट् च वेति फलितम्। पक्षे इति। एतदुपभयाऽभावपक्षे इत्यर्थः। यथाप्राप्तमिति। अनद्यतनपरोक्षभूते लिट्। परोक्षत्वाऽविवक्षायां तु लङित्यर्थः। "अभिज्ञावचने " इत्यारभ्य एतदन्ता विधयस्तृतीयस्य द्वैतीयीकाः। अथ तृतीयस्य तार्तीयीका विधयो वक्ष्यन्ते। भविष्यतीत्यनुवर्तमाने इति। "भविष्यति गम्यादयः" इति सूत्रादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वर्तमाने ७।१ ३।३।१ लट् १।१ धातोः ५।१ ३।१।९१ प्रत्ययः १।१ ३।१।१ परश्च १।१ ३।१।२

अर्थः॥

धातोः वर्तमाने (काले) लट् प्रत्ययः परश्च भवति।

उदाहरणम्॥

पचति, भवति, पठति।

काशिका-वृत्तिः

वर्तमाने लट् ३।२।१२३

आरब्धो ऽपरिसमाप्तश्च वर्तमानः। तस्मिन् वर्तमाने ऽर्थे वर्तमनाद् धातोः लट् प्रत्ययो भवति। पचति। पठति।

लघु-सिद्धान्त-कौमुदी

वर्तमाने लट् ३७६, ३।२।१२३

वर्तमान क्रिया वृत्तेर्धातोर्लट् स्यात्। अटावितौ। उच्चारण सामर्थ्याल्लस्य नेत्वम्। भू सत्तायाम्॥ १॥ कर्तृ विवक्षायां भू ल् इति स्थिते ---।

न्यासः

वत्र्तमाने लट्। , ३।२।१२३

"प्रारब्धोऽपरिसमाप्तश्च" इति। प्रारब्धो यः साधयितुं प्रस्तुतः, न च समाप्तिमुपगतः स वत्र्तमान इत्युच्यते। वत्र्तमानग्रहणं धात्वधिकारात् तदर्थस्यैव विशेषणं विज्ञायत इत्याह--- "वत्र्तमाने" इत्यादि। न ह्यधात्वर्थे धातोर्वृत्तिः सम्भवति। लटष्टकारः "टित आत्मनेपदानां टेरे" ३।४।७९ इति विशेषणार्थः। अकारः "विदो लटो वा " ३।४।८३ इति विशेषणार्थः; इकारे ह्युच्चारिते लिडादीनां ग्रहणं स्यात्॥

बाल-मनोरमा

वर्तमाने लट् २, ३।२।१२३

वर्तमाने लट्। "धातो"रिति सूत्रमा तृतीयाध्यायसमाप्तेरधिकृतम्। "वर्तमाने" इति तत्रान्वेति। वर्तमानेऽर्थे विद्यमानाद्धातोर्लडिति लभ्यते। फलितमाह-- वर्तमानक्रियावृत्तेरिति। धात्वर्थक्रियाया वर्तमानत्वं तु वर्तमानकालवृत्तित्वम्। कालस्य तु वर्तमानत्वम्--अतीतानागतभिन्नकालत्वम्। "भूतभविष्यतोः प्रतिद्वन्द्वी वर्तमानः काल" इति भाष्यम्। वर्तमानत्वं च न प्रत्ययार्थभूतकत्र्रादिविशेषणम्। अतीतपाकादिक्रिये कर्तरि वर्तमाने पचतीत्याद्यापत्तेः, किंतु धात्वर्थविशेषणमेव वर्तमानत्वम्। लट् तु तस्य द्योतक एव। अटाविताविति। न च अकार उच्चारणार्थ एवास्त्विति वाच्यं, लिडादि वैलक्षण्याय तस्यावश्यकत्वात्। तथा च तस्य इत्संज्ञां विना निवृत्त्युपायाऽभावादित्संज्ञैवादर्तव्येति भावः।

तत्त्व-बोधिनी
वत्र्तमाने लट् २, ३।२।१२३

वर्तमाने लट्। वर्तमान इत्येतत्प्रकृत्यर्थविशेषणमित्याह-- वर्तमानक्रियावृत्तेर्धातोरिति। धातोरिति सूत्रमा तृतीयाध्यायान्तमदिक्रियत इति भावः। लट् स्यादिति। तस्य वाच्यत्वमनुपदमेव स्फुटीभविष्यति। वर्तमानकालस्तु न तद्वाच्यः, किंतु द्योत्य एव। लङादिष्वपि भूतादिकालो यथायथं द्योत्य एवेत्यवगन्तव्यम्। वस्तुतस्तु वाच्यत्वाभ्युपगमोऽपि सुगम इति विध्यादिसूत्रे वक्ष्यामः॥ अटाविताविति। "अकार उच्चारणार्थ" इति तु नोक्तं, लिडादिवैलक्षण्यसंपादनाय तस्यावश्यवक्तव्यत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लटः ६।१ १२६ शतृ-शानचौ १।२ १२६ अप्रथमा-समानाधिकरणे ७।१ वर्त्तमाने ७।१ १२३ धातोः ५।१ ?

समासः॥

शतृ च शानच् च, शतृ-शानचौ, इतरेतरद्वन्द्वः। प्रथमया समानाधिकरणं, प्रथमासमानाधिकरणं, तृतीयातत्पुरुषः। न प्रथमासमानाधिकरणं, अप्रथमासमानाधिकरणं, तस्मिन् ॰ नञ्तत्पुरुषः।

अर्थः॥

धातोः लटः स्थाने शतृशानचौ आदेशौ वर्त्तमाने काले भवतः, प्रथमान्तेन चेत्, तस्य सामानाधिकरण्यं न स्यात्।

उदाहरणम्॥

पचन्तं देवदत्तं पश्य। पचमानं देवदत्तं पस्य। पठता कृतम्। आसीनाय देहि।
काशिका-वृत्तिः
लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४

लटः शतृशानचौ इत्येतावादेशौ भवतः, अप्रथमान्तेन चेत् तस्य सामानाधिकरण्यं भवति। पचन्तं देवदत्तं पश्य। पचमानं

देवदत्तं पश्य। पचता कृतम्। पचमनेन कृतम्। अप्रथमासमानाधिकरणे इति किम्? देवदत्तः पचति। लटिति वर्तमने पुनर् लङ्ग्रहणम् अधिकविधानार्थम्। क्वचित् प्रथमासमानाधिकरणे ऽपि भवति। सन् ब्राह्मणः। अस्ति ब्राह्मणः। विद्यमानः ब्राह्मणः। विद्यते ब्राह्मणः। जुह्वत्। जुहोति। अधीयानः। अधीते। माङ्याक्रोशे। मा पचन्। मा पचमानः। केचिद् विभाषाग्रहणम् अनुवर्तयन्ति नन्वोर् विभाषा ३।२।१२१ इति। सा च व्यवस्थिता। तत्र यथादर्शनं प्रयोगा नेतव्याः।

लघु-सिद्धान्त-कौमुदी

लटः शतृशानचावप्रथमासमानाधिकरणे ८३४, ३।२।१२४

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः। शबादि। पचन्तं चैत्रं पश्य॥

न्यासः

लटः शतृशानचावप्रथमासमानाधिकरणे। , ३।२।१२४

शतृशानचोः शकारौ सार्वधातुकार्थौ। ऋकार उगित्कार्यार्थः। अप्रथमासमानाधिकरण इति पर्युदासोऽयम्। प्रथमाशब्दोऽयं विभक्तिविशेषे सोरौजस्पर्य्नते शास्त्रे रूढः। प्रथमाया अन्या द्वितीयादिका विभक्तिः = अप्रथमा। समानशब्दोऽयं साधारणवचनः, यथा-- देवदत्तयज्ञदत्तौ समानधनावित। अधिकरणशब्दोऽयमभिधेयवचनः समानञ्च तदधिकरणञ्चेति कर्मधारयः। अप्रथमया समानाधिकरणम् = अप्रथमासमानाधिकरणम्। "तृतीया" २।१।२९ इतियोगविभागात् समासः। ततः "यस्य च भावेन भावलक्षणम्" २।३।३७ इति सप्तमी। अप्रथमासमानाधिकरणभावेन शतृशानचोर्भावो लक्ष्यते। अप्रथमेति पर्युदासवृत्त्या द्वितीयादेर्विभक्तेग्र्रहणम्, तेन प्रत्ययग्रहणपरिभाषया तदन्तविधिर्भविष्यतीत्याह-- "अप्रथमान्तेन चेत्" इत्यादि। "तस्य" इति। लटः। सामानाधिकरण्यम्" इति। समानाभिधेयमिति। यदि द्वितीयान्तेन शब्देन सामानाधिकरण्यम् = समानाभिधेयत्वं सम्भवत्येवं शतृशानचौ भवतः, नान्यथेति वाक्यार्थः। एवं विवृम्वताऽप्रथमासमानाधिकरणेऽत्र पर्युदास आश्रितः, न प्रसज्यप्रतिषेध इति दश्र्यते, अन्यथा हि यदि प्रसज्यप्रतिषेध आश्रितः स्यात् प्रथमान्तेन चेत सामानाधिकरण्यं न भवतीत्येवं ब्राऊयात्। किं पुनः स्याद्यदि प्रसज्यप्रतिषेध आश्रितः? अप्रथासमानाधिकरण उत्तरपदे शतृशानचौ न स्याताम्-- भज्यत इति भक्तिः, कुर्वन् भक्तिरस्य कुर्वद्भक्तिः, कुर्वाणो भक्तिरस्य कुर्वाणभक्तिः। ये च प्रथमासमानाधिकरणवृत्तयस्तद्धितास्तेषु न स्याताम्-- "प्रशंसायां रूपप्"५।३।६६ कुर्वद्रूपम्, कुर्वाणरूपमिति; "ईषदसमाप्तौ कल्पशब्देश्यदेशीयरः" ५।३।६७ कुर्वत्कल्पः। ननु पर्युदासेऽपि भवत्येव दोषः, न ह्रत्राप्रथमान्तेन क्वचित् प्रथमासमानाधिकरणेऽपि भवत इति। प्रसज्यप्रतिषेधे तु प्रतिषेधं विधाय प्रतिषिद्धस्य च पुर्विधानमयुक्तम्। "पचन्तं देवदत्तं पश्य" इति। द्वितीयान्तेन सामानाधिकरण्यं दर्शयति। "पचता" इति। तृतीयान्तेन। विभक्तेर्विपरिणामं कृत्वा देवदत्तेनेति सम्बन्धात्। ननु च लडादेशस्यात्राप्रथमान्तेन सामानाधिकरण्यम्, न लटः; तस्य प्रयोगाभावात्। आदेशधर्मस्य स्थानिन्युपचारात् लटोऽप्युपचारितं सामानाधिकरण्यं भवतीत्यदोषः।अथ लड्ग्रहणं किमर्थम्, यावताऽनन्तरसूत्राल्लडित्यनुवत्र्तत एव? स्यादेतत्; प्रथमान्तञ्चैतत्। षष्ठीनिर्देशेन चेहार्थः, तस्मात् षष्ठीनिर्देशार्थं पुनर्लड्()ग्रहणं कत्र्तव्यमिति, एतच्चायुक्तम्,प्रथमान्तस्यापि लड्()ग्रहमस्यार्थद्विभक्तिविपरिणामो भविष्यतीति षष्ठ()न्तं विज्ञास्यत इत्यत आह-- "लडिति वत्र्तमाने" इत्यादि। अप्रथमासमानाधिकरणे पुनर्लड्()ग्रहणम्। तेन क्वचित् प्रथमासमानाधिकरणे भवतः-- कुर्वन् ब्राआह्णः। "सन् ब्राआह्णः" इति। "अस भुवि" (धा।पा।१०६५), अदादित्वाच्छपो लुक्। "श्नसोरलोपः" ६।४।१११, इत्यकारलोपः। "विद्यमानः" इत्यादौ सर्वत्र ब्राआह्ण इत्यपेक्षते। "विद सत्तायाम्" (धा।पा।११७१), दिवादिरात्मनेपदी, श्यन्। "जुह्वत्" ७।१।७८ इति। "हु {दानादनयोः (आदाने इत्येके प्रीणनेऽपि इति भाष्यम्) -धा।पा।} दाने"(धा।पा।१०८३), "हुश्नुवोः सार्वधातुके" ६।४।८७ इति यणादेशः, "नाभ्यस्ताच्छतुः ७।१।७८ इति नुमागमाभावः। "अधीयानः"इति। "इङ अध्ययने" (धा।पा।११०४६), अधिपूर्वः। पूर्ववत् "अचिश्नु"६।४।७७ इत्यादिना इयङ। "माङ्याक्रोशे" इति। माङ्युपपद आक्रोशे गम्यमाने लटः शतृशानचौ भवतः। "मा पचन्, मा पचमानः" इति। ननु

चात्रैव माङि लुङा भवितव्यम्, एतस्मादेवाधिकविधानात्? पुनर्लङ्()ग्रहणादाक्रोशे न भवतीत्यदोषः। "माङि लुङ" ३।३।१७५ इत्यस्य यत्राक्रोशे नास्ति सोऽवकाशः। "केचिद्विभाषाग्रहणमनुवत्र्तयन्ति" इति। सन् ब्राआह्नणोऽस्ति ब्राआह्नण इत्यादौ विकल्पेन शतृशानचौ यथा स्यातामित्येवमर्थम्। केचिदिति वचनात् केचिन्नानुवत्र्तयन्तीत्युक्तं भवति। तेषामयमभिप्रायः-- यदि प्रथमासमानाधिकरणे नित्यं तौ भवतस्तदाऽप्रथमासमानाधिकणग्रहणं न कुर्यात्, "शतृशानचौ"इत्येवं ब्राऊयात्। तत्राप्ययमर्थः-- सामान्येन प्रथमासानाधिकरणेऽन्यत्र शतृशानचोर्विधानात् पुनग्र्रहणं न कत्र्तव्यं भवति। तस्मादप्रथमासमानाधिकरणग्रहणसामथ्र्यादप्रथमासमानधिकरण एव नित्यौ तौ भवतः, प्रथमासमानादिकरणेष्वन्यथेति। यदि तर्हि विभाषाग्रहणमनुवत्र्तयन्ति, यथा सन् ब्राआह्नणः, अस्ति ब्राआह्नणः, विद्यमानो ब्राआह्नणः,विद्यते ब्राआह्नण इत्यादौ विकल्पेन भवतः; तथा कुर्वद्भक्तिः कुर्वाणभक्तिरित्येवमादावपि स्यातामित्यत आह--"सा च" इत्यादि। "तत्र" इति। व्यवस्थितविभाषयां सत्याम्। "यथादर्शनम्" इति। यथा लक्ष्यस्य दर्शनं तदनुरूपाः प्रयोगा उन्नेयाः। एतदुक्तं भवति-- लक्ष्यदर्शनवत् स्यात्। क्वचिन्नित्यं तौ शतृशानचौ वेदितव्यौ, क्वचित् पाक्षिकौ,क्वचिदविद्यमानाविति। तत्र कुर्वद्भक्तिः, कुर्वाणभक्तिः, कुर्वत्तरः, कुर्वत्तम इत्यादौ नित्यम् ; सन् ब्राआह्नणः , अस्ति ब्राआह्नण इत्यादौ पाक्षिकौ; तरप्तमवादिप्रत्यये परे तावविद्यमानावेव। "पचतितराम" इति। पचतिशब्दात् "तिङश्च" ५।३।५६ इति तरप्, "किमेत्"५।४।११ इत्यादिनामि कृते न भवतः॥

बाल-मनोरमा

लटः शतृशानचावप्रथमासमानाधिकरणे ९०२, ३।२।१२४

लटः शतृशानचौ। "वर्तमाने ल"डिति पूर्वसूत्रविहितस्यैव एतौ शतृशानचौ, अनन्तरस्येति न्यायादिति "वर्तमानसामीप्ये" इत्यादिभाष्ये स्पष्टम्। शतृप्रत्यये शकारऋकाराविती। पचन्तमिति। पाकानुकूलव्यापाराश्रयमित्यर्थः, "क्रियाप्रधानमाख्यातं, सत्त्वप्रधानानि नामानि"ति सिद्धान्तात्। शतुः शित्त्वेन सार्वधातुकच्छपि "अतो गुणे" इति पररूपम्। शानचि शाचविती।

तत्त्व-बोधिनी

लटः शतृशानचावप्रथमासमानाधिकरणे ७४३, ३।२।१२४

लटः शतृ। सामनाधिकरण्ये सतीति। यद्यप्यादेशरहितस्य लटः प्रयोगाऽभावात्सामानाधिकरण्यं दुर्लभं तथापि शतृशानचोस्तद्दृष्ट्वा स्थानिन्यपि सामानाधिकरण्यं कल्प्यते। शबादीति। शित्त्वेन सार्वधातुकत्वादिति भावः। पचन्तमिति। शतुरुगित्त्वान्नुम्। विक्लित्त्यनुकूलवर्तमानव्यापाराश्रयमित्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सम्बोधने ७।१ च ० लटः ६।१ १२४ शतृ-शानचौ १।२ १२४ वर्त्तमाने ७।१ १२४ धातोः ५।१ ?

अर्थः॥

सम्बोधने च विषये धातोः लटः स्थाने शतृशानचौ आदेशौ भवतः।

उदाहरणम्॥

हे पचन्, हे पचमान।

काशिका-वृत्तिः

सम्बोधने च ३।२।१२५

प्रथमासमनाधिकरणार्थ आरम्भः। सम्भोधने च विषये लटः शतृशानचौ प्रत्ययौ भवतः। हे पचन्। हे पचमान।

न्यासः

सम्बोधने च।, ३।२।१२५

"प्र()थमासमानाधिकरणार्थ आरम्भः" इति। अवधारणमिह द्रष्टव्यम्। पूर्वयोगो ह्यप्रथमासमानाधिकरणार्थः, क्वचित् प्रथमासमानाधिकरणार्थश्च; अयं तु प्रथमासमानाधिकरणार्थं एव। यदि तर्हि पूर्वसूत्रं प्रथमासमानाधिकरणार्थमपि, तह्र्येषंसति तौ यथा अन्यत्र प्रथमासमानाधिकरणेऽपि भवतस्तथा सम्बोधनेऽपि भविष्यत इत्यपार्थकम्? नापार्थकम्; तस्यैव प्रपञ्चार्थत्वात्। "हे पचन्" इति। "न ङिसम्बुद्ध्योः" ८।२।८ इति नलोपप्रतिषेधान्नलोपाभावः। "हे पचमान" इति। "एङ ह्यस्वात् सम्बुद्धेः" ६।१।६७ इति सुलोपः॥

बाल-मनोरमा

संबोधने च ९०४, ३।२।१२५

संबोधने च। "शतृशानचा"विति शेषः। प्रथमासमानाधिकरणार्थ आरम्भः। पूर्सूत्रस्थपुनर्लड्ग्रहणस्य अधकविधानार्थत्वादेव सिद्धे प्रपञ्चार्थमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

लक्षणहेत्वोः क्रियायाः ३।२।१२६

लक्ष्यते चिह्न्यते तल् लक्षणम्। जनको हेतुः। धात्वर्थविशेषणं चैतत्। लक्षणे हेतौ च अर्थे वर्तमनाद धातोः परस्य लटः शतृशानचौ आदेशौ भवतः, तौ चेल् लक्षणहेतू क्रियाविषयौ भवतः। लक्षणे शयाना भुञ्जते यवनाः। तिष्ठन्तो ऽनुशासति गणकाः। हेतौ अर्जयन् वसति। अधीयानो वसति। लषणहेत्वोः इति किम्? पचति, पठति। क्रियायाः इति किम्? द्रव्यगुणयोर् मा भूत्। यः कम्पते सो ऽश्वत्थः। यदुत्प्लवते तल् लघु। यन् निषीदति तद् गुरु। लक्षणहेत्वोः इति निर्देशः पूर्वनिपातव्यभिचारलिङ्गम्।

न्यासः

लक्षणहेत्वोः क्रियायाः।, ३।२।१२६

"धात्वर्थ विशेषणञ्चैतत्" इति। धात्वधिकारात्। अथोपपदे कस्मान्न भवतः? क्रियाया इति वचनात्। यद्युपपदे स्यातां तदा क्रियाग्रहणमनर्थकं स्यात्। उपपदं हि धातोर्भवति, स च क्रियावचन इत्येन्तरेणापि क्रियाग्रहणं लक्षमहेतू क्रियाविषयौ विज्ञास्येते। तत् क्रियाग्रहणेन धात्वर्थविशेषणत्वे हि तयोः क्वचिद्धात्वर्थो द्रव्यस्य हेतुर्भवति, लक्षणं वा ; क्वचिद्गुणस्य , क्वचित्क्रियायाः। अतो द्रव्यादिनिवृत्त्यर्थं क्रियाग्रहणं युक्तम्; अतः "क्रियायाः" इति वचनम्। "क्रियाविषयौ" इति। क्रियाया इत्येतद्विवरणम्। क्रिया विषयो यथोस्तौ तथोक्तौ। एतेन "क्रियायाः" इति येयं षष्ठी सा सुब्व्यत्ययेन सप्तम्याः स्थाने विहितेति सूचयति। "शयाना भुञ्जते" इति। शीङोऽपवादित्वाच्छपो लुक्, "शीङः सार्वधातुके" ७।४।२१ इति गुणः। अत्र शयनं लक्षणम्, भुजिक्रिया विषयः।तेन हि भुजिक्रिया लक्ष्यते तत्र शीङ वत्र्तते।

"तिष्ठन्तोऽनुशासति" इति। तिष्ठतेः पाघ्रादिसूत्रेण ७।३।७८ तिष्ठादेशः। अत्रावस्थानं लक्षणम्, तेनानुशासनक्रिया लक्ष्यते। "अर्जयन् वसति" अत्राध्ययनम्। "पचति, पठति" इति। नात्र क्रियाया लक्ष्यलक्षणभावो विवक्षितः। "यः कम्पतेसोऽ()आत्थः"इति। अत्र हि कम्पनं लक्षणं भवतीति तेना()आत्थो लक्ष्यते, न तु क्रियाविषयम्, किं तर्हि? द्रव्यविषयम्; अ()आत्थस्य द्रव्यविषयत्वात्। "यदुत्प्लवते तल्लघु" इति। अत्रोत्प्लवनेनलघुसंज्ञको गुणो लक्ष्यत इति गु विषयं तत्, न तु क्रियाविषयम्। वर्षतीति धावति, हन्तीति पलायत इत्यत्र यद्यपि वर्षणहननाभ्यां धावनपलायनक्रिये लक्ष्येते, तथापि शतृशानचौ न भवतः; "नन्वोर्विभाषा"३।२।१२१ इत्यतो व्यवस्थितविभाषेत्यनुवत्र्तते; इतिकरणेन हेतुभावस्य द्योतितत्वात्। पूर्वनिपातलक्षमव्यभिचारलिङ्गम्" इति। "द्वन्द्वे घि" २।२।३२ इत्यनेन ध्यन्तस्य यः पूर्वनिपातः क्रियते तस्य व्यभिचारः। स्वविषये सत्यपि तस्य क्वचिदभावः। तस्य व्यभिचारस्य लिङ्गमयं निर्देशः।यदि ह्रभिचारी ध्यन्तस्य निपातः स्यात्, "हेतुलक्षणयोः"इति निर्देशं कुर्यात्। व्यभिचारे तु सति धूमाग्नी इत्येवमादय उपपन्ना भवन्ति॥ ननु च प्रकृतत्वादेव शतृशानचोरियं संज्ञा स्यात्, त()त्क तौग्रहणमित्याह-- "तौग्रहणम्" इत्यादि। उपाधिना विशेषमेनासंसर्गार्थं तौग्रहणमित्यर्थः। उपाधिस्तु वत्र्तमानकालः, तत्र शतृशानचोर्विहित्वात्। उपाध्यसंगर्हार्थे तौग्रहणे सति किं भवतीत्याह-- "शतृशानज्मात्रस्य" इत्यादि। मात्रग्रहणमुपाधिसंग्रहव्यवच्छेदार्थम्। असति हि तौग्रहणे यादृशौ प्रकृतौ तादृशयोरव संज्ञा स्यात्। कीदृशौ च तौ? वत्र्तमानकलाविहितौ। ततश्च लृडादेशयोर्भविष्यत्कालविहितयोः सदिति संज्ञा न स्यात्। ननु च "लुटः सद्वा" ३।३।१४ इति सच्छब्देन तौ विधीयेते, ततो वचनसामथ्र्यात् तु भविष्यतः? न ब्राऊमः-- विधानं तयोर्न सिध्यतीति, किं तर्हि? विहितयोरुत्तरकालसंज्ञा न सिध्यति। ततश्च ब्राआह्णस्य करिष्यन्, ब्राआह्णस्य करिष्यमाण इत्यत्र "पूरणगुण" २।२।११ इत्यादिना षष्ठीसमासप्रतिषेधो न स्यात्। सद्()ग्रहणं तु सच्छब्देनैव वत्र्तमानशतृशानजन्ते षष्ठीसमासप्रतिषेधार्थं स्यात्। तौग्रहणे शतृशानचोर्विशेषणमनपेक्ष्य रूपमात्रे संज्ञाऽऽख्यायत इति वत्र्तमानकाले विधानासंसक्तयोरपि संज्ञा सिध्यतीति॥

बाल-मनोरमा

लक्षणहेत्वोः क्रियायाः ९०५, ३।२।१२६

लक्षणहेत्वोः। लक्ष्यते ज्ञाप्यतेऽनेनेति लक्षणं = ज्ञापकम्। तदाह-- क्रियायाः परिचायके इति। धात्वर्थस्य लक्षणत्वे हेतुत्वे च द्योत्ये इति यावत्। कर्तैव प्रत्ययार्थः। शयाना भुञ्जते यवना इति। अत्र भोजनकालीनं शयनं भोक्तुर्यवनत्वसूचकम्। हेतावुदाहरति -- अर्जयन्वसतीति। अर्जनाय वसतीत्यर्थः।हेतावुदाहरणान्तरमाह-- हरिं पश्यन्निति। हरिदर्शनेन संसारदुःखान्मुच्यते इत्यर्थः। ननु धनाद्यार्जनस्य वाससाध्यतया कथं तस्य वासहेतुत्वमित्यत आह-- हेतुः फलं कारणं चेति। इष्टसाधनताज्ञानस्य वासप्रवृत्तौ हेतुतया इष्टस्यार्जनस्यापि वासहेतुमिति भावः। प्रपीयमाण इति। अत्र भिन्नपदस्थत्वात् कथं णत्वमित्यत आह-- कृत्यच इति।

तत्त्व-बोधिनी

लक्षणहेत्वोः क्रियायाः ७४५, ३।२।१२६

लक्षणहेत्वोः। लक्ष्यतेऽनेनेति लक्षणं= परिचायकम्। शयाना इति। शीङ आत्मनेपदित्वात्परस्य लटः शानच्। अत्र शयनं लक्षणं = चिह्नं यवनकर्तृकभोजनस्य, न तु फलं,नापिकरणमिति हेत्वपेक्षया लक्षणस्य पृथङ्निर्देशः। अर्जयन्निति। अर्ज प्रतियत्ने चुरादिः। अर्जनार्थो वास इत्यर्थः। हरिमिति। हरिदर्शनं मुक्तौ कारणमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तौ सत् ३।२।१२७

तौ शतृशानचौ सत्संज्ञौ भवतः। तौग्रहणम् उपाद्यसंसर्गार्थम्। शतृशानज्मात्रस्य संज्ञा भवति। ब्राह्मणस्य कुर्वन्। ब्राह्मणस्य कुर्वाणः। ब्राह्मणस्य करिष्यन्। ब्राह्मणस्य करिष्यमाणः। सत्प्रदेशाः पूरणगुणसुहितार्थसद्। अव्ययतव्यसमानाधिकरणेन २।२।११ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तौ सत् ८३७, ३।२।१२७

तौ शतृशानचौ सत्संज्ञौ स्तः॥

बाल-मनोरमा

तौ सत् ९०८, ३।२।१२७

तौ सत्। "लटः शतृशानचौ" इति सूत्रोपात्तौ शतृशानचौ तच्छब्दः परामृशति। तदाह-- तौ शतृशानचाविति।

---

सूत्रम्

काशिका-वृत्तिः

पूङ् यजोः शानन् ३।२।१२८

पूङो यजेश्च धातोः शानन् प्रत्ययो भवति। पवमानः। यजमानः। यदि प्रत्ययाः शानन्नादयः न लाऽदेशाः, कथं सोमं पवमानः, नडमाघ्नानः इति षष्ठीप्रतिषेधः? तृनिति प्रत्याहारनिर्देशात्। क्व संनिविष्टानां प्रत्याहारः? लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४ इत्यतः प्रभृति आ तृनो नकारात्। द्विषः शतुर्वा वचनम्। चौरस्य द्विषन्, चौरं द्विषन्।

न्यासः

पूङ्यजोः शानन्। , ३।२।१२८

वत्र्तमानविहिताः शतृशानच्प्रभृतयः। एते लादेशा वा स्युः? प्रत्यया वा? तत्र यदि इह लट इत्यनुवत्र्तते तदा लादेशाः, अथ नानुवत्र्तते ततः प्रत्ययाः। तस्यादेशाः क्रियेरंस्तदा "नन्वोर्विभाषा"३।२।१२१ इत्यतो विभाषाग्रहणमनुवत्र्तयितव्यं जायेत; अन्यथा पवते देवदत्तः, यजते देवदत्त इति तिङश्रवणं कुर्यात्। प्रत्ययलक्षणे तु वासरूपविधिना यदा लड् भवति तदा प्रत्ययश्रवणं तिङश्रवणमुपपद्यते। किञ्च, आदेशपक्षे "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इति भावकर्मणोरपि शानन्नादयः स्युः, कत्र्तर्येव चेष्यन्ते। प्रत्ययपक्षे तु "कत्र्तरि कृत्" ३।४।६७ इति कत्र्तर्येव भवन्ति, न भावकर्मणोः, इह कतीह मण्डयमान इत्युत्तरसूत्रे चानशि कृते "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" ६।१।१८० इतिनिघातः स्यात्, प्रत्ययपक्षे तु न भवति; अलसार्वधातुकत्वात्। चानशः "लः परस्मैपदम्" १।४।९८ "तङानावात्मनेपदम्" १।४।९९ इत्यात्मनेपदसंज्ञा प्रसज्येत, ततश्चात्मनेपदिभ्य एव स्यात्-- कतीह निघ्नाना इति। प्रत्ययपक्षे त्वलादेशान्न भवत्यात्मनेपदसंज्ञाप्रसङ्गः। तदेवमादेशपक्षे बहवो दोषाः प्रतिविधेयाः, प्रततिविधानेऽपि तेषां प्रतिपत्तिगौरवं भवतीति मत्वा प्रत्ययपक्षमाश्रित्याह-- "शानन्प्रत्ययो भवति" इति। शकारः सार्वधातुकसंज्ञार्थः। "पवमानः" इति। "पूङ् पवने" (धा।पा।९६६), शप्, "आने मुक्" ७।२।८२। "यदि" इत्यादि। "न लोकाव्यय"२।३।६९ इत्यादौ तृन्निति तृन एव प्रत्ययस्य निर्देश इति मन्यमानस्य प्रश्नः। "तृन्निति प्रत्याहारनिर्देशात्" इति। "सोमं पवमानः, नडमाघ्नानः" इति। षष्ठीप्रतिषेध इत्यनेन सम्बन्धनीयम्। यदि

तृन्निति प्रत्ययग्रहणं स्यात् तदा शानन्प्रभृतीनां प्रत्ययार्थे सति "सोमं पवमानः" इत्यादौ षष्ठीप्रतिषेधो न स्यात्। न च तृन्निति प्रत्ययस्य ग्रहणम्, किं तर्हि? प्रत्याहारस्य। तत्र चशानन्नादयोऽन्तर्भूता इति भवत्येव षष्ठीप्रतिषेधः। "द्विषः शतुर्वा वचनम्" इति। "द्विषोऽमित्रे" ३।२।१३१ इत्यनेन यः {शता"इति मुद्रितः पाठः} शतृ विधीयते तस्य प्रत्याहारेऽस्मिन्नन्तर्भावात् तद्योगे षष्ठीप्रतिषेधः स्यात्, ततश्चौरस्य द्विषन्निति पक्षे न स्यात्। तस्मात् "द्विष अप्रीतौ" (धा।पा।१०१३) इत्यस्य शत्रन्तस्य प्रयोगे द्वितीयायां प्राप्तायां वा षष्ठी वक्तव्या॥

बाल-मनोरमा

पूङ्यजोः शानन् ९१०, ३।२।१२८

पूङ्यजोः शानन्। पञ्चम्यर्थे षष्ठी। वर्तमाने इति। शेषपूरणमिदम्। "वर्तमाने ल"डित्यतस्तदनुवृत्तेरिति भावः। लड्ग्रहणं तु निवृत्तम्। ततश्च ण्वुलादिवत्स्वतन्त्रोऽयं , न तु शत्रादिवल्लादेशः। तथा च कर्तर्येवायं, न तु भावकर्मणोः। न च लादेशत्वाऽबावे "सोमं पवमानट इत्यत्र कर्मणि षष्ठी स्यादिति वाच्यं, "न लोके"ति सूत्रे "तृन्" इति प्रत्याहार इत्युक्तत्वात्।

तत्त्व-बोधिनी

पूङ्यजोः शानन् ७४७, ३।२।१२८

पूङ्यजोः। शाननः शकारः सार्वधातुकत्वार्थः। नकारः स्वरार्थः। ण्वुलादिवत्स्वतन्त्रोऽयं न तु शत्रादिवल्लादेशः, तथाहि सति वेति वाच्यं स्यात्, पवते यजते इति तिङोऽपि यथा स्युरिति। न च वाऽसरूपन्यायेन निर्वाहः,लादेशेषु वाऽसरूपविधिर्नास्तीत्याकरे स्थितत्वात्।किंच लादेशत्वे "लः कर्मणि चे" ति भावकर्मणोर्विहितस्य लस्यापि भावकर्मणोरपि प्रयुज्येत, इष्यते तु कर्तर्येव। एवं चानशः "इङ्धार्यो" रिति शतुश्च स्वातन्त्र्यं बोध्यम्। अत्र केचित्- शाननो लादेशत्वे लसार्वधातुकानुदात्तत्वं स्यादित्याहुः। तच्चिन्त्यम्। परत्वान्नित्स्वरप्रवृत्त्या पवमान इत्यादेराद्युदात्तत्वे शाननोऽनुदात्तत्वस्येष्टत्वात्। नन्वेषां लादेशत्वाऽनङ्गीकारे "सोमं पवमान" इत्यादौ कर्मणि षष्ठी स्यादिति चेन्मैवम्। "न लोके" ति सूत्रे तृन्निति प्रत्याहारनिर्देश इत्युक्तत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

ताच्छीयवयोवचनशक्तिषु चानश् ३।२।१२९

ताच्छील्यं तत्स्वभावता। वयः शरीरावस्था यौवनादिः। शक्तिः सामर्थ्यम्। ताच्छील्यादिषु धातोः चानश् प्रत्ययो भवति। ताच्छील्ये तावत् कतीह मुण्डयमानाः। कतीह भूषयमाणाः। वयोवचने कतीह कवचं पर्यस्यमानाः। कतीह शिखण्डं वहमानाः। शक्तौ कतीह निघ्नानाः। कतीह पचमानः।

न्यासः

ताच्छील्यवयोवचनशक्तिषु चानश्। , ३।२।१२९

"मण्ड()मानाः" इति। "मडि भूषायाम्" (धा।पा।३२१), इदित्()वान्नुम्। हेतुमण्णिच्। "भूषयमाणाः" इति। "भूष अलङ्कारे" (धा।पा।६८२), चुरादिणिच्। "कवचं पर्यस्यमानाः"इति। दिवादित्वाच्छ्यन्। तदेव वयो गम्यते तत्र स्थिताः कवचं पर्यस्यन्ते। कवचम् = सन्नाहम्। "शिखण्डं वहमानाः"इति। अत्रापि तथाविधं वयो गम्यते यत्र वत्र्तमानाः शिखण्डं वहन्ति। शिखण्ण्टः = चूडा। वचनग्रहणं वैचित्र्यार्थम्, विनापि हि तेन वयसि गम्यमाने प्रत्ययो लभ्यत एव, यथा च "वयसि च" ३।२।१० इत्यत्र। "निघ्नानाः" इति। हननशक्तिरिति गम्यते॥

बाल-मनोरमा

ताच्छील्यवयोवचनशक्तिषु चानश् ९११, ३।२।१२९

ताच्छील्य। चानशि शचावितौ। भोगं भुञ्जान इति। भोगशील इत्यर्थः। कवचं विभ्राण इति। यौवनबालदिति भावः। शत्रुं निघ्ना इति। निहन्तुं शक्त इत्यर्थः। अतः परत्वाऽभावान्न मुक्। चानशो लादेशत्वाऽभावादनामत्मनेपदत्वात् परस्मैपदिभ्योऽपि प्रवृत्तिः।

तत्त्व-बोधिनी

ताच्छील्यवयोवचनशक्तिषु चानश् ७४८, ३।२।१२९

ताच्छील्य। वचनग्रहणं स्पष्टार्थम्।चानशो लादेशत्वाऽभावेनाऽत्मनेपदत्वाऽभावात्परमैपदिभ्योऽपि विधानमिति ध्वनयन्नुदाहरति--निघ्नान इति। "गमहने"त्युपधालोपः।

---

सूत्रम्

काशिका-वृत्तिः

इङ्धार्योः शत्रकृच्छ्रिणि ३।२।१३०

इङो धारेश्च धात्वोः शतृप्रत्ययो भवति अकृच्छ्रिणि कर्तरि। अकृच्छ्रः सुखसाद्यो यसय् कर्तुर् धात्वर्थः सो ऽकृच्छ्री। अधीयन् पारायणम्। धारयन्नुपनिषदम्। अकृच्छ्रिणि इति किम्? कृच्छ्रेण अधीते। कृच्छ्रेण धरयति।

न्यासः

इङ्धार्योः शत्रकृच्छ्रिणि। , ३।२।१३०

"अकृच्छ्रिणि कत्तरि"इति। एतेनाकृच्छ्रिणीति प्रत्ययार्थस्य कर्तुरेतद्विशेषणमिति दर्शयति। "अकृच्छ्रः सुखसाध्यो यस्य धात्वर्थः सोऽकृच्छ्री" इति। "अत इनिठनौ" ५।२।११४ इतीनिः। "अधीयन्" इति। पूर्ववदियङ। "धारयन्" इति। "धृङ अवस्थाने" (धा।पा।१४१२) चुरादिणिच्॥

बाल-मनोरमा

इङ्घार्योः शत्रकृच्छ्रिणि ९१२, ३।२।१३०

इङ्धार्योः। शतृ- अकृच्छ्रिणीति छेदः। अकृच्छ्रम् = अदुःखम्, तदास्यास्तीति अकृच्छ्री। इङ्, धारि अनयोद्र्वन्द्वात् पञ्चम्यर्थे षष्ठी। अधीयन्निति। सुखमध्येतेत्यर्थः। धारयन्निति। सुखेन धारयितेत्यर्थः।

तत्त्व-बोधिनी

इङ्घार्योः शत्रकृच्छ्रिणि ७४९, ३।२।१३०

इङ्घार्योः। इङ आत्मनेपदित्वात् शता न सिध्यति, धारयतेरपि कर्तृगामिनि क्रियाफले न सिध्यति, लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्ययमारम्भः।

---

सूत्रम्

काशिका-वृत्तिः

द्विषो ऽमित्रे ३।२।१३१

अमित्रः शत्रुः। अमित्रे कर्तरि द्विषेर् धातोः शतृप्रत्ययो भवति। द्विषन्, द्विषन्तौ, द्विषन्तः। अमित्रे इति किम्? द्वेष्टि भार्या पतिम्।

न्यासः

द्विषोऽमित्रे। , ३।२।१३१

"अमित्रः शत्रुः" इति। शत्रादेवामित्रशब्दस्य रूढत्वात्। "द्वेष्टि" इति। अदादित्वाच्छपो लुक्॥

बाल-मनोरमा

द्विषोऽमित्रे ९१३, ३।२।१३१

द्विषोऽमित्रे। द्विषः शतृप्रत्ययः स्यादमित्रे कर्तरीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सुञो यज्ञसंयोगे ३।२।१३२

यज्ञेन संयोगः यज्ञसंयोगः। यज्ञसंयुक्ते ऽभिषवे वर्तमानात् सुनोतेर् धातोः शतृप्रत्ययो भवति। सर्वे सुन्वन्तः। सर्वे यजमानाः सत्रिण उच्यन्ते। संयोगग्रहणं प्रधानकर्तृप्रतिपत्त्यर्थम्। याजकेसु मा भूत्। यज्ञसंयोगे इति किम्? सुनोति सुराम्।

न्यासः

सुञो यज्ञसंयोगे। , ३।२।१३२

"यज्ञसंयोगः" इति। कर्मसाधनः संयोगशब्दः। अत एव वृत्तावाह-- "यज्ञसंयुक्तेऽभिषवे" इति। संयुक्तः = सम्बद्धः, यज्ञेन संयुक्तो यज्ञसंयुक्तः। कदा चाभिषवो यज्ञसंयुक्तो भवति? यदा यज्ञाङ्गं भवति। "सुन्वन्तः" इत्यादि। "स्वादिभ्यः श्नुः" [३।१।७३](#)। "सर्वे यजमानाः" इति। सुन्वन्त इत्यनेन यजमानाः सत्त्रिणो यज्ञस्य ये स्वामिनस्तेऽभिधीयन्ते, न तु याज्ञिका इति दर्शयति। कथं पुनरेषोऽर्थो लभ्यते, यावता यथाभिषवस्य यजमानाः, कत्र्तारस्तथा याजका अपीत्याह-- "संयोगग्रहणम्" इत्यादि। इह "सुञोयज्ञे" इत्येतद्वेदितव्यम्, एवमपि ह्युच्यमाने यज्ञसंयुक्तताभिषवस्य लभ्यत एव; यज्ञविषयश्चैष सुनोत्यर्थो भवतीत्यर्थस्य प्रतिपत्तेः, तस्मात् संयोगग्रहणमिति न कत्र्तव्यमेतत्? क्रियते प्रधानकर्तृप्रतिपत्त्यर्थम्। यागस्य ये कत्र्तारो भूत्वा फलं प्राप्नुवन्तः सुन्वन्तस्ते प्रधानकत्र्तारः, ते पुनर्यजमानाः,न याजकाः॥

बाल-मनोरमा

सुञो यज्ञसंयोगे ९१४, ३।२।१३२

सुञो यज्ञ। यज्ञसंयुक्तेऽभिषवे वर्तमानात् सुनोतेः शतृप्रत्यय इत्यर्थः। संयोगग्रहणं यज्ञस्वामिपरिग्रहार्थम्। तेन याजकेषु न भवति। तत्र सुन्वन्नित्येकवचनान्तं दशपूर्णमासज्योतिष्टोमादिविषयम्, एककर्तृकत्वात्। बहुवचनान्तं तु सत्रविषयमेव, तत्र ऋत्विजामपि यजमानत्वादिति मत्वा आह-- सर्वे सुन्वन्त इति।

तत्त्व-बोधिनी

सुञो यज्ञसंयोगे ७५०, ३।२।१३२

सुञो यज्ञसंयोगे। सुनोतेः शतृप्रत्ययः स्याद्यज्ञेन संयुज्यमाने वृत्तिश्चेत्। नन्विह "सुञो यज्ञे" इत्येवास्तु, यज्ञविषयकश्चेत्सुनोत्यर्थ इति व्याख्यायां सुरां सुनोतीत्यादेर्व्यावर्तयितुं शक्यत्वात्। अत्राहुः-- संयोगग्रहणं प्रधानकर्तृसंप्रत्ययार्थं,तेन यजानादन्यत्र न भवतीति। एवं चाऽप्रधाने कर्तरि "लटः शतृशानचौ" इत्यनेनाऽपि न भवति, संयोगग्रहणसामश्र्यादिति हरदत्तः। "यः सुन्वन्तमवती"त्यादीनामेकवचनान्तानां यजमानपरत्वसंभवेऽपि बहुवचनान्तानां तु न संभवति, एकस्मिन्यागे एकस्यैव यजमानत्वादित्याशङ्क्य यागविशेषे तु संभवतीति दर्शयितुमुदाहरति--सर्वे सुन्वन्त इत्यादि। सत्रयागे हि बहवो यजमानास्त एवं ऋत्विजां कर्म सोमाभिषवनं कुर्वन्तीति "सुन्वन्त" इत्यादिबहुवचनान्तस्यापि यजगानपरत्वं संभवतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अर्हः प्रशंसायाम् ३।२।१३३

प्रशंसा स्तुतिः। अर्हतेर् धातोः प्रशंसायां शतृप्रत्ययो भवति। अर्हन्निह भवान् विद्याम्। अर्हन्निह भवान् पूजाम्। प्रशंसायाम् इति किम्? अर्हति चौरो वधम्।

न्यासः

अर्हः प्रशंसायाम्। , ३।२।१३३

बाल-मनोरमा

अर्हः प्रशंसायाम् ९१५, ३।२।१३३

अर्हः प्रशंसायाम्। अर्ह इति पञ्चमी। "शतृप्रत्यय" इति शेषः। अर्हन्निति। पूजां प्राप्तुं योग्य इत्यर्थः। अत्र प्रशस्तस्यैव पूजायोग्यत्वात्प्रशंसा गम्यते।

तत्त्व-बोधिनी

अर्हः प्रंशायाम् ७५१, ३।२।१३३

अर्हः। प्रशंसायां किम्?। अर्हति चौरो वधम्।

---

सूत्रम्

काशिका-वृत्तिः

आ क्वेः तच्छीलतद्धर्मतत्साधुकारिषु ३।२।१३४

भ्राजभासधुर्विद्युतौउर्जिपृजुग्रावस्तुवः क्विप् ३।२।१७७ इति क्विपं वक्ष्यति। आ एतस्मात् क्विप् संशब्दाद् यानित ऊर्ध्वमनुक्रमिष्यामस् तच्छीलादिषु कर्तृषु ते वेदितव्याः। अभिविधौ च अयम् आङ्। तेन क्विपो ऽप्ययम् अर्थनिर्देशः। तदिति धात्वर्थः शीलादि विशेषणत्वेन निर्दिश्यते। तच्छीलो यः स्वभावतः फलनिरपेक्षस् तत्र प्रवर्तते। तद्धर्मा तदाचारः, यः स्वधर्मे ममायमिति प्रवर्तते विनापि शीलेन। तत्साधुकरी यो धात्वर्थं साधु करोति। उत्तरत्रैव उदाहरिष्यामः।

लघु-सिद्धान्त-कौमुदी

आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ८३९, ३।२।१३४

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः॥

लघु-सिद्धान्त-कौमुदी

तृन् ८४०, ३।२।१३४

कर्ता कटान्॥

न्यासः

आ क्वेस्तच्छीलतद्धर्तत्साधुकारिषु। , ३।२।१३४

"तच्छीलादिषु कर्त्तुषु" इति। अनेन तच्छीलादीनां प्रत्ययार्थविशेषणतां दर्शयति।"अभिविधौ चायमाङ" इति। अभिविधिः = अभिव्याप्ति-। अत्राङ न मर्यादायाम्, तेन वक्ष्यमाणस्य क्विपोऽप्ययमर्थनिर्देश इति। सोऽपि तच्छीलीदिष्वेव भवति। "तत्ित्यादि। "धातोः" 3।1।91 इति वत्र्तते,न च धातोः शीलादिविशेषणमुपपद्यते, तस्मात् तस्य योऽर्थः स शीलादीनां त्रयाणां विशेषणभावेन तच्छीलादिशब्देन निर्दिश्यते। स धात्वर्थः शीलं यस्य स तच्छीलः। स एव धर्मो यस्य स तद्धर्मा। साधु करोतीति साधुकारी, तस्य धात्वर्थस्य साधुकारीति यावत्। "स्वभावतः" इति। भवत्यस्मात् फलनिरपेक्षा वृत्तिरिति भावः। स्वभावश्चैतनिको धर्मः, स पुनः शीलमेव।"फलनिरपेक्षः" इति। फलाकाङ्क्षारहितः। "तत्र"इति। धात्वर्थे। "तदाचारः"इति। तच्छीलात् तदाचारस्यान्यथात्वं दर्शयति। "यो धात्वर्थं साधु करोति" इति। अत्रापि विना शीलेनेति सम्बध्यते। "साधु"इति। प्रशस्तमित्यर्थः। क्रियाविशेषणत्वान्नपुंसकत्वम्॥

बाल-मनोरमा

आ क्वेस्तच्छीलतद्धर्मतत्ससाधुकारिषु ९१६, ३।२।१३४

आ क्वेः। आङभिविधौ। तदाह-- क्विपमभिव्याप्तेति। "भ्राजभासधुर्विद्युतोर्जिपृ()जुग्रावस्तुवः क्वि" बिति सूत्रमभिव्याप्येति यावत्। तत्र ताच्छीलिकाः प्रत्ययाः प्रायेण सोपसर्गेभ्यो नेति "आढ()सुभगे" ति सूत्रे भाष्ये स्पष्टम्। तच्छीलः = तत्स्वभावः। फलमनपेक्ष्य स्वभावादेव प्रवर्तमान इति यावत्। स धर्मो यस्य स तद्धर्मा। स्वधर्मोऽयमिति प्रवर्तमानः। तस्या = धात्वर्थस्य साधुकर्ता तत्साधुकारी।

तत्त्व-बोधिनी

आ केस्तच्छीलतद्धर्मतत्साधुकारिषु ७५२, ३।२।१३४

आ क्वेः। शीलादीनां त्रयाणां विशेषणं समर्थयितुं निर्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते। क्विपमभिव्याप्तेति। "भ्राजभासधुर्विद्युतोर्जी"ति वक्षमाण"मिति शेषः। कर्ता कटानीति। "न लोकाव्यये"ति षष्टीनिषेधः।

---

सूत्रम्

काशिका-वृत्तिः

तृन् ३।२।१३५

सर्वधातुभ्यः तृन्प्रत्ययो भवति तच्छीलादिषु कर्तृषु। नकारः स्वरार्थः। तच्छीले तावत् कर्ता कटान्। वदिता जनापवादान्। तद्धर्मणि मुण्डयितारः श्राविष्ठायनाः भवन्ति वधूमूढाम्। अन्नमपहर्तारः आह्वरकाः भवन्ति श्राद्धे सिद्धे। उन्नेतारः तौल्वलायनाः भवन्ति पुत्रे जाते। तत्साधुकारिणि कर्ताकटम्। गन्ता खेटम्। तृन्विधावृत्विक्षु च अनुपसर्गस्य। होता। पोता। अनुपसर्गस्य इति किम्? उद्गाता। प्रतिहर्ता। तृजेव भवति। स्वरे विशेषः। नयतेः षुक् च। नेष्टा। त्विषेर् देवतायाम् अकारश्च उपधाया अनिट्त्वं च। त्वष्टा। क्षदेश्च नियुक्ते। क्षत्ता। क्वचिदधिकृत उच्यते। छन्दसि तृच् च। क्षतृभ्यः

सङ्ग्रहीतृभ्यः। स्वरे विशेषः।

न्यासः

तृन्।, ३।२।१३५

"मुण्डयितारः" इति। मुण्डां कुर्वन्तीति "मुण्डमिश्र" ३।१।२१ इत्यादिना णिच्, इष्ठवद्भावेन टिलोपः। "{मुण्डयितारः श्राविष्ठायना भवन्ति बधूमूढाम्"--काशिका।} वधूमूढां श्राविष्ठायना मुण्डयन्ति" इति। एतेषां कुलधर्मः। "आह्वरकाः श्राद्धे सिद्धेऽन्नमपहरन्ति" इति। एतेषामाचारः। यः कटं साधु करोतीति स कत्र्ता कटमिति। खेटं यो लीलया गच्छति स साधु गच्छति। "तृन्विधौ" इत्यादि। अताच्छील्यार्थ आरम्भः। अ()स्मस्तृन्विधावनुपसर्गस्य धातोस्तृन् वक्तव्य ऋत्विक्ष्वभिधेयेषु। "होता" इति। "हु {दानादनयोः। आदाने इत्येके।प्रीणनेऽपि इति भाष्यम्-- धा।पा।} दाने" (धा।पा।१०८३)। "पोता" इति। "पूङ पवने" (धा।पा।९६६)। "उद्गाता" इति। "कै गै शब्दे" (धा।पा।९१६,९१७)।"स्वरे विक्षेषः" इति। तृचि सति "गतिकारकोपपदात् कृत्" ६।२।१३८ इति प्रकृतिस्वरेणान्तोदात्तत्वं भवति, तृनि तु सति "गतिरनन्तरः" ६।२।४९ इत्यनुवत्र्तमाने" "तादौ च निति कृत्यतौ" ६।२।४९ इति पूर्ववदस्य प्रकृतिस्वरः प्रसज्येत। "नयतेः षुक् च" इति। कृते गुणे षुगागमो वेदितव्यः; अन्यथा ह्लघूपधत्वाद्()गुणो न स्यात्। गुणोऽपि वा वक्तव्यः। अत्र ऋत्विगिति वत्र्तते। अयमप्यताच्छील्यार्थ आरम्भः। "त्विषेःट इत्यादि। "त्विष दीप्तौ" (धा।पा।१००१) इत्यस्माद्देवतायामभिधेयां तृन् वक्तव्यः, अकारश्चोपधाया आदेशो भवति। "अनिट्()त्वं च"इति। एतस्य सर्वशेषत्वे चास्य पोतेत्यत्रानिट्()त्वं सिद्धं भवति। "क्षदेः"इत्यादि। "क्षद"इति सौत्रो धातुः। "गुधृवीपचिवयियमिसदि क्षदिभ्यस्त्रः" (पं।उ।४।१६६) इत्याद्युणादिसूत्रपाठात्। उणादिषु निपातितत्वात् होत्रादय इति सिद्धम्। तत्र हि "नसृनेष्टृत्वष्टृक्षतृपोतृहोतृभ्रातृजामातृपितृदुहितृ" (द।उ।२।३।) इत्येते निपातिताः॥

बाल-मनोरमा

तृन् ९१७, ३।२।१३५

तृन्। धातोस्तृन्प्रत्ययः स्यात्तच्छीलादिषु कर्तृषु। तच्छीले उदाहरति-- कर्ता कटमिति। कटकरणक्रियाशील इत्यर्थः। "न लोके"ति षष्ठीनिषेधः, "न लोके"ति सूत्रे "तृ"न्नित्यनेन "लटः शत" इत्यारभ्य एतत्सूत्रस्थनकारेण प्रत्याहारश्रयणात्। तद्धर्मणि यथा-- "मुण्डयितारः श्राविष्ठायना भवन्ति ऊढां वधूम्()"। श्राविष्ठायना नाम देशविशेषीया वधूमुण्डनं स्वधर्म इत्यनुष्ठातार इत्यर्थः। तत्साधुकारिणि "कर्ता कट"मित्येवोदाहरणम्।कटं साधु करोतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अलङ्कृञ्निराकृञ्प्रजनौत्पचौत्पतौन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३।२।१३६

अलङ्कृञादिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। अलङ्करिष्णुः। निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः। अपत्रपिष्णुः। वर्तिष्णुः। वर्धिष्णुः। सहिष्णुः। चरिष्णुः। अलङ्कृञो मण्डनार्थाद् युचः पूर्वविप्रतिषेधेनेष्णुज् वक्तव्यः।

न्यासः

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्।, ३।२।१३६

अलम्पूर्वः करोतिः, पुनः स एव निराङ्पूर्वः, "जनी प्रादुर्भावे" (धा।पा।११४९) प्रपूर्वः;"{पचि धा।पा।} पच व्यक्तीकरण" (धा।पा।१७४);"पद गतौ" (धा।पा।१८९८), पतिमन्ये पठन्ति;"शल हुल पत्लृ गतौ" (धा।पा।८४३,८४४,८४५)। "{मदी

हर्षग्लेपनयोः"-धा।पा।)मदी तृप्तिसाधने" (धा।पा।८१५)-- एते पदादय उत्पूर्वाः। "रुच {दीप्तवभिप्रीतौ च" -धा।पा।} दीप्तौ" (धा।पा।७४५); "त्रपूष् लज्जायाम्" (धा।पा।३७४) अपपूर्वः, "वृतु वत्र्तने" (धा।पा।७५८), "वृधु वृद्धौ" (धा।पा।७५९), "षह मर्षणे" (धा।पा।१८०९), "चर गत्यर्थः" (धा।पा।५५९)-- एभ्य इष्णुज् भवति, {तृणोऽपवादः इति, मु।पाठः} तृनोऽपवादः। यदा त्वलम्पूर्वः करोतिर्मण्डने वत्र्तते, तदा "क्रुधमण्डार्थेभ्यश्च" (३।२।१५१) इति युच् प्राप्नोति;पूर्वविप्रतिषेधश्च वक्तव्यः; अन्यथा मण्डनादन्यत्र सावकाशमिष्णुचं परत्वाद्बाधते। येऽत्र सोपसर्गाः पठ()न्ते, तेभ्य एतदुपसर्गपूर्वेभ्य एव भवति, अन्येभ्यस्त्वनियमेन॥

बाल-मनोरमा

अलङ्कृञनिराकृञ्?प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुधुसहचर इष्णुच् ९१८, ३।२।१३६

अलङ्कृढञ्। अलङ्कृञ्, निराकृञ्, प्रजन, उत्पच, उत्पत, उन्मद, रुचि, अपत्रप, वृतु, वृधु, सह, चर एषां द्वादशनां द्वन्द्वात्पञ्चमी। एभ्यस्तच्छीलादिषु कर्तृषु इष्णुच् स्यात्। इत्यादीति। निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, वर्धिष्()णुः, सहिष्णुः, चरिष्णुः।

तत्त्व-बोधिनी

अलङ्कृञनिराकृञ्?प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ७५३, ३।२।१३६

अलङ्कृञ्। कृञिति डुकृञ् करण इत्यस्यैव ग्रहणं न तु कृञ् हिंसायामित्यस्य , "प्रसिद्धाऽप्रसिद्धयोः प्रसिद्धस्यैव ग्रहण"मिति न्यायात्। निराङ्पूर्वोऽपि कृञ् स एव। प्रपूर्वो जनी प्रादुर्भावे। इह डुपचष् पाके, पत्लृ गतौ, मदी हर्षे, एते त्रयोऽपि उत्पूर्वाः पठ()न्ते। तत्र "उदः पचपतमद" इत्येव वक्तव्ये प्रत्येकमुत्पूर्वसय् पाठ उपसर्गान्तरनिवृत्त्यर्थस्तेन समुत्पतिष्णुरित्यादि न भवतीत्याहुः। रुच दीप्तौ। अपपूर्वः त्रपूष् लज्जायाम्, वृतु वर्तने, वृधु वृद्धौ,षह मर्षणे,चर गतौ। इत्यादीति। आदिशब्दग्राह्यास्तु निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुः,उत्पत्तिष्णुः, उन्मदिष्णुरिति। "उत्पतिष्णूसहिष्णू च चेरतुः खरदूषणौ" इति भट्टिः। कालिदासोऽप्याह-- "फलानामुत्पत्तिष्णवः"इति। केचित्तुः-- पत इत स्थाने दान्तं सूत्रे पठित्वा पद गतावित्यस्मात्प्रत्ययमाहुः। उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्तिष्णुः, चरिष्णुः।

---

सूत्रम्

काशिका-वृत्तिः

णेश् छन्दसि ३।२।१३७

ण्यन्ताद् धातोः छन्दसि विषये तच्छीलादिषु कर्तृषु इष्णुच् प्रत्ययो भवति। दृषदं धारयिष्णवः। वीरुधः पारयिष्णवः।

न्यासः

णेश्छन्दसि। , ३।२।१३७

"धारयिष्णवः, पारयिष्णवः"इति। "धृङ अवस्थाने" (धा।पा।१४१२), "पृ पालनपूरणयोः (धा।पा।१०८६); हेतुमण्णिच्, "अयामन्त"६।४।५५ इत्यादिनायादेशः॥

बाल-मनोरमा

णेश्छन्दसि ९१९, ३।२।१३७

णेश्छन्दसि। ण्यन्ताद्धातोरिष्णुच् स्याच्छन्दसीत्यर्थ-। पारयिष्णव इति। पृ()धातोण्र्यनतादिष्णुचि णेर्लोपं बाधित्वा "अयमन्ताल्वाय्ये"त्यय्। इदं सूत्रं वैदिकप्रक्रियायामेव व्याख्यातुमुचितम्।

तत्त्व-बोधिनी

णेश्छन्दसि ७५४, ३।२।१३७

पारयिष्णव इति। "अयामन्ते"ति णेरय्।

---

सूत्रम्

काशिका-वृत्तिः

भुवश् च ३।२।१३८

भवतेर् धतोः छन्दसि विषये तच्छीलादिषु इष्णुच् प्रत्ययो भवति। भविष्णुः। योगविभागः उत्तरार्थः। चकारोऽनुक्तसमुच्चयार्थः। भ्राजिष्णुना लोहितचन्दनेन।

न्यासः

भुवश्च। , ३।२।१३८

"योगविभाग उत्तरार्थः" इति। उत्तरसूत्रे भवतरेवानुवत्र्तनं यथा स्यात्; अन्यथा यदि "णिभूभ्याञ्च" इत्येको योगः क्रियते तदा णिग्रहणमप्यनुकृष्येत। "भाजिष्णुना" इत्याद। लौकिकप्रयोगः। तस्योपन्यासो भाषायामपि "भ्राजृ दीप्तौ" (धा।पा।१८१) इत्येतस्मादिष्णुच्प्रदर्शनार्थः॥

बाल-मनोरमा

भुवश्च ९२०, ३।२।१३८

भुवश्च। छन्दसीत्येवेति। भूधातोरिष्णुच् स्यात्तच्छीलादिषु छन्दसीत्यर्थ-। अण्यन्तार्थ आरम्भः।

तत्त्व-बोधिनी

भुवश्च ७५५, ३।२।१३८

नैतदिति। चकारस्याऽनुक्तसमुच्चयार्थत्वमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ग्लाजिस्थश् च क्स्नुः ३।२।१३९

छन्दसि इति निवृत्तम्। ग्ला जि स्था इत्येतेभ्यो धातुभ्यः, चकारात् भुवश्च तच्छीलादिषु क्स्नुः प्रत्ययो भवति। ग्लास्नुः। जिष्णुः। स्थास्नुः। भूष्णुः। गिच्चायं प्रत्ययो न कित्। तेन स्थः ईकारो न भवति। क्ङिति च १।१।५ इत्यत्र गकारो ऽपि चर्त्वभूतो निर्दिश्यते, तेन गुणो न भवति। श्र्युकः किति ७।२।११ इत्यत्र अपि गकरो निर्दिश्यते, तेन भुव इड् न भवति। क्स्तोर्गित्त्वान् न स्थ ईकारः कङितोरीत्वशासनात्। गुणाभावस्त्रिषु स्मार्यः श्र्युको ऽनिट्त्वं गकोरितोः। दंशेश्छन्दस्युपसङ्ख्यानम्। दंक्ष्णवः पशवः।

न्यासः

ग्लाजिस्थश्च क्स्नुः। , ३।२।१३९

अथ स्थास्नुरित्यत्र "घुमास्थागापा" ६।४।६६ इत्यादिसूत्रेण कस्मादीत्वं भवतीत्याह-- "पिच्चायम्" इत्यादि। ईत्वं

क्ङिति। तत्र "दीङो युडचि क्ङिति" [६।४।६३](#) इत्यनुवृत्तेः। न चायं कित्, न चायं ङित्; किं तर्हि? गित्। गकारस्य त्वश्रवणम्,चत्र्वभूतस्य निर्देशात्। यदि तर्हि गिदयम्, जिष्णुरित्यत्र गुणः प्राप्नोति, यस्मात् "क्ङिति च" [१।१।५](#) इति क्ङिति प्रत्यये गुणः प्रतिषिध्यते, न गितीत्यत आह-- "क्ङिति च" इत्यादि। न हि "क्ङिति च" [१।१।५](#) इत्यत्र ककारङकारावेव निर्दिश्येते, किं तर्हि? गकारोऽपि कृतचर्त्वः,तेन गित्यपि गुणो न भवति। भूष्णुरित्यत्र तर्हि श्र्युकः किति" [७।२।११](#) इट्()प्रतिषेध उच्यमानो गिति न स्यादित्यत आह-- "श्र्युकः" किति इत्यादिना गकारश्चत्र्वभूतो निर्दिश्यते" इति प्रकृतेन सम्बन्धः। "तेन" इति। गकारस्य चर्तवभूतस्य निर्देशेनेति। "कस्नोर्गित्वात्ित्यादि। गकार इत्संज्ञको यस्य स गित्, तद्भावो गित्त्वम्। तस्मात् गित्त्वान्न स्यास्नुरित्यत्रेकारः। तिष्ठतेरीकारो न भवति। कस्मात् पुनर्गित्तवादीकारो न भवतीत्याह-- "कङितोरित्वशासनात्" इत्यादि। ककारेऽकार उच्चारणार्थः। यस्मात् क्ङितीत्वमुच्यते, अयं तु गित्, तस्मात् क्ङिति विधीयमानमीत्वं गित्वादिह न प्राप्नोति। यद्येवम्, जिष्णुरित्यत्र गुणः प्राप्नोतीत्यत आह-- "गुणाभावः"इत्यादि। त्रिषु ककारगकारङकारेष्वित्संज्ञकेषु यो गुणप्रतिषेधः स स्मत्र्तव्य- = ज्ञातव्यः। "क्ङिति च" [१।१।५](#) इत्यत्र गकारश्चत्र्वभूतो निर्दिष्टः। यदि तर्हि गिदयम्, "भूष्णुरित्यत्र "श्र्युकः किति"[७।२।११](#) इत्यीट्()प्रतिषेधो न स्यादित्यत आह-- "श्र्युकोऽनिट्()चत्वमिट्प्रतिषेधो भवतीति वेदितव्यम्। यदि गकारश्चत्र्वभूतः "श्र्युक किति" [७।२।११](#) इतीट्प्रतिषेधो न स्यादित्यत आह-- "शयुकोऽनिट्()त्वम्" इत्यादि। गकारोऽपि ततश्चत्र्वभूतो निर्दिश्यते। तन ककारगकारयोद्र्वयोरपीत्संज्ञकयोः श्र्युकोऽनिट्()त्वमिट्प्रतिषेधो भवतीति वेदितव्यम्। यदिगकारश्चत्त्रवभूतः "श्र्युकः किति" [७।२।११](#) इत्यत्र निर्दिश्यते," हशि च" [६।१।११०](#) इत्युत्वं प्राप्नोति, तस्यासिद्धत्वात्? सौत्रत्वान्निर्देशश्यासंहितया पाठान्न भविष्यतीत्यदोषः। वामनस्य त्वेतत् सर्वमनभिमतम्। यथा नाभिमतं तथा "क्ङिति च" [१।१।५](#) इत्यत्र प्रतिपादितम्। "दंशेः"इत्यादि। उपसंख्यानशब्दः प्रतिपादने वत्र्तते। "दन्श दंशने" (धा।पा।८९८) इत्येतस्मादपि क्स्नुप्रत्ययस्योपसंख्यानम् = प्रतिपादनं कत्र्तव्यम्। तत्रेदं प्रतिपादनम्-- पूर्वसूत्राच्चकारोऽनुत्र्तते, स चानुक्तसमुच्चयार्थः, तेन दंशेरपि भविष्यतीति। "दंक्ष्णवः" इति। व्रश्चादिना [८।२।३६](#) षत्वम्, "षढोः कः सि" [८।२।४१](#) इति कत्वम्। "अनिदिताम्" [६।४।२४](#) इत्यनुनासिकलोपो न भवति, क्स्नोर्गित्वात्। ये तु कित्वमिच्छन्ति, तैरिह नकारलोपप्रतिषेधः "नाञ्चेः पूजायाम्" [६।४।३०](#) इत्यत्र नेति योगविभागेन कत्र्तव्यः। यत्नान्तरं वा तैरास्थेयम्-- नकारस्यानुस्वारः, तस्य परसवर्णः॥

बाल-मनोरमा

ग्लाजिस्थश्च ९२१, ३।२।१३९

ग्लाजिस्थश्च। निवृत्तमिति। व्याख्यानादिति भावः। चाद्भुव इत्यनुवकृष्यते। ग्ला, जि, स्था एषां द्वन्द्वात्पञ्चमी। ग्ला, जि,स्था, भू इत्येभ्यः क्स्नुः स्यात्तच्छीलादिष्वित्यर्थः। ककार इत्। "स्थास्नु" इत्यत्र कित्त्वलक्षणं "घुमास्थे" तीत्त्वमाशङ्क्याह-- गिदयमिति। सूत्रे चर्त्वेन ककारनिर्देश इति भावः। गित्त्वान्न गुण इति। "क्क्ङिति चे"त्यत्र गस्य चर्त्वेन ककारान्तरप्रश्लेषादिति भावः। ननु भूष्णुरित्यत्र इट् स्यात्, "श्र्युकः किती"ति कित एव इण्निषेधात् , अस्य च गित्त्वादित्यत आह-- श्र्युक इति। प्रश्लेषादिति। चर्त्वेनेति भावः।

तत्त्व-बोधिनी

ग्लाजिस्थश्च ग्स्नुः ७५६, ३।२।१३९

ईत्त्वं नेति। "घुमास्थे"त्यादिः। गित्त्वादिति। "क्ङिति चे"त्यत्र गकारं प्रश्लिष्य गिति किति ङितीति व्याख्यानादिति भाव-। गकारप्रश्लेषादिति। नन्वेवं गकारे चत्र्वस्याऽसिद्धत्वात् "हशिचे"त्युत्वं स्यादित चेत्। सत्यम्। सौत्रोऽयं निर्देशः। तथा च वार्तिकं-- ग्स्नोर्गित्त्वान्न स्थ ईकारः। क्ङितोरीत्त्वप्रशासनत्। गुणाऽभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरितोः"

इति। दङ्क्ष्णव इति। दंश दशने। "व्रश्चे"त्यादिना षत्वे "षढोः कः सी"ति कत्वम्। "आदेशप्रत्यययो"रिति षत्वम्। "अनिदिती"मिति नलोपो न,ग्स्नोर्गित्त्वेन प्राप्त्यभावात्।

---

सूत्रम्

काशिका-वृत्तिः

त्रसिगृधिधृषिक्षिपेः क्नुः ३।२।१४०

त्रसादिभ्यो धतुभ्यः तच्छीलादिषु क्नुः प्रत्ययो भवति। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः।

न्यासः

त्रसिगृधिधषिक्षिपेः क्नुः। , ३।२।१४०

"त्रस {धारणे-- धा।पा।} उद्वेगे" (धा।पा।१७४१), "गृधु अभिकांक्षायाम्" (धा।पा।१२४६) , "ञिघृषा प्रगल्भ्ये" (धा।पा।१२६९), "क्षिप प्रेरणे" (धा।पा।१२८५)। "त्रस्नुः" इति। "नेड्()वशिकृति"(७।२।८) इतीट्? प्रतिषेधथः। "गृघ्नुः "इति। "क्ङिति च" १।१।५ इति गुणाभावः॥

बाल-मनोरमा

त्रसिगृधिधृषिक्षिपेः क्नुः ९२२, ३।२।१४०

त्रसिगृधि। "तच्छीलादिषु कर्तृष्वि"ति शेषः। त्रस्नुरिति। "नेड्वशी"ति नेट्। गृध्नुः धृष्णुरित्यत्र कित्त्वान्न गुणः।

तत्त्व-बोधिनी

त्रसिगृधिधृषिक्षिपेः क्नुः ७५७, ३।२।१४०

त्रस्नुरिति। "नेड्वशि" इति नेट्।

---

सूत्रम्

काशिका-वृत्तिः

शमित्यष्टाभ्यो घिनुण् ३।२।१४१

इति शब्दः आद्यर्थः। शमादिभ्यो धातुभ्यो ऽष्टाभ्यः तच्छीलादिषु कर्तृषु घिनुण् प्रत्ययो भवति। शम उपशमे इत्यतः प्रभृति मदी हर्षे इत्येवम् अन्तः शमादिर् दिवाद्यन्तर्गणः। घकार उत्तरत्र कुत्वार्थः। उकार उच्चारणार्थः। णकारो वृद्ध्यर्थः। शमी। तमी। दमी। श्रमी। भ्रमी। क्लमी। प्रमादी। उन्मादी। अष्टाभ्यः इति किम्? असिता।

न्यासः

शमित्यष्टाभ्यो घिनुण्। , ३।२।१४१

"शमु उपशमे" (धा।पा।१२०१), "तमु काङ्क्षायाम्"(धा।पा।१२०२), "दमु {उपशमे-धा।पा।} उपरमे" (धा।पा।१२०३), "श्रमु तपसि खेदे च" (धा।पा।१२०४), "भ्रमु अनवस्थाने" (धा।पा।१२०५), "क्षमु सहने" (धा।पा।१२०६), "क्लमु ग्लानौ" (धा।पा।१२०७), "मदी हर्षे"(धा।पा।१२०८)। "उत्तरत्र कुत्वार्थः" इति। सम्पर्कीत्यादौ "चजोः कु घिण्यतोः" ७।३।५२ इति यथा स्यात्। "उकार उच्चारणार्थः" इति। अनुबन्धत्वमस्य निरस्यति। अनुबन्धत्वे सति शमिनौ शमिन इति "उगिदचाम्" ७।१।७० इति नुम् प्रसज्येत। इह शमिनितराम्, शमिनितमामिति "नद्याः शेषस्यान्यतरस्याम्" ६।३।४३

इति वर्त्तमाने "उगितश्च" ६|३|४४ इत्यन्यतरस्यां ह्यस्वत्वं स्यात्, अन्यथा ह्रस्यानुबन्धकरणमनर्थकं स्यात्| तस्मदुच्चारणार्थ एवोकारो भवति| ह्यस्वत्वञ्च "घरूपकल्पचेलड्()ब्राउवगोत्रमतहतेषु" ६|३|४२ इत्यनेन नित्यं भवति| "शमी" इति| "अत उपधाया-" ७|२|११६ इति वृद्धिर्न भवति, "नोदात्तोपदेश" ७|३|३४ इत्यादिना प्रतिषिद्धत्वात्| "सौ च" ६|४|१३ इति दीर्घः| "असिता"इति| "असु क्षेपणे" (धा|पा|१२०९) तृनि भवति॥

बाल-मनोरमा

शमिष्टाभ्योघिनुण् ९२३, ३|२|१४१

शमित्यष्टाभ्यः| इति शब्द आदिपर्यायः| शमादयो दिवादौ स्थिताः| तेभ्योऽष्टाभ्यो घिनुण् स्यात्तच्छीलादिष्वित्यर्थः| घित्वमुत्तरसूत्रार्थम्| "अकर्मकेभ्य एव घिनु"णिति भाष्यम्| शमिनितरा शमिनीतरेति| शमिन्शब्दात्स्त्रियां नान्तलक्षणङीबन्तात्तरबन्ताट्टाप्| ह्यस्वविकल्प इति| भाष्यमते उगित्त्वाद्ध्रस्वः| काशिकामते तु उगित्त्वाऽभावन्न ह्यस्वः| न च ह्यस्वाऽभावे "तसिलादिषु" इति पुंवत्त्वं शङ्क्यं, "संज्ञापूरण्योश्चे"ति निषेधात्| ननु भाष्यरीत्या उगित्त्वाभ्युपगमे शमी शमिनौ इत्यादौ "उगिदचा"मिति नुम् स्यादित्याशङ्क्य निराकरोति-- न चैवमपि| झल्ग्रहणमपकृष्येति| "नपुंसकस्य झलचः" इति उत्तरसूत्रादिति भावः| एतच्च प्रकृतसूत्रे, "युवोरनाकौ" इति सूत्रे च भाष्ये स्पष्टम्| शमादिभ्यो घिनुणि उपधावृद्धिमाशङ्क्याह-- नोदात्तेति| प्रमादीति| प्रमादीति| मान्तत्वाऽभावान्न वृद्धिनिषेधः| ननु उत्पूर्वान्मदेरुन्मादीति कथं घिनुण्, अलङ्कृञादिसूत्रे उत्पूर्वान्मदेर्विशिष्य इष्णुचो विधानादित्यताअह-- उत्पूर्वादित्यादिना| ननु कथमत्र ताच्छीलिके घिनुणि वाऽसरूपविधिप्रवृत्तिः, "ताच्छीलिकेषु वाऽसरूपविधिर्नास्ती"ति निषेधादित्यत आह-- ताच्छीलिकेष्विति| इयं परिभाषा "नन्दहिंसे"त्यादिवक्ष्यमाणसूत्रे ज्ञापितेति भाष्ये स्पष्टम्| प्रायिकमिति| एतच्च "सूददीपदीक्षश्चे"ति दीपग्रहणादिति "जुचङ्क्रम्यदन्द्रम्ये"ति सूत्रे भाष्ये स्पष्टम्|

तत्त्व-बोधिनी

शमिष्टाभ्योधिनुण् ७५८, ३|२|१४१

शमित्यष्टाभ्यो| इतिशब्द आद्यर्थः| शमिनीतरेत्यत्रेति| अत्र नव्याः-- विद्वत्तरेतिवत्तसिलादिष्विति पुंवद्भावेन शमितरेति भाव्यम्| न च उगित्त्वाभ्युपगमस्य फलाऽभावाद्ध्रस्विकल्प एव भवतीति वाच्यं, पाक्षिकह्यस्वेन उगित्करणस्य चरितार्थत्वात्| ह्यस्वाऽभावपक्षे तु पुंवद्भावस्य दुर्वारत्वादित्याहुः|

---

सूत्रम्

काशिका-वृत्तिः

संपृचानुरुधाऽङ्यमाऽङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाऽक्रीडविविचत्
च ३|२|१४२

घिनुणनुवर्तते| संपृचादिभ्यो धातुभ्यो घिनुण् भवति तच्छीलादिषु| पृची सम्पर्के इति रुधादिर् गृह्यते नत्वदादिर् लुग्विकरणत्वात्| परिदेविर्भ्वादिर्गृह्यते देवृ देवने इति| क्षिप प्रेरणे दिवादिस्तुदादिश्च सामानेन गृह्यते| युज समाधौ दिवादिः, युजिर् योगे रुधादिः द्वयोरपि ग्रहणम्| रञ्ज रागे इत्यस्य निपातनादनुनासिकलोपः| संपर्की| अनुरोधी| आयामी| आयासी| परिसारी| संसर्गी| परिदेवी| संज्वारी| परिक्षेपी| परिराटी| परिवादी| परिदाही| परिमोही| दोषी| द्वेषी| द्रोही| दोही| योगी| आक्रीडी| विवेकी| त्यागी| रागी| भागी| अतिचारी| अपचारी| आमोषी| अभ्याघाती|

न्यासः

सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यज
, ३।२।१४२

"पृची सम्पर्के" (धा।पा।१४६२) सम्पूर्वः। "रुधिर् आवरणे" (धा।पा।१४३८) अनुपूर्वः;"यम उपरमे" (धा।पा।९८४), "यसु प्रयत्ने" (धा।पा।१२१०) आङ्पूर्वः,"सृज विसर्गे" (धा।पा।११७८), "ज्वर रोगे" (धा।पा।७७६) सम्पूर्वः;"क्षिप प्रेरणे" (धा।पा।१२८५), "रट परिभाषणे" (धा।पा।२९७), "वद वक्ताव्यां वाचि" (धा।पा।१००९), "दह भस्मीकरणे" (धा।पा।९९१), "मुह वैचित्त्ये" (धा।पा।११९८) परिपूर्वः, "दुष वैकृत्ये" (धा।पा।११८५), "द्विष अप्रीतौ" (धा।पा।१०१३), "द्रुह जीघांसायाम्" (धा।पा।११९७),"दुह प्रपूरणे" (धा।पा।१०१४), "क्रीड़ विहारे" (धा।पा।३५०) आङ्पूर्वः, "विजिर् पृथग्भावे" (धा।पा।१०९४) विपूर्वः, "त्यज {हानौ इत्येव-धा।पा} वयोहानौ" (धा।पा।९८६), "रञ्ज रागे" (धा।पा।९९९), "भज सेवायाम्" (धा।पा।९९८), "चर गत्यर्थ" (धा।पा।५५९) अतिपूर्वः, स एवानुपूर्वः, "मुष स्तेये" (धा।पा।१५३०) आङ्पूर्वः, "हन हिंसागत्योः" (धा।पा।१०१२) अभ्याङ्पूर्वः। शरे()षा वृत्तावेव निर्दिष्टाः। "न त्वदादिः"इति। "गृह्रते"इति सम्बध्यते। आदादिकः कस्मान्न गृह्रत इत्याह-- आदादिकस्तु लुग्विकरणः, तस्मात् स न गृह्रते। "परिदेविभ्र्वादिः" इति। "गृह्रते" इति सम्बन्धः। अथ परिदिव#ए#ः क्रीडाद्यर्थस्य ण्यन्तस्य ग्रहणं कस्मान्न भवति? अण्यन्तैरितरैः साहचर्यात्। "सामान्येन गृह्रते" इति। विशेषाभावात्। "द्वयोरपि ग्रहणम्" इति। तत एव हेतोः। "निपातनादनुनासिकलोपः" इति। "त्यजरज"इति सूत्रे निरनुनासिकस्योच्चारणमेव निपातनम्। "सम्पर्की" इति। लघूपधगुणः। "आयामी" इति। "अत उपधायाः" ७।२।११६ इति वृद्धिः। "परिसारी" इति। अत्रापि "अचो ञ्णिति" ७।२।११५ इति वृद्धिः। "अभ्याघाती" इति। पूर्ववद्()घत्वतत्वे॥

बाल-मनोरमा

संपृचानुरुधाड�माड�सपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यज
९२४, ३।२।१४२

संपृचानु। संपृच, अनुरुध, आड()म, आड()स, परिसृ, संसृज, परिदेवि, संज्वर, परिक्षिप, परिरट, परिवद, परिदह, परिमुह, दुष, द्विष, द्रुह, दुह, युज, आक्रीड, विविच, त्यज, रज, भज, तिचर, अपचर, आमुष , अभ्याहन्, एषां सप्तविंशतेद्र्वन्द्वात्पञ्चमी। संपर्कीति। "चजो"रिति कुत्वम्। अनुरोधीत्यादौ लघूपधगुणः। अदुपधेषु उपधावृद्धिः। परिदेवीति। "देवृ देवने" भ्वादिः। दीव्यतेस्तु ण्यन्तस्य ग्रहणं , लाक्षणिकत्वात्, अण्यन्तैः साहचर्याच्च। अभ्याघातीति। "हनस्तोऽचिण्णलो"रिति तत्वम्। "हो हन्ते" रिति कुत्वम्।

तत्त्व-बोधिनी

संपृचानुरुधाड�माड�सपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यज
७५९, ३।२।१४२

संपृचा। संपर्कीति। पृची संपर्के। "चजो" कुत्वं। गुणः। परिदेवीति। देवृ देवने भ्वादिः। ण्यन्तस्य दीव्यतेस्तु नेह ग्रहणं, लाक्षणिकत्वात्, अण्यन्तैः साहचर्याच्च। अभ्याघातीति। अभ्याङ्पूर्वाद्धन्तेर्हस्य कुत्वेन घः। "हनस्तोऽचिण्णलोःर" इति नस्य तः। "अत उपधायाः" इति वृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

वौ कषलसकत्थस्रम्भः ३।२।१४३

कष हिंसार्थः, लस श्लेषणक्रीडनयोः, कत्थ श्लाघायाम्, स्रम्भु विश्वासे, एतेभ्यो धातुभ्यो विशब्दे उपपदे घिनुण् प्रत्ययो भवति। विकाषी। विलासी। विकत्थी। विस्रम्भी।

न्यासः

वौ कषलसकत्थरुआम्भः।, ३।२।१४३

बाल-मनोरमा

वौ कषलसकत्थरुआम्भः ९२५, ३।२।१४३

वौ कषलस। कष, लस, कत्थ, रुआम्भ् एषां द्वन्द्वात्पञ्चमी। एभ्यो घिनुण् स्यात्ताच्छील्यादिष्वित्यर्थः।

तत्त्व-बोधिनी

वौ कषलसकत्थरुआम्भः ७६०, ३।२।१४३

वौ कष। कष हिंसार्थः, लस श्लेषण क्रीडनयोः, कत्थ श्लाघायाम्, रुआम्भु वि()आआसे। अपे च लषः। लष कान्तौ।

---

सूत्रम्

काशिका-वृत्तिः

अपे च लषः ३।२।१४४

लष कान्तौ, अस्माद् धातोः अप उपपदे, चकाराद् वौ च घिनुण् भवति। अपलाषी। विलाषी।

न्यासः

अपे च लषः।, ३।२।१४४

बाल-मनोरमा

अपे च लषः ९२६, ३।२।१४४

अपे च लषः। चाद्वाविति। वौ उपपदेऽपीत्यर्थः। अपे वौ च उपपदे लषोर्घिनुणित्यर्थः। ताच्छील्यादिष्वेव।

---

सूत्रम्

काशिका-वृत्तिः

प्रे लपसृद्रुमथवदवसः ३।२।१४५

प्रे उपपदे लपादिभ्यः घिनुण् भवति। प्रलपी। प्रसारी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी। वसः इति वस निवासे इत्यस्य ग्रहणं नाच्छादनार्थस्य, लुग्विकरणत्वात्।

न्यासः

प्रे लपसृद्रुमथवदवसः।, ३।२।१४५

"प्रलापी, प्रसारी" इति। "लप व्यक्तायां वाचि"(धा।पा।४०२), "सृ गतौ" (९३५)। "प्रद्रावी, प्रमाथी"इति। "दु द्रु गतौ" (धा।पा।९४४ ९४५), "{मथे विलोडने-धा।पा।} मध विलोडने" (धा।पा।८४८)। "नाच्छादनार्थस्य" इति। न "वस आच्छादने" (धा।पा।१०२३)इत्येतस्य॥

बाल-मनोरमा

प्रे लपसृद्रुमथवदवसः ९२७, ३।२।१४५

प्रे लप। लप, सृ, द्रु, मथ, वद, वस्, एषां षण्णां द्वनद्वात्पञ्चमी। प्रे उपपदे एभ्यो घिनुण् स्यात्ताच्छील्यादिष्वित्यर्थः।

तत्त्व-बोधिनी

प्रे लपसृद्रुमथवदवसः ७६१, ३।२।१४५

प्रे लप। रप लप व्यक्तायां वाचि। प्रमाथीति। मथे विलोडने।

---

सूत्रम्

काशिका-वृत्तिः

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ३।२।१४६

निन्दाऽदिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु वुञ् प्रतयो भवति। पञ्चम्यर्थे प्रथमा। क्लिश उपतापे, क्लिशू विबाधने। द्वयोरपि ग्रहणम्। निन्दकः। हिंसकः। क्लेशकः। खादकः। विनाशकः। परिक्षेपकः। परिराटकः। परिवादकः। व्याभाषकः। असूयकः। ण्वुलैव सिद्ध वुञ्विधानं ज्ञापनार्थं, ताच्छीलिकेषु वा ऽसरूपन्यायेन तृजादयो न भवन्ति इति।

न्यासः

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ्। , ३।२।१४६

"णिदि कुत्सायाम्" (धा।पा।६६), "अर्द हिसि हिंसायाम्" (धा।पा।१८२८, १८२९), "खादृ भक्षणे" (धा।पा।४९), "णश अदर्शने" (धा।पा।११९४) विपूर्वः, हेतुमण्ण्यन्तः। "क्षिपिः"पूर्वोक्त एव, एवं रटिर्वदिः परिपूर्वो हेतुमण्ण्यन्तः, "भाव व्यक्तायां वाचि (धा।पा।६१२) व्याङ्पूर्वः। "असूय" इति कण्डवादियगन्तस्य ग्रहणम्। अत्र क्लिशेरुपतापार्थस्य भाषतेश्च "अनुदात्तेश्च हलादेः" ३।२।१४९ इति युचि प्राप्ते वुञ्चिधानम्। शेषेभ्यस्तु तृनि। ननु "परश्च" ३।१।२ इति दिग्योगलक्षणया पञ्चम्या भवितव्यम्, यथा वृत्तौ -- निन्दादिभ्यो धातुभ्यः" इति, तत्कथं सूत्रे प्रथमेत्यत आह-- "पञ्चम्यर्थे प्रथमा" इति। "व्यत्ययो बहुलम्" ३।१।८५ इतिसुब्व्यत्ययेनेति भावः। समाहारद्वन्द्वाच्च प्रथमैकवचनम्, पुंल्लिङ्गं तु व्यत्ययेन। "असूयकः"इति। "अतो लोपः" ६।४।४८ इत्यकारलोपः। अथ किमर्थं निन्दादिभ्यो धातुभ्यो वुञ् विधीयते, यावता वाऽसरूपविधिनैव निन्दकादयः,सिद्धाः, तदेव हि रूपम्, स एव स्वरः, इहैवैकत्र स्वरविशेषोऽस्ति-- असूयक इति, अत्र वुञि सति ञित्वादादेरुदात्तत्वं भवति, ण्वुलि तु सति लित्प्रत्ययात् पूर्वस्य स्यात्, तस्मादसूयतेरेवैकस्माद्()वुञ्, विधातव्यः, नेतरेभ्यो निन्दादिभ्य इत्यत आह-- "ण्नुलैव सिद्धे"इत्यादि। यदि तच्छीलादिषु वाऽसरूपविधिना तृजादयोऽपि स्युः निन्दादिभ्यो वुञ् न विदध्यात्, विहितश्चासौ, अत एव वुञ्विधानं ज्ञापयति-- तच्छीलादिषु वाऽसरूपविधिर्नास्तीति। तेनालङ्कारकः, निराकत्र्तेत्यादीनां तच्छीलादिषु साधुत्वं न भवति॥

बाल-मनोरमा

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषाऽसूयो वुञ् ९२८, ३।२।१४६

निन्दहिंस। निन्द, हिंस, क्लिश, खाद, विनाश, परिक्षिप, परिरट, परिवादि, व्याभाष, असूय एषां दशानां द्वन्द्वः। पञ्चम्यर्थे प्रथमेति। सौत्रं पुंस्त्वमेकवचनं वेति भावः। विनाशेति-- विपूर्वस्य नशेण्र्यन्तस्य भाविना णिलोपेन निर्देशः। शकारादकार उच्चारणार्तः। केचित्तु "विनाशी"ति ण्यन्तमेव पठन्ति। परिवादीति-- तु ण्यन्तमेव। असूयेति-- कण्ड्वदियगन्तः। इत्यादीति। क्लेशकः, खादकः,विनाशकः, परिक्षेपकः, परिराटकः, परिवादकः, व्याभाषकः, असूयकः।

ननु "असूयो वु"ञिति असूयतेरेव वुञ्विधीयतां , न तु निन्दादिभ्योऽपि, तेषां ण्वुलैव सिद्धेः। लित्स्वरञित्स्वरयोस्तु नास्ति विशेषः, उभयथाप्याद्युदात्तत्वात्। असूयतेस्तु ण्वुलि "लिती"ति प्रत्ययात्पूर्वं उकार उदात्तः। वुञि तु "ञ्नित्यादिर्नित्य"मिति धातोरकार उदात्त इति विशेषः। तस्मादसूयतेरेव वुञ्विधिरिति युक्तमित्यत आह-- ण्वुला सिद्धे इति। तृजादयो नेतीति। तच्छीलादिषु वासरूपविदिस्त्तवे हि तद्विषये तृनि प्राप्ते वुञ्विधिरर्थवान्। अतस्तच्छीलादिषु वासरूपविधिर्न प्रवर्तत इति भावः। इदं च प्रायिकम्। तत्फलं तु ऊत्पूर्वान्मदेरलङ्कृञादिसूत्रेण इष्णुजुक्तो, वासरूपविधिना घिनुणपीति मूल एवानुपदमुक्तम्।

तत्त्व-बोधिनी

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषाऽसूयो वुञ् ७६२, ३।२।१४६

निन्दहिंस। इह सूत्र विनाशेति विपूर्वस्य नशेण्यन्तस्य पाठो निर्विवाद एव। असूयतिः कण्ड्वादियगन्तः, निन्दादीनामसूयान्तानां समाहारद्वन्द्वे सौत्रं पुस्त्वम्। स्यादेतत्-- असूयतेरेव वुञ् विधेयो नेतरेभ्यः निन्दादीनां निन्दादीनां ण्वुलैव सिद्धेः। न हि तत्र लित्स्वरनित्स्वरयोर्विशेषोऽस्ति, उभयथाप्याद्युदात्तत्वात्। असूयतेस्तु ण्वुलि "लिती"ति प्रत्ययात्पूर्वमुदात्तं, वुञि तु "ञ्नित्यादिर्नित्य"मित्यादिरुदात्त इति विशेषः। तत्राह --ण्वुलेति। तृजादयो नेति। नेदं ण्वुल्विषयकमेव ज्ञापकं किंतु सामान्यतः प्रत्ययमात्रविषयकमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

देविक्रशोश् च उपसर्गे ३।२।१४७

देवयतेः क्रुशेश्च उपसर्गे उपपदे वुञ् पत्ययो भवति। आदेवकः। परिदेवकः। आक्रोशकः। परिक्रोशकः। उपसर्गे इति किम्? देवयिता। क्रोष्टा।

बाल-मनोरमा

देविक्रुशोश्चोपसर्गे ९२९, ३।२।१४७

देवीक्रुशोः। देवीति चुरादिण्यन्तस्य, "दिवु क्रीडा"इत्यस्य च ग्रहणम्। उपसर्गे उपपदे देवयतेः क्रुशेश्च तच्छीलादिषु वुञ् स्यादित्यर्थः।

तत्त्व-बोधिनी

देविक्रुशोश्चोपसर्गे ७६३, ३।२।१४७

देविक्रुशोः। दीव्यतेर्हेतुमण्ण्यन्तस्य, दिवु कूजने इति चुरादिण्यन्तस्य च ग्रहणम्।

---

सूत्रम्

काशिका-वृत्तिः

चलनशब्दार्थादकर्मकाद् युच् ३।२।१४८

चलनार्थेभ्यः शब्दार्थेभ्यश्च अकर्मकेभ्यो धातुभ्यस् तच्छीलादिषु कर्तृषु युच् प्रत्ययो भवति। चलनः। चोपनः। शब्दार्थभ्यः शब्दनः। रवणः। अकर्मकातिति किम्? पठिता विद्याम्।

न्यासः

चलनशब्दार्थादकर्मकाद्युच्।, ३।२।१४८

चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः। शब्दः श्रोत्रविषोऽर्थः। "चलनः, चोपनः" इति। "चल कम्पने" (धा।पा।८३२),"चुप मन्दायां गतौ" (धा।पा।४०३)। "शब्दनः" इति। "शब्द {उपसर्गादाविष्कारे भाषणे च"-- धा।पा।}शब्दने उपसर्गा विष्कारे " (धा।पा।१७१४) इति चौरादिकः। अथ वा-- "प्रतिपदिकाद्धात्वर्थे बहुलम्" (ग।सू।१८६० चुरादिः- १९१५) इत्यादिना णिच्, "शब्दवैरकलह" ३।१।१७ इत्यादिना णिजन्ताद्युच्। "रवणः"इति। "रु शब्दे" (धा।पा।१०३४)॥

बाल-मनोरमा

चलनशब्दार्थादकर्मकाद्युच् ९३०, ३।२।१४८

चलन। शब्दन इति। "शब्द शब्दने" चुरादिः। शब्दनं - शब्दोच्चारणम्। धात्वर्थोपसङ्ग्रहादकर्मकः।

तत्त्व-बोधिनी

चलनशब्दार्थादकर्मकाद्युच् ७६४, ३।२।१४८

चलनशब्दार्था। चल कम्पने, चुप मन्दायां गतौ, कपि चलने,शब्द शब्दने चुरादिः, रु शब्दे। चलन इत्यादि। "युवो"रित्यनादेशः।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तैतश् च हलादेः ३।२।१४९

अनुदात्तेद् यो धतुः हलादिरकर्मकः, ततश्च युच् प्रत्ययो भवति। वर्तनः। वर्धनः। अनुदात्तेतः इति किम्? भविता। हलदेः इति किम्? एधिता। आदिग्रहनं किम्? जुगुप्सनः। मीमांसनः। अकर्मकातित्येव, वसिता वस्त्रम्।

न्यासः

अनुदात्तेश्च हलादेः।, ३।२।१४९

"एधिता"इति। "एध वृद्धौ" (धा।पा।२)। "जुगुप्सनः,मीमांसनः" इति "गुप्तिज्किद्भ्यः सन्"३।१।५ "मान्बध" ३।१।६ इत्यादिना सनि दीर्घे च कृते भवतः। अत्र तदन्तौ समुदायावनुदात्तेतौ अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति। तथा च यद्यादिग्रहणं न क्रियते तदा ताभ्यां न स्यात्; यस्मादसत्यादिग्रहणे हला तु तदन्तविधिर्विज्ञायते-- अनुदात्तेतो हलन्तादिदिति। न च जुगुप्समीमांसशब्दौ हलन्तौ, किं तर्हि? अजन्तौ। आदिग्रहणे सत्यहलन्तेभ्योऽपि भवतीत्यादिग्रहणं कत्र्तव्यम्। तच्च तदा कत्र्तव्यं यदातो लोप आर्धधातुके परतो भवतीत्ययं पक्षः, न तु यदार्धधातुके विषयभूत इत्येष पक्षः। तदा ह्यार्धधातुकविवक्षायां विज्ञायमाने हलन्तग्रहणमनर्थकं स्यात्; व्यावत्र्याभावात्। तस्माद् हल्ग्रहणसामथ्र्यादादेर्विशेषणं विज्ञास्यत इत्यादिग्रहणं न कत्र्तव्यमेव। अत्रादिग्रहणं विस्पष्टार्थमेव व्याख्येयम्। "वसिता" इति। "वस आच्छादने" (धा।पा।१०२३)॥

बाल-मनोरमा

अनुदात्तेतश्च हलादेः ९३१, ३।२।१४९

अनुदात्तेतश्च। आदिग्रहणाऽभावे हलन्तादित्यर्थः स्यात्, ततश्च जुगुप्सन इति न स्यात्, सन्नन्तस्य हलन्तत्वाऽभावात्।

अस्ति चाऽनुदात्तेत्वं सन्नन्तस्य, "गुप" इत्यनुदात्तेत्त्वस्य केवले प्रयोजनाऽभावेन सन्नन्तार्थत्वात्।

तत्त्व-बोधिनी

अनुदात्तेतश्च हलादेः ७६५, ३।२।१४९

अनुदात्तेश्च हलादेः। ननु सर्वोऽप्यनुदात्तेद्धलन्त एवेति तदन्तविधं बाधित्वा सामर्थ्याद्धलादरेव ग्रहीष्यते, तत्किमादिग्रहणेनेति चेत्। अत्राहुः-- आदिग्रहणाऽभावे हलन्ताष्वचरितार्थस्याऽनुबन्धस्य समुदायविसेषकत्वादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ३।२।१५०

जुप्रघृतिभ्यो धतुभ्यो युच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जु इति सौत्रो धतुः। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। गर्धनः। ज्वलनः। शोचनः। लषणः। पतनः। पदनः। चलनार्थानां पदेश्च ग्रहणं सकर्मकार्थम् इह। ज्ञापनार्थं च पदिग्रहणम् अन्ये वर्णयन्ति, ताच्छीलिकेषु मिथो वा असरूपविधिर् न अस्ति इति। तेन अलङ्कृञः तृन् न भवति अलङ्कर्ता इति। तथा हि पदेरुकञा विशेषविहितेन सामान्यविहितस्य युचो ऽसरूपत्वात् समावेशो भवेदेव, किम् अनेन विधानेन? ज्ञापनार्थं पुनर् विधीयते। प्रायिकं च एतद् ज्ञापकम्। क्वचित् समावेश इष्यत एव, गन्ता खेटं विकत्थनः।

न्यासः

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः। , ३।२।१५०

"जवनः"इति। "जु" सौत्रौ धातुः; गतौ वत्र्तत इत्येके। विशेषहेतौ वेग इत्यपरे। "चंक्रमणः, दन्द्रमणः"इति। "क्रमु पादविक्षेपे" (धा।पा।४७३)। "द्रम हम्म गतौ" (धा।पा।४६६, ४६७), "नित्यं कौटिल्ये गतौ" [३।१।२३](#) इति यङ्, द्विर्वचनम्, "नुगतोऽनुनासिकान्तस्य" [७।४।८५](#) इति नुक्, "अतो लोपः" [६।४।४८](#) इत्यकारलोपः, "यस्य हलः" [६।४।४९](#) इति यकारलोपः। "ज्वलनः, शोचनः" इति। "ज्वल ह्लल सञ्चलने"(धा।पा।८०४,८०५), "शुच शोके" (धा।पा।१८३)। ननु चात्र जुचंक्रम्यदंद्रम्यप्रभृतयश्चलनार्थाः,पदिस्त्वनुदात्तेत, हलादिश्च; तस्मादेतेभ्यो यथायोगं पूर्वयोगाभ्यां युच्, सिद्धः, ततः किमर्थमिह ग्रहणमित्याह-- "चलनार्थानाम्" इत्यादि। असति तेषां ग्रहम इह चंक्रमणो ग्रामस्येत्येवमादौ न स्यात्;ग्रामादेः कर्मणो विवक्षिततत्वात्। तस्मात् सकर्मकेभ्यो यथा स्यादित्येवमर्थमेषां ग्रहणम्। "ज्ञापकार्थम्" इत्यादिना मतान्तरं दर्शयति। "अलंकृञस्तृन्न भवति" इति। अनेनापि ज्ञापकस्य प्रयोजनम्। अलंकत्र्तेति साधुर्न भवतीत्यध्याहार्यम्। कथं पुनः पदिग्रहणं ज्ञापकमित्याह-- "तथा हि" इत्यादि। विशेषविहितेनोकञा बाधा मा भूत्, समावेश एव यथा स्यादित्येवमर्थमिह पदिग्रहणं क्रियते। यदि ताच्छीलिके वाऽसरूपविधिः स्यात् ततोऽसरूपत्वदेवोकञा समावेशः स्यादिति पदेर्युज्विधानमनर्थकं स्यात्। तस्माज्ज्ञापनार्थमेवैतद्विशेषविहितत्वम्; "अनुदात्तेतश्च हलादेः" [३।२।१४९](#) इति सामान्यलक्षणेन विहितत्वात्। यदि तर्हि वाऽसरूपविधेरभावो ज्ञाप्यते, गन्तेति च "अनुदात्तेतश्च हलादेः" [३।२।१४९](#) इति युज्न सिध्यति, "वौ कष"( ३।२।१४३) इत्यादिना धिनुणो विधानादित्यत आह-- "प्रयिकञ्च " इत्यादि। प्रायिकत्वञ्चोत्तरसूत्रे प्रतिपादयिष्यते॥

बाल-मनोरमा

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ९३२, ३।२।१५०

जुचङ्क्रम्य। जु, चङ्क्रम्य, दन्द्रस्य, सृ, गृधि, ज्वल, शुच, लष, पत, पद एषां दशानां द्वन्द्वात्पञ्चमी। एभ्यस्तच्छीलादिषु युच् स्यादित्यर्थः। धातुपाठे जुधातोरदर्शनादाह-- सौत्र इति। चङ्क्रमण इति। यङन्तायुच्। "यस्य हलः" इति यकारलोपः, अतो लोपः। एवं दन्द्रमणः, सरणः, गद्र्धनः, ज्वलनः, शोचनः, लषणः, पतनः, पदन इत्यप्युदाहार्यम्। पूर्वेणेति। "अनुदात्तेतश्च हलादे"रित्यनेनेत्यर्थः। तेनेति। उकञ् ह्रयं तच्छीलाधिकारस्थः। तत्र वाऽसरूपविधिनैव उकञा "अनुदात्तेतश्च हलादे"रिति विहितस्य पदेर्युचो बाधो न भविष्यतीति "जुचङ्क्रम्ये" ति युज्विधिरनर्थकः स्यादतस्तातच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति विज्ञायते इत्यर्थः। "निन्दहिंसे"ति सूत्रे "तच्छीलादिषु वासरूपविधिना तृजादयो ने"ति ज्ञापितम्। इह तु "ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्ती"ति ज्ञाप्यते इति न पौनरुक्त्यम्। तृन्नेति। अलम्पूर्वात्कृञोऽलङ्कृञित्यादिसूत्रविहितेन तच्छीलाधिकारस्थेन इष्णुचा "तृ"न्निति सामन्यविहितस्तच्चीलाधिकारस्थो बाध्यते इत्यर्थः।

तत्त्व-बोधिनी

जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ७६६, ३।२।१५०

जुचङ्क्रम्य। क्रमिद्रमी यङन्तौ। क्रमु पादविक्षेपे, द्रम हम्म मीमृ गतौ। पूर्वेणेति। "अनुदात्तेतश्चे" त्यनेन। इह "पदिग्रहणं सकर्मकार्थ" मिति वृत्तिकृतोक्तम्। भाष्ये तु अनभिधानादेव सकर्मकान्न भविष्यतीत्युक्तत्वात्। ज्ञापनार्थमेव तदित्याशयेनाह--- बाधा माभूदित्यादि। परस्परमिति। निन्दादिसूत्रे हि तच्चीलादिषु वासरूपविधिना तृजादयो नेति ज्ञापितम्, इह तु "ताच्छीलिकेषु परस्परं ने"ति ज्ञापितमिति विवेक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

क्रुधमण्डार्थेभ्यश् च ३।२।१५१

क्रुधकोपे, मडि भूषायाम् इत्येतदर्थेभ्यः च धतुभ्यो युच् प्रत्ययो भवति। क्रोधनः। रोषणः। मण्डनः। भूषणः।

न्यासः

क्रुधमण्डार्थेभ्यश्च। , ३।२।१५१

"तृन्" ३।२।१३५ इति तृनि प्राप्ते युज्विधीयते। इहोत्तरेऽपि प्रत्ययो यत्र विशेषो न विवक्ष्यते, तत्र तृन एवापवादो वेदितव्यः। "रोषणः"इति। "रुष रोषे" (धा।पा।१६७०)॥

बाल-मनोरमा

क्रुधमण्डार्थेभ्यश्च ९३३, ३।२।१५१

क्रुधमण्डार्थेभ्यश्च। "क्रुध कोपे" "मडि भूषायाम्" एतदर्थेभ्यो धातुभ्यो युच् स्यात्तच्छीलादिष्वित्यर्थः।

तत्त्व-बोधिनी

क्रुधमण्डार्थेभ्यश्च ७६७, ३।२।१५१

क्रुध। क्रुध क्रोधे, रुष रोषे, मडि भूषायाम्,भूष् अलङ्कारे।

---

सूत्रम्

काशिका-वृत्तिः

न यः ३।२।१५२

यकारान्तात् धतोः युच् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। क्नूयिता। क्ष्मायिता।

न्यासः

न यः।, ३।२।१५२

"पूर्वेण" इति। "अनुदात्तेतश्च हलादेः" ३।२।१४९ इत्यादिना सिद्धत्वात्। अथ "अय वय रय णय गतौ"(धा।पा।४७४,४७५,४८२,४८०) इत्यस्माद्धातोर्युचो विधानार्थञ्चैतत्कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्;यस्मान्नयतेः "अनुदात्तेतश्च" ३।२।१४९ इत्यादिनैव सिद्धत्वात्। तस्मात् प्रतिषेधार्थमिदम्। "क्नयिता, क्ष्मायिता" इति। "क्नूयी शब्द {उन्दने च-धा।पा।} उन्दे च" (धा।पा।४८५), "क्ष्मायी विधूनने" (धा।पा।४८६)॥

बाल-मनोरमा

न यः ९३४, ३।२।१५२

न यः। "य" इति पञ्चम्यनतं धातुविशेषणं। तदन्तविधिः। तदाह-- यकारान्तादिति। क्नूयिता। क्ष्मायितेति। "क्नुयी शब्दे उन्दन चट "क्ष्मायी विधूनने"। अनुदात्तेतश्च हलादे"रिति युच् निषिध्यते। तृनेव भवति।

तत्त्व-बोधिनी

न यः ७६८, ३।२।१५२

न यः। अय वय पय भय चय तय णय गताविति पठितस्य नयतेर्नाऽयं निर्देशः, अनुदात्तेत्त्वादेव युचः सिद्धत्वात्, किंतु नेति पृथक् पदमिति मत्वाऽऽह-- यकारान्तादिति। क्नूयिता क्ष्मायितेति। क्नूयी शब्दे उन्दे च, क्ष्मायी विधूनने।

---

सूत्रम्

काशिका-वृत्तिः

सूददीपदीक्षश् च ३।२।१५३

सूद दीप दीक्ष इत्येतेभ्यश्च युच् प्रत्ययो न भवति। अनुदात्तेत्त्वात् प्राप्तः प्रतिषिध्यते। सूदिता। दीपिता। दीक्षिता। ननु च दीपेर् विशेषविहितो रप्रत्ययः दृश्यते, नमिकम्पिस्म्यजसकमहिंसदीपो रः ३।२।१६७ इति, स एव वाधको भविष्यति, किं प्रतिषेधेन? वा ऽसरूपेण युजपि प्राप्नोति। ताच्छीलिकेषु च वा असरूपविधिर् न अस्ति इति प्रायिकम् एतदित्युक्तम्। तथा च समावेशो दृश्यते, कम्रा युवतिः, कमना युवतिः, इति योगविभागाद् विज्ञायते। अथवा मधुसूदनादयो नन्द्यादिषु द्रक्ष्यन्ते। कृत्यल्युटो बहुलम् ३।३।११३ इति ल्युडन्ता वा।

न्यासः

सूददीपदीक्षश्च।, ३।२।१५३

"षूद क्षरणे" (धा।पा।२५), "दीपौ दीप्तौ" (धा।पा।११५०), "दीक्ष {मौण्ड()एज्योपनयननियमव्रतादेशेषु-धा।पा} मौण्ड()ए" (धा।पा।६०९)। "ननु च" इत्यादि देश्यम्। "वाऽसरूपेण" इत्यादि परिहारः। स्यादेतत्--वाऽसरूपविधिर्नास्तीति ज्ञापितमेतत्। ततो नास्ति युचप्राप्तिरित्यत आह-- "ताच्छीलिक"इत्यादि। प्रायिकस्य चायमेव लिङ्गम्। यदि हि सर्वत्र वाऽसरूपविधेरभावः स्यात्, ततो विशेषविहितेनैव प्रत्ययेन बाधितत्वादेव युज्न भविष्यीति प्रतिषेधोऽनर्थकः स्यात्।

"तथा च" इत्यादिना ताच्छीलिकप्रत्ययेन समावेशं दर्शयन् प्रायिकत्वमेव ज्ञापकस्य द्रढयति। "कम्रा"इति। "नमिकम्पि" ३।२।१६७ इत्यादिना रप्रत्ययः। "कमना" इति। अनुदात्तेतश्च हलादेः"३।२।१४९ इति युच्प्रत्ययः। "कम्प्रा"इति। "कपि चलने"(धा।पा।२७५)। "सूदेः" इत्यादि चोद्यम्। "अनित्यम्" इत्यादि परिहारः। "योगविभागादविज्ञायते" इति। अनित्यत्वे साधनं "नयसूददीपदीक्ष" इत्येकयोगे कत्र्तव्ये यद्योगविभागं करोति तज्ज्ञापयति-- पूर्वस्मात् प्रतिषेधादस्य कश्चिद्विशेषोऽस्तीति। स पुवनर्विशेषोऽनित्यत्वमेव। यद्यपि दीपदीक्षतिभ्यामपि युच् प्राप्नोति, अनभिधान्न भवति॥

बाल-मनोरमा

सूददीपक्षश्च ९३५, ३।२।१५३

सूददीप। सूद, दीप, दीक्ष, एषां द्वन्द्वात्पञ्चमी। युज्नेति। शेषपूरणमिदम्। "अनुदात्तेतश्चे"ति प्राप्तो युच् प्रतिषिध्यते। नन्विह दीपग्रहणं व्यर्थं, "नमिकम्पिस्म्यजसकमहिंसदीपोरः" इति विशेषविहितेन रप्रत्ययेन युचो बाधसिद्धेः। नच वाऽसरूपविधिना तद्बाधः शङ्क्यः, ताच्छीलिकेषु वासरूपविधेः प्रतिषेधादित्यत आह-- नमिकम्पीति। रेणेति। रप्रत्ययेनेत्यर्थः। प्रायिकमिति। तथा चाऽत्र वासरूपविधिना ताच्छीलिकेनापि रप्रत्ययेन युचो बाधासंभवादिह दीपेर्युचो निषेधोऽर्थवानिति भावः। तेनेति। ताच्छीलिकेऽपि क्वचिद्वासरूपविदेः सत्त्वादित्यर्थः। कम्ना कमनेति। इच्छाशीलेत्यर्थः। अत्रापि "नमिकम्पी"ति रेण युचः पक्षे बाध इति भावः। आक्षिपति-- यदीति।यदि "सूददीपदीक्षश्चे"तिसूदेर्युच्प्रतिषिध्यते तदा "मधुशूदन" इति कथमित्यन्वयः। समाधत्ते-- नन्द्यादिरिति। "सूदि"रिति सेषः। तथा च "नन्दिग्रही"ति ल्युप्रत्यय इति भावः।

तत्त्व-बोधिनी

सूददीपदीक्षश्च ७६९, ३।२।१५३

सूददीप। सूद क्षरणे, दीपी दीप्तौ, दीक्ष मौण्ड()एज्यादौ। ताच्छीलिकेष्विति। "परस्पर" मिति शेषः। प्रायिकमिति। न केवलं यथाश्रुत [ म् ] भाष्यमवलम्ब्य युज्रयोरेव समावेश इति मन्तव्यं,किंतु प्रायिकत्वं एव भाष्यस्य तात्पर्यम्। तेन गमेः "लषपतपदे" त्युकञ्विषये तृन्नपि। गन्ता। गामुकः। तथा "वौ कषलसे"ति घिनुण्विषये युजपि-- विकत्थी विकत्थन इत्यादि सिध्यतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ३।२।१५४

लषाऽदिभ्यो धातुभः तच्छीलादिषु कर्तृषु उकञ् प्रत्ययो भवति। उपलाषुकं वृषलसङ्गतम्। प्रपातुका गर्भा भवन्ति। उपपादुकं सत्त्वम्। उपस्थायुका एनं पशवो भवन्ति। प्रभावुकमन्नं भवति। प्रवर्षुकाः पर्जन्याः। आघातुकं पाकलिकस्य मूत्रम्। कामुका एनं स्त्रियो भवन्ति। आगामुकं वारान्सीं रक्ष आहुः। किंशारुकं तीक्ष्णमाहुः।

न्यासः

लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्। , ३।२।१५४

"{उपस्थायुकाः-काशिका} उपस्थायुकः" इति। "आतो युक्" ७।३।३३ इत्यादिना युक्। "{प्रवर्षुकाः-काशिका} प्रवर्षुकः"इति। "वृषु मृषु सेचने"(धा।पा।७०६,७०७) इति। "कामुकाः"इति। "कमु कान्तौ"(धा।पा।४४३)। "नोदात्तोपदेश" (७।३।३४) इत्यादिना वृद्धिप्रतिषेधे प्राप्तेऽनाचमेरित्यत्र "चमिकमिवमीनामिति वक्तव्यम्" (वा।८४४) इति वृद्धिरेव भवति।

"{किंशारुकं-काशिका} शारुकः"इति। "शृ हिंसायाम्" (धा।पा।१४८८)। अपपूर्वाल्लषेः "अपे#ऐ च लषः"३।२।१४४ इति धिनुण् भवति। उक्तं हि प्राक्-- ताच्छीलिकेषु "ग्लाजिस्थश्च क्स्नुः" ३।२।१३९ इति वचनसामर्थ्यात्। गमेश्छन्दसि "आदृगम"३।२।१७१ इत्यादिना किकिनावपि भवतः। भाषायामपि;"भाषायां धाञ्कृञ्सृजनिगमिनमिभ्यः (वा।२८४) इत्युपसंख्यानात्। कमेः "नमिकम्पि" ३।२।१६७ इत्यादिना रप्रत्ययः॥

बाल-मनोरमा

लषपतपदस्थाभूवृषहनकमगमशृ?भ्य उकञ् ९३६, ३।२।१५४

लषपत। एभ्यो दशभ्य उकञ् स्यात्तच्छीलादिष्वर्थेषु। इत्यादीति। पादुकः। आतो युक्। स्थायुकः। भावुकः। वर्षुकः। घातुकः। "हनस्तः" इति तत्वम्। "हो हन्तेति" कुत्वम्। कामुकः। गामुकः। शारुकः।

---

सूत्रम्

काशिका-वृत्तिः

जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३।२।१५५

जल्पाऽदिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु षाकन् प्रत्ययो भवति। षकारो ङीषर्थः। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। वराकी।

लघु-सिद्धान्त-कौमुदी

जल्पभिक्षकुट्टलुण्टवृङः षाकन् ८४१, ३।२।१५५

न्यासः

जल्पभिक्षकुट्टलुण्?टवृङः षाकन्। , ३।२।१५५

"जप जल्प व्यक्तायां वाचि" (धा।पा।३९७,३९८), "भिक्ष "याच्ञायाम्" (धा।पा।६०६) "कुट्ट {छेदनेभर्त्सनयोः-धा।पा।} च्छेदने" (धा।पा।१५५८), "लुण्ट स्तेये"(धा।पा।१५६३)-- चौदादिकावेतौ। "वृङ सम्भवतौ" (धा।पा।१५०९)। जल्पेरकर्मकत्वविवक्षया "चलनशब्दार्थादकर्मकाद्युच्" ३।२।१४८ इति युचि प्राप्ते। भिक्षेरपि "अनुदात्तेतश्च हलादेः"३।२।१४९ इति युच्येव। कुट्टिलुण्टिभ्यां "णेश्छन्दसि"३।२।१३७ इतीष्णुचि। वृङोऽपि "आदृगमहन" ३।२।१७१ इत्यादिना किकिनोः प्राप्तयोस्तदपवादः षाकन् विधीयते। "वराकी"इति। षित्वान्ङीष्॥

बाल-मनोरमा

जल्पभिक्षकुट्टलुम्टुवृङः षाकन् ९३७, ३।२।१५५

जल्पभिक्ष। एभ्यः पञ्चभ्यः षाकन् स्यात्तच्छीलादिष्वित्यर्थः। षनावितौ। स्त्रियां षित्त्वान्ङीष्। जल्पाक इत्यादि।

बाल-मनोरमा

पुवः संज्ञायाम् ९६८, ३।२।१५५

पुवः संज्ञायाम्। "इत्र" इति शेषः। करणे इत्येव। पवित्रमिति। पूयते अनेनाऽऽज्यमिति विग्रहः। तदाह-- येनाज्यमिति। पूयते आचमनोदकादिकमनेनेति विग्रहं मत्वाऽऽह-- यच्चानामिकेति। अनामिका --उपकनिष्ठिकाङ्गुलिः।

तत्त्व-बोधिनी

जल्पभिक्षकुट्टलुण्टवृङः षाकन् ७७०, ३।२।१५५

जल्प। जप जल्प व्यक्तायां वाचि, भिक्ष भिक्षायामलाभे लाभे च, कुट् ट छेदने, लुण्ट स्तेये, चौरादिकाविमौ। अत् व्याचख्युः-- जल्पेः "चलनशब्दार्था"दिति,भिक्षेः "अनुदात्तेतश्चे"ति युचि प्राप्ते, कुट्टलुण्टयोः "णेश्छन्दसी"ति इष्णुचि प्राप्ते, वृङस्तु "आदृगमहनजने"ति किकिनोः प्राप्तयोरयं विधिरिति। षो ङीषर्थ इत्याह-- वराकीति।

तत्त्व-बोधिनी

पुवः संज्ञायाम् ७९३, ३।२।१५५

पुवः। पूङ्पूञोरुभयोग्ग्रहणमविशेषात्। करण इत्यनुवृत्तेराह-- येनाज्यमिति।

---

सूत्रम्

काशिका-वृत्तिः

प्रजोरिनिः ३।२।१५६

प्रपूर्वाज् जवतेः तच्छीलादिषु कर्तृषु इनिः प्रत्ययो भवति। प्रजवी, प्रजविनौ।

न्यासः

प्रजोरिनिः।, ३।२।१५६

"जुचंक्रम्य" ३।२।१५० इत्यादिना युचि प्राप्त इनिर्विधीयते। इकारो नकारस्येत्संज्ञापरित्राणार्थः॥

बाल-मनोरमा

प्रजोरिनिः ९३८, ३।२।१५६

प्रजोरिनिः। जुः सौत्रो धातुः। प्रपूर्वादस्मादिनिप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः। नकारादिकार उच्चारणार्थः।

तत्त्व-बोधिनी

प्रजोरिनिः ७७१, ३।२।१५६

प्रजवीति। "जु" इति सौत्रो गत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश् च ३।२।१५७

जि जये। दृङादरे। क्षि क्षये, क्षि निवासगत्योः इति द्वयोरपि ग्रहणम्। प्रसू इति षू प्रेरणे इत्यसय् ग्रहणम्। जिप्रभृतिभ्यो धातुभ्यः इनिः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी।

न्यासः

जिदृक्षिश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च।, ३।२।१५७

"जि जये" (धा।पा।५६१), "दृङ आदरे" (धा।पा।१४११), "श्रिञ् सेवायाम्"(धा।पा।८९७) विपूर्वः, "इण् गतौ" (धा।पा।१०४५), "टुवम उद्गिरणे" (धा।पा।८४९), "व्यथ {भयसञ्चलनयोः-धा।पा।} भयचलनयोःर" (धा।पा।७६४) नञ्पूर्वः, "अम रोगे"(धा।पा।१७२०) अभिपूर्वः। "षू प्रेरणे" (धा।पा।१४०८) प्रपूर्व इत्यस्य ग्रहणम्, न "षूङ प्राणिगर्भविमोचने" (धा।पा।१०३१) "षूओङ प्राणिप्रसवे"(धा।पा।११३२) इत्येतयोः। निरनुबन्धकपरिभाषयेति (व्या।प।५३) भावः। इण्जिभ्यामित्यत्र "इण्नश्जिसर्त्तिभ्यः क्वरप्"३।२।१६३ इति वचनात् क्परप् भवति॥

बाल-मनोरमा

जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ९३९, ३।२।१५७

जिदृक्षि। जि, दृ, क्षि, विश्रि, इण्(), वम, अव्यथ, अभ्यम, परिभू, प्रसू, एषां दशानं द्वन्द्वः। जि जये, जि अभिभवे, दृङ् आदरे, क्षि क्षये, क्षि निवासगत्योः, श्रिञ् सेवायां विपूर्वः। इण् गतौ। वमु उद्गिरणे। व्यथ भयसंचलनयोः-- नञ्पूर्वः। निपातनान्नञो धातुना समासे "न लोपो नञः" इति नकारलोपः। अमु गत्यादिषु- अभिपूर्वः। भू सत्तायाम्-- परिपूर्वः। षू प्रेरणे प्रपूर्वः। एभ्य इनिः स्यात्तच्छीलादिष्वित्यर्थः। सूतिसूयत्योस्तु सानुबन्धकत्वान्नेह ग्रहणम्।

तत्त्व-बोधिनी

जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ७७२, ३।२।१५७

जिदृक्षि। जि जये, जि अभिभवे, दृङ् आदरे, क्षि क्षये,क्षि निवासगत्यो, श्रिञ् सेवायां विपूर्वः, व्यथ भयसंचलनयोर्नञ्पूर्वः। निपातनान्नञो धातुना समासे नलोपे ततः प्रत्ययः। अम गत्यादिषु अभिपूर्वः। प्रसवीति। षू प्रेरणे। अस्मादिनिः। षूङ् प्राणिगर्भविमोचने, षूङ् प्राणिप्रसवे, इमौ न गृह्नेते, सानुबन्धत्वात्। "जिदृक्षी"त्यत्रैव प्रजुं पठित्वा पूर्वसूत्रं त्यक्तुमुचितम्()। एवं हि पृथग्विभक्तिश्चकारश्च मास्त्विति सुवचम्।

---

सूत्रम्

काशिका-वृत्तिः

स्पृहिगृहिपतिदयिनिद्रादन्द्राश्रद्धाभ्य आलुच् ३।२।१५८

स्पृह ईप्सायाम्, ग्रह ग्रहने, पत गतौ, चुरादौ अदन्ताः पठ्यन्ते। दय दानगतिरक्षणेषु। द्रा कुत्सायां गतौ, निपूर्वस् तत्पूर्वश्च, तदो नकारान्तता च निपात्यते। डुधाञ् श्रत्पूर्वः। एतेभ्यस् तच्छीलादिषु कर्तृषु आलुच् प्रत्ययो भवति। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तन्द्रालुः। श्रद्धालुः। आलुचि शीङो ग्रहणं कर्तव्यम्। शयालुः।

न्यासः

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्। , ३।२।१५८

"चुरादावदन्ताः पठ()न्ते" इति। तेनातो लोपे कृते "अचः परस्मिन् पूर्वविधौ"१।१।५६ स्थानिवद्भावाद्वृद्धिगुणौ न भवत इत्याभिप्रायः। एतेभ्यश्छन्दसि पूर्ववदिष्णुचि प्राप्ते द्रातेर्दधातेश्च किकिनोः प्राप्तयोरालुज्विधीयते। "स्पृहयालुः"इति। "अयामन्त" ६।४।५५ इत्यादिना अयादेशः। "आलुचि" इत्यादि। शीङ गृह्नते। येन तच्छीङग्रहणं तत् पुनर्व्याख्यानमित्येतदुक्तं भवति। तद्व्याख्यानं कत्र्तव्यं येनालुचि विधातव्ये शीङोऽपि ग्रहणं भवति। तत्रेदं व्याख्यानम्--पूर्वसूत्रादिह चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन शीङपि प्रकृतित्वेन गुह्नत इति॥

बाल-मनोरमा

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ९४०, ३।२।१५८

स्पृहिगृहि। स्पृहि, गृहि,पति, दयि, निद्रा, तन्द्रा, श्रद्धा, एभ्यः सप्तम्य आलुच् स्यात्तच्छीलादिष्वित्यर्थः। स्पृहयालुरिति। स्पृहधातोरदन्तादालुच्। "अयामन्ते"ति णेरय् णिलोपापवादः। अल्लोपस्य स्थानिवत्त्वान्न लघूपधगुणः। एवं गृहयालुः। पतयालुरित्यत्र तु अल्लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः। निद्रालुरिति। "द्रा कुत्सायां गतौ" निपूर्वादालुच्। तत्पूर्वो द्रेति। तच्छब्दपूर्वो द्राधातुस्तन्द्रेत्यनेन गृह्रत इत्यर्थः। श्रद्धालुरिति। "श्र"दित्यव्ययं, तत्पूर्वाद्धातोरालुच्। शीङो वाच्य इति। आलु"जिति शेषः।

तत्त्व-बोधिनी

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ७७३, ३।२।१५८

स्पृहि। स्पृह ईप्सायाम्, गृहू ग्रहणे, पत गतौ। त्रयश्चुरादाविति। तेन णेरयादेशेन रूपसिद्धिरिति भावः। तत्पूर्व इति। तच्छब्दस्य समासोऽपि निपातनादिति बोध्यम्। डुधाञ् श्रत्पूर्वः। श्रद्धालुः। धेटस्तु नेदं रूपम्, श्रत्पूर्वस्य तस्य प्रयोगाऽभावादिति व्याचख्युः। ननु कथं कृपालुः स्पद्र्धालुरिति?। कृपां स्पद्र्धांच लातीति विग्रहे मृगय्वादित्वात्कुः।

---

सूत्रम्

काशिका-वृत्तिः

दाधेट्सिशदसदो रुः ३।२।१५९

दा धेट् सि शद सद इत्येतेभ्यः रुः प्रत्ययो भवति। दरुः। धारुर्वत्सो मातरम् न लौकाव्ययनिष्ठाखलर्थतृनाम् २।३।६९ इति उकारप्रश्लेषात् षष्ठी न भवति। सेरुः। शद्रुः। सद्रुः।

न्यासः

दाधेट्सिशदसदो रुः। , ३।२।१५९

"डुदाञ् दाने" (धा।पा।१०९१), "दो अवखण्डने"(धा।पा।११४८), "देङ रक्षणे"(धा।पा।९६२)--त्रयाणामिह ग्रहणम्; "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति वचनात्। "धेट् पाने"(धा।पा।९०२), षिञ् बन्धने" (धा।पा।१४७७), "शद्लृ शातने" (धा।पा।१४२८), "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।१४२७)। अथ "धारुर्वत्सो मातरम्" इति कथमत्र द्वितीया, यावता "कर्त्तृकर्मणोः कृति" २।३।६५ इति षष्ठ()आ भवितव्यमित्यत आह-- "न लोकाव्ययनिष्ठा" इति। उको य उकारस्तेन सहाकः सवर्णदीर्घत्वेन प्रश्लिष्टः, तेन तदन्तविधौ विज्ञायमाने उकारान्तस्य प्रत्ययस्य प्रयोगे षष्ठी न भवति, तेन द्वितीयैव भवतीति न षष्ठी। नन्विह तर्हि-- कटं चिकीर्षुरिति प्रतिषेधो न स्यात्, उप्रत्यय्सयानुकारान्तत्वात्। घिनुणपि बवति। छन्दस्युकारान्तत्वात् "आद्दगमहन" ३।२।१७१ इत्यादिना किकिनावपि भवतः॥

बाल-मनोरमा

दाधेट्?सिशदसदो रुः ९४१, ३।२।१५९

दाधेट्। दा, धेट्, सि, शद्, सद् एषां द्वन्द्वात्पञ्चमी। एभ्यो रुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः।

तत्त्व-बोधिनी

दाधेट्सिशदसदोः रुः ७७४, ३।२।१५९

दाधेट्। डुदाञ्()दोडेङां त्रयाणामेव ग्रहणं,न तु दाण्()दापोरित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

सृघस्यदः क्मरच् ३।२।१६०

सृ घसि अद इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्मरच् प्रत्ययो भवति। सृमरः। घस्मरः। अद्मरः।

बाल-मनोरमा

सृघस्यदः क्मरच् ९४२, ३।२।१६०

सृघस्यदः। सृ, घसि, अद् एषां द्वन्द्वात्पञ्चमी। घसिः प्रकृत्यन्तरम्।

---

सूत्रम्

काशिका-वृत्तिः

भञ्जभासमिदो घुरच् ३।२।१६१

भञ्ज भास मिद इत्येतेभ्यो घुरच् प्रत्ययो भवति तच्छीलादिषु कर्तृषु भङ्गुरं काष्ठम्। घित्वात कुत्वम्। भासुरं ज्योतिः। मेदुरः पशुः। भञ्जेः कर्मकर्तरि प्रत्ययः स्वभावात्।

न्यासः

भञ्जभासमिदो घुरच्। , ३।२।१६१

"{भञ्ज आमर्दने"(धा।पा।१४५३), "भासृ दीप्तौ"(धा।पा।६२४), "ञिमिदा {स्नेहने-धा।पा।} स्नेहनमोचनयोः" (धा।पा।१२४३)। "भङगुरम्िति। "चजोः कु घिण्ण्यतोः" ७।३।५२ इति कुत्वम्। "कर्मकत्र्तरि प्रत्ययः" इति। भज्यते स्वयमेवेत्यर्थः। कुतः पुनः कर्मकत्र्तरि प्रत्यो लभ्यत इत्यत आह--"स्वभावात्" इति। प्रकृत्यैव प्रत्ययः कर्मकत्र्तरिमभिधत्ते, न कर्तृमात्रम्। अतः कर्मकत्र्तर्येव॥

बाल-मनोरमा

भञ्जभासमिदो घुरच् ९४३, ३।२।१६१

भञ्जभास। भञ्ज, भास, मिद्, एषां द्वन्द्वात्पञ्चमी। एभ्यो घुरच् स्ातच्छीलादिष्वित्यर्थः। घचावितौ। भङ्गुर इति। "चजो"रिति कुत्वम्।

तत्त्व-बोधिनी

भञ्जभासमिदो घुरच् ७७५, ३।२।१६१

भङ्गुर इति। "चजो"रिति कुत्वम्। अभिधानस्वभावाद्भञ्जेः कर्मकर्तर्यैवेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

विदिभिदिच्छिदेः कुरच् ३।२।१६२

ज्ञानार्थस्य विदेः ग्रहणं न लाभाद्यर्थस्य, स्वभावात्। विदादिभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु कुरच् प्रत्ययो भवति। विदुरः पण्डितः। भिदुरं काष्ठम्। छिदुरा रज्जुः। भिदिच्छिद्योः कर्मकर्तरि प्रयोगः। व्यधेः सम्प्रसारणं कुरच् च वक्तव्यः।

विधुरः।

न्यासः

विदिभिदिच्छिदेः कुरच्। , ३।२।१६२

"ज्ञानार्थस्य विदेग्र्रहणम्" इति। "विद ज्ञाने" (धा।पा।१०६४) इत्येतस्य। "न लाभार्थस्य" इति। "विद्लृ लाभे" (धा।पा।१४३२) इत्येतस्य। अज्ञानार्थस्य विदेरुपलक्षणमेतत्, तेन सत्ताविचारणार्थौ यौ विदी तयोरपि ग्रहणं न भवत्येव। क्वचित्त्वनयोरादिशब्देनोपसंग्रहाय लाभार्थस्येति पाठः। कस्मात् पुनर्ज्ञानार्थस्य ग्रहणमित्याह-- "स्वभावात्" इति। विदेरुत्पन्नेन प्रत्ययेन स्वभाव एव ज्ञानक्रियाया यः कत्र्ता स एव प्रतीयते, नान्यः। तस्माज्ज्ञानार्थस्य ग्रहणम्, नान्यस्य। "कर्मकत्र्तरि प्रत्ययः"इति। स्वयमेव च्छिद्यत इत्यर्थे। तत्र स्वभावादिति पूर्वोक्त एव हेतुः॥

बाल-मनोरमा

विदिभिदिच्छिदेः कुरच् ९४४, ३।२।१६२

विदिभिदि। तच्छीलादिष्वित्येव। विदेर्ज्ञानार्थस्य ग्रहणं, नतु लाभार्थस्य, व्याख्यानादित्याहुः। विदुर इत्यादौ कित्त्वान्न लघूपधगुणः।

तत्त्व-बोधिनी

विदिभिदिच्छिदेः कुरच् ७७६, ३।२।१६२

विदिभिदि। विदेर्ज्ञानार्थस्यैव ग्रहणं न तु लाभार्थस्य, व्याख्यानात्। छिदुरमिति। कर्मकर्तरि प्रत्यय इति वृत्तिः। नैतद्भाष्ये दृष्टम्। तथा च माघो मुख्ये कर्तरि प्रायुङ्क्त--"प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽदुरयाचितमङ्गना" इति। इह अदुरिति च्छेदः।

---

सूत्रम्

काशिका-वृत्तिः

इण्नश्जिसर्तिभ्यः क्वरप् ३।२।१६३

इण् नश् जि सर्ति इत्येतेभ्यो धातुभ्यः तच्छीलादिषु कर्तृषु क्वरप् प्रत्ययो भवति। पकारस् तुगर्थः इत्वरः। इत्वरी। नश्वरः। नश्वरी। जित्वरः। जित्वरी। सृत्वरः। सृत्वरी। नेड्वशि कृति ७।२।८ इति इट्प्रतिषेधः।

न्यासः

इण्नश्जिसर्त्तिभ्य क्वरप्। , ३।२।१६३

"इत्वरः" इति। "ह्रस्वस्य पिति कृति तुक्" ६।१।६९। "इत्वरी" इति। "टिड्ढाणञ्" ४।१।१५ इत्यादिना ङीप्॥

बाल-मनोरमा

इण्नशजिसर्तिभ्यः क्वरप् ९४५, ३।२।१६३

इण्नशिजि। इण्, नशि, जि, सृ एभ्य क्वरप् स्यात्तच्छीलादिष्वित्यर्थः। कित्त्वान्न गुणः। पित्त्वं तु तुगर्थम्।

तत्त्व-बोधिनी

इण्नशजिसर्तिभ्यः क्वरप् ७७७, ३।२।१६३

इत्वरः। इत्वरीति। इण् गतौ "ह्रस्वस्य पिती"ति तुक्। कित्त्वाद्गुणाऽभावः। "टिड्ढे"त्यादिना स्त्रियां ङीप्।

---

सूत्रम्

काशिका-वृत्तिः

गत्वरश् च ३।२।१६४

गत्वरः इति निपात्यते। गमेरनुनासिकलोपः क्वरप् प्रत्ययश्च। गत्वरः। गत्वरी।

न्यासः

गत्वरश्च। , ३।२।१६४

बाल-मनोरमा

गत्वरश्च ९४६, ३।२।१६४

गत्वरश्च। गमेरिति।गमेः क्वरप्, अनुनासिकलोपश्च निपात्यते इत्र्थः। झलादिप्रत्ययपरकत्वाऽभावादनुनासिकलोपस्याऽप्राप्तिः। पित्त्वात्तुक्। गत्वरीति। "टिड्ढे"ति ङीप्।

---

सूत्रम्

काशिका-वृत्तिः

जागुरूकः ३।२।१६५

जागर्तेः ऊकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। जागरूकः।

न्यासः

जागरूकः। , ३।२।१६५

"जागरूकः" इति। "जागृ निद्राक्षये" (धा।पा।१०७२)। वाऽसरूपविधिना तृन्नपि-- जागरितेति भवति॥

बाल-मनोरमा

जागुरूकः ९४७, ३।२।१६५

जागुरूकः। "जागृ" इत्यस्य जागुरित पञ्चम्यन्तं पदम्। तदाह-- जागर्तेरिति। तच्छीलादिष्वित्येव। जागरूक इति। ऋकारस्य गुणः, रपरत्वम्। सिद्धरूपं तु न निपातितम्, उत्तरसूत्रे ऊक इत्यननुवृत्तिप्रसङ्गात्।

तत्त्व-बोधिनी

जागुरूकः ७७८, ३।२।१६५

जागरूकः। "जागु"रिति पञ्चम्यन्तं। तद्व्याचष्टे-- जागर्तेरिति। जागरूक इति सिद्धरूपमेव न तु निपातितम, उत्तरसूत्रे ऊकस्याऽननुवृत्तिप्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

यजजपदशां यङः ३।२।१६६

यजादीनां यङन्तानाम् ऊकः प्रत्ययो भवति तच्छीलादिषु कर्तृषु। यायजूकः। जञ्जपूकः। दन्दशूकः।

न्यासः

यजजपदशां यङः। , ३।२।१६६

दंशेर्यदि "अनिदिताम्" ६।४।२४ इत्यादिनाऽनुनासिकलोपो लुप्तेऽपि यङि प्रत्ययलक्षणेन सिध्यति, तथापि लाघवार्थं कृतानुनासिकलोपो द्रष्टव्यो निर्दिष्टः। "यायजूकः" इति। यजेर्यङ, "दीर्घोऽकितः" ७।४।८३ इति दीर्घः, "अतो लोपः" ६।४।४८ इत्यकारलोपः। "जञ्जपूकः, दन्दशूकः" इति। "लुपसद" ३।१।२४ इत्यादिना यङ, "जपजभ"७।४।८६ इत्यादिनाऽभ्यासस्य नुक्॥

बाल-मनोरमा

यजजपदशां यङः ९४८, ३।२।१६६

यजजपदशां यङः। यज, जप,दश एषां त्रयाणां द्वन्द्वः। पञ्चम्यर्थे षष्ठी। तदाह--एभ्य इति। तच्छीलादिष्वित्येव। ननु दंशेर्नोपधत्वनात्कथं दशामिति निर्देश इत्यत आह-- भाविनेति। ऊके कृतेसति भविष्यतो नलोपस्याऽत्र निर्देश इति यावत्। यायजूक इति। "यस्य हलः" इति यलोपः। "अतो लोपः" "दीर्घोऽकितः" इत्यभ्यासस्य दीर्घः। जञ्जपूक इति। "जपजभदहदशभञ्जपशां चे"त्यभ्यासस्य नुक्। एवं दन्दशूकः।

तत्त्व-बोधिनी

यजजपदशां यङः ७७९, ३।२।१६६

यजजप। यायजूक इति। यजेर्यङि द्वित्वादि। "दीर्घोऽकितः" इत्यभ्यासदीर्घः। अतो लोपे "यस्य हलः" इति यलोपः। जञ्जपूक इत्यादि। "जपजभदहदशे" त्यादिना नुक्। वावदूकशब्दस्तु "उलूकादयश्चे"त्यत्र वक्ष्यते। माधवस्त्वाह-- कुर्वादिगणे वावदूक इति पाठादेव यङन्ताद्वदेरूकप्रत्यय इति।

---

सूत्रम्

काशिका-वृत्तिः

नमिकम्पिस्म्यजसकमहिंसदीपो रः ३।२।१६७

नम्यादिभ्यः धातुभ्यः तच्छीलादिषु कर्तृषु रः प्रत्ययो भवति। नम्रं काष्ठम्। कम्प्रा शाखा। स्मेरं मुखम्। अजस्रं जुहोति। हिंस्रं रक्षः। दीप्रं काष्ठम्। अजस्रम् इति जसु मोक्षणे नञ्पूर्वो रप्रत्ययान्तः क्रयासातत्ये वर्तते।

न्यासः

नमिकम्पिस्म्यसकमहिंसदीपो रः। , ३।२।१६७

णम प्रह्वत्वे शब्दे" (धा।पा।९८१), "कपि चलने" (धा।पा।३७५), "ष्मिङ ईषद्धसने" (धा।पा।९४८), "कमु कान्तौ" (धा।पा।४४३), "{तृह-धा।पा} तृहि हिसि हिंसायाम्" (धा।पा।१४५५,१४५६), "दीपी दीप्तौ" (धा।पा।११५०)। कपेश्चलनार्थत्वात् कमिदीपिभ्यश्चानुदा४त्तेत्त्वाद्युचि प्राप्ते रो विधीयते। "क्रियासातत्यम्" इति। क्रियमाणानामविच्छेदेन प्रवृत्तिः = क्रियासातत्यम्। तत्र स्वभाव एव प्रत्ययान्तो वत्र्तते॥

बाल-मनोरमा

नमिकम्पिरम्यजसकमहिसदीपो रः ९४९, ३।२।१६७

नमिकम्पि। नमि, कम्पि, स्मि, अजस, कम, हिंस, दीप् एषां द्वन्द्वात्पञ्चम्येकवचनम्। एभ्यः सप्तभ्यो रप्रत्ययः स्यात्तच्छीलदिष्वित्यर्थः। अजसधातोर्धातुपाठेऽदर्शनादाह-- जसिर्नञ्पूर्व इति। "जसु मोक्षणे"अयं नञ्पूर्वः शक्तिस्वभावात् क्रियासातत्ये वर्तते इत्यर्थः। निपातनाद्धातुना नञः समासे "नलोपो नञः" इति नलोपः।

---

सूत्रम्

काशिका-वृत्तिः

सनाशंसभिक्ष उः ३।२।१६८

सनिति सन्प्रत्ययान्तो गृह्यते न सनिर्धातुः, अनभिधानात् व्याप्तिन्यायाद् वा। सन्नन्तेभ्यो धातुभ्यः आशंसेर् भिक्षेश्च तच्छीलादिषु कर्तृषु उः प्रत्ययो भवति। चिकीर्षुः। जिहीर्षुः। आशंसुः। भिक्षुः। आङः शसि इच्छायाम् इत्यस्य ग्रहणं, न शंषेः स्तुत्यर्थस्य।

लघु-सिद्धान्त-कौमुदी

सनाशंसभिक्ष उः ८४३, ३।२।१६८

चिकीर्षुः। आशंसुः। भिक्षुः॥

न्यासः

सनाशंसभिक्ष उः। , ३।२।१६८

"सन्प्रत्ययो गृह्रते" इति। "गुप्तिज्किद्भ्यः" ३।१।५ इत्यादिना यो विहितः। "न सनिर्धातुः"इति। "षणु दाने" (धा।पा।१४६४) " वन षण सम्भक्तौ" (धा।पा।४६३,४६४) इति न गृह्रते। एतच्च गर्गादिषु जिगीषुशब्दपाठाद्विज्ञायते, स हि प्रत्ययग्रहणे चोपपद्यते, न तु धातुग्रहणे। "आङ शासि इच्छायाम्ित्यादि। एतदप्याङा सह निर्देशाद्विज्ञायते। इच्छार्थो ह्राङसहितः पठ()ते, न स्तुत्यर्थः। "आशंसु, भिक्षुः" इति। अत्र "अनुदात्तेश्च हलादेः" ३।२।१४९ इति युचि प्राप्त उप्रत्ययस्य विधानम्॥

बाल-मनोरमा

सनाशंसभक्ष उः ९५०, ३।२।१६८

सनाशंस। सन्, आशंस, भिक्ष एषां त्रयाणां द्वन्द्वात्पञ्चम्येकवचनम्। "स"निति सन्प्रत्ययान्तं गृह्रते। "षणु दाने", "षण संभक्तौ" इत्यनयोस्तु न ग्रहणं , गर्गादिषु विजिगीषुशब्दापाठाल्लिङ्गात्। एभ्य उप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः। आशंसुरिति। "आङः शसि इच्छाया"मित्यस्मादुः।

तत्त्व-बोधिनी

सनाशंसभिक्ष उः ७८०, ३।२।१६८

सनाशंस। "स"निति प्रत्ययग्रहणात्तदन्तग्रहणम्। षणु दाने, षण संभक्ताविति धात्वोस्तु नेह ग्रहणं, गर्गादिषु विजिगीषुशब्दस्य पाठात्। आशंसेत्याङः शसि इच्छायामित्ययं गृह्रते, न शंसु स्तुताविति, आङा सह निर्देशात्।

---

सूत्रम्

काशिका-वृत्तिः

विन्दुरिच्छुः ३।२।१६९

विदेर् नुमागमः, इषेः छत्वम् उकारश्च प्रत्ययो निपात्यते तच्छीलादिषु कर्तृषु। वेदनशीलो विन्दुः। एषणशील इच्छुः।

न्यासः

विन्दुरिच्छुः।, ३।२।१६९

"विदेः" इति। "विद ज्ञाने" (धा।पा।१०६४)। इतरेषां त्वनभिधानान्निपातनसामर्थ्याद्वा ग्रहणं न भवति। "इषेः" इति। "{इष-धा।पा।} इषु इच्छायाम्" (धा।पा।१३५१) इत्येतस्य। "इष गतौ" (धा।पा।११२७) इत्यादीनां त्विषीणां पूर्ववद्()ग्रहणं न भवति। "इच्छुः" इति। छकारादेशो निपात्यते। "छे च" ६।१।७१ इति तुक्, "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वम्॥

बाल-मनोरमा

विन्दुरिच्छुः ९५१, ३।२।१६९

विन्दुरिच्छुः। वेत्तेरिति। "विद ज्ञाने" इत्यस्यादुप्रत्यये प्रकृतेर्नुमागमः। इषु इच्छायामित्यस्मादुप्रत्यये षकारस्य छत्वं च निपात्यते इत्यर्थः। वेत्तीति। धातुप्रदर्शनम्। तच्छील इति। वेदनशील इत्यर्थः। इच्छतीति। "इषु इच्छाया"मिति धातुप्रदर्शनम्। एषणशील इत्यर्थः।

तत्त्व-बोधिनी

विन्दुरिच्छुः ७८१, ३।२।१६९

विन्दुरिच्छुः। "विद ज्ञाने" इत्यस्यैव ग्रहणं नेतरेषाम्। एवमिषेरपि इच्छार्थकस्यैव ग्रहणं, नत्विष गतौ, इष आभीक्ष्ण्ये इत्यनयोः, अनभिधानान्निपातनाद्वेति भावः। बिन्दुशब्दस्तु पवर्गीयादिः-- विदि अवयवेऽस्मान्मृगय्वादित्वात्कुप्रत्यये बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

क्याच् छन्दसि ३।२।१७०

क्य इति क्यच्क्यङ्क्यषां सामान्येन ग्रहणम्। क्यप्रत्ययान्ताद् धातोः छन्दसि विषये तच्छीलादिषु कर्तृषु उकारप्रत्ययो भवति। मित्रयुः। न छन्दस्यपुत्रस्य ७।४।३५ इति प्रतिषेधाद् न धीर्घः। सुम्नयुः। संस्वेदयुः छन्दसि इति किम्? मित्रीयिता।

न्यासः

क्याच्छन्दसि।, ३।२।१७०

"मित्रयुः" इति। मित्रमिच्छतीति "सुप आत्मनः क्यच्"३।१।८ इति क्यच्। "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घत्वं प्राप्नोति, "क्यचि च" ७।४।३३ इतीत्त्वञ्च, एतदुभयमपि "न च्छन्दस्यपुत्रस्य" ७।४।३५ इति प्रतिषेधान्न भवति। "संस्वेदयुः"इति। लोहितादित्वात् ३।१।१३ क्यष्। "सुम्नयुः" इति। "देवसुम्नयोः" ७।४।३८ इति प्रतिषेधः। सुम्न इवाचरतीति "कर्तुः क्यङ सलोपश्च" ३।१।११ इति क्यङ॥

बाल-मनोरमा

क्याच्छन्दसि ९५२, ३।२।१७०

क्याच्छन्दसि। क्यप्रत्ययान्तादुप्रत्ययः स्यात्तच्छीलादिषु छन्दसीत्यर्थः। सुम्नयुरिति। सुम्नं - सुखम्।तदात्मन

इच्छतीत्यर्थे सुम्नशब्दात् क्यच्। "न च्छन्दस्यपुत्रस्ये"ति निषेधात् "क्यचि चे"ति ईत्वम्, "अकृत्सार्वे"ति दीर्गश्च न। "सुम्नये"ति क्यजन्तादुप्रत्ययः। अतो लोपः।

तत्त्व-बोधिनी

क्याच्छन्दसि ७८२, ३।२।१७०

क्याच्छन्दसि। "क्य" इति क्यच्क्यष्क्यङां सामान्यग्रहमम्। क्यन्ताद्धातोश्छन्दसि विषये ताच्छीलादिषु उप्रत्ययो भवतीति काशिका। किंद्यः क्य इति व्याख्यानात्कण्ड्वादियगपि गृह्यते। तेन "तुरण्यवोऽङ्गिरसो नक्षन्त", "सपर्येम सपर्यवः", "यमस्य योनौ शकुनं भुरण्यु"मित्यादि सिद्धम्। तुरण त्वरायां , सपर पूजयां, भुरण धारणपोषणयोरित्येते कण्ड्वादिषु पठिताः। अथ कथं "सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः" इति भट्टपादाः?। मृगय्वादिषु असूयशब्दो द्रष्टव्य इति हरदत्तः। सुम्नयुरिति। सुम्नशब्दात्क्यचि तदन्तादुः। "न छन्दस्यपुत्रस्ये"ति निषेधात् "क्यचि चे"ति ईत्वम्, "अकृत्सार्वे"ति दीर्घश्च न भवति।

---

सूत्रम्

काशिका-वृत्तिः

आदृगमहनजनः किकिनौ लिट् च ३।२।१७१

आकारान्तेभ्यः ऋवर्णान्तेभ्यः गम हन जन इत्येतेभ्यश्च छन्दसि विषये तच्छीलादिषु किकिनौ प्रतयौ भवतः। लिड्वच् च तौ भवतः। आतिति तकारो मुखसुखार्थः, न त्वयं अपरः, मा भूत्तादपि परः तपरः इति ऋकारे तत्कालग्रहणम्। पपिः सोमं ददिर्गाः। ददथुः मित्रावरुणा ततुरिम् मित्रावरुणौ ततुरिः। दूरे ह्यध्वा जगुरिः। जग्मिर्युवा। जघ्निर्वृत्र। जज्ञि बिजम्। अथ किमर्थं कित्त्वम्, यावता असंयोगाल् लिट् कित् १।२।५ इति कित्त्वं सिद्धम् एव? ऋच्छत्यृऋताम् ७।४।११ इति लिटि गुणः प्रतिषेधविषय आरभ्यते, तस्य अपि बाधनार्थं कित्त्वम्। किकिनावुत्सर्गश् छन्दसि सदादिभ्यो दर्शनात्। सेदिः। नेमिः। भाषायां धञ्कृञ्सृजनिगमिनमिभ्यः किकिनौ वक्तव्यौ। दिधिः। चक्रिः। सस्त्रिः। जज्ञिः। जग्मिः। नेमिः। सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ। दीर्घो ऽकितः ७।४।८३ सासहिः। वावहिः। चाचलिः। पापतिः।

न्यासः

आदृगमहनजनः किकिनौ लिट् च।, ३।२।१७१

परपदार्थेषु प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति, यथा-- गौर्वाहीकः, सिंहो माणवक इति। गौर्वाहीक इत्युक्ते गो शब्दोऽर्थान्तरे प्रयुक्तो विनापि वतिना गौरिवायमिति तुल्यशब्दरूपे वाहीके प्रतीयते। इह लिडिति स्वार्थादन्यत्र किकिनोः प्रयुक्तः। तस्मादसत्यपि वतिना योगेऽतिदेशो गम्यत इत्याह-- "लिड्()वच्च तौ भवतः"इति। लिटा तुल्यौ = तुल्यधर्माणौ भवत इत्यर्थः। द्विर्वचनादिकं यल्लिटः कार्यं तत् किकिनोर्भवतीति भावः। कार्यातिदेशोऽयम्, न शास्त्रातिदेशः; कार्यातिदेशापेक्षया शास्त्रातिदेशस्याप्राधान्यात्। अप्राधान्यं तु शास्त्रातिदेशस्य कार्यत्वात्। यदि तर्हि कार्यातिदेशोऽयम् "लः परस्मैपदम्" १।४।९८ इति परस्मैपदसंज्ञाऽपि किकिनोः प्राप्नोति, ततश्चात्मनेपदिभ्यस्तौ न स्याताम्? नैष दोषः; लादेशस्य हि परस्मैपदसंज्ञा, न लकारस्य। "ल" इति ह्यादेशापेक्षया तत्र षष्ठी, लादेशः परस्मैपदसंज्ञको भवतीति यावत्। न च किकिनौ लादेशौ,तत्कुतः परस्मैपदसंज्ञायाः प्रसङ्गः। तिबादयस्तर्हि कस्मान्न भवन्ति? तयोर्विधानसामर्थ्यात्। यदि तर्हि तिबादयः स्युः, किकिनोर्विधानमनर्थकं स्यात्-- लिटमेव विदध्यादिति, न च तिबादिभिस्तच्छीलादयो विधीयन्ते? अनभिधानान्न भविष्यन्ति। क्वसुकानचौ कस्मान्न भवतः, न च तयोर्भाव आनर्थक्यं किकिनोरुपपद्यते; "लिटः कानज्वा" ३।२।१०६ "क्वसुश्च" (३।२।१०७) इति विकल्पेन क्वसुकानचोर्विधानात्?

अनभिधानादेव तावपि न भविष्यतः; न हि ताभ्यां तच्छीलादयो विधीयन्ते;अत एवानभिधानात्। "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इतिभावकर्मणोरपि किकिनौ न भवतः। यथैव हि "भञ्जभासमिदो घुरच्" ३।२।१६१ इति भञ्जेरुत्पन्नेन च घुरचा स्वभावात् कर्मकर्त्तैवाभिधीयते न कर्त्तृमात्रम्, तथा किकिन्भ्यामपि धातोरुत्पन्नाभ्यां स्वभावादेव कर्त्तैवाभिधीयते, न भावकर्मणी। "आदिति दकारो मुखसुखार्थः"इति। तपरत्वनिरासार्थमेतत्। अत एवाह-- " न त्वयं तपरः" इति। किं पुनः कारणं तपरो नेष्यत इत्याह-- "मा भूत्" इत्यादि। "तपरस्तत्कालस्य" १।१।६९ इति तादपि पर इति पञ्चमीसमासोऽप्याश्रितः। "वृद्धिरादैच्" १।१।१ इत्यत्र त्रिमात्रचतुर्मात्रयोरैचां वृद्धिसंज्ञा मा भूदित्येवमर्थम्। ततश्च यद्येवं तपरः स्यात् तदा ऋकारेऽपि तपर एव स्यात्, ततश्च ऋकारेण तत्कालानां मात्रिकाणामेतद्()ग्रहणं स्यात्, न पुनर्दीर्घाणाम्। तत्र को दोषः? दधिश्चक्रिरित्येवमादावेव स्याताम्; ततुरिः, जगुरिरित्येवमादौ च न स्याताम्। तस्मात् मा भूदित्येव दोष इति तपरत्वमत्र नेष्यते। "पपिः सोमम्" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः, द्विर्वचनम्, अभ्यासस्य ह्रस्वः। "न लोकाव्ययनिष्ठा" २।३।६९ इत्यादिना षष्ठीप्रतिषेधः कार्यं इति सोमशब्दात् कर्मणि द्वितीयैकवचनं भवति। "ददिः" इति। "डुदाञ् दाने" (धा।पा।१०९१)। "ततुः" इति। "बहुलं छन्दसि"७।१।१०३ इत्युक्तम्, रपरत्वञ्च। "द्विर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावात् तृशब्दो द्विरुच्यते। (धा।पा।७।४।६६) इत्यत्त्वम्,रपरत्वम्, हलादिशेषः ७।४।६०। "जगुरिः" इति। "गृ निगरणे" (धा।पा।१४१०) "जन्मिः, जघ्निः" इति। "गमहन" ६।४।९८ इत्यादिनोपधालोपः। जनेर्नकारस्य "स्तो श्चुना श्चुः" ८।४।३९ इति श्चुत्वं ञकारः। "अथ" इत्यादि चोद्यम्। "ऋच्छत्यृताम्" इत्यादिना परीहारः। "उत्सर्गश्छन्दसि" इत्यादि। सामान्येन विधानम् = उत्सर्गः। एतदुक्तं भवति-- प्रकृतिविशेषमनुपादाय धातुमात्रात् किकिनोरुत्पादौ द्रष्टव्याविति। धातुमात्राद्विधातव्याविति यावत्। कुतो हेतोरित्याह-- "सदादिभ्योऽपि दर्शनात्" इति। सदादिभ्योऽपि सूत्रानुपात्तेभ्यः किकिनौ यस्मादुत्सर्गः कत्र्तव्यः। "सेदिः,नेमिः"इति। पूर्वदेत्त्वाभ्यासलोपौ। "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।८५४), "णम प्रह्वत्वे शब्दे" (धा।पा।९८१), "अत एकहल्मध्येऽनादेशादेर्लिटि"६।४।१२० इत्येत्त्वाभ्यासलोपौ। "दधिः, चक्रिः" इति। घाञः पूर्ववदाकारलोपः। "चक्रिः, सस्रिः" इति। करोतेः सत्र्तेश्च यणादेशः। "जज्ञिः" इति। जनेः पूर्वच्चुत्वोपधालोपौ। "नेमिः"इति। पूर्ववदत्त्वाभ्यासलोपौ। "सहिवहि" इत्यादि। भाषायामपि वत्र्तते। "सासहिः" इत्यादि। सहादिभ्यो यङ, द्विर्वचनम्, पूर्ववदकारयलोपौ॥

बाल-मनोरमा

आदृगमहनजनः किकिनौ लिट् च ९५३, ३।२।१७१

आदृगम। आत्, ऋ, गम, हन, जन्, एषां द्वन्द्वात्पञ्चमी।कि किन् अनयोद्र्वन्द्वः। लिट् चेति व्याचष्टे -- तौ च लिड्वदिति। तच्छीलादिष्वित्येव। पपिरिति। पाधातोः किः। द्वित्वादि, आल्लोपः। ददिरिति। दाधातोः किः। द्वित्वादि। बभ्रिर्वज्रमिति। भृञः किः, द्वित्वादि। जघ्निरित। हनः किः। द्वित्वादि। "गमहने"त्युपधालोपः। "हो हन्ते"रिति कुत्वम्। जज्ञिरिति। जनेः किः। द्वित्वादि। एवं किन्यपि बोध्यम्। स्वरे विशेषः। छान्दसमप्येतत्सूत्रद्वयं भाषायामित्यादिवक्ष्यमाणवरातिकविवेचनाय इहोपन्यस्तम्। भाषायामिति। वार्तिकमिदम्। धाञ्, कृ, सृ, गमि, जनि, नमि एभ्यः षड्भ्यः किकिनौ , तौ च लिड्वदिति वक्तव्यमित्यर्थः। दधिरित्यादि। किकिनोः कृतयोर्द्वित्वादि यथासंभवं ज्ञेयम्। नेमिरिति। नमेः किः। द्वित्वम्। एत्वाभ्यासलोपौ। सासहीति। सहेर्यङि द्वित्वादौ "दीर्गोऽकितः" इति दीर्घे, किकिनोः कृतयोः "यस्य हलः" इति यकारलोपे , अतो लोपे "सासही"ति निर्देशः। एवं वहेः चलेः पतेश्च यङन्तस्य किकिनन्तस्य निर्देशः। एषां निपातनस्य उपसङ्ख्यानमित्यर्थः। तदाह-- यङन्तेभ्यः सहत्यादिभ्य इति। नीगभाव इति। "नीग्वञ्चु" इति प्राप्तस्य नीगागमस्याऽभावन इत्यर्थः।

तत्त्व-बोधिनी

आदृगमहनजनः किकिनौ लिट् च ७८३, ३।२।१७१

आद्दग। "ऋदोर"बितिवदादिति दकारो मुखसुखार्थो, न त्वयं तकारः। तेन तत्परत्वाऽभावाद्द इत्येनेन दीर्घोऽपि गृह्नते।ततुरिः। जगुरिः। तृ? प्लवनतरणयोरित्यस्य, गृ? निगरण इत्यस्य च "बहुलं छन्दसी" त्युत्वे रूपमिति प्राञ्चः। वस्तुतस्तु आदित्यादि प्रकृतिविशेषणम्। उदाहरणं प्रपञ्चमात्रम्। किकिनौ लिट्चेत्येतावन्मात्रमेव विवक्षितम्। तथा च वार्तिकं-- "किकिनावुत्सर्गश्छन्दसि सदादिभ्यो दर्शना"दिति। उदाह्मतं च भाष्ये-- सेहिर्नेमिरित्यादि। एवं स्थिते आदिति तपरकरणेऽपि न क्षतिरिति ध्वनयन्नाह-- आदन्तादृदन्तादिति। बभ्रिर्वज्रमिति। "न लोके" ति षष्ठीनिषेधाद्द्वितीया। किकिनोः स्थाने तिबादयो न, "लिड्व"दित्यतिदेशेन स्वरूपाऽबाधेनैव कार्यातिदेशात्। छान्दससूत्रद्वयोपन्यसनं भाषायां धाञित्यादिवार्तिकविषयविवेचनार्थम्। इह च वार्तिके गमिर्यद्यपि न दृश्यते तथापि धातुवृत्तौ, क्वचिद्वृत्तिपुस्तके च दर्शनादुपन्यस्तः। जग्मिरिति। "गमहनजने"त्युपधालोपः। जघ्निरिति। "अभ्यासाच्चे"ति कुत्वम्।

* भाषायां धाञ्कृसृगमिजनिनमिभ्यः। दधिरिति। आतो लोपः। नेमिरिति। एत्वाभ्यासलोपौ।

* सासहिवावहिचाचलिपापतीनामुपसङ्ख्यानम्। सासहीत्यादि। यङोऽतोलोपेयलोपः। अभ्यासदीर्घः। नीगभावश्चेति। "नीग्वञ्चु" इत्यादिना प्राप्तस्य नीगागमस्याऽभाव इत्यर्थः। तृष्णगिति। ङित्त्वान्न गुणः। नजिङ इकार उच्चारणार्थः।

---

सूत्रम्

काशिका-वृत्तिः

स्वपितृषोर्नजिङ् ३।२।१७२

छन्दसि इति निवृत्तम्। स्वपेः तृषेश्च तच्छीलादिषु कर्तृषु निजिङ् प्रत्ययो भवति। स्वप्नक्। तृष्णक्। धृषेश्चेति वक्तव्यम्। धृष्णक्।

न्यासः

स्वपितृषोर्नजिङ्। , ३।२।१७२

"स्वप्नक, तृष्णक्" इति। "ञिष्वप शये" (धा।पा।१०६८), "ञितृषा पिपासायाम्" (धा।पा।१२२८), "चोः कुः"८।२।३० इति कुत्वम्-- गकारः। तस्य "वाऽवसाने" ८।४।५७ इति चत्र्वम्-- ककारः। नजिङो ङकारस्तृषेश्च गुणप्रतिषेधार्थः, इकार उच्चारणार्थः॥

बाल-मनोरमा

स्वपितृषोर्नजिङ् ९५४, ३।२।१७२

स्वपितृषोर्नजिङ्। पञ्चम्यर्थे षष्ठी। स्वपेर्नजिङ् स्यात्तच्छलादिष्वित्यर्थः। जकारादिकार उच्चारणार्थः। ङकार इत्। स्वप्नगिति। स्वपनशील इत्यर्थ-। स्वप्नजौ स्वप्नजः। एवं तृष्णक्। तर्षणशीलः इत्यर्थः। धृषेश्चेति। "नजि"ङिति शेषः। काशिकादाविति। भाष्ये तु न दृश्यते इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

शृवन्द्योरारुः ३।२।१७३

शृ हिंसायाम्, वदि अभिवादनस्तुत्योः, एताभ्यां धातुभ्यां तच्छीलादिषु कर्तृषु आरुः प्रत्ययो भवति। शरारुः। वन्दारुः।

न्यासः

शृवन्द्योरारुः , ३।२।१७३

शृणोतेः "लषपत" ३।२।१५४ इत्यादिनोकञपि भवति। वन्दतेः "अनुदात्तेतश्च" ३।२।१४९ इत्यादिना युचि प्राप्ते वचनमिदम्॥

बाल-मनोरमा

शृवन्द्योरारुः ९५५, ३।२।१७३

शृवन्द्योरारुः। पञ्चमर्थे षष्ठी। "शृ? हिंसायां" "वदि अभिवादनस्तुत्योः"। आभ्याम् आरुप्रत्ययः स्यात्तच्छीलादिष्वित्यर्थः।

तत्त्व-बोधिनी

शवन्द्योरारुः ७८४, ३।२।१७३

* क्रुकन्नपीति। अत एव "भीलुभीलुकभीरुकाः" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

भियः क्रुक्लुकनौ ३।२।१७४

ञिभी भये, अस्माद् धातोः तच्छीलादिषु कर्तृषु क्रुक्लुकनौ प्रत्ययु भवाः। भीरुः, भीलुकः। क्रुकन्नपि वक्तव्यः। भीरुकः।

न्यासः

भियः क्रुक्लुकनौ। , ३।२।१७४

"क्रुकन्नपि वक्तव्यम्" इति। क्रुकन्नित्यपरः प्रत्ययो वाच्यः, व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- "आदृगमहन" ३।२।१७१ इत्यादेः सूत्राच्चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, स चानुक्तसमुच्चयार्थः। तेन क्रुकन्नपि भविष्यतीति॥

बाल-मनोरमा

भियः क्रुक्लुकनौ। ९५६, ३।२।१७४

भियः। भीधातोः क्रु क्लुकन् एतौ स्तच्छीलादिष्वित्यर्थः। कित्वान्न गुणः।

---

सूत्रम्

काशिका-वृत्तिः

स्थाईशभासपिसकसो वरच् ३।२।१७५

ष्ठा गतिनिवृत्तौ, ईश ऐश्वर्ये, भासृ दीप्तौ, पिसृ पेसृ गतौ, कस गतौ, एतेभ्यस् तच्छीलादिषु कर्तृषु वरच् प्रत्ययो भवति। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। विकस्वरः।

न्यासः

स्थेशभासपिकसकसो वरच्। , ३।२।१७५

"स्थावरः"इति। "एकाच"७।२।१० इत्यादिनेट्प्रतिषेधः।"ई()आरः" इत्यादावपि "नेड्? वशि कृति" ७।२।८ इति। तिष्ठतेः पूर्वसूत्रविहितौ क्स्नूकञावपि वचनाद्भवतः। ईशभासोः पूर्ववद्युचि प्राप्त इदं वचनम्।

बाल-मनोरमा

स्थेशभासपिसकसो वरच् ९५७, ३।२।१७५

स्थेश। ष्ठा गतिनिवृत्तौ, ईश ऐ()आर्ये, भासृ दीप्तौ, पिसृ पेसृ गतौ, कस गतौ,एभ्यो वरच् स्यात्तच्छीलादिष्वित्यर्थः। ई()आरीति तु पुंयोगे ङीष्।

तत्त्व-बोधिनी

स्थेशभासपिसकसो वरच् ७८५, ३।२।१७५

ई()आर इति। "नेड्वशी"तीडभावः। पेस्वर इति। पिसृ पेसृ गतौ। कस्वर इति। कस गतौ।

---

सूत्रम्

काशिका-वृत्तिः

यश् च यङः ३।२।१७६

या प्रापने, अस्माद् यङन्तात् तच्छीलादिषु कर्तृषु वरच् प्रत्ययो हवति। यायावरः।

न्यासः

यश्च यङः। , ३।२।१७६

"यायावरः" इति। पूर्ववदकारयलोपौ॥

बाल-मनोरमा

यश्च यङः ९५८, ३।२।१७६

यश्च यङः। "या प्रापणे" इत्यस्य धातोरनुकरणस्य या इत्यस्य "यः" इति षष्ठ()न्तम्। तदाह--- यातेरिति। याधतोर्यङ्। द्वित्वादि। "दीर्घोऽकितः" इत्यभ्यासस्य दीर्घः। "यायाये"ति यङन्ताद्वरचिविशेषमाह-- अतो लोप इति। हलः परत्वाऽभावात् "यस्य हलः" इति यकारोलोप न। "यायाय् - वर" इति स्थिते आह-- लोपो व्योरिति यकारलोप इति। ननु अतो लोपस्य "अचः परस्मिन् इतस्थानिवत्त्वदाकरेण व्यवधानाद्वल्परत्वाऽभावात्कथमह यलोप इत्यत आह-- तस्येति। तस्य= अल्लोपस्य यलोपे कर्तव्ये "न पदान्ते"ति स्थानिवत्त्वनिषेधादित्यर्थः। एवं च यङोऽकारस्य यकारस्य च लोपे यायावर इत्यत्र "आतो लोप इटि चे"त्याल्लोपमाशङ्क्य निराकरोति-- अल्लोपस्येति। यङकारलोपस्य "अचः परस्मि"न्नति स्थानिवत्त्वमाश्रित्य तदाकारात्मकाद्र्धधातुकपरत्वादाकारस्य "आतो लोप इटि चे"त्याल्लोपे प्राप्ते सति परिहार उच्यते इत्यर्थः। परिहारमेवाह-- वरे लुप्तं न स्थानिवदिति। "लुप्त"मिति भावे क्तः। "न पदान्ते" ति सूत्रे "वरे" इत्यनेन वरे परे विहितं न स्थानिवदिति लभ्यते। अल्लोपोऽयमाद्र्धधातुके वरे परे विहितः। अतस्तस्य स्थानिवत्त्वाऽभावान्न यङोऽकारमाश्रित्य "आतो लोप इटि चे"त्यस्य प्रवृत्तिरित्यर्थः। एवंच "न पदान्ते"ति सूत्रे "वरे" इत्यंशस्य , "यलोपे" इत्यंशस्य च यायावर इत्युदाहरणमिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ३।२।१७७

भ्राजादिभ्यः धातुभ्यस् तच्छीलादिषु कर्तृषु क्विप् प्रत्ययो भवति। विभ्राट्, विभ्राजौ, विभ्राजः। भाः, भासौ, भसः। धूः, धुरौ, धुरः। विद्युत्, विद्युतौ, विद्युतः। ऊर्क्, ऊर्जौ, ऊर्जः। पूः, पुरौ, पुरः। जवतेर् दीर्घश्च निपात्यते। जूः जुवौ, जुवः। ग्रावस्तुत्, ग्रावस्तुतौ, ग्रावस्तुतः। किमर्थम् इदम् उच्यते, यावता अन्येभ्यो ऽपि दृश्यन्ते ३।२।७५, क्विप् च ३।२।७६ इति क्विप् सिद्ध एव? ताच्छीलिकैर् बाध्यते। वा ऽसरूपविधिर् न अस्ति इत्युक्तम्। अथ तु प्रायिकम् एतत्। ततस् तस्य एव अयं प्रप्ञ्चः।

लघु-सिद्धान्त-कौमुदी

भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ८४४, ३।२।१७७

विभ्राट्। भाः॥

न्यासः

भ्राजभासधुर्विद्युतोजिपृ?जुग्रावस्तुवः क्विप्। , ३।२।१७७

"{भ्राजृ- धा।पा} भ्राज दीप्तौ" (धा।पा।१८१), "भासृ दीप्तौ" (६२४), "उर्वी तुर्वी थुर्वी धुर्वी हिंसार्थाः" (धा।पा।५६९,५७०,५७१,५७३), "द्युत दीप्तौ" (धा।पा।७४१), "उर्ज बलप्राणनयोः" (धा।पा।१५४९), "पृ? पालनपूरणयोः" (धा।पा।१०८६), "जु"इति सौत्रो धातुः, "ष्टुञ् स्तुतौ" (धा।पा।१०४३) ग्रावपूर्वः। "विभ्राट्" इति। व्रश्चादिसूत्रेण ८।२।३६ षत्वम्। पूर्ववज्जश्त्वं चत्र्वञ्च। "धूः" इति। "राल्लोपः" ६।४।२१ इति वकारलोपः, "र्वोरुपधाया दीर्घ इकः" ८।२।७६ इति दीर्घः। "पूः"इति। "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्त्वम्, रपरत्वञ्च, पूर्ववद्दीर्घत्वम्। "जवतेर्दीर्घश्च" इति। कथम्? केचिदाहुः-- सूत्रे "जू" इति दीर्घः पठितव्य इति। अपरे त्वाहुः- उत्तरसूत्रे दृश्यत इत्युभयोरपि योगयोः शेषः, तच्च विध्यन्तरोपसंग्रहार्थम्, अतोजवतेर्दीर्घो विधीयत इति। ग्रावाणं स्तौतीति ग्रावस्तुत्।"ह्रस्वस्य पिति कृति तुक्" ६।१।६९। "किमर्थमिदम्" इत्यादि द्योद्यम्। "ताच्छीलिकैर्बाध्यते" इति परीहारः। स्यादेतत्-- वाऽसरूपविधिना क्वचिदपि भविष्यतीत्याह-- "वाऽसरूपविधिश्च" इति। एतत्तु "निन्दहिंस" ३।२।१४६ इत्यादौ सूत्र उक्तम्। ननु च "सूददीपदीक्षश्च" ३।२।१५३ इति सूत्रे प्रायिकत्वं ज्ञापकस्य प्रतिपादितम्, वाऽसरूपविधिश्चात्र नास्तीत्याह-- "तस्यैव" इति। "अन्येभ्योऽपि दृश्यते" ३।२।७५, "क्विप् च" ३।२।७६ इत्यादिना भवति॥

बाल-मनोरमा

भ्राजभासरधुर्विद्युतोर्जिपृ?जुग्रावस्तुवः क्विप् ९५९, ३।२।१७७

भ्राजभास। भ्राज, भास , धुर्वि, द्युत, ऊर्जि, पृ? , जु, ग्रावस्तु, एभ्योऽष्टभ्यः क्विप्स्यात्तच्छीलादिषु कर्तृष्वित्यर्थः। विभ्राडिति। "व्रश्चे"ति षः। भा इति। भासेः क्विपि सकारान्तस्य रुत्वविसर्गौ। धूरिति। धुर्वीधातोः क्विप्। "राल्लोपः" इति वकारस्य लोपः। "धु"रिति रेफान्तम्। सुलोपः। "र्वोरुपधायाः" इति दीर्घः। पूरिति। पृ()धातोः क्विप्। "उदोष्ठ()ए"त्युत्त्वम्, रपरत्वम्। "पु"रिति रेफान्तम्, सुलोपे "र्वो"रिति दीर्घः। जुधातोः क्विपि दीर्घं साधयितुमाह-- दृशिग्रहणस्याप्यपकर्षादिति। उत्तरसूत्रादिति भाव-। अत्र व्याख्यानमेव शरणम्। ननु "ग्रावस्तु" इति कथं समस्तनिर्देशः, सुबन्तस्य ग्रावशब्दस्य धातुना समासाऽसंभवादित्यत आह-- ग्रावशब्दस्येति। ग्रावस्तुदिति। पित्त्वात्तुक्।

तत्त्व-बोधिनी

भ्राजभाससधुर्विद्युतोर्जिपृ?जुग्रावस्तुवः क्विप् ७८६, ३।२।१७७

भ्राज। " आ क्वे" रित्युक्तत्वात्()तच्छीलादिष्वयं क्विप्। भ्राजृ दीप्तौ, भासृ दीप्तौ, धुर्वी हिंसायां, द्युत दीप्तौ, ऊर्ज बलप्राणनयोः, पृ? पालनपूरणयोः, जु गतौ सौत्रः। ग्रावपूर्वः-- ष्टुञ् स्तुतौ। विभ्राडिति। "व्रश्चे"ति षत्वम्। जश्त्वचर्त्वे।

धूरिति। "राल्लोपः" इति वलोपः। "र्वोरुपधायाः" इति दीर्घः। ऊर्गिति। "चोः कुः"। "रात्सस्ये"ति नियमान्न संयोगान्तलोपः। पूरिति। "उदोष्ठ()पूर्वस्ये"त्युत्वम्। "र्वो"रिति दीर्घः।

* क्विब्वचिप्रच्छयायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च। वाक् प्राडिति। इह दीर्घः, संप्रसारणाऽभावश्च। संप्रसारणप्राप्तिस्तु "वचिस्वपि" "ग्रहिज्यावयी"त्यादिना। श्रयति हरिं श्रीरिति। प्राचा तु श्रयन्त्येतामिति कर्मणि क्विबुदाह्मतः। तत्र "कर्तरि कृ"दिति सूत्रविरोधः स्पष्ट एव। बाहुलकं तु अगतिकगतिः।

* द्युतिगमिजुहोतीनां द्वे च। द्वे चेति। कृतेऽपि द्वित्वे अभ्याससंज्ञेह दुर्लभा, प्रत्यासत्त्या षाष्ठद्वित्व एव प्रवृत्तेः, अतएव आष्ठमिके सा नेत्याशङ्कायामाह-- दृशिग्रहणादिति। दिद्युदिति। "द्युतिस्वाप्यो"रित्यभ्यासस्य संप्रसारणम्। जगदिति।"गमः क्वौ" इति मलोपे तुक्। अत्र द्वे चे"ति चकारेण दीर्घः समुच्चीयमानो द्युतिगम्योर्न भवति, दीर्घश्रुत्या "अचश्चे"ति परिभाषोपस्थानात्। अजन्तस्य जुहोतेरेव संभवतीत्याशयेनाह---- जुहोतेर्दीर्घश्चेति। जुहोतीति जुहूः।

* जुहोतेर्दीर्घश्च। ह्मस्वश्चेति। चकारेण द्वित्वं समुच्चीयते।

* ध्यायतेः संप्रसारणं च। धीरिति। ध्यायतीति धीः। "हलः" इति दीर्घः। ननु ध्यायति पुरुषो न तु धीः, एवं जुहोत्यनया पुरुष इति सर्वसंमतत्वात् कथं तर्हि भवदुक्तार्थः सङ्गच्छत इति चेत्। अत्राह हरदत्तः- करणस्य कर्तृत्वविवक्षायां क्विब् भवति।

---

सूत्रम्

काशिका-वृत्तिः

अन्येभ्यो ऽपि दृश्यते ३।२।१७८

अन्येभ्यो ऽपि धातुभ्यः ताच्छीलिकेषु क्विप् प्रत्ययो दृश्यते। युक्। छित्। भित्। दृशिग्रहणं विध्यन्तरौपसङ्ग्रहार्थम्। क्वचिद् दीर्घः, क्वचिद् द्विर्वचनम्, क्वचित् सम्प्रसारणम्। तथा च आह क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घो ऽसंप्रसारणं च। वाक्। शब्दप्राट्। आयतस्तूः। कटप्रूः। जूः। श्रीः। जुग्रहनेन अत्र न अर्थः, भ्राजादि सूत्र एव गृहीतत्वात्। द्युतिगमिजुहोतीनां द्वे च। दिद्युत्। जगत्। जुहोतेर् दीर्घश्च। जुहूः। दृ भ्ये इत्यस्य ह्रस्वश्च द्वे च। ददृत्। ध्यायतेः सम्प्रसारणं च। धीः।

न्यासः

अन्येभ्योऽपि दृश्यते।, ३।२।१७८

ननु चान्यभ्योऽपीत्येतावतैव सिद्धम्, तत्किमर्थं दृशिग्रहणमित्यादि? क्वचिदित्यादिना येषामुपसंग्रहार्थं दृशिग्रहणं तानि विध्यन्तराणि दर्शयति। यस्मात् विध्यन्तराणामुपसंग्रहार्थं दृशिग्रहणम्ेवञ्च कृत्वा वृत्तिकारः "क्विब्वचिपृच्छि" (वा।२८८) इत्यादिकं वाक्यं पठति। दृशिग्रहणोपात्तानि तान्येव विध्यन्तराणि दर्शयितुमित्यभिप्राय-। कथं पुनर्दृशिग्रहणेन विध्यन्तरोपसंग्रहः? दृशिग्रहणे हि सति "यथा दृश्यन्ते क्विबन्ता धातवस्तथैव तेऽनुगन्तव्याः" इत्येषोऽर्थो लभ्यते। त()स्मश्चार्थे लभ्यमाने द्विर्वचनादिविधयः संगृहीता भवन्ति। एवं हिते यथा दृश्यन्ते तथानुगता भवन्ति। यदि यथायोगं द्विर्वचनादयो विधीयन्ते, तदा क्विबन्तेषु क्वचिद्द्विर्वचनं दृश्यते, क्वचिदपि संप्रसारणमिति युक्तमुक्तम्-- "दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्" इति। "वाक्" इति। वचेर्वच्यादिसूत्रेण ६।१।१५ प्राप्तस्य सम्प्रसारणस्याभावः क्रियते। "शब्दप्राट्" इति। पृच्छेरपि ग्रह्यादिसूत्रेण ६।१।१६ सम्प्रसारणस्य। व्रश्चादिसूत्रेण ८।२।३६ षत्वम्, पूर्ववज्जश्त्वं चत्र्वञ्च। आयतं स्तौतीति "आयतस्तूः"। "ष्टुञ् स्तुतौ" (धा।पा।१०४३)। कटं प्रवत इति "कटप्रूः"।

"प्रुङ गतौ" (धा।पा।९७७)। "श्रीः" इति। "श्रिञ् सेवायाम्" (धा।पा।८९७)। "दिद्युत्" इति। "जगत्" इति। "गमः क्वौ"६।४।४० इत्यनुनासिकलोपः। "ददृत्" इति। "उरत्"७।४।६६ इत्यत्त्वम्, रपरत्वम्, हलादिशेषः ७।४।६०।"धीः"इति। "ध्यै चिन्तायाम्" (धा।पा।९०८) "हलः" ६।४।२ इति दीर्घः॥ "धनिकाधमर्णयोः" इत्यादि। धनिको यस्मै ऋणं धार्यते। अधमर्णो यो धारयति। तदन्तरे मध्ये यस्तिष्ठत्यात्मपक्षपतितः सम्प्रत्ययहेतुः सप्रतिभूशब्देनोच्यते, न सर्वः। तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र प्रत्ययो न वति। एतच्च शब्दशक्तिस्वाभाव्याल्लभ्यते, "दृश्यते" ३।२।१७८ इत्यस्यानुवत्र्तेर्वा। अस्य ह्नुवृत्तौ प्रतिभूरिति संज्ञेयम्, तत् किमन्तरग्रहणेन, संज्ञायामित्येव वक्तव्यम्? नैतदस्ति; द्रव्यताविघाता हि संज्ञाशब्दा भवन्ति, न चैवं प्रतिभूशब्दः। तथापि सत्यपि देवदत्ते कदाचिदसौ न प्रवत्र्तत एव॥

बाल-मनोरमा

अन्येभ्योऽपि दृश्यते ९६०, ३।२।१७८

अन्येभ्योऽपि। क्विबिति। शेषपूरणमिदम्। "भ्राजभासे"त्यादिसूत्रोपात्तापेक्षया अन्येभ्योऽपि धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् दृश्यते इत्यर्थः। विध्यन्तरेति। विधीयते इति विधिः = कार्यं। कार्यान्तरोपसङ्ग्रहार्थमित्यर्थः। तदेव दर्शयति-- क्वचिद्दीर्घ इत्यादि। कक्विब्वचीत्यादिनेति। "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं चे"त्यौणादिकसूत्रेणेत्यर्थः। तृना बाधा मा भूदिति। वासरूपविधिस्तु ताच्छीलिकेषु नेति भावः। वागिति। वचधातोः क्विप्, वचनादुपधाया दीर्घः, "वचिस्वपी"ति संप्रसारणाऽभावश्च। एवं कटप्रूरित्यत्र दीर्घः। प्राडिति। वचनान्न संप्रसारणम्। जुरुक्त इति। "भ्राजभासेत्यत्रे"ति शेषः। अतोऽत्र तद्ग्रहमं मा()सत्त्विति भावः। श्रीरिति। श्रिञः क्विपि दीर्घः। द्युतीति। "द्युतिगमिजुहोत्यादिनां द्वित्वं क्विप्चे"ति वाच्यमित्यर्थः। "पूर्वोऽभ्यासः" इत्यतर् षाष्ठद्विर्वचन एव पूर्वखण्डस्याऽभ्याससंज्ञावचनादाह-- दृशिग्रहणादिति। "अन्येब्योऽपि दृश्यते" इत्यत्रेत्यर्थः। ततश्चाऽभ्यासकार्यं हालदिशेषादीति भावः। दिद्युदिति। "द्युतिस्वाप्यो"रिति संप्रसारणम्। जगदिति। गमेः क्विप् "गमः क्वौ" इत#इ मलोपे तुक्। जुहोतेर्दीर्घश्चेति। वार्तिकमिदम्। चात्क्विब्द्वित्वे। ह्रस्वश्चेति। वार्तिकमिदम्। ददृदिति। ह्रस्वे कृते तुक्। ध्यायते। वार्तिकमिदम्। चात्क्विप्। धीरिति। ध्यैधातोः क्वनिपि संप्रासरणे पूर्वरूपे "हलः" इति दीर्घ इति भावः। अत्र "ध्यायतेः संप्रसारमं चे"त्युणादिषु पठितत्वादिदं वार्तिकं माऽस्त्वित्याहुः। वस्तुतस्तु उणादिसूत्राणि न पाणिनीयानि किन्तु ऋष्यन्तरप्रणीतानीति वक्ष्यते अतो न पौरनुक्त्यशङ्का।

---

सूत्रम्

काशिका-वृत्तिः

भुवः संज्ञाऽन्तरयोः ३।२।१७९

भवतेर् धातोः संज्ञायाम् अन्तरे च गम्यमाने क्विप् प्रत्ययो भव्ति। विभूर्नाम् कश्चित्। अन्तरे प्रतिभूः। धनिकाधमर्णयोरन्तरे यस् तिष्ठति स प्रतिभूरुच्यते।

बाल-मनोरमा

भुवः संज्ञान्तरयोः ९६१, ३।२।१७९

भुवः संज्ञान्तरयोः। "क्वि"बिति शेषः। "संज्ञान्तरयोरेवेति" नियमार्थं सूत्रम्। संज्ञायामुदाहरति-- मित्रभूर्नामेति। अन्तरे उदाहरति-- धनिकेत्यादि। यावदद्रव्यभाविन्यः प्रतिभूशब्दस्तु सत्येव पुरुषे कदाचिन्न भवति, ऋणे प्रतिदत्ते सति प्रातिभाव्यस्य निवृत्तेः।

तत्त्व-बोधिनी

भुवः संज्ञान्तरयोः ७८७, ३।२।१७९

भुवः संज्ञा। धनिकेत्यादि। तेन ग्रामयोरन्तरे यस्तिष्ठति तत्र नेति भावः। एतच्च दृशिग्रहमाऽनुवृत्त्या लभ्यते। नन्वेवं प्रतिभूशब्द संज्ञेति फलितं, तत्र "संज्ञाया"मित्येव सिद्धं किमन्तरग्रहणेन?। अत्राहुः- यावद्द्रव्यभाविन्यः संज्ञाः। प्रतिभूशब्दस्तु सत्येव तस्मिन् ऋणप्रदानेन निवर्तत इत्युभयोर्भेद इति। शं सुखं भावयतीति शम्भुरित्यर्थाभ्युपगमेनाह-- अन्तर्भावितेति। शं भवति= सुखस्वरूपो भवतीति शम्भुरित्यन्ये। सं भवत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाऽभावाच्चिन्त्येति माधवः।

---

सूत्रम्

काशिका-वृत्तिः

विप्रसम्भ्यो ड्वसंज्ञायाम् ३।२।१८०

भुवः इति वर्तते। वि प्र सम् इत्येवं पूर्वाद् भवतेर् धातोः डुप्रतयो भवति, न चेत् संज्ञा गम्यते। विभुः सर्वगतः। प्रभुः स्वामी। सम्भुः जनिता। असंज्ञायाम् इति किम्? विभूर्नाम कश्चित्। डुप्रकरणे मितद्र्वादिभ्य उपसङ्ख्यनम्। मितं द्रवति मितद्रुः। शम्भुः।

न्यासः

विप्रसंभ्यो ड्?वसंज्ञायाम्। , ३।२।१८०

"विभुः" इति। पूर्वेण क्विबेव भवति। "मितद्रवादिभ्य उपसंख्यानम्" इति। आविशेषेण-- संज्ञायाम्, असंज्ञायाञ्च। "मितद्रवादिभ्यः"इति तादर्थ्ये चतुर्थी। मितद्रवादयो डुप्रत्ययान्ताः साधवो यथा स्युरित्येवमर्थः। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तच्च प्रतिपादनं प्रकृतत्वाड्()डुशब्दस्य। तत्रेदं प्रतिपादनम्-- "अन्येभ्योऽपि दृश्यते" ३।२।१७८ इत्यतोऽपि शब्दोऽत्रानुवत्र्तते, तेन मितद्रवादिब्यो डुप्रत्ययो धात्वन्तरादपि भवति, पदान्तरे चेति॥

बाल-मनोरमा

विप्रंसभ्यो ड्वसंज्ञायाम् ९६२, ३।२।१८०

विप्रसंभ्यः। "डु- अ- संज्ञाया"मिति छेदः। विभुरिति। डित्तवसमाथ्र्यादभस्यापि टेर्लोपः। सप्भुरिति। संभवति उत्पादयतीति सम्भुः। तदाह-- जनितेति। मितद्()व्रादिसिद्ध्यर्थं डुप्रत्ययस्य उपसङ्ख्यानमित्यर्थः। शम्भुरिति। शं = सुखं , भवति = उत्पादयतीत्यर्थः। तदेवोपपादयति - अन्तर्भावितेति।

---

सूत्रम्

काशिका-वृत्तिः

धः करम्णि ष्ट्रन् ३।२।१८१

धयतेर् दधातेश्च कर्मणि कारके ष्ट्रन् प्रत्ययः भवति। षकारो डीषर्थः। धयन्ति तां दधति वा भैषज्यार्थम् इति धात्री। स्तनदायिनी आमलकी च उच्यते।

न्यासः

धः कर्मणि ष्ट्रन्। , ३।२।१८१

"धयतेः" इति। "धेट् पाने" (धा।पा।९०२)। "दधातेः" इति। "डुधाञ् धारणपोषणयोः" (धा।पा।१०९२)। "कर्मणि कारके"

इति। एतेन कर्मणः प्रत्ययार्थतां दर्शयन्नुपपदत्वमपाकरोति। यदि हि कर्मण उपपदत्वं स्यात् "कर्मण्यण्"३।२।१ इत्यस्मिन्नेव प्रकरणे विदध्यात्। एवं हि द्विः कर्मग्रहणं न कत्र्तव्यं भवति। ननु च यद्यपि द्विः कर्मग्रहणं न कत्र्तव्यं भवति। ननु च यद्यपि द्विः कर्मघणं न कत्र्तव्यं भवति, तदाप्युत्तरसूत्रेण ष्ट्रन्ग्रहमं कत्र्तव्यं जायते? जायतां नाम, लघीयो हि कर्मग्रहणात् ष्ट्रन्ग्रहणम्। नन्विह वत्र्तमान इत्यनुवृत्तेर्वत्र्तमानप्रत्ययो भवति, तत्र तु क्रियमाणे नैतल्लभ्यते? नैतदस्ति;इहापि क्रियमाणे नैव वत्र्तमाने प्रत्ययो भवति। न हि धात्रीत्युक्ते काप्यविशेषा प्रतीयते, किं तर्हि? क्रियाकारकसम्बन्धमात्रविशिष्टा स्त्री प्रतीयते-- आमलकी च दधति तां भैषज्यार्थमिति कृत्वा। तस्मात् "कर्मणि" इति प्रत्ययार्थं एव, नोपपदम्॥

बाल-मनोरमा

धः कर्मणि ष्ट्रन् ९६३, ३।२।१८१

धः कर्मणि ष्ट्रन्। धेटः कृतात्वस्य धाञश्च ध इति पञ्चम्यन्तम्। तदाह-- धेट इत्यादि। षकारात्तकारस्य ष्टुत्वसंपन्नटकारेण निर्देशः, षस्य इत्संज्ञायां लोपे सति ष्टुत्वसंपन्नस्य टस्य निवृत्तिः। तदाह-- धात्रीत्यादि।

तत्त्व-बोधिनी

धः कर्मणि ष्ट्रन् ७८८, ३।२।१८१

धः कर्मणि। कर्मणीति नोपपदम्, "ह्वावामश्चे"त्यनन्तरमेव "धः ष्ट्र"न्निति वक्तव्ये पृथक्कर्मग्रहणाद्व्याख्यानाद्वेत्याशयेनाह-- कर्मण्यर्थे इति। अत एव धीयते पीयत इति धात्री = स्तनदायिनीत्यादि व्याचक्षते।

---

सूत्रम्

काशिका-वृत्तिः

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३।२।१८२

दाप् लवने, णीञ् प्रापणे, शसु हिंसायाम्, यु मिश्रणे, युजिर् योगे, ष्टुञ् स्तुतौ, तुद व्यथने, षिञ् बन्धने, षिचिर् क्षरणे, मिह सेचने, पत्लृ गतौ, दंश दशने, णह बन्धने, एतेभ्यो धातुभ्यः करणे कारके ष्ट्रन् प्रत्ययो भवति। दाति अनेन इति दात्रम्। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। दंष्ट्रा। अजादित्वात् टाप्, न डीप्। दंशेरनुनासिकलोपेन निर्देशो ज्ञापनर्थः, क्ङितो ऽन्यस्मिन्नपि प्रत्यये नलोपः क्वचिद् भवति इति। तेन ल्युट्यपि भवति। दशनम्। नद्ध्री।

लघु-सिद्धान्त-कौमुदी

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ८४७, ३।२।१८२

दाबादेः ष्ट्रन् स्यात्करणेऽर्थे। दात्यनेन दात्रम्। नेत्रम्॥

न्यासः

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे। , ३।२।१८२

"दाप् लवने " इति। यथा "दाधा घ्वदाप्"१।१।१९ इति सूत्रे "दैप् शोधने" (धापा।९२४) इत्यस्यापि ग्रहणम्। तर्हीहापि कस्मान्न भवति? अनभिधानात्। प्रकृत्यैव हि दात्रमिति ष्ट्रन्प्रत्ययान्तेन लवनस्य करणमुच्यते, न शोधनस्य। "करणे कारके" इति। एतेन करणप्रत्ययार्थतां दर्शयन्नुपपदत्वं निराकरोति। यद्युपपदत्वमस्यस्यात् तदाजादिषु दंष्ट्राशब्दस्य

पाठो नोपपद्यते। "योक्त्रम्" इति। "चोः कुः"८।२।३० इति कुत्वम्। "मेढ्रम्" इति। "हो ढः" ८।२।३१ इति ढत्वम्, "झषस्तथोर्धोऽधः" ८।२।४० इति घत्वम्, "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्, "ढो ढे लोपः" ८।३।१३ "दंष्ट्रा"इति। अजादित्वाट्टाप्। "दंशेः"इत्यादि। ननु च यथा "त्यजरज" ३।२।१४२ इति रञ्जेरनुनासिकनिर्देशे घिनुण्प्रत्यये रागीत्यनुनासिकलोपो भवति, तथा दंशेः ष्ट्रन्प्रत्यये न लोपो भविष्यति,तत्कथमस्य ज्ञापकतोपपद्यते? नैष दोषः; यद्ययं निर्देशो दंशेः ष्ट्रन्प्रत्ययेऽनुनासिकलोपार्थः स्यात्, तदा दंष्ट्राशब्दस्याजादिपाठो विरुध्यते। तस्माज्ज्ञापकार्थत्वम्। "नद्ध्री"इति। "नहो धः"८।२।३४ इति धत्वम्, "झषस्तथोर्धो।धः" ८।२।४० इति तकारस्य धत्वम्, धकारस्य "झलां जश् झशि" ८।४।५२ इति जश्त्वम्, "षिद्()गौरादिभ्यश्च" ४।१।४१ इति ङीष्। येऽत्र सेटो धातवः शस्प्रभृतयस्तेषां हि "तितुत्रतथ" ७।२।९ इत्यादिनेट्()प्रतिषेधः॥

बाल-मनोरमा

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ९६४, ३।२।१८२

दाम्नी। दाप्, नी, शस, यु , युज, स्तु, तुद, सि, सिच, मिह, पत, दश , नह एषां त्रयोदशानां द्वन्द्वः। "दाप् लवने" इत्यस्य पकारस्य स्थाने "यरोऽनु" इति कृतमकारस्य निर्देशः। अत्र शसेः पतेश्च त्रप्रत्यये इटमाशङ्क्याऽऽह--

---

सूत्रम्

काशिका-वृत्तिः

हलसूकरयोः पुवः ३।२।१८३

पू इति पूङ्पूञोः सामान्येन ग्रहणम्। अस्माद् धातोः करणे कारके ष्ट्रन् प्रत्ययो भवति, तच्चेत् करणं हल,सूकरयोरवयवो भवति। हलस्य पोत्रम्। सूकरस्य पोत्रम्। मुखम्। उच्यते।

न्यासः

हलसूकरयोः पुवः। , ३।२।१८३

"तच्चेत् करणं हलशूकरयोरवयवो भवति" इति। एतेन हलशूकरयोरित्येषाऽवयवषष्ठी, नत्वभिधेयसप्तमीति दर्शयति। "{मुखमुच्यते-- काशिका, पदमञ्जरी च} मुखमेवोच्यते" इति। नान्यः कर्णाद्यवयवः। एतच्चाभिधानशक्तिस्वाभाव्यात्॥

बाल-मनोरमा

हलसूकरयोः पुवः ९६६, ३।२।१८३

हलसूकरयोः पुवः। पोत्रमिति। "तितुत्रतथसिसुसरे"ति नेट्।

तत्त्व-बोधिनी

हलसूकरयोः पुवः ७९१, ३।२।१८३

तच्चेत्करणमित्यादि। एतेन हलसूकरयोरभिधेयत्वमुपपदत्वं च निरस्तम्। मुखमित्यर्थ इति। तत्रैव रूढेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अर्तिलूधूसूखनसहचर इत्रः ३।२।१८४

ऋ गत्रौ, लूञ् छेदने, धू विधूनने, षू प्रेरणे, खनु अवदारने, षह मर्षणे, चर गतिभक्षणयोः, एतेभ्यो धातुभ्यः करणे कारके इत्रः पत्ययो भवति। अरित्रम्। अवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्।

न्यासः

अर्त्तिलूधूसूखनसहचर इत्रः। , ३।२।१८४

"धू विधूनने" (धा।पा।१३९८), "षू प्रेरणे" (१४०८) इत्यनयोग्र्रहणम्। "धूञ् कम्पने" (धा।पा।१४८७) " {षूङ-धा।पा।} षूञ् प्राणिगर्भविमोचने" (धा।पा।१०३१) "षूङ प्राणिप्रसवे" (धा।पा।११३२) इत्येतेषां "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति परिभाषया ग्रहणं न भवति॥

बाल-मनोरमा

अर्तिलूधूसूखनसहचर इत्रः ९६७, ३।२।१८४

अर्तिलूधू। अर्ति, लू, धू, सू , खन, सह , चर एषां सप्तानां द्वन्द्वात्पञ्चमी।

तत्त्व-बोधिनी

अर्तिलूधूसूखनसहचर इत्रः ७९२, ३।२।१८४

अर्तिलूधूसू। धू विधूनने इति कुटादिरेव गृह्रते, निरनुबन्धकत्वात्। अत एव "गाङ्कुटे"ति ङित्त्वाद्गुणनिषेधे उवङ्। तदाह--धुवित्रमिति।

---

सूत्रम्

काशिका-वृत्तिः

पुवः संज्ञायाम् ३।२।१८५

पूङ्पूञोः सामान्येन ग्रहणम्। पवतेर् धतोः करणे कारके इत्रप्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते। दर्भः पवित्रम्। बर्हिष्पवित्रम्।

लघु-सिद्धान्त-कौमुदी

पुवः संज्ञायाम् ८५०, ३।२।१८५

पवित्रम्॥

लघु-सिद्धान्त-कौमुदी

इति पूर्वकृदन्तम् ८५०, ३।२।१८५

लघु-सिद्धान्त-कौमुदी

८५०, ३।२।१८५

अथोणादयः

लघु-सिद्धान्त-कौमुदी

कृवापाजिमिस्वदिसाध्यशूभ्य उण् १ ८५०, ३।२।१८५

करोतीति कारुः। वातीति वायुः। पायुर्गुदम्। जायुरौषधम्। मायुः पित्तम्। स्वादुः। साध्नोति परकार्यमिति साधुः। आशु

शीघ्रम्॥

न्यासः

पुवः संज्ञायाम्।, ३।२।१८५

"बर्हिष्पवित्रम्" इति। पवतेः, पुनातेर्वा। अनेन पवित्रं बर्हिषा कृतम्। बर्हिष्पवित्रम् = कुशविकारः। प्रदेशिन्या अङ्गुलेर्वेष्टनमुच्यते।

---

सूत्रम्

काशिका-वृत्तिः

कर्तरि चर्षिदेवतयोः ३।२।१८६

पुवः इति वर्तते। पुवः करने कर्तरि च इत्रप्रत्ययो भवति। ऋषिदेवतयोः यथासङ्ख्यं सम्बन्धः। ऋषौ करणे, देवतायां कर्तरि। पूयते अनेन इति पवित्रो ऽयम् ऋषिः। देवतायाम् अग्निः पवित्रं स मा पुनातु। वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु।

न्यासः

कर्त्तरि चर्षिदेवतयोः।, ३।२।१८६

बाल-मनोरमा

कर्तरि चर्षिदेवतयोः ३७२, ३।२।१८६

कर्तरि च। पवित्रमिति। पावमान्यादिसूक्तम्। अग्निः पवित्रमिति। पुनातीत्यर्थः। सामान्याभिप्रायमेकवचनं, नपुंसकत्वं च। इति पूर्वकृदन्तम्॥

॥ इति बालमनोरमायाम् पूर्वकृदन्तम्॥

अथ रुधादयः।

अथ श्नम्विकरणा धातवो निरूप्यन्ते।

तत्त्व-बोधिनी

कर्तरि चर्षिदेवतयोः ९७९, ३।२।१८६

कर्तरि चर्षि। इत्रः स्यादिति। करणे कर्तरि चेत्यर्थः। काशिकानुसारेण यतासङ्ख्यं व्याचष्टे-- ऋषौ करणे इति। "कर्तरि कृ"दिति सूत्रस्थभाष्यकैयटयोस्तु यथासङ्ख्यं नेति गम्यत इति शब्दकौस्तुभे स्थितम्। इति पूर्वकृदन्तम्।

अथ उणादिप्रकरणम्।

---

सूत्रम्

काशिका-वृत्तिः

ञीतः क्तः ३।२।१८७

ञि इद् यस्य असौ ञीत्। ञीतो धातोः वर्तमने ऽर्थे क्तप्रत्ययो भवति। भूते निष्ठा विहिता, वर्तमने न प्राप्नोति इति विधीयते। ञिमिदा स्नेहने मिन्नः। ञिक्ष्विदा क्ष्विण्णः। ञिधृषा धृष्टः।

न्यासः

ञीतः क्तः।, ३।२।१८७

"मिन्न" इति। "आदितश्च" ७।२।१६ इतीट्प्रतिषेधः। "रदाभ्याम्" ८।२।४२ इति नत्वम्। एवं "क्ष्विण्णः" इत्यात्रापि। "अट्कुप्वाङ"८।४।२ इत्यादिना णत्वम्। "धृष्टः" इति। "धृषिशसी वैयात्ये" ७।२।१९ इतीट्प्रतिषेधः, "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्॥

बाल-मनोरमा

ञीतः क्तः ८९१, ३।२।१८७

ञीतः क्तः। ञि इद्यस्य तस्माद्वर्तमानाक्रियावृत्तेः क्त इत्यर्थः। "तयोरेव कृत्यक्ते"ति भावकर्मणोरेव भूते विहितः क्तो वर्तमाने न प्राप्नोतीत्यारम्भः। क्ष्विण्ण इति। "आदिश्चे"ति नेट्। इद्ध इति। ()आईदितः" इति नेट्।

तत्त्व-बोधिनी

ञीतः क्तः ७३३, ३।२।१८७

क्ष्विण्ण इति। "आदितश्चे"ति नेट्। इद्ध इति। "()आईदितः" इति नेट्। नलोपः।

---

सूत्रम्

काशिका-वृत्तिः

मतिबुद्धिपूजाऽर्थेभ्यश् च ३।२।१८८

मतिः इच्छा। बुद्धिः ज्ञानम्। पूजा सकारः। एतदर्थेभ्यश्च धातुभ्यो वर्तमानार्थे क्तप्रत्ययो भवति। राज्ञां मतः। राज्ञाम् इष्टः। राज्ञां बुद्धः। राज्ञां ज्ञातः। राज्ञां पूजितः। राज्ञाम् अर्चितः। अनुक्तसमुच्चयार्थश्चकारः। शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि। रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि। १। हृष्टतुष्टौ तथा कान्तस् तथोभौ संयतोद्यतौ। कष्टं भविष्यति इत्याहुरमृतः पूर्ववत् समृतः। २। कष्टः इति भविष्यति काले। अमृतः इति पूर्ववत्। वर्तमाने इत्यर्थः। तथा सुप्तः, शयितः, आशितः, लिप्तः, तृप्तः इत्येवम् आदयो ऽपि वर्तमाने दृअष्टव्याः। इतिश्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य द्वितीयः पादः। तृतीयाध्यायस्य तृतीयः पदः।

न्यासः

मतिबुद्धिपूजार्थेभ्यश्च।, ३।२।१८८

"मतः" इति। "मन ज्ञाने" (धा।पा।११७६)। इट्प्रतिषेधः "एकाचः" ७।२।१० इत्यादिना, "अनुदात्तोपदेश" ६।४।३७ इत्यादिनानुनासिकलोपः। "इष्टः" इति। "{इष--धा।पा।} इषु इच्छायाम्"(धा।पा।१३५१)। "उदितो वा" ७।२।५६ इति विभाषितत्वान्निष्ठायां "यस्य विभाषा" ७।२।१५ इतीट्प्रतिषेधः। "बुद्धः" इति। "बुध अवगमने" (धा।पा।८५८)। पूर्ववद्धत्वम्, तकारस्य जश्त्वम्,धकारस्य दकारः। "पूजितः, अर्चितः" इति। "{भ्वादौ नोपलभ्यते;चुरादित्वेनैव प्रसिद्धः।} पूज पूजायाम्" (धा।पा।१६४२);"अर्च पूजायाम्" (धा।पा।२०४) भ्वादी। एतौ चारदी च, तत्र यदा चुरादिभ्यां प्रत्ययस्तदा "निष्ठायां सेटि" ६।४।५२ इति णिलोपः। "शीलितः" इत्यादौ "शील समाधौ"(धा।पा।६५८) "क्षमुष् सहने" (धा।पा।४४२),"क्रुश {आह्वाने रोदने च- धा।पा}आह्वाने" (धा।पा।८५६), "जुषी प्रीतिसेवनयोः (धा।पा।१२८८)," रुष रोषे"

(धा।पा।१६७०), "ह्मञ् हरणे" (धा।पा।८९९), "ह्मष तुष्टौ" (धा।पा।१२२९), "ह्मषु अलीके" (धा।पा।७०९),"तुष {प्रीतौ-धा।पा।} तुष्टौ (धा।पा।११८४), "कमु कान्तौ" (धा।पा।४४३), "यम उपरमे" (धा।पा।९८४), "कष हिंसायाम्" (धा।पा।६८५), "मृङ प्राणत्यागे" (धा।पा।१४०३)-- इत्येतेषां धातूनां यथाक्रमेणैतानि रूपाणि। तत्राद्यौ सेटौ। यश्चात्र कश्चिदुदिदूदिच्च, तस्य निष्ठायां "यस्य विभाषा" ७।२।१५ इतीट्()प्रतिषेधः। यस्त्वीदित् तस्यापि "()आईदितो निष्ठायाम्" ७।२।१४ इतीट्()प्रतिषेधः। ह्मषेरेव "ह्मषेर्लोमसु" ७।२।२९ इत्यादिना "रुष्यमत्वरसंघुषास्वनाम्" ७।२।२८ इति विभाषितेट्। "{नास्ति-काशिका} कान्तः, क्षान्तः" इति। "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घः। "आक्रुष्टः" इति। व्रश्चादिना ८।२।३६ षत्वम्। "संयतः" इति। पूर्ववदनुनासिकलोपः। "अमृतः" इति। गत्यर्थादीनां कत्र्तरि क्तः। "पूर्ववत्" (इति)। यथा शीलादिषु वत्र्तमाने निष्ठा तथाऽमृतशब्दस्यापीत्यर्थः। "सुप्तः"इति। स्वपेः सम्प्रसारणम्। "शयितः" इति। "निष्ठा शीङ" १।२।१९ इत्यादिना कित्त्वप्रतिषेधाद्()गुणः। "आशितः" इति। "अश भोजने" (धा।पा।१५२३) आङ्पूर्वः, "लिप उपदेहे" (धा।पा।१४३३), "तृप प्रीणने" (धा।पा।११९५)। अत्र अशिशीङौ सेटौ; शेषास्त्वनिटः। "एकाचः" ७।२।१० इत्यादिनेट्प्रतिषेधः। यद्यपि शीलादयो वत्र्तमानकाले व्युत्पाद्यन्ते, तथापि शीलितो देवदत्तेन, रक्षितो देवदत्तेन आक्रुष्टो देवदत्तेनेत्यत्र "क्तस्य च वत्र्तमाने" २।३।६७ इति षष्ठी न भवति। यथा न भवति तथा तत्रैव प्रतिपादितम्॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धपादविरचितायां काशिकाविवरणपञ्जिकायां तृतीयस्याध्यायस्य द्वितीयः पादः।

------------------ अथ तृतीयाध्यायस्य तृतीयः पादः <उणादयो बहुलम्। ३।३।१> "वत्र्तमान इत्येवे"ति। "वत्र्तमान लट्" ३।२।१२३ इत्यतो वत्र्तमानग्रहणमनुवत्र्तत इति दर्शयति। "सञ्ज्ञायाम्" इति। वत्र्तत इति "पुवः संज्ञायाम्" ३।२।१८५ इत्यतः। "बाहुलकम्" इत्यादि। "ला आदाने" (धा।पा।१०५८), बहूनर्थाल्लातीति बहुलम्। "आतोऽनुपसर्गे कः" ३।२।३ बहवः पुनरर्थाः क्वचित्प्रवृत्यादयः। तथा चोक्तम्- क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥ इति। बहुलस्य भावो बाहुलकम्। "द्वन्द्वमनोज्ञादिभ्यश्च" ५।१।१३२ इति मनोज्ञादित्वाद्वञ्। बह्वर्थादानं बहुलशब्दस्य प्रवृत्तिनिमित्तमिति तत्रैवायं भावप्रत्ययः। तद्()बाहुलकं प्रकृतेस्तनुदृष्टेरुक्तम्। प्रत्ययमनादिं कृत्वा यः पूर्वमुपादीयते शब्दः सा प्रकृतिरित्युच्यते। प्रत्ययात् पूर्वं क्रियत इति प्रकृतिः। प्रकर्षेण नियमेन प्रत्ययः क्रियते तस्या इति वा प्रकृतिः। "प्रकृतेः"इति। जातौ षष्ठ()एकवचनम्। "तनुदृष्टेः" इति। कर्मणि ल्यब्लोपे पञ्चमी। तनुदृ()ष्ट वीक्ष्य बाहुलकमुक्तमिति। "विभाषा गुणेऽस्त्रियाम्" २।३।२५ इत्यनेन त्विह पञ्चमी न भवति; अस्त्रियामिति प्रतिषेधात्। अथ वा "विभाषा गुणे" इति योगविभागादिह पञ्चमी वेदितव्या। तनुशब्दः शरीरवचनोऽप्यस्ति, गुणवचनोऽपि; इति तु गुणवचनः प्रकृतेरल्पत्वं नाम यो गुणस्तस्य वाचकः। दर्शनं दृष्टिः = उपलब्धिः, तनोर्गुणस्य दृष्टिस्तनुदृष्टिः। ततो गुणो नित्यं गुणिनमपेक्षत इति गमकत्वात् तनुशब्दस्य प्रकृतिमपेक्षमाणस्यापि दृष्टिशब्देन समासो भवति। अयं त्वर्थः- प्रकृतेर्गुणस्य, तयोर्दर्शनादिति। अथ वा तनुर्दृष्टिर्यस्याः प्रकृतेः सा तनुदृष्टिः। अत्र पक्षे यद्यपि तनुगुणो दृष्टेर्विशेषणम्, तथाप्यसौ दृष्टेः प्रकृतेरपि विशेषणत्वेन प्रतीयत एव। प्रकृतेस्तनुत्वादेव हि तद्()दृष्टितनुत्वं भवति। उणादिषु पञ्चपाद्यां स्वल्पाः प्रकृतयो दृश्यन्ते, ततोऽन्याभ्योऽपि च प्रकृतिभ्यः प्रत्यया दृश्यन्ते, तस्माद्बहुलग्रहणाद्भवन्ति। यथा हि "ह्मषेरुलच्" (पं।उ।१।९८) इति "ह्मषु अलीके" (धा।पा।७०९) इत्यस्मादुलजुक्तः, तथा "शकि शङ्कायाम्" (धा।पा।८६) इत्यतोऽपि भवति- शङ्कुलेति। किञ्च, प्रायसमुच्चयनादपि तेषां तदुक्तमिति सम्बन्धः। तदिति बाहुलकं परामृश्यते। तेषामुणादीनां प्रायेण बाहुल्येन समुच्चयनं ग्रहणं विधानं वा प्रायसमुच्चयनम्। "तृतीया" २।१।२९ इति योगविभागात् समासः। अपिशब्दः समुच्चये। न केवलं प्रकृतेस्तनुदृष्टेस्तद्()बाहुलकमुक्तम्, अपि तु प्रायसमुच्चयनादपि तेषामेतदुक्तं भवति। न केवलं प्रकृतस्तन्व्यः पठिताः, अपि तु प्रत्यया अपि प्रायेणसमुच्चिताः, न सर्वे, तदर्थं बाहुलकमिति। बाहुलकाद्व्यवहिता अपि ते चेत् प्रत्यया उन्नीय विधीयन्ते। तथा हि "अर्त्तेः क्युरुच्च"(पं।उ।५।१७) इत्यर्त्तिधातुः पठितः,फिडफिड्डौ तु प्रत्ययौ न विहितौ तथापि ऋफिडऋफिड्डशब्दयोर्दर्शनात् तावपि च विधीयेते। "कार्यसशेषविधेश्च तदुक्तम्" इति। चशब्दः समुच्चये।

पूर्वोक्तकारणद्वयादेतस्मात् तद्बाहुलकमुक्तम्। विधानं विधिः = कारणम्, सह शेषेण वत्र्तते यो विधिः स सशेषः, सशेषश्चासौ विधिश्च सशेषविधिः, कार्याणां सशेषविधिः कार्यसशेषविधिः। तस्माच्च बाहुलकमुक्तम्। एतदुक्तं भवति- प्रकृतेः प्रत्ययाश्रितानि कार्याणि न निःशेषाणि पञ्चपाद्यां दर्शितानि, इष्यन्ते चादर्शितान्यपि तानि। अतस्तत्सिद्ध्यर्थं तद्()बाहुलकमुक्तम्। तेन ऋफिड, ऋफिड्()ड- इत्यत्र गुणप्रतिषेधः सिद्धो भवति। एवमादि तावत् प्रत्ययाश्रितं कार्यं सिद्धं भवति। "षणु दाने" (धा।पा।१४६४), "ञमन्ताड्डः" (पं।उ।१।११३) इति षण्डः। अत्र "धात्वादेः षः सः" ६।१।६२ इति सत्वं न भवति। सत्यपि वा सत्वे पुनः षत्वमेव क्रियत इत्येवमादि प्रकृत्याश्रितमपि कार्यं बाहुलकाद्भवति। "नैगमरूढत्रिभवं हि सुसाधु" इति। निगमः = छन्दः, तत्र भवा नैगमाः, ऋगयनादिपाठादण्। निगमस्य वेमे नैगमाः। रूढिः = प्रसिद्धिः; भवन्तीति भवाः, रूढौ बवाः। "सप्तमी" २।१।३९ इति योगविभागात् समासः। लोकप्रसिद्धा इत्यर्थः। नैगमाश्च रूढिभवाश्च नैगमरूढिभवम्। "सर्वो द्वन्द्वो विभाषैकवद्भवति" (व्या।प।९१) इत्येकवद्भाव#ः, "स नपुंसकम्" २।४।१७ इति नपुंसकलिङ्गता। हिशब्दो यस्मदार्थे। यस्मादेतदेव बाहुलकमनेकार्थस्य साधकम्, तस्मान्नैगमं रूढिभवं सुष्ठु साधु भवति; व्याकरणे बहुलग्रहणेन संस्कृतत्वात्। अन्यथाऽसंस्कृसत्वाद्()गाव्यादिशब्दानामिव तस्यासाधुत्वं स्यात्। अन्यैरपि प्रमाणपुरुषैर्नैगमरूढिभवानां व्युत्पाद्यत्वमभ्युपेतमिति दर्शयितुमाह-- "नाम च धातुजम्" इत्यादि। "निरुक्ते" इति। निरुक्ते शास्त्रे। "नाम" इति। प्रातिपदिकम्। तस्य हीयमन्याचार्यसंज्ञा। धातोर्जातत्वाद्धातुजम्। धातुग्रहणमुपलक्षणम्, प्रत्ययागमादयोऽपि गृह्न्ते। निरुक्तकारः स्वशास्त्रे निरुक्ते प्रातिपदिकं धातुजमाह; धातुप्रत्ययकादिविभागेन व्युत्पादितत्वात्। चशब्दोऽवधारणे, भिन्नक्रमश्च। धातुजमेवेत्येवं द्रष्टव्यम्। शकटस्य पुत्रः शाकटायनः सोऽपि नाम धातुजमेवाह। तदेवं निरुक्तकारशाकटायनदर्शनेन त्रयी शब्दानां प्रवृत्तिः-- जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा इति;न सन्ति यदृच्छाशब्दा इति। अथ वा-- जातिगुणशब्दानामपि क्रियाशब्दत्वमेव; धातुजत्वात्। ततश्चैकैव शब्दानां प्रवृत्तिः-- क्रिया शब्दा इति। अथ यदि प्रकृतिविशेषं प्रत्ययविशेषञ्चोपादायन व्युत्पादितं शब्दरूपम्, तस्य कथं धातुजत्वं वेदितव्यम्, न हि प्रकृतिप्रत्ययानवधारणे धातुजत्वं शक्यं निश्चेतुमित्यत आह-- "यन्न" इत्यादि। अर्थशब्दः प्रयोजनवाची, परमर्थः प्रयोजनं यस्य प्रकृत्यादेः स पदार्थः। कथं पुनः पदमर्थः प्रकृत्यादेर्भवति? तदुद्दिश्य तदुपादानात्। पदं हि व्युत्पादयिष्यामीत्येवमर्थं प्रकृत्यादेरुपादानाम्। कस्मात्? प्रकृतिप्रत्ययश्च पदार्थः, तस्य विशेषः पदार्थविशेषः। समुत्थानं समुत्थः = प्रादुर्भावः;"सुपि स्थः" ३।२।४ इत्यत्र योगविभागेन भाव एव कप्रत्ययः। पदार्थविशेषात् समुत्थः प्रादुर्भावो यस्य तत् "पदार्थविशेषसमुत्थम्"। यदेवंविधं न भवति शब्दरूपं प्रत्यतः प्रकृतितत्श्च तदूह्मम्। धातुजत्वेनापि तदुक्तं भवति-- यस्य प्रतिपदोक्ता प्रकृतिप्रत्ययविशेषानासादितात्मा निर्वृत्तिस्तस्य प्रकृतिविशेषात् प्रत्ययविशेषाच्च धातुजत्वं निश्चेतव्यमिति। ननु च तथाविधस्य प्रकृतिप्रत्ययविशेषस्यापरिज्ञानादेवाशक्यं धातुजत्वं निश्चेतुमिति मत्वा परेण चोदितम्, तत्कथं प्रत्ययतः प्रकृतेश्च तदूह्मित्युक्तं युज्यते? नैष दोषः;एवं हि ब्राउवताऽनेन प्रकृतिप्रत्ययावेवं तावद्ध्यूहितव्यौ,ततस्ताभ्यां तच्छब्दरूपमित्येतदप्यर्थादुक्तं भवति। न ह्नवधारिताभ्यां प्रकृतिप्रत्ययाभ्यां शक्यं धातुजत्वं कस्यचिन्निश्चेतुमिति किमत्रायुक्तम्? यत्र प्रसिद्धप्रत्ययावयवेन शब्दान्तरेण कस्याचिद्भागस्य सारूप्याधिगमोऽस्ति तत्र प्रत्ययं दृष्ट्वा परिशिष्टो भागः प्रकृतित्वेनोत्प्रेक्षितव्यः। यथा-- "उषिकुषिगर्त्तिभ्यस्थन्" (पं।उ।२।४) इति थन्प्रत्ययान्तमोष्ठादिकं प्रसिद्धप्रत्ययावयवम्। तेन च डित्थवित्थशब्दयोः किञ्चित् सारूप्यमस्ति,ततैषामिव हि तेषां थशब्दोऽवयवो विशिष्टदेशवत्र्ती विद्यते। तत्र थन्प्रत्यान्ते शब्दरूपे यो दृष्टस्थशब्दः प्रत्ययसंज्ञकस्तत्सादृश्यात् डित्थडवित्थशब्दस्थं थशब्दं प्रत्ययमवधार्य ततः परिशिष्टस्तयोर्भागो डिड्डविदिति च धातुत्वेनोह्यः। ततश्चैवं सूत्रं कत्र्तव्यम्-- डीङस्थण् डिड्डविच्चेति। "डीङ विहासा गतौ" (धा।पा।११३५) इत्यस्मात् थन्प्रत्ययः, डीङश्च डिड्डविदित्येतावादेशौ भवतः। यत्र तु शब्दरूपे निज्ज्ञातधात्ववयवेन शब्दान्तरेण किञ्चिद्भागगतं सारूप्यमस्ति, तत्र प्रकृतिं दृष्ट्वा परिशिष्टो भागः प्रत्ययत्वेनोहितव्यः, यथा-- ऋतमिति दृष्टं शब्दरूप प्रसिद्धप्रकृत्यवयवम्, तेन ऋफिडशब्दस्य ऋफिड्डशब्दस्य च

किञ्चिदभागगतं सारूप्यमस्ति, उभयेषां तेषामुकारादित्वात्। तत्र निष्ठाप्रत्ययान्त ऋतशब्दे य ऋकारावयवो धातुसंज्ञकस्तत्सादृश्यादृफिडऋफिड्डशब्दस्थञ्च ऋवर्णं धातुमवधार्य ततः परिशिष्टस्तयोर्भागः फिड इति फिड्ड इति च प्रत्ययत्वेनोह्यः। ततश्चैवं सूत्रं कत्र्तव्यम्-- "अर्त्तेः फिडफिड्डौ" इति, "ऋ गतौ" (धा।पा।१०९८) इत्यस्मात् फिडफिड्डौ प्रत्ययौ भवतः। ऋफिडः, ऋफिड्डः। गुणः पूर्वोक्तात् कारणान्न भवति। अथ वा-- कितावेवैतौ प्रत्ययौ विधातव्यौ। एवं प्रकृतिप्रत्ययादूहित्वा तस्य शब्दरूपस्य धातुजत्वमूहितव्यम्। यत् प्रकृतिप्रत्ययविशेषावयवानुगतं न तद्धातुजत्वं व्यभिचरति, यथा-- कत्र्तव्यं करणीयमित्येवमादयः शब्दाः। "ऊह्यम्" इति। अनुज्ञाव्यम्। न यत्र क्वचिदूहः कत्र्तव्यः,अपि तु विशिष्ट एव विषय इति दर्शयन्नाह-- "संज्ञासु" इत्यादि। य एते निरूढाः साधुत्वेव शब्दरूपास्तेष्वेव संज्ञात) सूहः कत्र्तव्यो, नान्यत्र। "धातुरूपाणि"इति। कल्पयितव्यानीति शेषः। "प्रत्ययाश्च ततः परे" इति। कल्पयितव्या ति शेषः। "कार्यात्" गुणाभावदिकात्। "विद्यात्"जानीयात्। "अनुबन्धं" ककारादिकम्। एतदनन्तरोक्तं "शास्त्रमुणादिषु"। शास्त्रोपनिबन्धनत्वाच्छास्त्रविषयत्वाद्वा शास्त्रमित्युक्तम्। यदि तह्र्यत्र सूत्रे "संज्ञायाम्" ३।२।१८५ इत्यनुवत्र्तते "वत्र्तमाने"३।२।१२३ इति च, बहुलग्रहणं च क्रियते, तत् किमर्थमुणादिषु "वत्र्तमाने पृषद्बृहज्जगच्छतृवच्च" (द।उ।६।५) इति वत्र्तमानग्रहणम्? "धृषेर्धिष च संज्ञायाम्"(द।उ।५।२७) इति संज्ञाग्रहणम्, "बहुलमन्यत्रापि" (द।उ।५।२३) इति बहुलग्रहणञ्च क्रियते? "भूतेऽपि दृश्यन्ते" ३।३।२ इति वचनाद्भूतेऽपि पृषदादयो भवन्तीत्याशङ्कानिवृत्त्यर्थम्। वत्र्तमानग्रहणं प्रकृताया एव संज्ञाया अनुवृत्तेर्दृढीकरणार्थम्। पुनः संज्ञाकरणं बहुलवचनादसंज्ञायामपि भवन्तीत्याशङ्कानिवृत्त्यर्थं वा। अस्यैव बहुलस्य स्मरणार्थं पुनर्बहुलग्रहणम्। एवं हि विस्मरणशीलानामनुग्रहः कृतो भवति॥

बाल-मनोरमा

मतिबुद्धिपूजार्थेभ्यश्च ८९२, ३।२।१८८

मतिबुद्धि। मति, बुद्धि, पूजा , अर्थ एषामिति विग्रहः। "वर्तमाने क्त" इति शेष-। "तयोरेवे"ति भावकर्मणोरेव। मतः इष्ट इति। इच्छार्थकान् मनेरिषेश्च क्तः। "तीषसहे"ति वेट्कत्वात् "यस्य विभाषे"ति नेट्। शीलितो रक्षित इति। भाष्यस्थश्लोकोऽयम्। इत्यादीति। आदिना "रुष्टश्च रुषितश्चोभावभिव्याह्मत इत्यपि। ह्मष्टतुष्टो तथाक्रान्तस्तथोभौ संयतोद्यतौ। कष्टं भविष्यतीत्याहुरमृतः पूर्ववत्स्मृतः"। इति सङ्ग्रहः। कष्टशब्दो भविष्यति, अमृतशब्दो वत्र्तमाने इत्यर्थः।

तत्त्व-बोधिनी

मतिबुद्धिपूजार्थेभ्यश्च ७३४, ३।२।१८८

राज्ञामिति। "क्तस्य च वर्तमाने" इति षष्ठी। इष्ट इति। "तीषसहे" ति वेट्कत्वात् "यस्य विभाषे"ति नेट्। शीलित इत्यादि। शील समाधौ, रक्ष पालने, क्षमूष् सहने, क्रुश आह्वाने, जुषी प्रीतिसेवनयोः।

---

सूत्रम्

काशिका-वृत्तिः

उणादयो बहुलम् ३।३।१

वर्तमान इत्येव, संज्ञायाम् इति च। उणादयः प्रत्ययाः वर्तमाने ऽर्थे संज्ञायां विषये बहुलं भवन्ति। यतो विहितास् ततो ऽन्यत्र अपि भवन्ति। केचिदविहिता एव प्रयोगत उन्नीयन्ते। कृवापाजिमिस्वदिसाध्यशूभ्य उण्। कारुः। वायुः। पायुः। जायुः। मायुः। स्वादुः। साधुः। आशुः। बाहुलकं प्रकृतेस् तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम्। कार्यसशेषविधेश्च तदुक्तं

नैगमरूढिभवं हि सुसाधु। १। नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्। यन् न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्। २। संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे। कार्याद् विद्यादनुबन्धम् एतच् छास्त्रम् उणादिषु। ३।

लघु-सिद्धान्त-कौमुदी

उणादयो बहुलम् ८५१, ३।३।१

एते वर्तमाने संज्ञायाम् च बहुलं स्युः। केचिदविहिता अप्यूह्याः॥ संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे। कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥

लघु-सिद्धान्त-कौमुदी

इत्युणादयः ८५१, ३।३।१

लघु-सिद्धान्त-कौमुदी

अथोत्तरकृदन्तम् ८५१, ३।३।१

---

सूत्रम्

काशिका-वृत्तिः

भूते ऽपि दृश्यन्ते ३।३।२

पूर्वत्र वर्तमानाधिकाराद् भूतार्थम् इदं वचनम्। भूते काले उणादयः प्रत्यया दृश्यन्ते। वृतम् इदं वर्त्म। चरितं तदिति चर्म। भसितं तदिति भस्म। दृशिग्रहणं प्रयोगानुसारार्थम्।

न्यासः

भूतेऽपि दृश्यन्ते। , ३।३।२

"पूर्वत्र वत्र्तमानात्ि ति। अथ पूर्वत्र वत्र्तमानग्रहणं कस्मान्न निवर्त्तितम्, युक्तं हि तत् तत्र निवर्त्तियितुम्, तथा हि-- त()स्मस्तत्र निवृत्ते सतीदं न कत्र्तव्यम्? नैतदस्ति;अवश्यमैतत् कत्र्तव्यम्,यस्मात् केचिद्भूत एवेष्यन्ते। यदिच पूर्वत्र वत्र्तमानग्रहणानुवृत्तिर्न स्यात्,भविष्यत्यप्युणादयो न स्युः। "भविष्यति गम्यादयः" ३।३।३ इत्येकं तु नियमार्थं विज्ञायेत-- भविष्यत्येव गम्यादयैति। तस्मात् पूर्वत्रानुवत्र्तयितव्यं वत्र्तमानग्रहणम्। "वत्र्म" इति। "आतो मनिम्"३।२।७४ इत्यनुवत्र्तमाने "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति मनिन्प्रत्ययः।"नेड् वशि कृति" ७।२।८ इतीट्()प्रतिषेधः। "भस्म" इति। "भस भत्र्सनदीप्त्योः" (धा।पा।११००)। "दृशिग्रहणम्" इत्यादि। विशिष्टप्रयोगमनुसृत्य यत्र शिष्टाः प्रयुज्यते तत्र भूते प्रत्ययः कत्र्तव्यः,न तु सर्वत्रेति दृशिग्रहणेनायमर्थः प्रतिपादित इति दर्शयति॥

तत्त्व-बोधिनी

भूतेऽपि दृश्यन्ते १५०४, ३।३।२

भूतेऽपि दृश्यन्ते। नन्वेवं वर्तमानग्रहणं च "उणादयो बहुल"मित्यत्र नानुवर्त्यताम्, एतच्चोत्तरसूत्रं च त्यज्यताम्। अविशेषेण कालत्रयेऽपि प्रत्ययलाभादिति चेदत्राहुः-- "बाहुल्येन वर्तमाने भवन्ति, भूतभविष्यतोस्तु क्वचिदेवे"ति विवेकप्रदर्शानयेदमिति।

---

सूत्रम्

काशिका-वृत्तिः

भविष्यति गम्यादयः ३।३।३

भविष्यति काले गम्यादयः शब्दाः साधवो भवन्ति। प्रत्ययस्य एव भविष्यत्कालता विधीयते न प्रकृतेः। गमी ग्रामम्। आगामी। प्रस्थायी। प्रतिरोधी। प्रतिबोधी। प्रतियोधी। प्रतियोगी। प्रतियायी। आयावी। भावी। अनद्यतन उपसङ्ख्यानम्। श्वो गमी ग्रामम्।

न्यासः

भविष्यति गम्यादयः। , ३।३।३

"प्रत्ययस्यैव" इत्यादि। इदं हि भविष्यति गम्यादयः साधवो भवन्ति,यदि प्रत्ययस्यैव भविष्यत्कालता विधीयते, अथ तु प्रत्ययस्यान्यकालता स्यान्न ते भविष्यति साधवः स्युः।तस्मात् प्रत्ययस्यैवानेन प्रकारेण भविष्यत्कालता विधीयते। "ग्रामं गमी" इति। "गमेरिनिः" (द।उ।६।५७) इतीनिप्रत्ययः,"सौ"६।४।१३ इति दीर्घः। "अकेनोर्भविष्यदाधमर्ण्ययोः" २।३।७० इति षष्ठ()आं प्रतिषिद्धायां ग्रामशब्दात् "कर्मणि द्वितीया" (२।३२)। "आगामी" इति। "गमेरिनिः"(द।उ।६।५७) इति वत्र्तमाने "आङि णित्" (द।उ।६।५८)इतीनिः; णित्त्वादुपधावृद्धिः। "प्रस्थायी"इत्यादि। "ष्ठा गतिनिवृत्तौ" (धा।पा।९२८) "बुध बोधने" (धा।पा।११७२), "युज समाधौ" (धा।पा।११७७) "या प्रापणे" (धा।पा।१९४९) --एब्यः "सुप्यजातौ णिनिस्ताच्छील्ये"३।२।७८ इति णिनिः।यातितिष्ठत्योः "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्। युजः "चजोः कुघिण्()ण्यतोः" इति कुत्वम्। "भावी" इति। "आङि णित्" (पं।उ।४।७) इति वत्र्तमाने "भुवश्च" (पं।उ।४।८) इतीनिः, णित्त्वाद्वृद्धिः। "अनद्यतन उपसंख्यानम्" इति। किं पुनः कारणं न सिध्यति? भविष्यतीति लृटायं निर्देशः क्रियते, तेन च लृट एव विषये भविष्यत्सामान्ये स्यात्, न भविष्यदनद्यतने,ततो लुटो न विषयः, लृटा बाधितत्वात्। तस्मादनद्यतन उपसंख्यानं कत्र्तव्यम्। उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्-- बहुलग्रहणमिहानुवत्र्तते,तेनानद्यतनेऽपि भविष्यतीति। एते च गम्यादयो लुङ्लृटोरुभयोरपि बाधकाः, अपबादत्वात्।अपवादत्वं तु येननाप्राप्तिन्यायेन (व्या।प।४९) ननु च वासरूपविधिना लुङ्लृटावपि प्राप्नुतः, तद्विधौ "भविष्यति गम्यादयः" इत्यनुवृत्तेः? सत्यम्; अस्यामप्यनुवृत्तौ पक्षे एवेति चेत्? नैतदस्ति;एवं ह्यनुवृत्तिरपार्थिका स्यात्॥

तत्त्व-बोधिनी

भविष्यति गम्यादयः १५०५, ३।३।३

भविष्यति गम्यादयः। गमिष्यतीति -गमी ग्रामम्। आगमिष्यतीति आगामी। गमेरिनिः। "आङि णित्" इत्याङ्पूर्वस्य तु णित्त्वादुपधावृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

यावत्पुरानिपातयोर् लट् ३।३।४

भविष्यति इत्येव। यावत्पुराशब्दयोर् निपातयोरुपपदयोः भविष्यति काले धातोर् लट् प्रत्ययो भवति। यावद् भुङ्क्ते। पुरा भुङ्क्ते। निपातयोः इति किम्? यावद् दास्यति तावद् भोक्ष्यते। करणभूतया पुरा व्रजिष्यति।

न्यासः

यावत्पुरिनिपातयोर्लट्। , ३।३।४

"यावद्भुङ्क्ते" इति। "भुजोऽनवने" १|३|६६ इत्यत्मनेपदम्। "श्नसोरल्लोपः" ६|४|१११ त्यकारलोपः। "यावद्दास्यति तावद्भोक्ष्यते" इति। यत्परिमाणम्सय, तत् परिमाणमस्येति "यत्तदेतेभ्यः परिमाणे वतुप्" ५|२|३९ "दृग्दृशवतुषु" ६|३|८८ इत्यनुवत्र्तमाने "आ सर्वनाम्नः" ६|३|९० इत्यात्त्वम्। "पुरा व्रजिष्यति"इति। "पृ पालनपूरणयोः" (धा|पा|१४८९)। "भ्राजभास" ३|२|१७७ इत्यादिना क्विप्, "उदोष्ठ()पूर्वस्य" ७|१|१०२ इत्युत्वम्, करणे तृतीयैकवचनम्। ननु चाव्युत्पन्नावेव यावत्पुराशब्दौ निपातौ, तो च व्युत्पादितौ, तो च व्युत्पादितौ, तत्र लक्षणप्रतिपदोक्तपरिभाषयैव (व्या|प|३) तयोर्निपातयोग्र्रहणं भविष्यति, तत्किमर्थं निपातग्रहणम्? मन्दबुद्धीनां प्रतिपत्तिगौरवपरिहार्थमित्येके। अस्याः परिभाषाया अनित्यत्वज्ञापनार्थमित्यपरे। अनित्यत्वज्ञापनस्य तु प्रयोजनमुत्तरत्र वक्ष्यते॥

बाल-मनोरमा

यावत्पुरानिपातयोर्लट् ६०७, ३|३|४

यावत्पुरा। यावत् पुरा इति द्वे पदे। अनयोः प्रयुज्यमानयोर्लट् स्यादित्यर्थः। लुडादेरपवादः। निश्चयं द्योतयत इति। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे"इत्यमरः। यावद्दास्यते तावद्भोक्ष्यते इति। यत्परिणमाणकं तत्परिमाणकमित्यर्थः। "यत्तदेतेभ्यः परिमाणे वतु"बिति वतुबन्तत्वेन निपातत्वाऽभावान्न लडिति भावः। करणभूतयेति। "पुरा यास्यती"ति प्रत्युदाहरणान्तरम्। पुर्()शब्दस्य पुरेति तृतीयान्तमिदम्। तत्स्फोरणाय करणभूतयेत्युक्तम्।

तत्त्व-बोधिनी

यावत्पुरानिपातयोर्लट् ४९८, ३|३|४

यावत्पुरा। लक्षमप्रतिपदोक्तपरिभाषाऽनित्येति निपातग्रहमेन ज्ञाप्यते। यावद्भुङ्क्त इति। निश्चितं भोक्ष्यते इत्यर्थः। यावद्दास्यत इति।अनद्यतनभविष्यति तु "यावद्दाता तावद्भोक्ते"ति प्रत्युदाहर्तव्यम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा कदाकर्ह्योः ३|३|५

कदा कर्हि इत्येतयोः उपपदयोर् विभाषा भविष्यति काले धातोः लट् प्रत्ययो भवति। कदा भुङ्क्ते, कदा भोक्ष्यते, कदा भोक्ता। कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्टा।

न्यासः

विभाषा कदाकह्योः। , ३|३|५

"कदा भोक्ता" इति। लुट्। ननु च भविष्यतीत्यनुवृत्तेर्लृट एव विषये भवितव्यम्, न लुटः। ततो लृडेव पक्षे युक्त उदाहर्तुम्, तत्कथं लुडप्युदाह्मतः? एवं मन्यते-- "अनद्यतने लुट्" ३|३|१५ इत्यत्र "विभाषा कदाकर्ह्योः" इत्यस्यानुवृत्तेर्लृटो विषये विभाषा लुटा भवितव्यमिति। "कर्हि भोक्ष्यते" इति। लृट्। ननु च कर्हिशब्दः "अनद्यतने र्हिलन्यतरस्याम्"५|३|२१ इत्यनद्यतने व्युत्पादितः, तदसौ यत्र प्रयुज्यते ततर्ानद्यतन इव कालः सम्भवति, तत्कुतो लृटः प्राप्तिः, "अनद्यतने लुट्"(३|३|१५) इति लुटैव पक्षे भवितव्यम्? नैतदस्ति; यस्माद्भोक्ष्यत इत्येतत् पदं भविष्यत्काल एव वत्र्तते। अनद्यतनकालावगतिस्तु कर्हिशब्दसन्निधाने सति वाक्याद्भवति। न च वाक्यगम्येऽर्थे लृड्भवति। तथा हि पदमिह संस्क्रियते, न च पदसंस्कारे वाक्यगम्योऽर्थ उपयुज्यते। तस्माद्भविष्यत्सामान्ये विवक्षिते लृड्भवति, भविष्यति

विशेषेऽप्यनद्यतने विवक्षिते लुडिति॥

बाल-मनोरमा

विभाषा कदाकर्ह्योः ६०८, ३।३।५

विभाषा कदाकर्ह्योः। "भविष्यति लड्वा स्या"दिति शेषपूरणम्। लडभावपक्षे लुटलृटौ यथाप्राप्तम्। तदाह--कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वेति। न च कर्हियोगे लडभावपक्षे लुडेवोचितो, नतु लृट्। "अनद्यतने र्हिलन्यतरस्या"मिति र्हिलन्तकर्हियोगविरोधादिति वाच्यं, लृडुदाहरणस्य कदायोगमात्रविषयत्वादिहुः।

तत्त्व-बोधिनी

विभाषा कदाकर्ह्योः ४९९, ३।३।५

विभाषा। ननु "अनद्यतने र्हिलन्यतरस्या"मित्यनद्यने किमो र्हिल्विहितस्ततश्च कर्हियोगे लुटैव भाव्यमिति कथमुदाह्रियते--कर्हि भोक्ष्यत इति। अत्राहुः-- भविष्यत्सामान्ये भोक्ष्यते इति लृट्। कर्हियोगे तु अनद्यतनावगतिर्लक्षणयेति। भोक्ता वेति। ननु भविष्यत्सामान्येऽयं लड्विहितस्तस्य लुटा सह कथं विकल्पो, विषयभेदादिति चेत्, अत्राहुः-- "अनद्यतने लु"डित्यत्र "विभाषा कदे"त्यादीनि कानिचित्सूत्राणीष्टानुरोधेनानुवर्तन्ते तेन, लुड्विषयेऽपि लड्भवति, न त्वनद्यने लुटा लड् बाध्यत इति।

---

सूत्रम्

काशिका-वृत्तिः

किंवृत्ते लिप्सायाम् ३।३।६

विभाषा इति वर्तते। किमो वृत्तं किंवृत्तम्। वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्। डतरतमौ च इति परिसङ्ख्यानं स्मर्यते। किंवृत्ते उपपदे लिप्सायां भविष्यति काले धातोः विभाषा लट् प्रत्ययो भवति। लिप्सा लब्धुम् इच्छा, प्रार्थनाभिलाषः। कं भवन्तो भोजयन्ति, कं भवन्तो भोजयितारः। लब्धुकामः पृच्छति कतरो भिक्षां दास्यति, ददाति, दाता वा। कतमो भिक्षां दास्यति, ददाति, दाता वा। लिप्सायाम् इति किम्? कः पाटलिपुत्रं गमिष्यति।

न्यासः

किंवृत्ते लिप्सायाम।, ३।३।६

"किमो वृत्तम्" इत्यादि। किं पुनःकिमो वृत्तमित्याह-- "वृत्तग्रहणेन " इत्यादि। तदित्यनेन किंशब्दः सम्बध्यते-- किमेतच्छब्दरूपं विभक्त्यन्तं वृत्तग्रहणेन प्रतीयात्। डतरडतमौ च "किंयत्तदौर्निर्धारणे द्वयोरेकस्य डतरच्"५।३।९२।"वा बहूनां जातिपरिप्रश्ने डतमच्" ५।३।९३ इत्येतौ प्रत्ययौ किंशब्दसम्बन्धिनावेव वृत्तग्रहणेन प्रतीयात्। स्ययग्रहणपरिभाषया चेह डतरडतमान्तं प्रतीयादित्येषोऽर्थो वेदितव्यः। "परिसंख्यानम् " इति। नियम इत्यर्थः। तेन किंतराम्, किंगौः, किंपुरुषः-- इत्यवमादिषु पदेषु न भवति; तेषां किंवृत्तत्वस्य परिगणनेन निरस्तत्वात्। "भोजयन्ति" इति। हेतुमण्णयन्ताल्लट्। "भोजयितारः" इति। "लुटः प्रथमस्य डारौरसः" २।४।८५ इति झे रसादेशः, "रि च" ७।४।५१ इति सकारलोपः। "लब्धुकामः पृच्छति" इति। उदाहरणेषु लिप्साया गम्यमानत्वात्॥

बाल-मनोरमा

किंवृत्ते लिप्सायाम् ६०९, ३।३।६

किंवृत्ते लिप्सायां। किंशब्देन वृत्तं निष्पन्नं किंवृत्तमित्यभिप्रेत्य आह-- विभक्त्यन्तमिति लड्वेति। लडभावे तु लुट्लृटौ

यथाप्राप्तम्। किंवृत्तशब्देन विभक्त्यन्तडतरडतमान्तानामेव ग्रहणमिति युक्तम्। कं कतरं कतमं वेति। "क्षुधितमन्नलिप्स"मिति शेषः।

तत्त्व-बोधिनी
किंवृत्ते लिप्सायाम् ५००, ३।३।६

किंवृत्ते। किमा वृत्तं किंवृत्तम्। केचित्तु यद्यपि कदाकुत्रेत्याद्यपि किंवृत्तं, तथापि तन्न गृह्गते, अनभिधानात्। तेनकदा भोजयिष्यसीत्यादौ भविष्यति लण्नेत्याहुः।

---

सूत्रम्
काशिका-वृत्तिः
लिप्स्यमानसिद्धौ च ३।३।७

विभाषा इत्येव। लिप्स्यमानात् सिद्धिः लिप्स्यमानसिद्धिः। लिप्स्यमानसिद्धौ गम्यमानायां भविष्यति काले धातोः विभाषा लट् प्रत्ययो भवति। अकिंवृत्तार्थो ऽयम् आरम्भः। यो भक्तं ददाति स स्वर्गं गच्छति, यो भक्तं दास्यति स स्वर्गं गमिष्यति, यो भक्तं दात स स्वर्गं गन्ता। लिप्स्यमानाद् भक्तात् स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति।
न्यासः
लिप्स्यमानसिद्धौ च। , ३।३।७

लिप्सायामेव सत्यां सम्भवति, नासत्याम्। अतो यत्र लिप्स्यमानसिद्धिर्गम्यते तत्रावश्यं लिप्सया भवितव्यम्, तथा च पूर्वेणैव सिद्धम्, तत्किमर्थोऽयमारम्भ इत्यत आह-- "अकिंवृत्तार्थोऽयमारम्भः"इति। यद्येवम्, पूर्वसूत्र एव किंवृत्तग्रहणमकृत्वा प्रत्ययो विदेयः, एवं हीदं नारब्धव्यं भवति? नैतदस्ति; एं हि यथा लिप्स्यमानसिद्धौ गम्यमानायां किंद्दत्तं चाकिंवृत्तं च भवति तथा यत्रापि लिप्स्यमानसिद्धिरहितं लिप्स्यमानं गम्यं तत्रापि स्यात्। किंवृत्त एव तत् तत्रेष्यते, तस्मात् पूर्वयोगे किंवृत्तग्रहणं कत्तव्यम्। त()स्मश्च सतीदमप्यकिंवृत्तारोथमारब्धव्यम्। "दातारं प्रोत्साहयति" इति। भक्तदानविषयेऽस्य प्रोत्साहं जनयतीत्यर्थः॥
बाल-मनोरमा
लिप्स्यमानसिद्धौ च ६१०, ३।३।७

लिप्स्यमानसिद्धौ च। लड्वेति। पक्षे यथाप्राप्तम्। लिप्स्यमानसिद्धौ लिप्सायायाः सत्त्वेऽप्यकिंवृत्तार्थमिदमिति मत्वोदाहरति-- योऽन्नमिति। योऽन्नं ददाति स स्वर्गं याति, योऽन्नं दास्यति स स्वर्गं यास्यति, योऽन्नं दाता स स्वर्गं यातेत्यन्वयः।

तत्त्व-बोधिनी
लिप्स्यमानसिद्धौ च ५०१, ३।३।७

लिप्स्यमान। लिप्स्यमानसिद्धौ लिप्सायाः सत्त्वात्पूर्वेण सिद्धेऽप्यकिंवृत्तार्थमिदमिति ध्वनयन्नुदाहरति-- योऽन्नमिति।

---

सूत्रम्
काशिका-वृत्तिः

लोडर्थलक्षने च ३।३।८

लोडर्थः प्रैषादिर् लक्ष्यते येन स लोडर्थलक्षणो धात्वर्थः। तत्र वर्तमानाद् धातोः भविष्यति काले विभाषा लट् प्रत्ययो भवति। उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दो ऽधीष्व, अथ त्वं व्याकरणम् अधीष्व। उपाध्यायागमनमध्ययनप्रैषस्य लक्षणम्।

न्यासः

लोडर्थलक्षणे च। , ३।३।८

"प्रैषादि"इति आदिशब्देन विधिनिमन्त्रणामन्त्रणाधीष्टादयो गम्यन्ते। "आगच्छति" इति। "इषुगमियमां छः" ७।३।७७ इति च्छत्वम्। "अध्ययनप्रैषस्य"इति। अध्ययनविषयः प्रैषोऽध्ययनप्रैषः, शाकपार्थिवादित्वादुत्तरपदलोपी समासः। "अथ त्वं छन्दोऽधीष्व " इति। अत्र "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" ३।३।१६३ इति लोट्। स च प्रैषोऽध्ययनविषयः। तस्योपाध्यायगमनं ह्यपेक्ष्याध्ययने प्रैषतेत्यस्योपाध्यायागमनस्यप्रैषं प्रति निमित्तभावः॥

बाल-मनोरमा

लोडर्थलक्षणे च ६११, ३।३।८

लोडर्थलक्षणे च। लोडर्थः प्रैषादिरिति। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु" इत्यनुवृत्तौ "लोट् चे"ति लोड्विधानादिति भावः। कृष्णश्चेदिति। कृष्णबोजनकाले त्वं गाश्चारयेत्यर्थः। अत्र कृष्णभोजनं लोडर्थस्य गोचारणप्रैषस्य लक्षणम्, परिच्छेदकमिति यावत्। पक्षे लुट्लृटाविति। कृष्णश्चेद्भोक्ता, भोक्ष्यते वा, त्वं गाश्चारयेत्युदाहार्यम्।

तत्त्व-बोधिनी

लोडर्थलक्षणे च ५०२, ३।३।८

लोडर्थ। लोडर्थस्य लक्षणमिति षष्ठीतत्पुरुषः। कृष्णभोजनं लोडर्थस्य गोचारणप्रैषस्य लक्षणम्। भोजनकाले गोचारमं त्वया कर्तव्यमित्यर्थः। पक्षे लुडिति। कृष्णश्चेद्भोक्ता, कृष्णश्चेद्भोक्ष्यते, त्वं गाश्चारयेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

लिङ् च ऊर्ध्वमौहूर्तिके ३।३।९

भविष्यति, विभाषा, लोडर्थलक्षणे इति सर्वम् अनुवर्तते। ऊर्ध्वमौहूर्तिके भविष्यति काले लोडर्थलक्षणार्थे वर्तमानात् धातोर् विभाषा लिङ्प्रत्ययो भवति, चकाराल् लट् च। ऊर्ध्वं मुहूर्ताद् भवः ऊर्ध्वमौहूर्तिकः। निपातनात समासः, उत्तरपदवृद्धिश्च। भविस्यतश्च एतद् विशेषणम्। ऊर्ध्वं मुहूर्तातुपरि मुहूर्तस्य उपाध्यायश्चेदागच्छेत्, उपाध्यायश्चेदागच्छति, उपाध्यायश्चेदागमिष्यति, उपाध्यायश्चेदागन्ता, अथ त्वं छन्दो ऽधीष्व, अथ त्वं व्याकरणम् अधीष्व।

न्यासः

लिङ् चोध्र्वमौहूर्तिके। , ३।३।९

"निपातनात् समासः" इत्यादि। ऊध्र्वमौहूर्तिकशब्दस्योच्चारणेव निपातनम्। ऊध्र्वं मुहूत्र्तादिति विगृह्मास्मादेव निपातनात् समासः। ततः "बह्वचोऽन्तोदात्तात्" ४।३।६७ इति ठञ्, तत उत्तदरपदवृद्धिः, सा ह्यत एव निपातनात्।

भविष्यतः प्रकृतत्वात् तस्यैवोध्र्वमौहूर्त्तिकग्रहणं विशेषणं विज्ञायत इत्याह-- "भविष्यतश्चैतत्" इत्यादि। ऊध्र्वमौहूर्त्तिकशब्दश्चायं वत्र्तमानस्य प्रत्यासन्ने वर्तते। ऊध्र्वमौहूर्त्तिके वत्र्तमानसमीप इत्यर्थः। "आगच्छेत्" इति। यासुट्, "अतो येयः" ७।२।८० इतीयादेशः, "आद्गुणः" ६।१।८४"लोपो व्योर्वलि" ६।१।६४ इति यकारस्य लोपः,सलोपोऽनन्त्यस्य" ७।२।७९ इति सकारस्य॥

बाल-मनोरमा

लिङ् चोध्र्वमौहूर्तिके ६१२, ३।३।९

लिङ् चोध्र्वमौहूर्तिके। "ऊध्र्व"मिति विभक्तिप्रतिरूपकमव्ययम्। ऊध्र्वं मुहूर्ताद्भव इति विग्रहः। केचित्तु "ऊध्र्व"मिति द्वितीयान्तम्, "अकर्मकधातुभिर्योगे" इति कर्मत्वादित्याहुः। ऊध्र्वमौहूर्तिक इति। ऊध्र्वमुहूर्तशब्दाद्भवार्थे कालाड्ढिति भावः। ननु तद्धितार्थेत्यत्र दिक्सङ्ख्ये इत्यनुवृत्तेः समानाधिकरणाधिकाराच्चात्र कथंसमास इत्यत आह-- निपातनादिति। पूर्वपदे आदिवृद्धिमाशङ्क्य आह-- उत्तरपदवृद्धिश्चेति। निपातनादित्यनुषज्यते। ऊध्र्वमौहूर्तिके इति। मुहूर्तादूध्र्वकालीने इत्यर्थः। इदं च लोडर्थलक्षण इत्यत्रान्वेति। लिङ्लटाविति। चाल्लट् समुच्चीयत इति बावः। वा स्त इति। पक्षे लुट्लृटौ यथाप्राप्तम्। छन्द इति। वेदमित्यर्थः। इति तृतीयस्य तृतीये भविष्यतीत्यधिकारस्था लविधयः। अथाऽस्मिन्नेव तृतीयपादे कतिपयान्विधीनाह--

तत्त्व-बोधिनी

लिङ् चोध्र्वमौहूर्तिके ५०३, ३।३।९

लिङ् चोध्र्व। "कालाट्ठञ्"। "तद्धितार्थोत्तरपदे"त्यत्र "दिक्सङ्ख्ये" इत्यनुवर्तनादिह समासो दुर्लभ इत्याशङ्कायामाह-- निपातनादिति।

---

सूत्रम्

काशिका-वृत्तिः

तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३।३।१०

भविष्यति इत्येव। क्रियार्थायां क्रियायाम् उपपदे धातोर् भविस्यति कले तुमुन्ण्वुलौ प्रत्ययौ भवतः। भोक्तुं व्रजति। भोजको व्रजति। भुजिक्रियार्थः व्रजिरत्रोपपदम्। क्रियायाम् इति किम्? भिक्षिष्य इत्यस्य जटाः। क्रियार्थायाम् इति किम्? धावतस्ते पतिष्यति दण्डः। अथ किमर्थं ण्वुल् विधीयते यावता ण्वुल्तृचौ ३।१।१३३ इति सामान्येन विहित एव सो ऽस्मिन्नपि विषये भविस्यति? लृटा क्रियार्थोपपदेन बाध्येत। वा ऽसरूपविधिना सो ऽपि भविस्यति? एवं तर्हि एतद् ज्ञाप्यते, क्रियायाम् उपपदे क्रियार्थायां वा ऽसरूपेण तृजादयो न भवन्ति इति। तेन कर्ता व्रजति, विक्षिपो व्रजति इत्येवम् आदि निवर्त्यते।

लघु-सिद्धान्त-कौमुदी

तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ८५२, ३।३।१०

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति॥

न्यासः

तुमुन्?ण्वुलौ क्रियायां क्रियार्थायाम्। , ३।३।१०

"भिक्षिष्य इत्यस्य जटाः" इति। लृट्, अनुदात्तेत्त्वादात्मनेपदम्ुत्तमपुरुषैकवचनम्, इट्, टेरेत्त्वम्, "अतो गुणे" ६।१।९४

पररूपत्वम्। अत्रास्ति भिक्षिक्रियार्थमुपपदं जटाशब्दः, न तु जटाशब्दः क्रियावचनः; जटानां द्रव्यत्वात्। "धावतस्ते पतिष्यति दण्डः"इति। "धाव् गतिशुद्धयोः"(धा।पा।६०१), लट्, तस्य शत्रादेशः, षष्ठ()एकवचनम्। अथ वा "सृ गतौ" (धा।पा।९३५)इत्यस्य प्राघ्रादिसूत्रेण ७।३।७८ धावादेशः। अस्त्यत्र धावतिक्रियोपपदम्, न तु क्रियार्थः। अर्थशब्दो ह्ययं प्रयोजनवचनः, यच्च यदुद्दिश्य प्रवत्र्तते तत्तस्य प्रयोजनं भवति, न चासौ दण्डपतनमुद्दिश्य धावति, किं तर्हि? कार्यान्तरार्थम्। "अथ" इत्यादि चोद्यम्। "सामान्येन विहित एव"इति। भविष्यत्यन्यत्र च काले क्रियायां क्रियार्थायामुपपदेऽन्यत्र चाविशेषेण विधानात्। "लृटा" इत्यादि परिहारः। "लृट शेषे च" ३।३।१३ इति लृटं वक्ष्यति, तेन विशेषविहितेन लृटा बाध्यते, तन्मा भूतत्तस्य बाधेति पुनरिह विधीयते। अथ तुमुन् क्रियार्थोपपदेन बाध्यत इत्येतत् क्समान्नोक्तम्? भिन्नार्थत्वात्। न हि भिन्नार्थयोर्बाध्यबाधकभावो भवति, भिन्नार्थो च ण्वुल्तुमुनौ। तथा हि-- कत्र्तरि ण्वुल्, तुमुन् पुनर्भावे। कथं ज्ञायते? "तुमर्थे सेसेन्" ३।४।९ इत्यत्र तुमर्थग्रहणात्। यदि तुमुन् "कत्र्तरि कृत्" ३।४।६७ इत्यतो वचनात् कत्र्तरि स्यात्,ततः सेसेन्प्रभृतयोऽपि तत्रैव भविष्यन्तीति तुमर्थग्रहणं न कुर्यात्, कृतवांश्च, ततस्तुमर्थग्रहणादवसीयते-- तुमुन् कत्र्तरि न भवति। न चान्यार्थो निर्द्दिश्यते, तत्र "अनिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (पु।प।९०) इति भाव एव तुमुन् भवतीति विज्ञायते। यदुक्तम्-- लृटा क्रियार्थोपपदेन बाध्यत इति,तद्विघटयितुमाह-- "वासरूपविधिना"इत्यादि। "एवं तर्हि" इत्यादि। एतेन ज्ञापकार्थतां ण्वुल्विधानस्याचष्टे। यदि हि क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयः स्युर्ण्वुलपि तृजर्थाभिधायित्वाद्वासरूपविधिना भविष्यन्तीति पुनरिह तन्न विदध्यात्, विहितवांश्च;ततस्तेन ण्वुल्विधानेनास्मिन् विषये वासरूपेण तृजादयो न भवन्तीत्येषोऽर्थो विज्ञाप्यते। "तेन" इत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति। "कत्र्ता" इति। तृच्। "विक्षिपः" इति। "इगुपधज्ञाप्रीकिरः कः"३।१।१३५। तुमुनो नकार आद्युदात्तार्थः, उकार उच्चारणार्थः। ण्वुलो लकारो लिति प्रत्ययात् पूर्वस्योदात्तार्थः, णकारो वृद्ध्यर्थः॥
तत्त्व-बोधिनी
तुमुन्?ण्वुलौ क्रियायां क्रियार्थायाम् १५०८, ३।३।१०

तुमुन्ण्वुलौ। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था, तस्याम्। अत्रेदं बोध्यं-- तुमुन्ण्वुलोः कृत्वाऽविशेषेऽपि "अव्ययकृतो भावे" इति वचनाद्भावे तुमुन्। ण्वुल्तु कर्तरि। क्रियायामिति सप्तमीनिर्दशात्तद्वाचकस्य यातीत्यादेः "तत्रोपपदं सप्तमीस्थमित्युपपदत्वमिति। कृष्णं द्रष्टुमिति। कृष्णकर्मकं यद्भविष्यद्दर्शनं तत्प्रयोजकं यानमित्यर्थः। कृष्णं दर्शक इति। कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः। क्रियायां किम्?। भिक्षिष्ये इत्यस्य जटाः। इह भिक्षार्था जटाः, ताश्च द्रव्यं, न तु क्रिया, "भिक्षितुं जटा" इति प्रयोगस्तु धारयतीत्यध्याहारेण समर्थनीयः। क्रियार्थायां किम्?। "धावतस्ते पतिष्यति दण्डः"। अस्त्यत्र धावत इति क्रिया, न त्वसौ दण्डपतनार्था। धावनं तु दण्डपतने हेतुर्भवति न तूद्देश्यमिति दिक्।

---

सूत्रम्
काशिका-वृत्तिः
भाववचनाश् च ३।३।११

भविष्यति इत्येव। भावे ३।३।१८ इति प्रकृत्य ये घञादयो विहितास् ते च भाववचनाः भविस्यति काले क्रियायाम् उपपदे क्रियार्थायां भवन्ति। किमर्थम् इदं यावता विहिता एव ते? क्रियर्थौपपदे विहितेन अस्मिन् विषये तुमुना बाध्येरन्। वा ऽसरूपविधिश्च अत्र न अस्ति इत्युक्तम्। अथ वचनग्रहणं किमर्थम्? वाचका यथा स्युः। कथं च वाचका भवन्ति? याभ्यः प्रकृतिभ्यो येन विशेषणेन विहिता यदि ताभ्यस् तथा एव भवन्ति, नासामञ्जस्येन इति। पाकाय व्रजति। भूतये व्रजति। पुष्टये व्रजति।

लघु-सिद्धान्त-कौमुदी
नपुंसके भावे क्तः ८७३, ३।३।११

न्यासः
भाववचनाश्च। , ३।३।११

"भाववचनाः" इति। ब्राउवन्तीति वचनाः, बहुलचनात् कर्त्तरि ल्युट्। भावस्य वचना भाववचनाः। भाववचनत्वं पुनस्तेषां भावाधिकारे विधानादिति दर्शयितुमाह--"भावे इति प्रकृत्य"इत्यादि। प्रकृत्य अधिकृत्येत्यर्थः। "घञादयः"इति। आदिशब्देनाजबादीनां ग्रहणम्। "किमर्थम्" इत्यादि चोद्यम्। "क्रियार्थोपपदे विहितेन" इत्यादि परिहारः। स्यादेतत्--वासरूपविधिना ते भविष्यन्ति। अत आह-- "वासरूपविधिश्च नास्तीत्युक्तम्" इति। एतच्च पूर्वसूत्र उक्तम्। "अथ " इत्यादि। भाव इत्येतावद्वक्तव्यम्; एवं ह्युच्यमाने सतीदमेव घञादीनां विधायकं स्यात्,ततश्च ते धातुमात्रादविशेधेम प्रसज्येरन्; विशेधानुपादानात्। वचनग्रहणादयमर्थो लभ्यते-- भावे ये विहिताः प्रत्ययास्ते तथा भवन्ति यथा भावस्य वाचका भवन्तीति। यथा च ते भावस्य वाचका भवन्ति तथा प्रश्नपूर्वकं दर्शयितुमाह--"कथञ्च" इत्यादिना। "नामसामञ्जस्येन" इति। न व्यतिरेकेण,नानियमेनेत्यर्थः। तत्र केचिदाहुः- वचनग्रहणाद्यैरेव विधिवाक्यैर्भाव एषां विधानं तैरेव क्रियायामुपपदे क्रियार्थायां भवन्ति, एवञ्चते वाचका भवन्ति, नान्यथेति। अन्ये त्वाहुः-- एतदेव सूत्रं विधायकम्; वचनग्रहणसामश्र्यात्। अनेनापि तथैषां विधानं भवति यथा स्वैर्विधिवाक्यैः। यदि भावे हि तद्विधिः, नान्यस्मिन्नपि विषये भविष्यति। तत् तस्मात् पुनर्विधीयत इति॥

---

सूत्रम्
काशिका-वृत्तिः
अण् कर्मणि च ३।३।१२

भविस्यति इत्येव। चकारः सन्नियोगार्थः। धातोः अण् प्रत्ययो भवति भविष्यति काले कर्मण्युपपदे क्रियायां च क्रियार्थायाम्। कर्मण्यण् ३।२।१ इति सामान्येन विहितो वा ऽसरूपविधेरभावाद् ण्वुला बाधितः पुनरण् विधीयते, सो ऽपवादत्वाद् ण्वुलं बाधते, परत्वात् कादीन्। तेन अपवादविसये ऽपि भवत्येव। काण्डलावो व्रजति। अश्वदायो व्रजति। गोदायो व्रजति। कम्बलदायो व्रजति।

न्यासः
अण् कर्मणि च। , ३।३।१२

"कर्मण्यण्" इत्यादि। "तुमुन्ण्वुलौ" ३।३।१० इत्यादिसूत्रे ज्ञापितमेतत्-- वासरूपविधिरिह नास्तीति। तेन यद्यपि विशेषणेणाण् विहितः, तथापि वासरूपविधेरभावात् क्रियार्थोपपद न ण्वुला बाधितः,तस्मात् पुनर्विधीयते। "सोपऽपवादत्वाण्णवुलं बाधते" इति। नाप्राप्ते ण्वुलीतरस्यारब्धत्वात्, विशेषविहितत्वाच्च। "कादीन्" इति। बाधत इति सम्बन्धः। आदिशब्देन टगादीनां ग्रहणम्। "तेनापवादविषयेऽपि भवति" इति। अपवादाः सामान्यविहितस्याणः कादयः, तद्विषयेऽपि भवति। "अण् कर्मणि च" ३।२।१२ इत्यस्याऽनाकारान्तक्रियोपपदोऽवकाश--- काण्टलावो व्रजतीति, "आतोऽनुपसर्गे कः" ३।२।३ इत्यस्याकारान्तः क्रियोपपदोऽवकाशः --गोद इति; इह ह्युभयं प्राप्नोति-- गोदायो व्रजतीति, परत्वादण् भवति। तथा "गपोष्टक्"३।२।८ इत्यस्यावकाशः--सुरापः,शीधुपः,अणः स एव;इहोभयं प्राप्नोति--सुरापायो व्रजति, शीधुपायो व्रजतीति॥

तत्त्व-बोधिनी

अण् कर्मणि च १५१३, ३।३।१२

ण्वुलोऽपवाद इति। "अव्ययकृतो भावे" इति भावे विहितत्वात्तुमुनः प्राप्तिरेव नास्तीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

लृट् शेषे च ३।३।१३

भविष्यति इत्येव। शेषः क्रियार्थोपपदादन्यः। शेषे शुद्धे भविष्यति काले, चकारात् क्रियायां च उपपदे क्रियार्थायां धातोः लृट् प्रत्ययो भवति। करिष्यामि इति व्रजति। हरिष्यामि इति व्रजति। शेषे खल्वपि करिष्यति। हरिष्यति।

न्यासः

लृट् शेषे च। , ३।३।१३

"चकारात्" इत्यादि। एतेन क्रियायां क्रियार्थायामित्यस्यानुकर्षणार्थश्चकार इति दर्शयति। "करिष्यामि" इति। "ऋद्धनोः स्ये" ७।२।७० इतीट्॥

बाल-मनोरमा

लृट् शेषे च ४२, ३।३।१३

लृट् शेषे च। "तुमुन्ण्वुलौ क्रियायां क्रियार्थाया"मिति प्रागुक्तं,ततोऽन्यः शेष इत्याह---असत्यामिति। चार्थमाह--सत्यमिति। हरदत्तस्त्वाह-- अस्वरितत्वादेव क्रियार्थायां क्रियायामिति नानुवर्तते। एवं च "शेषे चे"ति सुत्यजमिति। तच्चिन्त्यम्। "शयिष्यत इति स्थीयते" इत्यादौ तुमुना लृटो बाधापत्तेः, क्तल्युट्()तुमुन्खलर्थेषु वासरूपविधेरभावात्। अत्र च ज्ञापकं "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे"त्यत्र लोटा बाधा मा भूदिति पुनः कृत्यविधि"रित्यादि कृदन्ते वक्ष्यति। इदमपि ज्ञापकमित्यन्यदेतत्। यत्तु प्राचा-- "भविष्यतीति व्रजती"त्युदाहृतं, तदापाततः, "तुमुन्विषयेऽपि लृङ्भवति तुमुना लृण्न बाध्यते" इत्येतत्प्रतिपादनाय तस्याऽनुपयोगात्,न हि भविष्यतीत्यत्र कर्तरि तुमुनः प्राप्तिरस्ति,भावे हि सः। समानकर्तृकेष्वेवेति च वक्ष्यते। लृडित्येतावत्सूत्रकरणेऽपि "भविष्यतीति व्रजती"त्ययं सिध्यत्येवेत्यास्तां तावत्। स्य इडिति। लृटस्तिपि "स्यतासी लृलुटो"रिति स्यप्रत्ययः। तस्य वलाद्यार्द्धधातुकत्वादिडागम इत्यर्थः। भविष्यतीति। स्यप्रत्ययस्य इटि ऊकारस्य गुणे अवादेशे प्रत्ययावयवत्वत्सकारस्य षत्वे भविष्यतीति रूपमित्यर्थः। तसादौ भविष्यत इत्याद्यप्येवं योज्यम्। भविष्यामीत्यादौ "अतो दीर्घो यञी"ति दीर्घः। इति लृट्प्रक्रिया।

तत्त्व-बोधिनी

लृट् शेषे च ३३, ३।३।१३

"तुमुन्()ण्वुलौ क्रियायां क्रियार्थाया"मिति प्रागुक्तं, ततोऽन्यः शेष इत्याह-- असत्यामिति। हरदत्तस्त्वाह---अस्वरितत्वादेव क्रियार्थायां क्रियायामिति नानुवर्तते। एवंच "शेषेचे"ति सुत्यजमिति। तच्चिन्त्यम्। "शयिष्यत इति स्थीयते"इत्यादौ तुमुना लृटो बाधापत्तेः, क्तल्युट्()तुमुन्? खलर्थेषु वासरूपविधेरभावात्। अतर् च ज्ञापकं "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे"त्यत्र लोटा बाधा माभूदिति पुनः कृत्यविधि"रित्यादि कृदन्ते वक्ष्यति। इदमपि ज्ञापकमित्यन्यदेतत्॥ यत्तु प्राचा-- "भविष्यतीति व्रजती"त्युदाहृतं, तदापाततः, "तुमुन्विषयेऽपि लृङ्भवति तुमुना लृण्न बाध्यतेट इत्येतत्प्रतिपादनाय तस्याऽनुपयोगात्, न हि भविष्यतीत्यत्र कर्तरि तुमुनः प्राप्तिरस्ति, भावे हि सः। समानकर्तृकेष्वेवेति च वक्ष्यते। लृरडित्येतावत्सूत्रकरणेऽपि "भविष्यतीति व्रजती"त्ययं सिध्यत्येवेत्यास्तां तावत्।

सूत्रम्

काशिका-वृत्तिः

लृटः सद्वा ३।३।१४

लृटः स्थाने सत्संज्ञौ शतृशानचौ वा भवतः। व्यवस्थितविभाषा इयम्। तेन यथा लटः शतृशानचौ तथा अस्य अपि भवतः। अप्रथमासमानाधिकरणाऽदिषु नित्यम्, अन्यत्र विकल्पः। करिष्यन्तं देवदत्तं पश्य। करिष्यमाणं देवदत्तं पश्य। हे करिष्यन्। हे करिस्यमाण। अर्जयिष्यमणो वसति। प्रथमासमानाधिकरणे विकल्पः करिष्यन् देवदत्तः। करिस्यमणो देवदत्तः। करिष्यति। करिस्यते।

लघु-सिद्धान्त-कौमुदी

लृटः सद्वा ८३८, ३।३।१४

व्यवस्थितविभाषेयम्। तेनाप्रथमासामानाधिकरण्ये प्रत्योत्तरपदयोः संबोधने लक्षणहेत्वोश्च नित्यम्। करिष्यन्तं करिष्यमाणं पश्य॥

न्यासः

लृटः सद्वा। , ३।३।१४

"सत्संज्ञौ" इति। "तौ सत्" ३।२।१२७ इतिसंज्ञाविहितत्वाच्छतृशानचौ सत्संज्ञकौ। कथं पुनर्लृटः शतृशानचौ भवत इत्याह-- "अप्रथमासमानाधिकरणे" इत्यादि। प्रथमासमानाधिकरणे विकल्पेन यथा लटः शतृशानचौ,तथा लृटोऽपि व्यवस्थितविभाषया सत्संज्ञकौ भवतः। अप्रथमासमानाधिकरणादिषु नित्यं भवतः-- करिष्यन्तं पश्य, करिष्यमाणं पश्य, हे करिष्यन्, हे करिष्यमाण, अर्जयिष्यन् वसति, करिष्यद्भक्तिः, करिष्यमाणभक्तिः, करिष्यद्रूपः,करिष्यमाणरूप इत्यप्रथमासमानाधिकरणे। प्रथमासमानाधिकरणे तु विकल्पः-- करिष्यति देवदत्तः करिष्यन् देवदत्तः; करिष्यते देवदत्तः, करिष्यमाणो देवदत्त इति। लृडिति वत्र्तमाने पुनर्लृड्()ग्रहणं स्थानिनिर्देशार्थम्; इतरथा हि प्रत्ययान्तरत्वं सत्संज्ञकयोर्विज्ञायेत। लृण्मात्रस्य यथा स्यादित्येवमर्थं वा। तेन योऽनद्यतने लृट् तस्यापि भवतः-- ()आओऽग्नीनाधास्यमानेनेति। "अभिज्ञावचने लृट्" ३।२।११२ इत्यस्य न भवतः; भविष्यतीत्यधिकारात्, अस्य च भविष्यत्कालविहितत्वात्। अनद्यतने पुनर्लृडुत्तरसूत्रेऽनद्यतन इतियोगविभागाद्भवतीति वेदितव्यम्। लृटष्टकारष्टेरेत्वार्थः, ऋकारः "स्यतासी लृलुटोः" ३।१।३३ इत्यत्र विशेषार्थः॥

बाल-मनोरमा

लृटः सद्वा ९०९, ३।३।१४

लृटः सद्वा। लृटः शतृशानचौ वा स्त इत्यर्थः। व्यवस्थितेति। व्याख्यानादिति भावः। नित्यमिति। तेन तिङां निवृत्तिः। अप्रथमासामानाधिकरण्ये उदाहरति-- करिष्यन्तमिति। प्रत्यययये परत उदाहरति-- कारिष्यत इति। उत्तपदे उदाहरति-- करिष्यद्भक्तिरिति। करिष्यन्ती भक्तिरिति। कर्मधारयः। सम्बोधने उदाहरति-- हे करिष्यन्निति। "शयिष्यमाणाभोक्ष्यन्ते यवना" इति लक्षणे उदाहार्यम्। हेतावुदाहरति-- अर्जयिष्यन्वसतीति। प्रथमासामानाधिकरण्येऽपि क्वचिदिति। अप्रथमासामानादिकरण्याऽभावेऽपि क्वचिदित्यर्थः। कदाचिदित्यपि द्रष्टव्यम्। इदं च "लृट् शेषे चे"ति भविष्यदधिकारविहिते लृट()एव प्रवर्तते इति "अनवक्लृप्त्यमर्षे"त्यत्र भाष्ये स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

अनद्यतने लुट् ३।३।१५

भविष्यति इत्येव। भविष्यदनद्यतने ऽर्थे वर्तमानाद् धतोः लुट् प्रत्ययो भवति। लृटो ऽपवादः। श्वः कर्ता। श्वो भोक्ता। अनद्यतने इति बहुव्रीहिनिर्देशः। तेन व्यामिश्रे न भवति। अद्य श्वो वा भविष्यति। परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्या। इयं नु कदा गन्ता, या एवं पादौ निदधाति। अयं नु कदा ऽध्येता, य एवम् अनभियुक्तः।

लघु-सिद्धान्त-कौमुदी

अनद्यतने लुट् ४०४, ३।३।१५

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात्॥

न्यासः

अनद्यतने लुट्। , ३।३।१५

"अनद्यतन इति बहुव्रीहिनिर्देशः" इति। अद्य भावो नास्यास्मिन्नित्यनद्यतनः। "तेन" इत्यादिना बहुव्रीहिसमासाश्रयणस्य फलं दर्शयति। एतच्च "अनद्यतने लङ्"३।२।१११ इत्यत्र व्याख्यातप्रायमिति तत एवादवगन्तव्यम्। "अद्य ()आओ वा गमिष्यति" इति। अद्य ()आश्व गमिष्यतीत्यर्थः। "परिदेवने" इत्यादि। भविष्यदनद्यतने लुडुक्तो भविष्यत्सामान्ये न प्राप्नोति, इष्यते च, एतदर्थमिदमुच्यते। परिदेवनम् = अनुशोचनम्। "()आस्तनी" इति। लुट इयमन्याचार्यसंज्ञा। "वक्तव्या" इति। व्याख्येया। तत्रेदं व्याख्यानम्-- "लृट् शेषे च" ३।३।१३ इत्यतश्चकारोऽनुवनत्र्तते, स चानुक्तसमुच्चयार्थः। ततः परिदेवने ()आस्तनी भविष्यत्यर्थे भविष्यतीति। अन्यस्त्वयं नु कदा गन्तेत्यादावनद्यतन एव काले लुडिति दर्शयन्नाह-- पदमन्वाख्याने व्याकरणे च, तच्च पदं गन्तेत्यादिकमनद्यतन एव वत्र्तते। तस्य यदाऽनद्यतने भविष्यत्सामान्ये वा वृत्तिः सार्थात् प्रकरणाद्वा भवतीति वाक्यार्मथोऽवतिष्ठते। न च वाक्यार्थः पदसंस्कारस्य निमित्तम्, किं तर्हि? पदार्थः। तस्मादनद्यतने लुडित्येष सिद्धमिति। अनेन तु न्यायेन परिदेवने ()आस्तनीत्यादि सम्यगेतत्। लुटोऽपि टकारष्टेरेत्वार्थः; उकारः "लुटः प्रथमस्य डारौरसः" २।४।८५ इति विशेषणार्थः॥

बाल-मनोरमा

अनद्यतने लुट् ३४, ३।३।१५

अनद्यतने लुट्। धातोरित्यधिकृतम्। "भविष्यति गम्यादयः" इत्यतो भविष्यतीत्यनुवर्तते। भविष्यत्यनद्यतन इति धात्वर्थेऽन्वेति। तदाह--भविष्यत्यनद्यतन इति। अनद्यतनशब्दस्तु परोक्षे लिडित्यत्र व्याख्यातः। उटावितौ। लुटस्तिबादयः।

तत्त्व-बोधिनी

अनद्यतने लुट् २८, ३।३।१५

अतीताया रात्रेः पश्चार्द्धेन, आगामिन्याः पूर्वार्द्धेन सहितोदिवसोऽद्यतन इति "कालोपसर्जने च तुल्य"मित्यत्र स्थितम्॥

---

सूत्रम्

काशिका-वृत्तिः

पदरुजविशस्पृशो घञ् ३।३।१६

भविष्यति इति निवृतम्। इत उत्तरं त्रिष्वपि कालेषु प्रत्ययाः। पदादिभ्यो धातुभ्यो घञ् प्रत्ययो भवति। पद्यते ऽसौ पादः। रुजत्यसौ रोगः। विशत्यसौ वेशः। स्पृश उपताप इति वक्तव्यम्। स्पृशति इति स्पर्शः उपतापः। ततो ऽन्यत्र पचाद्यच् भवति। स्पर्शो देवदत्तः। स्वरे विशेषः।

न्यासः

पदरुजविशस्पृशो घञ्। , ३।३।१६

पदेर्ण्वुल्तृचोरपवादो घञ् विधीयते, रुजिविशिभ्यामिगुपधलक्षणस्य कस्य, स्पृशेश्च पचाद्यचः। "पादः" इति। "अत उपधायाः" ७।२।११६ इति वृद्धिः। यद्येवम्, पदमिति न सिद्ध्यति? न तु खलु न सिद्ध्यति, "अनुदात्तं पदमेकवर्जम् ६।१।१५२इति निपातनात्। "स्पृश उपतापे इति वक्तव्यम्िति। उपतापः = रोगः, तत्र स्पृशेर्घञ्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "लृटः सद्वा" ३।३।१४ इत्यतो वाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेन स्पृशेरुपात एव कत्र्तरि भवति, नान्यत्रेति। "स्वरे विशेषः" इति। अचि हि सत्यन्तोदात्तत्वं भवति, घञि तु पदस्याद्युदात्तत्वं स्यात्। घञो ञकारो वृद्ध्यर्थः, आद्युदात्तार्थश्च। घकारः "चजोः कुघिण्ण्यतोः" ७।३।५२ इति कुत्वार्थः॥

तत्त्व-बोधिनी

पदरुजविशस्पृशो घञ् १५१४, ३।३।१६

पदरुज। पद्यतेऽसाविति। करणस्य कर्तृविवक्षाऽत्र बोध्या। पद्यते गच्छति येनेति फलितोऽर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सृ स्थिरे ३।३।१७

सर्तेः धातोः स्थिरे कर्तरि घञ् प्रतयो भवति। स्थिरः इति कालान्तरस्थायी पदार्थ उच्यते। स चिरं तिष्ठन् कालन्तरं सरति इति धात्वर्थस्य कर्ता युज्यते। चन्दनसारः। खदिरसारः। स्थिरे इति किम्? सर्ता। सारकः। व्याधिमत्स्यबलेष्विति वक्तव्यम्। अतीसारो व्याधिः। विसारो मत्स्यः। सारो बलम्।

न्यासः

सृ स्थिरे। , ३।३।१७

"सत्र्तेर्धातोः" इति। "सृ गतौ" (धा।पा।९३५) इत्यस्माद्धातोः। "स्थिरे कत्र्तरि" इति। एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्त्तुर्विशेषणं न तूपपदमिति दर्शयति।"घञ्प्रत्ययो भवति" इति। तृजाद्यपवादः। कः पुनरयं स्थिरो नामेत्याह-- "स्थिर इति कालान्तरस्थायी" इत्यादि। तत्रैवोपपत्तिमाह-- "स चिरम्" इत्यादि। सत्र्तेर्धातोर्गतिरर्थः। स च कालान्तरस्थायिन एव कर्त्तुः सम्भवति, नात्मलाभसमनन्तरनाशिनः। तस्मात् कालान्तरस्थाय्येव गतेर्धात्वर्थस्य कत्र्ता युज्यत इत्येवेह स्थिरशब्देनोच्यते। यदि कालान्तरस्थायिन एव गतिः सम्भवति स्थिरग्रहणमनर्थकम्, न ह्यस्थिरः सत्त्यर्थस् कत्र्तोपपद्यते? नानर्थकम्; प्रकर्षेण यः सरति तत्र कत्र्तरि प्रत्ययो यथा स्यादित्येवमर्थत्वात्। अत एव स चिरं तिष्ठन् कालान्तरं सरतीति वृत्तौ चिरग्रहणं कृतम्। "चन्दसारः" इति। षष्ठीसमासः। "व्याधिमत्स्यबलेष्विति वक्तव्यम्" इति। अस्थिरार्थोऽयमारम्भः। एषु व्याध्यादिषु त्रिष्विपि घञ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्विहापि चकारानुवृत्तिमाश्रित्य कत्र्तव्यम्। "अतीसारः" इति। "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ६।३।१२१ इति दीर्घत्वम्॥

तत्त्व-बोधिनी

सृ स्थिरे १५१५, ३।३।१७

सृ स्थिरे। सतेरिति भ्वादेर्जुहोत्यादेश्च ग्रहणं, स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणं न तूपपदमिति ध्वनयन्नाह-- स्थिरे कर्तरीति। अद्र्धर्चादिषु सारशब्दपाठोऽत्र मानम्। व्याधीत्यादि। अस्थिरार्थमिदं वचनम्। तेन "विसारो मत्स्य" इत्यत्र विविधं सरतीत्यर्थः सङ्गच्छते। अतीसार इति। "उपसर्गस्य घञी"ति दीर्घः। सारो बलमिति। अत्रापि सृधातुरन्तर्भावितण्यर्थः, सारयति चेष्टयतीत्यर्थानुरोधात्। वलवानेव हि चेष्टते। सिद्धावस्थापन्न इति। पचतीत्यादौ तु साध्यावस्थापन्नो धात्वर्थ इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भावे ७।१ ११२ घञ् ? धातोः ? प्रत्ययः ? परश्च ?

अर्थः॥

भावे धात्वर्थे वाच्ये धातोः घञ् प्रत्ययः भवति

उदाहरणम्॥

पाकः, त्यागः, रागः
काशिका-वृत्तिः
भावे ३।३।१८

भावे वाच्ये धातोः घञ् प्रत्ययो भवति। पाकः। त्यागः। रागः। क्रियासामान्यवाची भवतिः। तेन अर्थनिर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति। धात्वर्थश्च धातुना एव उच्यते। यस्तस्य सिद्धता नाम धर्मः तत्र घञादयः प्रत्ययाः विधीयन्ते। पुंलिङ्गएकवचनं च अत्र न तन्त्रं, लिङ्गान्तरे वचनान्तरे ऽपि च अत्र प्रत्यया भवन्त्येव। पक्तिः, पचनम्, पाकौ, पाकाः इति।
लघु-सिद्धान्त-कौमुदी
भावे ८५४, ३।३।१८

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्। पाकः॥
न्यासः
भावे। , ३।३।१८

"रागः" इति। "रञ्जेश्च" ६।४।२६ "घञि च भावकरणयोः" ६।४।२७इत्यनुनासिकलोपः। ननु च "भावे" इति भवतिनायं घञन्तेन निर्देशः क्रियत इति भवतिविषय एव प्रत्ययार्थनिर्द्देशः कृतो भवति, ततश्च भवतेर्यो भावस्तस्मिन्नेव वाच्ये प्रत्ययः स्यात्, स च भवतेरेवोत्पद्यमानेन प्रत्ययेन शक्योऽभिधातुम्, अतस्तत एव प्रत्ययेन भवितव्यम्, तत्कथं पाकस्त्यागो राग इति पच्यादिभ्यो भवति? अत आह-- "क्रियासामान्यवाची" इत्यादि। क्रियासामान्यं हि सर्व धात्वर्थानुगतं भवतेरर्थः। तेन क्रियासामान्यवाचिनाऽर्थनिर्देशः क्रियमाणः सर्वधातुविषयः कृतो भवति, अतः पच्यादिभ्योऽपि प्रत्ययो भवतीत्यभिप्रायः। ननु धात्वर्थः पूर्वापरीभूतोऽपरिनिष्पन्नः, ततो यदि तत्र वाच्ये प्रत्ययो भवति तस्यासत्त्वभूतत्वाल्लिङ्गसंख्याभ्यां प्रत्ययार्थस्य सम्बन्धो न सिद्ध्यति, तत आह-- "धात्वर्थश्च" इत्यादि। एवकारः

प्रत्ययव्यवच्छेदार्थः। धातुनैवोच्यते धात्वर्थः, न तु प्रत्ययेन। कथं तर्हि घञादयो विधीयन्त इत्यत आह-- "यस्तस्य" इत्यादि। तस्य धात्वर्थस्य सिद्धता निष्पन्न्ता नाम यो धर्मस्तत्र घञादयः प्रत्यया विधीयन्ते, ततो युक्तः प्रत्ययार्थस्य लिङ्गसंख्यायोगः। तस्य यो धर्मस्तस्य सत्त्वभूतत्वादित्यर्थः। भाव इति-- इहि पुंल्लिङ्गेनायं निर्द्देश एकवचनेनन च। तेन पुंल्लिङ्ग एव बावे एकवचन एव प्रत्ययाः स्युः। न लिङ्गान्तरयुक्ते नापि वचनान्तरे। एवञ्च सति "स्त्रियां क्तिन्" ३।३।९४ इत्यत्र "भावे" "स्त्रियाम्िति चैतयोः सामानाधिकरण्यं नोपपद्यते, वैयधिकरण्यं हि स्यात्। ततः स्त्रियां भावे क्तिन्प्रत्ययो न स्यात्, अर्थान्तर एव कर्मादौ स्यात्। भावे च पुंल्लिङ्गे पाकौ पाका इत्यत्रैकवचनं स्यात्। यथाजातीयकं ह्यर्थमुपादातुं समर्थो भावशब्दस्तथाजातीयकेऽर्थे प्रत्ययेन युक्तं भवितुं नान्यत्रेत्यत आह-- "पुंल्लिङ्गमेकवचनं चात्र न तन्त्रम्" इति। सर्वलिङ्गसंख्यासम्बन्धयोग्यं प्रतातिपदिकार्थसामान्यनिमित्तं प्रत्ययनिमित्तत्वेनोपादीयते, तदेव प्रधानम्, न लिङ्गं नापि वचनम्। तत्र प्रातिपदिकार्थसामान्यं विना लिङ्गवचनाभ्यां न शक्यं निर्द्देष्टुमिति नान्तरीयकत्वात् तयोरुपादानम्। प्रतीते तु तस्मिन् प्रातिपदिकार्थसामान्यचरितार्थत्वाल्लिङ्गवचने लिङ्गान्तरे च प्रत्यया भवन्त्येव। "पक्तिः" इति। भावे "स्त्रियां क्तिन्" ३।३।९४। "पक्वम्" इति। "नुपंसके भावे क्तः" ३।३।११४। "पचनम्" इति। "ल्युट् च" ३।३।११५ इति ल्युट्। अत्रापि यदि भावे पुल्लिङ्गस्तन्त्रं स्यात्, ततो भावनपुंसकशब्दयोः सामानाधिकरण्यानुपपत्तेर्वैयधिकरण्यं स्यात्, ततश्च भावे नपुंसके ल्युण्न स्यात्, अर्थान्तर एव तु स्यात्। भावे च पुंल्लिङ्गे पचनमित्यस्य तुल्यत्वाच्चोद्यपरिहारस्योपन्यासः, अन्यथा ह्यन्यदेव भावग्रहणमधिकृत्य ल्युटो विधानाददमिहानुपन्यसनीयमेव स्यात्। "पाकौ" इत्यादिकं वचनान्तरे भावप्रत्ययस्योदाहरणम्॥

---

सूत्रम्

काशिका-वृत्तिः

अकर्तरि च कारके संज्ञायाम् ३।३।१९

कर्तृवर्जिते कारके संज्ञायां विषये धातोः घञ् भवति। प्रास्यन्ति तं प्रासः। प्रसीव्यन्ति तं प्रसेवः। आहरन्ति तस्माद् रसम् इति आहारः। मधुराहारः। तक्षशिलाहारः। अकर्तरि इति किम्? मिषत्यसौ मेषः। सज्ञायाम् इति किम्? कर्तव्यः कटः। संज्ञाव्यभिचारार्थश्चकारः। को भवता दायो दत्तः। को भवता लाभो लब्धः। कारकग्रहणं पर्युदासे न कर्तव्यम्। तत् क्रियते प्रसज्यप्रतिषेधे ऽपि समासो ऽस्ति इति ज्ञापनार्थम्, आदेच उपदेशे ऽशिति ६।१।४४ इति। इत उत्तरं भावे, अकर्तरि च कारके इति द्वयम् अनुवर्तते।

लघु-सिद्धान्त-कौमुदी

अकर्तरि च कारके संज्ञायाम् ८५५, ३।३।१९

कर्तृभिन्ने कारके घञ् स्यात्॥

न्यासः

अकत्तरि च कारके संज्ञायाम्। , ३।३।१९

"प्रासः"इति। "असु क्षेपणे" (धा।पा।१२०९), "प्रसेवः" इति। "षिवृ तन्तुसन्ताने" (धा।पा।११०८), उभयत्राप्यत्र कर्मणि घञ्। "आहारः" इति। "ह्मञ् हरणे" (धा।पा।८९९)। "मधुराहारः" इति। कर्मधारयः, षष्ठीतत्पुरुषो वा। "मेषः" इति। "मिष स्पद्र्धायाम्" (धा।पा।१३५२), पचाद्यच्। "कत्त्तव्यः" इति। कर्मणि तव्यः। "चकारः संज्ञाव्यभिचारार्थः" इति। चकारोऽयं भिन्नक्रमः संज्ञायामित्यस्यानन्तरं द्रष्टव्यः, तदनेन चार्थ द्योत्यते। "संज्ञायाञ्च"इति चार्थं द्योतयन्नसौ संज्ञाव्यभिचाराय भवति, तेनासंज्ञायामपि च भवति यद्येवम्, संज्ञाग्रहणमकृत्वा सामान्येनैव प्रत्ययो विधेयः;

तत्राप्ययमर्थः-- संज्ञाव्यभिचारार्थश्चकारो न कत्र्तव्यो भवति? सत्यमेतत् ; तथापि बाहुल्येन संज्ञायां भवति; असंज्ञायां तु क्वचिदेवेत्यमुमर्थं सूचयितुं संज्ञाग्रहणं कृतम्। दीयत इति "दायः" कर्मणि घञ्, पूर्ववद् युक्। "लाभः" इति कर्मण्येव घञ्। "कारकग्रहणम्" इत्यादि। पर्युदासे हि "अकत्र्तरि" इत्युक्ते कारकग्रहणमन्तेरणापि नञिवयुक्तन्यायेन (व्या।प।६५) कर्त्तुरन्यत्र तादृशे कारक एव कर्मादौ प्रतीतिर्भवति, यथा-- अब्राआह्मण इति ब्राआह्मणसदृशे क्षत्रियादौ। तस्मात् पर्युदासे विनापि कारकग्रहणेन कारकएव प्रत्ययो लभ्यतैत कारकग्रहणं न कत्र्तव्यम्। प्रसज्यप्रतिषेधे तु कत्र्तव्यम्, तत्र हि क्रियाप्रतिषेधमात्रं प्रतीयते, न सदृशं वस्त्वन्तरम्। तत्र यदि "अकत्र्तरि संज्ञायाम्" इत्येतावदुच्येत, कत्र्तरि न भवतीत्येषोऽर्थः प्रतीयेत। एवञ्च विधायकस्य वाक्यान्तरस्याभ#आवात् कर्मादिषु प्रत्ययो न स्यात्। क्व तर्हि स्यात्? "अनिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति (पुं।प।९०) इति स्वार्थे। ननु च विहितः स्वार्थे पूर्वेणेव? नैतदस्ति;"धात्वर्थस्य हि सिद्धता नाम यो धर्मस्तत्र घञादयो विधीयन्ते" इत्युक्तम्। तस्मात् प्रसज्यप्रतिषेधे कारकग्रहणं क्रियते? इत्यत आह-- पर्युदासे कारकग्रहणमन्तरेणापि सिध्यति, स एवाश्रयिष्यते, तत्किमर्थमं कारकग्रहणं क्रियते? इत्यत आह-- "तत्क्रियते" इत्यादि। यदि तर्हि पर्युदास एवैष नञ्समासः स्यात्, कारकग्रहणमनर्थकं स्यात्, विनापि हि तेन कारक एव प्रत्ययो लभ्यते; प्रसज्यप्रतिषेधे तु सति कारकग्रहणमर्थवद्भवति, न हि तत्र विनापि तेन कारके प्रत्ययो लभ्यते। इवञ्चानन्तरमेव प्रतिपादनम्। तस्मात् कारकग्रहणेन प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञाप्यते। तेन "आदेच उपदेशेऽशिति" ६।१।४४ इत्यत्र प्रसज्यप्रतिषेधे समासो लभ्यते, ततश्च यदुक्तम्--"अनैमित्तिकमात्त्वं शिति प्रतिषेधः" इति, तदुपपन्नं भवति। किं पुनः कारणं तत्र प्रसज्यप्रतिषेध आश्रीयते? प्रागेव प्रत्ययोत्पत्तेरनिमित्तक आत्त्वे कृते सुग्लः सुम्ल इति "आतश्चोपसर्गे" ३।१।१३६ इति को यथा स्यात्। पर्युदासे तु तत्राश्रीयमाणे शितोऽन्यत्र तृजादौ प्रत्यये परभूत आत्त्वेन भवितव्यम्, ततश्च ग्लायतिप्रभृतिभ्य आकारान्तलक्षमः प्रत्ययो न स्यात्। ननु चाचार्यप्रवृत्तिज्र्ञापयति-- भवन्त्येजन्तेभ्य आकारान्तलक्षणः प्रत्यय इति, यदयं कबाधनार्थं "ह्वावामश्च" ३।२।२ इत्यणं शास्ति, तस्मादशितीति पर्युदासेऽप्याश्रीयमाणे ज्ञापकादेजन्तस्याकारान्तलक्षणः प्रत्ययः सिध्यत्येव? नैतदस्ति; कर्मोपपदविषयमेवैतज्ज्ञापकं विज्ञायते। तस्मादशितीत्यत्र प्रसज्यप्रतिषेध एवाश्रयितुं युक्तः। तस्य चास्तित्वमिह कारकग्रहणेन ज्ञाप्यते। किं पुनः कारणं प्रसज्यप्रतिषेधो न सिध्यति, यतस्तदस्तित्वज्ञापनं प्रतिपन्नं क्रियते? असामथ्र्यं कारणम्; सामर्थ्ये हि सति समासेन भवितव्यम्,न च तत् प्रसज्यप्रतिषेधे। तथा हि ततर् नञ् क्रियया सम्बद्धः, नोत्तरपदेन॥

---

सूत्रम्

काशिका-वृत्तिः

परिमाणाऽख्यायां सर्वेभ्यः ३।३।२०

परिमाणाऽख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यः घञ् प्रत्ययो भवति। एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ। कॄ विक्षेपे द्वौ कारौ। क्रयः काराः। सर्वग्रहणम् अपो ऽपि बाधनार्थम्। पुरस्तादपवादन्यायेन ह्यचम् एव बाधेत, न अपम्। परिमाणाऽख्यायाम् इति किम्? निश्चयः। आख्याग्रहणं रूढिनिरासार्थम्। तेन सङ्ख्या ऽपि गृह्यते, न प्रस्थाद्येव। घञनुक्रमणम् अजपोर् विषये, स्त्रीप्रत्ययास् तु न बाध्यन्ते। एका तिलोच्छित्तिः। द्वे प्रसृती। दारजारौ कर्तरि णिलुक् च। दारयन्ति इति दाराः। जरयन्ति इति जाराः।

न्यासः

परिमाणाख्यायां सर्वेभ्यः।, ३।३।२०

"एकस्तण्डुलनिश्चायः"इति। "ग्रहवृदृनिश्चिगमश्च" ३।३।५८ इत्यपि प्राप्ते धञ्। "द्वौ शूर्पनिष्पावौ" इति। अत्रापि "ॠदोरप्" ३।३।५७ इत्यपि प्राप्ते। "इदुदुपधस्य चाप्रत्ययस्य" ८।३।४१ इति विसर्जनीयस् षत्वम्। "द्वौ कारौ"इति। "कॄ विक्षेपे"

(धा।पा।१४०९)। ननु च द्वौ शूर्पनिष्पावावित्यत्र "निरभ्योः पूल्वोः" ३।३।२८ इत्यनेन घञ् सिद्धः, तत्किमर्थमिदमिहोक्तम्? एवं मन्यते -- अन्यार्ते सर्वग्रहणे क्रियमाणे परिमाणाख्यायां वाऽन्यत्रैव सिद्धम्, निष्पूर्वादपि ह्रप्प्रत्ययो युक्तः, "निरभ्योः पूल्वोः" ३।३।२८ इत्यस्य तु यत्र परिमाणाख्या न गम्यते सोऽवकाश इति। कः पुनस्तेन वानेन वा घञि सति विशेषः? को न्यायो वाख्ययते? न कश्चित्। ननु च धातोरिति सामान्यमधिकृतम्, न धातुविशेष इति। अन्तरेणापि सर्वग्रहणं धातुमात्राद्धञ् भविष्यति तत्किमर्थं सर्वग्रहणमित्याह-- "सर्वग्रहणम्" इत्यादि। किं पुनः कारणमसति सर्वग्रहणेऽपो बाधा न सिध्यतीत्याह-- "पुरस्तात्" इत्यादि। "पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्" (व्या।प।९) इति। सति सर्वग्रहणे घञमनन्तरमचमेव बाधेत, नापम्। सर्वग्रहणे तु सत्यपमपि बाधते। तस्मादपोऽपि बाधा यथा स्यादिति सर्वग्रहणम्। न च परिमाणशब्दोऽयं प्रस्थादिषु रूढो न संख्यायाम्, तत्कथं परिमाणाख्यायं प्रत्ययो विधायमान एकस्तण्डुलनिश्चाय इत्यादौ गम्यमानायां भवतीत्यत आह-- "आख्याग्रहणम्" इत्यादि। आख्याग्रहणमिह रूढेर्निरासस्त्यागो यथा स्यादित्येवमर्थं कृतम्। तेन रूढौ त्यक्तायां संख्यापि गृह्यते। आख्याग्रहणसामर्थ्याद्धि परिमाणम्, अतो युक्तं तस्यापि ग्रहणम्। यदि सर्वग्रहणात् परमप्ययं घञ् बाधते, स्थीप्रत्ययानपि बाधेतेत्यत इत्यभिप्रायः। अत एवाह--"स्त्रीप्रत्ययास्तु न बाध्यन्ते" इति। कुतः पुनरयमर्थो लभ्यते? "सर्वेभ्यः"इति पञ्चम्यन्तेन निद्र्दशात्। पञ्चम्यन्तनिर्द्देशे हि सर्वशब्दो धातुसमानाधिकरणो विज्ञायते। तेन प्रकृत्याश्रयस्यापवादस्य सर्वग्रहणाद्बाधा भवति, नार्थाश्रयस्य। यदि त्वर्थाश्रयोऽप्यपवादो बाधितुमिष्टः स्यात्, तदा सर्वस्मिन्निति सर्वशब्दं सप्तम्यन्तमुच्चारयेत्। "एका तिलोच्छ्रितिः"इति। श्रिञ उत्पूर्वात् "स्त्रियां क्तिन्()" ३।३।९४, "स्तोः श्चुना श्चुः" ८।४।३९ इति चुत्वम्, "शश्छोऽटि" ८।४।६२ इति च्छत्वम्। "दारजारौ" इत्यादि। दारजारशब्दौ निपात्येते। किमत्र निपात्यते? "दृ विदारणे" (धा।पा।१४९३) "जृष् वयोहानौ" (धा।पा।११३०) आभ्यां हेतुमण्ण्यन्ताभ्यां कत्र्तरि तृजादिषु घञि णिलुक्। ननु च "णेरनिटि" ६।४।५१ इति णिलोपे हि सति "जनीजृष्क्नसुरञ्जोऽमन्ताश्च" (धा।पा।८१७) इति मित्संज्ञायां सत्यां णिलोपे कृतेऽपि प्रत्ययलक्षणेन जीर्यतेर्मितां ह्रस्वत्वं प्रसज्यते। अस्तु तर्हि मितां ह्रस्वत्वम्, पुनर्घञाश्रया वृद्धिर्भविष्यतीति चेत्? अयुक्तमेतत्; न हि घञाश्रया वृद्धिः प्राप्नोति, "अचः परस्मिन् पूर्वविधौ" १।१।५६ इति स्थानिवद्भावे सति णिचा व्यवहितत्वात्। लुकि तु सति तस्यापरनिमित्तत्वादसति स्थानिवद्भावे घञमाश्रित्य वृद्धिर्भवति। न च प्रत्ययलक्षणेन ह्रस्वत्वं प्रसज्यते; "न लुमताङ्गस्यट १।१।६२ इति प्रत्ययलक्षणप्रतिषेधात्। तस्माल्लुग्वक्तव्यः॥

तत्त्व-बोधिनी

परिमाणाख्यायं सर्वेभ्यः १५१९, ३।३।२०

परिमाणाख्यायाम्। सर्वेभ्यः--घातुभ्यः। परिमाणं--परिच्छित्तिः। आख्यानमाख्या उक्तिः। परिच्छित्तेरुक्तौ सत्यामित्यर्थः। कस्य पुनः परिच्छित्तिरिति चेत्प्रत्ययार्थस्येत्युच्यते। आख्याग्रहणं रूढिनिरासार्थं, तेन परिमाणग्रहणेन सङ्ख्याऽत्र गृह्यते। सर्वेभ्यः किम्?। अन्यथा पुरस्तादपवादन्यायेनाऽचमेव घञ् बाधेत, न त्वपम्। तण्डुलनिचाय इति। निचीयते राशीक्रियते इति निचायः। अत्र राश्येकत्वेन समुदायिनां परिच्चित्तिरर्थाद्गम्यते। "एर"जित्यचि प्राप्ते घञ्। निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः। "ॠदारो"बित्यपि प्राप्ते घञ्। शूर्पेणेति करणे तृतीयान्तस्य "कर्तृकरणे कृता बहुल"मिति समासः। अत्र शूर्पसङ्खया तण्डुलादेरपि परिच्छित्तिः। शूर्पद्वित्वं तु आर्थिकं , न तु शाब्दं , निष्पावगतद्वित्वं तु शाब्दम्। यद्यप्यत्र "निरभ्योः पूल्वो"रिति घञ् लभ्यते तथापि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः। अप्रत्ययस्य मुख्योदाहरणमाह-- द्वौ काराविति। कृ? विक्षेपे। कर्मणि घञ्। शूर्पादिना विक्षिप्तो धान्यादिराशिः कारः। इह प्रकृत्याश्रय एवापवादो नत्वर्थाश्रयः, सर्वेभ्य इति पञ्चमीनिर्देशेन तथैवावगमात्। तेना।()यं प्रकृत्याश्रयो घञ् क्तिनोऽपवादो न भवति। एका तिलोच्छ्रितिः। उत्पूर्वकाच्छ्रयतेः कर्मणि भवे वा क्तिन्। ऊर्ध्वीकृतो राशीकृत इत्यर्थः। तदेतत्सूचयितुमुक्तम् "अजपोरपवाद इति। तयोरपि प्रकृत्याश्रयत्वात्, अपवाद्यापवादयोः समानविषयत्वौचित्यात्। स्त्रियां

क्तिन् त्वर्थाश्रय इति दिक्। दारजाराविति। अकर्तरि कारके इत्यधिकारात् "ॠदोर"बित्यस्य घञपवादत्वाच्च कर्तरि घञर्थमिदं वचनम्। णिलुक्चेति। चाद्धञ्। लोपे हि सति घञाश्रया वृद्धिर्न स्याण्णिलोपस्य स्थानिवद्भावेन व्यवधानात्। न च णिज्निमित्तैव वृद्धिरस्त्विति वाच्यं, जारशब्दे "मितां ह्रस्वः" इति ह्रस्वापत्तेः। "जनीजॄ()"षिति जॄ()धातोर्णौ मित्त्वात्। लुकि तु सति तस्य परनिमित्तत्वाऽभावेन , "क्विलुगुपधे"ति क्वौ लुप्तस्य निषेधेन वा स्थानिवत्त्वाऽभावाज्जार इति रूपं सिध्यतीति भावः। एतेन दीर्यते यैस्ते दाराः, जीर्यतेऽनेनेति जार इत्यण्यन्ताभ्यामेव करणे घञस्तु किमनेन वचनेनेति केषांचिदुक्तिः परास्ता। "ॠदोर"बित्यपवादविषये उत्सर्गस्य घञो दुर्लभत्वात्। स्त्र्यधिकारादूध्र्वं वाऽसरूपविधेरनङ्गीकारादपवादोऽप्यच् "करणाधिकरणयो"रिति ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत्।

---

सूत्रम्

काशिका-वृत्तिः

इङश् च ३।३।२१

इङो धातोः घञ् प्रत्ययो भवति। अचो ऽपवादः। अध्यायः। उपेत्यास्मादधीते उपाध्यायः। अपादाने स्त्रियाम् उपसङ्ख्यानं तदन्ताच् च वा ङीष्। उपाध्याया, उपाध्यायी। शॄ वायुवर्णनिवृतेषु। शारो वायुः। शारो वर्णः। शारो निवृतम्। गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः।

न्यासः

इङ्श्च। , ३।३।२१

"अचोऽपवादः" इति। "एरच्" ३।३।५६ इति प्राप्तोस्योत्तरस्यापीवर्णान्ताद्धञ् विधीयमानोऽच एवापवादो वेदितव्यः। "अध्यायः" इति। कर्मणि घञ्। "तदन्ताच्च वा ङीष्" इति। योऽयमपादाने घञ् तदन्तान्ङीष् प्रतिपाद्यः। तत्रेदं प्रतिपादनम्-- "वोतो गुणवचनात्" ४।१।४४ इत्यत्र वेति योगविभाघः कत्र्तव्यः, तेनापादाने स्त्रियामिङो यो घञ् विहितस्तदन्तान्ङीष् भविष्यतीति। यदा च पुंयोगो न विवक्ष्यते तदा ङीष् प्रतिपाद्यः। यदा तूपाध्यायस्य स्त्रीति पुंयोगो विवक्ष्यते तदा "पुंयोगादाख्यायाम्" ४।१।४८ इत्येव ङीष् सिद्धः। उपेत्याधीयतेऽस्या उपाध्यायी। "शॄ वायुवर्णनिवृतेषु" इति। "शॄ हिंसायाम्" (धा।पा।१४८८) - अस्माद्वाय्वादिषु वाच्येषु घञ् प्रतिपाद्यः। प्रतिपादनं तु तमेव चकारमनुक्तसमुच्चयार्थम्, "कृत्यल्युटो बहुलम्" ३।३।११३ इति बहुलग्रहणं वाऽऽश्रित्य कत्र्तव्यम्। निवृत्तम् = निवारणम्। शीतादिदुःखोपशमहेतुर्निवारणमुच्यते। "अकृतनीशारः" इति। अकृतशीतनिवारण इत्यर्थः। पूर्ववदुपसर्गस्य दीर्घत्वम्॥

तत्त्व-बोधिनी

इङ्श्च १५२०, ३।३।२१

उपेत्येति। गुरुसमीपमेत्येत्यर्थः। अपादान इति। पुरस्तादपवादन्यायेन इङ्श्चेत्यस्याऽच एवापवादत्वात्स्त्रियां तु क्तिन् स्यादिति तद्बाधनायाऽयमारम्भः। "घञनुक्रमणमजपोर्विषये" इति वचनात्स्त्रियां घञ् न स्यादिति स्त्रियाङ्ग्रहणम्। उपाध्यायेति। यां स्वयमद्यापयति तस्यामिदं रुपद्वयम्। पुंयोगे तु ङीषेव। आनुगागमश्च पाक्षिक इत्युक्तम्। करणे क्त इति। वृञ् वरण इत्यस्मादित्यर्थः। नीशार इति। "उपसर्गस्य घञी"ति दीर्घः। ननु "प्रदक्षिणप्रसव्यगामिनां शाराणा"मिति कथं प्रयोगः?, "वायुवर्णे" इत्यर्थपरिगणनादिति चेत्। अत्राहुः-- अतएव वार्तिकप्रयोगादक्षेष्वपि शृणातेर्घञिति।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गे रुवः ३।३।२२

उपसर्गे उपपदे रौतेर् धातोर् घञ् प्रत्ययो भवति। अपो ऽपवादः। संरावः। उपरावः। उपसर्गे इति किम्? रवः।

न्यासः

उपसर्गे रुवः।, ३।३।२२

"अपोऽपवादः" इति। "ॠदोरप्" 3।3।57 इति प्राप्तस्य। उत्तरसूत्रेणाप्युवर्णान्ताद्धञ् विधीयमानोऽप एवापवादो वेदितव्यः॥

तत्त्व-बोधिनी

उपसर्गे रुवः १५२१, ३।३।२२

रव इति। "ॠदोर"बित्यप्।

---

सूत्रम्

काशिका-वृत्तिः

समि युद्रुदुवः ३।३।२३

समि उपपदे यु द्रु दु इत्येतेभ्यः धातुभ्यः घञ् प्रत्ययो भवति। संयावः। संद्रावः। संदावः। समि इति किम्? प्रयवः।

न्यासः

समि युद्रुदुवः।, ३।३।२३

---

सूत्रम्

काशिका-वृत्तिः

श्रिणीभुवो ऽनुपसर्गे ३।३।२४

श्रि णी भू इत्येतेभ्यो धातुभ्यो ऽनुपसर्गेभ्यो घञ् प्रत्ययो भवति। अजपोरपवादः। श्रायः। नायः। भावः। अनुपसर्गे इति किम्? प्रश्रयः। प्रणयः। प्रभवः। कथं प्रभावो राज्ञाः? प्रकृष्टो भावः इति प्रादिसमासो भविष्यति। कथं च नयो राज्ञः? कृत्यल्युटो बहुलम् 3।3।113 इति अच् भविष्यति।

न्यासः

श्रिणीभुवोऽनुपसर्गे।, ३।३।२४

"अनुपसर्गेभ्यः"इति। अविद्यमान उपसर्ग एषामिति बहुव्रीहिः "अनुपसर्गेभ्यः" इति पञ्चम्यन्तेन विवरणं कुर्वन् सूत्रेऽनुपसर्ग इति सुब्व्यत्ययेन एषा सप्तमीति दर्शयति। "कथं प्रभावो राज्ञः" इति। अनुपसर्गवचनादिह प्रशब्द उपसर्ग उपपदे न भवितव्यमिति भावः। "{कथं च--काशिका} कथं नयो राज्ञः" इति। अनुपसर्गाद्धञात्र भवितव्यमिति मन्यते॥

तत्त्व-बोधिनी

श्रिणीभुवोऽनुपसर्गे १५२२, ३।३।२४

राज्ञो नय इति। णीञ् प्रापणे इत्यस्मादचो यत्।

---

सूत्रम्

काशिका-वृत्तिः

वौ क्षुश्रुवः ३।३।२५

वावुपपदे क्षु श्रु इत्येताभ्यां धातुभ्यां घञ् प्रत्ययो भवति। अपो ऽपवादः। विक्षावः। विश्रावः। वौ इति किम्? क्षवः। श्रवः।

न्यासः

वौ क्षुश्रुवः। , ३।३।२५

"विक्षावः"इति। "टुक्षु शब्दे" (धा।पा।१०३६)॥

---

सूत्रम्

काशिका-वृत्तिः

अवौदोर् नियः ३।३।२६

अव उतित्येतयोरुपपदयोः नयतेर् धातोः घञ् प्रत्ययो भवति। अवनायः। उन्नायः। कथम् उन्नयः पदार्थानाम्? कृत्यल्युटो बहुलम् ३।३।११३ इति अच् भविष्यति।

न्यासः

अवोदोर्नियः। , ३।३।२६

"उन्नायः" इति। "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति वाऽनुनासिकः। "कथमुन्नयः पदार्थानाम्" इति। उच्छब्दोपपदत्वाद्घञात्र भवितव्यमित्यभिप्रायः॥

---

सूत्रम्

काशिका-वृत्तिः

प्रे द्रुस्तुस्रुवः ३।३।२७

प्रशब्दे उपपदे द्रु स्तु स्रु इत्येतेभ्यो धातुभ्यो घञ् प्रत्ययो भवति। प्रद्रावः। प्रस्तावः। प्रस्रावः। प्र इति किम्? द्रवः। स्तवः। स्रवः।

न्यासः

प्रे द्रुस्तुम्रुवः , ३।३।२७

---

सूत्रम्

काशिका-वृत्तिः

निरभ्योः पूल्वोः ३।३।२८

पू इति पूङ्पूञोः सामान्येन ग्रहणम्। लूञ् छेदने। यथासङ्ख्यम् उपसर्गसम्बन्धः। निरभिपूर्वयोः पूल्वोर् धात्वोः घञ् प्रत्ययो भवति। निष्पावः। अभिलावः। निरभ्योः इति किम्? पवः। लवः।

न्यासः

निरभ्योः पूल्वोः। , ३।३।२८

"सामान्येन ग्रहणम्" इति। विशेषानुपादानात्। "यथासंख्यमुपसर्गसम्बन्धः" इति। निसोपसर्गेण पुवः सम्बन्धः, अभिना लूञः। ननु च पूञ्()पूङ्लूञस्त्रयो धातवः, उपसर्गौ द्वौ, अतो वैषम्याद्यथासंख्येन न भवितव्यम्? पूरूपमुत्सृष्टानुबन्धसामान्यमेकमेव, ततो नास्ति वैषम्यमित्यदोषः॥

---

सूत्रम्

काशिका-वृत्तिः

उन्न्योर् ग्रः ३।३।२९

गृ शब्दे, गृ निगरणे, द्वयोरपि ग्रहणम्। उन्न्योरुपपदयोः गृ इत्येतस्माद् धातोः घञ् प्रत्ययो भवति। उद्गारः समुद्रस्य। निगारो देवदत्तस्य। उन्न्योः इति किम्? गरः।

न्यासः

उन्न्योर्ग्रः।, ३।३।२९

"ॠदोरप्"३।३।५७ इतिप्राप्तस्यायमपवादः। उत्तरत्रापि ॠकारान्ताद्घञ् विधीयमानोऽप एवापवादो वेदितव्यः। "द्वयोरपि ग्रहणम्" इति। विशेषानुपादानात्॥

---

सूत्रम्

काशिका-वृत्तिः

कॄ धान्ये ३।३।३०

उन्न्योः इति वर्तते। कॄ इत्येतस्माद् धातोरुन्न्योः उपपदयोः घञ् प्रतयो भवति, धान्यविषयश्चेद् धात्वर्थो भवति। विक्षेपार्थस्य किरतेर् ग्रहणं, न हिंसार्थस्य, अनभिधानातुत्कारो धान्यस्य। निकारो धान्यस्य। धान्ये इति किम्? भैक्ष्योत्करः। पुष्पनिकरः।

न्यासः

कॄ धान्ये।, ३।३।३०

धान्यमिह प्रकृत्यर्थो वा स्यात्? प्रत्ययार्थो वा स्यात्? प्रकृत्यर्थस्तावन्नोपपद्यते;धान्यस्य द्रव्यत्वात् धातोश्च क्रियावाचित्वात्। प्रत्ययार्थस्तूपपद्यते धान्यम्;किन्तु प्रत्ययेनाबिहितत्वादुत्कारो धान्यस्येति धान्यशब्दस्य प्रयोगो न प्राप्नोति। अथापि प्रयोगः स्यात्? एवमपि प्रत्ययर्थेऽन्तर्भूतत्वात् षष्ठी नोपपद्यते-- उत्कारो धान्यस्येति। सामानाधिकरण्यमेव प्रत्ययान्तेन स्यात्, एवं हि प्रत्ययर्थो भवति यदि प्रत्ययान्तेन सामानाधिकरण्यं भवति, यथा-- दृतिहरिः पशुरिति। तस्मान्नेदं प्रत्ययार्थः,नापि प्रकृत्यर्थः, अपि तु प्रकृत्यर्थविशेषणमिति हिंसार्थस्य" इति। "कॄ हिंसायाम्" (धा।पा।१४९६) इत्यस्य ग्रहणं न भवति। किं कारणमित्याह-- "अनभिधानात्" इति। शब्दशक्तिस्वाभाव्यादुत्कारशब्दाभ्यां धान्यविषयो विक्षेप एवाभिधीयते, न हिंसा। यस्य चार्थः प्रत्ययान्तेनाभिधीयते तस्यैव ग्रहणं युक्तम्, नेतरस्य। "उत्कारो धान्यस्य" इति। विक्षेपो दान्यस्येत्यर्थः॥

---

सूत्रम्

काशिका-वृत्तिः

यज्ञे समि स्तुवः ३।३।३१

यज्ञविषये प्रयोगे सम्पूर्वात् स्तौतेर् घञ् पर्त्ययो भवति। संरतावः छन्दोगानाम्। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः इत्युच्यते। यज्ञे इति किम्? संस्तवः छात्रयोः।

न्यासः

यज्ञे समि स्तुवः। , ३।३।३१

"समेत्य स्तुवन्ति यस्मिन् देशे" इत्यादिना संस्तावशब्दस्याधिकरणसाधनत्वं दर्शयति॥

तत्त्व-बोधिनी

यज्ञे समि स्तुवः १५२३, ३।३।३१

यज्ञे समि। अधिकरणे ल्युटोऽपवादोऽयं घञ्।

---

सूत्रम्

काशिका-वृत्तिः

प्रे स्त्रो ऽयज्ञे ३।३।३२

स्तृञाच्छादने, अस्माद् धातोः प्रशब्दे उपपदे घञ् प्रत्ययो भवति न चेद् यज्ञविषयः प्रयोगो भवति। शङ्खप्रस्तारः। अयज्ञे इति किम्? बहिर्ष्प्रस्तरः।

न्यासः

प्रे स्त्रोऽयज्ञे। , ३।३।३२

"बर्हिष्प्रस्तरः"इति। "इदुदुपधस्य चाप्रत्ययस्य" (८।३।४१ ) विसर्जनीयस्य षत्वम्॥

---

सूत्रम्

काशिका-वृत्तिः

प्रथने वावशब्दे ३।३।३३

स्तृञाच्छादने, अस्माद् धातोः विशब्दे उपपदे घञ् पत्ययो भवति प्रथने गम्यमाने, तच् चेत् प्रथनं शब्दविषयं न भवति। प्रथनं विस्तीर्णता। पटस्य विस्तारः। प्रथने इति किम्? तृणविस्तरः। अशब्दे इति किम्? विस्तरो वचसाम्।

न्यासः

प्रथने वावशब्दे। , ३।३।३३

"तृणविस्तरः" इति। तृणाच्छादनमित्यर्थः॥

---

सूत्रम्

काशिका-वृत्तिः

छन्दोनाम्नि च ३।३।३४

वौ स्त्रः इति वर्तते। विपूर्वात् स्तृनातेः छन्दोनाम्नि घञ् प्रत्ययो भवति। वृत्तम् अत्र छन्दो गृह्यते यस्य गायत्र्यादयो विशेषाः, न मन्त्रब्रह्मणम् , नामग्रहणात्। विष्टारपङ्क्तिः छन्दः। विष्टारबृहती छन्दः। विष्टारपङ्क्तिशब्दो ऽत्र छन्दोनाम, न घञनतं शब्दरूपम्। तत्र त्ववयवत्वेन तद् वर्तते। छन्दोनाम्नि इत्यधिकरणसप्तम्येषा।

न्यासः

छन्दोनाम्नि च। , ३।३।३४

छन्दःशब्दोऽयमस्त्येव मन्त्रब्राआह्मणे, अस्त्यन्यदक्षराणामित्ताविशिष्टवृत्ते यस्य गायत्र्यादयो विशेषाः। तदिह कतरस्तदर्थो गृह्रते? इत्याह-- "वृत्तम्" इत्यादि। अत्रैवोपपत्तिमाह-- "नामग्रहणात्" इति। यद्यत्र मन्त्रब्राआह्मणमिष्टं स्यान्नामग्रहणं न कुर्यात्, छन्दसीत्येव ब्राऊयात्। एवमपि ह्रुच्यमाने मन्त्रब्राआह्मणग्रहणं लभ्यत एव, यथा-- "बहुलं छन्दसि" २।४।३९ इत्यादौ वाक्ये। तस्मन्नामग्रहणाव्()वृत्तमिह च्छन्दो गृह्रते। "विष्टारपङ्क्तिः" इति। "छन्दोनाम्नि च" ८।३।९४ इति षत्वम्। विष्टारशब्द एवात्र घञन्तश्छन्दोनामेति कस्यचिद्()भ्रान्तिः स्यात्, तन्निराकरणायाह-- "विष्टारपङ्क्तिशब्दोऽत्र" इत्यादि। तत्र = विष्टारपङ्क्तिशब्दे। "अवयवत्वेन वत्र्तते"इति। घञन्तं शब्दरूपमिति सम्बन्धनीयम। यदि घञन्तं शब्दरूपं न च्छन्दोनाम, किन्तु विष्टारपङ्क्तिशब्दः, तत्र घञन्तरूपमवयत्वेन वत्र्तते, एवं तर्हि "छन्दोतत्कथमुन्नीयते? अस्य हि छन्दोनाम्नि गम्यमान इत्येषोऽर्थः,प्रत्ययान्तं छन्दोनाम भवतीति यावत्। एवञ्चार्थ एवं सति नोपपद्यत इत्याह-- "छन्दोनाम्नीत्यधिकणसप्तम्येषा"इति। एतेन च्छन्दोनाम्नि प्रत्ययान्तस्याधिकरणभूते प्रत्ययो भवतीत्ययमत्रार्थो वेदितव्यः,न च्छन्दोनाम्नि गम्यमान इत्येष इति दर्शयति॥

तत्त्व-बोधिनी

छन्दोनाम्नि च १५२४, ३।३।३४

छन्दो। शब्दविषयत्वात्पूर्वेणाऽप्राप्ते वचनम्। केचित्तु "प्रस्तारपङ्क्ति"रित्यादिप्रयोगानुरधेनात्र वाविति नानुवर्तयन्ति।

---

सूत्रम्

काशिका-वृत्तिः

उदि ग्रहः ३।३।३५

उदि उपपदे ग्रहेर् धातोः घञ् प्रत्ययो भवति। अतो ऽपवादः। उद्ग्राहः। छन्दसि निपूर्वादपि इष्यते स्रुगुद्यमननिपतनयोः। हकारस्य भकारः। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्।

न्यासः

उदि ग्रहः। , ३।३।३५

"अपोऽपवादः" इति। "ग्रहवृदृनिश्चिगमश्च" ३।३।५८ इति प्राप्तस्य। "{छन्दसि विपूर्वादपीष्यतेरुआउगुद्यमननिपातनयोः"इत्येव वार्त्तिकपाठो मुद्रितो दृश्यते।} छन्दसि तु"इत्यादि। यज्ञपात्रविशेषो येनाहुतिर्दीयते तत्रुआउगुच्यते, तस्योद्यमनम् = ऊध्र्वलनयनम्, निपातनम् = धस्तान्नयनम्ेतयोरर्थयोग्र्रहेश्छन्दसि विषये घञिष्यते। स च "कृत्यल्युटो बहुलम्"३।३।११३ इति लभ्यत इति वेदितव्यम्। "निग्राभम्" इति। ह्मग्रहोर्भश्छन्दस्युपसंख्यानाद्धकारस्य भकारः॥

तत्त्व-बोधिनी

उदि ग्रहः १५२५, ३।३।३५

उदि ग्रहः। भावादौ घञ् स्यात्। "ग्रहवृदृ" इति प्राप्तस्याऽपोऽपवादः।

---

सूत्रम्

काशिका-वृत्तिः

समि मुष्टौ ३।३।३६

ग्रहः इत्येव। समि उपपदे ग्रहेर् धातोः घञ् भवति, मुष्टिविषयश्चेद् धात्वर्थो भवति। मुष्टिः अङ्गुलिसन्निवेशः। अहो मल्लस्य सङ्ग्राहः। अहो मुष्टिकस्य सङ्ग्राहः। दृढमुष्टिता आख्यायते। मुष्टौ इति किम्? सङ्ग्रहो धान्यस्य।

न्यासः

समि मुष्टौ। , ३।३।३६

ग्रहेः क्रियावाचित्वात् मुष्टेश्चाक्रियात्मकत्वात् तत्र ग्रहेर्न सम्भवति, तस्मान्मुष्टिग्रहे योऽर्थस्तस्य विषयो विज्ञायत इत्याह-- मुष्टिविषयश्चेद्वात्वर्थो भवति" इति। अस्त्येवायं मुष्टिशब्दः परिमाणे--शाकस्य मुष्टिरिति, अस्त्यङ्गुलीनां रचनाविशेषे, यथा-- हन्ति मुष्टिनेति,ततर् यदीह परिमाणवृत्तेग्र्रहणं स्यादस्य सूत्रस्य वैयथ्र्यं स्यात्, "परिमाणाख्यायां सर्वेभ्यः" ३।३।२० इत्येव सिद्धत्वात्। तस्मादङ्गुलीनां रचनाविशेषवृत्तेग्र्रहणं विज्ञायत इत्याह-- "मुष्टिरङ्गुलिसन्निवेशः" इति।सन्निवेशः = रचनाविशेषः। "अहो मल्लस्य संग्रहः"इति। मुष्टेर्दाढर्()मित्यर्थः। अत एवाह-- "दृढमुष्टिताऽऽख्यायते" इति।

---

सूत्रम्

काशिका-वृत्तिः

परिन्योर् नीणोर् द्यूताभ्रेषयोः ३।३।३७

परिशब्दे निशब्दे च उपपदे यथासङ्ख्यं नियः इणश्च धातोः घञ् प्रत्ययो भवति। अचो ऽपवादः। द्यूताभ्रेषयोः, अत्र अपि यथासङ्ख्यम् एव सम्बन्धः। द्यूतविषयः चेन् नयतेरर्थः, अभ्रेषविषयश्चेदिणर्थः। पदार्थानाम् अनपचारो यथाप्राप्तकरणम् अभ्रेषः। द्यूते तावत् परिणायेन शारान् हन्ति। समन्तान् नयनेन। अभ्रेषे एषो ऽत्र न्यायः। द्यूताभ्रेषयोः इति किम्? परिणयः। न्ययं गतः पापः।

न्यासः

परिन्योर्नीणोद्र्यूताभ्रेषयोः। , ३।३।३७

"पदार्थानाम्" इत्यादि। पदार्शब्दो वस्तुवाची। कुत्सितश्चारः = अपचारः।यताप्राप्तस्याकरणमित्यर्थः। यथाप्राप्तस्याकरणमसाध्वेतदितिलोके कुत्स्यते, तस्मादन्यः शान्तश्चारोऽनपचारः। एतमेवार्थं पर्यायान्तरेण व्यक्तीकर्तुमाह-- "यथाप्राप्तस्य करणम्" इति। यद्यत् प्राप्तिमिति "यथाऽसादृश्ये"२।१।७ इतिवीप्सायामव्ययीभावः। करणम् = सम्पादनम्। एतुदुक्तं भवति-- युक्तेरागमाल्लोकप्रसिद्धेर्वा यः पदार्थानां प्राप्नोति तस्य सम्पादनमभ्रेष इति।"{ भ्रेषृ गतौ-धा।पा।} भ्रेष चलने" (धा।पा।८८४) भ्रेषणम् = भ्रेषः, स्वरूपात् तच्चलनम्। अभ्रेषो भ्रेषस्वरूपादचलनम्। एवं हि पदार्थाः स्वरूपादचलिता भवन्ति यदि प्राप्तं नातिवत्र्तन्ते। "परिमायेन" इति। "उपसर्गादसमासेऽपि णोपदेशस्य" ८।४।१४ इति णत्वम्। "हन्ति" इति बाधते। "समन्तान्नयनेन" इति। परिणायेनेत्यस्येदमर्थकथनम्॥

तत्त्व-बोधिनी

परिन्योर्नीणोद्र्यूताऽभ्रेषयोः १५२६, ३।३।३७

परिन्योः। अक्षादिभिः क्रीडनं द्यूतम्। यथाप्राप्तकरणमभ्रेषः।

---

सूत्रम्

काशिका-वृत्तिः

परावनुपात्यय इणः ३।३।३८

परिशब्दे उपपदे इणो धातोः घञ् प्रत्ययो भवति, अनुपत्यये गम्यमाने। क्रमप्राप्तस्य अनतिपातो ऽनुपात्ययः, परिपाटी। तव पर्यायः। मम पर्यायः। अनुपात्यये इति किम्? कालस्य पर्ययः। अतिपातः इत्यर्थः।

न्यासः

परावनुपात्यय इणः। , ३।३।३८

"अनतिपातः" इति। अनितक्रम इत्यर्थः। "अतिपात इत्यर्थः" इति। अतिक्रम इत्यर्थः॥

तत्त्व-बोधिनी

परावनुपात्यय इणः १५२७, ३।३।३८

परावनु। अत्र व्याचख्युः--द्विः परिग्रहणमिह व्यर्थम्। सकृदेव कर्तुं शक्यम्। तथा हि-- "परौ नियो द्यूते", "इणोऽनुपात्यये", "नावभ्रेषे"। इह इण इत्यनुवर्तनादिणोऽनुपात्यय इत्यत्र तु परावित्यनुवर्तनाच्चेष्टं सिध्यतीति भावः। ननु पूर्वसूत्रेऽनुपात्ययः पर्यायार्थकत्वेन व्याख्यातः, तथा च तदनुवृत्त्यैव सिद्धे पर्यायग्रहणमिह बाधित्वाऽयमेव घञ् भवतीति।

---

सूत्रम्

काशिका-वृत्तिः

व्युपयोः शेतेः पर्याये ३।३।३९

वि उप इत्येतयोः उपपदयोः शेतेर् धातोः घञ् भवति पर्याये गम्यमाने। तव विशायः। मम विशायः। तव राजोपशायः। तव राजानम् उपशयितुं पर्यायः इत्यर्थः। पर्याये इति किम्? विशयः। उपशयः।

न्यासः

व्युपयोः शेतेः पर्याये। , ३।३।३९

पर्यायोऽनुपात्यय एव,तत्रानुपात्ययग्रहणानुवृत्त्यैव सिद्धे पर्यायग्रहणं बाधकबाधनार्थम्। अभिविधिविवक्षायां परिमाणमपि बाधित्वा घञेव यथा स्यात्। एवञ्चार्थे शब्दाधिक्यादर्थाधिक्यं भवतीति लभ्यते, न तु पर्यायशब्दोऽस्यार्थस्य वाचकः॥

---

सूत्रम्

काशिका-वृत्तिः

हस्तादाने चेरस्तेये ३।३।४०

हस्तादाने गम्यमाने चिनोतेर् धातोः घञ् प्रत्ययो भवति, न चेत् स्तेयं चौर्यं भवति। हस्तादानग्रहणेन प्रत्यासत्तिरादेयस्य लक्ष्यते। पुष्पप्रचायः। फलप्रचायः। हस्तादने इति किम्? वृक्षशिखरे फलप्रचयं करोति। अस्तेये इति किम्? फलप्रचयश्चौर्येण। उच्चयस्य प्रतिषेधो वक्तव्यः।

न्यासः

हस्तादाने चेरस्तेये। , ३।३।४०

"हस्तादानग्रहणेन" इत्यादि। हस्तेनोपायान्तरनिरपेक्षेणोपादानम् = प्रत्यासत्तिः, ततएव वस्तुनो भवति, तस्माद्धस्तादानग्रहणेन ग्राह्ग्स्य वस्तुनः प्रत्यासन्नतोपलक्ष्यते; हस्तादानशब्दाभिधेयस्यार्थस्य प्रत्यासत्तेः साहचर्यात्। "वृक्षशिखरे" इत्यादि। वृक्षशिखरग्रहणेनादेयस्याप्रत्यासन्नत्वं सूचयति॥

---

सूत्रम्

काशिका-वृत्तिः

निवासचितिशरीरौपसमाधानेष्वादेश् च कः ३।३।४१

चेः इत्येव। निवसन्ति अस्मिनिनिति निवासः। चीयते ऽसौ चितिः। पाण्यादिसमुदायः शरीरम्। राशीकरनम् उपसमाधानम्। एतेष्वर्थेषु चिनोतेः घञ् प्रत्ययः भवति, धातोरादेश्च ककार आदेशः। निवासे तावत् चिखल्लिनिकायः। चितौ आकायम् अग्निं चिन्वीत। शरीरे अनित्यकायः। उपसमाधाने महान् गोमयनिकायः। एतेषु इति किम्? चयः। इह कस्मान् न भवति महान् काष्ठनिचयः? बहुत्वम् अत्र विवक्षितं न उपसमाधानम्।

लघु-सिद्धान्त-कौमुदी

निवासचितिशरीरोपसमाधानेष्वादेश्च कः ८५७, ३।३।४१

एषु चिनोतेर्घञ् आदेश्च ककारः। उपसमाधानं राशीकरणम्। निकायः। कायः। गोमयनिकायः॥

न्यासः

निवासचितिशरीरोपसमाधानेषवादेश्च कः। , ३।३।४१

"राशीकरणम्" इति। प्रकीर्णस्यैकत्रकरणमित्यर्थः। "चिखल्लिनिकायः" इति। चिखल्लिर्जनपदः, तस्य निकायः = निवासः। अथादिग्रहणं किम्? अर्थस्य मा भूत्। यद्येवम्, "चः कः" इति वक्तव्यम्? एवं तर्हि यदा यङ्लुगन्तादुत्पद्यते तदा "{अन्त्याभावे अन्त्यसदेशस्य" शाक।प।}अन्त्यविकारेऽन्त्यसदेशस्य" (शाक।प।५६) इति द्वितीयस्य चकारस्य मा भूदित्यवमर्थमादिग्रहणम्॥

तत्त्व-बोधिनी

निवासचितिशरीरोपसमाधानेष्वादेश्च कः १५२८, ३।३।४१

आकायमिति। आचीयन्तेऽस्मिन्निष्टका इत्याकायम्। अधिकरणे घञ्। अग्निम् = अग्निस्थानविशेषं, चिन्वीत = चयनेन निष्पादयेदिति श्रुत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सङ्घे च अनौत्तराधर्ये ३।३।४२

चेः इत्येव। प्राणिनां समुदायः सङ्घः। स च द्वाभ्यां प्रकाराभ्यां भवति। एकधर्मसमावेशेन, औत्तराधर्येण वा। तत्र औत्तराधर्यपर्युदासादितरो गृह्यते। सङ्घे वाच्ये चिनोतेर् धातोः घञ् प्रत्ययो भवति आदेश्च कः। भिक्षुकनिकायः। ब्राह्मणनिकायः। वैयाकरणनिकायः। अनौत्तराधर्ये इति किम्? सूकरनिचयः। प्राणिविषयत्वात् सङ्घस्य इह न भवति। कृताकृतसमुच्चयः। प्रमाणसमुच्चयः।

न्यासः

सङ्घे चानौत्तराधर्ये। , ३।३।४२

"एकधर्मनिवेशेन" इति। एकधर्मानुगमनेनेत्यर्थः॥

तत्त्व-बोधिनी

सङ्घे चाऽनौत्तराधर्ये। १५२९, ३।३।४२

सङ्घे चानौत्तराधर्ये। उत्तरे चाधरे चोत्तराधरास्तेषां भाव औत्तराधर्यम्। सूकरेति। स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदैतत्प्रत्युदाहरणम्। यदा तु भिक्षुवत्पृथक्पृथगेवावतिष्ठन्ते तदेहापि घञ्।

---

सूत्रम्

काशिका-वृत्तिः

कर्मव्यतिहारे णच् स्त्रियाम् ३।३।४३

कर्म क्रिया। व्यतिहारः परस्परकरणम्। कर्मव्यतिहारे गम्यमाने धातोः णच् पत्ययो भवति स्त्रीलिङ्गे वाच्ये। तच् च भावे। चकारो विशेषणार्थः णचः स्त्रियाम् अञ् ५।४।१४ इति। व्यावक्रोशी। व्यावलेखी। व्यावहासी वर्तते। स्त्रियाम् इति किम्? व्यतिपाको वर्तते। बाधकविषये ऽपि क्वचिदिष्यते, व्यावचोरी, व्यावचर्ची। इह न भवति। व्यतीक्षा, व्यतीहा वर्तते। व्यात्युक्षी भवति। तदेतद् वैचित्र्यं कथं लभ्यते? कृत्यल्युटो बहुलम् ३।३।११३ इति भवति।

न्यासः

करमव्यतिहारे णच् स्त्रियाम्। , ३।३।४३

"दातोः"३।१।९१ इत्यधिकाराद्धातुवाच्यं यत्कर्म तदव गृह्यते,न साधनकर्म। न हि धातोस्तत्र वृत्तिरस्तीति मत्वाऽऽह-- कर्म क्रिया"इति। "चकारो विशेषणार्थः" इति। अन्तोदत्तार्थश्चकारः कस्मान्न भवति? नार्हत्यन्तोदात्तार्थो भवितुम्; णजन्तादञो विधानात्। सतिशिष्टस्वरेणाद्युदात्तेन भवितव्यम्,तत्र कुतोऽन्तोदात्तस्य सम्भवः। तस्माद्विशेषणार्थ एव चकारः। "स्त्रियाम्" इत्युच्यमाने "प्रज्ञाश्रद्धार्चाभ्यो णः"५।२।१०० इति प्राज्ञेत्यत्रापि स्यात्। "व्यावक्रोशी" इत्यादि। "क्रुश { आह्वाने रोदने च--ध।पा।}, "लिख अक्षरविन्यासे" (धा।पा।१३६५),"हसे हसने" (धा।पा।७२१)--एभ्यो णच्, "णचः स्त्रियाम्"५।४।१४ इति स्वार्तेऽञ्, "टिड्()ढाणञ्" ४।१।१५ इति ङीप्, "न कर्मव्यतिहारे" ७।३।६ इत्यैजागमप्रतिषेधः। आदिवृद्धिरेव भवति। "व्यतिपाकः" इति। तत्र पुंल्लिङ्गत्वाद्भावस्य घञ् भवति। अथ "स्त्रियां क्तिन्" ३।३।९४ इत्यस्मिन्नेव प्रकरणे णच् कस्मान्नोक्तः, कः पुनरेवं सति गुणो भवति, द्विः स्त्रियांग्रहणं न कत्र्तव्यं भवित? अस्ति गुणः,वासरूपविधिस्तु न स्यात् ; अस्त्रियामिति प्रतिषेधात्। ततश्च क्तिनो णचासमावेशाभावाद्व्यावक्रुष्टिरिति न सिध्येत्। इह तु क्रियमाणे णच् सिध्यति; यस्मात् "वाऽसरूपोऽस्त्रियाम्" ३।१।९४ इत्यत्र स्त्रीग्रहणस्य च स्वरितत्वात् स्त्र्यधिकरारविहितप्रत्ययविषय एव "अस्त्रियाम" ३।१।९४ इति प्रतिषेधो विज्ञायते,न स्त्रीप्रत्ययमात्रविषये। तस्माद्यथान्यसमेव न्याय्यम्। "व्यावचोरी, व्यावचर्ची" इति। "चुर स्तेये" (धा।पा।१५३४), "चर्च अध्ययने" (धा।पा।१७१२)-- आभ्यां चुरादिणिजन्ताभ्याम् "ण्यासश्रन्थो युच्" ३।३।१०७ इति युच् प्राप्नोति, स च विशेषविहितत्वात् परवाच्च बाधकः, तथापि तद्विषये तु णजेवेष्यते। "व्यतीक्षा,व्यतीहा" इति। "ईक्ष दर्शने" (धा।पा।६१०), "ईह चेष्टायाम्" (धा।पा।६३२) -- आभ्यां "गुरोश्च हलः" ३।३।१०३ इत्यकारएव प्रत्ययो भवति। न णच् शक्यः कर्तुम्;यस्मात् क्वचिद्बाधकविषये स इष्यते, न सर्वत्र। बाधकत्वं त्वकारप्रत्ययस्य पूरववद्वेदितव्यम्। "व्यात्युक्षी"इति। "उक्ष सेचने" (धा।पा।६५७)। अत्र बाधकस्याप्यकारस्य विषये णजेव भवति। "तदेतद्वैचित्र्यं कथं लभ्यते" इति। न कथञ्चित्। तल्लाभहेतोरभावादिति भावः। "कृत्यल्युटो बहुलम्"३।३।११३ इत्यनेन। अतो हेतोर्वैचित्र्यमेतल्लभ्यत इति दर्शयति॥

तत्त्व-बोधिनी

कर्मव्यतिहारे णच् स्त्रियाम् १५३०, ३।३।४३

कर्मव्यतिहारे णच्। कर्मव्यतिहारः क्रियाव्यतिहारः। परस्परकरणमिति यावत्। तत्र वर्तमानाद्धातोरित्यर्थः। भावे णजिति। कर्तृवर्चिते कारके न भवत्यनभिधानादित्याहुः। "भावादा"विति प्राचोक्तं यत्तदुपेक्ष्यम्, आकरविरोधात्।

---

सूत्रम्

काशिका-वृत्तिः

अभिविधौ भावे इनुण् ३।३।४४

अभिविधिरभिव्याप्तिः, क्रियागुणाभ्यां कात्स्न्र्येन सम्बन्धः। अभिविधौ गम्यमाने धातोः भवे इनुण् भवति। साङ्कूटिनम्। सांराविणम्। सान्द्राविणं वर्तते। अभिविधौ इति किम्? सङ्कोटः। सन्द्रावः। संरावः। भावे इति वर्तमने पुनर् भावग्रहणं वासरूपनिरासार्थम्, तेन घञ् न भवति। ल्युटा तु समावेश इष्यते। सङ्कूटनं वर्तते। तत् कथम्? कृत्यल्युटो बहुलम् ३।३।११३ इति।

न्यासः

अभिविधौ भाव इनुण् , ३।३।४४

"सांकूटिनम्" इति। "कूट {परितापे (परिदाहे इत्यन्ये)-धा।पा।} (धा।पा।१८९०), "अणिनुणः" ५।४।१५ इतीनुमन्तात् स्वार्थिकोऽण्। "इनण्यनपत्ये" ६।४।१६४ इति प्रकृतिभावात् "नस्तद्धिते" ६।४।१४४ इति टिलोपो न भवति। "संरावः" इति। "उपसर्गे रुवः ३।३।२२ इति घञ्। "संद्रावः" इति। अत्रापि "समि युद्रुदुवः" ३।३।२३ इति। ननु च भाव इति वत्र्तत एव, तत्किमर्थं पुनस्तद्()ग्रहमित्याह-- "भावे" इति। "वत्र्तमाने" इत्यादि। भावग्रहणमिहातिरिच्यते, तदितरिच्यमानं वासरूपनिरासार्थं विज्ञायते। तेन क्तेन सहेनुणः समावेशो न भवति। ननु च कारक इत्यपि वत्र्तते, ततस्तन्निवृत्त्यर्थं भावग्रहणं कस्मान्न भवति? एवं मन्यते-- भावे कारक इति द्वये प्रकृतेऽपि प्रयोगदर्शनवशाद्वयवस्था भवति, यथा णचः। स हि द्वथेऽपि प्रकृते लक्ष्यदर्शनानुरोधात् पुनग्र्रहमन्तरेणापि यथा भाव एव विज्ञायते, न कराके, तथात्रेनुणपि भाव एव विज्ञास्यते। तस्माद्वासरूपविधिनिरासार्थमेव पुनर्भावग्रहणं युक्तमिति। यद्येवम्, तर्हि, यथा घञेनुणः समावेशो न भवति तथा ल्युटापि न स्यादित्यत आह-- "ल्युटा तु" इत्यादि। गतार्थम्। इनुणो णकारो वृद्ध्यर्थः। उकार उच्चारणार्थः॥

तत्त्व-बोधिनी

अभिविधौ भाव इनुण् १५३३, ३।३।४४

अभिविधौ। अभिविधौ किम्?। संरावः। वासरूपेण घञ् क्तश्च न भवति, पुनर्भावग्रहणात्। नच कर्तृभिन्नकारकनिवृत्तये भावग्रहममिति वाच्यं, पूर्वसूत्र इव शक्तिस्वाभाव्यादेवेनुणोऽप्रवृत्तेः। ल्युटा तु समावेश इष्यते--संरवणमिति। तच्च बाहुलकाल्लभ्यत इत्याकरः।

---

सूत्रम्

काशिका-वृत्तिः

आक्रोशे ऽवन्योर् ग्रहः ३।३।४५

दृष्टानुवृत्तिसामर्थ्याद् घञनुवर्तते, न अनन्तर इनुण्। अव नि इत्येतयोः उअपदयोः ग्रहेर् धातोः घञ् प्रत्ययो भवति

आक्रोशे गम्यमने। आक्रोशः शपनम्। अवग्राहो हन्त ते वृषल भूयत्। निग्राहो हन्त ते वृषल भूयात्। आक्रोशे इति किम्? अवग्रहः पदस्य। निग्रहश्चोरस्य।

न्यासः

आक्रोशेऽवन्योग्ग्रहः। , ३।३।४५

" ग्रहवृदृ" ३।३।५८ इत्यादिना प्राप्ते वचनम्। "दृष्टानुवृत्तिसाम्थ्र्यात्" इति। प्रयोगोपस्थानेन घञोऽनुवृत्तिसामथ्र्य दृष्टम्, इनुणस्तु कल्पयितव्यम्। दृष्टसामथ्र्ययोश्च सन्निधौ दृष्टसामथ्र्यदग्रहणं न्याय्यम्। अतो घञेवानुवत्र्तत इत्येके। एवं तु "ग्रहवृदृ" ३।३।५८ इत्यादावपि सूत्रे घञेवानुवत्र्तते, नाप्। तस्मादन्यथा व्याख्यायते-- दृष्टमनुवृत्तिसामथ्र्यमधिकृतस्य यत्र तद्()दृष्टानुवृत्तिसामथ्र्यम्, तत्र पुनः स्वरितत्वम्। ततो हि शास्त्रेऽधिकृतस्य शब्दस्यानुवृत्तौ सामथ्र्ये दृश्यते। तदेतदुक्तं भवति-- घञ एव स्वरितत्वं प्रतिज्ञायते, नेनुणः। तस्मात् स्वरितत्वाद्घञेवानुवत्र्तते, नेनुणिति॥

तत्त्व-बोधिनी

आक्रोशेऽवन्योग्ग्रहः १५३५, ३।३।४५

आक्रोशे। "ग्रहवृदृ" इति --अपि प्राप्तेऽयमारम्भः। अवग्रहः पदस्येति। छेदविशेष इत्यर्थः। निग्रहो--निरोधः।

---

सूत्रम्

काशिका-वृत्तिः

प्रे लिप्सायाम् ३।३।४६

ग्रहः इत्येव। प्रशब्दे उपपदे ग्रहेर् धातो घञ् प्रत्ययो भवति लिप्सायां गम्यमानायाम्। पात्रप्रग्राहेण चरति भिक्षुः पिण्डार्थी। स्रुवप्रग्राहेण चरति द्विजो दक्षिणार्थी। लिप्सायाम् इति किम्? प्रग्रहो देवदत्तस्य।

लघु-सिद्धान्त-कौमुदी

एरच् ८५८, ३।३।४६

इवर्णान्तादच्। चयः। जयः॥

न्यासः

प्रे लिप्सायाम्। , ३।३।४६

तत्त्व-बोधिनी

प्रे लिप्सायाम् १५३७, ३।३।४६

प्रे लिप्सायाम्। लिप्सायां किम्?। देवदत्तस्य प्रग्रहः। प्रकृष्टोऽभिनिवेश इत्यर्थः। पात्रप्रग्राहेणेति। भिक्षापात्रोपादानेन। पात्रं गृहीत्वेति यावत्।

नौ वृ। नौ उपपदे वृञो भावादौ घञ् स्यात्। निवरा कन्येति। "ग्रहवृदृ" इत्यादिना कर्मण्यप्। ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात्, क्तिना भाव्यम् "अजब्भ्यां स्त्रीखलनाः" इत्युक्तेरत आह--क्तिन्विषयेऽपीति। एवं च प्रायेण भावार्थ एव "घञजबन्ताः पुंसी"ति द्रष्टव्यम्।

---

सूत्रम्

काशिका-वृत्तिः

परौ यज्ञे ३।३।४७

परिशब्दे उपपदे ग्रहेः घञ् प्रत्ययो भवति, यज्ञविषयश्चेत् प्रत्ययान्ताभिधेयः स्यात्। उत्तरपरिग्राहः। अधरपरिग्राहः। यज्ञे इति किम्? परिग्रहो देवदत्तस्य।

न्यासः

परौ यज्ञे।, ३।३।४७

---

सूत्रम्

काशिका-वृत्तिः

नौ वृ धान्ये ३।३।४८

वृ इति वृङ्वृञोः सामान्येन ग्रहणम्। निशब्दे उपपदे वृ इत्येतस्माद् धातोः धान्यविशेषे ऽभिधेये घञ् प्रत्ययो भवति। अपो ऽपवादः। नीवारा नाम व्रीहयो भवन्ति। धान्ये इति किम्? निवरा कन्या।

न्यासः

नौ वृ धान्ये।, ३।३।४८

"अपोऽपवादः"इति। "ग्रहवृदृ" ३।३।५८ इत्यादिना प्राप्तस्य। "नीवारा नाम व्रीहयो भवन्ति" इति। एतेन यद्यपि धान्यशब्देन सामान्यवाचिनायं व्युत्पाद्यते, तथापि प्रत्ययान्तं शब्दशक्तिस्वाभाव्याद्धान्यविशेष ए वत्र्तत इति दर्शयति। "उपसर्गस्यघञि" ६।३।१२१ इति दीर्घत्वम्। "निवरा" इति। निव्रियत इति निवरा। स्वभावेनाबन्तमपि स्त्रियां वत्र्तते। एवञ्च यद् घञबन्तो घाजन्तश्चेति लिङ्गाधिकारेऽबन्तस्य पुंल्लिङ्गताप्रतिपादनं तत् प्रायिकं वेदितव्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

उदि श्रयतियौतिपूद्रुवः ३।३।४९

उच्छब्दे उपपदे श्रयत्यादिभ्यो घञ् प्रतययो भवति। अजपोरपवादः। उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। कथं पतनान्ताः समुच्छ्रयाः? वक्ष्यमाणं विभाषाग्रहणम् इह सिंहावलोकितन्यायेन सम्बध्यते।

न्यासः

उदि श्रयतियौतिपूद्रुवः।, ३।३।४९

"अजपोरपवादः" इति। श्रयतेरिवर्णान्तत्वादचोऽपवादः, यौतिप्रभृतीनां तूवर्णान्तत्वादपः। "कथं पतनान्ताः समुच्छ्रया इति" इति। उच्छब्दोपपदत्वाद्घञात्र भवितव्यमिति भावः। "वक्ष्यमाणम्" इत्यादि परिहारः। यदि तर्हि विभाषाग्रहणमिह सम्बध्यते, यौतिप्रभृतीनामपि विकल्पेन प्रत्ययः प्रसज्यते? व्यवस्थितविभाषया न प्रसज्यत इत्यदोषः॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा आङि रुप्लुवोः ३।३।५०

आङि उपपदे रौतेः प्लवतेश्च विभाषा घञ् प्रत्ययो भवति। आरावः, आरवः। आप्लावः, आप्लवः।

न्यासः

विभाषाऽऽङि रुप्लुवोः। , ३।३।५०

रौतेः "उपसर्गे रुवः" ३।३।२२ इति नित्यं घञि प्राप्ते प्लवतेरप्युवर्णान्तत्वादपि सूत्रारम्भः॥

---

सूत्रम्

काशिका-वृत्तिः

अवे ग्रहो वर्षप्रतिबन्धे ३।३।५१

विभाषा इति वर्तते। अवे उपपदे ग्रहेः धातोः घञ् प्रत्ययो भवति विभाषा वर्षप्रतिबन्धे ऽभिधेये। प्राप्तकालस्य वर्षस्य कुतश्चिन् निमित्तादभावो वर्षप्रतिबन्धः। अवग्राहो देवस्य, अवग्रहो देवस्य। वर्षप्रतिबन्धे इति किम्? अवग्रहः पदस्य।

न्यासः

अवे ग्रहो वर्षप्रतिबन्धे। , ३।३।५१

"ग्रहवृद्द" ३।३।५८ इत्यादिनापि प्राप्ते तदपवादः, पक्षे घञभिधीयते। "कुतश्चिन्निमित्तात्" इति। सत्त्वकर्मापराधाधिकारात्॥

---

सूत्रम्

काशिका-वृत्तिः

प्रे वणिजाम् ३।३।५२

ग्रहः इति वर्तते। विभाषा इत्येव। प्रशब्दे उपपदे ग्रहेर् धातोः विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तवाच्यश्चेद् वणिजां सम्बन्धी भवति। वणिक्सम्बन्धेन च तुलासूत्रं लक्ष्यते, न तु वणिजस् तन्त्रम्। तुला प्रगृह्यते येन सूत्रेण स शब्दार्थः। तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति वणिगन्यो वा। वणिजाम् इति किम्? प्रग्रहो देवदत्तस्य।

न्यासः

प्रे वणिजाम्। , ३।३।५२

"वणिक्सम्बन्धन च" इत्यादि। तुलासूत्रं हि प्रायेण वणिजासम्बद्धम् = सहचरम्, ततः साहचर्याद्वणिक्सम्बन्धेन तदुपलक्ष्यते। नात्र वणिजां प्राधान्याम्। तस्मात् तदेव तुलादिसूत्रं तदन्यशब्दस्याभिधेयम्॥

---

सूत्रम्

काशिका-वृत्तिः

रश्मौ च ३।३।५३

ग्रहः विभाषा प्रे इति वर्तते। प्रशब्दे उपपदे ग्रहेर् धातोः विभाषा घञ् प्रत्ययो भवति, रश्मिश्चेत् प्रत्ययान्तेन अभिधीयते। रथादियुक्तानाम् अश्वादीनां संयमनार्था रज्जू रश्मिरिह गृह्यते। प्रग्राः, प्रग्रहः।

न्यासः

रश्मौ च। , ३।३।५३

"रथादियुक्तानाम्" इत्यादि। कुतः पुनरेतल्लभ्यते,यावता रश्मिशब्दः सामान्यवचनः, यथैवासाव()आआदिसंयमनार्थायां रज्ज्वां वत्र्तते तथा चन्द्रार्कादिसम्बन्धिष्वपि रश्मिषु? एवं मन्यते- यथा "नौ वृ धान्ये" 3।3।48 इति धान्यशब्दस्यापि धान्यविशेष एव गृह्यते, प्रत्ययान्तेन शब्दशक्तिस्वभाव्याद्धान्यविशेषस्य वाभिधानात्; तथा यद्यपि रश्मिशब्दः सामान्यवाची, तथापि प्रत्ययान्तः स्वभावाद्रज्जुविशेष एव वत्र्तते। तस्मात् युक्तं ग्रहणमिति॥

तत्त्व-बोधिनी

रश्मौ च १५३८, ३।३।५३

रश्मौ च। रथादियुक्तानाम()आआनां संयमनार्था रज्जुः--रश्मिः। तस्यामभिधेययायां प्रे उपपदे ग्रहेर्घञ्वा स्याद्भावादौ। इह द्विःकृत्वो ग्रहिरुपात्तः, सकृदेव तु वक्तुं शक्यः। तथाहि--- "उदि ग्रहः", "समि मुष्टौ" , "आक्रौशेऽवन्योः", "प्रे लिप्सायाम्" , "परौ यज्ञे", "अव वर्षप्रतिबन्धे विभाषा "प्रे वणिजा"मित्यादि "परौ भुवोऽवज्ञाने" इत्यस्यानन्तरम् "आङि रुप्लुवोः " इत्यस्तु, तथा तु न कृतमित्येव।

---

सूत्रम्

काशिका-वृत्तिः

वृणोतेराच्छादने ३।३।५४

विभाषा प्र इति वर्तते। प्रशब्दे उपपदे वृणोतेः धातोः विभाषा घञ् प्रत्ययो भवति, प्रत्ययान्तेन चेदाच्छादनविशेष उच्यते। प्रावारः, प्रवरः। आच्छादने इति किम्? प्रवरा गौः।

न्यासः

वृणोतेराच्छादने। , ३।३।५४

"वृणोतेः"इति। श्नुविकरणेन निर्देशो वृङो निवृत्त्यर्थः। अत्रापि सामान्यवाचित्वे प्राग्वदाच्छादनशब्दादन्यत्र। पक्षे "ग्रहवृदृ" 3।3।58 इत्यादिनाब्भवति॥

तत्त्व-बोधिनी

वृणोतेराच्छादने १५३९, ३।३।५४

वृणोते। [प्रावार इति। "उपर्गस्य घञ्यमनुष्ये बहुल"मित्युपसर्गस्य दीर्घः]। आच्छादने किम्?। प्रवरो गौः। प्रशस्त इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

प्रौ भुवो ऽवज्ञाने ३।३।५५

विभाषा इत्येव। परिशब्दे उपपदे भवतेः धातोः विभाषा घञ् प्रत्ययो भवति अवज्ञाने गम्यमाने। अवज्ञानम् असत्कारः। परिभावः, परिभवः। अवज्ञाने इति किम्? सर्वतः भवनं परिभवः।

न्यासः

परौ भुवोऽवज्ञाने। , ३।३।५५

तत्त्व-बोधिनी

परौ भुवोऽवज्ञाने १५४०, ३।३।५५

परिभावः। "अनादरः परिभवः परीभावस्तिरस्क्रिया" इत्यमरः। परत्वाद्धि क्तल्युटौ प्राप्तौ। तथा च पूर्वविप्रतिषेधोऽयं फलितः। एवं च वाऽसरूपन्यायोऽत्र न प्रवर्तते, अनपवादत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

एरच् ३।३।५६

भावे, अकर्तरि च कारके इति प्रकृतम् अनुवर्तते यावत् कृत्यल्युटो बहुलम् ३।३।११३ इति। इवर्णान्ताद् धातोः भावे, अकर्तरि च कारके संज्ञायाम् अच् प्रत्ययो भवति। घञो ऽपवादः। चकारो विशेषणार्थः, अन्तः ६।२।१४२ था ऽथघञ्क्ताजबित्रकणाम् ६।२।१४३ इति। चयः। अयः। जयः। क्षयः। अज्विधौ भयादीनाम् उपसङ्ख्यानम्। नपुंसके क्तादिनिवृत्त्यर्थम्। भयम्। वर्षम्। जवसवौ छन्दसि वक्तव्यौ। ऊर्वोरस्तुम् मे जवः। पञ्चौदनः सवः।

न्यासः

एरच्। , ३।३।५६

"चकारो विशेषणार्थः" इति। विनापि तेन थाथादिसूत्रे ६।२।१४३ अप्रत्ययादित्यप्रत्ययस्यापि ग्रहणं स्यात्। "अज्विधौ" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु "कृत्यल्युटो बहुलम्"३।३।११३ इत्येतदाश्रित्य कत्र्तव्यम्। अन्यस्तु "पञ्चमी भयेन" २।१।३६ "वर्षप्रमाण ऊलोपश्चास्यान्तरस्याम्" ३।४।३२ इति निपातनाद्भयादीनां सिद्धिमिच्छति, न चासौ युक्ता; किमिदं भयवर्षशब्दयोर्नपुंसकलिङ्गयोरुच्चारणम्? इत् पुंल्लिङ्गयोः? इति सन्देहात्। "वक्तयौ"इति। व्याख्येयावित्यर्थः। व्याख्यानं तु तदेव बहुलग्रहणमाश्रित्य कत्र्तव्यम्। "जवः, सवः" इति। "जु" ३।२।१५० इत्येस्मात् सौत्राद्धातोः, "षुञ् अभिषवे" (धा।पा।१२४७) इत्येस्माच्चोत्तरसूत्रेणापि प्राप्तेऽज्भवति। स्वरे विशेषः-- अपि हि स्तामाद्युदात्तं पदं स्यात्, अजन्ते सत्यन्तोदात्तत्वं भवति॥

तत्त्व-बोधिनी

एरच् १५४१, ३।३।५६

वर्षमिति। "वृषभो वर्षणा" दिति भाष्यप्रयोगात्तु ल्युडपि। वर्षणम्।

---

सूत्रम्

काशिका-वृत्तिः

ऋदोरप् ३।३।५७

ऋकारान्तेभ्यः उवर्णान्तेभ्यः च अप् प्रत्ययो भवति। घञो ऽपवादः। पित्करणं स्वरार्थम्। करः गरः। शरः। उवर्णान्तेभ्यः यवः। लवः। पवः। दकारो मुखसुखार्थः। मा भूत्तादपि परः तपरः।

लघु-सिद्धान्त-कौमुदी

ऋदोरप् ८५९, ३।३।५७

ॠवर्णान्तादुवर्णान्ताच्चाप्। करः। गरः। यवः। लवः। स्तवः। पवः। (घञर्थे कविधानम्)। प्रस्थः। विघ्नः॥

न्यासः

ऋदोरप्। , ३।३।५७

"पित्करणं स्वरार्थम्" इति। "अनुदात्तौ सुप्पितौ" ३।१।४ इत्यनुदात्तत्वं यथा स्यात्। "ऋदोरप्" इत्यत्र ऋकारस्तपरः स्यात्। एवं सति तादपि परस्तपरः इत्युकारोऽपि तस्य परः स्यात्। ततश्च "तपरस्तत्कालस्य" १।१।६९ इति परिभाषोपस्थानादिहैव स्यात्-- यवः,स्तव इति; लवः,पव इत्यत्र तु न स्यात्। दकारे तु "अण् सवर्णान् गृह्णाति-- "भुवः गृह्णाति" (व्या।पा।६६?) इति दीर्घादपि भवति। तस्मादुकारोऽयं सवर्णं गृह्णाति। अत्र च लिङ्गम्-- "भुवः प्रभवः" १।४।३१ इति निर्देशः।तपरे तु भवतेरप् न स्यात्, ततश्च "प्रभवः"इति निर्देशो नोपपद्यते। तस्य तु दकारस्य मुखसुखार्थत्वादन्यत् प्रयोजनं न सम्भवतीत्येतत्सर्वमालोच्याह-- "दकारो मुखसुखार्थः" इति॥

तत्त्व-बोधिनी

ऋदोरप् १५४२, ३।३।५७

ऋदोरप्। ऋच्च उच्च तयोः समाहारे सौत्रं पुंस्त्वम्। "ऋदो"रित्ययं न तकारः, किं तर्हि?। दकारः। "निरभ्योः पूल्वः" इत्यपवादतया घञ्विधानाज्ज्ञापकाद्दीर्घान्तादप्युदाहरति--लवः। पव इति। घञचोरपवाद इति। "निश्चय" इत्यत्राऽचः प्राप्तिरन्यत्र घञ इति विवेकः। हस्तादाने तु प्रपूर्वकाच्चिनोतेर्घञुदाह्मतः।

---

सूत्रम्

काशिका-वृत्तिः

ग्रहवृदृनिश्चिगमश् च ३।३।५८

ग्रहादिभ्यः धातुभ्यः अप् प्रत्ययो भवति। घञो ऽपवादः। निश्चिनोतेः तु अचो ऽपवादः। ग्रहः। वरः। दरः। निश्चयः। गमः। निश्चिग्रहनं स्वरार्थं। विशिरण्योरुपसङ्ख्यानम्। वशः। रणः। घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्। प्रतिष्ठन्ते ऽस्मिनिति प्रस्थः पर्वतस्य। प्रस्नाति अस्मिन् प्रस्नः। प्रपिबन्ति अस्याम् इति प्रपा। आविध्यन्ति तेन इति आविधः। विहन्यन्ते ऽस्मिनिति विघ्नः। आयुध्यते अनेन इति आयुधम्।

न्यासः

ग्रहवृदृनिश्चिगमश्च। , ३।३।५८

"वृ" इति वृङ्वृञोः सामान्येन ग्रहणम्। "दृ"इति। "दृङ आदरे" (धा।पा।१४११)। "निश्चिनोतेस्तवचोऽपवादः" इति। "एरच्" ३।३।५६ इति प्राप्तस्य। अथ निश्चिग्रहणं किमर्थम्, यावता नास्मादच्यपि वा विहिते कश्चिद्विशेषोऽस्ति, तदेव हि रूपमुभयत्रापि समापद्यत इत्याह-- "निश्चिग्रहणं स्वरार्थम्" इति। अनुदात्तार्थमित्यर्थः। ननु च "हस्तादाने चेरस्तेये" ३।३।४० इति चिनीतेर्घञ् विधीयमानो न स्यात्, निष्पूर्वादपि प्राप्नोति, अतस्तद्बाधनार्थमपि निश्चिग्रहणं युक्तम्? नैतदस्ति; निष्पूर्वादपि हि चिनोतेश्चैष घञ् पूर्वविप्रतिषेधेनेष्यते। ननु च स्वरार्थमपि निश्चिग्रहणं नोपपद्यतएव, तथापि "गतिकारकोपपदात् कृत्" ६।२।१३८ इत्युत्तरपदप्रकृतिस्वरे प्राप्ते" अन्तः"६।२।१४२ , "थाथघञ्क्ताजबित्रकाणाम्" ६।२।१४३ इत्यन्तोदात्तत्वेनैव भाव्यते। तथा चापि प्रत्ययेऽपि सत्यनुदात्तत्वेनैव भवितव्यम्? नैष दोषः;निश्चिग्रहणसामर्थ्यात थाथादिस्वरस्तस्मिन् विषये न भवति। तस्मिन्नसत्युत्तरपदे प्रकृतिभावेनावस्थितेऽपोऽनुदात्तत्वाद्धातोश्चान्तोदात्तत्वान्निश्चय इति पदं कृत्स्वरेण मध्योदात्#ं भवति, अचि सत्यन्तोदात्तं स्यात्। "वशिरण्योः" इत्यादि। "वश कान्तौ" (धा।पा।१०८०), "रण" (धा।पा।४४५) इति शब्दार्थः, अणरणेत्यादयः शब्दार्थाः (धा।पा।४४४-४५३) धातवः। तयोर्वशिरण्योरप उपसंख्यानम् = प्रतिपादनं कर्तव्यम्। तत्रेदं प्रतिपादनम् -- चकारोऽत्रानुक्तसमुच्चयार्थः क्रियते, तेन वशिरण्योरप्यब्भविष्यति। "घञर्थे क" इत्यादि। घञर्थो भावः

कर्तृवर्जितञ्च कराकम्, तत्र कप्रत्ययस्य विधानं कत्र्तव्यं स्थाद्यर्थम्। एतत्तु "कृत्यल्युटो बहुलम्"३।३।११३ इत्येव सिद्धम्। "पा" इति लुग्विकरणपरिभाषया (व्या।प।५०) पानार्थस्य ग्रहणम्, न रक्षणार्थस्य। "प्रस्थः" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "प्रश्नः" इति। "ष्णा शौचे" (धा।पा।१०५२)। "आविधः" इति। "व्यध ताडने" (धा।पा।११८१)। "ग्रहिज्या" ६।१।१६ ईत्यादिसूत्रेण सम्प्रसारणम्। "विघ्नः"इति। "गमहन" ६।४।९८ इत्यादिनोपधालोपः, "हो हन्तेः"७।३।५४ इत्यादिना कुत्वम्। "आयुधम्" इति। "युध सम्प्रहारे" (धा।पा।११७३)॥

तत्त्व-बोधिनी

ग्रहवृदृनिश्चिगमश्च १५४३, ३।३।५८

वशिरण्योरिति। घञि प्राप्ते वचनम्। वशनं वशः। रणन्ति शब्दं कुर्वन्त्यस्मिन्निति रणः = सङ्ग्रामः।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गे ऽदः ३।३।५९

अपित्येव। उपसर्गे उपपदे अदेर् धातोः अप् प्रययो भवति। प्रघसः। विघसः। उपसर्गे इति किम्? घासः।

न्यासः

उपसर्गेऽदः। , ३।३।५९

"अदेर्धातोरप्प्रत्ययो भवति" इति। घञपवादः। इत उत्तरत्रापि हलन्तादब्()विधीयमानो घञोऽपवादो वेदितव्यः। "विघसः, प्रघसः" इति। "घञपोश्च" २।४।३८ इति घस्लादेशः। अथ किमर्थमदेरब्विधीयते, न घसेः प्रकृत्यन्तरादेव विधीयते,कः पुनरेवं सति गुणो भवति? अदेरपि घस्लुभावो न कत्र्तव्यो भवति? सत्यमेतत्; तथाप्युत्तरार्थमदेर्विहितम्-- "नौ ण च" ३।३।६० इत्यदेर्यथा स्यात्, घसेर्मा भूदिति॥

---

सूत्रम्

काशिका-वृत्तिः

नौ ण च ३।३।६०

निशब्दे उपपदे अदेः धातोः णप्रत्ययो भवति, चकारादप् च। न्यादः, निघसः।

न्यासः

नौ ण च। , ३।३।६०

---

सूत्रम्

काशिका-वृत्तिः

व्यधजपोरनुपसर्गे ३।३।६१

व्यध जप इत्येतयोः अनुपसर्गयोः अप् प्रत्ययो भवति। घञो ऽपवादः। व्यधः। जपः। अनुपसर्गे इति किम्? आव्याधा। उपजापः।

न्यासः

व्यधजपोरनुपसर्गे। , ३।३।६१

तत्त्व-बोधिनी

व्यधजपोरनुपसर्गे १५४५, ३।३।६१

उपजापो मन्त्रभेदः। "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः। स्वान" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

स्वनहसोर् वा ३।३।६२

अनुपसर्गे इत्येव। स्वनहसोः अनुपसर्गयोर् वा अप् प्रत्ययो भवति। स्वनः, स्वानः। हसः, हासः। अनुपसर्गे इति किम्? प्रस्वानः। प्रहसः।

न्यासः

स्वनहसोर्वा।, ३।३।६२

---

सूत्रम्

काशिका-वृत्तिः

यमः समुपनिविषु च ३।३।६३

अनुपसर्गे वा इति वर्तते। सम् उप नि वि इत्येतेषु उपपदेषु अनुपसर्गे ऽपि यमेर् वा अप् प्रत्ययो भवति। घञो ऽपवादः। संयमः, संयामः। उपयमः, उपयामः। नियमः, नियामः। वियमः, वियामः। अनुपसर्गात् खल्वपि यमः, यामः।

न्यासः

यमः समुपनिविषु च।, ३।३।६३

---

सूत्रम्

काशिका-वृत्तिः

नौ गदनदपठस्वनः ३।३।६४

अपित्येव। निशब्दे उपपदे गद नद पठ स्वन इत्येतेभ्यः धतुभ्यः वा अप् प्रत्ययो भवति। घञो ऽपवादः। निगदः, निगादः। निनदः, निनादः। निपठः, निपाठः। निस्वनः, निस्वानः।

न्यासः

नौ गदनदपठस्वनः।, ३।३।६४

---

सूत्रम्

काशिका-वृत्तिः

क्वणो वीणायां च ३।३।६५

नौ वा अनुपसर्गे इति वर्तते। क्वणतेः धातोः निपूर्वादनुपसर्गाच् च वीणायां वा अप् प्रत्ययो भवति। घञो ऽपवादः। सोपसर्गार्थं वीणाया ग्रहणम्। निक्वणः, निक्वाणः। अनुपसर्गात् क्वणः, क्वाणः। वीणायां खल्वपि कल्याणप्रक्वणा

वीणा। एतेषु इति किम्? अतिक्वाणो वर्तते।

न्यासः

क्वणो वीणायाञ्च। , ३।३।६५

"सोपसर्गार्थं वीणाया ग्रहणम्" इति। यदि वीणाविषयेऽप्यनुसर्गादेव स्यात्, वीणाग्रहणमनर्थकं स्यात्। अनुपसर्गात् सामान्येन विधानाद्वीणायामपि प्रत्ययः सिद्धः॥

तत्त्व-बोधिनी

क्वणो वीणायां च १५४६, ३।३।६५

क्वणो। "निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि। वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं पणः परिमाणे ३।३।६६

पण व्यवहारे स्तुतौ च, अस्माद् धातोर् नित्यम् अप् प्रत्ययो भवति परिमाणे गम्यमाने। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। मूलकपणः। शाकपणः। संव्यवहाराय मूलकादीनां यः परिमितो मुष्टिर् बध्यते, तस्य इदम् अभिधानम्। परिमाणे इति किम्? पाणः।

न्यासः

नित्यं पणः परिमाणे। , ३।३।६६

"परिमितः"इति। परिमितो मितः परिच्छिन्नः। द्वयोस्त्रयाणां चतुर्णां वा मूलकादिद्रव्याणां यो मुष्टिः = परिमाणविशेषो बध्यते संव्यवहारार्थः स "मूलकपणः" इत्यादिना शब्देनाभिधीयते॥

तत्त्व-बोधिनी

पर्याप्तिवचनेष्वलमर्थेषु १५११, ३।३।६६

पर्याप्तो भोक्तुमिति। भोक्तुं समर्थ इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

मदो ऽनुपसर्गे ३।३।६७

मदेः धातोः अनुपसर्गातप् प्रत्ययो भवति। घजो ऽपवादः। विद्यामदः। धनमदः। कुलमदः। अनुपसर्गे इति किम्? उन्मादः। प्रमादः।

न्यासः

मदोऽनुपसर्गे। , ३।३।६७

"विद्यामदः"इति। विद्यया मदः। "कर्त्तुकरणे" २।१।३१ इत्यादिना समासः। "उन्मादः" इति। अत्रापि "कुगतिप्रादयः" २।२।१८ इति "व्यधजपोरनुपसर्गे" ३।३।६१ इत्यत्रैव मदिग्रहणे कत्र्तव्ये "मदोऽनुपसर्गे" इति सूत्रप्रणयनमस्य

विधेरनित्यत्वाज्ञापनार्थम्, तेन माद इति सिद्धं भवति॥

तत्त्व-बोधिनी

मदोऽनुपसर्गे १५४७, ३।३।६७

मदो। अनुपसर्गे सुप्युपपदे नित्यमप् स्याद्भावादौ।

---

सूत्रम्

काशिका-वृत्तिः

प्रमदसम्मदौ हर्षे ३।३।६८

प्रमद सम्मद इत्येतौ शब्दौ निपात्येते हर्षे ऽभिधेये। कन्यानां प्रमदः। कोकिलानां सम्मदः। हर्षे इति किम्? प्रमादः। सम्मादः। प्रसंभ्याम् इति न उक्तम्। निपातनं रूढ्यर्थम्।

न्यासः

प्रमदसंमदौ हर्षे। , ३।३।६८

ननु च "मदः" (३।३।६७) इत्यनुवत्र्तते, तत्र प्रसंभ्यामिति वक्तव्यम्, एवमप्यभीष्टं सिध्यत्येव,त()त्क निपात्यते? इत्यत आह-- "प्रसंभ्याम्" इत्यादि। रूढिशब्देनेह प्रमदसंमदाभ्यामन्यस्याश्रुतत्वादनयोश्च रूढिशब्दत्वादेतादेव विवक्षिततावििति गम्यते। अवधारणञ्चेह द्रष्टव्यम्, सावरधारणत्वात् सर्ववाक्यानाम्। तेन रूढ()र्थं निपातनम्। प्रमदसम्मदशब्दार्थमेवैषोऽर्थः सम्पद्यते। अनेन सूत्रेण "प्रमदसम्मदौ" इत्यनयोरेव रूढिशब्द्योव्र्युत्पत्तिर्यथा स्यान्न शब्दान्तराणामित्यवमर्थं निपातनमिति यावत्। यदि हि मदिग्रहणमनुवर्त्त्य प्रसंभ्यामित्येतावदुच्येत, तर्हि यदापि प्रसंभ्यां समस्ताभ्यामुत्तरो मदिर्भविष्यति तदापि प्रत्ययः स्यात्। तथा यदा प्रसमावन्यस्मादुपसर्गात् परौ भवतः प्रसंभ्यञ्च परो मदिर्भवति तदापि स्यात्। ततश्च प्रसम्मदः, अभिप्रसम्मदः, प्रनिसम्मदः-- इत्येवमाद्यरूढिशब्दार्थमपि सूत्रं स्यात्, न प्रमदसम्मदार्थमेव। निपातने तु सति नियमो विज्ञायते-- प्रत्येकमेवेतौ;न समस्तौ, नाप्यन्योपसर्गसहिताविति। तेन रूढ()र्थं सूत्रं सम्पद्यते॥

तत्त्व-बोधिनी

प्रमदसंमदौ हर्षे १५४८, ३।३।६८

प्रमद। "प्रसंभ्यां हर्षे" इति तु नोक्म्, प्रसंमदः, संप्रमद इति हर्षे माभूदिति।

---

सूत्रम्

काशिका-वृत्तिः

समुदोरजः पशुषु ३।३।६९

समुदोरुपपदयोः अजएर् धातोः पशुविषये धात्वर्थे अप् प्रत्ययो भवति। घञो ऽपवादः। अज गतिक्षेपणयोः इति पठ्यते। स सम्पूर्वः समुदाये वर्तते, उत्पूर्वश्च प्रेरणे। संजः पशूनाम्। समुदायः इत्यर्थः। उदजः पशूनाम्। प्रेरणम् इत्यर्थः। पशुषु इति किम्? समाजो ब्राह्मणानाम्। उदाजः क्षत्रियाणाम्।

न्यासः

समुदोरजः पशुष। , ३।३।६९

---

सूत्रम्

काशिका-वृत्तिः

अक्षेषु ग्लहः ३।३।७०

ग्लहः इति निपात्यते, अक्षविषयश्चेद् धात्वर्थो भवति। ग्रहेरप् सिद्ध एव, लत्वार्थं निपातनम्। अक्षस्य ग्लहः। अक्षेषु इति किम्? ग्रहः पादस्य। अन्ये ग्लहिं प्रकृत्यन्तरम् आहुः। ते घञं प्रत्युदाहरन्ति। ग्लाहः।

न्यासः

अक्षेषु ग्लहः।, ३।३।७०

"ग्रहेरप् सिद्ध एव" इति। "ग्रहवृद्द" ३।३।५८ इत्यादिना। यद्येवम्, किमर्थं निपातनमित्याह-- "लत्वार्थम्" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

प्रजने सर्तेः ३।३।७१

सर्तेः धातोः प्रजने विषये अप् प्रत्ययो भवति। घञो ऽपवादः। प्रजनं प्रथमं गर्भग्रहणम्। गवाम् उपसरः। पशूनाम् उपसरः। स्त्रीगवीषु पुंगवानाम् गर्भाधानाय प्रथमम् उपसरणम् उच्यते।

न्यासः

प्रजने सर्त्तेः।, ३।३।७१

तत्त्व-बोधिनी

प्रजने सर्तेः १५४९, ३।३।७१

प्रजने सर्तेः। प्रजननं प्रजनः। भावे घञ्। "जनिवध्यो"रिति वृद्धिनिषेधः। प्रशब्दबलादत्र जनेरर्थान्तरत्वम्। प्रतिष्ठते इत्यत्र प्रादुर्भावो यथा। तदेतदाह-- पर्थमगर्भग्रहणमिति। काशिकानुरोधेनेदमुक्तम्। प्रथमं द्वितीयं वेत्यनाग्रहः, किन्तु गर्भग्रहणमित्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

ह्वः सम्प्रसारणं च न्यभ्युपविषु ३।३।७२

नि अभि उप वि इत्येतेषु उपपदेषु ह्वयतेः धातोः सम्प्रसारणम् अप् प्रत्ययः च। घञो ऽपवादः। निहवः। अभिहवः। उपहवः। विहवः। एतेषु इति किम्? प्रह्वायः।

न्यासः

ह्वः सम्प्रसारणञ्च न्यभ्युपविषु।, ३।३।७२

"निहवः"इति। "ह्वेञ् {स्पर्धायां शब्दे च--धा।पा} स्पद्र्धायाम्" (धा।पा।१००८)। सम्प्रसारणे कृते गुणावादेशौ। जुहोतेरेव निप्रभृत्युपसर्गपूर्वस्य "निहवः"इत्यादिके रूपचतुष्टये सिद्धे सति ह्वयसेर्निप्रभृतिपूर्वस्य घञ्()निवृत्त्यर्थमेवैतद्ववचनम्॥

---

सूत्रम्

काशिका-वृत्तिः

आङि युद्धे ३।३।७३

आङि उपपदे ह्वयतेर् धातोः सम्प्रसारणम् अप् प्रत्ययश्च भवति युद्धे ऽभिधेये। आहूयन्ते ऽस्मिनित्याहवः। युद्धे इति किम्? आह्वायः।

न्यासः

आङि युद्धे। , ३।३।७३

"आह्वायः"इति। "आतो युक् चिण्कृतोः" ७।३।३३ इति युक्॥

---

सूत्रम्

काशिका-वृत्तिः

निपानम् आहावः ३।३।७४

आङ् पूर्वस्य ह्वयतेर् धातोः सम्प्रसारणम्, अप्प्रत्ययो, वृद्धिश्च निपात्यते निपानं चेदभिधेयं भवति। निपिबन्त्यस्मिन्निति निपानम् उदकाधार उच्यते। आहावः पशूनाम्। कूपोपसरेषु य उदकाधारस् तत्र हि पानाय पशव आहूयन्ते। निपानम् इति किम्? आह्वायः।

न्यासः

निपानमाहावः। , ३।३।७४

निपिबन्ति तस्मिन्निति निपानमित्यधिकरणे ३।३।११७ ल्युट्। कस्मादाहावशब्द उदकाधारे वत्र्तत इत्याह-- "तत्र हि" इत्यादि। एतेनाहावशब्दस्योदकाधारे प्रवृत्तनिमित्तं दर्शयति॥

---

सूत्रम्

काशिका-वृत्तिः

भावे ऽनुपसर्गस्य ३।३।७५

अनुपर्गस्य ह्वयतेः सम्प्रसारणम् अप् प्रत्ययश्च भवति भावे अभिधेये। हवः। हवे हवे सुहवं शूरम् इन्द्रम्। अनुपसर्गस्य इति किम्? आह्वायः। भावग्रहणम् अकर्तरि च कारके संज्ञायाम् ३।३।१९ इत्यस्य निरासार्थम्।

न्यासः

भावेऽनुपसर्गस्य। , ३।३।७५

"भावग्रहणम्" इत्यादि। ननु च यथा "कर्मव्यतिहारे णच् स्त्रियाम्" ३।३।४३ इत्यत्र द्वये प्रकृते च लक्ष्यदर्शनवशाद्भाव एव प्रत्ययो विज्ञास्यते, तथेहापि, त()त्क भावग्रहणेन "अकत्र्तरि च कारके" (३।३।१९) इत्येतन्निरासार्थेन? सत्यमेतत्; लक्ष्यदर्शनसामथ्र्यादेव प्राप्त एव एवार्थो भावग्रहणेनाख्यायते मन्दबुद्धीनामनुग्रहाय। अथ यथा "अभिविधौ भाव इनुण्" ३।३।४४ इत्यत्र "भावे" इति वत्र्तमाने पुनर्भावगर्हणं वासरूपनिरासार्थं विज्ञायते, तथेहापि कस्मान्न विज्ञायते? लक्ष्यदर्शनवशात्। दृश्यते हि क्तादयः-- हूतम्, ह्वानम्, हूतिरिति। घञादौ वासरूपेण भावः॥

---

सूत्रम्

काशिका-वृत्तिः

हनश् च वधः ३।३।७६

भावे ऽनुपसर्गस्य इति वर्तते। हन्तेर् धातोः अनुपसर्गे भावे अप् प्रत्ययो भवति, तत्संनियोगेन च भधादेशः, स चान्तोदात्तः। तत्र उदात्तनिवृत्तिस्वरेण अप उदात्तत्वं भवति। वधश्चोराणाम्। वधो दस्यूनाम्। भावे इत्येव, घातः। अनुपसर्गस्य इत्येव, प्रघातः, विघातः। चकारो भिन्नक्रमत्वान् नादेशेन सम्बध्यते। किं तर्हि? प्रकृतेन प्रत्ययेन। अप् च, यश्च अपरः प्राप्नोति। तेन घञपि भवति। घातो वर्तते।

न्यासः

हनश्च वधः।, ३।३।७६

"स चान्तोदात्तः" इति। सूत्रे वधशब्दस्यान्तोदात्तस्योच्चारणात्। "तत्र "इत्यादिनाऽन्तोदात्ते वधादेशे यदिष्टं सिध्यति तद्दर्शयति। अपि कृते "अतो लोपः" ६।४।४८ इत्यकारलोपे च "अनुदात्तस्य च यत्रोदात्तलोपः"६।१।१५५ इत्यप उदात्तत्वं भवति। "धातः" इति। कर्मादौ कारके घञ्,"हनस्तोऽटिण्णलोः" ७।३।३२ इति तत्वम्; "हो हन्तेः" ७।३।५४ इत्यादिना कुत्वम्। "चकारो भिन्नक्रमत्वात्" इत्यादि। चकारो नादेशेन सम्बध्यत इति सम्बन्धः।कस्मान्न सम्बध्यते? भिन्नक्रमत्वात्। यदि "हनो वधश्च" इत्येष चकारस्य क्रमः; आदेशानन्तरमनुच्चारणात्।तस्मात् भिन्नक्रमत्वात् क्रमभेदान्नादेशेन सम्बध्यते।अपि तु प्रकृतेन प्रत्ययेन। एवञ्च प्रकृतेन सम्बन्धं दर्शयितुमाह-- "अप् च" इत्यादि। अप् प्रत्ययो भवति, चकारावृत्तेर्यः प्राप्नोति स च। तेन घञपि भवति॥

तत्त्व-बोधिनी

हनश्च वधः १५५०, ३।३।७६

हनश्च वधः। अन्तोदात्त इति। सूत्रे वधशब्दोऽन्तोदात्ततयोच्चारित इति भावओः।

---

सूत्रम्

काशिका-वृत्तिः

मूर्तौ घनः ३।३।७७

हनः इत्येव। मूर्तिः काठिन्यम्। मूर्तौ अभिधेयायां हन्तेः अप् प्रत्ययो भवति, घनश्चादेशः। अभ्रघनः। दधिघनः। कथं घनं दधि इति? धर्मशब्देन धर्मी भण्यते।

न्यासः

मूर्त्तौ घनः।, ३।३।७७

"अभ्रवनः" इति। षष्ठासमासोऽयम्। अभ्रस्य काठिन्यमित्यर्थः। यदि मूत्तावभिधेयायां घनशब्दो व्युत्पाद्यते-- घनं दधीति, मूर्तिमतो दघ्नो नाभिधानं प्राप्नोति, कथं हि नाम मूर्त्तौ व्युत्पादितस्ततोऽन्यत्र वत्र्तते? इत्यत आह-- "धर्मशब्देन धर्मी भण्यते" इति। मतुबालोपादभेदोपचारः, यथा-- शुक्लः पटः। शुक्लशब्देन शुक्लगुणः पट इति भावः॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तर्घनो देशे ३।३।७८

अन्तः पूर्वात् हन्तेः अप् प्रत्ययो भवति, घनादेशश्च भवति देशे ऽभिधेये। अन्तर्घनः। संज्ञीभूतो वाहीकेसु देशविशेष

उच्यते। अन्ये णकारं पठन्ति अन्तर्घणो देशः इति। तदपि ग्राह्यम् एव। देशे इति किम्? अन्तर्घातो ऽन्यः।

न्यासः

अन्तर्घनो देशे। , ३।३।७८

"अन्तर्घनः"इति। अन्तर्हण्यन्ते प्राणिनोऽत्रेत्यधिकरणेऽप्। "तवपि ग्राह्रमेव" इति। उभयथा चाचार्ये शिष्याणां प्रतिपादित्वात्॥

---

सूत्रम्

काशिका-वृत्तिः

अगारएकदेशे प्रघणः प्रघाणाश् च ३।३।७९

प्रपूर्वस्य हन्तेः प्रघणः प्रघाणः इत्येतौ शब्दौ निपात्येते अगारैकदेशे वाच्ये। प्रघणः, प्रघाणः। द्वारप्रकोष्ठो बाह्य उच्यते। अगारैकदेशे इति किम्? प्रघातः अन्यः।

न्यासः

अगारैकदेशे प्रघणः प्रघाणश्च। , ३।३।७९

तत्त्व-बोधिनी

अगारैकदेशे प्रघणः प्रघाणश्च १५५१, ३।३।७९

अगारैक। "प्रघाणप्रघणाऽलिन्दा बहिद्र्वारप्रकोष्ठके" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

उद्घनो ऽत्याधानम् ३।३।८०

उत्पूर्वात् हन्तेः उद्घनः इति निपात्यते ऽत्याधानं चेद् भवति। उद्घनः। यस्मिन् काष्ठे स्थापयित्वा अन्यानि काष्ठानि तक्ष्यन्ते तदभिधीयते। उद्घातो ऽन्यः।

न्यासः

उद्घनोऽत्याधानम्। , ३।३।८०

"अत्याधानम्" इति। अतिशब्द उपरिभावे वत्र्तते। आदधातिः स्थापने। य उपरि निधीयते स्थाप्यते तस्मिन् सः, तदस्याधानम्। अधिकरणे ल्युट्। "उद्घनः" इति। उद्घन्यतेऽस्मिन्नित्यधिकरणेऽप्॥

---

सूत्रम्

काशिका-वृत्तिः

अपघनो ऽङ्गम् ३।३।८१

अपपूर्वस्य हन्तेः अपघनः इति निपात्यते, अङ्गं चेत् तद् भवति। अपघनः अङ्गम्। अवयवः एकदेशः, न सर्वः। किं तर्हि? पाणिः पादश्च अभिधीयते। अपघातः अन्यः।

न्यासः

अपघनोऽङ्गम्। , ३।३।८१

"अपघनः"इति। अपहन्यतेऽनेनेति करणेऽप्॥

---

सूत्रम्

काशिका-वृत्तिः

करणे ऽयोविद्रुषु ३।३।८२

हनः इति वर्तते। अयस् वि द्रु इत्येतेषु उपपदेषु हन्तेः धातोः करणे कारके अप् प्रत्ययो भवति, घनादेशश्च। अयो हन्यते अनेन इति अयोघनः। विघनः। द्रुघनः। द्रुघणः इति केचिदुदाहरन्ति। कथं णत्वम्? अरीहणादिषु पाठात्। पूर्वपदात् संज्ञायाम् अगः ८।४।३ इति वा।

न्यासः

करणेऽयोविद्रुषु। , ३।३।८२

---

सूत्रम्

काशिका-वृत्तिः

स्तम्बे क च ३।३।८३

करणे हनः इति वर्तते। स्तम्बशब्दे उपपदे करणे कारके हन्तेः कः प्रत्ययो भवति। चकारातप् च, तत्र घनादेशः। स्तम्बघ्नः, स्तम्बघनः। स्त्रियां स्तम्बघ्ना, स्तम्बघना इति इष्यते। करणे इत्येव, स्तम्बघातः।

न्यासः

स्तम्बे क च। , ३।३।८३

"तत्र च" इति। अनन्तरोक्तेऽपि। "घनादेशः"इति। "मूर्तौ घनः" ३।३।७७ इत्यतः "घनः" इत्यतस्यानुवृत्तेः। "स्तम्बघ्नः"इति। पूर्ववत् कुत्वोपधालोपौ॥

---

सूत्रम्

काशिका-वृत्तिः

परौ घः ३।३।८४

करणे हनः इत्येव। परिशब्दे उपपदे अन्तेर् धातोः अप् प्रत्ययो बह्वति करणे कारके, घशब्दश्चादेशः। परिहन्यते अनेन इति परिघः। पलिघः।

न्यासः

परौ घः। , ३।३।८४

"वलिघः" इति। "परेश्च घाङ्कयोः"८।२।२२ इति विभाषा लत्वम्॥

---

सूत्रम्

काशिका-वृत्तिः

उपघ्न आश्रये ३।३।८५

उपपूर्वात् हन्तेः अप् प्रत्ययः उपधालोपश्च निपात्यते आश्रये ऽभिधेये। आश्रयशब्दः सामीप्यं प्रत्यासत्तिं लक्षयति। पर्वतोपघ्नः। ग्रामोपघ्नः। आश्रये इति किम्? पर्वतोपघात एव अन्यः।

न्यासः

उपघ्न आश्रये।, ३।३।८५

"आश्रयशब्दः" इत्यादि। आश्रयणमाश्रयः = सेवा। सा च यत्र प्रत्यासत्तिस्तत्र भवतीत्याश्रयः प्रत्यासत्तिसहचरः।तस्मादाश्रयशब्दः सामीप्यं प्रत्यासत्तिमुपलक्षयति; तदर्थस्य प्रत्यासत्तिसाहचर्यात्। "पर्वतोपघ्नः" इति। पर्वतसमीपभूतोऽर्थ उच्यते॥

---

सूत्रम्

काशिका-वृत्तिः

सङ्घौद्धौ गणप्रशंसयोः ३।३।८६

समुदोः उपपदयोः हन्तेः धातोः अप् प्रत्ययो भवति, टिलोपः घत्वं च निपात्यते, यथासङ्ख्यं गणे ऽभिधेये, प्रशंसायां गम्यमानायाम्। सङ्घः पशूनाम्। उद्घो मनुष्यः। गणप्रशंसयोः इति किम्? सङ्घातः।

न्यासः

सङ्घोद्वघौ गणप्रशंसयोः।, ३।३।८६

"सङ्घोद्()घौ" इति। संहननं सङ्घः। उत्कटं हन्यते ज्ञायत इति उद्घः। कर्मण्यप्। कथं पुनर्हन्तिर्ज्ञाने वत्र्तते? गत्यर्थत्वात्। सर्वेषां गत्यर्थानां धातूनां ज्ञानार्थत्वात्॥

तत्त्व-बोधिनी

सङ्घोद्धौ गणप्रशंसयोः १५५२, ३।३।८६

सङ्घोद्धौ। "मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवचकान्यमूनि" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

निघो निमितम् ३।३।८७

निघः इति निपूर्वाद् हन्तेः अप् प्रत्ययः, टिलोपो घत्वम् च निपात्यते, निमितं चेदभिधेयं भवति। समन्तात् मितं निमितम्, समारोहपरिणाहम्। निघाः वृक्षाः। निघाः शालयः। निमितम् इति किम्? निघातः।

न्यासः

निघो निमितम्।, ३।३।८७

समन्तान्मितमिति ननिमितशब्दः। सर्वत आरोहतः परिणाहतश्च तुल्यमित्यर्थः। एकमेवार्थं प्रसिद्धतरेण दर्शयितुमाह-- "समारोहपरिणाहौ यस्य तत् तथोक्तम्। आरोहः = उच्छ्रायः। परिणाहः = विस्तारः। "निघा वृक्षाः"इति। निविशेषमं हन्यन्ते ज्ञायन्त इति निघाः। कर्मण्यपि समन्तात् तुल्या इत्यर्थः। एवं ते निर्विशेषं ज्ञायन्ते यदि समन्तादारोहतः परिणाहतश्च तुल्या भवन्ति॥

---

सूत्रम्

काशिका-वृत्तिः

ड्वितः क्त्रिः ३।३।८८

भावे ऽकर्तरि च कारके इति वर्तते। डु इत् यस्य तस्माद् ड्वितो धातोः क्त्रिः प्रत्ययो भवति। त्रेर्मम् नित्यम् ४।४।२० इति वचनात् केवलो न प्रयुज्यते। डुपचष् पाके पक्त्रिमम्। डुवप् बीजसन्ताने उप्त्रिमम्। डुकृञ् कृत्रिमम्।

लघु-सिद्धान्त-कौमुदी

ड्वितः क्त्रिः ८६०, ३।३।८८

न्यासः

ड्?वितः क्त्रिः। , ३।३।८८

"उप्त्रिमम्" इति। "वचिस्वपि" ६।१।१५ इत्यादिना सम्प्रसारणम्। क्त्रेः ककारो गुणप्रतिषेधार्थः॥

तत्त्व-बोधिनी

ड्वितः क्त्रिः १५५३, ३।३।८८

ड्वितः। अयमिति। अतएव पाकेन निर्वृतमिति विगृह्तते न तु पक्त्वेनेति। यत्तु प्राचोक्तं "भावादा"विति, तन्नेति भावः। क्त्रेर्मप्। तद्धितेषु व्याख्यातमिदम्। नित्यग्रहणादिति। तत्र हि नित्यमिति योगो विभज्यते तत्सामथ्र्यादर्थविशेषानादरेणैव मब्विषयत्वं निर्णीयते। एकयोगत्वे तु निर्वृत इत्यधिकारान्निर्वृत्तार्थस्याऽविवक्षायां स्वातन्त्र्यं प्रसज्येत, ततश्च मपं विनापि पक्त्रिरिति प्रयोगः स्यादिति भावः। उप्त्रिममिति। वपेर्यजादित्वात्किति संप्रसारणम्। वापेन निर्वृत्तमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ट्वितो ऽथुच् ३।३।८९

टु इत् यस्य, तस्मात् ट्वितो धातोः अथुच् प्रत्ययो भवति भावादौ। टुवेपृ कम्पने वेपथुः। टुओश्वि गतिवृद्ध्योः श्वयथुः। टुक्षु शब्दे क्षवथुः।

लघु-सिद्धान्त-कौमुदी

ट्वितोऽथुच् ८६२, ३।३।८९

टुवेपृ कम्पने, वेपथुः॥

न्यासः

ट्?वितोऽथुच्। , ३।३।८९

"वेपथुः" इति। वेपनम् = वेपथुः। स्वभावत एवैतदुभयं भावे भवतीति घञोऽपवादो विज्ञायते। घञ् तु वासरूपविधिनापि न भवति; अनभिधानात्। अथुचश्चकारः।अथुचश्चकारः स्वराथः॥

---

सूत्रम्

काशिका-वृत्तिः

यजयाचयतविच्छप्रच्छरक्षो नङ् ३।३।९०

भावे अकर्तरि च कारके इति वर्तते। यजाऽदिभ्यो धातुभ्यो नङ् प्रत्ययो भवति। ङकारो गुणप्रतिषेधार्थः। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः। प्रच्छेः असम्प्रसारणं ज्ञापकात् प्रश्ने च आसन्नकाले ३।२।११७ इति।

लघु-सिद्धान्त-कौमुदी

यजयाचयतविच्छप्रच्छरक्षो नङ् ८६३, ३।३।९०

यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः॥

न्यासः

यजयाचयतविच्छप्रच्छरक्षो नङ्। , ३।३।९०

"यज देवपूजादौ" (धा।पा।१००२), "टुयाच् याच्ञायाम्" (धा।पा।८६३), "{यती प्रयत्ने-धा।पा} यत प्रयत्ने"(धा।पा।३०), "विच्छ गतौ" (धा।पा।१४२३), "प्रच्छ ज्ञीप्सायाम्" (धा।पा।१४१३), "रक्ष {पालने-- धा।पा।}रक्षणे" (धा।पा।६५८)--अत्र स्वाभाविकत्वाद्याचेरन्येषां नङ्प्रत्ययान्तानां पुंसि वृत्तिरिति तेभ्यो नङ् न घञपवादो भवति। यथादर्शनञ्च वासरूपविधना घञपि भवति- याग इति। याचेस्तु नङन्तसय स्वभावात् स्त्रियां वृत्तिरिति ततो नङ् "गुरोश्च हलः" ३।३।१०३ इति प्राप्तस्याकारप्रत्ययस्यापवादः। "कृत्यल्युटो बहुलम्" ३।३।११३ इति वचनाद्वासरूपविधिर्न भवति। "ङकारो गुणप्रतिषेधः" इति। विच्छेर्लघूपधगुणो मा भूदित्येवमर्थः। ननु चान्तरङ्गत्वात् "छे च" ६।१।७१ इति तुकैव विच्छेस्तावद्भवितव्यम्, तत्रालघूपधत्वादेव गुणो न भविष्यति, त()त्क तत्प्रतिषेधार्थो ङकारः कत्र्तव्यः। "अनित्यमागमशासनम्"(व्या।प।९९) इत्यस्य चैदेव नङो ङिकरणं ज्ञापकम्। यदा तहूरनित्यत्वात्, तुङ्()न, तदा "च्छ्वोः शूडनुनासिके च" (६।४।१९) इति सतुक्कस्य च्छकारस्य शादेशो विधीयमानः केवलस्य न प्राप्नोति? नैष दोषः; यस्मात् "च्छ्वोः"इति द्विच्छकारो निर्देशः। तत्रैकः सतुक्कः, द्वितीयः केवल एव, तेन केवलस्यापि शादेशो भविष्यति। यदि तु द्विच्छकारो निर्देशः "च्छ्वोः" इति द्विवचनं न प्राप्नोति,बहुत्वात् स्थानिनाम्? सौत्रत्वनान्निर्देशस्य बहुवचनस्य व्यत्ययेन द्विवचनं भविष्यतीत्यदोषः। अवश्यं द्विच्छकारो निर्देशः कत्र्तव्यः; अन्यथा "राल्लोपः" ६।४।२१ इत्यत्र केवलस्य लोपो न स्यात्, केवलस्य च्छकारस्याप्रकृत्वात्। वचनं तु वकारलोपार्थमेव स्यात्। "यज्ञः, याच्ञा" इति। "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वेन नकारस्य ञकारः। "यत्नः" इति। "नेड् वशि कृति" ७।२।८ इतीट्()प्रतिषेधः। "विश्नः, प्रश्नः" इति। "च्छ्वोः"६।४।१९ इत्यादिना च्छकारस्य शकारादेशः। "रक्ष्णः"इति। "ष्टुना ष्टुः" ८।४।४० इति नकारस्य णकारः। अथ प्रच्छेः ग्रहिज्यादिसूत्रेण ६।१।१६ सम्प्रसारणं "प्रश्नः" इत्यत्र कस्मान्न भवतीत्यत आह-- "प्रच्छेः" इत्यादि। किं ज्ञापकमित्याह-- "प्रश्ने च" इत्यादि॥

तत्त्व-बोधिनी

यजयाचयतविच्छप्रच्छरक्षो नङ् १५५४, ३।३।९०

यजयाच। भावेऽकर्तरि कारके चेति वर्तते। अत एव "यज्ञेन यज्ञमयजन्त देवाः" इत्यत्र इज्यते इति यज्ञ इति व्याचक्षते। [विश्न इति। "च्छ्वोः शूडनुनासिके चे"ति शः]।

---

सूत्रम्

काशिका-वृत्तिः

स्वपो नन् ३।३।९१

स्वपेर् धातोः नन् प्रत्ययो भवति। नकरः स्वरार्थः। स्वप्नः।

लघु-सिद्धान्त-कौमुदी

स्वपो नन् ८६४, ३।३।९१

स्वप्नः॥

न्यासः

स्वपो नन्। , ३।३।९१

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गे घोः किः ३।३।९२

भावे अकर्तरि च कारके इति वर्तते। उपसर्गे उपपदे घुसंज्ञकेभ्यः धातुभ्यः किः प्रत्ययो भवति। कित्करणम् आतो लोपार्थम्। प्रदिः। प्रधिः। अन्तर्धिः।

लघु-सिद्धान्त-कौमुदी

उपसर्गे घोः किः ८६५, ३।३।९२

प्रधिः। उपधिः॥

न्यासः

उपसर्गे घोः किः। , ३।३।९२

"किप्रत्ययो भवति" इति। घञोऽपवादः। "कित्करणे लोपार्थम्" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपो यथा स्यादिति॥

तत्त्व-बोधिनी

उपसर्गे घोः किः १५५५, ३।३।९२

उपसर्गे [घोः किः। बाहुलकात्कत्र्तर्यपीति माधवः। अतएव उप = समीपे स्वधर्ममादधातीत्युपाधिरिति व्याचक्षते]। कित्वादातो लोपः। अन्तर्धिरिति। "अन्तः शब्दस्याऽङ्किविधी"ति वार्तिकादुपसर्गत्वम्। उपाधीयतेऽनेनेति। एतेन "उप = समीपे स्वधर्ममादधातीत्युपाधिः। बाहुलकात्कर्तरि कि"रिति माधवादिग्रन्थो नादर्तव्य इति ध्वनितम्। "विधाता वि()आसृड्विधि"रित्यत्रापि कर्तरि माभूत् किः, किंतु विध विधाने इत्यस्मादिगुपधात्किदितीति रूपसिद्धेः।

---

सूत्रम्

काशिका-वृत्तिः

कर्मण्यधिकरणे च ३।३।९३

घोः इत्येव। कर्मण्युपपदे घुसंज्ञकेभ्यो धातुभ्यः किः प्रत्ययो भवति अधिकरणे कारके। जलं धीयते अस्मिनिति जलधिः। शरधिः। अधिकरनग्रहणमर्थान्तरनिरासार्थम्। चकारः प्रत्ययानुकर्षणार्थः।

न्यासः

कर्मण्यधिकरणे च। , ३।३।९३

कर्माधिकरणयोः सप्तम्या भेदेन निर्देशान्नोभयोरुपपदत्वम्, नापि प्रत्ययार्थत्वम्, तस्मात् किञ्चित् तत्रोपपदम्, किञ्चित्प्रत्ययार्थः। कर्म उपपदम्, अधिकरणं प्रत्ययार्थः। एष तु विभागो व्याख्यानास्लक्ष्यदर्शनाच्च विज्ञात इत्याह--"कर्मण्युपपदे इत्यादि। अथाधिकरणग्रहणं किमर्थम्, यावता "अकत्तरि च कारके" (३।३।१९) इत्यस्यानुवृत्तेरेवाधिकरणे प्रत्ययो लभ्यते? इत्याह-- "अधिकरणग्रहणम्" इत्यादि। असति ह्यधिकरणग्रहणेरऽर्थान्तरेऽपि भावे करणादौ कारके प्रकृतप्रत्ययः स्यात्, तस्मात् तन्निवृत्त्यर्थमधिकरणग्रहणम्॥

---

सूत्रम्

काशिका-वृत्तिः

स्त्रियां क्तिन् ३।३।९४

भावे अकर्तरि च कारके ति वर्तते। स्त्रीलिङ्गे भावादौ धातोः क्तिन् प्रत्ययो भवति। घञजपामपवादः। कृतिः। चितिः। मतिः। क्तिन्नावादिभ्यश्च वक्तव्यः। आबादयः प्रयोगतो ऽनुसर्तव्याः। आप्तिः। राद्धिः। दीप्तिः। स्रस्तिः। ध्वस्तिः। लब्धिः। श्रुयजिस्तुभ्यः करणे। श्रूयते अनया इति श्रुतिः। इष्टिः। स्तुतिः। ग्लाम्लाज्याहाभ्यो निः। ग्लानिः। म्लानिः। ज्यानिः। हानिः। ॠकारल्वादिभ्यः क्तिन् निष्ठावद् भवति इति वक्तव्यम्। कीर्णिः। गीर्णिः। जीर्णिः। शीर्णिः। लूनिः। यूनिः। सम्पदादिभ्यः क्विप्। सम्पद्। विपद्। प्रतिपद्। क्तिन्नपि इष्यते। सम्पत्तिः। विपत्तिः।

लघु-सिद्धान्त-कौमुदी

स्त्रियां क्तिन् ८६६, ३।३।९४

स्त्रीलिङ्गे भावे क्तिन् स्यात्। घञोऽपवादः। कृतिः। स्तुतिः। (ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः)। तेन नत्वम्। कीर्णिः। लूनिः। धूनिः। पूनिः। (संपदादिभ्यः क्विप्)। संपत्। विपत्। आपत्। (क्तिन्नपीष्यते)। संपत्तिः। विपत्तिः। आपत्तिः॥

न्यासः

स्त्रियां क्तिन्। , ३।३।९४

"भावादौ" इति। आदिशब्देनाकर्तुः कारकस्योपादानम्। "घञजपामपवादः" इति। य इकारान्तास्तेभ्योऽचोऽपवादः, य ॠकारान्ता उवर्णान्ताश्च, तेभ्योऽपः, शेषेभ्यो घञः। वक्तव्य इति। व्याख्येय इत्यर्थः। व्याख्यानं तु "कृत्यल्युटो बहुलम्" ३।३।११३ इत्येतदाश्रित्य कत्त्तव्यम्। "आप्तिः" इत्यादि। "आप्लृ व्याप्तौ" (धा।पा।१२६०), "राध साध संसिद्धौ" (धा।पा।१२६२), "दीपी दीप्तौ" (धा।पा।११५०), "रुआन्सु ध्वन्सु अवरुआंसने" (धा।पा। ७५४,७५५) "डुलभष् प्राप्तौ" (धा।पा।९७५)। लभेति षित्वात् "षिद्भिदादिभ्योऽङ" ३।३।१०४ इत्यङि प्राप्ते शेषेभ्यस्तु गुरुत्वात् "गुरोश्च हलः"३।३।१०३ इत्यकारे क्तिन विधीयते। "इष्टिः" इति। वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्।"कीर्णिः,गीर्णिः, शीर्णिः" इति। "ॠत इद्धातोः" ७।१।१०० इतीत्त्वम्, रषादिसूत्रेण ८।४।१ णत्वम्। यथा "रदाभ्याम्" ८।२।४२ इत्यादिना कीर्ण इति निष्टायास्तकारस्य नत्वं भवति, तथेहापि क्तिनः। यथा "ल्वादिभ्यः"८।२।४४ इति लून इत्यत्र निष्ठातकारस्य नत्वं तथा "लूनिः, यूनिः"इत्यात्रापि क्तिनः॥

तत्त्व-बोधिनी

स्त्रियां क्तिन् १५५६, ३।३।९४

स्त्रियां क्तिन्। घञोऽपवाद इति। यत्तु प्रक्रियाग्रन्थं व्याचक्षाणा आहुः--"भाष्ये त्वधिकः कारोऽधिकार" इति घञप्युदाह्रत" इति, तद्रभसात्। न हि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः, किंतु पुंस्त्वविशिष्ट इति ध्येयम्। अजपौ त्विति। तयोरवकाशः--चयः। लवः। क्तिनोऽकाशः--कृतिः। ह्मतिः। चिनोतिस्तौतिभ्यां तु स्त्रियामुभयप्रसङ्गे परत्वात्

क्तिन्नित्यर्थः। [प्रामादिकम्। "स्फायः स्फी निष्ठायाटमिति निष्ठायामेव स्फीभावविधानादिति भावः]। श्रुयजीति। परत्वात् "करणाधिकरणयोश्चे"ति ल्युटि प्राप्ते वचनम्। श्रुतिः -श्रोत्रम्। यजेरिति। यजेः क्तिनि "वचिस्वपी"ति संप्रसारणे "व्रश्चभ्रस्जे"ति षत्वे इष्टिरिति रूपम्। इज्यतेऽनयेति विग्रहःओ। एवमिष्यतेऽनया इष्टिः। स्तूयतेऽनया स्तुतिः। तेन नत्वमिति। कीर्णिरित्यादौ "रदाभ्या"मित्यनेन नत्वम्। लूनिरित्यादौ तु "ल्वादिभ्यः" इत्यनेनेति विवेकः। ह्लाद इति। "ह्लादो निष्ठाया"मित्यत्रेत्यर्थः। चूर्तिरिति। "ति चे"ति चरफलोरुत्वे "र्वोरुपधाया दीर्घः" इति दीर्घः। चायतेः। चायृ पूजानिशामनयोः]। क्तिन्नपीति। अस्त्रियामिति प्रतिषेधेन स्त्रियां वासरूपविधेरबाधादिदमुक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

स्थागापापचो भावे ३।३।९५

स्त्रियाम् इति वर्तते। स्थादिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन् प्रत्ययो भवति। अङो ऽपवादस्य बाधकः। प्रस्थितिः। उद्गीतिः। सङ्गीतिः। प्रपीतिः। इति ज्ञापकात् नात्यन्ताय बाधा भवति इति।

न्यासः

स्थागापापची भावे। , ३।३।९५

"अङोऽपवादस्य बाधकः" इति। स्थादिभ्यः "आतश्चोपसर्गे"३।३।१०६ इति प्राप्तस्याङोऽपवादस्य बाधक इत्यर्थः। "पक्तिः" इति। "षिद्भिदादिभ्योऽङ" ३।३।१०४ इत्यस्य। "प्रस्थितिः" इति। "द्यतिस्यति" ७।४।४० इत्यादिनेत्वम्। "सङ्गीतिः"इति। धुमास्यादि ६।४।६६ सूत्रेणेत्वम्। अत्र च "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति "गै शब्दे" (धा।पा।९१७) "गाङ गतौ" (धा।पा।९५०) इति द्वयोरपि ग्रहणम्। "पा"इति। पूर्ववत् पानार्थस्य ग्रहणम्, न रक्षणार्थस्य। "भावग्रहणम्" इत्यादि। अर्थान्तरम् = कर्तृवर्जितं कराकम्, तन्निवृत्यर्थं भावग्रहणम्। "कथम्" इत्यादि। यद्यङोऽपवादस्यापवादोऽयं क्तिन्प्रत्ययस्तत् कथं "अवस्था संस्था" इति सिध्यति? न कथञ्चिदित्यभिप्रायः। "व्यवस्थायाम्" इत्यादि। यदिदं व्यवस्थाशब्दस्याङन्तस्य सूत्र उच्चारणमेतदेव ज्ञापकम्, अतः क्तिनात्यन्तबाधा न भवतीति, तेनावस्थेत्याद्यपि सिध्यति। "अत्यन्ताय" इति। चतुर्थ्यन्तप्रतिरूपको निपातोऽयम् यथा- चिरायेति॥

तत्त्व-बोधिनी

स्थागापापचो भावे १५५७, ३।३।९५

अङोऽपवादः इति। पुरस्तादपवादन्यायेन स्थादिभ्यः "आतश्चोपसर्गे" इति, पचेस्तु "षिद्भिदादिभ्यः" इति प्राप्तस्याऽङोऽपावदो न तु ण्वुलिञोरिति भावः। ण्वुलिञौ तु परत्वाद्भवत एव। "कां त्वं स्थायिकां , कां त्वं स्थायि"मिति भाष्यकारप्रयोगात्। प्रस्थतिरिति। "द्यतिस्यतिमास्था" मित्यात इत्वम्। सङ्गीतिरिति। "घुमास्थे"त्यादिना ईत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

मन्त्रे वृषैषपचमनविदभूवीरा उदात्तः ३।३।९६

भावे स्त्रियाम् इति वर्तते। मन्त्रे विषये वृषादिभ्यः धातुभ्यः क्तिन् प्रत्ययो भवति उदात्तः। प्रकृतिप्रत्यययोः विभक्तिविपरिणामेन सम्बन्धः। कस्मादेवं कृतम्? वैचित्र्यार्थम्। वृष्टिः। इष्टिः। पक्तिः। मतिः। वित्तिः। भूतिः। वीतिः। रातिः। सर्वत्र सर्वधातुभ्यः सामान्येन विहित एव क्तिन्। उदात्तार्थं वचनम्। इषेस्तु इच्छा ३।३।१०१ इति निपातनं वक्ष्यति,

ततः क्तिन्नपि विधीयते। मन्त्रादन्यत्र आदिरुदात्तः।

न्यासः

मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः।, ३।३।९६

"वृषु मृषु सेचने" (धा।पा।७०६,७०७), "{इष--धा।पा।} इषु इच्छायाम्"} (धा।पा।१३५१), "डुपचष् पाके" (धा।पा।९९६), "मन ज्ञाने" (धा।पा।११७६), "विद ज्ञाने" (धा।पा।१०६४),"भू सत्तायाम्" (धा।पा।१), "वी गतिव्याप्तिप्रजनादिषु" (धा।पा।१०४८), "रा {दाने -धा।पा।} आदाने" (धा।पा।१०५७)। "प्रकृतिप्रत्यययोः" इति। प्रकृतिसामान्यविवक्षायां द्विवचनम्, अन्यथा हि बहुत्वात् प्रकृतीनां बहुवचनं स्यात्। "विभक्तिविपरिणामेन सम्बन्धः" इति। वृषादिभ्यो या प्रथमा तस्या अर्थात् पञ्चमीपरिणामः। तेन प्रकृतिप्रत्यययोः सम्बन्धः; अन्यथा सम्बन्धानुपपत्तेः। "मतिः" इति। "अनुदात्तोपदेश" ६।४।३७ इत्यादिनाऽनुनासिकलोपः। "सर्वत्र" इत्यादि। मन्त्रे च, अमन्त्रे च -- सर्वत्र वृषादिभ्यः क्तिन्विहितः। पचेरपि स्थागादि ३।३।९५ सूत्रेण। यद्येवम् किमर्थमिदमित्याह-- "उदात्तार्थम्" इति। "इषेस्तु" इत्यादि। इषेरिच्छेति निपातनं वक्ष्यति; तस्मात् क्तिन्विधीयते, अन्यथा निपातनेनैवास्य स्यात्। वृषादिभ्यः क्तिन्प्रत्यय एव विधातव्यः। उदात्तवचनमुत्तरार्थम्। "व्रजयजोर्भावे क्यप्" ३।३।९८ इति क्यबुदात्तो यथा स्यात्॥

---

सूत्रम्

काशिका-वृत्तिः

ऊतियूतिजूतिसातिहेतिकीर्तयश् च ३।३।९७

मन्त्रे इति न अनुवर्तते। ऊत्यादयः शब्दा निपात्यन्ते। उदात्तः इति वर्तते। अवतेः ज्वरत्वरस्रिव्यविमवाम् उपधायाश्च ६।४।२० इति ऊथ्। ऊतिः। स्वरार्थं वचनम्। यौतेर् जवतेश्च यूतिः, जूतिः। दीर्धात्वम् च निपात्यते। सातिः। स्यतेः इत्वाभावो निपात्यते, सनोतेर् वा जनसनखनां संज्ञालोः ६।४।४२ इत्यात्वे कृते स्वरार्थं निपातनम्। हन्तेर् हिनोतेर् वा हेतिः। कीर्तयतेः कीर्तिः।

लघु-सिद्धान्त-कौमुदी

ऊतियूतिजूतिसातिहेतिकीर्तयश्च ८६७, ३।३।९७

एते निपात्यन्ते॥।

न्यासः

ऊतियूतिजूतिसातिहेतिकीत्र्तयश्च।, ३।३।९७

"स्वरार्थं वचनम्" इति। न तु प्रत्ययार्थम्। "स्त्रियां क्तिन्" ३।३।९४ इत्येव सिद्धत्वात्। नाप्यूडर्थम्; "ज्वरत्वर" ६।४।२० इत्यादिनैव सिद्धत्वात्। "यौतेः"इति। "यु {मिश्रणेऽमिश्रणे च-धा।पा} मिश्रणे (धा।पा।१०३३) इत्यस्य। "जवतेश्च" इति। "जु" इत्यस्य सौत्रस्य ३।२।१५० धातोः। "दीर्घत्वञ्च" इति। चकारादुदात्तत्वञ्च। क्तिन् सामान्यलक्षणेनैव सिद्धः। "ल्यतेः" इति। "षोऽन्तकर्मणि" (धा।पा।११४७) इत्यस्य। "इत्त्वाभावोऽपि निपात्यते" इति। "द्यतिस्यति" ७।४।४० इत्यादिनेत्त्वं प्राप्नोति, ततस्तस्याभावो निपात्यते। "सनोतेर्वा" इति। "षणु दाने" (धा।पा।१४६४) इत्यस्य। "जनसनखनाम्" ६।४।४२ इत्यात्त्वे कृते सातिरिति सिध्यतीति शेष-। यद्येवम्, किमर्थं निपातनमित्याह-- "स्वरार्()थम" इत्यादि। असति हि निपातने सातिशब्द आद्युदात्तः स्यात्। अन्तोदात्तो यथा स्यादित्येवमर्थ निपातनम्। "हन्तेर्हितनोतेर्वा" इति। हेतिरिति यदा हन्तेः, तदा हकारस्यैत्त्वं निपात्यते, अनुनासिकलोपस्तु "अनुदात्तोपदेश" ६।४।३७ इत्यादिनैव सिद्धः। यदा तु "हि {गतौ बुद्धौ च-धा।पा} (धा।पा।१५७) इत्स्य, तदा गुणो निपात्यते। "कीर्त्तिः"इति। "कृतं

संशब्दने" (धा।पा।१६५३) इत्यस्माच्चुरादिणिजन्तात् "ण्यासश्रन्थो युच्" ३।३।१०७ इति युचि प्राप्ते क्तिन्निपात्यते। "उपधायाश्च" ७।१।१०१ इतीत्त्वम् भवति, "हलि च" ८।२।७७ इति दीर्घत्वम्॥

तत्त्व-बोधिनी

ऊतियूतिजूतिसातिहेतिकीर्तयश्च १५५८, ३।३।९७

उदात्त इतीति। "मन्त्रे वृषेषे"ति सूत्रादनुवर्तत इत्यर्थः। एवं च क्तिन्नन्तस्याद्युदात्तत्वे प्राप्ते "ऊतियूती"त्यादयोऽन्तोदात्ता इति पर्यवसन्नोऽर्थः। इत्त्वाऽभाव इति। "द्यतिस्यती"ति प्राप्तस्याऽभाव इत्यर्थः। हन्तेरिति। नकारस्येत्वं, हिनोतेस्तु गुण इति बोध्यम्। कीर्तिरिति। कीर्तयतेः "ण्यासश्रन्थे"--ति युचि प्राप्ते क्तिननिपात्यते, उदातत्वं च। "तां सुते कीर्तिम्"।

---

सूत्रम्

काशिका-वृत्तिः

व्रजयजोर् भावे क्यप् ३।३।९८

उदात्तः इत्येव। व्रजयजोः धात्वोः स्त्रीलिङ्गे भावे क्यप् प्रत्ययो भवति उदात्तः। क्तिनो ऽपवादः। व्रज्या। इज्या। पित्करणम् उत्तरत्र तुगर्थम्।

न्यासः

व्रजयजोर्भावे क्यप्।, ३।३।९८

"इज्या" इति। वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्। यद्युदात्तं विधीयते पित्करणं किमर्थमित्याह-- "पित्करणमुत्तरत्र" इत्यादि॥

तत्त्व-बोधिनी

व्रजयजोर्भावे क्यप् १५५९, ३।३।९८

व्रजयजोः। उदात्त इत्येव। पित्करमं तूत्तरत्र तुगर्थम्।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ३।३।९९

भावे इति न स्वर्यते। पूर्व एव अत्र अर्थाधिकारः। समजादिभ्यो धातुभ्यः स्त्रियां क्यप् प्रत्ययो भवति उदात्तः संज्ञायां विषये। समजन्ति अस्यामिति समज्या। निषद्या। निपत्या। मन्या। विद्या। सुत्या। शय्या। भृत्या। इत्या। कथं तदुक्तम् स्त्रियां भावाधिकारो ऽस्ति तेन भार्या प्रसिध्यति इति? भावाधिकारो भावव्यापारः वाच्यत्वेन विवक्षितः, न तु शास्त्रीयो ऽधिकारः।

न्यासः

संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः।, ३।३।९९

"भाव इति न स्वर्यते" इत्यादि। स्थागादिसूत्रे ३।३।९५ यद्भावग्रहणं कृतं तस्यैव स्वरितत्वं न क्रियते। "भावे" ३।३।१८ "अकर्त्तरि च कारके संज्ञायाम्" ३।३।१९ इत्येष एवाधिकारः। "समज्या" इति। "अजेर्व्यघञपोः"२।४।५६ इति वीभावो न भवति; संज्ञायामिति वचनात्। न हि वीभावे कृते संज्ञा गम्यते, नियतवर्णानुपूर्वीका हि संज्ञा भवति। "निपत्या" इति।

निपतन्ति तस्यामिति। "षद्()लृ विशरणगत्यवसादनेषु" (धा।पा।८५४)। निषीदन्ती तस्यामिति। "निपत्या" इति। निपतन्ति तस्यामिति। "मत्या" इति। मन्यन्ते तयेति मत्या। पूर्ववदनुनासिकलोपः, ह्रस्वस्य तुक्। विदन्ति तया विद्या। सुन्वन्ति तस्यां सुत्या। शेरते तस्यां शय्या। "अयङ यि क्ङिति"७।४।२२ इत्ययङादेशः। भरणं भृत्या। एति तयेत्या = अयनमिति। "भृञोऽसंज्ञायाम्" ३।१।११२ इत्यत्र--- "संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति।" स्त्रियां भावाधिकरोऽस्ति तेन भार्या प्रसिध्यति॥ इत्युक्तम्, इह "भाव इति न स्वर्यते" (का।३।३।९८) इत्यभिहितम्, अतः पूर्वोत्ततरवचनं व्याहतमिति मन्यमान आह-- "कथम्" इत्यादि। यदीह "भावे" ३।३।१८ इति न स्वर्यते तत्कथं "स्त्रियां भावाधिकारोऽस्ति" इत्युक्तम्, न हि "भावे" इत्यस्वर्यमाणे भावाधिकारस्येहास्तित्वमुपपद्यते? "भावाधिकारो भाव्यव्यापारः"इत्यादि परिहारः। भावाधिकारशब्देन तत्र व्यापारो वाच्यत्वेन विवक्षितः। स पुनर्भृत्याशब्दाभिधेयभावोपगमनलक्षमः। अत एवैतदुक्तं भवति-- "संज्ञायां समजनिषद" इत्यादिना व्युत्पादितस्य भृत्याशब्दस्य भाव एवाभिधेयमुपयाति, न तु कर्तृवर्जितं कारकम्। तेन कर्मणि कारके भार्येति सिध्यीति। न तु शास्त्रीयोऽधिकारोऽयं स्वरितत्वासङ्गात् प्रियोगमुपतिष्ठते, स तत्र भावशब्देन विवक्षितो मा भूत्। समजन्ति तस्यां समज्या, निषीदन्ति तस्यां निषद्या, विदन्त्यनया विद्येत्येवमादीनां कारके करणादिके करणादसाधुत्वमिति न। कथं पुनः "भावेऽकत्त्तरि च कारके" (३।३।१८,१९) सर्वस्मिन्ननुवत्त्तमाने क्वचिद्भावः क्यबन्तस्याभिधेयभावमुपयाति? क्वचिदकर्त्तृकारकमेवेत्येष नियमो लभ्यते? संज्ञावशात्। यत्रोत्पद्यमानेन प्रत्ययेन संज्ञा गम्यते तत्र भाव एवाभिधेयत्वं प्रतिपद्यते, इतरदुदास्ते। यत्र त्वकत्त्तरि कारके प्रत्ययेनोत्पन्नेन संज्ञा गम्यते तत्र तदभिधेयतामुपयाति, भावस्त्वौदासीन्यमवलम्बते। "अकत्त्तरि च कारके संज्ञायाम्"३।३।१९ इति संज्ञाग्रहणेऽनुवत्त्तमाने पुनः संज्ञाग्रहणं भावार्थम्, पूर्वकं हि संज्ञाग्रहणमकर्त्तृकारकेण सम्बद्धमिति। ततः कर्तृवर्जित एव कारके संज्ञायां स्यात्, न भावे। तस्माद्भावेऽपि संज्ञायामेव यथा स्यादित्येवमर्थं पुनः संज्ञाग्रहणम्। अथ कथं भृतिः, मतिः, आसुतिरिति? निपातनात्। किं पुनर्निपातनम्? "कर्मणि भृतौ" ३।२।२२, "मतिबुद्धिपूजार्थेभ्यश्च" ३।२।१८८ "रजःकृष्यासुतिपरिषदो वलच्" ५।२।१११ #इति॥

तत्त्व-बोधिनी

संज्ञायां समजनिषदनिपतमनविदषुञ्?शीङ्?भृञिणः १५६०, ३।३।९९

गलपार्(ेति। तया हि क्रुद्धो ज्ञायत इति भावः। शेरतेऽस्यामिति शय्या। भरणं भृत्या = जीविका। "कुमारभृत्या-- गर्भिण्याः परिचर्याऽभिधीयते" इति हारावली। "कुमारमृत्याकुशलैरधिष्ठिते" इति रघुः। संज्ञायां किम्?। मतिः। भृतिः। आसुतिः। तथा च व्यवह्मतं -"मतिबुद्धिपूजार्थेभ्यश्चट "कर्मणि भृतौ" "रजः कृष्यासुती"त्यादि। एतेन "मतिबुद्धी"त्यादसूत्रप्रयोगादेव मतिभृत्यादीनां साधुत्वमिति दुर्घटाद्युक्तिः प्रत्युक्ता।

---

सूत्रम्

काशिका-वृत्तिः

कृञः श च ३।३।१००

करोतेर् धातोः स्त्रियां शः प्रत्ययो भवति। चकारात् क्यप् च। योगविभागो ऽत्र कर्तव्यः, क्तिन्नपि यथा स्यात्। क्रिया, कृत्या, कृतिः।

न्यासः

कृञः श च। , ३।३।१००

"योगविभागोऽत्र कत्र्तव्यः" इति। कृञः क्यबिति भवति, ततः शश्च, यथाप्राप्तञ्चेति, तेन त्रीणि रूपाणि सिध्यन्ति। तत्र "कृञः"इति योगेन कृत्येत्येतद्रूपं सिध्यति, "श च" इत्यनेन क्रिया कृतिरिति चेत्येतद्रूपद्वयं क्रियत इति। यदा भावे शब्दस्तदा "सार्वधातुके यक्" ३।१।६७, "रिङ् शयग्लिङक्षु" ७।४।२४ इति रिङादेशः। यदा त्वकत्र्तरि कारके तदा यगभावाच्छ एव प्रत्यये परतो धातोरिङादेशे कृते "अचि श्नुधातु" ६।४।७७ इत्यादिना तस्येयङ्। शकारः सार्वधातुकार्थः॥

तत्त्व-बोधिनी

कृञः श च १५६१, ३।३।१००

क्रियेति। यदा भावकर्मणोः शस्तदा "सार्वधातुके यक्"। "रिह् शयग्लिङ्क्षु" इति रिङादेशः। अन्यत्र तु यगभावेऽपि शे परतो रिङादेशे कृते इयङि सति रूपं तुल्यम्।

---

सूत्रम्

काशिका-वृत्तिः

इच्च्या ३।३।१०१

इषेः धातोः शः प्रत्ययो यगभावश्च निपात्यते। इच्छा। परिचर्यापरिसर्यामृगयाटाट्यानाम् उपसङ्ख्यानम्। परिचर्या। परिसर्या। मृगया। अटाट्या। जागर्तेरकारो वा। जागरा, जागर्या।

लघु-सिद्धान्त-कौमुदी

इच्छा ८६९, ३।३।१०१

इषेर्निपातोऽयम्॥

न्यासः

इच्छा। , ३।३।१०१

इषर्भावे शप्रत्ययो भवति; अभिधानशक्तिस्वाभाव्यात्, न कारके। "यगभावश्च" इति। "सार्वधातुके यक्" ३।१।६७ इति यक् स्यात्, अतस्तदभावो निपात्यते। "इच्छा" इति। "इषुगमि" ७।३।७७ इत्यादिना छत्वम्। "परिचर्या" इत्यादि। "चर गत्यर्थः" (धा।पा।५५९), "सृ गतौ" (धा।पा।९६५), "मृग अन्वेषणे" (धा।पा।१९००) चुरादावदन्तः, "अट पट गतौ" (धा।पा।२९५,२९६)--एभ्यो भावे शः, पूर्ववद्यक्, सत्र्तेर्गुणः। मृगयतेरकारलोपाभावः, "णेरनिटि" ६।४।५१ इति णिलोपः। "अटाट()आ" इति। अटतेर्द्विवचनात्त्वञ्चाभ्यासस्य। "जागत्र्तेरकारो वा" इति। यदा शस्तदा "सार्वधातुके यक्" ३।१।६७, "जाग्रोऽविचिण्णल्ङित्सु" ७।३।८५ इति गुणः। "जागरा" इति यदा त्वकारः॥

तत्त्व-बोधिनी

इच्छा १५६२, ३।३।१०१

इच्छा। इषेर्भाव इति। न त्वकर्तरि कारकेऽपीत्यर्थः। अतएव करणेऽर्थे इष्यतेऽनया इष्टिरिति प्रागुक्तम्। यकारनिवृत्तिरिति। हलादिः शेषस्तु नास्ति, षाष्ठाद्वित्वे धातुद्वत्वे वाऽभ्याससंज्ञास्वीकारात्। इह च तदुभयाऽभावादिति भावः। अटाट()एति। यदा तु अटतेर्यङन्तादप्रत्ययादित्यकारस्तदाऽतोलोपे "यस्य हलः" इति यलोपेऽटाटेति रूपं बोध्यम्। द्वित्वे हलादिः शेषे सति "दीर्घोऽकितः इत्यभ्यासस्य दीर्घप्रवृत्तेः। जागर्तेरिति। शे परतः "सार्वधातुके यक्"। "जाग्रोऽविचिण्ण"लिति गुणः।

---

सूत्रम्

काशिका-वृत्तिः

अ प्रत्ययात् ३।३।१०२

प्रत्ययान्तेभ्यो धातुभ्यः स्तिर्याम् अकारः प्रत्ययो भवति। क्तिनो ऽपवादः। चिकीर्षा। जिहीर्षा। पुत्रीया। पुत्रकाम्या। लोलूया। कण्डूया।

लघु-सिद्धान्त-कौमुदी

अ प्रत्ययात् ८७०, ३।३।१०२

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात्। चिकीर्षा। पुत्रकाम्या॥

न्यासः

अ प्रत्ययात्। , ३।३।१०२

"धातोः" ३।१।९१ इत्यधिकारात् प्रत्ययग्रहणं धातोर्विशेषणं विज्ञायत इत्याह-- "प्रत्ययान्तेभ्यो धातुभ्यः" इति। "चिकीर्षा" इति। चिकीर्षशब्दात् सन्नन्तादप्त्ययः। "पुत्रीया" इति। "सुप आत्मनः क्यच्" ३।१।८, "क्यचि च" ७।४।३३ इतीत्वम्। "पुत्रकाम्या" इति। "काम्यच्च" ३।१।९ इति काम्यच्। "लोलूया" इति। "धातोरेकाचो हलादेः"३।१।२२ इति यङ॥

---

सूत्रम्

काशिका-वृत्तिः

गुरोश् च हलः ३।३।१०३

हलन्तो यो धातुः गुरुमान्, ततः स्त्रियाम् अकारः प्रत्ययो भवति। क्तिनो ऽपवादः। कुण्डा। हुण्डा। ईहा। ऊहा। गुरोः इति किम्? भक्तिः। हलः इति किम्? नीतिः।

लघु-सिद्धान्त-कौमुदी

गुरोश्च हलः ८७१, ३।३।१०३

गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात्। ईहा॥

न्यासः

गुरोश्च हलः। , ३।३।१०३

"धातोः ३।१।९१ इत्यधिकाराद्गुरुग्रहणं हल्ग्रहणं च तस्यैव विशेषणं विज्ञायत इत्याह-- "गुरुमान् हलन्तो यो धातुः" इत्यादि। कथं पुनर्गुरोरित्युच्यमाने गुरुमान् धातुर्लभ्यते? सामथ्र्यात्। न हि हलन्तस्य धातोः कस्यचिद्गुरुसंज्ञा विहिता, उच्यते चेदं गुरोरिति, तत्र सामथ्र्याद्गुरुमान् धातुर्गुरुसंज्ञाकेनाभेदोपचारं कृत्वा गुरुशब्देनोक्त इति गम्यते। इष्यते ह्रभेदोपचाराद्विनापि मतुपा तद्वतोरभिधाम्-- यथा-- शुक्लः पट इति। अथ रुधादिभ्य एव यथा स्यात्, कुडिप्रभृतीभ्यो मा भूदित्येवमर्थो विपर्ययः कस्मान्न विज्ञायते "गुर्वन्तो यो धातुर्हल्वान्" इति? ज्ञापकात्, यदयं "गत्यर्थकर्मणि द्वितीयाचतुथ्र्यौ चेष्टायामनध्वनि" २।३।१२ इत्यप्रत्ययान्तस्य चेष्टाशब्दस्य "शकि शङ्गायाम्" (धा।पा।८६) इति च शङ्काशब्दस्य निर्देशं करोति, ततो ज्ञायते-- नात्र विपर्यय इति। विपर्यये हि न हि चेष्टेति गुर्वन्तः, नापि शङ्केति। "कुण्डा" इत्यादि। "कुडि दाहे" (धा।पा।२७०), "हुडि सङ्घाते" (धा।पा।२६९), "ईह चेष्टायाम्" (धा।पा।६३२) "ऊह वितर्के" (धा।पा।६४८)-- इत्येषां रूपाणि॥

तत्त्व-बोधिनी

गुरोश्च हलः १५६३, ३।३।१०३

गुरोश्च। धातोरित्यनुत्यवृत्त्या हल इति धातोर्विशेषणात्तदन्तविधौ हलन्तो धातुर्लभ्यते। न चाऽयं गुरुरिति संभवति। अज्विषयो हि गुरुः, अतो मत्वर्थो लक्ष्यते। तदाह --गुरुमत इति। ननु विपरीतमस्तु "गुर्वन्ताद्धल" इति, तादृशस्यापि धातोर्डुक्रीञित्यादेः सत्त्वादिति चेन्मैवम्। "चेष्टायामनध्वनि" "आशंसायां भूतवच्चे"ति निर्देशेन विपरीतशङ्काया अप्रवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

षिद्भिदादिभ्यो ऽङ् ३।३।१०४

षिद्भ्यः भिदादिभ्यश्च स्त्रियाम् अङ् प्रत्ययो भवति। गणपठितेषु भिदादिषु निष्कृष्य प्रकृतयो गृह्यन्ते। जृष् जरा। त्रपूष् त्रपा। भिदादिभ्यः खल्वपि भिदा। छिदा। विदा। क्षिपा। गुहा गिर्योषध्योः। श्रद्धा। मेधा। गोधा। आरा। हारा। कारा। क्षिया। तारा। धारा। लेखा। रेखा। चूडा। पीडा। वपा। वसा। सृजा। क्रपेः सम्प्रसारणं च कृपा। भिदा विदारणे। भित्तिः अन्या। छिदा द्वैधीकरणे। छित्तिः अन्या। आरा शस्त्र्याम्। आर्तिः अन्या। धारा प्रपाते। धृतिः अन्या।

न्यासः

षिद्भिदादिभ्योऽङ्। , ३।३।१०४

"गणपरिपठितेषु"इत्यादि। भिदादयोऽङन्ता एव गणे पठ()न्ते, तेभ्योयदि पुनरिहाङ विहितः प्रातिपदिकेभ्यो विहितः स्यात्, तच्चायुक्तं स्यात्, धात्वधिकारात्,तस्माते तेषु याः प्रकृतयोऽवयवभूतास्ता निष्कृष्य पृथक्कृत्वा "षिद्भिदादिभ्योऽङ्" इति भिदादिग्रहणेन निर्दिश्यन्ते। ताः पुनः "भिदिर् विदारणे" (धा।पा।१४३९), "छिदिर् द्वैधीकरणे" (धा।पा।१४४०), "विद ज्ञाने" (धा।पा।१०६४), "क्षिप प्रेरणे" (धा।पा।१२८५), "गुहू संवरणे" (धा।पा।८९६), "डुधाञ् धारणपोषणयोः" (धा।पा।१०९२), "{मिदृ मेधाहिंसनयोः"-धा।पा।}{मेदृ सङ्गमे च।धा।पा।} मेधृ हिंसासंक्लेशनयोः" (धा।पा।८६८,८६९), "ऋ गतौ" (धा।पा।१०९८), "ह्मञ् हरणे" (धा।पा।८९९) "डुकृञ् करणे" (धा।पा।१४७२), "क्षि क्षये" (धा।पा।२३६), अथवा "क्षि निवासगत्योः" (धा।पा।१४०७), "तृ प्लवनतरणयोः" (धा।पा।९६९), "घृञ् धारणे" (९००), "लिख अक्षरविन्यासे" (धा।पा।१३६५), "चुद {सञ्चोदने-धा।पा।}समुच्छ्रये(धा।पा।१५९२), "पीड अवगाहने" (धा।पा।१५४४), "डुवप {बीजतन्तुसन्ताने, छेदनेऽपि#ऋधा।पा।} बीजतन्तुसन्ताने" (धा।पा।१००३), "वस निवासे" (धा।पा।१९४२), "{मृजू-धा।पा।}मृजूष् शुद्धौ" (धा।पा।१०६६),"क्रप {कृपायां गत#औ च-धा।पा।} (धा।पा।७७१) इत्येते वेदितव्याः। यदि तर्हि प्रकृतयो निर्दिश्यन्ते भिदादीनां गणे पाठोऽनर्थकः? अथ पाठः क्रियते प्रत्ययविधानमनर्थकम्? गणे पाठस्तावन्नानर्थकः; प्रसिद्ध्युपसंग्रहार्थत्वात्। प्रसिद्ध्युसंग्रहस्तु यत्र भिदादयः समुदायाः प्रसिद्धास्तत्रैवैषां साधुत्वं यथा स्यात्, अन्यत्र मा भूदित्येवमर्थः। तेन यदुक्तं भाष्ये "भिदा विदारणे" (ग।सू।२९) इत्येवमादि, तदुपपन्नं भवति। न च प्रत्ययविधानमनर्थकम्; असन्देहार्थत्वात्। असति हि तस्मिन् सन्देहः स्यात--किमेषु "इगुपधज्ञाप्रीकिरः कः" (३।१।१३५) इत्येवमादिना लक्षणान्तरेण कप्रभृतादयः प्रत्यया विहिताः? उताङ्प्रत्यय एव? इति। ततर् पूर्वस्मिन् पक्षे स्त्रीत्वविवक्षायां क्तिन् प्रसज्यते, कस्मात्? असन्देहार्थत्वात्। अतः प्रत्ययविधानं नानर्थकम्। "आरा" इति। "ऋदृशोऽङि गुणः" ७।४।१६। "गुहा गिर्य्योषध्योः"इति। गुहाशब्दो गिर्य्योषध्योरेव साधुर्भवति, नान्यत्र। गिरिशब्दश्चात्र "समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वत्र्तन्ते" (व्या।पा।सू।८५) इत्येकदेशे वत्र्तते। गुहेति गिरेः कश्चिदेवैकदेश

उच्यते। गुहा नामौषधिः। अन्यत्र गुहेः क्तिन् भवति-- गूढिरिति। "हो ढः" ८।२।३१, "झतस्तथोर्घोऽधः" ८।२।४०, "ष्टुना ष्टुः" ८।४।४० "ढो ढे लोपः" ८।३।१३, "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११०। "हारा, कारा, धारा"इति। गुणे कृते दीर्घत्वं निपात्यते। "लेखा, रेखा" इति। लिखेर्गुणो निपात्यते। पक्षे लकारसय् रेफश्चादेशः। "चूडा" इति। चोदयतेर्डत्वादेशो निपात्यते, उपधाया दीर्घश्च। "आरा शस्त्र्()याम्िति। आराशब्दः शस्त्र्यां साधुर्भवति, अत्रापि गुणे कृते दीर्घत्वं निपात्यते। "आर्त्तिरन्या" इति। अत्रेराङपूर्वस्य क्तिन्। "उपसर्गादृति धातौ" ६।१।८८ इत्येकादेशः, रपरत्वम्। "धारा प्रपाते" इति। यत्र प्रपातनं तत्र धारेति, यथा-- जलधारा, क्षीरधारेति॥

तत्त्व-बोधिनी

षिद्भिदादिभ्योऽङ्। १५६४, ३।३।१०४

षिद्भिदा। कथं तर्हि "मुखाब्जगन्धलब्धे" रिति माघः। "प्रेक्षोपलब्धि"रित्यमरश्च। षित्वादङि "लभे"त्येव ह्रुचितम्। सत्यम्। "अनर्थकास्तु प्रतिवर्णमनुपलब्धे" रिति भाष्यप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः। विस्तरस्त्विह मनोरमायां बोध्यः। भिदेति। एवमादयोऽदन्ताः समुदाया एव गणे पठ()न्ते तत्र ये प्रकृतिभागा भिद-छिद इत्यादयस्ते आदिशब्देन सूत्रे निर्दिष्टाः। गणे विशिष्टपाठस्तु लोकप्रसिद्धार्थविशेषस्य कवचिदलाक्षणिककार्यस्य सङ्ग्रहार्थः। भित्तिरन्येति। भिद्यत इति भित्तिः = कुड()म्। छिदेति। द्वैधीकरण एवायम्। अन्यत्र तु छित्तिश्छिद्रम्। मृजेति। भृजू शुद्धौ, अस्याऽषित्वाद्भिदादौ पाठः।

---

सूत्रम्

काशिका-वृत्तिः

चिन्तिपूजिकथिकुम्बिचर्चश् च ३।३।१०५

चिति स्मृत्याम्, पूज पूजायाम्, कथ वाक्यप्रबन्धे, कुबि आच्छादने, चर्च अध्ययने चुरादिः, एभ्यो धातुभ्यः युचि प्राप्ते स्त्रियाम् अङ् प्रत्ययो भवति। चिन्ता। पूजा। कथा। कुम्बा। चर्चा। चकारात् युचपि भवति। चिन्तना।

न्यासः

चिन्तिपूजिकथिकुम्बचर्चश्च।, ३।३।१०५

"चुरादिः"इति। एतत् "चिति स्मृत्याम्" (धा।पा।१५३५) इत्यादिभिः प्रत्येकमभिसम्बध्यते। "युचि प्राप्ते" इति। "ण्यासस्रश्रन्थो युच्" ३।३।१०७ इत्यनेन। यस्तु भ्वादौ कुम्बिः पठ()ते ततो "गुरोश्च हलः" ३।३।१०३ इत्यकारेण भवितव्यम्। न च कुम्बेरकारेऽङि वा सति कश्चिद्विशेषोऽस्तीति नासाविह ग्रहणं प्रयोजयति॥

तत्त्व-बोधिनी

चिन्तिपूजिकथिकुम्बिचर्चश्च १५६५, ३।३।१०५

चिन्तिपूजि। चकारोऽनुक्तसमुच्चयार्थः। तेन तोलयतेस्तुलेति हरदत्तः। अतएव "तुलां यदारोहति दन्तवाससा" इति नैषधकृदाह। युचोऽपवादैति। "ण्यासश्रन्थे"ति वक्ष्यमाणस्येत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

आतश् च उपसर्गे ३।३।१०६

आकारान्तेभ्यः उपसर्गे उपपदे स्त्रियम् अङ् प्रत्ययो भवति। क्तिनो ऽपवादः। प्रदा। उपदा। प्रधा। उपधा श्रदन्तरोरुपसर्गवद् वृत्तिः। श्रद्धा। अन्तर्धा।

न्यासः

आतश्चोपसर्गे। , ३।३।१०६

"श्रदन्तरोः"इत्यादि। उपसर्गे इवोपसर्गवत्। यादृश्युपसर्गे वृत्तिः प्रत्ययोत्पत्तिलक्षणा, तादृश्येव तयोरपि भवति। तेन यथा प्रधा, उपधेत्युपसर्गे भवति, तथा श्रदन्तरोरपि श्रद्धा, अन्तर्धेति। न चेयं वृत्तिरुपसंख्यानसाध्या; यतः श्रद्धाशब्दस्तारकादिषु च पाठात् साधुत्वमनुभवति। अन्तर्धाशब्दोऽपि ज्ञापकात्, यदयं "अन्तर्धौयेनादर्शनमिच्छति" १।४।२८ इत्यन्तर्धिशब्दस्य किप्रत्ययान्तस्य निर्देशं करोति, ततो ज्ञायते-- भवत्यन्तःशब्द उपसर्गकार्यस्य निमित्तमिति; अन्यथा हि तस्मिन्ननुपपदे "उपसर्गे घोः किः" ३।३।९२ इति किप्रत्ययो न स्यात्, ततश्च "अन्तर्धौ" इति निर्देशो नोपपद्यते॥

---

सूत्रम्

काशिका-वृत्तिः

ण्यासश्रन्थो युच् ३।३।१०७

ण्यन्तेभ्यो धातुभ्यः, आस श्रन्थ इत्येताभ्याम् च स्त्रियाम् युच् प्रत्ययो भवति। अकारस्य अपवादः। कारणा। हारणा। आसना। श्रन्थना। कथम् आस्या? ऋहलोर् ण्यत् ३।१।१२४ भविष्यति। वासरूपप्रतिषेधश्च स्त्रीप्रकरणविषयस्य एव उत्सर्गापवादस्य। श्रन्थिः क्र्यादिर्गृह्यते श्रन्थ विमोचनप्रतिहर्षयोः इति , न चुरादिः श्रन्थ ग्रन्थ सन्दर्भे इति। ण्यन्तत्वेन एव सिद्धत्वात्। घट्टिवन्दिविधिभ्य उपसङ्ख्यानम्। घट्टना। वन्दना। वेदना। घट्टेः भौवादिकस्य ग्रहणं घट्ट चलने इति, न चुअरादिकस्य, तस्य णेः इत्येव सिद्धत्वात्। इषेरनिच्छार्थस्य युज् वक्तव्यः। अध्येषणा। अन्वेषना। परेर्वा। पर्येषना, परीष्टिः।

लघु-सिद्धान्त-कौमुदी

ण्यासश्रन्थो युच् ८७२, ३।३।१०७

अकारस्यापवादः। कारणा। हारणा॥

न्यासः

ण्यासश्रन्थो युच्। , ३।३।१०७

"अकारस्यापवादः" इति। "अ प्रत्ययात्" ३।३।१०२, "गुरोश्च हलः" ३।३।१०३ इति द्वाभ्यां यथायोगं प्राप्तस्य। "कथमास्या" इति। न कथञ्चित्। अः स्यादासेः, अनेन सूत्रेण युज्वा भविष्यति, नान्य इति भावः। "ऋहलोण्र्यत्" ३।१।१२४ इत्यादि परिहारः। ननु च वासरूपविधिना ण्यत्प्रत्ययः स्यात्, स च वासरूपविधिः स्त्रियां न भवति, "अस्त्रियाम्" ३।१।९४ इति प्रतिषेधात्, तत् किमुच्यते-- "ऋहलोण्र्यत्" (३।१।१२४) इति ण्यद्भविष्य(ती)ति? इत्यत आह-- "वासरूप" इत्यादि। एध चार्थस्तत्रैव प्रतिपादितः। "उपसंख्यानम्" इति। प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम्--- वक्ष्यमाणं बहुलग्रहणमुभयोरपि योगयोः शेषः, तेन घट्टिप्रभृतिभ्यो भविष्यीति। "वक्तव्यः"इति। व्याख्येय इत्यर्थः। व्याख्यानं तदेव बहुलग्रहणमाश्रित्य कत्र्तव्यम्। "अन्वेषणा" इति। "इष गतौ" (धा।पा।११२७), "इष आभीक्ष्ण्ये" (? ) इति वा॥

तत्त्व-बोधिनी

ण्यासश्रन्थो युच् १५६६, ३।३।१०७

आसनेति। आस्यतेऽस्यामिति विग्रहः। "ऋहलोण्र्य"दिति ण्यत्प्रत्यये त्वास्या। न च स्त्रीप्रत्यये वाऽसरूपविधिर्नेति शङ्क्यम्, अपवादस्य युचः स्त्रीप्करणस्थत्वेऽपि उत्सर्गस्य ण्यतस्तदभावात्। घट्टिवन्दि। विदिर्लाभार्थो गृह्नते। ज्ञानार्थस्य तु संवित्तिः। इषेरिति। अनिच्छार्थस्य युच्। इच्छार्थस्य् त्विषेरिच्छेत्येव।

---

सूत्रम्

काशिका-वृत्तिः

रोगाऽख्यायां ण्वुल् बहुलम् ३।३।१०८

रोगाख्यायां गम्यमानायां धातोः ण्वुल् प्रत्ययो बहुलं भवति। क्तिन्नादीनाम् अपवादः। आख्याग्रहणं रोगस्य चेत् प्रत्ययान्तेन संज्ञा भवति। बहुलग्रहणं व्यभिचरार्थम्। प्रच्छर्दिका। प्रवाहिका। विचर्चिका। न च भवति। शिरोर्तिः। धात्वर्थनिर्देशे ण्वुल् वक्तव्यः। आशिका। शायिका वर्तते। इक्श्तिपौ धातुनिर्देशे। भिदिः। छिदिः। पचतिः। पठतिः। वर्णात् कारः। निर्देश इति प्रकृतम्। अकारः। इकारः। रादिफः। रेफः। मत्वर्थाच् छः। अकारलोपः। मत्वर्थीयः। इणजादिभ्यः। आजिः। आतिः। आदिः। इक् कृष्यादिभ्यः। कृषिः। किरिः।

न्यासः

रोगाख्यायां ण्वुल्बहुलम्। , ३।३।१०८

"क्तिन्नादीनामपवादः" इति। आदिशब्देनाङादीनाम्।"आख्याग्रहणम्" इत्यादि। यदि प्रत्ययान्तं रोगस्य नाम भवत्येवं प्रत्ययो भवति। नान्यथेत्यस्यास्य संवाद्रायाख्याग्रहणम्। ते पदान्तरवाच्ये रोगे न भवति-- बुभुक्षा भस्मकेनेति। "बहुलग्रहणम्" इत्यादि। रोगाख्याया रोगाख्याया अन्यत्रापि ण्वुलो विधानं व्यभिचारः; तदर्थं बहुलग्रहणम्। तेन धात्वर्थनिर्देशेऽपि सिद्धो भवति। अपरोऽर्थः रोगाख्याया विषयाण्ण्वुलो विधेर्योऽन्यत्राप्यस्य लक्षणस्य विषये वृत्तिव्र्यभिचारः सः, तदर्थं बहुलग्रहणम्। तेन "इक्श्तिपौ धातुनिर्देशे"(वा।३१९) इत्येवमादि सर्वं संगृहीतं भवति। "प्रच्छर्दिका" इति। "छर्द वमने"(धा।१५८९) चुरादिः। "प्रवाहिका"इति। "वह प्रापणे"(धा।पा।१००४)। "प्रचर्चिका" इति। "चर्च अध्ययने" (धा।पा।१७१२) चुरादिः। अत्र वहेः क्तिनि प्राप्ते ण्वुल्ितरयोस्तु युचि। "शिरोऽस्तिः" इति। "अर्द हिंसायाम्" (धा।पा।१८२८), "अर्द {गतौ याचने च" -धा।पा।} गतौ" (धा।पा।५५) इति वा। "खरि च" ८।४।५४ इति चत्र्वम्। शिरसा सह षष्ठीसमासः, "ससजुषो रुः"८।२।६६, "अतो रोरप्लुतादप्लुते" ६।१।१०९ इत्युत्त्वम्, "आद्गुणः" ६।१।८४, "एङः पदान्तादति" ६।१।१०५ इत्येते विधयः कत्र्तव्याः। "इक्श्तिपौ"इति। ककारः कित्कार्यार्थः, तेन पचतिरिति सार्वधातुकनिबन्धनः शब्भवति। ननु च कर्तृवाचिनि सार्वधातुके शब्विधीयते; न चात्र कत्र्ता प्रत्ययार्थः;तत्कुतः शपः सम्भवः? सार्वधातुकसंज्ञार्थशित्करणसामाथ्र्यादकर्तृवाचिन्यपि सार्वधातुके शब्भविष्यति;अन्यथा हि शित्करणमनर्थकं स्यात्। यद्येवम्, यगपि स्यात्? अनभिधानान्न भविष्यति। "वर्णात्कारः" इति। वर्णादित्युच्यते, तत्रैवकार इति न सिध्यति? बहुलग्रहणसन्निधौ वचनात् क्वचिदवर्णादपि भविष्यतीत्यदोषः। अथ वा करणं कारः, एवस्य कारैति षष्ठीसमासोऽयम्। "मत्वर्थाच्छः" इति। अत्राकारलोपश्च वक्तव्यः। अभसंज्ञत्वद्धि न प्राप्नोति। बहुलग्रहणाद्वाकारलोपो भविष्यति। "इणजादिभ्यः" (इति)। "इक् कृष्यादिभ्यः" इति। अधातुनिर्देशार्थमेतत्। आज्यादयः शब्दाः संज्ञाशब्दा द्रष्टव्याः॥

तत्त्व-बोधिनी

रोगाख्यायां ण्वुल्बहुलम् १५६७, ३।३।१०८

रोगाख्या। धातोर्बहुलं ण्वुल् स्यात्प्रत्ययान्तं चेद्रोगस्यसंज्ञा। क्तिन्नादीनामपवादः। प्रच्छर्दिकेति। छर्द वमने।

प्रवाहिकेति। प्रवाहयति = मुहुर्मुहुः प्रवर्तयतीति प्रवाहिका = ग्रहणी। विचर्चिकेति। चर्च अध्ययने। प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः। "पाम पामा विचर्चिका" इत्यमरः। शिरोर्तिरिति। शिरःपीडा। अर्द हिंसायात्। "तितुत्रे"ति नेट्। धात्वर्थनिर्देश इति। क्रियानिर्देश इत्यर्थः। आसिका। शायिकेति। आसनं, शयनमित्यर्थः। इक्()श्तिपौ। धातोर्निर्देशः-अनुकरणम्। बहुलमित्यनुवृत्तेः क्वचिन्न। "गुप्तिज्किद्भ्यः सन्" "भुवो वुग्लुङ्लिटोः"। पचतिरिति। "उपसर्गात्सुनोति सुवतिस्यति" "ध्यायतेः संप्रसारमं चे"त्यादिनिर्देशादकर्तृवाचिन्यपि सार्वधातुके परे शबादयः। एवं भावकर्मवाचिन्यपि सार्वधातुके क्वचिद्यक्, "विभषा लीयतेः" इति यथा। तत्र हि "लीलीङोर्यका निर्देशो, न तु श्यने"त्युक्तम्। यत्तु प्राचा "श्तिपः शित्करणसामर्थ्याच्छबादय" इत्युक्तम्। तन्न। पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या , आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात्। वर्णादिति। वर्णानुकरणादित्यर्थः। न तु वर्णादुच्चार्यमाणादिति। तथा हि सत्यकार इत्यादावेव स्यान् तु ककार इत्यादौ। अत्र हि सङ्घातस्योच्चारणात्। अनुकार्यं त्विह वर्णमात्रम्, अकारत्सङ्घातादपि भवति, "उच्चैस्तरां वा वषट्()कारः" इति सूत्रनिर्देशात्। "सर्वे चकाराः प्रत्याख्यायन्ते" भाष्यप्रयोगाद्बहुलवचनाच्चेति। इह कारप्रत्ययस्य धातोरविहितत्वेऽपि धात्वदिकारस्थत्वात्कृत्संज्ञा। तेन कृदन्तत्वात्प्राप्तिपदिकत्वम्। प्रयोजनाऽभावन्न ककारस्येत्संज्ञा। आद्र्धधातुकत्वाऽभावादिडागमो न। "अस्य च्वौ" इत्यादौ तु कारप्रत्ययाऽभावो बाहुलकादेव। रादिफः। वाऽसरूपविधिना कारोऽपि। तेन "रकारादीनि नामानि शृण्वतो मम पार्वति" इत्यादि प्रयोगः साधुरेव। अकारलोप इति। अतद्धतपरत्वादभत्वाच्च "यस्ये"ति लोपस्याऽप्राप्तिरिति भावः। कृदन्तत्वात्प्राप्तपदिकत्वमिह पूर्ववद्बोध्यम्। "तसौ मत्वर्थे" इत्यत्र बाहुलकाच्छो न। "शैषकान्मतुबर्थीया"दित्यत्र तु बाहुलकादेव मतुबर्थशब्दाच्छः। अन्ये तु नैतत्कृदन्तं, मत्वर्थे भव इति विगृह्य गहादित्वाच्छप्रत्यये तद्धितान्तमेवेत्याहुः। इणजा। धात्वर्थनिर्देशे प्राप्तस्य ण्वुलऽपवादोऽयम्।एवमग्नेऽपि। आजिरिति। बाहुलकादजेर्वीभावो न।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् ३।३।१०९

संज्ञायां विषये धातोः ण्वुल् प्रत्ययो भवति। उद्दालकपुष्पभञ्जिका। वरणपुष्पप्रचायिका। अभ्यूषखादिका। आचोषखादिका। शालभञ्जिका। तालभञ्जिका।

न्यासः

संज्ञायाम्। , ३।३।१०९

"उद्दालकपुष्पभञ्जिका" इति। "नित्यं क्रीडाजीविकयोः" २।२।१७ इति षष्ठीसमासः। षष्ठी पुनरत्र "कर्तृकर्मणोः कृति" २।३।६५ इति कृद्योगलक्षणा॥

तत्त्व-बोधिनी

संज्ञायाम् १५६८, ३।३।१०९

संज्ञायाम्। अधिकरणे ण्वुलर्थोऽयमारम्भः। उद्दालकः = श्लेष्मातकः, तस्य पुष्पाणि भज्यन्ते यस्यां क्रियायां सा तथा भञ्जनं भञ्जिका। भावे ण्वुल्। उद्दालकपुष्पाणां भञ्जिकेत्यन्ये। सूत्रे आख्यानशब्दस्याऽल्पाच्तरत्वेन पूर्वनिपाते कृते व्याख्यानस्य प्रश्नपूर्वकतयाऽर्थप्राप्तकममनुसृत्य व्याचष्टे-- परिप्रश्ने आख्याने चेति।

---

सूत्रम्

काशिका-वृत्तिः

विभाऽअषख्यानपरिप्रश्नयोरिञ् च ३।३।११०

पूर्वं परिप्रश्नः, पश्चादाख्यानम्। सूत्रे ऽल्पाच्तरस्य पूर्वनिपातः। परिप्रश्ने आख्याने च गम्यमाने धतोः इञ् प्रत्ययो भवति, चकारात् ण्वुलपि। विभाषग्रहणात् परो ऽपि यः प्राप्नोति, सो ऽपि भवति। कां त्वं कारिमकार्षीः, कां कारिकाम् अकार्षीः, कां क्रियामकार्षीः, कां कृत्यामकार्षीः, का कृतिमकार्षीः? सर्वां कारिमकार्षम्, सर्वां कारिकाम् अकार्षम्, सर्वां क्रियामकार्षम्, सर्वां कृत्यामकार्षम्, सर्वां कृतिमकार्षम्। कां गणिमजीगणः, कां गणिकामजीगणः, कां गणनामजीगणः? सर्वां गणिमजीगणम्, सर्वां गणिकाम्, सर्वां गणनाम्। एवं कां याजिम्, कां याजिकाम्, कां याचिम्, कां यचिकाम्, कां पाचिम्, कां पाचिकाम् कां पचाम्, कां पक्तिम्, कां पाठिम्, कां पाठिकाम्, कां पठितिम् इति द्रष्टव्यम्। आख्यानपरिप्रश्नयोः इति किम्? कृतिः। हृतिः।

न्यासः

विभाषाख्यानपरिप्रश्नयोरिञ् च। , ३।३।११०

इह सूत्रे पूर्वमाख्यानस्य निर्देशः, पश्चात् परिप्रश्नस्य; वृत्तौ तु "परिप्रश्ने चाख्याने च गम्यमाने"इति पूर्व परिप्रश्नसोयपन्यासः,पश्चादाख्यानस्य; तत्र यश्चोदयेत्--किं कारणमेवं वृत्तौ विपर्ययः कृतः? इति, तं प्रत्याह-- "पूर्वं परिप्रश्नः"इत्यादि। परिप्रश्नपूर्वकं व्याख्यानं भवति, अतो वृत्तौ पूर्वं परिप्रश्नस्य तदुदाहरणस्य चोपन्यासः कृतः, पश्चादाख्यानस्य। क्रमव्यतिक्रमे प्रयोजनाभावादित्याभिप्रायः। सूत्रे तर्हि कस्मात् पूर्वं परिप्रश्नो न निर्दिष्टः, पश्चादाख्यानमित्याह-- "सूत्रे" इत्यादि। "अल्पाच्तरम्" २।२।३४ इति सूत्रेण द्वन्द्वे पदानां क्रमस्य नियत्वादल्पाच्तरस्याख्यानशब्दस्य सूत्रे पूर्वनिपातः कृत इति दर्शयति। "कां कारिम्िति। इञ्। "कां कारिकाम्" इति। ण्वुल्। "कां क्रियाम्" इति। "कृञः श च" ३।३।१०० इति शः। "कां कृत्याम्" इति। तत्र चकारात् क्यप्। "कां कृतिम्" इति। योगविभगात् क्तिन् कृतः। "कां गणिम्" इति। इञ्। "गण संख्याने" (धा।पा।१८५३) चुरादावदन्तः पठ()ते। "कां गणिकाम्" इति। ण्वुल्। "गणनाम्िति। युच्। एवम्--"कां पाचिम्" इत्यादि। "कां पाचिमकार्षीः", "कां पाचिकाम्" , "कां पचाम्"। "कां याजिम्" , "कां याजिकाम्" इत्यादि, कामिष्टिम्। "कां पाठिम्" , "कां पाठिकाम्" "कां पठितिम्" इति॥

---

सूत्रम्

काशिका-वृत्तिः

पर्यायार्हर्णौत्पत्तिषु ण्वुच् ३।३।१११

पर्यायः परिपाटीक्रमः। अर्हणमर्हः, तद्योग्यता। ऋणं तत् यत् परस्य धार्यते। उत्पत्तिः जन्म। एतेष्वर्थेषु धातोः ण्वुच् प्रत्ययो भवति। क्तिन्नादीनाम् अपवादः। पर्याये तावत् भवतः शायिका। भवतो ऽग्रग्रासिका। अर्हे अर्हति भवानिक्षुभक्षिकाम्। ऋणे इक्षुभक्षिकां मे धरयसि। ओदनभोजिकाम्। पयःपायिकाम्। उत्पत्तौ इक्षुभक्षिका मे उदपादि। ओदनभोजिका। पयःपायिका। विभाषा इत्येव, चिकीर्षा उत्पद्यते। ण्वुलि प्रकृते प्रत्ययान्तरकरनं स्वरार्थम्।

न्यासः

पर्यायार्हणोत्पत्तिषु ण्वुच्। , ३।३।१११

"क्तिन्नादीनामपवादः"इति। आदिशब्देनाकारादीनाम्। "अग्रगामिका" इति। अग्रस्य गामिका। कृद्योगलक्षणायाः कर्मणि षष्ठ्याः समासः। "स्वरार्थम्" इति। अन्तोदात्तत्वं यथा स्यादित्येवमर्थम्। ण्वुलि हि सति प्रत्ययात् पूर्वमुदात्तः स्यात्॥

तत्त्व-बोधिनी

पर्यायऽर्हणोत्पत्तिषु ण्वुच् १५६९, ३।३।१११

परिपाटीति। पट गतौ परिपूर्वः। "इणजादिभ्यः" इतीण्। "कृदिकारा"दिति ङीष्।

---

सूत्रम्

काशिका-वृत्तिः

आक्रोशे नञ्यतिः ३।३।११२

विभाषा इति निवृत्तम्। आक्रोशः शपनम्। आक्रोशे गम्यमाने नञि उपपदे धातोः अनिः प्रत्ययो भवति। क्तिन्नादीनाम् अपवादः। अकरणिस्ते वृषल भूयात्। आक्रोशे इति किम्? अकृतिस्तस्य कटस्य। नञि इति किम्? मृतिस्ते वृषल भूयात्।

न्यासः

आक्रोशे नञ्यनिः। , ३।३।११२

तत्त्व-बोधिनी

आक्रोशे नञ्यनिः १५७०, ३।३।११२

आक्रोशे। आक्रोशःऋ-शापः। नपुंसके भावे क्तः। ननु "तयोरेव कृत्यक्तखलर्थाः" इति लिङ्गत्रयसाधारण्येन भावकर्मणोः कृत्यादिविधानात्तेनैव नपुंसके भावे क्तः सिध्यति, किमनेन पुनर्विधानेनेति चेत्। अत्राहुः-- "भूते" इत्यधिकृत्य "निष्ठा" इति सूत्रेण विहितस्य क्तस्य भावोऽर्थः "तयोरेवे"ति सूत्रेण विहितः, अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते। एवं च स्वविषये परत्वाद्घञजपां बाधक इति परिशेषादेवैषां पुंविषयत्वं सिध्यति। किंच इह "भावे चाऽकर्मकेभ्य" इत्यस्याऽसन्निधानात्सकर्मकेभ्योऽप्ययं भवति, घञादिवत्। "गतं तिरिश्चीनमनूरुसारथेः" इत्यादिदर्शनात्। तथा च नास्त्यत्र शङ्केति। नन्वेवं कृद्योगे कर्मणि द्वितीया स्यात्, कृद्योगलक्षणषष्ठ()आ "न लोके"ति निषेधात्। एवं च "घटं कृतं" वृक्षं भिन्न"मित्यादि प्रसज्येत। "अनूरुसारथे"रित्यत्र तु कर्तरि तृतीया नापद्यते, कारकदृष्ट()आ निषेधेऽपि शेषत्विवक्षया षष्ठीति समाधानसंभवादिति चेन्मैवम्। नपुंसके भावे क्तस्य योगे षष्ठ()आ उपसङ्ख्यातत्वात्कर्मण द्वितीयया अभावात्। शेषत्बविवक्षामाश्रित्य वार्तिकमिदं प्रत्याख्यातमाकरे इति चेत्तर्हि तत्प्रामाण्यात्प्रायेण शेषत्वविवक्ष#ऐवेत्यस्तु वार्तिकमिदं प्रत्याख्यातमाकरे इति चेत्तर्ह तत्प्रामाण्यात्प्रायेण शेषत्वविवक्षैवेत्यस्तु। तथा च "घटं कृत"मित्यादि तु न प्रसज्यत एव। क्वचित्तु द्वितीयाऽपि दृश्यते "भ्रान्तं देशमनेकदुर्गविषम"मि[ती]ति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

कृत्यल्युटो बहुलम् ३।३।११३

भावे, अकर्तरि च कारके इति निवृतम्। कृत्यसंज्ञकाः प्रत्ययाः ल्युट् च भौलम् अर्थेषु भवन्ति। यत्र विहितास् ततो ऽन्यत्र अपि भवन्ति। भावकर्मणोः कृत्या विहिताः कारकान्तरे ऽपि भवन्ति। स्नानीयं चूर्णम्। दानीयो ब्राह्मणः। करणाधिकरणयोः भावे च ल्युट्। अन्यत्र अपि भवति। अपसेचनम्। अवस्रावणम्। राजभोजनाः शालयः। राजाच्छादनानि वासांसि। प्रस्कन्दनम्। प्रपतनम्। बहुलग्रहणादन्ये ऽपि कृतः यथाप्राप्तम् अभिधेयं व्यभिचरन्ति। पादाभ्यां ह्रियते पादहारकः। गले चोप्यते गलेचोपकः।

लघु-सिद्धान्त-कौमुदी

कृत्यल्युटो बहुलम् ७७५, ३।३।११३

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥ १॥स्नात्यनेनेति स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्रः॥

न्यासः

कृत्युल्युटो बहुलम्।, ३।३।११३

"यत्र विहितास्ततोऽन्यत्रापि भवन्ति" इति। यद्येवम्(), "तयोरेव कृत्यक्तखलर्थाः" (३।४।७०) इत्येवमादेरर्थनिर्देशस्यानर्थकत्वं जायते? नैतदस्ति; योगतो हि कृत्यादयो भावादिष्वर्थेष्विष्यन्ते, कारकान्तरे त्वल्पः। सा च तथा तेषां वृत्तिरनर्थनिर्देशे सति सिध्यतीति कुतस्तस्यानर्थक्यम्! "स्नानीयम्" इति। करणे कृत्यः। "दानीयः"इति। दीयते तस्मै इति सम्प्रदाने। "अपसेचनम्" इति। अपसिच्यते तदिति कर्मणि ल्युट्। "अवरुआआवणम्" इति। "अवरुआआव्यते तदिति "सृ गतौ" (धा।पा।९३५) इत्यस्माण्ण्यन्तात् कर्मणि ल्युट्। भुज्यतैति "भोजनाः"। आच्छाद्यन्त इति "आच्छादनानि"। कर्मण्येव ल्युट्। राज्ञो भोजना राज्ञ आच्छादनानीति षष्ठीसमासः। "प्रस्कन्दनम्, प्रपतनम्िति। प्रस्कन्दति, प्रपतत्यस्मादित्यपादाने ल्युट्। अथ बहुलग्रहणं किमर्थम्? यावता सूत्रारम्भसामर्थ्यादेव कृत्युल्युटो यत्र विहिता स्ततोऽन्यत्रापि प्रायेण भवन्तीत्येषोऽर्थो विज्ञायत एवेत्यत आह-- "बहुलग्रहणात्" इत्यादि। एतेनान्येऽपि कृतो यत्र विहितास्ततोऽन्यत्राप्यभिधेय इष्यन्ते, तच्च बहुलग्रहणात् सिध्यति। अतो बहुलग्रहणं कृतमिति सूचयति। "पादहारकः"इति। कत्र्तरि ण्वुल् विहितो बहुलग्रहणादिह कर्मणि भवति॥

बाल-मनोरमा

कृत्यल्युटो बहुलम् ६६२, ३।३।११३

कृत्यल्युटो। याभ्यः प्रतिभ्यो येष्वर्थेषु विहितास्ततोऽन्यत्रापि स्युरित्यर्थः।स्नानीयमिति। करणे अनीयर्। दानीय इति। संप्रदाने अनीयर्। भाष्ये तु "कृतो बहुलमिति वक्तव्य"मित्युक्त्वा पादाभ्यां ह्रियते पादहारकः। कर्मणि ण्वुल्। ()आओऽग्नीनाधास्यमानेन। अनद्यतने भविष्यति लृडित्युदाह्मतम्।

---

सूत्रम्

काशिका-वृत्तिः

नपुंसके भावे क्तः ३।३।११४

नपुंसकलिङ्गे भावे धतोः क्तः प्रत्ययो भवति। हसितम्। सहितम्। जल्पितम्।

न्यासः

नपुंसके भावे क्तः।, ३।३।११४

"तयोरेव कृत्यक्तखलर्थाः " ३।४।७० इति भावे क्तः सिद्धः। नपुंसके भावेऽपि क्तोऽयं विशेषविहितेन ल्युटा बाध्यत इति योगरम्भः॥

बाल-मनोरमा

नपुंसके भावे क्तः ८९३, ३।३।११४

नुपंसके भावे क्तः। कालसामान्ये इति। अस्य वर्तमानाद्यधिकारानन्तर्भावादिति भावः। अकर्मकेभ्य एव नपुंसके भावे क्तः,

नतु सकर्मकादिति "णेरध्ययने वृत्त"मिति सूत्रे भाष्यकैयटयोः स्पष्टम्। तद्ध्वनयन्नकर्मकेभ्य एवोदाहरति-- जल्पितमित्यादि। गतं भुक्तमित्यादौ त्वविक्षितकर्मकत्वादकर्मककत्वं बोध्यम्। अत एव गतं हंसस्य, भुक्तमोदनस्येत्यादौ शेषत्वविक्षया षष्ठीति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

ल्युट् च ३।३।११५

नपुंसकलिङ्गे भावे धातोः ल्युट् प्रत्ययो भवति। हसनं छात्रस्य। शोभनम्। जोपनम्। शयनम्। आसनम्। योगविभाग उत्तरार्थः।

लघु-सिद्धान्त-कौमुदी

ल्युट् च ८७४, ३।३।११५

हसितम्, हसनम्॥

न्यासः

ल्युट् च। , ३।३।११५

"योगविभाग उत्तरार्थः"इति। उत्तरत्र ल्युट एवानुवृत्तिर्यथा स्यात्, क्तस्य मा भूत्॥

---

सूत्रम्

काशिका-वृत्तिः

कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ३।३।११६

येन कर्मणा संस्पृश्यमानस्य कर्तुः शरीरसुखम् उत्पद्यते, तस्मिन् कर्मणि उपपदे धतोः नपुंसकलिङ्गे भावे ल्युट् प्रत्ययो भवति। पूर्वेण एव सिद्धे प्रत्यये नित्यसमासार्थं वचनम्। उपपदसमासो हि नित्यः समासः। पयःपानं सुखम्। ओदनभोजनं सुखम्। कर्मणि इति किम्? तूलिकाया उत्थानं सुखम्। संस्पर्शातिति किम्? अग्निकुण्डस्य उपासनं सुखम्। कर्तुः इति किम्? गुरोः स्नापनं सुखम्। स्नापयतेः न गुरुः कर्ता, किं तर्हि, कर्म। शरीरग्रहणं किम्? पुत्रस्य परिष्वजनं सुखम्। सुखं मानसी प्रीतिः। सुखम् इति किम्? कण्टकानां मर्दनं दुःखम्। सर्वत्रासमासः प्रत्युदाह्रियते।

न्यासः

कर्मणि चयेन संस्पर्शात्कर्तुः शरीरसुखम्। , ३।३।११६

"नित्यसमासार्थं वचनम्" इति। नित्यः समासोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। कथं पुनरेतद्वचनं नित्यसमासार्थं भवतीत्याह-- "उपपदसमासो हि नित्यसमासः" इति। अनेन हि सूत्रेण कर्मण्युपपदे प्रत्ययो विधीयत इति, "उपपदमतिङ्"२।२।१९ इत्युपपदसमासो भविष्यति, स च नित्यः;तद्विधौ "नित्यं क्रीडाजीविकयोः"२।२।१७ इत्यतो नित्यगर्हणानुवृत्तेः। "पयः पानं सुखम्" इति। कथं पुनरेतदस्योदाहरणं भवति? यावता नात्र संस्पर्शात् सुखमुत्पद्यते, किं तर्हि? अभ्यवहारात्;नैष दोषः;सर्वे हि तेऽभ्यवहारादयो न विना स्पर्शेन न भवतीति नान्तरीयकत्वात् स्पर्शो नापेक्ष्यते। "तूलिकाया उत्थानं सुखम्" इति। "उदः स्थास्तम्भोः पूर्वस्य"८।४।६० इति पूर्वसवर्णः। अस्तीह कर्तुः शरीरसुखम्, न तु कर्मणा संस्पृश्यमानस्य, किं तर्हि? अपादानेन तूलिकाख्येन। "अग्निकुण्डस्योपासनम्" इति। "आस उपदेशने"

(धा।पा।१०२१) उपपूर्वः। अत्रास्पर्शात् सुखं भवति; अग्निकुण्डेनोपास्यमानेनोपस्पृश्यमानस्यैव तदुत्पत्तेः। "गुरोः स्नापनम्" इति। "ष्णा शौचे" (धा।पा।१०५३), हेतुमण्मिच्। "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्। ननु चात्रापि गुरुः सुखस्य कत्र्ता भवतीत्यस्तीह कर्त्तुः सुखम्। तत्कथमिदं प्रत्युदाहरणं भवतीत्याह--"स्नापयतेर्न गुरुः" इति। अनेनतद्दर्शयति-- नात्र सुखापेक्षं कर्त्तृत्वं विवक्षितम्, किं तर्हि? क्रियापेक्षम्। न चात्र स्नापनक्रियाया गुरुः कत्र्ता, किं तर्हि? शिष्यः, तस्य च गुरुः कर्मैव भवति। कर्मसंज्ञा पुनर्गुरोः "गतिबुद्धि" १।४।५२ इत्यादिसूत्रेण; तस्याकर्मके स्नातावण्यन्तते कत्र्तत्वात्। "परिष्वञ्जनम्" इति। "ष्वन्ज परिष्वङ्गे" (धा।पा।९७६), "उपसर्गात् सुनोति" ८।३।६५ इत्यादिना मूर्धन्यः। "मानसी प्रीतिः"इति। तेन पुत्रपरिष्वञ्जनजन्मनः प्रीतिविशेषस्य शरीरसुखत्वं दर्शयति। "मर्दनम्" इति। "मृद क्षोदे" (धा।पा।१५१५)। "सर्वत्रासमासः प्रत्युदाह्रियते"इति। न तु ल्युडभावः। ल्युटः पूर्वसूत्रेण सर्वत्र भावात्॥

तत्त्व-बोधिनी

कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् १५७१, ३।३।११६

कर्मणि च। कर्तुरिति कर्मणि षष्ठी, "उभयप्राप्तौ कर्मणि" इति नियमात्। येनेति तृतीया। तदाह-- येन स्पश्यमानस्य कर्तुरिति। ल्युट् स्यादिति। नपुंसके भावे इति बोध्यम्। अत एवाह-- पूर्वेणेति। "ल्युट् चे"त्यनेनेत्यर्थः। नेहेति। स्नानकर्तृत्वेऽपि स्नापने न गुरुः कर्ता, किंतु शिष्य इत्यर्थः। शरीरग्रहणं किम्?। पुत्रस्य परिष्वजनं सुखम्। मानसी प्रीतिरत्र।

---

सूत्रम्

काशिका-वृत्तिः

करणाधिकरणयोश् च ३।३।११७

करणे ऽधिकरणे च कारके धातोः ल्युट् प्रत्ययो भवति। इध्मप्रव्रश्चनः। पलाशशातनः। अधिकरने गोदोहनी। सक्तुधानी।

न्यासः

करणधिकरणयोश्च।, ३।३।११७

"करणेऽधिकरणे च कारके" इत्यनेन करणाधिकरणयोः प्रत्ययार्थत्वं दर्शयति। अत्रोपपदे करणाधिकरणे कस्मान्न भवतः? "करणाधिकरणयोः"इत्यत एव निर्देशात्। करणाधिकरणशब्दौ हि ल्युडन्तौ करणाधिकरणसाधनौ च। तत्र दद्युपपदत्वमेतयोः स्यादेष निर्देशो नोपपद्यते। यद्येवम्, सति निर्देशे प्रत्ययविधानं च , सति च तस्मिन् निर्देश इतीतरेतराश्रयत्वं प्रसज्येत? न; नित्यत्वाच्छब्दानाम्। न ह्यपूर्वं किञ्चिदुत्पद्यते; शब्दानां नित्यत्वात्। सत्तामेव तु तेषामन्वाख्यानं क्रियते इति इतरेतराश्रयतायाः प्रसङ्गः। "इध्मप्रव्रश्चनः" इति। "ओव्रश्चूछेदने" (धा।पा।१२९२), इध्मानां प्रव्रश्चन इति षष्ठीसमासः। "पलाशशातनः" इति। "शद्लृ शातने" (धा।पा।१४२८), "हेतुमण्णिच्, "शदेरगतौ तः" ७।३।४२ इति तत्वम्। "गोदोहनी" इति। "टिड्()ढाणञ्" ४।१।१५ इति ङीप्॥

तत्त्व-बोधिनी

करणाधिकरणयोश्च १५७२, ३।३।११७

करणाऽधिकरणयोः। येन नाऽप्राप्तिन्यायेन घञोऽपवादोऽयमजपौस्त्रीप्रत्ययांश्च परत्वाद्बाधते। उक्तं हि-- "अजब्भ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेने"ति। इध्मेति। इध्मानि प्रवृस्च्यन्ते येन, गौर्दुह्यते यस्यामिति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

पुंसि संज्ञायां घः प्रायेण ३।३।११८

करनाधिकरनयोः इत्येव। पुंलिङ्गयोः करणाधिकरनयोरभिधेययोः धातोः घः प्रत्ययो भवति समुदायेन चेत् संज्ञा गम्यते। प्रायग्रहणम् अकात्स्न्यार्थम्। दन्तच्छदः। उरश्छदः पटः। अधिकरणे खल्वपि एत्य तस्मिन् कुर्वन्ति इति आकरः। आलयः। पुंसि इति किम्? प्रसाधनम्। संज्ञायाम् इति किम्? प्रहरणो दण्डः। घकारः छन्देर् घे ऽद्व्युपसर्गस्य ६।४।९६ विशेषणार्थः।

न्यासः

पुंसि संज्ञायां घः प्रायेण।, ३।३।११८

"समुदायेण चेत्" इत्यादि। प्रकृतिप्रत्ययसमुदायेन यदि संज्ञा गम्यत एवं प्रत्ययो भवति, नान्यथा। "अकात्स्न्यार्थम्" इति। अकात्स्न्यम् = असाकल्यम्, प्रयोजनमर्थो यस्य तत् तथोक्तम्। एतेनाकृत्स्नविषयतां प्रत्ययस्य दर्शयति। "दन्तच्छदः" इति। "छद अपवारणे" (धा।पा।१९३५), चुरादिणिच्। "छादेर्घेऽद्वयुपसर्गस्य" ६।४।९६ इति ह्रस्वः, पूर्ववत् समासः। "प्रसाधनम्िति। "राध साध संसिद्धौ" (धा।पा।१२६२), १२६३), अस्माद्धेतुमण्ण्यन्तात् पूर्वसूत्रेण करणे ल्युट्, "कुगतिप्रादयः २।२।१८ इति समासः॥

---

सूत्रम्

काशिका-वृत्तिः

गोचरसञ्चरवहव्रजव्यजाऽपणनिगमाश् च ३।३।११९

गोचरादयः शब्दाः घप्रययान्ता निपात्यन्ते पूर्वस्मिन्नेव अर्थे। हलश्च ३।३।१२१। इति घञं वक्ष्यति, तस्य अयम् अपवादः। गावश्चरन्ति अस्मिनिति गोचरः। सञ्चरन्ते अनेन इति सञ्चरः। वहन्ति तेन वहः। व्रजन्ति तेन व्रजः। व्यजन्ति तेन व्यजः। निपातनातजेर् व्यघञपोः २।४।५६ इति वीभावो न भवति। एत्य तस्मिन्नापणन्ते इत्यापणः। निगच्छन्ति तस्मिनिति निगमः। चकारो ऽनुक्तसमुच्चयार्थः। कषः। निकषः।

न्यासः

गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च।, ३।३।११९

"पूर्वस्मिन्नेवार्थे" इति। करणेऽधिकरणे च। ननु पूर्वसूत्रेणैव गोचरादिषु घः सिद्धः, तत्किमित्ययं योग आरभ्यते? इत्याह-- "हलश्च" इत्यादि। ननु च प्रत्ययग्रहणं तत्रानुवर्तिष्यते, तेन गोचरादिषु घञ् भविष्यति? प्रतिपत्तिगौरवं तु स्यात; प्रायग्रहणानुवृत्तेरज्ञापकत्वात्॥

---

सूत्रम्

काशिका-वृत्तिः

अवे तॄस्त्रोर् घञ् ३।३।१२०

अवे उपपदे तरतेः स्तृणातेश्च धातोः करनाधिकरणयोः संज्ञायाम् घञ् प्रत्ययो भवति। घस्यापवादः। ञकारो वृद्ध्यर्थः स्वरार्थश्च। घकारः उत्तरत्र कुत्वार्थः। अवतारः। अवस्तारः। कथम् अवतारो नद्याः, न हीयं सज्ञा? प्रायानुवृत्तेः असंज्ञायाम् अपि भवति।

लघु-सिद्धान्त-कौमुदी

अवे तृस्त्रोर्घञ् ८७७, ३।३।१२०

अवतारः कूपादेः। अवस्तारो जवनिका॥

न्यासः

अवे तृ?स्त्रोर्घञ्। , ३।३।१२०

"स्तृणातेः"इति। "स्तृञ् आच्छादने" (धा।पा।१४८४) इत्यस्मात्। "प्रायानुवृत्तेः" इत्यादि। प्रायशब्दस्यानुवृत्तौ सत्यामेव उपपदे तृस्त्रोर्घञ्प्रत्ययो भवति संज्ञायां प्रायेणोपधिभूतायामित्येषोऽर्थो लभ्यते। "न संज्ञायाम्िति। अस्योपाधेः प्रायिकत्वात् क्वचिदसंज्ञायामपि भवति॥

तत्त्व-बोधिनी

अवे तृ?रुआओर्घञ् १५७४, ३।३।१२०

अवे। अवे उपपदे तृ()स्त-ङभ्यां करणाधिकारणयोः पुंसि संज्ञायां घञ्स्यात्। घस्यांपवादः।

---

सूत्रम्

काशिका-वृत्तिः

हलश् च ३।३।१२१

पुंसि सञ्ज्ञायाम्, करणाधिकरणयोश्च इति सर्वम् अनुवर्तते। हलन्ताद् धातोः करणाधिकरणयोः घञ् प्रत्ययो भवति। घस्य अपवादः। लेखः। वेदः। वेष्टः। वन्धः। मार्गः। अपामार्गः। वीमार्गः।

लघु-सिद्धान्त-कौमुदी

हलश्च ८७८, ३।३।१२१

हलन्ताद्घञ्। घापवादः। रमन्ते योगिनोऽस्मिन्निति रामः। अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः॥

न्यासः

हलश्च। , ३।३।१२१

"वेष्टः" इति। "वेष्ट वेष्टने" (धा।पा।२५५)। "मार्गोऽपामार्गः" इति। "{मृजू-धा।पा।} (धा।पा।१०६६)। "चजोः ७।३।५२ इत्यादिना कुत्वम्, मृजेर्वृद्धिः, ७।२।११४ "उपसर्गस्य घञि" ६।३।१२१ इति दीर्घः॥

---

सूत्रम्

काशिका-वृत्तिः

अध्यायन्यायोद्यावसंहाराऽधाराऽवायाश् च ३।३।१२२

अध्यायाऽदयः शब्दाः घञन्ता निपात्यन्ते। पुंसि संज्ञायां घे प्राप्ते घञ् विधीयते। अहलन्तार्थ आरम्भः। अधीयते अस्मिनिति अध्यायः। नीयत अनेन इति न्यायः। उद्युवन्ति अस्मिनिति उद्यावः। संह्रियन्ते ऽनेन इति संहारः। आध्रियन्ते अस्मिनिति आधारः। आवयन्ति अस्मिन्निति आवायः। चकारो ऽनुक्तसमुच्चयार्थः। अवहारः।

न्यासः

अध्यायन्यायोद्यावसंहाराधारावायाश्च। , ३।३।१२२

"अहलन्तार्थ आरम्भः"इति। हलन्तेभ्यः पूर्वसूत्रेणैव सिद्धत्वात्॥

तत्त्व-बोधिनी

अध्यायन्यायोद्यावसंहाराश्च १५७५, ३।३।१२२

अवहारेत्यादि। वृत्तिकारस्त्वाधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणाऽवहारशब्दं संजग्राह, तदसंबद्धमिति स्पष्टमेव।

---

सूत्रम्

काशिका-वृत्तिः

उदङ्को ऽनुदके ३।३।१२३

उदङ्क इति निपात्यते अनुदकविषयश्चेद् धात्वर्थो भवति। उत्पूर्वादञ्चतेः घञ् निपात्यते। ननु च हलश्च 3|3|121। इति सिद्ध एव घञ्? उदके प्रतिषेधार्थम् इदं वचनम्। तैलोदङ्कः। अनुदके इति किम्? उदकोदञ्चनः। घः कस्मान् न प्रत्युदाह्रियते? विशेषाभावात्। घञ्यपि थाथादिस्वरेन अन्तोदात्त एव।

न्यासः

उदङ्कोऽनुदके। , ३।३।१२३

"ननु च" इत्यादि चोद्यम्। "उदकप्रतिषेधार्थं वचनम्िति परिहारः। यद्येतन्नारभ्येत तदोदकेऽपि पूर्वेण स्यादित्यर्थः। "तैलोदङ्कः"इति। षष्ठीसमासः। षष्ठी पुनः कर्मणि कृद्योगलक्षणा। "उदकोञ्चनः" इति। करमे ल्युट्। "घः कस्मात्" इत्यादि। एवं मन्यते-- "पुंसि संज्ञायाम्" 3|3|118 इत्यादिना घे प्राप्ते घञ् विहितः, ततश्च तेन मुक्ते विषये घनैव युक्तं भवितुमिति। "विशेषाभावात्" इति। न ह्रत्राञ्चतेर्घञि घे वा सति विशेषोऽस्ति। तत्र यद्युदकेऽपि घः स्यादनुकप्रतिषेधेनार्थो न स्यादित्यभिप्रायः। ननु च घे सति प्रत्ययस्वरेणान्तोदात्त उदङ्कशब्दो भवति, घञढि सति ञित्स्वरेणाद्युदात्तः स्यात्, तत् किमुच्यते विशेषाभावादित्यत आह-- "घञ्यपि" इत्यादि। "थाथादिस्वरेण" इति। थाथघञ्क्ताजबित्रकाणाम्" 6|2|143 इत्येतद्विहितेन॥

तत्त्व-बोधिनी

उदङ्कोऽनुदके १५७६, ३।३।१२३

उदङ्को। "हलश्चे"त्येव सिद्दे उदकप्रतिषेदार्थमिदम्। उदकोदञ्चन इति। "पुंसि संज्ञाया"मिति घे प्राप्ते घञ्विहितः। उदके तु घञि प्रतिषिद्धे घ एव स्यान्न तु ल्युडिति चेन्मैवम्। प्रतिषेधसामथ्र्याद्धस्याऽप्यप्रवृत्तेः। नहि इह घे घञि वा रूपे विशेषोऽस्ति। नच स्वरे विशेषः, घे सति कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तता, घञ्यपि थाथादिस्वरेण तथैवेति।

---

सूत्रम्

काशिका-वृत्तिः

जालम् आनायः ३।३।१२४

आनायः इति निपात्यते जालं चेत् तद् भवति। आङ्पूर्वात् नयतेः करने घञ् निपात्यते। आनायो मत्स्यानाम्। आनायो मृगाणाम्।

न्यासः

जालमानायः। , ३।३।१२४

तत्त्व-बोधिनी

जालमानायः १५७७, ३।३।१२४

जालमा। जल धातने [धान्ये()] ज्वलितिकसन्तेभ्यो णः" इति णप्रत्यये जालमाशब्दः सिद्धः। तेन जालशब्दोऽत्र निपात्यतैति न भ्रमितव्यम्।

---

सूत्रम्

काशिका-वृत्तिः

खनो घ च ३।३।१२५

खनतेः धातोः करणाधिकरणयोः घः प्रत्ययो भवति। चकारात् घञ् च। आखनः, आखानः। डो वक्तव्यः। आखः। डरो वक्तव्यः। आखरः। इको वक्तव्यः। आखनिकः। इकवको वक्तव्यः। आखनिकवकः।

न्यासः

खनो घ च। , ३।३।१२५

"डो वक्तव्यः"इत्यादि। सर्वत्र वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थः। तत्रेदं व्याख्यानम्- चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन डादयोऽपि प्रत्यया भविष्यन्तीति। ननु च घञनुकर्षणार्थश्चकारः? नैतदस्ति; स्वरितत्वादेव हि घञपतिष्ठते। अथ किमर्थं खनेर्घः प्रत्ययो विधीयते, यावता कुत्वार्थं तस्य विधानम्, न च खनेः कश्चिदवयवः कुत्वभागस्ति? एवं तह्र्येतज्ज्ञापयति--अन्येभ्योऽप्ययं भवतीति। तेन खलः,भगम्, पदमित्येवमादयः सिद्धा भवन्ति॥

तत्त्व-बोधिनी

खनो घ च १५७८, ३।३।१२५

खनो। घित्ककरणमिति। "आखन"इत्यादौ "चजो"रिति कुत्वस्य प्रसक्त्यभावादिति भावः। भगः। पदमिति। ननु पदमित्यत्र घस्य किं प्रयोजनमिति चेदत्राहुः-- "करणाधिकरणयोः" "पुंसि संज्ञाया"मिति यदि घः स्यात्तदा "पद"मिति नपुंसकं न स्यात्, अनेन चेद्धो भवति तदा त्विष्टसिद्धिरिति। एते इति। आखनादयः षडित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ईषद्दुःसुषु कृच्छ्राकृच्च्रार्थेषु खल् ३।३।१२६

करणाधिकरणयोः इति निवृत्तम्। ईषत् दुस् सु इत्येतेषु उपपदेषु कृच्छ्राकृच्छ्रार्थेषु धतोः खल् प्रत्ययो भवति। कृच्छ्रं दुःखम्, तद् दुरो विशेषणम्। अकृच्छ्रं सुखम्, तदितरयोः विशेषनम्, सम्भवात्। ईषत्करो भवता कटः। दुष्करः। सुकरः। ईषद्भोजः। दुर्भोजः। सुभोजः। ईषदादिषु इति किम्? कृच्छ्रेण कार्यः कटः। कृच्छ्राकृच्छ्रार्थेषु इति किम्? ईषत्कार्यः। लकारः स्वरार्थः। खित्करणम् उत्तरक्र मुमर्थम्।

लघु-सिद्धान्त-कौमुदी

ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ८७९, ३।३।१२६

करणाधिकरणयोरिति निवृत्तम्। एषु दुःखसुखार्थेषूपपदेषु खल् तयोरेवेति भावे कर्मणि च। कृच्छ्रे - दुष्करः कटो भवता। अकृच्छ्रे - ईषत्करः। सुकरः॥

न्यासः

ईषद्?दुःसुषु कृच्छ्रार्थेषु खल्। , ३।३।१२६

"तदितरयोः"इति। सुशब्देषच्छब्दयोः। कथं पुनः सामान्योक्तेनापि विशेषो लभ्यते? इत्याह-- सम्भवात्िति। यत्र यस्य सम्भवस्तत्र तस्य विशेषणं भवति। कृच्छ्रमेव दुःशब्दस्यार्थे वत्र्तते, नाकृच्छ्रम्। इतरयोस्त्वर्थेऽकृच्छ्रमेव वर्त्तते न कृच्छ्रम्। तस्मात् कृच्छ्रं दुर एव विशेषणम्, अकृच्छ्र त्वितरयोरेव। "ईषात्करः कटो भवता" इति। अकृच्छ्रेणायत्नेन क्रियते भवता कट इत्यर्थः। "ईषत्कार्यः"इति। "ऋहलोण्र्यत्" [३।१।१२४](#) इति ण्यत्। ईषच्छब्दोऽत्र मनागित्यस्यार्थे वत्र्ततेत। "लकारः स्वरार्थः" इति। लिति प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्। ननु च ह्मस्वादिकं खित्कार्यं "खित्यनव्ययस्य" [६।३।६५](#) इत्येवमादिशास्त्रेणानव्ययस्य विधीयते; ईषदादयश्चाव्ययसंसज्ञाः; तत्किमर्थं खलः, खित्करणमित्याह-- "खित्करणमुत्तरत्र मुमर्थम्" इति।उत्तरत्रानव्ययेऽप्युपपदे खल् विधास्यते, तत्र "अरूर्द्विषदजन्तस्य मुम्" [६।३।६६](#) इति मुम् यथा स्यादित्येवमर्थं खित्करणम्॥

तत्त्व-बोधिनी

ईषद्दुःसुषुकृच्छ्राऽकृच्छ्रार्थेषु खल् १५७९, ३।३।१२६

ईषद्दुःसुषु। इह सामान्योक्तावपि योग्यताबलाद्विशेषणस्य विषयविभागो लभ्यते। दुरिति कृच्छ्रार्थे,इतरौ त्वकृच्छ्रार्थे।तदेतद्दर्शयति--कृच्छ्रे दुष्कर इत्यादिना। भवतेति। "न लोके"ति षष्ठीनिषेधात्कर्तरि तृतीया। कच्छ्रेत्यादि किम्?। ईषत्कार्यम्। स्वल्पं कार्यमित्यर्थः। खलिति। लकारः स्वरार्थः, खित्करणं तूत्तरत्र मुमर्थम्। निमिमीति। "मीनातिमिनोतिदीङां ल्यपि च " "विभाषा लीयतेः इति प्राप्तं निषिध्यते। निमय इत्यादि। "एरच्। उपसर्गात्खल्घञोः। "लभेश्चे"त्यनेनैव सिद्धे नियमार्थमिदमित्याह--उपसर्गादेवति।

---

सूत्रम्

काशिका-वृत्तिः

कर्तृकर्मणोश् च भूकृञोः ३।३।१२७

भवतेः करोतेश्च धातोः यथासङ्ख्यं कर्तरि कर्मणि च उपपदे, चकारादीषदादिषु च खल् प्रत्ययो भवति। ईषदाढ्यम्भवं भवता। दुराढ्यम्भवम्। ईषदाढ्यङ्करः। स्वाढ्यङ्करो देवदत्तो भवता। कर्तृकर्मणोश्च्व्यर्थयोरिति वक्तव्यम्। इह मा भूत्, स्वाढ्येन भूयते।

न्यासः

कर्त्तृकर्मणोश्च भूकृञोः। , ३।३।१२७

कर्त्तृकर्मणोरुपपदत्वं भवति, न तु प्रत्ययार्थम्। यदि च तयोः प्रत्ययार्थत्वं स्यादीषदादिष्वेवोपपदेषु प्रत्ययः स्यात्, ततश्च खित्करणमनर्थकं स्यात्; अनव्ययस्य खित्कार्यविधानात्। ईषादादीनाञ्चाव्ययत्वात्; तस्मादतोऽपि खित्करणम्। उपपदे कर्त्तृकर्मणी, न तु प्रत्ययार्थावेतावित्यवसीयते। अत्र च कर्त्तृकर्मणी ईषदादयश्च न प्रत्येकं प्रत्ययस्य निमित्तम्, किं तर्हि? तत्समुदायः। चकारेण ह्रतर् सन्नियोगः क्रियते, तेन कर्त्तृकर्मणोरीषदादीनाञ्च युगपदुपपदत्वं भवति; नान्यथा। यद्येवम्, कथं द्वयोरुपपदयोर्युगपत् समासः? कः पुनराह-- युगपत् समास इति? पूर्वं हि परस्योपपदस्य समासं कृत्वा पश्चात् पूर्वस्य समासो भवति। किं पुनरत्र परमुपपदम्? कर्त्तृकर्मणी। कुत एतत्? खित्करणसामथ्र्यात्। खित्करणं हि मुमर्थम्, मुमागमश्चानव्ययस्य विधीयते। तत्रेषदादीनां धातोश्चानन्तर्ये खित्करणमनर्थकं स्यात्। "ईषदाढ()म्भवं भवता" इति। अकृच्छ्रमाढ()एन भयते भवतेत्यर्थः। "ईषदाढ()ङ्करो देवदत्तो भवता" इति। अकृच्छ्रमाढ्यः क्रियते देवदत्तो

भवतेत्यर्थः। "कर्तृकर्मणोः"इत्यादि। च्व्यर्थोऽभूततद्भावः। तदर्थयोः कर्तृकर्मणोरुपपदयोः खल भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- प्रायग्रहणं मण्डूकप्लुतिन्यायेनानुवत्र्तते, तेन यदा कर्तृकर्मणी च्व्यर्थे भवतस्तदैव प्रत्ययो भवति, नान्यदेति। "स्वाढ()एन भूयते" इति। अत्र च्व्यर्थस्याविवक्षितत्वात् प्रत्ययो न भवति॥

तत्त्व-बोधिनी

कर्तृकर्मणोश्च भूकृञोः १५८१, ३।३।१२७

कर्तृकर्मणोः। चकारः संनियोगार्थः। यदा कर्तृकर्मणोरीषदादीनां च युगपत्प्रयोगस्तदैव प्रत्ययो यथा स्यात्। न च कर्तृकर्मणोः प्रत्ययार्थत्वमेवास्तु न तूपपदत्वमिति वाच्यम्, ईषदादीनामेवोपपदत्वे तु खलः खित्त्वस्य वैयथ्र्यापत्तेः। मुमर्थं हि तत्। मुम् चानव्यस्य विधीयते। तस्मात्कर्तृकर्मणोरिति उपपदत्वमेव। तदेतदाह-- ईषदादिषु चेति। कर्तृकर्मणी द्वे, भूकृञौ च द्वौ, तयोर्यथासङ्ख्यं प्राप्तम्, स्वीकृतं च काशिकाकृता, कन्यासकारहरदत्तादिभिश्च, प्राचापि तथैवोक्तं, तद्वयाख्यातृभिश्चानुमोदितं, तत्सर्वं नादर्तव्यम्,यथासङ्ख्यसूत्रस्थभाष्यविरोधादिति ध्वनयन्नाह-- यथासङ्ख्यं नेष्यत इति। ननूपपदयोर्मध्ये पूर्वापरीभावव्यवस्था न सिध्यति, भूकृञोरवयवहितत्वं क्रतृकर्मणोरेवेष्यते न त्वीषदादीनाम्। एवं च कथमत्रेष्टव्यवस्था सिध्यतीति चेदत्राहुः-- बहुलग्रहणानुवृत्त्या दुराढ()म्भव इति भाष्योदाहरणाच्चेष्टव्यवस्था सिध्यतीति। तदेतदभिप्रेत्याह--- कर्तृकर्मणि चेति। भवतेः कर्तर्युदाहरति--- अनाढ()एनाढ()एनेति। कर्मणि त्वनाढ() आढ()ओ भूयते इति विग्रहः। भाव्यते इति तदर्थः। एवमग्रेऽपि विग्रहद्वयमुन्नेयम्। अनाढ()एनाढ()एन स्वयमेव क्रियते, अनाढ() आढ्यः क्रयत इति।

---

सूत्रम्

काशिका-वृत्तिः

आतो युच् ३।३।१२८

ईषदादयो ऽनुवर्तन्ते। कर्तृकर्मणोः इति न स्वर्यते। कृच्छ्राकृच्छ्रार्थेषु ईषदादिषु उपपदेषु आकारान्तेभ्यो धतुभ्यः युच् प्रत्ययो भवति। खलो ऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः। ईषद्दानो गौर्भवता। दुर्दानः। सुदानः।

लघु-सिद्धान्त-कौमुदी

आतो युच् ८८०, ३।३।१२८

खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः॥

न्यासः

आतो युच्। , ३।३।१२८

तत्त्व-बोधिनी

आतो युच् १५८२, ३।३।१२८

इत्यादीति। आदिशब्देन दुर्दर्शनः। दुर्धर्षणः। दुर्मर्षणः।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि गत्यर्थेभ्यः ३।३।१२९

ईषदादिसु कृच्छ्राकृच्छ्रार्थेषु उपपदेषु गत्यर्थेभ्यो धातुभ्यः छन्दसि विषये युच् प्रत्ययो भवति। खलो ऽपवादः। सूपसदनो ऽग्निः। सूपसदनम् अन्तरिक्षम्।

न्यासः

छन्दसि गत्यर्थेभ्यः। , ३।३।१२९

"सूपसदनम्" इति। "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।८५४), उपपूर्वः॥

---

सूत्रम्

काशिका-वृत्तिः

अन्येभ्यो ऽपि दृश्यते ३।३।१३०

अन्येभ्यो ऽपि धातुभ्यः गत्यर्थेभ्यः छन्दसि विषये युच् प्रत्ययो दृश्यते। सुदोहनामकृणोद् ब्रह्मणे गाम्। सुवेदनामकृणोर्ब्रह्मणे गाम्। भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वक्तव्यः। दुःशासनः। दुर्योधनः। दुर्दर्शनः। दुर्धर्षणः। दुर्मर्षणः।

न्यासः

अन्येभ्योऽपि दृश्यते। , ३।३।१३०

"सुदोहनम्" इति। "दुह प्रपूरणे" (धा।पा।१०१४)। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- अपिशब्दोऽत्र क्रियते, स च सर्वव्यभिचारार्थः, तेन "शासु अनुशिष्टौ" (धा।पा।१०७५), "युध सम्प्रहारे" (धा।पा।११७३), "दृशिर् प्रेक्षणे" (धा।पा।९८८), "ञिधृषा प्रागल्भ्ये" (धा।पा।१२६९), "मृष तितिक्षायाम्" (धा।पा।११६४)-- इत्येतेभ्योऽपि भाषायां युज्भवतीति। कथं पुनरेतदवसितम्-- "सर्वव्यभिचारार्थोऽपिशब्द इति? सूत्रारम्भात्। यदि हि गत्यर्थव्यभिचार एवात्राभिसंहितः स्यात्, सूत्रमिदं नारभेत। पूर्वसूत्र एव च गत्यर्थग्रहणं न कुर्यात्॥

---

सूत्रम्

काशिका-वृत्तिः

वर्तमानसामीप्ये वर्तमानवद् वा ३।३।१३१

समीपम् एव सामीप्यम्। ष्यञः स्वार्थिकत्वं ज्ञाप्यते चातुर्वर्ण्यादिसिद्ध्यर्थम्। वर्तमानसमीपे भूते भविष्यति च वर्तमानाद् धातोः वर्तमानवत् प्रत्यया वा भवन्ति। वर्तमने लट् ३।२।१२३ इत्यारभ्य यावदुणादयो बहुलम् ३।३।१ इति वर्तामाने प्रत्यया उक्ताः, ते भूतभविष्यतोर् विधीयन्ते। कदा देवदत्त आगतो ऽसि? अयम् आगच्छामि। आगच्छन्तम् एव मां विद्धि। अयम् आगमम्। एषो ऽस्मि आगतः। कदा देवदत्त गमिष्यसि? एष गच्छामि। गच्छन्तम् एव मा विद्धि। एष गमिष्यामि। गन्तास्मि। वत्करणं सर्वसादृश्यार्थम्। येन विशेषणेन वर्तमाने प्रत्ययाः विहिताः प्रकृत्योपपदोपाधिना तथा एव अत्र भवन्ति। पवमानः। यजमानः। अलङ्करिष्णुः। सामीप्यग्रहणं किम्? विप्रकर्षविवक्षायां मा भूत्, परुदगच्छत् पाटलिपुत्रम्। वर्षेण गमिष्यति। यो मन्यते गच्छामि इति पदं वर्तमाने काले एव वर्तते, कालान्तरगतिस् तु वाक्याद् भवति, न च वाक्यगम्यः कालः पदसंस्कारवेलायाम् उपयुज्यते इति तादृशं वाक्यार्थप्रतिपत्तारं प्रति प्रकरणम् इदं नारभ्यते। तथा च श्वः करिष्यति, वर्षेण गमिष्यति इति सर्वम् उपपद्यते।

लघु-सिद्धान्त-कौमुदी

वर्तमानसमीप्ये वर्तमानवद्वा ७६७, ३।३।१३१

वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः। कदागतोऽसि। अयमागच्छामि, अयमागमं वा। कदा गमिष्यसि। एष गच्छामि, गमिष्यामि वा॥

न्यासः

वत्र्तमानसामीप्ये वत्र्तमानवद्वा। , ३।३।१३१

यदि समीपस्य भावोऽभिधीयेत तद्धि स्यात्, एवं सति वत्र्तमानस्य सामीप्येन च समासो न स्यात्; सम्बन्धाभावात्। न हि सामीप्यस्य वत्र्तमानेन सम्बन्धः, अपि तु तत्समीपेन; तस्य तद्गुणत्वात्। तस्मात् स्वार्थ एवायमिह भविष्यतीति मत्वाहऽऽह-- समीपमेव सामीप्यम्" इति। किमर्थं पुनः स्वार्थिकं ष्यञं विधायैवं निर्देशः क्रियते, न वत्र्तमानसमीप एवोच्येत यतो लाघवं भवति? इत्यत आह-- "ष्यञः स्वार्थिकत्वं ज्ञाप्यते" इति।स्वार्थे ष्यञपि स्यादनेनेति। स्वार्थे ष्यञ् भवतीत्यमुमर्थं ज्ञापयितुं स्वार्थिकः ष्यञ् कृत इति। "चातुर्वण्र्यादिसिद्ध्यर्थम्" इति। अनेनापि ज्ञापनस्य प्रयोजनमुच्यते। आदिशब्देन चातुराश्रम्यादीनां ग्रहणम्। "अयमागच्छामि" इति। अयमागममित्यस्यार्थ एतद्वत्र्तते। "आगमम्" इति। लुङ, उत्तमैकवचनम्, "तस्थस्थमिपाम्" ३।४।१०१ इत्यादिना मिपोऽम्भावः, पुषादिसूत्रेण ३।१।५५ च्लेरङ। "एष गच्छामि" इति। एष गमिष्यामीत्यस्यार्थ इदं वत्र्तते। "गमेरिट् परस्मैपदेषु" ७।२।५८ इतीट्। "गन्तास्मि"इति। लुट्, तासिः, मिप्। अथ वत्करणं किमर्थम्, यत्वता "वत्र्तमानसामीप्ये वत्र्तमाने" इत्युच्यमाने वत्र्तमानकालविहिताः प्रत्यया वत्र्तमानसामीप्ये भवन्तीत्येषोऽर्थो लभ्यत एवत्यत आह-- "वत्करणम्" इत्यादि। असति वत्करणे वत्र्तमानकालेन रूपमात्रमेषां प्रत्ययानामुपलक्ष्यते, न तु प्रकृत्यादय उपादीयेरन्, ततश्च धातुमात्रात् स्युः। वत्करणे तु सति सर्वसादृश्यं गम्यते; तत्रैव वतेर्विधानात्, तेन सङ्करो न भवति। तमेवन सङ्कराभावं दर्शयितुमाह-- "येन "इत्यादि। एवं हि सर्वसादृश्यं भवति यदि येन विशेषणेन वत्र्तमाने विहितास्तेनैव वत्र्तमानसामीप्ये भवन्ति, नान्यथा। "प्रकृत्योपपदोपाधिना" इति। आदिश्ब्देनोपाधेरबिधेयस्य च ग्रहणम्। "पवमानः, यजमानः"इति। "पूङ्यजोः शानन्" ३।२।१२८ विहितः,स वत्र्तमानसामीप्येऽपि ताभ्यामेव भवति, न धात्वन्तरात्। "अलङ्गरिष्णुः" इति। ताच्छील्यादिविशिष्टे कत्र्तर्यलम्पूर्वात् कृञ इष्णुच्विहितः, वत्र्तमानसामीप्येऽपि तत्पूर्वादेव भवति। तस्मिन्नेव चार्थे "परुदगच्छत्" इत्यत्र विप्रकर्षविवक्षायां लङेव भवति। "वर्षेण गमिष्यति" इति। अत्रापि लृडेव भवति। "यो मन्यते" इत्यादिनापि प्रतिपत्तृविशेषं प्रति सूत्रं प्रत्याचष्टे। "कालान्तरगतिस्तु" इत्यादि। कालान्तरं वत्र्तमानसमीपो भूतो भविष्यंश्च कालः, तस्य या गतिः = प्रतीतिः। आगच्छामीत्यस्य पदस्य वत्र्तमानकालविशेषेऽप्ययं गच्छामीत्यतो वाक्यात् कदा देवदत्त गमिष्यसीत्येद्वाक्यसमनन्तरं प्रयुज्यमानाद्भवति। वाक्यगम्योऽपि कालो यदि पदसंस्कारवेलायामुपयुज्यते युज्येत सूत्रारम्भः, न चासौ तत्रोपयुज्यते; यस्माच्छास्त्रेण पदस्य संस्कारः क्रियते, न वाक्यस्य। पदे संस्क्रियमाणे तद्गम्य एव काल उपयुज्यते, तेन वाक्यगम्य इत्यभिप्रायः। इतिकरणः प्रकृतप्रत्यवमर्शक इति। एवं यो मन्यते = अवगच्छति तं प्रतीदं नारब्धव्यमेव। यदर्थमारभ्यते तेषां प्रत्ययानां "वत्र्तमाने लट्" ३।२।१२३ इत्यादिनैव शास्त्रेणासिद्धत्वात्। प्रकरणग्रहणेन केवलमिदं सूत्रं नारब्धव्यम्, अपि तु "अशंसायां भूतवच्च" ३।३।१३२ इत्येवमादीन्यपि नारब्धव्यनीति दर्शयति। "तादृशम्ित्यादि। एवञ्च यस्तु तादृशः प्रतिपत्ता न भवति मन्दबुद्धिस्तं प्रत्यारब्धव्यमेवेत्युक्तं भवति। न ह्रसावेवं न्यायेन प्रतिपत्तुं समर्थः। "तथा च" इत्यादि। यस्मात् तत्रैवं वाक्यगम्यः कालः पदसंस्कारवेलायां नोपयुज्यते, एवञ्च सति ()आः करिष्यतीत्येमाद्युपपद्यते। तत्रापि हि करिष्यतीत्येतत् पदं भविष्यत्येव काले वत्र्तत इति "लृट् शेषे च" ३।३।१३ इत्येव लृट् सिद्धः। भविष्यदनद्यतनस्तु कालोऽयम्। यद्युत्तरकालः प्रतीयते तथाप्यसौ वाक्यार्थ इति पदसंस्कारे नाश्रीयते। यदि तु वाक्यगम्योऽपि कालः पदसंस्कारे समाश्रीयेत, तदा तु करिष्यतीत्येवमादि नोपपद्येत-- भविष्यदनद्यतने लुटैव भवितव्यमिति कृत्वा॥

बाल-मनोरमा

वर्तमानसामीप्ये वर्तमानवद्वा ६१३, ३।३।१३१

वर्तमानसामीप्ये। स्वर्थे प्यञिति। अस्मादेव निर्देशाच्चतुर्वर्णादेराकृतिगणत्वाद्वेति भावः। इत्यारभ्येति। तृतीयस्य द्वितीये "वर्तमान ल"डित्यारभ्य आपादसमाप्तेः "उणादयो बहुल"मिति तृतीयपादादिमसूत्रात्पाग्वर्तमानाधिकारः। तस्मिन्नधिकारे येन विशेषणेन याभ्यः प्रकृतिभ्यो वर्तमाने प्रत्यया वहिताते सर्वे तेनैव विशेषणेन ताभ्यः प्रकृतिभ्यो वर्तमानसमीपकाले भूते भविष्यति च वा भवन्तीत्यर्थः। अत्र भूते भविष्यति चेत्यार्थिकं, तयोरेव वर्तमानसामीप्यसत्त्वात्। कदा आगतोऽसीत्यगतं प्रति प्रश्नः। अयमागच्छामित्युत्तरम्। अव्यवहितपूर्वकाले आगतवानस्मीत्यर्थः। वर्तमानसमीपकाले भूते लट्। "अय"मित्यनेन आगमनकालीनं प्रस्वेदपरिकरबन्धादियुक्तं रूपं निर्दिश्यते इदानीमागमनं सूचयितुम्। आगममिति। वर्तमानवत्त्वाऽभावे भूते लुङ्। कदा गमिष्यसीति गमनात्प्राक् प्रश्ने, एष गच्छामीत्युत्तम्। अव्यवहितोत्तरकाले गमिष्यामीत्यर्थः। "एष" इति तु अयमितिवद्व्याख्येयः। वर्तमानकालसमीपे भविष्यति लट्। गमिष्यामि वेति। वर्तमानवत्त्वाऽभावे भविष्यति लृट्।

तत्त्व-बोधिनी
वर्तमानसामीप्ये वर्तमानवद्वा ५०४, ३।३।१३१

वर्तमान। स्वर्थे ष्यञिति। अस्मादेव सामीप्य इति निर्देशात्ष्यञि सिद्धे "चतुर्वर्णाअदिभ्यः" इति वार्तिकं प्रपञ्चार्थमित्याहुः। न चाऽत्र "पूरणगुणे"ति निषेधात्षष्ठीसमासो नप्राप्नोतीति वाच्यम्, अनेनैव निर्देशेन तन्निषेधस्याऽनित्यत्वाऽभ्युपगमात्।तेन "बुद्धमान्य"मित्यादि सिद्धम्। येनोपाधिनेति। धातुविशेषाद्युपाधिना। तथाहि पूङ()जोः शानन्विहितः, स ताभ्यामेव धातुभ्यां भवति,न तु धात्वन्तरात्। तच्छीलादिविशिष्टे कर्तरि "अलङ्कृ"ञित्यारभ्य "भ्राजभासे"ति यावत् ये इष्णुजादय उक्तास्तेऽपि कृञादिभ्यो धातुभ्यस्तस्मिन्नुपाधौ सत्यैव भवन्ति। "कदा आगतोऽसी"ति भूतकालेन प्रश्नवाक्यम्, "आगच्छामी"त्युदाहरणे भूतकालाभिव्यक्तयेऽयमिति प्रयोगस्त्विदानीमेवागममिति वर्तमानसमीपभूतकालद्योतनाय। तेन ह्यागमनाऽविनाभूतं यद्रूपं परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते। न च "कदे"ति प्रश्ने उत्तरवाक्ययोः कालानुपादानादसङ्गतिः शङ्क्या, उत्तरत्राऽयमेषशब्दाभ्यामिदानीमिति कालावगमात्। सामीप्ये किम्?। कदा आगतो भवान्?। अस्मान्मासात्पूर्वस्मिन्मासे आगच्छम्। एतच्च सूत्रमाकरे प्रत्याख्यातम्। गङ्गासमीपे गङ्गात्वारोपवद्वर्तमानसमीपे वर्तमानत्वारोपसंभवात्।

---

सूत्रम्
काशिका-वृत्तिः
आशंसायां भूतवच् च ३।३।१३२

वा इत्येव। वर्तमानसमीप्ये इति न अनुवर्तते। आशंसनम् आशंसा, अप्राप्तस्य प्रियार्थस्य प्राप्तुम् इच्छा। तस्याश्च भविष्यत्कालो विषयः। तत्र भविष्यति काले आशंसायां गम्यमानायां धातोः वा भूतवत् प्रत्यया भवन्ति, चकाराद् वर्तमानवच् च। उपाध्यायश्चेदागमत्, आगतः, आगच्छति, आगमिष्यति, एते व्याकरणम् अध्यगीष्महि, एते व्याकरणम् अधीतवन्तः, अधीमहे, अध्येष्यामहे। सामान्यातिदेशे विशेषानतिदेशाल् लङ्लिटौ न भवतः। आशंसायाम् इति किम्? आगमिष्यति।
न्यासः
आशंसायां भूतवच्च। , ३।३।१३२

"आगमत्" इति। लुङ। आगत इति निष्ठा। "अनुदात्तोपदेश" ६।४।३७ इत्यादिनानुनासिकलोपः। "अधीमहे" इति। इङो लुट्, महिङ्, अदादित्वाच्छपो २।४।७२ लुक्। "अध्यगीष्महि" इति। लुङ, "विभाषा लुङ्लृङोः" २।४।५० इतीङो गाङादेशः, गाङ्कुटादिना १।२।१ सिचो ङित्वात् "घुमास्था" ६।४।६६ इत्यादिनेत्वम्। भूतवच्चेत्यादिदेशे लङलिटावपि प्राप्नुतः, तौ कस्मान्न भवत इत्याह-- "सामान्यातिदेशे" इत्यादि। भतसामान्यातिदेशोऽयम्, भूतविशेषप्रत्ययौ च लङलिटौ। सामान्यातिदेशे विशेषस्यानतिदेशः, तेन ताविह न भवतः॥

बाल-मनोरमा

आशंसायां भूतवच्च ६१४, ३।३।१३२

आशंसायां भूतवच्च। नानुवर्तते इति। अत्र व्याख्यानमेव शरणम्। अप्राप्तस्य प्रियसय् प्राप्तीच्छा आशंसा। सा च भविष्यद्विषयैव। भूते इच्छाविरहात्। तदाह-- भविष्यति काले इति। देवश्चेदिति। देव = पर्जन्यः, अवर्षीच्चेद्धान्यमवापम्स्म। वर्षति चेद्वपामः। वर्षिष्यति चेद्वप्स्याम इत्यन्वयः। भूतवद्भावाद्भविष्यति लुङ्-- अवर्षीदिति अवाप्स्मेति च भवति। वपधातोर्लुङि उत्त्मपुरुषबहुवचने अवाप्स्मेति भवति। वृष्टिवापयोरुभयोरप्याशंसाविषयत्वादुभत्रापि लुङ। वर्तमानवत्त्वपक्षे तु लट्। तदुभयाऽभावे तु लृट्। ननु भूतवत्त्वपक्षे लङ्()लिटावपि कुतो न स्यातामित्यत आह-- सामान्यातिदेशे इति। भूतत्वसामान्ये विहितस्याऽतिदेशादनद्यतनभूतत्वविशेषविहितयोर्लङ्()लिटोर्नाऽतिदेश इत्यर्थः। एतच्च भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

आशसायां भूतवच्च ५०५, ३।३।१३२

आशंसायाम्। आशंसनमाशंसा = अप्राप्तस्य प्राप्तुमिच्छा। आशंसायां वर्तमानत्वेऽपि तद्विषयस्य वर्षादेर्भविष्यत्कालसंबन्धाद्भविष्यतीत्युक्तम्। आशंसायां किम्?। गमिष्यति।

---

सूत्रम्

काशिका-वृत्तिः

क्षिप्रवचने लृट् ३।३।१३३

आशंसायाम् इत् येव। क्षिप्रवचने उपपदे आशंसायां गम्यमानायां धातोः लृट् प्रत्ययो भवति। भूतवच् च इत्यस्य अयम् अपवादः। उपाध्यायश्चेत् क्षिप्रम् आगमिष्यति, क्षिप्रं व्याकरणम् अध्येष्यामहे। वचनग्रहणं पर्यायार्थम्। क्षिप्रम्, शीघ्रम्, आशु, त्वरितम्, अध्येष्यामहे। न इति वक्तव्ये लृड्ग्रहणं लुटो ऽपि विषये यथा स्यात्। श्वः क्षिप्रम् अध्येष्यमहे।

न्यासः

क्षिप्रवचने लृट्। , ३।३।१३३

"भूतवच्चेत्यचस्यायमपवादः"इति। न प्राप्ते भूतवच्चेत्यस्मिन्नस्यारम्भात्। अथ वचनग्रहणं किमर्थम्? यावता क्षिप्रे लृडित्येनेनैव सर्वं सिद्धमित्यत आह-- "वचनग्रहणं पर्यायार्थम्िति। असति हि वचनग्रहणे क्षिप्रशब्द एवोपपदे लृट् स्यात्, त()स्मस्तु सति यावन्तः क्षिप्रवचनास्तेषु सर्वेषु भवति। अथ लृड्ग्रहणंकिमर्थम्, न क्षिप्रवचन इत्येवोच्येत, भूतवच्चेत्यस्यातिदेशस्य भविष्यत्कालविषयत्वात् तस्मिन् प्रतिषिदोधे "लट् शेषे च"३।३।१३ इत्येनेनैव सिद्धः? इत्याह--"नेति वक्तव्ये"इत्यादि। नेति वक्तव्ये यल्लृड्()ग्रहणं क्रियते तस्यैतत् प्रयोजनम्-- लुटोऽपि विषये भविष्यदनद्यतने काले "लृड्? यथा स्यात्, अन्यथा, हि लृडपवादो लुडेव स्यात्॥

बाल-मनोरमा

क्षिप्रवचने लृट् ६१५, ३।३।१३३

क्षिप्रवचने लृट्। वचनग्रहणात्क्षिप्रपर्याये इति लभ्यते। तदाह-- क्षिप्रपर्याये इति। पूर्वविषये इति। आशंसायामित्यर्थः। "आशंसायां भूतवच्चे"त्यस्यापवादः। ननु "क्षिप्रवचनेने"त्येतावतैव आशंसायां क्षिप्रपर्याये उपपदे भविष्यति न भूतवन्न वर्तमानवदिति लाभाल्लृङ्गहणमनर्थकमित्यत आह-- नेति वक्तव्ये इति। "क्षिप्रवचने ने"त्युक्ते "सामान्यातिदेशे विशेषानतिदेशः इनि न्यायेन भविष्यत्सामान्ये विहितस्य लृट एव निषेधः स्यान्नतु लुटः, तस्यानद्यतनभविष्यद्विशेषविधानात्। शीघ्रं वप्स्याम इति। अनद्यतनत्वद्योताय ()आश्शब्दः। अत्र न लुडिति भावः।

तत्त्व-बोधिनी

क्षिप्रवचने लृट् ५०६, ३।३।१३३

क्षिप्रवचने। वचनग्रहणं स्वरूपग्रहमनिरासार्थम्। तदाह-- क्षिप्रपर्याय इति। पूर्वविषय इति।आशंसायामित्यर्थः। तेन पूर्वलकारापवादोऽयम्।

---

सूत्रम्

काशिका-वृत्तिः

आशंसावचने लिङ् ३।३।१३४

आशंसा येन उच्यते तदाशंसावचनम्। तस्मिन्नुपपदे धातोर् लिङ् प्रत्ययो भवति भूतवच् च इत्यस्य अयम् अपवादः। उपाध्यायश्चेदागच्छेत्, आशंसे युक्तो ऽधीयीय। आशंसे अवकल्पये युक्तो ऽधीयीय। आशंसे क्षिप्रम् अधीयीय।

न्यासः

आशंसावचने लिङ्। , ३।३।१३४

"आशंसे युक्तोऽधीयीय" इति।इङः लिङः सीयुट, उत्तमपुरुषैकवचनम्, इट्, "इटोऽत्"३।४।१०६ इत्यद्भावः "सार्वधातुकमपित्"१।२।४ इति ङित्त्वाद्गुणाभावः, "लिङ सलोपोऽनन्तस्य"७।२।७९ इति सकारलोपः, धातोरियङ्, उपसर्गेण सह "अकः सर्वणे दीर्घः" ६।१।९७। "आशंसे क्षिप्रमधीयीय"इति। अत्र यद्यपि क्षिप्रवचनमुपपदमाशंसावचनमपि, तथापि परत्वाल्लिङेव भवति, न लृट। तस्य तु यत्राशंसावचनमुपपदं नास्ति सोऽवकाशः-- "क्षिप्रमध्येषामहे"इति॥

बाल-मनोरमा

आशंसावने लिङ् ६१६, ३।३।१३४

#आशंसावचने लिङ्। आशंसायाः प्राप्तीच्छाया भूते असंभवाद्भविष्यतीति लभ्यत इति मत्वाह-- भविष्यतीति। "आशंसायां भूतवच्चे"त्यस्यापवादः। तदाह-- नतु भूतवदिति। गुरुश्चेदिति। गुरुरुपेयाच्चेत् क्षिप्रमधीयीयेत्याशंसे इत्यन्वयः। क्षिप्रयोगेऽपि परत्वाल्लिङेव, नतु लृडिति भावः।

तत्त्व-बोधिनी

आशंसावचने लिङ् ५०७, ३।३।१३४

आशंसावचने। भूतवद्वर्तमानवत्प्रत्यययोरपवादः। न भूतवदिति। न वर्तमानवदित्यपि बोध्यम्। आशंसेऽधीयीयेति। एवं

प्रार्थये अधीयीय,इच्छामो वयवमधीयीमहीत्यादि ज्ञेयम्। क्षिप्रमिति। क्षिप्रयोगेऽपि परत्वाल्लिङिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

न अनद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ३।३।१३५

भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ विहितौ, तयोरयं प्रतिषेधः। अनद्यतनवत् प्रत्ययविधिर् न भवति क्रियाप्रबन्धे सामीप्ये च गम्यमाने। क्रियाणां प्रबन्धः सातत्येनानुष्ठानम्। कालानां सामीप्यं तुल्यजातीयेनाव्यवधानम्। यावज्जीवं भृशमन्नमदात्। भृशमन्नं दास्यति। यावज्जीवं पुत्रानध्यापिपत्। यावज्जीवमध्यापयिष्यति। सामीप्ये खल्वपि येयं पौर्णमास्यतिक्रान्ता, एतस्यामुपाध्यायो ऽग्नीनाधित, सोमेनायष्ट, गामदित। येयममावास्या आगामिनी, एतस्यामुपाध्यायो ऽग्नीनाधास्यते, सोमेन यक्ष्यते, स गां दास्यते। द्वौ प्रतिषेधौ यथाप्राप्तस्य अभ्यनुज्ञापनाय।

न्यासः

नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः। , ३।३।१३५

"कालानां सामीप्यम्ित्येनन कालसम्ब्धि सामीप्यमिहाश्रीयत इति दर्शयति। कुतः पुनः सामान्योक्तेन कालसम्बन्धिन एव सामीप्यस्य ग्रहणं लभ्यते? वत्र्तमानसामीप्य इत्यत आरभ्य प्रायिकत्वादस्य प्रकरणस्य। एतदपि कुतः? वत्र्तमानादिशब्दानां कालशब्दत्वात्। अपि च लङलुटोः प्रतिषेधः, तौ च कालविहितौ। अतो यत्र हि तौ, तत्र तत्सम्बन्धेनैव कालसामीप्यमिहाश्रीयत इति विज्ञायते। तत्पुनः कीदृशमित्याह-- "तुल्यजातीयेन"इत्यादि। तुल्यजातीयग्रहणं भिन्नजातीयनिवृत्त्यर्थम्। कालमात्रेण व्यवधानेन गृह्यमाणे येयं पौर्णमास्यतिक्रान्ता तस्यामुपाध्यायोऽग्नीनाधितेत्येवमादावुदाहरणे सामीप्यं न स्यात्; अमावास्यया अन्याभिश्च तिथिभ्यव्र्यवधानात्। तस्मात् समानजातीयेनाव्यवधानमश्रीयते। "अदात्" इति। "गातिस्था"२।४।७७ इत्यादिना सिचो लुक्। "अध्यापिपत्" इति। "हेतुमति च"३।१।२६ इति णिच्। "क्रीङजीनां णौ" ६।१।४७ इत्यात्त्वम्, "अर्त्तिह्री"७।३।३६ इत्यादिना पुक्, लुङ, च्लेः "णि श्री"३।१।४८ इत्यादिना चङ, "अजादेर्द्वितीयस्य" ६।१।२ इति पीत्येतस्य द्विर्वचनम्, "आडजादीनाम्" ६।४।७२ इत्याट्, "आटश्च" ६।१।८७ इति वृद्धिः, णिचो लोपः। "येयं पौर्णमास्यतिक्रान्ता" इति। पौर्णमास्यन्तरेणाव्यवहिता या पौर्णमासी, तामधिकृत्येदमाह। सा हि यद्यप्यमावास्यया अन्याभिश्च तिथिभिव्र्यवहिता, तथापि तुल्यजातीयेन पौर्णमास्याख्येन कालेनाव्यवहितत्वात् सामीप्यं नातिवत्र्तते। "अग्नीनाधित" इति। दधातेराङपूर्वस्य "स्थाघ्वोरिच्च"१।२।१७इतीत्त्वम्, सिचश्च कित्वम्, "ह्रस्वादङ्गात्" ८।२।२७ इति सिचो लोपः। "अदित"इति। ददाते रूपम्। पूर्ववत्। "यक्ष्यते"इति।यजेर्लृट्(), स्यः, तस्मिन् परस्तथा षष्वे कृते "षढोः कः सि"८।२।४१ इति कत्वम्। "आधित" इत्यादौ सर्वत्र "स्वरितञितः"१।३।७२ इत्यादिनाऽऽत्मनेपदम्। किमर्थं प्रतिषेधद्व्यमुच्यते, "नाद्यतनवत् क्रियाप्रबन्धसामीप्ययोः"इत्येवोच्येत? क्रियाप्रबन्धसामीप्ययोह्र्यद्यतनप्रत्ययौ लुङ्लृटाविष्येते, नानद्यतनप्रत्ययौ लङलृटौ। तौ च लङलुटावेवमुच्यमाने सिध्यत एवेत्यत आह-- "द्वौ प्रतिषेधौ" इत्यादि। एवं मन्यते-- यदि "नाद्यनवत् क्रियाप्रबन्धसामीप्ययोः"इत्येवोच्येत तदैतदेवं सूत्रं विधायकं स्यात्, ततश्च सङ्करः प्रसज्येत-- लुङोऽपि विषये लृट्, लृटश्च विषये लुङ। न ह्रत्रायं विशेष उपादीयते। भूते लुङ भविष्यति लृडिति प्रतिषेधविषय उच्यमाने नायं दोषः, ततो नानेन किञ्चिद्विधीयते, केवलमनद्यतनप्रत्ययानां प्रतिषेधः क्रियते, तेषु प्रतिषिद्धेषु स्वैरेव वाक्यैर्विधायकैर्लुङादय उत्सर्गाः स्वे स्वेकालेऽपवादविनिर्मुक्ते भवन्ति। अतो यथाप्राप्ताभ्यनुज्ञापनाय प्रतिषेधद्वयमुच्यते॥

बाल-मनोरमा

नाऽनद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ६१७, ३।३।१३५

नाऽनद्यतनवत्। क्रियायाः प्रबन्धः = सातत्यम्। तदाह-- क्रियायाः सातत्ये इति। अनद्यतनबदित्यनेन अनद्यने भूते भविष्यति च विहितौ लङ्लुटौ विवक्षितौ। तदाह-- लङ्लुटौ नेति। अनद्यतने भूते लङ् न भवति, भविष्यत्यनद्यतने तु लुग्नेत्यर्थ-। क्रियासातत्ये लङ्निषेधमुदाहरति-- यावज्जीवमन्नमदादिति। लुङि "गातिस्थे" ति सिचो लुक्। सामीप्ये उदाहरिष्यन्नाह-- सामीप्यमिति। येयमिति। पोर्णमास्या उपरि कृष्णपक्षे कतपयाहोरात्रे व्यवधानेऽपि सामीप्यमस्त्येव, पौर्णमास्यन्तरेण सजातीयेन व्यवधानाऽभावात्। आधितेति। धाधातोर्लुङि "स्थाध्वोरिच्चे"ति धाधातोरित्त्वं, सिचः कित्वं च "ह्रस्वादङ्गा"दिति सिचो लोपः। सोमेनायष्टेति। "येयं पौर्णमास्यतिक्रान्ता तस्या"मित्यनुषज्यते। अथ क्रियासातत्ये लुटो निषेधमुदाहरति-- येयममावास्येति। सोमेन यक्ष्यते इति। "येयममावास्या आगामिनी तस्या"मित्यनुषज्यते।

बाल-मनोरमा

भविष्यति मर्यादावचनेऽवरस्मिन् ६१८, ३।३।१३५

भविष्यति मर्यादा। "अवरस्मि"न्निति च्छेदः। अनद्यतनवन्नेति। लुण्नेत्यर्थः। "अक्रियाप्रबन्धार्थ"मिति भाष्यम्। "असामीप्यार्थं चे"ति कैयटः। योऽयमिति। क()स्मश्चिज्जनपदविशेषे वसतः आपाटलिपुत्राद्योऽयं गन्तव्योऽध्वा तस्य अध्वनो मध्यवर्तिन्याः कौशाम्ब्याः यदवरं पूर्वप्रदेशस्तत्र सक्तून् ()आः प्रभृति पास्याम इति योजना। अत्र कौशाम्ब्या इति मर्यादा गम्यते। "अवर"मित्यनेन अवरत्वं गम्यते। अत्र भविष्यत्यद्यतेन लुण्न, किंतु लृडेवेति भावः। कालविभागे। पूर्वसूत्रमिति। "भविष्यति मर्यादावचनेऽवरस्मि"न्निति सूत्रमित्यर्थः। ननु कालमर्यादायामपि पूर्वसूत्रेणैव सिद्धमित्यताअह-- अहोरात्रेति। तथा च आहोरात्रसंबन्धिनि प्रविभागे "भविष्यति मर्यादावचने इत्युक्तविधिर्न भवतीत्यर्थः। ननु "भविष्यति मर्यादावचनेऽवरस्मिन्कालविभागे चानहोरात्राणामित्येकमेव सूत्रं कुतो नेत्यत आह-- योगविभाग उत्तरार्थ इति। इदमुत्तरसूत्रे स्पष्टीभविष्यति। योऽयं वत्सर आगामीति। कालतो मर्यादायामुदाहरणम्। आग्रहायण्या इति। मार्गशीर्षपौर्णमास्या इत्यर्थः। युक्ता इति। नियमयुक्ता इत्यर्थः। अध्येष्यामहे इति। अत्र न लुट्, किंतु लृडेवेति भावः। पञ्चदशरात्रयुक्ता इति। पञ्चदश रात्रयो यस्य पक्षस्येति बहुव्रीहिः। "अच्प्रत्यन्ववपूर्वादित्यत्र अजिति योगविभागादच्समासान्तः। यद्वापञ्चदशानां रात्रीणां समाहारः पञ्चदशरात्रः। "अहःसर्वैकदेशे"त्यच्समासान्तः। "सङ्ख्यापूर्वंरात्रं क्लीब"मिति तु "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये"ति वचनान्न भवति।

तत्त्व-बोधिनी

नाऽनद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ५०८, ३।३।१३५

नानद्यतन। भूतानद्यतने लङ्विहितो, भविष्यत्यनद्यतने तु लुट्, तौ चानयोरर्थयोर्निषिध्येते। तदाह--लङ्लुटौ नेति। एवं च भूते लुङ्, भविष्यति तु लृडित्याशयेनोदाहरति-- अन्नमदात्, दास्यतीत्यादि। अग्नीनिति। आहवनीयादीन्।

---

सूत्रम्

काशिका-वृत्तिः

भविष्यति मर्यादावचने ऽवरस्मिन् ३।३।१३६

नानद्यतनवतिति वर्तते। अक्रियप्रबन्धार्थम्, असामीप्यार्थं च वचनम्। भविष्यति काले मर्यादावचने सत्यवरस्मिन् प्रविभागे ऽनद्यतनवत् प्रत्ययविधिर् न भवति। यो ऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्ष्यामहे, तत्र सक्तून् पास्यामः। भविष्यति इति किम्? यो ऽयमध्वा गतः आपाटलिपुत्रात्, तस्य यदवरं कौशाम्ब्याः, तत्र युक्ता अध्यैमहि, तत्र द्विरोदनम् अभुञ्ज्महि, तत्र सक्तूनपिबाम। मर्यादावचने इति किम्? यो ऽयमध्वा

निरवधिको गन्तव्यः, तस्य यदवरं कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, सक्तून् पाता स्मः। अवरस्मिनिति किम्? योऽयमध्वा गन्तव्यः आपाटलिपुत्रात्, तस्य यत्परम् कौशाम्ब्याः, तत्र द्विरोदनं भोक्तास्महे, तत्र सक्तून् पातास्मः। इह सूत्रे देशकृता मर्यादा, उत्तरत्र कालकृता। तत्र च विशेषं वक्ष्यति।

न्यासः

भविष्यति मर्यादावचनेऽवरस्मिन्। , ३।३।१३६

"मर्यादावचने सति" इति। वचनग्रहणमभिविधावपि यथा स्यात्। मर्यादाविशेष एवाभिविधिश्च। सैव मर्यादा यदा कार्येणाभिसम्बद्ध्यते तदाऽभिविधिरित्युच्यते, यदा तु न सम्बद्ध्यते तदा मर्यादेति। तत्रेह वचनग्रहणाद्विशेषो नाश्रीयते, तेन मर्यादाया उक्तिमात्रे भवति। विनापि वचनग्रहणेनाभिविधौ प्रतिषेधो न भवेत्; यस्माद्यत्राभिविधौ कार्यमिच्छति तत्राभिविधिग्रहणं वा करोति, यथा-- "आङ् मर्यादाभिविध्योः" २।१।१२ इति#इ; वचनग्रहणं वा, यथा-- "आङ् मर्यादावचने" १।४।८८ इति। तदभिविधावपि यथा स्यादित्येवमर्थं वचनग्रहणं क्रियते। "अवरस्मिन्" इति। अर्वागित्यर्थः। "गन्तव्यः"इति। भविष्यत्कातामध्वनो दर्शयति। "तस्य यदवरम्" इति। अनेनाध्वनो विभागं "द्विः" इति। एतेनापि क्रियाप्रतिबन्धाभावम्। "भोक्ष्यमहे" इति। "भुजोऽनवने" १।३।६६ इत्यात्मनेपदम्, "चोः कुः" ८।२।३० इति गकारः, "खरि च" ८।४।५४ इति गकारस्य ककारः। "अध्यैमहि" इति। महिङ, "आडजादीनाम्" ६।४।७२ इत्याट्, "आटश्च" ६।१।८७ इति वृद्धिः, उपसर्गस्य ६।१।७४ यणादेशः। "अपिबाम" इति। पाघ्रादिसूत्रेण ७।३।७८ पिबादेशः, "नित्यं ङितः" ३।४।९९ इति सकारलोपः। "भोक्तास्महे" इति। लुट्। "तत्रच विशेषं वक्ष्यति" इति। अनहोरात्राणामित्यनेन ३।३।१३७॥

तत्त्व-बोधिनी

भविष्यति मर्यादावचनेऽवरस्मिन् ५०९, ३।३।१३६

भविष्यति मर्यादा। अक्रियाप्रबन्धार्थमसामीप्यार्थं चेदं वचनम्। "नाऽनद्यतनव"दित्यनुवर्तते इत्याह--- अनद्यतनवन्नेति। लुडत्र नेत्यर्थः। इह सूत्रे देशकृत मर्यादा, उत्तरत्र कालकृता। तत्र विशेषं वक्ष्यति-- तस्य यदवरमिति। पाटलिपुत्रावधिकमार्गस्य यदवरं कौशाम्ब्याः सकाशादित्यर्थः। कौशाम्ब्याः पूर्वमिति यावत्। भविष्यति किम्?। योऽध्वा अतिक्रान्त आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तूनपिबाम। मर्यादावचने इति किम?। योऽध्वा गन्तव्यो निरवधिकस्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून्पास्यामः। अवरस्मिन्निति किम्?। योऽध्वा गन्तव्य आपाटलिपुत्रात्तस्य यत्परं कौशाम्ब्यास्तत्र सक्तून्पाता स्मः।

---

सूत्रम्

काशिका-वृत्तिः

कालविह्भागे च अनहोरात्राणाम् ३।३।१३७

भविष्यति मर्यादावचने ऽवरस्मिनिति वर्तते। कालमर्यादाविभागे सत्यवर्स्मिन् प्रविभागे भविष्यति काले ऽनद्यतनवत् प्रत्ययविधिर्न भवति, न चेदहोरात्रसम्भन्धी विभागः, तैस्तेषां च विभागे प्रतिषेधः। पूर्वेण एव सिद्धे वचनम् इदम् अहोरात्रनिषेधार्थम्। योगविभाग उत्तरार्थः। यो ऽयं संवत्सर आगामी, तत्र यदवरमाग्रहायण्याः, तत्र युक्ता अध्येष्यामहे, तत्रौदनं भोक्ष्यामहे। भविष्यति इत्येव। यो ऽयं वत्सरो ऽतीतः, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्जमहि। मर्यादावचने इत्येव। यो ऽयं निरवधिकः काल आगामी, तस्य यदवरमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्महे। अवरस्मिनित्येव। परस्मिन् विभाषां वक्ष्यति। अहोरात्राणाम् इति किम्? त्रिविधम्

उदाहरणम् यो ऽयं मास आगामी, तस्य यो ऽवरः पञ्चदशरात्रः, यो ऽयं त्रिंशद्रात्र आगामी, तस्य यो ऽवरो ऽर्धमासः, यो ऽयं त्रिंशदहोरात्र आगामी, तस्य यो ऽवरः पञ्चदशरात्रः, तत्र युक्ता अध्येतासमहे, तत्र सक्तून् पातास्मः। सर्वथा अहोरात्रस्पर्शे प्रतिषेधः।

न्यासः

कालविभागे चानहोरात्राणाम्। , ३।३।१३७

"कालमर्यादाविभागे सति" इति मर्यादाविभागशब्दयोः सयाहारे द्वन्द्वः। तेन कालशब्दस्य षष्ठीसमासः। "तेषाञ्च" इति। तैस्तेषाञ्चेति युक्तं यत् तेषां विभागे प्रतिषेधो भवति; तत्सम्बन्धित्वाद्विभागस्य। यदा तैरन्यस्य विभागस्तदा न युक्तम्, न हि तदा तत्सम्बन्धी विभागः। किं तर्हि? विभज्यमानसम्बन्धी। तथाप्यहोरात्रकृतत्वाद्विभागस्य सम्बन्धित्वमस्त्येव; निमित्तस्य नैमित्तिकसम्बन्धादित्यदोषः। यदि वचनमहोरात्रप्रतिषेधार्थम्, एवं च सामर्थ्यात् कालविभागस्यैव प्रतिषेधो विज्ञास्यते, न देशविभागस्य, न हि देशविभागस्याहौरात्रैः सह सम्बन्धोस्तीत्यत आह-- "योगाविभाग उत्तरार्थः"इति। उत्तरसूत्रे कालविभाग एव यथा स्यादित्येवमर्थम्, देशविभागे मा भूदिति। "अभुञ्ज्महि" इति। "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः। "त्रिविधिमुदाहरणम्" इति। तत्र प्रथमे शब्दान्तरवाच्यस्य कालस्याहोरात्रैर्विभागः, द्वितीयेऽहोरात्रवाच्यस्य शब्दान्तरवाच्ययेन कालेन विभागः, तृतीयेऽहोरात्रवाच्यस्य कालस्योरात्रवाच्येन कालेन। "सर्वथा" इति। सर्वेण प्रकारेण। यद्यहोरात्रैरन्यस्य विभागोऽथधाप्यन्येन तेषां यद्यहोरात्रैरेव तेषामेवमपि प्रतिषेध इति सर्वथाशब्दस्यार्थः। "अहोरात्रसंस्पर्शः" इति। अहोत्राणां विभागेन सम्बन्ध = अहोरात्रसंस्पर्श इति। "सर्वत्रानद्यतनवत्प्रत्यया उदाहत्र्तव्याः" इति। भूतानद्यतने-- तत्र युक्ता अध्यैमहि, तत्रोदनमभुञ्ज्महीति सर्वत्र लुङ्दाहत्र्तव्यः। भविष्यदनद्यतने तु-तत्र युक्ता अध्येतास्महे, तत्रौदनं भोक्तास्मह इति सर्वत्र लुडुदाहत्र्तव्यः॥

तत्त्व-बोधिनी

कालविभागे चाऽनहोरात्राणाम् ५१०, ३।३।१३७

कालविभागः = कालविशेषः। अनहोरात्राणामिति संबन्धषष्ठी। पूर्वसूत्रमिति। तदयमर्थः-- मर्यादोक्तौ कालविशेषाद्यदवरं तस्मिन्प्रविभागे भविष्यत्यनद्यतनवन्न, स चेत्कालविभागोऽहोरात्रसंबन्धी न चेदित्यर्थः। इह कालविभागे सत्यवरस्मिन्ननद्यतनवन्नेत्युक्ते कस्मादित्यपेक्षायामर्थात्कालविशेषादिति लभ्यत इत्येके। केचित्तु कालविभाग इति पञ्चम्यर्थे सप्तमीत्याहुः। उत्तरार्थ इति। "परस्मिन्विघाषे"ति सूत्रे कालमर्यादाया एवानुवृत्तिर्यथा स्यात्। भविष्यतीति किम्?। यः संवत्सरोऽतीतस्तस्य यदवरं मासात्तत्र पयोऽपिबाम। मर्यादायामिति किम्?। यो निरवधिः समयस्तस्य यदवरं मासात्तत्र पयः पातास्मः। पञ्चदशरात्र इति। नन्वत्र "सङ्ख्यापूर्वं रात्र"मिति क्लीब्तवेन भाव्यम्। न च पञ्चदश रात्रयो यस्मिन्पक्षे इति बहुव्रीह्याश्रयणात्पुंल्लिङ्गःसिद्ध इति वाच्यम्, "अहः सर्वैकदेशेट त्यच्प्रत्ययस्याऽभावप्रसङ्गादिति चेत्। सत्यम्। अतएव हि भाष्यप्रयोगात्क्लीबत्वं नेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

परस्मिन् विभाषा ३।३।१३८

भविष्यति मर्यादावचने कालविभागे च अनहोरात्राणाम् इति सर्वम् अनुवर्तते। कालमर्यादाविभागे सति भविस्यति काले परस्मिन् प्रविभागे विभाषा अनद्यतनवत् प्रत्ययविधिर् न भवति, न चेदहोरात्रसम्बन्धी प्रविभागः। अवरस्मिन् वर्जं पूर्वम् अनुवर्तते। अवरस्मिन् पूर्वेण प्रतिषेध उक्तः, सम्प्रति परस्मिन्नप्राप्त एव विकल्प उच्यते। यो ऽयं संवत्सर आगामी, तस्य

यत् परमाग्रहायण्याः तत्र युक्ता अध्येष्यामहे, अध्येतास्महे, तत्र सक्तून् पास्यामः, तत्र सक्तून् पातास्मः। अनहोरात्राणाम् इत्येव। यो ऽयं त्रिंशद्रात्र आगामी, तस्य यः परः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। भविष्यति इत्येव। यो ऽयं संवत्सरो ऽतीतः, तस्य यत् परमाग्रहायण्याः, तत्र युक्ता अध्यैमहि, तत्रौदनमभुञ्ज्महि। मर्यादावचने इत्येव। यो ऽयं संवत्सरो निरवधिकः काल अगामी, तस्य यत् प्रमाग्रहायण्याः, तत्र युक्ता अध्येतास्महे, तत्र सक्तून् पातास्मः। कालविभागे इत्येव। यो ऽयमध्वा गन्तव्य आपाटलिपुत्रात्, तस्य यत् परं कौशाम्ब्याः, तत्र युक्ता अध्येतास्महे, ओदनं भोक्तास्महे। इति सर्वत्र अनद्यतनवत् प्रत्यया उदाहार्याः।

बाल-मनोरमा

परस्मिन्विभाषा ६१९, ३।३।१३८

परसमिन्विभाषा। अनुवर्तते इति। तथा च भविष्यति काले मर्यादोक्तौ परस्मिन् विभागे अनद्यनवद्वेति फलितम्। "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति व्याख्यातं भूधातुनिरूपणे।

तत्त्व-बोधिनी

परस्मिन्विभाषा ५११, ३।३।१३८

परस्मिन्। "भविष्यत्यनद्यतनवतन्ने"ति वकल्पेन निषिध्यते। वर्ज्यमिति। णिजन्तात् "अचो य"दिति कर्मणि यत्। वर्जमिति। पाठे तु "द्वितीयायां चे"ति णमुल्।अनहोरात्रामित्येव। योऽयं वत्सर आगामी तस्य यत्परं पञ्चदशरात्रात्तत्र पयः पातास्म [इत्यादि]। लिङ्निमित्त इति। अतिपत्तिः--अनिष्पत्तिः।

---

सूत्रम्

काशिका-वृत्तिः

लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ ३।३।१३९

भविष्यति इत्यनुवर्तते। हेतुहेतुमतोर् लिङ् ३।३।१५६ इत्येवम् आदिकं लिङो निमित्तम्। तत्र लिङ्निमित्ते भविष्यति काले लृङ् प्रत्ययो भवति क्रियातिपत्तौ सत्याम्। कुतश्चिद् वैगुण्यादनभिनिर्वृत्तिः क्रियायाः क्रियातिपत्तिः। दक्षिणेन चेदायास्यन् न शकटं पर्यभविस्यत्। यदि कमलकमाह्वास्यन् न शकटं पर्याभविष्यत्। अभोक्ष्यत भवान् घृतेन यदि मत्समीपमागमिष्यत्। भविष्यत् कालविषयम् एतद् वचनम्। भविस्यदपर्याभवनं च हेतुमत्, तत्र हेतुभूतं च कमलकाह्वानम्। लिङ्गिलिङ्गे बुद्धवा तदतिपत्तिं च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते, यदि कमलकमाह्वास्यन्न शक्टं पर्याभविष्यतिति। हेतुहेतुमतोराह्वानापर्याभवनयोः भविष्यत् कालविषययोः अतिपत्तिः इतो वाक्यादवगम्यते।

लघु-सिद्धान्त-कौमुदी

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ४४४, ३।३।१३९

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्, इत्यादि ज्ञेयम्॥ अत सातत्यगमने॥ २॥ अतति॥

न्यासः

लिङनिमित्ते लृङ् क्रियातिपत्तौ। , ३।३।१३९

"इत्येवमादिकम्" इति। आदिशब्देन "कथमि लिङ च" ३।३।१४३ इत्येवमादयो गृह्न्ते। "कुतश्चिद्वैगूण्यात्" इति।

विधुरप्रत्ययोपनिपातात्, कारणान्तरवैकल्याद्वा। "आयास्यत्" इति। "स्यतासी लृलुटोः" ३।१।३३ इति स्यप्रत्ययः। "इतश्च" ३।४।१०० इतीकारलोपः। "आह्वास्यत्" इति। "ह्वेञ् {स्पर्धायां शब्दे च--धा।पा।} स्पर्धायाम्" (धा।पा।१००८)। "{वास्तीदमुदाहरणं काशिकायाम्} पर्यासिष्यत" इति। "आस उपवेशने" (धा।पा।१०२१), अनुदात्तेत्। {तत्र हेतुभूतम्--काशिका} तद्धेतुभूतम्" इति। शकटपर्याभवनस्य हेतुभूतम्। एतेन लिङनिमित्तं हेतुहेतुमद्भावं दर्शयति। "लिङ्गिलिङ्गेबुध्वा" इति। असकृत् प्राक् कमलकाह्वाने सति शकटस्यापर्याभवनं दृष्ट्वा भाविनोऽपि कमलह्वानस्य शकटस्यापर्यायभवनस्य हेतुभूतत्वं हेतुभूतत्वं लिङ्गेन बुध्वा। लिङ्गं पुनः कमलकाह्वानसामान्यं धर्मम्। "तदतिपर्ति()त च" इति। कमलकाह्वानस्य शकटपर्याभवनस्य चातिपत्तिम्। तत्र कमलकाह्वानस्य चातिपतिं()त कमलकस्य देशान्तरगमनादिना लिङ्गेनावगम्यते, शकटपर्याभवनस्यातिपत्तिमत्र शकटस्य गुरुभारारोपणादिना। "इतो वाक्यात्" इति। यदि कमलकमाह्वास्यदित्यादेवर्वाक्यात्। अथ किमर्थं क्रियाग्रहणम्, न त्वेतद्वक्तव्यम्-- लिङ्()निमित्ते लृङतिपत्ताविति, धात्वधिकाराद्विनापि क्रियाग्रहणेन धात्वर्थस्यातिपत्ताविति विशेषोऽर्थो लभ्यते, ततोऽनर्थकं क्रियाग्रहणमिति मन्यते;नैतत्; लिङनिमित्त इति श्रूयते, प्रकृतस्य सम्बन्धाच्छरुक्तस्य सम्बन्धो बलवानिति लिङनिमित्तस्यैवातिपत्तिर्विज्ञायते। ततश्च "उताप्योः समर्थयोः" ३।३।१५२ इति सामथ्र्यातिपत्तावुताप्योश्चातिपत्तौ लिङ प्रसज्येत। तस्मात् क्रियाग्रहणं कत्र्तव्यम्॥

बाल-मनोरमा

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ७६, ३।३।१३९

लिङ्निमित्ते। हेतुहेतुमद्भावादीति। हेतुहेतुमतोर्लिङ्" , "इच्छार्थेषु लिङ्लोटा"वित्यादि लिङ्निमित्तं लकारार्थप्रक्रियायां स्पष्टीभविष्यति। भविष्यत्यर्थ इति। "भविष्यति मर्यादावचने" इत्यतस्तदनुवृत्तेरिति" भावः। क्रियातिपत्तिपदं व्याचष्टे--- क्रियाया अनिष्पत्ताविति। "सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्य"दित्युदाहरणं बोध्यम्। अभविष्यदिति। लृङ्। तिप्। इतश्चेतीकारललोपः। "स्यतासी लृलुटो"रिति शबपवादः स्यप्रत्ययः। अट्। वलादिलक्षम इट्। गुणावादेशौ। षत्वम्। अभविष्यन्निति। झिः। स्यः। अट्। इट्। गुणावादेशौ। "झोऽन्त इति झेरन्तादेशः। इतश्चेतीकारलोपः। षत्वम्। रुत्वविसर्गौ। अभविष्यतमिति। थसस्तमादेशः। स्यः अट्। इट्। गुणः। अवादेशः। इतश्चेतीकारलोपः। षत्वम्। रुत्वविसर्गौ। अभविष्यमिति। मिपोऽम्। स्यः। अट्। इट्। गुणावौ। पूर्वरूपम्। षत्वम्। अभविष्यावेति। वस्। स्यः। अट्। इट्। नित्यं ङित इति सकारलोपः। अतो दीर्घः। षत्वम्। एवं मसि अभविष्यामेति रूपम्। इति लृङ्प्रक्रिया। अथ प्रसङ्गादाह--

तत्त्व-बोधिनी

लिङ्?निमित्ते लृङ् क्रियातिपत्तौ ५८, ३।३।१३९

हेतुहेतुद्भावादीति। अत्र केचित्-- "आदिशब्देनाशंसावचनं गृह्त" इति व्याख्याय आशंसावचने लिङो यन्निमित्तं तत्रापि क्रियातिपत्तौ भविष्यति लृङ्, गुरुश्चेदायास्यत्, आशंसे,- अहमध्येष्ये" इत्याद्युदाहरन्ति। अन्ये तु "भविष्यति मर्यादे"त्यादिना भविष्यतीत्युपक्रम्य यो यो लिङ्ग विहितस्तन्निमित्त एव क्रियातिपत्तौ लृह् भवति, नान्यत्रेत्याहुः॥ लिङ्()निमित्तमिति। "हेतुहेतुमतोर्लिङ्" , "इच्छार्थेष #3 लिङ्लोटौ" इत्यादिलकारार्थप्रक्रियायां स्फुटीभविष्यति। अनिष्पत्ताविति। "सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्य"दिति तत्रैवोदाहरिष्यति।

---

सूत्रम्

काशिका-वृत्तिः

भूते च ३।३।१४०

लिङ्निमित्ते लृङ् क्रियातिपत्तौ इति सर्वम् अनुवर्तते। पूर्वेन भविष्यति विहितः सम्प्रति भूते विधीयते। भूते च काले लिङ्निमित्ते क्रियातिपत्तौ सत्यां लृङ् प्रत्ययो भवति। उताप्योः समर्थयोर् लिङ् ३।३।१५२ इत्यारभ्य लिङ्निमित्तेषु विधानम् एतत्। प्राक् ततो विकल्पं वक्ष्यति। दृष्टो मया भवत्पुत्रो ऽन्नार्थी चङ्क्रम्यमाणः, अपरश्च द्विजो ब्राह्मणार्थी, यदि स तेन दृष्टो ऽभविष्यत्, तदा अभिक्ष्यत। न तु भुक्तवान्, अन्येन पथा स गतः।

न्यासः

भूते च।, ३।३।१४०

"उताप्यरित्यारभ्य"इत्यादि। "उताप्योः समर्थययोः" ३।३।१५२ इत्येतत्प्रभृतिषु लिङ्()निमित्तेषु ह्नेतल्लृङविधानम्। कुत एतदित्याह-- "प्राक्" इत्यादि। यस्मात् प्राक् "वोताप्योः" ३।३।१४१ इति वक्ष्यते, ततश्च पारिशेष्याद्()भूते लिङो विधानं "वोताप्योः" ३।३।१४१ इत्यादिष्वेवावतिष्ठते। "न तु भुक्तवान्" इत्यादि। क्रियातिपर्तिं()त दर्शयति॥

बाल-मनोरमा

भूते च ६२०, ३।३।१४०

भूते च। अधिकारोऽयम्। अनुवर्तते इति। तथा च लिङ्निमित्ते लृङ् क्रियातिपत्तौ भूत इति अधिक्रियते इति फलितमिति भावः।

तत्त्व-बोधिनी

भूते च ५१२, ३।३।१४०

भूते च। लिङ्()निमित्ते लृङ् स्याद्भूते भविष्यति च क्रियापत्तौ। अद्यतनाऽनद्यतनसाधारमं भूतसामान्यमिह ज्ञेयम्। अस्योदाहरणानि---"उताप्योः समर्थयोर्लिङ्" इत्यारभ्य "समानकर्तृकेषु तुमु"न्निति विहाय सप्तसूत्र्यां बोध्यानि, ततः प्राचीनेषु "वोताप्यो"रित्यनेन विकल्पोक्तेः।

---

सूत्रम्

काशिका-वृत्तिः

वाऊउताप्योः ३।३।१४१

भूते लिङ्निमित्ते लृङ् क्रियातिपत्तौ इति सर्वम् अनुवर्तते। वा आ उताप्योः वोताप्योः। मर्यादायाम् अयम् आङ्, न अभिविधौ। उताप्योः समर्थयोर् लिङ् ३।३।१५२ इति वक्ष्यति। प्रागेतस्मात् सूत्रावधेः यदित ऊर्ध्वम् अनुक्रमिष्यामः, तत्र भूते लिङ्निमित्ते क्रियातिपत्तौ लृङ् वा भवति इत्येतदधिकृतं वेदितव्यम्। वक्ष्यति, विभाषा कथमि लिङ् च ३।३।१४३ कथं नाम तत्र भवान् वृषलम् अयाजयिष्यत्। यथाप्राप्तं च याजयेत्।

न्यासः

वोताप्योः।, ३।३।१४१

"वा आ उताप्योः" इति। एतेनाङ प्रश्लेषं दर्शयति। यद्योङोऽत्र प्रश्लेषःष वोताप्योरिरिति न प्राप्नोति, परत्वाद्गुणे कृते पूर्वेण सह वृद्ध्या भवितव्यम्? सौत्रत्वान्निर्देशस्येत्यदोषः। निपातनत्वात् पूर्वेण सहैकादेशं कृत्वा परेण सहाद्गुणः ६।१।८४ करिष्यते। ननु चाङो योगे "पञ्चम्यापाङ्परिभिः" २।३।१० इति पञ्चम्या न च पदादाङो योगे पञ्चमी भवति;

अप्रातिपदिकत्वात्। "मर्यादायाम्" इत्यादि। यद्यभिविधौ स्यात् "उताप्योः समर्थयोः" ३।३।१५२ इति लिङ् विकल्पेन प्रसज्येत, नित्यञ्चेष्यते। तस्मान्मर्यादायामयमाङ्, नाभिविधौ। "यथाप्राप्तञ्च" इति। लिङादिः; वाग्रहणात्॥

बाल-मनोरमा

वोताप्योः ६२१, ३।३।१४१

वोताप्योः। अयमप्यधिकारः। वा आ उताप्योरिति छेदः। भूते इति, लिङ्निमित्ते लृङिति चानवर्तते। तदाह-- उताप्योरित्यतः प्रागिति। "उताप्योः समर्थयो"रित्यतः प्रागित्यर्थः। नन्वनेन "उताप्यो"रित्यतः प्राग्भूते लिङ्निमित्ते लृङ्वेत्याधिकाराक्रान्तत्वाद्भूतेचेति पूर्वमधिकारसूत्रं निर्विषयमित्यत आह-- पूर्वसूत्रं त्विति। "उताप्योः समर्थयोर्लि"ङित्यारभ्य इच्छार्थेभ्यो विभाषे"त्यतः प्राक् "भूते चे"ति पूर्वमधिकारसूत्रं प्रवर्तत इत्यर्थः। इमावधकारौ यत्रलिङ्विधिस्तत्रैव प्रवर्तेतते, नतु लडादिविधौ, लिङ्निमित्ताऽभावात्।

तत्त्व-बोधिनी

वोताप्योः ५१३, ३।३।१४१

लृङ् वेति। लिङ्निमित्ते भूत एवायं विकल्पो, भविष्यति तु न्तियमेव लृङ्।

---

सूत्रम्

काशिका-वृत्तिः

गर्हायां लडपिजात्वोः ३।३।१४२

गर्हा कुत्सा इत्यनर्थान्तरम्। गर्हायां गम्यमानायाम् अपिजात्वोः उपपदयोः धातोः लट् प्रत्ययो भवति। वर्तमने लटुक्तः कालसामान्ये न प्राप्नोति इति विधीयते। कालविशेषविहितांश्च अपि प्रत्ययानयं परत्वादस्मिन् विषये वाधते। अपि तत्रभवान् वृषलं याजयति, जातु तत्रभवान् वृषलं याजयति, गर्गामहे, अहो अन्याय्यम् एतद्। लिङ्निमित्ताभावादिह क्रियातिपत्तौ लृङ् न भवति।

न्यासः

गर्हायां लिडपिजात्वोः। , ३।३।१४२

"कालसामान्ये न प्राप्नोति" इति। एतेन भविष्यतीत्यादेः कालविशेषवाचितोऽनुवृतिं()त सूचयन्नयं कालसामान्ये विधिरिति दर्शयति-- "कालविशेषविहितान्" इति। भूते कालविशेषे लङलिटौ विहितौ, भविष्यति लुङलृटौ च। तान् सर्वान् कालसामान्ये विधीयमानो लट् परत्वाद्बाधते। "याजयति" इति। यजेर्हेतुमण्ण्यन्ताल्लट्। "लिङ्निमित्ताभावात्" इति। हेतुहेतुमदादेरिलङ्()निमित्तभावादिह यद्यपि क्रियातिपत्तिर्विवक्ष्यते, तथापि लृङ न भवति॥

बाल-मनोरमा

गर्हायां लडपिजात्वोः ६२२, ३।३।१४२

गर्हायाम्। अपि जातु अनयोद्र्वन्द्वः। अत्र "वोताप्योरिति भूते लिङ्निमित्ते लृङ् वा इत्यधिकारो न संबध्यते। लड्विधानेन तद्विषये लिङ्()निमित्ताऽभावात्। कालत्रये इति। वर्तमाने भूते। भविष्यति चेत्यर्थः। भविष्यतीति निवृत्तम्। अतः कालसामान्ये लडिति भावः। परत्वादिति। अनवकाशत्वाच्चेत्यपि द्रष्टव्यम्। "अपि जाया"मित्यत्र , "जातु गणिका"मित्यत्र अपि- जातुशब्दौ निन्दाद्योतकौ। तदाह-- गर्हितमेतदिति।

तत्त्व-बोधिनी

गर्हायां लडपिजात्वोः ५१४, ३।३।१४२

गर्हायाम्। अत्र "वोताप्यो"रितिन संबध्यते। वर्तमाने लडुक्तः तु न प्राप्नोतीति विधिरयम्। कालत्रय इति। कालविशेषानुपादानादिति भावः। परत्वादिति। निरवकाशत्वादित्यपि बोद्ध्यम्। अपि जायामिति। त्यक्ष्यसि अत्याक्षीरित्यादिविषयेऽपि "यो जायामपि त्यजति जातु गणिकामाधत्ते" इति लडेव कालत्रयलकारापवादतया प्रयोक्तव्यः। लिङ्निमित्ताऽभावादिह क्रियातिपत्तौ लृङ्न भवति। कालत्रये लकारा इति। परोक्षानद्यतनभूते लिट्--कथं धर्मं तत्यक्थ। भूतानद्यतने लङ्--कथं धर्ममत्यजः। भूतसामान्ये लुङ्--अत्याक्षीः। भविष्यत्यनद्यने लुट्--त्यक्तासि। भविष्यत्सामान्ये लृट्--कथं धर्मं तयक्ष्यसीत्यादि। अत्रेति। क्रियातिपत्ताविति ज्ञेयम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाष कथमि लिङ् च ३।३।१४३

गर्हायाम् इति वर्तते। कथमि उपपदे गर्हायां गम्यमानायं धातोः लिङ् प्रत्ययो भवति, चकाराल् लट् च। विभाषाग्रहणं यथास्वं कालविषये विहितानाम् अबाधनार्थम्। कथं नाम तत्रभवान् वृषलं याजयेत्, कथं नाम तत्रभवान् वृषलं याजयति। कथं नाम तत्रभवान् वृषलं याजयिष्यति। कथं नाम तत्रभवान् वृषलं याजयिता। कथं नाम तत्रभवान् वृषलं याजयेत्। कथं नाम तत्रभवान् वृषलम् अयाजयत्। कथं नाम तत्रभवान् वृषलं यायजां चकार। अत्र लिङ्निमित्तम् अस्ति इति भूतविवक्षायां क्रियातिपत्तौ वा लृङ्। भविष्यद् विवक्षायां सर्वत्र नित्येन एव लृङा भवितव्यम्।

न्यासः

विभाषा कथमि लिङ् च। , ३।३।१४३

"विभाषाग्रहणम्()" इत्यादि। यस्मिन् काले लृङादयो विहितास्तेषां बाधनं मा भूदित्येवमर्थं विभाषाग्रहणम्। यद्येवम्, अनर्थकश्चकारः, विभाषाग्रहणादेव हि लटोऽप्यबाधित्वात् सिध्यत्येव? सत्यं सिध्यति वत्र्तमाने, कालान्तरे तु न सिध्यति। न हि तत्र कथमित्युपपदे लटः प्राप्तिरिति तत् कथं विभाषाग्रहणेन सिध्यति ! तस्माल्लडर्थश्चकारः कत्र्तव्यः।"याजयेत्" इति। लिङ। "याजयिष्यति" इति। लृट्। "अयीयजत्" इति। लुङ, च्लेश्चङ, णौ चङि ह्यस्वः, णिलोपः, "चङि" ६।१।११ इति द्विर्वचनम्, "सन्यतः"७।४।७९ इतीत्त्वम्। "अयाजयत्" इति। याजयाञ्चकार" इति। लिट्। "कास्प्रत्ययात्" ३।१।३५ इत्याम्, "आमः" २।४।८१ इति लेर्लुक्, तस्याव्ययत्वात् सुबलुक्, "कृञ्च" ३।१।४० इत्यादिना लिट आम्परस्य कृञोऽनुप्रयोगःष णल्, द्विर्वचनम्, अभ्यासकार्यम्, "अयामन्त" ६।४।५५ इत्यादिनायादेशः। अत्र लिङ्()निमित्तमस्तीति कथमित्येतत् गर्हा च? तदेतद्गर्हायां लिङो विधानाद्भूतविवक्षायां क्रियातिपत्तौ लृङिति भूते चेति वत्र्तमाने "वोताप्योः" ३।३।१४१ इति वचनाद्भविष्यद्विवक्षायां सर्वत्र नित्यनैव लृङा भवितव्यमिति; भवितव्यमिति; भविष्यतीति वत्र्तमाने "लिङ्()निमित्ते लृङ् क्रियातिपत्तौ ३।३।१३९ इति वचनात्॥

बाल-मनोरमा

विभाषा कथमि लिङ् च ६२३, ३।३।१४३

विभषा कथमि। गर्हायामित्येवेति। अनुवर्तत एवेत्यर्थः। "कालत्रये लि"ङिति शेषपूरणम्। भविष्यतीति निवृत्तमिति। भावः चाल्लडिति। "समुच्चीयते" इति शेषः। तथा च कथमित्यस्मिन् प्रयुज्यमाने कालत्रये गर्हायां लिङ्लटौ वा स्त इति फलितम्। कथं धर्मं त्यजेरिति। त्यक्तत्वान् त्यक्ष्यसि त्यजसि वेत्यर्थः। "गर्हितमेतदिति कथंशब्दाद्गम्यते। लटि

उदाहरति-- त्यजसि वेति। उक्तोऽर्थः। पक्षे इति। विभाषाग्रहणाल्लिङ्लटोरभावपक्षे भूते वर्तमाने भविष्यति च कालत्रये लिट्()लङ्()लुङ्()लट्()लुट्()लृट इत्यर्थः। अत्रेति। अत्रा = उक्तविषये भविष्यति काले क्रियाया अनिष्पत्तौ गम्यमानां "लिङ्()निमित्ते लृङ् क्रियातिपत्तौ" इति नित्यमेव लृङ्, कथमो गर्हायाश्च लिङ्()निमित्तस्य सत्वादित्यर्थः, विशेषविहितत्वादिति भावः। भूते वेति। "वोताप्यो"रिति भूते लिङ् निमित्ते लृङ् वेत्यधिकृत्वादुक्तविषये भूतकाले लृङ् वेत्यर्थः। भविष्यि नित्यं लृङित्यत्रोदाहरति-- कथं नामेति। "तत्र भवा"निति समुदायः पूज्यवाची। वेदप्रामाण्याभ्युपगन्तेति यावत्। एवंविधः कथं धर्मत्यक्ष्यत्, तत्त्यागस्य गर्हिततत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

किंवृत्ते लिङ्लृटौ ३।३।१४४

गर्हायाम् इत्येव विभाषा न स्वर्यते। किंवृत्ते उपपदे गर्हायां गम्यमानायां धातोः लिङ्लृटौ प्रत्ययौ भवतः। सर्वलकाराणाम् अपवादः। लिङ्ग्रहणं लटो ऽपरिग्रहार्थम्। को नाम वृषलो यं तत्रभवान् याजयेत्, यं तत्रभवान् वृषलं याजयिष्यति। कतरो नाम, कतमो नाम यां तत्रभवान् वृषलं याजयेत्, याजयिष्यति। भूते क्रियातिपत्तौ वा लृङ्। भविष्यति तु नित्यम्। को नाम वृषलो यं तत्रभवानयाजयिष्यत्।

न्यासः

किंवृत्ते लिङलृटौ। , ३।३।१४४

"किंवृत्ते" इति। वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयतते। "डतरतमौ च" इति किंवृत्ते च लृडित्येवं कस्मान्नोक्तम्, प्रकृतो हि लिङ्, ततश्चकारेण तस्यैव समुच्चयो विज्ञास्यते, किं लिङ्()ग्रहणेनेत्याह-- "लिङ्ग्रहणम्" इत्यादि। असति हि लिङ्()ग्रहणे यथा प्रकृत्वाच्चकारेण लिङ समुच्चीयते, तथा लडपि समुच्चीयेत, सोऽपि हि प्रकृत एव। तस्माल्लटो निवृत्त्यर्थं लिङग्रहणं कृतम्॥

बाल-मनोरमा

किंवृत्ते लिङ्?लृटौ ६२४, ३।३।१४४

किंवृत्ते लिङ्लृटौ। नानुवर्तते इति। व्याख्यानादिति भावः। विभक्त्यन्तं डतरडतमान्तं च किंशब्दनिष्पन्नं किंवृत्तमित्युक्तम्। तस्मिन्प्रयुज्यमाने गर्हायां लिङ्()लृटौ स्त इत्यर्थः। सर्वलकाराणामपवादाविति वृत्तिः। लृङ् प्राग्विदिति। भविष्यति नित्यं लृङ्, भूते वेति प्रागुक्तमिहाप्यनुसन्धेयमित्यर्थः। लिङ्()निमित्तस्य किंवृत्तस्य गर्हायाश्च सत्त्वादिति भावः।

तत्त्व-बोधिनी

किंवृत्ते लिङ्लृटौ ५१५, ३।३।१४४

किंवृत्ते। लिङ्लृटौ कालत्रये स्तः। नानुवर्तत इति। एवं चाऽस्मिन्विषये नित्यं भूते वेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अनवक्लृस्यमर्षयोरकिंवृत्ते ऽपि ३।३।१४५

गर्हायाम् इति निवृत्तम्। अनवक्लृप्तिः असम्भावना। अमर्षः अक्षमा। किंवृत्ते ऽकिंवृत्ते च उपपदे अनवक्लृप्त्यमर्षयोः धातोः लिङ्लृटौ प्रत्ययौ भवतः। सर्वलकाराणाम् अपवादः। बह्वचः पूर्वनिपातो लक्षणव्यभिचारचिह्नम्। तेन यथासङ्ख्यं न भवति। अनवक्लृप्तौ तावत् न अवकल्पयामि, न सम्भावयामि, न श्रद्दधे तत्रभवान् नाम वृषलं याजयेत्, तत्रभवान् नाम वृषलं याजयिष्यति। को नाम वृषलो यं तत्रभवान् वृषलं याजयेत्, को नाम तत्रभवान् वृषलं याजयिष्यति। अमर्षे न मर्षयामि तत्रभवान् वृषलं याजयेत्, याजयिष्यति। को नाम वृषलो यं तत्रभवान् याजयेत्, याजयिष्यति। भूतविवक्षायां तु क्रियातिपत्तौ वा लृङ् भवति। भविष्यति नित्यम्। न अवकल्पयामि तत्रभवान् नाम वृषलम् अयाजयिष्यत्।

न्यासः

अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि।, ३।३।१४५

अत्र द्वावर्थौ, प्रत्ययावपि द्वावेव, ततश्च यथासंख्येन भवितव्यमिति कस्यचिद्()भ्रान्तिः स्यात्, अतस्तन्निराकर्त्तुमाह--"बह्वचः"इत्यादि। अमर्षशब्दो ह्यनवक्लप्तिशब्दापेक्षयाल्पाच्तरः, तत्र "अल्पाच्तरम्" २।२।३४ इति तस्य पूर्वनिपाते कत्तव्ये योऽयमिह वह्वचोऽनवुक्लृप्तिशब्दस्य पूर्वनिपातः कृतः स लक्षणव्यभिचारार्थतां दर्शयति। यथेह पूर्वनिपातलक्षणं व्यभिचारात् स्वविषये न प्रवत्तते, तथा यथासंख्यलक्षममपीति, तेन यथासंख्यं न भवति। अपिग्रहणं किंवृत्तेऽपि यथा स्यात्न्यथा ह्यकिंवृत्तग्रहणे किंवृत्ते न स्यात्। यदि यथा "उपकादिभ्योऽन्यतरस्याम्" २।४।६९ इत्यत्राद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थम्, तथेहाप्यकिंवृत्तग्रहणं किंवृत्ताधिकारनिवृत्त्यर्थं स्यात्, तस्मिन्निवृत्ते किंवृत्तेऽकिंवृत्ते प्रत्ययद्वयं भविष्यतीति व्याख्यायते, तदा शक्यतेऽपिग्रहणमकर्त्तुम्। तर्हि तत् क्रियते विस्पष्टार्थम्॥

बाल-मनोरमा

अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ६२५, ३।३।१४५

अनवक्लृप्यमर्ष। निवृत्तमिति। व्याख्यानादिति भावः। अनवक्लृप्त्यमर्षयोर्लिङ्()लृटोश्च यथासङ्ख्यं नेष्यते, अल्पाच्तरस्य अमर्षशब्दस्य पूर्वनिपातत्यागादिति वृत्तिः। न सम्भावयामीति। अकिंवृत्ते उदाहरणम्। भवान् हिरं निन्देदिति यत्तन्न संभवायामि, न मर्षये वेत्यन्वयः। किंवृत्ते उदाहरति--कः कतर इति। लृङ्()प्राग्वदिति। भविष्यति नित्यं लृङ्, भूते वेत्युक्तमिहाप्यनुसंधेयमित्यर्थः।

तत्त्व-बोधिनी

अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ५१६, ३।३।१४५

अनवक्लृप्त्यमर्षयोः। लिङ्लृटावनुवर्तेते, तौ च कालत्रये भवतस्तेन सर्वलकाराणामपवादौ। किंवृत्तस्यानधिकारादेवाऽविशेषादुभयोर्भविष्यतीत्यकिंवृत्तेऽपीति न कर्तव्यम्। पूर्वनिपाताऽर्हस्याऽल्पाऽचः परनिपातो यथासङ्ख्यनिवृत्त्यर्थः। लृङ् प्राग्वदिति। भूते वा, भविष्यति नित्यमित्यर्थः। नाऽहं भावयामि चैत्रो हरिम निन्दिष्यदित्याद्युदाहर्तव्यम्।

---

सूत्रम्

काशिका-वृत्तिः

किंकिलास्त्यर्थेषु लृट् ३।३।१४६

अनवक्लृप्त्यमर्षयोः इति वर्तते। किंकिलशब्दः समुदाय एव उपपदम्। अस्त्यर्थाः अस्तिभवति विद्यतयः। किंकिलास्त्यर्थेषु उपपदेषु अनवक्लृप्त्यमर्षयोः धातोः लृट् प्रत्ययो भवति। लिङो ऽपवादः। किं किल नाम तत्रभवन् वृषलं

याजयिष्यति। अस्ति नाम तत्रभवान् वृषलं याजयिष्यति। भवति नाम तत्रभवान् वृषलं याजयिष्यति। विद्यते नाम तत्रभवान् वृषलं याजयिष्यति। न श्रद्दधे, न मर्षयामि। लिङ्निमित्तम् इह न अस्ति तेन लृङ् न भवति।

न्यासः

किंकिलास्त्यर्थेषु लृट्। , ३।३।१४६

"किंकिलशब्दः समुदायैति। एतेन किंकिलशब्दयोः प्रत्येकमृपपदत्वं निरस्यति, कस्मात् पुनस्तयोश्च प्रत्येकमुपपदत्वं न भवति? केवलस्य किंशब्दस्यानवक्लस्यमर्षयोर्वृत्यसम्भवात्, समुदायस्य च सम्भवात्। "लिङ्गोऽपवादः" इति। पूर्वेण प्राप्तस्य। "लिङनिमित्तमिह नास्ति" इति। लृट एव विधानात्॥।

बाल-मनोरमा

किङ्किलाऽस्त्यर्थेषु लृट् ६२६, ३।३।१४६

किङ्किला। किंङ्किलेति। समुदायस्य, अस्त्यर्थानां च द्वन्द्वः। यावदिति। "गर्हायां चेत्तः प्रागित्यर्थः। किङ्किलेत्यस्मिन् अस्त्यर्थेषु च प्रयुज्यमानेषु अनवक्लृप्त्यमर्षयोर्लृट् स्यादित्यर्थः। पूर्वसूत्रेण लृङ्लृटोः प्राप्तौ लृडेवेत्यर्थमिदम्। तदाह-- लिङोऽपवाद इति। न श्रद्दधे इति। न संभावयामीत्यर्थः। त्वं शूद्रान्नं भोक्ष्यसे इति यत्तन्न श्रद्दधे, न मर्षये वा किङ्किलेत्यन्वयः। किङ्किलेति क्रोधं द्योतयति। अस्तीति। शूद्रस्य स्त्री शूद्री। तां गमिष्यसीत्यस्ति भवति विद्यते वेत्यन्वयः। अत्र लृङ् नेति। भविष्यति नित्यं लृङ्, भूते वेत्युक्तमिह न संभवति, अत्र लिङो विध्यभावेन लिङ्()निमित्तविरहात्।

तत्त्व-बोधिनी

किङ्किलाऽस्त्यर्थेषु लृट् ५१७, ३।३।१४६

किंकिलास्त्यर्थेषु। लिङ्लृटोः प्राप्तयोरिह लृङ्ग्रहणाल्लिङ् निवर्तत इत्याशयेनाह-- लिङोऽपवाद इति। अस्ति भवतीति। त्वत्कर्तृकं शूद्रागमनमस्तीत्यादिरर्थः। लृङ् नेति। लिङो निवृत्तवेन तन्निमित्तत्वाऽभावात्।

---

सूत्रम्

काशिका-वृत्तिः

जातुयदोर् लिङ् ३।३।१४७

अनवक्लृप्त्यमर्षयोः इत्येव। जातु यदा इत्येतयोः उपपदयोः अनवक्लृप्त्यमर्षयोः गम्यमानयोः धातोः लिङ् प्रत्ययो भवति। लृटो ऽपवादः। जातु तत्रभवान् वृषलं याजयेत्, यन् नाम तत्रभवान् वृषलं याजयेत्, न श्रद्दधे, न मर्षयामि। जातुयदोर् लिङ्विधाने यदायद्योरुपसङ्ख्यानम्। यदा भवद्विधः क्षत्रियं याजयेत्, यदि भवद्विधः क्षत्रियं याज्येत्, न श्रद्दधे, न मर्षयामि। क्रियातिपत्तौ भूते वा लृङ्। भविष्यति नित्यम्।

न्यासः

जातुयदोर्लिङ्। , ३।३।१४७

"लृटोऽपवादः" इति। अनवक्लृप्त्यादिसूत्रेण ३।३।१४५ प्राप्तस्य। "यदायद्योरुपसंख्यानम्" इति। लिङेव यथा स्यात्, लृङ मा भूत्। उपसंख्यानशब्दस्य प्रतिपादनार्थः। तत्रेदं प्रतिपादनम्--अनवक्लप्त्यादि ३।३।१४५ सूत्रादिहापिशब्दऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन यदायद्योरपि भविष्यति॥

बाल-मनोरमा

जातुयदोर्लिङ् ६२७, ३।३।१४७

जातुयदोर्लिङ्।जातु यत् अनयोः प्रयोगे अनवक्लृप्त्यमर्,योर्लिङ् स्यादित्यर्थः। यदिति विभक्तिप्रतिरूपकमव्ययम्। "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपी"ति लिङ्()लृटौ प्राप्तौ लिङेवेत्यर्तमिदम्। तदाह--- लृटोऽपवाद इति। यदायद्योरिति। यदायद्योः प्रयोगेऽपि उक्तविषये लिङ उपसङ्ख्यानमित्यर्थः। जात्वादिशब्दा उदाहरणे अनवक्लृप्त्यमर्षद्योतकाः। त्वादृशो हिरं निन्देदित्यतेतन्नावकल्पयामि, न मर्षयामि वेत्यन्वयः। नावकल्पयामीत्यस्य न संभवायामीत्यर्थः। लृङ् प्राग्वदिति। भविष्यति नित्यं लृङ्भूते वेत्युक्तमिहाप्यनुसंधेयमित्यर्थः, जात्वादियोगस्तु, अनवक्लृप्त्यमर्षयोश्च लिङ्()निमित्तत्वादिति भावः।

तत्त्व-बोधिनी

जातुयदोर्लिङ् ५१८, ३।३।१४७

जातुयदोर्लिङ्। अनवक्लृप्त्यमर्षयोरिति वर्तते। तथा च"अनवक्लृप्त्यमर्षयो"रिति लिङ्लृटोः प्राप्तयोर्वचनमिदं लृरटो बाधनार्थम्। तदाह-- लृटोऽपवाद इति। अयं कालत्रये। लृङ् प्राग्वदिति। क्रियाऽतिपत्तौ भूते वा, भविष्यति नित्यमित्यर्थः। "जातु भवान् हरिमनिन्दिष्य"दित्याद्युहार्तव्यम्। अगर्हार्थमिदम्। गर्हायां तु जातुयोगे लडुक्तः।

---

सूत्रम्

काशिका-वृत्तिः

यच्चयत्रयोः ३।३।१४८

अनवक्लृप्त्यमर्षयोः इत्येव। यच् च यत्र इत्येतयोः उपपदयोरनवक्लृप्त्यमर्षयोः गम्यमानयोः धातोः लिङ् प्रत्ययो भवति। लृटो ऽपवादः। योगविभाग उत्तरार्थः। यथासङ्ख्यं नेष्यते। यच् च तत्रभवान् वृषलं याजयेत्। यत्र तत्रभवान् वृषलं याजयेत्। क्रियातिपत्तौ यथायथं लृङ् भवति।

न्यासः

यच्चयत्रयो।, ३।३।१४८

"लृटोऽपवादः" इति। अनवक्लृप्त्यादिसूत्रेण ३।३।१४५ प्राप्तस्य। अथ पूर्वसूत्र एव यच्चयत्रयोग्ग्रहणं कस्मान्न कृतम्, किं योगविभागेन? इत्यत आह-- "योगविभाग उत्तरार्थः" इति। उत्तरत्र यच्चयत्रयोरेवानुवृत्तिर्यथा स्यात्, जातुयदोर्मा भूत्। "यथासंख्यमिह नेष्यते" इति। पूर्वोक्तादेव लक्षणव्यभिचारचिह्नात्। स च बह्वचः पूर्वनिपातः सर्वत्रैव चात्र प्रकरणे लक्षणव्यभिचारचिह्नम्, न तु तत्रैव सूत्रे। अथ वा-- यथासंख्यार्थस्य स्वरितत्वस्याभावादिह न भवति यथासंख्यम्। उक्तं हि प्राक्-- "स्वरितेन चिह्नेन यथासंख्यं भवति" इति॥

बाल-मनोरमा

यच्चयत्रयोः ६२८, ३।३।१४८

यच्चयत्रयोः। यच्चेति समुदाये यत्रशब्दे च प्रयुज्यमाने अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थः। लृटोऽपवादः। योगविभागस्तु उत्तरसूत्रे अनयोरेवानुवृत्त्यर्थः। उदाहरणे यच्चेति यत्रेति च अनवक्लृप्त्यमर्षद्योतकौ। त्वमेवं कुर्या इत्येतन्न श्रद्दधे, न मर्षयामि वेत्यन्वयः। अत्रापि "भविष्यति नित्यं लृङ्, भूते वे"त्युक्तमनुसंधेयम्। लिङ्()निमित्तस्य सत्त्वात्।

तत्त्व-बोधिनी

यच्चयत्रयोः ५१९, ३।३।१४८

यच्चयत्रयोः। "अनवक्लस्त्यमर्षयो"रिति वर्तते।यथासङ्ख्यमिह नेष्यते। अयमपि लिङ्लृटोरपवादः। योगविभागस्तु उत्तरसूत्रद्वये यच्चयत्रयोरेवाऽनुवृत्तिर्यथा स्यादित्येतदर्थः। क्रियातिपत्तौ लृङ् प्राग्वत्। यच्च यत्र वा त्वमेवमकरिष्योन श्रद्दधे न मर्षयामीत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

गर्हायां च ३।३।१४९

अनवक्लृत्प्यमर्षयोः इति निवृत्तम्। गर्हा, निन्दा, कुत्सा इत्यनर्थान्तरम्। यच् च यत्र इत्येतयोः उपपदयोर् धतोः लिङ् प्रत्ययो भवति गर्हायां गम्यमानायाम्। सर्वलकाराणाम् अपवादः। यच् च तत्रभवान् वृषलं याजयेत्, यत्र तत्रभवान् वृषलं याजयेद्दद्धो वृद्धः सन् ब्राह्मणः, गर्हामहे, अहो अन्याय्यम् एतत्। क्रियातिपत्तौ यथायथं लृङ् भवति।

न्यासः

गर्हायां च। , ३।३।१४९

बाल-मनोरमा

गर्हायां च ६२९, ३।३।१४९

गर्हायां च। निवृत्तमिति। व्याख्यानादिति भावः। "यच्चत्रयोरिति, लिहिति चानुवर्तते। तदाह---यच्चयत्रयोर्योगे इति।लिङेवेति। नतु लकारान्तरमित्यर्थः। उदारसणे यच्चेति यत्रेति च गर्हाद्योतकम्। "त्वं शूद्रं याजये" रितियत्तदन्याय्यमित्यन्वयः। लृङ् प्राग्वत्।

तत्त्व-बोधिनी

गर्हायां च ५२०, ३।३।१४९

गर्हायां च। कालत्रयेऽयं भवतीति सर्वलकारापवादः। लिङेव स्यादिति।गर्हायां "विभाषा कथमी"ति लट् प्राप्तस्तत्रैव "किंवृत्ते" इति लृट् प्राप्तस्तयोरपवादो यच्चत्रयोर्योगे विहितोऽयं लिङिति भावः। लृङ् प्राग्वत्। "यच्च यत्र वा त्वं शूद्रमयाजयिष्यस्तदन्याय्य"मित्यादि।

---

सूत्रम्

काशिका-वृत्तिः

चित्रीकरणे च ३।३।१५०

यच्चयत्रयोः इत्येव। चत्रीकरणम् आश्चर्यम्, अद्भुतम्, विस्मयनीयम्। यच्चयत्रयोः उपपदयोः चित्रीकरणे गम्यमाने धातोः लिङ् प्रत्ययो भवति। सर्वलकाराणाम् अपवादः। यच् च तत्रह्बवान् वृषलं याजयेत्, यत्र तत्रभवान् वृषलं याजयेत्, आश्चर्यम् एतत्। क्रियातिपत्तौ यथायथं लृङ् भवति।

न्यासः

चित्रीकरणे च। , ३।३।१५०

बाल-मनोरमा
चित्रीकरणे च ६३०, ३।३।१५०

चित्रीकरणे च। यच्चयत्रयोः प्रयोगे आश्चर्ये गम्ये लिहेव स्यान् तु लकारान्तरमित्यर्थः। उदाहरणे यच्चेति यत्रेति चाश्चर्यद्योतकम्। त्वं शूद्रं याजयेरिति यत्तदाश्चर्यमित्यन्वयः।

तत्त्व-बोधिनी
चित्रीकरणे च ५२१, ३।३।१५०

चित्रीकरणे च। अयमपि कालत्रये। लृङ् प्राग्वत्। यच्च यत्र वा त्वं शूद्रमयाजयिष्यः, आश्चर्यमेतत्!!।

---

सूत्रम्
काशिका-वृत्तिः
शेषे लृडयदौ ३।३।१५१

यच्चयत्राभ्याम् अन्यत्र चित्रीकरणं शेषः। शेषे उअपपदे चित्रीकरणे गम्यमाने धातोः लृट् प्रत्ययो भवति, यदिशब्दश्चेन् न प्रयुज्यते। सर्वलकाराणाम् अपवादः। आश्चर्यम्, चित्रम् अद्भुतम्, अन्धो नाम पर्वतमारोक्ष्यति, बधिरो नाम व्याकरनमध्येष्यते। अयदौ इति किम्? आश्चर्यं यदि स भुञ्जीत, यदि सो ऽधीयीत। लिङ् निमिताभावातिह लृङ् न भवति।
न्यासः
शेषे लृड�दौ। , ३।३।१५१

"यच्चयत्राभ्याम्" इत्यादिना यच्चयत्रापेक्षं शेषं दर्शयति। चित्रीकरणापेक्षया शेषो न शक्यते विज्ञातुम्; चित्रीकरणस्येह स्वर्यमाणत्वात्। "आरोक्ष्यति" इति। "रुह बीजजन्मनि प्रादुर्भावे च" (धा।पा।८५९)। "हो ढः" ८।२।३१, "षढोः कः सि" ८।२।४१। "आश्चर्य यदि भुंजीत" इति। अनवक्लृप्रेरत्राश्चर्य गम्यते। तत्राश्चर्यनिमित्ते लृटि प्रतिषिद्धे "जातुयदोर्लिङविधाने यदायद्योरूपसंख्यानम्" (वा।३३१) इत्यनवक्लृप्तौ लिङ॥
बाल-मनोरमा
शेषे लृडयदौ ६३१, ३।३।१५१

शेषे लृडयदौ।यच्चयत्राभ्यामन्यः शेषः। तदाह-- यच्चयत्राभ्यामन्यस्मिन्निति। "यदिभिन्ने" इति शेषः। लृट्()स्यादिति। नतु लकारान्तरमित्यर्थः। आश्चर्यमिति। अन्धः कृष्णं द्रक्ष्यतीत्याश्चर्यमित्यन्वयः। नामेत्यव्ययमाश्चर्यद्योतकम्। मूक् इति। मूकोऽधीयीत इत्याश्चर्यमित्यन्वयः। यदीत्याश्चर्यद्योतकम्।

तत्त्व-बोधिनी
शेषे लृडयदौ ५२२, ३।३।१५१

शेषे। सर्वलकारापवादः। सोऽधीयीतेति। यदायद्योरुपसङ्ख्यानात् "जातुयदो"रिति लिङ्। लिङ्निमित्ताऽभावादिह लृङ् न।

---

सूत्रम्

काशिका-वृत्तिः

उताप्योः समर्थयोर् लिङ् ३।३।१५२

उत अपि इत्येतयोः समर्थयोः धातोः लिङ् प्रत्ययो भवति। सर्वलकाराणाम् अपवादः। बाढम् इत्यस्मिन्नर्थे समानार्थत्वम् अनयोः। उत कुर्यात्। अपि कुर्यात्। उताधीयीत। अप्यधीयीत। बाढमध्येष्यते इत्यर्थः। समर्थयोः इति किम्? उत दण्डः पतिष्यति? अपि द्वारं धास्यति। प्रश्नः प्रच्छादनं च गम्यते। वाऽऔताप्योः ३।३।१४१ इति विकल्पो निवृत्तः। इतः प्रभृति भूते ऽपि लिङ्निमित्ते क्रियातिपत्तौ नित्यं लृङ्। भविष्यति तु सर्वत्र एव नित्यः।

न्यासः

उताप्योः समर्थयोर्लिङ्। , ३।३।१५२

"समर्थयोः" इति। धातुना सामथ्र्यमिह नाश्रीयते। तयोरुपपदत्वेनैव तस्य लब्धत्वात्। तस्मात् परस्परसामथ्र्य समर्थशाब्दादिह गृह्रते। तदपि व्यपेक्षालक्षणमेकार्थीभावलक्षणमुभयमुताप्योर्न सम्भवति; पर्यायेण तयोरुपपदत्वात्, तस्मात् समानार्थलक्षणमिह सामथ्र्य समर्थशब्देन प्रतिपाद्यत इत्यत आह-- "समानार्थत्वमनयोः"इति। "कुर्यात्" एङति। उप्रत्यये कृते गुणो रपरत्वञ्च, "अत उत् सार्वधातुके" ६।४।११० इत्युत्त्वम्, "ये च" ६।४।१०९ इत्युकारलोपः॥

बाल-मनोरमा

उताप्योः समर्थयोर्लिङ् ६३२, ३।३।१५२

उताप्योः। समौ अर्थौ ययोरिति विग्रहः। शकन्ध्वादित्वात्पररूपम्। एकार्थयोरित्यर्थः। कमर्तमादायानयोरेकार्थकत्वमित्यत आह-- बाढमिति। तथा च बाढार्थकयोः उत अपि इत्यनयोः प्रयोगे लिङ् स्यान्न तु लकारान्तरमित्यर्थः। उत अपि वेति। उत हन्यादघं हरिः, अपि हन्यादघं हरिरित्यन्वयः। "उताऽपी"बाढमितयर्थकौ। गम्यते इति। "उत दण्ड पतिष्यती"त्यत्र उतशब्देन प्रश्नो गम्यते। "अपिधास्यति द्वार"मित्यत्र अपिना धाधातोः प्रच्छादनार्थकत्वं गम्यत इत्यर्थः। इतः प्रभृतीति। "वोताप्यो"रिति मर्यादायामाङ्। "उताप्यो"रत्यतः प्राग्भूते लिङ्()निमित्ते लृङ् वेत्यधिक्रियते। "उताप्यो"रित्यादिसूत्रेषु भूते "लिङ्()निमित्ते लृङ् क्रियातिपत्तौ" इत्येवाधिक्रियते इत्युक्तम्। एवं च "उताप्यो"रिति सूत्रप्रभृति लिङ्()निमित्तेक्रियापत्तौ भूते लृङित्येवाधिक्रियते, नतु वाग्रहणम्। अतो नित्यमेवाऽत्र विषये क्रियातिपत्तौ भूते भविष्यति च लृङित्यर्थः।

तत्त्व-बोधिनी

उताप्योः समर्थयोर्लिङ् ५२३, ३।३।१५२

उताप्योः। धातोर्लिङ् स्यात्कालत्रये। भूतेऽपि नित्य इति। वाग्रहमस्य निवृत्तत्वाद्भविष्यतीव भूतेऽपि नित्यं लृङ्। उताऽहनिष्यद्दस्युं राजा। नाऽहन्, न हनिष्यतीति गम्यते।

---

सूत्रम्

काशिका-वृत्तिः

कामप्रवेदने ऽकच्चिति ३।३।१५३

स्वाभिप्रायाविष्करणम् कामप्रवेदनम्। कामः, इच्छा, अभिलाषः इत्यनर्थान्तरम्। तस्य प्रवेदनम् प्रकाशनम्। तस्मिन् गम्यमाने अकच्चिति उपपदे धातोर् लिङ् प्रत्ययो भवति। सर्वलकाराणाम् अपवादः। कामो मे भुञ्जीत भवान्। अभिलाषो

मे भुञ्जीत भवान्। अकच्चिति इति किम्? कच्चिज् जीवति ते माता कच्चिज् जीवति ते पिता। माराविद त्वां पृच्छामि कच्चिज् जीवति पार्वती।

न्यासः

कामप्रवेदनेऽकच्चिति। , ३।३।१५३

"कामो मे भुञ्जीत भवान्" इति। स्वाभिप्रायं परस्यानेनाविष्कारोति॥

बाल-मनोरमा

कामप्रवेदनेऽकच्चिति ६३३, ३।३।१५३

कामप्रवेदनेऽकच्चिति। "अकच्चिती"ति च्चेदः। तदाह-- नतु कच्चितीति। सर्वलकारापवादः। अभिप्रायः = इच्छा। काम इति। भवान् भुञ्जीतेति मे कामः। इच्छेत्यर्थः। अत्र लिङ्()निमित्तस्य सत्त्वात् क्रियातिपत्तौ भूतेऽपि नित्यं लिङ्। प्रश्न एवायं कामप्रवेदनद्योतक इति प्राप्तिः। अत्र कच्चिच्छब्दस्य इच्छार्थकत्वाऽभावादिच्छार्थेष्विति वक्ष्यमाणं नाऽत्र प्रवर्तते।

तत्त्व-बोधिनी

कामप्रवेदनेऽकच्चिति ५२५, ३।३।१५३

कामप्रवेदने। लिङ् स्यादिति। कालत्रये।सर्वलकारापवादः। कच्चिज्जीवतीति। "कामो मे" इत्यनुषञ्जनीयम्। "वर्तमानसामीप्ये" इति लट्।

---

सूत्रम्

काशिका-वृत्तिः

सम्भावने ऽलम् इति चेत् सिद्धाप्रयोगे ३।३।१५४

लिङित्येव। सम्भावनम् क्रियासु योग्यताध्यवसानम्, शक्तिश्रद्धानम्। तदिदानीम् अल्मर्थेन विशेष्यते। तच् चेत् सम्भावनं पर्याप्तमवितथं भवति। सिद्धाप्रयोगे इत्यलमो विशेषणम्। सिद्धश्चे दलमो ऽप्रयोगः। क्व च असौ सिद्धः? यत्र गम्यते चार्थो न च असौ प्रयुज्यते। तदीदृशे सम्भावनोपाधिके ऽर्थे वर्तमानाद् धातोः लिङ् प्रत्ययो भवति। सर्वलकाराणाम् अपवादः। अपि पर्वतं शिरसा भन्द्यात्। अपि द्रोणपाकं भुञ्जीत। अलम् इति किम्? विदेशस्थायी देवदत्तः प्रायेन गमिष्यति ग्रामम्। सिद्धाप्रयोगे इति किम्? अलं देवदत्तो हस्तिनं हनिष्यति। क्रियातिपत्तौ भूते भविष्यति च नित्यं लृङ् भवति।

न्यासः

सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे। , ३।३।१५४

"योग्यताध्यवसानम्" इति। योग्यता = सामथ्र्यम्, तस्याध्यवसानम्। सा येनाध्यवसीयते निश्चीयते तद्योग्यताध्यवसानम् = ज्ञानम्, सम्भावनमुच्यते। तमेवार्थं पर्यायान्तरेण विस्पष्टीकर्तुमाह-- "शक्तिश्रद्धानम्" इति। शक्तिः = सामथ्र्यम्, सा श्रद्धीयते येन ज्ञानेन तच्छक्तिश्रद्धानम्। "तत्" इति। सम्भावनम्"। "पर्याप्त्या" इति। सामर्थ्येन।एतेन पर्याप्ताविह वत्र्तमानोऽलंशब्दो गृह्रते, न तु भूषणादाविति दर्शयति। "पर्याप्तम्" इति। शक्तम्, स्वकार्यनिर्वत्र्तनक्षममित्यर्थः। स्वकार्यं पुनस्तस्य विपरीतविषयपरिच्छेदः। "अवितथम्" इति। विद्यमानविषयत्वात्। एतेन पर्याप्त्यर्थं एवास्य स्वीकृतिः। एवं हि तद्विपरीतविषयं भवति यदि विद्यमानविषयत्वादवितथं भवति, नान्यथा। "अलमः र"इति। अलंशब्दस्य। कुत एतत्? इतिकरणेनार्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकतयाऽलंशब्दस्य

व्यवस्थापनात्। अलमर्थः सम्भावनस्य विशेषमं नोपपद्यते, ततश्च यदुक्तम्-- "तदिदानीमलमथन विशेष्यते" इति तद्विघटते? नैष दोषः"; आवृत्तिरलंशब्दस्य करिष्यते, तत्रैकस्य सूत्रोपात्तस्यार्थपदार्थकता भविष्यति, आवृत्तस्येतिकरणेनाभिसम्बन्धादर्थपदार्थतायाः प्रच्युतस्य शब्दपदार्थकता चात्र गम्यते। "चार्थः" इति। अर्थात्, प्रकरणाद्वा। "{न चासौ प्रयुज्यते-काशिका} न तु प्रयुज्यते" इति।अवगतार्थत्वात्। "{ तदीदृशसंभावनोपाधिकेऽर्थे --काशिका} क्रियासम्भावनोपाधिके" इति। क्रियासम्भावनमुपाधिविशेषणं यस्यार्३तस्य स तथोक्तः। "अपि पर्वतं शिरसा भिन्द्यात्" इति। पूर्ववत् "श्नसोरल्लोपः"[६।४।१११](#)। अत्र यत् पर्वतभेदनविषयं सामर्थ्यं पुंसः सम्भाव्यते तत् तस्य विद्य एवेत्यवितथत्वात् पर्याप्तं सम्भावनम्। "प्रायेण स गमिष्यति" इति। अस्त्यत्र सम्भावनं प्रायशब्दात् प्रतीयमानम्, अलमर्थस्तु नास्ति; तेन भविष्यत्कालविवक्षायां लृडेव भवति न लिङ॥

बाल-मनोरमा

संभावनेऽलमितिचेत्सिद्धाऽप्रयोगे ६३४, ३।३।१५४

संभावने। अलमर्थोऽत्र प्रौढिरिति। पर्याप्तिरित्यर्थः। विपरिणम्यते इति। संभावने इति यत् सप्तम्यन्तं तदावर्त्त्य प्रथमया संभावनमिति च विपरिणम्यते, यत्तु अलमिति प्रथमान्तं तदावर्त्त्य सप्तम्या अलमि इति च विपरिणम्यत इत्यर्थः। "छान्दसं विभक्तिव्यत्ययमाश्रित्ये"ति शेषः। तथा च संभावने इति सप्तम्यन्तं, संभावनमिति प्रथमान्तं च लभ्यते। तथा अलमिति प्रथमान्तमलभि इति सप्तम्यन्तं च लभ्यते। तत्र संभावने इति सप्तम्यन्तमर्थनिर्देशपरं। तदाह-- संभावनेऽर्थे लिङ्()स्यादिति। उत्कटान्यतरकोटिकं ज्ञान संभावनमित्युच्यते। संभावनमितिप्रथमान्तं तु अलमिति प्रथमान्तेन विशेष्यते। इति र्हेतौ। तदाह-- तच्चेदिति। तत् = संभावनम्(), अलं = पर्याप्तिहेतुकं चेदित्यन्वयः। षिधधातोर्ज्ञानार्थकात् "मतिबुद्धी"त वर्तमाने कर्मणि क्ते सिद्धशब्दः। सिद्धे गम्यमानेऽप्यलमर्थे अप्रयोगो यस्य स सिद्धाऽप्रयोगस्तस्मिन्निति विग्रहः। अलमीति सप्तम्यन्तमत्र विशेष्यसमर्पकं संबध्यते। अलंशब्दप्रयोगं विनापि तदर्थे गम्यमाने इति यावत्। तदाह-- सिद्धाऽप्रयोगे सतीति। "अलमी"ति शेषः। अपि गिरिमिति। बलवन्तं पुरुषमधिकृत्य अत्युक्तिरियम्। प्रायेण शिरसा गिरि भ#एत्तुमयं समर्थ इत्यर्थः। गिरिभेदसंभावनस्य सामथ्र्यहेतुकत्वद्योतकोऽपिशब्दः। अत्र लिङ्()निमित्तसत्त्वात् क्रियातिपत्तौ भूते लृङ्। "अलमिति संभावने सिद्धाऽप्रयोगश्चे"दिति सुवचम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा धातौ सम्भावनवचने ऽयदि ३।३।१५५

सम्भावने ऽलम् इति चेत् सिद्धाप्रयोगे इति सर्वम् अनुवर्तते। अम्भावनम् उच्यते येन स सम्भावनवचनः। सम्भावनवचने धातावुपपदे यच् छब्दवर्जिते धातोर् विभाषा लिङ् भवति। पूर्वेण नित्यप्राप्तौ विकल्पार्थं वचनं। सम्भावयामि भुञ्जीत भवान्, सम्भावयामि भोक्ष्यते भवान्। अवकल्पयामि भुञ्जीत भवान्, भोक्ष्यते भवान्। श्रद्दधे भुञ्जीत भवान्, भोक्ष्यते भवान्। अयदि इति किम्? सम्भावयामि यद् भुञ्जीत भवान्।

न्यासः

विभाषा धातौ सम्भावनवचनेऽयदि। , ३।३।१५५

"{भविष्यति च काले-- काशिका"} भविष्यति काले" इति। इष्यत इत्यपेक्षते। कथं पुनर्विभाषा भविष्यत्कालश्च लभ्यते, यावता नेह सूत्रे विभाषाग्रहणं विनापि भविष्यत्कालोऽस्ति? अत आह-- यस्माद्विभाषाग्रहणमनुवत्र्तते" इति। तेन विभाषा लिङप्रत्ययो लभ्यते। यत् "उताप्योः" [३।३।१५२](#) इत्यादेः सूत्राल्लिङिति वत्र्तमाने पुनर्लिङग्रहणं क्रियतेऽतोभविष्यत्कालो

लभ्यते। पुनर्लिङ्ग्रहणस्यैतत् प्रयोजनम्-- कालविशेषे भविष्यति यथा स्यादिति। तेन हन्तीति पलायत इत्येवमादौ वत्र्तमानविवक्षायां लडेव भवति। अत्र हननं हेतुः, पलायनं हेतुमत्। "पलायते" इति। "उपसर्गस्यायतौ" ८।२।१९ इति लत्वम्॥

बाल-मनोरमा

विभाषा धातो सम्भावनवचनेऽयदि ६३५, ३।३।१५५

विभाषा धातौ। "अयदी"ति छेदः। तदाह-- नतु यदिति। लिङभावे लृट्, "शेषे लडयदौ" इत्यतस्तदनुवृत्तेः। संभावयामीति। प्रायेण भोक्तुं समर्थ इत्यर्थः।

तत्त्व-बोधिनी

विभाषा धातौ सम्भावनवचनेऽयदि ५२६, ३।३।१५५

विभाषा धातौ। संभावनमुच्यते येन तत्संभावनवचनं, तस्मिन्धातौ। संभावनार्थकधातावित्यर्थः। भुञ्जीथास्त्वमिति। अत्र पूर्वेण नित्यो लिङ्। धातौ किम्?।संभावनवचने स्वरूपग्रहणं माभूत्। कृते तु संभावनवचने तद्वाचकधातोरप्रयोगादिह विभाषा न भवति। भुञ्जीत भवान्। पूर्वेणाऽत्र नित्यो लिङ्।

---

सूत्रम्

काशिका-वृत्तिः

हेतुहेतुमतोर् लिङ् ३।३।१५६

तेहुः कारणम्। हेतुमत् फलम्। हेतुभूते हेतुमति चार्थे वर्तमानाद् धातोः लिङ् प्रत्ययो भवति। सर्वलकाराणाम् अपवादः। दक्षिणेन चेद् यायान्न शकटं पर्याभवेत्। यदि कमलकमाह्वयेन्न शकटं पर्याभवेत्। दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यति। तत्र विभाषाग्रहणं तावदनन्तरम् एव अनुवर्तते। लिङिति वर्तमाने पुनर् लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थम्। तेन इह न भवति, हन्ति इति पलायते, वर्षति इति धावति। क्रियातिपत्तौ लृङ् भवति।

लघु-सिद्धान्त-कौमुदी

हेतुहेतुमतोर्लिङ् ७६८, ३।३।१५६

वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। (भविष्यत्येवेष्यते)। नेह। हन्तीति पलायते॥ विधिनिमन्त्रणेति लिङ्। विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम्। यजेत॥ निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। इह भुञ्जीत॥ आमन्त्रणं कामचारानुज्ञा। इहासीत॥ अधीष्टं सत्कारपूर्वको व्यापारः। पुत्रमध्यापयेद् भवान्॥ संप्रश्नः संप्रधारणम्। किं भो वेदमधीयीय उत तर्कम्॥ प्रार्थनं याच्ञा। भो भोजनं लभेय। एवं लोट्॥

लघु-सिद्धान्त-कौमुदी

इति लकारार्थप्रक्रिया ७६८, ३।३।१५६

इति तिङन्तं समाप्तम्॥

लघु-सिद्धान्त-कौमुदी

अथ कृदन्ते कृत्प्रक्रिया ७६८, ३।३।१५६

बाल-मनोरमा

हेतुहेतुमतोर्लिङ् ६३६, ३।३।१५६

हेतुहेतुमतोर्लिङ्। पूर्वसूत्राद्विभाषानुवृतिं()त मत्वा आह-- वा स्यादिति। पक्षे लृट्। हेतुभूते फलभूते वाऽर्थे वर्तमानाद्धातोर्लिङ् वा स्यादिति यावत्। भविष्यत्येवेति। लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणादिति भावः। हन्तीति। इतिर्हेतौ। वर्तमानकालिकहननाद्धेतोरित्यर्थः। अत्र लिङ्()निमित्तसत्त्वाद्भविष्यति तु क्रियातिपत्तौ भूते च लृङ्।

तत्त्व-बोधिनी

हेतुहेतुमतोर्लिङ् ५२७, ३।३।१५६

हेतुहेतु। विभाषेत्स्याऽनुवर्तनादाह-- वा स्यादिति। नमेच्चेदिति। कृष्णनतिः सुखप्राप्तौ हेतुः।

*भविष्यत्येवेष्यते। भविष्यत्येवेति। लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणं कालविशेषप्रतिपत्त्यर्थमिति भावः। हन्तीत्यादि। ननु "लक्षणहेत्वोः क्रियायाः" इति हन्तेः शतृप्रत्ययः स्यात्, हननस्य पलायने हेतुत्वात्। मैवम्। "देवत्रातो गलो ग्राह इति योगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः" इति "शाच्छोरन्यतरस्यामिति सूत्रे भाष्ये व्यवस्थापितत्वात्। व्याख्यातं च कैयटेन तत्रैव सूत्रे-- "देवत्रात्" इति संज्ञा। तत्र "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्या"मिति न णत्वं भवति--देवत्राण इति। किं तु देवत्रात इत्येव। "ग्रो यङि", "अचि विभाषा" इति प्राण्यहगे नित्यं लत्वम्। गलः। विषवाचके "गर" इत्यत्र न भवति। "विभाषा ग्रहः" इति णप्रत्ययो जलचरे भवति-- ग्राहः। ज्योतिषि न, --ग्रहः। "लक्षणहेत्वो"रिति सूत्रे "नन्वोर्विभाषे"त्यतो विबाषेत्यनुवर्त्त्य व्यवस्थितविभाषाश्रयणादितिशब्दयोगे सद्विधिः = शतृशानचौ न भवतः। हन्तीति पलायते। वातायने-- "गवाक्षः"। अन्यत्र त्ववङ्न भवति-- गोऽक्षः। संशितव्रत इति बहुव्रीहिः। अत्र "शाच्छोरन्यतरस्या"मिति संशात इतीत्वविकल्पो न भवति। अन्यत्र तु शातः। शितः। ते = पूर्वोक्तनत्वादिविधयो, मिथः =परस्परम् एकविषये, न विकल्प्यन्ते-- तत्तद्विधायकसूत्रे व्यवस्थितविभाषाश्रयणादिति भावः। क्रियातिपत्तौ तु भूते भविष्यति च नित्यं लृङ्। यद्यवर्षिष्यत् सस्यमुपत्स्यम्।

---

सूत्रम्

काशिका-वृत्तिः

इच्छाऽर्थेषु लिङ्लोटौ ३।३।१५७

इच्छार्थेषु धतुषु उपपदेषु धतोः लिङ्लोटौ प्रत्ययौ भवतः। सर्वलकाराणाम् अपवादः। इच्छामि भुञ्जीत भवान्। इच्छामि भुङ्क्ताम् भवान्। कामये। प्रार्थये। कामप्रवेदन इति वक्तव्यम्। इह मा भूत्, इच्छन् करोति।

न्यासः

इच्छार्थेषु लिङलोटौ। , ३।३।१५७

"भुङ्क्ताम्" इति। टेरेत्वे कृत आम्। "कामप्रवेदन इति वक्तव्यम्" इति। कामस्येच्छायाः प्रवेदने = प्रकाशने इमौ लिङलोटौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "कामप्रवेदनेऽकच्चिति" ३।३।१५३ इत्यतः कामप्रवेदनग्रहणमनुवत्र्तते, तेन कामप्रेवदन एव भवतः। अत्र लिङ्()ग्रहणं किमर्थम्, न "इच्छार्थेषु लोट् च" इत्येवोच्यत, चकारेण समुच्चीयमानोऽपि प्रकृतो लिङ भविष्यति?नैतदस्ति; विभाषया हि भविष्यत्काल इत्युक्तम्,ततो यद्यसावनुवत्र्तते विकल्पः स्यात्। तद्बाधनार्थमेव पुनर्लिङग्रहणं क्रियते॥

बाल-मनोरमा

इच्छार्थेषु लिङ्लोटौ ६३७, ३।३।१५७

इच्छार्थेषु लिङ्()लोटौ। इच्छार्थकधातुषु प्रयुज्यमानेषु लिङ्()लोटौ स्तः। सर्वलकारापवादः। असमानकर्तृकविषयमिदम्। समानकर्तृकेषु तु "लिङ् चे"ति वक्ष्यते। इच्छामिति। भुञ्जीत भवानिति इच्छामीत्यन्वयः। कामप्रवेदने इति। परं प्रति स्वाभिप्रायाविष्करणे "इच्छार्थेषु लिङ्लोटा"विति विधिरित्यर्थः। इच्छन्करोतीति। परं प्रति स्वाभिप्रायाविष्करणाऽभावान्न लिङ्()लोटाविति भाव-। "कामप्रवेदनेऽकच्चिती"ति सूत्रं तु प्रकरणादिना यत्र कामप्रवेदनं, नत्विच्छार्थकमुपपदमस्ति तद्विषयमिति बोध्यम्। इत उत्तरसूत्रं "समानकर्तृकेषु तुमु"न्निति तु कृदधिकारे व्याख्यास्यते।

तत्त्व-बोधिनी
इच्छार्थेषु लिङ्लोटौ ५२८, ३।३।१५७

इच्छार्थेषु लिङ्लोटौ। एषूपपदेषु धातोरेतौ स्तः। सर्वलकाराणामपवादः। "लिङ् चे"त्यनेन रसमानकर्तृकेषु लिङो विधानादिह लिङ्लोटटावसमानकर्तृकेषु भवत इति बोध्यम्।

* कामप्रवेदन इति वक्तव्यम्। इच्छन् करोतीति। अत्राऽनभिधानात् "समानकर्तृकेषु" इति तुमुन् न। ननु "कामप्रवेदनेऽकच्चिती"त्यनेनैव लिङः सिद्धत्वादिह लिङ्ग्रहणं मास्तु, लोडेव विधीयतामिति चेन्न, लोटा लिङो बाधा माभूदिति लिङ्ग्रहणस्याऽत्रावश्यकत्वात्। न चैवम् "इच्छार्थेषु लोट् चे"त्येव सूत्र्यतामिति वाच्यम्। चकारेण लिङोऽनुकर्षे तत्संबद्धविभाषाग्रहणस्याऽनुकर्षणप्रसक्त्या लकारान्तमपि स्यादिति। न चैवमपि "कामप्रवेदने" इत्युपसङ्ख्यानादनेनैव सिद्धे "कामप्रवेदनेऽकच्चिती"ति सूत्रं मास्त्विति वाच्यम्, यत्राऽर्थप्रकरणादिना कामप्रवेदनं गम्यते इच्छार्थकमुपपदं नास्ति तदर्थं तदारम्भात्।

---

सूत्रम्
काशिका-वृत्तिः
समानकर्तृकेषु तुमुन् ३।३।१५८

इच्छार्थेषु धातुषु समानकर्तृकेषु उपपदेषु धातोः तुमुन् प्रत्ययो भवति। तुमुन् प्रकृत्यपेक्षम् एव समानकर्तृट्वम्। इच्छति भोक्तुम्। कामयते भोक्तुम्। विष्टि भोक्तुम्। वाञ्छति बोक्तुम्। समानकर्तृकेषु इति किम्? देवदत्तम् भुञ्जानम् इच्छति यज्ञदत्तः। इह कस्मान् न भवति, इच्छन् करोति? अनभिधानात्।
न्यासः
समानकर्तृकेषु तमुन्। , ३।३।१५८

पूर्वेण लिङ्लोटोः प्राप्तयोस्तुमुन् विधीयते। "तुमुनप्रकृत्यपेक्षमेव"इति। यस्माद् धातोस्तुमुन् , अतः प्रत्यासत्तेस्तदपेक्षमेव समानकर्तृकत्वं ज्ञायते-- तुमुन्प्रकृतेर्यः कत्र्ता स चेदिच्छार्थानामपि भवतीति। "इच्छति भोक्तुम्" इति। योऽत्रेषेः कत्र्ता स एव भुजेरपीत्यस्तीह समानकर्तृकेषु लिङलोटौ च परत्वात् प्राप्नुतस्तौ मा भूतमित्येवमर्थम्, {अर्थः-मुद्रितः पाठः,} ण्वुल् मा भूदित्येव {अर्थश्च-मुद्रितः पाठः} च। "देवदत्तं भुञ्जानमिच्छति" इति। अत्र भूजेर्देवदत्तः कत्र्ता, इच्छतेस्ततोऽन्य इति नास्ति समानकर्तृकत्वम्, तेन वत्र्तमानविवक्षायां लडेव भवति। "अनभिधानात्" इति। न ह्त्र तुमुनोत्पद्यमानेन विवक्षतोऽर्थः शक्यतेऽभिधातुमिति। अबिधानलक्षणाश्च कृत्तद्धितसमासाः। अथ वा-- "अनभिधानात्" इति। इच्छन् कर्तुमित्यभिधानस्याभावादित्यर्थः। लोकप्रसिद्धानां हि शास्त्रेऽन्वाख्यानं क्रियते, न

त्विच्छन् कर्त्तुमित्यादयो लोकप्रसिद्धाः॥

तत्त्व-बोधिनी

समानकर्तृकेषु तुमुन् १५०९, ३।३।१५८

समानकर्तृकेषु। अक्रियार्थेति। "भोक्तुमिच्छती"त्यत्र भोजनविषयिणीच्छेति प्रतीयते न भोजनार्थेच्छेति। अतः पूर्वेणाऽप्राप्तिरिति भावः। सूत्रस्थसमानशब्द एकतावचन इत्याह-- एककर्तृकेष्विति। एकेति किम्?। पुत्रस्य पठनमिच्छति। पुत्रस्येति कर्तरि षष्ठी। पुत्रकर्तृकं पठनमित्यर्थः। इह सूत्रे "समानकर्तृके"ति पदाभाऽवे "पुत्रस्य पठितुमिच्छती"ति प्रयोगः स्यात्। देवदत्तं भुञ्जानमिच्छतीति काशिका। प्रयोगाऽभावेऽपि इच्छन् कर्तुं गच्छतीत्यादौ तु "तुमुन्()ण्वुलौ" इति सूत्रेण स्यादिति। तच्चिन्त्यम्। करोतीत्यर्थ तुमुनः प्राप्तेरेवाऽभावात्, तस्य भावार्थकत्वात्। इह च लटा कर्तृप्रतीतेः। कंचेच्छन्कर्तुमिति प्रयोगो नेष्यते इति रिक्तं वचः, कर्तुमच्छन्निति प्रयोगस्य सकलसंमतत्वात्। पदानुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादविव स्वेच्छायत्तत्वात्। विस्तरस्त्विह मनोरमादावनुसन्धेयः। वष्टीति। वश कान्तौ, कान्तिरिच्छेति वशधातुरपीच्छार्थकः।

---

सूत्रम्

काशिका-वृत्तिः

लिङ् च ३।३।१५९

इच्छार्थेषु समानकर्तृकेषु धातुषु उपपदेषु धातोः लिङ् प्रत्ययो भवति। भुञ्जीय इति इच्छति। अधीयीयेति इच्छति। क्रियातिपत्तौ लृङ् भवति। योगविभाग उत्तरार्थः।

न्यासः

लिङ् च। , ३।३।१५९

"भुञ्जीयाधीय" इति। "इटोऽत्" ३।४।१०६। किमर्थं पुनरिदमुच्यते, यावता वासरूपविधिनैवात्र लिङ् भविष्यति? नैतदस्ति;लिङलोटोरपवादत्वाद् बाधकयोः प्राप्तयोस्तद्बाधनार्थस्तुमुन्, विधीयते। तेन बाधितत्वाद्यथा लोड् न भवति, तथा लिङ्गपि न स्यात्। तसमाल्लिङविधानार्थमिदमुच्यते। "योगविभाग उत्तरार्थः" इति। उत्तरसूत्रे लिङ एवानुवृत्तिर्यथा स्यात्, तुमुनो मा भूत्॥

बाल-मनोरमा

लिङ् च ६३८, ३।३।१५९

लिङ् च। समानकर्तृकेष्विति, इच्छार्थेष्विति चानुवर्तते। तदाह-- समानेत्यादि। भुञ्जीयेतीच्छतीति। अत्र भोक्तुरेव इषिकर्तृत्वात्समानकर्तृकत्वम्। "समानकर्तृकेषु इच्छार्थेष्वि"ति लोटो निवृत्त्यर्थमिदं सूत्रम्। क्रियातिपत्तौ तु भविष्यति नित्यं लृङ्, भूते चेत्यधिकारः संपूर्णः। इच्छार्थेभ्यो। लिङित्येवानुवर्तते। समानकर्तृकेष्विति तु निवृत्तम्। तत् सूचयन्नुदाहरति-- इच्छेत् इच्छतीति। "विधिनिमन्त्रणे"ति बूधातौ व्याख्यातमप सूत्रकर्मप्राप्तत्वात्समारितम्। एवं लोडिति। लोट् चेति विध्यादिषु विहितो लोडप्येवमुदाहर्तव्य इत्यर्थः।

तत्त्व-बोधिनी

लिङ् च ५२९, ३।३।१५९

लिङ् च। "समानकर्तृकेषु तुमुन्नि"त्यनेन "इच्छार्थेषु लिङ्लोटौ" इति विहितयोर्लिङ्लोटोर्बाधे प्राप्ते लिङः प्रतिप्रसवार्थं

सूत्रम्। न चाऽत्र वासरूपविधिना लिङ्लोटोर्नित्यं बाधा नेति शङ्क्यम्, क्तल्युट्तुमुन्खलर्थेषु तदभावात्। अथाऽपि वासरूपविधिः स्यात्, एवमपि लिहेव यता स्याल्लोट् माभूदित्येवमर्थं तदारब्धव्यमेव। क्रियातिपत्तौ लृङ् प्राग्वत्।

---

सूत्रम्

काशिका-वृत्तिः

इच्छार्थेभ्यो विभाषा वर्तमाने ३।३।१६०

इछार्थेभ्यो धतुभ्यो वर्तमाने काले विभाषा लिङ् प्रत्ययो भवति। लटि प्राप्ते वचनम्। इच्छति, इच्छेत्। वष्टि, उश्यात्। कामयते, कामयेत।

तत्त्व-बोधिनी

इच्छार्थेभ्यो विभाषा वर्तमाने ५३०, ३।३।१६०

इच्छार्थेभ्यः। इच्छार्थेभ्यः किम्?। पचति गच्छति।

---

सूत्रम्

काशिका-वृत्तिः

विधिनिमन्त्रणाऽमन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ३।३।१६१

विधिः प्रेरणम्। निमन्त्रणम् नियोगकरणम्। आमन्त्रणम् कामचारकरणम्। अधीष्टः सत्कारपूर्वको व्यापारः। सम्प्रश्नः सम्प्रधारणम्। प्रार्थनम् याच्ञा। विध्यादिष्वर्थेषु धातोः लिङ् प्रत्ययो भवति। सर्वलकाराणाम् अपवादः। विध्यादयश्च प्रत्ययार्थविशेषणम्। विध्यादिविशिष्टेषु कर्त्रादिषु लिङ् प्रत्ययो भवति। विधौ तावत् कटम् कुर्यात्। ग्रामं भवानागच्छेत्। निमन्त्रणे इह भवान् भुञ्जीत। इह भवानासीत। आमन्त्रणे इह भवानासीत। इह भवान् भुञ्जीत। अधीष्टे अधीछामो भवन्तं माणवकं भवानुपनयेत्। सम्प्रश्ने किं नु खलु भो व्याकरनम् अधीयीय। प्रार्थने भवति मे प्रार्थना व्याकरनम् अधीयीय।

लघु-सिद्धान्त-कौमुदी

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ४२७, ३।३।१६१

एष्वर्थेषु धातोर्लिङ्॥

न्यासः

इच्छार्थेभ्यो विभाषा वत्र्तमाने। , ३।३।१६१

"प्रेरणम्" इति। नियोगः" "निमन्त्रणं नियोगकरणम्" इति। असत्यामपीच्छायामकरणे सत्यधर्मोत्पत्तेर्नियमेनावश्यम्भावेन यत् करणं तन्निमन्त्रणम्। "कामचारकरणम्ििति। कामचार- = इच्छाप्रचारः। तेन यत्करणं तदामन्त्रणम्। एतदुक्तं भवति-- यदिच्छयैवकरणंनानिच्छया अकरणेऽपि दोषाभावात्,तदामन्त्रमणम्()। इहायं विध्यादिरर्थः प्रकृत्यर्थविशेषणं वा स्यात्? प्रत्ययार्थो वा? प्रत्ययार्थविशेषणं वा? तत्र यद्याद्यः पक्ष आश्रीयेत तदा यत्र प्रकृतिरेव विध्यादीनर्थानाचष्टे तत्र न सिध्येत्-- विदध्यान्निमन्त्रयेतामन्त्रयेताधीच्छेदिति, न ह्यत्र प्रकृत्यर्थादन्ये विशेषणभूता विध्यादयः सन्तीत्येष दोषः प्रतिविधेयः स्यात्। प्रतिविधीयमानेऽपि तस्मिन् प्रतिपत्तिगौरवं स्यात्। अथ द्वितीयः? भावकर्मकर्तृप्रत्ययार्थानां विध्यादयो वाचकाः स्युरित्येवमनयोर्दोषं दृष्ट्वा तृतीयं पक्षमाश्रित्याह--

"विध्यादयश्च" इत्यादि। प्रत्ययार्थास्त एव भावकर्मकर्त्तारः। तेषु "लः कर्मणि च" ३।४।६९ इत्यादिना प्रत्ययस्य विधानात् तेषामयं विध्यादिरर्थो विशेषणमिति मत्वाऽऽह-- "विध्यादिविशिष्टेषु" इत्यादि। एतेनादिशब्देन निमन्त्रणादीनां ग्रहणम्। द्वितीयेन भावकर्मणोः। "आसीत्" इति। अदादित्वाच्छपो २।४।७२ लुक्। "अध्यापयेत्" इति। पूर्ववदात्त्वपुकौ॥

बाल-मनोरमा

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ५७, ३।३।१६१

विधिनिमन्त्रणाअ। ननु विध्यादयो हि न लिङो वाच्याः, लः, कर्मणि च भावे चेति सूत्रेण कर्तृकर्मभावानां लकारवाच्यत्वबोधनात्। नच लः कर्मणि चेति शास्त्रं लिङ्व्यतिरिक्तलकारविषयकमेवास्त्विति वाच्यं, तथा सति यजेतेत्यादौ कर्तृवाचकत्वाऽभावेन शबाद्यनापत्तेरित्यत आह-- द्योत्येष्विति। "लः कर्मणि चे"ति सूत्रं सामान्यविषयं चेदपि विधिनिमन्त्रणेति विशेषशास्त्रेण न बाध्यते, अविरोधात्। तथा च विध्यादिविशिष्टकर्त्रादिषु लिङिति फलतीति मत्वाह-- वाच्येषु वेति। पक्षद्वयमपीदं भाष्ये स्थितम्। "विधिः प्रेरण"मिति भाष्यमर्थतस्सङ्गृह्णाति---विधिः प्रेरणमिति। ननु निमन्त्रणादीनामपि प्रेरणान्तर्भावात्पौनक्त्यमित्यतो व्याचष्टे। भृत्यादेर्निकृष्टस्य प्रवर्तनमिति। तद्यथा भृत्यं स्वामी वदति-- "भवान् वस्त्रं क्षालये"दिति। आमन्त्रणाद्भेदं दर्शयितुं निमन्त्रणशब्दं व्याचष्टे--- निमन्त्रणं नियोगकरणमिति। नियोगशब्दस्य प्रेरणशब्दपर्यायत्वभ्रमं वारयति-- आवश्यके इति। "त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलः" इत्यादिवचनादिति भावः। तद्यथा दौहित्रादीन् प्रति "इह श्राद्धे भवान् भुञ्जीते"ति। आमन्त्रणं कामचारानुज्ञेति। "यथेच्छं क्र#इयता" मित्यभ्यनुज्ञानमित्यर्थः। अधीष्टं सत्कारपूर्वको व्यापार इति। भाष्यवाक्यमिदम्। सत्कृत्य प्रवर्तनमित्यर्थः। अधिपूर्वकस्येषधातोर्भावे क्तान्तस्योपसर्गवशादस्मिन्नर्थे वृत्तिः। अत एव भाष्यप्रयोगादधीष्टशब्दस्य पुंस्त्वम्। "अधीष्ट" मित्येव क्वचित्पाठः। "माणवकं भवानध्यापये" दित्युदाहरणम्। "इदं कार्यं न वे"ति विचार्य निर्धारणं संप्रश्नः। यथा-- "किं भोः व्याकरणं भवानधीयीते"ति। प्रार्थनं--याच्ञा। यथा "भवानन्नं मे दद्या" दिति। सुवचमिति। प्रवर्तनात्वस्य विध्यादिचतुर्षु अनुस्यूतत्वादिति भावः। प्रवृत्यनुकूलव्यापारः--प्रवर्तना। तत्र प्रवृत्तिः शिष्यादिनिष्ठा। तदनुकूलव्यापारस्तु प्रेरणात्मकः प्रवर्तयितृगुर्वादिनिष्ठः। विस्तरस्तु मञ्जूषायां द्रष्टव्यः। चतुर्णामिति। विधिनिमन्त्रणामन्त्रणाधीष्टानामित्यर्थः।

तत्त्व-बोधिनी

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्राथनेषु लिङ् ४२, ३।३।१६१

द्योत्येषु वाच्येषु वेति। पक्षद्व्यस्याप्याकरे स्थितत्वादिति भावः। अत्राद्ये त्वित्थमुपपत्तिः-- विध्यादीनां प्रत्ययार्थत्वमनुचितम्। तथाहि सति कत्रादीनामर्थानां लकारान्तरे चरितार्थानां विद्यादयोऽर्थे बाधकाः स्युः, तथा च लिङः कत्राद्यबिधायकत्वं न स्यात्, ततश्च द्विवचनबहुवचने न स्यातां, शबादयश्च न स्युः, पुरुषव्यवस्था च न स्यात्, अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिध्येदिति॥ द्वितीये त्वित्थमुपपत्तिः-- विध्यादिभिः कत्रादयो न बाध्यन्ते, परस्परविरोधाऽभावात्। तथा च "लः कर्मणी"त्यत्र "ल" इति बहुवचननिर्देशेन सर्वलकाराणां सङ्ग्रहाल्लिङादीनामपि कत्रादयोऽर्था भवेयुः। किं च कत्रादयोऽपि निरवकाशाः। न च लडादयोऽवकाशाः। न्यायसाम्येन विध्यादिवद्वर्तमानत्वभूतत्वादेरपि तत्तल्लकारवाच्यत्वात्। न चैवं पचतीत्यादौ धात्वर्थं रप्रति वर्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यात्, तथा चैककर्तृका वर्तमाना पचिक्रियेत्यादिशाब्दबोधवर्णनमयुक्तं स्यादिति वाच्यम्। प्रत्ययार्थतया विशेष्यत्वापादनस्य कत्रादावपि तुल्यत्वात्। ननु प्रत्ययार्थः प्रधानं, प्रकृत्यर्थो विशेषणमित्यौत्सर्गिकमाख्याते त्यज्यत#ए "भावप्रधानमाख्यात"मिति सिद्धान्तानुरोधादिति चेत्तर्हि तत एव नोक्तदोष

इति दिक्॥ प्रवर्तनायामिति। प्रवर्तनात्वस्य विध्यादिषु चतुष्र्वनुस्यूतत्वादिति भावः। अत्र वदन्ति-- प्रवृत्तिः प्रवर्तना चोभयमपि व्यापारः, स च धात्वर्थः। फलव्यापारयोर्धातुवाच्यत्वस्वीकारात्। तदाश्रयस्तु लकारार्थः, व्यापारत्वेन प्रवर्तनाया धात्वर्थत्वेऽपि प्रवर्तनात्वेन प्रवर्तना तु लिङ्त्वादिरूपेण लकारवाच्या द्योत्या वेति पक्षद्वयम्। प्रवृत्तिः पुरुषनिष्ठा "आर्थी भावने"त्युच्यते। प्रवर्तना तु विधिः, मां प्रेरयतीत्यनुभवात् लिङादिनिष्ठा "शाब्दी भावने"त्युच्यते। वेद एव लिङादिनिष्ठा, वक्तुरभावात्, लोके तु पुरुषनिष्ठेति केचिदभ्युपगच्छन्ति। प्रवर्तनाया अस्याः पुरुषप्रवृत्तिरेव भाव्या। पुरुषप्रवृत्तेस्तु यजनदानादि ज्यायान्। लिङ्त्वादिरूपेण लकारस्य प्रवर्तनायां शक्त्यन्तरकल्पने गौरवात्। एवं णिच्यपि। इयांस्तु विशेषः-- णिच्प्रत्ययद्योत्या प्रेरणा सर्वस्मिन्नपि मते पुरुषादिनिष्ठैव न तु णिज्निष्ठा, लिङादिद्योत्या तु मतभेदेन लिङ्निष्ठा वा पुरुष निष्टा वेति॥ स्यादेतत्-- "लिङादिद्योत्या प्रवर्तना लोके पुरुषनिष्ठे"ति मते "पाचयत्य#ओदनं देवदत्तेन यज्ञदत्त" इतिवत् "पचेदोदनं देवदत्तेन यज्ञदत्त" इति प्रयोगः स्यात्। अत्राहुः-- पुरुषनिष्ठेति मते प्रवर्तना लिङादिवाच्यैव, न तु धातुवाच्या। तथा च लिङुपात्तव्यापाराश्रयस्य पुरुषस्य कर्तृत्वाऽभावान्नोक्तदोषः। "देवदत्तेन पाचयति यज्ञदत्तर" इत्यादौ तु णिजन्तस्य धातुत्वाद्धातूपात्तव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोरुभयोरपि कर्तृत्वाल्लकारेणाऽनुक्ते प्रयोज्ये कर्तरि तृतीयेति वैषम्यमिति। कौस्तुभादौ तु-- "हेतुमति चे"ति सूत्रे प्रयोजकव्यापारस्य णिज्वाच्यत्वपक्ष एव मुख्यत्वेन स्थापितः। व्यापारद्वयस्यापि णिच्प्रकृत्यर्थत्वे तु--अभीत्यस्य णिजर्थविशेष्यकत्वे अभिसावयति, प्रकृत्यर्थविशेष्यकत्वे तु "उपसर्गात्सुनोती"ति षत्वमभिषावयतीति सिद्धान्तस्य स्वारस्यभङ्गापत्तेरिति। तथा "गतिबुद्धी"ति सूत्रे अणिकर्तेति विशेषणमव्यावर्तकं स्यात्। त्वन्मते प्रयोजकव्यापारस्यापि णिच्प्रकृत्यर्थत्वेन प्रयोजकस्याप्यणौ कर्तृत्वादिति दिक्। प्रार्थनं-- याच्ञा॥

---

सूत्रम्

काशिका-वृत्तिः

लोट् च ३।३।१६२

लोट् प्रत्ययो भवति धातोः विध्यादिषु अर्थेषु। योगविभाग उत्तरार्थः। विधौ तावत् कटं तावत् भवान् करोतु। ग्रामं भवानागच्छतु। निमन्त्रणे अमुत्र भवानास्ताम्। अमुत्र भवान् भुङ्क्ताम्। आमन्त्रने इह भवान् भुङ्क्ताम्। अधीष्टे अधीच्छामो भवन्तं माणवकं भवानध्यापयतु, माणावकं भवानुपनयताम्। सम्प्रश्ने किं नु खलु भो व्याक्रनम् अध्ययै। प्रार्थने भवति मे प्रार्थना व्याकरणम् अध्ययै, छन्दो ऽध्ययै।

लघु-सिद्धान्त-कौमुदी

ऌट् शेषे च ४११, ३।३।१६२

भविष्यदर्थाद्धातोॢट् क्रियार्थायां क्रियायां सत्यामसत्यां वा। स् य इट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः।लोट् च॥ विध्याद्यर्थेषु धातोर्लोट्॥

न्यासः

लोट् च।, ३।३।१६२

यदि विध्यादिष्वेव लोड्भवत्येवं योगविभागः किमर्थं क्रियते? इत्याह-- "योगविभाग उत्तरार्थः" इति। उत्तरसूत्रे लोट एवानुवृत्तिर्यथा स्यात्, लिङो मा भूदिति। "करोतु" इति। "एरुः" ३।४।८६ इत्युक्तम्। "अध्ययै" इति। "आडुत्तमस्य पिच्च" ३।४।९२ इत्याट्, टेरेत्वे कृते "एत ऐ" ३।४।९३, "आटश्च" ६।१।८७ इति वृद्धिः, प्रकृतेर्गुणायादेशौ॥

बाल-मनोरमा

लोट् च ४३, ३।३।१६२

लोट् च। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु" इत्यनुवर्तते।तदाह--विध्यादिष्विति। विध्यादिशब्दा अनुपदमेव लिङ्विधौ व्याख्यास्यन्ते।

तत्त्व-बोधिनी

लोट् च ३४, ३।३।१६२

"विधिनिमन्त्रणे"त्याद्यनुवर्तते। तदाह-- विध्यादिष्विति॥

---

सूत्रम्

काशिका-वृत्तिः

प्रैषातिसर्गप्राप्तकालेषु कऋत्याश् च ३।३।१६३

प्रेषणं प्रैषः। कामचाराभ्यनुज्ञानम् अतिसर्गः। निमित्तभूतस्य कालस्य अवसरः प्राप्तकालता। एतेष्वर्थेषु धातोः कृत्यसंज्ञकाः प्रत्ययाः भवन्ति, चकाराल् लोट् च। भवता कटः करणीयः, कर्तव्यः, कृत्यः, कार्यः। लोट् खल्वपि करोतु कटं भवानिह प्रेषितः, भवानतिसृष्टह्, भवतः प्राप्तकालः कटकरणे। किमर्थं प्रैषादिषु कृत्या विधीयन्ते न सामान्येन, भावकर्मणोर् विहिता एव ते प्रैषादिष्वन्यत्र च भविष्यन्ति? विशेषविहितेन अनेन लोटा बाद्यन्ते। वासरूपविधिना भविस्यन्ति? एवं तर्हि ज्ञापयति, स्त्र्यधिकारात् परेण वासरूपविधिर् नावष्यं भवति इति। विधिप्रैषयोः को विशेष? केचिदाहुः, अज्ञातज्ञापनं विधिः, प्रेषणं प्रैषः इति।

न्यासः

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च। , ३।३।१६३

"कार्यः" इति। "ऋहलोण्र्यत्" ३।१।१२४ इति ण्यत्। "कृत्यः" इति। "विभाषा कृवृषोः" ३।१।१२० इति क्यप्। "किमर्थमिदम्" इत्यादि द्वेष्यम्। "विशेषविहित" इत्यादि परीहारः। कृत्या हि सामान्येन विहिताः। लोट् तु प्रैषादिनार्थविशेषेण। अतस्तेन विशेषविहितेन कृत्याः प्रैषादिविषये बाध्येरन्निति पुनर्विधीयते। "वासरूप"इत्यादीना परीहारं विघटयति। "एवं तर्हि" इत्यादिना प्रेषादिषु कृत्यविधानस्य ज्ञापकत्वं दर्शयति। ननु चाऽसति प्रयोजने ज्ञापकं भवति, इह चास्ति प्रयोजनम्, किं तत्? प्रैषादि येन नियमेन कृत्या भवन्ति, नान्यत्रेति? नैतत्; अनिष्टत्वात्। अन्यत्रापि हि कृत्या दृश्यन्ते-- तृणेन शोष्यम्, बुधेन बोध्यमिति। तच्च नियमे सति न सिध्येत्, न ह्रत्र प्रैषादयो गम्यन्ते। तस्मान्नेह नियमोऽभीष्टः, न चानिर्दिष्टार्था प्रक्लृप्तिः शास्त्रे युक्ता (भो।प।सू।१०७)। ततो युक्तं ज्ञापकमेव;कृत्यविधानस्यावश्यम्भावात्। अवश्यंग्रहणेन न क्वचिदपि भवतीति दर्शयति। एतच्च स्त्रधिकारात् परेणापि वासरूपविधिः क्वचित् स्वरितत्वप्रतिज्ञानाल्लभ्यते। तेन कालादिषूपपदेषु वासरूपविधिना ल्युडपि भवति-- कालो भोजनस्येति। यदि तु सर्वथा वासरूपविधिर्न स्यात् तदा "कालसमयवेलासु तुमुन्"३।३।१६७ इति तुमुन्नेव नित्यं स्यात्। "केचिदाहुःर"इति वचनादपरे त्वेतयोर्विशेषं नेच्छन्तीत्युक्तं भवति॥

बाल-मनोरमा

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ६३९, ३।३।१६३

प्रैषातिसर्ग।लोट् चेति। पूर्वसूत्रोपात्तो लोट् चकारात्समुच्चीयते। कृत्यसंज्ञकाः प्रत्यया वक्ष्यमाणा, लोट् च प्रैषादिषु भवन्तीत्यर्थः। प्रैषे अतिसर्गे च कृत्यप्रत्ययमुदाहरति-- भवता यष्टव्यमिति। भावे तव्यप्रत्ययः। लोटमुदाहरति--

भवान्यजतामिति। ननु चकारेण लोटोऽनुकर्षणं व्यर्थं, प्रैषस्य विधिरूपतया, अतिसर्गस्य आमन्त्रणरूपतया च "लोट् चे"त्यनेनैव सिद्धेरित्यत आह-- वकारेणेति। प्राप्तकाले यथा-- गुरुणा भोक्तव्यम्। गुरुर्भुञ्जीत। भोजनं प्राप्तावसरमित्यर्थः। "प्राप्तकाले च कृत्याश्चे"त्युक्तौ तु निमन्त्रणादिष्वपि कृत्याः स्युः। अतः प्रैषादिग्रहणम्।

तत्त्व-बोधिनी

प्रैषतिसर्गप्राप्तकालेषु कृत्याश्च ५३१, ३।३।१६३

प्रैषतिसर्ग। प्रैषो विधिरिति। विधिग्रहणे कर्तव्ये प्रैषग्रहणं शिष्यबुद्धिवैशद्यार्थमित्याहुः। लोटोऽनुकर्षणमिति। "लोट् चे"ति योगस्येदमेव प्रयोजनम्। एकयोगत्वे तु लिङोऽप्यनुकर्षणं स्यात्। प्राप्तकालार्थमिति। प्रैषतिसर्गयोः पूर्वेणैव सिद्धत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

लिङ् च ऊर्ध्वमौहूर्तिके ३।३।१६४

प्रैषादयो वर्तन्ते। प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिके ऽर्थे वर्तमानाद् धातोः लिङ् प्रत्ययो भवति, चकाराद् यथा प्राप्तं च। ऊर्ध्वं मुहूर्तात्, उपरि मुहूर्तस्य भवता खलु कटः कर्तव्यः, करणीयः, कार्यः। भवान् खलु कटं कुर्यात्, भवान् खलु करोतु। भवानिह प्रेषितः। भवानतिसृष्टः। भवान् प्राप्तकालः।

न्यासः

लिङ् चोध्र्वमौहूर्तिके। , ३।३।१६४

"यथाप्राप्तञ्च" इति। लोट्, कृत्याश्च॥

बाल-मनोरमा

लिङ् चोध्र्वमौहूर्तिके ६४०, ३।३।१६४

लिङ् चोध्र्वमौहूर्तिके। "लोडर्थलक्षणे चे"त्युत्तरमेवंजातीयकमेव सूत्रं लिङ्लङ्लुङ्लृङ्()विधायकं प्राक् पठितम्। तत्र ऊध्र्वमौहूर्तिकशब्दो व्याख्यातः। प्रैषादय इति। तथा च मुहूर्तादूध्र्वं यजेत यजतां यष्टव्यमिति। अत्र प्राप्तकालेऽप्राप्तस्य लिङो विधिः, विध्यादिसूत्रे लिङ्()विधौ प्राप्तकालस्य ग्रहणाऽभावात्। प्रैषातिसर्गयोस्तु विद्यादिसूत्रेणैव लिङ् सिध्यति। लिङ एवात्र विधौ तु तेन लोटः कृत्यानां च बाधः स्यात्, अतश्चकारेण तेषामिति विधिरिति ज्ञेयम्।

तत्त्व-बोधिनी

लिङ् चोध्र्वमौहूर्तिके ५३२, ३।३।१६४

लिङ् चोध्र्व। प्राप्तकालविशेषेऽप्राप्तस्य लिङो विधानार्थमिदं सूत्रम्। प्रैषातिसर्गयोस्तु पूर्वेण प्राप्त एव लिङ्। लोट्()कृत्यानां कालविशेषेऽस्मिन् लिङा माभूदिति चकारः।

---

सूत्रम्

काशिका-वृत्तिः

स्मे लोट् ३।३।१६५

प्रैषादिषु ऊर्ध्वमौहूर्तिके इति वर्तते। सम्शब्दे उपपदे प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिके ऽर्थे वर्तमानाद् धातोः लोट् प्रत्ययो भवति। लिङ्कृत्यानाम् अपवादः। ऊर्ध्वं मुहूर्ताद् भवान् कटं कओर्तु स्म, ग्रामं गच्छतु स्म, माणावकमध्यापयतु स्म।

न्यासः

स्मे लोट्। , ३।३।१६५

"लिङ्कृत्यानामपवादः"इति। अनन्तर सूत्र विहितानाम्॥

बाल-मनोरमा

स्मे लोट् ६४१, ३।३।१६५

स्मे लोट्। पूर्वसूत्रेति। तथा च मुहूर्तादुपरितनकाले प्रैषातिसर्गप्राप्तकालेषु लोडेव स्यान्नतु लिह् कृत्याश्चेत्यर्थः। तदाह--लिङः कृत्यानां चापवाद इति।

तत्त्व-बोधिनी

स्मे लोट् ५३३, ३।३।१६५

पूर्वसूत्रस्यविषय इति। प्रैषादयः, ऊध्र्वमौहूर्तिके इति चानुवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अधीष्टे च ३।३।१६६

स्मे इति वर्तते। अधीष्टं व्याख्यातम्। स्मशब्दे उपपदे ऽधीष्टे गम्यमाने धातोः लोट् प्रत्ययो भवति। लिङो ऽपवादः। अङ्ग स्म राजन् माणवकमध्यापय। अङ्ग स्म राजन्नग्निहोत्रं जुहुधि।

न्यासः

अधीष्टे च। , ३।३।१६६

"लिङोषऽपवादः"इति। विध्यादिसूत्रेण प्राप्तस्य। "अध्यापय"इति। सेर्हिरादेशः ३।४।८७, तस्य "अतो हेः" ६।४।१०५ इति लुक्। "जुहुधि"इति। "हुझल्भ्यो हेर्धिः" ६।४।१०१ इति धिरादेशः॥

बाल-मनोरमा

अधीष्टे च ६४२, ३।३।१६६

अधीष्टे च। लोट् स्यादिति। अधीष्टे विहितस्य लिङोऽपवादः। अधीष्टं सत्कारपूर्वको व्यापार इत्युक्तम्। त्वं स्माध्यापयेति गुरुं प्रत्युक्तिः। "स्मे लोडधीष्टेचे"त्येकसूत्रत्वेन सिद्धए योगविभागस्तु ऊध्र्वमौहूर्तिक इत्यनुवृत्तिनिवृत्त्यर्थः। "कालसमयेलासु तुमु"न्नित्युत्तरसूत्रं तु कृदधिकारे व्याख्यास्यते।

तत्त्व-बोधिनी

अथीष्टे च ५३४, ३।३।१६६

अधीष्टे च। लिङोऽपवादः। योगविभास्तु ऊध्र्वमौहूर्तिकाऽननुवृत्त्यर्थः।

सूत्रम्

काशिका-वृत्तिः

कालसमयवेलासु तुमुन् ३।३।१६७

कालादिषु उपपदेसु धातोः तुमुन् प्रत्ययो भवति। कालो भोक्तुम्। वेला भोक्तुम्। इह कस्मान् न भवति, कालः पचति भूतानि इति? प्रैषादिग्रहणम् इह अभिसम्बध्यते। इह कस्मान् न भवति,कालो भोजनस्य? वासरूपेन ल्युडपि भवति। उक्तम् इदम्, स्त्र्यधिकारात् परत्र वासरूपविधिरनित्यः इति।

लघु-सिद्धान्त-कौमुदी

कालसमयवेलासु तुमुन् ८५३, ३।३।१६७

कालार्थेषूपपदेषु तुमुन्। कालः समयो वेला वा भोक्तुम्॥

न्यासः

कालसमयवेलासु तुमुन्। , ३।३।१६७

"प्रैषादिग्रहणमिह सम्बध्यते" इति।न चेदिह प्रैषादयो गम्यन्ते, तेन तत्र न भवतीत्यभिप्रायः। कालो भोजनस्येत्युक्ते तस्याद् भङ्क्तां भवानिति प्रैषो गम्यते। ततश्च प्रैषादिग्रहणेऽनुवत्र्तमानेऽपीह प्राप्नोतीत्यभिप्रायेणाह--"इह कस्मान्न भवति" इत्यादि। स्यादेत्-- प्रैषादि कृत्यविधानाज्ज्ञापकात् स्त्र्यधिकारात् परेणापि वासरूपविधिर्नास्तीति, किं तर्हि? अनित्यः।ततः क्वचिद्भवति। एतच्च "एवं तर्हेतज्ज्ञापयति" (३।३।१६३ का।वृ) इत्यादिना प्रागेवाभिहितम्॥

---

सूत्रम्

काशिका-वृत्तिः

लिङ् यदि ३।३।१६८

कालादयो ऽनुवर्तन्ते। यच्छब्दे उपपदे कालादिषु धातोः लिङ् प्रत्ययो भवति। तुमुनो ऽपवादः। कालो यद् भुञ्जीत भवान्। सम्यो यद् भुञ्जीत भवान्। वेला यद् भुञ्जीत भवान्।

न्यासः

लिङ् यदि। , ३।३।१६८

" तुमुनोऽपवादः"इति। पूर्वसूत्रेण प्राप्तस्य॥

बाल-मनोरमा

लिङ्यदि ६४३, ३।३।१६८

लिङ्यदि। कालसमयवेलास्वत्यनुवर्तते। सर्वलकारापवादः, तुमुनपवादश्च। भुञ्जीत भवानिति यत्तस्यकालः समयो वेला वेत्यन्वयः।

तत्त्व-बोधिनी

लिङ्यदि ५३५, ३।३।१६८

लिङ् यदि। कालसमयवेलासु चेति। "उपपदेष्वि"ति वचनविपरिणामेन संबध्यते। तुमुनोऽपवादः। यद्भुञ्जीतेति। यत्कालः

पचतीत्यत्र तु न , प्रेषादीनामनुवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

अर्हे कृत्यतृचश् च ३।३।१६९

अर्हति इति अर्हः, तद्योग्यः। अर्हे कर्तरि वाच्ये गम्यमाने वा धातोः कृत्यतृचः प्रत्यया भवन्ति, चकाराल् लिङ् च। भवता खलु कन्या वोढव्या, वाह्या, वहनीया। भवान् खलु कन्याया वोढा। भवान् खलु कन्यां वहेत्। भवानेतदर्हेतिति। अथ कस्मादर्हे कृत्यतृचो विधीयन्ते, यावता सामानेन विहितत्वादर्हे ऽपि भविस्यन्ति? यो ऽयम् इह लिङ् विधीयते, तेन बाधा मा भूतिति। वासरूपविधिश्च अनित्यः।

न्यासः

अर्हे कृत्यतृचश्च। , ३।३।१६९

"वोढव्यः"इति। "हो ढः" ८।२।३१, "झषस्तथोर्धोऽधः" ८।२।४०, "ष्टुना ष्टुः"८।४।४०, "ढो धे लोपः" ८।३।१३ , "सहिवहोरोदवर्णस्य" ६।३।१११ इत्येते विधयः कत्र्तव्याः। "अथ"इत्यादि द्वेष्यम्। "योऽयम्" इत्यादि परीहारः। वासरूपविधिः स्त्र्यधिकारात् परेण नावश्यम्भवतीत्युक्तमेव॥

बाल-मनोरमा

अर्हे कृत्यतृचश्च ६४४, ३।३।१६९

अर्हे कृत्यतृतश्च। चाल्लिङिति। योग्येकर्तरि गम्ये कृत्याः, तृच्, लिङ् चेत्यर्थः। त्वं कन्यां वहेरिति। कन्याविवाहस्य योग्य इत्यर्थः।

तत्त्व-बोधिनी

अर्हे कृत्यतृचश्च ५३६, ३।३।१६९

अर्हे। योग्ये कर्तरि गम्यमाने कृत्यतृचो भवन्ति। त्वया कन्या वोढ्वया, वहनीया। त्वं कन्यां वोढा। कन्यां वहेरिति। कन्योद्वहने योग्यस्त्वमित्यर्थः। नन्वर्हे किमर्थं कृत्यतृचो विधीयन्ते यावता सामान्येन विहितत्वादनर्हेऽपि भविष्यन्तीति चेत्। अत्राहुः-- अर्हतायां द्योत्यायमप्राप्तो लिङ् विधीयते, तेन तु लिङा बाधा माभूदिति कृत्यतृचोर्विधानम्। न च वासरूपविधिना समीहितसिद्धिः, स्त्र्यधिकारादूध्र्वं तदप्रवृत्तेरिति।

---

सूत्रम्

काशिका-वृत्तिः

आवश्यकाऽधमर्ण्ययोर् णिनिः ३।३।१७०

अवश्यं भावः आवश्यकम्। उपाधिरयं, न उपपदम्। अवश्यं भावविशिष्टे आधमर्ण्यविशिष्टे च कर्तरि वाच्ये धातोः णिनिः प्रत्ययो भवति। अवश्यंकारी। मयूरव्यंसकादित्वात् समासः। आधमर्ण्ये खल्वपि शतम् दायी सहस्रं दायी। निष्कं दायी।

न्यासः

आवश्यकाधमण्र्ययोर्णिनिः। , ३।३।१७०

"आवश्यकम्ि‍ति। मनोज्ञादित्वाद्()वुञ्। "उपाधिरयम्ि‍ति। प्रत्ययार्थविशेषणमित्यर्थः। "नोपपपदम्" इति। उपपदत्वे तु कारी, हारीति रूपं नस्यादित्यभिप्रायः।"ओरावश्यके"३।२।१२५ इत्यत्र प्रतिपादितमेवावश्यमुपाधिः, नोपपदमिति;तदिहापि तद्वदेवोपाधिकत्वमावश्यकस्य वदितव्यम्। तेन सह निर्द्देशादाधमण्य्रमप्युपाधिरेव, नोपपदमिति। यद्यावश्यकमपाधिर्नोपपदम्, "उपपदमतिङ्"२।२।१९ इति समासो न स्यात्, न चान्यल्लक्षणमस्ति येनेह समासः स्यादिति यो मन्येत्, तं प्रत्याह-- "मयूरव्यंसकादित्वात् समासः" इति "सहरुआं दायी"इति।"अकेनोर्भविष्यदाधमण्र्ययोः" २।३।७० इति षष्ठ()आं प्रतिषिद्धायां द्वितीयैव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

कृत्याश् च ३।३।१७१

आवश्यकाऽधमर्ण्ययोः इति वर्तते। कृत्यसञ्ज्ञाकाश्च प्रत्यया आवश्यकाऽधमर्ण्ययोरुपाधिभूतयोः धातोर् भवन्ति। भवता खलु अवश्यं कटः कर्तव्यः, अवश्यं करणीयः, अवश्यं कार्यः, अवश्यं कृत्यः। आधमर्ण्ये भवताशतं दातव्यम्। सहस्रं देयम्। किमर्थम् इदम्, यावता सामाग्येन विहिता अस्मिन्नपि विषये भविस्यन्ति? विशेषविहितेन णिनिना बाध्येरन्। कर्तरि णिनिः, भावकर्मणोः कृत्याः, तत्र कुतो बाधप्रसङ्गः? तत्र केचिदाहुः, भव्यगेयादयः कर्तृवाचिनः कृत्याः, त इह उदाहरणम् इति।

न्यासः

कृत्याश्च। , ३।३।१७१

"किमर्थम्ि‍त्यादि चोद्यम्। "विशेषविहितेन"इति परीहारः।"कत्र्तरि"इत्यादिना परीहारविघटनञ्च। "केचित्ि‍त्यादिना परकीयमतेन परोहारसमर्थनम्। "भव्यगेयम्ि‍ति। "समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वत्र्तन्ते" (शा।प।८५) इति भव्यगेयादयः शब्दा अवयवभूतेषु कृत्येष्विह वत्र्तन्ते। "कर्त्तृवाचिनः"इति। भव्यगेयादिसूत्रेणैषां पक्षे कत्र्तरि निपातनात्। योगविभाग उत्तरार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

शकि लिङ् च ३।३।१७२

शकि इति प्रकृत्यर्थविशेषणम्। शक्नोत्यर्थोपाधिके धात्वर्थे लिङ् प्रत्ययो भवति, चकारात् कृत्याश्च। भवता खलु भारो वोढव्यः, वहनीयः, वाह्यः। भवान् खलु भारं वहेत्। भवानिह शक्तः। सामान्यविहितानां पुनर् वचनम् लिङा बाधा मा भूतिति।

न्यासः

शकि लिङ् च। , ३।३।१७२

"प्रकृत्यर्थविशेषणञ्चैतत्"। पूर्वेणाभिप्रायेणोपपदनिरासार्थमिदमुच्यते। "जीव्यात्ि‍ति।"स्कोः"८।२।२९ इति सलोपः। अथ किमर्थं लिङग्रहणम्, "लोट् च"३।३।१६२ इत्येव सिद्धम्, चकारेण ह्यनुकृष्यमाणो लिङपि भविष्यति? नैवं शक्यम्; यथैव हि चकारेण लिङनुकृयते तथा कृत्या अप्यनुकृष्येरन्। ननु निवर्तिष्यन्ते कृत्याः, तेषु निवृत्तेषु लिङ एवानुकर्षणार्थश्चकारो भविष्यति? सत्यमेतत्; एवं यदि तेषां निवृत्तिर्विज्ञास्यते लिङोऽपि निवृत्तिः स्यात्।

व्याख्यानादनुवर्तिष्यत इति चेदेवमपि प्रतिपत्तिगौरवं स्यात्। तस्मात् प्रतिपत्तिगौरवपरीहारार्थं यथान्यासमेव न्याय्यम्। अत्र विध्यादिसूत्रे ३।३।१६१ एवाशीग्र्रहणं कस्मान्न कृतम्, एवं हि लिङलोटोग्र्रहणं न कृतं भवति? नै शक्यम्; विध्यादिसूत्रे पाठे सति "स्मे लोट्" ३।३।१६५ इत्येवमादिभिः परत्वाद्बाधा स्यात्। इहतु क्रियमाणे परत्वादेष योगस्तेषां बाधको भविष्यतीति न भवत्येष दोषप्रसङ्ग। अवश्यञ्चोत्तरार्थमाशीग्र्रहणं कत्र्तव्यम्-- "क्तिच्क्तौ च संज्ञायाम्" ३।३।१७४ इत्याशिषि यथा स्याताम्॥।

बाल-मनोरमा

शकि लिङ् च ६४५, ३।३।१७२

शकि लिङ् च। "शक्" इति भावे क्विबन्तम्। शक्तौ गम्यमानायामित्यर्थः। भारं त्वं वहेरिति। वोढुं शक्त इत्यर्थः। "माङि लु"ङिति व्याख्यातमपि क्रमप्राप्तं विशेषविवक्षया पुनः स्मार्यते। ननु सर्वलकारापवादोऽयमित्युक्तम्, एवं सति मा भवतु मा भविष्यतीति कथमिति शङ्क्यते -- कथमिति। परिहरति-- नायं माङिति। किंत्विति। ङकारानुबन्धविधिर्मुक्तस्यापि अव्ययेषु पाठादिति भावः। नच माशब्दमादाय मा भवत्वित्यादिप्रयोगसत्त्वे "माङि लु"ङिति व्यर्थमिति वाच्यं, सर्वलकारविषये "न माङ्योगे" इत्यडाड्रहितलुङन्तप्रयोगार्थं तदावश्यकत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

आशिषि लिङ् लोटौ ३।३।१७३

आशंसनम् आशीः, अप्रप्तस्य इष्टस्य अर्थस्य प्राप्तुम् इच्छा। प्रकृत्यर्थविशेषणं च एतत्। अशीर्विशिष्टे ऽर्थे वर्तमानाद् धातोः लिङ्लोटौ प्रत्ययौ भवतः। चिरं जीव्याद् भवान्। चिरं जीवतु भवान्। आशिषि इति किम्? चिरं जीवति देवदत्तः।

लघु-सिद्धान्त-कौमुदी

आशिषि लिङ्लोटौ ४१२, ३।३।१७३

बाल-मनोरमा

आशिषि लिङ्?लोटौ ४४, ३।३।१७३

आशिषि लिङ्। आशिष्यपीत्यर्थः। आशासनमासीः, इष्टप्राप्तीच्छा।

तत्त्व-बोधिनी

आशिषि लिङ्लोटौ ३५, ३।३।१७३

ननु विध्यादिसूत्र एव संप्रश्नप्रार्थनाशीःष्वित्युच्यतां किमनेन पृथक्सूत्रकरणेनेति चेत्। अत्राहुः--- इह हि "क्तिच्क्तौ चे"त्युत्तरसूत्रार्तमाशिषीति तावदावश्यकम्। लिङ्लोटावपीहैव विधेयौ, विध्यादिसूत्रे आशीग्र्रहणे हि "स्मे लो"डित्यादिना स्वविषये परत्वादद्बाधः स्यात्। सिद्धान्ते तु परत्वादेष विधिः "स्मे लो"रडित्यादेर्बाधक इति महान्विशेष इति॥

---

सूत्रम्

काशिका-वृत्तिः

क्तिच्क्तौ च संज्ञायाम् ३।३।१७४

आशिषि इत्येव। आशिषि विषये धातोः क्तिच्क्तौ प्रत्ययौ भवतः, समुदायेन चेत् संज्ञा गम्यते। तनुतात् तन्तिः। सनुतात् सातिः। भवतात् भूतिः। मनुतात् मन्तिः। क्तः खल्वपि देवा एनं देयासुः देवदत्तः। सामान्येन विहितः क्तः पुनरुच्यते, क्तिचा बाधा मा भूतिति। चकारो विशेषणार्थः, न क्तिचि दीर्घश्च ६।४।३९ इति।

न्यासः

क्तिच्क्तौ च संज्ञायाम्। , ३।३।१७४

"समुदायेन"इति। प्रकृतिप्रत्ययसमुदायेन। एतेन समुदायोपाधितां संज्ञाया दर्शयति। "तन्तिः"इति। "तनु विस्तारे"(धा।पा।१४६३), अत्र "अनुनासिकस्य क्विझलोः क्ङिति"६।४।१५ इति दीर्घः प्राप्नोति, "अनुदात्तोपदेश"६।४।३७ इत्यादिनानुसिकलोपश्च; तदुभयं "न क्तिचि दीर्घश्च" ६।४।३९ इति निषिध्यते। "सातिः"इति। "षणु दाने"(धा।पा।१४६४), "जनसनखनां सञ्झलोः"६।४।४२ इत्यात्त्वम्। "देवदत्तः"इति। डुदात्रो निष्ठायाम् "दो दद् घोः"७।४।४६ इति ददादेशः, "खरि च"८।४।५४ इति चत्र्वम्॥

तत्त्व-बोधिनी

क्तिच्क्तौ च संज्ञायाम् १५८३, ३।३।१७४

क्तिच्क्तौ। क्तिचश्चकारो "न क्तिची"ति विशेषणार्थः। "न क्त्वा" वित्युक्ते हि क्तिनोऽपि ग्रहणं स्यादिति भावः। तत्र एकानुबन्धपरिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तः। यत्तु वदन्ति--"तितुत्रे"त्यत्र सामान्यग्रहणार्थश्चकारः। अन्यथा एकानुबन्धत्वादस्यैव ग्रहणं स्यान्न तु क्तिन इति, तद्रभसात्, "तितुत्रे"ति सूत्रेऽनुबन्धविशिष्टरूपानुच्चारणेनैकानुबन्धपरिभाषाया उक्तिसंभवस्यैवाऽभावात्। #एतेन "तितुत्रे"ति सूत्रे एकानुबन्धत्वात्तिबेव गृह्रते न त्वयं क्तिच्। ततश्च रोदतीति रूपं न स्यादिति शङ्काप्यपास्ता। भूतिरिति। यद्यपीह परत्वात् "श्र्युकः किति" इत्येवेण्निषेधोन्याय्यस्तथापि वन्तितन्त्योरिण्निषेधार्थमावश्यकत्वात्फले विशेषाऽभावाच्च "तितुत्रे"त्युपन्यस्तम्।

---

सूत्रम्

काशिका-वृत्तिः

माङि लुङ् ३।३।१७५

माङि उपपदे धातोः लुङ् प्रत्ययो भवति। सर्वलकाराणाम् अपवादः। मा कार्षीत्। मा हार्षीत्। कथम् मा भवतु तस्य पापम्, मा भविष्यति इति? असाधुरेव अयम्। केचिदाहुः, अङिदपरो माशब्दो विद्यते, तस्य अयं प्रयोगः।

लघु-सिद्धान्त-कौमुदी

माङि लुङ् ४३७, ३।३।१७५

सर्वलकारापवादः॥

न्यासः

माङि लुङ्। , ३।३।१७५

"मा कर्षित्" इति। "न माङ्योगे" ६।४।७४ इत्यडागमाभावः॥

बाल-मनोरमा

माङि लुङ् ६७, ३।३।१७५

माङि लुङ्। माङि प्रयुज्यमाने धातोर्लुङ् स्यादित्यर्थः। ननु लुङित्युदाहृतसूत्रेणैव सिद्धेः किमर्थमिदमित्यत आह-- सर्वलकारापवाद इति। मास्त्वित्यादौ तु "मा" इत्यव्ययान्तरं प्रतिषेधार्थकमित्याहुः। आङ्()माङोश्चे"ति सूत्रभाष्ये तु ङितो माशब्दस्य निर्देशात्प्रमाछन्द इत्यत्र तुङ्न भवतीत्युक्तम्। माशब्दस्याऽव्ययान्तरस्य सत्त्वे तु तदेवोदाह्रियेत। मास्त्क्यत्र तु अस्त्विति विभक्तिप्रतिरूपकमव्ययमित्यन्ये।

तत्त्व-बोधिनी

माङि लुक् ५१, ३।३।१७५

सर्वलकारापवाद इति। मास्त्वित्यादौ निषेधार्थकमाशब्दोऽन्य एव, न तु माङित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

स्मौत्तरे लङ् च ३।३।१७६

स्मशब्दौत्तरे माङि उपपदे धातोः लङ् प्रत्ययो भवति, चकाराल् लुग् च। मा स्म करोत्। मा स्म कार्षीत्। मा स्म हरत्। मा स्म हार्षीत्। इति श्रीजयादित्यविरचितायाम् काशिकायां वृत्तौ तृतीयाध्यायस्य तृतीयः पादः। तृतीयाध्यायस्य चतुर्थः पादः।

लघु-सिद्धान्त-कौमुदी

स्मोत्तरे लङ् च ४३८, ३।३।१७६

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ्॥

न्यासः

स्मोत्तरे लङ् च। , ३।३।१७६

स्मशब्द उत्तरमधिकं यस्य माङः स तथोक्तः॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां तृतीयस्याध्यायस्य तृतीयः पादः ---------------------------------------------- अथ तृतीयाध्यायस्य चतुर्थः पादः

बाल-मनोरमा

स्मोत्तरे लङ्च ६८, ३।३।१७६

स्मोत्तरे लङ् च। चकारान्माङि लुङित्यनुकृष्यते। "स्मे त्यव्ययमुत्तरं यस्मादिति विग्रहः। तदाह---स्मोत्तरे माङिति। अयमपि सर्वलकारापवादः।

---

सूत्रम्

काशिका-वृत्तिः

धातुसम्बन्धे प्रत्ययाः ३।४।१

धात्वर्थे धातुशब्दः। धात्वर्थानां सम्बन्धो धातुसम्बन्धः विशेषणविशेष्यभावः। तस्मिन् सति अयथाकालोक्ता अपि प्रत्ययाः साधवो भवन्ति। अग्निष्टोमयाज्यसय पुत्रो जनिता। कृतः कटः श्वो भविता। भावि कृत्यम् आसीत्।

अग्निष्टोमयाजी इति भूतकालः, जनिता इति भविष्यत्कालः। तत्र भूतः कालः भविष्यत्कालेन अभिसम्बध्यमानः साधुर् भवति। विशेषणं गुणत्वाद् विशेष्यकालम् अनुरुध्यते, तेन विपर्ययो न भवति। प्रत्ययाधिकारे पुनः प्रत्ययग्रहणम् अधात्वधिकारविहिता अपि प्रत्ययाः तद्धिता धातुसम्बन्धे सति कालभेदे साधवो यथा स्युः इति। गोमानासीत्। गोमान् भविता। गावो विद्यन्ते ऽस्य इति वर्तमानविहितो मतुप्, आसीत् भविता इति सम्बन्धाद्तीते भविष्यति च साधुर् भवति।
न्यासः
धातुसम्बन्धे प्रत्ययाः। , ३।४।१

"धात्वर्थे धातुशब्दः" इति। अभिधेयेऽभिधानोपचारं कृत्वा धात्वर्थोऽत्र धातुशब्देन निर्दिष्ट इति दर्शयति। भ्वादिष्वेवायं धातुशब्दो वत्र्तते, स्वार्थे गुणीभूतस्य धातुशब्दस्य शब्दान्तरेण सम्बन्धो न स्यात्; तस्माद्धात्वर्थ एवायं धातुशब्दो वत्र्तते, न भ्वादिषु। ततश्च धातुसम्बन्ध इत्यस्य धात्वर्थसम्बन्ध इत्येषोऽर्थो विज्ञायत इत्याह-- "धात्वर्थानां सम्बन्धो धातुसम्बन्धः" इति। कथं पुनः सम्बन्ध इत्याह-- "विशेषणविशेष्यभावः" इति। "अयथाकालोक्ता अपि" इत्यादि। यो यस्यात्मीयः कालो यथाकालम्। "यथाऽसादृश्ये"२।१।७ इति वीप्सायामव्ययीभावः, यथाकाले उक्ता यथाकालोक्ताः, "सप्तमी"२।१।३९ इति योगविभागात् समासः,न यथाकालोक्ताः = अयथाकालोक्ताः। एतदुक्तं भवति-- स्वैः स्वैर्विधायकैर्वाक्यैर्यत्र यस्मिन् यस्मिन् काले ये ये विहितास्ततोऽन्यत्रकालेऽपि प्रयुक्ताः प्रत्ययाः साधवो भवन्तीति। "अग्निष्टोमयाजी" इत्यादीन्युदाहरणानि दर्शयति। सर्वत्र तिङन्तदाच्योऽर्थो विशेष्यः, सुबन्तवाच्यस्तु विशेषणम्। "अग्निष्टोमयाजीति भूतकालः" इति। भूतः कालोऽस्येति बहुव्रीहिः। भूतकालत्वंतु भूताधिकारे "करणे यजः"३।२।८५ इति णिनेर्विध#आनात्। "जनितेति भविष्यत्कालः" इति। भविष्यन् कालोऽस्येति बहुव्रीहिरेव। भविष्यत्कालत्वं तु भविष्यदनद्यतने लृटो विधानात्। "तत्र"इति। निर्धारणे सप्तमी। तयोर्भूतकालभविष्यत्कालयोर्मध्ये यो भूतकालः स भविष्यत्कालेन सम्बध्यमानः साधुर्भवति। अग्निष्टोमयाजीति भूतकालो जनितेति भविष्यत्कालेनापि सम्बध्यमानो भविष्यत्काल एव सम्पद्यते। द्वितीयेऽप्युदाहरणे "कृतः" इति भूतकालः; भूते निष्ठाविधानात्। "भविता" इति भविष्यत्कालः पूर्ववदेव। तत्र भूतकाल इतरेणापि सम्बध्यमानः साधुर्भवति। तृतीयेऽपि "भावी"इति भविष्यत्कालः; "भविष्यति गम्यादयः"३।३।३ इति वचनात्। "आसीत्" इति भूतकालः; भूतानद्यतने लङो विधानात्। तत्र भविष्यत्कालो भूतकालेनापि सम्बध्यमानः साधुर्भवति। इहाग्निष्टोमयाज्यस्य पुत्रो जनितेति भूतकालो भविष्यत्कालेनापि सम्बध्यमानो भविष्यत्कालः सम्पद्यते। तथा ह्ययमत्रार्थः प्रतीयते-- सोऽस्यपुत्रो जनिता योऽग्निष्टोमेन यष्टेति। न च भविष्यत्कालो भूतकालेनाभिसम्बध्यमानो भूतकालतां प्रतिपद्यते, न ह्यत्रायमर्थः प्रतीयते-- सोऽस्य पुत्रो जातो योऽग्निष्टोमेनेष्टवानिति। इतरयोरप्युदाहरणयोर्विशेषणं विशेष्यकालतामापद्यते, यतस्तत्रायमर्थोऽवगम्यते-- स ()आओ भविता कटो यः करिष्यते, तत् कृत्यमासीद् यदभूतमिति। तदेतत्कथं भवति? विपर्ययः कस्मान्न भवति? इत्याह-- "विशेषणम्ित्यादि। विशेषणं हि परार्थत्वाद्()गुणोऽप्रधानमित्यर्थः। तेन च प्रधानकालस्य विशेष्यस्योपकारः कत्र्तव्यः। न च तत् प्रधानमपरित्यज्य स्वकालं प्रधानकालमप्रतिपद्यमानं प्रधानोपकारक्रियां कर्तुं समर्थ भवतीति प्रधानस्य यः कालस्तमुरुध्यते। विशेष्यं तूपकार्यत्वात्प्रधानम्।न च प्रधानस्य गुणकालापत्तिर्युक्ता, अन्यथा यदिगुणकालं प्रधानकालः प्रतिपद्येत तदा तस्य प्रधानत्वं हीयेत। तेन न भवति विपर्ययः। अथ प्रत्ययग्रहणं किमर्थम्, यावता प्रत्यय इत्यनुवत्र्तत इत्यत आह-- "प्रत्ययाधिकारे"इत्यादि। पूर्वकं प्रत्ययग्रहणं धातुसम्बद्धम्, अतस्तदिहाश्रीयमाणं धात्वधिकारविहितानां प्रत्ययानां साधुत्वे सम्पद्यते। अत्र पुनः प्रत्ययग्रहणे प्रत्ययमात्रं गृह्रते, तदर्थं पुनः प्रत्ययग्रहणम्। "कालभेदे" इति। कालविशेषे,अस्मात्कालादन्यस्मिन् काल इत्यर्थः। "गोमानासीत्िति। गोमानिति वत्र्तमानकालः, "तदस्य"५।२।९३ इत्यादिना वत्र्तमानकालमस्तीत्युपादाय मतुपो विधानात्। स भूतभविष्यत्कालाभ्यां सम्बध्यमानः साधुर्भवति॥

बाल-मनोरमा

धातुसम्बन्धे प्रत्ययाः ६४६, ३।४।१

धातुसम्बन्धे। धातुशब्देन धात्वर्थो लक्ष्यते। धात्वोः संबन्ध इति विग्रहः, संबन्धस्य द्विनिष्ठत्वात्। तथा च धात्वर्थयोः संबन्धे सति परत्ययाः स्युरिति लब्धम्। कस्मिन्नर्थे इत्याकाङ्क्षायां काले इति गम्यते, "वर्तमाने ल" डित्यारभ्य तत्तत्कालविशेषेष्वेव प्रत्ययविधिदर्शनात्। तत्र तत्तद्विधिभिरेव तत्तत्कालविशेषे प्रत्ययसिद्धेस्ततोऽन्यस्मिन्काले इति गम्यते। तदाह-- धात्वर्थानामित्यादिना। धात्वर्थयोरित्यर्थः। उदाहरणबहुत्वाभिप्रायं बहुवचनम्। "वर्तमानसामीप्ये वर्तमानवद्वे"त्यादिसूत्रे यत्र काले ये प्रत्यया उक्तास्ते धात्वर्थयोः सम्बन्धे गम्ये ततोऽन्यमिन्नपि काले स्युरिति यावत्। तथा च "वसन् ददर्श" इत्यत्र लडादेशः शतृप्रत्ययो भूतकाले इतिसिद्धं भवति। ननु "वसन् ददर्श"त्यत्र भूते लडिव वर्तमाने लिडितय्पि स्यादित्यत आह-- तिङन्तेति। "वसन् ददर्श" त्यादौ तङन्तवाच्या दर्शनादिक्रिया प्रधानम्। वासादिक्रिया तु दर्शनादिक्रियार्थत्वाद्गुणभूता। अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एव इह प्रत्ययाः कालान्तरेषु विधीयन्त इत्यर्थः। भूते लडिति। एवं च उषित्वा ददर्शेत्यर्थ-। तदाह-- अतीतेति। अत#ईति वासे कर्ता यस्येति विग्रहः। "सप्तमीविशेषणे बहुव्रीहौ" इति ज्ञापकाद्व्यधिकणपदो बहुव्रीहिः। उदाहरणान्तरमाह-- सोमयाजीति। सोमेन इष्टवान्यः स सोमयाजी। करणे यजः" इति भूते विहितो णिनिः, इह भवितेत्यनद्यतनभविष्यल्लहन्तप्रधानक्रियानुसारेण अनद्यतनभविष्यति बोध्यः। तदाह-- सोमेन यक्ष्यमाण इति। भवनमिति। उत्पत्तरित्यर्थः। "गोमानासी"दित्यप्युदाहार्यम्। अत्र गौरस्यास्तीति अस्तिक्रियायां वर्तमानायां वर्तमानायां "तदस्यास्ती"ति विहितो मतुप् गौरस्यासीदिति भूतायामस्तिक्रियायां भवति, धात्वर्थद्वयसंबन्धस्य सत्त्वात्। एतेन अर्थद्वारके धात्वोः संबन्धे इत्यपि व्याख्यानं परास्तम्। तथा सति परस्परसंबन्धार्थबोधकधातुद्वयप्रोगे प्रत्यया इत्यर्थलाभाद्गोमानासीदित्यत्र मतुबनापत्तेः। नहि धात्वोरिह प्रयोगोऽस्ति। धात्वर्थयोः सम्बन्धे इत्यर्थाभ्युपगमे तु गोमानासीदित्यत्र धातुद्वयप्रयोगाभावेऽपि धात्वर्थद्व्यस्य सत्त्वादासीदित्यर्थे मतुब्निर्बाध इत्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

धातुसंबन्धे प्रत्ययाः ५३७, ३।४।१

धातुसंबन्धे। इह धात्वोर्विशेषणविशेष्यभावादिसंबन्धोऽनुपपन्नः , स्वार्थस्मारणेनोपक्षीणत्वात्, पदार्थसंसर्गो वाक्यार्थः, कारकविशिष्टा क्रिया चेति स्वीकारात्। "शब्दानुगमादृते न शाब्दोऽस्ति प्रत्यय" इत्यवष्टभ्य शाब्दबोधे शब्दोऽपि भासत इत्यभ्युपगमेऽपि शब्दस्य स्वर्थं प्रत्येव प्रकारत्वं न तु शब्दान्तरं प्रति। तथा च धातुसंबन्धो वाक्येन न बुध्यते इति तस्य वाक्यार्थत्वाऽसंभवाद्धातुशब्देन धात्वर्थो लक्ष्यते। ननु "धातोः कर्मणः समानकर्तृका"दिति सन्विधौ कर्मत्वं समानकर्तृकत्वं च धातोरर्थद्वारकं विशेषणमाश्रितं तथेहापि धात्वोरर्थद्वारकः संबन्धोऽस्त्विति रकचेत्। मैवम्। तथा हि सति परस्परसंबन्धाऽर्थबोधकाऽनेकधातुप्रयोग एव प्रत्ययाः स्युस्ततश्च गोमानासीत् गोमान् भवितेत्यादि न सिध्येत्। न ह्त्र "वसन् ददर्श" त्यत्र वर्तमानकालो वसिरिव वर्तमानकालोऽस्तिः प्रयुज्यते। न चाऽप्रयुज्यमानस्य दात्वन्तरेण संबन्धोऽस्ति। अर्थयोः संबन्धाभ्युपगमे धातुद्वयाऽभावेऽपि धात्वर्थद्वयस्य सत्त्वाद्गोमानासीदित्यादौ नाऽनुपपत्तिः। तदेतदभिप्रेत्याह--- धात्वर्थानामिति। विषयबहुत्वापेक्षं बहुवचनम्। एकैकविषयापेक्षायां त#उ धात्वर्थयोरिति बोध्यम्। एतच्च मनोरमानुसारेण व्याख्यातम्। केचित्तु-- धात्वोरर्थ्दवारकसंबन्धेऽभ्युपगते "गोमानासीद्भविते"त्यादि न सिध्येदिति मनोरमोक्तं चिन्त्यमेव। "तत्करोति तदाचष्टे" इत्यकत्रेव "तदस्यास्त्यस्मि" न्नितक्यत्राप्येकत्ववर्तमानत्वयोरविवक्षितत्वात्प्रकृतसूत्रानपेक्षयैव तत्सिद्धेः। न ह्त्र मतुब्बिधौ "वर्तमाने ल"डित्यादाविव कालविशेषपरिग्रहोऽस्तीत्याहुः। तद्भाष्यकैयटाद्यननुगुणम्। तधा हि भाष्ये-- प्रत्यय इत्यनुवर्तमाने

पुनरत्र प्रत्ययग्रहणं किमर्थमित्याक्षिप्य अधातुप्रत्ययानामपि संबन्धे साधुत्वं यथा स्यात्, गोमानासीत् भविता वेति समाहितम्। कैयटेन तु-- "तदस्यास्त्यस्मिन्निति मतुप् प्रत्ययोवर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तो विहित" इत्युक्तम्। तथा च मतुब्विधावस्तीत्यत्र एकत्वस्याऽविवक्षतत्वेऽपि वर्तमानत्वं विवक्षितमिति तद्ग्रन्थबलादवगम्यते। किं च "दण्डिनमानये" त्युक्ते वर्तमानसत्ताविशिष्टदण्डयुक्त एवानीयते नाऽन्यः। तथा च "आसीत्" "भविते" ति तिङन्तपदानुरोदेन "गोमा"नित्यत्र गावोऽस्यासन् गावोऽस्य भवितार इत्यतीतानागतसत्ताविशिष्टप्रकृत्यर्थयुक्तो मतुप्प्रत्ययः प्रकृतसूत्रेणैव व#इधीयते न तु तदुक्तरीत्या लभ्यत इति दिक्। ननु तत्तद्विधिवाक्यैरेव स्वविषये प्रत्ययाः सिद्धाः किमनेन सूत्रेणेत्यत आह-- अत्र काल इति। "वर्तमानसामीप्ये" इत्यारभ्य कालाऽन्यत्वं प्रायेण प्रतिपाद्यते तदेव चेह गृह्यत इति भावः। "वनानि पश्यन् ययाे" वित्यादौ वर्तमानभूतकालादिप्रत्ययेषु को वा स्वकालात्प्रच्युतो भवतीत्याकङ्क्षायामाह--तिङन्तवाच्येति। प्रधानानुरोधेन गुणस्य नयनमुचितं न तु विपरीतमिति भावः। प्रत्यया इति। कालान्तरभाजो भवनन्तीत्यर्थः। भूते लडिति। एवं चोषित्वा ददर्शेत्र्थः। अतीतेति। अतीतवासकर्ता कर्ता यस्य दर्शनस्येति बहुव्रीहिः। सोमयाजीति। "करणे यजः" इति भविष्यति णिनिः। अत एवाह-- सोमेन यक्ष्यमाण इति। एवं च "पश्यन् यया" वित्यत्र दृशेर्भूते लट्। दृष्ट्वा ययावित्यर्थः। "निवेदयिष्यतो मनो न विव्यथे" इत्यत्र तु वेदतेर्भूते लृट्। तस्य "लृटः सद्वाट इति शतृप्रत्ययः। निवेदनं कृतवत इत्यर्थ इत्याद्यूह्यम्।स्यादेतत् "भावि कृत्यमासी"दित्यत्र सूत्ररीत्या "भावि"शब्दस्य भूतकालत्वे स्वीकृते सत्यतीतं भवनमित्यर्थादासीच्छब्दस्याप्येकर्तृकमतीतं भवनमितयर्थाद्भाव्यासीच्छब्दयोर्युगपत्प्रयोगो न स्यात्, भाविशब्दार्थस्य आसीच्छब्देनैव लाभात्। ततश्चैतावन्तं कालं भावितया व्यवह्यतं तदिदानीमासीदित्यर्थोऽत्रावश्यं स्वीकर्तव्यः। स्वीकृते तु "गोमानासी"दित्यत्रापि गोमानिति व्यवहारविषय आसीदित्यर्थोऽस्तु। "वसन् ददर्शे" इत्यादौ भूते लक्षणया यथायथं लडादिः स्वीकर्तव्यः। "सोमयाजी" त्यत्र तु भूत एव णिनिप्रत्यये जातेऽपि भवितेति लुडन्तसमभिव्याहारे सति सोमयाजीति व्यवहरिष्यमाण इत्यध्याहारेण,णिनेर्भविष्यदर्थे लक्षमया वा प्रयोगो भवेदिति किमनेन सूत्रेणेति चेत्। अत्राहुः-- अध्याहारलक्षणाप्रयुक्तक्लेशं विनैव प्रायशो निर्वाहार्थः सूत्रारम्भः। न हि "भावि कृत्यमासी"दित्यादौ क्वचिदध्याहारादिकमगत्या भवतीति सर्वत्र तत्स्वीकर्तुमुचितमिति।

---

सूत्रम्

काशिका-वृत्तिः

क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ३।४।२

धातुसम्बधे इति वर्तते। पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः। प्रकृत्यर्थविशेषणं च एतत्। समभिहारविशिष्टक्रियावचनाद् धातोः लोट् प्रत्ययो भवति सर्वेषु कालेषु। सर्वलकाराणाम् अपवादः तस्य च लोटो हि स्व इत्येतावादेशौ भवतः। तध्वंभाविनस्तु वा भवतः। योगविभागो ऽत्र कर्तव्यः। क्रियासमभिहारे लोड् भवति, ततो लोटो हिस्वौ। लोटित्येव, लोड्धर्माणौ हिस्वौ भवतः इत्यर्थः। तेन आत्मनेपदपरस्मैपदत्वं भेदेन अवतिष्ठते, तिङ्त्वं च द्वयोरपि भवति। लुनीहि लुनीहि इत्येव अयं लुनाति, इमौ लुनीतः, इमे लुनन्ति। लुनीहि लुनीहि इत्येव त्वं लुनासि, युवां लुनीथः, यूयं लुनीथ। अथ वा, लुनीत लुनीत इत्येव यूयं लुनीथ। लुनीहि लुनीहि इत्येव अहं लुनामि, आवां लुनीवः, वयं लुनीमः। भूते लुनीहि लुनीहि इत्येव अयम् अलावीत्, अलाविष्टाम्, अलाविषुः। एवं मध्यमौत्तमयोरुदाहार्यम्। भविष्यति लुनीहि लुनिहि इत्येव अयं लविष्यति, लविष्यतः, लविष्यन्ति। एवं मध्यमौत्तमयो रुदाहार्यम्। अधीष्वाधीष्वेत्येव अयम् अधीते, इमावधीयते, इमे ऽधीयते। अधीष्वाधीष्वेत्येव त्वम् अधीषे, युवाम् अधीयाथे, यूयम् अधीध्वे। अथ वा, अधीध्वम् अधीध्वम् इत्येव यूयम् अधीध्वे। अधीष्वाधीष्वेत्येव अहम् अधीये, आवाम् अधीवहे, वयम् अधीमहे। एवं सर्वेष्वेव

लकारेषु उदाहार्यम्। क्रियासमभिहाराभिव्यक्तौ द्विर्वचनम् अयं लोडपेक्षते, क्रियासमभिहारे द्वे भवतः इति। यङ्प्रत्ययः पुनरस्मिन्नेव अर्थे विधीयमानः स्वयम् एव शक्तत्वान् न अपेक्षते द्विर्वचनम्।
न्यासः
क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः। , ३।४।२

"प्रकृत्यर्थविशेषं चैतत्िति। एतेनोपपपदत्वं निरस्यति। उपपदत्वे हि केवलाद्धातोर्न स्यादित्यादित्यभिप्रायः। अत्र तिङादेशौ वा हिस्वौ स्याताम्, लोडादेशौ वेति द्वौ पक्षौ। ननु च प्रथमपक्षाशङ्कायाः प्रसङ्ग एव नास्ति; लोट इति वचनात्,तत् कथमसावाशङ्कितः? लोट्स्थानिकत्वादादेशोऽपि लोड्()व्यपदेशमासादयीति युक्तमाशङ्कितुम्। तत्र हि यदि पूर्वकः पक्ष आश्रीयते तदा "भुङ्क्ष्व भुङ्क्ष्वेत्येवाहं भुञ्जै"इति "आडुत्तमस्य पिच्च" ३।४।९२ इति, पित्त्वान्ङित्त्वं नास्ति, ततश्च "श्नषोरल्लोपः" ६।४।१११ इत्याकारलोपो न स्यात्। उभावपि च परस्मैपदानामात्मनेपदानामनियमेन स्याताम्;नियमहेतोरभावात्। सामान्येन तिङां स्थाने विधीयमानयोः कृत एतल्लभ्यते ! यतः परस्मैपदानां ह्यदेशेन भविव्यम्, इतरेषां स्वादेशेनेति। तस्माद्दुष्टोऽयं पक्ष इति मत्वा द्वितीयपक्षमाश्रित्याह-- "तस्य च लोटः" इत्यादि। यस्मिन् पक्षे दोषः प्रसजति तं प्रतिविधास्यति। "तध्वंभाविनस्तु वा भवतः" इति। लोट इत्यपेक्ष्यते। तश्च ध्वञ्च तध्वमौ, तौ भाविनौ यस्य लोटः स तष्वम्भावी। एतेन तादशार्थो लोडेव स्थानी; तादथ्र्यात्, सूत्रे तशब्देन व्यपदिष्टो ध्वमादेशार्थश्च ध्व#ंशब्देनेति दर्शयति। अथ तध्वमावेवस्थानिनौ कस्मान्न विज्ञायेते? अशक्यं हि तौ स्थानित्वेन विज्ञातुम्। तयोरपि स्थानित्वेऽलोडादेशयोरपि हिस्वौ स्याताम्। अथ तध्वमौ विशेषयिष्यामः-- लोटो यौ तध्वमाविति, ततोऽयमदोष इति चेत्; एवमपि प्रतिपत्तिगौरवं स्यात्। तध्वम्भाविनौ लोट एव स्थानित्वं युक्तम्, न तध्वमोः। यदितर्हि लोटो हिस्वावादेशौ, न तदादेशानां तिङामेव, एवञ्च "लः परस्मैपदम्" १।४।९८ इति तयोः परस्मैपदसंज्ञा स्यात्, ततश्च "शेषात्कत्र्तरि परस्मैपदम्"१।३।७८ इत्युभावपि परस्मैपदिभ्य एव स्याताम्; तिङक्ष्वसन्निवेशाच्च तदन्तस्य तिङन्तता न स्यात्, ततश्च "तिङ्ङतिङः" ८।१।२८ इति निघातो न स्यादित्यत आह-- "योगविभागश्च" इत्यादि। "लोडित्येव" इति। एतेन द्वितीये योगे लोडित्यस्यानुवृतिं()त दर्शयति। "लोड्धर्माणौ"इत्यादि। लोट इव धर्मस्तिङत्वादित्वार्ययोस्तौ लोड्()धर्माणौ। ननु च लोडादेशानां तिङत्वादि धर्मः, न लोटः? आदेशद्वारेण स्थानिनोऽपि लोटस्तिङत्वादिधर्मो भवतीत्यदोषः। कथं पुनर्योगविभागे सति लोड्()धर्माणौ तौ भवतः? योगविभागे सति द्वितीये योगे लोटशब्दो योऽनुवत्र्तते तेनार्थाद्विभक्तेर्विपरिणामो भवतीति षष्ठ()न्तततामापन्नेन हिस्वौ विशेष्येते-- लोटो यौ हिस्वाविति। ततश्च लोडादेशयोः सिप्थासोः स्थाने यौ हिस्वौ "सेह्र्रपिच्च" ३।२।८७ इत्यादिना शास्त्रेण विधास्येते, तावेव यथास्वमुपात्तविशेषाविह लोटः स्थाने विधीयेते, नापूर्वाविति। तेन लोड्()धर्माणौ तौ इत्येषोऽर्थो लभ्यत एव। "तेन"इत्यादि। अत एव= यथोक्तेन प्रक#आरेण, लोड्()धर्माणौ हिस्वौ लोटः स्थाने भवतः। तेन परस्मैपदत्वनमात्मनेपदत्वञ्च भेदेन विषयविभागेन व्यवतिष्ठते। तत्र हिशब्दे परस्मैपदत्वं व्यतिष्ठते; लोट्()सम्बन्धिनो हेः परस्मैपदसंज्ञकत्वात्। स्वशब्दे चात्मनेपदत्वं व्यवतिष्ठते;स्वशब्दस्य लोट्()सम्बन्धिन आत्मनेपदसंज्ञकत्वात्। "तिङत्वञ्च द्वयोरपि भवति" इति। लोट्()सम्बन्धिनोस्तयोद्र्वयोरपि तिङन्तत्वात्। ननु च सिप्थासोर्लोडादेशयोस्तौ सम्बन्धिनौ, तदादेशत्वात्, न लोटः, तत्कथं लोट्सम्बन्धित्वेन व्यदिश्येते? आदेशद्वारेण लोट्()सम्बन्धित्वं तयोरप्यस्तीत्यदोषः। यदि तर्हि लोड्धर्माणौ भवतः, एवमेकवचनसंज्ञा स्यात्, मध्यमपुरुषसंज्ञा च, तयोरपि लोड्()धर्मत्वात्, ततश्च वचनान्तरभाविनः पुरुषान्तरभाविनश्च लोटो न स्याताम्? नैष दोषः;यदि ह्रेकवचनमध्यमपुरुषसंज्ञे अपि स्यातां वचनमिदमनर्थकं स्यात्, विनाप्यनेन वचनेन मध्यमपुरुषैकवचनयोर्हिस्वयोः सिद्धत्वात्। "लुनीहि लुनीहि"इति। "क्रियासमभिहारे द्वौ भवतः" (वा।८८६) इति द्विर्वचनम्।"ई हल्यघोः" ६।४।११३ इतीत्त्वम्। "लुनन्ति"इति। "श्नाभ्यस्तयोरातः"६।४।११२ इत्याकारलोपः। "अथ वा" इत्यादिना "वा च तध्वमोः" इति वाग्रहमस्य फलं दर्शयति। "अलावीत्" इति। "सिचि वृद्धिः

परस्मैपदेषु"७।२।१ इति वृद्धि, "आर्धधातुकस्येड्()वलादेः" ७।२।३५ इतीट्,स्तिसिचोऽपृक्ते" ७।३।९६ इतीट्, "इट ईटि" ८।२।२८ इति सिचो लोपः। "अलाविष्टाम्" इति। "तस्थस्थ" ३।४।१०१ इत्यादिना तसस्ताम्। "अलाविषुः" इति। सिजभ्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुसादेशः। "एवं मध्यमोत्ततयो{अपि नास्ति-काशिका,पदमञ्जरी च}रप्युदाहार्यम्" इति। लुनीहि लुनीहीत्येव त्वमलावीर्युवामलाविष्टं यूयमलाविष्ट। अथ वा-- लुनीत लुनीतेत्येव यूयमलाविष्ट। लुनीहि नीहीत्येवाहमलाविषम्, आवामलाविष्वि, वयमलाविष्म। "एवं मध्यमोत्तमयो{अपि नास्ति-काशिका}रप्युदाहार्यम्" इति। लुनीहि लुनीहीत्येवं त्वं लविष्यसि, युवां लविष्यथः, यूयं लविप्यथ। अथ वा-- लुनीत लुनीतेत्येव यूयं लविष्यथ। लुनीहि लुनीहीत्येवाहं लविष्यामि, आवां लविष्यावः, वयं लविष्यामः। "अधीयात्" इति। इयङ। "अधीयते" इति। "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः। "एवं {सर्वेषु लकारेषूदाहार्यम्-काशिका, पदमञ्जरी च}सर्वलकारेषूदाहार्यम्" इति। लङ-लुनीहि लुनीहीत्येवायमलुनात्, इमावलुनीताम्, इमेऽलुनन्। लुनीहि लुनीहीत्येव त्वमलुनः, युवामलुनीतम्(), यूयमलुनीत। अथ वा-- लुलीत लुनीतेत्येव यूयमलुनीत। लुनीहि लनीहीत्येवाहमलुनाम्, आवामलुनीव, वममलुनीम। अधीष्वाधीष्वेत्येवायमध्यैत, इमावध्यैयाताम्िमेऽध्यैयत। अधीष्वाधीष्वेसत्येव त्वमध्यैथाः, युवामध्यैयाथाम्, यूयमध्यैध्वम्। अथ वा-- अधीध्वमधीध्वमित्येव यूयमध्यैध्वम्। अधीष्वाधीष्वत्यवाहमध्यैषि, आवामध्यैवहि, वयमध्यैमहि। अन्येषु लकारेष्वतिग्रन्थविस्तरभयान्नोदाह्रियते।अनया दिशा स्वयमेवाभ्युपगम्योदाहार्यम्। अथ लुनीहि लुनोहीति कथमत्र द्विर्वचनम्, यावता धातुनैव क्रियासमभिहारोऽवगमितः; तद्विशिष्टक्रियावचनाद्धातोर्लोड्विधानात्? अथ वा-- अवगमिते सति तस्मिन् द्विर्वचनं भवतीति चेदेवं यङन्तस्यापि द्विर्वचनं स्यात्? इत्यत आह-- "क्रियासमभिहाराभिव्यक्तौ" इत्यादि। यद्यपि क्रियासमभिहारविशिष्टक्रियाभिधायिनो धातोर्लोड् भवति, तथापि या तस्य क्रियासमभिहारभिव्यक्तिः सा धातुना न क्रियते, किं तर्हि? लोडैव। स चतां कर्तुं द्विर्वचनसहित एव समर्थो भवति, न केवलः; तत्र तस्याविधानात्। स हि लोट "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इति कर्मादिषु विधीयते, न क्रियासमभिहारे। तस्मात् तदभिव्यक्तौ कत्र्तव्यायां लोट् स्वयमसमर्थ इति द्विर्वचनमपेक्षते, तेन तदन्तस्य द्विर्वचनं भवतीति भावः। केन पुनर्विधीयमानं द्विर्वचनमपेक्षत इत्याह-- "क्रियासमभिहारे" इत्यादि। "यङप्रत्ययः पुनः" इत्यादि। यङप्रत्ययो हि क्रियासमभिहार एव विधीयते। तेनासौ तत्र विधीयमानस्तदभिव्यक्तौ स्वयमेव समर्थ इति नापेक्षते द्विर्वचनम्। तेन तदन्तस्य द्विर्वचनं न भवतीति भावः॥
बाल-मनोरमा
क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः ६४७, ३।४।२

क्रियासमभि। अत्र चत्वारि वाक्यानि। तत्र "क्रियासमभिहारे लो"डिति प्रथमं वाक्यम्। पौनः पुन्यं भृशार्थश्च क्रियासमभिहार इत्युक्तम्। क्रियासमभिहारे इति धात्वर्थविशेषणम्। क्रियासमभिहारविसिष्टक्रियावृत्तेर्धातोरिति लभ्यते। लोट् तु द्योतकः। तदाह--पौनः पुन्ये भृशार्थे च द्योत्ये इति। क्रियासमभिहारविशिष्टक्रियावृत्तेर्धातोर्लोडिति यावत्। सर्वलकारापवादः। "लोटो हिस्वा"विति द्वितीयं वाक्यं व्याचष्टे-- तस्येति। पूर्ववाक्यविहितस्य लोटो हिस्वावादेशौ स्त इत्यर्थः। तिङामपवाद इति। अपवादावित्यर्थः। प्रत्येकाभिप्रायमेकवचनम्। ननु हिस्वयोरुभयोरपि लादेशत्वात्परस्मैपदत्वं स्यात्। तथा सति हेः परस्मपैदत्वं, स्वादेशस्य त्वात्मनेपदत्वमितीष्टा व्यवस्था न सिध्येत्। अस्य स्वादेशस्य तङ्()प्रत्याहारप्रविष्टत्वाऽभावेन "तङानावात्मनेपदटमित्स्याऽप्रवृत्तेः। "तिप्रतस्झी"त्यादिसूत्रोपात्तेषु ताऽऽतामादिष्वेव तङ्संज्ञाप्रवृत्तेः। किंच अनयोर्हिस्वयोः "तिप्तस्झी"ति सूत्रानन्तर्भूतत्वात्तिङ्त्वं च दुर्लभमित्यत आह-- तौ चेति। "लोटो हिस्वा"विति द्वितीयवक्ये तावत्क्रियासमभिहारे लोडिति प्रतमवाक्याल्लोडित्यनुवृत्तं स्थानषष्ठ()आ विपरिणतं तृतीयं वाक्यं संपद्यते। तत्र हि "लोटो हिस्वौ" इति द्वितीयवाक्याद्धिस्वावित्यनुवृत्तं धर्मपरमाश्रीयते। तथा च लोडादेशौ हिस्ववद्भवत इत लभ्यते। कौ भवत इत्याकाङ्क्षायां पूर्ववाक्योपस्थितौ हिस्वाविति गम्यते। ततश्च याविमौ

तिङनन्तर्भूतौ हिस्वावुक्तौ तौ प्रसिद्धलोडादेशतिङन्तर्बूतहिस्ववद्भवत इति तृतीयं वाक्यं पर्यवस्यति। तिङन्तर्भूतहिस्वयोस्तावत्क्रमात्परस्मैपदत्वमात्मनेपदत्वं तिङ्त्वं च प्रसिद्धम्। अतः प्रकृतौ हिस्वौ कर्मात्परस्मैपदात्मनेपदसंज्ञौ तिङ्()संज्ञौ चेत्यर्थः। तिङ्()त्वात्पदत्वसिद्धिः। ननु "वा च तध्वमो रिति तध्वमोर्हिस्वादेशविकल्पविदिरनुपपन्नः, लोडादेशभूतहिस्वयोस्तिङपवादतया लोटस्तध्वमोरप्रसक्तेरित्यत आह-- तध्वमोर्विषयेत्विति। स्थानषष्ठीमाश्रित्य "लोडादेशतध्वमोः स्थाने हिस्वा"वित्यर्थ इति न भ्रमितव्यम्(), येनोक्तदोषः स्यात्, किंतुं विषयविषयिभावः षष्ठ()र्थः। तथा च तध्वमोर्विषये लोटो हिस्वौ, पक्षे तध्वमाविति फलतीत्यर्थः।अत्र मध्यमपुरुषबहुवचनमेव तशब्दो गृह्यते, व्याख्यानात्, ध्वंसाहचर्याच्च। ननु हिस्वयोरनयोर्मध्यमपुरुषैकवचनत्वस्याप्यतिदेशाद्युष्मत्सामानाधिकरण्ये एकत्वे च सत्येव हिस्व#औ स्याताम्। तथा च "इणौ हिस्वौ सर्वेषां पुरुषाणां, सर्वेषां च वचनानामिष्येते" इति भाष्यमनुपपन्नमित्यत आह-- हिस्वविधानेति। यदि हिस्वयोर्मध्यमपुरुषैकवचनसंज्ञे स्यातां तर्हि युष्मत्सामानाधिकरण्ये एकत्वे च सत्येवलोटो हिस्वौ स्याताम्, अन्यत्र तु यथायथं तिबाद्यादेशाः स्युः। तथा सति लोटो हिस्वविधानमनर्थकं स्यादतो न पुरुषवचनातिदेश इत्यर्थः। तेनेति। हिस्वयोः पुरुषवचनातिदेशाऽभावेन क्रमात् परस्मैपदात्मनेपदसंज्ञालाभेन चेत्यर्थः। सकलेति। सकलपुरुषवचनविषये हिर्भवति, स च भवन् परस्मैपदिभ्य एव कर्तर्येव भवति, न त्वात्मनेपदिभ्यो भावकर्मकर्तृष्वित्यर्थः, "शेषात्कर्तरि परस्मैपदमित्युक्तेरिति भावः। आत्मनेपदिभ्यः स्व इति। "अनुदात्तङित आत्मनेपदम्","भावकर्मणो()रित्यादिसूत्रविषयेभ्यो धातुभ्यो भावकर्मकर्तुषु लोटः स्व एव भवतीत्यर्थः। अनयोरत्र क्रमात् परस्मैपदात्मनेपदसंज्ञाविध्यभावे तु लादेशत्वेन उभयोः परस्मैपदत्वात् कर्तर्येव परस्मैपदमात्मनेपदिभ्योऽपि स्यादिति भावः।

तत्त्व-बोधिनी

क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः ५३८, ३।४।२

क्रियासमभिहारे। द्योत्य इति। क्रियासमभिहारो धातोरेवार्थः। लोट् तु द्योतक इति भावः। तस्यच हिस्वौ स्त इति। ननु "लो"डित्यनेन तिङो लक्षयित्वा तिङामेव हिस्वौ विधीयेताम्।था सति तिङन्तत्वात्पदत्वं लभ्यत इति गुणोऽप्यस्ति, "वा च तध्वमो"रिति वाक्यशेषोऽपि स्वरसतः सङ्गच्छते। अन्य्था येन नाप्राप्तिन्यायेन हिस्वयोस्तिङतिङलक्षणा न न्याय्या, असंजातविरोधित्वेनोपक्रमस्य प्राबल्यात्, वि,यसप्तम्याश्रणेन वाक्यसेषस्योपपन्नत्वाच्च। किंच तिङामादेशत्वे तिप्सिप्मिपां स्थाने विहितस्यहेः स्थानिवद्भावेन पित्त्वान्ङित्त्वाऽभावेन "लुनीही"त्यत्र "ई हल्यघो"रितीत्वं न स्ात्। "ब्राऊही"त्यत्र "ब्राऊव ई"डितीडागमे "ब्रावीही"ति स्यात्। "तृण्ढी"त्यत्र तु "तृणह इ"मितीमागमे तृणेढीति स्यात्। किंच लादेशानामेव परस्मैपदात्मनेपदसंज्ञे न तु लादेशतिङादेशानामिति सर्वेषां तिङां द्वावपि हिस्वौ पर्यायेण स्यातां न तु तिबादीनां हिः, तिङां स्व इति पदव्यवस्थया। ततश्च लकारस्यैवादेशौ हिस्वौ स्यातामत आह---तौ चेति। अयं भावः- "लोटो हिस्वौ" इति वाक्ये "क्रियासमभिहारे लो"डिति वाक्याल्लोडित्यनुवर्तते, तच्च हिस्वावित्यस्य विशेषणम्। न च हिस्वौ लोटौ भवत इतिसामथ्याल्लोटधर्मकावित्र्थः संपद्यते। तत्रापि मुख्यलोट्संबन्धिनो धर्मस्य प्रत्ययत्वस्यातिदेशोव्यर्थः, स्थानिवत्त्वेनैव तत्सिद्धेः। किंतु स्थानवद्भावलब्धलोड्व्यपदेशकौ तिङ्भूतौ यौ हिस्वौ तयोरेव धर्म इहातिदिश्यते। केचित्तु-- "क्रियासमभिहारे लो" डित्यनन्तरं लाघवात्तस्य हिस्वाविति वक्तव्ये लोड्ग्रहणसामथ्याल्लोड्धर्मकावेव हिस्वौ लोटः स्थाने भवत इत्यर्थः संपद्यते। तथा च पूर्वोक्तरीत्या तिङ्भूतौ यौ हिस्वौ तयोरेव धर्म इहातिदिश्यत इति सिद्धमिष्टम्। एवं च "लोटो हिस्वा"विति वाक्ये पूर्ववाक्याल्लोड्ग्रहणं नानुवर्तनीयमित्याहुः। तिङ्संज्ञौ चेति। तेन पदत्वं, "तिङ्ङतिङः" इति च भवति। हिस्वविधान इति। यदि हि पुरुषवचनसंज्ञे अपि स्यातां तर्हि युष्मत्सामानाधिकरणये एकत्वे च सत्येव हिस्वाभ्यां भाव्यं, तत्रच व्यर्थो

हिस्वविधिरिति भावः। हिः कर्तरि। स्वो भावकर्मकर्तृष्विति। उक्तं च कैयटेनापि-- "हिशब्दस्य कर्ता वाचयः, स्वशब्दस्य तु भावकर्मकर्तार इति। अत्र नव्याः-- "अल्पे" "ह्रस्वे" इत्यादौ कप्रत्ययवत्क्रियासमभिहारे लोडयं स्वर्थिक एव। न त्व()स्मल्लोटि "लः कर्मणि चे" त्याद्यर्थोऽभ्युपेयः, प्रयोजनाऽभावात्। यदि तु हिशब्दस्य कर्ता अर्थः स्यात्, पुनः पुनरतिशयेन वा यानं ह्रन्तस्यार्थ इति वक्षमाणग्रन्थः स्वरसतो न सङ्गच्छेत। याहियाहीत्यादौ तु कत्र्रादिप्रतीतिर्यातीत्यादिसमभिव्याहारेण सुलभैव। यथा एधांचक्रे इत्यत्र तङादेशात्प्रागेव आमः परस्य लेर्लुक्यामन्ते सहख्यासीत्भावेऽपि चक्रे इत्यनुप्रयोगवशेन एकर्तृका वृद्धिरूपा क्रियेत्यविद्यमानाऽपि सङ्ख्या प्रतीयते, तथैव हिस्वान्तेष्पि कालकारकसङ्ख्याप्रतीतिर्यातीत्याद्यनुप्रयोगबलेन भवतीत्याहुः। स्यादेतत्--"क्रियासमभिहारे हिस्वौ लोड्वा च तध्वमो"रिति सूत्रमस्तु। तथा च हिस्वौ लोटौ न भवत इत लोड्धर्मकावित्यर्थः पूर्वोक्तरीत्या स्यादिति सर्वेष्टसिद्धौ किमनेन लोट इति षष्ठ()न्तकरणेनेतिचेत्। अत्राहुः--- हिस्वयोर्यदि लोट्स्थानिकत्वं न स्वीक्रियते तर्हि तयोर्लोडादेशवद्भावेन "ईहल्यघो"रित्यादिप्रवृत्त्या लुनीहीत्यादिसिद्धावपि हिस्वान्तस्य लोडन्तत्वं न सिध्येत्। तथा च "हन्त चे"त्यनुदात्तविकल्पो न स्यात्, "हन्त! प्रलुनीहिप्रलुनीहीत्ययं लुनाति"। एवंच लोडन्तत्वलाभार्थं "लोटो हिस्वा"विति विधीयते। यदि तु "हिस्वौ लो"डित्युक्तेऽपि लोड्वद्भावाश्रयेण लोडन्तकार्यं "हन्त चे"ति स्वरविकल्पः सिध्यतीति ब्राऊषे तर्हि स्थानिवद्भावलब्धलोड्()धर्मकौ हिस्वावित्यर्थस्याऽनाश्रयणाल्लोडादेशकार्याणि परस्मैपदात्मनेपदतिङ्संज्ञास्तु न सिध्यन्ति। तथा च पूर्वोक्तदोषस्तदवस्थः स्यात्। "लोट् लोटो हिस्वौ"इत्युक्ते तु स्थानिवद्भावेन हिस्वयोर्लोट्()त्वाल्लोडन्तकार्यं स्वरविकल्प सिध्यति, "क्रियासमभिहारे लोडि"ति वाक्याल्लोडित्यरनुवर्त्य हिस्वौ लोडिति प्रागेव व्याख्यातत्वाल्लोपडादेशवद्भावेन परस्मैपदात्मनेपदसंज्ञादीन्यपि सिध्यन्तीति।

---

सूत्रम्

काशिका-वृत्तिः

सयुच्चये ऽन्यतरस्याम् ३।४।३

अनेकक्रियाध्याहारः समुच्चयः। समुच्चीयमानक्रियावचनाद् धातोरन्यतरस्यां लोट् प्रत्ययो भवति, तस्य लोटो हिस्वौ आदेशौ भवतः। तध्वंभाविनस्तु वा भवतः। भ्राष्ट्रमट, मठमट, खदूरमट, स्थाल्यपिधानम् अट इत्येव अयम् अटति, इमावटतः, इमे ऽटन्ति। भ्राष्ट्रमट, मठमट, खदूरम् अट, स्थाल्यपिधानम् अट इत्येव त्वम् अटसि, युवाम् अटथः, यूयम् अटथ। अथ वा, भ्राष्ट्रम् अटत, मठम् अटत, खदूरम् अटत, स्थाल्युपिधानम् अटत इत्येव यूयम् अटथ। भ्राष्ट्रम् अट, मठम् अट, खदूरम् अट, स्थाल्युपिधानम् अट इत्येव अहम् अटामि, आवाम् अटावः, वयम् अटामः। अथ वा, भ्राष्ट्रम् अटति, मठम् अटति, खदूरम् अटति, स्थाल्युपिधानम् अटति इत्येव अयम् अटति, इमा वटतः, इमे ऽटन्ति। भ्राष्ट्रम् अटसि, मठम् अटसि, खदूरम् अटसि, स्थाल्युपिधानम् अटसि, इत्येव त्वम् अटसि, युवाम् अटथः, यूयम् अटथ। भ्राष्ट्रम् अटामि, मठम् अटामि, खदूरम् अटामि, स्थाल्युपिधानम् अटामि इत्येव अहम् अटामि, आवाम् अटावः, वयम् अटाअमः। छन्दो ऽधीष्व, व्याकरणम् अधीष्व, निरुक्तम् अधीष्व इत्येव अयम् अधीते, इमावधीयाते, इमे ऽधीयते। छन्दो ऽधीष्व, व्याकरणम् अधीध्वम् इत्येव यूयम् अधीध्वे। छन्दो ऽधीष्व, व्याकरणम् अधीष्व, निरुक्तम् अधीष्व इत्येव अहम् अधीये, आवाम् अधीवहे, वयम् अधीमहे। अथ वा, छन्दो ऽधीते, व्याकरणम् अधीते, निरुक्तमधीते, इत्येव अयम् अधीते, इमावधीयाते, इमे ऽधीयते। छन्दो ऽधीषे, व्याकरणम् अधीषे, निरुक्तम् अधीषे इत्येव त्वम् अधीषे, युवाम् अधीयाथे, यूयम् अधीध्वे। छन्दो ऽधीये, व्याकरणम् अधीये, निरुक्तम् अधीये इत्येव अहम् अधीये, आवाम् अधीवहे, वयम् अधीमहे।

न्यासः

समुच्चयेऽन्यतरस्याम्। , ३।४।३

"अनेकक्रियाध्याहारः" इति। अनेकासां क्रियाणां चीयमानतेत्यर्थः। एतेन समभिहारात् समुच्चयस्य भेदं दर्शयति। समभिहारोऽपि पौनःपुन्यम्, भृशार्थो वा, स चैकस्या एव क्रियायाः सम्भवः। समुच्चयः पुनरनेकासां क्रियाणाम्। "भाष्ट्रमट"इति। "अतो हेः" ६।४।१०५ इति लुक्। अत्र साधनभेदाद्भेदमुपागतानामनकासामटनक्रियाणां समुच्चयः। "अथ वा" इत्यादि। प्रथमेनाथ वेतिग्रहणेन "वा च तध्वमोः" ३।४।२ इति वाग्रहणप्रतिपादितं विकल्पं दर्शयति, द्वितीयेनान्यतरस्यां ३।४।३ ग्रहणप्रतिपादितम्॥

बाल-मनोरमा

समुच्चयेऽन्यतरस्याम् ६४८, ३।४।३

समुच्चये। समभिहार इति पदरहितं "क्रिया, लोट् लोटौ हिस्वौ वा च तध्मो"रिति पूर्वसूत्रमनुवर्तते। क्रियेति लुप्तषष्ठीबहुवचनान्तं समुच्चय इत्यत्रान्वेति। तदाह-- अनेकक्रियासमुच्चये द्योत्ये इति। एवं च कारकसमुच्चयमाश्रित्य नाऽस्य प्रवृत्तिः। प्रागुक्तमिति। धातोर्लोट्, तस्य हिस्वौ प्रसिद्धहिस्वधर्मकौ तध्मोर्विषये वा इत्युक्तमित्यर्थः। यथाविध्यनुप्रयोगः। "क्रियासमभिहारे" इति, "समुच्चयेऽन्यतरस्या"मिति च लोड्विधी उक्तौ, तयोर्मध्ये यत्पूर्वसूत्रं "क्रियासमभिहारे" इति, तदेतत्पूर्वशब्देन परामृश्यते। तदाह--- आद्ये लोड्विधाते इति। विधिमनतिक्रम्य यथाविधि। यस्याः प्रकृतेर्लोड()?विहितस्तस्या अनुप्रयोग इति लभ्यते। तदाह-- लोट्प्रकृतिभूत एवेति। अत्राऽनुप्रयोगः पश्चात्प्रयोगः, न त्वव्यवहितत्वं विवक्षितम्, लुनीहि "लुनीहीत्येवायं लुनाती"ति भाष्यप्रोगाल्लिङ्गात्।

तत्त्व-बोधिनी

समुच्चयेऽन्यतस्याम् ५३९, ३।४।३

समुच्चये। चिनोतेर्भावे "एरच्" इत्यच्। प्रगुक्तमिति। धातोर्लोट्, लोटो हिस्वौ तध्वमोर्विषये वेत्यर्थः। यथाविध्यनु।

---

सूत्रम्

काशिका-वृत्तिः

यथाविध्यनुप्रयोगः पूर्वस्मिन् ३।४।४

पूर्वस्मिन् लोड्विधाने यथाविध्यनुप्रयोगो भवति। यस्माद् धातोः लोड् विहितः स एव धातुरनुप्रयोक्तव्यः। धातुसम्भन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव, यथाविध्यर्थं तु वचनम्। तथा च एव उदाहृतम् लुनीहि लुनीहि इत्येव अयं लुनीति इति। छिनत्ति इति न अनुप्रयुज्यते। अधीष्वाधीष्वेत्येव अयम् अधीते। पठति इति न अनुप्रयुज्यते।

न्यासः

यथाविध्यनुप्रयोगः पूर्वस्मिन्। , ३।४।४

"पूर्वस्मिन लोड्()विधाने" इत्यादेर्वाक्यस्य यस्माद्धातोरित्यादिनार्थं स्पष्टीकरोति। "धातुसम्बन्धे" इत्यादि। धातुसम्बन्ध ३।४।१ इत्यनुवृत्तेर्धातुसम्बन्ध एव लोड्()विधानम्, अतोऽनु प्रयोगः सिद्धः एव, न हि तेन विना धातुसम्बन्धो भवति; तस्य द्विष्ठत्वात्। यद्येवम्, किमर्थमिदं वचनम्? इत्याह-- "यथाविध्यर्थं तु" इति। अथ व्यवहितप्रयोगस्य वा पूर्वस्य प्रयोगस्य वा निवृत्त्यर्थं कस्मान्न भवति, यथा-- "कृञ्चानुप्रयुज्यते लिटि" (३।१।४०) इति? न; तयोरपीष्टत्वात्। इष्यते हि व्यवहितप्रोगः- लुनीहि लुनीहीत्यवायं देवदत्तो लुनाति। पूर्वप्रयोगोऽपीष्यते-- लुनाति देवदत्तो लुनीहि लुनीहीति। तस्माद्यथा विध्यर्थमेवेदं युक्तम्। ननु च"समुच्चये सामान्यवचनस्य" ३।४।५ इति धात्वन्तरस्य समानार्थस्य

प्रयोगाभ्यनुज्ञानात् क्रियासमभिहारे यथाविध्यनुप्रयोगो भविष्यतीति, तत्किमनेन वचनेन? नैतदस्ति, समुच्चय एव हि नियमः स्यात्, क्रियासमभिहारे तु यथाविध्यनुप्रयोगः स्यात्, धात्वन्तरस्य च समानार्थस्य। तस्मादारब्धव्यमिदम्॥
तत्त्व-बोधिनी
पूर्वस्मिन् १४३८, ३।४।४

पूर्वस्मन् = क्रियासमभिहारविषये। अत्र सङ्ख्याकारकादीनां हिस्वान्तादप्रतीतेस्तद्बोधनायानुप्रयोगो न्यायत एव प्राप्तस्तदनुवादेन "यथाविधी"ति नियम्यते। तथा च पक्षे प्राप्तस्य नियमनाद्याहियाहीति गच्छतीत्यादि न भवति। यद्यप्यन्यत्र "हन्हपूषाऽर्यम्णां शौ" इत्यादौ नियमशब्देन परिसङ्ख्या व्यवह्रियते, "सर्वनामस्थाने चे"त्यादिना शौ तद्भिन्ने च दीर्घप्राप्तेशेरन्यत्र तु तन्निवृत्तिपरत्वात्, तथापीहकदाचिद्यातीत्यस्य कदाचिद्गच्छतीत्यस्यानुप्रयोगे प्राप्ते यथाविधीत्ययमप्राप्तांशंपरिपूरणाय "व्रीहीनवहन्ती"त्यादिवद्विधीयत इति नियमविधिरेवाऽयम्। एतेन मीमांसकप्रिसद्धनियमविधिः शब्दशास्त्रेऽप्रसिद्ध इति वदन्तः परास्ताः।

* क्रियासमभिहारे द्वे वाच्ये। द्वे वाच्ये इति। वार्तिकमिदं द्विरुक्तप्रक्रियायां व्याख्यातम्। इतिशब्दस्त्विति। ननु इतिशब्देन व्यवधानाद्यातीत्यस्याऽनुप्रयोगत्वं कथमिति चेत्। अत्राहुः---
अनुशब्दस्येहानुवादित्वमात्रपरत्वाद्व्यहितविपरीतप्रयोगयोरिष्टापत्तिः। एतच्च भाष्यकारीयोदाहरणसूत्रप्रत्याख्यानाभ्यां निर्णीयते। न च "समुच्चये सामान्यवचनस्ये"ति विशेषस्योक्तत्वात्सूत्रैकदेशस्य पूर्वस्मिन्निनितिपदस्य वैयर्थ्यमस्तु नाम, "यथाविध्यनुप्रयोग" इति तु यथाविधीति नियमार्थं स्वीकर्तव्यमेव। अन्यथा "याहि याहीति गच्छती"त्यादि स्यादिति वाच्यम्, यस्माल्लोड्विधिस्तत्प्रकृतिकतिङन्तस्यैवोपस्थितत्वेनाऽनुप्रयोक्तुमर्हत्वान्न तूपस्थितपरित्यागेन य()त्कचिद्धातुप्रकृतितिङन्तस्याऽनुप्रोगार्हतेति। अतएव "स्वं रूपं शब्दस्ये"त्यपि सूत्रं प्रत्याख्यातं भाष्यकारेण। "अग्नेर्ढ"गित्यादौ
विधिवाक्यगतस्याऽङ्गारवाचकाऽग्निशब्दादेरुपस्थितत्वात्तत्परित्यागेनाऽनुपस्थितवह्न्यादिशब्देभ्यो ढगादिर्न भवेदिति। एवं चाऽस्मिन्प्रत्याख्याते यथाविध्यनुप्रयोगसूत्रे मीमांसकप्रसिद्धनियमविधेः
स्थितोदाहरणमन्यदन्वेषणीयमिति दिक्। एवमिति। याह#इयाहीति यातः, याहियाहीति यान्तीत्येवमूह्यमित्यर्थः। पक्षे इति। "वा च तध्वमो"रित्युक्तत्वाद्धिस्वाऽभावपक्ष इत्यर्थः। तध्वमोरित्यत्र तशब्देन मध्यमपुरुषबहुवचनं गृह्यते, "ध्वम्" साहचर्यात्। यद्यपि "ध्व"मित्यस्यात्मनेपदत्वमस्तीति तत्साहचर्येण प्रथमपुरुषैकवचनस्य ग्रहणं प्राप्नोति, तथापि बहुवचनत्वमध्यमत्वरूपधर्माभ्यां मध्यमपुरुषबहुवचनमेव गृह्यत इत्याशयेनोदाहरत--यातयातेति यूयमिति। अस्यापि लोटो लङ्()वत्त्वात् "तस्थस्थमिपा"मिति यातेत्यत्र थस्य तादेशः। विध्यादिलोड्विषये त्वनुप्रयोगेऽपि तु थस्य तादेशप्रवृत्तेर्यूयं यातेत्यनुप्रयोक्तम्। अधीध्वमधीद्वमिति। "सवाभ्या"मित्यम्। अधीध्वे इति। विध्यादिलोड्विषये तु सवाभ्यां वामाविति प्रवृत्तेरधीध्वमित्येवानुप्रयोक्तव्यम्। भावकर्मणोस्तु "भूयस्व--भूयस्वेति भूयते" "पच्यस्वपच्यस्वेति पच्यते" इत्याद्युन्नेयम्। "समुच्चयेऽन्यतरस्या"मिति सूत्रे क्रियासमभिहारैत्यननुवर्तनाद्द्वित्वमकृत्वैवोदाहरति---सक्तन् पिब धानाः खादेति। अब्यवहरथेति। विध्यादिलोड्विषये तु "अभ्यवहरते"त्यनुप्रोक्तव्यम्। एवमभ्यवहरध्वे इत्यत्राप्युक्तविषये अभ्यवहरध्वमित्यनुप्रयोक्तव्यम्। पक्षे हिस्वाव#इति। "पिब खादेत्यब्यवहरथ" "भुङ्क्ष्व आस्वादस्वेत्यभ्यवहरध्वे" इत्युदाहार्यम्। लवनादीति। आदिशब्देन-- मोषणहरणे ग्राह्ये। अनुवृत्त्यभ्युपगमे बाधकमाह-- लोडन्तस्योत। भ्रम एवेति। पुरुषांशे, वचनांशे च। लोडंशे तु प्रमैवेति भावः। एवमुक्तोदाहरणेषु हिस्वान्तेषु तिङन्तत्वं यथायथं परस्मैपदात्मनेपदान्तत्वं च सिद्धं। पुरुषवचनसंज्ञे तु विधानसामर्थ्याद्धिस्वयोर्न स्त इत्युक्तमिति सर्वेष्टसिद्धिः।

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणारणारविन्दसेवकज्ञानेन्द्र सरस्वती कृतौ सिद्धान्तकौमुदी

व्याख्यायां तत्त्वबोधिन्याख्यायां तिङन्तकाण्डं समाप्तम्।

---

सूत्रम्

काशिका-वृत्तिः

समुच्चये सामान्यवचनस्य ३।४।५

द्वितीये लोड्विधाने समुच्चये सामान्यवचनस्य धातोरनुप्रयोगः कर्तव्यः। ओदनं भुङ्क्ष्व, सक्तून् पिब, धानाः खाद इत्येव अयम् अभ्यवहरति। सर्वविशेषानुप्रयोगनिवृत्त्यर्थं वचनम्। लाघवं च लौकिके शब्दव्यवहारे न अद्रियते। भ्राष्ट्रम् अट, मठम् अट, खदूरम् अट, स्थाल्युपिधानम् अट इत्येव अयम् अटति इत्यत्र अपि कारकभेदात् क्रियाभेदे सति सामान्यवचनता सम्भवत्येव।

न्यासः

समुच्चये सामान्यवचनस्य। , ३।४।५

"सर्वविशेषानुप्रयोगानिवृत्त्यर्थम्" इति। यदीदं नारभ्यते तदा यावद्भ्यो धातुभ्यो लोड्विहितस्तावतामेवानुप्रयोगः प्रसज्येत; ततस्तन्निवृत्त्यर्थमेतत्। ननु चान्तरेणापीदं वचनं लाघवात् सामान्यवचनस्यैवानुप्रयोगो भविष्यति। सर्वविशेषानुप्रयोगे ह्योदनं भुङ्क्ष्व सक्तून् पिब धानाः खाद इत्येवायं भुङ्क्ते पिबति खादतीति सर्वेषु तदा तरुशब्दस्यैव प्रयोगः स्यात्, वनस्पतिशब्दप्रभृतयस्तूच्छिद्येरन्, न चैवम्, तस्मान्नास्ति लौकिकशब्दप्रयोगे गुरुलाघवं प्रत्यादरः। ननु च भ्राष्ट्रमटेत्यादावुदाहरणे कारकस्यैव समुच्चयो भ्राष्ट्रादेः, न क्रियायाः, तस्या एकत्वात्; अनेकाधारत्वञ्च सामान्यम्, एकत्वे क्रियायास्तन्न सम्भवति, तत्कथं सामान्यवचनस्यानुप्रयोग उपपद्यते? इत्याह-- "भ्राष्टमट"इत्यादि। गतार्थम्॥

बाल-मनोरमा

समुच्चये सामान्यवचनस्य १८२१, ३।४।५

समुच्चये सामान्यवचनस्य। उच्यतेऽनेनेति वचनः। सामान्यवाचिन इत्यर्थः। फलितमाह-- सामान्यार्थकस्येति। समुच्चीयमानक्रियासामन्यवाचिन इत्यर्थः। अनुप्रयोगादिति। अनुप्रयोगादिति। अनुप्रयुज्यमानादित्यर्थः। तत इति। अनुप्रयुज्यमानधातुप्रकृतिकलडादिभिरित्यर्थः। हिस्वाभ्यां तु न सङ्ख्याकारकाद्यभिव्यक्तिः। तथा च भाष्यं-- "हिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थः" इत्यादि। "क्रियासमभिहारे द्वे वाच्ये" इति वार्तिकं द्विरुक्तप्रक्रियायां व्याख्यातम्। इदमाद्यसूत्रविहितलोडन्तविषयमिति भाष्ये स्पष्टम्। क्रियासमभिहारे लोटमुदाहरति-- याहियाहीति यातीति। भाष्ये "इति" शब्दस्य दर्सनादिति भावः। ह्रन्तस्येति। याहि याहीत्यस्येत्यर्थः। एककर्तृकतकमिति। यातीति यानिकर्तुस्तदेकत्वस्य च प्रतीतेरित्यर्थः। अभेदान्वये इति। तथा च पुनः पुनरतिशयेन वा यद्यानं तदात्मकमेककर्तृकं वर्तमानं यानमिति बोधः। तिङन्तेषु सर्वत्र क्रियाविशेष्यक एव बोध इति सिद्धान्तादेवमुक्तिः। एवमिति। याहि याहीति यातः। याहि याहीति यान्तीतित्यादिसकलपुरुषवचनेषूदाहार्यमित्यर्थः। याहि याहीति ययौ। याहि याहीति याता। याहि याहीति यास्यति। याहि याहीति यातु। लोण्मध्यमपुरुषबहुवचनतादेशविषये लोटो हिभावविकल्प उक्तः-- वा च तध्वमोरिति। तत्र हिभावपक्षे याहि याहीति यूयं यातेति सिद्धवत्कृत्य अभावपक्षे आह--यात यातेति यूयं यातेति। याहि याहीत्ययात्। याहि याहीति यायात्। लुङ्याह--याहि याहीत्ययासीदिति। लृङि उदाहरति-- अयास्यद्वेति। याहि याहीत्ययास्यदिति लृङि रूपम्। यास्यति वेति पाठे लृटि उदाहरणम्। क्रमस्तु न विवक्षितः। पक्षे इति। ध्वंविषये स्वादेशाऽभावपक्षे इत्यर्थः। यूयमधीध्वमिति-- लोण्मध्यमपुरुषबहुवचनम्। भावकर्मणोस्तु भूयस्व भूयस्वेति भूयते। पच्यस्व पच्यस्वेति पच्यते इत्युदाहार्यम्। अथ "समुच्चये सामान्यवचनस्ये" त्यस्योदाहरति-- समुच्चये त्विति।

अभ्यवहरतीति। पानं द्रवद्रव्यस्य। दन्तसंमर्दनं विना भक्षणम्। खादनं तु -- कठिनद्रव्यस्य चर्वणम्। तयोः सामान्यरूपमभ्यवहरणम्, यथाकथंचिद्भक्षणात्मकत्वात्। पक्षे हिस्वाविति। तध्वमोर्विषये कदाचिद्धिस्वादेशौ पक्षे इत्यर्थः। "पिब खादेत्यभ्यवहरते" त्युदाहार्यम्। अत्रेति। "पिब खादेत्यभ्यवहरती"त्यादौ समुच्चीयमानपानखादनादिक्रियाविशेषाणामनुप्रयुज्यमानधातुवाच्याभ्यवहरणातमकक्रियासामान्येनाऽभेदान्वय इत्यर्थः। पक्षे सक्तूनिति। समुच्चये लोडभावपक्षे अनुप्रयोगोऽपि सामान्यवचनस्य नास्तीति भावः। एतेनेति। "समुच्चयेऽन्यतरस्या"मिति "समुच्चये समान्यवचनस्ये"ति च सूत्रद्वयेन तदुदाहरणप्रदर्शनेन च "पुरीमवस्कन्दे"त्यादि माघकाव्यस्थं श्लोकवाक्यं व्याख्यातमित्यर्थः। बली-- रावणो, नमुचिद्विषा = इन्द्रेण सह, विगृह्य - विरोधं प्राप्य, पुर्याः = अमरावत्याः, अवस्कन्दनं = पीडनं, नन्दनवनस्य लवनं, रत्नानां मोषणम्, अमराङ्गनानां हरणमित्येवंप्रकारेण अहर्दिवम् = अहन्यहनि, अस्वास्त्यं चक्रे = कृतवानित्यन्वयः। इत्थंशब्द इतिपर्यायोऽवस्कन्दनादिक्रियाविशेषणामस्वस्थ्यक्रियासामान्येऽभेदं ग्राहयति। फलितमाह-- अवस्कन्दलवनादिति। आदिना मोषणं हरणं च गृह्यते। भ्रममूलकत्वमुपपादयति-- द्वितयीसूत्रे इति। अननुवृत्तेरिति। भाष्ये तदनुवृत्तेरनुक्तत्वादिति भावः। तदनुवृत्त्यभ्युपगमे बाधकमाह--- लोडन्तस्येति। "समुच्चयेऽन्यतरस्या"मिति सूत्रे "क्रियासमभिहारे" इत्यनुवृत्तौ "अवस्कन्दे" त्यादिलोडन्तानां "क्रियासमभिहारे द्वे वाच्ये" इति द्वित्वापत्तेरित्यथः। भ्रम एवेति। मध्यमपुरुषांऽशे, एकवचनांशे च भ्र एवेत्यर्थः। कुत इत्यत आह-- पुरुषवचनसंज्ञे इह नेत्युक्तत्वादिति। अत्र भाष्ये हिस्वान्तयोरनभिव्यक्तसङ्ख्याकालकत्वात्तदभिव्यक्तयेऽनुप्रयोगस्य न्यायत एव प्राप्तत्वादनुप्रयोगविधिर्माऽस्तु इत्युक्तम्। एवं च "तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येततृतीयं स्थान"मिति श्रुतौ "समुच्चयेऽन्यतरस्या"मिति लोटो हिस्वावेव भवतो,न त्वनुप्रयोगः। तत्र जननमरणक्रिययोरेव विवक्षिततया सङ्ख्याकालभिव्यक्तेरविवक्षितत्वेन तत्राऽनुप्रयोगस्य प्रयोजनाऽभावात्। एतेन "आ च सत्यलोकादाचाऽवीचेर्जायस्वम्रियस्वेति विपरिवर्तमानमात्मानं जीवलोकं चालोक्याऽस्मिन् संसारे नित्याऽशुचिदुःखात्मकं प्रसङ्ख्यानमुपवर्तते" इति वाचस्पत्यग्रन्थेऽपि जायस्व म्रियस्वेति व्याख्यातम्। नचात्र "समुच्चयेऽन्यतरस्या"मित्यत्र "क्रियासमभिहारे" इत्यस्याननुवृत्तेरुक्तत्वात्कथमिह पौनःपुन्यमसकृत्पदगम्यमित्यदोषः। कल्पतरुग्रन्थे तु जायस्व म्रियस्वेत्यत्र "क्रियासमभिहारे" इति सूत्रेण लो"डित्युक्तम्, तत्तु द्वित्वापत्तेरुपेक्ष्यमिति शब्देन्दुशेखरे प्रपञ्चितम्। इति श्रीवासुदेवदीक्षितविरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां लकारार्थप्रक्रियानिरूपणम्।

अथ मत्वर्थीयप्रकरणम्।

----------------

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि लुङ्लङ्लिटः ३।४।६

धातुसम्बन्धे इत्येव। छन्दसि विषये धातुसम्बन्धे सर्वेषु लुङ्लङ्लिटः प्रत्यया भवन्ति। अन्यतरस्याम् इति वर्तते। तेन अन्ये ऽपि लकारा यथायथं भवन्ति। लुङ् शकलाङ्गुष्ठको ऽकरत्। अहं तेभ्यो ऽकरं नमः। लङ् अग्निम् अद्य होतारम् अवृणीतायं यजमानः। लिट् अद्या ममार। अद्य म्रियते।

न्यासः

छन्दसि लुङ्लङलिटः। , ३।४।६

"यथायथम्" इति। यथास्वम्। यो यस्यात्मीयो विषयः स तत्रेत्यर्थः। "अकरत्" इति।"कृमृदृरुहिभ्यश्छन्दसि"३।१।५९ इति च्लेरङ, "ऋदृशोऽङि गुणः" ७।४।१६। "अकरम्" इति। मिपोऽम्। "अवृणीत" इति। वृञो लङ्, क्र्यादित्वात् श्ना, पूर्ववदीत्वम्। "ममार" इति। लिट्, "म्रियतेर्लुङलिङोश्च" १।३।६१ इति नियमात् परस्मैपदम्, णल्, वृद्धिः, रपरत्वम्, "द्विर्वचनेऽचि" १।१।५८ इति स्थाननिवद्भावात् मृ इत्येतद्()द्विरुच्यते(), "उरत्" ७।४।६६ इत्यत्वम्, रपरत्वम्, हलादिशेषः॥

---

सूत्रम्

काशिका-वृत्तिः

लिङर्थे लेट् ३।४।७

छन्दसि अन्यतरस्याम् इति वर्तते। लिङर्थे, यत्र लिङ् विधीयते विध्यादिः, हेतुहेतुमतोर् लिङ् ३।३।१५६ इत्येवम् आदिः, तत्र छन्दसि विषये ऽन्यतरस्यां लेट् प्रत्ययो भवति। जोषिषत् तारिषत्। मन्दिषत्। नेता इन्द्रो नेषत्। तक्षिषत्। पताति दिद्युत्। प्रजापतिरुदधिं च्यावयाति।

न्यासः

लिङर्थे लेट्। , ३।४।७

"नेषत्"। "तक्षिषत्" इति। नयतेस्तक्षते श्च लेट्, तिप्, "इतश्च लोपः परस्म #ऐपदेषु" )३।४।९७) इतीकारलोपः, "सिब् बहुलं लेटि"३।१।३४ इति सिप्, "लेटोऽडाटौ" ३।४।९४ इत्याट्। तक्षिषदित्यत्र "आर्धधातुकस्य" ७।२।३५ इत्यादिनेट्। जोषिषदित्यादीन्युदाहरणानि "सिब् बहुलं लेटि"( ३।१।३४) इत्यत्र व्युत्पादितानि॥

---

सूत्रम्

काशिका-वृत्तिः

उपसंवादाऽशङ्कयोश् च ३।४।८

उपसंवादः परिभाषणम्, कर्तव्ये पणबन्धः, यदि मे भवानिदं कुर्यादहम् अपि भवते इदं दास्यामि इति। कारणतः कार्यानुसरणं तर्कः, उत्प्रेक्षा, आशङ्का। उपसंवादे आशङ्कायां च गम्यमानायां छन्दसि विषये लेट् प्रत्ययो भवति। उपसंवादे अहम् एव पशूनामीशै। मदग्रा एव वो ग्रहा गृह्यान्तै इति। मद्देवत्यान्येव वः पात्राण्युच्यानतै। आशङ्कायाम् च नेज्जिह्मायन्त्यो नरकं पताम। जिह्माचरणेन नरकपातः आशङ्क्यते। लिङर्थ एव अयम्, नित्यार्थं तु वचनम्। पूर्वसूत्रे अन्यत्रस्याम् इति वर्तते।

न्यासः

उपसंवादशङ्कयोश्च। , ३।४।८

"उपसंवादः परिभाषणम्; कत्र्तव्ये पणबन्धः" इति। उपसंवादशब्दस्येमौ पर्यायौ। "यदि मे भवान्" इत्यादिनोसवादस्य स्वरूपं दर्शयति। कारणत इत्यादिनाप्याशङ्कायाः। "अनुसरणम्" इति। अनुगमनम्, अनुमानमित्यर्थः। "तर्क उत्प्रेक्षा" इति। आशङ्काया इमौ प्र्यायौ। "अहमेव" इत्यादि। देवैः पशुपतिरुक्तस्त्रिपुरं जहीति, तेनोक्तम्-- "अहमेव पशूनामीशै" इति। ब्राह्महत्याभागं गृहाणेत्युक्ते आदित्य इदमुक्तवान् "मदग्रा एव वो ग्रहा गृह्यान्तै। मद्देवतान्येव वः पात्राण्युच्यान्तै। "ईशै"इति-- "ईश ऐ()आर्ये" (धा।पा।१०२०), उत्तमपुरुषैकवचनम्, इट्, टेरेत्वम्, "एत ऐ" ३।४।९३। "गृह्यान्तै" इति--ग्रह उपादाने" (धा।पा।१५३३), "झोऽन्तः" ७।१।३, कर्मणि "सार्वधातुके यक्" ३।१।६७, ग्रह्यादिसूत्रेण ६।१।१६ सम्प्रसारणम्।

शेषं पूर्ववत् साधनम्। "उच्यान्तै" इति-- "वच परिभाषणे" (धा।पा।१०६३), वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्। शेषं पूर्ववत्। "पताम" इति-- "पत्लृ गतौ" (धा।पा।८४५), मस्, "लेटोऽडाटौ" ३।४।९४ इत्याट्। "जिह्वआचरणेन" इत्यादिना पूर्वोक्तमाशङ्कालक्षणमुदाहरणे दर्शयति। "लिङर्थ एवायम्" इति। हेतुहेतुमद्भावः। कथम्? उपसंवादे तावत्-- यदि मे भवानिदं कुर्यादहमपि त इदं दास्यामीत्येवंविधं परिभाषणलक्षणम्। तत्र च करणं हेतुः, दानं हेतुमदिति युक्त उपसंवादो लिङर्थः। आशङ्कापि कारणतः कार्यानुसरणम्। तत्रापि कारणं हेतुः, कार्यानुसरणं हेतुमदित्याशङ्कापि लिङर्थ एव। यद्येवम्म, पूर्वेणैव सिद्धम्, तत्किमर्थमिदमुच्यते? इत्याह-- "नित्यार्थ वचनम्" इति। स्यादेतत् पूर्वेणैव नित्यं भविष्यतीत्याह-- "पूर्वसूत्रे" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ३।४।९

छन्दसि इत्येव। तुमुनो ऽर्थस् तुमर्थः। तत्र छन्दसि विषये धातोः सयादयः प्रत्यया भवन्ति। तुमर्थो भावः। कथं ज्ञायते? वचनसामर्थ्यात् तावदयम् कर्तुरपकृष्यते। न च अयम् अन्यस्मिन्नर्थे तुमुनादिश्यते। अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति। स्वार्थश्च धातूनां भाव एव। से वक्षे रायः। सेन् ता वामेषे रथानाम्। असे, असेन् क्रत्वे दक्षाय जीवसे। स्वरे विशेषः। क्षे प्रेषे भगाय कसेन् श्रियसे। अध्यै, अध्यैन् काममुपाचरध्यै। स्वरे विशेषः। कध्यै इन्द्राग्नी आहुवध्यै। कध्यैन् श्रियध्यै। शध्यै, शध्यैन् वायवे पिबध्यै। राधसः सह मादयध्यै। तवै सोममिन्द्राय पातवै। तवेङ् दशमे मासि सूतवे। तवेन् स्वर्देवेषु गन्तवे। कर्तवे। हर्तवे।

न्यासः

तुमर्थे सेसेनसेअसेन्कसेकसेनध्यैअध्यैकध्यैकध्यैन्शध्यैशध्यैन्तवैतवङ्तवेनः। , ३।४।९

"कथं ज्ञायते" इति। "कर्त्तरि कृत्" ३।४।६७ इति वचनात् कर्त्तैव तुमर्थो युक्त इति मन्यते। "वचनसामथ्र्यात्" इत्यादि। यदि कर्त्तैव तुमर्थः स्यात् तुमर्थवचनमर्थकं स्यात्, कृत्त्वादेव हि सयादयः कर्त्तरि भविष्यन्ति। तस्मात् तुमर्थग्रहणाल्लिङ्गात् कर्त्तरि तुमुन्न भवति। "अपकृष्यते"। अपनीयते। कर्त्तरि न भवतीति यावत्। स्यादेतत्, कर्मादिरस्यार्थो भविष्यतीत्याह-- "न च" इत्यादि। "अन्यस्मिन्" इति। कर्मादौ। यथा तर्हि कर्मादावनिर्देशान्न भवति तथा भावेऽपि न स्यात्। भावेऽपि नैव तुमुन्निर्दिश्यत इत्याह-- "अनिर्दिष्टार्थाः" इत्यादि। अर्थान्तरस्य निर्देशाद्या प्रकृतिः प्रत्ययानां निमित्तत्वेनोपादीयते तदर्थस्य प्रत्यासत्तेस्तत्रैवानिनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति, स पुनरिह स्वार्थो भावः। कुत एतत्? धात्वधिकारात्, धातोश्च भाववचनत्वात्। यद्येवम्, भावग्रहणमेव कुर्यात्, लघुत्वात्? नैवं शक्यम्; भावग्रहणे सति "कर्त्तरि कृत्" ३।४।६७ इति वचनात्तुमुन् कर्त्तर्येव स्यात्। तुमर्थग्रहणे हि तुमुनोऽपि हि भाव एवार्थ इत्येतद्ज्ञापितं भवतीति न कश्चिद्दोष इति। "वक्षे" इति। "वच परिभाषणे" (धा।पा।१०६३), सेप्रत्ययः, "चोः कुः" ८।२।३० इति कुत्वम्। "एषे" इति। इणः सेन्प्रत्ययः। "जीवसे" इति। "जीव प्राणधारणे" (धा।पा।५६२)। प्रत्ययद्वयस्याप्येतदेवोदाहरणम्, स्वरस्तु भिद्यते। "प्रेषे" इति। इणः प्रपूर्वात् क्से, "आद्()गुणः" ६।१।८४। "श्रियसे" इति। "श्रिञ् सेवायाम्" (धा।पा।८९७), अस्मात् क्सेन, इयङ्। "उपाचरध्यै" इति। "चर गत्यर्थः" (धा।पा।५५९), उपाङ्पूर्वः। प्रत्ययद्वयस्यापीदुहारणम्, स्वरभेदात्तु भेदः। "आहुवध्यै" इति। "पा पाने" (धा।पा।९२५), शध्यै, प्राघ्रादिसूत्रेण ७।३।७८ पिबादेशः। "मादयध्यै" इति। "मदी {हर्षग्लेपनयोः-धा।पा।} हर्षे" (धा।पा।८१५), हेतुमण्णिच्, शध्यैन्, गुणायादेशौ। "पातवै" इति। पिबतेस्तवै। "सूतवे" इति। "षूङ प्राणिगर्भविमोचे" (धा।पा।१०३१), तवेङ, ङित्वाद्गुणाभावः। "गन्तवे" इत्यादीन्युदाहरणानि गमिकरोतिहरतीनां यथाक्रमेण॥

---

सूत्रम्

काशिका-वृत्तिः

प्रयै रोहिष्यै अव्यथिष्यै ३।४।१०

तुमर्थे छन्दसि इत्येव। प्रयै रोहिष्यै अव्यथिष्यै इत्येते शब्दा निपात्यन्ते छन्दसि विषये। प्रपूर्वस्य यातेः कैप्रत्ययः प्रयै देवेभ्यः। प्रयातुम्। रुहेः इष्यैप्रत्ययः अपामोषधीनां रोहिष्यै। रोहणाय। व्यथेर्नञ्पूर्वस्य इष्यैप्रत्ययः अव्यथिष्यै। अव्यथनाय।

न्यासः

प्रयै रोहिष्यै अव्यथिष्यै। , ३।४।१०

"प्रयै" इति। "अतो लोप इटि च" ६।४।६४ इत्याकारलोपः॥

---

सूत्रम्

काशिका-वृत्तिः

दृशे विख्ये च ३।४।११

तुमर्थे छन्दसि इत्येव। दृशे विख्ये इत्येतौ छन्दसि विषये निपात्येते। दृशेः केप्रत्ययः दृशे विश्वाय सूर्यम्। द्रष्टुम्। विख्ये त्वा हरामि। विख्यातुम्।

न्यासः

दृशे विख्ये च। , ३।४।११

"दृशे" इति। दृशेः केप्रत्ययः। "विख्ये" इति। विपूर्वाच्चक्षिङ ख्यातेर्वा केप्रत्ययो निपात्यते॥

बाल-मनोरमा

लिङाशिषि ६३, ३।४।११

अथाशीर्लिङि विशेषमाह--लिङाशिषि। "लि"ङिति लुप्तषष्ठीकं पदम्। तिङ्()शित्सार्वधातुमित्यतस्तिङित्यनुवर्तते। तदाह--आशिषि लिङस्तिङिति। सार्वधातुकसंज्ञाऽपवादोऽयम्। ततश्च सार्वधातुकसंज्ञाकार्यं शबादि न भवति।

---

सूत्रम्

काशिका-वृत्तिः

शकि णमुल्कमुलौ ३।४।१२

छन्दसि इत्येव। शक्नोतौ धातावुपपदे छन्दसि विषये तुमर्थे णमुल् कमुलित्येतौ प्रत्ययु भवतः। णकारो वृद्ध्यर्थः। ककारो गुणवृद्धिप्रतिषेधार्थः। लकारः स्वरार्थः। अग्निं वै देवा विभाजं नाशक्नुवन्। विभक्तुम् इत्यर्थः। अपलुम्पं न अशक्नोत्। अपलोप्तुम् इत्यर्थः।

न्यासः

शकि णमुल्कमुलौ। , ३।४।१२

"विभाजमम्" इति। विपूर्वाद्भजेर्णमुल्। "अपलुपम्" इति। "लुप्लृ च्छेदने" (धा।पा।१४३१), कमुल्॥

---

सूत्रम्

काशिका-वृत्तिः

ईश्वरे तोसुन्कसुनौ ३।४।१३

तुमर्थे छन्दसि इत्येव। ईश्वरशब्द उपपदे छन्दसि विषये तुमर्थे धतोः तोसुन्कसुन्प्रत्ययौ भवतः। ईश्वरो ऽभिचरितोः। अभिचरितुम् इत्यर्थः। ईश्वरो विलिखः। विलिखितुम् इत्यर्थः। ईश्वरो वितृदः। वितर्दितुम् इत्यर्थः।

न्यासः

ई�आरे तोसुन्कसुनौ। , ३।४।१३

अभिचरितोः" इति। चरतेरभिपूर्वात् तोसुन्प्रत्ययः। "विलिखः, वितृदः" इति। लिखतेः, "{उ तृदिर्" धा।पा।}तृदिर् हिंसादानयोः" (धा।पा।१४४६) इत्येतस्माच्च कसुन्॥

---

सूत्रम्

काशिका-वृत्तिः

कृत्यार्थे तवैकेन्केन्यत्वनः ३।४।१४

छन्दसि इत्येव। कृत्यानाम् अर्थो भावकर्मणी। तस्मिन् कृत्यार्थे छन्दसि विषये तवै केन् केन्य त्वनित्येते प्रत्यया भवन्ति। तवै अन्वेतवै। अन्वेतव्यम्। परिधातवै। परिधातव्यम्। परिस्तरितवै। परिस्तरितव्यम्। केन् नावगाहे। नावगाहितव्यम्। केन्य दिद्दृक्षेण्यः। शुश्रूषेण्यः। दिदृक्षितव्यम्। शुश्रूषितव्यम्। त्वन् कर्त्वं हविः। कर्तव्यम्। तुमर्थे छन्दसि इति सयादिसूत्रे ऽपि तवै विहितः, तस्य तुमर्थादन्यत्र कारके विधिर् द्रष्तव्यः।

न्यासः

कृत्यार्थे तवैकेन्केन्यत्वनः। , ३।४।१४

"कृत्यानामर्थो भावकर्मणी" इति। "तयोरेव कृत्यक्तखलर्थाः" ३।४।७० इतिभावकर्मणोः कृत्यानां विधानात्। "अन्तेतवै" इति। अनुपूर्वादिणस्तवै। "परिधातवै" इति। परिपूर्वाद्दधातेः। "परिस्तरितवै" इति। परिपूर्वादेव "स्तृञ् आच्छादने" (धा।पा।१२५२) इत्यस्मात्। "अवगाहे" इति। "गाहु विलोडने" (धा।पा।६४९) अक्पूर्वः। "दिद्दृक्षेण्यः" इति। "दृशः सन्, द्विर्वचनम्, उरत्त्वम्, रपरत्वम्, "सन्यतः" ७।४।७९ इतीत्त्वम्, "हलन्ताच्च" १।२।१० इति गुणाभावः, व्रश्चादिसूत्रेण ८।२।३६ षत्वम्,"षढोः कः सि" ८।२।४१ इति कत्वम्, दिद्दृक्ष इति स्थिते केन्यप्रत्ययः, "अतो लोपः" ६।४।४८। "शुश्रूषेण्यः" इति। शृणोतेः सन्, "अज्झनगमां सनि" ६।४।१६ इति दीर्घः, द्विर्वचनमभ्यासकार्यम्, शुश्रूष इति स्थिते केन्यप्रत्ययः। "कत्त्वम्" इति। करोतेस्त्वम्। "सयादिसूत्रेऽपि तवै विहितः" इति। सयादीनां सूत्रं सयादिसूत्रम्, येन सयादयो विहितास्ततत्रापि तवैप्रत्ययो विहितः। "तस्य तुमर्थात्" इत्यादि। यदि तु तस्य तुमर्थ एव भावे विधिः स्यात् तस्यानर्थक्यं स्यात्; अनेनैव सिद्धत्वात्। तस्माद्यद्यपि तत्र तुमर्थ इत्युच्यते, तथापि ततोऽन्यत्र कर्मकारके कर्त्रादौ तवैप्रत्ययविधानं वेदितव्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

अवचक्षे च ३।४।१५

कृत्यर्थे छन्दसि इत्येव। अवपूर्वात् चक्षिङः एश् प्रत्ययो निपात्यते। रिपुणा नावचक्षे। नावख्यातव्यम् इत्यर्थः।

न्यासः

अवचक्षे च। , ३।४।१५

"एश्प्रत्ययो निपात्यते" इति। शित्करणं सार्वधातुकसंज्ञार्थम्। तेनार्धधातुके विधीयमानः सार्वधातुके "चक्षिङ ख्याञ्" २।४।५४ इति ख्याञादेशो न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

भावलक्षने स्थाइण्कृञ्वदिचरिहुतमिजनिभ्यस् तोसुन् ३।४।१६

कृत्यार्थे इति निवृत्तम्। तुमर्थे इति वर्तते। प्रकृत्यर्थविशेषणं भावलक्षणग्रहणम्। भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यः छन्दसि विषये तुमर्थे तोसुन् प्रत्ययो भवति। आसंस्थातोर्वेद्यां शेरते। आ समाप्तेः सीदन्ति इत्यर्थः। इण् पुरा सूर्यस्तोदेतोराधेयः। कृञ् पुरा वत्सानामपाकर्तोः। वदि पुरा प्रवदितोरग्नौ प्रहोतव्यम्। चरि पुरा प्रचरितोराग्नीध्रीये होतव्यम्। हु आहोतोरप्रमत्तस्तिष्थति। तमि आ तमितोरासीत। जनि काममा विजनितोः सम्भवामेति इति।

न्यासः

भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्। , ३।४।१६

"आसंस्थातोः" इत्यादि। आसंस्थातोः शब्देन समाप्तिरुच्यते, वेद्यां सदनं लक्ष्यते। "पुरा सूर्यस्योदेतोराधेयः" इति। अत्राप्याधानक्रिया सूर्यस्योदयेन। "पुरा वत्सानाम्" त्यादौ वत्सानामपाकरणेनासनम्। "पुरा प्रवदितोः" इत्यादौ प्रवदनेन हवनम्। "पुरा प्रचरितोः" इत्यादौ प्रचरणेन हवनमेव। उत्तरयोरुदाहरणयोराहवनेनासम्भवनम्॥

---

सूत्रम्

काशिका-वृत्तिः

सृपितृदोः कसुन् ३।४।१७

भावलक्षणे छन्दसि ति वर्तते। सृपितृदोर् धात्वोः भावलक्षणे ऽर्थे वर्तमानयोः छन्दसि विषये तुमर्थे कसुन् प्रत्ययो भवति। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जत्रुभ्य आतृदः।

न्यासः

सृपितृदोः कसुन्। , ३।४।१७

---

सूत्रम्

काशिका-वृत्तिः

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३।४।१८

छन्दसि भावलक्षणे इति सर्वं निवृत्तम्। अलम् खलु इत्येतयोः प्रतिषेधवाचिनोरुपपदयोः धातोः क्त्वा प्रत्ययो भवति प्राचाम् आचार्याणां मतेन। अलं कृत्वा। खलु कृत्वा। अलं बाले रुदित्वा। अलंखल्वोः इति किम्? मा कार्षीः। प्रतिषेधयोः इति किम्? अलङ्कारः। प्राचांग्रहणं विकल्पार्थम्। अलं रोदनेन। वासरूपविधिश्चेत् पूजार्थम्।

लघु-सिद्धान्त-कौमुदी

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ८८१, ३।४।१८

प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात्। प्राचां ग्रहणं पूजार्थम्। अमैवाव्ययेनेति नियमान्नोपपदसमासः। दो दद्घोः। अलं दत्त्वा। घुमास्थेतीत्त्वम्। पीत्वा खलु। अलंखल्वोः किम्? मा कार्षीत्। प्रतिषेधयोः किम्? अलंकारः॥
न्यासः
अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। , ३।४।१८

"प्रतिषेधवाचिनोः" इति। प्रतिषेधयोरित्यस्येदं विवरणम्।एतेन प्रतिषेधवाचित्वादलंखलुशब्दौ सूत्रे प्रतिषेधशब्देनोक्ताविति दर्शयति। भवति हि तद्वाचित्वात्ताच्छब्द्यम्; यथा-- "क्षुद्रजन्तवः" २।४।८ इति, तत्र क्षुद्रजन्तुवाचित्वाद्यूकालिक्षादयः शब्दाः क्षुद्रजन्तुशब्देनोक्ताः। "अलङ्कारः" इति। भावे घञ्। भूषणवचनोऽत्रालंशब्दः। "अलं वाले रोदनेन" इति। भावे ल्युट्। "वासरूपविधिरिति चेत्" इति। विनापि प्राग्ग्रहणेन विकल्पो लभ्यत एव। यस्मादसरूपोऽपवादो बाधको भवतीत्येवं चेन्मन्यसे,एवं तर्हि प्राग्ग्रहणम्, पूर्वं स्त्र्यधिकारात्। परेण वासरूपविधिर्नास्तीति चेतसि कृत्वा विकल्पार्थं प्राग्ग्रहणमुक्तम्॥
तत्त्व-बोधिनी
अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा १५८५, ३।४।१८

अलंखल्वोः। पूजार्थमिति। ननु विकल्पार्थमेवास्तु, अलं रुदित्वा अलं रोदनेनेति रूपद्वयसिध्यर्थमिति चेन्मैवम्। वासरूपन्यायेनैतत्सिद्धेः। न च "क्तल्युट् तुमुन्खलर्थेषु" वाऽसरूपविधिर्ने"ति सिद्धान्ताल्ल्युटि वासरूपन्यायो अस्तीति वाच्यं, "क्तल्यडादयोऽपवादभूताः स्वबाध्यं नित्यं बाधन्ते" इति हि तस्य निष्कृष्टोऽर्थः। इह तु ल्युटोऽपवादः क्त्वेति वैषम्यात्। ननु "प्रैषादिषु कृत्याश्चे"ति वचनेन स्त्र्यधिकारादूर्ध्वं वासरूपवधिर्नावश्यमस्तीति ज्ञापितमिति चेत्कं ततः?। "ज्ञापकसिद्धं न सर्वत्र"तीष्टानुरोधेन तदभ्युपगमे बाधकाऽभावात्। अलं दत्त्वेति। अपात्रे न देयमिति फलितोऽर्थः।

---

सूत्रम्
काशिका-वृत्तिः
उदीचां माङो व्यतीहारे ३।४।१९

क्त्वा तु वर्तते। माङो धातोः व्यतीहारे वर्तमानादुदीचाम् आचार्याणां मतेन क्त्वा प्रत्ययो भवति। अपमित्य याचते। अपमित्य हरति। अपूर्वकालत्वादप्राप्तः क्त्वा विधीयते। उदीचांग्रहणात् तु यथाप्राप्तम् अपि भवति। याचित्वा ऽपमयते। गृत्वा अपमयते। मेङः कृतात्वस्य अयं निर्देशः कृतो ज्ञापनार्थः, नानुबङ्घकृतमनेजन्तत्वम् इति। तेन दाधा घ्वदाप् १।१।१९ इति दैपो ऽपि प्रतिषेधो भवति।
न्यासः
उदीचां माङो व्यतीहारे। , ३।४।१९

"अपमित्य" इति। "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्वम्, "कुगतिप्रादयः" २।२।१८ इति समासः, "समासेऽनञ्पूर्वे क्त्वो ल्यप्" ७।१।३७ इति ल्यप्, "मयतेरिदन्यतरस्याम्" ६।४।७० इतीत्त्वम्, "ह्रस्वस्य पिति कृति तुक्" ६।१।६९। ननु च "समानकर्तृकयोः पूर्वकाले" ३।४।२१ इत्यनेनैवात्र क्त्वाप्रत्ययो भवति, अस्ति ह्यत्रापि समानकर्तृकत्वम्। तथा हि-- य एवापमयतेः कर्त्ता स एव याचतेः,तत्किमर्थं विधीयते? इत्याह-- "अपूर्वकालत्वात्" इत्यादि। पूर्वं ह्यसौ याचते पश्चादपमयत इति नास्ति पूर्वकालत्वम्, तस्मादप्राप्त एव क्त्वा विधीयते। विधीयतान्नमाम; अयन्तु दोषः--

यदैवास्माद्वचनान्मयतेः क्त्वा भवति, तदैव समानकर्तृकयोरित्यस्माद्वचनाद्याचतेरपि स्यात्? नैष दोष-; यस्मात् "समानकर्तृकयोः" ३।४।२१ इत्यत्र "उदीचाम्" ३।४।१९ इति वत्र्तते, सा च व्यवस्थितविभाषा,तेन यदा मयतेः क्त्वा भवति तदा याचतेः क्त्वा न भविष्यति। "उदीचांग्रहणात्" इत्यादि। उदीचांग्रहणमिह विकल्पार्थम्। तेन यथाप्राप्तमपि पक्षे भवति। याचतेः क्त्वा। मयतेर्लडादिः। माङिति "माङ माने" (धा।पा।११४२) इत्यस्यायं निर्देश इति कस्यचिदाशङ्का स्यात्तस्तां निराकर्त्तुमाह-- "मेङ कृतात्त्वस्यायं निर्देशः" इति। कुतः पुनरेतदवगतम्? व्यतीहारग्रहणात्। मेङेव व्यतीहारे वत्र्तते, न माङ, तस्मान्मेङ एवायं निर्देश इति विज्ञायते। किमर्थं पुनरेवं निर्देशः कृतः,कृते यत्र सति सन्देहः स्यात्, न मेङ इत्येवासन्दिग्धः कत्र्तव्य स्यादित्यत आह-- "ज्ञापनार्थः"इति। मेङ इत्येवं निर्देशे कत्र्तव्ये यः सानुबन्धकस्य कृतात्त्वस्य निर्देशः कृतः स ज्ञापनार्थः। तेनैतज्ज्ञापयते-- "नानुबन्धकृतमनेजन्तत्वम्" इति। "तेन" इत्यादिना ज्ञापनप्रयोजनं दर्शयति। यद्यमर्थो न ज्ञाप्येत ततो हलन्तत्वाद् दैप एजन्तत्वं न स्यात्। तत्र को दोषः? दाब्ग्रहणेन दैब्ग्रहणं न स्यात्; भिन्नेरूपत्वात्। ततश्च "दाधा घ्वदाप्" १।१।१९ इत्यत्र दैपः प्रतिषेधो न स्यात्। अ()स्मस्त्वर्थे ज्ञापिते सति भवति॥

तत्त्व-बोधिनी

उदीचां माङो व्यतीहारे १५८६, ३।४।१९

उदीचाम्। व्यतीहारो व्यतिक्रमः। मेङः कृतात्वस्यायं माङ इति निर्देशो "नानुबन्धकृतमनेजन्तत्वमिति परिभाषां ज्ञापयति, तेन घुसंज्ञायां दैपोऽप्यदाबिति पर्युदासः सिध्यति।

---

सूत्रम्

काशिका-वृत्तिः

परावरयोगे च ३।४।२०

परावराभ्यां योगः प्रावरयोगः। परेण पूर्वस्य योगे गम्यमाने अवरेण च परस्य धातोः क्त्वा प्रत्ययो भवति। परेण तावत् अप्राप्य नदीं पर्वतः स्थितः। परनदीयोगेन पर्वतो विशिष्यते। अवरयोगे अतिक्रम्य तु पर्वतं नदी स्थिता। अवरपर्वतयोगेन नदी विशिस्यते।

न्यासः

परावरयोगे च। , ३।४।२०

इहेमौ परावरशब्दौ सम्बन्धिशब्दौ। पूर्वञ्चापेक्ष्य परो भवति, परञ्चापेक्ष्।यावरः,सम्बन्धिशब्दाश्च नियतमेव प्रतियोगिनमुपस्थापयन्ति, तस्मात् सूत्रे यद्यपि विशिष्टप्रयोगो न मिर्दिश्यते, तथापि पूर्वपरयोरेव परावराभ्यां योगो गम्यत इत्याह-- "परेण पूर्वस्य" इत्यादि। "परनदीयोगेन पर्वतो विशिष्यते" इति। तथा ह्रप्राप्य नदीं पर्वत इत्युक्ते परया नद्या पर्वतस्य यो योगस्तद्विशिष्टः पर्वतः प्रतीयते। "अवरपर्वतयोगेन नदी विशिष्यते" इवि। यस्मादतिक्रम्य पर्वतं नदीत्युक्तेऽवरेण पर्वतेन नद्या च यो योगस्तद्विशिष्ट नदी विज्ञायते॥

तत्त्व-बोधिनी

परावरयोगे च १५८८, ३।४।२०

परावर। अप्राप्येति। दक्षिणदेशस्थानां गङ्गामप्राप्य विन्ध्यः। गङ्गाप्राप्तविरहविशिष्टदेशस्थो विन्ध्य इत्यर्थः। अत्र विन्ध्यात्परा गङ्गेति गम्यते। अतिक्रम्येति। दक्षिणदेशस्थानामेवायमपि प्रयोगः। अत्र हि गङ्गायाः पूर्वो विन्ध्य इति गम्यते। इह त्रिसूत्र्यां क्त्वाप्रत्ययस्य भावमात्रार्थत्वेऽपि विशेषणविशेष्यसंसर्गा भिद्यन्त इति नास्ति वैयर्थ्यमिति दिक्।

सूत्रम्
काशिका-वृत्तिः
समानकर्तृकयोः पूर्वकाले ३।४।२१

समानः कर्ता ययोः धात्वर्थयोस् तत्र पूर्वकाले धात्वर्थे वर्तमानाद् धातोः क्त्वा प्रत्ययो भवति। शक्तिशक्तिमतोः भेदस्य अविवक्षिततत्वात् समानकर्तृकता। भुक्त्वा व्रजति। पीत्वा व्रजति। द्विवचनमतन्त्रम्। स्नात्वा पीत्वा भुक्वा व्रजति। समानकर्तृकयोः इति किम्? भुक्तवति ब्राह्मणे गच्छति देवदत्तः। पूर्वकाले इति किम्? व्रजति च जल्पति च। आस्यं व्यादाय स्वपिति चक्षुः संमील्य हस्ति इत्युपसंख्यानम् अपूर्वकालत्वात्।
लघु-सिद्धान्त-कौमुदी
समानकर्तृकयोः पूर्वकाले ८८२, ३।४।२१

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। भुक्त्वा पीत्वा व्रजति॥
न्यासः
समानकर्तृकयोः पूर्वकालेः।, ३।४।२१

धात्वधिकाराद्धात्वर्थस्यैव समानकर्तृकत्वं विज्ञायत इत्याह-- "समानः कत्र्ता ययोर्धात्वर्थयोःट इत्यादि। निर्धारणे चेयं षष्ठी। समानशब्दश्चायमेकवाची। ननु शक्ति कारकम्, अन्या च पूर्वकालक्रियायाः, तत्कुतः समानकर्त्तृकत्वं विज्ञायते? इत्याह-- "शक्तिशक्तिमतोः" इत्यादि। शक्तिः शक्तिमाँश्च शक्तिशक्तिमन्तौ। यश्च शक्त्याधारो या च शक्तिस्तयोरिह भेदो न विवक्षितः। तेन शक्त्याधार एक एव देवदत्तः कत्र्ता, स चोभयोरपि क्रिययोरेक एवेति युक्तं समानकर्त्तृकत्वम्। "पीत्वा" इति। पूर्ववदीत्वम्। इह "समानकर्त्तृकयोः" इति द्विर्वचनेन निर्देशः कृतः तेन द्वे एव क्रिये प्रत्युपस्थास्येते, न बह्व्यः, ततश्च द्वयोरेव क्रिययोः प्रत्युपस्थापितयोः स्यात्, न बह्वीषु? इत्याह-- "द्विवचनम्" इत्यादि। क्रियाप्रधानत्वादस्य निर्देशस्य। नात्र द्विवचनं प्रधानम्; नान्तरीयकत्वात्। तेन द्विवचनेन निर्देशः कृतः। अवश्यं येन केनचिद्वचनेन निर्देशः कत्र्तव्यः, तस्मादतन्त्रत्वाद्()द्विवचनस्य, बह्वीष्वपि क्रियासु भवत्येव। "भुक्तवति ब्राआह्मणे व्रजति" सिति। अत्र भुजिक्रियाया ब्राआह्मणः कत्र्ता, व्रजतिक्रियायास्तु देवदत्त इति समानकर्त्तृकत्वाभावः। "व्रजति जल्पति च" इति। यौगपद्यादिह क्रियायाः पूर्वकालता नास्ति। "व्यादाय" इति। ददातेव्र्याङ्पूर्वस्य रूपम्। "सम्मील्य" इति। "मील स्मील क्ष्मील निमेषणे" (धा।पा।५१७,५१९,५२०) इत्यस्य सम्पूर्वस्य हेतुमण्ण्यन्तस्य। किं पुनः कारणं न सिध्यीत्याह-- "अपूर्वकालत्वात्ुपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्-- पूर्वयोगाच्चकायोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन मुखं व्यादाय स्वपितीत्यादौ पूर्वकालत्वाभावेऽपि भविष्यतीति॥
तत्त्व-बोधिनी
समानकर्तृकयोः पूर्वकाले १५८९, ३।४।२१

समानकर्तृक। इह धात्वधिकारेऽपि समानकर्तृकत्वं क्रिययोरेव सम्भवतीत्याशयेनाह-- धात्वर्थयोरिति। निर्धारणे षष्ठी सप्तमी वा। धात्वर्थयोर्मध्ये पूर्वः कालो यस्य धात्वर्थस्य तस्मिन्विद्यमानादित्यर्थः। एवं च निर्धारणविभक्तिरेव पूर्वकाल इत्यस्य बहुव्रीहित्वद्योतिकेति फलितम्। क्त्वा स्यादिति। स च भावे, "अव्ययकृत" इति वचनात्। भावोऽपि घञादाविव नेह सिद्धावस्थः, किन्तु साध्यावस्थः। स च धातुनैव लब्धः। क्वाप्रकृत्यर्थभूता क्रिया च क्रियान्तरं प्रति विशेषणं, धातुसंबन्धादिकारात्। संसर्गश्चेह सामानाधिकरण्यं , पूर्वोत्तरकालत्वं च। नत्र संसर्गविशेषतात्पर्यग्राहकः क्त्वाणमुलादयः। अत्र च "समानकर्तृकयो"रिति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम्, दातूपात्तव्यापराश्रयस्य कर्तृतया

तथा पर्यवसानादिति दिक्। द्वित्वमिति। नन्वमीषां ब्राआह्णणानां पूर्वमानयेत्युक्ते मध्यमो नानायीते, तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् क्त्वाप्रत्ययो न स्यादिति चेदत्राहुः-- इहाप्याख्यातवाच्या क्रिया प्रधानं,तां प्राति क्त्वान्तोपस्थिताः क्रियाः सर्वा एव विशेषणं, न तु तासां परस्परसंबन्धः, "गुणानां च परार्थत्वा"दित न्यायात्। अतएव स्नात्वा पीत्वा भुक्त्वा व्रजतीत्याद्यनियमेन प्रयुज्यत इति। "स्वरतिसूती" त्यादिना विकल्पे प्राप्ते नित्यार्थमाह-- स्वरत्यादेरिति।

---

सूत्रम्

काशिका-वृत्तिः

आभीक्ष्ण्ये णमुल् च ३।४।२२

समानकर्तृकयोः पूर्वकाले इत्येव। आभीक्ष्णयम् पौनःपुन्यम्। प्रकृत्यर्थविशेषणं च एतत्। आभीक्ष्ण्यविशिष्टे ऽर्थे वर्तमानाद् धातोः णमुल् प्रत्ययो भवति, चकारात् क्त्व च। द्विर्वचनसहितौ क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतः, न केवलौ। आभीक्ष्ण्ये द्वे भवतः इत्युपसङ्ख्यानाद् द्विर्वचनम्। भोजं भोजं व्रजति, भुक्त्वा भुक्त्वा व्रजति। पायं पायं व्रजति, पीत्वा पीत्वा व्रजति।

लघु-सिद्धान्त-कौमुदी

आभीक्ष्ण्ये णमुल् च ८८८, ३।४।२२

आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च॥

न्यासः

अभीक्ष्ण्ये णमुल् च। , ३।४।२२

"द्विर्वचनसहितौ" इत्यादि। आभीक्ष्ण्यं हि द्योतयितुं द्विर्वचनसहितयोरेव क्त्वाणमुलोः सामथ्र्यम्, न केवलयोः; शब्दशक्तिस्वाभाव्यात्। तस्माद्द्विर्वचनं विधेयमिति भावः। केन पुनरत्र द्विर्वचनमित्याह-- "आभीक्ष्ण्ये" इत्यादि। "पायम्पायम्" इति। "आतो युक्" ७।३।३३॥

तत्त्व-बोधिनी

आभीक्ष्ण्ये णमुल् च १६०८, ३।४।२२

आभीक्ष्ण्ये णमुल् च। ननु वाऽसरूपन्यायेन क्तवाप्रत्ययो भविष्यतीति "च" ग्रहणमिह व्यर्थमिति चेन्मैवम्। उक्तन्यायस्वीकारे तु लडादिरपीह प्रवर्तेत। न चेष्टापत्तिः, "विभाषाऽग्रे" इति वक्ष्यमाणसूत्रस्थविभाषाग्रहणस्य वैयथ्र्यप्रसङ्गात्। तत्र हि क्त्वाणमुलौ विभाषाग्रहणेन लडादिसमावेशार्थं विकल्प्येते। यद्यपि वाऽसरूपन्यायेनैव लडादिः सिध्यति तथापि णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्रवाऽसरूपविधिर्न प्रवर्तत इति ज्ञापनार्थं विभाषाग्रहणम्। तत्फलं तु "आभीक्ष्णे णमुल् चे"त्यत्र लडाद्यप्रवृत्तिः। ततश्च चकारेणैव क्त्वाप्रत्ययो लभ्यत इति नास्त्येव तस्य वैयथ्र्यम्। किं च वाऽसरूपं विनैव क्त्वालडाद्योः स्वीकारे तु "न यद्यनाकाङ्क्षे" इत्यत्र क्त्वाप्रत्ययवल्लडादिरपि न सिद्ध्येत्। तथा च "यदयं भुङ्()क्ते ततः पठती"त्युदाहरणं न स्यात्। सिद्धान्ते तु "आभीक्ष्ण्ये णमुल्चे"ति विशेषविहितयोः क्त्वाणमुलोरेव निषेधात्सामान्यविहितलडादिर्भवत्येवेति नास्त्येवाऽनुपपत्तिरिति दिक्।पूर्वविषय इति। "समानकर्तृकयोः पूर्वकाले" इत्यर्थः। पायंपायमिति। "आतो युक्"। वा दीर्घ इति। गमेण्र्यन्ताण्णमुलि मितां ह्रस्वे च कृते वा दीर्घ इत्यर्थः। ण्यन्तस्यापीति। यत्तु प्राचा ण्नय्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति मतमुपन्यस्तं,तदपाणिनीयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

न यद्यनाकाङ्क्षे ३।४।२३

यच्छब्दे उपपदे धातोः क्त्वाणमुलौ प्रत्ययौ न भवतो ऽनाकाङ्क्षे वाच्ये। यत्र पूर्वोत्तरे क्रिये स्तः, तच्चेद् वाक्यं न परं किञ्चिदाकाङ्क्षते इति। णमुलनन्तरः, क्त्वा तु पूर्वसूत्रविहितो ऽपि प्रतिषिध्यते। यदयं भुङ्क्ते ततः पचति। यदयम् अधीते ततः शेते। अनाकाङ्क्षे इति किम्? यदयं भुक्त्वा व्रजति अधीते एव ततः परम्।

न्यासः

न यद्यनाकाङ्क्षे।, ३।४।२३

"अनाकाङ्क्षे" इति। न विद्यत आकाङ्क्षा = अपेक्षा यस्य स तथोक्तः। "क्त्वा तु पूर्वसूत्रविहितोऽपि" इति। अपिशब्दादनन्तरविहितोऽपि युक्तं यदनन्तरसूत्रविहितः प्रतिषिध्यते-- "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।९९) इति कृत्वा। पूर्वसूत्रेण विहितस्य तु कथं प्रतिषेधः? प्रकरणापेक्षया प्रतिषेधविधानात्। पूर्वकालप्रकरणे यत् प्राप्नोति तन्न भवतीत्येवमयं पूर्वकालप्रकरणापेक्षया प्रतिषेधः क्रियते। तस्माद्युक्तः पूर्वसूत्रविहितस्यापि प्रतिषेधः॥

तत्त्व-बोधिनी

न यद्यनाकाङ्क्षे १६०९, ३।४।२३

न यदि। अनाकाङ्क्ष इति पचाद्यजन्तेन नञ्समासः। तद्दर्शयति--नाकाङ्क्षते चेदिति। चेदत्राहुः-- "पूर्वकाले यत्प्राप्नोति तन्ने"ति व्याख्यानात् क्त्वाप्रत्ययोऽपि न भवतीति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा ऽग्रे प्रथमपूर्वेषु ३।४।२४

अप्राप्तविभाषेयम्। आभीक्ष्ण्ये इति न अनुवर्तते। अग्रे प्रथम पूर्व इत्येतेषु उपपदेषु समानकर्तृकयोः पूर्वकाले धातोः क्त्वाणमुलौ प्रत्ययु विभाषा भवतः। अग्रे भोजं व्रजति, अग्रे भुक्त्वा व्रजति। प्रथमं भोजं व्रजति, प्रथमं भुक्त्वा व्रजति। पूर्वं भोजं व्रजति, पूर्वं भुक्त्वा व्रजति। विभाषाग्रहणम् एताभ्यां मुक्ते लडादयो ऽपि यथा स्युः। अग्रे भुङ्क्ते ततो व्रजति। ननु च वासरूप इति भविस्यति? क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर् न अस्ति इत्येतदनेन ज्ञाप्यते, तेन आभीक्ष्ण्ये लडादयो न भवन्ति। उपपदसमासः कस्मान् न क्रियते? उक्तं तत्र एव कारस्य प्रयोजनम्, अमैव यत् तुल्यविधानम् उपपदं तत् समस्यते, न अन्यतिति।

न्यासः

विभाषाग्रेप्रथमपूर्वेषु।, ३।४।२४

"आभीक्षण्ये" इति नानुवत्र्तते" इति। "अप्राप्तविभाषेयम्" इत्यत्रेयं युक्तिः। ननु च प्रताप्तविभाषेयं युक्ता,णमुल्यप्राप्ते क्त्वाप्रत्यये "समानकर्त्तृकयोः" (३।४।२१) इत्यादिना प्राप्ते सत्यारम्भात्? नैतदस्ति; अनन्तरसूत्रविहितौ हि क्त्वाण्मुलावित्यधिकृत्याप्राप्तविभाषेयमित्युच्यते। यस्तु "समानकर्त्तृकयोः" ३।४।२१ इत्यादिना केवलः क्त्वा विहितस्तं प्रति विभाषाग्रहणं न कत्र्तव्यमेव; वासरूपविधिना तत्प्रतिपादितस्यार्थस्य सिद्धत्वात्। "ननु च" इत्यादिनाऽनन्तरोक्तविभाषाग्रहणस्य प्रयोजनं विघटयति। "क्त्वाणमुली यत्र" इत्यादि। वासरूपविधिनैव पक्षे लडादिषु।

सिद्धेषु यत् तदर्थं विभाषाग्रहणं क्रियते तेन यत्र क्त्वाणमुलौ युगपद्विधीयेते तत्र वासरूपविधिर्नास्तीत्येषोऽर्थो ज्ञाप्यते। किमेतस्य प्रयोजनं ज्ञापनस्य? इत्याह-- "तेन" इत्यादि। "उपपदसमासः" इत्यादि। "अमैवाव्ययेन" २।२।२० इत्युपपदसमासः प्राप्नोति, स कस्मान्न भवतीत्याह-- "उक्तम्" इत्यादि। "अमैव यत् तुल्यविधानमुपपदं तत् समस्यते" (का।व।२।२।२०) इत्युक्तं प्राक्। अग्ने भृतीन्युपपदान्यमा चान्येन क्त्वाप्रत्ययेन तुल्यविधानम्, अतो न समस्यन्ते॥

तत्त्व-बोधिनी

विभाषाऽग्रेप्रथमपूर्वेषु १६१०, ३।४।२४

विभाषाऽग्रे। यद्यप्यग्रेशब्दो देशविशेषवचनोऽप्यस्ति, "प्रभोरग्रेभुङ्क्ते" इत्यादिप्रयोगात्, तथापीह कालविशेषवाच्येव गृह्यते, प्रथमशब्दसाहचर्यात्। "प्रथमं भुङ्क्ते" इत्यादौ तु काल एव हि प्रतीयते। "अग्रे" इति सप्तम्यन्तस्यानुक्रणम्। "प्रकृतिवदनुकरण"मित्यस्य वैकल्पिकत्वाद्विभक्तेर्लुङ्न कृतोऽस्यवामीय"मिति वत्। अग्रेभोजमिति। "अग्रेभोजमिति। "अमैवाव्ययेने"ति नियमाद्व्यस्तमेवेदं, न त्वत्रोपपदसमासः। नन्वग्रेप्रथमपूर्वशब्दैः पूर्वकालत्वमुच्यत इति कथमिह क्त्वाणमुलौ स्यातामिति चेदत्राहुः-- अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीति हि वाक्यार्थः। तत्राग्रेप्रभृतिभिर्भोक्रपेक्षया पूर्वत्वमुच्यते चेदत्रापि अन्येभ्यो भोक्तृभ्यः पूर्वं व्रजतीति व्रजनपेक्षया पूर्वत्वं तु क्त्वाणमुल्भ्यां द्योत्यत इत्याशङ्कैवात्र नास्तीति। नित्यमेव विधिरिति। अग्रे भुङ्क्ते इत्येव लडादिर्न प्रयुज्यत इतिभावः।

---

सूत्रम्

काशिका-वृत्तिः

कर्मण्याक्रोशे कृञः खमुञ् ३।४।२५

कर्मण्युपपदे कृजो धातोः खमुञ् प्रत्ययो भवति आक्रोशे गम्यमाने। चोरंकारम् आक्रोशति। चोरो ऽसि, दस्युरसि इत्याक्रोशति। चोरकरणम् आक्रोशसम् पादनार्थम् एव, न त्वसौ चोरः क्रियते।

न्यासः

कर्मण्याक्रोशे कृञः खमुञ्। , ३।४।२५

"चौराङ्कारम्" इति। "अरुर्द्विषदजन्तस्य मुम्" ६।३।६६ इति मुम्। "चौरकरणम्" इत्यादि। करोतिरत्रोच्चारणक्रियः। "चौरोऽसि"इत्याक्रोशवाक्ये चौरशब्दस्य यत् करणमुच्चारणं तदाक्रोशस्यैव सम्पादनार्थम्। न हि तेनविनाऽऽक्रोशः शक्यते प्रतिपादयितुम्। "न त्वसौ चौरः क्रियते" इति। अशक्यत्वात्। न च "चौरोऽसीति शतकृत्वोऽपि ब्राउवता पुरुषस्य शक्यते चौरत्वमुत्पादयितुम्॥

---

सूत्रम्

काशिका-वृत्तिः

स्वादुमि णमुल् ३।४।२६

समानकर्तृकयोः पूर्वकाले कृञः इति च अनुवर्तते। स्वादुमि इत्यर्थग्रहणम्। स्वाद्वर्थेषु उपपदेषु कृञो णमुल् प्रत्ययो भवति। स्वादुङ्कारं भुङ्क्ते। सम्पन्नङ्कारं भुङ्क्ते। लवणङ्कारम्। स्वादुमि इति मकारान्तनिपातनम् ईकाराभावार्थम्, च्व्यन्तस्य अपि मकारार्थं दीर्घाभावार्थं च। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते। वासरूपेण क्त्वा अपि भवति, स्वादुं कृत्वा भुङ्क्ते। तुमर्थाधिकाराच् च सर्वे एते भावे प्रत्ययाः। यद्येवम्, स्वादुङ्कारं भुङ्क्ते देवदत्तः इति णमुला कर्तुरनभिहितत्वात् कर्तरि कस्मात् तृतीया न भवति? भुजिप्रत्ययेन अभिहितः कर्ता, न च अस्मिन् प्रकरणे

शक्तिशक्तिमतोर्भेदो विवक्ष्यते, समानकर्तृकत्वं हि विरुध्यते। प्रधानशक्त्यभिधाने वा गुणशक्तिरभिहितवत् प्रकाशते।

न्यासः

स्वादुमि णमुल्। , ३।४।२६

"स्वादुमीत्यर्थग्रहणम्()" इति। ननु च "स्वं रूपं शब्दस्याशब्दसंज्ञा" (१।१।६८) इति वचनात् स्वरूपस्यैव ग्रहणेन भवितव्यम्? नैतदस्ति; शब्दानुशासनप्रस्तावादेव हि शब्दस्येति सिद्धे शब्दग्रहणं यत्र शब्दपरो निर्देशस्तत्र स्वं रूपं गृह्यते नार्थपरनिर्देश इति ज्ञापनार्थं कृतम्, इह चार्थपरो निर्देशः। तस्मादर्थग्रहणमेव युक्तम्। अर्थपरत्वं तु निर्देशस्याविच्छिन्नाचार्यपारम्पर्योपदेशाद्विज्ञायते। अर्थग्रहणे च सति तत्पर्यायेष्वपि प्रत्ययो लभ्यत इत्याह-- "स्वाद्वर्थेषु" इत्यादि। अथ "स्वादुमि" इति किमर्थं मकारान्तत्वं निपात्यते, मान्तस्योपपदस्य श्रवणं यथा स्यादिति चेत्? न; यद्येतत्प्रोयजनम्, न निपातयितव्यम्, अनन्तरसूत्रे खमुञः प्रकृतत्वात् स एव विधास्यते। अ()स्मश्च विहिते मुमैव मान्तत्वमुपपदस्य भविष्यतीत्येतच्चोद्यमापाकर्तुमाह--"स्वादुमि"इत्यादि। एतेनैतद्दर्शयति--यद्यपि खमुञि सति सिध्यति मकारान्तत्वम्, ईकारप्रतिषेधस्तु न सिध्यति, ततश्च स्वदुशब्दादुपपदात् "वोतो गुणवचनात्" ४।१।४४ इति ङीष् प्रसज्येत्, तथा चानिष्टं रूपं स्यात्। माकारान्तत्वनिपातने हि निमित्तस्य विहितत्वान्ङीष्प्रसङ्गो नास्ति। तस्माद्योऽपि खमुञं विदधाति तेनाप्यवश्यमीकारप्रतिषेधार्थं मकारान्तं निपातयितव्यमिति। यद्यपि परस्याभिमतम्-- "खमुञि विहिते मुमैव मकारान्तत्वं भविष्यति" इति, तदपि न सर्वत्रेति सूचयितुमाह-- "च्व्यन्तस्य" इत्यादि। अनेनैतद्दर्शयति-- यदि मकारान्तत्वं न निपात्येत, तदा सत्यपि खमुञि मकारान्तत्वं च्व्यन्तस्योपपदस्य न स्यात्; तस्याव्ययत्वात्। मुम्()विधौ च "खित्यनव्ययस्य" ६।३।६७ इत्यधिकारात्। तस्माद्योऽपि खमुञं विदधाति तेनापि मकारान्तत्वनिपातनं कत्र्तव्यम्। एवं हि मकारान्तत्वनिपातनमेव क्रियताम्, प्रत्ययस्तु प्रकृतः खमुञेव विधातव्यः? अशक्यः खमुञ् विधातुम्; खमुञ्प्रत्यये हि मकारान्तत्वनिपातनमव्ययार्थं विज्ञायते,ततश्च "च्वौ च" ६।३।६३ इति दीर्घत्वं स्यादेव। णमुलि सति सर्वविधयपवादस्तु विज्ञायेत, तेन दीर्घत्वमपि न भवति। अवश्यञ्चोत्तरार्थं णमुल् विधेयः, न च तस्मिन्नुत्तरत्र विधीयमाने लाघवं भवति, नापीह गौरवम्। क्व पुनरर्थ एते प्रत्या भवन्तीत्याह-- "तुमरोथाधिकाराच्च" इत्यादि॥ "एते" इति। ये तुमर्थधिकारे विहिताः। "यद्येवम्" इति। यदि तुमर्थे भवन्तीत्यर्थः। "भुजिप्रत्ययेन" इत्यादि। यद्यपि णमुलाऽनभिहितः कत्र्ता, तथापि भुजिप्रत्ययेन लटाभिहित इति न भवितव्यं तृतीयया। ननु च शक्तिलक्षणः कत्र्ता, अन्या च स्वादुकरणविषया शक्तिः, अन्या च भुजिक्रियाविषया, तत्र लटाभिहितायामपि भुजिक्रियाविषायायां शक्तावितरस्याः शक्तेः कर्तृसंज्ञाया अनभिधानात् {प्राप्नोतीत्येव-मुद्रितः पाठः} प्राप्नोत्येव तृतीयेत्याह-- "न चास्मिन्" इत्यादि। अत्र हि समानकर्त्तृकप्रकरणे शक्तमतः शक्तीनाञ्च भेदो न विवक्ष्यते। तेन शक्तिमान् देवदत्तः कत्र्ता। स चैक एवाभिहितश्चेति कुतस्ततीयाप्रसङ्गः। किं कारणं भेदेनोपादानं न विवक्षितम्? इत्याह-- "समानकर्त्तृकत्वे हि" इत्यादि। अभ्युपगम्यापि भेदविवक्षाम्, परिहारान्तरमाह-- "प्रधानशक्त्यभिधाने" इत्यादि। किं कृतः पुनरत्र कर्त्तृशक्त्योः प्रधानगुणभावः? क्रियाकृतः; स्वादुङ्कारं हि गुणभूतम्, भुजिक्रियार्थत्वात्। भुजिक्रिया तु प्रधानम्; तेनोपकार्यत्वात्। क्रियायाश्च गुणप्रदानभावात् तद्विषययोरपि कर्त्तृशक्त्योः प्रधानगुणभावो भवति। तत्र प्रधानशक्ताविभिहितायामप्रदानशक्तिरभिहितत्वात् प्रकाशते = प्रतिभासते; प्रधानानुयायित्वाद्()गुणानाम्। तेन तृतीया न भवतीति भावः॥

तत्त्व-बोधिनी

स्वादुमि णमुल् १६११, ३।४।२६

स्वादुमि। "स्वांदुमी"त्यर्थग्रहणं, व्याख्यातम्। तदाह-- स्वाद्वर्थेष्विति। मान्तवमिति। ननु "स्वादौ" इत्येव सूत्रमस्तु, मास्त्वत्र णमुल्। खमुञेवानुवर्त्यताम्। "अरुर्द्विष"दिति मुम्भविष्यति। एवं च निपातनं विनापि मान्तत्वं सिध्यतीति

महल्लाघवमिति चेन्मैवम्। च्व्यन्तस्य मुम्न स्यात्, अनव्ययस्येति वचनात्, ततश्च स्वादुङ्कारमित्यत्र "च्वौ चे"ति दीर्घः स्यात्, "सम्पन्नङ्कारः" मित्यादिषु "अस्य च्वौ" इतीत्वं स्यात्। किं च स्त्रियां "वोतो गुणवचना"दिति ङीषि स्वाद्वीकारमिति स्यादतोऽत्र स्वादुमिति रूपं निपात्यते। ततश्चानजन्तत्वान्नेत्त्वदीर्घौ, न वा ङीष्। निपातनमिह भावप्रत्ययमात्रविषकम्। तेन स्वादुङ्कृत्वेत्यपि सिध्यति। स्यादेतत्-- उक्तदोषपरिहाराय "स्वादुमी"त्येव सूत्रमङ्गीक्रियतां, णमुल्तु त्यज्यतां, कृञः खमुञि कृतेषऽपि "स्वादुङ्कार"मित्यादिरूपसिद्धरिति चेन्मैवम्। तथा सत्युत्तरसूत्रेषु सन्निहितत्वात् खमुञेवाऽनुवर्तत इति कन्यादर्शनं ब्राआह्णवेदमित्यादिषु पूर्वपदस्य मुमागमः स्यादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

अन्यथाएवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३।४।२७

कृञः इत्येव। अन्यथादिषु उपपदेसु कृञो णमुल् प्रत्ययो भवति, सिद्धाप्रयोगश्चेत् करोतेर् भवति। कथं पुनरसौ सिद्धाप्रयोगः? निरर्थकत्वान् न प्रयोगम् अर्हति इति एवम् एव प्रयुज्यते। अन्यथा भुङ्क्ते इति यवानर्थस्तावानेव अन्यथाकारं भुग्क्ते इति गम्यते। अन्यथाकारं भुङ्क्ते। एवङ्कारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। इत्थंकारं भुङ्क्ते। सिधाप्रयोगः इति किम्? अन्यथा कृत्वा शिरो भुङ्क्ते।

लघु-सिद्धान्त-कौमुदी

अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ८९०, ३।४।२७

एषु कृञो णमुल् स्यात्। सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत् कृञ्। व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्। एवङ्कारम्। कथङ्कारम्। इत्थङ्कारं भुङ्क्ते। सिद्धेति किम्? शिरोऽन्यथा कृत्वा भुङ्क्ते॥

लघु-सिद्धान्त-कौमुदी

इत्युत्तरकृदन्तम् ८९०, ३।४।२७

इति कृदन्तम्॥

लघु-सिद्धान्त-कौमुदी

८९०, ३।४।२७

अथ विभक्तयर्थाः

न्यासः

अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्। , ३।४।२७

"सिद्धाप्रयोगः" इति। सिद्धोऽप्रयोगो यस्य स तथोक्तः। "निरर्थकत्वात्" इत्यादि। अभिधेयाभावात् प्रयोजनाभावाद्वा निरर्थकत्वम्। "एवमेव" इति। निरर्थकत्वमेवेत्यर्थः। "अन्यथा भुङ्क्ते" इत्यादिना तदेवानर्थकत्वं चेतसि कृत्वा सिद्धाप्रयोगतां दर्शयति। अन्यथा भुङ्क्ते इति यावानेवार्थः करोतावप्रयुज्यमाने गम्यते तावानेवार्थः करोतावप्रयुज्यमाने गम्यते तावानेवार्थोऽन्यथाकारं भुङ्क्त इति करोतौ प्रयुज्यमानेऽपि। तस्मादनर्थकः करोतिः। कथं पुनः प्रयुज्यमान एवानर्थको भवति? अन्यथादयएते प्रकारवचनाः, ते यदानुप्रयोगधातोरर्थस् प्रकारमाचक्षते तदा कृञपि तैर्विशेष्यमाणस्तदीयप्रकारमाचष्टे, गचान्यत एवावगत इत्यनर्थको भवति। यद्येवम्, अवगतार्थत्वात् तस्य प्रयोगो न

प्राप्नोति? नैवम्; अवगतार्थमपि प्रयोगो दृश्यते-- अपूपौ द्वावानय, पचाम्यहमिति। "अन्यथा कृत्वा शिरो भुङ्क्ते" इत्यत्रान्यथाशब्देन पदान्तरस्य शिरसः प्रकारमाख्यायते। स विना करोतिना नावगम्यते। यदि हि करोतिर्न प्रयुज्येत, भुजिक्रियागत एव प्रकारोऽन्यथालक्षणः प्रतीयतेत, न शिरोगतः। शिरसस्तु भुज्यमानतैवावगम्येत। तस्मान्नात्र करोतिः शिद्धाप्रयोगः॥

तत्त्व-बोधिनी

अन्यथैवङ्कथमित्थंसु सिद्धाऽप्रयोगश्चेत् १६१२, ३।४।२७

व्यर्थत्वादिति। निष्प्रयोजनत्वादित्यर्थः। तदेतद्दर्शयति--इत्थं भुङ्क्त इत्यर्थ इति। इह शाब्दबोधे विशेषसत्त्वेऽपि फलितार्थः। कथनपरतया कारमिति णमुलन्तस्य निष्फलत्वमुक्तम्, अनतिप्रयोजनत्वात्। विस्तरस्तु मनोरमादावनुसन्धेयः। शिरोऽन्यतेति। इह शिरोऽन्यथा कृत्वौदनादिकं भुङ्क्त इत्यर्थलाभाय करोतेः प्रयोग आवश्यकः। तदभावे तु भुजिक्रियागत एव प्रकारो गम्येत न तु शिरसोऽन्यथाकरणम्, अतः करोतेः प्रयोगार्हत्वमस्तीति णमुलन्तः करोतिरिह न प्रयुज्यत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

यथातथयोरसूयाप्रतिवचने ३।४।२८

कृञः सिद्धाप्रयोगे इति वर्तते। यथातथशब्दयोरुपपदयोः कृञो णमुल् प्रत्ययो भवति असूयाप्रतिवचने गम्यमाने। यद्यसूयन् पृच्छति प्रतिवक्ति तत्र प्रतिवचनम् , यथाकारम् अहं भोक्ष्ये, तथाकारम् अहं, किं तवानेन? असूयाप्रतिवचने इति किम्? यथा कृत्वा ऽहं भोक्ष्ये, तथा त्वं द्रक्ष्यसि। सिद्धाप्रयोगे इत्येव, यथा कृत्वा ऽहं शिरो भोक्ष्ये, किं तवानेन।

न्यासः

यथातथयोरसूयाप्रतिवचने। , ३।४।२८

"असूयाप्रतिवचने" इति। असूयाप्रभवं प्रतिवचनमसूयाप्रतिवचनम्। "यद्यसूयन्" इत्यादि। असूयन्निति शत्रन्तमेतत्। कण्ड्वादियगन्तः। अस्य प्रतिवक्तीत्यनेन सम्बन्धः। प्रतिवक्ति = प्रतिभणति, प्रतिवचनं वदातीत्यर्थः। "पृच्छति" इति। सप्तम्यन्तमेतत्। पृच्छति सति यद्यसूयन् = असूयां कुर्वन् प्रतिवक्ति तदा तत्र पृच्छति यत् प्रतिवचनं तदसूयाप्रतिवचनम्। "यथाकारम्" इत्यादि। कथं भवान् भोक्ष्यते इत्येवं वचनं पृच्छति सत्यसूयाप्रतिवचनम्। "यथाकारम्" इत्यादि। कथं भवान् भोक्ष्यते इत्येवं वचनं पृच्छति सत्यसूयाप्रतिवचनमेतत्। "यथा कृत्वाऽहं भोक्ष्ये तथा द्रक्ष्यसि" इति। नैतदसूयाप्रतिवचनम्। किं तर्हि? तद्व्याख्यानम्॥

तत्त्व-बोधिनी

यथातथयोरसूयाप्रतिवचने १६१३, ३।४।२८

यथाकारमिति। प्रष्टुमनर्हः सन्यदि पृच्छति तदेदमुत्तरम्। अत्रापि वाऽसरूपन्यायेन पक्षे क्त्वाप्रत्ययो बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

कर्मणि दृशिविदोः साकल्ये ३।४।२९

कर्मण्युपपदे साकल्यविशिष्टे ऽर्थे दृशिविदोः धात्वोः णमुल् प्रत्ययो भवति। कन्यादर्शं वर्यति। याः याः कन्याः पश्यति तास्ताः वर्यति इत्यर्थः। ब्राह्मणवेदं भोजयति। यं यं ब्राह्मणं जानाति लभते विचारयति वा तान् सर्वान् भोजयति इत्यर्थः। साकल्ये इति किम्? ब्राह्मणं दृष्ट्वा भोजयति।

न्यासः

कर्मणि दृशिविदोः साकल्ये। , ३।४।२९

"कर्मण्युपपदे साकल्यविशिष्टे" इति। एतेन साकल्यग्रहणं कर्मविशेषणमिति दर्शयति। "{यं यं ब्राआह्नणं जानाति--काशिका"} यं यं जानाति लभते विचारयति वा" इति। एतेन ज्ञानलाभविचारणार्थानां विदीनां ग्रहणमिति दर्शयति। कुतः पुनः सत्तार्थस्य ग्रहणं न भवति? तस्याकर्मकत्वात्, कर्मणीति चोपादानात्॥

तत्त्व-बोधिनी

कर्मणि दृशिविदोः साकल्ये १६१४, ३।४।२९

कन्यादर्शमिति। अत्र दर्शनविषयीभूतानां सर्वासां कन्यानां वाक्यार्थऽन्वयात्साकल्यं बोध्यम्। सर्वा इति। दर्शनविषयीभूताः सर्वा इत्यर्थः। अतिशयप्रतिपादनपरमेतत्। ब्राआह्नणवेदमिति। विद ज्ञाने, विद्लृ लाभे, विद विचारमे इति धात्वर्थान्पर्यालोच्य व्याचष्टे-- जानातीत्यादि। सत्तार्थस्य विदेरनेकार्थत्वान्नेह ग्रहणमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

यावति विन्दजीवोः ३।४।३०

यावच्छब्द उपपदे विन्दतेर् जीवतेश्च णमुल् प्रत्ययो भवति। यावद्वेदं भुङ्क्ते। यावल्लभते तावद्भुङ्क्ते इत्यर्थः। यावज्जीवम् अधीते। यावज्जीवति तावदधीते इत्यर्थः।

न्यासः

यावति विन्दजीवोः। , ३।४।३०

"विन्दतेः" इति। "विद्लृ लाभे" (धा।पा।१४३२) इत्यस्य॥

तत्त्व-बोधिनी

यावति विन्दजीवोः १६१५, ३।४।३०

यावति विन्द। विदेर्लाभार्थस्यानुकरणम्। तस्य हि "विन्दती"त्यादौ "शे मुचादीना"मिति नुमस्ति। यावल्लभत इति। असाकल्यमनेन दर्शयति। साकल्ये हि "कर्मणि दृशिविदो"रित्यनेनैव सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

चर्मौदरयोः पूरेः ३।४।३१

कर्मणि इत्येव। चर्मोदरयोः कर्मणोरुपपदयोः पूर्यतेः णमुल् प्रत्ययो भवति। चर्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते।

न्यासः

चर्मोदरयोः पूरेः। , ३।४।३१

"पूरयतेः" इति। एतेन निर्देशे ण्यन्तस्येदं ग्रहणमित्याचष्टे। इह कर्मणीति वत्र्तते। न चाण्यन्तस्य पूरेः कर्म सम्भवति; अकर्मका हि धातवो ण्यन्ताः सकर्मका भवन्ति। तस्माण्ण्यन्तस्येदं ग्रहणं विज्ञायते॥

तत्त्व-बोधिनी

चर्मोदरयोः पूरेः १६१६, ३।४।३१

चर्मोदर। कर्मणीत्येवेति। एवं च पूरेरिति ण्यन्तस्य निर्देशो, न तु केवलस्य "इक्श्तिपौ" इति इका निर्देशः। तस्याऽकर्मकत्वादिति भावः। चर्मपूरमित्यादि। चर्म पूरयित्वा। उदरं पूरयित्वा उदरपूरणविशिष्टाभुजिक्रियेत्यर्थः। इह पूर्वकाले इति न संबध्यतेऽसंभवात्, अप्रतीतेश्च। एवमन्यत्रापि यथासंभवं बोध्यम्। उदरपूरणविशिष्टाभुजिक्रियेत्यर्थः। इह पूर्वकाले इति न संबध्यतेऽसंभवात्, अप्रतीतेश्च। एवमन्यत्रापि यथासंभवं बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

वर्षप्रमाण ऊलोपश् च अस्य अन्यत्रस्याम् ३।४।३२

कर्मणि इत्येव। पूरयतेः धातोः णमुल् प्रत्यय् भवति, ऊलोपश्च अस्य पूरय्तेरन्यतरस्यां भवति, समुदायेन चेद् वर्षस्य प्रमाणम् इयत्ता गम्यते। गोष्पदपूरं वृष्टो देवः, गोष्पदप्रं वृष्टो देवः। सीतापूरं वृष्टो देवः, सीताप्रं वृष्टो देवः। अस्य ग्रहणं किमर्थम्। उपपदस्य मा भूत्। मूषिकाबिलपूरं वृष्टो देवः, मूषिकाबिलप्रम्।

न्यासः

वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्। , ३।४।३२

"समुदायेन" इति। प्रकृतिप्रत्ययोपपदसमुदायेन। एतेन वर्षप्रमाणस्य समुदायोपाधित्वं दर्शयति। "अस्यग्रहणं किमर्थम्" इति। प्रकृतत्वात् पूरयतेः, अस्येति वचनमन्तरेणापि तस्यैव लोपो विज्ञास्यत इत्यभिप्रायः। "उपपदस्य मा भूत्" इति। यद्यस्येति नोच्येत ततो यथा वर्षप्रमाणं समुदायोपाधिर्विज्ञायते, ऊलोपोऽपि तथा समुदायोपाधिर्विज्ञायेत। प्कृतिप्रत्ययोपपदस्य समुदायस्य य ऊकारान्तस्य लोपो भवतीति, ततश्चोपपदस्यापि स्यात्। तस्मात् मा भूदेष दोष इति "अस्य" इत्युच्यते॥

तत्त्व-बोधिनी

जान्तनशां विभाषा १५९८, ३।४।३२

खात्वना। खनित्वेति। "उदितो वे"ति वेट्।

---

सूत्रम्

काशिका-वृत्तिः

चेले क्नोपेः ३।४।३३

कर्मणि इत्येव। क्नूयी शब्दे उन्दने च, अस्माण्ण्यन्ताद् धातोः चेलर्थेषु कर्मसु उपपदेषु णमुल् प्रत्ययो भवति, वर्षप्रमाणे गम्यमाने। चेलक्नोपं वृष्टो देवः। वस्त्रक्नोपम्। वसनक्नोपम्।

न्यासः

चेले क्नोपेः। , ३।४।३३

"ण्यन्तात्" इति। सपुक्कस्यायां निर्देशः। पुक् च "अर्त्तिह्री" ७।३।३६ इत्यादिना णावेव परतो भवतीति। तस्मादत एव निर्देशाण्ण्यन्तताऽवगम्यते। "चेलार्थेषु"इति। चेलमर्थो येषामिति बहुव्रीहिः। एतेन "चेल" इत्यस्यार्थग्रहणतां दर्शयति। अर्थग्रहणे च या युक्तिः सा "स्वादुमि णमुल्" ३।४।२६ इत्यत्रोक्ता, सैवेहार्थग्रहणे द्रष्टव्या। "चेलक्नोपम्" इति। वलि यलोपः, "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः, णिलोपः॥

तत्त्व-बोधिनी

चेलेक्नोपेः १६१७, ३।४।३३

चेलेः। व्याख्यानादर्थग्रहणमित्याहुः। चेलार्थेष्विति। चेलक्नोपमित्यादि। यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इत्यर्थः। अन्ये तु क्नूथी क्लेदने, क्लिदू आद्रीभावे इत्येवं क्नोपयति ममुलन्तस्य प्रकृत्यर्थ पर्यालोच्य यथा वर्षमेन चेलान्याद्रीभवन्ती तावद्वृष्ट इति व्याचख्युः।

---

सूत्रम्

काशिका-वृत्तिः

निमूलसमूलयोः कषः ३।४।३४

कर्मणि इत्येव। निमूलसमूलशब्दयोः कर्मवाचिनोरुपपदयोः कषेः धातोः णमुल् प्रत्ययो भवति। निमूलकाषं कषति। समूलकाषं कषति। निमूलं समूलं कषति इत्यर्थः। इतः प्रभृति कषादीन् यान् वक्ष्यति तत्र कषादिषु यथाविध्यनुप्रयोगः ३।४।४६ इति।

न्यासः

निमूलसमूलयोः कषः। , ३।४।३४

"कषः" इति। "कष शिष" (धा।पा।६८५,६८७) इति हिंसार्थधातुवर्गे पठ()ते॥

तत्त्व-बोधिनी

निमूलसमूलयोः कषः १६१८, ३।४।३४

निमूलमिति। नियतं मूलमस्य निमूलम्। सह मूलेन समूलम्। निमूलसमूलकषणाऽभिन्नं कषणमिति शाब्दबोधः। तेनेति। अत्रेदं बोध्यं-- सामान्यं विशेष्यं, विशेषस्तु विशेषणम्। "आम्रो वृक्ष" इत्यादौ आम्रो विशेषणं, वृक्षस्तु विशेष्यमिति सर्वजनानुभवात्। ततश्चात्र निमूलकषणादिकं विशेषणं, केवलषणं तु विशेष्यमिति।

---

सूत्रम्

काशिका-वृत्तिः

शुष्कचूर्णरूक्षेषु पिषः ३।४।३५

कर्मणि इत्येव। शुष्कादिषु कर्मवाचिषु उपपदेषु पिषेर् धातोः णमुल् प्रत्ययो भवति। शुष्कपेषं पिनष्टि। शुष्कं पिनष्टि इत्यर्थः। चूर्णपेषं पिनष्टि। चूर्णं पिनष्टि इत्यर्थः। रूक्षपेषं पिनष्टि। रूक्षं पिनष्टि इत्यर्थः।

न्यासः

शुष्कचूर्षरूक्षेषु पिधः। , ३।४।३५

"पिषः" इति। "पिष्लृ सञ्चूर्णने" (धा।पा।१४५२)॥

---

सूत्रम्

काशिका-वृत्तिः

समूलाकृतजीवेषु हन्कृञ्ग्रहः ३।४।३६

कर्मणि इत्येव। समूल अकृत जीव इत्येतेषु शब्देषु कर्मसु उपपदेषु यथासङ्ख्यं हन् कृञ् ग्रह इत्येतेभ्यो धातुभ्यो णमुल् प्रत्ययो भवति। समूलघातं हन्ति। समूलं हन्ति इत्यर्थः। अकृतकारं करोति। जीवग्राहं गृह्णाति।

न्यासः

समूलाकृतजीवेषु हन्कृञ्ग्रहः।, ३।४।३६

"समूलघातम्" इति। "हो हन्तेर्ञ्णिन्नेषु" ७।३।५४ इति कुत्वम्, "हनस्तोऽचिण्णलोः" ७।३।३२ इति तत्वम्॥

---

सूत्रम्

काशिका-वृत्तिः

करणे हनः ३।४।३७

करणे उपपदे हन्तेर् धातोः णमुल् प्रत्ययो भवति। पाणिघातं वेदिं हन्ति। पादघातं भूमिं हन्ति। हिंसार्थानां च समानकर्मकाणाम् ३।४।४८। इति णमुलं वक्ष्यति। अहिंसार्थो ऽयम् आरम्भः। नित्यसमासार्थो वा यथा विध्यनुपर्योगार्थश्च। पूर्वविप्रतिषेधेन हन्तेः हिंसार्थस्य अपि प्रत्ययो ऽनेन एव इष्यते। असिघातं हन्ति। शरघातं हन्ति।

न्यासः

करणे हनः।, ३।४।३७

"अहिंसार्थोऽयमारम्भःट इति। हिंसायाम् "हिंसार्थानाम्" ३।४।४८ इति वक्ष्यमाणेन सिद्धत्वा। "नित्यसमासार्थः" इति। हिंसार्थस्यापीति शेषः। "उपपदमतिङ्" २।२।१९ इति नित्यसमासो यथा स्यादित्येवमर्थोऽयमारम्भः। तेन तु प्रत्यये सति "तृतीयाप्रभृतीन्यन्यतरस्याम्" २।२।२१ इति विकल्पेन स्यात्। "यथाविध्यनुप्रयोगार्थश्च" इति। "कषादिषु यथाविध्यनुप्रयोगः" ३।४।४६ इति। यस्माद्धातोर्णमुल् विहितस्तस्यैवानुप्रयोगो यथा स्यात्, तेन तु प्रत्यये धात्वन्तर्सयानुप्रयोगः स्यात्। ननु च यता हन्तिर्हिंसार्थो भवति तदा परत्वात् तेनैव भवितव्यम्, तत्कथं नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्च हिंसार्थस्य हन्तेरयमारम्भो युज्यते? इत्यत आह-- "पूर्वविप्रतिषेधेन" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

स्नेहने पिषः ३।४।३८

करने इत्येव। स्निह्यते येन तत् स्नेहनम्। स्नेहनवाचिनि करणे उपपदे पिषेर् धातोः णमुल् प्रत्ययो भवति। उदपेषं पिनष्टि। तैलपेषं पिनष्टि। तैलेन पितष्टि इत्यर्थः।

न्यासः

स्नेहने पिपः।, ३।४।३८

"स्नेहनवाचिनि" इत्यनेन "स्नेहने" इत्यस्यार्थमाचष्टे॥

तत्त्व-बोधिनी

स्नेहने पिषः १६१९, ३।४।३८

स्नेहने। "शुष्कचूर्णे"ति सूत्रे एव स्नेहनग्रहणं न कृतम्। तत्र हि "कर्मणि दृशिविदो"रिति सूत्रात्कर्मणीत्यनुवर्तते, इह तु पूर्वसूत्रात्करण इत्यनुवर्तनीयमिति।

---

सूत्रम्

काशिका-वृत्तिः

हस्ते वर्तिग्रहोः ३।४।३९

करणे इत्येव। हस्ते इत्यर्थग्रहणम्। वर्तिः ण्यन्तः। हस्तवाचिनि करणे उपपदे वर्तयतेः गृह्णातेश्च णमुल् प्रत्ययो भवति। हस्तेन वर्तयति, हस्तवर्तं वर्तयति। करवर्तम्। पाणिवर्तम्। ग्रहेः खल्वपि हस्तेन गृह्णाति, हस्तग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम्।

न्यासः

हस्ते वर्त्तिग्रहोः। , ३।४।३९

"वर्त्तिण्र्यन्तः" इति। निर्देशादेव वर्तेण्र्यन्तत्वं प्रतीयते॥

तत्त्व-बोधिनी

हस्ते वर्तिग्रहोः १६२०, ३।४।३९

हस्ते। हस्त इत्यर्थग्रहणं, तदाह-- हस्तार्थे इति।

---

सूत्रम्

काशिका-वृत्तिः

स्वे पुषः ३।४।४०

करणे इत्येव। स्वे इत्यर्थग्रहणम्। स्ववाचिनि करणे उपपदे पुषेर् धातोः णमुल् प्रत्ययो भवति। आत्मीयज्ञातिधनवचनः स्वशब्दः। स्वपोषं पुष्णाति। आत्मपोषम्। गोपोषम्। पितृपोषम्। मातृपोषम्। धनपोषम्। रैपोषम्।

न्यासः

स्वे पुपः। , ३।४।४०

"स्वपोषम्" इति। आत्मवाचिनी स्वशब्द उपपदे प्रत्ययः। "गोपोषम्" इति। आत्मीयवाचिनि। "धनपोषम्" इति धनवाचिनि। "पितृपोषम्" इति ज्ञातवाचिनि॥

---

सूत्रम्

काशिका-वृत्तिः

अधिकरणे वन्धः ३।४।४१

अधिकरणवाचिनि उपपदे बध्नातेः धातोः णमुल् प्रत्ययो भवति। चक्रबन्धं बध्नाति। कूटबन्धं बध्नाति। मुष्टिबन्धं बध्नाति। चोरकबन्धं बध्नाति। चोरके बध्नाति इत्यर्थः।

न्यासः

अधिकरणे बन्धः। , ३।४।४१

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् ३।४।४२

संज्ञायां विषये बध्नातेः धातोः णमुल् प्रत्ययो भवति। क्रौञ्चबन्धं बध्नाति। मयूरिकाबन्धं बध्नाति। मयूरिकाबन्धं बधः। अट्टालिकाबन्धं बद्धः। बन्धविशेषाणां नामधेयानि एतानि।

न्यासः

संज्ञायाम्। , ३।४।४२

---

सूत्रम्

काशिका-वृत्तिः

कर्तोर् जीवपुरुषयोर् नशिवहोः ३।४।४३

जीवपुरुषयोः कर्तृवाचिनोरुपपदयोः यथासङ्ख्यं नशिवहोः धात्वोः णमुल् प्रत्ययो भवति। जीवनाशं नश्यति। जीवो नश्यति इत्यर्थः। पुरुषवाहं वहति। पुरुषः प्रेष्यो भूत्वा वहति इत्यर्थः। कर्तरि इति किम्? जीवेन नष्टः। पुरुषेणोढः।

न्यासः

कत्र्रोर्जीवपुरुषयोर्नशिवहोः। , ३।४।४३

"नष्टः" इति। नशेव्र्रश्चादिसूत्रेण ८।२।३६ षत्वम्, "मस्जिनशोर्झलि" ७।१।६० इत्यागमस्य नुमः "अनिदिताम्"६।४।२४ इत्यादिना लोपः। "पुरुषेणोढः" इति। वहेर्वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्, "सम्प्रसारणाच्च" ६।१।१०४ इति परपूर्वत्वम्, "हो ढः" ८।२।३१, "झषस्तथोर्धोऽधः" ८।२।४०, "ष्टुना ष्टुः" ८।४।४०, "ढो ढे लोपः" ८।३।१३, "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।१११ इति दीर्घः॥

---

सूत्रम्

काशिका-वृत्तिः

ऊर्ध्वे शुषिपूरोः ३।४।४४

कर्तृग्रहणम् अनुवर्तते। ऊर्ध्वशब्दे कर्तृवाचिनि उपपदे शुषिपुरोः धात्वोः णमुल् प्रत्ययो भवति। ऊर्ध्वशोषं शुष्यति। ऊर्ध्वं शुष्यति इत्यर्थः। ऊर्ध्वपूरं पूर्यते। ऊर्ध्वं पूर्यते इत्यर्थः।

न्यासः

ऊर्ध्वे शुषिपूरोः। , ३।४।४४

"ऊध्र्वं पूर्यते" इति। ऊध्र्वं पूरितो भवतीत्यर्थः। अनुदात्तेत्त्वादात्मनेपदम्, दिवादित्वच्छयन्॥ "घृतनिधायम्" इति। पूर्ववद् युक्॥

---

सूत्रम्

काशिका-वृत्तिः

उपमाने कर्मणि च ३।४।४५

उपमीयते ऽनेन इत्युपमानम्। उप्माने कर्मणि उपपदे, चकारात् कर्तरि, धातोः णमुल् प्रत्ययो भवति। घृतनिधायं निहितः। घृतम् इव निहितः इत्यर्थः। सुवर्णनिधायं निहितः। सुवर्णम् इव निहितः इत्यर्थः। कर्तरि खल्वपि अजकनाशं नष्टः। अजक इव नष्टः। चूडकनाशम्। दन्तनाशम्।

---

सूत्रम्
काशिका-वृत्तिः
कषादिषु यथाविध्यनुप्रयोगः ३।४।४६

निमूलसमूलयोः इत्येतदारभ्य कषादयः। एतेषु यथाविध्यनुप्रयोगो भवति। यस्माद् धातोः णमुल् प्रत्ययो भवति स एव अनुप्रयोक्तव्यः। ननु धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगः सिद्ध एव? यथाविधि इति नियमार्थं वचनम्, तथा च एव उदाहृतम्।
न्यासः
कषादिषु यथाविध्यनुप्रयोगः। , ३।४।४६

तत्त्व-बोधिनी
कषादिषु यताविध्यनुप्रयोगः १६२२, ३।४।४६

तथैवेति। "निमूलकाषं कषती"त्याद्युदाह्रतमित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
उपदंशस् तृतीयायाम् ३।४।४७

दंश दशने, अस्माद् धतोरुपपूर्वात् तृतीयान्ते उपपदे णमुल् प्रत्ययो भवति। मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशम्। आऋद्रकोपदंशम्, आर्द्रकेणोपदंशम्। अत्र विकल्पेन उपपदसमासः तृतीयाप्रभृतीन्यन्तरस्याम् २।२।२१। मूलकादि चोपदंशेः कर्म। भुजेः करणम्। सर्वस्मिन्नेव अत्र णमुल्प्रकरणे क्रियाभेदे सति वासरूपविधिना क्त्वापि भवति। मूलकेनोपदश्य भुङ्क्ते।
न्यासः
उपदंस्तृतीयायाम्। , ३।४।४७

इह "मूलकेनोपदंशं भुङ्क्ते" इत्यादौ करणे तृतीया, तदन्तं मूलकाद्युपपदम्। तच्च करणमुदंशेर्वा स्यात्, भुजेर्वा? तत्रोपदंशेस्तावन्नोपपद्यते; अन्यस्मिन् {ह्युपदिश्यमाने-मुद्रितः पाठः} ह्युपदंश्यमानेऽन्यत् करणं भवति, इह च तदेव मूलकाद्युपदश्यते, नापरं किञ्चित्। भुजिं तु प्रत्युपपद्यत एव करणभावः, किन्तूपपदसंज्ञा न स्यात्, तदभावदुपपदसमासश्च; यस्मादुपपदमिति महत्याः संज्ञायाः करणं समर्थपरिभाषाया व्यापार्थम्, तेनेह तस्यामुपस्थितायां यमेव प्रति यस्य सामथ्र्य तमेव प्रति तस्योपपदसंज्ञाया भवितव्यम्। भुजिं तु प्रति तस्योपपदसंज्ञया भवितव्यम्। भुजिं तु प्रति मूलकादेः सामथ्र्यम्, नोपदंशि प्रतीति चोद्यमाशङ्क्याह-- "मूलकादि चोपदंशे" इत्यादि। यद्यपि भुजिं प्रति मूलकादेः करणभावः तथाप्युपदंशिना सह सामथ्र्यमुपपद्यत एव; यतस्तस्य कर्म। न च भुजिना सरह

सम्बन्धे सत्युपदंशिना सह सम्बन्धो निवत्र्तते; विरोधाभावात्। तस्मादुपपद्यत एवोपपदत्वम्, त()स्मश्च सत्युपपदसमासः। "क्रियाभेदे सति"इति। क्रियाभेदग्रहणेन क्त्वाप्रत्ययविषयमुपलक्षयति। यत्र क्रियाणां पौर्वापर्यं समानकर्तृकत्वञ्च स क्त्वाप्रत्ययस्य विषयः। एतच्चोभयं क्रियाभेदे सति भवतीति क्त्वाप्रत्ययस्य विषय उपलक्ष्यते। "मूलकेनोपदश्य भुङ्क्ते" इति। "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः॥

तत्त्व-बोधिनी

उपदंशस्तृतीयायाम् १६२३, ३।४।४७

मूलकोपदंशमिति। अयमर्थः-- मूलकेन भुङ्क्ते। किं कृत्वा?। उपदस्य। किमुपदश्य?। अर्थान्मूलकमिति संबध्यते। एतावतैवेति। शाब्दान्वयाऽभावेऽपि आर्थिकान्वयमात्रेणेत्यर्थः। वचनसामथ्र्यादिति। यदि हि तृतीयान्तेव शाब्दान्वये सत्येव प्रत्ययो भवेत्तर्हि "करणे हनः"इति वत् "उपदंशः करणे" इत्येव ब्राऊयात्। ततश्च क्रियान्तरं प्रति करणत्वं मूलकेनेत्यस्येष्टमिति भावः। एतच्च मनोरमाग्रन्थानुसारेणोक्तम्।अत्र केचित्त--नन्वेवम् "उपदंशः कर्मणी"त्येव सूत्रमस्तु। अथवोपदंश इत्येवाऽस्तु। "उपमाने कर्मणी"त्यतः कर्मणीत्यनुवत्र्य कर्मण्युपपदे उपपूर्वकाद्दशेर्णमुलिति व्याख्यायतां, किमनया कुसृष्ट()एति। न चैवं कर्मण्युपपदे नित्यसमासः स्यादिति वाच्यं, करणे इत्युक्तेऽप्युक्तदोषस्य तुल्यत्वात्। न च "तृतीयाप्रभृतीनी"ति सूत्रे "करणप्रभृतीनी"त्युक्ते नास्त्येव दोषः, "करणे हनःर" इत्यारभ्य विकल्प इति सन्देहवारणाय "व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षण"मिति परिभाषास्वीकारादिति वाच्यं, "तृतीयाप्रभृतीनी"ति सूत्रे "कर्मणिप्रभृतीनी"ति सूत्रे "कर्मणिप्रभृतीनी"त्युक्तेऽपि दोषाऽभावात्। "कर्मण्याक्रोशे कृञः खमुञ्" "कर्मण#इ दृशिविदो" रित्यारभ्य वा विकल्प इति सन्देहस्य "व्याख्यानतो विशेषप्रतिपत्तिः" रिति परिभाषया वारयितुं शक्यत्वात्। तस्मात् "उपदंशः करणे" इत्येव ब्राऊया"दिति मनोरमा चिन्त्येत्याहुः। वस्तुतस्तु "कर्मणिप्रभृतीन्यन्यतरस्या"मित्युक्ते "उपमाने कर्मणि चे"त्यतः कर्मणीत्यनुवत्र्य "उपदंश" इत्येव सूत्रमिति स्वीकारपक्षे कषादिषु यथाविध्यनुप्रयोगोऽपि विकल्पेन स्यात्। मण्डूकप्लुत्याश्रयणं त्वगतिकगतिः। "उपदंशः कर्मणी"ति सूत्रस्वीकारपक्षेऽपि "मूलकोपदंश"मिति। "करणे प्रभृतीनी"ति मनरमोक्तौ तु समासाऽभावपक्षे "मूलकेनोपदंश"मिति सिध्यत्येव, करणतृतीयायाः प्रवृत्तेरिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

हिंसाऽर्थानां च समानकर्मकाणाम् ३।४।४८

तृतीयायाम् इत्येव। हिंसा प्राण्युपघातः। तदर्थानां धातूनाम् अनुप्रयोगधातुना समानकर्मकाणां तृतीयान्ते उपपदे णमुल् प्रत्ययो भवति। दण्डोपघातं गाः कालयति, दण्डेनोपघातम्। दण्डताडम्, दण्डेन ताडम्। समानकर्मकाणाम् इति किम्? चोरं दण्डेनोपहत्य गोपालको गाः कालयति।

न्यासः

हिंसार्थाञ्च समानसकर्मकाणाम्। , ३।४।४८

धातुसम्बन्धाधिकारादनुप्रयोगेण भवितव्यम्, द्विष्ठत्वात्। तत्र प्रत्यासत्तेरनुप्रयोगधात्वपेक्षयैव समानकर्मत्वं विज्ञायत इत्याह-- "अनुप्रयोगधातुना" इत्यादि। "कालयति" इति। "{वेल कालोपदेशे (काल इति पृथग्धातुरित्येके)-धा।पा। कल क्षेपे-धा।पा।} काल विक्षेपे (धा।पा।१८८०)। "दन्तताडम्" इति। "तड आघाते" (धा।पा।१५७९), चुरादिरेव। "दण्डेनाहत्य" इत्यादि। अत्र हन्तेश्चौरः कर्म , अनुप्रयोगधातोश्च गौरिति समानकर्मकत्वाभावः। तेन क्त्वाप्रत्यय एव भवति। "आहत्य"

इति। "अनुदात्तोपदेश" ६।४।३७ इत्यादिनाऽनुनासिकलोपः, "ह्रस्वस्य पिति कृति तुक्" ६।१।६९॥

तत्त्व-बोधिनी

हिंसार्थानां च समानकर्मकाणाम् १६२४, ३।४।४८

कालयतीति। कल विक्षेपे चुरादिः। प्रेरयतीत्यर्थः। दण्डताडमिति। तड आघाते। अयमपि चुरादिरेव।

---

सूत्रम्

काशिका-वृत्तिः

सप्तम्यां च उपपीडरुधकर्षः ३।४।४९

उपशब्दः प्रत्येकम् अभिसम्बध्यते। उपपूर्वेभ्यः पीडरुधकर्षेभ्यः सप्तम्यन्ते उपपदे, चकारात् तृतीयान्ते उपपदे, णमुल प्रत्ययो भवति। पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडम्, पार्श्वाभ्याम् उपपीडम्। व्रजोपरोधं गाः स्थाप्यति, व्रजे उपरोधम्, व्रजेनोपरोधम्। पाण्युपकर्षं धानाः संगृह्णाति, पाणावुपकर्षम्, पाणिनोपकर्षम्। कर्षतेरिदं ग्रहणं न कृषतेः।

न्यासः

सप्तम्यां चोपपीजरुधकर्षः। , ३।४।४९

"उपशब्दः प्रत्येकमभिसम्बध्यते" इति। रुधिकषिभ्यामुपपूर्वाभ्यामेव यथा स्यात्। "पार्(ाओपपीडम्" इति। "पीड अवगाहने" (धा।पा।१५४४), चुरादिः। "कर्षतेः" इत्यादि। "कृष विलेखने" (धा।पा।९९०, १२८६) भ्वादौ तुतादौ च पठ()ते, तत्रेह भौवादिकस्य ग्रहणम्, न तौदादिकस्य; शपा निर्देशात्। शपा निर्देशस्तस्य कृतगुणस्योच्चारणाल्लभ्यते॥

तत्त्व-बोधिनी

सप्तम्यां चोपपीडरुधकर्षः १६२५, ३।४।४९

सप्तम्यां चो। उपपूर्वेभ्य इति। सूत्रे पीडादीनां समाहारद्वन्द्वं कृत्वा उपपूर्वः पीडरुधकर्ष इति उत्तरपदलोपी समास इति भावः। इह सौत्रं पुंस्त्वं, पञ्चम्यर्थे प्रथमेति च ज्ञेयम्। कर्षेति शपा निर्देशः, कृष विलेखने इत्यस्य गुणसहितस्योच्चारणात्। तत्फलं तुदादेव्र्युदासः। यद्यपि विलेखन एव सोऽपि पठ()ते तथापि क्षेत्रविषयकविलेखन एव स प्रयुज्यते। पञ्चभिर्हलैः कर्षतीति दर्शनात्। एवं च तौदादकात् कृषेः क्त्वाप्रत्यय एव भवति, क्षेत्रे उपकृष्य, हलेनोपकृष्येति, न त्विह णमुलिति स्थितमाकरे।

---

सूत्रम्

काशिका-वृत्तिः

समासत्तौ ३।४।५०

सप्तम्याम् तृतीयायाम् इति वर्तते। समासत्तिः सन्निकर्षः। समासत्तौ गम्यमानायां तृतीयासप्तम्योः उपपदयोः धातोः णमुल् प्रत्ययो भवति। केशग्राहं युध्यन्ते, केशेषु ग्राहम्, केशैर् ग्राहम्। हस्तग्राहम्, हस्तेषु ग्राहम्, हस्तैर् ग्राहम्। युद्धसंरम्भादत्यन्तं सन्निकृष्यन्ते इत्यर्थः।

न्यासः

समासत्तौ। , ३।४।५०

"युद्धसंरभात्" इति। संरम्भः = मनः संक्षोभपूर्वको वाक्कायविकारविशेषः,युद्धाय संरम्भो युद्धसंरम्भः, तस्मादत्यन्तं

सन्निकृष्यन्ते, प्रत्यासीदन्तीति यावत्॥

तत्त्व-बोधिनी

समासत्तौ १६२६, ३।४।५०

समासत्तौ। केशग्राहमिति। केशेषु ग्रहणं भवतु वा, मा भूत्, सन्निकर्षप्रतिपादनपरमेतत्।

---

सूत्रम्

काशिका-वृत्तिः

प्रमाणे च ३।४।५१

तृतीयासप्तम्योः इत्येव। प्रमाणम् आयामः, दैर्घ्यम्। प्रमाणे गम्यमने तृतीयासप्तम्योः उपपदयोः धातोर् णमुल् प्रत्ययो भवति। द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति, द्व्यङ्गुले उत्कर्षम्, द्व्यङ्गुलेनोत्कर्षम्। त्र्यङ्गुलोत्कर्षम्।

न्यासः

प्रमाणे च। , ३।४।५१

"प्रमाणमायामः" इति। "आयामस्तु प्रमाणं स्यात्" इति वचनात्। दैघ्र्यमिति प्रसिद्धतरार्थेन शब्दान्तरेण प्रमाणशब्दस्यैवार्थं स्पष्टीकरोति। "द्व्यङ्गुलोत्कर्षम्" इति। द्व्योरङ्गुल्योः समाहारो द्व्यङ्गुलम्, "तत्पुरुषस्याङ्गुलेः" ५।४।८६ इत्यादिनाऽच्। तेन द्व्यङ्गुलेन खण्डिकाया देघ्र्यं परिच्छिद्यते॥

तत्त्व-बोधिनी

प्रमाणे च १६२७, ३।४।५१

द्व्यङ्गुलोत्कर्षमिति। द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्। "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" इत्च् समासान्तः। द्व्यङ्गुलेनोत्कृष्य। परिच्छित्येत्यर्थः। स्वल्पः खण्डः खण्डिका। ह्यस्वः खण्डः खण्डिकेति मनोरमायामुक्तम्। यद्यपि ह्यस्वशब्दो वामनपर्यायतया चेतनेष्वेव प्रायेण प्रयुज्यते, अल्पे ह्यस्वे इति पृथक्सूत्रस्वारस्यात्, तथापि ह्यस्वदीर्धत्यादिनिर्देशादचेतनेष्वपि क्वचिद्भवतीत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अपादाने परीप्सायाम् ३।४।५२

परीप्सा त्वरा। परीप्सायां गम्यमानायाम् अपादाने उपपदे धातोः णमुल् प्रत्ययो भवति। शय्योत्थायं धावति, शय्याया उत्थाय। एवं नाम त्वरते यदवश्यंकर्तव्यम् अपि न अपेक्षते। शय्योत्थानमात्रम् आद्रियते। रन्ध्रापकर्षं पयः पिवति। भ्राष्ट्रापकर्षमपूपान् भक्षयति। परीप्सायाम् इति किम्? आसनादुत्थाय गच्छति।

न्यासः

अपादाने परीप्सायाम्। , ३।४।५२

"शय्योत्थायम्िति। "उदः स्थास्तम्भोः पूर्वस्य " ८।४।६० इति पूर्वसवर् णः, "आतो युक्" ७।३।३३ एवम्" इत्यादिना परीप्सां दर्शयति। "रन्ध्रापकर्षम्" इति। एवं नाम त्वरते यत् पात्रमपि नापेक्षते, स्तनरन्ध्रादेवापकृष्य मुखेन पयः पिबतीत्यर्थः। "भ्राष्ट्रापकर्षम्" इति। एवं नाम त्वरते यद्भाजनमपि दीयमानं नापेक्षते, भ्राष्ट्रादेवापकृष्य हस्तेन भक्षयति॥

सूत्रम्
काशिका-वृत्तिः
द्वितियायां च ३।४।५३

परीपसायाम् इत्येव। द्वितीयान्त उपपदे परीप्सायां गम्यमानायां धातोः णमुल् प्रत्ययो भवति। यष्टिग्राहं युध्यन्ते, यष्टिं ग्राहम्। लोष्टग्राहम्, लोष्टं ग्राहम्। एवं नाम त्वरते यदायुधग्रहणम् अपि न अद्रियते। लोष्तादिकं यत् किंचिदासन्नं तद् गृह्णाति।
न्यासः
द्वितीयायाश्च। , ३।४।५३

तत्त्व-बोधिनी
द्वितीयायां च १६२८, ३।४।५३

द्वितीयायां। परीप्सायामित्येवेति। कथं तर्हि "अनुदात्तं पदमेकवर्ज"मिति, नह्मत्र त्वरा गम्यते?। अत्राहुः- अस्यां हि परिभाषायां त्वरा विवक्षिता। तेनयमर्थः--उदात्तः स्वरितो वा यत्र विधीयते तत्र तत्समकालमेवैकमचं वर्जयित्वा परिशिष्टमनुदात्तं कर्तव्यं, न विलम्बतिव्यमिति। यष्टिग्राहमित्यादि। एवं खलु युद्धाय त्वरन्ते यदासन्नं यष्ट()आदिकमपि गृहीत्वा धावन्ति नायुधं प्रतीक्षन्त इति भावः।

---

सूत्रम्
काशिका-वृत्तिः
स्वाङ्गे ऽध्रुवे ३।४।५४

द्वितीयायाम् इत्येव। अग्रुवे स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोः णमुल् प्रत्ययो भवति। अक्षिनिकाणं जल्पति। भ्रूविक्षेपं कथयति। अघ्रुवे इति किम्? उत्क्षिप्य शिरः कथयति। यस्मिनङ्गे छिन्ने ऽपि प्राणी न म्रियते तदघ्रुवम्। अद्रवम् मूर्तिमत् स्वाङ्गम्।
न्यासः
स्वाङेऽध्रुवे। , ३।४।५४

स्वाङ्गलक्षणमद्रवादि चतुर्थे वक्ष्यति। "अक्षिनिकाणम्" इति। "कण निमीलने" (धा।पा।१७१५), चुरादिर्निपूर्वः। "यस्मिन्नङ्गेच्छिन्ने प्राणी न म्रियते तद्ध्रतम्" इति। पाणिपादादिकम्। अध्रुवत्वं पुनस्तस्य जीवत्यपि प्राणिनि कदाचिदभावात्। यस्मिस्त्वङ्गे च्छिन्ने प्राणी म्रियते तद्()ध्रुवम्, शिरःप्रभृति। ध्रुवत्वं पुनस्तस्य सदा प्राणिनि सन्निवेशात्॥

---

सूत्रम्
काशिका-वृत्तिः
परिक्लश्यमाने च ३।४।५५

स्वाङ्गे, द्वितीयायाम् इत्येव। परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्ते उपपदे धातोः णमुल् प्रत्ययो भवति। परिक्लेशः सर्वतो विबाधनम्, दुःखनम्। उरःपेषं युध्यन्ते, उरःप्रतिपेषं युध्यन्ते। शिरःपेषम्, शिरःप्रतिपेषम्। कृत्स्नमुरः

पीडयन्तो युध्यन्ते। घ्रुवार्थो ऽयम् आरम्भः।

न्यासः

परिक्लिश्यमाने च।, ३।४।५५

"परिक्लेशः सर्वतो विबाधनम्" इति। सर्वतःशब्देन परिशब्दस्यार्थमाचष्टे। विबाधनशब्देनापि क्लिशेर्धातोः॥

---

सूत्रम्

काशिका-वृत्तिः

विशिपतिपदिस्कन्दाम् व्याप्यमानाऽसेव्यमानयोः ३।४।५६

द्वितीयायाम् इत्येव। द्वितीयान्ते उपपदे विश्यादिभ्यो धातुभ्यो णमुल् प्रत्ययो भवति, व्याप्यमाने आसेव्यमाने च अर्थे गम्यमाने। विश्यादिभिः क्रियाभिरनवयवेन पदार्थानां सम्बन्धो व्याप्तिः। तात्पर्यम् आसेवा। द्रव्ये व्याप्तिः, क्रियायामासेवा। गेहानुप्रविशम् आस्ते। समासेन व्याप्त्यासेवयोरुक्तत्वात् नित्यवीप्सयोः ८।१।४ इति द्विर्वचनं न भवति। असमासपक्षे तु व्याप्यमानतायां द्रव्यवचनस्य द्विर्वचनम्, आसेव्यमानतायां तु क्रियावचनस्य। तथा च वक्ष्यति सुप्सु वीप्स, तिङ्क्षु नित्यता इति। गेहं गेहम् अनुप्रवेशम् आस्ते। आसेवायाम् गेहम् अनुप्रवेशम् अनुप्रवेशम् आस्ते। पति गेहानुप्रपातम् आस्ते गेहं गेहम् अनुप्रपातम् आस्ते, गेहम् अनुप्रपातम् अनुप्रपातम् आस्ते। पदि गेहानुप्रपादम् आस्ते, गेहं गेहम् अनुप्रपादम्, गेहम् अनुप्रपादम् अनुप्रपादम्। स्कन्दि गेहावस्कन्दम् आस्ते, गेहं गेहम् अवस्कन्दम्, गेहम् अवस्कन्दम् अवस्कन्दम्। व्याप्यम् आनासेव्यमानयोः इति किम्? गेहम् अनुप्रविश्य भुङ्क्ते। ननु आभीक्ष्ण्ये णमुल् विहित एव, आसेवा आभीक्ष्ण्यम् एव, किम् अर्थं पुनरासेवायां णमुलुच्यते? क्त्वानिवृत्त्यर्थम् इति चेत्, न, इष्टत्वात् तस्य। द्वितीयोपपदार्थं तर्हि वचनम्, उपपदसमासः पक्षे यथा स्यात्। तेन हि सति उपपदाभावः।

न्यासः

विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः।, ३।४।५६

"विश्यादिभिः क्रियादिभिः" इति। आदिशब्देन पत्यादित्रयाणां ग्रहणम्। "अनवयवेन" इति। साकल्येन। "पदार्थानाम्" इति। गेहादीनाम्।"तात्पर्यम्" इति। क्रियाणां पौनःपुन्यमाभीक्ष्ण्यमित्यर्थः। "द्रव्ये व्याप्तिः" इत्यादिना व्याप्यमानासेव्यमानयोर्विषयविभागं दर्शयति। यदि व्याप्यमान आसेव्यमाने चार्थे प्रत्ययो भवति, एवञ्च सति तयोरर्थयोर्नित्यता वीप्सा च विद्यत इति "नित्यवीप्सयोः"८।१।४ इति द्विवचनेन भवितव्यम्, तत् कस्मान्न भवति? इत्याह-- "समानेन"इत्यादि। यद्यपि समासस्तयोरर्थयोर्न विधीयते, पुरस्तादेव प्रतिपादितम्। "तथा च वक्ष्यति"इति।भाष्यकारः। "सुप्सु वीप्सा "इति वचनात् "व्याप्तमानतायां द्रव्यवचनस्य द्विर्वचनं भवति"इत्युक्तं भवति। "तिङ्क्षु नित्यता"इति वचनात् "आसेध्यमानतायां क्रियावचनस्य द्विर्वचनं भवति" इत्युक्तं भवति। "गेहंगेहम्िति। द्रव्यमवचनस्य द्विर्वचमनम्। "गेहमनुप्रवेशमनुप्रवेशम्िति। क्रियावचनस्य।"ननु च"इत्यादि देश्यं "क्त्वानिवृत्त्यर्थम्ित्यादिना परमतमाशङ्क्य निराकरोति। स्यादेतत्, "आभीक्ष्ण्ये णमुल् च" ३।४।२२ इत्यनेन क्त्वाणमुलौ द्वावपि विहितौ, तत्र यदि विश्यादिभ्यः पुनरासेवायां णमुल् विधीयेत तदा क्त्वाप्रत्ययोऽपि स्यात्। अतस्तन्निवृत्त्यर्थं पुनर्णमुलुच्यत इति? एतच्च नास्ति; इष्टत्वात्। इष्यते ह्यासेवायां विशिप्रभृतिभ्यः क्त्वा-- गेहमनुप्रविश्यानुप्रविश्यास्त इति। तस्मादयुक्तं तन्निवृत्त्यर्थं पुनर्णमुल्ग्रहणम्। "द्वितीयान्तोपपदार्थम्" इत्यादि। यदि क्त्वानिवृत्त्यर्थं न प्रयुज्यते तदा द्वितीयान्तस्योपपदसंज्ञार्थं पुनर्वचनम्। अनेन "द्वितीयायाञ्च" ३।४।५३ इत्यधिकाराद्द्वितीयान्त उपपदे प्रत्ययविधानम्। अतो द्वितीयान्तस्योपपदसंज्ञा लभ्यते। किमर्थं

पुनर्द्वितीयान्तस्योपपदत्वमिष्यते? इत्याह-- "उपपदसमासः" इत्यादि। पक्षग्रहणं "तृतीयाप्रभृतीन्यन्यतरस्याम्" २।२।२१ इति विकल्पेन समासविधानात्। स्यादेतत्--तेनापि णमुल्विधान उपपदसंज्ञा भविष्यतीत्यत आह--"तेन हि"इत्यादि। न हि तेनोपपदसम्बन्धे णमुल् विधीयते; सप्तमीस्थस्य कस्यचिच्छब्दस्याभावात्। तस्मात् तेन णमुल्विधाने सत्युपपदत्वाभाव एव स्यात्॥

तत्त्व-बोधिनी

विशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयोः १६३०, ३।४।५६

उपपदसंज्ञार्थमिति। "विशिपती"ति सूत्रे द्वितीयायामित्यनुवर्तनात्तदन्तस्योपपदसंज्ञार्थमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अस्यतितृषोः क्रियान्तरे कालेषु ३।४।५७

द्वितीयायाम् इत्येव। क्रियामन्तरयति क्रियान्तरः, क्रियाव्यवधायकः। क्रियान्तरे धात्वर्थे वर्तमानाभ्याम् अस्यतितृषिभ्यां द्वितीयान्तेषु कालवाचिषु उपपदेषु णमुल् प्रत्ययो भवति। द्व्यहात्यासं गाः पाययति, द्व्यहमत्यासं गाः पाययति। त्र्यहात्यासं गाः पाययति, त्र्यहमत्यासं गाः पाययति। द्व्यहतर्षं गाः पाययति, द्व्यहंतर्षं गाः पाययति। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते विच्छिद्यते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययति इत्यर्थः। अस्यतितृषोः इति किम्? द्व्यहमुपोष्य भुङ्क्ते। क्रियान्तरे इति किम्? अहरत्यस्य इषून् गतः। न गतिर् व्यवधीयते। कालेषु इति किम्? योजनम् अत्यस्य गाः पाययति। अध्वकर्मकम् अत्यसनं व्यवधायकम्, न कालकर्मकम्।

न्यासः

अस्यतितृषोः क्रियान्तरे कालेषु। , ३।४।५७

"अस्यतितृषोः"इति। "असु क्षेपणे" (धा।पा।१२०९), ञितृषा पिपासायाम्" (धा।पा।१२२८)। "क्रियामन्तरयति" इत्यादि। अन्तरं करोतीति "तत्करोति"(वा।२००) इत्यादिना णिच्। "क्रियामन्तरयति क्रियान्तरः" (इति) कर्मण्यण्, णिलोपः।अन्तरशब्दश्चायमिह व्यवधाने वत्र्तत इति दर्शयन्नाह--"क्रियाव्यवधायकः"इति। "पाययति"इति। "पा पाने" (धा।पा।९२५), णिच्। "शाच्छा"७।३।३७ इत्यादिना युक्। "अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते" इति। यच्चायं पानं यच्च द्व्यहेऽतीते पानं भविता तन्मध्यवर्तित्वाद्तयसननतर्षणयोः। "अद्य पाययित्वा" इत्यादिना द्व्यहात्यासं गाः पाययतीत्यस्यार्थमाचष्टे। एतदनुसारेणान्यस्याप्यर्थो गम्यत इतिन व्याख्यातः। "द्व्यहमुपोध्य"इति। "वस निवासे"(धा।पा।१९४२), वच्यादिना ६।१।१५ सम्प्रसारणम्, क्त्वो ल्यबादेशः "शासिवसिघसीनाञ्च" ८।३।६० इति षत्वम्। अत्रोपवसने भुजिक्रियाव्यवधायके वसिर्वत्र्तते। अत्र "अस्यतितृषोः"इति यदि नोच्येत तदेहापि स्यात्। "न गतिव्र्यवधीयते" इति। यथा मलोदाहरणेऽत्यसनेन तर्षणेन च मध्यवर्त्तिना पानक्रिया व्यवधीयते, न तथेह गतिः। तत्र चाहञ्छब्दात् "कालाध्वनोरत्यन्तसंयोगे" २।३।५ इति द्वितीया। सकलस्याह्न इष्वत्यसनेन व्याप्तत्वादिषुशब्दात् कर्मण्येव। "योजनमत्यस्य गाः पाययति" इति। अत्राध्ववाच्युपपदम्। क्वचित् रुआउध्नादौ पाययित्वा योजनमतिक्रम्य पाययतीत्यर्थः। "अध्वकर्मकम्()", "न कालकर्मकम्िति द्वावपि बहुव्रीही॥

---

सूत्रम्

काशिका-वृत्तिः

नाम्न्यादिशिग्रहोः ३।४।५८

द्वितीयायाम् इत्येव। नामशब्दे द्वितीयान्ते उपपदे आदिशेर् ग्रहेश्च धातोः णमुल् प्रत्ययो भवति। देशम् आचष्ते। नामग्राहम् आचष्टे।

न्यासः

नाम्न्यादिशिग्रहोः। , ३।४।५८

"आदिशेः" इति। "दिश अतिसर्जने" (धा।पा।१२८३)), आङ्पूर्वः॥

---

सूत्रम्

काशिका-वृत्तिः

अव्यये ऽयथाभिप्रेताऽख्याने कृञः क्त्वाणमुलौ ३।४।५९

अव्यये उपपदे अयथभिप्रेताऽख्याने गम्यमाने करोतेः क्त्वाणमुलौ भवतः। ब्राह्मण, पुत्रस्ते जातः। किं तर्हि वृषल, नीचैः कृट्याचक्षे, नीचैः कृत्वा, नीचैः कारम्। उच्चैर् नाम प्रियम् आख्येयम्। ब्राहमण, कन्या ते गर्भिणी। किं तर्हि वृषल, उच्चैः कृत्याचक्षे, उच्चैः कृत्वा, उच्चैः कारम्। नीचैर् नामाप्रियम् आख्येयम्। अयथाभिप्रेताऽख्याने इति किम्? उच्चैः कृत्वाचष्टे पुत्रस्ते जातः इति। क्त्वाग्रहणं किम्, यावता सर्वस्मिन्नेव अत्र प्रकरणे वासरूपेण क्त्वा भवति इत्युक्तम्? समासार्थं वचनम्। तथा च क्त्वा च २।२।२२ इत्यस्मिन् सूत्रे तृतीयाप्रभृतीन्यन्यतरस्याम् २।२।२१ इति वर्तते। णमुलधिकारे पुनर् णमुल्ग्रहणं तुल्यकक्षत्वज्ञापनार्थम्, तेन उत्तरत्र द्वयोरप्यनुवृत्तिर् भविष्यति।

न्यासः

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ। , ३।४।५९

"अयथाभिप्रेताख्याने" इति। यद्यदभिप्रेतमिष्टं यथाभिप्रेतम्, "यथाऽसादृश्ये"२।१।७ इति वीप्सायामव्ययीभावसमासः, न यथाभिप्रेतमयथाभिप्रेतम्। अप्रियमित्यर्थः। "आचक्षे"इति। आङ्पूर्वाच्चक्षिङो लट्; "थासः से"३।४।८०, "स्कोः संयोगाद्योरन्तेच"८।२।२९ इति ककारलोपः, "षढोः कः सि" ८।२।४१ इति कत्वम्,िण्कोःट ८।१।५७ इति षत्वम्। "उक्तम्" इति। क्वोक्तम्? "उपदंशस्तृतीयायाम्" ३।४।४७ इत्यत्र। उपपदसमासार्थं वचनमिति च। "क्त्वा च" २।२।२२ इत्यनेनोपपदसमासः पक्षे यथा स्यात्। कस्मात् पुनरनेन यः क्त्वा विहितस्तेन समासो भवति? यस्तु "समानकर्तृकयोः" (३।४।२१) इत्यादिना विहितस्तेन न भवति? इत्याह-- "तथा हि" इत्यादि। "क्त्वा च"२।२।२२ इत्यत्र "तृतीयाप्रभृतीनि" २।२।२१ इत्यनुवत्र्तते। तस्मादनेन यः क्त्वा विहितस्तेनैव पक्षे समासो भवति, न तु तेन, तृतीयाप्रभृतिषूपपदेषु क्त्वा विधीयते। अथ णमुल्ग्रहणं किमर्थम्; यावता णमुलनुवत्र्तत एव,ततः क्त्वा चेति वक्तव्यम्? इत्याह-- "णमुलधिकारे" इत्यादि। तुल्यकक्षत्वं तद्वत् तुल्यबलत्वम्। "तेन" इत्यादि। ज्ञापकस्य प्रयोजनं दर्शयति। यदि "क्त्वा च" इत्युच्येत। चकारेण यत्नादनुकृष्टो णमुलुत्तरत्र नानुवत्र्तेत; यत्नाभावात्। यथा तेन क्त्वाप्रत्ययस्यान्वाचीयमानता विज्ञायेत ततश्चोत्तरत्र तस्याप्रधान्यादनुवृत्तिर्न स्यात्। पुनर्णमुल्ग्रहणे सति सहनिर्देशात् क्त्वाणमुलोर्गुणप्रधानभावो न भवतीति द्वयोरप्यनुवृत्तिर्भवति॥

तत्त्व-बोधिनी

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ १६३१, ३।४।५९

अव्यये। अयथेति। न यथाभिप्रेतमयथाभिप्रेतं तथाख्यान इत्यर्थः। त्रियस्योच्चैः, अप्रियस्य नीचैः कथनं यथाभिप्रेताख्यानम्। तद्विपरीताख्याने इति यावत्। नन्वप्रियाख्याने इत्येव कुतो नोक्तमिति चेदत्राहु-- प्रियस्य नीचैः कथनमपि प्रियाख्यानमेव, न त्वप्रियाख्यानमिति "नीचैः कृत्य नीचैः कारं प्रियं ब्राऊते" इति प्रयोगो न स्यात्। तथा

अप्रियस्य नीचैः कथनमप्यप्रियाख्यानमिति नीचैः कृत्य नीचैः कारमप्रियं ब्राऊत इति प्रयोगोऽपि स्यादित्ययथाभिप्रेताख्याने इत्युक्तमिति।

---

सूत्रम्

काशिका-वृत्तिः

तिर्यच्यपवर्गे ३।४।६०

तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ प्रत्ययौ भवतः, अपवर्गे गम्यमाने। अपवर्गः समाप्तिः। तिर्यक्कृत्य गतः, तिर्यक्कृत्वा गतः, तिर्यक्कारं गतः। समाप्य गतः इत्यर्थः। अपवर्गे इति किम्? तिर्यक्कृत्वा काष्ठं गतः। तिर्यचि इति शब्दानुकरणम्। न च प्रकृतिवदनुकरणेन भवितव्यम्, अनुक्रियमाणरूपविनाशप्रसङ्गात्, एतदो ऽश्, अदसो मात् १।१।१२ इति।

न्यासः

तिर्यच्यपवर्गे।, ३।४।६०

"तिर्यक्कृत्वा" इति। तिरोऽञ्चतीति ऋत्विगादिना ३।२।५९ क्विन्। "झलां जशोऽन्ते" ८।२।३९ इति चकारस्य जकारे कृते "क्विन्प्रत्ययस्य कुः"८।२।६२ इति कुत्वम्--गकारः, तस्यापि चत्र्वम्-- ककारः, "तिरसस्तिर्यलोपे" ६।३।९३ इति तिर्यादेशः। "तिर्यक्कृत्वा "{काष्ठं इति मूलपाठः} काण्डं गतः"इति। अनृजू कृत्वा। पार्(ातः कृत्वेत्यर्थः। अथ "तिर्यचि" कोऽयं निर्देशः, यावता भसंज्ञायां सत्यां "अचः" ६।४।३८ इत्यकारलोपे कृते तिरश्चीति भवितव्यमित्यत आह-- "तिर्यचि" इत्यादि। सर्वत्र ह्रनुकरणभूतशब्दः शब्दस्वरूपस्यैवानुकरणम्। एतावांस्तु विशेषः-- क्वचिच्चब्दपदार्थस्यानुकरणम्, क्वचिदर्थस्येति। तत्रानुकरणमित्येतावपि वक्तव्ये शब्दरूपग्रहणं शब्दरूपमात्रस्यार्थरहितस्यैतदनुकरणमिति ज्ञापनार्थम्। तदेतदुक्तं भवति-- शब्दपदार्थको यस्तिर्यक्छब्दस्तस्येदमनुकरणम्, न तु स एव। तेन शब्दान्तरत्वादकारलोपो न भवतीति भावः। नन्वेवमपि "प्रकृतिवदनुकरणं भवति"(व्या।प।११३) इति भवितव्यमेवात्र प्रकृतिकार्येणाकारलोपेन? इत्यत आह-- "न च" इत्यादि। अत्रैवोपपत्तिमाह--"अनुक्रियमाणरूपविनाशप्रसङ्गात्" इति। यद्यत्र प्रकृतिकार्यं स्यात् ततो यादृशमनुकरणं तिर्यगिति शब्दरूपं तस्य विनाशोऽनुपलब्धिः स्यात्। यादृशमनुकर्त्तुमिष्टमकृताकारलोपं तादृशं न प्रतीयेतेत्यर्थः। यतएवं प्रकृतिवदनुकरणभावे सत्येष दोष आपतति, ततोनेह प्रकृतिवदनुकरणेन भवितव्यम्। "प्रकृतिवदनुकरणं भवति" (व्या।प।११३) इत्यस्य तु यत्रार्थपदार्थस्यानुकरणं सोऽवकाशो वेदितव्यः। क्व च यथा प्रकृतिवदनुकरणं भवतीत्याह-- "एतदोऽश्" इत्यादि। एतदोऽदस इत्युभयमप्येतच्छब्दरूपपदार्थकस्यानुकरणम्। यदि च शब्दपदार्थकस्य यदनुकरणं तस्यापि प्रकृतिभावः स्यात्, तदा त्यदाद्यत्वादिके प्रकृतिकार्ये कृते-- एतस्य, अमुष्येति रूपं स्यात्। तस्याद्यथेह प्रकृतिभावो न भवति,तथातिर्यचीत्यत्रापि॥

तत्त्व-बोधिनी

तिर्यच्यपवर्गे १६३२, ३।४।६०

तिर्यक्कृत्वेति। अनृजुत्वादग्रतः स्थितं पार्(ातः कृत्वा गत इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

स्वाङ्गे तस्प्रत्यये कृभ्वोः ३।४।६१

तस्प्रत्ययो यतः स्वाङ्गात् तदेवम् उच्यते। तस्प्रत्यये स्वाङ्गवाचिनि उपपदे करोतेः भवतेश्च धात्वोः क्त्वाणमुलौ प्रत्ययौ भवतः। यथासङ्ख्यम् अत्र नेष्यते, अस्वरितत्वात्। मुखतःकृत्य गतः, मुखतः कृत्वा गतः, मुखतःकारं गतः। मुखतोभूय तिष्ठति, मुखतो भूत्वा तिष्ठति, मुखतोभावं तिष्ठति। पृष्ठतःकृत्य गतः, पृष्ठतः कृत्वा गतः, पृष्ठतः कारं गतः। पृष्ठतोभूय गतः, पृष्ठतो भूत्वा, पृष्ठतोभावम्। स्वाङ्गे इति किम्? सर्वतः कृत्वा गतः। तस्ग्रहणं किम्? मुखीकृत्य गतः। मुखीभूय गतः। प्रत्ययग्रहणं किम्? मुखे तस्यति इति मुखतः, मुखतः कृत्वा गतः।

न्यासः

स्वाङ्गे तस्प्रत्यये कृभ्वोः। , ३।४।६१

"यथासंख्यमत्र नेष्यते" इति। कथं पुनरिष्यमाणमपि न भवति, यावता द्वे प्रकृती, प्रत्ययावपि द्वावेवेत्यस्ति यथासंख्यप्राप्तिनिमित्तम्? "कृभ्वोः" इति निर्देशाल्लक्षमव्यभिचारचिह्नात्। इह प्रत्यये विधीयमाने "परश्च" ३।१।२ इति सम्बन्धाद्दिग्योगलक्षणया पञ्चम्या भवितव्यम्, ततर् कृभूभ्यामिति पञ्चमीनिर्देशे कत्र्तव्ये योऽयं "कृभ्वोः" इति निर्देशाल्लक्षणव्यभिचारचिह्नात्। इह प्रत्यये विधीयमाने "परश्च" ३।१।२ इति सम्बन्धाद्दिग्योगलक्षणया पञ्चम्या भवितव्यम्, तत्र कृभूभ्यामिति पञ्चमीनिर्देशे कत्र्तव्ये योऽयं "कृभ्वोः" इति षष्ठीनिर्देशः स लक्षणव्यभिचारचिह्नम्, तेन यथासख्याभाव इति वेदितव्यम्। "मुखतः" इति। "अपादाने चाहीयरुहोः" ५।४।४५ इति तसिः। "मुखीकृत्य" इति। अत्र मुखशब्दश्च्व्यन्तः। "अभूततद्भावे" ५।४।५० इत्यादिना च्विः, "अस्य च्वौ" ७।४।३२ इतीत्त्वम्। "मुखे तस्यति" इति। "तसु उपक्षये", (धा।पा।१२१२) "अन्येभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्, हल्ङ्यादिना ६।१।६६ सुलोपः, रुत्वविसर्जनीयौ। धातुरत्र तस्()शब्दः, न तु प्रत्ययः। तेन तदन्त डपदेशे क्त्वाणमुलौ न भवतः, "समानकर्त्तृकयोः" ३।४।२१ इति क्त्वैव भवति॥

तत्त्व-बोधिनी

स्वाङ्गे तस्प्रत्यये कृभ्वोः १६३३, ३।४।६१

स्वाङ्गे। तस्प्रत्ययो यस्मात्तस्प्रत्ययस्तस्मिन्स्वाङ्गे उपपदे इत्येके। प्रत्ययग्रहणपरिभाषया तस्प्रत्ययान्ते स्वाङ्गे इत्यन्ये। तस् चासौ प्रत्ययश्चेति कर्मधारयः। तस्प्रत्यये परतो यत्स्वाङ्गं तस्मिन्नुपपद इति तु प्राञ्चः। तत्र यद्यपि स्वाङ्गमात्रं नोपपदं तथापि तस्मिन्नित्येतत्प्रकृतिप्रत्ययसमुदायपरिमिति बोध्यम्। मुखतःकारं मुखतोभूयेति। क्त्वाणमुलोः कृभुवोश्च यथासङ्ख्यं नेष्यतत इति भावः। मुखत इत्यत्राद्यादित्वात्सप्तम्यर्थे तसिः। प्रत्ययग्रहणं किम्?। मुके तस्यति मुखतः। तसु उपक्षये क्विप्। धातुत्वादिह "अत्वसन्तस्ये"ति दीर्घो न। मुखतः कृत्वा गत इति काशिकादौ स्थितम्। वस्तुतस्तु प्रत्ययाऽप्रत्ययपरिषाषायैवेष्टसिद्धेः प्रत्ययग्रहणं सुत्यजम्।

---

सूत्रम्

काशिका-वृत्तिः

नाधाऽर्थप्रत्यये च्व्यर्थे ३।४।६२

नाऽर्थो धाऽर्थश्च प्रत्ययो यस्मात् स एवम् उच्यते। नाधार्थप्रत्यये शब्दे च्व्यर्थे उपपदे कृभ्वोः धात्वोः क्त्वाणमुलौ प्रत्ययु भवतः। अनाना नाना कृत्वा गतः नानाकृत्य गतः, नाना कृत्वा गतः, नानाकारं गतः। विनाकृत्य गतः, विना कृत्वा गतः, विनाकारं गतः। नानाभूय गतः, नाना भूत्वा गतः, नानाभावं गतः। विनाभूय गतः, विना भूत्वा गतः, द्विनाभावं गतः। द्विधाकृत्य गतः, द्विधा कृत्वा गतः, द्विधाकारं गतः। द्विधाभूय गतः, द्विधा भूत्वा गतः, द्विधाभावं गतः। द्वैधंकृत्य गतः, द्वैधं कृत्वा गतः, द्वैधंकारं गतः। द्वैधंभूय गतः, द्वैधं भूत्वा गतः, द्वैधंभावं गतः। प्रत्ययग्रहणं किम्? हिरुक् कृत्वा। पृथक्

कृत्वा। च्व्यर्थे इति किम्? नाना कृत्वा काष्ठानि गतः। धार्थम् अर्थग्रहणम्, ना पुनरेक एव, विनञ्भ्यां नानाञौ इति।
न्यासः
नाधार्थप्रत्यये च्व्यर्थे।, ३।४।६२

"नार्थो धार्थश्च" इति। नाप्रत्ययसहचरितोऽर्थो ना इत्युच्यते, धाप्रत्ययसहचरितश्च धा इति। नाऽर्थो यस्य प्रत्ययस्य स नार्थः धाऽर्थो यस्य प्रत्ययस्य स धार्थ इति। "द्विधाकृत्य" इति। "संख्याया विधार्थे धा" ५।३।४२। "द्वैधं कृत्वा" इति। "द्वित्र्योस्च धमुञ्" ५।३।४५ इति धमुञ्। "द्वेधाकृत्य" इति। "एधाच्च" ५।३।४६ इत्येधाच्। "हिरुक् कृत्वा, पृथक् कृत्वा" इति। असति प्रत्ययग्रहणे हिरुक्पृथक्शब्दयोरसहार्थत्वात् नार्थत्वनमस्तीति तयोरप्युपपदयोः क्त्वाणमुलौ स्याताम्। पूर्वसूत्रादेव प्रत्ययग्रहणानुवृत्त्या सिद्धे पुनरिह प्रत्ययग्रहणं सुखप्रतिपत्त्यर्थम्। पूर्वकं हि प्रत्ययग्रहणं समासैकदेशत्वाद्यत्रानुवृत्तं स्यात्। "नाना कृत्वा काष्ठानि गतः" इति। च्व्यर्थोऽत्र नास्ति; प्रकृत्यन्यावस्थाया अविवक्षितत्वात्। "धार्थमर्थग्रहणम्" इति। धाप्रत्ययोऽर्थः प्रयोजनं यस्य तत् तथोक्तः। धार्था हि प्रत्यया बहवः,तत्रसत्यर्थग्रहणे धाप्रत्ययस्यैव ग्रहणं स्यात्, नान्येषां तदर्थानाम्। अथग्रहणे तु सति तेषामपि ग्रहणं भवति। अथ नार्थमप्यर्थग्रहणं कस्मान्न भवति? इत्याह-- "ना पुनरेक एव" इति। अर्थग्रहणं हि तत्र क्रियते यत्र बहवो ग्राह्याः सम्भवन्ति, नाप्रत्ययस्त्वेक एव,तस्य चार्थग्रहणमन्तरेण सिध्यतीति न तदर्थमर्थग्रहणम्। ननु च घमुञादीनामपि स्थानिवद्भावादेव धाग्रहणेन ग्रहणं भविष्यति, अतोधार्थमप्यर्थग्रहणमयुक्तम्? नैष दोषः; अघादेशोऽपि धार्थप्रत्ययोऽस्ति, "घमुञन्तात् स्वार्थे डदर्शनम्" (व्या।प।६१०) इति वचनात्। तस्माद्धार्थमर्थग्रहणं कर्त्तव्यम्। वयं तु ब्राऊमः-- नार्थमप्यर्थग्रहणं कत्र्तव्यमेव। तथा हि-- द्वौ नाप्रत्ययौ; एको निरनुबन्धकः, द्वितीयः सानुबन्धकः। तत्रासत्यर्थग्रहणे "निरनुबन्धग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति नाप्रत्ययस्यैव ग्रहणं स्यात्, न सानुबन्धकस्य नाञः। अर्थग्रहणे तु सति तस्यापि ग्रहणं भवति॥
तत्त्व-बोधिनी
नाधार्थप्रत्यये च्व्यर्थे १६३४, ३।४।६२

नार्धार्थे। नार्थौ "विनञ्भ्या"मिति विहितौ नानाञौ। धार्थाः-- द्वित्र्योश्च धमुञादयः। "सङ्ख्याया विधार्थे धे"ति धाप्रत्ययो धाऽर्थको भवतीत्याशयेनोदाहरति--एकधाभूयेत्यादि। एवं द्वैधङ्कृत्य द्वैधम्भूय द्वैधम्भावमित्याद्युदाहर्तव्यम्। ननु नानाञौ प्रत्ययौ, धा च प्रत्ययः, धमुञादिविधौ तु "एकाद्धो ध्यमुञ्यन्यतरस्या"मित्यतो "ध" इत्यनुवर्त्यतेषामादेशत्वाऽश्रयणेऽपि स्थानिवद्भावेन धमुञादिर्धाप्रत्ययो भवतीति किमर्थं प्रत्ययग्रहणमित्यक्षिपति-- प्रत्ययग्रहणमिति। यद्यप्युक्तरीत्या धाग्रहणेन धमुञादेग्रहणं संभवतीत्यर्थग्रहणमिह व्यर्थं, तथापि "धमुञन्तात्सवार्थे डदर्शन"मिति डप्रत्ययान्तसङ्ग्रहार्थमर्थग्रहणं, तत्फलं। तु द्वैधीकृत्येत्यादिप्रयोगः।

---

सूत्रम्
काशिका-वृत्तिः
तूष्णीमि भुवः ३।४।६३

तूष्णींशब्दे उपपदे भवतेः धातोः क्त्वाणमुलौ प्रत्ययौ भवतः। तूष्णींभूय गतः, तूष्णीं भूत्वा, तूष्णींभावम्। भूग्रहणं कृञो निवृत्त्यर्थम्।
न्यासः
तूष्णीमि भुवः।, ३।४।६३

ननु च "स्वाङ्गे तस्प्रत्यये कृभ्वोः" ३|४|६१ इत्यतो भूग्रहणमनुवर्त्तत एव, तत् किमर्थं भुव इतीहोच्यते? इत्याह-- "भूग्रहणम्" इत्यादि। पूर्व हि भूग्रहणं कृञा सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्; अतस्तन्निवृत्यर्थं पुनरिह भूग्रहणम्॥

तत्त्व-बोधिनी

तूष्णीमि भुवः १६३५, ३।४।६३

तूष्णीमि। कृञो निवृत्त्यर्थं तूष्णीङ्ग्रहणम्।

---

सूत्रम्

काशिका-वृत्तिः

अन्वच्यानुलोम्ये ३।४।६४

अन्वक्शब्दे उपपदे भवतेर् धातोः आनुलोम्ये क्त्वाणमुलौ भवतः। आनुलोम्यम् अनुलोमता, अनुकूलत्वम्, परिचित्तानुविधानम्। अन्वग्भूय आस्ते, अन्वग् भूत्वा आस्ते, अन्वग्भावम् आस्ते। आनुलोम्ये इति किम्? अन्वग् भूत्वा तिष्ठति।

न्यासः

अन्वच्यानुलोम्ये। , ३।४।६४

"अन्वचि" इति निर्देशस्तिर्यचीत्यनेन व्याख्यातः। "अन्वग्भूय"इति। पूर्ववत् क्विनि कृते तदन्तस्य जश्त्वे कृते च रूपम्। "अन्वग्भूत्वाट इति। अनुचरो भूत्वा तिष्ठतीत्यर्थः॥

तत्त्व-बोधिनी

अन्वच्यानुलोम्ये ११६१, ३।४।६४

अन्वच्या। नन्विह "अचः" इत्यकारलोपे "च्वौ" इति पूर्वस्याऽणो दीर्घऽनूचीति निर्देष्टुमुचितम्। "द्युप्रागपागि"ति सूत्रे "प्रतीचोय"दितिवतो। एवं "तिर्यच्यपवर्गे" इति सूत्रेऽपि "तिरश्ची"त्येव निर्देष्टुमुचितमिति चेत्। अत्र केचित्-- शास्त्रोक्तं कार्यमर्थवत्येव भवति। अर्थश्च लोके प्रसिद्ध एव गृह्णते। "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः" इति न्यायात्। अतोऽनुकरणे न भविष्यतीत्यन्वचीति सम्यगेवेति। तच्चिन्त्यम्। एवं तर्हि "क्षियो दीर्घात्" इत्यादावियङादिकं न स्यात्। "प्रतीचो य"दित्यपि न सिध्येदिति। वस्तुतस्तु "प्रकृतिवदनुकरण"मित्यस्य वैकल्पिकत्वादन्वचीत्यादिनिर्देशे तु न दोषखः। वैकल्पिकत्वं च "यत्तदेतेभ्यः" इति सूत्रे त्यदाद्यत्वस्य करणादेकशेषाऽभावदर्शनाच्च निर्णीयत इति प्रागेव प्रपञ्चितम्। अग्रत इत्यादि। अन्वक्शब्दस्यानुकूल्यमात्रे विश्रान्तेर्देशविशेषवाचित्वे नियमो नेति ध्वनयितुमिदम्। पृष्ठतो भूत्वत्यर्थ इति। इहान्वक्शब्देनानुकूलोऽननुकूलो वेति न स्पृश्यते, तस्य देशविशेषमात्र पर्यवसानात्। प्रमाणान्तरेण क्वचिदिहानुकूल्यलाभेऽपि अन्वक्शब्दस्य तत्समर्पणे व्यापाराऽभावाण्णमुल् न, किन्तु क्त्वैव भवतीति व्यवस्था बोध्या। इत्युत्तरकृदन्तम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवामनेन्द्रस्वामिचरणसेवकज्ञानेन्द्रसरस्वतीकृतायां सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां कृदन्तं समाप्तम्। समाप्ता चेयं तत्त्वबोधिनी।

---

सूत्रम्

काशिका-वृत्तिः

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३।४।६५

शकाऽदिषु उपपदेषु अस्त्यर्थेषु वा धातुमात्रात् तुमुन् प्रत्ययो भवति। अत्रियार्थोपपदार्थो ऽयम् आरम्भः। शक्नोति भोक्तुम्। धृष्णोति भोक्तुम्। जानाति भोक्तुम्। ग्लायति भोक्तुम्। घटते भोक्तुम्। आरभते भोक्तुम्। लभते भोक्तुम्। प्रक्रमते भोक्तुम्। सहते भोक्तुम्। अर्हति भोक्तुम्। अस्त्यर्थेषु खल्वपि अस्ति भोक्तुम्। भवति भोक्तुम्।

न्यासः

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्। , ३।४।६५

ननु च "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ३।३।१० इत्येवं शकादिषूपपदेषु तुमुन् सिद्धः, तत् किमर्थोऽयमारम्भ इत्याह-- "अक्रियार्थोऽयमारम्भः" इति। अक्रियार्थेष्वपि शकादिषु तुमुन् यथा स्यादित्येवमर्थोऽयमारम्भः। न हि शक्नोति भोक्तुमित्यादौ क्रियार्थोपपदं गम्यते। किं तर्हि? अर्थान्तरम्, अन्यदेव। इह तावत्-- "शक्नोति भोक्तुम्, उत्सहते भोक्तुम्, जानाति भोक्तुम्" इति प्रावीण्यं गम्यते। "ग्लायति भोक्तुम्" इति तदशक्तता गम्यते, "घटयति भोक्तुम्, अर्हति भोक्तुम्" इति तद्योग्यतामात्रम्। "आरभते भोक्तुम्, प्रक्रमते भोक्तुम्" इति भुजेरेवाद्यावस्थानक्रियान्तरम्। "लभते भोक्तुम्" इति प्रत्याख्यानम्। "अस्ति भोक्तुम्" इत्यादौ सम्भवमात्रम्॥

तत्त्व-बोधिनी

शकधृषज्ञाग्लाघटरभलभक्रमसाहर्हास्त्यर्थेषु १५१०, ३।४।६५

शकधृष। अयमप्यक्रियार्थोपपदार्थ आरम्भः। "भोक्तुं शक्नोति जानाती"त्यत्र हि भुज्यर्थो विषयतया संबध्यते, नैपुण्यं च गम्यते। ग्लायति भोक्तुमित्यत्र भोजनविषयिण्यशक्तिर्गम्यते। "भोक्तुं घटते" इत्यत्र तु भोक्तुमर्हतीति योग्यता। "आरभते भोक्तु"मित्यत्र भोक्तुं प्रक्रमते = उत्सहते इति भुजेराद्यावस्था। "लभते इत्यत्राऽप्रत्याख्यानम्। "अस्ति भोक्तु"मित्यादौ तु संभवमात्रम्।

---

सूत्रम्

काशिका-वृत्तिः

पर्याप्तिवचनेष्वलमर्थेषु ३।४।६६

पर्याप्तिः अन्यूनता। पर्याप्तिवचनेषु अलमर्थेषु उपपदेषु धातोस्तुमुन् प्रत्यओ भवति। पर्याप्तो भोक्तुम्। अलं भोक्तुम्। भोक्तुं पारयति। पर्याप्तिवचनेषु इति किम्? अलं कृत्वा। अलमर्थेषु इति किम्? पर्याप्तं भुङ्क्ते। पूर्वसूत्रे शकिग्रहणम् अनलमर्थम्, शक्यम् एवं कर्तुम् इति।

न्यासः

पर्याप्तिवचनेष्वलमर्थेषु। , ३।४।६६

"पर्याप्तिरन्यूनता" इति। परिपूर्णतेत्यर्थः। "अलमर्थविशिष्टेषु" इति। यद्यपि भूषणादयोऽलमर्थाः, तथापि पर्याप्तिवचने सामर्थ्येमेव सम्भवतीति तदेव गृह्यते। प्रयोगदर्शनार्थबोधेन व्याख्यानतो वा। तेनालमर्थविशिष्टेष्वित्ययमर्थो भवति। यद्येवम्, सामर्थ्येष्वित्येवं कस्मान्नक्तम्? नैवं शक्यम् ; एवं ह्युच्यमाने सामर्थ्येन भुङ्क्ते, बलेन भुङ्क्त इत्यादावपि स्यात्। यथान्यासे तु न दोषः; न ह्यत्र पर्याप्तिर्दृश्यते। किं तर्हि? सौकर्यम्। सुकरमेतदित्यर्थः। यथाविध्यस्य सम्भवमात्रं विवक्षितम्, सम्भवत्येवंविधस्य करणमित्यर्थः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ कर्तरि ७।१ कृत् १।१ धातोः ? प्रत्ययः ?

अर्थः॥

अस्मिन् धात्वधिकारे कृत्संज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति

उदाहरणम्॥

कर्त्ता, कारकः, नन्दनः, ग्राही, पचः
काशिका-वृत्तिः
कर्तरि कृत् ३।४।६७

कृत्संज्ञकाः प्रत्ययाः कर्तरि कारके भवन्ति। कृदुत्पत्तिवाक्यानाम् अयं शेषः। तत्र येषु अर्थनिर्देशो नास्ति तत्र इदम् उपतिष्ठते, अर्थाकाङ्क्षत्वात्। न ख्युन्नादिवाक्येषु, साक्षादर्थनिर्देशे सति तेषाम् निराकाङ्क्षत्वात्। कारकः। कर्ता। नन्दनः। ग्राही। पचः।
लघु-सिद्धान्त-कौमुदी
कर्तरि कृत् ७७२, ३।४।६७

कृत्प्रत्ययः कर्तरि स्यात्। इति प्राप्ते --।
न्यासः
कत्र्तरि कृत्। , ३।४।६७

किमर्थमिदम्? कत्र्तरि तृजादयो यथा स्युः। क्व तर्हि स्युः? अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे (पु।प।पा।९०)। ननु च स्वार्थे यत्र प्रत्ययमिच्छति तत्र भावग्रहणं करोति, यथा-- घञादिविधौ भाव इति, न चैते घञादयः स्वार्थे भवन्ति, किं तर्हि? तस्य धर्मे सिद्धताख्ये; तथा लकारादिविधौ "लः कर्मणि च भावे चाकर्मकेभ्यः"३।४।६९ इत्यत्र सूत्रे लकारा अपि नैव स्वार्थे विधीयन्ते, किं तर्हि? तस्य धर्मे साध्यताख्ये? यद्यपि घञादीनां लकाराणाञ्च भावे विधानम्, तथापि शब्दशक्तिस्त्वाभाव्यादेष विषयविभागो लभ्यते। घञादीनां हि धात्वर्थस्य सिद्धतामेवाभिधातुं सामथ्र्यम्, लकाराणां साध्यतामेव। तदेवं यदनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति, तस्मात् तृजादयोऽपि तत्रैव भवेयुः, अतः कत्र्तर्येव ते यथा स्युरित्येवमर्थमिदमारभ्यते। अत्र च द्वेधम्-- कृदुत्पत्तिवाक्यानामयं शेषो वा स्यात्-- ण्वुल्तृचौ कत्र्तरि, नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः कत्र्तरीति? अर्थादेशो वा? निरपेक्षैः स्वैः स्वैर्विधायकैवर्वाक्यैर्विहितानां कृतां पश्चादनेनार्थ आदिश्येत-- ये न लक्षणान्तरैः कृतो विहितास्ते कत्र्तरि वाच्ये भवन्तीति। तत्र यदि द्वितीयः पक्ष आश्रीयेत ततो यथा तृजादीनामनेनर्थ आख्यायते, तथा ख्युन्नादीनामपि; विशेषानुपादानात्, ततस्तेऽपि कत्र्तरि स्युः। स्वेषु विधिवाक्येषु करणादीनामुपादानात् कणादिष्वपि। यद्यप्येकस्य प्रत्ययस्य कत्र्तरि करणे च यगुपद्()वृत्तिर्न सम्भवति, तथापि वचनसामथ्र्यात् पर्यायेण कत्र्तरि करणे च स्युरिति। तस्माद्दुष्टोऽयं पक्ष इति प्रथमं पक्षमाश्रित्याह-- "कृदुत्पत्तिवाक्यानाम्" इत्यादि। अनेन तेषामस्य चैकवाक्यतामाह। यद्येवम्, ख्युन्नादिवाक्येष्वप्यनेनोपस्थातव्यम्-- तेषामप्ययं शेष इति कृत्वा, ततश्चास्मिन्नपि पक्षे द्वितीये पक्षे भावी दोषः स्यात्? इत्यत आह-- "तत्र येषु" इत्यादि। तत्रैव

हे#उतमाह-- "अर्थाकाङ्क्षत्वात्" इति। शेषो हि तेषां भवति यान्यपरिसमाप्तत्वादर्थमाकाङ्क्षन्ति, नान्येषाम्। अतो येषु वाक्येष्वर्थो न#आदिश्यते तेषामेव साकाङ्क्षत्वात् शेषोऽयं युक्तः। तृजादीनामेव विधायकानि वाक्यान्यर्थानादशादर्थाकाङ्क्षाणि। तथा हि-- "ण्वुल्तृचौ भवतः" इत्युक्तेऽर्थविशेषाकाङ्क्षा भवति-- क्वेमौ भवत इति। तस्मात् तेषामेवायं शेष इति तेष्वेवोपतिष्ठते। "न ख्युन्नादिवाक्येषु" इति। "उपतिष्ठते" इति। प्रकृतेनैव सम्बन्धः। "साक्षात्" इत्यादि। अनुपस्थाने कारणम्। ख्युन्नादिवाक्यान्यर्थाकाङ्क्षाणि न भवन्ति, तेषु करणादीनामर्थानां साक्षान्निर्देशात्। तस्यान्न तेषामयं शेष इति न तेषूपतिष्ठते,अतो न भवत्येष दोषप्रसङ्गः॥

बाल-मनोरमा

कर्तरि कृत् ६५३, ३।४।६७

कर्तरि कृत्। अर्थनिर्देशोऽयम्। इति प्राप्ते इति। वक्यमाणतव्यदादिप्रत्ययानां कृत्संज्ञकत्वात्तेषां कर्तरि प्राप्ताविव्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

भव्यगेयप्रवचनीयौपस्थानीयजन्याऽप्लाव्याऽपात्या वा ३।४।६८

भव्यादयः शब्दाः कर्तरि वा निपात्यन्ते। तयोरेव कृत्यक्तखलर्थः 3।4।70। इति भावकर्मणोः प्राप्तयोः कर्ता च वाच्यः पक्षे उच्यते। भवत्यसौ भव्यः, भव्यम् अनेन इति वा। गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानि इति वा। प्रवचनीयो गुरुः स्वाध्यायस्य, प्रवचनीयो गुरुणा स्वाध्याय इति वा। उपस्थानीयो ऽन्तेवासी गुरोः, उपस्थानीयः शिष्येण वा गुरुः। जायते ऽसौ जन्यः, जन्यमनेन इति वा। आप्लवते ऽसावाप्लाव्यः, आप्लाव्यम् अनेन इति वा। आपतति असावापात्यः, आपात्यम् अनेन इति वा।

न्यासः

भव्यगेयप्रवचीयोपस्थानीयजन्याप्लाव्यापात्या वा। , ३।४।६८

भव्यादिषु गेयप्रवचनीयोपस्थानीयाः सकर्मकाः। तेन तेषां कर्मणि प्राप्ते कत्र्तरि च निपातनम्। शेषाणामकर्मकाणां भावे कत्र्तरि च। "भव्यः" इति। "अचो यत्" 3।1।97, गुणः, "धातोस्तन्निमित्तस्यैव" 6।1।77 इत्यवादेशः। "गेयः" इति। "ईद्यति" 6।4।65 इतीत्वम्,गुणः। "साम्नाम्" इति। कर्मणि कृद्योगलक्षणा षष्ठी। "उपस्थानीयः" इति। अनीयर्। "जन्यः"इति। "अचो यत्" 3।1।97 इत्यत्र "तकिशसियतिचतिजनीनामुपसंख्यानम्" (वा।२१३) इति यत्। "आप्लाव्यः" इति। प्लवतेः "ओरावश्यके" 3।1।125 ण्यत्,वृद्धिः, पूर्ववदावादेशः। "आपात्यः" इति। "ऋहलोण्र्यत्" 3।1।124॥

बाल-मनोरमा

भव्यगेयप्रवचनीयोपस्तानीयजन्याप्लाव्यापात्या वा ३८१, ३।४।६८

भव्यगेय। कर्तरि वेति। "कर्तरि कृ"दित्यतः कर्तरीत्यनुवृत्तं वेत्यनेन संबध्यते। तथा च कर्तरि वा एते निपात्यन्ते। अन्यत्र नेति फलति। तत्र अन्यत्रेत्यस्याऽनिर्धारणादाह-- पक्षे इति। अन्यत्रापि न सर्वत्र, किंतु "तयोरेव कृत्यक्तखलर्थाः" इति सूत्रेण सकर्मकात्कर्मणि, अकर्मकाद्भावे एते कृत्या ज्ञेया इत्यर्थः। "तयोरेव कृत्ये"ति सूत्रे "लः कर्मणि चे"त्यस्मात्सकर्मकेभ्यः कर्मणि अकर्मकेभ्यो भाव इत्यनुवर्तते इति भावः। भव्य इति। कर्तरि अचो यत्। भव्यमनेन वेति। भावे यत्।गेयः साम्नामयमित। गाधातोः कर्तरि यत्। "ईद्यती"ति प्रकृतेरीत्वम्। गुणः। साम्नां कर्मणामनभिहितत्वात्कृद्योगे षष्ठी। कर्तुरभिहितत्वात्प्रथमा। गेयं सामाऽनेनेति। कर्मणि यत्, सकर्मकत्वात्, नतु भावे, कर्तुरनभिहितत्वात्तृतीया। कृद्योगषष्ठी तु कृत्ययोगे कर्तरि वैकल्पिकी, "कृत्यानां कर्तरि वा " इत्युक्तेः। इत्यादीति।

"प्रवचनीयो गुरुर्वेदस्य"। प्रवक्तेत्यर्थः। कर्तरि अनीयर्। "प्रवचनीयो वेदो गुरुणे"ति वा। "उपस्थानीयः शिष्यो गुरोः", "उपस्थानीयो गुरुः शिष्येणे"ति वा। "जन्योऽसौ"। जायते इत्यर्थः। "जन्यमनेने"ति वा। आप्लवतेऽसौ "आप्लाव्यः"। "ओरावश्यके" इति कर्तरि ण्यत्। "आप्लाव्यमनेने"ति वा। आपतत्यसौ "आपात्यः"। "ऋहलो"रिति कर्तरि ण्यत्। "आपात्यमनेन वा"। "शकि लिङ् चे"त्यपि व्याख्यातं प्राक् विशेषविवक्षया सूत्रक्रमादिहोपन्यस्तम्। नन्विह चकारानुकृष्टकृत्यविधिव्र्यर्थः, शक्तौ अशक्तौ च भावकर्मणोः सामान्यतः कृत्यविदित एव शक्तावपि सिद्धेरित्यत आह-- लिङा बाधेति। "शकि लि"ङित्येतावत्येवोक्ते शक्तौ विशेषविहितेन लिङा कृत्यानां बाधः स्यात्, अशक्तौ कृत्यानां चरितार्थत्वात्। वासरूपविधिस्तु स्त्र्यधिकारादूध्र्वं नेत्युक्तमेवेति भावः। लाघवादिति। इह चकारमात्रेण वासरूपविधेः स्त्र्यधिकारादूध्र्वमनित्यताज्ञापनं संभवति, अतः "प्रैषातिसर्गे"ति सूत्रे कृत्यग्रहणेन "अर्हे कृत्यतृचश्चे"त्यत्र कृत्यतृज्ग्रहणेन च तज्ज्ञापनाश्रयणे गौरवमिति भावः। इति कृत्यप्रक्रिया।

॥ इति बालमनोरमायाम् कृत्यप्रक्रिया॥

अथ क्र्यादयः।

अथ श्नाविकरणधातवो निरूप्यन्ते। डु क्रीञिति।

तत्त्व-बोधिनी

भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ३३२, ३।४।६८

भव्य।"तयोरेवे"ति नियमात्कर्तर्यप्राप्ते वचनम्। साम्नामिति। कर्मणि षष्ठी। इत्यादीति। प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य। प्रवचनीयो गुरुणा स्वाध्यायः। उपस्थानीय शिष्यो गुरोः। उपस्थानीयो गुरुः शिष्येण। जायते जन्यः, जन्यमनेन वा। आप्लवते आप्लाव्यः। ण्यत्। आप्लाव्यमनेन वा। शकि लिङ् च। वोढव्य इति। वह प्रापणे इत्यस्मात्तव्यः। हस्य "हो ढः" इति ढत्वे "झषस्तथो"रिति धत्वे "ष्टुना ष्टु"रिति ष्टुत्वे "ढो ढो लोपः"। "सहिवहो"रित्यवर्णस्यौत्वम्। अत्र ढलोपे कर्तव्ये ष्टुत्वमसिद्धमिति न शङ्क्यम्, आश्रयाऽसिद्धत्वात्। बाधा माभूदिति। "कृत्याना"मिति शेषः। कृत्योक्तिरिति। कृत्याऽनुकर्षकचकारोक्तिरित्यर्थः।

इति तत्त्वबोधिन्याम् कृत्यप्रकरणम्।

अथ क्र्यादयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लः १।३ ७२ कर्मणि ७।१ ७२ च ० ७२ भावे ७।१ ७२ च ० ७२ अकर्मकेभ्यः ५।३ ७२ कर्तरि ७।१ ६७ धातोः ५।१ ३।१।९१

अर्थः॥

लः=लकाराः सकर्मकेभ्यः धातुभ्यः कर्मणि कारके भवन्ति, चकारात् कर्त्तरि च, अकर्मकेभ्यः धातुभ्यः लकाराः भावे भवन्ति, चकारात् कर्त्तरि च। द्विः चकार-ग्रहणात् उभयत्र {कर्त्तरि} इति सम्बध्यते। अकर्मक-ग्रहणात् सकर्मकाः अपि

धातवः स्वयम् एव अक्षिप्ताः भवन्ति

उदाहरणम्॥

सकर्मकेभ्यः कर्मणि -- पठ्यते विद्या ब्राह्मणेन। कर्त्तरि -- पठति विद्यां ब्राह्मणः। अकर्मकेभ्यः भावे -- आस्यते देवदत्तेन, हस्यते देवदत्तेन। कर्त्तरि -- आस्ते देवदत्तः, हसति देवदत्तः।
काशिका-वृत्तिः
लः कर्मणि च भावे च अक्रमकेभ्यः ३।४।६९

लः इत्युत्सृष्टानौबन्धं सामान्यं गृह्यते, प्रथमाबहुवचनान्तं चा एअत्। लकाराः कर्मणि कारके भवन्ति, चकारात् कर्तरि च अकर्मकेभ्यो धातुभ्यो भावे भवन्ति, पुनश्चकारात् कर्तरि च। गम्यते ग्रामो देवदत्तेन। गच्छति ग्रामं देवदत्तः। अकर्मकेभ्यः आस्यते देवदत्तेन। आस्ते देवदत्तः। सक्रमकेभ्यो भावे न भवन्ति।
लघु-सिद्धान्त-कौमुदी
लः कर्मणि च भावे चाकर्मकेभ्यः ३७५, ३।४।६९

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च॥
न्यासः
लः कर्मणि च भावे चाकर्मकेभ्यः। , ३।४।६९

पूर्वसूत्रेण कृत्संज्ञकत्वाल्लकारः कत्त्रर्येव प्राप्नोति न भावकर्मणोः, अतस्तयोरपि यथा स्यादित्येवमर्थमिदमारब्धम्। "ल इत्युत्सृष्टानुबन्धकम् इत्यादि। लडादीनां दशानां लकारानां विशेषकराननुबन्धानुत्सृज्य "लः" इति सामान्यं गृह्नते। "प्रथमाबहुवचनान्तञ्चैतत्" इति। पञ्चमीषष्ठेकवचनाशङ्कां निराकरोति। पञ्चम्यां ह्नस्यां लकारात् परो यस्तस्यैवार्थो निर्दिष्टः स्यात्, ततश्च कत्त्रर्येव लकारः स्यात्, षष्ठ()आमेवास्यामनन्तर्यलक्षणा विज्ञायेत। तथा च लकारस्य योऽनन्तरस्तस्यैवार्थनिर्देशः स्यात्, ततश्च स एव दोषो यः पञ्चम्याम्। अत्राप्यादेशापेक्षया षष्ठी विज्ञायते?एवमपि लकारादेशानामनेनामर्थो निर्दिश्यत इत्ययमेव विषयार्थो न निर्दिष्टः स्यात्। ननु च लकारस्य प्रयोग एव नास्ति, तत्कथं तस्यैव कर्मादयोऽर्थाः? सामथ्र्यात् तदादेशानामेतेऽर्था विज्ञास्यन्त इत्यदोषः। "सकर्मकेभ्यो भावे न भवन्ति" इति। अकर्मकेभ्य इति वचनात्; अन्यथा हि तदनर्थकं स्यात्॥
बाल-मनोरमा
लः कर्मणि च भावे चाऽकर्मकेभ्यः ३, ३।४।६९

लः कर्मणि च। वाक्यद्वयमिदं सूत्रम्। "लः कर्मणि चे"ति प्रथमं वाक्यम्। "ल" इति प्रथमाबहुवचनान्तम्। चकारेण "कर्तरि कृ"दित्यतः "कर्तरी"त्यनुकृष्यते। "धातो"रित्यधिकृतम्। लकाराः कर्मणि कर्तरि च धातोः स्युरिति लभ्यते। सकर्मकधातुविषयमेवेदम्, अकर्मकेषु "कर्मणी"त्यस्य बाधितत्वात्। तदाह लकाराः सकर्मकेभ्य इति। एवं च सकर्मकेभ्यो भावे लकारान भवन्ति। सकर्मकेभ्योऽपि भावलकारप्रवृत्तौ तु "देवदत्तेन घटं क्रियते" इत्यादौ भावलकारेण कर्मणोऽनभिहितत्वाद्द्वितीया स्यादिति भावः। "भावे चाकर्मकेभ्यः" इति द्वितीयं वाक्यम्। अत्रापि चकारेण कर्तैवानुकृष्यते, न तु कर्म, असंभवात्। तदाह-- अकर्मकेभ्यो भावे कर्तरि चेति। अत्राऽकर्मकग्रहणेन अविवक्षितकर्मका अपि गृह्नन्ते। तेन "देवदत्तेन भुज्यते" इत्यत्र सतोऽप्योदनरूपकर्मणोऽविवक्षायां भावे लकारोऽस्त्येवेत्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

लः कर्मणि च भावे चाऽकर्मकेभ्यः ३, ३।४।६९

लः कर्मणि च। चकारात् "कर्तरि क"दित्यतः कर्तरीत्यनुकृष्यते। सकर्मकविषयं चेदम्। अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्, "भावे चे"त्युत्तरवाक्येन तत्र विशेषविधानाच्च। तदेतदाह--- सकर्मकेभ्य इति। भावे चेति। चकारेण कर्तैवाऽनुकृष्यते न तु कर्म, असंभवात्। तदाह-- भावे कर्तरि चेति। ननु भावकर्मणोरात्मनेपदविधानात्, "शेषात्कर्तरी"ति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्तारोऽर्था अनुमातुं शक्यन्त इति किमनेन सूत्रेण? मैवम्। असत्यस्मिन्सूत्रे सकर्मकेभ्योऽपि घञादिवद्भावे लकारापत्तौ "घटं क्रियते देवदत्तेने"त्यादिप्रयोगः प्रसज्येत, तन्माभूदित्येतदर्थमेतत्सूत्रस्यावश्यकत्वात्। न चैवम् "अककर्मकेभ्यो भावे लः" इत्येव सूत्र्यतां, "भावे अकर्मकेभ्य एवे"ति नियमार्थमिति वाच्यम्, "अकर्मकेभ्यो भाव एवे"ति विपरीतनियमापत्त्या कर्तरि तेभ्यो लकाराऽनापत्त्या कर्तरि तेभ्यो लकाराऽनापत्तेः। तस्माद्भावे चेति चकार आवश्यकः। न चैवं "भावे चाकर्मकेभ्यः" इत्येवाऽस्त्विति वाच्यं, भावे इव कत्त्र्तर्यप्यकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यो भाव इव कर्तर्यपि लकारानापत्तेः। नन्वेवमपि "लश्च भावे चाऽकर्मकेभ्यः" इत्येवास्तु, चकारेण कत्रीत्यनुकर्षणाल्लकाराः सकर्मकेभ्यः कर्तरि स्युरकर्मकेभ्यो भावे कर्तरि च स्युरित्यर्थे पर्यवसिते, कर्मणि तूक्तज्ञापकाद्भविष्यन्तीति किमनेन कर्मणीत्यनेनेति चेन्मैवम्, उत्तरसूत्रे "तयो"रित्यनेन कर्मणोऽपि परामर्शार्थं तस्यावश्यकतया ज्ञापकानुसरणक्लेशस्य वैयथ्र्यात्। तस्माद्यथान्यासमेव रमणीयम्। अत्र नैयायिका-- "लकाराणां कृतावेव शक्तिर्लाघवान्न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्, "देवदत्त" इत्यादिप्रथमान्तपदेन तल्लाभाच्च। "देवदत्तः पचती"त्यत्र हि देवदत्तो विशेष्यः, यत्नो विशेषणम् , आश्रयत्वं तु संसर्गः। रतथा च पाकानुकूलकृत्याश्रयो देवदत्त इत्यादिशाब्दबोधोऽपि सूष्बूपपद्यते" इति। तन्न। पचतीत्युक्ते पाककर्ता कस्मिन्नित्याकाङ्क्षा स्यात्, कस्येति वा। न चैककर्तृका पचिक्रियेति शाब्दबोधाब्युपगमेऽपि क इत्याकाङ्क्षा नोपपद्यत एवेति शङ्क्यं, कर्तृसामान्यबोदे सति क इति कर्तृविशेषाकाङ्क्षायां बाधकाऽभावात्। नापि देवदत्तकर्तृका पचिक्रियेत्युक्तेऽपि कस्मिन्नस्ति कस्य वेत्याकाङ्क्षा दुर्वारेवेति शङ्क्यं, विक्लित्त्यनुकूलव्यापारस्यैव पचिक्रियात्वात्, तदाश्रयस्य देवदत्तस्य कर्तृत्वात्, क्रियाश्रयत्वे निश्चिते कस्मिन्नित्याद्याकाङ्क्षाया अप्रवृत्तेः। किंच "पचन्तं देवदत्तं पश्य", "पचते देवदत्ताय देहि", "पचमानस्य देवदत्तस्य द्रव्य"मित्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाऽविशेषेण तेभ्योऽपि कृतिमात्रबोधापत्तेः। न चेष्टापत्तिराश्रयत्वं संसर्ग इत्युक्तत्वेन पाकानुकूलकृत्याश्रयं देवदत्तं पश्येत्याद्यर्थस्वीकारे दोषाऽभावदिति वाच्यं, नामार्थयोर्भेदान्वयस्य स्वपरसिद्धान्तविरुद्धत्वात्। न चैवं नामार्थयोरमेदसंसर्गव्युत्पत्त्यनुरोधेन, शतृशानजाजीनां कर्तरि शक्तिस्तिबादीनां तु कृतावेवेति वैषम्यं स्वीक्रियते, प्रामाणिकगौरवस्याऽदोषत्वादिति वाच्यं, "स्थान्येव वाचको लाघवान्न त्वादेशो गौरवा"दिति स्वसिद्धातन्तस्य परित्यागापत्तेः। "रामः", "ज्ञानं", "कतर"दित्यादौ सोर्विसर्गे सोरमि सोरदडि च कृते लाघवात्सुत्वनैव शक्तिर्न तु तत्तद्रूपेणेत्यादिभवदीयव्यवहारस्याऽसाङ्गत्यापत्तेश्च। एवं च तिबादीनां शत्रादीनां च स्मारकतया लिपिस्थानीयत्वं, बोधकस्तु लकार एवेति स्थितम्। स च शत्राद्यन्ते कर्तरि शक्त इत्यभ्युपगमे तिङन्ते कथं कृतिं बोधयेत्?। "अन्यायश्चाऽनेकार्थत्व"मिति न्यायात्। यदि त#उ वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचका इत्याद्यभ्युपगम्यते तर्हि-- घटं, घटेन, हरेऽव, विष्णोऽवेत्यादिषु "सर्वे सर्वपदादेशाः" इति न्यायेन पदस्फोटो वाक्यस्फोटश्च सिध्येदिति भवतां तन्महदनिष्टम्। किं च "कर्तरि कृ"दिति यत्कर्तृग्रहणं तदेव "लः कर्मणी"ति सूत्रे चकारेणानुकृष्यत इति कथं ण्वुलादीनां लकाराणां च शक्तौ वैलक्षण्यम्()। न च नामार्थयोरभेदान्वयसंसर्गाभ्यपगम एव ण्वुलादौ कर्तुर्वाच्यत्वे बीजमिति वाच्यं, "पचतिरूपं पचतिकल्पं देवदत्त" इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यतौचित्यात्। ननु समुदायस्य नामत्वेऽपि तिङ्प्रत्यययो न नामेति चेत्, पाचक इत्यत्राप्यक इत्येतन्न नामेति तुल्यम्। अकान्तं नामेति चेद्रूपबाद्यन्तमपि नामेति तुल्यम्। ततश्चात्र प्रशस्तपाककर्ता देवदत्त इत्याद्यभेदान्वयो भवद्भिरभ्युपगन्तव्य इति तिङ्क्ष्वपि कर्तुर्वाच्यता स्वीकत्रवयैव। किं च कर्तुर्वाच्यत्वाऽनभ्युपगमे "युष्मदि

समानाधिकरणे मध्यमः" "अस्मद्युत्तमः" इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्था, "अभिहिते कर्तरि प्रथमे"त्यादिकं च बवन्मते कथं सङ्गच्छताम्()। यत्तु अनभिहित इत्यस्यानभिहितसङ्ख्याक इत्यर्थवर्णनेन "देवदत्तः पचत्योदनम्", "ओदनः पच्यते देवदत्तेने"त्यादौ प्रथमाद्वितीयादिव्यवस्थापनमुक्तं, तन्न, कृत्तद्धितसमासेषु सङ्ख्याभिधानस्याऽप्रसिद्धत्वात्। ततश्च "पक्तकव्यस्तण्()ड्डुलः", "शत्यः शतिकोऽ()आः", "प्रास्तोदको ग्रामः" इत्यादिषु "कर्मणि द्वितीये"त्यस्य प्रवृत्तौ प्रथमा न स्यात्। न च "तिष्ठती"त्यध्याहारेण सङ्ख्याबिधानमिहाप्यस्तीति वाच्यं, "स्थित" इत्याद्यध्याहारे तदभावात्। "शाब्दिकोऽयं देवदत्तो न तु नैयायिक" इत्यादिषु "नीलमिदं न तु रक्त"मित्यत्रेव क्रियापदा[द्य]ध्याहारस्याऽनावश्यकतया आख्यातेन, "शब्ददर्दुरं करोती"ति ठक्प्रत्ययेन वा कर्तृसङ्ख्याया अनुक्तत्वाद्देवदत्ते कर्तरि तृतीयोत्पत्तिप्रसङ्गाच्च। तस्मादनभिहिते कर्तरीत्यादि व्याख्यानमेवाभ्युपेतव्यम्। अपि च धातूपात्तव्यापाराश्रयः कर्ता, तत्राश्रयमात्रं कृतां लकाराणां चार्थो न तु व्यापारोऽपि, तस्य धातुनैव लब्धत्वात्। अत एव कर्ता कारक इत्यादौ प्रकृतिप्रत्ययार्थयोर्नाऽनन्वयः, व्यापाराश्रयस्य प्रत्ययार्थत्वे तु तस्य प्रकृत्यर्थेन व्यापारएमान्वयः क्लिष्टः स्यात्। यस्तु वदति-- "कृदातोः कृतिरर्थः, कृत्प्रत्ययस्यापि कृतावेव शक्तिर्न तु कर्तरि। "कर्तरि कृ"दित्यत्रं हि कर्तरीति भावप्रधानो निर्देशः। कर्तृत्वं कृतिमत्त्वम्। तच्च कृतिरेवायत्र तु देवदत्तादिपदसमभिव्याहारस्तत्र तृजादौ कृतिमति लक्षणे" इत्यादि, तन्मते पूर्वोक्तकर्तेत्यादौ सुतरामनन्वयः। "कर्मवत्कर्मणे"ति सूत्रे करोतिरुत्पादनार्थः, उत्पत्तिश्च कर्मस्था, यत्नार्थकत्वे तु "करिष्यते घट" इत्यादि न सिद्ध्येदिति वक्ष्यमाणदूषणं च दुरुद्धरम्। आश्रयमात्रस्य प्रत्ययार्थत्वे तु "रथो गच्छती"त्यत्र रथस्याचेतनस्य यत्नाभावेऽपि गमनानुकूलचक्रभ्रमणादिव्यापाराश्रयत्वान्न काचिदनुपपत्तिः। एवं स्थिते कृतौ शक्तिरित्यास्योक्तिसंभव एव नास्ति, कृतेरपि व्यापारविशेषतया प्रायेण धातुत एव लाभात्। जानातीत्यादावाश्रयत्वं प्रत्ययस्यार्थ इति स्वीकृत्य यत्नार्थत्वस्य त्वयापि वक्तव्यत्वात्। नहि यत्नमन्तरेण ज्ञानं नोदेतीति कश्चिदभ्युपैति। तस्मात्कृतां तिङां च वैलक्षण्यं दुर्लभमिति कत्र्रर्थकत्वमभ्युपेयम्। एतेन कत्र्रधिकरणे आख्यातवाच्यत्वं कर्तुर्निरस्य जञ्जभ्यमानाधिकरणे यङन्ताद्विहितस्य जञ्जमान इति सानचः कर्तृवाचकत्वं स्वीकुर्वन्तो मीमांसका अपि प्रयुक्ताः। यत्तु तैरुक्तं- "शानजंशे"कर्तरि कृ"दिति व्याकरणं शक्तिग्राहकमस्ती"ति। तन्न। कृद्वाक्यशेषो ह्ययमर्थाकाङ्क्षायामनिर्दिष्टार्थेषु ण्वुलादिष्वेवोपतिष्ठते "आकाङ्क्षितविधानं ज्यायः" इति न्यायात्, न तु शत्रादिषु। स्थानिबूतलाकारार्थेनैव तेषां निराकाङ्क्षत्वात्, अन्यथा भावे कर्मणि च शानचो दौर्लभ्यापत्तेः। ततश्च "शय्यमाने आस्यमाने चायं गत" इत्यादिप्रयोगो भावे न स्यात्। कर्मणि तु "क्रियमाण" इत्यादिप्रयोगो न स्यात्। यत्तु भट्टपादा आहुः--- "कर्तरि यदेकत्वं तत्र तिप्, कर्तरि यद्द्वित्वं तत्र तसित्यादिक्रमेण "लः कर्मणी"त्यस्य "द्व्येकयो"रित्यादेश्चैकवाक्यतया व्याख्यानान्न कर्तृवाच्यता सूत्रादायाती"ति। तञ्चिन्त्यम्। "तान्येकवचनद्विवचने"ति विहितद्विवचनादिसंज्ञा हि तिबाद्यादेशनिष्ठा। ततश्च द्विवचनादिसंज्ञाकतिबादिविधिना "द्वेयकयो"रित्यस्यैकवाक्यताऽस्तु। न च तिबादिविधौ कर्तरीत्यस्ति यद्द्वित्वैकत्वादिविशेषणतयाक कथंचिन्नीयेत?। ननु "लः कर्मणी"ति सूत्रे कर्तरि कृ"दित्यतोऽनुवृत्तं कर्तृग्रहणं तिबादिविधावस्त्येव, लविधि-तिबादिविध्योरप्येकवाक्यतास्वीकारादिति चेत्। सत्यम्। वाक्यैकवाक्यता हि सा, न तु पदैकवाक्यता, " लः कर्मणी"ति विहितलकारानुवादेन तिबाद्यादेशविधेः प्रवृत्तत्वात्। तथा च लविधौ श्रूयमाणं कर्तृग्रहणं कथं सङ्ख्यां विशिनष्टु। न हि यत्र कर्तृग्रहणं तत्र सङ्ख्योपस्थापकमस्ति, लकारस्य द्विवचनादिसंज्ञाविनिर्मुक्तत्वात्। ततश्च "कर्तरि यदेकत्व"मिति व्याख्या कथमपि न संभवत्येव। स्यादेतत्-- "लः कर्मणी"ति सूत्रे "ल" इत्यकारानुबन्धकयोर्लङ्लटोः सामान्यग्रहणं न भवति, किन्तूत्सृष्टानुबन्धकलकाराणां सामान्यग्रहणमिति निर्विवादम्। तत्र "ल" इति जसन्तं माभूत्। किं तु ङसन्तमस्तु "लः परस्मैपद"मितिवत्। आदेशापेक्षा चेयं षष्ठी-- लस्य य आदेशः स कर्मणि चेत्यादि। न चाऽविहितस्य लस्यानुवादोन संभवतीति वाच्यं, "वर्तमाने ल"डित्यादिभिरेव लविधानात्। तथा च लस्य स्थानेय आदेशः स सकर्मकात्कर्मणि कर्तरि च [यदेकत्वं तत्र] स्यादकर्मकाद्भावे कर्तरि चेत्याद्यर्थः सुलभ इति

भट्टपादोक्त्योजनिकानिर्बाधैवेति चेत्। अत्राहुः-- ल इत्यस्य षष्ठ()न्तत्वे आदेशानामेवाऽर्थ उक्तः स्यात्। सोऽपि तिबादिनामेव, न तु शवादीनां , तेषां द्विवचनादिसंज्ञाविरहात्। "द्व्येकयो"रित्यादिनाऽस्यैकवाक्यतायाभवद्भिरुक्तत्वात्। न च भवदुक्तरीत्या "कर्तरि कृ"दित्यनेन निर्वाहः। भावे कर्मणि च शानचो दौर्लभ्यापत्तेर#उक्तत्वात्। न च शानज्विधिना सहाऽऽत्मनेपदव्यवस्थाकपकानामेकवाक्यतया "भावकर्मणो"रित्यनेनेष्टसिद्धिः। सकर्मकादपि भावे शानजापत्तेः। किं च जसन्तत्वे श्रुतेनैव संबन्धः, षष्ट()न्तत्वे त्वादेश इत्यध्याहाराद्गौरवमित्यादि। अत्रेदं बोध्यम्-- "भावे चाकर्मकेभ्यः" इत्यकर्मकग्रहणेनाऽविवक्षितकर्माणोऽपि गृह्न्ते। अत एव "णेरणौ" इति सूत्रे-- नेह पच्यते नेह भज्यते इति भावे लकार इति हरदत्तः। "अत्यन्ताऽविद्यमानकर्मकामामेव ग्रहणं, "नेह, पच्यते" इत्यादौ तु कर्मण्येव लकारः। गम्यमानत्वाच्च कर्म न प्रयुज्यते" इति मतान्तरम्। एतच्च "गतिबुद्धी"त्यादिसूत्रे हरदत्तग्रन्ते स्पष्टम्। यत्तु कैश्चिदुक्तम्-- इह "अविवक्षितकर्मणां भावे लकार इति प्रसादकृतोक्तं भाष्यादिविरोधादयुक्त" मिति, तच्चिन्त्यम्, पक्षद्व्यस्यापि भाष्यकैयकटादिग्रन्थारूढत्वात्। प्रत्युताऽविवक्षितकर्माणोऽप्यकर्मका इति पक्ष एव प्रबलः। तथाहि "समानकर्तृकेषु तुमु"न्निति सूत्रे इच्छता क्रियत इति भावे लडुक्तो हरदत्तेन। "णेरध्ययने वृत्त"मितिसूत्रे कैयट हरदत्तादिभिरपि "नपुंसके भावे क्तोऽकर्मकेभ्य एव, "तयोरेव कृत्यक्त"त्यत्र कृन्मात्रस्य ग्रहणात्, तत्र भावेचाऽकर्मकेभ्य इत्यनुवर्तनात्, अन्यथा घटं कृतमिति प्रसज्येते"ति सिद्धान्तितम्। एवं स्थिते यद्यविवक्षितकर्मणोऽपीह सूत्रेऽकर्मकग्रहणेन न गृह्नेरन्, तर्हि पीता गावो भुक्ता ब्राआह्नणा इत्यादौ भावे क्तान्तादर्शे आद्यजित्यादि निष्ठादिप्रकरणे स्वयमेव वक्ष्यमाणम्, "आदिकर्मणि क्तः" इति सूत्रे हरदत्तेन वक्ष्यमाणं, कृतपूर्वीत्यत्र भावे क्त इति कैयटाद्युक्तं च कथं सङ्गच्छेत्?। कथं च "गतं तिरश्चीन" मित्यादिप्रयोगाः सङ्गच्छेरन्?। "गतिबुद्धी"ति सूत्रे त्वकर्मकग्रहणेनाऽविवक्षितकर्मके"ति सूत्रेऽपि न गृह्न्ते,तेन हि सूत्रेण कर्तर्यपि क्तो विधीयत इति दत्तवान्पक्ववानित्याद्यर्थे दत्तः पक्व इत्याद्यापत्तेः। इह सूत्रे त्विवक्षितकर्मणाकर्मकत्वेन ग्रहणे न कोऽपि दोष इत्यास्तां तावत्।

---

सूत्रम्

काशिका-वृत्तिः

तयोरेव कृत्यक्तखलर्थाः ३।४।७०

तयोरेव भावकर्मणोः कृत्यसंज्ञाकाः क्तखलर्थाश्च प्रत्यया भवन्ति। एवकारः कर्तुरपकर्शणार्थः। कृत्याः कर्मणि कर्तव्यः कटो भवता। भोक्तव्य ओदनो भवता। भावे आशितव्यं भवता। शयितव्यं भवता। क्तः कर्मणि कृतः कटो भवता। भुक्त ओदनो भवता। भावे आसितं भवता। शयितं भवता। खलर्थाः कर्मणि ईषत्करः कटो भवता। सुकरः। दुष्करः। भावे ईषदाढ्यंभवं भवता। स्वाढ्यंभवं भवता। भावो चाक्रमकेभ्यः इत्यनुवृत्तेः सकर्मकेभ्यो भावे न भवन्ति।

लघु-सिद्धान्त-कौमुदी

तयोरेव कृत्यक्तखलर्थाः ७७३, ३।४।७०

एते भावकर्मणोरेव स्युः॥

न्यासः

तयोरेव कृत्यक्तखलर्थाः।, ३।४।७०

"तयोरेव भावकर्मणोः" इति। एतेन "तयोः" इत्यनेन "भावकर्मणोः" इत्यस्य प्रत्यवमर्श इति दर्शयति। ननु चानन्तरसूत्रे द्वे वाक्ये-- "लः कर्मणि भवन्ति कत्र्तरि च" इत्येकं वाक्यम्, "भावे चाकर्मकेभ्योऽपि भवन्ति कत्र्तरि च" इति द्वितीयम्, तत्रानन्तरवाक्यश्रुतयोः कर्तृभावयोरेव तयोरित्यनेन प्रत्यवमर्शो युक्तः? नैष दोषः। यदयमुत्तरसूत्रे "कत्र्तरि च" ३।४।७१

इति करोति,ततोऽवसीयते--- भावकर्मणोरेव प्रत्यवमर्श इति यदि भावकर्त्रोरेव प्रत्यवमर्शः स्यात्, कर्तृग्रहणमनर्थकं स्यात्; कर्त्तर्यनेनैव सिद्धत्वात्। एवं हि तत्र वक्तुं युक्तं स्यात्-- कर्मणि चेति, कर्मणि केनचिदप्राप्तः स्यात्। यदा पुनरिह भावकर्मणोः प्रत्यवमर्शस्तदा युक्तं कर्त्तरिग्रहणम्, कर्त्तर्यप्राप्ते यथा स्यात्। यथाप्राप्तं भावकर्मणोः। तस्माद्भावकर्मणोरेव प्रत्यवमर्शो युक्तः। "एवकारः" इत्यादिना एवकारस्य व्यवच्छेद्यं अपकर्षणार्थः = निवृत्त्यर्थः। "शयितम्" इति। "निष्ठा शीङ" १।२।१९ इत्यादिना कित्त्वप्रतिषेधाद्गुणः। "ईषत्करः,सुकरः" इति। "ईषदुःसुषु" ३।३।१२६ इत्यादिना खल्। "ईषदाढ()ंभवम्" इति। अत्रापि "कर्तृकर्मणोश्च भूकृञोः ३।३।१२७॥

बाल-मनोरमा

तयोरेव कृत्यक्तखलर्थाः ६५४, ३।४।७०

तयोरेव कृत्यखलर्थाः। "लः कर्मणि च भावे चे" ति सूत्रोपात्ते भावकर्मणी तच्छब्देन कृत्संज्ञकतया प्राप्तकर्त्रर्थकत्वस्याऽभावमनुवदन् कृत्यसंज्ञया वैशेषिक्या कृत्संज्ञाया अबाधं गमयति।

तत्त्व-बोधिनी

तयोरेव कृतयक्तखलर्थाः ५४४, ३।४।७०

तयोरेव। तच्छब्देन भावकर्मणी परामृश्येते, एवकारस्तु क्रतृयोगव्यवच्छेदार्थः। तदाह--भावकर्मणोरेवेति। यद्यप्येतत्तक्रकौण्डिन्यन्यायेनैव लभ्यते तथापि स्पष्टप्रतित्त्यथमेवकार इत्येके। तन्न्यायस्याऽनित्यज्ञापनार्थमित्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

आदिकर्मणि क्तः कर्तरि च ३।४।७१

आदिकर्मणि यः क्तो विहितः स कर्तरि भवति। चकाराद् यथाप्राप्तं भावकर्मणोः। आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितः, तस्य अयम् अर्थनिर्देशः। प्रकृतः कटं देवदत्तः, प्रकृतः क्तो देवदत्तेन, प्रकृतम् देवदत्तेन। प्रभुक्त ओदनं देवदत्तः, प्रभुक्त ओदनो देवदत्तेन, प्रभुक्तं देवदत्तेन।

न्यासः

आदिकर्मणि क्तः कर्त्तरि च। , ३।४।७१

"आदिकर्मणि" इति। आदिश्चासौ कर्म चेति विशेषणसमासः। "क्रियाक्षणः" इति। एतेन कर्मशब्दोक्रियां कर्माचष्टे, न साधनं कर्मेति दर्शयति। कुतः पुनरेतदवसितम्-- "क्रियां कर्माचष्ट इति? आदिशब्देन विशेषणात्। बहूनां क्रियाक्षणनामादिमध्यान्तभावे सत्यनादिभूतक्रियाक्षमव्यवच्छेदादादिभूतो यः क्रियाक्षणस्तदादिकर्मेति युक्तं प्रतिपादयितुम्। आदिग्रहणेन साधनं कर्म त्वेकमेवेत्यादिशब्देन विशेषयितुं न शक्यते; आदेरनादिभूतत्वापेक्षत्वादादिशब्दस्य तत्राप्रवृत्तिः, व्यवच्छेद्याभावात्। आदिकर्मणि च "भूते" ३।२।८४ इत्यनुवर्त्तमाने "निष्ठा" ३।२।१०२ इत्यनेनैव विहित इति दर्शयतिन्नाह--"तस्मिन्" इत्यादि। आद्यो यः क्रियाक्षणः स परिनिष्पन्नत्वाद्()भूतो भवतीति युक्ता तस्य भूतत्वेन विवक्षितता। "प्रकृतः कटं देवदत्तः" इति। कर्त्तरि क्तः। तेनैव कर्त्ताऽभिहित इति देवदत्तशब्दात् तृतीया न भवति। कर्मणस्त्वनभिहितत्वात् कटशब्दाद्द्वितीया भवत्येव। "प्रकृतः कटो देवदत्तेन" इति। अत्र कर्मणि क्तः। तेनैव कर्णणोऽभिहितत्वाद्द्वितीया न भवति। कर्त्तरनभिहितत्वाद्देवदत्तशब्दात् तृतीया भवत्येव। "प्रकृतं देवदत्तेन" इति। भावे क्तप्रत्ययः। सर्वत्र प्रशब्द आदिकर्म द्योतयति। ननु चादिभूतक्रियाक्षमकाले

कटोऽनभिनिर्वृत्त एव भवति, कटकारणभूता एव पीरणादयस्तदानीं सन्ति, न च तदवस्थः कटः तदवस्थः कटः, तत्कथं प्रकृतः कट इति भूतकालेन प्रकृतशब्देन कटस्य सामानाधिकरण्यम्? आद्येन क्रियाक्षणेन यो वीरणादीनां विशेष आहितस्तत्र तादर्थ्यात् कटशब्दो वत्र्तते, स च भूत एवेत्यदोषः॥

बाल-मनोरमा

आदिकर्मणि क्तः कर्तरि च ८६०, ३।४।७१

आदिकर्मणि क्तः कर्तरि च। चाद्भावकर्मणोरिति। "तयोरेव कृत्ये"त्यतस्तदनुवृत्तेरिति भावः। "प्रकृतः कटं देवदत्तः, प्रकृतवान् कटं देवदत्तः" इति भाष्ये उदाह्मतम्। आरभ्यमाणकरणक्रियेति बोधः।

तत्त्व-बोधिनी

आदिकर्मणि क्तः कर्तरि च ७०५, ३।४।७१

आदिकर्मणीति। आद्येषु क्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाऽभावान्निष्ठा न प्राप्नोतीति वचनम्, आदिकर्मणि क्तस्य कर्तरि विधानार्थं चेत्याहुः। चादिति। अन्यथा तक्रकौण्डिन्यन्यायेन भावकर्मणोर्न स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

गत्यर्थाक्रमकश्लिषशीङ्स्थाऽअसवसजनरुहजीर्यतिभ्यश् च ३।४।७२

गत्यर्थभ्यो धातुभ्यो ऽकर्मकेभ्य श्लिषादिभ्यश्च यः क्तः, स कर्तरि भवति। चकाराद् यथाप्राप्तं च भावकर्मणोः। गतो देवदत्तो ग्रामम्, गतो देवदत्तेन ग्रामन्, गतो देवदत्तेन ग्रामः, गतं देवदत्तेन। अकर्मकेभ्यः ग्लानो भवान्, ग्लानं भवता। आसितो भवान्, आसितं भवता। श्लिष उपश्लिष्टो गुरुं भवान्, उपश्लिष्टो गुरुर्भवता, उपश्लिष्टं भवता। शीङ् उपशयितो गुरुं भवान्, उपशयितो गुरुर्भवता, उपशयितं भवता। स्था उपस्थितो गुरुं भवान्, उपस्थितो गुरुर्भवता, उपस्थितं भवता। आस उपासितो गुरुं भवान्, उपासितो गुरुर्भवता, उपासितं भवता। वस अनूषितो गुरुं भवान्, अनूषितो गुरुर्भवता, अनूषितं भवता। जन अनुजातो माणवको माण विकाम्, अनुजाता माणवकेन माणविका, अनुजातं माणवकेन। रुह आरूढो वृक्षं भवान्, आरूढो वृक्षो भवता, आरूढं भवता। जीर्यति अनुजीर्णो वृषलीं देवदत्तः, अनुजीर्णा वृपली देवदत्तेन, अनुजीर्णं देवदत्तेन। श्लिषादयः सोपसर्गाः सकर्मका भवन्ति, तदर्थम् एषाम् उपादानम्।

न्यासः

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च। , ३।४।७२

"उपस्थितः" इति। "द्यतिस्यतिमास्थामिति किति" ७।४।४० इत्तीत्वम्। "अनूषितः" इति। वच्यादिना (६।१।१५ सम्प्रसारणम्, "वसतिक्षुधोः" ७।२।५२ इतीट्, "शासिवसिघसीनाञ्च" इति षत्वम्। "अनुजातः" इति। "जनसनखनां सञ्झलोः" ६।४।४२ इत्यात्वम्। "आरूढः" इति। "हो ढः" ८।२।३१, "झषस्तथोर्द्धोऽधः" ८।२।४० इति धत्वम्, "ष्टुना ष्टुः" ८।४।४०, " ढो ढे लोपः" ८।३।१३, "ढ्रलोपे पूर्वस्य" ६।३।११० इति दीर्घः। "अनुजीर्णः" इति। "जॄ वयोहानौ" (धा।पा।१४९४), "ऋत इद्धातोः" ७।१।१०० इतीत्त्वम्, "हलि च" ८।२।७७ इति दीर्घत्वम्, "रदाभ्याम्" ८।२।४२इत्यादिना नत्वञ्च। ननु च श्लिषादीनामकर्मकत्वादेव सिध्यतीति तत्किमर्थमेषां ग्रहणमित्याह-- "श्लिषादयः" इत्यादि। "तदर्थम्" इति। सकर्मकार्थमित्यर्थः॥

बाल-मनोरमा

गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ८८९, ३।४।७२

गत्यर्थ। गत्यर्थ, अकर्मक, श्लिष, शीङ्, स्था, आस , वस, जन, रुह, जीर्यति एषां दशानां द्वन्द्वः। "लः कर्मणि च भावे चे"त्यतो भावे कर्मणीति "आदिकर्मणि क्तः कर्तरि चे"त्यतः कर्तरि इति चानुवर्तते। तदाह-- एभ्य इत्यादिना। कर्तरीत्येवानुवृत्तौ भावकर्मणोर्न स्यादिति तयोरप्यनुवृत्तिः। गङ्गां गत इति। कर्तरि क्तः। गङ्गां प्राप्त इति। "आप्लृ व्याप्तौ" उपसर्गवशाद्गतौ वर्तते। अकर्मकादुदाहरति--म्लान इति। क्षीण इत्यर्थः। "संयोगादेः" इति निष्ठानत्वम्। आश्लिष्ट इति। आलिङ्गितवानित्यर्थः। नन्वकर्मकत्वादेव सिद्धे शीङादीनां पुनग्र्रहणं व्यर्थमित्यत आह-- शेषमधिशयित इति। शेषे शयितवानित्यर्थः। "अधीशीङ्()स्थासाटमिति शेषः कर्म, अतो नाऽकर्मकत्वादिह प्राप्तिरिति भावः। वैकुण्ठमधिष्ठित इति। वैकुण्ठे स्थिवानित्यर्थः। "अधिशीङ्स्थासा"मिति वैकुण्ठः कर्म। अतो नाऽकर्मकत्वादिह प्राप्तिः। शिवमुपासित इति। शिवं परिचरितवानित्यर्थ-। उपवेशनार्थकत्वे अकर्मकत्वेऽपि इह उपसर्गवशेनाऽर्थान्तरे सकर्मकत्वादकर्मकेत्यनेन न प्राप्तिरिति भावः। हरिदिनमुपोषित इति। "वसतिक्षुधो"रिति इट्। यजादित्वात्संप्रसारणम्। "शासी"ति षः। हरिदिने न भुक्तवानित्यर्थः। "उपान्वध्याङ्वसः" इति हरिदिनं कर्म। ततश्चाऽकर्मकत्वाऽभावादप्राप्तिः। राममनुजात इति। अनुकृतवानित्यर्थः। अनुसृत्य जातवानिति वा। "ततश्चाऽकर्मकत्वाऽभावादप्राप्तिः। गरुडमारूढ इति। उपर्याक्रान्तवानित्यर्थः। वि()आमनुजीर्ण इति। हतवानित्यर्थः। व्याप्तवानिति वा। अकर्मकत्वाऽभावादप्राप्तिः। जृ()धातोः कर्तरि क्तः। "ऋतः" इतित इत्त्वं। रपरत्वं। "हलि चे " ति दीर्घः। "रदाभ्या"मिति नत्वं। णत्वम्। पक्षे इति। कर्तरि प्रत्ययाऽभावपक्षे इत्यर्थः।

तत्त्व-बोधिनी

गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ७३१, ३।४।७२

गत इति। "अनुदात्तोपदेशे"ति मलोपः। प्राप्त इति। प्रपूर्व आप्लृ व्याप्तौ। व्याप्तिरपीह सूत्रे गतिशब्देन विवक्षितेति भावः। ग्लान इति। ग्लै हर्षक्षये। अकर्मकोऽयम्। "आदेच" इत्यात्वे "संयोगादेरात" इति नत्वम्। शेषमिति। "अधिशीङस्थासां कर्मे"ति कर्मत्वम्। अधिष्ठित इति। "द्यतिस्यती"ति इत्त्वम्। उपोषित इति। "वसतिक्षुधो"रितीट्। "शासिवसी"ति षत्वम्। अनुजीर्ण इति। जृ()ष् वयोहानौ। "ऋत इद्धातोः" "हलि चे"ति दीर्घः। नत्वणत्वे।

---

सूत्रम्

काशिका-वृत्तिः

दाशगोघ्नौ सम्प्रदाने ३।४।७३

दाशगोघ्नौ शब्दौ संप्रदाने कारके निपात्येते। दाशृ दाने, ततः पचाद्यच्। स कृत्संज्ञकत्वात् कर्तरि प्राप्तः, सम्प्रदाने निपात्यते। दाशन्ति तस्मै इति दाशः। आगताय तस्मै दातुं गां हन्ति इति गोघ्नः, अर्घार्हो ऽतिथिः। टगत्र निपात्यते। निपातनसामर्थ्यादेव गोघ्नः ऋत्विगादिरुच्यते, न तु चण्डालादिः। असत्यपि च गोहनने तस्य योग्यतया गोघ्नः इत्यभिधीयते।

न्यासः

दाशगोघ्नौ सम्प्रदाने। , ३।४।७३

"गोघ्नः" इति। स एव हन्तेः पचाद्यच्। सम्प्रदानेऽच् निपात्यते, उपधालोपश्च। अथ वा-- टक्()प्रत्ययो निपात्यते, उपधालोपश्च "गमहन" ६।४।९८ इत्यादिनैव सिद्धः, "हो हन्तेः" ७।३।५४ इत्यादिना कुत्वम्। यदि सम्प्रदाने "गोघ्नः" इति

निपात्यते, ततश्चाण्डालादेरपि तेनाभिधानं प्राप्नोति; यस्मात् तस्मै अपि ये ह्यागताय दातुं घ्नन्ति तेऽपि सुकृत इत्यत आह-- "निपातनसामर्थ्यात्" इत्यादि। यथैव ह्यत्र निपातनसामर्थ्यात् किञ्चिदलाक्षणिकं कार्यं लभ्यते तथाऽर्थविशेषोऽपि। तस्माद्यद्यपि "गोघ्नः" इत्यविशेषेण निपात्यते, तथापि विशिष्टस्यैव। तेन ऋत्विगादेरभिधानम्, नान्यस्य चाण्डालादेः। यदा तर्हि दातुं हन्यते तदा तस्य गोघ्न इत्यभिधां न प्राप्नोतीत्यत आह-- "असत्यपि" इत्यादि। यथा ह्यपचन्नपि योग्यतया पाचक इत्युच्यते, तथाऽसत्यपि गोहनने गोघ्न इति॥

---

सूत्रम्

काशिका-वृत्तिः

भीमाऽदयो ऽपादाने ३।४।७४

भीमादयः शब्दा अपादाने निपात्यन्ते। उणादिप्रत्ययान्ता एते, इषियुधीन्धिदसिश्याधूसूभ्यो मक्, भियष्षुक् ग्रस्वश्च इत्येवम् आदयः। ताभ्याम् अन्यत्रौणादयः ३।४।७५ इति पर्यदासे प्राप्ते निपातनम् आरभ्यते। भीमः। भीष्मः। भयानकः। वरुः। भूमिः। रजः। संस्कारः। संक्रन्दनः। प्रपतनः। समुद्रः। स्रुचः। स्रुक्। खलतिः।

न्यासः

भीमादयोऽपादाने। , ३।४।७४

"{उणादिप्रत्ययान्ता एते-- काशिका"} ऊणादिप्रत्यया एते"। इति। उणादयः प्रत्यया येषां ते तथोक्ताः। के पुनस्त उणादयः प्रत्ययाः? इत्यत आह-- "श्याधूसूभ्यो मक्" इत्यादि। आदिशब्देन मङ्क्वन्नादीनां ग्रहणम्। यदि तर्ह्युणादिप्रत्यया एते, एवं सत्युणादिप्रत्ययानां रूढिशब्दात् क्रियाकारकसम्बन्धाभावादपादाने वृत्तिर्न सम्भवत्येव? नैष दोषः; रूढिशब्देष्वपि केषाञ्चित् क्रियाकारकसम्बन्धोऽस्त्येव, यथा-- तैलपायिकादिषु। अतोऽदेश्यमेतत्। "ताभ्याम्" इत्यादि। ननु चासत्यस्मिन् सूत्रे ताभ्यामित्येष निर्देशो नोपपद्यते; अपादानस्याप्रकृतत्वात्, तत्कुतः पर्युदासस्य प्रसङ्गः? नैष दोष-; अर्थकत्वमेतत्। अस्मिन् ह्यसति तत्रैवं सूत्रं कत्र्तव्यम्-- ततोऽपादानाच्चान्यत्रोणादय इति। तथा च यदीदं नोच्येत,तदा स्यादेव पर्युदासः॥

तत्त्व-बोधिनी

भीमादयोऽपादाने १५०७, ३।४।७४

भीमः। भीष्म इति। "भियो हेतुभये षु"गिति मप्रत्ययसंनियोगेन वैकल्पिकः षुक्। प्रस्कन्दत्स्मादिति प्रस्कन्दनः। अपादाने ल्युट्। प्ररक्षत्यस्मादिति प्ररक्षः। पचाद्यच्। मुह्यत्यस्मादिति मूर्खः। "मुहेः खो मूर्च"। स्खलत्यस्मादिति खलतिर्निष्केशशिरा इति प्रागुक्तम्।

ताभ्यामितीति। "ताभ्या"मित्यनुक्तौ तु सन्निहिताऽपादानस्यैव परामर्शादपादानादन्यत्रेत्यर्थः स्यादिति भावः। ततोऽसाविति। तनोतेः कर्तरि क्तः। "अनुदात्तोपदेशे"त्यनुनासकिलोपः। असौ ततो भवति = विस्तृतो भवतीत्यर्थे तनोतेस्तुन्। वृत्तमिति। गमनादिना निष्पन्नं यत्तद्वत्र्म। वृतेः कर्मणि मनिन्। "अयनं वत्र्ममार्गाऽध्वे"त्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

ताभ्याम् अन्यत्रौणादयः ३।४।७५

उणादयः शब्दाः ताभ्याम् अपादानसम्प्रदानाभ्याम् अन्यत्र कारके भवन्ति। कृत्वात् कर्तर्येव प्राप्ताः कर्मादिषु कथ्यन्ते। ताभ्याम् इति सम्प्रदानार्थः प्रत्यवमर्शः, अन्यथा ह्यपादानम् एव पर्युदस्येत, अनन्तरत्वात्। कृषितो ऽसौ कृषिः। तनित इति तन्तुः। वृत्तम् इति वर्त्म। चरितं चर्म।

न्यासः

ताभ्यामन्यत्रोणादयः। , ३।४।७५

अथ किमर्थं ताभ्यामित्यनेन सम्प्रदानापादानप्रत्यवमर्शः क्रियते, एतावदेव वक्तव्यम्-- अव्यत्रोणादय इति, प्रकृतत्वादेव हि तयोस्ताभ्यामन्यत्रोणादयो विज्ञास्यन्ते? अत आह-- "सम्प्रदानप्रत्यवमर्शार्थम्" इत्यादि। "अन्यथा हि" इत्यादि। यदि "ताभ्याम्" इत्यनेन तयोः प्रत्यवमर्शो न क्रियते इत्यर्थः। "अनन्तरत्वात्" इत्यादि। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति न्यायादपादानस्यैव पर्युदासः स्यात्, यदि ताभ्यामिति निर्देशो न क्रियेत। "कृषिः" इति। "इक् कृष्यादिभ्यः" (वा।३२४) इतीक्। "तन्तुः" इति। "सितनिगमिमसिसच्याविधाञ्क्रुशिभ्यस्तुन्" (द।उ।१।१२२) इति तुन्। "चर्म" इति। मनिन्॥

---

सूत्रम्

काशिका-वृत्तिः

क्तो ऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३।४।७६

द्रौव्यार्थाः अकर्मकाः, प्रत्यवसानार्थाः अभ्यवहारार्थाः इति स्वनिकायप्रसिद्धिः। ध्रौव्यागतिप्रत्यवसानार्थेभ्यः यः क्तो विहितः सो ऽधिकरणे भवति। चकाराद् यथाप्राप्तं च। ध्रौव्यार्थेभ्यः कर्तृभावाधिकरणेषु, गत्यर्थेभ्यः कर्तृकर्मभावाधिकरनेषु, प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेसु। भ्रौव्यार्थेभ्यः तावत् आसितो देवदत्तः, आसितं तेन, इदम् एषाम् आसितम्। गत्यर्थेभ्यः यातो देवदत्तो ग्रामम्, यातो देवदत्तेन ग्रामः, यातं देवदत्तेन, इदम् एषां यातम्। प्रत्यवसानार्थेभ्यः भुक्तः ओदनो देवदत्तेन, देवदत्तेन भुक्तम्, इदम् एषां भुक्तम्। कथं भुक्ता ब्राह्मणाः, पीता गावः इति। अकारो मत्वर्थीयः, भुक्तम् एषाम् अस्ति, पीतम् एषाम् अस्ति इति।

न्यासः

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः। , ३।४।७६

ननु च नेयं लोके प्रसिद्धिः -- ध्रौव्यार्था अकर्मकाः, प्रत्यवसानार्था अब्यवहार्था इति, तत्कथमयमर्थो लभ्यते? इत्यत आह-- "स्वनिकायप्रसिद्धिः" इति। स्वनिकायः = वैयाकरणसङ्घः, तत्रेयं प्रसिद्धिः। "कर्तृभावाधिकरणेषु" इति। भावकर्मणोः "तयोरेव" [३।४।७०](3.4.70) इत्यादिना। "इदमेषाम्" इति। "अधिकरणवाचिनाम्" [२।३।६८](2.3.68) इति षष्ठी। "कथम्" इत्यादि। "भुक्ता ब्राआह्णणाः, पीता गावः" इति। कत्र्तरि निष्ठा, अन्यथाऽनभिहितत्वात् कर्त्तुब्र्राआह्णणशब्दाद्गोशब्दच्च कत्र्तरि तृतीया स्यात्। न प्रत्यवसानार्थेभ्यः केनचित् कत्र्तरि क्तो विहितः, तत्कथमेतौ सूत्रादनन्तरमिदं कस्मान्न पठ()ते, एकः एवं सति गुणो भवति, द्विः क्तग्रहणं न कत्र्तव्यं भवति। तदेवं वक्तव्यम् --आदिर्मणि क्तः कत्र्तरि च, ततः श्लिषशीङ्स्थासवजनरुहजीर्यतिभ्यश्च, ततोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य इति, एवञ्च द्विः क्तग्रहणं गत्यर्थाकर्मकग्रहणञ्च न कत्र्तव्यं भवति? अशक्यमेवं वक्तुम्; एवं ह्युच्यमाने यथा ध्रौव्यार्थेभ्यः कत्र्तरि क्तो भवति, तथा प्रत्यवसानार्थेभ्योऽपि स्यात्, स च नेष्यते। तस्माद्यथान्यासमेवास्तु॥ "अकार उच्चारणार्थः" इति। एतेनानुबन्धशङ्कां निराकरोति। अनुबन्धे ह्यस्मिन्ननकारानुबन्धविशिष्टयोरेव लङलटोग्र्रहणं स्यात्, नान्येषां लिडादीनाम्। "अर्थविशेषे"इति। कर्तृकर्मादौ"। "कालविशेषे" इति। वत्र्तमानादौ। "अक्षरसमाम्नायवत्" इति। यथाऽक्षरसमाम्नाये प्रत्याहारेऽकारादयो

वर्णा आनुपूर्व्या कथ्यन्ते, तद्वदित्यर्थः। "अथ लकारमात्रस्य ग्रहणं कस्मान्न भवति" इति। विशेषानुपादानामिति भावः। "चूडालः" इति। "प्राणिस्थादातो लजन्यतरस्याम्" ५।२।९५ इति लच्। "धात्वधिकारः" इति। "धातोः" ३।१।९१ इति पञ्चम्यन्तमनुवत्र्तते, तेन च लकारो विशिष्यते-- धातोर्विहितस् लस्येति। "लः कर्मणि च भावे चाकर्मकेभ्यः" ३।४।६९ इत्यादौ प्रकारणे येऽर्थाः कर्त्तृकर्मभावा निर्दिष्टास्त इहानुवत्र्तन्ते, तैश्च लकारो विशिष्यते-- कत्र्रादिषु विहितस्य लस्येति। तेन विसिष्टस्यैव लकारस्य ग्रहणं भवति, न सर्वस्येति भावः॥

बाल-मनोरमा

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ८९०, ३।४।७६

क्तोऽधिकरणे च। ध्रौव्यं , गतिः, प्रत्यवसानं च अर्थो येषामिति विग्रहः। ध्रौव्यार्थेभ्यो, गत्यर्थेभ्यः, प्रत्यवसानार्थेभ्यश्चेति यावत्। चाद्यथाप्राप्तमिति। कर्मकर्तृभावेष्वपि यथासंभवमित्यर्थ-। ध्रौव्यमित्यस्य विवरणं - स्थैर्यमिति। स्थिरीभवनम्। उपवेशनशयनादिक्रियेति यावत्। मुकुन्दस्यासितमिदमिति। श्लोकोऽयम्। आस्यते अस्मिन्नित्यासितम्। आसनमित्यर्थः। ध्रौव्यार्थस्योदाहरणमिदम्। इदं यातं रमापतेरिति। गत्यर्थस्योदाहरणम्। यायते गम्यते अस्मिन्निति यातं, मार्ग इत्यर्थः। भुक्तमेतदनन्तरस्येति। भुज्यते अस्मिन्निति भुक्तम्। भोजनस्थानमित्यर्थः। "अधिकरणवाचिनश्चे"ति त्रिष्वपि कर्तरि षष्ठी। पक्षे इति। आधिकरणे प्रत्ययाऽभावपक्षे इत्यर्थः। आसेरकर्मकत्वादिति। ततश्च न कर्मणि क्त इत्यर्थः। आसितो मुकुन्द इति। आसितवानित्यर्थः। आसितं तेनेति। भावे उदाहरणम्। गत्यर्थेभ्य इति। तेषां सकर्मकतया कर्तरि कर्मणि च क्तः, न तु भावे इत्यर्थः, "लः कर्मणि चे"त्यत्राऽदर्शनादिति भावः। भुजेः कर्मणीति। भक्षणार्थात्कर्मणि क्तः, न तु भावे, सकर्मकेभ्यो भावे प्रत्ययस्य "लः कर्मणी"त्यत्राऽदर्शनात्। नापि प्रत्यवसानार्थेभ्यः कर्तरि, अनभिधानादित्यर्थः। कथमिति। भुजेः कर्तरि क्ताऽभावस्योक्तत्वादिति भावः। समाधत्ते-- भुक्तमस्त्येषामिति। अत् गत्यर्थेभ्यो भावेऽपि क्तप्रत्ययोऽस्त्येव , अविशेषात्, "अजर्यं सङ्गत"मिति सूत्रे "अनेकमन्यपदार्थेट इति सूत्रे च भाष्ये गत्यर्थेभ्यो भावे क्तप्रत्ययस्य अभ्युपगमाच्चेति शब्देन्दुशेखरे विस्तरः। इत्यधिकृत्येति। "वर्तमाने ल"डित्यतो मण्डूकप्लुत्या अनुवर्तमान इत्यर्थः, चानशादीनां सर्वकालतायाः "भूते" इति सूत्र भाष्ये उक्तत्वादित्याहुः।

तत्त्व-बोधिनी

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ७३२, ३।४।७६

मुकुन्दस्येति। आस्यतेऽस्मिन्नित्यासितम्। आसनमित्यर्थः। यायतेऽस्मिन्निति यानं मार्गः। भुज्यतेऽस्मिन्निति भुक्तं। भोजनमित्यर्थः। त्रिष्वपि "अधिकरणवाचिनश्चे"ति कर्तरि षष्ठी।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लस्य ६।१ ११७

अर्थः॥

इतः अग्रे आतृतीयाध्यायपरिसमाप्तेः (३।४।११७) वक्ष्यमाणानि कार्याणि लकारस्य एव स्थाने भवन्ति इति अधिकारः वेदितव्यः। लस्य इति सामान्यस्य निर्देशस्तेन लकारमात्रस्य ग्रहणं भवति। लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लुङ्,

लृङ् इत्येतेषां दशलकाराणाम्।

उदाहरणम्॥

अग्रे उदाहरिष्यामः

काशिका-वृत्तिः

लस्य ३।४।७७

लस्य इत्ययम् अधिकारः। अकार उच्चारनार्थः। लकारमात्रं स्थानित्वेन अधिक्रियते। यदिति ऊर्ध्वम् अनुक्रमिष्यामः लस्य इत्येवं तद् वेदितव्यम्। किं च इदं लस्य इति? दश लकारा अनुबन्धविशिष्टा विहिता अर्थविशेषे कालविशेषे च। तेषां विशेषकराननुबन्धानुत्सृज्य यत् सामान्यं तद् गृह्यते। षट् टितः, चत्वारः ङितः। अक्षरसमाम्नायवदानुपूर्व्या कथ्यन्ते। लट्। लिट्। लुट्। लृट्। लेट्। लोट्। लङ्। लिङ्। लुङ्। लृङ्। इति। अथ लकारमात्रस्य ग्रहणम् कस्मान् न भवति, लुनाति, चूडालः इति? धात्वधिकारो ऽनुवर्तते, कर्त्रादयश्च विशेषकाः।

बाल-मनोरमा

लस्य ४, ३।४।७७

लस्य। "धातो"रित्यधिकृतम्। अकारो न विवक्षितः। तेन लिडादीनामपि सङ्ग्रहः। "चूडाल" इत्यादौ च नातिप्रसङ्गः।

तत्त्व-बोधिनी

लस्य ४, ३।४।७७

वणग्रहणे प्रत्ययग्रहमपरिभाषा, अर्थवद्ग्रहणपरिभाषा च न प्रवर्तते इति लुनाति, चूडाल इत्यादौ तिबाद्यादेशः कुतो न भवतीति चेत्?। अत्राहुः--- "लः कर्मणी"ति सूत्रे निर्दिष्टानां कत्र्राद्यर्थानामनुवृत्तेः कत्र्राद्यर्थे विहितस्य लकारस्य ग्रहणमिति। अतोऽपि तिबाद्यादेशानुवादेन कत्र्राद्यर्थ विधिरिति कल्पना निरस्ता। लस्थानिकतिबादीनां कत्र्राद्यर्थर्थे विहितस्य लस्य तिबादिविधानमित्यन्योन्याश्रयापत्तेः। द्वा धातोरित्यधिकाराद्धातोर्विहितस्यैव लस्येह ग्रहणमिति नोक्ताऽतिप्रसङ्गः। लस्येत्संज्ञा तु न भवति, फलाऽभावात्। न च लित्स्वरः फलं, णलो लित्त्वेन तदभावस्य ज्ञापनात्। नाप्यश्रवणमेव फलं, तदुच्चारणस्यानर्थक्यापत्तेः, आदेशविधिनैवाऽश्रवणलाभाच्च। लसय् तिबादिस्थानित्वाभ्युपगमे तु "लः परस्मैपद"मित्यादि स्वरसतः सङ्गच्छत इति दिक्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तिप्॰महिङ् १।१ लस्य ६।१ ७७ धातोः ५।१ ३।१।९१ प्रत्ययः १।१ ३।१।१ परश्च १।१ ३।१।२

समासः॥

तिप्तस्झि॰ इत्यत्र समाहारः द्वन्द्वः

अर्थः॥

धातोः, तिप्-तस्-झि, सिप्-थस्-थ, मिप्-वस्-मस् (परस्मैपदम्), त-आताम्-झ, थास्-आथाम्-ध्वम्, इट्-वहि-महिङ् (आत्मनेपदम्) इत्येते अष्टादश आदेशाः, लस्य=लकारस्य स्थाने भवन्ति। तत्र नव आदेशाः परस्मैपदिनां धातूनां, नव च आत्मनेपदिनाम्

उदाहरणम्॥

परस्मैपदिभ्यः-पठति, पठतः, पठन्ति, पठसि, पठठः, पठथ, पठामि, पठावः, पठामः। आत्मनेपदिभ्यः-एधते, एधेते, एधन्ते, एधसे, एधेथे, एधध्वे, एधे, एधावहे, एधामहे। एवमन्येषु लकारेषु उदाहार्यम्
काशिका-वृत्तिः
तिप्तस्झिसिप्थस्थमिब्वस्मस्ताऽतांझथासाथाम्ध्वमिड्वहिमहिङ् ३।४।७८

लस्य तिबाद्य आदेशा भवन्ति। तिप्सिप्मिपां पकारः स्वरार्थः। इटष्टकारः इटो ऽत् 3।4।106 इति विशेषणार्थः, तिबादिभिरादेशैस् तुल्यत्वान् न देशविध्यर्थः। महिङो ङकारः तिङिति प्रत्याहारग्रहणार्थः। पचति, पचतः, पचन्ति। पचसि, पचथः, पचथ। पचामि, पचावः, पचामः। पचते, पचेते, पचन्ते। पचसे, पचेथे, पचध्वे। पचे, पचावहे, पचामहे। एवम् अन्येष्वपि लकरेषु उदाहार्यम्।
लघु-सिद्धान्त-कौमुदी
तिप्तस्झिसिप्थस्थमिब्वस्मस्ताताञ्झथासाथाम्ध्वमिड्वहिमहिङ् ३७७, ३।४।७८

एतेऽष्टादश लादेशाः स्युः॥
न्यासः
तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्। , ३।४।७८

"पकारः स्वरार्थः" इति। "अनुदात्तौ सुप्पितौ" 3।1।4 इत्यनुदात्तो यथा स्यात्। "इटष्टकारः" इत्यादि। ननु चासत्यप्येतस्मिन् विशेषणार्थे नैवं किञ्चिदनिष्टं प्राप्नोति, "इटोऽत्" 3।4।106 इत्यत्र सूत्रे लिङादेशस्येटोऽद्विधानात्, ततोऽन्यस्य लिङ्गादेशस्येकारस्यासम्भवात्। तिवाद्यवयवोऽस्तीति चेत्? न; तस्यालादेशत्वात्। तिबादयो हि समुदाया लादेशाः, न च तदवयवा इकारादयः। अर्थवद्ग्रहणे (व्या।प।१) परिभाषयार्थवदिकारस्य ग्रहणे सति कृतस्तबाद्यवयवस्य प्रसङ्गः ! न हि तेऽर्थवन्तः; तिबादीनामेव समुदायानामर्थवत्वात्। तस्मान्न कत्र्तव्य एव टकारः? सत्यं न कत्र्तव्यं, य एवं प्रतिपत्तुं समर्थस्तं प्रति; यस्त्वसमर्थस्तं प्रति कत्र्तव्य एव। अथ "आद्यन्तौ टकितौ" (१।१।४६) इति विशिष्टदेश आगमभूतस्यास्य विधानं यथा स्यादित्येवमर्थष्टकारः कस्मान्न विज्ञायते? इत्याह-- "तिबादिभिः" इत्यादि। तुल्यत्वम् = सदृशत्वम्, तत्ुपनरेकयोगनिर्दिष्टत्वेन। तस्मिन् सति लस्य 3।4।77 इत्यनया षष्ठ()आ सर्वेषं तिबादीनां सम्बन्धो भवति। द्वितीये त्विट एव। तत्र यस्मिन्पक्ष आश्रीयमाणे सर्वेषामनुग्रहो भवति स एवाश्रयितुं युक्त इति स्थानषष्ठीयमङ्गीकत्र्तव्या। इटोऽप्यादेशत्वं तेन भवतीति न भवति देशवनिध्यर्थष्टकारः। अथ वा-- तिबादिभिरेकयोगनिर्दिष्टत्वेन यत् तिबादिभिस्तुल्यत्वं तत् साहचर्योपलक्षमम्। तिबादिभिस्तुल्यत्वात् तत्साहचर्यादित्यर्थः। साहचर्येण सन्दिग्धार्थनिश्चयो भवति, यथा-- सवत्सा धेनुरिति। तथेहापि सन्देहो जायते-- किमयमादेशः? उतागमः? इति, तथापि तिबादिभिरसन्दिग्धादेशभावैः साहचर्यादादेशोऽयमिति निश्चीयते। तेन देशविध्यर्थता टकारस्य न भवति। यद्येवम्, "फलिपाटिनमिमनिजनां गुक् पटिनाकिधतश्च" (द।उ।१।१०३) इत्यत्रापि पट()आदिभिरादेशैस्तुल्यत्वाद्गुगागमोऽप्यादेशः स्यात्? नैष दोषः; "संज्ञायाम्" 3।2।185 इति तत्रानुवत्र्तते,न चादेशेन संज्ञा गम्यते, किन्त्वागमेन। तस्माद्गुक आगमत्वं वेदितव्यम्। तत्रैकापि षष्ठी यदाऽदेशन सम्बध्यते तदा स्थानषष्ठी

भवति, यदा त्वागमेन तदावयवषष्ठी। "महिङो ङकारः" इत्यादि। अथ ङित्वार्थो ङकारः कस्मान्न भवति? तस्य "सार्वधातुकमपित्" [१।२।४](#) इत्यनेनैव सिद्धत्वात्॥ ७२९। टित आत्मनेपदानां टेरे। [३।४।७९](#) "इह कस्मान्न भवति" इत्यादि। शानजपि टितो लकारस्य सम्बन्ध्यात्मनेपदसंज्ञकश्च, तस्मात् तस्यापि टेरेत्वेन भवितव्यमित्यभिप्रायः। "प्रकृतैः" इत्यादि। प्रकृतानां तिबादीनां मध्ये "यान्यात्मनेपदानि"--- इत्येवमिहात्मनेपदानि विशिष्यन्ते, तेन न भवत्येष दोषः। न हि शानच् तिबादिषु सन्निविष्टः। लाघवार्थं "टितस्तङाम्" इति वाच्ये "आत्मनेपदानाम्" इति वचनं वैचित्र्यार्थम्। ननु च "तङाम्" इत्युच्यमाने तसस्तकारेण प्रत्याहारग्रहणं स्यात्? अर्थवद्()ग्रहणपरिभाषया (व्या।प।१) न भविष्यति। यस्तर्हि थस्य स्थान आदिश्यते तेन स्यात्? न; तिबादिषु सन्निविष्टा ये तेषां तिङां ग्रहणं विज्ञास्यते। प्रत्यासत्तेर्वा आत्मपदीयेन तशब्देन प्रत्याहारग्रहणं विज्ञास्यते। व्याप्तेस्त्वनाश्रयः; लक्ष्यस्थित्यनुरोधात्॥

बाल-मनोरमा

तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथाध्वमिड्वहिमहिङ् ५, ३।४।७८

तिप्तस्। तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त , आताम्, झ,थास्, आथाम्, ध्वम्, इड्, वहि, महिङ्। एषां समाहारद्वन्द्वात्प्रथमैकवचनम्। लस्येति स्थानषष्ठ()न्तमधिकृतम्। तेन आदेश इति लभ्यते। फलितमाह-- एत इति। तसादौ रुत्वाऽभाव आर्षः। तिबादौ पकारानुबन्धयोजनं तु द्वेष्टीत्यादौ सार्वधातुकमपदिति ङित्त्वनिवृत्त्यर्थम्। तदुदाहरणेषु स्पष्टीभविष्यति।

तत्त्व-बोधिनी

तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिडव्वहिमहिङ् ५, ३।४।७८

समाहारे द्वन्द्वः। इटष्टकार आगमलिङ्गं न भवति, सप्तदशभिरादेशैः समभिव्याहारात्। किंतु "इटोऽ"दिति विशेषणार्थः। "एर"दित्युच्यमाने एधेवहि एधेमहीत्यत्रापि स्यात्, वर्णग्रहणे प्रत्ययग्रहणाऽर्थवद्ग्रहणपरिभाषयोरप्रवृत्तेः। केचित्तु-- "इटोऽ"दित्यत्र लिङ इत्यनुवर्तनाल्लिङ्गादेशस्येवर्णस्येति सामानाधिकरण्येन व्याख्याने एधेवहि एधेमहीत्यादावतिप्रसङ्गो नास्त्येव। न हि तत्र इकामात्रमादेशो भवति। तेन "इटोऽ"दित्यत्र टकारः स्पष्टप्रतिपत्त्यर्थ एवेत्याहुः। तच्चिन्त्यम्। वहि-- महीत्यस्यापि स्थानिवत्त्वेन लिङ्त्वात्। महिङो ङकारस्तिङ् तङिति प्रत्यानिषेधो न, तथा च वृश्चतेः पृच्छतेश्च कर्मणि रलिटि वव्रश्चिमहे पप्रच्छिमहे इत्यत्र "ग्रहिज्ये"ति संप्रसारणं न।

---

सूत्रम्

काशिका-वृत्तिः

टित आत्मनेपदानां टेरे ३।४।७९

टितो लकारस्य स्थाने यान्यात्मनेपदानि तेषाम् टेः एकाराऽदेशो भवति। तथा च एव उदाहृतम्। इह कस्मान् न भवति पचमानः, यजमानः? प्रकृतैस् तिबादिभिः आत्मनेपदानि विशेष्यन्ते।

लघु-सिद्धान्त-कौमुदी

टित आत्मनपदानां टेरे ५१०, ३।४।७९

टितो लस्यात्मनेपदानां टेरेत्वम्। एधते॥

बाल-मनोरमा

टित आत्मनेपदानां टेरे ८०, ३।४।७९

टित आत्म। टेः--- ए इति च्छेदः। लस्येत्यधिकृतं। तदाह-- टितो लस्येति। "आदेशाना"मिति शेषः। अत्रात्मनेपदशब्देन तङेव गृह्यते नत्वानोऽपि। तेन पचमानो यजमान इत्यादावेत्वं नेति भाष्ये स्पष्टम्। एधत इति। अत्र तकारादकारस्य व्यपदेशिवद्भावेनान्त्यादित्वेन टित्त्वादेत्वम्। अथ लटः प्रथमपुरुषद्विवचने आतामित्यादेशे "टित आत्मनेपदाना"मिति आम एत्वे, शपि एध--आते इति स्थिते ङित्कार्यं वक्ष्यन्ङित्त्वमाह-- सार्वधातुकमपित्। "गाङ्कुटादिभ्य" इत्यतो ङिदित्यनुवर्तते। अङितो ङित्त्वं वास्तवं न संभवतीति ङिद्वदिति लभ्यते। तदाह--ङिद्वदिति।

तत्त्व-बोधिनी

टित आत्मनेपदानां टेरे ६२, ३।४।७९

ननु शानचोऽपि लस्थानिकात्मनेपदत्वात्पचमानो यजमान इतयत्र टेरेत्वेन भवितव्यमिति चेत्। अत्राहुः-- प्रकृतैस्तिबादिभिरात्मनेपदानां विशेषणान्न दोषः। एवं तु "टितस्तङां टेरे" इत्येव वक्तुमुचितमिति।

---

सूत्रम्

काशिका-वृत्तिः

थासः से ३।४।८०

टितः इत्येव। टितो लकारस्य यः थास् तस्य सेशब्द आदेशो भवति। पचसे। पेचिषे। पक्तासे। पक्ष्यसे।

लघु-सिद्धान्त-कौमुदी

थासः से ५१२, ३।४।८०

टितो लस्य थासः से स्यात्। एधसे। एधेथे। एधध्वे। अतो गुणे। एधे। एधावहे। एधामहे॥

न्यासः

थासः से।, ३।४।८०

"पेचिषे" इति।लिट्, "अत एकहल्मध्वेऽनादेशादेर्लिटि" ६।४।१२० इत्येत्वाभ्यासपोपौ। "पक्तासे" इति। लुट्, तासिः, "तासस्त्योर्लोपः" ७।४।५० इति सकारलोपः। "पक्ष्यसे" इति। लृट्, "चोः कुः" ८।२।३० इति कुत्वम्-- ककारः। अथ थकारमात्रस्यैव सकारादेशः कस्मान्न भवति----थः स इति, थकारस्य सकारे कृते परस्य भागस्य टेरेत्वे सत्यभीष्टं सिध्यत्येव? नैतच्छक्यम्च एवं ह्यर्थाशब्दस्य यस्थकारस्तस्यापि स्यात्। धात्वधिकाराद्धातोर्यो विहित इति विशेषणान्न भवतीति चेत्? न; असम्भवात्। न हि तथाविधस्तकारो धातोर्विहितः सम्भवति। अथ धातोरनन्तरस्यैति विशिष्येत? एवमप्यनादित्व एव परस्य स्यात्, नेतरेभ्यो विकरणेभ्यः; व्यवधानादिति यथान्यासमेवास्तु। टेरेत्वेनैव सिद्ध एकारान्तत्वे यदेकारान्तत्वामादेशस्य क्रियते, तत् "तिङामादेशानां टेरेत्वं न भवति" इति ज्ञापनार्थम्। तेन डारौरस्प्रभृतिषु टेरेत्वं न भवतीति-- पक्ता, पक्तारौ, पक्तार इति॥

बाल-मनोरमा

थासः से ८२, ३।४।८०

थासः से। "से" इति लुप्तप्रथमाकम्। एधस इति। थासि शपि थासः सेभावः। एधेथे इति। लटो मध्यमपुरुषदिवचने आथामादेशे शपि आम एत्वे आकारस्य इयादेशे गुणे यलोप इति भावः। एधध्व इति। लटो मध्यमपुरुषबहुवचने ध्वमादेशे शपि टेरेत्वे रूपम्। लट उत्तमपुरुषैकवचने इडादेशे एत्वे शपि एध ए इति स्थिते प्रक्रियां दर्शयति-- अतो गुणे इति। "अतो गुणे"इति पररूपे वृद्ध्यपवादे कृते सति "एधे" इति रूपमित्यर्थः। एधावहे इति। लट उत्तमपुरुषबहुवचने वहीत्यादेशे टेरेत्वे

शपि अतो दीर्घः। एधमह इति। लट उत्तमपुरुषबहुवचने महीत्यादेशे टेरेत्वे शपि अतो दीर्घः। महिङिति ङकारस्तङ्प्रत्ययार्थः। इति लट्प्रक्रिया।

तत्त्व-बोधिनी

थासः से ६३, ३।४।८०

एकारोच्चारणं ज्ञापनार्थमिति "लिटस्तझयो"रित्यत्र स्फुटीभविष्यति। अतो गुणे इति। इट एत्वे कृते आद्गुणं बाधित्वा वृद्धौ प्राप्तायामनेन पररूपमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

लिटस् तझयोरेशिरेच् ३।४।८१

लिडादेशयोः तझयोः यथासङ्ख्यम् एशिरेचित्येतावादेशौ भवतः। शकारः सर्वादेशार्थः। चकारः स्वरार्थः। पेचे, पेचाते, पेचिरे। लेभे, लेभाते, लेभिरे।

लघु-सिद्धान्त-कौमुदी

लिटस्तझयोरेशिरेच् ५१५, ३।४।८१

लिडादेशयोस्तझयोरेश् इरेजेतौ स्तः। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे। एधाञ्चकृषे। एधाञ्चक्राथे॥

न्यासः

लिटस्तझयोरेशिरेच्। , ३।४।८१

"शकारः सर्वादेशार्थः" इति। असति तस्मिन् धात्वधिकारात् "तस्मादित्युत्तरस्य " १।१।६६ इत्यादेः परस्य तकारस्य प्रसज्येत। शकारे तु सति "अनेकाल्शित् सर्वस्य" १।१।५४ इति वचनात् सर्वस्य भवति। अथ "शे" इति कस्मान्नोक्तम्? नैवं शक्यम्; "शे" इति हि प्रगृह्यसंज्ञा स्यात्। इह च व्यतिपप इति पिबादेशः स्यात्। एशि तु सति न भवति, वक्ष्यति ह्येतत्--- "वर्णे यत् स्यात् तच्च विद्यात् तदादौ" इति॥

बाल-मनोरमा

लिटस्तझयोरेशिरेच् ८७, ३।४।८१

लिटस्तझयो। ननु लिटस्तझयोरिशिरिजित्येवास्तु, आदेशयोरेकारोच्चारणं व्यर्थं, टित आत्मनेपदानामित्येत्वेनैन सिद्धेरित्यत आत-- एकारोच्चारणमिति। ज्ञापनस्य फलमाह-- तन डारौरसां नेति डा रौ रस्--एषां लुडादेशभूतात्मनेपदादेशानां टेरेत्वं नेत्यर्थः। वस्तुतस्तु परत्वादेत्वे कृते पुनः प्रसङ्गविज्ञानेन डादिषु कृतेषु लक्ष्ये लक्षणस्येति न्यायादेत्वं नेति लुटः प्रथमस्येति सूत्रभाष्ये स्पष्टम्। कृ ए इति स्थित इति। तकाराऽकारसङ्घातस्य एकारः शित्त्वात्सर्वादेश इति भावः।

तत्त्व-बोधिनी

लिटस्तझयोरेशिरेच् ६८, ३।४।८१

एशिति शकारकरणकारविशिष्टतकारस्यादेशत्वाय।

---

सूत्रम्

काशिका-वृत्तिः

प्रस्मैपदानां णलतुसुस्थल्थुसणल्वमाः ३।४।८२

लिटः इत्येव। लिडादेशानां परस्मैपदसंज्ञाकानां यथासङ्ख्यं तिबादीनां णलादयो नव आदेशा भवन्ति। लकारः स्वरार्थः। णकारो वृद्ध्यर्थः। पपाच, पेचतुः, पेचुः। पेचिथ, पपक्थ, पेचथुः, पेच। पपाच, पपच, पेचिव, पेचिम।

लघु-सिद्धान्त-कौमुदी

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३९४, ३।४।८२

लिटस्तिबादीनां नवानां णलादयः स्युः। भू अ इति स्थिते --।

न्यासः

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः। , ३।४।८२

"पपक्थ" इति। "उपदेशेऽत्वतः" ७।२।६२ इतीडभावः। "पेचिथ" इति क्वचित् पाठः, तत्र हि "ऋतो भारद्वाजस्य" ७।२।६३ इति नियमादिट्। "थलि च सेटि" ६।४।१२१ इत्येवत्वाभ्यासलोपौ। "पेच" इति। "धातोः" ३।१।९१ इत्यधिकारात् "तस्मादित्युत्तरस्य" १।१।६६ , "आदेः परस्य" १।१।५३ इति थकारस्याकारादेशः। द्वयोराकारयोः "अतो गुणे " ६।१।९४ पररूपत्वम्। अथ वा-- आन्तरतम्याद्बह्वर्थस्याकारस्य बह्वर्थ एव स्थानी युक्त इति समुदायस्यैव भवति। "पेचिव, पेचिम" इति। क्रादिनियमादिट्॥

बाल-मनोरमा

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः २३, ३।४।८२

परस्मैपदानां। लिटस्तझयोरित्यस्माल्लिट इत्यनुवृत्तिमभिप्रेत्याह-- लिटस्तिबादीनामिति। णलादय इति। णल्, अतुस्, उस्। थल्, अथुस् अ। णल्, व , म-इत्येते नव यथासङ्ख्यं स्युरित्यर्थः। तत्र तिपो णल् सर्वादेशः। न च णकारलकारयोः "चुटू" इति "हलन्त्य"मिति च इत्संज्ञकत्वाल्लोपे कथमनेकाल्त्वामिति वाच्यं, सर्वादेशत्वात्प्राग्णलः प्रत्ययत्वाऽभावेन "चुटू" इत्यस्याऽप्रवृत्तेः। णित्त्वं तु जुहावेत्यादौ वृद्ध्यर्थम्। लित्त्वं तु लित्स्वरार्थम्। ननु मध्यमपुरुषबहुवचनथस्य विधीयमानोऽकारः "अलोऽन्त्यस्ये"त्यन्यस्य स्यात्। अकारस्य अकारविधिस्तु यथासङ्ख्यापादनार्थ इति चेत्, सत्यम्, द्वयोरकारयोः पररूपेण "अ" इति सूत्रे निर्देशादनेकाल्त्वात्सर्वादेशत्वमिति भाष्ये स्पष्टम्। न च अतुसादीनामादेशत्वात्पूर्वं विभक्तित्वाऽभावेन "न विभक्तौ" विति निषेधाऽभावत्सकारस्येत्त्वं दुर्वारमिति वाच्यं, सकारादुपरि सकारान्तस्य संयोगान्तलोपेन लुप्तया श्रूयमाणसकारस्योपदेशेऽन्त्यत्वाऽभावादित्यलम्।

तत्त्व-बोधिनी

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः १९, ३।४।८२

अत्र थशब्दस्याऽकारो विधीयमानोऽन्त्यस् प्राप्नोति। न चाऽकारस्याऽकारविधौ निरर्थकत्वमिति वाच्यं, यथासङ्ख्यसंपादनेन कृतार्थत्वात्। अत्राहुः--- धातोरित्यधिकारात् "आदेः परस्ये"ति व्यञ्जनमात्रस्य कृतेर, द्वयोः "अतो गुणे" इति पररूपम्। यद्वा द्वयोरकारयोः पपरूपेण सूत्रे निर्देशः, तथा चानेकाल्त्वात्सर्वादेशे सिद्धमिष्टमिति। ननु सुबन्थानामेव द्वन्द्वस्तत्र त्वकारद्वयकल्पनायां सवर्णदीर्घ एव स्यादिति चेन्मैवम्। आदेशानां स्थान्यर्थेनैवार्थवत्त्वात्थशब्दस्य विधीयमानमकारद्वयं प्रत्येकमर्थवन्न भवतीति समुदितस्य प्रातिपदिकत्वेन "अतो

गुणे" इति पररूपस्यैव प्रवृत्तिः॥

---

सूत्रम्

काशिका-वृत्तिः

विदो लटो वा ३।४।८३

परस्मैपदानाम् इत्येव। विद ज्ञाने, अस्माद् धातोः परेषां लडादेशानां परस्मैपदानां णलादयो नव विकल्पेन आदेशा भवन्ति। वेद, विदतुः, विदुः। वेत्थ, विदथुः, विद। वेद, विद्व, विद्म। न च भवति। वेत्ति, वित्तः, विदन्ति। वेत्सि, वित्थः, वित्थ। वेद्मि, विद्वः, विद्मः।

लघु-सिद्धान्त-कौमुदी

विदो लटो वा ५७१, ३।४।८३

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे -- वेत्ति। वित्तः। विदन्ति॥

न्यासः

विदो लटो वा। , ३।४।८३

"विद ज्ञाने" इति। एतेन ज्ञानार्थस्य विदेग्र्रहणम्, नान्येषामिति। एवं मन्यते-- विद इति पञ्चमी, तेन "तस्मादित्युत्तरस्य" १।१।६६ इत्यनन्तराणां तिबादीनामादेशेन भवितव्यम्। न चान्यस्माद्विदेः परस्मैपदान्यनन्तराणि सम्भवति; विकरणैव्र्यवधानात्। विचारसत्तार्थयोश्चात्मनेपदित्वात् परस्मैपदानुपपत्तिः। तस्मात् ज्ञानार्थस्यैव ग्रहणमिति॥

बाल-मनोरमा

विदो लिटो वा २९५, ३।४।८३

विदो लटो वा। "परस्मैपदानां णलतु"सित्यादिसूत्रमनुवर्तते। "विद"इति पञ्चमी। तदाह--वेत्तेर्लट इति। विन्दतिविद्यत्योस्तु शेन श्यना च व्यवधानान्नैते आदेशाः। इत्यादीति। विदन्ति। वेत्सि वित्थः वित्थ। वेद्मि विद्वः विद्मः। विविदतुरिति। विविदुः। विवेदिथ विविदथुः विविद। विवेद विविदिव विविदिम। आम्पक्षे इति। न लघूपधगुण इत्यन्वयः। कुत इत्यत आह--अकारान्तनिपातनादिति। "उषविदे"ति सूत्रे विदेत्यकारान्तत्वमाम्संनियोगेन निपात्यत इत्यर्थः। आमि अतो लोपः। तस्य स्थानिवत्त्वान्न लघूपधगुण इति भावः। वेदितेति। वेदिष्यतीत्यपि ज्ञेयम्।

तत्त्व-बोधिनी

विदो लटो वा २५५, ३।४।८३

विदो लटो वा। पञ्चमीयं, न तु षष्ठी, तेन विद्यतिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नैते आदेशाः। तदाह--वेत्तेरिति।

---

सूत्रम्

काशिका-वृत्तिः

ब्रुवः पञ्चानाम् आदित आहो ब्रुवः ३।४।८४

परस्मैपदानाम् इत्येव, लटो वा इति च। ब्रुवः परस्य लटः परस्मैपदानां पञ्चानाम अदिभूतानां पञ्चैव णलादय आदेशा भवन्ति, तत्सन्नियोगेन च ब्रुव आहशब्द आदेशो भवति। आह, आहतुः, आहुः। आत्थ, आहथुः। न च भवति। ब्रवीति, ब्रूतः, ब्रुवन्ति। ब्रवीषि, ब्रूथः। पञ्चानाम् इति किम्? ब्रूथ। ब्रवीमि, ब्रूवः, ब्रूमः। आदितः इति किम्? परेषां मा भूत्। ब्रुवः इति पुनर् वचनं स्थान्यर्थम्, प्रस्मैपदानाम् एव हि स्यात्।

लघु-सिद्धान्त-कौमुदी

ब्रुवः पञ्चानामादित आहो ब्रुवः ५९६, ३।४।८४

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। आह। आहतुः। आहुः॥

न्यासः

ब्राउवः पञ्चानामादित आहौ ब्राउवः। , ३।४।८४

"पञ्चैव" इत्यादि। ननु च नेह द्वितीयं पञ्चग्रहणं, नाप्यदिग्रहणमादेशविशेषमम्, तत्र पञ्चानामाद्यानां स्थाने सर्वैरेव णलादिभिः पर्यायेण भवितव्यम्, तत् कथं पञ्चैव णलादय आदेशा भवन्तीत्येषोऽर्थो लभ्यते? इत्यत आह-- "स्थानिसम्बन्धात् " इत्यादि। इह हि स्थानिनः पञ्चैवाऽद्या निर्दिष्टाः, तेषाञ्च "स्थानेऽन्तरतमः" १।१।४९ इति परिभाषया पञ्चिरेवाद्यैः सम्बन्धः सम्भवति, नेतरैश्च। तथा हि-- पञ्चानामेवाद्यानामान्तरतम्यमस्ति, तुल्यार्थत्वात्। नान्येषाम्, विपर्ययात्। तस्मात् स्थानिसम्बन्धादादेशेष्वपि पञ्चत्वमादित्वञ्च विज्ञायत इति युक्तम्-- पञ्चैव णलादय आदेशा भवन्तीति। "आत्थ" इति। "आहस्थः" ८।२।३५ इति हकारस्य थकारः, तस्य "खरि च" ८।३।५५ इति चत्र्वम्-- तकारः। "ब्रावीति" इति। "ब्राउव ईट्" ७।३।९३। "परेषाम्" इति। थादीनाम्। अथ "ब्राउवः" इति किमर्थं पुनरिदमुच्यते, यावता ब्राउव इति यदेतत् पञ्चम्यन्तं तदेवार्थद्विभक्तेर्विपरिणामो भविष्यीति षष्ठ()न्तं विज्ञास्यत इत्याह-- "ब्राउवः" इति पुनर्वचनम्" इत्यादि। असति हि श्रते सम्बन्धिनि विभक्तिविपरिणामो युक्तः। इह परस्मैपदानामिति प्रकृता एव तिबादयः षष्ठ()न्ताः सम्बन्धिन इति न युक्तो विभक्तिविपरिणामः। "ब्राउवः" इतियदि पुनर्नोच्येत ततो यथा णलादयः परस्मैपदानां भवन्ति, एवमाहौदेशोऽपि स्यात्। तस्मात् तं प्रति ब्राउवः स्थानित्वं यथा स्यादित्येवमर्थं "ब्राउवः" इति पुनरुच्यते। "परस्मैपदानामेव हि स्यात्" इति। यदि "ब्ुवः" इति पुनर्नोच्येतेति शेषः। अयञ्च "ब्राउवः" इति पूनर्वचनस्य हेतुः। हिशब्दो यस्मादर्थे। यस्मादसति पुनवर्वचने परस्मैपदानामेवाहादेशः स्यात्, तस्मात् "ब्राउवः" इति पुनर्वचनं कत्र्तव्यम्॥

बाल-मनोरमा

ब्राऊवः पञ्चानामादित आहो ब्राउवः २८१, ३।४।८४

ब्राऊत्र्। ब्राउवः पञ्चानाम्। "परस्मैपदानां णलतु"रित्यत उत्तरसूत्रमिदम्। "विदो लटो वे"त्यतो लटो वेत्यनुवर्तते। तदाह-- ब्राउवो लट इति। आदितः पञ्चानामिति। तिप् तस् झि सिप् थसित्येषामित्यर्थः। णलादयः पञ्चेति। णल् अतुस् उस् थल् अथुस् इत्येते पञ्चेत्यर्थः। उच्चारणार्थ इति। तत्प्रयोजनमात्तेत्यत्रानुपदमेव व्यक्तं भविष्यति। आहेति ब्राऊधातोर्लटस्तिपो णलि प्रकृतेराहादेशः। सिपस्थलि प्रकृतेराहादेशे आह् थ इति स्थिते हस्य ढत्वे प्राप्ते--

तत्त्व-बोधिनी

ब्राउवः पञ्चानामादित आहो ब्राउवः २४६, ३।४।८४

ब्राउवः पञ्चानाम्। "विदो लटो वे"त्यतो लटो वेतित वर्तते। "ब्राउव" इत्येतदादिमं पञ्चम्यन्तमन्तिमं तु पञ्चम्यन्तमन्तिमं तु षष्ठ()न्तमित्याशयेनाह-- ब्राउवो लट इत्यादि। चत्र्वमिति। प्रक्रियालाघवात् "आहस्तः" इत्येव

सुवचमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

लोटो लङ्वत् ३।४।८५

अतिदेशो ऽयम्। लोटो लङ्वत् कार्यं भवति। तामादयः, सलोपश्च। पचताम्। पचतम्। पचत। पचाव। पचाम। अडाटौ कस्मान् न भवतः, तथा झेर् जुसादेशः लङः शाकटायनस्य एव ३।४।१११ इति वान्तु, यान्तु? विदो लटो वा ३।४।८३ इत्यतो वाग्रहणम् अनुवर्तते, सा च व्यवस्थितविभाषा भविष्यति।

लघु-सिद्धान्त-कौमुदी

लोटो लङ्वत् ४१५, ३।४।८५

लोटस्तामादयस्सलोपश्च॥

न्यासः

लोटो लङ्वत्। , ३।४।८५

"तामादयः" इति। येषां "तस्थस्थ" ३।४।१०१ इत्यादिना विधाननम्। "सलोपश्च" इति। यस्य नित्यं ङितः" ( ३।४।९९) इति विधानम्। "अडाटौ इत्यादि। "लुङ्लङ्लृङक्षु" ६।४।७१इत्यादिनाट्, "आडजादीनाम्" ६।४।७२ इत्याट् लङः कार्य विधास्यते। "लङ शाकटायनस्यैव" ३।४।१११ इति झेर्जुसादेशश्च। न चेह कश्चिद्विशेष उपादीयते, ततश्च यस्मादतिदेशात् तामादिकार्यं भवति तथा "आडजादीनाम्"६।४।७२ लङकार्येणापि भवितव्यमित्यभिप्रायः। "इतश्च" ३।४।१०० इति लोपः, मिपोऽम्भावश्च। देश्यमेतत्। तयोः "एरुः" ३।४।८६ इत्युत्त्वस्य "मेर्निः" इति निरादेशस्य चापवादस्य विधास्यमानत्वात्। "सा च व्यवस्थितविभाषा" इति। तेन तामादिरेवादेशो भवति, न त्वडादिरिति मन्यते॥

बाल-मनोरमा

लोटो लङ्वत् ४७, ३।४।८५

लोटो लङ्वत्। लङ इव लङ्वत्। "तत्र तस्येवे"ति षष्ठ()न्ताद्वतिः। तदाहलोटो लङ इवेति। ननु तर्हि "लुङ्लङ्लृङ्क्ष्वड्उदात्त" इत्यडागमोऽपि स्यादित्यत आह-- तेनेति। लङ इति स्थानषष्ठ()न्ताद्वतिप्रत्यययाश्रयणेनेत्यर्थः। अडागमस्तु न लङो विधीयते, किन्तु लङि अङ्गस्येति भावः। केन तामादयः, केन वा सलोप इत्यत आह--तथा हीति। तामादयः सलोपश्च यथा ज्ञायन्ते तथा स्पष्टमुच्यन्त इत्यर्थः।

तत्त्व-बोधिनी

लोटो लङ्वत् ३७, ३।४।८५

"लोट" इत्युपमेये षष्ठीदर्शनात् [उपमानादपि] षष्ठ()न्तादेव वतिः, तदाह--तेनेति। अडादौ तु नातिदिश्येते, न हि तौ लङः क्रियेते, किं तु लङि अङ्गस्येति भावः॥ नन्वेमपि यान्तु वान्तु इत्यत्र "लङः वाग्रहणमिहानुवत्र्य व्यवस्थितविभाषाश्रयणान्न जुस्। यद्वा "लङः शाकटायनस्ये"ति सूत्रे "नित्यं ङितःर" इत्यतो "ङित" इत्यनुवृत्त्यैवेष्टसिद्धेर्लचङ्ग्रहणमतिरित्यते, लुङि सिचा, लृङि स्यप्रत्ययेन च व्यवधानात्, लिङि तु "झेर्जु"सिति जुसो विहितत्वाच्च, "ङित" इत्यस्य लङ()एव पर्यवसानात्। ततो लङ्ग्रहणं विभज्यते। नियमश्चायं "लङेव यो लङ् तस्यैव झेर्जुस् न तु लङ्वद्भावेन यो लङ् तस्ये"त्यतो नोक्तदोष" इति। तञ्चिन्त्यम्। अदुरित्यत्र "सिजभ्यस्ते"ति नित्यजुसं

बाधित्वा परत्वाच्छाकटायनस्येति विकल्पप्रसङ्गात्। तस्माल्लङ्ग्रहणं शाकटायनसूत्रे कर्तव्यमेव, न तु तदतिरिच्यते। न च "आतः" इति सूत्रेणाऽदुरित्यत्र नित्यं रजुस्स्यादिति वाच्यं, तस्य नियमार्थत्वेन विद्यर्थत्वा।योगात्, अन्यथा अभूवन्नित्यत्र "सिजभ्यस्ते"ति जुस् दुर्वार एव स्यादिति नव्याः॥ यदि त्विह "आतः" इति सूत्रमावर्त्त्य विध्यर्थता नियमार्थता च व्याख्यायेत तदा तूक्तद#ओषाऽभावाद्यद्वेति समाधानमपि सम्यगेव, शाकटायनस्येति जुसो वैकल्पिकत्वात्। तदभावपक्षे पुनःप्रसङ्गविज्ञानात् "सिजभ्यस्ते"ति जुसि स्वीकृते तु सुतरां सम्यगेव, परं तु जुह्वतु विन्दत्वित्यत्र जुस्()वारणाय व्यवस्थितविभाषा त्वाश्रयणीयैवैति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

एरुः ३।४।८६

लोटः इत्येव। लोडादेशानाम् इकारस्य उकारादेशो भवति। पचतु। पचन्तु। हिन्योरुत्वप्रतिषेधो वक्तव्यः। न वा उच्चारणसामर्थ्यात्। अथ वा वा इति वर्तते, सा च व्यवशितविभाषा।

लघु-सिद्धान्त-कौमुदी

एरुः ४१३, ३।४।८६

लोट इकारस्य उः। भवतु॥

न्यासः

एरुः। , ३।४।८६

"हिन्योः" इत्यादि। हिश्च निश्च हिनी, तयोरुत्वप्रतिषेधो वक्तव्यः, अन्यथा हि लुनीहि पचानीति न सिध्येत्। "न वोच्चारणसामश्र्यात्" इति। यदि हीकारे कृते सत्युकारेण भवितव्यं तदोकारमेवोच्चारयेत्। अयं हि लधीयान् शब्दव्युत्पत्तावुपायः। न चेकारोच्चारणे सूत्रस्य लाघवं भवति, तदुकार एवोच्चरयितव्ये यदिकारोच्चारणं करोति, तस्यैतत् प्रयोजनम्-- उत्वं मा भूदिति॥

बाल-मनोरमा

एरुः ४५, ३।४।८६

लोटस्तिपि विशेषमाह--एरुः। "एः-उः" इति च्छेदः। एरिति षष्ठ()न्तम्। इवर्णस्येति लभ्यते। "लोटो लङ्व"दित्यतो लोट इत्यनुवर्तते। तदाह--लोट इति। भवत्विति। तिपि शपि गुणेऽवादेशे तिप इकारस्य उकारः।

---

सूत्रम्

काशिका-वृत्तिः

सेर् ह्यपिच् च ३।४।८७

लोटः इत्येव। लोडादेशस्य सेः हि इत्ययम् आदेशो भवति, अपिच् च भवति। स्थानिवद्भावात् पित्त्वं प्राप्तं प्रतिषिध्यते। लुनीहि। पुनीहि। राध्नुहि। तक्ष्णुहि।

लघु-सिद्धान्त-कौमुदी

सेर्ह्यपिच्च ४१७, ३।४।८७

लोटः सेर्हिः सोऽपिच्च॥

न्यासः

सेह्र्यपिच्च।, ३।४।८७

"लुनीहि" इति। पित्वे प्रतिषिद्धे "सार्वधातुकमपित्" १।२।४ इति ङित्त्वम्, ततस्तन्निबन्धनं "ई हल्यघोः" ६।४।११३ इतीत्वं भवति। "राध्नुहि" इति। "राध साध संसिद्धौ" (धा।पा।१२६२), १२६३) स्वादित्वात् श्नुः। अत्रापि पूर्ववन्ङित्वने सति गुणो न भवति। अथ किमर्थं गुरु सूत्रं क्रियते, न "से र्हि ङिच्च" इत्येवोच्येत? नैवं शक्यम्; ङित्त्वस्य विधाने स्थानिवद्भावातम् पित्त्वं स्यादेव। ततश्च ङित्त्वान्ङित्कार्यं गुणनिषेधादिकं स्यात्, पित्वाच्चानुदात्तत्वम्। तस्माद्यथान्यासमेवास्तु॥

बाल-मनोरमा

सेह्र्यपिच्च ५०, ३।४।८७

सेह्र्यपिच्च। "हि" इति लुप्तप्रथमाकम्। "लोटो लङ्व"दित्यतो "लोट" इत्यनुवर्तते। तदाह--लोटः सेरिति। स्तुहीत्यादौ सिप्स्थानिकस्य हेः पित्वात्सार्वधातुकपिदिति ङिद्वात्त्वाऽभावाद्गुणे प्राप्ते अपिद्वचनम्। एवञ्च ङिद्वत्त्वात्क्ङितिचेति गुणो न। "सेर्हर्हिङिच्चे"त्येव तु न सूत्रितम्, पितस्सिपोऽनुदात्तस्य स्थाने हेरप्यनुदात्तत्वापत्तेः। भव हि स्थिते--

तत्त्व-बोधिनी

सेह्र्यपिच्च ३९, ३।४।८७

सोऽपिच्चेति। एवं च पित्वेनानुदात्तस्य सिपः स्थाने यो हिरादेशः स तु "स्थानेऽन्तरतमः" इत्यनुदात्तो न भवति, "जहि शत्रून्ट, "स्तुहि श्रुतम्॥

---

सूत्रम्

काशिका-वृत्तिः

वा छन्दसि ३।४।८८

अपित्त्वं विकल्प्यते। लाऽदेशः छन्दसि विषये हिशब्दो वा अपिद् भवति। युयोध्यस्मज्जुहुराणमेनः। प्रीणाहि। प्रीणीहि।

न्यासः

वा च्छन्दसि।, ३।४।८८

"अपित्त्वं विकल्प्यते"( इति)। "लादेशः" इति। तस्यानन्तरत्वात्। आदेशस्तु तेन व्यवहितत्वादनन्तरो न भवति विकल्प्यते। "युयोधि" इति। "यु{मिश्रणेऽमिश्रणे च" धा।पा} मिश्रणे" (धा।पा।१०३३), "बहुलं छन्दसि" २।४।७६) इति शपः श्लुः, "श्लौ" (६।१।त१०) इति द्विर्वचनम्। अत्रापि पित्त्वेन ङित्त्वं नास्ति, तेन गुणो न भवति। "अङितश्च" ६।४।१०३ इति घिभावः। "प्रीणीहि" इति। "प्रीञ् {तर्पणे कान्तौ च" -धा।पा।}(धा।पा।१४७४) क्र्यादित्वात् श्ना। अत्राप्यपित्त्वे सति पूर्ववदीत्वम्॥

---

सूत्रम्

काशिका-वृत्तिः

मेर् निः ३।४।८९

लोटः इत्येव। लोडादेशस्य मेः निः आदेशो भवति। उत्वलोपयोरपवादः। पचानि। पठानि।
लघु-सिद्धान्त-कौमुदी
मेर्निः ४१९, ३।४।८९

लोटो मेर्निः स्यात्॥
न्यासः
मेर्निः। , ३।४।८९

"उत्थलोपयोरपवादः" इति। यथाक्रमं "एरुः" ३।४।८६, "लोटो लङ्वत्" ३।४।८५ इत्यतिदेशेन प्राप्तयोः। इकारलोपस्य च लङि "इतश्च" ३।४।१०० इति विधानादतिदेशेन तस्य प्राप्तिः। "पचानि" इत्यत्र "आडुत्तमस्य पिच्च" ३।४।९२ इत्याट्॥
बाल-मनोरमा
मेर्निः ५२, ३।४।८९

लोटो मिपि शपि गुणेऽवादेशे मिपस्तस्थस्थमिपामित्यमादेशे प्राप्ते-- मेर्निः। "लोटो लङ्व"दित्यतो इत्यनुवर्तते। तदाह--लोटो मेरिति।

---

सूत्रम्
काशिका-वृत्तिः
आम् एतः ३।४।९०

लोटः इत्येव। लोट् सम्बधिनः एकारस्य अम् इत्ययम् आदेशो भवति। पचताम्, पचेताम्, पचन्ताम्।
लघु-सिद्धान्त-कौमुदी
आमेतः ५१९, ३।४।९०

लोट एकारस्याम् स्यात्। एधताम्। एधेताम्। एधन्ताम्॥
न्यासः
आमेतः। , ३।४।९०

अत्रैकारेण लोड्विशिष्यते, लोटा वैकार इति द्वौ पक्षौ। तत्र यद्याद्यः पक्ष आश्रीयेत तदैकास्य विशएषणत्वाद्विशेषणेन च तदन्तविधिर्भवतीत्येकारान्तस्य लोट आम् विधीयमानोऽनेकाल्त्वात् सर्वादेशः स्यादित्येष दोषः प्रतिविधेयः। द्वितीये तु पक्ष एकार एव विशेष्यत्वात् प्रधानम्। न च प्रधाने तदन्तविधिरित्येकारस्यैव भविष्यीति न किञ्चित् प्रतिविधेयम्। तेन द्वितीयपक्षमाश्रित्याह-- "लोट्()सम्बन्धिन एकारस्य" इत्यादि। "पचताम्" इति। टेरेत्वे कृत आम्। इह पचावेदम्, यजावेदमिति यद्यप्यन्तादिवद्भावाद्गुणो लोड्()ग्रहणेन गृह्रते, तथापि बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यन्तरङ्ग आमादेशे कत्र्तव्ये बहिरङ्गस्याद्गुणस्यासिद्धत्वादामादेशो न भवति। बहिरङ्गत्वं तु गुणस्य द्विपदाश्रयत्वात्। आमस्त्वन्तरङ्गत्वमेकपदाश्रयत्वात्॥
बाल-मनोरमा
आमेतः ९७, ३।४।९०

आमेतः। आम्-एत इति च्छेदः। "लोटो लङ्व"दित्यतो लोट इत्यनुवर्तते। तदाह--लोट एकारस्येति। लोडादेशावयवस्य

एकारस्येत्यर्थः। एधतामिति। लोटस्तादेशे टेरेत्वे आमादेशे शपि रूपम्। एधेतामिति। आताम्। टेरेत्वं। शप्। "सार्वधातुकमपि"दिति ङित्त्वादातो ङित इत्याकारस्य इय्। गुणः। यकारलोपः। "आमेत" इत्येकारस्य आम्। एधन्तामिति। झस्य टेरेत्वे शपि झकारस्य अन्तादेशे एकारस्य आम्।अथ लोटस्थासः सेभावे शपि एध--से इति स्थिते।

---

सूत्रम्

काशिका-वृत्तिः

सवाभ्याम् वामौ ३।४।९१

लोटः इत्येव। सकारवकाराभ्याम् उत्तरस्य लोट्सम्बन्धिन एकारस्य यथासङ्ख्यं च अम् इत्येतावादेशौ भवतः। आमो ऽपवादः। पचस्व। पचध्वम्।

लघु-सिद्धान्त-कौमुदी

सवाभ्यां वामौ ५२०, ३।४।९१

सवाभ्याम् परस्य लोडेतः क्रमाद्वामौ स्तः। एधस्व। एधेथाम्। एधध्वम्॥

न्यासः

सवाभ्यां वामौ। , ३।४।९१

"पचस्व" इति। "थासः से" ३।४।८० इति कृते वकारः। "पचध्वम" इति। टेरेत्वे कृतेऽमादेशः॥

बाल-मनोरमा

सवाभ्यां वामौ ९८, ३।४।९१

सवाभ्यां। सश्च वश्च सवौ। ताभ्यामिति विग्रहः। अकारावुच्चारणार्थौ। वश्च अम्च वाऽमौ। "लोटो लङ्व"दित्यास्माल्लोट इति "आमेत"इत्यस्मादेत इति चानुवर्तते। तदाह--सकारेति। "आमेत"इत्यस्यापवादः। एधस्वेति। "एध-सेट इत्यत्र एकारस्य "व" इति वकाराकारसङ्घात आदेशः। एधेथामिति। आथाम्। टेरत्वं। शप्। "आतो ङि" इत्याकारस्य इय्। गुणः। यलोपः "आमेत" इत्याम्। एधध्वमिति। ध्वमि, शप्, टेरेत्वे कृते सवाभ्यामिति वकारात्परत्वादेकारस्य अम्।

---

सूत्रम्

काशिका-वृत्तिः

आडुत्तमस्य पिच् च ३।४।९२

लोटः इत्येव। लोट्सम्बन्धिनः उत्तमपुरुषस्य आडागमो भवति, स च उत्तमपुरुषः पिद् भवति। करवाणि, करवाव, करवाम। करवै, कर्वावहै, करवामहै।

लघु-सिद्धान्त-कौमुदी

आडुत्तमस्य पिच्च ४२०, ३।४।९२

लोडुत्तमस्याट् स्यात् पिच्च। हिन्योरुत्वं न, इकारोच्चारण सामर्थ्यात्॥

न्यासः

आडुत्तमस्य पिच्च। , ३।४।९२

"स चोत्तमपुरुषः पिद्भवतिट" इति। अथाट एव पित्त्वं कस्मान्न क्रियते? निरर्थकत्वात्। पित्त्वं ह्यनुदातार्थं वा स्यात्, गुणवृद्ध्यर्थं वा; तत्राटोऽनुदात्तत्वमागमत्वादेव सिद्धम्, गुणवृद्ध्योस्तु नैवासौ निमित्तम्; अप्रत्ययत्वात्। तस्मादाटं प्रति पित्त्वमनर्थकमित्युत्तमस्यैव विधीयते। "करवाणि" इति। पित्त्वादुत्तमस्य ङित्वं नास्ति, तेन गुणो भवति। "करवै" इति। "एत ऐ" ३।४।९३, "आटश्च" ६।१।८७ इति वृद्धिः॥

बाल-मनोरमा

आडुत्तमस्य पिच्च ५३, ३।४।९२

भव नि इति स्थिते-- आडुत्तमस्येति। "लोटो लङ्व"दित्यतो लोट इत्यनुवर्तते। तदाह--लोडुत्तमस्येति। स्तवानि स्तवावेत्यादौ सार्वधातुकपिदिति ङित्त्वनिवृत्त्यर्थं पिद्वचनम्। यद्यपि मिपस्थानिकस्य नः पित्वात्तदागमस्यापि सिद्धं पित्त्वं, तथापि वस्मसोराडागमस्याऽङित्तवार्थं पिदिति वचनम्। ननु स्तुहि भवानीत्यत्र "एरु" रित्युत्वं कुतो न स्यादित्यत आह-हिन्योरुत्वं नेति। सामर्थ्यादिति। अन्यथा-- "हु-नु" इत्येव विदध्यादिति भावः। भवानीति। आडागमे सवर्णदीर्घः। न चाऽत्र लङ्वद्भावादितश्चेति लोपः शङ्क्यः, इकारोच्चारणसामर्थ्यात्। अन्यथा "मो न" इत्येव विदध्यात्। एवं हेरपि बोध्यम्। यद्यपि भवानीत्यादवतो दीर्घो यञि इत्येव दीर्घसिद्धेराडागमविधिव्र्यर्थस्तथापि स्तवानीत्याद्यर्थमावश्यकमिहापि न्याय्यत्वादुपन्यस्तम्। भवावेति। लोटो वस्। गुणावादेशौ। आडागमः। सवर्णदीर्घः। लङ्वद्भावात् "नित्यं ङित" इति सकारलोपः। एवं मसि भवामेति रूपम्। इति लोट्प्रक्रिया।

तत्त्व-बोधिनी

आडुत्तमस्य पिच्च ४१, ३।४।९२

"स" इति तच्छब्देन यस्याऽऽडागमः स परामृश्यत इत्याहुः॥

---

सूत्रम्

काशिका-वृत्तिः

एत ऐ ३।४।९३

लोट उत्तमस्य इति वर्तते। लोडुत्तमसम्भन्धिनः एकारस्य ऐकाराऽदेशो भवति। आमो ऽपवादः। करवैक् करवावहै, करवामहै। इह कस्मान् न भवति, पचावेदम्, यजावेदम्? बहिरङ्गलक्षणत्वाद् गुणस्य।

लघु-सिद्धान्त-कौमुदी

एत ऐ ५२१, ३।४।९३

लोडुत्तमस्य एत ऐ स्यात्। एधै। एधावहै। एधामहै॥ आटश्च। ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि॥

न्यासः

एत ऐ। , ३।४।९३

"आमोऽपवादः" इति। "आमेतः" ३।४।९० इति प्राप्तस्य। "पचावेदं यजावेदम्" इति। "लोटो लङ्()वत्" ३।४।८५इति सलोपे सति "आद्गुणः" ६।१।८७ इति वृद्धिः॥

बाल-मनोरमा

एत ऐ ९९, ३।४।९३

उत्तमपुरुषैकवचने इटि टेरेत्वे शपि "आमेत" इत्येकारस्य आमि प्राप्ते--एत ऐ। "ऐ" इति लुप्तप्रथमाकम्। "लोटो लङ्व"दित्यस्माल्लोट इति, "आडुत्तमस्य पिच्चे"त्यस्मादुत्तमस्येति चानुवर्तते। तदाह--लोडुत्तमस्येति। एधै इति। एध - ए इति स्थिते एकारस्य ऐत्वे,आडुत्तमस्येत्याडागमे, आटश्चेति वृद्धौ, वृद्धिरेचीति वृद्धिः। एधावहै एधामहै इति। वहिमह्योष्टेरेत्वे शपि एकारस्य ऐत्वे आटि सवर्णदीर्घः। इति लोटप्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

लेटो ऽडाटौ ३।४।९४

लेटो ऽडाटावागमौ भवतः पर्यायेण। जोषिषत्। तारिषत्। मन्दिषत्। पताति दिद्युत्। प्रजापतिरुदधिं च्यावयाति।

न्यासः

लेटोऽडाटौ। , ३।४।९४

"पर्यायेण" इति। अथ युगपदेव कस्मान्न भवतः? एवं मन्यते-- टितावेतौ विधीयेते, टित्त्वञ्चादिविधानार्थम्। न च युगपद्()द्वयोरादित्वं भवति, एकेनैवादिदेशस्यावष्टब्धत्वान्न युक्तं यौगपद्यमिति। "जोषिषत्" इत्यादीव्युदाहरणानि "सिब्बहुलं लेटि" ३।१।३४ इत्यत्र व्युत्पादितानि। अत्रापि व्युत्पाद्यन्ते। "जोषिषत्" इति-- "जुषी प्रीतिसेवनयोः" (धा।पा।१२८८), सिप इकार उच्चारणार्थः, अनेनाट्, "इतश्च लोपः परस्मैपदेषु" ३।४।९७ इतीकारलोपः "आर्धधातुकस्येड्वलादेः" ७।२।३५ इतीट्, लघूपधगुणः, "आदेशप्रत्यययोः" ८।३।५९) इति षत्वम्। "तारिषत्" इति-- "तृ प्लवनतरणयोः" (धा।पा।९६९), "सार्वधातुकार्धधातुकयोः" ७।३।८४ इति व्यत्ययेन धात्वकारस्य दीर्घः। शेषं पूर्ववत्। "मन्दिवत्" इति--"मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" (धा।पा।१३) इदितो नुम्" ७।१।५८। "पदाति" इति। "पद गतौ" (धा।पा।११६९) दिवादावनुदात्तेत् , व्यत्ययेन परस्मैपदम्; शप्प्रत्ययश्च, अटा सहाकः सवर्णे ६।१।९७ दीर्घत्वम्, तिप्। इकारलोपोऽत्र न भवति; तद्विधौ "वैतोऽन्यत्र" ३।४।९६ इत्यतो वाग्रहणानुवृत्तेः। "च्यावयति" इति। "च्युङ् ज्युङ प्रुङ प्लुङ गतौ" (धा।पा।९५५--९५८), हेतुमण्णिच्॥

---

सूत्रम्

काशिका-वृत्तिः

आत ऐ ३।४।९५

लेटः इत्येव। लेट्सम्भन्धिनः आकारस्य ऐकाराऽदेशो भवति। प्रथमपुरुषमध्यमपुरुषाऽत्मनेपदद्विवचनयोः। मन्त्रयैते। मन्त्रयैथे। करवैते। करवैथे। आटः कस्मान् न भवति? विधानसामर्थ्यात्।

न्यासः

आत ऐ। , ३।४।९५

"मन्त्रयैते" इति। "मत्रि {गुप्तपरिभाषणे-धा।पा।} (धा।पा।१६७९), चुरादिणिच्, शप्,{ गुणायादेशः" इति मु।पाठः।} गुणायादेशौ। "आटः कस्मान्न भवति" इति। पदाति विद्युदित्यादौ। "विधानसामश्र्यात्" इति। यद्याट ऐत्वं स्यात् ऐडागममेव विदध्यात्, एवं प्रक्रियालाघवं भवतीति मन्यते॥

---

सूत्रम्

काशिका-वृत्तिः

वाएतो ऽन्यत्र ३।४।९६

लेटः इत्येव। लेट्सम्भन्धिनः एकारस्य वा ऐकाराऽदेशो भवति। अन्यत्र इत्यनन्तरो विधिरपेक्ष्यते। आत ऐ ३।४।९५ इत्येतद् विषयं वर्जयित्वा एत ऐ भवति। सप्ताहानि शासै। अहम् एव पशूनामीशै। मदग्रा एव वो ग्रहा गृह्यान्तै। मद्देवत्यान्येव वः पात्राण्युच्यान्तै। न च भवति। यत्र क्व च ते मनो दक्षं दधस उत्तरम्। अन्यत्र इति किम्? मन्त्रयैते। मन्त्रयैथे।

न्यासः

वैतोऽन्यत्र। , ३।४।९६

"शासै" इति। उत्तमपुरुषैकवचनमिट्, टेरेत्वम्। "ईशै" इत्यादीनि उदाहरणानि "उपसंवादाशङ्कयोः" ३।४।८ इत्यत्र व्युत्पादितानि। "दधस" इति। "डुधाञ् धारणपोषणयोः" (धा।पा।१०९२), "थासः से" ३।४।८०, शपः श्लु), "श्लौ" ६।१।१० इति द्विर्वचनम्, अट्, "घोर्लोपो लेटि वा" ७।३।७० इत्यकारलोपः॥

---

सूत्रम्

काशिका-वृत्तिः

इतश् च लोपः परस्मैपदेसु ३।४।९७

लेटः इत्येव। लेट्सम्भन्धिनः इकारस्य परस्मैपदविषयस्य लोपो भवति। वानुवृत्तेः पक्षे श्रवणम् अपि भवति। जोषिषत् तारिषत्। मन्दिषत्। न च भवति। पताति दिद्युत्। प्रजापतिरुदधिं च्यावयाति परस्मैपदग्रहणम्, इड्वहिमहिडां मा भूत्।

न्यासः

इतश्च लोपः परस्मैपदेषु। , ३।४।९७

"परस्मैपदग्रहणम्" इत्यादि। ननु च टेरेत्वमिडादिषु बाधकं भविष्यति, तत् किं परस्मैपदग्रहणेन? नैतदस्ति; टेरेत्वस्यावकाश अन्येषु लकारादिषु, इतो लोपस्य च परस्मैपदेषु; उभयप्रसङ्गे परत्वादितो लोपः स्यात्॥

---

सूत्रम्

काशिका-वृत्तिः

स उत्तमस्य ३।४।९८

लेटः इति वा इति च वर्तते। लेट्सम्भन्धिन उत्तमपुरुषस्य सकारस्य वा लोपो भवति। करवाव, करवाम। न च भवति। करवावः, करवामः। उत्तमग्रहणम्, पुरुषान्तरे मा भूत्।

न्यासः

स उत्तमस्य। , ३।४।९८

"करवाव" इति। "लेटोऽडाटौ" ३।४।९४ इत्याट्। "उत्तमग्रहणम्" इत्यादि। यदि तर्हि पुरुषान्तरे मा भूदित्येवमर्थमुत्तमग्रहणं क्रियते? न ; वस्मस्ग्रहणमेव कत्र्तव्यम्, अत्राप्ययमर्थः-- सकारग्रहणं कर्तव्यं न भवति, अलोऽन्त्यपरिभाषयैव सकालोपो भवति? अशक्यं वस्मस्ग्रहणं कर्त्तुम्; तस्मिन् सति यदा व्यत्यनेन पुरुषान्तरस्य स्थाने तौ भवतस्तदापि लोपः स्यात्, यदा चोत्तमपुरुषस्य स्थाने थस् क्रियते तदा लोपो न स्यात्। उत्तमग्रहणे सत्येव दोषो न

भवति स्थानिवद्भावेन मध्यमोत्तमसंज्ञयोर्भवन्त्योरेकसंज्ञाधिकारादसति समावेश उत्तमसंज्ञया मध्यमसंज्ञाया निवृत्तिः। सकारग्रहणञ्च यदि न क्रियेत, तदोत्तमस्य व्यत्ययेन वचनान्तरेषु कृतेषु वर्णान्तरस्यापि लोपः स्यात्। तस्माद्यथान्यासमेवास्तु॥

---

सूत्रम्

काशिका-वृत्तिः

नित्यं ङितः ३।४।९९

लेतः इति निवृत्तम्। ङितो लकारस्य य उत्तमः, तस्य नित्यं सकारस्य लोपो भवति। उपचाव, उपचाम। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्।

लघु-सिद्धान्त-कौमुदी

नित्यं ङितः ४२३, ३।४।९९

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः। अलोऽन्त्यस्येति सलोपः। भवाव। भवाम।

न्यासः

नित्यं ङितः। , ३।४।९९

"अपचावापचाम" इति। लङ, "अतो दीर्घो यञि" ७।३।१०१ इति दीर्घः॥ "अपचात्" इति। लङ। "अपाक्षीत्" इति। लुङ "वदव्रज" ७।२।३ इत्यादिना वृद्धिः, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्॥

बाल-मनोरमा

नित्यं ङितः ४९, ३।४।९९

नित्यं ङितः। उत्तमपुरुष एवास्य सूत्रस्य प्रयोजनम्, प्रसङ्गादिहोपन्यस्तम्। "स उत्तमस्ये"ति सूत्रमनुवर्तते। तत्र "स" इति षष्ठ()न्तम्। तेन उत्तमो विशेष्यते। तदन्तविधिः। "इतश्च लोप" इत्यतो "लोप" इत्यनुवर्तते। तदाह--सकारान्तस्य ङिदुत्तमस्येति। ङितो लकारस्य य आदेशः--उत्तमपुरुषस्तस्येत्यर्थः। "वैतोऽन्यत्रे"त्यस्माद्वाग्रहणानुवृत्तिनिवृत्तये नित्यग्रहणम्। अलोऽन्त्यस्येत्यन्त्यलोपः। भवतामिति। लोटस्तस्। तस्य तामादेशः। शप्। गुणाऽवादेशौ। न च तामादेशस्य सर्वादेशत्वात्प्राग्विभक्तित्वाऽभावा"न्न विभक्तौ तुस्मा" इति निषेधाऽभावान्मकारस्येत्संज्ञा शङ्क्या। संयोगान्तलोपेन मकारान्तप्रश्लेषेण उपदेशेऽन्त्यत्वाऽभावात्। भवन्त्विति। लोटो रेझन्तादेशे शिपि गुणेऽवादेशे द्वयोरकारयोः पररूपे एरुरितीकारस्य उकारे भवन्त्विति रूपम्। अथ लोटः सिपि शपि गुणाऽवादेशयोः भव सि इति स्थिते--।

तत्त्व-बोधिनी

नित्यं ङितः ३८, ३।४।९९

सकारान्तस्येति। "ङिल्लकारोत्तमसकारस्ये"ति प्राचो व्याख्यानं त्वयुक्तं, भूयासमित्यादावतिप्रसङ्गः स्यादिति भावः। ङिदुत्तमस्येति। ङिल्लकारोत्तमस्येत्यर्थः। तेन भवाव भवामेत्यादौ नातिप्रसङ्गः॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इतः ६।१ च ० नित्यं ? ङितः ? लोपः ? लस्य ?

अर्थः॥

ङित्-लकार-सम्बन्धिनः इकारस्य नित्यं लोपः भवति

उदाहरणम्॥

अपचत्, अपचन्, अपचम्। अपाठीत्
काशिका-वृत्तिः
इतश् च ३।४।१००

ङितः इत्येव। ङिल्लकारसम्बन्धिन इकारस्य नित्यं लोपो भवति। अपचत्। अपाक्षीत्। परस्मैपदेषु इत्येव, अपचावहि, अपचामहि।
लघु-सिद्धान्त-कौमुदी
इतश्च ४२६, ३।४।१००

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः। अभवत्। अभवताम्। अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम॥
बाल-मनोरमा
इतश्च ५६, ३।४।१००

इतश्च। लस्येत्यधिकृमतम्। "इतश्च लोपः परसमैपदेष्वि"त्यस्माल्लोप इति, परस्मैपदेष्विति चानुवर्तते। परस्मैपदष्वित्येततत्षष्ठ()आ विपरिणम्यते। तदाह-- ङितो लस्येत्यादिना। अलोऽन्त्यस्येत्यन्त्यस्य लोपः। तदाह-- अभवदिति। अभवतामिति। लङस्तस्तामादेशः। शप् गुणावादैशौ। अट्। अभवन्निति। झेरन्तादेशः। शप् गुणावादेशौ।अट्। "इतश्चे"तीकारलोपः। तकारस्य संयोगान्तलोपः। अभव इति। सिपि शपि गुणे अवादेशे अटि इकारलोपे रुत्वविसर्गौ। अभवतमिति। थसस्तमादेशः। शप्। गुणावदेशौ। अट्। अभवतेति। थस्य तादेशे शपि गुणे अवादेशेऽटि। अभवमिति। मिपोऽमादेशे शपि गुणेऽवादेशे पूर्वरूपम्। अभवावेति। वसि शपि गुणावादेशौ। अट्। "अतो दीर्घो यञी"ति दीर्घः। "नित्यं ङित" इति सकारलोपः। एवं मसि अभवामेति रूपम्। इति लङप्रक्रिया।

तत्त्व-बोधिनी
इतश्च ४१, ३।४।१००

"इतश्च लोपः" इति सूत्रात्परस्मैपदेष्वित्यनुवृत्तं षष्ठ()एकवचनान्ततया विपरिणमय्य इत इत्यनेन विशेष्येते। तदाह-- परस्मैपदमिकारान्तं यत्तस्येति। प्राचा तु "परस्मैपदेष्विकारस्य लोपर" इत्युक्तम्, तदयुक्तम्, भवेदित्यादावतिव्याप्तेः। ननु "अतो येयः" इत्यत्र ईय् दीर्घादिरस्तु, एवं च नोक्तातिव्याप्तिः "इतश्चे"ति तपरकरणात्। अत एव अबोभवीदित्यादावपि न दोष इति चेत्। मैवम्। करुदेर्लङि अरुदितामित्यादौ दोषध्रौव्यादिति मनोरमायां स्थितम्॥

---

सूत्रम्

काशिका-वृत्तिः

तस्थस्थमिपाम् तांतंतामः ३।४।१०१

ङितः इत्येव। ङिल्लकारसम्बन्धिनां चतुर्णाम् यथासङ्ख्यं तामादयः अदेशा भवन्ति। अपचताम्। अपचतम्। अपचत। अपचम्। अपाक्ताम्। अपाक्तम्। अपाक्त। अपाक्षम्।

लघु-सिद्धान्त-कौमुदी

तस्थस्थमिपां तांतंतामः ४१६, ३।४।१०१

ङितश्चतुर्णां तामादयः क्रमात्स्युः। भवताम्। भवन्तु॥

न्यासः

तस्थस्थमिपां तान्तन्तामः। , ३।४।१०१

"अपाक्ताम्" इति। पूर्ववद्()वृद्धिः, "झलो झलि" ८।२।२६ इति सिचो लोपः॥

बाल-मनोरमा

तस्थस्थमिपां तांतंताऽमः ४८, ३।४।१०१

तस्थस्थमिपां। तस्,थस्, थ, मिप्,--एषां द्वन्द्वात्षष्ठीबहुवचनम्। ताम तम् त आम् एषां द्वन्द्वात्प्रथमाबहुवचनम्। "नित्यं ङित" इत्यस्मान्ङित इत्यनुव्रतते। तदाह--ङितश्चतुर्णामिति। ङितो लकारस्य आदेशभूतानामित्यर्थः। क्रमादिति। यथासङ्ख्यसूत्रलभ्यमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

लिङः सीयुट् ३।४।१०२

लिङादेशानाम् सीयुडागमो भवति। टकारो देशविध्यर्थः। उकार उच्चारणार्थः। पचेत, पचेयाताम्, पचेरन्। पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन्।

लघु-सिद्धान्त-कौमुदी

लिङः सीयुट् ५२२, ३।४।१०२

सलोपः। एधेत। एधेयाताम्॥

न्यासः

लिङ सीयुट्। , ३।४।१०२

"पचेत्" इत्यादौ "विधिनिमन्त्रण" ३।३।१६१ इत्यादिना लिङ, "लिङ सलोपोऽनन्तस्य" ७।२।७९ इति सकारलोपः, शपा सह "आद्गुणः" ६।१।८४ वलि लोपः। "पक्षीष्ट" इत्यादौ आशिषि लिङ, चकारस्य "चोः कुः" ८।२।३० इति कुत्वम्, "इण्कोः" ८।३।५७ इति षत्वम्॥

बाल-मनोरमा

लिङः सीयुट् १०१, ३।४।१०२

लिङः सीयुट्। स्पष्टम्। परस्मैपदानां लिङादेशानां यासुडागमविधानादात्मनेपदविषयमिदम्। सीयुटि टकार इत्। उकार उच्चारणार्थः। सलोप इति। "लिङः सलोप इत्यनेने"ति शेषः। एधेतेति। लिङस्तादेशः। सीयुट्। सलोपः। आद्गुणः। यलोपः। एधेयातामिति। आतामि सीयुट् शप् सलोपः। आद्गुणः। झस्य रन्। "लिङः सीयु"डित्यतो लिङ इत्यनुवर्तते। तदाह--लिङो झस्येति। लिङादेशस्य झस्येत्यर्थः। अनेकाल्त्वात्सर्वादेशः। एधेरन्निति। झस्य रन्। शप्। सीयुट्। सलोपः। आद्गुणः। यलोपः। एधेथा इति। थास् सीयुट् शप्। सीयुटः सस्य लोपः। आद्गुणः। यलोपः।थासः सस्य रुत्वविसर्गौ। एधेयाथामिति। आथां। सीयुट्। सलोपः। शप्।आद्गुणः। एधेध्वमिति। ध्वम् सीयुट्। शप्। सलोपः। आद्गुणः। यलोपः।

तत्त्व-बोधिनी

लिङः सीयुट् ७५, ३।४।१०२

सलोप इति। "लिङः सलोपोऽनन्त्यस्ये"त्यनेन। एधेयातामिति। सीयुटः सलोपे आद्गुणः।

---

सूत्रम्

काशिका-वृत्तिः

यासुट् परस्मैपदेसु उदात्तो ङिच् च ३।४।१०३

लिङः इत्येव। परसमैपदविषयसय् लिङो यासुडागमो भवति, स च उदात्तो भवति ङिच् च। सीयुटो ऽपवादः। आगमानुदात्तत्वे प्राप्ते, ङित्त्वं तु लिङ एव विधीयते, तत्र तत्कार्याणां सम्भवाद्, न आगमस्य। कुर्यात्, कुर्याताम्, कुर्युः। स्थनिवद्भावादेव लिङादेशस्य ङित्त्वे सिद्धे यासुटो ङिद्वचनं ज्ञापनार्थम्, लकाराश्रयङित्त्वम् आदेशानां न भवति इति। अचिनवम्। अकरवम्।

लघु-सिद्धान्त-कौमुदी

यासुट् परस्मैपदेषूदात्तो ङिच्च ४२८, ३।४।१०३

लिङः परस्मैपदानां यासुडागमो ङिच्च॥

न्यासः

यासुट् परस्मैपदेषूदात्तो ङिच्च। , ३।४।१०३

"परस्मैपदविषयस्य" इति। एतेन "परस्मैपदेषु" इत्यस्याः सप्तम्या विषयसप्तमीत्वं दर्शयति, न परसप्तमीत्वम्। परसप्तमीत्वं तु न सम्भवति; लिङः परस्मैपदानामसम्भवात्। "आगमानुदात्तत्वे प्राप्ते" इति। कुतः पुनरागमानुदात्तत्वं भवतीति निश्चितम्? अत एव यासुट उदात्तवचनात्। यदि ह्यागमा अनुदात्ता न स्युस्तदोदात्तवचनमनर्थकं स्यात्; प्रत्ययभक्तत्वेनैव यासुटः प्रत्ययस्वरेणैवाद्युदात्तस्य सिद्धत्वात्। ननु यानि पिद्वचनानि तदर्थमुदात्तवचनं स्यात्, तेषां ह्यनुदात्तत्वात् तद्भक्तो यासुडनुदात्त एव स्यात्, यद्युदात्त इति नोच्येत? नैतदस्ति;यद्येतत् प्योजनमभिमतं स्यात्, अपिदित्येवं ब्राऊयात्। तदैतदुदात्तवचनमागमानुदात्तस्य ज्ञापकमेव। "तत्र ङित्कार्याणामसम्भवात्" इति। न सर्वेषामित्यभिप्रायः। कुत एतत्? यावता "उष्यात्" इत्यत्र ग्रहिज्यादिसूत्रेण ६।१।१६ यत्सम्प्रसारणं तत् यासुट()यि ङिति सम्भवति। ङिन्मात्रिबन्धनं हि सम्प्रसारणम्; विशेषानुपादानात्। तत्र यदि यासुटो ङित्त्वं विधीयेत तदा ग्रहेः सम्प्रसारणस्यैवेकस्यानुग्रहः स्यात्। लिङस्तु ङित्वे विधाने सर्वस्य ङित्कार्यस्य गुणवृद्धिप्रतिषेधादेवानुग्रहो भवतीति लिङ एव ङित्त्वं विधीयते। "ङित्कार्याणाम्" इति। ङिति कार्याणामित्यर्थः। "कुर्यात्" इति। विकरणाश्रयो धातोर्गुणः, "अत

उत् सार्वधातुके" ६।४।११० इत्युत्वम्, "ये च" ६।४।१०९ इत्युकारलोपः। "कुर्युः" इति। "उस्यपदान्तात्" ६।१।९३ इति पररूपत्वम्। "अचिनवम्" इति। मिपोऽम्। अत्र ङित्त्वाभावाद्गुणः। एतच्च ज्ञापकस्य प्रयोजनम्॥

बाल-मनोरमा

यासुट् परस्मैपदेषूदात्तो ङिच्च ५८, ३।४।१०३

अथ लिङस्तिपि इतश्चेतीकारलोपे शपि गुणेऽवादेशे भव त् इति स्थिते--यासुट् पर। "लिङ सीयु"डित्यतो लिङ इत्यनुवर्तते। षष्ठ()र्थे सप्तमी। तदाह--लिङः परस्मैपदानामिति। सीयुटोऽपवादः। यासुटि टकार इत्, उकार उच्चारणार्थः। टित्त्वात्तिबादीनामाद्यवयवः। अवयवे ङित्त्वं च "आनर्थक्यात्तदङ्गेषु" इति न्यायेन समुदाये आगमविशिष्टतिबादौ विश्राम्यति। "आगमा अनुदात्ता" इति यासुटोऽनुदात्तत्वे प्राप्ते उदात्तवचनम्। इदमेव वचनम् "आगमा अनुदात्ता" इत्यत्र ज्ञापकमिति भाष्यम्। स्तुयात् स्तुयातामित्यादौ गुणादिनिषेधार्थं यासुटो ङित्त्ववचनम्। ननु यदागमा इति न्यायेन यासुडागमो लिङादेशपरस्मैपदावयवः, ततश्च स्थानिवत्त्वेनैव ङित्त्वसिद्धेर्यासुटो ङित्तवविधिर्()व्यर्थः। न च स्थानिभूतलिङो ङकारस्याऽल इत्त्वेन गुणनिषेधविधावाश्रयणादनल्विधाविति निषेधः शङ्क्यः, "घुमास्थागापाजहातिसां हली"ति क्ङिति विहितस्य ईत्वस्य "न ल्यपी"ति निषेधेन लिङ्गेनाऽनुबन्धकार्ये अनल्विधाविति निषेधाऽभावज्ञापनादित्यत आह-- ङित्त्वोक्तेरिति। क्वचदनुबन्धकार्येऽपि अनल्विधाविति निषेध इति। यासुटो ङित्त्वेन ज्ञायत इत्यन्वयः। तथा च एतज्ज्ञापनार्थमेव यासुटो ङित्त्वमिति भावः। ज्ञापनफलं तु वक्ष्यमाणेत्यत्र ङीबभावः। अन्यथा लृडादेशस्य शानचः स्थानिवत्त्वेन टित्त्वान्ङीप् स्यात्। ननु "क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेध" इत्यत्र यासुटो ङित्त्ववचनं न ज्ञापकम्। अनुबन्धकार्ये सर्वत्र अनल्विधाविति निषेधाऽभावे सत्यपि यासुटो ङित्त्वस्य तिप्()सिप्()मिबागमयासुटो ङित्वार्थमावश्यकत्वात्, नह लिङादेशत्वेऽपि तिपसिप्()मिपां ङित्त्वं स्थानिवत्त्वलभ्यम्। "हलश्श्नश्शानज्झा"विति सूत्रभाष्ये "ङिच्च पिन्न पिच्च ङिन्ने"ति प्रपञ्चितत्वादित्यस्वरसादाह--श्नः शानचः शित्तवमपीह लिङ्गमिति। इह--अनुबन्धकार्येऽपि क्वचदनल्विधाविति निषेधोऽस्तीत्यस्मिन्नर्थे, श्नः-- श्नाप्रत्ययस्य, यः शानजादेशो हलः श्नश्शानज्झाविति विहितः, तस्य शित्त्वमपि लिङ्गं--ज्ञापकमित्यर्थः। अन्यथा स्थानिवत्त्वेनैव तस्य शित्()वसिद्धेस्तद्वचनं व्यर्थं स्यादिति भावः। अत्र च यद्वक्तव्यं तत्स्त्रीप्रत्ययप्रकरणे वक्ष्यमाणेत्यत्र प्रपञ्चितम्।

तत्त्व-बोधिनी

यासुट् परस्मैपदेषूदात्तो ङिच्च ४३, ३।४।१०३

क्वचिदिति। ज्ञापनफलं तु वक्ष्यमाणेत्यादौ टिदुगिल्लक्षणङीबभाव इति "टिड्ढे"ति सूत्र एवोक्तम्। "रुया"दित्यादौ "उतो वृद्धिर्लुकि हली"ति न प्रवर्तते, भाष्ये "पिच्च ङिन्न, ङिच्च पिन्ने"ति व्याख्यानाद्विशेषविहितेन ङित्त्वेन पित्वस्य बाधादित्यदादौ वक्ष्यमाणतया यासुतटो ङित्त्वं न ज्ञापकमित्यपरितोषादाह-- श्नः शानचः शित्त्वमिति॥

---

सूत्रम्

काशिका-वृत्तिः

किदाशिसि ३।४।१०४

आशिषि यो लिङ्, तस्य यासुडागमो भवति, स च उदात्तः किद्वद् भवति। प्रययस्य एव इदं कित्त्वम्, न आगमस्य, प्रयोजनाभावात्। ङित्त्वे प्राप्ते कित्त्वम् विधीयते। गुणवृद्धिप्रतिषेधः तुल्यः, सम्प्रसारणम्, जागर्तेर् गुणे च विशेषः। इष्यत्, इष्यास्ताम्, इस्यासुः। जागर्यात्, जागर्यास्ताम्, जागर्यासुः। आशिषि इति किम्? वच्यात्। जागृयात्।

लघु-सिद्धान्त-कौमुदी

किदाशिषि ४३४, ३।४।१०४

आशिषि लिङो यासुट् कित्। स्कोः संयोगाद्योरिति सलोपः॥

न्यासः

किदाशिषि।, ३।४।१०४

"प्रत्ययस्यैवेदं कित्त्वम्" इति। यद्येवम्, आशिषि लिङ् विहितस्तस्य यासुट् किद्भवतीत्येतद्विरुध्यते? नास्ति विरोधः; यासुड्()वचनं लिङ एवोपलक्षणम्। तेन लिङवयवद्वारेण लिङ एव कित्त्वमनेन विधीयते; यासुडवयवत्वाल्लिङः। "नागमस्य" इति। "नागमस्य" इति। अत्रापि नागमात्रस्येत्येषोऽर्थो वेदितव्यः। "प्रयोजनाभावात्" इति। न सर्वस्य कित्त्वप्रयोजनस्याभावादिति भावः। कुतः? वाच्यादिसूत्रेण ६।१।१५ यद्वचिस्वप्योः सम्प्रसारणं तस्य यासुट()पि किति सम्भवात्। किन्मात्रे हि सम्प्रसारणमुच्यते, विशेषापरिग्रहात्। यदि गुणवृद्धिप्रतिषेधस्तुल्य एवेति कस्तर्हि ङित्वात् कित्त्वस्य विशेषो येन तस्मिन् प्राप्ते कित्तवं विधीयेत? इत्याह-- "सम्प्रसारणम्" इत्यादि। ङित्वे वच्यादिसूत्रेण ६।१।१५ किति दिधीयमानं सम्प्रसारणं न स्यात्। "जाग्रोऽविचिण्णल्ङित्सु" ७।३।८५ इति विधीयमानो गुणः। "इष्यात्" इति। "स्कोः संयोगाद्योरन्ते च" ८।२।२९ इति सकारलोपः। "वच्यात्" इति। कित्वाभावाद्वचेः सम्प्रसारणं न भवति। "जागृयात्" इति। पूर्वसूत्रेण ङित्वम्, तेन गुणो न भवति। उभयत्रादादिकत्वाच्छपो लुक्॥

बाल-मनोरमा

किदाशिषि ६४, ३।४।१०४

किदाशिषि। "लिङः सीयु"डित्यतो लिङ इत्यनुवर्तते। "यासुट् परस्मैपदेष्वि"त्यतो यासुडिति च। तदाह--आशिषि लिङ इति। "यासुट् परस्मैपदेष्वि"ति ङित्त्वस्यापवादः। यद्यपि ङित्त्वेनैव गुणनिषेधः सिध्यति, तथापि "इज्या"दित्यादौ "वचिस्वपियजादीनां किती"ति संप्रसारणार्थं कित्तवमावश्यकमिह न्याय्यत्वादुपन्यस्तम्। अथ आशिषि लिङस्तिप्याद्र्धधातुकत्वाच्छबभावे "इतश्चे"तीकारलोपे यासुटागमेऽतः परत्वाऽभावात् सार्वधातुकात्वाऽभावाच्च इयादेशाऽभावे सुटि भूयास् स् त् इति स्थिते प्रक्रियामाह-- स्कोरिति लोप इति। "लिङसलोप" इत्यस्य सार्वधातुकविषयत्वात्स्कोरिति सुः पदान्तसंयोगादित्वाल्लोपः। ततो यासुटः सस्यापि पदान्तसंयोगादित्वादेव लोपः, न तु झल्परसंयोगादित्वेन यासुटः सस्य लोपे सुटः सस्य पदान्तसंयोगादित्वाल्लोप इति युक्तं, तथा सति झल्पसंयोगादिलोपस्याऽसिद्धत्वेन संयोगान्तलोपापत्तेः। भ्रष्ट इत्यादौ सावकाशस्यझल्परसंयोगादिलोपस्य संयोगान्तलोपाऽबाधकत्वादिति शब्दरत्ने विस्तरः। एवं च भूयास् स् त् इति स्थिते सकारद्वयस्य निवृत्तौ भूयादिति रूपम्। तत्र "सार्वधातुकाद्र्धधातुकयो"रिति गुणे प्राप्ते।

तत्त्व-बोधिनी

किदाशिषि ४९, ३।४।१०४

ङित्त्वेनैव गुणवृद्धिप्रतिषेधेसिद्धे किद्वचनमिज्यादित्यादौ संप्रसारणार्थं, जागर्यादित्यत्र गुणार्थं च। जागर्तेर्गुणो हि ङिति पर्युदस्यते, ङित्त्वं चेह विशेषविहितेन कित्त्वेन बाध्यते। सलोप इति। झल्परसंयोगादित्वेन यासुटः सस्य लोपः, सुटस्तु पदान्तसंयोगादित्वेनेति भाव मनोरमायां स्थितं, तदसंबद्धमिति मत्वाऽत्र निष्कर्षमाहुः-- भूयास्तां, भूयास्तं, भूयास्तेत्यत्र झस्पसंयोगादित्वेन यासुटः सस्य लोपः। भूयादित्यत्र तु सुट इव यासुटोऽपि सस्य लोपः पदान्तसंयोगादित्वेनैव। अन्यथा झस्परसंयोगादिलोपस्याऽसिद्धत्वात्संयोगान्तलोप एव स्यात्। भृष्ट इत्यादौ सावकाशस्य झस्पसंयोगादिलोपस्य संयोगान्तलोपऽबाधकत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

झस्य रन् ३।४।१०५

लिङः इत्येव। झस्य लिङादेशस्य रनित्ययम् आदेशो भवति। झो ऽन्तापवादः। पचेरन्। यजेरन्। कृषीरन्।

लघु-सिद्धान्त-कौमुदी

झस्य रन् ५२३, ३।४।१०५

लिङो झस्य रन् स्यात्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्॥

न्यासः

झस्य रन्। , ३।४।१०५

"कृषीरन्" इति। आशिषि लिङ्॥

---

सूत्रम्

काशिका-वृत्तिः

इटो ऽत् ३।४।१०६

लिङादेशस्य इअः अत इत्ययम् आदेशो भवति। पचेय। यजेय। कृषीय। हृषीय। तकारस्य इत्संज्ञाप्रतिषेधः प्राप्नोति, न विभक्तौ तुस्माः १।३।४ इति? न एव अयम् आदेशावयवस् तकारः, किं तर्हि, मुखसुखार्थ उच्चार्यते। आगमस्य इटो ग्रहणं न भवति, अर्थवद्ग्रहणे नानार्थकस्य ग्रहणम् इति।

लघु-सिद्धान्त-कौमुदी

इटोऽत् ५२४, ३।४।१०६

लिङादेशस्य इटोऽत्स्यात्। एधेय। एधेवहि। एधेमहि॥

न्यासः

इटोऽत्। , ३।४।१०६

"कृषीय" इति। आशिषि लिङ्। "नैवायमादेशावयवः" इति। अकारमात्रस्यादेशत्वात्। यद्येवम, अकारोऽयमादेशो विधीयत इति "अणुदित्सवर्णस्य चाप्रत्ययः" (१।१।६९) इति सवर्णानां ग्राहकः स्यात्? "भाव्यमानोऽण् सवर्णान् न गृह्णाति" (व्या।प।३५) इति न भविष्यति। सत्यपि वा सवर्णग्रहणे मात्रिकस्यान्तरतम्यान्मात्रिक एव भविष्यति। अथ लाविषीष्टेत्यत्रागमस्येटः कस्मादकारो न भवतीत्याह-- "आगमस्येटो ग्रहणं न भवति" इति। अत्र कारणमाह-- "अर्थवद्()ग्रहणे न" इत्यादि। ननु चागमानामप्यर्थवत्त्वमस्त्येव, तथा हि-- यासुट्()सहितेनैव लिङो।ऽत्रर्थोऽविभिधीयते, न केवलेन? नैतदेवम्; अन्येषु लकारेषु विनापि तेनार्थवत्ता दृष्टा, आगमानां तु न क्वचित्। तेन तेऽर्थवन्तो न भवन्तीति॥

बाल-मनोरमा

इटोऽत् १०२, ३।४।१०६

इटोऽत्। इटः -अत् इति च्छेदः। "लिङः सीयु"डित्यतो लिङ इत्यनुवर्तते।तदाह--लिङादेशस्येति। "अच्च घे" रित्यत्रेव आदेशे तकार उच्चारणार्थ एव, नत्वित्संज्ञक इति शब्देन्दुशेखरे दिव औदित्यत्र प्रपञ्चितम्। इत्संज्ञक एवेत्यन्ये। न

विभक्ताविति निषेधस्तु न, आदेशत्वात्प्राग्विभक्तित्वाऽभावात्। "झस्य र"न्नित्यत्र तु लक्ष्यानुरोधेन संयोगान्तलोपमाश्रित्य नकारानतरप्रश्लेषादुपदेशेऽन्त्यत्वाऽभावान्नकारस्य नेत्संज्ञेत्यलम्। एधेयेति। इट्। तस्य अकारादेशः।सीयुट् शप्। सलोपः। आद्गुणः। एधेवहि। एधेमहीति। वहिमह्योः सीयुट्। सलोपः। शप्। आद्गुणः। यलोपः। इति विधिलिङ्प्रक्रिया। आद्र्धधातुकत्वादिति। "लिङाशिषी"त्यनेनेति भावः। सलोपो नति। सार्वधातुकग्रहणस्य "लिङः सलोप" इत्यत्रानुवृत्तेरिति भावः। सीयुट्सुटोरिति। लक्ष्यभेदात्पुनःप्रवृत्तिरिति भावः। युगपदेवोभयोः षत्वमित्यन्ये। एधिषीष्टेति। आशिषि लिङस्तादेशः। आद्र्धधातुकत्वान्न शप्। सीयुट्। तकारस्य सुट्। सीयुटः सकारात्प्रागिडागमः। यलोपः। सीयुट सुटश्च सकारस्य षत्वं। तकारस्य ष्टत्वेन टकारः। एधिषीयास्तामिति। आताम् सीयुट्। अकारादुपरि तकारात्प्राक्सुट्।सीयुः प्रागिट्। तत उत्तरस्य सकारस्य षत्वम्। एधिषीरन्निति। झस्य रन्। सीयुट्। इजागमः। यकारलोपः। षत्वम्। एधिषीष्ठा इति। थास् सीयुट्। थकारस्य सुट्। सीयुटः प्रागिट्। सकारद्वयस्य षत्वम्। थकारस्य ष्टुत्वेन ठकारः। रुत्वविसर्गौ। एधिषीयास्थामिति। आथाम्। सीयुट्। अकारादुपरि थकारात्प्राक्सुट्। सीयुटः प्रागिट्। तत उत्तरस्य सकारस्य षत्वम्। एधिषीध्वमिति। ध्वम् सीयुट् यलोपः। सीयुटः प्रागिट्। षत्वम्। इणः परत्वेऽपि इण्णन्तादङ्गात्परत्वं नास्ति, इटः प्रत्ययभक्तत्वात्। ततश्च "इणः षीध्व"मिति ढत्वं न भवति। एधिषीयेति। इटोऽत्। सीयुट्। इट्। षत्वम्। एधिषीवहि एधिषीमहीति। वहिमह्योः सीयुट्। इट् षत्वम्। इत्याशीर्लिङ्प्रक्रिया। ऐधिष्टेति। लुङस्तादेशः। च्लिः। सिच्। इट्। धातोराट्। वृद्धिः। षत्वं ष्टुत्वम्। ऐधिषातामिति। आताम्। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्।

तत्त्व-बोधिनी

इटोऽत् ७६, ३।४।१०६

एधिषीध्वमिति। इणः परत्वेऽपि इणन्तादङ्गात्परत्वाऽभावात् "इणः षीध्वमि"ति ढत्वं न भवति।

---

सूत्रम्

काशिका-वृत्तिः

सुट् तिथोः ३।४।१०७

लिङः इत्येव। लिङ्सम्भन्धिनोः तकारथकारयोः सुडागमो भवति। तकरथकारावागमिनौ, लिङ् तद्विशेषणम्। सीयुटस्तु लिङेवागमी। तेन भिन्नविषयत्वात् सुटा बाधनं न भवति। तकारे इकर उच्चारणार्थः। कृषीष्त। कृषीयास्ताम्। कृषीष्ठाः। कृषीयास्थाम्।

लघु-सिद्धान्त-कौमुदी

सुट् तिथोः ५२५, ३।४।१०७

लिङस्तथोः सुट्। यलोपः। आर्धधातुकत्वात्सलोपो न। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्॥

न्यासः

सुट् तिथोः। , ३।४।१०७

अथ तकारथकाराब्यां लिङ विशिष्यते-- तकारथकायोर्यो लिङ स्थानीति? तेन वा तौ लिङसम्बन्धिनोस्तकारथकारयोरिति? तत्र यद्याद्यः पक्ष आश्रीयेत, तदा विशेष्यत्वाल्लिङः प्राधान्यम्। ततश्च प्रधाने

कार्यसम्प्रत्ययाल्लिङ एव सुडागमः स्यात्। एवञ्च परत्वाद्विशेषविहित्वाच्च सुटा सीयड् बाध्येत। तस्माद्दुष्टोऽयं पक्ष इति द्वितीयं पक्षमाश्रित्याह-- "लिङ्सम्बन्धिनोः" इति। यदुक्तम्-- तकारथकारयोः सुडागमो भवतीति, तस्यार्थं स्पष्टीकर्तुमाह-- "तकारथकारावागमिनौ" इति। विशेष्यत्वेन प्राधान्यादिति भावः। यदुक्तञ्च-- लिङसम्बन्धिनोरिति, तस्यार्थं स्पष्टीकर्तुमाह-- "लिङ् तद्विशेषणम्" इति। "सीयुटस्तु लिङेवागमी" इति। तकारथकारावेवकारेण व्यवच्छिद्येते। "तेन" इत्यादि। यत एवं तकारथकारावागमिनौ सुटः, सीयुटस्तु लिङेव, तेन भिन्नदेशत्वात् सुटा सीयुड् न बाध्यते। न च भिन्नदेशयोर्बाध्यबाधकभावो युक्तः; विरोधाभावात्। "कृषीष्ट, कृषीष्ठाः" इति। तथासोरेकवचनयो रूपे। "कृषीयास्ताम्, कृषीयास्थाम्" इति। आतामाथामोः। सर्वत्राशिषि लिङ, "उश्च" १।२।३२ इति कित्त्वाद्गुणाभावः॥

बाल-मनोरमा

सुट् तिथोः ५९, ३।४।१०७

तथा च प्रकृते भव यास् त इति स्थिते-- सुट्()तिथोः। लिङः सीयुडित्यतो लिङ इत्यनुवर्तते। तिश्च थ् चेति द्वन्द्वात्षष्ठीद्विवनचम्। इकार उच्चारणार्थः। तदाह--लिङस्तकारेति। सुटि टकार इत्, उकार उच्चारणार्थः। भव यास् स् त् इति स्थितम्। नन्विह परेण सुटा यासुटः कथं न बाधः?। भवेयुरित्यादौ परस्मैपदेषु यासुड्()विधेश्चरितार्थत्वादित्याशङ्क्य निराकरोति--सुटा यासुण्न बाध्यत इति। तत्कुतः इत्यत आह-- लिङो यासुडिति। लिङः सीयुट् यासुडागमश्च, लिङादेशैकदेशस्य तकारस्य सुडागम इति विषयभेदादित्यर्थः। तथा च यौगपद्याऽसम्भवाऽभावाद्विप्रतिषेधाऽभावान्न पेरणापि सुटा यासुटो बाध इति भावः।

तत्त्व-बोधिनी

सुट् तिथोः ४४, ३।४।१०७

तकारादिकार उच्चारणार्थः।

---

सूत्रम्

काशिका-वृत्तिः

झेर् जुस् ३।४।१०८

लिङः इत्येव। लिङादेशस्य झेर् जुसादेशो भवति। झो ऽन्तापवादः। पचेयुः। यजेयुः।

लघु-सिद्धान्त-कौमुदी

झेर्जुस् ४३२, ३।४।१०८

लिङो झेर्जुस् स्यात्। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम॥

न्यासः

झेर्जुस्। , ३।४।१०८

"पचेयुः" इति। "अतो येयः" ७।२।८० इतीयादेशः, "आद्गुणः" ६।१।८४ , पररूपत्वम्॥

बाल-मनोरमा

झेर्जुस् ६२, ३।४।१०८

अथ लिङो झेर्झोऽन्त इति प्राप्ते--झेर्जुस्। लिङः सीयुडित्यतो लिङ इत्यनुवर्तते। तदाह-- लिङो झेरिति।

अनेकाल्त्वात्सर्वादेशः। ज इदिति। जुसः स्थानिवत्त्वेन प्रत्ययत्वाच्चुटू इति जकार इत्संज्ञक इत्यर्थः। उसि शपिगुणे अवादेशे यासुटि सकारलोपे भव या उसिति स्थिते इयादेशं बाधित्वा पररूपप्रवृतिं()त शङ्कितुमाह--उस्यप। एकः पूर्वपरयोरित्यधिकृतम्। आद्गुण इत्यस्मादादित्यनुवर्तते। "एङि पररूप"मित्यस्मात्पररूपमिति। तदाह--अपदान्तादिति। उसीति। उसि योऽच् उकारस्तस्मिन् परत इत्यर्थः, "इको यणची"त्यतोऽचीत्यनुवृत्तेः। यद्यपि उसः कृत्स्नस्याऽऽकारस्य च उसित्येकादेशेऽपि रूपं तुल्यं, तथापि अकः सवर्णे दीर्घ इत्यादावुत्तरत्राचीत्यावश्यकमत्राप्यनुवर्तत इति बोध्यम्। भिन्द्युरित्याद्युदाहरणम्। इति प्राप्त इति। भव या उसित्यत्राकारस्योकारस्य चाद्गुणं बाधित्वा एकस्मिन्नुकारे पररूपे प्राप्ते सतीत्यर्थः। सति च पररूपे या इत्यस्याऽभावादिञ् न स्यादिति मन्यते-- परत्वादिति। पररूपापेक्षया इयादेशः परो नित्यश्च, अकृते कृते च प्रवृत्तेः। कृते पररूपे य् इत्यस्यैकदेशविकृतन्यायेन , एकादेशस्य पूर्वान्तवत्त्वेन वा इयादेशस्य निर्बाधत्वात्। ततश्च पररूपं बाधित्वा इयादेशे भवेयुरिति रूपमिति प्राचीना मन्यन्त इत्यर्थः। ननु पररूपमङ्गाधिकारस्थत्वाऽभावादङ्गानपेक्षत्वादन्तरङ्गम्, इयादेशस्तु आङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वाद्बहिरङ्गः। ततश्च परान्नित्यादपीयादेशात्पररूपस्यान्तरङ्गतया बलवत्त्वात्पररूपमेव इह स्यादिति शङ्कते-- यद्यपीति। परिहरति--तथापिति। अतः -यास्-इयः-इति पदच्छेदः। यासिति लुप्तषष्ठीकं पदम्। ततश्च अतः परस्य यासित्येतस्य इय् स्यादिति व्याख्येयमित्यर्थः। ननु "लिङः स लोपोऽनन्()तयस्ये"ति सकारस्य लोप इयादेशं बाधित्वा नित्यत्वात्प्राप्नोतीति, ततश्च यास् इत्यस्य इय् इति कथमित्यत आह--एवं चेति। यासिति सकारान्तस्य इयादेशविधिसामर्थ्यादेव सकारलोपं बाधित्वा प्रागेव यासिति सकारान्तस्य इयादेशो भवतीत्यर्थः। तथा च सकारावस्थायामवर्णात्परत्वाऽभावेन पररूपस्याऽप्रवृत्तिरिति भावः। ननु यदि "यास्-इयः" इति च्छेदस्तदा सकारस्य रुत्वे, भोभगो इति यत्वे, "लोपः शाकल्यस्ये"ति तस्य लोपे अतो --या इय इति स्यात्। आद्गुणे कर्तव्ये यलोपस्याऽसिद्धत्वादित्यत आह-- सन्धिरार्ष इति। "आने मु"गिति सूत्रे भाष्ये तु "अतो या--इय इत्येव सूत्रपा"ठो लक्ष्यते। भवेरिति। सिपि, शपि गुणः। अवादेशः। इतश्चेति इकारलोपः। यासुडागमः। सकारस्य लोपः। इयादेशः। आद्गुणः यलोपः। रुत्वविसर्गौ। एवं थसस्तमादेशे थस्य तादेशे च , भवेतं भवेतेति च रूपम्। भवेयमिति। मिपि अमादेशः। शप्। गुणः। अवादेशः। यासुट्। सलोपः। इयादेशः। आद्गुणः। भवेवेति। वस्। शप्। गुणावादेशौ। "नित्यं ङित" इति सकारलोपः। यासुट्। सलोपः। इयादेशः। आद्गुणः। यलोपः। एवं मसि भवेमेति रूपम्। इति विधिलिङ्()प्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

सिजभ्यस्तविदिभ्यश् च ३।४।१०९

अलिङर्थः आरम्भः। सिचः परस्य, अभ्यस्तसंज्ञकेभ्यो, वेत्तेश्च उत्तरस्य झेर् जुस्, आदेशो भवति। अभ्यस्तविदिग्रहणम् असिजर्थम्। ङित इति च अनुवर्तते। सिचस्तावत् अकार्षुः। अहार्षुः। अभस्तात् अबिभयुः। अजिह्रयुः। अजागरुः। विदेः अविदुः।

लघु-सिद्धान्त-कौमुदी

सिजभ्यस्तविदिभ्यश्च ४४९, ३।४।१०९

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस्। आतिषुः। आतीः। आतिष्टम्। आतिष्ट। आतिषम्। आतिष्व। आतिष्म। आतिष्यत्॥ षिध गत्याम्॥ ३॥

न्यासः

सिजभ्यस्तविदिभ्यश्च। , ३।४।१०९

"वेत्तेश्च" इति निर्देशेन लुग्विकरणस्यैवेह ग्रहणमिति दर्शयति। तस्यैव हि झिरनन्तरः सम्भवति,नान्येषां विदीनाम्। विकरणैर्व्यवधानात्। सत्ताविचारणार्थयोरात्मनेपदित्वात् झेरसम्भव एव, तस्माल्लुग्विकरणस्यैव ग्रहणं युक्तम्। "अभ्यस्तविदिग्रहणमसिजर्थम्" इति। यद्यभ्यस्तविदिग्रहणमसिजर्थम्, एवं सति लडादिसम्बन्धिनोऽपि झेः प्राप्नोतीत्यत आह--- "ङित इति चानुवर्त्तते" इति। तेन ङिल्लकारसम्बन्धिन एव झेर्जुस् भविष्यति, नान्येषामित्यभिप्राय-। "अबिभयुः, अजिह्रयुः" इति। "ञि भीभये" (धा।पा।१०८४), "ह्री लज्जायाम्" (धा।पा।१०८५), "जुजि च" ७।३।८३ इति गुणः, जुहोत्यादिभ्यः शपः श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्। "अजागरुः" इति। अदादित्वाच्छपो लुक्; जागर्तेः "जक्षित्यादय षट्" ६।१।६ इत्यभ्यस्तसंज्ञा॥
बाल-मनोरमा
सिजभ्यस्तविदिभ्यश्च ७४, ३।४।१०९

सिजभ्यस्तविदि। "झेर्ज"सिति सूत्रमनुवर्तते। "नित्यं ङित" इत्यतो ङित इति च। तदाह--सिचोऽभ्यस्तादित्यादिना। इति प्राप्त इति। "लिङो झेर्जुसी"ति शेषः।

---

सूत्रम्
काशिका-वृत्तिः
आतः ३।४।११०

सिज्ग्रहणम् अनुवर्तते। सिच आकारान्ताच् च परस्य झेः जुसादेशो भवति। कथम् आभ्यामानन्तर्यम्? सिचो लुकि कृते प्रत्ययलक्षणेन सिचो ऽनन्तरः, श्रुत्या चाकारान्तादिति। अदुः। अधुः। अस्थुः। तकारो मुखसुखार्थः। पूर्वेण एव सिध्द्धे नियमार्थं वचनम्, आत एव सिज्लुगन्तात्, न अन्यस्मातिति। अभूवन्। प्रत्ययलक्षनेन जुस् प्राप्तः प्रतिषिध्यते, तुल्यजातीयापेक्षत्वान् नियमस्य। श्रूयमाने हि सिचि भवत्येव, अकार्षुः, अहार्षुः।
लघु-सिद्धान्त-कौमुदी
आतः ४९३, ३।४।११०

सिज्लुकि आदन्तादेव झेर्जुस्॥
न्यासः
आतः। , ३।४।११०

सिचः परस्याकारान्तादुत्तरस्य झेरिति ब्राउवता द्वाभ्यमप्यनन्तरसय् झेरित्युक्तं भवति। उभाभ्याञ्चानन्तर्यं न सम्भवति, आतः सिचा व्यवधानादिति मन्यमानः पृच्छति-- "कथम्" इत्यादि। "सिचो लुकि" इति। "गातिस्था" २।४।७७ इत्यादिना यदा सिचो लुक् क्रियते तदा प्रत्ययलक्षणेन सिचोऽनन्तरः सम्भवति। "श्रुत्या चाकारान्तात्" इति। तदनन्तरश्रूयमाणत्वात्। श्रुत्येति श्रोत्रेन्द्रियसाध्योपलब्ध्येत्यर्थः। तदेवं द्वाभ्यामप्यानन्तर्यस्याश्रयणात् सामर्थ्यादातः सिज्लुगन्ताद् झेर्जुस् भवतीत्युक्तं भवति। न हि श्रूयमाणे सिचि द्वाभ्यामानन्तर्यं सम्भवति। "तकारो मुखसुखार्थः" इति। व्यावर्त्याभावात्। न हि ह्रस्वात् प्लुताद्वा वर्णात् परः सिच् सम्भवति। "पूर्वेणैव सिद्धे" इति। लुप्तेऽपि सिचि प्रत्ययलक्षणेन झेः सिजनन्तरत्वादभूविन्निति नियमस्य व्यावर्त्यं दर्शयति। "भुवो वुग् लुङलिटोः" ६।४।८८ इति वुक्। ननु च नैवेह पूर्वसूत्रेण प्राप्नोति, न हीह सिजपेक्षयानन्तर्यं झेर्विद्यते, तत् किं प्रतिषिध्यत इत्याह-- "प्रत्ययलक्षणेन" इत्यादि। लुप्ते हि

प्रत्ययलक्षणेनानन्तर्यमस्ति, अतः पूर्वेण प्राप्नोति। जुस् नियमेन प्रतिषिध्यते। यदि तर्हि नियमार्थमिदम्, "अकार्षुः" इत्यत्रापि न स्यात्, न ह्यत्रातः सिज्लुगन्तात्परो झिर्भवतीति? इत्यत आह--"तुल्यजातीय" इत्यादि। आतः सिज्लुगन्तान्नियमार्थमयं जुस् विधीयते। स च नियमस्तुल्यजातीयापेक्षः, तेन समानजातीयमेव व्यवच्छिनत्ति। कश्च समानजातीयः? अन्यः {सिजलुगन्तः इति मु।पाठः।} सिज्लुगन्तः। न चाकार्षुरित्यत्र झेः पूर्वः सिज्लुगन्तः इति नायं नियमस्य विषयः, तेन भवत्येव जुस्॥

बाल-मनोरमा

आतः ७५, ३।४।११०

आतः। "झेर्जु"सिति सूत्रमनुवर्तते। "आतः सिज्लुगन्तादिति वक्तव्य"मिति वार्तिकं भाष्ये पठितम्। ततस्च सिज्लुकि यदाकारान्तं तस्मात्परस्य झेर्जुसिति लभ्यते। सिजभ्यस्तेति पूर्वसूत्रेणैव सिद्धे नियार्थमिदम्। तदाह-- आदन्तादेवेति। अभूवन्निति। झिः। च्लिः। सिच्। लुक्। अट्। झोऽन्तः। इतश्चेति इकारलोपः। तकारस्य संयोगान्तलोपः। "भुवो वुग्लुङ्लिटो"रिति वुक्। सिज्लुकि आतः परस्यैवेति नियमात्सिजभ्यस्तेति न जुसिति भावः। अभूरिति। सिप् च्लिः सिच् लुक् अट् इकारलोपः। रुत्वविसर्गौ। अभूतमिति। थसस्तम् च्लिः सिच् लुक् अट्। गुणनिषेधः। एवं थस्य तादेशे अभूतेति रूपम्। अभूवमिति। मिप् अम्। च्लिः सिच्। लुक्। अट् वुक्। अभूवेति। वस् च्लिः सिच् लुक् अट्। नित्यं ङित इति सकारलोपः। गुणनिषेधः। एवं मसि अभूमेति रूपम्। अथ माङि लुङि विशेषमाह-- न माङ्योगे। शेषपूरणेन सूत्रं व्याचष्टे---अडादौ न स्त इति। "लुङ्लङ्लृङ्क्ष्वडुदात्त" इत्यत, "आडजादीना"मित्यश्च तदनुवृत्तेरिति भावः। मा भवान्()भूदिति। "मा स्म भवद्भूद्वेति। एवं बहुवचने मा स्म भवन् मा स्म भूवन्निति चोदाहरणं बोध्यम्। इति लुङ्()प्रक्रिया।

तत्त्व-बोधिनी

आतः ५७, ३।४।११०

सिज्ग्रहणमंनुवर्तते, "झेर्जु"सिति च। सिच आकाराच्च परसय् झेर्जुस्। तत्र प्रत्ययलक्षणेन सिचः परत्वमाकारात्तु श्रुत्या। एवं स्थिते फलितमाह-- सिज्लुकीति। "गातिस्थे"ति सूत्रेणेत्यर्थः। "सिज्यभ्यस्ते"ति पूर्वसूत्रेणवादन्तादपि झेर्जुस् सिद्धे स्थिते नियमार्थोऽयमित्याह-- आदन्तादेवेति।

---

सूत्रम्

काशिका-वृत्तिः

लङः शाकटायनस्य एव ३।४।१११

आतः इत्येव। आकारान्तादुत्तरस्य लङादेशस्य झेः जुसादेशो भवति शाकटायनस्य आचार्यस्य मतेन। अयुः। अवुः। अन्येषां मते अयान्। ननु ङितः इत्यनुवर्तते। अत्र लङेव अकारान्तादनन्तरो ङित् सम्भवति न अन्यः, तत् किं लङ्ग्रहणेन? एवं तर्थि लङेव यो लङ् विहितः तस्य यथा स्यात्, लङ्वद्भावेन यस् तस्य मा भूत्, लोटो लङ्वत् ३।४।८५ इति। यान्तु। वान्तु। सिजभ्यस्तविदिभ्यश्च ३।४।१०९ इत्ययम् अपि झेर् जुस् लोटो न भवति। बिभ्यतु। जाग्रतु। विदन्तु। जुस्भावमात्रं हि मुख्येन लङा विशेष्यते। एवकार उत्तरार्थः।

लघु-सिद्धान्त-कौमुदी

लङः शाकटायनस्यैव ५७०, ३।४।१११

आदन्तात्परस्य लङो झेर्जुस् वा स्यात्। अयुः, अयान्। यायात्। यायाताम्। यायुः। यायात्। यायास्ताम्। यायासुः। अयासीत्। अयास्यत्। वा गतिगन्धनयोः॥ ५॥ भा दीप्तौ॥ ६॥ ष्णा शौचे॥ ७॥ श्रा पाके॥ ८॥ द्रा कुत्सायां गतौ॥ ९॥ प्सा भक्षणे॥ १०॥ रा दाने॥ ११॥ ला आदाने॥ १२॥ दाप् लवने॥ १३॥ पा रक्षणे॥ १४॥ ख्या प्रकथने॥ १५॥ अयं सार्वधातुके एव प्रयोक्तव्यः॥ विद ज्ञाने॥ १६॥

न्यासः

लङः शाकटायनस्यैव। , ३।४।१११

"अयुः, अवुः" इति। पूर्ववच्छपो लुक्, पूर्ववच्च पररूपत्वम्। "लङेव" इत्यादि। यत्सम्बन्धिनो झेर्जुस्भावो विधेयः। तिङत्वमधिकृत्येमुक्तम्। कुतः एतत्? लङलिङोरप्याकारान्तादनन्तरयोः सम्भवात्। तत्सम्बन्धिनोस्तु "झेर्जुस्" ३।४।१०८ इत्येवमादिनैव शास्त्रेण जुस्भावो विहित इति न तावदधिकृत्येदमुच्यते। एवकारस्तु लृङ्व्यवच्छेदार्थः, स्यप्रत्ययेन झेर्व्यवधानात्। स चातिदेशद्वारेण यस्य लङ्वद्भावो न भवति स वेदितव्यः। यस्य ह्यतिदेशद्वारेण लङ्वद्भावो विहितः स उपचारेण लङित्युच्यते। परमार्थतस्तु लोडेवासौ, न लङेव। "लङ्वद्भावेन यः" इति। लङिति सम्बध्यते।लङा तुल्यं मा भूदिति मुख्यस्यैव लङो ग्रहणं यथा स्यादित्येवमर्थं लङ्ग्रहणं क्रियते। केन पुनर्लङ्वद्भावो भवतीत्याह-- "लोटो लङ्वत्" इति। अनेन हि सूत्रेण ३।४।८५ लोटो लङ्वत् कार्यष्वतिदिष्टेषु लङ्कार्ययोगात् तस्य लङ्वद्भावो भवति। तेन लङसदृशभूत उपचारेण लङिति व्यपदिश्यते। अत्रायमर्थः--यदि मुख्यस्य लङः परिग्रहार्थं लङ्ग्रहणं न क्रियते, ततः "लोटो लङ्वत्" ३।४।८५ इत्यतिदेशाद्यथा तामादिकार्यं लोटो भवति, तथेदमपि स्यात्। अतोऽस्य दोषस्य निवृत्यर्थं लङग्रहणं क्रियत इति मा भून्नामायं जुस्; लोटो लङग्रहणाद्यत्नात्॥ यस्तु "सिजभ्यस्तविद#इभ्यश्च" ३।४।१०९ इत्यनेन विधीयते स विभ्यतु, जाग्रतु, विदन्त्वित्यादौ कस्मान्न भवति, न हि किञ्चित् तत्र यत्नान्तरमस्ति? इत्याह-- "सिजभ्यस्त" इत्यादि। कथं पुनर्विना यत्नेन पूर्वको जुस् लोटो न भवतीत्याह-- "जुस्भावमात्रं हि" इत्यादि। न ह्ययमेव जुस् मुख्येन लङा विशिष्यते,किं तर्हि? जुस्भावमात्रम्। योऽस्मिन् प्रकरणे जुस् विहितः स मुख्यस्यैव लङो भवति, नेतरस्येति। तेन पूर्वकोऽपि जुस् न भवति। "एककार उत्तरार्थः" इति। अथ तदर्थं एवकारः कस्मान् भवति? विध्यर्थत्वात् तस्य। न हि विध्यर्थवाक्य एवकारस्यार्थवत्वमुपपद्यते। स हि नियमार्थेषूपयुज्यते, न हि विध्यर्थेषु। न चेदं नियमार्थम्; सिद्धे हि विधिरारभ्यमाणो नियमार्थो भवति (का।दु।प।५९), न च सिद्धेऽयमारभ्यते। तस्मादुत्तरार्थं एवकारः। ननु शाकटायनस्यैव मतेन यथा स्यादन्येषां मते मा भूदित्येवमर्थमिहैवकारः स्यात्? न; तेन विनाऽप्यस्य नियमस्य सिद्धत्वात्। यद्यन्येषां मते न स्यात्, शाकटायनग्रहणमनर्थकं स्यात्॥

बाल-मनोरमा

लङः शाकटायनस्यैव २९४, ३।४।१११

लङः शाकटायनस्यैव। "झेर्जुसि"ति "आत" इति चानुवर्तते। तदाह--आदन्तादिति। जुस्वेति। शाकटायनग्रहणाद्वकल्पलाभ इति भावः। एवकारस्तु "लिट् च" "लिङाशिषी"त्युत्तरार्थ इति भाष्ये स्पष्टम्। नच "लोटो लङ्व"दित्यतिदेशाद्यान्तु इत्यत्रापिजुस्विकल्पः शङ्क्यः,"नित्यं ङितः" इत्यतो हित इत्यनुवृत्यैव सिद्धेर्लङ्ग्रहमस्य लङ्वद्भावमादाय प्रवृत्तिनिवारणार्थत्वात्। इदमपि भाष्ये स्पष्टम्। अयानिति। जुसभावे रूपम्। अयासीत्। ष्णाधातुः षोपदेशः। नस्य ष्टुत्वेन णत्वनिर्देशः। स्नाति। स्नायात्-स्नेयात्। पा रक्षणे। "एर्लिङी"ति सूत्रे "गातिस्थे"त्यत्र च पिबतेरेव ग्रहणादेत्त्वसिज्लुकौ न। तदाह-- पायास्ताम्। अपासीदिति। दाप् लवने। घुत्वाऽभावात् "शेषे विभाषे"ति णत्वविकल्पं मत्वा आह-- प्रणिदाति प्रनिदातीति। घुत्वाऽभावादाशीर्लिङि एत्वं, लुङि लुक्, च नेति मत्वाऽऽह अदायास्तामिति। अदासीदिति च। ख्या प्रकथन।सार्वधातुकमात्रविषय इति। मात्रशब्दोऽवधारणे। सार्वधातुक एवास्य ख्याधातोः प्रयोगः,न त्वाद्र्धधातुक इत्यर्थः। कुत इत्यत आह--सस्थानत्वमिति। "चक्षिङ ख्या"ञिति सूत्रे ख्यास्थाने "ख्याञ्" इति वक्तव्यम्।

अस्य शकारस्य "पूर्वत्रासिद्ध"मित्यधिकारे यकारो वक्तव्य इत्युक्तवा "प्रयोजननं सौप्रख्ये वुञ्विधि"रित्युपक्रम्य "सस्थानत्वं नमः ख्यात्रे" इत्युक्तं वार्तिके। तत्र नञमध्याह्मत्य "नमः ख्यात्रे" इति सस्थानत्वं न भवतीति व्याख्यातं भाष्ये। तदिदं वार्तिकं भाष्यं च ख्याधातोरस्य सार्वधातुके एव प्रयोग इत्यत्र ज्ञापकमित्यर्थः। तत्र सस्थानपदं व्याचष्टे--- सस्थानो जिह्वामूलीय इति। प्राचीनाचार्यसमयादिति भावः। स नेति। स = जिह्वामूलीयो नमः ख्यात्रे इत्यत्र न भवतीत्येतत् ख्याञादेशस्य ख्श्यादित्वविधौ, शस्य यत्वविधौ च प्रयोजनमित्यर्थः। ख्श्यादित्वे इति। यत्वविधावित्यस्याप्युपलक्षणम्। शकार्थानिकयत्वस्याऽसिद्धत्वात् "शर्परे विसर्जनीयः" इति विसर्जनीय इष्टः सिध्यति, जिह्वामूलीयस्त्वनिष्टो न भवतीति भाष्यवार्तकह्मदयम्। ख्याधातोरस्याद्र्धधातुकेऽपि प्रयोदसत्त्वे तु तृजन्ते ख्यातृशब्दे यकारस्य शकारस्थानिकत्वाऽभावादसिद्धत्वाऽभावात् "शर्परे विसर्जनीयः" इत्यस्याऽप्रवृत्तौ कुप्वोर्जिह्वामूलीयोदुर्वारः स्यात्। ततश्चाद्र्धदातुके सर्वत्र न ख्याधातोः प्रयोग इति विज्ञायते,ज्ञापकस्य सामान्यापेक्षत्वादिति भावः। संपूर्वस्येति। सार्वधातुकेऽपीति भ#आवः। अत्र व्याख्यानमेव शरणम्। एवं च "सङ्ख्यती"त्यादि नास्तीति फलितम्। सङ्ख्यादिशब्दास्तु ख्याञादेशस्येति बोध्यम्। मा माने इति। मानं परिमितिरिति भावः। तदाह--अकर्मक इति। "माति घृतं पात्रेऽस्मि" न्निति उदाहरणम्। परिमितं भवतीत्यर्थः। संगृहीतं भवतीति यावत्। अत्रार्थे शिष्टप्रयोगसंवादं दर्शयति--तनो ममुस्तत्रेति। "तनौ मुमस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः" इति माघकाव्ये तपोधनस्य नारदस्य अभ्यागमेन आगमनेन संभवाः मुदः = संतोषाः, कैटभद्विषः = श्रीकृष्णस्य तनौ = शरीरे , न ममुः= परिमिता न बभूवुः। आधिक्यान्न संगृहीता बभूवुरिति यावत्। अर्थान्तरे त्विति। परिच्छेदे त्वित्यर्थः। उदरमिति। "उदरंपरिमाति मुष्टिना कुतुकी कोऽपिदमस्वसुः किमु" इति नैषधकाव्ये। कोऽपिकुतुकी दमस्वसुः =दमयन्त्याः, उदरं मुष्टिना परिमाति किमु?, किमुपरिगृह्मातीत्यर्थः। नास्य ग्रहणमिति। "घुप्रकृतिमा"ङिति भाष्यादिति भावः। एवं च "शेषे विभाषाऽकखादौ" इति णत्वविकल्प इति मत्वाऽऽह---प्रणिमाति प्रनिमातीति। ममौ।ममिथ--ममाथ। ममिव। मात। मास्यति। मातु। अमात्। अमासीत्। अमास्यत्। वचपरिभाषणे। अनिट्। अयमन्तीति। लटि प्रथमपुरुषबहुवचनं नास्तीत्यर्थः। बहुवचनपर इति। "न प्रयुज्यते" इति शेषः। अस्मिन् पक्षे पुरुषत्रये बहुवचनं नास्ति। झिपर इति। "न प्रयुज्यते" इति शेषः। अस्मिन् पक्षे लिडादिष्वपि [प्रथमपुरुष] बहुवचनं नास्तीति भावः। तत्र लिटि अकिति "लिट()भ्यासस्ये"ति संप्रसारणम्। उवाच। किति तु "वचिस्वपी"ति संप्रसारणम्। ऊचतुः। उवचिथ --उवक्थ। ऊचिव। वक्ता वक्ष्यति। वक्तु। अवक्। वच्यादिति। विधिलिङि रूपम्। आशीर्लिङि "वचिस्वपी"ति संप्रसारणं मत्वाऽऽह-- उच्यादिति। अवोचदिति। लुङि "अस्यतिवक्ती"ति च्लेरङि "वच उ"मिति भावः। विद ज्ञाने इति। अनिट्सु लुग्विकरणस्याऽग्रहणादयं सेट्।

तत्त्व-बोधिनी

लङः शाकटायनस्यैव २५४, ३।४।१११

प्रणिदातीति। "शेषे विभाषे"ति णत्वविकल्पः। अदासीदिति। अघुत्वान्न सिज्लुक्। नमः ख्यात्रे इति। यद्ययमाद्र्धधातुकेऽपि प्रयुज्येत तर्हि तृजन्तेऽस्मिन्परे "शर्परे विसर्जनीयः" इत्यस्याऽप्रवृत्त्या "कुप्वो"रिति जिह्वामूलीयो दुर्वारः स्यादेवेति "तदभावः ख्शादित्वे प्रयोजन"मिति वार्तिककाराद्युक्तिर्व्याकुप्येतेति भावः। संपूर्वस्येत्यादि। सङ्ख्यातीत्यादि प्रयोगो नास्त्येव। "सङ्ख्ये"ति प्रयोगस्तु ख्याञादेशस्येति न्यासकाराशयः। मा माने। नास्येति। "घुप्रकृतिमा"ङिति पाठान्ङितामेव तत्र ग्रहणं, ततश्च "शेषे विभाषे"ति विकल्प एव प्रवर्तत इत्याशयेनाह-- प्रणिमातीत्यादि। वच परिभाषणे। उवाच। वक्ता। वक्ष्यति। वक्तु। वक्तात्। अवक्। अवक्ताम्। अयमन्तिपर इति। तथा च-- वचन्ति, वक्ष्यन्ति, वचन्तु, अवचन्, अवोचन्, अवक्ष्यन्नित्येतेऽसाधवः। बहुवचनपर इति। अस्मिन् पक्षे लटि मध्यमे-- वक्थ। उत्तमे तु -- वच्मः। लिटि -- ऊचुः। मध्यमे- उच। उत्तमे तु --ऊचिम। लुटि--- वक्तारः। लिङि--उच्यासुः। वच्यासुरित्यादयोऽप्यसाधवः। झिपर इति। अ()स्मस्तु पक्षे-- वक्थ वच्मः ऊच ऊचिमेत्यादयः साधव इति दिक्।

सूत्रम्

काशिका-वृत्तिः

द्विषश् च ३।४।११२

लङः शाकटायनस्य इत्येव। द्विषः परस्य लङादेशस्य झेर् जुसादेशो भवति, शाकटायनस्य आचार्यस्य मतेन। अद्विषुः। अन्येषां मते अद्विषन्।

न्यासः

द्विषश्च।, ३।४।११२

"अद्विषु" इति। अदादित्वाच्छपो लुक्॥

बाल-मनोरमा

द्विषश्च २६६, ३।४।११२

द्विषश्च। "झेर्जु"सिति "लङः शाकटायनस्ये"ति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- लङो झेरिति। अद्विषन्निति। अद्वेट् अद्विष्टम् अद्विष्ट। अद्वेषम् अद्विष्व अद्विष्म। विधिलिङि परस्मैपदे आह--- द्विष्यादिति। द्विष्याताम् द्विष्युः-- इत्यादि। तङि आह-- द्विषीतेति। द्विषीयाताम् द्विषीरन् इत्यादि। आशीर्लिङि द्विष्यास्ताम्-- इत्यादि। तङ्याह-- द्विक्षीष्टेति। "लिङ्सिचावात्मनेपदेषु" इति कित्वान्न गुणः। द्विक्षीयास्तामित्यादि। लुङि परस्मैपदे आह--अद्विक्षदिति। "शल इगुपधात्" इति क्सः। अद्विक्षताम् अद्विक्षन्नित्यादि। तङित्यादौ प्रकृष्टपूरणस्यार्थस्यानवगमादाह--प्रपूरणं पूरणाऽभाव इति। ऊधः पूरणप्रतिकूलीभाव इत्यर्थः। ऊधशः सकाशात्क्षारणे इति यावत्। ननु प्रपूरणशब्दस्य कुतोऽयमर्थ इत्यत आह-- धात्वर्थं बाधते कश्चिदिति। प्रसिद्धं धात्वर्तं कश्चिदुपसर्गो बाधित्वा अर्थान्तरं नयतीत्र्थः। दोग्धीति। "दादे"रिति हस्य घः, "झषस्तथो"रिति तकारस्य धकारः, घस्य जश्त्वेन गः। एवं दुग्ध इत्यपि। दुहन्ति। धोक्षीति। हस्य घः, चर्त्वेन कः, षत्वमिति भावः। दुग्धः दुग्ध।दोह्म दुह्वः दुह्मः। लटि आत्मनेपदे आह--दुग्धे इति। घधगाः। दुहाते दुहते। धुक्षे इति। हस्य घः, दस्य भष् धकारः, घस्य कः, षत्वम्। दुहाथे। धुग्ध्वे इति। हस्य घः, भष्, घस्य गः। दुह्वहे दुह्महे। दुदोह, दुदुहतुः, दुदुहुः। अजन्ताऽकारवत्त्वाऽभावात्क्रादिनियमान्नित्यमिट्। दुदोहिथ, दुदुहथुः दुदुह।दुदोह दुदुहिव दुदुहिम। दुदुहे दुदुहाते दुदुहिरे दुदुहिषे दुदुहाथे दुदुहिढ्वे--दुदुहिध्वे। दुदुहे दुदुहे दुदुहिवहे दुदुहिमहे। दोग्धा। धोक्ष्यति। धोक्ष्यते। दोग्ध्विति।दुग्धात् दुग्दाम् दुहन्तु। दुग्धीति। हेर्धिः।घत्वजश्त्वे। दुग्धात्। दुग्धम्। दुग्ध। जश्त्वचर्त्वे। षत्वम्। दुहाथाम्। धुग्ध्वमिति। हस्य घः, भष्, घस्य जश्त्वम्। दोहै इति। आटः पित्त्वादङित्त्वाद्गुण इति भावः। दोहावहै दोहामहै। लङि परस्मैपदे आह--अधोगिति। तिप इकारलोपः, हल्ङ्यादिलोपः, हस्य घः, दस्य भष्, घस्य चत्र्वविकल्पः। अदुग्धाम् अदुहन्। अधोक् अदुग्धम् अदुग्ध। अदोहमिति। अदुह्व अदुह्म। लङस्तङ्याह-- अदुग्धेति। हस्य घः, तकारस्य धः, घस्य गः। अदुहाताम् अदुहत। अदुग्धाः, अदुहाथाम्। अधुग्ध्वमिति। "क्सस्याऽचि"। अधुक्षाताम् अधुक्षन्त। अधुक्षथाः, अधुक्षाथाम्, अधुक्षध्वम्। अधुक्षि, अधुक्षावहि, अध#उक्षामहि। लुग्वेति। त थास् ध्म् वहि--एषु चतुर्षु दन्त्यादिषु परेषु "लुग्वा दुहे"ति क्सस्य लुक्पक्षे लङीव रूपाणीत्यर्थः। तथा च अदुग्ध, अदुग्धाः, अधुग्ध्वम्, तदुह्वहि--इत्यपि रूपाणीति फलितम्। अधोक्ष्यत्। अधोक्ष्यत। दिह उपचये इति। #उपचयो वृद्धिःओओ। अनिट्। प्रणिदेग्धीति। "नेर्गदे"ति णत्वम्। दुहधातुवद्रूपाणि। लिह आस्वादने इति। अनिट्। लेढीति। शपो लुकि ढत्वधत्वष्टुत्वढलोपाः। लेक्षीति। सिपि हस्य ढः। "षढो"रिति ढस्य क इति भावः। लीढः लीढ। लेहमि लिह्वः लिह्मः। लटि तङ्याह-- लीढे इति।लिहाते लिहते। लिक्षे इति। ढकषाः। लिहाते इति सुगमम्। लीढ्वे इति। ढत्वधत्वष्टुत्वढलोपदीर्घाः। लिहे लिह्वहे लिह्महे। लेढा। लेक्ष्यति। लेक्ष्यते। लेढ्विति। लीढात् लीढाम् लिहन्तु। लीढीति। हेर्धिः। ढत्वधत्वष्टुत्वढलोपदीर्घाः। लीढात् लीढम् लीढ। लेहानीति। आटः

पित्त्वेन ङित्त्वाऽभावाद्गुण इति भावः। लेहाव लेहाम। लीढाम् लिहाताम् लिहताम्। लिक्ष्व लिहाथाम् लीढ्वम्। लेहै लेहावहै लेहामहै। अलेडिति। लङि तिपि शपो लुकि इकारलोपे हल्ङ्यादिलोपे हस्य ढः। चर्त्वविकल्प इति भावः। अलीढाम् अलिहन्। अलेट् अलीढम् अलीढ। अलेहम् अलिह्व अलिह्म। अलीढ अल#इहाताम् अलिहत। अलीढाः। अलिहाथाम् अलीढ्वम्। अलिहि अलिह्वहि अलिह्महि। अलिक्षिदिति। लुङि क्सः। अलिक्षताम् अलिक्षन्त। अलिक्षथाः-- अलीढाः, अलिक्षाथाम् अलिक्षध्वम्--अलीढ्वम्। अलिक्षि। "लुग्वा दुहे"ति लुग्विकल्पं मत्वा आह-- अलिक्षावहि अलिह्वहीति। अलेक्ष्यत् अलेक्ष्यतेति। लृङि रूपे। द्विषादयश्चत्वारः स्वरितेतो गताः। चक्षिङ् व्यक्तायां वाचीति। गूढार्थस्य स्पष्टप्रतिपत्त्यर्थे विवरणे इत्यर्थः। अयं दर्शनेऽपीति। श्रुतौ "पूर्वाऽपरं चरतो माययैतो। शिशू क्रीजन्तौ परियातो अध्वरम्। वि()आआन्यन्यो भुवनानि चक्षे। ऋतूनन्यो विदधज्जायते पुनः इत्यादौ तथा दर्शनादिति नाप्यनुदात्तेत्त्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुं,ङित्त्वादेव तत्सिद्धेरित्यत आह--इकारोऽनुदात्तो युजर्थ इति। नाप्यनुदात्तेत्त्वप्रयुक्तात्मनेपदार्थं तदिति शक्यं वक्तुं, ङित्त्वादेव तत्सिद्धेरित्यत आह-- इकारोऽनुदात्तो युजर्थ इति। "अनुदात्तेतश्च हलादे"रिति ल्युडपवादयुच्प्रत्ययार्थ इत्यर्थः। अकारमुल्लङ्घ्य इकारोच्चारणं तु उच्चारणार्थत्वाऽभावप्रतिपत्त्यर्थमिकारस्य इत्संज्ञावश्यकत्वे नुमागमः स्यादित्यत आह-- नुम् तु नेति। कुत इत्यत आह-- अन्ते इदित इति। "इदितो नुम् धातो"रित्यत्र "गोः पादान्ते" इत्यस्मादन्ते इत्यनुवृत्तेरिति भावः। नन्विकारे युजर्थमनुदात्तत्वस्य इत्संज्ञकत्वस्य च आवश्यकत्वे तत एवात्मनेपदसंभवान्ङकारोच्चारणं व्यर्थमित्याशङ्क्य आह--ङकारस्त्विति। ङकारो नित्यात्मनेपदार्थः। अनुदात्तेतत्वप्रयुक्तं त्वात्मनेपदं कदाचिन्न स्यात्, अतो ङकारोच्चारणम्। अत एव "अनुदात्तेत्त्वप्रयुक्तात्मनेपदमनित्य"मिति विज्ञायत इत्यर्थः। स्फायन्निति। "स्फायी वृद्धा"वित्यनुदात्तेतोऽपि लटः शत्रादेश न त्वात्मनेपदं शानजिति बावः। वस्तुतस्तु अन्त्येकत्ववयाघातेन चरितार्थत्वान्ङकारोच्चारणमुक्तार्थे कथं ज्ञापकम्?, भाष्ये तथाऽनुक्तत्वाच्च। अतःपृषोदरादित्वकल्पनया स्फायन्निति कथंचित्साध्यमित्याहुः। चष्टे इति। "स्को"रिति कलोपः, ष्टुत्वं चेति भाव-। चक्षाते इति। चक्षते। थासः सेभावे "स्को"रिति कलोपे "षढोरिति षस्य कत्वे षत्वे च कृते चक्षे चक्षाथे। ध्वमि "स्को"रिति कलोपे षस्य जश्त्वेन डकारे चड्ढ्वे। चक्षे चक्ष्वहे चक्ष्महे। आद्र्धधातुके इत्यनन्तरम् "इत्यनुवर्तमाने" इति शेषः।

तत्त्व-बोधिनी

द्विषश्च २३२, ३।४।११२

दुह प्रपूरणे। प्रपूरणं-- त्याजनम्। लङ्वदपीति। अदुग्ध। अदुग्धाः। अधुग्ध्वम्। अदुह्महि। दिह। उपचयो वृद्धिः। प्रणिदेग्धीति। "नेर्गदे"ति णत्वम्। अलिक्षतेति। "शल इगुपधे"ति क्सः। अलिक्षाताम्। अलिक्षन्त। अलीढेति। "लुग्वा दुहे"ति वा लुक्। अलीढाः। अलीढ्वम्। चक्षिङ्। दर्शनेऽपीति। "वि()आआ रूपा अभिचष्टे शचीभि"रित्यत्र दर्सनार्थत्वेन व्याख्यातत्वादिति भावः। युजर्थ इति। "अनुदात्तेतश्च हलादे"रिति युच्। अन्तेदित इति। "इदितः" इति नुम्विधौ "गोः पादान्ते" इत्यस्मादन्त इत्यस् मादन्त इत्यनुवर्तत इति भावः। एवं च नुमागमशङ्काऽनुत्थानाय चक्षिङ इकारस्थानेऽकार एवासक्तुमुचितः। अनुदात्तेत्त्वेनैव तङि सिद्धे ङकारो व्यर्थ इत्याशङ्क्याह-- ङकारस्त्विति। स्फायन्निति। "स्फायी वृद्धा"वित्यनुदात्तेतो लटः शत्रादेशः। चष्टे इति। "स्को"रिति कलोपः। ष्टुत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तिङ्शित् १।१ सार्वधातुकम् १।१ धातोः ५।१ ३।१।९१ प्रत्ययः १।१ ३।१।१ परश्च १।१ ३।१।२

समासः॥

श् इत् यस्य सः शित्, बहुव्रीहिः। तिङ् च शित् च तिङ्शित्, समाहारः द्वन्द्वः।

अर्थः॥

धातोः विहिताः तिङः शितश्च प्रत्यया सार्वधातुक-संज्ञकाः भवन्ति।

उदाहरणम्॥

नयति, स्वपिति, रोदिति। पचमानः, यजमानः।

काशिका-वृत्तिः

तिङ्शित्सार्वधातुकम् ३।४।११३

तिङः शितश्च प्रययाः सार्वधातुकसंज्ञा भवन्ति। भवति। नयति। स्वपिति। रोदिति। पचमानः। यजमानः।
सार्वधातुकप्रदेशाः सार्वधातुके यक् ३।१।६७ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तिङ् शित्सार्वधातुकम् ३८८, ३।४।११३

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः॥

न्यासः

तिङ्शित्सार्वधातुकम्। , ३।४।११३

"भवति, नयति" इति। तिङः सार्वधातुकसंज्ञायां तन्निबन्धनः कत्र्तरि शप्, तस्यापि शितः सार्वधातुकत्वात् "सार्वधातुकार्धधातुकयोः" ७।३।८४) इति गुणः। "रोदिति" इति। पूर्ववच्छपो लोपः, "रुदादिभ्यः सार्वधातुके" ७।२।७६ इतीट्। "पवमानः, यजमानः" इति। "पूङ्यजोः शानन्" ३।२।१२८ ,तस्य सार्वधातुकत्वात् शप्, तस्यापि सार्वधातुकत्वाद्धातोर्गुणः॥

बाल-मनोरमा

तिङ्?शित्सार्वधातुकम् १६, ३।४।११३

तत्र सार्वधातुककार्यं वक्ष्यन्सार्वधातुकंसंज्ञामाह-- तिङ्()शित्। धातोरित्यधिकृतं। तदाह--धात्वधिकारोक्ता इति। तेन "हरी"नित्यत्र शसः सार्वधातुकत्वं न, "अन्यथा तिङ्()शित्सार्वधातुक"मिति शसः सार्वधातुकत्वात्सार्वधातुकमपिदिति ङित्त्वे "घेर्ङिती"ति गुणः स्यात्।

तत्त्व-बोधिनी

तिङ्शित्सार्वधातुकम् १३, ३।४।११३

धात्वदिकारोक्ता इति कम्?। हरीन्। शसः "सार्वधातुकमपि"दिति ङित्त्वे "घेर्ङिती"ति गुणः स्यात्, लिहः श्रिय इत्यादिशसन्तेषु "सार्वधातुके य"गिति यक्क स्यात्। केचित्तु वारिणी इत्यत्र नुमि कृतेऽपि लघूपधगुणः स्यादित्याहुः। तन्न। क्ङितीति निषेधात्, इगन्तत्वप्रयुक्तस्य नुमो गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आर्धधातुकम् १।१ ११७ शेषः १।१ धातोः ५।१ ३।१।९१ प्रत्ययः १।१ ३।१।१ परश्च १।१ ३।१।२

अर्थः॥

धातोः विहिताः शेषाः (तिङ्-शित्-भिन्नाः) प्रत्ययाः आर्धधातुक-संज्ञकाः भवन्ति। तिङ्-शितं वर्जयित्वा अन्यः प्रत्ययः शेषः।

उदाहरणम्॥

लविता, लवितुम्, लवितव्यम्
काशिका-वृत्तिः
आर्धधातुकं शेषः ३।४।११४

तिङः शितश्च वर्जयित्वा अन्यः प्रत्ययः शेषो धातुसंशब्दनेन विहितः आर्धधातुकसंज्ञो भवति। लविता। लवितुम्। लवितव्यम्। धातोः ३।१।९१ इत्येव। वृक्षत्वम्। वृक्षता अस्ति। लूभ्याम्। लूभिः। जुगुप्सते।
न्यासः
आर्धधातुकं शेष-। , ३।४।११४

"लविता" इति। तृच्, "आर्धधातुकस्येड्वलादेः" ७।२।३५ इतीट्। "वृक्षत्वम्" इति। "तस्य भावस्त्वतलौ" ५।१।११८। "लूभ्याम्" इति। लुनातेः क्विबन्ताद्भ्याम्। "जुगुप्सते" इति। गुपादिसूत्रेण ३।१।५ सन्। त्वलादीनामार्धधातुकत्वाभावादिडभावः। यक्तं "वृक्षत्वम्" प्रत्युदाहरणम्, त्वप्रत्ययस्य धातोरविधानात्, "लूभ्याम्" इत्याद्ययुक्तम्, "क्विबन्ता धातुत्वं न जहति" (व्या।प।१३२) इति न्यायात्, म्याम्प्रत्ययो धातोरेव विहितः, सन्प्रत्ययोऽपि धातोः, गुपादेर्धातुत्वात्? नैतदस्ति;अस्यैव हि दोषस्य परीहाराय धातुशब्देन यो विहित इत्युक्तम्। तस्य चायमर्थः-- धातोरित्येवं यो विहितः,धातुशब्दमुच्चार्य यो विहित इति यावत्। यस्य विधायकलक्षणे धातुग्रहणमस्ति,न चैवं भ्मांसनौ विहितौ; त्दविधौ धात्वधिकारस्य धातुग्रहणस्य चासम्भवात्। कथं पुनर्धातुसंशब्दनेन यो विहित इत्येषोऽर्थो लभ्यते, यावता धातोरित्येकमेव धातुग्रहणमनुवत्र्तते, तच्चाधातुप्रत्ययनिवृत्तौ चरितार्थत्वान्नापरं किञ्चिद्विशिष्टमभिधातुमुत्सहते? एवं मन्यते-- यङविधानसूत्रात् ३।१।२२ "शमिधातो संज्ञायाम्" ३।२।१४ इत्यतो वा द्वितीयदातुग्रहणमनुवत्र्तते, तत्रैकेन धातुना अधातुप्रत्ययो निवर्ततते, अपरेण धातुप्रत्ययो विशिष्यते-- धातोरित्येवं यो विहित इति। शेषग्रहणं किम्? तिङशितोर्मा भूत्, अन्यथा ह्येकसंज्ञाधिकाराभावात् प्रत्ययादिसंज्ञानामिव समावेशः स्यात्॥
बाल-मनोरमा
आद्र्धधातुकं शेषः ३६, ३।४।११४

भू तास् ति इति स्थिते--आद्र्धधातुकं शेष-। "तिङ्()शित्सार्वधातुक"मिति पूर्वसूत्रोपात्ततिङ्शिदन्यः शेषः। तदाह-- तिङ्()शिद्भ्योऽन्य इति। विहित इति। "धातो"रित्यधिकृतं विहितविशेषणमाश्रीयत इति भावः। एवं च "जुगुप्सते" इत्यादौ "गुप्तिज्किद्भ्य" इत्यादिविहितसनादीनां धातोरित्युच्चार्य विहितत्वाऽभावेन आद्र्धधातुकत्वाऽभावादिडागमो न

भवति। एतत्संज्ञः स्यादिति। आद्र्धधातुकसंज्ञक इत्यर्थः। इडिति। तास्प्रत्ययस्योक्तसूत्रेणाद्र्धधातुकत्वात्स्वतो वलादित्वाच्च "आद्र्धधातुकस्येड्वलादे"रितीडागम इत्यर्थः।

तत्त्व-बोधिनी

आद्र्धधातुकं शेषः २९, ३।४।११४

"धातोरेकाचः" इत्यत्र धातोरित्यनुवर्तमाने पुनर्धातोरित्यधिकारसूत्रारम्भादिदं लभ्यते। एतच्च तत्रैव मनोरमायां स्पष्टम्। दातोरितिविहित इति किम्?। लूभ्यां। जुगुप्सते॥

---

सूत्रम्

काशिका-वृत्तिः

लिट् च ३।४।११५

लिडादेशः तिङार्धधातुकसंज्ञो भवति। सार्वधातुकसंज्ञाया अपवादः। पेचिथ। शेकिथ। जग्ले। मम्ले। ननु च एकसंज्ञाधिकारादन्यत्र समावेशो भवति? सत्यम् एतत्। इह तु एवकारो ऽनुवर्तते, स नियमं करिस्यति।

लघु-सिद्धान्त-कौमुदी

लिट् च ४०२, ३।४।११५

लिडादेशस्तिङ्ङार्धधातुकसंज्ञः॥

न्यासः

लिट् च। , ३।४।११५

"शेकिथ" इति। आर्धधातुकत्वाल्लिटः "ऋतो भारद्वाजस्य" ७।२।६३ इतीट्। तत्र ऋत एव भारद्वाजस्य नान्येषां धातूनामित्येषोऽर्थोऽभिमतः। "थलि च सेटि" ६।४।१२१ इत्येत्वाभ्यासलोपौ। "जग्ले, मम्ले" इति। आर्धधातुकत्वात् "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "ननु च " इत्यादिना यदुक्तं "सार्वधातुकसंज्ञाया अपवादः" (का।३।४।११५) इति तद्विघटयति। एकसंज्ञाधिकारादन्यत्र समावेशो भवति, यथा-- त्ययादिसंज्ञानाम्। न चात्रैकसंज्ञाधिकारोऽस्ति,तदयुक्तमस्याः सार्वधातुकसंज्ञाया अपवादत्वमित्यभिप्रायः।"सत्यमेतत्ित्यादिना अपवादत्वमेव समर्थयते॥

बाल-मनोरमा

लिट् च २२, ३।४।११५

लिट् च। "लि"डिति लुप्तस्थानषष्ठ()न्तम्। "तिङ्()शित्सार्वधातुक"मित्यस्मात्तिङित्यनुवर्तते। "आद्र्धधातुकं शेष" इत्यस्मादाद्र्धधातुकमिति। तदाह--लिडादेशस्तिङिति। एकसंज्ञाधिकारबहिर्भूतत्वात्सार्वधातुकसंज्ञाया अपि समावेशे प्राप्ते आह--आद्र्धधातुकसंज्ञ एवेति। "लङः शाकटायनस्यैवे"ति सूत्रादेवकारानुवृत्तेरिति भावः। तेनेति। सार्वधातुकतवाऽभावेन तन्निमित्ताः शप्श्यनादयो न भवन्तीत्यर्थः।

तत्त्व-बोधिनी

लिट् च १८, ३।४।११५

आद्र्धधातुकसंज्ञ एवेति। "लङः शाकटायनस्ये"ति सूत्रादेवकारोऽनुवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

लिङाशिषि ३।४।११६

आशिषि विषये यो लिङ् स आर्धधातुकसंज्ञो भवति। सार्वधातुकसंज्ञाया अपवादः। समावेशश्च एवकारानुवृत्तेर्न भवति। लविषीष्ट। पविषीष्ट। आशिषि इति किम्? लुनीयात्। पुनीयात्।

लघु-सिद्धान्त-कौमुदी

लिङाशिषि ४३३, ३।४।११६

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात्॥

न्यासः

लिङाशिषि। , ३।४।११६

"{लविषीष्ठा" इति मु।पाठः} लविषीष्ट" इति। थास् , "सुट् तिथोः" ३।४।१०७ इति सुट्, षष्वम्, ष्टत्वञ्च॥

तत्त्व-बोधिनी

लिङाशिषि ४८, ३।४।११६

आर्धधातुकसंज्ञ इति। "लङः शाकटायनस्यैवे"त्येत एवकारोऽनुवर्तनीयः। अन्यथा एकसंज्ञाधिकारबहिर्भूतत्वेन सार्वधातुकसंज्ञापि स्यात्, ततश्च पक्षे शबादिः स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दस्युभयथा ३।४।११७

छन्दसि विषये उभयथा भवति, सार्वधातुकम् आर्धधातुकं च। किं लिङेव अनन्तरः सम्बध्यते? न एतदस्ति, सर्वम् एव प्रकरणम् अपेक्ष्यैतदुच्यते। तिङ्शिदादि छन्दस्युभयथा भवति। वर्धन्तु त्वा सुष्टुतयः। आर्धधातुकत्वाण् णिलोपः। वर्धयन्तु इति प्राप्ते। शेषं च सार्वधातुकम् स्वस्तये नावमिवारुहेम। क्तिनः सार्वधातुकत्वादस्तेर् भूभावो न भवति। लिट् सार्वधातुकम् ससृवांसो विशृण्विरे। इम इन्द्राय सुन्विरे। लिङुभयथा भवति। उप स्थेयाम शरणा वृहन्ता। सार्वधातुकत्वात् लिङः सलोपः, आर्धधातुकत्वातेत्वम्। व्यत्ययो बहुलम् ३।१।८५ इत्यस्य एव अयं प्रप्ञ्चः। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ तृतीयाध्यायस्य चतुर्थः पादः। चतुर्थो ऽध्यायः प्रथमः पादः।

न्यासः

छन्दस्युभयथा। , ३।४।११७

"{अस्तये इति मुद्रितः पाठः} स्वस्तये" इति। "अस भुवि" (धा।पा।१०६५), स्त्रियां क्तिन्। सार्वधातुकत्वादस्तेर्भूभावो न भवति। "विशृण्विरे" इति। अत्र लिटः सार्वधातुकत्वात् "श्रुवः शृ च" ३।१।७४ इति श्नुप्रत्ययः, शृभावश्च। "सुन्विरे" इति। "स्वादिभ्यः श्नुः" ३।१।७३। "उपस्थेयाम"इति। तिष्ठतेर्लिङ,यासुट्,मस्, "एतेर्लिङि" ७।४।२४इत्येत्वम्। ननु "व्यत्ययो बहुलम्" ३।१।८५ इत्यनेनैव सिद्धं सर्वमेवेदम्, किमर्थोऽयमारम्भ इत्याह-- "व्यत्ययो बहुलमित्यस्यैव" इति। गतार्थम्॥

इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां तृतीयस्याध्यायस्य चतुर्थः पादः। समाप्तश्च तृतीयोऽध्यायः॥ ----------------- अथ चतुर्थोऽध्यायः

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ङ्याप्प्रातिपदिकात् ५।१ ५।४।१६०

समासः॥

ङी च आप् च प्रातिपदिकं च, ङ्याप्प्रातिपदिकम् तस्मात् ॰ समाहारः द्वन्द्वः

अर्थः॥

ङी इत्यनेन ङीप्, ङीष्, ङीन् इत्येते प्रत्ययाः सामान्येन गृह्यन्ते, एवम् आप्-शब्देन अपि टाप्, डाप्, चाप् इत्येते प्रत्ययाः। अधिकारः अयम्, आपञ्चमाध्यायपरिसमाप्तेः, इतोऽग्रे ङ्यन्तात्, आबन्तात्, प्रातिपदिकात् च वक्ष्यमाणाः प्रत्ययाः भवन्ति॥

उदाहरणम्॥

उदाहरणानि अग्रेमसूत्रे द्रष्टव्यानि
काशिका-वृत्तिः
ङ्याप्प्रातिपदिकात् ४।१।१

अधिकारो ऽयम्। यदित ऊर्ध्वम् अनुक्रमिष्यामः आऽपञ्चमाध्यायपरिसमाप्तेः ङ्याप्प्रातिपदिकादित्येवं तद् वेदितव्यम्। स्वाऽदिषु कप्पर्यंतेषु प्रकृतिरधिक्रियते। ङीब्ङीष्ङीनां सामान्येन ग्रहणं ङी इति, टाब्डाप्चापाम् आपिति, प्रातिपदिकम् उक्तम् अर्थवत्, कृत्तद्धितसमासाश्च १।२।४६ इति, तेषां समाहारनिर्देशो ङ्याप्प्रातिपदिकातिति। यद्यपि च प्रत्ययपरत्वेन पारिशेष्यादियम् एव प्रकृतिर् लभ्यते, तथा अपि वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणप्रत्ययविधौ तत्संप्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं कर्तव्यम्, इतरथा हि समर्थविशेषणम् एतत् स्यात्। अथ ङ्याप्ग्रहणं किम्, न प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य अपि ग्रहणं भवति इत्येव सिद्धम्? न एतदस्ति। स्वरूपविधिविषये परिभाषेयं प्रातिपदिकस्वरूपग्रहणे सति लिङ्गविशिष्टग्रहणं भवति इति। तथा च युवा खलतिपलितवलिनजरतीभिः २।१।६६ इति ज्ञापकमस्यास्तादृशम् एव। किं च तदन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणम्, कालितरा, हरिणितरा, खट्वातरा, मालातरा इति। विप्रतिषेधाद् धि तद्धितबलीयस् त्वं स्यात्।
लघु-सिद्धान्त-कौमुदी
ङ्याप्प्रातिपदिकात् ११९, ४।१।१

न्यासः
ङ्याप्प्रातिपदिकात्। , ४।१।१

"अधिकारोऽयम्" इति। स्वरितेनासञ्जितत्वात्। "आ पञ्चमाध्यायपरिसमाप्तेः" इति। अनेनाधिकारस्यावधिं दर्शयति।

ततः परं नायमनुवत्र्तते; अस्वरितत्वात्। "स्वादिषु कप्पर्यन्तेषु" इति। अधिकारस्य विषमाचष्टे। "ङी इति ङीप्ङीष्ङीनां सामान्येन ग्रहणम्" इत्यादि। "ङी" इति विशेषकराननुबन्धानुत्सृज्य यत् सामान्यं ङीमात्रं तदिह गृह्रते। "टाब्डाप्चापामाप्" इति। सामान्येन ग्रहणमिति प्रकृतेन सम्बन्धः। ननु च ङ्यादीनां बहुत्वाद्बहुवचनेन भवितव्यम्, तत्कथं "ङ्याप्प्रातिपदिकात्" ४।१।१ इत्येकवचनेन निर्देश इत्याह --"तेषाम्" इत्यादि। समाहारद्वन्द्वेनेह ङ्यादीनामयं निर्देशः कृत इत्यर्थः। इतरेतरयोगे हि द्वन्द्वे स्याद्बहुवचनम्। न चायमितरेतरयोगे द्वन्द्वः,किं तर्हि? समाहारे। तस्य चैकार्थत्वादेकवचनमेव युक्तम्। "समाहारनिर्देशः" इति वचनमितरेतरयोगनिवृत्त्यर्थम्,सामासन्तरनिवृत्त्यर्थञ्च, अन्यथा हि ङ्यापोः प्राप्तिपदिकं ङ्याप्प्रातिपदिकमित्यपि षष्ठीसमास आशङ्क्येत। ततो ङ्यन्तमाबन्तञ्च समासप्रातिपदिकं यत् ततः स्याद् राजकुमार्यादिभ्यः न तु केवलेभ्यः कुमार्यादिभ्यः। ङ्यापोस्तु विधानेनैव प्रातिपदिकं प्रकृतिः स्यात्। तस्मात् समाहार द्वन्द्वेनायं निर्देशः। तत्र तु त्रयं प्रकृतित्वेनाधिक्रियते, तेन सर्वतो भवति। अथ कथं पुनरत्र विग्रहः? केचिदाहुः-- "ङीश्च आप्च प्रातिपदिकञ्चेति। ननु च "अप्रत्ययः" (१।२।४५) इति प्रातिपदिकसंज्ञाप्रतिषेधाद् ङीश्चेति विभक्त्युत्पत्तिर्न स्यात्? उच्यते; नायं प्रत्ययः, अपि तु प्रत्ययानुकरणमिदम्। एवमपि "प्रकृतिवदनुकरणं भवति" (व्या।प।११३) इति स्यादेव प्रतिषेधः? नैष दोषःच अनुकरणं द्वैधम्-- अर्थस्य, शब्दमात्रस्य चेति। ज्ञापितमाचार्येणैतद् द्वेधा निर्देशात् -- "परिव्यवेभ्यः क्रियः" १।३।१८ , "विपराभ्यां जेः" १।३।१९ इतीयङादेशस्य करणाकरणाभ्याम्। अतोऽत्र शब्दमात्रमनुकृतम्, न त्वर्थसहितम्। तेनात्र "अप्रत्ययः" १।२।४५ इति नास्त्येव प्रतिषेधः। प्रकृतिवदतिदेशस्त्वर्थवत्यनुकरणे। ननु चेवमपि हल्ङ्यादिलोपेन (६।१।६८) भाव्यम्? उच्यते; ङ्यन्तात् सुलोपः, न ङीमात्रात्। व्यपदेशिवद्भावात् स्यादिति चेत्? न; "व्यपदेशवद्भावोऽप्रातिपदिकेन" (शाक।प।६५) इत्युच्यते, प्रातिपदिकञ्चदम्। तस्मात् "ङीश्च" इति। अथ प्रत्ययविधिविषयैषा परिभाषा पूर्वादिनिः" ५।२।८५ "सपूर्वाच्च" (५।२।८७) इत्यत्र ज्ञापितत्वात्? न चायं प्रत्ययविधिः, कस्तर्हि? लोपविधिरिति, अतः परिभाषा न प्रवत्र्तत इत्यस्त्येव व्यपद#एशिवद्भाव इति ततः प्रवत्र्तते लोपशास्त्रम्। अतः सुलोपेन भवितव्यम्-- ङी चेति। सामान्येन परिभाषाप्रवृत्तिमाश्रित्य ङीश्चेति विग्रहः। अन्यस्त्वाह-- "प्रयोगस्य एव कुमारी, गौरीत्यादिषु य ईकारः सोऽत्रानुकृत एव लुप्तविभक्तिकः,तेन ङी इत्येव भवति। यद्येवम्, कुतो ङकारः सामान्यग्रहणार्थ आसज्यते? ननु चानुक्रियमाणेनार्थेनार्थवत्त्वात् पुनरपि विभक्त्युत्पत्तिः प्राप्नोति, ततश्च ङीश्चेति भवितव्यम्? नैतदस्ति; प्राक्कालभाविनी या विभक्तिस्तां प्रत्ययलक्षणेनाश्रित्याप्रत्यय १।२।४५ इति प्रतिषेधात्। अथापि स्यात्-- "न ङिसम्बुद्ध्योः" ८।२।८ इति ज्ञापकात् प्रत्ययलक्षणेनाप्रत्यय १।२।४५ इति प्रातिपदिकसंज्ञा न प्रतिषिध्यते" इति। असदेतत्; नलोपविधिविषयमेवैतज्ज्ञापकम्। अतोऽत्र नास्त्येव प्रत्ययलक्षणेन प्रातिपदिकसंज्ञाप्रतिषेध इति स्थितमेतत्। ननु च प्रत्ययत्वे सति "परश्च" ३।१।२ इति वचनात् परे भवन्तः स्वादयः पूर्वां प्रकृतिमाक्षिप्य भवन्ति, न ह्रन्यथा परत्वमुपपद्यते, तस्य परत्वस्य पूर्वापेक्षत्वात्, न च ङ्यादिभ्योऽन्या प्रकृतिरुपपद्यते। तत्र ङ्याप्प्रातिपदिकग्रहणमन्तरेणापि पारिशेष्यादियमेव प्रकृतिर्लभ्यते तथा हि, प्रकृत्यन्तरं धातुरिति-- तिङन्तञ्च, वाक्यञ्च। प्रत्यया अपि स्वादयः, टाबादयः अणादयश्च। तत्र धातोस्तावत् स्वादिभिर्न भवितव्यम्, ते ह्रेकत्वादिष्वर्थेषु विधीयमानास्तद्वन्तं शब्दमाक्षिपन्ति। न च धातुरेकत्वादिमान्। अथाप्यविशेषणोत्पद्यन्ते, उत्पन्नानां तु नियमः क्रियते? तथापि न #ऐव तेषां धातोरुत्पत्तिर्युक्ता; सामान्यविहितानां स्वादीनां विशेषविहितैस्तव्यदादिभिर्बाधितत्वात्। टाबादयस्तर्हि धातोर्भवेयुरिति चेत्? स्यादेतत्। असति ङ्याप्प्रातिपदिकग्रहणेऽकारान्तेभ्यो धातुभ्यो जुगुप्सादिभ्यः "अतः" ४।१।४ इति टाप् स्यात्, अपिद्भ्यो वञ्चुप्रभृतिभ्यः "उगितश्च" ४।१।६ इति ङीप् स्यात्, नकारान्तेभ्यो मन्प्रभृतिभ्यः "ऋन्नेभ्यो ङीप्" (४।१।५) इति ङीप्प्रत्ययः इति? एतच्च नास्ति ; यतः स्त्रियां टाबादयो विधीयन्ते, क्रियावचनश्च धातु#ः। क्रियायाश्चासत्त्वभूतत्वाल्लिङ्गेन योगो नास्ति; तस्य द्रव्यधर्मत्वात्। एतेन तिङन्ताद्वाक्याच्च टाबादीनामुत्पत्तिः प्रतिक्षिप्ता; तयोरपि क्रियाप्रधानत्वात्। अणादीनामपि नैव धातोरुत्पत्तिरुपपद्यते। ते ह्रपत्यादिनार्थेन

सम्बन्धे सति विधीयन्ते। धातुवाच्यस्यार्थस्यासत्त्वभूतत्वाद्यथा स्त्रीत्वेन योगो न सम्भवति, तथाप्यपत्यादिना ह्यर्थेन। एतेन तिङन्ताद्वाक्याच्चाणादीनामुत्पत्तिर्निरस्ता; तदर्थस्यापि क्रियाप्रधानस्यापत्यादिना सम्बन्धाभावात्। देवदत्तस्य पचति यस्तस्यापत्यमिति सत्यपि सम्बन्धे "तिङश्च" ५।३।५६ इति ज्ञापकान्न भवति। येऽपत्यादिनार्थेन सम्बन्धे तद्धिता विधीयन्ते तेऽनन्तरोक्तया नीत्या मा भून्, ये तु स्वार्थे विधीयन्ते तैर्युक्तमेव भवितुमिति चेत्? वात्तमेतत्; यथैव हि स्वादीनां सामान्यविहितानां विशेषविहितैस्तव्यदादिभिर्बाधितत्वात् तदुत्पत्तिर्नोपपद्यते तथा स्वार्थिकानामपि सामान्यविहितानां स्वार्थिकैस्तुमुन्नादिभिर्विशेषविहितैर्बाधितत्वान्नोपपद्यत एव। तिङन्तात् तर्हि के स्युरिति चेत्? ज्ञापकान्न भविष्यन्ति। यदयं क्वचित् तद्धितविधौ तिङ्गर्हणं करोति-- "अतिशायने तमबिष्ठनौ" ५।३।५५ "तिङश्च" ५।३।५६ इति, क्वचित् तद्धितविधौ तिङ्ग्रहणं करोति-- "अतिशायने तमबिष्ठनौ" ५।३।५५ "तिङश्च" ५।३।५६ इति, तज्ज्ञापयति-- तिङन्तात् तद्धिता न भवन्तीति। वाक्यात् तर्हि भवेयरिति चेत्? अनभिधानान्न भविष्यन्ति। न हि "देवदत्तस्या()आकः" इत्युक्ते वाक्यार्थगता अज्ञातादयोऽर्थाः कप्रत्ययेन द्योत्यन्ते, किं तर्हि? अ()आशब्दगता एव। स्वादिभिरपि नैव तिङन्ताद्भवितव्यम्, तेषां ह्येकत्वादयोऽर्थाः,ते च तिङभिरेवोक्ताः। न चोक्तर्थानां प्रयोगे युक्तः; "उक्तार्थानामप्रयोगः" (व्या।प।६०) इति वचना। ननु चोक्तार्थानामपि प्रयोगो दृश्यते, यथा-- एको द्वौ बहव इति चेत्? युक्तोऽत्र प्रयोगः वचनग्रहणात्। "प्रातिपदिक" इत्यादौ हि सूत्रे वचनग्रहणस्यैतत् तेषां भवति; तत्रास्याः परिभाषाया उपस्थानात्। तेन लिङ्गविशिष्टानामपि सर्वादीनां सर्वनामकार्यमुपपद्यते। यद्येवम्, इममेव न्यायमाश्रित्य शक्यं ङ्याब्ग्रहणमकर्तुम्? नैतदस्ति; न हि प्रातिपदिकसंज्ञा लिङ्गविशिष्टस्यार्थवतः शब्दरूपस्य भवितुमर्हति; "अप्रतयय" १।२।४५ इति प्रतिषेधात्। न च प्रातिपदिकसंज्ञाविधौ सर्वेऽर्थवन्तः संज्ञिनः स्वरूपेण शक्या दर्शयितुम्; तेषामानन्त्यात्। यद्येवम्, "णाविष्ठवत् प्रातिपदिकस्य" (वा।८१३) इत्यत्रापि तर्हीयं परिभाषा नोपतिष्ठते; स्वरूपाग्रहणात्, ततश्च लिङ्गव्शीष्टेष्वष्ठवद्भावो न स्यात्। तत्र को दोषः? कुमारीमाचष्टे कुमारीयतीत्यत्र टिलोपो न स्यात्? नैष दोषः; बहुलमिष्ठवद्भाव इष्यते, तथा च चुरादौ पठ()ते "प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च" (चुरा।ग।सू।१८६) इति। तस्माद्बहुलवचनाल्लिङ्गविशिष्टस्यापीष्ठवद्भावो भविष्यति। "किञ्च" इत्यादना प्रयोजनान्तरं समुच्चिनोति। तदिति ङ्यापोः प्रत्यवर्शः। ङ्यन्तादाबन्ताच्च तद्धितविधानं यथा स्यादित्येवमर्थं च ङ्याब्ग्रहणम्। "कालितरा" इति। कालशब्दाज्जनपदादिसूत्रेण ४।१।४२ ङीप्, तदन्तात् "द्विवचनविभज्योपपदे" ५।३।५७ इत्यादिना तरप्, "घरूपकल्प" ६।३।४२ इत्यादिना ह्रस्वः। "हरिणितरा" इति। हरितशब्दात् "वर्णादनुदात्तात् तोपधातो नः" ४।१।३९ इति ङीप्, तकारस्य नकारः, "अट्कुप्वाङ्" ८।४।२ इत्यसति ङ्याब्ग्रहणे परत्वादातिशयिकः स्यात्। अ()स्मस्तु सति ङ्यापोस्तद्धितविधाने प्रकृतित्वेनाश्रयणात् पूर्वं ङ्याब्भ्यां भवितव्यमिति तदन्तात् तद्धितविधिः सिध्यति। ननु चान्तरङ्गः स्त्रीप्रत्ययः, बहिरङ्गास्तदिताः, तथा हि-- "समर्थानां प्रथमाद्वा" ४।१।८२ इत्यधिकाराद्विभक्त्यन्ताते उत्पद्यन्ते, विभक्तयश्च कर्माद्यपेक्षाः, कर्मादयश्च बाह्यक्रियानिमित्तत्वाद्बहिरङ्गाः ततश्च निमित्तस्य बहिरङ्गत्वात् तद्धिता अपि बहिरङ्गाश्रया एव भवन्ति; लिङ्गस्य तु सम्बन्ध्यन्तरानपेक्षत्वादन्तरङ्गत्वञ्च, अतस्तन्निमित्ता अपि टाबादयोऽन्तरङ्गा भवन्ति, ततश्चान्तरङ्गत्वादेव टाबादिभिस्तावद्भवितव्यम्, पश्चात् तदन्तात् तद्धितैरित्यपार्थकं ङ्याब्ग्रहणम्? नैतदस्ति; तदन्तात् तद्धितविमधानार्थं ङ्याब्ग्रहणमित्यत्र हि वाक्ये तद्धितग्रहणेन स्वार्थिका ये तद्धितास्त एव विवक्षिताः। इममेवार्थं सूचयितुं कालितरा, हरिणितरेति स्त्रीप्रत्ययान्तात् स्वार्थिक एव तरप्प्रत्यय उदाह्मतः। स्वार्थिकेषु च "समर्थानाम्" ४।१।८२ इत्येतन्नानुवत्र्तते। तथा हि क्ष्यति वृत्तिकारः-- "स्वार्थिकप्रत्ययावधिश्चायमधिकारः "प्राग्दिशो विभक्तिः" ५।३।१ इति यावत्। स्वार्थिकेषु ह्यस्योपयोगो नास्ति" इति। एवञ्च सति विभक्त्युत्पत्तिमनपेक्ष्य प्रातिपदिकादेव स्वार्थिकैर्भवितव्यमिति कुतस्तेषां बहिरङ्गत्वम् ! नन्वेवमपि कालितरेत्याद्यनुदाहरणम्; तरप्प्रत्ययस्य बहिरङ्गत्वात्। स हि यद्यपि विभक्त्युत्पत्तिं()त नापेक्षते, प्रतियोगिनं तु बाह्यार्थमपेक्षत एव, स्त्रीप्रत्ययस्य तु न कश्चित् प्रतियोग्यपेक्षेति तस्यान्तरङ्गत्वम्? नैष दोषः; उदाहरणदिगियं वृत्तिकारेण दर्शिता। एतानि त्वत्रोदाहरणानि

दर्शयितव्यानि-- एनिका, श्येनिका, रोहिणिकेति। अत्र हि यदि पूर्वं तद्धितः स्यात् तदेतश्यतरोहितशब्देभ्योऽज्ञाताद्यर्थविवक्षायां कप्रत्यये "वर्णादनुदात्तात् तोपधात् तो नः" ४।१।३९ इत्यनेन ङीब्नकारौ न स्याताम्। यदि तर्हि ङ्याबन्तात् तद्धितविधानार्थं ङ्याब्ग्रहणम्, समासान्ता अपि तदन्तादेव स्युः, ततश्च बहवो गोमन्तोऽस्यां नगर्यामिति स्यात्, बहुव्रीहौ कृते "उगितश्च" ४।१।६ इति ङीप्, ततश्च "नद्यृतश्च" ५।४।१५३ इति कपि बहुगोमतीकेति रूपं स्यात्, बहुगोमत्केति चेष्यते? नैष दोषः; न हि समासान्ताः समासादुत्पद्यन्ते। किं तर्हि? अकृत एव समासे तदर्थादुत्तरपदात्। तथा हि "न कपि" ७।४।१४ इत्यत्र वक्ष्यति वृत्तिकारः-- "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इत्ययमपि ह्रस्वः कपि न भवति, समासार्थे ह्युत्तरपदे कपि कृते पश्चात् समासेन भवितव्यमिति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति" इति। न च बहवो गोमन्तोऽस्यां नगर्यामित्यत्र वाक्ये समासार्थमुत्तरपदं स्त्रियां वत्र्तत इति प्राक्कपैव भवितव्यम्, पश्चात् समासेन, ततः स्त्रीप्रत्ययेन प्रत्ययानुपूव्र्या बहुगोमत्केति सिद्धं भवति। यिद तह्र्यकृत एव समासे तदर्थादुत्तरपदात् समासान्ता भवन्ति, तदा "नञस्तत्पुरुषात्" (५।४।७१) इत्यत्र "नञढः परे वक्ष्यमाणा य ऋगादयस्तदन्तात् तत्पुरुषात् समासान्ता न भवन्ति" इत्येष वृत्तिग्रन्थो विरुध्यते, तेब्यस्तत्पुरुषसमासार्थेभ्यः समासान्ता न भवन्तीति वक्तव्यं स्यात्? नञः प्रकृतत्वात् स एव विज्ञायते। "तत्पुरुषात्" ५।४।७१ इत्यत्रापि तत्पुरुषशब्दस्तादथ्र्यात् तत्पुरुषार्थ उत्तरपदे वत्र्तते। तत्र पुनः ऋगादेः श्रुतत्वादृगादिरेव विज्ञायते, तदन्तात् तत्पुरुषादिति च व्यधिकरणे पञ्चम्यौ। ततोऽयमर्थः नञः परे य ऋगादयस्ते समीपभूता यस्य नञस्तस्मात् परं यत्तत्पुरुषार्थमृगादिपदं ततः समासान्तो न भवतीति। अथ वा-- अवयववचनोऽन्तशब्दः, समानाधिकरण एव पञ्चम्यौ; तादथ्र्यात्। ऋगाद्यन्तं तत्पुरुषार्थं युदत्तरपदं तदेव। तदन्तात् तत्पुरुषार्थादित्युक्तम्। ततश्चायमर्थः नञः परे य ऋगादयस्तदन्तात् तत्पुरुषार्थादुत्तरपदात् समासान्ता न भवन्तीति। तत् पुनस्तदन्ततत्पुरुषार्थम्। उत्तरपदं सामथ्र्यादृगाद्येव विज्ञायते। "बहुव्रीहौ संख्येये डजबहुगणात्" ५।४।७३ इत्यत्र तर्हि योऽयं वृत्तिग्रन्थः-- "संख्येये योऽयं बहुव्रीह#इर्वत्र्तते तस्मादबहुगणान्ताड्डच्प्रत्ययो भवति" इति, तस्य विरोधः? नास्ति विरोधः; अत्र हि बहुव्रीह्यर्थमुत्तरपदमेव तादथ्र्याद्बहुव्रीहिरित्युक्तं भवति। तदयमर्थः-- संख्येये यद्बहुव्रीह्यर्थमुत्तरपदं वत्र्तते तस्माड्ड्च्प्रत्ययो भवतीति। अनया दिशाऽप्यन्य एवञ्जातीया विरोधाः परिहत्र्तव्याः। तदेवं स्थितमेवैतत्-- तदन्तात् तद्धितविधानार्थं ह्याब्ग्रहणमिति, विप्रतिषेधात् तद्धितविधानार्थं ङ्याब्ग्रहणमिति, विप्रतिषेधात् तद्धितवलीयस्त्वमिति। यद्येवम्, "युनस्तिः" ४।१।७७ "ऊङुतः" ४।१।६६ इत्येतयोरपि त्यूङोग्र्रहणं कस्मान्न विज्ञायते, तदन्तात् तद्धितोत्पत्तिर्यथा स्यात्-- युवतितरा, ब्राह्मबन्धूतरेति? "नद्याः शेषस्यान्यतरस्याम्" ६।३।४३ इत्यूङो विकल्पेन ह्रस्वत्वं न कत्र्तव्यम्; ह्याब्ग्रहणस्योपलक्षणार्थत्वात्। "स्त्रियाम्" ४।१।३ इति प्रकृत्य येषां विधानं तदुपलक्षणार्थमिह ङ्याब्ग्रहमम्। अतस्त्यूङोरपि ग्रहणमिह कृतमेव वेदितव्यम्। ङ्याब्ग्रहणं यद्युपलक्षणार्थम, अन्यतरस्यैव ग्रहणं कत्र्तव्यम्, एकेनापि हि स्त्रीप्रत्यया उपलक्ष्यन्त एव? सत्यमेतत् ; वैचित्र्यार्थं तु द्वयोग्र्रहणम्। "यावादिभ्यः कन्" ५।४।२९, "लोहितान्मणौ" ५।४।३०, "वर्णे चानित्ये" ५।४।३१ इत्यनेन तु विकल्पेन स्वार्थिकेन स्त्रीप्रत्ययस्य बाधनमिष्यते। तत्र यदा बाधा तदा लोहितशब्दात् कनि टापि कृते चेत्वे लोहितिकेति भवितव्यम्; यदा तु न बाधा तदा " वर्णादनुदात्तात्तोपधात् तो नः" ४।१।३९ इति ङीब्नकारयोः कनि च "केऽणः" ७।४।१३ इति ह्रस्वत्वे कृते लोहिनिकेति भवितव्यम्। तस्माद्वक्तव्यमेवैतत्-- लोहिताल्लिङ्गबाधनं वेति॥

बाल-मनोरमा

ङ्याप्प्रातिपदकात् १८१, ४।१।१

ङ्याप्प्रातिपदिकात्। चतुर्थाध्यायस्यादिमं सूत्रमिदम्। ङी च, आप् च, प्रातिपदिकं चेति समाहारद्वन्द्वः। ङी इति ङीप्()ङीष्ङीनां सामान्येन ग्रहणम्। आबिति टाप्()डाप्()चापां ग्रहणम्। प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। तदाह--

ङ्यन्तादित्यादिना। "आ पञ्चमे"त्य वधिनियमे तु व्याख्यानमेव शरणम्। ननु प्रातिपदिकादित्येव सूत्र्यताम्। ङ्याब्ग्रहणं मास्तु। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण"मिति परिभाषया ऊङप्रत्ययान्तात् ()आश्रूशब्दादिव दण्डिनी अजा खट्()वेत्यादिभ्योऽपि ङ्याबन्तेभ्यः सुबादिप्रत्ययसम्भवादित्यत आह--प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीति। स्त्रीलिङ्गबोधकङीबादिप्रत्ययविशिष्टस्येत्यर्थः। यथा स्यादिति। यथेति योग्यतायाम्। ङ्याबन्तादेव तद्धितः प्राप्तुं योग्यः। स च ङ्याब्ग्रहणे सत्येव स्यादित्यर्थः। व्यवच्छेद्यं दर्शयति-ङ्याब्भ्यां प्राङ्भाभूदिति। ततश्च लोहनिका आर्यका च सिध्यति। तथाहि--लोहितशब्दस्तावत् "वर्णाना तणतिनितान्तानाम्" इति फिट्()सूत्रेणाद्युदात्तः। ततश्च ओकार उदात्तः। "अनुदात्तं पदमेकवर्ज"मिति परिशिष्टौ इकारा।ञकारावनुदात्तौ। तथाच "वर्णादनुदात्तात्तोपधात्तो नः" इत#इ मणौ विद्यमानाल्लोहितशब्दात्स्त्रीत्वविवक्षायां ङीप्, तत्संनियोगेन तकारस्य नकारादेशश्च प्राप्तः। "लोहितान्मणौ" इति स्वार्थिकः कनपि प्राप्तः। तत्र स्वार्थिकत्वादन्तरङ्ग परश्च कन् नत्वसंनियोगशिष्टं ङीपं बाधित्वा प्रवर्तेत। ततश्च ङीपो न प्रसक्तिः। कोपधत्वेन तोपधत्वाऽभावात्। ततश्च लोहितकशब्दात् "अजाद्यतः" इति टापि "प्रत्ययस्था"दित्यादिना इत्वे लोहितिकेत्येव स्यात्, न तु लोहिनिकेति। इष्यते तु रूपद्वयमपि। "ङ्याप्प्रातिपदिका"दित्यत्र ङीब्ग्रहणे तु तत्सामथ्र्यादन्तरङ्गं परमपि कनं बाधित्वा नत्वसंनियोगशिष्टे ङीपि कृते, लोहिनीशब्दात्कनि, "केऽणः" इति ह्रस्वे, लोहिनिकेति रूपम्। "वर्णादनुदात्ता"दित्यस्य वैकल्पिकतया नत्वसंनियोगशिष्टङीबभावे तु लोहिताशब्दात्कनि, ह्रस्वे, पुनः कान्ताट्टापि, प्रत्ययस्थादितीत्वे लोहितिकेत्यपि सिध्यति। तथा आर्यशब्दात्स्वार्थिके कनि, समुदायोत्तरटापैव स्त्रीत्वबोधनसम्भवादेकाज्द्विर्वचनन्यायेन कनन्तादेव टापि, कनः पूर्वं टाबभावात्, आत्स्थानिकस्य अतोऽभावादुदीचामातःस्थाने इति इत्वविकल्पस्याऽप्रवृत्तौ, प्रत्ययस्थादिति नित्यमित्वे आर्यिकेत्येव स्यात्, आर्यकेति न स्य#आत्। इष्यते तूभयमपि। "ङ्याप्प्रातिपदिका"दित्यत्र आब्ग्रहणे तु तत्सामथ्र्यात्स्वार्थिकं कनं बाधित्वा टापि, ततः कनि, "केऽण" इति ह्रस्वे, पुनः कनन्ताट्टापि , "उदीचामातः स्थाने" इतीत्वविकल्पे रूपद्वयं सिध्यति। वस्तुतस्तु ङ्यापोग्र्रहणं मास्तु, सुबन्तादेव तद्धितोत्पत्तिः। सुपः प्रागेव च ङ्यापौ प्रवर्तेते। स्वार्थद्रव्यलिङ्गसङ्ख्याकारककुत्सादिप्रयुक्तकार्याणां क्रमिकत्वात्। तथाहि-स्वार्थः=प्रवृत्तिनिमित्तं जात्यादि। तज्ज्ञानं पूर्वं भवति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। ततस्तदाश्रयज्ञानम्, धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिराकाङ्क्षितत्वाच्च। ततः स्वमात्रापेक्षत्वाल्लिङ्गस्य ज्ञानम्। ततो विजातीयक्रियापेक्षकारकापेक्षया सजातीयपदार्थापेक्षसङ्ख्याज्ञानम्। ततः कारकरूपविभक्त्यर्थापेक्षा भवति। तन्निवृत्तौ कुत्सादिज्ञानमिति कुत्सित इति सूत्रभाष्ये स्थितम्। शब्दरत्ने च परिष्कृतमेतत्।

तत्त्व-बोधिनी

ङ्याप्प्रातिपदिकात् १५०, ४।१।१

ङ्याप्प्रातिपदिकात्। समाहारद्वन्द्वादेकवचनम्। "ङी"ति ङीप्ङीष्ङीनां सामान्यग्रहणम्। "आ"विति च टाप्डाप्चापाम्। आपञ्चमपरिसमाप्तेरिति। ननु "घकालतनेषु"--इति ज्ञापकात्सुबन्तात्तद्धितोत्पत्तिरित्यभ्युपगतेः किमर्थस्तद्धितेषु प्रातिपदिकाधिकार इति चेदत्राहुः--असति त्वधिकारे "अत इ"ञित्यत्राऽत इत्येतत्सुबन्तस्यैव विशेषणं स्यात्, ततश्च दक्षस्यापत्यमित्यत्रैव इञ्स्यान्न तु दक्षयोर्दक्षाणामित्यत्र। किञ्च "वद्धाच्छः" इत्यत्र "वृद्ध"-मित्येतत्सुबन्तविशेषणं मा भूत्। अन्यथा जानन्तीति ज्ञाः, "इगुपधे"तु कः। "ज्ञानामय"मित्यत्र सुबन्तस्य वृद्धत्वाच्छो न भवति, किन्त्वणेव भवति। शब्दकौस्तुभे त्वसत्यस्मिन्नधिकारे वाक्यादपि कप्रत्ययादयः स्युः। ततो विशिष्यस्य प्रातिपदिकतया [सकल]सुब्लोपे स्पष्टमेवानिष्टमिति स्थितम्। लिह्गविसिष्टस्येति। लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः। परिभाषायाः प्रयोजनः-()आश्रूः। प्रत्ययान्तत्वेनाऽप्रातिपदिकत्वेऽपि इह स्वादयः। न च "()आशुरः ()आ()ओ"ति निर्देशादेव स्वादिसिद्धिरिति वाच्यम्। निर्देशस्य शब्दपरत्वात्। "विपाराभ्यां जेः""ङेर्यः" इतिवत्। किंच कुमारीमाचष्टे कुमारयति।

"णाविष्ठव"दिति टिलोपः। एवं यामिन्य इवांचरन्ति अहानि "यामिनयन्ती"त्यत्राचारे क्विबपि फलम्। ङ्याब्भ्यां प्रागिति। तेन "एनिका" "आर्यका" च सिध्यति। तथाहि "न सामिवचने" इति ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकः क एतार्याशब्दाभ्यां ङ्यापौ बाधेत, ततश्च "एतिका" "आर्यिके"त्येव रूपं स्यात्। ङ्याब्ग्रहणसामर्थ्यात्तु ङीबन्तात्कनि "एनिके"-त्यपि सिध्यति। "वर्णादनुदात्ता"दित्यस्य वैकल्पिकत्वात्। आबन्तात्कनि तु "उदीचामातः स्थाने" इतीत्त्वविकल्पादार्यका आर्यिकेति रूपद्वयं सिध्यति। वस्तुतस्तु ङ्यापोग्रहणं मास्तु, "घकालतनेषु"--इत्यलुग्विधानसामर्थ्यात्सुबन्तात्तद्धितोत्पत्तिरिति हि निष्कर्षः। तथा च सुपः प्रागेव ङ्यापौ प्रवर्तेते। स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्वौ॰सुप् १।१ ङ्याप्प्रातिपदिकात् १।१ १ प्रत्ययः १।१ ३।१।१ परश्च १।१ ३।१।२

समासः॥

सु च, औ च, जस् च, अम् च, औट् च, शस् च, टा च, भ्यां च, भिस् च, ङे च, भ्यां च, भ्यस् च, ङसि च, भ्यां च, भ्यस् च, ङस् च, ओस् च, आं च, ङि च, ओस् च, सुप् च, स्वौजस्॰सुप्, समाहारः द्वन्द्वः।

अर्थः॥

१। सु, औ, जस्, २। अम्, औट्, शस्, ३। टा, भ्याम्, भिस्, ४। ङे, भ्याम्, भ्यस्, ५। ङसि, भ्याम्, भ्यस्, ६। ङस्, ओस्, आम्, ७। ङि, ओस्, सुप्, इत्येते प्रत्ययाः ङ्याप्प्रातिपदिकात् भवन्ति॥

उदाहरणम्॥

ङीप् - कुमारी कुमार्यौ कुमार्यः। कुमारीम् कुमार्यौ कुमारीः। कुमार्या कुमारीभ्याम् कुमारीभिः। कुमार्यै कुमारीभ्याम् कुमारीभ्यः। कुमार्याः कुमारीभ्याम् कुमारीभ्यः। कुमार्याः कुमार्योः कुमारीणाम्। कुमार्याम् कुमार्योः कुमारीषु। हे कुमारि हे कुमार्यौ हे कुमार्यः॥
ङीप् - गौरी गौर्यौ गौर्यः। एवं सप्तविभक्तिषु रूपाणि कुमारीवत् ज्ञेयानि।
ङीन् - शार्ङ्गरवी, शिष्टं कुमारीवत्
टाप् - खट्वा खट्वे खट्वाः। खट्वाम् खट्वे खट्वाः। खट्वया खट्वाभ्याम् खट्वाभिः। खट्वायै खट्वाभ्याम् खट्वाभ्यः। खट्वायाः खट्वाभ्याम् खट्वाभ्यः। खट्वायाः खट्वयोः खट्वानाम्। खट्वायाम् खट्वयोः खट्वासु। हे खट्वे हे खट्वे हे खट्वाः॥
डाप् - बहुराजा बहुराजे, एवं पूर्ववत् सप्तविभक्तिषु ज्ञेयानि।
चाप् - कारीपगन्ध्या, शिष्टं खट्वावत् ज्ञेयम्।
प्रातिपदिकात् - दृषत्/दृषद् दृषदौ दृषदः। दृषदम् दृषदौ दृषदः। दृषदा दृषद्भ्याम् दृषद्भिः। दृषदे दृषद्भ्याम् दृषद्भ्यः। दृषदः दृषद्भ्याम् दृषद्भ्यः। दृषदः दृषदोः दृषदाम्। दृषदि दृषदोः दृषत्सु। हे दृषत् / हे दृषद् हे दृषदौ हे दृषदः॥
काशिका-वृत्तिः

स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्याम्भ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२

ङ्याप्प्रातिपदिकात् ४।१।१ इत्यधिकृतम्। ङ्याप्प्रातिपदिकात् स्वादयः प्रत्यया भवन्ति। उकारादयो ऽनुबन्धा यथायोगम् उच्चारणविशेषणार्थाः। औटः टकारः सुटिति प्रत्याहारग्रहणार्थः। पकारः सुपिति प्रत्याहारार्थः। सङ्ख्याकर्मादयश्च स्वादीनाम् अर्थाः शास्त्रान्तरेण विहितास् तेन सह अस्य एकवाक्यता। ङ्यन्तात् तावत् कुमारी। गौरी। शार्ङ्गरवी। ङीब्ङीष्ङीनां क्रमेण उदाहरणम्। कुमारी, कुमार्यौ, कुमार्यः। कुमारीम्, कुमार्यौ, कुमारीः। कुमार्या, कुमारीभ्याम्, कुमारीभिः। कुमार्यै, कुमारीभ्याम्, कुमारीभ्यः। कुमार्याः, कुमारीभ्याम्, कुमारीभ्यः। कुमार्याः, कुमार्योः, कुमारीणाम्। कुमार्याम्, कुमार्योः, कुमारीषु। एवं गौरी, शार्ङ्गरवी चोदाहार्ये। आपः खल्वपि खट्वा। बहुराजा। कारीषगन्ध्या। टाब्डाप्चापां क्रमेण उदाहरणम्। खट्वा, खट्वे, खट्वाः। खट्वाम्, खट्वे, खट्वाः। खट्वया, खट्वाभ्याम्, खट्वाभिः। खट्वायै, खट्वाभ्याम्, खट्वाभ्यः। खट्वायाः, खट्वाभ्याम्, खट्वाभ्यः। खट्वायाः खट्वयोः, खट्वानाम्। खट्वायाम्, खट्वयोः, खट्वासु। एवं बहुराजाकारीषगन्ध्ये च उदाहार्ये। एवं प्रातिपदिकात् दृषद्, दृषदौ, दृषदः। दृषदम्, दृषदौ, दृषदः। दृषदा, दृषद्भ्याम्, दृषद्भिः। दृसदे, दृषद्भ्याम्, दृषद्भ्यः। दृषदः, दृषद्भ्याम्, दृषद्भ्यः। दृषदः, दृषदोः, दृषदाम्। दृषदि, दृषदोः, दृषत्सु।

लघु-सिद्धान्त-कौमुदी

स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ११८, ४।१।२

सु औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टा भ्याम् भिस् इति तृतीया। ङे भ्याम् भ्यस् इति चतुर्थी। ङसि भ्याम् भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी॥

न्यासः

स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्याम्भ्यस्ङसिभ्याम्ब्यस्ङसोम्ङ्योस्सुप्। , ४।१।२

"उकारादवोऽनुबन्धाः" इत्यादि। तत्र प्रथमैकवचनस्योकार उच्चारणार्थाः। "अनहसौ" (७।१।९३) इति विशेषणार्थः कस्मान्न विज्ञायते? व्यावत्र्याभावात्। जसो जकारोऽसन्दिग्धोच्चारणार्थः, असति हि तस्मिन्नौकारस्यावादेशे कृते सन्देहः स्यात्-- कीदृशस्य प्रत्ययस्योच्चारणमिति, तत्र व्याख्यानं कत्र्तव्यमापद्यते। अथ "जसः शी" (७।१।१७) इत्यत्र विशेषणार्थः कस्मान्न विज्ञायते? "असः शी" (इत्युच्यमानेऽप्यतिप्रसङ्गाभावात्। "औटष्टकारः सुडिति प्रत्याहारग्रहणार्थः" इति। वृत्तौ त्वेष ग्रन्थो नास्ति; भवितव्यं त्वनेन। लेखकप्रमाददोषादिदानीमन्तर्हितः। शसः शकार औटष्टकारस्य "खरि च" ८।४।५४ इति चर्त्वेनासन्दिग्धोच्चारणार्थः। शकारः सन्देहनिरासार्थः, इतरथा ह्यौडसित्युच्यमाने सन्देहः स्यात्-- किं टकारस्येदमुच्चारणम्, उत डकारस्येति?तत्र डकारोच्चारणाट्टिलोपः स्यात्। ननु च सत्यपि शकारे भवितव्यमेव सन्देहेन-- किमिदं कृतचत्र्वस्य डकारस्योच्चरणम्?टकारस्य वेति? नैतदस्ति; यदि हि डकारस्य स्यात्, शकारोच्चारणमनर्थकं स्यात्। अथ "तस्माच्छसो नः पुंसि" ६।१।९९ इति तत्र विशेषणार्थः "टाङसिङसामिनात्स्याः" ७।१।१२ इत्यत्र। "सुपां सुलुक्" ७।१।३९ इत्यादौ सुपां सुलुक् पूर्वसवर्ण आ आत् शे इत्याकारप्रश्लेषः, तत्रासति टकारे तस्यापि ग्रहणं स्यात्। "संख्याकर्मादयश्च" इत्यादि। संख्या स्वादीनामर्थे विहिता "बहुषु बहुवचनम्" १।४।२१ इत्यादिना शास्त्रान्तरेण। कर्मादयश्च "कर्मणि द्वितीया" २।३।२ इत्येवमादिना। "तेन सहास्यैकवाक्यता" इति। कर्मणि बहुत्वे बहुवचनं शस्। कर्मणि द्वित्वैकत्वयोद्विवचने औडमौ। एवमन्यत्राप्येकवाक्यता वेदितव्या। यदि तर्हि तेन सहास्यैकवाक्यता , तदा युक्तं "बहुषु बहुवचनम्" १।४।२१ इत्यत्र -- "यत्र च संख्या सम्भवति तत्रायमुपदेशः, अव्ययेभ्यस्तु निःसंख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव" इति, तद्विरुध्यते, एकवाक्यतायां हि विशिष्ट एवार्थे कर्मादिसम्बन्धिन्येकत्वादौ स्वादीनां विधानात् सामान्यविहितत्वं नोपपद्यते। यदपीदं तत्रोक्तम्- "ङ्याप्प्रातिपदिकात्

स्वादयो लस्य तिबादय इति बहुवचनं विहितं तस्यानेन बहुत्वसंख्यावाच्यत्वेन विधीयते" इति, तदपि विरुध्यत एव; न ह्येकवाक्यतायां विहितस्य बहुवचनस्य पश्चाद्बहुत्वसंख्याय वाच्यत्वेन विधानं युक्तम्। तेन शास्त्रान्तेणानेन च संहत्य बहुत्वसंख्यायामेव बहुवचनविधानात् पूर्वकस्तावन्नास्ति विरोधः। एकवाक्यतायामपि हि यथा स्वादीनां सामान्येन विधानमुपपद्यते तथा "बहुषु बहुवचनम्" १।४।२१ इत्त्रैव प्रतिपादितम्। योऽपि द्वितीयो विरोध उद्भावितः सोऽपि न भवत्येव; ह्याप्प्रातिपदिकात् स्वादयो लस्य तिबादय इति बहुवचनं विहितमिति "बहुषु बहुवचनम्" १।४।२१ इत्यनेन सैहकवाक्यतामापन्नेनेत्ययं तत्राभिप्रायो वेदितव्यः। तस्यानेन सूत्रेण बहुत्वसंख्या वाच्यत्वेन विधीयत इत्यत्रापि स्वादिसूत्रेण ४।१।२ "लस्य" ३।४।७७ इत्यादिना च शास्त्रेण सहैकवाक्यतां प्रतिपन्नेनेत्येषोऽभिप्रायो द्रष्टव्यः। एवञ्च संहत्यैव बहुवचनं विहितम्। संहत्यैव च तस्य बहुतवसंख्या वाच्यत्वेन विधीयत इति कुतो विरोधः; ननु च "बहुवचनम्" १।४।२१ इत्येकमिदं शास्त्रम्, तस्य दि स्वादिसूत्रेणै ४।१।२कवाक्यता, ततो "लस्य" (३।४।७७) इत्यादिना शास्त्रान्तरेण सा नोपपद्यते? अथ तेनैकवाक्यता, स्वादिसूत्रेण (४।१।२) सा नोपपद्यते? नैव दोषः; द्वे ह्येते वचने तन्त्रोच्चारिते, तत्रैकस्य स्वादिसूत्रेणैकवाक्यता, अपरस्य "लस्य" १।४।२१ इत्यादिना शास्त्रान्तरेण। अथ वा-- अन्यथा विरोधाभावः प्रतिपाद्यते। इह हि स्वादयोऽनेन सूत्रेण "कर्मणि द्वितीया" (२।३।२) इत्येवमादिकं शास्त्रमनपेक्ष्य वा विधीयेरन्? तद्वापेक्ष्य तेन सहैकवाक्यतामापन्ने ते? इति द्वौ पक्षौ। तत्राद्ये पक्षेऽविशेषेणैव स्वादयो विधीयन्त इति, तथा विहितानां तु तेषां नियमः क्रियते-- यत्र संख्या सम्भवति तत्रासौ बहुषु बहुवचनम्" १।४।२१ इत्यादिना शास्त्रान्तरेण कर्मादिसम्बन्ध्येकत्वादिसंख्यावाच्यत्वेन विधीयते, यानि तु निःसख्यान्यव्ययानि तेब्यः सामान्यविहिताः स्वादय सन्तीत्येव। द्वितीये तु पक्षे विशिष्ट एवार्थे कर्मादिसम्बन्धिनि बहुत्वादौ स्वादयो विधीयन्ते। तत्र "बहुषु बहुवचनम्" १।४।२१ इत्याद्यः पक्ष आश्रितः, इह तु द्वितीय इति नास्ति विरोधः; पक्षान्तरमाश्रित्य तथाऽभिधानात्। अथ द्वितीये पक्षे कथमव्ययेभ्यः सुबुत्पत्तिः, न ह्येकवाक्यतायां संक्याकर्माद्यर्थरहितेभ्यः स्वाद्युत्पत्तिरुपपद्यते? नैष दोषः; ज्ञापकाद्भविष्यति। यदयं "अव्ययादाप्सुपः" २।४।८२ इत्यव्ययादुत्पन्नस्य सुपो लुकं शास्ति, तज्ज्ञापयति-- भवत्यव्ययाद्विभक्त्युत्पत्तिरिति। "कुमारी" इति। "वयसि प्रथमे" ४।१।२० इति ङीप्। "गौरी" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्। "शाङ्गरवी" इति "शाङ्गरवाद्यञो ङीन्" ४।१।७३। "खट्वा" इति। "अजाद्यतष्टाप्" ४।१।४ इति टाप्। "बहूराजा" इति। "डाबुभाभ्यामन्यतरस्याम्" ४।१।१३ इति डाप्। "कारीवगन्ध्याः" इति। करीषस्य गन्ध इव गन्धो यस्येति। "गन्धस्येदुत्पूतिसुसुरभिभ्यः" ५।४।१३५ , "उपमानाच्च" ५।४।१३७ इतीत्त्वम्। करीषगन्धेरपत्यमिति "यस्येति च" ६।४।१४८ इत्यकारलोपः,"तद्धितेष्वचामादेः" ७।२।११७ इत्यादि वृद्धिः,"अणिञोरनार्षयोर्गुरुपोत्तमयोः" ४।१।७८ इत्यादिना ष्यङादेशः, "यङश्चाप्" ४।१।७४ इति चाप्॥

बाल-मनोरमा

स्वौजसमौट्?छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् १८२, ४।१।२

स्वैजसमौट्। सु-औ-जस्, अम्-औट्-शस्, टा-भ्यां-भिस्", ङे-भ्यां-भ्यस्, ङसि-भ्यां-भ्यस्, ङस्-ओस्-आम्, ङि-ओस्-सुप्--इत्येकविंशतिः स्वादयः। समाहाद्वन्द्वः, इतरेतरयोगद्वन्द्वो वा। तथा सति सौत्रमेकवचनम्। ङ्याप्प्रातिपदिकादित्यदिकृतं, "प्रत्ययः", "परश्चे"ति च यथायथं च विपरिणम्यते। तदाह--ङ्यन्तादित्यादिना। सुङस्योरिति। सु-ङसि-इत्यनयोरुकारेकारौ, जस्-शस्-इत्यनयोर्जकारशकारौ, औट्-टा--इत्यनयोष्टकारः, ङे-ङसि-ङस्-ङि-इत्येतेषां ङकारः, "सुप्" इत्यस्य पकार इत्येते इत्संज्ञकाः प्रत्येतव्या इत्यर्थः। "उपदेशेऽजनुनासिक इत्, "चुटू", लशक्वतद्धिते", "हलन्त्यम्" इति सूत्रै"रिति शेषः। इत्संज्ञायां च लोपः। तदुच्चारणफलं तु तत्र तत्र वक्ष्यते।

तत्त्व-बोधिनी

स्वौजसमौट्छष्टाभ्याम्भिस्ङेम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् १५१, ४।१।२

स्वौजसमौट्। समाहारे द्वन्द्वः। सुङस्यौरिति। सोरुकारः "अर्वणस्त्रसा"वित्यत्र विशेषणार्थः। "असी"त्युक्ते हि असकारादाक्()त्यिर्थः स्यात्। तथा च "वाजमर्वत्सु" इति न सिध्येत्। ङसेरिकारः "टाङसिङसां"--"ङसिङयोः स्मात्स्मिनौ" इत्येतदर्थः। जश्शसोर्जकारशकारौ "जसः शी" तस्माच्छसौ नः" इत्यनयोर्विषयविभागार्थौ। [ननु] अन्यतरस्य निरनुबन्धकत्वमेवास्त्विति चेत्[न], जाकाराऽभावे "औ"इत्यस्य आव् स्यात्, ततश्च प्रत्ययस्य वकारान्तता संभाव्येत। एवं शसः शकाराऽभावे औटो ङित्त्वं संभाव्येत, तथाच "तेजसी" इत्यादौ टिलोपः स्यात्। अथवा "लिहा"वित्यादौ ङित्त्वसामर्थ्यादभस्यापि टेर्लोपः संभाव्येत। औटष्टकारः "सु"डिति प्रत्याहारार्थः। टाटकारस्तु "टाङसिङसां"--"द्वितीयाटौस्वेनः" इति विशेषणार्थः। एतेन "आदिरन्त्येने"ति सूत्रे काशिकाकारेण यदुक्तम्-"अन्त्येनेति किम्?, "सु"डिति तृतीयैकवचनावयवेन मा भूत्"-इति तत्परास्तम्। औटष्टकारस्यान्यार्थतया तेनैव संभवात्, प्रत्यासत्तेश्च। अतेव शब्दकौस्तुभे तत्रान्यदेव प्रयोजनमुक्तम्--"मध्यमेनेता सहित आदिस्तदुत्तरेषामपि ग्राहको मा भूदित्यन्त्येनेति ग्रहणम्। अन्त्येनेता सहितो मध्यमः पूर्वेषामपि मा भूदित्यादिग्रहणम्"-इति। अमुमेवार्थं मनसि निधाय--"आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते"--इति निष्कृष्टमुक्तं प्राक्। प्रकृतमनुसरामः--ङेप्रभृतीनां ङकारो "घेर्ङिति" "ङेराम्--" इति विशेषणार्थः। सुपः पकारस्तु प्रत्याहारार्थः।

---

सूत्रम्

काशिका-वृत्तिः

स्त्रियाम् ४।१।३

अधिकारो ऽयम्। यदिति ऊर्ध्वम् अनुक्रमिष्यामः स्त्रियाम् इत्येवं तद् वेदितव्यम्। ङ्याप्प्रातिपदिकात् ४।१।१ इति सर्वाधिकारे ऽपि प्रातिपदिकमात्रम् अत्र प्रकरणे सम्बध्यते, ण्यापोरनेन एव विधानात्। स्त्रियाम् इत्युच्यते। केयं स्त्री नाम? सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः। क्वचिदाश्रयविशेषाभावातुपदेशव्यङ्गया एव भवन्ति, यथा ब्राह्मणत्वादयः। स्त्रीत्वं च प्रत्ययार्थः। प्रकृत्यर्थविशेषणं च इत्युभयथा अपि प्रयुज्यते, स्त्रियाम् अभिधेयायां स्त्रियां वा यत् प्रातिपदिकं वर्तते इति। वक्ष्यति

लघु-सिद्धान्त-कौमुदी

स्त्रियाम् १२५१, ४।१।३

अधिकारोऽयम्। समर्थानामिति यावत्॥

न्यासः

स्त्रियाम्। , ४।१।३

"ङ्यापोरनेनैव विधानात्" इति। एतेन "स्त्रियाम्" इत्यधिकृत्य प्रत्ययविधौ ह्याबन्तायाः प्रकृतेरभावमाह। एष च "प्रातिपदिकमात्रमत्र प्रकरणे सम्बध्यते" इत्यत्र हेतुः। यदि हि ङ्याबन्ता प्रकृतिरिह प्रकरणे सम्भवेत् ततो ङ्यापावपि सम्बध्येयातानाम्, सा ङ्याब्राऊपा न सम्भवति, अतो न ताविह सम्बध्येते। इह च स्त्रीत्वं प्रत्याचार्याणां दर्शनभेदः, क्वचिच्च दर्शने दोषो दृश्यते। तत्र केषाञ्चिद्दर्शनम्-- "स्तनकशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तदभावे नपुसंकम्॥ इति। "स्तनकेशवती" इति, भूम्न्यतिशायने वा मतुप्। "लोमशः" इत्यत्रापि लोमादिपामादिसूत्रेण ५।२।९९ शप्रत्ययः। "उभयोरन्तरम्" इति, उभयोः स्त्रीपुंसयोः सदृशमित्यर्थः। तत्पुनः सादृश्यं लिङ्गवत्वेन। एवं तर्हि तदुभयं समुदितं यत्र तन्नपुंसकं प्राप्नोति। भवति हि समुदायरूपं समुदायिरूपेण लिङिगत्वेन सदृशमित्यत आह-- "तदभावे" इति। एतदुभयं यत्र नास्ति तत् "नपुंसकम्" इति। तेन न सम्भवत्येष दोषः। यदि तदभावे

नपुंसकमित्येतदुच्यते, ततोऽव्ययानां तिङन्तानाञ्चैव नपुंसकत्वं स्यात्। तथाप्युभयोरन्तरं यदित्येतावदुच्यते, एवमपि कुक्कुटमयूर्यौ इत्येवमादीनां लिङ्गसमुदायमतां समुदायानां नपुंसकत्वं प्रसज्येत। तस्मादुभयोरन्तरं यत् तदभाव इति च द्वयमप्युक्तम्। तदेवं यन्न स्त्री न पुमान् लिङ्गवच्च वस्तु तन्नपुंसकमित्युच्यते, ततोऽव्ययानां तिङन्तानाचञ्च नपुंसकत्वं न भवतीत्युक्तं भवति। अत्र दर्शने भ्रूकुंसे च टाप् प्रसज्यते, तसय् हि स्तनकेशसम्बन्ध उपलभ्यते। भ्रूकुंसः स्त्रीवेशधारी नर्तकः, पुरुष उच्यते। खट्वादीनाञ्च स्तनकेशाभावात् स्त्रीत्वं न स्यात्, वृक्षादीनाञ्च लोमशत्वाभावात् कुंस्त्वाभावः प्राप्नोति, खरकुट()आदीनाञ्च लोमशत्वात् पुंस्त्वम्, ततश्च खरकुटीः पश्येति "तस्माच्छसो नः पुंसि" ६।१।९९ इति नत्वमापद्येत। अन्येषां तु दर्शनम्-- संस्त्यानम्, प्रसवः, स्थितिश्चेति। संस्त्यानम्-- अपचयस्वभावं स्त्रीत्वम्, तद्यत्रास्ति सोऽर्थः स्त्री। प्रसवः = उपचयात्मकः पुंस्त्वम्, तद्यत्रास्ति स पुमान्। उपचयापचयरहिता याऽवस्था तदात्मिका स्थितिर्नपुंसकत्वम्, तद्यत्रास्ति तन्नपुंसकमिति। अत्रापि दर्शने संस्त्यानादेस्त्रयस्य सर्वत्र भावादेकैकं वस्तु स्त्री, पुमान्, नपुंसकञ्च प्रसज्येत। संस्त्यानविवक्ष्यायामेव स्त्रीत्वं भवति, प्रसवविवक्षायामेव पुंस्त्वम्, स्थितिविवक्षायामेव नपुंसकत्वम्, अतोऽयमदोष इति चेत्? अयुक्तमेतत्; तथा हि-- उपचीयते कुमारीत्यपि कुमारी स्त्री भवति, न पुमान्। अपचीयते वृक्ष इति संस्त्यानविवक्षायामपि वृक्षः पुमानेव भवति, न स्त्री। #उपचीयते कुण्डमपचीयते वेत्युपचयापचययोरन्यतरविवक्षायामपि कुण्डं नपुंसकमेव भवति, न पुमान् नापि स्त्री। तदेवमाचार्याणां स्त्रीत्वं प्रति दर्शनभेदाद्दोषदर्शनाच्च पृच्छति-- "स्त्रियामित्युच्यते,केयं स्त्री" इत्यादि। वृत्तिकारस्तु विदिताभिप्रायो दर्शनान्तरमाश्रित्याह-- "सामान्यविशेषाः" इत्यादि। सामान्यानि विशेषाश्चेति। तथा सामान्यानि च तानि तुल्यजातीपदार्थसाधारणत्वाद्विशेषाश्च परस्परतो विजातीयेभ्यश्च विशिष्यन्ते = व्यावत्र्यन्त इति सामान्यविशेषाः। "स्त्रीत्वादयो गोत्वादय इव" इति। यथैव हि गोत्वादयः सामान्यविशेषा भिन्नेष्व पि स्वाश्रयेष्वभिन्नाकारबुद्ध्यभिधानहेतवस्तथा स्त्रीत्वादयोऽपि। यथैव हि गोत्वादयस्तुल्यजातीयेषु सर्वेषु वत्र्तन्ते, विजातीयेभ्यस्तु व्यावत्र्तन्ते, तथा स्त्रीत्वादयोऽपि। तस्मात् तद्वदेव तेऽपि सामान्यविशेषाः। ननु च सामान्यविशेषणां सर्वव्यक्त्यनुगतत्वादस्मिन्नपि दर्शने स एव सर्वत्र सर्वलिङ्गताप्रसङ्गः, तत्किमिति दर्शनान्तरमुत्सृज्येदं दर्शनमाश्रितमित्याह--"बहुहप्रकारा व्यक्तयः"इति। व्यजन्त आभिरिति व्यक्तव्यः--- सामान्यविशेषाणामाश्रयाः। बहुप्रकारा व्यक्तयो येषां सामान्यविशेषाणां ते तथोक्ताः। अनेनैतत् सूचयति-- विचित्रत्वात् सामान्यविशेषाश्रयाणां व्यञ्जकानां कश्चिदेव सामान्यविशेषः केनचिदेवाश्रयेण व्यज्यते, न सर्वः सर्वेण। प्रतिनियतविषयत्वात् पदार्थशक्तीनाम्। तत्र येनार्थेन स्त्रीत्वमेव व्यज्यते न पुंस्त्वं नापि नपुंसकत्वम्, सा स्त्र्येव भवति, न पुमान्, नापि नपुंसकम्, येन पुंस्त्वमेव व्यज्यते स पुमानेव, येन नपुंसकत्वं तन्नपुंसकमेव। यस्तु द्वयोस्त्रयाणां वा व्यञ्जकः स द्विलिङ्गस्त्रिलिङ्गो वेष्यते-- अर्धर्चः, अर्धर्चम्; पद्मः, पद्मम्; तटः, कटी,तटमिति। तेन नास्मिन् दर्शने पूर्वदोषावसरः। यस्तर्हि सामान्यविशेषस्याश्रयो व्यञ्जको न भवति स कथं तद्योगात् स्त्री भवति? पुमान् नपुंसकञ्चेति?अत आह--क्वचित्" इत्यादि। आशात्माकाशादिषु हि सामान्यविशेषाः स्त्रीत्वादयः क्वचिदुपदेशमात्रव्यङ्ग्या एव, न त्वाश्रयव्यङ्ग्याः, तदाश्रयाणामतीन्द्रियत्वात्। तत्र यस्मिन्नुपदेशेन स्त्रीत्वं व्यज्यते सा स्त्री भवति, यथा -- इयमाशेति। यत्र पुंस्त्वं स पुमान्, यथा--अयमात्मेति। यत्र नपुंसकत्वं तन्नपुंसकमेव, यथा--- इदमाकाशमिति। कथं स्त्रीत्वादयः क्वचिदुपदेशमात्रव्यङ्ग्या भवन्तीत्याह-- "यथा" इत्यादि। ब्राआहृणत्वक्षत्रियत्वादीनां हि तथाविध आश्रयो नास्ति यस्तान्यभिव्यञ्जयेत्; सामान्यविशेषाश्रयाणामाशात्माकाशादीनमतीन्द्रियत्वात्। तदाश्रयणामन्यत्र सादृश्यादुपदेशमात्रादेव तु ब्राआहृणत्वादीनामभिव्यक्तिर्भवति। यथा च तेषां तथा च क्वचित् स्त्रीत्वादीनाम्। किं पुनरिदं स्त्रीत्वम्? प्रत्ययार्थः? उत प्रातिपदिकविशेषणम्? इत्याह-- "स्त्रीत्वञ्च" इत्यादि। यदा स्त्रीशब्दो विनाऽपि भावप्रत्ययेन स्त्रीत्वे वत्र्तते तदा स्त्रियामभिधेयायां टाबादयो भवन्तीति स्त्रीत्वं प्रत्ययार्थो भवति। यथैव हि गोशब्दो जातिपदार्थपक्षे भावप्रत्ययरहितोऽपि गोत्वे वत्र्तते तथा स्त्रीशब्दोऽपि स्त्रीत्वे। यदा तु स्त्रीत्वं विशेषणमुपादाय तद्वति द्रव्ये स्त्रीशब्दोऽपि वत्र्तते तदायं पक्षोऽपि

भवति-- स्त्रियां यत् प्रातिपदिकं वत्र्तते तस्माट्टाबादय इति स्त्रीत्वं प्रकृतेर्विशेषणं भवति। "उभयथाऽपि युज्यते" इति। कथं पुनरुभयथा युज्यते, यावता स्त्रीत्वस्य प्रत्ययार्थत्वे स्त्रीत्वं प्रधानमापद्यत इति तत्र व्यतिरेकलक्षणा षष्ठी प्राप्नोति, यथा--स्त्रीत्वं देवदत्ताया इति, ततश्च कुमारी देवदत्तेति सामानाधिकरण्यं न स्यात्? द्विवचने बहुवचने च कुमार्यौ कुमार्य इति न स्याताम्, एकत्वात् स्त्रीत्वस्य? अनेकश्च प्रत्ययो नोपपद्यते गार्गायणी, कारीषगन्ध्या,कालितरेति;एकत्वात् स्त्रीत्वस्य, तस्य च प्रथमोत्पन्नेनैव ष्फष्यङादिनाभिहितत्वात्? स्त्रीति च ईकारो न प्राप्नोति संस्त्याने "{स्त्री इत्येव मुद्रितदशपाद्युणादिसूत्रपाठे दृष्यते} स्त्यायतेर्ड्रट्" (पं।उ।४।१६५) इति ड्रट्प्रत्ययान्तेनाभिधीयते, यतो व्यतिरेकलक्षणा षष्ठी स्यात्। कस्मात् न हि सामान्यविशेषाणामाश्रयाद्भेदः स्त्रीप्रत्ययान्तेनाभिधीयते, यतो व्यतिरेकलक्षणा षष्ठी स्यात्। कस्मात् पुनर्नाभिधीयते? शब्दशक्तिस्वाभाव्यात्। द्विवचनबहुवचने अपि चोपपद्यते; यस्मात् सामान्यविशेषाणामेकत्वेऽपुनर्नाभिधीयते? शब्दशक्तिस्वाभाव्यात्। द्विवचनबहुवचने अपि चोपपद्येते; यस्मात् सामान्यविशेषणामेकत्वेऽप्याश्रयसंख्यास्तद्वाचिन उपाददते, शब्दशक्तिस्वाभाव्यादेव। तेनाश्रयस्यानेकत्वात् द्विवचनबहुवचने भविष्यतः। गाग्र्यायणीत्येवमादौ द्वाभ्यामेव स्त्रीप्रत्ययाभ्यां स्त्रीत्वं व्यज्यते। नैकेन ष्यङादिनेत्यनेकोऽपि प्रत्ययो युक्त एव। अथ वा-- गाग्र्यायणीत्यत्र "प्राचां ष्फ तद्धितः" ४।१।१७) इति विहितस्य ष्फस्य षित्करणसामथ्र्यात् ङीष् प्रत्ययो भविष्यति। "कारीषगन्ध्या" इति। ष्यङन्तात् "यङश्चाप्" ४।१।७४ इति वचनसमाथ्र्यादच्चाब्भविष्यति। "कालितरा" इति। जानपदादि ४।१।४२ सूत्रविहितेन ङीषा स्त्रीत्वमप्रकर्षविशिष्टमुक्तम्, न तु प्रकर्षविशिष्टम्, अतस्तस्यानभिहितत्वात् तरवन्तात् टाब्भविष्यति। स्त्रीति "स्त्रियाम्"४।१।३ इति निर्देशाल्लिङ्गाट्टित्करणसामथ्र्याद्वा ङीब्भविष्यति। प्रकृत्यर्थविशेषणपक्षे तु प्रातिपदिकेन स्त्रीत्वविशिष्टं द्रव्यमेवोच्यते, टाबादयस्तु द्योतका इति। तत्र व्यतिरेकाभावात् षष्ठ()आ अप्रसङ्गादेव द्विवचनबहुवचने अपि। अनेकत्वादद्रव्यस्य युक्तेऽनेकोऽपि प्रत्ययो युक्त एव। यथैव हि प्रातिपदिकेनोक्तेऽपि स्त्रीत्वे खट्वेत्यादौ टाबादयो भवन्ति, तथा गाग्र्यायणीत्यादावनेकेऽपि ष्फादयो भवन्ति। अनेनैव स्त्रीत्वस्य द्योतितत्वादिति युक्तमुक्तम्-- "उभयथापि युज्यते" इति॥

बाल-मनोरमा

स्त्रियाम् ४४७, ४।१।३

अथ स्त्रीप्रत्ययाः। तदेवं "ङ्याप्प्रातिपदिका"दित्यधिकृत्य "स्वौजसमौ"डिति सूत्रं सप्रपञ्चं निरूप्य तदुत्तरम-नुक्रान्तान्स्त्रीप्रत्ययान्निरूपयितुमाह-स्त्रियाम्। अधिकारोऽयमिति। "अजाद्यतष्टाबित्याद्युत्तरसूत्रेष्वनुवृत्त्यर्थमिदं सूत्रं, नतु स्वतन्त्रविधिरित्यर्थः। कियत्पर्यन्तमयमधिकार इत्यत आह--समर्थेति। "याव"दित्यवधौ। "समर्थानां प्रथमा"-दित्यतः प्रागित्यर्थः। अत्रेदमवधेयम्। "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तद भावे नपुंसकम्।" इति लक्षणलक्षितमवयवसंस्थानविशेषात्मकं लौकिकं स्त्रीपुंसयोर्लिङ्गम्। तदभावे=तयोरुभयोरभावे सति, यदुभयोरन्तरं=सदृशं तन्नपुंसकमित्यर्थः। तदिदं लौकिकं लिङ्गमस्मिन् शास्त्रे नोपयुज्यते, तस्याऽचेतने खट्वामालादौ बाधात्स्त्रीप्रत्ययानापत्तेः। दारानित्यादौ "तस्माच्छसो नः पुंसी"ति नत्वानापत्तेश्च। किंतु सत्त्वरजस्तमसां प्राकृतगुणानां वृद्धिः--पुंस्त्वम्, अपचयः--स्त्रीत्वम्, स्थितिमात्रं नपुंसकत्वम्। अत एव ऊत्कार्षापकर्षसत्वेऽपि स्थितिमात्रमादाय "सामान्ये नपुंसक"मिति प्रवादः। उत्कर्षाऽपकर्षसाम्यात्मकावस्थात्रयसाधारणस्थितिमात्रविवक्षायां नपुंसकं भवतीति तदर्थः। ईदृशमवस्थात्रयं केवलान्वयि। "अयं पदार्थः," "इयं व्यक्तिः", "इदं वस्तु" इति व्यवहारस्य सार्वत्रिकत्वात्। तच्चेदं लिङ्गमर्थनिष्ठमेव। तदुक्तं भाष्ये--"एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्चे"ति। एकस्मिन्नेवार्थे "पुष्यः" "तारका" "नक्षत्र"मिति शब्दनानात्वदर्शनात्, कुटीकुटीरादौ रेफाद्यवयवोपजनने लिङ्गभेददर्शनाच्च स्तनकेशाद्यतिरिक्तमेव लिङ्गमित्यर्थ इति कैयटः। "पुलिङ्गः शब्द" इत्यादिव्यवहारस्तु

वाच्यवाचकयोरभेदोपचारद्बोध्यः। नच उपचयादिधर्माणां विरुद्धत्वादेकत्र समावेशाऽयोगादेकस्य द्वित्रिलिङ्गताऽनापत्तिरिति वाच्यम्, एकैकस्मिन्वस्तुनि क्षणभेदेन त्रयाणां धर्माणामपि समावेशोपपत्तेः। उक्तंच भाष्ये-"कश्चिदपि सत्त्वादिधर्म क्वचिन्मुहुर्तमपि नावतिष्ठते, यावदनेन वर्द्धितव्यमपायेन वा युज्यते" इति नचैवं सति युगपद्द्वित्रिलिङ्गत्वानापत्तिरिति वाच्यम्, नहि व्यवहारे स्वसमकालिकपदार्थसत्ता प्रयोजिका। तथा सति भूतभविष्यद्व्यवहारोच्छेदापातात्। तत्र कश्चिच्छब्द एकलिङ्गविशिष्ट एवार्थे प्रयोज्यः, कश्चित्तु द्विलिङ्गे, कश्चित्तु त्रिलिङ्गे इत्येतत्तु लिङ्गानुशासनशास्त्रादवगन्तव्यम्। एषां पुंस्त्रीनपुंसकशब्दानां वृद्ध्यादिशब्दवदस्मिन् शास्त्रे संकेतश्च लिङ्गानुशासनत एव ज्ञेयः। उक्तं च भाष्ये-अवश्यं तावत्कश्चित्स्वकृतान्त आस्थेयः" इति वैयकरणसिद्धान्त इत्यर्थः। "कृतान्तौ यमसिद्धान्तौ" इत्यमरः। तत्र टिघुभादिसंज्ञावल्लघुसंज्ञामकृत्वा महासंज्ञाकरणसामर्थ्यात्सति संभवे "स्तनकेशवती"त्यादिलौकिकं लिङ्गमप्यत्राश्रीयते। अन्यथा "पशुना यजेते "त्यत्र स्त्रीव्यक्तावपि सत्त्वाद्युपचयात्मकपुंस्त्वाद्यनपायादाङोनाऽस्त्रियामिति नाभावस्याऽविरोधात्स्त्रीपशुरप्यालभ्येत। तदेतच्चतुर्थस्य प्रथमपादे "तथालिङ्ग"मित्यधिकरणे अद्वरमीमांसाकुतूहरवृत्ताववोचाम। त्रिविधमपि एतल्लिङ्गं जातिव्यक्तिवत्प्रातिपदिकार्थ एव। प्रत्ययार्थत्वे प्राधान्यापत्तौ अजा, खट्वा इत्यादौ स्त्रीत्वविशिष्टतादात्म्यावच्छिन्नाऽजादिबोधोऽनुभवसिद्धो विरुध्येत। किंच मातृदुहितृस्वसृगवादिशब्देषु विनापि टाबादिप्रत्ययं स्त्रीत्वविशिष्टार्थस्य बोधात्प्रातिपदिकस्य तत्र शक्त्यावश्यकत्वे टाबादीनामपि शक्तिकल्पने गौरवम्। "ऋकारान्तामातृदुहितृस्वसृयातृननान्दरः, प्रावृड्()विप्रुड()क्तिविषः" इत्याद#इलिङ्गानुशासनसूत्राण्यपि प्रकृतिविषयाण्येव दृश्यन्ते। अत एव च "कृदिकारादक्तिनः" इत्यत्र "अक्तिन" इत्यतदर्थवत्। अन्यथा क्तिनैव स्त्रीत्वस्योक्तत्वान्ङीपोऽप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव। न चैवमपि प्रकृत्यैव स्त्रीत्वस्योक्तत्वात्कथं टाबादय #इति वाच्यं, द्वावित्यादिवत्प्रकृत्युक्तस्याऽव्यावर्तकत्वात्। अन्यथा टाबादिविधिवैयर्थ्यात्। तथा च स्त्रीत्वमिह प्रातिपदिकस्यैव वाच्यं। टाबादयस्तु तद्द्योतकाः। तथाच टाबादिषु सत्सु अवश्यं स्त्रीत्वबोध इति नियमः, नतु टाबादिषु सत्स्वेवेति नियम इति।

---

सूत्रम्

काशिका-वृत्तिः

अजाद्यतष् टाप् ४।१।४

अजा। देवदत्ता। स्त्रियाम् इति किम्? अजः। देवदत्तः। अजाद्यतष् टाप् ४।१।४। अजादिभ्यः प्रातिपदिकेभ्यः अकारान्ताच् च प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति। पकारः सामान्यग्रहणार्थः। टकारः सामान्यग्रहणाविघातार्थः। अजा एडका। कोकिला। चटका। अश्वा। खट्वा। देवदत्ता। तपरकरणं तत्कालार्थम्। शुभंयाः। कीलालपाः ब्राह्मणी। हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६।१।६६ इति सुलोपः स्यात्। अजादिग्रहणं तु क्वचिज् जातिलक्षणे ङीषि प्राप्ते, क्वचित् तु पुंयोगलक्षणे, क्वचित् तु पुष्पफलौत्तरलक्षणे, क्वचित् तु वयोलक्षणे ङीपि, क्वचिट् टिल्लक्षणे। हलन्तानां तवप्राप्त एव कस्मिंश्चिदाब् विधीयते। शूद्रा च अमहत्पूर्वा जातिः इति पठ्यते। तस्य अयम् अर्थः। शूद्रशब्दष् टापम् उत्पादयति जातिश्चेद् भवति। शूद्रा। पुंयोगे ङीषैव भवितव्यम्। शूद्रस्य भार्या शूद्री। महत्पूर्वस्य प्रतिषेधः। महाशूद्री। महाशूद्रशब्दो ह्याभीरजातिवचनः, तत्र तदन्तविधिना टाप् प्राप्तः प्रतिषिध्यते। ग्रहणवता प्रातिपदिकेन तदन्तविधिर् न इति कथं तदन्तविधिः? एतदेव ज्ञापकं भवति अस्मिन् प्रकरणे तदन्तविधिः इति। तेन अतिधीवरी, अतिपीवरी, अतिभवती, अतिमहती इति भवति। अजा, एडका, चटका, अश्वा, मूसिका इति जातिः। बाला, होढा, पाका, वत्सा, मन्दा, विलाता इति वयः। पूर्वापहाणा, अपरापहाणा। टित्, निपतनाण् णत्वम्। संभस्त्राजीनशणपिण्डेभ्यः फलात्। सम्फला। भस्त्रफला। अजिनफला। शणफला। पिण्डफला। त्रिफला द्विगौ। बहुव्रीहौ त्रिफली संहतिः। सदच्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्। सत्पुष्पा।

प्राक्पुष्पा। कान्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा। पाककर्ण इति ङीषो ऽपवादः। शूद्रा च अमहत्पूर्वा जातिः। क्रुञ्चा, उष्णिहा, देवविशा हलन्ताः। ज्येष्टा, कनिष्ता, मध्यमा पुंयोगः। कोकिला जातिः। मूलान्नञः। अमूला।

लघु-सिद्धान्त-कौमुदी

अजाद्यतष्टाप् १२५२, ४।१।४

अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्। अजा। एडका। अश्वा। चटका। मूषिका। बाला। वत्सा। होडा। मन्दा। विलाता। इत्यादि॥ मेधा। गङ्गा। सर्वा॥

न्यासः

अजाद्यतष्टाप्। , ४।१।४

"अजाद्यतदन्ताच्च"इति। अकारान्तादित्यर्थः। अथ स्वरूपग्रहणं कस्मान्न विज्ञायते? अच्छब्दान्ताच् शरद्वरदित्येवमादेरिति? लिङ्गात्। किं लिङ्गम्? "तदाद्याचिख्यासायाम्" २।४।२१ "यकपूर्वायाः" ७।३।४६ इत्येवमादिनिर्देशात्। स्वरूपग्रहणे हि ते नोपपद्येरन्। "पकारः सामान्यग्रहणार्थः" इति। "ङ्याप्प्रातिपदिकात्" ४।१।१ इत्यत्रासति हि पकारेऽस्य ग्रहणं न स्यात्। "टकारः सामान्यग्रहणाविघातार्थः" (इति)। असति हि टकारे "एकानुबन्धकग्रहणे न द्वय्नुबन्धकस्य" (व्या।प।५२) इतिटापकस्यैव ग्रहणं स्यात्, न डाप्चापोः; द्वयनुबन्धकत्वात्। "शुभंयाः कीलालपाः" इति। "अन्येभ्योथऽपि दृश्यन्ते" ३।२।७५ इतिविच्। किं पुनः स्यात्, यद्यत्रापि टाप्स्यात्? इत्याह-- "हल्ङ्याभ्यः" इत्यादि। "जातिलक्षणे" इति। "जातेरस्त्रीविषयादयोपधात्" ४।१।६३ इति। "पुंयोगलक्षणे" इति। "पुंयोगादाख्यायाम्" ४।१।४८ इति। "पुष्पफलोत्तरपदलक्षणे" इति। "पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च" ४।१।६४ इति। "वयोलक्षणे" इति। "वयसि प्रथमे" ४।१।२० इति। "टिल्लक्षणे" इति। "टिड्ढाणञ्" ४।१।४२ इति। "शूद्रा चामहत्वपूर्वा" इत्यादि। ननु च "आमन्महतः" (६।३।४६) इत्यादिनात्वेनात्र भवितव्यम्, अत एवं वक्तव्यम्-- अमहापूर्वेति? नैतदस्ति; अर्थप्रधानस्य हि तदात्वमुच्यते, शब्दप्रधानश्चायम्। महच्छब्दः पूर्वो यस्याः सा महत्पूर्वेति। "महत्पूर्वस्य प्रतिषेधः" इति।अहमत्पूर्वेत्यस्यार्थमाचष्टे। अत्रापि जातिरिति सम्बध्यते, जातिवचनस्य प्रतिषेधो यथा स्यात्। इह मा भूत्-- महती शूद्रा महाशूद्रेति। अत् ह्युत्तरपदं शूद्रशब्दो जातौ वत्र्तते, न समुदायो महतीशूद्रारूपः। कथं पुनर्जातिरित्युच्यमाने महत्पूर्वस्य प्राप्तिः,यतः प्रतिषेध उच्यत इत्याह-- "महाशूद्रशब्दो ह्याभीरजातिवचनः" इति। महाशूद्रशब्दल एव हि समुदायो जातौ वत्र्तते। अत एव महाशूद्रीति "जातेरस्त्री" ४।१।६३ इत्यादिना ङीब्भवति। नन्वेवमपि नास्त्येव टापः प्राप्तिः,शूद्रशब्दाद्धि प्रत्यय उत्पद्यमानः कथं महाशूद्रात् प्राप्नोतीत्यत आह--"तत्र तदन्तविधिर्न" इत्यादि। "कथं तदन्तविधिः" इति। न कथञ्चित्। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादिति (व्या।प।८९) मन्यते। "अतिधीवरी " इति। "अतिपीवरी" इति। दधातेः पिबतेश्च "आतो मनिन्ववनिष्वनिपश्च" ३।२।७४ इति क्वन#इप्, ईत्वं घुमास्थादिसूत्रेण ६।४।६६। धीवानमतिक्रान्ता, पीवानमतिक्रान्तेति "कुगतिप्रादयः" २।२।१८ इति समासः। अत्र तदन्तविधौ ज्ञापिते सति "वनोरच्" ४।१।७ इति ङीब्राऔ न भवतः। यदि पुनस्तदन्तविधिर्न ज्ञाप्येत तदा "वनः" इति प्रत्ययग्रहणमेतत्, ततश्च प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवति" (पु।प।वृ।४४) इति वचनादिहैव स्याताम्-- "धीवरी, पीवरीति; अतिधीवरी, अतिपीवरीत्यत्र तु न स्याताम्। "अतिभवती"। अतिमहती" इति। भवतुशब्दः केवल उगित् सर्वादिषु पठ()ते, महदिति गौरादौ, तत्रासत्यस्मिञ्ज्ञापके केवलाभ्यामेव भवन्महच्छब्दाभ्यामुगिद्गौरादिलक्षणौ ङीब्ङीषौ स्याताम्। अतिभवती, अतिमहतीत्यत्र तु न स्याताम्, ज्ञापके तु सति भवतः। यद्येवम्, पञ्चानामजानां समाहारः पञ्चाजीति द्विगोरपि तदन्तविधिना टाप् प्राप्नोति? नैष दोषः; अजादिभिः स्त्रियामिति विशेषयिष्यामः,"अजाद्यतः" ४।१।४ इति हि षष्ठी,तत्रैवमभिसम्बन्धः कत्र्तव्यः-- अजादीनां या स्त्री, अजादिशब्दानां वाच्येऽर्थे यत् स्त्रीत्वं समवायसम्बन्धेन वत्र्तमानम्, तत्र टाबिति। न च पञ्चाजीत्यत्राजाशब्दस्यार्थे

वाच्ये स्त्रीत्वं समवेतम्, किं तर्हि? समाहारे वाच्ये। "पूर्वापहाणा। अपरापहाणा। टित्" इति। ल्युडन्तत्वात्।कक "प्राक्पुष्पा" इति। प्राञ्चन्तीति प्राञ्चि, "ऋत्विग्दधृक् ३।२।५९ इत्यादिना क्विन्। प्राञ्चि पुष्पानि यस्याः सा प्राक्पुष्पा॥
बाल-मनोरमा
अजाद्यतष्टाप् ४४८, ४।१।४

अजाद्यतष्टाप्। अजः=अजशब्दः-आदिर्येषां ते अजादयः, ते च अच्चेति समाहारद्वन्द्वात्षष्ठी। "ङ्यात्प्रातिपदिका"दित्यतः प्रातिपदिकादित्यनुवृत्तं षष्ठ()आ विपरिणतम् अजादिभिरता च विशेष्यते। तदन्तविधिः। तत्राऽद्विषये "समासप्रत्ययविधौ तदन्तविधे प्रतिषेधो वक्तव्यः" इति निषेधो न, "उगिद्वर्णग्रहणवर्ज"मित्युक्ते। ङ्याब्ग्रहणं तु नानुवर्तते, "स्त्रिया"मित्यधिकारे तयोर्विधेयत्वात्। नच अजादिभिः प्रातिपदिकस्य विशेषणेऽपि तदन्तविधिर्नास्ति, "समासप्रत्ययविधौ" इति निषेधात्, "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"ति च निषेधादिति वाच्यं, "शूद्रा" चामहत्पूर्वा जाति"रित्यत्र अमहत्पूर्वेति वचनेना।त्र तदन्तविधिज्ञापनात्। किंच "स्त्रियां व्यक्तौ" गम्यमानाया"मिति नार्थः। तर्हि अजा खट्वेत्यादौ अजत्वाद्याकरेण वस्तुतः स्त्रीव्यक्तौ गम्यमानायां टाबादिप्रत्ययाः स्युः। ततश्च टाबादिप्रत्ययेषु प्रयुज्यमानेषु स्त्रीत्वस्य भानं न नियतं स्यात्। अतः स्त्रियामिति भावप्रधानो निर्देशः। स्त्रीत्वे इति यावत्। तदाह--अजादीनामित्यादिना। अजाद्यन्तानामित्यर्थः। द्योत्ये इति। उक्तरीत्या स्त्रीत्वस्य प्रातिपदिकार्थत्व#आदिति भावः। उक्तं च भाष्ये-"स्त्रियां यत्प्रातिपदिकं वत्र्तते, तस्माट्टाबादयो भवन्ति स्वार्थे" इति। टाप्स्यादिति। "प्रत्ययः", "परश्चे"त्यधिकृतम्। कस्मात्परो भवतीत्याकाङ्क्षायां संनिधानादजादिभ्योऽदन्ताच्चेति बोध्यम्। नन्वजादिगणे "अज", "अ()आ" इत्याद्यदन्तपाठो व्यर्थः, अदन्तत्वादेव सिद्धेरित्यत आह--अजाद्युक्तिरिति। "वयसि प्रथमे" "जातेरस्त्रीविषया"दित्यादिवक्ष्यमाणस्य ङीपो ङीषश्च अदन्तटाबपवादस्य बाधनार्थमजादिग्रहणमित्यर्थः। एवंच अदन्तटाबपवादौ ङीप्ङीषौ, तयोरप्यजादिटाबपवाद इति फलति। अजशब्दश्छागजातौ वर्तते। अजा छागी तुभच्छागबस्तच्छगलका अजे" इत्यमरः। अजशब्दाट्टाप्, टपावितौ। सवर्णदीर्घः। व्यपदेशिवत्त्वादजान्तत्वम्। अत इति। "उदाहरणं वक्षयते" इति शेषः। खट्वेति। खट काङ्क्षायाम्" "अशू प्रुषिलटिकणिखटिविशिब्यः क्वन्"। खट्वशब्दोऽदन्तः। तस्माट्टापि सवर्णदीर्घः। "शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः" इत्यमरः। ननु "प्रत्ययः", "परश्चे"त्यनुवृत्तौ दिग्योगपञ्चम्या युक्तत्वादजादिभ्योऽतश्च टाप्स्यात्स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः, तथाच "अजाद्यतः" इति षष्ठ()आश्रयणमयुक्तमित्यत आह--अजादिभिरिति। "अजाद्यत" इति षष्ठीमाश्रित्य अजादीनामदन्तस्य च वाच्ये स्त्रीत्वे टाबित्येवमजादिभिः स्त्रीत्वस्य विशेषणादित्यर्थः। पञ्चाजीति। पञ्चानामजानां समाहार इति विग्रहे "तद्धितार्थ" इत्यादिना द्विगुः। " अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति स्त्रीत्वम्। "द्विगोः" इति ङीप्। "यस्येति चे"त्यकारलोपः। नन्वत्र समासेऽजशब्दसत्त्वात्तद्वाच्यमेव स्त्रीत्वमित्यत आह-अत्रेति। हि=यतोऽत्र =पञ्चाजशब्दे समासार्थभूतो यः समाहारस्तन्निष्ठं स्त्रीत्वं पञ्चाजेति समुदायस्य वाच्यं नत्वजशब्दस्य, अतोऽत्र न टाबित्यर्थः। नचोक्तरीत्या तदन्तविधिसत्त्वादजशब्दान्तस्य पञ्चाजेति समासस्य ग्रहणात्तद्वाच्यत्वं स्त्रीत्वस्येति वाच्यं, सत्यपि तदन्तविधावजादीनां श्रुतत्वेन स्त्रीत्वस्य तद्विशेषणताया एव न्याय्यत्वात्। "अजादिभ्यष्टापस्त्रीत्वेद्योत्ये" इति व्याख्याने तु स्त्रीत्वस्य अजादिशब्दवाच्यत्वाऽलाभात्समाहारनिष्ठमपि स्त्रीत्वमादाय टाप्स्यादिति भावः। अथाजादीनुदाहरति--अजेत्यादिना। एडकेति। "मेढ्रोरभ्रोरणोर्णायुमेषवृष्णाय एडके" इत्यमरः। अस्य स्त्रीत्वे कोसान्तरं मृग्यम्। अ()ओति। "वाम्य()आआ वडव#आ" इत्यमरः। चटकेति। चटकः पक्षिजातिविशेषः। अस्य जातिशब्दस्य स्त्रीत्वं मृग्यम्। अमरस्तु "चटकः कलविङ्कः स्यात्तस्य स्त्री चटका" इत्याह। मूषिकेति। "चुचुन्दरी गन्धमूषी दीर्घदेही तु मूषिका" इत्यमरः। एषु जातीति। अजादिपञ्चसु "जातेरस्त्री"ति ङीष् प्राप्तः स अजादिटापा बाध्यत इत्यर्थः। बालादयः प्रथमवयोवचनाः, तत्र होढादित्रयस्य प्रथमवयोवाचित्वे कोशो मृग्यः। एष्विति। बादिपञ्चसु "वयसि प्रथमे" इति ङीप् प्राप्तः सोऽजादिटापा

बाध्यत इत्यर्थः।

सम्भस्त्रेति। "पाककर्णे"ति सूत्रभाष्ये पठितमिदं वार्तिकमर्थतः संगृहीतम्। "सम्" "भस्त्र" "अजिन" "शण" "पिण्ड" एतेभ्य परो यः फलशब्दस्तस्मादपि "पाककर्णे"ति ङीष् न भवति, किंतु टाबेवेत्यर्थः। सम्फलेति। समृद्धानि फलानि यस्या इति विग्रहः। भस्त्रफलेति। भस्त्रेव फलानि यस्या इति विग्रहः। "भस्त्रा चर्मप्रसेविका" इत्यमरः। ननु भस्त्राशब्दस्य नित्यस्त्रीत्वाद्भाषितपुंस्कत्वाऽभावात् "स्त्रियाः पुंव"दिति पुंवत्त्वस्याऽप्रसक्तेः कथं ह्रस्व इत्यत आह--ङ्यापोरिति। "ङ्यापोः संज्ञाच्छन्दसोर्बहुल"मिति ह्रस्व इत्यर्थः। अजिनफला, शणफसा, पिण्डफला-ओषधिविशेषसंज्ञाः।

सदच्काण्ड। अयमपि पाककर्णे"ति सूत्रपठितवार्तिकार्थसङ्ग्रहः। "सत्" "अच्""काण्ड""प्रान्त""शत""एक"--एतेभ्यः परो यः पुष्पशब्दस्तस्तमादपि "पाककर्णे"ति ङीष् न भवति, किन्तु टाबेवेत्यर्थः। सत्पुष्पेति। सन्ति पुष्पाणि यस्या इति विग्रहः। अच इति लुप्तनकारोऽञ्चुधातुर्गृह्यत इत्यभिप्रेत्य उदाहरति--प्रक्पुष्पेति। प्राञ्चिपुष्पाणि यस्या इति विग्रहः। प्रत्यक्पुष्पेति। प्रत्यञ्चि पुष्पाणि यस्या इति विग्रहः। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एक पुष्पा।

शूद्रा च। "अजाद्यतः" इति प्रकृतसूत्रे पठितं वार्तिकमेतत्। शूद्रजातिर्वाच्या चेदमहत्पूर्वाः शूद्रशब्दः स्त्रियां टापं लभते। जातिलक्षणङीषोऽपवादः। शूद्रात् स्वभार्यायां विधिनोढायामुत्पन्ना स्त्री शूद्रा। "जाति"रित्यस्य प्रयोजनमाह-पुंयोगे त्विति। शूद्रस्य स्त्रीत्येव पुंयोगात्स्त्रियां वृत्तौ जातिवाचित्वाऽभावान्न टाप् किन्तु "पुंयोगादाख्याया ङीषेवेत्यर्थः। महाशूद्रीति। महती च सा शूद्रा चेति विग्रहः। कर्मधारयः "पुंवत् कर्मधारये"ति पुंवत्त्वम्। अत्र महत्पूर्वत्वान्न टाप्। किन्तु जातिलक्षणङीषेव। "आभीरी तु महाशूद्री जातिपुंयोगयोः समा"इत्यमरः। नृपाच्छूद्रायामुत्पन्ना उग्रा, तस्या ब्राआह्मणादुत्पन्नः आभीरः। स्त्री चेदाबीरी। अत्र जातीग्रहणस्य, अमहत्पूर्वग्रहणस्य च प्रयोजनविचारः शब्देन्दुशेखरे भाष्यप्रदीपोद्द्योते च स्फुटः। क्रुञ्चेति। क्रुञ्चशब्दः चकारान्ताः "ऋत्विक"इत्यादिना क्विबन्तः पक्षिजातिविशेषे वर्तते। "यत्क्रोञ्चमिथुनादेकमवधीः काकममोहित"मिति रामायणे। उष्णिहशब्दो हकारान्तश्छन्दोविशेषे "ऋत्विक्ित्यादिना क्विन्नन्त एव। देवविश्शब्दः शकारान्तः गणविशेषात्मकमरुत्सु वर्तते "मरुतो वै देवानां विशः"इति श्रुतेः। एतेषामदन्तत्वाऽभावादप्राप्ते टापि तद्विधानार्थमजादिषु पाठः।"ङ्याप्प्रातिपदिकात्" इति सूत्रभाष्ये त्वेषां त्रयाणामदन्तत्वमास्थितमिति ""वष्टि भागुरिरल्लोप"मिति श्लोकव्याख्यावसरे प्रपञ्चितमनुपदमेव। ज्येष्ठेति। यदा ज्येष्टादिशब्दाः प्रथमोत्पन्नादौ वर्तन्ते तदाऽदन्तत्वादेव टाप् सिद्धः। यदा तु ज्येष्ठस्य स्त्रीत्यादिविवक्षा तदापि पुंयोगलक्षणं ङीषं बाधित्वा टाबर्थमिह पाठ इत्यर्थः। कोकिलेति। कोकिलशब्दस्य जातावपि जातिलक्षणङीषं बादित्वा टाबर्थमिह पाठ इत्यर्थः। मूलान्नञ इति। "पाककर्णे"ति सूत्रे पठितं वार्तिकमेतत्। नञः परो यो मूलशब्दस्तस्मात् "पाककर्णेति"ङीष् न भवति, किन्तु टाबेवेत्यर्थः। अमूलेति। अविद्यमानं मूलं यस्या इति विग्रहे "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः"इति बहुव्रीहिः। अत्र "सम्भस्त्रेति,सदच्काण्डेति, मूलान्नञ इति च वार्तिकत्रयं""पाककर्णे"ति सूत्रभाष्यपठितमपि फले विशेषाऽभावादजादिगणे मूवे प्रपञ्चितम्। न चैतान्यजाद्यन्तर्गणसूत्राणीति भ्रमितव्यम्। अजादिराकृतिगणः। तेन "न मु ने" इति सूत्रभाष्ये "टायामादेश" इति भाष्यप्रयोगः सिद्धः। अत एव च पूर्वमीमांसायां द्वितीयस्य प्रथमपादे "स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वा"दिति स्तुतशस्त्रीधिकरणे "वशावद्वा गुणार्थं स्या"दिति गुणसूत्रव्याख्यावसरे शाबरभाष्यभट्टवार्तिकयोः "छागाय वपाया"इत्यूहानुक्रमणं सङ्गच्छते। अत एव च ब्राह्मीमासायां प्रथमस्य चतुर्थपादे "चमसवदविशेषा"दित्यधिकरणे शाङ्करभाष्यवाचस्पत्ययोरजायां छागेति टाबन्तः प्रयोग उपपन्नः। अन्यथा जातिलक्षणङीष्प्रसङ्गादित्यास्तां तावत्। "ऋन्नेभ्यः" इति सूत्रमजन्तस्त्रीलिङ्गाधिकारे प्रसङ्गाद्व्याख्यातम्, इह तु सूत्रक्रमात्पुनस्तदुपन्यासः।

तत्त्व-बोधिनी

अजाद्यतष्टाप् ४०४, ४।१।४

अजाद्यतः। अजशब्द आदिर्यस्येति बहुव्रीहिः। अच् आदिर्यस्येति तु नाऽर्थः, "ऋची"ति निर्देशात् गणपाठसामर्थ्याच्च। "अ"दिति न स्वरूपग्रहणम्, "सङ्ख्यायं"इति लिङ्गात्, अजादिभ्यः पृथक्पाठसामर्थ्याच्च। इह "ङ्याप्प्रातिपदिका"दित्यधिकारेऽपि ङ्यापौ न संबध्येते, इहैव तयोर्विधेयत्वात्, अपि तु प्रातिपदिकमेव। तच्चाऽकारणे विशेष्यते॥ विशेषेण च तदन्तत्वालाक्भः, तदाह---अजादीनामकारान्तस्य चेति। सूत्रे "अतः"इति षष्ठी। तदर्थश्च वाच्यवाचकभावः। "स्त्रिया"मिति तु धरमप्रधाने निर्देश इत्याशयेनाह---वाच्यं यत्स्त्रीत्वमिति। एतच्च "लिङ्गं प्रातिपदिकार्थ"इति पक्षाभिप्रायेणोक्तम्। "कस्यमाद्भवती"त्याकाङ्क्षायां संनिधानादजादिभ्योऽकारान्ताच्चेति बोध्यम्। "इको यणची"त्यत्र कस्मादचि पर इत्याकाङ्क्षायामिक इति यथा। टापः पकारः स्वरार्थः, "औङ आपः", "आङि चापः", "याडापः", इत्यादौ सामान्यग्रहणार्थश्च। तदविधातार्थष्टकारः। "आ"बित्युक्ते हि तदनुबन्धपरिभाषया "औङ् आपः"इत्यादावयमेव गृह्रते, डाप्चापोस्तु ग्रहणं न स्यात्। नन्वत इत्येव सिद्धे अजादिग्रहणं व्यर्थम्, नच "क्रुञ्चा""उष्णिहा" "देवविशे"त्यादिषु हलन्तत्वादप्राप्ते विध्यर्थं तदिति वाच्यं, तथा सति "क्रुञ्चे"त्यादिरेव गृह्रत, न त्वजादिः। अतो व्याचष्टे--अजाद्युक्तिर्ङीशषो ङीपश्चेति। खट्वेति। "खट काङ्क्षायाम्" "अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन्"। नन्वचेतनानां खट्वादिशब्दानां कथं लिङ्गव्यवस्थेति चेत्। उच्यते--लोकप्रसिद्धं स्तनाद्यवयवसंस्थानविशेषात्मकं लिङ्गं न व्याकरणे आश्रीयते, दारा" नित्यादौ नत्वाऽभावपर्सङ्गाक्, तटस्तटी तटमित्यादौ यथायथं लिङ्गत्रितयनिबन्धनकार्याणामसिद्धिप्रसङ्गाच्च, किन्तु पारिभाषिकमेव लिङ्गत्रयम्। तच्च केवलान्वयि। "अयमर्थः""इयं व्यक्तिः""इदं वस्त्वि"ति शब्दानां सर्वत्राऽप्रतिबग्धप्रसरत्वात्।तत्र कश्चिच्छब्द एक()स्मल्लिङ्गे शक्तः कश्चिद्द्वयोः वकश्चिश्रिष्विति लिङ्गानुशासनादिभ्यो निर्णेयम्। कुमारब्राआह्णादिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः, लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे। कथमन्यथा कुमी कुमार इत्यादयः प्रयोगा व्यवतिष्ठेरन्। "करेणुरिभ्यां स्त्री नेभे"इत्यमरस्याप्।यमेवार्थः। नन्वेवं "पशुने"ति पुंस्त्वं विवक्षितमिति मीमांसकोद्घोषः कथं योज्यः()। पारिभाषिकस्याऽव्यावर्तकतया तद्विवक्षाया अकिञ्चित्करत्वात्। ल#औकिकस्य तु लिङ्गस्य पशिशब्दादप्रतीतेरिति चेत्। अत्राहुः--"छागो वा मन्त्रवर्णा"दिति षष्ठान्त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यः, छागशब्दस्य लौकिकपुंस्त्वविंशिष्टपारिभाषिके शक्तत्वादिति। तच्च जातित्रयमित्येक। उक्तं च हरिणा---"तिरुआओ जातय एवाताः केषांचित्समवस्थिताः।अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः"। भाष्ये तु प्राकारान्तरमुक्तम्---"संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः। संस्त्याने स्त्यायतेर्ड्रट् स्त्री, सूतेः सप् प्रसवे पुमान्॥ उभयोरन्तरं यच्च तदङावे नपुंसकम्॥"इति। अस्यायमर्थः--संस्त्यानं स्त्री, सत्त्वरजस्तमोलक्षणानां गुणानामपचयः। प्रसवो गुणानामुपचयः। स च पुमान्। सूतेर्धातोः सप्--सकारस्य पकारादेश इत्यर्थः। औणादिकोम्सुन्प्रत्ययो ह्यस्वश्च बाहुलकादिति तैयटः। "पूञो डुम्सुन्ि ति माधवः। तयोरुपचयापचययोरभावे सति यदुभयोरन्तरं=सदृशं तन्नपुंसकं। "नम्राण्नपा"दिति निपातनादिति भावः। तथाऽवस्थितिमात्रं नपुंसकसम्। अत एवाविशब्दाश्च शुक्लादिशब्दवद्धर्मे धर्मिण च वर्तन्ते। स्वकृतान्तत इति। वैयाकरणसिद्धान्तत इत्यर्थः। "कृतान्तौ यमसिद्धान्तौ"इत्यमरः। पञ्चाजीति। पञ्चानामजानां समाहार इत#इ "तद्धितार्थे"त्यादिना द्विगुः। "अकारान्तोत्तरपद"इति स्त्रीत्वे "द्विगो"रिति ङीप्। न चात्र प्रत्ययविधौ तदन्तविधिविरहादेव टापोऽप्रवृत्तौ ङीबेव स्यादिति वाच्यम्, अमहत्पूर्वग्रहणेनानुपसर्जनाधिकरेण च स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनाट्टाप्प्राप्तेः सत्त्वात्। समासार्थसमहारनिष्ठमिति। नन्वजहत्स्वार्थायां वृत्तौ समाहारोऽप्यजाद्यर्थ एवेति चेन्मैवम्। तथापि तस्य पदान्तर समाभिव्याहारपेक्षया बहिरङ्गत्वात्। टाब्विधेस्त्वन्तरङ्गे चरितार्थत्वात्। कथं तर्हि परमाजेति चेत्, प्रागुत्पन्नस्यैव टापस्तत्र श्रवणात्। "अत्यजा"निरजे त्यत्र त्वदन्तत्वप्रयुक्तष्टाबित्यवेहि। नच "पञ्चाजी"त्यत्रापि तथास्त्विति वाच्यं, "द्विगो"रिति ङीपै बाधितत्वात्ष। चटकेति। न

चाऽत्र "प्रत्ययस्था"दितीकारः शङ्क्यः, "चटकाया ऐर"गिति लिङ्गादिहैव निपातनाद्वा तदपर्वृत्तेः। एवं च क्षिपकादिषु "चटके"ति पठनं नाऽतीवावश्यकमिति नव्याः। मूषिकेति। "वृश्चिकृषोः किकन्नि"त्यधिकारे "मुषेर्दीर्धश्चे"ति किकनि इकारमध्यो मूषिकाशब्दः। यस्तु "मूष स्तेये"इति दीर्घोपधात्संज्ञायां क्वुनि मूषकशब्दो माधवेनोक्तस्ततोऽप्ययं टाप्। प्रत्ययस्थादितीत्वं तु विशेषः। केचित्तु क्वुन्नन्तोऽसावजादिगणे पाठं न प्रयुङ्केः,गणे तत्पाठस्य जातिलक्षणङीष्वाधनार्थत्वात्संज्ञायाश्चषऽजादिकत्वात्। तथा चादन्तत्वादेव क्वुन्नन्ताट्टप्सिध्यतीत्याहुः। तच्चिन्त्यम्। "व्याघ्री"त्यादिवत्संज्ञातवेऽपि जातित्वानपायात्।

सम्भस्त्राजिनशणपिण्डभ्यः फलात्। भस्त्रेव फलानि यस्या इति विग्रहः। ङ्यापोरिति। एतच्च "फल निष्पत्ता"विती धातौ माधवग्रन्थे स्थितम्। "पाककर्णे"त्यत्र भाष्ये तु दीर्घ एव दृश्यते।

सगच्काण्डप्रान्तशतैकेभ्यः पुष्पात्। सदच्काण्डेति। "सत्प्राक्काण्डे"ति पाठो नादर्तव्य इति ध्वनयुन्नदाहरति---प्रत्यक्पुष्पेति। अत्र नव्याः--"संभस्त्रे"त्यादि वचनद्वयं, "मूलान्नञः"इति वक्ष्यमाणं च "पाककर्णे"त्यनेनपब्राआप्तस्य ङीपो निषेधार्थ तत्रैव सूत्रे भाष्ये पठितमपि फले विशेषाऽभावादिहैव ग्रन्थकारैः पठितम्।न चैतावताऽजाद्यन्तर्गणसूत्राणीति भ्रमः कार्यः, तथात्वे मानाऽभावात्। किन्तु वार्तिकान्येवेमानीत्याहुः।

शूद्रा चाऽमहत्पूर्वा जातिः॥ शूद्रा चेति। शूद्रशब्दष्टापमुपादयति जातिश्चेत्। महत्पूर्वस्तु न। जातिश्चेदितीहपि संबध्यते। तेन महती शूद्रा "महाशूद्रे"ति भवत्येव। पुंयोगेत्विति। पुंयोगश्च दाम्पत्यरूप एवेति न नियमः, किन्तु जन्यजनकभावोऽपि गृह्रते। तथा च स्मृतिः--"वैश्याशूद्योस्तु राजन्यान्माहिष्योग्रौ सुतौ"इति। महीशूद्रीति। "आभीरी तु महाशूद्री जातिपुंयोगयोः सने"त्यमरः। इह "अमहत्पूर्वे"ति व्यर्थं, महाशूद्रशब्दो हि समुदित एवाऽऽभीरत्वजातौ वर्तते। तत्राऽवयवस्यानर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाऽभावने टापः पर्सक्त्यभावात्। न, तदन्तविधिज्ञापनाय तदिति वाच्यम्, अनुपसर्जनाधिकारेणैव तदन्तविधिज्ञापनादिति दिक्। अत्र नव्याः--"शूद्रा चे"त्यादिवचनम् "अजाद्यत"इसि सूत्रस्थं वार्तिकमेव, नत्विदं गणसूत्रमित्याहुः। क्रुञ्चेत्यादि। त्रयोऽमी हलन्ता इत्येके। भाष्ये तु "क्रुञ्चानालभेत""उष्णिहककुभौ"इत्यादिप्रयोगमुदाह्मत्याऽन्ता अपि स्वीकृताः। पचाद्यचा इगुपधलक्षणेन कप्रत्ययेन च यथासंभमदन्तत्वात्। पुंयोगेऽपीति। यदा ज्येष्ठादयः पर्थमजातादौ वर्तन्ते तदाऽदन्तत्वादेव टाप्सिद्धः। यदा तु ज्येष्ठस्य स्त्रीत्वादिविवक्षा तदा पुंयोगलक्षणो ङीष्प्राप्तः--सोऽप्यनेन बाध्यते इति सूचयितुमपिशब्दः।

मूलान्नञः।मूलान्नञः। नञः किम्(), शतमूली। अमूलेति। ओषधिजातिरियम्।

---

सूत्रम्

काशिका-वृत्तिः

ऋन्नेभ्यो ङीप् ४।१।५

ऋकारान्तेभ्यो नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति ङकारः सामान्यग्रहणार्थः। कर्त्री। हर्त्री। दण्डिनी। छत्रिणी।

लघु-सिद्धान्त-कौमुदी

ऋन्नेभ्यो ङीप् २३३, ४।१।५

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री गौरीवत्॥ भ्रूः श्रीवत्॥ स्वयम्भूः पुंवत्॥

न्यासः

ऋन्नेभ्यो ङीप्। , ४।१।५

"ङकारः सामान्यग्रहणार्थः" इति। असति हि तस्मिन् "ङ्याप्प्रातिपदिकात्" ४।१।१ इत्यत्र ङीति ङीग्ङीषोरेव ग्रहणं स्यात्। न ङीपः॥

बाल-मनोरमा

ऋन्नेभ्यो ङीप् ३०४, ४।१।५

ऋन्नेभ्यो ङीप्। ऋतस्च नाश्चेति द्वन्द्वः। "स्त्रिया"मित्यधिकृतम्। "ङ्याप्प्रातिपदिकात्" इत्यतः प्रातिपदिकग्रहणमनुवृत्तमृन्नकारैर्विशेष्यते। अतस्तदन्तविधिस्तदाह--ऋदन्तेभ्य इत्यादिना। ङपावितौ। क्रोष्टृ ई इति स्थिते यणि क्रोष्ट्रीशब्दात्सुबुत्पत्तिः। गौरीवद्रूपाणीत्याह--क्रोष्टीत्यादि। इत्युदन्ताः। अथ ऊदन्ताः। वधूर्गौरीवदिति। "वहो धश्चे"त्यूप्रत्ययः, हस्य धश्च। धात्ववयवोवर्णाऽभावान्नोवङ। ऊकारस्य यण्वकार इत्यादिविशेषस्तु सुगम इति भावः। भ्रूः श्रीवदिति। "भ्रमेश्च डूः" इति डूप्रत्ययान्तोऽयम्। "अचि श्नुधातुभ्रुवा"मित्युवङित्यादिविशेषस्तु सुगम इति भावः। सु=शोभना भ्रूर्यस्याः सा सुभ्रूः। अस्त्रीप्रत्ययान्तत्वात् "गोस्त्रियो"रिति ह्रस्वो न भवति। नेयङुवङ्स्थानावस्त्री ति भ्रूशब्दस्य तदन्तस्य च निषेधान्नदीत्वं न। ततश्च "अम्वार्थे"त्यादि नदीकार्यं नेत्यभिप्रेत्याह--हे सुभ्रूरिति॥ कथं तर्हीति। यदि सुभ्रूशब्दे नदीकार्यं न स्यात्तदा "हा पितः क्वासि हे सुभ्रु" इति कथं भट्टिराहेत्यर्थः। रावणेन सीतापहारोत्तरं रामविलापोऽयम्। हे सुभ्रु त्वयाऽहं हापितोऽस्मि विधिनेत्यर्थः। "हापित" इत्यस्य त्याजित इत्यर्थः। प्रमाद इति। "अम्बार्थे"ति ह्रस्वस्य करणादिति भावः। बहव इति कतिपये सामान्ये नपुंसकत्वमाश्रित्य कथं"चित्समादधुः। खलपूः पुंवदिति। खलपवनस्य उत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियां वर्तमानत्वाऽभावेन नित्यस्त्रीत्वाऽभावान्नदीत्वं नेति भावः। पुनर्भूरिति। "पुनर्भूर्दिधिषूरूढाद्विः" इत्यमरः। तस्य "नेयङुवङि"ति नेषेधमाशङ्क्याह-दृन्करेतीति। "अम्शसोःपूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा "दृन्करे"ति यणिति मत्वाह--पुनर्भ्वं पुनर्भ्वाविति। पुनर्भ्वाः। नद्यन्तत्वान्नुटि दीर्घे पुनर्भूनामिति स्थिते रेफान्नकारस्य भिन्नपदस्थत्वात् "अट्कुप्वा"ङित्यप्राप्ते-।

तत्त्व-बोधिनी

ऋन्नेभ्यो ङीप् २६६, ४।१।५

ऋन्नेभ्यो। ऋत्-ऋकारः, नो--नकारः। प्रयोगापेक्षं बहुत्वम्। प्रातिपदिकविश्षणात्तदन्तविधि-। "स्त्रिया"मिति चाधिक्रियते, तदाह-ऋदन्तेभ्ये इत्यादि। क्रोष्ट्रीति। "स्त्रियां चे"त्येतस्ताङ्गत्वादङ्गेन प्रत्ययस्याक्षेपाद्विभक्तौ परत एवेह तृज्वद्भावस्ततो खीबिति बोध्यम्। भ्रूरिति। भ्रमतीति भ्रूः। "भ्रमस्चे डूः"इति भ्रमतेर्डूप्रत्ययः। डित्त्वाट्टिलोपः। हे सुभ्रूरिति। डूप्रत्ययस्याऽस्त्रीप्रत्ययत्वाद्गोस्त्रियोरिति ह्रस्वो न भवति। "नेयङुवङ्स्थाना"विति नदीसंज्ञानिषेधात्संबुद्धिह्रस्वोऽपि नेति भावः। ह्रस्वोऽत्रानुपपन्न इत्याक्षिपति----कथं तर्हीति। "विमानना सुभ्रु पितुर्गृहे कुतः"इति कालिदासप्रयोदोऽप्यनुपपन्न इति बोध्यम्। बहव इति। केचुत्तु--"नेयहुवं"ङिति सूत्रे"वामी"त्यतो वाग्रहणमपकृष्य व्यवस्थितविभाषां चाश्वित्यसमादधिरे। तदसत्। तथा सतीह "न"ञ्ग्रहणं "वामी"त्युत्तरसूत्रं च व्यर्थं स्यात्, "वेयङुवङ्स्थानौ"इत्येव वक्तुं शक्यत्वात्। अन्ये तु--"सामान्ये नपुंसक"मिति कथञ्चित्समादधुः।

---

सूत्रम्

काशिका-वृत्तिः

उगितश् च ४।१।६

उगिति यत्र सम्भवति यथाकथंचित् तदुगिच्छाब्दरूपं, तदन्तात् स्त्रियां ङीप् प्रत्ययो भवति। भवती। अतिभवती। पचन्ती। यजन्ती। धातोरुगितः प्रतिषेधो वक्तव्यः। उखास्रत्। पर्णध्वत् ब्राह्मणी। अञ्चतेश्च उपसङ्ख्यानम्। प्राची। प्रतीची। उदीची।

लघु-सिद्धान्त-कौमुदी

उगितश्य १२५३, ४।१।६

उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात्। भवती। भवन्ती। पचन्ती। दीव्यन्ती॥

न्यासः

उगितश्च। , ४।१।६

"यथाकथञ्चित्" इति। येन केनचित् प्रकारेण। यदि वर्ण उगित् सम्भवति, यदि प्रत्ययः, अथापि प्रातिपदिकम्, सर्वर्था यत्रैषामन्यतमः सम्भवति तत् "उगिच्छब्दरुपम्()" इति। अनेनोगिच्छब्दरूपस्य विशेषणं न प्रातिपदिकस्येति दर्शयति। यदि प्रातिपदिकस्यैव विशेषमं स्यादिहैव स्यात्-- भवती, महतीति; अर्वतीत्यत्र तु न स्यात्, "अर्वणस्त्रसावनञः" ६।४।१२७ इति नकारस्य त्रादेशः कृत इति वर्ण एव तकार उगित्, न प्रातिपदिकम्; गोमतीत्यत्र च न स्यात्, अत्रापि हि मतुप्प्रत्यय एवोगित्, न प्रातिपदिकम्; तस्मादुगिच्छब्दस्यैव विशेषणं युक्तमित्यभिप्रायः। तच्चोगिच्छब्दरूपं प्रातिपदिकस्य विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह-- "तदन्तात्" इत्यादि। यदि तर्ह्युगिच्छब्दरूपान्तात् प्रातिपदिकान्ङीब्भवत्येवं सति भवतीति न सिध्यति, न ह्यत्रोगिच्छब्दरूपान्तं प्रातिपदिकं भवति, भवच्छब्दान्तादुगितः प्रातिपदिकादन्यस्य तदन्तस्याभावात्? नैष दोषः; व्यपदेशिवद्भावात् तदन्ताद्भविष्यति। ननु च "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (शाक।प।६५) इति व्यपदेशिद्भावेन नात्र भवितव्यम्? नैतदस्ति; न ह्युगिदिति प्रातिपदिकग्रहणम्, किं तर्हि? प्रातिपदिकाप्रातिपद#इकग्रहणम्; वर्णप्रत्यययोरप्युगितोग्ररहणात्। "पचन्ती, यजन्ती" इति। शत्रन्तान्ङीप्। "धातोरुगितः प्रतिषेधः" इति। प्रतिपाद्यत इति शेषः। "अञ्चतेश्चोपसंख्यानम्" इति। अञ्चतेर्ङीप्प्रत्ययस्य प्रतिपादनं कत्रत्व्यमित्यर्थः। तत्रेदमुभयत्र प्रतिपादनम् --- "पादोऽन्यतरस्याम्" ४।१।८ इति सूत्रे "अन्यतरस्याम्" इति योगविभागः करिष्यते, स च "उगितश्च" ४।१।६ "वनो र च" ४।१।७ "पादोऽन्यतरस्याम्" ४।१।८ इत्येषां त्रयाणामपि योगानां शेषः। व्यवस्थितविभाषा च सा। तेन प्रातिपदिकादुगितच्छब्दरूपान्ताद्धातूगिच्चब्दान्तादञ्चतेरेव नित्यं ङीब्भवति, ततोऽन्येभ्यस्तु न भवत्येवेति। अन्ये त्वन्यथा प्रतिपादनं कुर्वन्ति-- उखारुआत्, पर्णध्वदिति। क्रियाकारकसम्बन्धमात्रं विवक्षितम्, न स्त्रीत्वमिति ङीब्न भवति। स्त्रीशब्दसामानाधिकरण्यात्तु स्त्रीत्वप्रतीतिरापद्यते। न च "स्त्रीयाम्" ४।१।३ इत्यत्र स्त्रीसामानाधिकरण्यपक्षः स्थितः। प्राचीत्यादिषु तु स्त्रीत्वं विवक्षितम्, तेनेह भवतीकार इति। "उखारुआत्, पर्णध्वत्" इति। उखेन रुआंसते, पर्णानि ध्वंसत इति "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति क्विप्, "अन्येषामपि दृश्यते" ६।३।१३६ इत्युखस्य दीर्घत्वम्। प्राचीति प्रपूर्वादञ्चतेः क्विन्, "अचः" ६।४।१३८ इत्यकारलोप), "चौ" ६।३।१३७ इत्युपसर्गस्य दीर्घत्वम्॥

बाल-मनोरमा

उगितश्च ४४९, ४।१।६

उगितश्च। उक् प्रत्याहारः। उक् इद्यस्य स उगित्।"उगित" इति पञ्चम्यन्तम्, ते प्रातिपदिकादित्येतद्विशेष्यते, तदन्तविधिः। "उगिद्वर्णग्रहणवर्ज"मित्युक्तेः "समासप्रत्ययविधौ" इति प्रतिषेधो न। पूर्वसूत्रान्ङीबित्यनुवर्तते। तदाह-उगिदन्तादिति। उगिद्द्विविधं, प्रातिपदिकं प्रत्ययश्च। तत्र प्रातिपदिकमुदाहरति--भवतीति। सर्वादिगणे "भवतु" इत्यव्युत्पन्नं प्रातिपदिकं पठितं, तस्य व्यपदेशिवत्त्वे उगदन्तत्वान्ङीप्। ङपावितौ।

"आच्छीनद्योर्नुम्""शप्श्यनोर्नित्य"मिति नुम्न, शत्रन्तत्वाऽभावात्| "उगिदचा"मित्यपि न सर्वनामस्थानत्वाऽभावात्| अथ द्वितीयमुगितमुदाहरति-पचन्तीति| पचेर्लटः शतरि शषि पररूपे पचच्छब्दः| तत्र शतृप्रत्यय उगित्, तदन्तं पचदिति प्रातिपदिकमिति तस्मान्ङीपि "शप्श्यनोर्नि"मिति नुमिति भावः| यदि तु सर्वादिगणे पठितं भवतु इत्येतत् "भातेर्डवतुः"इति व्युत्पाद्यते, तदा उगित्प्रत्ययान्तस्यैवोदाहरणं बोध्यम्| भूधातोः शतरि शपि ऊकारस्य गुणेऽवादेशे भवच्छब्दान्ङीपि तु, "शप्श्यनोर्नित्य"मिति नुमि भवन्तीति रूपम्| नच भवच्छब्दस्याऽप्युत्पन्नत्वे तस्य कथं व्यपदेशिवत्त्वेनोगिदन्तत्वं, "व्यपदेशिवद्भावोऽप्रातिपदिकेने"ति वचनादिति वाच्यं, प्रातिपदिकस्य तत्तत्स्वरूपेण ग्रहण एव तत्प्रवृत्तेः| "उगिदचामिति सूत्र" इत्यादिग्रन्थो हलन्ताधिकारे गोमच्छब्दनिरूपणे व्याख्यातः| तेनेति| अञ्चुव्यतिरिक्तधातोरुगित्कार्याऽभावलाभेनेत्यर्थः| उखेति| उखा=कुण्डी| उखायाः रुआंसते, पर्णाद्ध्वंसतेइति विग्रहः| "पिठरं स्थाल्युखा कुण्ड"मित्यमरः| "रुआंसु ध्वंसु अवरुआंसने"| सुपीत्यनुवृत्तौ "क्विप्चे"ति क्विप्, उपपदसमासः, सुब्लुक्,निदिता"मिति न लोपः, हल्ङ्यादिना सोर्लोपः, "वसुरुआंसु"इति दत्वमिति भावः| स्यादेवेति| "ङी"बिति शेषः| प्राचीति| प्रपूर्वादञ्चतेः "ऋत्विक" इत्यादिना क्विन्, "अनिदिता"मिति नलोपः| उगित्त्वान्ङीप्, "अचः"इत्यकारलोपे "चौ"इति दीर्घः|

तत्त्व-बोधिनी

उगितश्च ४०५, ४|१|६

उगिच्छब्देन प्रातिपदिकं विशेष्यते, विशेषणेन तदन्तविधिः|न च प्रत्ययविधौ प्रतिषेधः शङ्क्यः, "अनुपसर्जना"दित्यनेन स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापनात्, "उगिद्वर्णग्रहणवर्ज"मिति "येन विधि"रिति सूत्र एवोक्तत्वाच्चेत्याशयेनाह--उगिदन्तादिति| अत्रोगित्प्रतिपदिकं, प्रत्ययश्चेति द्विविधं संभवति| आद्ये उगिदन्ते--भवन्तं महान्तं चातिक्रान्तै अतिभवती अतिमहतीत्थदाहरणम्| सर्वादिगणे "भवतु"इति पाठाद्भवच्छब्दस्योगित्त्वव्यपदेशः| महच्छशब्दस्य तु शतृवद्भावात्| न चैवं "प्यपदेशिवद्भावोऽप्रातिपदिकेने"ति निषेधात्केवलाभ्यां भवन्महच्छब्दाभ्यां ङीम्न स्यादिति वाच्यम्| प्रातिपदिकाऽप्रातिपदिकसाधरण्येन शब्दमात्रमुगित्पदाभिधेयमुत्युक्तनिषेधाऽप्रवृत्तेरित्याशयेनोदाहरति---भवन्तीति| द्वितीयमुगिदन्तमुदाहरति--पचन्तीति| पचेर्लटः शतरि "कर्तरि शप्"| यदि तु सर्वादिगणे "भवतु"इति य उगित्पठितः सः "भातेर्डवतु"रिति व्युत्पाद्यते, तदा "भवती"ति द्वितीयोगिदन्तस्याप्युदाहरणं भवत्येव| शत्रन्तात्तु भवतेर्ङीपि "शप्शयनो"रिति नित्यो नुम्| भवन्ती| उखारुआदित्यादि| उखायाः रुआंसते, पर्णेभ्यो ध्वंसते| "रुआंसु ध्वंसु अव रुआंसने" "वस#उरुआंसु"इति दत्वम्|

वनो न हश इति वक्तव्यम्| वनोर च| "व"न्निति प्रत्ययेन तदन्तं प्रातिपदिकं गृह्यते| वन्नन्तेन त्वधिकृत प्रातिपदिकविशेषणात्तदन्तविधिरित्याह--वन्नन्तात्तदन्ताच्चेति| "येन विधिस्तदन्तस्ये"त्यत्र "स्वं रूप"मिति सूत्रात्स्वमित्यनुवर्त्य स्वस्य चेति व्याख्यानादुभयं लभ्यत इथि भावः| यदि तु वन्नन्तमेव व्यपदेशिवद्भावेन वन्नन्तान्तमित्युच्यते, तर्हि "येन विधि"रित्यत्र "स्व"मित्यनुवर्त्य "स्वस्य चे"ति न व्याख्येयम्| न चात्र "व्यपदेशिवद्भावोऽप्रातिपदिकेने"ति निषेधः शङ्क्यः, तस्य प्रातिपदिकत्वाऽभावाच्चेत्याहुः| सामान्यग्रहममिति| सूत्रे "वन" इत्यनुबन्धरहितस्य ग्रहणात्तदनुबन्धपरिभाषा नोपतिष्ठत इति भावः| वन्ग्रहणे वन्नन्तं वन्नन्तान्तं च कथं लभ्यत इत्याशङ्कायामाह--प्रत्ययग्रहणे इत्यादि| तेनेति| वन्नन्तेनेत्यर्थः| तदन्तान्तमपिलभ्यत इति| "स्त्रिया"मित्यधिकारे "ग्रहण वता प्रातिपदिकेने"ति निषेधो न पर्वतते, "अमहत्पूर्वे"त्यादिज्ञापकागिति भावः| अन्ये त्वाहुः--वन्नन्तस्य वस्तुतः प्रातिपदकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वं नास्तीत्युक्तत्वाद्ग्रहणवतेति

निषेधशङ्कैव नास्तीति। सुत्वानमिति। "सुजयोर्ङ्वनिप्"। "अत्यादयः क्रान्ताद्यर्थे" इति समासः। अतिधीवरीति। दधातेः "अन्येभ्योऽपि दृश्यते"इति क्वनिप्। "घुमास्थे"तीत्त्वम्। भाष्ये तु ध्यायतेः क्वनपि संप्रसारणमिति स्थितम्। नस्य रेफादेशे कृतेऽप्येकदेशविकृतस्यानन्यत्वात् "अल्लोपरोऽनः"इति प्राप्नोति, अनो नकारान्तत्वविशेषणात्तु न भवतीति "()आयुवमघोना"मित्यत्रैव व्युत्पादितम्। शर्वरिति। शॄ()धातोः "अन्येभ्योऽपी"त्यनेनैव वनिप्। गुणे कृते रपरत्वे च हशन्तात्परत्वेऽपि हशन्ताद्विहितत्वाभावान्ङीब्रायोरत्र निषेधो न।

बहुव्रीहौ वा॥ बहुव्रीहौ वेति। "अन्यतरस्या"मिति योगविभागदिदं लभ्यते, नत्वपूर्वं वचनमिति वक्ष्यते। बहुधीवरीति। "बहवो धीवानो यस्या नगर्या"मिति विग्रहः। पक्षे डाविति। "डाबुभाभ्या"मिति सूत्रेण। तथाच द्विवचने "बहुधीवर्यौ""बहुधीवानौ""बहुधीवे इति रूपत्रयं भवतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वनो र च ४।१।७

वन्नन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति, रेफश्चान्तादेशः। धीवरी। पीवरी। शर्वरी। परलोकदृश्वरी। ऋन्नेभ्यो ङीप् ४।१।५ इत्येव ङीपि सिद्धे तत्सन्नियोगेन रेफविधानार्थं वचनम्। वनो न हशः। प्राप्तौ ङीब्रौ उभावपि प्रतिषिध्येते। सहयुध्वा ब्राह्मणी।

न्यासः

वनो र च। , ४।१।७

"वनः" इति क्वनिब्वनिपोः प्रत्ययोग्र्रहणम्। अथ "बन षण सम्भवक्तौ" (धा।पा।४६३,४६४) "वनु याचने" (धा।पा।१४७०) इत्याभ्यां "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति विचि कृते यद्रूपं वन्निति निष्पद्यते तत्कस्मान्न गृह्रते यदि ताभ्यां विज् दृश्येत स तु न दृश्यते; अनभिधानात्। "शर्वरी" इति। "शॄ? हंसायाम्" (धा।पा।१४८८), "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति वनिप्,गुणः रपरत्वम्। "परलोकदृ()आरी" इति। दृशस्तेनैव सूत्रेण ३।२।७५ क्वनिप्। "वनोन हशः" इति। क्वचिदिति शेषः। हशः परो यो वनिप् हशन्ताद्धातोर्विहितस्तदन्तात् प्रातिपदिकात् क्वचिन्ङीब्रोफश्चान्तादेशो न भवति। "सहयुध्वा" इति। "युध सम्प्रहारे" (धा।पा।११७३), "दृशेः क्वनिप्" ३।२।९४, "राजनि युधिकृञः" ३।२।९५, "सहे च" ३।२।९६ इति क्वनिप्, "नोपधायाः" ६।४।७, "सर्वनामस्थाने" ६।४।८ इति दीर्घः, "नलोपः प्रातिपदिकान्तस्य" ८।२।७। क्वचित्तु प्रतिषेधो न भवत्येव-- शर्वरीति, अतर् रेफाद्धशः परो वनिप्; अवावरीति, अत्रापि हशन्ताद्धातोर्वनिब्विहितः, तथापि प्रतिषेधो न भवति। "ओणृ अपनयने" (धा।पा।४५४), "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति वनिप्, "विड्()वनोरनुनासिकस्यात्" ६।४।४१ इत्यात्त्वम्, अवादेशः। न च वनो न हश इत्येव {वक्तव्यं कत्र्तव्यम्" इति मुद्रितः पाठः। } वक्तव्यम्; यस्मात् "पादोऽन्यतरस्याम्" (४।१।८) इत्यन्तरस्यांग्रहणमस्यापि योगस्य शेषः। सा च व्यवस्थितविभाषा विज्ञायते। तेन यत्र ङीब्रोफौ नेष्येते तत्र न भविष्यतः॥

बाल-मनोरमा

वनोर च ४५०, ४।१।७

वनोर च। वनः र च इति च्छेदः। "र"इति लुप्तप्रथमाकम्, अकार उच्चारणार्थः। चकारात्ङीप्समुच्चीयते। "वन"इति पञ्चम्यन्तम्। तेन वन्प्रत्ययान्तं तदन्तं च विवक्षितम्। "प्रातिपदिका"दित्यधिकृतम्। तदाह-वन्नन्तादित्यादिना। अन्तादेश इति। "प्रकृते"रिति शेषः। नान्तत्वादेव ङीप्प्राप्तः, तत्संनियोगेन रेफमात्रमिह विधेयम्। सामान्येति।

अनुबन्धविनिर्मुक्त "वन"ग्रहणस्य त्रिष्वपि साधारणत्वादिति भावः।

ननु वन्ग्रहणेन वन्प्रत्ययान्तं तदन्तं च कथं लभ्यत इत्यत आह-प्रत्ययग्रहणे इति। यस्मात्प्रकृतिभूताच्छब्दाद्यः प्रत्ययो विहितः तदादेः=स प्रकृतिभूतः शब्द आदिर्यस्य तस्य , तदन्तस्य=स प्रत्ययोऽन्तो यस्य समुदायस्य, तस्य च ग्रहणम्। प्रकृतिप्रत्ययसमुदायस्य तन्मध्यवर्तिनश्च ग्रहणमित्यर्थः। "तिङ्ङतिङ"इत्यत्र तिङ्ग्रहणेन शबादिविकरणस्यापि ग्रहणार्थं तदादिग्रहणम्। "यस्मात्प्रत्ययविधि"रिति सूत्रे इयं परिभाषा भाष्ये स्थिता। तेनेति। वन्नन्तेन प्रातिपदिकादित्यधिकृतस्य विशेषणात्पुनस्तदन्तविधिलाभावादिति भावः। नचैवं सति वन्नन्तस्य कथं लाभ इति वाच्यं, "यनविधिस्तदन्तस्ये"त्यत्र "स्वं रूप"मित्यतः"स्व"मित्यनुवर्त्य विभक्तिविपरिणामेन स्वस्य चेति व्याख्यानादिति भानः। तदेतदपिशब्देन सूचितम्। वन्नन्तमेव व्यपदेशिवत्त्वेन वन्नन्तान्तमिति केचित्। "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"ति तु "स्त्रिया"मित्यस्मिन्नधिकारे न प्रवर्तते, "शूद्रा चामहत्पूर्वा जातिः"इत्यत्र अमहत्पूर्वेति लिङ्गात्। अथ वन्नान्तान्तमुदाहरति-सुत्वानमिति। "षुञ् अभिषवे" "सुजयोङ्वनिप्" "ह्यस्वस्य पिति कृती"ति तुक्। सुत्वन्शब्दः। सुत्वानमतिक्रान्ता इति विग्रहे "अत्यादयः"इति समासः। सुब्लुकि, ङीप्, नकारस्य रत्वम्, इतिसुत्वरीति रूपम्। अतिधीवरीति। "डुधाञ्धारणपोषणयोः", "अन्येभ्योऽपि दृश्यते"इति भाषायामपि क्वनिप्। "घुमास्था"इति ईत्त्वम्। धीवानमतिक्रान्ता इति विग्रहे "अत्यादयः" इति समासः। ङीब्राश्च, अतिधीवरीति रूपम्। भाष्ये तु "ध्यायतेः क्वनिपि संप्रसारणे "हलः"इति दीर्घ" इति स्थितम्। शर्वरीति। "शृ? हिंसायाम्", "आतो मनिन्क्वनिब्वनिपश्च", "अन्येभ्योऽपि दृश्यते" इति भाषायामपि वनिप्, "सार्वधातुकार्धधातुकयोः" इति गुणः, "वनो र चे"ति ङीब्राश्च। वन्नन्तस्योदाहरणमेतत्। "अतिशर्वरी"ति पाठे तु इदमपि वन्नन्तातन्तस्योदाहरणम्। सुत्वरी, धीवरी, शर्वरीति वन्नन्तस्योदाहरणानि। वनो नेति। पूर्ववद्वन्नन्तं वन्नन्तान्तं च गृह्रते। "हश" इति पञ्चमी, तेन च धातोरित्यधिकृत्य विहितेवनाऽऽक्षिप्तं धातोरित्येतद्विशेष्यते, तदन्तविधिः। ङीबिति रश्चेति चानुवर्तते। तदाह--हशन्तादित्यादिना। विहितविशेषणस्य प्रयोजनं दर्शयन्वन्नन्तोदाहरणं दर्शयितुमाह--ओणृ इत्यादिना। वनिबिति। "अन्येभ्योऽपि दृश्यते इत्यनेने"ति शेषः। आवावेति। ओण् इत्यस्मद्वनिपि "विड्वनोरनुनासिकस्या"दिति णकारस्य आत्वे ओकारस्यावादेशे "अवावन्" शब्दः। स्त्रीत्वस्फोरणाय "ब्राआहृणी"ति विशेष्यम्। अत्र ओण् इति धातोर्हशन्ताद्वन् विहितः, तदन्तत्वान्न ङीब्रात्वे, किंतु राजवद्रूपम्। "हशन्ताद्धातोः परो यो व"न्निति व्याख्याने तु आत्वे सति वनो हशः परत्वाऽभावान्निषेधो न स्यादिति भावः। वन्नन्तान्तमुदाहरति-राजयुध्वेति। राजानं योधितवतीत्यर्थः। भूते कर्मणि क्विबित्यनुवर्तमाने "राजनि युधिकृञः" इति क्वनिप्। कर्मीभूते राजनि उपपदे युधेः कृञ्श्च क्वनिबिति तदर्थः। उपपदसमासे सुब्लुकि राजयुध्वन्शब्दः। अत्र हशो विहितो वन्, तदन्तो युध्वन्शब्दः, तदन्तो राजयुध्वन्शब्दः, अतो न ङीब्राआदेशावित्यर्थः।

बहुव्रीहौ वा। इदं वार्तिकम्। "वनो र चे"ति विधिर्वहुव्रीहौ वा स्यादित्यर्थः। "अनो बहुव्रीहे"रिति निषेधस्यापवादः। बहुधीवरीति। बहवो धीवानो यस्या इति विग्रहः। बहुधीवेति। ङीब्रात्वयोरभावे राजवद्रूपम्। नच बहूनि पर्वाणि यस्याः सा बहुपर्वेत्यत्रापि हीब्रात्वविकल्पः स्यादिति वाच्यम्, "अल्लोपोऽनः" इति उपधालोपयोग्यस्थल एवैतद्वार्तिकस्य प्रवृत्तेर्भाष्ये उक्तत्वात्। बहुपर्वन्शब्दे च "न संयोगाद्वनमन्ता"दित्यचल्लोपनिषेधात्। पक्षे इति। ङीब्रात्वाऽभावपक्षे "डाबुभाभ्या"मिति डाब्वक्ष्यत इत्यर्थः। डपाविती। बहुधीवन्-आ इति स्थिते "टेः" इति टिलोपे बहुधीवाशब्दात्सोर्हल्ङ्यादिलोपे "बहुधीवे"ति रमावद्रूपम्। ङीब्रात्वयोर्डापश्चऽभावेसौ बहुधीवेत्येव रूपम्। ङीब्रात्वयोर्बहुधीवरीति। औजसादिषु तु बहुधीवर्यौ-बहुधीवे बहूधीवानौ इत्यादि रूपत्रयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पादो ऽन्यतरस्याम् ४।१।८

पादः इति कृतसमासान्तः पादशब्दो निर्दिश्यते। पादन्तात् प्रातिपदिकादन्यतरस्यां स्त्रियां ङीप् प्रत्ययो भवति। द्विपात्, द्विपदी। त्रिपात्। त्रिपदी। चतुष्पाद्, चतुष्पदी।

न्यासः

पादोऽन्यतरस्याम्। , ४।१।८

"पाद इति कृतसमासान्तः पादशब्दो निर्दिश्यते" इति। अथ "पद गतौ" (धा।पा।११६९) इत्यस्माण्ण्यन्तात् "अन्येभ्योऽपि दृश्यते" (३।२।१७८) इति क्विपि कृते यत् पादिति रूपं निष्पद्यते रूपं निष्पद्यते तस्य ग्रहणं कस्मान्न विज्ञायते? विज्ञायते यदि पादयतेः क्विब् दृश्येत्, स तु न दृश्यते; अनभिधानात्। "द्विपात्, द्विपदी" इति। द्वौ पादादस्या इति बहुव्रीहिः। "पादस्य लोपः" ५।४।१३८ इत्यनुवत्तमाने "संख्यासुपूर्वस्य" ५।४।१४० इत्यकारलोपः, "पादः पत्" ६।४।१३० इति पद्भावः॥

बाल-मनोरमा

पादोऽन्यतरस्याम् ४५१, ४।१।८

पादो। कृतसमासान्त इति। अन्तलोपात्मके समासान्ते कृते परिशिष्टः पाच्छशब्द इह गृह्रत इत्यर्थः। तदन्तादिति। पाच्छब्दान्तादित्यर्थः। "पाद" इति पञ्चम्यन्तेन "प्रातिपदिका"दित्यधिकृतस्य विशेषणादिति भावः। ङीब्वा स्यादिति। "ऋन्नेभ्यः" इत्यतस्तदनुवृत्तेरिति भावः। द्विपदीति। द्वौ पादौ यस्या इति बहुव्रीहिः। "सङ्ख्यासुपूर्वस्ये"ति पादशब्दान्तस्याऽकारस्य लोपः। ङीपि भत्वात् "पादः पत्"। द्विपदिति रूपम्। ङीबभावे तुद्विपादिति।

तत्त्व-बोधिनी

पादोऽन्यतरस्याम् ४०६, ४।१।८

द्विपादिति। द्वौ पादौ यस्या इति बहुव्रीहौ "बहुधीवरीति। "बहवो धीवानो यस्यां नगर्या"मिति विग्रहः। पक्षे डाबिति। "डाबुभाभ्या"मिति सूत्रेण। तथाच द्विवचने "बहुधीवर्यौ""बहुधीवानौ""बहुधीवे"इति रुपत्रयं भवतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

टाबृचि ४।१।९

पादः इत्येव। ऋचि इत्यभिधेयनिर्देशः। ऋचि वाच्यायां पादन्तात् प्रातिपदिकात् स्त्रियां टाप् प्रत्ययो भवति। ङीपो ऽपवादः। द्विपदा ऋक्। त्रिपदा ऋक्। चतुष्पदा ऋक्। ऋचि इति किम्? द्विपदी देवदत्ता।

न्यासः

टाबृचि। , ४।१।९

"ऋचीत्यभिधेयनिर्देशः" इति। विषयनिर्देशाशङ्कां निराकरोति। यदि हि विषयनिर्देशः स्यात्, तत ऋचि विषय ऋग्ग्रन्थे यः पाच्छब्दस्तदन्तात् प्रातिपदिकाट्टाब्भविष्यतीत्येषोऽर्थः स्यात्, तथा च ऋग्वेद एव स्यात्, नान्यत्र। अभिधेयनिर्देशे तु सर्वत्र भवतीति भावः॥

बाल-मनोरमा

टाबृचि ४५२, ४।१।९

टाबृचि। पादन्तादिति। "प्रातिपदिका"दिति शेषः। "पादोऽन्यतरस्या"मित्यतोऽनुवृत्तेन पाच्छब्देन प्रातिपदिकादित्यधिकृतस्य विशेषणादिति भावः। "पादोऽन्यतरस्या"मिति ङीपोऽपवादोऽयम्। द्विपदा ऋगिति। द्वौ पादौ यस्या इति विग्रहः। एकपदेति। एकः पाटो यस्या इति विग्रहः। उभयत्रापि टापि, "पादः पत्"। "ङ्याप्प्रातिपदिकात्" इति सूत्रभाष्ये तु पादशब्दसमानार्थकं पदशब्दमवष्टभ्य प्रत्याख्यातमेतत्। नच ऋचि वाच्यायां द्विपदी द्विपादिति प्रयोगव्यावृत्त्ये एतत्सूत्रमिति वाच्यम्, एतद्भाष्यप्रामाण्येन तथाविधप्रयोगस्याऽपीष्टत्वादित्यसम्। न षडिति। इदमजन्ताधिकारे ऋकारान्तनिरूपणे व्याख्यातम्। पञ्चेति। इहान्तरङ्गत्वान्नन्तलक्षणङीपि प्राप्ते षट्त्वान्निषिद्धे "षड्भ्यो लुक्" इति जश्शसोर्लुकि नलोपे कृतेऽदन्तत्वात्प्राप्तस्य टापः प्रतिषेधार्थमिह टाबनुवृत्तिरावश्यकीति यावत्। नच नलोपस्याऽसिद्धत्वाट्टापः प्रसक्तिरेव नेति वाच्यं, सुप्स्वसंज्ञातुग्विधिषु टाब्विधेरनन्तर्भावेन तस्मिन्कर्तव्ये नलोपस्याऽसिद्धत्वाऽभावात्। ननु "न षट्स्वरुआआदिभ्यः" इति न टाबित्यन्वयः। "अदन्तलक्षणष्टा"बिति शेषः। नान्तलक्षणङीपि प्रतिषिद्धे सति जश्शसोर्लुकि नलोपे कृतेऽदन्तत्वात्प्राप्तस्य टापः प्रतिषेधार्थमिह टाबनुवृत्तिरावश्यकीति यावत्। नच नलोपस्याऽसिद्धत्वाट्टापः प्रसक्तिरेव नेति वाच्यं, सुप्स्वस्संज्ञातुग्विधिषु टाब्विधेरनन्तर्भावेन तस्मिन्कर्तव्ये नलोपस्याऽसिद्धत्वाऽभावात्। ननु "न षट्स्वरुआआदिभ्यः" इत्यत्र सत्यामपि टाबनुवृत्तौ कथमिह षट्संज्ञानिबन्धस्तन्निषेधः, नलोपे कृते षट्संज्ञाविरहात्। नच टाब्निषेधे कर्तव्ये नलोपस्याऽसिद्धत्वं शङ्क्यं, टाब्निषेधस्य सुप्स्वरसंज्ञातुग्विधिष्वनन्तर्भावादित्यत आह--नलोपे कृतेऽपीत्याद्यसिद्धत्वादित्यन्तम्। टाब्निषेधविधिरयं षट्संज्ञामपि विधत्ते, कार्यकालपक्षाश्रयणात्। ततश्च तस्मिन् कर्तव्ये नवोपस्याऽसिद्धत्वेन षट्संज्ञाया निर्बाधतया षट्संज्ञानिबन्धनष्टाप्प्रतिषेधोऽत्र निर्बाध इति बावः। वस्तुतस्तु नलोपस्याऽसिद्धत्वेऽपि बूतपूर्वषट्संज्ञामाश्रित्य टाब्निषेध उपपद्यते। अत एव षट्संज्ञायां नलोपाऽसिद्धत्वस्य न फलमिति "नलोपः सुप्स्वरे"ति सूत्रभाष्ये उक्तमित्याहुः।

तत्त्व-बोधिनी

टाबृचि ४०७, ४।१।९

टाबृचि। पूर्वेण प्राप्तस्य ङीपोऽपवादः। यद्यपि "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु"इति कोशात्पादसमानार्थकः पदशब्दोऽस्तीति तेनैव "द्विपदा""एकपदे"ति रूपं सिध्यति, तथापि ऋचि वाच्यायां "द्विपदी""द्विपा"दिति प्रयोगनिवृत्तये सूत्रारम्भोऽयमावश्यकः। असिद्धत्वादिति। एतच्चाऽसिद्धत्वेपवर्णनं कार्यकालपक्ष एवोपयुज्यते, न तु यथोद्देशपक्षे, सकृत्कृतायाः संज्ञायाः सर्वार्थत्वेन तस्याः पुनरपक्षाऽभावात्। न च"पञ्च"न्निति नान्तस्य कृतायामपि संज्ञायां "पञ्चे"त्यदन्तस्य न कृतेति शङ्क्यम्, एकदेशविकृतस्याऽनन्यत्वादित्याहुः। तदसत्। एकदेशविकृतस्योपसङ्ख्यानं हि "स्थानिवदादेशोऽनल्विधा"वित्यत्र पठ()ते, तच्चाऽल्विधौ न प्रवर्तत एवेति यथोद्देशपक्षेऽप्यसिद्धत्ववर्णनस्य युक्तत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

न षट्स्वस्रादिभ्यः ४।१।१०

षट्संज्ञाकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः स्त्रीप्रत्ययो न भवति। यो यतः प्राप्नोति स सर्वः प्रतिषिध्यते। पञ्च ब्राह्मण्यः। सप्त। नव। दश। स्वस्रादिभ्यः स्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्रः। षट्संज्ञानामन्ते लुप्ते

टाबुत्पत्तिः कस्मान् न स्यत्। प्रत्याहाराच् चापा सिद्धं दोषस्त्विवत्त्वे तस्मान् न उभौ।

लघु-सिद्धान्त-कौमुदी

न षट्स्वस्रादिभ्यः २३४, ४।१।१०

ङीप्टापौ न स्तः॥स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।याता मातेति सप्तैते स्वस्रादय उदाहृताः॥स्वसा। स्वसारौ॥ माता पितृवत्। शसि मातृः॥ द्यौर्गोवत्॥ राः पुंवत्॥ नौग्लौवत्॥

लघु-सिद्धान्त-कौमुदी

इत्यजन्तस्त्रीलिङ्गाः २३४, ४।१।१०

लघु-सिद्धान्त-कौमुदी

अथाजन्तनपुंसकलिङ्गाः २३४, ४।१।१०

न्यासः

न षट्स्वरुआआदिभ्यः। , ४।१।१०

यो यतः प्राप्नोति स सर्वः प्रतिषिध्यते" इति। ङीपोऽनन्तरत्वात् तस्यैवायं प्रतिषेध इत्याशङ्काया निरासार्थमिदमुक्तम्। ननु चात्र "टाबृचि" ४।१।९ इति टाबेवानन्तरः, तत् कुतो ङीपोऽनन्तरत्वम्? अस्वरितत्वात्। अस्य टापो ङीप एवानन्तर्यं युक्तम्। ननु च षट्संज्ञाः संख्याशब्दाः, संख्याश्च भेदमात्रं द्रव्यस्य प्रत्यययायन्ति, न स्त्रीत्वम्, या तु तस्य स्त्रीत्वप्रतीतिः सा शब्दान्तरेण सामानाधिकरण्याद्भवति, न च स्त्रीसमानाधिकरणपक्षः "स्त्रियाम्" ४।१।३ इति सूत्रे स्थितः, तथा च तेभ्यः स्त्रीप्रत्ययस्य प्राप्तिरेव नास्तीत्यपार्थकः प्रतिषेधः? नैतदस्ति; संख्या हि गुणः, "संख्या परिमाणानि पृथक्त्वं संयोगविभागौ" इति वैशेषिकाणां १।१।६ गुणसूत्रे पाठात्। गुणवचनानां चाश्रयतो लिङ्गवचनानि भवन्ति, यथा--शुक्ला शाटी, शुक्लः कम्बलः, शुक्लं वस्त्रम्; शुक्लः शुक्लौ शुक्लाः इति। तथा सति प्रतिषेधे यथा शुक्लादिशब्देभ्यः स्त्रीप्रत्ययो भवति तथा षट्()संज्ञकेभ्योऽपीति स्यात्, यथा-- पञ्च ब्राआहृण्य इति। "षड्भ्यो लुक्" ७।१।२२ इति जसो लुक्। "स्वसा" इति। "अनङ सौ" ७।१।९३ पूर्ववत् "नोपधायाः" ६।४।७ इति दीर्घः। तिसृचतसृशब्दावपि स्वरुआआदिषु पठ()एते, तयोः किमर्थः पाठः? यावता विभक्तौ परतः "त्रिचतुरोः स्त्रियां तिसृचतसृ" ७।२।९९ इति तिसृचतसृभ्यां भवितव्यम्, तत्र यदि तावृकारान्तलक्षमं ङीपं प्रति निमित्तभावं प्रतिपद्येयातां विभक्तेरानन्तर्यं ताभ्यां विहन्येत, एतच्च "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।प।१२) इत्युक्तम्। तस्मात् सन्निपातलक्षणपरिभाषयैव ङीब्न भविष्यतीति किं प्रतिषेधेन? एवं तह्र्येतज्ज्ञापयति-- अनित्यैषा परिभाषेति। तेन या, सेति सिद्धं भवति। अत्रापि हि विभक्तौ त्यदाद्यत्वमित्यकारष्टापो निमित्तं न स्यात्, टापि हि सति विभक्तेरानन्तर्यं विहन्यते। परिभाषायस्त्वनित्यत्वेनैव टाब्भवति। "षट्संज्ञानाम्" इत्यादि। पञ्च ब्राआहृण्य इत्यादौ "अवन्तरस्य विधिर्भवति प्रतिषेधो वा" (व्या।प।१९) इति ङीपोऽनन्तरस्य प्रतिषेधे कृते "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नकारे लुप्ते सत्याकारान्ततायामुपजातायां टाबुत्पत्तिः कस्मान्न स्यात्?स्यादेव, निमित्तस्य सविधानात्। नलोपस्यासिद्धत्वान्न स्यादिति चेत्? नैतदस्ति; "नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" ८।२।२ इति परिगणितेष्वेव विधिषु नलोपस्यासिद्धत्वमुच्यते। न च टाब्विधिस्तत्र परिगण्यते, तत् कुतस्तत्र नलोपस्यासिद्धत्वम्? टाब्विधिरपि तत्र परिगण्यत एवेति दर्शयन्नाह-- "प्रत्याहारात्" इत्यादि। चाबिति चाप्सम्बन्धिनं पकारमुपलक्षयति। तदेतदुक्तं भवति-- सुबिति। तत्र न सप्तमीबहुवचनसम्बन्धिना सुपः पकारेण प्रत्याहारो गृह्रते,किं तर्हि? "यङश्चाप्" ४।१।७४ इति चाप्सम्बन्धिना। तस्माट्टापो विधिरपि सुब्विधिरेव; टापोऽपि प्रत्याहारान्तर्भावात्। ततश्च टाब्विधावपि नलोपस्यासिद्धत्वेन भवितव्यमिति सिद्धं सर्वमिष्टम्। सिध्यत्येव। "दोषस्त्विवत्त्ववे" इति। बहूनि चर्माण्यस्यां नगर्यामिति बहुव्रीहिः। "शेषाद्विभाषा" ५।४।१५४ इति कप्, टाप्, नलोपः।

अत्रेदानीं "प्रत्ययस्थात्कात्" ७|३|४४ इत्यनेनेत्त्वमिष्यते बहुचर्मिकेति यथा स्यात्, तच्च न प्राप्नोति, न ह्यत्र कात् पूर्वोऽकारः; सिद्धत्वार्थं सर्वविभक्त्यन्तः समास आश्रितः। सुपो विधिः सुब्विधिः, सुपिवा विधिः सुब्विधिरिति। यदि च टाबपि सुप् स्यात्, ततस्त्रत्रापि परत्रावस्थित इत्त्वमुच्यत इति तदपि सुब्विधिः स्यात्-- सुपि विधिरिति कृत्वा। ततस्तस्मिन्नपि कत्त्वर्ये नलोपस्यासिद्धत्वं स्यात्, तवयुक्तश्चापा प्रत्याहारः। "तस्मान्नोभौ" इति। यस्मादेवं चापा सह प्रत्याहारे दोषस्तमादुभावपि टाब्ङीपौ न भवत इति प्रतिषिद्धौ। कथमिह हि स्त्रियामित्यर्थोऽपेक्षते? अस्मिन्नर्थे यदुक्तं भवतीति स्त्र्यर्थे चोभौ ङीप्टापावुक्तावित्युभावपि भवतः॥

बाल-मनोरमा

न षट्स्वरुआआदिभ्यः ३०६, ४|१|१०

"ऋन्नेभ्यः" इति ङीपि प्राप्ते--न षट्। षट् इत्यनेन षट्संज्ञका गृह्न्त इत्याह--षट्संज्ञकेभ्य इति। ङीप्टापाविति। "ऋन्नेभ्यः" इत्यतो "ङी"विति, "टावृचि" इत्यतष्टावित्यस्य चानुवृत्तेरिति भावः। स्वरुआआदीन् पठतिस्वसा तिरुआ इत्यादिना। अथ "तिसृचतसृ" इत्यनयोः पाठो न कर्तव्यः, "न तिसृचतसृ" इति नामि दीर्घनिषेधादेव लिङ्गान्ङीबभावसिद्धेरिति "कृन्मेजन्तः" इति सूत्रे कैयटः। न नन्दतीनि ननान्दा। "नञि च नन्देः" इति ऋन्, वृद्धिश्च। "ननान्दा तु स्वसा पत्युः" इत्यमरः। दोग्धीति दुहिता। "नप्तृनेष्टृत्वहोतृपोतृभ्रातृजामातृपितृदुहितृ" इति दुहेस्तृच्। इट् गुणाऽभावश्च निपातितः। मान्यते पूज्यते इति माता। मान पूजायाम्। तृचि नलोपश्च। यतते इति याता। "यतेर्वृद्धिश्च" इति ऋन्, उपधावृद्धिश्च। "भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्" इत्यमरः। अतृन्निनतीति। स्वसृशब्दात् सुः, "ऋदुशनस्" इत्यनङ्, तृप्रत्ययान्तत्वाऽभावेऽपि "अप्तृन्" इति सूत्रे स्वसृग्रहणाद्दीर्घ इति भावः। माता पितृवदिति। "अप्तृन्" इति सूत्रे औणादिकतृन्तृजन्तेषु नप्त्रादीनामेव दीर्घनियमनादिति भावा। इत्यृदन्ताः। अथ ओदन्ताः। द्यौर्गोवदिति। ओतो णित्" इति णिद्वत्त्वाऽतिदेशात्। "अचो ञ्णिति" इति वृद्धिः। "द्योदिवौ द्वे स्त्रियामभ्र"मित्यमरः। इत्योदन्ताः। अथ ऐदन्ताः। राः पुंवदिति। "रायो हली"त्यात्वम्। "राः स्त्रीत्येके" इति क्षीरस्वाम्युक्तेः स्त्रीलिङ्गोऽप्ययमिति भावः। इत्यैदन्ताः। अथ ओदन्ताः नौग्लौवदिति। स्त्रियां नौस्तरणिस्तरिः" इत्यमरः। इत्यौदन्ताः।

*****इति बालमनोरमायामजन्ताः स्त्रीलिङ्गा*****

*****अथाजन्तनपुंसकलिङ्गप्रकरणम्।*****

तत्त्व-बोधिनी

न षट्स्वस्त्रादिभ्यः २६८, ४|१|१०

न षट्स्वस्त्रादिभ्यः। "स्त्रियां यदुक्तं तन्न भवती"ति व्याख्यानादनन्तरो ङीबिव व्यवहितष्टबपि निषिध्यत इत्याशयेनाह----ङीष्टापौ नेति। स्वस्त्रादीनां ङीप्प्राप्तः। षट्संज्ञकानां तूभौ। स्वसा तिरुआ इति। "न तिसृचतसृ"इति नामि दीर्घत्वप्रतिषेधाज्ज्ञापकादेव ङीबभावे सिद्धे स्वस्त्रादिषु तिसृचतसृशब्दपाठो न कर्तव्य इति "कृन्मेजन्तः"इति सूत्रे कैयटः। स्वसेति। "सावसेरृन्"। "ऋदुशन"इत्यनङ्। "ननान्दा तु स्वसा पतच्युः"। "भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्"। द्यौर्गोवदिति। "गमेर्डोः"बाहुलकाद्द्युतेरपि। डित्वाट्टिलोपः। "ओतो णि"दिति णिद्व द्भावाद्वृद्धिः। राः पुंवदिति। यद्यपि पुंलिङ्गः एवायम्, अर्थरैविभवा अपि"इत्यमरोक्तेः। भिन्नलिङ्गानां न द्व"न्द्व इति तेन परिभाषितत्वात्, तथापि "रात्येनं राः। स्त्रीत्येके"इति क्षीरस्वामिनास्त्रीलिङ्गताया अप्यभ्युपगमादेवमुक्तम्। नौग्लौवदिति। "ग्लानुदिभ्यां डौः"। डित्वाट्टिलोपः। "स्त्रियां नौस्तरणिस्तरि"रित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

मनः ४।१।११

मन्नन्तात् प्रातिपदिकात् ङीप् प्रत्ययो न भवति। ऋन्नेभ्यो ङीप् ४।१।५ इति ङीप् प्राप्तो मनः इति सूत्रेण प्रतिषिध्यते। दामा, दामानौ, दामानः। पामा, पामानौ, पामानः। अनिनस्मङ्ग्रहणान्यर्थवता च अनर्थकेन च तदन्तविधिं प्रयोजयन्ति। सीमा, सीमानौ, सीमानः। अतिमहिमा, अतिमहिमानौ, अतिमहिमानः।

न्यासः

मनः। , ४।१।११

"वामा,पामा" इति। ददातेः पिबतेश्च "आतो मनिन्क्वनिब्वनिपश्च" ३।२।७४ इति मनिन्, पूर्ववत् "नोपधायाः" ६।४।७ दीर्घः। अथ समीमा, सीमानौ, सीमानः; अतिमहिमा, अतिमहिमानौ, अतिमहिमान इत्यत्र कतं प्रतिषेधः, यावता मन इत्यर्थवतो मन एतद्()ग्रहणम्। न च यथा दामा पामेत्यतर् मनः प्रत्ययार्थेनार्थवत्वं तथा सीमेत्येवमाद न केनचिदर्थेनार्थवत्त्वम्, तथा हि सीमाशब्दस्तावदव्युत्पन्नं प्रातिपदिकम्, तस्यैव चार्थवत्त्वम्, न तदवयवभूतस्य मनः; अतिमहिमेत्यत्रापि नैव मनोऽर्थवत्त्वम्, तथा हि-- "महतो भावः" इत्यर्थविवक्षायां "पृथ्वादिभ्य इमनिच्" ५।१।१२१ इति महच्छब्दादिमनिज्विहितः, तत्र चेमनिच एवार्थवत्त्वम्, न तदेकदेशस्य मन इत्यत आह-- "अनिनस्मन्ग्रहणानि" इत्यादि। एतद्वाक्यं पठता वाक्यकारेण अन्, इन्स्, मन्-- इत्येतेषां ग्रहणेऽर्थवद्ग्रहणपरिभाषा (व्या।प।१) न व्याप्रियते। तेनैषामनर्थकानामपि ग्रहणं भवति, एभिश्चानर्थकैः सार्थकैश्च तदन्तविदिर्भवतीत्युक्तं भवति, ततश्च सीमाऽतिमहिमेत्यादावपि प्रतिषेधः सिद्धो भवति॥

बाल-मनोरमा

मनः ४५३, ४।१।११

मनः। "न षट्स्वरुआआदिभ्यः" इत्यतो नेति "ऋन्नेभ्यः इत्यतो ङीबिति चानु वर्तते। "मन" इति प्रत्ययग्रहणपरिभाषया तदन्तं गृह्रंते। तदाह--मन्नन्तादिति। सीमेति। "पिञ् बन्धने" औणादिको मनिन्, प्रकृतेर्दीर्घश्च। सीमन्शब्दान्ङीपि निषिद्धे राजवद्रूपम्। ङीपि सति तु अल्लोपे सीम्नीति स्यादिति भावः। ननु वक्ष्यमाणडापि सीमेति सौ रूपसिद्धेः किं ङीब्निषेधेनेत्यत आह--सीमानाविति। डापि तु सति "सीमे" इत्येव स्यादिति भावः।

तत्त्व-बोधिनी

मनः ४०८, ४।१।११

न ङीबिति। पूर्वसूत्रान्नेत्यनुवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अनो बहुव्रीहेः ४।१।१२

अन्नन्ताद् बहुव्रीहेः स्त्रियां ङीप् प्रत्ययो न भवति। अनुपधालोपी बहुव्रीहिरिह उदाहरणम्। उपधालोपिनो हि विकल्पं वक्ष्यति। सुपर्वा, सुपर्वाणौ, सुपर्वाणः। सुशर्मा, सुशर्माणौ, सुशर्माणः। बहुव्रीहेः इति किम्? अतिक्रान्ता राजानम्

अतिराजी।

न्यासः

अनो बहुव्रीहिः। , ४।१।१२

"अनुपधालोपो बहुव्रीहिरिहोदाहरणम्" इति। कथं पुनरेतत्लभ्यते, यावता नात्र विशेष उपात इत्याह-- "उपधालोपिनो हि" इत्यादि। यस्मात् "अन उपधालोपिनोऽन्यतरस्याम्" ४।१।२८ इत्युपधालोपिनो विकल्पं वक्ष्यति, तस्मात् पारिशेष्यादनुपधालोपो बहुव्रीहिरस्यावकाश इति। तस्य चोदाहरणम्-- "सुपर्वा" इत्यादि। शोभनमस्याः पर्वं शोभनं चर्मास्या इति बहुव्रीहिः। अयञ्च "न संयोगाद्वमन्तात्" इत्यल्लोपो न भवति। "अतिराजी" इति। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा।९१) इति "कुगतिप्रादयः" २।२।१८ इति तत्पुरुषोऽयम्॥

बाल-मनोरमा

अनो बहुव्रीहेः ४५४, ४।१।१२

अनो बहुव्रीहेः। "अन" इति "बहुव्रीहे"रित्यस्य विशेषणम्, तदन्तविधिः। नेति ङीविति च पूर्ववदनुवर्तते। तदाह-- अन्नन्तादिति। बहुयज्वेति। बहवो यज्वानो यस्या इति विग्रहः। नान्तलक्षणङीप प्रतिशेधे राजवद्रूपाणि। "न संयोगा"दिति निषेधान्नायमुपधालोपी। अतोऽत्र "अन उपधालोपिनः" इति विकल्पो न प्रवर्तितुमर्हति।

तत्त्व-बोधिनी

अनोबहुव्रीहेः ४०९, ४।१।१२

अनो बहुव्रीहेः। ननु "राजयुध्वे"त्यादिसिद्धयेऽवश्यं वक्तव्येन "वनो न हशः"इत्यनेनैबेष्टलसिद्धेः किमनेन सूत्रेण()। मैवम्। अन्नन्ताद्बहुव्रीहेः "डाबुभाभ्या"मिति डाब्विधानार्थमेतत्सूत्रस्याऽवश्यारब्धव्यत्वात्। तथा चाऽनेन ङीपि निषिद्धे तत्संनियोगेन प्राप्तो "वनो र चे"ति यो रेफः सोऽपि दुर्लभ एवेति "वनो न हशः"इति वार्तिकमबहुव्रीह्यर्थमिति फलितम्। बहुयज्वानाविति। "न संयोगो"दिति निषेधान्नायमुपधालोपि। तेनाऽत्र "अन उपधालोपिन"इति वक्ष्यमाणविकल्पो न प्रवर्तते।

---

सूत्रम्

काशिका-वृत्तिः

डाबुभाभ्याम् अन्यतरस्याम् ४।१।१३

डाप् प्रत्ययो भवति उभाभ्यां मन्नन्तात् प्रातिपदिकातनन्ताच् च बहुव्रीहेरन्यतरस्याम्। पामा, पामे, पामाः। सीमा, सीमे, सीमाः। न च भवति। पामानः। सीमानः। बहुव्रीहौ बहुराजा, बहुराजे, बहुराजाः। बहुतक्षा, बहुतक्षे, बहुतक्षाः। न च भवति। बहुराजानः। बहुतक्षाणः। अन्यतरस्यांग्रहणं किमर्थम्? बहुव्रीहौ, वनो र च ४।१।७ इत्यस्य अपि विकओपो यथा यात्। बहुधीवा, बहुधीवरी। बहुपीवा, बहुपीवरी।

न्यासः

डाबुभाभ्यामन्यतरस्याम्। , ४।१।१३

इहान्यतरस्यांग्रहमस्य डापः मुक्ते पक्षे प्रतिषेधोऽपि यथा स्यादित्येतद्वा प्रयोजनं स्यात्? डाप्प्रतिषेधाभ्यां मुक्ते पक्षे ङीबपि यथा स्यादित्येतद्वा? तत्राद्यं तावदयुक्तम्;डाबपि ह्युच्यते, प्रतिषेधोऽपि, तावुभावपि वचनसामर्थ्याद्भविष्यतः। द्वितीयमप्ययुक्तम्। अन्यतरस्यांग्रहमेन ह्यनुपधालोपिनो वा बहुव्रीहेः पक्षे ङीब्विधीयते? उपधालोपिनो वा? तत्र

प्रथमस्तावत् पक्षो नोपपद्यते, यदि ह्यत्रानुपधालोपिनःपक्षे ङीब्विधीयेत प्रतिषेधवचनमनर्थकं स्यात्; द्वितीयोऽपि नोपपद्यते, "अन उपधालोपिनोऽन्यतरस्याम्" [४।१।२८] इति प्रतिपदं विकल्पेन ङीपो विधास्यमानत्वात्। न च तदन्यतरस्यांग्रहमं न करिष्याम इतीहान्यतरस्यांग्रहणं कर्तुं युक्तम्; तद्ध्यवश्यमेव कत्र्तव्यम्, उपधालोपिनो हि ङीपा मुक्ते डाप्प्रतिषेधौ यथा स्याताम्-- बहुराज्ञ्यौ, बहुराजानौ, बहुराजे इति। इतरथा हि डाप्प्रतिषेधौ सुपर्वादिष्वनुपधालोपिषु सावकाशौ परत्वान्ङीपा बाध्येयाताम्। तस्माद्वक्ष्यमाणमप्यन्यतरस्यांग्रहणं कत्र्तव्यमेवेति तत्सर्वं मनसि कृत्वाऽऽह-- "अन्यतरस्यांग्रहणं किमर्थम्" इति। निरर्थकमिति भावः। "बहुव्रीहौ"इत्यादि। "वनो र च" [४।१।७] इत्यनेन यत्कार्यं विधीयते तस्यापि बहुव्रीहौ विकल्पो यथा स्यादित्येवमनर्थकमन्यतरस्यांग्रहणम्। यद्यत्प्राप्तं तत्तद्विकल्पेन प्रत्युपस्थापयितव्यम्। ङीब्रोफावप्राप्तौ, "अनो बहुव्रीहेः" [४।१।१२] इति प्रतिषेधात्। तस्मात् तद्विधानार्थमन्यतरस्यांग्रहणं कत्र्तव्यम्। कथमन्यतरस्यामिति? योगविभागोऽत्र क्रियते, तत्र बहुव्रीहिग्रहणमनुवत्र्तते, "वनो र च" [४।१।७] इत्येतच्च मण्डूकप्लुतिन्यायेन। तेन वन्नन्ताद्बहुव्रीहेरन्यतरस्यां ङीब्रोफश्चान्तादेशो लभ्यत इति बहुपीवा, बहुधीवा, बहुपीवरी, बहुधीवरीत्यादि सिद्धं भवति। अन्ये त्वाहुः-- उभाभ्यांग्रहमसहितादन्यतरस्यांग्रहणाद्वन्नन्ताद्बहुव्रीहेर्ङीब्रोफौ लभ्येते। "उभाभ्याम्" [४।१।१३] इतिनेयं पञ्चमी, कं तर्हि? तृतीया, वन्नन्ते बहुव्रीहौ स्त्रीत्वमुभाभ्यां ङीब्रोफाभ्यां करणाभ्यां प्रयोक्त्रा प्रत्याययितव्यमिति। ननु च मन्नन्तात् प्रातिपदिकादन्नन्ताच्च बहुव्रीहेर्डाबुभाभ्यामित्यदुभाभ्यांग्रहणस्य प्रयोजनम्? एवं मन्यते-- स्वरितत्वादेव "उभाभ्याम" [४।१।१३] इति वचनमन्तरेणाप्युभाभ्यामेव प्रत्ययो लभ्यत एवेति॥

बाल-मनोरमा

ङाबुभाभ्यामन्यतरस्याम् ४५५, ४।१।१३

डाबुभाभ्याम्। "उभाभ्या"मित्येतद्व्याचष्टे--सूत्रद्वयोपात्ताभ्यामिति। "मन" इति "अनो बहुव्रीहेः" इति च सूत्रद्वयोपात्तान्मन्नादन्नन्तबहुव्रीहेश्चेत्यर्थः। नन्विहान्यतरस्याङ्ग्रहणं व्यर्थम्। नच तदभावे डाब्नित्यः स्यादिति वाच्यं, डापो नित्यत्वे तेनैव ङीपो निवृत्तिसंभवेन ङीब्निषेधवैयथ्र्यात्। एवञ्च ङीप्निषेधडापोर्वचनसामथ्र्यादेव विकल्पसिद्धेरन्यतरस्याङ्ग्रहणं व्यर्थमिति चेत्, स्पष्टार्थमिति केचित्। भाष्ये तु "अन्यतरस्या"मिति योगविभागमाश्रित्य "बहुव्र्रूहौ" इति वार्तिकं प्रत्याख्यातम्। सीमेति। सीमन्शब्दाड्डापि टिलोपे सीमाशब्दात्सोर्हल्ङ्यादिलोपः। डाबभावपक्षेऽपि "मनः" इति ङीब्निषेधे सौ "सीमे"त्येव राजवद्रूपम्। तर्हि डाब्विधेः किं फलमित्यत आह-सीमे सीमानाविति। मन्नन्तविषये उदाहरणान्तरमाह-दामेति। दाधातोरौणादिको मनिन्। "हिरण्मयं दाम दक्षिणा" इत्यादौ दामशब्दस्य नपुंसकत्वदर्शनादाह-न पुंसीति। दामन्शब्दः पुंसि न, किंतु स्त्रीनपुंसकयोरित्यर्थः, "निषिद्धलिङ्गं शेषार्थ"मिति परिभाषितत्वात्। अन्नन्तबहुव्रीहेरुदाहरति-बहुयड्ज्वेति। बहवो यज्वानो यस्या इति विग्रहः। डापि टिलोपे बहुयज्वाशब्दात्सोर्हल्ङ्यादिलोपः। ङीब्निषेधे सौ एतदेव राजवद्रूपम्। डापः फलमाह-बहुयज्वे बहुयज्वानाविति। शसि-बहुयज्वनः। अत्राऽल्लोपस्तु न भवति, "न संयोगाद्वमन्ता"दिति निषेधात्। अत एव "अन उपदालोपिनः" इत्यस्य नायं विषयः।

तत्त्व-बोधिनी

डाबुभाभ्यामन्यतरस्याम् ४१०, ४।१।१३

डाबुभाभ्याम्। उभाभ्याङ्गरहणं व्यर्थं, मन्नन्ताऽन्नन्तयोरनुवृत्त्यैव तत्फलसिद्धेरित्येके। उभोरप्यनुवृत्तिसृचनाय त्द्ग्रहणमावश्यकम्, अन्यथा संनिहितस्यान्नन्तस्यैवानुवृत्तिरिति शङ्का स्यादित्यन्ये। ननु निषेधापोर्वचनसामथ्र्यात्पर्यायः सिध्यति तत्किमन्यतरस्यङ्गरहणेन()। सत्यम्। "अन्यतरस्या"मिति योगो विभज्यते, तत्र "मनः"इति निवृत्तम्। अनो बहुव्रीहेर्डाब्वा स्यात्। पूर्वेणैव डैपि सिद्धे पुनर्विधानमिदम् "ऋन्नेभ्यः--"इति ङीपा स ह

विकल्पार्थम्। "अन उपधालोपिनः--"इति सूत्रं तु नियमार्थम्। "अनो योऽसौ विकल्पः स उपधालोपिन एवे"ति। एवं ट "बहुधीवर्य्यौ""बहुधीवानौ" "बहुधीवे"त्युक्तरुपत्रयं सिद्धमिति "बहुव्रीहौ वे"त्येतन्नाऽपूर्वं वचनमिति बोध्यम्। "उपधालोपिन एवे"ति नियमात्तु "सुपर्वा"चारुपर्वे"त्यादावनुधालोपिनो ङीप्न भवति, किंतु डाप्प्रतिषेधावेव भवतः। अयं च योगविभागोऽबश्यमभ्युपेयः, अन्यथा "बहिधावरी"त्यत्र प्रकरणान्तरस्थेन "अन उपधालोपिन"इति वक्ष्यमाणेन पाक्षिके ङीपि कृतेऽपि "ऋन्नेभ्यः"इति प्राप्तं ङीपमनूद्य तत्संनियोगेन हि विधायमानो यो "वनोर चे"ति ,#ऊत्रमेव ङीब्राऔ विधत्तामिति चेन्, उभयविधौ गौरवात्। किञ्चोभयविधायकत्वेऽपि "अनो बहुव्रीहे"रित्यनेन ङीपि निषिद्धे रोऽपि दुर्लभः, संनियोगशिष्टत्वात्। भाष्ये तु "अनो बहुव्रीहे"रित्यस्याऽनन्तरम् "उपधालोपिनो वे"ति सूत्रमस्तु, "अन उपधे"त्यादि प्रदेशान्तरस्थं सूत्रं, ङाप्सूत्रेऽन्यतरस्याङ्ग्रहणं च मास्त्वित्युक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

अनुपसर्जनात् ४।१।१४

अधिकारो ऽयम्। उत्तरसूत्रेषु उपसर्जने प्रतिषेधं करोति। यदिति ऊर्ध्वम् अनुक्रमिष्यामो ऽनुपसर्जनातित्येवं तद् वेदितव्यम्। टिड्ढाणञिति ङीप्। कुरुचरी। मद्रचरी। अनुपसर्जनातिति किम्? बहुकुरुचरा, बहुमद्रचरा मधुरा। जातेः इति ङीष्। कुक्कुटीइ। शूकरी। अनुपसर्जनातिति किम्? बहुकुक्कुटा, बहुशूकरा मधुरा। कथं पुनरुपसर्जनात् प्रत्ययप्रस्ङ्गः? तदन्तविधिना। ज्ञापितं च एतदस्त्यत्र प्रकरणे तदन्तविधिः इति। तथा च प्रधानेन तदनतविधिर् भवति। कुम्भकारी। नगरकारी। न च अणिति कृद्ग्रहणं, तद्धितो ऽप्यणस्ति।

न्यासः

अनुपसर्जनात्। , ४।१।१४

इहानुपसर्जनादिति विधिर्वानेनोत्तरत्र क्रियते-- उपसर्जनादन्यस्मादनुपसर्जनान्ङीबादयो भवन्तीति? प्रतिषेधो वा-- उपसर्जनान्न भवतीति? तत्र यद्याद्यः पक्ष आश्रीयेत "कुक्कुटीपादः" इति न सिध्येत्; पूर्वपदस्योपसर्जनत्वात्। उपसर्जनत्वं त्वस्य "षष्ठी" २।२।८ इति समासशास्त्रे प्रथमानिर्देशात्। कुक्कुटीत्येतदपि न सिध्येत्; प्रधानं ह्यनुपसर्जनम्, न चात्र जातिः प्रधानम्, अप्रधानापेक्षया हि प्रधानं भवति, न चात्र किञ्चिदप्रधानमस्ति यदपेक्षया जातेः प्राधान्यं स्यात्। तस्माद्विधिपक्षोऽयं दुष्ट इति मत्वा प्रतिषेधपक्षमाश्रित्याह -- "उत्तरसूत्रेषूपसर्जनप्रतिषेधं करोति" इति। "कुरुचरी" इति। कुरुषु चरतीति "चरेष्टः" ३।२।१६ इति टः। "उपपदमतिङ" २।२।१९ इति तत्पुरुषसमास इत्यस्योत्तरपदप्रधानत्वादप्रथमानिर्दिष्टत्वाच्च समासशास्त्रे चरशब्द इहोपसर्जनं न भवतीति। "बहुकुरुचरा" इति। बहवः कुरुचरा अस्यामिति। अस्यान्यपदार्थप्रधानत्वात् प्रथमानिर्दिष्टत्वाच्च शास्त्रे समासपदानामत्रावयव उपसर्जनम्। "{जातेः इति ङीष्--काशिका"} जातेर्ङीष्" इति। "जातेरस्त्रीविषयादयोपधात्" ४।१।६३ इत्यनेन। "बहुकुक्कुटा" इति। बहुव्रीहिः। अत्र#आपि पूर्ववज्जातिशब्द उपसर्जनम्। ननु च बहुकुरुचरेत्यत्र समुदायः स्त्रियां वत्र्तते, नावयवः न च समुदायष्टित्, किं तर्हि? अवयवः तत्र टित उच्यमान ईकारः केन पुनः समुदायादटितः स्यात्? बहुकुक्कुटेत्यत्रापि समुदायः स्त्रियां वत्र्तते, नावयवः। न च समुदायो जातिवचनः, किं तर्हि ; अवयवः। तत्र जातिवाचिन उच्यमानः प्रत्ययः केनाजातिवाचिनः समुदायात् स्यात्, यत्प्रतिषेधार्थमिदमुच्यत इति मन्यमान आह-- "कथम्" इत्यादि। "तदन्तविधिना" इति। परिहारः। तत्रैतत् स्यात्-- "ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते" (व्या।प।८९) इति, अत आह-- "ज्ञापितञ्च" इत्यादि। "शूद्रा चामहत्पूर्वा जातिः" ग।सू।४०।४।१।४) इत्यत्र महत्पूर्वेत्यनेनास्मिन् प्रकरणे तदन्तविधिरिति ज्ञापितमेतत्। "तथा च" इति। एवं सतीत्यर्थः यस्मात् पूर्वं तदन्तविधिरिह प्रकरणेऽस्तीति

ज्ञापितमेतत्; अनेन च सूत्रेणोपसर्जनेन तदन्तविधिः प्रतिषिध्यते, नानुपसर्जनेन, एवञ्च सति प्रधानेन तदन्तविधिर्भवत्येव। तेन कुम्भकारी, नगरकारीति सिद्धं भवति। तत्र हि कारशब्दोऽणन्तः प्रधानम्। तदन्तात् समासात् "टिड्()ढाणञ्" ४।१।१५ इतीकारः स्यादेव। ननु चाणित्यत्राणिति कृद्()ग्रहमम्, ततश्च "कृद्()ग्रहमे गतिकारकपूर्वपदस्यापि ग्रहणम्" (व्या।प।१२६) इत्यनया परिभाषयैव कुम्भकारशब्दात् कारान्तादीकारः सिध्यति, ततो नेदं तदन्तविधिज्ञापनस्य प्रयोजनमित्यत आह-- "न च" इत्यादि। कथं न? इत्याह-- "तद्धितोऽप्यणस्ति" इति। तस्याप्यत्र ग्रहणम्, अन्यथा ह्यौपगवीति न सिध्येत्। तस्मान्नेदं कृद्ग्रहणम्, किं तर्हि? कृदकृद्ग्रहणम्। तत्र यदि तदन्तविधिर्न ज्ञाप्यते, तदाणिति प्रत्ययग्रहणम्, "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहमं भवति" (पु।प।वृ।४४) इतीहैव स्यात्-- औपगवीति, इह तु न स्यात्-- कुम्भकारीति, अत्र हि धातोरण् विहितः, तदन्तश्च स्त्रियां न वत्र्तते; तावन्मात्रस्य कारशब्दस्य प्रयोगाभावात्। या वा स्त्रीयां वत्र्तते सोपपदम्, न तस्मात् प्रत्ययो विहितः। तदन्तविधौ तु ज्ञापिते कारशब्दान्तादपीकारः सिध्यति॥

तत्त्व-बोधिनी

अनुपसर्जनात् ४१६, ४।१।१४

अधिकारोऽयमिति। स्वरितत्वप्रतिज्ञानादिति भावः। अभिव्याप्येति। अतएव "बहुयुवा शाले"त्यत्र "यूनस्ति"रिति न पर्वर्तत इति प्राञ्चः। न चाऽत्र नलोपस्याऽसिद्धत्वान्नन्तलक्षणो ङीप्स्यादिति शङ्क्यं, "नलोपः सुप्स्वरे"ति नियमेन ङीपं प्रत्यसिद्धत्वाऽभावादित्येके। अन्ये तु--- "उत्तरपदत्वे चापदादिविधौ प्रतिषेधः" इति प्रत्ययलक्षणनिषेधेनाऽन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाऽभावान्नलोपस्याऽप्रसत्तया ङीप् स्यादेव। परन्तु "अनो बहुव्रीहेः"इति निषेधान्ङीबभावे डान्बिधान्ङीबभावे भवत इत्याहुः। अयमेवेति। अनुपसर्जनाधिकार एवेत्यर्थः।

तत्त्व-बोधिनी

डिड्ढाणन्द्वयसज्दन्घन्मात्रच्तयप्ठक्ठञ्कञ्क्करपः ४१७, ४।१।१४

टिड्ढाण्ञ्। टिड्ढादयः प्रत्ययास्तैः तदन्तं गृह्रते, तच्चाऽनुवर्तमानस्य प्रातिपदिकस्य विशेषणम्। "अजाद्यतः"इतिसूत्रादनुवर्तमानमप्यत इत्येतत् प्रातिपदिकविशेषणम्। अतएव तदन्तविधिरतो व्याचष्टे "टुदन्तं प्रातिपदिक"मिति व्याख्यानं सङ्गच्छत एव। "स्तनन्धयी"त्यत्र तु प्रत्ययस्य टित्त्वाभावेऽपि धातोष्टित्त्वस्याऽचरितार्थत्वात्समुदायात्स्यादेव ङीबिति वक्ष्यति। अन्ये तु--ढादय एव प्रत्ययाःस टिदिति तु प्रत्ययाऽप्रत्ययसाधारणं, तेन टिद्यात्प्रतिपदिकं ढाद्यन्तं च यत्प्रातिपदिकमित्यर्थः। टित्त्वं तु प्रातिपदिकस्य क्वचित्स्वतः, क्वचित्प्रतिकृतं भवति, अवयवधर्मस्य समुदाये उपचारात्। तत्र आद्यस्योदाहरणम्---कुरुचरीति। द्वितीयस्योदहारणं--नदडिति। पचादिषुटितोऽस्य पाठात्स्वत एव टित्त्वम्। तृतीयन्तु "धेटष्टित्त्वात्स्तनन्धयी"ति कृदन्ते उदाहरिष्यतीत्याहुः। कुरुचरीति। कुरुषु चरतीत्यधिकरणोपपदे "चरेष्टः"इति कर्तरि टः। उपसर्जनत्वान्नेहेति। बहवः कुरुचरा सा यास्यां सा बहुकुरुचरेति बहुब्राईहिरिन्यपदार्थप्रधानास्तथा च टुजन्तस्योपसर्जनत्वान्ङीन्बेत्यर्थः। वक्ष्यमाणेति। ब्राऊञो लृटि "लृटः सद्वे"ति शनच्। "ब्राउवो वचि"रिति वच्यादेशः। "वच परिभाषणे"इत्यस्मात्कर्मणि वा लृटः शानच्। "स्यतासी"इति स्यः। कुत्वषत्वे। "आने मुक्ित मुक्। टित्त्वादुगित्त्वाच्चेति। स्थानिवद्भावेनेत्यर्थः। न चाऽल्विधित्वात्कथमिह स्थानिवद्भाव इति शङ्क्यम्, "न ल्यपि"इति ज्ञापकादनुबन्धकार्येषु "अनल्विधौ"इति निषेधस्याऽप्रवृत्तेः। अतएव "रमया"मित्यादौ परत्वान्ङेरामि कृते स्थानिवद्भावेनाऽऽमो ङित्वात् "याडापः"इति याडागमः सिध्यति। ज्ञापनान्न भवतीति। लिङादेशपरस्मैपदानां स्थानिवद्भावेनैव ङित्त्वालाभात्तदागमस्य यासुटो ङित्त्वं व्यर्थं सत् "लाश्रयानुबन्धकार्यमादेशानां ने"ति सामान्यतो ज्ञापयतीति भावः। "पिच्च ङिन्ने"त्यदादिगणे

वक्ष्यमाणत्वात्तिबादिष्वौपदेशिकेन पित्त्वेनातिदेशिकं ङित्त्वं बाध्यत इति यासुटो ङित्त्वास्य वैयर्थ्याऽभावान्न तज्ज्ञापयतीति शङ्कमानं प्रत्याह--श्नः शानच शित्त्वेनेत्यादि। सौपर्णेयीति। "कद्रूश्च वै सुपर्णी"ति श्रुतिः। सुपर्णीशब्दादपत्येऽर्थे "समाया यः" "ढश्छन्दसी"ति विहितस्तयोरेव ढयोग्र्रहणेन भवितव्यं न तु ढकः। सत्यम्। शिलाया ढस्य स्वभावान्नपुंसक एव पर्वृत्तेः स्त्रियामसंभवात्। सभाया ढस्य च "सभेयी"ति स्त्रियां छन्दसि प्रयोगाऽदर्शमनादन्यस्य हि निरनुन्धस्याऽसम्भवादगत्या सानुबन्धको गृह्रते। ऐन्द्रीति। इन्द्रो देवता अस्याः। "साऽस्य देवते"त्यण्।इन्द्रस्येयमिति वा विग्रहः। "तस्येद"मित्यण्। अत्र व्याचक्षते---"कृद्ग्रहणे गतिकारकपूर्वस्ये"त्यस्य प्रवृत्त्यभाषेऽपि अण्णन्तस्य प्रातिपदिकविशेषणातदन्तान्तमपि गृह्रत इति कुम्भकारशब्दान्ङीप्स्यादेव। अस्तु वा कारशब्दादेव ङीप्, तथापि "कुम्भकारी"ति रूपं सिध्यत्येव। न च कारशब्दादेव ङीप्, तथापि "कुम्भकारी"ति रूपं सिध्यत्येव। न च कारशब्दान्ङीपि तदन्तात् "स्त्रीभ्यो ढक्िति ढक्प्रत्यये कौम्भकारेयो न सिध्येदिति वाच्यम्, अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावात्तत्सिद्धेः। नापि नियमाऽभावे "कारी"शब्दात्कदाचिड्ढकि "कुम्भकारेय"इति रूपं स्यादिति शङ्क्यम्। "समर्थः पदविधि "रिति वक्ष्यमाणत्वेनाऽसमर्थधात्तद्धितानुत्पत्तेरिति मनोरमायान्तु इह सूत्रेऽनेकं वाक्यं, तत्राऽनुपसर्जनमण्, तस्य योऽकारस्तदन्तादिति व्याख्यानान्नेह--आपिशलमधीते आपिशला ब्राआह्मणीति। अत्र हि प्रोक्तर्थे योऽण्श्रीयमाणः, स उपसर्जनम्। यस्तु प्रधानोऽध्येत्रण् "प्रोक्ताल्लुक्िति स लुप्तः। वर्णप्राधान्यान्न प्रत्ययलक्षणमतष्टाबेव भवतीति स्थितम्। नन्वेवमापिशलेति रूपसिद्ध्यर्थमनुपसर्जनग्रहणस्यावश्यकत्वेन सामर्थ्योपक्षयात्कथमेतस्य तदन्तविधिज्ञापकेति चेत्; अत्राहुः--स्वरितत्वप्रतिज्ञयी अधिकारोऽयमित्यधिकारत्वाश्रयणादनुपसर्जनग्रहणं व्यर्थम्। अञन्तस्याद्युदात्तत्वेन ङीम्ङीनो स्वरे विशेषाऽभावात्। मैवम्। उत्सस्यापत्यं स्त्री ओत्सीत्यत्राऽञन्तलक्षणं ङीपं बाधित्वा परत्वाज्जातिलक्षणे ङीषि प्राप्ते तद्बाधनार्थं तस्यावश्यकत्वात्। न चैवं "शाङ्र्गरवाद्यञः"इति ङीनास सिद्धमिदं रूपमित्यञ्ग्रहमिह न कर्तव्यमिति वाच्यं, तत्र "जाते"रित्यनुवृत्तेः। अन्यथा शाङ्र्गरवस्य स्त्री शाङ्र्गरवी, औत्सस्य स्त्री औत्सीत्यादौ पुंयोगेऽपि परत्वान्ङीन्स्यान्न तु ङीष्। इष्यते तु पुंयोगे ङीषेव। तस्माद्बवाद्यर्थस्य जातित्वेनाऽपरिभाषणाद्बावाद्यर्थे ङीबर्थमिहाप्यञ्ग्रहणमावश्यकमेवेति दिक्। ऊरुद्वयसीत्यादि। ऊरू प्रमाणमस्याः सा। "प्रमाणे द्वयसज्दन्घञ्मात्रचः"। यद्यत्र "न लोके"ति सूत्रे तृन्नितिवद्द्वयसजिति मात्रचश्चकारेण प्रत्याहारो गृह्रते, तदा दन्घञ्माक्पज्ग्रहणमिहाऽकर्तुं शक्यम्। पञ्चतयीति। पञ्चावयवा अस्याः। "सङ्ख्याया अवयवे तयप्"। आक्षिकीति। "तेन दीव्यती"ति ठक्। लावणिकीति। लवणं पण्यमस्याः। "लवणाट्ठञ्"। ठक्ठञोर्मेदेनोपादानं ठन्निवृत्त्यर्थम्, तेनेह न,--दण्डोऽस्त्यस्याः सा दण्डिका। "अत इनी"ति ठन्। अतएव ञिठन्तेऽपि न ङीप्। काशिषु भवा काशिका। "काश्यादिभ्यष्ठञ्ञिठौ"। यादृशीति। "त्यदादिषु दृश"इति कञ्। "आ सर्वनाम्नः"इत्याकारः। इत्वारीति। एति तच्छीला। "इण्नशजिसर्तिभ्यः क्वरप्"। "ह्यस्वस्य पिति कृति तुक्"। क्वरपोऽन्यतरानुबन्धोपादानं स्पष्टार्थम्। एकेनैव वरचो व्यावृत्तिसिद्धेः। "विन्यस्तमङ्गलमहौषधिरी()आरायाः"इति भारविः। तत्र "स्थेशमासे"ति वरच्। "ई()आरी"ति तु त्रेधा। पुंयोगलक्षणे ङीष्यन्तोदात्त मेकम्, "ईच्चोपधायाः"इत्यनुवृत्तौ "अश्नोतेराशुकर्मणि वर"ङित्यौणादिके वरटि टित्त्वान्ङीपि मध्योदात्तमपरम्, ईशेः क्वनपि वनिपि वा ङीब्राआयोराद्युदात्तदमन्यत्। ताच्छीलिकेति। अयं भावः---"शीलं""छात्रादिभ्यो णः"इति विहितो यो णस्तस्मिन्नण्कार्यं भवति, "कार्मस्ताच्छील्ये"इति ज्ञापकात्। तत्र हि "अ"न्नित्यणि विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते, यदि तु णप्रत्यये अण्कार्यं न स्यात्तर्हि किं तेन()। ताच्छीलिके एवाऽण्कार्यज्ञापनान्नेह,---दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। "तदस्यां प्रहरण"मिति णः। "छत्रादिभ्योऽ"णित्येव सूत्रमस्तु किमनया कुसृष्ट()एति तु बहवः। चौरीति। चुरा शीलमस्याः।

नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसख्यानम्। नञ्स्नञ्। वृत्तिकृता त्वत्रात्यख्युन्ग्रहणं सूत्रे प्रक्षिप्य "क्वरप्ख्युना"मिति पठितम्, तच्च भाष्यविरुद्धमित्युत्तरत्र स्फुटीभविष्यति। स्त्रैणी पौंस्नीति। "स्त्रीपुंसाभ्या"मिति

नञ्स्नञौ। शाक्तीकीति। शक्तिः प्रहरणमस्याः। "शक्तियष्ट()ओरिकक्"। आढ()ङ्करणीति। अनाढ() आढ्यः क्रियते अनयेत्यर्थे "आढ()सुभगे"त्यादिना कृञः ख्युन्। "युवो"रित्यनादेशः। "अरुर्द्विष"दिति मुम्। तरुणी। तलुनीति। तरुणतलिनयोरुनन्प्रत्ययान्तत्वेन नित्त्वादाद्युदात्तता। सैव ङीपि। ङीषि त्वन्तोदात्ततेति।

---

सूत्रम्

काशिका-वृत्तिः

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम् ४।१।१५

अतः इति सर्वत्र अनुवरतते। तत् सति सम्भवे विशेषणं भवति। टिदादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् प्रत्ययो भवति। टापो ऽपवादः। टितस्तावत् कुरुचरी। मद्रचरी। इह कस्मान् न भवति, पचमाना, यजमाना? द्व्यनुबन्धकत्वाल् लटः। ल्युडादिषु कथम्? टित्करणसामर्थ्यात्। इतरत्र तु टेरेत्वं फलम्। पठिता विद्या इति? आगमटित्त्वम् अनिमित्तं, ट्युट्युलौ तुट् च इति लिङ्गात्। ढ सौपर्णेयी। वैनतेयी। निरनुबन्धको ढशब्दः स्त्रियां न अस्ति इति निरनुबन्धकपरिभाषा न प्रवर्तते। अण् कुम्भकारी। नगरकारी। औपगवी। णे ऽपि क्वचिदण्कृतं कार्यं भवति। चौरी, तापसी। दाण्डा, मौष्टा इत्यत्र न भवति। अञ् औत्सी। औदपानी। शार्ङ्गरवाऽद्यञो ङीन् ४।१।७३ इति पुनरञो ग्रहणं जातिलक्षणं ङीषं बाधितुम्। द्वयसच् ऊरुद्वयसी। जानुद्वयसी। दघ्नच् ऊरुदघ्नी। जानुदघ्नी। मात्रच् ऊरुमात्री। जानुमात्री। तयप् पञ्चतयी। दशतयी। ठक् आक्षिकी। शालाकिकी। ठञ् लावणिकी। ठक्ठञोर् भेदेन ग्रहणं ठनादिनिवृत्त्यर्थम्। कञ् यादृशी। तादृशी। क्वरप् इत्वरी। नश्वरी। ख्युन् आढ्यङ्करणी। सुभगंकरणी। नञ्स्नञीकक्तरुणतलुनानाम् उपसङ्ख्यानम्। स्त्रैणी। पौंस्नी। शाक्तीकी। याष्टीकी। तरुणी। तलुनी।

लघु-सिद्धान्त-कौमुदी

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः १२५४, ४।१।१५

अनुपसर्दनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्स्यात्। कुरुचरी। नदट् नदी। देवट् देवी। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी। (नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्)। स्त्रैणी। पैंस्नी। शाक्तीकी। याष्टीकी। आढ्यङ्करणी। तरुणी। तलुनी॥

न्यासः

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञक्वरप्ख्युनाम्। , ४।१।१५

"सर्वत्र" इति। स्त्रीप्रकरणे। ननु च "पत्युर्नो यज्ञसंयोगे" ४।१।३३ "इतो मनुष्यजातेः" ४।१।६५ इत्यादौ नानुवत्र्तते, तस्यात इत्यस्यासम्भवाद्विशेषणं नोपपद्यत इत्याह-- "तत् सति" इत्यादि। यत्र सम्भवति तत्र विशेषणं भवति, यत्र तु न सम्भवति तत्रोत्तरार्थमेवानुवत्र्तते। इह कस्मान्न भवति-- "पचमाना" इति। स्थानिवद्भावेन शानचष्टित्त्वमस्ति, अतस्तदन्तादपि ङीपा भवितव्यमित्यभिप्रायः। "द्वयनुबन्धकत्वाल्लटः" इति। तेन "एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" (व्या।प।५२) इत्येतया परिभाषया लटोऽत्र ग्रहणं नास्तीति दर्शयति, तस्य ह्रकारो द्वितीयोऽनुबन्धोऽस्ति। "ल्युडादिषु कथम्" इति। ईकारो भवतीति शेषः। आदिशब्देन "गापोष्टक्" ३।२।८ इत्येवमादयो गृह्रन्ते। ल्युडादीनामपि द्व्यनुबन्धकत्वाट्टिद्ग्रहणेन भवितव्यम्, अतस्तदन्तेभ्यो ङीब्न स्यात्, ततश्चक करणी, सामगीत्यादि न सिध्येत्। "टित्करणसामथ्र्यात्" इति। यदि तेषामपि टिद्()ग्रहणेन ग्रहणं न स्याट्टित्करणमनर्थकं स्यात्; प्रयोजनान्तरासम्भवात्। तस्मात् सत्यपि द्व्यनुबन्धकत्वे टित्करणसामथ्र्याल्ल्युडादयो गृह्रन्त इत्यदोषः। लटोऽपि तर्हि टित्करणसामथ्र्यादेव ग्रहणेन भवितव्यमित्यत आह--"इतरत्र" इति। लटि हि टित्करमस्य "टित

आत्मनेपदानां टेरे" ३|४|७९ इति टेरेत्वं फलम्| अतो यद्यपि ग्रहणं न भवति, तथापि नैव टित्करणस्य वैयर्थ्यं प्रसज्येत| तस्मात् टित्करणसामर्थ्याल्ल्युडादयो गृह्न्त इत्यदोषः| लटोऽपि तर्हि टित्करणसामर्थ्यादेव ग्रहनेन भवितव्यमित्यत आह--"इतरत्र" इति| लटि हि टित्करणस्य "टित आत्मनेपदानां टेरे" ३|४|७९ इति टेरेत्वं फलम्| अतो यद्यपि तस्येदं ग्रहणं न भवति, तथापि नैव टित्करणस्य वैयर्थ्यं प्रसज्येत| तस्मात् टित्करणस्य चरितार्थत्वादयुक्तं तस्येदं ग्रहणम्| "पठिता विद्या" इति| अत्रापि कथमिति सम्बध्यते| इडागमस्य हि प्रत्ययभक्तत्वात् प्रत्ययस्य टित्त्वमस्ति, ततस्च ङीपा भवितव्यम्, तत्कथं पठितेत्येतद्रूपं भवतीति?"आगमटित्त्वमनिमित्तम्" इति| प्रकृतत्वात् ङीप इति विज्ञायते| कथं ज्ञायतेऽयमनिमित्तमित्याह--"ट()उट()उलौ" इत्यादि| तुड् वेत्यागमटित्त्वेनैव सिद्धे ङीपि "सायंचिरं प्राह्ण" ४|३|२३ इत्यादिसूत्रे "ट()उट()उलौ" इति पुनः प्रत्यययोष्टत्करणं ज्ञापकम्--- आगमटित्त्वमनिमित्त्वं ङीप इति| "सोपर्णेयी,वैनतेयी" इति| सुपर्णीशब्दाज्जातिलक्षमङीषन्ताद्विनताशब्दाच्च टाबन्तात् "स्त्रीभ्यो ढक्" ४|१|१२० इति ढक्| आयमन्नादि ७|१|२ सूत्रेणैयादेशः| ननु च "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या|प|५३) इति ढको ग्रहणेन न भवितव्यमित्यत आह-- "निरनुबन्धको ढशब्दः" इत्यादि| ननु चायं निरनुबन्धकोऽस्ति "शिलायाः ढः" (५|३|१०२) इति? नैतदस्ति; स्वभावत एव ह्रयं नपुसंके वत्र्तते| अयं तह्र्यस्ति स्वाभाव्यात्-- "{सभाया ढश्छन्दसि इति मुद्रितः पाठः} सभाया यः" ४|४|१०४ "ढश्छन्दसि" (४|४|१०६) इति? अयमपि नैव स्त्रियां वत्र्तते, छन्दसि सभेयीशब्दस्य प्रयोगादर्शनात्| तस्मान्नरनुबन्धको ढशब्द स्त्रियां नास्तीति नेह निरनुबन्धकपरिभाषोपतिष्ठते; अन्यथा हि ढग्रहममनर्थकं स्यात्| "णेऽपि" इति| अणि यत् कार्यं कृतं तण्णेऽपि क्वचिदिति क्वचिन्न भवतीत्युक्तं भवति| क्व पुनर्णेऽप्यण्कृतं कार्यं भवतीति? ताच्छीलिके| तथा हि "कार्मस्ताच्छील्ये" ६|४|१७२ इत्यत्र ज्ञापितमेतत्- णेऽप्यण्कृतं कार्यं भवतीति, कथम्? कार्मशब्दो हि ताच्छील्ये टिलोपार्थं निपात्यते| यदि न णेऽप्यण्कृतं कार्यं न स्यात् निपातनमनर्थकं स्यात्| कर्मशब्दात् कर्म शीलमस्येति "छत्रादिभ्यो णः" ४|४|६२ इति णे कृते "नस्तद्धिते" ६|४|१४४ इत्येवं टिलोपस्य सिद्धत्वात्| "अन्" (६|४|१६७) इति प्रकृतिभावान्न सिध्यतीति चेत्? नैतदस्ति; अणि हि प्रकृतिभाव उच्यते, तत्र "इनण्यनपत्ये" ६|४|६४ इत्यतोऽणीत्यनुवत्र्तते| तदेवं "ताच्छीलिके णेऽप्यणि कृतं कार्यं भवति" इत्यस्यार्थस्य ज्ञापितत्वात् तत्रैवाण्कृतं कार्यं भवति, नान्यत्र| " चौरी, तापसी" इति| चुरा शीलमस्यास्तपः शीलमस्या इति "छत्रादिभ्यो णः" ४|४|६२ णेऽप्यण्कृतं भवतीति ङीप्| "दाण्डा मौष्टा" इति| दण्डः प्रहरणस्याम्, मुष्टिः प्रहरणस्यां क्रीडायामिति "तदस्यां प्रहरणम्" ४|२|५६ इति क्रीडायां णः| अथाणित्यकारादारभ्य लणो णकारात् प्रत्याहारग्रहणं कस्मान्न भवति? टिबादीनां पुनग्र्रहणात्| प्रत्याहारग्रहणे हि तेषां ग्रहणमनर्थकं स्यात्, अणन्तादेव सिद्धत्वात्| "औत्सी, औदपानी" इति| उत्सस्योदपानस्येयमिति "उत्सादिभ्योऽञ्" ४|१|८६ इत्यञ्| अथ "शाङ्गरवाद्यञो ङीन्" ४|१|७३ इत्यत्र पुनरञ्ग्रहणं किमर्थं क्रियते,|यावतानेनैव सिद्धम्, तदेव हि रूपं स एव हि स्वरः, तथा हि-- ङीनि सति "ञ्नित्यादिर्नित्यम्" ६|१|१९१ इत्याद्युदात्तं भवति,औत्सीत्यत्राप्युत्सशब्दादञन्तान्ञित्स्वरेणाद्युदात्तान्ङीपि कृते तदेवाद्युदात्तत्वं भवति? इत्याह-- "शाङ्गर्वाद्यञः" इत्यादि| बिदस्यापत्यं गोत्रं स्त्रीति "अनृष्यानन्तर्य्ये बिदादिभ्योऽञ्" ४|१|१०४ इत्यञि कृते तस्य "गोत्रञ्च चरणैः सह" (का|वृ|४|१|६३) इति जातित्वात् "जातेरस्त्रीविषयादयोपधात्" ४|१|६३ इति ङीष् प्राप्नोति| तद्बाधानार्थं पुनः "शाङ्गरवाद्यञो ङीन्" ४|१|७३ इत्यत्राञो ग्रहमं क्रियते| यद्येवम्, इहाञ्ग्रहमं न कत्र्तव्यम्, तेनैवोत्सीत्यादेरपि सिद्धत्वात्? नैतदस्ति; जातिग्रहणं तत्र "इतो मनुष्यजातेः" ४|१|६५ इत्यतोऽनुवत्र्तते "पुंयोगादाख्यायाम्" ४|१|४८ इत्यादिनाञ् बैदः, तस्य भार्या बैदीति, तस्य पुंयोग ङीषेवेष्यते, तस्मात् तत्र जातिग्रहणमनुवत्र्तनीयम्| त()स्मश्चानुवत्र्तमान औत्सीत्यत्रोत्सस्येयमित्यर्थविवक्षायामञि कृतेऽजातित्वादीकारस्तत्र न प्राप्नोति,तस्मादिहाप्यञ्ग्रहणं कत्र्तव्यमेव| द्वयसजादीनामनुबन्धोच्चारणं प्रत्ययपरिग्रहार्थम्| प्रातिपदिकान्यपि द्व्यसजादीनि सन्ति, तत्रासत्यनुबन्धोच्चारणे तेषामपि ग्रहणं विज्ञायेत| तयशब्दोऽपि "अय वय तय {णय-धा|पा|} नय गतौ" (धा|पा|४७४,४८५,४७९,४८०) इति तयो धातोरजन्तं प्रातिपदिकं सम्भवति, अतस्तन्निवृत्त्यर्थं

पकारोच्चारणम्। "ऊरुद्वयसी" इत्यादि। ऊरुप्रमाणमस्याः, जानुप्रमाणस्या इति "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" ५।२।३७ इति द्वयसजादयः प्रत्ययाः। "पञ्चतयी" इति।पञ्चावयवा अस्या इति "संख्याया अवयवे तयप्" ५।२।४२। "आक्षिकी, शालाकिकी" इति। अक्षैर्दीव्यति शलाकाभिर्दीव्यतीति "तेन दीव्यतिखनति" ४।४।२ इत्यादिना ठक्, ठस्येकादेशः। "लावणिकी" इति। लवणं पण्यमस्या इति "लवणाट्ठञ्" ४।४।५२। अथ किमर्थं ठक्ठञौर्भेदेनोपादानाम्? न विशेषकरानुबन्धानुत्सृज्य "ठ"इति सामान्येनैव ग्रहणं क्रियेतेत्यत आह-- "भेदेन" इत्यादि। "ठ" इति सामान्येन ग्रहणे सति ठनादीनामपि ग्रहणं स्यात्, अतस्तन्निवृत्त्यै भेदेन ग्रहणम्। आदिशब्दो ञिठादीनां परिग्रहाय, तेन दण्डोऽस्यास्तीति "अत इनिठनौ" ५।२।११४ इति ठनि कृते दण्डिकीति न भवति, काशिषु भवेति "काश्यादिभ्यष्ठाञ्ञिठौ" ४।२।११५ इति ञिठे प्रत्यये कृते काशिकीति न भवति। कञोनुबन्धग्रहणं "आतोऽनुपसर्गे कः" ३।२।३ इत्येवादीनां निवृत्त्यर्थम्। "यादृशी, तादृशी" इति। "त्यदादिषु दृशेरनालोचने कञ्च" ३।२।६० इति कञ्, "आ सर्वनाम्नः" ६।३।९० इति यत्तदोरात्वम्। क्वरपोऽनुबन्धोच्चारणं "स्थेशभास" ३।२।१७५ इत्यादिना विहितस्य वरचो निवृत्यर्थम्। यद्येवम्, एक एवानुबन्ध उच्चारणीयः, एकेनापि वरचो निवृत्तिः सिध्यत्येव? सत्यमेतत्, तथापि मन्दबुद्धीनां सुखप्रतिपत्तयेऽनुबन्धद्वयोच्चारणम्। "इत्वरी, न()आरी"इति। "इण्नश्जसर्त्तिभ्य- क्वरप्" ३।२।१६३ ह्रस्वस्य तुक्। ख्युनोऽनुबन्धोच्चारणं लाघवार्थम्; अनयथा हि षष्ठीबहुवचने कृते नुटि नामि दीर्घत्वे च गुरुच्चारणं स्यात्। "आढ()ङ्करणी" इति। अनाढ() आढ्यः क्रियतेऽनयेति "आढ()सुभग" ३।२।५६ इत्यादिना ख्युन्, "अरुर्द्विषदजन्तदस्य मुम्" ६।३।६६। नञ्स्नञीकक्" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्-- उत्तरसूत्रे चकारोऽनुक्तसमुच्यार्थः, तेन नञादिभ्योऽपि भविष्यतीति। "स्त्रैणी,पौस्नी" इति। स्त्रिया इयम्, पुंस इयमिति "स्त्रीपुंसाभ्यां नङस्नञौ भवनात्" ४।१।८७ इति नञ्सञौ। "शात्तीकी, याष्टीकी" इति। शक्तिः प्रहरणमस्याक्षितम्। तरुणी सुरा,तलुनी सुरेति-- अत्र सुरादौ विषये तरुणतलुनशब्दाभ्यां ङीब्वेदितव्यः, न हि सुरादीनां वयोऽस्ति,तस्य प्राणिधर्मत्वात्। अभिनत्वमात्रं सुरादीनां तरुणतलुनशब्दाभ्यां गम्यते। यदा तु वयो विवक्ष्यते तदा गौरादिपाठान्ङीषा भवितव्यम्। तत्र स्वरे विशेषः-- तरुणतलुनशब्दौ हि "{कृ()वृदारिभ्य उनन्" (द।उ।५।५२) "त्रो रश्च लो वा" (द।उ।५।५६) इत्युननप्रत्ययान्तौ व्युत्पादितौ,अतो नित्स्वरेणाद्युदात्तौ। तत्र ङीपि सत्याद्युदात्तत्वं भवति; ङीषि तु सति प्रत्ययस्वरेणान्तोदात्तत्वम्॥

बाल-मनोरमा

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४६३, ४।१।१५

टिड्ढाणञ्। टित्, ढ, अण्, अञ्, द्वयसच्, दघ्नच्, मात्रच्, तयप्, ठक्, ठञ्, कञ्, क्वरप्,-एषां द्वादशानां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। ढादय एकादश प्रत्ययाः। प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। टित्तु प्रत्ययोऽप्रत्ययश्च। टिदादिभिश्च प्रातिपदिकादित्यधिकृतं विशेष्यते, विशेषणत्वात्तदन्तविधिः। ततश्च टिदन्ताड्ढाणादिप्रत्ययान्तान्ताच्च प्रातिपदिकादिति लभ्यते। "अजाद्यतष्टाप्" इत्यस्मादत इत्यनुवृत्तं, तेनापि प्रातिपदिकं विशेष्यते। तदन्तविधिः। "अनुपसर्जना"रित्येतच्छ()तेषु टिदादिष्वेवान्वेति, नतु तदन्तेषु। स्त्रियामित्यधिकृतं। तदाह--अनुपसर्जनं यट्टिदादीत्यादिना। तदन्तमिति। टिदन्तं, ढादिप्रत्ययान्तं चेत्यर्थः। टित्रिविधिः। प्रत्ययः, प्रातिपदिकं, धातुश्च। तत्राद्यमुदाहरति--कुरुचरीति। कुरुषु चरतीत्यधिकरणे उपपदे "चरेष्टः" इति कर्तरि टः। टकार इत्। उपपदसमासः। नच प्रत्ययस्यैवाऽत्र टित्त्वात्प्रत्ययग्रहणुपरिभाषया चरेत्येव टिदन्तं, नतु कुरुचरशब्दः, तदादिनियमादिति वाच्यं, नदट् देवडित्यादेरप्रत्ययस्यापि टितः सत्त्वेन तत्र प्रत्ययग्रहणपरिभाषाया अप्रवृत्तौ "येन विधिः" इति टिदन्तत्वस्य कुरुचरशब्दे सत्त्वात्। अथ द्वितीयं टितमुदाहरति-नदडिति। पचादिगणे पठितं प्रातिपदिकमेतत्। तृतीयं तु कृदन्ते स्तनन्धयीत्युदाहरिष्यते। अनुपसप्जनत्वविशेषणस्य प्रयोजनमाह--बहुकुरुचरेति।

बहवः कुरुचरा यस्यामिति विग्रहः। बहुव्रीहिरयमन्यपदार्थप्रधानः। ततश्च टितष्टप्रत्ययस्य उपसर्जनत्वान्न ङीप्। अनुपसर्जनत्वस्य प्रातिपदिकविशेषणत्वे तु ङीबत्र दुर्वारः। अतएव च आपिशालिना प्रोक्तमधीते आपिशला ब्राआहृणीत्यत्रापि न ङीप्। तत्र हि आपिशलिना प्रोक्तमित्यर्थे "तेन प्रोक्त"मित्यणि आपिशलशब्दः। आपिशलमधीते इत्यर्थे "तदधीते तद्वेदे" त्यणि "प्रोक्ताल्लुगि"ति लुप्ते स्त्रियामदन्तत्वाट्टापि आपिशलेति रूपम्। अनुपसर्जनादित्यस्य प्रातिपदिकविशेषणत्वे प्रोक्ताणन्तस्यानुपसर्जनत्वात्स्त्रियां वर्तमानत्वाच्च अणन्तत्वनिबन्धनो ङीब्दुर्वारः स्यात्। तस्य च श्रुतटिदाद्यन्वये तु प्रोक्ताऽण उपसर्जनत्वान्न दोषः। अध्येत्रण्तु लुप्तः, अणोयोऽकार इति व्याख्यानेन वर्णाश्रयतया प्रत्ययलक्षणाऽभावात्। नच स्त्रिया"मित्यस्य श्रुतटिदादिविशेषणत्वात्प्रोक्ताऽणश्चस्त्रियामवर्तनादेव न ङीपः प्रसक्तिरिति वाच्यं, ज्ञापिते तदन्तविधौ प्राधान्यात् "स्त्रिया"मित्यस्य ङीप्प्रकृतिविशेषणताया एव उचितत्वात्, अन्यथा अनुपसर्जनाधिकारवैयथ्र्याच्च। अतएव धीवानमतिक्रान्ता अतिधीवरीत्यादि सिद्धमित्यलम्। स्यादेतत्-"वच परिभाषणे"। अस्मात्कर्मणि, लृट्, "लृटः सद्वा" इति तस्य शानजादेशः, "स्यतासी लृलुटोः" इति स्यः कुत्वषत्वे, आने मुक्, णत्वम्, टाप्, वक्ष्यमाणेति रूपम्। अत्र लृडादेशस्य स्थानिवत्त्वेन टित्त्वादुगित्वाच्च "टिड्ढाणञि"ति "उगितश्चे"ति च ङीप् प्राप्नोति। नच स्थानिनो लृटष्टकारस्य ऋकारस्य च इत्वाश्रयणान्ङीब्विधेरल्विधित्वादनल्विधाविति निषेधः शङ्क्यः, "घुमास्थागापाजहातिसां हली"ति क्ङिति विहितस्य ईत्त्वस्य "न ल्यपी"ति निषेधेन लिङ्गेन अनुबन्धकार्ये अनल्विधाविति निषेधाऽभावज्ञापनात्। अनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्तौ हि क्त्वादेशस्य ल्यपः कित्त्वाऽप्रसक्तेस्तस्मिन्परत ईत्वस्याऽप्रसक्त्या तन्निषेधवैयर्थ्यां स्पष्टमेव। अतो वक्ष्यमाणेत्यत्र स्थानिवत्त्वेन शानचष्टित्त्वादुगित्वाच्च ङीब्दुर्वार इत्याशङ्क्य परिहरति--वक्ष्यमाणेत्यादिना। वक्ष्यमाणेत्यत्र टित्त्वादुगित्वाच्च ङीप् प्राप्तो न भवतीत्यन्वयः। कुतो नेत्यत आह--यासुट इत्यादि, ज्ञापनादित्यन्तम्। "यासुट् परस्मैपदेषूदात्तो ङिच्चे"ति लिङादेशानां-तिप्तस्()झीत्यादिपरस्मैपदानां यासुडागमस्य ङित्त्वं विहितम्। "यदागमाः" इति न्यायेन यासुडागमो लिङादेशावयवः। ततश्च स्थानिवत्त्वेनैव ङित्त्वसिद्धेर्यासुटस्तद्विधिवैयथ्र्यं स्यादतो "लाश्रयमनुबन्धकार्यमादेशाना ने"ति विज्ञायते। ततश्च वक्ष्यमाणेत्यत्र लृडादेशस्य शानचष्टिदुगित्कार्ये ङीपि कर्तव्ये स्तानित्त्वाऽभावान्न ङीबित्यर्थः। ननु "लाश्रयमनुबन्धकार्यमादेशानां ने"ति ज्ञापनेऽपि ब्राऊतादित्यत्र "ब्राउव ईट्" इति पितो विधीयमान ईडागमो दुर्वारः। तस्य तिबाश्रयत्वे।ञपि लाश्रयत्वाऽभावेन तस्मिन्कर्तव्ये तातङः स्थानिवत्त्वेन पित्त्वस्य निर्बाधत्वादित्यस्वरसादाह--श्नः शानच इति। श्ना इत्यस्मात्षष्ठ()एकवचने आल्लोपे "श्न" इति रूपम्, "आतो धातोः" इत्यत्र "आत" इति योगविभागमाश्रित्य अधातोरपि क्वचिदाल्लोपाभ्युपगमात्। "हलः श्नः शानज्झौ" इति स्नाप्रत्ययस्य शानजादेशो विधीयते। तत्र स्थानिवत्त्वेनैव सिद्धत्वाच्छानचः शित्त्वं व्यर्थम्। नचानल्विधाविति निषेधः शङ्क्यः, "न ल्यपी"ति लिङ्गेनाऽनुबन्धकार्येऽनल्विधाविति निषेधाऽभावस्यानुपदमेवोक्तत्वात्। एवं च क्वचिदनुबन्धकार्येऽपि अनल्विधाविति निषेधप्रवृत्तिर्विज्ञायते। तथाच वक्ष्यमाणेत्यत्र टिदुगित्कार्ये ङीपि "अनल्विधा"विति निषेधप्रवृत्त्या स्थानिवत्त्वाऽभावेन टित्त्वोगित्त्वयोरबावान्न ङीबित्यर्थः। वस्तुतस्तु "लाश्रयमनुबन्धकार्यं नादेशाना"मित्यत्र यासुटो ङित्त्वं न ज्ञापकं, तस्य तिप्सिब्मिवर्थत्वात्। नहि लिङादेशत्वेऽपि तिप्सिब्मिपां ङित्त्वं स्थानिवत्त्वलभ्यम् , "हलः श्नः शानज्झौ" इति सूत्रे भाष्ये "ङिच्च पिन्न, पिच्च ङिन्ने"ति प्रपञ्चितत्वात्। तथा श्नश्शानचः शित्त्वमपि न लिङ्गं, तत्र शित्त्वस्य भाष्ये प्रत्याख्यातत्वात्। प्रत्युत शित्त्वस्य ज्ञापकत्वे "सेह्र्रपिच्चे"ति हेरपित्त्वस्य तातङो ङित्त्वस्य च वैयथ्र्यमिति भाष्ये दूषणाभिधानाच्च। तस्माद्वक्ष्यमाणेत्यत्र ङीबेव युक्तः, टाप् त्वसाधुरेव। अजादित्वाट्टाबिति वा कथञ्चित्समाधेयमित्यास्तां तावत्।

सौपर्णेयीति। सुपण्र्या अपत्यं स्त्रीत्यर्थे "स्त्रीभ्यो ढ"गिति ढकि "आयने"यित्येयादेशः। "यस्येति चे"तीकारलोपः, "किति चे"त्यादिवृद्धिः। सौपर्णेयशब्दान्ङीप्, "यस्येति चे"त्कारलोपः, सौपर्णेयीति रूपम्। न च "निरनुबन्धकग्रहणे न

 

सानुबन्धकस्ये"ति परिभाषाया "शिलाया ढः" ढश्छन्दसि" इत्यनयोरेव ग्रहणमिति वाच्यं, तयोः स्त्रियामप्रवृत्तेरगत्या सानुबन्धकस्य ढस्य ग्रहणादिति भाष्ये स्पष्टम्। ऐन्द्रीति। इन्द्रो देवता अस्या आमिक्षाया इति विग्रहः, "सास्य देवता" इत्यमि, "यस्येति चे"त्यकारलोपः, आदिवृद्धिः। ऐन्द्रशपब्दान्ङीप्, "यस्येति चे"त्यकारलोपः। इन्द्रस्येयमिति वा विग्रहः, "तस्येद"मित्यण्। औत्सीति। "उत्सः प्रस्नवणं वारि" इत्यमरः। ऋषिविशेषो वा उत्सः। उत्सस्येयमिति विग्रहः। "उत्सादिभ्योऽञ्"। "यस्येति ट"। ङीप्। उत्सस्यापत्यं स्त्री औत्सीति तु नोदाहरणम्, जातेरित्यनुवृत्तौ "शाङ्गरवाद्यञो ङी"नित्येव सिद्धेः, "गोत्रं च चरणैः सहे"त्यपत्यप्रत्ययान्तस्य जातित्वादित्यलम्। ऊरुद्वयसी ऊरुदघ्नी ऊरुमात्रीति। ऊरू प्रमाणमस्या इति विग्रहः। "प्रमाणे द्वयसच्दघ्नञ्मात्रचः"। ङीप्। पञ्चतयीति। पञ्च अवयवा यस्या इति विग्रहः। "सङ्ख्याया अवयवे तयप्"। ङीप्। आक्षिकीति। अक्षैर्दीव्यतीति विग्रहः। "तेन दीव्यति खनति जयति जित"मिति ठक्, आदिवृद्धिः, "ठस्येकः" "यस्येति चे"त्यकारलोपः। आक्षिकशब्दान्ङीप्, "यस्येति च"। लावणिकीति। लवणं पण्यमस्या इति विग्रहः। "लवणाट्ठञ्" ठस्येकः", आदिवृद्धिः, "यस्येति च", लावणिकशब्दान्ङीप्, "यस्येति च" ठेत्येव सिद्धे ठक्ठञोः पृथग्ग्रहणं तु ठनो ञिठस्य च व्यावृत्त्यर्थम्। दण्डोऽस्त्यस्याः दण्डिका। "अत इनिंठनौ"। काश्यां भवा काशिका। "काश्यादिभ्यष्ठञ्ञिठौ" इति ञिठः। यादृशीति। "त्यदादिषु दृशः" इति यच्छब्दे उपपदे कञ्, "आ सर्वनाम्नः" इति यच्छब्दस्याकारः। ङीप्, "यस्येति च"। इत्वरीति। "इण् गतौ" "इण्नशजिसर्तिभ्यः क्वरप्"। "ह्रस्वस्य पिति कृति" इति तुक्। इत्वरशब्दान्ङीप्। "यस्येति च"। "स्थेशभासे"ति वरचो व्यावृत्तये ककारानुबन्धग्रहणम्। "विन्यस्तमङ्गलमहौषधिरी()आरायाः" इति भारविः। "सैनमी()आराप्रदह" इति वेदे। क्वरपि अन्यतरानुबन्धेनैव वरचो व्यावृत्तिसिद्धेरनुबन्धद्वयोपादानं स्पष्टार्थम्। ई()आरी तु ई()आरशब्दादी()आरस्य स्त्रीति पुंयोग ङीष्। अथवा "अस्नोतेराशुकर्मणि वरट् चे"ति वरडन्ताट्टित्वान्ङीप्। यद्वा "आतो मनिन्क्वनिब्वनिपश्च" अन्येभ्योऽपि "दृश्यते" इति क्वानिपि वनिपि च "वनो र चे"ति ङीब्राऔ।

ताच्छीलिके णेऽपीति। तच्छीले भवस्तच्छीलिकः। तच्छीलार्थक इति यावत्। तस्मिन् णप्रत्यये सति तदन्तादपि ङीब्भवतीत्यर्थः। ज्ञेपकसिद्धमेतत्। तथाहि--"शील"मित्यनुवृत्तौ "छत्रादिभ्यो णः" इति विहिते णप्रत्ययेऽण्कार्यं भवति, "कार्मस्ताच्छील्ये" इति ज्ञापकात्। कर्म शीवमस्येति विग्रहे छत्रादित्वाण्णप्रत्यये "नस्तद्धिते" इति टिलोपे, "कार्म" इति भवति, नतु "अन्" इति सूत्रेण अण्यन् प्रकृत्या स्यादित्यर्थकेन प्रकृतिभाव इति तदर्थः। अत्र अणि विहितस्य प्रकृतिभावस्य णप्रत्यये परतः प्रतिषेधात्ताच्छीलिके णुप्रत्ययेऽण्कार्यं विज्ञायते। अतस्ताच्छीलिकणप्रत्ययान्तादण्कार्यं ङीब् भवतीति भावः। चौरीति। चुरा शीलमस्या इति विग्रहः। छत्रादित्वाण्णः। आदिवृद्धिः। "यस्येति च"। चौरशब्दान्ङीपि, "यस्येति च"।

नञ्स्नञ्। नञ्, स्नञ्, ईकक्, ख्युन्, तरुण, तलुन--एतेषामपि ङीब्विधिवचनं कर्तव्यमित्यर्थः। नञादयश्चत्वारः। प्रत्ययाः, अतस्तदन्तविधिः। स्त्रौणी पौंस्नीति। "स्त्रीपुंसाभ्याम्" इति नञ्स्नञौ। तत्र स्त्रीशब्दान्नञि, आदिवृद्धिः, णत्वम्, ङीप्, "यस्येति च"। पुंस्शब्दात्स्नञि, आदिवृद्धिः, ङीप्, "यस्येति च"। शाक्तीकीति। शक्तिः-आयुधविशेषः प्रहरणमस्या इति विग्रहः। "शकिं()तयष्ठ()ओरीकक्"। आदिवृद्धिः, णत्वम्, ङीप्, "यस्येति च"। आढ()ङ्करणीति। अनाढ() आढ्यः क्रियते अनयेति विग्रहः। "आढ()सुभगे"त्यादिना ख्युन्। "युवोः" इत्यनादेशः। "अरुर्द्विषत्" इति मुम्, णत्वम्, ङीप्, "यस्येति च"। तरुणी तलुनीति। यद्यप्यनयोः "वयसि प्रथमे" इत्येव ङीप्सिद्धः, तथापि गौरादिषु पाठान्ङीषि प्राप्ते इदं वचनम्। गौरादिपाठान्ङीषि स्वरे विशेष इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

यञश् च ४।१।१६

ङीपित्येव। यञन्ताच् च प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति। गार्गी। वात्सी। अपत्यग्रहणं कर्तव्यम्। इह मा भूत्, द्वीपादनुसमुद्रं यञ् ४।३।१० द्वैप्या। योगविभागः उत्तरार्थः।
लघु-सिद्धान्त-कौमुदी
यञश्च १२५५, ४।१।१६

यञन्तात् स्त्रियां ङीप्स्यात्। अकारलोपे कृते -।
न्यासः
यञश्च। , ४।१।१६

"गार्गी। वात्सी" इति। गर्गवत्सशब्दाभ्यां स्त्रियामपत्ये "गर्गादिभ्यो यञ्" ४।१।१०५ इति यञ्, ङीप्, "यस्येति च" ६।४।१४८ इत्यकारस्य लोपः, "हलस्तद्धितस्य" ६।४।१५० इति यकारस्य च। "अपत्यग्रहणं कत्र्तव्यम्" इति। अपत्यं गृह्लते येन तदपत्यग्रहमम्। व्याख्यानमेतदुक्तं भवति-- तथा व्याख्यानं कत्र्तव्यं यथा यञो विशेषणमपत्यं गृह्लेत्। तत्रेदं व्याख्यानम्-- उत्तरसूत्रे विकल्पार्थं प्राचामिति वचनमनेनापि योगेन सम्बध्यते,व्यवस्थितविभाषा च सा विज्ञायते, तेनापत्येऽर्थे यो यञ् विहितस्तदन्तान्नित्यं भवति, यस्तु द्वीपशब्दाज्जातादावर्थे विहितदन्तान्न भवतीति। अथ योगविभागः किमर्थः? न पूर्वसूत्र एव अञ्ग्रहणं क्रियेतेत्यत आह-- "योगविभाग उत्तरार्थः" इति। उत्तरसूत्रे यञन्तादेव ष्फो यथा स्यात्, टिदादिभ्यो माभूदिति॥
बाल-मनोरमा
यञश्च ४६४, ४।१।१६

यञश्च। यञ इति प्रत्ययत्वात्तदन्तग्रहणम्। "ऋन्नेभ्यः" इत्यतो ङीबित्यनुवर्तते। स्त्रियामित्यधिकृतम्। तदाह-- यञन्तादिति। यद्यपि "टिड्ढाणञि"ति पूर्वसूत्र एव यञ्ग्रहणं कर्तुमुचितं "तथापि ष्फ तद्धितः" इत्युत्तरसूत्रे यञ एवानुवृत्तये पृथक् सूत्रमिति भावः। अकारलोपे कृते इति। गार्गीत्युदाहरणं वक्ष्यति। गर्गस्यापत्यं स्त्री इत्यर्थे "गर्गादिभ्यो यञि"ति यञ्, आदिवृद्धिः, "यस्येति चे"ति गकारादकारस्य लोपः। गार्ग्यशब्दान्ङीपि "हलस्तद्धितस्ये"ति यकारलोपात्परत्वात् "यस्येति चे"ति यकारादकारस्य लोपे कृते सति प्रक्रिया वक्ष्यत इत्यर्थः।

तत्त्व-बोधिनी
यञश्च ४१८, ४।१।१६

यञश्च। योगविभाग उत्तरार्थः। "प्राचां ष्फ तद्धितः"इत्यत्र यञ एवानुवृत्तिर्यथा स्यात्।

---

सूत्रम्
काशिका-वृत्तिः
प्राचां ष्फ तद्धितः ४।१।१७

यञः इत्येव। प्राचाम् आचार्याणां मतेन यञन्तात् स्त्रियां ष्फः प्रत्ययो भवति, स च तद्धितसंज्ञः। षकारो ङीषर्थः। प्रत्ययद्वयेन इह स्त्रीत्वं व्यज्यते। तद्धितग्रहणं प्रातिपदिकसंज्ञार्थम्। गार्ग्यायणी। वात्स्यायनी। अन्येषाम् गार्गी। वात्सी। सर्वत्रग्रहणम् उत्तरसूत्रादिह अपकृष्यते बाधकबाधनार्थम्। आवट्यात् चापं वक्ष्यति, तम् अपि बाधित्वा प्राचां ष्फ एव यथा

स्यात्। आवट्यायनी।

लघु-सिद्धान्त-कौमुदी

प्राचां ष्फ तद्धितः १२५७, ४।१।१७

यञन्तात् ष्फो वा स्यात्स च तद्धितः॥

न्यासः

प्राचां ष्फ तद्धितः। , ४।१।१७

"षकारो ङीषर्थः" इति। "षिद्()गौरादिभ्यश्च" ४।१।४१ इति ङीप्यथा स्यात्। ननु च क्रियमाणेऽपि षकारे नैव ङीषा भवितव्यम्, ष्फप्रत्ययेनैव स्त्रीत्वस्याभिव्यक्तत्वादित्यत" आह-- "प्रत्ययद्वयेन" इत्यादि। न हि केवलः ष्फः स्त्रीत्वमभिव्यङ्क्तुं समर्थ इति ङीषमपेक्षते। तेन सहिताभ्यामेव ताभ्यां स्त्रीत्वं व्यज्यत इति ङीषा भवितव्यम्। "तद्धितग्रहणम्" इत्यादि। "कृत्तद्धितसमासश्च" १।२।४६ इति प्रातिपदिकसंज्ञा यथा स्यादित्येवमर्थं तद्धितग्रहणम्। प्रातिपदिकसंज्ञा तु ङीष् यथा स्यादित्येवमर्थम्। ननु च विनापि तया षित्करणसामर्थ्यादेव ङीष् भविष्यति, अन्यथा हि षित्करणमनर्थकं स्यत्, प्रयोजनन्तराभावात्; न च "त्रपूष् लज्जायाम्" (धा।पा।३७४) इत्यतोऽपि धातोः स्यादित्यतिप्रसङ्ग आशङ्कनीयः, धातोः षित्करणस्य "षिद्भिदादिभ्योऽङ" ३।३।१०४ इत्यङविधौ चरितार्थत्वात्, अत इति चाधिकारात्? सत्यमेतत्, प्रतिपत्तिगौरवं तु स्यात्। तस्मात् सुखप्रतिपत्तये तद्धितग्रहमम्। "सर्वत्रग्रहणम्" इत्यादि। उत्तरसूत्रे सर्वत्रग्रहणमनर्थकम्। तद्धि सर्वेषामचार्याणां मतेन यथा स्यादित्येवमर्थं क्रियते, एतच्चाप्रयोजनम्, अस्वरितत्वदेव हि प्राग्ग्रहणस्य सर्वेषां मतेन भवितव्यम्। तस्मादुत्तरसूत्रे सर्वत्रग्रहणमनर्थकम्, अतस्तदिहापकृष्यते। किमर्थमित्याह-- "बाधकबाधनार्थम्" इति। "आवट()आच्चापं वक्ष्यति" इत्यादना बाधकबाधनार्थमित्यस्यैवार्थं विस्पष्टीकरोति।अवट()आच्चापोऽवकाशः-- उदीचां मतेन आवट()एति, घवटशब्दाद् गर्गादिञन्ताच्चाप्, "प्राचां ष्फ तद्धितः" ४।१।१७ इत्यस्यावकाशः-- गार्ग्यायणीति; आवट()आत् प्राचानुभयप्रसङ्गे परत्वाच्चाप् स्यात्। सर्वत्रग्रहणात् ष्फ एव भविष्यति-- आवट()आयनीति॥

बाल-मनोरमा

वृद्धेत्कोसलाजादाञ्ञ्यङ् ११७१, ४।१।१७

वृद्धेत्कोसला। जनपदक्षत्रियोभयवाचकाद्वृद्धसंज्ञकादिदन्तात्, कोसलात् , अजादाच्चापत्ये ञ्यङित्यर्थः। वृद्धादिति। उदाह्रियते इत्यर्थः। आम्बष्ठ्यः सौवीर्य इति। आम्बष्ठसौवीरशब्दौ जनपदक्षत्रियोभयवाचकौ। इदिति। इदन्तोदाहरणसूचनमिदम्। आवन्त्य इति। अवन्तिशब्दो देशे राजनि च। कौसल्य इति। कोसलशब्दो देशे राजनि च। अजादस्यापत्यमिति। राजवाचकत्वे विग्रहोऽयम्। देशवाचकत्वे तु अजादानां राजेति विग्रहः।

बाल-मनोरमा

प्राचां ष्फ तद्धितः ४६६, ४।१।१७

प्राचां ष्फ तद्धितः। "यञ" इत्यनुवर्तते, स्त्रियामित्यदिकृतम्। "ष्पे" ति लुप्तप्रथमाकम्। तदाह--यञ्न्तादिति।

तत्त्व-बोधिनी

प्राचां ष्फ तद्धितः ४२०, ४।१।१७

प्राचां ष्फ तद्धितः। "तद्धित"ग्रहणं ष्फप्रत्ययान्तस्य प्रातिपदिकसंज्ञार्थम्। तेन "षिद्गौरे"ति ङीष्सिध्यति। ननु

प्रातिपदिकसंज्ञा विनापि षित्करणसामर्थ्यादेव ङीष्भाविष्यति किमनेन तद्धितग्रहणेन()। न च यञन्ते "यस्येति चे"ति लोपार्थं तदिति वाच्यम्। सवर्णदीर्घेणापि रूपसिद्धेर्लोपस्याऽनावश्यकत्वात्। एवं तर्हि तद्धितग्रहणमिञन्तादपि क्वचित्ष्फोभवतीति ज्ञापनार्थम्। तेन "आसुरेरुपसङ्ख्यान"मिति वक्ष्यमाणं सिध्यति।

---

सूत्रम्

काशिका-वृत्तिः

सर्वत्र लोहितादिकतन्तेभ्यः ४।१।१८

यञः इत्येव। पूर्वेण विकल्पे प्राप्ते नित्यार्थं वचनम्। सर्वत्र लोहितादिभ्यः कतपर्यन्तेभ्यः यञन्तेभ्यः स्त्रियां ष्फः प्रत्ययो भवति। कतशब्दः स्वतन्त्रं यत् प्रातिपदिकं तदवधित्वेन परिगृह्यते कपिशब्दात् परः कपि कत इति , न प्रतिपदिकावयवः कुरुकतेति। लौहित्यायनी। शांसित्यायनी बाभ्रव्यायणी। कण्वात् तु शकलः पूर्वः कतादुत्तर इष्यते। पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम्। प्रातिपदिकेष्वन्यथा पाठः, स एवं व्यवस्थापयितव्यः इति मन्यते। कतन्तेभ्यः इति बहुव्रीहितत्पुरुषयोरेकशेषः, तथा कण्वादिभ्यो गोत्रे ४।२।१११ इति। तत्र तत्पुरुषवृत्त्या संगृहीतो मध्यपाती शकलशब्दो यञन्तः प्रत्ययद्वयम् अपि प्रतिपद्यते। शाकल्यायनी। शाकल्यस्य इमे छात्राः शाकलाः।

न्यासः

सर्वत्र लोहितादिकतन्तेभ्यः। , ४।१।१८

"स्वतन्त्रम्" इति। यो ह्यन्यस्यावयवभूतो न भवति केवलः कतशब्दस्तत् स्वतन्त्रं प्रातिपदिकम्। यस्तु कुरुकतशब्दस्यावयवः कतशब्दस्तस्य स्वान्तन्त्र्यं नास्ति; समुदायप्रतिबद्धत्वात्। कः पुनरसौ कतशब्दः स्वतन्त्रं प्रातिपदिकमित्यत आह-- "कपिशब्दात्" इत्यादि। "लौहित्यायनी"। शांसित्यायनी" इति। लोहितशंसितशब्दाभ्यां गर्गादित्वाद्यञ्। "वाभ्रव्यायणी" इति। अत्रापि बभ्रुशब्दात् "मधुबभ्रुवोब्र्राआह्मणकौशिकयोः" ४।१।१०६ इति यञ् "ओर्गुणः" ६।४।१४६, "वान्तो यि प्रत्यये" ६।१।७६ इति वान्तादेशः, यञन्तेभ्यः ष्फः। "कण्वात्तु"इत्यादि। कण्वशब्दात् पूर्वः शकलशब्द इष्यते, कतशब्दात्तूत्तरः। किमेवं सति भवतीत्याह-- "पूर्वोत्तरो"इत्यादि। एवं सति पूर्वोत्तरो गणौ तदन्तादी भवतः। तच्छब्देन शकलशब्दः प्रत्यवमृश्यते। शकलशब्दोऽन्त आदिश्च यथाक्रमं ययोः पूर्वोत्तरयोर्गणयोस्तौ तदन्तादी पूर्वोत्तरगणौ। लोहितादिः शकलशब्दान्तो भवति पूर्वो यथः। उत्तर गणः कण्वादिः शकलशब्दादिर्भवति। किं पुनः पूर्वोत्तरयोर्गणयोस्तदन्तादित्वे प्रयोजनमित्याह--"ष्फाणौ तत्र प्रयोजनम्" इति। पूर्वस्य गणस्यशकलान्तत्वे ष्फः प्रयोजनम्। उत्तरस्य शकलादित्वेऽण् प्रयोजनम्। "प्रातिपदिकेष्वन्यथा पाठः"इति। कपिकत, कुरुकत, अनडुह्, कण्व, शकल -- इत्यनयाऽनुपूव्र्या प्रातिपदिकेषु पाठः। "स एवं व्यवस्थापयितव्यः" इति। कण्वात्तु शकलः पूर्वः"इत्यादिना याऽऽनुपर्वी दर्शिता तया व्यवस्थापयितव्यः। अत एतदुक्तं भवति-- कुरुकत, अनडुह्-- इत्येतावन्यस्मिन् स्थाने पठितव्यौ, शकलशब्दस्तु कतकण्वशब्दयोर्मध्ये पठितव्यः। "मन्यते" इति श्लोवार्त्तिकारः। कथं पुनरेवं पाठे सति शकलशब्दात् ष्फाणौ सिध्यत आह-- "कतन्तेभ्यः" इत्यादि। कतस्यान्तः कतन्त इति तत्पुरुषः "कतन्तेभ्यः"इति निपातनात्पररूपत्वम्। कतशब्दोऽन्ते येषां लोहितादीनां ते कतन्ता इति बहुव्रीहिः। कतन्तश्च शकलशब्दः, कतन्ताश्च लोहितादय इति कतन्तश्च कतन्ताश्चेति सरूपाणामेकशेषः। "तथा" इत्यादिना यथा कतन्तेभ्य इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषः, तथा कण्वादिभ्य इत्यत्रापीति दर्शयति। कण्वस्यादिः कण्वादिः शकलशब्दः कण्वशब्दः आदिर्येषां गोकक्षादीनां ते कण्वादयः, कण्वादिश्च कण्वादयश्च कण्वादयः, पूर्ववदेकशेषः। "तत्पुरुषवृत्त्यासंगृहीतः"इति। "कतन्तेभ्यः" इत्यत्र "कण्वादिब्यः" ४।२।१११ इत्यत्र तत्पुरुषवृत्त्या तत्पुरुषसमासेन। "मध्यापीत" इति। कतकण्वशब्दयोर्गणयोर्वा। "प्रत्ययद्वयम्" इति। ष्फप्रत्ययम्, अण्प्रत्ययञ्च। "प्रतिपद्यते" इति। प्राप्नोति।

तत्पुरुषवृत्त्याहि तस्य संग्रहे सत्यस्य सूत्रस्यायमर्थो जायते-- कतन्ताच्छकलशब्दात् तथा यञन्तात् कतन्तेभ्यश्च लोहितादिभ्यो यञन्तेभ्यः स्त्रियां ष्फप्रत्ययो भवतीति। तेन ष्फप्रत्ययं प्रतिपद्यते शकलशब्दः। "शाकल्यायनी" इति। "कण्वादिभ्यो गोत्रे" ४।२।११० इत्यत्रापि तत्पुरुषवृत्त्या शकलशब्दस्य संग्रहे सत्ययमर्थो भवति। कण्वादेः शकलशब्दान्ताद्गोत्रप्रत्ययान्तात् कण्वादिभ्यो गोकक्षान्तेभ्यो गोत्रप्रत्ययान्तेभ्यः शैषिकेष्वर्थेष्वण्प्रत्ययो भवतीति। तेनाण्प्रत्ययमपि शकलशब्दः प्रतिपद्यते-- शाकल्यस्येमे छात्राः शाकला इति॥

बाल-मनोरमा

सर्वत्र लोहितादिकतन्तेभ्यः ४६९, ४।१।१८

सर्वत्र लोहितादिर्गर्गाद्यन्तर्गणः। लोहित आदिर्येषामिति, कतोऽन्तो येषामिति च विग्रहः। "कतन्ते"त्यत्र शकन्ध्वादित्वात्पररूपम्। "यञ" इत्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। "प्राचां ष्फ तद्धितः" इति सूत्रं "प्राचां"वर्जमनुवर्तते। सर्वत्रेति। सर्वेषु मतेष्वित्यर्थः। नित्यमिति यावत्। तदाह--लोहितादिभ्य इत्यादिना। लौहित्यायनीति। लोहितस्यापत्यं स्त्रीति विग्रहः। लोहितशब्दाद्गर्गादियञन्तात् ष्फः। ष इत्, फकारस्यायन्,"यस्येति चे"ति यकारादकारस्य लोपः, "तद्धितः" इत्यप्यनुवृत्तेः षित्त्वान्ङीषिति भावः। कात्यायनीति। पूर्ववत्प्रक्रिया बोध्या।

तत्त्व-बोधिनी

सर्वत्र लोहितादिकतन्तेभ्यः ४२३, ४।१।१८

सर्वत्र। सर्वषां मत इत्यर्थः। तदेतत्फलितमाह--नित्यं ष्फः स्यादिति। नन्वारम्भसामथ्र्यान्नित्।त्वे सिद्धे सर्वत्रग्रहणं व्यर्थमिति चेत्। अत्राहुः--पूर्वसूत्रे बाधकबाधनोपयुक्तस्येह स्पष्टार्थमभ्युपगमान्न वैयथ्र्यमिति। "यञ"इत्यनुवर्तनादाह--यञन्तेभ्य इति। लोहितादिर्गर्गाद्यन्तर्गण इति भावः। लौहित्यायनीति। "सांशित्यायानी""बाभ्राव्यायणी"त्यदायोऽपि ज्ञेयाः। ननु गर्गादौ कत--कण्व-शकलेति पठ()ते, तथा च "शाकल्यायनी"ति रूपं न सिध्येत्। यदि तु लोहितादिकार्यार्थं कतशब्दात्प्रागेव शकलब्दः पठ()ते, तथा च "शाकल्यायनी"ति रूपं न सिध्येत्। यदि तु लोहितादिकार्यार्थं कतशब्दात्प्रागेव शकलब्दः पठ()ते तर्हि शाकल्यस्य छात्राः शाकला इत्यत्र "कण्वादिभ्यो गोत्रे"इति कण्वादिकार्यमण् न सिध्येत्। उच्यते--कतकण्वशकलेति गणपाधे कण्वशब्दात् पूर्वं शकलशब्दः पठितव्यः।"कतन्तेभ्य"इत्यत्र कतस्याऽन्तः कतन्तः, कतोऽन्तो येषां ते कतन्ताः। शाकन्ध्वादित्वात्पररूपम्। कतन्तश्च कतन्ताश्चेति बहुव्रीहितत्पुरुषयोरेकशेषोऽभ्युपेयः। तथा "कण्वादिभ्य"इत्यत्रापि कण्वस्यादिः कण्वादिः, कण्व आदिर्येषामिति बहुव्रीहितत्पुरुषयोरेकशेषस्तथा च सर्वेष्टसिद्धिरिति।

---

सूत्रम्

काशिका-वृत्तिः

कौरव्यमाण्डूकाभ्यां च ४।१।१९

कौरव्य माण्डूक इत्येताभ्यां स्त्रियां ष्फः प्रत्ययो भवति। कुर्वादिभ्यो ण्ये कृते, ढक् च मण्डूकात् ४।१।११९ इत्यणि च। यथाक्रमं टाब्ङीपोरपवादः। कौरव्यायणी। माण्डूकायनी। कथं कौरवी सेना? तस्य इदं विवक्षायाम् अणि कृते भविष्यति। कौरव्यमाण्डूकयोरासुरेरुपसङ्ख्यानम्। आसुरायणी। शैषिकेष्वर्थेषु इञश्च ४।२।१११ इत्यणि प्राप्ते छप्रत्यय इष्यते। आसुरीयः कल्पः।

न्यासः

कौरव्यमाण्डूकाभ्याञ्च। , ४।१।१९

"कथं कौरवी"इति। कौरव्यशब्दादेवात्र ङीब्विहित इति मन्यमानस्य प्रश्नः। कुरुशब्दादेवात्राणन्तान्ङीब्विहित इति दर्शयन्नाह--"तस्येदम्" इत्यादि। "कौरव्यमाण्डूकयोः" इत्यादि। कौरव्यमाण्डूकयोरनेन सूत्रेण यत्कार्यं विधीयते तस्यासुरेरप्युपसंख्यानम् = प्रतिपादनं कत्र्तव्यम्। आसुरेरपि ष्फः प्रतिपादयितव्य इति यावत्। तत्रेदं प्रतिपादनम्--चकारोऽत्र क्रियते,स चानुक्तसमुच्चयार्थः तेनासुरिशब्दादपि ष्फो भविष्यतीति। "आसुरायणी"इति। असुरस्यापत्यमिति "अत इञ्" ४।१।९५ , तदन्तात् ष्फः। "इञश्चेत्यणि प्राप्ते" इति। तत्र "प्रस्थोत्तरपदपलद्यादिकोपदादण्" ४।२।१०९ नेति योगविभागः कत्र्तव्यः, तेनासुरिशब्दादपि प्रतिषिद्धे "वृद्धाच्छः" ४।२।११३ इति छ एव भविष्यति-- आसुरिणा प्रोक्त आसुरीयः कल्प इति॥

बाल-मनोरमा

कौरव्यमाण्डूकाभ्यां च ४७०, ४।१।१९

कौरव्यमाण्डूकाभ्यां च। आभ्यामिति। कौरव्यमाण्डूकाभ्यामित्यर्थः। क्रमेणेति। कौरव्यशब्दाट्टापो माण्डूकशब्दान्ङीषस्चापवाद इत्यर्थः।छ कौरव्यशब्दस्य यञन्तत्वान्माण्डूकशब्दस्य अणन्तत्वाच्च "ङीपोऽपवाद" इत्युचितमिति भ्रमं वारयितुमाह--कुर्वादिभ्य इत्यादिना। कौरव्यायणीति। कुरोरपत्यं स्त्रीति विग्रहः। "कुर्वादिभ्यो ण्यः" इति ण्यः। णकार इत्, "ओर्गुणः," "आदिवृद्धिः, "गोत्रं च चरणैः सहे"ति जातित्वेऽपि योपधत्वात् "जातेरस्त्रीविषया"दिति ङीषभावे टाप् प्राप्तः। तं बाधित्वा ष्फः, ष इत्, आयन्, "यस्येति चे"त्यकारलोपः। षित्वान्ङीष्। "यस्येति चे"ति भावः। माण्डूकायनीति। मण्डूको नाम ऋषिः, तस्यापत्यं स्त्रीति विग्रहः। "ढक् च मण्डूका"दित्यण्, आदिवृद्धिः, "यस्येति च," "गोत्रं च चरणैः सहे"ति जातित्वान्ङीष् प्राप्तः, तं बाधित्वा ष्फः, ष इत्, आयन्, "यस्येति च," षित्वान्ङीष्, "यस्येति चे"ति भावः। "टाब्ङीपोरपवाद" इति पाठस्तु प्रामादिकः।

आसुरेरुपसङ्ख्यानमिति। "ष्फस्ये"ति शेषः। आसुरायणीति। असुरस्यापत्यं स्त्रीति विग्रहः। "अत इञ्", आदिवृद्धिः, ष्फः, ष इत्ायन्। "यस्येति च"। "षित्वान्ङीष्, "यस्येति च"। णत्वमिति भावः।

तत्त्व-बोधिनी

कौरव्यमाण्डूकाभ्यां च ४२४, ४।१।१९

कौरव्य। टाम्ङीषोरिति योपधत्वेन "जाति"रिति तथापि तत्र "ङी"बिति लेखकपर्माद एव। पारिभाषिकस्य पौत्रपर्भृतिगोत्रस्यैव जातित्वान्ङीषः प्राप्तिर्नेति मतान्तराभि प्रायेण वा तथोक्तमिति बोध्यम्। कौरव्यसाहचर्यान्माण्डूकशब्दोऽप्यपत्यपत्र्ययान्त एवेह गृह्रते न तु "तस्येद"मित्यणन्तः, तेन "यद्यसौ कूपमाण्डूकि। तवैकावतिकः स्मय"इति भट्टिप्रयोगः सिद्धः। तत्र हि मण्डूकस्येयं भार्येति विवक्षया "तस्येद"मित्यण्।

---

सूत्रम्

काशिका-वृत्तिः

वयसि प्रथमे ४।१।२०

कालकृतशसीरावस्था यौवनादिः वयः। प्रथमे वयसि यत् प्रातिपदिकं श्रुत्या वर्तते ततः स्त्रियां ङीप् प्रत्ययो भवति। कुमारी। किशोरी। बर्करी। प्रथमे इति किन्? स्थविरा। वृद्धा। अतः इत्येव, शिशुः। वयस्यचरम इति वक्तव्यम्। वधूटी। चिरण्टी। द्वितीयवयोवचनावेतौ। प्राप्तयौवना स्त्री अभिधीयते। कथं कन्या? कन्यायाः कनीन च ४।१।११६ इति ज्ञापकात्। उत्तानशया, लोहितपादिका इति? नैताः वयःश्रुतयः।

लघु-सिद्धान्त-कौमुदी
वयसि प्रथमे १२५९, ४।१।२०

प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप्स्यात्। कुमारी॥
न्यासः
वयसि प्रथमे। , ४।१।२०

"यौवनादिः" इति। आदिशब्दो वृद्धत्वाद्युपसंग्रहार्थं इति। "श्रुत्या वत्र्तते" इति। यत् प्रातिपदिकं श्रवणमात्रेणैव प्रकरणाद्यनपेक्षं प्रथमं वयः प्रत्याययति तदत्र श्रुत्या वत्र्तते। "कुमारी" इति। ननु च नायं कुमारीशब्दः प्रथमे वयसि वत्र्तते, क्व तर्हि? पुंयोगाभावे, तथा हि वृद्धायामपि हि प्रयुज्यते-- वृद्धा कुमारीति? नैतदस्ति;कुमारीशब्दो हि प्रथम एव वयसि रूढः। यस्तु वृद्धायामपि तस्य प्रयोगस्तत्र कुमारीसाधम्र्यात्, न तु पुंयोगाभावात्। भवति हि ताद्धम्र्यात् ताच्छब्द्यम्, यथा --#ऋ- गौर्वाहीक इति। "वयस्यचरमे" इति। अचरमे = अनन्त्ये ङीब्भवतीत्येतदर्थरूपमस्य सूत्रस्य व्याख्यानमित्यर्थः। तेत्रेदं व्याख्यानम्-- प्रथमवयोग्रहणमिहाचरमस्य वयस उपलक्षणम्, तेनान्यत्राप्यचरमे वयसि ङीब्भवतीति। किं पुनः कारणं प्रथम एव वयसि गृह्रमाणे न सिध्यति, येनैवं सूत्रार्थो व्याख्येयः? इत्याह-- "द्वितीयवयोवचनावेतौ" इत्यादि। इह केचिच्चत्वारि वयांसीच्छन्ति --कौमार यौवन मध्यत्व वृद्धत्वानि। तथा चाहुः-- "प्रथमे वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये न तपस्तप्तं चतुर्थं किं करिष्यति॥ इति। अन्ये त्रीणीच्छन्ति-- कौमारयौवनस्थाविराणि। तथा चाहुः-- पिता रक्षतिकौमारे भत्र्ता रक्षति यौवने, पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥इति। केचिद्बाल्यमध्यत्ववृद्धत्वानीति त्रीणीच्छन्ति।तथा चाहुः-- आषोडशाद्भवेद्बालो यावत् क्षीरान्नवत्र्तकः। मध्यमः सप्ततिर्यावत् परतो वृद्ध उच्यते॥ इति। एतेषु सर्वेषु यौवनं द्वितीयं वयो भवति। ननु प्रथमवयोवचनौ तु वधूटीचिरण्टीशब्दावित्यतो न प्राप्नोति, तस्मादचरमस्य वयस इहोपलक्षणं प्रथमं वय इति व्याख्येयमिति केचित्। यस्तु मन्यते "केचित्तु द्वे एव वयसी इच्छन्तीति, यावत्यो बुद्धिमत्योऽवस्थास्ताः सर्वा राशीकृत्य प्रथमं वयो व्यवस्थाप्यते, यास्त्वपचयवत्योऽवस्थास्ताः सर्वा राशीकृत्य द्वितीयं वयः। तथा चोक्तम्-- "वद्र्धते यावदन्नेन तावद्वर्धितव्यं पश्चदपायेन योक्ष्यते"इति,एतदेव दर्शनमाश्रित्यैतत् सूत्रं प्रणीतम्। इति। तेन वधूटी, चिरण्टीत्यत्रापि ङीब्भवतीति तेन द्वितीयवयोवचनावेतौ। प्राप्तयौवना स्त्र्यभिधीयत इत्यस्य ग्रन्थस्याविरोधाय यतितव्यम्। न ह्रस्मिन्दर्शने यौवनं द्वितीये वयस्यन्तर्भवति;यौवनावस्था वृद्धिमतीत्वात्। अथ कथमुत्तानशयालोहितपादिकेति, यावता बाल्यमत्र गम्यते, बालैव ह्युत्तानशया लोहितपादिका भवति, तस्माद्भवितव्यमेव ङीपेत्यत आह-- "नैता वयः श्रुतयः" इति। नैते वयोवचनाः शब्दा इत्यर्थः। इह तावदुत्तानशयेति प्रातिपदिकश्रवणमात्रेण क्रियाकारकसम्बन्धमात्रं प्रतीयते-- उत्ताना शेत इत्युत्तानशया। "हरतेरनुद्यमनेऽच्" ३।२।९ इत्यतोऽज्ग्रहणेऽनुवत्र्तमाने "अधिकरणे शेतेः" ३।२।१५ इत्यत्रोत्तानादिषु कर्त्तृष्वित्युपसंख्यानादच्,"स्त्रियाः पुंवत्"६।३।३३ इति पुंवद्भावः। सर्वैवोत्ताना शेते, उच्यते चेदमुत्तानशयेति;तत्र नियमो गम्यते। अन्यथा शायितुमसामथ्र्यादुत्तानैव या सेते सोत्तानशयेति गम्येति। अवगतेऽप्यस्मिन्नियमे सन्देह एव-- किमसौ बाला? वृद्धा वा? इति। वृद्धाऽपि हि कदाचिदन्यथा शयितुमशक्ता स्यात्, उत्तानैव च शेते। तस्माद्यदोत्तानैव शेत इति नियमप्रतीतिर्भवति, वृद्धत्वाभावश्च कुतश्चित्प्रकरणादेरवसितो भवति, तदा बाल्यं गम्यते। "लोहितपादिका"इति। अत्रापि लोहितौ पादावस्या इत्यन्यपदार्थमात्रं तावत् तच्छब्दात् प्रतीयते। यदा तु प्रकरणादिना स्वभावत एवास्या रक्तौ पादौ नालक्तकरसादिनेति प्रतीतिर्भवति तदा बालेति गम्यते। इतिशब्दः प्रकारार्थः। एवम्प्रकारा नैता वयः श्रुतय इत्यर्थः। कथं बाला, वत्सेति? अजादित्वाट्टाब्भविष्यति। ननु वचनसामथ्र्यादनेन ङीबपि प्राप्नोति? नैतदस्ति;तस्यान्यत्र कुमारी, किशोरीत्यादौ चरितार्थत्वात्॥
बाल-मनोरमा

वयसि प्रथमे ४७२, ४।१।२०

वयसि प्रथमे। प्राणिनां कालकृतावस्ताविशेषो वयः। तच्च कौमारं यौवनं वार्धकं चेति त्रिधा। "पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्रयमर्हति॥" इति दर्शनात्। चतुर्विधं वय इत्यन्ये। "आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति॥" इति दर्शनात्। "प्रथमे वयसी"त्यनन्तरं "विद्यमाना"दिति शेषः। "अजाद्यतष्टाप्" इत्यतोऽत इत्यनुवृत्तेन प्रातिपदिकादित्यधिकृतं विसेष्यते। तदन्तविधिः। स्त्रियामित्यधिकृतम्। "ऋन्नेभ्यः" इत्यतो ङीबित्यनुवर्तते। तदाह--प्रथमवयोवाचिन इत्यादिना। कुमारीति। अप्रादुर्भूतयौवनेत्यर्थः। वृद्धकुमारीति तु वृद्धायामेव कुमारीत्वारोपाद्बोध्यः।

वयस्यचरम इति। चरमम्न्त्यं वयः, तद्भिन्नम् अचरमं। प्रथमे इत्यपनीय अचरमे इति वक्तव्यमित्यर्थः। किमर्थमित्यत आह--वधूटी चिरण्टीति। अनयोर्द्वितीयवयोवाचित्वादप्राप्तिरिति भावः। अनयोर्द्वितीयवयसि अप्रसिद्धत्वादाह--यावनवाचिनाविति। भाष्यप्रामाण्यादिति भावः। शिशुरिति। शिशुशब्दस्य प्रथमवयोवाचित्वेऽपि अदन्तत्वाऽभावान्न ङीबिति भावः। कन्याया नेति। "ङी"बिति शेषः। कुत इत्यत आह--कन्यायाः कनीन चेति। नच "द्विवर्षा स्त्री"त्यादावपि ङीप् शङ्क्यः, शालादावपि प्रयोगसत्त्वेन द्विवर्षेत्यादेः प्रथमयोवाचित्वाऽभावात्, पदान्तरसमभिव्याहारप्रकरणादि अनपेक्ष्या यो वयोवाची तस्यैव विवक्षितत्वात्।

तत्त्व-बोधिनी

वयसि प्रथमे ४२५, ४।१।२०

वयसि। कालकृता शरीरावस्था वयः। यस्त्वर्थपर्करणादिकमनपेक्ष्य श्रवणमात्रेण वयः पर्तिपादयति स वयोवाचीत्युच्यते, अन्तरङ्गत्वात्। तेनेह न,--उत्तानशया। लोहितपादा। इह प्रकरणादिना वयसः प्रतीतावपि शब्दादप्रतीतेः। अवलाऽपि हि व्याध्यादिवशादुत्ताना शेते, अलक्तकेन च रक्तचरणा भवति। प्रथमेति किम्()। वृद्वा। कुमारीति। पर्थमवयोवचन एवाऽयं शब्दो न त्वनूढत्वप्रयुक्तः। पुंस्यपि "कुमार"इति प्रयोगात्। "वृद्धकुमारी"ति तु गौणः प्रयोगः।

वयस्यचरम इति वाच्यम्। वयस्यचरम इति। यौवनं न प्रथमवयः, किंतु द्वितीयमिति वार्तिकारम्भः। "उपचयापचयलक्षणे द्वे एव वयसी" इति पक्षे यौवनस्यापि प्राथम्यात्सूत्रेणैव सिध्यतीत बोध्यम्। वयांसि चत्वारीत्येके। यदाहुः--"अद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि"()॥ इति। त्रीणीत्यन्ये। यदाहुः--"पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थावीरे भावे न स्त्री स्वातन्त्र्यमर्हति॥"इति।

---

सूत्रम्

काशिका-वृत्तिः

द्विगोः ४।१।२१

द्विगुसंज्ञकात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो भवति। पञ्चपूली। दशपूली। कथं त्रिफला? अजादिषु दृश्यते।

न्यासः

द्विगोः।, ४।१।२१

"पञ्चपूली" इति। पञ्चानां पूलानां समाहार इति। "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति समाहारद्विगुः। "अकारान्तोदत्तरपदो द्विगुः स्त्रियां भाष्यते" (वा। १५६) इति स्त्रीलिङ्गता। "त्रिफला" इति। त्रयाणां फलानां समाहार इति।

पूर्ववद् द्विगुः॥

बाल-मनोरमा

द्विगोः ४७३, ४।१।२१

द्विगोः। "स्त्रिया"मिति "अत" इति "ङी" बिति चानुवर्तते। तदाह-अदन्तादिति। त्रिलोकीति। त्रयाणां लोकानां समाहार इति विग्रहः। "तद्धितार्थोत्तरपदसमाहारे चे"ति द्विगुसमासः। "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति स्त्रीत्वम्। त्रिलोकशब्दाट्टाबपवादो ङीप्। "यस्येति चे"ति भावः। ननु त्रिफला त्र्यनीका इत्यत्रापि ङीप् प्राप्नोतीत्यत आह--अजादित्वात्रिफला त्र्यनीकेति। "भवती"ति शेषः। त्रयाणां फलानां समाहार इति, त्रयाणामनीकानामिति च विग्रहे "तद्धितार्थ" इति द्विगुः। "अकारान्तोत्तरपदः" इति स्त्रीत्वम्, "द्विगोः" इति ङीपं बाधित्वाऽजादित्वाट्टाबिति भावः। अनीकशब्द ऐन्द्रवायवाग्रत्वे शुकाग्रत्वे आग्रयणाग्रत्वे च वर्तते इति त्र्यनीकाधिकरणे मीमांसकाः। अपरिमाण। "द्विगोः" इति ङीबिति चानुवर्तते। प्रातिपदिकादित्यधिकृतमपरिमाणादिभिर्विशेष्यते। तदन्तविधिः।

---

सूत्रम्

काशिका-वृत्तिः

अपरिमाणबिस्ताऽचितकम्बल्येभ्यो न तद्धितलुकि ४।१।२२

पूर्वेण ङीप् प्राप्तः प्रतिषिध्यते। अपरिमाणान्तात् द्विगोः बिस्ताऽचितकम्बल्यान्ताच् च तद्धितलुकि सति ङीप् प्रत्ययो न भवति। बस्तादीनां परिमाणार्थं ग्रहणम्। सर्वतो मानं परिमाणम्। अपरिमाणान्तात् तावत् पञ्चभिरश्वैः क्रीता पञ्चाश्वा। दशाश्वा। कालः च सङ्ख्या न परिमाणम्। द्विवर्षा त्रिवर्षा। द्वाभ्यां शताभ्यां क्रीता द्विशता। त्रिशता। बिस्तादिभ्यः द्विबस्ता। त्रिबस्ता। द्व्याचिता। त्र्याचिता। द्विकम्बल्या। त्रिकम्बल्या। अपरिमाण इति किम्? द्व्याढकी। त्र्याढकी। तद्धितलुकि इति किम्? समाहारे पञ्चाश्वी। दशाश्वी।

न्यासः

अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि। , ४।१।२२

"तद्धितलुकि सति"इति। एतेन "तद्धितलुकि" इत्येषा विषयसप्तमीति दर्शयति। परसप्तमीत्येषानोपपद्यते;लुकोऽभावरूपत्वात्, अभावे च पौर्वापर्याभावात्। "सर्वतो मानं परिमाणम्" इति। परिशब्दः सर्वतो भावे। सर्वत आरोहतः परिणाहतश्च मीयते = परिच्छद्यते येन तत्परिमाणम्- प्रस्थादिः। "पञ्चा()आआ" इति। तद्धितार्थे द्विगुः, "तेन क्रीतम्" ५।१।३६ इत्यार्हीयष्ठक्, "अध्यर्धपूर्वाद्द्विगोर्लुक्"५।१।२८। "कालः संख्या च न परिमाणम्" इति। न हि ताभ्यामारोहतः परिणाहतश्च मीयते। ज्ञापकाच्च न तयोः परिमाणत्वमवसीयते। यदयं "परिमाणान्तस्यासंज्ञाशाणयोः" ७।३।१७ इति सिद्धायामुत्तरपदवृद्धौ "संख्यायाः संवत्सरसंख्यस्य च"७।३।१५ इति संख्यासंवत्सरग्रहणं करोति, तज्ज्ञापयति--कालः संख्या च न परिमाणं भवतीति। विस्तादि च परिमाणविशेष एव ग्रहीतव्यः। अतो वृत्तिग्रन्थः-- परिमाणार्थं ग्रहणमिति। काण्डस्य वा परिमाणत्वे तूत्तरसूत्रेण नियमार्थता न विरुध्यते। यद्येवं "कालाः परिमाणिना" (२।२।५) इत्यत्र सामर्थ्यात् परिमाणवचनाः कालशब्दाः समस्यन्त इति यदुक्तं तद्विरुध्यते? नास्ति विरोधः; उपचारेण तथान्यत्र परिमाणिवाचिना सुबन्तेनाभिधानात्। इह हि मुख्यं कालस्य परिमाणत्वे निषिध्यते। तत्र ह्यौपचारिकं कालस्य परिमाणत्वमाश्रित्य परिमाणवचनाः कालशब्दा इत्युक्तम्-- कालाः परिमाणनेति ब्राउवता। परिमाणवचनत्वं कालशब्दानामुपयुक्तं भवति,न हि तेन विना परिमाणापेक्षयोत्तरपदस्य परिमाणिव्यपदेश उपपद्यते। न च कालस्य मुख्यं परिमाणत्वमस्ति। अतः सामर्थ्यादौपचारिकं परिमाणत्वमाश्रितमिति गम्यते।

उपचारस्य हेतुः परिच्छेदस्य हेतुत्वमात्रम्, परिमाणस्य साधर्म्यम्। कालो हि मासादिर्जातादिसमबन्धिनीमादित्यगतिं गमयतीति भवति परिच्छेदस्य हेतुः। अतः परिमाणसाधर्म्यादुपपद्यते, तत्र च परिमाणोपचारः। "द्विवर्षा, त्रिविर्षा" इति। द्वे वर्षे भूतेति "समधीष्टो भृतो भूतो भावी" ५।१।७९ इत्यनेन विहितस्य ठकः "वर्षाल्लुक्" ५।१।८७इति लुक् पाक्षिकः। चित्तवत्त्वे तु प्रत्ययार्थस्य विवक्षिते "चित्तवति नित्यम्" ५।१।८८ इति नित्यमेव लुक्। द्वे वर्षे प्रमाणमस्या इति "प्रमाणे लो द्विगोर्नित्यम्" (वा।५५८,५५९) इति नित्यमेव लुक्। "द्विशता, त्रिशता" इति। द्वाभ्यां शताभ्यां क्रीतेति "पणपादमाषसशताद्यत्" ५।१।३४) इति यति प्राप्ते "शाणाद्वा" (५।१।३५) इत्यत्रोपसंख्यानम्-- "शताच्चेति वक्तव्यम्"(वा। ५१०) इति। तेन शतसशब्दात् पक्षे "संख्याया अतिशदन्तायाः कन्" ५।१।२२ इति कन्,तस्य पूर्ववल्लुक्। "द्विविस्ता"इति। द्वौ बिस्तौ पचति। "सम्भवत्यवहरति पचति" ५।१।५१ इत्यनेनार्हीयष्ठक्, तस्य पूर्ववल्लुक्। द्वावाचितौ पचति "द्व्याचिता"। "आढकाचितपात्रात्सखोऽन्यतरस्याम्" ५।१।५२ इति वत्र्तमाने "द्विगोः ष्ठंश्च" ५।१।५३ इति ष्ठन्, तस्य पूर्वल्लुक्। द्वाभ्यां कम्बल्याभ्यां क्रीता "द्विकम्बल्या"। "तेन क्रीतम्" ५।१।३६ इति ठक्,तद्वदेव। लुक्। "द्व्याढकी" इति। द्वावाढकौ पचति। "आढकाचितपात्रात्खोऽन्यतरस्याम्" ५।१।५२ इति वत्र्तमाने "द्विगोः ष्ठंश्च" ५।१।५३ इतिपक्षे ष्ठन्, तस्या लुक्। "पञ्चा()आई" इति। पूर्ववत् समाहारे द्विगुः। इहेमौ द्वौप्रतिषेधावुच्येते, तत्रैकः शक्यमकर्त्तुम्। कथम्? एवं सूत्रन्यासः करिष्यते-- परिमाणान्तातद्धितलुकीति। पूर्वेणैव सिद्धे नियमार्थमेतत्-- परिमाणान्तादेव तद्धितलुकि ङीब्भवति, नान्यस्मात्। तेन द्व्याढकीत्यादावेव भवति, न पञ्चा()ओत्यादौ;ततो विस्ताचितकम्बल्येभ्यो न तद्धितलुकीत्यनुवत्र्तते,बिस्तादिभ्यः परिमाणेभ्योऽपि तद्धितलुकि ङीब्न भवतीति? नैवं शक्यम्; विपरीतोऽपि नियमः सम्भाव्येत--परिमाणान्तात् तद्धितलुक्येवन भवति, नान्यत्रेति। ततश्च द्वयोः कुडवयोः समाहारो द्विकुडवीत्त्र न स्यात्। तस्माद्यथान्यासमेवास्तु॥

बाल-मनोरमा

अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ४७४, ४।१।२२

तदाह-अपरिमाणान्तादित्यादिना। अपरिमाणान्तमुदाहरति-पञ्चभिरिति। तद्धितलुकं दर्शयति-आर्हीयष्ठक्, अध्यर्धेति लुगिति। पञ्चभिर()औः क्रीतेति विग्रहे "तद्धितार्थ" इति द्विगुः। "आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठ"गित्यधिकारे "तेन क्रीत"मिति ठक्, "अध्यर्धपूर्वाद्द्विगोर्लुगसंज्ञाया"मिति तस्य लुक्। अत्र "द्विगोः" इति ङीप् न भवति, अपरिमाणान्तद्विगुत्वात्। नन्वत्र "द्विगो"रिति प्राप्तङीब्निषेधेऽपि "टिड्ढाण"ञिति ठग्निमित्तको ङीब् दुर्वारः। द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यत्र "सङ्ख्याया अतिशदन्तायाः" इति कनः "अध्यर्धे"ति लुकि "अपरिमाणे"ति निषेधस्य चरितार्थत्वादिति चेत्सत्यम्, "टिड्ढाण"ञित्यत्र प्रत्यासत्त्या टिड्ढाणञादीनां यो।ञकारस्तदन्तमिति विवक्षितम्। पञ्चा()आशब्दश्चायं ठगवयवाकारान्तो न भवतीति न दोषः। नच प्रत्ययलक्षणेन ठगवयवाकारान्तत्वं शङ्क्यं, वर्णाश्रये प्रत्ययलक्षणाऽभावात्। विस्तादिशब्दानां तु परिमाणविशेषवाचित्वात् "अपरिमाणे"त्यनेनाऽप्राप्तेः पृथगुपादानम्। द्वौ बिस्ताविति। "सुवर्णबिस्तौ हेम्नोऽक्षे" इत्यमरः। "गुञ्जाः पञ्च-आद्यमाषकः। ते षोडश अक्ष इति च। गुञ्जापञ्चकं माषपरिम#आणम्। माषषोडशकम् अक्षपरिमाणम्, तच्च अशीतिगुञ्जात्मकम् तस्मिन् हेमविषये अक्षपरिमाणे सुवर्णबिस्तशब्दावित्यर्थः। द्वौ बिस्तौ पचतीति विग्रहे "तद्धितार्थ" इति द्विगुः। "सम्भवत्यवहरतिपचती"ति ठक्, तस्य "अध्यर्धे" ति लुक्। "द्विगो"रिति ङीपि प्रितषिद्धे सति टापि-"द्विबिस्ता मूषा"। द्विबिस्त परिमाणकहिरण्यं द्रावयतीत्यर्थः। पचिरिह द्रावणे द्रष्टव्यः। द्व्याचितेति। "आचितो दश भाराः" इत्यमरः। "तुला स्त्रियां पलशतं भारः स्यादिं()वशतिः पुमा"निति च। द्वावाचितौ वहतीत्यर्थे "आढकाचिढपात्रात्खोऽन्यतरस्याम्"द्विगोष्ठं श्च" इति खठनोरभावे प्राग्वतीयष्ठञ्। "अध्यर्धे"ति तस्य लुक्। अनेन "द्विगोः" इति ङीपि निषिद्धे टापि-"द्व्याचिता शकटी"। द्विकम्बल्येति। कम्बलस्य प्रकृतिभूतं द्रव्यं कम्बल्यम् ऊर्णापलशतं। "तदर्थं विकृतेः प्रकृतौ" इत्यर्थे "कम्बलाच्च संज्ञाया"मिति यत्। द्वाभ्यां

कम्बल्याब्यां क्रीतेति विग्रहे "तेन क्रीत"मिति ठञः "अध्यर्द्धे"ति लुक्, "द्विगो"रिति ङीपि अनेन प्रतिषिध्दे टाप्। नन्वत्र। "न तद्दितलुकी"त्येवास्तु। तावतैव पञ्चभिर()औः क्रीता पञ्चा()ओति सिद्धेः "अपरिमाणे"ति मास्तु। एवंच द्विबिस्ता द्व्याचिता द्विकम्बल्येत्यपि सिद्धे विस्तादिग्रहणमपि मास्त्वित्यत आह--परिमाणान्तात्त्विति। "गुञ्जाः पञ्च तु माषः स्यात्ते सुवर्णस्तु षोडश। पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्॥ पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम्। चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः॥" इति स्मृतिः। द्वावाढकौ पचतीति विग्रहे "आढकाचितपात्रात्खोऽन्यतरस्यां""द्विगोष्ठंश्चे"ति खठनोरभावे प्राग्वतीयष्ठञ्। "अध्यर्धे"ति लुक्। "द्विगोः" इति ङीप्। द्व्याढकीति रूपम्। "न तद्धितलुकी"त्येवावत्येवोक्तेऽत्रापि ङीपो निषेधः स्यात्। अतोऽपरिमाणान्न तद्धितलुकीति वक्तव्यम्। तावत्युक्ते द्विबिस्तेत्यादौ परिमाणत्वान्ङीब्निषेधो न स्यात्। अतो बिस्तादिग्रहणमपीति।

तत्त्व-बोधिनी

अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ४२७, ४।१।२२

पञ्चा()ओति। नन्वत्र "द्विगो"रिति ङीब्माभूत्, ठगन्तत्वात्तु स्यादेव। न च "अपरिमाणे"ति निषेधस्यनिरवकाशतेति वाच्यम्, पञ्चानामजानां निमित्तं धनपतिसंयुक्तिः "पञ्चाजा" "पञ्चोष्ट्रे"त्यादौसावकाशत्वात्। तत्र हि "गोद्यचोऽसङ्ख्ये"ति यत्प्रत्ययस्य "अध्यर्धपूर्वे"त्यादिना लुगिति चेदत्राहुः--"ठको योऽकार" इति व्याख्यानाट्टगन्तलक्षणो ङीब्नेति। द्विबिस्तेति। "सुवर्णबिस्तौ हेम्नोऽक्षे"इत्यमरः। "आचितो दश भाराः स्युः"। द्विकम्बल्येति। द्वाभ्यां कम्बल्याभ्यां क्रीता। कम्बल्यम्---ऊर्णापलशतम्। "कम्बलाच्च संज्ञाया"मिति यत्। ततः क्रीतार्थस्य ठञो लुक्। ह्रढकीति। द्वावाढकौ पचतीति विग्रहे "आढकाचितपात्रात्खोऽन्यतरस्याम्", "द्विगोष्ठंश्चे"ति खठनौ विहितौ, ताभ्यां मुक्ते प्राग्वतीयष्ठञ्। तस्य "अध्यर्द्धे"ति लुक्। एतेन "द्याचिता"व्याख्याता। स्यादेतत्---"काण्डान्ता"दित्युत्तरसूत्रे "परितः सर्वतो येन मीयते तत्--परिमाणमाढककुडवादि, न तु परिच्छेदकमात्र"मिति मनोरमायां स्थितम्। तथा चाऽपरिमाणत्वादेव सिद्धे बिस्तादिग्रहणमिह व्यर्थं स्यात्। अत्राहुः--"उन्मानस्य निषेदे बिस्तादीनामेवे"ति नियमार्तं तद्ग्रहणं, तेन "द्विकार्षापणी""द्यक्षी"त्यादी सिध्यतीति।

---

सूत्रम्

काशिका-वृत्तिः

काण्डान्तात् क्षेत्रे ४।१।२३

काण्डशब्दान्तात् द्विगोस् तद्धितलुकि सति क्षेत्रे वाच्ये ङीप् प्रत्ययो न भवति। द्वे कण्डे प्रमाणम् अस्याः क्षेत्रभक्तेः, प्रमणे द्वयसज्दघ्नञ्मात्रचः ५।२।३७ इति विहितस्य तद्धितस्य प्रमाणे लो द्विगोर् नित्यम् इति लुकि कृते, द्विकाण्डा क्षेत्रभक्तिः। त्रिकाण्डा क्षेत्रभक्तिः। काण्डशब्दस्य अपरिमाणवाचित्वात् पूर्वेण एव प्रतिषेधे सिद्धे क्षेत्रे नियमार्थं वचनम्। इह मा भूत्, द्विकाण्डी रज्जुः, त्रिकाण्डी रज्जुः इति। प्रमाणविशेषः काण्डम्।

न्यासः

काण्डान्तात्क्षेत्रे। , ४।१।२३

"नियमार्थम्" इति। क्षेत्र एव यथा स्यात्, अन्यत्र मा भूदिति। अथान्तग्रहणं किमर्थम्, यावता सामर्थ्यादेव तदन्तविधिर्लभ्यत एव, यथा-- पूर्वस्मिन् सूत्रे, न हि केवलस्य काण्डशब्दस्य केनचिद्द्विगुसंज्ञा विहिता? सत्यमेतत्, किन्त्वसत्यग्रहणे काणडमेव क्षेत्रेण विशिष्येत-- काण्डशब्द एव केवलो यः क्षेत्रे वत्र्तते इति, ततश्चेह प्रतिषेधः स्यात्-- द्वाभ्यां काण्डसंज्ञकाभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेति। इह तु न स्यात्-- द्वे काण्डे प्रमाणमस्याः क्षेत्रभक्तेः द्विकाण्डा

क्षेत्र भक्तिरिति। अन्तसूत्रे तु सति काण्डशब्दस्य विशेषणं क्षेत्रं न भवति; तस्य द्विगो गुणभूतत्वात्।

बाल-मनोरमा

काण्डान्तात्क्षेत्रे ४७५, ४।१।२३

काण्डान्तात्क्षेत्रे। "द्विगोः" इति, "न तद्धितलुकी"ति चानुवर्तते। तदाह--क्षेत्रे य इत्यादि। द्वे काण्डे इति। षोडशारत्न्यायामो दण्डः काण्डमिति स्मृतिः। द्वे काण्डे प्रमाणमस्या इति विग्रहे "तद्धितार्थ" इति द्विगुसमासे द्विकाण्डशब्दस्य क्षेत्रवर्तित्वे नपुंसकत्वशङ्काव्युदासाय क्षेत्रभक्तिरिति विशेष्योपादानम्। तद्धितलुकं दर्शयितुमाह-प्रमाणे द्वयसजिति। नच काण्डादित्यस्य प्रातिपदिकविशेषणतया तदन्तलाभादन्तग्रहणं व्यर्थमिति शङ्क्यम्, अलसति ह्नन्तग्रहणे क्षेत्र इत्येतत्काण्डस्यैव विशेषणं स्यात्, श्रुतत्वात्। क्षेत्रे यः काण्डशब्दस्तदन्तादिति लभ्येत एवंच "द्विकाण्डा क्षेत्रभक्ति"रित्यत्र द्विकाण्डशब्दस्यैव क्षेत्रवर्तित्वात्काण्डशब्दस्य प्रमाणवाचित्वान्ङीब्निषेधो न स्यात्। द्वाभ्यां काण्डाभ्यां= काण्डप्रमितक्षेत्राभ्यां क्रीता "द्विकाण्डी बहवे"त्यत्रैव ङीम्निषेधः स्यात्। अतोऽन्तग्रहणम्। द्विकाण्डी रज्जुरिति। पूर्ववन्मात्रचो लुकि "द्विगो"रिति ङीप्। क्षेत्रवृत्तित्वाऽभावान्न तन्निषेध इति भावः। ननु "अपरिमाणे"ति पूर्वसूत्रे परिमाणशब्देन किं परिच्छेदकमात्रं विवक्षितम्, उत "ऊध्र्वमान#ं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्" इति वार्तिकानुसारेण परितः-सर्वत आरोहतः परिणाहतश्च येन मियते तत् परिमाणमित्याढककुडवाद्येव आयाभव्यावृत्तं विवक्षितम्?। नाद्यः, तथा सति द्वौ हस्तौ प्रमाणमस्या इति विग्रहे द्विहस्ता भित्तिरित्यत्र पूर्ववन्मात्रचौ लुकि ङीब्निषेधो न स्यात्। न द्वितीयः, तथा सतिकाण्डशब्दस्यायामप्रमाणपरतयोक्तपरिमाणपरत्वाऽभावेन "अपरिमाणे"त्यनेनैव "द्विकाण्डा क्षेत्रभक्ति"रित्यत्रापि ङीब्निषेधसंभवेन "काण्डान्तात्क्षेत्र एव ङीब्निषेधः, नान्यत्र "द्विकाण्डीरज्जु"रित्यादाविति नियमार्थमित्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

काण्डान्तात्क्षेत्रे ४२८, ४।१।२३

काम्ढान्तात्। षोडशहस्तप्रमाणो दण्डः काण्डम्। यद्यपि विशेषणेन तदन्तविधिः सिद्धः, तथाप्यसत्यन्तग्रहणे "क्षेत्रे"इत्येतत् श्रुतत्वात्काण्डस्यैव विशेषणं स्यान्न तु काण्डान्तस्य। ततश्च द्वाभ्यां काण्डाभ्यां=काण्डप्रमिताभ्यां क्रीता "द्विकाण्डी वडवे"त्यत्र निषेधः स्यात्। इह तु निषेधो न स्यात्--"द्विकाण्()डा क्षेत्र भक्ति"रिति। अत्र हि काण्डं प्रमाणे वर्तते, काण्डान्तस्तु क्षेत्रे, अतोऽन्तग्रहणं कृतम्। इह "द्विगो"रित्यनुवर्तते "न तद्धितलुकी"ति च, तदाह--द्विगुस्ततो न ङीबत्यादि। मात्रच इति।"द्वयसचो लु"गिति प्राचोक्तं नादर्तव्यम्। "प्रथमश्च द्वितीयश्च ऊध्र्वमाने मतौ ममे"ति सिद्धान्तादिति भावः। द्विकाण्डी रज्जुरिति। द्वे काण्डे प्रमाणमस्याः। पूर्ववत्ताद्धितलुक्। द्विगोः"इति ङीप्। नन्विहापरिमाणान्तादिति पूर्वेण निषेधः स्यात्, काण्डशब्दस्यायामपरतया अपरिमाणार्थत्वात्, परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणम्--आढककुडवादि, नतु यथाकथञ्चिच्चपरिच्छेदकमात्रम्। यदाहुः--"ऊध्र्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्सङ्ख्या बाह्रा तु सर्वतः"इति। अतएव "द्विहस्ता भित्ति"रित्यत्र ङीम्न भवतीति चेदत्रीहुः--नियमार्थमिदं "क्षेत्र एव निषेधा यथा स्या"दिति। तथा च "द्विकण्डी रज्जु"रित्यत्र ङीबेव सूत्रारम्भस्य फलमिति।

---

सूत्रम्

काशिका-वृत्तिः

पुरुषात् प्रमाणे ऽन्यतरस्याम् ४।१।२४

द्विगोः तद्धितलुकि इत्येव। प्रमाणे यः पुरुषशब्दः, तदन्ताद् द्विगोः तद्धितलुकि सति अन्यतरस्यां न ङीप् प्रत्ययो भवति। द्वौ पुरुषौ प्रमाणम् अस्याः परिखायाः द्विपुरुषा, द्विपुरुषी। त्रिपुरुषा, त्रिपुरुषी। अपरिमाणान्तत्वान् नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। प्रमाणे इति किम्? द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा। क्रिपुरुषा। तद्धितलुकि इत्येव। समाहारे द्विपुरुषी। त्रिपुरुषी।

न्यासः

पुरुषात्प्रमाणेऽन्यतरस्याम्। , ४।१।२४

"प्रमणे यः पुरुषशब्दो वत्र्तते"इति। जातिवचनोऽपि पुरुषशब्दः, यदा प्रमाणशब्देनाभिसम्बध्यते तदा पुरुषगते प्रमाणे वत्र्तते। भवति पदान्तरसम्बन्धेन शब्दस्यार्थान्तरे वृत्तिः, यथा-- सिंहो माणवक इति। सिंहशब्दो जातिवचनोऽपि माणवकसान्निध्याच्छौर्यलक्षणं गुणमाचष्टे। "द्विपुरुषी" इति। "प्रमाणे द्वयसच्"५।२।३७ इति विहितस्य द्वयसचः "प्रमाणे लो द्विगोर्नित्यम्"(वा। ५५८,५५९) इति लुक्। "अपरिमाणान्तत्वात् प्रतिषेध प्राप्ते"इति। "अपरिमाणविस्त" ४।१।२२ इत्यादिना। "द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा" इति। पूर्ववदार्हीयस्य ठको लुक्। "तद्धितलुकि" इत्येव। "पञ्चपुरुषी" इति। प्रमाणार्थवृत्तानामेव समाहारान्नास्ति द्व्यङ्गविकलता॥

बाल-मनोरमा

पुरुषात्प्रमाणेऽन्यतरस्याम् ४७६, ४।१।२४

पुरुषात्। द्विगोरिति तद्धितलुकीति ङीबिति चानुवत्र्तते। तदाह--प्रमाणे य इत्यादिना। प्रमाणमायामः, "आयामस्तु प्रमाणं स्यात्" इति वचनात्। द्वौ पुरुषाविति। "पञ्चहस्तायामः पुरुषः" इति शुल्वसूत्रात्। द्वौ पुरुषौ प्रमाणमस्या इति विग्रहे "तद्धितार्थ" इति द्विगुसमासः। प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति विहितस्य मात्रचः "प्रमाणे लः, द्विगोर्नित्य"मिति लुक्। अत्रोक्तरीत्या पुरुषप्रमाणस्य आयामात्मकस्य "अपरिमाणे"ति नित्यं ङीब्निषेधे प्राप्ते विकल्पार्थमिदं वचनम्। अन्ये तु "तदस्य परिमाण"मिति ठकः ठञो वा "अध्यर्धे"ति लुक्। तत्र हि उत्तरसूत्रानुरोधात्परिमाण शब्देन परिच्छेदकमात्रं गृह्रते इत्याहुरित्यास्तां तावत्। द्विपुरुषी द्विपुरुषा वा परिखेति। तिर्यक् द्विपुरुषायतेत्यर्थः। दुर्गं परितः तत्संरक्षणार्थौ जलाशयः परिखा। अथ कुण्डमिव ऊधो यस्या इति बहुव्रीहौ कुण्डोधस्शब्दः।

तत्त्व-बोधिनी

पुरुषात्प्रमाणेऽन्यतरस्याम् ४२९, ४।१।२४

पुरुषात्प्रमाणे। अपरिमाणान्तत्वान्निषेधे प्राप्ते विकल्पार्थं वचनम्। पुरुषशब्दो यद्यपि लोके जातिवचनस्तथापि "द्वौ पुरुषौ प्रमाणमस्या"इति वाक्ये प्रमाणशब्दसामानाधिकरण्यात्प्रमाणे वर्तत एव। वृत्तौ तु शब्दशक्तिस्वाभाव्यादेव। तथा च शुल्लसूत्रम्--"पञ्चारित्रि- पुरुषः"इति। द्विपुरुषीति। अत्र "पर्माणे लोद्विगोर्नित्य"मिति द्वयसचो लुगिति न्यासकारः। नन्विह तद्धितलुग्लुर्लभः, पुरुषशब्दस्य प्रमाणवाचित्वाऽभावेन "प्रमाणे लः"इति श्लोकवार्तिकस्याऽपर्वृत्तेः। ये हि शमादिवत्प्रमाणत्वेन प्रसिद्धस्तत्रैव तत्प्रवर्तते, न तु पुरुषशब्देऽपि। अन्यथा "पुरुषद्वयस"मित्यत्रापि लुक् स्यात्। न चैवं द्वयसज्दघ्नचावपि नास्मात्स्यातामिति वाच्यम्, --"ऊध्र्वमाने मतौ ममे"त् वचनात्। एवं "पुरुषात्प्रमाणे---"इति वैकल्पिकस्यापि ङीपः सामथ्र्यादेव प्रवृत्तिः। किन्तु तद्धितलुगेव दुर्लभः इति चेत्राहुः--अस्त्विह "प्रमाणे लः"इत्यस्याऽप्रवृत्तिस्तथापि सुलभ एव लुक्। "पुरुषात्प्रमाणे"इति सूत्रे हि "द्विगोस्तद्धितलुकी"त्यनुवर्तते तत्सामथ्र्याल्लुगप्याक्षिप्यत इति सुवचत्वादिति। प्रमाणे किम्()। द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुष#आ गौः। "तद्धितलुकी"त्येव। समाहारे--पञ्चपुरुषी। नन्विह पुरुषशब्दः पर्माणे न वर्तते इति द्यङ्गविकलमेतदिति चेदत्राहुः--प्रमाणार्थवृत्तीनामेव पुरुषाणामत्र समाहारान्न द्यङ्गविकलता। ततश्च "तद्धितलुकी"त्यनुक्तौपञ्चपुरुषशब्दाद्विकल्पः

स्यात्, इष्यते तु "द्विगो"रिति नित्यं ङीबीति।

---

सूत्रम्

काशिका-वृत्तिः

बहुव्रीहेरूधसो ङीष् ४।१।२५

ऊधस्शब्दान्ताद् बहुव्रीहेः स्त्रियां ङीष् प्रत्ययो भवति। ऊधसो ऽनङ् ५।४।१३१ इति समासान्ते कृते अनो बहुव्रीहेः ४।१।१२ इति डाप्प्रतिषेधयोः प्राप्तयोरिदम् उच्यते। घटोध्नी। कुण्डोध्नी। बहुव्रीहेः इति किम्? प्राप्ता ऊधः प्राप्तोधाः। अन उपधालोपिनो ऽन्यतरस्याम् ४।१।२८ इत्यस्य अपि ङीपो ऽयम् उत्तरत्र अनुवृत्तेर् बाधक इष्यते। समासान्तश्च स्त्रियाम् एव। इह न भवति, महोधाः पर्जन्यः इति।

न्यासः

बहुव्रीहेरूधसो ङीष्। , ४।१।२५

"ऊधसोऽनङिति समासान्ते कृते" इति। अकृत एव समासे बहुव्रीह्यर्थं उत्तरपदे पूर्वं समासान्तेन भवितव्यमिति प्राक् ततः समासान्त एव भवति, ततो बहुव्रीहिः ततः स्त्रीप्रत्ययः-- इत्येवैवानुपूर्वी।"अनो बहुव्रीहेः" इत्यादि। इतिशब्द आद्यर्थे। "अनो बहुव्रीहेः" ४।१।१२ इत्यादिना शास्त्रान्तरेणेत्यर्थः। तत्र "अनो बहुव्रीहेः" इत्यनेन सूत्रेण प्रतिषेधे प्राप्ते "डाबुभाभ्यामन्यतरस्याम्" ४।१।१३ इत्यनेन डाप्। "कुण्डोध्नी" इति। कुण्डमिवोधोऽस्या इति बहुव्रीहिः,"अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः। "प्राप्तोधाः" इति। "प्राप्तापन्ने च द्वितीयया" २।२।४ इति तत्पुरुषः, "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "अन उपधालोपिनः"इत्यादि। "अन उपधालोपिनोऽन्यतरस्याम्" ४।१।२८ इत्येतेनापि विधीयमानस्य ङीपोऽयं ङीब्बाधक इष्यते। कथं पुनरिहोच्यमानस्तस्य बाधको भवति? उत्तरसूत्रानुवृत्तेः। असत्यानुत्तरत्रानुवृत्तौ "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते" (व्या।प।१०) इत्येवमयं ङीब्डाप्प्रतिषेधावेव बाधते, नोपधालोपिनो ङीषम्। ततशचोपधालोपिनः परत्वात् स एव पक्षे भवेत्। तस्मात् "अन उपधालोपिनः" ४।१।२८ इत्यत्रास्यानुवृत्तिः कत्र्तव्याः। तेनोपधालोपिनोऽप्यूधसन्तान्ङीषेव भवति। "समासान्तश्च स्त्रियामेव" इति। समासान्तविधेरनित्यत्वात्। अनित्यत्वं तु पुनरूधःशब्देन सकारान्तेनासमासान्तेन विशेषणाद्विज्ञायते। यदि हि नित्यः स्यात् "बहुव्रीहेरूघ्नः" इति निर्देशः स्यात्॥

बाल-मनोरमा

बहुव्रीहेरूधसो ङीष् ४७८, ४।१।२५

बहुव्रीहेः। "ऊधस" इति बहुव्रीहेर्विशेषणम्, तदन्तविधिः, स्त्रियामित्यधिकृतम्। तदाह--ऊधोऽन्तादिति। कुण्डोध्नीति। अनङि कृते ङीषि "अल्लोपोऽनः" इति भावः। "ऊधस्तु क्लीबमापीन"मित्यमरः। ङीष्विधेस्तु स्वरे विशेषः फलम्। स्त्रियां किमिति। ङीष्विधौ स्त्रियामित्यनुवृत्तिः किमर्थेति प्रश्नः। कुण्डोधो धैनुकमिति। कुण्डमिव ऊधोयस्येति विग्रहः। नपुंसकत्वस्फोरणाय "धैनुक"मिति विशेष्यम्। धेनूनां समूह इत्यर्थः। "अचित्तहस्तिधेनोष्ठक्"। "इसुसुक्तान्तात्कः" "आदिवृद्धिः, क्लीबत्वं लोकात्। अत्र स्त्रीत्वाऽभावान्न ङीषित्यर्थः। ननु मास्तु ङीष्, अनङ् तु कुतो न स्यात्, समासान्तप्रकरणस्थे ऊधसोऽनङ्विधौ "स्त्रिया"मित्यभावादित्यत आह--तद्विधाविति। ऊधसोऽनङ्विधौ "स्त्रिया"मित्युपसङ्ख्यानादित्यर्थः। बहुव्रीहेः किम्?। ऊधः प्राप्तेति विग्रहे "प्राप्तापन्ने च द्वितीयये"ति समासे "प्राप्तोधाः"।

तत्त्व-बोधिनी

बहुव्रीहेरूधसो ङीष् ४३१, ४।१।२५

ऊधोन्तस्य बहुव्रीहेरिति। समासान्तप्रकरणस्थत्वेऽप्यनङो न प्रत्ययत्वम्, अन्यथा ङित्त्ववैयथ्र्यापत्तेरिति प्राञ्चः। वस्तुतस्तु ष्यङ इव प्रत्ययत्वेऽप्यादेशत्वमविरुद्धं, "कुण्डोध्नी"त्यत्र ङीषि कृते स्वरेऽपि विशेषाऽभावादिति बोध्यम्। स्त्रियामिति। उपसङ्ख्यानाल्लब्धमेतत्। डाम्ङीन्बिषेधेष्बिति। "डाबुभाभ्या"मिति वैकल्पिको डाप्। "अन उपधालोपिनोऽन्यतरस्या"मिति विकल्पेन ङीप्। "अनो बहुव्रीहे"रित्यनेन "ऋन्नेभ्य"इति प्राप्तस्य ङीपो निषेध इथि विवेकः। ङीष् स्यादिति। पर्कृतो ङीबेव तु न विहितः, स्वरे विशेषात्। कुण्डोन्धीति। कुण्डमिव ऊधो यस्याः सा। बहुव्रीहेः किम्()। प्राप्ता ऊधः--प्राप्तोधाः। "प्राप्तापन्ने चे"ति समासः। धैनुकमिति। "अचित्तहस्ती"ति समूहार्थे ठक्। "इसुसुक्तान्तात्कः"। स्त्रियामित्युपसङ्ख्यानादिति। नन्विहैव लाघवार्थं "बहुव्रीहेरूधसो ङीषे" "नश्चे"ति सूत्र्यताम् "अनङ् चे"ति वा। समासान्तेषु "ऊधसो न"ङिति च त्यक्त्वा "धनुषो न"ङित्येव पठ()ताम्। मैवम्। कबभावे सावकाशस्याऽस्य पक्षे कपा बाधपत्तेः। सिद्धान्ते त्वनङः समासान्ततया शेषत्वमेवेह नास्तीति न कप्।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्याव्ययादेर्ङीप् ४।१।२६

पूर्वेण ङीषि प्राप्ते ङीब् वधीयते। सङ्ख्यादेः अव्ययादेश्च बहुव्रीहेरूधस्शब्दान्ताद् ङीप् प्रत्ययो भवति। सङ्ख्यादेः तावत् द्व्यूध्नी। त्र्यूध्नी। अव्ययादेः अत्यूध्नी। निरूध्नी। आदिग्रहणं किम्? द्विविधोध्नी, त्रिविधोध्नी इत्यत्र अपि यथा स्यात्।

न्यासः

संख्याव्ययादेर्ङीप्। , ४।१।२६

"द्व्यूघ्नी"इत्यादि। द्वे ऊधसी अस्याः। त्रीण्यूधांस्यस्याः।अबिगतमूधोऽस्याः।निर्गतमूधोऽस्या इति विग्रहः। "आदिग्रहणं किम्" इति। एवं मन्यते-- संख्याव्ययाभ्यामित्येव वक्तव्यम्, "बहुव्रीहेरूधसः" (४।१।२५) इति हि वत्र्तते,, तत्रैवमभिसम्बन्धः करिष्यते--- संख्याव्ययाभ्यामुत्तरो य ऊधःशब्दस्तदन्ताबहुव्रीहेर्ङीब्भवतीति, तथा च निष्पलमादिग्रहणम्, विनापि तेन सिद्धत्वादिति। "द्विविधोघ्नी" इत्यादि। यद्यादिग्रहणं न क्रियेत तदा "संख्याव्ययाभ्याम्" इति पञ्चमीनिर्देशात् संख्याया अनन्तरो य ऊधःशब्दस्तदन्तादेव स्यात्। यत्र तु व्यवधानं तत्र तु न स्यात्, आदिग्रहणात्तु तत्रापि भवति। द्विविधमूधो यस्या इति विग्रहः। अत्रादिग्रहणे सति विधशब्देन व्यवधानेऽपि भवति॥

बाल-मनोरमा

सङ्ख्याऽव्ययादेर्ङीप् ४७९, ४।१।२६

सङ्ख्याव्ययादेर्ङीप्। सङ्ख्याव्ययादेरूधोऽन्तात्स्त्रियां ङीप् स्यादित्यर्थः। ङीषोऽपवाद इति। "बहुव्रीहेरूधसो ङी"षित्यस्यापवाद इत्यर्थः। स्वरे विशेषः। सङ्ख्यादेरुदाहरति--द्व्यूध्नीति। द्वे ऊधसी यस्या इति विग्रहः। बहुव्रीहेरित्येवेति। "बहुव्रीहे"रित्यनुवर्तते एवेत्यर्थः। ऊधोऽतिक्रान्तेति। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासस्य अबहुव्रीहित्वान्न ङीप्। अत एव नानङ्, नापि ङीष्।

तत्त्व-बोधिनी

सङ्ख्याऽव्ययादेर्ङीप् ४३२, ४।१।२६

सङ्ख्याऽव्यया। आदिग्रहणत्पदान्तरव्यवधानेऽपि स्यादेव, द्विविधोन्धी।

---

सूत्रम्

काशिका-वृत्तिः

दामहायनानाच् च ४।१।२७

ऊधसः इति निवृत्तम्। सङ्ख्याग्रहणम् अनुवर्तते, न अव्ययग्रहणम्। सङ्ख्यादेः बहुव्रीहेः दामशब्दान्तात् हायनशब्दान्तात् च स्त्रियां ङीप् प्रत्ययो भवति। दामान्तात् डाप्प्रतिषेधविक्ल्पेषु प्राप्तेषु नित्यार्थं वचनम्। द्विदाम्नी। त्रिदाम्नी। हायनान्ताट् टापि प्राप्ते। द्विहायनी। त्रिहायणी। चतुर्हायणी। हायनो वयसि स्मृतः। तेन इह न भवति, द्विहायना शाला। त्रिहायना। चतुर्हायना। णत्वम् अपि त्रिचतुर्भ्याम् हायनस्य इति वयस्य इव स्मर्यते।

न्यासः

दामहायनान्ताच्च। , ४।१।२७

"ऊधसः" इति निवृत्तम्,प्रकृत्यन्तरोपादानात्। "संख्याग्रहणनुवत्र्तते, नाव्ययग्रहणम्" इति। संख्याग्रहणस्यैव स्वरितत्वात्। "डाप्प्रतिषेधविकल्पेषु प्राप्तेषु" इति। "डाबुभाभ्यामन्यतरस्याम्" ४।१।१३ इत्यादिना डापि प्राप्ते "अनो बहुव्रीहेः" ४।१।१२ इति प्रतिषेध "अन उपधालोपिनोऽन्यतरस्याम्ट ४।१।२८ इति विकल्पे च। द्वे दामनी अस्या इति "द्विदाम्नी"। "द्वौ हायनावस्या इति "द्विहायनी"। "हायनो वयसि स्मृतः" इति। प्रकृतिरिति शेषः। कस्य प्रकृतिः? ङीपः प्रकृतत्वात् तस्यैव। बहुव्रीह्यधिकारादत्र हायमान्तो बहुव्रीहिरिति गम्यते। एतदुक्तं भवति-- हायमान्तो बहुव्रीहिर्वयसि गम्यमाने ङीपः प्रकृतिराचार्यैः स्मृत इति। तेन यदि वयो गम्यते ततो ङीब्भवति, नान्यथा। एतच्चोत्तरसूत्रेऽन्यतरस्यांग्रहणस्योभयोर्योगयोः शेषभूतत्वाद्व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। अथ त्रिचतुर्भ्यां हायनस्याप्युपसंख्यानाद्यथा हि त्रिहायनी चतुर्हायणीत्यत्र णत्वं भवति; तथा त्रिहायना शाला, चतुर्हायना शालेत्यत्रापि कस्मान्न भवति? इत्याह -- "णत्वमपि" इत्यादि। तदपि हि णत्वमौपसंख्यानिकमाचार्यैर्वयस्येव स्मर्यते। न च शालाया वयः सम्भवति, तस्य प्राणिधर्मत्वादिति नेह णत्वं प्रवर्तते। अन्तग्रहणं विस्पष्टार्थम्। बहुव्रीह्यधिकारादेव हि सामर्थ्यात् तदन्तविधिर्लभ्यते; न हि केवलयोर्दामहायनशब्दयोर्बहुव्रीहिसंज्ञा केनचिद्विहिता॥

बाल-मनोरमा

दामहायनान्ताच्च ४८०, ४।१।२७

दामहायनान्ताच्च। "सङ्ख्यादेः" "ङी"विति चानुवर्तते। तदाह--सङ्ख्यादेरिति। अव्ययग्रहणं तु नानुवर्तते, अस्वरितत्वादिति भावः। बहुव्रीहिविशेषणत्वादेव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। दामान्ते इति द्विदामन्शब्दे दामान्ते "डाबुभाभ्या"मिति डापि "अन उपधालोपिनः" इति ङीपि, "अनो बहुव्रीहे"रिति ङीप्प्रतिषेधे च-प्राप्ते, द्विहायनीत्यत्रापि हायनान्तेऽदन्तत्वाट्टापि प्राप्ते "दामहायनान्ताच्चे"ति वचनमित्यर्थः। द्विदाम्नीति। द्वे दामनी यस्या इति विग्रहः। ङीपि "अल्लोपोऽनः" इति भावः। नन्वव्ययग्रहणानुवृत्तौ किं बाधकमित्यत आह्व अव्ययग्रहणेति। उद्दामेति। उद्दामेति। उत्क्रान्तं दाम यस्या इति विग्रहः। डाब्निषेधावपीति। अपिना "अन उपधे"ति ङीप् गृह्तते, अन्ग्रहणे अनर्थकस्यापि ग्रहणात्। अथ हायनान्तस्य उदाहरति--द्विहायनी बालेति। द्वौ हायनौ यस्या इति विग्रहः।

अथ त्रिहायणीत्यत्र भिन्नपदत्वाण्णत्वाऽप्राप्तावाह--त्रिचतुर्भ्यामिति। नन्वेवमपि "द्विहायना शाले"त्यत्रापि ङीप् स्यात्, "त्रिहायना शाले"त्यत्र तु ङीप् णत्वं च स्यातामित्यत आह--वयोवाचकस्येति। इष्यते इति। "भाष्यकृते"ति शेषः।

तत्त्व-बोधिनी

दामहायनान्ताच्च ४३३, ४।१।२७

दाम। बहुव्रीहिविशेषणत्वादेव सिद्धेऽन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। सङ्ख्यादेरिति। समासनिर्देशेऽपि स्वरितत्वबलादेकदेश एवानुवर्तत इति भावः। अननुवृत्तेरिति। भाष्यकृताऽननुवर्तितत्वादिति भावः। एवं चोद्दामेत्यत्र "दामहायनान्ताच्चे"त्यस्याऽप्रवृत्त्या पूर्वोक्तेषु डाप्ङीब्निषेधेषु प्राप्तेषु बहुराज्ञीवद्रूपत्रयं भवत्यतो व्याचष्टे---डान्बिषेधावपीति।

---

सूत्रम्

काशिका-वृत्तिः

अन उपधालोपिनो ऽन्यतरस्याम् ४।१।२८

बहुव्रीहेरित्येव। अन्नन्तो यो बहुव्रीहिः उपधालोपी, तस्मादन्यतरस्यां ङीप् प्रत्ययो भवति। ङीपा मुक्ते डाप्प्रतिषेधौ भवतः। किमर्थं तर्हि इदम् उच्यते, ननु सिद्धा एव डाप्प्रतिषेधङीपः? अनुपधालोपिनः ङीप्प्रतिषेधार्थं वचनम्। बहुराजा, बहुराज्ञी, बहुराजे। बहुतक्षा, बहुतक्ष्णी, बहुतक्षे। अनः इति किम्? बहुमत्स्या। उपधालोपिनः इति किम्? सुपर्वा, सुपर्वे, सुपर्वाः। सुपर्वाणौ, सुपर्वाणः। डाप्प्रतिषेधावेव अत्र भवतः।

न्यासः

अन उपधालोपिनोऽन्यतरस्याम्। , ४।१।२८

"उपधालोपी"इति। उपधालोपो यस्य ङीपि परतः सम्भवति स उपधालोपी। "ननु" इत्यादि। "अनो बहुव्रीहेः" ४।१।१२ इति प्रतिषेधः सिद्धः, "डाबुभाभ्याममन्यतरस्याम्" ४।१।१३ इति डाप्, अनयतरस्यांग्रहणाच्च पक्षे ङीप्। यदि तर्हि "डाबुभाभ्यामन्यतरस्याम्" इत्यनेन ङीबपि विधीयते, तदा दामा पामेत्यत्रापि स्यात्? अन्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वान्न भविष्यति। "अनुपधालोपिनः" इत्यादि। यदीदं नोच्येत, अनुपधालोपिनोऽपि ङीप् स्यात्। तस्मादुपधालोपिन एव ङीब्यथा स्यात्, अनुपधलोपिनो मा भूदित्येवमर्थमिदमुच्यते। "बहुराजा" इति। ङीप्प्रतिषेधः। "सर्वनामस्थाने च" ६।४।८ इति नोपधाया दीर्घः। "बहुराज्ञी" इति। ङीप्, "अल्लोपोऽनः" ६।४।१३४। "बहुराजे" इति। डाप्, "औङ आपः" ७।१।१८ इति शीभावः, "आद्गुणः" ६।१।९४। द्विवचननिर्देशो डापोऽभिव्यक्तये। एकवचने हि डाप्प्रतिषेधयोर्न कश्चिद्विशेषः; उभयत्रापि तुल्यरूपत्वात्। क्वचित् "बहुराजाः" इति बहुवचनेन निर्देशः, तस्यापि तेदव प्रयोजनम्। "बहुमत्स्या" इति। "सूर्यातिष्यागस्त्यमत्स्यानां य उपधायाः" ६।४।१४९ इति लोपविधानादुपधालोपीत्येष बहुव्रीहिः। "सुपर्वा" इति। अयमुपधालोपी न भवति। "न संयोगाद्वमन्तात्" ६।४।१३७ इत्युपधालोपप्रतिषेधात्॥

बाल-मनोरमा

अन उपधालोपिनोऽन्यतरस्याम् ४५६, ४।१।२८

अथ बहवो राजानो यस्या इति बहुव्रीहौ बहुराजन्शब्दात् "अनो बहुव्रीहे"रिति ङीब्निषेधे "डाबुभाभ्या"मिति डापि च नान्तत्वमाकारान्तत्वं च प्राप्तम्, ङीबन्तत्वमपीष्यते, तदर्थमिदमारभ्यते-अन उपधा। इदं सूत्रं नात्र प्रकरणे पठितम्, किंतु "दामहायनान्ताच्चे"त्युत्तरं पठितं, प्रसङ्गादत्रोपन्यस्तम्। "बहुव्रीहेरूधसो ङी"षित्यतो बहुव्रीहेरित्यनुवर्तते, किंतु "दामहायनान्ताच्चे"त्युत्तरं पठितं, प्रसङ्गादत्रोपन्यस्तम्। "बहुव्रीहेरूधसो ङी"षित्यतो बहुव्रीहेरित्यनुवर्तते, "संख्याव्ययादेर्ङी वित्यतो ङीबिति च। प्रातिपदिकादित्यदिकृतमन इत्यनेन विशेष्यते, तदन्तविधिः। तदाह--अन्नन्तादित्यादिना। पक्षे डाब्ङीब्निषेधाविति। कदाचिन्ङीब्निषेधः, कदाचिड्डाप्येत्यर्थः। अन्यतरस्याङ्ग्रहणस्य प्रयोजनमिदम्। अकृतेऽत्वन्यतरस्याङ्ग्रहणे बहुयज्वादिशब्दे अनुपधालोपिनि सावकाशस्य "अनो बहुव्रीहे"रिति ङीप्प्रतिषेधस्य "डाबुभाभ्या"मिति डापश्च बहुराजन्शब्दादावुपधालोपिन्यनवकाशेन ङीपा बाधः स्यात्। बहुराज्ञीति। ङीपि

अल्लोपे सोर्हल्ङ्यादिलोप इति भावः। बहुराजेति। डापि ङीब्निषेधे च सौ रूपम्। बहुराज्याविति। ङीप्पक्षे औङि यण्। बह#उराजे इति। डाप्पक्षे औङि रूपम्। बहुराजानाविति ष। ङीब्निषेधे औङि रूपम्।

तत्त्व-बोधिनी

अन उपधालोपिनोऽन्यतस्म्राम् ४११, ४।१।२८

अन उपधा। "बहुव्रीहेरूधसो ङी"षित्यतो बहुव्रीहिग्रहणं "सङ्ख्याव्ययादेङी"बित्यतो ङीप्चानुवर्तत इत्याशयेनाह-- अन्नन्तादित्यादि। नियमार्थमिदमित्युक्तम्। न चैवं पूर्वसूत्रेणैव विकल्पसिद्धाविहान्यतरस्याङ्ग्रहणं व्यर्थमिति वाच्यम्, असति ह्नन्यतरस्याङ्ग्रहणे नित्यार्थो विधिरेवायं स्यान्न तु नियम इति।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं संज्ञाछन्दसोः ४।१।२९

अन्नन्ताद् बहुव्रीहेरुपधालोपिनः संज्ञायां विषये छन्दसि च नित्यं ङीप् प्रत्ययो भवति। विकल्पस्य अपवादः। सुराज्ञी, अतिराज्ञी नामः ग्राम। छन्दसि गौः पञ्चदाम्नी। एकदाम्नी। द्विदाम्नी। एकमूर्ध्नी। समानमूर्ध्नी।

न्यासः

नित्यं संज्ञाछन्दसोः। , ४।१।२९

नित्यग्रहणं विस्पष्टार्थम्। पूर्वणैव हि विकल्पेन ङीप् सिद्धः, तदारम्भसामथ्र्यादेव ङीब्नित्यं भविष्यति, अन्यथा हीदं वचनमनर्थकं स्यात्॥

तत्त्व-बोधिनी

नित्यं संज्ञाछन्दसोः ४३४, ४।१।२९

नित्यं सञ्ज्ञाछन्दसोः। "अन उपधालोपिनः"इति विकल्पस्याऽपवादः। आरम्भसामथ्र्यात्सिद्धेऽपि नित्यत्वे नित्यग्रहणमुत्तरत्र विकल्पाननुवृत्तिसूचनाय कृतमित्याहुः। शतमूर्न्ध्नीति। इह "पञ्चदाम्नि"ति क्वचित्पाठः, स चाऽयुक्तः "दामहायनान्ताच्चे"त्यनेनैव सिद्धत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

केवलमामकभागधेयपापापरसमानाऽर्यकृतसुमङ्गलभेषजाच् च ४।१।३०

संज्ञाछन्दसोः इत्येव। केवलाऽदिभ्यः प्रातिपदिकेभ्यः संज्ञायां, छन्दसि विषये स्त्रियां ङीप् प्रत्ययो भवति। केवली। केवला इति भाषायाम्। मामकी। मामिका इति भाषायाम्। मित्रावरुणयोर् भागधेयीः स्थ। भागधेया इति भाषायाम्। सा पापी। पापा इति भाषायाम्। उता अपरीभ्यो मघवा विजिग्ये। अपरा इति भाषायाम्। समानी प्रवाणी। समाना इति भाषायाम्। आर्यकृती। आर्यकृता इति भाषायाम्। सुमङ्गली। सुमङ्गला इति भाषायाम्। भेषजी। भेषजा इति भाषायाम्।

न्यासः

केवलमामाकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च। , ४।१।३०

अथ मामकग्रहणं किमर्थम्, यावताऽस्मदः "तस्येदम्" ४।३।१२० इत्यणि कृते "तवकममकावेकवचने" ४।३।३ इतिममकादेशेन मामक इति भवति, ततश्च "टिड्()ढाणञ्" (४।१।१५) इत्येव ङीप्सिद्धेः? सत्यमेतत्; नियमार्थं तु मामकशब्दस्य ग्रहणम्; संज्ञाच्छन्दसोर्यथा स्यात्, अन्यत्र मा भूदिति॥

बाल-मनोरमा

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ४८१, ४।१।३०

केवलमामक। नित्यं संज्ञाच्छन्दसोः" इति पूर्वसूत्रमनुवर्तते। एवंच "अन उपधालोपिनोऽन्यतरस्या"मित्यन्यतरस्यांग्रहणं निवृत्तम्। "सङ्ख्याव्ययादेर्ङी"बित्यतो ङीबित्यनुवर्तते। तदाह-एभ्य इति। केवल, मामक, भागधेय, पाप, अपर, समान, आर्यकृत, सुमङ्गल, भेषज-इत्येतेभ्यो नवभ्य इत्यर्थः। छन्दस्युदाहरति--अथोत इन्द्रः केवलीरिति। मामकी तनू इति। मदीयायामित्यर्थः। "युष्मदस्मदोरन्यतरस्यां खञ् चे"त्यणि "तवकममकावेकवचने" इति प्रकृतेर्ममकादेशः, ङीप्, "सुपां सुलुगि"ति सप्तम्या लुक्। "मित्रावरुणोर्भागधेयी स्थ"। "भागरूपनामभ्योधेयः" इति स्वार्थिको धेयप्रत्ययः। भागशब्दस्य पुंलिङ्गत्वेऽपि "स्वार्थिकाः प्रकृतेः क्वचिल्लिङ्गवचनान्यतदिवन्तते" इति स्त्रीत्वं, ङीप्। "तन्वः सन्तु पापीः"। पापमस्यास्तीत्यर्थे अर्श आद्यजन्तात्स्त्रीत्वे ङीप्। "उत वापरीभ्यो मघवा विजिग्ये"। अपरशब्दः पवर्गमध्यः। "समानीव आकूतिः।" आर्यकृतीति क्वचिद्वेदेऽन्वेषणीयम्। एवं सुमङ्गलीति च। "सुमङ्गलीरियं वधूः" इत्यत्र "छन्दसीवनिपौ च" इति मत्वर्थे ईप्रत्ययः। "शिवा रुद्रस्य भेषजा।" भेषजशब्दो रोगनिवर्तके औषधे प्रसिद्धः। अत एव सूत्र#आत्स्त्रीत्वमपि। यद्वा भिषज इयमित्यर्थेऽणि इकारस्य एकारोऽत एव निपातनात्। संज्ञायामप्येवमेव सर्वत्र ङीबुदाहार्यः ष संज्ञाच्छन्दोभ्यामन्यत्र सु केवला मामिका इत्यादि। नन्वणन्तत्वादेव "टिड्ढाणञि"ति ङीपि सिद्धे मामकग्रहणं व्यर्थमित्यत आह--मामकग्रहणमिति। लोकेऽसंज्ञायां च ङीब्निवृत्त्यर्थमिति भावः। एवं भेषजशब्दस्य अणन्तत्वेऽपि ज्ञेयम्। एतदर्थमेव वैदिकप्रक्रियायामिदं नोपन्यस्तम्।

तत्त्व-बोधिनी

क्वलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ४३५, ४।१।३०

केवल। छन्दसि "मामकी तनू"। "मित्रावरुणयोर्भागधेयी""तन्वः सन्तु पापीः"।"उतापरूभ्यः"। "समानी व आकूतिः"। आर्यकृती। सुमङ्गली। "सुमङ्गलीरियं वधूः"इत्यत्र तु "छन्दसीवनिपौ"इति मत्वर्थे ईप्रत्ययो बोध्यः। "शिवा रुद्रस्य भेषजी"। अन्यत्र केवलेत्यादीति। मामकनरकयोरुपसङ्ख्यानादित्वम्। मामिका।भागशब्दात्पुंलिङ्गात्स्वार्थे धेयप्रत्ययः। "स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते"इति स्त्रीत्वम्। भागधेया। अभेदोपचारात्तद्वति वर्तमानः पापशब्दो विशेष्यनिघ्नः। पापा। अपरा। समाना। आर्येण कृतेति प्राक् सुबुत्पत्तेः कृदन्तेन समासः। टाप्। आर्यकृता। भिषज इयमित्यणि आदिवृद्धेरपवादोऽस्मादेव निपातनादेकारः। "संज्ञाछन्दसो"रिति नियमादन्यत्र--भेषजा।

---

सूत्रम्

काशिका-वृत्तिः

रात्रेश् च अजसौ ४।१।३१

जस्विषयादन्यत्र संज्ञायां छन्दसि च रात्रिशब्दात् ङीप् प्रत्ययो भवति। या च रात्री सृष्टा। रात्रीभिः। अजसौ इति किम्? यास्ता रात्रयः। अजसादिष्विति वक्तव्यम्। रात्रिं सहोषित्वा। कथं तिमिरपटलैरवगुण्ठिताश्च रत्र्यः? ङीषयं बह्वादिलक्षणः। तत्र हि पठ्यते कृदिकारादक्तिनः, सर्वतो ऽक्तिन्नर्थातित्येके इति।

न्यासः

रात्रेश्चाजसौ। , ४।१।३१

"अजसौ" इति। विषयसप्तमीयम्, न परसप्तमी, कुतः? स्त्रीप्रत्ययस्यान्तरङ्गत्वाज्जसः परत्वाविरोधाद्विषयसप्तमीत्वे न दोष इत्याह-- "जस्विषयत्वात्" इत्यादि। "अजसादिष्विति वक्तव्यम्ि‌ति।जासादिविषयादन्यत्र रात्रिशब्दान्ङीब्भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- इह लाघवार्थं "अजसि" इति वक्तव्येऽजसावित्युक्तम्, मात्राधिक्यादर्थाधिक्यसूचनार्थम्, तेनाजसादिषु ङीब्भवतीति। आदिशब्देनामादीनां ग्रहणम्। "कथम्" इत्यादि। "रात्र्यः" इति। रात्रिशब्दस्य जसन्तस्य प्रयोगः। एवं हि "दीर्घाज्जसि च" ६।१।१०१ इति सवर्णदीर्घत्वे प्रतिषिद्धे यणादेश उपपद्यते, नान्यथा। यदि तु रात्रिशब्दस्यायं प्रयोगः स्यात्, ततः "जसि च"७।३।१०९ इति गुणे कृतेऽयादेशे च रात्रय इति रूपं स्यात्। ईकारान्तश्च रात्रिशब्दो न सम्भवति;अजसाविति ङीप्प्रतिषेधात्। ततश्च रात्र्य इति प्रयोगो नोपपद्यत इत्यभिप्रायः। "ङीषयम्ि‌त्यादि। ननुच रात्रिशब्दो बह्वादिषु पठ()ते, तत्कथं बह्वादिलक्षणस्ततो ङीष्भविष्यति? इत्यत आह--"तत्र हि" इत्यादि। "कृदिकारादक्तिनः"इति। कृत इकारः कृदिकारः,तदन्तान्ङीष् भवति।"वृदृभ्यां विन्" (द।उ। १।२३) वर्वी, दर्वी। यस्तु क्तिन्सम्बन्धी तदन्तान्न भवति-- "स्त्रियां क्तिन्" ३।३।९४ कृतिः, ह्मतिः। "सर्वतोऽक्तिन्नर्थादित्येके" इति। एक आचार्या सर्वतोऽक्तिन्नर्थात् कृदिकारादकृदिकाराच्च ङीष् भवतीत्याहुः, राजिः राजी। राजिशब्दोऽव्ययुत्पत्तिपक्षे कृतिकारान्तो न भवति। अक्तिन्नर्थादिति, न विद्यते क्तिन्नर्थो यस्य सोऽक्तिन्नर्थः, तस्मात् सर्वतो ङीष् भवति। यस्तु क्तिन्नर्थस्तदन्तान्न भवति-- कृतिः ह्मतिः। "आक्रोशे नञ्यनिः" ३।३।११२ -- अकरणिः, अहरणिः। रात्रिशब्दश्चायं व्युत्पत्तिपक्षे कृदिकारान्तो भवति, "रा आदाने" (धा।पा।१०५७), "राशदिभ्यां त्रिप्" (द।उ।१।३६) रात्रिः, तस्मात् पक्षे ङीष् रात्री। अव्युत्पत्तपक्षे तु कृदिकारान्तो न भवति, ततः "सर्वतोऽक्तिन्नर्थात्" (ग।सू।५१) इति ङीष्॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तर्वत्पतिवतोर् नुक् ४।१।३२

प्रकृतिर् निपात्यते, नुगागम् अस्तु विधीयते। अन्तर्वत्पतिवतोर् नुक् भवति ङीप् च प्रत्ययः, स तु नकारान्तत्वादेव सिद्धः। निपातनसामर्थ्याच् च विशेषे वृत्तिर् भवति। अन्तर्वत् पतिवतिति गर्भभर्तृसंयोगे। इह न भवति, अन्तरस्यां शालायां विद्यते। पतिमती पृथीवी। अन्तर्वतिति मतुब् निपात्यते, वत्वं सिद्धम्। पतिवतिति वत्वं निपात्यते, मतुप् सिद्धः। अन्तर्वत्नी गर्भिणी। पतिवत्नी जीवपतिः। अन्तर्वत्पतिवतोस् तु मतुब्वत्वे निपातनात्। गर्भिण्यां जीवपत्यां च वा छन्दसि तु नुग्विधिः। सान्तर्वत्नी देवानुपैत्। सान्तर्वती देवानुपैत। पतिवत्नी तरुणवत्सा। पतिवती तरुणवत्सा।

न्यासः

अन्तर्वत्पतिवतोर्नुक्। , ४।१।३२

"स तु नकारान्तत्वादेव सिद्धः" इति। "ऋन्नेभ्यो ङीप्" ४।१।५) इत्यनेन। "निपातनसामथ्र्यात्" इत्यादि। यथैव हि निपातनसामथ्र्यादन्यत् किञ्चिदलाक्षणिकं कार्यं भवति, तथार्थविशेषेऽपि वृत्तिः। कस्मिन्पुनरर्थविशेषे वृत्तिर्भवति? इत्यत आह-- "अन्तर्वत्पतिवत्" इत्यादि। यथाक्रममन्तर्वदित्यस्य गर्भसंयोगे वृत्तिः, पतिपदित्यस्य भर्तृसंयोगे। गर्भेण संयोगो गर्भसंयोगः, स कस्या भवति? यस्याः कुक्षौ गर्भो व्यज्यते। भत्र्रा संयोगो भर्तुसंयोगः, स च कस्या भवति? यस्याः पतिर्जीवति। भत्र्ता चेह योऽग्निसाक्षिपूर्वकेण पाणिग्रहणनेन सम्बन्धी स एवाभिमतः, नतु यः पृथिवीस्वामी।

"{राशतिभ्यां द।उ।} इह तु न भवति इति-- अन्तरस्यां शालायां विद्यते" (इति) शालायां कुक्षिगतेन गर्भेण सम्बन्धाभावात्। "पतिमती" इति। परिरस्या अस्तीति मतुप्, "उगितश्च" ४।१।६ इति ङीप्। अत्र पतिशब्द ई()आरे स्वमिनि वत्र्तते। तेन संयोगे च न पतिवदिति निपात्यते। येन तु संयोगो निपात्यते स चाख्यात एव। "मतुब्निपात्यते" इति। अन्तःशब्दस्याधिकरणप्रधानत्वात् प्रथमासमर्थता नास्ति। प्रथमासमर्थाच्चास्तिसमानाधिकरणेन मतुब्विधीयते, न चास्तिनान्तशब्दस्य सामानाधिकरण्यम्, तस्मान्मतुब्न प्राप्नोतीति निपात्यते। "वत्वं न सिद्धम्" इति। "मादुपधायाश्च" ८।२।९ इत्यादिनैवाकारोपधत्वात्। "निपात्यते" इति। केनचिदप्राप्तत्वात्। " मतुप्सिद्धः"इति। पतिरस्यास्तीति प्रथमासमर्थस्य पतिशब्दस्यास्तिना सामानाधिकरण्यात्। "गर्भिणी" इत्यनेन गर्भसंयोगं दर्शयति। "जीवपतिः"इत्यनेनापि भर्तृसंयोगम्। "अन्तर्वत्पतिवतोः"इत्यादि। अन्तर्वत्पतिवदित्येतयोः शब्दयोर्निपातनान्मतुबवत्वे भवतः, यथाक्रमं गर्भिण्यां जीवपत्यां च स्त्रियामभिधेयायाम्। गर्भोऽस्या अस्तीति गर्भिणी। जीवतीति जीवः, पचाद्यच्; जीवः गतिर्यस्याः सा जीवपतिः।ननु च "पतिः समास एव" १।४।८ इति घिसंज्ञोयऽयं पतिशब्दः,तत्र "अच्च घेः" ७।३।११८ इत्यात्वौत्वयोः कृतयोः जीवपताविति भवितव्यम्, तदयुक्तो जीवपत्यामिति निर्देशः? नैतदस्ति; "शेषो घ्यसखि"१।४।७ इति, सिद्धायामेव घिसंज्ञायां "पतिः समास एव" १।४।८ इत्यनेन शेषस्यैव पतिशब्दस्य घिसंज्ञा नियमार्थं विधीयते, न चायं शेषः; "ङिति ह्रस्वश्च" १।४।६ इति नदीसंज्ञासम्भवात्। नदीसंज्ञायां च सत्यां "इदुद्भ्याम्" ७।३।११७ इति "ङेराम् नद्याम्नीभ्यः" ७।३।११६ इत्याम्, यणादेशे जीवपत्यामिति भवति। "वा च्छन्दसि नुग्विधिः"। छन्दसि विकल्पे तु नुग्विधिर्भवति। स च वक्ष्यमाणस्य विभाषाग्रहणस्य सिंहावलोकितन्यायेनानुवृत्तेव्र्यवस्थितविभाषाविज्ञानाच्च लभ्यते। नुक्पक्षे "ऋन्नेभ्यो ङीप्" ४।१।५ इति ङीप्। "अन्तर्वत्नी" इति। अनुक्पक्षे "उगितश्च" ४।१।६ इति ङीप्--अन्तर्वतीति भवति॥

बाल-मनोरमा

अन्तर्वत्पतिवतोर्नुक् ४८२, ४।१।३२

अन्तर्वत्पतिवतोर्नुक्। नुक्स्यादिति। कित्त्वसामथ्र्यादयमागमः, नतु प्रत्यय इति भावः। कित्त्वादन्तावयवः। अन्तर्वत्-न, पतिवत्-न इति स्थिते आह--ऋन्नेभ्यो ङीबिति। गर्भिण्यामिति। गर्भिण्यां जीवद्भर्तृकायां च स्त्रियाम् अन्तर्वत्पतिवदिति प्रकृतिभागौ नुक्संनियोगेन निपात्येते इत्यर्थः। वार्तिकमेतत्। कतरस्मिन् किं निपात्यत इत्यत आह--तत्रेति। तयोर्मध्य इत्यर्थः। अन्तरस्त्यस्यां गर्भ इति विग्रहेऽप्राप्तो मतुप् निपात्यत इत्यन्वयः। कथमप्राप्तिर्मतुप इत्यत आह--अन्तःशब्दस्येत्यादि, अभावादित्यन्तम्। "तदस्यास्त्यस्मिन्निति मतु"बिति सूत्रे अस्तिसमानाधिकरणात्कर्तृकारकप्रधानप्रथमान्तान्मतुप्प्रत्ययो विहितः। यथा गौरस्यास्तीति गोमानित्यादौ। प्रकृते प्रथमान्तः कर्तृकारकप्रधानो गर्भशब्द एवास्तिसमानाधिकरणो, नत्वन्तश्शब्दः, तस्याधिकरणकारकप्रधान तया अस्तिसामानाधिकरण्याऽसंभवात्। अतोऽत्राऽप्राप्तो मतुब्निपात्यत इत्यर्थः। ततश्च "मादुपधायाश्च मतोर्वः" इति मकारस्य वत्वेऽन्तर्वदिति प्रकृतिभागः संपद्यत इति भावः। वत्वमिति पतिरस्या अस्तीति विग्रहे "तदस्यास्त्यस्मिन्नि"ति मतुपो मकारस्य मादुपधात्परत्वाऽभावेन "मादुपधायाः" इति वत्वमप्राप्तं निपात्यत इत्यर्थः। प्रत्युदाहरणं त्विति। गर्भिण्यामेव मतुब्निपातनादन्तरस्त्यस्यां शालायां घट इति विग्रहवाक्यमेव, नतु मतुबित्यर्थः। पतिमती पृथिवीति। जीवद्भर्तृकायामेव वत्वनिपातनादिह वत्वाऽभाव इति भावः।

तत्त्व-बोधिनी

अन्तर्वत्पतिवतोर्नुक् ४३६, ४।१।३२

प्रत्युदाहरणं त्विति। "अन्तर्वती""पतिवती"ति प्राचोक्तं प्रत्युदाहरणमयुक्तमिति भावः।

[आद्येऽस्तिसामानाधिकरण्याभावान्मतुपोऽसंभवात्, द्वितीये तु वत्त्वाऽसंभवादिति भावः]।

---

सूत्रम्

काशिका-वृत्तिः

पत्युर् नो यज्ञसंयोगे ४।१।३३

पतिशब्दस्य नकारादेशः स्त्रियां विधीयते, ङीप् प्रत्ययस् तु नकारान्तत्वादेव सिद्धः यज्ञसंयोगे। यज्ञेन संयोगः यज्ञसंयोगः। तत्साधनत्वात् फलग्रहीतृत्वात् वा यजमानस्य पत्नी। पत्नी वाचं यच्छ। यज्ञसंयोगे इति किम्? ग्रामस्य पतिरियं ब्राह्मणी कथं वृषलस्य पत्नी? उपमानाद् भविष्यति।

न्यासः

पत्युर्नो यज्ञसंयोगे। , ४।१।३३

"यज्ञसंयोगे" इति। यज्ञसम्बन्धे। कस्य पुनर्यज्ञेन संयोगः? पतिशब्दवाच्यार्थस्य। अथ पतिशब्दस्यैव कस्मान्न भवति? असम्भवात्। तयोर्हि वाच्यवाचकभावलक्षणः सम्बन्धः स्यात्, न केवलः पतिशब्दो यज्ञस्य वाचकः। कथं पुनर्यज्ञेन संयोग इत्याह-- "तत्साधनत्वात्" इति। तस्य यज्ञस्य साधनं तत्साधनम्, तद्भावो यज्ञसाधनत्वम्। तस्माद्यज्ञेन संयोगो भवति। यजमानस्य या भार्या तस्या यागं प्रति साधनभावोऽस्तीति; विना तया तदनिष्पत्तेः। न हि भार्याविरहितस्त्रैर्णिकः केवलो यज्ञेऽधिक्रियते। तस्मात् स तया करणभूतया यज्ञं निष्पादयतीत्यस्ति तस्या यज्ञेन सह क्रियाकारकलक्षणः सम्बन्धः। "तत्फलग्रहीतृत्वाद्वा" इति। यज्ञसंयोगे द्वितीयो हेतुः। अनेन तु स्वस्वामिभावलक्षमः सम्बन्धः प्रतिपाद्यते। यज्ञस्य यत्प्रधानं फलं स्वर्गाख्यं तद्यजमानस्य पत्नी परिगृह्णाति। अतो यद्यपि यज्ञं प्रति तस्याः साधनत्वं न विवक्ष्यते, तथापि तत्फलस्य ग्रहणात्, यथा यजमानस्य यज्ञेन हस स्वस्वामिभावसम्बन्धः, तथा तत्पत्न्या अपि। अथ फलग्रहीतृत्वादिति कथमत्र षष्ठीसमासः? कथञ्च न स्यात्? "कत्र्तरि च" (२।२।१६) इति तृचा सह षष्ठीसमासप्रतिषेधात्? नैवायं तृजन्तेन षष्ठीसमासः, किं तर्हि? द्वितीयेति योगविभागात् तृन्नन्तेन द्वितीयासमासः। अथ वा-- याजकादिषु ग्रहीतृशब्दो द्रष्टव्यः, तेन षष्ठीसमासो भविष्यति। अथापि तत्र न पठ()ते? एवमपि "याजकादिभिश्च" २।२।९ इति चकारस्यानुक्तसमुचयार्थत्वाद्भविष्यति। "ऋन्नेभ्यो ङीप्" ४।१।५ इति ग्रहीतृशब्दादिह ङीप् न भवति, स्त्रीत्वस्याविवक्षितत्वात्। क्वचित् "फलगृह्णीतत्वात्" इति पाठः।तत्र फलगृहीतशब्दयोर्बहुव्रीहिः। फलशब्दस्य जातिवाचित्वान्निष्ठायाः पूर्वनिपाते प्राप्ते "जातिकालसुखादिभ्यः परवचनम्" (वा।११६) इति गृहीतशब्दस्य परनिपातः। "कथम्" इत्यादि। एं मन्यते-- "शूद्रस्यैव तावद्यज्ञेऽनधिकृत्वाद्यज्ञेन संयोगो नास्ति, किं पुनस्तद्भार्यायाः? अतः "वृषलस्य पत्नी" इत्येष प्रयोगो नोपपद्यते" इति। "उपमानाद्भविष्यति" इति। पत्नीवद्धि पत्नी। यथैव हि यजमानस्य पत्न्यग्निसाक्षिपूर्वकेण तत्पत्युः सम्बन्धिनी तत्कार्येषु चाधिकृता तथा वृषलस्य भार्याऽपि। तस्मात् पत्नीसमाधर्म्यात् साऽपि पत्नीत्युच्यते॥

बाल-मनोरमा

पत्युर्नो यज्ञसंयोगे ४८३, ४।१।३३

पत्युर्नो। पत्युरिति षष्ठी। "न" इत्यकार उच्चारणार्थः। स्त्रियामित्यधिकृतम्। तदाह--पतिशब्दस्येति। यज्ञेनेति। यज्ञसंबन्धः=यज्ञेन सह स्वामितया संबन्धः। यज्ञफलभोक्तृत्वमिति यावत्। तदाह--तत्कर्तृकस्येति। वसिष्ठकर्तृकस्येत्यर्थः। ननु वसिष्ठकर्तृकयज्ञस्य वसिष्ठ एव फलभोक्तृत्युचितं, नतु तत्स्त्र्यपि, "स्वर्गकामः" इत्यादिपुंलिङ्गशब्दैः पुंस एवाधिकारावगमादित्यत आह--दम्पत्योः सहाधिकारादिति। एतच्च प्रकृतसूत्रे भाष्ये स्पष्टम्।

अत एव पूर्वमीमांसायां षष्ठस्य प्रथमपादे "लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः" इत्यधिकरणे "स्ववतोस्तु वचनादैककर्म्यं स्यात्" इत्यधिकरणे च दम्पत्योः सहाधिकारः सिद्धान्तितः। प्रपञ्चितं चैतदस्माबिरध्वरमीमांसाकुतूहलवृत्तौ।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा सपूर्वस्य ४।१।३४

पत्युर्नः इति वर्तते। पतिशब्दान्तस्य प्रातिपदिकस्य सपूर्वस्य अनुपसर्जनस्य स्त्रियां विभाषा नकाराऽदेशो भवति, ङीप् तु लभ्यते एव। वृद्धप्त्नी, वृद्धपतिः। स्थूलपत्नी, स्थूलपतिः। अप्राप्तविभाषेयमयज्ञसंयोगत्वात्। सपूर्वस्य इति किम्? पतिरियं ब्राह्मणी ग्रामस्य।

न्यासः

विभाषा सपूर्वस्य। , ४।१।३४

"पतिशब्दान्तस्य"इत्यादि। एतेन पतिशब्दस्य ग्रहणम्, सपूर्वग्रहणम्, अनुपसर्जनग्रहणञ्च -- त्रयमप्येतत् प्रातिपदिकस्य विशेषणमिति दर्शयति। सहशब्दोऽयमस्त्येव तुल्ययोगे-- सशिष्यो गुरुरागत इति, गुरोः शिष्यस्य चागमनेन तुल्ययोगः प्रतीयते; अस्ति च सत्तावचनः, यथा-- सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इति, विद्यमनैरेवेत्यर्थः। तदिह सत्तावचनो गृह्रते, सपूर्वस्य विद्यमानपूर्वस्येत्वर्थः। यदि हि तुल्ययोगे वत्र्तमानो गृह्रते, ततोऽयमर्थः स्यात्--- सहपूर्वेण पतिशब्दान्तस्य नकारो भवतीति। ततश्च पतिशब्दात् पूर्वस्यापि वृद्धादिशब्दस्य नकारः स्यात्। एवं हि तुल्ययोगो भवति यदि नकार उभयोरपि भवति। पूर्वशब्दोऽयमस्त्येव व्यवस्थाशब्दः, यथा--पूर्वं मथुरायाः पाटलिपुत्रमिति; अस्त्यवयववचनः, यथा-- पूर्वं कायस्येति। तदिहावयववचनो गृह्रते। सह विद्यमानः पूर्वोऽवयवो यस्य तत् सपूर्वमित्युच्यते। यदि व्यवस्थाशब्दो गृह्रेत, तत्रायमर्थः स्यात्-- विद्यमानः पूर्वो यस्मात् तस्य पतिशब्दान्तस्य नकारो भवतीति। ततस्च दृढपत्नीत्यत्र न स्यात्, न हि पतिशब्दान्तादिहकश्चित् पूर्वोऽस्तीति। अथ पतिशब्दस्यैव सपूर्वत्वमनुपसर्जनत्वञ्च विशेषणं कस्मान्न विज्ञायते? अशक्यत्वात्। स ह्रवयववचनं वा पूर्वशब्दं गृहीत्वा विशिष्येत, व्यवस्थाशब्दं वा। तत्र पूर्वस्तावदयुक्तः कल्पः अव्यभिचारात्, असम्भवाच्च। कथम्? यदि पकारं पूर्वमभिप्रेत्य विद्यमानः पूर्वोऽवयवो यस्येति विशिष्येत, ततोऽव्यभिचारादयुक्तं विशेषणम्। न हि पकारेण यस्य पूर्वत्वं तत्पतिशब्दो व्यभिचरति। अथ शब्दान्तरम्? तदसम्भवादयुक्तं विशेषणम्। न हि शब्दान्तरं पतिशब्दस्यावयव उपपद्यते। व्यवस्थाशब्दपक्षे तु विद्यमानः पूर्वो यस्मात् तदिति विशिष्यते। युज्यते च विशेष्यविशेषणभावः। किन्तु वाक्येऽपि नकारः प्राप्नोति---- ग्रामस्य पतिरियं ब्राआह्रणीति; अस्ति ह्रत्र पतिशब्दात् पूर्वो ग्रामशब्द-। अनुपसर्जनग्रहणेनापि पतिशब्दे विशिष्यमाने बहुव्रीहौ विकल्पो न प्राप्नोति-- दृढः पतिरस्या दृढपतिः, दृढपत्नीति। न ह्रत्रानुपसर्जनं पतिशब्दः, सर्वोपसर्जनत्वाद्()बहुव्रीहेरिति बहुव्रीह्रवयवानामप्युपसर्जनत्वात्। तस्मात् प्रातिपदिकस्यैव विशेषणं युक्तम्। "पतिरियं ब्राआह्रणी ग्रामस्य" इति। ननु च व्यपदेशिवद्भावादिदमपि सपूर्वमिति शक्यते व्यपदेष्टुम्। न च "व्यपदेशिवद्भावोऽप्रतिपदिकेन" (शाक्।प।६५) इति व्यपदेशिवद्भावाभावः; प्रातिपदिकत्वात्। यद्येवम्, पतिशब्दान्ततापि नास्तीति, अतो द्व्यङ्गविकलता? नैतदस्ति; सपूर्वग्रहणे हि क्रियमाणे पतिशब्दान्तस्येत्येषोऽर्थो लभ्यते। अक्रियमाणे तु तस्मिन् शब्दस्यैव शुद्धस्य नकारो विज्ञायते॥

बाल-मनोरमा

विभाषा सपूर्वस्य ४८४, ४।१।३४

विभाषा सपूर्वस्य। "पत्युर्न" इत्यनुवर्तते। प्रातिपदिकादित्यनुवृत्तं षष्ट()आ विपरिणतं पत्युरित्यनेन विशेष्यते, तदन्तविधिः। सपूर्वस्येत्येतत्पतिशब्दान्तप्रातिपदिकेऽन्वेति। पूर्वावयवसहितस्येत्यर्थः। तदाह--पतिशब्दान्तस्येत्यादिना। यज्ञसंयोगाऽभावेऽपि अप्राप्तविभाषेयम्। गृहपतिः गृहपत्नीति। नत्वपक्षे "ऋन्नेभ्य" इति ङीप्। अत्र गृहपतिशब्दः पतिशब्दान्तो गृहशब्दात्मकपूर्वावयवसहितश्चेति भावः। नच "ग्रहणवता प्रातिपदिकेने"ति निषेधः शङ्क्यः, "शूद्रा चामहत्पूर्वा" इति लिङ्गेन तस्य स्त्रियामित्यधिकारेऽप्रवृत्तेरुक्तत्वात्। ननु दृढः पतिर्यस्या इति बहुव्रीहौ दृढपतिः दृढपत्नीति नत्वविकल्प इष्यते, स तु न संभवति, अनुपसर्जना"दित्यधिकारात्, पतिशब्दस्यात्रोपसर्जनत्वात्। नच अनुपसर्जनादिति नात्र संबध्यते इति वाच्यम्, उत्तरत्रानुवृत्तये इहापि तदनुवृत्तेरावश्यकत्वादित्यत आह--अनुपसर्जनस्येत्यादि। किं तु तदन्तस्येति। सपूर्वस्येति पत्यन्तस्य श्वुतत्वेन तद्विशेषणताया एव न्याय्यत्वात्। अवान्तरवाक्यार्थबोधोत्तरमेव अनुपसर्जनत्वविशेषणप्रवृत्त्या तत्काले सपूर्वस्य श्रुतत्वेन तेनैव संबन्धे जाते सति पश्चात्पतिशब्देऽपि पुनर्व्यापारे मानाऽभावादिति भावः। तेनेति। अनुपसर्जनत्वस्य पत्यन्तविशेषणत्वेनेत्यर्थः। यज्ञसंयोगग्रहणमनुवर्त्य प्राप्तविभाषो कुतो न स्यादित्यत आह--वृषलपत्नीति। पाति रक्षतीति पतिः, वृषलस्य पतिः स्त्री इति विग्रहः। अपशूद्राधिकरणे शूद्राणां यज्ञाधिकारनिराकरणादिह यज्ञसंयोगाऽभावादप्राप्तमेव नत्वं विभाष्यत इति भावः। आक्षिपति--अथेति। आक्षेपारम्भद्योतकोऽथशब्दः, प्रश्नद्योतको वा। "मह्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अत" इत्यमरः। व्यस्ते इति। विग्रहवाक्ये इत्यर्थः। ततश्च सपूर्वत्वाऽडभावान्न प्रकृतसूत्रेण नत्वविकल्पः। यज्ञसंयोगाऽभावाच्च न पूर्वसूत्रेण, अकतो वूषलस्य पत्नीत्यनुपपन्नमित्याक्षेपः। इति चेन्नेति। इत्याक्षिपसि चेन्नैतद्युक्तमित्यर्थः। पत्नीवेति। यज्ञसंयुक्तायां द्विजभार्यायां यः पत्नीशब्दो व्युत्पादितस्तस्यैव शूद्रस्त्रियामपि अयज्ञसंयुक्तायां पाणिग्रहणादिधर्मपुरस्कारेण गौण्या वृत्त्या प्रयोगः। यथा गङ्गायामिति स्त्रीलिङ्गस्य तीरे प्रयोगः। उक्तं च भाष्ये-"तुषजकस्य पत्नीत्युपमानात्सिद्ध"मिति। यद्वेति। प्रौढिवादमात्रमिदम्, स्त्रियामाचारक्विबन्तप्रकृतिकक्विबन्तशब्दां न सन्तीति "अनुपसर्जना"दित्यत्रोक्तात्वेता। सपूर्वस्येति किमिति। प्रातिपदिकविशेषणतया पतिशब्दस्य तदन्तलाभे सति पतिशब्दान्तस्य सपूर्वत्वाऽव्यभिचारात्सपूर्वस्येति किमर्थमिति प्रस्नः। गवां पतिः स्त्रीति। स्वामिनी, रक्षित्री वेत्यर्थः। असमस्तत्वाद्गवामित्यस्य न पूर्वावयवत्वमिति भावः। यद्यपि "यत्र सङ्घाते पूर्वो भागः पदं तत्र चेत्प्रातिपदिकसंज्ञा भवति तर्हि समासस्यैवे"ति नियमेन गवां पतिरिति समुदायस्य पत्यन्तत्वेऽपि प्रातिपदिकत्वाऽभावादेवात्र नत्वविकल्पो न भवति तथापि गवां पतिरित्यत्र पतिशब्दस्यैव व्यपदेशिवत्त्वेन तदन्ततया नत्वविकल्पप्राप्तौ तन्निवृत्यर्थं सपूर्वस्येति वचनमिति भावः। वस्तुतस्तु "व्यपदेशिवद्भावोऽप्रातिपदिकेने"ति निषेधादिह केवलपतिशब्दस्य पतिशब्दान्तत्वाऽभावादेव नत्वविकल्पनिवृत्तिसिद्धेः सपूर्वस्येति स्पष्टार्थमित्याहुः।

तत्त्व-बोधिनी

विभाषा सपूर्वस्य ४३७, ४।१।३४

विभाषा सपूर्वस्य। अप्राप्तविभाषेयम्, अयज्ञसंयोगत्वात्। पूर्वेण सहितः सपूर्वस्तस्य। यस्य समुदायस्य पूर्वावयवो विद्यते तस्येत्यर्थः। स च समुदायः पतिशब्दो नभवतीति पतिशब्देन तदन्तविधिरित्याह---पतिशब्दान्तस्येति। ननु "पत्यु"रिति प्रातिपदिकविशेषणेन तदन्तलाभात्पत्यन्तस्येत्येवास्तु किमनेन सपूर्वग्रहणेन()। अत्राहुः--केवलपतिशब्दस्यापि व्यपदेशिवद्भावेन पत्यन्तत्वादतिप्रसङ्गः स्यात्तद्वारणाय सपूर्वग्रहणमिति। अत्र पूर्वशब्दः पूर्वावयवपर इथि ध्वनयन्प्रत्युदाहरति---गवां पतिः स्त्रीति। पातीति पतिरिति क्रियाशब्दस्य त्रिलिङ्गत्वादिह स्त्रीत्वम्। तथा च तैत्तिरीयैर्नपुंसकेऽपि प्रयुज्यते---"अन्नं साम्राज्यानामधिपति तन्मावतु"इति। व्यस्ते कथमिति। प्राचा तु समस्तेऽप्युपचार इत्युक्तं तद्वृथैवेति भावः।

सूत्रम्

काशिका-वृत्तिः

नित्यं सपत्न्यादिषु ४।१।३५

सप्त्न्यादिषु नित्यं पत्युर्नकारादेशो भवति, ङीप् तु लभ्यते एव। पूर्वेण विकल्पे प्राप्ते वचनम्। नित्यग्रहणं वस्पष्टार्थम्। समानः पतिरस्याः सप्त्नी। एकप्त्नी। समानादिष्विति वक्तव्ये समानस्य सभावार्थं वचनम्। समान। एक। वीर। पिण्ड। भ्रातृ। पुत्र। दासाच् छन्दसि।

न्यासः

नित्यं सपत्न्यादिषु। , ४।१।३५

"सपत्न्यादिषु" इति। के पुनः सप्त्नत्यादयः? ये पठ()न्ते। तेषु प्रातिपदिकेषु येषां समानादीनि पूर्वपदानि ते सपत्न्यादयः। कुत एतत्? समानादीनां गणे पाठात्, सपत्न्यादीनां चापाठात्। लाघवार्थं समानार्थं समानादिष्विति प्रवक्तव्ये कृते नकारदेशस्य सप्रत्ययस्य च सपत्न्यादिष्विति समुदायस्योच्चारणम्-- नियोगत एव समुदाय ईकारन्त एव यथा स्यादित्येवमर्थम्। तेन सपत्नी भार्या यस्य स सपत्नीभार्य इति "स्त्रियां पुंवत्" ६।३।३३ इति पुंवद्भावो न भवति। "सपत्न्यादिषु नित्यम्" इत्यादि। समानादिषु पूर्वेष्वयवयवेषु सत्सु नित्यं पतिशब्दस्य नकारादेशो भयतीत्यर्थः। यदि पूर्वेण विकल्पे प्राप्त इदं वचनम्, एवं हि नित्यग्राहणयनर्थकम्, आरम्भसामथ्र्यादेव हि नित्यं विधिर्भविष्यतीत्यत आह-- "नित्यग्रहणं विस्पष्टार्थम्" इति। "दासाच्छन्दसि" इति। दासशब्दात् परो यः पतिशब्दस्तदन्तस्य प्रातिपदिकस्य चछन्दसि विषये नित्यं नकारादेशो भवति। दासः पतिर्यस्याः सा दासपत्नी। भाषायां तु पूर्()वेण विकल्पः-- दासपतिः, दासपत्नीति॥

बाल-मनोरमा

नित्यं सपत्न्यादिषु ४८५, ४।१।३५

नित्यं सपत्न्यादिषु। विषयसप्तम्येषा। सपत्न्यादिविषये तत्सिद्ध्यर्थं नित्यं नत्वमित्यर्थः। पूर्वविकल्पेति। "विभाषा सपूर्वस्ये"ति विकल्पस्यापवाद इत्यर्थः। आरम्भसामथ्र्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्। ननु समानः पतिर्यस्याः सा सपत्नीति वक्षयति। तत्र समानशब्दस्य सभावोऽनुपपन्नः, अतः सद्दशपर्यायेण सहशब्देनैव बहुव्रीहिराश्रयणीयः। एवं च "वोपसर्जनस्ये"ति वैकल्पिकः सभाव इत्यत आह--समानस्येति। इह गणे समान,एक, वीर, भ्रातृ, पुत्र इति समानादयः पठिताः। अतः समानशब्देनैन बहुव्रीहिकुचितः। तस्य च निपातनादेव नित्यं सभाव इति भावः। समानः पतिरिति। अत्र समानशब्द एकपर्यायः, पतिशब्दस्तु विवाहनिबन्धनभर्तृशब्दपर्यायः। वीरपत्नीति। वीरः पतिर्यस्या इति विग्रहः। सपत्न्यादित्वान्नत्वम्।

तत्त्व-बोधिनी

नित्यं सपत्न्यादिषु ४३८, ४।१।३५

नित्यं सपत्न्यादिषु। आरम्भसामथ्र्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्। निपात्यत इत। इह गणे समान एक वीर भ्रातृ पुत्रेति समानादय एव पठ()न्ते, ततश्च "समानादिषु"इति वक्तव्ये "सपत्न्यादि"ष्वित्युक्तिः सभावनिपातनार्थेति भावः। सपत्न्यादिषु बहुव्रीहिराश्रीयत इत्याशयेनाह---समानः पतिर्यस्याः सेति।

सूत्रम्

काशिका-वृत्तिः

पूतक्रतोरै च ४।१।३६

पूतक्रतुशब्दस्य स्त्रियाम् ऐकारश्चान्तादेशो भवति, ङीप् प्रत्ययः। पूतक्रतोः स्त्री पूतक्रतायी। त्रय एते योगाः पुंयोगप्रकरने द्रष्टव्याः। यया हि पूताः क्रतवः पूतक्रतुः सा भवति।

न्यासः

पूतक्रतोरै च। , ४।१।३६

"ऐकारश्चान्तादेशो भवति" इति। कुतः पुनरेतदवसितम्-- आदेशोऽयमिति, न पुनः प्रत्ययः? उत्तरसूत्रेऽप्यादेशत्वात्। उत्तरसूत्रे ह्ययमेवैकारोऽनुवत्र्तते, तत्र चास्यादेशत्वम्। अत इहाप्यादेशत्वमवसीयते। उत्तरसूत्रे कुतोऽस्यादेशत्वं निश्चितमिति चेत्? उदात्तवचनात्। यदि हि प्रत्ययः, तस्याद्युदात्तत्वादुदात्तवचनमनर्थकं स्यात्; प्रत्ययस्वरेणैवोदात्तत्वस्य सिद्धत्वात्। "त्रय एते योगाः" इति। अयं चैकः, वक्ष्यमाणौ चानन्तरौ-- द्वौ-- एते त्रयो योगाः पुंयोगप्रकणे "पुंयोगादाख्यायाम्" ४।१।४८ इत्येवमादौ द्रष्टव्याः; तस्मिन्नेषां स्वरितत्वेनानुवृत्तेः। पूतः क्रतुर्येन पुकषेण स पूतक्रतुः, तस्य स्त्री पूतक्रतायी॥

बाल-मनोरमा

पूतक्रतोरै च ४८६, ४।१।३६

पूतक्रतोरै च। "ऐ" इति लुप्तप्रथमाकम्। पूतक्रतुशब्दात्स्त्रियां ङीप्स्यात्, प्रकृतेरैकारोऽन्तादेशश्चेत्यर्थः।

इयं त्रिसूत्रीति। वार्तिकमिदम्। पूतक्रतोरित्यादिसूत्रत्रयं पुंयोगात्स्त्रियां वृत्तावेवेत्यर्थः। पूतक्रतायीति। पूतः क्रतुर्येन स पूतक्रतुः, तस्य स्त्रीत्यर्थे ङीप्, तकारादुकारस्य ऐकारः , तस्य आयादेश इति भावः। पुंयोग इत्यस्य प्रयोजनमाह--ययेति। वृषाकप्यग्नि। "ऐ चे"त्यनुवर्तते। तदाह--एषामिति।

तत्त्व-बोधिनी

पूतक्रतोरै च ४३९, ४।१।३६

पूतक्रतोरै च। ऐकार आदेशो ननु प्रत्ययः, उत्तरसूत्रे उदात्तग्रहणात्। नत्विति। अन्यथा "लाघवन्ते इति मध्योदात्तो वृषाकपिशब्द उदात्तत्वं प्रयोजयति, अग्न्यादिषु त्रिषु "स्थानेऽन्तरतमः"इत्येव सिद्ध"मिति वृत्त्यादिग्रन्था विरुध्येरन्निति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वृषाकप्यग्निकुसितकुसिदानाम् उदात्तः ४।१।३७

वृषाकप्यादीनाम् उदात्त ऐकारादेशो भवति स्त्रियाम्, ङीप् च प्रत्ययः। वृषाकपिशब्दो मद्योदात्त उदात्तत्वं प्रयोजयति। अग्न्यादिषु पुनरन्तोदात्तेषु स्थानिवद्भावादेव सिद्धम्। वृषाकपेः स्त्री वृषाकपायी। अग्नायी। कुसितायी। कुसिदायी। पुंयोगे इत्येव, वृषाकपिः स्त्री।

न्यासः

वृषाकप्यग्निकुसितकुसीदानामुदात्तः। , ४।१।३७

"वृषाकपिशब्दो मध्योदात्तः" इति। "लघावन्ते द्वयोश्च बह्वषो गुरुः" (फिट्।२।४२) इति वनचात्। अस्यायमर्थः-- लघावन्ते परतो द्वयोश्च लघ्वोः परतो बह्वच्शब्दस्य यो गुरुः स उदात्तो भवतीति। "बह्वष्" इति बह्वजित्यर्थः। पाणिनेर्यश्चकारेण प्रत्याहारः सोऽन्येषामाचार्याणां मतेन षकारेण। वृषाकपिशब्दे कपिशब्दसम्बन्धिनोर्लघ्वोः परतः पूर्व आकारो गुरुतर उदात्तो भवति, शेषमनुदात्तम्। तत्र यद्युदात्तग्रहणं न क्रियेतानुदात्तस्य स्थाने य आदेशः स्थानिवद्भावेन सोऽनुदात्त एव स्यात्। तस्माद्वृषाकपि शब्द उदात्तत्वं प्रयोजयति। "अग्न्यादिषु पुनरन्तोदात्तेषु" इति। "फिषः" (फि।सू।१।१) इत्यादिनाग्न्यादीनामन्तोदात्तत्वम्। आदिशब्देन कुसितकुसीदयोग्र्रहणम्। "फिष्" इति प्रातिपदिकस्यैव पुनरन्याचार्याकृता संज्ञा॥

बाल-मनोरमा

वृषाकप्यग्निकुसितकुसिदानामुदात्तः ४८७, ४।१।३७

वृषाकपायीति। ङीप्, प्रकृतेरुदात्त ऐकारोऽन्तादेशः, तस्य आयादेशः, तस्य एकारस्थानिकत्वात्तदाकारोऽप्युदात्तः, "अनुदात्तं पदमेकवर्ज"मित्यवशिष्टानामचामनुदात्तत्वम्। उदात्त इति किम्?। "लघावन्ते द्वयोश्च वह्वषो गुरुः" इति वृषाकपिशब्दो मध्योदात्तः, "नाहमिन्द्राणि रारण सख्युर्वृषाकपेः" इति यथा। अन्ते एकस्मिन् लघौ सति द्वयोर्वा लध्वोः सतोः पूर्वो बह्वच्कस्य गुरुरुदात्तः स्यादिति तदर्थः। ततश्च षकारादाकारस्य उदात्तत्वे "अनुदात्तं पदमेकवर्जमित्यवशिष्टानामचामनुदात्तत्वमिति स्थितिः। तथा च पकारादिकारस्यानुदात्तत्वात्तत्स्थाने एकारोऽनुदात्तः स्यात्। ततस्च तदादेशभूतायादेशाकारस्याप्यनुदात्तत्वं स्यात्। अतोऽत्र उदात्तत्वविधिः।?ग्नायीति। "अग्निर्मूर्धा" इत्यादौ अग्निशब्दोऽन्तोदात्तः, ततो ङीप्, प्रकृतेरैकारोऽन्तादेशः, स च भवन्नान्तर्यादुदात्त एव भवति। अतस्तदादेशाऽऽयादेशाकारस्य उदात्तत्वसिद्धेरुदात्त इत्येतदग्निशब्दे अन्वयं न लभते, प्रयोजनाऽभावात्। कुसितायी कुसिदायीति। कुसितकुसिदे अव्युत्पन्नप्रातिपदिके देवताविशेषस्य नामधेये, फिट्()स्वरेणान्तोदात्ते। ततो ङीप् ऐकारश्चान्तादेशः, सच भवन्नान्तर्यादुदात्त एवेति कुसितकुसिदशब्दयोरपि उदात्त इत्यस्य नान्वय इति वृत्त्यादिग्रन्थेषु स्थितम्। अत एवाह--न तु दीर्घमध्य इति। दीर्घमध्यत्वे हि "लघावन्ते" इति मध्योदात्ततया शिष्टस्वरेण दकारादकारस्यानुदात्ततया तत्स्थाने ऐकारस्यानुदात्ततया तत्स्थाने आयाकारस्यानुदात्तत्वापत्त्या तन्निवृत्त्यर्थं तत्राप्युदात्तग्रहणस्यावश्यकत्वादुदाहृतवृत्त्यादिग्रन्थविरोधः स्पष्ट एवेति भावः।

तत्त्व-बोधिनी

वषाकप्यग्निकुसितकुसिदानामुदात्तः ४४०, ४।१।३७

उदात्तैकार इति। "शृ()स्वृस्निहीत्यादिना मनेरुप्रत्ययविधौ "धान्ये नि "दित्यधिकारान्मनुशब्द आद्युदात्तः। समासनिर्देशेनैतद्दर्शयति--उदात्त इत्यनुवर्तमानं संबन्धानुवृत्तैरैकारणेव संबध्यते त्वैकारेणापीति। ततश्चैकारौकारावृदात्तौ स्त इति प्राचोक्तं वृत्तिपदमञ्जर्यानामिति। एथः। शोणः। पृश्निः। पृषत्। इति क्रमेणोदाहरणानि। आद्युदात्त इति। "अनुदात्तं पदमेकवर्ज"मिति शेषनिघातेनाऽनुदात्तान्त एत शब्द इति भावः। त्र्येण्येति। अत्र एतशब्दस्योपसर्जनत्वामिति भावः। "पूर्वपदात्संज्ञाया"मिति णत्वम्। गृह्यमिति। "गृहू ग्रहणे""ऋदुपधाच्चाऽक्लृपिचृतेः" इति क्यप्। त्रीण्येतानि यस्या इति। ननु "चित्रं किर्मिरकल्माषशबलैताश्च कर्वुरे"इति चित्रपर्याय एतशब्दः। तथा च शकल्यां चित्रत्रयाऽभावादर्थाऽस,ङ्गतिरित्याशङ्क्या केचिदिह व्याचक्षते--एतशब्दोऽत्र एतावयवपर इति नास्त्यत्रार्थाऽसङ्गतिः। न चैवमपि गुणविषयेनपुंसकपर्योगो न सङ्गच्छते "गुणे शुल्कादयः पुंसि"इत्युक्तेरिति वाच्यम्, एतानि--एतावयवाधिकरणानीति ब्याख्यया गुणिलिङ्गपरत्वादेतशब्दस्य नपुंसकमप्युपपद्यत इति।

प्शङ्गादुपसङ्ख्यानम्। पिशङ्गादिति। "लघावन्ते"इति पिशङ्गशब्दस्य मध्योदात्तत्वात् "अन्यको ङी"षिति ङीषि प्राप्ते

ङीबुपसङ्ख्यायते। स्वरे विशेषः।

छन्दसि क्नमेके। क्नमेके इति। असितपलितयोस्तकारस्य "वर्णादनुदत्ता"दिति नकारे प्राप्ते तं बाधित्वा तकारस्थाने क्नमादेशं तत्संनियोगेन ङीपं चेच्छन्त्येके आचार्या इत्यर्थः। अत्र "छन्दस्येके"इत्यन्वयाद्भाषायां न्को भवत्येव। छन्दस्येवैके इच्छन्त्यन्ये तु भाषायामपीत्यर्थपर्यवसानात्। अन्यथा एकग्रहणं भाष्यकारो न कुर्यात्। न हि छन्दसि "पलिन्किरिद्युवतयः"इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते। एवं च "गतो गणस्तूर्णमसिक्निकाना"मिति प्रयोगो नाऽनुपन्नः। विशुद्धवाचीति। "दैप् शोधने"इत्युक्तेः। अमरेण तु विशुद्धत्वसाधर्म्यात् "अवदातः सितो गौरः"इत्युक्तमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

मनोरौ वा ४।१।३८

ऐ उदात्तः इति वर्तते। मनुशब्दात् स्त्रियां ङीप् प्रत्ययो भवति, औकारश्चान्तादेशः, ऐकारश्च उदात्तः। वाग्रहणेन द्वावपि विकल्प्येते। तेन त्रैरूप्यं भवति। मनोः स्त्री मनायी। मनावी। मनुः। मनुशब्दः आद्युदात्तः।

न्यासः

मनोरौ वा। , ४।१।३८

"वाग्रहणेन द्वावपि विकल्प्येते" इति। प्रत्येकं वाग्रहणेनाभिसम्बन्धात्। यदा चैकारौकारौ न भवतस्तदा ङीबपि न भवति ; तस्य सन्नियोगशिष्टत्वात्। "मनुशब्द आद्युदात्तः" इति। एतेनोदात्तग्रहणमनुवर्त्तयितव्यम्; अन्यथा शेषस्यानुदात्तत्वे स्थानिवद्भावेनादेशस्याप्यनुदात्तत्वं स्यादिति भावः। "मन ज्ञाने" (धा।पा।११७६) "{भृमृशीतृचरित्सरितनिममस्ज्भ्य उः-- द।उ।}भृमृशीतृचरित्सरितनिधनिमिमस्ज्भ्य उः" (द।उ।१।९२) इत्यनुवर्त्ताने "धान्ये नित्" (द।उ।१।९४) इति च "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमानिभ्यश्च" (द।उ।१।९५) इत्युप्रत्ययः, नित्वात् "ञ्नित्यादिर्नित्यम्" ६।१।१९१ इत्याद्युदात्तत्वं भवति मनुशब्दस्य॥

बाल-मनोरमा

मनोरौ वा ४८८, ४।१।३८

मनोरौ वा। ऐ चेति, उदात्त इति, ङीबिति चानुवर्तते। तदाह--मनुशब्दस्येति। उदात्तैकारश्च वेति। औकारः, उदात्त एकारश्च वा स्यादित्यर्थः। "उदात्तैकार" इति समासनिर्देशादुदात्त इत्यौकारेण न संबध्यत इति सूचितम्, एतच्च वृत्तिपदमञ्जर्योः स्पष्टम्। चकारान्ङीप् एकारौकाराभ्यां समुच्चीयते। तदाह--ताभ्यामिति। एकारौकाराभ्यां समुच्चयेनैव विहित इत्यर्थः। ततश्च तदुभयाऽभावपक्षे ङीबपि नेति लभ्यते, "संनियोगशिष्टानां सह वा प्रवृत्तिः" सह वा निवृत्तिः" इति परिभाषावशादिति भावः। इयं तु परिभाषा "पूतक्रतोरै चे"ति सूत्रभाष्ये स्थिता। मनायीति। "यद्वै किं च मनुरवद"दित्यादौ मनुशब्दः "ञ्नित्यादिनित्यम्" इत्याद्युदात्तः। "धान्ये नित्" इत्यतो निदित्यनुवृत्तौ "शृ()स्वृस्निही"त्यादिना मनेरुप्रत्ययविधेः। ततश्च सिष्टस्वरेण नकारादुकारोऽनुदात्तः। तस्य स्थाने उदात्त ऐकारः, तस्यायादेशो ङीप् चेति भावः। मनावीति। अत्रौकारोऽनुदात्त एव। मनुरिति। ऐकारस्य औकारस्य चाऽभावे तत्संनियोगशिष्टो ङीबपि नेत्युक्तमेव।

---

सूत्रम्

काशिका-वृत्तिः

वर्णादनुदात्तात् तोपधात्तो नः ४।१।३९

वा इति वर्तते। वर्णवाचिनः प्रातिपदिकातनुदात्तान्तात् तकारोपधाद् वा ङीप् प्रत्ययो भवति, तकारस्य नकारादेशो भवति। एता, एनीं। श्येता, श्येनी। हरिता, हरिणी। सर्वे एते आद्युदात्ताः, वर्णानां तणतिनितान्तानाम् इति वचनात्। वर्णातिति किम्? प्रकृता। प्ररुता। गतिस्वरेणाद्युदात्तः। अनुदात्तातिति किम्? श्वेता। घृतादित्वादन्तोदात्तः। तोपधातिति किम्? अन्यतो ङीषं वक्ष्यति। अतः इत्येव, शितिर् ब्रह्मणी। पिशङ्गादुपसङ्ख्यानम्। पिशङ्गी। असितपलितयोः प्रतिषेधः। असिता। पलिता। छन्दसि क्नम् इत्येके। असिक्नी। पलिक्नी। भाषायाम् अपि इष्यते। गतो गणस्तूर्णमसिक्निकानाम्।

लघु-सिद्धान्त-कौमुदी

वर्णादनुदात्तात्तोपधात्तो नः १२६१, ४।१।३९

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च। एनी, एता। रोहिणी, रोहिता॥

न्यासः

वर्णादनुदात्तात्तोपधात्तो नः। , ४।१।३९

"वर्णानां तणितनितान्तानाम्" (फि।सू।२।२३) इत्यस्यायमर्थः-- वर्णवाचिनां तशब्दान्तानां णकारान्तानां तिशब्दान्तानां निशब्दान्तानां चादिरुदात्तो भवतीति, आदिग्रहणमुदात्तग्रहणं च प्रकृतं तत्रानुवत्र्तते। "प्रकृता" इति। प्रकर्षेण कृतेति, "कुगतिप्रादयः" २।२।१२ इति समासः। प्रशब्दोऽयं निपातः, "निपाता आद्युदात्ताः" (फि।सू।४।८०) "उपसर्गाश्चाभिवर्जम्" (फि।सू।४।८१) इत्युदात्तः। समासेऽपि कृते "गितरनन्तरः" ६।२।४९ इति पूर्वपदप्रकृतिस्वरेणाद्युदात्त एव भवतीति। सेषमनुदात्तम्। "घृतादित्वादन्तोदात्तः" इति। "घृतादीनाञ्च" (फि। सू।१।२१।) इत्यन्तोदात्तत्वविधानात्। एतच्च फिट्सूत्रे पठ()ते। "शिति" इति "वर्णानाम्" (फि।सू।२।३३) इत्यादिना शितिशब्द आद्युदात्तः। "पिशङ्गात्" इत्यादि। पिशङ्गशब्दः "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदात्तः, ततः "अन्यतो ङीष्" (४१।३६) इत्यतश्चकारोऽनुक्तसमुच्चयार्थोऽनुवत्र्तते। तेन पिशङ्गादपि ङीब्भवतीति। "वक्तव्यम्" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "मनोरौ वा" ४।१।३९ इत्यतो वेत्यनुवर्तते,सा च व्यवस्थितविभाषा। तेनासितपलितशब्दाभ्यां ङीष्न भविष्यत्येवेति। "वर्णानां तणतिनितान्तानाम्" (फि।सू।२।३३) इयाद्युदात्तौ असितपलितशब्दौ। "तयोश्छन्दसि" इत्यादि। असितपलितशब्दयोस्तकारस्य क्नमेक आचार्या इच्छन्ति। स तु "व्यत्ययो बहुलम्" ३।१।८५ इत्येव सिद्धः। "भाषायामपीष्यते" इति। एतेन प्रत्याचष्टे। "असिक्निकानाम्" इति। अज्ञातार्थे "प्रागिवात्कः" ५।३।७० इतिकः, "केऽणः" ७।४।१३ इति ह्रस्वः॥

बाल-मनोरमा

वर्णादनुदात्तात्तोपधात्तो नः ४८९, ४।१।३९

वर्णादनु। वेति ङीबिति चानुवर्तते। अनुदात्तादिति वर्णादित्यस्य विशेषणं, तदन्तविधिः तोपदादित्यपि वर्णादित्यत्रान्वेति, तकार उपधा यस्येति विग्रहः। तकारादकार उच्चारणार्थः। "वर्णा"दित्यस्य "स्वं रूपं शब्दस्ये"ति वर्णशब्दादिति नार्थः, तोपधत्वाऽसंभवात्। किं तु वर्णवाचिनः शब्दादित्यर्थो विवक्षितः। वर्णादित्येतत्प्रातिपदिकादित्यस्य विशेषणम्, तदन्तविधिः। "त" इति षष्ठी, तकारस्येत्यर्थः। "न" इत्यत्र नकारादकार उच्चारणार्थः। नकार इत्यर्थः। तदाह-- वर्णवाचीत्यादिना। तदन्तादनुपसर्जनादिति। अनुपसर्जनादित्यनुवृत्तं वर्णान्तेऽन्वेति, नतु वर्णादित्यत्रेति भावः। एनी एतेति। ()ओतेत्यर्थः। एतशब्दान्ङीप्, तकारस्य नकारश्च। ङीबभावे टाबेव। नत्वं तु न भवति, ङीपा संनियोगशिष्टत्वात्। एतशब्दः ()ओतपर्याय इति कल्पसूत्रव्याख्यातारो धूर्तस्वामिभवस्वामिरूद्रदत्तभृतयो याज्ञिकाः। रोहिणी रोहितेति।

रोहितशब्दो रक्तवर्णपर्यायः। ङीपि णत्वे-रोहिणीति। तदभावे टाप्। अनुदात्तान्तत्वं गमयितुमाह--वर्णानामिति। तान्तेत्यत्र तकारादकार उच्चारणार्थः। त, ण, ति, नि, त् इत्यन्तानां आदिरुदात्त इत्यर्थः। एतः, शोण, श#इतिः , पृश्निः, पृषत् इति क्मेणोदाहरणानि। प्रकृते एतशब्दे एकारस्य, रोहितशब्दे ओकारस्य चोदात्तत्वे "अनुदात्तं पदमेकवर्जम्" इति शिष्टस्वरेण अवशिष्टानामनुदात्तत्वादन्तानुदात्तत्वमित्यर्थः। ननु "अनुपसर्जना"दित्यनुवृत्तस्य श्रुतवर्णविशेषणत्वमेव युक्तं, नतु तदन्तविधिलभ्यवर्णान्तविशेषणत्वमित्यत आह--त्र्येण्येति। त्रीणि एतानि ()ओतानि अवयवसंस्थानानि यस्या इति बहुव्रीहौ त्र्येतशब्दः। तत्र एतशब्दस्य वर्णवाचिन उपसर्जनत्वान्ङीब्नत्वे न स्याताम्। अनुपसर्जनादित्यस्य वर्णान्तविशेषणत्वे तु त्र्येतशब्दस्यानुपसर्जनत्वान्न दोष इति भावः। शलल्येति। शल्यकाख्यामृगविशेषस्य अङ्गरुहा सूची शललीति याज्ञिकप्रसिद्धिः। गृह्यमिति। गृह्णन्ते संगृह्णन्ते औपासनाग्निसाध्यकर्णाण्यत्रेति व्युत्पत्त्या आपस्तम्बा()आलायनादिप्रणीतकल्पसूत्रविशेष उच्यते। त्र्येण्येति णत्वनमार्षम्। यजुर्वेदे तु "त्रि एण्या शलल्या निवर्तयेते"ति पठितम्। तत्र त्रीणि एतानि ()ओतानि यस्या इति विग्रहः। यणभावो णत्वं च आर्षमिति वेदभाष्ये भट्टभास्करः। ननु "वर्णानां तणति" इति ()ओतशब्दस्याद्युदात्तत्वाच्छिष्टस्वरेणानुदात्तान्तत्वमेवेत्यत आह--घृतादीनाभिति। अत इत्येवेति। "अजाद्यतष्टा"वित्यस्मादत इत्यनुवर्तते एवेत्यर्थः। शितिः स्त्रीति। "शिती धवलमेचक्तौ" इत्यमरः। पिशङ्गीति। "लघावन्ते" इति पिशङ्गशब्दस्य मध्योदात्ततया शिष्टस्वरेणानुदात्तान्तत्वेऽपि तोपधत्वाभावादप्राप्तो ङीबुपसङ्ख्यायते। "अन्यतो ङी"षिति वक्ष्यमाणङीषोऽपवादः। स्वरे विशेषः।

असितेति। वार्तिकमेतत्। असितशब्दस्य कृष्णवाचकतया पलितशब्दस्य स्वेतवाचकतया च "वर्णादनुदात्ता"दिति प्राप्ते ङीब्नत्वे निषिध्येते। छन्दसि क्नमेके इति। इदमपि वार्तिकम्। असितपलितयोस्तकारस्य ङीप्संनियोगेन क्नादेशमन्ये आचार्या इच्छन्तीत्यर्थः। असिक्नीति। असितशब्दान्ङीप्, तकारस्य क्नादेशे पररूपे "यस्येति चे"त्यकारलोपः। क्न् इति नकारान्त एवादेश इत्यन्ये। एवं पलिक्नीत्यपि। "पलितं जरसा शौक्ल्य"मित्यमरः। ननु "अवदातः सितो गौरः" इति कोशादवदातशब्दस्य वर्णवाचित्वा"ल्लघावन्ते" इति मध्योदात्ततयाऽनुदात्तान्तत्वात्तोपधत्वाच्च "वर्णादनुदात्ता"दिति ङीब्नत्वे स्यातामित्यत आह--अवदातशब्दस्त्विति। "अवदातः सिते पीते शुद्धे" इति कोशात् "दैप् शोधने" इत्यस्मात्तप्रत्ययेऽवदातशब्दस्य व्युत्पत्तेश्चेति भावः। एतच्च "पुंयोगादाख्याया"मिति सूत्रे भाष्ये स्पष्टम्। "अवदातः सितो गौरः" इति कोशस्तु शुद्धत्वसाधर्म्याद्बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

अन्यतो ङीष् ४।१।४०

वा इति निवृत्तम्। वर्णादनुदात्तातिति वर्तते, तोपधापेक्षम् अन्यत्वम्। वर्णवाचिनः प्रातिपदिकादनुदात्तान्तात् स्त्रियां ङीष् प्रत्ययो भवति। स्वरे विशेषः। सारङ्गी। कल्माषी। शबली। वर्णातित्येव, खट्वा। अनुदात्तातित्येव, कृष्णा। कपिला।

न्यासः

अन्यतो ङीष्। , ४।१।४०

"सारङ्गी, कल्माषी" इति। "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदात्तौ सारङ्गकल्मावशब्दौ। "शवली" इति। "शप अक्रोशे" (धा।पा।१०००), "कलस्तृपश्च" (द।उ।८।१०७) इति "शपेर्वश्च" (द।उ।८।१०८) इति कलप्रत्ययः, पकारस्य बकारः, प्रत्यायाद्युदात्तत्वेन मध्योदात्तः शबलशब्दः। "खट्वा" इति। "खट काङ्क्षायाम् (धा।पा।३०९), "अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्" (द।उ।८।१२५) इति क्वन्, नित्सर्वेरणाद्युदात्तः खट्वाशब्दाः। "कृष्णा" इति।

"कृष विलेखने" (धा।पा।९९०) "{इण्सिन्दीङुष्यविभ्यो नक्--द।उ।) इण्सिञ्जिदीङुष्यविभ्यो नक्", "कृषेर्वर्णे" (द।उ।५।३५।३७) इति नक्, प्रत्ययस्वरेणान्तोदात्तः कृष्णशब्दः। "कपिला" इति। "कमु कान्तौ" (धा।पा।४४३) "सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्" (पं।उ।१५५), "कमेः पश्च" (पं।उ।१।५६) इति मकारस्य पकारः, चित्स्वरेणाणान्तोदात्तः कपिलाशब्दः॥

बाल-मनोरमा

अन्यतो ङीष् ४९०, ४।१।४०

अन्यतो ङीष्। पञ्चम्यास्तसिः। वर्णादिति, अनुदात्तादिति, तोपधादिति चानुवर्तते। तत्र कस्मादन्यत इत्यपेक्षायां तोपधादिति प्रतियोगित्वेनान्वेति--तोपधापेक्षया अन्यत इति। तदाह--तोपधभिन्नादिति। कल्माषीति। चित्रवर्णेत्यर्थः। "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः। सारङ्गीति। सारङ्गः शबले त्रिषु" इत्यमरः। "फिषोऽन्त उदात्तः" इत्यन्तोदात्तत्वशङ्कां व्युदस्यति--लघाविति। एतत्सूत्रं "वृषाकपी"ति सूत्रव्याख्यावसरे व्याख्यातम्। कृष्णा कपिलेति। फिट्स्वरेणान्तोदात्ताविमाविति भावः।

तत्त्व-बोधिनी

अन्यतो ङीष् ४४१, ४।१।४०

लघा४वन्त इति। अन्ते एकस्मिन् लघौ द्वयोश्च लघ्वोः परतो बह्वषो =बह्वच्कस्य गुरुरुदात्तः स्यात्। "अ"षित्यचः प्राचां संज्ञा। कृष्णोत्यादि। "कृषश्चे"ति नक्प्रत्यये "कपेश्चे"ति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ।

---

सूत्रम्

काशिका-वृत्तिः

षिद्गौरादिभ्यश् च ४।१।४१

ङीषनुवर्तते। षिद्भ्यः प्रातिपदिकेभ्यो गौरादिभ्यश्च स्त्रियाम् ङीष् प्रत्ययो भवति। शिल्पिनि ष्वुन् ३।१।१४५ नर्तकी। खनकी। रजकी। गौरादिभ्यः गौरी। मत्सी। गौर। मत्स्य। मनुष्य। शृङ्ग। हय। गवय। मुकय। ऋष्य। पुट। द्रुण। द्रोण। हरिण। कण। पटर। उकण। आमलक। कुवल। बदर। बम्ब। तर्कार। शर्कार। पुष्कर। शिखण्ड। सुषम। सलन्द। गडुज। आनन्द। सृपाट। सृगेठ। आढक। शष्कुल। सूर्म। सुब। सूर्य। पूष। मूष। घातक। सकलूक। सल्लक। मालक। मालत। साल्वक। वेतस। अतस। पृस। मह। मठ। छेद। श्वन्। तक्षन्। अनडुही। अनड्वाही। एषणः करणे। देह। काकादन। गवादन। तेजन। रजन। लवण। पान। मेध। गौतम। आयस्थूण। भौरि। भौलिकि। भौलिङ्गि। औद्गाहमानि। आलिङ्गि। आपिच्छिक। आरट। टोट। नट। नाट। मलाट। शातन। पातन। सवन। आस्तरन। आधिकरण। एत। अधिकार। आग्रहायणी। प्रत्यवरोहिणी। सेवन। सुमङ्गलात् संज्ञायाम्। सुन्दर। मण्डल। पिण्ड। विटक। कुर्द। गूर्द। पट। पाण्ट। लोफाण्ट। कन्दर। कन्दल। तरुण। तलुन। बृहत्। महत्। सौधर्म। रोहिणी नक्षत्रे। रेवती नक्षत्रे। विकल। निष्फल। पुष्कल। कटाच्छ्रोणिवचने। पिप्पल्यादयश्च। पिप्पली। हरीतकी। कोशातकी। शमी। करीरी। पृथिवी। क्रोष्ट्री। मातामह। पितामह। मातामहपितामहयोः मातरि षिच् च ४।२।३५ इति षित्वादेव सिद्धे ज्ञापनार्थं वचनम्, अनित्यः षिल्लक्षणो ङीषिति, तेन दंष्ट्रा इत्युपपन्नं भवति।

लघु-सिद्धान्त-कौमुदी

षिद्गौरादिभ्यश्च १२५८, ४।१।४१

षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात्। गार्ग्यायणी। नर्तकी। गौरी। अनुडुही। अनड्वाही। आकृतिगणोऽयम्॥

लघु-सिद्धान्त-कौमुदी

द्विगोः १२६०, ४।१।४१

अदन्ताद् द्विगोर्ङीप्स्यात्। त्रिलोकी। अजादित्वात्त्रिफला। त्र्यनीका सेना॥

न्यासः

षिद्?गौरादिभ्यश्च। , ४।१।४१

"षिद्भ्यः प्रातिपदिकेभ्यः" इति। षकार इद्येषां तानि। कथं पुनः प्रातिपदिकानि षिन्ति भवन्ति, यावता ध्वुनादेः प्रत्ययस्य षकार इत्संज्ञकः,न तु तेषाम्? नैष दोषः; अवयवगतं हि षित्त्वं समुदायस्य विशेषणं भविष्यति, यथा-- अक्षिगतं काणत्वं पुरुषस्य --काणः पुरुष इति। यद्येवम्, धातुगतमपि षित्त्वं समुदायस्य विशेषणं प्राप्नोति, "त्रपूष् लज्जायाम्" (धा।पा।३४७), अङ, अपत्रपेति? नैतदस्ति; यो ह्नुबन्धोऽवयवे निष्प्रयोजनः स समुदायार्थो विज्ञायते। धातोस्तु विद्यत एव षित्करणस्य नान्यत् प्रयोजनमस्ति, अतः समुदयार्थमेव तद्विज्ञायते। "रजकी" इति। अत्र "रञ्जेश्च" ६।४।२६ इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादनुनासिकलोपः। गौरादिषु गौरशब्दस्य सत्यपि वर्णवाचित्वे प्रातिपदिकस्वरेणान्तोदात्तत्वात् पूर्वेण प्राप्नोतीतीह पाठः। मत्स्यादीनां यकारोपधानाम् "अयोपधात्" ४।१।६३ इति जातिलक्षणस्य ङीषः प्रतिषेधे प्राप्ते। शृङ्गशब्दस्य प्राक् ()आञ्शब्दात् पुटादीनाञ्चानन्दवर्ज्जितानां स्त्रीविषयत्वात् शृङ्गशब्दस्य प्राप्ते पुटादीनां चास्त्रीविषया ४।१।६३दिति प्रतिषेधे प्राप्ते। आनन्दशब्दस्याजातिवाचित्वान्ङीष्यप्राप्ते। ()आंस्तक्षन्नित्येतयोः "ऋन्नेभ्यो ङीप्" ४।१।५ इतिङीपि प्राप्ते। अनुडुह्नड्वाहीत्यनयोरनकारान्तत्वान्ङीप्यप्राप्ते। इकारान्तयोः सप्रत्यययोर्गणे पाठः पुंवद्भावप्रति,#एधार्थः-- अनडुहीभार्यः, अनड्वाहीभार्य इति। एतदेव वचनं ज्ञापकम्-- अनडुहः स्त्रियां विकल्पेनाम्भवतीति। तेन यदुक्तम्-- "अनडुहः {स्त्रियां वेति -- वा।पाठ।} स्त्रियाञ्चेति वक्तव्यम्" (वा।८२९) इति, तन्न वक्तव्यमिति भवति। "{एषणः का।वृ।}एषणं करणे" इति। एषणशब्दः करणे कारके ङीषमुत्पादयतीति। इष्यतेऽनयेत्येषणी। करण इति किम्? इष्यतेऽस्यामित्यधिकरणे ङीपि। मेध इत्यस्याजातित्वान्ङीष्यप्राप्ते। गौतमस्य शार्ङ्गरवादित्वान्ङीनि प्राप्ते। पक्षे च वचनात्सोऽप#इ भवत्येव। आयस्थूणादीनामालिपिशब्दपर्यन्तानां "अणिञोरनार्षयोः" ४।१।७८ इति ष्यङि प्राप्ते। आयस्थूणशब्दः शिवाद्यणन्तः। "{भौरि,भौलिकि-गणपाठः} भौरिक्यादयः "अत इञ्" ४।१।९५ इतीञन्ताः। आपिच्छिकस्य ङीषि प्राप्ते। आपिच्छिकानां राजानः, तेषामपत्यं स्त्री। "जनपदशब्दात् क्षत्रियादञ्" ४।१।१६६ इत्यञ्, तस्य "अतश्च" ४।१।१७५ इति लुकि कृतेप्रत्ययलक्षणेन ङीप्प्राप्नोति। आरटादीनां प्राक् शातनशब्दात् स्त्रीविषयत्वान्ङीष्यप्राप्ते। शातनादीनां ल्युडन्तत्वान्ङीपि प्राप्ते। अधिकरणान्ङीपि। अग्रे हायनमस्य इत्याग्रहायणी। स्वार्थिकोऽण्, णत्वं निपातनात्। अणन्तत्वान्ङीपि प्राप्ते। ईकारान्तस्य पाठः पुंवद्भावप्रतिषेधार्थः-- आग्रहायणीभार्य इति। प्रत्यवरोहणसेवनयोर्ल्युडन्तयोष्टित्वान्ङीपि। केचित्तु पुंद्भावप्रतिषेधार्थं प्रत्यवरोहिणीति पठन्ति--प्रत्यवरोहिणीभार्य इति। "सुमङ्गलात्संज्ञायाम्" (इति)। "नित्यं संज्ञाच्छन्दसोः" ४।१।२९ इति वत्र्तमाने "केवलमामक" ४।१।३० इत्यादिना ङीपि प्राप्ते। पक्षे वचनात् सोऽपि भवति। संज्ञायामिति किम्? सुमङ्गला। सुन्दरादीनां प्राक् तरुणशब्दात् स्त्रीविषयत्वात् ङीष्यप्राप्ते। तरुणतलुनशब्दयोर्वयोलक्षणे ङीपि प्राप्ते। "नञ्स्नञीकक्तरुणतलुनानामुपसंख्यानम्" (वा।३३८) इत्यत्र तु वयोग्रहणम्। बृहन्महच्छब्दयोरुगित्वान्ङीपि प्राप्ते। "रोहिणी नक्षणे" इति। नक्षत्र इति किमर्थम्? रोहिता। "रेवती नक्षत्रे" इति किम्? येषां रेवतशब्दोऽत्राकारान्त इति दर्शनं तेषां प्रत्युदाहरणं टाप्-- रेवतेति। येषां त्विदं वचनम्-- राविद्यतेऽस्या इति रेशब्दान्मतुप्, निपातनाद्वत्वमिति, तेषां प्रत्युदाहरणम् "उगितश्च" ४।१।६ इति ङीप्-- रेवतीति। स्वरे विशेषः। विकलादीनां टापि प्राप्ते। कटशब्दाच्छ्रोण्यभिधाने ङीष्। कटी श्रोणिरित्यर्थः। श्रोणिरिति किम्? कटा। "पिप्पल्यादयश्च"

इति। एतावद्गणे पठ()ते। तांस्तु पिप्पस्यादीन् दर्शयितुं पिप्पली हरीतकीत्यादिकं वृत्तिकावचनम्। "पृथिवी" इति। ईकारान्तनिपातनं पुंवद्भावनिवृत्त्यर्थम्-- पृथिवीभार्य इति। क्रोष्टुशब्दस्य "स्त्रियां च" ७।१।९६ इतितृज्वद्भावः। "मातरि षिच्च" इति। "पितृष्यमातुलमातामहपितामहाः" ४।२।३५ इत्यत्र पितृमातृभ्यां पितरि वाच्ये डामहज्निपातयिष्यते। मातरि डामहजेव। तस्यापि षित्वम्। "दंष्ट्रा" इति। "{दन्श धा।पा।} दंश दशने" (धा।पा।९८९), "दाम्नीशस्" ३।२।१८२ इत्यादिनाष्ट्रन्। षिल्लक्षणस्यानित्यत्वान् ङीषष्टाब्भवति॥

बाल-मनोरमा

षिद्गौरादिभ्यश्च ४९१, ४।१।४१

षिद्गौरादिभ्यश्च। ष् इत् येषां ते षितः, गौर आदिर्येषां ते गौराभ्यः, षितश्च गौरादयश्चेति द्वन्द्वः। नर्तकीति। "नृती गात्रविक्षेपे" "शिल्पिनि ष्वुन्" "षः प्रत्ययस्य" इति षकार इत्, "हलन्त्य"मिति नकारश्च इत्, "युवोरनाकौ" इति अकादेशः, लघूपधगुणः, रपरत्वम्। नर्तकशब्दात्ङीष्, टापोऽपवादः, "यस्येति चे"त्यकारलोप इति भावः। गौरीति। ()ओतेत्यर्थः। फिट्स्वरेण अन्तोदात्तत्वात्। "अन्यतो ङीष्" इत्यप्राप्तेरिह विधिरिति भावः। संज्ञाशब्दो वाऽयम्। "उमा कात्ययनी गौरी"त्यमरः। "दशवर्षा भवेद्गौरी"ति स्मृतिः।

अनडुही अनड्वाहीति। अनडुहः स्त्रीत्यर्थः। अनो वहतीति यौगिको वा। गौरादिगणे निपातनादेव ङीपि आम्बिकल्पः। एवं च "अनुडुहः स्त्रियामाम् वेचि वक्तव्य"मिति न कर्तव्यमिति भावः।

पिप्पल्यादयश्चेति। अत्र-गौर मत्स्य म मनुष्य, श्रृङ्ग, गवयं, हय, मुकय, गौतम, अनड्वाही, अनडुही, तरुण, तलुन ()आन्-इति पठित्वा "पिप्पल्यादयश्चे"त्युक्त्वा-पिप्पली, हरीतकी, कोशातकी, पृथिवी, मातामही इत्यादि पठितम्। पिप्पलीशब्दस्य जातिवाचित्वेऽपि नियतस्त्रीलिङ्गत्वान्ङीषोऽप्राप्तेरिह पाठः। ()आन्()शब्दस्य तु"ऋन्नेभ्यः" इति ङीपि प्राप्ते ङीषर्थ इह पाठः। स्वरे विशेषः। आकृतिगणोऽयमिति। गौरादिरित्यर्थः। पिप्पल्यादेरवान्तरगणत्वे प्रयोजनं चिन्त्यम्।

तत्त्व-बोधिनी

षिद्गौरादिभ्यश्च ४४२, ४।१।४१

षिद्गौरादि। नर्तकीति। नृतुधातोः "शिल्पिनि ष्वुन्"। ष्वुनः षित्त्वमवयवेऽचरितार्थत्वात्तदन्तस्य प्रातिपदिकस्य विशेषणम्। त्रपूषः षित्वस्याऽङ्विधौ चरितार्थत्वत्त्रपेत्यत्र तु न ङीष्। मृजेः षित्त्वमनार्षं, भिदादौ भृजेति पाठादित्याहुः। मृजेः षित्त्वादेवाह्, भिदादौ मृजेति पाठस्त्वनार्ष इत्यन्ये। गौरीति। गौरशब्दस्य वर्णवाचित्वेऽपि प्रातिपदिकस्वरेणान्तोदात्तत्वात् "अन्यतो ङीष्िति ङीष् न प्राप्नोतीतिहि गणे पाठः।

आमनडुहःस्त्रियां वा। अनङ्वाही। अनडुहीति। अनकारान्तत्वाज्जातिलक्षणस्य पुंयोगलक्षणस्य वा ङीषोऽप्राप्ततया गणेऽस्मिन्पठ()ते। प्रत्ययसहितपाठस्तु ङीषि परे आम्विकल्पार्थः। गौर मत्स्य मनुष्य श्रृङ्ग गवय हय मुकय[गौतम]अनङ्वाही अनडुही तरुण तलुन ()आन्।

पिप्पल्यादयश्च। पिप्पल्यादयश्च। पिप्पली।हरीतकी। कोशातकी। पृथिवी। मातामहीत्यादि। यत्तु प्राचा "ऋन्नेभ्यो ङीप्ित्यत्र "शुनी"त्युदाहृतं तत्तु गौरादिगणे ()आन्शब्दपाठाऽदर्शनप्रयुक्तमित्याहुः। अत्र केचित्--नित्यस्त्रीत्वात् "जातेरस्त्रीविषया"दित्यप्राप्ते ङीषि पिप्पल्यादयो गौरादिषु पठ()न्ते, ङीषन्तपाठस्तु चिन्त्यप्रयोजनः। नच पिप्पली भार्या यस्य स पिप्पलीभार्य इत्यादौ पुंवद्भावं बाधित्वा ङीषः श्रवणं यथा स्यादित्येतदर्थः स इति वाच्यम्,

भाषितपुंस्कत्वाऽभावादेव पुंवद्भावनिषेधसिद्धेः। किं चाऽवान्तरगणत्वाभ्युपगमोऽपि पिप्पल्यादेव्यर्थ एव। न चैवं जाताधिकारे "चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यान"मित्यत्र पिप्ल्यादेराकृतिगणत्वात्पुनर्ङिषिति वक्ष्यमाणग्रन्थो विरुध्यत इति वाच्यं, गौरादेराकृतिगणत्वादित्यपि वक्तुं शक्यत्वादित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्

वृत्त्यमत्राऽवपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ४।१।४२

जानपदाऽदिभ्य एकादशभ्यः प्रातिपदिकेभ्य एकादशसु वृत्त्यादिष्वर्थेषु यथासङ्ख्यं ङीष् प्रत्ययो भवति। जानपदी भवति,वृत्तिश्चेत्। जानपदी अन्या। स्वरे विशेसः। उत्सादिपाठादञि कृते ङीपाद्युदात्तत्वं भवति। कुण्डी भवति, अमत्रं चेत्। कुण्डा ऽन्या। गोणी भवति, आवपनं चेत्। गोणा अन्या। स्थली भवति, अकृत्रिमा चेत्। स्थला अन्या। भाजी भवति, श्राणा चेत्। पक्वा इत्यर्थः। भाजा अन्या। नागी भवति, स्थौल्यं चेत्। नागा अन्या। नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुण एव टापम्। जातिवचनात्तु जातिलक्षणो ङीषेव भवति। नागी। काली भवति, वर्णश्चेत्। काला अन्या। नीली भवति, अनाच्छादनं चेत्। नीला अन्या। न च सर्वस्मिन्ननाच्छादन इष्यते। किं तर्हि? नीलादोषधौ प्राणिनि च। नीली ओषधिः। नीली गौः। नीली वडवा। संज्ञायां वा। नीली, नीला। कुशी भवति, अयोविकारश्चेत्। कुशा अन्या। कामुकी भवति मैथुनेच्छा चेत्। कामुका अन्या। मैथुनेच्छावती भण्यते, नेच्छामात्रम्। कबरी भवति, केशवेशश्चेत्। कबरा अन्या।

न्यासः

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमै , ४।१।४२

वत्र्तते यया सा वृत्तिरिति जीवनोपायो वृत्तिशब्देनेहोच्यते। जनपदे भावा वृत्तिर्जानपदी। "उत्सादिभ्योऽञ्" ४।१।८६ इत्यञ्। "जनापद्यन्या" इति।"टिड्ढाणञ्" ४।१।१५ इति ङीबेव भवति। "स्वरे विशेषः" इति। ङीषि सति प्रत्ययस्वरेणान्तोदात्तत्वं भवति। ङीपि तु सत्याद्युदात्तत्वम्; जानपदस्य ञित्स्वरेणाद्युदात्तत्वात्। "अमत्रम्" इति। भाजनम् = पात्रम्। "कुण्डाऽन्या" इति। क्रियाशब्दोऽयमित्याहुः।"कुडि दाहे" (धा।पा।२७०), "गुरोश्च हलः" ३।३।१०३ इत्यकारतप्रत्ययः,"अजाद्यतष्टाप्" ४।१।४। यस्तु द्रव्यवचनः कुण्डशब्दः स नित्यं नुपंसक एव वत्र्तत इति प्रत्युदाहर्त्तुं न युक्त इति। "आवपनम्" इति। भाजनविशेष उच्यते, यत्र धान्यादि प्रक्षिप्य नीयते। "गोणाऽन्या" इति। सा पुनर्यस्या इदं यादृच्छिकं नाम। "अकृत्रिमा" इति। पुरुषव्यापारदिभिर्न निर्वृत्तेत्यर्थः। "स्थलाऽन्या" इति। या पौरुषेयी। "भाजी" इति। "भज विश्राणने" (धा।पा।१७३३) चुरादिणिच्। "ण्यासश्रन्थो युच्" ३।३।१०७ इति युच् प्राप्नोति। अस्मादेव निपातनादङ्, अङन्तान्ङीष्। "श्राणा" इति। "श्रा पाके" (धा।पा।८१०) इत्यस्मात् क्तः। "{संयोगादेरातो धातोर्यण्वतः"इति सूत्रम्"}संयोगादेर्धातोर्यण्वतः" ८।२।४३ इतिनत्वम्, "अट्कुप्वाङ्नुम्व्यवायेऽपि" ८।४।२ इति णत्वम्। "नागशब्दः" इत्यादि। नागशब्दो द्विविधः-- जातिवचनः, गुणवचनश्च। ततर् स्थौल्यग्रहणादिह न जातिवचनो ङीषमुत्पादयति, न हि जातिवचनस्य स्थौल्यमभिधेयं सम्भवति; नापि गुणान्तरवचनः; न हि गुणान्तरशब्दान्नागवचनान्ङीषन्ताद्गुणान्तरं प्रतीयते, अपि तु स्थौल्यमेव। तस्माद्यदाऽसौ स्थौल्यं गुणमभिधाय द्रव्ये वत्र्तते तदा ङीषमुत्पादयति, नान्यथा। "अन्यत्र" इत्यादि। स्थौल्यादग्यत्र गुण एव दैध्र्यादौ वत्र्तमानो नागशब्दो यदा द्रव्यं विशिनाष्टि तदा टापमुत्पादयति। "जातिवचनात्तु" इत्यादि। हस्तित्वादिजातिवचनात् "जातरेस्त्रीविषयात्" ४।१।६३ इत्यादिना ङीष्भवति। "वर्णश्चेत्" इति।

द्रव्ये वत्र्तमानो यदि वर्णस्तस्य प्रयृत्तिनिमित्तं भवतीत्यर्थः। "कालाऽन्या" इति। यस्या याद्दटच्छिकसंज्ञा। "नीलाऽन्या" इति। आच्छादनं शाटिकादि। अनाच्छादने, न सर्वत्र। किं तर्हि? "नीलादौषदधौ प्राणिनि च" इति। शब्दशक्तिस्वाभाव्यात्,तत्रैव नीलशब्दस्य वृत्तेः। अथ वा "मनोरौ वा" [४।१।३८] इत्यतो वाग्रहणमिहानुवत्र्तते, सा च व्यवस्थितविभाषा , तेनानयोरेवार्थयोस्ततो भविष्यति, नान्यत्रेति। "संज्ञायामेव" इति। अनाच्छादन एवायं विकल्पः। एषोऽपि तत एव वाग्रहानुवृत्तेर्लभ्यते। "अयोविकारः" इति। विशिष्ट एव "फालः" इति यस्य नामधेयम्। "कुशाऽन्या" इति। तदाकृतिरेव काष्ठादिमयी। "कामुकाऽन्या" इति। सा पुनर्यस्या मैथुनादन्यद्वस्तु कामयितुं शीलम्। "मैथुनेच्छवती भण्यते" इति। मत्वर्थीयाकारान्तस्य मैथुनेच्छाशब्दस्योपादानात्। "केशवेशः"इति। एतदाख्ये विशिष्ट एव। "कवराऽन्या" इति। वर्णोऽस्या" अस्तीति मतुप्, तस्या लोपादभेदोपचाराद्वा द्रव्ये यो वत्र्तते स वेदितव्यः॥

बाल-मनोरमा

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककवराद्वृत्त्यमत्रावपनाकुत्रिमाश्राणास्थौल्यवर्णानाच्छादनयोविकारमैथु

४९३, ४।१।४२

जानपद। जानपदेत्यादि कबरादित्यन्तमेकं पदम्। समाहारद्वन्द्वात्पञ्चमी। जानपदीति। जनपदे भवेत्यर्थः। वृत्तिश्चेदिति। जीविका गम्या चेदित्यर्थः। ननूत्सादित्वादञि ङीपैव सिद्धे ङीष्विधिव्र्यर्थ इत्यत आह--उत्सादित्वादिति। "अनुदात्तौ सुप्पितौ" इति ङीप्याद्युदात्तत्वम्। ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वमिति भेद इत्यर्थः। कुण्डीति। पिठरं स्थाल्युखा कुण्डम्" इत्यमरः। "पात्राऽमत्रे च भाजन"मिति च कुण्डशब्दस्य स्त्रीत्वमपि ङीष्विधिसामथ्र्यात्। "पिठरे तु न ना कुण्ड"मिति वि()आः। कुण्डाऽन्येति। दहनीयेत्यर्थः। तदेव विशदयति-कुडि दाहे इति। गुरोश्चेति। गुरुमतो हलन्ताद्धातोरप्रत्ययः स्याद्भावकर्णणोः स्त्रियामिति तदर्थः। ननु "अमृते जारजः कुण्डो मृते भर्तरि गोलकः" इति मनुष्यजातिविशेषवाची कुण्डशब्दोऽपि प्रत्युदाहरणं किं न स्यादित्यत आह--यस्त्विति। जातिलक्षण इति। जातेरस्त्रीविषया"दिति जातिनिमित्तर इत्यर्थः। नन्वमत्रेऽपि वाच्ये कुण्डशब्दाज्जातिलक्षणङीषि सिद्धे तद्वचनं व्यर्थम्। नच अमत्र एव ङीषिति नियमार्थं तदिति वाच्यम्, एवं सति मनुष्यजातिविशेषवाचित्वे ङीषोऽनुत्पत्तेरित्यत आह--अमत्रे हीति। "जातेरस्त्रीविषया"दित्यनित्यस्त्रीलिङ्गान्ङीष् विहितः। अमत्रे कुण्डशब्दो नित्यस्त्रीलिङ्गः, "पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्व"मिति स्वीकारात्। "कुण्डी कमण्डलौ जारात्पतिपत्नीसुते पुमान्" इति मेदिनीकोशाच्च। तथाच कुण्डशब्दाज्जातिलणङीषप्राप्त #एव विधीयते, नतु नियम्यते। अतो मनुष्यजातिवाचित्वेऽपि ङीष् निर्बाध इति भावः। आवपनं चेदिति। ओप्यते निक्षिप्यते अस्मिन्नित्यर्थे आङ्()पूर्वाद्वपेल्र्युट्। गोणाऽन्येति। कस्याश्चिदिदं नाम। अकृत्रिमा चेदिति। इदामीन्तनपुरुषपरिष्कृता भूमिः कृत्रिमा, तद्भिन्नेत्यर्थः। स्थलाऽन्येति। कृत्रिमेत्यर्थः। "स्थलयोदकं परिगृह्णन्ति" इति यजुर्वेदे। भाजीति। भज्यते सेव्यते इति कर्मणि घञ्। "घञजबन्ताः पुंसि" इति तु प्रायिकम्। श्राणा चेदिति। "यवागूरुष्णिका श्राणा" इत्यमरः। भूज़ाऽन्येति। अश्राणेत्यर्थ #ः। "श्रा पाके"क्तः। "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वम्, णत्वं च। पक्तेत्यर्थः। नागशब्दस्य स्थौल्ये क्वाप्यप्रसिद्धेराह--गजवाचीति। वर्णश्चेदिति। वर्णः प्रवृत्तिनिमित्तं चेदित्यर्थः। वर्णविशिष्टा चेदिति यावत्। अन्यथा कालशब्दस्य "गुणे शुक्लादयः पुंसि" इति पुंस्त्वापात्तात्। सूत्रे वर्णा इति च्छेदः। अर्शाअद्यजन्तट्टाप्। कालाऽन्येति। क्रौर्ययुक्तेत्यर्थः। संज्ञाशब्दो वा। अनाच्छादनं चेदिति। वस्त्रभिन्नं गवादिकमित्यर्थः। नीलाऽन्येति। नन्वत्राच्छादनस्य विशेष्यत्वे स्त्रीत्वानुपपत्तिः। पटीत्यस्य विशेष्यत्वेऽपि नीलवर्णवती पटीत्यर्थे ङीषोऽप्रसक्तिरेव, "नीलादोषधौ, प्राणिनि चे"ति नियमस्य वक्ष्यमाणत्वादित्यत आह--नील्यारक्तेति। नील्या ओषध्या रागविशेषं प्राप्तेत्यर्थः। ननु कथमयमर्थो लभ्यत इत्यत आह--नील्या अनिति। "तेन रक्तं रागा"दित्यत्रेदं वार्तिकम्। नीलीशब्दादन्प्रत्यये सति "यस्येति चे"ति लोपे नीलशब्दः, तस्य नीलीरक्तवाचकस्य विशेषणांशे ओषधिवाचकत्वसत्त्वात् "नीलादोषधौ प्राणिनि चे"ति नियमे सत्यपि ङीषः

प्राप्तेस्तन्निवृत्त्यर्थमनाच्छदानाग्रहणमिति भावः। ननु नीला कुण्डीत्यत्रापि अनाच्छादनत्वान्ङीष् स्यादित्याशङ्क्य आह--अनाच्छादनेऽपीति। "नीवादोषधौ प्राणिनि चे"ति वार्तिकमेतत्। नीलादनाच्छादनेऽपि भवन्ङीष् ओषधौ प्राणिनि चैव स्यात्, न त्वन्यत्रेत्यर्थः। एवं च नीला कुण्डीत्यादौ न ङीषिति भावः। "संज्ञायां वा" इत्यपि वार्तिकम्। संज्ञायामुक्त विषये तदन्यत्रापि ङीष् वा स्यादित्यर्थः। अयोविकारश्चेदिति। फाला इति प्रसिद्धः। कुशाऽन्येति छन्दोगसूत्रे "प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य खदिरस्य दीर्घसूत्रेष्वेके प्रादेशमात्रीः कुशपृष्ठास्त्वक्तस्समाभज्जते" इति प्रसिद्धा। कामुकीति। कामयितुं शीलमस्या इति विग्रहे "लषपते"त्यादिना कमेरुकञ्। मैथुनेच्छावती चेदित्यर्थः। अर्शाअद्यजन्ताट्टाप्। कामुकान्येति। धनादीच्छावतीत्यर्थः।

तत्त्व-बोधिनी

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथ
४४४, ४।१।४२

जानपदीति। जनपदे भवा। वृत्तिश्चेदिति। वर्ततेऽनयेति वृत्तिर्जीविका।कुण्डीति। "अस्त्री कमण्डलुः कुण्डी"त्यमरः। कुण्डाऽन्येति। क्रियाशब्दोऽयम्। अत एवाह--कुडि दाह इत्यादि। यस्तु घटपर्यायः कुण्डशब्दः स न प्रत्युदाहरणम्। "पठिरः स्थाल्युखा कुण्ड"मिति तस्य नपुंसकत्वात्। अग्न्यालयादिपर्यायोऽपि कुण्डशब्दो नपुंसकलिङ्गे नियतः। "कुण्डमग्न्यालये मानभेदे देवलाशये"इति मेदिनीकोशात्। आवपनं चेदिति। आङ्पूर्वाद्वपेरधिकरणे ल्युट्। ओप्यते निक्षिप्यते धान्यं यस्मिन्। गोणाऽन्येति। यस्या यादृच्छिकं नाम। अकृत्रिमेति। यथा "सैषा स्थली यत्र विचिन्वता त्वा"मिति स्थलाऽन्येति। कृत्रिमा--पुरुषेण संस्कृता। श्राणा--पक्वा।

प्राणिनि च। अयोविकार इति। "फाल"इति प्रसिद्धः। कुशाऽन्येति। छन्दोगाः स्तोत्रीयागणनार्थानौदुम्बरान् शङ्कून् "कुशा"इति व्यवहरन्ति। "अतःकृकमी"ति सूत्रे प्रसिद्ध एवाऽयम्। कामुकाऽन्येति। मैथुनादन्यद्धनादिकं कामयितुं यस्याः शीलं सेत्यर्थः। "लषपते"त्युकञ्।

---

सूत्रम्

काशिका-वृत्तिः

शोणात् प्राचाम् ४।१।४३

शोणशब्दात् प्राचाम् आचार्याणां मतेन स्त्रियां ङीष् प्रत्ययो भवति। शोणी, शोणा वडवा।

न्यासः

शोणात्प्राचाम्। , ४।१।४३

शोणशब्दोऽयं वर्णवचनः। "वर्णानां तणतिनितान्तानाम्" (फि।सू।२।३३) इतिवचनादाद्युदात्तः। तत्र "अन्यतो ङीष्" ४।१।४० इति सिद्धे वचनं नियमार्थम्-- प्रचामेद यथा स्यात्, अन्येषां मा भूदिति॥

बाल-मनोरमा

शोणात्प्राचाम् ४९४, ४।१।४३

शोणात्प्राचाम्। "रोहितो लोहितो रक्तः शोणः कोकनदच्छविः" इत्यमरः। "वर्णानां तणतिनितान्ताना"मिति शोणशब्द आद्युदात्तोऽनुदात्तान्तः। "अन्यतो ङी"षिति नित्यं ङीषि प्राप्ते विकल्पार्थमिदम्।

तत्त्व-बोधिनी

शोणात्प्राचाम् ४४५, ४।१।४३

शोणात्। "शोणः कोकनदच्छवि"रिति कोशाच्छोणशब्दस्य वर्णवाचित्वात् "वर्णानां तणे"त्याद्युदात्ततया "अन्यतो ङी"षिति सिद्धेऽपि प्राचामेव ङीष् नान्येषामिति नियमार्थमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

वा उतो गुणवचनात् ४।१।४४

गुणम् उक्तवान् गुणवचनः। गुणवचनात् प्रातिपदिकादुकारान्तात् स्त्रियां वा ङीष् प्रत्ययो भवति। पट्वी, पटुः। मृद्वी, मृदुः। उतः इति किम्? शुचिरियं ब्राहमणी। गुणवचनातिति किम्? आखुः। वसुशब्दाद् गुणवचनाद् ङीबाद्युदात्तार्थम्। वस्वी। खरुसंयोगोपधात् प्रतिषेधो वक्तव्यः। खरुरियं ब्राह्मणी। पाण्डुरियं ब्राह्मणी। सत्त्वे निविशते ऽपैति पृथग् जातिषु दृश्यते। आधेयश्च अक्रियाजश्च सो ऽसत्त्वप्रकृतिर् गुणः।

लघु-सिद्धान्त-कौमुदी

वोतो गुणवचनात् १२६२, ४।१।४४

उदन्ताद् गुणवाचिनो वा ङीष् स्यात्। मृद्वी, मृदुः॥

न्यासः

वोतो गुणवचनात्। , ४।१।४४

"गुणमुक्तवान् गुणवचनः" इति। भूते काले ल्युटो विधानात्। स पुनर्यः प्राग् गुणमभिधाय पश्चान्मतुब्लोपादभेदोपचाराद्वा तद्वद्द्रव्यमभिधत्ते स वेदितव्यः। "पट्वी, मृद्वी" इति। अत्र पटुत्वं मृदुत्वञ्च यताक्रमं गुणमभिधाय पटुमृदुशब्दौ तद्वति द्रव्ये वत्र्तेते इति गुणवचनौ भवतः। "शुचिः" इति। शुचिशब्दः शुचित्वे गुणे वर्त्तित्वा द्रव्ये वत्र्तत इति गुणवचनः, न तूकारान्तः। "आखुः" इति। जातिवचनोऽयम्, न गणवचनः। "गुणवचनान्ङीबाद्युदात्तार्थम्" इति। गुणवचनान्ङीब्विधेयः, न ङीष्। स्वरे विशेषः। किमर्थम्? आद्युदात्तार्थम्। अन्तोदात्तेषु "उदात्तयणो हल्पूर्वात्" ६।१।१६८ इत्युदात्तत्वमीकारस्य विधीयत इति नास्ति विशेषो ङीब्ङीषोः। आद्युदात्तेषु तु ङीबनुदात्त एवावतिष्ठते, तस्मात् तदर्थं ङीब्विधेयः। ननु च ङीष् प्रकृतः, तत् कथं ङीप् शक्यते विधातुम्? नैष दोषः; ङीबेव ह्यत्र मण्डूकप्लुतिन्यायेनानुवत्र्तते, न ङीष्; अस्वरितत्वात्। "वस्वी" इति। "वस निवासे" (धा।पा।१९४२) "भृमृशीतृचरित्सरितनि{धनि-नास्ति-द।उ।} धनिमिमस्जिभ्य उः" (द।उ।१।९२) इति वत्र्तमाने "धान्ये नित्" (द।उ।१।९४) इति च शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिवन्धिमनिभ्यश्च" (द।उ।१।९५) इत्युप्रत्ययः, निच्च, नित्त्वादाद्यदात्तत्वं भवति। गुणवचनश्चायं वसुशब्दः, वसुत्वे गुणे वर्त्तित्वा तद्वति द्रव्ये वत्र्तत इति कृत्वा। पटुशब्दोऽप्याद्युदात्तत्वान्ङीपं प्रोजयति। "अट पट गतौ" (धा।पा।२९६,२९७), हेतुमण्णिच्, "फलिपाटिनमिमनिजनां गुक् पटिनाकिधतश्च" (द।उ।१।१०३) इत्युप्रत्ययः, पाटेश्च पटिरादेशः, "धान्ये नित्" (द।उ।१।९४) इत्यनुवृत्तेर्नत्वादाद्युदात्तत्वम्। मृदुशब्दश्च प्रत्ययस्वरेणान्तोदात्त इति, तत्र ङीपो ङीषो वा विशेषो नास्ति। "म्रद मर्दने" (धा।पा।७६७), "कुभ्र्रश्च" (द।उ।१।१०७) इत्यतः कुरित्यनुवत्र्तमाने "प्रथिम्रदिभ्रस्जां सम्प्रसारणं च" (द।उ।१।११३) इति कुप्रत्ययः, सम्प्रसारणं च भवति। "खरुसंयोगोपधप्रतिषेधः" इति। खरुशब्दात् संयोगोपधाश्च प्रतिषेधः। स तु वेत्यस्य व्यवस्थितविभाषाविज्ञानादेव लभ्यत इति वक्तव्यमिति। "उतः" इति तपरकरणं दीर्घनिवृत्त्यर्थम्, तेन पटुरित्यत्र न भवति। पटुमिच्छतीति "सुपः आत्मनः क्यच्" ३।१।८, "अकृत्सार्वधातुकयोः"

७।४।२५ इति दीर्घः। पटू य इति स्थिते क्विप्, "अतो लोपः" ६।४।४८ इत्यकारलोपः, "लोपो व्योर्वलि" ६।१।६४ इति यकारस्य लोपः। इह "उतः" इति विशेषणोपादनादेव शास्त्रीयगुणस्यापरिग्रहः सिद्धः म ह्लेदेङ्गां मध्ये कश्चिदुकारान्तोऽस्ति। लोके तु क्वचिदुपसर्जनं गुण इत्यभिधीयते, यथा-- गुणभूता वयमिति, अप्रधानभूता इति गम्यते। यस्य गुणस्य हि भावात् तद्वति द्रव्यशब्दे निवेशस्तदभिधाने त्वतलावित्यत्र विशेषणमात्रं गुणशब्देनोच्यते, तथा हि, जातावपि भावप्रत्ययो भवति-- इह तु यादृशो गुण इष्यते तादृशं परिभाषितुमाह-- "सत्त्वे निवशतेऽपैति" इत्यादि। व्यवच्छेदफलकत्वात् सर्ववाक्यानां सत्तव एवेत्यवधारणं द्रष्टव्यम्। सत्त्वम् = द्रव्यम्, तत्रैव निविशते, तदेवाश्रयतीत्यर्थः। अपैति = ततः सत्त्वादपगच्छथि, यथा-- आम्रफले श्यामता पूर्वमुपैति, रक्ततायामुपजातायां ततोऽपैति। "पृथग्जातिषु दृश्यते" (इति)। पृथक् = नाना जातयो येषां ते पृथग्जातयः, अतस्तेषु पृथग्जातिषु दृश्यते। न हि गोत्वम()आआदिषु व्यक्तिषु दृश्यते। गोव्यते। गोव्यक्तौ दृष्टः शङ्()खादावपि शुक्लादिर्गुणौ दृश्यते। एतेन सर्वेण जातिर्गुणो न भवतीत्युक्तं भवति। न हि जातिद्र्रव्यमेवाश्रयति। यथा हि सत्ता द्रव्यगुणकर्मसु त्रिष्वपि वत्र्तते, द्रव्यत्वं द्रव्य एव, कर्मत्वं कर्मण्येव, गुणत्वं गुण एव, नापि द्रव्यवर्तिनी जातिः सत्त्वादपैति; जन्मनः प्रभृत्या विनाशात्तस्याधारद्रव्यापरित्यागात् न जातिः पथग्जातिषु दृश्यते। न हि गोत्वम()आआदिव्यक्तिषु दृश्यते, नाप्य()आत्वं गवादिष्विति नास्ति जातेर्गुणत्वप्रसङ्गः। कर्मणस्तु स्यात्; तदपि हि सत्त्व एव निवशिते यदा सक्रियं द्रव्यं भवति, अपैति च ततो यदा तु निष्क्रियं भवति। "पृथग्जातिषु दृश्यते" इति। घटपटादिषु दृश्यते। अतः रक्तता गुणः, स ह्ग्निसन्नियोगेन निष्पाद्यते। "अक्रियाजश्च" इति। क्रिया = व्यापारः, ततो जातः क्रियाजः, न क्रियाजोऽक्रियाजः = नित्यः, यथा-- आकाशादिषु महत्त्वादिर्गुणः। तदेवं गुणस्योत्पाद्यत्वानुत्पाद्यत्वप्रकारद्वयदर्शनेन कर्मणो गुणत्वनिवृत्तिः कृता भवति। तद्ध्युत्पाद्यमेव, नानुत्पाद्यम्। एवमपि द्रव्यस्य गुणत्वं प्राप्नोति,तस्यापि ह्लेते धर्मा विद्यन्ते।तथा हि-- तदपि यदि द्रव्य एवारम्भकेऽवयवभूते निविशते, अपैति च ततः, यथा-- शरीरमवयवीति। तद्धि हस्तपादादिष्ववयवेषु समवैति; तद्विनाशे च विनाशात् ततोऽपैति। पृथग्जातिषु दृश्यते, हस्त्यादिषु दृश्यते। द्रव्यस्यापि पूर्वोक्तं प्रकारद्वयमस्त्येव। अवयविद्रव्यस्योत्पाद्यत्वादाकाशादेस्तद्वदनुत्पाद्यत्वात्? इत्यत आह-- "सोऽसत्त्वप्रकृतिर्गुणः"इति। प्रकृतिः = स्वभावः। सत्त्वं द्रव्यं प्रकृतिर्यस्य स सत्त्वप्रकृतिः, न सत्त्वप्रकृतिरसत्त्वप्रकृतिः। यथोक्तैर्धर्मैर्युक्तो यो द्रव्यस्वभावो न भवति स गुणः। द्रव्यम् = द्रव्यस्वभावम्, अतो गुणो न भवति॥

बाल-मनोरमा

वोतो गुणवचनात् ४९५, ४।१।४४

वोतो गुणवचनात्। प्रातिपदिकादित्यनुवृत्तम्। वा उत इतिच्छेदः। उता गुणवचनस्य प्रातिपदिकस्य विशेषणात्तदन्तविधिः। तदाह--उदन्तादिति। वा ङीबिति। ङीषिति नात्रानुवर्तते। "गुणवचनान्ङीबाद्युदात्तार्थः" इति वार्तिकादिति भावः। मृद्वीति। मृदुशब्दान्ङीपि यण्। अत्र-"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः" इति भाष्ये गुणलक्षणमुक्तम्। सत्त्वं द्रव्यं समवायिकारणं, तत्रैव निविशते समवैति यः स गुण इत्यन्वयः। द्रव्यमात्रसमवेत इति यावत्। मात्रपदात्सत्ताजातिव्र्यवच्छिद्यते, तस्या द्रव्यगुणक्रियावृत्तित्वात्। अथ द्रव्यत्वेऽतिव्याप्तिवारणाय आह--अपैतीति। कतिपयद्रव्येभ्योऽपगच्छतीत्यर्थः। द्रव्यत्वस्य सर्वद्रव्यवृत्तित्वान्नातिव्याप्तिरिति भावः। एवमपि क्रियायामतिव्याप्तिवारणाय आह--आधेयश्चाक्रियाजश्चेति। आधीयते उत्पाद्यते इत्याधेयः=उत्पाद्यः, अक्रियाजः=अनुत्पाद्यः। उत्पाद्यत्वाऽनुत्पाद्यत्वाभ्यां द्विविध इति यावत्। गुणोनित्याऽनित्यभेदेन द्विविधो भवति। नित्यगतानां गुणानां नित्यत्वात्, अनित्यगतानामनित्यत्वात्। क्रियायास्तु सर्वस्या अप्युत्प#आद्यत्वान्नातिव्याप्तिरिति भावः। एवमपि द्रव्येऽतिव्याप्तिः, तस्य अवयवद्रव्यसमवेतत्वादसमवायिकारणसंयोगनाशे ततोऽपायात्, विजातीयपार्थिवाद्यवयवेषु सत्त्वात्,

नित्याऽनित्यभेदसत्त्वाच्च।?त आह--असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः। द्रव्यभिन्न इति यावत्।?त्र मात्रपदेन सत्ताजातेः, अपैतीत्यनेन द्रव्यत्वस्य, पृथग्जातिषु दृश्यते इत्यनेन गोत्वादिजातेश्च निरासत्ताद्भिन्नत्वमिति लब्धम्। "आधेयश्चाक्रियाजश्चे"त्यनेन क्रियानिरासात्क्रियाभिन्नत्वं लब्धम्। असत्वप्रकृतीरित्यनेन द्रव्यस्य निरासादद्रव्यभिन्नत्वं लब्धम्। तथाच जातिभिन्नत्वे सति क्रियाभिन्नत्वे सति द्रव्यभिन्नत्वे सति समवेतत्वं गुणलक्षणं निष्कृष्टं वेदितव्यम्। समवेतत्वाऽभावादभावनिरासः। अत्र "नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव" इति तार्किकाभिमतविशेषपदार्थाङ्गीकारे तद्भिन्नत्वमपि निवेश्यम्। "आकडारादेक संज्ञा" इति सूत्रभाष्ये तु "समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दव्यतिरिक्तमर्थवच्छब्दरूपं गुणवचनसंज्ञं भवती"त्युक्तम्। तदिदं प्रकृतसूत्रभाष्यस्थलक्षणस्यास्योक्तस्य प्रपञ्चनपरं वेदितव्यम्। परन्तु आकडारसूत्रभाष्ये संख्याशब्दभिन्नत्वमप्युपात्तम्। तदप्युक्तलक्षणे निवेश्यम्। न चैवमपि मृदुपट्वादिशब्दानां गुणविशिष्टद्रव्यवाचित्वाद्गुणवचनत्वाऽभाव इति वाच्यं, गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनद्रव्यवाचित्वस्यैव विवक्षितत्वात्। एवं च रूपशब्दस्य न गुणवचनता तस्य प्राधान्येन रूपवाचितया रूपवति प्रयोगाऽभावात्। रूपादिशब्दस्यापि गुणवचनशब्देन ग्रहणे "गुणवचनेभ्यो मतुपो लुगिष्टः" इत्यत्रापि रूपादिशब्दानां ग्रहणापत्तौ "रूपो घटः" इत्यादिप्रयोगापत्तेः। प्रपञ्चितं चैदरूणाधिकरणेऽस्माभिरध्वरमीमांसाकुतूहलवृत्तौ। शुचिरिति। शुक्लेत्यर्थः। "शुक्लशुभ्रशुचि()ओतविशदश्येतपाण्डराः" इत्यमरः। नच शुचिधातोः "इगुपधात् कि"दित्यौणादिके इप्रत्यये उत्पन्नस्य शुचिशब्दस्य आकडारसूत्रे भाष्ये कृदन्तस्य गुणवचनत्वपर्युदासादेवात्र ङीष् न भविष्यतीति वाच्यम्, उणादीनामव्युत्पत्तिपक्षाश्रयणात्। आखुरिति। मूषिकेत्यर्थः। आखोस्तु जातिविशिष्टद्रव्यवचनत्वादुक्तगुणवचनत्वाऽभावान्न ङीप्। "खरुसंयोगापधान्ने"ति वार्तिकम्। खरुश्च संयोगापधश्चेति समाहारद्वन्द्वः। खरुशब्दात् संयोगोपधाञ्च "वोतो गुणवचनादि"ति ङीप् नेत्यर्थः। खरुशब्दमप्रसिद्धत्वाद्व्याचष्टे--पतिंवरा कन्येति। पतिलाभोत्कण्ठावतीत्यर्थः। औत्कण्ठ()लक्षणगुणोपसर्जनद्रव्यवाचितया गुणवाचित्वात् प्राप्तिः। पाण्डुरिति। ()ओतेत्यर्थः। संयोगोपधत्वान्न ङीप्।

तत्त्व-बोधिनी

वोतो गुणवचनात् ४४६, ४।१।४४

गुणवचनात्। गुणो नाम नेहादेङ्गपः, "उतः"इति विशेषणाद्वचनग्रहणाच्च, नापि विशेषणमात्रमिदम्, आखुद्रव्यमित्यादावतिप्रसङ्गादिति चेत्। अत्राहुः--"संज्ञाजातिक्रियाशब्दान् हित्वाऽन्ये गुणवाचिनः"। "चतुष्टयीशब्दानां प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादेव निर्णयः" इति। भाष्ये तु "सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः।"इति स्थितम्। सत्त्वं द्रव्यम्। सत्त्व एव निविशतो इति सावधारणं व्याख्येयम्। एतेनसत्ता व्यावर्त्यते। सा हि न केवलं द्रव्ये वर्तते किन्तु द्रव्यगुणकर्मसु। ननु द्रव्य एव द्रत्यत्वं वर्तत इति तत्राऽतिव्याप्तिरत आह---अपैतीति। अपगच्छतीत्यर्थः। अर्थात्सत्त्वादेव। यथा पीततायां जातायां फलादेर्नीलताऽपैति, नैवं द्रव्यत्वं द्रव्यादपैति। एवमपि गोत्वं गोषु वर्तते अ()आआदेश्चापैति तत्रातिव्याप्तिरत आह--पृथग्जातिषुदृश्यत इति। गोत्वं हि द्रव्यत्वाऽवान्तरनानाजातिषु न दृश्यते। गुणस्तु दृश्यते। यथा अम्रे दृष्टा नीलता तृणादिष्वपि दृश्यते। एतेन पूर्वार्धेन सकलजातेव्र्यवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग्जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह--आधेयश्चाक्रियाजश्चेति। उत्पाद्योऽनुत्पाद्य इत्यर्थः। उत्पाद्यो--यथा घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यः। स यथा आकाशादेर्महत्त्वादिः। क्रिया तु सर्वाप्युत्पाद्यैव न नित्येति तस्या द्वैविध्याऽभावाद्गुणत्वाऽभावाः। एवमपिल द्रव्यस्य गुणत्वं प्राप्नोति, अवयविद्रव्यं ह्रस्तपादादिषु दृश्यते, द्विविधं च भवति नित्याऽनित्यभेदेन, निरवयवस्याऽत्मपरमाण्वादेर्नित्यात्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह--असत्त्वपर्कृतिरिति। अद्रव्यस्वभाव

इत्यर्थः। पतिवरेति। एवं च पाणिग्रहणोत्कण्ठाभिधायित्वाद्गुणवचनोऽयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

बह्वाऽदिभ्यश् च ४।१।४५

बहु इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् प्रत्ययो भवति। बह्वी, बहुः। बहु। पद्धति। अङ्कति। अञ्चति। अंहति। वंहति। शकटि। शक्तिः शस्त्रे। शारि। वारि। गति। अहि। कपि। मुनि। यष्टि। इतः प्राण्यङ्गात्। कृदिकारादक्तिनः। सर्वतो ऽक्तिन्नर्थादित्येके। चण्ड। अराल। कमल। कृपाण। विकट। विशाल। विशङ्कट। भरुज। ध्वज। चन्द्रभागान्नद्याम्। कल्याण। उदार। पुराण। अहन्। बहुशब्दो गुणवचन एव। तस्य इह पाठ उत्तरार्थः।

लघु-सिद्धान्त-कौमुदी

बह्वादिभ्यश्च १२६३, ४।१।४५

एभ्यो वा ङीष् स्यात्। बह्वी, बहुः। (कृदिकारादक्तिनः)। रात्री, रात्रिः। (सर्वतोऽक्तिन्नर्थादित्येके)। शकटी। शकटिः॥

न्यासः

बह्वादिभ्यश्च। , ४।१।४५

बह्वादिषु "शक्तिः शस्त्रे" इति पठ()ते, तस्यायमर्थः-- शस्त्रेऽभिधेये शक्तिशब्दाद्वा ङीष् भवति-- शक्तिः, शक्ती। शस्त्र इति किम्? शक्तिः,सामर्थ्यम्। अन्ये तु शक्तिशस्त्री इति शब्दद्वयं पठन्ति-- शक्तिः,शक्ती, शस्त्रिः, शस्त्री। "इतः प्राण्यङ्गात्" इति। इकारान्तात् प्राण्यङ्गवाचिनो वा ङीष् भवति-- धमनिः, धमनी। इत इति किम्? समर्था ग्रीवा। प्राण्यहगादिति किम्? श्रेणिः। "कृदिकारादक्तिनः" (इति)। "सर्वतोऽक्तिन्नर्थादित्येके" (इति)। अस्यार्थः "रात्रेश्चाजसौ" ४।१।३१ इत्यत्रैव व्याख्यातः। यदि सर्वतोऽक्तिन्नर्थात् ङीष् भवति, शकट()आदीनां गणेकिमर्थं इकारान्तानां पाठः? तस्यैव प्रपञ्चार्थः। पद्धतिश्बद्सयाक्तिन्नर्थादिति प्रतिषेधे प्राप्ते पाठः। पादस्य हतिः पद्धतिः, "हिमकाषिहतिषु च" ६।३।५३ इति पद्भावः। "चन्द्रभागान्नद्याम्" इति। चन्द्रभागशब्दान्नद्यामभिधेयायां वा ङीष् भवति-- चन्द्रभागी नदी। नद्यामिति किम्? चन्द्रभागा नाम देवता। "अहन्" इति। अयं शब्दः केवलः स्त्रियां न वत्र्तते। तस्मात् समासे तदन्त उदाहार्यः। दीर्घाण्यहानि यस्यां शरदि सा दीर्घाह्नो। ङीप्प्रतिषेधावप्यस्माद्भवतः। "अनोः बहुव्रीह#ए#ः" ४।१।१२ "डाबुभाभ्यामन्यतरस्याम्" ४।१।१३ इत्यपि डाब्भवति; "अन उपधालोपिनोऽन्यतरस्याम्" ४।१।२८ इति वा ङीप् च। तेन धातुरूप्यं भवति। यदि बहुशब्दो गुणवचनः,तत्किमर्थमस्येह ग्रहणम्,यावता पुर्वेणैव सिद्धो ङीष्? इत्यत आह-- "तस्य" इत्यादि॥

बाल-मनोरमा

बह्वादिभ्यश्च ४९६, ४।१।४५

बह्वादिभ्यश्च। गुणवचनत्वादेव सिद्धे बहुग्रहणं व्यर्थमेवेति प्राञ्चः। वस्तुतस्तु अनुपदोदाह्यताकडारसूत्रभाष्यरीत्या सङ्ख्याशब्दानां गुणवचनत्वाऽभावादप्राप्तस्य ङीषो विधानार्तं बहुग्रहणमित्याहुः। बह्वी बहुरिति। वैपुल्यवाची बहुशब्दोऽयम्। त्रित्वादिशमनियतसङ्ख्याविशेषवाचित्वे तु एकवचनानुपपत्तेः। वैपुल्यवाचित्वेऽपि "बहुगणवतुडति सङ्ख्या" इति सङ्ख्याशब्दत्वान्न गुणवचनत्वमिति न वैयथ्र्यमिति भावः। "कृदिकारादक्तिनः" इति बह्वाद्यन्तर्गणसूत्रम्। कृतो यैकारस्तदन्तात्प्रातिपदिकात् ङीष् वा स्यात्, न तु क्तिन्नान्तादित्यर्थः। रात्रिः रात्रीति। "राशदिभ्यां त्रिप्" इति राधातोरौणादि कस्त्रिप्। गुणवचनत्वाऽभावात्, उदन्तत्वाऽभावाच्चाऽप्राप्ते वचनम्।

"सर्वतोऽन्नर्थादित्येके" इत्यपि बह्वाद्यन्तर्गणसूत्रमेव। कृदिकारान्तादृकृदिकारान्तादपि ङीष् वा स्यात्, नतु क्तिन्नर्थकप्रत्यययान्तादित्यर्थः। शकटिः शकटीति। शकटिशब्दस्य अव्युत्पन्नप्रातिपदिकत्वात् कृदन्तत्वाऽभावात् "सर्वत" इति वचनम्। अव्युत्पतिपक्षे रात्रिशब्दोऽप्युदाहरणं बोध्यम्। अजननिरिति। "स्त्रियां क्तिन्नि"त्यधिकारे "आक्रोशे नञ्यनिः" इति नञि उपपदे जनेरनिप्रत्ययः। "अक्तिन" इत्यक्तौ अत्र निषेधो न स्यादतोऽक्तिन्नर्थादित्युक्तिरिति भावः। ननु हनधातोः स्त्रियां कर्मणि क्तिनि "अनुदात्तोपदेशे"त्यादिना नलोपे हतिशब्दः, तस्य क्तिन्नन्तत्वात्कथं पद्धतिशब्दान्ङीषित्यत आह--क्तिन्नन्तत्वादिति। गणे इति। बह्वादिगण इत्यर्थः। ननु पादाभ्यां हतिरिति विग्रहे "कर्तृकरणे कृता बहुल" शब्दस्य ग्रहणात्, भत्वाऽभावाच्च। "पादस्य पदाज्यातिगोपहतेषु" इत्यपि न संभवति, तस्य आज्यादिष्वेव परेषु प्रवृत्तेरित्यत आह--हिमकाषीति। हिमादिषु परेषु पादशब्दस्य पदादेशः स्यादिति तदर्थः।

तत्त्व-बोधिनी

बह्वादिभ्यश्च ४४७, ४।१।४५

बह्वादिभ्यश्च। बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धेऽप्युत्तरार्थं ग्रहणम्,--"नित्यं छन्दसी"त्युत्तरसूत्रेण बहुशब्दादपि छन्दसि नित्यं यथा स्यादिति। वस्तुतस्तु बहुशब्दो, "नित्यं छन्दसी"ति सूत्रं च व्यर्थमेव, सर्वविकल्पानां छन्दसि व्यवस्थितत्वात्। गुणसूत्रामाह--कृदिकारादिति। "सर्वतोऽक्तिन्नार्था" दित्यपि गुणसूत्रमेव। व्यवस्थितविभाषात्वादिह न,--सुगन्धिः। प्रियकतिर्वेश्या। अजननिरिति। "आक्रोशे नञ्यनिः"इति जनेरनिप्रत्ययः। इहाऽन्यान्यपि गणसूत्राणि सन्ति---शक्तिः शस्त्रे। शक्तिः शक्ती। शस्त्रे किम्()। शक्तिः सामथ्र्यम्। शक्तिः शस्त्रीति पाठे तु शब्दद्वयम्। शस्त्रीः शस्त्री। इतः प्राण्यङ्गात्। धमनिः। धमनी। चन्द्रभागान्नद्याम्। चन्द्रभागी। चन्द्रभागा। अहन्शब्दोऽत्र पठ()ते, तत्सामथ्र्यात्तदन्तो बहुव्रीहिरुदाहार्यः, अनुपसर्जनाधिकारबाधश्च। दीर्घाह्वी प्रावृट्। पक्षे ङीम्ङीन्बिषेधाः। बहु पद्धति यष्टि विकट विशाल कल्याण पुराण चण्ड कृपाण अहन्। इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं छन्दसि ४।१।४६

बह्वादिभ्यः छन्दसि विषये नित्यं स्त्रियां ङीष् प्रत्ययो भवति। बह्वीषु हित्वा प्रपिबन्। बह्वी नाम ओषधी भवति।
नित्यग्रहणम् उत्तरार्थम्।

न्यासः

नित्यं छन्दसि। , ४।१।४६

अथ नित्यग्रहणं किमर्थम्, यावता पूर्वेणैव सिद्धे विकल्पे सत्यारम्भसामथ्र्यादेव नित्यं भविष्यति? इत्यत आह--"नित्यग्रहणमुत्तरार्थम्" इति॥

---

सूत्रम्

काशिका-वृत्तिः

भुवश् च ४।१।४७

छन्दसि विषये स्त्रियां भुवो नित्यं ङीष् प्रत्ययो भवति। विभ्वी च। प्रभ्वी च। संभ्वी च। इह कस्मान् न भवति, स्वयम्भूः?

उतः इति तपरकरणम् अनुवर्तते। ह्रस्वादेव इयं पञ्चमी। भुवः इति सौत्रो निर्देशः।

न्यासः

भुवश्च। , ४।१।४७

"प्रभ्वी" इत्यादि। "भुवः संज्ञान्तरयोः" ३।२।१७९ इत्यतः "भुवः" इत्यनुवत्र्तमाने "विप्रंशभ्यो ड्वसंज्ञायाम्" ३।२।१८० इतिप्रत्ययः, तदन्तान्ङीष्। "स्वयम्भूः" इति। भवतेः क्विबन्तस्य रूपम्। ननु च "भुवः" इति भूशब्दाद्दीर्घादियं पञ्चमी, , ततश्च दीर्घादेव प्रत्ययेन भवितव्यम्, न ह्यस्वादित्यत आह-- "ह्यस्वादेवेयं पञ्चमी " इति। तर्हि "भुवः"इति निर्देशो नोपपद्यते, "घेर्ङिति" (७।३।१११) इति गुणे कृते "भोः" इति निर्देशेन भवितव्यम्? इत्यत आह-- "सौत्रो निर्देशः"इति। छन्दसि वर्णव्यत्यय उक्तः। तेन तस्य गुणेऽकृत उवङादेशः कृत इति दर्शयति॥

---

सूत्रम्

काशिका-वृत्तिः

पुंयोगादाख्यायाम् ४।१।४८

पुंसा योगः पुंयोगः। पुंयोगाद् धेतोर् यत् प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतं तस्माद् ङीष् प्रत्ययो भवति। गणकस्य स्त्री गणकी। महामात्री। प्रष्ठी। प्रचरी। पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुंशब्दा एते, तद्योगात् स्त्रियां वर्तन्ते। पुंयोगातिति किम्? देवदत्ता। यज्ञदत्ता। आख्याग्रहणात् किम्? परिसृष्टा। प्रजाता। पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते, न तु पुमांसमाचक्षते। गोपालिकादीनां प्रतिषेधः। गोपालकस्य स्त्री गोपालिका। सूर्याद् देवतायां चाब् वक्तव्यः। सूर्यस्य स्त्री देवता सूर्या। देवतायाम् इति किम्? सुरी।

लघु-सिद्धान्त-कौमुदी

पुंयोगादाख्यायाम् १२६४, ४।१।४८

या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष्। गोपस्य स्त्री गोपी। (पालकान्तान्न) -।

न्यासः

पुंयोगादाख्याम्। , ४।१।४८

"पुंयोगात्" इति। "विभाषा गुणेऽस्त्रियाम्" २।३।२५ इति हेतौ पञ्चमी। योगः = सम्बन्धः। "आख्यायाम्" इति। पञ्चम्यर्थ एषा "व्यत्ययो बहुलम्" ३।१।८५ इति सप्तमी। आख्यायतेऽनया प्रातिपदिककार्थ इति श्रुत्याऽऽख्या। "पुंस आख्यायाम्" इति। पुंसो वाचकभूतमित्यर्थः। तद्धि पुंयोगाद्धेतोः सम्प्रति स्त्रियां वत्र्तते; न पुंसि। अतीत ए काले पुंसो वाचकमासीत्, अतो भूतग्रहणम्। एतदुक्तं भवति-- यत् प्रातिपदिकं प्राक् पुंसो वाचकमभूत्, पश्चात्तु पंयोगाद्धेतोः स्त्रियां वत्र्तते तस्मान् ङीष्भवतीति। कथं पुनर्योगे गुणभावमापन्नस्य पुंस आख्याग्रहणं विशेषणं युज्यते, स्त्रियामित्यनुवृत्तेः स्त्रिया एव? नैतदस्ति; यो हि पुंयोगात् स्त्रियां वत्र्तते सोऽवश्यं स्त्रियमचष्ट इति विसेषणमिदमदनर्थमकमेव स्यात्। पुंयोगस्य तर्हीदं विशेषणम्? न; असम्भवात्। न सम्भवत्येव हि तत् प्रातिपदिकं यत् पुंयोगाद्धेतोः पूर्वं स्त्रियां वत्र्तते, पुंयोगस्य चाख्याभूतं भवति। गणकादयो हि ये शब्दाः पुंयोगात् स्त्रियां वत्र्तन्ते ते सर्वे एव वाचकाः प्रागभूवन्, न पुंयोगस्य। ये तु पुंयोगादयः शब्दाः पुंयोगस्य वाचकाः, ते पुंयोगात् स्त्रियां न वत्र्तन्त एव। न चेह कश्चित् तथाविधोऽन्य प्रकृतः, नापि श्रूयते, यस्याख्याग्रहणेन सम्बन्धः स्यात्। तस्माद्गुणभूतस्यापि पुंस एवानेन सम्बन्धो विज्ञायते। "गणकी" इत्यादि। गणयतीति गणक,ण्वुल्। प्रतिष्ठित इति प्रष्ठः, "आतस्चोपसर्गे" ६।१।१३१ इति कः। "प्रष्ठोऽग्रगामिनि" ८।३।९२ इति निपातनान्मूर्धन्यः। सर्व एते पुंसो वाचकाः। पुंयोगात्तु यदोत्तरकालं स्त्रियां वत्र्तन्ते तदैतेभ्यो ङीष्। "पुंसि

शब्दप्रवृत्तिनिमितस्य सम्भवात्" इति। गणनादिक्रियास्वभावं यद्गणकादिशब्दानां प्रवृत्तिनिमित्तं तस्य पुंसि सम्भवः, न स्त्रियाम्, नापि नपंसके। तस्मात् पुंसि शब्दे एते। पुंसो वाचका एते शब्दा इत्यर्थः। कथं तर्हि स्त्रियां वत्र्तन्ते? इत्याह--"तद्योगात्" इत्यादि। तद्योगः = तस्यायमिति सम्बन्धः, स्वस्वामिभावलक्षणः। तस्मादेते पुंशब्दा अपि स्वभावतः स्त्रियां वत्र्तन्ते। यथैव तद्योगात् स्त्रियां स्नानोद्वत्र्तनपरिषेकादीन् लभते तथा ताच्छब्द्यमपि। "देवदत्ता" इति। अत्र देवदत्तशब्दसंज्ञकेन पुरुषेण योगाद्देवदत्तशब्दः स्त्रियां न वत्र्तते। किं तर्हि? स्वत एव, तस्या हीयं संज्ञा कृता। "परिसृष्टा, प्रजाता" इति। प्रसूतेत्यर्थः। निर्लुठितगर्भेति यावत्। परिसृष्टप्रजातशब्दौ स्त्रियां वत्र्तमानो प्रसवनिमित्तमुपादाय प्रवत्र्तेते। परिसर्गः, प्रजनः, प्रसव इत्येकार्था एते शब्दाः। तस्य च प्रसवस्य पुंयोगो निमित्तम्, तेन विना तदभावात्। तस्मात् पुंयोगाद्धेतोः स्त्रियां वत्र्तत इति। वत्र्तत इति। न तु पुंशब्दाख्य इति ईकारो न भवतीति। "एते शब्दाः" इति। बहुवचनं येऽन्येऽप्येवंजातीयाः शब्दास्तानपेक्ष्य वेदितव्यम्; अन्यथा हि परिसृष्टप्रजातशब्दयोर्द्वित्वदेतौ शब्दाविति वक्तव्यं स्यात्। "गोपालिकादीनां प्रतिषेधो वक्तव्यः" इति। सिद्ध्ये इति वाक्यशेषः। गोपालिकादीनां शब्दानां सिद्धये ङीब्प्रतिषेधः। स तु "वोतो गुणवचनात" ४।१।४४ इत्यतो वेत्यनुवृत्तेस्तस्य व्यवस्थितविभाषात्वमाश्रित्य प्रतिपाद्यः। "सूर्याद्देवतायां चाव्वक्तव्यः"इति। ननु च ङीष एव प्रतिषेधो वक्तव्यः, ङीषि प्रतिषिद्धे टाब्भविष्यति, टापि च सूर्येति सिध्यत्येव? नैतदेवम्; यद्यपि हि रूपं सिद्ध्यति, स्वरतु न सिध्यति, यस्मात् सूर्यशब्दोऽयमाद्युदात्तः। तथा हि "राजसूयसूर्यः" ३।१।११४ इत्यत्र क्यबन्तो निपातितः, ततः क्यपः पित्त्वादनुदात्तत्वम्। धातोस्तु सुवतेः सत्र्तेर्वा धातुस्वरेणान्तोदात्तत्वम्। तत्र टापि सत्यनुदात्तत्वं स्यात्, तु सत्यन्तोदात्तता भवति। पित्करणं तु "ङ्याप्प्रातिपदिकात्" ४।१।१ इत्यत्र सामान्यग्रहणार्थम्। "सूरी"इति। सूर्यस्य स्त्री मानुषी सूरी, ङीषेव भवति, "सूर्यतिष्यागस्त्यमस्त्यानाम्" ६।४।१४९ इति यलोपः॥

बाल-मनोरमा

पुंयोगादाख्यायाम् ४९७, ४।१।४८

पुंयोगात्। पुंयोगादिति हेतौ पञ्चमी। आख्यायामिति पञ्चम्याः सप्तम्यादेशः, "सुपां स्थाने सुपो भवन्तीति वक्तव्य"मित्युक्तेः। आख्येत्यनेन वाचकः शब्दो विवक्षितः, कस्य वाचक इत्यपेक्षायां पुंयोगादित्युपस्थितत्वात्पुंस इति लभ्यते। तथाच आख्यायामित्यनेन पुंसि प्रसिद्धाच्छब्दादिति लभ्यते। पुंयोगादिति स्त्रियामित्यत्रान्वेति। तथाच पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानादिति लभ्यते। तदा--या पुमाख्येत्यादिना। ङीषिति। "अन्यतो ङीष्" इत्यतस्त दनुवृत्तेरिति भावः। "वोतो गुणवचना"दिति पूर्वसूत्रे तु "गुणवचनान्ङीबाद्युदात्तार्थः" इति वार्तिकान्ङीप् लब्ध इति न तत्राऽस्यानुवृत्तिः। गोपस्य स्त्रीति। गाः पातीति गोपः, "आतोऽनुपसर्गे कः"। तज्जायायां तु गोरक्षणाऽभावेऽपि तद्भार्यात्वात्तद्व्यपदेशः। ततश्च पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानत्वान्ङीषि "यस्येति चे"त्यकारलोप इति भावः। हरेः स्त्री, शम्भोः स्त्रीत्यादौ न ङीष्, स्त्रीप्रत्ययविधिप्रकरणेऽत इत्यनुवृत्तेः। या तु स्वयमेव गाः पाति, नतु गोपस्य स्त्री, सा तु गोपा। तत्र गोपशब्दस्य स्वत एव स्त्रियां वृत्त्या पुंयोगादवृत्तेः। नच गोपस्य माता ()आश्रूः मातुलानी वा गौपीति स्यादिति वाच्यम्, "अकुर्वती पापं भर्तृकृतान् वधबन्धादीन् यथा लभते एवं तच्छब्दमपी"ति बाष्यस्वारस्येन जायापत्यात्मकस्यैव पुंयोगस्य विवक्षितत्वात्। दुहितरि कैकयी देवकीत्यादयस्तु गौरादौ पाठ()आ इति शब्देन्दुशेखरे स्थितम्। आख्याग्रहणं किम्?। प्रसूता। अयं हि शब्दो जातप्रसवामाहा। स च प्रसवः पुंयोगनिमित्तकः, तन्निमित्ता चास्य स्त्रियां वृत्तिः, न त्वयं पुंसि प्रसिद्धः, अतो न ङीष्। अत्र "गोपालकादीनां प्रतिषेधः" इति वार्तिकम्। अत्र आदिपदेन अ()आपालिकेत्यादयः पालकान्ता एव गृह्रन्ते, भाष्ये तेषामेवोदाहरणात्। तदाह--पालकान्तान्नेति। "पुंयोगलक्षण ङी"षिति शेषः। गोपालिकेति। गोपालकस्य स्त्रीत्यर्थः। ननु पालयतीति पालकः, कर्तरि ण्वुल्, "युवोरनाकौ" इत्यकादेशः। "णेरनिटि" इति णिलोपः। गवां पालक इति विग्रहे षष्ठीसमासे सुपो लुकि गोपालकशब्दः। तत्र किं शेषे षष्ठी, उत

"कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी?। न तावदाद्यः, प्रत्ययलक्षणमाश्रित्य टापः समासावयवात् पालकशब्दादुत्पन्नसुपः परत्वेन असुप इति निषेधात् "प्रत्ययस्था"दिति इत्त्वानुपपत्तेः। नचाऽस्तु कर्मणि षष्ठीत#इ द्वितीयः पक्षः, "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्वपत्तेः" इति वचनेन सुबुत्पत्तेः प्रागेव पालकशब्देन प्रातिपदिकेन गवामिति षष्ठ्याः समासे सति समासदुत्पन्नस्य टापः सुपः परत्वाऽभावेन इत्त्वस्य निर्बाधत्वादिति वाच्यं, "तृजकाभ्यां कर्तरी"ति कारकषष्ठ्याः समासनिषेधादिति चेत्, मैवम्--गाः पालयतीति गोपालः। कर्मण्यण्। उपपदसमासः। गोपाल एव गोपालकः, स्वार्थिकः कः। तद्धितावयवत्त्वात्सुब्लुक्। गोपालकस्य स्त्री गोपालिकेति व्युत्पत्त्याश्रयणात्। नह्यत्र टाप् सुपः परः, केन व्यवधानात्। अस्तु वा शेषषष्ठ()आ समासः, एवमपि न टाप् सुपः परः, शेषत्वविवक्षायामपि वस्तुतः कारकतया सुबुत्पत्तेः प्रागेव शेषषष्ठ()आ समासप्रवृत्तेः। अत एव प्रकृतसूत्रे "उपपदमतिङि"ति सूत्रे च भाष्ये कुम्भकारपदे सुबुत्पत्तेः प्रागेव कुम्भस्येति शेषषष्ठ()आ समास उपन्यस्तः सङ्गच्छत इति शब्देन्दुशेखरे प्रपञ्चितम्।

सूर्याद्देवतायामिति। देवताभूतायां ()स्त्र पुंयोगाद्वर्त्तमानात्सूर्यशब्दाच्चाप् वक्तव्य इत्यर्थः। "गुयोगा"दिति ङीषोऽपवादः। चपावितौ। सूर्येति। चापि सवर्णदीर्घः। देवतायां किमिति। सूर्यस्त्रियां देवतात्वाऽव्यभिचारात् प्रश्नः। सूरी कुन्तीति। ङीषि "सूर्यतिष्ये"ति यकारलोपः, "यस्येति चे"त्यकारलोपः। मानुषीयमिति। इयं कुन्ती मानुषी, न तु देवतेत्यर्थः। एतच्च महाभारतादौ स्पष्टम्। नच "सूर्याद्देवतायां ने"त्येवोच्यतां, ङीषि निषिद्धे टापैव सूर्येति सिद्धेरिति वाच्यं, टापि हि सति पित्त्वादनुदात्तत्वम् "अनुदात्तौ सुप्पित्तौ" इत्युक्तेः। चापि तु "चितः" इत्यन्तोदात्तत्वमिति भेदः।

तत्त्व-बोधिनी

पुंयोगादाख्यायाम् ४४८, ४।१।४८

पुंयोगादाख्यायाम्। इह"पु"मिति लुप्तषष्ठीकं पृथक् पदं, तच्चावर्तते। "पुंयोगा"दिति हेतौ पञ्चमी। "आख्याया"मिति तु पञ्चम्यर्थे सप्तमीत्याशयेनाह----या पुमाख्येत्यादि। "पुमाख्या"---पुंवाचकः शब्दः। "पुंयोगात् स्त्रियां वर्तते" इत्यनेन गौणी वृत्तिरुक्ता। यदा तु मुख्यार्थात् "तस्येदम्ित्यण्, तदा "गौपी"त्येव भवति। योगः--संबन्धः। स चेह "दन्पतिभाव एवेति नाग्रहः, किं तु जन्यजनकभावोऽपि गृह्यते, सङ्कोचे मानाऽभावात्। तेन "कौसल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभू"दिति भट्टिप्रयोगः सङ्गच्छते। केकयस्य दुहिता केकयी। "जनपशब्दात्क्षत्त्रियाद"ञित्यपत्यप्रत्यये तु "कैकेयीतो भरत"इति स्यात्। न चेह "अतश्चे"ति तद्राजाकारस्य लुक्शङ्क्यः, "न प्राच्यभर्गादी"ति प्रतिषेधात्। तथा च कालिदासः--"कैकेयि। कामाः फलितास्तवे"ति। एतेन "देवकी"व्याख्याता। पुंयोगात् किम्(), देवदत्ता। अयं हि संज्ञाशब्दः स्वभावात्स्त्रियमाह, न तु पुंवाचकशब्दयोगात्। आख्यायां किम्(), प्रसूता। अयं हि जातपर्सवामाह। स च पर्सवो गर्भधारणद्वारा पुंयोगनिमित्तक इत्यस्तीह पुंयोगः, किं तु नायं पुंसो वाचक इति न ङीष्।

सूर्याद्देवतायां चाब्वाच्वः। सूर्याद्देवतायामिति। ङीषोऽपवादः। सूरीति। "सूर्यतिष्ये"ति यलोपः।

---

सूत्रम्

काशिका-वृत्तिः

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाऽचार्याणामानुक् ४।१।४९

इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियाम् ङीष् प्रत्ययो भवति, आनुक् च आगमः। येषाम् अत्र पुंयोग एव इष्यते, तेषाम्

आनुगागममात्रं विधीयते। रत्ययस् तु पूर्वेण एव सिद्धः। अन्येषां तूभयं विधीयते। इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। हिमारण्ययोर् महत्त्वे। महद्धिमं हिमानी। महदरण्यम् अरण्यानी। यवाद् दोषे। दुष्टो यवः यवानी। यवनाल्लिप्याम्। यवनानी लिपिः। उपाध्यायमातुलाभ्यां वा। उपाध्यायानी, उपाध्यायी। मतुलानी, मतुली। आचार्यादणत्वं च। आचार्यानी, आचार्या। अर्यक्षत्रियाभ्यां वा। अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया। विना पुंयोगेन स्वार्थ एव अयं विधिः। पुंयोगे तु ङीषा एव भवितव्यम्। अर्यी। क्षत्रियी। मुद्गलाच्छन्दसि लिच्च। रथीरभून्मुद्गलानी गविष्टौ।

लघु-सिद्धान्त-कौमुदी

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलचार्याणामानुक् १२६६, ४।१।४९

एषामानुगागमः स्यात् ङीष् च। इन्द्रस्य स्त्री - इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। (हिमारण्ययोर्महत्त्वे)। महद्धिमं हिमानी। महदरण्यमरण्यानी। (यवाद्दोषे)। दुष्टो यवो यवानी। (यवनाल्लिप्याम्)। यवनानां लिपिर्यवनानी। (मातुलोपाध्याययोरानुग्वा)। मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी। (आचार्यादणत्वं च)। आचार्यस्य स्त्री आचार्यानी। (अर्यक्षत्रियाभ्यां वा स्वार्थे), अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया॥

न्यासः

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयनमातुलाचार्याणामानुक्। , ४।१।४९

"येषाम्" इति। इन्द्राणीनाम्। "अन्येषां तु" इति। हिमादीनाम्। अथ किमर्थमानुक् क्रियते, अनुगेव नोच्येत, तेन सवर्णदीर्घत्वेन सिध्यति? न सिध्यति; "अतो गुणे" ६।१।९४ इति पररूपत्वं हि प्राप्नोति। अकारोच्चारणसामर्थ्यान्न भविष्यति, पररूपे हि नुगेव वक्तव्यः स्यात्। एवं तह्र्रकारोच्चारणसमर्थ्याद्भविष्यति। ल्वरसन्धिरेव न भवतीत्येवमपि विज्ञायते। तस्मान्मैवं विज्ञायीत्यानुगेव वक्तव्यः। अथ वा-- इन्द्रमाचष्ट इति "तत्करोति तदाचष्टे" (वा।२००,२०१) इति णिचि "णाविष्टवत् प्रातिपदिकस्य" (वा।८१३) इति टिलोपः, इन्द्रयतेः क्विप्, णिलोपः, इन्द्रः स्त्रीन्द्राणीत्यत्र दीर्घघस्याकारस्य श्रवणं यथा स्यादित्येवमर्थमानुको विधानम्। आनुकि हि सति दीर्घो न श्रूयेत। ननु च नैवात्र ङीषा भवितव्यम्, अत इत्यधिकारात्? दीर्घोच्चारणसामर्थ्याद्भविष्यति। "हिमारण्ययोर्महत्त्वे" इति। महत्त्वेन युक्ता हिमादयः स्त्रीलिङ्गेनाभिसम्बध्य्नते यदा, तदा स्त्रीत्वविवक्षायामनयोः प्रत्ययागमयोर्विधानमित्येतदनेनाख्यायते, न तु स्त्रीप्रत्ययस्यायमपवाद उच्यते। स्त्रीत्व एव हि प्रत्ययो भवति। "यथाद्दोषे"इति। यवाद्दोषे गम्यमाने स्त्रियां ङीष् भवति-- दुष्टो यवो यवानी। "यवनाल्लिप्याम्" इति। "यवनानां लिपिः" इति। "तस्येदम्" ४।३।१२० इत्यप्प्रसङ्गे ङीष् विधीयते, स तु तदर्थस्य ङीषैव द्योतितत्वान्न भवति। "आचार्यदणत्वञ्च" इति। नेदमपूर्वं वक्तव्यम्, क्षुभ्नादिष्वस्य पाठात्। "स्वार्थ एवायं विधिः" इति। एवकारेण पुंयोगो व्यवच्छिद्यते। यदि हि पुंयोगे विधिरयं स्यात् शूद्राऽपि क्षत्रियस्य भार्या क्षत्रियाणीति स्यात्। तस्मात् स्वार्थे एवायं विधिः-- क्षत्रियैव क्षत्रियाणीति। "पुंयोगे तु ङीषैव भवितव्यम्" इति। पूर्वसूत्रेण। "लिच्च"इति। कस्य तल्लित्वम्? आनुकः। तथा हि-- मुद्गलानीशब्दस् द्वितीय उदात्त आम्याये पठ()ते। ङीषस्तु लित्वे तृतीय उदात्तः स्यात्॥

बाल-मनोरमा

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनामातुलाचार्याणामानुक् ४९८, ४।१।४९

इन्द्रवरूण। आनुगागम इति। कित्वादागमलिङ्गादिति भावः। ङीष् चेति। "अन्यतो ङीष" इत्यतस्तदनुवृत्तेरिति भावः। पुंयोग एवेष्यते इति। पुंयोगादित्यनुवृत्तेः, तेषां स्त्रीत्वे पुंयोगं विनाऽप्रवृत्तेश्चेति भावः। नन्वेवं पुंयोगादित्येव सिद्धे ङीष्विधिव्र्यर्थ इत्यत आह--तत्रेति। तत्र इन्द्रादिषु षट्सुमातुलाचार्ययोश्च पुंयोगादित्येव ङीषि सिद्धे तत्संनियोगेन आनुगागममात्रं विधीयत इत्यर्थः। इतरेषामिति। हामारण्ययवयवनानां तु आनुक् ङीष् चेत्युभयं विधीयते, तत्र

पुंयोगस्याऽसंभवादिति भावः। इन्द्राणीति। आनुकि ककार इत्, उकार उच्चारणार्थः, कित्त्वादन्तावयवः, सवर्णदीर्घः, णत्वमिति भावः। वरुणानी, भवानी, शर्वाणी, रुद्राणी, मृडानीत्युदाहरणानि सुगमत्वादुपेक्षितानि। दीर्घोच्चारणं विना अनुग्विधौ तु पररूपापत्तिः, अकारोच्चारणस्य अल्लोपनिवृत्त्य चरितार्थत्वात्। नुग्विधौ तु अल्लोपापत्तिरित्यन्यत्र विस्तरः।

हिमारण्योर्महत्त्वे--इति वार्तिकम्। महत्त्वविशिष्टे हिमे अरण्ये च वर्तमानयोरानुङ्ङीषावित्यर्थः। महद्धिमं हिमानीति। महत्त्वयोगे स्त्रीत्वमत एव ज्ञेयम्। अरण्यानीति। महदरण्यमित्यर्थः।

यवाद्दोषे--इति वार्तिकम्। "आनुङ्ङीषा"विति शेषः। दुष्टयवे वृत्तौ स्त्रीत्वमत एव ज्ञेयम्।

यवनाल्लिप्याम् --इत्यपि वार्तिकम्। विपिरक्षरविन्यासः। तत्र लक्षमया वृत्तौ आनुङ्ङीषावित्यर्थः।

मातुलोपाध्याययोरानुग्वेति। इदमपि वार्तिकम्। अत्र पुंयोगादिति सम्बध्यते, हिमादिष्विवाऽत्र असम्भवाऽभावात्। अत्र आनुगेव तु विकल्प्यते, आनुगभावेऽपि पक्षे ङीष् भवत्येव। मातुलान्नित्यं प्राप्ते उपाध्यायादप्राप्ते विभाषेयम्। मातुलानी मातुलीति। मातुलस्य स्त्रीत्यर्थः। उपाध्यायानी उपाध्यायीति। उपाध्यायस्य स्त्रीत्यर्थः।

या तु स्वयमेवेति। इदं तु वार्तिकं तृतीयस्य तृतीयस्य तृतीये "इङश्चे"ति सूत्रे पठितम्। या स्वयमेवाध्यापयति न तूपाध्यायस्य स्त्री, तत्र पुंयोगाऽभावेऽपि केवलङीष्विकल्पो वाच्य इत्यर्थः। युगान्तरे ब्राह्मवादिन्यः स्त्रियः सन्ति तद्विषयमिदम्। "पुरा युगेषु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्री वचनं तथा।" इति स्मरणात्।

आचार्यादणत्वं च --इत्यपि वार्तिकम्। चकार आनुङ्ङीषोः समुच्चयार्थः। आचार्यानीति। आचार्यस्य स्त्रीत्यर्थः। "अट्कुप्वा"ङिति णत्वं न भवति। "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते।" "एकदेशमुपाध्यायः" इति स्मृतिः। पुंयोग इत्येवेति। पुंयोगग्रहणमनुवर्तते एवेत्यर्थः। तत्प्रयोजनमाह--आचार्येति। अत्र पुंयोगाऽभावं विशदयति--स्वयं व्याख्यात्रीति। धर्मोपदेष्ट्रीत्यर्थः। "यस्माद्धर्मानाचिनोति स आचार्यः इति स्मरणादिति भावः।

अर्यक्षत्रियाभ्यां वा--इति वार्तिकम्। "आनुङ्ङीषा"विति शेषः। "स्वार्थे"ति व्याख्यानलभ्यं, तेन पुंयोगनिरासः। अत एव भाष्ये "आर्याणी अर्या" इत्येवोक्तम्। पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवदर्यीति ङीषमेवोदाहरेत्। अर्यशब्दं व्याचष्टे--स्वामिनी वैश्या वेत्यर्थ इति। "अर्यः स्वामिवैश्ययोः" इति निपातनादिति भावः। क्षत्रियाणी क्षत्रियेति। क्षत्रियात् क्षत्रियायां भार्यायामुत्पन्नेत्यर्थः। "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः" इत्युपक्रम्य "विन्नास्वेष विधिः स्मृतः" इति स्मरणात्। विन्नास्वित्यस्य ऊढास्वित्यर्थः। पुंयोगे तु अर्यी क्षत्रियीति। अर्यस्य स्त्री अर्यी, क्षत्रियस्य स्त्री क्षत्रियी, वैश्या शूद्रा वेत्यर्थः। कथमिति। "इन्द्रवरुण"त्यादिसूत्रे ब्राह्नन्शब्दस्याऽग्रहणाद्ब्राह्मणः स्त्रीत्यर्थे ब्राह्मणीत्यानुङ्ङीषौ कथमिति प्रश्नः। उत्तरमाह--ब्राह्मआणमिति। आनयतीत्यस्य व्याख्यानं-जीव्यतीति। "अन प्राणने"। प्राणनं जीवनम्। अस्माद्धातोर्हेतुमण्णिचि उपधावृद्धौ तिपि शपि गुणाऽयादेशयोरानयतीति रूपम्। भर्तृजीवनस्य जायासौमङ्गल्यायत्तत्वात्। ततस्च ब्राह्मआणमानयतीति विग्रहे "आनि" इति ण्यन्तात् "कर्मण्यणि"त्यपि "णेरनिटी"ति णिलोपे आनशब्देन ब्राह्मआणमित्यस्य उपपदसमासे सुब्लुकि नलोपे सवर्णदीर्घे ब्राह्मआनशब्दात् "टिड्ढाणञि"ति ङीपि "यस्येति चे"त्यकारलोपे "पूर्वपदात्संज्ञाया"मिति णत्वे ब्राह्मणीति रूपमिति भावः। "एकाजुत्तरपदे" इति तु न, अणि सति प्रातिपदिकस्य द्व्यच्कत्वाल्लुप्तेऽप्यणि लोपस्य स्थानिवत्त्वात्। "पूर्वत्रासिद्धीये न स्थानिवत्" इति तु न, "तस्य दोषः" इत्युक्तेः।

तत्त्व-बोधिनी

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४४९, ४।१।४९

यवाद्दोषे। दुष्टो यवो यवानीति। जात्यन्तरमेवानेनाभिधीयते। अयमेव चाऽस्य दोषो यस्माद्धि यवत्वजातेरभावेऽपि तदाकारानुकृतिः।

यवनाल्लिप्याम्। वा ङीष्वाच्य इति। इदं च "इङश्चे"ति घञ्विधायकसूत्रस्थं वार्तिकम्। वक्ष्यति च तत्र---"अपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च बा ङी"षिति। उपाध्यायी--उपाध्यायेति। उपेत्य अस्या अधीयत इति विग्रहः। स्वार्थैति। यदि तु पुंयोगे एवायं विधिः स्याच्छूद्रापि क्षत्त्रियस्य भार्या क्षत्त्रियाणी स्यात्। ब्राआह्णभार्या च क्षत्त्रिया क्षत्त्रियाणी स्यादिति भावः।

अर्यक्षत्त्रियाभ्यां वा स्वार्थे। वैश्या वेत्यर्थं इति। "अर्यः स्वामिवैश्ययो"रित्यर्थद्वये निपातनादिति भावः। अत्राऽमरस्य सङ्ग्रहः---"अर्याणी स्वयमर्या स्यात्क्षत्त्रिया क्षत्त्रियाण्यपि। उपाध्यायाऽप्युपाध्यायी स्यादाचार्यापि च स्वतः। आचार्यानी सु पुंयोदे स्यादर्यी क्षत्त्रियी तथा। उपाध्यायाऽप्युपाध्यायी---"इति। कथमिति। सूत्रे ब्राह्आन्शब्दस्याऽग्रहणादानुगनुपपन्न एवेति प्रश्नः। उत्तरं तु---ब्राह्आणमानयतीत्यादि। ण्यन्तात् "अन प्राणने"इत्यस्मात्कर्मण्यणि "णेरनिटी"ति णिलोपे "टिड्ढाण"ञिति ङीपि "पूर्वपदात्संज्ञाया"मिति णत्वे च "ब्राह्आणी"ति रूपसिद्धेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

क्रीतात् करणपूर्वात् ४।१।५०

करणं पूर्वम् अस्मिन्निति करणपूर्वं प्रतिपदिकम्। क्रीतशब्दान्तात् प्रातिपदिकात् करणपूर्वात् स्त्रियां ङीप् प्रत्ययो भवति। वस्त्रेण क्रियते सा वस्त्रक्रीती। वसनक्रीती। करणपूर्वातिति किम्? सुक्रीता। दुष्क्रीता। इह कस्मान् न भवति, सा ही तस्य धनक्रीती प्राणेभ्यो ऽपि गरीयसी इति? टाबन्तेन समसः। अतः इति चातुवर्तते। गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति बहुलं तदुच्यते, कर्तृकरणे कृता बहुलम् २।१।३१ इति।

लघु-सिद्धान्त-कौमुदी

क्रीतात्करणपूर्वात् १२६७, ४।१।५०

क्रीतान्तादुदन्तात् करणादेः स्त्रियां ङीष्स्यात्। वस्त्रक्रीती। क्वचिन्न। धनक्रीता॥

न्यासः

क्रीतात्करणपूर्वात्। , ४।१।५०

करणं पूर्वं यस्मिन्नित्यादिना करणपूर्वग्रहणं क्रीतग्रहणञ्च उभयमप्येतत्प्रातिपदिकस्य विशेषणमिति दर्शयति। पूर्वशब्दोऽयमवयववचनः। करणमवयवो यस्मिन्नित्यर्थः। अथ क्रीतशब्दस्यैव करणपूर्वग्रहणं विशेषणं कस्मान्न विज्ञायते? अशक्यत्वात्। क्रीतशब्दो ह्यवयववाचिनं वा पूर्वशब्दं गृहीत्वा विशेष्येत-- करणं पूर्वस्मिन्निति? व्यवस्थाशब्दं वा-- करणं पूर्वमस्मादिति? तत्र प्रथमः पक्षो न सम्भवति; न ह्यत्र क्रीतशब्दस्य करणवाचिशब्दान्तरमवयव उपपद्यते, द्वितीयस्तु सम्भवति, किन्तु वाक्येऽपि स्यात्-- अ()ओन क्रीतेति, अस्ति ह्यत्र क्रीतशब्दात् करणं पूर्वम्। प्रातिपदिके तु विशेष्यमाणे न भवत्येष दोषः। न ह्()ओन क्रीतेत्येतत् करणावयवं क्रीतशब्दान्तं प्रातिपदिकम्। किं तर्हि? वाक्यम्।

तस्मात् प्रकृतं प्रातिपदिकं सामान्यमेवावयववाचिना पूर्वशब्देन विशेष्यते। क्रीतशब्देनापि तदेव करणपूर्वं प्रातिपदिकम्। तेन तस्मिन् विशेष्यमाणे सामर्थ्यात् तदन्तविधिः प्रसज्येतेत्याह-- "क्रीतशब्दात् प्रातिपदिकात्" इति। "वस्त्रक्रीती, वसनक्रीती" इति। अत्र "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः" (व्या।प।वृ।१३८) इति वस्त्रवसनयोः करणयोः क्रीतशब्देन "कर्त्तृकरणे कृता बहुलम्" २।१।३१ इति प्रागेव सुबुत्पत्तेः समासः। "सुक्रीता, दुष्क्रीता" इति। गत्युपपदत्वात् प्रागेव सुबुत्पत्तेः "कुगतिप्रादयः र" २।२।१८ इति समासः। दुष्क्रीतेत्यत्र "इदुदुपधस्य चाप्रत्यय" ८।३।४१ इति षत्वम्। "टाबन्तेन समासः" इति। सुबन्तयोरेवेति वेदितव्यम्। टापि विहिते कृदन्तताया विहितत्वात्। अत्र किं टाप् क्रियताम्? उत विभक्तिरिति? अन्तरङ्गत्वाट्टाप्। पश्चाद्बहिरङ्गा विभक्तिरिति विभक्त्यन्तयोः समासः। अन्तरङ्गत्वं बहिरङ्गत्वं तु टाब्विभक्त्योः "ङ्याप्प्रातिपदिकात्" ४।१।१ इत्यत्र प्रतिपादितम्। कृते तर्हि टापि ङीष् कस्मान्न भवतीत्याह-- "अत इति च" इत्यादि। कथं पुनः टाबन्तेन समासः सिध्यति, यावता "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" (व्या।प।वृ।१३८) इति प्रागेव कृदन्ततायां समासेन भवितव्यमित्यत आह-- "गतिकारकोपपदानाम्" इत्यादि। कथं पुनर्बहुलं तदुच्यते? इत्याह-- "कर्त्तृकरणे" इत्यादि। "कर्त्तृकरणे कृता बहुलम्" २।१।३१ इत्यनेन हि गतिकारकोपपदानां कृद्भिः समासो विधीयते। स च बहुलग्रहणात् क्वचित् कृदन्तावस्थायां प्रागेव सुबुत्पत्तेः, क्वचिदन्यथा। तेन "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः (व्या।प।वृ।१३८) इति बहुलं तदाचार्यैरुच्यते। ततश्च टाबन्तेनापि क्वचित्समासो लभ्यत इत्यभिप्रायः॥

---

सूत्रम्

काशिका-वृत्तिः

क्तादल्पाऽख्यायाम् ४।१।५१

करणपूर्वातित्येव। करणपूर्वात् प्रातिपदिकात् क्तान्तादल्पाख्यायां ङीष् प्रत्ययो भव्ति। अल्पाख्यायाम् इति समुदायोपाधिः। अभ्रविलिप्ती ख्यौः। सूपविलिप्ती पात्री। अल्पसूपा इत्यर्थः। अल्पाख्यायाम् इति किम्? चन्दनानुलिप्ता ब्राह्मणी।

न्यासः

क्तादल्पाख्यायाम्। , ४।१।५१

"अभ्रविलिप्ती" इति। "लिप उपदेहे" (धा।पा।१४३३), अस्मात् क्तः। अल्पैरभ्रैर्विलिप्तेत्यस्यामर्थविवक्षायां पूर्ववत्प्राक्सुबुत्पत्तेः समासः। अल्पशब्दस्तु गतार्थत्वान्न प्रयुज्यते। "चन्दनानुलिप्ता" इति। बहुचन्दनानुलिप्तेत्यर्थः॥

बाल-मनोरमा

क्तादल्पाख्यायाम् ५००, ४।१।५१

क्तादल्पाख्यायां। करणादेरिति। करणपूर्वादित्यनुवृत्तेरिति भावः। क्तान्तादिति। क्तान्तान्तादित्यर्थः, प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य विशेषणात्। अदन्तादिति। "अत" इत्यनुवृत्तेरिति भावः। अल्पत्वे द्योत्ये इति। "अल्पाख्याया"मिति समुदायोपाधिः। अल्पत्वं करणगतं क्रियागतं वा। अभ्रलिप्ती द्यौरिति। अभ्रैरल्पैराच्छन्नेत्यर्थः। अभ्रैरीषदाच्छन्नेति वा।

तत्त्व-बोधिनी

क्तादल्पाख्यायाम् ४५१, ४।१।५१

क्तादल्पाख्यायाम्। अत्र व्याचख्युः--"अल्पाख्याय"मिति समुदायोपाधिः। अल्पैरभ्रैर्लिप्ता अभ्रालिप्ती। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण"मिति समुदायस्यापि क्तान्तत्वान्ङीष्। यद्यपि पूर्वपदार्थस्य अभ्राणमेवाल्पत्वं गम्यते तथापि तदल्पत्वे सति तद्विलेपनस्याप्यल्पत्वमवश्यं भावीति समुदायोपाधित्वमल्पत्वस्य सङ्गच्छत इति।

---

सूत्रम्

काशिका-वृत्तिः

बहुव्रीहेश् च अन्तोदत्तात् ४।१।५२

क्तातित्येव। बहुव्रीहिर् यो ऽन्तोदात्तः, तस्मात् स्त्रियां ङीष् प्रत्ययो भवति। स्वाङ्गपूर्वपदो बहुव्रीहिरिह उदाहरणम्। अस्वाङ्गपूर्वपदाद् विकल्पं वक्ष्यति। शङ्ख्यभिन्नी। ऊरुभिन्नी। गललोत्कृत्ती। केशलूनी। बहुव्रीहेः इति किम्? पादपतिता। अन्तोदात्ताज् जातप्रतिषेधः। दन्तजाता। स्तनजाता। पाणिगृहीत्यादीनाम् अर्थविशेषे। पाणिगृहीती भार्या। यस्य अस्तु कथञ्चित् पाणिर् गृह्यते पाणिगृहीता सा भवति। अबहुनञ्सुइआलसुखादिपूर्वादिति वक्तव्यम्। बहुकृता। नङ् अकृता। सु सुकृता। काल मासजाता। संवत्सरजाता। सुखादि सुखजाता। दुःखजाता। जातिकालसुखाऽदिभ्यो ऽनाच्छादनात् क्तो ऽकृतमित। प्रतिपन्नाः ६।२।१६९ इत्येवम् आदिना भौव्रीहेरन्तोदात्तत्वम्।

न्यासः

बहुव्रीहेश्चान्तोदात्तात्। , ४।१।५२

"शङ्खभिन्नी" इति। "रदाभ्याम्" ८।२।४२ इति नत्वम्। निष्ठान्तस्य "निष्ठा" २।२।३६ इति पूर्वनिपाते प्राप्ते "जातिकालसुखादिभ्यः परवचनम्" (वा।११६) इति स न भवति। शङ्खादिशब्दा हि जातिवचनाः। अत एव हि "जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" ६।२।१६९ इत्यन्तोदात्तत्वं भवति। "गलकोत्कृती" इति। "कृती छेदने" (धा।पा।१४३५) इत्यस्मात् क्तः। "केशलूनी" इति। केशान् लुनातीति। "ल्वादिभ्यः" ८।२।४४ इति नत्वं चोदयति। "पादपतिता" इति। "कर्तृकरणे कृता बहुलम्" २।१।३१ इति तत्पुरुषसमासेऽन्तोदात्तत्वम्। "अन्तोदात्ताज्जातप्रतिषेधः" इति। अन्तोदात्ताद्बहुव्रीहेर्ङीषो विधाने जातशब्दान्तात् प्रतिषेधः, स चान्तग्रहणादेव लभ्यत इति न वक्तव्यम्। इहान्तग्रहणं न कत्र्तव्यमेव, विनाऽपि तेन यथा "वर्णाअदनुदात्तात्" ४।१।३९ इत्यत्रानुदात्तान्तादिति विज्ञायते, तथेहाप्यन्तोदात्तन्तादिति विज्ञास्यते? तदेवमर्थं क्रियते--- अन्तोदात्त एव यो नित्यं बहुव्रीहिस्ततो यथा स्यात्, विकल्पेन योऽन्तोदात्तस्ततो मा भूदिति। इह च दन्ताजाता, स्तनजातेत्यत्र "वा जाते" ६।२।१७० इति विकल्पेनान्तोत्तत्वम्, अतोऽयं विधिर्न भविष्यति। अथ वा-- उत्तरसूत्रे वाग्रहणमुभयोरपि योगयोः शेषः, व्यवस्थितविभाषा च, तेन जातशब्दान्तान्न भविष्यति। अ()स्मस्तु व्याख्यानेऽन्तग्रहणं विस्पष्टार्थमेवेति वेदितव्यम्। "पाणिगृहीत्यादीनामर्थविशेषे"इति। "सिद्धये" इति शेषः। पाणिगृहीतीत्यादीनां सिद्ध्यर्थं विशेष एव ङीब्भवति, न सर्वत्र। एतदपि व्यवस्थितविभाषया लभ्यते। विशेषस्तु पाणिग्रहणस्य वेदितव्यः। आग्निसाक्षिपूर्वकं भार्यार्थं यस्या पाणिग्रहणं क्रियते सा पाणिगृहीतीति भवति। "यथाकथञ्चित्" इति। यथोक्तात् प्रकारादन्येन केनापि प्रकारेणेत्यर्थः। "अबहुनञ्" इत्यादि। बह्वादिपूर्वान्ङीष् न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु तस्यैव वाग्रहणस्य व्यवस्थितविभाषात्वमाश्रित्य कत्र्तव्यम्। "जातिकालसुखादि" इत्यादि। "बहुकृते" इत्यत्र "बहोर्नञ्वदुत्तरपदभूम्नि" ६।२।१७४ इत्यन्तोदात्तत्वम्। "अकृता, सकृता" इत्यत्र "नञ्सुभ्याम्" इति। "मासजातः" इत्यादिषु "जातिकालसुखादिभ्योऽनाच्छादनात् क्तः" ६।२।१६९ इति॥

बाल-मनोरमा

बहुव्रीहेश्चान्तोदात्तात् ५०१, ४।१।५२

बहुव्रीहेश्च। क्तादिति अत इति चानुवर्तते। तदाह--बहुव्रीहेरिति। क्तान्तादिति। क्तान्तान्तादित्यर्थः। तेनेति। जातिपूर्वादिति विशेषणेन बह्वादिपूर्वान्न ङीषित्यर्थः। "सुखादिभ्यः कर्तृवेदनाया"मित्यत्र सुखादिगणः पठितः। जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" इति, "नञ्सुभ्या"मिति "बहोर्नञ्वदुत्तरपदभूम्नी"ति च क्तान्तबहुव्रीहावन्तोदात्तविधायकानि। अत्र जातिपूर्वादित्युक्तेर्बह्वादिपूर्वस्यान्तोदात्तत्वेऽप्यर्थात् पर्युदास इति भावः।

ऊरुभिन्नीति। ऊरू भिन्नौ असंयुक्तौ यस्या इति विग्रहः। "निष्ठा" इति भिन्नशब्दस्य पूर्वनिपातस्तु न भवति, "जातिकालसुखादिभ्यः परा निष्ठा वाच्या" इति वार्तिकात्। "जातिकालसुखादिभ्यः" इत्यादिसूत्रेणान्तोदात्तमिदम्। जातिलक्षणं तु "जातेरस्त्रीविषया"दित्यत्र वक्ष्यते। बहुकृतेति। बहवः कृता यायेति विग्रहः। अकृता, सुकृता, मासयाता, सुखयाता, दुःखयाता इति च भाष्ये प्रत्युदाह्रतम्।

जातान्तान्न-इति वार्तिकम्। "बहुव्रीहेश्चे"त्युक्तो ङीष् नेत्यर्थः। दन्तजातेति। दन्ता जाता यस्या इति विग्रहः। ऊरुभिन्नीतिवत् परनिपातः।

पाणिगृहीती भार्यायामिति। इदमपि वार्तिकम्। विधिवदूढा भार्या , तदस्यां विद्यमानादेव पाणिगृहीतशब्दान्ङीषित्यर्थः। विवाहकाले विधिवत् पाणिर्गृहीतो यस्या इति विग्रहः। अन्येति। दास्यादिरित्यर्थः।

तत्त्व-बोधिनी

बहुव्रीहेश्चान्तोदात्तात् ४५२, ४।१।५२

तेन बह्विति। अयं भावः--"बहोर्नञ्वदुत्तरपदभूम्नि""नञ्सुभ्यां""जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः"इति ह्रन्तोदात्तविधायकानि। तत्र "जातिपूर्वा"दित्युक्ते बह्वादिपूर्वकस्यांर्थाद्व्युदास इति।

जातिपूर्वादिति वक्तव्यम्। सुखादिपूर्वान्नेति। "सुखादिभ्यः कर्तृवेदनाया"मित्यत्र ये पठिताः सुखदुःखकृच्छ्रादयस्तेऽत्र गृह्नन्ते। सुखायाता। सुखं दुःखं वा आयातं प्राप्तमनयेति विग्रहः। "अस्वाङ्गपूर्वपदाद्वे"ति विकल्पस्य वक्ष्यमाणत्वादिह स्वाङ्गपूर्वपद एवोदाहरणामाह--ऊरुभिन्नीति। भिन्नौ ऊरु यस्या इति बहुव्रीहौस भिन्नशब्दस्य "निष्ठे"ति पूर्वनिपाते प्राप्ते "जातिकालसुखादिभ्यः परा निष्ठा वाच्ये"ति परनिपातः। बहुकृतेति। बहूनि कृतानि यया सा।

जातान्तान्न। जातान्तान्नेति। "वर्णादनुदात्ता"दितिवत्-----"बहुव्रीहेरुदात्ता"दित्येव सिद्धेऽन्तग्रहणं नित्यत्वप्रतिपत्त्यर्थम्। "वा जाते"इति तु वैकल्पिक उदात्तो न तु नित्यमिति भावः।

पाणिगृहीति भार्यायाम्। पाणिगृहीतीति। यस्याः पाणिरग्निसाक्षिकं गृह्नते तस्यां वाच्यायां पाणिगृहीतशब्दान्ङीष्वक्तव्य इत्यर्थः। अन्येति। कौतुकादिना पाणिर्गृहीतो यस्या दास्यादेः सा "पाणिगृहीता"।

---

सूत्रम्

काशिका-वृत्तिः

अस्वाङ्गपूर्वपदाद् वा ४।१।५३

अन्तोदात्तात् क्तातिति अनुवर्तते। अस्वाङ्गपूर्वपदादन्तोदात्तात् क्तान्ताद् बहुव्रीहेः स्त्रियां वा ङीष् प्रत्ययो भवति। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। शार्ङ्गजग्धी, शार्ङ्गजग्धा। पलाण्डुभक्षिती, पलाण्डुभक्षिता। सुरापीती, सुरापीता। अस्वाङ्गपूर्वपदातिति किम्? शङ्खभिन्नी। ऊरुभिन्नी। अन्तोदात्तातित्येव, वस्त्रच्छन्ना। वसनच्छन्न। बहुलं

संज्ञाछन्दसोरिति वक्तव्यम्। प्रवृद्धविलूनी, प्रवृद्धविलूना। प्रवृद्धा च असौ विलूना च इति। न अयं बहुव्रीहिः।

न्यासः

अस्वाङ्गपूर्वपदाद्वा। , ४।१।५३

"अस्वाङ्गपूर्वपदात्" इति। न स्वाङ्गम् = अस्वाङ्गम्, तत् पूर्वपदं यस्य बहुव्रीहेः स तथोक्त-। "सारङ्गजग्धी" इति। "अद भक्षणे" (धा।पा।१०११), "अदो जग्धिः" २।४।३६ इत्यादिना जग्ध्यादेशः, "झषस्तथोर्धोऽधः" ८।२।४० इति तकारस्य घत्वम्, "झरो झरि" ८।४।६४ इति घलोपः। "पलाण्डभक्षिती" इति। "भक्ष अदने" (धा।पा।१५५७), चुरादिणिच्। "सुरापीति" इति। घुमास्थादि ६।४।६६ सूत्रेणेत्वम्। सर्वत्र "जातिकालसुखादिभ्यः" ६।२।१६९ इत्यादिनोत्तरपदान्तोदात्तत्वम्। "वस्त्रच्छन्ना, वसनच्छन्ना" इति। "छद अपवारणे" (धा।पा।१८३३) इत्यस्य चुरादिण्यन्तस्य क्तप्रत्यये "वा वान्तशान्तपूर्ण"७।२।२७ इत्यादिना च्छन्नशब्दो निपातितः। "अनाच्छादनात्" ६।२।१६९ इत्युत्तरपदान्तोदात्तत्वप्रतिषेधे "बहुव्रीहौ प्रकृत्या पूर्वपदम्" ६।२।१ इति प्रकृतिस्वरे कृते "अनुदात्तं पदमेकवर्जम्" ६।१।१५२ इति शेषस्यानुदात्तत्वादिहान्तोदात्तत्वं नास्ति। पूर्वपदे एवात्राद्युदात्ते--एकं नित्स्वरेण, अपरं लित्स्वरेण। "थस आच्छादने" (धा।पा।१०२३), ष्ट्रन्प्रत्ययः--वस्त्रम्। धातोर्वसनम्--ल्युट्। "बहुलम्" इत्यादिना संज्ञायां छन्दसि बहुलं ङीष्भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्र वाग्रहणस्य व्यवस्थितविभाषात्वादेव बहुलं संज्ञाच्छन्दसोर्भविष्यति। नन्व सूत्रेणैवानेनावस्य बहुव्रीहित्वाद्भविष्यति ङीष्, किमर्थं तर्हीदम्? इत्याह-- "प्रवृद्धा च"इत्यादि। विग्रहविशेषेण तत्पुरुषं दर्शयति।

बाल-मनोरमा

अस्वाङ्गंपूर्वपदाद्वा ५०२, ४।१।५३

अस्वाङ्गपूर्वपदाद्वा। स्वाङ्गलक्षणमुत्तरसूत्रे वक्ष्यते। अस्वाङ्गं यत् पूर्वपदं तस्यात् परं यत् क्तान्तं तदन्ताद्बहुव्रीहेर्ङीष् वा स्यादिति सूत्रार्थः। यद्यपि "अस्वाङ्गं पूर्वपदं यस्य तस्मात् क्तान्तबहुव्रीहे"रित्यपि व्याख्यातुं शक्यं, तथापि उत्तरसूत्रेऽस्वाङ्गपूर्वपदादित्यनुवृत्तस्य कर्मधारयसमासाश्रयणादिहापि तथा व्याख्यानमुचितम्। ननु बहुकृता, अकृता इत्यादावपि अस्वाङ्गपूर्वपदक्तदान्तबहुव्रीहित्वान्ङीष्विकल्पः स्यादित्याशङ्क्याह--पूर्वेणेति। "बहुव्रीहेश्चान्तोदात्ता"दिति पूर्वसूत्रेण नित्यं ङीषि प्राप्ते तद्विकल्पोऽत्र विधीयत इत्यर्थः। एवं च जातिपूर्वादित्यस्य अन्तोदात्तादित्यस्य चेहापि संबन्धाद्बहुकृतेत्यादौ नातिप्रसङ्ग इति भावः। सुरापीति सुरापीतेति। सुरा पीता ययेति विग्रहः। ऊरुभिन्नीतिवत् पूर्वनिपातः। अन्तोदात्तात्किमिति। "बहुव्रीहेश्चे"त्यत्र श्रुतम्, "अस्वाङ्गपूर्वपदाद्वा" इत्यत्रानुवृत्तमपि अन्तोदात्तादित्येतत्किमर्थमिति प्रश्नः। वस्त्रच्छन्नेति। ऊरुभिन्नीतिवत्पूर्वनिपातः। अथ वस्त्रच्छन्नेत्यत्र "जातिकालसुखादिभ्यः" इत्यन्तोदात्तत्वमाशङ्क्य निरस्यति--अनाच्छादनादिति। तथाच बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरे शेषनिघातेन अनुदात्तान्तमेतदिति भावः। अत एवेति। "अस्वाङ्गपूर्वपदा"दित्यनेन "बहुव्रीहेश्चे"ति पूर्वसूत्रेण च वस्त्रच्छन्नेत्यत्र वैकल्पिको नित्यश्च ङीष् नेत्यर्थः। अन्तोदात्तत्व एवोभयोः प्रवृत्तेरिति भावः।

तत्त्व-बोधिनी

अस्वाङ्गुपूर्वपदाद्वा ४५३, ४।१।५३

पूर्वेण नित्यं प्राप्त इति। एतेन विकल्पोऽप्ययं जातिपूर्वादेवेति ध्वनितम्। कथं तर्हि "पुत्रहती"त्यत्र "अस्वाङ्गपूर्वपदा"दिति वा ङीषिति कैयटः, पुत्रशब्दस्याऽजातिवाचकत्वात्। अन्यथा "पुत्रादिनी"त्यत्र "सुप्यजातौ----"इति णिनिर्न स्यात्। यदि त्वदनमादः, सोऽस्यास्तीति आदिनी, पुत्राणामादीनीति विगृह्य कथंचित्साधितेऽपि "जातिकालसुखादिभ्यः"इत्यन्तोदात्तविधायकसूत्रे "जातेः किं, पुत्रायातः"इति वक्ष्यमाणमूलग्रन्थो

विरुध्यत एवेति चेदुच्यते---"प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः। असत्त्विलिङ्गां बह्वार्थां ता जातिं कवयो विदुः"---इति भाष्ये लक्षणान्तरमुक्तम्। "सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां प्रादुर्भावतिरोभावौ या प्राप्नोति। यावदद्रव्यभाविनीत्यर्थः। गुणैर्युगपदद्रव्येण सम्बध्यते। बह्वर्थां। सर्वव्यक्तिव्यापिनीमित्यर्थः। तां जाति"मित्यादि कैयटेन व्याख्यातम्। एवं च पुत्रत्वस्य यावदद्रव्यभावित्वेनोक्तलक्षणलक्षितत्वाज्जातिवाचक एव पुत्रशब्द इति "अस्वङ्गेति वा ङी"षिति ग्रन्थस्तत्र न विरुध्यते। "आकृतिग्रहणा जाति"रित्यादिमुख्यपक्षाश्रयणे तु पुत्रत्वास्याऽजातित्वाज्जातेः किं, "पुत्राऽऽयात"इति ग्रन्थोऽपि सङ्गच्छत इति दिक्। केचिदर्वाचीनास्तु पुत्रहती पुत्रघ्नीत्यत्र "क्तादल्पाख्याया"मित्यनेन ङीषामाहुः। सुरापीतीति। पीता सुरा यया सा। "जातिकाले"ति सूत्रवार्तिकाभ्यां निष्ठाया अन्तोदात्तत्वपरनिपातौ। वस्त्रच्छन्नेति। बहुव्रीहिस्वरेण पूर्वपदपर्कृतिस्वरे शेषनिघाते, च कृते अनुदात्तान्तोऽयम्।

---

सूत्रम्

काशिका-वृत्तिः

स्वाङ्गाच् च उपसर्जनादसंयोगौपधात् ४।१।५४

बहुव्रीहेः क्तान्तादन्तोदात्तातिति सर्वं निवृत्तम्। वाग्रहणम् अनुवर्तते। स्वाङ्गं यदुपसर्जनम् असंयोगोपधं तदन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् प्रत्ययो भवति। चन्द्रमुखी, चन्द्रमुखा। अतिक्रान्ता केशानतिकेशी, अतिकेशा माला। स्वाङ्गातिति किम्? बहुयवा। उपसर्जनातिति किम्? अशिखा। असंयोगोपधातिति किम्? सुगुल्फा। सुपार्श्वा। अङ्गगात्रकण्ठेभ्य इति वक्तव्यम्। मृद्वङ्गी, मृद्वङ्गा। सुगात्री, सुगात्रा। स्निग्धकण्ठी, स्निग्धकण्ठा। अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टं चेत् तेन चेत्तत्तथायुतम्।

लघु-सिद्धान्त-कौमुदी

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् १२६८, ४।१।५४

असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्ताददन्तान् ङीष्वा स्यात्। केशानतिक्रान्ता - अतिकेशी, अतिकेशा। चन्द्रमुखी चन्द्रमुखा। असंयोगोपधात्किम्? सुगुल्फा। उपसर्जनात्किम्? शिखा॥

न्यासः

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्। , ४।१।५४

"चन्द्रमुखी" इति। चन्द्र इव मुखमस्या इति बहुव्रीहिः। अत्र च "प्रथमानिर्दिष्टम्" १।२।४३ इत्यादिना मुखशब्दस्योपसर्जनसंज्ञा। "अतिकेशी" इति। "कुगतिप्रादयः" २।२।१८ इति समासः। "एक विभक्ति च" १।२।४४ इति केशब्दस्योपसर्जनत्वम्। "अङ्ग" इति। अङ्गादिभ्य उपसर्जनेभ्यो ङीष् भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्? संयोगोपधत्वान्ङीष् न प्राप्नोति, तदर्थमेतदर्थरूपं व्याख्येयम्। तदिदं व्याख्यानम्-- उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेनाङ्गादिभ्यः संयोगोपधेभ्यो ङीब्भवतीति। "अद्रवम्" इति। मुखनासिकाभ्यां योऽभिनिष्क्रामति वायुः स प्राणः, प्राणोऽस्यास्तीति, प्राणी, तत्र यत्तिष्ठति तत्प्राणिस्थम्; मुखादि स्वाङ्गमुच्यते। यद्येवम्, कफोऽपि स्वाङ्गं स्यात्, ततश्च बहुकफेत्यत्र ङीष् प्रसज्येत? इत्यत आह-- "अद्रवम्" इति। विशेषणोपादानान्न भवत्ययं प्रसङ्गः, कफस्य द्रवात्मकत्वात्। एवमपि ज्ञानं स्वाङ्गं भवेत्, प्राणिस्थत्वाददद्रवत्वाच्च, ततश्च बहुज्ञानेत्यत्रापि ङीष् स्यात्? इत्यत आह-- "मूर्तिमत्" इति। असर्वगतानि यानि द्रव्याणि तेषां परिमाणं ह्यस्वादिमद्यत् तन्मूर्त्तिः, सा यस्यास्ति तन्मूर्तिमत्। न च तद्()ज्ञानेऽस्तीति;निर्गुणत्वात्। गुणानां च ज्ञानस्यात्मगुणत्वान्नास्य स्वाङ्गत्वप्रसङ्गः। येषामपि काठिन्यादिस्पर्शविशेषो मूर्त्तिः, तन्मतेनापि नैव ज्ञां मूर्तिमद्भवति, न हि ज्ञानस्य स्पर्शोऽस्ति। एवमपि शोफस्य

()आयथुसंज्ञकस्य स्वाङ्गत्वं प्राप्नोत्येव; यथोक्तविशेषणविशिष्टत्वात्। ततश्च बहुशोफेत्यत्र ङीष् प्रसज्येतेत्यत आह-- "अविकारजम्" इति। विकारः = धातुवैषम्यम्, भूतप्रक्षोम इत्यर्थः, ततो जातं विकारजम्। न विकारजम् = अविकारजम्। तदेवं विशेषमोपादानसामथ्र्यात्। शोफस्यापि स्वाङ्गत्वं न प्राप्नोति। यदि प्राणिस्थं स्वाङ्गं भवति, एवं तर्हि रथ्यादिपतितानां केशानां स्वाङ्गत्वं न स्यात्, ततश्च दीर्घकेशी रथ्येति न सिध्यतीत्यत आह-- "अतत्स्थम्" इत्यादि। तस्मिन् प्राणिनि तिष्ठतीति तत्स्थम्, न तत्स्थम् अतत्स्थम् = अणिस्थम्। एवमपि केशादि स्वाङ्गं भवति यदि तत्प्राणिनि पूर्वं दृष्टं भवति। प्रतिमावयवानां तर्हि मुखादीनां स्वाङ्गता न स्यात्, अप्राणिस्थत्वात्, ततश्च दीर्घमुखी प्रतिमेति ङीष् न स्यात्? इत्यत आह-- "तस्य चेत्तथा" इति। तस्य प्राणिनस्तत् स्वाङ्गं यथा युतं येन प्रकारेण संस्थानविशेषेण सम्बद्धं तथा तेन प्रकारेणाप्राणिनोऽपि यदि सम्बद्धं भवत्येवमपि तस्य स्वाङ्गत्वं भवति। अथ वा-- तस्य चेदं प्राणिनस्तत् स्वाङ्गं तथा यदि युतं सम्भवति यथा प्राणिनः, एवमपि स्वाङ्गं भवति। अन्येषां पाठः- "तेन चेतत्तथा युतम्" इति। तेन प्राणिना येन प्रकारेण संस्थानविशेषादिना सम्बद्धं तथा यद्यप्राणिनापि सम्बद्धं भवति, एवमपि स्वाङ्गं भवति। अथ वा--तेनाप्राणिना तन्मुखादि यदि तथा युतम् = सम्बद्धं भवति यथा प्राणिना, एवमपि स्वाङ्गं भवति। अथ वा तेन चेन्मुरवादीनां स्वाङ्गेन तदप्राणिस्थं द्रव्यं तथा यदि युतं भवति यथा प्राणिद्रव्यम्, एवमपि स्वाङ्गं भवतीति। सर्वथाययमर्थः-- यादृशं प्राणिनो मुखादि स्वाङ्गं तादृशमेव यद्यप्राणिनोऽपि भवति स्वाङ्गमेवमेव भवतीति॥
बाल-मनोरमा
स्वाङ्गाच्चोपसर्जनादसंयोगापधात् ५०३, ४।१।५४

स्वाङ्गच्च। उपसर्जनादिति असंयोगपधादिति च स्वाङ्गादित्यत्रान्वेति। स्वाङ्गादित्येतदत इत्यनुवृत्तं च प्रातिपदिकादित्यनुवृत्तस्य विशेषणं, तदन्तविधिः। तदाह--असंयोगोपधमित्यादिना। वा ङीषिति। "अस्वाङ्गपूर्वपदाद्वा" इत्यतो वेति "अन्यतो ङीष्" इत्यतो हीषित्यस्य चानुवृत्तेरिति भावः। बहुव्रीहेरित्यनुवर्तमाने उपसर्जनग्रहणं किमर्थमित्याशङ्क्य परिहरति--केशानतिक्रान्तेति। "अत्यादयः क्रान्ताद्यर्थे" इति समासस्तत्पुरुषः। अत्र बहुव्रीहित्वाऽभावेऽपि प्राप्त्यर्थमुपसर्जनग्रहणमिति भावः। "एकविभक्ति चापूर्वनिपाते" इति केशशब्दस्योपसर्जनत्वम्। चन्द्रमुखी चन्द्रमुखेति। चन्द्र इव मुखं यस्या इति विग्रहः। सुगुल्फेति। सु=शोभनौ गुल्फौ यस्या इति विग्रहः। "पदङ्घ्रिश्चरणोऽस्त्रियाम्"। तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः। उपसर्जनात्किमिति। केवलकेशादिशब्दानामनुपसर्जनानां स्त्रीत्वविरहादेवाऽप्राप्तेः प्रश्नः। शिखेति। अत्र स्वाङ्गान्तत्वात्केवलशिखाशब्दान्ङीष्निवृत्त्यर्थमुपसर्जनग्रहणमित्युक्तम्। अन्यथा टापं बाधित्वा पक्षे ङीष् स्यादिति भावः। "शोभना शिखा सुशिखे"ति क्वचित् पुस्तकेषु दृष्टं, तत् प्रक्षिप्तं वेदितव्यम्। टाबन्तेन समासेऽनदन्तत्वादेव प्राप्तिविरहात्। ननु स्वस्य अवयवीभूतस्य अङ्गं-स्वाङ्गम्। तथा च सुमुखा शालेत्यादावतिव्याप्तिः, तत्र मुखशब्दार्थस्य प्रथमभागस्य अवयवीभूतशालाङ्गत्वात्। किंच सुकेशी रथ्येत्यत्राऽब्याप्तिः, तत्र केशानां रथ्याङ्गत्वाऽभावादित्यत आह--स्वाङ्गं त्रिधेति। "अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टं च, तेन चेतत्तथायुतम्।" इति भाष्ये त्रिधा निरुक्तं पारिभाषिकं स्वाङ्गमिह विवक्षितमित्यर्थः। तत्र प्रथमार्धं प्रथमं स्वाङ्गलक्षणमित्यभिप्रेत्य विच्छिद्य पठति--अद्रवमिति। न विद्यते द्रवो यस्य तत्-अद्रवम्।

मूर्तिः=अवयवसंयोगोऽस्यास्तीति मूर्तितम्। अवयवसंयोगसमवायिकारणं द्रव्यमिति यावत्। प्राणिनि=प्राणवति जन्तौ विद्यमानं प्राणिस्थम्, अविकारजं=रोगादिविकाराजन्यं च यत् तत् प्रथमं स्वाङ्गमित्यर्थः। "अद्रव"मित्यस्य प्रयोजनमाह--सुस्वेदेति। सु=शोभनः, स्वेदः=घर्मज उदकप्ररुआवो यस्या इति विग्रहः। स्वेदस्य शोभनत्वं तु दुर्गन्धाऽभावः। द्रवत्वादिति। "न स्वाङ्गत्व"मिति शेषः। अतो न ङीषित्यर्थः। "मूर्तिम"दित्यस्य प्रयोजनमाह-- सुज्ञानेति। सु=शोभनं ज्ञानं यस्या इति विग्रहः। अमूर्तत्वादिति। "न स्वाङ्गत्व"मिति शेषः। "प्राणिस्थ"मित्यस्य

प्रयोजनमाह--सुमुखा शालेति। सु=शोभनं मुखं प्रथमभागो यस्या इति विग्रहः। अप्राणिस्थत्वादिति। "न स्वाङ्गत्व"मिति शेषः। "अविकारज"मित्यस्य प्रयोजनमाह--सुशोफेति। सु=अधिकः शोफः=()आयथुर्यस्या इति विग्रहः। "शोफस्तु ()आयथुः" इत्यमरः। विकारजत्वादिति। रोगजत्वादित्यर्थः। "न स्वाह्गत्व"मिति शेषः।

अतत्स्थं तत्र दृष्टं चेति। द्वितीयं स्वाङ्गलक्षणम्। तच्छब्देन प्राणी परामृश्यते। अतत्स्थम्= अप्राणिस्थं, तत्र=प्राणिनि, दृष्टं यत् तदपि स्वाङ्गमित्यर्थः। रथ्येति। रथ्यास्थानां केशानां प्राणिस्थत्वाऽभावात्पूर्वलक्षणेन स्वाङ्गत्वाऽसिद्धेर्लक्षणान्तरमिति भावः। उक्तलक्षणमुदाहरणे योजयति--अप्राणिस्थस्यापीति। इदानीं प्राणिस्थत्वाऽभावेऽपि कदाचित् प्रामिस्थत्वादपि स्वाङ्गत्वमित्यर्थः।

तेन चेत्तत्तथेति। तृतीयं स्वाङ्गलक्षणम्। अत्र भाष्ये "स्वाङ्गमप्राणिनोऽपि" इति शेषः पूरितः। चेदिति यद्यर्थे। तेन प्राणिस्थेन स्तनाद्यङ्गाकृतिकावयवविशेषेण तत्प्राणिद्रव्यं प्रतिमादि, तथा=प्राणिद्रव्यवत्, युतं=संबद्धं यदि, तदा तत्=स्तनाद्याकृतिकं अप्राणिनोऽपि स्वामित्यर्थः। सुस्तनी सुस्तना वा प्रतिमेति। सु=शोभनौ स्तनौ=स्तनाकृती अवयवौ यस्या इति विग्रहः। प्रतिमागतयोः स्तनाकृतिकावयवयोः कदाचिदपि प्राणिस्थत्वाऽभावात् प्राम्यन्तरेऽदृष्टत्वाच्च पूर्वलक्षणद्वयस्याप्यप्रवृत्तेर्लक्षणान्तरमिदम्। अथोदाहरणे लक्षणं योजयति--प्राणिवदिति। सुसम्यन्ताद्वतिः। प्राणिवत्-प्राणिसदृशे=प्रतिमादिद्रव्ये स्थिततत्वात् स्वाङ्गमित्यर्थः। नच "कल्याणपाणिपादे"ति बहुव्रीहावपि ङीष् स्यादिति वाच्यम्, "अस्वाङ्गपूर्वपदाद्वा" इत्यनुवृत्तेः। अत्र हि पाणिपादेति समुदायो न स्वाङ्गं, किन्तु स्वाङ्गसमुदाय एव यत्तु स्वाङ्गं पादेति न तु तदस्वाङ्गात्पूर्वपदात् परम्, पाणिपदेन व्यवधानात्। तथा च स्वाङ्गस्य पादस्य अस्वाङ्गात्पूर्वपदात् कल्याणशब्दात् परत्वाऽभावान्न ङीषिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी
स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४५४, ४।१।५४

स्वाङ्गाच्चोप। इह बहुव्रीहेरिति नानुवर्तते इति ध्वनयन्नुदाहरति---अतिकेशीति। शिखेत्। "शीङः खो ह्रस्वश्चे"ति खः। तदन्ताट्टाप्। अन्यथा टापं बाधित्वा ङीष् स्यादिति भावः। [केचित्तु सुशिखेत्यपि प्रत्युदाहरन्ति। तच्चिन्त्यम्। टाबन्तेन समासेऽनदन्तेत्वेन ङीषः प्राप्त्यभावात्। न च टापः प्रागेव कृदन्तेनैव समासाददन्तत्वमस्तीति वाच्यम्, तथा हि सति शोभना शिखा सुशिखेत्यर्थस्याऽलाभादिति नव्याः]। यद्यत्र स्वमङ्गं गृह्नते तर्हि सुमुखा शालेत्यत्रापि स्यात्, मुखस्य शालाङ्गत्वात्। सुकेशी रथ्येत्यत्र च न स्यात्, केशानां रथ्याङ्गत्वाऽभावात्। अतोऽव्याप्त्यतिव्याप्तिपरिहार्थमाह---।

अद्रवं मूर्तिमत्खाङ्गं प्राणिस्थमविकारजम्। स्वाङ्गं त्रिधेति। मूर्तिमदिति। स्पर्शवदद्रव्यपरिमाणं मूर्तिः। प्राणीति। मुखनासिकासञ्चार वायुः प्राणः। सुमुखा शालेति। एवं च "फलमुखी कारणमुखी वाऽनवस्थे"त्यादिप्रयोगाः प्रामादिका इति भावः। प्रतिमादिगतस्तनस्य प्राणिन्यदृष्टत्वात्स्वाङ्गत्वं न प्राप्नोतीति तृतीयलक्षणमाह--तेन चेदिति।येनाऽह्गेन प्राणिरूपं वस्तु यथा युतं तेन=तत्सदृशेनाऽङ्गेन तदप्राणिरूपं वस्तु तथा=प्राणिवद्युतं=युक्तं चेत्तदप्यप्राणिनि दृष्टं स्वाङ्गमित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
नासिकाउदरओष्ठजङ्घादन्तकर्णशृङ्गाच् च ४।१।५५

स्वाङ्गाच् च उपसर्जनातित्येव। बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्ते वचनम्। सहनञ्विद्यमानलक्षणस् तु

प्रतिषेधो भवत्येव। नासिकाऽद्यन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् प्रत्ययो भवति। तुङ्गनासिकी, तुङ्गनासिका। तिलोदरी, तिलोदरा। बम्बोष्ठी, बम्बोष्ठा। दीर्घजङ्घी, दीर्घजङ्घा। समदन्ती, समदन्ता। चारुकर्णी, चारुकर्णा। तीक्षणशृङ्गी, तीक्ष्णशृङ्गा। पुच्छाच् च इति वक्तवय्म्। कल्याणपुच्छी, कल्याणपुच्छा। कबरमणिविषशरेभ्यो नित्यम्। कबरपुच्छी। मणिपुच्छी। विषयुच्छी। शरपुच्छी। उपमानात् पक्षाच् च पुच्छात् च। उलूकपक्षीसेना। उलूकपुच्छी शाला।

न्यासः

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च। , ४।१।५५

"बह्वज्लक्षणे" इत्यादि। नासिकोदरयोः। "न क्रोडादिबह्वचः" ४।१।५६ इति बह्वज्लक्षणे प्रतिषेधे प्राप्ते वचनम्। शेषाणाम् "असंयोगोपधात्" ४।१।५४ इति संयोगोपलक्षणे। "सहनञ्विद्यमानपूर्वलक्षणनस्तु प्रतिषेधो भवत्येव" इति। नासिकोदरयोस्तावदयं योगः "पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते, नोत्तरान्" (व्या।प।९) इत्यनन्तरमेव बह्वज्लक्षणं प्रतिषेधं बाधते, न सहादिलक्षणम्। ओष्ठादिष्वपि "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते" (व्या।प।१०) इति पूर्वमेव संयोगोपधलक्षणम्, तेनासौ भवत्येवम-- सहनासिका, अनासिका, विद्यमाननासिकेति। "बिम्बोष्ठी" इति। बिम्बमिवोष्ठौ यस्याः सा बिम्बोष्ठी-- "ओत्वष्ठयोः समासे वा पररूपं वक्तव्यम्" (वा।६८७) इत्यौपसंख्यानिकं पररूपत्वम्। ये तु बिम्बौष्टीत्यौकारं पठन्ति ते "वृद्धिरेचि" ६।१।८५ इति वृदिं()ध कुर्वन्ति। "पुच्छाच्चेति वक्तव्यम्" इति। पुच्छान्ताच्च प्रातिपदिकान्ङीष् भवतीत्येदर्थरूपं व्याख्येमित्यर्थः। किमर्थम्? संयोगोपधादपि पुच्छान्ताद्यथा स्यात्। व्याख्यानं तु चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कत्र्तव्यम्। "कल्याणपुच्छी" इति। कल्याणं पुच्छमस्याः। "कबर" इत्यादि। कबरादिभ्यो यः पुच्छशब्दस्तदन्तान्ङीष् भवतीति। एषोऽपि तत एव चकाराद्वाग्रहणस्य वा व्यवस्थितविभाषात्वल्लभ्यते। कबरं पुच्छे यस्याः सा कबरपुच्छी। एवं "मणिपुच्छी, विषपुच्छी, शरपुच्छी" इति। "सप्तमीविशेषणे बहुव्रीहौ" २।२।३५ इति पुच्छस्य पूर्वनिपातो न भवति; "सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम्" (वा। ११५) इति वचनात्। "उपमानात् पक्षात् पुच्छाच्च" इति। नित्यमिति सम्बध्यते। एतदपि पूर्वोक्तात् कारणद्वयाल्लभ्यते। "पुच्छाच्चेति वक्तव्यम्" (वा।३६४) इत्यनेनैव सिद्धे पुनरिह पुच्छग्रहणं प्रपञ्चार्थम्,नित्यार्थं वा। उलूकस्येव पुच्छं यस्याः सा "उलूकपुच्छी"॥

बाल-मनोरमा

नासिकोदरौष्ठजङ्घादन्तकर्णश्रृङ्गाच्च ५०४, ४।१।५५

नासिकोदरोष्ठ। अस्वाङ्गपूर्वपदाद्वा" इत्यतो वेति, "अन्यतो ङीष्" इत्यतो ङीषिति चानुवर्तते। तदाह--एभ्य इति। उपसर्जनभूतनासिकादिशब्दान्तेभ्य इत्यर्थः , पूर्वसूत्रादुपसर्जानादित्यनुवृत्तेः। ननु "स्वाङ्गाच्चे"ति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह--आद्ययोरिति। नासिकोदरशब्दयोर्विषये "न क्रोडादिबह्वचः" इति निषेधः प्राप्तः सोऽनेन ङीष्विकल्पविधिना वाध्यत इत्यर्थः। बह्वज्लक्षणनिषेधस्तु सुजघनेत्यादौ सावकाश इति भावः। ननु सहनासिका, अनासिका, सहोदरा, अनुदरा #इत्यत्र "सहनञ्विद्यमानपूर्वाच्चे"ति निषेधोऽप्यनेन वाध्यतां, "सहनञ्" इत्यस्य सकेशा अकेशा इत्यादौ सावकाशत्वादित्य आह--पुरस्तादिति। "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्" इति न्यायादित्यर्थः। ततश्च "सहनञि"ति निषेधो "न क्रोडादि"सूत्रे व्यवहितत्वात् "नासिकोदर; इत्यनेन बाधं नार्हतीत्यर्थः। ओष्ठादिपञ्चकस्य प्रयोजनमाह--ओष्ठादीनामिति। सुगुल्फोत्यादावसंयोगापधादित्यस्य सावकाशत्वादिति भावः। ननु सहोष्ठा, अनोष्ठा इत्यादौ "सहनञि"ति निषेधोऽप्यनेन बाध्यतामित्यत आह--मध्येऽपवादेति। "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" इत#इ न्यायादित्यर्थः। ननु "नासिकोदर" इति ङीष्विकल्पस्तुङ्गनासिकीत्यादौ सावकाशः, "सहन"ञिति निषेधस्तु सहकेशेत्यादौ सावकाशः, सहनासिकेत्यादौ तूभयप्राप्तौ कतरस्या बाध इत्यत आह--सहनञ्लक्षणस्त्विति। अस्येति। "नासिकोदर" इति ङीष्विकल्पविधेरित्यर्थः। तुङ्गनासिकी तुङ्गनासिकेति। "न

क्रोडादिबह्वचः" इति बह्वज्लक्षणङीष्निषेधं बाधित्वा "नासिकोदर" इति विकल्पः। इत्यादीति। कुम्भोदरी-कुम्भोदरा। अत्र बह्वज्लक्षणङीष्निषेधं बाधित्वा ङीष्विकल्पः। बिम्बोष्ठी-विम्बोष्ठा। सुजङ्घी-सुजङ्घा। शुभ्रदन्ती-शुब्रादन्ता।सुकर्णी-सुकर्णा। सुश्रहृगी-सुश्रृङ्दा। ओष्ठादिषु संयोगोपधत्वेऽपि ङीष्विकल्पः। सहनासिकेति। सहशब्दोविद्यमानवचनः, सह नासिका यस्या इति विग्रहः। अविद्यमाना नासिका यस्या इति च विग्रहः। इह उभयत्रापि "सहनञ्विद्यमाने"ति ङीष्निषेधो नतु "नासिकोदर" इति ङीष्विकल्प इत्यर्थः। वक्तव्यमिति। "वा ङी"षिति इति शेषः संयोगापधत्वाद्ववचनम्। स्वङ्गीतचि। सु=शोभनानि अङ्गानि यस्या इति विग्रहः। सुगात्री-सुगात्रा। सुकण्ठी-सुकण्ठा। वृत्तिग्रन्थस्य मूलं दर्शयति--एतच्चेति। प्रामाणिका इति। एवं च तन्वङ्गी, सुगात्री, कलकण्ठी त्यपभ्रंशा एवेति भावः।

पुच्छाच्चेति। संयोगापधत्वेऽपि पुच्छशब्दान्तान्ङीष्वेति वक्तव्यमित्यर्थः।

कबरमणीति। कबरादिभ्यः परो यः पृच्छशब्दस्तदन्तान्नित्यं ङीषिति वक्तव्यमित्यर्थः। "पुच्छाच्चे"त्युक्ताविकल्पापवादः। कबरमित्यस्य व्याख्यानं त्रित्रमिति। इत्यादीति। मणिपुच्छी वृश्चकी। विषपुच्छी। शरपुच्छी पक्षिजातिविशेषः।

उपमानादिति। उपमानात्परौ यौ पक्षपुच्छशब्दौ तदन्तादपि ङीषित्यर्थः। नित्यमित्येवेति। नित्यमित्यनुवर्तत एवेत्यर्थः। विकल्पापवादः। उलूकपक्षी शालेति। उलूकः पक्षिविशेषः, उलूकपक्षाविव पक्षौ पार्(ो यस्या इति विग्रहः। "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्य उत्तरपदलोपश्च" इति समासः। संयोगोपधत्वादप्राप्ते विधिः। उलूकपुच्छी सेनेति। उलूकपुच्छमिव पुच्छ=पश्चिमान्तो यस्या इति विग्रहः। पूर्वपदे बहुव्रीहिः। "पुच्छाच्चे"ति विकल्पस्यापवादः।

तत्त्व-बोधिनी

नासिकोदरौष्ठजङ्घादन्तकर्णश्रृङ्गांच्च ४५५, ४।१।५५

मध्येऽपवादेति। "मध्येऽपवादाः पूर्वान्विधीन्बीधन्ते नोत्तरान् इति न्यायादित्यर्थः। उरः क्रोडेति। स्त्रीलिङ्गोऽयमिति हरदत्तादयः। तत्रोपसर्जमह्यस्वत्वे कृते अदन्तत्वान्ङीषः प्राप्तिः। अमरस्तु "न ना क्रोडं भुजान्तरम्ित्याह। रत्नमतिस्तुपुंलिङ्गतामाह। "गणे च "क्रोड"इति प्रातिपदिकमात्रं पठ()ते न तु टाबन्त"मिति गणरत्न महोदधिकारः। एवं चाऽविशेषाल्लिङ्गत्रयेऽप्युदाहरणं बोध्यम्। माधवस्तु--तुदादिगणे "क्रुड निमज्जने"इति धातावाह---"क्रोडः--धञ्। क्रोडा अ()आनामुरः। टाबन्तोऽयं स्वभावतो विशेषविषयः। क्रोडादिषु टाबन्तमात्रस्य पाठात्। भुजान्तरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वाङ्गलक्षणो ङीष्विकल्पो भवत्येव। "कल्याणक्रोडी कल्याणक्रोडा मयूरी"ति। केशैः सह वर्तत इति।

---

सूत्रम्

काशिका-वृत्तिः

न क्रोडादिबह्वचः ४।१।५६

स्वाङ्गातिति ङिष् प्राप्तः प्रतिषेध्यते। क्रोडाद्यन्तात् बह्वजन्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति। कल्याणक्रोडा। कल्याणाखुरा। कल्याणोखा। कल्याणबाला। कल्याणशफा। कल्याणगुदा। कल्याणघोणा। कल्याणनखा। कल्याणमुखा। क्रोडादिराकृतिगणः। सुभगा। सुगला। बह्वचः खल्वपि पृथुजघना। महाललाटा।

लघु-सिद्धान्त-कौमुदी

न क्रोडादिबह्वचः १२६९, ४।१।५६

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। आकृतिगणोऽयम्। सुजघना॥

न्यासः

न क्रोडादिबह्वचः। , ४।१।५६

"कल्याणक्रीडा" इति। क्रोडाशब्दः स्त्रीलिङ्गः। "क्रोडाघाटाजिह्वाशिरोधरासङ्गकुलास्पृहामाया" इति लिङ्गकारिकायां पाठात्। कल्याणी क्रोडाऽस्या इति विग्रहः। "स्त्रियाः पुंवत्" ६।३।३३ इति पुंवद्भावः। उत्तरपदस्य "गोस्त्रियोः" १।२।४८ इत्यादिना ह्रस्वः। ततः "स्वाङ्गाच्चोपसर्जनात्" ४।१।५४ इत्यादिना प्राप्तस्य ङीपोऽनेन प्रतिषेधः ततष्टाप्। "महाललाटा"इति। "आमन्महत्" (६।३४६) इत्यादिनात्वम्॥

बाल-मनोरमा

न क्रोडादिबह्वचः ५०५, ४।१।५६

न क्रोडादिबह्वचः। क्रोडा आदिर्यस्येति, बहवोऽचो यस्येति च विग्रहः। क्रोडादिश्च बह्वच्च इति समाहारद्वन्द्वः। क्रोडादेरिति। क्रोडादिर्गणः, बह्वच्च यत्स्वाङ्गं तदन्तान्ङीष् नेत्यर्थः। कल्याणक्रोडेति। कल्याणी क्रोडा यस्या इति विग्रहः। "स्त्रियाः पुंवत्" इति कल्याणशब्दस्य पुंवत्त्वम्। अ()आआनामिति। हरदत्तादिमते क्रोडाशब्दो नित्यस्त्रीलिङ्गः। उपसर्जनह्रस्वत्वेऽदन्ततया "स्वाङ्गाच्चोपसर्जना"दिति प्राप्तो ङीष् निषिध्यते। अमरस्तु "न ना क्रोडं भुजान्तर"मिति स्त्रीत्वं नपुंसकत्वं चाह। क्वचित् कोशे पुंस्त्वमपि दृश्यते। क्रोडादिगणे क्रोड इति प्रातिपदिकं पठ()ते। एवं च लिङ्गत्रयेऽपि उदाहरणं निर्बाधम्। आकृतिणोऽयमिति। "क्रोडादि"रिति शेषः। सुजघनेति--बह्वच उदाहरणम्। सुशोभनं जघनं यस्या इति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

सहनञ्विद्यमानपूर्वाच् च ४।१।५७

स्वाङ्गाच् च उपसर्जनातिति, नासिकौदरओष्ठजङ्घादन्तकर्ण। शृग्गाच् च ४।१।५५ इति च प्राप्तो ङीष् प्रतिषिध्यते। सह नञ् विद्यमान एवं पूर्वात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो न भवति। सकेशा। अकेशा। विद्यमानकेशा। सनासिका। अनासिका। विद्यमाननासिका।

न्यासः

सहनञ्विद्यमानपूर्वाच्च। , ४।१।५७

"सकेशा" इति। सह केशैर्वर्तत इति। "तेन सहेति तुल्योगे" २।२।२८ इति समासः। "वोपसर्जनस्य" ६।३।८१ इति सहस्य सभावः। "अकेशा"इति। अविद्यमानाः केशा अस्येति, "नञोऽस्त्यर्थानां बहुव्रीहिरुत्तरपदलोपश्च" (वा।१०२) इति विद्यमानशब्दलोपः। अथ पूर्वग्रहणं किम्, सहनञ्विद्यमानादित्येवोच्येत, एतया हि पञ्चम्या स्वाङ्गे विशेष्यमाणे सहादिपूर्वता लभ्यत एव? नैतदेवम्; पञ्चमी हि परत्वेन स्वाङ्गं विशेषयेत्-- सहादिभ्यः परं यत् स्वाङ्गमिति। ततश्च सहादिभ्यः परेण स्वाङ्गेनान्यस्यापि कल्याणं विद्यमानमुखमस्या इति विग्रहः। अथ वा-- विद्यमानं मुखं यस्य स विद्यमानमुखः, कल्याणो विद्यमानमुखो यस्या इति विग्रहः। पूर्वग्रहणे सति पूर्वशब्दस्यावयववाचित्वात् सहादिपूर्वत्वेन प्रातिपदिकं विशेष्यत इति सहाद्यवयवं यत् स्वाङ्गान्तं प्रातिपदिकं तस्मादिति विज्ञायमाने नात्र प्रतिषेधो भवति, न ह्येतत् सहाद्यवयवमेव। किं तर्हि? कल्याणशब्दावयवमिति न भवत्यनिष्टप्रसङ्गः॥

बाल-मनोरमा

सहनञ्विद्यमानपूर्वाच्च ५०६, ४।१।५७

सहनञ्। त्रिकपूर्वादिति। "स्वाङ्गा"दिति शेषः। सकेशेति। सह केशा यस्या इति बहुव्रीहिः। सहशब्दो विद्यमानवचनः। "वोपसर्जनस्ये"ति सभावविकल्पः। "स्वाङ्गाच्चे"ति प्राप्तस्य निषेधः। "नासिकोदर" इति ङीष्विकल्पोऽप्यनेन बाध्यत इत्युक्तं स्मारयितुमुदाहरति --विद्यमाननासिकेति। विद्यमाना नासिका यस्या इति बहुव्रीहिः।

तत्त्व-बोधिनी

सहनञ्विद्यमानपूर्वाच्च ४५६, ४।१।५७

सकेशाष अविद्यमानाः केशा यस्याः सा--अकेशा।

---

सूत्रम्

काशिका-वृत्तिः

नखमुखात् संज्ञायाम् ४।१।५८

नखमुखान्तात् प्रातिपदिकात् संज्ञायाम् विषये स्त्रियां ङीष् प्रत्ययो न भवति। शूर्पणखा। वज्रनखा। गौरमुखा। कालमुखा। संज्ञायाम् इति किम्? ताम्रनखी कन्या। चन्द्रमुखी।

लघु-सिद्धान्त-कौमुदी

नखमुखात्संज्ञायाम् १२७०, ४।१।५८

न ङीष्॥

न्यासः

नखमुखात्संज्ञायाम्। , ४।१।५८

"सूर्पणखा" इति। "पूर्वपदात्संज्ञायामगः" ८।४।३ इति णत्वम्। अथ कथं शूर्पनखी राक्षसीति? असंज्ञात्वात्। संज्ञायामित्युच्यते, न चेयं संज्ञा। तथा हि-- "पूर्वपदात्" ८।४।३ इत्यादिना णत्वं न भवति। यौगिकस्त्वेष तस्या व्यपदेशः; शूर्पाकारनखयोगात्-- शूर्पमिव नखो यस्याः शूर्पनखीति॥

बाल-मनोरमा

नखमुखात्संज्ञायाम् ५०७, ४।१।५८

नखमुखात्। नखमुखादिति। समाहारद्वन्द्वः। शेषपूरणेन सूत्रे व्याचष्टे--ङीष् नेति। "स्वाङ्गाच्चे"ति प्राप्तस्य निषेधोऽयम्। शूर्पणखेति। राक्षसीविशेषस्य नाम। शूर्पाणीव कररूहा यस्या इत्यस्वपदविग्रहः, संज्ञात्वेन नित्यसमासत्वात्। "पूर्वपदात्संज्ञाया"मिति णत्वम्। केवलयौगिकत्वे तु ङीष् भवत्येव। णत्वं तु न। गौरमुखेति--कस्याश्चिन्नाम। ()ओतं मुखं यस्या इत्यस्वपदविग्रहः ताम्रमुखीति। यौगिकोऽयम्। ताम्रं मुखं यस्या इति विग्रहः।

तत्त्व-बोधिनी

नखमुखात्संज्ञायाम् ४५७, ४।१।५८

शर्पणखेति। "पूर्वपदात्संज्ञाया"मिति णत्वम्। यदा तु शूर्पवन्नखानि यस्या इति योगमात्रं विवक्ष्यते न तु संज्ञा, ततोऽसंज्ञात्वान्न ङीष्निषेधो, न वा णत्वं, तेन राक्षस्यपि योगवृत्त्या "शर्पनखी"ति भवतीत्याहुः।

सूत्रम्

काशिका-वृत्तिः

दीर्घजिह्वी च च्छन्दसि ४।१।५९

दीर्घजिह्वी इति छन्दसि विषये निपात्यते। संयोगोपधत्वादप्राप्तो ङीष् विधीयते। दीर्घजिह्वी वै देवानां हव्यमवालेट्। चकारः संज्ञानुकर्षणार्थः। दीर्घजिह्वी इति निपातनं नित्यार्थम्।

न्यासः

दीर्घजिह्वी च च्छन्दसि। , ४।१।५९

अथ किमर्थमीकारान्तनिपातनं क्रियते, न "दीर्घजिह्वा च्छन्दसि" इत्येवोच्येत, एवमुच्यमाने प्रतिषेध प्रकरणात् प्रतिषेधो विज्ञायेतेति चेत्? न; संयोगोपधत्वेन प्राप्त्यभावात्, प्राप्तिपूर्वकत्वाच्च प्रतिषेधानाम्। तस्मात् सामर्थ्याद्विधिरेव विज्ञास्यत इत्याह-- "निपातनं नित्यार्थम्" इति। कल्पितत्वात् प्रकृतस्य ङीष इहापि विकल्पित एवासौ विज्ञायेत, निपातनात् नित्यो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

दिक्पूर्वपदान् ङीप् ४।१।६०

स्वाङ्गाच् च उपसर्जनातित्येवम् आदिविधिप्रतिषेधविषयः सर्वो ऽप्यपेक्ष्यते। यत्र ङीष् विहितस् तत्र तदपवादः। दिक्पूर्वपदात् प्रातिपदिकात् ङीप् प्रत्ययो भवति। स्वरे विशेषः। प्राङ्मुखी, प्राङ्मुखा। प्राङ्नासिकी, प्राङ्नासिका। इह न भवति, प्राग्गुल्फा, प्राक्क्रोडा, प्राग्जघना इति।

न्यासः

दिक्पूर्वपदान्ङीप्। , ४।१।६०

"विधिप्रतिषेध" इत्यादि। विधिविषयः-- स्वाङ्गमुपसर्जनसंयोगोपधत्वम्, नासिकादि च प्रातिपदिकम्। प्रतिषेधविषयः- संयोगोपधञ्च प्रातिपदिकम्, "न क्रोडादिबह्वचः" ४।१।५६ "सहनञ्विद्यमानपूर्वाच्च" ४।१।५७ इति। एतेनैतत् सूचयति-- "स्वाङ्गाच्चोपस्र्जनासंयोगोपधात्" ४।१।५४ इत्यादि विधिशास्त्रमिहानुवत्र्तते, "न क्रोडादिबह्वचः" ४।१।५६ इत्यादि प्रतिषेधशास्त्रम्, तेन यत्र विषये ङीष् विहितस्तत्रैव ङीब्विधेयः। यत्र तु विषये ङीष् प्रतिषिद्धस्तत्र ङीबपि प्रतिषिध्यत इति। "यत्र ङीष् विहितः" इत्यादिना विधि विषयापेक्षयाः फलं दर्शयति। कः पुनर्ङीपो वा विशेषः, यावतोभयत्र तदेव रूपम्? इत्याह-- "स्वरे विशेषः" इति। ङीपो हि पित्त्वादनुदात्तत्वं भवतीति, ङीषस्तु प्रत्ययस्वरेणाद्युदात्तत्वम्। "प्राङमुखी" इति। ऋत्विगादि ३।२।५९ सूत्रेणाञ्चतेः क्विन्, "अनिदिताम्" ६।४।२४ इत्यनुनासिकलोपः, "उगितश्च" ४।१।६ इति ङीप्-- प्राची। प्राच्यां दिशि मुखमिति "दिक्शब्देभ्यः सप्तमीपञ्चमी" ५।३।२७ इत्यादिनास्तातिः, "अञ्चेर्लुक्" ५।३।३० इति तस्य लुक्, "लुक् तद्धितलुकि" १।२।४९ इति स्त्रीप्रत्ययस्यापि लुक्, "तद्धितश्चासर्वविभक्तिः" १।१।३७ इत्यव्ययत्वम्, "अव्ययादाप्सुपः" २।४।८२ इति सुपो लुक्--- प्राग् मुखं यस्याः सा प्राङमुखी, "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति ङकारः। "प्राङ्()मुखा" इति। टाप्। ननु च ङीपा मुक्ते "स्वाङ्गाच्चोपसर्जनात्" (४।१।५४) इति ङीषा भवितव्यम्? नैतदस्ति; आचार्यप्रवृत्तिर्ज्ञापयति--यत्रोत्सर्गापवादयोर्विभाषा तत्रापवादेन मुक्त उत्सर्गो न प्रवत्र्तत इति, यदयं "पीलाया वा" ४।१।११८ इति वाग्रहणं करोति। यद्यत्राणा विकल्पितेन मुक्ते "स्त्रीभ्यो ढक्" (४।१।१२०) (इति) ढकारेण भवितव्यं किं वाग्रहणेन? तस्मादस्माद्वाग्रहणादिदं ज्ञाप्यते-- यत्रोत्सर्गोऽपि विभाषा तत्रापवादेन मुक्त उत्सर्गो न प्रवर्तत इति। कथं

पुनरुत्सर्गो विभाषा? महाविभाषया। "प्राग्दीव्यतोऽण्" ४।१।८३ इत्यणुत्सर्गः, "स्त्रीभ्यो ढक्" ४।१।१२० इति ढगपवादः; तेन मुक्ते यद्यपि स्यादण्, किं वाग्रहणेन? नेत्येवं ब्राऊयात्, तत्रौत्सर्गिकाणो निवृत्त्यर्थम्। "इह न भवति" इत्यादिना प्रतिषेधापेक्षायाः फलं दर्शयति। "प्राक्क्रोडा, प्राग्जघना" इति। अत्र हि "न क्रोडादिबह्वचः" ४।१।५६ इत्यस्याप्यनुवृत्तेर्ङीष् न भवति। "प्राग्गुल्फा" इति। अत्राप्यसंयोगोपधा ४।१।६३, "वहश्च" ३।२।६४ इति ण्विः, ण्वेः सर्वापहारी लोपः, प्रत्ययलक्षणेन "अत उपधायाः" ७।२।११६ इति वृद्धिः, ङीष्, "वाह ऊठ्" ६।४।१३२ इति संप्रासरणसंज्ञको वकारस्योठ् भवति; "वसोः सम्प्रसारणम्" ६।४।१३१ इत्यतः सम्प्रसारणानुवृत्तेः। ठकारः "एत्येधत्यूठसु" ६।१।८६ इति विशेषणार्थः। "सम्प्रसारणाच्च" ६।१।१०४ इति पररूपत्वम्, "एत्येधत्यूठ्सु" ६।१।८६ इति पूर्वपदाकारेण सैहकादेशो वृद्धिः॥

बाल-मनोरमा

दिक्पूर्वापदान्ङीप् ५०८, ४।१।६०

दिक्पूर्वपदान्ङीप्। दिक्पूर्वपदं यस्येति विग्रहः। स्वाङ्गादित्यनुवर्तते। प्रातिपदिकादिति च।"अन्यतो ङीषि"त्यतो ङीषित्यनुवृत्तं षष्ठ()आ विपरिणम्यते। तदाह--दिक्पूर्वेत्यादिना। प्राङ्मुखीति। प्राक् मुखं यस्या इति विग्रहः। ङीषो ङीब्विधेः फलमाह--आद्युदात्तं पदमिति। ङीपः पित्त्वादनुदात्तत्वे बहुव्रीहिप्रकृतिस्वरेणाद्युदात्तत्वम्। ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वं स्यादित्यर्थः। नच स्वतन्त्रो ङीबेव विधीयतामिति वाच्यं, तथा सति प्राग्गुल्फेत्यादावपि "असंयोगोपधा"दिति निषेधं बाधित्वा ङीप्प्रसङ्गात्। ङीषो ङीबादेशविधौ तु "स्वाङ्गाच्चोपसर्जनादसंयोगोपधा"दिति विहितङीषो ङीब्विधानान्न दोषः। "असंयोगोपधा"दित्यस्यानुवृत्त्यङ्गीकारे तु प्रतिपत्तिगौरवमिति भावः।

तत्त्व-बोधिनी

दिक्पूर्वपदान्ङीप् ४५८, ४।१।६०

ङीषो ङीबादेश इति। "अन्यतो ङी"षित्यतो ङीषित्यनुवर्तते। "दिक्पूर्वपदा"दिति पञ्चम्या "ङी"षिति प्रथमायाः षष्ठी कल्प्यत इति भावः। यदि तु स्वतत्रो ङीप्स्यात्तर्हि "प्राग्गुल्फा" "प्राक्रोडे"त्यत्रापि प्रसज्येत, पूर्वोक्ताऽसंयोगोपधादित्यस्य निषेधानां चानुवृत्तौ प्रतिपत्तिगौरवमिति भावः। [प्राङिति।"निपाता आद्युदात्ताः"इति पूर्वपदे उदात्ते सति "बहुव्रीहौ प्रकृत्या पूर्वपद"मिति पूर्वपदप्रकृतिस्वरे सिद्धे ङीष् प्रत्ययस्वरेणोदात्त इति सेषनिघातः स्यात्, तन्माभूदिति ङीषो ङीबनुदात्तो विधीयत इति प्राङ्गुखीति पदमाद्युदात्तमिति भावः]

---

सूत्रम्

काशिका-वृत्तिः

वाहः ४।१।६१

ङीषेव स्वर्यते, न ङीप्। वहेरयं ण्विप्रत्ययान्तस्य निर्देशः। सामाथ्र्यात् तदन्तनिधेर् विज्ञानम्। बहन्तात् प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति। दित्यौही। प्रष्ठौही।

बाल-मनोरमा

वाहः ५०९, ४।१।६१

वाहः। "वाह" इति पञ्चम्यन्तं प्रातिपदिकादित्यनुवृत्तस्य विशेषणं, तदन्तविधिः। तदाह--वाहन्तादिति। ङीषेवानुवर्तत इति। "अन्यतो ङीष् इत्यत" इति शेषः। न ङीबिति। "दिक्पूर्वपदात्" इति पूर्वसूत्रे संनिहितमपि ङीब्ग्रहणमिह नानुवर्तते, अस्वरितत्वादित्यर्थः। स्वरे विशेषः। दित्यौहीति। गवां तावत् षण्मासात्मकमेकैकं वयः। "गर्भाश्च मे वत्साश्च मे"

इत्यनुवाके अनुक्रान्तानि वयांसि। तत्र तृतीयं वयो दित्यशब्देनोच्यते, इति यजुर्वेदभाष्ये, भवस्वामिधूर्तस्वाम्यादिकृतकल्पभाष्येषु च स्पष्टम्। दित्यं वहतीति विग्रहे "च्छन्दसि सहः", "वहश्चे"ति ण्विः, उपधावृद्धिः, उपपदसमासः। दित्यवाहशब्दात् ङीष्। "वाह ऊठ्"। "एत्येधत्यूठ्सु " इति वृद्धिः, दित्यौहीति रूपम्। ण्विप्रत्ययस्य छन्दोमात्रविषयत्वाद्वेदवाक्यमुदाहृतम्। सोके तु वाहयतेः क्विपि, वाहशब्दात् ङीषि, दित्यौहीति रूपमस्ति। वैदिकप्रक्रियायामुपन्यसनीयमेप्येतत्सूत्रमेतदर्थमिहोपन्यस्तम्।

तत्त्व-बोधिनी

वाहः ४५९, ४।१।६१

वाहः। ण्विप्रत्ययान्तस्य वहेरनुकरणमिदम्। "वहश्चे"त्यनेन कर्मण्युपपद एव वहेर्ण्विप्रत्ययविधानात्केवलस्य संभवो नास्तीति सामर्थ्यात्तदन्तविधिरित्यभिप्रेत्याह--वाहन्तादिति। न ङीबिति। अस्वरितत्वादिति भावः। दित्यौहीति। ङीषि भसंज्ञायां "वाह ऊठ्", "संप्रसारणाच्च"इति पूर्वरूपम्। "एत्येधत्यूठ्सु"इहि वृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

सख्यशिष्वी इति भाषायाम् ४।१।६२

सखी अशिश्वी इत्येतौ शब्दौ ङीषन्तौ भाषायां निपात्येते। सखीयं मे ब्राह्मणी। न अस्याः शिशुरस्ति इति अशिश्वी। भाषायाम् इति किम्? सखा सप्तपदी भव। अशिशुम् इव मामयं शिशुरभिमन्यते।

न्यासः

सख्यशि�आईति भाषायाम्। , ४।१।६२

"सखी" इति। सखिशब्दान्ङीप्। नास्याः शिशुरस्तीति वाक्यशेषेण बहुव्रीहिं दर्शयन्नशिशुशब्दो यो बहुव्रीहिस्तस्याशि()आईति निपात्यते। न तु तत्पुरुषो यस्तस्येति दर्शयति। तत्पुरुषे हि न शिशुरशिशुरित्येवं भवति। "सखा" इति। "अनङ् सौ" ७।१।९३ इत्यनङादेशः, "नोपधायाः" ६।४।७ "सर्वनामस्थाने च" ६।४।८ इति दीर्घः। "सख्यशिशुभ्याम्" इत्येवं वक्तव्ये यन्निपातनं क्रियते, तस्यैतत् प्रयोजनम्-- तुल्यश्रुतेः शब्दान्तरस्यापि यथा स्यात्, सह खेन या वत्र्तते सा सखीति॥

बाल-मनोरमा

सख्यशि�आईति भाषायाम् ५१०, ४।१।६२

सख्यशि()आई। सखिशब्दादशिशुशब्दाच्च स्त्रियां ङीष् निपात्यते भाषायाम्। सौकिकप्रयोगो-भाषा। तर्हि वेदे नैव स्यादित्यत आह--इतिशब्द इति। "प्रकारे" इत्यनन्तरं "वर्तते" इति शेषः। प्रकारः=सजातीयता। भाषायामित्यस्येति। सच "इति"शब्दो भाषायामित्यस्यानन्तरं संनिवेश्यते इत्यर्थः। ततश्च भाषायां वेदे चेति फलितम्। नन्वेवं सति भाषायामिति व्यर्थमित्यत आह--तेनेति। भाषाग्रहणेन भाषायां सर्वत्र भवति, वेदे तु क्वचिदिति लभ्यत इत्यर्थः। सखीति। सखिशब्दान्ङीषि "यस्येति चे"ति खकारादिकारस्य लोपः। भाषायां किम्?। "सखा सप्तपदा भव" अशि()आईति। न विद्यते शिशुर्यस्या इति विग्रहः। अशिशुशब्दान्ङीषि उकारस्य यण्। "अशि()आई शिशुना विना" इत्यमरः। छन्दस्यपि क्वचिदित्यस्योदाहरणमाह--आ धेनवो धुनयन्तामशि()आईरिति। अशि()आईशब्दाज्जसि "दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घनिषेधाऽभावश्छान्दसः।

तत्त्व-बोधिनी

सख्यशि�आईति भाषायाम् ४६०, ४।१।६२

सख्याशि()आईति। सखिशब्दादशिशुशब्दाच्च ङीष् निपात्यते। न विद्यते शिशुर्यस्याः सा अशि()आई। भाषायां किम्()। सखा सप्तपदी भव।

---

सूत्रम्

काशिका-वृत्तिः

जातेरस्त्रीविषयादयौपधात् ४।१।६३

जातिवाचि यत् प्रातिपदिकं न च स्त्रियाम् एव नियतम् अस्त्रीविषयम् अयकारोपधं च तस्मात् स्त्रियां ङीष् प्रत्ययो भवति। आकृतिग्रहणा जातिर् लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्गाह्या गोत्रं च चरणैः सह। कुक्कुटी। सूकरी। ब्राह्मणी। वृषली। नाडायनी। चारायणी। कठी। बह्वृची। जातेः इति किम्? मुण्डा। अस्त्रीविषयातिति किम्? मक्षिका। अयोपधातिति किम्? क्षत्रिया। योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणम् अप्रतिषेधः। हयी। गवयी। मुकयी। मत्सी। मनुषी।

लघु-सिद्धान्त-कौमुदी

जातेरस्त्रीविषयादयोपधात् १२७२, ४।१।६३

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात्। तटी। वृषली। कठी। बह्वृची। जातेः किम्? मुण्डा। अस्त्रीविषयात्किम्? बलाका। अयोपधात्किम्? क्षत्रिया। (योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः)। हयी। गवयी। मुकयी। हलस्तद्धितस्येति यलोपः। मनुषी। (मत्स्यस्य ङ्याम्)। यलोपः। मत्सी॥

न्यासः

जातेरस्त्रीविषयादयोपधात्। , ४।१।६३

जासेः प्रातिपदिकादिति सामानाधिकरण्यानुपपत्तेर्जातिवाचि यत् प्रातिपदिकं तदिहाभिधानेऽभिधेयोपचारं कृत्वा जातिशब्देनोक्तम्, अत एव वृत्तावाह-- "जातिवाचि यत् प्रातिपदिकम्" इति। "अस्त्रीविषयात्" इति। अनन्यत्राभावेऽपि विषयशब्दो वत्र्तते, अत एव वृत्तावाह-- "न चेत् स्त्रियामेव नियतम्" इति। न स्त्रियामेव यस्य भावः, किन्तु स्त्रियां चान्यत्र च तदस्त्रीविषयम्। जातिरित्युच्यते, केयं जातिर्नामेति प्रश्नस्योत्तरमाह--"आकृतिग्रहणा" इत्यादि। आक्रियते व्यज्यतेऽनयेत्याकृतिः = संस्थानमुच्यते। तथा हि-- दुराकृतिः दुःसंस्थानमुच्यते, स्वाकृतिश्च सुसंस्थानम्। गृह्रतेऽनेनेतित ग्रहणम्, करणे ल्युट्। आकृतिग्र्रहणं यस्याः साऽऽकृतिकग्रहणा, संस्थानव्यङ्ग्येति यावत्। ननु चाकृतिशब्दसामानाधिकरण्याद्()ग्रहणशब्दस्य स्त्रियां वृत्तिरिति "टिड्ढाणञ्" ४।१।१५ इति ङीपा भवितव्यम्, तदन्तेन समासे कृते "नद्यृतश्च" ५।४।१५३ इति कप्, ततश्चाकृतिग्रहणीकेति प्राप्नोति? नैष दोषः; ग्रहणशब्दो हि पूर्व करणसामान्ये व्युत्पादितः, पश्चाद्विशेषेणाभिसम्बध्यते। तत्र पदान्तरसन्निधाने यस्तस्य लिङ्गविशेषसम्बन्धः, स च बहिरङ्ग इति सामान्यलिङ्गेनैवान्तरङ्गेण वाक्यं कृत्वा समासः क्रियते, यथा-- "मुखनासिकावचनोऽनुनासिकः" १।१।८ इत्यत्र। तदनेन लक्षणेन सामान्यरूपा गोत्वादिलक्षणा जातिरित्युक्तं भवति। गोत्वादयो हि विषाणादिमत्संस्थानव्यङ्ग्यत्वादाकृतिग्रहणाः। एतेन लक्षणेन ब्राआह्मत्वादयो जातिविशेषा न संगृहीताः। न हि ते संस्थानव्यङ्ग्याः; तदाश्रयस्य संस्थानस्याभिन्नत्वात्। यादृशं हि संस्थानं ब्राआह्मणस्य क्षत्रियादेः संस्थानमपि तादृशमेवेत्यतो द्वितीयं लक्षणमाह-- "लिङ्गानाञ्च" इत्यादि। यापि सर्वाणि लिङ्गानि न भजति साप्यसंस्थानव्यङ्ग्यापि जातिः, यथा-- ब्राआह्णत्वादिः। सा हि स्त्रीलिङ्गं पुंलिङ्गं च भजति-- ब्राआह्णएः,

ब्राआह्रणीति, न तु नपुंसकलिङ्गमित्यसर्वलिङ्गभाग्भवति। ब्राआह्रणत्वादिष्वप्युदेशाभिव्यङ्ग्यताऽश्रयणीया, अन्यथा देवदत्तः, देवदत्तेति लिङ्गद्वयं भजति, अत्रापि जातित्वं स्यात्। न चायं जातिशब्द इष्यते, किं तर्हि? संज्ञाशब्दः। विध्यर्थञ्चेदम्। अतः सर्वलिङ्गभाजोऽपि पूर्वेण लक्षणेन जातित्वमस्ति, यथा--तटः,तटी, तटमिति। सर्वलिङ्गं भजत इति सर्वलिङ्गभाक्, कर्मण्युपपदे "भजो ण्विः"३।२।६२ इति ण्विः। ननु च लिङ्गापेक्षया सर्वशब्द उपपदे भजो ण्विप्रत्ययो न प्राप्नोति, उपपदाश्रयत्वा, उपपदसमासश्च असमर्थत्वात्? नैष दोषः; यथैव हि देवदत्तस्य गुरुकुलमित्यत्रासामर्थ्येऽपि समासो भवति, गमकत्वात्; तथैवमुभयमपि भविष्यतीति। सा च जातिः-- "सकृदाख्यातनिग्र्राह्रा" इति। सकृत् = एकवारम्, आख्याता = उपदिष्टा, निग्र्राह्रा = निश्चयेन ग्राह्रा। एतेन जातिधर्मानेकत्वनित्यत्वप्रत्येकपरिसमाप्तित्वलक्षणान् दर्शयति। सकृदेवारं यस्मात् कृष्णे धवले वा गोपिण्ड आख्याता तद्विलक्षणेऽपि गोपिण्डे निग्र्राह्रा, तस्मादेव नित्या प्रत्येकं परिसमाप्ता च। यदि ह्रेका न स्यात्, सकृदाख्याता गौरिति पिण्डान्तरे न गृह्रेत। यदि च नित्या न भवेत्, पिण्डविनाशे तस्या अपि विनाशात् पिण्डान्तरेण न गृह्रेत। यदि च प्रत्येकं सर्वात्मना परिसमाप्ता न स्यात्, तस्मिन्नपि तावत् पिण्डे सर्वात्मना न गृह्रेत यत्राख्याता, किं पुनः पिण्डान्तरे ! अंशेन हि परिसमाप्तौ सत्यामंश एव परिगृह्रते, न जातिः। नजात्यंशो जातिर्भवति, अनेकत्वप्रसङ्गात्। तृतीयं जातिलक्षममाह-- "गोत्रञ्च" इत्यादि। "अपत्यं पौत्रप्रभृति गोत्रम्" ४।१।१६२ इति गोत्रं पारिभाषिकम्। इह तु लौकिकमपि गोत्रमपत्यमात्रं गृह्रते। चरणमध्ययनभेदेनानेकधा। गोत्रञ्च चरणैः सह जातिर्भवति। गोत्रं नाडायनादि। यद्यपि नाडायनतादि सामान्यं गोत्रवदेव कल्प्यते, तथापि तत् संस्थानव्यङ्ग्यं न भवति। सर्वलिङ्गभावक्त्वाच्च-- नाडायनः पुमान्, नाडायनी स्त्री, नाडायनं नपुंसकमिति। अतो गोत्रस्य जातित्वप्रतिपादनसिद्धये गोत्रञ्चेत्युक्तम्। चरणशब्दस्त्वध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात्। क्रियाशब्द एव जातिशब्द इत्यतस्तदर्थस्य जातित्वप्तिपादनाय चरणैः सहेत्युक्तम्। "कुक्कुटी, शूकरी मयूरी" इति। आकृतिग्रहणाया जातेरुदाहरणम्। "ब्राआह्रणी, वृषली" इति। असर्वलिङ्गभाजः। "नाडायनी, चारायणी" इति। गोत्रलक्षणायाः। नडचरशब्दयोः "नडादिभ्यः फक्" ४।१।९९ इति फगपत्येऽर्थे। "कठी, बह्रृची" इति। चरणलक्षणयाः। "मुण्डा"इति। मुण्डगुणयोगात्। मुण्डो भवत्येष इत्यस्त्रीविषयः-- मुण्डो देवदत्त इति; पुरुषेऽपि मुण्डशब्दस्य वृत्तेः। न तु जातिशब्दः,किं तर्हि? गुणशब्दः।"मक्षिका" इति। सर्वदा स्त्रियामेव नियत्वात् स्त्रीविषयो मक्षिकाशब्दः। "क्षत्त्रिया" इति। गोत्रमिह जातिः। "क्षत्त्राद्धः" ४।१।१३८ इति गोत्रापत्ये घविधानादरुआवलिङ्गभाक्त्वाच्च जातित्त्वम्। "क्षत्त्रियः" इति च पुंस्यपि वृत्तेरस्त्रीविषयः क्षत्त्रियशब्दः। योपधस्तु-- "योपधप्रतिषेधे हयगवयमुकत्स्यमनुष्याणामप्रतिषेधः" इति। कथं पुनरेष लभ्यते? उत्तरसूत्रे चकास्यानुक्तसमुच्चयार्थत्वात्। तेन हि हयगवयादिभ्यो ङीष्विधानादयं प्रतिषेधो न प्रवत्र्तते। "मत्सी" इति। "सूर्यतिष्यागस्त्यमत्स्यानाम्" ६।४।१४९ इत यलोपः। "मनुषी" इति। "मनोर्जातावञ्यतौ षुक् च" ४।१।१६१ इति यत्प्रत्ययः, षुगागमश्च। जातित्वं च पुरनेषां हयगवयादीनामाकृतिग्रहणाद्वेदितव्यम्॥

बाल-मनोरमा

जातेरस्त्रीविषयादयोपधात् ५११, ४।१।६३

जातेरस्त्री। अर्थे कार्याऽसंभवाच्छब्दे कार्यं विज्ञायत इत्याह--जातिवाचीति। न च स्त्रियां नियतमिति। स्त्री विषयः=नियमेन वाच्या यस्या इति बहुव्रीहिणा स्त्रीविषयशब्दो नियतस्त्रीलिङ्गपरः। तथा च "अस्त्रीविषया"दित्यनेन अनियतस्त्रीलिङ्गादिति विवक्षितम्, नैयत्यलाभायैव विषयग्रहणम्। अन्यथा "अस्त्रिया" इत्येवावक्ष्यदिति भावः। ननु यदि "नित्यमेकमनेकानुगतं सामान्य"मिति तार्किकोक्ता जातिस्तर्हि शुक्लादिगुणस्य नित्यत्वैकत्वपक्षे शुक्लेत्यादावतिव्याप्तिः, औपगवी कठीत्यादावव्याप्तिश्च। "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः" इत्यादिस्मृत्या जननेन यत् प्राप्यते ब्राआह्रणत्वादि सा जातिश्चेद्युवत्वादावव्याप्तिः। तथा च युवतितरेत्यत्र "जातेश्चे"ति पुंवत्त्वनिषेधो न स्यादिति चेन्न, "आकृतिग्रहणा जातिः, लिङ्गानां च न सर्वभाक्।

सकृदख्यातनिग्र्राह्या, गोत्रं च चरणैः सह" इति बाष्योक्तत्रिविधजातेर्विवक्षितत्वादित्यभिप्रेत्य भाष्योक्तत्रैविध्यं प्रपञ्चयति--आकृतिग्रहणा जातिरिति। "प्रथमे"ति शेषः। आकृतिः= अवयवसंनिवेशविशेषः। गृह्यते अनेनेति ग्रहणं=व्यञ्जकम्। करणे ल्युट्, सामान्ये नपुंसकम्। आकृतिग्र्रहणं यस्या इति विग्रहः। उपसर्जनत्वात् "टिड्ढाणञि"ति ङीब्न। फलितमाह--अनुगतेति। सर्वासु घटादितत्तद्व्यक्तिषु एकरूपतत्तदाकारव्यङ्ग्येति यावत्। गृह्यते इति कर्मणि ल्युट्, आकृत्या ग्रहणा आकृतिग्रहणेति तु न व्याख्येयम्, "टिड्ढाणञ्िति ङीप्प्रसङ्गात्। तटीति। "तटं त्रिषु" इत्यमरः। जलसमीपप्रदेश आकृतिविशेषविशिष्टस्तटःष अतस्तटत्वमाकृतिव्यङ्ग्यत्वाज्जातिः, अतस्तटशब्दस्य जातिवाचित्वादिनियतस्त्रीलिङ्गत्वादयोपधत्वाच्च ङीषिति भावः। युवत्वादिकमप्याकृतिव्यङ्ग्यत्वाज्जातिरेव। अनेन प्रथमलक्षणेन अनुगताकारप्रत्ययसिद्धा तटत्वादिजातिरुक्ता।

नन्वेवं सति वृषलत्वादीनां जातित्वं न स्यात्, तदवयवसंनिवेशस्य ब्राहाह्मणादिसाधारणत्वेन वृषलत्वादीनां तद्व्यङ्ग्यत्वाऽभावादित्याशङ्क्याह-लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिग्र्राह्येति। "अन्या जाति"रिति शेषः। लिङ्गानामिति कर्मणी षष्ठी। सर्वाणि लिङ्गानि न भजते इत्यर्थः। निग्र्राह्येत्यस्य व्यक्त्यन्तरे उपदेशं विनापि सुगमेत्यर्थः, निरित्युपसपर्गवशात्। निग्र्राह्येत्यनन्तरम्-"अन्या जाति"रिति शेषः। फलितमाह--असर्वेति। एकस्यामिति। एकस्यां व्यक्तौ वृषल इत्युपदेशाद्व्यक्त्यन्तरे तदुपदेशं विनापि सुगमेति यावत्। लक्षणान्तरमिति। जात्यन्तमित्यर्थः। अन्यथोक्ततटत्वादिजातेरेव "आकृतिग्रहणा जातिः" इत्युक्तलक्षणादन्यदिदं लक्षणमिति स्यात्, नहीदं युज्यते, तटस्य सर्वलिङ्गत्वात्। वृषलीति। वृषलत्वं ह्यसर्वलिङ्गं, नपुंसकत्वाऽभावात्, एकस्यां व्यक्तौ वृषलत्वे उपदिष्टे सति तदपत्यसहोदरादिषु तदुपदेशं विना तस्य सुग्रहत्वात्सकृदाख्यातनिग्र्राह्यं चेति भावः। ब्राआह्मणत्वं तु पुत्रपौत्रादौ यद्यपि न सुगमं, ब्राआह्मणात्क्षत्रियायामुत्पन्नस्य ब्राआह्मणत्वाऽभावात्, तथापि पित्रादौ सुगममेव। एवं क्षत्रियत्वं वैश्यत्वं च तत्पित्रादावेव सुग्रहम्। सत्यन्तं किमिति। असर्वलिङ्गत्वे सतीति किमर्थमित्यर्थः। शुक्लेति। "बलाके"ति शेषः। "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति कोशाद्विशेष्यनिघ्नतया त्रिलिङ्गत्वादसर्वलिङ्गत्वाऽभावाच्छुक्लत्वं न जातिः। अवयवसंस्थानव्यङ्ग्यत्वाऽभावान्न पूर्वलक्षणमपि। देवदत्तेति। संज्ञात्वेन नपुंसकलिङ्गहीनतया असर्वलिङ्गत्वेऽपि न सकृदाख्यातनिग्र्राह्यत्वमिति भावः। अनेन द्वितीयलक्षणेन जननिमित्तकब्राआह्मणत्वादिजातिसङ्ग्रहः।

नन्वेवमपि औपगवी कठीत्याद्यसङ्ग्रहः, औपगवत्वादेरनुगतसंस्थानव्यङ्ग्यत्वाऽभावात्, सर्वलिङ्गत्वाच्चेत्यत आह--गोत्रं च चरणैः सहेति। "जाति"रित्यनुषज्यते। गोत्रशब्देन अपत्यं विवक्षितं, नतु पौत्रप्रभृतीति परिभाषिकं, व्याख्यानात्। अत एवानन्तरापत्यप्रत्ययान्ते अवन्तीत्यत्र जातिप्रयुक्तो ङीषिति "अनुपसर्जना"दिति सूत्रस्थभाष्यं सङ्गच्छते। शब्देन्दुशेखरे तु पारिभाषिकमेव गोत्रमिह विवक्षितमिति प्रपञ्चितम्। चरणशब्दस्तु शाखाध्येतरि प्रसिद्धः। चरणैः सह गोत्रं जातिरिति लभ्यते। गोत्रं चरणाश्च जातिरिति यावत्। यद्यपि अनुगताकारप्रत्ययवेद्या जननविशेषप्रयुक्ता चेति द्विविधैव जातिर्लोके प्रसिद्धा। तत्र गोत्रचरणा नान्तर्भवन्ति। तथापि "()त()स्मस्तच्छब्दस्तद्वाचिषु शब्देषु तत्कार्यार्थ" इत्यभिप्रेत्य व्याचष्टे--अपत्यप्रत्ययान्त इत्यादिना। गोत्रमुदाहरति--औपगवीति। उपगोरपत्यं स्त्रीत्यर्थे "तस्यापत्य"मित्यणि "टिड्ढाण"ञिति ङीपं बाधित्वा परत्वादनेन ङीष्। स्वरे भेदः। चरममुदाहरति--कठीति। कठेन प्रोक्तमधीयानेत्यर्थः। कलापीति वैशम्पायनान्तेवासित्वनिबन्धनो णिनिः। "कठचरकाल्लु"गिति तस्य लुक्। ततः "तदधीते"इत्यणः "प्रोक्ताल्लु"गिति लुक्, ततो ङीष्। चरणविषये उदाहरणान्तरमाह--वह्वृचीति। बहव ऋचोऽध्येया यस्या इति विग्रहः। "ऋक्पूरब्धूःपथामानक्षे" "अनृचबह्वृचावध्येतर्येव" इत्यच्समासान्तः, ततो ङीष्। "पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवचनं तथा।" इति यमादिस्मृतिः। ननु "लिङ्गानां च न सर्वभाक्" इति "गोत्रं च चरणैः सहे"ति च जातिलक्षणे ब्राआह्मणीति परित्यज्य वृषली औपगवीत्येव कुत उदाह्यतमित्यत

आह--ब्राआह्नणीत्यत्रेति। ब्राह्नणोऽपत्यमित्यर्थे "तस्यापत्यम्" इत्यणि "ब्राआह्नओऽजातौ" #इति टिलोपाऽभावे आदिवृद्धौ ब्राआह्नणशब्दः। स्त्रियां तु जातिलक्षणं ङीषं बाधित्वा "शाङ्र्गरवाद्यञो ङी"निति ङीन्, शाङ्र्गरवादिगणे तत्पाठस्य निरवकाशत्वादिति भावः। तदेवं जातिस्वरूपमुक्त्वा ङीष्विधौ तद्ग्रहणस्य प्रयोजनं पृच्छति--जातेःकिमिति मुण्डेति। मुण्डत्वं नाम विलुप्तसर्वकेशत्वम्। तत्तु नाकृतिव्यङ्ग्यं, केशदशायामपि तदाकृतेः सत्त्वात्। नापि "लिङ्गानां चे"ति लक्षणलक्षितं, सर्वलिङ्गत्वात्। नापि गोत्रचरणान्तर्भूतं, अतो न जातिरिति भावः। अस्त्रीविषयात्किमिति। विषयग्रहणलभ्यं नियतत्वं प्रव#एश्य अनियतस्त्रीलिङ्गादिति किमर्थमित्यर्थः। बलाकेति। पक्षिवर्गे "बलाका विसकण्ठिका" इत्यमरः। बलाकात्वस्य आकृतिव्यङ्ग्यतया जातित्वेऽपि नियतस्त्रीलिङ्गत्वान्न ङीषित्यर्थः। यद्यपि बलां कायतीति यौगिकत्वे त्रिलिङ्गत्वमस्ति, तथापि प्रवृत्तिनिमित्तैक्यस्त्रीलिङ्गान्यलिङ्गरहितभिन्नादित्यर्थो विवहितम्। क्षत्रियेति। "लिङ्गानां च न सर्वभा"गिति जातिलक्षणसत्त्वेऽपि योपधत्वान्न ङीषिति भावः।

योपधप्रतिषेधे हयगवयेति। वार्तिकमिदम्। हयादानां योपधत्वेऽपि ङीष् वाच्य इत्यर्थः। हयीति। अ()आआ प्रसिद्धा। गवयीति। गोसदृशश्चतुष्पाज्जातिविशेषः। मुकयीति। चतुष्पाज्जातिविशेषः। हल इति। मनुष्यशब्दात्स्त्रियां ङीषि मनुष्य-ई इति स्थिते "हलस्तद्धितस्ये"ति यकारस्य लोपे "यस्येति चे"त्यकारलोपे मनुषीति रूपमित्यर्थः। "हलस्तद्धितस्ये"ति लोपप्रवृत्तये यकारस्य तद्धितावयवत्वं दर्शयितुमाह--मनोर्जाताविति। तद्धिताधिकारेऽपत्याधिकारस्थमिदं सूत्रम्।

मनुशब्दादपत्येऽञ्यतौ प्रत्ययौ स्तः, प्रकृतेः षुक्च, प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामिति तदर्थः।मात्स्यशब्दान्ङीषि यकारस्य तद्धितावयवत्वाऽभावादप्राप्ते लोपे आह--मत्स्यस्य ङ्यामिति। "सूर्यतिष्ये"ति सूत्रे वार्तिकमिदम्। मत्स्यस्यावयवस्य यकारस्य लोपः स्यान्ङ्यामेवेति नियमार्तमिदम्। मत्सीति। ङीषि यकारलोपे "यस्येति चे"ति लोप इति भावः। ङ्यांकिम्?। मात्स्योऽवतारः।

तत्त्व-बोधिनी
जातेरस्त्रीविषयादयोपधात् ४६१, ४।१।६३

जातेरस्त्री। जात्या स्ववाचकशब्दो लक्ष्यते, अर्थे कार्याऽसंभवात्, स्वरूपं तु न गृह्नते, अस्त्रीविषयादित्यादेर्वैय्थ्र्यापत्तेरित्याशयेनाह--जातिवाचि यदिति।

आकृतिग्रहणा जाति।आकृतिग्रहणेति। "ग्रहण"मिति करणे ल्युट्। सामान्ये नपुंसकम्। आकृतिग्र्रहणं यस्या इति बहुव्रीहिस्तदेतत्फलितमाह---अनुगतसंस्थानेत्यादि। वृषले ब्राआह्नणादिव्यावृत्तसंस्थानाऽभावादव्याप्तिरिति लक्षणान्तरमाह----लिङ्गानां चेत्यादि। चकारो भिन्नक्रमः "निग्र्रह्रे"त्यस्यानन्तरं बोध्यः।"लिङ्गाना"मिति कर्मणि षष्ठी। न सर्वभागिति। सर्वाणि लिङ्गानि न भजतीत्यर्थः। सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वाद्भजो ण्विः समासश्च भवत्येवेति नात्र सामथ्र्याऽभावः शङ्क्यः। वृषलीति। एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विनापि तस्य सुग्रहत्वादिति भावः देवदत्तेति।

लिङ्गानां च न सर्वभाक्-सकृदाख्यातनिग्र्रह्रा। नन्वत्र परिमाणभेदेन द्रव्यभेदाभ्युपगमे स्यादेवातिप्रसङ्गः, एकस्यां व्यक्तौ देवदत्तत्वे कथिते व्यक्त्यन्तरे कथनं विनापि तस्य सुग्रहत्वात्। मैवम्,--परिमाणभेदेन द्रव्यभेदस्य प्रामाणिकैरनभ्युपगमात्। अभ्युपगमे वा समानकालतया व्यक्त्यान्तरस्य विशेषणात्। तथा च यस्यां व्यक्तौ देवदत्तत्वं कथ्यतेतत्समकालमन्या देवदत्तव्यक्तिरप्रसिद्धेति न देवदत्तत्वं जातिः। वृषलत्वादिस्तु भवत्येव, तदीयपितृभ्रात्रादिषु

तस्य सुग्रहत्वादिति दिक्। उक्तलक्षणद्वयानाक्रान्तत्वात्तृतीयं लक्षणमाह--।

गोत्रं च चरणैः सह। गोत्रं च चरणैः सहेति। अपत्याधिकारादन्यत्र लौकिकं गोत्रम्। चरणः--शाखाध्येता। तदेतत्फलितमाह---अपत्यप्रत्ययान्त इति। अत्र व्याचख्युः---"नाडायनं बह्वृचमिद"मिति नपुंसकप्रयोगदर्शनात्सर्वलिङ्गौ गोत्रचरणौ, अतः पृथग्लक्षणं कृतम्। तेनात्र "लिङ्गानां च न सर्वभा"गिति द्वितीयलक्षणेन गतार्थता न शङ्क्येति। औपगवीति। अण्णन्तलक्षणं ङीपं परत्वादयं बाधते। एवं चापत्याधिकारे "औपगवी"ति प्रतीकमुपादाय "टिड्ढाण"ञित्यादिना ङीबिति व्याचक्षाणा उपेक्ष्या इथि भावः। केचित्तु अपत्याधिकारादत्तुरत्रैव लौकिकं गोत्रं गोत्रशब्देन गृह्नते नान्यत्रेति पारिभाषितगोत्रप्रत्ययान्त एव जातिकार्यं लभते न त्वपत्यप्रत्ययान्तः। "गोत्रं च चरणैः सहे"ति वचनस्यापत्याधिकरात्पूर्वभावित्वात्। तथा चापत्यार्थे औपगवीति ङीबन्त इथि प्राचामुक्तिः सम्यगेवेत्याहुः। कठीति। कठेन प्रोक्तमधीयाना [वा]। "कलापिवैशंपायनान्तेवासिभ्यश्चे"ति वैशंपायनान्तेवासित्वाण्णिनिः। तस्य "कठचरकाल्लु"गिति लुक्। अध्येत्रणस्तु "प्रोक्ताल्लु"गित्यनेन। बह्वृचीति। बह्व्य ऋचोऽध्येतव्या यया सेति बहुव्रीहिः। अनृचबह्वृचावध्येतर्येवे"ति वचनात् "ऋक्पूरब्धू"रिति अप्रत्ययः समासान्तः। यद्यपि स्त्रीणामध्ययनं प्रतिषिद्धम्, तथापि पुराकल्पे ह्वेतदासीत्। तदाह यमः--"पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवचनं तथा।"इति। यद्वा---"मा नामाऽध्यगीष्ट, तद्वश्यत्वात्ताच्छब्द्यं भविष्यति, यथाऽनधीयानेऽपि माणवके। ब्राआह्मणीत्यत्रेति। एवं च प्राचो ङीबुदाहरणं प्रामादिकमिति भावः। मुण्डेति। मुण्डगुणयोगान्मुण्डा। "बलाका बिसकण्ठिका"। क्षत्त्रियेति। "क्षत्राद्धः"इत्यपत्ये घविधानाद्गोत्रलक्षणा, "लिङ्गानां च न सर्वे"त्यादिलक्षणा वा जातिः।

योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः। योपधप्रतिषेध इत्यादि। गौरादिषु गवादय इदानीन्तनैः प्रक्षिप्ता इत्यस्मादेव वार्तिकाद्विज्ञायत इति कैयटादयः।

---

सूत्रम्

काशिका-वृत्तिः

पाककर्णपर्णपुष्पफलमूलवालौत्तरपदाच् च ४।१।६४

पाकाऽद्युत्तरपदात् जातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् प्रत्ययो भवति। स्त्रीविषयत्वादेतेषां पूर्वेण अप्राप्तः प्रत्ययो बिधीयते। ओदनपादी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोबाली। पुष्पफलमूलौत्तरपदात् तु यतो नेष्यते तदजादिषु पठ्यते, सत्प्राक्काण्डप्रान्तशतैकेभ्यः पुष्पात्, सम्भस्त्राजिनशणपिण्डेभ्यः फलात्, मूलान्नञः इति।

न्यासः

पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च। , ४।१।६४

"ओदनपाकी" इति। ओदनस्य पाक इति षष्ठीसमासः। व्युत्पत्तिमात्रार्थं त्वसौ क्रियते, न त्ववयवार्थो विद्यते। समुदाय एव ह्ययं कस्याञ्चिज्जातौ वत्र्तते। एवं "शह्कुकर्णी" इत्यदिष्वपि वेदितव्यम्॥

बाल-मनोरमा

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्चा ५१२, ४।१।६४

पाककर्ण। "जातेरस्त्रीविषया"दिति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह--स्त्रीविषयादपीति।

नियतस्त्रीलिङ्गादपीत्यर्थः। नियतस्त्रीलिङ्गत्वात्पूर्वेणाऽप्राप्तिरिति भावः। जातिवाचित्वं दर्शयितुमाह--ओषधिविशेष रूढा इति। अवयवव्युत्पत्तिरहिता इत्यर्थः।

तत्त्व-बोधिनी

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ४६२, ४।१।६४

पाककर्ण। "जाते"रित्यनुवृत्तेर्नेह--बहुपुष्पा बहुफलाशाखा। एवं हि पूर्ववर्णे सिद्धे किमनेन सूत्रेणेत्यशङ्क्याह--स्त्रीविषयादपीति।

तत्त्व-बोधिनी

इतो मनुष्य जातेः ४६३, ४।१।६४

इतो मनुष्य। इतः किम्()। विट्। दरद्। विटशब्दात् "जनपदशब्दात्क्षत्त्रि#आदञ्ित्यञ्। दरच्छब्दात्तु "द्व्यञ्मगदे"त्यण्। तयोः "अतश्चे"ति लुक्। यस्तु वैश्यपर्यायो विट्शब्दः सोऽपि प्रत्युदाहरणमित्याहुः। दाक्षिति। "अत इञ"। गोत्रलक्षणा जातिः। अदन्तत्वाऽभावादप्राप्तो ङीष् विधीयते। योपधादपीति। "जाते"रित्यनुवर्तमाने पुनर्जातिग्रहणादिति भावः। उदमेयस्येति। उदकं मेयं यस्य उदमेयः। "उदकस्योदः संज्ञाया"मित्युदादेशः। इञ उपसङ्ख्यानमजात्यर्थम्। सौतङ्गमी। निर्वृत्ताद्यर्थे "वुञ्छ"णादिसूत्रेण सुतङ्गमादिभ्य इञ्। न चायमिञन्तो जातिः।

---

सूत्रम्

काशिका-वृत्तिः

इतो मनुस्यजातेः ४।१।६५

इकारान्तात् प्रातिपदिकात् मनुष्यजातिवाचिनः स्त्रियां ङीष् प्रत्ययो भवति। अवन्ती। कुन्ती। दीक्षी। प्लाक्षी। इतः इति किम्? विट्। दरत्। मनुष्यग्रहणं किम्? तित्तिरिः। जातेः इति वर्तमाने पुनर् जातिग्रहणं योपधादपि यथा स्यात्। औदमेयी। इञ उपसङ्ख्यानम् अजात्यर्थम्। सौतङ्गमी। मौनचित्ती। सुतङ्गमादिभ्यश्चातुरर्थिक इञ् न जातिः।

लघु-सिद्धान्त-कौमुदी

इतो मनुष्यजातेः १२७३, ४।१।६५

ङीष्। दाक्षी॥

न्यासः

इतो मनुष्यजातेः। , ४।१।६५

"अवन्ती, कुन्ती" इति। अवन्तिकुन्तिशब्दाभ्यामपत्येऽर्थे "वृद्धेत्कोशलाजादाञ्ञ्यङ्" ४।१।१६९ "स्त्रियामवन्तिकुन्तुकुरुभ्यश्च" ४।१।१७४ इति तस्य लुक्, ततो ङीष्। "दाक्षी,प्लाक्षी"इति। "अत इञ्" ४।१।९५। सर्वत्र गोत्रं हि जातिः। "विट्, दरत्" इति। विशोऽपत्येऽर्थे "जनपदशब्दात्क्षत्त्रियादञ्" ४।१।१६६। दरदो द्वयञ्मगधादिसूत्रेणाण् ४।१।१६८, "अतश्च" ४।१।१७५ इति तयोः स्त्रियां लुक्। इहापि गोत्रं जातिः। "तित्तिरिः" इति। अत्राकृतिग्रहणा जातिः। "उदमेयी" इति। "अत इञ्"४।१।९५ गोत्रमिह जातिः। "इञ उपसंख्यानम्" इति। इञन्तान्ङीष उपसंख्यानं कत्र्तव्यमित्यर्थः। किमर्तम्? अजात्यर्थम्। अजातिवाचिनोऽपीञन्ताद्यथा स्यात्। तत्रेदं प्रतिपादनम्-- "इतः" इति योगविभागोऽत्र क्रियते, तेनेञन्तादजातिवाचिनोऽपि भविष्यतीति। ततः "मनुष्यजातेः" इत्ययं द्वितीयो योगः

पूर्वयोगस्यानित्यत्वज्ञापनार्थः।तेन मुष्यजातौ नित्यम्, अन्यत्र तु यथादर्शनम्। क्वचिदेव न सर्वत्र। "सौतङ्गमी" इत्याद्युदाहरणम्। स्यादेतत्-"अत इञ्" ४।१।९५ इति गोत्रापत्य एवात्रेञ् विहितः, गोत्रञ्च जातिरेव, तत् किमुच्यते--इञ उपसंख्यानमजात्यर्थमिति? अत आह-- "सुतह्गमादिभ्यः" इत्यादि। सुतङ्गमेन निर्वृता नगरीति "वुञ्छण्" ४।२।७९ इत्यादिना सुतङ्गमादित्वादिञ्। "इतः" इत तपकरणं दीर्घनिवृत्त्यर्थम्। तेन अवन्तीशब्दादयं न भवति। अवन्तिमिच्छति, "सुप आत्मनः क्यच्" ३।१।८, "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः, अवन्ती य इत स्थिते क्विप्, "अतो लोपः" ६।४।४८ इत्यकारलोपः। पूर्वं लोपग्रहणादपृक्तलोपात् प्राक् "लोपो व्योर्वलि" ६।१।६४ इति यलोपः, पश्चात् "वेरपृक्तस्य" ६।१।६७ इति वकारस्य। ततः अवन्ती इति स्थिते यदि तपरकरणं न क्रियेत, ततोऽस्मादपि स्यात, ततः "हल्ङ्याब्भ्यः" ६।१।६६ इति सुलोपः प्रसज्येत,ततोऽवन्तीरिति न सिध्येत्॥

बाल-मनोरमा

इतो मनुष्यजातेः ५१३, ४।१।६५

इतो मनुष्यजातेः। शेषपूरणेन सूत्रं व्याचष्टे--ङीष् स्यादिति। इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष्स्यादित्यर्थः। स्त्रीप्रत्ययविधिषु?त इत्यनुवृत्तेरिदन्तात् "जातेरस्त्रीविषया"दित्यप्राप्तौ वचनम्। दाक्षीति। दक्षस्यापत्यं स्त्रीत्यर्थैः अत इञि अल्लोपः, आदिवृद्धिः, ङीष्, "यस्येति चे"तीकारलोपः। "गोत्रं च चरणैः सहे"ति जातिवाचित्वम्। दक्षः-प्रजापतिविशेषः। योपधादपीति। "अयं ङी"षिति शेषः। पुनर्जातिग्रहणेन योपधग्रहणस्याऽनुवृत्यभावबोधनादिति भावः। औदमेयीमि। उदमेयो नाम कश्चित्, तस्यापत्यं स्त्रीत्यर्थे "अत इञ्", "यस्येति चे"त्यल्लोपः, आदिवृद्धिः, औदमेयिशब्दान्ङीष्, "यस्येति चे"तीकारलोपः। तित्तिरिरिति। तित्तिरिः पक्षि जातिविशेषः। स्त्रियां ङीष् न, अमनुष्यजातिवाचित्वादिति भावः। "स्त्रीपुंसयोरपत्यन्तद्विचतुष्षट्पदोरगाः" इत्यमरकोशादयं स्त्रियामपि भवति, द्विपात्वात्।

---

सूत्रम्

काशिका-वृत्तिः

ऊङुतः ४।१।६६

मनुस्यजातेः इति वर्तते। उकारान्तात् मनुस्यजातिवाचिनः प्रातिपदिकात् स्त्रियाम् ऊङ् प्रत्ययो भवति। कुरूः। बह्मबन्धूः। वीरबन्धूः। ङकारो नोङ्धात्वोः ६।१।१६९ इति विशेषणार्थः। दीर्घोच्चारणं कपो बाधनार्थम्। अयोपधातित्येतदत्र अपेक्ष्यते। अध्वर्युर् ब्राह्मणी। अप्राणिजातेश्चारज्ज्वादीनाम् इति वक्तव्यम्। अलाबूः। कर्कन्धूः। अप्राणिग्रहणं किम्? कृकवाकुः। अरज्ज्वादीनाम् इति किम्? रज्जुः। हनुः।

लघु-सिद्धान्त-कौमुदी

ऊङुतः १२७४, ४।१।६६

उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरूः। अयोपधात्किम्? अध्वर्युर्ब्राह्मणी॥

न्यासः

ऊङुतः। , ४।१।६६

"कुरूः" इति। कुरोरपत्यं स्त्री-- कुरुनादिभ्यो ण्यः" ४।१।१७०, "स्त्रियामवन्ति" ४।१।१७४ इत्यादिना तस्य लुक्। गोत्रमिह जातिः। "ब्राह्मबन्धूः" इति। ब्राह्म बन्धरस्याः, वीरो बन्धुरस्या इति बहुव्रीहिः। ब्राह्मबन्धूवीरबन्धूशब्दौ कस्याञ्चिदेव जातौ वत्र्तेते। जातित्वं पुनरसर्वलिङ्गभाक्त्वात्। तौ हि स्त्रीलिङ्गपुंल्लिङ्गादेव, न नपुंसकलिङ्गौ। "उतः" इति तपरकरणं मुखसुखार्थम्। न तु दीर्घनिवृत्त्य्रथम्; ऊकारान्तस् मनुष्यजातिवाचिनोऽभावात्। "ङकारः"इत्यादि। ऊङो यदि ङकारो न

क्रियेत तदा "नोङ्धात्वोः" ६।१।१६९ इत्यस्मिन्नपि न कत्र्तव्यः स्यात् ; ङाकारानुबन्धवतोऽन्यस् कस्यचिदूकारस्याभावात्। ततश्च "नोधात्वोः" इत्युच्यमाने यवाग्वा, यवाग्वै इत्यत्रापि "उदात्तयणो हल्पूर्वात्" ६।१।१६८ इति तृतीयादिविभक्तेरुदात्तत्वस्य प्राप्तस्य प्रतिषेधः स्यात्। ननु चार्थवत ऊकारस्य ग्रहणात् "अर्थवद्()ग्रहणे नानर्थकस्य" (व्या।प।१) इत्यनर्थकस्य न भविष्यति, यवागूशब्दो हि "सृयुवचिभ्योऽन्युजागूजक्नुचः" (द।उ।१०।४) इत्यागूच्प्रत्ययान्तो व्युत्पादितः, तत्रागूच्छब्द एव प्रत्ययार्थेनार्थवान्, ऊकारस्त्वनर्थक एव? नैतदस्ति; यस्मान्न वर्णग्रहणेष्वियं परिभाषा व्यवस्थिता, वर्णग्रहणञ्चेदम्, अतो नोपतिष्ठते। अथोपतिष्ठेत? एवमपि "कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः" (द।उ।१।१६४) इत्यूप्रत्ययस्य ग्रहणं स्यात्। ततश्च खर्ज्वा, खर्ज्वे-- इत्यत्र प्रतिषेधः प्रसज्येत। तस्माद्विशेषणार्थो ङकारः कत्र्तव्यः। अथ दीर्घोच्चारणं किमर्थम्, ननु उङेवोच्येत, "अकः सवर्णे दीर्घः" (६।१।१०१) इति दीर्घत्वेन हि दीर्धस्य ग्रहणं भवति? इत्यत आह-- "दीर्घोच्चारणम्" इत्यादि। यदि दीर्घो नोच्चार्येत तदा "शेषाद्विभाषा" ५।४।१५४ इति परत्वात् पक्षे कप् स्यात्, अतस्तद्बाधनार्थं दीर्गोच्चारणम्। कथं पुनर्दीघोच्चारणेन कपो निवृत्तिः? ब्राह्आ बन्धूरस्येति समासादनन्तरमूङ् क्रियताम्ुत कबिति? तत्र परत्वात् कप् स्यात्; दीर्घोच्चारणेनोकारप्रश्लेषात्। पुनर्विधानं तुल्यकालप्राप्तिकं स्वार्थिकतया समानजातीयं कब्विधिमेव निवर्तयति, न स्वादिविधिम्। स्वादयस्तूङन्ताद्भवन्त्येव; त्यूङोरपि ग्रहणात्; ज्ञापकाद्वा, "()आशुरः ()आश्रवा" १।२।७१ इतिनिर्देशात्। तेन ब्राह्बन्धूरिति नित्यमूकारान्त एव भवति, न तु कदाचित् कबन्तः। "अध्वर्युः" इति। अध्वरमिच्छतीति क्यच्, "क्याच्छन्दसि" ३।२।१७० इत्युप्रत्ययः, "कब्यघ्वरपृतनस्यर्चि लोपः" ७।४।३९ इत्यकारलोपः। "अप्राणिजातेश्च" इत्यादि। अप्राणिजातिवाचिनश्च प्रातिपदिकादूङ् प्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "पङ्गोश्च" ४।१।६८ इत्यत्र चकारोऽनुक्तसमुच्चयार्थः, तेनाप्रणिजातेश्च रज्ज्वादिवर्जिताद्भविष्यति। "अलाबूः, कर्कन्धूः" इति। कः पुनरस्योङि सत्यसति वा विशेषः, यावतोभयत्र तदेव रूपं स व स्वरः; तथा हि-- अलाबूशब्द उणादिषूकारप्रत्ययान्त एव व्युत्पाद्यते, "कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः" (द।उ।१।१६४) "{इति वत्र्तमाने णित् इति च (द।उ।१।१६८) नञि लम्बेर्नलोपश्च" (द।उ।१।१७०) इतिनञ्पूर्वात् "लबि अवरुआंसने इत्यस्मादूप्रत्ययः" इति पाठेन भवितव्यम्। इति "वत्र्तमाने णित्" इति च "नञि लम्बेर्नलोपश्च" (द।उ।१।१७०) इति नञ्पूर्वात् "लबि अवरुआंसने" (धा।पा।३७९) इत्यस्मादूप्रत्ययः, "इदितो नुम्" ७।१।५८ इत्यनेन कृतनुमागरूपस्य नकारस् नलोपश्च विहितः; कर्कन्धूशब्दोऽपि "नृतिशृध्योः कूः" (द।उ।१।१७४) इति वत्र्तमाने "अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः" (द।उ।१।१७६) इत्यूकारान्त एव व्युत्पादितः, तत्किमर्थमूङ् विधीयते? अलाब्वा, अलाब्वै-- इत्यत्र "नोङधात्वोः" ६।१।१६९ इति विभक्त्याद्युदात्तत्वप्रतिषेधो यथा स्यात्। असति हि तस्मिन् यथा खलप्वौ, खलप्वः- इत्यत्र स न भवति तथेहापि न स्यात्॥

बाल-मनोरमा

ऊङुतः ५१४, ४।१।६६

ऊङुतः। "अयोपधा"दिति "मनुष्यजाते"रिति चानुवर्तते, उत इति तद्विशेषणम्, तदन्तविधिः। तदाह-- उकारान्तादित्यादिना। कुरूरिति। कुरुक्षेत्रस्य राजा कुरुः, तस्यापत्यं स्त्रीत्यर्थः। "गोत्रं च चरणैः सहे"ति जातित्वम्। कुरुशब्दाडूङि सवर्णदीर्घः। ऊङि दीर्घोच्चारणस्य प्रयोजनं भाष्ये स्पष्टम्। "तस्यापत्य"मित्यणमाशह्क्याह--कुरुनादिभ्यो ण्य इति। अपत्याधिकारस्थमिदं सूत्रम्। अनेन सूत्रेम अणपवादो ण्यप्रत्यय इत्यर्थः। तर्हि स श्रूयेतेत्यत आह--तस्येति। अध्वर्युरिति। अध्वर्युशाखाध्यायिनीत्यर्थः। चरणत्वाज्जातित्वम्। "पुरा युगेषु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवचनं तथा।" इति यमादिस्मृतिः।

अप्राणिजातेश्चेति। "वाचकाना"मिति शेषः। रज्ज्वादिभिन्नानामप्राणिजातिवाचकानामपि ऊङ उपसङ्ख्यानमित्यर्थः।

नन्वत्र उत इति संबध्यते वा, न वा?। नाद्यः, अलाबूरिति भाष्योदाहरणविरोधात्, अलाबूशब्दस्य ऊदन्तत्वात्। न द्वितीयः, अदन्तादपि अप्राणिजातिवाचन ऊङापत्तेरित्यत आह--रज्ज्वादिपर्युदासादिति। "उत" इति न संबध्यतो। अदन्तेषु नातिप्रसङ्गः "नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" इति न्यायेन रज्ज्वादिसदृशानामुवर्णान्तानामेव ग्रहणादिति भावः। अलाब्वेति। अलाबूशब्दादूङि सवर्णदीर्घे अलाबूशब्दादूङन्तात्सुबुत्पत्तिः। टायां यणादेशे अलाब्वा इति रूपम्। एवं कर्कन्धूशब्दादूङन्ताट्टायां "कर्कन्ध्वा" इति रूपम्। "कर्कन्धूर्बदरी"त्यमरः, "तुम्ब्यलाबूरुभे समे" इति च। ननु ऊदन्तत्वादनयोरूङ्विधिर्व्यर्थ इत्यत आह--अनयोरिति। कृकवाकुरिति। पक्षिजातिविशेषः। अत्र मनुष्यजातित्वाऽभावात्पूर्वेणापि न ङीष्।

तत्त्व-बोधिनी

ऊङुतः ४६४, ४।१।६६

ऊङुतः। ङकारो "नोङ्धात्वोः" इति विशेषणार्थः। अन्यथा "यगाग्वै" "यगाग्वै"इत्यत्रापि स निषेधः स्यात्। दीर्घोच्चारणं तु "()आश्रू"शब्दार्थम्। अन्यत्र सवर्णदीर्घेणापि सिद्धेः। कुरुरिति। लिङ्गविशिष्टपरिभाषया स्वादयः। अत्र व्याचक्षते---"यद्येकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादय इति व्याख्यायेत तर्हि "काण्डे" "कुड()ए"इत्यादावपि "एकवचनमुत्सर्गतः"इति सुःप्रवर्तत, तद्वारणाय "अप्रत्ययः"इति प्रसज्यप्रतिषेधाभ्युपगमे तु प्रकृते दोषः। "()आश्रू"रित्यत्रैकादेशाऽभावाल्लिङ्गविशिष्टपरिभाषाया आवश्यकत्वाच्च। अतएव "रमे"इत्यत्र "एकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादयैति मनोरमादौ न व्याख्यातमिति। अध्वर्युरिति। अध्वर्युशाखाध्येत्री, अध्वर्युशाखाध्यायिवंशोद्भवेति वार्थः। चरणलक्षणेयं जातिः। अध्वरं यातीति विग्रहे "मृगय्यादयष्चे"त्यौणादिकेन अध्वरशब्दस्यान्तलोपः, याधातोः कुप्रत्ययश्च।

अप्राण्जातेश्चारज्ज्वादीनामुपसङ्ख्यानम्। पर्युदासादिति। यदि सूत्रादुत इति गृह्यते तर्हि अलाब्बादावूङः संभवो नेति भावः। अलाब्वेत्यादि। प्रथमान्तं द्वितीयान्तं वा नोदाहृतम्। वक्ष्यमाणप्रयोजनस्य तत्राऽसभवात्। नोङ्धात्वोरिति। ऊङ्धात्वोर्यणः परे शसादय उदात्ता न स्युरिति सूत्रार्थः।

---

सूत्रम्

काशिका-वृत्तिः

बाह्वन्तात् संज्ञायाम् ४।१।६७

बाहुशब्दान्तात् प्रातिपदिकात् संज्ञायां विषये स्त्रियां ऊङ् प्रत्ययो भवति। भद्रबाहूः। जालबाहूः। संज्ञायाम् इति किम्? वृत्तौ बाहू अस्याः वृत्तबाहुः।

न्यासः

बाह्वन्तात्संज्ञायाम्। , ४।१।६७

बाल-मनोरमा

बाह्वन्तात्संज्ञायाम् ५१५, ४।१।६७

बाह्वन्तात्संज्ञायाम्। "ऊङुत" इत्यत ऊङित्यनुवर्तते, स्त्रियामित्यधिकृतं, प्रातिपदिकादिति च। तदाह--स्त्रियामूङ् स्यादिति। भद्रबाहूरिति। कस्याश्चित्संज्ञा। संज्ञायां किमिति। संज्ञायामित्येतत्किमर्थमिति प्रश्नः। वृत्तबहुरिति। वृत्तौ बाहू यस्या इति विग्रहः। स्त्रियामपि नोङ्।

सूत्रम्

काशिका-वृत्तिः

पङ्गोश् च ४।१।६८

पङ्गुशब्दात् स्त्रियां ऊङ् प्रत्ययो भवति। पङ्गूः। श्वशुरस्य उकाराकारलोपश्च वक्तव्यः। श्वश्रूः।

लघु-सिद्धान्त-कौमुदी

पङ्गोश्च १२७५, ४।१।६८

पङ्गूः। (श्वशुरस्योकाराकारलोपश्च)। श्वश्रूः॥

न्यासः

पङ्गोश्च। , ४।१।६८

"()आशुरस्योकाराकारयोर्लोपश्च" इति। अयं तु "()आशुरः ()आश्रवा" (१।२।७१) #इति निपातनादेव सिद्ध इति न वक्तव्यः॥

बाल-मनोरमा

पङ्गोश्च ५१६, ४।१।६८

पङ्गोश्च। "ऊ"ङिति सूत्रशेषः। भग्नपादत्वं पङ्गुत्वं न जातिः, आसीने शयाने च आकृत्या दुग्र्रहत्वात्, एकस्या व्यक्तौ "विकलपादोऽयं पङ्गु"रिति पङ्गुत्वस्योपदेशेऽपि व्यक्त्यन्तरेषु आसनशयनाद्यस्थेषु तस्य दुग्र्रहत्वात्, गोत्रचरणानन्तर्भावाच्च। ततश्च "ऊङुतः" इत्यप्राप्तौ वचनमिदम्।

()आशुरस्येति। वृत्त्यादौ पठितमिदम्। चकारादूङनुकृष्यते। ()आशुरस्य स्त्री इत्यर्थे पुंयोगलक्षणे ङीषि प्राप्ते तदपवाद ऊङ्, तत्संनियोगेन रेफादकारस्य शकारादुकारस्य लोपश्चेत्यर्थः। नच वकारादकारस्य लोपः शङ्क्यः, "अन्त्यबाधेऽन्त्यसदेशस्ये"ति वचनात्। "यस्येति चे"ति तु नात्र भवति, ईकारे तद्धिते च तद्विधानात्। ननु ()आशूरित्यत्र कथं स्वादयः, "ङ्याप्प्रातिपदिका"दित्यधिकृत्य तद्विधेः, अस्य च ङ्याबन्तत्वाऽभावात्, ऊङन्तस्य च प्रत्ययान्तत्वेन प्रातिपदिकत्वाऽभावादित्यत आह--लिङ्गविशिष्येति। "प्रातिपदिकग्रहणे लिङ्गविशिष्यस्यापि ग्रहण"मिति परिभाषयेत्यर्थः। वस्तुतस्तु ()आशुरस्येति वचनममूलकमेव, भाष्येऽदृष्टत्वात्, "ङ्याप्प्रातिपदिका"दिति सूत्रस्थभाष्यविरोधाच्च। तत्र हि "ङ्याप्प्रातिपदिका"दित्यत्र ऊहोऽपि ग्रहणं कर्तव्यमित्याक्षिप्य उवर्णान्तादूङ् विधीयते। तत्र सवर्णदीर्घे एकादेशे कृते पूर्वान्तत्वेन प्रातिपदिकत्वलाभादेव सिद्धमित्युक्तम्। यदि हुक्तरीत्या ()आश्रूशब्दो व्युत्पाद्यते तर्हि रेफादकारस्य लुप्तत्वेन एकादेशाऽप्रसक्तेस्तदसङ्गतिः स्पष्टैव। तथाच ()आश्रूरित्यव्युत्पन्नं प्रातिपदिकमिति शब्देन्दुशेखरे स्पष्टम्।

तत्त्व-बोधिनी

पङ्गोश्च ४६५, ४।१।६८

पङ्गोश्च। अजात्यर्थमिदम्। पङ्गुशब्दो हि गुणवाची।

()आशुरस्योकाराऽकारलोपश्च। ()आशुरस्येति। पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् तत्संनियोगेन च विधीयमानो लोपः संनिहितत्वादन्तस्यैवाऽकारस्य न त्वादेः। एतच्च वचनं "()आशुरः ()आश्रवे"ति निर्देशसिद्धार्थकथनपरम्। अतोऽपि प्रथमाकारस्य लोपो न शङ्क्यः।

सूत्रम्

काशिका-वृत्तिः

ऊरूत्तरपदादौपम्ये ४।१।६९

ऊरूत्तरपदात् प्रातिपदिकातौपम्ये गम्यमाने स्त्रियाम् ऊङ् प्रत्ययो भवति। कदलीस्तम्भोरूः। नागनासोरूः। करभोरूः। औपम्ये इति किम्? वृत्तोरुः स्त्री।

लघु-सिद्धान्त-कौमुदी

ऊरूत्तरपदादौपम्ये १२७६, ४।१।६९

उपमानवाची पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्। करभोरूः॥

न्यासः

ऊरूत्तरपदादौपम्ये। , ४।१।६९

"वृत्तोरुः" इति। वृत्तौ {परिमण्डला ऊरू इति मुद्रितः पाठ।} परिमण्डलाबूरू यस्याः सा वृत्तोरुः। लाघवार्थमूर्वन्तादिति वक्तव्य ऊरूत्तरपदादित्युक्तम्-- यत्र केवल ऊरुब्द उत्तरपदं तत्र यथा स्यादित्येवमर्थम्; अन्यथा हि यद्यर्वन्तादित्युच्येत,तदा स्वामिन ऊरू स्वाम्यूरू, हस्तिन इव स्वम्यूरू यस्याः सा हस्तिस्वम्यूरुरित्यत्रापि स्यात्, भवति ह्येतदूर्वन्तं प्रातिपदिकम्। उत्तरपदग्रहणे तु न दोषः, न ह्येतदूरूत्तरपदं प्रातिपदिकम्, किं तर्हि? स्वाम्यूरूत्तरपदम्॥

बाल-मनोरमा

ऊरूत्तरपदादौपम्ये ५१७, ४।१।६९

ऊरुत्तर। ऊरुः-उत्तरपदं यस्येति बहुव्रीहिः। प्रातिपदिकादित्यनुवर्तते। उत्तरपदेत्यनेन पूर्वपदमाक्षिप्तम्, औपम्ये इति तत्रान्वेति। उपमीयते अनयेत्युपमा=उपमानम्, उपमैव औपम्यं, स्वार्थे ष्यञ्। तदाह--उपमानवाचीति। करभोरूरिति। करभाविव ऊरू यस्या इति विग्रहः। "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः। करभोरुत्वस्याऽजातित्वादप्राप्तौ वचनम्, ऊर्वाकृतेः करभसदृशपुरुषोरुसाधारणत्वेन करभसादृश्यघटितकरभोरुत्वस्य आकृतिग्राह्यत्वाऽभावात्, असर्वलिङ्गत्वाद्यभावाच्च। उपमानवचीति किम्?। वृत्तोरुः। करभोपमोरुरित्यादौ नोङ्, करभशब्दस्य करभसदृशेऽवृत्त्या उपमानवाचित्वाऽभावात्।

तत्त्व-बोधिनी

ऊरूत्तरपदादौपम्ये ४६६, ४।१।६९

ऊरूत्तपदात्। उपमीयतेऽनयेत्युपमा, तस्या भाव औपम्यम्। उत्तरपदेन पूर्वपदमिहाक्षिप्यते। तदेतत्फलितमाह--- उपमानवाचिपूर्वपदमिति। करभोरूरिति। "माणिबन्धादाकनिष्ठं करस्य करभो बहिः"। तद्वदूरू यस्याः सा। "धात्री कराभ्यां करभोपमोरु"रित्यत्र तूङ् न, करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाऽभावात्। औपम्ये किम्()। वृत्तोरुः। "ऊर्वन्ता"दिति वक्तव्ये उत्तरपदग्रहणं "हस्तितस्वाम्यूरु"रित्यत्र माभूदित्येवमर्थम्। अत्र हि हस्तिन इव स्वाम्यूरु अस्या इति विग्रहः। तथा चोर्वन्तत्वेऽपि ऊरुत्तरपदत्वमिह नास्ति। "स्वाम्यूरु"शब्दस्यैवोत्तरपदत्वात्।

सूत्रम्

काशिका-वृत्तिः

संहितशफलक्षणवामाऽदेश् च ४।१।७०

संहित शफ लक्षण वाम इत्येवम् आदेः प्रातिपदिकादूरूत्तरपदात् स्त्रियाम् ऊङ् प्रत्ययो भवति। अनौपम्यार्थ आरम्भः। संहितोरूः। शफोरूः। लक्षणोरूः। वामोरूः। सहितसहाभ्यां च इति वक्तव्यम्। सहितोरूः। सहोरूः।
लघु-सिद्धान्त-कौमुदी
संहिताशफलक्षणवामादेश्च १२७७, ४।१।७०

अनौपम्यार्थं सूत्रम्। संहितोरूः। शफोरूः। लक्षणोरूः। वामोरूः॥
न्यासः
संहितशफलक्षणवामादेश्च। , ४।१।७०

"संहितोरूः" इति। संहितशब्दः संश्लिष्टवचनः, संश्लिष्टोरुरित्यर्थः। "सहितसहाभ्याञ्चेति वक्तव्यम्" इति। सहित, सह -- इत्येताभ्यां परो य उरुशब्दस्तदन्ताच्च प्रातिपदिकादूङ् भवीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- घकारोऽत्र क्रियते, स चायुक्तसमुच्चयार्थः, तेन सहितसहाभ्यामपि भविष्यति। सूत्र आदिग्रहणमूरूत्तरपदमित्यस्यानुवृत्तेर्लिङ्गम्। अन्यथा संहितादिप्रातिपदिकेभ्य एव प्रत्ययो भवतीत्येषोऽर्थो विज्ञायेत। सत्यां हि स्वरितत्वादेवानुवृत्तावेभ्यो यत्परमूरूत्तरपदं सत्यप्यस्मिन् मध्यपदे तत्रैव प्रत्ययः प्रसज्यते;संहितस्वाम्यूरुशब्दात्, न संहितोरुशब्दात्। गुणभावादूरुशब्दस्य न स्यादेवेह विशेषणम्॥
बाल-मनोरमा
संहितशफलक्षणवामादेश्च ५१८, ४।१।७०

संहितशफ। संहित शफ लक्षण वाम एतत्पूर्वपदादप्यूरूत्तरपदादूङ् ऊरू यस्या इति विग्रहः। सैव शफोरूरिति। संहितोरूरेव शफोरूरित्यनेनोच्यत इत्यर्थः। शफशब्दं विवृणोतिशपौ खुराविति। यद्यपि "शफं क्लीबे खुरः पुमा"नित्यमरस्तथापि "शफः खुरे गवादीना"मिति [हेम] चन्द्रकोशात्पुंस्त्वमिति भावः। ननु शफत्वमूर्वोः प्रत्यक्षविरुद्धमित्यत आह--ताविवेति। यतः शफाविव, अत ऊरू शफशब्देनोच्येते इत्यर्थः। कुतस्तत्सादृश्यमित्यत आह--संश्लिष्टत्वादिति। तर्ह्युपमानवाचिपूर्वपदत्वादेव सिद्धमित्यत आह--उपचारादिति। शफवद्वास्तवं संश्लिष्टत्वमवलम्ब्या शफत्वस्य आरोपादित्यर्थः। एवं च शफशब्दात्तत्सादृश्याऽप्रतीतेर्नोक्तदोष इति भावः। लक्षणोरूरिति। लक्षणौ ऊरू यस्या इति विग्रहः। ननु मार्दवादिगुणपर्यायस्य लक्षणशब्दस्य कथमूरुशब्दसामानाधिकरण्यमित्यत आह--लक्षणशब्दादिति। लक्षणमनयोरस्तीति विग्रहे लक्षणशब्दादर्शाअदिभ्योऽजित्यच्प्रत्यय इत्यर्थः। तथाच लक्षणयुतौ इत्यर्थलाभादिह नोक्तदोष इति भावः। वामोरूरिति। वामौ=सुन्दरौ ऊरू यस्या इति विग्रहः। "वामौ वल्गुप्रतीपौ द्वौ" इत्यमरः।

सहितेति। "सहित" "सह" आब्यां परो य ऊरुशब्दस्तस्मादपि ऊङ् स्यादिति वक्तव्यमित्यर्थः। ननु संहितग्रहणेनैव एकदेशविकृतन्यायेन सिद्धे पुनः सहितग्रहणं व्यर्थमित्यत आह--हितेनेति। हितेन सहेति विग्रहे "तेन सहे"ति बहुव्रीहौ "वोपसर्जनस्ये"ति सभावे सहितशब्द इत्यर्थः। ननु सहशब्दस्य विद्यमानवचनत्वे सहोरूरित्यत्र सहशब्दप्रयोगो व्यर्थ इत्यत आह--सहेते इति। "रतिकालिकमर्दन"मिति शेषः। विद्यमानवचनत्वेऽपि सहशब्दस्य न वैयर्थ्यामित्याह-यद्वेति। अतिशयेन विद्यमानत्वं विवक्षितमिति न वैयर्थ्यमिति भावः।

तत्त्व-बोधिनी
संहितशफलक्षणवामादेश्च ४६७, ४।१।७०

संहित। संहितादिपूर्वपदमूरूत्तरपदं यत् प्रातिपदिकं तस्मादूङ् स्यात्। शफाविति। यद्यप्यमरेण "शफं क्लीबे खुरः पुमान्िति नपुंसकतोक्ता, तथापि शफशब्दस्य पुंस्त्वमपि प्रामाणिकमेव। "शफाविव जर्भुराणे"ति श्रुतेः। "शफः खुरे गवादीनां मूले विटपिनामपि"इति हेमचन्द्रकोशाच्च। वामोरूरिति। वामौ सुन्दरौ ऊरू यस्या इतचि विग्रहः। कथं तर्हि "पीवरोरु। पिबतीव बर्हिणः"इति कुमारः। ऊङभावे हि "पीवरोरो"इति स्यात्। ऊङ्श्चेह विधायकं नास्ति। अत्राहुः--- संज्ञापूर्वकविधेरनित्यतया संबुद्धिगुणाऽभावादिति स्थितस्य गतिरुन्नेयेति।

सहितसहाभ्यां चेति वक्तव्यम्। हितेन सहेति। अत्राहुः-- "समो वा हिततततयोः"इति व्युत्पादितः "सहित"शब्दस्तु नेह गृह्यते, एकदेशविकृततया संहितग्रहणादेव तत्सिद्धेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कद्रुकमण्डल्वोश् छन्दसि ४।१।७१

कद्रुशब्दात् कमण्डलुशब्दाच् च छन्दसि चिषये स्त्रियां ऊङ् प्रत्ययो भवति। कद्रूश्च वै सुपर्णी अ। मा स्म कमण्डलूं शूद्राय दद्यात्। छन्दसि इति किम्? कद्रुः। कमण्दलुः। गुग्गुलुमधुजतुपतयालूनाम् इति वक्तव्यम्। गुगुलूः। मधूः। जतूः। पतयालूः।

न्यासः

कद्रुकमण्डल्वोश्छन्दसि। , ४।१।७१

कद्रुशब्दो वर्णविशेषवचनः, ततः "वोतो गुणवचनात्" ४।१।४४ इति ङीषः प्राप्तस्य "खरुसंयोगोपधयोः" (वा।३४९) इति प्रतिषेधे कृते प्रातिपदिकेनानभिधाने प्राप्ते वचनम्। कमण्डलुशब्दस्याप्यप्राणिवाचित्वात् "अप्राणिजातेश्चारज्ज्वादीनाम्" (वा।३६९) इत्यूङ् प्राप्ते छन्दसि नियमार्थम्। अथ वा-- अयं रज्ज्वादि,ततः प्रतिषेधे सति प्राप्त्यर्थं वचनम्॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् ४।१।७२

कद्रुकमण्डलुशब्दाभ्यां संज्ञायां विषये स्त्रियाम् ऊङ् प्रत्ययो भवति। अच्छन्दोर्थं वचनम्। कद्रूः। कमण्डलूः। संज्ञायाम् इति किम्? कद्रुः। कमण्डलुः।

न्यासः

संज्ञायाम्। , ४।१।७२

बाल-मनोरमा

संज्ञायाम् ५१९, ४।१।७२

संज्ञायाम्। कद्रुकमण्जल्वोरिति ऊङिति चानुवर्तते, स्त्रियामित्यधिकृतम्। तदाह--कद्रकमणाडल्वोरित्यादि। अच्छन्दोऽर्थमिति। पूर्वसूत्रे छन्दसीत्युक्तत्वाल्लोके संज्ञायामप्राप्तावयमारम्भः। कद्रूरिति। नागानां मातुः संज्ञा। एतच्च महाभारतादौ स्पष्टम्। कमण्डलूरिति। कस्यचिन्मृगस्य संज्ञा। अत एव "चतुष्पाद्भ्यो ढ"ञित्यत्र कामम्जलेय इत्युदाहरिष्यते। पात्रपर्यायस्तु नोदाहरणं, तस्य स्त्रीलिङ्गत्वाऽभावात्।

तत्त्व-बोधिनी

संज्ञायाम् ४६८, ४।१।७२

कमण्डलुरिति। चतुष्पाज्जातिवाचतोऽयम्। अतएव "चतुष्पाभ्द्यो ढञ्ित्यत्र "कामण्डवेय"इत्युदाहरिष्यति। पात्रपर्यायस्तु न प्रत्युदाहरणं, तस्य स्त्रीलिङ्गत्वाऽभावात्। अच्छन्दोर्थमिति। वेदे तु "कद्रुकमण्()डल्वोश्छन्दसी"त्यनेन संज्ञायामलसंज्ञायां चोङ् सिध्यतीति भावः। अञो योऽकार इति। अञा अकारविशेषणं किम्()। शूरसेनी। "जनपदशब्दा"दित्यञः "अतश्चे"ति लुकि जातिलक्षणोऽत्र ङीष्।

---

सूत्रम्

काशिका-वृत्तिः

शार्ङ्गरवाऽद्यञो ङीन् ४।१।७३

शार्ङ्गरवादिभ्यो ऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययो भवति। शार्ङ्गरवी। कापटवी। अञनतेभ्यः बैदी। और्वी। जातिग्रहणम् अत्र अनुवर्तते। तेन जातिलक्षणो ङीषनेन बाध्यते, न पुंयोगलक्षणः, बैदस्य स्त्री बैदी। शार्ङ्गरव। कापटव। गौगुलव। ब्राह्मण। गौतम। एते ऽणन्ताः। कामण्डलेय। ब्राहमकृतेय। आनिचेय। आनिधेय। आशोकेय। एते ढगन्ता। वात्स्यायन। मौञ्जायन। एतौ फगन्तौ जातिः। कैकसेयो ढगन्तः। काव्यशैव्यौ यञन्तौ। एहि, पर्येहि कृदिकारान्तौ। आश्मरथ्यो यञन्तः। औदपानः। उदपानशब्दः शुण्डिकाद्यणन्तः प्रयोजयति। अराल। चण्डाल। वतण्ड। जातिः। भोगवद्गौरिमतोः संज्ञायाम् घादिषु नित्यं ह्रस्वार्थम्। नृनरयोर् वृद्धिश्च। अत्र यथायोगं ङीबादिषु प्राप्तेषु ङीन् विधीयते।

लघु-सिद्धान्त-कौमुदी

शार्ङ्गरवाद्यञो ङीन् १२७८, ४।१।७३

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्। शार्ङ्गरवी। बैदी। ब्राह्मणी। (नृनरयोर्वृद्धिश्च)। नारी॥

न्यासः

शाङ्र्गरवाद्यञो ङीन्। , ४।१।७३

"बैदी, औवीं" इति। बिदौर्वशब्दाभ्यां "अनृष्यानन्तर्ये" ४।१।१०४ इत्यादिनाऽञ्, तदन्ताद्()गोत्रत्वाज्जातित्वे जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते। स्वरे विशेषः। "अणन्ता एते" इति। गोतमशब्दादपत्येऽर्थे "ऋष्यन्धकवृष्णि" ४।१।११४ इत्यादिनाऽण्, शेषेभ्यस्तु तस्यापत्यम्" ४।१।९२ इति। गौतमशब्दाद्गौरादिपाठात् ङीषपि भवति। "ढगन्ता एते" इति। शुभ्रादित्वात्। "कामण्डलेयः"इति। "ढे लोपोऽकद्र्वा" ६।४।१४७ इत्युकारलोपः। एषां "टिड्ढाणञ्" ४।१।१५ इति ङीपि प्राप्ते वचनम्। "वात्स्यायन" इति। वत्सशब्दाद्गर्गादियञन्तात् "यञिञोश्च" ४।१।१०१ इति फक्। "मौञ्जायन" इति। मुञ्जशब्दात् "नडादिभ्यः फक्" ४।१।९९ इति फक्। "जातिः" इति। गोत्रलक्षणा। लौकिकमपि हि तत्र गोत्रं गृह्नते। युवापि च लोके गोत्रमुच्यते, तथा हि वक्तारो वदन्ति-- गाग्र्यायणो गोत्रेणेति। "ढगन्ताः" इति। केकसशब्दस्य शुभ्रादित्वात् अढगन्ताञ्ञ्यङन्तादपि ताविति। कपिशिविशब्दाभ्यामपत्येऽर्थे "वृद्धेत्कोशलाजादाञ्ञ्यङ" ४।१।१६९ इति ञ्यङ्। "यङश्चाप्" ४।१।७४ इति चापि प्राप्ते वचनम्। "एहि, पर्येहि" इति। "ईह चेष्टायाम्" (धा।पा।६३२) इत्यस्मादाङ्पूर्वात् पर्याद्याङ्पूर्वाच्च "{इन् इत्येवोणादिसूत्रम्-- वृत्तौ तु सर्वधातुभ्यः इन्प्रत्ययो भवति इति दृश्यते-द।उ।} सर्वधातुभ्यः" (द।उ।१।४६) इतीन्प्रत्ययः। बह्वादिषु "कृदिकारादक्तिनः" (ग।सू।५०) इति पाठान्ङीषि प्राप्ते वचनम्। "यञन्तः" इति। गर्गादित्वात्। "यञश्च" ४।१।१६, "प्राचां ष्फ तद्धितः" ४।१।१७ इति ङीपि ष्फे च प्राप्ते वचनम्। "{उदपानः इति मुद्रितः पाठः} औदपानः"इति। उदपानादागत इति "शुण्डिकादिभ्योऽण्" ४।३।७६ इत्यण्। उत्सादिष्वयं पठ()त इति तत्राञि कृते

नास्ति विशेषः-- ङीपो वा ङीनो वा, उभयत्रापि हि "ञ्नित्यादिर्नित्यम्" ६।१।१९१ इत्याद्युदात्तेन भवितव्यमित्येतन्मनसि कृत्वाऽऽह-- "शुण्डिकाद्यणन्तः प्रयोजयति" इति। "जातिः" इति। अरालचण्डालयोरसर्वलिङ्गत्वादिति जातित्वम्। वतण्डस्य गौरादिलक्षणे ङीषि प्राप्ते वचनम्। प्रत्ययलक्षणेन "यञश्च" ४।१।१६, "प्राचां ष्फ तद्धितः" ४।१।१७ इति ङीष्फयोर्बाधनम्। वतण्डस्यापत्यं स्त्री "वतण्डाच्च" ४।१।१०८ इति यञ्, तस्य "लुक् स्त्रियाम्" ४।१।१०९ इति लुक्। "भोगवद्गौरिमतोः संज्ञायाम्" इति। संज्ञायां गम्यमानायां भोगवद्गौरिमच्छब्दाभ्यां ङीन् भवति। मत्वन्तत्वात् "उगितश्च" ४।१।६ इति ङीपि प्राप्ते वचनम्। ननु च बोगशब्दो घञन्तः, गौरिश्बदः "अत इञ्" ४।१।९५ इतीञन्तः, तेन द्वावप्येतौ ञित्स्वरेणाद्युदात्तौ। ताभ्यां मतुप्, पित्त्वादनुदात्तः। तथा च भोगवद्गौरिमद्भ्यां ङीपि ङीनि वा विहिते न कश्चिद्विशेषः, तत्किमर्थं ताभ्यां ङिन् विधीयते? इत्यत आह-- "घादिषु नित्यं ह्रस्वार्थम्" इति। "घरूपकल्प" ६।३।४२ इत्यादिषु नित्यं ह्रस्वो यथा स्यादिति ताभ्यां ङीनो विधानम्-- भोगवतितरा, गौरिमतितरेति। यदि पुनरुगिल्लक्षणो ङीप्क्रियेत,ततः "नद्याः शेषस्यान्तयतरस्याम्" ६।३।४३ इत्यनुवत्र्तमाने "उगितश्च" ६।३।४४ इति विकल्पेन ह्रस्वत्वं स्यात्। अथानेनापि ङीनि सति कस्मादेव "उगितश्च" ६।३।४४ इत्यन्यरस्यां ह्रस्वत्वं न भवति, यावता भोगवद्गौरिमद्भ्यामुगिद्भ्यामेवायं त्सया विकल्पेन ह्रस्वत्वं भवतीति। न चानेन सूत्रेण या विहिता सा नद्युगित्संशब्दनेन विहिता भवति; उगित्त्वानाश्रयणात्। संज्ञायामिति किम्? भोगवती, गौरिमतीति। "उगितश्च" ४।१।६ इति ङीप्। अत्र च घादिषु विकल्पनैव ह्रस्वो भवति-- भोगवतितरा , भोगवतीतरा, गौरिमतितरा, गौरीमतीतरेति। "नृनरयोर्वद्धिश्च" इति। नृशब्दस्य "ऋन्नेभ्यो ङीप्" ४।१।५ इति ङीपि प्राप्ते वचनम्। नरशब्दस्य "अजाद्यतः" ४।१।४ इति टापि प्राप्ते जातित्वान्ङीषि वा। जातित्वं त्वाकृतिग्रहणात्। वृद्धिश्च तयोर्भवति, सा च नृशब्दस्यालोऽन्त्यपरिभाषया १।१।५१ ऋकारस्यस्थाने भवति। नरशब्दस्य "यस्येति" ६।४।१४८ लोपे कृते सत्यकारस्य। ननु च "अनन्त्यविकारेऽन्त्यसदेशस्य" (व्या।प।६३) इति रेफस्यैव भवितव्यम्? नैष दोषः; वृद्धेर्याऽन्तरमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेश इत्यकारः स्थानी ज्ञायते। पुत्रशब्दमत्र केचित् पठन्ति, न स केवलः स्तियां वत्र्तत इत्ययं समासन्तो गृह्नते। समासान्ते च वत्र्तमानो दुहितृशब्देन समानार्थो भवन् स्त्रीलिङ्गो भवति-- प्रद्योतपुत्री, शैलपुत्रीति। "यथोयोगम्" इति। यथासम्भवम्॥

बाल-मनोरमा

शाङ्गर्वाद्यञो ङीन् ५२०, ४।१।७३

शाङ्गरवाद्यञो ङीन्। शाङ्गरवादीति लुप्तपञ्चमीकम्। "अञ" इति षष्ठी। "अत" इत्यनुवृत्त पञ्चम्यन्ते अन्वेति। जातेरित्यनुवृत्तमता विशेष्यते। तदन्तविधिः। तदाह--शाङ्गरवादेरित्यादिना। शङ्गरवीति। श्रृङ्गरोरपत्यं स्त्रीत्यर्थे अण्, आदिवृद्धिः, रपरत्वम्, ओर्गुणः "गोत्र च चरणैः सहे"ति जातित्वान्ङीषि प्राप्ते ङीन्। स्वरे विशेषः। वैदीति। विदस्यापत्यं स्त्रीत्यर्थः। "अनृष्यानन्तर्ये विदादिभ्योऽञ्"। गोत्रत्वेन जातित्वान्ङीषि प्राप्ते ङीन्। अञा अकारस्य विशेषणान्नेह-शूरसेनी। "जनपदशब्दा"दित्यपत्येऽञ्। "अतश्चे"ति तस्य लुक्। अत्र जातिलक्षणङीषेव न तु ङीन्, अञो लुप्तत्वेन नकारादकारस्य अञोऽवयवत्वाऽभावात्। नृनरयोर्वृद्धिश्चेति। चकारात् ङीन्। नारीति। नृनरशब्दयोरुभयोरुदाहरणम्। तत्र नृशब्दात् "ऋन्नेभ्यः" इति ङीपि प्राप्ते ङीन्, ऋकारस्य वृद्धिः, रपरत्वम्। जातिलक्षणङीषस्तु नृशब्दान्न प्रसक्तिः, तत्र "अत" इत्यनुवृत्तेः। नरशब्दात्तु ङीनि नकारादकारस्य वृद्धिः। ननु परमपि "यस्येति चे"ति लोपं बाधित्वाऽन्तरङ्गत्वादलोऽन्त्यपरिभाषया रेफादकारस्य वृद्धिः स्यात्। न च कृतायामपि वृद्धौ "यस्येति चे"त्यकारलोपः स्यादिति वाच्यं, वृद्धिविधिसामश्र्यादेव तस्य लोपाऽभावासिद्धेरिति चेदुच्यते-नृनरयोरित्यत्र "नर्" इति रेफान्तस्य लुप्ताकारस्यानुकरणम्। नरः-अः-नरः, ना च नरश्च नृनरौ, तयोरिति विग्रहः। नचैवमपि वानरीशब्देऽतिप्रसङ्ग इति वाच्यम्, अर्थवत एव ग्रहणात्। न च नृशब्दान्ङीनि वृद्धौ नारीति सिद्धेर्नरग्रहणं व्यर्थमिति वाच्यं, नरत्वजातिवाचिनो

नरशब्दात्स्त्रियां जातिलक्षणङीषि नरीति व्यावृत्त्यर्थत्वात्। वस्तुतस्तु "नृनरयोर्वृद्धिश्चे"ति गणसूत्रं नारब्धव्यमेव। "तदस्य धम्र्य"मित्यनुवृत्तौ "ऋतोऽञि"ति सूत्रेण "नरस्य चे ति वक्तव्य"मिति वार्तिकेन च नुर्धम्या नरस्य धम्र्येत्यर्ते नृशब्दान्नरशब्दाच्च अञि ततः "टिड्ढाण"ञिति ङीपि नारीति सिद्धेः। "ञ्नित्यादिर्नित्य"मिति प्रकृतेराद्युदात्तत्वे ङीपः पित्त्वादनुदात्तत्वम्। ङीन्यपि नित्स्वरेण प्रकृतेरुदात्तत्वमिति स्वरे विशेषाऽभावात्। नचैवं सति मनुष्यधम्र्यत्वेनैव बोधः स्यान्न तु नरत्वेनेति वाच्यं, योग्यतया हि तद्धम्र्या नरत्वाजातिविशिष्टैव बुध्यते। अत एव वास्तुनि भवो वास्तव्य इति रूपस्य "दिगादिभ्यो य"दिति भवार्थकतया सिद्धत्वात् "वसेस्तव्यत्कर्तरि णिच्चे"ति वचनं न कर्तव्यमिति भाष्यं सङ्गच्छते। रूढानां यथाकथंचिदन्वाख्यानमिति कैयट इति शब्देन्दुशेखरे स्थितम्।

तत्त्व-बोधिनी

शाङ्र्गरवाद्यञो ङीन् ४६९, ४।१।७३

शाङ्र्गरवीति। श्रऋङ्गरुशब्दादपत्येऽण्। आदिवृद्धिः। "ओर्गुणः""टिड्ढाणञ---"इति ङीषं बाधित्वा परत्वात् "जातेः"इति ङीषि प्राप्तेङीन् विधीयते। तेन नित्त्विदाद्युदात्तः। ङीषि तु प्रत्ययस्वरेणाऽन्तोदात्तः स्यात्। बैदाति बिदस्यापत्यं स्त्री। "अनृष्यानन्तर्येबिदादिभ्योऽञ्"।पूर्ववज्जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते। शाङ्गरव कापटव ब्राआह्मणा गौग्गुलव गौतम इत्यादि। श्रृङ्गारुकपटुब्राह्मन्गुग्गुलुशब्देभ्यः प्राग्दीव्यतोऽण्। गौतमशब्द ऋष्यणन्तः। अयं गौरादिविष्विपि पठित इति पक्षे अत्र ङीषपि भवति। ङीषेवेति। "जाते" रित्यननुवृत्तौ तु शाङ्र्गरवस्य स्त्री बिदस्य स्त्रीति पुंयोगविवक्षायामपि परत्वान्ङीनेव स्यादिति भावः।

नृनरयोर्वृद्धिश्चेति गणसूत्रम्। नृनरयोरिति। नृशब्दात् "ऋन्नेभ्यः"इति ङीपि, नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनं वृद्धिविधानार्थम्। ननु नरशब्दे "अलोऽन्त्यस्ये"ति वृद्धिः स्यात्। अत्राहुः--"वर्णादाङ्गं बलीयः"इत्याकारस्य "यस्येति चे"ति लोपोनापहारादनन्त्य्स्याप्यकारस्य वृद्धिर्भवतीति। यद्वा। नरस्य--अः नरः। कतन्तवत्पररूपम्। ना च नरश्च तयोर्नृनरयोः। परस्य च प्रथम एवाऽकारो गृह्रते न तु द्वितीयः, पर्श्लेषसामश्र्यादिति। इह नरस्येत्यर्थवतो ग्रहणाद्वानरशब्दे नातिप्रसङ्ग इति बोध्यम्। यद्यर्यन्यतरोपादानेनापि "नारी"ति रूपं सिध्यति तथाप्यन्यतरस्यानिष्टरुपनिवृत्त्यर्थं द्वयोरूपादानम्। कथं तर्हि "किन्नरीणां नारीणां"मित्यादिप्रयोगः()। अत्राहुः--नरस्य स्त्री नरी। पुंयोगलक्षणो ङीषे। एवं च किन्नरूत्यपि सिद्धम्। किचिन्नरीति विग्रहादिति। केचित्तु अनिर्दिष्टस्थानिकत्वादिक्परिभाषोपस्थितौ नृ शब्दस्यैव वृद्धेर्नारीति भवति। नरशब्दस्य ग्रहणं तु ङीनर्थमेव। तत्राऽनिको वृद्ध्यभावान्नरीत्येव भवितव्यमित्याठुः। तदपरे न क्षमन्ते। यदि ङीनर्थमेव नरशब्दग्रहणं स्यात्तर्हि शाङ्र्गरवादिगणे पृथगेव पठेत्। वृद्धिविधायके तद्गणसूत्रे तत्पाठस्य वैयथ्र्यापत्तेरिति। पुत्रशब्दोऽत्र गणे पठ()ते। ततः स्त्रियां ङीन्। पुत्री। न च पुत्रशब्दः कन्यायां नास्तीति शङ्क्यम्, "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रीयां त्वमी। आहुर्दुहितरं सर्वे"इत्यमरोक्तेः। तेन "पुत्रीव हर्षं ह्मदये तनोति"। "कुर्वे तदुर्वीपतिपुत्रि। सर्वम्ित्यादिप्रयोग निर्बाधा एव। यत्वत्र हरदत्तेनोक्तम्--"कोवलः पुत्रशब्दः स्त्रियां नास्ती"ति। तदुपेक्ष्यम्। उदाह्मतकोशविरोधात्। "सूतिकापुत्रिस्थवार्तिकं व्यर्थमिति मनोरमायां स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

यङश् चाप् ४।१।७४

यङन्तात् प्रातिपदिकात् स्त्रियां चाप् प्रत्ययो भवति। ञ्यङः ष्यङश्च सामान्यग्रहणम् एतत्। आम्बष्ठ्या। सौवीर्या। कौसल्या। ष्यङ् कारीषगन्ध्या। वाराह्या। बालाक्या। षाच् च यञः। षात् परो यो यञ् तदन्ताच् चाप् वक्तव्यः। शार्कराक्ष्या।

अपुतिमाष्या। गौकक्ष्या। उत्तरसूत्रे चकारो ऽनुक्तसमुच्चयार्थः, तेन वा भविष्यति।

न्यासः

यङश्चाप्। , ४।१।७४

पकारोऽत्र "ङ्याप्प्रातिपदिकात्" ४।१।१ इत्यत्र सामान्यग्रहणार्थः,चकारस्तदविघातार्थः, एवमुभयोरन्यत्र चरितार्थयोः "अनुदात्तौ सुप्पितौ" ३।१।४ इत्येतद्बाधित्वा परत्वात् "चितः" ६।१।१५७ इत्यन्तोदात्तत्वं चापो भवति। "ञ्यङः ष्यङश्च सामान्यग्रहणमेतत्" इति। विशेषकरानुबन्धानुत्सृज्य यत्सामान्यं यङमात्रं तस्येदं ग्रहणम्। कथं पुनः सामान्यग्रहणं युज्यते; यावता ञ्यङ एव तत्र ग्रहणं युक्तम्, तथा हि-- सोऽपत्ये विधीयमानः स्त्रीत्वं वक्तुमसमर्थ इति स्त्रीप्रत्ययमपेक्षते, न तु ष्यङ, तस्य स्त्रियामेव विधानात्? नैतदस्ति; यदि हि सामान्यग्रहणं न स्यात् ष्यङो ङित्करणमनर्थकं स्यात्। तस्य ह्यत्र सूत्रे सामान्यग्रहणेव प्रयोजनम्, नान्यत किञ्चित्। तस्मात् ङित्करणसामर्थ्यात् ष्यङोऽपि ग्रहणं भवति। "आम्बष्ठ()आ" इत्यादि। आम्बष्ठसौवीरकोसलशब्देभ्योऽपत्येऽर्थे "वृद्धेत्कोसलाजादाञ्ञ्यङ्" ४।१।१६९ इति ञ्यङ्, तदन्ताच्चाप्। "कारीषगन्ध्या" इति। एतत् स्वादिसूत्रे ४।१।२ व्युत्पादितम्। "वाराह्या" इति। वराहशब्दात् "अत इञ्" ४।१।९५। "बालाक्या" इति। बलाकाशब्दाद्बाह्वादिलक्षम इञ्। उभयत्र "अणिञोरनार्षयोः" ४।१।७८ इत्यादिना ष्यङादेशः, तदन्ताच्चाप्। "शार्कराक्ष्या" इत्यादि। शर्कराक्षपूतिमाषगोरक्षशब्देभ्यो गर्गादियञन्तेभ्यश्चाप्॥

बाल-मनोरमा

यङश्चाप् ५२१, ४।१।७४

यङश्चाप्। पकारो "हल्ङ्याब्भ्यः" इत्यत्र ग्रहणार्थः। चकारः "चितः" इत्यन्तोदात्तार्थः। सामान्येति। यङ्रूपस्य उभयत्रापि सत्त्वादिति भावः। ञ्यङमुदाहरति--आम्बष्ठ()एति। आम्बषष्ठस्यापत्यं स्त्रीत्यर्थः। "वृद्धेत्कोसले"ति ञ्यङ्। आम्बष्ठ()शब्दाच्चाप्। ष्यङमुदाहरति--कारीषगन्ध्येति। करीषं=गवादिपशुपुरीषं, तस्येव गन्धो यस्य सः-करीषगन्धिः। "उपमानाच्चे"ति गन्धस्य इकारोऽन्तादेशः। करीषगन्धेर्गोत्रापत्यं स्त्रीत्यर्थेऽण्प्रत्ययः। "अणिञोरनार्षयोः" इति तस्य ष्यङादेशः।

षाद्यञ इति। षकारात्परो यो यञतदन्तादपि चाबित्यर्थः। शार्कराक्ष्येति। शर्कराक्षस्यापत्यं स्त्रीत्यर्थः। पौतिमाष्येति। पूतिमाषस्यापत्यं स्त्रीत्यर्थः। "गर्गादिभ्यो य"ञित्युभयत्र यञ्।

तत्त्व-बोधिनी

ङश्चाप् ४७०, ४।१।७४

यङ्श्चाप्। पकारोऽत्र "हल्ङ्याबि"ति सामान्ग्रहणार्थः। चकारस्य तदविघातेन चरितार्थत्वेऽपि परत्वाच्चित्स्वरः पित्स्वरं बाधते। आम्बष्ठ()एति। आम्बष्ठस्यापत्यं स्त्री। "वृद्धेत्कोशला----"इति ञ्यङ्। कारीषगन्ध्येति। करीषस्येव गन्धोऽस्य करीषगन्धिः। "उपमानाच्चे"ति गन्धस्येदन्तादेशः। तस्य गोत्रापत्यं स्त्री। अण्। "अणिञोरनार्षयोः----"इति ष्यङादेशः। स च यद्यपि स्त्रियामेव विहितसतथापि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप्। षाद्यञ इति। एतच्च "आवट()आच्चे"ति चकारस्यानुक्त समुच्चयार्थत्वाल्लभ्यत इत्यहुः। पौतिमष्येति। पूतिमाषशब्दो गर्गादिः।

षाद्यञश्चाववाच्यः। तद्धिताः। बहुवचनमनुक्तानामुपसङ्ग्येयानां सङ्ग्रहार्थम्। महासंज्ञाकरणं तु --तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इत्यन्वर्थलाभाय। तेन यथाप्रयोगमेव स्युः। ननु टापः प्रागेवायमधिकारोऽस्तु, ष्फविधौ तद्धितग्रहणं यस्येतिलोपे, ईद्ग्रहणं च मास्त्विति चेन्मैवम्; "पठ्वी""मृद्वी"त्यादावोर्गुणपर्सङ्गात्। यदि तु "यस्येति चे"त्यत्र

ईद्ग्रहणमेव ङीषि तद्धितकार्याऽभावं ज्ञापयतीति स्वीक्रियेत, तर्हि टापः प्राक्तद्धिताधिकारेऽपि न कश्चिद्दोष इथि केचित्। तच्चिन्त्यम्। "कुरु"रित्यादौ ओर्गुणादिप्रसङ्गादिति नव्याः।

---

सूत्रम्

काशिका-वृत्तिः

आवङ्याच् च ४।१।७५

अवटशब्दो गर्गादिः, तस्माद् यञि कृते ङीपि प्राप्ते वचनम् एतत्। आवट्याच् च स्त्रियां चाप् प्रत्ययो भवति। आवट्या प्राचां ष्फ एव, सर्वत्र ग्रहणात्। आवट्यायनी।

न्यासः

आवट�आच्च। , ४।१।७५

"ङीपि प्राप्ते" इति। "यञश्च" ४।१।१६ इत्यनेन॥

बाल-मनोरमा

आवट�आच्च ५२२, ४।१।७५

आवट()आच्च। ननु कथमवयशब्दस्यापत्यमित्यर्थे यञन्तत्वमित्यत आह--अवटशब्द इति। आवट()एति। अवटस्यापत्यं स्त्रीत्यर्थः। गर्गादियञि "यस्येति चे"त्यकार लोपे आदिवृद्धौ आवठ()शब्दाच्चाप्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तद्धिताः १।३

अर्थः॥

अधिकारोऽयम्। इतः अग्रे आपञ्चमाध्यायपरिसमाप्तेः (५।४।१६०) वक्ष्यमाणाः प्रत्ययाः तद्धितसंज्ञाः भवन्ति।

उदाहरणम्॥

अग्रे उदाहरिष्यामः

काशिका-वृत्तिः

तद्धिताः ४।१।७६

अधिकारो ऽयम्। आपञ्चमाध्यायपरिसमाप्तेः यानित ऊर्ध्वम् अनुक्रमिस्यामः तद्धितसंज्ञास्ते वेदितव्याः। वक्ष्यति, यूनस्तिः ४।१।७७ युवतिः। बहुवचनम् अनुक्ततद्धितपरिग्रहार्थम्। पृथिव्या ञाञौ ४।१।८५, अग्रादिपश्चाड् डिमच् ४।३।२३ इत्येवम् आदि लब्धं भवति। तद्धितप्रदेशाः कृत्तद्धितसमासाश्च १।२।४६ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तद्धिताः ९१९, ४।१।७६

आपञ्चमसमाप्तेरधिकारोऽयम्॥

न्यासः

तद्धिताः। , ४।१।७६

"युवतिः" इति। तद्धितसंज्ञायां सत्यां "कृत्तद्धित" १।२।४६ इत्यादिना प्रातिपदिकसंज्ञा भवति। अथ "तद्धिताः" इति न सम्भवति बहुवचननिर्देशः, यथैव हि "प्रत्ययः" ३।१।१ इत्येकवचननिर्देशेऽपि वक्ष्यमाणानां बहूनामपि सन्नादीनां सर्वेषां सा संज्ञा भविष्यति, तथाऽत्राप्येकवचनेनैव निर्देशः कत्र्तव्यः? इत्यत आह-- "बहुवचनम्" इत्यादि। एकवचन एव कत्र्तव्ये यद्बहुवचनं क्रियते तस्यैतत्प्रयोजनम्--अनुक्ता ये तद्धिता लक्षणवाक्यैरनभिहितास्तेषामपि परिग्रहो यथा स्यात्। ततः "पृथिव्या ञाञौ" (वा।३७६) इत्यादि न कत्र्तव्यं भवति। बहुवचननेनैवानुक्ततद्धितपरिग्रहार्थेन तेषां सिद्धत्वे महत्याः संज्ञायाः करण एतत् प्रयोजनम्, अन्वर्थसंज्ञा यथा विज्ञायेत-- तेभ्यो हितास्तद्धिताः। तदित्यनेन लौकिका वैदिकाश्च शब्दाः प्रत्यवमृश्यन्ते; तेषां व्युत्पाद्यत्वेन प्रकृतत्वात् तेन तत्रैव भवन्त्यणादयो यत्र च भवन्तस्तेषामुपकारिणो भवन्ति, नान्यत्रेति। तेनाभिधानलक्षणत्वं तद्धितानामुपपन्नं भवति। अथ तद्धिताधिकारः स्त्रीप्रत्ययानामादित एव कस्मान्न क्रियते? किमेव सति भवति? तद्धितानामुपपन्नं तद्धितानन्तत्वात् प्रातिपदिकमिति "ङ्याप्प्रातिपद#इकात्" ४।१।१ इत्यत्र ङ्याब्ग्रहमं न कत्र्तव्यं भवति, "प्राचां ष्फ तद्धितः" ४।१।१७ इत्यत्र च तद्धितग्रहणम्, "यस्येति च" ६।४।१४८ इतीकारग्रहणञ्च;तद्धित इत्येवं सिद्धत्वात्? अशक्यमेवं कर्त्तुम्; एवं हि क्रियमाणे तत्र ङ्याब्ग्रहणस्य यत् पूर्वं प्रयोजनमुक्तं तन्न स्यात्; ङीब्ङीष्ङीनाञ्च ङकारस्येत्संज्ञा "अतद्धिते" १।३।८ इति प्रतिषेधात्। इह च पट्वीति "ओर्गुणः" ६।४।१४६ इति गुणः स्यात्। तस्माद्यथान्यासमेवास्तु॥

बाल-मनोरमा

तद्धिताः ५२३, ४।१।७६

तद्धिताः। वक्ष्यमाणाः प्रत्ययास्तद्धितसंज्ञकाः प्रत्येतव्या इत्यर्थः। अधिकार सूत्रमेतत्। उत्तरावधिमाह--आ पञ्चमेति।

---

सूत्रम्

काशिका-वृत्तिः

यूनस् तिः ४।१।७७

युवन्शब्दात् प्रातिपदिकात् स्त्रियां तिः प्रत्ययो भवति। स च तद्धितसंज्ञो भवति। ङीपो ऽपवादः। युवतिः।

न्यासः

यूनस्तिः। , ४।१।७७

"ङीपोऽपवादः" इति। नकारान्तत्वात् "ऋन्नेभ्यो ङीप्" ४।१।५ इति प्राप्तस्य। अथेदन्तात् "इतो मनुष्यजातेः" (४।१।६५) इति ङीष् कस्मान्न भवति? अमनुष्यजातित्वात्। न हि युवतिशब्दो मनुष्यजातिवचनः, किं तर्हि? वयोवचनः। तथा हि यौवनावस्थायामेव स वत्र्तते, न बाल्यवृद्धत्वावस्थायाम्। न चैवंविधा जातिशब्दाः,ते हि सर्वावस्थासु व्युक्तिषु जातिनिबन्धना वत्र्तन्ते, गोशब्दादिवत्॥

बाल-मनोरमा

यूनस्तिः १६०, ४।१।७७

यूनस्तिः। "तद्धिता" इत्यनुवृत्तमेकवचनेन विपरणम्यते। तदाह--युवन्शब्दादित्यादि। "स्त्रिया"मिति शेषः।

"समर्थना"मित्यतः प्राक्तदधिकारस्योक्तत्वादिति भावः। नान्तलक्षणङीपोऽपवादः। नन्वत्र तद्धितग्रहणानुवृत्तिर्व्यर्था। नच "कृत्तद्धिते"ति प्रातिपदिकत्वार्थं तदनुवृत्तिरिति वाच्यम्, प्रातिपदिकत्वाभावेऽपि लिङ्गविशिष्टपरिभाषया तिप्रत्ययान्तात्सुबुत्पत्तिसिद्धेरित्यत आह--लिङ्गविशिष्टस्येति। युवतिरिति। स्वादिष्विति पदत्वात् "न लोप" इति नकारलोपः। अनुपसर्जनादित्येवेति। अनुवर्तत एवेत्यर्थः। बहुयुवेति। उपसर्जनत्वात्तिप्रत्ययाऽभावे नान्तलक्षणङीपः "अनो बहुव्रीहेः" इति निषेधे "डाबुभाभ्या"मिति डापि च रूपम्। ननु "युवतीभिः परिवृत" इत्यादौ कथं युवतीशब्द ईकारान्त इत्यत आह--युवतीति त्विति। "युमिश्रणे" इत्यस्माल्लटः शतरि, शपो लुकि, उवङि उगित्त्वान्ङीपि युवतीशब्दो व्युत्पन्नो बोध्य इत्यर्थः। पतिं सुखेन मिश्रयन्ती योषिदुच्यते। अन्ये तु युधातोरौणादिके बाहुलकात्कतिप्रत्यये कित्त्वाद्गुणाऽभावे उवङि उगित्त्वान्ङीपि युवतीशब्दः सिध्यतीत्याहुः।

इति श्रीमद्वासुदेवदीक्षितविरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां स्त्रीप्रत्ययनिरूपणम्।

----------------------

अथ स्वादिसन्धिः।

तत्त्व-बोधिनी

यूनस्तिः ३०७, ४।१।७७

यूनस्तिः। "ऋन्नेभ्यः"इति ङीपोऽपवादः। युवतिरिति। "स्वादिषु---"इति पदत्वान्नलोपः। कथं तर्हि "युवतीकरकोमलनिर्मथित"मिति प्रयोगः। अत्र केचित्--"सर्वतोऽक्तिन्नर्था"दिति बह्वादिगणसूत्राद्वैकल्पिकोऽत्र ङीष्। न च तिप्रत्ययेनैव स्त्रीत्वस्योक्तत्वान्ङीष् नभविष्यतीति शङ्क्यम्,---"उक्तेऽपि हि भवन्त्येते"इति भष्यात्। न चैवमपि युवतीनां समूहो "योवत"मिति न सिध्येत्। किं तु "तस्य समूहः"इत्यणि "भस्याढे तद्धिते"इति पुंवद्भावेन "यौवन"मित्येव स्यादिति वांच्यम्, बाहुलकाद्यौतेरौणादिके कतिप्रत्ययेसति युवतिशब्दस्तमादय तत्सिद्धेरिति। इमं क्लेशं परिहारन्नाह---शत्रन्तादिति। यौति मिश्री करोति पत्येति विग्रहे "लटः शतृशानचौ"इति शतरि "उगितश्च"इति ङीप्। एवं हि "यौवत"मिति प्रयोगोऽपि सुलभः। त्यन्तादणि तु पुंवद्भावाद्यौवनमित्येव। "भिक्षादिपाठसामश्र्यात् पुंव"दिति वृत्तिकारोक्तिरयुक्तेति "भिक्षादिभ्योऽण्ित्यत्रैवोपपादयिष्यामः। *इति तत्त्वबोधिन्यां स्त्रीप्रत्ययप्रकरणम्*

अथ स्वादयः।

षुञ्। सुन्व इति। "लोपश्चास्ये"त्युकारस्य लोपः।

---

सूत्रम्

काशिका-वृत्तिः

अणिञोरनार्षयोर् गुरूपोत्तमयोः ष्यङ् गोत्रे ४।१।७८

गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोर् गुरूपोत्तमयोः स्त्रियां ष्यङादेशो भवति। निर्दिष्यमानस्य आदेशा भवन्ति इत्यणिञोरेव विज्ञायते, न तु समुदायस्य। ङकारः सामान्यग्रहणार्थः। षकारस् तदविघातार्थः, यङश्चाप् ४।१।७४ इति। उत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमक्षरमाह। उत्तमस्य समीपम् उपोत्तमम्। गुरु उपोत्तमं यस्य तद् गुरूपोत्तमं प्रातिपदिकम्। करीषस्य इव गन्धो ऽस्य करीषगन्धिः। कुमुदगन्धिः। तस्यापत्यम् इत्यण्। तस्य ष्यङादेशः। कारीषगन्ध्या। कौमुदगन्ध्या। वराहस्यापत्यम्। अत इञ् ४।१।९५। वाराहिः। तस्य ष्यङादेशः। वाराह्या। बालाक्या।

अणिञोः इति किम्? ऋतभागस्यापत्यं, बदादित्वादञ्, आर्तभागी। गुरूपोत्तमादिकं सर्वम् अस्ति इति न स्तणिञौ। टिड्ढाणञ् ४।१।१५ इति ङीबेव भवति। अनार्षयोः इति किम्? वासिष्ठी। वैश्वामित्री। गुरूपोत्तमयोः इति किम्? औपगवी। कापटवी। गोत्रे इति किम्? तत्र जाताः ४।३।२५ आहिच्छत्री। कान्यकुब्जी।

न्यासः

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे। , ४।१।७८

इह "अणिञोः" इति प्रत्ययमात्रं वा गृह्यते? तदन्तो वा समुदायः? तत्र यद्याद्यः पक्ष आश्रीयेत, "गुरूपोत्तमयोः" इति विशेषणं नोपपद्येत। न ह्यणिञोर्गुरूपोत्तमत्वं सम्भवति, कस्य तर्हि? तदन्तस्य समुदायस्य। तस्माद्द्वितीयः पक्ष आश्रयितुं युक्त इति मत्वाऽऽह-- "गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोः प्रातिपदिकयोः" इति। यदि तर्हि समुदायस्याणन्तस्येञन्तस्य चेदं ग्रहणम्, "अनार्षयोः" इति विशेषणं न प्रकल्प्येत; समुदायस्य ऋषादेव विधानात्। अणिञोस्तु प्रकल्प्यत एतद्विशेषणम्; तयोरृषादन्यतर् च विधानात्। "गोत्रे" इत्यपि विशेषणमणिञोरेव युक्तम्, न समुदायस्य; तथा हि "अपत्यं पौत्रप्रभृति गौत्रम्" ४।१।१६२ इति परिभाषिकं गोत्रमिह गृह्यते,तत्र चाणिञावेव विहितौ, न समुदायः? नैष दोषः; समुदायस्यैते विशेषणे न सम्भवत इति सामर्थ्यादेकदेशयोरणिञोर्विज्ञायेते। अत एव वृत्तावाह-- "गोत्रे यावणिञौ विहितावनार्षौ" इति। इहायं ष्यङादेशो वा स्यात्? प्रत्ययो वा? ननु च षष्ठीनिर्देशादादेशेनैवानेन भवितव्यमिति असन्दिग्धमेतत्, तदयुक्ता द्वितीयपक्षाशङ्का? नैतदस्ति; प्रत्ययविधावपि षष्ठीनिर्देशो दृश्यते, यथा-- "गापोष्टक्" ३।२।८ "व्रीहिशाल्योर्ढक्" ५।२।२ इति,तस्मात् प्रत्ययपक्षशङ्कापि युक्तैव। तत्र यदि प्रत्ययः स्यात्, औदमेधेय इति न सिध्येत्। उदमेघस्यापत्यं स्त्री-- "अत इञ्" ४।१।९५, तदन्तादनेन ष्यङ्, इकारस्व यस्येति ६।४।१४८ लोप), "यङश्चाप्" ४।१।७४, औदमेध्या, तस्या अपत्यमिति "स्त्रीभ्यो ढक्" ४।१।१२० , एयादेशः। तस्मिन् "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ इति यलोप इष्यते, स न प्राप्नोति; अनापत्ययकारत्वात्। ननु च "हलस्तद्धितस्य" (६।४।१५०) इति चेत्? न; ईतीत्यत्रानुवत्र्तते। आदेशपक्षे त्वणिञोरपत्यत्वात् तदादेशस्यापि ष्यङः स्थानिवद्भावेनापत्यत्वमिति सिध्यति यलोपः। तस्मादादेशपक्ष एव साधुरित्यभिप्रायेणाह---"ष्यङादेशो भवति" इति। ननु चादेशपक्षेऽप्यौडुलोम्येति न सिध्यति, लोमशब्दो बाह्वादिषु पठ()ते। तस् केवलस्यापत्येन संयोगो नास्तीति तदन्तः समुदायो गृह्यते, तत उडुलोम्नोऽपत्यं स्त्री--बाह्वादित्वादिञि कृते तस्य च ष्यङादेशः। तत्र "नस्तद्धिते" ६।४।१४४ इति टिलोप इष्यते, स च न प्राप्नोति;"ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिभावात्। प्रत्ययपक्षे त्विञो व्यवहितत्वात् ष्यङः प्रकृतिभावो नास्तीति भयति टिलोपः। नन "यस्येति च" ६।४।१४८ इति लोपे कृते नास्ति व्यवधानम्। "अचः परस्मिन् पूर्वविधौ" १।१।५६ इति लोपस्य ६।४।१४८ इति लोपे कृते नास्ति व्यवधानम्। "अचः परस्मिन् पूर्वविधौ" १।१।५६ इति लोपस्य स्थानिवद्भावादस्त्येव। आदेशपक्षेऽप्यदोषः; आनुपूव्र्या सिद्धत्वात्। न ह्यत्राकृते लोपे गुरुपोत्तमत्वं सम्भवति। तत्र प्रागेव ष्यङ इञि तस्यैव टिलोपः, ततो गुरुपोत्तमता। ततः ष्यङित्यानुपूव्र्या सिद्धत्वम्। अयं तह्र्यादेशपक्ष दोषः-- अनेकाल्त्वात् सर्वादेशः प्राप्नोति, "ङिच्च" (१।१।५३) इत्यन्तस्य प्राप्नोतीति चेत्? नैतदस्ति; अपवादप्रतिषेधाद्धि सर्वादेशः प्राप्नोतीति। "ङिच्च" १।१।५२ इत्यन्तादेशः क्रियताम्, आहोस्विदनेकाल्त्वात् सर्वादेशः, तत्र परत्वात् सर्वादेशः प्राप्नोति, यथा-- "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" (७।१।३५)? इत्यत आह-- "निर्दिश्यमानस्य" इत्यादि। यथा पाच्छब्दस्य पदित्ययमादेशो विज्ञायते न पाच्छब्दान्तस्य समुदायस्य, तथाऽयमपि निर्दिश्यमानयोरणिञोरेव विज्ञायते। तत् क्व तर्हि सर्वादेशेन भवितव्यम्? यत्र समुदायात् षष्ठ्युच्चारिता, यथा--तुह्योरिति। "ङकारः सामान्यग्रहणार्थः" इति। असति हि तत्र "यङश्चाप्" ४।१।७४ इत्यत्र "वृद्धेत्कोसलाजादाञ्ञ्यङ्" ४।१।१६९ इत्यस्यैव ग्रहणं स्यात्, न ष्यङः। "षकारस्तदविघातार्थः" इति। तत्र ह्यसत्येकानुबन्धकग्रहणे न द्वयनुबन्धकस्य (व्या।प।५२) त्यस्यैव ग्रहणं स्यात्, न ञ्यङः। उत्तमशब्दोऽयमस्त्येव व्युत्पन्नं तमबन्तं प्रातिपदिकम्, अस्त्यव्युत्पन्नम्। तत्र यदि व्युत्पन्नस्येदं ग्रहणं

स्याद्वाराह्वेति न सिध्येत्; यस्माद्व्युतप्त्तिमानुत्तमशब्दश्चतुष्प्रभृतिष्ववतिष्ठते। यथा ह्रुच्छब्दादुद्गताभिधायिनस्तमप्प्रत्ययोऽतिशायने विधीयते। अनुद्गतञ्चापेक्ष्योद्गतो भवति। त्रिषु च द्वावुद्गतौ,एकोऽनुद्गतः,न च द्वयोरयं चोद्गत इत्ययमनयोरतिशयेनोद्गत इत्यर्थविवक्षायां तमबुत्पद्यते; तरपा विशेषविहितेन बाधितत्वात्। चतुर्षु तु त्रय उद्गताः, एकोऽनुद्गतः, ततर् त्रीनुद्गतानपेक्ष्यायञ्चोद्गतः। अयं चैषामतिशयेनोद्गत इत्यर्थविवक्षायां तमबुत्पद्यते, तस्माच्चतुर्ष्वेव प्राप्नोति; तत्र चोत्तमशब्दस्य स्वरूपसिद्धेः, ततश्च वाराह्वेति न सिध्येत्। न ह्यत्र चत्वारः सन्तीत्येतदालोच्याव्युत्पन्नोऽयमिहोत्तमशब्दो गृह्रत इति दर्शयन्ननाह-- "उत्तमशब्दः स्वभावात्" इत्यादि। अध्युत्पन्न एव ह्युत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमाह, न व्युत्पन्नः। स हि चतुष्प्रभृतीनामन्त्यमाह, तस्मात् "उत्तमशब्दः स्वभावात्" इत्यादिना ग्रन्थेनाव्युत्पन्नस्योत्तमशब्दस्येह ग्रहणमिति दर्शितं भवति। तदेवमव्युत्पन्नस्य ग्रहणे वाराहीत्येतदपि सिद्धं भवति। "टिड्()ढाणञिति ङीबेव भवति" इति। प्रमादपाठोऽयम्। यथैव हि बैदीति जातित्वादञन्तात् "शाङ्गरवाद्यञो ङीन्" ४।१।७३ इति ङीन् भवति, तथेहापि ङीनैव भवितव्यम्। जातित्वं तु गोत्रत्वात्। तस्मात् "शाङ्गरवाद्यञो ङीन् इति ङीनेव भवति" इत्ययमेवात्र पाठो द्रष्टव्यः। "वासिष्ठी, वै()आआमित्री" इति। "ऋष्यन्ध" ४।१।११४ इत्यादिनिऽण्। "औपगवी, कापटवी" इति। उपगुकपटुशब्दाभ्यामौत्सर्गिकोऽण्, "ओर्गुणः" ६।४।१४६। "आहिच्छत्री। वै()आआमित्री" इति। "तत्र जातः" ४।३।२५ इत्यण्॥

बाल-मनोरमा

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ११८०, ४।१।७८

अणिञोः। त्र्यादीनामन्त्यमुत्तममिति। तथा भाष्यादिति भावः। तस्य समीपमुपोत्तममिति। सामीप्येऽव्ययीभाव इति भावः। गुरु-उपोत्तमम्-उत्तमसमीपवर्ति ययोरिति विग्रहः। प्रातिपदिकादित्धिकृतं षष्ठीद्विवचनेन विपरिणम्यते। उपोत्तमगुरुवर्णकयोः प्रातिपदिकयोरिति लभ्यते। "अणिञो"रित्यनेन प्रत्ययग्रहणपरिभाषयाञन्तयोग्र्रहणम्। "गोत्रे" इत्येतत् अणिञोरन्वेति। ऋषेरविहितौ-अनार्षौ। इदमपि अणिञोविशेषणं। स्त्रियामित्यधिकृतम्। तदाह गोत्रे यावणिञावित्यादिना। आदेशः स्यादिति। स्थानषष्ठीनिर्देशादादेशत्वलाभः।

ननु अणिञन्तयोः श्यङादेशोऽयमनेकाल्त्वात्सर्वादेशः स्यादित्यत आह--निर्दिश्यमानस्येति। तथा च अणिञोरेवायमादेश इति भावः। "ङिच्चे"त्यन्तादेश इति तु न युक्तं, ङित्वस्य ष्यङः सम्प्रसारण"मित्यादौ चरितार्थत्वात्। कुमुदगन्धेरिति। कुमुदगन्ध इव गन्धो यस्येति विग्रहः। "सप्तम्युपनानपूर्वपदस्य बहुव्रीहिर्वाच्यः, उत्तरपदलोपश्चे"ति बहुव्रीहिः, पूर्वखण्डे उत्तरपदस्य गन्धशब्दस्य लोपश्च। "उपमानाच्चे"ति इत्वं। कुमुदगन्धेरपत्यं स्त्रीति विग्रहे अण्। "यस्येति चे"ति इकारलोपः, आदिवृद्धिः, कौमुदगन्धशब्दः, तत्र धकारादणोऽकार उत्तमः। तत्समीपवर्ती गुरुः गकारादकारः, "संयोगे गुरु" इत्युक्तेः। नचाऽनुस्वारधकारव्यवहितत्वात्कथमुत्तमसमीपवर्तित्वं गकारादकारस्येति वाच्यं, येन नाव्यवधानं तेन व्यवहितेऽपी"ति न्यायेन हला व्यवधानस्याऽदोषत्वात्। नह्यणि परेऽव्यवहितो गुरुः क्वचिदस्ति। एवंच गुरूपोत्तमं प्रातिपदिकं कौमुदगन्धेत्यणन्तं, तदवयवस्य अमः ष्यङादेशे "यङश्चा"विति चापि कौमुदगन्ध्याशब्द इत्यर्थः। इञन्तस्योदाहरति--वाराह्येति। वराहस्यापत्यं स्त्री विग्रहः। अत इञ्। अकारलोपः। वाराहिशब्दः। तत्र इकार उत्तम#ः। रेफादाकार उत्तमसमीपवर्ती गुरुः इञ इकारस्य ष्यङादेशः, चाविति भावः। वासिष्ठी वै()आआमित्रीति। ऋष्यणन्तावेतौ औपगवीति। अणन्तत्वेऽपि गुरूपोत्तमत्वाऽभावान्न ष्यङ्। जातिलक्षण इति। "गोत्रं च चरणैः सहे ति जातित्वम्। आहिच्छत्रीति। जातार्थे अणयं, नतु गोत्र इति न ष्यङ्। नच ष्यङ्प्रत्यय एव कुतो न विधीयते इति वाच्यं, तथा सति उदमेघस्यापत्यं स्त्रीति विग्रहेऽत इति ष्यङि चापि औदमेध्या, तस्या अपत्यं ओदमेधेय इति न सिध्येत्, अस्यापत्यप्रत्ययत्वाऽभावेन यलोपाऽप्राप्तेरिति स्पष्टं भाष्ये।

तत्त्व-बोधिनी

अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ९७६, ४।१।७८

अणिञोः। उत्तममिति। अव्युत्पन्नं प्रातिपदिकमिदं न तूच्छब्दात्तमप्ष तेन "किमेत्तिङव्ययघादि"त्याम् नशङ्क्यः। गोत्रे याविति। "अपत्याधिकारादन्यत्र लौकिकं गोत्र"मिति नेह शास्त्रीयं गृह्रते। तथा च "अनार्षयो"रिति पर्युदासादेव सिद्धे गोत्रग्रहणमिह त्यक्तुं शक्यम्। न चाऽत्र गोत्रग्रहणसामथ्र्याच्छास्त्रीयमेव गोत्रं गृह्रत इति वाच्यं, दैवदत्त्या याज्ञदत्त्येत्यादीनामानन्तरापत्येऽपीष्यमाणत्वात्। अतएवानुपदं वक्ष्यति "कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्ये"ति। इदं च कौस्तुभानुसारि व्याख्यानमत्रत्यमूलानुगुणमपि "दैवयज्ञि"सूत्रस्थेन "अगोत्रार्थ"मित्यादिमूलग्रन्थेन सह विरुध्यत इति तत्रैव स्फुटीभविष्यति। यद्यपि स्त्रीप्रत्ययाः प्रकृतास्तथापि "पत्युर्नो यज्ञसंयोगे"इति नकारस्येव ष्यङ आदेशत्वमेवोचितम्, "अणिञो"रिति षष्ठीस्वरसादित्यभिप्रेत्याह---ष्याङादेशः स्यादिति। ष्यङः प्रत्ययत्वेऽपि लक्ष्यसिद्धिरप्रत्यूहेति मनोरमायां स्थितम्। नन्वयं "ङिच्चे"त्यन्तादेशं बाधित्वापर्तावत्सर्वादेशः स्यात्। "ङिच्चे"त्यस्यानन्यार्थङित्त्वेष्वनङादिषु चरितार्थत्वात्। ष्यङोऽनुबन्धस्य "यङश्चा"बिति विशेषणार्थतया सप्रयोजनत्वादित्याशङ्क्याह---निर्दिश्यमानस्येति। षङाविताविति। अनुबन्धद्वयकरणं ञ्यङ इव ष्यङोऽपि "यङश्चा"बित्यत्र सामान्यग्रहणार्थम्। न च "ष्यङः संप्रसारण"मित्यत्र विशेषणार्थं तयोरुपयोगोऽस्ति। अन्यथा पाश्यापुत्रः पाश्यापतिरित्यत्र "पाशादिभ्योः येः"इति यप्रत्ययेऽपि संप्रासारणप्रसङ्ग इति वाच्यं, "यङः संप्रसारण"मित्येकानुबन्देनापि तद्वारणात्। "लोलूयापति"रित्यत्र त्वकारप्रत्ययेन व्यवधानात्संप्रसारणाऽभावः। "कौमुदगन्धीपुत्र" इत्यत्र त्वेकादेशस्य पूर्वान्तत्वेन ग्रहणान्नास्ति व्यावधानमिति संप्रसारणं सिध्यति। कौमुदगन्ध्येति। अणः ष्यङ्। वाराह्येति। इञः ष्याङ्। अणिञोः किम्()। ऋतभागस्यापत्यमार्तभागी। बिदादित्वादञ्। "शार्ङ्गरवाद्यञः"इति ङीन्। "टिड्ढे"त्यादिना ङीबिति तु वृत्तिकारः। "अणिञो"रित्यत्र तु लौकिकं गोत्रं गृह्रते। "गोत्रं च चरणै"रित्यत्र तु पारिभाषिकमेव गृह्रते। तेन जातित्वाऽभावान्ङीनः प्राप्तिर्नास्तीति स्थितस्य गतिमाहुः।

---

सूत्रम्

काशिका-वृत्तिः

गोरावयवात् ४।१।७९

अणिञोः इत्येव। गोत्रावयवाः गोत्राभिमताः कुलाख्याः पुणिकभुणिकमुखरप्रभृतयः। ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशो भवति। अगुरूपोत्तमार्थ आरम्भः। पौणिक्या। भौणिक्या। मौखर्या। येषां स्वनन्तरापत्ये ऽपि इष्यते दैवदत्त्या, याज्ञादत्त्या इति , ते क्रौड्यादिषु द्रष्टव्याः।

न्यासः

गोत्रावयवात्। , ४।१।७९

गोत्रञ्च तदवयवञ्चेति गोत्रावयवः। इह त्वभिधानेऽभिधेयोपचारं कृत्वा तदभिधायिप्रातिपदिकं गोत्रावयव शब्देनोक्तम्। ननु चैवं विग्रहे विशेषणत्वादवयवशब्दस्य नीलोत्पल इव नीलशब्दस्य पूर्वनिपातः स्यात्। राजदन्तादेराकृतिगणत्वाद्विशेषणस्य परनिपातो भविष्यति। गोत्रं पुनरिह लौकिकं गृह्रते, न पारिभाषिकम्। लोके च प्रधानभूत आदिपुरुषः स्वप्रभवस्यापत्यसन्तानस्य संज्ञाकारी गोत्रमुच्यते। तथा हि भरतो नाम कश्चिदाद्यः प्रधानः पुरुषोऽभूत्, तेन सर्व एव तत्पूर्वकाः पुत्त्रपौत्त्रादयो भरता इति व्यपदिश्यन्ते। अवयवशब्दोऽयमस्त्येवैकदेशे, तत्सम्बन्धादवयवीति समुदाय उच्यते। अस्ति च पृथग्भावे--अवयुतिः = अवयवः, पृथग्भूत इत्यर्थः। यद्यपि

यौतिर्मिश्रणे पठ()ते, तथाप्यनेकार्थत्वाद्धादूनामवपूर्वः पृतघ्भावमाचष्टे। अस्त्यप्रधाने, यथा-- कुलावयवोऽयम्, सङ्घावयवोऽयमिति। कुलसय् सङ्घस्य चाप्रधानभूतोऽयमिति गम्यते। तत्र यदेयकदेशवाची गृह्नते तदुपादानमनर्थकं स्यात्, गोत्रादित्येव वक्तव्यम्। गोत्रादवयवोऽपि हि गोत्रं भवति, यथा-- क्षीरावयवः क्षीरमिति। अथापि पृथग्भावे गोत्रादन्यत्र वत्र्तमानो गृह्नते, एवमपि पुणिकादिभ्यो विहितयोरणिञो विहितौ; अनिष्टञ्चैतत्; तस्यैकदेशवाचिनि पृथग्भाववाचिनि वाक्यशब्दे दोष इत्यत्राप्रधानवाच्येव गृह्नते। "गोत्रावयवाः" इति। पुणिकादिश्रुतीनामेतद्विशेषणम्। अप्रधानगोत्राभिधायिन्य इत्यर्थः। "गोत्रभमताः" इति। गोत्रमित्येवमभिमता गोत्राभिवायिन्य इत्येवं लोके प्रसिद्धाः। न पुनर्गोत्राध्याये पठिता इत्यर्थः। अत एव तासामप्रधान्यम्; गोत्राध्यायेऽपठितत्वात्। "कुलाख्याः" इति। कुलम् = गोत्रम्, आख्यायत आभिरित्याख्याः, गोत्रेणेत्येवमादि। "ततः" इति। यथोक्तविशेषणविशिष्टाभ्यः पुणिकादिश्रुतिभ्यः। यदि तर्हि ततो गोत्रविहितयोरणिञोः ष्यङ् भवत्येवं सत्यपार्थकोऽयं योगः, पूर्वेणैव सिद्धत्वात्? इत्यत आह-- "अगुरुपोत्तमर्थ आरम्भः"इति। "पौणिक्या" इत्यादि। पुणिकभुणिकमुखरशब्देभ्यः "अत इञ्" ४।१।९५ इतीञन्तस्य ष्यङश्चाप्॥

बाल-मनोरमा

गोत्रावयवात् ११८१, ४।१।७९

गोत्रावयवात्। गोत्रावयवशब्दं व्याचष्टे-गोत्रावयवा गोत्राभिमता इति। गोत्र=कुलम्, अभिमतं=प्रख्यातं याभिरिति विग्रहः। कुलप्रख्यातिकृत इत्यर्थः।कुलव्यपदेशकृत इति यावत्। तदाह--कुलाख्या इति। कुलम् आख्यायते व्यपदिश्यते आभिरिति कुलाख्याः। कुलनामानीत्यर्थः। पुणिकादिशब्दैर्हि कुलं व्यपदिश्यते-"पुणिकाः वयं", "भुणिकाः वय"मित्यादि। अवपूर्वकात् "यु मिश्रणे" इति धातोरुपसर्गवशेन प्रख्यात्यर्थकात् पचाद्यचि अवयवशब्दः। कुवस्यावयवः प्रख्यापकशब्दः कुलावयव इति लभ्यत इति भावः। ननु पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह--अगुरूपोत्तमार्थ इति। गोत्रादवयुतं=मिश्रितम्-अनन्तरापत्यं, तदर्थमित्यपि भाष्ये स्पष्टम्। एवञ् पूर्वसूत्रे अपत्याधिकारबहिर्भूतेऽपि पारिभाषिकमेव गोत्र गृह्नत इति भाष्यस्वरसः। पौणिक्येति। पुणिकस्यापत्यं स्त्रीति विग्रहे अत इञन्तात् ष्यङि चाप्। एवं मौणिक्या। मनुष्यनामत्वे तन्नामिकाऽणः ष्यङ्।

तत्त्व-बोधिनी

गोत्रावयवात् ९७७, ४।१।७९

गोत्रावयवात्। अवयवशब्दोऽप्रधानवाची, अवयवश्चासौ गोत्रं चेति कर्मधारयः, निपातनाद्गोत्रशब्दस्य पूर्वनिपातः। गोत्रभिमता इति। "गोत्र मित्येवमभिमताः=गोत्रवाचित्वेन देशविशेषे प्रसिद्धाः, न तु प्रवराध्याये पठिता इत्यर्थः। प्रवराध्यायेऽपाठाच्चाऽप्राधान्यम्। कुलाख्या इति। कुलमाख्यायते यैरिति कुलाख्याः--पुणिकभुणिक मुखरप्रभृतयः। तैर्हि कुलमाख्यायते "पुणिका वयं गोत्रेण" "भुणिका वयं गोत्रेण"इति। तत इचि। गोत्रावयवादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

क्रौड्यादिभ्यश् च ४।१।८०

क्रौडि इत्येवम् आदिभ्यश्च स्त्रियां ष्यङ् प्रत्ययो भवति। अगुरूपोत्तमार्थ आरम्भः। अनणिञर्थश्च। कौड्या। लाड्या। कौडि। लाडि। व्याडि। आपिशलि। आपक्षिति। चौपयत। चैटयत। शैकयत। बैल्वयत। वैकल्पयत। सौधातकि। सूत युवत्याम्। भोज क्षत्रिये भौरिकि। भौलिकि। शाल्मकि। शालास्थलि। कापिष्ठलि। गौलक्ष्य। गौकक्ष्य।

न्यासः

क्रोड�आदिभ्यश्च। , ४।१।८०

"क्रौजीत्येवमादिभ्यश्च स्त्रियां ष्यङ्प्रत्ययो भवति" इति। ननु चाचेशपक्षः पूर्वमाश्रितः, तत् किमर्थमिह प्रत्ययपक्ष आश्रीयते? तदाश्रयणेऽप्यत्र दोषो नास्तीति प्रदर्शनार्थः। "अगुरूपोत्तमार्थ आरम्भः" इत्यादि। येऽत्रान्ता इञन्ताश्च पठ()न्ते तान् त्ययमगुरूपोत्तमार्थ आरम्भः। ये त्वन्ये, तान् प्रत्ययमणिञर्थः। तत्राद्याः क्रौड()आदयः प्राक् चौपयतशब्दादिञन्ताः।चौपयतप्रभृतयस्त्वणन्ताः प्राक् सौधातकिशब्दात्। सौधातकिशब्दस्तु "सुधातोरकङ् च" ४।१।९७ इतीञन्तः। "सूत युवत्याम्" इति। सूतशब्दाद्युवत्यां प्राप्तयौवनायां ष्यङ् भवति-- सूत्या, अन्यत्र टाबेव--सूता। "भोज क्षत्त्रिये" इति। भोजशब्दात् क्षत्त्रियजातौ वाच्यायां ष्यङ भवति। जातिलक्षणस्य ङीषोऽपवादः--भोज्या, अन्यत्र टाबेव भवति-- भोजा। तत- परे प्राग्गौकक्ष्यशब्दादिञन्ताः। स पुनर्गर्गादियञन्तः॥

बाल-मनोरमा

क्रौड�आदिभ्यश्च ११८२, ४।१।८०

क्रौड()आदिभ्यश्च। "प्रत्ययविधि"रिति भाष्योक्तं पक्षान्तरमाश्रित्याह--ष्यङ्प्रत्यय इति। पूर्वेण सिद्धे किमर्थमिदमित्यत आह--अगुरूपोत्तमार्थोऽनणिञन्तार्थश्चेति। क्रौड()एति। क्रोडस्यापत्यं स्त्रीति विग्रहे अत इञन्तात् ष्यङ्, चाप्। इह "त्र्यादीनामन्त्यमुत्तम"मित्युक्तेर्न गुरूपोत्तमत्वम्। मनुष्यनामत्वे त्वण्। "गौकक्ष्य" शब्दो गर्गादिञन्तः। तस्य अनणिञन्तत्वेऽपि ष्यङ्। सूतयुवत्वामिति। गणसूत्रमिदम्। सूतशब्दो युवत्या ष्यङं लभत इत्यर्थः। सूत्रेयति। प्राप्तयौवनेत्यर्थः। जातौ तु सूतीत्येव। भोज क्षत्रिये। इदमपि गणसूत्रम्।

तत्त्व-बोधिनी

क्रौड�आदिभ्यश्च ९७८, ४।१।८०

क्रौड()आदिभ्यश्च। पञ्चमीनिर्देशात्प्रत्ययत्वमेवेहाश्रीयत इत्याह--ष्यङ् प्रत्यय इति। क्रौडि, व्याडि, आपिशलि, गौकक्ष्य---इत्यादि। गौकक्ष्यशब्दो गर्गादियञन्तस्तदर्थमाह---अनणिञन्तार्थश्चेति। सूतेति। गण सूत्रम्। सूतशब्दः ष्यङं लभते युवत्यां वाच्यायामित्यर्थः। सूत्येति। ष्यङि "यङश्चाप्"। अन्यत्र तु क्रियाशब्दाट्टाप्। सूतजातिवाचिनस्तु ङीष्। सूती। भोजेति। इदमपि गणसूत्रम्। जातिलक्षणङीषोऽपवादः ष्यङ्। क्रियाशब्दात्तु टाबेव---भोजयतीति भोज्या।

---

सूत्रम्

काशिका-वृत्तिः

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्यो ऽन्यतरस्याम् ४।१।८१

दैवयज्ञि शौचिवृक्षि सात्यमुग्रि काण्ठेविद्धि इत्येतेषाम् अन्यतरस्यां ष्यङ् प्रत्ययो भवति। इञन्ता एते, गोत्रग्रहणं च न अनुवर्तते। तेन उभयत्रविभाषेयम्। गोत्रे पूर्वेण ष्यङादेशः प्राप्तो विकल्प्यते, अगोत्रे त्वनन्तरे ऽपत्ये पक्षे विधीयते। तेन मुक्ते इतो मनुस्यजाते ४।१।६५ इति ङीषेव भवति। दैवयज्ञ्या, दैवयज्ञी। शौचिवृक्ष्या, शौचिवृक्षी। सात्यमुग्र्या, सात्यमुग्री। काण्ठेविद्ध्या, काण्ठेविद्धी।

न्यासः

दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्। , ४।१।८१

"गोत्रे पूर्वेण नित्यः" इत्यादि। यदा पौत्रप्रभृतावपत्य इञ् विधीयते तदा पूर्वेण "अणिञोः" ४।१।७८ इत्यादिना नित्ये प्राप्ते विकल्प्यते। यदा त्वनन्तरापत्ये तदाऽप्राप्त एव पक्षे विधीयते॥

बाल-मनोरमा
दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् १६५७, ४।१।८१

दैवयज्ञीति। देवयज्ञस्यापत्यं स्त्रीति विग्रहे अत इञन्तात् ष्यङ्विकल्पः। इत्यादीति। शुचिवृक्षस्यापत्यं स्त्री शौचिवृक्ष्या--शौचिवृक्षी। सत्यमुग्रमस्येत्यर्थे--सत्यमुग्रः। निपातनान्मुम्। सत्यमुग्रहस्यापत्यं स्त्री सात्यमुग्रय-सात्यमुग्री। काण्डेन विद्धः काण्डेविद्धः। निपातनादेत्त्वम्। काण्डेविद्धस्यापत्यं स्त्री काण्डेविद्ध्या-काण्डेविद्धी। कण्ठेविद्धीति पाठान्तरम्।

*****इति बालमनोरमायाम् अपत्याधिकारः।*****

अथाऽऽर्हीयाः।

----------

तत्त्व-बोधिनी
दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् १२७९, ४।१।८१

दौवयज्ञि। चतुभ्र्य इति। "इञन्तेभ्य"इति शेषः। देवा यज्ञा यष्टव्या यस्य स देवयज्ञः। शुचिर्वृक्षो यस्य शुचिवृक्षः। सत्यमुग्रं यस्य सत्यमुग्रः। निपातनाद्विशेष्यस्य पूर्वनिपातः, मुमागमश्च। काण्डेन विद्धः कण्ठेविद्धः। "कर्तृकरणे कृते"ति समासः। निपातनात्काण्डशब्दस्यैकारः। पाठान्तरे कण्ठे विद्धमस्य, कण्ठे वा विद्धः कण्ठेविद्धः। "अमूर्धमस्तकादि "त्यलुक्। एभ्यः सर्वेभ्योऽपत्ये "अत इञ्"। गोत्रेऽपि परत्वादिति। तथा चोभयत्र विभाषेति भावः। अत्रेदमवधेयम्--"अणिञो"रिति सूत्रे यदि शास्त्रीयं गोत्रं गृह्रते तदा "अगोत्रार्थमिद"मित्यादिग्रन्थः स्वरसतः सङ्गच्छते। यदि तु लौकिकं गोत्रमेव तत्र गृह्रते तदा "अणिञोरि"ति नित्ये प्राप्ते विकल्पार्थमिदमित्येव व्याख्यातुनुचितमिति।

इत्यपत्याधिकारः तत्त्वबोधिन्याम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ समर्थानाम् ६।३ प्रथमात् ५।१ वा ०

अर्थः॥

समर्थानाम् इति अत्र निर्द्धारणे (२।३।४१) षष्ठी॥
अधिकारोऽयम्, {प्राग्दिशो विभक्तिरिति (५।३।१)} यावत्। इतोऽग्रे वक्ष्यमाणाः तद्धिताः समर्थानां मध्ये यः प्रथमः (सूत्रे प्रथमोच्चारितः) प्रकृतिः तस्मात् विकल्पेन भवन्ति॥ यथा - उपगोः अपत्यं औपगवः, अत्रोपगुरपि समर्थप्रकृतिः, अपत्यमपि, परं प्रथमप्रकृतिः तु उपगुरेव, अतः सैव प्रत्ययम् उत्पादयति न तु अपत्यम्, समर्थानां ग्रहणेन इह न भवति - कम्बलमुपगोः, अपत्यं देवदत्तस्य। अत्रोपगोः प्रकृतेः सामर्थ्यं कम्बलं प्रति वर्त्तते, नापत्यं प्रति, अतः सामर्थ्याभावात् उपगोः प्रातिपदिकात् अपत्ये प्रत्ययः न उत्पद्यते।
काशिका-वृत्तिः
समर्थानां प्रथमाद् वा ४।१।८२

त्रयम् अप्यधिक्रियते समर्थानाम् इति च, प्रथमादिति च, वा इति च। स्वार्थिकप्रत्ययावधिश्चायम् अधिकारः, प्राग्दिशो विभक्तिः ५।३।१ इति वावत्। स्वार्थिकेषु ह्यस्य उपयोगो न अस्ति, विकल्पो ऽपि तत्र अनवस्थितः। केचिन् नित्यम् एव भवन्ति। लक्षणवाक्यानि तस्य अपत्यम् ४।१।९२, तेन रक्तं रागात् ४।२।१ तत्र भवः ४।३।५३ इत्येवम् आदीनि भविष्यन्ति। तेषु सामर्थ्ये सति प्रथमनिर्दिष्टादेव विकल्पेन प्रत्ययो भवति इति वेदितव्यम्। समर्थानाम् इति विर्धारणे षष्ठी। समर्थानां मद्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्धार्यते। तस्य इति सामान्यं विशेषलक्षणार्थम्। तदीयं प्राथम्यं विशेषाणां विज्ञायते। उपगोः अपत्यम् औपगवः। समर्थानाम् इति किम्? कम्बल उपगोः, अपत्यं देवदत्तस्य। प्रथमातिति किम्? षष्ठ्यान्ताद् यथा स्यात्, प्रथमान्तान् मा भूत्। वा इति किम्? वाक्यम् अपि यथा स्यातुपगोरपत्यम् इति। यद्येवं समासवृत्तिः तद्धितवृत्त्या बाध्येत उपग्वपत्यम् इति। न एष दोषः। पूर्वसूत्रादन्यतरस्यां ग्रहणम् अनुवर्तते। तेन एतदपि भविष्यति।

लघु-सिद्धान्त-कौमुदी

समर्थानां प्रथमाद्वा १०००, ४।१।८२

इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत्॥

न्यासः

समर्थानां प्रथमाद्वा। , ४।१।८२

"स्वार्थिकप्रत्ययवधिश्चायमधिकारः"इति। स्वार्थे प्रकृत्यर्थे भवाः स्वार्थिकाः , अध्यात्मादित्वाट्(वा।४५६) ठञ्। स्वार्थिकाः प्रत्यया अवधिर्मर्यादा यस्य स तथोक्तः। "प्राग्दिशो विभक्तिरिति यावत्" इति। अनेन यतः परेण स्वार्थिकाः प्रत्यया अवधिभूताः प्रवत्र्तन्ते तत्सूत्रं दर्शयन् "प्राग्दिशो विभक्तिः" ५।३।१ इत्येतत्सूत्रात् प्रागयमधिकार इच्याचष्टे। किं पुनः कारणं स्वार्थिकेष्वयमप्यधिकारो न प्रवत्र्तते? इत्याह-- "स्वार्थिकेषु" इत्यादि। "समर्थानाम्" इति। सम्बद्धार्थानमामित्येषोऽर्थः। सम्बद्धार्थता च द्विष्ठत्वात् प्रतियोगिनि सति भवति, स्वार्थिकानाञ्()च प्रकृत्यर्थादर्थान्तरं न सम्भवति यत्प्रत्यययायनाय शब्दान्तरं प्रयुज्येत,यदपेक्षया च समर्थता स्यात्। तस्मात् समर्थतावा अभावात् स्वार्थिकेषु समर्थानामित्येतत् तावन्नोपयुज्यते। अत एव प्रतियोगिनोऽभावात् प्रथमादित्येतदपि नोपयुज्यत एव। यदि हि प्रतियोगिशब्दान्तरं स्यात्, तत आशङ्का स्यात्-- किं प्रथमात् प्रत्ययः? उत द्वितीयादिति? ततश्च तन्निवृत्तये प्रथमादिति वचनमनुवत्र्तमानमर्थवत् स्यात्। असति तु द्वि#ईतीये प्रतियोगिनि तदनुवृत्तिर्नोपयुज्यते। "विकल्पोऽपि तत्रानवस्थितः"इति। अनियत इत्यर्थः। यतः केचित् स्वार्थिका नित्यमेव भवन्ति। तथा च "अषडक्षाशितङ्ग्वलंकर्मालम्" (५।४।७) इत्यादौ सूत्रे भाष्यकारः परिगणनं करिष्यति-- "के पुनर्नित्याः प्रत्ययाः? तमबादयः प्राक् कात्, ञ्यादयः प्राग्वुनः, आमादयः प्राङ्मयटः, बृहत्या जात्यन्तात् समासान्ताश्च" इति। तत्र "अतिशायने तमबिष्ठनौ" ५।३।५५ इति तमप्प्रभृतयो ये प्रत्ययाः "प्रागिवात् कः" ५।३।७० इत्येतस्मात् प्राक् ते नित्याः। तथा "पूगाञ्ञ्योऽग्रामणीपूर्वात्" ५।२।१११ इत्यतो ञ्यप्रत्ययात् प्रभृति "पादशतस्य संख्यादेर्वीप्सायां वुन्म लोपश्च" ५।४।१ इत्यतो वुनः प्राग्ये ते नित्याः। तथा "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" ५।४।११ इत्यत आम्प्रभृति प्राक् तत्प्रकृतवचने मयटो ये प्रत्ययास्ते नित्याः। तथा "बृहत्या आच्छादने" ५।४।६ इति यो विहितः कप्रत्ययः"जात्यन्ताच्छोबन्धुनि" ५।४।९ इति च यश्चप्रत्ययो ये समासान्ता डजादयस्ते सर्वे नित्याः। तस्माद्विकल्पः स्वार्थिकेष्वनवस्थितः। ततश्च वाग्रहणमपि तत्रानवस्थितमेव क्वचिदनुवत्र्तते, क्वचिन्नेत्युक्तं भवति। इह प्रथमादिति विशेषणं प्रयोगवाक्यस्य? लक्षमवाक्यस्य वा? यदि प्रथमः ,ततो लौकिके वाक्ये पदानां प्रयोगे नियमो नास्तीति; पात्रमाहर, आहर पात्रमिति प्रयोगात्। ततश्च यदापत्यमुपगोरिति प्रयुज्यते तदापत्यशब्दात् प्रथमासामथ्र्यात् प्रत्ययः स्यात्। ननु च तस्येतनेन सूत्रोपात्तेनानुकरणपदेन षष्ठ()न्तेन प्रथमेनालौकिकवाक्यसमवायि पश्चान्निर्दिष्टमपि

पदमनुकृतम्, तत् प्रथमत्वात् प्रथमव्यपदेशमासादयति। तेन यदाप्यपत्यमुपगोरिति लौकिकं वाक्यं प्रयुज्यते, तदोपगुशब्दादेव यथोक्तेनैव प्रकारेण लब्धप्रथमव्यपदेशात् प्रत्ययो भविष्यति; नापत्यशब्दात्। तदाद्येऽपि पक्षे समाश्रीयमाणे न दोष इति चेत्? वात्तमेतत्; न हि मुख्ये प्रथमे सम्भवपिसति गौणस्य ग्रहणं युक्तम्। अतः सत्यप्युपगुशब्दस्य गौणेन प्रथमत्वे मुख्यात् प्रथमादपत्यशब्दादेव प्रत्ययः स्यात्, नोपगुशब्दात्। प्रतिपत्तिगौरवञ्च। द्वितीये तु पक्ष एव दोषो नावतरति; लक्षमवाक्येषु पदानां प्रयोगस्य नियत्वात्। अतस्तमाश्रित्याह-- "लक्षणवाक्यानि" इत्यादि। समर्थानां मध्ये प्रथमः प्रत्ययप्रकृतित्वेन निर्धारित इति, यथा-- कृष्णा गवां सम्पन्नक्षीरतमेति, गवां मध्ये कृष्णा गौः सम्पन्नक्षीरतमात्वेन। यदि तर्हि समर्थानां प्रथमात् प्रत्ययो भवति, एवं सति "तस्यापत्यम्" ४।१।९२ इत्यत्र तस्येत्येतत्सर्वनाम। सामान्यवाचि प्रथमं निर्दिष्टमिति सामान्यवाचिन एव प्रत्ययः स्यात्, न विशेषवाचिनः; प्रातिपदिकादुपग्वित्यादेः, न हि तल्लक्षमवाक्ये प्रथमं निर्दिष्टम्? इत्यत आह--"तस्य" इत्यादि। "विशेषलक्षणार्थम्" इति। विशेषोपलक्षणार्थमित्यर्थः। यदि हि तस्येत्येद्विशेषोपलक्षणार्थं न स्यात् तदा समर्थता तस्य न स्यात्। न हि तस्येत्येतत् प्रकरणाद्यनपेक्षं विशेषेष्वतिष्ठछते। न च विशेषेष्वनवस्थितेनानेनापत्यस्य कश्चिदुपकारः कृतो भवति; सम्बन्धिसामान्यस्य सम्बन्धिशब्दत्वात्, अपत्यशब्देनैव गमितत्वात्। ततश्चोपाकारभावात् समर्थता न स्यात्। उच्यतेचेदम्-- तस्येति। तस्मात् सामर्थ्याद्विशेषोपलक्षणार्थत्वं तस्येत्यस्य। तेन ये विशेषा उपलक्षिताः = प्रतिपदितान्ते सम्बन्ध्यन्तरव्यवच्छेदेन विशिष्टं सम्बन्धिनं प्रतिपादयन्त उपकारिणो भवन्तीत्युपपद्यते तैः सह सामर्थ्यम्। तस्मात् तस्येतत् सामान्यं विशेषोपलक्षणार्थं द्रष्टव्यम्। तेन तस्य यत् प्राथम्यं तद्विशेषाणामुपगुशब्दादीनां विज्ञायते। ततश्च तत एव प्रत्ययो भवति, न च सामान्यवाचिनः। "कम्बल उपगोरपत्यं देवदत्तस्य" इति। अत्रोपगुशब्दः कम्बलेन सह सम्बद्धः, नापत्येन। अपत्यशब्दस्यापि देवदत्तशब्देन, नोपगुशब्देन। तस्मादपत्यशब्देन, सहोपगुशब्दस्य सम्बन्धो नास्तीति न ततः प्रत्ययो भवति। "वाक्यमपि हि यथा स्यात्" इति। असति हि वाग्रहणे वाक्येनापत्यस्याभिधाने प्राप्तेतस्मिन्नर्थे विधीयमानः प्रत्ययस्तन्निवत्त्रयेत्। ननु च समानेऽर्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवत्त्रको भवति, यथा-- "गमेर्डोः" (द।उ।२।११) इत्यनेन शास्त्रान्वितो गोशब्दोऽशास्त्रान्वितस्य गावीशब्दस् समानार्थस्यैव, न तु भिन्नार्थस्य डित्थादेः। न च वृत्तिवाक्ययोः समानोऽर्थः, वृत्तौ ह्रेकार्थीभावः सामर्थ्यम्, वाक्ये तु व्यपेक्षा? नैतदेवम्; सत्यपि ह्रेतस्मिन्नर्थभेदे प्रधानार्थो न भिद्यते, तथा हि-- उपगोरपत्यमानयेत्युक्ते य एवार्थोऽपत्यात्यवत्सम्बन्धविशिष्टः स आनीयते। औपगवमानयेत्युक्ते स एव। प्रधानापेक्षयैव च समानार्थः शास्त्रन्वितोऽशास्त्रान्वितं निवत्त्रयति, अन्यथा हि गोशब्दोऽपि गावीशब्दं न निवत्त्रयेत्। अस्ति हि तयोरप्यर्थभेदः, तथा हि-- गोशब्दो गोत्वमाचष्टे, गावीशब्दस्तु तथा, अशास्त्रियत्वञ्च। तस्मादसति वाग्रहणे यथा गोशब्दः सत्यप्यप्रधानार्थभेदे प्रधानार्थस्य समानर्थाद्गावीशब्दं निवत्त्रयति, तथा तद्धितोऽपि शास्त्रान्वितोऽशास्त्रन्वितं वाक्यं निवत्त्रयेत्। तस्माद्वाक्यमपि यथा स्यादिति वाग्रहणं क्रियते। "यद्येवम्" इत्यादि। यदि वाग्रहणेन तद्धितस्य भावाभावौ कुर्वता वाक्यस्य भावः क्रियते, एवं सति यदा वाक्यं नास्ति तदा तद्धितेनैव भवितव्यम्। समासवृत्तिरुपग्वपत्यमित्येषः तद्धितवृत्त्या बाध्येत। "नैष दोषः" इत्यादि। गतार्थम्॥

बाल-मनोरमा

समर्थानां प्रथमाद्वा १०५६, ४।१।८२

तदेवं समासप्रप्ञ्चं निरूप्य तद्धितप्रकरणमारभते--समर्थाना प्रथमाद्वा। विधेयस्याऽदर्शनान्नायं स्वतन्त्रविधिरिति मत्वाह--इदं पदत्रयमधिक्रियत इति। स्वरितत्वप्रतिज्ञाबलादिति भावः। अधिकारस्योत्तरावधिमाह--प्राग्दिश इति यावदिति। "प्राग्दिसो विभक्ति"रिति सूत्रमुत्तरावधिरित्यर्थः "समर्थाना"मिति निर्धारणषष्ठी। प्राथम्यं च "तस्यापत्य"मित्यादितत्तत्सूत्रेषु प्रथमोच्चारितत्वम्। समर्थानां मध्ये प्रथमोच्चारितादित्यर्थः। "समर्थात्प्रथमाद्वे"ति सुवचम्। केचित्तु बहुवचनबलादनेकसमर्थसमवाय एवास्य प्रवृत्तिः। एवंच "प्राग्दिशः" इत्यादिषु स्वार्थिकप्रत्ययविधिषु

नाऽस्य प्रवृत्तिरिति लभ्यते इत्याहुः ननु सुबन्तात्तद्धितोत्पत्तेर्वक्ष्यमाणत्वेन तद्धितविधीनां पदविधितया "समर्थः पदविधि"रिति परिभाषयैव एकार्थीभावरूपसामथ्र्यलाभादिह समर्थग्रहणं व्यर्थमित्यत आह--सामथ्र्यं परिनिष्ठितत्वमिति। समर्थः पटुः शक्त इति पर्यायाः। शक्तत्वं च कार्योत्पादनयोग्यत्वम्। शब्दस्य च कार्यमर्थप्रतिपादनमेव। तच्छक्तत्वं च कृतेष्वेव सन्धिकार्येषु संभवति। तथाच कृतसन्धिकार्यत्वमेव सामथ्र्यमिह पर्यवस्यति। तदाह--कृतसन्धिकार्यत्वम#इति।

तत्त्व-बोधिनी

समर्थानां प्रथमाद्वा ८८२, ४।१।८२

अपवादसङ्गत्या तद्धितान्विवक्षुस्तदीयमधिकारसूत्रमाह--समर्थानामिति। "अन्यतरस्याङ्ग्रहणानुवृत्तेः समासोऽपी"ति वक्ष्यमाणमूलग्रन्थेन समासापवादत्वं सूचितम्। विधेयाऽनिर्देशादुत्तरत्र प्रकृतिविशेषकाङ्क्षासत्त्वाच्चनाऽयं स्वतन्त्रो विधिरित्याह---अधिक्रियत इति। "पदत्रय"मित्यनेन प्रत्येकं स्वरितत्वप्रतिज्ञा सूचिता। तत्प्रयोजनं तु कस्यचिन्निवृत्तावप्यपरस्याऽनिवृत्तिः, तथा च "प्राग्दिशः"इति सूत्रे "समर्थानां प्रथमा"दिति निवृत्तं, "वा" इति त्वनुवर्तत एव"---इति वक्ष्यमाणमूलग्रन्थः सङ्गच्छते।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्राक् १।१ दीव्यतः ५।१ अण् १।१ प्रत्ययः ? परश्च ?

अर्थः॥

दीव्यतः इत्यनेन {तेन दीवति खनति (४।४।२)} इति परिगृह्यते। {तेन दीव्यति खनति॰} इत्येतस्मात् प्राक् अण् प्रत्ययः भवति इति अधिकारः वेदितव्यः। वक्ष्यति {तस्यापत्यम् (४।१।९२)} तत्र अण् प्रत्ययः भवति।

उदाहरणम्॥

औपगवः, कापटवः॥

व्याख्या (सरलबोधिनी)

मम व्याख्या।

काशिका-वृत्तिः

प्राग् दीव्यतो ऽण् ४।१।८३

तेन दीव्यति इति वक्ष्यति। तदेकदेशो दीव्यच्छब्दो अवधित्वेन गृह्यते। प्राग् दीव्यत्संशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यमः, अण् प्रत्ययस् तत्र भवति इति वेदितव्यम्। अधिकारः, परिभाषा, चिधिर्वा इति त्रिष्वपि दर्शनेष्वपवादविषयं परिगृत्य अण् प्रवर्तते। वक्ष्यति, तस्य अपत्यम् ४।१।९२ औपगवः। कापटवः।

न्यासः

प्राग्दीव्यतोऽण्। , ४।१।८३

"प्राग्दीव्यत्" इत्ययुक्तोऽयं निर्देशः , यावता "दीव्यति" ४।४।२ इति वक्ष्यति, न तु दीव्यदिति, तत्र दीव्यतीशब्दस्यावधित्वेनोपादाने दीव्यतेरिति निर्देशेन भवितव्यम्? इत्यत आह-- "तदेकदेशः"इत्यादि। समस्तस्य दीव्यतिशब्दस्यावधित्वेनोपादाना#ए सति न युज्येतायं निर्देशः, न तु समस्तस्योपादानम्, अपि तु तदेकदेशस्य दीपव्यच्छब्दस्येत्यदोषः। अथ किमर्थं दीव्यद्ग्रहणं प्राग्ग्रहणञ्चत, नणित्येवाधिकारः क्रियताम्? नैवं शक्यम्ेवं हि क्रियमाणे "स्त्रीभ्यो ढक्" ४।१।१२० इत्येवमादिनाऽधिकारान्तरेण विच्छिन्ननस्याणः "तेन रक्तं रागात्" ४।२।१ इत्येवमादिषु पुनग्र्रहणं कत्र्तव्यं जायेत। अवधिनाधिकारपरिमाण आख्याते तदवधिकेष्वर्थेषु सर्वेष्वयमभ्यनुज्ञायत इतिपुनरण्ग्रहणं कत्र्तव्यं न भवति। तस्मादधिकारपरिमाणज्ञापनार्थं दीव्यद्ग्रहणं तावत्कत्र्तव्यम्। प्राग्ग्रहणमपि कत्र्तव्यमेव तस्यैवावधित्वद्योतनार्थम्। असति हि तस्मिन् "दीव्यतोऽण्" इत्युच्यमाने प्रकृतिरणो दीव्यच्छब्दो विज्ञायेत। "त्रिष्वपि दर्शनेषु" इत्यादि। कथं पुनरियमपवादविषयपरिहारेणाणः प्रवृत्तिर्लभ्यते, यावताधिकारे तस्मिन् सति प्रतियोगमुपस्थानादपवादविषयेऽप्यण् प्राप्नोति-- "अत इञ् अण् च" इति, अन्यथा हि तस्य तत्रोपादानमनर्थकं स्यात्? परिभाषापक्षेऽपि प्राग्दीव्यतोऽर्थेष्वणित्यविशेषेण परिभाषिते सामान्येन परिभाषा प्रवत्र्तमाना केनापवादविषयं परिहरेत्? विधावपि प्राग्दीव्यतो याः प्रकृतयस्ताः सर्वा इहैकध्यमुपनीयाण् विधीयमानः सर्वतः प्रवत्र्तेत, अन्यथा सर्वतो विधानमनर्थकं स्यात्? एवं मन्यते-- ज्ञापकादपवादविषये न भविष्यतीति, यदयं क्वचिद्वाग्रहणमन्यतरस्यांग्रहणञ्च करोति-- "पीलाया वा" ४।१।११८, "उद()इआतोऽन्यतरस्याम् ४।२।१८ इति,तज्ज्ञापयति-- नापवादविषयेऽण् भवतीति। विधौ तु भूयान् परीहारः। न हि प्राग्दीव्यतो याः प्रकृतयस्ताभ्योऽण् विधीयते, किं तर्हि? प्राग्दीव्यतो येऽर्थास्तेषु। तत्र समानार्थे प्रकृतिविशेषादुत्पाद्यमान इञणं बाधिष्यत इति। अथ किमर्थमियानवधिरुपादीयते, न प्राक् ठक इत्येवोच्येत, "प्राग्वहतेष्ठक्" (४।४।१) इत्येतस्माट्ठकः प्रागित्यर्थः? नैवं शक्यम्; "दध्नष्ठक्" ४।२।१७ इत्येवमादिरपि ठगवधित्वेन विज्ञायते। "प्राक् कंसीयात्" इत्येवं तर्हि वक्तव्यम्-- "कंसीयपरशब्दयोर्यञञौ लुक् च" (४।३।१६८) इति,तत्र यः कंसीयशब्दस्ततः प्रागित्यर्थः? एवमप्यशक्यं वक्तुम्; "द्विगोर्लुगनपत्ये" ४।१।८८ इत्येतयापि कंसीयादुत्पद्येत, ततश्च द्वयोः कंसीययोर्विकारो द्विकंस इत्यत्र लुङ्न स्यात्। तस्माद्यथान्यासमेवास्तु॥

बाल-मनोरमा

प्राग्दीव्यतोऽण् १०५७, ४।१।८३

प्राग्दीव्यतोऽण्। "तेन दीव्यति खनति जयति जित"मिति सूत्रस्थदीव्यतिशब्दैकदेशस्यानुकरणमिह दीव्यच्छब्दः। तेन च तद्घटितं तत्सूत्रं लक्ष्यते। तदाह--तेन दीव्यतीत्यतः प्रागिति। तथाच "तस्यापत्य"मित्याद्युत्तरसूत्रेषु विधेयप्रत्ययविशेषाऽसंयुक्तेषु किं भवतीत्याकाङ्क्षायामणित्युपतिष्ठत इति लभ्यते। "कस्माद्भवती"त्याकाङ्क्षायां "समर्थात्प्रथमा"दिति प्रकृतिविशेषो लभ्यते। यत्र तु विधेयः प्रत्ययविशेषः श्रूयते तत्राऽणिति नोपतिष्ठते, अमित्यस्यौत्सर्गिकतया वैशेषिकेणेञादिना बाधात्।

तत्त्व-बोधिनी

प्राग्दीव्यतोऽण् ८८३, ४।१।८३

प्राग्दिश इतीति। तत उत्तरेषां प्रत्ययानां स्वार्थिकत्वेन "समर्थानां", "प्रथमा"दिति पदयोः प्रयोजनं नेति भावः। ननु "समर्थः पदविधि"रिति परिभाषया गतार्थत्वात् "समर्थाना"मित्येतव्द्यर्थम्। न च पदविधित्वं नेति शङ्क्यं, "घकालतनेषु"इत्यलिग्विधानात् "सुबन्तात्तद्धितोत्पत्ति"रिति सिद्धान्तस्य सकलसंमतत्वादत आह--सामथ्र्यमिति। कृतसन्धिकार्यत्वमिति। अस्य फलं तु "तस्यापत्य"मिति सूत्रे मूल एव स्फुटीभविष्यति। इह "समर्थात्प्रथमाद्वे"ति वक्तुं युक्तम्। महोत्सर्गानाह---प्राग्दीव्यत इत्यादीना। सूत्रे "दीव्य"दित्येकदेशोऽनर्थकोऽप्यवधित्वेनोपात्तः

"प्राग्री()आरा"दितिवदित्येके। अन्ये त्वाहुः--"दीव्य"दिति शत्रन्तम्। तेन देवनकर्ता अर्थ एवावधिरिति।

---

सूत्रम्

काशिका-वृत्तिः

अश्वपत्यादिभ्यश् च ४।१।८४

अश्वपत्यादिभ्यः प्रातिपदिकेभ्यः प्राग्दीव्यतीयेष्वर्थेषु अण् प्रत्ययो भवति। पत्युत्तरपदाद् ण्यं वक्ष्यति, तस्य अपवादः। आश्वपतम्। शातपतं। अश्वपति। शतपति। धनपति। गणपति। राष्ट्रपति। कुलपति। गृहपति। धान्यपति। पशुपति। धर्मपति। सभापति। प्राणपति। क्षेत्रपति।

लघु-सिद्धान्त-कौमुदी

अश्वपत्यादिभ्यश्च १००१, ४।१।८४

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु। अश्वपतेरपत्यादि आश्वपतम्। गाणपतम्॥

न्यासः

अ�आपत्यादिभ्यश्च। , ४।१।८४

बाल-मनोरमा

अ�आपत्यादिभ्यश्च १०५८, ४।१।८४

अ()आपत्यादिभ्यश्च। चकारात् "प्राग्दीव्यतोऽ"णित्यनुकृष्यते। तदाह--एभ्योऽण् स्यादिति। दीव्यतः प्राक्--प्राग्दीव्यत्। "अपपरिबहिरञ्चवः पञ्चम्या" इत्यव्ययीभावः। "झयः" इति टच् तु न, तस्य पाक्षिकत्वात्। प्राग्दीव्यति भवाः-प्राग्दीव्यतीयाः। "वृद्धाच्छः"। "अव्ययात्त्यबि"ति तु न, अव्ययीभावस्याव्ययत्वे "लुहृउखस्वरोपचाराः प्रयोजन"मिति परिगणनात्। अत एव "अव्ययानां भमात्रे टिलोपः" इत्यपि न भवति। ननु "प्राग्दीव्यतोऽ"णित्येव सिद्धे किमर्थमिदं सूत्रमित्यत आह--वक्ष्यमाणस्येति। "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति वक्ष्यमाणस्य पत्युत्तरपदत्वप्रयुक्तण्यप्रत्ययस्य बाधनार्थमित्यर्थः।

तत्त्व-बोधिनी

अ�आपत्यादिभ्यश्च ८८४, ४।१।८४

प्राग्दीव्यतीयेष्विति। दीव्यतः प्राक्प्राग्दीव्यत्। "अपपरिहहिरञ्चवः पञ्चम्या" इत्यव्ययीभाव"इति प्राञ्चः। "प्राग्दीव्यत"मिति तूचितम्, "झयः"इति टच्प्रवृत्ते"रिति केचित्। तन्न। "झयः"इति टचः पाक्षिकत्वात्। अन्यथा "उपसमिधमुपसमि"दिति तत्सूत्रस्थमूलोदाहरणस्याऽसङ्गत्यापत्तेः। न चाऽत्र टचोऽभावे "अव्ययानां भमात्रे"इति टिलोपे "प्राग्दीव्यतीय"इति रूपं न स्यादिति शङ्क्यम्। अव्ययीभावस्याव्ययत्वे प्रयोजनं "लुङ्भुखस्वरोपचारः"इति परिगणनात्। प्राग्दीव्यति भवः प्राग्दीव्यतीयः। "वृद्धाच्छः"। त्यप्तु न शङ्कनीय एव, "अमेहक्वतसित्रेभ्य एव" इति परिगणनात्। " लुङ्भुखस्वर"इत्यादिपरिगणनया अनव्ययत्वाच्च। वक्ष्यमाणस्येति। "पत्युत्तरपदाण्ण्यः"इति वक्ष्यमाणस्य।

---

सूत्रम्

काशिका-वृत्तिः

दित्यदित्यादित्यपत्युत्तरपदाण् ण्यः ४।१।८५

प्राग्दीव्यतः इत्येव। दिति अदिति आदित्य इत्येतेभ्यः, पत्युत्तरपदात् च प्रातिपदिकात् प्राग्दीव्यतीयेष्वर्थेषु ण्यः प्रत्ययो भवति। दैत्यः। आदित्यः। आदित्यम्। पत्युत्तरपदात् प्राजापत्यम्। सैनापत्यम्। यमाच्चेति वक्तव्यम्। याम्यम्। वाङ्मतिपितृमतां छन्दस्युपसंख्यानम्। वाच्यः। मात्या। पैतृमत्यम्। पृथिव्या ञाञौ। पार्थिवा। पार्थिवी। देवाद् यञञौ। दैव्यम्। दैवम्। बहिषष्टिलोपश्च। बाह्याः। ईकक् च। वाहीकः। ईकञ् छन्दसि। बाहीकः। स्वरे विशेषः। टिलोपवचनम् अव्ययानां भमात्रे टिलोपस्य अनित्यत्वज्ञापनार्थम्। आरातीयः। स्थाम्नो ऽकारः। अश्वत्थामः। लोम्नो ऽपत्येषु बहुषु। उडुलोमाः। शरलोमाः। बहुषु इति किम्? औडुलोमिः। शारलोमिः। सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्। गव्यम्। अजादिप्रत्ययप्रसङ्गे इति किम्? गोभ्यो हेतुभ्य आगतं गोरूप्यम्। गोमयम्। ण्यादयो ऽर्थविशेषलक्षणादपवादात् पूर्वविप्रतिषेधेन। दितेरपत्यं दैत्यः। वनस्पतीनां समूहः वानस्पत्यम्। कथं दैतेयः? दितिशब्दात् कृदिकारादक्तिनः, सर्वतो ऽक्तिन्नर्थादित्येके इति ङीषं कृत्वा स्त्रीभ्यो ढक् क्रियते। लिङ्गविशिष्टपरिभाषा च अनित्या।

लघु-सिद्धान्त-कौमुदी

हलो यमां यमि लोपः १००३, ४।१।८५

हलः परस्य यमो लोपः स्याद् वा यमि। इति यलोपः। आदित्यः। प्राजापत्यः। (देवाद्यञञौ)। दैव्यम्। दैवम्। (बहिषष्टिलोपो यञ्च)। बाह्यः (ईकक्च)॥

न्यासः

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। , ४।१।८५

"पत्युत्तरपदाच्च" इति। एतेनोत्तरपदशब्दः पतिशब्देनैव सम्बध्यते, नान्यैर्दित्यादिभिरिति दर्शयति। एतच्च प्रत्यासत्तेव्र्याख्यानाद्वा लभ्यते। "यमाच्चेति वक्तव्यम्" इत। यमशब्दाच्च ण्यप्रत्ययो भवीत्येतदर्थरूपं व्याख्येयम्। तत्रेयं व्याख्या-- इह लाघवार्थं पत्यन्तादिति वक्तव्ये पत्युत्तरपदादित वचनमधिकविधानार्थम् । ग्रन्थाधिक्यादर्थाविषयं भवतीति। तेन यमशब्दादपि ण्यो भविष्यतीति। अथ वा--

पूर्वसत्राच्चकारोऽनुवत्र्तते,तस्मादनुक्तसमुच्चतयार्थत्वाद्भविष्यतीति। "वाङमतिपितृमताम्" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु तदेव ग्रन्थाधिक्यादर्थाधिक्यमाश्रित्य चकारस्यानुक्तसमुच्चयार्थस्यानुवृत्तेर्वा कत्र्तव्यम्। याम्यमित्यादिषु यथायोगं प्राग्दीव्यतीयेपत्यादावर्थे ण्यप्रत्ययः। "पृथिव्या ञाञौ" इति। एते ञादयः-- "तद्धिताः" (४।१।७६) इति बहुवचनेनानुक्ततद्धितपरिग्रहार्थेन सिद्ध्यन्तीति न वक्तव्याः। तत्र पृथिवीशब्दाद्यदा ञस्तदा टाप्-- पार्थिवा, यदा त्वञ् तदा "टिड्ढाणञ्" ४।१।१५ इति ङीप्--पार्थिवी। "बहिषष्टिलोपश्च" इत्यादि। ननु च "अव्ययानां भमात्रे टिलोपः सायंप्रातिकाद्यर्थः" (वा।८०२) इत्येनैव टिलोपसिद्धिः, तत्किमर्थं पुनरुच्यते? इत्यत आह-- "टिलोपपवचनम्" इत्यादि। "आरातीयः" इति। अनित्यत्वाज्ञापनस्य प्रयोजनम्। आराद्भवतीति "वृद्धाच्छः" ४।२।११३। "स्थाम्नोऽकारः"(इति)। स्थामन्शब्दस्य केवलस्यापत्यार्थे प्रयोगो नास्तीति तदन्तस्याकारप्रत्ययो विज्ञेयः। अ()आस्येव स्थामास्येत्य()आत्वामा, पृषोदादित्वात् सकारस्य तकारः। अ()आत्थाम्नोऽपत्यम()आत्थामः, "नस्तद्धिते" ६।४।१४४ इति टिलोपः। "लोम्नोऽपत्ये" इति। लोमशब्दो बाह्वादिषु पठ()ते, तस्य केवलस्यापत्येन सम्बन्धो नास्तीति तदन्तविदिर्विज्ञायते। अत्रापत्यविवक्षायां बहुष्विञि प्राप्ते तदपवाद एवाकारो विधीयेते। उडुलोम्नोऽपत्यानि बहून्युडुलोमाः। "सर्वत्र" इति। अपत्ये च अन्यत्र च।अथ वा-- प्राग्दीव्यतीये चान्यत्र चार्थेऽजादिप्रत्ययप्रसङ्गं इति। अजादेः प्रत्ययस्य प्रसङ्गः = प्राप्तिः। तत्र गोशब्दात् सर्वत्र यद् भवति। यद्येवम्, "उगवादिभ्यो यत्" (५।१।२) इत्यत्र गोग्रहणं किमर्थम्? अस्यैव प्रपञ्चार्थम्। "गव्यम्" इति। गोरपत्यम्, गवा चरतीति

वा। अणष्ठको वाऽजादेर्यत्रार्थे प्रसङ्गस्तत्र यद्भवति, नान्यत्र। "गोरूप्यम्, गोमयम्" इति। "हेतुमनु,()येभ्योऽन्यतरस्यां रूप्यः" ४।३।८१, "मयट् च" ४।३।८२। "ण्यादयः" इत्यादि। लक्षमशब्दो निमित्तवचनः,चिह्नवचनो वा। अर्थविशेषो लक्षणं यस्य सोऽर्थविशेषलक्षणोऽणपवादः। तस्मात् पूर्वविप्रतिषेधेन ण्यादयो भवन्ति। न चेदं वक्तव्यम्; परशब्दस्येष्टवाचित्वात् तेनैव सिद्धत्वात्। आदिशब्देन "उत्सादिभ्योऽञ्" ४।१।८६ इत्येवमादयः प्रत्यया गृह्न्ते। तत्र ण्यस्यावकाशः भवति-- दैत्यः, वानस्पत्यमिति। ण्यश्चायं सर्वेष्वपत्यादिष्वर्थेषु विधीयत इति सामान्यप्रत्ययो भवतीति, अतो नार्थविशेषलक्षणः। अर्थविशेषलक्षमस्याणपवादस्यावकाशः-- दुलेरपत्यमिति "इतश्चानिञःट ४।१।१२२ इति ढक्-- दौलेयः, ढगयमपत्य एवार्थवेशेषे विधीयत इत्यर्थविशेषलक्षणो भवति। इहोभयं प्राप्नोति-- दितेरपत्यं दैत्यः, वनस्पतीनां समूहो वानस्पत्यमिति वा, ण्यप्रत्ययो भवति पूर्वविप्रतिषेधेन। अर्थविशेषलक्षणादिति किम्? योऽणपवादोऽर्थसामान्येनार्थविशेषे विहितः स परत्वाण्ण्यादीन् बाधित्वा भवत्येव। उष्ट्रपतिर्नाम पत्त्रम्। तस्योष्ट्रपतेरिदमिति तस्येदं विवक्षायाम् "पत्त्राध्वर्युपरिषदश्च" ४।३।१३१ इत्यञ्-- औष्ट्रपत्यम्, तस्येदंलक्षणो ह्ययमञणोऽपवादः, न योऽर्थविशेषलक्षणस्तस्य। अर्थविशेषा ह्पत्यादयोऽर्थाः। तस्येदमर्थस्तु सामान्यम्, नार्थविशेषः। "कथं वैतेयः"इति। यदि ण्यादयोऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषेधन भवन्ति, दैतेय इति न सिध्यति। अत्रापि हि ण्यप्रत्ययेनैव भवितव्यमिति भावः। "दितिशब्दात्" इत्यादि। दितिशब्दोऽयं "दो अवखण्डने" (धा।पा।११४८) इत्यस्मात् "क्तिच्क्तौ" ३।३।१७४ इति क्तिच्, "द्यतिस्यति" ७।४।४० इत्यादिनेत्त्वमित्येवं यदा व्युत्पाद्यते तदा "कृदिकारादक्तिनः" (ग।सू।५०) इति ङीष्। अथाव्युत्पन्नं प्रातिपदिकं तदा "सर्वतोऽक्तिन्नर्थादित्येके" (ग।सू।५१) इति। ननु "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति" (व्या।प।२९) इति दितिशब्दो गृह्रमाणो दितीशब्दमपि ग्राहयति, ततश्च यथा दितिशब्दाण्ण्यप्रत्ययः पूर्वविप्रतिषेधेन भवति, तथा दितीशब्दादपि तेन भवितव्यमित्यत आह--"लिङ्गविशिष्टपरिभाषाऽनित्या" इति। अनित्यत्वं पुनरस्याः "अच्प्रकरणे शक्तिलाङ्गलांकुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपपसंख्यानम्" (वा।२३५) इति घटशब्दोच्चोरणाद्वेदितव्यम्॥

तत्त्व-बोधिनी

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ८८७, ४।१।८५

दित्यदित्या। पतिशब्दस्योत्तरपदशब्देन बहुव्रीहि कृत्वा पश्चद्द्वन्दः कार्यो, न तु द्वन्द्वोत्तरं बहुव्रीहिरित्याह-- पत्युत्तरपदाच्चेति। "पत्यन्ता दुत्युच्यनाने बह्वच्पूर्वादपि स्यादित्युत्तरपदग्रहणं कृतम्। दैत्य इति। ननु दितेर्देवताद्यर्थेण्यः सावकाशः, "इतश्चानिञः"इत्यपत्ये ढक् दौलैय इत्यादौ सावकाशः, तथा च दितेरपत्यमित्यत्रोभयप्रसङ्गे परत्वाल्लुक्स्यात्। मैवम्। "ण्यादयोऽर्थविशेषलक्षणादणपबादात्पूर्वविप्रतिषिद्ध"मिति भाष्ये पूर्वविप्रतिषेधाश्रयणात्। अर्थविशेषे इति किम् ()। औष्ट्रपतम्। उष्ट्रपतिर्नाम पत्रम्। "तस्येदम्" "पत्राध्वर्युपरिपदश्चे"त्यञ्। इह पूर्वविप्रतिषेधेन "तस्येद"मित्यर्थे ण्यो न भवति, इदमित्यस्य सामान्यार्थत्वात्। कथं तर्हि "दैतेयः"इति?। अत्राहु---"कृदिकारा"दिति ङीषन्तात् "स्त्रीभियो ढत्"। ण्यस्तु न भवति, लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्। न च "अन्तादिवच्चे"ति पूर्वस्यान्तवद्भावेन स्यादेव ण्य इति भ्रमितव्यम्। दितिशब्दान्ङीषि कृते "यस्येति चे"ति लोपेन सवर्णदीर्घाऽभावा"दिति। आदित्यशब्दाण्ण्यप्रत्यये "यस्ये"ति लोपे "हलो यमा"मिति पाक्षिको यलोपः। न चाल्लोपस्य स्तानिवत्त्वं, यलोपे "न पादन्ते"ति तन्निषेधात्, "पूर्वत्रासिद्धे न स्थानिव"दित्युक्तेश्च। काशिकायामिति। भाष्ये तु न दृष्टमिति भावः। अणन्तात्स्वार्थिकेन ष्यञा प्रयोगः सूपपादः। स्त्रियां ङीष्न भवति, षितां ङीषोऽनित्यत्वात्।

पृथिव्या ञाऽञौ। ञाऽञोः फलभेदज्ञापनाय स्त्रीलिङ्गमुदाहरति--पार्थिबा। पार्थिवीति।

बहिषष्टिलोपो यञ्च। बहिष इति। टिलोपवचनम् "अव्ययानां भमात्रे" इत्यस्याऽनित्यतां ज्ञापयितुम्। तेन "आरातीय"इति

सिद्ध्म्।

स्थाम्नोऽकारः। अ()आत्थमेति। भाष्येदाहरणात्तदन्तविधिः। न च बलवाचिनः स्थामन्शब्दस्यापत्येन योगाऽसंभवाद्वचनारम्भसामश्र्यात्तदन्तविधिः स्यादिति वाच्यं, जाताद्यर्थे तत्संभवेन सामर्थ्योपक्षयात्। अ()आस्येव स्थाम यस्येति बहुव्रीहिः।

लोम्नोऽपत्येषु बहुषु। उडुलोम इति। उडूनि नक्षत्राणीव लोमान्यस्येति विग्रहः। केवलस्यापत्येन योगाऽभावात्तदन्तविधिस्ततोऽकारष्टिलोपः।

[सर्वत्र]गोरजादिप्रसङ्गेयत्। गोरिति। न केवलमपत्य एवायं, किं तु प्राग्दीव्यतीयेषु सर्वेष्वर्थेष्विति ज्ञेयम्। गव्यमिति। गवि भवं, गौर्देवता अस्य, गोरिदमित्यादिरर्थः। केचित्तु भाष्ये सर्वग्रहणात्प्राग्दीव्यतीयेभ्योऽन्यस्मिन्नर्थेप्ययं यत्। तेन गवा चरति गब्य इत्याद्यपि भवतीतच्चाहुः। गोरुष्यमित्यादि। "हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः" "मयट् चे"ति रूप्यमयटौ।

---

सूत्रम्
काशिका-वृत्तिः
उत्साऽदिभ्यो ऽञ् ४।१।८६

प्राग्दीव्यतः इत्येव। उत्सादिभ्यः प्राग्दीव्यतीयेषु अर्थेषु अञ् प्रत्ययो भवति। अणस् तदपवादानां च बाधकः। औत्सः। औदपानः। उत्स। उदपान। विकर। विनोद। महानद। महानस। महाप्राण। तरुण। तलुन। बष्कया ऽसे। धेनु। पृथिवी। पङ्क्ति। जगती। तिर्ष्टुप्। अनुष्टुप्। जनपद। भरत। उशीनर। ग्रीष्म। पीलु। कुल। उदस्थानात् देशे। पृषदंशे। भल्लकीय। रथान्तर। मध्यन्दिन। बृहत्। महत्। सत्त्वन्तु। सच्छब्दो मतुबन्त आगतनुङ्को गृह्यते सत्त्वन्तु इति। कुरु। पञ्चाल। इन्द्रावसान। उष्णिक्। ककुब्H। सुवर्ण। देव। ग्रीष्माच्छन्दसि इति वक्तव्यम्। इह मा भूत्। ग्रैष्ंई त्रिष्टुप्। छन्दश्च इह वृत्तं गृह्यते, न वेदः।
लघु-सिद्धान्त-कौमुदी
उत्सादिभ्योऽञ् १००५, ४।१।८६

औत्सः॥
लघु-सिद्धान्त-कौमुदी
इत्यपत्यादिविकारान्तार्थ साधारणप्रत्ययाः १ १००५, ४।१।८६

लघु-सिद्धान्त-कौमुदी
अथापत्याधिकारः १००५, ४।१।८६

न्यासः
उत्सादिभ्योऽञ्। , ४।१।८६

"तदपवादानाञ्च" इति। इञादीनाम्। "वष्कयाऽसे" इति गणे पठ()ते। तस्यायमर्थः- वष्कयशब्दादञ् भवति, असे असमासे इत्यर्थः। पूर्वाचार्यैः समासस्य "स" इत्येषा संज्ञा कृता। वष्कयस्यापत्यं वाष्कयः। अस इति किम्?

"गौवष्कयिः"। "अत इञ्" ४।१।९५ इतीञेव भवति। "उदस्थानाद्देशे" इति। उदस्थानशब्दाद्देशे वाच्येऽञ् भवति। उदस्थाने भवो देश औदस्थानः। देश इति किम्? उदस्थानो नाम कश्चित्पुरुषः, तस्यापत्यमौदस्थानिः। "पृषदंशे" इति। पृषच्छब्दादंशेऽभिधेयऽञ् भवति। पृषदोंऽशः पार्षदः। अंश इति किम्? पार्षदोऽन्यः। अणेव भवति। कुरुशब्दोऽत्र पठ()ते, तस्यापत्यविवक्षायां कौरव इति न सिध्यति,यस्मात् "कुर्वादिभ्यो ण्यः" ४।१।१५१ "कुरुनादिभ्यो ण्यः" ४।१।१७० इतिच ण्यप्रत्ययः प्राप्नोति। अञ्प्रत्ययो हि सामान्यविहितः, ण्यप्रत्ययस्तु विशेषविहितः। सामान्यविहितश्च विशेषविहितेन बाध्यते? नैष दोषः; अयं योगस्तयोर्योगयोरनुवर्तिष्यते; तत्राप्यपत्येऽर्थे कुरुशब्दोऽनवकाश इत्यञपि ततो भविष्यति। अपत्यार्थस्य "तस्येदम्" ४।३।१२० इत्यर्थविवक्षायां वा कौरव इति भविष्यति। "ग्रीष्मादच्छन्दसीति वक्तव्यम्" (इति)। ग्रीष्मशब्दादच्छन्दस्यभिदेयेऽञ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थमित्याह-- "इह मा भूत्" इत्यादि। छन्दसि त्रिष्टुवादौ वाच्ये सन्धिवेलादिसूत्रेण ४।३।१६ ऋत्वणेव यथा स्यात्, अञ्मा भूदित्येवमर्थम्। तेन ग्रैष्मी त्रिष्टुवित्यञ् न भवति। तत्रेदं व्याख्यानम्-- वेति वत्र्तते, सा च व्यवस्थितविभाषा। तेन ग्रीष्मशब्दाच्छन्दसि वाच्येऽञ् न भवतीति। "वृत्तं गृह्रते" इति। यस्य त्रिष्टुज्जगतीत्यादयो विशेषास्तदिह वृत्तम्; अतश्छन्दो गृह्रते, न वेदः॥

बाल-मनोरमा

उत्सादिभ्योऽञ् १०६१, ४।१।८६

उत्सादिभ्योऽञ्। "प्राग्दीव्यतीये()आर्थेष्वि"ति शेषः। अणिञाद्यपवादः। "दृष्टं सामे"ति सूत्रभाष्ये "सर्वत्राऽग्निकलिभ्यां ढग्वक्तव्यः" इति वार्तिकं पठितम्। "दृष्टं सामे"त्यर्थे ततोऽन्येष्वप्यर्थेषु ढग्वक्तव्य इत्यर्थः।

"तत्र सर्वत्रे"ति त्यक्त्वा लाघवात्प्राग्दीव्यतीयेष्वेवेदं वार्तिकं पठति--अग्निकलिभ्यामिति। अपत्यादीति। अग्निर्देवता अस्य इत्यादिसङ्ग्रहः। आग्नेयं कालेयमिति। ढकि एयादेशे कित्वादादिवृद्धौ "यस्येति च" इति लोपः। इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः।

तत्त्व-बोधिनी

उत्सादिभ्योऽञ् ८८८, ४।१।८६

उत्सादिभ्योऽञ्। अणस्तदपवादानामिञादीना चायमपवादः। इह "बष्कयाऽसे" इति गणसूत्रम्। असे=असमासे। पूर्वाचार्यसंज्ञेयम्। बष्कयस्यापत्यादि बाष्कयः। असे किम्()। गौबष्कयिः। "असे"इति निषेधाल्लिङ्गादिह तदन्तविधिः, तेन धेनुशब्दस्येह पाठाददेनूनां समूह आधेनवमिति सिद्धम्। नन्वेवं धैनुकं गौधेनुकमित्यत्राऽञ्प्रवर्तेत, "अचित्तहस्तिधेनो"रिति सूत्रे धेनुशब्दग्रहणाद्धैनुकमिति सिद्धावपि गौधेनुकं न सिद्ध्येदिति चेन्न, "धेनुरनञ् इकमुत्पादयती"ति विशेषवचनस्य भाष्ये स्थितत्वात्। इकं---ठकमित्यर्थः।

अग्निकलिभ्यां ढग्वक्तव्यः। अग्निकलिभ्यामिति। अयं भावः---"साऽस्य देवता"इत्यधिकारे "अग्रेर्ढ"गिति सूत्रं,"दृष्टं सामे"त्यधिकारे "कलेर्ढ"गिति वार्तिकं चापनीय प्राग्दीव्यतीयेष्विदमेव पठनीयम्। तेनाऽग्नेरपत्यम्, अग्निना दृष्टं साम, अग्निरिदम्, अग्नौ भवम्, अग्नेरागतमाग्नेयमिति सिध्यति। तथा कलेरपत्यमित्याद्यर्थे कालेयमपि सिध्यतीति। एतेन "यदकालयत् तत्कालेयस्य कालेयत्व"मिति श्रुतावर्थान्तरेऽपि ढको दर्शनात् "कलेर्ढ"गिति सूत्रमपार्थकमिति मीमींसकोक्तिः परास्ता। वार्तिके सूत्रत्वोक्तिरप्यवैयाकरणमीमांसकप्रतारणार्थेति दिक्। इत्यपत्यादिबिकारान्तार्थसाधारणाः प्रत्ययाः।

---

सूत्रम्

काशिका-वृत्तिः

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८७

धान्यानां भवने क्षेत्रे खञ् ५।२।१ इति वक्ष्यति। तस्य प्रागित्यनेन एव सम्बन्धः। प्राग्भवनसंशब्दनाद् ये ऽर्थास् तेषु स्त्रीशब्दात् पुंस्शब्दाच् च यथाक्रमं नञ्स्नञौ प्रत्ययु भवतः। स्त्रीषु भवं स्त्रैणम्। पौंस्नम्। स्त्रिणां समूहः स्त्रैणम्। पौंस्नम्। स्त्रीभ्य आगतं स्त्रैणम्। अपुंस्नम्। स्त्रीभ्यो हितं स्त्रैणम्। पौंस्नम्। स्त्रियाः पुंवतिति ज्ञापकाद् वत्यर्थे न भवति। योगापेक्षं च ज्ञापकम् इति स्त्रीवदित्यपि सिद्धम्।

लघु-सिद्धान्त-कौमुदी

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् १००६, ४।१।८७

धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः। स्त्रैणः। पैंस्नः॥

न्यासः

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्। , ४।१।८७

"अत्र तावत् स्त्रीशब्दस्य स्वरूपग्रहणम्, न टाबादिस्त्रीप्रत्ययन्तस्य शब्दस्य। ततो हि "स्त्रीभ्यो ढक्" ४।१।१२० इति ढकं वक्षति, तत्साहचर्यात् पुंशब्दोऽपि तद्धर्मैव विज्ञायते। तस्यापि स्वरूपग्रहणेव। "पौस्नम्" इति। "संयोगानतस्य लोपः" ८।२।२३ इति लोपः। यदि प्राग्भवनसंशब्दनात् स्त्रीपुंसाभ्यां नञ्सनञौ भवतः, वत्यर्थेऽपि तौ स्याताम्, ततश्च स्त्रीवत्, पुंवदिति न सिध्येदित्याह- "स्त्रियाः पुंवत्" इत्यादि। यदयम् "स्त्रियां पुंवत्" ६।३।३३ इति निर्देशं करोति ततो ज्ञायते-- वत्यर्थे नञ्स्नञौ न भवतः। ननु चैतस्मान्निर्देशात् स्नञ्प्रत्ययो वत्यर्थे न भवतीति शक्यं विज्ञातुम्, न तु नञ्प्रत्ययो न भवतीति, ततश्च स्त्रीवदिति न सिध्यति? इत्यत आह-- "योगापेक्षञ्च" इत्यादि। "पुंवत्" इति निर्देशादयं योगो वत्यर्थे न प्रवत्र्तते-- इत्यवमर्थमिदं योगापेक्षं ज्ञापकम्, न तु स्नञ्प्रत्ययापेक्षम्। तेन स्त्रीवदित्येतदपि सिध्यति॥

बाल-मनोरमा

स्त्रीपुंसाभ्यां नञ्सन्ञौ भवनात् १०६२, ४।१।८७

अथाऽपत्याधिकारो निरूप्यते। स्त्रीपुंसाभ्याम्। भवनशब्देन "धान्यायां भवने क्षेत्रे ख"ञिति सूत्रं विवक्षितम्। "प्राग्दीव्यत" इत्यतः प्रागित्यननुवृत्तम्। तदाह--धान्यानामिति। स्त्रीपुंसाभ्यामिति। "अचतुरे"त्यच्। स्त्रीशब्दात्, पुंस्शब्दाच्चेत्यर्थः। स्त्रैण इति। स्त्रिया अपत्यं, स्त्रीषु भवः स्त्रीणां समूह इत्यादिविग्रहः। नञ्, वृद्धिः, णत्वम्। पौंस्न इति। पुंसोऽपत्यं, पुंसि भवः, पुंसां समूह इत्यादिविग्रहः। पुंस्शब्दात् स्नञि "स्वादिषुइति पदत्वात्संयोगान्तलोपः, आदिवृद्धिः। प्रत्ययसकारस्तु श्रूयते, उभाभ्यामपि नञ्प्रत्ययस्यैव विधौ तु पुंसः सकारस्य संयोगान्तलोपे "पुन्न" इति स्यादिति भावः। वत्यर्थे नेति। "तेन तुल्यं क्रिया चेद्वति"रिति वतिप्रत्ययो वक्ष्यते। तस्यार्थे स्त्रीपुंसाभ्यां नञ्स्नञौ न भवत इत्यर्थः। कुत इत्यत आह स्त्री पुंवच्चेति ज्ञापकादिति। अन्यथा "पुंव"दिति निर्देशोऽनुपपन्नः स्यादिति भावः। न च "पुंव"दिति निर्देशः पुंस्शब्दाद्वतद्यर्थे स्नञभावं ज्ञापयेन्नतु स्त्रीशब्दान्नञभावमपीति वाच्यं, नञ्स्नञोरेकसूत्रोपात्ततया वत्यर्थे स्नञभावे ज्ञापिते सति स्त्रीशब्दान्नञभावस्यापि लाभात्, ज्ञापकस्य सामान्यापेक्षत्वात्। तदुक्तं भाष्ये "योगापेक्षं ज्ञापक"मिति।

तत्त्व-बोधिनी

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ८८९, ४।१।८७

स्त्रीपुंसाभ्याम्। प्रागित्यनुवर्तते। तदाह---प्रागर्थेष्विति। पौंस्न इति। इह "स्वादिषु"इति पदत्वात्संयोगान्तलोपेन पुंसः सस्य निवृत्तावपि प्रत्ययसकारः श्रूयत एव। अतएवोभाभ्यां परतो नञेव न विहितः, पौंस्नमिति रूपाऽसिद्धिप्रसङ्गात्। स्यादेतत्---उभाभ्यामपि प्रकृतोऽञेवाऽस्तु, तत्संनियोगेन "स्त्रीपुंसयोर्ुक्चे"ति नुगेव विधीयताम्। न चैवं "स्त्रैणाः, पौंस्नाः"इत्यत्र " यञञोश्चे"ति लुक्प्रसङ्गः, रुऔणानां सङ्घ इत्यादौ "सङ्घाहकलक्षणेषु" इत्यणप्रसङ्गश्च स्यादिति वाच्यम्, उभयत्रापि "गोत्रे"इत्यनुवृत्तेः। प्रवराध्यायप्रसिद्धं हि तत्र गोत्रम्। अन्यथा "पौत्राः, दौहित्राः"इत्यत्राऽप्यञो लुक्स्यात्। एवं च "नञ्स्नञीकक्ख्यु"न्निति वार्तिके नञ्स्नञ्ग्रहणं विनाऽञन्तत्वादेव ङीप्सिध्यतीत्यपरमप्यनुकूलमिति चेत्। अत्राहुः---नुकि "नस्तद्धिते"इति टिलोपः स्यात्। न चैवं नुगानर्थक्यं, टिलोपप्रवृत्यैव नुकः सार्थकत्वात्। यद्यपि स्त्रीशब्दे तस्य सार्थक्यं नास्ति, "यस्येति चे"त्यनेनापीकारलोपसंभवात्, तथापि "श्रीर्देवताऽस्य श्रायं हविः"इत्यत्रैव लोपात्परत्वाद्वृद्धिः स्यात्, नुकि तु टिलोपः प्रवर्तते इति स्त्रीशब्देऽपि नुकः सार्थक्यमस्तु। तस्मान्नञ्स्नञाविति यतान्यासमेव स्वीकर्तव्यमिति। अन्ये तु "स्त्रीपुंसयोर्नुक्चे"त्यस्तु, आगमे अकारो विवक्षितः। तस्य च "यस्येति चे"ति लोपे कृतेऽपि स्थामिवत्त्वाट्टिलोपो न भविष्यति। एवं च "टिड्ढाण"ञिति सूत्रेणैव ङीप्सिद्धौ नञ्स्नयोरुपसङ्ख्यानं माऽस्त्विति महदेव लाघवमित्याहुः। वत्यर्थ इति। "स्त्रीपुंसाभ्यां नञ्स्नञौ वत्यर्थे न प्रवर्तेते" इति सामान्यापेक्षं ज्ञापकमिति भावः। अत एवोदाहरति---स्त्रीवदिति। "आ च त्वा"दिति चकारो नञ्स्नञ्भ्यां त्वतलोः समावेशार्थ इति वक्ष्यति। तेन स्त्रीत्वं स्त्रीता, पुंस्त्वं पुंस्तेति सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

द्विगोर् लुगनपत्ये ४।१।८८

प्राग्दीव्यतः इति वर्तते, न भवनातिति। द्विगोः इति षष्ठी। द्विगोर् यः सम्बन्धी निमित्तत्वेन तद्धितः प्राग्दीव्यतीयो ऽपत्यप्रत्ययं वर्जयित्वा तस्य लुग् भवति। पज्चसु कपालेषु संस्कृतः पज्चकपालः। दशकपालः। द्वौ देवादधीते द्विवेदः। त्रिवेदः। अनपत्ये इति किम्? द्वैदेवदत्तिः। त्रैदेवदत्तिः। प्राग्दिव्यतः इत्येव, द्वैपारायणिकः। द्विगुनिमित्तविज्ञानादिह न भवति, पञ्चकपालस्य इदं पाञ्चकपालम्। अथ वा द्विगोरेव अयं लुग् विधीयते। द्विगोः इति स्थानषष्ठी। ननु च प्रत्ययादर्शनस्य एषा संज्ञा? सत्यम् एतत्। उपचारेण तु लक्षणया द्विगुनिमित्तभूतः प्रत्यय एव द्विगुः, तस्य लुग् भवति। द्विगुनिमित्तको ऽपि तर्हि गुणकल्पनया कस्मान् न द्विगुरुच्यते पाज्चकपालम् इति? न तस्य द्विगुत्वम् निमित्तम्। इतरस् तु द्विगुत्वस्य एव निमित्तम् इत्यस्ति विशेषः। यद्येवम् इह कथं पञ्चकपाल्यां संस्कृतः पञ्चकपालः इति? न एव अत्र तद्धित उत्पद्यते। वाक्यम् एव भवति। त्रैशब्द्यं हि साध्यं, पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः पञ्चकपालः इति। तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः। अपरस्मादुत्पत्तिर् भविष्यति। अथ इह कस्मान् न भवति, पञ्चभ्यो गर्गेभ्य आगतं पज्चगर्गरूपयम्, पञ्चगर्गम् अयम् इति वा इत्यनुवर्तते। सा च व्यवस्थितविभाषा विज्ञायते।

न्यासः

द्विगोर्लुगनपत्ये। , ४।१।८८

"प्राग्दीव्यतः" इति। तस्य स्वरितत्वात्। "न भवनात्ि"ति। विपर्ययात्। द्विगोरिति पञ्चमी चेयं स्यात्? षष्ठी वा? तत्र यदि पञ्चमी, तदायमर्थः स्यात्-- द्विगोः परस्यानपत्यप्रत्ययस्य प्राग्दीयव्यतीयस्य लुग्भवतीति। ततश्च यथा द्विगुसंज्ञानिमित्तस्य लुग्भवति-- पञ्चकपालेषु संस्कृतः पुरोडाशः पञ्चकपाल इति, तथा यो द्विरगोर्निमित्तं न भवति तस्यापि स्यात्-- पञ्चकपालस्य पुरोडाशस्येदं खण्डम्। "तस्येदम्" ४।३।१२० इत्यण्-- पाञ्चकपालमिति। तमिमं पञ्चमीपक्षे दोषं दृष्ट्वा, षष्ठीपक्षमाश्रित्याह-- द्विगोरिति षष्ठी" इति। "द्विगोर्यः सम्बन्धी" इति। यस्य तद्धितस्यार्थे

"तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति समाहारद्विगुर्विधीयते स द्विगोः सम्बन्धीति; अर्थद्वारेण तदर्थस्य द्विगुसम्बन्धित्वात्। सोऽपि तद्द्वारेण द्विगुसम्बन्धी। "निमित्तत्वेन"इति। अनेन निमित्तनैमित्तिकभावेन यः सम्बन्धो तस्य लुग्भवति, न तु पौर्वापर्यभावेन यस्तस्येति दर्शयति। एतच्च निमित्तनैमित्तिकभावस्यान्तरङ्गत्वाल्लभ्यते। स हि द्विगोराद्यस्तद्धितेन सम्बन्धः; तस्मात् स गृह्यते। पौर्वापर्यभावस्तूत्तरकालमपि भवतीति बहिरङ्गो भवति, अतो न तस्य ग्रहणम्। "पञ्चकपालः" इति। पञ्चसु कपालेषु संस्कृत इति "तद्धितार्थ" २।१।५० इति समासः, "संख्यापूर्वो द्विगुः" २।१।५१ इति द्विगुसंज्ञा, "संस्कृतम्" ४।४।३ इत्यण्, तस्य लुक्। "द्विवेदः"इति। द्वौ वेदावधीत इति पूर्ववत्समासः, "तदधीते तद्वेद" ४।१।५९ इत्यण्। "द्वैदेववत्तिः" इति। द्वयोर्देवदत्तयोरपत्यमिति "अत इञ्" ४।१।९५। "पञ्चकपालस्येदमिति पाञ्चकपालम्" इति। अत्र संस्कृतार्थे यः प्रथमः प्रत्यय उत्पन्नः स एव द्विगोर्निमित्तम्, न तु य उत्तरकालं तस्येदमित्यर्थविवक्षायाम्। न हि तस्यार्थे विषयभूते द्विगुर्विहितः, किं तर्हि? संस्कृतार्थे यो विहितस्तस्य। तेनाद्विगुनिमित्तत्वात् "तस्येदम्" इति यो विहितस्तस्येह लुग्न भवति। "अथ वा" इत्यादि। पूर्वं हि द्विगोर्यस्तद्धितो निमित्तं तस्य लुग्विहितः, इदानीं द्विगोरेव विधीयत इत्यस्ति विशेषः। कथं पुनर्द्विगोरेव लुग्भवति? इत्यत आह-- "द्विगोरिति स्थानषष्ठी" इति। "ननु च" इत्यादिनानन्तरोकक्तव्याख्यानं विघटयति। "प्रत्ययस्य लुक्श्लुलुपः" १।१।६० इतिलुगादिकाः प्रत्ययादर्शनस्यैताः संज्ञा विहिताः, ततो लुगुच्यमानोऽनेन न शक्तो द्विगोरेव लुकं विधातुमित्याभिप्रायः। "सत्यमेतत्" इति। यदनन्तरमुक्तम्। यद्येवम्, कथं लुक्संज्ञाया द्विगोर्लुग्लभ्यते? इत्यत आह-- "उपाचारेण तु" इत्यादि। अतथाभूते वस्तुनि योऽध्यारोपिततथाभावो ज्ञानविशेषः स उपचारः। लक्ष्यतेऽनयेति लक्षणा, सापुनरिहोपचार एव "एतेन ह्द्विगुरूपस्तद्धितो द्विगुरूपतया लक्ष्यते। यथा मञ्चाः क्रोशन्तीत्यत्रामञ्चरूपा अपि पुरुषा मञ्चरूपतया लक्ष्यन्ते, तथेहाप्यद्विगुरूपस्तद्धितो द्विगुरूपतया। उपचारस्य तु निबन्धनं द्विगुनिमित्तभूतत्वम्, यदाह--- " द्विगुनिमित्तभूतः प्रत्यय एव द्विगुः" इति। भवति हि कारणे कार्योपचारः, यथा-- आयुर्घृतमिति। "द्विगुनिमित्तकोऽपि तर्हि" इत्यादि। द्विगुर्निमित्तं यस्य स तथोक्तः। यो धर्म उपचारस्य निबन्धनं स इह गुणशब्देन विवक्षितः। गुणनिमित्ता कल्पना = गुणनिमित्तकल्पना, सा पुनरुपचारात्मिकैव वेदितव्या। यद्युपचारेण द्विगोर्निमित्तं प्रत्ययोऽपि द्विगुरुच्यते, द्विगुर्यस्य निमित्तं सोऽप#इ गौण्या कल्पनया कस्माद्द्विगुरिति नोच्यते? कार्येऽपि हि कारणशब्द उपचारात् प्रयुज्यमानो विद्यत एव, यथा-- पुरातनं सर्वमिदं शुभाशुभं कर्म भुज्यत इति। "पाञ्चकपालम्" इति। पञ्चकपालस्य पुरोडाशस्येदं खण्डमित्यण्, स च द्विगोरुत्पन्नत्वाद्द्विगुनिमित्तक इत्यभिप्रायः। न तस्य द्विगुत्वं निमित्तमिति निष्पन्नत्वादद्विगोस्तद्धितस्योत्पद्यमानस्य न द्विगुत्वं निमित्तं, किं तर्हि? प्रातिपदिकम्। तथा हि-- नासौ द्विगुरित्येवं विधीयते, किं तर्हि? प्रातिपदिकादित्येवम्। तस्मात् सन्निहिताऽपि द्विगुता न प्रत्ययस्य निमित्तमिति, न च प्रत्ययो द्विगुरित्युपचारेण व्यपदेष्टुं शक्यत इति। "इतरस्तु" इति। तद्धितप्रत्ययः, यस् मूलोदाहरणे लुग्दर्शितः। "द्विगुत्वस्यैव निमित्तम्" इति। एवकारेण प्रातिपदिकस्य व्यवच्छेदः क्रियते-- द्विगुत्वस्यैव निमित्तम्, न तु प्रातिपदिकत्वस्य; यतस्तदर्थे द्विगुसमासो विधीयते,न तु प्रातिपदिकत्वमित्यस्ति विशेषः। ततश्च द्विगोर्यो निमित्तं तत्रैव द्विगुत्वव्यपदेश उपाचाराद्भवति। न तु निष्पन्नाद्द्विगोर्य उत्पद्यते तत्रापि। "यद्येवम्ित्यादि। यदि द्विगोर्यो निमित्तं तद्धितः सोऽत्र निमित्तत्वादुपाचारेण द्विगुरुच्यते तस्य लोपो भथवि। एवं सतीह कथं लोपः-- पञ्चकपाल्यां संस्कृतः पञ्चकपाल इति? अत्र हि पञ्चानां कपालानां समाहार इति समाहारे द्विगौ निष्पन्ने ततस्तूत्तरकालं तद्धितो विधीयमानो न द्विगोर्निमित्तं भवति। "नैवात्र" इत्यादि परिहारः। कस्मान्नोत्पद्यत इत्याह-- "त्रैशब्द्यं हि" इत्यादि। त्रय एव शब्दाः = त्रैशब्द्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। इहास्माभिस्त्रैशब्द्यं साध्यम्। पञ्चकपालीशब्दस्तद्धितोत्पत्तिमन्तरेणापि सिद्धतीति न तस्मात् तद्धित उत्पद्यते। "पञ्चसु कपालेषु संस्कृतः" इत्यादिना त्रैशब्द्यं दर्शयति। "द्वयोः शब्दयोः" इत्यादि। यश्च समाहारे पञ्चकपालीशब्दः, यश्च तद्धितार्थविषये समासे पञ्चकपालशब्दस्तौ द्वावपि समानार्थौ,तयोरेकेन पूर्वेण विग्रह एवेति तस्मान्न तद्धितोत्पत्तिर्विज्ञेया। "अपरस्मादुत्पत्तिः" इति। पञ्चकपालशब्दात्। अव्यविकन्यायेन।

यथाऽवेर्मांसमाविकमित्यविशब्देन विग्रहः,अविशब्दस्तु प्रत्ययमुत्पादयति तद्वदिहापि। "अथेह कस्मान्न भवति" इत्यादि। रूप्यमयटावपि हि द्विगोर्निमित्तभूतौ, अतस्तयोरपि लुका भवितव्यमिति भावः। "वेत्यनुवत्र्तते" इति "समर्थानां प्रथमाद्वा"४।१।८२ इत्यतः। नन्वेवमपि सर्वत्र विकल्पेन लुक् प्राप्नोतीत्यत आह-- "सा च" इत्यादि। च शब्दो हेतौ। यस्मात् सा व्यवस्थितविभाषा विज्ञायते, तेन पञ्चकपाल इत्यादौ नित्यं लुग्भवति। पञ्चगर्गरूप्यमित्यादौ न भवत्येव॥

बाल-मनोरमा

द्विगोर्लुगनपत्ये १०६३, ४।१।८८

द्विगोर्लुगनपत्ये। द्विगोरिति हेतुत्वसंबन्धे षष्ठी। लुक्श्रवणात्प्रत्ययस्येत्युपस्थितम्, प्रत्ययाऽदर्शनस्यैव लुक्त्वात्। तताच "द्विगुनिमित्तस्य प्रत्ययस्य लु"गिति लभ्यते। द्विगुनिमित्तश्च प्रत्ययस्तद्धित एव भवति तद्धितार्थे विषये तद्विधानात्। ततश्च "द्विगुनिमित्तस्य तद्धितस्ये"ति लभ्यते। द्विगुनिमित्तस्य तद्धितस्ये"ति लभ्यते। प्राग्दीव्यत" इत्यनुवृत्तेः। तद्धितविशेषणं। "गोत्रेऽलुगची"त्युत्तरसूत्रेऽचीति सप्तम्यन्तस्य गोत्रविशेषणतया तदादिविधिः। अजादावित्यर्थकमचीति पदमिहाऽपकृष्यते। तच्च षष्ठ()आ विपरिणतं तद्धितविशेषणम्। तदाह--द्विगोर्निमित्तमित्यादिना। पञ्चकपाल इति। "संस्कृतं भक्षाः" इत्यण्। तद्धितार्थे द्विगुः। अणो लुक्। प्रत्ययलक्षणाऽभावान्नादिवृद्धिः। पञ्चकपालस्येदमिति। पञ्चसु कपालेषु संस्कृतः पुरोडाश इत्यर्थे अणि विवक्षिते द्विगुसमासेऽणो लुकि निष्पन्नात्पञ्चकपालशब्दात् "तस्येद"मित्यणि आदिवृद्धौ पाञ्चकपालमित्यत्राऽणोलुङ्न भवति अणो द्विगुनिमित्तत्वाऽभावादिति भावः। पञ्चगर्गरूप्यमिति। पञ्चभ्यो गर्गेभ्य आगतमित्यर्थे "हेतुमनुष्येभ्यः" इति रूप्यप्रत्ययः। "तद्ध#इतार्थ" इति द्विगुसमासनिमित्तत्वेऽपि अजादित्वाऽभावान्न लुगिति भावः। द्वैमित्रिरिति। अत्र "अत इ"ञिति इञोऽपत्यार्थकत्वान्न लुगिति भावः। न च तिस्नो विद्या अधीयानस्तैविद्य इत्यत्राप्यणो लुक् स्यादिति वाच्यं, त्र्यवयवा विद्या त्रिविद्या। शाकपार्थिवादिः। त्रिविद्यामधीते त्रैविद्य इति विग्रहे त्रिविद्याशब्दादणो द्विगुनिमित्तत्वाऽभावात्। प्राग्दीव्यतीयस्येति। किम्?। पञ्चभ्यः कपालेभ्यो हितं पञ्चकपालीयम्।

तत्त्व-बोधिनी

द्विगोर्लुगनपत्ये ८९०, ४।१।८८

द्विगोर्लुगनपत्ये। द्विगोरिति षष्ठी, तदर्थश्च हेतुत्वं, तच्च भाविनोऽप्युपपद्यते, बुद्ध्याध्यवसायादित्याशयेनाह-- द्विगोर्निमित्तमिति। अजादिरिति। एतच्चोत्तरसूत्रात्, "अचि" इत्यपकर्षाल्लभ्यते, वाग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणेन वा। प्राग्दीव्यतीयः किम्()। पञ्चम्यः कपालेभ्यो हितं पञ्चकपालीयम्।

---

सूत्रम्

काशिका-वृत्तिः

गोत्रे ऽलुगचि ४।१।८९

प्राग्दीव्यतः इत्येव। यस्कादिभ्यो गोत्रे २।४।६३। इत्यादिना येषां गोत्रप्रत्ययानां लुगुक्तः, तेषामजादौ प्राग्दीव्यतीये विशयभूते प्रतिषिध्यते। गर्गाणाम् छात्राः गार्गीयाः। वात्सीयाः। आत्रेयीयाः। खारपायणीयाः। गोत्रे इति किम्? कौबलम्। बादरम्। अचि इति किम्? गर्गेभ्य आगतम् गर्गरूप्यम्। गर्गमयम्। प्राग्दीव्यतः इत्येव, गर्गेभ्यो हि तम् गार्गीयम्। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक्। बिदानाम् अपत्यं युवा, युवानौ बैदः, बैदौ। वैदशब्दाततः इञ् कृते तस्य च इञः ण्यक्षत्रियाऽर्षञितो यूनि लुगणिञोः २।४।५८ इति लुकि रूपम्। एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु

लोपो यूनि, बैदस्य बैदयोर् वा अपत्यं बहवो माणवकाः बिदाः। नह्यत्राण् बहुषूत्पन्नः।

न्यासः

गोत्रेऽलुगचि। , ४।१।८९

"अचि" इति। यद्येषा परसप्तमी स्याच्छविधावितरेतराश्रयता प्रसज्येत। कथम्? गर्गस्यापत्यानि बहुनि "गर्गादिभ्यो यञ्" ४।१।१०५, तस्य यदि लुक् स्याच्छो न स्यात्। लुप्तेऽपि तस्मिन् "प्रत्ययलोपे प्रत्ययलक्षणम्" (१।१।६२) इति चेत्? "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलोपप्रतिषेधाद्()वृद्ध्यभावेन वृद्धसंज्ञा न स्यात्, ततश्च वृद्धलक्षणच्छो न स्यात्। तस्माद्()वृद्धत्वं प्रातिपदिकस्य वाञ्छतोऽलुक् पूर्वं स्यात्। स चालुक छे परतो यदि भवति ततश्चालुग्विनिमित्तश्छः, तन्निमित्तश्चालुगितिव्यक्तमितरेतराश्रयत्वम्। तदिमं परसप्तम्यां दोषं दृष्ट्वा विषयसप्तमीयमिति दर्शयन्नाह--"अजादौ प्राग्दीव्यतीये विषयभूते" इति। विषयभूते = अनुत्पन्न एव बुद्धिस्थ इत्यर्थः। "गार्गीयाः" इति। गर्गस्यापत्यानि बहूनि। गर्गादित्वाद्यञ् ४।१।१०५। तस्य गर्गाणाञ्छात्रा इत्यर्थविवक्षायामजादावनुत्पन्ने बुद्ध्यभिमुखीकृते विषयभूते "यञिञोश्च" ४।१।१०१ इतियो लुक् प्राप्नोति तस्यानेन प्रतिषेधः क्रियते, ततश्चादिवृद्धौ कृतायां तन्निबन्धनायां च वृद्धसंज्ञायाम् "वृद्धाच्छः" ४।१।११४ इति च्छः, ईयादेशः, "यस्येति च" ६।४।१४८ इत्यकारलोपः, "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ इत यकारस्य। "वास्तीयाः" इति। पूर्वेण तुल्यम्। "आत्रेयीयाः" इति। अत्त्रेरपत्यानि बहूनि। "इतश्चानिञः" ४।१।१२२ इति ढक्, तस्य "अत्त्रिभृगुकुत्स" २।४।६५ इत्यादिना लुकि प्राप्तेऽत्रीणां छात्रा इति च्छे विषयभूते तस्य प्रतिषेधः। "खारपायणीयाः" इति। खरपस्यापत्यानि बहूनि। "नडादिभ्यः फक्" ४।१।९९, "यस्कादिभ्यो गोत्रे" २।४।६३इति तस्य प्राप्तस्य लुकः खरपाणां छात्रा इति च्छे विषयभूते प्रतिषेधः। "कौबलम्, वादरम्" इति। कुबलीवदरीशब्दौ गौरादिङीषन्तौ प्रत्ययस्वरेणान्तोदात्तौ, तयोः शेषमनुदात्तम्। तेन कुबल्या विकारः फलम्, वदर्या विकारः फलमित्यर्थविवक्षायाम्। "अनुदात्तादेरञ्" ४।२।४३ तस्य "फले लुक्" ४।३।१६१ इति तयोर्लुग् यः प्राप्नोति तस्य कुबलस्येदं वदरस्येदमित्यर्थविवक्षायामजादौ छे विषयभूते प्रतिषेधो न भवति; गोत्रग्रहणात्। गोत्रे यः प्रत्ययो वाचकत्वेन वत्र्तते तस्य लुकः प्रतिषेधेन भवितव्यम्। न चायमञ् गोत्रे वाचकत्वेन वत्र्तते, अपि तु विकारे, तेन तस्य लुग्भवत्येव। तस्मिन् सति "लुक्तद्धितलुकि" १।२।४९ इति स्त्रीप्रत्ययस्यापि लुक्। अञि लुप्ते वृद्ध्यभावाद्()वृद्धत्वं नास्तीत्यणेव भवति, न तु च्छः। "गर्गरूप्यम्, गर्गमयम्" इति। पूर्ववद्रूपमयटौ। यद्यत्रालुक् स्याद्गार्ग्यरूप्यं गार्ग्यमयमिति स्यात्। "गार्गीयम्" इति। "तस्मै हितम्" ५।१।५ इति "प्राक्क्रीताच्छः" ५।१।१ इति च्छः, स च प्राग्दीव्यतीयो न भवति; दीव्यतः परेण विधानात्। "गोत्रस्य" इति। गोत्रप्रत्ययस्य। "बहुषु लोपिनः" इति। बहुष्वर्थेषूत्पन्नस्य यस्य लोपो विधीयते स बहुषु लोपी। "बहुवचनान्तस्य प्रवृत्तौ" इति। प्रवृत्तिः = अर्थान्तरसंक्रान्तिः। एतदुक्तं भवति-- बहुवचनान्तस्यार्थान्तरसंक्रान्ताविति। सा चार्थान्तरसंक्रान्ताविति। सा चार्थान्तरसंक्रान्तिस्तदन्ताद्यदा यूनि प्रत्यय उत्पद्यते तदा भवतीति वेदितव्यम्; तदा गोत्रान्तस्य यूनि प्रवृत्तेः। "द्वयेकयोः" इति। यदा गोत्रप्रत्ययान्तादेकस्मिन्नर्थे यूनि द्वयोर्वा यूनोः उत्पद्यते तदाऽर्थान्तरसंक्रान्तौ सत्यामलुग्भवति। बिदस्यापत्यानिबहुनि। "अनुष्यानन्तर्ये बिदादिभ्योऽञ" ४।१।१०४ इत्यञ्, स च "यञञोश्च" २।४।६४ इति बहुषु लुग्विधानाद्बहुषु लोपी भवति, तदन्ताद्युवविवक्षायामेकस्मिन् यूनि द्वयोर्वा "अत इञ्" (४।१९५), तस्य ण्यक्षत्त्रियादिसूत्रेण (२।४५८) लुकि कृते गोत्रप्रत्ययान्तस्य तस्यार्थान्तरसंक्रान्तौ सत्यां गोत्रप्रत्ययस्यात्र इहापि बहुषूत्पन्नस्य लग्न भवति। कथं पुनर्न भवति, यावताऽलुको विषयाभावात् प्राग्दीव्यतीयोऽजातिरिञ् प्रत्यय उपनीतः? प्रत्ययलक्षणम्" (व्या।प।९६) इति च परिभाषा। यथा गवे हितं गोहितमिति चतुर्थीसमासे सुब्लुकि कृते प्रत्ययलक्षणेन चतुर्थीविभक्तिमाश्रित्य गोशब्दस्य "एचोऽयवायावः" इत्यवादेशो न भवति; वर्णाश्रयत्वात्। वर्णाश्रयत्वं तु तस्याचि विधानात्। यथा च "वर्णाश्रये नास्ति प्रत्ययलक्षणम्ट (व्या।प।९६) इति परिभाषा, तथा बैदः, बैदौ-- इत्यत्राप्यलुका वर्णाश्रयतया न भवितव्यम्? नैतदस्ति, न

ह्रलुगत्र वर्णाश्रयः, किं तर्हि? तद्धिताश्रयः। अचीत्येतत् त्विह सूत्रे विशेषणत्वेनोक्तम्। अत एव वृत्तावुक्तम्-- अजादौ प्राग्दीव्यतीये प्रत्यय इति। तस्मात् तस्याः परिभाषाया इहोवस्थानेऽसति "गोत्रेऽलुगचि" इति भवतीति, अनेनैवात्रालुक् सिद्धः। स च बहुषु युवसु मा भूदिति द्वयेकयोरेवेत्युपसंख्यानम्। तत्र बिदा इत्येव भवति। "एकवचनद्विवचनान्तस्य" इत्यादि। एकवचनान्ततस्य गोत्रप्रत्ययस्य द्विवचनान्तस्य च बहुष्वर्थेषु युवसंज्ञकेषु प्रवृत्तौ संक्रान्तौ सत्यां लुग्वक्तव्यः। तत्र बैदस्येत्येकवचनान्तं गोत्रम्, बैदयोरिति द्विवचनान्तम्()। अत्र च पूर्ववदञ्, तयोर्युवापत्यबहुत्वविवक्षायाम् "अत इञ्" ४।१।९५। तस्य ण्यक्षत्त्रियादिसूत्रेण २।४।५८ लुकि कृतेऽञोऽपि गोत्रप्रत्ययस्य लुगिष्यते। स च न प्राप्नोति, तस्मादुपसंख्यायते। किं पुनः कारणं न प्राप्नोति? इत्याह-- "न ह्यत्र" इत्यादि। "यञञोश्च" २।४।६४ इति अनेन हि बहुषूत्पन्नोर्लुग्विधीयते, न चाञ् हुहषूत्पन्न,किं तर्हि? एकस्मिन् द्वयोश्च, तस्मान्न प्राप्नोतीति। तदेवं सर्वथा बहुषु बिदा इत्येवं भवितव्यमिति स्थितम्॥

बाल-मनोरमा

गोत्रेऽलुगचि १०६४, ४।१।८९

गोत्रेऽलुगचि। "अलु"गिति च्छेदः। "प्राग्दीव्यत" इत्यनुवृत्तेः, प्रत्ययाधिकाराच्च प्राग्दीव्यतीये प्रत्यये इति लब्धम्। अचीति तद्विशेषणं। तदादिविधिः। विषयसप्तम्येषा, नतु परसप्तमी। तदाह--अजादावित्यादिना। गोत्रप्रत्ययस्येति। गोत्रार्थकप्रत्ययस्येत्यर्थः। लुकः प्रत्ययाऽदर्शनत्वात्प्रत्ययस्येति लब्धम्। गर्गाणां छात्रा इति। वक्ष्यमाणोदाहरणविग्रहप्रदर्शनमिदम्। गर्गस्य गोत्रापत्यं गार्ग्यः। "गर्गादिभ्यो यञ्"। गर्गस्य गोत्रापत्यानीति बहुत्वविवक्षायां यञि कृते तस्य "यञञोश्चे"ति लुकि "गर्गा" इति भवति। वृद्धाच्छ इति। गाग्र्य शब्दादुक्तेऽर्थे छप्रत्यय इत्यर्थः। छस्य ईयादेशः, तस्मिन्भविष्यति अजादौ परे "यञञोश्चे"ति प्राप्तो लुङ् न भवति।

तत्त्व-बोधिनी

गोत्रेऽलुगचि ८९१, ४।१।८९

गोत्रे लुगचि। गोत्रे किम्()। गोत्रार्थकप्रत्ययस्यैवाऽलुग्यथा स्यात्। नेह--कुवलस्येदं कौवलं, बदरस्येदं बादरम्। कुवलीबदरीशब्दौ हि गौरादिङीषन्तौ, ताभायं फलरूरे विकारे "अनुदात्तादेश्चे"त्यञ्। तस्य "फले लु"गिति लुक्। तत इदमर्थे अजादिप्राग्दीव्यतीये विवक्षितेऽनेनाऽलुङ्न भवतीति वृद्धित्वाऽभावाच्छो नेति भावः। विवक्षित इति। अचीति विषयसप्तमी। परसप्तमीत्वे तु अवृद्धत्वाच्छस्याऽप्राप्तौ अणेव स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

यूनि लुक् ४।१।९०

प्राग् दीव्यतः इति वर्तते, अचि च। प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते बुद्धिस्थे ऽनुत्पन्न एव युवप्रत्ययस्य लुग् भवति। तस्मन् निवृत्ते सति यो यतः प्राप्नोति स ततो भवति। फाण्टाहृतस्य अपत्यं फाण्टाहृतिः। तस्य अपत्यं युवा, फाण्टाहृतिमिमताभ्यां णफिञौ ४।१।१५०, फाण्टागृतः। तस्य छाऽत्राः इति विवक्षिते ऽर्थे बुद्धिस्थे युवप्रत्यय्स्य लुग् भवति। तस्मिन् निवृत्ते इञन्तं प्रकृतिरूपं सम्पन्नम्। तस्मातिञश्च ४।२।१११ इत्यण् भवति, फाण्टाहृताः। भागवित्तस्य अपत्यं भागवित्तिः। तस्य अपत्यं युवा, वृद्धाट् ठक् सौवीरेषु बहुलम् ४।१।१४८ इति ठक्, भागवित्तिकः। तस्य छात्राः, पूर्ववद् युवप्रत्यये निवृत्ते, इञश्च ४।२।१११ इत्यण्, भागवित्ताः। तिकस्य अपत्यं, तिकादिभ्यः फिञ् ४।१।१५४, तैकायनिः। तस्य अपत्यं युवा, फेश् छ च ४।१।१४९ इति छः, तैकायनीयः। तस्य छात्रः, युवप्रत्यये निवृत्ते वृद्धाच् छः ४।२।११३,

तैकायनीयाः। कपिञ्जलादस्य अपत्यं कापिञ्जलादिः। तस्य अपत्यं युवा, कुर्वादिभ्यो ण्यः ४।१।१५१, कापिञ्जलाद्यः। तस्य छात्राः, ण्ये निवृत्ते इञश्च ४।२।१११ इत्यण्, कापिञ्जलादाः। ग्लुचुकस्य अपत्यं, प्राचाम् अवृद्धात् फिन् बहुलम् ४।१।१६० इति ग्लुचुकायनिः। तस्य अपत्यं युवा, प्राग्दीव्यतो ऽण् ४।१।८३, ग्लौचुकायनः। तस्य छात्राः, युवप्रत्यये निवृत्ते स एव अण्, ग्लौचुकायनाः। अचि इत्येव, फाण्टाहृतरूप्यम्। फाण्टाहृतमयम्। प्राग्दीव्यतः इत्येव, भागवित्तिकाय हितं भागवित्तिकीयम्।

न्यासः

यूनि लुक्। , ४।१।९०

"यूनि" इति। "व्यत्ययो बहुलम्" ३।१।८५ इति षष्ठ()र्थे सप्तमी। अत एव वृत्तावाह--"युवप्रत्ययस्य" इति। अजादौ प्रत्यये विवक्षिते बुद्धिस्य इत्यादिनाऽचीति विषयसप्तमीत्वं दर्शयति। यद्येषां परसप्तमी स्यात्, यत्रापि च्छप्रत्ययो नेष्यते तत्रापि स्यात्। युवप्रत्ययान्तस्य बुद्धत्वादित्यभिप्रायः। "फाण्टाह्यतरूप्यम्, फाण्टाह्यतमयम्" इति। यद्यत्र लुक् स्यात्, फाण्टाह्यतरूप्यं फाण्टाह्यतमयमिति न स्यात्। "भागवित्तिकीयम्" इति। प्राक्क्रीतीयच्छः ५।१।१ पू()ववत्॥

बाल-मनोरमा

यूनि लुक् १०६६, ४।१।९०

यूनि लुक्। प्राग्दीव्यत इत्यनुवृत्तेः प्रत्ययाधिकाराच्च "प्राग्दीव्यतीये प्रत्यये" इति लभ्यते। अचीति प्रत्ययविशेषणं, तदादिविधिः। विषयसप्तम्येषा, नतु परसप्तमी। तदाह--अजादौ प्राग्दीव्यतीये विवक्षिते इति। युवप्रत्ययस्येति। युवार्थकप्रत्ययस्येत्यर्थः। लुकः प्रत्ययाऽदर्शनत्वात्प्रत्ययस्येति लभ्यत इति भावः। ननु ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिरिति कथम्, "अत इ"ञितीञः प्राप्तेरित्यत आह--वक्ष्यमाण इति। "प्राचामवृद्धात्फिन्बहुल"मित्यनेने"ति शेषः। आयन्नादेशे ग्लुचुकायनिरिति रूपमिति भावः। तत इति। ग्लुचुकायनेरपत्यार्थे "तस्यापत्य"मित्यणि आदिवृद्धौ "यस्येति चे"ति लोपे "ग्लौचुकायन" इति रूपमित्यर्थः। तस्येति। ग्लौचुकायनस्य छात्र इत्यर्थे तस्येदमित्यणि युवापत्याऽणो लुकि "ग्लौचुकायन" इत्येव रूपमित्यर्थः। ननु युवापत्याऽणः "यस्येति चे"ति लोपेनैव छात्रार्थे ग्लौचुकायन इति रूपसिद्धेस्तस्य लुग्विधिरनर्थक इत्यत आह--अणो लुकीति। छात्रार्थकछप्रवृत्तेः प्रागेव युवप्रत्ययस्याऽणो लुकि आदिवृद्धेर्निवृत्तौ ग्लुचुकायनिशब्दस्य वृद्धत्वाऽभावाच्छो न भवति। युवप्रत्ययस्य लुगभावे तु वृद्धत्वाच्छः स्यात्। अतदर्थमेव युवप्रत्ययस्य लुग्विधानमित्यर्थः। स्थितश्चातुर्थिको युवप्रत्ययलुक्। तत्प्रसङ्गाद्द्वैतीयीको युवप्रत्ययलुगनुक्रम्यते-।

तत्त्व-बोधिनी

यूनि लुक् ८९३, ४।१।९०

यूनि लुक्। प्राग्दीव्यतीय इति वर्तते, अचीति च, प्रत्ययाधिकाराच्च प्रत्यय इति लभ्यते। तदेतदाह---प्राग्दीब्यतीयेऽजादौ प्रत्यय इति। "प्रत्ययस्य लु"गिति संज्ञाकरणाल्लब्धो यः प्रत्ययः, सः "यूनी"त्यनेन विशेष्यते। तथा च "यूनियः प्रत्ययस्तस्य लु"गित्यर्थस्तदाह।

---

सूत्रम्

काशिका-वृत्तिः

फक्फिञोरन्यतरस्याम् ४।१।९१

यूनि इत्येव। पूर्वसूत्रेण नित्ये लुकि प्राप्ते विकल्प उच्यते। फक्फिञोर् युवप्रत्यययोः प्राग्दीव्यतीये ऽजादौ प्रत्यये विवक्षिते ऽन्यतरस्यां लुग् भवति। गर्गादिभ्यो यञि कृते यञिञोश्च ४।१।१०१ इति फक्, गार्ग्यायणः। तस्य छात्राः गार्गीयाः, गार्ग्यायणीयाः। वात्सीयाः, वात्स्यायनीयाः। फिञः खल्वपि यस्कस्य अपत्यं, शिवादिभ्यो ऽण् ४।१।११२, यास्कः। तस्य अपत्यं युवा, अणो द्व्यचः ४।१।१५६ इति फिञ्, यास्कायनिः। तस्य छात्राः यास्कीयाः, यास्कायनीयाः।

न्यासः

फक्फिञोरन्यतरस्याम्। , ४।१।९१

"गार्गीयाः, वात्सीयाः" इति। पूर्वपदकारयकारलोपः। "वा" ४।१।८२ इति वत्र्तमानेऽन्यतरस्यां ग्रहणं "पूर्वसूत्रे नित्यो विधिः" इति ज्ञापनार्थम्॥

बाल-मनोरमा

फक्?फिञोरन्यतरस्याम् १०७०, ४।१।९१

"इञः प्राचा"मिति लुङ्नेत्यर्थः। अथ प्रकृतं चातुर्थिकं लुग्विधिमनुसरति--फक्फिञोरन्यतरस्यां। यूनीत्येवेति। "यूनि लु"गिति पूर्वसूत्रमनुवर्तते इत्यर्थः। "यूनि लु"गित्यक्तो लुक् फक्फिञोर्वा स्यादित्यर्थः। तदाह--पूर्वेणेति। कात्यायनस्येति। कतस्य गोत्रापत्यं कात्यः। गर्गादित्वाद्यञ्। तस्यापत्यं युवा--कात्यायनः। "यञिञोश्चे"ति फक्। कात्यायनस्य छात्रा इत्यर्थे "तस्येद"मित्यनुवृत्तौ "वृद्धाच्छः" इति छः। तस्य ईयादेशः। अत्र छात्रार्थकच्छप्रत्यये विवक्षिते युवार्थकफको लुकि सति, कात्य-ईय इति स्थिते"यस्येति चे"त्यकारलोपे "आपत्यस्य चे"ति यलोपे "कातीया" इति रूपम्। फको लुगभावे तु "कात्यायनीया" इति रूपमित्यर्थः। यस्कस्येति। यस्कस्य गोत्रापत्यमित्यर्थे "अत इ"ञिति इञपवादः शिवाद्यणित्यर्थः। तस्येति। यास्कस्यापत्यं युवेत्यर्थे "अणो द्व्यचः"इति फिञि आयन्नादेशे यास्कायनिरिति रूपमित्यर्थः। तस्य छात्रा इति। यास्कायनेश्छात्रा इत्यर्थे "तस्येद"मित्यनुवृत्तौ "वृद्धाच्छः" इति छः। तस्य ईयादेशः। "यास्कायनीया" इति रूपम्। अत्र छात्रार्थकच्छप्रत्यये विवक्षिते युवार्थफकिञो लुकि "यस्येति चे"त्यकारल#ओपे "यास्कीया" इति रूपमित्यर्थः।

तत्त्व-बोधिनी

फक्? फिञोरन्वतरस्यस्याम् ८९६, ४।१।९१

कात्यायनस्येति। कतस्य गोत्रापत्यं कात्यः। गर्गादित्वा द्यञ्। ततो यूनि "यञिञोश्चे"ति फक्। कातीया इथ। "आपत्यस्य चे"ति यलोपः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तस्य ६।१ १७६ अपत्यम् १।१ १७६ समर्थानाम् ? प्रथआत् ? वा ? ङ्याप्प्रातिपदिकात् ? तद्धिताः ? प्रत्ययः ? परश्च ?

अर्थः॥

तस्य=षष्ठीसमर्थात् प्रातिपदिकात् अपत्यम् इत्येतस्मिन् अर्थे यथाविहितं प्रत्ययः भवति।

उदाहरणम्॥

औपगवः। अश्वपतेः अपत्यम् आश्वपतः, दैत्यः, औत्सः, स्तैणः, पौस्नः॥
काशिका-वृत्तिः
तस्य अपत्यम् ४।१।९२

अर्थनिर्देशो ऽयं, पूर्वैरुत्तरैश्च प्रत्ययैरभिसम्बध्यते। तस्य इति षष्ठीसमर्थातपत्यम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकृत्यर्थविशिष्टः षष्ठ्यर्थो ऽपत्यम् आत्रञ्चेह गृह्यते। लिङ्गवचनादिकमन्यत् सर्वमविवक्षितम्। उपगोरपत्यम् औपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः। तस्य इदम् अपत्ये ऽपि बाधनार्थं कृतं भवेत्। उत्सर्गः शेष एव असौ वृद्धान्यस्य प्रयोजनम्। भानोरपत्यम् भानवः। श्यामगवः।
लघु-सिद्धान्त-कौमुदी
तस्यापत्यम् १००७, ४।१।९२

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः॥
लघु-सिद्धान्त-कौमुदी
शेषे १०७१, ४।१।९२

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टा दार्षदाः सक्तवः। चतुर्भिरुह्यं चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः। [?]तस्य विकारः' इत्यतः प्राक् शेषाधिकारः॥
न्यासः
तस्यापत्यम्। , ४।१।९२

"पूर्वैरुत्तरैश्च प्रत्ययैरभिसंबध्यते" इति। तत्र पूर्वैस्तावदणादिभिः सम्बध्यते; असंयुक्तविधानात्। अस्य यदि पूर्वैरभिसम्बन्धो न भवेत् "तस्यापत्यमत इञ्" इत्येकयोगमेव कुर्यात्। यतस्तु "अत इञ्" ४।१।९५ इत्यनेन "तस्यापत्यम्" ४।१।९२ इत्येतदसंयुक्तं करोति, ततोऽसंयुक्तविधानात्पूर्वार्थमेतद्विज्ञायत इत्येवं तावत्पूर्वैरभिसम्बध्यते। उत्तरैरप्यभिसम्बध्यते; तेष्वस्य स्वरितत्वात्। "तस्य" इति। पुंल्लिङ्गेन निर्देशः क्रियते, एकवचनेन च। तेन पुंल्लिङ्गादेवोत्पत्तिः स्यात्, एकवचनान्ताच्च। स्त्रीलिङ्गान्नपुंसकाच्च न स्यात्-- देवदत्ताया अपत्यम्, कुलस्यापत्यमेवमादौ न स्यात्। द्विवचनबहुवचनान्ताच्च-- द्वयोर्मात्रोरपत्यम्, तिसृणां मातृणामपत्येवमादौ न स्यात्। अथ नपुंसकलिङ्गेनायं निर्देशः? स्त्रीलिङ्गात् पुंल्लिङ्गाच्च न स्यात्। अपत्यमित्येकवचनेऽत्र निर्देशः क्रियते, तेनैकस्मिन्नेवापत्ये स्यात्, न द्वयोर्नापि बहुषु-- उपगोरपत्ये औपगवौ; उपगोरपत्यान्यौपगवा इति। एतस्मिन् पूर्वपक्ष इदमाह-- "प्रकृत्यर्तविशिष्टः" इत्यादि। "गृह्नते" इति वक्ष्यमाणेन सम्बन्धः। प्रकृत्यर्थ उपगवादिशब्दानामर्थः,तेन विशिष्टः षष्ठ()र्थोऽपत्यापत्यवत्सम्बन्धः। ननु च तस्यात्र तच्छब्दस्य सामान्यवाचिनो ग्रहणम्, तस्य कृत उपगवादिरर्थविशेषः, येन षष्ठ()र्थो विशिष्यते? तस्येत्यस्य विशेषोपलक्षणत्वाददोषाः। विशेषोपलक्षणत्वं चास्य प्रागेव प्रतिपादितम्। तस्माद्विशेष एवोपग्वादिः प्रकृत्यर्थः। "अपत्यमात्रञ्च" इति। मात्रशब्दोऽधिकस्य लिङ्गादेव्र्यवच्छेदाय। "लिङ्गवचनादिकम्" इति। आदिशब्देन कालस्य ग्रहणम्। वत्र्तमानेन हि कालेनायं निर्देशः क्रियते। यथोक्तम्-- "यत्रापि साक्षादन्यक्रियापदं न श्रूयते तत्राप्यस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते" इति। तत्र वत्र्तमानकालविवक्षायां कालान्तरे न स्यात्। किं पुनः कारणं लिङ्गवचनादि न विवक्ष्यते? तस्याप्रधान्यात्। अवश्यं हि

येन केनचिल्लिङ्गादिना निर्देशः कत्र्तव्य इति, नान्तरीयकत्वात्। तस्येहोपादानम्, यथा-- धान्यार्थिनः पलालादेरप्रधानस्यापि। "तस्येदम्" इत्यादि। "तस्येदम्" ४।३।१२० इत्येतत्सूत्रमपत्यार्थेऽपि वत्र्तते। यो ह्युपगोरपत्यमुपगोरसावयमिति शक्यते व्यपदेष्टुम्। तस्येदमित्यस्य विशेषा ह्येते-- अपत्यम्, समूहः, निवासः, विकार इति। ततश्च "तस्येदम्" ४।३।१२० इत्यनेनैवापत्यार्थेऽप्यण् सिद्धः, तत् किमर्थं तस्यापत्यमित्येतत् सूत्रं कृतम्? "बाधनार्थम् कृतं भवेत्" इति। "तस्येदम्" ४।३।१२० इत्यनेन विधीयमानस्याणो यो बाधकः "वृद्धाच्छः" ४।२।११३ इति च्छः प्राप्नोति, तद्बाधनार्थमिदं कृतम्। एतत्सूत्रविहितेनाणा छप्रत्ययस्य बाधनं यथा स्यात्। कथं पुनरशैषिकः शैषिकं बाधते? अपत्यादिभ्यश्चतुरर्थीपर्यन्तेभ्योऽन्योषडर्थः शैषिकाणां विषयः। अयं चापत्याच्छविषये नास्त्येव। तदसन्नयं कथं छप्रत्ययं बाधिष्यत इत्यत आह-- "उत्सर्गः शेष एवासौ" इति। असत्यस्मिन् योग इत्यभिप्रायः। असावित्यनेन प्रकृतत्वात् तस्यापत्यमित्येषोऽर्थः प्रत्यवमृश्यते। उत्सर्ग उत्पन्नेनाप्यणा स एवार्थ उत्सर्गसाहचर्यादुच्यते। उत्सर्गसाहचर्यन्तु तस्य तत्रोत्सर्गस्याणादेर्विधानात्। इहापि क्रियमाणे "तस्यापत्यम्" ४।१।९२ इत्येतस्मिन् योगे "तस्येदम्" ४।३।१२० इत्येतस्मिन्ननुप्रवेशाद्यथान्यस्तद्विशेषः शेषो भवति तथाऽपत्यार्थोऽपि। अस्ति तस्याप्युपयुक्तापेक्षमन्यत्वम्, "चतुरर्थीपर्यन्तेष्वनन्तर्भावात्। ततश्च शेषत्वादपत्यार्थे च्छप्रत्ययः प्राप्नोति। अ()स्मस्तु योगे "तस्येदम्" ४।३।१२० इत्यत्र शेषे नानुप्रविशति; उपयुक्तत्वात्। ततश्चाशेषत्वादपत्ये छप्रत्ययस्य छप्रत्ययस्य प्राप्तिर्नास्त्येव। सैवाप्राप्तिर्बाधनशब्देनोक्ता। अथ बाधनार्थस्यास्य किं प्रयोजनमित्याह-- "वृद्धान्यस्य प्रयोजनम्" इति। वृद्धानि प्रातिपदिकान्यस्य योगस्य प्रयोजनम्। भानोरपत्यं भानवः, श्यामगोरपत्यं श्यामगव इत्यत्राण् सिद्धो भवति। असति त्वस्मिन् योकेऽपत्यार्थः पूर्वोक्तरीत्या शेषः स्यात्। ततश्च तत्र वृद्धेभ्यचः "वृद्धाच्छः" ४।२।११३ प्रसज्येत॥

बाल-मनोरमा

तस्याऽपत्यम् १०७१, ४।१।९२

तस्यापत्यं। तद्धिता इति, प्रत्ययः, परश्चेति चाधिकृतम्। तच्छब्दः सर्वनामतया बुद्धिस्थपरामर्शित्वादुपग्वादिसर्वविशेषबोधकः। तस्य उपग्वादेरपत्यमित्यर्थे तद्धिताः प्रत्ययाः परे भवन्तीति लभ्यते। "कस्मात्परे प्रत्यया भवन्तीत्याकाङ्क्षायां "समर्थानां प्रथमाद्वे"त्यधिकारात्प्रथमोच्चारितात्समर्थात्तच्छब्दलब्धोपग्वादेरिति लभ्यते। प्रातिपदिकादित्यधिकृतम्। "घकालतनेषु कालनाम्नः" इति तरप्तमप्तनेषु तद्धितेषु परतः सप्तम्या अलुग्विधानात्सुपस्तद्धितोत्पत्तज्ञ्ापितत्वात्सुप्शिरस्कात्प्रातिपदिकादिति लभ्यते। सुप् चेह तस्येति प्रथमोच्चारिति पदे उपस्थितत्वात्षष्ठ()एव गृह्रत। ततश्च षष्ठ()न्तादिति फलति। "सामथ्र्यं कृतसंधिकार्यत्व"मित्युक्तमेव। तदाह-- षष्ठ()न्तात्कृतसन्धेरिति। "समर्थः पदविधि"रिति परिभाषया लब्धमाह--समर्थादिति। विशिष्टैकार्थप्रतिपादकादित्यर्थः। सुबन्तात्तद्धितोत्पत्त्या तद्धितविधीनांपदविधित्वादिति भावः। उक्ता इति। "प्राग्दीव्यतोऽ"णित्याद्या औत्सर्गिका इत्यर्थः। वक्ष्यमाणश्चेति। "अत इ"ञित्याद्या वैशेषिका इत्यर्थः। वा स्युरिति। "समर्थानां प्रथमाद्वे"त्यधिकृतत्वादिति भावः। "अपत्यं पौत्रप्रभृति गोत्र"मित्युत्तरसूत्रव्याख्यावसरेऽपत्यशब्दो व्याख्यास्यते। औपगव इति। उपगोरणि आदिवृद्धिः। ओर्गुणः। अवादेशः। अत्र प्रकृत्यैव उपगोर्लाभादपत्यमेव प्रत्ययार्थ इति स्थितिः। ननु उपगु अ इति स्थिते ओर्गुणात्परत्वात् "अचो ञ्णिती"ति वृद्धिः स्यात्, ओर्गुणस्य "पशव्य" इत्यादौ चरितार्थत्वात्। कृते च गुणे अवादेशे सति "अत उपधायाः इति बृद्धिर्दुर्निवारा। त्वष्टुरपत्यं त्वाष्ट्रः, मघवतोऽपत्यं माघवत इत्यादौ गुणाऽप्रसक्त्या अन्त्योपधावृद्ध्योर्निर्बाधत्वाच्च। नच परत्वादादिवृद्धौ अन्त्योपधावृद्धी बाध्येते इति वाच्यं, विप्रतिषेधे हि परस्य पूर्वबाधकता। नचेह विप्रतिषेधोऽस्ति, देशभेदेनोभयसंभवात्। नाप्यन्त्योपधावृद्ध्योरपवाद आदिवृद्धिरिति वक्तुं शक्यं सुश्रुतोऽपत्यं सौश्रुत इत्यादौ अन्त्योपधावृद्ध्योरप्राप्तयोरप्यादिवृद्धे प्रवृत्तेः। तस्मादादिवृद्धिस्थलेऽन्त्योपधावृद्धी

स्यातामित्यत आह--आदिवृद्धिरिति। "अचो ञ्णिती"त्यन्त्यवृद्धिम्, "अत उपधायाः" इत्युपधावृद्धिः, पुष्करसच्छब्दस्य अनुशतिकादौ पाठात्। तत्र यद्यादिवृद्धिरन्त्योपधावृद्धी न बाधेत, तदा आदिवृद्ध्या उपधावृद्ध्या च पौष्करसादेः सिद्धत्वादनुशतिकादौ पुष्करसच्छब्दपाठोऽनर्थकः स्यात्। अतस्तक्रकौण्डिन्यन्यायात्सत्यपि सम्भवे बाधनं भवतीति विज्ञायत इति भाष्ये स्पष्टम्।

तस्येदमित्यपत्येऽपीत्यादि। श्लोकवार्तिकमिदम्। तत्र प्रथमचरणस्यायमर्थः--तस्येदमिति विहितोऽण् अपत्येऽर्थेऽपि भवति, इदमर्थे तस्याप्यन्तर्भावात्। अतस्तस्यापत्यमित्यण्विधानं व्यर्थमित्याक्षेपः। नच "अत इ"ञित्याद्युत्तरसूत्रार्थं "तस्यापत्य"मित्यावश्यकमिति वाच्यम्, एवं हि सति "तस्यापत्यमत इ" ञित्येकमेव सूत्रमस्तु। तथा च "तस्यापत्य"मिति पृथक्सूत्रकरणं व्यर्थमित्याक्षेपः पर्यवस्यति।

अत्र समाधत्ते--बाधनार्थं कृतं भवेदिति। "तस्येद"मित्यणं बाधित्वा "वृद्धाच्छः इति छोऽपत्ये प्राप्तः, तद्बाधनार्थं "तस्यापत्य"मिति पृथक्सूत्रं कृतमित्यर्थः। ननु "वृद्धाच्छः" इति सूत्रं शेषाधिकारस्थम्, अपत्यादिचतुर्थ्यन्तेभ्योऽन्यः शेषः, तथाच अपत्यार्थस्य शेषाधिकारस्थत्वाऽभावात्, तस्मात्तत्र छप्रत्ययस्याऽप्रसक्तेस्तद्बाधनार्थत्वं "तस्यापत्य"मित्यस्य कथमित्यत आह--उत्सर्गः शेष एवासाविति। उत्सृज्यते अदन्त-बाह्वादिप्रकृतिभ्यो इत्युत्सर्गः। कर्मणि घञ्। अदन्त-बाह्वादिभिन्नप्रकृतिसंबद्धोऽपत्यार्थोऽसौ शेषो भवत्येवेत्यर्थः। आक्षेप्तुर्हि"तस्याप्तयमत इ"ञित्येकसूत्रमभिमतम्। विनियुक्तादन्यः शेषः। अदन्त-बाह्वादिप्रकृतिसंयुक्ताऽपत्यार्थ एव विनियुक्तो नतु तद्भिन्नप्रकृतिसंयुक्तापत्यार्थोऽपि। ततस्च तस्य शेषत्वात्तस्मिन्नपत्ये छस्य प्रसक्तत्वात्तद्बाधनार्थं "तस्यापत्य"मिति पृथक्सूत्रम्। सति चास्मिन् पृथक्सूत्रे प्रकृतिसामान्यसंयुक्तापत्यार्थस्योपयुक्तत्वादशेषत्वाच्छस्य न प्राप्तिरित्यप्राप्तिसंपादनद्वारा छबाधकत्वं "तस्यापत्य"मिति पृथक्सूत्रस्य सिद्धम्। अयमप्राप्तबाध इत्युच्यते। नन्वेवमपि उपगोरपत्यमित्यत्र उपगोरवृद्धत्वाच्छस्य नैव प्रसक्तिरिति किं पृथक्सूत्रेणेत्यत आह--वृद्धान्यस्य प्रयोजनमिति। भानोरपत्यं भानव इत्यादौ यानि भान्वादिप्रातिपदिकानि वृद्धानि, यानि उपग्वादिप्रातिपदिकानि नामधेयत्वाद्वृद्धानि, तेभ्यश्छप्रत्ययबाधनार्थं "तस्यापत्य"मिति पृथक्सूत्रमित्यर्थः। ननु "तस्येद"मित्यणि इदन्त्वेन बोधः, "तस्यापत्य"मित्यणि त्वपत्यत्वेन बोध इति शाब्दबोधे वैलक्षण्यसत्त्वात् "तस्येदमित्यपत्येऽपि" इत्याक्षेप एवाऽयमनुपपन्न इति चेन्न, एतद्वार्तिकभाष्यप्रामाण्येन "तस्येद"मितीदंशब्देन अपत्यस्य इदंत्वेन ग्रहणाऽभावविज्ञानात्। "प्रदीयतां दाशरथाय मैथिली"ति त्वार्षत्वान्न दुष्यतीत्यास्तां तावत्। कृतसन्धेः किमिति। "समर्थानां प्रथमाद्वे"त्यधिकारसूत्रस्थसमर्थग्रहणलब्धं कृतसन्धेरित्येतत्किमर्थमिति प्रश्नः। सौत्थितिरिति। सु=शोभन उत्थितः सूत्थितः। प्रादिसमासे सवर्णदीर्घः। सूत्थितस्यापत्यं सौत्थितिः। अत इञ्, सुब्लुक्, आदिवृद्धिः, "यस्येति चे"त्यकारलोपः। "कृतसंधे"रित्यभावे तु सु-उत्थितैत्यस्यामेव दशायां सवर्णदीर्घात्परत्वादादिवृद्धौ कृतायामावादेशे सावुत्थितिरिति स्यादिति भावः। नन्वन्तरङ्गत्वात्सवर्णदीर्घे कृते तदुत्तरमेव इञ्()प्रत्यय उचितः, परादन्तरङ्गस्य बलवत्त्वात्। ततश्च सन्धेः प्राक् तद्धितोत्पत्तेरप्रसक्तेः कृतसन्धेरिति व्यर्थमेवेत्यत आह-अकृतेति। अन्तरङ्गपरिभाषाया अप्यपवादभूतया अक-तव्यूहपरिभाषया सन्धेः प्रागेव प्रत्ययः स्यात्। ततश्च आदिवृद्ध्यपोक्षया अन्तरङ्गोऽपि सवर्णदीर्घोऽकृतव्यूहपरिभाषया आदिवृद्धेः प्राक् न प्रवर्तते। एवञ्च सवर्णदीर्घात्प्रागेवादिवृद्धौ आवादेशे सावुत्थितिरिति स्यादित्यर्थः। नच इञि सति कृते सवर्णदीर्घे ऊकारस्य जायमानया वृद्ध्यासवर्णदीर्घनिमित्तस्य कस्यचिद्विनाशाऽभावादकृतव्यूहपरिभाषायाः कथमिह प्रवृत्तिरिति वाच्यं, "यदि सवर्णदीर्घो न स्यात्तदा सु-उत्थित इत्यवस्थायां सकारादुकारस्य वृद्ध्या औकारे सति सवर्णदीर्घनिमित्तस्य अको विनाशः स्या"दिति संभावनयाऽकृतव्यूहपरिभाषायाः प्रवृत्तेरिति कथञ्चिद्योज्यम्। वस्तुतस्तु अकृतव्यूहपरिभाषा नास्त्येव , भाष्ये क्वाप्यव्यवहृतत्वात्, प्रत्युत भाष्यविरुद्धत्वाच्च। "विप्रतिषेधे परं कार्य"मिति सूत्रभाष्ये हि "परादन्तरङ्गं बलीयः-

इत्युक्त्वा सोत्थितिरित्यत्र परामप्यादिवृदिं()ध बाधित्वा अन्तरङ्ग एक#आदेश इत्युक्तम्। पदस्य विभज्यान्वाख्याने-सु उत्थित इति स्थिते परत्वाद्वृद्धिः प्राप्ता। अन्तरङ्गत्वादेकादेश इति कैयटः। अकृतव्यूहपरिभाषासत्त्वे तदसङ्गतिः स्पष्टैव। "सेदुष" इत्यादावकृतव्यूहपरिभाषाफलस्यान्यथासिद्धिस्तु तत्र तत्र प्रपञ्चितैवेत्यास्तां तावत्। विस्तरस्तु शब्देन्दुशेखरे ज्ञेयः।

वस्त्रमुपगोरपत्यं चैत्रस्येति। अत्र उपगुशब्दादपत्ये अण्न भवति, उपगोर्वस्त्रेणैवान्वयात्। यद्यपि तत्संबन्ध्येऽपत्ये प्रत्ययविधानादिह च अपत्यस्य तच्छब्दवाच्योपगुसंबन्धाऽभावादेव अत्र प्रत्ययस्य न प्रसक्तिस्तथापि ऋद्धस्य औपगवमित्यादिवारणाय सामर्थ्यमेकार्थीभावलक्षणमाश्रयणीयमिति भावः। अपत्यवाचकादिति। उपगुरपत्यमस्य देवदत्तस्येत्यर्थे औपगवो देवदत्त इति माभूदित्यर्थः। "प्रथमा"दित्युक्तौ तु "तस्यापत्य"मिति सूत्रे षष्ठ()न्तस्यैव प्रथमोच्चारितत्वादुपगुरिति प्रथमान्तान्न भवतीत्यर्थः। वाग्रहणाद्वाक्यमपीति। वाग्रहणाऽभावे हि तद्धितस्य नित्यत्वादुवगोरपत्यमिति वाक्यं न स्यादिति भावः। ननु उपग्वपत्यमिति कथं षष्ठीसमासः, तद्धितानां समासापवादत्वात्। नच तद्धितानां पाक्षिकत्वात्तदभावपक्षे षष्ठीसमासो निर्बाध इति वाच्यम्, "अपवादेन मुक्ते उत्सर्गो न प्रवर्तते" इति "पारे मध्ये षष्ठ()आ वे"ति वाग्रहणेन ज्ञापितत्वादित्यत आह--देवयज्ञीति सूत्रादिति। जातित्वादिति। अपत्यार्थंकाऽणन्तस्य औपगवशब्दस्य "गोत्र च चरणैः सह" इति जातित्वान्ङीषित्यर्थः। आ()आपत इति। अ()आपतेरपत्यमिति विग्रहः। पत्युत्तरपदलक्षणं ण्यं बाधित्वा"अ()आपत्यादिभ्यश्चे"त्यणिति भावः। दैत्य इति। दितेरपत्यमिति विग्रहः। "दित्यदिती"ति ण्योऽणपवादः। औत्स इति। उत्सः कश्चित्, तस्यापत्यमिति विग्रहः। "उत्सादिभ्योऽ"ञित्यञ् इञाद्यपवादः। स्वरे विशेषः। स्त्रैणः। पौंस्न इति। स्त्रिया अपत्यं, पुंसो।ञपत्यमिति विग्रहः। "स्त्रीपुसाभ्या"मिति नञ्स्नञौ। अणोऽपवादः।

तत्त्व-बोधिनी

तस्याऽपत्यम् ८९७, ४।१।९२

तस्यपत्यम्। "तस्ये ति न स्वरूपग्रहणं, किं तु षष्ठ()न्तमात्रोपलक्षणमित्याशयेनाह--षष्ठ()न्तादिति। पञ्चम्यर्थोऽध्याहारलभ्यः। अनुकरणात्पञ्चम्याः सौत्रो लुग्वा। उक्ता इति। अण् ण्यादय उक्ताः। वक्ष्यमाणा इति। इञादयः। ननु "उपगु--अ" इति स्थिते ओर्गुणात्परत्वात् "अचोऽञ्णिती"ति वृद्ध्या भाव्यं। घुणस्तु पिचव्यादौ सावकाशः। कृते च गुणे अवादेसे च "अत उपधायाः"इति वृद्ध्या भाव्यमत आह--आदिवृद्धिरिति। परत्वादिति भावः। अन्त्योपधावृद्ध्योरवकाशः---गौः, पाचकः। आदिवृद्धेस्तु--सुश्रुत्। सौश्रुत्। सौश्रुतः। "त्वाष्ट्रो" "जागतः"इत्यादौ तूभयप्रसङ्गे परत्वादादिवृद्धिरेव भवति। लक्ष्यानुरोधेनात्र सकृद्गतिन्यायस्यैवाश्रयणात्। अनुशतिकादिषु पुष्परसच्छब्दपाठो ह्त्र लिङ्गम्। अन्यथा आद्युपधावृद्धिभ्यां पौष्करसादेः सिद्धत्वात्तेषु पाठोऽनर्थकः स्यात्। न च "पुष्करसदा चरती"--त्यर्थे ठकि "पौष्करसादिक"इत्येतदर्थमनुशतिकादिपाठ आवश्यकः, ञिति णित्येव उपधावृद्धिस्वीकारान्न तु कितीति वाच्यम्, अनभिधानाट्ठगत्र न भवतीत्यादिसमाधानस्य कैयटे स्थितत्वात्। एतेन भिन्नविषये बाध्यबाधकभावो नोपपद्यत इति शङ्का निरस्ता। उक्तज्ञापकेन "सत्यपि संभवे बाधनं भवती"

त्यवश्याश्रयणीयत्वात्। नन्वेवमपि "जगतः"इत्यादावुपधावृद्धिर्बाध्यताम्, "औपगव"इत्यत्र त्वादिवृद्धिप्रवृत्तिवेलायामुपधावृद्धेरप्राप्त्या कथं बाधः स्यादिति चेदत्राहुः---"जागत"इत्यादावुपधावृद्धेर्बाध्यत्वे निर्णीते, क्वचित्कालान्तरप्राप्तायां अपि तस्या बाध्यत्वौचित्यादिति। स्यादेतत्---यत्रादिबृद्धिर्न जाता तत्राऽन्त्योपधालक्षणा वृद्धिः कस्मान्न भवति। व्यसोर्भावो वैयसवम्। "इगन्ताच्चेत्यण्। व्यापदि भवं वैयापदम्। "तत्र भवः"इत्यण्। अत्र कैयटः---अत्राप्यैचौ परत्वात्तद्बाधकाविति सर्वेष्टसिद्धिरिति। शाब्दबोधे वैलक्षण्यसत्त्वेऽपि तदनादरेणाक्षिपति।

तस्येदमित्यपत्येऽपि बाधनार्थ कृतं भवेत्। तस्येदमित्यपत्येऽपीति। इदमर्थे
अपत्यसमूहविकारादीनामन्तर्भावादपत्येऽपि "तस्येद"मित्यण् प्रवर्तत इति किमनेन "तस्यापत्य"मिति सूत्रेणेत्यर्थः। यद्यपि "अत इञि"त्याद्यर्थं "तस्यापत्य"मित्येतद्वक्तब्यन्तथापि योगविभागः किमर्थ इत्याक्षेपोऽत्र बोध्यः। समाधत्ते---बाधनार्थमिति। "तस्येद"मित्यस्य यद्बाधकं "वृद्धाच्छः [इति], तद्बाधनार्थं पृथक् सूत्रं कृतं भवेदित्यर्थ-। ननु "तस्येद"मित्यणस्तदपवियुज्यतवादस्य वृद्धाच्छस्य च शैषिकत्वादपत्यार्थे प्रसक्तिरेव नास्ति, "अपत्यादिचतुर्थीपर्यन्तेभ्यो योऽन्योऽर्थः स शेषः" इत्यब्युपगमादत आह-- उत्सर्गः शेष एवासाविति। असौ--अपत्यार्थः। अयं भावः--असति योगविभागे
अदन्तबाह्वादिप्रकृतिसंबद्धस्यैवाऽपत्यार्थस्योपयोगादुपग्वादिप्रकृतिसंबद्धोऽपत्यार्थः शेष एव स्यात्। तथा चाऽणं बाधित्वा भान्वादिभ्यो वृद्धाच्छः प्रसज्येत। योगविभागे तु कृते प्रकृतिसामान्यसंबद्धस्याप्यपत्यार्थस्योपयोगाच्छेषत्वाऽभावेन छस्य प्राप्तिरेव नास्तीति। ननु उपग्वादेरवृद्धत्वेन छस्य प्रसक्त्यभावान्निष्पलो योगविभाग इत्यत आह---वृद्धानीति। "प्रातिपदिकानी"ति शेषः। कृतसन्धेः किमिति। अन्तरङ्गत्वात्संधौ कृतायां तदुत्तरमेव प्रत्ययो भविष्यतीत्यधिकारसूत्रस्थं समर्थपदग्रहणं किमर्थमिति प्रश्नः। अकृतेति। इयं च परिभाषा समर्थग्रहणेन ज्ञापितेति हरदत्तादयः, लोकतः सिद्धेत्यन्ये। सावुत्थितिर्माभूदिति। अन्तरङ्गपरिभाषाया अपवादभूतया "अकृते"त्यनया अकृतसन्धेरेव प्रत्यय स्यात्। तन्निवारणाय समर्थग्रहणधिकरणसूत्रस्थमावश्यकमिति भावः। यद्यपि तत्र "सामर्थ्यं परिनिष्ठितत्व"मित्यविशेषेणोक्तं, तथापि ङ्याप्प्रातिपदिकासे एव परिनिष्ठितत्वं न तु सुब्विशिष्टे इत्यवदेयम्। तेन औपगवो दण्डिमानित्यादि सिद्धम्। अन्यथा "औपगः" "दण्डीमा"मित्यादि स्यात्। "अ()इआमानणि"त्यादिनिर्देशश्चेह लिङ्गम्। यदि तु पामादिगणे "विष्वगित्युत्तरपदलोपश्चे"त्यत्राऽकृतसन्धिग्रहणेन "परिनिष्ठतात्तद्धितोत्पत्ति"रित्यभ्युपगम्यते, तर्हि व्यर्थमेव समर्थग्रहणमित्याहुः। प्रथमात्किमिति। "तस्यापत्य"मित्यत्र निर्दिष्टपदद्वयमध्ये प्राथमिकमेव प्रकृतिसमर्पकं, न त्वपत्यम्। तथाच प्रकृत्याकाङ्क्षायांतदेव ग्रहीष्यत इति किं तेन "प्रथमा"दित्येनेनेति प्रश्नः।

---

सूत्रम्

काशिका-वृत्तिः

एको गोत्रे ४।१।९३

अपत्यं पौत्रप्रभृति गोत्रम् ४।१।१६२। तस्मन् विवक्षिते भेदेन प्रत्यपत्यं प्रत्ययोत्पत्तिप्रस्ङ्गे नियमः क्रियते, गोत्रे एक एव प्रत्ययो भवति, सर्वे ऽपत्येन युज्यन्ते। अपतनादपत्यम्। यो ऽपि व्यवहितेन जनितः, सो ऽपि प्रथमप्रकृतेरपत्यं भवत्येव। गर्गस्य अपत्यं गार्गिः। गार्गेरपत्यं गार्ग्यः। तत्पुत्रो ऽपि व्यवहितेन जनितः, सो ऽपि प्रथमप्रकृतेरपत्यं भवत्येव। गर्गस्य अपत्यं गार्गिः। गार्गेरपत्यं गार्ग्यः। तत्पुत्रो ऽपि गार्ग्यः। सर्वस्मिन् व्यवहितजनिते ऽपि गोत्रापत्ये गर्गशब्दाद् यञेव भवति इति प्रत्ययो नियम्यते। अथवा गोत्रापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः प्रत्ययम् उत्पादयति इति प्रकृतिर् नियम्यते। गार्ग्यः। नाडायनः।

लघु-सिद्धान्त-कौमुदी

एको गोत्रे १०१०, ४।१।९३

गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यमौपगवः॥

न्यासः

एको गोत्रे।, ४।१।९३

"कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः"(व्या।प।६) इति परिभाषिकस्यैव गोत्रस्य ग्रहणम्। अपत्याधिकारे गोत्रग्रहणाच्च। अपत्यमात्रं हि लौकिकं गोत्रम्, तस्य यदीह ग्रहणमभिमतं स्यादेक इत्येवं ब्राऊयात्, लौकिकस्य गोत्रापत्याधिकारादेव लब्धत्वात्। तस्माद्गोत्रग्रहणाच्च पारिभाषिकस्य ग्रहणमत्याह--"अपत्यं पौत्रप्रभृति गोत्रम्" इति। "भेदेन" इत्यादि। भेदेन = विभागेन, अपत्यमपत्यं प्रति = प्रत्ययत्यम्। यावन्त्यपत्यानि सम्भवन्ति तेभ्योऽपि सर्वेभ्यः प्रत्ययानामुत्पत्तेः प्रसङ्गे प्राप्तौ सत्यामित्यर्थः। सर्वेषामपत्येन योगेन गर्गगार्गिगार्ग्यगार्ग्यायणानामन्यतमस्य यदपत्यं तत्सर्वेषामपत्यं भवतीति परमप्रकृतेरनन्तरगोत्रमुवलक्षणाः प्रत्ययाः प्राप्नुवन्ति। गर्गस्य यदपत्यं तत्सर्वेषां गार्गिगार्ग्यगार्ग्यायणानामपि सम्बन्धि भवति। तथा ह्त्र यद्यपि गर्गस्यापत्यमिति गर्गशब्देन विग्रहः क्रियते, तथापि नायंनियमो लभ्यते-- गर्गशब्दादेवोत्पत्तिरिति, अपि तु कामचारः। ततश्च यदा गर्गशब्दादुत्पत्तिर्भवति तदा गर्गादित्वाद्यञ् ४।१।१०५ , यदा गार्गिशब्दात् तदा "यञिञोश्च" ४।१।१०१ इति फक्, यदापि गार्ग्यशब्दात् तदापि स एव फक्, यदा गार्ग्यायमशब्दात् तदा "अत इञ्" ४।१।९५। एवं प्रत्यपत्यं विभागेन प्रत्ययानामुत्पत्तौ प्रसक्तायामनेन नियमः क्रियते-- "एक एव प्रत्ययो भवति" इति। एतेन प्रत्ययनियम इति दर्शयति। प्रत्ययनियमस्त्वेकस्त्वेकशब्दस्य प्रत्ययशब्दसामानाधिकरण्याल्लभ्यते। एकशब्दश्चास्मिन्नियमे संख्यावचनो वेदितव्यः यथा--एकः,द्वौ, बहव इति। एवकारेण द्वयादिव्यवच्छेदः क्रियते-- एक एव प्रत्ययो भवति,न द्वौ, नापि बहव इति। स चैकः प्रत्ययो भवन्नेकग्रहणात् परमप्रकृतेरेव भवतीति सामर्थ्यादुक्तं भवतीति। यदि हि गार्गिशब्दादुत्पद्येत्, द्वौ स्याताम्-- इञ्फकौ, नैकः? अथ गार्ग्यशब्दादेवमपि द्वावेव-- यञ्फकौ? अथ गार्ग्यायणशब्दात्, त्रयः स्युः-- यञ्फगिञः। तस्मान्मूलप्रकृतेरेवोत्पत्तावेकः प्रत्ययः सिध्यतीत्येकग्रहणं कुर्वता सामर्थ्यान्मूलप्रकृतेरेव गोत्रप्रत्ययस्योत्पत्तिरुक्ता भवति। ननु चोत्पादयितैवापत्येन सम्बध्यते, एवं हि लोके दृश्यते-- पितामहस्योत्सङ्गे दारकमासीनं दृष्ट्वा कश्चित् पृच्छति-- कस्यायमिति? स आह-- देवदत्तस्येति, तेनोत्पादयितारं व्यपदिशति, नात्मानम्? ततः सर्वेषामपत्येन योगाभावात् प्रत्यपत्यं भेदेन प्रत्ययोत्पत्तिप्रसङ्गो नास्त्येवेति निवर्त्त्याभावादिदं नियमार्थं नारब्धमित्यत आह-- "सर्वेऽपत्येन युज्यन्ते" इति। अत्रैवोपपत्तिमाह-- "अपतनादपत्यम्" इति। यन्निमित्तं हि यसय् पापेष्वपतनं तदपतनात् तस्यापत्यं भवति। तस्माद्यो व्यवहितेन जनितः सोऽपि परमप्रकृतिवाच्यस्यार्थस्यापत्यं भवति,तस्यापि येनापतनात्। परमप्रकृतिग्रहणञ्चोपलक्षणं वेदितव्यम्। इतरप्रकृतिवाच्यस्यापि ह्र्थस्याव्यवहितजनितोऽपत्यं भवत्येव। यत्पुनरुक्तम्-- कस्यायमित्युक्ते उत्पादयितारं व्यपदिशति, नात्मानमिति, न तेनोत्पादयितुरेवापत्येन योगः, शक्यते प्रतिपादयितुम्। यस्मान्न तत्र यस्य तेनापतनं स जिज्ञासितः स्यात्, किं तर्हि? य उत्पादयितारं व्यपदिशति नात्मानम्। यदि यस्य तु तेनापतनं स जिज्ञासितः स्यात्, तदाऽऽत्मानमपि व्यपदिशेदेव। यदि च सर्वेऽपत्येन न युज्येरन्, "अपत्यं पौत्रप्रभृति गोत्रम्" ४।१।१६२ इति योऽयमपत्यपौत्रप्रभृतिशब्दयोः सामानाधिकरण्येन निर्देशः, स नोपपद्यते; यदपेक्षया पौत्रादिव्यपदेशमासादयन्ति पुमांसस्तं प्रति तेषामनपत्यत्वात्। तस्मादतोऽपि निर्देशात्-- सर्वेऽपत्येन युज्यन्त इति विज्ञायते। "तत्पुत्रोऽपि गार्ग्यः" इति। अपिशब्दात् तत्पौत्रादिरपि। किं पुनः कारणं तत्पुत्रोऽपि गार्ग्य इत्याह-- "सर्वस्मिन्" इत्यादि। यदपि गार्ग्यायण इत्यत्रैकेन व्यवहितेन जनितं गोत्रापत्यं यस्मात् तत्रापि गर्गशब्दाद्यञेव भवति, तस्मात् तत्पुत्रोऽपि गार्ग्यो भवति। गर्गशब्दादित्यनेन परमप्रकृतेर्भवतीति दर्शयति। एतच्चैकग्रहणाल्लभ्यत इत्युक्तम्। "अथ वा" इत्यादिना प्रकृतिनियमं दर्शयति प्रकृतिनियमस्त्वेकशब्दस्य प्रकृतिसामानाधिकरण्याल्लभ्यते। एकशब्दोऽत्र प्राथम्यनियमे वत्र्तत इति वेदितव्यम्, यथा-- वर्गाणां प्रथमद्वितीयाः संवृतकण्ठाः ()आआसानुप्रदाना अघोषा एकेऽल्पप्राणा इतरे सर्वे महाप्राणा इति। अत्र हि प्रथमेऽल्पप्राणा इति गम्यते। एकशब्दस्येदं विवरणम्-- "प्रथमा प्रकृतिः" इति। का च प्रथमा? या परमप्रकृतिरप्रत्ययान्ता "गर्ग नड" इत्येवमादिका। "प्रकृतिर्नियम्यते" इति। प्रथमैव प्रकृतिः प्रत्ययमुत्पादयति, नाप्रथमा-- गार्गिगार्ग्यगार्ग्यायणप्रभृतिशब्दाः प्रत्ययान्ताः। गर्गस्यापत्यं गार्ग्यः, तत्पुत्रोऽपि गार्ग्यः। नडस्यापत्यं नाडायनः, तत्पुत्रोऽपि नाडायनः। सर्वत्र व्यवहितजनितेऽपि गोत्रापत्ये प्रथमा प्रकृतिः

प्रत्ययमुत्पादयति॥

बाल-मनोरमा

एको गोत्रे १०७६, ४।१।९३

एको गोत्रे। संख्याविशेषोपादाने तदितरसङ्ख्याव्यवच्छेदस्य स्वभावसिद्धत्वादेक एवेति गम्यते। अपत्याधिकारात्प्रत्ययाधिकाराच्चापत्यप्रत्यय इति तद्विशेष्यलाभः। तदाह--गोत्रे एक एवापत्यप्रत्ययः स्यादिति। औपगव इति। उपगोर्गोत्रापत्ये "तस्यापत्य"मित्यण्। गार्ग्य इति। गर्गस्य गोत्रापत्ये "गर्गादिभ्य" इति यञ्। नाडायन इति। नडस्य गोत्रापत्ये "नडादिभ्यः" इति फक्। "गोत्र एक एव प्रत्ययः स्या"दित्येबोक्तौ त्वनन्तरापत्यप्रत्ययान्तादौपगवशब्दादिञ्प्रत्ययो न निवार्येत। नियमस्य सजातीयविषयतया गोत्रप्रत्ययान्तादेव गोत्रप्रत्ययो वार्येत। अतोऽपत्यग्रहणमित्याहुः। नन्वेकस्मिन्गोत्रे युगपदनेकप्रत्ययाऽप्रसक्तेव्र्यर्थमिदं सूत्रमिति चेत्, मैवम्-अपत्यशब्दो हि पुत्र एव रूढ इत्येक पक्षः। पुत्रादिसाधारण इत्यन्यः पक्ष इति प्रकृतसूत्रभाष्ये स्थितम्। तदेतत् "अपत्यं पौत्रप्रभृती"ति सूत्रव्याख्यावसरे प्रपञ्चितं चास्माभिः। तत्र प्रथमपक्षे उपगोः पौत्रे अपत्यप्रत्ययेन बुबोधयिषिते सति तस्य उपगुपुत्रापत्यस्य उपगुं प्रत्यपत्यत्वाऽभावात् "तस्यापत्य"मित्यण्न सम्भवति। ततश्च उपगुपुत्रे वाच्ये "तस्यापत्य"मित्यणा औपगवशब्दे व्युत्पादिते सति, औपगवस्यापत्ये वस्तुतः उपगोस्तृतीया गोत्रे विवक्षिते औपगवशब्दात् "अत इ"ञिति इञि औपगविरित्यनेनैव उपगोस्तृतीयो बोधनीयः स्यात्। एवञ्च उपगोस्तृतीये विवक्षिते उपगोरण् औपगवादिञिति प्रकृतिद्वयात्प्रत्ययद्वयमनिष्टं स्यात्। तत्र यद्यपि उपगोरणिष्टः, तथापि उपगोस्तृतीये विवक्षिते अनिष्टमिञ्प्रत्ययमण्प्रत्ययो घटयतीति सोऽप्यनिष्ट एव। तथाच तत्रानिष्टप्रत्ययद्वयनिवृत्तये एको गोत्रे अपत्यप्रत्ययः स्यादित्यनपत्येऽपि उपगोस्तृतीये अपत्यप्रत्ययो विधीयते। सच वस्तुतोऽणेव, न त्विञ्, अदन्तत्वाऽभावात्। विहिते च तस्मिन्नौपगवादिञपि निवर्तते, गोत्रे बुबोधयिषिते एकस्यैवापत्यप्रत्ययस्य विधेः। अतः प्रत्ययद्वमाला निवर्तते। एवमुपगोश्चतुर्थे विविक्षिते तस्य उपगुं तत्पुत्रं च प्रत्ययपत्यत्वाऽभावात् पौत्रं प्रत्येवापत्यत्वादौपगविशब्दात् "यञिञोश्चेति फकि प्रकृतित्रयादनिष्टा "औपगवायन" इति प्रत्ययत्रयमाला स्यात्। उपगोः पञ्चमे विवक्षिते तु औपगवायनशब्दादिञि "औपगवायनि"रित्येवं प्रकृतिचतुष्टयमाला स्यात्। षष्ठे तु औपगवायनिशब्दात्फकि "औपगवायनायन" इत्येवं प्रकृतिपञ्चकात्पञ्च प्रत्ययाः स्युः। तदेवं फगिञोः परम्परायां मूलप्रकृतेरुपगोः शततमे गोत्रे विवक्षिते एकोनशतात्प्रकृतिभ्यः एकोनशतमनिष्टप्रत्ययाः स्युः। तदेवं फगिञोः परम्परायां मूलप्रतृतेरुपगोः शततमे गोत्रे विवक्षिते एकोनशतात्प्रकृतिभ्यः एकोनशतमनिष्टप्रत्ययाः स्युः। अत्र तृतीयप्रभृति क()स्मिश्चिद्गोत्रे विवक्षिते उपगुं प्रत्यनपत्येऽपि तस्मिन् "एको गोत्रे" इत्यणेव भवति, नतु इञादि। यदा त्वपत्यशब्दः पुत्रपौत्रादिसाधारणस्तदा यद्यपि उपगोरनन्तरापत्ये पुत्रे इव पौत्रादिष्वपि विवक्षितेषु "तस्यापत्य"मित्यणि औपगव इतीष्टं सिध्यति। तथापि उपगोरनन्तरापत्ये अणि सति औपगवस्यानन्तरापत्ये उपगोस्तृतीये विवक्षिते द्वितीयस्मादेकः प्रत्ययोनिष्टः प्रसज्येत। एवमुपगोश्चतुर्थे विवक्षिते सिद्धेऽपि उपगोरणि औपगवे, तस्मादिञि औपगविः, तस्मात्फकि औपगवायन इत्येवं प्रत्ययत्रयमपि कदाचित्प्रसज्येत। तत्रापि उपगोर्मूलप्रकृतेरणिष्ट एव। इञ्फकौ तु प्रत्ययावनिष्टौ। तथा उपगोश्चतुर्थे विवक्षिते द्वितीयस्मादेकोऽनिष्टप्रत्ययः, तृतीयस्मादन्य इत्येवं प्रकृतिद्वयादनिष्टौ द्वौ प्रत्ययाविति पर्यवस्यति। एवं पञ्चमे प्रकृतित्रयात्रयः प्रत्ययाः। षष्ठे प्रकृ-तिचतुष्टय#आच्चत्वारः प्रत्यया इत्येवं मूलाच्छततमे गोत्रे अष्टनवतेरष्टनवतिरनिष्टप्रत्ययाः स्युः। तत्र "एको गोत्रे" इति नियमविधिः--"गोत्रे एक एव प्रत्ययः स्या"दिति। तत्रापि प्रथमातिक्रमे कारणाऽभावान्मूलप्रकृतेर्यः प्रत्ययः प्राप्तुं योग्यः स एवेति फलति। सूत्रे एकशब्दः प्रथमपर्यायः। "एके मुख्यान्यकेवलाः" इत्यमरः। मुखे भवो मुख्यः=प्रथमः। "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा" इति कोशान्तरम्। तथाच मूलप्रकृतेरेव गोत्रे विवक्षिते स्वयोग्यप्रत्ययलाभ इति व्याख्यान्तरम्। गोत्रे एकः प्रथम एवशब्दः प्रत्ययत्पादक

इति। तदेतत्सर्वं श्लोकद्वयेन संगृह्णाति--गोत्रे स्वैकोनेति। अत्र प्रथमश्लोकान्ते श्रुतं "प्रसज्यते" इत्येतत्पदं पूर्वार्धे परम्परेत्यनन्तरमपि संबध्यते। तत्र स्वं=गोत्रं मूलपुरुषोपग्वपेक्षया यत्संख्याकं तदपेक्षया एकोनसङ्ख्याकानामनिष्टप्रत्ययानां परम्परैवोक्तरीत्या प्रसज्येत, नतु कदाचिदपि गोत्रे औपगव इत्यणन्तमिष्टं सिध्यतीत्यर्थः।

यद्वेति। स्वं=गोत्रं, तत् मूलपुरुषोपग्वक्षया यत्सङ्ख्याकं तदपेक्षया द्व्यूनसङ्ख्याकप्रकृतिभ्यस्तावतां प्रत्ययानामनिष्टानामुत्पत्तिरुक्तरीत्या प्रसज्यत इत्यर्थः। ननु कथमिदं पक्षद्वयमित्यत आह--अपत्यमित्यादि मतभेदेनेत्यन्तम्। "पुत्र एवापत्य"मिति पक्षे प्रथमः पक्ष उन्मिषथतीति, "पुत्रपौत्रादि साधारणोऽपत्यशब्द" इति पक्षे तु द्वितीयः पक्ष उन्मिषतीति भावः। तद्धान्यै इति। तस्य=उक्तप्रकाराभ्यामनिष्टोत्पादनस्य हानिः=निवृत्तिः, तदर्थमिदमित्यर्थः। तथोत्तरमिति। "गोत्राद्यून्यस्त्रिया"मित्युत्तरसूत्रमपि तथा योज्यमित्यर्थः। तत्रापत्यशब्दः पुत्र एव रूढ इति पक्षे अनिष्टं प्रपञ्चयति--पितुरेवेत्यादिना। औपगवादिञ्स्यादिति। "अत इञ् इत्यनेने"ति शेषः। औपगवादेव इञ् स्यन्नतूपगोरणित्यर्थः, तृतीयस्य उपगुं प्रत्यपत्यत्वाऽभावादिति भावः। चतुर्थे त्वित्यतः पूर्वम् "उपगो"रिति शेषः। अजीवज्ज्येष्ठे इति। जीवन् ज्येष्ठो यस्येति विग्रहः। जीवति तु ज्येष्ठे चतुर्थस्य "भ्रातरि च ज्यायसी"ति युवसंज्ञया गोत्रत्वं बाध्येतेति भावः। औपगवेः फगिति। "यञिञोश्चेनेने"ति शेषः। एकोनेति। एकोनशतात्प्रकृतिभ्यः एकोनशतं प्रत्यया अनिष्टाः स्युरित्यर्थः। अथाऽपत्यशब्दः पुत्रपौत्रादिसाधारण इति पक्षे अनिष्टं प्रपञ्चयति--पितामहादीनामपीति। मुख्यपक्षत्वं त्वस्य भाष्ये पूर्वपक्षस्य निराकरणात् "अपत्यं पौत्रप्रभृति" इति सूत्रस्वरसाच्च बोध्यम्। इष्टे सिद्धेऽपीति। तृतीयादीनामप्यपत्यत्वेन तत्र "तस्यापत्य"मित्यणो निर्बाधत्वादिति भावः। तत इति। इञन्तादित्यर्थः। अष्टनवतेरिति। "प्रकृतिभ्यः" इति शेषः। अनिष्टप्रत्ययाः स्युरिति। "अष्टनवति"रिति शेषः। नियमार्थमिति। यद्यप्युपगोस्तृतीयादिषु अपत्यप्रत्ययविध्यर्थत्वमेव प्रथमपक्षे, तथापि गर्गात्तृतीयादिषु विवक्षितेषु गोत्रविहितगर्गादियञा गार्ग्यशब्दस्येष्टस्य सिद्धावपि गर्गादिञि ततः फिञित्येवं प्रत्ययपरम्पराप्तनिष्टा प्राप्नोतीति नियमार्थत्वमपि प्रथमपक्षेऽप्यस्य सूत्रस्येति भावः। एवमुत्तरसूत्रेऽप्यूह्यमिति। तत्प्रकारस्तु उत्तरसूत्रे एव वक्ष्यते।

तत्त्व-बोधिनी
एको गोत्रे ९०१, ४।१।९३

एको गोत्रो। "गोत्रे"इति जात्यपेक्षया एकवचनम्। एकशब्दः सङ्ख्यावाची। "गोत्रेऽभिधित्सितेऽपत्यत्वबोधकप्रत्यय एक एव स्या"दित्युक्तेगोत्रापत्ये प्रथम एव शब्दः प्रत्ययं लभते नान्यः। यदि त्वनन्तरापत्यप्रत्ययान्तादपि प्रत्ययः स्यात्तर्हि गोत्रापत्ये एक एव प्रत्ययो न कृतः स्यात्। इत्थं च "अपत्यप्रत्ययान्तात्प्रतिषेधोवाच्यः"इति वार्तिकार्थोऽप्यनेन सङ्गृहित इत्याशयेन व्याचष्टे---गोत्रे एव एवेति। अपत्यप्रत्यय इति। एतच्चाधिकारल्लब्धम्। अन्ये तु--एकशब्दः प्रथमपर्यायः, प्रथमश्चापत्यप्रत्ययशून्यः। तथा च "प्रथमा प्रकृतिर्गोत्रे अपत्यप्रत्ययं लभते"इति सूत्रार्थं व्याचक्षते। तत्क्लिष्टम्। "अस्यां पङ्क्तावेकमानये"त्युक्ते "प्रथम"मिति प्राथम्यार्थस्याऽप्रतीतेः। वस्तुतस्तु "प्रथमादित्यधिकाराद्गोत्रे प्रथमादेव प्रातिपदिकादपत्यप्रत्ययः"इति व्याख्यायैकग्रहणमिह त्यक्तुं शवयमित्याहुः। औपगव इथि। उपगुशब्द एव प्रत्ययं लभते, न त्वौपगवशब्दः इति "गोत्रापत्येऽप्यनन्तरापत्य इवाऽणेव भवति, न त्विञ्। गर्ग्य इति। गोत्रापत्ये "गर्गादिभ्योय"ञिति विशिष्य विधानादनन्तरापत्य इवात्र "अत इञ्" न भवति, किं तु यञेव। स च गार्ग्यस्यापत्येऽपि भवति, नत्वत्र यञन्तात्फक्, "एको गोत्रे"इति नियमात्। नाडायण इति। "नडादिभ्यः फ"गिति गोत्रापत्ये विधानादत्रापि "अत इञ"न भवति, किंतु फगेव, स च नाडायनस्यापत्येऽपि भवति, न तु फगन्तादिञ्, उक्तनियमात्। नन्वेकस्मिन्गोत्रे युगपदनेकप्रत्ययाऽप्रसक्तेव्यर्थमिदं सूत्रमित्याशङ्क्य सूत्रारम्भफलं मतभेदेन व्यवस्थापयति--गोत्रे स्वैकोनेति।

"स्व=गोत्रं, तदपेक्षया एकोनसङ्ख्यानां, तृतीये द्वयोः परम्परा, चतुर्ये त्रयाणां, पञ्चमे तु चतुर्णा"मित्यादिपरम्परा प्रसज्यत इत्यर्थः। तथाहि--उपगोस्तृतीये अणिञोः परम्परा, चतुर्थे त्वणिञ् फगिञाम्,। यद्यप्यत्र "यस्येति च" इति लोपेनाऽणादेरसत्त्वात् "अणिञादीनां परम्परे"त्युक्तिर्न सङ्गच्छते, तथापि "अणन्तादिञुत्पद्यते, इञन्तत्फगि"त्युपत्तिमात्राभिप्रायेण प्रत्ययपरम्पराभिधानं बोध्यम्। स्वद्व्यूनसङ्ख्येभ्य इति। स्वं=गोत्रं, तदपेक्षया द्व्यूनसङ्ख्येभ्यः प्रातिपदिकेभ्यः, तृतीये एकस्मादनिष्ठोत्पत्तिः, चतुर्थे द्वाभ्यां, पञ्चमे त्रिभ्यः, इत्यादीत्यर्थः। अपत्यं पितुरेवेति। तता चामरः--"आत्मजस्तनयःस सूनुः सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वेऽपत्यं तोकं तयो#ः समे"इति। मुख्यमतमाह---ततः प्रातामिति। पित्रपेक्षया ये प्राञ्चः पितामहप्रपितामदादयस्तेषामपीत्यर्थः। अत्रायमाशयः---अपत्यशब्दः कियानिमित्तो न त्वात्मजपर्यायः, "न पतन्त्यनेनेत्यपत्य"मिति व्युत्पत्तेः "पङ्क्तिर्विशती"ति सूत्रे भाष्यकृता दर्सितत्वात्, बाहुलकात्करणे यत्प्रत्ययः। "यन्निमित्तं यस्यापतनं तत्तस्यापत्य"मिति फलितोऽर्थः। तथा च "पौत्रादिरपि पितामहादीनामपतनहेतु"रिति तेषामपत्यत्वं भवति। प्रसिद्धं च व्यवहितोऽपि पितामहादीनामुद्धर्तेति जरत्कार्वाद्युपाख्यानेषु। "अपत्यं पौत्रप्रभृती"ति सूत्रमप्यत्रानुगुणम्। आद्यपक्षे हि "अपत्यमिवापत्य"मिति गौणी वृत्तिराश्रयणीया स्यात्। अमरस्तु सूत्रभाष्यादिविरोधादुपेक्ष्य इति। तद्वान्यै इति। आद्यपक्षे प्रत्ययमाला निवृत्तये, अन्ये तु स्वद्व्यूनङ्ख्येभ्योऽनिष्टोत्पत्तिनिवृत्तये इत्यर्थः। औपगवादिञ्स्यादिति। तृतीयस्य उपगुं प्रति अनपत्यत्वादिति भावः। एवं चऽसति सूत्रे अस्मिन्पक्षे औपगविरित्यनिष्टमेव स्यात् "औपगव"इतीष्टं तु न सिद्ध्यतीति बोध्यम्। अजोबज्ज्येष्ठे इति। जीवज्ज्येष्ठे जीवद्वंश्ये वा युवसंज्ञायां सत्यां गोत्रसंज्ञा नेति भावः। इष्टे सिद्धेऽपीति। अस्मिन् पक्षे औपगवस्य यदपत्यं तदुपयोगप्यपत्यमिति उपगोर्यदा प्रत्ययः तदा "औपगवः" इतीष्टं यद्यपि सिद्ध्यपि, तथाप्यौपगविरित्यनिष्टं प्राप्नोतीत्यर्थः। तत इति। इञन्तादित्यर्थः। फगिञोरिति। फगन्तादिञ्, इञन्तात्फक्, तदन्तात्पुनरिञित्यादिपरम्परायां सत्यामित्यर्थः। नियमार्थमिति। नन्वाद्यपक्षे तत्तत्पितृवाचकादेव प्रत्ययो, न तु मूलभूतात्स्यात्, अनन्तरापत्ये मुख्यसंबन्धे चरितार्थस्याऽणादेर्गौणसंबन्धेऽपि प्रवृत्तेरन्याय्यत्वात्। तथा चौपगवापत्येन उपगोर्मुख्यसंबन्धाऽभावादत्राऽप्राप्ते विध्यर्थमेवेदं सूत्रं, न तु नियमार्थमिति औपगवशब्दादपि प्रत्ययो दुर्वार इति चेदत्राहुः--गोत्रे बोधनीये क्रमेणाऽनेकप्रत्ययप्रसङ्गे एक एवापत्यप्रत्ययः स्यादिति सूत्रार्थे कृते औपगवशब्दस्यापत्यप्रत्ययान्तत्वात्पुनरपत्यप्रत्ययस्ततो नोपपद्यते इत्यगत्या परम्परासम्बन्धाभ्युपगमेनोपगोरेव तदुत्पत्तिः, न त्वौपगवशब्दादिति सिद्धिमिष्टमिति। अत्र केचिव्द्याचक्षते---"आद्यपक्षे प्रत्ययपरम्परायां प्राप्तायाम् "एको गोत्रे"इत्यनेनैकः प्रत्ययो विधीयते। तथा चैको नामैकजातीय इत्यर्थपर्यवसानान्मूलप्रकृतेर्थोऽपत्यप्रत्ययोऽणादिस्तज्जातीय एव गोत्रे बोधनीये तत्तत्पितृवाचकाद्भवति "अणन्तादण्, इञन्तादिञ्, यञन्ताद्यञिति। न चैवमणिञोः परम्परायां निवर्तितायामप्यौपगव इत्यत्राऽण्प्रत्ययपरम्परा स्यात्, तथा गर्ग्य इत्यादौ यञादिपरम्परेति वाच्यं, सत्यामपि तस्यामनिष्टाऽभावा"दिति। तच्चिन्त्यं। फगन्तात्फकि "नाडायन"इत्यादावनिष्टप्रसङ्गादिति दिक्। ऊह्यमिति। "अपत्यं पितुरेवे"ति पक्षे चतुर्थापत्यरूपे यूनि विवक्षिते "गोत्राद्यूनी"ति नियमसूत्रे सत्यसति च गोत्रप्रत्ययान्तादेव युवप्रत्यय इति द्वयोः परम्परा, सा चेष्टत्वान्न नियमेन व्यावर्त्यते। पञ्चमे तु यूनि नियमाऽभावे त्रयाणां परम्परा प्रसज्येत। षष्ठे तु चतुर्णामित्यादि। "ततः प्राचामपी"ति द्वितीयपक्षे तु--गर्गाचतुर्थे यूनि मूलप्रकृत्यनन्तराभ्यामनिष्टोत्पत्तिः प्रसज्ते। पञ्चमे तु --मूलप्रकृत्यनन्तरयुवभ्यः। तथा नडाच्चतुर्थे यूनि पूर्ववद्द्वाभ्यामनिष्टोत्पत्तिः। पञ्चमे त्रिभ्यः। उपगोश्चतुर्थे वाच्ये तु मूलप्रकृतेरेकस्मादेवानिष्टोत्पत्तिः, न त्वनन्तरा पत्यवाचकात्। ततो जातेऽप्यत इञि रूपानिष्टाभावादित्यादि यथासंभवं तत्रोह्यमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

गोत्राद् यून्यस्त्रियां ४।१।९४

अयम् अपि नियमः। यून्यपत्ये विवक्षिते गोत्रादेव प्रत्ययो भवति, न परमप्रकृत्यनन्तरयुवभ्यः। गार्ग्यस्य अपत्यं युवा गार्ग्यायणः। वात्स्यायनः। दाक्षायणः। प्लाक्षायणः। औपगविः। नाडायनिः। अस्त्रियाम् इति किम्? दाक्षी। प्लाक्षी। किं पुनरत्र प्रतिषिध्यते? यदि नियमः, स्त्रियाम् अनियमः प्राप्नोति। अथ युवप्रत्ययः, स्त्रिया गोत्रप्रययेन अभिधानं न प्राप्नोति गोरसंज्ञायाः युवसंज्ञया बाधितत्वात्। तस्माद् योगविभागः कर्तव्यः। गोत्राद् यूनि प्रत्ययो भवति। ततो ऽस्त्रियाम्। यूनि यदुक्तं तत् स्त्रियां न भवति। युवसंज्ञा एव प्रतिषिध्यते, तेन स्त्री गोत्रप्रत्ययेन अभिधास्यते।
लघु-सिद्धान्त-कौमुदी
गोत्राद्यून्यस्त्रियाम् १०१४, ४।१।९४

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा॥
न्यासः
गोत्राद्यून्यस्त्रियाम्। , ४।१।९४

"अयमपि नियमः" इति। न केवलं पूर्वः--- इत्यपिशब्देन दर्शयति। सर्वेषां ह्यपत्येन योगे परमप्रकृत्यनन्तरयुवभ्योऽपि युवापत्यविवक्षायां प्रत्ययः प्राप्नोति, अतस्तन्निवृत्त्यर्थं नियमः क्रियते। "गोत्रादेव"इति। गोत्रपत्ययान्तादेवेत्यर्थः। अनेन नियमस्वरूपं दर्शयति। "न परम" इत्यादिना नियमस्य व्यवच्छेद्यम्। "गाग्र्यायणः, दाक्षायणः" इति। गोत्रे यौ यञिञौ विहितौ तदन्तात् "यञिञोश्च" ४।१।१०१ इति फक्। "औपगविः" नाडायनिः" इति। गोत्रे यावण्फकौ विहितौ तदन्तात् "अत इञ्" ४।१।९५। "दाक्षी" इति। वक्षस्यापत्यं चतुर्थ स्त्री। "अत इञ्" ४।१।९५, "इतो मनुष्यजातेः" ४।१।६५ इति ङीष्। "किं पुनरत्र प्रतिषिध्यते" इति। सर्वस्मिन् प्रतिषिध्यमाने दोषं मन्यते। तमेव दोषमाविष्कर्तुमाह-- "यदि" इत्यादि। "स्त्रियामनियमः प्राप्नोति" इति। परमप्रकृत्यनन्तरयुवभ्योऽपि स्त्रियां युवप्रत्ययः प्राप्नोतीत्यर्थः। "गोत्रसंज्ञाया युवसंज्ञया बाधितत्वात्" इति। "जीवति तु वंश्ये युवा" इत्यत्र तुशब्दोऽवधारणार्थः कृतः। तेन अभिधानं न प्राप्नोति। "तस्मात्" इत्यादि। यत एव च नियमयुवप्रत्यययोरुभयोरपि प्रतिषेधे दोषः, तस्मात् तन्निरासाय योगविभागः कत्र्तव्यः। तत्र " गोत्राद्यूनि" इत्येको योगः, अनेन च नियमः क्रियते, यदाह-- "गोत्राद् यूनि प्रत्ययो भवति" इति। ततः "अस्त्रि याम्" इति द्वितीयो योगः। तेन च यूनीत्यत्र यदुक्तं कार्यं तस्य प्रतिषेधः क्रियते, यदाह-- "यूनि यदुक्तं स्त्रियां तन्न भवति" इति। "युवसंज्ञैव प्रतिषिध्यते" इति। कथम्? "अस्त्रियाम्" इत्यत्र हि योगे यूनीत्येतदनुवत्र्तते, तेनैवं विज्ञायते-- यूनि यदुक्तं कार्यं स्त्रियां तन्न भवतीति। युवसंज्ञा च यून्येव कार्ययुक्तेत्यतः सैव प्रतिषिध्यते। "युवसंज्ञैव" इति। एवकारेण नियमयुवप्रत्यययोव्र्यवच्छेदः क्रियते। "तेन स्त्री गोत्रपत्ययेनाभिधास्यते" इति। तस्यां युवसंज्ञायां प्रतिषिद्धायां गोत्रसंज्ञाया अविचलत्वात्॥
बाल-मनोरमा
गोत्राद्यून्यस्त्रियाम् १०७८, ४।१।९४

गोत्राद्यून्यस्त्रियाम्। गर्गस्य गोत्रं गार्ग्यः, गर्गस्य तृतीयः। "गर्गादिभ्यः" इति गोत्रे यञ्। गाग्र्यस्य तृतीयः सगर्गस्य पञ्चमो युवापत्यं, तस्मिन्बुबोधयिषिते गाग्र्यशब्दात् गोत्रप्रत्ययान्तात् "यञिञोश्चे"ति फकि "गाग्र्यायण" इति रूपमिष्यते। तथा षष्ठादिष्वपि युवापत्येषु "गाग्र्यायण" इत्येवेष्यते। तदिदमपत्यशब्दः पुत्रपौत्रादिसाधारण इति पक्षे यद्यपि सुलभमेव,गर्गात्तृतीयं गाग्र्यं प्रति पञ्चमादीनामप्यपत्यत्वात्, तथापि गर्गस्य पञ्चमाद्यपत्ये यूनि विवक्षिते गर्गान्मूलप्रकृतेरपि इञ् स्यात्। तथा गर्गस्य अन्तरापत्ये इञि गार्गिः, तदपत्यत्वेन विवक्षिते गर्गान्मूलप्रकृतेरपि इञ् स्यात्। तथा गर्गस्य अन्तरापत्ये इञि गार्गिः, तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि "गार्गायण"

इत्यपि स्यात्। तथा गर्गस्य चतुर्थे यूनि गोत्रत्वाऽभावात् यञभावे इञि गार्गिः। तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि "गार्गायण" इति स्यात्। गोत्रपत्ययान्तादेव यूनि प्रत्यया" इति नियमः क्रियते--गोत्राद्यूनी"ति। तदाह--यून्यपत्ये गोत्रप्रत्ययान्तादेवेति। नतु मूलप्रकृतेस्तदनन्तरापत्यप्रत्ययान्ताद्युवप्रत्ययान्ताच्चेति भावः। नचापत्यशब्दः पुत्र एव रूढ इति पक्षे पञ्चमादौ यूनि चतुर्थाद्यपत्यप्रत्ययान्तादेव प्रत्ययः स्यात्, नतु तृतीयवाचिगोत्रप्रत्ययान्तादिति तत्र विष्यर्थमेवेदं स्यात्, नतु नियमार्थमिति वाच्यं, "पुत्रपौत्रादिसाधारणोऽपत्यशब्द" इत्येव भाष्ये सिद्धान्तितत्वादिति भावः।

स्त्रियां तु न युवसंज्ञेति। इह "अस्त्रिया"मिति योगो विभज्यते। यूनीत्यनुवर्तते। उभयमपि प्रथमया विपरिणम्यते। तथाच "स्त्री उक्तयुवसंज्ञिका ने"ति फलितमिति भावः। नच स्त्रीभिन्ने यूनि गोत्रादेवेत्यर्थः कुतो नाश्रीयते, एवं सत्येकवाक्यत्वलसाभादिति वाच्यं, युवसंज्ञया गोत्रसंज्ञाया बाधात्। नच "एको गोत्रे" इति नियमात्तन्निवृत्तिः संभवतीति वाच्यं, युवसंज्ञया गोत्रसंज्ञाया बाधात्। नच सत्यपि योगविभागे "स्त्रियां न युवप्रत्यय" इति व्याख्यायतामिति वाच्यं, गोत्रप्रत्ययेन युवत्यभिधानानापत्तेरित्यलम्। गर्गस्येति। गर्गस्य पञ्चमादौ यूनि गाग्र्यशब्दाद्गोत्रे यञन्तात्फकि "गाग्र्यायण" इति रूपमित्यर्थः। स्त्रियां युवसंज्ञानिषेधस्य प्रयोजनं दर्शयति--स्त्रियामिति। पञ्चमादियुवतीनां युवसंज्ञानिरहेण गोत्रत्वात्। "एको गोत्रे" इति नियमाद्गार्गीत्येव भवति, नतु गाग्र्यायणीति रूपमित्यर्थः। "स्त्रीभिन्ने यूनि गोत्रादेवे"त्यर्थाश्रयणे तु युवसंज्ञया गोत्रसंज्ञाया बाधात् "एको गोत्रे" इत्यस्याऽप्रवृत्तेः प्रत्ययमाला स्यादिति भावः।

तत्त्व-बोधिनी

गोत्राद्यून्यस्त्रियाम् ९०२, ४।१।९४

गोत्राद्यूनि। असत्यस्मिन्सूत्रे मुख्यमते पञ्चमादौ यूनि विवक्षिते गोत्रप्रत्ययन्ताद्युवप्रत्ययोत्पत्ताविष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरयुवभ्योऽपि स्यादिति पाक्षिकानिष्टे प्राप्ते नियमार्थमिदमित्याशयेनाह---गोत्रप्रत्ययान्तादेवेति। न तु मूलप्रकृत्यनन्तरयुबभ्य इत्यर्थः। मनोरमायां तु "नतु युप्रत्ययान्तादिति प्रथमपक्षेऽर्थ"इत्यपि स्थितम्। अत्र वदन्ति---पञ्चमादौ यूनि विवक्षिते तस्य यूस्तृतीयं प्रत्यनपत्यत्वादप्राप्तौ विध्यर्थमेवेदं स्यान्न तु नियमार्थमिति युवप्रत्ययान्तात्प्रत्ययो दुर्वारः स्यात्। तस्मादिह "पितुरेवापत्य"मिति पक्षो नाश्रयणीय इति। अन्ये त्वाहुः---आद्यपक्षे "गोत्राद्यूनि"त्यावत्र्य एकेनाऽप्राप्तप्रत्ययं विधाय द्वितीयेन नियम्यते "यूनि गोत्रादेव"इति। एवं च "ततः प्राचामपी"ति पक्षेण सहास्यैकरूपता भवतीति। "गोत्राच्चेद्यून्येवे"ति विपरीतनियमस्त्विह न कृतः, व्यावर्त्त्याऽलाभात्। न च शैषिकाश्छादयो व्यावर्त्त्या इति वाच्यं, "गोत्रेऽलुगची"ति लिङ्गात्। स्त्रियां त्विति। यद्यत्र "अस्त्रिया"मित्यस्यैकवाक्यतया "स्त्रीभिन्ने यूनि गोत्रादेवे"त्यर्थः क्रियते, तर्हि स्त्रीषु युवसंज्ञाय#आ अनषेधाद्यवतिषु स्त्रीषु प्रत्ययानां परम्परा प्रसज्येत। न च "एको गोत्रे"इत्यनेन निस्तारः, युवसंज्ञया गोत्रसंज्ञाया बाधात्। अथ "स्त्रियां न युवप्रत्ययः"इति वाक्यभेदेनार्थः क्रियते, तदा गोत्रप्रत्ययेन युवतिर्नाभिधोयेत। ततश्च गाग्र्यस्यापत्यं स्त्री गार्गी न स्यात्। किं तु वाक्यमेव स्यात्। अतो "युवसंज्ञानिषेधपरमेवेद"मित्याशयेन व्याचष्टे---न युसंज्ञेति। अत्रायमाशयः---"अस्त्रिया"मिति योगो विभज्यते। "यूनी"ति शब्दस्वरूपमनुवर्तते। परिभाषा चेयम्। यत्र युवसंज्ञाविधानं तत्र "अस्त्रिया"मित्युपतिष्ठत"इति,---सिद्धस्य गतिरियम्। "जीवति तु वंश्ये युवाऽस्त्रिया"मित्येव सूत्रयितुं युक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

अत इञ् ४।१।९५

तस्य अपत्यम् इत्येव। अकारान्तात् प्रातिपदिकातिञ् प्रत्ययो भवति। अणो ऽपवादः। दक्षस्य अपत्यं दाक्षिः। तपरकरणं किम्? शुभंयाः, कीलालपाः इत्यतो मा भूत्। कथं प्रदीयतां दाशरथाय मैथिलि? शेषविवक्षया भविष्यति।

लघु-सिद्धान्त-कौमुदी

अत इञ् १०१७, ४।१।९५

अपत्येर्ऽथे। दाक्षिः॥

न्यासः

अत इञ्। , ४।१।९५

"अतः"इत्यनेन प्रकृतं प्रातिपदिकं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्यत आह-- "अकारान्तात् प्रातिपदिकात्" इति। अथात इति "अत सातत्यगमने" (धा।पा।३४) इत्यस्य क्विबन्तस्य ग्रहणं कस्मान्न विज्ञायते? "शिवादिभ्योऽण्" ४।१।११२ इति वचनात्। तद्धीञो बाधनार्थं क्रियते। यदि चेह स्वरूपग्रहणं स्यात्, शिवादिभ्यः प्रसङ्ग एव नास्तीति तेभ्यस्तद्बाधनार्थमण्विधानमनर्थकं स्यात्, क्रौड()आदीनाञ्चेञन्तानां पाठात्। तस्मादकारान्तस्यैवेदं ग्रहणम्। यद्येवम्, अस्यापत्यमिरित्यत्र न प्राप्नोति, अनकारान्तत्वात्? एतदपि व्यपदेशिवद्भावेनाकारान्तं भवतीत्यदोषः। "शुभंयाः, कीलालपाः" इति। यातेः, पिबतेश्च "आतो मनिन्क्वनिब्वनिपश्च" ३।२।७४ इत्यत्र हि "विजुपेश्छन्दसि" ३।२।७३ इत्यतश्चकारेण विजप्यनुकृष्यते। "कथम्" इत्यादि। दशरथशब्दादप्यकारान्तदिञा भवितव्यम्। ततः "दाशरथाय" इत्यणन्तस्य प्रयोगो नोपपद्यत इति भावः। "शेषविवक्षायाम्" इत्यादि। एतेन दशरथस्यायमित्यर्थविवक्षायामत्राण विहितः, न तु "तस्यापत्यम्" ४।१।९२ इत्यर्थविवक्षायामिति दर्शयति। यदा तु दशरथस्यापत्यमिति विवक्ष्यते, तदेञ्भवत्येव-- दाशरथिरिति॥

बाल-मनोरमा

अत इञ् १०७९, ४।१।९५

अत इञ्। प्रातिपदिकादित्यधिकृतमता विशेष्यते, तदन्तविधिः। तदाह--अदन्तं यत्प्रातिपदिकमिति। "तस्यापत्य"मित्यनुवृत्तं "समर्थानां प्रथमाद्वे"ति च। ततश्च प्रथमोच्चारिततच्छब्दबोधितात्प्रातिपदिकादिति लब्धं। सुबन्तात्द्धितोत्पत्तिरिति सिद्धान्तात्सुबन्तादिति लभ्यते। सुप्चेहोपस्थितत्वात्षष्ठ()एव विवक्षिता। तथा च षष्ठ()न्तात्प्रातिपदिकादिति लभ्यते। यद्यपि प्रातिपदिकं न षष्ठ()न्तं, प्रत्ययग्रहणपरिभाषया प्रकृतिप्रत्ययसमुदायस्यैव लाभात्। तथापि प्रातिपदिकप्रकृतिषष्ठ()न्तादित्यर्थो विवक्षितः। तदाह--तत्प्रकृतिकात्षष्ठ()न्तादिति। दाक्षिरिति। दक्षस्यापत्यमिति विग्रहः। इञ्। आदिवृद्धिः, "यस्येति चे"त्यकारलोपः। "प्रदीयतां दाशरथाय मैथिली"ति त्वार्षमिति "तस्यापत्य"मित्यत्र निरूपितम्। प्रातिपदिकग्रहणाऽननुवृत्तौ त्वदन्तात्षष्ठ()न्तादिति लभ्येत। तथा च दक्षयोरपत्यं दाक्षिरिति न सिध्येदिति भावः।

तत्त्व-बोधिनी

अत इञ् ९०३, ४।१।९५

अत इञ्। "घकालतने"ष्विति ज्ञापकात्सुबन्तादेव तद्धितोत्पत्तिरित्यभ्युपगमेऽप्यधिकृतप्रातिपदिकस्य न वैयथ्र्यं, किं तु प्रयोजनमस्तीति ध्वनयति----अदन्तं यत्प्रातिपदिकमिति। "अत"इत्यस्य सुबन्तविसेषणत्वे तु दक्षयोरपत्यमित्यादिविवक्षायां दाक्षिरित्यादि न सिद्ध्येदिति भावः। तपरः किम्()। वि()आपोऽपत्यं वै()आपः। "प्रदीयतां दाशरथाये"त्यत्र तु "तस्येद"मित्यण्। अपत्यत्वविवक्षायां त्विञेव।

सूत्रम्

काशिका-वृत्तिः

बाह्वादिभ्यश् च ४।१।९६

बाहु इत्येवम् आदिभ्यः शब्देभ्यो ऽपत्ये इञ् प्रत्ययो भवति। बाहविः। औपबाहविः। अनकारार्थ आरम्भः। क्वचिद् बाधकवाधनार्थः। बाहु। उपबाहु। विवाकु। शिवाकु। बटाकु। उपबिन्दु। वृक। चूडाला। मूषिका। बलाका। भगला। छगला। घ्रुवका। धुवका। सुमित्रा। दुर्मित्रा। पुष्करसत्। अनुहरत्। देवशर्मन्। अग्निशर्मन्। कुनामन्। सुनामन्। पञ्चन्। सप्तन्। अष्टन्। अमितौजसः सलोपश्च। उदञ्चु। शिरस्। शराविन्। क्षेमवृद्धिन्। शृङ्खलातोदिन्। खरनादिन्। नगरमर्दिन्। प्राकारमर्दिन्। लोमन्। अजीगर्त। कृष्ण। सलक। युधिष्ठिर। अर्जुन। साम्ब। गद। प्रद्युम्न। राम। उदङ्कः संज्ञायाम्। अम्भूयो ऽम्भसोः सलोपश्च। बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततो ऽन्यत्र तेषां प्रतिषेधः। बाहुर्नाम कश्चित्, तस्य अपत्यं बाहवः। सम्बन्धिशब्दानां च तत्सदृशात् प्रतिषेधः। संज्ञा श्वशुरस्य अपत्यं श्वाशुरिः। चकारो ऽनुक्तसमुच्चयार्थः आकृतिगणतामस्य बोधयति। जाम्बिः। ऐन्द्रशर्मिः। आजधेनविः। आजबन्धविः। औडुलोमिः।

लघु-सिद्धान्त-कौमुदी

बाह्वादिभ्यश्च १०१८, ४।१।९६

बाहविः। औडुलोमिः। (लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः)। उडुलोमाः। आकृतिगणोऽयम्॥

न्यासः

बाह्वादिभ्यश्च। , ४।१।९६

"बाहविः" इति। "ओर्गुणः" ६।४।१४६। "क्वचित्" इति। अजीगर्त्ताविष्कारान्तेषु। बाहुप्रभृतीनां वटाकुपर्यन्तानामनकारान्तत्वात् प्राप्त्यर्थः पाठः। चूडाशब्दस्य च "द्वय चः" ४।१।१२१ इति ढकि प्राप्ते। वृकलादीनां प्राक् पुष्करसच्छब्दात् "अवृद्धाभ्यो नदीमानुषीभ्यः" ४।१।११३ इत्यणि प्राप्ते। पुष्करसदित्येवमादीनां लोमशब्दपर्यन्तानां प्राप्त्यर्थः, अनकारान्तत्वात्। "अमितौजसः सलोपश्च" इति। अमितौजस्शब्दादिञ् भवति, सलोपश्च। आमितौजिः। उदञ्चिवति पठ()ते, तत्राञ्चतेर्धातोश्चकारो वेदितव्यः। नायं पुनरकारान्तः, किं तर्हि? क्विन्नन्तः, प्रत्ययवेलायां निपातनादनुनासकिलोपो न भवति। उदीचोऽपत्यमौदञ्चिः। शिरः शब्दस्तदन्तविधिं प्रयोजयति, केवलस्य नपुंसकस्यापत्येन सम्बन्धाभावात्। हस्तिशिरसोऽपत्यं हास्तिशीर्षिः, "ये च तद्धिते" ६।१।६० इत्यत्र चकारस्यानुक्तसमुच्चलोम्नोऽपत्यम्-- औध्र्वलोमिः। अजीगर्त्तादीनां प्रागुदङ्कशब्दात् "ऋष्यन्धकवृष्णि" ४।१।११४ इत्यादिनाणिबाधके प्राप्ते। "उदङ्कः संज्ञायाम्" इति। उदङ्को नाम कश्चित्, तस्यापत्यमौदङ्किः। "सम्भूयोऽम्भसोः सलोपश्च" (इति)। सम्भूयस्, अम्भसित्येतयोरिञ् भवति, सकारलोपश्च-- साम्भूयिः,आम्भिः। "बाह्वादिप्रभृतिषु" इति। प्रभृतिशब्देनेत ऊध्र्वं ये वक्ष्यन्ते ते परिगृह्न्ते। "येषां दर्शनं गोत्रभावे लौकिके" इति। दर्शनं = प्रसिद्धिः। लौकिके गोत्रे भावः = संज्ञाकारित्वम्। येषां लौकिकगोत्रभावे प्रसिद्धिस्तेषां बाह्वादिषु परिग्रहो द्रष्टव्यः। "ततोऽन्यत्र तेषां प्रतिषेधः" इति। येषां लौकिके गोत्रभावे न दर्शनमपि तु ततोऽन्यत्र दर्शनम्, तेषां प्रतिषेधो वेदितव्यः। तेन बाहुर्नाम कश्चिदादिपुरुषो यः संज्ञाकारित्वेन प्रसिद्धो यदपत्यसन्तानान्तः पातिनः पुमांसो बाहुव्यपदेशमासादयन्ति, तत एवेञ् भवति। यस्त्विदालीन्तनो बाहुर्नाम कश्चित् ततोऽणेव भवति-- बाहव इति। एतच्च वेत्यनुवृत्तेव्र्यवस्थितविभाषाविज्ञानाच्चलभ्यते। सम्बन्धिशब्दानाञ्च ()आशुरादीनाञ्च यत्कार्यमुच्यते तस्य तत्सादृश्यात् प्रतिषेधो भवति। अत्रापि पूर्वोक्त एव हेतुर्वेदितव्यः। राज()आशुराद्यत्" ४।१।१३७ इति ()आशुरशब्दाद्यत्प्रत्ययः सम्बन्धिशब्दादेव भवति, न संज्ञाशब्दात्। तेन ()आशुरो नाम कश्चित्, तस्यापत्यं

()आआशुरितीञेव भवति। "संज्ञा()आशुरस्य" इति। संज्ञया यः ()आशुरः, न सम्बन्धेन स संज्ञा()आशुरः॥

बाल-मनोरमा

बाह्वादिभ्यश्च १०८०, ४।१।९६

बाह्वादिभ्यश्च। "अपत्ये इ"ञिति शेषः। बाहविरिति। बाहुर्नाम कश्चिद्दृषिः, अथ "ऋषयः" इत्यधिकृत्य"बाहविर्गाग्र्यगौतमौ" इत्या()आलायनसूत्रे दर्शनात्। बाहोरपत्यमिति विग्रहः। इञि ओर्गुणः। औडुलोमिरिति। उडुलोम्नोऽपत्यमिति विग्रहः। इञि "नस्तद्धिते" इति टिलोपः। आदिवृद्धिः, अदन्तात्वाऽभावादप्राप्तिः।

तत्त्व-बोधिनी

बाह्वादिभ्यश्च ९०४, ४।१।९६

बाह्वदिभ्यश्च। "बाधृ लोडने"इति धातौ "केवलस्य बाहोरपत्ययोगाऽसंभवात्सामथ्र्यात्तदन्तविधौ सौबाहविः" इति माधवोक्तं चिन्त्यमिति ध्वनयन्नाह---बाहविरिति। "जानन्तिबाहविगाग्र्यगौतमा" इत्या()आलायनसूत्रप्रयोगाद्भाष्यवृत्त्याद्युदाहरणाच्च बाहुशब्दः संज्ञारूपोऽस्तीति भावः। औडुलोमिरिति। यद्यपि गणे बाहु कृष्ण युधिष्ठिर अर्जुन प्रद्युम्नेत्यादिषु केवलो लोमन्शब्दः पठितस्तथापि सामथ्र्यात्तदन्तग्रहणम्। "तारकाप्युडु वा स्त्रियाम्" इत्यमरोक्त्या नक्षत्रवाच्युडुशब्दः। उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः। शरा इव लोमानि यस्य तस्यापत्यं शारोमिः। बहुत्वे तु इञपवादोऽकारः प्रागेवाऽजन्तेषूक्तः। उडुलोमाः। शरलोमाः। इह प्रतिपदविधानेषु पुराणसिद्धाः संज्ञाशब्दा एव गृह्लन्ते, शीघ्रोपस्थितिकत्वात्। तेन इदानीतनो यो बाहुस्तस्यापत्ये बाहव इत्यणेव, न त्विञ्। उक्तं च हरिणा---"अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु"। अनर्थकं संदिग्धार्थकमप्रयुक्तं च क्रमेण विशेषणत्रयव्यावर्त्यम्। तदुक्तिषु। तत्सदृशेष्वित्यर्थः। अत एव संज्ञा()आशुरस्यापत्यं ()आआशुरिरित्यत्र "राजा()आशुरा"दिति यन्न। मिमीते माता। तस्य स्वसा मातृस्वसा। इह "मातृपितृभ्यां स्वसे"ति षत्वं न। नन्वेवं बाहवः ()आआशुरिरिति पूर्वोक्तौ न सिद्यति इति चेत्। मैवम्। अणिञोर्विधौ शब्दविशेषानुपादानादप्रसिद्धेष्वपि तत्प्रवृत्तेः।

व्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम्। व्यासेति। वेदान्व्यस्यतीति वेदव्यासः। "कर्मण्यण्"। भीमो मीमसेन इतिवदेकदेशग्रहणम्।

---

सूत्रम्

काशिका-वृत्तिः

सुधातुरकङ् च ४।१।९७

सुधातृशब्दादपत्ये इञ् प्रत्ययो भवति, तत्संनियोगेन च तस्य अकङदेशो भवति। सुधातुरपत्यम् सौधातकिः। व्यासवरुडनिषादचण्डालबिम्बानाम् इति वक्तव्यम्। वैयासकिः। बारुडकिः। नैषादकिः। चाण्डालकिः। बैम्बकिः।

न्यासः

सुधातुरकङ् च। , ४।१।९७

"व्यासवरुड" इत्यादि। व्यासादीनामिञ्, तत्सन्नियोगेन चाकङादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- पूर्वसूत्रामिह चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः,तेन व्यासादीनामपि भविष्यति। "वैयासकिः" इति। "न य्वाभ्याम्" ७।३।३ इत्यादिनैज्वृद्धिप्रतिषेधौ। अथ बाह्वादिष्वेव सुधातृशब्दमधीत्य तत्र चाकङादेशः कस्मान्न कृतः,

यथा-- अमितौजसः सलोपश्चेति गणे पठ()ते? सूत्रे वा, न तत्र कश्चिल्लाघवाभावाद्विशेषो लभ्यत इति यत्किञ्चिदेतत्॥

---

सूत्रम्

काशिका-वृत्तिः

गोत्रे कुञ्जाऽदिभ्यश् च्फञ् ४।१।९८

तस्य अपत्यम् इत्येव। गोत्रसंज्ञके ऽपत्ये वाच्ये कुञ्जादिभ्यः च्फञ् प्रत्ययो भवति। इञो ऽपवादः। चकारो विशेषणार्थः व्रातच्फञोरस्त्रियाम् ५।३।११३ इति। ञकारो वृद्ध्यर्थः। कौञ्जायन्यः, कौजायन्यौ, कौञ्जायनाः। ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः। गोत्रे इति किम्? कुञ्जस्य अपत्यम् अनन्तरं कौञ्जिः। एकवचनद्विवचनयोः सतिशिष्टत्वात् ञित्स्वरेण एव भवितव्यम्। बहुवचने तु कौञ्जायनाः इति, परम् अपि ञित्स्वरं त्यक्त्वा चित्स्वर एव इष्यते। गोत्राधिकारश्च शिवादिभ्यो ऽण् ४।१।११२ इति यावत्। कुञ्ज। ब्रध्न। शङ्ख। भस्मन्। गण। लोमन्। शठ। शाक। शाकट। शुण्डा। शुभ। विपाश। स्कन्द। स्तम्भ।

न्यासः

गोत्रे कुञ्जादिभ्यश्च्फञ्। , ४।१।९८

"इञोऽपवादः" इति। अकारान्तत्वात् कुञ्जादीनाम्। "चकारो विशेषणार्थः"इति। यद्यत्र चकारो न क्रियेत ततः "व्रातच्फञोरस्त्रियाम्" ५।३।११३ इत्यत्रापि नैव क्रियते, च्फञ्प्रत्यस्याभावात्। ततश्च "वातफञोरस्त्रियाम्" इत्युच्यमाने "अ()आआदिभ्यः फञ्" ४।१।११० इत्यस्यापि ग्रहणं स्यात्। "कौञ्जायन्यः, कौञ्जायन्यौ" इति। "पूगाञ्ञ्योऽग्रामणीपूर्वात्" ५।३।११२ इत्यतः "ञ्यः" इत्यनुवर्त्तमाने "व्रातच्फञोरस्त्रियाम्" ५।३।११३ इति स्वार्थ ञ्यः। "कौञ्()जायनाः" इति। "ञ्यादयस्तद्राजा-" ५।३।११९ इति तद्राजसंज्ञकत्वात् "तद्राजस्य बहुषु" २।४।६२ इत्यादिना लुक्। किं पुनरत्र ञित्वस्वरेण भवितव्यम्? उत चित्स्वरेण? इत्यत आह-- "एकवचनद्विवचनयोः" इत्यादि। एकवचनद्विवचनयोस्तावत् सति तस्मिन् चित्स्वरे पश्चाद् ञ्ये विहिते समुपजायमानो ञित्स्वरः सतिशिष्टो भवतीति तेनैव भवितव्यम्। बहुवचने तु ञ्ये निवृत्ते प्राप्ते तं त्यक्त्वा चित्स्वर एवेष्यते। कथं पुनरिष्यमाणोऽपि स लभ्यते, चित्करणसामर्थ्यादिति चेत् न; ञित्करणसामर्थ्याद् ञित्स्वरोऽपि लभ्यते। एवं तर्हि स्वरविधौ योगविभागः करिष्यते,इदमस्ति-- "चितःट ६।१।१५७ इति; ततः "तद्ध#इतस्य" ६।१।१५८ इति, तत्र "चितः" इत्येवानुवर्त्तते। किमर्थमिदम्? परत्वात् "ञ्नित्यादिर्नित्यम्" ६।१।१९१ इत्याद्युदात्तत्वं प्राप्नोति, तद्बाधनार्थम्। ततः "कितः" ६।१।१५९ इति, कितश्च तद्धितस्यान्त उदात्तो भवति॥

बाल-मनोरमा

गोत्रे कुञ्जादिभ्यश्चफञ् १०८३, ४।१।९८

गोत्रे कुञ्ज। स्पष्टम्। इञोऽपवादः। च्फञिचञावितौ।

तत्त्व-बोधिनी

गोत्रे कुञ्जादिभ्यश्च्फञ् ९०६, ४।१।९८

गोत्रे कुञ्जा। इतः प्राक् "एकौ गोत्रे"इत्यादि सूत्रद्वयं चेत्पठ()ते तह्र्यत्रत्यं गोत्राग्रहणं त्यक्तुं शक्यमित्याहुः। च्फञो ञकारो वृद्ध्यर्थः। कौञ्जायन्यः। चकारस्तु "व्रातच्फञौ"रित्यत्र विशेषणार्थः। तेन "अ()आआदिभ्यः फञ्" आ()आयन इत्यत्र ञ्यो न भवति। अत्रेदमदधेयं---कौञ्जायन्य इत्यादावेकवचने द्विवचने च ञ्यस्य ञित्वादाद्युदात्तत्वमेव। बहुत्वे तु ञ्यस्य लुकि

च्फञश्चकारकारस्योस्तुल्यबलयोर्विरोधेसति परत्वात्()ञित्स्वरेणाद्युदात्तत्वे प्राप्ते भाष्यादौ "तद्धितस्य कितः" इत्यत्र योगं विभज्य "चितः"इत्यनुवर्त्य "तद्धितस्य चितोऽन्तोदात्तत्वम्िति व्याख्यानात् "कौञ्झायनाः"इत्यत्रान्तोदात्तैव भवति। न चैवं हि फगेवात्रास्तु किमनेन गुरुनिर्देशेनेति वाच्यं, तथा हि सति "व्रातफकोरस्त्रिया"मिति सूत्रप्रणयनापत्त्या नाडायनादिभ्योऽपि ञ्यः स्यादिति। कुञ्ज, व्रध्न, शङ्ख, शकटेत्यादि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ नडादिभ्यः ५।१ फक् १।१ १०३ गोत्रे ? तस्यापत्यम् ? तद्धिताः ? ङ्याप्प्रातिपदिकात् ? प्रत्ययः ? परश्च ?

समासः॥

नड आदिः येषां ते नडादयः तेभ्यः ॰ बहुव्रीहिः

अर्थः॥

गोत्रापत्ये वाच्ये षष्ठीसमर्थेभ्यः नडादिभ्यः प्रातिपदिकेभ्यः फक् प्रत्ययः भवति

उदाहरणम्॥

नडस्य गोत्रापत्यं नाडायनः चारायणः
काशिका-वृत्तिः
नडादिभ्यः फक् ४।१।९९

नडित्येवम् आदिभ्यः प्रातिपदिकेभ्यः गोत्रापत्ये फक् प्रत्ययो भवति। नाडायनः। चारायणः। गोत्रे इत्येव, नाडिः। शलङ्कु शलङ्कं च इत्यत्र पठ्यते। शालङ्कायनः। पैलादिषु शालङ्किशब्दः पठ्यते। शालङ्किः पिता। शालङ्किः पुत्रः। तत् कथम्? गोत्रविशेषे कौशिके फकं स्मरन्ति, इञेव अन्यत्र शालङ्किः इति। अथवा पैलादिपाठ एव ज्ञापकः इञो भावस्य। नड। चर। बक। मुञ्ज। इतिक। इतिश। उपक। लमक। शलङ्कु शलङ्कं च। सप्तल। वाजप्य। तिक। अग्निशर्मन् वृशगणे। प्राण। नर। सायक। दास। मित्र। द्वीप। पिङ्गर। पिङ्गल। किङ्कर। किङ्कल। कातर। कातल। काश्य। काश्यप। काव्य। अज। अमुष्य। कृष्णरणौ ब्राह्मणवासिष्ठयोः। अमित्र। लिगु। चित्र। कुमार। क्रोष्टु क्रोष्टं च। लोह। दुर्ग। स्तम्भ। शिंशिपा। अग्र। तृण। शकट। सुमनस्। सुमत। मिमत। ऋक्। जत्। युगन्धर। हंसक। दण्डिन्। हस्तिन्। पञ्चाल। चमसिन्। सुकृत्य। स्थिरक। ब्राह्मण। चटक। बदर। अश्वक। खरप। कामुक। व्रह्मदत्त। उदुम्बर। शोण। अलोह। दण्ड।
न्यासः
नडादिभ्यः फक्। , ४।१।९९

नडादिषु "शलङ्कु शलङ्कञ्च" इति पठ()ते। तस्यायमर्थः- शलङ्कुशब्दः प्रत्ययमुत्पादयति शलङ्कभावं चापद्यते, तेन शालङ्कायन इति भवति। "पैलादिषु "इति। पैलादिषु शालङ्किशब्द इञन्तः पठ()ते, तत उत्पन्नस्य युवप्रत्ययस्य लुग्यथा स्यात्-- "शालङ्कि पिता, शालङ्किः पुत्रः" इति। तत्र हि "ण्यक्षत्त्रियार्षञितः" २।४।५८ इत्यादेः सूत्रात् "यूनि लुक्" इति चानुवत्र्तते, तस्य शालङ्गिशब्दस्य तत्र पाठो न युज्यते-- नडादिषु पाठात् फका भवितव्यमिति कृत्वा, तत्

कथमिञन्तस्तत्र पठ()त इति चोद्यम्। तस्य परिहारमाह-- "गोत्रविशेषे" इत्यादि। कौशिकं यद्गोत्रं तत्रैव शलङ्कुशब्दादाचार्यः फकं स्मरन्ति, ततोऽन्यत्र त्विञेव भवतीत्यदोषः। स त्विञ् बाह्वादेराकृतिगणत्वाल्लभ्यते। अभ्युपेत्यापि गोत्रमात्रे फको विधानम्। परिहारान्तरमाह-- "अथ वा" इत्यादि। इञो भाव उपलक्षणम्। शलङ्कभावस्यापि हि पैलादिपाठ एव ज्ञापकम्। पूर्वत्रापि परिहारे तस्य एव ज्ञापकं वेदितव्यम्। "अग्निशर्मन् वृषगणे" इति। अग्निशर्मञ्शब्दाद्वृषगणे गोत्रे फग्भवति-- आग्निशर्मायणः। अन्यत्राणेव-- आग्निशर्मः। "अमुष्य" इति पठ()ते। ततर् निपातनाद्विभक्तेरलुक्-- आमुष्यायण इति। "कृष्णरणौ ब्राआह्मणवाशिष्ठयोः" इति। कृष्णरणशब्दौ यथाक्रमं ब्राआह्मणे वाशिष्ठे चाभिधेये फकमुत्पादयतः। काष्र्णायनो ब्राआह्मणः। राणायणो वशिष्ठः। वशिष्ठगोत्र इत्यर्थः। अन्यत्रेञेव भवति-- का()ष्णः, राणिरिति। "क्रोष्टु क्रोष्टञ्च" इति पठ()ते। क्रोष्टुशब्दः फकमुत्पादयति, क्रोष्टञ्चापद्यते -- क्रौष्टायनः॥

बाल-मनोरमा

नडादिभ्यः फक् १०८५, ४।१।९९

नडादिभ्यः फक्। इञोऽपवादः। अनन्तरो नाडिरिति। अनन्तरापत्यस्य गोत्रत्वाऽभावात्फगभावे इञेवेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

हरिताऽदिभ्यो ऽञः ४।१।१००

हरितादिर्बिदाद्यन्तर्गणः। हरितादिभ्यो ऽञन्तेभ्यो ऽपत्ये फक् प्रत्ययो भवति। इञो ऽपवादः। हरितस्य अपत्यं हारितायनः। कैन्दासायनः। ननु च गोत्रे इति वर्तते। न च गोत्रादपरो गोत्रप्रत्ययो भवति एको गोत्रे ४।१।९३ इति वचनात्? सत्यम् एतत्। इह तु गोत्राधिकारे ऽपि सामर्थ्याद् यूनि प्रत्ययो विज्ञायते। गोत्राधिकारस् तु उत्तरार्थः।

न्यासः

हरितादिभ्योऽञः। , ४।१।१००

"न च" इत्यादि चोद्यम्। "सत्यमेतत्" इत्यादि परिहार उच्यते। गोत्रे योऽञ् विहितस्तदन्तेभ्यो हरितादिभ्यः फक्। न च गोत्रप्रत्ययादपरो गोत्रप्रत्यययः सम्भवति। तत्र सामथ्र्यादगोत्राधिकारेऽपि यूनि प्रत्ययो विज्ञायते। यद्येवम्, गोत्राधिकारः किमर्थः? इत्याह-- "गोत्राधिकार उत्तरार्थः" इति॥

बाल-मनोरमा

हरितादिभ्योऽञः १०८६, ४।१।१००

"हरितादिभ्योऽञ" इत्यादि स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

यञिञोश् च ४।१।१०१

यञन्तातिञन्ताच् च प्रातिपदिकादपत्ये फक् प्रत्ययो भवति। गार्ग्यायणः। वात्स्यायनः। इञन्तात् दाक्षायणः। प्लाक्षायणः। द्वीपादनुसमुद्रं यञ् ४।३।१०, सुतङ्गमादिभ्य इञ् ४।२।७९ इत्यतो न भवति। गोत्रग्रहणेन यञिञौ विशेष्येते। तदन्तात् तु यून्येव अयं प्रत्ययः, गोत्राद् यूनि प्रत्ययो भवति इति वचनात्।

लघु-सिद्धान्त-कौमुदी

यञिञोश्च १०१५, ४।१।१०१

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात्॥

न्यासः

यञिञोश्च। , ४।१।१०१

अथ "द्वीपादनुसमुद्रं यञ्" ४।३।१० इति यो यञ् विहितः, यश्च "वृञ्छण्" ४।२।७९इत्यादिना सूत्रेण सुतङ्गमादिभ्य इञिति तदन्तात् कस्मान्न भवति, न ह्यत्र कश्चिद्विशेष उपात्तः?इत्यत आहः-- "द्वीपादनुसमुद्रं यञ्" इत्यादि। गोत्रग्रहणेन ह्यत्र यञिञौ विशेष्येते-- गोत्रे यौ यञिञाविति। न च "द्वीपात्" ४।३।१० इत्यादिना गोत्रे यञ् विहितः,किं तर्हि? जातादावर्थविशेषे। नापि सुतङ्गमादिभ्यो गोत्रे इञ् विहितः, किं तर्हि? तदस्मिन्नस्तीति देशे" (४।२।६७,७०) इत्येवमादिषु चतुष्र्वर्थेषु, तेन तदन्तान्न भवति। यदि तर्हि गोत्रग्रहणेनेह यञिञौ विशेष्येते, न प्रत्ययार्थः, एवं सति क्वायं प्रत्ययो भवतीति न विज्ञायत इत्यत आह--"तदन्तात्" इत्यादि। कस्मात् तदित्याह-- "गोत्राद्यूनीति वचनात्" इति॥

बाल-मनोरमा

यञिञोश्च १०८७, ४।१।१०१

यञिञोश्च। "गोत्रे" इत्यधिकृतं यञिञोर्विशेषणं, नतु विधेयस्य फकः, व्याख्यानात्। तदाह--गोत्रे यौ यञिञाविति। सामथ्र्याद्यून्ययम्। न हि गोत्रप्रत्ययात् गोत्रप्रत्ययोऽस्ति, "एको गोत्रे" इति नियमात्। अनातीति। गर्गस्य गोत्रं गाग्र्यः। गर्गादित्वाद्यञ्। गाग्र्यस्यापत्यं युवेत्यर्थे यञन्तात्फकि आयन्नादेश "अनाती"ति पर्युदासात् "आपत्यस्य चे"ति यलोपाऽभावे णत्वे "गाग्र्यायण" इति रूपमित्यर्थः। दाक्षायण इति। दक्षस्य गोत्रापत्यं दाक्षिः, अत इञ्, दाक्षेरपत्यं युवा दाक्षायणः। इञन्तात्फक्। गोत्रे किम्?। सुतङ्गमस्यादूरभव इत्यर्थे "सुतङ्गमादिभ्य इ"ञितीञि सौतङ्गमेरपत्ये न फक्।

तत्त्व-बोधिनी

यञिञोश्च ९०८, ४।१।१०१

यञिञोश्च।अधिकारप्राप्तं गोत्रग्रहणं यञिञोर्विशेषणं न तु विधेयस्य फकः, व्याख्यानात्। तदेतदाह---गोत्रे याविति। गोत्रे किम्()। "द्वीपादनुसमुद्रं"यञ"द्वीपे भवो द्वौप्यः। सुतङ्गमादिभ्यश्चातुरर्थिक इञ्। सौतङ्गमिः। तदपत्ये फक्मा भूत्। फक्स्यादिति। सामथ्र्याद्यून्ययम्।

---

सूत्रम्

काशिका-वृत्तिः

शरद्वच्छुनकदर्भाद् भृगुवत्साऽग्रायणेषु ४।१।१०२

गोत्रे इत्येव। शरद्वत् शुनक दर्भ इत्येतेभ्यो गोत्रापत्ये फक् प्रत्ययो भवति यथासङ्ख्यं भृगुवत्साग्रायणेषु अर्थेषु अपत्यविशेषेषु। शारद्वतायनो भवति भार्गवश्चेत्। शारद्वतो ऽन्यः। शौनकायनो भवति वात्स्यश्चेत्। शौनको ऽन्यः। दार्भायणो भवति आग्रायणश्चेत्। दार्भिरन्यः। शरद्वच्छुनकशब्दौ बिदादी। ताभ्याम् अञो ऽपवादः फक्।

न्यासः

शरद्वच्छुनकदर्भाद्?भृगुवत्साग्रायणेषु। , ४।१।१०२

"गोत्र इत्येतत्" इति। यदि तर्हि गोत्र इति वत्र्तते, भुगुवत्साभ्यां मूलप्रकृतिभ्यां प्रत्ययार्थस्य विशेषणं नोपपद्यते, गोत्रप्रत्ययाभ्यामेव हि ताभ्यां गोत्रापत्यं प्रत्ययार्थः शक्यो विशेषयितुम्त एव युक्तं स्याद्वक्तुम्-- भार्गववात्स्यायनाग्रायणेष्विति? नैष दोषः;गोत्राधिकारसामथ्र्याद्धि गोत्रापत्य एव वत्र्तमानाविह गृह्रेते, कार्ये कारणोपचारं कृत्वा। तामेव गोत्रापत्ये तयोर्वृतिं()त दर्शयितुं वृत्तावित्युक्तम्-- "शारद्वतायनो भवति भार्गवश्चेत्, शौनकायनो भवति वात्स्यश्चेत्" इति॥

बाल-मनोरमा

शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु १०८८, ४।१।१०२

शरद्वच्छुनक। शेषपूरणेन सूत्रं व्याचष्टे--गोत्रे फगिति। आद्यौ विदादी इति। शरद्वच्छुनकशब्दौ विदादी। अतस्तदुभयविषयेऽञपवाद इत्यर्थः। दर्भविषये त्विञोऽपवाद इति स्पष्टमेव। दर्भः--कस्चिदृषिः। ऋष्यणं बाधित्वा बाह्वादित्वादिञ्। आग्रायणश्चेदिति। अग्रो नाम कश्चिदृषिः। नडादिफगन्तोऽयम्।

तत्त्व-बोधिनी

शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ९०९, ४।१।१०२

शरद्वच्छुनक। भृगः शरद्वतोऽपत्यं न भवति, पूर्वभावित्वात्। एवं शुनकस्यापत्यं न भवति वत्सः। अतोऽत्र भार्गवश्च वात्स्यश्चाग्रायणश्चेति द्वन्द्वे "अत्रभृगु"इति "यञिञोश्चे"ति च यथासंभवं लुग्बोध्यः। यद्यप्यत्र बहुत्वाऽभावात् "अत्रिभृगु"इत्यादिना लुग्दुर्लभस्तथापि युगपदधिकरणवचनतायां वर्तिपदानां बह्वर्थत्वात्सौत्रत्वाद्वा स्यादेव लुक्। अतो व्याचष्टे---भार्गवश्चेदिकि। वात्स्यश्चेदिति च।

---

सूत्रम्

काशिका-वृत्तिः

द्रोणपर्वतजीवन्तादन्यतरस्याम् ४।१।१०३

गोत्रे इत्येव। द्रोणादिभ्यः प्रातिपदिकेभ्यो गोत्रापत्ये ऽन्यतरस्यां फक् प्रत्ययो भवति। इञो ऽपवादः। द्रौणायनः, द्रौणिः। पार्वतायनः, पार्वतिः। जैवन्तायनः, जैवन्तिः। कथम् अनन्तरः अश्वत्थामा द्रौणायनः इत्युच्यते। न एव अत्र महाभारतद्रोणो गृह्यते। किं तर्हि? अनादिः। तत इदं गोत्रे प्रत्ययविधानम्। इदानींतनात् तु श्रुतिसामान्यादध्यारोपेण तथाभिधानं भवति।

न्यासः

द्रोणपर्वतजीवन्तादन्यतरस्याम्। , ४।१।१०३

"कथम्" इत्यादि। यदि गोत्रापत्ये द्रोणादिभ्यः फग्भवति, तत्कथं द्रौणायनः, द्रोणतः प्रतीत्येवमादिषु प्रयोगेष्वनन्तरोऽ()आत्थामा इत्युच्यते? "नैवात्र" इति। नात्रेदानीन्तनो द्रोणस्तदनन्तरापत्ये फका द्रोणायन इति, किं तर्हि? "अनादिः"इति। श्रुतिसम्भवदर्शनार्थमिदमुक्तम्। येन हेतुना()आत्थामा द्रौणायन इत्युच्यते तमिदानीन्तनेत्यादिना दर्शयति। "इदानीन्तनात्तु"इत्यादि। अनादिद्रोणव्यवच्छेदपरमेतद्वेदितव्यम्। न हि तावद्भारतद्रोण इदानीन्तनो भवति; चिरातीतत्वात्। चिरातीतोऽप्यर्थो बुद्धौ परिभाव्यमानो वत्र्तमानतां प्रतिपद्यते, यथा-- अद्य कंसो हन्यताम्। इदानीन्तनाद् द्रोणादप्य()आत्थाम्नि द्रोणायन इत्येवं गोत्रप्रत्ययेन यदभिधानं तदध्यारोपेण भवति। अविद्यमानस्यैव

तत्रासञ्जनमध्यारोपः। कस्याध्यारोपः? गोत्रस्य। "श्रुतिसामान्यात्" इति। अध्यारोपे हेतुः।
अनादेद्र्रोणस्या()आत्थानम्नः पितुश्च द्रोण इति समाना श्रुतिः। अतः श्रुतिसामान्यादनादिद्रोणापत्यस्य यो धर्मो गोत्रत्वं तद्भावं भारतद्रोणापत्येऽ()आत्थाम्न्यपि श्रुतिसामन्याच्चलितबुद्धयः प्रतिपत्तार अध्यारोपयन्ति। तेनाध्यारोपेण द्रोणायन इति तत्राभिधां प्रवत्र्तत#ए॥
बाल-मनोरमा
द्रोणपर्वतजीवन्तादन्यतरस्याम् १०८९, ४।१।१०३

द्रोणपर्वत। अनादिरिति। अस्वत्थाम्नः पिता यो महाभारते कलेरादौ प्रसिद्धः,तदपेक्षया अन्य एवायमनादिद्रोण इत्यर्थः। अ()आत्थाम्नीति। द्रोणाचार्यस्यानन्तरापत्ये अ()आत्थाम्नि "द्रौणायन" इति प्रयोग इत्यर्थः। तदिदं "बाह्वादिभ्यश्चे"ति सूत्रे भाष्ये स्पष्टम्।

तत्त्व-बोधिनी
द्रोणपर्वतजीवन्तादन्यतरस्याम् ९१०, ४।१।१०३

अनादिरिति। अ()आत्थाम्नः पिता यो महाभारते प्रसिद्धः, तदपेक्षयाऽन्य एवायं द्रोण इत्यर्थः। अ()आत्थाम्नीत्यादि। द्रोणाचार्यस्यानन्तरापत्ये अ()आत्थाम्नि "द्रौणायन"इति प्रयोगो भाक्त इत्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
अनृष्यानन्तर्ये बिदाऽदिभ्यो ऽञ् ४।१।१०४

गोत्रे इत्येव। बिदादिभ्यो गोत्रापत्ये अञ् प्रत्ययो भवति। बैदः। और्वः। ये पुनरत्र अनृषिशब्दाः पुत्रादयस्तेभ्यो ऽनन्तरापत्ये एव भवति। पौत्रः। दौहित्रः। अनृष्यानन्तर्यस्य अयम् अर्थः, अनृषिभ्यो ऽनन्तरे भवति इति। यद्ययम् अर्थः, ऋष्यपत्ये नैरन्तर्यप्रतिषेधो न कृतः स्यात्? तत्र इदं न सिध्यति, इन्द्रभूः सप्तमः काश्यपानाम्। अनन्तरापत्यरूपेण एव ऋष्यणाभिधानं भविष्यति। अवश्यं च एतदेवं विज्ञेयम्। ऋष्यपत्ये नैरन्तर्यविषये प्रतिषेधे विज्ञायमाने कौशिको विश्वामित्रः इति दुष्यति। गोत्रे इत्येव, बैदिः। ननु च ऋष्यणा भवितव्यम्? बाह्वादिः आकृतिगणः, तेन इञेव भवति। बिद। उर्व। कश्यप। कुशिक। भरद्वाज। उपमन्यु। किलालप। किदर्भ। विश्वानर ऋष्टिषेण। ऋतभाग। हर्यश्व। प्रियक। आपस्तम्ब। कूचवार। शरद्वत्। शुनक। धेनु। गोपवन। शिग्रु। बिन्दु। भाजन। अश्वावतान। श्यामाक। श्यमाक। श्यापर्ण। हरित। किन्दास। वह्यस्क। अर्कलूष। वध्योष। विष्णुवृद्ध। प्रतिबोध। रथान्तर। रथीतर। गविष्ठिर। निषाद। मठर। मृद। पुनर्भू। पुत्र। दुहितृ। ननान्दृ। परस्त्री परशुं च।
लघु-सिद्धान्त-कौमुदी
अनृष्यानन्तर्ये बिदादिभ्योऽञ् १०१९, ४।१।१०४

एभ्योऽञ् गोत्रे। ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। बिदस्य गोत्रं बैदः। बैदौ। बिदाः। पुत्रस्यापत्यं पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः॥
न्यासः
अनृष्यानन्तर्ये बिदादिभ्योऽञ्। , ४।१।१०४

"ये पुनरत्रानृषिशब्दाः" इत्यादि। ननु च सूत्रे आनन्तर्यशब्दो भावप्रत्ययान्त उपात्तः,तत्रैवं विवरितव्यम्-- ये

पुनरत्रानृषिशब्दाः पुत्रादयस्तेभ्योऽपत्यानन्तर्य एव भवति? नैतदस्ति; न ह्ययं भावे ष्यञ् विहितः, किं तर्हि? स्वार्थ एव, चातुर्वर्ण्यवत्; अन्यथापत्यस्य धर्म आनन्तर्ये प्रत्ययः धर्म आनन्तर्ये प्रत्ययः स्यात्, नापत्ये, तत्रेष्यते च। कथं पुनर्गोत्राधिकारे सत्यनुषिभ्योऽनन्तरापत्य एव प्रत्ययो लभ्यते? अत्र गोत्रग्रहणं निवत्र्तते। ऋषिशब्देभ्योऽनन्तरापत्य एव स्वदित्यत आह-- "अनृष्यानन्तर्य इत्यस्यायम्" इत्यादि। "यद्ययमर्थः" इत्यादि। अस्मिन् ह्यर्थे सत्यनृष्यानन्तर्य इत्येतद्विष्यर्थ भवति; अनृषेरनन्तरापत्ये प्रत्ययविधानात्। ततश्च ऋष्यपत्य आनन्तर्येप्रतिषेधो न कृतः स्यादित्याह-- "ऋषिशब्दोऽत्रऋषिजातावृषित्वे वत्र्तते। "अपत्येषु नैरन्तर्यम्" इति। "सप्तमी" २।१।३९ इति योगविभागात्समासः। पश्चादृषेरपत्यनैरन्तर्यमिति षष्ठीसमासः। तदायमर्थो भवति-- ऋषित्वस्यापत्येषु नैरन्तर्यविषयेऽञः प्रतिषेधो न कृतः स्यात्। अथ वा-- ऋषयश्च तेऽपत्यानि च ऋष्यपत्यानि, तेषां नैरन्तर्यं तद्विषये प्रतिषेधोऽञः प्रत्ययस्य न कृतश्च स्यादित्यर्थः। ततर् को दोषः? इत्याह-- "तत्रेदम्" इत्यादि। सप्त काश्यपा ऋषयोऽपत्यापत्यवत्सम्बन्धेन परसप्रं सम्बद्धाः, येषां मित्त्रहूर्नाम काश्यपः सप्तमः, तेषामुषित्वस्यापत्येषु नैरन्तर्यम्। तत्र ऋष्यपत्यानां वा नैरन्तर्ये विषयेऽञः प्रतिषेध इष्यते,काश्यपानामित्येतद्रूपं यथा स्यात्। अञि सति तस्य बहुषु लोपाभावात् काश्यपानामिति प्राप्नोति। स च प्रतिषएधोऽस्मिन्नर्थे सति न प्राप्नोति, ततश्च काश्यपानामिति न सिध्यति। तस्मात् "अनृष्यानन्तर्ये" इत्यस्य ऋष्यपत्यनैरन्तर्येण न भवतीत्येषोऽर्थो विज्ञायत इत्यभिप्रायः। "अनन्तरापत्यरूपेणैव" इति। न चात्र गोत्रापत्यं विवक्षितम्। किं तर्हि? किं तर्हि? अनन्तरापत्यम्। अतोऽनन्तरापत्यरूपेणैव ऋष्यणा ऋष्यन्धकादिषु ४।१।११४ विहितेन काश्यपानामित्यभिधानं भविष्यति। एतदेव द्रढयितुमाह-- "अवश्यञ्च" इत्यादि। ऋष्यपत्यं नैरन्तर्यं विषयो यस्य प्रतिषेधस्य स तथोक्तः। ऋषित्वस्यापत्येषु ऋष्यपत्यानां वा यन्नैररन्तर्य तद्विषये प्रतिषेधे विज्ञायमान इत्यर्थः। "कौशिको वि()आआमित्र इति दुष्यति" इति। किं कारणम्? वि()आआमित्रस्तपस्तेपे-- नानृषिः स्यामिति, तत्रभवानृषिः सम्पन्नः,स पुनस्तपक्षेपे --नानृषेः पुत्रः स्यामिति, तत्रभवान् गाधिरपि ऋषिः सम्पन्नः; स पुनस्तपस्तेपे-- नानृषेः पौत्रः स्यामिति; तत्रभवान् कुशिकोऽपि ऋषिः सम्पन्नः। तदेतद्भवति-- ऋषित्वस्यापत्येषु नैरन्तर्यम्ृष्यपत्यानां वानन्तर्यम्। ततश्च ऋष्यपत्यनैरन्तर्ये न भवतीत्येवं विज्ञायमाने कौशिको वि()आआमित्र इति न सिध्यति। "परस्त्री परशुञ्च" इति।परस्त्रीशब्दः प्रत्ययमुत्पादयति परेशुभावञ्चापद्यते। परस्त्रिया अपत्यं पारशवः॥

बाल-मनोरमा

अनृष्यानन्तर्ये बिदादिभ्योऽञ् १०९०, ४।१।१०४

अनृष्यानन्तर्ये। "अनृषी"ति लुप्तपञ्चमीकम्। बिदादिभ्योऽञिति द्विरावर्तते। तथा च "अनृष्यानन्तर्ये विदादिभ्योऽ"ञिति कृत्स्नमेकं वाक्यं। "बिदादिभ्योऽ"ञिति वाक्यान्तरं। तत्र द्वितीयं वाक्यं व्याचष्टे--एभ्योऽञ्गोत्रे इति। गोत्रे विवक्षिते विदादिभ्योऽञ्स्यादित्यर्थः।

अथ प्रथमं वाक्यं कृत्सनसूत्रं व्याचष्टे--ये त्विति। अनृषिभ्यो विदादिभ्योऽनन्तरापत्येऽञ्स्यादित्यक्षरार्थः। विदादौ हि ऋषयोऽनृषयश्च पठिताः। तत्र येऽनृषयस्तेभ्योऽनन्तरापत्येऽञिति फलितमिति भावः। नन्वानन्तर्ये इति श्रवणादनन्तर इति कथमित्यत आह--सूत्रे स्वार्थे ष्यञिति। "अनन्तरशब्दा"दिति शेषः। चतुर्वर्णादित्वादिति भावः। बिदस्य गोत्रापत्यं बैद इति। बिदस्य ऋषित्वात्ततो गोत्र एवाऽञिति भावः। ऋष्यणोऽपवादः। स्वरे विशेषः। नन्वनन्तरापत्येऽञभावे इञपवाद ऋष्यणेवोचित इति कथमनन्तरो वैदिरित्यत आह--बाह्वादेरिति।
बिदादिगणस्थादनृषेरनन्तरात्येऽञमुदाहरति--पौत्रो दौहित्र इति। पुत्रस्यानन्तरापत्यमिति, दुहितुरनन्तरापत्यमिति च विग्रहः। यथायथमणिञोपरपवादेऽञ्।

तत्त्व-बोधिनी

अनृष्यानन्तर्ये बिदादिभ्योऽञ् ९११, ४।१।१०४

अनृष्या। "अनृषी"ति पञ्चम्याः सौत्रो लुक्। अनृषिभ्य इत्यर्थः। सूत्रे इति। आनन्तर्य [इत्यत्र] इत्यर्थः। स्वार्थ इति। चातुर्वर्ण्यादेराकृतिगणत्वादिति भावः। बैदिरित्यत्र ऋष्यणमाशङ्क्याह---बाह्वादेरिति। बिद, उर्व, कश्यप,, कुशिक, भरद्वाज, उपमन्यु, वि()आआनर, "परस्त्री परशुं च" इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

गर्गाऽदिभ्यो यञ् ४।१।१०५

गोत्रे इत्येव। गर्गादिभ्यो गोत्रापत्ये यञ् प्रत्ययो भवति। गार्ग्यः। वात्स्यः। मनुशब्दो ऽत्र पठ्यते। तत्र कथम् मानवी प्रजा? गोत्रे इत्युच्यते। अपत्यसामान्ये भविष्यति। कथम् अनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्यः इति? गोत्ररूपाध्यारोपेण भविष्यति। अनन्तरापत्यविवक्षायां तु ऋष्यणैव भवितव्यं जामदग्नः, पाराशरः इति। गर्ग। वत्स। वाजा ऽसे। संकृति। अज। व्याघ्रपात्। विदभृत्। प्राचीनयोग। अगस्ति। पुलस्ति। रेभ। अग्निवेश। शङ्ख। शठ। घूम। अवट। चमस। धनञ्जय। मनस। वृक्ष। विश्वावसु। जनमान। लोहित। शंसित। बभ्रु। मण्डु। मक्षु। अलिगु। शङ्कु। लिगु। गुलु। मन्तु। जिगीषु। मनु। तन्तु। मनायी। भूत। कथक। कष। तण्ड। वतण्ड। कपि। कत। कुरुकत। अनडुः। कण्व। शकल। गोकक्ष। अगस्त्य। कुण्डिन। यज्ञवल्क। उभय। जात। विरोहित। वृषगण। रहूगण। शण्डिल। वण। कचुलुक। मुद्गल। मुसल। पराशर। जतूकर्ण। मान्त्रित। संहित। अश्मरथ। शर्कराक्ष। पूतिमाष। स्थूण। अररक। पिङ्गल। कृष्ण। गोलुन्द। उलूक। तितिक्ष। भिषज्। भडित। भण्डित। दल्भ। चिकित। देवहू। इन्द्रहू। एकलू। पिप्पलू। वृदग्नि। जमदग्नि। सुलोभिन्। उकत्थ। कुटीगु।

लघु-सिद्धान्त-कौमुदी

गर्गादिभ्यो यञ् १०११, ४।१।१०५

गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः॥

न्यासः

गर्गादिभ्यो यञ्। , ४।१।१०५

"कथं मानवी प्रजा"इति। गर्गादिषु पाठाद्यञा भवितव्यम्, ततश्च मानवीति न सिध्यतीति। लोहितादिलक्षणे हि यञन्तात्तु ष्फे विहिते मानव्यायनीति भवितव्यमित्यभिप्रायः। गोत्रमित्युच्यते, गोत्रे हि यञ् प्रत्यय उच्यते, नापत्यसामान्ये। तेन तत्रौत्सर्गिकोऽण् मानवीति भविष्यति। "कथम्" इत्यादि। यदि गोत्रमित्युच्यते, ततो यथा गर्गशब्दादनन्तरापत्ये यञ् न भवति, तथा च जमदग्निपराशरशब्दाभ्यामपि न भवितव्यम्, तत्कथमनन्तरो रामो जामदग्न्यः, व्यासः पाराशर्य इत्यत्र यञ् भवति? "गोत्ररूपाध्यारोपेण भविष्यति" इति। यदानन्तरापत्ययोरपि गोत्ररूपयो रामव्यासयोर्विवक्षितत्वाद्गोत्ररूपाध्यारोपः क्रियते, तदा यञ् भवतीत्यदोषः। असतो न युक्ता विवक्षेत्येतच्च न सम्भावनीयम्; दृश्यते ह्रसतोऽपि विवक्षा, यथा-- विन्ध्यो वर्द्धितकः, समुद्रः कुण्डिकेति। यदा तह्र्रनन्तरापत्यविवक्षा भवति, तदा केन भवितव्यमित्याह-- "अन्तरापत्यविवक्षायां तु" इत्यादि। "वाजाऽसे"इति। वाजशब्दो यञमुत्पादयति। असे, असमास इत्यर्थः। वाज्यः असमास इति किम्? सौवाजिः॥

बाल-मनोरमा

गर्गादिभ्यो यञ् १०९१, ४।१।१०५

गर्गादिभ्यो यञ्। गार्ग्यो वात्स्य इति। गर्गस्य गोत्रपत्यमिति, वत्सस्य गोत्रापत्यमिति च विग्रहः। "रामो-जामदग्न्यः", "पाराशर्यो व्यास" इत्यादौ त्वनन्तरापत्ये गोत्रात्वारोपाद्यञित्याहुः।

तत्त्व-बोधिनी

गर्गादिभ्यो यञ् ९१२, ४।१।१०५

गर्गादिभ्यो। गर्ग, वत्स, व्याघ्रपाद, पुलिस्त, बभ्रु, मण्डु, वतण्ड, कपि, कत शकल, कण्व, अगस्ति, कुण्डिन, यज्ञवल्क, पराशर, जमदग्नि--इत्यादि। कथं तर्हि "रामो जामदग्न्यः"इति। अनन्तरापत्ये ह्रयम्। सत्यम्। अनन्तरेऽपि गोत्रत्वारोपाद्बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

मधुबभ्व्रोर् ब्राह्मणकौशिकयोः ४।१।१०६

मधुशब्दाद् बभ्रुशब्दाच् च गोत्रापत्ये यञ् प्रत्ययो भवति यथासङ्ख्यम् ब्राह्मणे कौशिके वाच्ये। माध्व्यो भवति बाह्मणः चेत्। माधव एव अन्यः। बाभ्रव्यो भवति कौशिकश्चेत्। बाभ्रव एव अन्यः। बभ्रुशब्दो गर्गादिषु पठ्यते, ततः सिद्धे यञि कौशिके नियमार्थं वचनम्। गर्गादिषु पठो ऽप्यन्तर्गणकार्यार्थः, सर्वत्र लोहितादिकतन्तेभ्यः ४।१।१८ इति। बाभ्रव्यायणी।

न्यासः

मधुबभ्व्रोब्रराआहृणकौशिकयोः। , ४।१।१०६

यदि तर्हि बभ्रुशब्दस्य गर्गादिपाठादेव सिद्धे कौशिके नियमार्थमिह ग्रहणम्, एवं सति नार्थो गर्गादिषु पाठेन, कौशिके विध्यर्थमेव ग्रहणमस्तु, नास्य? इत्यत आह-- "गर्गादिषु पाठोऽपि" इत्यादि। गर्गादिषु पाठोऽपि कत्र्तव्यः। "सर्वत्र लोहितर" ४।१।१८ इत्यादिनान्तर्गणकार्य ष्फो यथा स्यात्। अथ गण ए कौशिकग्रहणं कस्मान्न कृतम्, कः पुनरेवं सति गुणो भवति, सुत्रे पुनर्बभ्रुग्रहणं न कत्र्तव्यं भवति? सत्यमेतत्; "अपाणिनीयत्वात्" गणस्य। नैवं चाकरणे पाणिनिरुपालम्भमर्हति। गणकारेणापि हि किं न कृतम्? वैचित्र्यार्थम्। विचित्रा हि गणस्य कृतिर्गणकारेण॥

बाल-मनोरमा

मधुबभ्व्रोब्रराआहृणकौशिकयोः १०९३, ४।१।१०६

मधुबभ्व्रोः। शेषपूरणेन सूत्रं व्याचष्टे--गोत्रे यञिति। मधुशब्दाद्बभ्रुशब्दाच्च गोत्रापत्ये यञ्स्याद्ब्राहृणे कौशिके च यथासङ्ख्यं वाच्ये इत्यर्थः। लोहितादिकार्यमिति। ष्फ इत्यर्थः। लोहितादिर्गर्गाद्यन्तर्गणै इति भावः। बाभ्रव्यायणीति। बभ्रोर्गोत्रापत्यं स्त्रीति विग्रहः। गर्गादियञि बाभ्रव्यशब्दात् "सर्वत्र लोहितादिकतन्तेभ्यः" इति ष्फः।आयन्नादेशः, षित्वान्ङीषिति भावः।

तत्त्व-बोधिनी

मधुबभ्व्रोब्रराआहृणकौशिकयोः ९१४, ४।१।१०६

गोत्रे यद्यञन्तमित्यादि। प्रवराध्यायप्रसिद्धगोत्रवाचिनौ केवलौ यञञौ न भवत इति "गोत्र "इत्यनेन तदन्तं विशेषितम्। तदवयवयोरिति। निर्दिश्यमानस्यादेशा भवन्ती"ति भावः। प्रवराध्यायेति। एतच्च "स्त्रीपुंसाभ्या"मिति सूत्रे "लौकिकष्य गोत्रस्य ग्रहण"मिति भाष्यमुपादाय कैयटेनोक्तमिति भावः। लोहितादीति। "सर्वत्र लोहितादी"त्यादिना ष्फः। ष्फेणोक्तेऽपि

स्त्रीत्वे षित्त्वासामर्थ्यान्ङीषित्याशयेनाह---बाभ्रव्यायणीति। गर्गादिगण एव "बभ्रुः, कौशिक"इति पाठ()म्, एवं हि द्विर्बभ्रुग्रहणं न कर्तव्यं भवतीति हरदत्तादयः।

---

सूत्रम्

काशिका-वृत्तिः

कपिबोधादाङ्गिरसे ४।१।१०७

कपिबोधशब्दाभ्याम् आङ्गिरसे ऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति। काप्यः। बौध्यः। आङ्गिरसे इति किम्? कापेयः। बौधिः। कपिशब्दो गर्गादिषु पठ्यते। तस्य नियमर्थं वचनम्, आङ्गिरसे यथा स्यात्। लोहितादिकार्यार्थं गणे पाठः। काप्यायनी।

न्यासः

कपिबोधादाङ्गिरसे। , ४।१।१०७

"कापेयः"इति। "इतश्चामित्रः" ४।१।१२२ इति ढञक्। यदि कपिशब्दो गर्गादिषु पठ()ते, नियमार्थं त्विह तस्य ग्रहणम्, एवं सत्याङ्गिरसे विध्यर्थमेवास्य ग्रहणमेवास्तु,नार्थो गर्गादिषु पाठेन? इत्यत आह-- "लोहितादिकार्यार्थश्च" इत्यादि॥

बाल-मनोरमा

कपिबोधादाङ्गिरसे १०९४, ४।१।१०७

कपिबोधादा। गोत्रे यञ्स्यादिति। शेषपूरणमिदं। कपिशब्दाद्बोधशब्दाच्च आङ्गिरसात्मके गोत्रे गम्ये यञ्स्यादित्यर्थः। कापेय इति। अत्र गोत्रस्य अनाङ्गिरसत्वाद्यञभावे "इतश्चानिञः" इति ढक्। बौधिरिति। अत्राप्यनाङ्गिरसत्वाद्यञभावे ऋष्यणं बाधित्वा बाह्वादित्वादिञिति भावः। कपेर्गर्गादौ पाठेऽपि आङ्गिरस एवेति नियमार्थं ग्रहणम्। तस्य गर्गादौ पाठस्तु लोहितादिकार्यार्थः। काप्यायनी। बोधशब्दात्तु अप्राप्ते विधिः।

तत्त्व-बोधिनी

कपिबोधादाङ्गिरसे ९१५, ४।१।१०७

कापेय इति। "इतश्चऽनिञः"इति ढक्। कपेर्गर्गादिगणे पाठो लोहितादिकार्यार्थः। तेन कात्यायनीति सिध्यति। बौधिरिति। अनृषित्वादि"ञ्, बाह्वादित्वाद्वा।

---

सूत्रम्

काशिका-वृत्तिः

वतण्डाच् च ४।१।१०८

आङ्गिरसे इत्येव। वतण्डशब्दादाङ्गिरसे ऽपत्यविशेषे गोत्रे यञ् प्रत्ययो भवति। वातण्ड्यः। आङ्गिरसे इति किम्? वातण्डः। किम् अर्थम् इदं यावता गर्गादिष्वयं पठ्यते? शिवादिषु अपि अयं पठ्यते। तत्र आङ्गिरसे शिवाद्यणो ऽपवादार्थं पुनर् वचनम्। अनाङ्गिरसे तु उभयत्र पाठसामर्थ्यात् प्रत्ययद्वयम् अपि भवति। वातण्ड्यः, वातण्डः।

न्यासः

वतण्डाच्च। , ४।१।१०८

किमर्थमिदम्? अनर्थकमिदमित्यर्थः। किं कारणमित्याह-- "यावता" इत्यादि। "शिवादिष्वपि" इत्यादिना प्रयोजनं दर्शयति। यदीदं नोच्येत, ततो गर्गादिपाठादाङ्गिरसे यथा यञ् भवति, तथा शिवादिषु पाठादणपि स्यात्। तस्मादाङ्गिरसे यञा शिवाद्यणो बाधनं यथा स्यादित्येवमर्थं पुनर्वचनम्। अथ गर्गादिपाठादेव सिद्धे, आङ्गिरसे नियमार्थमेतदिति कस्मान्नोक्तम्? अशक्यमेवं वक्तुम्; प्रयोजनाभावे हि नियमार्थं भवति। इह चास्ति प्रयोजनम्, तच्च दर्शितमेव॥

बाल-मनोरमा

वतण्डाच्च १०९५, ४।१।१०८

वतण्डाच्च। वतण्डस्य गर्गादौ शिवादौ च पाठाद्यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थमिदम्।

तत्त्व-बोधिनी

वतण्डाच्च ९१६, ४।१।१०८

वतण्डाच्च। यञणोः प्राप्तयोराङ्गिरस यञेवेति नियमार्थं सूत्रम्।

---

सूत्रम्

काशिका-वृत्तिः

लुक् स्त्रियाम् ४।१।१०९

आङ्गिरसे इत्येव। वतण्डशब्दादाङ्गिरस्यां स्त्रियां यप्रत्ययस्य लुक् भवति। लुकि कृते शार्ङ्गरवादिपाठान् ङीन् भवति। वतण्डी। आङ्गिरसे इति किम्? वातण्ड्यायनी। शिवाद्यणि तु वातण्डी।

न्यासः

लुक् स्त्रियाम्। , ४।१।१०९

"वातण्ड()आयनी" इति। लोहितादिलक्षणः ष्फः॥

---

सूत्रम्

काशिका-वृत्तिः

अश्वादिभ्यः फञ् ४।१।११०

आङ्गिरस इति निवृत्तम्। अश्वादिभ्यः गोत्रापत्ये फञ् प्रत्ययो भवति। आश्वायनः। आश्मायनः। ये त्वत्र प्रत्ययान्ताः पठ्यन्ते तेभ्यः सामार्थ्याद् यूनि प्रत्ययो विज्ञायते। अश्व। अश्मन्। शङ्ख। बिद। पुट। रोहिण। खर्जूर। खर्जूल। पिञ्जूर। भडिल। भण्डिल। भडित। भण्डित। भण्डिक। प्रहृत। रामोद। क्षत्र। ग्रीवा। काश। गोलाङ्क्य। अर्क। स्वन। ध्वन। पाद। चक्र। कुल। पवित्र। गोमिन्। श्याम। धूम। धूम्र। वाग्मिन्। विश्वानर। कुट। वेश। शप आत्रेये। नत्त। तड। नड। ग्रीष्म। अर्ह। विशम्य। विशाला। गिरि। चपल। चुनम। दासक। वैल्य। धर्म। आनडुह्य। पुंसिजात। अर्जुन। शूद्रक। सुमनस्। दुर्मनस्। क्षान्त। प्राच्य। कित। काण। चुम्प। श्रविष्ठा। वीक्ष्य। पविन्दा। आत्रेय भारद्वाजे। कुत्स। आतव। कितव। शिव। खदिर। भारद्वाज आत्रेये।

न्यासः

अ�आआदिभ्यः फञ्। , ४।१।११०

"ये त्वत्र" इत्यादि। "एको गोत्रे" ४।१।९३ इति वचनाद्गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो नोपपद्यते। तत्र सामर्थ्यादगोत्राधिकारेऽपि ये गोत्रप्रत्ययान्ताः पठ()न्ते तेभ्यः "गोत्राद्यून्यस्त्रियाम्" ४।१।९४ इति यूनि प्रत्ययो विज्ञायते। "शप आत्रेये" इति। शपशब्दात् फञात्त्रेयश्चेद्भवति शापायन आत्त्रेयः, अन्यत्र शापिः। वैल्यशब्दो गोत्रप्रत्ययान्तः, तस्माद्यूनि भवति। विलिर्नाम राजर्षिः, तस्यापत्यं गोत्रम्, "वृद्धेत्कोसलाजादाञ् ञ्यङ्" ४।१।१६९, वैल्यः, तस्यापत्यं वैल्यायनो युवा। आनडुह्यशब्दोऽपि गोत्रप्रत्ययान्तो गर्गादिषु, य()ञन्तत्वात्; तस्मादपि यून्येव फञ्-- आनडुह्यायनो युवा। स्त्रियां ढगेव भवति-- जाताया अपत्यं जातेयः। "आत्त्रेय भारद्वाजे"इति। आत्त्रेयशब्दात् फञ् भारद्वाजश्चेदपत्यार्थो भवति-- आत्त्रेयायणो भारद्वाजः, अन्यत्र आत्त्रेयिः। "भारद्वाज आत्त्रेये" इति। भारद्वाजशब्दात् फञ् आत्त्रेयेऽपत्यविशेषे-- भारद्वाजायन आत्त्रेयः, अन्यत्र -- ऋष्यण्॥

बाल-मनोरमा

अ�आआदिभ्यः फञ् १०९७, ४।१।११०

अ()आआदिभ्यः। गोत्रे इति। शेषपूरणमिदम्। "आङ्गिरसे" इति निवृत्तम्। आ()आआयन इति। अ()आस्य गोत्रापत्यमिति विग्रहः। इञपवादः फञ्। पुंसि जाते इति। गणसूत्रम्। प्रकृतिविशेषणमिति। पुंसि विद्यमानो यो जातशब्दस्तस्माद्गोत्रे फञित्यर्थः। जातेय इति। स्त्रीब्यो ढक्"।

तत्त्व-बोधिनी

अ�आआदिभ्यः फञ् ९१८, ४।१।११०

अ()आआदिभ्यः। गोत्र इति। इह गणे बैल्य, अनाडुह्य, आत्रेय---इति गोत्रप्रत्ययान्तारुआयः पठ()न्ते तेभ्यस्तु यून्येव। "एको गोत्रे", "गोत्राद्यूनी"ति वचनात्ष। तत्र बिलिर्नाम राजर्षिस्ततो "वृद्धेत्कोसले"ति ञ्यङ्। आनडुह्यशब्दो गर्गादिञन्तः। "आत्रेय"शब्दो डगन्त इति ज्ञेयः। पुंसि जात इति। गणसूत्रमिदम्। जातशब्दे पुंसि विद्यमाने फञित्यर्थः। कस्मादित्याकाङ्क्षायामर्थाज्जातशब्दादिति लभ्यते। जाताया इति। लिङ्गविशिष्टपरि भाषया, एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिः।

---

सूत्रम्

काशिका-वृत्तिः

भर्गात् त्रैगर्ते ४।१।१११

भर्गशब्दादपत्ये विशेषे त्रैगर्ते गोत्रे फञ् प्रत्ययो भवति। भार्गायणो भवति त्रैगर्तः चेत्। भार्गिः अन्यः।

न्यासः

भर्गात्त्रैगत्ते। , ४।१।१११

बाल-मनोरमा

भर्गात्त्रैगर्ते १०९८, ४।१।१११

भर्गात्त्रैगत्रे। इदमपि गणसूत्रम्। त्रिगर्तो नाभ भर्गस्य पुत्रः। तस्यापत्यं त्रैगर्तः। ऋष्यण्। तस्मिन्गोत्रे भर्गात्फञ्।

---

सूत्रम्

काशिका-वृत्तिः

शिवाऽदिभ्यो ऽण् ४।१।११२

गोत्रे इति निवृत्तम्। अतः प्रभृति सामान्येन प्रत्ययाः विज्ञायन्ते। शिवादिभ्यो ऽपत्ये अण् प्रत्ययो भवति। यथायथम् इञादीनाम् अपवादः। शैवः। प्रौष्ठः। तक्षन् शब्दो ऽत्र पठ्यते कारिलक्षणमुदीचामिञं बाधितुम्। ण्यत्प्रत्यय्स्य तु बाधो निष्यते। ताक्ष्णः, ताक्षण्यः। गङ्गाशब्दः पठ्यते तिकादिफिञा शुम्रादिढका च समावेशार्थम्। तेन त्रैरूप्यं भवति। गाङ्गः, गाङ्गायनिः , गाङ्गेयः। विपाशशब्दः पठ्यते कुञ्जादिलक्षणेन च्फञा समावेशार्थम्। वैपाशः, वैपाशायन्यः। शिव। प्रौष्ठ। प्रौष्ठिक। चण्ड। जम्भ। मुनि। सन्धि। भूरि। कुठार। अनभिम्लान। ककुत्स्थ। कहोड। लेख। रोध। खञ्जन। कोहड। पिष्ट। हेहय। खञ्जार। खञ्जाल। सुरोहिका। पर्ण। कहूष। परिल। वतण्ड। तृण। कर्ण। क्षीरह्रद। जलह्रद। परिषिक। जटिलिक। गोफिलिक। बधिरिका। मञ्जीरक। वृष्णिक। रेख। आलेखन। विश्रवण। रवण। वर्तनाक्ष। पिटक। पिटाक। तृक्षाक। नभाक। ऊर्णनाभ। जरत्कारु। उत्क्षिपा। रोहितिक। आर्यश्वेत। सुपिष्ट। खर्जूरकर्ण। मसूरकर्ण। तूणकर्ण। मयूरकर्ण। खडरक। तक्षन्। ऋष्टिषेण। गङ्गा। विपाश। यस्क। लह्य। द्रुघ। अयःस्थूण। भलन्दन। विरूपाक्ष। भूमि। इला। सपत्नी। द्व्यचो नद्याः। त् रिवेणी त्रिवणं च।

लघु-सिद्धान्त-कौमुदी

शिवादिभ्योऽण् १०२०, ४।१।११२

अपत्ये। शैवः। गाङ्गः॥

न्यासः

शिवादिभ्योऽण्। , ४।१।११२

"यथायथम्" इति। यथास्वम्। यस्य य इञादिरात्मीयप्रत्ययस्तदपदादोऽण् विधीयते। अथाण्ग्रहणं किमर्थम्, न "शिवादिभ्यः" इत्येवोच्येत? "शिवादिभ्यः" एतावत्युच्यमाने यथाविहितमिञादिरेव प्रत्ययो मा भूत्, अणेव यथा स्यादित्येवमर्थमिति चेत्; नैतदस्ति; यथाविहितमिञादीन् प्रत्ययान् प्रत्येतद्वचनमनर्थकम्; विनाप्यनेन तत्सिद्धेः। तस्मादन्तरेणाप्यण्ग्रहणमणेव भविष्यति। ननु चासत्यण्ग्रहणे फञः प्रकृतत्वात् तस्यैव विधिर्विज्ञायते? नैतदस्ति; यदि हि शिवादिभ्यः फञ् विधातुमिष्टः स्यात्, ततोऽ()आआदिष्वेव तेषां पाठं कुर्यात्। इदं तर्हि प्रयोजनम्-- अयमृष्टिषेणशब्दः शिवादिषु पठ()ते, तस्य "सेनान्तलक्षणकारिभ्यश्च" ४।१।१५२ इति ण्यप्रत्ययः प्राप्नोति। तत्रासत्यण्ग्रहणे पुनर्विधानमिदं तद्बाधने कृतार्थमिति ततो यथाविहितमिञेव स्यात्, नाण्; ततोऽणेव यथा स्यादित्यण्ग्रहणम्। "उदीचामिञं बाधितुम्" इति। "उदीचाम्" ४।१।१५३ इत्यनेनेञ् प्राप्नोति, ततस्तं बाधितुं तक्षन्शब्दोऽतर् पठ()ते। तथा तर्हि तक्षन्शब्दस्यात्र पाठादुदीचामिञ् बाध्यते, तथा "सेनान्तलक्षणकारिभ्यश्च" ४।१।१५२ इति यो ण्यस्तस्यापि बाधा प्राप्नोति। ततश्च "ताक्षण्यः" इति न सिध्यति? इत्याह-- "ण्यप्रत्ययस्य तु बाधो नेष्यते" (इति)। कथमनिष्यमाणमपि न भवति? सुपिष्टशब्दादिभिः साहचर्यात्। इह यस्तक्षञ्शब्दः सुपिष्टमयूरखरदूरतक्षन्नित्येवं सुपिष्टादिभिः सह पठ()ते, यथा तेषाञ्चेञपवादार्थोऽत्र पाठः, तैः साहचर्यादस्यापीञपवादार्थ एव पाठो विज्ञास्यते। तत्र शिवादीनां प्राग् भूरिशब्दादिञपवादार्थं वचनम्। भूरि, सन्धि, मुनि-- इत्येतेषां "इतश्चानिञः" ४।१।१२२ इति ढकि प्राप्ते। कुठार, अनभिम्लान-- इत्येतयोः ककुत्स्थ-- इत्येमादीनां प्राग् जरत्कारुशब्दादिञो बाधनार्थम्। जरत्कारुप्रभृतीनां प्राक् सुपिष्टशब्दात् "स्त्रीभ्यो ढक्" ४।१।१२० इति ढकि प्राप्ते। सुपिष्टादीनां प्राक् तक्षञ्शब्दादिञः। तक्षन्नित्यस्य कारिलक्षणोदीचामिञः। ऋष्टिषेणस्य सेनान्तलक्षमस्य ण्यस्य च बाधनार्थम्। गङ्गादिपाट्()शब्दयोर्यस्मिन्नप्राप्त इह पाठः स वृत्तिकारेणैव व्याख्यातः। यस्कादिभ्यः प्राग् भूमिशब्दादिञि प्राप्ते। भूमिशब्दस्य "इतश्चानिञः" ४।१।१२२ इति ढकि। इलाशब्दस्यापि "{द्व्यचः इति सूत्रम्} द्व्यचश्च" ४।१।१२१ इति ढकि। एमेव सपत्नीशब्दस्यापि "स्त्रीभ्यो ढक्"

४।१।१२० इति ढक्येव। "द्व्यचो नद्याः" इति। नदीवाचका ये द्व्यचस्तेभ्योऽण् भवति, सन्ध्या-- सान्ध्यम्, कुल्या-- कौल्यम्। ननु चात्र तन्नामिकोऽणस्त्येव? सत्यमस्ति; स तु "द्व्यचः" ४।१।१२१ इति ढका बाध्यते। तस्मात् तद्बाधनार्थं वचनम्। "त्रिवेणी त्रिवणञ्च" इति। त्रिवेणीशब्दः प्रत्ययमुत्पादयति, त्रिवणञ्चापद्यते। त्रिवेण्या अपत्यं त्रैवणः॥

बाल-मनोरमा

शिवादिभ्योऽण् १०९९, ४।१।११२

शिवादिभ्योऽण्। निवृत्तमिति। वृत्तिकैयटयोस्थोक्तत्वादिति भावः। "यूनि लु"गिति सूत्रस्य भाष्यकैयटयोस्तु गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इति लभ्यते। तत्तु मतान्तरमित्येके। तदेव युक्तमिति शब्देन्दुशेखरे प्रपञ्चितम्।

तत्त्व-बोधिनी

शिवादिभ्योऽण् ९११, ४।१।११२

शिवादिभ्योऽण्। ननु विशेषविहितानिञादीन्बाधित्वाऽणेवारम्भसामथ्र्याद्भविष्यति किमनेनाऽण्ग्रहणेन। अत्राहुः---- ऋषिषेणशब्दोऽत्र गणे पठ()ते, ततः प्राप्तिमित्रं बाधित्वा परत्वात् "सेनान्तलक्षणे"ति ण्ये प्राप्ते इह पाठसामथ्र्याद्यथाप्राप्तप्रत्यय इञेव स्यान्न त्वण्। तथा चाऽत्राष()ण्?ग्रहणमावश्यकमित्येके। अणधिकारादणेव स्यान्नाऽन्य इत्यण्ग्रहणं स्पष्टप्रतिपत्त्यर्थमित्यन्ये। शिब, ककुत्स्थ, वतण्ड, जरत्कारु, विपाट्। तक्षन्, विश्रवण, रवण, ऋषिषेण, विरूपाक्षेत्यादि। गोत्र इति निवृत्तमिति। एतच्च वृत्तौ कैयटे च स्थितम्। यद्यपि "गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारः"इति "यूनि लु"गिति सूत्रस्थभाष्यकैयटाभ्यां लभ्यते, तथापि तन्मतान्तरमिति भावः। एवं चेतः प्रभृत्यपत्यसामान्ये प्रत्यया भवन्तीति स्थितम्। शुभ्रादत्वान्नित्यं ढकि प्राप्ते जरत्कारुशब्दोऽत्रणर्थं पठ()ते। जारत्कारवः। ढकि तु "ढे लोपोऽकद्र्वाः"इत्युलोपः। जारत्कारेयः। कुञ्जादित्वात् "गोत्रे कुञ्जादिभ्यः"इति नित्यं च्फञि प्राप्ते विपाट्शब्दोऽत्राणर्थं पठ()ते। वैपाशः। वैपाशायन्यः। "सेनान्तलक्षणे"ति ण्यप्रत्यये "उदीचामि"तीञि त प्राप्ते तक्षन्शब्दोऽत्राऽणर्थं पठ()ते, ण्यप्रत्ययेन समावेशोऽत्रेष्यते, न त्विञा। ताक्ष्णः। ताक्षण्यः। विश्रवणरवणशब्दावत्र पठ()ते, तौ च विश्रवःशब्दस्यादेशौ। विश्रवसोऽपत्यं--वैश्रवणः। रावणः।

---

सूत्रम्

काशिका-वृत्तिः

अवृद्धाभ्यो नदीमानुषीभ्यस् तन्नामिकाभ्यः ४।१।११३

वृद्धिर् यस्य अचाम् आदिस् तद् वृद्धम् १।१।७२। अवृद्धाभ्यः इति शब्दधर्मः, नदीमानुषीभ्यः इति अर्थधर्मः, तेन अभेदात् प्रकृतयो निर्दिश्यन्ते। तन्नामिकाभ्यः इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्शः। अवृद्धानि यानि नदीनां मानुषीणां च नामधेयानि, तेभ्यो ऽपत्ये अण् प्रत्ययो भवति। ढको ऽपवादः। यमुनाया अपत्यं यामुनः। इरावत्याः अपत्यम् ऐरावतः। वैतस्तः। नार्मदः। मानुषीभ्यः खल्वपि शिक्षितायाः अपत्यं शैक्षितः। चिन्तितायाः अपत्य चैन्तितः। अवृद्धाभ्यः इति किम्? चन्द्रभागायाः अपत्यं चान्द्रभागेयः। वासवदत्तेयः। नदीमानुषीभ्यः इति किम्? सौपर्णेयः। वैनतेयः। तन्नामिकाभ्यः इति किम्? शोभनायाः, शौभनेयः।

न्यासः

अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः। , ४।१।११३

शास्त्रान्तरे परिभाषितमपि वृद्धमस्ति-- अपत्यमन्तर्हितं वृद्धमिति; इह शास्त्रेऽपि परिभाषितं वृद्धमस्ति

"वृद्धिर्यस्याचामादिस्तद्()वृद्धम्" १।१।७२ इति, अतो वृद्धप्रतिषेधे कस्यचित् सन्देहः स्यात्-- कस्य वृद्धस्यायां प्रतिषेधः, किंस्वित् यदिह परिभाषितं तस्यायं प्रतिषेधः? उत यच्छास्त्रान्तरेण परिभाषितं तस्येति? अतस्तन्निरासाय "वृद्धिर्यस्य" ९१।१।७३) इत्यादिनेह शास्त्रे यत् परिभाषितं तस्यायं प्रतिषेध इति दर्शयति। कुतः पुनरेतदवसितम्-- इह वृद्धं यत् परिभाषितं तस्यायं प्रतिषेध इति दर्शयति। कुतः पुनरेतदवसितम्-- इह वृद्धं यत् परिभाषितं तस्यायं प्रतिषेध इति? नदीमानुषीनामधेयस्य गोत्रप्रत्ययान्तस्यासम्भवात्। नदीग्रहणे त्विह लौकिक्येव नदी गृह्यते, न तु पारिभाषिकी। कुत एतत्? लौकिकार्थवृत्तिना मानुषीशब्देन साहचर्यात्। अथ स्वरूपग्रहणमेव नदीमानुषीशब्दयोः कस्मान्न भवति? वृद्धप्रतिषेधात्। स्वरूपग्रहणे हि वृद्धप्रतिषेधोऽनर्थकः स्यात्; प्रसङ्गाभावात्। बहुवचननिर्देशाच्च न स्वरूपग्रहणम्। स्वरूपग्रहणे ही नदीमानुषीशब्दयोर्द्वित्वाद्()द्विचनेनैव निर्देशं कुर्यात्। "अवृद्धाभ्यिति शब्दधर्मः स्यात्। यदि तर्ह्यर्थधर्मोऽयम्, कथं नदीमानुषीभ्य इत्यनेन प्रकृतयो निर्दिश्यन्ते, अर्थधर्म एव ह्येवं निर्दिष्टो भवति, न प्रकृतयः? इत्यत आह-- "तेन" इत्यादि। तेनार्थभेदोपचारात्। नदीमानुष्यभिधायिन्यः प्रकृतयो निर्दिश्यन्ते। "प्रत्ययप्रकृतिः" इति। प्रत्ययस्य प्रकृतिरिति षष्ठीसमासः। "ढकोऽपवादः" इति। अवृद्धादीनां नदीनां मनुषीणां नामधेयानां स्त्रीप्रत्ययान्तत्वात्। "वैतस्तः, नार्मदः" इति। वितस्तानर्मदाशब्दाभ्यामण्। "शैक्षितः" इति। शिक्षिताशब्दात्। "सौपर्णेयः, वैनतेयः" इति। सुपर्णाविनताशब्दौ पक्षिणीनामधेये, न नदीमानुष्यौ। "शौभनेय-" इति। शोभनाशब्दो वत्र्तते नदीमानुष्यर्थः, न तु संज्ञात्वेन, किं तर्हि? विशेषणत्वेन॥

बाल-मनोरमा

अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ११००, ४।१।११३

अवृद्धाभ्यो नदी। नदीमानुषीशब्दापेक्षमवृद्धाभ्य इति स्त्रीत्वम्। वस्तुतस्तु "अवृद्धेभ्यो नदीमानुषीनामभ्य" इत्येव सूत्रयितुमुचितमिति व्याचष्ट--अवृद्धेभ्य इत्यादि। ननु "तस्यापत्य"मित्येकसिद्धे किमर्थमिदमित्यत आह--ढकोऽपवाद इति। चिन्तिता नाम काचिन्मानुषी। वासवदत्तेय इति। वासवदत्ता नाम काचिन्मनुष्यस्त्री। तस्या अपत्यमिति विग्रहः। वृद्धसंज्ञकत्वादणभावे ढगिति भावः। वैनतेय इति। विनताया अपत्यमिति विग्रहः। विनता नाम गरुडमाता, सा न मानुषी, नापि नदीति भावः। शौभनेय इति। शोभनाशब्दोऽयं न नदीमानुषीनामेति भावः।

तत्त्व-बोधिनी

नदीमानुषीब्यस्तन्नामिकाभ्यः ९२०, ४।१।११३

अवृद्धाभ्यो। "अवृद्धेभ्यो नदीमानुषीनामभ्यः"इत्येव सूत्रयितुं युक्तमित्याशयेन व्याचष्टे--अवृद्धेभ्य इत्यादिना। आत्रेय इति। परत्वादयमृष्यणं बाधत ऐति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ऋष्यन्धकवृष्णिकुरुभ्यश् च ४।१।११४

ऋषयः प्रसिद्धा वसिष्ठादयः। अन्धकाः वृष्णयः कुरवः इति वंशाख्याः। ऋष्यादिकुर्वन्तेभ्यः प्रातिपदिकेभ्यो ऽपत्ये अण् प्रत्ययो भवति। इञो आवादः। अत्र्यादिभ्यस् तु परत्वाड् ढगादिभिरेव भवितव्यम्। ऋषिभ्यस् तावत् वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः श्वाफल्कः। रान्धसः। वृष्णिभ्यः वासुदेवः। आनिरुद्धः। कुरुभ्यः नाकुलः। साहदेवः। कथं पुनर् नित्यानां शब्दानामन्धकादिवंशसमाश्रयेण अन्वाख्यानं युज्यते? केचिदाहुः कथम् अपि काकतालीयन्यायेन कुर्वादिवंशेष्वसंकरेण एव नकुलसहदेवादयः शब्दाः सुबहवः सङ्कलिताः, तानुपादाय पाणिनिना स्मृतिरुपनिबद्धा इति।

अथवान्धकवृष्णिकुरुवंशा अपि नित्या एव, तेषु ये शब्दाः प्रयुज्यन्ते नकुलसहदेवादयः, तत्र इदं प्रत्ययविधानम् इत्यदोषः।

लघु-सिद्धान्त-कौमुदी

ऋष्यन्धकवृष्णिकुरुभ्यश्च १०२१, ४।१।११४

ऋषिभ्यः - वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः - श्वाफल्कः। वृष्णिभ्यः - वासुदेवः। कुरुभ्यः - नाकुलः। साहदेवः॥

न्यासः

ऋष्यन्धकवृष्णिकुरुभ्यश्च। , ४।१।११४

"इञोऽपवादः" इति। ननु चानकारान्तेभ्योऽत्र्यादिभ्यो ये ढगादयः प्राप्नुवन्ति तदपवाद एव युक्त इत्यत आह-- "अत्र्यादिभ्यस्तु" इत्यादि। एकेनादिशब्देन ऋषयो जातसेनादयोऽन्धकादिषु च वत्र्तमाना उग्रसेनादयः, परिगृह्न्ते, द्वितीयेन ण्यादयः प्रत्ययाः। तत्र ऋष्यणोऽवकाशः-- वासिष्ठः, "इतश्चानिञः" ४।१।१२२ इति ढकोऽवकाशः-- दौलेयः;अत्त्रिशब्दादुभयप्राप्तौ परत्वाद् ढग्भवति-- आत्त्रेयः। ऋष्यणोऽवकाशः स एव, सेनान्तलक्षमस्य ण्यस्यावकाशः-- कारिषेण्यः, हारिषेण्यः;जातसेनो नाम ऋषिः, तस्मादुभयप्राप्तौ परत्वाण्ण्यो भवति--- जातसेन्यः। अन्धकाणोऽवकाशः--वासुदेवः, ण्यस्य स एव; शूरसेनो विष्वक्सेनो नाम वृष्णिः, तस्मादुभ्यप्राप्तौ परत्वाण्ण्यो भवति-- शौरसेन्यः , वैष्वक्सेन्यः। कुर्वणोऽवकाशः--नाकुलः,ण्यस्य स एव; उग्रसेनो नामान्धकः,तस्मादुभयप्राप्तौ परत्वाण्ण्यो भवति-- औग्रसेन्यः। वृष्ण्यणोऽवकाशः-- वासुदेवः, ण्यस्य स एव; शूरसेनो विष्वक्सेनो नाम वृष्णिः, तस्मादुभयप्राप्तौ परत्वाण्ण्यो भवति-- शौरसेन्यः, वैष्वक्सेन्यः। कुर्वणोऽवकाशः--नाकुलः, ण्यस्य स एव; भीमसेनो नाम कुरुः, तस्मादुभयप्राप्तौ परत्वाण्ण्यो भवति-- भैमसेन्यः। "कथं पुनः" इत्यादि चोद्यम्। "केचिदाहुः" इत्यादि चोद्यपरिहारः। "काकतालीयम्" इति। अबुद्धिपूर्वकमित्यर्थः। "सङ्कलिताः" इति। समुच्चिताः। "नित्या एव" इति। अन्धकादीनां वंशानामनादित्वात्॥

बाल-मनोरमा

ऋष्यन्धकवृष्णिकुरुभ्यश्च ११०१, ४।१।११४

ऋष्यन्धक। प्रलीना वेदास्तपोबलवशाद्यान् अर्षन्ति=प्राप्नुवन्ति ते ऋषयः। तथा च तैत्तिरीये श्रुतम् --"अजान्ह वै पृश्नींस्तपस्यमानान्ब्राह्म स्वयम्भ्वभ्यानर्षत्, त ऋषयोऽभवन्, तदृषीणामृषित्व"मिति। अजाः=नित्याः, पृस्नयः=शुक्लाः। शुद्धा इति यावत्। तान्तपस्यमानांस्तपश्चरतः स्वयम्भु=अनादि ब्राह्म वेदः अभ्यानर्षत्। "ऋष गतौ"। आभिमुख्येन प्राप्नोत्। ते वेदस्य अर्षणादृषिशब्दवाच्या अभव"न्निति वेदभाष्यम्। "सर्बादिसमये वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा। " इति पुराणेषु प्रसिद्धं कात्यायनप्रणीतसर्वानुक्रमणिकाख्यग्रन्थेस्पष्टमेतत्। तदाह--ऋषयो मन्त्रद्रष्टार इति। अन्धकशब्देन वृष्णिशब्देन कुरुशब्देन च अन्धकादिवंश्या विवक्षिताः। ऋषिविशेषवाचिभ्योऽन्धकादिवंश्यवाचिभ्यश्चापत्ये अण् स्यादित्यर्थः। इञोऽपवादः। ऋषिभ्य उदाहरति--बासिष्ठः वै()आआमित्र इति।

अन्धकेभ्य इति। अन्धकवंश्यवाचिभ्य उदाह्रियते इत्यर्थः। वासुदेव इति। वसुदेवस्यापत्यमिति विग्रहः। आनिरुद्ध इति। अनिरुद्धस्यापत्यमिति विग्रहः। ननु शूरो नाम कश्चिद्वृष्णिवंश्यः, तस्यापत्यं शौरिः कथम्स अण्प्रसङ्गादित्यत आह--शौरिरिति त्विति। "बाह्वादित्वा"दित्यनन्तरमित्रा समाधेय"मिति शेषः। कुरुभ्य इति। कुरुवंश्यवाचिभ्य उदाह्रियते इत्यर्थः। नकुलसहदेवौ प्रसिद्धौ। नन्वत्रेरपत्यमित्यर्थे "#इतश्चानिञ" इति ढकि आत्रेय इति कथम्, ऋष्यणा इञ इव ढकोपि बाधौचित्यादित्यत आह--इञ एवेति। न तु ढक इत्यर्थः।

सूत्रम्

काशिका-वृत्तिः

मातुरुत् सङ्ख्यासंभद्रपूर्वायाः ४।१।११५

मतृशब्दात् सङ्ख्यापूर्वात् संपूर्वात् भद्रपूर्वाच् च अपत्ये अण् प्रत्ययो भवति, उकारश्च अन्तादेशः। द्वयोर् मात्रोरपत्यं द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः। उकारादेशार्थं वचनं, प्रत्ययः पुनरुत्सर्गेण एव सिद्धः। स्त्रीलिङ्गनिर्देशो ऽर्थापेक्षः, तेन धान्यमातुर् ग्रहणं न भवति। सङ्ख्यासंभद्रपूर्वायाः इति किम्? सौमात्रः।

लघु-सिद्धान्त-कौमुदी

मातुरुत्संख्यासंभद्रपूर्वायाः १०२२, ४।१।११५

संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः॥

न्यासः

मातुरुत्संख्यासम्भद्रूपर्वायाः। , ४।१।११५

"द्वैमातुरः"इति। प्राक् तद्धितार्थे विषये द्विकुः, पश्चात् तद्धितः। "साम्मातुरः" इति। पूर्वं प्रादिसमासः, पश्चात् तद्धितः।"भाद्रमातुरः" इति। पूर्वं विशेषणसमासः; ततस्तद्धितः। अथ प्रत्ययार्थं वचनं कस्मान्न भवति? इत्याह-- "प्रत्ययः पुनः" इत्यादि। उत्सर्गलक्षणेनैव "तस्यापत्यम्" ४।१।९२ इत्यनेन। ननु च संख्यादिपूर्वत्वं मातृशब्दस्य विशेषणम्, तत्र मातृशब्दापेक्षया निर्देशः क्रियमाणः पुंल्लिङ्ग एव दृश्यते, तत्कथं "संख्यासम्भद्रपूर्वायाः" इति स्त्रीलिङ्गेन निर्देशः? इत्यत आह-- "स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः" इति। मातुः शब्दस्य योऽर्थस्तदपेक्षोऽयं निर्देशः, स चार्थः स्त्रीलिङ्गः। तेन स्त्रीलिङ्गेन निर्देशः कृतः। "तेन" इत्यादिनार्थापेक्षस्य फलं दर्शयति। अर्थापेक्षे हि स्त्रीलिङ्गनिर्देशे स्त्रीलिङ्गो यस्यार्थो मातृशब्दस्य , तस्यैव ग्रहणेन भवितव्यम्, तेन धानयमातुग्र्रहणं न भवति। न हि तस्य स्त्रीलिङ्गोऽर्थः, किं तर्हि? पुंल्लिङ्गः। धान्यं मिमीते यो भृतकः स धान्यमातेत्युच्यते। "सौमात्रः" इति। प्राक् प्रादिसमासः। तत औत्सर्गिकोऽण्॥

बाल-मनोरमा

मातुरुत्सङ्ख्यासंभद्रपूर्वायाः ११०२, ४।१।११५

मातुरुत्। द्वैमातुर इति। द्वयोर्मात्रोरपत्यमिति विग्रहः। "तद्धितार्थ" इति समासः। अण्। ऋकारस्योकारः। रपरत्वम्। एवं षाण्मातुरः सांमातुर इति। समीचीना माता संमाता, संमातुरपत्यं सांमातुरः। अण् उत्। रपरत्वं। भाद्रमातुर इति। भद्रा चासौ माता चेति विग्रहः। अणादि पूर्ववत्। ननु "तस्यापत्य"मित्येव सिद्धेऽण्विधिव्र्यर्थ एवेत्यताअह--आदेशार्थं वचनमिति। उदादेशस्य अण्सन्नियोगेन विध्यर्थमित्यर्थः। ननु धान्यं यो मिमीते तस्यापि मातुग्र्रहणं कुतो न स्यात्। तथा च तत्रापि द्वैमातुरादिकं प्राप्नोतीत्यत आह--स्त्रीलिङिगनिर्देशीऽर्थापेक्ष इति। मातृगतं स्त्रीत्वं शब्दे आरोप्य "सङ्ख्यासम्भद्रपूर्वाया" इति निर्दिश्यते। अतः स्त्रीलिङ्गस्य मातृशब्दस्य जननीवाचकस्य ग्रहणमित्यर्थः। तेन धान्यमातुर्नेति। अत्र मातृशब्दस्य परिच्छेत्तृवाचिनः पुंलिङ्गत्वादिति भावः।

सौमात्र इति। सुमातुरपत्यमित्यर्थे "तस्यापत्य"मित्यण्। सङ्ख्यासम्भद्रपूर्वत्वाऽभात्वात् नायमण्, उत्त्मपि तत्सन्नियोगशिष्टत्वान्नेति भावः। ननु द्वैमात्रेय इति कथम्, सङ्ख्यापूर्वकतया अण उत्त्वस्य च दुर्वारत्वादित्यत आह--शुभ्रादित्वादिति। "शुब्राआदिभ्यश्चे"ति ढकि रूपमित्यर्थः।

तत्त्व-बोधिनी

मातुरुत्सङ्ख्यासंभद्रपूर्वायाः ९२१, ४।१।११५

द्वैमातुर इति। "तद्धितार्थ"इत्यादिना समासः। अत्र "द्वयोर्मात्रोरपत्य"मिति विग्रहो, न तु "द्विमात्रोरपत्य"मिति। "दिक्संख्ये संज्ञाया"मिति नियमेनाऽसंज्ञायां समासाऽसंभवात्। धान्यमातुर्नेति। "अभिव्यक्तपदार्था:"इत्यनेन जननीवाचिना एव ग्रहणे सिद्धेऽपि तस्य स्पष्टप्रतिपत्त्यर्थः स्त्रीलिङ्गनिर्देश इति भावः। "अभिव्यक्ते"त्यस्याऽनित्यताया ज्ञापनार्थ इति त्वन्ये।

---

सूत्रम्

काशिका-वृत्तिः

कन्यायाः कनीन च ४।१।११६

कन्याशब्दादपत्ये ऽण् प्रत्ययो भवति। ढको ऽपवादः। तत् सन्नियोगेन कनीनशब्द आदेशो भवति। कन्यायाः अपत्यं कानीनः कर्णः। कानीनो व्यासः।

लघु-सिद्धान्त-कौमुदी

कन्यायाः कनीन च १०२४, ४।१।११६

चादण्। कानीनो व्यासः कर्णश्च॥

न्यासः

कन्यायाः कनीन च। , ४।१।११६

बाल-मनोरमा

कन्यायाः कनीन च ११०३, ४।१।११६

कन्यायाः क। "कनीने"ति लुप्तप्रथमाकम्। ढक इति। "स्त्रीभ्यो ढ"हिति विहितस्येत्यर्थः। कनीनादेशश्चेति। "प्रकृते"रिति शेषः। भारते व्यासः कर्णश्च कन्यायाः पुत्रौ इति प्रसिद्धम्। ननु कन्याया अप्रादुर्भूतयौवनत्वात्पुंसंयोगाऽभावात्कथमपत्यसम्बन्ध इत्यत आहानूढाया इति। अलब्धविवाहाया इत्यर्थः। एतच्च भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

कन्यायाः कनीन च ९२३, ४।१।११६

कन्यायाः। ननु कन्या ह्क्षतयोनिः, तस्याश्चाऽपत्यसंभव एव नास्तीत्याशङ्क्याह---अनूढाया इथि। अविवाहिताया इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

विकर्णशुङ्गछङ्गलाद् वत्सभरद्वाजात्रिषु ४।१।११७

विकर्णशुङ्गछङ्गलशब्देभ्यः यथासङ्ख्यं वत्सभरद्वाजात्रिषु अपत्यविशेषेषु अण् प्रत्ययो भवति। वैकर्णो भवति

वात्स्यश्चेत्। वैकर्णिः अन्यः। शौङ्गो भवति भारद्वाजश्चेत्। शौङ्गिः अन्यः। छागलो भवति आत्रेयश्चेत्। छागलिः अन्यः। शुङ्गाशब्दं स्त्रीलिङ्गमन्ये पठन्ति, ततो ढकं प्रत्युदाहरन्ति शौङ्गेयः इति। द्वयम् अपि च एतत् प्रमाणम्, उभयथा सूत्रप्रणयनात्।

न्यासः

विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्त्रिषु। , ४।१।११७

अत्र वत्सभरद्वाजास्त्रिशब्दा वात्स्यभारद्वाजात्त्रेयेषु गोत्रविशेषेषु लब्धवृत्तय उपात्ता इति। अत एवाह-- "वैकर्णो भवति वात्स्यश्चेत, शौङ्गो भवति बारद्वाजश्चेत्, चागलो भवत्यात्त्रेयश्चेत्" इति। सा पुनस्तेषां गोत्रापत्ये वृत्तिः कार्ये कारणीपचाराद्वेदितव्या। "द्वयमपि चैतत् प्रमाणम्" इति। कथं पुनः परस्परविरुद्धमपि प्रमाणं भवति? इत्याशङ्क्याह-- "उभयथा ह्येतत् सूत्रमाचार्येण प्रणीतम्, तस्मात् को विरोधः॥

बाल-मनोरमा

विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजाऽत्रिषु ११०४, ४।१।११७

विकर्ण। वत्सादिशब्दैस्तद्वंश्या विवक्षिताः। विकर्ण, शुङ्ग, छगल एभ्योऽण् स्यात्, वत्संवश्ये भरद्वाजवंश्येऽत्रिवंश्ये चापत्ये इत्यर्थः। एतेन वत्सादीनां विकर्ण, शुङ्ग, छगल एभ्योऽण् स्यात्, वत्सवंश्ये भरद्वाजवंश्येऽत्रिवंश्ये चापत्ये इत्यर्थः। एतेन वत्सादीनां मूलपुरुषत्वाद्विकर्णादीन्प्रत्यपत्यत्वाऽसम्भव इति निरस्तम्। "विकर्णादिभ्यो वात्स्यादिष्वेव ऋष्य"णिति नियमार्थं सूत्रं।

तत्त्व-बोधिनी

विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजाऽत्रिषु ९२४, ४।१।११७

विकर्ण। वात्स्यादीनामपत्यप्रत्ययान्तानां द्वन्द्वे "यञञोश्च"

"अत्रिभृगकुत्से "ति सूत्राभ्यामपत्यप्रत्ययस्य लुक्। न चात्र वत्सादीनामेव द्वन्द्वोऽस्त्विवति सङ्क्यं, मूलभूतानां तेषां विकर्मादीन्प्रत्यपत्यत्वाऽभावादतो व्याचष्टे---वात्स्य इत्यादि। "युगपदधिकरणवचनतायां बहुत्वमस्ती"ति "शरद्वच्छुनक"सूत्र एवोक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

पीलाया वा ४।१।११८

तन्नामिकाणो बाधके द्व्यच इति ढकि प्राप्ते अण् प्रत्ययः पक्षे विधीयते। पीलायाः अपत्ये वा अण् प्रत्ययो भवति। पीलायाः अपत्यं पैलः, पैलेयः।

न्यासः

पीलाया वा। , ४।१।११८

बाल-मनोरमा

पीलाया वा ११०५, ४।१।११८

पीलाया वा। "अपत्येऽ"णिति शेषः। पीला नाम काचिन्मानुषी। तन्नामिकाणमिति। वाग्रहणाऽभावे त्वनेनाऽणा नित्यमेव ढको बाधः स्यात्। नच महाविभाषयाऽणः पाक्षिकत्वात्तदभावे ढक्भवत्येवेति वाच्यं, महाविभाषया अपवादे निषिद्धे उत्सर्गो न प्रवर्तत इति ज्ञापनात्।

तत्त्व-बोधिनी

पीलाया वा ९२५, ४।१।११८

पक्षे इञिति। पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ठक् च मण्डूकात् ४।१।११९

मण्डूकशब्दातपत्ये ढक् प्रत्ययो भवति। चकारातण् च वा। तेन त्रैरूप्यं भवति। माण्डूकेयः, माण्डूकः, माण्डूकिः।

न्यासः

ढक्च मण्डूकात्। , ४।१।११९

बाल-मनोरमा

ढक् च मण्डूकात् ११०६, ४।१।११९

अन्यथा शैवः शैविरित्यादिः स्यात्, ढक् च। मण्डूको नाम ऋषिः पक्षे इञिति। पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

स्त्रीभ्यो ढक् ४।१।१२०

स्त्रीग्रहणेन टाबादिप्रत्ययान्ताः शब्दा गृह्यन्ते। स्त्रीभ्यो ऽपत्ये ढक् प्रत्ययो भवति। सौपर्णेयः। वैनतेयः। स्त्रीप्रत्ययविज्ञापनादसत्यर्थग्रहणे इह न भवति, इडबिडो ऽपत्यम् ऐडविडः, दरदो ऽपत्यम् दारदः इति। वडवाया वृषे वाच्ये। वाडवेयो वृषः स्मृतः। अपत्ये प्राप्तः ततो ऽपकृष्य विधीयते। तेन अपत्ये वाडवः इति। अण् क्रुञ्चाकोकिलात् स्मृतः। क्रुञ्चाया अपत्यं क्रौञ्चः। कौकिलः।

लघु-सिद्धान्त-कौमुदी

स्त्रीभ्यो ढक् १०२३, ४।१।१२०

स्त्रीप्रत्ययान्तेभ्यो ढक्। वैनतेयः॥

न्यासः

स्त्रीभ्यो ढक्। , ४।१।१२०

"इह स्त्रीग्रहणेन टाबादिस्त्रीप्रत्ययान्ताः शब्दाः गृह्न्ते" इति। अथ स्वरूपग्रहणं कस्मान्न भवति? बहुवचननिर्देशात्। स्वरूपग्रहणे हि तस्यैकत्वादेकवचनेनैव निर्देशं कुर्यात्। स्त्र्यर्थमात्रस्य ग्रहणं कस्मान्न भवति? विमातृशब्दस्य स्त्र्यर्थस्य शुभ्रादिषु पाठात्। यद्यत्र स्त्र्यर्थमात्रस्य स्त्रीशब्दस्य ग्रहणं स्यात्, तस्य शुभ्रादिषु पाठोऽनर्थकः स्यात्, अनेनैव ढकः

सिद्धत्वात्। "ऐडविडः दारदः" इति। इडविडोऽपत्यं वरदोऽपत्यमित्यणेव भवति। ढगिति वत्र्तमाने ढकः पुनग्र्रहणं नित्यार्थम्। "वडवाया वृष वाच्ये" इति। यस्तस्या गर्भे बीजं प्रक्षिपति स वृषो वाडवेय इत्युच्यते। "अण्क्रुञ्चाकोकिलात् स्मृतः" इति। वृष इति नापेक्ष्यते। अपत्ये विधिरेवायम्। ढकोऽपवादः॥

बाल-मनोरमा

स्त्रीभ्यो ढक् ११०७, ४।१।१२०

स्त्रीभ्यो ढक्। स्त्रीशब्देन टाबादयः स्त्रीप्रत्ययाश्चातुर्थिका गृह्रन्ते, न त्वन्येऽपि स्त्रीवाचका, व्याख्यानादित्याह--स्त्रीप्रत्ययान्तेभ्य इति। विनता नामगरुडमाता, तस्या अपत्यमिति विग्रहः। प्रत्ययग्रहणं किम्?। दरत्कश्चित्क्षत्रियः, तस्यापत्यं स्त्री दरत्। "द्व्यञ्मगधे"त्यण्। "अतश्चे"ति तस्य लुक्। तस्या अपत्यं-दारदः। अत्र दरच्छब्दस्य स्त्रीलिङ्गत्वेऽपि स्त्रीप्रत्ययान्तत्वाऽभावान्न ढक्। ननु सुमित्राया अपत्यं सौमित्रिः, सपत्न्या अपत्यं सापत्न इति कथं, ढक्प्रसङ्गादित्यत आह--बाह्वादित्वादित्यादि। सापत्नशब्दे पुंवत्त्वं नेति प्रागेवोक्तम्।

तत्त्व-बोधिनी

स्त्रीभ्यो ढक् ९२७, ४।१।१२०

स्त्रीभ्यो ढक्। बहुवचननिर्देशान्न स्वरूपस्य ग्रहणं, नाप्यर्थस्य, ढगर्थतया शुभ्रादिषु विमातृशब्दपाठात्। किं तु स्त्र्यधिकारोक्तटाबादेग्र्रहणं, न तु विप्रकृतिक्तिन्नादेरित्याशयेनाह---स्त्रीप्रत्ययान्तेभ्य इत्यादिना। तेन "दरदोऽपत्यं दारदः"इत्यत्र ढक् न भवति। स्त्र्यर्थग्रहणे तु स्यादेवाऽत्र ढक्। दरच्छब्दो हि जनपदक्षत्रियवाचीति ततोऽपत्यार्थे "द्यञ्मगधे"त्यणि तस्य स्त्रियाम्। "अतश्चे"ति लुकि दरच्छब्दस्य स्त्र्यर्थवाचित्वात्। "ढक् चे"ति वर्तमाने पुनरिह ढग्ग्रहणमण्संबद्धस्य ढको निवृत्त्यर्थम्। यद्यपि "चानुकृष्टं नोत्तरत्रे"ति परिभाषया अणिह न प्रवर्तते तथापि तस्या अनित्यत्वज्ञापनाय ढग्ग्रहणमित्याहुः।

तस्येदमिति। शिवादित्वादपत्य एवाऽणित्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

द्व्यचः ४।१।१२१

स्त्रीभ्यः इत्येव। द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् प्रत्ययो भवति। तन्नामिकाणो ऽपवादः। दत्ताया अपत्यं दात्तेयः। गौपेयः। द्व्यचः इति किम्? यामुनः।

न्यासः

द्व्यचः। , ४।१।१२१

"तन्नामिकाणोऽपवादः"इति। ये द्व्यचः स्त्रीप्रत्ययान्ता नदीमानुषीनामधेयभूतास्तेभ्यो विशेषविहितत्वात् तन्नामिकाण् भवति। ततस्तद्बाधनार्थं ढग्विधीयते॥

बाल-मनोरमा

द्व्यचः ११०८, ४।१।१२१

द्व्यचः। ननु "स्त्रीभ्यो ढ"गित्येव सिद्धे किमर्थमिदमित्यत आह--तन्नामिकेति। दात्तेय इति। दत्ता नाम काचिन्मानुषी,

तस्या अपत्यमिति विग्रहः। ननु पृथाया अपत्यं पार्थ इति कथम्, तन्नामिकाऽणं बाधित्वा "द्व्यचः" इति ढक्प्रसङ्गादित्यत आह--पार्थ इत्यत्रेति। शिवादित्वादपत्य एवाऽणित्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

इतश्चानिञः ४।१।१२२

स्त्रीग्रहणं निवृत्तम्। चकारो द्व्यचः इत्यस्य अनुकर्षणार्थः। इकारान्तात् प्रातिपदिकादनिञन्तादपत्ये ढक् प्रत्ययो भवति। आत्रेयः। नैधेयः। इतः इति किम्? दाक्षिः। प्लाक्षिः। अनिञः इति किम्? दाक्षायणः। प्लाक्षायणः। द्व्यचः इत्येव, मरीचेरस्यं मारीचः।

न्यासः

इतश्चानिञः। , ४।१।१२२

बाल-मनोरमा

इतश्चाऽनिञः ११०९, ४।१।१२२

इतश्चाऽनिञः। अस्त्रीप्रत्ययान्तार्थमिदम्। दुलिः निधिश्च-कश्चित्। आत्रेय इति। अत्रिः प्रसिद्धः। परत्वादयमृष्यणमपि बाधत इति भावः।

तत्त्व-बोधिनी

इतश्चाऽनिञः ९२८, ४।१।१२२

इतश्च। इतः किम्()। दाक्षिः। अनिञः किम्()। दाक्षायणः। व्यचः किम्()। उदधेरपत्यमौदधः। काशिकायां तु "मरीचेर्मारीचः"इत्युदाह्रतं, तदसत्। बाह्वादित्वेनेञ्प्रवृत्तेः। न चास्य बाह्वादित्वमव्वक्षितम्, "मरीचिशब्दो बाह्वादिषु पठ()ते"इति "मिदचोऽन्त्यात्परः"इति सूत्रे भाष्ये स्थित्वात्।

---

सूत्रम्

काशिका-वृत्तिः

शुभ्राऽदिभ्यश् च ४।१।१२३

शुभ्र इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः ढक् प्रत्ययो भवति। यथायोगम् इञादीनाम् अपवादः। शौभ्रेयः। वैष्टपुरेयः। चकारो ऽनुक्तसमुच्चयार्थः आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः, पाण्डवेयः इत्येवम् आदि सिद्धं भवति। शुभ्र। विष्टपुर। ब्रह्मकृत। शतद्वार। शतावर। शतावर। शलाका। शालाचल। शलाकाभ्रू। लेखाभ्रू। विमातृ। विधवा। किंकसा। रोहिणी। रुक्मिणी। दिशा। शालूक। अजबस्ति। शकन्धि। लक्ष्मणश्यामयोर् वासिष्ठे। गोधा। कृकलास। अणीव। प्रवाहण। भरत। भारम। मुकण्डु। मघष्टु। मकष्टु। कर्पूर। इतर। अन्यतर। आलीढ सुदत्त। सुचक्षस्। सुनामन्। कद्रु। तुद। अकाशाप। कुमारीका। किशोरिका। कुवेणिका। जिह्माशिन्। परिधि। वायुदत्त। ककल। खट्वा। अम्बिका। अशोका। शुद्धपिङ्गला। खडोन्मत्ता। अनुदृष्टि। जरतिन्। बालवर्दिन्। विग्रज। वीज। श्वन्। अश्मन्। अश्व। अजिर।

न्यासः

शुभ्रादिभ्यश्च। , ४।१।१२३

"यथायोगम्" इत्यादि। ये तावदकारान्तास्तेभ्य इञोऽपवादः। शलाका, कुरेका,अम्बिका, अशोका, खट्वा, पिङ्गला, खण्डोन्मत्ता-- इत्येतेम्पस्तन्नामिकाणः। विधवाशब्दात् क्षुद्रालक्षणस्य ढ्रकः। किंकसा, रोहिणी, अजवस्ति, शकन्धि, कृकलास, सुदत्त, परिधि-- एतेभ्यश्चतुष्पाल्लक्षणस्य ढञः। गोधाशब्दाद् गोधाया ढ्रकः, वचनसामश्र्यात् सोऽपि भवत्येव। शेषेभ्य औत्सर्गिकोऽण इत्येष यथायोगार्थः। "लक्षणश्यामयोर्वासिष्ठे" इति। लक्षण, श्याम-- इत्येतयोर्वासिष्ठेऽपत्यविशेषे ढग्भवति। लाक्षणेयो वासिष्ठः, लाक्षणिरन्यः। श्यामेयो वासिष्ठः, श्यामायनोऽन्यः। अ()आआदित्वात् फञ्॥

बाल-मनोरमा

शुभ्रादिभ्यश्च ११११०, ४।१।१२३

शुभ्रादिभ्यश्च। ढक् स्यादिति। शेषपूरणम्। इञाद्यपवादः। शुभ्रस्यापत्यमिति। अस्त्रीत्वादप्राप्तौ ढगिति भावः।

तत्त्व-बोधिनी

शुभ्रादिभ्यश्च ९२९, ४।१।१२३

शुभ्रादिभ्यश्च। चकारस्त्वाकृतिगणत्वत्वद्योतनार्थ इत्याहुः। मृकण्डशब्दोऽत्र पठ()ते। मार्कण्डेयः। शुभ्र, मृकण्ड, अ()आ, विमातृ। विधवा, गोधा, प्रवाहणेत्यादि। आकृतिगणोऽयम्। तेन "पाण्डवेय"इत्यादि सिद्धम्। इहाऽदन्तेषु इञ् प्राप्तः, विधवाशब्दात्क्षुद्रालक्षणो ढक्, चतुष्पाज्जातिवाचिषु ढञ्, गोधाशब्दाड्ढ्रग्वनात्सोऽपि भवति, क्वचिदौत्सर्गिकोऽणं प्राप्त इति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

विकर्णकुषीतकात् काष्यपे ४।१।१२४

विकर्णशब्दात् कुषीतकशब्दाच् च काष्यपे ऽपत्यविशेषे ढक् प्रत्ययो भवति। वैकर्णेयः। कौषीतकेयः। काश्यपे इति किम्? वैकर्णिः। कौषीतकिः।

न्यासः

विकर्णकुषीतकात्काश्यपे। , ४।१।१२४

बाल-मनोरमा

विकर्णकुषीतकात्काश्यपे ११११, ४।१।१२४

विकर्णकुषीत। अपत्ये ढगिति। शेषपूरणम्। "काश्यप एवे"ति नियमार्थं शुभ्रादिभ्यः पृथक् पाठः।

---

सूत्रम्

काशिका-वृत्तिः

भ्रवो वुक् च ४।१।१२५

भ्रूशब्दादस्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वुगागमः। भ्रौवेयः।

न्यासः

भ्रुवो वुक्च। , ४।१।१२५

बाल-मनोरमा

भ्रुवो वुक् च ११११२, ४।१।१२५

भ्रुवो वुक् च। चाड्ढगिति। भ्रूशब्दादपत्ये ढक् स्यात्प्रकृतेर्वुगागमश्च। वुकि ककार इत्। उकार उच्चारणार्थछः। कित्त्वादन्तावयवः। भ्रौवेय इति। भ्रूर्नाम काचित्, तस्या अपत्यमिति विग्रहः। ढकि एयादेसे प्रकृतेर्वुकि आदिवृद्धिः। वुगभावे तु ऊकारस्य वृद्धौ आवादेसे "भ्रावेय" इति स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

कल्याण्यादीनाम् इनङ् ४।१।१२६

कल्याणी इत्येवम् आदीनां शब्दानाम् अपत्ये ढक् प्रत्ययो भवति, तत्संनियोगेन च इनङादेशः। स्त्रीप्रत्ययान्तानाम् आदेशार्थं ग्रहणं, प्रत्ययस्य सिद्धत्वाद्। अन्येषाम् उभयार्थम्। काल्याणिनेयः। सौभागिनेयः। दौर्भागिनेयः। हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ७।३।१९ इत्युभयपदवृद्धिः। कल्याणी। सुभगा। दुर्भगा। बन्धकी। अनुदृष्टि। अनुसृष्टि। जरती। बलीवर्दी। ज्येष्ठा। कन्ष्ठा। मध्यमा। परस्त्री।

न्यासः

कल्याण्यादीनामिनङ्। , ४।१।१२६

बाल-मनोरमा

कल्याण्यादीनामिनङ् १११५, ४।१।१२६

काल्याणिनेय इति। कल्याण्या अपत्यमिति विग्रहः। बान्धकिनेय इति। बन्धक्या अपत्यमिति विग्रहः। अत्र गणे स्त्रीप्रत्ययान्ता एव पठ()न्ते। तेभ्यो ढक्सिद्ध एव इनङेव तु विधीयते।

तत्त्व-बोधिनी

कल्याण्यादीनामिनङ् ९३२, ४।१।१२६

कल्याण्यदीनाम्। इह परस्त्रीशब्दः पठ()ते। "परस्य स्त्री परस्त्री"ति षष्ठीसमासः। पारस्त्रैणेयः। परभार्यायामुत्पन्न इत्यर्थः। अनुशतिकादित्वादुभयपदवृद्धिः। बिदादिगणे तु "परस्त्री परशुं चे"ति पठ()ते। "प्राप्नोती"ति शेषः। तत्र परा चासौ स्त्री चेति कर्मधारयः। परस्त्रिया अपत्यं--पारशवःष ब्राआहृणाच्छूद्रायां तेनैवोढायामुत्पन्नः। सा च जात्यन्तरयोगात्परस्त्री। न च पर()आआदेशस्य स्थानिवद्भावात्पारशवेऽपि "अनुशतिकादीनां चे"त्युभयपदवृद्धिः स्यादिति वाच्यं,सत्यादेशे पूर्वोत्तरपदसंप्रमोहात्तदप्रवृत्तेः। इह गणे स्त्रीप्रत्ययान्तानां ढकः सिद्धत्वादिनङर्थं ग्रहणम्। अन्येषां तूभयार्थम्। कल्याणी, सुभगा, दुर्भगा, बन्धकी, परस्त्रीत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

कुलटाया ४।१।१२७

कुलान्यटति इति कुलता। पररूपं निपातनात्। कुलटायाः अपत्ये ढक् प्रत्ययो भवति, तत्सन्नियोगेन च वा इनङादेशो

भवति। आदेशार्थं वचनं, प्रत्ययश्च पूर्वेण एव सिद्धः। कौलटिनेयः, कौलटेयः। या तु कुलान्यटन्ती शीलं भिनत्ति, ततः क्षुद्राभ्यो वा ४।१।१३१ इति परत्वाड् ढ्रका भवितव्यम्। कौलटेरः।

न्यासः

कुलटाया वा। , ४।१।१२७

कुलन्यटतीति कुलटा। नन्वकः सवर्णे दीर्घत्वे कृते कुलाटेति भवितव्यमित्यत आह-- "पररूपम्" इत्यादि। "पूर्वेणैव" इति।"स्त्रीभ्यो ढक्" ४।१।१२० इत्यननैव। व्यवहितेऽपि पूर्वव्यपदेशः प्रवत्र्तते, यथा-- मथुरायाः पाटलिपुत्रं पूर्वमिति। "कौलटेरः" इति। एयादेशे कृते वलि यलोपः॥

बाल-मनोरमा

कुलटाटा वा १११६, ४।१।१२७

कुलटाया वा। इनङ्()मात्रमिति। व्याख्यानादिति भावः। पूर्वेणैवेति। "स्त्रीभ्यो ढ"गित्यनेनेत्यर्थः। कुलानि गृहाणि अटतीति रुलटा। शकन्ध्वादित्वात्पररूपम्। अत्रेति। "कुलटाया वे"ति सूत्रे इत्यर्थः। पक्षे ढ्रगिति। ढ्रगपि कदाचिद्भवतीत्यर्थः। कौलटेर इति। कुलटाया ढ्रकि ढकारस्य एयादेशे "लोपो व्यो"रिति यकारलोप इति भावः।

तत्त्व-बोधिनी

कुलटाया वा ९३३, ४।१।१२७

कुलटाया वा।शकन्धवादित्वात्पररूपपमत एव निपातनाद्वा। सती भिक्षुक्यवेति। अत्र=अनङ्विधौ। तथा चोक्तममरेण---"अथ बान्धकिनेयः स्याद्बन्धुलश्चाऽसतीसुतः। कौलटेरः कौलटीयो भिक्षुकी तु सती यदि। तदा कोलटीनेयोऽस्याः कौलटेयोऽपि चात्मजः"इति। केचित्तु क्षुद्राया अपि इनङा तृतीयं रूपं कौलटिनेय इतीच्छन्ति। पक्षे ढ्रगिति। ढगपि पक्षे भवत्येवेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

चटकाया ऐरक् ४।१।१२८

चटकायाः अपत्ये ऐरक् प्रत्ययो भवति। चाटकैरः। चटकाच् च इति वक्तव्यम्। चटकस्य अपत्यं चाटकैरः। स्त्रियाम् अपत्ये लुग् वक्तव्यः। चटकाया अपत्यं स्त्री चटका।

न्यासः

चटकाया ऐरक्। , ४।१।१२८

"चटकाया अपत्यं स्त्री चटका" इति। "लुक् तद्धितलुकि" १।२।४९ इति लुकि कृते पुनष्टाप् कत्र्तव्यः। पुंल्लिङ्गादपि स्त्रियामिष्यत एव लुक्। एवम् "चटकादैरक्" इत्येतत् सूत्रमासीत्, इदानीं प्रमादाच्च "चटकायाः" इति पाठः॥

बाल-मनोरमा

चटकाया ऐरक् १११८, ४।१।१२८

चटकायाः। चटकाशब्दादपत्ये ऐरक्()प्रत्ययः स्यादित्यर्थः। ननु स्त्रीलिङ्गनिर्देशात्पुंलिङ्गान्न स्यादित्यत आह--चटकादिति। सूत्रे "चटकाया" इत्यपनीय "चटका"दिति वाच्यमित्यर्थः। तर्हि स्त्रीलिङ्गान्न स्यादत

आह--लिङ्गेति।

स्त्रिया अपीति। स्त्रीलिङ्गादप्यैरगित्यर्थः। तयोरिति। चटकस्य चटकायटाश्चेत्यर्थः। ननु चटकेति कथं, जातित्वान्ङीष्प्रसङ्गादित्यत आह--अजादित्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

गोधाया ढ्रक् ४।१।१२९

गोधायाः अपत्ये ड्रक् प्रत्ययो भवति। गौधेरः। शुभ्रादिष्वयं पठ्यते, तेन गौधेयः अपि भवति।

न्यासः

गोधाया ढ्रक। , ४।१।१२९

"गोधेरः" इति। पूर्ववद्यलोपः॥

बाल-मनोरमा

गोधायाढ्रक् ११९९, ४।१।१२९

गोधाया ढ्रक्। गौधेर इति। गोधाया अपत्यमिति विग्रहः। ढ्रकि ढकारस्य एयादेशे "लोपोव्यो"रिति यलोपः। कित्त्वादादिवृद्धिरिति भावः।

तत्त्व-बोधिनी

गोधाया ढ्रक् ९३५, ४।१।१२९

गौधेर इति। ढस्य एयादेशे कृते "लोपो व्यो"रिति यलोपः।

---

सूत्रम्

काशिका-वृत्तिः

आरगुदीचाम् ४।१।१३०

गोधायाः अपत्ये उदीचाम् आचार्याणां मतेन आरक् प्रत्ययो भवति। गौधारः। आचार्यग्रहणं पूजार्थं, वचनसामर्थ्यादेव पूर्वेण समावेशो भवति। आरग्वचनम् अनर्थकं, रका सिद्धत्वात्? ज्ञापकं त्वयम् अन्येभ्यो ऽपि भवति इति। जाडारः। पाण्डारः।

न्यासः

आरगुदीचाम्। , ४।१।१३०

"आचार्यग्रहणं पूजार्थम्" इति। ननु चासत्याचार्यग्रहणे नित्य एवायं विधिः स्यात्, तथा चारकः पूर्वेण ढ्रका समावेशो न स्यात्। तद्विकल्पार्थमेवाचार्यग्रहणं कस्मान्न भवतीत्याह-- "वचनसामर्थ्यात्" इति। ढ्रगपि ह्रुच्यते, आरगपि, तत्र वचनसामर्थ्यात् समावेशो भविष्यति। तस्मात् पूजार्थमेवाचार्यग्रहणम्। "ज्ञापकं तु" इत्यादि। रका सिद्धे यदारग्वचनं सञ्ज्ञापनार्थम्। तेनैवं ज्ञायते-- अन्येभ्योऽप्ययं भवति;अन्यथा ह्यारग्वचनमनर्थकं स्यात् रकि सिद्धेः। तेन जडस्यापत्यं जाडारः, पाण्डार इति सिद्धं भवति, न ह्येतद्रका सिध्यति॥

बाल-मनोरमा

आरगुदीचाम् ११२०, ४।१।१३०

आरगुदीचां। गोधाया आरग्वा स्यादित्यर्थः। अन्यत इति। आकारान्तादन्यत् अदन्तं, तस्मादपि क्वचिद्विधानार्थमित्यर्थः। जाडार इति। रग्विधौ आकारो न श्रूयेतेति भावः। पण्डो--नपुंसकः, तस्यापत्यं क्षेत्रजातत्वादिना।

तत्त्व-बोधिनी
आरगुदीचाम् ९३६, ४।१।१३०

आरदुदीचाम्। वचनादेव ढ्रग्()ढकारकां पर्याये सिद्धे "उदीचां"ग्रहणं पूजार्थम्। "अरक्िति न सूत्रितं, "यस्येति चे"त्याकारलोपे "गौधरः"इत्यनिष्टप्रसङ्गात्। अन्यत इति। अनाकारान्ताल्लक्ष्यानुरोधेन कुतश्चिदित्यर्थ। पण्डस्येति। पण्डो नपुंसकः, तस्यापत्यं तु कृत्रिमादिरिति।

---

सूत्रम्
काशिका-वृत्तिः
क्षुद्राभ्यो वा ४।१।१३१

ढ्रकनुवर्तते, न आरक्। क्षुद्राः अङ्गहीनाः शीलहीनाश्च। अर्थधर्मेण तदभिधायिन्यः स्त्रीलिङ्गाः प्रकृतयो निर्दिष्यन्ते। क्षुद्राभ्यो वा अपत्ये द्दअक् प्रत्ययो भवति। ढको ऽ पवादः। काणेरः, काणेयः। दासेरः, दासेयः।
न्यासः
क्षुद्राभ्यो वा। , ४।१।१३१

"अर्थधर्मेण" इति। अर्थस्य क्षुद्रत्वात्तदभिधायिन्योऽपि प्रकृतय उपचारेण क्षुद्रा इति निर्दिश्यन्ते॥
बाल-मनोरमा
क्षुद्राभ्यो वा ११२१, ४।१।१३१

श्रुद्राभ्यो वा। अङ्गहीना इति। चक्षुरादिकतिपयावयवविकला इत्यर्थः। शीलहीना इति। सद्वृत्तहीना इत्यर्थः। यथेष्टपुरुषसंचारिण्य इति यावत्। "अनियतपुंस्का अङ्गहीना वा क्षुद्राः" इति भाष्यम्।

तत्त्व-बोधिनी
क्षुद्राभ्यो वा ९३७, ४।१।१३१

क्षुद्राभ्यः। अर्थगतं स्त्रीत्वं शब्दे आरोप्यं स्त्रीलिङ्गनिर्देशः।

---

सूत्रम्
काशिका-वृत्तिः
पितृष्वसुश् छण् ४।१।१३२

पितृष्वसृशब्दातपत्ये छण् प्रत्ययो भवति। पैतृष्वस्त्रीयः।
न्यासः

पितृष्वसुश्छण्। , ४।१।१३२

बाल-मनोरमा

पितृष्वसुश्छण् ११२२, ४।१।१३२

पितृष्वसुश्छण्। पैतृष्वस्त्रीय इति। पितृस्वसुरपत्यमिति विग्रहः। छस्य ईयादेशे आदिवृद्धिः। करारादृकारस्य यण्।

---

सूत्रम्

काशिका-वृत्तिः

ठकि लोपः ४।१।१३३

पितृष्वसुः अपत्यप्रत्यये ढकि परतो लोपो भवति। पैतृष्वसेयः। कथं पुनरिह ढक् प्रत्ययः? एतदेव ज्ञापकं ढको भावस्य।

न्यासः

ढकि लोपः। , ४।१।१३३

"कथं पुनः" इत्यादि। ढग्विधौ टाबादिस्त्रीप्रत्ययान्तग्रहणात् पितृष्वसृशब्दस्य चास्त्रीप्रत्ययान्तत्वात्। ततो ढको भावमसम्भावयतः प्रश्नः। "एतदेव" इत्यादि। यदेतत् पितृष्वसृशब्दं प्रति ढको निमित्तत्वेनाश्रयणम्, एतदेव पितृष्वसृशब्दत् तस्य भावं ज्ञपायति। न ह्यसतो निमित्तभाव उपपद्यते॥

बाल-मनोरमा

ढकि लोपः ११२३, ४।१।१३३

ढकि लोपः। "पितृष्वसु"रित्यनुवर्तते। अलोऽन्त्यपरिबाषयाऽन्त्यस्य लोपः। तदाह--पितृष्वसुरन्त्यस्य लोप इति। ननु पितृष्लसुरपत्ये ढक एक दुर्लभत्वात्कथं तस्मिन्परे लोपविधिरित्यत आह--अत #एवेति। शुभ्राआदित्वाड्ढगित्यन्ये। पैतृष्वसेय इति। ढकि अन्त्यस्य ऋकारस्य लोपे आदिवृद्धिः। "मातृपितृभ्यां स्वसे"ति षत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

मातृष्वसुश् च ४।१।१३४

पितृष्वसुः इत्येतदपेक्षते। पितृष्वसुर् यदुक्तं तन् मातृष्वसुरपि भवति, छन्ण्प्रत्ययो ढकि लोपश्च। मातृष्वस्त्रीयः। मातृष्वसेयः।

न्यासः

मातृष्वसुश्च। , ४।१।१३४

"पितृष्वसुरित्येतदपेक्षते"इति। इहापि "अनन्तरस्य पितृष्वसुर्विधिर्वा भवतिप्रतिषेधो वा" इति लोप एवानन्तरः प्राप्नोति, न छण्; व्यवहितत्वात्। उभयमपि चैतदिष्यते, तत्र यतो हेतोरेतदद्वयमपि लभ्यते तमनेन दर्शयति-- "पितृष्वसुः" इति। एतदिहापेक्ष्यमाणं षष्ठ()न्तं ज्ञायते यथा लोपविधौ "पितृष्वसुः" ४।१।१३२ इति च षष्ठी, तेनायमर्थः सम्पद्यते-- पितृष्वसुर्यदुक्तं तन्मातृष्वसुरपि तेन छण् ढकि लोपश्च लभ्यते। उभयमपि ह्येतत् पितृष्वसुरुक्तम्॥

बाल-मनोरमा

मातृष्वसुश्च ११२४, ४।१।१३४

मातृष्वसुश्चा। चकाराच्छण्, ढकि लोपश्चानुकृष्यते। तदाह--पितृष्वसुर्यदुक्तमिति।

---

सूत्रम्

काशिका-वृत्तिः

चतुष्पाद्भ्यो ढञ् ४।१।१३५

चतुष्पादभिधायिनीभ्यः प्रकृतिभ्यो ऽपत्ये ढञ्प्रत्ययो भवति। अणादीनाम् अपवादः। कामण्डलेयः। शौन्तिबाहेयः। जाम्बेयः।

न्यासः

चतुष्पाद्भयो ढञ्। , ४।१।१३५

"चतुष्पाद्भ्यः" इति। चत्वारः पाद आसामिति तास्तथोक्ताः। "पादस्य लोपऽहस्त्यादिभ्यः" ५।४।१३८ इति लोपः। इहाप्यर्थधर्मेण तदभिधायिन्यः प्रकृतयो निर्दिश्यन्ते। अत एवाह-- "चतुष्पादभिधायिनीभ्यः प्रकृतिभ्यः" इति। बहुवचननिर्देशः स्वरूपविधिनिरासाय। "अणादीनाम्" इति। आदिशब्देन ढगादीनां ग्रहणम्। "कामण्डलेयः" इत्यादि। कमण्डलूशुन्तिबाहुजम्बुशब्दाश्चतुष्पाज्जातिवाचिनः,तेषां "ढे लोपोऽकद्रवाः" ६।४।१४७ इत्युवर्णलोपः॥ अणादीनामपवादः। आदिशब्देन ढकः। बहुवचननिर्देशस्तु प्रकृतिभेदेन तयोर्भेदस्य विवक्षितत्वात्। तत्राजवस्तिमित्रयुशब्दयोरणोऽपवादः, शेषाणां "इतश्चानिञः" ४।१।१२२ इति ढकः॥

बाल-मनोरमा

चतुष्पाद्भ्यो ढञ् ११२५, ४।१।१३५

चतुष्पाद्भ्यो। चतुष्पादः-पशवः। तद्विशेषवाचिभ्योऽपत्ये ढञित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

गृष्ट्यादिभ्यश् च ४।१।१३६

गृष्ट्यादिभ्यः शब्देभ्यो ऽपत्ये ढञ् प्रत्ययो भवति। अणादीनाम् अपवादः। गार्ष्टेयः। हार्ष्टेयः। गृष्टिशब्दो यश्चतुष्पादवचनः, ततः पूर्वेण एव सिद्धः। अच्तुष्पादर्थं वचनम्। गृष्टि। हृष्टि। हलि। बलि। विश्रि। कुद्रि। अजबस्ति। मित्रयु।

बाल-मनोरमा

गृष्ट�आदिभ्यश्च ११२७, ४।१।१३६

गृष्ट()आदिभ्यश्च। अण्ढकोरिति। गृष्टि, हलि, बलि, कुठि, अगस्ति, मित्रयु एते गृष्ट()आदयः। अत्राऽन्त्ययोरृषित्वादणप्राप्तः।अन्येभ्यस्तु "इतश्चाऽनिञः" इति ढक्प्राप्त इति विवेकः। सकृत्प्रसूता मानुष्यादिरपि गृष्टिः, नतु गोरेव। ततश्च "चतुष्पाद्भ्यः" इत्यनेन न प्राप्तिः।

तत्त्व-बोधिनी

गृष्ट�आदिभ्यश्च ९३८, ४।१।१३६

गृष्ट()आदिभ्यश्च। गृष्टि, ह्रषि, हलि, बलि, क्रुद्रि, अगस्ति, मित्रयु। अण्ढकोरपवाद इति। इहान्त्ययोद्र्वयोरृषित्वादण् प्राप्तः, अन्येभ्यस्तु "इतश्चानिञः"इति ढगिति विवेकः। गार्ष्टेय इति। सकृत्प्रसूता सर्वापि गृष्टिः, न तु गोरेव। अतोऽत्र न "चतुष्पाभ्द्यः"इत्यनेन ढञ्()सिद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

राजश्वशुराद् यत् ४।१।१३७

राजन्श्वशुरशब्दाभ्याम् अपत्ये यत् प्रत्ययो भवति। यथाक्रमम् अणिञोरपवादः। राजन्यः। श्वशुर्यः। राज्ञो ऽपत्ये जातिग्रहणम्। राजन्यो भवति क्षत्रियश्चेत्। राजनो ऽन्यः।

लघु-सिद्धान्त-कौमुदी

राजश्वशुराद्यत् १०२५, ४।१।१३७

(राज्ञो जातावेवेति वाच्यम्)॥

न्यासः

राज�आशुराद्यत्। , ४।१।१३७

"क्षत्रियजातिश्चेत्" इति। प्रत्ययान्तेन यदि क्षत्रियजातिर्गम्यते एवं यद् भवति। यो ह्रपत्यमेव राज्ञो न क्षत्रियजातिस्तत्राणेवौत्सर्गिको भवति। एतच्च "वा ४।१।१३१ इत्यस्येहानुवृत्तस्य व्यवस्थिविभाषात्वविज्ञानाल्लभ्यते। "राजन्यः" इति। "ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिभावः। "राजनः" इति। अत्रापि "अन्" ६।४।१६७ इति प्रकृतिभावः॥

बाल-मनोरमा

राज�आशुराद्यत् ११३७, ४।१।१३७

राज()आशुराद्यत्। राजन्शब्दाच्छ्वशुरशब्दाच्चापत्ये यत्प्रत्ययः स्यादित्यर्थः। क्रमेण अणिञोरपवादः।

राज्ञो जातावेवेति। जातिः समुदायवाच्याचेदित्यर्थः।

तत्त्व-बोधिनी

राजस्वशुराद्यत् ९४८, ४।१।१३७

राज()आशुराद्यत्।क्रमेणाऽणिञोरपवादः।

राज्ञो जातावेवेति वाच्यम। जाता वेवेति। प्रकृति प्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः। प्रत्ययस्त्वपत्य एव। एवं च पङ्कजादिवद्योगरूढ इति फलितोऽर्थः।

---

सूत्रम्

काशिका-वृत्तिः

क्षत्राद् घः ४।१।१३८

क्षत्रशब्दादपत्ये घः प्रत्ययो भवति। क्षत्रियः। अयम् अपि जातिशब्द एव। क्षात्रिरन्यः।

लघु-सिद्धान्त-कौमुदी

क्षत्राद् घः १०२८, ४।१।१३८

क्षत्त्रियः। जातावित्येव। क्षात्त्रिरन्यत्र॥

न्यासः

क्षत्राद्धः। , ४।१।१३८

"घप्रत्ययो भवति" इति। घशब्द एव, न तु तरप्तमपाविति वेदितव्यम्। कथं पुनरेतल्लभ्यते,यावता "घः" इति तरप्तमपोरियं संज्ञा, चोच्चरिता संज्ञिनं सम्प्रत्यययायतीति तयोरेव ग्रहणं युक्तम्? नैष दोषः; प्रत्ययविधौ यत्र "घः" इति श्रूयते,तत्र स्वरूपस्य ग्रहणं भवति; ज्ञापकात्। यदयं प्रत्ययादेर्घकारस्येयादेशं शास्ति, तज्ज्ञापयति-- यत्र प्रत्ययविधौ घः श्रूयते स्वरूपमेव गृह्त इति। न हि संज्ञिनोग्र्रहणेन प्रत्ययादेर्घः सम्भवति॥

बाल-मनोरमा

क्षत्राद्धः ११४५, ४।१।१३८

क्षत्राद्धः। "अपत्ये" इति शेषः। क्षत्रिय इति। घस्य इयादेशे "यस्येति चे"त्यकारलोपः। क्षात्रिरन्य इति। क्षत्राच्छूद्रादाबुत्पन्न इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कुलात् खः ४।१।१३९

उत्तरसूत्रे पूर्वप्रतिषेधादिह तदन्तः केवलश्च दृश्यते। कुलशब्दान्तात् प्रातिपदिकात् केवलाच् च अपत्ये खः प्रत्ययो भवति। आढ्यकुलीनः। श्रोत्रियकुलीनः। कुलीनः।

न्यासः

कुलात्खः। , ४।१।१३९

"उत्तरसूत्रे" इत्यादि। उत्तरसूत्रे हि पूर्वपदप्रतिषेधाद्यस्यां परिभाषायां प्रातिपदिकश्रुतिरस्ति, साऽत्र नोपतिष्ठत इत्येषोऽर्थो ज्ञायते। यदि ह्युपतिष्ठेत, तदा ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेव (व्या।प।८९) स पूर्वपदान्न भविष्यतीत्यपूर्वपदादिति प्रतिषेधोऽनर्थकः स्यात्। सामान्यापेक्षञ्च ज्ञापकम्; तेन "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (शाक।प।६५), "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेष्यते" (व्या।प।८९) इत्येतयोरपीह परिभाषयोरुपस्थानं न भवति। ततश्च कुलशब्दान्तं प्रातिपदिकं कुलशब्दो गृह्यते॥

बाल-मनोरमा

कुलात्खः ११४६, ४।१।१३९

कुलात्खः। "अपत्ये" इति शेषः। कुलीन इति। खस्य ईनादेशः। ननु "समासप्रत्ययविधौ" इति तदन्तविधिनिषेधादाढ()कुलीन इति कथमित्यत आह--तदन्तादपीति। आढ()कुलीन इति। आढ()कुलशब्दात्कर्मधारयात्खः। कुले आध्यत्वप्रतीतिरत्र फलम्। कुलीनशब्देन कर्मधारये तु तदप्रतीतिरिति भेदः।

तत्त्व-बोधिनी

कुलात्खः ९५२, ४।१।१३९

कुलीन इथि। लिङ्गादिति। अन्यथा "ग्रहणवते"ति तदन्तविधिप्रतिषेधादपूर्वपदग्रहणं व्यर्थं स्यादिति भावः। आढ()कुलीन इति। आढ()श्चासौ कुलीनश्चेति कुलीनविशेषणत्वे कुलस्याढ()त्वं न प्रतीयते। किं च ईकार उदात्त इति स्वरेऽपि विशेषोऽस्तीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अपूर्वपदादन्यत्रस्यां यड्ढकञौ ४।१।१४०

कुलादित्येव। अविद्यमानं पूर्वपदं यस्य तदपूर्वपदम्। समाससम्बन्धिपूर्वपदस्य अभावेन कुलशब्दो विशेष्यते। अपूर्वपदात् कुलशब्दातन्यतरस्यां यत् ढकञित्येतौ प्रत्ययौ भवतः। ताभ्यां मुक्ते क्यो ऽपि भवति। कुल्यः, कौलेयकः, कुलीनः। पदग्रहणं किम्? बहुच्पूर्वादपि यथा स्यात्। बहुकुल्यः, बाहुकुलेयकः, बहुकुलीनः।

न्यासः

अपूर्वपदादन्यतरस्यां यड्ढकञौ। , ४।१।१४०

ननु पूर्वशब्दोऽवयववचनः; न च कुलशब्दस्य पदान्तरमवयव उपपद्यते; पृथग्भूत्तवात्, अनारम्भकत्वाच्च, ततो व्यपच्छेद्याभावादपूर्वपदादित्युक्तमेतत्कुलशब्दस्य विशेषणम्? इत्याह-- "समाससम्बन्धि" इत्यादि। समासे सत्येतद्भवति-- पूर्वपदम्, उत्तरपदमिति। तस्मात् समाससम्बन्धिनः पूर्वपद्सयाभावेन कुलशब्दो विशेष्यते-- अविद्यमानं समाससम्बन्धि पूर्वपदं यस्येति। कस्य चाविद्यमानम्? यः समासस्यान्तभूतो न भवति केवलः कुलशब्दः,तेन केवलात् कुलशब्दादयं विधिरित्युक्तं भवति। अथ व्यवस्थावाच्येव पूर्वशब्दः कस्मान्नाश्रीयते? अशक्यत्वात्। तत्र ह्याश्रीयमाणेऽविद्यमानं पूर्वपदं यस्मात् कुलशब्दात् सोऽपूर्वपदशब्देनोच्यते। ततश्च देवदत्तः कुल्यो देवदत्तः कौलेयक इति वाक्ये य()ड्ढकञौ न स्याताम्; देवदत्तस्येह पूर्वपदस्य विद्यमानत्वात्। "पदग्रहणं किम्" इति। अपूर्वादित्येवं कस्मान्नोक्तम्, एवमपि हीष्टं सिध्यति, लघु च सूत्रं भवतीति मन्यते। "बहुच्पूर्वपदादपि यथा स्यात्" इति। "अपूर्वात्" इत्युच्यमाने बहुच् पूर्वं यत्प्रतातिपदिकं बहुजस्य पूर्वं इति ततः प्रत्ययो न स्यात्। पदग्रहणे तु सति ततोऽपि भवति; तस्यापूर्वपदत्वात्। "बहुकुल्यः" इति। ईषदसमाप्तं कुलमिति "विभाषा सुपो बहुच् पुरस्तात्तु" ५।३।६८ इति बहुच्। बहुकुलस्यापत्यं बहुकुल्यः॥

बाल-मनोरमा

अपूर्वपदादन्यतरस्यां यड्ढकञौ ११४७, ४।१।१४०

अपूर्वपदादन्यतरस्याम्। कुलादित्येवेति। पूर्वपदरहितात्कुलादपत्ये यड्ढकञौ वा स्त इत्यर्थः। पक्षे ख इति। यड्ढकञोरभावपक्षे इत्यर्थः। बहुकुल्य इति "विभाषा सुपः" इति बहुच्प्रत्ययो न पदम्। अतः पूर्वपदरहितत्वाद्यड्ढकञ्खा भवन्त्येवेत्यर्थः।

तत्त्व-बोधिनी

अपूर्वपदादन्यतरस्यां यड्ढकञौ ९५३, ४।१।१४०

बहुकुल्य इति। "विभाषा सुपः" इति बहुच्प्रत्ययो न पदमिति अपूर्वपदत्वात्प्रत्ययत्रयं भवत्ये"ति भावः।

सूत्रम्

काशिका-वृत्तिः

महाकुलादञ्खञौ ४।१।१४१

अन्यतरस्याम् इति अनुवर्तते। महाकुलशब्दातञ्खञौ प्रत्ययौ भवतः। पक्षे खः। माहाकुलः, माहाकुलीनः, माहाकुलीनः।

न्यासः

महाकुलादञ्खञौ। , ४।१।१४१

बाल-मनोरमा

महाकुलादञ्खञौ ११४८, ४।१।१४१

महाकुलादञ्खञौ। अनुवर्तत इति। अन्यथा महाविभाषाधिकारे अपवादेन मुक्ते उत्सर्गस्याऽप्रवृक्तत्तेः पीलाया वे"त्यत्रोक्तत्वात्पूर्वसूत्रोक्तः खो न स्यादिति भावः। तदाह--पक्षे ख इति। तथा सति आदिवृद्धिर्नेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दुष्कुलाड् ढक् ४।१।१४२

दुष्कुलशब्दातपत्ये ढक् प्रत्ययो भवति। अन्यत्रस्याम् इत्यनुवृत्तेः खश्च। दौष्कुलेयः, दुष्क्लीनः।

न्यासः

दुष्कुलाड्ढक्। , ४।१।१४२

बाल-मनोरमा

दुष्कुलाड्ढक् ११४९, ४।१।१४२

दुष्कुलाड्ढक्। पूर्ववदिति। अन्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

स्वसुश् छः ४।१।१४३

स्वसृशब्दादपत्ये छन्_H प्रत्ययो भवति। अणो ऽपवादः। स्वसुरपत्यं स्वस्रीयः।

न्यासः

स्वसुश्छः। , ४।१।१४३

बाल-मनोरमा

स्वसुश्छः ११५०, ४।१।१४३

स्वसुश्छः। "अपत्ये" इति शेषः। स्वस्रीय इति। छस्य ईयादेशः, ऋकारस्य यण्।

---

सूत्रम्

काशिका-वृत्तिः

भ्रातुर् व्यच् च ४।१।१४४

भ्रातृशब्दादपत्ये व्यत् प्रत्ययो भवति। चकाराच् छश्च। अणो ऽपवादः। भ्रातृव्यः, भ्रात्रीयः। तकारः स्वरार्थः।

न्यासः

भ्रातृव्र्यच्च। , ४।१।१४४

"तकारः स्वरार्थः" इति। "तिस्त्वरितम्" ६।१।१७९ इति स्वरितत्वं यथा स्यात्।

बाल-मनोरमा

भ्रातुव्र्यच्च ११५१, ४।१।१४४

भ्रातुव्र्यच्च। तकारः "तित्स्वरित"मिति स्वरार्थ इति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

व्यन् सपत्ने ४।१।१४५

सपत्नशब्दः शत्रुपर्यायः शब्दान्तरव्युत्पन्नम् एव। सप्त्नीशब्दादपरे ऽकारम् इव अर्थे निपातयन्ति। सप्त्नीव सपत्नः। भ्रातृशब्दाद् व्यन् प्रत्ययो भवति समुदायेन च इदम् इत्रः सपत्न उच्यते। अपत्यार्थो ऽत्र न अस्त्येव। पाप्मना भ्रातृव्येण। भ्रातृव्यः कण्टकः।

न्यासः

व्यन्सपत्ने। , ४।१।१४५

ननु "नित्यं सपत्न्यादिषु" ४।१।३५ इति सपत्नीशब्द एव स्त्रीलिङ्गो व्युत्पादितः, तत्कथं सपत्न इति प्रयोगः पुंलिङ्गस्य युज्यत इत्याह-- "सपत्नशब्दः शत्त्रुपर्यायः" इत्यादि। "इवार्थे" इति। इवार्थः = सादृश्यम्। यथैव हि सपत्नी दुःखहेतुः, तथा शत्त्रुरपीति। यः सपत्नीव सपत्नः स उच्यते॥

बाल-मनोरमा

व्यन्त्सपत्ने ११५२, ४।१।१४५

व्यन्सपत्ने। अपत्ये इति। प्रत्ययेनाऽपत्यमुच्यते। भ्रातृशब्दार्थस्तु न विवक्षितः। तथाच भ्रातृशब्दोत्तरत्वे व्यन्प्रत्ययार्थः शत्रुरिति भाष्ये स्पष्टम्। ननु "पाप्मना भ्रातृव्येणे"ति कथं, पाप्मनोऽपत्यत्वाऽभावादित्यत आह--उपचारादिति। हिंसकत्वगुणयोगाल्लाक्षणिक इत्यर्थः।

तत्त्व-बोधिनी

व्यन्त्सपत्ने ९५४, ४।१।१४५

व्यन्स्यादिति। भ्रातुरपत्यं यदि शत्रुदस्तदा भ्रातृशब्दाव्द्यन्नेव स्यान्न तु व्याच्छौ इत्यर्थः। समुदायेनेति। तद्धटितप्रत्यये शत्रुरूपेऽपत्ये वाच्य इत्यर्थः। यत्तु वृत्तिकृतोक्तम्--"अपत्यार्थोऽत्र नास्त्येवे"ति, तदुपेक्ष्यं, भाष्यविरोधादिति मनसि

निधायाह--पाप्मनेति। श्रुतिहतभ्रातृव्यशब्दस्य गतिं वदति--उपचारादिति। "अस्त्रि पङ्कं पुमान्पाप्मा पापं किल्विषकल्मष "मित्यमरः। न हि पापं भ्रातुरपत्यं भवतीतत्यतो भाक्त एवायं प्रयोग इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

रेवत्यादिभ्यष् ठक् ४।१।१४६

रेवती इत्येवम् आदिभ्यो ऽपत्ये ठक् प्रत्ययो भवति। यथा योगं ढगादीनाम् अपवादः। रैवतिकः। आश्वपालिकः। रेवती। अश्वपाली। मणीपाली। द्वारपाली। वृकवञ्चिन्। वृकग्राह। कर्णग्राह। दण्डग्राह। कुक्कुटाक्ष।

लघु-सिद्धान्त-कौमुदी

रेवत्यादिभ्यष्ठक् १०२९, ४।१।१४६

न्यासः

रेवत्यादिभ्यष्टक्। , ४।१।१४६

"यथायोगम्" इत्यादि। तत्राद्यानां चतुर्णां स्त्रीप्रत्ययान्तत्वाद् ढकोऽपवादः; वृकञ्चिन्-- इत्यस्याणः, शेषाणामकरान्तत्वादिञः॥

बाल-मनोरमा

रेवत्यादिभ्यष्ठक् ११५३, ४।१।१४६

रेवत्यादिभ्यष्ठक्। "अपत्ये" इति शेषः। ढगाद्यपवादः।

तत्त्व-बोधिनी

रेवत्यादिभ्यष्ठक् ९५५, ४।१।१४६

रेवत्या।रेवती, अ()आपाली, मणिपाली, द्वारपाली---इत्यादि। ठस्येकः। "अङ्गस्ये"त्यनुवर्तनादाहर---अङ्गात्परस्येति। "अङ्गा"दिति ठकारविशेषणादठचष्ठकारस्य न भवति। कर्मठः।

---

सूत्रम्

काशिका-वृत्तिः

गोत्रस्त्रियाः कुत्सने ण च ४।१।१४७

अपत्यं पौत्रप्रभृति गोत्रं गृह्यते। गोत्रं या स्त्री तदभिधायिनः शब्दादपत्ये णः प्रत्ययो भवति, चकाराट् ठक् च, कुत्सने गम्यमाने। पितुरसंविज्ञाने मात्रा व्यपदेशो ऽपत्यस्य कुत्सा। गार्ग्याः अपत्यं गार्गः जाल्मः, गार्गिकः। ग्लुचुकायन्याः अपत्यं ग्लौचुकायनः, ग्लौचुकायनिकः। गोत्राद्यूनि इति यूनि प्रत्ययो भवति। गोत्रम् इति किम्? कारिकेयो जाल्मः। स्त्रियाः इति किम्? औपगविर्जाल्मः। कुत्सने इति किम्? गार्गेयो माणवकः।

न्यासः

गोत्रस्त्रियाः कुत्सने ण च। , ४।१।१४७

"अपत्यं प्रौत्रप्रभृति गोत्रं गृह्नते" इति। न लौकिकमपत्यमात्रम्, तद्()ग्रहणे हि गोत्रग्रहणमनर्थकं स्यात्।

अपत्याधिकारादेव तद्()ग्रहणस्य लब्धत्वादिति भावः। "पितुरसंविज्ञाने" इति। अप्रसिद्धौ। तस्य पितुरसंविज्ञानप्रदर्शनार्थं मात्रा यो व्यपदेशोऽस्ति तेन कुत्सा स्यात्। "गार्गो जाल्मो गार्गिकः" इति। गर्गशब्दाद्गोत्रे गर्गादियञन्तात् "यञश्च" ४।१।१६ इति ङीपि "हलस्तद्धितस्य" ६।४।१५० इतिलोपे सति यकारस्य गार्गी इति स्थिते णठकौ। "ग्लौचुकायनः" इत्यादि। ग्लुचकस्यापत्यं गोत्रं स्त्री "प्राचामवृद्धात्" फिन् बहुलम्" ४।१।१६० इति फिन्,ततः "इतो मनुष्यजातेः" ४।१।६५ इति ङीष्,ततो णठकौ। "कारिकेयः"इति। कारकशब्दाण्ण्वुलन्ताट्टाप्।कारिकाशब्दोऽयं गोत्रे न वत्र्तते,ततो ढगेव भवति। "औपगविः"इति। उपगोरपत्यं गोत्रं पुमान्ण्, तदन्तादिञेव भवति। अत्र केनचित् प्रतिषिद्धाचरणादिना कुत्सा वेदितव्या।"गार्गेयो माणवकः" इति। अत्र पितरि विज्ञाते मातुः परिज्ञानार्थं तन्मत्रा व्यपदेशः क्रियत इति नास्ति कुत्सा, तेन ढगेन भवति॥

बाल-मनोरमा

गोत्रस्त्रियाः कुत्सने ण च ११५४, ४।१।१४७

गोत्रस्त्रियाः। "ण" इति लुप्तप्रथमाकं चाद्वगनुकृष्यते। तदाह--गोत्रं यास्त्रीत्यादिना। सामथ्र्यादिति। "एको गोत्रे" इति नियमादिति भावः। गाग्र्या अपत्यमिति। गर्गस्य गोत्रापत्यं स्त्री गार्गी। "गर्गादिभ्यः" इति यञ्। "यञश्चे"ति ङीप्। "यस्येति चे"त्यकारलोपः। "हलस्तद्धितस्ये"ति यकारलोपः।छ गाग्र्या अपत्यं युवेति विग्रहः। पितुरविज्ञानेमात्रा व्यपदेशः कुत्सनम्। यद्यपि णप्रत्यये ठक इकादेशे च "यस्येति"चे"ति लोपे गार्ग गार्गिकः इति सिध्यति, तथापि वस्तुस्थितिमाह--पुंवद्भ्वादिति। "भस्याढे"इत्यस्य तद्धिते विवक्षिते प्रवृत्तिमब्युपगम्य गाग्र्यशब्दादित्युक्तम्। तच्च समूहाधिकारे "भिक्षादिभ्योऽ"णित्यत्र स्फुटीभविष्यति। स्त्रियाः किम्?। औपगवस्यापत्यं युवा औपगविः। प्रकरणादिगम्या कुत्सा। गोत्रेति किं?। णस्य णित्त्वं तु ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायन इत्यत्र वृद्ध्यर्थम्।

तत्त्व-बोधिनी

गोत्रस्त्रियाः कुत्सने ण च ९५६, ४।१।१४७

गोत्रस्त्रियाः। णित्त्वं तु ग्लुचुकायन्या अपत्यं ग्लौचुकायनो जाल्मः"इत्यत्र फिन्नन्ताण्णे वृद्य्रर्थमिति बोध्यम्। समाश्र्याद्यूनीति। "गोत्रादपरो गोत्रप्रत्ययो ने"त्युक्तत्वादिति भावः। गाग्र्या अपत्यमिति। पितुरसंविज्ञाने मात्रा व्यपदेशात्कुत्सा। गोत्रेति किम्()। कारिकेयो जाल्मः। स्त्रियाः किम्()। औपगवस्यापत्यम् औपगविर्जाल्मः। कुत्सने किं()। गार्गेयो माणवकः।

---

सूत्रम्

काशिका-वृत्तिः

वृद्धात् ठक् सौवीरेषु बहुलम् ४।१।१४८

कुत्सने इत्येव। सौवीरेषु इति प्रकृतिविशेषणम्। वृद्धात् सौवीरगोत्रादपत्ये बहुलं ठक् प्रत्ययो भवति कुत्सने गम्यमने। भागवित्तेः भागवित्तिकः। तार्णबिन्दवस्य तार्णबिन्दविकः। पक्षे यथाप्राप्तं फक्, भागवित्तायनः। पक्षे तार्णबिन्दविः। अकशापः शुभ्रादिः, आकशापेयः। तस्य अपत्यम् आकशापेयिकः। पक्षे आकशापेयिः। भागपूर्वपदो वित्तिर् द्वितीयस् तार्णबिन्दवः। तृतीयस् त्वाकशापेयो गोत्राट् ठग् बहुलं ततः। वृद्धग्रहणं स्त्रीनिवृत्त्यर्थम्। सौवीरेषु इति किम्? औपगविर्जाल्मः। कुत्सने इत्येव, भागवित्तायनो माणवकः। बहुलग्रहणम् उपाधिवैचित्र्यार्थम्। गोत्रस्त्रियाः इत्यारभ्य चत्वारो योगास् तेषु प्रथमः कुत्सन एव, अन्त्यः सौवीरगोत्र एव, मध्यमौ द्वयोरपि। तदेतद् बहुलग्रहणाल् लभ्यते।

न्यासः

वृद्धाट्ठक्सौवीरेषु बहुलम्। , ४।१।१४८

"सौवीरेष्विति प्रकृतिविशेषणम्" इति। सौवीरेषु यद्()वृद्धं सौवीरगोत्राभिधायि यद्()वृद्धमित्यर्थः। "भागवित्तेःट इत्यादि। भगवित्तस्यापत्यं गोत्रम्। "अत इञ" ४।१।९५ , तदन्तात् ठक्-- "भागवित्तिकः"। "भागवित्तायनः" इति। "यञिञोश्च" ४।१।१०१ इति फक्। तृणादिबिन्दोरपत्यमौत्सर्गिकोऽण् तार्णबिन्दवः, ततष्ठक्-- "तार्णबिन्दविकः"। पूर्वसूत्रे ठक् चानुकृष्ट इतीह नानुवत्र्तत इति पुनष्ठग्ग्रहणं ण्सय निवृत्त्यर्थम्। वापूर्वकं हि ठग्ग्रहणं णप्रत्ययेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। "भागपूर्वपदो वृत्तिः" इत्यादि। येभ्योऽनेन सूत्रेण ठगिष्यते, त एतेन श्लोकेन परिगण्यन्ते। "भाग" इत्येतत् पूर्वपदं यस्य वृत्तिशब्दस्य स तथोक्तः। अयं तावदेको भागवित्तिः, द्वितीयस्तार्णबिन्दवः, तृतीयस्त्वाकशापेयः-- य एते त्रयः शब्दाः ,गोत्रे ठग्बहुलं तत इति। सौवीरगोत्रवचनान्तात् प्रातिपदिकाद्बहुलं यष्ठगुच्यते स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्यो भवति, नान्येभ्य इत्यर्थः। अथ वृद्धग्रहणं किमर्थम्, यावता पूर्वसूत्राद्गोत्रग्रहणमनुवत्र्तते, सौवीरग्रहणेनैव विशेषयिष्यामः; यच्चसौवीरगोत्रे वत्र्तते प्रातिपदिकं भागवित्त्यादिकं तद्वृद्धमेव, ततो निवृत्त्यभावादपार्थकं वृद्धग्रहणम्? इत्याह -- "वृद्धग्रहणम्" इत्यादि। तद्धि गोत्रग्रहणं स्त्रिया विशेषणम्, अतस्तस्मिन्ननुवत्र्तमाने विशेष्यायाः स्त्रिया अनुवृत्तिः स्यात्। तस्मात् तन्निदृत्त्यर्थं वृद्धग्रहणम्। गोत्रग्रहणमेवानुवर्तिष्यते; तस्यैव स्वरितत्वात्, न स्त्रीति-- एतद्व्याख्येयं भवति। व्याख्यानाच्च लघु वृद्धग्रहणमेव। "औपगविः" इति। अणन्तादिञ्। ननु च परिगणनं कृतम्,तत्कथमौपगवशब्दात् ठक्प्रसङ्गः? सौवीरग्रहणे सति तत्परिगणनम्। तथा हि-- भागवित्तिप्रभृतयः सौवीरगोत्राभिधायिन एव परिगणिताः। तत्रासति सौवीरग्रहणे औपगवशब्दादपि प्रसज्यते-- "भागवित्तायनः" इति। पूर्ववत् फक्। अथ बहुलग्रहणं किमर्थम्,न, वाग्रहणमेव क्रियेत,तेनापि हि भागवित्तिको भाघवित्तिकायन इत्यादि सिध्यत्येव? इत्यत आह-- "बहुलग्रहणम्" इत्यादि। वाग्रहणाद्विकल्पमात्रं लभ्यते, न तूपाधिवैचित्र्यम्। बहुलग्रहणे तु तदपि। तस्मादुपाधीनां विशेषमानां वैचित्र्यम् = नानाप्रकारता यथा स्यादित्येवमर्थं बहुलग्रहणम्। तदेवोपाधिवैचित्र्यं दर्शयितुमाह-- "गोत्रस्त्रिया इत्यारभ्य" इत्यादि। सुखावबोधम्॥

बाल-मनोरमा

वृद्धाट्ठक् सौवीरेषु बहुलम् ११५५, ४।१।१४८

वृद्धाट्ठक्()सौ। पूर्वसूत्राद्गोत्रेत्येकदेशोऽनुवर्तते। सौवीरेष्विति प्रकृतिविशेषणं। तदाह--वृद्धादिति। "वृद्धिर्यस्याचामादि"रिति वृद्धिसंज्ञकादित्यर्थः। ठग्ग्रहणं णस्य अनुवृत्तिनिवृत्त्यर्थम्। भागवित्तेरिति। भगवित्तस्य सौवीरं गोत्रापत्यं--भागावित्तिः, तस्यापत्य युवेत्यर्थे ठकि इकादेसे भागवित्तिक" इति रूपमित्यर्थः। पक्षे फगिति। "यञिञोश्चे" त्यनेने"ति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

फेश् छ च ४।१।१४९

कुत्सने इत्येव, सौवीरेषु इति च। फेः इति फिञो ग्रहणं न फिनः, वृद्धाधिकारात्। फिञन्तात् प्रातिपदिकात् सौवीरगोत्रादपत्ये छः प्रत्ययो भवति, चकाराट् ठक्, कुत्सने गम्यमाने। यमुन्दस्य अपत्यं, तिकादिभ्यः फिञ् ४।१।१५४। तस्यपत्यं यामुन्दायनीयः, यामुन्दायनिकः। कुत्सने इत्येव, यामुन्दायनिः। फिञन्तादौत्सर्गिकस्य अण आगतस्य ण्यक्षत्रियार्षञितो यूनि लुगणिञोः २।४।५८ इति लुक्। सौवीरेसु इत्येव, तैकायनिः। यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः। सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् समरेत्।

न्यासः

फेश्च च। , ४।१।१४९

"यमुन्दश्च"इत्यादि। येभ्योऽनेन सूत्रेण छठकाविष्येते, तेषामनेन श्लोकेन परिगणनं क्रियते, तत्तु बहुलग्रहणानुवृत्तेरेव लभ्यत इत्येवं तद्वेदितव्यम्। यमुन्दमुद्दिश्य वृत्तिकारेणैवोदाहरणं दर्शितम्। इतरयोस्तु दर्शयामः-- सुयाम्नोऽपत्यं, फिञ्-- सौयामायनिः,तस्यापत्यं सौयामायनिकः। वृषस्यापत्यं,फिञ्, तस्य वाध्र्यायणिः, तस्यापत्यं वाष्र्यायणीयः,वाष्र्यायणिकः। एते यमुन्दादयः शब्दाः फिञः स्मृताः = फिञन्ता विज्ञाताः। "गोत्रस्त्रियाः कुत्सने ण च" ४।१।१४७ इत्यादयश्चत्वारो योगाः। तत्राद्यः कुत्सन एव, अन्त्यः सौवीरेष्वेव। मध्यमौ तु द्वौ सौवीरेषु कुत्सायाञ्च शब्दवित्स्मरेत् जानीयात्॥

बाल-मनोरमा

फेश्छ च ११५६, ४।१।१४९

फेश्छ च। "छे"ति लुप्तप्रथमाकम्। यमुन्दस्येति ष यमुन्दो नाम सुवीरदेशे कश्चित्। यामुन्दायनिरिति। यामुन्दायनेरपत्यं युवेत्यर्थे कुत्सनाऽभावाच्छठगभावे "तस्यापत्य"मित्यण्। "ण्यक्षत्रियार्षे"ति तस्या लुगित्यर्थः। तैकायनिरिति। तैकायनेरपत्यं युवेत्यर्थेऽसौवीरत्वाच्छठगभावे "तस्यापत्य"मित्यण्। "ण्यक्षत्रिये" ति तस्य लुगित्यर्थः। तैकायनिरिति। तैकायनेरपत्यं युवेत्यर्थेऽसौवीरत्वाच्छठगभावे "तस्यापत्य"मित्यण्। "ण्यक्षत्रिये"ति तस्य लुगिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

फाण्डाहृतिमिमताभ्यां णफिञौ ४।१।१५०

सौवीरेषु इत्येव। कुत्सने इति निवृत्तम्। फाण्टाहृतिमिमतशब्दाभ्यां सौवीरविषयाभ्याम् अपत्ये णफिञौ प्रत्ययु भवतः। फको ऽपवादः। अल्पाच्तरस्य अपूर्वनिपातो लक्षणव्यभिचारचिह्नं, तेन यथासङ्ख्यम् इह न भवति इति। फाण्टाहृतः, फाण्टाहृतायनिः। मैमतः, मैमतायनिः। सौवीरेषु इत्येव, फाण्टाहृतायनः। मैमतायनः। फाण्टाहृतेः यञिञोश्च ४।१।१०१ इति फक्। मिमतशब्दो ऽपि नडादिषु पठ्यते।

न्यासः

फाण्टाह्मतिमिमताभ्यां मफिञौ। , ४।१।१५०

"आल्पाच्तरस्य" इत्यादि। मिमतशब्दोऽयमल्पाच्तरः, तस्य "अल्पाच्तरम्" २।२।३४ इति पूर्वनिपाते प्राप्ते यः परनिपातः स लक्षमव्यभिचारचिह्नं सूचयति। यथेदं पूर्वनिपातलक्षणं व्यभिचरति = स्वविषये न प्रवत्र्तते, तथा यथासंख्यलक्षणमपीति यथासंख्यं न भवति। अत एवैकैकस्मात् प्रत्ययद्वयं सिद्धं भवति॥

बाल-मनोरमा

फाण्टाह्मतिमिमताभ्याणफिञौ ११५७, ४।१।१५०

फाण्टाह्मति। "सौवीरेष्विति। शेषपूरणमिदम्। सैवीरगोत्रादित्यर्थः। फाण्टाह्मतस्य गोत्रापत्यं फाण्टाह्मतिः, अत इञ्। तस्यापत्यं युवेति विग्रहः। मैमत इति। मिमतस्यापत्यमिति विग्रहः। मिमतशब्दे सौवीरगोत्रादिति न संबध्यते, व्याख्यानाद्गोत्रत्वाऽभावाच्चेति भावः।

तत्त्व-बोधिनी

फाण्टाह्मतिमिमताभ्यांणफिञौ ९५७, ४।१।१५०

फाण्टाह्मति। "कुत्सने"इति निवृत्तम्। वृत्तिमते णित्त्वस्य फलमस्तीति ध्वनयन्नुदाहरति---मैमत इति। न च भाष्यमतेऽपि "फाण्टाह्मताभार्यः"इत्यत्र "वृद्धिनिमित्तस्ये"ति पुंवद्भावनिवृत्तिर्णित्त्वफलमस्तीति वाच्यम्, "अस्त्रिया"मिति युवसंज्ञानिषेधाद्गोत्रसंज्ञासद्भावात् "एको गोत्रे"इति नियमादिञन्तात्फाण्टाह्मतिशब्दादन्यस्यापत्ययस्याऽभावात्फाण्टाह्मताशब्दस्यैवाऽसत्त्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कुर्वादिभ्यो ण्यः ४।१।१५१

सौवीरेषु बहुलम् इति निवृत्तम्। कुरु इत्येवम् आदिभ्यः शब्देभ्यो ऽपत्ये ण्यः प्रत्ययो भवति। कौरव्यः। गार्ग्यः। कुरुनादिभ्यो ण्यः ४।१।१७०। इति कुरुशब्दादपरो ण्यप्रत्ययो भविष्यति। स तु क्षत्रियात् तद्राजसंज्ञकः। तस्य बहुषु लुका भवितव्यम्, अयं तु श्रूयत एव। कौरव्याः। कौरव्यशब्दस्य क्षत्रियवचनस्य तिकादिषु पाठात् फिञपि भवति, फौरव्यायणिः। रथकारशब्दो ऽत्र पठ्यते, स जातिवचनः। त्रैवर्णिकेभ्यः किंचिन् न्यूना रथकारजातिः। कारिणस् तु रथकारशब्दादुत्तरसूत्रेण एव ण्यः सिद्धः। केशिनीशब्दः पठ्यते, तस्य कैशिन्यः। पुंवद्भावो न भवति, स्त्रीप्रत्ययनिर्देशसामर्थ्यात्। वेनाच्छन्दसि इति पठ्यते। कथम् भाषायां वैन्यो राजा इति? छन्दस एव अयं प्रमादात् कविभिः प्रयुक्तः। वामरथशब्दः पठ्यते, तस्य कण्वादिवत् कार्यम् इष्यते। स्वरं वर्जयित्वा लुगादिकम् अतिदिश्यते। बहुसु वामरथाः। स्त्री वामरथी। वामरथ्यायनी। युवा वामरथ्यायनः। वामरथ्यस्य छात्राः वामरथाः। वामरथानि सङ्घाङ्कलक्षणानि। स्वरस् तु ण्यप्रत्ययस्य एव भवति, न अतिदेशिकमाद्युदात्तत्वम्। कुरु। गर्ग। मङ्गुष। अजमारक। रथकार। वावदूक। सम्राजः क्षत्रिये। कवि। मति। वाक्। पितृमत्। इन्द्रजालि। दामोष्णीषि। गणकारि। कैशोरि। कापिञ्जलादि। कुट। शलाका। मुर। एरक। अभ्र। दर्भ। केशिनी। वेनाच्छन्दसि। शूर्पणाय। श्यावनाय। श्यावरथ। श्यावपुत्र। सत्यङ्कार। बडभीकार। शङ्कु। शाक। पथिकारिन्। मूढ। शकन्धु। कर्तृ। हर्तृ। शाकिन्। इनपिण्डी। वामरथस्य कन्वादिवत् स्वरवर्जम्।

न्यासः

कुर्वादिभ्यो ण्यः। , ४।१।१५१

"कौरव्यः" इति। "ओर्गुणः" ६।४।१५६, "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादशः। "कुरुनादिभ्यो ण्यः" इत्यादि। किमर्थं पुनः कुरुशब्दादपरोऽपि ण्यप्रत्ययो भविष्यति, यावतानेनैव सिद्धम्, तदेव हि रूपम्, स एवच स्वरः? इत्यत आह-- "स तु क्षत्त्रियात्" इति। अनेनार्थभेदं दर्शयति। स हि "जनपदशब्दात् क्षत्त्रियादञ" ४।१।१६६इत्यधिकारात् क्षत्त्रियाद्भवति, अयं तु ततोऽन्यतः। ततश्चैकः क्षत्त्रियापत्यो भवति, अपरस्त्वक्षत्त्रियापत्य इति स्पष्ट एवार्थभेदः। रूपविशेषोऽपि बहुषु विद्यत इति दर्शयन्नाह-- "तद्राजसंज्ञकः" इत्यादि। तस्य हि तद्राजसंज्ञकत्वात् "तद्राजस्य बहुषु" २।४।६२ इत्यादिना बहुषु लुका भवितव्यम् -- कुरव इति। अयं तु श्रूयत एव कौरव्या इति। रथकारशब्दोऽतर् पठ()ते, तत्र रथकारशब्दश्चास्त्येव जातिवचनः, अस्ति च कारिवचनः, तदिह तयोः कतरः पठ()ते? इत्याह-- "रथकारशब्दोऽत्र पठ()ते" इत्यादि। अथ कारिवचनोऽपि कस्मान्न पठ()ते? इत्याह-- "कारिणस्तु" इत्यादि। यो हि वचनो रथकारशब्दः, तत उत्तरसूत्रेणैव ण्यः सिद्धः, तत्किंत्र तस्य पाठेन ! "पुंवद्भावो न भवति" इति। "भस्याऽढ तद्धिते" (वा।७३१) इति यः पुंवद्भावः प्राप्नोति, स केशिनी शब्दस्य न भवति। यदि स्यात्, "नस्तद्धिते" ६।४।१४४ इति टिलोपे कृते "कैश्यः" इत्यनिष्टं रूपं स्यात्। कस्मान्न भवति? इत्याह-- "स्त्रीप्रत्ययस्य निर्देशसामथ्यात्" इति।यदि हि पुंवद्भावः स्यात्, स्त्रीप्रत्ययेनास्य निर्देशोऽनर्थकः स्यात्, पुंल्लिङ्गमेवैनं पठेत्। पुंल्लिङ्गस्यापि पाठे लिङ्गविशिष्टपरिभाषया केशिनीशब्दादपि प्रत्ययः

सिध्यति। ननु च पुंल्लिङ्गनिवृत्त्यर्थः स्त्रीप्रत्ययान्तस्य पाठः स्यात्? नैतदस्ति; अभिधानादेव हि पुंल्लिङ्गान्न भविष्यति। "तस्य कण्वादिवत्िति। अपत्याधिकारेऽयमतिदेशो भवन् कण्वादिभिरपत्यप्रत्ययान्तैर्विज्ञायते। कण्वादयश्च गर्गाद्यन्तः पातिनः, तेन यञन्तानां कण्वादीनां यत्कार्यं तद्वामरथ्यस्य स्वरवर्जं भवतीत्ययं भवति। "लुगादिकम्" इति। आदिशब्देन ङीबादिकं गृह्यते। कण्वादीनमपत्यप्रत्ययस्य "यञञोश्च" २।४।६४ इति बहुषु लुग्भवति। स्त्रियां "यञश्च" ४।१।१६ इति ङीप्। "प्राचां ष्फ तद्धिते" ४।१।१७ इतिष्फ प्रत्ययः स्त्रियामेव। "यञिञोश्च" ४।१।१०१ इति फक्। शैषिकेष्वर्थेषु "कण्वादिभ्यो गोत्रे" ४।२।११० इत्यण् "तस्येदम्" ४।३।१२० इत्यर्थविवक्षायाम्। "सङ्घाङ्कलक्षणेष्वञ्यञिञाम्" ४।३।१२७ इत्यण्। एतानि कार्याणि यथा कण्वादीनां भवन्ति तता वामरथ्यस्यापि। एषां "वामरथा" इत्यादीनि यथाक्रममुदाहरणानि। "नातिदेशिकमाद्युदात्तत्वम्" इति। यथा कण्वादीनां यञन्तानां ञित्स्वरेणाद्युदात्तत्वं, न तथा वामरथ्यस्य, किं तर्हि? प्रत्ययस्वरेणान्तोदात्तत्वमेव भवति। "सम्राजः क्षत्त्रिये" इति। सम्राजः क्षत्त्रिये ण्यो भवति, सम्राजोऽपत्यं साम्राज्यः। अन्यत्राणेव-- साम्राजः॥

बाल-मनोरमा

कुर्वादिभ्यो ण्यः ११५८, ४।१।१५१

कुर्वादिभ्यो ण्यः। अपत्ये इति। शेष पूरणमिदम्। "सौवीरेष्वि"ति निवृत्तम्। कौरव्या ब्राआह्मणा इति। कुरुर्नाम कश्चिद्ब्राआह्मणः। तस्यापत्यानीति विग्रहः। ण्यप्रत्यये ओर्गुणे अवादेशः। आदिवृद्धिः। यस्तु "कुरुनादिभ्यो ण्यः" इति ण्यो वक्ष्यते, तस्य तद्राजत्वाद्बहुषु लुकि-"कुरवः क्षत्रियाः" इति भवति। एतत्सूचनार्थमेव बहुवचनं, "ब्राआह्मणा" इति विशेष्यं चोदाह्यतम्। वावदूक्या इति। वावदूकस्यापत्यानीति विग्रहः। सम्राजः क्षत्रिये इति। कुर्वादिगणसूत्रम्। "अपत्ये" इति शेषः। क्षत्रिय एवेति नियमार्थमिदम्। साम्राजोऽन्य इति। सम्राजः क्षत्रिये इति। कुर्वादिगणसूत्रम्। "अपत्ये" इति शेषः। क्षत्रिय एवेति नियमार्थमिदम्। साम्राजोऽन्य इति। सम्राजः शूद्रादौ उत्पन्न इत्यर्थः।

तत्त्व-बोधिनी

कुर्वादिभ्यो ण्यः ९५८, ४।१।१५१

कुर्वादिभ्यो। "सौवीरेषु"इत्यपि निवृत्तम्। कौरव्या ब्राआह्णण इति। यत्तु "कुरुनादिभ्यो ण्य"इति वक्ष्यति तस्य तद्राजत्वाद्बहुषु लुकि "कुरवः क्षन्त्रियाः" इति भवति, न तु "कौरव्याः"इति भावः। वावदूक्या इति। बदेर्यङन्तादूकप्रत्ययः। स चात्रैव गणे निपातनादित्याहुओः। कुरु, गर्ग, वावदूक। सम्राजः क्षत्त्रिये इति। सम्राट्शब्दाण्ण्य इत्यर्थः। "वामरथस्य कण्वादिवत्स्वरवर्जम्"। यञन्तस्य काव्यशब्दस्य यत्कार्यं तण्ण्यप्रत्ययान्तस्य वामरथ्यशब्दस्य स्यात्। आद्युदात्तं विनेत्यर्थः। बहुत्वे "यञञोश्चे"ति लुक्। वामरथाश्छात्राः। "कण्वादिभ्यो गोत्रे"इति छापवादोऽण्। वामरथी। वामरथ्यायनी स्त्री। "यञश्च"। "प्राचां ष्फ तद्धितः" इति ङीष्फौ। वामरथानि सङ्घाङ्कलक्षणानि। "सङ्घाङ्कलक्षणेषु"इति छापवादोऽण्। सत्यङ्कार, वलभीकार, बुद्धिकार, इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

सेनान्तलक्षणकारिभ्यश् च ४।१।१५२

सेनान्तात् प्रातिपदिकात् लक्षणशब्दात् कारिवचनेभ्यश्च अपत्ये ण्यः प्रत्ययो भवति। कारिशब्दः कारूणां तन्तुवायादीनां वाचकः। कारिषेण्यः। हारिषेण्यः। लाक्षण्यः। कारिभ्यः तान्तुवाय्यः। कौम्भकार्यः। नापित्यः।

न्यासः

सेनान्तलक्षमकारिभ्यश्च।, ४।१।१५२

अत्र ग्रहणवता प्रातिपदिकेन तदन्तविधि (व्या।प।८९) प्रतिषेधाल्लक्षणशब्दस्य स्वरूपग्रहणम्। अत एवाह-- "लक्षणशब्दात्" इति। कारीत्यर्थग्रहणम्। तत्रार्थे कार्यस्याभावात् तद्वाचिनः प्रत्ययो विज्ञायत इत्याह-- "कारिवचनेभ्यश्च" इति।यथा लक्षणशब्दस्य स्वरूपग्रहणं तथा कारिशब्दस्य कस्मान्न भवति? शिवादिषु तक्षन्निति पाठात्। अस्य हि कारिलक्षणमिञं बाधितुं तत्र पाठः। यदि च कारिशब्दस्येह स्वरूपग्रहणं स्यात्, तक्षन्शब्दादिभ्यः प्राप्तेरसम्भवादुत्सर्गेणैवाणा भवितव्यमिति तस्य शिवादिषु पाठोऽनर्थकः स्यात्। अर्थग्रहणे त्वनेन प्राप्तस्येञो बाधनार्थस्तत्र पाठो युज्यते॥

बाल-मनोरमा

सेनान्तलक्षणकारिभ्यश्च ११५९, ४।१।१५२

सेनान्त। एभ्य इति। सेनान्तलक्षणकारिभ्य इत्यर्थः। अकुर्वादित्वाद्वचनम्। हारिषेण्य इति। हरिषेणो नाम कश्चित्। "एति संज्ञायां"मिति षत्वम्। तस्याऽसिद्धत्वात्सेनान्तत्वाण्ण्यः। लाक्षण्य इति। लक्षणमस्यास्तीति लक्षणः। अर्शाअद्यच्। तस्यापत्यमिति विग्रहः। कारिपदं व्याचष्टे--कारिः शिल्पीति। तस्मादिति। कारिविशेषवाचिनो ण्ये सतीत्यर्थः। तान्तुवाय्य इति। तन्तुवायस्यापत्यमिति विग्रहः। कौम्भकार्य इति। कुम्भकारस्यापत्यमिति विग्रहः। नापित्य इति। नापितस्यापत्यमिति विग्रहः।

तत्त्व-बोधिनी

सेनान्तलक्षणकारिभ्यश्च ९५९, ४।१।१५२

हारिषेण्य इति। "एति संज्ञाया"मिति षत्वस्याऽसिद्धत्वत्सेनान्तोऽयम्।

ताक्ष्णोऽण उपसङ्ख्यानम्। ताक्ष्ण इति। उदीचामिञोपवादोऽयमण्। अस्मादुपसङ्ख्यानाच्छिवादिषु तक्षन्शब्दपाठोऽनार्ष इति गम्यते। वृत्तिकारस्तु---तक्षन्शब्दं शिवादिषु पठित्वा "कारिलक्षणमुदीचाभिञमयमणबाधते, णस्य तु बाधो नेष्यते"इत्याह। तदनुरोधेनास्माभिरपि तत्र तथैव व्याख्यातम्। फले विशेषाऽभावात्।

---

सूत्रम्

काशिका-वृत्तिः

उदीचाम् इञ् ४।१।१५३

ण्ये प्राप्ते इञपरो विधीयते। सेनान्तलक्षणकारिभ्यो ऽपत्ये इञ् प्रत्ययो भवति उदीचां मतेन। कारिषेणिः। हारिषेणिः। लाक्षणिः। तान्तुवायिः। कौम्भकारिः। वचनसामर्थ्यादेव प्रत्ययसमावेशे लब्धे आचार्यग्रहणं वैचित्र्यार्थम्। तक्षन्शब्दः शिवादिः, तेन अणा अयम् इञ् बाध्यते, न तु ण्यः। तक्ष्णो ऽपत्यं ताक्ष्णः, ताक्षण्यः।

न्यासः

उदीचामिञ्।, ४।१।१५३

"वचनसामर्थ्यात्" इत्यादि। ण्योऽप्युच्यते, इञपि, वचनसामर्थ्यादेवान्तरेणाचार्यग्रहणं तयोः समावेशे सिद्धे तदाचार्यग्रहणं क्रियते तद्वैचित्र्यार्थम्। आचार्यग्रहणस्यातिरिच्यमानत्वादयमर्थो लभ्यते, ग्रन्थाधिक्यादर्थाधिक्यं भवतीति कृत्वा। ननु च पूजार्थमाचार्यग्रहणं स्यात्? नैतदस्ति; एवं हि प्राचामपि ग्रहणं कर्त्तव्यं स्यात्। तेऽपि हि

सेनान्तलक्षणकारिभ्य इत्रं स्मरन्ति। "तक्षन्शब्दः" इत्यादिना वैचित्र्यं दर्शयति। "ताक्ष्णः" इति। शिवाद्यणि कृते "षपूर्वहन्धृतराज्ञामणि" ६।४।१३५ इत्यल्लोपः। "ताक्षण्यः" इति। "ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिभावः॥
बाल-मनोरमा
उदीचामिञ् ११६०, ४।१।१५३

उदीचामिञ्। सेनान्तलक्षणकारिभ्य इञ् स्यादुदीचां मते इत्यर्थः। परत्वात्फिञेवेति। "उदीचां वृद्धा"दित्यनेनेति शेषः।

तक्ष्णोऽण उपसङ्ख्यानमिति। "उदीचांमते"इति शेषः। ताक्ष्ण इति। अणि प्रकृतिभावान्न टिलोपः। "अल्लोपस्तु "षपूर्वह"न्निति वचनाद्भवति। पक्षे ताक्षण्य इति। प्राचां मते कारित्वलक्षणो ण्य इत्यर्थः। "ये चाऽभावकर्मणोः" इति प्रकृतिभावान्न टिलोपः।

---

सूत्रम्
काशिका-वृत्तिः
तिकादिभ्यः फिञ् ४।१।१५४

तिक इत्येवम् आदिभ्यः शब्देभ्यो ऽपत्ये फिञ् प्रत्ययो भवति। तैकायनिः। कैतवायनिः। वृषशब्दो ऽत्र पठ्यते, तस्य प्रत्ययसन्नियोगेन यकारन्तत्वम् इष्यते। वार्ष्यायणिः। कौरव्यशब्दः पठ्यते, स च क्षत्रयवचनः, औरसशब्देन क्षित्रयप्रत्ययान्तेन साहचर्यात्। यस् तु कुर्वादिह्यो ण्यः ४।१।१५१ , तदन्तादिञैव भवितव्यम्। तथा च ण्यक्षत्रियार्षञितो यूनि लुगणिञोः २।४।५८ इत्यत्र उदाहृतं कौरव्यः पित, कौरव्यः पुत्रः इति। तिक। कितव। संज्ञा। बाल। शिखा। उरस्। शाट्य। सैन्धव। यमुन्द। रूप्य। ग्राम्य। नील। अमित्र। गौकक्ष्य। कुरु। देवरथ। तैतिल। औरस। कुअरव्य। भैरिकि। भौलिकि। चौपयत। चैतयत। चैटयत। शैकयत। क्षैतयत। ध्वाजवत। चन्द्रमस्। षुभ। गङ्गा। वरेण्य। सुयामन्। आरद। वह्यका। खल्या। वृष। लोमका। उदन्य। यज्ञ।
न्यासः
तिकादिभ्यः फिञ्। , ४।१।१५४

"कौरव्यशब्दः पठ()ते" इत्यादि। कौरव्यशब्दोऽयमस्त्येव क्षत्त्रियगोत्रवचनो यः "कुरुनादिभ्यो ण्यः" ४।१।१७० इति ण्यप्रत्ययान्तः; तयोरिह पूर्वो गृह्रते। कुत एतत्? औरसशब्देन साहचर्यात्। औरसशब्दोऽयं "जनपदशब्दात् क्षत्त्रियादञ्" ४।१।१६६ इत्यञ्प्रत्ययान्तः, तेनासौ क्षत्त्रियवचनः, तत्साहचर्याच्चकौरव्यशब्दो यः क्षत्त्रियप्रत्ययान्तत्वात् क्षत्त्रियवचनः स एव गृह्रते। "यस्तु" इत्यादि। यस्तु "कुर्वादिभ्यो ण्यः" ४।१।१५। इति ण्यप्रत्ययान्तो ब्राआह्मणादिगोत्रवचनः, तस्मात् "अत इञ्" ४।१।९५ इदीञैव भवितव्यम्, तत्रैतत् स्यात्? स्वमनीषिकेयं भवत इत्याह-- "तथा च" इत्यादि। यत एवं ब्राआह्मणादिगोत्रवचनादिञैव भवितव्यम्। तथा हि ण्यक्षत्त्रियादि २।४।५८ सूत्रे पूर्वैरपि वृत्तिकारैः--- कौरव्यः पिता, कौरव्यः पुत्र इत्युदाह्मतम्। यदि चातः फिञ् स्यात् तदुदाहरणं न युज्येत।न हि ण्यप्रत्ययान्ताद्विहितस्य फिञो यूनि लुगुच्यते, अपि त्वणिञोः॥
बाल-मनोरमा
तिकादिभ्यः फिञ् ११६१, ४।१।१५४

तिकादिभ्य फिञ्। इञोऽपवादः। तैकायनिरिति। फञि आयन्नादेशः।

---

सूत्रम्

काशिका-वृत्तिः

कौशल्यकार्मार्याभ्यां च ४।१।१५५

कौशल्यकार्मार्यशब्दाभ्याम् अपत्ये फिञ् प्रत्ययो भवति। इञो ऽपवादः। कौशल्यायनिः। कार्मार्यायणिः। परमप्रकृतेरेव अयं प्रतययः इष्यते, कौशलस्य अपत्यं, कर्मारस्य पत्यम् इति। प्रत्ययसन्नियोगेन तु प्रकृतिरूपं निपात्यते। यथा च स्मृत्यन्तरम्, दगुकोसलकर्मारच्छागवृषाणां युट् वादिष्टस्य इति। दागव्यायनिः। कौसल्यायनिः। कार्मार्यायणिः। छाग्यायनिः। वार्ष्यायणिः।

न्यासः

कौशल्यकार्मार्याभ्याञ्च। , ४।१।१५५

"परमप्रकृतेरेवायं प्रत्यय इष्यते" इति। कोशलशब्दात्, कर्मारशब्दाच्च। एवकाः "वृद्धेत्कोशलाजादाञ्ञ्यङ्" ४।१।१६९ इति ञ्यङन्तो यः कौशल्यशब्दः, यश्च "सेनान्तलक्षणकारिभ्यश्च" ४।१।१५२ इति कारिलक्षणण्यप्रत्ययान्तः कर्मार्यशब्दः तयोर्व्यवच्छेदाय। यदि मूलप्रकृतेरेवेष्यते, कथमिदं विकृतं प्रकृतिरूपं श्रयूते? इत्याह-- "प्रत्ययसन्नियोगेन" इत्यादि। न चेयं स्वमनीषिका, अपि त्वाचार्यणामेव भाष्यकारप्रभृति#ईनामिदं मतमिति दर्शयन्नाह-- "तथा च" इत्यादि। कः पुनः परमप्रकृतेः प्रत्ययान्ताद्वत्पत्तौ विशेषः? परमप्रकृतेरुत्पत्तावपत्यमात्रे प्रत्ययो लभ्यते, प्रत्ययान्तात् तूत्पत्तौ "गोत्राद्यूनि" ४।१।९४ इति वचनात् "यून्यपत्ये" इत्येव विशेषः। "युड् वादिष्टस्य" इति। आदिष्टग्रहणमायन्नादेशए कृते यथा स्यादित्येवमर्थम्; अन्यथा ह्ननादित्वादायन्नादेशो न स्यात्। "दागव्यावनिः" इति। "ओर्गुणेः" ६।४।१४६ कृते "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः॥ "कात्रायणिः" इति। कर्त्तुरपत्यमित्यण्--- कार्त्रः, ततः फिञ्। " दाक्षायणः" इति। दाक्षिशब्दादिञन्ताद्यूनि पञिञोश्च" ४।१।१०१ इति फक्। प्रतिपादनादि सुगमम्॥

बाल-मनोरमा

कौशल्यकार्मार्याभ्यां च ११६१, ४।१।१५५

कौसल्य। परमप्रकृतेरेवेति। कोसलकर्माराभ्यां फिञ्, तस्य युट् चेत्यर्थः। भाष्ये स्पष्टमेतत्।

छागवृषयोरपीति। फिञ्, तस्य युट् चेति वक्तव्यमित्यर्थः।

तत्त्व-बोधिनी

कौशल्यकार्मार्याभ्यां च ९६०, ४।१।१५५

कौशल्य। परमप्रकृतेरेवायमिति। यदि तु "वृद्धेत्कोसले"ति ञ्यङन्तात्कोशलशब्दात्कारिलक्षणण्यन्तात्कर्मारशब्दाच्चायं विधिः स्यात्तदा यून्येव प्रसज्यतेतेति भावः।

छागवृषयोरपि। छागेति। दगुशब्दस्याप्युपलक्षणमेतत्। फैञ्प्रकरणे "दगुकोसलकर्मारच्छागवृषाणां युट्चाऽऽदिष्टस्यं"इति वार्तिकात्। आदिष्टस्य। आयन्नदेशस्येत्यर्थः। अन्यथा प्रातिपदोक्ते युटि कृते प्रत्ययादित्वाऽभावात्कौशल्यायनिरित्यादौ फस्यायन्नादेसो न स्यात्, युकि कृते तु "दागव्यायनिः इत्यत्र और्गुणः, अन्यत्राऽल्लोपश्च न स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः
अणो द्व्यचः ४।१।१५६

अणन्ताद् द्व्यचः प्रातिपदिकादपत्ये फिञ् प्रत्ययो भवति। इञो ऽपवादः। कार्त्रीयणिः। हार्त्रीयणिः। अणः इति किम्? दाक्षायणः। द्व्यचः इति किम्? औपगविः। त्यदादीनां वा फिञ् वक्तवय्H। त्यादायनिः, त्यादः। यादायनिः, यादः। तादायनिः, तादः। अणत्र प्राप्तः।
बाल-मनोरमा
अणो द्व्यचः ११६२, ४।१।१५६

अणो द्व्यचः। अपत्ये फिञिति। शेषपूरणमिदम्। द्व्यचोऽण्प्रत्यान्तादपत्ये फिञित्यर्थः। कात्र्रायणिरिति। कर्तु छात्रः कार्त्रः। "तस्येद"मित्यणम्। कात्र्रस्यापत्यं कात्र्रायणिः। फिञि आयन्नादेशे णत्वम्। दाक्षायण इति। दक्षस्यापत्यं दाक्षिः। अत इञ्। दाक्षेरपत्यं दाक्षायणः। "यञिञोश्चे"ति फक्। अण्णन्तत्वाऽभावान्नफिञिति भावः। औपगविरिति। उपगोर्गोत्रापत्यमौपगवः। तस्यापत्यमौपगविः युवा। द्व्यच्त्वाऽभावान्न फिञिति भावः। कर्तुरपत्ये तु कुर्वादिगणे पा

ठाण्ण्य एवेति बोध्यम्।

त्यदादीनां फिञ्वा वाच्यः। त्यादायनिः त्यादः" इति क्वचित्पुस्तके दृश्यते। तत्तु प्रामादिकं, "त्यदादीनि चे"ति त्यदादीनां वृद्धत्वात् "उदीचां वृद्धा"दित्येव सिद्धेः, भाष्येऽस्य वार्तिकस्याऽदर्शनाच्च।

तत्त्व-बोधिनी
अणो द्व्यचः ९६१, ४।१।१५६

कात्र्रायणिरिति। कर्तुरपत्यं कात्र्रस्तस्यापत्यं तु कात्र्रायणिः। अत्र व्याचक्षते---कर्तृशब्दः कुर्वादिषु षठ()ते। तथा च "कार्त्र्यः"इत्येव वद्र्धमानेनोदाह्मतं, तस्मादिह भर्तृहत्र्राद्युदाहार्यमिति। दाक्षिरिति। "वा नामधेयस्ये"ति वृद्धसंज्ञाऽभावपक्षे प्रत्युदाहरणमिदम्। पक्षान्तरे तु फिञ्भवत्येव। "दाक्षायण्योऽ()इआनीत्यादि ताराः"इत्यमरः।

---

सूत्रम्
काशिका-वृत्तिः
उदीचां वृद्धादगोत्रात् ४।१।१५७

वृद्धं यच्छब्दरूपम् अगोत्रं, तस्मादपत्ये फिञ् प्रत्ययो भवति उदीचाम् आचार्याणां मतेन। आम्रगुप्तायनिः। ग्रामरक्षायणिः। कारिशब्दादपि वृद्धादगोत्रात् परत्वादनेन एव भवितव्यम्। नापितायनिः। उदीचाम् इति किम्? आम्रगुप्तिः। वृद्धादिति किम्? याज्ञदत्तिः। अगोत्रादिति किम्? औपगविः।
न्यासः
उदीचां वृद्धादगोत्रात्। , ४।१।१५७

"वृद्धात्" इति। इहैव यत्पारिभाषिकं वृद्धं तद्()गृह्रते, न शास्त्रान्तरप्रसिद्धम्, अगोत्रादिति प्रतिषेधात्। "कारिशब्दात्" इत्यादि। कारिलक्षणस्येञोऽवकाशः-- तान्तुवायिरिति, फिञोऽवकाशः--आम्रगुप्तायनिरिति; इहोभं प्राप्नोति-- नापितायनिरिति, परत्वात् फिञेव भवति॥

बाल-मनोरमा

उदीचां वृद्धादगोत्रात् ११६३, ४।१।१५७

उदीचां वृद्धा। वृद्धसंज्ञकादगोत्रप्रत्ययान्तात्फिञ्स्यादुदीचां मते इत्यर्थः। आम्रगुप्तायनिरिति। आम्रगुप्तस्यापत्यमिति विग्रहः। प्राचां त्विति। "मते" इति शेषः। आम्नगुप्तिः। अत इञ्। औपगविरिति। उपगोर्गोत्रापत्यम् औपगवः, तस्यापत्यं युवा औपगविः। औपगवस्य गोत्रत्वात्ततो यूनि फिञभावे इञेवेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वाकिनादीनां कुक् च ४।१।१५८

वाकिन इत्येवम् आदिभ्यः शब्देभ्यो ऽपत्ये फिञ् प्रत्ययो भवति, तत् संनियोगेन च एषां कुगागमः। यदिह वृद्धम् अगोत्रं शब्दरूपं तस्य आगमार्थम् एव ग्रहणम्, अन्येषाम् उभयार्थम्। वाकिनकायनिः। गारेधकायनिः। इञाद्यपवादो योगः। उदीचाम् इत्यधिकारात् पक्षे ते ऽपि भवन्ति। वाकिनिः। गारेधिः। वाकिन। गारेध। कार्कट्य। काक। लङ्का।
चर्मिवर्मिणोर् नलोपश्च।

न्यासः

वाकिनादीनां कुक्च। , ४।१।१५८

"यदिह वृद्धमगोत्रम्" इति। वाकिनशब्दादिकाकपर्यन्तम्। "इञाद्यपवादो योगः" इति। आदिशब्देनाणो ग्रहणम्। तत्र चर्मिवर्मशब्दयोरणोऽपवादः शेषाणामिञः। "चमिवर्मिणोर्नलोपश्च" इति। चर्मिन्, वर्मिन्-- इत्येतयोः कुक्फिञौ भवतः, नलोपश्चेति। कुकि कृते प्रातिपदिकस्यानकारान्तत्वान्नलोपोऽत्र न प्राप्नोतीति विधीयते--
चार्मिकायणिः,वार्मिकायणिः॥

बाल-मनोरमा

वाकिनादीनां कुक्च ११६४, ४।१।१५८

वाकिनादीनां। शेषपूरणेन सूत्रं व्याचष्टे--अपत्ये फिञ्वेति। चकारादुदीचामिति फिञिति चानुवर्तते इति भावः। तथा च वाकिनादिभ्यः फिञ् वा स्यात्, प्रकृतीनां कुगागमश्चेति फलितम्।

तत्त्व-बोधिनी

वाकिनादीनां कुक्च ९६२, ४।१।१५८

वाकिनादीनां। यदिह वृद्धमगोत्र शब्दरूपं, तत्रागमार्थमेवेदं वचनम्, अन्येषां तूभयार्थम्। "उदीचा"मित्यनुवर्तनाद्विकल्पः फलित इत्याह---फिञ्वा स्यादिति। वाकिनकायमिरिति। वचनं वाकः, सोऽस्यास्तीति वाकिनः। अतएव निपातनादिनन्। अगारे एधत इथि गारेधः। पृषोदरादित्वादादिलोपः। शकन्ध्वादित्वात्पररूपम्। गारेधकायनिमः। चर्मिवम्र्यादौ कूभयार्थम्। चर्मवर्मशब्दाभ्यां व्रीह्यादित्वादिनिः। "चर्मिवर्मिणोर्नलोपश्चे"ति गणसूत्रम्। चार्मिकायणिः। वार्मिकायणिः। कुकि कृते नकारस्याऽनन्त्यत्वान्नलोपाऽप्राप्तौ वचनम्। न चु कुट् परादिरस्त्विति वाच्यं,
फस्याऽनादित्वादायनादेशाऽभावप्रसङ्गा। वाकिनिरिति। "अत इञ्"। फिञभावे तत्संनियोगशिष्टः कुगत्र न भवति। एवं गारेधिः, चार्मिण इत्याद्यूह्यम्।

---

सूत्रम्

काशिका-वृत्तिः

पुत्रान्तादन्यतरस्याम् ४।१।१५९

उदीचां वृद्धातिति वर्तते। पुत्रान्तम् अगोत्रम् इति पूर्वेण एव प्रत्यय्H सिद्धः, तस्मिन्ननेन कुगागमो ऽन्यतरस्यां विधीयते। पुत्रान्तात् प्रातिप्दिकात् यः फित्र् प्रत्यय्H, तस्मिन् परभूते ऽन्यतरस्यां कुगागमो भवति पुत्रान्तस्य। तेन त्रैरूप्यं सम्पद्यते। गार्गीपुत्रकायणिः, गार्गीपुत्रायणीः, गार्गीपुत्रिः। वात्सीपुत्रकाय्णिः, वात्सीपुत्रायणिः, वात्सीपुत्रिः।

न्यासः

पुत्रान्तादन्यतरस्याम्। , ४।१।१५९

"तेन" इत्यादि। वचनात् पूर्वसूत्रेणैवोदीचां मतेन यः पक्षे फित्र् विहितस्तस्मिन्ननेनान्यतरस्यां कुगागमोऽपि विधीयते।तेन त्रीणि रूपाणि भवन्ति॥

बाल-मनोरमा

पुत्रान्तादन्यतरस्याम् ११६५, ४।१।१५९

पुत्रान्तादन्यतरस्यां। स्पष्टम्।

तत्त्व-बोधिनी

पुत्रान्तदन्यतरस्याम् ९६३, ४।१।१५९

पुत्रान्तात्। "उदीचां वृद्धा"दित्यनुवर्तत इत्याशयेनाह वा फिञ्सिद्ध इति। तेनैव सुत्रेण फित्रि सिद्धे अनेन कुगेव वा विधीयत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

प्राचाम् अवृद्धात् फिन् बहुलम् ४।१।१६०

अवृद्धाच् छब्दरूपादपत्ये फिन् प्रत्ययो भवति बहुलं प्राचां मतेन। ग्लुचुकायनिः। अहिचुम्बकायनिः। प्राचाम् इति किम्? ग्लौचुकिः। अवृद्धातिति किम्? राजदन्तिः। उदीचां प्राचाम् अन्यतरस्यां बहुलम् इति सर्व एते विकल्पार्थस् तेषाम् एकेन एव सिध्यति। तत्र आचार्यग्रहणं पूजार्थम्। बहुलग्रहणम् वैचित्र्यार्थम्। कव्चिन् न भवत्येव, दाक्षिः। प्लाक्षिः।

न्यासः

प्राचामवृद्धात्फिन्बहुलम्। , ४।१।१६०

"विकल्पार्थः" इति। विकल्पप्रयोजनाय। "एकेनैव सिध्यति" इति। विकल्पार्थत्वादिति।प्रकृतत्वाद्विकल्प इति गम्यते। अत्र च किमर्थं सर्वेषां ग्रहणमित्यध्याहार्यम्। तत्रेत्याद्युत्तरम्। यच्चोदीचांग्रहणं यच्च प्राचांग्रहणम्, तदुभयं पूजार्थम्। "बहुलग्रहणं वैचित्र्यार्थम्" (इति)। पारिशेष्यादन्यतरस्यांग्रहणं विकल्पार्थमित्युक्तं भवति। "क्वचित्" इत्यादिना बहुलग्रहणस्य वैचित्र्यार्थतां दर्शयति॥

बाल-मनोरमा

प्राचामवृद्धात्फिन्बहुलम् ११६६, ४।१।१६०

प्राचामवृद्धात्। अवृद्धसंज्ञकादपत्ये बहुलं फिन् स्यादित्यर्थः। प्राचांग्रहणं पूजार्थम्। ग्लुचुकायनिरिति। ग्लुचुकस्यापत्यमिति विग्रहः। अवृद्धात्किम्। राजदन्तिः। बहुवग्रहणान्नेह--दाक्षिः।

तत्त्व-बोधिनी

प्राचामवृद्धात्फिन्बहुलम् ९६४, ४।१।१६०

प्राचामवृद्धात्। प्राचांग्रहणं पूजार्थम्। अवृद्धादिति किम्()। राजदन्तिः। बहुग्रगणान्नेह---दाक्षिः।

---

सूत्रम्

काशिका-वृत्तिः

मनोर् जातावञयतौ षुक् च ४।१।१६१

मनुशब्दादञ् यतित्येतौ प्रत्यौ भवतः, तत् सन्नियोगेन षुगागमः, समुदायेन चेज् जातिर् गम्यते। मानुषः, मनुष्यः। जातिशब्दावेतौ। अपत्यार्थो ऽत्र न अस्त्येव। तथा च मानुषाः इति बहुषु न लुग् भवति। अपत्यविवक्षायां तु अणैव भवितव्यम्। मानवी प्रजा। अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस् तेन सिध्यति माणवः।

न्यासः

मनोर्जातावञ्यतौ षुक् च। , ४।१।१६१

"तथा च" इत्यादि। यस्मादपत्यार्थोऽत्र नास्ति, एवञ्च कृत्वा मानुषा इति बहुषु लुग्न भवति। अपत्यार्थे तु सति "यञञोश्च" २।४।६४ इति बहुषु लुक् प्रसज्येत। "अपत्ये कुत्सिते" इत्यादि। मूर्धन्योपसंख्यानपरोऽयं श्लोकः। अण्प्रत्ययोऽपत्यविवक्षायाम् "तस्यापत्यम्" ४।१।९२ इत्येनैव सिध्यति। ननु च मूर्धन्योऽपि च बहुलग्रहणानुवृत्त्या सिध्यत्येव? एवं तर्हि बहुलग्रहणानुवृत्तेर्लभ्य एवार्थः श्लोकेन कथ्यते। स चापि मूर्धन्यो विशिष्ट एव विषये मूढादावपत्ये भवति, न सर्वत्र। अनधीतवेदत्वदज्ञो मूढः। मूढत्वादेव प्रतिषिद्धाचरणाद्वा कुत्सितो यः स ब्राआह्णजातीयो माणव उच्यते॥

बाल-मनोरमा

मनोर्जातावञ्यतौ षुक्च ११६७, ४।१।१६१

मनोर्जातौ। मनुशब्दादञ् यत् एतौ प्रत्ययौ स्तः, तयाः परयोर्मनुशब्दस्य षुगागमश्च, प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामित्यर्थः। तदाह--समुदायार्थो जातिरिति। नात्राऽपत्यग्रहणं संबध्यत इति भावः। अन्यथा "मानुषा" इत्यत्र "यञञोश्चे"ति लुक्स्यादिति बोध्यम्।

तत्त्व-बोधिनी

मनोर्जातावञ्यतौ षुक्च ९६५, ४।१।१६१

मानुषः। मनुष्य इति। जातिशब्दावेतौ। "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः"। णत्वविधानार्थमिदम्, अमः सिद्धत्वात्। अनधीतवेदत्वान्मूढत्वं, विहिताननुष्ठानाच्च कुत्सितत्वम्। इदं च वचन "ब्राआह्णमाणवे"ति णत्वनिपातनाल्लब्धमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अपत्येअं पौत्रप्रभृति गोत्रम् ४।१।१६२

पौत्रप्रभृति यदपत्यं तद् गोत्रसंज्ञं भवति। सम्बन्धिशब्दत्वादपत्यशब्दस्य यदपत्यं तदपेक्षया पौत्रप्रभृतेर् गोत्रसंज्ञा विधीयते। गर्गस्य अपत्यं पौत्रप्रभृति गार्ग्यः। वात्सयः। अपत्यम् इति व्यपदेशो ऽयं पौत्रप्रभृतेः। पौत्रप्रभृति इति किम्? अन्यस्य मा भूत्। कौञ्जिः। गार्गिः। गोत्रप्रदेशाः एको गोत्रे ४।१।९३ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

अपत्यं पौत्रप्रभृति गोत्रम् १००९, ४।१।१६२

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्॥

न्यासः

अपत्यं पौत्रप्रभृति गोत्रम्। , ४।१।१६२

प्रभृतिशब्द आदिशब्दस्यार्थे। पौत्रः प्रभृतिर्यस्येति बहुव्रीहिः। यदि पौत्रप्रभृति यदपत्यं तद्()गोत्रसंज्ञं भवति, गर्गस्यापि गोत्रसंज्ञा प्राप्नोति, सोऽपि कञ्चित् प्रति पौत्रो भवत्येव। सत्याञ्च गोत्रसंज्ञायां गोत्रशब्दादनन्तरापत्ये प्रत्ययो न प्राप्नोतीति चोद्यमाशङ्क्याह-- "सम्बन्धिशब्दत्वात्" इत्यादि। गोत्रसंज्ञा ह्रपत्यस् पोत्रप्रभृतेर्विधीयते। ते च यस्चापत्यमिति सम्बन्धिशब्दोऽसौ नियोगतोऽपत्यवन्तमपेक्षत। तेन तस्य यदपत्यं तदपेक्षया गोत्रसंज्ञा विधीयते। न च यस्य गर्गः पोत्रस्तस्यासौ गर्गोऽस्रयमिति शक्यते व्यपदेष्टुम् ; अपत्यत्वस्य तत्राप्रतिभासनात्। अप्रतिभासनं पुस्तस्तस्य द्वतोऽविवक्षितत्वात्। यदपि हि तत्रापत्यत्वं तदप्यविवक्षितस्वरूपेण नाख्यातम्, ततोऽपत्यस्य पोत्रप्रभृतेर्विधीयते। अतः स्वरूपेण प्रतिभासमानो न भवति गर्गस्य गोत्रसंज्ञायाः प्रसङ्गः।"गर्गस्य पौत्रप्रभृति" इति। गर्गसम्बन्धि पौत्राद्यपत्यं गाग्र्य इति गोत्रसंज्ञायां सत्यां "गोत्रे कुञ्जादिभ्यश्च्फञ्" ४।१।९८ इत्यतो गोत्र इत्यनुवत्र्तमाने "गर्गादिभ्यो य()ञ्" ४।१।१०५ इतिगोत्रेऽपत्ये यञ् भवति। "अपत्यमिति व्यपदेशोऽयम्" इति। संज्ञिन इति शेषः। तच्चोत्तरसूत्र इत्यभिप्रायः। इह तु पौत्रस्यापत्यत्वाव्यभिचारात् तदपत्यमेव प्रत्ययान्तैः विज्ञायत इति नार्थः संज्ञिव्यपेदशार्थेनापत्यग्रहणेन। उत्तरसूत्रे तु पौत्रप्रभृत्येतत् षष्ठ()न्तं विपरिणम्य पौत्रप्रभृतेः सम्बन्धिनोऽपत्यस्य युवसंज्ञेष्यते, सा चापत्यग्रहणमन्तरेण न लभ्यते। अन्यदपि ह्रपत्यात् पौत्रप्रभृतेः सम्बन्ध्यस्ति, तत्र न ज्ञायते-- कस्येयं संज्ञेति? अतस्तत्र संज्ञिनो व्यपदेशाय युक्तमपत्यग्रहणमित्येके। इह तु संज्ञिव्यपेदशार्थं युक्तमपत्यग्रहणं पश्यामः। असति ह्रपत्यग्रहणे सम्ब्नधिशब्दत्वादपत्यशब्दस्येत्यादि यदुक्तं चोद्यनिरासाय तदघटमानं स्यात्। ततश्च गर्गस्यापि गोत्रसंज्ञा स्यादेव। तस्मादिहापि संज्ञिव्यपेशायापत्यग्रहणं कत्र्तव्यमेव, अपत्यरूपेण प्रतिभासमानस्य संज्ञा यथा स्यात्। "अन्यस्य मा भूत्" इति। ननु च तस्मादेव तत्प्रकृतमपत्यग्रहणं तदेव संज्ञिव्यदेशाय भविष्यति, तत् किमपरेणापत्यग्रहणेन? नैतदस्ति; तद्धि प्रत्ययार्थतया प्कृतं कथं संज्ञिनो व्यपदेशाय स्यात्; स्यादेतत् यद्यपि तत्प्रत्ययार्थे कृतं तथापि तस्येहानुवृत्तस् तत्प्रयोजनं नास्तीत्यतः संज्ञिव्यपदेशाय विज्ञास्यत इति?एतच्च नास्ति; उत्तरार्थं ह्यधिकाराणामनुवृत्तिर्दृश्यते,व्याख्यानञ्चैवं कत्र्तव्यं स्यात्, व्याख्यानाच्च वचनमेव लघुतरमित्यपत्यग्रहणं कत्र्तव्यम्। "कौञ्जि-, गार्गिःर" इति। अनन्तरस्य गोत्रसंज्ञाया अभावात् "गोत्रे कुञ्जादिभ्यश्च्फञ्" ४।१।९८, "गर्गादिभ्यो यञ्" ४।१।१०५ इति यश्च गोत्रे विधीयमानो न स भवति॥

बाल-मनोरमा

अपत्यं पौत्रप्रभृति गोत्रम् १०७२, ४।१।१६२

अपत्यम्। अपत्याधिकारात्सिद्धे पुनरपत्यग्रहणं व्यर्थमित्यत आह--अपत्यत्वेन विवक्षितमिति। एवंच पौत्रत्वादिना

विवक्षितानां पौत्रादीनां न गोत्रसंज्ञेति भावः। "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इति कोशतो गोत्रशब्दस्य सन्ततिवाचकत्वात्पुत्रस्यापि गोत्रत्वे प्राप्ते प्रौत्रादिग्रहणादिह शास्त्रे पुत्रस्य न गोत्रत्वम्। ननु "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे" इत्यादिकोशादपत्यशब्दस्य पुत्र एव रूढत्वात्कथमम् "अपत्यं पौत्रप्रभृती"ति सामानाधिकरण्यमिति चेत्, मैवम्--अपत्यशब्दो हि नात्मजपर्यायः किंतु पुत्रपौत्रादिसंततिपर्यायः, "न पतन्ति नकरे पितरो येन तदपत्य"मिति "पङ्क्तिविंशती"ति सूत्रे भाष्ये व्युत्पादितत्वात्। तथा च पौत्रादयोऽपि पितामहादीनां नरकादुद्धर्तार इति तेषामप्यपत्यत्वमस्त्येवेति "एको गोत्रे" इति सूत्रभाष्ये स्पष्टम्। एतच्च महाभारतादौ जरत्कार्वाद्युपाख्यानेषु प्रसिद्धमेव। कोशस्तु सूत्रभाष्यादिविरुद्धत्वादुपेक्ष्य एव। न चैवमपि गर्गस्य पुत्रोऽपि अङ्गिरसः पौत्रत्वाद्गोत्रं स्यादिति वाच्यं, यस्य यः पौत्रादिस्तस्य तद्गोत्रमिति व्याख्यानादित्यलम्।

तत्त्व-बोधिनी

अपत्यं पौत्रप्रभृति गोत्रम् ८९८, ४।१।१६२

अपत्यवाचकादिति। "तस्यापत्य"मित्यादिना विहितः प्रत्ययो यथा षष्ठ()न्तोपग्वादिशब्ददभ्युपगम्यते, तथा अपत्यवाचिकदेवदत्तादिशब्दात्प्रत्ययो भवत्विति शङ्का स्यात्, तद्वारणार्थं प्रथमाद्ग्रहणमावश्यकमिति भावः। ननु "उपगोरपत्य"मिति विग्रहवाक्येऽपत्यवाचकस्याऽप्राथम्येऽपि "अपत्यमुपगो"रिति वाक्ये प्राथम्यात्स्यादेवापत्यवाचकात्प्रत्यय इति चेत्। मैवम्। लक्षणापेक्षं प्राथम्यं नियतत्वादत्राश्रीयते, न तु विग्रहापेक्षमनियतम्। अन्यथा "प्रथमादि"त्येतन्निरर्थकंस्यादिति। षष्ठ()र्थे मामूदिति। अयमर्थः---यथा इन्द्रो देवता अस्य हविष इति ऐन्द्र"हविरिति प्रथंमान्तात्प्रत्ययो भवति तथा उपगुरपत्यमस्य देवदत्तस्य "औपगवो देवदत्तः"देवदत्तोऽपत्यमस्योपगोः "दैवदत्तिरुपगु"रिति माभूदिति। एतच्च कैयटे स्पष्टम्॥ नन्वपवादत्वात्तद्धितः समासं नित्यं बाधेत। न च तद्धितस्य वैकल्पिकत्वात्पक्षे सोऽपि भविष्यतीति वाच्यं, "यत्रोत्सर्गापवादौ महाविभाषाया विकल्प्येते, तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तते, इति "पारेमध्ये"इत्यत्र वाग्रहणेन ज्ञापितत्वादित्याशङ्क्याह--अन्यतरस्याङ्ग्रहणानुवृत्तोरिति। जातित्वादिति। "गोत्रं च चरणैः सहेत्येनेने"ति शेषः। प्राचा तु "अणन्तत्वान्ङी"भित्युक्तम्। तव्द्याख्यातृभिश्च "टिड्ढाणञि"त्यनेने"त्युक्तम्। तदुभयमपि "गोत्राद्यून्यस्त्रियाम्ि ति सूत्रस्थभाष्यनुरोधेन "गोत्रं च चरणै"रित्यत्र कृत्रिमं गोत्रमेव गृह्रते, न त्वपत्यमात्रमित्याशयेन प्रवृत्तमिति बोध्यमित्याहुः। सूत्रस्थान्महोत्सर्गान्कमेणोदाहरति---आ()आपत इत्यादि। औत्स इति। "उत्सः प्ररुआवणं वारि प्रवाहो निर्झरो झरः"इत्यमरः। तस्य टचापत्येन योगस्तु "गङ्गेयो भीष्मः"इतिवति। अपत्यं पौत्रं। नन्वपत्यग्रहणं व्यर्थं, पौत्रादेरपत्यात्वाऽव्यभिचारादित्यत आह--अपत्यत्वेन विवक्षितमिति। विवक्षितमिति किं()। वस्तुतः पौत्रप्रभृत्येव यदा शेषत्वेन विवक्ष्यते "गर्गस्येद"मिति, तदा मा भूदित्याहुः। अन्ये तु--वस्तुतः पौत्रादीनामेव तत्त्वेन विवक्षायां संज्ञा मा भूत्, अपत्यत्वेन विवक्षायामेव यथा स्यादित्येवमर्थं तत्। तेन "औपगव"इत्यादावप्यणर्थस्य गोत्रसंज्ञा सिद्ध्यति। नह्रणः पौत्रत्वादिकं शक्यतावच्चेदकं, किं त्वपत्यत्वमेव। अन्यथा गोत्राधिकारस्थायञाद्यर्थस्यैव गोत्रसंज्ञा स्यादिति। नन्वपत्याधिकारे गोत्रयुवसंज्ञाकरणसामथ्र्यादपत्यमिति लभ्यत एवेति तेनैवोक्तप्रयोजनसिद्धौ किमनेना[त्रा]पत्यग्रहणेनेति चेत्। अत्राहुः----"ते तद्राजाः"इत्यत्र तच्छब्देन "जनपदशब्दात्क्षत्रियादञि"त्यदिना विहिता येऽञादयस्त एव गृह्रन्ते न तु ततः प्राक्तनप्रत्ययाः, गोत्रयुवसंज्ञाकाण्डेन विच्छिन्नत्वादिति वक्ष्यते। तथा चापत्याधिकारपठनसामथ्र्यस्योपक्षयादपत्यस्याऽसंबन्धशङ्कानिराकरणाय पुनरपत्यग्रहणमिह कृतमिति। पौत्रप्रभृतीति किम्()। अनन्तरापत्ये मा भूत्---कोञ्जि;। गार्गिः। न चैवमप्यङ्गिरसः पौत्रे गर्गस्यानन्तरे अतिप्रसङ्ग इति वाच्यं, "यस्य पौत्रादि तं प्रत्येव गोत्रसंज्ञे"ति स्वीकारात्। एवं च गार्गि प्रत्यनन्तरापत्यत्वेन विवक्षायामपि गर्गं प्रति गोत्रत्वं निष्प्रत्यूहमिति स्यादेव गर्गाद्यञिति दिक्।

सूत्रम्

काशिका-वृत्तिः

जीवति तु वंश्ये युवा ४।१।१६३

अभिजनप्रबन्धो वंशः। तत्र भवो वंश्यः पित्रादिः। तस्मिन् जीवति सति पौत्रप्रभृत्यपत्यं युवसंज्ञं भवति। पौत्रप्रभृति इति च न सामानाऽधिकरण्येन अपत्यं विशेषयति, किं तर्हि, षष्ठ्या विपरिणम्यते पौत्रप्रभृतेर् यदपत्यम् इति। तेन चतुर्थादारभ्य युव। संज्ञा विधीयते। गार्ग्यायणः। वात्स्यायनः। तुशब्दो ऽवधारणार्थो युव एव न गोत्रम् इति।

लघु-सिद्धान्त-कौमुदी

जीवति तु वंश्ये युवा १०१३, ४।१।१६३

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात्॥

न्यासः

जीवति तु वंश्ये युवा। , ४।१।१६३

"अभिजनप्रबन्धः" इति। अभजनाः = पितामहादयः, प्रबन्धः = सन्तानः, तत्र भवो वंश्य इति दिगादित्वाद्यत्। "पौत्रप्रभृत्यपत्यम्" इति। षष्ठीसमासः। "पौत्रप्रभृतीति च" इत्यादि। यदि पौत्रप्रभृतीत्येतत् सामानाधिकरण्येनापत्यं विशेषयेत् पौत्रप्रभृति यदपत्यमिति तदारभ्य युवसंज्ञा स्यात्, तच्चानिष्टम्। तस्मान्नैतत् सामानाधिकरण्येनापत्यस्य विशेषणम् किं तर्हि? अर्थाद्विभवनक्तविपरिणामे कृते षष्ठ()न्ततामापन्नं वैयधिकरण्येन पौत्रप्रभृर्यदपत्यमिति, तथा सति यदिष्टं सम्पद्यते तद्दर्शयितुमाह-- "तेन" इत्यादि। यत एवं विभक्तिविपरिणामे कृते पौत्रप्रभृतीत्यनेन षष्ठ()न्तेनापत्यं विशेष्यते तेन चतुर्थादारभ्य युवसंज्ञा विधीयते, तस्य च विभक्तपरिणामस्यापत्यं हेतुः। अपत्यशब्दो हि सम्बन्धिशब्दत्वनाद्धेत्वाद्यपेक्षते,तत्र षष्ठ()आ हेतुर्भवति। सन्निहितत्वाच्च। पौत्रप्रभृति तस्येत्येतदेवापेक्षते, ततस्तत्रैव षष्ठीं प्रकल्पयति।यदि तह्रपत्यग्रहमसामथ्र्यात् पौत्रप्रभृतेः षष्ठीविपरिणामो भवति, पूर्वसूत्रेऽपि कस्मान्न भवति? तत्र प्रथमाया अनवकाशत्वात्। पूर्वसूत्रे ह्रकृतार्था प्रथमा, ततो न शक्यते तस्याः षष्ठीं विपरिणमयितुम्। इह तु कृतार्था शक्यते षष्ठीभावेन विपरिणमयितुम्। "गाग्र्यायणः" इति। इह युवसंज्ञायां सत्यां "गोत्राद्यून्यस्त्रियाम्" [४।१।९४](#) इति गोत्रप्रत्ययान्ताद्यूनि प्रत्ययो भवति। "तु शब्दोऽवधारणार्थः" इति। कः पुनः संज्ञासमावेशे दोषः कथ्यते? शालङ्केरपत्यं युवा "यञिञोश्च" [४।१।१०१](#) इति फक्, पैलस्यापत्यं युवा "अणो द्व्यचः"[४।१।१५६](#) इत फिञ्,तयोः "पैलादिभ्यश्च" [१।४।५८](#) इति लुगुच्यते-- शालङ्किर्युवा, पैलो युवेति। यदि च गोत्रयुवसंज्ञयोः समावेशः स्यात् तदा शालङ्केर्यूनश्छात्रा इत्यर्थविवक्षायां प्राग्दीव्यतीयेऽजादौ प्रत्यये विषयभूते गोत्रादयः "गोत्रेऽलुगचि" [४।१।८९](#) इत्यलुक् स्यात्। ततस्तस्माद्यूनो गोत्रसंज्ञा मा भूदित्यवधारणार्थस्तुशब्दः क्रियते॥

बाल-मनोरमा

जीवति तु वंश्ये युवा १०७३, ४।१।१६३

जीवति। वंशः--उत्पादकपित्रादिपरम्परा। तत्र भवो वंश्यः। दिगादित्वाद्यत्। तदाह--वंश्ये पित्रादौ जीवतीति। जीवतीति सप्तम्यन्तम्। पौत्रादेरिति। पूर्वसूत्रात्पौत्रप्रभृति इत्यनुवृत्तं षष्ठ()आ विपरिणम्यत इति भावः। यदपत्यमिति। "तस्यापत्य"मित्यतस्तदनुवृत्तेरिति भावः। तुरवधारणे युवेत्यनन्तरं द्रष्टव्यः। तदाह--युवसंज्ञमेनेति। तेन एकसंज्ञाधिकारबहिर्भावेऽपि गोत्रसंज्ञाया अपि अस्मिन्न समावेश इति भावः। युवसञ्ज्ञया सहगोत्रसंज्ञायाः समावेशे तु शालङ्का इति पैलीया इति च न स्यात्। शलङ्कुः कश्चित्, तस्य गोत्रापत्यं शालङ्किः। इञ्। पैलादिगणे शालङ्कीति

पाठात्प्रकृतेः शलङ्कादेशश्च। शालङ्केरपत्यं युवापि शालङ्किरेव। "यञिञोस्चे"ति फक्। "पैलादिभ्यश्चे"ति तस्य लुक्। शालङ्केर्यूनछात्रा इत्यर्थे "इञश्चे"त्यणि "शालङ्का" इति रूपम्। तथा पीलाया गोत्रापत्यं पैलः। "पीलाया वा" इत्यण्। पैलस्यापत्यं युवापि पैल एव। "अणो द्व्यचः" इति फिञ्। "पैलादिभ्यश्चे"ति तस्य लुक्। पैलस्य यूनश्छात्र इत्यर्थे वृद्धाच्छः। "पैलीया" इति रूपम्। युवगोत्रसंज्ञयोः समावेशे तु "गोत्रेऽलुगचि" इति फक्फिञोरलुक्प्रसज्येतेत्यलम्।

तत्त्व-बोधिनी

जीवति तु वंश्ये युवा ८९९, ४।१।१६३

जीवति तु वंश्ये। पितृपितामहाद्युत्पादकप्रबन्धो वंशः। तत्र भवो वंश्यः। दिगादित्वाद्यत्। "पौत्रप्रभृती"त्यनुवृत्तं षष्ठ()आ विपरिणम्यते, व्याख्यानात्, "गोत्राद्यून्यस्त्रिया"मिति लिङ्गाच्चेत्याह---पौत्रादेरिति। तुशब्दोभिन्नक मो युवेत्यस्मात्परो बोध्यः। स च एवकारार्थ इति व्याचष्टे।

---

सूत्रम्

काशिका-वृत्तिः

भ्रातरि च ज्यायसि ४।१।१६४

भ्रतरि ज्ययसि जीवति कनीयान् भ्राता युवसंज्ञो भवति पौत्रप्रभृतेरपत्यम्। गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् मृते पित्रादौ वंश्ये भ्रातरि ज्यायसि जीवति युवसंज्ञो भवति। अवंश्यार्थो ऽयम् आरम्भः। पूर्वजाः पित्रादयो वंश्या इत्युच्यते। भ्राता तु न वंश्यः। अकारणत्वात्। गार्ग्ये जीवति, गार्ग्यायणो अस्य कनीयान् भ्राता। वात्स्यायनः। दाक्षायणः। प्लाक्षायणः।

न्यासः

भ्रातरि च ज्यायसि। , ४।१।१६४

भ्रातृशब्दस् सम्बन्धिशब्दत्वाद्यदपेक्षं भ्रातृत्वं मेव भ्रातरं संज्ञित्वेनोपक्षिपति। ज्यायानिति प्रशस्यतरोवृद्धतरश्चाभिधीयते। तस्य च ज्यायस्त्वं गुणैर्वयसा वा। युवानं प्रतियोगिनमपेक्ष्य भवतीति स एव ज्यायसीत्यनेन प्रतियोगी प्रत्युपस्थाप्यते। तेन भ्रातुरेव कनीयसः संज्ञा विज्ञास्यत इति मत्वाह-- "कनीयान् भ्रातः यवसंज्ञो भवति" इति। "पूर्वजाः" इत्यादिना अवंश्यार्थतामारम्भस्य समर्थयते। "अकारणत्वात्" इत्यनेनापि भ्रातुरवंश्यत्वम्। यो हि साक्षात् पारम्पर्येण वा कारणं स वंश्यः, न च भ्राता कारणम्, तस्मादसौ वंश्यो न भवतीति॥ गार्ग्ये जीवति भ्रातरि जीवतीत्यर्थः। एवं वात्स्ये जीवति वात्स्यायनोऽस्य कनीयान् भ्राता, दाक्षौ जीवति दाक्षायणोऽस्य कनीयान् भ्राता वेदितव्यः॥

बाल-मनोरमा

भ्रातरि च ज्यायसि १०७४, ४।१।१६४

भ्रातरि च ज्यायसि। जीवतीत्यनुवर्तते। तदाह--ज्येष्ठे भ्रातरि जीवति कनीयानिति। अनुज इत्यर्थः। "पौत्रप्रभृती"त्यनुवृत्तं षष्ठ()आविपरिणम्यते। अपत्यमित्यधिकृतम्। पौत्रादेरपत्यमित्यर्थः। फलितमाह--चतुर्थादिरिति। मृतेष्वपि पित्रादिषु ज्येष्ठे भ्रातरि जीवति युवसंज्ञार्थमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

वा अन्यस्मिन् सपिण्डे स्थविरतरे जिवति ४।१।१६५

सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते। येषाम् उभयत्र दशाहानि कुलस्यन्नं न भुज्यते इत्येवम् आदिकायां क्रियायाम् अनधिकारः। भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञम् वा भवति। प्रकृतं जीवतिग्रहणं सपिण्डस्य विशेषणम्, इदं तु संज्ञिनः। तरब्निर्देश उभयोत्कर्षार्थः। स्थानेन वयसा च उत्कृष्टे यथा स्यात् पितृव्ये पितामहे भ्रातरि वयसाधिके जिवति। गर्गस्य अपत्यं गार्ग्यायणः गार्ग्यो वा। वात्स्ययनः वात्स्यो वा। दक्षायणः दाक्षिर्वा। स्थविरतरे इति किम्? स्थानवयोनयूने गार्ग्य एव भवति। जीवति इति किम्? मृते मृतो वा गार्ग्य एव भवति।
काशिका-वृत्तिः
वृद्धस्य च पूजायाम् ४।१।१६६

अपत्यम् अन्तर्हितं वृद्धम् इति शास्त्रान्तरे परिभाषणाद् गोत्रं वृद्धम् इत्युच्यते। वृद्धस्य युवसंज्ञा वा भवति पूजायां गम्यमानायाम्। संज्ञसामर्थ्याद् गोत्रं युवप्रत्ययेन पुनरुच्यते। वृद्धस्य इति षष्ठीनिर्देशो विचित्रा सूत्रस्य कृतिः इति। तत्र भवान् गार्ग्यायणः गार्ग्यो वा। तत्र भवान् वात्स्यायनः वात्स्यो वा। तत्र भवान् दाक्षायणः दाक्षिर्वा। पूजायाम् इति किम्? गार्ग्यः। वात्स्यः।
काशिका-वृत्तिः
यूनश् च कुत्सायाम् ४।१।१६७

कुत्सायां गम्यमनायां यूनो वा युवसंज्ञा भवति। निवृत्तिप्रधानो विकल्पः। युवसंज्ञायां प्रतिषिद्धायां पक्षे गोत्रसंज्ञा एव भवति, प्रतिपक्षाभावात्। गार्ग्यो जाल्मः। गार्ग्यायणो वा। वात्स्यो जाल्मः वात्स्यायनो वा। दाक्षिर् जाल्मः दाक्षायणो वा। कुत्सायाम् इति किम्? गार्ग्यायणः।
न्यासः
वान्यस्मिन् सपिण्डे स्थविरतरे जीवति। , ४।१।१६५

"सप्तमपुरुषावधयः" इति। सप्तमः पुरुषोऽवधिर्येषां सपिण्डानां ते तथोक्ताः समानपिण्डाः,निपातनात् सभावः, "समानस्य" ६।३।८३ इति योगविभागाद्वा। तस्य च योगविभागस्यैतल्लिङ्गम्, तेन सपिण्डाः शास्त्रेष्वा सप्तमात्पुरुषात्। परेण ये ते सपिण्डा नोच्यन्ते। "येषाम्" इत्यत्याधिकार इति परेण सम्बन्धः। "उभयत्र" इति। जन्मनि मरणे च। "इत्येवमादिकायाम्" इति। आदिशब्देन निवृत्त्य्ादिकाः क्रियाश्च गृह्न्ते। तथा चोक्तम्--- उभयत्र दशाहानि कुलस्यान्नं न भुज्यते। दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवत्र्तते॥ इति॥ "जीवति" इति। सप्तम्येकवचनमेतत्। प्रथमायाश्च स्थाने सुब्व्यत्ययेन सप्तमी विहिता, अत एवाह-- "जीवदेव" इति। "तरब्निर्देशः" इत्यादि। असति हि तरब्निर्देशे स्थविरशब्दाद्वयःप्रकर्षमात्रं गम्यते, तरपा तु स्थानप्रकर्षोऽपि गम्यते। तस्मादुभयोरुत्कर्षार्थस्तरब्निर्देशः कृतः। "पितृव्ये पितामहे भ्रातरि च" इति। द्वावप्येतौ स्थानत उत्कृष्टौ। स्थानशब्देन चेह सम्बन्धविशेष उच्यते; अनेकार्थत्वाद्धातूनाम्। "गाग्र्य एव भवति" इति। न गाग्र्यायणः।युवसंज्ञायामसत्यां युवप्रत्ययस्य फकोऽनुत्पत्तेः। "मृते" इति। स्थविरतरे सपिण्डे। "मृतो वा" इति। पौत्रप्रभृतिरप्यत्र मृतोऽर्थः॥
न्यासः
वृद्धस्य च पूजायाम्। , ४।१।१६५

"अपत्यमन्तर्हितम्" इत्यादिना शास्त्रान्तरेण परिभाषितं यद्()वृद्धं तत्परिगृह्ते, न तु यदिह शास्त्रे परिभाषितं तदिति दर्शयति। कुतः पुनरेतदवगतम्-- शास्त्रान्तरपरिभाषितमिह वृद्धत्वं गृह्त इति? अपत्याधिकारात्। शब्दात्मकस्य

वृद्धस्यापत्त्वासम्भवाद्विज्ञायते। "पूजायां गम्यमानायाम्" इति। का पुनरिह पूजा विवक्षिता? युवत्वमेव। तद्धि लोके सर्वप्राणिनामभिमतम्। ननु च नेह युवशब्दो वयः पदार्थक एवायं युवशब्दो गोत्रे वर्तिष्यते। "संज्ञासामथ्र्यात्" इत्यादिना संज्ञाप्रणयनस्य प्रयोजनं दर्शयति। गोत्रप्रत्ययेनाभिहितमपि गोत्रम्। संज्ञासामथ्र्यात् पुनर्युवप्रत्ययो विधीयते गाग्र्यायण इति। अथ किमर्थं वृद्धस्येति षष्ठ()आ निर्देशः क्रियते, न वृद्धमिति प्रथमान्तं निर्दिश्यते,एवं हि लघु सूत्रं भवति? इत्याह-- "वृद्धस्य" इत्यादि। इतिकरणो हेतौ। यस्माद्विचित्रा सूत्रस्य कृतिः; तस्माद्()वृद्धस्येति षष्ठ()आ निर्देशः। एवं हि सूत्रे कृते वैचित्र्यं सम्भवतीत्यभिप्रायः।"तत्र भवान् गाग्र्यायणः" इति। तत्रभवच्छब्दस्य पूजावचनस्य प्रयोगेण पूजां गमयतीति॥
न्यासः

यूनश्च कुत्सायाम्। , ४।१।१६५

ननु च युवसंज्ञा पूर्वमेवाभिनिर्वृत्ता,यदाह-- "यूनश्च" इति।न ह्रसत्यां तस्यामयं निर्देश उपपद्यते, तदभिनिर्वृत्तायास्तस्याः पुनर्विकल्पेन विधानमनुपपन्नमित्यत आह-- "निवृत्तिप्रधानो विकल्पः" इति। नायं विधिप्रधानो विकल्पः, किं तर्हि? प्रतिषेधप्रतिपादनपर इत्यर्थः। सिद्धायां प्रतिषिद्धायां गोत्रसंज्ञा वक्तव्याः; अन्यथा यूनो गोत्रप्रत्ययेनाभिधानं न स्यात्? इत्यत आह-- "युवसंज्ञायाम्" इत्यादि। गोत्रसंज्ञाया युवसंज्ञा प्रतिपक्षः प्रत्यनीकः। सा चेन्निवृत्ता गोत्रसंज्ञैव प्रवत्र्तते; प्रतिपक्षाभावात्, अतो न वक्तब्गेति भावः। "गाग्र्यो जाल्मः"इति। जाल्मशब्दस् कुत्सावचनस् प्रयोगेण कुत्सां गमयति। कुत्सा पुनरिह यूनो वृद्धतयाभिधानस्यैवानभिमतत्वात्। अत एवाकुत्सिते युवेति वाक्यार्थं पदमन्वाख्यायते। सा च कुत्सा याऽन्या वा ततो वेति विशेषो नाश्रीयते, यथा-- कदन्नादिविषये देवदत्तादीनाम्॥
बाल-मनोरमा

वाऽन्यस्मिन्त्सपिण्डे स्थविरतरे जीवति १०७५, ४।१।१६५

वाऽन्यस्मिन्। शेषपूरणेन सूत्रं व्याचष्टे--पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यादिति। सपिण्डास्तु-स्वयम्, पिता, पितामहः, प्रपितामहः, तस्य पितृपितामहप्रपितामहाश्चेति सप्त पुरुषाः। एवं मातृसंषेऽपीत्यादि धर्मशास्त्रेषु प्रसिद्धम्। स्थविरतरः--अतिवृद्धः। जीवतीति सप्तम्यन्तमनुवृत्तं सपिण्डे इति सप्तम्यन्तेऽन्वेति। अत्रत्यं तु जीवतिपदं तिङन्तम् अपत्येऽन्वेति, यदपत्यं जीवति तद्युवसंज्ञकमिति। ततश्च भ्रातुरन्यस्मिन्वृद्धतमे सपिण्डे जीवति सति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यादिति फलितम्। एकमिति। अत्रत्यमित्यर्थः। द्वितीयमिति। अनुवर्तमानमित्यर्थः। उभयोरिति। हेतुत्वसंबन्धे षष्ठी। उभयहेतुकोत्कर्षवाचकस्तरवित्यर्थः। तदेव विवृणोति-स्थानेन वयसा चेति। स्थानतः उत्कृष्टः-पितृव्यः, तस्य पितृस्थानीयत्वात्। वयसा उत्कृष्टो-मातामहः। भार्तरीति संनिहितत्वान्मातामहभ्रातरीत्यर्थ इति केचित्। पितृव्यपुत्र इत्यन्ये। जीवतीति किमिति। जीवतिद्वयस्य किं प्रयोजनमिति प्रश्नः। मृते मृतो वा गाग्र्य एवेति। मृते सपिण्डे चतुर्थौ गाग्र्य एव, मृतश्च चतुर्थो गाग्र्य एवेत्यर्थः।

वृद्धस्य चेति। वार्तिकमिदम्। तत्र वृद्धपदं विवृणोति-गोत्रस्यैव वृद्धसंज्ञा प्राचामिति। गोत्रमेव "वृद्ध"मिति प्राचीनाचार्या व्यवहरन्तीत्यर्थः। तथा च वार्तिकस्य फलितमर्थमाह--गोत्रस्य युवसंज्ञा पूजायां गम्यमानायामिति। उदाहरति--तत्रभवान्गाग्र्यायण इति। "तत्रभवा"निति पूज्यवाची, युवसंज्ञकानामल्पवयस्कत्वेन वृद्धाधीनत्वेन सुखितया च पूजा। ता गोत्रप्रभृतिस्तृतीयोऽपि मन्यते।

अत्र युवसंज्ञाविधिसामथ्र्यात्स्वार्थे युवप्रत्ययो बोध्यः। गाग्र्यो जाल्म इति। वृद्धाननादृत्य स्वातन्त्र्यं भजते तद्विषयमिदम्।

तत्त्व-बोधिनी

वाऽन्यस्मिन्त्सपिण्डे स्थविरतरे जीवति ९००, ४।१।१६५

युवसंज्ञमेवेति। तेन एकसंज्ञाधिकारबहिर्भूतयोरपि गोत्रयुवसंज्ञयोर्न समावेश इति भावः। नन्वस्तु संज्ञाद्वयस्यट समावेशः, को दोष इति चेत्। मैवम्। शालङ्काः पैलीया इत्यसिद्धिप्रसङ्गात्। तथा हि शलङ्कोरपत्यं शालङ्किः। पैलादिषु पाठादिञ्शलङ्कादेशौ। शालङ्केरपत्यम्। शालङ्केर्युवापत्यं "यञिञिश्चे"ति फक्। तस्य "पैलादिभ्यश्चे"ति लुक्, ततः शालङ्केर्यूनश्छत्रा इत्यर्थविवक्षायाम् "इञस्चे"त्यणि "शालङ्का"इति भवति। तथा पीलाया अपत्यं गोत्रापत्यं वा---"पीलाया वा"इत्यणि --पैलः। तस्या पत्यं युवा, "अमो व्यचः"इति फिञ्। तस्य "पैलादिभ्यश्चे"ति लुक्। ततः पैलस्य यूनश्छात्राः पैलीया इति भवति। तत्र गोत्रयूनोः समावेशे तु "गोत्रे लुगची"ति फक्()फिञारलुक् प्रसज्येत। न च परत्वाद्यूनि लुग्भविष्यतीति सिद्धमिष्टमिति वाच्यं, ततोऽपि परत्वात् "फक्फिञोरन्यतरस्या"मिति विकल्पापत्तेः। न च सिद्धान्तेऽपि विकल्पः शङ्क्यः, "फक्फिञो"रित्ययं हि यूनि लुक एवापवादो न तु "पैलादिभ्यश्चे"त्यस्य, "अनन्तरस्ये"ति न्यायात्। यद्यपि यूनि लुगवादोऽपि "फक्फिञो"रिति विकल्पः परत्वात् "पेलादिभ्यश्चे"ति लुकमपि बाधेतेति वक्तुं शक्यन्तथापि परादप्यन्तरङ्गस्य बलीयस्त्वात् "प्लादिभ्यश्चे"ति नित्य एव लुगित्याहुः। भ्रातरि च। अवंश्यार्थोऽमारम्भः। भ्राता तु न वंश्यः, "उत्पादकप्रबन्धो वंशः"इत्यभ्युपगमात्। "अपत्यं पौत्रप्रभृती"त्यनुवर्त्य "पौत्रप्रभृते"रिति षष्ठ()आ विपरिणम्य व्याख्यानात्फलिकमाह---चतुर्थादिरिति। अत्रायमर्थः---गर्गादिषु मृतेष्वपि जीवत्यग्रजे अनुजो युवसंज्ञक इति। वान्यस्मिन्। इहत्यं जीवतिपदं तिङन्तं, न तु सप्तम्यन्तमिति व्याचष्टे--जीवदेवेति। यो जीवति स युवसंज्ञकः, मृतस्तु स्थविरतरे जीवत्यपि गार्ग्य एव भवति, न तु गार्ग्यायण इति भावः। एकमिति। इहत्यमित्यर्थः द्वितीयमिति। अनुवर्तमानं सप्तम्यन्तमित्यर्थः। यदुक्तमुभयोरिति, तदेव विवृणोति--स्थानेनवयसा चेति। मतामहेभ्रातरि वेति। संनिहितत्वात् "भ्रातरी"त्यस्य "मातामहभ्रातरी"त्येवार्थ इत्येके। "पितृव्यपुत्रे"इत्यन्ये। वृत्तौ तु ---"पितृव्ये पितामहभ्रातरि वे"ति पाठः। जीवतीति किमिति। जीवतिद्वयं किमर्थमिति प्रश्नः। अतएव "मृते मतो वे"त्यत्तुरं सङ्गच्छते। अन्यस्मिन् किम्()। भ्रातरि जीवति जीवतो विकल्पो मा भूत्। पूर्वसूत्रं तु भ्रातरि जीवति भृतस्य कनीयसो युवसंज्ञार्थमिति सावकशम्।

वृद्धस्य च पूजायामिति वाच्यम्। वृद्धस्य। चेति। वार्कतिकमिदम्। तथा "यूनश्चे"त्यग्रिममपि।

---

सूत्रम्

काशिका-वृत्तिः

जनपदशब्दात् क्षत्रियादञ् ४।१।१६८

जनपदशब्दो यः क्षत्रियवाची, तस्मादपत्ये अञ् प्रत्ययो भवति। पाञ्चालः ऐक्ष्वाकः। वैदेहः। जनपदशब्दातिति किम्? द्रुह्योरपत्यं द्रौह्यवः। पुरवः। क्षत्रियातिति किम्? ब्राह्मणस्य पञ्चालस्य अपत्यं पाञ्चालिः। वैदेहिः। क्षत्रियसमानशब्दाज् जनपदशब्दात् तस्य राजन्यस्यवत्। पञ्चालानां राजा पाञ्चालः। वैदेहः। मागधः।

लघु-सिद्धान्त-कौमुदी

जनपदशब्दात्क्षत्त्रियादञ् १०३१, ४।१।१६६

जनपदक्षत्त्रियवाचकाच्छब्दादञ् स्यादपत्ये। पाञ्चालः। (क्षत्त्रियसमान शब्दाज्जनपदात्तस्य राजन्यपत्यवत्)। पञ्चालानां राजा पाञ्चालः। (पूरोरण् वक्तव्यः)। पौरवः। (पाण्डोर्ड्यण्)। पाण्ड्यः॥

न्यासः

जनपदशब्दात्क्षत्त्रियादञ्। , ४।१।१६६

जनपदवृत्तिशब्दः पञ्चालादिर्जनपद इत्युक्तः,क्षत्रियवृत्तिः क्षत्रिय इत्यभिधानेऽभिधेयोपचारात्, साहचर्याद्वा। ननु पञ्चालादयः शब्दाः, ते "तस्य निवासः" ४।२।६८ इति तद्धिते कृते तस्य "जनपदे लुप्" ४।२।८० इति लुपि च जनपदे वत्र्तन्ते, तत् कथमवरकालया जनपदशब्दतया नित्याः क्षत्रियशब्दा विशेष्यन्ते? कथं पुनः क्षत्त्रियसम्बन्धादेते जनपदे वत्र्तन्त इत्येतदभिधातुमर्हति विद्वान्। सूत्रकारेण हि "तदशि,()यं संज्ञाप्रमाणत्वाल्लुव्योगाप्रख्यानात्" (१।२।५३,५४) इतियुक्तवद्भावं लुपञ्च प्रत्यादिशता जनपदे क्षत्त्रियेष्विव स्वत एव पञ्चालादिशब्दस्य वृत्तिरुक्ता। यथा शब्दा नित्यास्तथा पञ्चालादिरपि जनपद इति कुतो जनपदवचनानताया अवरकालता !"पाञ्चालः" इत्यादि। पञ्चालादयः शब्दा देशे सन्तः क्षत्त्रियवाचिनोऽपि भवन्ति स्वभावत एव, तेभ्योऽपत्यार्थेऽञ्। "ऐक्ष्वाकः" इति। इक्ष्वाकुशब्दस्य "दाण्डिनायनहस्तिनायन" ६।४।१७४ इत्यादौ सूत्रे उकारलोपो निपातितः। "द्रौह्लवः" इति। द्रह्लुशब्दः क्षत्त्रियवचन एव, न जनपदशब्दः, तेनाणेव भवति। "पाञ्चालिर्वैदेहिः" इति। इह पञ्चालविदेहशब्दौ भवतो जनपदशब्दौ, न तु क्षत्त्रियवचनौ। अपि तु ब्राआह्मणवचनो, तेनेञेव भवति। "क्षत्त्रियसमानशब्दात्" इत्यादि। क्षत्त्रियवचन एव शब्द उपचारेण क्षत्त्रिय इत्युक्तः जनपदशब्दो जनपद इति। क्षत्त्रियेण समानः शब्दो यस्य स तथोक्तः। तस्मात् क्षत्त्रियसमानशब्दादस्येति षष्ठीसमर्थाद्राजन्यभिधेयेऽपत्यवत् प्रत्ययोत्पत्तिरिति वक्तव्यम्। "अवृद्धादपि बहुवचनविषयात्" ४।२।१२४ (इति) प्राप्तस्य वुञोऽपवादः। यथा पञ्चालस्यापत्यमित्यत्र भवति पाञ्चालः, तथा पञ्चालानां राजा पाञ्चाल इत्यत्रापि भवति।"मागधः" इति। मगधशब्दादपत्ये "द्व्यञ्मगध" ४।१।१६८ इत्यादिनाण् भवति, तथा तस् यराजेत्यत्रापि॥

---

सूत्रम्

काशिका-वृत्तिः

साल्वेयगान्धारिभ्यां च ४।१।१६९

साल्वेयगान्धारिशब्दाभ्याम् अपत्ये अञ् प्रत्ययो भवति। जनपदशब्दावेतौ क्षत्रियाभिधायिनौ ताभ्याम् अञपवादे वृद्धादिति ञ्यङि प्राते पुनरञ् विधीयते। साल्वेयः। गान्धारः। तस्य राजनि इत्येव, साल्वेयो राजा। गान्धारो राजा।

न्यासः

साल्वेयगान्धारिभ्याञ्च। , ४।१।१६७

बाल-मनोरमा

साल्वेयगान्धारिभ्यां च ११६९, ४।१।१६७

साल्वेय। ननु साल्वेयगान्धारिशब्दावव्युत्पन्नौ देशक्षत्रियोभयवाचिनौ, ताभ्यां जनपदशब्दादिदिञि सिद्धे किमर्थमिदमित्यत आह--ञ्यङोऽपवाद इति।

तत्त्व-बोधिनी

साल्वेयगान्धारिभ्यां च ९६७, ४।१।१६७

बृद्धेत्। तपरकरणं किम्()। कौमारः। कुमारीशब्दो हि जनपदक्षत्रियवचनः।

---

सूत्रम्

काशिका-वृत्तिः

द्व्यञ्मगधकलिङ्गसूरमसादण् ४।१।१७०

जनपदशब्दात् क्षत्रियाभिधायिनो द्व्यचः, मगध कलिङ्ग सूरमस इति एतेभ्यश्च अपत्ये अण् प्रत्ययो भवति। अञो ऽपवादः। आङ्गः। वाङ्गः। अपुण्ड्रः सौह्मः। मगधः। कालिङ्गः। सौरमसः। तस्य राजनि इत्येव, आङ्गो राजा।

न्यासः

द्व्यञ्गमधकलिङ्गसूरमसादण्। , ४।१।१६८

बाल-मनोरमा

द्व्यञ्मगधकलिङ्गसूरमसादण् ११७०, ४।१।१६८

द्व्यञ्मगध। अञोऽपवाद इति। जनपदशब्दादिति विहितस्याऽञोऽपवाद इत्यर्थः। द्व्यजिति। "उदाह्रियते" इति शेषः। अङ्ग, वङ्ग, सुह्म-इत्येते द्व्यचो देशक्षत्रियवाचिनः। अङ्गस्यापत्यमिति विग्रहः। तस्य राजन्यप्येवमिति। अङ्गादिदेशस्य राजेति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

वृद्धेत्कोसलाजादाञ् ञ्यङ् ४।१।१७१

जनपदशब्दत् क्षत्रियातित्येव। वृद्धात् प्रातिपदिकातिकारान्तात् च, कोसलाजादशब्दाभ्यां च अस्य ञ्यङ् प्रत्ययो भवति। अञो ऽपवादः। वृद्धात् तावत् आम्बष्ठ्यः। सौवीर्यः। इकारान्तात् आवन्त्यः। कौन्त्यः। कौसलाजादयोरवृद्धार्थं वचनम्। कौसल्यः। आजाद्यः। तपरकरनम् किम्? कुमारी नाम जनपदसमानशब्दः क्षत्रियः, तस्य अपत्यं कौमारः। पाण्डोर् जनपदाब्दात् क्षत्रियाड् ड्यण् वक्तव्यः। पाण्ड्यः। अन्यस्मात् पाण्डव एव। तस्य राजनि इत्येव, आम्बष्ठ्यो राजा। आवन्त्यः। कौन्त्यः। कुअसल्यः। आजाद्यः।

न्यासः

वृद्धेत्कोशलाजादाञ्ञ्यङ्। , ४।१।१६९

वृद्धग्रहणेनेह "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" [१।१।७२](#) इति गृह्रते, तस्यैव हि जनपदशब्दता क्षत्त्रियवाचित्वं च सम्भवति, न शास्त्रान्तरपरिभाषितस्य। "आम्बष्ठ्यः सौवीर्यः" इति। आम्बष्ठसौवीरशब्दाभ्यां ञ्यङ। "आवन्त्यः, कौन्त्यः" इति। अवन्तिकुन्तिशब्दाभ्यां ञ्यङ। "कौमारः" इत्यत्राञ् भवति। "ड()ण् वक्तव्यः" इति। क्षत्त्रियञ्यङोऽपवाद इति, डकारष्टिलोपार्थ इति। स च "वान्यस्मिन् सपिण्डे"[४।१।१६५](#) इत्यतो मण्डूकप्लुतिन्यायेन वेत्यनुवृत्तेर्लभ्यते। तथैवमतिप्रसङ्गो भवति? व्यवस्थितविभाषात्वात् स न भविष्यति। "अन्यस्मात् पाण्डवः" इति। यः पाण्डुशब्दः क्षत्त्रिये वत्र्तते,तस्मादौत्सर्गिकेऽणि कृते पाण्डव इति भवति॥

---

सूत्रम्

काशिका-वृत्तिः

कुरुनादिभ्यो ण्यः ४।१।१७२

जनपदशब्दात् क्षत्रियातित्येव। कुरुशब्दात् नादिभ्यश्च प्रातिपदिकेभ्यो ण्यः प्रत्ययो भवति। अणञोरपवादः। कौरव्यः। नकारादिभ्यः नैषध्यः। नैपथ्यः। तस्य राजनि इत्येव, कौरव्यो राजा।

लघु-सिद्धान्त-कौमुदी

कुरुनादिभ्यो ण्यः १०३२, ४।१।१७०

कौरव्यः। नैषध्यः॥

न्यासः

कुरुनादिभ्यो ण्यः। , ४।१।१७०

अञणोरपवादः। कुरुशब्दस्यतु द्व्यज्लक्षणस्याणः। कुरुशब्दात् "कुर्वादिभ्यो ण्यः" ४।१।१५१ इति पूर्वमपत्ये उक्तः। तस्य यो जनपदशब्द क्षत्त्रियो न भवति सोऽवकाशः, यस्तु जनपदशब्दः क्षत्त्रियस्तस्मात् परत्वादञि तदपवादो द्व्यज्लक्षणोऽण् स्यात्। अतस्तं बाधितुं पुनर्ण्यो विधीयते॥

बाल-मनोरमा

कुरुनादिभ्यो ण्यः ११७२, ४।१।१७०

कुरुनादिभ्यो ण्यः। कुरुशब्दान्नकारादिभ्यश्च जनपदक्षत्त्रियवाचकेभ्योऽपत्ये राजनि च ण्यः स्यादित्यर्थः। कौरव्य इति। कुरोरपत्यं, कुरूणां राजेति वा विग्रहः। नैषध्य इति। निषधशब्दो देशे राजनि च। शैषिक इति। "तस्येदमित्यनेने"ति शेषः।

तत्त्व-बोधिनी

कुरुनादिभ्यो ण्यः ९६८, ४।१।१७०

कुरुना। नकार आदिर्येषां ते नादयः। कुरुशब्दाद्()व्यज्लक्षणे अणि प्राप्ते, नादिभ्यस्त्वञि प्राप्ते[च] वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ४।१।१७३

जनपदशब्दात् क्षत्रियातित्येव। सल्वा नाम अक्षत्रिया तन्नामिका, तस्या अपत्यं, द्व्यचः ४।२।१२० इति ढक्, साल्वेयः। अणपीष्यते, साल्वः। तस्य निवासः साल्वो जनपदः। तदव्यवा उदुम्बरादयः, तेभ्यः क्षत्रियवृत्तिभ्य इदं प्रत्ययविधानम्। साल्वावयवेभ्यः प्रत्यग्रथकलकूटाश्मकशब्देभ्यश्चापत्ये इञ् प्रत्ययो भवति। अञो ऽपवादः। औदुम्बरिः। तैलखलिः। माद्रकारिः। यौगन्धरिः। भौलिङ्गिः। शारदण्डिः। प्रत्यग्रथिः। कालकूटिः। आश्मकिः। तस्य राजनि इत्येव, औदुम्बरी राजा। उदुम्बरास्तिलखला मद्रकारा युगन्धराः। भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः।

न्यासः

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्। , ४।१।१७१

"अजपीष्यते" इति। तन्नामिकालक्षणः। कुतो विज्ञायते? साल्व इति निपातनात्। तदवयवा जनपदानां वाचकाः क्षत्त्रियाणां समाना भवन्ति। अतस्तेऽप्यौपचारिकं साल्वापदेशमासादयन्ति॥

बाल-मनोरमा

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ११७३, ४।१।१७१

साल्वावयव। उदुम्बरादय इति। "उदुम्बरास्तिलखला मद्रकारा युगन्धराः। भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः।

इति प्रसिद्धिः। "द्व्यञ्मगधे"ति भाष्ये तु-बुध अजमीढ-अडक्रन्धा अपि गृहीताः।

तत्त्व-बोधिनी

साल्ववयवप्रत्यग्रथकलकूटाश्मकादिञ् ९६९, ४।१।१७१

उदुम्बरादय इति। "उदुम्बरास्तिलखला मद्रकारा युगंधराः। भूलिङ्गा शरदण्डाश्च साल्वावयवसंज्ञिताः"इति वृत्तिः। औदुम्बरिरिति। तैलखलिः। माद्रकारिः। यौगन्धरिरित्यादीन्युदाहर्तव्यानि।

---

सूत्रम्

काशिका-वृत्तिः

ते तद्राजाः ४।१।१७४

जन्पदशब्दात् क्षत्रियादञ् ४।१।१६६ इत्येवम् आदयः प्रत्यायाः सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु पूर्वे, गोत्रयुवसंज्ञाकान्डेन व्यवहितत्वात्। ते ऽञादयः तद्राजसंज्ञा भवन्ति। तथा चोदाहृतम्। तद्राजप्रदेशाः तद्राजस्य बहुषु तेन एव अस्त्रियाम् २।४।६२ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

ते तद्राजाः १०३३, ४।१।१७२

अञादयस्तद्राजसंज्ञाः स्युः॥

न्यासः

ते तद्राजाः। , ४।१।१७२

"गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वात्" इति।गोत्रयुवसंज्ञाप्रकरणं हि यदन्तरा व्यवधायं कृतं तस्यैतदेव प्रयोजनम्। तेन ये व्यवहिताः पूर्वेऽणादयस्तेषां "ते तद्राजाः" इत्यत्र सर्वनाम्ना प्रत्यवमर्शो मा भूदिति। "तथा चैवोदाह्रतम्" (इति)। "तद्राजस्य बहुषु तेनैवास्त्रियाम्" २।४।६२ इत्यत्र कार्याश्रयमुदाह्रतम्। इह तु प्रकरणे रूपाश्रयम्॥

बाल-मनोरमा

ते तद्राजाः ११७४, ४।१।१७२

ते तद्राजाः। ते इत्यनेन जनपदशब्दादित्याद्यारभ्य विहिता अञादयः परामृश्यन्ते। तदाह--अञादय इति।

तत्त्व-बोधिनी

ते तद्राजाः ९७०, ४।१।१७२

ते तद्राजाः। अञादय इति। ततः प्राचीनास्तु त्तच्छब्देन न परामृश्यन्ते, गोत्रयुवसंज्ञाकाण्डेन विच्छेजात्। एतदर्थमेव तत्काण्डं मध्ये कृतमाचार्येणेत्याहुः। वस्तुतस्तु "तद्राजे"त्यधिकृत्य "जनपदशब्दात्क्षत्रियाद"ञित्यादिसूत्राणामारम्भे गोत्रयुवसंज्ञाकाण्डस्य मध्ये पाठाऽभावेऽपि न क्षतिरित्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

कम्बोजाल् लुक् ४।१।१७५

जनपदशब्दात् क्षत्रियात्तित्यनेन विहितस्य अञो लुगुच्यते। कम्बोजात् प्रत्ययस्य लुक् भवति। कम्बोजः। कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्। चोलः। केरलः। शकः। यवनः। तस्य राजनि इत्येव, कम्बोजो राजा।

लघु-सिद्धान्त-कौमुदी

कम्बोजाल्लुक् १०३५, ४।१।१७३

अस्मात्तद्राजस्य लुक्। कम्बोजः। कम्बोजौ। (कम्बोजादिभ्य इति वक्तव्यम्)। चोलः। शकः। केरलः। यवनः॥

लघु-सिद्धान्त-कौमुदी

इत्यपत्याधिकारः २ १०३५, ४।१।१७३

लघु-सिद्धान्त-कौमुदी

अथ रक्ताद्यर्थकाः १०३५, ४।१।१७३

न्यासः

कम्बोजाल्लुक्। , ४।१।१७३

"चोलः,शकः" इति। द्व्यञ्मगध ४।१।१६८ लक्षणस्याणो लुक्। केरल इत्यञः॥

बाल-मनोरमा

कम्बोजाल्लुक् ११७६, ४।१।१७३

कम्बोजाल्लुक्। "तद्राजा" इत्यनुवृत्तं षष्ठ()आ विपरिणम्यते। कम्बोजात्परस्य तद्राजस्य लुक् स्यादित्यर्थः। अबहुत्वार्थं सूत्रम्।

तदाह-कम्बोजः कम्बोजाविति। "जनपदशब्दा"दिति विहितस्य अञो लुक्। चोलः शक इति। चोलशकौ देशविशेषौ, राजविशेषौ च द्व्यज्लक्षणस्येति। "द्व्यञ्मगधे"ति विहितस्येत्यर्थः। केरल इति। केरलयवनशब्दौ देशराजोभयवाचिनौ। अञो लुगिति। "जनपदशब्दादिति विहितस्ये"ति शेषः। ननु "काम्बोज" इति कथं, लुक्प्रसङ्गादित्यत आह--कम्बोजाः समरे इति। दीर्घपाठे त्विति। अचां मध्ये आदेरचो दीर्घभूतस्य पाठे त्वित्यर्थः। अभिजन इति। यत्र पूर्वैरुषितं सोऽभिजन इत्यग्रे वक्ष्यति। सिन्धुतक्षेति। सिन्ध्वादौ कम्बोजशब्दस्य पाठादिति भावः।

तत्त्व-बोधिनी

कम्बोजाल्लुक् ९७२, ४।१।१७३

कम्बोजाल्लुक्। "तद्राजस्य बहुषु इति प्रकरण एवेदं न कृतं, द्व्येकार्थवाचकस्याऽञो लुगभावप्रसङ्गात्। यद्यपि लुगधिकारे पुनर्लुग्विधानसामथ्र्यातद्()द्व्येकयोरप्यञो लुग्भविष्यत्येवेति वक्तुं शक्यं, तथाप्यतद्राजस्यापि लुक्प्रसङ्गशङ्कापत्तेर्लाघवाऽभावाच्च चचप्रकरणे न कृतमित्याहुः। न चात्र अपत्ये लक्षणयैव "कम्बोजः कम्बोजौ"इत्यादिरूपसिद्धौ किमनेन सूत्रेणेति शङ्क्यं, "कम्बोज"इत्यादिपाक्षिकाऽनिष्टवारणाय सूत्रस्यावश्यकत्वात्।

कम्बोजादिभ्य इति वक्तव्यम्। सिन्धुतक्षेति। कम्बोजशब्दस्य सिन्ध्वादित्वादण्। तस्य तु तद्राजत्वाऽभावल्लुङ्नेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

स्त्रियाम् अवन्तिकुन्तिकुरुभ्यश् च ४।१।१७६

अवन्तिकुन्तिकुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्तिर्याम् अभिधेयायां लुग् भवति। अवन्तिकुन्तिभ्यां ञ्यङः, कुरोर्ण्यस्य। अवन्ती। क्न्ती। कुरूः। स्त्रियाम् इति किम्? आवन्त्यः। कौन्त्यः। कौरव्यः।

न्यासः

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च। , ४।१।१७४

"अवन्ती। कुन्ती" इति। तद्धितलुकि कृते "इतो मनुष्यजातेः" ४।१।६५ इति ङीष्। "कुरूः" इति। "ऊङ" ४।१।६६ इत्यूङ्॥

बाल-मनोरमा

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ११७७, ४।१।१७४

स्त्रियामवन्ति। अवन्ती कुन्तीति। अवन्तेः कुन्तेश्चापत्यं स्त्री राज्ञी वेति विग्रहः। "वृद्धेत्कोसले ति ञ्यङोऽनेन लुकि "इतो मनुष्यजाते"रिति ङीष्। कुरूरिति। "कुरुनादिभ्यः" इति ण्यस्य लुक्।

तत्त्व-बोधिनी

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ९७३, ४।१।१७४

अवन्ती। कुन्तीति। "वृद्धे"दिति ञ्यङो लुकि "इतो मनुष्यजाते"रिति ङी,()। कुरुरिति। ण्यस्य लुक् "ऊङुतः"इत्यूङ्।

---

सूत्रम्

काशिका-वृत्तिः

अतश् च ४।१।१७७

स्त्रियाम् इत्येव। अकारप्रत्ययस्य तद्राजस्य स्त्रियाम् अभिधेयायाम् लुग् भवति। तकारो विस्पष्टार्थः। शूरसेनी। मद्री। दरत्। अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति, आम्बष्ठ्या। सौवीर्या।

न्यासः

अतश्च। , ४।१।१७५

"तकारो विस्पष्टार्थः" इति। तकारे ह्रसति "अस्य" इति निर्देशेन भवितव्यम्, ततश्च समानत्वान्निर्देशस्य सन्देहः स्यात्-- किमयवमवर्णस्य निर्देशः? आहोस्तवित् इदमः? इति। तकारे तु सत्येष दोषो न भवति; तपरस्य वणष्वेव प्रसिद्धत्वात्। दीर्घनिवृत्त्यर्थस्तु तकारो न भवति, दीर्घस्यासम्भवात्। "सूरसेनी। मद्री" इति। सूरसेनाशब्दाद्योऽञ्, म्दरशब्दाद्यो द्व्यज्लक्षणोऽण् -- तयोर्लुकि कृते "जातेरस्त्रीविषयादयोपधात्" ४।१।६३ इति ङीष्। "दरत्" इति। दरच्छब्दाद् द्व्यञ्मगधलक्षणस्याणो ४।१।१६८ लुक्। यदि "अतः" इति वर्णस्येदं ग्रहणम्, एवंसति वर्णग्रहमं तदन्तविधिं प्रयोजयतीतीहापि प्राप्नोति--- आम्बषष्ठ()आ, सौवीर्या इति? अत आह-- "अवन्त्यादिभ्य लुक्" इत्यादि। यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यात्; अनेनैव सिद्धत्वात्। तदन्तविधावसत्यकारग्रहणमात्रेण न सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमनर्थवद्भवति॥

बाल-मनोरमा

अतश्च ११७८, ४।१।१७५

अतश्च। तद्राजस्याकारस्येति। "अत" इति तद्राजविशेषणम्। तद्राजात्मकस्य अकारस्येत्यर्थः। शूरसेनीति। अत्रो लुकि प्रत्ययलक्षणमाश्रित्य अपत्यप्रत्ययान्तत्वेन जातित्वान्ङीष्। "न लुमते"ति निषेधस्तु न, ङीष्विधेरङ्गकार्यत्वाऽभावात्। एवं मद्री।

तत्त्व-बोधिनी
अतश्च ९७४, ४।१।१७५

अतश्च। इद तद्राजेन अकारो विशेष्यते, न त्वकारेण तद्राजः। विशेषणेन तदन्तविधौ ञ्यङ्ण्यादीनामप्यदन्ततद्राजत्वादनेनैव लुकि सिद्धे अवन्तिकुन्तिकुरुभ्यो लुग्विधायकस्य "स्त्रियामवन्ती"ति सूत्रस्य वैयथ्र्यापत्तेः। न चेष्ट

#आपतिः, कौसल्येति रूपाऽसिद्धिप्रसङ्गादतो व्याचष्टे।

---

सूत्रम्
काशिका-वृत्तिः
न प्राच्यभर्गाऽदियौधेयाऽदिभ्यः ४।१।१७८

प्राच्येभ्यः भर्गादिभ्यः यौधेयादिभ्यश्च उत्पन्नस्य लुग्न भवति। अतश्च ४।१।१७५ इत्यनेन स्त्रियां लुक् प्राप्तः प्रतिषिध्यते। प्राच्येभ्यः क्षत्रियेभ्यस् तावत् पाञ्चाली। वैदेही। आङ्गी। वाङ्गी। मगधी। भर्गादिभ्यः भार्गी। कारूषी। कैकेयी। यौधेयादिभ्यः यौधेयी। शौभ्रेयी। शौक्रेयी। कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक् प्राप्तः प्रतिषिध्यते? पाञ्चमिकस्यञः, पर्श्वादियौधेयादिभ्याम् अनञौ इत्येतस्य। कथं पुनस् तस्य भिन्नप्रकरणस्थस्य अनेन लुक् प्राप्नोति? एतदेव विज्ञापयति पाश्चमिकस्य अपि तद्राजस्य अतश्च इत्यनेन लुग् भवति इति। किम् एतस्य ज्ञापनेन प्रयोजनम्? पर्श्वाद्यणः स्त्रियां लुक् सिद्धो भवति। पर्शूः। रक्षाः। असुरी। तथा च उक्तं यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वाद्यणो लुकिति। भर्ग। करूष। केकय। कश्मीर। साल्व। सुस्थाल। उरश। कौरव्य। इति भर्गादिः। यौधेय। शौभ्रेय। शौक्रेय। ज्याबानेय। धार्तेय। धार्तेय। त्रिगर्त। भरत। उशीनर। यौधेयादिः। इति श्रीजयादित्यविरचितायाम् काशिकायां वृत्तौ चतुर्थाध्यायस्य प्रथमः पादः। चतुर्थाध्यायस्य द्वितीयः पादः।
न्यासः
न प्राच्यभर्गादियौधेयादिभ्यः। , ४।१।१७६

"पाञ्चाली, वैदेही"इति। "जनपदशब्दात्" ४।१।१६६ इत्यादिनाञ्। "शाङ्गरवाद्यञो ङीन्" ४।१।७३। "आङगी। मागधी" इति। "द्व्यञ्मगध" ४।१।१६८ इत्यादिनाण्। "जातेरस्त्रीविषयादयोपधात्" ४।१।६३ इति ङीष्। भर्गशाल्वशब्दाभ्यां द्व्यञ्मगधलक्षणोऽण् ४।१।१६८। शेषेभ्यस्त्वञ्। "भार्गी" इत्यादौ पूर्ववत् ङीष्। "यौधेयी, शौक्रेयी, शौभ्रेयी" इति। यौधेय शौक्रेय शौभ्रेयशब्देभ्यः स्वार्थे "पर्(ाआदियौधेयादिभ्योऽणञौ" ५।३।११७ इत्यण्। भार्गीत्यादौ पूर्ववन्ङीष्। "कस्य पुनः" इत्यादि।येनाभिप्रायेण पृष्टवान् तं "कथम्" इत्यादिना आविष्करोति। "पर्(ाआदि" इत्यादि। पर्शूः = क्षत्त्रियः, जनपदेन समानशब्दः, तस्यापत्यं स्त्रीत्वविशिष्टम्। "द्व्यञ्मगध" ४।१।१६८ इत्यादिनाण्, तस्य "अतश्च" ४।१।७७) इति लुक्। पर्(ाआदियौधेयादिभ्योऽणञौ" ५।३।११७ इत्यनेनापि यः स्वार्थिकोऽण्, तस्यापि लुक्। एवं "रक्षाः" इति। असूरशब्दाज्जनपदशब्दादित्यादिनाञ्, तदन्तात् पूर्ववत् स्वार्थिकोऽण् तोयर्लुक्। "तथा च" इत्यादिना ज्ञापकमेव भाष्यकारयतेन द्रढयति॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां

चतुर्थाध्याये प्रथमः पादः। -------------------------------- अथ चतुर्थोऽध्यायः द्वितीयो पादः।

बाल-मनोरमा

न प्राच्यभर्गादियौधेयादिभ्यः ११७९, ४।१।१७६

न प्राच्य। एभ्य इति। प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चेतियर्थः। एते प्राच्या इति। "क्षत्रिया" इति शेषः। यथायथमञोऽणश्च लुक्। भर्गादीनुदाहरति--भार्गीस कारूशी, कैकेयीति। जन्यजनकभावेति। अत्र यद्वक्तव्यं तत् "पुंयोगादाख्याया"मित्यत्रोक्तम्। अथ यौधेयादिभ्यो लुक्प्रतिषेधं दर्शयितुमाह--युधा, शुक्रा इत्यादिना। ढगिति। युधाया अपत्यं, शुक्राया अपत्यमिति विग्रहे तन्नामिकाऽणं बाधित्वा "द्व्यचः" इति ढकि एयादेशे "यस्येति चे"त्यकारलोपे आदिवृद्धिः। यौधेयशब्दात्, शौक्रेयशबदाच्च "पर्(ाआदियौधेयादिभ्योऽणञौ" इति स्वार्थे तद्राजसंज्ञके पाञ्चमिके अञि "यस्येति चे"त्यकारलोपे "शाङ्गरवाद्यञः" इति ङीनि यौधेयी शौक्रेयीति रूपमिति भावः। नन्वत्र "अतश्च" इत्यञोलुकि सत्यपि "टिड्ढे"ति ङीपि, यौधेयी शौक्रेयीति सिद्धेरिह यौधेयादिग्रहणनर्थकमित्यत आह--अतश्चेति लुकि त्विति। उदात्तनिवृत्तीति। अनुदात्तस्य च यत्रोदात्तलोपः" इत्यनेन ङीबुदात्तः स्यात्। सिद्धान्ते त्वञन्तत्वान्ङीनि आद्युदात्तत्वमिति भावः।

तत्त्व-बोधिनी

न प्राच्यभर्गादियौधेयादिभ्यः ९७५, ४।१।१७६

तद्राजस्यऽकारस्येति। सूत्रे तपरकरणं विस्पष्टार्थमिति भावः। शूरसेनीति। अञो लुकि "जाते"रिते ङीष्। न त्वञन्तदलक्षणो ङीन्, "अञो योऽकारस्तदन्ता"दिति व्याख्यानात्। कारूशीति। कृञ उः करुः, तं वष्टि करुशः। "वश कान्तौ"मूलविभुजादित्वात्कः। "ग्रहिज्ये"ति संप्रसारणम्। तस्यापत्यं राजा वा कारुशः। स्त्रियां कारूशी। एतेन मूर्धन्योष्मोपधः पाठो निरस्तः। यौधेयादिभ्यो लुक्प्रतिषेधमुदाहर्तुमाह---युधाष शुक्रेत्यादि। अतश्चेति लुकि त्विति। "ञ्यादस्तद्राजाः"इति वक्ष्यमाणत्वादञोऽस्य तद्राजत्वमस्तीति भावः। योपधत्वान्ङीषः प्राप्तिर्नेत्याशयेनाह---ङीपीति। उदात्तनिवृत्तिस्वर इति। "अनुदात्तस्य च यत्रोदात्तलोपः" इत्यनेन ङीबुदात्तः स्यादित्यर्थः। सिद्धान्ते त्वञो लुगभावान्ङीन्याद्युदात्तत्वमिति ज्ञेयम्। स्यादेतत्। "अतश्चे"ति सूत्रेण विधीयमानो लुक् चातुरर्थिकानामेव तद्राजानां भवतु संनिधानात्, न तु "ञ्यादयस्तद्राजाः"इति पाञ्चमिकानामपि तद्राजानामिति किमनेन यौधेयादिग्रहणेन()। सत्यम्। "व्याप्तिन्यायेन पाञ्चमिकस्यापीह ग्रहण"मिति ज्ञापयितुं यौधेयादिग्रहणम्। तेन पार्(ाआद्यणः स्त्रियां लुक् सिध्यति। तथा हि पर्शुः क्षत्रिय#ओ जनपदेन समानशब्दः। तस्यापत्यं स्त्री। "द्व्यञ्महधे"त्यण्, तस्य "अतश्चे"ति लुक्। पुनः पर्(ाआदिलक्षणः स्वार्थिकोऽण्। तस्यापि लुकि "ऊङुतः"पर्शूः। एवं रक्षसः क्षत्रियस्यापत्यं स्त्री रक्षाः। पूर्ववदण्द्वयस्यापि लुकि "अत्वसन्तस्ये"ति दीर्घः। उक्तं च वार्तिककृता---"पर्(ाआदिभ्यो लुग्वक्तव्यः। यौधेयादिप्रतिषेधो वा ज्ञापकः--पार्(ाआदिलुगि"ति यौधेयीत्यादि। युधायाः शुक्राया अपत्यं स्त्रीति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

तेन रक्तं रागात् ४।२।१

शुक्लस्य वर्णान्तरापादनम् इह रञ्जेरर्थः। रज्यते ऽनेन इति रागः। तेन इति तृतीयासमर्थाद् रागविशेषवाचिनः शब्दाद् रक्तम् इत्येतस्मिन्नर्थे यथाविहितम् प्रत्ययो भवति। कषायेण रक्तं वस्त्रम् काषायम्। माञ्जिष्ठम्। कौसुम्भम्। रागातिति किम्? देवदत्तेन रक्तं वस्त्रम्। कथं काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पदौ इति? उपमानाद् भविष्यति, काषायौ

इव काषायौ, हारिद्राविव हारिद्रौ। द्वैपवैयाघ्रादञ् ४।२।११ इति यावत् तृतीयासमर्थविभक्तिरनुवर्तते।

लघु-सिद्धान्त-कौमुदी

तेन रक्तं रागात् १०३६, ४।२।१

अण् स्यात्। रज्यतेऽनेनेति रागः। काषायेण रक्तं वस्त्रं काषायम्॥

न्यासः

तेन रक्तं रागात्। , ४।२।१

रञ्जिरयमस्त्येवानुरागे -- देवे रक्तः, स्त्रियां रक्त इति; अस्ति च वर्णविशेषे -- रक्तो गौरिति, लोहित इत्यर्थः; अस्ति शुक्लस्य वर्णान्तरापादने --रक्तः पट इति, शुक्लमपनीय रक्तादिकं वर्णान्तरमापादित इत्यर्थः। इह तृतीयेऽर्थे वत्र्तमानो गृह्रते, यदाह-- "शुक्लस्य" इत्यादि। रागशब्दोऽयमस्त्येव भावसाधनः, अस्ति च करणसाधनः; तत्रेह द्वितीयो गृह्रते, यदाह-- "रज्यतेऽनेनेति रागः" इति। रागग्रहणेन चार्थस्य ग्रहणम्, न स्वरूपस्य। तेन रागविशेषवाचिनः प्रातिपदिकात् प्रत्ययो विज्ञायते, न तु रागशब्दादेवेत्यत आह-- "रागविशेषवाचिनः प्रातिपदिकात्" इति। अथ स्वरूपग्रहणं कस्मान्न भवति? अर्थपरत्वान्निर्देशस्य। यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्रते,न यत्रार्थपरो निर्देश इति प्राक् प्रतिपादितमेव। अर्थपरत्वञ्च निर्देशस्याविच्छिन्नाचार्यपारम्पर्योपदेशाद्गम्यते। यदि तर्हि शुक्लस्य वर्णान्तरापादनमित्यभिप्रायेणाह-- "कथम्" इति। "उपमानात्" इत्यादि परिहारः। यथा "गौर्वाहीकः" इत्युपमानाद्()गोशब्दोऽर्थान्तरे वाहीके वत्र्तते,तथेहापि काषायादिशब्दो गर्दभकर्णादाविति भावः॥

बाल-मनोरमा

तेन रक्तं रागात् ११८४, ४।२।१

तेन रक्तं रागात्। रज्यत इति। रज्यते वर्णान्तरं प्राप्यते अनेनेत्यर्थे रञ्जेः करणे घञि कृते "गञि च भावकरणयो"रिति नलोपे "चजोः कुघिण्ण्यतो"रिति कुत्वे उपधावृद्धौ रागशब्द इत्यर्थः। तथाच रागशब्देन रञ्जनसाधनं द्रव्यमुक्तं भवति। "तेने"ति सामान्यनिर्देशः। तथाच तेन रक्तं=वर्णान्तरं प्राप्तमित्यर्थे, रागात्=रञ्जनद्रव्यवाचकात्तृतीयान्तादण् स्यादित्यर्थः, "प्राग्दीव्यतोऽणि"त्यधिकारात्। कषायेणेति। कषायो धातुविशेषः, रञ्जनद्रव्यं, तेन रक्तं वर्णान्तरं प्राप्तं काषायमित्यर्थः। माञ्जिष्ठमिति। मञ्जिष्ठानाम रञ्जनद्रव्यविशेषः।

तत्त्व-बोधिनी

तेन रक्तं रागात् ९८०, ४।२।१

तेन रक्तं। तृतीयान्तात्समर्थाद्यथाविहितं प्रत्ययाः स्युः। रज्यतेऽनेनेतीति। बाहुलकात्करणे घञ्। राग इति। रञ्जकद्रव्यमित्यर्थः। शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः।

---

सूत्रम्

काशिका-वृत्तिः

लाक्षारोचनाशकलकर्दमाट् ठक् ४।२।२

लाक्षादिभ्यो रागवचनेभ्यस् तृतीयासमर्थेभ्यो रक्तम् इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अणो ऽपवादः। लाक्षया रक्तं वस्त्रम् लाक्षिकम्। रौचनिकम्। शाकलिकम्। कार्दमिकम्। शकलकर्दमाभ्यामणपीष्यते। शाकलम्। कार्दम्। नील्या अन् वक्तव्यः। नील्या रक्तं नीलं वस्त्रम्। पीतात् कन् वक्तव्यः। पीतेन रक्तं पीतकम्। हरिद्रामहारजनाभ्यामञ् वक्तव्यः। हारिद्रम्।

माहरजनम्।

न्यासः

लाक्षारोचनाशकलकर्दमाट्ठक्।, ४।२।२

"शकलकर्दमाभ्यामणपीष्यते" इति। स च "वान्यस्मिन् सपिण्डे" ४।१।१६५ इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणानुवृत्तेर्लभ्यते। न चैवं सत्यतिप्रसङ्गो भवति; व्यवस्थितविभाषाविज्ञानात्॥

बाल-मनोरमा

लाक्षारोचनाट्ठक् ११८५, ४।२।२

लाक्षारोचनाट्ठक्। अमोऽपवादः। लाक्षिक इति। "पट" इति शेषः। लाक्षया रक्त इति विग्रहः। रौचनिक इति। रोचनया रक्त इति विग्रहः।

शाकलिक इति। शकलं--रागद्रव्यविशेषः। वृत्तिरिति। भाष्ये तु नैतद्दृष्टम्।

नील्या अनिति। "वक्तव्य" इति शेषः। अणोऽपवादः। नीली ओषधिविशेषः।

"पीतात्कन्"। अणोऽपवादः। पीतं हरितालकादि द्रव्यम्।

हरिद्रामहेति। अणोऽपवादः। स्वरे विशेषः। हरिद्रा प्रसिद्धा। महारजनं--नाम रागद्रव्यविशेषः। इति रक्ताधिकारः।

तत्त्व-बोधिनी

लाक्षरोचनाट्ठत् ९८१, ४।२।२

लाक्षरोचनात्। वृत्तिकृता तु वार्तिकस्थौ शकलकर्दमौ सूत्रे प्रिक्षिप्तौ। "शकलं त्वचि खण्डे च रागवस्तुनि वल्कले"इति वि()आः।

सकलकर्दमाभ्यामुपसंख्यानम्। वृत्तिकार इति। भाष्ये तु नैकद्दृष्टमिति भावः।

नील्या अन्। नील्येति। नीली ओषधिविशेषः। अणपवादोऽयम्।

---

सूत्रम्

काशिका-वृत्तिः

नक्षत्रेण युक्तं कालः ४।२।३

तृतीयासमर्थविभक्तिः अनुवर्तते। तेन इति तृतीयासमर्थाद् नक्षत्रविशेषवाचिनः शब्दाद् युक्तः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। यो ऽसौ युक्तः। कालश्चेत् स भवति। कथं पुनर् नक्षत्रेण पुष्यादिना कालो युज्यते? पुष्यादिसमीपस्थे चन्द्रमसि वर्तमानाः पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति पुष्येण युक्तः कालः। पुष्यसमीपस्थेन चन्द्रमसा युक्तः इत्यर्थः। पौषी रात्रिः। पौषमहः। माघी रात्रिः। माघमहः। नक्षत्रेण इति किम्? चन्द्रमसा युक्ता रात्रिः। कालः इति किम्? पुष्येण युक्तश्चन्द्रमाः।

लघु-सिद्धान्त-कौमुदी

नक्षत्रेण युक्तः कालः १०३७, ४।२।३

अण् स्यात्। (तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्)। पुष्येण युक्तं पौषमहः॥

न्यासः

नक्षत्रेण युक्तः कालः। , ४।२।३

इह कालं क्रियात्मानं केचिदिच्छिन्ति, अपरे द्रव्यात्मानमाकाशादिकल्पम्। दर्शनद्वयमपि चैतदिहाश्रयितुमयुक्तम्। पूर्वस्मिन् दर्शने समाश्रीयमाणे सूर्यादिद्रवयान्तर्सयायां वा क्रियाया नक्षत्रेण योगः स्यात्? आत्मस्थाया वा? पूर्वस्यास्तावन्न सम्भवति, अर्थान्तरासमवायात्। अन्यथा ह्याकाशादयोऽपि क्रियावन्तः स्यु। न ह्यर्थान्तरसमवायिन्या अपि क्रियाया द्रव्यान्तरेण योगः स्यात्। आत्मस्थायास्तु क्रियाया विद्यते नक्षत्रेण योगः, किन्तु युक्तग्रहणं विशेषणं नोपपद्यते; व्यवच्छेद्याभावात्। न हि पुष्यादिस्थायाः कालस्य पुष्यादिभिः कदाचिद्योगो युज्यते यद्व्यवच्छेदार्थं युक्तग्रहणं क्रियते। एवं तावत् "क्रिया कालः" इत्येतद्दर्सनमत्राश्रयितुमयुक्तम्। द्वितीयमप्ययुक्तमेव; यस्मात् कालविशेषावधारणहेतुरिह योगोऽभिप्रेतः। तथा हि कालविशेषावधारणार्थमेव पौषीत्यादिलोके प्रयुज्यते। स चैवंविधो योगस्तयोरेव भवतीति ययोः सन्निकर्षविप्रकर्षे स्तः, यथा-- पुष्यचन्द्रमसोः। तयोर्हि कदाचित् सन्निकर्षो भवति, तदाचिद्विप्रकर्षः। न च नक्षत्रकालयोः कदाचित् सन्निकर्षविप्रकर्षैः स्तः,तयोर्नित्यत्वादित्येतच्चेतसि कृत्वाह-- "कथं पुनः" इत्य#आदि। न कथञ्चिदित्यभिप्रायः। नक्षत्रनिकटवर्तिनि चन्द्रमसि वत्र्तमानः सूत्रे नक्षत्रशब्द उपात्त इत्येतत् सूचयन्नाह-- "पुष्यादिसमीपस्थे" इत्यादि। यतैव हि सामीप्यात् "गङ्गायां घोषः" इति गङ्गासमीपस्थे देशे गङ्गाशब्दो वत्र्तते, तथेहापि पुष्यदयो नक्षत्रविशेषवाचिनः शब्दाः पुष्यादिसमीपस्थे चन्द्रमसि वत्र्तन्ते। तेन तत्रैव वत्र्तमानाः प्रत्ययमुत्पादयन्ति। तेन पुख्यादिसमीपस्थचन्द्रमसा कालस्य विशेषावधारणहेतुर्योग उपपद्यते। तदवस्थस्य चन्द्रमसः कादाचित्कत्वात्। पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः; तदवस्थे चन्द्रमसि पुष्यशब्दस्य वृत्तेः। "पौषी" इति। "सूर्यतिष्यागस्त्यमस्त्यानां य उपधायाः ६।४।१४९ इत्यत्र "{तिष्यपुष्ययोर्नक्षत्राणि यलोपः" इति मु।पाठ।} तिष्यपुष्ययोर्नक्षत्राणि" (वा।८०८) इति वचनाद्यलोपः॥

बाल-मनोरमा

नक्षत्रेण युक्तः कालः ११८६, ४।२।३

नक्षत्रेण। अस्मिन्नर्थे प्रथमोच्चारितान्नक्षत्रवाचकाच्छब्दात् प्राग्दीव्यतीयाः प्रत्यया यथायथं स्युरित्यर्थः। नक्षत्रयुक्तश्चन्द्रमा-नक्षत्रशब्देन विवक्षितः। पुष्येण युक्तमिति। पुष्ययुक्तचन्द्रमसा युक्तमित्यर्थः। पौषमहरिति। पुष्यशब्दादणि "तिष्यपुष्ययोर्नक्षत्राऽणि यलोपः" इति यलोपः। पौषी रात्रिरिति। पुष्ययुक्तचन्द्रमसा युक्तेत्यर्थः। अणि यलोपे "टिड्ढे"ति ङीप्। नक्षत्रेणेति किम्?। चन्द्रेण युक्ता रात्रिः। कालः किम्?। पुष्येणयुक्तश्चन्द्रमाः।

तत्त्व-बोधिनी

नक्षत्रेण युक्तः कालः ९८२, ४।२।३

नक्षत्रेण। नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्रत्ययं लभन्ते। पुष्येणेति। पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः। एवं च पौषमह इत्यादिव्यवहारः सङ्गच्छते। सर्वेषामप्यह्नां पुष्ययोगसत्त्वेऽपि तत्समीपस्थचन्द्रमसा योगस्याऽसर्वत्रिकत्वात्। नक्षत्रेणेति किम्()। चन्द्रेण युक्ता रात्रिः। कालः किम्()। पुष्येण युक्तश्चन्द्रः।

---

सूत्रम्

काशिका-वृत्तिः

लुबविशेषे ४।२।४

पूर्वेण विहितस्य प्रत्ययस्य लुब् भवति अविशेषे। न चेन् नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषो ऽभिधीयते। यावन् काले नक्षत्रेण युज्यते अहोरात्रः, तस्य अविशेषे लुब् भवति। अद्य पुष्यः। अद्य कृत्तिकाः। अविशेषे इति किम्? पौषी रात्रिः। पौषमहः।

लघु-सिद्धान्त-कौमुदी

लुबविशेषे १०३८, ४।२।४

पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः॥

न्यासः

लुबविशेषे। , ४।२।४

यद्यविशेषे लुग्भवति, इहापि प्राप्नोति-- पौषी रात्रिः,पौषमहरिति, अत्राप्यविशेषी गम्यत एव। तथा हि-- पौषीरात्रिरित्युक्ते, अद्य ()आओ वेति विशेषो न गम्यत इत्यत आह-- "न चेत् नक्षत्रयुक्तस्य" इत्यादि। एवं मन्यते-- "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यनुवत्र्तते, तेन तद्विशेष एव न भवतीति। "रात्र्यादिविशेषः" इति।आदिशब्देनाह, मुहूर्तः, लवः-- इत्येते विशेषा गृह्न्ते। "यावान्" इत्यादि। अनन्तरोक्तमेवार्थं विस्पष्टीकरोति। कियांश्च कालो नक्षत्रेण युज्यते? अहोरात्रः। तदेवं यावान् कालो नक्षत्रेण युक्तस्तस्याविशेषे न गम्यते, अपि तु तदेकदेशस्य रात्रेः, अह्नो वेति नायं लुपो विषयः। यद्येवम्, प्रत्ययस्यापि कथमेकदेशो विषयः?समुदायद्वारेण तदन्तःपातिनो गृह्न्ते। एकदेशानामपि योगात् पूर्वेण प्रत्ययोत्पत्तिः सिद्धा बवति। पुनरिहावयवस्यैकदेशो लुपो विषय इति। इह तर्हि प्राप्नोति-- पौषोऽहोरात्र इति, अत् यावान् कालो नक्षत्रेण युक्तः, तस्याविशेषो गम्यते, तथा ह्नहोरात्र इत्युक्ते न ज्ञायते-- किमतीतः, अथानागतः,अथ वत्र्तमान इति? नैष दोषः; अविशेष इति प्रसज्यप्रतिषेधोऽयम्। तेन नक्षत्रयुक्तस्य कालस्य यत्र विशेषो रात्र्यादिस्तत्र न लुग्भवतीति ज्ञायते, न तु यत्राविशेषस्तत्र तु लुब्भवतीति॥

बाल-मनोरमा

लुबविशेषे ११८७, ४।२।४

लुबविशेषे। षष्ठिदण्डेति। षष्टिघटिकापरिच्छिन्ने काले एकैकस्मिन्नेकैकेन नक्षत्रेण चन्द्रमा युज्यत इति स्थितिः। तस्य षष्टिदण्डस्य कालस्य अवान्तरविशेषोऽहर्वा रात्रिर्वेति न गम्यते चेदित्यर्थः। अद्य पुष्य इति। अद्येत्यव्ययम् अहोरात्रवाचि अधिकरणशक्तिप्रधानम्, इह तु अधिकरणशक्तिविनिर्मुक्तोऽहोरात्रकालो विवक्षितः। तथाच अयमहोरात्रः पुष्ययुक्तचन्द्रमसा युक्त इत्यर्थः। अहर्वा रात्रिर्वेति विशेषानवगमादणो लुप्। कथं तर्हीति। पौर्णमस्याः षष्टिदण्डात्मिकाया अवान्तरविशेषानवगमादिह लुप् स्यादित्याक्षेपः। समाधत्ते--विभाषेति। फाल्गुनीकार्तिकीचैत्रीशब्दानां नक्षत्राऽण्विशिष्टानां पौर्णमास्यां प्रयोगदर्शनेन पौर्णमास्यां नक्षत्रयुक्तायां "लुबंभावात्कथं श्रणणेति निर्देश इत्यत आह--श्रवणशब्दात्त्वत एव लुबिति। "श्रवणे"ति निपातनादेव पौर्णमास्यां लुबित्यर्थः। ननु "कृत्तिका श्रवणः पुष्यः चित्रास्वात्योर्यदन्तर"मित्यादौ श्रवणशब्दस्य पुंलिङ्गत्वदर्शनेन तस्मादणो लिपि कृते "लुपि युक्तवद्व्यक्तिवचने" इति पुंलिङ्गत्वावश्यंभावाच्छ्रवणेति कथं स्त्रीलिङ्गतेत्यत आह--युक्तवद्भावाभावश्चेति। "निपातना"दिति शेषः। ननु तर्हि श्रावणीति नैव स्यादित्यत आह--अबाधकान्यपीति। इयं परिभाषा वृत्तौ स्थिता। सर्वादिसूत्रभाष्ये तु "बाधकान्येव निपातनानी"त्युक्तम्।

तत्त्व-बोधिनी

लुबविशेषे ९८३, ४।२।४

लुबवि [शेषे]। पूर्वसूत्रस्यानुवर्तनादिह "नक्षत्रेण युक्तस्य कालस्याऽविशेषे गम्ये"इत्यर्थ उपलभ्यते, तदाह--षष्टिदण्डेति। "अद्य पुष्यः"इत्युक्त्या"न ह्यो, न ()आः"इति विशेषे गम्यमानेऽपि अहोरात्रात्मककालस्यावान्तरविशेषानवगमाल्लुब्भवत्येवेति भावः। "अविशेषे"इत्यत्र प्रसज्यप्रतिषेधाश्रयणात् "पौषोऽहोरात्रः"इत्यत्र लुब्न भवति, षष्टिदण्डात्मकसमुदायरूपकालस्य प्रतीतावप्यवयवद्वयात्मकस्यापि विशेषस्यापि प्रतीतेरित्याशयेनाह---विशेषश्चेन्नेति। अद्य पुष्य इति।स "मूलेनावाहयेद्देवीं श्रवणेने"त्यप्युदाहरणं बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां श्रवणाश्वत्थाभ्याम् ४।२।५

अविशेषे लुप् विहितः पूर्वेण, विशेषार्थो ऽयम् आरम्भः। श्रवनशब्दादश्वत्थशब्दाच् च उत्पन्नस्य प्रत्ययस्य लुब् भवति संज्ञायां विषये। श्रवणारात्रिः। अश्वत्थो मुहूर्तः। लुपि युक्तवद्भावः कस्मान् न भवति? निपातनात् विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ४।२।२२ इति। संज्ञायाम् इति किम्? श्रावणी, आश्वत्थी रात्रिः।

न्यासः

संज्ञायां श्रवणा�आत्थाभ्याम्। , ४।२।५

"लुपि युक्तवद्भावः कस्मान्न भवति" इति। यदि स्यात्, श्रवणशब्दस्य पुंल्लिङ्गता स्यात्। "निपातनात्" इत्यादिना परिहारः। गतार्थः॥

बाल-मनोरमा

संज्ञायां श्रवणाऽ�आत्थाभ्याम् ११८८, ४।२।५

संज्ञायाम्। श्रवणाऽ()आत्थाभ्यां परस्य नक्षत्र प्रत्ययस्य लुप् स्यात्संज्ञायामित्यर्थः। ननु लुबविशेषे" इत्येव सिद्धे किमर्थमिदमित्यत आह--विशेषार्थोऽयमारम्भ इति। श्रवणा रात्रिरिति। श्रवणयुक्तचन्द्रमसा युक्ता रात्रिरित्यर्थः। "विभाषा फाल्गुनीश्रवणे"ति सूत्रे श्रवणेति निर्देशस्य सामान्यापेक्षत्वादपोर्णमास्यामपि युक्तवद्भावो नेति विज्ञायते। अतः "श्रवणा रात्रि"रिति सिद्धमिति प्रकृतसूत्रे भाष्ये स्पष्टम्। अ()आत्थो मुहूर्त इति। अ()आत्थो नाम अ()इआनीनक्षत्रम्। तेन युक्तः अ()आत्थः--मुहूर्तविशेषो ज्यौतिषे प्रसिद्धः।

---

सूत्रम्

काशिका-वृत्तिः

द्वन्वाच् छः ४।२।६

नक्षत्रद्वन्द्वात् तृतीयासमर्थाद् युक्ते काले छः प्रत्ययो भवति, विशेषे च अविशेषे च। राधानुराधीया रात्रिः। तिष्यपुनर्वसवीयमहः। अविशेषे राधानुराधीयम्। अद्य तिष्यपुनर्वसवीयम्। लुपं परत्वाद् बाधते।

न्यासः

द्वन्द्वाच्छः। , ४।२।६

नक्षत्रग्रहणं यत्प्रकृतं तदिहार्थात् षष्ठ()न्तं विपरिणम्यते।तेन नक्षत्राणां यो द्वन्द्वस्तस्मात् प्रत्ययो विज्ञायत इत्याह-- "नक्षत्रद्वन्द्वात्" इति। "विशेषे चाविशेषे च" इति। अविशेषग्रहणस्य निवृत्तत्वात्। "अद्य राधानुराधीयम्" इति। ननु

चाविशेषे लुपा भवितव्यम्, तत्कथं प्रत्ययस्य श्रवणमित्याह-- "लुपं परत्वाद्बाधते" इति॥

बाल-मनोरमा

द्वन्द्वाच्छः ११८९, ४।२।६

द्वन्द्वाच्छः। तिष्यपुनर्वसवीयमिति। तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू, ताभ्यां युक्तमहरिति विग्रहः। छस्य ईयादेशे ओर्गुणः। राधानुराधीयेति। रादेति विशाखानक्षत्रमुच्यते। राधा च अनूराधाश्च राधानूराधाः, तद्युक्ता रात्रिरित्यर्थः।

तत्त्व-बोधिनी

द्वन्द्वाच्छः ९८४, ४।२।६

द्वन्द्वाच्छः। विशेषे उदाहरणमाह--तिष्येत्यादि। अविशेषे तूदाहर्तव्यम् "अद्यराधानुराधीय"मिति। न चात्र "लुबविशेषे"इति अम इव छस्यापि लुप्स्यादिति वाच्यं, मध्येऽपवादन्यायरीत्या पूर्वोपस्थितस्याऽण एव तत्प्रवृत्तेः। यत्तु "लुपं परत्वाद्बाधते छ"इति वृत्तिकृतोक्तं, तन्न, द्वयोर्युपत्प्रस्यभावा।

---

सूत्रम्

काशिका-वृत्तिः

दृष्टं साम ४।२।७

तेन इति तृतीयासमर्थाद् दृष्टं साम इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद् दृष्टं साम चेत् तद् भवति। क्रुञ्चेन दृष्तं कौञ्चं साम। वासिष्ठम्। वैश्वामित्रम्।

काशिका-वृत्तिः

कलेर् ढक् ४।२।८

कलिशब्दात् तृतीयासमर्थाद् दृष्टं साम इत्येतस्मिन्नर्थे ढक् प्रत्ययो भवति। अणो ऽपवादः। कलिना दृष्टं साम कालेयम्। सर्वत्र अग्निकलिभ्यां ढग् वक्तव्यः। अग्निना दृष्टम् आग्नेयम्। एवम् अग्नौ भवम्, अग्नेरागतम्, अग्नेः स्वम् इति सर्वत्र ढगेव भवति। आग्नेयम्। तथा कालेयम् अपि प्रतिपत्तव्यम्। दृष्टे सामनि अण् वा डिद् भवति इति वक्तव्यम्। उशनसा दृष्टं साम औशनसम्, औशनम्। जाते च अर्थे यो ऽन्येन बाधितः पुनरण् विधीयते स वा डिद् भवति इति वक्तव्यम्। प्राग्दीव्यतो ऽण् प्राप्तः कालठञा बाधितः संधिवेलाद्यृतुनक्षत्रेभ्यः इति पुनर् विधियते स वा डिद् भवति इति वक्तव्यम्। शतभिषजि जातः। शातभिषजः, शातभिषः। तीयादीकक् स्वार्थे वा वक्तव्यः। द्वैतीयीकम्। तार्तीयीकम्। द्वितीयकम्। तृतीयकम्। न विद्यायाः। द्वितीया, तृतीया विद्या। गोत्रादङ्कवदिष्यते। दृष्टं साम इत्येतस्मिन्नर्थे। औपगवेन दृष्टं साम औपगवकम्। कापटवकम्। गोत्रचरणाद् वुञ् भवति। दृष्टे सामनि जाते च द्विरण् डिद्वा विधीयते। तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते।

लघु-सिद्धान्त-कौमुदी

दृष्टं साम १०३९, ४।२।७

तेनेत्येव। वसिष्ठेन दृष्टं वासिष्ठं साम॥

न्यासः

कलेर्ढक्।, ४।२।७

"तीयात्" इति। द्वेस्तीयः" ५।२।५३ इति तीयः। "त्रेः सम्प्रसारणञ्च" (५।२।५५) इति तीयं वक्ष्यति, तदन्तात् स्वार्थ ईकग्वक्तव्यः। "न विद्यायाः"इति। विद्याया अभिधाने तीयादीकग्न भवति। "गोत्रादह्कवत्" इति। यथा तस्याङ्क इत्यत्रार्थे विवनक्षिते गोत्रात् प्रत्ययो भवति, "तेन दृष्टं साम" ४।२।७ इत्यत्रार्थे विवक्षिते तथैवेष्यते। "औपवेन दृष्टं साम" इति। औपगवशब्दः "तस्यापत्यम्" ४।१।९२ इतिगोत्रप्रत्ययान्तः। "गोत्रचरणाद्()वुञ् भवति" इति। यथौपगवस्यायमङ्क औपगवक इत्यौपगवशब्दाद्()गोत्रप्रत्ययान्तादङ्के वुञ्भवति, तथा "तेन दृष्टं साम" इत्यत्रापि। ननु च "गोत्रचरणाद्()वुञ्" ४।३।१२६ इत्यत्र नाङ्कार्थ उपात्तः, तत्कथमनेनाह्कवदित्युच्यमाने वुञ् बवति? नैष दोषः; तत्राङ्कवदित्यनेन विहितस्येदमर्थो विवक्ष्यते। "तेन गोत्रप्रत्ययान्ताद्यथा "तस्येदम्" ४।३।१२० इत्यत्रार्थे प्रत्यय इष्यते, तथा तेन दृष्टं साम" इतत्यत्रापीत्यर्थः। "दृष्टे सामनि" इति सङ्ग्रहः।गतार्थः॥

बाल-मनोरमा

दृष्टं साम ११९०, ४।२।७

दृष्टं साम। तेनेत्येवेति। अनुवर्तत एवेत्यर्थः। तेन दृष्टं सामेत्यर्थे तृतीयान्तादणादयः स्युरित्यर्थः।

अस्मिन्नर्थे इति। "दृष्टं साम" इत्यर्थे यः अण् स डिद्वेत्यर्थः। औशनमिति। अमि टिलोपपक्षे रूपम्।

बाल-मनोरमा

कलेर्ढक् ११९१, ४।२।७

कलेर्ढक्। वार्त्तिकमिदम्।

तत्त्व-बोधिनी

दृष्टं साम ९८५, ४।२।७

दृष्टं साम। तृतीयान्ताद्दृष्टमित्यर्थेऽणादयः स्युर्युद्दृष्टं त्वेचत्साम।

अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः। अस्मिन्नर्थे इति तथा च श्र्लोकवार्तिकं--"दृष्टे सामनि जाते वाप्यण् डिद् द्विर्वा विधीयते। तीयैदीकक् न विद्याया गोत्रादङ्कवदिष्यते। "इति। जातेऽर्थे यो द्विरण् स च वा डिदित्यन्वयः। शतभिषजि जातः शातभिषः, शातभिषझः। इह हि "प्राग्दीव्यतः"इति प्राप्तोऽण् कालाट्ठञा बाधितः, स च "सन्धिवेलादि"सूत्रेण प्रतिप्रसूयते इत्ययं द्विरुक्तोऽम्। तीयादिति। तीयादिकक् स्वार्थे भवतीत्यर्थः। द्वैतीयीकः। तार्तीयीकः। न विद्याया इति। विद्यावाचकात्तीयान्तादीकङ्न भवतीत्यर्थः। द्वितीया विद्या। गोत्रादङ्कवदिति। गोत्रप्रत्ययान्तादङ्के यः प्रत्ययः स दृष्टे सामन्यपि भवति। औपगवेन दृष्टपगवकम्। इह "गोत्रचरणाद्वु"ञिति वुञ्।

---

सूत्रम्

काशिका-वृत्तिः

वामदेवाड् ड्यड्ड्यौ ४।२।९

वामदेवशब्दात् तृतीयासमर्थात् दृष्टं साम इत्येतस्मिन्नर्थे ड्यत् ड्य इत्येतौ प्रत्ययौ भवतः। अणो ऽपवादः। वामदेवेन दृष्टं साम वामदेव्यं साम। तित्करणं स्वरार्थम्। डित्करणं किम् अर्थम्? ययतोश्च अतदर्थे ६।२।१५५ इति नञ उत्तरस्य अन्तोदात्तत्वे विधीयमाने ऽन्योर् ग्रहणं मा भूत्। अननुबन्धकग्रहणपरिभाषया एकानुबन्धकग्रहणपरिभाषया च अनयोर्

निवृत्तिः क्रियते। अवामदेव्यम्। सिद्धे यस्य इति लोपेन किमर्थं ययतौ डितौ। ग्रहणं मा ऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे।

लघु-सिद्धान्त-कौमुदी

वामदेवाड्ड्यड्ड्यौ १०४०, ४।२।८

वामदेवेन दृष्टं साम वामदेव्यम्॥

न्यासः

वामदेवाड्ड�ड्ड�औ। , ४।२।८

"{उदाहरणद्वयं मूले नास्ति, एवमेव वामदेव्य् इति दृश्यते।} वामदेव्यम्, वागमदेव्यम्" इति। एकस्तितस्वरेणान्तस्वरितः, द्वितीयः प्रत्ययस्वरेणान्तोदात्तः। "ङित्करणं किमर्थम्()" इति। "यस्येति च" ६।४।१४८ इत्येवं लोपस्य सिद्धत्वाड्()डित्करणस्यानर्थक्यं मन्यते-- ड()ड्ड()आवित्यादि। न वामदेव्यमवामदेव्यमिति-- -- अत्र "नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः" ६।२।१५४ इत्यतो नञ इत्यनुवत्र्तमाने "ययतोश्चातदर्थे" ६।२।१५५ इत्युत्तरपदस्यान्तोदात्तत्वे विधीयमानेऽनयोग्र्रहणं मा भूदित्येवमर्थ डित्करणम्। असति च तत्रानयोग्र्रहणे नञ एव स्वरो भवति, स पुनरुदात्तः। "निपाता आद्युदात्ता भवन्ति" (फिट्।सू।४।८०) इति वचनात्। अथ क्रियमाणे डित्करणे कस्मादनयोग्र्रहणं न भवति? इत्याह्म-- "निरनुबन्धग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति परिभाषया ड()ड()ड()योरपि निवृत्तिः क्रियते। यद्()ग्रहणेऽपि "एकानुबन्धकरणे न द्व्यनुबन्धकस्य" (व्या।प।५२) इति परिभाषया यतः। अनयोश्च परिभाषयोरस्तित्व एतदेव डित्करणं लिङ्गम्। सङ्ग्रहश्लोके "अतदर्थे" इत्यनेन "ययतोश्चातदर्थे" ६।२।१५५ इत्येतत् सूत्रं लभ्यते। एतस्मिन् सूत्रे इत्यर्थः। "नञ्स्वरे"इति। नञो यः स्वरः नञ्स्वरः। शेषो गतार्थः॥

बाल-मनोरमा

वामदेवाड्ड�ड्ड�औ ११९२, ४।२।८

वामदेवाड्ड()ड्ड()औ। वामदेव्यमिति। डित्वाट्टिलोपः। तित्वं स्वरार्थम्। ननु "यस्येति चे"ति लोपेन सिद्धे किमर्थमिह डित्करणमिति चेत्, सत्यम्ययतोरेव विधौ "ययतोश्चाऽतदर्थे" इति नञः परस्य ययदन्तस्यान्तोदात्तस्वरविधावनयोग्र्रहणं स्यात्, तदभावार्थ डित्करणं। डित्करणे सति तु स्वरविधावनयोर्न ग्रहणं "निरनुबन्धकग्रहणे सति न सानुबन्धकस्य ग्रहण"मिति परिभाषया "तदनुबन्धकग्रहणे सति नाऽतदनुबन्धकस्य" इति परिभाषया च तन्निवृत्तिर्भवति। एते तु परिभाषे इहैव ज्ञाप्येते। तथाच "अवामदेव्य"मित्यत्राऽयं स्वरो न भवति। एतत्सङ्ग्राहकं भाष्यस्थं श्लोकं पठति--सिद्धे यस्येत्यादि। अत्र पूर्वार्धमाक्षेपपरम्। "यस्य" इति लोपेन सिद्धे ययतौ किमर्थं डितौ कृतावित्यर्थः। ग्रहणमिति। वामदेव्यशब्दस्य नञ्स्वरे=नञाश्रयस्वरविधौ अतदर्थे=नञाश्रयस्वरविधौ अतदर्थे="ययतोश्चातदर्थे" इति सूत्रे अनयोडर्()ड्ड()योग्र्रहणं मा भूदित्येतदर्थं डित्करणमित्यर्थः।

तत्त्व-बोधिनी

वामदेवाड्ड�ड्ड�औ ९८६, ४।२।८

वामदेवात्। ग्रहणं माऽदर्थैत्यादि। अतदर्थे--"ययतोश्चातदर्थे इति विहिते"नञ्स्वरे---नञाश्रितस्वरे ड()ड्ड()तोग्र्रहणं मा भूदित्यर्थः। "ययतोश्चे"ति सूत्रेण विधीयमानं नञः परस्य ययदन्तस्योत्तरपदस्यान्तोदात्तत्वमवामदेव्यशब्दे मा भूत् किंतु----अव्ययपूर्क्लपदस्वर एव यखा स्यादित्येतदर्थं ढित्करणमिति फलितोऽर्थः। न च कृतेऽपि डित्त्वे "ययतो"रित्यस्य प्रवृत्तिः कृतो नेति शङ्क्यं, "निरनुबन्धकग्रहणे न सानुबन्धकस्य", "तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये"ति परिभाषयोः सत्त्वात्। इमे च परिभाषे इहैव डित्त्वेन ज्ञाप्येते। तत्राऽऽद्यायाः

प्रयोजनं---"पूरणगुणे"ति सूत्रे तव्यग्रहणे तव्यतोऽग्रहणम्। द्वितीयस्यास्तु अङ्ग्रहण् चङोऽग्रहणम्। "()आयतेरः" "अहि परे"इति शेषः। अ()आत्। चङि परे तु न , अशि()इआयत्।

---

सूत्रम्

काशिका-वृत्तिः

परिवृतो रथः ४।२।१०

तेन इति तृतीयासमर्थात् परिवृतः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यो ऽसौ परिवृतः रथश्चेत् स भवति। वस्त्रेण प्रतिवृतो रथः वास्त्रो रथः। काम्बलः। चार्मणः। रथः इति किम्? वस्त्रेण परिवृतः कायः। समन्तात् वेष्टितः परिवृत उच्यते। यस्य कश्चिदवयवो वस्त्रादिभिरवेष्टितः, तत्र न भवति। तेन इह न, छात्रैः परिवृतो रथः।

लघु-सिद्धान्त-कौमुदी

परिवृतो रथः १०४१, ४।२।९

अस्मिन्नर्थेऽण् प्रत्ययो भवति। वस्त्रेण परिवृतो वास्त्रो रथः॥

न्यासः

परिवृतो रथः। , ४।२।९

"चार्मणः"इति। "अन्" ६।४।१६७ इति प्रकृतिभावे टिलोपो न भवति। "न संयोगा४द्वमन्तात्" ६।४।१३७ इत्यल्लोपो न भवति। अथेह कस्मान्न भवति-- छात्त्रैः परिवृतो रथ इति? अत्राह-- "समन्ताद्वेष्टितः" इत्यादि। वृणोतिरयं वेष्टने वत्र्तते, तस्य परिणा सर्वतो भावो द्योत्यते। तस्माद्यः सर्वतो वेष्ट()ते तत्रैव त्ययेन भवितव्यम्, न तु छात्त्रैः रथः सर्वतो वेष्टितः, ततो न तत्र प्रत्ययस्य प्रसङ्गः। यस्तु छात्त्रैः परिवृतो रथ इति प्रयोगः,सपरिवृतस्याध्यारोपेणौपचारिकः।नच मुख्ये सति परिवृतत्वे गौणस्याध्यारोपितस्य ग्रहणं युक्तम्॥

बाल-मनोरमा

परिवृतो रथः ११९३, ४।२।९

परिवृतो रथः। "तेने"त्यनुवर्तते। तेन "परिवृतोरथः" इत्यर्थे तृतीयान्तादणादयः स्युरित्यर्थः। ननु छात्रैः परिवृतो रथ इत्यत्रापि स्यादित्यत आह--समन्तादिति। रथस्य समन्तादाच्छादनार्थं यद्वस्त्रादिकं रथावयवभूतं तद्वाचकादेवेत्याशयः, एकान्तग्रहणिति वार्तिकात्।

तत्त्व-बोधिनी

परिवृतो रथः ९८७, ४।२।९

परिवृतो। तृतीयान्तत्परिवृत इत्यर्थेऽणादय स्युर्यः परिवृत्तः स चेद्रथो भवति। रथाच्छादनार्थं यद्वस्त्रकम्बलादिकं तत एव सर्ववेष्टनं भवति, न तु च्छात्रादिभ्य इत्याशयेनाह---समन्ताद्वेष्टित इति। परिः सर्वतोबावे वर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पाण्डुकम्बलादिनिः ४।२।११

पाण्डुकम्बलशब्दात् तृतीयासमर्थात् परिवृतो रथः इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति। अणो ऽपवादः। पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः। पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः। मत्वर्थीयेन एव सिद्धे वचनमणो निवृत्त्यर्थम्।

न्यासः

पाण्डुकम्बलादिनिः। , ४।२।१०

"पाण्डुकम्बली" इति। "सौ च" ६।४।१३ इति दीर्घः। "मत्वर्थीयेनैव सिद्धे" इति। यद्धि येन सम्न्ताद्वेष्टितं तत् तस्यास्ति। तस्मात् "अत इनिठनौ" ५।२।११४ इति म्तवर्थीयेनेनिना सिद्धे यत्तद्वचनं तदणो निवृत्त्यर्थम्। यदि लभ्येत, तन्नारभ्येत। यदि ह्येतद्वचनं न स्यात्, तदा "परिवृतो रथः"४।२।९ इत्यणप्रसज्येत्, ततश्च पाण्डुकम्बल इति स्यात्, पाण्डुकम्बलीति चेष्यते। तस्मादण्निनृत्त्यर्थमुच्यते॥

बाल-मनोरमा

पाण्डुकम्बलादिनिः ११९४, ४।२।१०

पाण्डुकम्बलादिनिः। तेनेति, परिवृतो रथ इति चानुवर्तते। इनिप्रत्यये नकारादिकार उच्चारणार्थः। ननु "अत इनिठनौ" इति मत्वर्थीयेन इनैव सिद्धे किमर्थमिदमित्यत आह--अणो निवृत्त्यर्थमिति।

---

सूत्रम्

काशिका-वृत्तिः

द्वैपवैयाघ्रादञ् ४।२।१२

द्वीपिव्याघ्रयोर् विकरभूते चर्मणो द्वैपवैयाघ्रे, ताभ्यां तृतीयासमर्थाभ्यां परिवृतो रथः इत्येतस्मिन्नर्थे अञ् प्रत्ययो भवति। अणो ऽपवादः। स्वरे विशेषः। द्वैपेन परिवृतो रथः द्वैपः। वैयाघ्रः।

न्यासः

द्वैपवैयाघ्रादञ्। , ४।२।११

"द्वीपिव्याघ्रयोर्विकार" इत्यादि। द्वीपिनो विकारश्चर्म, व्याघ्रस्य विकारश्चर्म-- इत्यर्थविवक्षायां "प्राणिरजतादिभ्योऽञ्" ४।३।१५२ इत्यञ्प्रत्ययान्तत्वात् द्वैपवैयाघ्रशब्दयोः, ताभ्यामिह द्वीपिव्याघ्रविकारत्वाच्चर्मणि अभिधीयेते। चर्मणैव द्वीपिव्याघ्रविकारेण रथस्य परिवृतत्वं सम्भवति, न विकारमात्रेणेति चर्मणी इह द्वैपवैयाघ्रशब्दाभ्यां विवक्षिते इति गम्यते॥

बाल-मनोरमा

द्वैपवैयाघ्रादञ् ११९५, ४।२।११

द्वैपवैयाघ्रादञ्। तेनेति परिवृतो रथ इति चानुवर्तते। तृतीयान्ताद्द्वैपशब्दावैयाघ्रशब्दाच्च परिवृतो रथ इत्यर्थे अञ् स्यादित्यर्थः। अणोऽपवादः। स्वरे विशेषः। द्वीपिन इति। द्वीपी--व्याघ्रः, तस्य विकारश्चर्मेत्यर्थे "प्राणिरजतादिभ्यः" इत्यञि द्वैपशब्द इत्यर्थः। एवं वैयाघ्र इति। व्याघ्रस्य चर्म, वैयाघ्रम्। अञि "न य्वाभ्या"मित्यैच्। तेन परिवृतो वैयाघ्र इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कौमारापूर्ववचने ४।२।१३

कौमार इत्येतदण्प्रत्ययन्तं निपात्यते ऽपूर्ववचने। पाणिग्रहणस्य अपूर्ववचनम्। उभ्यतः स्त्रियाः अपूर्वत्वे निपातनम् एतत्। अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः। कुमारीशब्दाद् द्वितीयासमर्थादुपयन्तरि प्रत्ययः। अपूर्वपतिः कुमारी पतिम् उपपन्ना कौमारी भार्या। प्रथमान्तादेव स्वार्थे प्रत्ययो ऽपूर्वत्वे द्योत्ये। कौमारापूर्ववचने कुमार्या अण् विधीयते। अपूर्वत्वं यदा तस्याः कुमार्यां भवति इति वा। कुमार्यां भवः कौमारः पतिः, तस्य स्त्री कौमारी भार्या इति सिद्धम्।

न्यासः

कौमारापूर्ववचने।, ४।२।१२

"अपूर्ववचने"इति। अपूर्वस्य वचन इति, अपूर्वाभिधान इत्यर्थः। कस्यापूर्ववचनमित्याह--"पाणिग्रहणस्य" इत्यादि। एतच्च सामान्योक्तावपि निपातनसामथ्र्याल्लभ्यते। यथैव हि निपातनसामथ्र्यादन्यदपि किञ्चिदलाक्षणिकं कार्यं लभ्यते,तथेदमपि। "उभयतः स्त्रियाम्" इत्यादि। यदि कौमार इति पुमानभिधीयते, एवमप्यस्यापूर्वत्वं यदा स्त्रिया एव विशेषणं भवति, न पुंसः एवमतन्निपात्यते नान्यथेत्यर्थः। "अपूर्वपतिम्" इति। नास्याः पूर्वः पतिरिति बहुव्रीहिः। पत्या सह यस्याः पाणिग्रहणं निवृत्तं साऽपूर्वपतिः। तां पतिरुपपन्नः प्राप्तवानित्यर्थः। "अपूर्वपतिः" इति। अयमपि बहुव्रीहिः। "कौमारापूर्ववचने" इत्यादि। कौमार इत्येतन्निपात्यते, अपूर्ववचने। किं पुनरिह निपात्यत इत्याह-- "कुमार्या अण्विधीयते" इति। कुमारीशब्दादण् निपात्यत इत्यर्थः। कदेत्याह-- "अपूर्वत्वं यदा तस्याः" इति। इह हि निपातनेन पुमानभिधीयते, स्त्री वा,तत्र द्वयोरपि पक्षयोरपूर्वत्वम्। यदा तस्याः स्त्रिया विशेषणं भवति, न पुंसः, तदेतन्निपातनम्, नान्यथेत्यर्थः। "कुमार्या भवतीति वा" इति। अनेन योगः प्रत्याख्यायते। यो हि कुमारीं प्राप्तवानसौ तत्र भवति। ततस्च "तत्र भवः" ४।३।५३ इति शैषिके भवार्थेऽणन्तं कौमारशब्दं व्युत्पद्येत,ततः पुंयगोलक्षणे ङीषि सति हि कुमारीत्येतत् सिद्धम्। स्वरकृतो विशेषो नास्त्येव। तथा हि अणन्तान्ङीष्यपि कृते "यस्येति च" ६।४।१४८ इति लोपे च "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इत्युदात्तेन ङीपा भवितव्यम्। ङीष् प्रत्ययस्वरेणाद्युदात्त एव। ननु चैवं सति कौमारस्य याऽन्यापि स्त्रीकौमारव्यपदेशस्य कारणं सापि कौमारीति प्रसज्यते? नैष दोषः; प्रत्यासत्तेर्हि या तस् प्रत्यासन्ना सैव तस्य कौमारीति भविष्यति। का पुनस्तस्य प्रत्यासन्ना? या कौमारे व्यपदेशस्य हेतुः। यस्यामसौ भवन् कौमार इत्युच्यते सैव, नान्या। यद्यपि व्यासादयोऽपि कुमार्या भवन्ति तथापि तेष्वण्, न भविष्यति; अनभिधानात्।
एतच्चावश्यमनभिधानमाश्रयणीयमिति; इतरथा हि क्रियमाणेऽपि निपातने "तत्र भवः" ४।३।५३ इत्यनेनाण् स्यादेव॥

बाल-मनोरमा

कौमासऽपूर्ववचने ११९६, ४।२।१२

कौमारापूर्व। तेनेति परिवृतो रथ इति च निवृत्तम्। अविभक्तिक इति। लुप्तप्रथमाक इति भावः। अपूर्वशब्दो भावप्रधान इत्याह--अपूर्वत्वे निपातनमिदमिति। न पूर्व पतिर्यस्याः सा अपूर्वपतिः, तां कुमारीमुपयतवान् पतिरित्यर्थे द्वितीयान्तात्कुमारीशब्दादण् स्यादित्येकोऽर्थः। कुमारी अपूर्वपतिमुपपन्नेत्यर्थे प्रथमान्तात्कुमारीशब्दादण् स्यादित्यन्योऽर्थः। आद्यो उदाहरति--अपूर्वपतिमिति। द्वितीये उदाहरति--यद्वेत्यादि। आद्ये उपयन्तरि प्रत्ययः। द्वितीये उपयतायां स्वार्थे प्रत्यय इति विवेकः।

तत्त्व-बोधिनी

कौमाराऽपूर्ववचने ९८८, ४।२।१२

कौमारा। तेनेति निवृत्तम्। "अपूर्व"इति भावप्रधानो निर्देश इत्याह---अपूर्वत्वे इति। अपूर्वत्वं तु स्त्रिया एवेष्यते, पुरुषस्तु अपूर्वभार्योऽस्तु वा मा वेत्यनाग्रहः। अपूर्वपतिमिति। न पूर्वं पतिर्यस्या इति बहुव्रीहिः। कौमारः परिति। द्वितीयान्तात्कुमारीशब्दादुपयन्तरि प्रत्ययः। कौमारीति। इह कुमारीशब्दात्प्रथमान्तात्स्वार्थे प्रत्ययः, "टिढ्ढा"णिति ङीप्। तत्रोद्धृत। "सास्मिन्पौर्णमासी"ति सूत्रात्प्राक् "तत्रे"त्यधिकारः। पात्रवाचिभ्यः सप्तम्यन्तेभ्य उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः।

---

सूत्रम्

काशिका-वृत्तिः

तत्र उद्धृतम् अमत्रेभ्यः ४।२।१४

तत्र इति सप्तमीसमर्थादमत्रवाचिनः शब्दादुद्धृतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। भुक्तोच्छिष्टम् उद्धृतम् उच्यते, यस्य उद्धरणम् इति प्रसिद्धिः। अमत्रं भाजनं पात्रम् उच्यते। शरावेषु उद्धृतः शाराव ओदनः। माल्लिकः। कार्परः। अमत्रेभ्यः इति किम्? पाणावुद्धृत ओदनः। तत्र इति सप्तमी समर्थविभक्तिः क्षीराड् ढञ् ४।२।१९ इति यावदनुवर्तते।

लघु-सिद्धान्त-कौमुदी

तत्रोद्धृतममत्रेभ्यः १०४२, ४।२।१३

शरावे उद्धृतः शाराव ओदनः॥

न्यासः

तत्रोद्धृतममत्रेभ्यः। , ४।२।१३

बाल-मनोरमा

तत्रोद्धृतममत्रेभ्यः ११९७, ४।२।१३

तत्रोद्धृतम्। तत्रोद्धृतमित्यर्थे अमत्रवाचकशब्दात्सप्तम्यन्तात्प्रत्ययः स्यादित्यर्थः। अमत्रं-भजनं शरावादि। ननु उद्धरणे पृथक्करणे शरावस्याऽपादानत्वात् कथं सप्तमीत्यत आह--उद्धरतिरिहेति। "सास्मिन्पौर्णमासी" त्यतः प्राक्"तत्रे"त्यनुवर्तते।

तत्त्व-बोधिनी

तत्रोद्धृतममत्रेभ्यः ९८९, ४।२।१३

शाराव इति। भुक्तोच्छिष्ट इत्यर्थ इति वृत्तिकृत्। अवशिष्ट इति तदर्थः। "उच्छिनष्टि, न सर्वं जुहोती"ति कल्पसूत्रव्यवहारात्। सप्तमीति। निधानक्रियापेक्षया अधिकरणत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

स्थण्डिलाच् छयितरि व्रते ४।२।१५

स्थण्डिलशब्दात् सप्तमीसमर्थात् शयितर्यभिधेये यथाविहितं प्रत्ययो भवति, समुदायेन चेत् व्रतं गम्यते। व्रतम् इति शास्त्रितो नियमः उच्यते। स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः। स्थाण्डिलो ब्रह्मचारी। व्रते इति किम्? स्थाण्डिले

शेते ब्रह्मदत्तः।

न्यासः

स्थण्डिलाच्छयितरि व्रते।, ४।२।१४

"समुदायेन च" इत्यादिना प्रकृतिप्रत्ययोपाधित्वं व्रतस्य दर्शयति। "शास्त्रितः" शब्दः "वाचि यमो व्रते" ३।२।४० इत्यत्र व्युत्पादितः॥

बाल-मनोरमा

स्थाण्डिलाच्छयितरि ब्राते ११९८, ४।२।१४

स्थण्डिलात्। स्थण्डिलशब्दात्सप्तम्यन्ताद्व्रतनिमित्तकशयनकर्तरि वाच्ये प्रत्ययः स्यादित्यर्थः।

तत्त्व-बोधिनी

स्थण्डिलाच्छयितरि ब्राते ९९०, ४।२।१४

स्थण्()डिलात्। व्रतं=शास्त्रेण विहितो नियमः, तस्मिन्समुदायेन गम्ये सप्तन्यन्ताद्यथाविहितः प्रत्ययो भवति शयितर्यर्थे।

---

सूत्रम्

काशिका-वृत्तिः

संस्कृतं भक्षाः ४।२।१६

तत्र इति सप्तमीसमर्थात् संस्कृतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् संस्कृतं भक्षाः चेत् ते भवन्ति। खरविशदम् अभ्यवहारार्थं भक्षम् इत्युच्यते। सतुत्कर्षाधानम् संस्कारः। भ्राष्ट्रे संस्कृता भक्षाः भ्राष्ट्रा अपूपाः। कालशाः। कौम्भाः। भक्षाः इति किम्? पुष्पपुटे संस्कृतो मालागुणः।

लघु-सिद्धान्त-कौमुदी

संस्कृतं भक्षाः १०४३, ४।२।१५

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा यवाः॥

न्यासः

संस्कृतं भक्षाः।, ४।२।१५

"संस्कृतम्" इति। अत्र सामान्यशब्दत्वात् संस्कृतशब्दस्य नपुंसकलिङ्गत्वम्। एकवचनत्वञ्च। "भक्षाः" इति। विशेशब्दत्वाद्भक्षशब्दस्य पुंल्लिङ्गत्वम्। बहुवचनत्वञ्च। भक्षशब्दोऽयं घञन्त उपात्तः। स च खरविशवाभ्यवहार्य एव रूढ इत्याह-- "खरविशद" इत्यादि। सुबोधम्॥

न्यासः

काश्यादिभ्यष्ठञ्ञिठौ।, ४।२।१५

काशिचेदिशब्दाभ्यां जनपदलक्षणे ४।२।१२३ वुञि प्राप्ते साजातेः "इञश्च" ४।२।१११ इत्यणि, संवाहादिभ्यो वृद्धच्छे ४।२।११३ , हस्तिकर्षूशब्दात् "ओर्देशे ठञ्" ४।२।११८ इति ठञि, परिशिष्टेभ्यः "प्राग्दीव्यतोऽण्" ४।१।८३

इत्यणीदमारभ्यते। कथं पुनर्ञकार एव विपर्यस्तदेशेऽनुबन्धे क्रियमाणे विशेष इत्यत आह-- "स्त्रीप्रत्यये विशेषः" इति। अन्ते हि ञकारेऽनुबन्धे सति "टिड्ढाणञ्"४।१।१५ इतिङीब्भवति। आदौ हि सति टाबेव भवति। "वृद्धादित्यनुवत्र्तते" इति। यद्येवम्, अत्र ये वृद्धाः पठ()न्ते तेभ्यः स्यये न प्राप्नोति? इत्याह-- "येत्ववृद्धाः"इत्यादि। यदि तह्रवृद्धेभ्योऽपि वचनप्रामाण्यात्प्रत्ययो भवति, वृद्धादित्यस्यानुवृत्तिरपार्थिकेत्यत आह-- "देवदत्तशब्दः" इत्यादि। देवदत्तशब्दस्य प्राग्देश एव हि वत्र्तमानेऽस्य वृद्धसंज्ञा, न वाहीकग्रामे। तत्र यदि वृद्धादिति नानुवत्र्तते, वाहीकग्रामवाचिनोऽपि ततष्ठञ्ञिठौ स्याताम्। तस्मात् तन्निवृत्त्यर्थं वृद्धाधिकारोऽर्थवान् भवतीति भावः। "कथम्" इत्यादिना वृद्धसंज्ञायां देवदत्तीया इति भाष्यकारस्योपन्यासे तदुदाहरणं विघटय्य "तत्रैवं वर्णयन्ति" इत्यादिना समर्थयते। "आपदादिपूर्वपदात्कालात्" इति। आपच्छब्द आदिर्येषां तान्यापदादीनि। तानि पूर्वपदं यस्य तदापदादिपूर्वपदम्। ततः कालाट्ठञ्ञिठौ भवतः।आदिशब्देनोध्र्वादयः शब्दा गृह्रन्ते॥

बाल-मनोरमा

संस्कृतं भक्षाः ११९९, ४।२।१५

संस्कृतं भक्षाः। भक्ष्यन्ते इति भक्षाः, कर्मणि घञ्। तत्रेत्यनुवर्तते। तदाह--सप्तम्यन्तादिति। एकवचनं बहुवचनं च सामान्याभिप्रायं, जात्याख्यायामेकस्मिन्बहुवचन"मित्युक्तेरित्यभिप्रेत्याह--यत्संस्कृतमिति। संस्कारो नाम पाकादिना गुणविशेषाधानम्। अष्टाकपाल इति। "तद्धितार्थ" इति समासः। भक्षा इति किम्? पुष्पपुटे संस्कृतं भक्षाः" इत्यर्थे यत्स्यादित्यर्थः। उखा पात्रविशेष इति। "पिठरं स्थाल्युखा कुण्ड"मित्यमरः।

तत्त्व-बोधिनी

संस्कृतं भक्षाः ९९१, ४।२।१५

अष्टाकपाल इति। "द्विगोर्लुगनपत्ये"इत्यणो लुक्।

---

सूत्रम्

काशिका-वृत्तिः

शूलौखाद् यत् ४।२।१७

शूलशब्दादुखाशब्दाच् च सप्तमीसमर्थात् संस्कृतं भक्षाः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। अणो ऽपवादः। शूले संस्कृतं शूल्यं मांसम्। उख्यम्।

तत्त्व-बोधिनी

शूलोखाद्यत् ९९२, ४।२।१६

शूलोखात्। "संस्कृतं भक्षाः"इत्यनुवर्तते। कथम् "उख्योऽग्निः"इति। न ह्रसौ भक्ष इति चेत्()। अत्राहुः--- दिगादित्वाद्भावार्थे यदिति।

---

सूत्रम्

काशिका-वृत्तिः

दध्नष् ठक् ४।२।१८

दधिशब्दात् सप्तमीसमर्थात् संस्कृतं भक्षाः इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। दधनि संस्कृतं दाधिकम्। ननु च

संस्कृतार्थे प्राग्वहतेः ठकं वक्ष्यति, तेन एव सिद्धम्? न सिध्यति। दध्ना हि तत् संस्कृतं यस्य दधिकृतम् एव उत्कर्षाधानम्, इह तु दधि केवलमाधारभूतं, द्रव्यान्तरेण लवणादिना संस्कारः क्रियते।

न्यासः

शूलोखाद्यत्। , ४।२।१७

न्यासः

दध्नष्टक्। , ४।२।१७

ठकं वक्ष्यति-- "संस्कृतम्" ४।४।३ इत्यनेन। "तेनैव सिद्धम्" इति।यद् दध्नि संस्कृतं तद् दध्ना हि संस्कृतं भवतीत्यभिप्रायः। "इह रदध्यधिकरणमाधारभूतम्" इति। यथा शूले संस्क्रियमाणस्य मांसस्य शूलम्। न हि शूलेन मांसस्य कश्चित् संस्कार क्रियते, अपि तु लवणादिना। आधारभावमात्रं तु मांसस्य शूलं प्रतिपद्यते। यदि तर्हि दधि केवलमाधारभूतम्, केन तत्र तर्हि संस्कारः क्रियते इत्याह-- "द्रव्यान्तरेण" इत्यादि।

बाल-मनोरमा

दध्नष्ठक् १२००, ४।२।१७

दध्नष्ठक्। सप्तम्यन्ताद्दधिशब्दात् संस्कृतं भक्षा इत्यर्थे ठक् स्यादित्यर्थः। अणोऽपवादः। दाधिकमिति। ठकि इकादेशे "यस्येति चे"ति इकारलोपः। इह दध्नि अधिकरणे संस्कारो लवणादिना भवति। प्राग्वहतेरित्यत्र तु "संस्कृतम्" इति तृतीयान्ताठ्ठग्वक्ष्यते।

तत्त्व-बोधिनी

दध्नष्ठक् ९९३, ४।२।१७

दध्नष्ठत्। दध्नीति। संस्कारस्त्विह लवणादिना, दधि त्वधिकरणमात्रम्। यस्तु "प्राग्वहते"रित्यत्र "संस्कृत"मिति ठग्वक्ष्यते स तृतीयान्तद्बोध्यः। तेन दध्ना संस्कृतमपि दाधिकमेव।

---

सूत्रम्

काशिका-वृत्तिः

उदश्वितो ऽन्यतरस्याम् ४।२।१९

उदश्विच्छब्दात् सप्तमीसमर्थात् संस्कृतं भक्षाः इत् येतस्मिन्नर्थे अन्यतरस्यां ठक् प्रत्ययो भवति, पक्षे यथाप्राप्तमण् भवति। औदश्वित्कम्, औदश्वितम्।

न्यासः

उद�इआतोऽन्यतरस्याम्। , ४।२।१८

"{ओदस्वित्यम् इति मु।पाठः} औद()इआत्कम्" इति। "इसुसुक्तान्तात् कः" ७।३।५१॥

बाल-मनोरमा

उद�इआतोऽन्यतरस्याम् १२०१, ४।२।१८

उद()इआतो। ठक्स्यादिति। शेषपूरणमिदम्। उक्तविषये उद()इआच्छब्दाठ्ठग्वा स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

क्षीराड् ढञ् ४।२।२०

क्षीरशब्दात् सप्तमीसमर्थात् संस्कृतं भक्षाः इत्येतस्मिन्नर्थे ढञ् प्रत्ययो भवति। अणो ऽपवादः। क्षीरे संस्कृता क्षैरेयी यवागूः।

न्यासः

क्षीरादड्ढञ्। , ४।२।१९

"क्षैरेयी" इति। "टिड्ढाणञ्" ४।१।१५ इति ङीप्॥

---

सूत्रम्

काशिका-वृत्तिः

सा ऽस्मिन् पौर्णमासी इति संज्ञायाम् ४।२।२१

सा इति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् तत् प्रथमासमर्थं पौर्णमासी चेद् भवति। इतिकरणः ततश्चेद् विवक्षा भवति। संज्ञायाम् इति समुदायोपाधिः, प्रत्ययान्तेन चेत् संज्ञा गम्यते इति। मासार्धमाससंवत्सराणाम् एषा संज्ञा। पौषी पौर्णमासी अस्मिन् पौषो मासः। पौषो ऽर्धमासः। पौषः संवत्सरः। इह न भवति, पौषी पौर्णमासी अस्मिन् दशरात्रे इति। भृतकमासे च न भवति। इतिकरणस्य संज्ञाशब्दस्य च तुल्यम् एव फलं प्रयोगानुसरणं, तत्र किमर्थं द्वयम् उपादीयते? संज्ञाशब्देन तुल्यताम् इति करणस्य ज्ञापयितुं, न ह्ययं लोके तथा प्रसिद्धः। संज्ञार्थत्वे तु सम्प्रति ज्ञापिते यत् तत्र तत्र उच्यते इतिकरणस् ततश्चेद् विवक्षा इति तदुपपन्नं भवति। अथ पौर्णमासी इति को ऽयं शब्दः। पूर्णमासादण् पौर्णमासी। अथवा पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी। मा इति चन्द्र उच्यते।

न्यासः

सास्मिन्पौर्णमासीति संज्ञायाम्। , ४।२।२०

"ततश्चेद्विवक्षा भवति" इति। तत इति प्रत्ययान्तो निर्दिश्यते। एतदुक्तं भवति-- यदि प्रत्ययान्ताल्लोकेऽस्य विवक्षा भवत्येवं प्रत्ययो भवति; नान्यथेत्यर्थः। "प्रत्ययान्तेन च" इत्यादिना संज्ञायाः समुदायोपाधित्वं स्पष्टीकरोति। "एषा संज्ञा" इति। या प्रत्ययान्तेन गम्यते। "पौषी" इति। "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यण्, तदन्तान्ङीप्। "इह न भवति" इति। संज्ञाया अनवगम्यमानत्वात्। न हि दशरात्रस्य प्रत्ययान्ताः संज्ञा, नापि भृतकमासस्य। किं तत् तुल्यं फलमित्याह-- "प्रयोगानुसरणम्" इति। प्रयोगानुसरणं प्रयोगोपलक्षणमित्यर्थः। संज्ञाग्रहणे ह्येतत् क्रियते-- प्रयोगमुपलक्ष्य यत्र प्रयोगो दृश्यते मासार्धमाससंवत्सरेषु तत्र प्रत्यय उत्पादयितुव्यः, न तु भृतकमासादौ। इति करणेनाप्येतदेव क्रियते। तथा हि-- प्रत्ययान्ताद्यदि लोकस्यार्थविवक्षा भवति, एवं हि प्रत्यय उत्पादयितव्यः, नान्यथेति। एवमर्थमितिकरण उपादीयते, ततश्च लोकविवक्षा मासार्धमाससंवत्सरविषया भवति, एवं हि न भृतकमासादिविषया। तस्मात् प्रोयगानुसरणम्, उभयोरपि फलं तुल्यमेव। "संज्ञा" इत्यादि। ननु च यथा संज्ञाशब्दः प्रयोगानुसरणफलतया लोके प्रसिद्धः, तथेतिकरणोऽपि, तत्किमर्थमिह तस्य तेन तुल्यत्वमेव ज्ञायते? इत्याह--- "न ह्ययम्" इत्यादि। तथा हि-- लोकेऽयं संज्ञाशब्दः प्रयोगानुसरणफलत्वेन यथा प्रसिद्धः, न तथेतिकरणः। तस्मादस्य तेन तुल्यता ज्ञापितेति भावः। "संज्ञार्थत्वेट इत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति। संज्ञया तुल्योऽर्थो यस्य स संज्ञार्थः। समासेन गम्यमानत्वात् तुल्यशब्दो न प्रयुज्यते, यथा "रुच्यर्थानाम्" १।४।३३ इत्यत्र रुचिना समानशब्द इति भावः। संज्ञार्थस्य भावः =

संज्ञार्थत्वम्। अर्थशब्दश्चायं प्रयोजनवचनः। "तदुपपन्नं भवति" इति। यत एव संज्ञाशब्देनेतिकरणस्य तुल्यार्थता ज्ञापिता तेन यत्र यत्र प्रयोगानुसारणार्थं इतिकरणः, ततस्ततश्च विवक्षा भवतीत्युच्यते-- तदुपपन्नं भवतीति; इतकरणस्य संज्ञाप्रयोजनत्वात्। "पूर्णमासादण्" इति। पूर्णो मासो यस्यं तिथाविति तत्रार्थे बहुव्रीहिः। अस्मादेव निपतानादण्। पूर्णमासस्येयं "पौर्णमासी"। "तस्येदम्" ४।३।१२० इत्यण्। तिथिविशेषस्येयं संज्ञा। व्यत्पत्तिस्तु यथाकथञ्चित् कत्र्तव्याः॥

बाल-मनोरमा

क्षीराड्ढञ् १२०३, ४।२।२०

सोमे मत्तेर् मिस्सिन्ग्।

बाल-मनोरमा

सास्मिन्पौर्णमासीति १२०४, ४।२।२०

सोमे मत्तेर् मिस्सिन्ग्-----चोन्तिनुए---इतिशब्दादिति। एतच्च भाष्ये स्थितम्। पौषीति। पुष्येण युक्ता पौषी पौर्णमासी, सा यस्मिन्मासे स पौषो मासः। पौषीशब्दादणि "यस्येति चे"ति ईकारलोपः। एवं मघाभिर्युक्ता पौर्णमासी माघी, सा यस्मिन्स माघो मासः। तथा फाल्गुन इत्यादि। संज्ञायां किम्?। पौषी पौर्णमासी अस्मिन्पञ्चदशरात्रे।

तत्त्व-बोधिनी

सास्मिन्पौर्णमासीति ९९५, ४।२।२०

सास्मिन्। सेति प्रथमान्तदस्मिन्निति सप्तम्यन्तार्थे प्रत्ययः स्याद्यः प्रथमान्तार्थः स चेत्पौर्णमसी भवनति। इतिशब्दादिति। स हि लौकिकीं विवक्षामनुसारयति। वृत्तिकृता तु सूत्रे एव "संज्ञाया"मिति प्रक्षिप्तम्। पौर्णमासीति। पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादित्वात्स्वार्थिकोऽणीति हरदत्तादयः। "तदस्मिन्वर्तते"इत्यधिकारे "पूर्णमासादण् वक्तव्यः"इति वार्तिकं न कर्तव्यमिति तदाशयः।

---

सूत्रम्

काशिका-वृत्तिः

आग्रहायण्यश्वत्थाट् ठक् ४।२।२२

सा अस्मिन् पौर्णमासी इति सर्वम् अनुवर्तते। आग्रहायणीशब्दादश्वत्थशब्दाच् च प्रथमसमर्थात् पौर्णमास्युपाधिकादस्मिन्निति सप्तम्यर्थे ठक् प्रत्ययो भवति। अणो ऽपवादः। आग्रहायणिको मासः, सर्धमासः, संवत्सरः। एवम् आश्वत्थिकः।

न्यासः

आग्रहायण्य�आत्थाट्ठक्।, ४।२।२१

बाल-मनोरमा

आग्रहायण्य�आत्थाट्ठक् १२०५, ४।२।२१

आग्रहायण्य()आत्थाट्ठक्। पूर्वसूत्रविषये आग्रहायणीशब्दाद()आत्थशब्दाच्च ठक् स्यादित्यर्थः अणोऽपवादः।

हायनमिति। संवत्सर इत्यर्थः। "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री"त्यमर। यस्या ऊध्र्वं संवत्सरस्यारम्भः सा पोर्णमासी आग्रहायणीत्यर्थः। तर्हि आग्रहायणेति स्यादित्यत आह--प्रज्ञादेरिति। "प्रज्ञादिभ्यश्चे"ति स्वार्थे अमि "टिड्ढे"ति ङीबित्यर्थः। अ()आत्थेनेति। अ()इआनीनक्षत्रेणेत्यर्थः। अ()आत्थ इति। नक्षत्राऽणो "लुबविषेशे " इति लुबिति भावः। ननु "विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः" इति निर्देशेन पौर्णमास्यां "लुबविशेषे" इत्यस्याऽप्रवृत्तेरुक्तत्वात्कथमिह लुबित्यत आह--निपातनादिति। तथाच पौणमास्यां लुब्नेति ज्ञापनमेतद्व्यतिरिक्तविषयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ४।२।२३

फल्गुन्यादयः पौर्णमासीशब्दाः तेभ्यो विभाषा ठक् प्रत्ययो भवति, सा ऽस्मिन् पौर्णमासी इति सज्ञायाम् ४।२।२० इत्येतस्मिन् विषये। नित्यम् अणि प्राप्ते पक्षे ठग् विधीयते। फाल्गुनो मासः, फाल्गुनिकः। श्रावणः, श्रावणिकः। कार्तिकः, कार्तिकिकः। चैत्रः, चैत्रिकः।

न्यासः

विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः। , ४।२।२२

बाल-मनोरमा

विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः १२०६, ४।२।२२

विभाषा फाल्गुनी। एभ्यष्ठग्वेति। "सास्मिन्" इत्युक्तविषये" इति शेषः। फाल्गुनिकः--फाल्गुनो वा मास इति। फाल्गुनी पौर्णमास्यस्मिन्निति विग्रहः एवं श्रावणिक इत्यादि। इति युक्ताद्यर्थकाः।

---

सूत्रम्

काशिका-वृत्तिः

सा ऽस्य देवता ४।२।२४

सा इति प्रथमासमर्थादस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं देवता चेत् सा भवति। यागसंप्रदानं देवता, देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्ननभिधेये प्रत्ययः। इन्द्रो देवता अस्य ऐन्द्रं हविः। आदित्यम्। बार्हस्पत्यम्। प्राजापत्यम्। देवता इति किम्? कन्या देवता अस्य। कथम् ऐन्द्रो मन्त्रः? मन्त्रस्तुत्यम् अपि देवता इत्युपचरन्ति। कथम् आग्नेयो वै ब्राह्मणो देवता इति? उपमानाद् भविष्यति। महाराजप्रोष्ठपदाट् ठञ् ४।२।३४ इति यावत् सा ऽस्य देवता इत्यधिकारः। सा इति प्रकृते पुनः समर्थविभक्ति निर्देशः संज्ञानिवृत्त्यर्थः।

लघु-सिद्धान्त-कौमुदी

सास्य देवता १०४४, ४।२।२३

इन्द्रो देवतास्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्॥

न्यासः

सास्य देवता। , ४।२।२३

"तस्मिन्ननभिधेये" इति। यागसम्प्रदानभूतदेवतास्वामिनीके पुरोडाशादौ। एष चाभिधेयविशेषः।

सामान्योक्तावपीतीत्यस्येहानुवृत्तेर्लभ्यते। "आदियत्यम्, बार्हस्पत्यम्" इति। "दित्यदित्यादित्यपत्युत्तरपदात्" ४।१।८५ इत्यादिना ण्यः। यागस्य देवतेहाभिप्रेता। ऐन्द्रो मन्त्र इति च प्रयोगे कस्यचित् पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्ति। अतो नासौ देवदेति प्रत्ययेनात्र न भवितव्यमिति मन्यते। "मंन्त्रस्तुत्यम्" इति। यथा देवता पूजार्हा तथा मन्त्रस्तुत्यमपि वस्तु, ततो देवतासाधर्म्यात् तदि देवतेत्युपचरन्ति विद्वांसः। इन्द्रश्च मन्त्रस्तुत्यो भवति, तस्मादसम्प्रदानभूतमपि तं देवतेत्युचपरन्ति। दैवतोपचारं तत्र कुर्वन्तीत्यर्थः। नन्वेमपि नैवात्र प्रत्ययेन भवितव्यम्; मुख्ये सति गौणस्याश्रयणस्यायुक्तत्वात्? नैष दोषः;यथैव हि कश्चिदेनकेनैव यत्नेन ()ओतो धावतीति तन्त्रेण वाक्यद्वयमुच्चारयति, तथेहाप्याचार्येण द्वे वाक्ये तन्त्रेणोच्चारिते। तत्रैकं मुख्यार्थम्; अपरं गौणार्थं भविष्यति। "कथम्" इत्यादि। अग्नेर्हि न मुख्यं देवतात्वम्, नापि गौणम्। तत्र मुख्यं तावन्नास्ति;देयाभावेनासम्प्रदानभूतत्वात्। गौणमपि नास्ति; मन्त्रशब्दाभावेन मन्त्रस्तुल्यतथानुपात्तत्वात्। तस्मादत्र प्रत्ययेन न भवितव्यमिति भावः। "उपमानाद्भविष्यति" इति। देवतास्वामिनीक एवात्र प्रत्यय उपपद्यते। यस्त्वर्थान्तरे प्रत्ययान्तप्रयोगः स आग्नेय इवाग्नेय इत्युपमानाद्भविष्यति, यथा-- काषायौ गर्गभस्य कर्णाविति। ननु च सास्मिन् पौर्णमासीति सेति प्रकृतमेव। तत्किमर्थं पुनरिह समर्थविभक्तिर्निर्देश्यत इत्यत आहु-- "सेति प्रकृते" इत्यादि। यदिदं सेति प्रकृतं तत्संज्ञासम्बद्धमिति, तदनुवृत्तौ संज्ञाग्रहणस्याप्यनुवृत्तिः स्यात्। तस्मात् तन्निवृत्त्यर्थं पुनरिह समर्थविभक्तिनिर्दिश्यत इति॥

बाल-मनोरमा

अर्द्देः संनिविभ्यः ८७१, ४।२।२३

अर्द्देः संनिविभ्यः। समर्ण इति। सम् अर्द् त इति स्थिते "रदाभ्या"मिति निष्ठातस्य पूर्वदकारस्य च नत्वं। णत्वम्।

बाल-मनोरमा

साऽस्य देवता १२०७, ४।२।२३

साऽस्य देवता। अस्मिन्नर्थे प्रथमान्तादणादयः स्युरित्यर्थः। ऐन्द्रं हविरिति। इन्द्रात्मकदेवतासम्बन्धीत्यर्थः। पाशुपतमिति। पशुपतिर्देवता अस्येति विग्रहः। ननु देवताशब्दस्य लोकप्रसिद्धजातिविशेषवाचकत्वे पितरो देवता अस्य पित्त्रयमित्याद्यनुपपन्नमित्यत आह--त्यज्यमानद्रव्ये इति। "हविश्शेषमृत्विग्भ्यो ददाति", विप्राय गां ददाती"त्यादौ ऋत्विग्विप्रादेर्देवतात्वव्यावृत्तये विशेषग्रहणम्। त्यज्यमानहविस्साध्योऽस्मदाद्यप्रत्यक्षः यस्तृप्त्याद्युपकारस्तदाश्रयो देवतेति यावत्। मन्त्रस्तुत्या चेति। "अग्निमीडे पुरोहित"मित्यादिमन्त्रेषु यज्ञपुरोहितत्वादिगुणविशिष्टत्वेन या प्रतिपाद्यते सापि देवतेत्यर्थः। ऐन्द्रो मन्त्र इति। इन्द्रस्तुत्यको मन्त्र इत्यर्थः। ननु "आग्नेयो वै ब्राआह्णो देवतया" इत्यत्र कथं देवतातद्धितः। अत्र अग्नेर्हविरुद्देश्यत्वस्य मन्त्रस्तुत्यत्वस्य चाऽभावादित्यत आह--आग्नेयो वै इति। शैषिकेऽर्थे इति। "शेषे" इति सूत्रलब्धे तदभिमानिकत्वे गम्ये इत्यर्थः। अग्निर्नाम यो देवताजातिविशेषो लोकवेदसिद्धस्तदभिमानिको ब्राआह्ण इति बोधः।

तत्त्व-बोधिनी

साऽस्य देवता ९९६, ४।२।२३

सास्य। "से"ति प्रकृतं संज्ञासंबद्ध"मिति पुनः साग्रहणं कृतिमित्याहुः। इहैव सूत्रे निपातनाद्देवशब्दत्स्वार्थे तल्। मन्त्रस्तुत्येति। मन्त्रेण स्तुत्या। "एतिस्तुशा"सित्यादिना क्यपि तुक् टाप्। आग्नेयो वै ब्राआह्ण इति। इहाग्न्युद्देसेन ब्राआह्णो न त्यज्यत इति कथमयं प्रयोग इति न शङ्क्यमिति भावः। परत्वादादिवृद्धिरिति। इदं च समाधानं श्रायमित्यत्रावश्यकमिति तेनैव परिहारसंभवादित्वविधानसामश्र्यमिह नाश्रितम्।

सूत्रम्

काशिका-वृत्तिः

कस्य इत् ४।२।२५

कशब्दो देवतायां प्रजापतेर् वाचकः, ततः पूर्वेन एव अण् प्रत्ययः सिद्धः, इकारादेशार्थम् वचनम्। कस्य इकारादेशो भवति प्रत्ययसन्नियोगेन। कायं हविः। कायम् एककपालं निर्वपेत्।

न्यासः

कस्येत्। , ४।२।२४

तकारो मुखसुखार्थः, न दीर्घनिवृत्त्यर्थः। भाव्यमानेमाणा सवर्णानामग्रहणात्। सत्यपि सवर्णग्रहण आन्तरतम्याद् ह्रस्वस्य ह्रस्व एव भविष्यति न दीर्घः। " प्रजापतेर्वाचकः" इति। अनेनासर्वनामत्वमस्य दर्शयति। इकारस्य "यस्येति च" ६।४।१४८ इति लोपो न भवति, विधानसामथ्र्यात्। "कायम्" इति। वृद्ध्यायादेशौ॥

बाल-मनोरमा

कस्येत् १२०८, ४।२।२४

कस्येत्। प्रत्ययसंनियोगेनेति। "साऽस्य देवते"ति विहिते कशब्दादणप्रत्यये परे तत्संन्नियोगेन प्रकृतेरिकारोऽन्तादेश इत्यर्थः। तताच कशब्दादणि प्रकृतेरिकारे अन्तादेशे वृद्धौ आयादेशे कायमिति सिद्धम्। तत्र कि-अ इति स्थिते "यस्येति चे"ति इकारलोपमाशङ्क्याह--यस्येति लोपादिति। कशब्दस्य विवरणं--ब्राह्मएति। यद्यप्यत्र इत्त्वविधिबलादेव लोपो न भवतीति भाष्यम्, तथापि वस्तुस्थितिकथनमिदम्। तस्य प्रयोजनमाह--श्रायं हविरिति। अत्रेदमवधेयम्। "कस्ये"दित्यत्र कशब्दस्य अकारान्तस्य षठ()एकवचनमित्येकः पक्षः। सर्वादिगणपठितस्य किंशब्दस्य षष्ठ()एकवचनमिति पक्षान्तरम्। तत्राद्यपक्षे हविःप्रचारे "कायानुब्राऊही"ति प्रैष इति निर्विवादं, सर्वादिगणबहुर्भूतत्वेन स्मैबावाऽसम्भवात्। द्वितीयपक्षे तु किंशब्दस्य प्रजापतिनामत्वेन असर्वनामत्वान्न स्मैभावः, अन्वर्थसंज्ञाबलेन एकार्थवृत्तेः संज्ञाशब्दस्य सर्वनामत्वात् "कस्मा अनुब्राऊही"त्येव संप्रैष इति भाष्ये प्रपञ्चितम्। एवञ्च विष्णुसहरुआनामसु-"वि()आं विष्णुः" इति, "एकौ नैकः सवः कः किं यत्तत्पदमनुत्तम"मिति च पठितम्। वि()आआदिशब्देष्वप्ययं न्यायस्तुल्यः। तथाच वि()आस्म#ऐ नमः, "वि()आआय नमः" इत्यादि प्रयोज्यमित्यास्तां प्रासङ्गिकम्।

सूत्रम्

काशिका-वृत्तिः

शुक्राद् घन् ४।२।२६

शुक्रशब्दात् सा ऽस्य देवता इत्यसिन्न्नर्थे घन् प्रत्ययो भवति। अणो ऽपवादः। शुक्रियं हविः। शुक्रियो ऽध्यायः।

लघु-सिद्धान्त-कौमुदी

शुक्राद्घन् १०४५, ४।२।२५

शुक्रियम्॥

न्यासः

शुक्राद्घन्। , ४।२।२५

बाल-मनोरमा

शुक्राद्धन् १२०९, ४।२।२५

शुक्राद्धन्। "साऽस्य देवता" "इत्यर्थे" इति शेषः। शुक्रियमिति। शुक्रो देवता अस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

अपोनप्त्रपांनप्तृभ्यां घः ४।२।२७

अपोनप्तृ अपांनप्तृ इत्येताभ्यां घः प्रत्ययो भवति सा ऽस्य देवता इत्यस्मिन् विषये। अणो ऽपवादः। अपोनप्त्रियं हविः, अपांनप्त्रियम्। अपोनपादपांनपादिति देवताया नामधेये एते। तयोस् तु पत्ययसन्नियोगेन रूपम् इदं निपत्यते।

न्यासः

अपोनप्त्रपान्नप्तृभ्यां घः। , ४।२।२६

अपोनपात्, अपान्नपादिति यद्येते देवतानामधेयेतत् कथमेतद्विलक्षणं प्रकृतिरूपं सूत्रे श्रूयते? इत्याह--"तयोस्तु प्रत्ययसन्नियोगेन" इत्यादि॥

बाल-मनोरमा

अपोनप्त्रपान्नप्तृभ्यां घः १२१०, ४।२।२६

अपोनप्त्रपांनपतृभ्यां घः। प्रत्ययसंनियोगेनेति। घप्रत्ययसंनियोगेन अपोनपाच्छब्दस्य अपोनप्तृभावः, अपांनपाच्छब्दस्य अपांनप्तृभावश्च निपात्यत इत्यर्थः। अत एवेति। घप्रत्ययसंनियोगेनैव उक्तादेशविधेरित्यर्थः। अत्र घप्रत्ययाऽभावान्नोक्तादेशाविति भावः।

तत्त्व-बोधिनी

अपोमप्त्रपान्नप्तृभ्यां घः ९९७, ४।२।२६

उक्तं रुपमिति। "नपात्ित्यस्य "नृप्त"इति रूपमित्यर्थः।

शतरुद्राद्घश्च। शतं रुद्रा इति। शतशब्दोऽनन्तवचनः। सौमिति। "हलस्तद्धितस्ये"ति यलोपः।

---

सूत्रम्

काशिका-वृत्तिः

छ च ४।२।२८

अपोनप्तृ अपांनप्तृ इत्येताभ्यां छकारः प्रत्ययो भवति सा अस्य देवता इति यस्मिन् विषये। अणो ऽपवादः। अपोनप्त्रीयं हविः, अपांनप्त्रीयम्। योगविभागः सङ्ख्यातानुदेशपरिहारार्थः। छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम्। पैङ्गाक्षीपुत्रीयम्। तार्णबिन्दवीयम्। शतरुद्राच्छश्च घश्च। शतरुद्रीयम्, शतरुद्रियम्।

न्यासः

छ च। , ४।२।२७

अथ किमर्थं योगविभागः क्रियते, न "अपोनमृ-- अपान्नमृभ्यां घच्छौ" इत्येकयोग एव क्रियते? इत्याह-- "योगविभागः" इत्यादि। एकयोगे हि द्वे प्रकृती, प्रत्ययावपि द्वावेव, समसंख्यत्वात् संख्यातानुदेशः स्यात्, अतस्तन्निवृत्तये योगविभागः क्रियते। "छ प्रकरणे" इत्यादि। पैङ्गाक्षीपुत्रादिभ्यश्छप्रकरणे छस्योपसंख्यानम् = प्रतिपादनं कत्र्तव्यम्। तत्रेदं प्रतिपादनम्-- चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः , तेन पैङ्गाक्षीपुत्रादिभ्यश्छो भवतीति॥

बाल-मनोरमा

छ च १२११, ४।२।२७

छ च। उक्तविषये छोऽपीत्यर्थः। "ननु अपोनप्त्रपांनमृभ्यां" घच्छौ इत्येवास्तु। तत्राह--योगविभाग इति। पैङ्गाक्षीपुत्रीयमिति। पैङ्गाक्षीपुत्रो देवता अस्येति विग्रहः। तार्णविन्दवीयमिति। तार्णविन्दुर्देवता अस्येति विग्रहः।

शतरुद्राद्घश्चेति। वार्तिकमिदम्। शतरुद्रियमिति। घस्य इयादेश। शतरुद्रीयमिति। छस्य ईयादेशः। उभयत्र "तद्धितार्थ" इति द्विगुसमासः। "द्विगोर्लुगपत्ये" इति लुकमाशङ्क्याह--घच्छयोरिति।

---

सूत्रम्

काशिका-वृत्तिः

महेन्द्राद् घाणौ च ४।२।२९

महेन्द्रशब्दात् घाणौ प्रत्ययौ भवतः, चकाराच् छश्च, सा ऽस्य देवता इत्यस्मिन् विषये। महेन्द्रो देवता अस्य महेन्द्रियम् हविः, माहेन्द्रम्, महेन्द्रीयम्।

न्यासः

महेन्द्राद्घाणौ च। , ४।२।२८

अथ "महेन्द्रादण् च" इत्येव कस्मान्नोक्तम्? चकाराद्घच्छौ भविष्यतः, एवमुच्यमाने द्वेष्यमपि विज्ञायते--अनन्तरं छ एव चकारेणात्र कृष्यत इति। तस्मात् तथा मा विज्ञायीति घग्रहणम्॥

बाल-मनोरमा

महेन्द्राद्घाऽणौ च १२१२, ४।२।२८

महेन्द्राद्घाणौ च। महेन्द्रियमिति। महेन्द्रो देवता अस्येति विग्रहः घस्य इयादेशः माहेन्द्रमिति। अणि रूपम्। महेन्द्रीयमिति। छस्य ईयादेशः।

---

सूत्रम्

काशिका-वृत्तिः

सोमाट् ट्यण् ४।२।३०

सोमशब्दात् ट्यण् प्रत्ययो भवति सा ऽस्य देवता इत्यस्मिन् विषये। अणो ऽपवादः। णकारो वृद्ध्यर्थः। टकारो ङीबर्थः। सोमो देवता अस्य सौम्यं हविः। सौम्यं सूक्तम्। सौम्यी ऋक्।

लघु-सिद्धान्त-कौमुदी

सोमाट्ट्यण् १०४६, ४।२।२९

सौम्यम्॥

न्यासः

सोमाट्ट�ण्। , ४।२।२९

"सौमी" इति। "हलस्तद्धितस्य" ६।४।१५० इति यलोपः॥

बाल-मनोरमा

सोमाट्ट�ण् १२१३, ४।२।२९

सोमाट्ट()ण्। सौम्यमिति। सोमो देवता अस्येति विग्रहः। टित्वस्य प्रयोजनमाह--टित्त्वान्ङीबिति। सौमीति। सोमो देवता अस्या ऋच इति विग्रहः।ङीपि "हलस्तद्धितस्ये"ति यलोपः।

---

सूत्रम्

काशिका-वृत्तिः

वाय्वृतुपित्रुषसो यत् ४।२।३१

वाय्वादिभ्यः शब्देभ्यः यत् प्रत्ययो भवत् सा ऽस्य देवता इत्येतस्मिन् विषये। अणो ऽपवादः। वायुः देवता अस्य वायव्यम्। ऋतव्यम्। पित्र्यम्। उषस्यम्।

लघु-सिद्धान्त-कौमुदी

वाय्वृतुपित्रुषसो यत् १०४७, ४।२।३०

वायव्यम्। ऋतव्यम्॥

न्यासः

वाय्वृतुपित्रुषसो यत्। , ४।२।३०

"वायव्यम्। ऋतव्यम्" इति। "ओर्गुणः" ६।४।१४६,"वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः। "पित्र्यम्" इति। "रीङ्तः" ७।४।२७ इति रीङ्, यस्येति ६।४।४९ लोपः॥

बाल-मनोरमा

वाय्वृतुपित्रुषसो यत् १२१४, ४।२।३०

वाय्वृतुपित्रुषसो यत्। वायु, ऋतु, पितृ,उषस् एभ्यो यदित्यर्थः। वायव्यमिति। वायुर्देवता अस्येति विग्रहः। यति ओर्गुणः। "वान्तो यी"त्यवादेशः। ऋतव्यमिति। ऋतुर्देवता अस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच् छ च ४।२।३२

द्यावापृथिव्यादिभ्यः छः प्रत्ययो भवति सा ऽस्य देवता इत्यस्मिन् विषये, चकाराद् यच् च। अणो ण्यस्य च अपवादः। द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयम्, द्यावापृथिव्यम्,। शुनश्च सीरश्च तौ देवते अस्य इति शुनासीरीयम्, शौनासीर्यम्। शुनो वायुः। सीरः आदित्यः। मरुत्वान् देवता अस्य मरुत्वतीयम्, मरुत्वत्यम्।

अग्नीषोमीयम्, अग्नीशोम्यम्। वास्तोष्पतीयम्, वास्तोष्पत्यम्। गृहमेधीयम्, गृहमेध्यम्।

न्यासः

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च।, ४।२।३१

"अणो ण्यस्य चापवादः" इति। वास्तोष्पतिशब्दात् "दित्यदित्यादिभ्य" ४।१।८५ इत्यादिना प्राप्तस्य ण्य्स्यापवादः। शेषेभ्यस्त्वौत्सर्गिकस्याणः। वास्तुनः पतिर्वास्तोष्पतिः। वास्तुशब्दस्य नपुंसकस्य पुंल्लिङ्गता, षष्ठ()र्थेऽलुक् च निपातनात्। "षष्ठ्याः पतिपुत्रपृष्ठ" ८।३।५३ इत्यादिना षत्वम्। "द्यावापृथिव्यौ" इति। "दिवो द्यावा" ६।३।२८ इति द्यावादेशः। "शुनासीरीयम्" इति। "देवताद्वन्द्वे च" ६।३।२५ इत्यानङ्। "अग्नीषोमीयम्" इति। "ईदग्नेः सोमवरुणयोः" ६।३।२६ इतीत्त्वम्; "अग्नेः स्तुत्स्तोमसोमाः" ८।३।८२ इति षत्वम्॥

बाल-मनोरमा

द्यावापृथिवीशुनासीरमरुत्वदग्नोषीमवास्तोष्पतिगृहमेधाच्छ च १२१६, ४।२।३१

द्यावापृथिवीयं द्यावापृथिव्यमिति। द्यावापृथिवी देवता अस्येति विग्रहः। छस्य ईयादेशः। उभयत्र "यस्येति चे"ति लोपः। शुनासीरीयमिति। शुनो वायुः, सीरः आदित्यः। शुनश्च सीरश्च शुनासीरौ। "देवताद्वन्द्वे चे"त्यानङ्। शुनासीरावस्य स्त इति शुनासीरः। "वाय्यादित्यवानिन्द्रो विवक्षितः" इति वेदभाष्ये भट्टभास्करः। शुनासीरो देवता अस्येति विग्रहः। मरुत्वान् देवता अस्य मरुत्वतीयं मरुत्वत्यम्। अग्नीषोमौ देवता अस्य अग्नीषोमीयम् अग्निषोम्यम्।वास्तुनः पतिः वास्तोष्पतिः-रुद्रः। निपातनादलुक् षत्वं च। "रुद्रः खलु वै वास्तोष्पतिः" इति ब्राआह्णम्। अमरस्तु इन्द्रपर्याये "वास्तोष्पतिः सुरपति"रित्याह वास्तोऽपतिर्देवता अस्य वास्तोष्पतीयं, वास्तोष्पत्यम्। गृहमेधो देवता अस्य "गृहमेधीयम्। गृहमेध्यम्।

तत्त्व-बोधिनी

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ९९९, ४।२।३१

द्यावापृ। अण्ण्यञोरपवादः। शुनासीरीयमिति। शुनश्च सूरश्चेति द्वन्देव"देवताद्वन्द्वि चे"त्यानङ्। शुनो--वायुः, सीरः--आदित्य इति वृत्तिकृत्। हरदत्तस्तु सुनासीरशब्द इन्द्रस्य गुणवाचीत्यन्ये मन्यन्त इत्याह। तथा च मन्त्रः--"इन्द्रं वयं सुनासीरमस्मिन्यज्ञे हवामहे"इति। मरुतोऽस्य सन्तीति मरुत्वानिन्द्रः, मरुत्वतीयं। मरुत्वत्यम्। अग्निषोमीयम्। "ईदग्नेः सोमवरुणयोः"। वास्तुनः पतिः वास्तोष्पतिः। इहैव सूत्रे निपातनात्साधुः। "वेश्मभूर्वास्तुरस्त्रियाम्"। वास्तोष्पतीयं वास्तोष्पत्यम्। गृहमेधीयं। गृहमेध्यम्। गृहमेधशब्दोऽकारान्तः। तथा च आ()आलायनः---"मरुभ्द्यो गृहमेधेभ्यः"इति।

---

सूत्रम्

काशिका-वृत्तिः

अग्नेर् ढक् ४।२।३३

अग्निशब्दाद् ढक् प्रत्ययो भवति सा अस्य देवता इत्यस्मिन् विषये। अणो ऽपवादः। अग्निर् देवता अस्य आग्नेयो ऽष्टाकपालः। प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग् वक्तव्यः।

न्यासः

अग्नेर्ढक्।, ४।२।३२

बाल-मनोरमा

अग्नेर्ढक् १२१७, ४।२।३२

अग्नेर्ढक्। आग्नेयमिति। प्राग्दीव्यतीयेष्वर्थेष्वयम्, "सर्वत्राग्निकलिभ्या"मिति वचनात्।

---

सूत्रम्

काशिका-वृत्तिः

कालेभ्यो भववत् ४।२।३४

कालविशेषवाचिभ्यः शब्देभ्यो भववत् प्रत्यया भवन्ति सा ऽस्य देवता इत्यस्मिन् विषये। कालाट् ठञ् ४।३।११ इति प्रकरणे भवे प्रत्यया विधास्यन्ते ते सा ऽस्य देवता इत्यस्मिनर्थे तथा एव इष्यन्ते, तदर्थम् इदम् उच्यते। वत्करणं सर्वसादृश्यपरिग्रहार्थम्। मासे भवम् मासिकम्। आर्धमासिकम्। सांवत्सरिकम्। वासन्तम्। प्रावृषेण्यम्। तथा मासो देवता ऽस्य मासिकम्। आर्धमासिकम्। सांवत्सरिकम्। वासन्तम्। प्रावृषेण्यम्।

न्यासः

कालेभ्यो भववत्। , ४।२।३३

बहुवचनग्रहणेन स्वरूपग्रहणे निरस्ते, कालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह-- "कालविशेषवाचिभ्यः" इत्यादि। "वत्करणम्" इत्यादि। सर्वस्य सादृश्यस्य परिग्रहो यथा स्यादित्येवमर्थ वत्करणम्। "कालेभ्यो भवः" इत्युच्यमाने यदि तावत् कालग्रहणं भवप्रत्ययैः सम्बध्यते? भवेऽर्थे कालेभ्यो विधास्यन्ते ये प्रत्ययास्ते "सास्य देवता" ४।२।२३ इत्येतस्मिन्नर्थे भवन्ति, तदा च देवताप्रकृतिरविशेषिता स्यात्। एवञ्च देवतामात्रवाचिनः प्रातिपदिकादविशेषेण प्रत्ययाः प्रसज्येरन्। अथ देवताप्रकृतिभिः कालग्रहणं सम्बध्यते? भवे ये विधास्यन्ते ते प्रत्ययाः कालेभ्यो देवताभ्यः प्रसज्येरन्। अथाप्युभयेषां सन्निधानाद्विशेष्यभेदेन वाक्यभेदाच्च प्रत्ययैः प्रकृतिभिश्च सम्बध्यते-- कालेभ्यो भवेऽर्थे विधास्यन्ते ये प्रत्ययास्ते कालेभ्यो देवताभ्यो भवन्तीति? एवमपि यः कश्चित् कालप्रकृतिः प्रत्ययो यतः कुतश्चित् कालाद्देवतायाः स्यात्, ऋतुभ्योऽण् मुहूर्तादिभ्योऽपि स्यात्। वतौ तु सति तस्य सादृश्यविधानात् सर्वसादृश्यपरिग्रहो भवति। तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया भवार्थे विधास्यन्ते, इहापि ताभ्य ए प्रकृतिभ्यस्तेनैव व#इशेषणेन त एव प्रत्यया भवन्तीति न बवत्यनिष्टप्रसङ्गः। "{वासन्तम्--काशिका} वासन्तः"इति। "सन्धिवेलादि"४।३।१६ सूत्रेणाण्। "{प्रावृषेण्यम्--काशिका} प्रावृषेण्यः" इति। "प्रावृष एण्यः" ४।३।१७॥

बाल-मनोरमा

कालेभ्यो भववत् १२१८, ४।२।३३

कालेभ्यो भववत्। कालवाचिभ्यो भवेऽर्थे येन विशेषणेन ये प्रत्यया वक्षयन्ते, ते "साऽस्य देवते"त्यर्थे कालवाचिभ्यस्तेनैव विशेषणेन भवन्तीत्यर्थः। मासिकमिति। मासो देवता अस्येति विग्रहः। कालाट्ठञ्। प्रावृषेण्यमिति। प्रावृट् देवता अस्येति विग्रहः। "प्रावृष एण्यः"।

तत्त्व-बोधिनी

कालेभ्यो भववत् १०००, ४।२।३३

कालेभ्यो। कालवाचिभ्यो ये प्रत्यया भवार्थे वक्ष्यन्ते ते "सास्य देवता"इत्यस्मिन्नर्थेऽनेनातिदिश्यन्ते। वत्करणं सर्वसादृश्यार्थम्। तेन यस्माद्यो विहितस्तस्मात्स एव भवति नाऽन्यः। तथैवोदाहरति---मासिकम्। प्रावृषेण्यमिति।

"कालाट्ठञ्"। "प्रावृष एण्यः।

मातृपितृभ्यां पितरि डामहच्। डामहजिति। एतच्च वृत्त्याद्यनुरोधेनोक्तं। भाष्ये तु आनङादेशो महच् प्रत्ययश्च निपात्यते। तेनावग्रहः सिध्यतीत्युकतम्।

अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः। सकारपाठेति। अन्यथा प्रक्रियालाघवाय षकारमेव पठेदिति भावः। एतच्च मनोरमायां स्थितम्। अन्ये तूक्तरीत्य। "अविसोढ" मित्यत्र षत्वनिवारणेऽपि "अविदूस"मित्यादौ स्यादेव षत्वम्। तत्र हि ण्यन्तात्क्विपि "अविदूः"इत्यादिरूपसिद्धये सकारपाठसामर्थ्यस्योपक्षीणत्वात्। तस्मात् "अविसोढ"मित्यादि भाष्यकृदुदाहरणेषु सकारपाठसामर्थ्यादिति व्याख्येयमित्याहुः।

---

सूत्रम्
काशिका-वृत्तिः
महाराजप्रोष्ठपदाट् ठञ् ४।२।३५

महाराजशब्दात् प्रोष्ठपदशब्दाच् च ठञ् प्रययो भवति सा ऽस्य देवता इत्यस्मिन् विषये। महाराजो देवता अस्य माहाराजिकम्। प्रौष्ठपदिकम्। ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम्। नवयज्ञो ऽस्मिन् वर्तते नावयज्ञिकः कालः। पाकयज्ञैकः। पूर्णमासादण्। पूर्णमासो ऽस्यां वर्तते पौर्णमासी तिथिः।
न्यासः
महाराजप्रोष्ठपदाट्ठञ्। , ४।२।३४

बाल-मनोरमा
महाराजप्रोष्ठपदाट्ठञ् १२१९, ४।२।३४

महाराजप्रोष्ठपदाट्ठञ्। माहाराजिकमिति। महाराजो वैश्रवणः, स देवता अस्येति विग्रहः। प्रौष्ठपदिकमिति। प्रोष्ठपदो देवता अस्येति विग्रहः।

---

सूत्रम्
काशिका-वृत्तिः
पितृव्यमातुलमातामहपितामहाः ४।२।३६

पितृव्यादयो निपात्यन्ते। समर्थविभक्तिः, प्रत्ययः, प्रत्ययार्थो ऽनुबन्धः इति सर्वं निपातनाद् विज्ञेयम्। पितृमातृभ्यां भ्रातर्यभिधेये व्यत् डुलचित्येतौ प्रत्ययु निपात्येते। पित्रुर् भ्राता पितृव्यः। मातुर् भ्राता मातुलः। ताभ्यां पितरि डामहच् मातरि षिच्च। ताभ्याम् एव पितरि डामहच् प्रत्ययो भवति। पितुः पिता पितामहः। मातुः पिता मातामहः। मातरि षिच्च। पितामही। मातामही। अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः। अवेर्दुग्धम् अविसोढम्, अविदूसम्, अविमरीसम्। तिलान्निष्फलात् पिञ्जपेजौ प्रत्ययौ वक्तव्यौ। निष्फलस्तिलः तिलपिञ्जः, तिलपेजः। पिञ्जश्छन्दसि डिच्च। तिल्पिञ्जं दण्डनं नडम्।
लघु-सिद्धान्त-कौमुदी
पितृव्यमातुलमातामहपितामहाः १०४९, ४।२।३५

एते निपात्यन्ते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। मातुः पिता मातामहः। पितुः पिता पितामहः॥

न्यासः

पितृव्यमातुमातामहपितामहाः। , ४।२।३५

"पितामही,मातामही" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्॥

बाल-मनोरमा

पितृव्यमातुलमातामहपितामहाः १२२४, ४।२।३५

पितृव्यमातुल। कस्मिन्नर्थे किं निपात्यते इत्यत आह--पितुभ्र्रातरि व्यदित्यादिना।

मातुल इति। मातृशब्दाड्डुलचि "टे" इति टिलोपः। मातामह इति। मातृशब्दाड्डमहचि टिलोपः। एवं पितामहः।

मातरि षिच्चेति। मातृपितृभ्यां मातरि डामहच्, स च षिद्भवतीत्यर्थः। षित्त्वफलं ङीषित्याह--मातामही पितामहीति।

अवेरिति। अवोर्दुग्धमित्यर्थे अविशब्दात् सोढः, दूस, मरीसच् एते प्रत्यया वक्तव्या इत्यर्थः। सोढसकारस्य प्रत्यटयावयवत्वात्षत्वमाशङ्क्याह--सकारापाठसामथ्र्यान्न ष इति। अन्यथा षोढ इत्येवोपदिशेदिति भावः।

तिलादिति। तिलशब्द ओषदिविशेषे मुख्य। तत्फले तु गौणः। तत्र यदा तिलशब्दो निष्फले आषधिविशेषे वर्तते, तदा तस्मात्स्वार्थे पेज, पिञ्ज इति प्रत्ययौ स्त इत्यर्थः। इति देवतार्थकाः।

---

सूत्रम्

काशिका-वृत्तिः

तस्य समूहः ४।२।३७

तस्य इति षष्ठीसमर्थात् समूहः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। किम् इह उदाहरणम्? चित्तवदद्युदात्तमगोत्रं यस्य च न अन्यत् प्रतिपदं ग्रहणम्। अचित्तात् ठकं वक्ष्यति, अनुदात्तादेरञ् ४।२।४३, गोत्राद् वुञ्, प्रतिपदं च केदाराद् यञ्च ४।२।३९ इत्येवम् आदि, तत्परिहारेण अत्र उदाहरणं द्रष्टव्यम्। काकानां समूहः काकम्। बाकम्। इनित्रकट्यचश्च ४।२।५० इति यावत् समूहाधिकारः। गुणादिभ्यो ग्रामज् वक्तव्यः। गुणग्रामः। करणग्रामः। गुण। करण। तत्त्व। शब्द। इन्द्रिय। आकृतिगनः।

लघु-सिद्धान्त-कौमुदी

तस्य समूहः १०५०, ४।२।३६

काकानां समूहः काकम्॥

लघु-सिद्धान्त-कौमुदी

इनण्यनपत्ये १०५२, ४।२।३६

अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात्। तेन नस्तद्धित इति टिलोपो न। युवतीनां समूहो यौवनम्॥

न्यासः

तस्य समूहः। , ४।२।३६

"काकम्, शौकम्, बाकम्" इति। काकशुकबकशब्दा आद्युदात्ताः।"प्राणिनां कुपूर्वाणाम्" (फि।सू।२।३०) इत्यनेन। अस्यायमर्थः-- प्राणिविशेषवाचिनां शब्दानां आदिभूताः कवर्गात् तेषामुदात्तो भवतीति॥

बाल-मनोरमा

तस्य समूहः १२२५, ४।२।३६

तस्य समूहः। इनित्रकठ()चस्चे"ति यावदिदमनुवर्तते। अस्मिन्नर्थे प्रथमोच्चारितात्षष्ठ()न्तात्प्राग्दीव्यतीया अणादयो यथासम्भवं स्युरित्यर्थः। "अचित्तहस्तिधेनोष्ठ"गित्याद्यपवादविषयं परिह्रत्योदाहरति--काकं बाकमिति।समूहप्रत्ययान्तानां नपुंसकत्वं लोकात्।

तत्त्व-बोधिनी

तस्य समूहः १००१, ४।२।३६

तस्य समूहः। इह "अचित्ताट्ठक्", "अनुदात्तादेरञ्", गोत्रान्ताद्वुञ्", "केदाराद्यञ्च"इत्यादिना प्रतिपदं यञादीश्त वक्ष्यति। तथा च चित्तवदाद्युदात्तमगोत्रान्तं प्रतिपदोक्तप्रत्ययरहितमिहोदाहरणमित्यशयेनोदाहरति---काकम्। बाकमिति। एवं वार्कम्। काकबकवृकशब्दाः "प्राणिनां कुपूर्व"मिति फिट्सूत्रेणाद्युदात्ताः। प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे, तेषामुदात्तः स्यादिति सूत्रार्थः। "अथादिः प्राक् शकटेः"इत्यधिकारात्। यत्तु वृत्तिन्यासयोः शौकमित्युहाह्मतं, तदुपेक्ष्यम्। खण्डिकादिषु शुकशब्दस्य पाठातत्राऽञा भाव्यमिति हरदत्तादयः।

---

सूत्रम्

काशिका-वृत्तिः

भिक्षाऽअदिभ्यो ऽण् ४।२।३८

भिक्षा इत्येवम् आदिभ्यः शब्देभ्यो ऽण् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। अण्ग्रहनं बाधकबाधनार्थम्। भिक्षाणां समूहः भैक्षम्। गार्भिणम् युवतिशब्दो ऽत्र पठ्यते, तस्य ग्रहणसामर्थ्याद् पुम्बद्भावो न भवति भस्याढे तद्धिते ६।३।३४ इति। युवतीनां समूहो यौवतम्। भैक्षा। गर्भिणी। क्षेत्र। करीष। अङ्गार। चर्मिन्। धर्मिन्। सहस्र। युवति। पदाति। पद्धति। अथर्वन्। दक्षिणा। भूत।

न्यासः

भिक्षादिभ्योऽण्। , ४।२।३७

अथाण्ग्रहणं किमर्थम्, न भिक्षादिभ्यो यथाविहितमेवोच्येत? इत्यत आह-- "अण्ग्रहणम्" इत्यादि। भिक्षाशब्दोऽयम् "गुरोश्च हलः"३।३।१०३ इत्यकारप्रत्ययान्तत्वादन्तोदात्तः। तत्र "अनुदात्तोदेरञ्" ४।२।४३ इत्यञ् अणो बाधकः प्राप्नोति, तस्य बाधकस्य बाधनार्थमण्ग्रहणम्। ननु च यद्यत्राण् स्यात् पुनर्वचनमनर्थकं स्यात्? नैतदस्ति; परत्वादचित्तलक्षणष्ठक् प्राप्नोति, अतस्तद्बाधनर्थं पुनर्वचनं स्यात्। अञ्प्रत्ययस्तु स्यादेव, अण्ग्रहणात् पुनरणेवेति न भवत्येष दोषः। "गार्भिणम्" इति। गर्भिणीनां समूहो "भस्याऽढे तद्धिते" (वा।७३१)। "सिद्धत्वात् प्रत्ययविधौ" ४।२।३७ पुंवद्भावेन स्त्रीप्रत्ययनिवृत्तिः, ततोऽण्, तस्मिन् "नस्तद्धिते" ६।४।१४४ इति टिलोपः प्राप्तः, "इनण्यनपत्ये" ६।४।१६४ इति प्रकृतिभावान्न भवति। "तस्यग्रहण" इति। युवतिशब्दस्य यदि पुंवद्भावो न भवति, तदा तस्य प्रत्ययान्तत्वात् "अनुदात्तादेः" ४।२।४३ इत्यञि प्राप्ते तद्बाधनार्थमिहाण्ग्रहममर्थवद्भवति। यदि पुंवद्भावः स्यात् तदा तदनर्थकं स्यात्। तथा हि --"सिद्धश्च" प्रत्ययविधौ" (वा। ४।२।३८) इति वचनादनुत्पन्न एव तद्धिते बुद्धिस्थे पुंवद्भावेन भवितव्यम्। युव शब्दस्य

"कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" (द।उ।६।५१) इति कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वम्। तत्र यदि पुंवद्भावः स्यादुत्सर्गलक्षणेवाण् सिद्ध इतीह ग्रहणमनर्थकं स्यात्। तस्मान्ना भूदस्सयानर्थक्यमिति तस्यग्रहणसामर्थ्यादेव पुंवद्भावो न भवति, तेन यौवतमिति सिद्धं भवति॥

बाल-मनोरमा

भिक्षादिभ्योऽण् १२२६, ४।२।३७

भिक्षादिभ्योऽण्। तस्य समूह इत्येव। भैक्षमिति। अत्र "अचित्तहस्ती"ति वक्ष्यमाणठगपवादोऽण्। गार्भिणमिति। गर्भशब्दान्मत्वर्थीये इन्प्रत्यये कृते प्रत्ययः परश्च आद्युदात्तश्चेति इकारस्य उदात्तत्वे "अनुदात्तं पदमेकवर्ज"मिति शिष्टस्यानुदात्तत्वे गर्भिन्शब्दः अनुदात्तादिः। ततो नान्तलक्षणङीपि तस्य "अनुदात्तो सुप्पितौ" इत्यनुदात्तत्वे गर्भिणीशब्दोऽप्यनुदात्तादिरेव। ततः समूहेऽर्थे "अनुदात्तादेर"ञिति वक्ष्यमाणे अञि प्राप्ते भिक्षादित्वादणिति भावः। अणि प्रत्ययस्वरेणान्तोदात्तत्वम्, अञि तु "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वमिति स्वरे विशेषः। अणि टिलोपाऽभावोऽपि प्रयोजनमिति दर्शयति--इह भस्येति। गर्भिणीशब्दादणि सति "भस्याऽढे" इति पुंवत्त्वेन ङीपो निवृत्तौ गर्भिन् अ इति स्थिते "नस्तद्धिते" इति टिलोपे प्राप्ते सतीत्यर्थः।

तत्त्व-बोधिनी

भिक्षादिभ्योऽण् १००२, ४।२।३७

भिक्षादिभ्योऽण्। भैक्षमिति। अचित्तत्वाट्ठक् प्राप्तः। गार्भिणमिति। अनुदात्तादित्वादञ् प्राप्तः। सति हि तस्मिन्नाद्युदात्तटिलोपौ स्याताम्। न च "भस्याढे" इति पुंवाचकरूपा तिदेशान्न टिलोपः स्यादिति वाच्यं, हस्तिनीनां समूहो हास्तिकमित्यत्रापि टिलोपाऽनापत्तेः। तस्मात्स्त्रीप्रत्ययनिवृत्तिमात्रपरं तन्न तु रूपातिदेशकमिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

गोत्रौक्षौष्ट्रौरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ४।२।३९

गोत्रादिभ्यो वुञ् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते ऽपत्यमात्रं, न तु पौत्रप्रभृत्येव। औपगवानां समूहः औपगवकम्। कापटवकम्। उक्षन् औक्षकम्। उष्ट्र औष्ट्रकम्। उरभ्र औरभ्रकम्। राजन् राजकम्। राजन्य राजन्यकम्। राजपुत्र राजपुत्रकम्। वत्स वात्सकम्। मनुष्य मानुष्यकम्। अज आजकम्। प्रकृत्या ऽके राजन्यमनुष्ययुवानः इति यलोपो न भवति, आपत्यसय् च तद्धिते ऽनाति ६।४।१५१ इति। वृद्धाच्चेति वक्तव्यम्। वृद्धानां समूहो वार्धकम्।

न्यासः

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्?वुञ्। , ४।२।३८

"अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्रते" इति। यद्येवम्, गोत्रग्रहणेनैतस्य सिद्धत्वाद्राजन्यमनुष्ययोरुपादानमनर्थकम्? नैतदस्ति; न हि तौ गोत्रप्रत्ययान्तौ, जातेः प्रत्ययार्थत्वात्। यद्येवम्, लोपस्य प्राप्तिरेव नास्ति, तत्र यदुक्तम्-- "प्रकृत्याके राजन्यमनुष्ययुवानः" (वा।८१४) इति यलोपो न भवतीति, तदनर्थकं स्यात्? एतत् पुनरेकीयमतमाश्रित्योक्तम्। केचिदाचार्या राजन्यमनुष्ययोरपत्यप्रत्ययान्तत्वमिच्छन्ति, अतस्तन्मतमाश्रित्यैदुक्तमित्यदोषः, तन्मतेन तर्हि राजन्यमनुष्ययोग्ररहणमनर्थकं स्यात्? ज्ञापनार्थत्वात्।

तेनैतद्ज्ञाप्यते-- राजन्यमनुष्ययोर्यकारसय् किञ्चिदपत्याश्रितं कार्यं न भवतीति। किं पुनस्तत्? आपत्यव्यपदेशम्। तेन राजन्यकम्, "मानुष्यकमिति -- अत्रापि "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ इति यलोपो न भवतीति। तथा सूत्रोपात्त एव राजन्यमनुष्ययोः प्रकृतिभावः "प्रकृत्याके राजन्यमनुष्ययुवानः" (वा।८१४) इत्यनेनाख्यायत इति वेदितव्यम्। "वृद्धाच्चेति वक्तव्यम्" इति। वृद्धश्बदाद्()वुञ् भवतीत्येदर्थमित्यर्थः। तत्रेदं व्याख्यानम्-- इह पुनरुत्तरसूत्राच्चकारोऽनुवत्र्तते सिंहावलोकितन्यायेन, स चानुक्तसमुच्चयार्थः, तेन वृद्धशब्दाद्()वुञ् भवतीति। योगश्चायं यथायोगमणञोरपवादः॥

बाल-मनोरमा

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् १२२८, ४।२।३८

गोत्रोक्षोष्ट्रो। एभ्य इति। गोत्र, उक्षन्, उष्ट्र, उरभ्र, राजन्, राजन्य, राजपुत्र, वत्स, मनुष्य, अज-एतेब्य इत्यर्थः लौकिकमिह गोत्रमिति। नतु पारिभाषिकमित्यर्थः। अत्र लौकिकं गोत्रं किमित्यत आह--तच्चापत्यमात्रमिति। प्रवराध्याये परिगणितं पुत्रपौत्रादि कृत्स्नापत्यमित्यर्थः। "अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्रते, नतु पारिभाषिकं गोत्रमिष्यते" इति "स्त्रीपुंसाभ्या"मित्यादिसूत्रबाष्ये सिद्धान्तिततत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

केदाराद् यञ् च ४।२।४०

केदारशब्दाद् यञ् प्रत्ययो भवति, चकाराद् वुञ् च, तस्य समूहः इत्येतस्मिन् विषये। अचित्तलक्षनस्य ठकः अपवादः। केदाराणाम् समूहः कैदार्यम्, कैदारकम्। गणिकायाश्च यञ् वक्तव्यः। गनिकानां समूहः गाणिक्यम्।

न्यासः

केदाराद्यञ्च। , ४।२।३९

"गणिकायाश्च यञ्वक्तव्यः" (इति)। वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- इहाप्युत्तरसूत्राच्चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन गणिकाशब्दादपि यञ् भवतीति, वुञ् न भवतीति, अनभिधानात्॥

बाल-मनोरमा

केदाराद्यञ्च १२३०, ४।२।३९

केदराद्यञ् च। कैदार्यम्-कैदारकमिति। केदाराणां समूह इति विग्रहः।

गणिकाया यञ्। यञ्ग्रहणाद्वुञो निवृत्तिः। गाणिक्यमिति। गणिकानां समूह इति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

ठञ् कवचिनश् च ४।२।४१

कवचिन् शब्दात् ठञ् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। कवचिनाम् समूहः कावचिकम्। चकारः केदारातित्यस्य अनुकर्षणार्थः। केदाराणां समूहः कैदारिकम्।

न्यासः

उञ् कवचिनश्च। , ४।२।४०

कवचिञ्शब्दो मत्वर्थीयेनिप्रत्ययान्तः,प्रत्ययस्वरेणान्तोदात्तः। तस्मादनुदात्तादि ४।२।४३ लक्षणेऽञि प्राप्ते वचनम्॥

बाल-मनोरमा

ठञ्कवचिनश्च १२३१, ४।२।४०

ठञ्कवचिनश्च। केदारादपीति। कवचिन्शब्दात्केदारशब्दाच्च समूहे ठञ् स्यादित्यर्थः। कावचिकमिति। ठञ्, इकादेशे टिलोपः।

---

सूत्रम्

काशिका-वृत्तिः

ब्राह्मणमाणववाडवाद् यन् ४।२।४२

ब्राह्मणादिभ्यः शब्देभ्यो यन् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। नकारः स्वरार्थः। ब्राह्मणानां समूहः ब्राह्मण्यम्। माणव्यम्। वाडव्यम्। यन्प्रकरणे पृष्ठादुपसङ्ख्यानम्। पृष्ठानां समूहः पृष्ठ्यः। अह्नः खः क्रतौ। अह्नां समूहः अहीनः क्रतुः। क्रतौ इति किम्? आह्नः। खण्डिकादिषु दर्शनादञ् भवति। पर्श्वा णस् वक्तव्यः। पर्शूनां समूहः पार्श्वम्। पदसंज्ञकत्वाद् गुणो न भवति। वातादूलः। वातानां समूहः वातूलः।

न्यासः

ब्राआह्णमाणववाडवाद्यन्। , ४।२।४१

"पृष्टादुपसंख्यानम्" इति। पृष्ठशब्दाद्यन्प्रत्ययस्योपसंख्यानम् = व्याख्यानं कत्र्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्-- पूर्वसूत्रादिह चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन पृष्ठशब्दादपि भविष्यतीति। "अहीनः" इति। "अह्नष्टखोरेव"६।४।१४५ टिलोपः। "आह्नः" इति। "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः। ननु चाचित्तलक्षणेन ठका भवितव्यम्, तत्कथमाह्न इति भवति? इत्याह-- "खण्डिकादिषु " इत्यादि। "णस्वक्तव्यः" इति। सकारः "सिति च" १।४।१६ इति विशेषणार्थः। तेन पार्(ामित्यत्र भत्वाभावात् "ओर्गुणः" ६।४।१४६ न भवति॥

बाल-मनोरमा

ब्राआह्णमाणववाडवाद्यन् १२३२, ४।२।४१

ब्राआह्णमाणव। ब्राआह्ण्यमित्यादि। ब्राआह्णानां माणवानां बाडबानां च समूह इति विग्रहः। मनोरपत्यं माणवः। अणि नस्य णत्वम्। "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेनसिध्यति माणवः" इति "मनोर्जातावञ्यतौ षुक्च" इति सूत्रे भाष्यम्।

पृष्ठादिति। "यन" इति शेषः। पृष्ठ्यः षडह इति। षण्णामह्नां समाहारः षडहः। समाहारे द्विगुः। "राजाहः सखिभ्यः" इति टचि टिलोपः। रथन्तरबृहद्रौरूपवैराजशाक्वररैवताख्यानि षट् पृष्ठाख्यस्तोत्राणि। तद्युक्तान्यहानि लक्षणया पृष्ठानि, तेषां समूह इति विग्रहः।

तत्त्व-बोधिनी

ब्राआह्णमाणववाजवाद्यन् १००५, ४।२।४१

ब्राआह्मणमाणव। ननु त्रयोऽप्यमी वृद्धाः। तेभ्यः प्रकृतो यञेवास्तु, वृद्धाद्यनि यञि वा रूपे विशेषऽभावात्। नापि स्वरे विशेषः, उभयथाप्युदात्तत्वात्। स्त्रिया विशेषस्तु न शङ्क्य एव, नपुंसकत्वात्। "यञश्चे"त्यत्रापत्यग्रहणाच्च। ठञ् तु नानुवर्तिष्यते, अस्वरितत्वादिति, चेत्। सत्यम्। अवृद्धादपि कृतश्चिद्विधानार्थं यन्वचनम्। तत्सिद्धार्थानुवादकं वार्तिकमाह--।

पृष्ठादुपसङ्ख्यानम्। पुष्ठादिति। पृष्ठं--स्तोत्रविशेषः। पष्ट() इति। पृष्टानां समूहः। "पृष्ठ्यः षडह"इति तु मत्वर्थलक्षणया बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

ग्रामजनबन्धुसहायेभ्यस् तल् ४।२।४३

ग्रामादिभ्यः तल् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। ग्रामाणां समूहः ग्रामता। जनता। बन्धुता। सहायता। गजाच्चेति वक्तव्यम्। गजानां समूहः गजता।

लघु-सिद्धान्त-कौमुदी

ग्रामजनबन्धुभ्यस्तल् १०५३, ४।२।४२

तलन्तं स्त्रियाम्। ग्रमता। जनता। बन्धुता। (गजसहायाभ्यां चेति वक्तव्यम्)। गजता। सहायता। (अह्नः खः क्रतौ)। अहीनः॥

न्यासः

ग्रामजनबन्धुसहायेभ्यस्तल्। , ४।२।४२

ग्रामशब्दादचित्तलक्षणे ठकि प्राप्ते। जनशब्दो ञित्स्वरेणाद्युदात्तः; घञन्तत्वात्। तथा बन्धुशब्दोऽपि नित्स्वरेणाद्युदात्त एव। तथा हि स "धान्ये नित्" (द।उ।१।९४)इति वत्र्तमाने "{शृ()स्वृस्निहित्रप्यसि----द।उ।} शृ()स्वस्निहितप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" (द।उ।१।९५) इत्यनेन व्युत्पादित उप्रत्ययान्तः। आद्युदात्तत्वादणि प्राप्ते। सहायशब्दोऽपि "लघावन्ते बह्वषो गुरुः" (फि।सू।२।४२) इति मध्योदात्तः। तत्र अनुदात्तादेरञि प्राप्ते तलो विधानम्। "गजाच्चेति वक्तव्यम्" इति। गजशब्दात् तल् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं चेह चकारस्यानुवृत्तिमाश्रित्य कत्र्तव्यम्॥

बाल-मनोरमा

ग्रामजनबन्धुभ्यस्तल् १२३३, ४।२।४२

ग्रामजन। समूह इत्येव। ग्रामतेत्यादि। ग्रामाणां, जनानां, बन्धूनां च समूह इति विग्रहः। तलन्तानां स्त्रीत्वं लोकात्, "तलन्तं स्त्रियाम्" इति लिङ्गानुशासनसूत्राच्च।

गजसहायाभ्यां चेति। आभ्यामपि समूहे तलिलि वक्तव्यमित्यर्थः।

अह्नः खः क्रतौ इति। वार्तिकमिदम्। क्रतौ वर्तमाना दहन्शब्दात् समूहेऽर्थे खप्रत्ययो वाच्य इत्यर्थः। अहीन इति। अहश्शब्देन सौत्यान्यहानि विवक्षितानि। तेषां समूह इति विग्रहः। अहन्शब्दात् खः, ईनादेशः। "अह्नष्टखोरेवे"ति ट्लोपे इति भावः। फलितमाह--अहर्गणेति। आह्न इति। अह्नां समूह इति विग्रहः। इह क्रत्वप्रतीतेर्न ख इति भावः।

"अचित्तहस्तिधेनो"रिति ठकमाशङ्कयाह--इहेति। "खण्डिकादिभ्यश्चे"त्यठित्यर्थः। नन्वेवं सति "अन्" इति प्रकृतिभावस्याऽणि विहितस्यात्राऽसंभवाट्टिलोपः स्यादित्यत आह--आह्नष्टखोरेवेतीति। टिलोपाऽभावे सति "अल्लोपोऽनः" इत्यकारलोपे "आह्न" इति रूपमिति भावः।

पर्(ाआ णसिति। अणोऽपवादः। पर्शुशब्द उकारान्तस्त्रीलिङ्गः पार्(ागतास्थिवाची। तस्माण्णसि ओर्गुणे प्राप्ते-सिति च। "सुप्तिङन्तं पद"मित्यतः पदमित्यनुवर्तते। तदाह--सिति परे पूर्वं पदसंज्ञमिति। सकार इत् यस्य स सित्। "स्वादिष्वसर्वनामस्थाने"इत्येव सिद्धे भसंज्ञापवादोऽयम्। अभत्वादिति। पदत्वेनानेन भत्वस्य बाधादिति भावः। पार्(ामिति। पर्शु-अ इति स्थिते "इकोऽसवर्णे" इति शाकल्यह्रस्वप्रकृतिभावयोः "सिति चे"ति तत्रत्यवचनान्तरेण तन्निषेधे यणादेशे पार्(ामिति रूपमिति भावः।

तत्त्व-बोधिनी

ग्रामजनबन्धुभ्यस्तल् १००६, ४।२।४२

ग्रामजन। वृत्तिकृता तु वार्तिकस्थासहायशब्दोऽपि सूत्रे प्रक्षिप्तः। अनुदात्तादेरञ्। आपूपिकं शाष्कुलिकमित्यादौ परत्वात् "अचित्तहस्ति धेनो"रिति टगेवेत्याशयेनेह सूत्रे चित्तवन्तमुदाहरति---कापोतमिति। "लघावन्त"इति फिटसूत्रेण कपोतमयूरशब्दौ मध्योदात्तौ। न च "शकुनीनां च लघु पूर्व"मित्याद्युदात्ताविमाविति शङ्क्यम्, "अन्त्यात्पूर्वं लघूदात्त"मिति तत्र व्याख्यानादित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तादेरञ् ४।२।४४

अनुदात्तादेः शब्दादञ् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। कपोतानां समूहः कापोतम्। मायूरम्। तैत्तिरम्।

न्यासः

अनुदात्तादेरञ्। , ४।२।४३

"कापोतम्, मायूरम्" इति। कपोतमयूरशब्दौ "लघावन्ते द्वयोश्च बह्वषो गुरुः" (फि।सू।२।४२) इति मध्योदात्तौ"। "तैत्तरम्" इति। तित्तिरिशब्दः कित्" (द।उ।१।४८) इति कित्प्रत्ययान्तः। तरतेः {सन्वल्लुक् इति। प्रांउ।पाठः} सन्वत्तुक् चाभ्यासस्येति प्रत्ययस्वरेणान्तोदात्तः। ननु च सन्वद्भावादाद्युदात्तः प्राप्नोति? "उणादयो बहुलम्" ३।३।१ इति बहुलवचनात् स्वरे सन्वद्भावो न भविष्यतीत्यदोषः॥ "आद्युदात्तार्थमचित्तार्थञ्च वचनम्" इति। असत्येतस्मिन्नाद्युदात्तेभ्योऽण् स्यात्, अचितेब्योऽचित्तलक्षणष्ठक् प्रसज्येत। "क्षुद्रकाश्चमालवाश्चेति क्षत्तरियद्वन्द्वः" इति।क्षुद्रकस्यापत्यानि बहूनि "जनपदशब्दात् क्षत्त्रियादञ्" ४।१।१६६, मालवस्यापत्यानि बहूनि। "वृद्धेत्कोशलाजादाञ्ञ्यङ्" ४।१।१६९। तयोः "तद्राजस्य" २।४।६२ इति बहुषु लुक्, पश्चाद्द्वन्द्वः। "ततः पूर्वेणाञि सिद्धे" इति। समासान्तोदात्तत्वे कृते द्वन्द्वसमासस्यानुदात्तादित्वात्। वचनं गोत्रवुञो बाधनार्थम्। "गोत्रोक्षोष्ट्रोरभ्र" ४।२।३८ इत्यादिना गोत्रलक्षणो वुञ्()प्राप्नोति, तद्बाधनार्थं क्षुद्रकलृमालवकस्येह गणे पाठः। "ननु च" इत्यादि। परत्वादेवाञ् वुञं बाधिष्यत इत्यतो नार्थो वुञो बाधनार्थेनानेन वचनेनेति भावः। एतच्च गोत्रत्वमभ्युपेत्योक्तम्। इदानीं गोत्रत्वमेव न भवतीति दर्शयितुमाह-- "न च" इत्यादि। गोत्रसमुच्चयोऽयम्। न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते, यथा जनपदसमुदायो न जनपदग्रहणेन। तथा च काशयश्च कोशलाश्च काशिकोशलाः, तेषु भवाः काशिकोशलीयाः।

जनपदत्वाभावात् "{जनपदवध्योश्च--मु।पाठः} जनपदतदवध्योश्च" ४।२।१२३ इति वुञ् न भवति, "वृद्धाश्छः" ४।२।११३ एव तु भवति। स्यादेतत्-- यद्यपि गोत्रसमुदायो गोत्रं न भवति, तदवयुस्तु भवति, क्षुद्रकमालवकशब्दोऽवयवो गोत्रम्, अतस्तदन्तविधिना तदन्ताद्()गोत्रसमुदःयादपि वुञ् प्राप्नोति? अत आह -- "न च" इत्यादि। न हि सर्वस्तदन्तविधिर्भवतीति। तथा हि-- "येन विधिस्तदन्तस्य" १।१।७१ इत्यत्रोक्तम्--"समासप्रत्ययविधौ प्रतिषेधः", "उगिद्वर्णग्रहणवर्जम्" (वा।१२,१३) इति। प्रत्ययविधिश्चायम्। येषु तत्र च तदन्तविधिरिष्यते ते तत्रैव "भयाद्यादिग्रहणम्" (वा।३०३) इत्यादिना परिगणिताः, न चास्य तत्र परिगणनम्। ततो नास्ति तदन्तविधिः। "एवं तर्हि" इत्यादि। यदयं क्षुद्रमालवकग्रहणं करोति वुञ्बाधनर्थाम्, तज्ज्ञापयति-- वुञि पूर्वविप्रतिषेधो भवति, न परविप्रतिषेधः। "सामूहिकेषु च तदन्तविधिरस्ति" इति। किमेतस्य ज्ञापने प्रयोजनमित्याह-- "औपगवकम्, कापटवकम्" इति। एतद् वुञ्पूर्वविप्रतिषेधज्ञापनस्य प्रोजनम्। असति ह्येतस्मिञ्ज्ञापने परिविप्रतिषेधेन "अनुदात्तादेरञ्" ४।२।४३ इत्यञ् स्यात्। वुञस्तु यत्राद्युदात्तत्वं सोऽवकाशः --- ग्लौचुकायनकमिति। ग्लुचुकायनशब्दो हि "प्राचामवृद्धात् फिन् बहुलम्" ४।१।१६० इति फिन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः॥ "वानहस्तिकम्,गोथेनुकम्" इति। तदन्तविधिज्ञापनस्य प्रयोजनम्। असत्येतस्मिञ्ज्ञापने "अचित्तहस्तिधेनोष्ठक्" ४।२।४६ इति धेनुहस्तिशब्दाभ्यां विधीयमानष्ठक् न तदन्तात् स्यात्। "{क्षुद्रकमालवात्-- काशिका, पदमञ्जरी च।} क्षुद्रकमालवकात्" इति। गणे "क्षुद्रकमालवात् सेनासंज्ञायाम्" (ग।सू।८२) इति पठ()ते, तत्र यद्ययमेको योगः स्यात्, एकेन यत्नेन च ज्ञापनं नियमश्च न लभ्यते। तस्मादत्र योगविभागः कर्त्तव्यः। तत्र क्षुद्रकमालवादित्येको योगः, सेनासंज्ञायामिति द्वितीयः। तत्र पूर्वो योगो ज्ञापनार्थः, उत्तरो नियमार्थः। "पुनरस्यैव" इति। क्षुद्रकमालवादित्यस्यैव योगस्य। "क्षौद्रकमालवी" इति। "टिड्ढाणञ्" ४।१।१५ इति ङीप्। "क्षौद्रकमालवकमन्यत्" इति। तदन्तविधिनात्र वुञ् भवति। "अञ्सिद्धेः" इत्यादि। क्षुद्रकमालशब्दात् "अनुदात्तादेरञ्" ४।२।४३ इत्यञ् सिद्धः। तत्कोऽर्थः किं प्रयोजनं तस्य गणपाठेन?न किञ्चिदित्यर्थः। स्यादेतत्--यो गोत्रलक्षणो वुञ् स्यादेतस्तद्बाधनार्थः पाठः? इत्याह-- "गोत्राद्()वुञ् विधीयते" (इति)। न च क्षुद्रकमालवशब्दो गोत्रम्, तत्कुतस्ततो वुञ्प्राप्तिः? "तदन्तात्" इत्यादि। यद्यपि क्षुद्रकमालवशब्दो गोत्रसमुदायो गोत्रं न भवति, तदवयवस्तु भवति, तेन तदन्तविधिना प्राप्नोत्येव। "न च सर्वतः" इति। न च तदन्तविधिः सर्वत्रैव भवति। परिगणितेष्वेव कार्येषु तदन्तविधिरिष्यते, न चेदं तत्र परिगण्यते, तत्कुतस्तदन्तविधिना वुञ्प्राप्तिः। "ज्ञापकं स्यात्" इत्यादि। इदं हि क्षुद्रकमालवग्रहणं ज्ञापनार्थं भवेत्। एतज्ज्ञापयति-- सामूहिकेषु तदन्तविधिरस्तीति। एवं कृत्वाऽषडपिशलेर्विधिरुपपन्नो भवति। विधीयतेऽनेनेति विधिः, स पुनः "धेनोरनञः" (वा।४२३) इति, एतद्धि तत्सूत्रम्। अस्यायमर्थः-- धेनुशब्दः समूहेऽर्थे ठकमुत्पादयति, न चेद्धेनुशब्दो नञ उत्तरो भवतीति। नञ्पूर्वपदो न भवतीति यावत्। यदि तत्र सामूहिकेषु तदन्तविधिर्न स्यात् "अनञः" इति वचनं नोपपपद्यते। असति तदन्तविधौ धेनुशब्दादुच्यमानः प्रत्ययः, कः प्रसङ्गो यदधेनुशब्दात् स्यात् ! तदेतदनञिति वचनं परमर्थवद्भवति यदि सामूहिकेषु तदन्तविधिर्भवति, नान्यथा। प्रयोजनान्तरमाह--"सेनायाम्" इत्यादि। सेनासंज्ञायामेव क्षुद्रकमालशब्दादञ् भवतीत्येष नियमो यता स्यादित्येवमर्थस्तस्य गणे पाठ इत्यर्थः। "यथा" इत्यादि। चेति समुच्चये। पूर्वविप्रतिषेधेन वुञाऽञो बाधनं यथा स्यादित्येवमर्थो गणे पाठः। "{खण्डिका--काशिका} खण्डिक" इति। खण्डिकशब्दो मत्वर्थीयठन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। "वल { संवरणे सञ्चलने च" -- धा।पा।} संवरणे" (धा।पा।४९१) इत्यस्मात् "उणादयो बहुलम्" ३।३।१ इत्यवन्प्रत्यये डलयोरेकत्वस्मरणाल्लकारस्य डकारादेशे टापि वडवेति भवति। भिक्षुकशब्दोऽपि कुत्सार्थविवक्षायां कन्नन्तत्वात् पूर्वपदाद्युदात्तः। शुकोलूकयोरपि "प्राणिना कुपूर्वाणाम्" (फि।सू।१।३०) इति कुपूर्वादिरुदात्त एव। ()आञ्शब्दः "कनिन् युवृषि" (द।उ।६।५१) इत्यतः कनिन्ग्रहणेऽनुवर्त्तमाने "()आन्नुक्षन्पूषन्प्लीहन्क्लेदन्तस्नेहन्मूर्धन्मज्जन्नर्यमन्वि()आप्सन्परिज्मन्मातरि()आन्मघवन्" (द।उ।६।५५) इति कनिन्प्रत्ययान्तो निपातितः,तेनसावपि पूर्ववदाद्युदात्तः। युगवरत्राशब्दयोरचितार्थः। संहतविगृहीतार्थं युगवरत्राग्रहणं वर्णयन्त-- यौगम्, वारत्रम्, योगवरत्रमिति॥

बाल-मनोरमा

अनुदात्तदेरञ् १२३४, ४।२।४३

अनुदात्तादेरञ्। समूह इत्येव। कापोतं। मायूरमिति। "लघावन्ते द्वयोश्च बह्वषो गुरु"रिति कपोतमयूरशब्दौ मध्योदात्ताविति भावः।

---

सूत्रम्

काशिका-वृत्तिः

खण्डिकाऽदिभ्यश् च ४।२।४५

खण्दिका इत्येवम् आदिभ्यः शब्देभ्यो ऽञ् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। आद्युदात्तार्थम् अचित्तार्थम् च वचनम्। खण्दिकानां ममूहः खाण्डिकम्। वाडवम्। क्षुद्रकमालवशब्दोत्र पठ्यते। क्षुद्रकाश्च मालवाश्च इति क्षत्रियद्वन्द्वः। ततः पूर्वेण एव अञि सिद्धे वचनं गोत्रवुञ् बाधनार्थम्। ननु च परत्वादञा वुञ् बाधिष्यते, न च गोत्रसमुदायो गोत्रं, न च तदन्तविधिरत्र अस्ति? एवं तर्हि एतज् ज्ञापयति वुञि पूर्वविप्रतिषेधः, समूहिकेषु च तदन्तविधिरस्ति इति। प्रत्योजनम् औपगवकं कापटवकम् इति वुञ् भवति, वानहस्तिकं गौधेनुकम् इति च तदन्तविधिः। क्षुद्रकमालवातित्येतावता योगविभागेन पूर्वविप्रतेषेधस् तदन्तविधिश्च ज्ञापितः, पुनरस्या एव नियमार्थम् उच्यते सेनासंज्ञायाम् इति। क्षुद्रकमालवात् सेनासंज्ञायाम् एव अञ् भवति। क्षौद्रकमालवी सेना। क्षौद्रकमालवमन्यत्। अञ्सिद्धिरनुदातादेः को ऽर्थः क्षुद्रकमालवात्। गोत्राद् वुञ् न च तद्गोत्रं तदन्तान् न च सर्वतः। ज्ञापकं स्यात् तदन्तत्वे तथा च अपि शलिएर् विधिः। सेनायां नियमार्थं च यथा बध्येत चाञ् वुञा। खण्दिका। वडवा। क्षुद्रकमालवात् सेनासंज्ञायाम्। भिक्षुक। शुक। उलूक। श्वन्। युग। अहन्। वरत्रा। हलबन्ध।

बाल-मनोरमा

खण्डिकादिभ्यश्च १२३५, ४।२।४४

खण्डिकादिभ्यश्च। शेषपूरणेन सूत्रं व्याचष्टे--अञ्स्यादिति। "समूहे"इति शेषः। आद्युदात्तार्थमिदम्।

तत्त्व-बोधिनी

खण्डिकादिभ्यश्च १००७, ४।२।४४

खण्डिका। आद्युदातार्थमचित्ताट्ठको बाधनार्थं च वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

चरणेभ्यो धर्मवत् ४।२।४६

चरणशब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति। गोत्रचरणाद् वुञित्यारभ्य प्रत्यया वक्ष्यन्ते, तत्र चेदमुच्यते चरणाद् धर्माम्नाययोः इति, तेन धर्मवतित्यतिदेशः क्रियते। वतिः सर्वसादृश्यार्थः। कठानां धर्मः काठकम्। कालापकम्। छन्दोग्यम्। औक्थिक्यम्। आथर्वणम्। तथा समूहे ऽपि काठकम्। कालापकम्। छन्दोग्यम्। औक्थिक्यम्। आथर्वणम्।

न्यासः

चरणेभ्यो धर्मवत्। , ४।२।४५

"गोतर्चरणाद्()वुञित्यारभ्य" इति। ननु च तत्र धर्मग्रहमं नास्ति, तत्कथं धर्मवदित्यतिदेशः प्रयुज्यते? इत्याह-- "तत्रेदम्" इत्यादि। इदमेव धर्मवदिति वचनं लिङ्गभूतं गमयति-- "चरणाद्धर्माम्नाययोः" (वा।४७६) इत्येतद्वचनं शेषभूतमिति। न हि तेन विनाऽदेश उपपद्यते। "वतिः सादृश्यार्थः" इति। असति हि वतौ यदि चरणग्रहणं धर्मप्रत्ययैरभिसम्बध्यते-- चरणेभ्यो धर्मेऽभ्यो ये प्रत्यया अभिधास्यन्ते ते भवन्ति "तस्य समूह-" ४।२।३६ इत्येतस्मिन्नर्थ इति, समूहप्रकृतिर्न विशेषिता स्यात्। एवञ्चेह प्रकृतिमात्राद्धर्मप्रत्ययाः प्रसज्येरन्। अथ प्रकृतिः सम्बध्यते-- धर्मे ये विधास्यन्ते प्रत्ययास्ते भवन्ति। "चरणेभ्यः समूहः" इत्येतस्मिन्नर्थे, एवमपि धर्मप्रत्ययान विशेषिताः स्युः। ततश्चाचरणेभ्योऽपि ये धर्मे विधास्यन्ते प्रत्ययास्तेऽपीह चरणेभ्य आपद्येरन्। अथाप्युभयसन्निधानादुभयं विशेष्यते, तेन वाक्यभेदं कृत्वा प्रत्ययैः प्रकृतिभिः सम्बध्यते-- चरणेभ्यो धर्मेऽथ ये प्रत्यया विधास्यन्ते ते समूहे भवन्ति चरणेभ्य इति? एवमपि कश्चित् चरणप्रकृतिकः प्रत्ययो यतः कुतश्चिच्चरणात् समूहे स्यात्। "कौपिञ्जलहास्तिपदादण्" ४।३।१३१ छन्दोग#आदिभ्योऽपि स्यात्। वतौ तु तस्य सादृश्ये विधानात् सर्वसादृश्यपरिग्रहो भवति। तेन याभ्यः प्रकृतिभ्यश्चरणविशेषणेन ये प्रत्ययाः विहिताः , इहापि ताभ्यः प्रकृतिस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न किञ्चिदनिष्टमापद्यते। तस्मात् सर्वसादृश्यपरिग्रहार्थं वत्करणं कत्र्तव्यम्। " काठकम्, कालापकम्" इति। "गोत्रचरणाद्()वुञ्" ४।३।१२६। "छान्दोग्यम्, औक्थिक्यम्" इति। "छन्दोगोक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" ४।३।१२९ इति ञ्यः। "आथर्वणम्" इति। "कौपिञ्जलहास्तिपदादण्" ४।३।१३१,"आथर्वणिकस्येकलोपश्च" ४।३।१३१ इत्यण्, इकलोपश्च। एते प्रत्यया यथा चरणेभ्यो धर्मे भवन्ति, तथा समूहेऽपि॥

बाल-मनोरमा

चरणेभ्यो धर्मवत् १२३६, ४।२।४५

चरणेभ्यो धर्मवत्। चरणाः=शाखाध्येतारः। धर्मेऽर्थे याभ्यः प्रकृतिभ्यो ये प्रत्यया वक्ष्यन्ते ते ताभ्यः प्रकृतिभ्यः समूहे स्युरित्यर्थः। काठकमिति। कठानां समूह इति विग्रहः। "गोत्रचरणाद्वुञ्" इति धर्मे वक्ष्यमाणो वुञ् समूहेऽपि भवति। छान्दोग्यमिति। छन्दोगाः-सामशाखिनः, तेषां समूह इति विग्रहः। "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" इति धर्मे वक्ष्यमाणो ञ्यः समूहेऽपि भवति।

तत्त्व-बोधिनी

चरणेभ्यो धर्मवत् १००८, ४।२।४५

चरणेभ्यः। यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते, स तस्याः प्रकृतेः समूहेऽपि स्यादित्यथः। वुञादयो हि चरणेभ्यो वक्ष्यन्ते। तत्र "चरणाद्धर्माम्नाययो"रिति तु वार्तिकम्। तदप्यनेनैवातिदेशसूत्रेण ज्ञाप्यते। काठकमित्यादि। गोत्रचरणाद्वुञ्। छान्दोग्यमिति। "छन्दोगौक्थिके"तिञ्यः। यच्छाविति। यथासङ्ख्यं स्तः। ठगणाविति। केशशब्दादचित्तत्वेन ठक्।

---

सूत्रम्

काशिका-वृत्तिः

अचित्तहस्तिधेनोष् ठक् ४।२।४७

अचित्तार्थेभ्यो हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। अणञोरपवादः। अपूपानां समूहः आपूपिकम्। शाष्कुलिकम्। हास्तिकम्। धैनुकम्। धेनोरनञ इति वक्तव्यम्। आधेनवम्।

लघु-सिद्धान्त-कौमुदी

अचित्तहस्तिधेनोष्ठक् १०५४, ४।२।४६

न्यासः

अचित्तहस्तिधेनोष्ठक्। , ४।२।४६

"अचित" इति। अर्थप्रधानत्वान्निर्देशस्यार्थस्येदं ग्रहणम्, न स्वरूपस्य, तेनाचित्तवाचिभ्यष्ठग्विज्ञायत इत्याह-- "अचित्तवाचिभ्यः शब्देभ्यः" इति। हस्तिधेनुशब्दयोश्च शब्दप्रधानत्वान्निर्देशस्य स्वरूपग्रहणम्। अत एव "हस्तिधेनुशब्दाभ्याम्" इति। "{धेनोरनञ इति वक्तव्यम्-- इति वार्तिकपाठः।} अधेनोरिति वक्तव्यम्" इति। धेनुशब्दादनञ्पूर्वाट्ठग् भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- वक्ष्यमाणमिहान्यतरस्यांग्रहणमुभयोरपि योगयोः शेषो विज्ञायते, व्यवस्थिविभाषा च।तेन धेनुशब्दादनञ्पूर्वादेव भवतीति, न नञ्पूर्वादिति। "आधेनवम्" इति। "उत्सादिभ्योऽञ्" ४।१।८६। ननु च धेनुशब्दस्तत्र पठ()ते, तत्कथमधेनुशब्दाद्भवतीति?तत्रापि तदन्तविधेः सम्भवात्। तत् कथं विज्ञायते? वष्कयास इति वष्कयशब्दस्य समासे प्रतिषेधात्। वष्कयशब्दाद्धि प्रत्ययविधानम्, गोवष्कयशब्दान्न प्राप्नोति,किं समासप्रतिषेधेन? इतः प्रतिषेधाद्विज्ञायते-- अस्ति तत्र तदन्तविधिरिति॥

बाल-मनोरमा

अचित्तहस्तिधेनोष्ठक् १२३७, ४।२।४६

अचित्तहस्ति। अचित्ताः=अप्राणिनः, तद्वाचिभ्यः, हस्तिशब्दाद्धेनुशब्दाच्च समूहे ठक् स्यादित्यर्थः। साक्तुकमिति। सक्तूनां समूह इति विग्रहः। "इसुसुक्तान्तात्कः" इत्युकः परत्वाट्ठस्य कः आदिवृद्धिः। हास्तिकमिति। हस्तिनां समूह इति विग्रहः। ठक् इकः। टिलोपः। आदिवृद्धिः। धैनुकमिति। धेनूनां समूह इति विग्रहः। उकः परत्वाट्ठस्य कः। आदिवृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

केशाश्वाभ्यां यञ्छावन्यतरस्याम् ४।२।४८

केश अश्व इत्येत्याभ्यां यथासङ्ख्यं यञ् छ इत्येतौ प्रत्ययौ भवतो ऽन्यतरस्यां तस्य समूहः इत्येतस्मिन् विषये। केशानां समूहः कैश्यम्, कैशिकम्। अश्वानाम् समूहः अश्वीयम्, आश्वम्।

न्यासः

केशा�आआभ्यां यञ्छावन्यतरस्याम्। , ४।२।४७

केशशब्दादचित्तलक्षमे ठकि प्राप्ते वचनमिदम्। अ()आशब्दादप्यणि सूत्रमिदमारभ्यते। अन्यतरस्यांग्रहमाट्()ठगणावपि भवतः॥

बाल-मनोरमा

केशा�आआभ्यां यञ्छावन्यतरस्याम् १२३८, ४।२।४७

केशा()आआभ्यां। समूह इत्येव। केशाद्यञ् वा, अ()आआच्छो वेत्यर्थः। पक्षे इति। केशाद्यञभावे "अचित्ते"ति ठक्।

अ()आच्छाऽभावे अणित्यर्थः। कैश्यं कैशिकमिति। केशानां समूह सति विग्रहः। क्रमेण यञ्ठकौ। अ()आईयम् आ()आमिति। क्रमेण छाऽणौ।

---

सूत्रम्

काशिका-वृत्तिः

पाशादिभ्यो यः ४।२।४९

पाशदिभ्यः यः प्रत्ययो भवति तस्य समूहः इत्येतस्मिन् विषये। पाशानां समूहः पाश्या। तृण्या। पाश। तृण। धूम। वात। अङ्गार। पोत। बालक। पिटक। पिटाक। शकट। हल। नड। वन।

न्यासः

पाशादिभ्यो यः। , ४।२।४८

अचित्तलक्षणके कठि प्राप्ते वचनमिदम्॥

बाल-मनोरमा

पाशादिभ्यो यः १२३९, ४।२।४८

पाशादिभ्यो यः। समूह इत्येव। पाश्येत्यादि। पाशानां, तृणानां, धूमानां, वनानां, वातानां च समूह इति विग्रहः। स्त्रीत्वं लोकात्।

---

सूत्रम्

काशिका-वृत्तिः

खलगोरथात् ४।२।५०

खलगोरथशब्देभ्यः यः प्रत्यय भवत् तस्य समूहः इत्येतस्मिन् विषये। खलानां समूहः खल्या। गव्या। रथ्या। पाशादिष्वपाठः उत्तरार्थः।

न्यासः

खलगोरथात्। , ४।२।४९

गोशब्दादणि प्राप्ते, खलरथाब्यामचित्तलक्षणे ठकीदं वचनम्। अत्र पाशादिष्वेव खलादीनां पाठः कस्मान्न कृतः? इत्याह--"पाशादिष्वपाठ उत्तरार्थः" इति। उत्तरसूत्र इनित्रकट()चः खलादिभ्य एव यथा स्युः, पाशादिभ्यो मा भूदिति॥

बाल-मनोरमा

खलगोरथात् १२४०, ४।२।४९

खलगोरथात्। समूह इत्येव। खल, गो, रथ एभ्यो यः स्यादित्यर्थः। खल्या गव्य रथ्येति। खलानां गवां रथानां च समूह इति विग्रहः। यद्यपि पाशिद्ष्वेव एषां पाठो युक्तस्तथापि उत्तरसूत्रे एषामेवानुवृत्त्यर्थं पृथक् पाठः।

---

सूत्रम्

काशिका-वृत्तिः

इनित्रकट्यचश् च ४।२।५१

खलगोरथशब्देभ्यो यथासङ्ख्यम् इनि त्र कट्यचित्येते प्रत्यया भवन्ति तस्य समूहः इत्येतस्मिन् विषये। खलिनी। गोत्रा। रथाकट्या। खलादिभ्य इनिर् वक्तव्यः। डाकिनी। कुण्डलिनी। कुटुम्बिनी। कमलादिभ्यः खण्डच् प्रत्ययो भवति। कमलखण्डम्। अम्भोजखण्डम्। कमल। अम्भोज। पद्मिनी। कुमुद। सरोज। पद्म। नलिनी। कैरविणी। कमलादिराकृतिगणः। नरकरितुरङ्गाणाम् स्कन्धच् प्रत्ययः। नरस्कन्धः। करिस्कन्धः। तुरङ्गस्कन्धः। पूर्वादिभ्यः काण्डः प्रत्ययो भवति। पूर्वकाण्डम्। तृणकाण्डम्। कर्मकाण्डम्।

न्यासः

इनित्रट�चश्च। , ४।२।५०

"खलादिभ्य इनिर्वक्तव्यः" इति। वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्-- चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन खलादिभ्य इनिप्रत्ययो भविष्यति। आदिशब्दश्चायं प्रकारे, खलप्रकार इत्यर्थः। किं पुनस्ते खलप्रकाराः? येब्य इनिर्दृश्यते। यदि तर्हि खलादिभ्य इनिर्भवति, वैषम्याद्यथासंख्यं न प्राप्नोति? वाक्यभेदाददोः। एकं वाक्यं यथासंख्यं न भवति, इह द्वे वाक्ये इति। इनित्रकट()चः खलगोरथेभ्यो भवन्तीत्येकं वाक्यम्; चकारश्चानुक्तसमुच्चयार्थः, तः खलादिभ्य इनिर्भवतीति द्वितीयम्। द्वितीये तु वाक्ये खलशब्दस्य तत्र प्रकारोपलक्षणत्वं वेदितव्यम्, न तु प्रकृतित्वम्॥

बाल-मनोरमा

इनित्रकट�चश्च १२४१, ४।२।५०

इनित्र। स्युरिति। इनि त्र कट()च्--एते स्युरित्यर्थः। खलिनीति। खलानां समूह इति विग्रहः। इनिप्रत्यये नकारादिकार उच्चारणार्थः। स्त्रीत्वं लोकात्। नान्तत्वान्ङीप्। गोत्रेति। गवां समूह इति विग्रहः। गोशब्दात्रः। स्त्रीत्वं लोकात्। टाप्। रथकट()एति। रथानां समूह इति विग्रहः। कठ()चि ककारस्य नेत्त्वम्, अतद्धित इत्युक्तेः स्त्रीत्वाट्टाप्।

खलादिभ्य इति। "इनित्रकट()चश्चे"ति सूत्रे इनिग्रहणमकृत्वा "गोरथात्रकट()चौ" इत्येव सूत्रं कृत्वा "खलादिभ्य इनि"रिति पृथक्कर्तव्यमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

विषयो देशे ४।२।५२

समूहः इति निवृत्तम्। षष्ठी समर्थविभक्तिरनुवर्तते। तस्य इति षष्ठीसमर्थाद् विषयः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यो ऽसौ विषयः देशश्चेत् स भवति। विषयशब्दो बह्वर्थः। क्वचिद् ग्रामसमुदाये वर्तते, विषयो लब्धः इति। क्वचिदिन्द्रियग्राह्ये, चक्षुर् विषयो रूपम् इति। क्वचिदत्यन्तशीलिते ज्ञेये, देवदत्तस्य विषयो ऽनुवाकः इति। क्वाचिदन्यत्र अभावे, मत्स्यानाम् विषयो जलम् इति। तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम्। शिबीनां विषयो देशः शैबः। औष्ट्रः। देशे इति किम्? देवदत्तस्य विषयो ऽनुवाकः।

न्यासः

विषयो देशे। , ४।२।५१

"योऽसौ विषयो देशश्चेत् स भवति" इति। ननु च यो विषयः स देश एव भवति, किं तद्विशेषणेन देशे ग्रहणेन? इत्याह-- "विषयशब्दोऽयम्" इत्यादि। "अत्यन्तशीलिते" इति। अत्यन्ताभ्यस्त इत्यर्थः।

बाल-मनोरमा

विषयो देशे १२४२, ४।२।५१

विषयो देशे। समूह इति निवृत्तं। तस्येत्यनुवर्तते। तस्य विषय इत्यर्थे प्रथमोच्चारितात्षष्ठ()न्तात्प्रत्यया: स्युरिति लभ्यते। तदाह--षष्ठ()न्तादिति। "विषय"शब्दं व्याचष्टे--अत्यन्तपरिशीलितेऽर्थे इति। "देवदत्तविषयोऽनुवाक इत्यत्र तथा दर्शनादिति भावः। तर्हि तत्रातिव्याप्तिः स्यादित्यत आह--स चेदिति। सः= अत्यन्तपरिशीलितोऽर्थो देशश्चेदित्यर्थः। एवंच अतन्यतपरिशीलिते देशे गम्ये प्रत्ययाः स्युरिति फलितम्। विषयशब्दो ह्रयं क्वचिद्ग्रामसमूहात्मके जनपदे वर्तते। तद्यथा--"सामन्तस्य राज्ञो विषयोऽनेन लब्ध" इति। क्वचिदिन्द्रियग्राह्रे वर्तते। तद्यथा "चक्षुर्विषयो रूप"मिति। क्वचिदन्यत्राऽवृत्तौ वर्तते। यथा "मत्स्यानां विषयो जल"मिति। अन्यत्र नास्तीति गम्यते। प्रकृते तु "देवदत्तविषयोऽनुवाक इत्यर्थः। अत्र देशस्यानवगमान्न प्रत्यय इति भावः। विषय इति किम्?। देवदत्तस्य कदाचिद्गन्तव्यो मार्गः। न च "देवदत्तस्य गृह"मित्यत्र अत्यन्तपरिचितदेशत्वात्प्रत्ययः स्यादिति वाच्यं, जनपदसमूहात्मकात्यन्तपरिशीलितदेशस्यैवात्र विवक्षितत्वात्।

तत्त्व-बोधिनी

विषयो देशे १००९, ४।२।५१

विषयो देशे। "तस्ये"त्यनुवर्तत इत्याह--षष्ट()न्तादिति। विषयशब्दार्थमाह---अत्यन्तेति। भौरिक्या। आभ्या गणाभ्यां यथासङ्ख्यमेतौ प्रत्ययौ स्तः।

---

सूत्रम्

काशिका-वृत्तिः

राजन्यादिभ्यो वुञ् ४।२।५३

राजन्यादिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति विषयो देशे इत्येतस्मिन्नर्थे। अणो ऽपवादः। राजन्यानां विषयो देशः राजन्यकः। दैवयानकः। आकृतिगणश्च अयम्। मालवानां विषयो देशः मालवकः। वैराटकः। त्रैगर्तकः। राजन्य। देवयान। शालङ्कायन। जालन्धरायण। आत्मकामेय। अम्बरीषपुत्र। वसाति। बैल्ववन। शैलूष। उदुम्बर। बैल्वत। आर्जुनायन। संप्रिय। दाक्षि। ऊर्णनाभ।

न्यासः

राजन्यादिभ्यो वुञ्। , ४।२।५२

"आकृतिगणश्चायम्" इति। अपरिसमाप्ततां राजन्यादेर्दर्शयति।आदिशब्दश्चायं प्रकारार्थः॥

बाल-मनोरमा

राजन्यादिभ्यो वुञ् १२४३, ४।२।५२

राजन्यादिभ्यो वुञ्। तस्य विषयो देश इत्यर्थे राजन्यादिभ्यः षष्ठ()न्तेभ्यो वुञ् स्यादित्यर्थः। अणोऽपवादः। राजन्यक इति। अत्र राजन्यानां विशेषो देश इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ४।२।५४

भैरिक्यादिभ्यः ऐषुकार्यादिभ्यश्च यथासङ्ख्यं विधल् भक्तलित्येतौ प्रत्ययौ भवतः विषयो देशे इत्येतस्मिन् विषये। अणोऽपवादः। भौरिकिविधः। वैपेयविधः। ऐषुकार्यादिभ्यः ऐषुकारिभक्तः। सारस्यायनभक्तः। भौरिकि। वैपेय। भौलिकि। चैटयत। काणेय। वाणिजक। वालिज। वालिज्यक। शैकयत। वैकयत। ऐषुकारि। सारस्यायन। चान्द्रायण। द्व्याक्षायण। त्र्याक्षायण। औडायन। जौलायन। खाडायन। सौवीर। दासमित्रि। दासमित्रायण। शौद्राण। दाक्षायण। शयण्ड। ताक्ष्यार्यण। शौभ्रायण। सायण्डि। शौण्डि। वैश्वमाणव। वैश्वधेनव। नद। तुण्डदेव। विशदेव।

न्यासः

भौरिक्याद्यैषुकार्यादिभ्यो विघल्भक्तलौ। , ४।२।५३

बाल-मनोरमा

भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ १२४४, ४।२।५३

भौरिक्याद्यैषु। भैरिक्यादिभ्य ऐषुकार्यादिभ्यश्च षष्ठ()न्तेभ्यः यथाक्रमं विधल्, भक्तल्-एतौ प्रत्ययौ स्तो विषयो देश इत्यर्थे। ऐषुकारिभक्तमिति। ऐषुकारीणां विषयो देश इत्यर्थः। सारसायनभक्तमिति। सारसायनानां विषयो देश इत्यर्थः। इह नपुंसकत्वं लोकात्।

तत्त्व-बोधिनी

भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ १०१०, ४।२।५३

भौरिकिविधमित्यादि। क्लीबत्वं लोकात्।

---

सूत्रम्

काशिका-वृत्तिः

सो ऽस्याऽदिरिति च्छन्दसः प्रगाथेषु ४।२।५५

स इति समर्थविभक्तिः। अस्य इति प्रत्ययार्थः। आदिः इति प्रकृतिविशेषनम्। इतिकरणो विवक्षार्थः। छन्दसः इति प्रकृतिनिर्देशः। प्रगाथेषु इति प्रत्ययार्थविशेषणम्। स इति प्रथमासमर्थादस्य ति षष्ट्यार्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं छन्दश्चेत् तदादिर् भवति, यत् तदस्य इति निर्दिष्टं प्रगाथाश्चेत् ते भवन्ति, इतिकरणस् ततश्चेद् विवक्षा। पङ्क्तिरादिरस्य पाङ्कतः प्रगाथः। आनुष्टुभः। जागतः। आदिः इति किम्? अनुष्टुब्H मध्यम् अस्य प्रगाथस्य। छन्दसः इति किम्? उदुत्यशब्द आदिरस्य प्रगाथस्य। प्रगाथेषु इति किम्? पङ्क्तिरादिरस्य अनुवाकस्य। प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते, स प्रग्रथनात् प्रकर्षगानाद् वा प्रगाथः इत्युच्यते। छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसङ्ख्यानम्। त्रिष्टुबेव त्रैष्टुभम्। जागतम्।

न्यासः

सोऽस्यादिरितिच्छन्दसः प्रगाथेषु। , ४।२।५४

"छन्दसः" इति। न स्वरूपग्रहणम्, नापि मन्त्रब्राआह्णयोः। कस्य तर्हि? अक्षराणामियत्तावचनश्छन्दशब्दोऽस्ति, यस्य जगत्यादयो विशेषाः, तस्येदं ग्रहणम्। तस्यैव हि प्रगाथ इत्यादौ सम्बन्धः, नेतरस्य। तेन पङ्क्त्यादिभ्यः प्रत्ययो भवतीत्युक्तं भवति। "{प्रगथनेन--काशिका} प्रग्रन्थेन" इति। उच्चारणविशेषणेन प्रग्रन्थात् प्रकर्षाद्गायनर्थाद्वेति। एतेन

यन्निमित्तकः प्रगाथशब्दस्तां क्रियां दर्शयति। प्रगाथशब्दोऽयं यदा "अकर्त्तरि च कारके संज्ञायाम्" [३।३।१९] इति कर्मणि घञन्तो व्युत्पाद्यते-- प्रग्रवयतेऽसौ प्रगाथ इति, पृषोदरादिपाठाद्ग्रन्थे रेफानुनासिकयोर्लोपश्च , तदा प्रग्रन्थनक्रियानिमित्तको भवति। यदा तु "कै गै शब्दे" (धा।पा।९१६,९१७) इत्यस्मात् "उणादयो बहुलम्" [३।३।१] इति प्रगाथस्थन्प्रत्ययान्तो व्युत्पाद्यते, तदा गायनक्रियानिमित्तो भवति। "नुपंसके" इत्यादि। नपुंसकलिङ्गे स्वार्थ एव च्छन्दसः प्रत्ययस्योपसंख्यानम्। तत्रेदं व्याख्यानम्-- इति करणो विवक्षार्थः। तेन यत्र प्रत्ययान्ताच्छिष्टानां विवक्षा भवति तत्र प्रत्ययेन भवितव्यम्। नपुंसकलिङ्गे स्वार्थेऽपि च सा भवति, अतस्तत्रापि प्रत्ययो भवति। अवश्यं चैतदेव विज्ञेयम्। यो हि मन्यते-- "सर्वातिप्रसङ्गनिवृत्तिरितिकरणेन क्रियते" इति, तस्यासावनर्थक एव स्यात्; सर्वातिप्रसङ्गानानुपाधिभिर्निरस्तत्वात्॥

बाल-मनोरमा

सोऽस्यादिरिति च्छन्दसः प्रगाथेषु १२४५, ४।२।५४

सोऽस्यादिः। ऋग्द्वयमाम्नातं पादावृत्त्या ऋक्त्रयं संपद्यते। स च "संप्रगाथ" इति छन्दोगसूत्रे बह्वृचसूत्रे च प्रसिद्धम्। षष्ठ()एकवचनस्थाने सप्तमीबहुवचनमार्षम्। सोऽस्य प्रगाथस्य आदिरित्यर्थे प्रथमान्ताच्छन्दोविशेषवाचकदणादिप्रत्ययाः स्युरित्यर्थः। अक्षरेयत्ताविशेषो गायत्र्यादिश्छन्दः। पङ्क्तिरादिरिति। पङ्क्तिच्छन्दस्का ऋक् आदिर्यस्य प्रघाथस्य स पाङ्क्तः प्रगाथ इत्युच्यते इत्यर्थः।

स्वार्थ इति। छन्दोवाचिभ्यः स्वार्थेऽणादिप्रत्ययस्योपसहख्यानमित्यर्थः। त्रैष्टुभमिति। क्लीबत्वं लोकात्।

तत्त्व-बोधिनी

सोऽस्यादिरिति च्छन्दसः प्रगाथेषु १०११, ४।२।५४

सोऽस्यादिरिति। छन्दो नाम--अक्षरेयत्तानिबन्धनपङ्क्त्यादिरिह विवक्षितः। तद्वाचकात्प्रथमान्तदस्येत्यादिमति प्रत्ययः स्यात्, य आदिमान्स प्रगाथश्चेत्। प्रग्रथ्यत इति प्रगाथऋ। "ग्रन्थ संदर्भे"इत्यस्मात् "अकर्तरिच कारके"इति कर्मणि घञ्। पृषोदरादित्वाद्रेफनकारयोर्लोपः। अन्ये तु प्रगीयत इति प्रगाथः। "गै शब्दे"इत्यतः "उषिकुषिगार्तिभ्यः स्थन्ित्याहुः। यत्र द्वे ऋचावावृत्त्या तिरुआः क्रियन्ते स प्रगाथः।

स्वार्थ उपसङ्ख्यानम्। त्रैष्टुभमिति। "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते"इति न्यायेन क्लीबतेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ग्रामे प्रयोजनयोद्धृभ्यः ४।२।५६

सो ऽस्य इति समर्थविभक्तिः, प्रत्ययार्थश्च अनुवर्तते। प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च। प्रत्ययार्थविशेषनं सङ्ग्रामः। प्रयोजनवाचिभ्यः योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्यः अस्य इति षष्ठ्यर्थे सङ्ग्रामे ऽभिधेये यथाविहितं प्रत्ययो भवति। भद्रा प्रयोजनम् अस्य सङ्ग्रामस्य भद्रः सङ्ग्रामः। सौभद्रः। गौरिमित्रः। योद्धृभ्यः आहिमाला योद्धारो ऽस्य सङ्ग्रामस्य आहिमालः। स्यान्दनाश्वः। भारतः। सङ्ग्रामे इति किम्? सुभद्रा प्रयोजनम् अस्य दानस्य। प्रयोजनयोद्धृभ्यः इति किम्? सुभद्रा प्रेक्षिका ऽस्य सङ्ग्रामस्य।

न्यासः

सङ्ग्रामे प्रयोजनयोद्धृभ्यः। , ४।२।५५

अत्र "संग्रामे" इति प्रत्ययार्थ इति, सप्तम्यन्तत्वात्। "प्रयोजनयोद्धृभ्यः" इति पञ्चम्यन्तत्वात् प्रकृतिनिर्देशः, ततश्च "समर्थानां प्रथमाद्वा" ४।१।८२ इत्येतद्विरुध्यते; प्रथमस्य प्रत्ययार्थत्वेन द्वितीयस्य प्रकृतित्वेनोपादीयमानत्वादित्यस्य चोद्यस्य निरासायाह-- "सोऽस्येति समर्थविभक्तिः प्रत्ययार्थश्चानुवत्र्तते" इति। एतेनैतद्दर्शयति-- "प्रयोजनयोद्धृभ्यः" इत्येतदेवमर्थं यस्मात् पूर्वसूत्रादेव स इति प्रथमं तदिहानुवत्र्तते, तद्वशेषणं तु प्रयोजनयोद्धृभ्य इति। प्रत्ययाथोऽप्यस्येति पूर्वसूत्रादनुवत्र्तते, तद्विशेषणं संग्रामः, तत्रो नास्ति विरोधः; पूर्वसूत्रे यत् प्रथमानिर्दिष्टं तत एव प्रत्ययविधानादिति॥

बाल-मनोरमा

संग्रामे प्रयोजनयोद्धृभ्यः १२४६, ४।२।५५

संग्रामे। अनुवर्तते इति। तथाच "संग्रामे" इति सप्तम्यन्तं षष्ठ()आ विपरिणतमस्येत्यनेनान्वेति। तदस्य सङ्ग्रामस्य प्रयोजनं, तेऽस्य सहग्रामस्य योद्धार इत्यर्थे प्रयोजनयोद्धृवाचिभ्यः प्रतमान्तेभ्योऽणादयः स्युरित्यर्थः।

तत्त्व-बोधिनी

संग्रामे प्रयोजनयोद्धृभ्यः १०१२, ४।२।५५

संङ्ग्रामे। ननु "प्रथमा"दित्यधिकारात्प्रथमोच्चारितसङ्ग्रामवाचिन एव प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्य इत्यत आह--सोऽस्येतीति। एवं च प्रथमान्तविशेषणद्वारा प्रयोजनयोद्धृणां प्रकृतित्वम्। "अस्ये"ति प्रत्ययार्थविशेषणद्वारा संग्रामस्य प्रत्ययर्थत्वं वक्तुं शक्यमिति भावः। तता चयमिह सूत्रार्थः--प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ()न्तार्थेऽण् स्यात्, स च षष्ठ()आन्तार्थः। संग्रामश्चेदिति।

---

सूत्रम्

काशिका-वृत्तिः

तदस्यां प्रहरणम् इति क्रीडायां णः ४।२।५७

ततिति प्रथमासमर्थादस्याम् इति सप्तम्यर्थे णः प्रत्ययो भवति, यत् ततिति निर्दिष्टं प्रहरणं चेत् भवति। यदस्याम् इति निर्दिष्टं क्रीडा तद् चेत् सा भवति। इतिकरणस् ततश्चेद् विवक्षा। दण्डः प्रहरणम् अस्यां क्रीडायां दाण्डा। मौष्टा। प्रहरणम् इति किम्? माला भूषणम् अस्यां क्रीडायाम्। क्रीडायाम् इति किम्? खड्गः प्रहरणम् अस्यां सेनायाम्।

न्यासः

तदस्यां प्रहरणमिति क्रीडायां णः। , ४।२।५६

बाल-मनोरमा

तदस्यां प्रहरणमिति क्रीडायां णः १२४७, ४।२।५६

तदस्यां। "तत् अस्यां क्रीडायां प्रहरण"मित्यर्थ प्रथमान्तात् प्रहरणवाचनकाण्णप्रत्ययः स्यादित्यर्थः। प्रह्रियते अनेनेति प्रहरणम्--आयुधम्। दाण्डेति। अणि तु ङीप् स्यादिति भावः। मौष्टेति। मुष्टिः प्रहरणमस्यां क्रीडायामिति विग्रहः।

तत्त्व-बोधिनी

तदस्यां प्रहरणमिति क्रीडायां णः १०१३, ४।२।५६

तदस्यां। प्रथमान्तात्प्रहरणोपाधिकात्सप्तम्यन्तार्थे णः स्यात्, स चेत्सप्तान्यन्तार्थः क्रीडा भवति। प्रहरणं किम्()। माला

भूषणमस्याम्। क्रीडायां किम्()। खड्गः प्रहणमस्यां सेनायाम्।

---

सूत्रम्

काशिका-वृत्तिः

घञः सास्यां क्रियेति ञः ४।२।५८

सा इति समर्थविभक्तिः। अस्याम् इति प्रत्ययार्थः स्त्रीलिङ्गः। क्रिया इति प्रकृत्यर्थविशेषणम्। घञः इति प्रकृतिनिर्देशः। इति करणो विवक्षार्थः। घञन्तात् कियावाचिनः प्रथमासमर्थादस्याम् इति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रययो भवति। घञः इति कृद्ग्रहणम्, तत्र गतिकारकपूर्वम् अपि गृह्यते। श्येनपातो ऽस्यां वर्तते श्यैनंपाता। तैलंपाता घञः इति किम्? श्येनपतनम् अस्यां वर्तते। क्रिया इति किम्? प्राकारो ऽस्यां वर्तते। अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात् पुनरुपादियते, यावता द्वयम् अपि प्रकृतम् एव? क्रीडायाम् इत्यनेन तत्सम्बद्धम्, अतस्तदनुवृत्तौ क्रीडानुवृत्तिरपि सम्भाव्येत। सामान्येन च इदं विधानम्। दण्डपातो ऽस्यां तिथौ वर्तते दाण्डपाता तिथिः। मौसलपाता तिथिः।

न्यासः

घञः सास्यां क्रियेति ञः। , ४।२।५७

"क्रियेति प्रकृतिविशेषणम्" इति। यत्र तद्घञन्तं क्रियावाचि चेद्भवतीति। तेन भावे यो घञ् तदन्तात् प्रत्ययो भवतीत्युक्तं भवति। ननु च भावे यो घञ् तेनैव तदन्तं क्रियावाचि? यस्माद्धात्वर्थस्य सिद्धता नाम यो धर्मस्तत्र घञादिभिर्भवितव्यमित्युक्तं प्राक्, धर्मधर्मिणोर्भेदस्याविवितत्वात् क्रियाधर्मोऽपि क्रियाशब्दनोक्त इत्यदोषः। "इतिकरणो विवक्षार्थः"इति। ननु च पर्वसूत्रादेवेतिकरणोऽनुवरितिष्यते,त()त्क पुनरिह तस्योपादानम्? इतिकरणस्येह प्रकरणेऽनधिकारतां दर्शयितुं पुनरुपादानम्। तेन "तद्धीते तद्वेद" ४।२।५८ इत्यत्रास्येतिकरणस्याननुवृत्तौ विवक्षानियमाभावादध्येतृवेदितृमात्रे प्रत्ययः सिद्धो भवतीत्येके। वैचित्र्यार्थमितिकरणोपादानमित्यपरे। "श्यैनम्पाता" इति। "शल हुल पत्लृ गतौ" (धा।पा।८४३, ८४४,८४५) भावे घञ्, श्येनस्य पात इति षष्ठीसमासः। ञे विहिते "श्येनतिलस्य पाते ञे" ६।३।७० इत मुम्। "प्राकारः" इति। करोतेः प्रपूर्वात् "अकत्तरि च कारके संज्ञायाम्" ३।३।१९ इति कर्मणि घञ्। "उपसर्गस्य घञ्यमनुष्ये बहुलम्" ६।३।१२१ इति प्रशब्दस्य दीर्घः। भवतीदं घञन्तम्; न तु क्रियावाचि; प्राकारस् द्रव्यत्वात्। "अथ"इत्यादि चोद्यम्। "क्रीडायामित्यनेन तत्सम्बद्धम्" इत्यादि परिहारः। स्यादेतत्नुवत्र्ततां क्रीडा, तस्याञ्चेदं प्रत्यविधानमिष्यत इत्यत आह-- "सामान्येन च" इत्यादि॥

बाल-मनोरमा

घञः साऽस्यां क्रियेति ञः १२४८, ४।२।५७

घञः सास्याम्। अस्यामित्यनन्तरं "मृगयाया"मित्यादि स्त्रीलिङ्गं विशेष्यमध्याहार्यम्। सा क्रिया अस्यां मृगयादिक्रियायामित्यर्थे घञन्तप्रकृतिकप्रथमान्तात्क्रियावाचिनो ञः स्यादित्यर्थः। फलितमाह--घञन्तादित्यादिना। कृद्ग्रहणादिति। तत्प्रयोजनमनुपदमेव वक्ष्यते।

तत्त्व-बोधिनी

साऽस्यां क्रियेति ञः १०१४, ४।२।५७

घञः। कृद्ग्रहणादिति। तेन "श्यैनंपाते"त्यत्र "ञ्णिती"त्यङ्गस्य विधीयमाना वृद्धिः सिद्धा। श्येनपातस्यापि घञन्तत्वादिति भावः। घञः किम्()। श्येनपतनमस्यां वर्तते। क्रिया किम्()। प्राकारोऽस्यां वर्तते। "तदस्या"मिति प्रकृते

पुनः "सास्या"मित्युक्तिः "क्रीडायां"मित्यस्य निवृत्तिर्यथा स्यादिति। अतएवाह--।

---

सूत्रम्

काशिका-वृत्तिः

तदधीते तद् वेद ४।२।५९

ततिति द्वितीयासमर्थातधीते वेद इत्येतयोः अर्थयोः यथाविहितं प्रत्ययो भवति। छन्दो ऽधीते छान्दसः। वैयाकरणः। नैरुक्तः। निमित्तानि वेद नैमित्तः। मौहूर्तः। औत्पातः। द्विस्तद्ग्रहणम् अधीयानविदुषोः पृथग्निधानार्थम्।

लघु-सिद्धान्त-कौमुदी

तदधीते तद्वेद १०५६, ४।२।५८

न्यासः

तदधीते तद्वेद। , ४।२।५८

"वैयाकरणः" इति। "नन य्वाभ्याम्" ७।३।३ इत्यादिना वृद्धिप्रतिषेधः,ऐजागमश्च। "द्विस्तद्ग्रहणम्" इत्यादि। यदि "तदधीते वेद" इत्येवोच्येत प्रत्ययार्थद्वस्य द्वितीयासमर्थे समुच्चयो विज्ञायते, ततश्च यस्त्वधीते वेत्ति च तत्रैव स्यात्; यस्त्वधीते केवलं न वेत्ति, वेत्ति वा केवलं नाधीते तत्र न स्यात्। द्विस्तद्()ग्रहणे तु वाक्यभेदादधीयाने विदुषि च प्रत्येकं प्रत्ययः सिध्यति। तदर्थं द्विस्तद्()ग्रहणम्। नैतद्()द्विस्तद्()ग्रहणस्य प्रयोजनम्, यथैव हि "ते न दीव्यति खनति जयति जितम्" ४।४।२ इत्यत्र सकृत् समर्थविभक्त्युपादानेऽपि प्रत्ययार्थचतुष्टयेन तृतीयासमर्थेन समुच्चयो न विज्ञायते,तथेहापि न विज्ञास्यते। तेन यथा दीव्यतिप्रभृतिषु प्रत्ययो भवति, तथेहापि प्रत्येकमधीयाने विदुषि च भविष्यतीति? न ब्राऊमः-- इहैव द्विस्तद्()ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति। "कुतस्तर्हि? "क्रतूक्थादिसूत्रान्ताट्ठक्" ४।२।५९, "वसन्तादिभ्यष्ठक्" ४।२।६२ इत्यत्र च। किं कारणं तत्र न स्यात्? क्रतुशब्दः कर्मनामधेयः,वसन्तादयोऽप्यृतुवचनाः, तेषामध्ययनं नोपपद्यते। तत्सहचरिते ग्रन्थे स्यात्, स च तत्र गोण इति न गृह्यते। मुख्य एवार्थे वेदने सम्भवतीति तेभ्यो विदुष्येण प्रत्ययः स्यात्, नाध्येतरि। पुनर्द्विस्तद्ग्रहणाद्गौणस्यापि ग्रहणं भवतीति प्रत्येकमध्येतृविदुषोरत्र ठक्प्रत्ययो भवति॥ क्रतुशब्दः कर्मनामधेयः, तस्याध्यनवेदने द्वे न सम्भवत इति साहचर्यात् तदर्थो ग्रन्थो गृह्यते, न तु क्रतुनामा क्रतुरस्तीति तद्विशेषा येऽग्निष्टोमादयस्तद्रथो ग्रन्थो गृह्यते, तत्र चाह-- "क्रतुविशेषवाचिभ्यः" इति। अग्निष्टोममधीत इत्यग्निष्टोमेन सहचरितं तदर्थग्रन्थमधीत इत्यर्थः। "सूत्रान्तादकल्पादेरिष्यते" इति। किमिष्यत एव? ततो न तत् शस्यते, लभ्यते च। कुतः? वेत्यनुवृत्तेव्र्यवस्थितविभाषाविज्ञानात्। "किं तर्हि? सामलक्षण औक्थिक्ये वत्र्तमाने" इति। उक्थसंज्ञकानां साम्नलक्षणं व्याख्याग्रन्थ औक्थिक्यः, "{छन्दोगौक्थिक्य" इतिमु।पाठः।} छन्दोगौक्थिकय" ४।३।१२९ इत्यादिना ञ्यः। तत्रौक्थिक्ये सामलक्षणेग्रन्थे वत्र्तमान उक्थशब्दः प्रत्ययमुत्पादयति। कुत एतत्? गौणेन सह क्रतुशब्देन निर्देशात्। औक्थिक्ये उक्थशब्दस्य वृत्तिस्तादथ्र्याद्भवति। भवति च तादथ्र्यात् ताच्छब्द्यम्, यथा-- प्रदीपार्था मल्लिका प्रदीप इति। औक्थिक्यं योऽधीते कथं तत्र भवितव्यम्? इत्यत आङ-- "औक्थिक्यशब्दाच्च" इति। तत्रैव कारणमाह-- "अनभिधानात्" इति। "विद्यालक्षणकल्पसूत्रान्तात्" (ग।सू।८४), इत्यस्यातिप्रसक्तस्यापवादमाह-- "विद्या च"इत्यादि। विद्याशब्दोऽनङ्गक्षत्रधर्मसंसर्गत्रिपूर्व एव प्रत्ययमुत्पादयति, नाङ्गादिपूर्व इत्यर्थः। "त्रैविद्यः" इति। त्र्यवयवा विद्या, शाकपार्थिवादित्वादुत्तरपदलोपी समासः। त्रिविद्यामधीते त्रैविद्यः। यावक्रीतमाख्यानधीते "यावक्रीतिकः"। प्रियङ्गुमधीते "प्रैयङ्गविकः"। वासवदत्तामाख्ययिकामधीते "वासवदत्तिकः"। सुमनोत्तरामधीते "सौमनोत्तरिकः। "सर्वसादेर्द्विगोश्च लः"

इति। सर्वादेः सादेर्द्विगोरुत्पन्नस्य ठको लोपो भवतीत्यर्थः। ननु च "द्विगोर्लुगनपत्ये" (४।१।८८) इत्येवं सिद्धः? सत्यमेतत्; इह तु कैश्चित् "विद्यालक्षणकल्पसूत्रान्तात्" (ग।सू।८४) इत्यादिना प्रतिपदं प्रत्ययो विधीयते। तद् द्वेष्यमपि जायेत। प्रतिपदविधानान्न लुक्, ततो लुग्वचनम्। "अनुसूर्लक्ष्यलक्षणे च" इति। अनुसूशब्दः प्रत्ययमुत्पादयति। लक्ष्यलक्षणे च शब्दरूपे प्रत्ययमुत्पादयतः। "आनुसुकः" इति। "इसुसुक्तान्तात् कः" ७।३।५१ इति कः, "केऽणः" ७।४।१३ इति ह्रस्वः। "इकन बहुलं पदोत्तरपदात्" इति। पदशब्द उत्तरपदं यस्य स तथोक्तः। "शतषष्टेः षिकन् पथः"इति। शतषष्टिशब्दाभ्यामुत्तरस्मात् पथः षिकन् प्रत्ययो भवति। षकारो ङीषर्थः, नकारः स्वरार्थः। एतत्सर्वमुक्थादिषु पाठादेव सिद्धम्। यदपीह किञ्चिन्न पठ()ते, तदपि च बहुलग्रहणेन संगृहीतम्। उक्थादिष्वपि षिकन् बहुलं पदोत्तरपदाच्चेति पठ()ते॥

बाल-मनोरमा

तदधीते तद्वेद १२५१, ४।२।५८

तदधीते। तदधीते इत्यर्थे, तद्वेत्तीत्यर्थे च द्वितीयान्तादणादयः स्युरित्यर्थः। गुरुमुखादक्षरानुपूर्वीग्रहणमध्ययनम्। शब्दार्थज्ञानं वेदनम्। एतेन अध्ययनविधिरर्थज्ञानपर्यन्त इति कतिपयमीमांसकोक्तिः परास्ता, पृथग्ग्रहणवैयथ्र्यात्। यताचैतत्तथा अध्वरमीमासाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः। वैयाकरण इति। अणि "न य्वाभ्यामि"त्यैजागमः।

ऋतूक्थादि। "तदधीते तद्वेदे" त्यर्थयोः--क्रतु, उक्थादि,सूत्रान्तः-एभ्यः ठक् स्यादित्यर्थः। क्रतुविशेषवाचिनामेवेति। न तु क्रतुशब्दस्यैवेत्यर्थः। अन्यथा उक्थादिगण एव क्रतुशब्दमपि पठेदिति भावः। ननु क्रतुविशेषाणां कथमद्ययनम्, अक्षरग्रहणात्मकत्वाऽभावादित्यत आहतेभ्य इति। अग्निष्टोमादिशब्दाः क्रतुविशेषेषु मुख्याः। तत्प्रतिपादकग्रन्थेषु तु गौणाः। तत्र क्रतुविशेषात्मकमुख्यार्थकेभ्योऽग्निष्टोमादिशब्देभ्यो वेदितरि प्रत्ययाः। अग्निष्टोमादिक्रतुप्रतिपादकग्रन्थेषु लक्षणया विद्यमानेभ्यस्तु तेभ्योऽध्येतरीत्यर्थः। आग्निष्टोमिक इति। अग्निष्टोमं क्रतुं वेत्ति, तत्प्रतिपादकग्रन्थमधीते इति वाऽर्थः। उक्थशब्दः सामसु मुख्यः। सामलक्षणग्रन्थे प्रातिशाख्ये तु गौणः। तत्र गौणार्थकादेव उक्थशब्दाट्ठगित्याह--उक्थं सामविशेष इति। "अग्निष्टोमस्तोत्रात्परं यत्साम गीयते" इति वृत्तिकृदुक्तेरिति भावः। भाष्ये तु सामशब्दपर्याय उक्थशब्द इति लक्ष्यते।

मुख्यार्थादिति। सामवाचिन उक्थशब्दात्तु न ठक्। तस्मिन्निषिद्धे तदधीते इत्यण् च न भवतीत्यर्थः। भाष्ये तु मुख्यार्थकादुक्थशब्दाट्ठक् नेत्येव लक्ष्यते। उक्थादिगणपठितान्न्यायादिशब्दाट्ठकमुदाहरति--न्यायमिति। "अधीते वेत्ति वे"ति शेषः। नैयायिक इति। ठकि ऐजागमः। वृत्तिमिति। "अधीते वेद वे"ति शेषः। वार्त्तिक इति। ठकि आदिवृद्धौ रपरत्वम्। साङ्ग्रहसूत्रिक इति। संग्रहाख्यं सूत्रमधीते वेत्ति वेत्यर्थः। विद्यालक्षणेति। विद्या, लक्षण, कल्प-एतदन्तादपि उक्तेऽर्थे ठगित्यर्थः।

अङ्गेति। अङ्ग, क्षत्र, धर्म, त्रि-एतत्पूर्वकाद्विद्यान्तात्समासाट्ठक् नेत्यर्थः। ततश्च अणेव। त्रिविद्या इति। शाकपार्थिवादित्वाद्विधाशब्दस्य लोप इति भावः। तिरुआओ विद्यास्त्रिविद्या इति न विग्रहः, "दिक्सङ्ख्ये संज्ञाया"मिति नियमात्। नापि तिरुआओ विद्या अधीते वेद वेति तद्धितार्थे द्विगुः, तथा सति तद्धितस्य द्विगुनिमित्ततया "द्विगोर्लुगनपत्ये" इति लुगापत्तेः। तिसृणां विद्यानां समाहर इति द्विगुरप्यत्र निर्बाध एव।

आख्यानेति। आख्यान, आख्यायिका, इतिहास, पुराण-एभ्यश्च उक्तेऽर्थे ठग्वक्तव्य इत्यर्थः। तत्र आख्यानशब्देन आक्यायिकाशब्देन च आख्यानविशेषवाचिन आख्यायिकाविशेषवाचिनश्च ग्रहणम्। इतिहास पुराणशब्दयोस्तु स्वरूपयोरेव ग्रहणम्। आख्यानं नाम कथाप्रबन्धः। "आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षण"मित्यमरः। "इतिहासः

पुरावृत्त"मिति च। "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चेति पुराणं पञ्चलक्षमम्। तत्र आख्यानादुदाहरति--यवक्रीतमिति। आख्यायिकाया उदाहरति--वासवदत्तामिति। लुग्वक्तव्य इति। "उक्तप्रत्ययस्ये"ति शेषः।

सर्ववेद इति। अणो लुकि आदिवृद्ध्यभावः। सर्वतन्त्र इति। सर्वतन्त्राण्यधीते वेद वेत्यर्थः। सवार्तिक इति। वार्तिकेन सह सवार्तिकम्। "तेन सहे"ति बहुव्रीहि। "वौपसर्जनस्ये"ति सभावः। सवार्तिकं सूत्रमधीते इत्यर्थः। द्विगोरिति। द्वे तन्त्रे अधीते वेत्ति वेत्यर्थे तद्धितार्थे द्विगुनिमित्तत्वादणो लुकि आदिवृद्ध्यभावे "द्वितन्त्र" इति रूपमित्यर्थः।

इकन्पदोत्तरपदादिति। पदशब्द उत्तरपदं यस्य स पदोत्तरपदः, तस्मादुक्तेऽर्थे इकन्प्रत्ययो वक्तव्यः। शतषष्टेः षिकन्पथ इति। शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तस्मादुक्तेर्थे षिकन्प्रत्ययो वक्तव्य इत्यर्थः। पूर्वपदिक इति। पूर्वपदमधीते वेत्ति वेत्यर्थः। एवमुत्तरपदिकः। शतपथिक इति। शतपथं नाम वाजसनेयिब्राआह्मणं। तदधीते वेत्ति वेत्यर्थः। शतपथिकीति। षित्वान्ङीषिति भावः। एवं षष्टिपथिकः। षष्टिपथिकीति।

तत्त्व-बोधिनी

तदधीते तद्वेद १०१६, ४।२।५८

तदधीते। द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात्। द्विस्तद्ग्रहणमधीयाने विदुषि च प्रत्येकं विधानार्थम्। तेनोत्तरत्र क्रतुवसन्तादयः शब्दास्तत्प्रतिपादकग्रन्थे गौणा अप्यधीयानेऽपि प्रत्ययं प्राप्नुवन्ति। अन्यथा तेषामध्ययनाऽसंभवेन वेदितर्येव प्रत्ययः स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

क्रतूक्थादिसूत्रान्ताट् ठक् ४।२।६०

क्रतुविशेषवाचिभ्यः उक्थादिभ्यश्च सूत्रान्ताच् च ठक् प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन् विषये। अणो ऽपवादः। अग्निष्टोमम् अधीते वेद वा आग्निष्टोमिकः। वाजपेयिकः। उक्थादिभ्यः औक्थिकः। लौकायतिकः। सूत्रान्तात् वार्तिकसूत्रिकः। साङ्ग्रहसूत्रिकः। सूत्रान्तादकल्पादेरिष्यते। कल्पसूत्रम् अधीते काल्पसूत्रः। अणेव भवति। उक्थशब्दः केषुचिदेव सामसु रूढः। यज्ञायज्ञीयात् परेण यानि गीयन्ते, न च तान्यधीयाने प्रत्यय इष्यते, किं तर्हि, सामलक्षणे औक्थिक्ये वर्तमानः उक्थशब्दः प्रत्ययम् उत्पादयति। उक्थम् अधीते औक्थिकः। औक्थिक्यम् अधीते इत्यर्थः। औक्थिक्यशब्दाच् च प्रत्ययो न भवत्येव, अनभिधानात्। विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यम्। वायसविद्यिकः। सार्पविद्यिकः। गौलक्षणिकः। आश्वलक्षणिकः। मातृकल्पिकः। पाराशरकल्पिकः। विद्या च न अङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा। अङ्गविद्याम् अधीते आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। सांसर्गविद्यः। त्रैविद्यः। आख्यानाख्यायिकेतिहासपुराणेभ्यष् ठग् वक्तव्यः। आख्यानाख्यायीकयोरर्थग्रहणम्, इतिहासपुराणयोः स्वरूपग्रहणं यावक्रीतिकः। प्रैयङ्गविकः। वासवदत्तिकः। सौमनोत्तरिकः। ऐतिहासिकः। पौराणिकः। सर्वसादेर् द्विगोश्च लः। सर्ववेदः। सर्वतन्त्रः। सादेः सवार्त्तिकः। ससङ्ग्रहः। द्विगोः द्विवेदः। पञ्चव्याकरणः। अनुसूर्लक्ष्यलक्षणे च। अनुसूर्नामग्रन्थः, तम् अधीते आनुसुकः। लाक्षिकः। लाक्षणिकः। इकन् बहुलं पदोत्तरपदात्। पूर्वपदिकः। शतषष्टेः षिकन् पथो बहुलम्। शतपथिकः। शतपथिकी। षष्टिपथिकः। षष्टिपथिकी। बहुलग्रहणादणपि भवति। शातपथः। षाष्टिपथः। उक्थ। लोकायत। न्याय। न्यास। निमित्त। पुनरुक्त। निरुक्त। यज्ञ। चर्चा। धर्म। क्रमेतर। श्लक्ष्ण। संहिता। पद। क्रम। सङ्घात। वृत्ति। सङ्ग्रह। गुणागुण। आयुर्वेद।

सूत्रान्तादकल्पादेः। विद्यालक्षणकल्पान्तात्। विद्याचानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा। आख्यानाख्यायिकेतिहासपुराणेभ्यष् ठक्। सर्वसादेर् द्विगोश्च लः। अनुसूर्लक्ष्यलक्षणे च। द्विपदि ज्योतिषि। अनुपद। अनुकल्प। अनुगुण। इकन्बहुलं पदोत्तरपदात्। शतषष्टेः षिकन्। पथो बहुलम्।

तत्त्व-बोधिनी

क्रतूक्थादिसूत्रान्ताट्ठक् १०१७, ४।२।५९

क्रतूक्थादि। क्रतुविशेषेति। स्वरूपस्य तु न ग्रहणं, तथात्वे सत्युक्थादिष्वेव क्रतुशब्दः पठ()एत। नापि क्रतुपर्यायाणाम्, उक्थादिगणे यज्ञशब्दपाठादिति भावः। अध्यतरीति। अध्येतर्यपीत्यर्थः। आग्निष्टोमिक इति। संस्थाविशेषवाचकस्याप्यग्निष्टोमशब्दस्य तत्संस्थाके क्रतौ निरूढप्रयोग। तल्लक्षणेत्यादि। तत्प्रतिपादकं प्रातिशाख्यमित्यर्थः।

मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्यते। नेष्येते इति। अनभिधानादिति भावः।

अङ्गक्षत्रधर्मत्रिपूर्वाद्विधान्तान्नेति वक्तव्यम्।

त्रिविधेति। "तिरुआओ विद्या अधीते"इति विग्रहे तु तद्धितार्थे द्विगौ "त्रिविद्यः"इत्येव स्यात्, द्विगोर्लुगनपत्ये "इति लुक्प्रवृत्तेरिति भावः।

आख्यानाख्यायिकेतिहासपुराणेभ्यश्च। आख्यायिकेति। गद्यपद्यरूपो ग्रन्थविशेष इत्यर्थः।

सर्वादेः सादेश्च लुग्वक्तब्यः। सर्वादेरिति। "सादे"रित्येव सिद्धे सर्वाग्रहणमर्थवत्परिभाषाज्ञापनार्थम्। सवार्तिक इति। वार्तिकान्तमधीत इत्यर्थः। अन्तवचने अव्ययीभावः॥ "अव्ययीब्वे चाऽकाले"इति सहस्य सभावः।

इकन्पदोत्तरपदाच्छतपष्टेः षिकन्पथः। इकन्निति। पदशब्द उत्तरपदं यस्य तस्मादिकन्। शतशह्दात्षष्टिशब्दाच्च परो यः पथिन्()शब्दस्तदन्तास्तुषिकन् वाच्य इत्यर्थः। शतपथिक इति। वृत्तिकृता तु वार्तिके "बहुल"मिति पूरयित्वा "शातपथः" इत्यणन्तमप्युदाह्यतम्। तत्तु भाष्ये न दृष्टम्। षित्त्वफलं दर्शयति--शतपथिकीति।

---

सूत्रम्

काशिका-वृत्तिः

क्रमादिभ्यो वुन् ४।२।६१

क्रम इत्येवम् आदिभ्यः शब्देभ्यः वुन् प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन् विषये। अणो ऽपवादः। क्रमकः। पदकः। क्रम। पद। शिक्षा। मीमंसा। सामन्।

लघु-सिद्धान्त-कौमुदी

क्रमादिभ्यो वुन् १०५८, ४।२।६०

क्रमकः। पदकः। शिक्षकः। मीमांसकः॥

लघु-सिद्धान्त-कौमुदी

इति रक्ताद्यर्थकाः ३ १०५८, ४।२।६०

लघु-सिद्धान्त-कौमुदी

अथ चातुरर्थिकाः १०५८, ४।२।६०

न्यासः

क्रमादिभ्यो वुन्। , ४।२।६०

बाल-मनोरमा

क्रमादिभ्यो वुन् १२५२, ४।२।६०

क्रमादिभ्यो वुन्। "तदधीते तद्वेद इत्यर्थे" इति शेषः। क्रमक इति। क्रममधीते वेत्ति वेत्यर्थः। क्रमादिगणं पठति-क्रमेत्यादि। क्रमादिरिति। अयं क्रमादिगण इत्यर्थः। "पदकः""मीमांसकः" इत्युदाहरणानि।

---

सूत्रम्

काशिका-वृत्तिः

अनुब्राह्मणादिनिः ४।२।६२

अनुब्राह्मणशब्दातिनिः प्रत्ययो भवति तदधीते तद्वेद इत्येतस्मिन् विषये। अणो ऽपवादः। ब्राह्मणसदृशो ऽयं ग्रन्थः अनुब्राह्मणम्। तदधीते अनुब्राह्मणी। अनुब्राह्मणिनौ, अनुब्राह्मणिनः। मत्वर्थेन अत इनिठनौ ५।२।११४ इति इनिना सिद्धम्? तत्र एतस्माट् ठन्नपि प्राप्नोति। अनभिधानान् न भविष्यति? अणो निवृत्त्यर्थं तर्हि वचनम्।

न्यासः

अनुग्राहृणादिनिः। , ४।२।६१

"ब्राआहृणसदृसोऽयं ग्रन्थोऽनुब्राआहृणम्" इति। यथार्थऽव्ययीभावं दर्शयति। ननु योऽनुब्राआहृणमधीते तस्यानुब्राआहृणमस्तीति तत्र मत्वर्थीयेनैवेनिना सिद्धम्, तत् किमर्थमिदम्? अण्बाधनार्थम्। यदीदं नोच्येत "तदधीते तद्वेद" ४।२।५८ इत्यण् प्रसज्येत॥

बाल-मनोरमा

अनुब्राआहृणादिनिः १२५३, ४।२।६१

अनुब्राआहृणादिनिः। सेषपूरणेन सूत्रं व्याचष्टे--तदधीते तद्वेदेत्यर्थे इति। इनिप्रत्यये नकारादिकार उच्चारणार्थः। तथा च नकारस्योपदेशेऽन्त्यत्वाऽभावान्नेत्संज्ञा। ननु "अत इनिठनौ" इति मत्वर्थे इनिनैव सिद्धत्वादिदं व्यर्थमित्यत आह--अण्बाधनार्थमिति। भाष्ये तु प्रत्याख्यातमेवेदम्।

तत्त्व-बोधिनी

अनुब्राहृणादिनिः १०१८, ४।२।६१

अण्बाधनार्थमिति। भाष्ये तु प्रत्याख्यातमेवेदं सूत्रं, तद्रीत्या त्वणिष्यत इति, अनभिधानान्नेति वा बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

वसन्तादिभ्यष् ठक् ४।२।६३

वसन्त इत्येवम् आदिभ्यः ठक् प्रत्ययो भवति तदधीते तद्वेद इत्यस्मिन् विषये। अणो ऽपवादः। वसन्तसहचरितो ऽयं ग्रन्थः वसन्तः। तम् अधीते वासन्तिकः। वार्षिकः। वसन्त। वर्षाशरदम्। हेमन्त। शिशिर। प्रथम। गुण। चरम। अनुगुण। अपर्वन्। अथर्वन्।

न्यासः

वसन्तादिभ्यष्टक्। , ४।२।६२

"{वसन्तसहचरितोऽयं ग्नथो वसन्तः-काशिका} वसन्तसहचरितो ग्रन्थो वसन्तः"इति। यो वसन्ते पठ()ते, नियोगेन यत्र च वसन्तो वण्र्यते स वसन्त सहचरितो भवति। "वर्षाशरदम्" इति। वर्षाश्च शरच्च वर्षाशरदम्। "द्वन्द्वाच्चुदषहान्तात् समाहारे" ५।४।१०६ इति टच्। समासान्तेन निर्देशः॥

बाल-मनोरमा

वसन्तादिभ्यष्ठक् १२५४, ४।२।६२

वसन्तादिभ्यष्ठक्। "तदधीते तद्वेद"त्येव। वासन्तिक इति। वसन्तवर्णनपरो ग्रन्थो वसन्तः। तमधीते वेत्ति वेत्यर्थः। अथर्वाणमिति। अथर्वणा प्रोक्तो वेदो लक्षमया अथर्वा, तमित्यर्थः। वस्तुतस्तु प्रोक्तप्रत्ययस्य "ऋषिभ्यो लुग्वक्तव्यः" इति वचनाल्लुक्। आथर्वणिक इत्यत्र "नस्तद्धिते" इति टिलोपमाशङ्क्याह--दाण्डिनायनेति। वान्तसंयोगपूर्वकत्वात्तु नाल्लोपः।

तत्त्व-बोधिनी

वसन्तादिभ्यष्ठक् १०१९, ४।२।६२

वसन्ता। उक्थादिष्वेव वसन्ता दीन् पठित्वा, वसन्तादिषु वा उक्थादीन्पठित्वा, अन्यतरच्छक्यमवक्तुम्। अथर्वाणमिति। अथर्वणा प्रोक्त उपचारादथर्वा। यद्वा "तेन प्रोक्ता"मित्यधिकारे---ऋषिभ्यो लुग्वक्तव्यः। वसिष्ठो वि()आआमित्रोऽनुवाक इत्युदाहृत्य अथवणो वा। "अथर्वा", "अथर्वणः"इति भाष्योक्तेः---- साधुः।

---

सूत्रम्

काशिका-वृत्तिः

प्रोक्ताल् लुक् ४।२।६४

प्रोक्तसहचरितः प्रत्ययः प्रोक्तः। प्रोक्तप्रत्ययान्तादध्येतृवेदित्रोः उत्पन्नस्य लुग् भवति। पाणिनिना प्रोक्तं पाणिनीयम्। तदधीते पाणिनीयः। आपिशलः। स्त्रियां स्वरे च विशेषः। पाणिनीया ब्राह्मणी।

न्यासः

प्रोक्ताल्लुक्। , ४।२।६३

युक्तो निर्देशो यदि प्रोक्तनामा ग्रन्थो व्याकरणादिर्भवति, न चासावस्ति; अन्यार्थेन ततः परः सम्भवतीत्येतं दोषमाकर्त्तुमाह-- "प्रोक्तसहचरितः" इत्यादि। साहचर्यात् सोऽयमित्यभेदोपचारेण प्रोक्तार्थे यो वहितः प्रत्ययः स प्रोक्तशब्देनोक्त इति दर्शयति। "पाणिनीयः" इति। "वृद्धाच्छः" ४।२।११३ तदन्तात् "तदधीते तद्वेद" ४।२।५८ इत्यण्। तस्य लुक् "पाणिनीयः"। आपिशलिना प्रोक्तमित्यण्, तस्य लुक्--- "आपिशलः"। कः पुनरत्र विशेषोऽर्थो लुकि सति, यावता तदेव रूपम्? इत्याह-- "स्त्रियाम्" इत्यादि। असति लुकि "टिड्ढाणञ्" ४।१।१५ इति ङीप् स्यात्, सोऽणः स्वरेणान्तोदात्तः। लुकि हि सति टाब्भवति, स्वरेण तु मध्योदात्तः। आपिशलिशब्दाल्लुकि सति स्वरे नास्ति विशेषः। सत्यपि हि

लुक्यन्तोदात्तत्वेन भवितव्यम्। स्त्रियान्तु पूर्वोक्तो विशेषो वत्र्तते--- न हि लुकि सति ङीब्भवति; सत्यप्यणि तत्रैव "अनुपसर्जनात्" ४।१।१४ इत्यधिकारात् प्रतिषेधात्, प्रोक्तार्थविहितस्य चाण इहोपसर्जनत्वात्॥

बाल-मनोरमा

प्रोक्ताल्लुक् १२५५, ४।२।६३

अथ पाणिनिशब्दं व्युत्पादयितुमुपक्रमते-प्रोक्ताल्लुक्। प्रोक्तशब्देन प्रोक्तार्थप्रत्ययो विवक्षितः। अध्येतृवेदितृप्रत्ययस्येति प्रकृतत्वाल्लभ्यते। तदाह--प्रोक्तार्थकेति। पण इति। स्तुरित्यर्थः। ननु "हलश्चे"ति घञि उपधावृद्धिः स्यादित्यत आह--घञर्ते इति। पणीति। "अत इनिठनौ" इति मत्वर्थे इनिः। तस्येति। पणिनो गोत्रापत्ये "तस्यापत्य"मित्यणि "पाणिन" इति रूपमित्यर्थः। अत्र अणोऽपत्यत्वात्तस्मिन्परे "इनण्यनपत्ये" इति प्रकृतिभावाऽभावाट्टिलोपे प्राप्ते।

---

सूत्रम्

काशिका-वृत्तिः

सूत्राच् च क उपधात् ४।२।६५

सूत्रवाचिनः ककार उपधादुपन्नस्य प्रत्ययस्य लुग् भवति। अप्रोक्तार्थ आरम्भः। पाणिनीयम् अष्टकं सूत्रम्। तदधीयते अष्टकाः पाणिनीयाः। दशका वैयघ्रपदीयाः। त्रिकाः काशकृत्स्नाः। सङ्ख्याप्रकृतेरिति वक्तव्यम्। इह मा भूत्, महावार्त्तिकं सूत्रम् अधीते माहावार्त्तिकः। कालापकम् अधीते कालापकः। कोपधातिति किम्? चतुष्टयम् अधीते चातुष्टयः।

न्यासः

सूत्राच्च कोपधात्। , ४।२।६४

कोपधादिति वचनात् स्वरूपग्रहणं न भवतीत्यतः सूत्रवाचिनो ग्रहणं विज्ञायत इत्याह-- "सूत्रवाचिनः प्रतिपादिकात्" इति। "अष्टकम्" इति। अष्टावध्यायाः परिमाणमस्य। "तदस्य परिमाणम्" ५।१।५६ इत्यनुवत्र्तमाने "संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" ५।१।५७ इति च "सख्याया अतिशदन्तायाः कन्" ५।१।२२ इति कन्। "संख्याप्रकृतेरिति वक्तव्यम्" इति। संख्या प्कृतिर्यस्य प्रत्ययस्य स संख्याप्रकृतिः। तदन्तात् कोपधादुत्पन्नस्य लुब्भवतीत्येतदर्थरूपं वक्तव्यम्, व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्-- वेति वत्र्तते, सा च व्यवस्थितविभाषा, तेन संख्याप्रकृतेरेव भविष्यति, नान्यस्मादिति। "{चातुष्टयः-- काशिका, चतुष्टयः-पदमञ्जरी।}चातुष्टयम्" इति। चत्वारोऽवयवा अस्येति "संख्याया अवयवे तयप्" ५।२।४२, "ह्यस्वात् तादौ तद्धिते" ८।३।९९ इति मूर्धन्यः, षत्वं भवति। एतत् संख्याप्रकृतिप्रत्ययान्तम्, न तु कोपधम्, किं तर्हि? योपधम्॥

बाल-मनोरमा

सूत्राच्च कोपधात् १२५८, ४।२।६४

सूत्राच्च को। ककारोपधादित्यनन्तरं "परस्ये"ति शेषः। ननु "प्रोक्ताल्लु"गित्येव सिद्धे किमर्थमिदमित्यत आह--अप्रोक्तार्थ आरम्भ इति। अप्रोक्तार्थादपि प्रत्ययात्परस्य लुगर्थमित्यर्थः। अष्टकमिति। "तदस्य परिमाण"मित्यधिकारे "सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" इति "सङ्ख्याया अतिशदन्तायाः क"न्निति च सूत्ररूपेऽर्थे कन्। अष्टका इति। अष्टकशब्दाध्येतृवेदितृप्रत्ययस्य?नेन लुक्, कोपधात्सूत्रवाचिनः परत्वादिति भावः।

सह्ख्याप्रकृतिकादिति। "सूत्राच्च कोपधा"दितिलुक्सङ्ख्याप्रकृतिकप्रत्ययान्तादेव परस्य भवतीत्यर्थः। माहावार्तिक इति। महावार्तिकं नाम सूत्रम्। तदधीते वेत्ति वा माहावार्तिकः। अत्र अणो न लुक्।

तत्त्व-बोधिनी

सूत्राच्छ कोपधात् १०२२, ४।२।६४

अष्टकमिति। "सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु"इति "सङ्ख्याया अतिशदन्तायाः कन्"।

सह्ख्याप्रकृतिकादिति वाच्यम्। सङ्ख्याप्रकृतिकीदिति। सङ्ख्याप्रकृतिकप्रत्ययन्तादित्य्रथः। कालापक इति। कलापिन्शब्दात्प्रोक्तार्थेऽण्। "सब्राह्मचारी"त्युपसङ्ख्यानाट्टिलोपः। ततोऽद्येतर्यण्। तस्य "प्रोक्ताल्लु गिति लुक्। कालापानामाम्नाय इत्य्रथे "गोत्रचरणाद्वुञ्"। ततोऽध्यतृवेदित्रणो न लुक्। स्वरे स्त्रियां च विशेषः।

---

सूत्रम्

काशिका-वृत्तिः

छन्दोब्राहमणानि च तद्विषयाणि ४।२।६६

प्रोक्तग्रहणम् अनुवर्तते। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति। अध्येतृवेदितृरत्ययविषयाणि। अनन्यभावो विषयार्थः। तेन स्वातन्त्र्यम् उपाध्यान्तरयोगो वक्यं च निवर्तते। कठेन प्रोक्तम् अधीयते कठाः। मौदाः। पैप्पलादाः। आर्चाभिनः। वाजसनेयिनः। ब्राहमणानि खल्वपि ताण्डिनः। भाल्ल्लविनः। शाट्यायनिनः। ऐतरेयिणः। ब्राह्मणग्रहणं किं, यावता छन्द एव तद्? ब्राह्मणविशेषप्रतिपत्त्यर्थम्। इह तद्विषयता मा भूत्, याज्ञवल्क्येन प्रोक्तानि ब्राह्मन्णानि याज्ञवल्क्यानि। सौलभानि। चकारो ऽनुक्तसमुच्चयार्थः। कल्पे काश्यपिनः। कौशिकिनः। सूत्रे पाराशरिणो भिक्षवः। शैलालिनो नटाः। कर्मन्दिनः। कृशाश्विनः। छन्दोब्राह्मणानि इति किम्? पाणिनीयं व्याकरणम्। पैङ्गी कल्पः।

न्यासः

छन्दोब्राआहृणानि च तद्विषयाणि। , ४।२।६५

"प्रोक्तग्रहणमनुवत्र्तते" इति। तच्चेहार्थात् प्रथमान्तं विज्ञायते छन्दोब्राआहृणानीत्यस्य समानाधिकरणार्थम्, अत आह--छन्दांसि ब्राआहृणानि च प्रोक्तप्रत्ययान्तानीति भवन्ति" (इति)। स्वरूपग्रहणमिह न भवति। तथा हि --प्रोक्तग्रहणमिहानुवत्र्तते, न च च्छन्दोब्राआहृणशब्दौ प्रोक्तप्रत्ययान्तौ। तस्माच्छन्दोब्राआहृणवाचिनो ये शब्दाः प्रोक्तप्रत्ययान्तास्ते गृह्रन्ते। किमर्थं पुनरिदमुच्यते? इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता लभ्यते। तथा हि क्वचित् तदन्तस्य स्वातन्त्र्यमुपलभ्यते, यता-- पाणिनिना प्रोक्तं पाणिनीयं शास्त्रम्। प्रोक्तार्थ एव वृत्तिः स्वातन्त्र्यम्। पाणिनीय शब्दस्य चात्र प्रोक्तार्थ एव वृत्तिः। क्वचिदुपाध्यन्तयोगः, यथा--- पाणिनीयं महत् भवत्सु विहितमिति। क्वचिद्वाक्यम्--पाणिनीयमधीत इति। क्वचिद्()वृत्तिः। पाणिनीय इति। तदिह छन्दोब्राआहृणानामध्येतृवेदितृविषया वृत्तिर्यथा स्यात्। प्रकारान्तरं मा भूदित्येवमर्थमिदमुच्यते। "अध्येतृवेदितृ" इति। अध्येतृवेदितृप्रत्ययो विषयेषामिति बहुव्रीहिः। "{अनन्यभावो--काशिका, पदमञ्जरी च} अन्यत्रभावो विषयार्थः" इति। यथा मत्स्यानां जलं विषय इत्यत्रानन्यत्रभावे विषयशब्दो वत्र्तते, तथेहापि। एतेन यद्यपि ग्रामसमुदायादिष्वर्थेषु विषयशब्दस्य वृत्तिः, तथापीहानन्यत्रभावे वत्र्तमानः संगृहृत इति दर्शयति। "तेन"इत्यादिना अनन्यत्रभाववृत्तिशब्दस्य फलं दर्शयति। एवं ह्रत्रन्यत्राभावो भवति यदि स्वातन्त्र्यादि न भवति। उपाध्यन्तरयोगो महत्त्वादिना विशेषेण सम्बद्धः कठ इति। "कठेन प्रोक्तम्" इति। "कलापि()औशभ्यायनान्तवासिभ्यश्च" ४।३।१०४ इति णिनिः, तस्य "कठचरकाल्लुक्" ४।३।१०७, ततः कठेन प्रोक्तमधीते तद्वेदेति ४।२।५८ पुनरण्, तस्यापि "प्रोक्ताल्लुक्" ४।२।६३ इति लुक्। "मौदाः, पैप्पलादाः" इति। "कलापिवैशम्पायनान्तेवासिभ्यश्च" ४।३।१०४ इति णिनिः-मोदेन प्रोक्तमिति, "कलापिनोऽण्" ४।३।१०८ इत्यण्, तदन्तात् "तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य "प्रोक्ताल्लुक्" ४।२।६३ इति लुक्। "आचार्भिनः" इति। ऋचाभेन

प्रोक्तमिति "कलापिवैशम्यायनान्तेवासिभ्यश्च" ४।३।१०४ इति णिनिः, तदन्तात् "तदधीते तद्वेद" ४।२।५८ इत्यण्। "वाजसनेयिनः" इति। वाजसनेयेन प्रोक्तमिति। "शौनकादिभ्यश्छन्दसि" ४।३।१०६ इति णिनिः, तदन्तात् "तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य लुक्। "ताण्डिनः" इति। ताण्ड्यशब्दाद्()गर्गादि ४।१।१०५ यञन्तात् प्रोक्तार्थे "पुराणप्रोक्तेषु ब्राआहृणकल्पेषु" ४।३।१०५ इति णिनिः, "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ इतियलोपः। ततः "तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य लुक्। "भाल्लविनः" इति। भाल्लविशब्दादिढन्तात् प्रोक्तार्थे पूर्ववण्णिनिः,तदन्तात् तद्वेद ४।२।५८ इत्यण्, तस्य लुक्। शाट()आयनिनः" इति। शाट()शब्दाद्()गर्गादि ४।१।१०५ यञन्तात् "यञिञोश्च" ४।१।१०१ इति फक्,ततः प्रोक्तार्थे पूर्ववण्णिनिः, तदन्तात् "तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य लुक्। "ऐतरेयिणः" इति।ऐतरेयशब्दाच्लुभ्रादिढगन्तात् ४।१।१२३ पूर्ववण्णिनिः, ततः "तदधीते" ४।२।५८ इत्यण्, तस्यु लुक्। "ब्राआहृणविशेषप्रतिपत्त्यर्थम्" इति। ब्राआहृणविशेषः पुराणप्रोक्तत्वम्। तस्य प्रतीतिः = प्रतिपत्तिर्यथा स्यादित्येवमर्थं ब्राआहृणग्रहणम्। "याज्ञवल्क्यानि" इति। याज्ञवल्क्यशब्दाद्गर्गादि ४।१।१०५ यञन्तात् प्रोक्तार्थे "कण्वादिभ्यो गोत्रे" ४।२।११० इत्यण्। "सौलभनि" इति सुलभेन प्रोक्तानीति। पूर्ववत् "कलापिनोऽण्" ४।३।१०८ इत्यण्। अत्र स्वातन्त्र्यं भवति। न हीह पुराणप्रोक्तत्वमस्ति; इदानीन्तेन प्रोक्तत्वात्। "काश्यपिनऋः, कौशिकिनः"इति। कश्यपेन प्रोक्तः कल्पः, कौशिकेन प्रोक्कत इति। " काश्यपकौशिकाभ्यामृषिभ्यां णिनिः" ४।३।१०३, तदन्तात् "तदधीते" ४।२।५८ इत्यण्, तस्य लुक्। "पारशरिणः, शैलालिनः" इति। पाराशर्येण प्रोक्तं सूत्रम्, शिलालिना प्रोक्तं सूत्रम्-- "पारशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" ४।२।५८ इत्यण्, तस्य लुक्। "कर्मन्दिनः, कृशा()इआनः" इति। कर्मन्देन प्रोक्तं सूत्रम्, कृशा()ओन प्रोक्तं सूत्रमिति "कर्मन्दकृशा()आआदिनिः" ४।३।१११ तदन्तात् "तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य लुक्। "पैङ्गी कल्पः"इति। पिङ्गेन प्रोक्तः कल्पः-- "पुराणप्रोक्त" ४।३।१०५ इत्यादिना णिनिः। तत्र स्वातन्त्र्यमेव भवति, न च तद्विषयता॥

बाल-मनोरमा

छन्दोब्राआहृणानि च तद्विषयाणि ३७६, ४।२।६५

छन्दोब्राआहृणानि। छन्दांसि-मन्त्राः, ब्राआहृणानि-विधिवाक्यानि। तेषां द्वन्द्वः। वेद इति यावत्, "मन्त्रब्राआहृणोर्वेदनामधेय"मिति स्मरणात्। "प्रोक्ताल्लु"गित्यतः प्रोक्तादित्यनुवर्तते। प्रथमाबहुवचनेन विपरिणम्यते। प्रोक्तप्रत्ययान्तानीति लभ्यते। तदाह--छन्दांसीत्यादिना। तद्विषयाणीत्यत्र तच्छब्देन अध्येतृवेदितृप्रत्यया विवक्षिताः। तैर्विषयः=अविनाभावो येषां तान--तद्विषयाणि। "षिञ्बन्धने"। विशिष्य सयो-बन्धः-विषयः। अविनाऽभाव इति यावत्। अध्येतृवेदितृप्रत्ययसंयुक्तान्येव स्युरित्यर्थः। फलितमाह--अध्येतृवेदितृप्रत्ययं विनेति। पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम्। पाणिनीयास्तदध्येतारो वेदितारो वेति वदध्येतृप्रत्ययं विनापि प्रयोगे प्राप्ते नियमार्थमिदम्। कठेनेति। कठेन प्रोक्तमधीयते इत्यर्थे "कठा" इत्युदाहरणमिति भावः। तदुपपादयति--वैशम्पायनेति। कठेन प्रोक्तमित्यर्थे "तेन प्रोक्त"मित्यणपवादः "वैशम्पायनान्तेवासिभ्यश्च" इति णिनिरित्यर्थः। तस्येति। णिनेः "कठचरकाल्लु"गित्यनेन लुगित्यर्थः। एवंच कठेन प्रोक्तो वेदभागः कठ इति स्थितम्। ततोऽणिति। तस्माल्लुप्तप्रोक्तप्रत्ययकात्कठशब्दात्तदधीते इति अणित्यर्थः। तस्य प्रोक्ताल्लुगिति। तस्य=अध्येत्रणः, "प्रोक्ताल्लुक्" इति लुगित्यर्थः। तथा च कठेन प्रोक्तमधीयते कठा इत्येवं कठशब्दस्य लुप्तप्रोक्तप्रत्ययान्तस्य अध्येत्रणा सहैव प्रयोगार्हता, नतु तेन विना केवलप्रोक्तप्रत्ययान्तस्येति भावः।

**** इति बालमनोरमायाम् रक्ताद्यर्थक प्रकरणम्।****

अथ तनादयः।

अथ उविकरणधातवो निरूप्यन्ते। तनुधातुरुदित्। "उदितो वे"ति प्रयोजनम्। तनादिकृञ्भ्य उः। कत्र्रर्थे सार्वधातुके तनादिभ्यः कृत्रश्च उप्रत्ययः स्यात्स्वार्थेइत्र्थः। शपोऽपवादः। तनोतीति। उप्रत्ययस्य तिपमाश्रित्य गुणः। तसादौ तु ङित्वान्न गुणः। तनुतः। झोऽन्तादेशे कृते "इको यणची"ति यण्। तन्वन्ति। तनोषि तनुथः। तनुथ। तनोमि। "लोपश्चाऽस्यान्यतरस्या"मित्यकारलोपविकल्पमभिप्रेत्याह -- तन्वः तनुव इति। तङ्याह - तनुते इति। तन्वाते तन्वते।तनुषे तन्वाथेतनुध्वे। तन्वे तनुवहे - तन्वहे तनुमहे - तन्हे। ततानेति। तेनतुः। तेनिथ। तेन। तेनिव। तङ्याह - तेने इति। तेनात् तेनिरे। तेनिषे तेनाथे तेनिध्वे। तेने तेनिवहे तेनिमहे।तनिता। तनिष्यति। तनिष्यते। तनोतु- तनुतात् तनुताम् तन्वतु। "उतश्चप्रत्यया"दिति हेर्लुकं मत्वाह -- तन्विति। तनुतात् तनुतम् तनुत। तनवानि। तनवाव तनवाम। अतनोत् अतनुताम् अतन्वन्। अतनोः। अतनम्, अतन्व- अतनुव। तनुयात्। तन्वीत। तनिषीष्ट। "अतो हलादे"रिति वृद्धिविकल्पं मत्वाऽऽह - अतनीत् अतानीदिति। अतनिष्टाम् अतनिषुः। अतनीः अतनिष्टम् अतनिष्ट। अतनिषम् अतनिष्व अतनिष्म। वृद्धिपक्षे अतानिष्टामित्यादि। अतनिष्यत्। लुङस्तङि प्रतमैकवचने, मध्यमपुरुषैकवचने च विशेषमाह ---

तत्त्व-बोधिनी

छन्दोब्राआह्मणानि च तद्विषयाणि ३२६, ४।२।६५

छन्दोब्राआह्मणानि। इह मण्डूक प्लुत्यानुवृत्तं "प्रोक्ता"दिति पञ्चम्यन्तं जसन्तत्वेन विपरिणम्यते, "छन्दोब्राआह्मणानी"त्यनेन सामानाधिकरण्यात्। प्रोक्तशब्दश्च प्रोक्तार्थके प्रत्यये लाक्षणिक इत्याशयेनाह--- प्रोक्तप्रत्ययान्तानीति। तद्विषयाणीति। तच्छब्देन अध्येतृवेदितृप्रत्ययः परामृश्यते। विषयशब्दस्त्वलिहानन्यभाववाची न तु देशवाचीत्यभिप्रेत्येह---प्रत्ययं विना न प्रयोज्यनीत्यर्थ इति। पाणिनीयं पाणिनीया इतिवदनियमेन प्रयोगे प्राप्ते नियमार्थमेतदिति भावः। छन्दोग्रहणादेव सिद्धे ब्राआह्मणग्रहणं चिरन्तनप्रोक्तब्राआह्मणानामेव तद्विषयत्वार्थम्। तेनेह न---याज्ञवल्क्यादयो हि पाणिन्यपेक्षया नूतना इति वृत्तिकृतां व्यवहारः। चकारोऽनुक्तसमुच्चयार्थः। तेन काश्यपिनः कौसिकिन इत्यत्र कल्पेऽपि तद्विषयत्वं सिद्धम्। "काश्यपकौसिकाभ्यामृषिभ्या"मिति प्रोक्ते णिनिः, अध्येत्रणो लुक्। छन्दोब्राआह्मणानीति किम्()। पाणिनीयं व्याकरणम्।

इति तत्त्वबोधिन्याम् रक्ताद्यर्थकाः।

अथ रुधादयः।

---

सूत्रम्

काशिका-वृत्तिः

तदस्मिन्नस्ति इति देशे तन्नाम्नि ४।२।६७

ततिति प्रथमा समर्थविभक्तिः। अस्मिनिति प्रत्ययार्थः। अस्ति ईत् प्रकृत्यर्थविशेषणम्। इतिकरणो विवक्षार्थः। देशे तन्नम्नि इति प्रत्ययार्थविशेषणम्। ततिति रथमासमर्थादस्मिनिति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थम् अस्ति चेत् तद् भवति यदस्मिनिति निर्दिष्टं देशश्चेत् स तन्नामा भवति, प्रत्ययान्तनामा, इतिकरणस् ततश्चेद् विवक्षा। उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः। बाल्बजः। पार्वतः। मत्वर्थीयापवादो योगः।

लघु-सिद्धान्त-कौमुदी

तदस्मिन्नस्तीति देशे तन्नाम्नि १०५९, ४।२।६६

उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः॥

बाल-मनोरमा

तदस्मिन्नस्तीति देशे तन्नाम्नि १२६०, ४।२।६६

अथ चातुरर्थिकान्प्रत्यायन्वक्तुमुपक्रमते--तदस्मिन्नस्तीति। तदस्मिन्नस्तीत्यर्थे प्रथमोच्चारितात्प्रथमान्तादणादयः स्युः। प्रत्ययान्तेन प्रकृतिनामके देसे गम्ये इत्यर्थः। प्रसिद्धदेशग्रहणार्थ इतिशब्दः। मतुपोऽपवादः।

तत्त्व-बोधिनी

तदस्मिन्नस्तीति देशे तन्नाम्नि १०२४, ४।२।६६

तदस्मिन्। अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात्प्रत्ययान्तनामा देशश्चेत्। तत्प्रत्ययान्तं नाम यस्येति बहुव्रीहिः। मतुपोऽयमपवादः। "इति शब्दस्तु सकल लोकप्रसिद्धे देशे यथा स्यात्, न त्वाधुनिकसङ्केतेऽपीत्येतदर्थः। उत्तरसूत्रयेऽपि "देशे तन्नाम्नी"त्यनुवर्तते।

---

सूत्रम्

काशिका-वृत्तिः

तेन निर्वृत्तम् ४।२।६८

तेन इति तृतीयासमर्थात् निर्वृत्तम् इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। देशे तन्नम्नि इति चतुर्ष्वपि योगेषु सम्बध्यते। सहस्रेण निर्वृत्ता साहस्री परिखा। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। हेतौ कर्तरि च यथायोगं तृतीया समर्थविभक्तिः।

लघु-सिद्धान्त-कौमुदी

तेन निर्वृत्तम् १०६०, ४।२।६७

कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी॥

न्यासः

तेन निर्वृतत्तम्। , ४।२।६७

"चतुर्ष्वपि" इति। अनन्तरातीतेऽस्मिन् वक्ष्यमाणयोश्च योगयोः। "कर्त्तरि च"इति। लक्ष्यानुरोधेन क्वचिद्धेतौ क्वचित् कर्त्तरि च-- सहरुओणेति हेतौ,कुशाम्बेनेति कर्त्तरि। यदा हेतौ तदा वृत्तेरकर्मकत्वान्निर्वृत्त इति कर्त्तरि निष्ठा, यदा कर्त्तरि तदाऽन्तर्भावितव्यमर्थत्वाता कर्मणि। अकर्मका अप्यन्तर्भावितण्यर्थाः सकर्मका भवन्ति॥

बाल-मनोरमा

तेन निर्वृत्तम् १२६१, ४।२।६७

तेन निर्वृत्तं। देशे तन्नाम्नीत्यनुवर्तते। तेन निर्वृत्तमित्यर्थे तृतीयान्तादणादयः स्युस्तन्नाम्नि देशे इत्यर्थः।

तत्त्व-बोधिनी

तेन निर्वृत्तम् १०२५, ४।२।६७

तेन निर्बृत्तम्। अन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः।

सूत्रम्

काशिका-वृत्तिः

तस्य निवासः ४।२।६९

तस्य इति षष्ठीसमर्थान् निवासः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। निवसन्त्यस्मिन्निति निवासः। ऋजुनावां निवासो देशः आर्जुनावो देशः। शैबः। शुदिष्ठः।

लघु-सिद्धान्त-कौमुदी

तस्य निवासः १०६१, ४।२।६८

शिबीनां निवासो देशः शैबः॥

न्यासः

तस्य निवासः। , ४।२।६८

बाल-मनोरमा

तस्य निवासः १२६२, ४।२।६८

तस्य निवासः। "तन्नाम्नि देशे" इत्येव। तस्य निवास इत्यर्थे षष्ठ()न्तादणादयः स्युस्तन्नाम्नि देशे इत्यर्थः। स्वत्ववान्विषयः, निवासस्तु वसतिमात्रं, स्वत्वाऽस्वत्वसाधारणमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अदूरभवश् च ४।२।७०

पूर्वा समर्थविभक्तिरनुवर्तते। तस्य इति षष्ठीसमर्थातदूरभवः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। विदिशायाः अदूरभवं नगरं वैदिशम्। हैमवतम्। चकारः पूर्वेषां त्रयाणाम् अर्थानाम् इह सन्निधानार्थः। तेन उत्तरेषु। चत्वारो ऽप्यर्थाः सम्बध्यन्ते।

लघु-सिद्धान्त-कौमुदी

अदूरभवश्च १०६२, ४।२।६९

विदिशाया अदूरभवं नगरं वैदिशम्॥

न्यासः

अदूरभवश्च। , ४।२।६९

बाल-मनोरमा

अदूरभवश्च १२६३, ४।२।६९

अदूरभवश्च। तस्येति तन्नाम्नि देशे इति चानुवर्तते। तस्य अदूरभव इत्यर्थे षष्ठ()न्तादणादयः स्युस्तन्नाम्नि देशे इत्यर्थः। नन्वत्र चकारः किमर्थ इत्यत आह--चकारेणेति। अदूरभव इति विघ्यनन्तरं प्रागुक्तास्त्रयोऽर्थाः पुनरुपस्थाप्यन्ते इत्यर्थः। किमर्थमित्यत आह--तेनेति। अन्यथा संनिहितत्वाददूरभव इत्येव उत्तरविधिष्वनुवर्तेतेति भावः।

चातुरर्थिकत्वमिति। चतुरर्थ्यां भव इत्यर्थे द्विगोरध्यात्मादित्वाट्ठञ्। तद्धितार्थद्विगौ तु "द्विगोर्लुगनपत्ये" इति लुक्स्यात्। केचित्तु चतुर्णां सूत्राणामर्थाश्चतुरर्थाः, तत्र भवाश्चातुरर्थिका इत्याहुः।

तत्त्व-बोधिनी

अदूरभवश्च १०२६, ४।२।६९

अदूर। अदूरमन्तिकम्। तत्र भवतीत्यदूरभवः। निपातनात्सप्तमीसमासः। चातुरर्थिकत्वामिति। चतुर्णामर्थानां समाहारश्चतुरर्थी। तत्र भवाश्चातुरर्थिकाः। अध्यात्मादित्तावट्ठञ्। चतुष्र्वर्थेषु भवा इति तद्धितार्थे द्विगौ तु "द्विगोर्लुगनपत्ये"इति ठञो लुक् स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

ओरञ् ४।२।७१

चत्वारो ऽर्थाः अनुवर्तन्ते। उवर्णान्तात् प्रातिपदिकात् यथविहितं समर्थविभक्तियुक्तातञ् प्रत्ययो भवति तदस्मिन्नस्ति इत्येवम् आदिष्वर्थेषु। अणो ऽपवादः। अरडु आरडवम्। कक्षतु काक्षतवम्। कर्कटेलु कार्कटेलवम्। नद्यां तु परत्वान् मतुब् भवति। इक्षुमती। अञधिकारः प्राक् सुबास्त्वादिभ्यो ऽणः।

न्यासः

ओरञ्। , ४।२।७०

"यथायथम्" इति। यथास्वम्। तत्र प्रथमे प्रथमासमर्थविभक्तियुक्तात्। द्वितीये तृतीयासमर्थविभक्तियुक्तात्। तृतीयचतुर्थयोः षष्ठीसमर्थविभक्तियुक्तात्। "नद्यास्तु परत्वान्मतुबेव भवति" इति। नद्यां मतुप्" ४।२।८४ इत्यनेन॥

बाल-मनोरमा

ओरञ् १२६४, ४।२।७०

ओरञ्। "तदस्मिन्नस्ती"त्यादिषु चतुष्र्वर्थेषु प्रथमोच्चारितात्तत्तद्विभक्त्यन्तादञ्स्यात्। अणोऽपवादः। अञधिकारः "सुवास्त्वादिभ्योऽण् इति यावत्। काक्षतवमिति। कक्षतुरस्मिन्नस्तीत्यादि विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

मतोश् च बह्वजङ्गात् ४।२।७२

बह्वचङ्गं यस्य असौ बह्वजङ्गओ मतुप्, तदन्तात् प्रातिपदिकातञ् प्रत्ययो भवति चातुरर्थिकः। अणो ऽपवादः। ऐषुकावतम्। सैध्राकावतम्। बह्वजङ्गातिति किम्? आहिमतम्। यावमतम्। अङ्गग्रहणं बह्वजिति तद् विशेषणम् यथा विज्ञायते, मत्वन्तविशेषणं मा विज्ञायि इति। मालावतां निवासो मालावतम्।

न्यासः

मतोश्च बह्वजङ्गात्। , ४।२।७१

"मालवतम्" इति। यदि बह्वजिति, न भवत्येव दोषः॥

बाल-मनोरमा

मतोश्च बह्वजङ्गात् १२६५, ४।२।७१

मतोश्च। सैध्रकावतमिति। सिध्रकावानस्मिन्नस्तीत्यादयश्चत्वारोऽर्थाः यथायोगं बोध्याः। आहिमतमिति। अहिमानस्मिन्नस्तीत्यादयोऽर्थाः। अहिशब्दस्य द्व्यच्कत्वादञ्नेति भावः।

तत्त्व-बोधिनी

मतोश्च बह्वजङ्गात् १०२७, ४।२।७१

मतोश्च। ननु "मतोर्बह्वचः"इत्यवास्तु, बह्वचो विहितो यो मतुप् तदन्तादिति वैयधिकरण्येन व्याख्यानादिष्टं सिद्ध्यति किमङ्ग ग्रहणेनेत्याशह्क निवारयति---अङ्गग्रहणमिति। मत्वन्तविशेषणमिति। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादङ्गग्रहणाऽभावे मत्वन्तविशेषणं स्यादेव। ततश्चाहिमतमित्यादावतिप्रसङ्गः स्याद्ति भावः।

---

सूत्रम्

काशिका-वृत्तिः

बह्वचः कूपेषु ४।२।७३

बह्वचः प्रातिपदिकातञ् प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेसु। अणो ऽपवादः। यथासम्भवमर्थाः सम्बध्यन्ते। दीर्घवरत्रेण निर्वृत्तः कूपः दैर्घवरत्रः। कापिलवरत्रः।

न्यासः

बह्वचः कूपेषु। , ४।२।७२

बाल-मनोरमा

बह्वचः कूपेषु १२६६, ४।२।७२

बह्वचः कूपेषु। बह्वचः प्रातिपदिकादञ्चतुर्ष्वर्थेषु। अणोऽपवादः दीर्घवरत्रेण निर्वृतः कूपः--दैर्घवरत्रः।

---

सूत्रम्

काशिका-वृत्तिः

उदक् च विपाशः ४।२।७४

विपाशः उत्तरे कूले ये कूपास्तेष्वभिधेयेषु अञ् प्रत्ययो भवति चातुरर्थिकः। अणो ऽपवादः। अबह्वजर्थ आरम्भः। दत्तेन निर्वृतः कूपः दात्तः। गौप्तः। उदकिति किम्? दक्षिणतो विपाशः कूपेषु अणेव दात्तः। गौप्तः। स्वरे विशेषः। महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य।

न्यासः

उदक् च विपाशः। , ४।२।७३

बाल-मनोरमा

उदक्च विपाशः १२६७, ४।२।७३

उदक्च विपाशः। उत्तरे कूले इति। विपाश्शब्दः शकारान्तो नदीविशेषवाची।

---

सूत्रम्

काशिका-वृत्तिः

सङ्कलादिभ्यश् च ४।२।७५

कूपेषु इति निवृत्तम्। सङ्कल इत्येवम् आदिभ्यः अञ् प्रत्ययो भवति चातुरर्थिकः। अणो ऽपवादः। यथासम्भवम् अर्थसम्बन्धः। सङ्गतः कलः सङ्कलः। सङ्क्लेन निर्वृत्तः साङ्कलः। पौष्कलः। सङ्कल। पुष्कल। उद्वप। उडुप। उत्पुट। कुम्भ। विधान। सुदक्ष। सुदत्त। सुभूत। सुनेत्र। सुपिङ्गल। सिकता। पूतीकी। पूलस। कूलास। पलाश। निवेश। गवेष। गम्भीर। इतर। शर्मन्। अहन्। लोमन्। वेमन्। वरुण। बहुल। सद्योज। अभिषिक्त। गोभृत्। राजभृत्। गृह। भृत। भल्ल। माल। वृत्।

न्यासः

सङ्कलादिभ्यश्च। , ४।२।७४

बाल-मनोरमा

सङ्कलादिभ्यश्च १२६८, ४।२।७४

सङ्कलादिभ्यश्च। निवृत्तमिति। व्याख्यानादिति भावः। अणोऽपवादः। पौष्कलमिति। पुष्कलेन निर्वृत्तमिति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

स्त्रीषु सौवीरसाल्वप्राक्षु ४।२।७६

देशे तन्नम्नि इत्यस्य विशेषनं सौवीरादयः, स्त्रीत्वं च। ङ्याप्प्रातिपदिकातञ् प्रत्ययो भवति चातुरर्थिकः, अणो ऽपवादः, सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि। सौवीरे तावत् दत्तमित्रेण निर्वृत्ता नगरी दात्तामित्री। साल्वे विधूमाग्निना निर्वृत्ता वैधूमाग्नी। प्राचि खल्वपि ककन्देन निर्वृत्ता काकन्दी। माकन्दी। मणिचरी। जारुषी।

न्यासः

स्त्रीषु सौवीरसाल्वप्राक्षु। , ४।२।७५

बाल-मनोरमा

स्त्रीषु सौवीरसाल्वप्राक्षु १२६९, ४।२।७५

स्त्रीषु सौवीर। सौवीरे इति। "उदाहरणं वक्ष्यते" इति शेषः। दात्तामित्री नगरीति। "टिड्ढे"ति ङीप्। साल्वे इति। "उदाह्रियते" इति शेषः। वैधूमाग्नीति। विधामाग्निना निर्वृत्तेत्यर्थः। अञि ङीप्। प्राचीति। प्राचि देशे उदाह्रियत इत्यर्थः। माकन्दीति। माकन्देन निर्वृत्तेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सुवास्त्वादिभ्यो ऽण् ४।२।७७

सुबास्तु इत्येवम् आदिभ्यः अण् प्रत्ययो भवति चातुरर्थिकः। अत्र उवर्णान्तलक्षणस्य कूपलक्षणस्य च अपवादः। सुवास्तोः अदूरभवं नगरं सौवास्तवम्। वार्णवम्। अण्ग्रहणं नद्यां मतुपो बाधनार्थम्। सौवास्तवी नदी। सुवास्तु। वर्णु। भण्डु। खण्डु। सेचालिन्। कर्पूरिन्। शिखण्दिन्। गर्त। कर्कश। शटीकर्ण। कृष्ण। कर्क। कर्ङ्कधू मती। गोह्य। अहिसक्थ। वृत्।

न्यासः

सुवास्त्वादिभ्योऽण्।, ४।२।७६

"उवर्मान्तलक्षणस्य" इत्यादि। य उवर्णान्तास्तेभ्यः "ओरञ्" ४।२।७० इति प्राप्तस्याञोऽपवादः। शेषेभ्यश्च "बह्वचः कूपेषु" ४।२।७२ इत्यादिना प्राप्तस्य कूपलक्षण्स्य। अथाण्ग्रहणं किमर्थम्, सुबास्त्वादिभ्यो यताविहितमेवोच्येत। पुनर्वचनं यो विहितो न च प्राप्नोति तदर्तं विज्ञायते। अणेव च विहितो न प्राप्नोति; अपवादेन बाधित्वा।अथ स भविष्यीत्यत आह--"अण्ग्रहणम्" इत्यादि। असति ह्रण्ग्रहणे "मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" (व्या।प।१०) इति नदीमतुपा सह सम्प्रसारणायां परत्वान्नदीपमतुप् स्यात्। अणो ग्रहणादणेव भवति। तस्मान्मतुपो बाधनार्थण्ग्रहणम्॥

बाल-मनोरमा

सुवास्त्वादिभ्योऽण् १२७०, ४।२।७६

सुवास्त्वादिभ्योऽण्। अत्र इति। "ओर"ञित्यस्यापवाद इत्यर्थः। सौवास्तवमिति। अणि ओर्गुणः। वार्णवमिति। वर्णोरदूरभवमित्यर्थः। ननु "ओर"ञित्येव सिद्धे पुनर्विधिसामर्थ्यादेव तदननुवृत्तौ अणि सिद्धे पुनरण्ग्रहणं व्यर्थमित्यत आह--अण्ग्रहणमिति।

---

सूत्रम्

काशिका-वृत्तिः

रोणी ४।२।७८

रोणीशब्दादन् प्रत्ययो भवति चातुरर्थिकः। यथासम्भवम् अर्थसम्बन्धः। कूपलक्षणस्य अञो ऽपवादः। रोणी इति को ऽयं निर्देशो, यावता प्रत्ययविधौ पञ्चमी युक्ता? सर्वावस्थप्रतिपत्त्यर्थम् एवम् उच्यते। रोणीशब्दः सर्ववस्थो ऽण्प्रत्ययम् उत्पादयति, केवलस् तदन्तश्च। रौणः। आजकरोणः। सैहिकरोणः।

न्यासः

रोणी।, ४।२।७७

"कोऽयं निर्देशः"इति। कुत्सितोऽयं निर्देश इत्यर्थः। कुत्सितं तु लक्षणातिक्रान्तत्वात्। तदेव लक्षणातिक्रान्तत्वं दर्शयितुमाह "यावता"इत्यादि। सर्वावस्था च केवलस्य तदन्तस्य च प्रतिपत्तिः प्रकृतत्वेन यथा स्यादित्येवमर्थमुच्यते। यदि "रोण्याः" इत्यादिनिर्देशः क्रियेत तदा "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न" (व्या।प।८९) इति केवलादेव स्यात, न तदन्तात्। रोणीति शास्त्रानपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिहोच्यते, तदस्याः परिभाषाया अनपेक्षणादिह तदन्तापि प्रत्ययः सिद्धो भवति। ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, न चेदं प्रातिपदिकम्; स्त्रीप्रत्ययान्तत्वात्। अथ मतम्-- "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति" (व्या।प।२९) इति प्रातिपदिकस्य तदन्तविधेः प्रतिषिध्यमानः स्त्रीप्रत्ययान्तस्यापि प्रतिषिध्यत इति,एतच्च यत्र हि प्रातिपदिकस्य स्वरूपग्रहणं तद्विषया परिभाषेति प्राग् ज्ञापितमेतत्? एवं तर्हि तस्य ज्ञापनस्य प्रायिकत्वं दर्शयति। तेन क्वचिदस्वरूपग्रहणेऽप्येषा परिभाषा प्रवत्र्तते। तेन कुमारीमाचष्टे कुमारयतीत्यत्र "जातिष्ठवत् प्रातिपदिकस्य" (वा।८१३)

इतीष्टवद्भावः सिद्धो भवति॥

बाल-मनोरमा

रोणी १२७१, ४।२।७७

रोणी। लुप्तपञ्चमीकमिदम्। तदन्तादिति। "येन विधि" रिति सूत्रस्थभाष्यादिह प्रत्ययविधावपि तदन्तविधिरिति भावः। रौण इति। रोण्या निर्वृत्तः कूप इत्यर्थः। आजकरौण इति। अजकरोण्या निर्वृत्त इत्यर्थः। अणि "यस्ये"ति ईकारलोपः।

तत्त्व-बोधिनी

रोणी १०२८, ४।२।७७

रोणी। रोणीशब्दः प्रत्ययमुत्पादयतीत्यर्थः। तथाच फलितमाह--रोणीशब्दादिति। पञ्चम्याः सौत्रो लुगित्यन्ये। तदन्तादिति। "येन विधि"रिति सूत्रे भाष्यस्थविसेषवचनात्, विशेषणविशेष्ययोः कामचारमाश्रित्य "समासप्रत्ययविधौ प्रतिषेधः"इत्यस्य प्रत्याख्यानाद्वा तदन्तविरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कौपधाच् च ४।२।७९

ककारौपधात् च प्रातिपदिकातन् प्रत्ययो भवति चातुरर्थिकः। यथासम्भवम् अर्थसम्बन्धः। कूपलक्षणस्य उवर्नलक्षणस्य च अञो ऽपवादः। कार्णच्छिद्रिकः कूपः। कार्णवेष्टकः। कृकवाकुना निर्वृतं कार्कवाकवम्। त्रैशङ्कवम्।

न्यासः

कोपधाच्च। , ४।२।७८

बाल-मनोरमा

कोपधाच्च १२७२, ४।२।७८

कोपधाच्च। कार्णच्छिद्रक इति। कर्णच्छिद्रकेण निर्वृत्तः कूप इत्यर्थः। कार्कवाकवमिति। कृकवाकुना निर्वृत्तः कूप इत्यर्थः। ओर्गुणः। आदिवृद्धौ रपरत्वम्। त्रैशङ्कवमिति। त्रिशङ्कुना निर्वृत्तः कूप इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

वुञ्छण्कठजिलसैनिरढ ण्ययफक्फिफिञिञ्ञ्यकक्ठको ऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाऽश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदाऽदिभ्यः ४।२।८०

वुञादयः स्पतदश प्रत्ययाः, अरीहणादयो ऽपि सप्तदश एव प्रातिपदिकगणाः। आदिशब्दः प्रत्येकम् अभिसम्बध्यते। तत्र यथासङ्ख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश प्रत्ययाः भवन्ति चातुरर्थिकाः। अणो ऽपवादः। यथासम्भवमर्थसम्बन्धः। अरीहणादिभ्यो वुञ् प्रत्ययो भवति। आरीहणकम्। द्रौघणकम्। अरीहण। द्रुघण। खदिर। सार। भगल। उलन्द। साम्परायण। क्रौष्ट्रायण। भास्त्रयण। मैत्रायण। त्रैगर्तायन। रायस्पोष। विपथ। उद्दण्ड। उदञ्चन। खाडायन। खण्ड। वीरण। काशकृत्स्न। जाम्बवन्त। शिंशिपा। किरण। रैवत। बैल्व। वैमतायन। सौसायन।

शाण्डिल्यायन। शिरीष। बधिर। अरीहणादिः। कृशाश्वादिभ्यः छण् प्रत्ययो भवति। कार्शाश्वीयः। आरिष्टीयः। कृशाश्व। अरिष्ट। अरीश्व। वेश्मन्। विशाल। रोमक। शबल। कूट। रोमन्। वर्वर। सुकर। सूकर। प्रतर। सुदृश। पुरग। सुख। धूम। अजिन। विनता। अवनत। विकुघास। अरुस्। अवयास। मौद्गल्य। कृशाश्वादिः। ऋश्यादिभ्यः कः प्रत्ययो भवति। ऋश्यकः। न्यग्रोधकः। ऋश्य। न्यग्रोध। शिरा। निलीन। निवास। निधान। निवात। निबद्ध। विबद्ध। परिगूढ। उपगूढ। उत्तराश्मन्। स्थूलबाहु। खदिर। शर्करा। अनडुः। परिवंश। वेणु। वीरण। ऋश्यादिः। कुमुदादिभ्यः ठच् प्रत्ययो भवति। कुमुदिकम्। शर्करिकम्। कुमुद। शर्करा। न्यग्रोध। इत्कट। गर्त। बीज। अश्वत्थ। बल्वज। परिवाप। शिरीष। यवाष। कूप। विकङ्कत। कुमुदादिः। काशादिभ्य इलः प्रत्ययो भवति। काशिलम्। वाशिलम्। काश। वाश। अश्वत्थ पलाश। पीयूष। विश। तृण। नर। चरण। कर्दम। कर्पूर। कण्टक। गृह। काशादिः। तृणादिभ्यः शः प्रत्ययो भवति। तृणशः। नडशः। तृण। नड। बुस। पर्ण। वर्ण। चरण। अर्ण। जन। बल। लव। वन। तृणादिः। प्रेक्षादिभ्य इनिप्रत्ययो भवति। प्रेक्षी। हलकी। प्रेक्षा। हलका। बन्धुका। ध्रुवका। क्षिपका। न्यग्रोध। इर्कुट। प्रेक्षादिः। अश्मादिभ्यो रप्रत्ययो भवति। अश्मरः। अश्मन्। यूष। रूष। मीन। दर्भ। वृन्द। गुड। खण्ड। नग। शिखा। अश्मादिः। सख्यादिभ्यो ढञ् प्रत्ययो भवति। साखेयम्। साखिदत्तेयम्। सखि। सखिदत्त। वायुदत्त। गोहित। भल्ल। पाल। चक्रपाल। चक्रवाल। छङ्गल। अशोक। करवीर। सीकर। सकर। सरस। समल। सख्यादिः। संकाशादिभ्यो ण्यप्रत्ययो भवति। सांकाश्यम्। कम्पिल्यम्। संकाश। काम्पिल्य। समीर। कश्मर। शूरसेन। सुपथिन्। सक्थच। यूप। अंश। एग। अश्मन्। कूट। मलिन। तीर्थ। अगस्ति। विरत। चिकार। विरह। नासिका। संकाशादिः। बलादिभ्यो यः प्रत्ययो भवति। बल्यः। कुल्यम्। बल। वुल। तुल। उल। डुल। कवल। वन। कुल। बलादिः। पक्षादिभ्यः फक् प्रत्ययो भवति। पाक्षायणः। तौषायनः। पक्ष। तुष। अण्ड। कम्बलिक। चित्र। अश्मन्। अतिस्वन्। पथिन् पन्थ च। पक्षादिः। कर्णादिभ्यः फिञ् प्रत्ययो भवति। कार्णायनिः। वासिष्ठायनिः। कर्ण। वसिष्ठ। अलुश। शल। डुपद। अनडुह्य। पाञ्चजन्य। स्थिरा। कुलिश। कुम्भी। जीवन्ती। जित्व। अण्डीवत्। कर्णादिः। सुतङ्गमादिभ्य इञ् प्रत्ययो भवति। सौतङ्गमिः। मौनिचित्तिः। सुतङ्गम। मुनिचित्त। विप्रचित्त। महापुत्र। श्वेत। गडिक। शुक्र। विग्र। बीजवापिन्। श्वन्। अर्जुन। अजिर। जीव। सुतङ्गमादिः। प्रगदिन्नादिभ्यः ज्यः प्रत्ययो भवति। प्रागद्यम्। प्रगदिन्। मगदिन्। शरदिन्। कलिव। खडिव। गडिव। चूडार। मार्जार। कोविदार। प्रगद्यादिः। वराहादिभ्यः कक् प्रत्ययो भवति। वाराहकम्। पालाशकम्। वराह। पलाश। शिरीष। पिनद्ध। स्थूण। विदग्ध। विजग्ध। विभग्न। बाहु। खदिर। शर्करा। वराहादिः। कुमुदादिभ्यः ठक् प्रत्ययो भवति। कौमुदिकम्। कुमुद। गोमथ। रथकार। दशग्राम। अश्वत्थ। शाल्मली। कुण्डल। मुनिस्थूल। कूट। मुचुकर्ण। कुमुदादिः। शिरीषशब्दो ऽरीहणादिषु, कुमुदादिषु, वराहादिषु च पठ्यते, औत्सर्गिको ऽपि तत इष्यते, तस्य च वरणादिषु दर्शनाल् लुब् भवति। तथा च उक्तम्, शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनम् इति।

न्यासः

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशा�आश्र्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णः, ४।२।७९

"औत्सिर्गिकोऽपि तत्रेष्यते" इति। यद्येवम्, तस्य श्रवणं प्राप्नोतीत्यत आह-- "तस्य च" इत्यादि। "तथा चोक्तम्" इत्यादि। तदेव द्रढयति-- औत्सर्गिक इत्येव। शिरीषाणामदूरभवो शिरीषाः, तस्य वनं शिरीषवनमिति भाष्यकारवचनाल्लभ्यते। विशेषविहितानांहि लुपा न भवितव्यम्। अत औत्सर्गिकस्य लुब्भवतीति विज्ञायते॥

बाल-मनोरमा

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशा�आश्र्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णः १२७३, ४।२।७९

वुञ्छण्। वुञ्, छण्, क, ठच्, इल, स, इनि, र, ढञ्, ण्य, य, फक्, फिञ्, इञ्, ञ्य, कक्, ठक् एतेषां सप्तदशानां द्वन्द्वात्प्रथमाबहुवचनम्।अरीहण, कृशा()आ, ऋश्य, कुमुद, काश, तृण, प्रेक्ष, अश्मन्, सखि, सङ्काश, बल, पक्ष, कर्ण, सुतङ्गम, प्रगदिन्, वराह,कुमुद एतेषां सप्तदशानां द्वन्द्वः। एते आदयो येषामिति बहुव्रीहेः पञ्चमीबहुवचनम्। यथासङ्ख्यावगमाय कुमुदशब्दयोरेकशेषो न कृतः। प्रगदिन्शब्दे नलोपाऽभावस्तु इकारान्तत्वभ्रमनिरासाय। द्वन्द्वान्ते श्रूयमाणस्य आदिशब्दस्य अरीहणादिषु प्रत्येकमन्वयः। तथा च अरीणादिभ्यो बुञ्, कुशा()आआदिभ्यश्छणित्येवं सप्तदश वाक्यानि सम्पन्नानि। तदाह--सप्तदशभ्य इति। अरीहणादिसप्तदशगणेभ्यो वुञादयः प्रत्ययाः क्रमात्स्युरित्यर्थः। चतुरश्र्यामिति। "तदस्मिन्न"स्तीति देशे तन्नाम्नि""तेन निर्वृत्तं""तस्य निवासः" "अदूरभवश्चे"ति चतुष्र्वर्थेषु प्रथमोच्चारितात्तत्तद्विभक्त्यन्ताद्यथायोगं प्रत्यया इति फलितम्। एतेषु गणेषु चेतनवाचका अचेतनवाचकाश्च सन्ति। तत्र यथायोगं चतुरश्र्या अन्वयः। प्रेक्षीति। प्रेक्षते इति प्रेक्षः, तेन निर्वृत्त मित्यर्थः। प्रेक्षया निर्वृत्तमिति वा। पथः पन्थ चेति। पक्षादिगणसूत्रमिदम्। पान्थायन इति। पथोऽदूरभव इत्यर्थः।

तत्त्व-बोधिनी

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशा�आश्र्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णः
१०२९, ४।२।७९

वुञ्छण्। "ठक"इत्यन्तमेकं समस्तं पदम्। अरीहणादि त्वपरम्। तत्र प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय, द्वितीयेन काशादिकुमुदान्तद्वन्द्वेन सह पुनद्र्वन्द्वो बोध्यः। तेन कुमुदशब्दस्य द्विःपाठेऽपि नैकसेषः। आदिशब्दः प्रत्येकं संबध्यत इत्याह---अरीहणादिभ्य इति। पक्षाद्यन्तर्गणसूत्रमाह--पथ इति।

---

सूत्रम्

काशिका-वृत्तिः

जनपदे लुप् ४।२।८१

देशे तन्नाम्नि यश्चातुरर्थिकः प्रत्ययः भवति, तस्य देशविशेषे अनपदे ऽभिधेये लुब् भवति। ग्रामसमुदायो जनपदः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। मत्स्याः। अङ्गाः। बङ्गाः। मगधाः। सुह्माः। पुण्ड्राः। इह कस्मान् न भवति, उदुम्बराः अस्मिन् सन्ति औदुम्बरो जनपदः, वैदिशो जनपदः इति? तन्नाम्नि इति वर्तते। न च अत्र लुबन्तं तन्नामधेयं भवति।

न्यासः

जनपदे लुप्। , ४।२।८०

बाल-मनोरमा

जनपदे लुप् १२७४, ४।२।८०

जनपदे लुप्। चातुरर्थिकस्येति। प्रकरणलभ्यमिदम्।

तत्त्व-बोधिनी

जनपदे लुप् १०३०, ४।२।८०

जनपदे लुप्। तन्नाम्नीत्येव। नेह--उदुम्बराः सन्त्यास्मिन्नौदुम्बरो जनपदः। न ह्यत्र लुबन्तं नामधेयम्।

जनपदस्यैकत्वादेकवचने प्राप्ते बहुवचनादिफलकमतिदेशमाह--।

---

सूत्रम्

काशिका-वृत्तिः

वरणाऽदिभ्यश् च ४।२।८२

वरण इत्येवम् आदिभ्यः उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुप् भवति। अजनपदार्थ आरम्भः। वरणानाम् अदूरभवं नगरं वरणाः। शृङ्गी। शाल्मलयः। चकारो ऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति। कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी। शिरीषाः। काञ्ची। वरणाः। पूर्वौ गोदौ। आलिङ्ग्यायन। पर्णी। शृङ्गी। शाल्मलयः। सदाण्वी। वणिकि। वणिक। जालपद। मथुरा। उज्जयिनी। गया। तक्षशिला। उरशा। अकृत्या।

लघु-सिद्धान्त-कौमुदी

वरणादिभ्यश्च १०६५, ४।२।८१

अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः॥

न्यासः

वरणादिभ्यश्च। , ४।२।८१

बाल-मनोरमा

वरणादिभ्यश्च १२८२, ४।२।८१

अथ प्रकृतमारभते--वरणादिभ्यश्च। "जनपदे लु"बित्युत्तरमिदं सूत्रम्। वरणादिभ्यः परस्य चातुरर्थिकप्रत्ययस्य लुप्स्यादित्यर्थः। पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह--अजनपदार्थ इति। वरणानामिति। वरणा नाम नदी काश्या उत्तरतः प्रसिद्धा। अवयवाभिप्रायं, पूजार्थ वा बहुवचनम्। वरणानामदूरभवं नगरं-वरणाः। अत्र लुप्तप्रत्ययान्तस्य वरणाशब्दस्य नगरे वाच्ये प्रकृतिवत्स्त्रीलिङ्गं बहुवचनं च।

तत्त्व-बोधिनी

वरणादिभ्यश्च १०३५, ४।२।८१

वरणादि। चकारोऽनुक्तसमुच्चयार्थः, तेनास्याकृतिगणत्वं सिद्धम्। वरणा इति। एवं कटुबदरी, शिरीषाः, गोदौ, खलतिकमित्यादीन्युदाहर्तव्यानि। वत्वस्याऽसिद्धत्वात्तस्मिन्कर्तव्ये टिलोपो न स्थानिवदित्याशयेनाह--झय इति। नड्वानित्यत्पापि परत्वात् "झयः"इत्यनेनैव वकारो न तु "मादुपधायाः"इत्यनेनेति भावः। न चाऽसिद्धत्वात् "मादुपधायाः"इत्येव तत्र न्याय्यमिति वाच्यं, "प्रकरणे प्रकरणमसिद्धं, न तु योगे योगः"इति "उपसर्गादसमासेऽपी"त्यत्र भाष्ये निर्णीतत्वात्। ननु वेतस्वानित्यत्र वेतसशब्दस्य सुबन्तत्वेन पदत्वात्ङ्भतुपो डित्त्वसामर्थ्याट्टिलोपे एकदेशविकृतन्यायेन पदत्वात्सस्य रुत्वं स्यात्। न च स्थानिवत्त्वेन निर्वाहः। पूर्वत्रासिद्धे तन्निष #एधादिति चेत्, मैवम्। अन्तरङ्गं रुत्वं प्रति बहुरङ्गस्य टिलोपस्याऽसिद्धत्वात्। न च षाष्ठी बहिरङ्गपरिभाषा त्रैपादिकं न जानातीति वाच्यं, कार्यकालपक्षाभ्युपगमात्। नन्वेवमपि "स्वादिषु"इति सान्तस्य पदत्वे तदाश्रयरुत्वस्यान्तरङ्गत्वाऽभावाद्बहिरङ्गपरिभाषा न प्रवर्तते इति रुत्वं दुर्वारमेव। न च नद्यां मतु"बिति चतरर्थ्यां मतुपा विधानाच्चातुरर्थिको ङ्भतुप् मत्वर्थीय इति "तसौ मत्वर्थे" इत्यनेन भत्वं शङ्क्यं, टिलोपस्य स्थानिवत्त्वात्। न च पदत्वेऽप्येवम्।तस्य रुत्वविधिना सह कार्यकालतया "पूर्वत्रासिद्धे ने"ति निषेधादिति चेत्, अत्राहुः---पदसंज्ञायां

यथोद्देशपक्षाश्रयणात् "पूर्वत्रिसिद्धे ने"ति निषेधाऽप्रवर्तनात्स्थानिवत्त्वप्रवृत्या सान्तस्याऽपदत्वादिति। एतेन घटी आमलकीत्यत्र "स्वादिषु"इति पदत्वाज्जश्त्वं स्यात्, औत्सीत्यत्र तु संयोगान्तलोपः स्यादिति शङ्कपि परास्तेति दिक्। ननु प्रक्रियालाघवाय ड्वतुबेव विधीयताम्, अथवा "कुमुदनडवेतसेभ्यो डि"दिति प्रकृतस्य मतुपो डित्वमतिदिश्यतां, किमनेन ड्भतु ब्विधानेन()। सत्यम्। अन्यतो विधानार्थं तत्। तत्सिद्धार्थकथनपरं वार्तिकमाह---महिषाच्चेति।

---

सूत्रम्

काशिका-वृत्तिः

शर्कराया वा ४।२।८३

शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब् भवति। वाग्रहणं किम्, यावता शर्कराशब्दः कुमुदादिषु वराहादिषु च पठ्यते, तत्र पाठसमर्थ्यात् प्रत्ययस्य पक्षे श्रवणं भविष्यति? एवं तर्ह्येतज् ज्ञापयति, शर्कराशब्दादौत्सर्गिको भवति, तस्य अयं विकल्पितो लुपिति। शर्करा। शार्करम्। गणपाठाच् च श्रवणम् उत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ, तदेवं षड् रूपाणि भवन्ति। शर्करा, शार्करम्, शर्करिकम्, शार्करकम् , शार्करिकम्, शर्करीयम् इति।

न्यासः

शर्कराया वा। , ४।२।८२

"पाठसामथ्र्यात्ित्यादि। यदि नित्यो लुप् स्यात्, गणयोरस्य पाठोऽनर्थकः स्यात्। तस्मात् पाठसमाथ्र्यादेव पक्षे श्रवणं भविष्यतीत्यत आह। "एवं तर्हि" इत्यादिना वाघणस्य ज्ञापकं दर्शयति। "शर्करा" इति। औत्सर्गिकस्य लुप्। "शार्करम्" इति। त्स्यैव पक्षे श्रवणम्। "शर्करकम्" इति। कुमुदादित्वाड्डच्। "शार्करकम्" इति। वराहादित्वात् कक्। शार्करिकम्, शर्करीयम्" इति। उत्तरसूत्रेण ठक्छौ॥

बाल-मनोरमा

शर्कराया वा १२८३, ४।२।८२

शर्कराया वा। "लु"बित्यनुवर्तते। प्रत्यासत्त्या चातुरर्थिकस्येति लभ्यते। तदाह--अस्मादिति।

---

सूत्रम्

काशिका-वृत्तिः

ठक्छौ च ४।२।८४

शर्कराशब्दात् ठक् छ इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ। यथासम्भवम् अर्थसम्बन्धः। शार्करिकम्। शर्करीयम्।

न्यासः

ठक्छौ च। , ४।२।८३

बाल-मनोरमा

ठक्छौ च १२८४, ४।२।८३

ठक्छौ च। "शर्कराया इत्यनुवर्तते। तदाह--शर्कराया एतौ स्त इति। ठच्ककाविति। कुमुदादित्वाड्डच्, वराहादित्वात्कगिति विवेकः। वाग्रहणेति। अन्यथा तत्र पाठसामथ्र्यादेव ठचः ककश्च लोपविकल्पसिद्धेस्तद्वैयथ्र्यादिति भावः। शर्करेति। अणो लुपि युर्तवद्भावे रूपम्। शार्करमिति। अणि रूपम्। शार्करिकमिति। ठकि रूपम्। शर्करीयमिति। छे रूपम्। शर्करिकमिति।

ठचि रूपम्। शार्करकमिति। ककि रूपम्। शर्कराः सन्त्यस्मिन्नित्यर्थः, शर्कराबिर्निर्वृत्तमपि वा।

---

सूत्रम्

काशिका-वृत्तिः

नद्यां मतुप् ४।२।८५

नद्याम् अभिधेयायां मतुप् प्रत्ययो भवति चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। उदुम्बरा यस्यां सन्ति उदुम्बरवती। मशकावती। वीरणावती। पुष्करावति। इक्षुमती। द्रुमती। इह कस्मान् न भवति, भागीरथी, भैमरथी? मतुबन्तस्य अतन्नामधेयत्वात्।

न्यासः

नद्यां मतुप्। , ४।२।८४

"उदुम्बरावती"इति। "मतौ बह्वजोऽनजिरादीनाम्" ६।३।११८ इति दीर्घः॥

बाल-मनोरमा

नद्यां मतुप् १२८५, ४।२।८४

नद्यां मतुप्। चातुरर्थिक इति। शेषपूरणम्। इक्षमतीति। मतुपि उपावितौ। इक्षवः सन्त्यस्मिन् इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

मध्वादिभ्यश् च ४।२।८६

मधु इत्येवम् आदिभ्यः शब्देभ्यो मतुप् प्रत्ययो भवति चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्। बिसवान्। मधु। बिस। स्थाणु। मुष्टि। इक्षु। वेणु। रम्य। ऋक्ष। कर्कन्धु। शमी। किरीर। हिम। किशरा। शर्पणा। मरुत्। मरुव। दार्वाघाट। शर। इष्टका। तक्षशिला। शक्ति। आसन्दी। आसुति। शलाका। आमिधी। खडा। वेटा। मध्वादिः।

न्यासः

मध्वादिभ्यश्च। , ४।२।८५

बाल-मनोरमा

मध्वादिभ्यश्च १२८६, ४।२।८५

मध्वादिभ्यश्च। शेषपूरणेन सूत्रं व्याचष्टे--मतुप्स्याच्चातुरर्थिक इति। मधुमानिति। मधूनां निवास इत्यर्थः। पूर्वेण सिद्धे किमर्थमिदमित्यत आह--अनद्यर्थ इति।

---

सूत्रम्

काशिका-वृत्तिः

कुमुदनडवेतसेभ्यो ड्मतुप् ४।२।८७

कुमुद नड वेतस इत्येतेभ्यः शब्देभ्यः ड्मतुप् प्रत्ययो भवति चातुरर्थिकः। कुमुद्वान्। नड्वान्। वेतस्वान्। महिषाच् च इति

वक्तव्यम्। महिष्मान् नाम देशः।

लघु-सिद्धान्त-कौमुदी

कुमुदनडवेतसेभ्यो ड्मतुप् १०६६, ४।२।८६

न्यासः

कुमुदनडवेतसेभ्यो ड्मतुप्। , ४।२।८६

कुमुदशब्दाद्वच्ठकोः प्राप्तयोः। नडशब्दादपि "नडशादाड्डवलच्" ४।२।८७ इति "नडादीनां कुक्च" ४।२।९१) इति। अ()स्मश्च विधौ प्राप्ते वेतसशब्दादपि मतुब् विधीयते। "महिषाच्च" इत्यादि। "महिषशब्दान्मतुब् विधीयते" इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- पूर्वसूत्राच्चकारोऽनुवत्र्तते, स चानुक्तसमच्चयार्थः। तेन महिषशब्दादपि भविष्यतीति॥

बाल-मनोरमा

कुमुदनडवेतसेभ्यो ड्भतुप् १२८७, ४।२।८६

कुमुदनड। कुमुद नड वेतस-एतेभ्यो ड्मतुप्स्यादित्यर्थः। डकार उपौ च इतः। अयं मत्वर्थ एवेति "न पदान्ते ति" सूत्रभाष्यकैयटयोः स्थितम्। कुमुद्वानिति। कुमुदाः अस्मिन्सन्तीति विग्रहः। ड्भतुपि डित्वाट्टिलोपः। नड्वानिति। नडा अस्मिन्सन्तीति विग्रहः। "कुमुद्वान्कुमुदप्राये" इस्यमरः। वेतस्वानिति। वेतसा अस्मिन्सन्तीति विग्रहः। आद्ययोरिति। कुमुद्वच्छब्दे, नड्वच्छब्दे च "झयः" इति मतुपो मस्य वकारः, वेतस्वच्छब्दे तु "मादुपधायाः" इति मस्य वकार इत्यर्थः। वस्तुतस्तु नड्वच्छब्देऽपि "झयः" इत्यस्याऽसिद्धत्वात् "मादुपधायाः" इत्येव न्याय्यं, "प्रकरणे प्रकरणमसिद्धं, नतु एकस्मिन्नेव प्रकरणे पूर्वयोगं प्रति परस्याऽसिद्धत्व"मित्यस्य "उपसर्गादसमासे" इति सूत्रभाष्ये दूषितत्वात्। "वेतस्वा"नित्यत्र रुत्वं तु न, अल्लोपस्य स्थानिवत्त्वात्। "न पदान्ते"ति निषेधस्तु न, पदे अन्त इति विगृह्न पदे परतश्चरमावयवे कर्तव्ये पदपदस्थाऽजादेशस्यैव तन्निषेधप्रवृत्तेर्भाष्येऽभ्युपगतत्वात्। पूर्वत्रासिद्धे न स्थानिव"दिति निषेधोऽपि न, पदे अन्त इति विगृह्न तत्र स्थानिवत्त्वनिषेधव्यावृत्तिसाधनपरभाष्यप्रामाण्येन पदचरमावयवकार्यविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणादिति शब्देन्दुशेखरे विस्तरः।

माहिषाच्चेत्यनन्तरं तु "ड्भतु"बिति शेषः। महिष्मानिति। महिषा अस्मिन्सन्तीति विग्रहः। टित्वाट्टिलोपः। अल्लोपस्य स्थानिवत्त्वान्न जश्त्वम्। "प्रत्यये भाषायां नित्य"मिति तु न, तस्य सवर्णे परतो विधेः। न हि षकारसवर्णोऽनुनासिकोऽस्ति।

---

सूत्रम्

काशिका-वृत्तिः

नडशादाड् ड्वलच् ४।२।८८

नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः। यथासम्भवम् अर्थसम्बन्धः। नड्वलम्। शाद्वलम्।

लघु-सिद्धान्त-कौमुदी

नडशादाड्ड्वलच् १०६९, ४।२।८७

नड्वलः। शाद्वलः॥

न्यासः

नडशादाड्ड्वलच्। , ४।२।८७

बाल-मनोरमा

नडशादाड्ड्वलच् १२८८, ४।२।८७

नडशादाड्ड्वलच्। नड्वल इति। डित्त्वाट्टिलोपः। शाद्वल इति। शादा अस्मिन्सन्तीति विग्रहः। शादो--दन्त्योपधः। डोपध इत्यन्ये। "नडप्राये नड्वान्नड्वल इत्यपी"त्यमरः। "शाद्वलः शादहरिते" इति च।

---

सूत्रम्

काशिका-वृत्तिः

शिखाया वलच् ४।२।८९

शिखाशब्दात् वलच् प्रत्ययो भवति चातुरर्थिकः। यथासम्भवम् अर्थसम्बन्धः। शिखावलं नाम नगरम्। मतुप्प्रकरणे ऽपि शिखाया वलचं वक्ष्यति, तददेशार्थं वचनम्।

लघु-सिद्धान्त-कौमुदी

शिखाया वलच् १०७०, ४।२।८८

शिखावलः॥

लघु-सिद्धान्त-कौमुदी

इति चातुरर्थिकाः ४ १०७०, ४।२।८८

लघु-सिद्धान्त-कौमुदी

अथ शैषिकाः १०७०, ४।२।८८

न्यासः

शिखाया वलच्। , ४।२।८८

बाल-मनोरमा

शिखाया वलच् १२८९, ४।२।८८

शिखाया वलच्। निर्वृत्ताद्यर्थं सूत्रं, देशे तन्नाम्नि अणो बाधनार्थं च। "दन्तशिखात्संज्ञाया"मिति पञ्चमे वक्ष्यमाणं तु अदेशे।ऽपि शिखावल इति रूपार्थछम्।

तत्त्व-बोधिनी

शिखाया वलच् १०३६, ४।२।८८

शिखायाः निर्वृत्ताद्यर्थे देशे तन्नाम्नयणो बाधनार्थं चेदम्। "दन्तशिखात्संज्ञाया"मिति पञ्चमे वक्ष्यमाणं त्वदेशेऽपि"शिखाबल"इति रूपसिद्ध्यर्थम्।

---

सूत्रम्

काशिका-वृत्तिः

उत्करादिभ्यश् छः ४।२।९०

उत्कर इत्येवम् आदिभ्यः छः प्रत्ययो भवति चातुरर्थिकः। यथासम्भवम् अर्थसम्बन्धः। उत्करीयम्। शफरीयम्। उत्कर। संफल। शफर। पिप्पल। पिप्पलीमूल। अश्मन्। अर्क। पर्ण। सुपर्ण। खलाजिन। इडा। अग्नि। तिक। कितव। आतप। अनेक। पलाश। तृणव। पिचुक। अश्वत्थ। शकाक्षुद्र। भस्त्रा। विशाला। अवरोहित। गर्त। शाल। अन्य। जन्य। अजिन। मञ्च। चर्मन्। उत्क्रोश। शान्त। खदिर। शूर्पणाय। श्यावनाय। नैव। बक। नितान्त। वृक्ष। इन्द्रवृक्ष। आर्द्रवृक्ष। अर्जुनवृक्ष। उत्करादिः।

न्यासः

उत्करादिभ्यश्छः। , ४।२।८९

बाल-मनोरमा

उत्करादिभ्यश्छः १२९०, ४।२।८९

उत्करादिभ्यश्छः। "चातुरर्थिक" इति शेषः। उत्करीय इति। देशविशेषोऽयम्। उत्करेण निर्वृत्तमिति वा, तस्य निवासः, तस्य अदूरभव इति वा।

---

सूत्रम्

काशिका-वृत्तिः

नडादीनां कुक् च ४।२।९१

नड इत्येवम् आदीनां कुगागमो भवति, छश्च प्रत्ययश्चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। नडकीयम्। प्लक्षदीयम्। नड। प्लक्ष। बिल्व। वेणु। वेत्र। वेतस। तृण। इक्षु। काष्ठ। कपोत। क्रुञ्चायां ह्रस्वत्वं च। तक्षन्नलोपश्च।

न्यासः

नडादीनां कुक् च। , ४।२।९०

"क्रुञ्चाया ह्यस्वत्वञ्च" इति। क्रुञ्चाशब्दस्य कुग्भवति ह्यस्वत्वञ्च-- "क्रौञ्चकीयम्" इति। "तिक्षन्नलोपश्च" इति। तक्षन्नित्यस्य कुगागमो भवति, नलोपश्च-- "तक्षकीयम्" इति।

बाल-मनोरमा

नडादीनां कुक् च १२९१, ४।२।९०

नडादीनां कुक्च। नडादिभ्यछः स्याच्चातुरर्थिकः, प्रकृतेः कुक्च। क्रुञ्चा ह्यस्वत्वं चेति। नडादिगणसूत्रम्। क्रुञ्चाशब्दाच्छः, प्रकृतेः कुक्, आकारस्य ह्यस्वश्च। क्रुञ्चकीय इति क्रुञ्चा अस्मिन्सन्तीत्यादिविग्रहः। तक्षन्नलोपश्च। इदमपि गमसूत्रम्। तक्षन्शब्दाच्छः कुक्, नकारस्य लोपश्च।

तत्त्व-बोधिनी

नडादीनां कुक् च ३४०, ४।२।९०

नडादीनां। नड प्लक्ष बिल्व वेणु वेत्र वेतसादयो नडादयः। नडाद्यन्तर्गणसूत्रमाह---क्रुञ्चेति एवं तक्षन्नित्यपि। उभयत्रापि

षष्ठ्याः सौत्रो लुक्। "ढे लोप "इत्यतो लोप इत्यनुवर्तमाने लुग्()ग्रहणं व्यर्थमित्या शङ्क्याह---सर्वलोपार्थमिति। यमात्रस्येति। न च "आदेः परस्य"इतीकारस्य भाव्यमिति वाच्यं, "सूर्यतिष्ये" त्यतो यकारसंबद्धस्यैव लोपस्याऽनुवर्ततनादिति भावः।

इति तत्त्वबोधिन्यां चातुरर्थिकाः।

तिङन्ते चुरादयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ शेषे ७।१ ४।३।१२० प्रत्ययः ? परश्च ?

अर्थः॥

अपत्यादिभ्यः चातुरर्थ-पर्यन्तेभ्यः यः अन्यः अर्थः सः शेषः। इतः अग्रे वक्ष्यमाणाः प्रत्ययाः शेषे अर्थे भवन्ति, अर्थात् इतः आरभ्य {तस्येदम् (४।३।१२०)} इति पर्यन्तं ये अर्थाः सन्ति, तेषु सर्वेषु अर्थेषु वक्ष्यमाणाः प्रत्ययाः भवन्ति। राष्ट्रावारपाराद्धखौ, इति वक्ष्यति, तत्र घखौ प्रत्ययौ सर्वेषु अर्थेषु भवतः। यथा - राष्ट्रे भवः राष्ट्रियः। राष्ट्रात् आगतः राष्ट्रियः। राष्ट्रे भक्तिः अस्य राष्ट्रियः।
काशिका-वृत्तिः
शेषे ४।२।९२

शेषे इत्यधिकारो ऽयम्। यानित ऊर्ध्वं प्रत्ययाननुक्रमिष्यामः, शेषे ऽर्थे ते वेदितव्याः। उपयुक्तादन्यः शेषः। अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्यो ऽन्यो ऽर्थः। शेषः। तस्य इदं विशेषा ह्यपत्यसमूहादयः, तेषु घादयो मा भूवनिति शेषाधिकारः क्रियते। किं च सर्वेषु जातादिषु घादयो यथा स्युः अनन्तरेण एवार्थादेशेन सम्बन्धित्वेन कृतार्थता मा ज्ञायि इति साकल्यार्थं शेषवचनम्। वक्ष्यति
न्यासः
शेषे। , ४।२।९१

"उपयुक्तादन्यः शेषः" इत्येतद्ग्रहणकवाक्यम्। तदेव "अपत्यादिभ्यः"इत्यादिना विवृणोति।अपत्यादयो हि चातुरथ्र्यपर्यन्ताः प्रत्ययविधौ विनियुक्ताः, तस्मात् तेभ्यो योऽन्यो जातादिरर्थः,स शेषः। ननु च निवृत्ता अपत्यादयः, तेभ्यश्चान्तरेषु जातादिषि येषु घादयस्ततोऽपत्यादिषु नैव ते प्राप्नुवन्तीति त()त्क तन्निवृत्त्यर्थेन शेषाधिकारेण? इत्य आह-- "तस्येदम्" इत्यादि। जातादिष्वर्थेषु तस्येदमित्येषोऽर्थः पठ()ते। तच्चापत्यादीनां सामान्यम्। सामान्ये च विधीयमानस्तद्विशेषेऽपि विधीयते। तदुपलक्षणत्वात् सामान्यस्य। अतस्तस्येदं विशेषत्वाज्जाताद्यन्तःपातिष्वपत्यादिषु घादयः प्राप्नुवन्ति। तस्मात् तेषु मा भूवन्निति शेषाधिकारः क्रियते। "किञ्च" इत्यादिना प्रयोजनान्तरं दर्शयति। असति हि शेषाधिकारे घादीनां प्रथमार्थेनैव सम्बन्धमनुभवतां तत्रैव कृतार्थता विज्ञायेत। तत्र द्वितीयादिष्वर्थेषु प्राग्दीव्यतीया एवाणादयः स्युः, न तु घादयः। शेषशब्दस्तूपयुक्तादन्यतया जातादीनर्थानेकीकृत्य शक्नोत्यभिधातुम्-- "सर्वत्र घादयः सिध्यन्तीति। अतः साकल्यार्थं वा शेषवचनम्। "लक्षमं

चाधिकारश्च, इति। इह लक्षणस्य विधायकत्वाल्लक्ष्यतेऽनेनेति लक्षणमिति कृत्वा; उत्तरत्राधिकारः स्वरितत्वात्। तत्र यदाऽस्य लक्षणम्,चाक्षुषादयः सिध्यन्ति। यदा स्वधिकारता, तदा सर्वेषु जातादिष्वर्थेषु घादयो भवन्ति। यदि तर्हि शेष इतिलक्षणमपीदमनेनैव यथा ग्रहणादिष्वर्थेषु प्रत्ययो भवति, तथा जातादिष्वपि भविष्यतीति जाताद्यनुक्रमणमनर्थकम्? न; अपवादविधानार्थत्वात्। यानि त्वनपवादार्थानि जातनिवृत्तलब्धक्रीतकुशलाः--इत्येवमादीनि तानि शेषग्रहणस्यैव प्रपञ्चो वेदितव्यः॥

बाल-मनोरमा

शेषे १२९३, ४।२।९१

अथ शैषिकप्रकरणं निरूप्यते। शेषे। अणादय इति। "प्राग्दीव्यतोऽणित्यादिसाधारणाः प्रतयया इत्यर्थः। वतुर्भिरिति। अ()आआदिभिरिति शेषः। चतुर्दश्यामिति। कृष्णचतुर्दश्यां रात्रौ रक्षांसि दृशयन्ते इत्यागमः। लक्षणमिति।प्रदर्शितेषु ग्रहणाद्यर्थेषु उत्तरसूत्रैरनुपात्तेषु अणादिविधायकमित्यर्थः। अधिकारत्वे तु उत्तरसूत्रेष्वेवानुवृत्तिलाभादिदं न सिध्येदिति भावः। अधिकारश्चेति। उत्तरसूत्रेष्वनुवृत्त्यर्थः, स्वरितत्वादिति भावः। अधिकारस्योत्तरावधिमाह-तस्य विकार इत्यतः प्रागिति। नच उत्तरसूत्रेषु निर्दिष्टानामर्थविशेषाणामपत्यादिचतुरथ्र्यन्तादन्यत्वस्य सिद्धत्वाच्छेषाधिकारो व्यर्थ इति वाच्यं, "तस्येद"मित्यादावपत्यादिचतुरथ्र्यन्तार्थानां ग्रहणाऽभावाय तदावश्यकत्वात्। नच प्रदर्शितेषु ग्रहणाद्यर्थेषु "तस्येद"मित्येव अणादिसिद्धेः शेष इत्यस्य विधित्वं नाश्रयणीयमिति वाच्यं, "शैषिकान्मतुवर्थीया"दित्यादौ प्रदर्शितग्रहणाद्यर्थकानामपि ग्रहणलाभाय तदावश्यकत्वात्। इदंत्वेन भासमानमपत्याद्यपि न शेषः, "इदंविशेषा ह्येते अपत्यं समूहो विकारो निवासः" इति भाष्यात्। प्रपञ्चितं चैतत् "तस्यापत्य"मित्यत्र "तस्येदमित्यपत्येऽपीत्यादिश्लोकवार्तिकव्याख्यावसरे।

तत्त्व-बोधिनी

शेषे १०३८, ४।२।९१

शेषे। लक्षणं चेति। ग्रहणक्षुण्णादिष्वर्थेषूत्तरसूत्रानुपात्तेषु अणो विधायकमित्यर्थः। ननु लक्षणं तावव्द्यर्थम्, "तस्येद"मित्यनेन चाक्षुषादीनां, "संस्कृतं भक्षाः"इत्यनेन दार्षदादीनां सिद्धेः। तथा अधिकारोऽपि व्यर्थः। तथाहि--- अधिकारस्यापत्यादिचतुर्थीपर्यन्तेष्वर्थेषु धादीनां ट()उट()उलन्तानां निवृत्तिः, जाताद्यचर्थसाकल्यं वा प्रयोजनम्। तत्र निवृत्तिस्तावन्न प्रयोजनम्। आद्रकशालादीनामुत्करादिपाठेन इतः प्राचीनेष्र्थेषु घादयो न प्रवत्र्तन्ते"इति ज्ञापनात्। अन्यथा "वृद्धाच्छः"इत्येव सिद्धे तत्पाठस्य वैयथ्र्यप्रसङ्गात्। नाप्यर्थसाकल्यं प्रयोजनं, जाताधिकारात्प्राक्पाठसामथ्र्यादेब तल्लाभात्। यदि संनिहिते जातार्थ एव घादयः स्युः, तदुत्तरेषु भवाद्यर्थेषु "प्राग्दीव्यतः"इति विशिष्टावधिवरिच्छन्नेर्थेषु विधीयमाना अणादय एव स्युस्तदा जाताधिकारानन्तरमेव "प्रावृषष्ठ"बित्यादिभिः सह "राष्ट्रावारपारा"दित्यदयोऽपि पठ()एरन्। तस्माव्द्यर्थमिदं सूत्रमिति चेत्। अत्रोच्यते--"शैषिकात्सरूपः शैषिको ने"ति वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकार आवश्यकः। शैषिक प्रयुक्तकार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकार एव "शैषिकान्मतुबर्थीया"दित्यादिश्र्लोकं ज्ञापयति। एष च श्र्लोकः सन्विधौ मतुब्विधौ च भाष्ये पठितः। इह तु सन्नन्ते पठित इति तत्रैव व्याख्यास्यते। अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमप्यधिकार आवश्यकः। न चोक्तज्ञापकेनैव तत्सिद्धिरिति वाच्यं, ज्ञापकस्य विशेषापेक्षत्वे दोषतादवस्थ्यात्। "आद्रकादिभ्यो यदि छः स्यात्तर्हि चतुरथ्र्यामेवे"ति नियमस्यापि संभवाच्च एवं स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमपि तस्य सुवचमिति दिक्। विग्रहीतादपीत्यादि। वचनमेवेदं, सूत्रे यथासङ्ख्यप्रवृत्त्यर्थं विशिष्टोच्चारणात्।

---

सूत्रम्

काशिका-वृत्तिः

राष्ट्रावारपाराद् घखौ ४।२।९३

राष्ट्रियः। अवारपारीणः। शेषे इति लक्षणं च अधिकारश्च। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। दृषदि पिष्टाः दार्षदाः सक्तवः। उलूखले क्षुण्णः औलूखलो यावकः। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः इति।

लघु-सिद्धान्त-कौमुदी

राष्ट्रावारपाराद्घखौ १०७२, ४।२।९२

आभ्यां क्रमाद् घखौ स्तः शेषे। राष्ट्रे जातादिः राष्ट्रियः। अवारपारीणः। (अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्)। अवारीणः। पारीणः। पारावारीणः। इह प्रकृतिविशेषाद् घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थ विभक्तयश्च वक्ष्यन्ते॥

न्यासः

राष्ट्रावारपाराद्घखौ। , ४।२।९२

राष्ट्रशब्दात् "वृद्धाच्छः"४।२।११३ इति च्छे प्राप्ते।अवारपारशब्दादणि घखौ विधीयेते। अवारस्य पारमवारपारमिति षष्ठीसमासः। राजदन्तादिषु दर्शनात् पारावारमित्यपि पक्षे भवति। विगृहीताद्विपरीताच्च लभ्यते। वक्तव्यमेवैतत्। अथ वा-- एकशेषो विज्ञास्यते, तत्रैकः समुदायारेथः, अपरोऽवयवार्थो भविष्यति। विपरीतस्यापि "एकार्थानां विरूपाणाम्" (१।२।६४।वा।२३) इत्येकशेषो न विरुध्यते, था-- वक्रदण्डश्च कुटिलदण्डश्च कुटिलदण्डाविति, यथा च यङ्लुकाविति। ननु च तस्यैवं प्रकृतयो भवन्ति, पञ्च राष्ट्रादिशब्दाः,प्रत्ययौ तु द्वौ-- इति वैषम्यात् संख्यातानुदेशो न सिध्यति? नैष दोषः;निर्देशापेक्षं हि यथासंख्यत्वम्। निर्देशश्च द्वयोरेव तदपेक्षया प्रकृते यथासंख्यत्वम्। एवं पञ्चाद्यभेद उपजायते, न स यथासंख्यं बाधते। यथा वुञादीनाञ्च गणापेक्षया यथासंख्यं प्रवृत्ते तु यथासंख्येन प्रत्ययोत्पत्तिवेलायां गणेषु यद्यपि प्रातिपदिकरूपाण्यसमसंख्यानि भवन्ति, तथात्रापि यथासंख्यं न हीयते। कुतः पुनरवगतम्-- एकशेषोऽयमिति? व्याख्यानात्। "प्रकृतिविशेषोपादानमात्रेण" इति। मात्रशब्दो जाताद्यर्थविभक्तिनिर्देशस्य च व्यवच्छेदाय॥

बाल-मनोरमा

राष्ट्राऽवारपाराद्ध्खौ १२९४, ४।२।९२

राष्ट्रावारपाराद्घखौ। आभ्यामिति। राष्ट्रशब्दादवारपारशब्दाच्चेत्यर्थः। राष्ट्रिय इति। राष्ट्रे जातः भव इत्यादिरर्थो यथायथं बोध्यः। धस्य इयः। अवारपारीण इति। खस्य ईनादेशः, णत्वम्।

अवारपारादविगृहीतादपीति। अवारशब्दात्पारशब्दाच्च पृथग्भूतदादपि खो वक्तव्य इत्यर्थः। विपरीताच्चेति। पाराऽवारशब्दादपीत्यर्थः। ननु "सार्ष्टावारपारे"त्यरभ्य "विभाषा पूर्वाह्णाऽपराह्णाभ्या"मित्यन्तैः सूत्रै राष्ट्रादिशब्देभ्यः प्रकृतिभ्यः शेषेऽर्थे प्रत्यया विहिताः। तस्यापत्यमित्यादिवदर्थविशेषास्तु न निर्दिश्यन्ते, यत्किञ्चिद्विभक्त्यन्तेभ्यो राष्ट्रादिप्रकृतिविशेषेभ्यो घादयः ट()उट()उलन्ताः प्रत्ययाः स्युः, "समर्थानां प्रथमाद्वे"त्थस्यानुपस्थित्या प्रथमोच्चारितविभक्तिविशेषानुपस्थितेः। किंच "तत्र जातः" इत्यादिसूत्रेषूत्तरेषु अर्थविशेषा एव निर्दिष्टाः। तत्र प्रथमोच्चारितसप्तम्यन्तादितत्तद्विभक्त्यन्तेभ्यः सर्वेभ्यः साधारणा अणादय एव स्युः। तत्राह--इह प्रकृतीत्यादिना। "राष्ट्रावारे"त्यादिसूत्राणां प्रकृतिविशेषेभ्यः केवलप्रत्ययविधीनामर्थविशेषविभक्तिविशेषाकाङ्क्षायां, "तत्र जातः" इत्यादि

सूत्राणां च केवलमर्थविशेषनिर्देशपराणां "समर्थाना"मिति सूत्रलब्धतत्तद्विभक्तिकप्रकृतिविशेषाणां विधेयप्रत्ययविशेषाकाङ्क्षायां परस्परमेकवाक्यत्वे सति तत्र जात इत्याद्यर्थेषु प्रथमोच्चारिततत्तद्विभक्त्यन्तेभ्यो राष्ट्रादिशब्देभ्यो घादयः ठ्युठ्युलन्ताः प्रत्ययाः स्युरिति लभ्यत इति भावः। राष्ट्राद्यन्याभ्यस्तु प्रकृतिभ्यो जाताद्यर्थेषु अणादयः साधारणा भवन्त्येव।

---

सूत्रम्

काशिका-वृत्तिः

राष्ट्रावारपाराद् घखौ ४।२।९४

राष्ट्र अवारपार इत्येताभ्यां यथासङ्ख्यं घखौ इत्येतौ प्रत्ययौ भवतः। राष्ट्रियः। अवारपारीणः। विगृहीतादपि इष्यते। अवारीणः। पारीणः। विपरीताच् च। पारावारीणः। प्रकृतिविशेष उपादानमात्रेण तावत् प्रत्यया विधीयन्ते। तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद् वक्ष्यन्ते। ग्रामाद् यखञौ ४।२।९२। ग्रामशब्दात् य खञित्येतौ प्रत्ययौ भवतः। ग्राम्यः, ग्रामीणः।

लघु-सिद्धान्त-कौमुदी

ग्रामाद्यखञौ १०७३, ४।२।९३

ग्राम्यः। ग्रामीणः॥

न्यासः

ग्रामाद्यखञौ। , ४।२।९३

वृद्धलक्षणे छे प्राप्ते वचनम्॥

बाल-मनोरमा

ग्रामाद्यखञौ १२९५, ४।२।९३

ग्रामाद्यखञौ। ग्राम्य इति। यप्रत्यये "यस्येति चे"ति लोपः। ग्रामीण इति। खञ ईनादेशः, णत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

कत्र्यादिभ्यो ढकञ् ४।२।९५

कत्रि इत्येवम् आदिभ्यो ढकञ् प्रत्ययो भवति। कात्रेयकः। औम्भेयकः। कत्रि। उम्भि। पुष्कर। मोदन। कुम्भी। कुण्डिन। नगर। वञ्जी। भक्ति। माहिष्मती। चर्मण्वती। ग्राम। उख्या। कुड्याया यलोपश्च। कत्र्यादिः।

न्यासः

कत्त्र्यादिभ्यो ढकञ्। , ४।२।९४

कत्त्र्यादिषु यद्()वृद्धं पठ()ते ततश्छे प्राप्ते शेषेभ्यस्त्वणीति योगोऽयमारभ्यते। कत्त्रिशब्दश्च तत्पुरुषः-- कुत्सितास्त्रयः, "कोः कत्" ६।३।१०० इतियोगविभागात् कद्भावः। अत एव निपातनाद्बहुव्रीहिर्वा-- कुत्सितास्त्रयो यस्याः कत्त्रिः। "कुड()आया यलोपश्च" इति। कुडज्ञाशब्दाड् ढञ् भवति यलोपश्च --कौडेयकः। ये तु "कुल्याया यलोपश्च" इति पठन्ति तेषां कौलेयकः॥

बाल-मनोरमा

कत्र्यादिभ्यो ढकञ् १२९६, ४।२।९४

कत्र्यादिभ्यो। कत्रय इति। "कुगतिप्रादयः" इति कुशब्दस्य समासः। "त्रौ चे"ति कोः कदादेशः। कात्रेयक इति। ढकञ्, ञकारस्य एयादेशः। "लोपो व्यो"रिति यलोपः। अनुवृत्तेरिति। स्वरितत्वादिति भावः। तथाच ग्रामशब्दाड्ढकञपि लभ्यते इत्यर्थः।

तत्त्व-बोधिनी

कत्त्र्यादिभ्यो ढकच् १०३९, ४।२।९४

कुत्सितास्त्रय इति। इह बहुव्रीहिरपि सुवचः। इहैव निपातनात्कोः कद्भावः। "कद्भावे त्रावुपसङ्ख्यान"मिति तु प्रत्याख्येयम्।

---

सूत्रम्

काशिका-वृत्तिः

कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ४।२।९६

कुलकुक्षिग्रीवाशब्देभ्यो यथासङ्ख्यं श्वनसि अलङ्कार इत्येतेषु जतादिष्वर्थेषु ढकञ् प्रत्ययो भवति। कौलेयको भवति श्वा चेत्। कौलो ऽन्यः। कौक्षेयको भवति असिश्चेत्। कौक्षो ऽन्यः। ग्रैवेयको भवति अलङ्कारश्चेत्। ग्रैवो ऽन्यः।

न्यासः

कुलकुक्षिग्रीवाभ्यः �आआस्यलङ्कारेषु। , ४।२।९५

"अणोऽपवादो योगः॥

बाल-मनोरमा

कुलकुक्षिग्रीवाभ्यः �आआऽऽस्यलङ्कारेषु १२९७, ४।२।९५

कुलकुक्षि। कुलाच्छुनि, कुक्षेः असौ , ग्रीवाया अलंकारे ढकञित्यर्थः। कौलेयकः। ()ओति। कुले जातादिरिति विग्रहः। कौक्षेयकोऽसिरिति। कुक्षौ=कोशे भवः खड्ग इत्यर्थः। ग्रैवेयक इति। ग्रीवासु भव इति विग्रहः।

तत्त्व-बोधिनी

कुलकुक्षिग्रीवाभ्यः �आआऽऽस्यलङ्कारेषु १०४०, ४।२।९५

कुल्याया यलोपश्चे "ति गण सूत्रम्। कुल्यायां जातः--कौलेयकः। कत्त्रि, उम्भि, कुण्डिन, माहिष्मतीत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

नद्यादिभ्यो ढक् ४।२।९७

नदी इत्येवम् आदिभ्यो ढक् प्रत्ययो भवति। नादेयम्। माहेयम्। पूर्वनगरीशब्दो ऽत्र पठ्यते। पौर्वनगरेयम्। केचित् तु पूर्वनगिरी इति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति, पौरेयम्, वानेयम्, गैरेयम् इति। तदुभयम् अपि दर्शनं प्रमाणम्।

नदी। मही। वाराणसी। श्रावस्ती। कौशाम्बी। नवकौशाम्बी। काशफरी। खादिरी। पूर्वनगरी। पावा। मावा। साल्वा। दार्वा। दाल्वा। वासेनकी। वडवाया वृषे।

लघु-सिद्धान्त-कौमुदी

नद्यादिभ्यो ढक् १०७४, ४।२।९६

नादेयम्। माहेयम्। वाराणसेयम्॥

न्यासः

नद्यादिभ्यो ढक्। , ४।२।९६

यान्यत्रावृद्धानि तेभ्योऽणि प्राप्तेष वृद्धेभ्यस्तु वाराणसीत्येवमादिभ्यश्छे प्राप्तेऽपवादः। केषाञ्चित् "रोपधेतोः प्राचाम"४।२।१२२ इति वुञि प्राप्ते ढगारभ्यते। "पौरेयम्" इति। पुरि भवम्। वने भवं "वानेयम्"। "गैरेयम्" इति। गिरौ भवम्। "तदुभयमपि दर्सनं प्रमाणभूतम् इति। उभयथाऽप्याचार्येण शिष्याणां प्रतिपादित्वात्। गणे नदीत्येतत् स्वरूपेण ग्रहणम्, न संज्ञाग्रहणार्थम्। संज्ञाग्रहणे हि मह्नदीनां पाठोऽनर्थकः स्यात्।

बाल-मनोरमा

नद्यादिभ्यो ढक् १२९८, ४।२।९६

नद्यादिभ्यो ढक्। माहेयमिति। मही=भूमिः, तस्यां जातादीत्यर्थः। वाराणसेयमिति। वाराणस्यां जातादीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

दक्षिणापश्चात्पुरसस् त्यक् ४।२।९८

दक्षिणा पश्चात् पुरसित्येतेभ्यः त्यक् प्रययो भवति शैषिकः। दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः।

लघु-सिद्धान्त-कौमुदी

दक्षिणापश्चात्पुरसस्त्यक् १०७५, ४।२।९७

दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः॥

न्यासः

दक्षिणापश्चात्पुरसस्त्यक्। , ४।२।९७

पश्चात्पुरसोरव्ययत्वात् साहचर्याद्दक्षिणाशब्दोऽपि "दक्षिणादाच्" ५।३।३६ इत्यजन्तमध्ययमेव गृह्नते। एवं च "अव्ययात्त्यप्" ४।२।१०३ इत्यत्र परिगणनात् त्यपः प्राप्तिर्नास्तीत्यणोऽपवादोऽयं योगः॥

बाल-मनोरमा

दक्षिणापश्चात्पुरसस्त्यक् १२९९, ४।२।९७

दक्षिणापश्चात्। आजन्तमव्ययमिति। अव्ययसाहचर्यादाजन्तं गृह्नत इति भावः। दक्षिणा, पश्चात्, पुरस्, एभ्योऽव्ययेभ्यो जाताद्यर्थेषु त्यक्प्रत्ययः स्यादित्यर्थः।

तत्त्व-बोधिनी

दक्षिणापश्चात्पुरसस्त्यक् १०४१, ४।२।९७

दक्षैणापश्चात्। अव्ययमिति। साहचर्यादिति भावः। एवं च "दाक्षिणात्य"इत्यत्र "सर्वनाम्नो वृत्तिमात्रे"इति पुंवद्भावशङ्कैव नास्तीति बोध्यम्। पाश्चात्त्य इति। कथं तर्हि "पश्चात्तनैः कश्चन नुद्यमानः"इति। न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट()उट()उलौ बाधेते परत्वादिति वाच्यम्। "अग्रादिपश्चा"दिति डिमचा ट()उट()उलोर्बाधस्य दुर्वारत्वात्। सत्यम्। पश्चात्तन्वन्ति पश्चात्तना इति कथंचित्समाधेयम्।

---

सूत्रम्

काशिका-वृत्तिः

कापिश्याः ष्फक् ४।२।९९

कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः। षकारो ङीषर्थः। कापिशायनं मधु। कापिशायनी द्राक्षा। बाह्ल्युर्दिपर्दिभ्यश्च इति वक्तव्यम्। बाह्लायनी। और्दायनी। पार्दायनी।

न्यासः

कापिश्याः ष्फक्। , ४।२।९८

वृद्धा ४।२।११३दिति छे प्राप्ते कापिशीशब्दात् ष्फग्विधीयते। "बाह्लो" इत्यादि। बाह्लीत्यादिभ्यः ष्फग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- उत्तरसूत्रादिह चकारः सिंहावलोकितन्यायेनानुवत्र्तते, तस्यानुक्तसमुच्चयार्थत्वात् बाह्ल्यादिभ्योऽपि ष्फग्भवतीति॥

बाल-मनोरमा

कापिश्याः ष्फक् १३००, ४।२।९८

कापिश्याष्ष्फक्। कापिष्याः ष्फक् इति छेधः। कापिशीशब्दात् ष्फक् स्यादित्यर्थः। कापिशी नाम देशविशेषः। कापिशायनी द्राक्षेति। षित्वान्ङीष्।

तत्त्व-बोधिनी

कापिश्याः ष्फक् १०४२, ४।२।९८

कापिश्याः ष्फक्। कापिशीशब्दात्ष्फक्त्स्यात्। षित्वान्ङीष्। तदाह---कापिशायनीति।

---

सूत्रम्

काशिका-वृत्तिः

रङ्कोरमनुष्ये ऽण् च ४।२।१००

रङ्कुशब्दादण् प्रत्ययो भवति, चकारात् ष्फक् च शैषिको ऽमनुस्ये ऽभिधेये। राङ्कवो गौः, राङ्कवायणो गौः। अमनुस्ये इति किम्? राङ्कवको मनुस्यः। ननु च रङ्कुशब्दः कच्छादिषु पठ्यते, तत्र च मनुष्यतस्थयोर् वुञ् ४।२।१३३ इति मनुस्ये परत्वाद् वुञैव भवितव्यं, कच्छादिपाठादमनुस्ये अणपि सिद्धः, किम् इह मनुस्यप्रतिषेधेन अण्ग्रहनेन च? तदुच्यते, न एव अयम् मनुस्यप्रतिषेधः, किं तर्हि, नञिवयक्तन्यायेन मनुस्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते। तेन राङ्कवः कम्बलः इति ष्फक् न भवति। विशेषविहितेन च ष्फका अणो बाधा मा भूतित्यण्ग्रहणम् अपि क्रियते।

न्यासः

रङ्कोरमनुष्ये च।, ४।२।९९

"ओर्देशे ठञ्" ४।२।११८ इति ठञि "जनपदतदवध्योश्च" ४।२।१२३ इति जनपदलक्षणे वुञि "कोपधादण्" ४।२।१३१ इत्यणि प्राप्ते वचनम्। "{कच्छादिपाठादमनुष्येऽणापि--काशिका,पदमञ्जरी च।} कच्छादिपाठादणिप सिद्धः" इति। "कच्छादिभ्यश्च" ४।२।१३२ इत्यत्र "कोपधादण्" ४।२।१३१ इत्यण् ग्रहणानुवृत्तेः। "नञिवयुक्तन्यायेन"इति। नञ्युक्ते चेवयुक्ते च तत्सदृशसम्प्रत्ययो भवति। इह च मनुष्यशब्दो नञ्युक्तः, तस्मान्नेह मनुष्यन्नेह मनुष्यप्रतिषेध्यः क्रियते। अपि च मनुष्यसदृशे प्राणिन्येव प्रवृत्तिः, तेन मनुष्यसदृशे प्राणिनि ष्फगणौ भवतः। अप्राणिनि तु कच्छादिपाठादणेव भवति, न ष्पक्-- "राङ्कवः कम्बलः"इति। "विशेष विहितेन" इत्यादि। यदीहाप्यण्न क्रियेत,तदा"{कच्छादिभ्यश्च इत्येव सूत्रम्।} कच्छादिभ्योऽण्" ४।२।१३२ इत्यणो राङ्कवः कम्बल इत्यत्र सावकाशत्वात् प्राणिनि विशेषविहितेन ष्फका तस्य बाधनं स्यात्। तस्मादेष दोषो मा भूदित्यणपि क्रियते॥

बाल-मनोरमा

रङ्कोरमनुष्येऽण्च १३०१, ४।२।९९

रङ्कोरमनुष्येऽण् च। रङ्कोरण् स्याच्चात्ष्फक्। राङ्कवो गौरिति। रङ्कुर्नाम देशविशेषः। तत्र जातादिरित्यर्थः। राङ्कवको मनुष्य इति। अत्र मनुष्यत्वान्न ष्फगणौ। किन्तु "मनुष्यस्तत्स्थयो"रिति वक्ष्यमाणो वुञ्। अकादेशः। राङ्कवो मनुष्य इति त्वपपाठः।

तत्त्व-बोधिनी

रङ्कोरमनुष्येऽण्च १०४३, ४।२।९९

रङ्कोरमनुष्ये। रङ्कवो जनपदः, ततः "प्राग्दीव्यतोऽ"णित्यण्प्राप्तः। तद्बाधकत्वेन "अवृद्धादपी"ति वुञ्प्राप्तः, तमपि बाधित्वा "ओर्देशे"इति ठञ्प्राप्तः, तस्य तु "कोपधादण्"बाधकः, ततो।ञपि परत्वात्कच्छाद्यणि प्राप्तेऽनेन ष्फगणौ विधीयेते। कोपधत्वादेवाऽणि सिद्धे कच्छादिषु सङ्कुशब्दस्य पाठो "मनुष्यतत्स्थयोर्वुञ्"विधानार्थ इति कैयटः। अतएवाह----राङ्कवको मनुष्य इति॥ क्वचित्तु "राङ्कव"इति पठ()ते, स तु लेखकप्रमादः। स्यादेतत्---अमनुष्यग्रहणमिह व्यर्थम्, अपवादेन वुञा तत्र ष्फगणोर्बाधेनाऽमनुष्य एव पर्यवसानात्। अण्()ग्रहणमपि व्यर्थमेव, कच्छादित्वादेव तत्सिद्धेः। अत्राह काशिकाकृत्--नायं प्रसज्यप्रतिषेधः किं तु पर्युदासः, तेन मनुष्यभिन्ने प्राणिन्येव ष्फग्विधीयत इति, राङ्क्रवः कम्बल इत्यत्र न ष्फक्। विशेष विहितेन ष्पका अणो बाधा मा भूदित्यण्ग्रहणं च क्रियत इति। भाष्ये तु अप्राणिन्यपि ष्फकमङ्गीकत्येदं द्वयमपि प्रत्याख्यातम्।

---

सूत्रम्

काशिका-वृत्तिः

द्युप्रागपागुदक्प्रतीचो यत् ४।२।१०१

दिव् प्राचपाचुदच् प्रत्यचित्येतेभ्यो यत् प्रत्ययो भवति शैसिकः। दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। अव्ययात् तु कालवाचिनः परत्वात् ट्युट्युलौ भवतः। प्राक्तनम्।

लघु-सिद्धान्त-कौमुदी

द्युप्रागपागुदक्प्रतीचो यत् १०७६, ४।२।१००

दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्॥

न्यासः

द्युप्रागपागुदक्प्रतीचो यत्। , ४।२।१००

अणि प्राप्ते यद् विधीयते। प्रागित्यादयः शब्दा अञ्चतेः "ऋत्विक्"३।२।५९ इत्यादिना क्विनि कृते सत्यात्मानं लभन्ते। ते च द्विविधाः-- अव्ययसंज्ञका,अनव्ययसंज्ञकाश्च। यदा त्वस्तातिप्रत्ययान्ता भवन्ति तदा "तद्धितश्चासर्वविभक्तिः" १।१।३७ इत्यव्ययसंज्ञाविधानादव्ययसंज्ञकाः,अन्यदा त्वनव्ययसंज्ञकाः। तेषामिह विशेषस्यानुपादानादुभयेषामपि ग्रहणम्। "प्राच्यम्, "{अवाच्यम्--इतिकाशिकापाठः,पदमञ्जरीपाठश्च। }अपाच्यम्" इति। "अचः" ६।४।१३८ इत्यकारलोपः, "चौ" ६।३।१३७ इति दीर्घः। "उदीच्यम्" इति।"उद ईत्" ६।४।१३९ इतीकारः। "प्राक्तनम्" इति। प्राक्शब्दात् "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिक्" ५।३।२७ इत्यादिनाऽस्तातिः, तस्य "अञ्चेर्लुक्" ५।३।३० इति लुक्, ततोऽनेन यति प्राप्ते "सायञ्चिरम्" ४।३।२३ इत्यादिना ट()उट()उलौ भवतः। यतस्तु -- यश्च कालवाची सोऽवकाशः॥

बाल-मनोरमा

द्युप्रागपागुदक्प्रतीचो यत् १३०२, ४।२।१००

द्युप्रागपाक्। दिव्, प्राञ्च्, अपाञ्च्, उदञ्च्, प्रत्यञ्च् एभ्यो यत्स्यादित्यर्थः। सूत्रे "दिव उत्" इत्युत्वेन निर्देशः। दिव्यमिति। दिवि जातादीत्यर्थः। प्राच्यमिति। प्राचि प्रदेशे जातादीत्यर्थः। तद्धितोत्पत्तौ सुब्लुकि प्राञ्च् य इति स्थिते "अनिदिता"मिति नलोपे "अचः" इत्यकारलोपे "चौ" इति दीर्घे प्राच्यमिति रूपम्। अपाच्यमिति। इदमपि पूर्ववत्। उदीच्यमिति। अत्र "उद ईदि"ति ईत्वं विशेषः। प्रतीच्यमिति। प्राच्यवद्रूपम्।

तत्त्व-बोधिनी

द्युप्रागपागुक्प्रतीचो यत् १०४४, ४।२।१००

द्युप्रागपा। दिव्यमिति। सूत्रे "दिव उ" दित्युत्वेन निर्देश इति भावः। अपाची दक्षिणा दिक्। द्वितीयो वर्णः पकारो, न तु दन्त्योष्ठ्यः, "यदिन्द्र प्रागपागुद"गित्यादौ तथा दर्शनादिति स्थितं मनोरमायाम्। केचुत्तु "प्राच्यवाचीप्रतीच्यास्ताः"इत्यमरकेशे अवाचीति दन्त्योष्ठ()पाठं क्वाचित्कं पुरस्कृत्य सूत्रेऽपि "अवा"गिति पठित्वा "अवाच्य"मित्युदाहरन्ति। "प्रागपाक्िति वेदे तु व्यत्ययेन वकारस्य पकार इति तेषामाशयः। प्रागादयोऽस्तात्यन्ता अव्ययाः, तद्भिन्नास्त्वनव्ययाः, उभयेषामपीह ग्रहणमविशेषात्। कथं तर्हि "संस्काराः प्राक्तना इव"इति()। अत्राहुः--- कालवाचिनः प्राक्शब्दाद्यतं बाधित्वा परत्वाट्ट()उट()उलौ बोध्याविति।

---

सूत्रम्

काशिका-वृत्तिः

कन्थायाष्ठक् ४।२।१०२

कन्थाशब्दात् ठक् प्रत्ययो भवति शैषिकः। कान्थिकः।

न्यासः

कन्थायाष्ठक्। , ४।२।१०१

अणपवादोऽयं योगः॥

बाल-मनोरमा

कन्थायाष्ठक् १३०३, ४।२।१०१

कन्थायाष्ठक्। तिर्यक्स्यूतबहुवस्त्रखण्डसमूहः कन्था। देशविशेष इत्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

वर्णौ वुक् ४।२।१०३

कन्थायाः इत्येव। वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः। ठको ऽपवादः। वर्णुर्नाम नदः, तत्समीपो देशो वर्णुः। तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः। तथा हि जातं हिमवत्सु कान्थकम्।

न्यासः

वर्णौ वुक्।, ४।२।१०२

"वर्णुः" इति। नदोऽभिधीयते। रुआओतसि च कन्था न सम्भवीति सामीपिकमधिकरणं विज्ञायते, अत आह--"तत्समीपो देशो वर्णुः" इति। वर्णुशब्दात् "अदूरभवश्च" ४।२।६९ इत्यत्रार्थे "सुवास्त्वादिभ्योऽण्" ४।२।७६ इत्यण्, तस्य "जनपदे लुप्" ४।२।८० इति लुपि कृते वर्णुरिति भवति। ननु च प्रतिपदविधानात् प्रत्ययस्य लुब्न भवति? नैवम्; सुवास्त्वादिपाठो हि जनपदादान्यस्मिन् प्रत्ययार्थे कृतार्थः--"वार्णवो ग्रामो नगरमिति, न तु जनपदे। तत्र तु परत्वाल्लोपेन भवितव्यम्। "तद्विषयार्थ"इति। विषयग्रहणेन वर्णादिति सप्तम्या विषयसप्तमीत्वं दर्शयति। स वर्णुदेशो विषयो यस्य तद्विषयार्थः। सा पुनः कन्थैव॥

बाल-मनोरमा

वर्णौ वुक् १३०४, ४।२।१०२

वर्णौ वुक्। वर्णुसमीपेति। वर्णुर्नाम सिन्धुनदः, तस्याऽदूरभव इत्यर्थे सुवास्त्वादित्वादणो "जनपदे लुबि"ति लुप्। तथाच वर्णुसमीपदेशो वर्णुः, तस्मिन् या कन्था तद्वाचकाद्वक्प्रत्यय इति यावत्।

तत्त्व-बोधिनी

वर्णो वुक् १०४५, ४।२।१०२

वर्णो वुक्। वर्णुरिति। "अदूरभवेश्चे"त्यर्थे सुवास्त्वादित्वादणि "जनपदे लु"बिति लुप्।

अमेहक्वतसित्रेभ्य एव। अमात्य इति। अमाशब्दः समीपवाची स्वरादिः। अमा=समीपे भव इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अव्ययात् त्यप् ४।२।१०४

अव्ययात् त्यप् प्रत्ययो भवति शैषिकः। अमेहक्वतसित्रेभ्यस् त्यद्विधिर् यो ऽव्ययात् स्मृतः। निनिभ्यां घ्रुवगत्योश्च प्रवेशो नियमे तथा। अमात्यः। इहत्यः। क्वत्यः। इतस्त्यः। तत्रत्यः। यत्रत्यः। परिगणनं किम्? औपरिष्टः पौरस्तः। पारस्तः। वृद्धात्तुधो भवति। आरातीयः। त्यब् नेर्ध्रुवे। नियतं घ्रुवम् नित्यम्। निसो गते। निर्गतो वर्णाश्रमेभ्यः निष्ट्यः चण्डालादिः। आविसश् छन्दसि। आविस् शब्दाच् छन्दसि त्यप् प्रत्ययो भवति। आविष्ट्यो वर्धते चारुरासु। अरण्याण् णो

वक्तव्यः। आरण्याः सुमनसः। दूरादेत्यः। दूरेत्यः पथिकः। उत्तरादाहञ्। औत्तराहम्।

लघु-सिद्धान्त-कौमुदी

अव्ययात्त्यप् १०७७, ४।२।१०३

(अमेहक्वतसित्रेभ्य एव)। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। (त्यब्नेर्ध्रुव इति वक्तव्यम्)। नित्यः॥

न्यासः

अव्ययात्त्यप्। , ४।२।१०३

"अमेह" इत्यादि। परिगणनम्। एतच्चोत्तरसूत्रस्थस्यान्यतरस्यांग्रहणस्यभोर्योगयोः विज्ञायते व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। अमाशब्दः समीवाची, स्वरादिपाठादव्ययत्वम्। इहेत्यादीनां "तद्धितश्चासर्वविभक्तिः"१।१।३७ इति। अमा भवोऽमात्यः। "औपरिष्टः" इति। उपरिष्टाद्भवतीत्यणि कृते "अव्ययानां भमात्रे टिलोपो वक्तव्यः" (वा।८४२) इति टिलोपः।परतो भवः "पारस्तः"। परतः शब्दः "विभाषा परावराभ्याम्" ५।३।२९ इत्यसुजन्तः। "आरातीयः" इति। अत्र टिलोपो न भवति; "बहिषष्टिलोपश्च" (वा।३७८) इत्यत्रानित्यत्वस्य ज्ञापितत्वात्। "त्यब्नेध्र्रुवे" इति। निशब्दाध्रुवे वाच्ये त्यब्भवति। नियते सर्वकाले भवो नित्यः। "निसो गते" इति। निःशब्दाद्गते वाच्ये त्यब्भवति। "निष्ट()ः" इति। "ह्रस्वात्तादौ तद्धिते" ८।३।९९ इति मूर्धन्यः। एवमादविष्ट() इत्यत्रापि भवति॥

बाल-मनोरमा

अव्ययात्त्यप् १३०५, ४।२।१०३

अव्ययात्त्यप्।

अमेहेति। अमा, इह, क्व, तसि, त्र एभ्य एव अव्ययेभ्यस्त्यप्प्रत्यय इति परिगणनवार्तिकमिदम्। अमात्य इति। समीपे सह वा जात इत्यर्थः। औपरिष्ट इति। "उपरिष्टा"दित्यव्ययस्य परिगणितेष्वनन्तर्भावान्न त्यप्। अणि "औपरिष्ट" इति रूपमित्यर्थः।

कथमिह टिलोप इत्यत आह--अव्ययानामिति। वार्तिकमिदम्। भमात्रे इति। कात्स्न्र्ये मात्रशब्दः। कृत्स्नस्य भस्याव्ययस्य टेर्लोपः। "नस्तद्धिते" इत्याद्युपाधिर्नापेक्षित इत्यर्थः। नन्वेवं सति आरादित्यव्ययाच्छस्य ईयादेशे टिलोपे "आरीय" इति स्यादित्यत आह--अनित्योऽयमिति।

त्यब्नेरिति। नि इत्यव्ययात्त्यप् स्याद्ध्रुवे गम्ये इत्यर्थः। नियतं भवं नित्य"मिति भाष्यम्।

निसो गत इति। निस् इस्यव्ययात्त्यब्वक्तव्यो गते गम्ये इत्यर्थः। निस्-त्य इति स्थिते सकारस्य पदान्तत्वादादेशप्रत्ययावयवत्वाऽभावाच्च षत्वे अप्राप्ते--।

---

सूत्रम्

काशिका-वृत्तिः

ऐषमेओह्यःश्वसो ऽन्यतरस्याम् ४।२।१०५

ऐषमस् ह्यस् श्वसित्येतेभ्यो ऽन्यतरस्यां त्यप् पत्ययो भवति शैषिकः। ऐषमस्त्यम्, ऐषमस्तनम्। ह्यस्त्यम्, ह्यस्तनम्। श्वस्त्यम्, श्वस्तनम्। श्वसस्तुट् च ४।३।१५ इति ठञपि तृतीयो भवति। शौवस्तिकम्।

न्यासः

ऐषमोह्यः�आसोऽन्तरस्याम्।, ४।२।१०४

ऐषमःप्रभृ-तीनि कालवाचीनि प्रातिपदिकान्यव्ययानि। "सायञ्चिरम्" ४।३।२३ इत्यादिना परत्वाट्ट()उट()उलोः प्राप्तयोरिदं वचनम्। "शोवस्तिकम्" इति। "द्वारादीनाञ्च" ७।३।४ इत्यैजागमः॥

बाल-मनोरमा

ऐषमोह्यः�आसोऽन्यतरस्याम् १३०७, ४।२।१०४

ऐषमोह्यः। एभ्य इति। ऐषमस्, ह्यस्, ()आस् एतेभ्य इत्यर्थः। वक्ष्यमाणाविति। "सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट()उठ्युलौ तुट् चे"त्यनेनेति शेषः। ऐषमस्त्यमिति। ऐषमस् इत्यव्ययं वर्तमाने संवत्सरे वर्तते। तत्र भवमित्यर्थः। "परुत्परो यैषमो।ऽब्दे पूर्वे पूर्वतरे यती"त्यमरः। ऐषमस्तनमिति। ठ्युठ्युलौ वा। टावितौ, य्वोरनादेशः, तस्य तुट्, ट इत्, उकार उच्चारणार्थः, टित्त्वादाद्यवयवः। ह्यस्त्यं, ह्यस्तनमिति। ह्यसित्यव्ययं गतेऽह्नि। तत्र भवमित्यर्थः। ()आस्त्यं-()आस्तनमिति। ()आस् इत्यव्ययमनागतेऽह्नि। तत्र भवमित्यर्थः। "ह्यो गतेऽनागतेऽह्नि ()आः" इत्यमरः। पक्षे इति। "()आसस्तुट् चे"ति ठञि तस्य इकादेशे तुडागमे "द्वारादीनां चे"त्यैजागमे "शौवस्तिक"मित्यपि वक्ष्यमाणं रूपमित्यर्थः।

तत्त्व-बोधिनी

ऐषमोह्यः�आसोऽन्यतरस्याम् १०४७, ४।२।१०४

वक्ष्यमाणाविति। "सायंचिर"मित्यादिने"ति शेषः। वक्ष्यत इति। "()आसस्तुट् चे"त्यत्र।

---

सूत्रम्

काशिका-वृत्तिः

तीररूप्यौत्तरपदादञ्ञौ ४।२।१०६

तीरौत्तरपदात् रूप्यौत्तरपदाच् च प्रातिपदिकाद् यथासङ्ख्यम् अञ् ञ इत्येतौ प्रत्ययौ भवतः शैषिकौ। अणो ऽपवादौ। काकतीरम्। पाल्वलतीरम्। रूप्योत्तरपदात् वार्करूप्यम्। शैवरूप्यम्। तीररूप्यान्तातिति नोक्तं बहुच्प्रत्ययपूर्वाद् मा भूतिति। बाहुरूप्यम्। अणेव भवति।

न्यासः

तीररूप्योत्तरपदादञ्ञौ।, ४।२।१०५

अथ तीररूप्योत्तरादित्येवं कस्मान्नोक्तम्, एवं हि लघु सूत्रं भवतीति? अत आह-- "तीररूप्यान्तात्" इत्यादि। यदीह तीररूप्यान्तादित्युज्येत, बहुच्पूर्वादपि स्यात्-- बहुतीरे जात इति, भवति ह्येतत् तीरान्तम्। उत्तरपदग्रहणे ह्येषोऽतिप्रसङ्गो न भवति, न ह्येतत्, तीरोत्तरपदम्, यस्मात् समासे सत्येतद्भवति। पूर्वपदमुत्तरपदमिति न्यायेन नायं समासः॥

बाल-मनोरमा

तीररूप्योत्तरपदादञ्ञौ १३०८, ४।२।१०५

तीररूप। तीरोत्तरपदाद्रूपोत्तरपदाच्च क्रमादञ्ञ्यश्चेत्यर्थः। काकतीरमिति। ककतीरे भवतित्यर्थः। पाल्वलतीरमिति। पल्वलतीरे भवमित्यर्थः। शैवरूप्यमिति। शिवरूपे भवमित्यर्थः। "रूप्योत्तरपदे"ति क्वचित्पाठः। तथा सति ञ्यप्रत्यये

"यस्येति चे"त्यकारलोपे द्वियकारं रूपम्। बाहुरूपमिति। "विभाषा सुपो बहुच् पुरस्तात्तु" इति बहुपूर्वस्य रूपान्तत्वेऽपि तदुत्तरपदकत्वाऽभावान्न ञ्य इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दिक्पूर्वपदादसंज्ञायां ञः ४।२।१०७

असंज्ञायाम् इति प्रकृतिविशेषणम्। दिक्पूर्वपदात् प्रातिपदिकातसंज्ञाविषयात् ञः पत्ययो हबवति शैषिकः। अणो ऽपवदः। पौर्वशालः। दाक्षिणशालः। आपरशालः। असंज्ञायाम् इति किम्? पूर्वैषुकामशमः। अपरैषुकामशमः। दिक्षङ्ख्ये संज्ञायाम् २।१।४९ इति समासः। प्राचां ग्रामनगराणाम् इति उत्तरपदवृद्धिः। पदग्रहणं स्वरूपविधिनिरासार्थम्।

लघु-सिद्धान्त-कौमुदी

दिक्पूर्वपदादसंज्ञायां ञः ९४०, ४।२।१०६

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम्॥

न्यासः

दिक्पूर्वपदादसंज्ञायां ञः। , ४।२।१०६

"पौर्वशालः"इति। पूर्वस्यां शालायां भवः पौर्वशालः। "तद्धितार्थः" २।१।५० इत्यादिना तद्धितार्थे समासः, ततः प्रत्ययः। अथ पदग्रहणं किमर्थम्? "न दिक्पूर्वात्" इत्येवोच्येत? इत्यत आह-- "पदग्रहणम्" इत्यादि। असति हि पदग्रहण स्वरूपग्रहणं स्यात्। तथा च दिग्गजः, दिग्नागः, दिग्दाहः-- इत्येवमादिः प्रकृतिर्विज्ञायते। पदग्रहणे तु सति दिग्विशेषो गृह्रते,कथम्? पदग्रहणसामथ्र्याद्व्याधिकरणे बहुव्रीहिर्विज्ञायते-- दिशः पूर्वपदं यस्य। दिश इति च वाचकापेक्षया षष्ठी विज्ञायते। तेनेह तदभिधायी पूर्वादिदिक्शब्दो गृह्रते।

बाल-मनोरमा

दिक्पूर्वपदादसंज्ञायां ञः १३०९, ४।२।१०६

दिक्पूर्वपदात्। पञ्चम्यर्थे सप्तमी। असंज्ञाभूताद्दिक्पूर्वपदकाञ्ञः स्यादित्यर्थः। पौर्वशाल इति। पूर्वस्यां शालायां भव इत्यर्थे "तद्धितार्थ" इति समासाञ्ञः।

तत्त्व-बोधिनी

दिक्पूर्वपदादसंज्ञायां ञः १०४८, ४।२।१०६

दिक्पूर्व। "असंज्ञायामि"त्यत्र सौत्रत्वात्पञ्चम्यर्थे सप्तमीत्याशयेनाह---संज्ञाभूताया इति।

---

सूत्रम्

काशिका-वृत्तिः

मद्रेभ्यो ऽञ् ४।२।१०८

दिक्पूर्वपदादित्येव। दिक्पूर्वपदात् मद्रशब्दादञ् प्रत्ययो भवति शैषिकः। पौर्वमद्रः। आपरमद्रः। दिशो ऽमद्राणाम् ७।३।१३ इति पर्युदासादादिवृद्धिरेव।

न्यासः

मद्रेभ्योऽञ्। , ४।२।१०७

"पौर्वमद्रः" इति। पूर्ववत् तद्धितार्थे २।१।५० समासः, ततोऽणि प्राप्ते,"अवृद्धादपि बहुवचनविषयात्" ४।२।१२४ इतिच वृञि, "मद्रवृज्योः कन्" ४।२।१३० इति कन्यञ् विधीयते॥

बाल-मनोरमा

मद्रेभ्योऽञ् १३१०, ४।२।१०७

मद्रेभ्योऽञ्। इत्येवेति। दिक्पूर्वान्मद्रशब्दादञित्यर्थः। पर्युदासादिति। उत्तरपदवृद्धेः पर्युदासे सति आदिवृद्धिरित्यर्थः। बहुवचनाज्जनपदवाचिन एव ग्रहणम्। पौर्वमद्र इति। पूर्वेषु मद्रेषु भव इत्यर्थः।

तत्त्व-बोधिनी

मद्रेभ्योऽञ् १०४९, ४।२।१०७

मद्रेभ्योऽञ्। बहुवचननिर्देशाज्जनपदवाची गृह्रते, न तु भद्रपर्यायः। दिशोऽमद्राणमिति। "दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याऽचामादेर्वृद्धिः स्याञ्ञिति णिति किति च तद्धिते"इति सूत्रार्थः। पौर्वमद्र इति। मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन समानाधिकरण्यात् "तद्धितार्थ"इति समासः।

---

सूत्रम्

काशिका-वृत्तिः

उदीच्यग्रामाच् च बह्वचो ऽन्तोदात्तात् ४।२।१०९

दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचो ऽन्तोदात्तादञ् प्रत्ययो भवति शैषिकः। अणो ऽपवादः। शैवपुरम्। माण्डवपुरम्। उदीच्यग्रामातिति किम्? माथुरम्। बह्वचः इति किम्? ध्वजी। ध्वाजम्। अन्तोदात्तातिति किम्? शार्करीधानम्। शर्करीधानशब्दे लित्स्वरेण धानशब्द उदात्तः।

न्यासः

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तौ। , ४।२।१०८

"शैवपुरम्, माहानगरम्" इति। शिवपुरमहानगरशब्दौ समासस्वरेणान्तोदात्तौ। "माथुरम्" इति। मथुराशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। मध्यदेशग्रामस्तु, तेनाणेव भवति। "ध्वाजम्" इति। ध्वजीशब्दः पिप्पल्यादित्वान्ङीषन्तः।गौरादिषु हि प्पिल्यादयः पठ()न्ते,तेनासौ प्रत्ययस्वरेणान्तोदात्तः। उदीच्यग्रामस्य बह्वजन्तो भवति। "धानशब्द उदात्तः" इति। "गतिकारकोपपदात्" ६।२।१३८ इति धानशब्दस्य ल्युडन्तस्य प्रकृतिभावात्॥

बाल-मनोरमा

उदाच्यग्रामाच्च बह्वचोऽन्तोदात्तात् १३११, ४।२।१०८

उदीच्यग्रामाच्च। शैवपुरमिति। उत्तरदेशे शिवपुरं नाम ग्रामविशेषः। तत्र भवमित्यर्थः। समासस्येत्यन्तोदात्तः शिवपुरशब्दः। बह्वचः किम्। ङीषन्तो ध्वञ्जी नाम उत्तरदेशे ग्रामविशेषः। तत्र भवो ध्वाञ्जः। अन्तोदात्तात्किम्?। शार्करीधनाम्। कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यैवावस्थानान्मध्योदात्तोऽयम्।

तत्त्व-बोधिनी

उदीच्यग्रामाच्चबह्वचोऽन्तोदात्तात् १०५०, ४।२।१०८

उदीच्य। दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामात्किम्()। माधुरः। बह्वचः किम्()। ध्वाजः। पिप्पल्यादिङीषन्तो ध्वजीशब्दः। अन्तोदात्तत्किम्()। शार्कराधानम्, शर्कराघानशब्दे धाशब्दाकार उदात्तः। कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यावस्थानात्। शैवपुरमिति। "प्रस्थपुरवहान्ताच्चे"ति वुञ्न भवति, "वृद्धा"दिति तत्रावुवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

प्रस्थौत्तरपदपलद्यादिकौपधादण् ४।२।११०

प्रस्थोत्तरपदात पलद्यादिभ्यः ककारोपधात् च प्रातिपदिकादण् प्रत्ययो भवति शैसिकः। उदीच्यग्रामलक्षणस्य अञो ऽपवादः। माद्रीप्रस्थः। माहकीरस्थः। पलद्यादिभ्यः पालदः। पारिषदः। ककारोपधात् नैलीनकः। चैयातकः। पलद्यादिषु यो वाहीकग्रामः, ततः ठञ्ञिठयोः अपवादः। यथा गौष्ठी, नैतकी इति। गोमतीशब्दः पठ्यते, ततो रोपधेतोः प्राचाम् ४।२।१२२ इति वुञो ऽपवादः। वाहीकशब्दः कोपधो ऽपि पुनः पठ्यते परं छं ४।२।११३ बाधितुम्। अण्ग्रहणं बाधकबाधनार्थम्। पलदी। परिषत्। यकृल्लोमन्। रोमक। कालकूट। पटच्चर। वाहीक। कलकीट। मलकीट। कमलकीट। कमलभिदा। गोष्ठी। कमलकीर। बाहुकीत। नैतकी। परिखा। शूरसेन। गोमती। उदयान। पलद्यादिः।

न्यासः

प्रस्थोत्तरपदलद्यादिकोपधादण्। , ४।२।१०९

"उदीच्यग्रामलक्षणस्याञोऽपवादः" इति। प्रस्थोत्तरपदादीनामुदीच्यग्रानत्वात्। "माद्रीप्रस्थः, माहकीप्रस्थः" इति। अत्र प्रकृतिः समासस्वरेणान्तोदात्ता। अथोत्तरपदग्रहणं किमर्थम्, न प्रस्थान्तादित्येवोच्येत? नैवं शक्यम्; तदिहापि प्रसज्येत--उत्तमकर्णीप्रस्थः। तत्राप्युत्तरपदग्रहणान्न भवति। न ह्यत्र प्रस्थशब्द उत्तरपदम्, किं तर्हि? कर्णीप्रस्थशब्दः। "ततष्ठञ्ञिठयोरपवादः"इति "वाहीकग्रामेभ्यश्च" ४।२।११६ इति प्राप्तयोः। अथ वाहीकशब्दः किमर्तमिह पठ()ते, यावता कोपधत्वादेवाण् सिद्धः? अत्राह-- "वाहीकशब्दः" इत्यादि। यदि वाहीकशब्द इह न पठ()ते, परत्वात् "वृद्धाच्छः" ४।२।११३ इति च्छः स्यात्। कोपधस्य तु निलीक इत्यत्रावृद्धमवकाशः। तस्मात्परमपि च्छं बाधित्वाऽण् यथा स्यादिति कोपधोऽपि वाहीकशब्दः पठ()ते। अथाण्ग्रहणं किमर्थम्, न यावता यथाविहितमेवोच्येत?न; पुनर्विधानादणेव भवतीति विज्ञायते। अपवादस्य विधाने पुनर्विधानमनर्थकमित्याह--"अजग्रहमम्" इत्यादि। यदत्र वृद्धं वाहीकग्रामः,तस्मात् "प्राग्दीव्यतोऽण्" ४।१।८३ इत्यतोऽणि प्राप्ते " वृद्धाच्छः" ४।२।११३ प्राप्नोति, तस्मिन् "वाहीकग्रहामेभ्यश्च" ४।२।११६ इति ठञ्ञिठौ, तौ परत्वात् बाधित्वा यद्यत्राण्ग्रहणं न क्रियेत तदा पुनर्विधानाच्छ एव स्यात्। अण्ग्रहणादेव भवति-- गोष्ठ()आं भवं "गौषठ()म्" इति। तस्मात् बाधकमपि बाधित्वाऽणेव यथा स्यादित्येवमर्थमण्ग्रहणम्। कोपधग्रहणमिहाजनपदार्थम्। जनपदतदवधि"४।२।१२३ "कोपधादण्" ४।२।१३१ इत्यनेन सिद्धः। यकृल्लोमशब्दः पलद्यादिषु पठ()ते, तस्य नलोप निपात्यते,अन्यथा "अन्" ६।४।१६७ इति प्रकृतिभावे सति यकृल्लोम्नि भवः याकृल्लोम इति न सिध्येत्॥

बाल-मनोरमा

प्रस्थोत्तरपदपलद्यादिकोपधादण् १३१२, ४।२।१०९

प्रस्थोत्तरपद। प्रस्थोत्तरपदात्पलद्यादिभ्यः कोपधाच्च अणित्यर्थः। पलदिः-आदिर्येषामिति विग्रहः। उदीच्यग्रामलक्षणस्य

अणोऽपवादः। माहिकिप्रस्थ इति। महिकिप्रस्थनाम्नि ग्रामे भव इत्यर्थः। पालद इति। पलदिनाम्नि ग्रामे भव इत्यर्थः। नैलीनक इति। निलीनकनाम्नि ग्रामे भव इत्यर्थः।

तत्त्व-बोधिनी

प्रस्थोत्तरपदपलद्यादिकोपधादण् १०५१, ४।२।१०९

प्रस्थोत्तर। उदीच्यमग्रामलक्षणस्याऽञोऽपवादः। पालद इति। "पलदी"ति ईकारान्त इत्येके। नान्त इत्यन्ये। नलोपे सति यणादेशात्संहिता तुल्यैव। वाहीकशब्दः कोपधोऽपि पलद्यादिषु पठ()ते परं छं बाधितुम्। अन्यथा अणं बाधित्वापरत्वाच्छ एव स्यात्, कोपधप्रयुक्तोषऽण् अवृद्धे सावकाश इति। यकृल्लोम नि भवो याकृल्लमः। " अन्िति प्रकृतिभावस्तु न, गणेऽस्मिन्नलोपनिपातनादिति हरदत्तादयः।

---

सूत्रम्

काशिका-वृत्तिः

कण्वाऽदिभ्यो गोत्रे ४।२।१११

गोत्रम् इह न प्रत्ययार्थो न च प्रकृतिविशेषणम्। तर्ह्येवं सम्बध्यते, कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितः, तदन्तेभ्य एव अण् प्रत्ययो भवति शैषिकः। छस्य अपवादः। काण्वाः छात्राः। गौकक्षाः।

न्यासः

कण्वादिभ्यो गोत्रे। , ४।२।११०

"गोत्रग्रहणमिह न प्रत्ययार्थम्" इति। शेषाधिकारात्। यदि हि प्रत्ययार्थः स्यात्, शेषाधिकारो वाच्येत। "{न च--काशिका पदमञ्जरी च} न प्रकृतिविशेषणम्"िति)। असम्भवात्। न हि कण्वादीनां परमप्रकृतिरूपाणामेव गोत्रार्थत्वं सम्भवति। तर्हि गोत्रग्रहणं सम्बध्येतेत्येवमर्थं पृच्छति। "एवम्" इत्यादिना प्रत्ययविधिविशेषणं गोत्रग्रहणमिति दर्शयित्वा तेन गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्योऽण् भवतीति दर्शयति। "छस्यापवादः" इति। गोत्रप्रत्ययान्तानां कण्वादीनां वृद्धत्वात्। "काण्वाः, गौकक्षाः"इति। कण्वगोकक्षशब्दाभ्यां गोत्रापत्ये गर्गादि ४।१।१०५ इत्वाद्यञ्, तदन्तादण्, "आपत्यस्य" ६।४।१५१ इत्यादिना यलोपः। "काण्वः" इति। "सास्य देवता" ४।२।२३ इत्यण्॥

बाल-मनोरमा

कण्वादिभ्यो गोत्रे १३१३, ४।२।११०

कण्वादिभ्यो गोत्रे। काण्व्यस्येति। कण्वस्य गोत्रापत्यं काण्व्यः। गर्गादियञ्। काण्व्यस्य छापवादोऽण्। "यस्येति चे"त्यकारलोपः। "आपत्यस्य चे"ति यकारलोपः। "काण्वा" इति रूपम्।

---

सूत्रम्

काशिका-वृत्तिः

इञश् च ४।२।११२

गोत्रे इत्येव। गोत्रे य इञ् विहितः तदन्तात् प्रातिप्दिकातण् प्रत्ययो भवति शैषिकः। छस्य अपवादः। दाक्षाः। प्लाक्षाः। माहकाः। गोरे इत्येव, सौतङ्गमेरिदं सौतङ्गमीयम्।

न्यासः

इञश्च। , ४।२।१११

दाक्ष्यादिभ्यः "अत इञ्" ४।१।९५ इतीञन्तेभ्योऽण्। "सौतङ्गमीयम्" इति। सुतङ्गमेन निर्वृत्तमिति "वुञ्छण्" ४।२।७९ इत्यादिना सुतङ्गमशब्दाच्चातुरर्थिक इञ्॥
बाल-मनोरमा
इञश्च १३१४, ४।२।१११

इञश्च। दाक्षा इति। दक्षस्य गोत्रापत्यं दाक्षिः। "अत इञ"। दाक्षेः छात्रा इति विग्रहः। सौतङ्गमेरिदमिति। सुतङ्गमस्य निवासः सौतङ्गमिः। "सुतङ्गमादिभ्य इञ्"। सौतङ्गमेरिदमित्यर्थे वृद्धाच्छः, न त्वण्, इञो गोत्रार्थकत्वाऽभावात्। गोत्रमिह शास्त्रीयमिति। अपत्याधिकारादन्यत्र यद्यपि लौकिकमेव गोत्रमिति सिद्धान्तस्तथापि इह सूत्रद्वयेऽपि शास्त्रीयमेव गोत्रं गृह्रते, "यूनि लु"गिति सूत्रभाष्ये तथोक्तत्वादिति भावः। पाणिनीयमिति। पणिनो गोत्रापत्यं पाणिनः। तस्यापत्यं युवा--पाणिनिः। तस्येदं पाणिनीयम्। वृद्धाच्छः। अण् तु न, पाणिनिशब्दस्य युवप्रत्ययान्तत्वादिति भावः।

तत्त्व-बोधिनी
इञश्च १०५२, ४।२।१११

सोतङ्गमेरिति। सुतङ्गमादिभ्यश्चातुरर्थिक इञ्। शास्त्रीयमिति। ननु "अपत्याधिकारादन्यत्र लौकिकं गौत्रं गृह्रते"इति चेत्। अत्राहुः---"पूर्वसूत्रे गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्रते, कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्यः"इति गोत्रप्रत्ययानुवादेन तत्राऽण्विधानात्। कण्वादयश्च गर्गाद्यन्तर्गताः। "गर्गादिभ्यो यञ"ञित्यत्र तु "गोत्रे कुञ्जादिभ्यः"इत्यतो गोत्र इत्यनुवर्तते, न तु शास्त्रीयगोत्रमेव गृह्रते, अपत्याधिकारस्थत्वात्, तदेव हि "इञश्चे"ति सूत्रेऽनुवर्तते इथि।

---

सूत्रम्
काशिका-वृत्तिः
न द्व्यचः प्राच्यभरतेसु ४।२।११३

द्व्यचः प्रातिपदिकात् प्राच्यभरतगोत्रादिञन्तादण् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। पैङ्गीयाः। पौष्ठीयाः। चैदीयाः। पौष्कीयाः। काशीयाः। पाशीयाः। द्व्यचः इति किम्? पान्नागाराः। प्राच्यभरतेषु इति किम्? दाक्षाः। काशीयाः इति कथम् उदाहृतं, यावता काश्यादिभ्यष् ठञ् ञिठाभ्यां भवितव्यम्? न एतदस्ति। देशवाचिनः काशिशब्दस्य तत्र ग्रहणं चैदिशब्देन साहचर्यात्। गोत्रात् तु वृद्धाच्छः एव भवति। ज्ञापकादन्यत्र प्राच्यग्रहणेन भरतग्रहणं न भवति इति स्वशब्देन भरतानाम् उपादानं कृतम्।
न्यासः
न द्व्यचः प्राच्यभरतेषु। , ४।२।११२

"पैङ्गीयाः, प्रौष्ठीयाः"इति। प्राच्यगोत्रोदाहरणम्। "काशीयाः,पाशीयाः"इति। भरतगोत्रोदाहरणम्। "कथम्" इत्यादि चोद्यम्। "नैतदस्ति" इति परिहारः। उभयञ्चैतत्,तदुदाहरणम्। उभयञ्चैतदनुगतार्थम्। ननु च भरताः प्राच्या एव,ततः प्राच्यग्रहणेनैव तेषां ग्रहणं भविष्यति, तत्किमर्थं तेषांस्वशब्देनोपादानम्? इत्यत आह-- "ज्ञापकादन्यत्र" इत्यादि। क्वान्यत्र? "बह्वच इञः प्राच्यभरतेषु" २।४।६६ इत्यत्र॥
बाल-मनोरमा

न द्व्यचः प्राच्यभरतेषु १३१५, ४।२।११२

न द्वयचः। प्राच्येषु [परेषु?]भरतेषु च गोत्रेषु विद्यमानादिञन्तात् द्व्यचोऽण् न भवतीत्यर्थः। इञश्चेत्यणोऽपवादः। प्रतिषेध इत्यर्थः। प्राष्ठीया इति। प्राष्ठस्य गोत्रापत्यं प्राष्ठिः, तस्य छात्रा इत्यर्थः। काशीया इति। काशस्य गोत्रापत्यं काशिः, तस्य छात्रा इत्यर्थः। अणो निषेधे वृद्धाच्छः। सिङ्गमिति। तेन औद्दालकिः पिता, औद्दालकायनः पुत्र इत्यत्र "इञः प्राचा"मिति भरतेब्यो लुङ् न भवति।

तत्त्व-बोधिनी

न व्द्यचः प्राच्यभरतेषु १०५३, ४।२।११२

न व्द्चः। अपवाद इति। प्रतिषेध इतर्थः॥ भरतानामग्रहणस्येति। तेन "इञः प्राचा"मिति भरतेभ्यो युवप्रत्ययस्य लुङ्न भवति, औद्दालकिः पिता, औद्दालकायनः पुत्र इति "अर्हादगोपुच्छे"ति सूत्रे कैयटः। भवतः। छादिरयं प्रत्ययो न तु शादिः, पदसंज्ञार्थं सित्करणादित्यांशयेनाह--जश्त्वमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृद्धात् ५।१ छः १।१ शेषे ? तद्धिताः ? ङ्याप्प्रातिपदिकात् ? प्रत्ययः ? परश्च ?

अर्थः॥

वृद्ध-संज्ञात् शैषिकः छः प्रत्ययः भवति।

उदाहरणम्॥

गार्गीयः, वात्सीयः, शालीयः, मालीयः॥

काशिका-वृत्तिः

वृद्धाच् छः ४।२।११४

गोत्रे इति न अनुवर्तते। सामान्येन विधानम्। वृद्धात् प्रातिपदिकात् छः प्रत्ययो भवति शैषिकः। अणो ऽपवादः। गार्गीयः। वात्सीयः। शालीयः। मालीयः। अव्ययतीररूप्यौत्तरपदौदीच्यग्राम। कौपधविधीन् तु परत्वाद् बाधते।

लघु-सिद्धान्त-कौमुदी

वृद्धाच्छः १०८०, ४।२।११३

शालीयः। मालीयः। तदीयः। (वा नामधेयस्य वृद्धसंज्ञा वक्तव्या)। देवदत्तीयः, दैवदत्तः॥

न्यासः

वृद्धाच्छः। , ४।२।११३

"अव्ययतीर"इत्यादि। तत्राव्ययविधिं बाधते-- आराद्भव आरातीयः। तीरोत्तर एव विधिः,तं च वायसतीरे भवो वायसतीरीयः। रूपोत्तरपदात्तु छं बाधित्वा "धन्ययोपधाद्()वुञ्" ४।२।१२० इति योपधलक्षणो वुञ् भवति--- मणिरूप्ये

भवो माणिरूप्यक इति। उदीच्यग्रामविदिं बाधते-- वाडवाक्षे भवो वाडवाक्षीयः, साडलपुरे भवः साडलपुरीयः। कोपधलक्षमम्--औदके भव औदकीयः, चौल्लुके भवः चौल्लुकीयः। तेषां तु विधीनामवृद्धोऽवकाशः॥

बाल-मनोरमा

वृद्धाच्छः १३१८, ४।२।११३

वृद्धाच्छः। वृद्धसंज्ञकाच्छः स्याज्जातादिष्वर्थेषु। अणोऽपवादः। शालीय इति। शालायां जात इत्यादिरर्थः। एवं तदीयः।

बाल-मनोरमा

भवतष्ठक्छसौ १३२०, ४।२।११३

भवतष्ठक्छसौ। भावत्क इति। "इसुसुक्तान्तात्कः"। ननु भवच्छब्दाच्छस्य ईयादेशे सति भत्वेन पदत्वस्य बाधात्कथं जश्त्वमित्यत आह--जश्त्वमिति। "सिति चे"ति पदत्वेन भत्वस्य बाधादिति भावः। ननु "भावत" इति कथमण्प्रत्ययः, "त्यदादीनि चे"ति भवच्छब्दस्य वृद्धतया छस्यैव युक्तत्वादित्यत आह--वृद्धादित्यनुवृत्तेः शत्रन्तादणेवेति। त्यदादिषु "भातेर्डवतु"रिति डवत्वन्तस्यैव पाठादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

भवतष् ठक्छसौ ४।२।११५

वृद्धातित्येव। भवच्छब्दाद् वृद्धात् ठक्छसौ प्रत्ययौ भवतः शैषिकौ। छस्य अपवादौ सकारः पदसंज्ञार्थः। भवतस्त्यदादित्वाद् वृद्धसंज्ञा। भावत्कः। भवदीयः। अवृद्धात् तु भवतः शतुरणेव भवति। भावतः।

न्यासः

भवतष्ठक्छसौ। , ४।२।११४

"सकारः पदसंज्ञार्थः" इति। "सिति च" १।४।१६ इति पदसंज्ञा यथा स्यात्। तस्याञ्च सत्यां भवदीयमतित्यत्र "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वं भवति। "भावत्कः" इति। "इशुसुक्तान्तात् कः"७।३।५१। "अवृद्धात्तु भवतः" इति। शत्रन्तादिति॥

---

सूत्रम्

काशिका-वृत्तिः

काश्यादिभ्यष् ठञ्ञिठौ ४।२।११६

काशि इत्येवम् आदिभ्यः ठञ् ञिठ इत्येतौ प्रत्ययौ भवतः शैषिकौ। इकार उच्चारनार्थः। ञकार एवोभयत्र विपर्यस्तदेशो ऽनुबन्धः। स्त्रीप्रत्यये विशेषः। काशिकी। काशिका। बैदिकी। बैदिका। वृद्धातित्यत्र अनुवर्तते। ये तु अवृद्धाः पठ्यन्ते, वचनप्रामाण्यात् तेभ्यः प्रत्ययविधिः। देवदत्तशब्दः पठ्यते, तस्य एङ् प्राचां देशे १।१।७४ इति वृद्धसंज्ञा। दैवदत्तिकः। वाहीकग्रामस्य तु न अस्ति वृद्धसंज्ञा। दैवदत्तः। कथं भाष्ये उदाहृतं वा नामधेयस्य वृद्धसंज्ञा वेदितव्या देवदत्तीयाः, दैवदत्ताः इति, यावता वृद्धसंज्ञाऽपक्षे काश्यादित्वात् ठञ्ञिठाभ्यां भवितव्यम्? तत्र एवं वर्णयन्ति, वा नामधेयस्य इति व्यवस्थितविभाषेयम्, सा छे कर्तव्ये भवति, ठञ्ञिठयोर् न भवति इति। काशि। चेति। संज्ञा। संवाह। अच्युत। मोहमान। शकुलाद। हस्तिकर्षू। कुदामन्। हिरण्य। करण। गोधाशन। भौरिकि। भौलिङ्गि। अरिन्दम। सर्वमित्र। देवदत्त।

साधुमित्र। दासमित्र। दासग्राम। सौधावतान। युवराज। उपराज। सिन्धुमित्र। देवराज। आपदादिपूर्वपदात् कालात्। आपत्कालिकी, आपत्कालिका। और्ध्वकालिकी, और्ध्वकालिका। तात्कालिकी, तात्कालिका।

बाल-मनोरमा

काश्यादिभ्यष्ठञ्ञिठौ १३२१, ४।२।११५

काश्यादिभ्यष्ठञ्ञिठौ। ठञ्--ञिठ इति प्रत्ययौ स्तः। ञिठप्रत्यये ञि इति समुदायस्य "आदिर्ञिटुडवः" इति इत्संज्ञायां प्रयोजनाऽभावाञ्ञकार एव इत्, तस्य ञित्स्वरः प्रयोजनम्। ठञ एव विधौ तु ङीप् स्यात्, टाब् न स्यात्। नन्वेवं सति इठप्रत्यये ठस्य इकादेशो न स्यात्, अङ्गात्परत्वाऽभावादित्यत आह--उच्चारणार्थ इति। काशिकीति काश्यां जातादिरित्यर्थः। ठञन्तान्ङीप्। काशिकेति। ञिठप्रत्यये इकादेशे टाप्। वैदिकी वैदिकेति। वेदिर्देशविशेषः। आपदादिपूर्वपदादिति। गणसूत्रम्। ठञ्ञिठावित्येव। आपदादिरिति। आपत् आदिर्यस्येति विग्रहः। आपत्कालिकी आपत्कालिकेति। ठञि ङीप्, ञिठेटाप्। बाहीकग्रामेभ्यश्च। बाहीकाख्याः केचिद्ग्रामाः, तद्विशेषवाचिभ्य इत्यर्थः।

तत्त्व-बोधिनी

काश्यादिभ्यष्ठञ्ञिठौ १०५४, ४।२।११५

काश्यादिभ्यः। इकार उच्चारणार्थ इति। उभयत्र ञकार एवानुबन्धःस तस्य व्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थ इति भावः। आपदादीति। गणसूत्रमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

वाहीकग्रामेभ्यश् च ४।२।११७

वृद्धातित्येव। वाहीकग्रामवाचिभ्यः वृद्धेभ्यः ठञ्ञिठौ प्रत्ययौ भवतः शैषिकौ। छस्य अपवादौ। शाकलिकी, शाकलिका। मान्थविकी, मान्थविका।

न्यासः

वाहीकग्रामेभ्यश्च। , ४।२।११६

बाल-मनोरमा

वाहीकग्रामेभ्यश्च १३२२, ४।२।११६

तदाह--वाहीकग्रामवाचिभ्य इति।

तत्त्व-बोधिनी

वाहीकग्रामेभ्यश्च १०५५, ४।२।११६

वृद्धादेवेति। "वृद्धाच्चेत्प्राचमेवे"ति विपरीतनियमस्तु न भवति,अप्राग्देशवाचिनो वृद्धस्य उवर्णान्तस्याऽभावात्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा उशीनरेषु ४।२।११८

वृद्धातिति वर्तते, वाहीकग्रामेभ्यः इति च। उशीनरेसु ये वाहीकग्रामाः, तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यः विभाषा ठञ्ञिठौ प्रत्ययौ भवतः। आह्वजालिकी, आह्वजालिका, आह्वजालीया। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया।

न्यासः

विभाषोशीनरेषु। , ४।२।११७

बाल-मनोरमा

विभाषोशीनरेषु १३२३, ४।२।११७

विभाषोशीनरेषु। पूर्वसूत्रे समस्तनिर्देशेऽपि ग्रामेभ्य इत्यनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञानात्। तदाह--एषु ये ग्रामा इति। उशीनरेषु ये ग्रामास्तद्विशेषवाचिभ्यः इत्यर्थः। सौदर्शनो नाम उशीनरदेशे कश्चिद्ग्रामः। सौदर्शनीयेति। ठञ्ञिठयोरभावे वृद्धाच्छः।

---

सूत्रम्

काशिका-वृत्तिः

ओर् देशे ठञ् ४।२।११९

वृद्धातेति नावुवर्तते, उत्तरसूत्रे पुनर्वृद्धग्रहणात्। उवर्णान्तात् देशवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। नैषादकर्षुकः। शावरजम्बुकः। देशे इति किम्? पटोश्छात्राः पाटवाः। ठञ्ञिठयोः प्रकरणे ठञः केवलस्य अनुवृत्तिः न लभ्यते इति ठञ्ग्रहणं कृतम्।

न्यासः

और्देशे ठञ्। , ४।२।११८

"नैषादकर्षुकः। शावरजम्बुकः" इति। निषादकर्षूवरजम्बूशब्दाभ्यां ठञ्, "इसुसुक्तान्तात् कः" ७।३।५१, "केऽणः" ७।४।१३ इति ह्यस्वः। ननु च ठञ् प्रकृत एव, स एवेहानुकृष्यते, त()त्क ठञ्ग्रहणेन? इत्यत आह-- "ठञ्ञिठयोः" इति। यथैव हि ठञ् प्रकृतः, एवं ञिठोऽपि। तत्र द्वयोरपि प्रकरणे ठञ् चानुवर्तिष्यते, नेतर इत्येतन्न लभ्यते। तस्मात् ञिठस्य निवृत्तये पुनष्ठञ्ग्रहणं कृतम्। ननु चास्वरितत्वादेव ञिठो नानुवर्तिष्यते? सत्यमेतत्; तदेवास्वरितत्वं ज्ञापयितुं ञिठस्य ठञ्ग्रहणं कृतम्। तच्चास्वरितत्वमाख्यायते मन्दबुद्धीनामनुग्रहाय॥

बाल-मनोरमा

ओर्देशे ठञ् १३२४, ४।२।११८

ओर्देशे ठञ्। निषादकर्षूरिति। "कश्चिद्ग्राम" इति शेषः। नैषादकर्षुक इति। उगन्तात्परत्वात्कादेशः।

---

सूत्रम्

काशिका-वृत्तिः

वृद्धत् प्राचाम् ४।२।१२०

ओर् देशे इत्येव। उवर्णान्तात् वृद्धात् प्राग्देशब्वाचिनः। प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। आढकजम्बुकः। शाकजम्बुकः। नापितवास्तुकः। पूर्वेण एव ठञि सिद्धे नियमार्थं वचनम्, वृद्धादेव प्राचाम् अवृद्धान् न भवति इति। मल्लवास्तु माल्लवास्तवः।

न्यासः

वृद्धात्प्राचाम्। , ४।२।११९

"आढकजम्बुकः" इति। पूर्ववत् कादेशो ह्रस्वत्वञ्च॥

बाल-मनोरमा

वृद्धात्प्राचाम् १३२५, ४।२।११९

वृद्धात्प्राचाम्। "ओर्देशे ठ"ञित्यनुवर्तते। प्राचामिति देशविशेषणं, नतु विकल्पार्थं, व्याख्यानात्। पूर्वेण सिद्धे नियमार्थमिदम्। तदाह--प्राग्देशेत्यादिना। आढकजम्बुक इति। आढकजम्बूर्नाम कश्चिद्ग्रामः। तत्र भव इत्यर्थः। उगन्तात्परत्वाद्वुस्य कः। "केऽणः" इति ह्रस्वः। एवे शाकजम्बुकः। मल्लवास्त्विवति। "कश्चित् प्राच्यो ग्राम" इति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

धन्वयौपधाद् वुञ् ४।२।१२१

वृद्धातिति वर्तते, देशे इति च। धन्ववाचिनो यकारौपधाच् च देशाभिधायिनो वृद्धात् प्रातिपदिकात् वुञ् प्रत्ययो भवति शैषिकः। धन्वशब्दो मरुदेशवचनः। पारेधन्वकः। ऐरावतकः। योपधात् सांकाश्यकः। कम्पिल्यकः।

न्यासः

घन्वयोपधाद्?वुञ्। , ४।२।१२०

धन्वनोऽर्थस्य ग्रहणम्, न स्वरूपस्य; वृद्धाधिकारात्। न हि धन्वशब्दो वृद्धः। पारेधन्वनि जातः पारेधन्वकः, "नस्तद्धिते" ६।४।१४४ इति टिलोपः। ऐरावते जात ऐरावततकः॥

बाल-मनोरमा

धन्वयोपदाद्वुञ् १३२६, ४।२।१२०

धन्वयोपधाद्वुञ्। ऐरावतं धन्वेति। ऐरावताख्यं धन्वेत्यर्थः। धन्व-मरुप्रदेशः। "समानो मरुधन्वानौ" इत्यमरः। "आष्टकं नाम धन्वे"ति बाष्यान्नपुंसकत्वमपि। ऐरावतक इति। ऐरावताख्ये मरुप्रदेशे भव इत्यर्थः। वुञ्, अकादेशः। साङ्काश्यकः काम्पिल्यक इति। साङ्काश्ये काम्पिल्ये च भव इत्यर्थः।

तत्त्व-बोधिनी

धन्वयोपधाद्वुञ् १०५६, ४।२।१२०

धन्वयोपधा। धन्वेति न स्वरूपपर्याययोग्रहणं, वद्धत्वाऽसंभवादित्याशयेनाह---धन्वविशेषेति। ऐरावतं धन्वेति। यद्यपि "समानौ मरुधन्वानौ"इत्यमरेण पुंस्त्वमुक्तं, तथापि "आष्टकं नाम धन्वे"ति भाष्ये ह्रस्वापाठान्नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रस्थपुरवहान्ताच् च ४।२।१२२

वृद्धातित्येव, देशे इति च। अन्तशब्दः प्रत्येकम् अभिसम्बध्यते। प्रस्थपुर वह इत्येवम् अन्तात् देशवाचिनः प्रातिपदिकाद् वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्य अपवादः। मालाप्रस्थकः। नान्दीपुरकः। कान्तीपुरकः। पैलुवहकः। फाल्गुनीवहकः। पुरान्तो रोपधस्ततः उत्तरसूत्रैणैव सिद्धम् अप्रागर्थम् इह ग्रहणम्।

न्यासः

प्रस्थपुरवहान्ताच्च। , ४।२।१२१

"वृद्धादित्येव" इति। यदि तर्हि वृद्धादित्यनुवत्र्तते वृद्धाधिकारादेव स्वरूपग्रहणाभावात् कथं तदन्तविधिर्भवति, नहि प्रस्थादेः केवलस्य वृद्धत्वं सम्भवति, किं तर्हि? तदन्तस्य, तत्किमन्तग्रहणेन? मैवम्; सत्यपि वृद्धाधिकारे यथा धन्वेति वृद्धग्रहणं हि देशस्य विशेषणं तथेहापि स्यात्, तन्निवृत्त्यर्थमन्तग्रहणं कृतम्॥

बाल-मनोरमा

प्रस्थपुरवहान्ताच्च १३२७, ४।२।१२१

प्रस्थपुरवहान्ताच्च। एतदन्तादिति। प्रस्थ, पुर, वह-एतदन्तादित्यर्थः। ननु पुरान्तग्रहणं व्यर्थं, नान्दीपुरक इत्यत्र "रोपधेतोः प्राचा"मित्युत्तरसूत्रेण सिद्धत्वादित्यत आह--पुरान्तेति।

तत्त्व-बोधिनी

प्रस्थपुरवहान्ताच्च १०५७, ४।२।१२१

उत्तरेणेति। रोपधत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

रौपधैतोः प्राचाम् ४।२।१२३

वृद्धतित्येव, देशे इति च। तद्विशेसणं प्राग्ग्रहणम्। रौपधातीकारान्ताच् च प्रग्देशवाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्य अपवादः। पाटलिपुत्रकाः ऐकचक्रकाः। ईतः खल्वपि काकन्दी। काकन्दकः। माकन्दी। माक्नदकः। प्राचाम् इति किम्? दात्तामित्रीयः। तपरकराणं विस्पष्टार्थम्।

न्यासः

रोपधेतोः प्राचाम्। , ४।२।१२२

"ईकारान्ताच्च" इति।कतं पुनर्ज्ञायते---दीर्घस्येदं ग्रहणम्, न ह्रस्वस्येति? सामथ्र्यात्। प्राग्ग्रहणं हि देशस्य विशेषणम्। वृद्धादिति वत्र्तते, न च वृद्धमिकारान्तं प्राग्देशवाच्यस्ति, तस्माद्दीर्घस्येदं ग्रहणमिति विज्ञायते। एकचक्राशब्दस्य तु "एङ् प्राचाम्" १।१।७४ इति वृद्धसंज्ञा। अथ तपरकरणं किमर्थम्, नेह किञ्चित्तस्य व्यावर्त्यमस्तीत्यत आह-- "तपरकरणं विस्पष्टार्थम्ट (इति)। असति हि तस्मिन् रोपध इति स्थिते गुणे कृते विभक्तौ च रोपधयोरिति निर्देशः स्यात्। तत्रैव सन्देहः स्यात्--किं रोपधस्येदं ग्रहणम्? उत रोपधस्येकारान्तस्येति? तपरकरणे तु सति सन्देहो न भवति। ईरोपधादिति नोक्तम्, वैचित्र्यार्थम्॥

बाल-मनोरमा

रोपधेतोः प्राचाम् १३२८, ४।२।१२२

रोपधेतोः प्राचां। रोपधश्च, ईच्च तयोरिति द्वन्द्वः। षष्ठी पञ्चम्यर्थे। प्राचामिति धेशविशेषणं। तदाह--रोपधादित्यादिना। ईत इति। "उदाह्रियते" इति शेषः। काकन्दक इति। काकन्दी नाम देशः, तत्र भव इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

जनपदतदवध्योश् च ४।२।१२४

वृद्धातित्येव, देशे इति च। तद्विशेषनं जनपदतदवधी। वृद्धाज् जनपदवाचिनः तदवधिवाचिनश्च प्रातिपदिकात् वुञ् प्रत्ययो भवति शैसिकः। छस्य अपवादः। आभिसारकः। आदर्शकः। जनपदावधेः खल्वपि औपुष्टकः। श्यामायनकः। तदवधेरपि जनपा एव गृह्यते न ग्रामः। किम् अर्थं तर्हि ग्रहणम्? बाधकबाधनार्थम्। गर्तोत्तरपदाच् छं बाधित्वा वुञेव जनपदावधेर् भवति। त्रैगर्तकः।

न्यासः

जनपदतदवध्योश्च। , ४।२।१२३

"तदवधेरपि" इत्यादि। "जनपदतदवध्योश्च" इत्यत्र तच्छब्देन सन्निहितत्वाज्जनपद एवपरामृश्यते। न चायं षष्ठीसमासः। षष्ठीसमासे ह्जनपदोऽपि योऽवधिस्ततोऽपि वुञ् प्रसज्येत। छ एव तस्येष्यते-- मौञ्जी नाम वाहीकानामवधिग्रामः, तत्र भवो मौञ्जीय इति। तस्मात् समानाधिकरण एवायं समासः-- सएव जनपदोऽवधिर्मर्यादा तदवधिरिति। तेन जनपदावधिरेव एव गृह्न्ते, न ग्रामः। "किमर्थं तर्हि तदवधिग्रहणम्" इति। यदि तदवधिरपि जनपद एव गृह्नते,निरर्थकं तर्हि तस्य ग्रहणम्, "जनपदाच्च" इत्येतावदेव वक्तव्यमित्यभिप्रायः। "बाधकबाधनार्थम्" इति। गत्र्तोत्तरपदाद्वक्ष्यमाणश्छ एव परत्वाद्विशेषविहितत्वाच्च बाधकः, तस्य बाधनार्थं तदवधिग्रहणम्।तेनहि त्रिगत्र्तेषु भवस्त्रैगत्र्तक इत्यत्रोत्तरसूत्रेण गर्तत्तोत्तरपदाच्छं बाधित्वा वुञेव भवति॥

बाल-मनोरमा

जनपदतदवध्योश्च १३२९, ४।२।१२३

जनपदतदवध्योश्च। आदर्शक इति। आदर्शो नाम जनपदः। तत्र भव इत्यर्थः। त्रिगत्रो नाम जनपदविशेषस्यावधिः। जनपदत्वेन सिद्धावपि त्रिगर्तशब्दे परमपि गर्तोत्तरपदच्छं बाधितुमिह तदवधिग्रहणम्। तदाह--त्रैगर्तक इति।

तत्त्व-बोधिनी

जनपदतदवध्योश्च १०५८, ४।२।१२३

जनपद। स चासौ अवधिश्चेति कर्मधारयाज्जनपदजरूप एवावधिर्लभ्यते। न च जनपदत्वादेव सिद्धे अवधिग्रहणं व्यर्थं, "बुञेव यथा स्यान्नान्य"दित्येतदर्थं तस्यावश्यकत्वात्। अत एव जनपदावधिवाचिनस्त्रिगर्तशब्दात् "र्तोत्तरपदा"दिति च्छो न भवति, किंतु "अवृद्धादपि बहुवचनविषया"दित्युत्तरसूत्रेण वुञेव भवतीत्याशयेनोदाहरति--त्रैगर्तक इति। "जनपदतदवध्यो"रिति सूत्रे जनपदावधिवाचिन उदाहरणं तु "श्यामायनकः"इत्यादि बोध्यम्। नागरा ब्राआह्नणा इति। कत्त्र्यादिषु "माहिष्मती"ति संज्ञाशब्दसाहचर्यात्संज्ञाभूतनगरशब्दस्यैव ढकञा "नाग रेयके"इति भाव्यमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अवृद्धादपि बहुवचनविषयात् ४।२।१२५

जनपदतदवध्योः इत्येव। अवृद्धाद् वृद्धाच् च जनपदात् तदवधिवाचिनश्च बहुवनचविषयात् प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैसिकः। अण्छयोरपवादः। अवृद्धाज् जनपदात् तावत् अङ्गाः। वङ्गाः। कलिङ्गाः। आङ्गकः। वाङ्गकः। कालिङ्गकः। अवृद्धाज् जनपदावधेः अजमीढाः। अजक्रन्द्राः। आजमीढकः। आजक्रन्दकः। वृद्धाज् जनपदात् दार्वाः। जाम्ब्वाः। दार्वकः। जाम्ब्वकः। वृद्धाज् जनपदावधेः कालञ्जराः। वैकुलिशाः। कालञ्जरकः। वैकुलिशकः। विषयग्रहणमनयत्र भावार्थम्। जनपदएकशेषबहुत्वे मा भूत्। वर्तन्यः। वार्तनः। अपिग्रहणं किम् यावता वृद्धात पूर्वेण एव सिद्धम्? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायि इति समुच्चीयते।

न्यासः

अवृद्धादपि बहुवचनविषयात्। , ४।२।१२४

"अण्छयोरपवादः" इति। अवृद्धादणोऽपवादः, वृद्धाच्छस्य। अथ विषयग्रहणं किमर्थम्, विनापि तेन विशेषो लभ्यत एव। कथम्? इह जनपदतदवधिशब्दाभ्यां समानाधिकरणत्वाद्बहुवचनशब्दो न पारिभाषिको विज्ञायते,किं तर्हि? अन्वर्थः-- बहूनामर्थानां वचनो यो जनपदस्तदवधिश्चेति। यश्च बहूनामर्थानां वचनः सोऽर्थान् बहून् ब्राऊवन् सामथ्र्यादेव बहुवचनविषयो भवति? इत्याह-- "विषयग्रहणम्" इत्यादि। अनन्यत्रभावः कथं नाम लभ्यत इत्येवमर्थं विषयग्रहणम्। अनन्यत्रभावः किमर्थमिष्यत इत्याह-- जनपदैकदेशः क्रियते। वत्र्तनी च वत्र्तनी च वत्र्तनी च वत्र्तन्यः,तद्बहूनां वाचको भवति। ततश्च यदि विषयघणं न क्रियते ततो वत्र्तनीषु भव इति वुञ् स्यात्। विषयग्रहणे तु सति न भवति, अनन्यत्रभावो विषयः। तेनैवं विज्ञायते-- बहुवचनं न यो व्यभचरति। यश्चैकशेषः स बहूवचनं व्यभिचरति, तस्यहि विवक्षाभावे बहुत्वात्। द्वयोरपि च कदाचिद्()वृत्तेः। "अपिग्रहणम्" इति। अपिग्रहणं हि वृद्धादपि यथा स्यादित्येवमर्थं क्रियते। वृद्धात्पूर्वेणैव सिद्धः प्रत्ययः, तत् किमपिग्रहणेन? "तक्रकौण्डिन्यायेन" इति। यथा "ब्राआह्मणेभ्यो दधि दीयता तक्रं कौण्()डिन्याय" इति सामान्येन वृत्तस्य दधिदानस्य विशेषे वत्र्तमानेन तक्रदानेन बाधा क्रियते, तथेहापि बहुवचनविषये च सामान्येन प्रवृत्तस्य पूर्वयोगस्य बहुवचनविषये वत्र्तमानेनानेन योगेन बाधा विज्ञायते। तस्माद्()वृद्धादपि यथा स्यादित्यपि शब्देन समुच्चीयते॥

बाल-मनोरमा

अवृद्धादपि बहुवचनविषयात् १३३०, ४।२।१२४

अवृद्धादपि बहुवचनविषयात्। अवृद्धाज्जनपदादिति। "उदाह्रियते" इति शेषः। आजमीढक इति। अजमीढेषु भव इत्यर्थः। आजमीढक इति। अजमीढेषु भव इत्यर्थः। अजमीढाख्यो जनपदः कस्यचिज्जनपदस्यावधिः। वृद्धाज्जनपदादिति। "उदाह्रियते" इति शेषः। दार्वक इति। "दार्वा" इति बहुवचनान्तो जनपदविशेषे वर्तते। तत्र भव इत्यर्थः। कालञ्जरक इति। कलञ्जरेषुभव इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कच्छाग्निवक्त्रगर्तोत्तरपदात् ४।२।१२६

देशे इत्येव उत्तरपदशब्दः प्रत्येकम् अभिसम्बध्यते। कच्छाद्युत्तरपदाद् देशवाचिनः। प्रातिपदिकाच् च अवृद्धाद् वृद्धाच् च वुञ् प्रत्ययो भवति शैषिकः। छणोरपवादः। दारुकच्छकः। पैप्पलीकच्छकः। काण्डाग्नकः। वैभुजाग्नकः। ऐन्द्रवक्त्रकः। सैन्धुवक्त्रकः। बाहुगर्तकः। चाक्रगर्तकः।

न्यासः

कच्छाग्निवक्त्रगत्र्तोत्तरपदात्।, ४।२।१२५

कच्छशब्दार्थमुत्तरपदग्रहणात्, स हि केवलोऽपि देश वत्र्तते। इतरेषां तु केवलानं देशे वृत्त्यसम्भवात् सामथ्र्यादेव तदन्तविधिर्लभ्यत इतीतरान् प्रत्युत्तरपदग्रहणमनर्थकम्। "कच्छाग्निवक्त्रगत्र्तान्तात्" इति नोक्तम्, बहुच्पूर्वान्मा भूत्। यदा हि कच्छदेशेन देशान्तरन्तरस्य गुणसाम्ये सतीषदसमाप्तः कच्छदेश इति कच्छशब्दाद्बहुच् क्रियते तदा बहुकच्छशब्दो देशवचन इति। अन्तग्रहणे तु सति ततोऽपि प्रत्ययः स्यात्, उत्तरपदग्रहणान्न भवति। "दारुकच्छः"इति। कच्छशब्दस्योत्तरपदस्य वृद्धस्योदाहरणम्। "पैप्पलीकच्छकः" इत्यवृद्धस्योदाहरणम्, एवमन्याद्युत्तरपदानामपि। एकवृद्धस्योदाहरणम्। अपरं वृद्धस्य वेदितव्यम्॥

न्यासः

गोयवाग्वोश्च।, ४।२।१२५

बाल-मनोरमा

कच्छाग्निवक्रवर्तोत्तरपदात् १३३१, ४।२।१२५

कच्छाग्नि। कच्छ, अग्नि, वक्त, वर्त-एतदुत्तरपदादित्यर्थः। शेषपूरणेन सूत्रं व्याचष्टे--देशवाचिन इति। छाऽणोरपवादः। दारुकच्छक इति। दारुकच्छे भव इत्यर्थः। काण्डाग्नक इति। काण्डाग्नौ भव इत्यथः। अकादेशे "यस्येति चे"ति इकारलोपः। सैन्धुवक्रक इति। सिन्धुवक्रे भव इत्यर्थः। बाहुवर्तक इति। बहुवर्ते भव इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

धूमादिभ्यश् च ४।२।१२७

धूमादिभ्यो देशवचिभ्यः प्रातिपदिकेभ्यः वुञ् प्रत्ययो भवति शैषिकः। अणादेरपवादः। धौमकः। खाण्डकः। पाथेयशब्दः पठ्यते, तस्य योपधात्वादेव वुञि सिद्धे सामर्थ्याददेशार्थं ग्रहणम्। तथा विदेहानर्तशब्दयोः जनपदलक्षणे वुञि सिद्धे ऽदेशार्थः पाठः। विदेहानां क्षत्रियाणां स्वं वैदेहकम्। आनर्तकम्। समुद्रशब्दः पठ्यते, तस्य नावि मनुष्ये च वुञिष्यते। सामुद्रिका नौः। सामुद्रको मनुस्यः। अन्यत्र न भवति, सामुद्रं जलम् इति। धूम। खण्ड। शशादन। आर्जुनाद। दाण्डायनस्थली। माहकस्थली। घोषस्थली। माषस्थली। राजस्थली। राजगृह। सत्रासाह। भक्षास्थली। मद्रकूल। गर्तकूल। आञ्जीकूल। द्व्याहाव। त्र्याहाव। संहीय। वर्वर। वर्चगर्त। विदेह। आनर्त। माठर। पाथेय। घोष। शिष्य। मित्र। वल। आराज्ञी। धर्तराज्ञी। अवयात। तीर्थ। कूलात् सौवीरेषु। समुद्रान्नावि मनुस्ये च। कुक्षि। अन्तरीप। द्वीप। अरुण। उज्जयिनी। दक्षिणापथ। साकेत।

न्यासः

धूमादिभ्यश्च।, ४।२।१२६

"अणादेरपवादः"इति। आदिशब्देन कच्छादीनां ग्रहणम्। तत्र देशवचना अवृद्धा येधूमादयस्तेभ्योऽणोऽपवादः। ये तु वृद्धास्तेभ्यश्छस्। य उदीच्यग्रामास्तेभ्योऽणः। ये बाहीकग्रामास्तेभ्यष्ठञ्ञिठयोः। "तस्य योपधत्वादेव वुञि सिद्धे" इति। "धन्वयोपधाद्()वुञ्" ४।२।१२० इत्यनेन। "जनपदलक्षणे वुञि सिद्धे" इति। "अवृद्धादपि" ४।२।१२४ इत्यादिना। "कूलात् सौवीरेषु" इति। कुलशब्दाद्()वृञ् भवति सौवीरेषु। कौलको भवति सौवीरश्चेत, कौलोऽन्यत्॥

बाल-मनोरमा

धूमादिभ्यश्च १३३२, ४।२।१२६

धूमादिभ्यश्च। "देशवाचिभ्यो वु"ञिति शेषपूरणम्।

---

सूत्रम्

काशिका-वृत्तिः

नगरात् कुत्सनप्रावीण्ययोः ४।२।१२८

नगरशब्दात् वुञ् प्रत्ययो भवति शैसिकः कुत्सने प्रावीण्ये च गम्यमाने। प्रत्ययार्थविशेषणं च एतत्, कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति। कुत्सनं निन्दनम्। प्रावीण्यं नैपुण्यम्। केन अयं मुषितः पन्था गात्रे पक्ष्मालिधूसरः। इह नगरे मनुष्येण सम्भाव्यत एतन् नागरकेण। चोरा हि नागरका भवन्ति। केन इदं लिखितं चित्रं मनोनेत्रविकाशि यत्। इह नगरे मनुष्येण सम्भाव्यत एतन् नागरकेण। प्रवीणा हि नागरका भवन्ति। कुत्सनप्रावीण्ययोः इति किम्? नागरा ब्राह्मणाः। कत्र्यादिषु तु संज्ञाशब्देन साहचर्यात् संज्ञानागरं पठ्यते, तस्मिन् नागरेयकम् इति प्रत्युदाहार्यम्।

न्यासः

नगरात्कुत्सनप्रावीण्ययोः। , ४।२।१२७

"नागरा ब्राआह्णाः" इति। अण्। ननु च "नगर,माहिष्मती" ४।२।९४ इति नगरशब्दः कत्त्र्यादिषु पठ()ते, ततो ढकञा भवितव्यम्, तत्कथं नागरा इति प्रत्युदाह्रियत इत्याह-- "कत्त्र्यादिषु" इति। द्विविधो नगरशब्दः-- जातिवचनः, संज्ञावचनश्च। तयोः कत्त्र्यादिषु माहिष्मतीशब्देन साहचर्यात् संज्ञाशब्दः पठ()ते। तत्र जातिशब्दान्नागरा इति प्रत्युदाह्रतम्। संज्ञाशब्दे तु नागरेयक इति प्रत्युदाहत्र्तव्यम्॥

बाल-मनोरमा

नगरात्कुत्सनप्रावीण्ययोः १३३३, ४।२।१२७

नगरात्कुत्सन। नागरा ब्राआह्णा इति। कत्र्यादिषु माहिष्मतीसाहचर्येण संज्ञाभूतस्यैव नगरशब्दस्य ग्रहणम्। अतो न ढकञ्। "प्राचां ग्रामनगराणामि"ति सूत्रभाष्ये "नागरा" इत्युदाहरणात्।

---

सूत्रम्

काशिका-वृत्तिः

अरण्यान् मनुस्ये ४।२।१२९

अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैसिको मनुस्ये ऽभिधेये। औपसङ्ख्यानिकस्य णस्य अपवादः। आरण्यको मनुस्यः। पथ्याध्यायन्यायविहारमनुस्यहस्तिषु इति वक्तव्यम्। आरण्यकः पन्थाः। आरण्यको ऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती। वा गोमयेसु। आरण्याः, आरण्यका गोमयाः। एतेसु इति किम्? आरण्याः पशवः।

न्यासः

अरण्यान्मनुष्ये। , ४।२।१२८

"औपसंख्यानिकस्य णस्यापवादः" इति। "अरण्याण्यः" (वा।४३७) इत्युपसंख्यानात्प्राप्तस्य। "पथ्यध्यायन्याय" इत्यादि।

एषु पथ्यादिषु वुञ्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "धूमादिभ्यश्च" ४।२।१२६ इत्यतश्चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः,तेन पथ्यादिषु वुञ्भवति। "वागोमयेषु" इति। गोमयेषु वाच्येषु वा वुञ्भवतीति। स तु तस्यैव चकारस्यानुक्तसमुच्चयार्थस्यानुवृत्तेर्वक्ष्यमाणस्य विभाषाग्रहणस्योभयोः शेषभूतत्वाल्लभ्यते। यदि तर्हि वक्ष्यमाणं विभाषाग्रहणमुभयोर्योगयोः शेषभूतं पथ्यादिष्वपि विकल्पेन विधिः स्यात्? नैष दोषः; व्यवस्थितविभाषा हि सा, तेन गोमयाद्विकल्पेन विधिर्भवति, पथ्यादिषु नित्यमिति॥

बाल-मनोरमा

अरण्यान्मनुष्ये १३३४, ४।२।१२८

अरण्यान्मनुष्ये। आरण्यक इति। पन्था अध्यायो न्यायो विहारो मनुष्यो हस्ती वा। वा गोमयेष्विति। वार्तिकमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा कुरुयुगन्धराभ्याम् ४।२।१३०

कुरु युगन्धर इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः। कौरवकः, कौरवः। यौगन्धरकः , यौगन्धरः। जनपदशब्दावेतौ, ताभ्याम् अवृद्धादपि इति नित्ये वुञि प्राप्ते विकल्प उच्यते। कुरुशब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति। सैषा युगन्धरार्था विभाष। मनुष्यतत्स्थयोः तु कुरुशब्दान् नित्य एव वुञ् प्रत्ययो भवति, कौरवको मनुस्यः, कौरवकमस्य हसितम् इति।

न्यासः

विभाषा कुरुयुगन्धाराभ्याम्। , ४।२।१२९

"सैषा युगन्थरार्था विभाषा" इति।न कुरुशब्दार्था। तत्र कच्छादिपाठाद्विनापि विभाषाग्रहणेनाणा भवितव्यम्। ननु युगन्धरशब्दादप्यणि "अवृद्धादपि बहुवचनविषयात्" ४।२।१२४ इति नित्यएव वुञि प्राप्ते वचननित्यार्थं भविष्यति, नित्ये हि वुञि पुनरारम्भोऽनर्थक- स्यात्, तस्माद्युगन्धरार्थोऽपि विभाषा न प्रसज्येत? नैतत् पुनरारम्भो विपर्ययेणापि शक्यते समर्थयितुम्। जनपदलक्षणो ४।२।१२३ यो वुञ् स विभाषा,अयं तु नित्य इति।अस्मात्तु युगन्धरार्थं विभाषाग्रहणं कत्र्तव्यम्। मनुष्यतत्स्थयोस्तु कुरुशब्दान्नित्य एव वुढ्भवति, कच्छादिषु पाठसामथ्र्यात्। अन्यथानयैव विभाषया वुञणोः सिद्धत्वात् कच्चादिपाठोऽर्थकः स्यात्; अनवकाशत्वात्॥

बाल-मनोरमा

विभाषा कुरुयुगन्धराभ्याम् १३३५, ४।२।१२९

विभाषा कुरु। कुरुयुगन्धरौ जनपदौ। अवृद्धाभ्यामपि ताभ्याम् "अवृद्धादपी"ति नित्यं प्राप्ते विकल्पः।

तत्त्व-बोधिनी

विभाषा कुरुयुगन्धराभ्याम् १०५९, ४।२।१२९

विभाषा कुरु। कुरुशब्दः कच्छादिषु पठ()ते, तत्सामथ्र्यात्पक्षेऽण्सिद्ध इति परिशेषाद्विभाषाग्रहणं युगन्धरार्थमेव। "अवृद्धादपी"ति नित्यप्राप्तो वुञनेन विकल्प्यते। मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ्। कौरवको मनुष्यः। कौरवकमस्य हसितम्। एतदर्थमेवास्य कच्छादौ पाठः। अन्यथा अनयैव विभाषया वुञणोः सिद्धौ किं तेनेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

मद्रवृज्योः कन् ४।२।१३१

मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः। जनपदवुञो ऽपवादः। मद्रेसु जातः मद्रकः। वृजिकः।

न्यासः

मद्रवृज्योः कन्। , ४।२।१३०

"जनपदवुञोऽपवादः"इति। "अवृद्धादपि" ४।२।१२४ इत्यादिप्राप्तस्य। मद्रवृज्योः कन्निति ञ्यन्तस्य परनिपातः "द्वन्द्वे घि" २।२।३२ इत्यस्य विधेरनित्यत्वज्ञापनार्थम्। तेन धूमाग्नी इत्येवमादि सिद्धं भवति॥

बाल-मनोरमा

मद्रवृज्योः कन् १३३६, ४।२।१३०

मद्रवृज्योः कन्। मद्रो वृजिश्च जनपदविशेषः। जगपदवुञोऽपवादः।

---

सूत्रम्

काशिका-वृत्तिः

कोपधादण् ४।२।१३२

देशे इत्येव। ककारौपधात् प्रातिपदिकादण् प्रत्ययो भवति शैसिकः। जनपदवुञो ऽपवादः। अन्यत्र जनपदं मुक्त्वा पूर्वेण एव कोपधादणि सिद्धम्। ऋषिकेषु जातः आर्षिकः। माहिषिकः। अण्ग्रहणम् उवर्णान्तादपि यथा स्यात्, इक्ष्वाकुषु जातः ऐक्ष्वाकः।

न्यासः

कोपधादण्। , ४।२।१३१

"जनपदवुञोऽपवादः" इति। पूर्वत्प्रप्तस्य। किं पुनर्देशादन्यत्र वत्र्तमानो नेष्यते, यो देशे वत्र्तते? इत्याह-- "अन्यत्रेत्यादि पूर्वेण" इति।"प्रस्थोत्तरपदात्" ४।२।१०९ इति सूत्रेण। अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमेवोच्येत, यथाविहितमुच्यमानेऽणपवादो वुञ् स्यादिति चेत्? न; वुञ्विधाने हि वचनमनर्थकं स्यात्,तेन विना वुञः सिद्धत्वात्। तस्माद्वचनसामथ्र्याद्विहितोऽणेव प्राप्नोति। अन्येन बाधित्वा अत एवाण् अतएवाण् भविष्यतीति। स हि "प्राग्दीव्यतोऽण्" ४।१।८३ इति विहितो बाधितश्च वुञैवेत्यत आह-- "अण्ग्रहणम्" इत्यादि। "इक्ष्वाकुषु जातः"इति। इक्ष्वाकुशब्दादोर्देशे ठञ् ४।२।११८ प्राप्तः, तस्मिन् जनपदवुञा बाधिते यदीहाज्ग्रहणं न क्रियते तदा पुनर्वचनाद्()वुञेव भवति, अण्ग्रहणादणेव भवति। "ऐक्ष्वाकः" इति। "दाण्डिनायनहास्तिनायन" ६।४।१७४ इत्यादाविक्ष्वाकुशब्दस्योकारस्य लोपो निपातितः॥

बाल-मनोरमा

कोपधादण् १३३७, ४।२।१३१

कोपधादण्। माहिषिक इति। महिषिको नाम जनपदः, तत्र भव इत्यर्थः। "प्रस्थोत्तरपदे"त्यादिना सिद्धे जनपदवुञ्बाधनार्थमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

कच्छाऽदिभ्यश् च ४।२।१३३

देशे इत्येव। कच्छ इत्येवम् आदिभ्यो देशवाचिभ्यः अण् प्रत्ययो भवति शैसिकः। वुञादेरपवादः। काच्छः। सैन्धवः। वार्णवः। कच्छशब्दो न बहुवचनविषयः, तस्य मनुस्यतत्स्थयोर् वुञर्थः पाठः। विजापकशब्दः पठ्यते, तस्य कोपधत्वादेव अणि सिद्धे ग्रहनम् उत्तरार्थम्। कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। कुरु। रङ्कु। अणु। खण्ड। द्वीप। अनूप। अजवाह। विजापकः। कुलून। कच्छादिः।

न्यासः

कच्छादिभ्यश्च। , ४।२।१३२

"वुञादेरपवादः" इति। आदिशब्देन ठञः। तत्र ये जनपदबहुवचनविषयास्तेभ्यो वुञः प्राप्तस्यापवादः। सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः ४।२।११८। "कच्छशब्दो न बहुवचनविषयः" इति। तेन "अवृद्धादपि" ४।२।१२४ इत्यादिना बाधकस्य वुञोऽप्राप्तावेव सामान्येनाण्सिद्ध एवेति दर्शयति। यद्येवम्, किमर्थं तस्य पाठः? इत्याह-- "तस्य" इत्यादि। उत्तरसूत्रेण वुञ् मनुष्यतस्त्थयोर्यथा स्यादित्यवमर्थः कच्छस्येह पाठः, न त्वनर्थकः। "कोपधादेवाण् सिद्धः"इति। पूर्वसूत्रेणेति। "इहग्रहणमुत्तरार्थम्" इति। उत्तरसूत्र वुञ् यथा स्यात्॥

बाल-मनोरमा

कच्छादिभ्यश्च १३३८, ४।२।१३२

कच्छादिभ्यश्च। काच्छ इति। अत्र वुञोऽपवादोऽण्। सैन्धव इति। #ओर्देशे ठञोऽपवादः।

तत्त्व-बोधिनी

कच्छादिभ्यश्च १०६०, ४।२।१३२

सैन्धव इति। "ओर्देशे"इति ठञ्प्राप्तः। वुञि सिद्धे इति। "मनुष्यतत्स्थयो"रित्यनेन।

---

सूत्रम्

काशिका-वृत्तिः

मनुस्यतत्स्थयोर् वुञ् ४।२।१३४

कच्छादिभ्यः इत्येव। मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ् प्रत्ययो भवति। अणो ऽपवादः। काछको मनुस्यः। काच्छकम् अस्य हसितं, जल्पितम्। काच्छिका चूडा। सैन्धवको मनुस्यः। सैन्धवनस्य हसितं, जल्पितम्। सैन्धविका चूडा। मनुष्यतत्स्थयोः इति किम्? काच्छो गौः। सैन्धवो वार्णवः।

न्यासः

मनुष्यतत्स्थयोर्वुञ्। , ४।२।१३३

बाल-मनोरमा

मनुष्यतत्स्थयोर्वुञ् १३३९, ४।२।१३३

मनुष्यतत्स्थयोर्वुञ्। कच्छादिभ्य इत्यनुवर्तते। तदाह--कच्छादीति।

---

सूत्रम्

काशिका-वृत्तिः

अपदातौ साल्वात् ४।२।१३५

साल्वशब्दः कच्छादिसु पठ्यते, ततः पूर्वेण एव मनुस्यतत्स्थयोः वुञि सिद्धे नियमार्थं वचनम्। अपदातावेव मनुस्ये मनष्यस्थे च साल्वशब्दाद् वुञ् प्रत्ययो भवति। साल्वको मनुस्यः। सल्वकम् अस्य हसितम्, जल्पितम्। अपदातौ इति किम्? साल्वः पदातिर्व्रजति।

न्यासः

अपदातौ साल्वात्। , ४।२।१३४

"साल्वः" इति। कच्छादिपाठादण्॥

बाल-मनोरमा

अपदातौ साल्वात् १३४०, ४।२।१३४

अपदातौ साल्वात्। नियमार्थमिति। "साल्वाच्चेदपदातावेवेति नियमार्थमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

गोयवग्वोश् च ४।२।१३६

गवि यवाग्वाम् च जातादौ प्रत्ययार्थे साल्वशब्दाद् बुञ् प्रत्ययो भवति शैसिकः। कच्छाद्यणो ऽपवादः। साल्वको गौः। साल्विका यवागूः। साल्वमन्यत्।

बाल-मनोरमा

गोयवाग्वोश्च १३४१, ४।२।१३५

गोयवाग्वोश्च। जातत्वादिना विवक्षितयोरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

गर्तौत्तरपदाच् छः ४।२।१३७

देशे इत्येव। गर्तौत्तरपदात् देशवाचिनः प्रातिपदिकात् छः प्रत्ययो भवति शैसिकः। अणो ऽपवादः। वाहीकग्रामलक्षणं च प्रत्ययं परत्वाद् बाधते। वृकगर्तीयम्। शृगालगर्तीयम्। श्वाविद्गर्तीयम्। उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम्। बाहुगर्तम्।

न्यासः

गत्र्तोतत्रपदाच्छः। , ४।२।१३६

अवृद्धार्थं वचनम्। वृद्धात्तु "वृद्धाच्छः" ४।२।११३ इत्यनेनैव सिद्धमिति। सति तु वृद्धावपि परत्वादनेनैव भवितव्यम्।

"अनोऽपवादः" इति। नाप्राप्ते तस्मिन्नस्यारम्भात्। "वाहीकग्रामलक्षणञ्च" इत्यादि। यद्()गर्त्तोत्तरपदं वाहीकवाचि ततो वाहीकग्रामलक्षणौ ठञ्ञिठौ बाधित्तवात् परत्वाच्छ एव भवति, तस्य गर्त्तोत्तरपदमवकाश इति। अथोत्तरपदग्रहणं किमर्थम्, न गर्त्तान्तादित्येवोच्येत? इत्याह-- "उत्तरपदग्रहणम्" इत्यादि। यदि गर्त्तान्तादित्युच्येत तदा बहुगर्त्त इत्येतस्मादपि बहुच्पूर्वात् स्यात्, भवति ह्येतद्()गर्त्तान्तम्। उत्तरपदग्रहणे तु सति न भवति, न ह्येतद्()गर्त्तोत्तरपदम्। समासे हि सत्येतद्भवति-- पूर्वपदमुत्तरपदमिति॥ "अणादेरपवादः" इति। आदिशब्देन वुञः। तत्र कामप्रस्थशब्दात् "प्रस्थपुरवहान्ताच्च" ४।२।१२१ इति प्राप्तस्य वृञोऽपवादः, शेषेभ्यस्त्वौत्सर्गिकस्याणः। "सम्भवापेक्षं विशेषणम्िति। सम्भवमपेक्षत इति सम्बवापेक्षम्। येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेवेदं विशेषममिति। एतदुभयमपि विशेषणमेवार्थार्थैः स्मर्यते। "पृथिवीमध्यस्य" इत्यादिना तद्विशेषं दर्शयति। "चरणसम्बन्धेन" इत्यादि। चरणेनार्थेन सम्बन्धश्चरणसम्बन्धः; तेन करणेन वाण् भवति। किंविशिष्टः? निवासलक्षमः। निवासो लक्षणं यस्य स तथोक्तः। कथं निवासलश्रणः? यः पृथिवीमध्ये निवासभूते वर्त्तमानात् मध्यशब्दाद्भवति, स हि निवासेन लक्ष्यते। तदेतदुक्तं भवति-- पृथिवीमध्यनिवासोऽस्य चरणस्येति। यदायमर्थो विज्ञायते तदाण्भवति, नान्यत्रेति। तेन यदा पृथिवीमध्याद्()गतं चरणमिति चरणमिति विवक्ष्यते तदा च्छ एव भवति--मध्यमीय इति। कथं पुनः सामान्योक्तावेव विशेषो लभ्यत इति? सामान्यभिधानेऽपि विशेषोपस्थानदर्शनात्। घृतक्षरणवच्च स ह्यविशेषेणोपदिष्टो घृतादिष्वेवावतिष्ठते। तस्मात् सामान्योक्तावपि पृथिवीमध्य एव वर्त्तमाने मध्यशब्दो मध्यमभावमापद्यते। चरणे च प्रत्ययार्थे निवासलक्षण एवाण् भवति,न हि सर्वेषु जातादिष्वर्थेषु। "मुखपार्(ातसोर्लोपः" इति। मुखपार्(ाशब्दयोस्तसस्तयोः प्रत्ययसन्नियोगेन लोपो भवति। स च अलोऽन्त्यस्य १।१।५१ इति वचनादन्त्यस्य। लोपवचनं "अव्ययानां भमात्रे टिलोपः" (वा।८४२) इत्यस्यानित्यत्वज्ञापनार्थम्, तेनारातीय इत्यत्र न भवति। "मुखतीयम्, पार्(ातीयम्" (इति)। "अपादाने चाहीयरुहोः" ५।४।४५ इति मुखपार्(ाशब्दाभ्यां तसिः। "आद्यादिभ्य उपसंख्यानम्" (वा।६३४) इत्यौपसंख्यानिके सकारस्य लोपे कृतेऽकारस्यापि "यस्येति च" ६।४।१४८ इति लोपः। "देवस्य चेति वक्तव्यम्" इति। देवशब्दस्य कुग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- "{जनपपदयोः कुक्क इति सं। परिषत्काशिकापाठः"}कुग्जनस्य परस्य" (वा।ग।सू।१०१) इत्यत्र चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन देवदशब्दादपि भविष्यति॥

बाल-मनोरमा

गर्तोत्तरपदाच्छः १३४२, ४।२।१३६

गर्तोत्तरपदाच्छः। देशे इति। शेषपूरणम्। देशवाचिन इति यावत्। वृकगर्तीयमिति। वृकगर्तो नाम देशः। तत्र भव इत्यर्थः। ननु गर्ताच्छ इत्येतावतैव केवलगर्तशब्दस्य देशवाचित्वाऽभावाद्गर्तोत्तरपदादिति सिद्धे उत्तरपदग्रहणं व्यर्थमित्यत आह--उत्तरपदग्रहणमिति।

---

सूत्रम्

काशिका-वृत्तिः

गहाऽदिभ्यश् च ४।२।१३८

गह इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः छः प्रत्ययो भवति शैसिकः। अणादेरपवादः। गहीयः। अन्तःस्थीयः। देशाधिकारेऽपि संभवापेक्षं विशेषणं, न सर्वेषाम्। मध्यमध्यमं चाण् चरणे इति पठ्यते, तस्यायमर्थः। मध्यशब्दः प्रत्ययसंनियोगेन मध्यमम् आपद्यते। मध्यमीयाः। चरणे तु प्रत्ययर्थे अण् भवति, माध्यमाः इति। तदेतद् विशेष एव स्मर्यते। पृथिवीमध्यस्य मध्यमभावः। चरणसम्बन्धेन निवासलक्षणो ऽणिति च। मुखपार्श्वतसोर् लोपश्च। मुखतीयम्। पार्श्वतीयम्। कुग्जनस्य परस्य च। जनकीयम्। परकीयम्। देवस्य च इति वक्तव्यम्। देवकीयम्। वेणुकादिभ्यश् छण्

वक्तव्यः। आकृतिगणो ऽयम्। वैणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्। प्रास्थकीयम्। माध्यमकीयम्। गह। अन्तःस्थ। सम। विषम। मध्यमध्यमं चाण् चरणे। उत्तम। अङ्ग। वङ्ग। मगध। पूर्वप्क्ष। अपरपक्ष। अधमशाख। उत्तमशाख। समानशाख। एकग्राम। एकवृक्ष। एकपलाश। एष्वग्र। इष्वनी। अवस्यन्दी। कामप्रस्थ। खाडायनि। कावेरणि शैशिरि। शौङ्गि। आसुरि। आहिंसि। आमित्रि। व्याडि। वैदजि। भौजि। आढ्यश्वि। आनृशंसि। सौवि। पारकि। अग्निशर्मन्। देवशर्मन्। श्रौति। आरटकि। वाल्मीकि। क्षेमवृद्धिन्। उत्तर। अन्तर। मुखपार्श्वतसोर्लोपः। जनपरयोः कुक्च। देवस्य च। वेणुकादिभ्यश् छण्। गहादिः।

लघु-सिद्धान्त-कौमुदी

गहादिभ्यश्च १०८१, ४।२।१३७

गहीयः॥

बाल-मनोरमा

गहादिभ्यश्च १३४३, ४।२।१३७

गहादिभ्यश्च। गहीय इति। गहो देश विशेषः। मुखपार्(ोति। गहादिगणसूत्रम्। "मुखपार्(ो"ति लुप्तषष्ठीकं पदम्। तसन्तयोरेतयोरन्त्यस्य लोपश्च। चाच्छः। असम्भवादत्र जनपदस्येति न सम्बध्यते। कुग्जनस्येति। गणसूत्रमिदम्। जनशब्दस्य परशब्दस्य च कुगागमः स्यात्। चाच्छः। अत्रापि देश इति न सम्बध्यते। देवस्य च। इदमपि गणसूत्रम् चात्कुक्छश्च। "देवाद्यञञौ" इत्यस्यापवादः। "दैवानुग्रह" इति भाष्यप्रयोगाद्दैवमित्यपि साधु। स्वकीयमिति। गहादित्वाच्छः, कुक्च। स्वशब्दोऽपि गहादिः, आगमशास्त्रस्याऽनित्यत्वात्स्वीयम्।

तत्त्व-बोधिनी

गहादिभ्यश्च १०६१, ४।२।१३७

गहादिभ्यश्च। एभ्यो देशवाचिभ्यश्छः स्यात्। पूर्वरक्षादिशब्देभ्यस्तु देशवाचित्वाऽभावेऽपि पाठसामर्थ्याच्छः। मुखपार्(ातसोरिति। गणसूत्रमिदम्। सप्तम्यन्ताभ्यामाभ्यामाद्यादित्वात्तसिः। मुखतीयमिति। मुखे जातमित्याद्यर्थे तसन्ताच्छः। "अलोऽन्त्यस्ये"ति तसः सकारस्य लोपे "यस्येति चे"त्य कारलोपः। कुग्जनस्येति। इदमपि गणसूत्रम्। स्वकीयमिति। स्वार्थिककन्नन्तात्स्वशब्दाद्गहादेराकृतिगणत्वाच्छो देशवाचित्वाऽभावेऽपि पूर्वपक्षादिवद्बोध्यः। अत एव "लुब्योगाप्राख्याना"दिति सूत्रे "न हि स्वकीयस्यैव प्रत्याख्यान"मिति न्यासकारोक्तिः सङ्गच्छते। केवलास्त्वशब्दादणेव। सौवम्। द्वारादीनांचेत्यैच्। एतच्च "द्वारादीनां चे"त्यत्र आकरे उदाह्रतम्। "स्वीय"मित्यत्र तु "प्राक्क्रीताच्छः"। अन्तरशब्दात्तु गहादित्वाच्छे तदन्तेन नशब्दस्य समासे स्वार्थे कनि च "नान्तरीयक"मिति भवति। अविनाभूतमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

प्राचां कटादेः ४।२।१३९

देशे इत्येव। तद्विशेषनं प्राग्ग्रहणम्। प्राग्देशवाचिनः कटादेः प्रातिपदिकात् छः प्रत्ययो भवति शैसिकः। अणो ऽपवादः। कटनगरीयम्। कठघोषीयम्। कटपल्वलीयम्।

न्यासः

प्राचां कटादेः। , ४।२।१३८

बाल-मनोरमा

प्राचां कटादेः १३४४, ४।२।१३८

प्राचां कटादेः। कटनगरीयमिति। कटनगरो नाम प्राच्यो देशः।

---

सूत्रम्

काशिका-वृत्तिः

राज्ञः क च ४।२।१४०

असंभवाद् देशाधिकारो न विशेषणम्। राज्ञः ककारश्च अन्तादेशो भव्ति छश्च प्रत्ययः। राजकीयम्। आदेशमात्रम् इह विधेयं, प्रत्यय्स्तु वृद्धाच् छः ४।२।११३ इत्येव सिद्धः।

न्यासः

राज्ञः क च। , ४।२।१३९

बाल-मनोरमा

राज्ञः क च १३४५, ४।२।१३९

राज्ञः क च। राजन्शब्दाच्छः स्यात्, ककारश्चान्तादेशः।

---

सूत्रम्

काशिका-वृत्तिः

वृद्धादकैकान्तखौपधात् ४।२।१४१

देशे इत्येव। वृद्धाद् देशवाचिनः अक इक इत्येवम् अन्तात् खकारोपधाच् च प्रातिपदिकात् छः प्रत्ययो भवति शैसिकः। कोपधलक्षणस्य अणो ऽपवादः। वाहीकग्रामलक्षणस्य च प्रत्ययस्य, रोपधेतोः प्राचाम् ४।२।१२२ इति च। अकान्तात् तावत् आरीहणकीयम्। द्रौघणकीयम्। इकान्तात् आश्वपथिकीयम्। शाल्मलिकीयम्। खोपधात् कौटिशिखीयम्। आयोमुखीयम्। अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम्। सौसुकीयम्। मौसुकीयम्। ऐन्द्रवेणुकीयम्।

न्यासः

वृद्धादकेकान्तखोपधात्। , ४।२।१४०

"कोपधलक्षणस्य च" इत्यादि। अकेकान्तात् "कोपधादण्" ४।२।१३१ इत्यणि प्राप्तेऽणोऽपवादः। कोपधादपि वाहीकग्रामलक्षणस्य ठ()ञो ञिठस्य च। "रोपधेतोः प्राचाम्" इति। "अकेकान्तग्रहणे कोपधग्रहणम्" इति। इह सूत्रेऽकेकान्तग्रहणमपनीय कोपधग्रहणं कत्र्तव्यम्। कोपधादित्येवं वक्तव्यमित्यर्थः॥

बाल-मनोरमा

वृद्धादकेकान्तखोपधात् १३४६, ४।२।१४०

वृद्धादकेकान्तखोपधात्। ब्राआह्णकीय इति। कोपधाऽणोऽपवादश्छः। शाल्मलिकीय इति। शाल्मलिको नाम देशः। तत्र भव इत्यर्थः। इकान्तोदाहरणमिदम्। कोपधाऽणपवादः। अयोमुखीय इति। "बाहीकग्रामेभ्यश्चे"ति ठञ्ञिठयोरपवादश्छः।

तत्त्व-बोधिनी

वृद्धादकेकान्तखोपधात् १०६२, ४।२।१४०

वृद्धादकेकान्त। ब्राआह्णकीय इति। "कोपधाद"णित्यण्प्राप्तः। अयोमुखीयमिति। वाहीकग्रामलक्षणौ ठञ्ञिठाविह प्राप्तौ।

---

सूत्रम्

काशिका-वृत्तिः

कन्थापलदनगरग्रामह्रदौत्तरपदात् ४।२।१४२

देशे इत्येव, वृद्धातिति च। कन्थाद्युत्तरपदाद् देशवाचिनो वृद्धात् प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। वाहीकग्रमादिलक्षणस्य प्रत्ययस्य अपवादः। दाक्षिकन्थीयम्। माहिकिकन्थीयम्। दाक्षिपलदीयम्। माहिकिपलदीयम्। दाक्षिनगरीयम्। माहिकिनगरीयम्। दाक्षिग्रामीयम्। माहिकिग्रामीयम्। दाक्षिह्रदीयम्। माहिकिह्रदीयम्।

न्यासः

कन्थापलदनगरग्रामह्रदोत्तरपदात्। , ४।२।१४१

"वाहीकग्रामलक्षणस्य" इति। ठञ्ञिठयोश्च। अन्तग्रहणेनैव सिद्ध सत्त्युत्तरपदग्रहणं वैचित्र्यार्थम्॥

बाल-मनोरमा

कन्थापलदनगरग्रामह्यदोत्तरपदात् १३४७, ४।२।१४१

कन्थापलद। ठञ्ञिठादेरपवाद इति। नगरान्ते "रोपधेतो"रिति वुञोऽपवादः। इतरत्र "बाहीकग्रामेभ्यश्चे"ति ठञ्ञिठयोरपवाद इति विवेकः।

तत्त्व-बोधिनी

कन्थापलदनगरग्रामह्यदोत्तरपदात् १०६३, ४।२।१४१

ठञ्ञिठादेरिति। आदिशब्देन "रोपधेतोः"इत्यादिना प्राप्तस्य वुञः।

---

सूत्रम्

काशिका-वृत्तिः

पर्वताच् च ४।२।१४३

पर्वतशब्दाच् छः प्रत्ययो भवति शैषिकः। अणो ऽपवदः। पर्वतीयो राजा। पर्वतीयः पुरुषः।

न्यासः

पर्वताच्च। , ४।२।१४२

बाल-मनोरमा

पर्वताच्च १३४८, ४।२।१४२

पर्वताच्च--इत्यादि स्पष्टम्। युष्मदस्मदो। युष्मदस्मच्छब्दयोरिह शब्दस्वरूपपरत्वात् "त्यदादीनि सर्वैर्नित्य"मित्येकशेषो न भवति। पञ्चम्यर्थे षष्ठी। युष्मच्छव्दादस्मच्छब्दाच्च जाताद्यर्थेषु खञ्स्यादित्यर्थः। चाच्छः।

गर्तोत्तरपदादित्यधिकृतः छश्चकारेण समुच्चीयत इत्यर्थः।

तत्त्व-बोधिनी

पर्वताच्च १०६४, ४।२।१४२

पर्वतीय इति। "तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभू"दित्यत्र तु "पर्वतीयस्य राज्ञ इमे" इत्यर्थे छान्तादण्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा ऽमनुष्ये ४।२।१४४

पर्वतशब्दाच् छः प्रत्ययो भवति वा अमनुष्ये वाच्ये। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। पर्वतीयानि फलानि, पार्वतानि फलानि। पर्वतीयमुदकम्, पार्वतमुदकम्। अमनुष्ये इति किम्? पर्वतीयो मनुष्यः।

न्यासः

विभाषाऽमनुष्ये। , ४।२।१४३

"पार्वतीयानि फलानि" इति। ननु चामनुष्यशब्दो रक्षःपिशाचादिष्वेव रूढः तथा हि "सभा, राजाऽमनुष्यपूर्वा" २।४।२३ इत्यत्र "इह कस्मान् भवति--काष्ठसभेति, तत्रेदमुक्तम्--"अमनुष्यशब्दो रूढिरूपेण रक्षः पिशाचादिष्वेव वत्र्तते" इति, तत्कथं "अमनुष्ये" इत्युच्यमाने फलादिष्वभिधेयेषु भवति?नैष द्वोषः;द्वौ ह्रमनुष्यशब्दौ -- रूढः, व्युत्पन्नश्च। तत्र "सभा राजाऽमनुष्यपूर्वा" २।४।२३ इत्यत्र रूढिशब्दस्य ग्रहणम्, इह त्वितरस्य मनुष्यादन्य वत्र्तमानस्य॥

बाल-मनोरमा

विभाषाऽमनुष्ये १३४९, ४।२।१४३

पक्षेऽणिति। अत्यतरस्यांग्रहणादिति भावः। अत्र "युष्मदस्मदो"रिति योगो विभज्यते। आभ्यां छो भवतीत्यर्थः। "खञ् च" इति योगान्तरम्। आभ्यां खञ् च भवतीत्यर्थः। "अन्यतरस्या"मिति योगान्तरम्। आभ्यां छखञौ वा स्तः, पक्षेऽणित्यर्थः। अतो न यथासङ्ख्यामिति भाष्ये स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

कृकणपर्णाद् भरद्वाजे ४।२।१४५

देशे इत्येव। भारद्वाजशब्दो ऽपि देशवचन एव, न गोत्रशब्दः। प्रकृतिविशेषणम् च एतन्, न प्रत्ययार्थः। कृकणपर्णशब्दाभ्यां भारद्वाजदेशवाचिभ्यां छः प्रत्ययो भवति शैषिकः। कृकणीयम्। पर्णीयम्। भारद्वाजे इति किम्? कार्कणम्। पार्णम्। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः। चतुर्थाध्यायस्य तृतीयः पादः।

न्यासः

कृकणपर्णाद्भारद्वाजे। , ४।२।१४४

"भारद्वाजशब्दोऽपि देशवचन एव,न गोत्रशब्दः"इति। देश एव भारद्वाजे कृकणपर्णशब्दवृत्तेः सम्भवात्॥ इति

श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां चतुर्थाध्याये द्वितीयः पादः।

******************************** अथ चतुर्थोऽध्यायः। तृतीयः पादः।

तत्त्व-बोधिनी

कृकणपर्णाद्भारद्वाजे १०६५, ४।२।१४४

कृकण। भारद्वाजशब्दोऽत्र देशवचनः, स च न प्रत्ययार्थः, किं तु प्रकृतिविशेषणमित्याह--भारद्वाजदेशेत्यादिना।

---

सूत्रम्

काशिका-वृत्तिः

युष्मदस्मदोरन्यतरस्यां खञ् च ४।३।१

देशाधिकारो निवृत्तः। युष्मदस्मदोः खञ् प्रत्ययो भवति शैषिकः। चकाराच् छः च। अन्यतरस्यांग्रहणाद् यथाप्राप्तम्। तदेते त्रयः प्रत्ययाः भवन्ति, तत्र वैषम्याद् यथासङ्ख्यं न भवति। त्यदादित्वाद् वृद्धसंज्ञकयोर् युष्मदस्मदोः छे प्राप्ते प्रत्येकं प्रत्ययत्रयं विधीयते। यौष्माकीणः। आस्माकीनः। युष्मदीयः। अस्मदीयः। यौष्माकः। आस्माकः।

लघु-सिद्धान्त-कौमुदी

युष्मदस्मदोरन्यतरस्यां खञ् च १०८२, ४।३।१

चाच्छः। पक्षेऽण्। युवयोर्युष्माकं युष्मदीयः, अस्मदीयः॥

न्यासः

युष्मदस्मदोरन्यतरस्यां खञ्च। , ४।३।१

"तत्र वषम्याद्यथासंख्यं न भवति" इति। द्वे हि प्रकृती, प्रत्ययाश्च त्रय इति वैषम्यम्। ननु च?ञ्छावेवानेन विधीयेते, अण्प्रत्ययस्त्वन्यतरस्यांग्रहणेन यथाप्राप्तस्याभ्यनुज्ञाने कृते शास्त्रादेव भवति, तत्कृतो वैषम्यम्? छोऽपि तर्हि तेनैवानेन विधीयते, तस्यापि हि चकारोऽभ्यनुज्ञापक एव। सोऽपि स्वशास्त्रादेव "वृद्धाच्छः ट (४।२।११४) इत्येतस्माद्भवतीति? एवमपि वैषम्यम्। सर्वथा नास्ति यथासंख्यप्रसङ्ग॥

बाल-मनोरमा

युष्मदस्मदोरन्यतरस्यां खञ्च १३५०, ४।३।१

युष्मदीय इति। द्विवचनान्दाद्बहुवचनान्ताच्च छः। ईयादेशः। सुब्लुकि युवादेशस्य निवृत्तिः, तस्य विभक्तौ परे विधानात्। प्रकृत्यर्थैकत्वे विभक्तेर्लुप्तत्वेऽपि त्वादेशो वक्ष्यते। अस्मदीय इति। आवयोरस्माकं वा अयमित्यर्थः।

तत्त्व-बोधिनी

युष्मदस्मदोरन्यतरस्यां खञ्च १०६६, ४।३।१

युष्मदस्मदोः। "त्यदादीनि चे"ति वृद्धत्वान्नित्ये छे प्राप्ते खञणोरपि विधानार्थमिदजम्। पक्षे अणिति। अन्यतरस्याङ्ग्रहणादिति भावः। तथा चैते त्रयः प्रत्यया इति वैषम्याद्यथासङ्ख्यं न भवतीति केचित्। मनोरमायां तु यथासङ्ख्यनिवारणाया योगविभागः कृतः। तथा हि "युष्मदस्मदोरन्यतरस्याम्" आभ्यां छो वा स्यात्। "त्यदिदीनि चे"ति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोऽयम्। ततः "खञ्च"। एवमुत्तरसूत्रेऽपि योगविभागो बोध्यः। तेन आदेशयोः खञणभ्यां यथासङ्ख्यं नेत्यादि। युवयोरित्यादि। एकवचने तवकममकादेशविधानादेकवचनान्तेन विग्रहोऽत्र न कृतः।

सूत्रम्

काशिका-वृत्तिः

तस्मिन्नणि च युष्माकास्माकौ ४।३।२

तस्मिनिति साक्षाद् विहितः खञ् निर्दिष्यते, न चकारानुकृष्टः छः। तस्मिन् खञि अणि च युष्मदस्मदोर् यथासङ्ख्यं युष्माक अस्माक इत्येतावादेशौ भवतः। निमित्तयोरादेशौ प्रति यथासङ्खं कस्मान् न भवति? योगविभागः करिष्यते, तस्मिन् खञि युष्मदस्मदोः युष्माकास्माकौ भवतः, ततो ऽणि च इति। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः। तस्मिनणि च इति किम्? युष्मदीयः। अस्मदीयः।

लघु-सिद्धान्त-कौमुदी

तस्मिन्नणि च युष्माकास्माकौ १०८३, ४।३।२

युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः॥

न्यासः

तस्मिन्नणि च युष्माकास्माकौ। , ४।३।२

"तस्मिन्निति साक्षद्विहितः खञ् निर्दिश्यते" इति। तस्मिन्नित्युक्ते प्रागेव तत्रैव प्रतीत्युत्पत्तेः। तत्र पुनः कारणं साक्षाद्विहित्वम्ानन्तर्याच्च खञः, तस्यैव युक्तः। ननु च पूर्वसूत्रे?ञ्चेति चकारेण च्छोऽनुकृष्यते,वाचकदेशश्च वाच्य इति खञश्छ एवानन्तरो भवति। स्यादनन्तरो यदि चकारस्तस्य वाचकः स्यात्, न चासौ तस्य वाचकः। स हि समीपवर्तिनः पदार्थान्तरस्य सहायतामात्रमाचष्टे। खञः सहायतामाख्याय निवृत्ते चकारे सा सहायता प्रकरणाच्छेनैव विज्ञायते। तस्माच्चकारश्छस्य वाचको न भवतीति नासौ तादृशः। तत्कृतयोस्तस्यानन्तर्य "निमित्तयोः" इत्यादि। द्वे हि निमित्ते--खञणौ, निमित्तनावपि द्वावेवादेशौ, ततः समानत्वद्यथासंख्येनात्र भवितव्यमिति मन्यमानस् प्रश्नः। "योगविभागः इत्यादि" परिहारः। "युष्मदीयः, अस्मदीयः" इति। यदि "तस्मिन्नणि च" इति नोच्येत तो यथा पूर्वसूत्रविहितयोः खञणोरिमावादेशौ भवतस्तथा च्छेऽपि स्याताम्। त()स्मस्तु सति न भवतः॥

बाल-मनोरमा

तस्मिन्नणि च युष्माकास्माकौ १३५१, ४।३।२

अथ खञि अणि च विशेषमाह--तस्मिन्नणि च। पूर्वसूत्रे निर्दिष्टः खञ् तच्छब्देन परामृश्यते। तदाह--खञि अणि चेति। अत्र स्थानिनोरादेशयोश्च यथासङ्ख्यं, न तु परनिमित्तयोः, तस्मिन्नणीति व्यस्तनिर्देशात्। यौष्माकीण इति। युवयोर्युष्माकं वा अयमिति विग्रहः। खञ्, ईनादेशः, युष्माकादेशः आदिवृद्धिः, णत्वम्। आस्माकीन इति। आवयोरस्माकं वा अयमिति विग्रहः। अणि उदाहरति--यौष्माकः आस्माक इति।

तत्त्व-बोधिनी

तस्मिन्नणि च युष्माकास्माकौ १०६७, ४।३।२

तस्मिन्नणि च। तस्मिन्निति साक्षाद्विहितः खञ्निर्दिश्यते, नतु चानुकष्टः। निमित्तयोरादेशौ प्रति यखासङ्ख्यं तु न भवति, "खञणो"रिति वक्तव्ये पृथग्विभक्तिनिर्देशसामथ्र्यात्। स्थान्यादेशयोस्तु इष्यत एव तत्।

---

सूत्रम्

काशिका-वृत्तिः

तवकममकावेकवचने ४।३।३

एकवचनपरयोर् युष्मदस्मदोः तवक ममक इत्येतावादेशौ भवतः यथासङ्ख्यं तस्मिन् खञि अणि च परतः। निमित्तयोस् तु यथासङ्ख्यं पूर्ववदेव न भवति। ननु च न लुमता अङ्गस्य १।१।६२ इति प्रत्ययलक्षणप्रतिषेधादेकवचनपरता युष्मदस्मदोर् न सम्भवति? वचनात् प्रत्ययलक्षणम् भविष्यति। अथ वा न एव इदं प्रत्ययलक्षणं, किं तर्ह्यन्वर्थग्रहणम्। एकवचने युष्मदसमादी एकस्य अर्थस्य वाचके तवकममकावादेशौ प्रतिपद्येते इति सूत्रार्थः। तावकीनः। मामकीनः। तावकः। मामकः। तस्मिन्नणि च इत्येव, त्वदीयः। मदियः।

लघु-सिद्धान्त-कौमुदी

तवकममकावेकवचने १०८४, ४।३।३

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु -।

न्यासः

तवकममकावेकवचने। , ४।३।३

पूर्वेण युष्माकास्माकयोः प्राप्तयोः "प्रत्ययोत्तरपदयोश्च" ७।२।९८ इति त्वमयोरेकवचनेतवकममकावादेशौ विधीयेते। "एकवचनपरयोः" इति। एकवचनं परं याभ्यां ते तथोक्ते। "निमित्तयोस्तु" इत्यादि। यथा पूर्व एव सूत्रे योगविभागान्निमित्तयोरादेशौ प्रति यथासंख्यत्वं न भवति, तथेहापि न भविष्यति। तस्य च यथासंख्याभावस्य पूर्वसूत्र एव योगविभागो हेतुः। तेन हि पूर्वत्र निमित्ते निवृत्ते यथासंख्ये कृते तस्मादिहाप्यनुवर्त्तते। ते निवृत्ते यथासंख्ये एवानुवर्त्तेते; अजहद्धर्मत्वादधिकाराणाम्। तस्मादिहापि पूर्वकयोगविभागाद्यवासंख्यभावः। इह सर्वविधिभ्यो लुग्विधिर्वलवानित्येकवचनस्य लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलोपलक्षणेन समर्थयितव्या। तदपि प्रत्ययलोपलक्षमं प्रतिषेधलक्षणं प्रतिषेधयितुमाह-- "ननु च" इत्यादि। "वचनात्" इत्यादि परिहारः। यदि हि प्रत्ययलोपलक्षणं न स्यादिदं वचनमपार्थकं स्यादित्यभिप्रायः। ननु च यस्यैवक वचनपरता सम्भवति तस्य विशेषणार्थमेकवचनं स्यात्, कस्यैकवचनपरता सम्भवति? निमित्तस्य खञादेः। निमित्ते त्वेकवचनपरत्वेन विशेष्यमाणे सतीहैव स्याताम्-- यौष्माकः पुत्रः, आस्माकः पुत्रः; अत्र ह्येकवचनपरत्वम्, तद्धि तस्योपपद्यते; इह च न स्याताम्-- तावकाः पुत्राः, मामकाः पुत्रा इति। न ह्यत्र निमित्तस्यैकवचनपरता सम्भवतीति? नैतदस्ति; युष्मदस्मदी पूर्वसूत्रे विशेषे अभूताम्। तथा हि-- खञ्यणि च परतो युष्मदस्मदोरिति खञण्परता तयोः, अत एव युष्मदस्मदी विशेष्येते। तदिहापि तथाभूते एवानुवर्त्तेते; अजहद्धर्मत्वादधिकाराणामिति तयोरेवैकवचनपरत्वं विशेषणं युक्तम्। अथ वा तवकममकयोर्विधेयत्वेन प्राधान्यात् तयोरेवैतद्विशेषणं युक्तम्। तयोरेव तद्विशेषणं भवत् स्थानिद्वारकमेव भवति। यदि स्थानिनोरेकवचनपरता, एवमादेशौ स्थानिवत्त्वादेकवचनपरौ भवतः। तदनेनापि प्रकारेण युष्मदस्मदोरेकवचनविशेषणं युक्तम्। न तु कथञ्चिन्निमित्तस्य खञादेः। "अथ वा" इत्यादि। पुर्वं पारिभाषिकमेकवचनमाश्रित्य व्याख्यातम्, इदानीं त्वर्तमाश्रित्य व्याचष्टे-- एकोऽर्थ उच्यते येन तदेकवचनम्। अत्र तु व्याख्याने "एकवचने" इति नेदं सप्तम्येकवचनम्। किं तर्हि? प्रथमाद्विवचनान्तम्॥

बाल-मनोरमा

तवकममकावेकवचने १३५२, ४।३।३

तवकममकौ। "एकवचने" इति युष्मदस्मदोः प्रकृत्योर्विशेषणम्। एकस्य वचनम्ुक्तिः-एकवचनम्। एकस्योक्तौ व्याप्रियमाणयोरिति लभ्यते। तदाह--एकार्थवाचिनोरिति। छे त्विति। "एकार्थवृत्तयोर्विशेषो वक्ष्यते" इति शेषः।

तत्त्व-बोधिनी

तवकममकावेकवचने १०६८, ४।३।३

तवक। इह पूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासङ्ख्यं न भवति, किंतु स्थान्यादेशयोरेवेत्याशयेनोदाहरति---- तावकीनः। मामकीन इति। परावरा "परावराधमोत्तमेभ्यः"इत्येव वक्तव्ये पूर्वग्रहणं पूर्वविप्रतिषेधसूचनार्थम्। तेन दिक्शब्दयोः परावरयोकर्धशब्देन समासे उत्तरसूत्रेण प्राप्तावपि ठञ्यतौ बाधित्वा यदेव भवति।

---

सूत्रम्

काशिका-वृत्तिः

अर्धाद् यत् ४।३।४

अर्धशब्दात् यत् प्रत्ययो भवति शैषिकः। अणो ऽपवादः। अर्ध्यम्। सपूर्वपदाट् ठञ् वक्तव्यः। बालेयार्धिकम्। गौतमार्धिकम्।

न्यासः

अर्धाद्यत्। , ४।३।४

बाल-मनोरमा

अर्धाद्यत् १३५४, ४।३।४

अर्धात्। अध्र्य इति। अर्धे जातादिरित्यर्थः। "सपूर्वपदाट्ठञ् वाच्यः" इति वार्तिकं भाष्ये स्थितम्। बालेयार्धिकः।

---

सूत्रम्

काशिका-वृत्तिः

परावराधमौत्तमपूर्वाच् च ४।३।५

पर अवर अधम उत्तम इत्येवं पूर्वाच् च अर्धात् यत् प्रत्ययो भवति शैषिकः। पराध्र्यम्। अवराध्र्यम्। अधमाध्र्यम्। उत्तमाध्र्यम्। पूर्वग्रहणं किम्? परावराधमौत्तमेभ्यः इत्येव उच्यते, अर्धातिति वर्तते, तस्य तत्पूर्वता विज्ञास्यते? परावरशब्दावदिग्ग्रहणावपि स्तः परं सुखम्, अवरम् सुखम् इति। तत्र कृतार्थत्वाद् दिक्शब्दपक्षे परेण ठञ्यतौ स्याताम्। अस्मात् पूर्वग्रहणाद् यत् प्रत्ययो भवति पराध्र्यम्, अवराध्र्यम् इति।

न्यासः

परावराधमोत्तरमपूर्वाच्च। , ४।३।५

"ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" (व्या।प।८९) इतितदन्तविधिप्रतिषेधात् पूर्वेणाप्राप्तावयमारम्भः। तत्राधमोत्तमशब्दौ निन्दाप्रशंसावचनौ, तत्पूर्वादणि प्राप्ते सत्यमारम्भः। परावरशब्दौ यावदिक्छब्दौ तत्पूर्वादप्यण्येव। यौ तु दिक्छब्दौ तत्पूर्वादुत्तरसूत्रेण ठञि यति च। कथं पुनः "परावराधमोत्तमेभ्यः" इत्युच्यमाने परावरादिपूर्वता शक्या विज्ञातुम्? इत्याह-- "अर्धादिति वत्र्तते" इत्यादि। इह हि पूर्वसूत्रादर्धादित्यनुवत्र्तते। तत्र परावराधमोत्तमेभ्यः परो योऽर्धशब्दः-- इत्येवं विशेषमाणेऽद्र्धशब्दसामथ्र्यादेव तस्य परावरादिपूर्वता विज्ञास्यते, त()त्क पूर्वग्रहणेन? "तत्र" इति। परावरयोरदिक्शब्दयोः। "परेण" इति। उत्तरसूत्रेण ठञ्यतौ स्यातामिति। यदि पूर्वग्रहणं न क्रियेतेत्यभिप्रायः। "अस्मात्" इत्यादि। परावरादिपूर्वादेव यथा स्यादित्येतदेव हि पूर्वग्रहणस्य प्रयोजनम्। तेन हि पूर्वं कार्यं भवति, न परमित्येषोऽर्थः

सूच्यते। तस्मात् दिक्शब्दपक्षेऽपि परावरपूर्वाद्यदेव भवति॥

बाल-मनोरमा

परावराधमोत्तमपूर्वाच्च १३५५, ४।३।५

परावर "अर्धाद्य"दिति शेषः। अवरशब्दो दन्तोष्ठ()वकारमध्यः।

---

सूत्रम्

काशिका-वृत्तिः

दिक्पूर्वपदाट् ठञ् च ४।३।६

दिक्पूर्वपदादर्धान्तात् प्रातिपदिकात् ठञ् प्रत्ययो भवति, चकाराद् यत् च शैषिकः। अणो ऽपवादः। पौर्वार्धिकम्। पूर्वार्ध्यम्। दाक्षिणार्धिकम्, दक्षिणार्ध्यम्। पदग्रहणं स्वरूपविधिनिवारणार्थम्।

न्यासः

दिक्पूर्वपदाट्ठञ्च। , ४।३।६

"पौर्वार्द्धिकम्" इति। पूर्वस्मिन्नर्थे जातः। " तद्धितार्थ" २।१।५० इत्यादिना समासः,ततस्तद्धितः। अथ पदग्रहणं किमर्थम्, दिक्पूर्वादित्येवोच्येत? इत्याह-- "पदग्रहणम्" इत्यादि। असति हि पदग्रहणे स्वरूपविधिः स्यात्, ततश्च दिगर्द्धे जात इत्यत्रैव स्यात्। पदग्रहणे तु सति यन्नाम किञ्चिद्()दिक्सम्बन्धिः पूर्वपदं तस्य ग्रहणमुपपन्नं भवति॥

बाल-मनोरमा

दिक्पूर्वपदाट्ठञ्च १३५६, ४।३।६

दिक्पूर्वपदायट्ठञ् च। अर्धादित्येव। परावरपूर्वार्धशब्दात्पूर्वसूत्रेण यदेव, विशिष्य विहितत्वात्।

तत्त्व-बोधिनी

दिक्पूर्वपदाट्ठञ्च १०६९, ४।३।६

दिक्। पूर्वपदग्रहणं स्वरूपविधिनिरासार्थमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

ग्रामजनपद एकदेशादञ्ठञौ ४।३।७

दिक्पूर्वपदातित्येव। ग्रामएकदेशवाचिनो जनपदएकदेशवाचिनश्च प्रातिपदिकाद् दिक्पूर्वपदादर्धान्तादञ्ठञौ प्रत्ययौ भवतः शैषिकौ। यतो ऽपवदौ। इमे खल्वस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धः, पौर्वार्धिकाः। दाक्षिणार्धाः, दाक्षिणार्धिकाः।

न्यासः

ग्रामजनपदैकदेशादञ्ठञौ। , ४।३।७

"यतोऽपवादौ" इति। पूर्वेण प्राप्तस्य। "पौर्वार्धाः" इति।पूर्ववत्समासः। नन्वत्र पूर्वस्मिन्नर्द्धे ग्रामस्येति ग्राममपेक्षमाणस्यार्धशब्दस्यासामर्थ्यात् समासो नोपपद्यते? नैष दोषः; प्रधानमात्रार्द्धं भवति। प्रधानस्य सापेक्षस्यापि

समासः-- इत्येतत् "उपमितं व्याघ्रादिभिः सामान्यप्रयोगे" २।१।५५ इत्यत्र ज्ञापितम्॥

बाल-मनोरमा

ग्रामजनपदैकदेशादञ्ठञौ १३५७, ४।३।७

ग्रामजनपद। ननु अञ् चेत्येतावतैव चकाराट्ठञोऽनुकर्षसिद्धेः ठञ्ग्रहणं व्यर्थमित्यत आह--ठञ्ग्रहणमिति। ननु अञ् चेत्युक्तेऽपि चकाराट्ठञोऽनुकर्षः स्पष्ट एवेत्यत आह--अञ्चेत्युक्त इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

मध्यानमः ४।३।८

मध्यशब्दान् मः प्रत्ययो भवति शैषिकः। अणो ऽपवादः। मध्यमः। आदेश्च इति वक्तव्यम्। आदिमः। अवो ऽधसोर् लोपश्च। अवमम्। अधमम्।

लघु-सिद्धान्त-कौमुदी

मध्यान्मः १०८६, ४।३।८

मध्यमः॥

न्यासः

मध्यान्मः। , ४।३।८

मध्यशब्दो यो गहादिषु पृथिवीमध्यवचनः "मध्यमध्यमञ्चाण् चरणे" (ग।सू.।९९) इति पठ()ते, ततस्तु तत एव विधिर्भवति। यस्त्वन्यस्तस्येह ग्रहणं वेदितव्यम्॥

बाल-मनोरमा

मध्यान्मः १३५८, ४।३।८

मध्यान्मः। स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

अ साम्प्रतिके ४।३।९

अकारः प्रत्ययो भवति मध्यशब्दात् साम्प्रतिके जातादौ प्रत्ययार्थे। मस्य अपवादः। साम्प्रतिकं न्याय्यं, युक्तम् उचितं, सममुच्यते। नातिदीर्घं नातिह्रस्वं मध्यं काष्ठम्। नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः। मध्या स्त्री।

न्यासः

अ साम्प्रतिके। , ४।३।९

न्याय्यं युक्तमित्यादिभिः पर्यायैः साम्प्रतिकशब्दार्थमाचष्टे--"{साम्प्रतिकम्--न्याय्यम्, युक्तम्, उचितम्, सममुच्यते--काशिका,पदमञ्जरी च} साम्प्रतिकं न्याय्यमुच्यते" (इति)। तथा हि प्रयोगो दृश्यते न बाह्वं प्राप्तमित्येवं वर्त्तितव्यमसाम्प्रतमिति। अत्र न्याय्यः प्रतिषेधः प्रतीयते। साम्प्रतमेव साम्प्रतिकम्। विनयादेराकृतिगणत्वात्

"विनयादिभ्यश्च" ५।४।३४ इति ठक्॥

बाल-मनोरमा

अ सांप्रतिके १३५९, ४।३।९

अ सांप्रतिके। "अ" इति लुप्तप्रथमाकम्। मध्यादित्यनुवर्तते। तदाह--मध्यशब्दादित्यादि। "संप्रती"त्यव्ययम् उत्कर्षापकर्षहीनत्वात्मकसाम्ये वर्तते, तैत्तिरीये "अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथवा एष सम्प्रतियज्ञो यत्पञ्चरात्रः" इत्यत्र तथा दर्शनात्। पञ्चरात्रो न न्यूनः नाप्यतिरिक्तः, सम इत्यर्थः। सम्प्रतिशब्दात्स्वार्थे विनयादित्वाट्ठकि साम्प्रतिकम्। प्रज्ञादित्वात्स्वार्थ अणि तु साम्प्रतमित्यपि भवति। "एतर्हि सम्प्रती"ति कोशादिदानीमित्यर्थेऽपि। प्रकृते तु साम्यं विवक्षितम्।

तत्त्व-बोधिनी

अ सांप्रतिके १०७०, ४।३।९

अ सांप्रतिके। "सप्रती"त्यव्ययं न्याय्ये वर्तते, "अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रः स वा एष संप्रति यज्ञो यत्पञ्चरात्रः"इत्यत्र तथा दर्शनात्। न न्यूनो नातिरिक्तः---सम इत्यर्थः। इदानीमित्यर्थे तु प्रसिद्धमेव, "एतर्हि संप्रतीदानीम्ित्यमरात्। ततः प्रज्ञादित्वात्स्वार्थेऽण्, विनयादित्वात्स्वार्थे ठगपि। तेन सांप्रतं सांप्रतिकमिति पर्यायौ। उत्कर्षेत्यादि। न्याय्ये विद्यमान एव संप्रतिशब्दोऽत्र गृह्नते इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

द्वीपादनुसमुद्रं यञ् ४।३।१०

समुद्रसमीपे यो द्वीपः, तस्माद् यञ् प्रत्ययो भवति शैषिकः। कच्छादिपाठातणो, मनुष्यवुञः चापवादः। द्वैप्यम्। द्वैप्यं भवन्तो ऽनुचरन्ति चक्रम्। अनुसमुद्रम् इति किम्? द्वैपकम्। द्वैपमन्यत्।

न्यासः

द्वीपादनुसमुद्रं यञ्। , ४।३।१०

"अनुसमुद्रम्" इति। समुद्रं समयाऽनुसमुद्रम्। "अनुर्यत्समया" २।१।१४ इत्यव्ययीभावः। "अणो मनुष्यवुञश्चापवादः" इति। "कच्छादिभ्यश्च" ४।२।१३२ इति प्राप्तस्याणः। "मनुष्यतत्स्थयोर्वुञ्" ४।२।१३३ इति प्राप्तस्य वुञः॥

बाल-मनोरमा

द्वीपादनुसमुद्रं यञ् १३६०, ४।३।१०

द्वीपादनु। "अनुसमुद्र"मिति सामीप्ये अव्ययीभावः। अनुसमुद्रमिति सप्तम्यन्तम्, विद्यमानादित्यध्याहार्यम्। तदाह--समुद्रस्य समीपे इति। द्वैप्येति। "यञश्चे"ति ङीप् तु न, "अनपत्याधिकारस्थान्ने"ति तन्निषेधात्।

तत्त्व-बोधिनी

द्वीपादनुसमुद्रं यञ् १०७१, ४।३।१०

द्वीपादनु। समुद्रं समया अनुसमुद्रम्। "अनुर्यत्समया"इत्यव्ययीभावः। सप्तम्यन्तं चेदम्, विद्यमानक्रियाद्वारा

द्वीपविशेषणमित्याशयेनाह---समुद्रसमीपे यो द्वीप इति। कच्छाद्यणो मनुष्यवुञश्चापवादोऽयम्। अनुसमुद्रं किं()। द्वैपमन्यत्। कच्छाद्यण्। द्वैपको मनुष्यः। "मनुष्यतत्स्थो"रिति वुञ्। द्वैप्येति। "यञश्चे"ति ङीब्न भवति, "अपत्याधिकारस्थादेव यञो ङी"बिति प्रागेवोक्तत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

कालाट् ठञ् ४।३।११

कालविशेषवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः। अणो ऽपवादः। वृद्धात् तु छं परत्वाद् बाधते। मासिकः। आर्धमासिकः। सांवत्सरिकः। यथाकथञ्चिद् गुणवृत्त्या अपि काले वर्तमानात् प्रत्यय इष्यते। कादम्बपुष्पिकम्। व्रैहिपलालिकम्। तत्र जातः ४।३।२५ इति प्रागतः कालाधिकारः।

लघु-सिद्धान्त-कौमुदी

कालाट्ठञ् १०८७, ४।३।११

कालवाचिभ्यष्ठञ् स्यात्। कालिकम्। मासिकम्। सांवत्सरिकम्। (अव्ययानां भमात्रे टिलोपः)। सायम्प्रातिकः। पौनःपुनिकः॥

न्यासः

कालाट्ठञ्। , ४।३।११

"कालविशेषवाचिनः" इति। अनेन कालादित्यर्थग्रहणम्, न स्वरूपस्येति। यदि हि स्वरूपगर्हणं स्यात्, सन्धिवेलादि ४।३।१६ सूत्रेणाणो विधानमनर्थकं स्यात्; "प्राग्दीव्यतोऽण्" ४।१।८३ इत्यनेनैव सिद्धत्वात्। इह त्वर्थग्रहणे ठञ्बाधनार्थत्वात् तस्यानर्थक्यं भवति। तस्मादर्थग्रहणमेतत्। इह केचिच्छब्दा मुख्यया वृत्त्या काले वत्र्तन्ते-- मासोऽर्धमास इति,केचिद्गौण्या वृत्त्या-- कदम्बपुष्पसाहचर्यात् कालः कदम्बपुष्पः,व्रीहिपलालेन साहचर्यात् कालो व्रीहिपलाल इति; तेषामिहोभयेषामपि ग्रहणम्। अत एवाह-- "यथा कथञ्चित्" इति। येन केनचित्प्रकारेणेत्यर्थः। "गुणवृत्त्याऽपि" इति। अनेन यथाकथञ्चिदित्यस्यार्थं विस्पष्टीकरोति। औपचारिकी, वृत्तिः, अप्रधानभूता वृत्तिरित्यर्थः। अपिशब्दान्मुख्यायपि वृत्त्या। ननु च मुख्ये सति गौणस्य ग्रहणमयुक्तम्, गौणमुख्ययोर्मुख्ये, कार्यसम्प्रत्ययात् (व्या।प।४)? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति-- गौणस्यापि कालस्य ग्रहणमिति, यदयं सन्धिवेलादिसूत्रे ४।३।१६ प्रकृतेन कालग्रहणेन नक्षत्राणि विशिनष्टि। न हि मुख्यार्थः कालो नक्षत्राणां विशेषणमुपपद्यते। तेषु मुख्यस्य कालत्वस्यासम्भवात्॥

बाल-मनोरमा

कालाट्ठञ् १३६१, ४।३।११

कालाट्ठञ्। "कालशब्दस्यैव न ग्रहणं, किन्तु कालशब्दस्य, कालविशेषवाचकानां च ग्रहण"मिति "तदस्य परिमाणं" "सङ्ख्यायाः" इति सूत्रभाष्ये स्पष्टम्। तदाह--कालवाचिभ्य इति। सायंप्रातिकः पौनःपुनिक इति। "अव्ययानां भमात्रे" इति टिलोपः। "सायञ्चिर"मिति ट्युट्युलौ तु न भवतः, "नस्तद्धिते" इति सूत्रभाष्ये तथा प्रयोगदर्शनात्। शार्वरस्येति। समानकालिकं प्राक्कालिकमिति भाव्यमित्यर्थः। प्रामाणिका इति। केचित्तु अमुकः पुरतः परेद्युरित्यादिवदेतेऽपि शब्दा अव्युत्पन्नाः, पृष्टोदरादयो वा साधव इत्याहुः। इति यावदिति। व्याख्यानादिति भावः।

तत्त्व-बोधिनी

कालाट्ठञ् १०७२, ४।३।११

कालाट्ठञ्। स्वरूपस्यैव न ग्रहणं, संधिवेलादिसूत्रेण संधिवेलात्रयोदशीचतुर्दशी--प्रभृतिभ्योऽवृद्धेभ्योऽपि ठञ्वाधनार्थमण्विधानात्। किं तु सर्वेषामपि कालवाचिनां ग्रहणमित्याशयेनाह---कालावाचिभ्य इति। यत्तु "स्वरूपस्य पर्यायाणां च न ग्रहण "मिति पदमञ्जर्यादिषु स्थितम्। तदसत्। "कालिकः संबन्धः", "कालिकी व्याप्ति"रित्यादिप्रयोगाऽनापत्तेः। न च विशेषाणामेव सन्धिवेलादिसूत्रेण सन्धिवेलादिभ्योऽण्विधानं ज्ञापकमिति वाच्यं, तस्य स्वरूपमात्रग्रहणनिरासकत्वेनापि साफल्यात्। गौणमुख्यन्यायस्त्विह नाश्रीयते। तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालः, व्रीहिपलालसाहचर्याद्व्रीहिपलालः कालः, तत्र भवं कादम्बपुष्पिकं व्रैहिपलालिकमित्याकरः। अत्रहि प्रमाणं सन्धिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणमेवेत्याहुः। न च पुष्पदिशब्दानां कालो मुख्य एवार्थः, "लुबविशेषे"इति व्युत्पादनात्, तथा च कालविशेषणमुक्तार्थे न प्रमाणमिति वाच्यं, पुष्यादिसमीपस्थचन्द्रमसा युक्ते काले पुष्यादिशब्दानां गौणत्वात्। "लुबविशेषे"इति शास्त्रमपि गौणवृत्तित्वान्वाख्यायकमेवेति दिक्। एवं स्थिते "कालवाचिभ्य"इति मूलस्य "कालप्रतिपादकेभ्यः"इति फलितोऽर्थः।

---

सूत्रम्

काशिका-वृत्तिः

श्राद्धे शरदः ४।३।१२

शरच्छब्दात् ठञ् प्रत्ययो भवति श्राद्धे ऽभिधेये शैषिकः। ऋत्वणः अपवादः। श्राद्धे इति च कर्म गृह्यते, न श्रद्धावान् पुरुषः, अनभिधानात्। शारदिकं श्राद्धम्। शारदम् अन्यत्।

न्यासः

श्राद्धे शरदः। , ४।३।१२

"ऋत्वणोऽपवादः"इति। सन्धिवेलादिसूत्रेण ४।३।१६ प्राप्तस्य। "{श्राद्ध इति न कर्म गृह्नते" इत्येव मूलपाठो दृश्यते।"श्राद्ध इति कर्म गृह्नते-- पदमञ्जरी।} श्राद्धं इति न कर्म गृह्नते" इति। क्रियाविशेषः कश्चित् शास्त्रोक्तेन विधिना साध्यः श्राद्धग्रहणेन गृह्नते, न तु श्रद्धावान् पुरुषः। कुत एतत्? तस्य प्रत्ययेनानाभिधानात्। शारदिकशब्देन ह्यभिधानशक्तिस्वाभाव्यात् कर्मण एवाभिधानम्, न पुरुषस्य॥

बाल-मनोरमा

श्राद्धे शरदः १३६२, ४।३।१२

श्राद्धे शरदः। ठञ् स्यादिति। शेषपूरणमिदम्। ननु "कालाट्ठ"ञित्येव सिद्धे किमर्थमिदमित्यत आह--ऋत्वण इति। "सन्धिवेसाद्यृतुनक्षत्रेभ्योऽणि"ति वक्ष्यमाणस्येत्यर्थः। शारदिकमिति। शरदि ऋतौ भवमित्यर्थः। शरच्छब्दस्य संवत्सरवाचित्वे तु पूर्वेणैव सिद्धम्।

तत्त्व-बोधिनी

श्राद्धे शरदः १०७३, ४।३।१२

श्राद्धमिति। भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः। "प्रज्ञाश्रद्धार्चाभ्योऽणः"इति मत्वर्थीयेन व्युत्पादितः श्रद्धातान्पुरुषस्तु न गृह्नते, अनभिधानात्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा रोगाऽतपयोः ४।३।१३

शरदः इत्येव। रोगे आतपे च अभिधेये शरच्छब्दाट् ठञ् प्रत्ययो वा भवति शैषिकः। ऋत्वणो ऽपवादः। शारदिको रोगः। शारदिकः आतपः। शारदो रोगः। शारदः आतपः। रोगातपयोः इति किम्? शारदं दधि।

न्यासः

विभाषा रोगातपयोः। , ४।३।१३

बाल-मनोरमा

विभाषा रोगातपयोः १३६३, ४।३।१३

विभाषा रोगातपयोः। "ठ"ञिति शरद इति चानुवर्तते। शारदं दधीति। ञत्वणिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

निशाप्रदोषाभ्यां च ४।३।१४

निशाप्रदोषशब्दाभ्यां च विभाषा ठञ् प्रत्ययो भवति शैषिकः। कालाट् ठञ् ४।३।११ इति नित्ये ठञि प्राप्ते विकल्प उच्यते। नैशिकम्, नैशम्। प्रादोषिकम्, प्रादोषम्।

न्यासः

निशाप्रदोषाभ्याञ्च। , ४।३।१४

न्यासः

नित्यं वृद्धशरादिभ्यः। , ४।३।१४

प्राग्दीव्यतीयाणो ह्यपवादो मयडारभ्यते, अणं तु कोपधलक्षणम्, अञमुवर्णान्तलक्षणमनुदात्तादिलक्षणं च परत्वाद्बाधते। "आरम्भसामर्थ्यादेव नित्यं भविष्यति" इति। यदि ह्यनित्यः स्यात्, अस्य सूत्रस्यारम्भोऽनर्थकः स्यात्; पाक्षिकस्य मयटः पूर्वेणैव सिद्धत्वात्। "तदनेन क्रियते" इति। यत् तदेकेषामाचार्याणामिष्टम्। तदनेन नित्यग्रहणेन सफलं क्रियत इत्यर्थः। कथं योगविभागः क्रियते? तद्यथा द्वारं द्वारमिति शब्दाधिक्यादर्थाधिक्यं भवतीति नित्यग्रहणेनायमर्थः सूच्यते। यद्येवम्, नित्यग्रहणादेव मृच्छशब्दस्यापि नित्योऽयं मयट् सिद्धः, तदपार्थकोऽस्य शरादिषु पाठः? नानर्थकः; नित्यग्रहणस्यैवोदाहरणप्रदर्शनार्थत्वात्॥

बाल-मनोरमा

निशाप्रदोषाभ्यां च १३६४, ४।३।१४

निशाप्रदोषाभ्यां च। वा ठञ् स्यादिति। शेषपूरणम्। "कालाट्ठ"ञिति नित्यं प्राप्ते विकल्पोऽयम्।

---

सूत्रम्

काशिका-वृत्तिः

श्वसस् तुट् च ४।३।१५

विभाषा इत्येव। श्वःशब्दाद् विभाष ठञ् प्रत्ययो ह्बवति, तस्य च तुडागमो भवति। त्यप्प्रत्ययो ऽप्यतो विहितः, ऐषमोह्यः श्वसो ऽन्यत्रस्याम् ४।२।१०४ इति। एताभ्यां मुक्ते ट्युट्युलावपि भवतः। शैवस्तिकः, श्वस्त्यः, श्वस्तनः।
न्यासः

�आसस्तुट् च। , ४।३।१५

तस्य {तस्य चेति इति मूलपाठः;पदमञ्जरीश्च।} वेति। ठञः। कुत एतत्? तस्य विधीयमानतया प्राधान्यात्, प्रधाने च कार्यसम्प्रत्ययात्। स च तुडागम इकादेशे कृते भवतीति वेदितव्यम्। ननु सन्नियोगशिष्टत्वात् तुटस्तेनैव तावद्भवितव्यम्, पश्चादङ्गसंज्ञायामभिनिर्वृत्तायामिकादेशेन? नैतदस्ति; उपेदशावस्थायामेव हीकादेशे कृते न भवितव्यम्, ज्ञापकात्। यदयं "वुञ्छण्कठच्" ४।२।७९ इति प्रत्ययस्वरार्थमनुबन्धं चकारं करोति। प्रत्ययसंज्ञायाः सन्नियोगाद्धि प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वम्, किञ्चित्करणेन? तस्माच्चित्करणाद्विज्ञायते--सन्नियोगशिष्टेभ्योऽपि पूर्वमिकादेशो भवति। तेन ठग्ग्रहणान्यङ्गसंज्ञाभूतानीकमेव बोधयन्तीति तुडपि तस्यैव भविष्यतीति विज्ञायते। "एताभ्याम्" इत्यादि। ()आःशब्दोऽयमव्ययं कालवाची। तेन यदा ठञ्त्यपौ न भवतः,तदा "सायञ्चिरम्"४।३।२३ इत्यादिना ट()उट()उलौ अपि भवतः॥
बाल-मनोरमा

�आसस्तुट् च १३६५, ४।३।१५

()आसस्तुट् च। तस्येति। प्रत्ययस्येत्यर्थः। तुटि टकार इत्। उकार उच्चारणार्थः।

तत्त्व-बोधिनी

�आसस्तुट् च १०७४, ४।३।१५

()आसस्तुट् च। विभाषेत्यनुवर्तनादाह--ठञ्वास्यादिति। "ऐषमोह्यः"इत्यादिना त्यबपि विकल्पेन विहितः। आभ्यां मुक्ते ठ्युट()उलावपि स्त एव।

---

सूत्रम्
काशिका-वृत्तिः
सन्धिवेलाऽद्यृतुनक्षत्रेभ्यो ऽण् ४।३।१६

कालातित्येव। सन्धिवेलाऽदिभ्यः ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्यो ऽण् प्रत्ययो भवति शैषिकः। ठञो ऽपवादः। अण्ग्रहणम् वृद्धाच्छस्य ४।२।११३ बाधनार्थम्। सन्धिवेलादिभ्यस् तावत् सान्धिवेलम्। सांध्यम्। ऋतुभ्यः ग्रैष्मम्। शैशिरम्। नक्षत्रेभ्यः तैषम्। पौषम्। सन्धिवेला। सन्ध्या। अमावास्या। त्रयोदशी। चतुर्दशी। पञ्चदशी। पौर्णमसी। प्रतिपद्। संवत्सरात् फलपर्वणोः सांवत्सरं फलम्। सांवत्सरं पर्व।
न्यासः
सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्। , ४।३।१६

"ठञोऽपवाद-ट इति। "कालाट्ठञ्" ४।३।११ इति प्राप्तस्य। अथाण्ग्रहणं किमर्थम्, यथाविहितमेवोच्येत,तेनैवमुच्यमाने न प्राप्नोतीत्याशङ्कनीयम्, यदि ठञ् स्यात् पुनर्वचनमनर्थकं स्यात्, तस्माद्वचनप्रामाण्याद्यो विहितो न स प्राप्नोति,

ठञ्प्रत्ययेन बाधितत्वात् स एव भविष्यति, स वाच्य? इत्यत आह-- "अण्ग्रहणम्" इत्यादि। सन्धिवेलादिषु पौर्णमासीशब्दो वृद्धः पठ()ते। स्वातिरिति नक्षत्रशब्दो वृद्धोऽस्ति। तत्र यद्यण्ग्रहणं न क्रियेत, ताभ्यां परत्वाट्ठञा छे बाधिते पुनर्वचनाच्छ एव स्यात्। तस्मात् तनपि बाधित्वा वृद्धादणेव यथा स्यादित्येवमर्थं पुनरण्ग्रहणम्। "तैषम्, पौषम्" इति। तिष्यपुष्पशब्दाभ्यां "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यण्, तस्याणो "लुबविशेषे" ४।२।४ इति लुप्, ततोऽनेनाण्, तिष्यपुष्ययोर्नक्षत्राणि" (वा।८०८) इति यलोपः। "संवत्सरात्फलपर्वणोः"इति। संवत्सरशब्दादण्भवति फले पर्वणि चाभिधेये। सांवत्सरं फलम्, सावंत्सरं पर्व वा। सांवत्सरिकमन्यत्॥

बाल-मनोरमा

सन्धिवेलाद्युतुनक्षत्रेभ्योऽण् १३६७, ४।३।१६

सन्धिवेलां। कालवृत्तिभ्य इति। "कालाट्ठ]ञित्यतस्तदनुवृत्तेरिति भावः। ठञोऽपवादः। तैषमिति। तिष्ये भवादीत्यर्थः। "तिष्टपुष्ययोर्नक्षत्राऽणी"ति। यलोपः। तिष्ये जात इत्यर्थे "श्रविष्ठाफल्गुनी"ति लुग्वक्ष्यते। सन्धिवेलादिगणं पठति-- सन्धिवेलेत्यादि। संवत्सरात्फलपर्वणोरिति। गणसूत्रमिदम्।

तत्त्व-बोधिनी

सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् १०७६, ४।३।१६

सन्धिवेला। अण्ग्रहणं तु छबाधनार्थम्। अन्यथा "सन्धिवेलादिभ्यो यथाविहितं प्रत्ययाः स्युः" इत्यक्ते पौर्णमासीशब्दात् "वृद्धाच्छः"स्यात्। वचनं तु ठञो बाधनाय स्यादिति भावः। तैषमिति। तिष्याद्भवादावण्। जातार्थे तु "श्रविष्ठाफाल्गुनी"ति लुक्स्यात्। "सूर्यतिष्ये"त्यत्र "तिष्यपुष्ययोर्नक्षत्राऽणि"इति वचनाद्यलोपः।

---

सूत्रम्

काशिका-वृत्तिः

प्रावृष एण्यः ४।३।१७

प्रावृष्शब्दादेण्यः प्रत्ययो भवति शैषिकः। ऋत्वणो ऽपवादः। प्रावृषेण्यः बलाहकः।

लघु-सिद्धान्त-कौमुदी

प्रावृष एण्यः १०८८, ४।३।१७

प्रावृषेण्यः॥

न्यासः

प्रावृष एण्यः। , ४।३।१७

अथ किमर्थं प्रत्यये मूर्धन्यः पठ()ते, न "रषाभ्याम्" (८।४।१) इत्येनैव णत्वं भविष्यति? नैवं शक्यम्, इह हि न स्यात्-- प्रावृषेणिति पदान्तत्वात्॥

बाल-मनोरमा

प्रावृष एण्यः १३६८, ४।३।१७

प्रावृष एण्यः। ऋत्वणोऽपवादः। प्रावृषेण्य इति। प्रावृट्-वर्पर्तुः। तत्र भवादिरित्यर्थः। जाते तु ठब् वक्ष्यते। प्रक्रियालाघवार्थं णकारोच्चारणम्।

तत्त्व-बोधिनी

प्रावृष एण्यः १०७७, ४।३।१७

प्रावृष एण्यः। ऋत्वणोऽपवादः। प्रवर्षतीति प्रावृट् "नहिवृती"ति दीर्घः। तत्र भवः। जाते तु ठपं वक्ष्यति। "रषाभ्यां"मिति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणमित्याहुः। किंच प्रावृषएण्यमाचक्षाणः प्रावृषेण् इत्यत्र णकारश्रवणार्थमपि तत्। ण्यन्तात्क्विपि टिलोपणिलोपयलोपाः।

---

सूत्रम्

काशिका-वृत्तिः

वर्षाभ्यष्ठक् ४।३।१८

वर्षशब्दात् ठक् प्रत्ययो भवति शैषिकः ऋत्वणो ऽपवादः। वार्षिकं वासः। वार्षिकमनुलेपनम्।

न्यासः

वर्षाभ्यष्ठक्। , ४।३।१८

अथ किमर्थं ठग्विधानम्,कालाट् (४।३।११) ठञैव सिद्धत्वात्ुभयत्रापि तदेव रूपमिति? नैवम्; ठकि सति प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्, ठञि तु सति "ञ्नित्यादिर्नित्यम्" ६।१।१९१ इत्याद्युदात्तत्वम्॥

बाल-मनोरमा

वर्षाभ्यष्ठक् १३६९, ४।३।१८

वर्षाभ्यष्ठक्। तृतीयर्तौवर्षाशब्दौ नित्यं बहुवचनान्तः, "अप्सुमनःसमासिकतावर्षाणां बहुत्व"मिति लिङ्गानुशासनसूत्रात्। "स्त्रिया प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः। वर्षाशब्दाजाताद्यर्थे ठगित्यर्थः। वर्षाषु साध्विति हितकारीत्यर्थः। ननु "तत्र साधु"रिति साध्वधिकारस्य शेषाधिकारबहुर्भूतत्वात्कथं साध्वर्थेऽयं प्रत्यय इत्यत आह--कालादिति। साध्वर्थे इति। साध्वर्थेऽपि ठगित्यर्थः। अस्य जाताद्यर्थेषु शैषिकेष्वन्तर्भावादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि ठञ् ४।३।१९

वर्षशब्दात् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ठको ऽपवादः। स्वरे भेदः। नभश्च अभस्यश्च वार्षिकावृतू।

न्यासः

छन्दसि छञ्। , ४।३।१९

---

सूत्रम्

काशिका-वृत्तिः

वसन्ताच् च ४।३।२०

छन्दसि इत्येव। वसन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणो ऽपवादः। मधुश्च माधवश्च वासन्तिकावृतू।

न्यासः

वसन्ताच्च। , ४।३।२०

---

सूत्रम्

काशिका-वृत्तिः

हेमन्ताच् च ४।३।२१

छन्दसि इत्येव। हेमन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणो ऽपवादः। सहश्च सहस्यश्च हैमन्तिकावृतू। योगविभागः उत्तरार्थः।

न्यासः

हेमन्ताच्च। , ४।३।२१

"योगविभाग उत्तरार्थः" इति। "सर्वत्राण् च तलोपश्च" ४।३।२२ इति वक्ष्यति, स हेमन्तशब्दस्यैव यथा स्यात्, वसन्तस्य मा भूत्। यदि "हेमन्तवसनताभ्याम्" इत्येकयोगः क्रियेत, ततो वसन्तस्यापि स्यात्; तस्य ह्युत्तरत्रानुवृत्तेः॥

---

सूत्रम्

काशिका-वृत्तिः

सर्वत्र अण् च तलोपश् च ४।३।२२

हेमन्तशब्दादण् प्रत्ययो भवति, तत्संनियोगेन च अस्य तकारलोपः। हैमनं वासः। हेइमनम् उपलेपनम्। सर्वत्रग्रहणं छन्दो ऽधिकारनिवृत्त्यर्थम्। छन्दसि भाषायां च सर्वत्र एतद् भवति। ननु च छन्दसि इति न अनुवर्तिष्यते? सैवाननुवृत्तिः शब्देन अख्यायते प्रत्यत्नाधिक्येन पूर्वसूत्रे ऽपि सम्बन्धार्थम्। हैमन्तिकम् इति भाषायाम् अपि ठञं स्मरन्ति। अथ अण् च इति चकारः किम् अर्थः? अण्, यथाप्राप्तं च ऋत्वणिति। कः पुनरनयोर् विशेषः? ऋत्वणि हि तकारलोपो न अस्ति हैमन्ति पङ्क्ती पङ्क्तिः इति। तदेवं त्रीणि रूपाणि भवन्ति, हैमन्तिकम्, हैमन्तम्, हैमनम् इति।

न्यासः

सर्वत्राण् च तलोपश्च। , ४।३।२२

छन्दसि पूर्वेण ठञि प्राप्ते भाषायामपि ऋत्वणि चैतदुच्यते। "सर्वत्रग्रहणम्" इत्यादिनि सर्वत्रग्रहणस्य प्रयोजनमाचष्टे। "छन्दसि भाषायाञ्च" इत्यादिना छन्दोऽधिकारनिवृत्तेः फलं दर्शयति। "ननु च" इत्यादि। अस्वरित्वादेव च्छन्दसीति नानुवर्तिष्यते, ततो नार्थश्छनदोऽधिकारनिवृत्त्यर्थेन सर्वत्रग्रहणेनेत्यभिप्रायः। "सैव" इत्यादिना यासावस्वरितत्वादननुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते। किमर्थमित्याह-- "प्रयत्नादिक्येन" इत्यादि। प्रत्यत्नाधिक्यमेतदेव शब्देनाख्यातम्। तेन हेतुना पूर्वसूत्रेऽपि सर्वत्रशब्दस्य सम्बन्धो यथा स्यादित्येवमर्थः शब्देनाख्यायते। कस्मात् पुनः पूर्वसूत्रेऽपि सर्वत्रग्रहणस्य सम्बन्ध इष्यते? इत्याह-- "हैमन्तिकमिति हि" इत्यादि। हिशब्दो हेतौ। आचार्या हि हैमन्तिकमिति भाषायां ठञं स्मसन्ति। स चैवं भाषायामपि सिद्ध्यति, यदि पूर्वसूत्रेऽपि सर्वत्र ग्रहणस्य सम्बन्धो भवति। तत्र हि सति पूर्वसूत्रस्यायमर्थो भवति-- हेमन्ताच्च सर्वत्र च्छन्दसि भाषायामपि ठञ् भवतीति। "कः पुनरनयोरणो विशेषः"इति। न कश्चिदिति भावः। "ऋत्वणि हि" इत्यादिना विशेषं दर्शयति। "हैमन्ती" इति। "टिड्ढाणञ्" ४।१।१५ इति ङीप्। "तदेवम्" इत्यादि। यत एव पूर्वसूत्रेण ठञ् भवत्यनेनाण् तलोपसहितः,तेन त्रीणि रूपाणि भवन्ति॥

बाल-मनोरमा

सर्वत्राऽण् च तलोपश्च १३७०, ४।३।२२

सर्वत्राऽण्च। छन्दसीत्यनुवृत्तिनिवृत्त्यर्थं सर्वत्रग्रहणम्। लोके वेदे चेत्यर्थः। "हेमन्ताच्चे"ति पूर्वसूत्राद्धेमन्तादित्यनुवर्तते। तदाह--हेमन्तादित्यादिना। ननु "सर्वत्राऽण् तलोपश्चे"त्येव सिद्धे प्रथमचकारो व्यर्थ इत्यत आह--चकारादिति। हैमनमिति। "हेमन्ते"त्यत्र तकारात्प्राग् नकारस्यानुस्वारपरसवर्णौ स्थितौ। तत्र तकाराकारसमुदायस्य लोप इति पक्षे "अ"निति प्रकृतिभावान्न टिलोपः। तकारस्यैव लोप इति पक्षे तु अकारस्य "यस्येति चे"ति लोपे तस्य आभीयत्वेनासिद्धत्वात्स्थानिवत्त्वाद्वा न टिलोपः। हैमन्तमिति। ऋत्वणि रूपम्। अत्र न तलोपः, तस्य एतत्सूत्रप्रतिपदोक्ताऽणा संनियोगशिष्टत्वादिति भावः।

तत्त्व-बोधिनी

सर्वत्राऽण् च तलोपश्च १०७८, ४।३।२२

सर्वत्राण्च। हेमन्तादिति। एतच्च "हेमन्ताच्चे"त्यतोऽनुवृत्तमिति भावः। हैमनमिति। अकारविशिष्टस्य तशब्दस्य लोपे "अन्" इति प्रकृतिभावात् "नस्तद्धिते"इति टिलोपो नेति बोध्यम्। हैमन्तमिति। ऋत्वणि तकारलोपो न भवति, तस्य "सर्वत्रा"णिति प्रतिपदोक्तेन अणा सन्नियोगशिष्टत्वात्। एतच्च प्रत्याख्यातं भाष्ये। तथाहि--हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति, "हेमन्नागनीगन्ति कर्णौ" इत्यादि प्रयोगात्, ततश्च हेमन्--हेमन्त शब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम्। छन्दसि तु "हेमन्ताच्चे"ति ठञा "हैमन्तिक"मिति तृतीयमपि रूपं सिध्यति। न च विशेषविहितेन ठञा अणो बाधः शङ्क्यः। छन्दसि सर्वविधीनां वैकल्पिकत्वात्। वृत्तिकृता तु "हेमन्ताच्चे"ति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिकमिति स्वीकृतम्।

---

सूत्रम्

काशिका-वृत्तिः

सायंचिरंप्राह्णेप्रगे ऽव्ययेभ्यष् ट्युट्युलौ तुट् च ४।३।२३

कालातित्येव। सायं चिरं प्राह्णे प्रगे इत्येतेभ्यः अव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ प्रत्ययौ भवतः, तयोश्च अदिष्टयोः तुडागमो भवति। सायन्तनम्। चिरन्तनम्। प्राह्णेतनम्। प्रगेतनम्। अव्ययेभ्यः दोषातनम्। दिवातनम्। सायम् इति मकारान्तं पदम् अव्ययम्, ततो ऽव्ययादेव सिद्धः प्रत्ययः। यस्तु स्यतेरन्तकर्मणो घञि सायशब्दस् तस्य इदं मकारान्तत्वं प्रत्ययसन्नियोगेन निपात्यते। दिवसावसानं सायः। चिरशब्दस्य अपि मकारान्तत्वं निपात्यते। प्राह्णे, प्रगे इत्येकारान्तत्वम्। चिरपरुत्परारिभ्यस्त्नो वक्तव्यः। चिरत्नम्। परुत्नम्। परारित्नम्। प्रगस्य छन्दसि गलोपश्च। प्रत्नम्। अग्रपश्चाड्डिमच्। अग्रिमम्। पश्चिमम्। अन्ताच् च इति वक्तव्यम्। अन्तिमम्।

लघु-सिद्धान्त-कौमुदी

सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च १०८९, ४।३।२३

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। सायन्तनम्। चिरन्तनम्। प्राह्णे प्रगे अनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्॥

न्यासः

सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट�उट�उलौ तुट् च। , ४।३।२३

"कालाट्ठञ्" ४।३।११ इति ठञि प्राप्ते सायमादिभ्यः ट()उट()उलौ विधीयेते, तयोश्च तुडागमः। ठञपवादत्वाच्च् ट()उट()उलोः। ठञैव च्छस्य बाधित्वादेताभ्यां पुनश्छस्य सम्प्रधारणैव नास्ति। तेन वृद्धादपि ट()उट()उलावेव भवतः--प्राक्तनमिति। "तयोश्च" इत्यादि। यद्यनादिष्टयोस्तुट् स्यात् तदा युरूपौ प्रत्ययौ न भवत इत्यनादेशो न स्यात्। तस्मादादिष्टयोस्तयोः कृतादेशयोस्तुडागमः। एतच्च "घकालतनेषु काल नाम्नः" ६।३।१६ इति निर्देशाल्लभ्यते। न ह्रनादिष्टयोस्तुड्()विधानेन तनशब्द उपपद्यते। अथ प्रत्ययोष्टित्करणं किमर्थम्, न तुट एव टित्त्वेन प्रत्यययोरपि टित्त्वं विज्ञास्यत इति, यतस्तद्()ग्रहणेन ग्रहणादागमानाम्? नैतदस्ति; युक्तं यत् प्रत्ययधर्मा आगमे भवन्ति तस्य प्रत्ययभक्तत्वात्, नत्वागयधर्मा प्रत्यये। तस्माट्टित्कार्यार्थं प्रत्यययोरपि टित्त्वमासज्यते। "स्यतेरन्तकर्मणः" इति। "षोऽन्तकर्मणि" (धा।पा।११४७) इत्यस्य। "प्राह्णे प्रगे इत्येकारान्तम्" इति। निपात्यत इति सम्बन्धः। ननु च "घकालतनेषु कालनाम्नः" ६।३।१६ इति सप्तम्या अलुकैव सिद्धम्, तदपार्थकं निपातनम्? यत्र तर्हि सप्तम्यर्थो नास्ति तदर्थं निपानम् --- ग्राह्णः स#ओढोऽस्य प्राह्णेतनः, प्रगः सोढोऽस्य प्रगेतन इति। अत्र हि "तदस्य सोढम्" ४।३।५२ इति प्रथमासमर्थात्प्रत्ययविधानात्सप्तम्यर्थो नास्ति। तदभावत्सप्तम्यपि नास्त्येव। "चिरपरुत्परारिभ्यस्त्नो वक्तव्यः" इति। व्याख्येय इत्यर्थः। व्याख्यानं तु "तद्धिताः" ४।१।७६ इत्यत्रैव कृतम्। एवमुत्तरत्रापि वेदितव्यम्। चिरशब्दस्य सूत्रे चोपादानाट्ट()उलावपि भवतः। "प्रगस्य च्छन्दसि गलोपश्च" इति।वक्तव्य इति सम्बन्धः। वक्तव्यशब्दस्य स एवार्थः। व्याख्यानात् त्विहापि "प्रत्नपूर्ववि()ओमात् थाल् च्छन्दसि" ५।३।१११ इतिनिपातनमाश्रित्य कत्र्तव्यम्। "अन्ताच्चेति वक्तव्यम्" (इति)। अन्तशब्दाड्()डिमज्भवतीत्येतदर्तरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु कृतमेव। डिमचो डित्करणं पश्चादित्यस्य टिलोपार्थम्। ननु च "अव्ययानां भमात्रे टिलोपो वक्तव्यः" (वा।८४२) इत्यनेनैव सिद्धम्? न सिध्यति; अनित्यत्वात् तस्य। यथा आरातीय इत्यत्र न भवति, तथेहापि न भवतीति कस्यचिद्()भ्रानति स्यात्, अतस्तन्निरासार्थं डित्करणम्॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा पूर्वाह्णापराह्णाभ्याम् ४।३।२४

पूर्वाह्णापराह्णशब्दाभ्यां विभाषा ट्युट्युलौ प्रत्ययौ भवतः, तुट् च तयोरागमः। कालाट् ठञ् ४।३।११ इति ठञि प्राप्ते वचनं, पक्षे सो ऽपि भवति। पूर्वाह्णेतनम्। अपराह्णेतनम्। पौर्वाह्णिकम्। आपराह्णिकम्। घकालतनेषु कालनाम्नः ६।३।१६ इति सप्तम्या अलुक्। यदा तु न सप्तमी समर्थविभक्तिः पूर्वाह्णः सोढः अस्य इति तदा पूर्वाह्णतनः इति भवितव्यम्।

न्यासः

विभाषा पूर्वाह्णापराह्णाभ्याम्। , ४।३।२४

"{पूर्वाह्णेतनम्--काशिका} पूर्वाह्णेतनः" इति। अह्नः पूर्वो भाग इति पूर्वादिसूत्रेणै २।२।१ कदेशिसमासः। "राजहःसखिभ्यष्टच्" ५।४।९१ इति टच् समासान्तः, "अह्नोऽह्न एतेभ्यः" ५।४।८८ इत्यह्नादेशः,"अह्नोऽदन्तात्" ८।४।७ इति णत्वम्। यदाऽपत्यम्यन्तात् प्रत्ययस्तदा पूर्वाह्णतन इति भवितव्यमिति; सप्तम्यभावात्। सप्तम्यभावस्तु प्रथमासमर्थात् तद्धितोत्पत्तेः॥

बाल-मनोरमा

विभाषा पूर्वाह्णापराह्णाभ्याम् १३७२, ४।३।२४

विभाषा पूर्वाह्णा। पक्षे ठञिति। तथा सति न तुट्, तस्य ठ्युठ्युल्भ्यां संनियोगशिष्टत्वादिति भावः। तदेवं

"राष्ट्रावारे"त्यारभ्य एतदन्तैः सूत्रैः शाष्ट्रादिप्रकृतिविशेषेभ्यो घादयः प्रत्ययविशेषा अनुक्रान्ताः।

---

सूत्रम्

काशिका-वृत्तिः

तत्र जातः ४।३।२५

अणादयो घादयश्च प्रत्ययाः प्रकृताः, तेषाम् अतः प्रभृति अर्थाः समर्थविभक्तयः च निर्दिश्यन्ते। तत्र इति सप्तमीसमर्थात् जातः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्ने जातः स्रौघ्नः। माथुरः। औत्सः। औदपानः। राष्ट्रियः। अवारपारीणः। शाकलिकः। माकलिकः। ग्राम्यः। ग्रामीणः। कात्रेयकः। औम्भेयकः।

लघु-सिद्धान्त-कौमुदी

तत्र जातः १०९०, ४।३।२५

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुग्घ्ने जातः स्रौग्घ्नः। उत्से जात औत्सः। राष्ट्रे जातो राष्ट्रियः। अवारपारे जातः अवारपारीणः, इत्यादि॥

न्यासः

तत्र जातः। , ४।३।२५

"अणादयो घादयश्च" इति। एकेनादिशब्देनाणादीनामिहोत्सर्गाणां ग्रहणम्, द्वितीयेन घादीनां शेषाधिकारविहितानाम्। रुआऔघ्नः,माथुरः" इति। "प्राग्दीदीव्यतोऽण्" ४।१।८३। "औत्सः, औदपानः" इति। "उत्सादिभ्योऽञ्" ४।१।८६। "राष्ट्रियः,अवारपारीणः" इति। "राष्ट्रावारपाराद्घखौ" ४।२।९२। "शाकलिकः, मालविकः" इति। "वाहीकग्रामेभ्यश्च" ४।२।११६ इति ठञ्ञिठौ। "कात्त्रेयकः, औम्भेयकः" इति। "कत्त्र्यादिभ्यो ढकञ्" ४।२।९४॥

बाल-मनोरमा

तत्र जातः १३७३, ४।३।२५

अथ तेषां प्रत्ययानामर्थविशेषान्, प्रकृतीनां च विभक्तिविशेषान् दर्शयितुमुपक्रमते--तत्र जातः सप्तमीसमर्थादिति। सप्तम्यन्तात्कृतसन्धेरित्यर्थः। तत्रेत्यनेन सप्तम्यन्तस्यैव प्रथमानिर्दिष्टत्वादिति भावः। अणादय इति। अपत्यादिविकारान्तार्थसाधारणा इत्यर्थः। घादय इति। "राष्ट्रावारपारे"त्यादिभिर्विशेषविहिता इत्यर्थः।

तत्त्व-बोधिनी

तत्र जातः १०८०, ४।३।२५

तत्र जातः। ननु शेषे इत्यस्य लक्षमत्वोक्तेः "चाक्षुषं रूपं, श्रावणः शब्दः"इत्यादाविव जातादिष्वर्थेष्वणादयः सिद्धाः, अधिकाराञ्च घादयोऽपि। न च "जातादिष्वेवाऽणादयः"इति नियमार्थं जाताद्यर्थनिर्देश आवश्यकः। अन्यथा "तत्रास्ते, तत्र शेते"इत्याद्यर्थेऽपि प्रत्ययः स्यादिति वाच्यम्, "चाक्षुषु"मित्यद्यसिद्यापत्तेः।रुआउध्ने आस्ते, रुआउध्ने शेते"इत्यादौ त्वनभाधानादेव तद्धितो न भविष्यति, अङ्गुल्या खनति, वृक्षमूलादागत इत्यादौ यथा। समर्थविभक्तयस्त्वाक्षेपादेव लप्स्यन्ते। चाक्षुषमित्यत्र तृतीया यथा, तस्मात् "तत्र जातः"इत्याद्यर्थनिर्देशो व्यर्थ इति चेत्। मैवम्। "प्रावृषष्ठ"बित्याद्यपवादार्थं तदावश्यकत्वात्। ये तु निरपवादा अर्थनिर्देशाः "कृतलब्धक्रीतकुशलाः"इत्यादयः, ते तु व्यर्था एवेति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

प्रावृषष्ठप् ४।३।२६

प्रावृट्शब्दात् सप्तमीसमर्थाज् जातः इत्येतस्मिन्नर्थे ठप् प्रत्ययो भवति। एण्यस्य अपवादः। पकारः स्वरार्थः। प्रावृषि जातः प्रावृषिकः।

लघु-सिद्धान्त-कौमुदी

प्रावृषष्ठप् १०९१, ४।३।२६

एण्यापवादः। प्रावृषिकः॥

न्यासः

प्रावृषष्ठप्। , ४।३।२६

"एण्यस्यापवादः" इति। "प्रावृष एण्यः" ४।३।१७ इति प्राप्तस्य॥

बाल-मनोरमा

प्रावृषष्ठप् १३७४, ४।३।२६

प्रावृषष्ठप्। ठपः पित्त्वम् "अनुदात्तौ सुप्पितौ" इति स्वारार्थम्। एण्यस्येति। "प्रावृष एण्यः" इति विहितस्येत्यर्थः। एवंच "प्रावृष एम्यः" इति सूत्रं जातादन्यार्थमिति पर्यवस्यति।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां शरदो वुञ् ४।३।२७

शरच्छब्दात् सप्तमीसमर्थाज् जातः इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति ऋत्वणः अपवादः, समुदायेन चेत् संज्ञा गम्यते। शारदका दर्भाः। शारदका मुद्गाः। दर्भविशेषस्य मुद्गविशेषस्य च इयं संज्ञा। संज्ञायाम् इति किम्? शारदं सस्यम्। संज्ञाधिकारं केचित् कृतलब्धक्रीतकुशलाः ४।३।३८ इति यावदनुवर्तयन्ति।

न्यासः

संज्ञायां शरदो वुञ्। , ४।३।२७

"समुदायेन चेत्संज्ञा गम्यते" इति। अनेन समुदायोपाधित्वं संज्ञाया दर्शयति।प्रकृतिप्रत्ययसमुदायेन चेत्संज्ञा गम्यते इत्यर्थः। यद्येवम्, शारदका दर्भा इतिदर्भशब्दस्य प्रयोगो न प्राप्नोति, प्रत्ययान्तेनाभिहितत्वात्? नैष दोषः; यथैव हि शारदकशब्दो दर्भविशेषस्य नामधेयं तथा मुद्गविशेषस्यापि। तत्रासति दर्भशब्दप्रयोगेऽनेकार्थसाधारणत्वात् कस्य नामधेयमिति सन्देहः स्यात्--- कोऽर्थः शारदकशब्दे विवक्षित इति। तस्मादसन्देहार्थो दर्भशब्दो उपादीयते। "संज्ञाधिकारम्" इत्यादि। "केचित्" इति वचनात् केचिन्नानुवर्त्तयन्तीत्युक्तं भवति॥ "पूर्वाह्णकः,अपराह्णकः" इति। पूर्ववदेकदेशिसमासादिकं कार्यं विधेयम्-- "विभाषा पूर्वाह्णापराह्णाभ्याम्" ४।३।२४ इति, तत्र ट()उट()उल्()विधिश्च। "आद्र्रकः, मूलकः" इति। "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यागतस्यार्थः "लुबविशेषे" ४।२।४ इति लुप् ततो वुन्। "निशाप्रदोषाभ्याम्ि‌ति। ठञ्विधेः। "ठञादय एव " आदिशब्देन ट()उट()उलादयो गृह्न्ते॥

बाल-मनोरमा

संज्ञायां शरदो वुञ् १३७५, ४।३।२७

संज्ञायां शरदो वुञ्। संज्ञायामित्येतदत् "कृतलब्धक्रीते"त्येतत्पर्यन्तमनुवर्तत इति केचिदिति वृत्तिकृतः।

तत्त्व-बोधिनी

संज्ञायां र?सदो वुञ् १०८१, ४।३।२७

संज्ञायां शरदः। समुदायेन चेत्संज्ञा गम्यत इत्यर्थः। संज्ञायां किम्()। शारदं सस्यम्। "संज्ञाया"मित्येतत् "कृतलब्धे"त्येतत्पर्यन्तं केचिदनुवर्तयन्तीति वृत्तिकृत्।

---

सूत्रम्

काशिका-वृत्तिः

पूर्वाह्णापराह्णाऽर्द्रामूलप्रदोषावस्कराद् वुन् ४।३।२८

पूर्वाह्णाऽदिभ्यः शब्देभ्यः वुन् प्रत्ययो भवति तत्र जातः ४।३।२५ इत्येतस्मिन् विषये संज्ञायां गम्यमानायाम्। पूर्वाह्णकः। अपराह्णकः। विभाषा पूर्वाह्णापरह्णाभ्याम् ४।३।२४ इत्यस्य अपवादः। आर्द्रकः। मूलकः। नक्षत्राणः अपवादः। प्रदोषकः। निशाप्रदोषाभ्यं च ४।३।१४ इत्यस्य अपवादः। अवस्करकः। औत्सर्गिकस्याणः ४।१।७३ अपवादः। असंज्ञायां तु यथाप्राप्तं ठञादयः एव भवन्ति।

बाल-मनोरमा

पूर्वाह्णापराह्णाद्रामूलप्रदोषावस्कराद्वुन् १३८१, ४।३।२८

पूर्वाह्णापराह्ण। पूर्वाह्णकः अपराह्णक इति। पूर्वाह्णे अपराह्णे च जात इत्यर्थः। "विभाषा पूर्वाह्णापराह्णाभ्या"मित्यस्यापवादः। ठ्युठ्युलोष्ठञश्च विकल्पस्तु जातादन्यार्थे सावकाश इति भावः। आद्रकः मूलक इति। आद्रायां मूले च जात इत्यर्थः। ऋत्वणोऽपवादः। प्रदोषक इति। "निशाभावः। आद्रकः मूलक इति। आद्रायां मूले च जात इत्यर्थः। ञत्वणोऽपवादः। प्रदोषक इति "निशाप्रदोषाभ्या"मित्यस्यापवादः अवस्करक इति। औत्वसर्गिकस्याऽणोऽपवादः। पथः पन्थ च। पथिन्शब्दाद्वन् स्यात् प्रकृतेः पन्थादेशश्च।

बाल-मनोरमा

कृतलब्धक्रीतकुशलाः १३९२, ४।३।२८

कृतलब्ध। तत्रेत्येवेति। "तत्र जातः" इत्यतस्तत्रेत्येवानुवर्तते। "जात इति तु निवृत्तमित्यर्थः। तथा च कृतो लब्धः क्रीतः कुशलो वेत्यर्थे सप्तम्यन्तादणादयो घादयश्च यथायथं स्युरित्यर्थः। स्नौग्घ्न इति। औत्सर्गिकोऽण्। राष्ट्रे कृतो राष्ट्रिय इत्याद्यप्युदाहार्यम्।

तत्त्व-बोधिनी

पूर्वाह्णापराह्णाद्रामूलप्रदोषावस्कराद्वुन् १०८५, ४।३।२८

अद्राकः। मूलक इति। नक्षत्राऽणोऽपवादः। प्रदोषक इति। "निशाप्रदोषाभ्यां चे"त्यस्यापवादः। अवस्करक इति। औत्सर्गिकस्याऽणोऽपवादः। ये तु "संज्ञाया"मित्येतत् "कृतलब्धे"त्येतत्पर्यन्तमनुवर्तयन्ति, तन्मतेऽसंज्ञायां यथायथमणादयो घादयश्च बोध्याः।

तत्त्व-बोधिनी

कृतलब्धक्रीतकुशलाः १०९३, ४।३।२८

कृतलब्ध। ननु कृतक्रीत त्वे जातलब्धत्वयोर्व्याप्ये इति किमनयोग्र्रहणेने()। सत्यम्। कृतत्वक्रीतत्वप्रकारकबोधेऽपि प्रत्ययार्थं तद्ग्रहणम्। अत एव जाते लुग्भाजामपि कृते न लुक्।

---

सूत्रम्

काशिका-वृत्तिः

पथः पन्थ च ४।३।२९

पथिशब्दाद् वुन् प्रत्ययो भवति, तत्र जातः इत्येतस्मिन् विषये ऽणो ऽपवादः। प्रत्यय। संनियोगेन च पथः पन्थ इत्ययम् आदेशः भवति। पथि जातः पन्थकः।

न्यासः

पथः पन्थ च। , ४।३।२९

"एकदेशाविकृतस्य" इत्यादि। "अमावस्यदन्यतरस्याम्" ३।१।१२२ इत्यत्र ण्यत्यवृद्धिरेव निपात्यते। अवृद्धिस्तु वृद्धेरेकादेशभूततया विकारो भवतीत्येकदेशविवृतममावस्याशब्दस्योपपद्यते। ये तु सन्धिवेलादिषु ह्रस्वोपधमधीयते, तेषां वृद्ध्युपधस्य ग्रहणं न प्राप्नोति, न हि विकृतिः प्रकृतिं गृह्णाति। तस्माद्दीर्घ एव पाठो युक्तः॥।

तत्त्व-बोधिनी

अ च १०८७, ४।३।२९

अ च। अमावास्याशब्दादकारप्रत्ययः स्यात्। अयमपि पूर्ववदुभाभ्यां बोध्यः। अमावास्य इति। ह्रस्वमध्यात्तु अमावस्यः।

---

सूत्रम्

काशिका-वृत्तिः

अमावास्याया वा ४।३।३०

अमावास्याशब्दाद् वुन् प्रत्ययो भवति वा तत्र जातः इत्येतस्मिन् विषये। सन्दिवेलद्यृतुनक्षत्रेभ्यो ऽण् ४।३।१६ इत्यादिषु पाठातणो ऽपवादः। अमावस्यकः, आमावास्यः। एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि भवति। अमावस्यकः, आमावस्यः।

बाल-मनोरमा

अमावास्याया वा १३८२, ४।३।३०

अमावास्याया वा। "वु"निति शेषः। पक्षे सन्धिवेलादित्वादण्। एकदेशविकृतन्यायादमावस्याशब्दादप्ययं विधिः।

तत्त्व-बोधिनी

अमावास्याया वा १०८६, ४।३।३०

अमावास्याया वा। सन्धिवेलाद्यणोऽपवादः। "अमावस्यदन्यतरस्या"मिति सूत्रेणाऽमापूर्वाद्वसेण्र्यति वृद्धौ पक्षे ह्रस्वत्वं निपात्यत इति ह्रस्वमध्यस्याप्यमावस्याशब्दस्येह ग्रहणम्, प्रकृतिग्रहणे विकृतेरपि ग्रहणात्। अमावस्यकः।

आमावस्यः। ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधं पठन्ति, तेषां तु दीर्घोपधस्य न स्यात्, विकृतिग्रहणेन प्रकृतेरग्रहणादिति हरदत्तादयः। वस्तुतस्तु वृद्धिप्रकृतिभूतस्यानुकरणमिदमित्याश्रित्य ह्रस्वोपधापाठोऽपि समर्थयितुं शक्यत इत्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

अ च ४।३।३१

अमावास्याशब्दातकारः प्रत्ययो भवति तत्र जातः ४।३।२५ इत्येतस्मिन् विषये। पूर्वेण वुन्नणोः प्राप्तयोः अयं तृतीयः विधीयते। अमावास्यः, अमावास्यकः, अमावास्यः। अमावस्यः, अमावस्यकः, आमावस्यः।

न्यासः

अ च। , ४।३।३१

अथ योग विभागः किमर्थः,न "अमावास्या अ च वा" इत्येवोच्येत, चकारो वुनोऽनुकर्षार्थो भविष्यति, वावचनञ्चोभयोर्विकल्पार्थम्, तेन ताभ्यां मुक्कतेऽणपि भविष्यति? अस्त्येतत्; किन्त्वेकयोगे सति "सिन्ध्वपकराभ्यां कन्" ४।३।३२ इति कन्नेव विकल्पेन कस्यचिद्()भ्रान्तिः स्यात्; अतस्तन्निवृत्त्यर्थं योगविभागे हि सति व्यवधानतया विकल्पस्य कन् नित्यो विज्ञायते॥

बाल-मनोरमा

अ च १३८३, ४।३।३१

अ च। "अ" इति। लुप्तप्रथमाकम्। अमावास्याशब्दादकार प्रत्ययोऽपीत्यर्थः। आदिवृद्ध्यभावः प्रयोजनम्।

---

सूत्रम्

काशिका-वृत्तिः

सिन्ध्वपकराभ्यां कन् ४।३।३२

सिन्धुशब्दादपकरशब्दाच् च कन् प्रत्ययो भवति तत्र जात ४।३।२५ इत्येतस्मिन् विषये। सिन्धुशब्दः कच्छादिः, ततो ऽणि मनुष्यवुञि च प्राप्ते विधानम्। अपकरशब्दादपि औत्सर्गिके ऽणि। सिन्धुकः। अपकरकः।

न्यासः

सिन्ध्वपकराभ्यां कन्। , ४।३।३२

"अपकरशब्दादौत्सर्गिकेऽणि" इति। प्राप्ते विधानमिति सम्बन्धः॥

बाल-मनोरमा

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युठ्युलौ तुट् च १३७१, ४।३।३२

सायंचिरं। चतुभ्र्य इति। सायं चिरं प्राह्णे प्रगे इत्येभ्य इत्यर्थः। कालवाचिभ्य इति। "कालाट्ठ"ञित्यतस्तदनुवृत्तेरिति भावः। तयोरिति। ठ्युठ्युलोरित्यर्थः। ननु "सायंतन"मित्यादौ कथं योरनादेशः। "युवोरनाकौ" इति ह्रङ्गाधिकारस्थम्। अङ्गात्परयोर्यु वु इत्येतयोरनाकौ विधीयेते। प्रकृते च अन्तरङ्गत्वात्तुटि"यु" इत्यस्य अङ्गात्परत्वाऽभावादनादेशो न संभवति। नच "तदागमास्तद्ग्रहणेन गृह्रन्ते" इति न्यायेन "त्यु" इत्यस्यापि युग्रहणेन ग्रहणात्तस्याङ्गात्परत्वं

निर्बाधमिति वाच्यं, "निर्दिश्यमानस्यादेशा भवन्ती"ति परिभाषया योरेवाऽनादेशप्राप्तेः, तस्य च तुटा व्यवहितत्वादङ्गात्परत्वाऽभावादित्यत आह--तुटः प्रागनादेश इति। कुत इत्यत आह--निर्देशादिति। आदिना "घकालतनेषु" इत्यत्र तनेति ग्राह्रम्। सायंतनमिति। "षो अन्तकर्मणि" इति धातोर्घञि सायशब्दो दिवसावसाने रूढः। तस्माट्ट()उट()उलौ, तयोरनादेशे तुट्, प्रकृतेर्मान्तत्वं निपात्यते। यत्तु सायमिति स्वरादिपठितमव्ययं, तस्याव्ययत्वादेव ट()उट()उलौ सिद्धौ। चिरंतनमिति। अत्रापि प्रकृतेर्मान्तत्वं निपात्यते। अस्मादेव लिङ्गाच्चिरमित्यस्याऽव्ययेषु पाठोऽप्राम#आणिक इति गम्यते। प्राह्णेतनमिति। प्राह्णः सोढोऽस्येति विग्रहः, "तदस्य सोढ"मित्यर्थस्य निर्देक्ष्यमाणत्वात्। प्राह्णे जात इत्याद्यर्थे तु "घकालतनेषु" इत्यलुकैव एदन्तत्वं सिद्धम्। प्रगेतनमिति। प्रगच्छतीति प्रगः, तस्मिन् जातादिरित्यर्थः। यत्तु "प्रगे" इत्यव्ययमेदन्तं प्रातरित्यर्थे, तस्यत्वव्ययत्वादेव सिद्धम्। अव्ययेभ्य उदाहरति दोषातनमिति। दोषेत्याकारान्तमव्ययं रात्रौ। दिवातनमिति। दिवेत्याकारान्तमव्ययमह्नि। चिरपरुदिति। चिर्, परुत्, परारि एब्यस्त्नप्रत्यय इत्यर्थः। चिरत्नमिति। ठ्युठ्युलोरेव प्राप्तयोर्वचनम्। त्नप्रत्ययपक्षे मान्तत्वं न भवति, ट()उट()उल्भ्यां तस्य संनियोगशिष्टत्वात्। "परु"दिति "परारी"ति चाव्ययं पूर्वस्मिन पूर्वतरे च वत्सरे क्रमाद्वर्तते।

अग्रादीति। वार्तिकमिदम्। अग्र, आदि, पश्चात् एभ्यो डिमच् स्यादित्यर्थः। पश्चिममिति। "अव्ययानां भमात्रे" इति टिलोपः।

अन्ताच्च। इदमपि वार्तिकम्।

बाल-मनोरमा

सिन्ध्वपकाराभ्यां कन् १३८४, ४।३।३२

सिन्ध्वपकराभ्यां कन्। सिन्धुक इति। सिन्धौ जात इत्यर्थः। कच्छादीति। "कच्छादिभ्यश्चे"त्यणि "मनुष्यतत्स्थयोश्चे"ति वुञि च प्राप्तेऽयं कन्विधिरित्यर्थः। अपकरक इति। अपकरे जात इत्यर्थः। अणि प्राप्ते इति। "कन्विधि"रिति शेषः।

तत्त्व-बोधिनी

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट�उट�उलौ तुट् च १०७९, ४।३।३२

सायंचिरं।नन्वन्तरङ्गत्वात्प्रथमं तुटि "मृत्यु"रित्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानोऽनादेशो न स्यात्। न चैवं तुगेव क्रियतामिति वाच्यं, तस्य पूर्वान्तत्वेन विसर्गाऽभावात्प्रतस्तनमित्यत्र सत्त्वाऽभावप्रसङ्गात्ष अत आह---तुटः प्रागिति। इत्यादिति। आदिशब्देन "घकालतनेषु"इति ग्राह्रम्। सायंतनमिति। स्यतेर्घञि सायशब्दोऽकारान्तो दिवसावसाने रूढः, तस्य प्रत्ययसंनियोगेन मान्तत्वं निपात्यत इथि वार्तिककृन्मतम्।भाष्यकृतातु "मान्ताव्यय"मित्याश्रित्य सायंग्रहणं प्रत्याख्यातम्। न चैव सायशब्दात्कालाट्ठञि अनिष्टरूपप्रसङ्गः। तस्य कालवाचित्वाऽभावादनभिधानाद्वेत्याहुः।

चिरपुरुत्परारिभ्यस्त्नो वक्तव्यः। चिरंतनमिति। चिरशब्दस्यापि प्रत्ययसंनियोगेन मान्तता निपात्यत इति भावः। अत्र वदन्ति--स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येतद्व्यर्थम्। न चादन्ताच्चिरशब्दाट्ठञ्स्यादिति वाच्यम्, त्नेन बाधादिति। एदन्तत्वमिति। प्राह्णः सोढोऽस्य प्राह्णतनमित्याद्यर्थम्। तत्र हि सप्तमी नास्ति। जातार्थे "घकालतनेषु"इत्युलुकाऽपि सिद्धेः। चिरत्नमिति। सूत्रे चिरशब्दस्योपादानाट्ट()उट()उलावपि स्तः। न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानं न संभवतीति वाच्यम्, मान्ताव्ययादेव ट()उट()उल्विधौ तत्संभवात्। पुरुत्=पूर्वस्मिन्वत्सरे।

परारि=पूर्वतरे। अग्रादि। डिमचो डित्त्वं स्पष्टार्थम्।

---

सूत्रम्

काशिका-वृत्तिः

अणञौ च ४।३।३३

सिन्ध्वपकरशब्दाभ्यां यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः तत्र जातः ४।३।२५ इत् येतस्मिन् विषये। पूर्वेण कनि प्राप्ते वचनम्। सैन्धवः। आपकरः।

न्यासः

अणञौ च , ४।३।३३

यथासंख्यार्थो योगविभागः। यदि "सिन्ध्वपकराभ्याञ्च कन्नणञः" इत्येकयोगः क्रियेत,ततो वैषम्यादेकैकस्याः प्रकृतेः प्रत्ययास्त्रयः स्युः॥

बाल-मनोरमा

अणञो च १३८५, ४।३।३३

अणञो च। क्रमात्स्त इति। "सिन्ध्वपकराभ्या"मिति शेषः।

तत्त्व-बोधिनी

अणञौ च १०८८, ४।३।३३

अणञौ च। यथासङ्ख्यार्थो योगविभागः।

---

सूत्रम्

काशिका-वृत्तिः

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाऽषाढाबहुलाल् लुक् ४।३।३४

श्रविष्ठाऽअदिभ्यः शब्देभ्यः नक्षत्रेभ्यः आगतस्य जातार्थे लुग् भवति। तस्मिन् स्त्रीप्रत्ययस्य अपि लुक् तद्धितलुकि १।२।४९ इति भवति। श्रविष्ठासु जातः श्रविष्ठः। फल्गुनः। अनुराधः। स्वातिः। तिष्यः। पुनर्वसुः। हस्तः। विशाखः। अषाढः। बहुलः। लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियाम् उपसङ्ख्यानम्। चित्रायां जाता चित्रा। रेवती। रोहिणी। स्त्रीपर्त्ययस्य लुकि कृते गौरादित्वात् ङीष्। फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ। फल्गुनी। अषाढा। श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः। श्राविष्ठीयः। आषाढीयः।

न्यासः

श्रविष्ठाफल्गुन्यनुरादास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्। , ४।३।३४

नक्षत्राणः श्रवणे प्राप्ते लुगुच्यते। ननु च "नक्षत्रेभ्यो बहुलम्" (४।३।३७) इत्यनेनैव लुग्भविष्यति? सत्यमेतत्; तस्यैवायं प्रपञ्चः। उत्तरावपि योगौ प्रपञ्चौ तस्यैव वेदितव्यौ।श्रविष्ठादयश्चैते " नक्षत्रेण युक्तः कालः" ४।२।३ इत्यनेनानगतस्याणः "लुबविशेषे" ४।२।४ इति कृते लुबन्ता वेदितव्याः।" स्त्रीप्रत्ययस्यापि" "लुक् तद्धितलुकि" १।२।४९ इति लुग्भवति" इति। ये स्त्रीप्रत्ययान्तास्तेषामुपसंख्यानमिति प्रतिपादनमित्यर्थः। तच्चोपरिष्टात् करिष्यते। चित्रायाष्टापो लुकि कृते पुनष्टाप्

क्रियते। "गौरादित्वान्ङीष्" इति। रेवतीरोहिणीत्यत्र। "फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ" इति। स्त्रियामित्यपेक्ष्यते। तयोस्तु विधानसामर्थ्यान्न लुग्भवतिष। टस्य टकारो ङीबर्थः, अनो नकार आद्युदात्तार्थः। वक्तव्यशब्दो व्याख्येये वत्र्तते। व्याख्यानं तु कृतमेव च। "श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः" इति। अत्र स्त्रियामिति नोपपद्यते। णकारो वृद्ध्यर्थः। वक्तव्यशब्दस्य स एवार्थः। व्याख्यानमपि करिष्यते च। कृतमेव॥

बाल-मनोरमा

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाऽषाढाबहुलाल्लुक् १३८६, ४।३।३४

श्रविष्ठा। एभ्य इति। श्रविष्ठा, फल्गुनी, अनुराधा, स्वाति, तिष्ट, पुर्नर्वसु, हस्त विशाखा, अषाढा, बहुला--एतेभ्यः इत्यर्थः। जातार्थेति। प्रकरणलभ्यमिदम्। स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तौ। दीर्घान्त इति "अत सातत्यगमने" इति धातौ माधवः। कृत्तिकावाचिबहुलाशब्दष्टाबन्तः। समाहारद्वन्द्वे ह्रस्वनिर्देशः।

तत्त्व-बोधिनी

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाऽषाढाबहुलाल्लुक् १०८९, ४।३।३४

श्रविष्ठ। इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः। माधवस्तु "दीर्घन्तः"इति "अत सातत्यगमने"इति धातावाह। एवं चात्र स्वाती तिष्येति ङीषन्तग्रहणादङीषन्तस्य सौवात इति रूपं भवार्थं इव जातार्थेऽपि माधवमते सिध्यत्वेव। कैयटादिमते तु जातार्थे न सुध्यति। लुग्विधायकेऽस्मिन्ङीषन्तग्रहणेऽपि लिङ्गविशिष्टपरिभाषया ङीषन्तादपि अणो लुकःप्रवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

स्थानानतगोशालखरशालाच् च ४।३।३५

स्थानान्तात् प्रातिपदिकात् गोशालशब्दात् खरशालशब्दात् च जातार्थे प्रत्ययस्य लुग् भवति। गोस्थाने जातः गोस्थानः। अश्वस्थानः। गोशालः। खरशालः।

न्यासः

स्थानान्तगोशालखरशालाच्च। , ४।३।३५

गोशालखरशालयोह्र्यस्वान्तयोः पाठान्नपुंसकयोग्र्रहणं विज्ञायते। नपुंसकलिङ्गता तु "विभाषा सेनासुरा" २।४।२५ इत्यादिना। यद्यपि नपुंसकयोग्र्रहणम्, तथापि प्रतिपदिकग्रगणे लिङ्गविशिष्टस्यापि ग्रहणं भविष्यति इति स्त्रीलिङ्गाभ्यामपि लुग्भवत्येव। उदाहरणेऽप्यौत्सर्गिस्याणौ लुक्॥

बाल-मनोरमा

स्थानान्तगोशालखरशालाच्च १३८९, ४।३।३५

स्थानान्तगोशाल। एभ्य इति। स्थानान्त, गोशाल, खरशाल--एतेभ्यः इत्यर्थः। गोस्थान इति। गोस्थाने जात इत्यर्थः। गोशाल इति। गोशाले जात इत्यर्थः। एवं खरशालः। सर्वत्र अणो लुकि नादिवृद्धिः। ननु शालाशब्दस्य स्त्रीलिङ्गत्वाद्ध्रस्वनिर्देशोऽनुपपन्न इत्यत आह--विभाषा सेनेति। लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादवपि लुक्।

तत्त्व-बोधिनी

स्थानान्तगोशालखरशालाच्च १०९१, ४।३।३५

स्थानान्त। गोशालेत्यत्र "विभाषा सेने"ति नपुंसकत्वे ह्रस्वत्वं, तत्साहचर्यत्खरशालेऽप्येवमेव। न चैवं स्त्रीत्वपक्षे लुङ् न स्यादिति शङ्क्यं, लिङ्गविशिष्टपरिभाषया तत्रापि लुक्सिद्धेरित्याहुः। यद्यपि टाबन्तयोः पाठेऽप्येकदेशविकृतन्यायेन क्लीबेऽपीष्टं सिध्यति, तथापि लाघवार्थं ह्रस्वपाठः। नपुंसकत्वे ह्रस्वत्वमिति। "सूत्रे "इति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

वत्सशालाऽभिजिदश्वयुक्छतभिषजो वा ४।३।३६

वत्सशालादिभ्यः परस्य जातार्थे प्रत्ययस्य लुग् वा भवति। वत्सशालायां जातः वत्सशालः, वात्सशालः। अभिजित्, आभिजितः। अश्वयुक्, आश्वयुजः। शतभिषक्, शातभिषजः। बहुलग्रहणस्य अयं प्रपञ्चः।

न्यासः

वत्सशालाभिजिद�आयुक्तशतभिषजो वा। , ४।३।३६

वत्सशालशब्दो नपुंसकलिङ्गो गृह्रते। कुत एतस्()व्यस्तेव्र्यायात;नपुंसकलिङ्गस्य हि ग्रहणे लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि लुग्न सिध्यति; न तु स्त्रीलिङ्गस्य ग्रहणे नपुंसकात्। "बहुलग्रहणस्यायं प्रपञ्चः" इति। वत्सशालशब्दो यद्यपि नक्षत्रवचनो न भवति, तथापि बहुलवचनात् ततोऽपि लुग्भविष्यतीत्यभिप्रायः॥

बाल-मनोरमा

वत्सशालाऽभिजिद�आयुक्छतभिषजो वा १३९०, ४।३।३६

वत्सशालाभिजित्। एभ्य इति। वत्सशाला, अभिजित्, अ()आयुज्, शतभिषज् इत्येभ्य इत्यर्थः। "परस्ये"ति शेषः। इत्यादीति अभिजिति जात आभिजितः, अभिजित्। अ()आयुजोर्जातः-आ()आयुजः, अ()आयुक्। शतभिषजि जातः-शातभिषजः , शतभिषक्।

जातार्थे इति। "कालाट्ठञि"ति ठञा निवर्तित औत्सर्गिकोऽण् सन्धिवेलादिसूत्रेण पुनरुत्थितो डिद्वा वक्तव्य इत्यर्थः। "दृष्टं सामे"ति सूत्र भाष्ये इदं वार्तिकं दृष्टम्। शातभिष इति। अणि ङित्त्वपक्षे टिलोपः।

तत्त्व-बोधिनी

वत्साशालाऽभिजिद�आयुक्छकभिषतो वा १०९२, ४।३।३६

वत्सशालाभि। वत्सशाले जात इति। वत्सशालायामित्यपि बोध्यम्। इत्यादीति। आदिशब्दादभिजित्--आभिजितः, अ()आयुक्--आ()आयुजः। प्रतिप्रसूत इति। कालाट्ठञा निवर्तमानो य औत्सर्गिकोऽण् "सन्धिवेलादि"सूत्रेण पुनरभ्यनुज्ञात इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

नक्षत्रेभ्यो बहुलम् ४।३।३७

नक्षत्रेभ्यः उत्तरस्य जातार्थे प्रत्ययस्य बहुलं लुग् भवति। रोहिणः, रौहिणः। मृगशिराः, मार्गशीर्षः।

न्यासः

नक्षत्रेभ्यो बहुलम्। , ४।३।३७

"रोहिणः"इत्यादौ नक्षत्राणः पक्षे लुक्। "मृगशिराः"इति। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः।"मार्गशीर्षः"इति। "ये च तद्धिते" ६।१।६० इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाच्छिरसः शीर्षभावः। अथ बहुलग्रहणं किमर्थम्? नपूर्वसूत्रादेव वाग्रहणमनुवर्तिष्यते? इदं प्रयोजनम्-- न क्वचिदन्यदेव यथा स्यात्, तेन फल्गुन्यषाढाभ्यां टानौ सिद्धौ भवतः। श्रविष्ठाषाढाभ्याञ्छणपीति॥

बाल-मनोरमा

नक्षत्रेभ्यो बहुलम् १३९१, ४।३।३७

नक्षत्रेभ्यो बहुलं। रोहिण इति। रोहिण्यां जात इत्यर्थः। नक्षत्राऽणो लुकि आदिवृद्धिनिवृत्तौ "लुक्तद्धितलुकी"ति स्त्रीप्रत्ययनिवृत्तिः। नच तथा सति तकारस्य नकारोऽपि निवर्तेतेति वाच्यं, न हि रोहितशब्दोऽयं वर्णविशेषवाचको येन "वर्णादनुदात्ता"दिति ङीपो निवृत्तौ तकारोऽपि निवर्तेत। किंतु रोहिणीशब्दोऽयमब्युत्पन्नो नक्षत्रविशेषे रूढः। "रोहिणी नक्षत्रे" इति गौरादि पाठान्ङीष्। अत एव "रोहिणी नक्षत्रं प्रजापतिर्देवते"त्यादौ अन्तोदात्तत्वं श्रूयमाणं न विरुध्यते। अन्यथा "वर्णानां तणतिनितान्ताना"मित्याद्युत्तत्वं स्यादित्यलम्।

---

सूत्रम्

काशिका-वृत्तिः

कृतलब्धक्रीतकुशलाः ४।३।३८

तत्र इत्येव। सप्तमीसमार्थात् कृतादिष्वर्थेषु यथाविहितं प्रत्ययः भवति। स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा कुशलो वा स्रौघनः। माथुरः। राष्ट्रियः। ननु च यद् यत्र कृतं जातम् अपि तत्र भवति, यच् च यत्र क्रीतं लब्धम् अपि तत्र एव भवति किमर्थं भेदेन उपादानं क्रियते, शब्दार्थस्य अभिन्नत्वात्? वस्तुमात्रेण क्रीतं लब्धं भवति, शब्दार्थस् तु भिद्यते एव।

न्यासः

कृतलब्धक्रीतकुशलाः। , ४।३।३८

"ननु च" इत्यादि। जन्मवद्वस्तु जातशब्दस्यार्थः, कृतस्यापि जन्मास्त्येव, तस्माद्यद्यत्र कृतं जातमपि तत्तत्र भवति। "यच्च क्रीतम्" इत्यादि। प्राप्तं लब्धमुच्यते। क्रीतं प्राप्तमपपि तद्भवत्येव, तस्मात् क्रीतं लब्धमपि भवति। "शब्दस्यार्थस्याभिन्नत्वात्" इति।स्वजन्मन्यनुभूतकर्तृभावो जातशब्दस्यार्थः। जातशब्दस्यैव विशेषोपलक्षितपरव्यापारो स्वजन्मनिष्पत्तौ कृतशब्दस्यार्थः। प्राप्तिसामान्यं लब्धशब्दस्यार्थः। प्राप्तिविशेषो यस्य मूलहेतुका प्राप्तिः। स क्रीतशब्दस्यार्थः। न च सामान्यविशेषयोरेकार्थता युक्ता। मा भूत्पर्यायप्रसङ्ग इति भिद्यते शब्दार्थः। "वस्तुमात्रेण" इति। क्रीतलब्धयोर्यदाधारभूतं व्सतुमात्रं तस्याभिन्नरूपत्वात्क्रीतं लब्धं भवति। मात्रग्रहणं शब्दार्थव्यवच्छेदार्थम्। अत एवाह-- "शब्दार्थस्तु भिद्यत एव" (इति)। न हि येन रूपेण क्रीतशब्देन तत्प्रत्याय्यते तेनैव लब्धशब्देन। एवं जातकृतशब्दयोर्वस्तुत्वेनाभिन्नत्वम्। शब्दार्थद्वारेण तु भिन्नार्थत्वमेव। अन्येनैव हि रूपेण जातशब्देन तद्वस्तु प्रत्याय्यते, अन्येन कृतशब्देन॥

---

सूत्रम्

काशिका-वृत्तिः

प्रायभवः ४।३।३९

तत्र इत्येव। सप्तमीसमर्थात् ङ्याप्प्रातिपदिकात् प्रायभवः इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रायशब्दः साकल्यस्य किंचिन्नयूनताम् आह। स्रुघ्ने प्रायेण बहुल्येन भवति स्रौघनः। माथुरः। राष्ट्रियः। प्रायभवग्रहणम् अनर्थकं तत्र भवेन कृतत्वात्। अनित्यभवः प्रायभवः इति चेद्, मुक्तसंशयेन तुल्यम्।
लघु-सिद्धान्त-कौमुदी
प्रायभवः १०९२, ४।३।३९

तत्रेत्येव। स्रुग्घ्ने प्रायेण बाहुल्येन भवति स्रौग्घ्नः॥
न्यासः
प्रायभवः। , ४।३।३९

"प्रायभवग्रहणमनर्थकम्" इति। वैचित्र्यादन्यस्यार्थस्याभावादनर्थमित्युच्यते। वैचित्र्येण तु सार्थकमेव। कस्मात् पुनरर्थकमिति? "तत्र भवेन कृतार्थत्वात्" इति। यत् "प्रायभवः"इत्यस्य साध्यम्, तस्य "तत्र भवः"४।३।५३ इत्यनेनैव साधितत्वादितिभावः। यो हि राज्ये प्रायेण भवति तत्रासौ भवत्येव। ततश्च तत्र भवे तस्यान्तर्भावात् "तत्र भवः" (४।३।५३) इत्यनेनैव कृतं सम्पादनम्रिति किं प्रायभवग्रहणेन? "अनित्यभवः" इत्यादिना परस्योत्तरमाशङ्कते।स्यादेतत्-- अनित्यभवः प्रायभवो नित्यभवस्तत्र भव इति, तस्मात् तत्र भवेन प्रायभव्सयासंग्रहान्न सिध्यति? इत्याशङ्क्याह-- "मुक्तसंशयेन तुल्यम्" इति। मुक्तस्त्यक्तः संशयो येन तत् मुक्तसंशयम्। न्याय्यस्तत्र भवोऽयमिति यो निश्चितस्तेन तुल्यं भवति। तथा हि-- रुआघ्ने भवो देवदत्तः रुआऔघ्न इत्युच्यते, न चासौ रुआउघ्ने सदा भवति, अवश्यं हि कदाचिदुदग्देसादीनपक्रामति, अथ च तत्रभवप्रत्ययो भवति। यदि च नित्यभवस्तत्र भवः? जिह्वामूले भवो वर्णः जिह्वामूलीय इत्यत्र "तत्र भवःर" ४।३।५३ इत्यधिकारे जिह्वामूलाङ्गुलेश्छः" (४।३।क६२) इति च्छो न स्यात्, न हि वर्णो नित्यं जिह्वामूले भवति। तस्मात् प्रायभव ककककककककककस्य तत्रभवान्तर्भवात् ततो न ण्यतिरिच्यत इत्नर्थकं प्रयभवग्रहणम्॥
बाल-मनोरमा
प्रायभवः १३९३, ४।३।३९

प्रायभवः। तत्रेत्येवेति। प्रायभव इत्यर्थे सप्तम्यन्तादणादयो घादयश्च यथायथं स्युरित्यर्थः। प्रायशब्दस्य व्याख्यानम्-- बाहुल्येनेति। तत्र भव इत्येव सिद्धत्वात्प्रत्याख्यातमिदं भाष्ये।

तत्त्व-बोधिनी
प्रायभवः १०९४, ४।३।३९

प्राय। कादाचित्कभवनाश्रयः--प्रायभवः। तेन "तत्र भवः"इत्यनेन न गतार्थतेत्याहुः। भाष्ये तु प्रत्याख्यातमेतत्, "प्रायभवग्रहणमन्र्थकं तत्र भवेन कृतत्वा"दिति।

---

सूत्रम्
काशिका-वृत्तिः
उपजानूपकर्णोपनीवेष् ठक् ४।३।४०

उपजान्वादिभ्यः शब्देभ्यः सप्तमीसमर्थेभ्यः प्रायभव इत्येतस्मिन् विषये ठक् प्रत्ययो भवति। अणो ऽपवादः।
औपजानुकः। औपक्रिणकः। औपनीविकः।
न्यासः
उपजानूपकर्णोपनीवेष्ठक्। , ४।३।४०

जानुनः समीपम्, कर्णस्य समीपम्, नाव्याः समीपमिति-- "अव्ययं विभक्ति" २।१।६ इत्यादिनाऽव्ययीबावः।
"{औपजानुकः-- काशिका"} उपजानुकः" इति। "इसुसुक्तन्तात् कः" ७।३।५१॥
बाल-मनोरमा
उपजानूपकर्णोपनीवेष्ठक् १३९४, ४।३।४०

उपजानूपकर्ण। "प्रायभव" इत्यर्थे उपजानु उपकर्ण उपनीवि इत्येभ्यष्ठगित्यर्थः। उपजान्वादिषु सामीप्येऽव्ययीभावः। औपजानुक इति। जानुनः समीपमुपजानु। तत्र प्रायभव इत्यर्थः। उगन्तात्परत्वाट्ठस्य कः। औपकर्णिक इति। कर्णस्य समीपमुपकर्ण, तत्पर प्रायभव इत्यर्थः। औपनीविक इति। नीवेः समीपमुपनीवि, तत्र प्रायभव इत्यर्थः।

तत्त्व-बोधिनी
उपजानूपकर्णोपनीवेष्ठक् १०९५, ४।३।४०

उपजानू।त्रयोऽप्यमी। सामीप्येऽव्ययीभावाः। तेषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम्।

---

सूत्रम्
काशिका-वृत्तिः
सम्भूते ४।३।४१

तत्र इत्येव। सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकात् सम्भूते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। अवक्लृप्तिः प्रमाणानतिरेकश्च सम्भवत्यर्थः इह गृह्यते, न उत्पत्तिः सत्ता वा, जातभवाभ्यां गतत्वात्। स्रुघ्ने सम्भवति स्रौघनः।
माथुरः। राष्ट्रियः।
लघु-सिद्धान्त-कौमुदी
सम्भूते १०९३, ४।३।४१

स्रुग्घ्ने संभवति स्रौग्घ्नः॥
न्यासः
सम्भूते। , ४।३।४१

"अवक्लृप्तिः"इत्यादि। अवक्लृप्ति = सम्भावना। प्रमाणानतिरेकः = आधारप्रमाणादाधेयप्रमाणस्यानतिरिक्तता, यस्यां सत्यां रुआवमाधेयमाधारमनुप्रविशति। "रुआउध्ने सम्भवति" (इति)। यस्तु रुआउध्ने सम्भाव्यते,
रुआउघ्नप्रमाणान्नातिरिच्यते, तदनुप्रवशात् स सेनादिकोऽर्थ एवमुच्यते॥
बाल-मनोरमा
संभूते १३९५, ४।३।४१

संभूते। तत्रेत्येव। सप्तम्यात्सम्भूतेऽर्थेऽणादयो घादयश्च यथातं स्युरित्यर्थः। संभवः-संभावना।

तत्त्व-बोधिनी
संभूते १०९६, ४।३।४१

संभूते। इह तन्त्रादिना संभावना, अधारपरिमाणादाधेयस्यानतिरेकश्चेति द्वयमप्याश्रीयते। रुआऔग्घ्न इति। रुआउग्घ्ने संभाव्यते, तत्परिमाणानतिरिक्तो वा सेनादिरित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
कोशाड् ढञ् ४।३।४२

कोशशब्दात् ठञ् प्रत्ययो भवति तत्र सम्भूते इत्यस्मिन् विषये। अणो ऽपवादः। कोशे सम्भूतं कौशेयं वस्त्रम्। रूढिरेषा, तेन क्रिमौ न भवति, खड्गकोशाच् च।
लघु-सिद्धान्त-कौमुदी
कोशाड्ढञ् १०९४, ४।३।४२

कौशेयम् वस्त्रम्॥
न्यासः
कोशाड्ढञ्। , ४।३।४२

"कौशेयं वस्त्रम्" इति। ननु च वरुआं कौशेयं न सम्भवति, किन्तु कृमिः, ततश्च कृमावेव स्यात्, न वस्त्रे; अपि च विशेषानभिधानात् खड्गसम्बन्धिनोऽपि कोशात् प्रत्ययः प्रसज्येतेत्याह-- "रूढिरेषा" इत्यादि। रूढिशब्दो हि यथाकथञ्चिदुत्पाद्यते, न तत्रावश्यमवयवार्थोऽपेक्ष्यः, क्वचिदवयवार्थासम्भवात्। तथा हि तैलं पिबतीत्येवं तैलपायिकाशब्दो व्युत्पाद्यते, न तत्रावश्यमवयवार्थोऽपेक्ष्यः, क्वचिवयवार्थासम्भवात्। तथा हि तैलं पिबतीत्येवं तैलपायिकाशब्दो व्युत्पाद्यते, स च तैलपानक्रियारहित एव क्वचित् प्राणिविशेषे वत्र्तते। सस्माद्यद्यपि न कृमौ। अथ खड्गकोशादुत्पत्तौ को दोषः, येन ततः प्रत्ययो नेष्यते? खड्गस्याबिधानं प्राप्नोति। स हि तत्र सम्भवतीति चेत्? इतरस्मादपि तर्हि कोशात् प्रत्ययोत्पत्तौ च कृमेरभिधानं प्राप्नोति, स हि तत्र सम्भवति। अथ तत्रापि रूढिवशाद्वस्त्रस्याभिधानम्, न कृमेः। इतरस्मादपि तर्हि कोशादुत्पत्तौ वरुआस्याभिधानं न खड्गस्य? एवं मनयते-- यद्यपि सम्भूताधिकारे कोशाड्ढञ् विधीयते, तथापि कौशेयशब्दान्न सम्भवोऽर्थ प्रतीयते, अपि तु विकारोऽर्थः; रूढिवशात्। कौशेयं वरुआमितिकोशविकारो वरुआमित्यर्थः। तथा च वार्तिककारेणोक्तम्-- "विकारे कोशाड्ढञ्, "{सम्भूतार्थानुपपत्तिः--वा।पाठः"} सम्भूतार्थानुपपत्तेः" (वा। १,२४।३।४२ इति। विकारस्च कौशेयशब्दात् कृमिकोशस्य प्रतीयते, न खड्गकोशस्य ; रूढिवशात्। तस्माद्यस्य विकारः प्रतीयते तदभिधायिन एव कोशशब्दाद्युक्कतः प्रत्ययः नेतरस्मात्॥
बाल-मनोरमा
कोशाड्ढञ् १३९६, ४।३।४२

कोशाड्ढञ्। कौशेयं वस्त्रमिति। कृमिविशेषकोशस्य विकार इत्यर्थः। "विकारे कोशाड्ढ"ञिति वार्तिकात्।

तत्त्व-बोधिनी

कोशाड्ढञ् १०९७, ४।३।४२

केशात्। कौशेयमिति। वस्त्रविशेषे योगरूढोऽयम्। कोशे संभवस्तु सत्कार्यवादाभिप्रायेण। मतान्तरे तु विकारप्रकरणे "एण्या ढ"ञित्यस्यानन्तरं "कोशाच्चे"ति पठितव्यम्। तथा च वार्तिकं "विकारे कोशाड्ढञ", संभूते ह्यर्थानुपपत्ति"रिति।

---

सूत्रम्

काशिका-वृत्तिः

कालात् साधुपुष्प्यत्पच्यमानेषु ४।३।४३

तत्र इत्येव कालविशेषवाचिभ्यः सप्तमीसमार्थेभ्यः साध्वादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। हेमन्ते साधुः हैमन्तः प्राकारः। शैशिरमनुलेपनम्। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। ग्रैष्म्यः पाटलाः। शरदि पच्यन्ते शारदाः शालयः। ग्रैष्म यवाः।

न्यासः

कालात्साधुपुष्प्यत्पच्यमानेषु। , ४।३।४३

कालादिति स्वर्यते, प्रकृतीरुत्तरा विशेषयितुम्। न च स्वरूपग्रहणे सत्युत्तराः प्रकृतयः शक्या विशेषयितुम्; स्वरूपस्याधारणत्वात्। तस्मादर्थग्रहणमेवैतत्। तेनकालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह--"कालविशेषवाचिब्यः" इत्यादि। "हैमनः" इति। "सर्वत्राण् च तलोपश्च" ४।३।२२। "शैशिरः" इत्यादौ सन्धिवेलादिसूत्रेण ४।३।१६ ऋत्वण्॥

बाल-मनोरमा

कालात्साधुपुष्फ्यत्पच्यमानेषु १३९७, ४।३।४३

कालात्साधुपुष्प्यत्। तत्रेत्येव साधुः, पुष्प्यत्, पच्यमानमित्यर्थेषु सप्तम्यन्ताद्यथधाविहितं प्रत्ययाः स्युरित्यर्थः। "पुष्प विकसने" इति दैवादिकाल्लटः शतरि "पुष्प्य"दिति भवति। हैमनः प्रावार इति। "सर्वत्राऽण्च तलोपश्चे"त्यणितलोपः। वासन्त्य इति। "टिड्ढे"ति ङीप्। "शारदा" इत्यत्र ऋत्वण्। "तत्र भवः" इति यावत्कालादित्यनुवर्तते।

बाल-मनोरमा

उप्ते च १३९८, ४।३।४३

उप्ते च। तत्रेत्येव। कालवाचिनः सप्तम्यन्तादुप्तेऽर्थे यथाविहितं प्रत्ययाः स्युः। उप्यन्त इति। "डु वप् बीजसन्ताने"। भूतकालस्त्वविवक्षित इति भावः।

तत्त्व-बोधिनी

कालत्साधुपुष्प्यत्पच्यमानेषु १०९८, ४।३।४३

कालात्। "पुष्य"दिति दैवादिकः शत्रन्तः। तदाह--पुष्प्यन्तीति।

---

सूत्रम्

काशिका-वृत्तिः

उप्ते च ४।३।४४

तत्र इत्येव, कालातिति च। सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकातुप्ते ऽर्थे यथाविहितं प्रत्ययो भवति। हेमन्ते उप्यन्ते हैमन्ता यवाः। ग्रैष्माः व्रीहयः। योगविभाग उत्तरार्थः।

न्यासः

उप्ते च। , ४।३।४४

"योगविभाग उत्तरार्थः" इति। उत्तरत्र वुञ् उप्त एव यथा स्यात्; साध्वादिषु मा भूत्॥

तत्त्व-बोधिनी

उप्ते च १०९९, ४।३।४४

उप्ते च। "काला"दित्येव। योगविङाग उत्तरार्थः। उप्यन्त इति। सूत्रे भूतकालोऽतन्त्रमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

आश्वयुज्या वुञ् ४।३।४५

आश्वयुजीशब्दात् वुञ् प्रत्ययो भवति उप्ते ऽर्थे। ठञो ऽपवादः। आश्वयुज्यामुप्ताः आश्वयुजकाः माषाः। अश्विनीभ्यां युक्ता पौर्णमासी आश्वयुजी। अश्विनीपर्यायो ऽश्वयुक्शब्दः।

न्यासः

आ�आयुज्या वुञ्। , ४।३।४५

"ठञोऽपवादः" इति। "कालाटठ्ञ्" [४।३।११](#) प्राप्तस्य। ननु च कालाट्ठञ् विहितः। न चा()आयुजीशब्दः कालवाची, ततः कुतष्ठञ्? इत्याशङ्क्य कालवाचित्वमा()आयुजीशब्दस्य प्रतिपादयितुमाह--- "अ()इआनीभ्यां युक्ता" इत्यादि॥

बाल-मनोरमा

आ�आआयुज्या वुञ् १३९९, ४।३।४५

आ()आयुज्या वुञ्। तत्रोप्य इत्येव। सप्तम्यन्तादा()आयुजीशब्दादुप्तेऽर्थे वुञ्स्यादित्यर्थः। ठञोऽपवाद इति। "कालाट्ठ"ञिति विहितस्येत्यर्थः। आ()आयुजका इति। अ()आयुग्भ्यां युक्ता पौर्णमासी आ()आयुजी, तत्रोप्ता इत्यर्थः।

तत्त्व-बोधिनी

आ�आयुज्या वुञ् ११००, ४।३।४५

आ()आयुज्या वुञ्। ञकारः स्वरार्थ, उत्तरत्र वृद्ध्यर्थश्च। आ()आउयुज्यामिति। अ()इआनीनक्षत्रपर्यायोऽ()आयुक्, तद्युक्ता पौर्णमासी--आ()आयुजी, तत्रेत्यर्थः।

तत्त्व-बोधिनी

नित्यं समासेऽनुत्तरपदस्थस्य १२९, ४।३।४५

व्यपेक्षायामिति। "इदं सर्पिष्कुण्डिकाया"इत्यत्रेत्यर्थः। अत्र "सर्पि"रित्यसमस्तं पदमिति बोध्यम्। समासे तु "नित्यं

समासे" इत्यनेन सिद्धे समासाऽभावमेव ज्ञापयितुमिदमिति सपिर्विशेषणमुक्तम्। नित्यार्थश्चेति। अयं भावः-असमासे व्यपेक्षाविरहेऽत्यन्ताप्राप्तौ नित्यतया षत्वार्थः पाठं, व्यपेक्षायां त्वसमासे "इसुसोः" इति विकल्पेन प्राप्तौ नित्यार्थ इति।

---

सूत्रम्

काशिका-वृत्तिः

ग्रीष्मवसन्तादन्यत्रस्याम् ४।३।४६

ग्रीष्मवसन्तशब्दाभ्याम् अन्यतरस्यां वुञ् प्रत्ययो भवति उप्ते ऽर्थे। ऋत्वणो ऽपवादः। ग्रीष्मं सस्यम्, ग्रैष्मकम्। वासन्तम्, वासन्तकम्।

न्यासः

ग्रीष्मवसन्तादन्यतरस्याम्। , ४।३।४६

बाल-मनोरमा

ग्रीष्मवसन्तादन्यतरस्याम् १४००, ४।३।४६

ग्राष्मवसन्तात्। ग्रीष्माद्वसन्ताच्च सप्तम्यन्तादुप्ते वुञ्वेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

देयम् ऋणे ४।३।४७

तत्र इत्येव, कालातिति च। सप्तमीसमार्थात् कालवाचिनः प्रातिपदिकात् देयम् इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद् देयम् ऋणं चेत् तद् भवति। मासे देयम् ऋणं मासिकम्। आर्धमासिकम्। सांवत्सरिकम्। ऋणे इति किम्? मासे देया भिक्षा।

न्यासः

देयमृमे। , ४।३।४७

बाल-मनोरमा

देयमृणे १४०१, ४।३।४७

देयमृणे। कालादित्येवेति। तत्रेत्यप्यनुवर्तते। वुञिति निवृत्तम्। सप्तम्यन्तात्कालवाचिनो देयमित्यर्थे यताविहितं प्रत्ययाः स्युः। तस्मिन्देयद्रव्ये ऋणे सतीत्यर्थः। मासिकमिति। "कालट्ठञ्"।

तत्त्व-बोधिनी

देयमृणे ११०१, ४।३।४७

देयमृणे। ऋणे किम्()। मासे देया भिक्षा।

---

सूत्रम्

काशिका-वृत्तिः

कलाप्यश्वत्थयवबुसाद् वुन् ४।३।४८

कालातित्येव। कलापिनश्वत्थ यवबुस इत्येतेभ्यः कालवाचिभ्यः सप्तमीसमर्थेभ्यो देयम् ऋणम् इत्येतस्मिन्नर्थे वुन् प्रत्ययो भवति। कलाप्यादयः शब्दाः साहचर्यात् काले वर्तन्ते। यस्मिन् काले मयूशः कलापिनो भवन्ति स कलापी। यस्मिनश्वत्थाः फलन्ति सो ऽश्वत्थः। यस्मिन् यवबुसं सम्पद्यते स यवबुसशब्देन उच्यते। कलापिनि काले देयम् ऋणम् कलापकम्। अश्वत्थकम्। यवबुसकम्।

न्यासः

कलाप्य�आत्थयवबुसाद्?वुन्। , ४।३।४८

कथं पुनः कलापादयः शब्दाः काले वत्र्तन्ते, यावता मयूरादिषु तेषां वृत्तिः प्रसिद्धेत्यत आह-- "कालाप्यादयः शब्दाः" इत्यादि। एवमेव विषयं स्पष्टीकरोति-- "यस्मिन्काले" इत्यादि। अ()आत्थशब्दोऽत्र वृक्षविशेषे रूढः। तेन सर्व एव कालः सम्बध्यत इति तद्()द्वारेण कालविशेषो न संज्ञायते। तस्माद()आत्थफलसहचारिणि कालेऽ()आत्थशब्दो वत्र्तत इति दर्शयितुमाह-- "यस्मान्न()आत्थाः फलन्ति" इत्यादि। अ()आत्थशब्दो यद्यपि वृक्षे वत्र्तते, तथापि फले वत्र्तते एव॥

बाल-मनोरमा

कलाप्य�आत्थयवबुसाद्वुन् १४०२, ४।३।४८

कलाप्य()आत्थ। कलापिन्, अ()आत्थ, यवबुस--एभ्यः कालवाचिभ्यः सप्तम्यन्तेभ्यो देयमृणमित्यर्थे वुन्स्यादित्यर्थः। कलापकमिति। वुन्। अकादेशः। "नस्तद्धिते" इति टिलोपः। अ()आत्थ इति। विकारप्रत्ययस्य फले लुगिति भावः। अ()आत्थशब्दस्य प्लक्षादित्वे तु ततः "प्लक्षादिभ्योऽ"णिति फले अणो विधानसामथ्र्याल्लुगभावे अ()आत्थशब्दः फले लाक्षणिक इति भावः।

तत्त्व-बोधिनी

कलाप्य�आत्थयवबुसाद्वुन् ११०२, ४।३।४८

कलाप्य। अ()आत्थ इति। "फले लुक्"। इह पुंलिङ्गनिर्देशो यद्यप्ययुक्तस्तथापि फले अ()आत्थशब्द औपचारिक इत्याशयेन पुंलिङ्गप्रयोग इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

ग्रीष्मावरसमाद् वुञ् ४।३।४९

ग्रीष्म अवरसमशब्दाभ्यां वुञ् प्रत्ययो भवति देयम् ऋणम् इत्येतस्मिन्नर्थे। अण्ठञोरपवादः। ग्रीष्मे देयम् ऋणं ग्रैष्मकम्। आवरसमकम्। प्रत्ययान्तरकरणं वृद्ध्यर्थम्। समाशब्दो वर्षपर्यायः।

न्यासः

ग्रीष्मावरसाद्?वुञ्। , ४।३।४९

"अण्ठञोरपवादः" इति। ग्रीष्मशब्दादृत्वणोरपवादः। अनरसमाशब्दात् कालाट्ठञः। अवरा चासौ समा चेत्यवरसमा॥

बाल-मनोरमा

ग्रीष्माऽवरसमाद्वुञढ् १४०३, ४।३।४९

ग्रीष्मावरसमाद्वुञ्। समाशब्दो वत्सरे नित्यस्त्रीलिङ्गबहुवचनः। ग्रीष्म अवरसमा अनयोः समाहारद्वन्द्वात्पञ्चमी। तत्र देयमृणमित्यर्थे आभ्यां वुञित्यर्थः। आवरसमकमिति। अवरासु समासु देयमृणमित्यर्थः। "तद्धितार्थ" इति समासः।

---

सूत्रम्

काशिका-वृत्तिः

संवत्सराऽग्रहायणीभ्यां ठञ् च ४।३।५०

संवत्सराऽग्रहायणीशब्दाभ्यां ठञ् प्रत्ययो भवति, चकाराद् वुञ् च देयम् ऋणम् इत्येतस्मिन्नर्थे संवत्सरे देयम् ऋणं सांवत्सरिकम्, सांवत्सरकम्। आग्रहयणिकम्, आग्रहायणकम्। वा इति वक्तव्ये ठञ्ग्रहणं सन्धिवेलादिषु संवत्सरात् फलपर्वणोः इति पठ्यते, तत्र फले ऋणत्वेन विवक्षिते ऽणं बाधित्वा ठञेव यथा स्याततिति।

न्यासः

संवत्सराग्रहायणीभ्यां ठञ्च। , ४।३।५०

कालाड्ठञि प्राप्ते वचनम्। तेन ठञ् न वक्तव्य इति। वुञि विकल्पिते विनापि ठञ्ग्रहणेन पक्षे यथाप्राप्तं ठञेव भवतीत्यभिप्रायः। "ठञ्ग्रहणम्" इत्यादि। तत्र यद्यत्र ठञ्ग्रहणं न क्रियेत "सन्धिवेला" ४।३।१६ इत्यादिषु "संवत्सरात्फलपर्वणोः" (ग।सू।१०४) इति पाठात् सन्धिवेलाद्यणष्ठञपवादत्वादणत्वेन काले विवक्षिते वुञा मुक्तेऽणेव स्यात्। ठञ्ग्रहणादणमपि बाधित्वा ठञेव भवति॥

बाल-मनोरमा

संवत्सराग्रहायणीभ्यां ठञ्च १४०४, ४।३।५०

संवत्सराग्रहायणीभ्यां ठञ्च। "देयमृण"मित्यर्थे सप्तम्यन्ता"दिति शेषः। सन्धिवेलादिगणे "संवत्सरात्फलपर्वणोः" इति पठितम्। तत्र फले देयर्णत्वेन विवक्षिते प्राप्तोऽण् अनेन ठञा बाध्यते।

तत्त्व-बोधिनी

संवत्सराग्रहायणीभ्यां ठञ्च ११०३, ४।३।५०

संवत्स। ठञ्चेति। "संवत्सराग्रहाणीभ्यां वे"त्येव सुवचम्। न च "वे"ति वक्तव्ये ठञ्ग्रहणं व्यर्थं, सन्धिवेलादिषु "संवत्सरात्फलापर्वणो"रिति पठ()ते, तत्र फले ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यादिति काशिकादावुक्तमिति वाच्यं, तस्मै हितास्तद्धिता इत्यन्वर्थसंज्ञाकरणबलेनाऽत्राण्प्रत्ययो न भवेदिति वक्तुं शक्यत्वादिति नव्याः।

---

सूत्रम्

काशिका-वृत्तिः

व्याहरति मृगः ४।३।५१

तत्र इत्येव, कालातिति च। कालवाचिनः सप्तमीसमर्थात् प्रातिपदिकात् व्याहरति मृगः इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। निशायां व्याहरति मृगः वैशः, नैशिकः। प्रादोषः, प्रादोसिकः। मृगः इति किम्? निशायां व्याहरति उलूकः।

न्यासः

व्याहरति मृगः। , ४।३।५१

"नैशिकः,नैशः। प्रादोषिकः, प्रादोषः" इति। निशाप्रदोषाभ्यां ४।३।१४ठञ्। तेन मुक्ते पक्ष ऋत्वणेव भवति॥

बाल-मनोरमा

व्याहरति मृगः १४०५, ४।३।५१

व्याहरति मृगः। तत्र कालादित्येव। "देयमृणे" इति निवृत्तम्।

तत्त्व-बोधिनी

व्याहरति मृगः ११०४, ४।३।५१

नैशिक ति। "निशाप्रदोषाभ्यां चे"ति वा ठञ्।

---

सूत्रम्

काशिका-वृत्तिः

तदस्य सोढम् ४।३।५२

कालातित्येव। तदिति प्रथमासमर्थात् कालवाचिनः प्रातिपदिकातस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् प्रथमासमर्थं सोढं चेत् तद् भवति। सोढं जितमभ्यस् तम् इत्यर्थः। निशासहचरितम् अध्ययनं निशा, तत् सोढम् अस्य छात्रस्य नैशः, वैशिकः। प्रादोषः, प्रदोषिकः।

न्यासः

तदस्य सोढम्। , ४।३।५२

कालादिति वत्र्तते, न च कालो जीयते, तस्मान्निसासहचरितमिहाध्ययनं गौण्या वृत्त्या निशेत्येवमादिभिरभिधीयत इति विज्ञायते। अत एवाह-- "निशासहचरितमध्ययनं निशा" इति॥

बाल-मनोरमा

तदस्य सोढम् १४०६, ४।३।५२

तदस्य सोढम्। अस्मिन्नर्थे प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युः। सोढमित्यस्य अभ्यस्तमित्यर्थः। नैशिकः नैश इति। "निशाप्रदोषाभ्यां चे"त्यण्ठञौ।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तत्र ० ७३ भवः १।१ ७३ शेषे ? तद्धिताः ? ङ्याप्प्रातिपदिकात् ? प्रत्ययः ? परश्च ?

अर्थः॥

सप्तमी-समर्थात् ङ्याप्प्रातिपदिकात् भवः इत्येतस्मिन् अर्थे यथाविहितं प्रत्ययः भवति।

उदाहरणम्॥

स्रुघ्ने भवः=स्रौघ्नः, माथुरः, राष्ट्रियः, शालायां भवः=शालीयः, मालीयः
काशिका-वृत्तिः
तत्र भवः ४।३।५३

कालातिति निवृत्तम्। तत्र इति सप्तमीसमर्थात् ङ्याप्प्रातिपदिकात् भवः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सत्ता भवत्यर्थो गृह्यते, न जन्म, तत्र जातः ४।३।२५ इति गतार्थत्वात्। स्रुघ्ने भवः स्रौघ्नः। माथुरः। राष्ट्रियः। पुनस् तत्रग्रहणं तदस्य इति निवृत्त्यर्थम्।
लघु-सिद्धान्त-कौमुदी
तत्र भवः १०९५, ४।३।५३

सुग्घ्ने भवः स्रौग्घ्नः। औत्सः। राष्ट्रियः॥
न्यासः
तत्र भवः। , ४।३।५३

बाल-मनोरमा
तत्र भवः १४०७, ४।३।५३

तत्र भवः। कालादिति निवृत्तम्। अस्मिन्नर्थे सप्तम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। भवनं सत्ता, जननमुत्पत्तिरिति भेदः। रुआऔग्घ्न इति। #औत्सर्गिकोऽण्। राष्ट्रिय इति। "राष्ट्रावारे"ति घः।

तत्त्व-बोधिनी
तत्र भवः ११०५, ४।३।५३

तत्र भवः। "काला"दिति निवृत्तम्। कालसंबद्धस्य "तत्रे"त्यस्य निवृत्तये पुनस्तत्रग्रहणात्। न च पूर्वसूत्रस्थस्य "त"दित्यस्य ब्यावृत्तये तत्रग्रहणमस्त्विति वाच्यं, "तदस्य"इति सूत्रेस्येत उत्तरत्रापि सुपठत्वात्। यद्यपि भूधातुरुत्पत्तावपि वर्तते, तथापीह सत्तार्थ एव वर्तते, "त्र जातः"इति पृथग्ग्रहणादिति बोध्यम्।

---

सूत्रम्
काशिका-वृत्तिः
दिगादिभ्यो यत् ४।३।५४

दिशित्येवम् आदिभ्यः प्रातिपदिकेभ्यः यत् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अणश्छस्य च अपवादः। दिशि भवम् दिश्यम्। वर्ग्यम्। मुखजघनशब्दयोरशरीरावयवार्थः पाठः, सेनामुख्यम्, सेनाजघन्यम् इति। दिश्। वर्ग। पूग। गण। पक्ष। धाय्या। मित्र। मेधा। अन्तर। पथिन्। रहस्। अलीक। उखा। साक्षिन्। आदि। अन्त। मुख। जघ्न। मेघ। यूथ। उदकात् संज्ञयाम्। न्याय। वंश। अनुवंश। विश। काल। अप्। आकाश। दिगादिः।
लघु-सिद्धान्त-कौमुदी
दिगादिभ्यो यत् १०९६, ४।३।५४

दिश्यम्। वर्ग्यम्॥

न्यासः

दिगादिभ्यो यत्। , ४।३।५४

"अणश्छस्य चापवादःर" इति। यद्दिगादिषु वृद्धं वाप्यादि ततश्छस्यापवादः, शेषेभ्यस्त्वणः प्राग्दीव्यतीयस्य। अथ मुखजघनयोश्च किमर्थः पाठो दिगादिषु , यावता शरीरावयवात् ताभ्यामुत्तरसूत्रेणैव (४।३।५५) भविष्यति? इत्याह-- "मुखजघनयोः" इति। सेनावयववाचिनौ हि यौ मुखजघनशब्दौ तौ शरीरवयववाचिनौ न भवतः। पाणिपादाद्यवयवस्वभावं हि शरीरम्, न चैवमात्मिका सेना; किं तर्हि? रथादिसमुदायात्मिका। "उदकात्संज्ञायाम्" इति। उदकशब्दात् संज्ञायां गम्यमानायां यद्भवति-- उदक्या स्त्री, रजस्वलोच्यते। न चात्र प्रकृत्यर्थः प्रत्ययार्थो वा विद्यते। सा च तयोरविद्यमानता संज्ञाग्रहणेन विज्ञायते। संज्ञायामन्यत्र-- औदको मत्स्य इति, अत्राणेव भवति॥

बाल-मनोरमा

दिगादिभ्यो यत् १४०८, ४।३।५४

दिगादिभ्यो यत्। "भव इत्यर्थे सप्तम्यन्तेभ्यः" इति शेषः। दिश्यमिमि। दिशि भवमित्यर्थः।

तत्त्व-बोधिनी

दिगादियो यत् ११०६, ४।३।५४

दिगादिभ्यो। "दिश्, वर्ग, पूग, पक्ष, रहस्, उखा, साक्षिन्, आदि, अन्त, मुख, जघन, मेघ,यूथ, "उदकात्संज्ञायां"न्याय, वंश, काल्येत्यादि दिगादिः। मुखजघनयोः पाठोऽत्राऽशरीरावयवार्थः। सेनाया मुखे जघने च भवं----मुख्यम्। जघन्यम्।

---

सूत्रम्

काशिका-वृत्तिः

शरीरावयवाच् च ४।३।५५

शरीरं प्राणिकायः शरीरावयववाचिनः प्रातिपदिकाद् यत् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अणो ऽपवादः। दन्तेषु भवं दन्त्यम्। कर्ण्यम्। ओष्ठ्यम्।

लघु-सिद्धान्त-कौमुदी

शरीरावयवाच्च १०९७, ४।३।५५

दन्त्यम्। कण्ठ्यम्। (अध्यात्मादेष्ठञिष्यते) अध्यात्मं भवमाध्यात्मिकम्॥

न्यासः

शरीरावयवाच्च। , ४।३।५५

"अणोऽपवादः" इति। नाप्राप्ते तस्मिन्नस्यारम्भात्। यस्तु पादादिवृद्धस्ततः परत्वाद्यत् छं बाधते॥

बाल-मनोरमा

शरीरावयवाच्च १४०९, ४।३।५५

शरीरावयवाच्च। "भव इत्यर्थे सप्तम्यन्तेभ्य" इति शेषः। दन्त्यमिति। दन्ते भवमित्यर्थः। "यस्येति चे"त्यकारलोपः। एवं कण्ठ()म्।

---

सूत्रम्

काशिका-वृत्तिः

दृतिकुक्षिकलशिवस्त्यस्त्यहेर् ढञ् ४।३।५६

दृत्यादिभ्यः प्रातिपदिकेभ्यः ढञ् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। दृतौ भवं दार्तेयम्। कौक्षेयम्। कालशेयम्। वास्तेयम्। आस्तेयम्। आहेयम् अजरं विषम्। अस्तिशब्दः प्रातिपदिकं, न तिङन्तः।

न्यासः

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्। , ४।३।५६

दृतिकुक्षिभ्यां शरीरावयत्वाद्यति प्राप्ते;कुक्षिशब्दो धूमादष्वपि पठ()ते, तस्मात् "धूमादिभ्यश्च" ४।२।१२६ इति वुञि प्राप्ते; शेषेभ्यस्त्वणि ढञि विधीयते। अस्तिशब्दस्तिङन्तो मा विज्ञायीत्यत आह-- "अस्तिशब्दः" इत्यादि। "विभक्तिस्वरप्रतिरूपकाश्चेति निपाता भवन्ति" इति निपातसंज्ञकं तिङन्तसदृशं प्रातिपदिकमेतत्, न तिङन्तः। एतच्च तिङन्तेन समानार्थम्, यथा-- अस्तिक्षीरा ब्राआह्मणीति। भिन्नार्थश्च यथा धने वत्र्तते, यथा--- अस्तिमानिति। धनवानिति गम्यते। तदिह विशेषस्यानभिधानादुभयस्यापि ग्रहणम्॥

बाल-मनोरमा

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् १४१२, ४।३।५६

दृतिकुक्षि। भव इत्यर्थे दृति, कुक्षि, कलशि, वस्ति, अस्ति, अहि--इत्येभ्यः। "सप्तम्यन्तेभ्यः" इति शेषः। दार्तेयमिति। दृतौ भवमित्यर्थः। ढञ्, एयः, आदिवृद्धिः, रपरत्वम्। दृतिश्चर्मभस्त्रिका। कौक्षेयमिति। दूमादित्वाद्वुञि प्राप्ते ठञ्। कलिशिर्घटः। "कलशिर्मथनपात्र"मित्यमरव्याख्यातारः। "वस्तिर्नाभेरधो द्वयो"रित्यमरः। तत्र भवो बास्तेयः। अस्तीति विभक्तिप्रतिरूपककमव्ययम् सत्तायां घने चेति न्यासकारो हरदत्तश्च। तत्र भव आस्तेयः। अहिः-सर्पः, तत्रभवः-आहेयः।

तत्त्व-बोधिनी

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ११०८, ४।३।५६

दृतिकुक्षि। दृतिश्चर्मकारः, शरीरावयवविशेषश्च। कुक्षिशब्दो धूमादिस्ततो "धूमादिभ्यश्चे"ति वुञि प्राप्तेऽनेन ढञ्। कलशिः--मन्थापात्रं।"कलशिमुदधिगुर्वी बल्लवा लोडयन्ति"इति माघः। "बस्तिर्नाभेरधो द्वयोः"इत्यमरः। तत्र भवं वास्तेयम्। "अस्ती"ति तिङन्तप्रतिरूपको निपातः। स च तिङन्तेन समानार्थो भिन्नर्थश्च। आद्यो यथा---अस्तिक्षीरा गौः। द्वितीयो यथा,--अस्तिमान्। धनवानित्यर्थः। तदिहाऽविशेषादुभयोरपि ग्रहणमास्थेयमिति हरदत्तः। अहौ भवमाहेयम्।"त्रिष्वाहेयं विषास्थ्यादी"त्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

ग्रीवाभ्यो ऽण् च ४।३।५७

ग्रीवाशब्दादण् प्रत्ययो भवति, चकाराड् ढञ् च, तत्र भवः इत्येतस्मिन् विषये। शरीरावयवाद् यतो ऽपवादः। ग्रीवासु भवं ग्रैवम्, ग्रैवेयम्। ग्रीवाशब्दो धमनीवचनस् तासां बहुत्वाद् बहुवचनं कृतम्।

न्यासः

ग्रीवाभ्योऽण्? च। , ४।३।५७

बहुवचननिर्देशाद्बहुवचनान्तात् प्रत्ययेन भवितव्यम्, अन्यथा ह्येकवचेनैव निर्देशं कुर्यादिति कस्यचिद्भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह-- "ग्रीवाशब्दःर" इत्यादि। अर्थविशेषाद्बहुवचननिर्देशः कुतः, न तु बहुवचनान्तादेव यथा स्यादिति दर्शयति॥

बाल-मनोरमा

ग्रीवाभ्योऽण् च १४१३, ४।३।५७

ग्रीवाभ्योऽण् च। "शरीरावयवाच्चे"ति यतोऽपवादः। ग्रीवाशब्दोऽयं धमनीसङ्गे वर्तते। तत्र उद्भूतावयवभेदसङ्गविवक्षायां बहुवचनान्तात्प्रत्यय इति सूचयितुं बहुवचनम्। तिरोहितावयवभेदविवक्षायां तु एकवचनान्तादप्यण्ढञौ स्त एव।

तत्त्व-बोधिनी

ग्रीवाभ्योऽण् च ११०९, ४।३।५७

ग्रीवाभ्योऽण् च। "शरीरावयवाच्चे"ति यतोऽपवादः। ग्रीवाशब्दो धमनीसङ्घाते वर्तते। तत्र उद्भूतावयवसङ्घातविवक्षया सूत्रे बहुवचनम्। तिरोहितावयवसङ्घातविवक्षायां त्वेकवचनान्तादप्यण्ढञौ स्त एव। ग्रैवेयमित्यादि। ग्रीवासु भवं, ग्रीवायामिति वा विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

गम्भीरात् ञ्यः ४।३।५८

गम्भीरशब्दाद् ञ्यः प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अणो ऽपवादः। गम्भीरे भवं गाम्भीर्यम्। बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्। बाह्यम्। दैव्यम्। पाञ्चजन्यम्।

न्यासः

गम्भीराञ्ञ्यः। , ४।३।५८

"बहिर्देव" इत्यादि। बहुर्देवपञ्चजनेभ्यश्च ञ्यो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- चकारोऽत्र वत्र्तते, तेन बहिरादिभ्योऽपि ञ्यो भविष्यतीति॥

बाल-मनोरमा

गम्भीराञ्ञ्यः १४१४, ४।३।५८

गम्भीराञ्ञ्यः। गाम्भीर्यमिति। यञ्विधौ तु स्त्रियां "प्राचां ष्फः तद्धितः" इति ष्फः स्यात्।

तत्त्व-बोधिनी

गम्भीराञ्ञ्यः १११०, ४।३।५८

गम्भीराञ्ञ्यः। पञ्तजनादुपसङ्ख्यानम्। पाञ्चजन्यम्।

---

सूत्रम्

काशिका-वृत्तिः

अव्ययीभावाच् च ४।३।५९

अव्ययीभावसंज्ञाकात् प्रातिपदिकाच् च ञ्यः प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अणो ऽपवादः। न च सर्वस्मादव्ययीभावाद् भवति, किं तर्हि, परिमुखादेः। परिमुखादीनां च गणपाठस्य एतदेव प्रयोजनम्। तेषां विशेषणम् अव्ययीभावग्रहणम्। परिमुखं भवं पारिमुखम्। पारिहनव्यम्। परिमुखादेरन्यत्र न भवति, औपकूलम्। परिमुख। परिहनु। पर्योष्ठ। पर्युलूखल। परिसीर। अनुसीर। उपसीर। उपस्थल। उपकलाप। अनुपथ। अनुखड्ग। अनुतिल। अनुशीत। अनुमाष। अनुयव। अनुयूप। अनुवंश।

न्यासः

अव्ययीभावाच्च। , ४।३।५९

"किं तर्हि" इत्यादि। कथं पुनरव्ययीभावादिति सामान्येनोच्यमानः प्रत्ययः परिमुखादेरेव? इत्यत आह-- "परिमुखादीनाञ्च" इत्यादि। चशब्दो हेतौ। न ह्न्तत् कार्यमस्ति परिमुखादिगणपाठस्य। तत्र यद्यप्येतदपि न स्यात्, विध्यर्थमेव तस्य स्यात्, तस्मात् परिमुखादेरेव भवति, न सर्वस्मादव्ययीभावात्। यद्येवम्, परिमुखादेरित्येवं वक्तव्यमित्याह-- "तेषाम्" इत्यादि। यदि हि परिमुखादेरित्युच्यते, ततोऽसत्यव्ययीभावग्रहणे तत्पुरुषेभ्योऽपि परिमुखादिभ्यः प्रत्ययः स्यात्, त()स्मस्तु सति न भवति-- परिगतं मुखं परिमुखमिति प्रादिसमासः, तत्र भवः परिमुखः; अणेव भवति। अपि चोत्तरार्धमव्ययीभावग्रहणमवश्यमेव कत्र्तव्यम्-- "अन्तःपूर्वपदाट्ठञ्" ४।३।६० "ग्रामात्पर्यनुपूर्वात्" ४।३।६१ इत्यव्ययीभावाद्यथा स्यात्। "पारिहनव्यम्" इति। "ओर्गुणः र" ६।४।१४६, "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः। "औपकूलम्" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिनाऽव्ययीभावः। एष च परिमुखादिषु न पठ()त इत्यणेव भवति। अत्र पिरमुखमिति कथमव्ययीभावः? यावता अपपरिबहिरञ्चवः पञ्चम्या २।१।११ समस्यन्ते, पञ्चमी च परिणा कर्मप्रवचनीयेन योगे भवति, कर्मप्रवचनीयसंज्ञा तु "अपपरी वर्दने" १।४।८७ इत्यनेन, न च परिमुखे वर्जनं गम्यते, किं तर्हि? सर्वतोभावः? एवं तर्हि "अव्ययम्" २।१।६ इति योगविभागव्ययीभावो भविष्यति। अन्ये तु येऽत्र परिहनुप्रभृतयोऽव्ययीभावाः, ते "अपपरिबहिरञ्चवः पञ्चम्या" २।१।११ इत्यनेनैव भवन्ति। अत्र येष्वपि वर्जनं न गम्यते, ततस्तेष्वयि "अव्ययम्" २।१।६ इति योगविभागेनैव। ये तूपसीरादय उपपूर्वाः, ते सामीप्ये "अव्ययम्" २।१।६ इत्यादिना। "अनुगङ्गम्" इति। "यस्य चायामः" २।१।१५ इत्यव्ययभावः। अन्ये तु येऽनुसीरादयोऽनुपूर्वास्ते पश्चादर्थेऽव्ययमित्यादिना॥

बाल-मनोरमा

अव्ययीभावाच्च १४१५, ४।३।५९

अव्ययीभावाच्च। "ञ्य" इति शेषः।

परिमुखादिभ्य इति। यद्यपीदं वार्तिकं भाष्ये न दृष्टं, तथापि दिगदिगणपाठानन्तरं परिमुखादिगणपाठसामथ्र्यादिहाव्ययीभावपदं परिमुखादिपरमिति गम्यते। न ह्रष्टाध्याय्यां परिमुखादिगणस्य कार्यान्तरमस्ति। औपकूल इति। उपकूलं भव इत्यर्थः। अव्ययीभावत्वेऽपि परिमुखाद्यनन्तर्भावान्न ञ्यः।

तत्त्व-बोधिनी

अव्ययीभावाच्च ११११, ४।३।५९

अव्य। परिमुखमिति। यदि परिशब्दादिह वर्जनं गम्यते, तदा"अपपरिबहिरञ्चवः पञ्चम्ये"त्यब्ययीभावः। यदि तु सर्तोभावः, तदा त्वस्मादेव निपातनादब्ययीभाव इत्याहुः।

परिमुखादिभ्यएवेष्यते। परिमुखादिभ्य एवेति। अयं भावः---दिगादिगणानन्तेरं परिमुख, परिहनु, पर्योष्ठ, पर्युलूखलेत्यादि परिमुखाः दिगणः पट()ते, तत्साहचर्यादिह सूत्रेऽव्ययीभावशब्देन परिमुखादिरेव गृह्यते। तस्य गणस्। कार्यान्तराऽभावादिति। नन्वेवं "परिमुखादे"रिति सूत्रं विशिष्यैव क्रियतां, किमनेन प्रयासेन()। उत्तरत्र "अव्ययीभावा"दित्यस्यापेक्षायमपि तत्रैव तत्करणौचित्यादिति चेत्। अतारिह हरदत्तः---"परिमुखादेः"इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवतीति। परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः। तथा च"शाखृ व्याप्तौ"इति धातौ प्रतिशाखं भवं प्रातिशाख्यम्। "अव्ययीभावाच्चे"ति भवार्थे ञ इति माधवः।

---

सूत्रम्

काशिका-वृत्तिः

अन्तःपूर्वपदाट् ठञ् ४।३।६०

अव्ययीभावातित्येव। अन्य्तःशब्दो विभक्त्यर्थे समस्यते। अतपूर्वपदातव्ययीभावाट् ठञ् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अणो ऽपवादः। आन्तर्वेश्मिकम्। आन्तर्गेहिकम्। समानशब्दाद् ठञ् वक्तव्यः। समाने भवं सामानिकम्। तदादेश्च। सामानग्रामिकम्। सामानदेशिकम्। अध्यात्मादिभ्यश्च। आध्यात्मिकम्। आधिदैविकम्। आधिभौतिकम्। अध्यात्मादिराकृतिगणः। ऊर्ध्वन्दमाच् च ठञ् वक्तव्यः। और्ध्वन्दमिकः। ऊर्ध्वशब्देन समानार्थ ऊर्ध्वन्दमशब्दः। ऊर्ध्वदेहाच् च। और्ध्वदेहित्कम्। लोकोत्तरपदाच् च। ऐहलौकिकम्। पारलौकिकम्। मुखपार्श्वशब्दाभ्यां तसन्ताभ्यामीयः प्रत्ययो वक्तव्यः। मुखतीयम्। पार्श्वतीयम्। जनपरयोः कुक् च। जनकीयम्। परकीयम्। मध्यशब्दादीयः। मध्यीयः मण्मीयौ च प्रत्ययौ वक्तव्यौ। माध्यमम्। ्ध्यमीयम्। मध्यो मध्यं दिनण् च अस्मात्। मध्ये भवं माध्यन्दिनम्। स्थम्नो लुग् वक्तव्यः। अश्वत्थामा। अजिनान्ताच् च। वृकाजिनः। सिंहाजिहः। समानस्य तदादेश्च अध्यात्मादिषु च इष्यते। ऊर्ध्वन्दमाच्च देहाच्च लोकोत्तरपदस्य च। मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च। ईयः कार्यो ऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा। मध्यो मध्यं दिनण् च अस्मात् स्थाम्नो लुगजिनात् तथा।

न्यासः

अन्तः पूर्वपदाट्ठञ्। , ४।३।६०

"अन्तःशब्दो विभक्त्यर्थे समस्यते" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिना। विभक्त्यर्थस्त्वधिकरणम्, अन्तःशब्दस्याधिकरणप्रधानत्वात्। समानशब्दाट्ठञ्वक्तव्यः" इति। वक्तव्यशब्दो व्याख्येये। तत्रेदं व्याख्यानम्-- इहान्तःपूर्वादित्येवं सिद्धे यदधिकं पदग्रहणं तदधिकमिह कार्यं भवतीत्येवमर्थं क्रियते, तेन समानशब्दादपि ठञ् भवतीति। एतेन शब्दान्तरादेव। अध्यात्मादिभ्य ऊध्वन्दमादूध्वदेहाल्लोकोत्तरपदाच्च ठञ् भवतीति वेदितव्यम्। "आध्यात्मिकम्" इति। "आध्यात्मिकम्" इति। आत्मन्यधि अध्यात्मम्, विभक्त्यर्थेऽव्ययीभावः। "अनुशतिकादीनाञ्च" ७।३।२० इत्युभयपदवृद्धिः। "अध्यात्मादिराकृतिगणश्चायम्" इति। यद्येवम्, "समानशब्दाट्ठञ् वक्तव्यः" (वा।४५४) इत्यद्यनर्थकम्, अध्यात्मादिभ्यश्चेत्यनेनैव सिद्धत्वात्? नानर्थक्; अस्यैव प्रपञ्चार्थत्वात्। अध्यात्मादिरेव तत् प्रपञ्च्यते। ननु चाकारान्त ऊध्वशब्दः, तत् कुत इह मकारान्तत्वमायातमित्ाह-- "ऊध्वशब्देन" इत्यादि। "ऐहलौकिकः, पारलौकिकः" इति। पूर्ववदुभयपदवृद्धिः। "मुखतीयम्, पार्(ातीयम्" इति। "अपादाने चाहीयरुहोः" ५।४।४५ इति तसिः। "आद्यादिभ्य उपसंख्यानम्" (वा।६३४) इत्यौपसंख्यानिको वा। "अव्ययानां भमात्रे टिलोपः" (वा।८४२) इत्यनेन टिलोपः। "मण्नीयौ च प्रत्ययौ वक्तव्यौ" इति। मध्यशब्दादित्यपेक्षते। "मध्यो मध्यं दिनण् चास्मात्" इति। मध्यशब्दो मध्यम्भावमापद्यते, दिनण् चास्मात् प्रत्ययो भवति। "स्थाम्नः" इति। स्थामशब्दान्तात् प्रातिपदिकात्। अ()आस्येव स्थाम बलमस्येति बहुव्रीहिः, पृषोदरदित्वात् सकारस्य तकारः। अ()आत्थाम्नि भव इत्यण्,

तस्य लुक्। "आजिनान्ताच्च" इति। लुगिति सम्बध्यते। "वृकाजिनः" इति। अणो लुक्। "समानस्य" इति। आनन्तर्यलक्षणा षष्ठी। समानशब्दादनन्तरष्ठञिष्यत इत्यर्थः। "समानस्य" इति। आनन्तर्यलक्षणा षष्ठी। समानशब्दादनन्तरष्ठञिष्यत इत्यर्थः। "अध्यात्मादिषु" इति। वैषयिकेऽधिकरणे सप्तमी। अध्यात्मादिविषये ठञिष्यत इत्यर्थः। "कुग्जनस्य परस्य च" इति। चकारादीयश्च प्रत्ययः। "ऊध्र्वन्दमाच्च देहाच्च" इति। ऊध्र्वशब्दात् परस्मात् दमशब्दादूध्र्वशब्दाद्देशशब्दाच्च ठगिष्यत इत्यर्थः। "ईयः कार्योऽथ मध्यस्य" इति। अथशब्दः समुच्चये। मध्यशब्दस्यानन्तर ईयः कार्य इत्यर्थः। "मण्मीयौ प्रत्ययौ तथा" इति। मध्यशब्दादित्यपेक्ष्यते। मण्मीयौ मध्यशब्दस्यान्तरौ कत्र्तव्यौ। "अजिनात्तथा" इति। अजिनान्तात् लुग्वक्तव्य इत्यर्थः॥

बाल-मनोरमा

अन्तःपूर्वपदाट्ठञ् १४१६, ४।३।६०

अन्तःपूर्वपदाट्ठञ्। अन्तर्वेश्ममिति। विभक्त्यर्थेऽव्ययीभावः। "अनश्चे"ति टच्। आन्तर्वेश्मिकमिति। ठञ्। इकः। सुब्लुक्। टिलोपः। आदिवृद्धिः। आन्तर्गणिकमिति। गणे इत्यन्तर्गणम्। तत्र भवमित्यर्थः। आध्यात्मिकमिति। आत्मनीत्यध्यात्मम्। तत्र भवमित्यर्थः।

आध्यात्मिकमिति। आत्मनीत्यध्यात्मम्। तत्र भवमित्यर्थः।

तत्त्व-बोधिनी

अन्तःपूर्वपदाट्ठञ् ११११२, ४।३।६०

अन्तः पूव। अन्तर्वेश्ममिति। "नपुंसकादन्यतरस्या "मिति समासान्तष्टच्।

अध्यात्मादेष्ठञिष्यते। अध्यात्ममिति। "अनश्चे"ति टच्।

---

सूत्रम्

काशिका-वृत्तिः

ग्रामात् पर्यनुपूर्वात् ४।३।६१

अव्ययीभवातित्येव। ग्रामशब्दान्तादव्ययीभावात् परि अनु इत्येवं पूर्वात् ठञ् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अणो ऽपवादः। पारिग्रामिकः। आनुग्रामिकः।

न्यासः

ग्रामात्पर्यनुपूर्वात्। , ४।३।६१

"पारिग्रामिकम्" इति। "{ग्रामशब्दान्तादव्ययीभावात् परि--काशिका।}" ग्रामात् परि" इति। "अपरपरिबहिरञ्चवः पञ्चम्या" २।१।११ इत्यव्ययीभावः। "आनुग्रामिकम्िति। अत्रापि "अनुर्यत्समया" २।१।१४॥

बाल-मनोरमा

ग्रामात्पर्यनुपूर्वात् १४१९, ४।३।६१

ग्रामात्पर्यनुपूर्वात्। ठञ् स्यादिति। "अन्तःपूर्वपदा"दित्यतस्तदनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

जिह्वामूलाङ्गुलेश् छः ४।३।६२

जिह्वामूलशब्दादङ्गुलिशब्दात् च छन्[H प्रतयो भवति तत्र भवः इत्येतस्मिन् विषये। यतो ऽपवादः। जिह्वामूलीयम्। अङ्गुलीयम्।

लघु-सिद्धान्त-कौमुदी

जिह्वामूलाङ्गुलेश्छः १०९९, ४।३।६२

जिह्वामूलीयम्। अङ्गुलीयम्॥

न्यासः

जिह्वामूलाङ्गुलेश्छठः। , ४।३।६२

"यतोऽपवादः" इति।" शरीरवयवाच्च" ४।३।५५ इति प्राप्तस्य॥

बाल-मनोरमा

जिह्वामूलाङ्गलेश्छः १४२०, ४।३।६२

जिग्वामूलाङ्गुलेश्छः। "शरीरावयवाच्चे"ति यतोऽपवादः।

---

सूत्रम्

काशिका-वृत्तिः

वर्गान्ताच् च ४।३।६३

वर्गशब्दान्तात् च प्रातिपदिकाच् छः प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अणो ऽपवादः। कवर्गीयम्। चवर्गीयम्।

लघु-सिद्धान्त-कौमुदी

वर्गान्ताच्च ११००, ४।३।६३

कवर्गीयम्॥

न्यासः

वर्गान्ताच्च। , ४।३।६३

बाल-मनोरमा

वर्गान्ताच्च १४२१, ४।३।६३

वर्गान्ताच्च। कवर्गीयमिति। कादिवर्गे भवमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अशब्दे यत्खावन्यतरस्याम् ४।३।६४

वर्गान्तातित्येव। शब्दादन्यस्मिन् प्रत्ययार्थे वर्गान्तात् प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः तत्र भवः

इत्येतस्मिन् विषये। छे प्राप्ते वचनम्। पक्षे सो ऽपि भवति। वासुदेववर्ग्यः, वासुदेववर्गीणः, वासुदेववर्गीयः। युधिष्ठिरवर्ग्यः, युधिष्ठिरवर्गीणः, युधिष्ठिरवर्गीयः। अशब्दे इति किम्? कवर्गीयो वर्णः।

न्यासः

अशब्दे यत्खावन्यतरस्याम्। , ४।३।६४

"छे प्राप्ते" इति। पूर्वसूत्रेण॥

बाल-मनोरमा

अशब्दे यत्खावन्यतरस्याम् १४२२, ४।३।६४

अशब्दे। "वर्गान्ताच्छः" इति शेषः। मद्वर्ग्यः मद्वर्गीण इति। मत्पक्षे भव इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कर्णललाटात् कनलङ्कारे ४।३।६५

कर्णललाटशब्दाभ्यां कन् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये ऽलङ्कारे ऽभिधेये। यतो ऽपवादः। कर्णिका। ललाटिका। अलङ्कारे इति किम्? कर्ण्यम्। ललाट्यम्।

न्यासः

कर्णललाटात्कनलङ्कारे। , ४।३।६५

कर्णिकाशब्दश्चाभरणविशेषे रूढः। रूढिशब्देषु च नावश्यमपि कर्णसम्बन्धेन भवितव्यम्॥

बाल-मनोरमा

कर्णललाटात्कनलङ्कारे १४२३, ४।३।६५

कर्णललाटात्। "शरीरावयवाच्चे"ति यतोऽपवादः। कर्णिका ललाटिकेति। कर्णे ललादे भवोऽलङ्कार इत्यर्थः। स्त्रीत्वं लोकात्। टापि "प्रत्ययस्था"दितीत्त्वम्।

तत्त्व-बोधिनी

कर्णललाटात्कनलङ्कारे ११११३, ४।३।६५

कर्णलाटात्। यतोऽपवादः। अलङ्कारे किम्()। कण्र्यम्। ललाट()म्।

---

सूत्रम्

काशिका-वृत्तिः

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ४।३।६६

व्याख्यायते ऽनेन इति व्याख्यानं, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम। तस्य इति षष्ठीसमर्थात् व्याखयातव्यनाम्नः प्रातिपदिकाद् व्याख्याने ऽभिधेये यथाविहितं प्रत्ययो भवति तत्र भवे च। वाक्यार्थसमीपे चकारः श्रूयमाणः पूर्ववाख्यार्थम् एव समुच्चिनोति तत्र भव ४।३।५३ इति। सुपां व्याख्यानः सौपो ग्रन्थः। तैङः। कार्त्तः। सुप्सु भवं सौपम्। तैङम्। कार्तम्। व्याख्यातव्यनाम्नः इति किम्? पातलिपुत्रस्य व्याख्यानी सुकोशला, पाटलिपुत्रः सुकोशलया व्याख्यायते, एवं संनिवेशं

पाटलिपुत्रम् इति, न तु पाटलिपुत्रो व्याख्यातव्यनाम। भवव्याख्यानयोर् युगपदधिकारो ऽपवादविधानार्थः। कृतनिर्देशौ हि तौ।

न्यासः

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः। , ४।३।६६

"{ तस्य व्याख्याने- इति सूत्रभागः}तस्य व्याख्यानम्" इति। व्याख्यायतेऽनेनेति व्याख्यानम्, करणे ल्युट्। चकारात् "तत्र भवे च" इति। ननु च व्याख्यानं प्रत्ययार्थः, तस्य समीपे चकारः श्रूयत इति प्रत्ययार्थमात्रस्यैव समानजातीयस्य तेनानुकर्षणं न्याय्यम्, न तु समर्थविभक्तेरपि; समानजातीयस्य तु चकारः समुच्चयं करोति, यथा-- "केदाराद्यञ्च" ४।२।३९ इति; प्रत्ययसमीपवर्त्तिना चकारेण प्रत्यय एव समुच्चीयते, यथा-- "ठञ् कवचिनश्च" ४।२।४० पादानात् पूर्वस्याः समर्थविभक्तेर्निवृत्तौ सत्यां भवार्थेऽपि षष्ठीसामर्थ्यादेव प्रत्ययो युक्तः-- तदयुक्तमुक्तम्; तत्र भवे चेति, तस्य भवे चेति वक्तुं युक्तम्? इत्यत आङ-- "वाक्यार्थसमीपे" इत्यादि। इहेतिरकरणेन तस्य व्याख्यान इत्येषोऽर्थः प्रत्यवमृश्यते। न तु व्याख्यानप्रत्ययार्थः। तस्मादितिकरणान्ततरमुच्चारितश्चकारस्तत्प्रत्ययवमृष्टस्य वाक्यार्थस्यैव समीपे श्रूयमाणस्तुल्यजातयीमेव वाक्यार्थं समुच्चिनोति। तेन भवार्थे सप्तमीसामर्थ्यादेव एव कृतः; अन्यथा हि "तस्य व्याख्याने च" इत्येवं ब्राऊयात्। कः पुनरसौ वाक्यार्थ इत्याह-- "तत्र भवे" इति। "न तु पाटलीपुत्रशब्दो व्याख्यातव्यनाम" इति। ननु च पाटलिपुत्रः कोशलया व्याख्यायते, नियतं तेन व्याख्यातव्येन भवितव्यम्, अन्यथा तस्य व्याख्यानी सुकोशला न स्यात्। तस्य व्याख्यानस्य पाटलिपुत्रशब्दो व्याख्यातव्यनाम भवतीति भावः? नैतदस्ति; यदीह व्याख्यातव्यमभिप्रेतम्, न तस्यैतन्नाम भवतीति भावः। किञ्चेह व्याख्यातव्यमभिप्रेतम्? यद्व्याख्यातव्यतया लोके प्रसिद्धतरम्। कुत एतत्? व्याख्यातव्यनामग्रहणात्। इह हि व्याख्यातव्यनामग्रहणं व्याख्यातव्यार्थं तु न कत्र्तव्यमेव;विनापि हि तेन व्याख्याव्यनाम्न एव प्रत्ययसिद्धेः। तथा हि "तस्य " इति तस्य प्रतियोगिव्याख्यानमुपात्तम्। तच्च व्याख्यातव्यस्यैव सम्भवति, नान्यस्य। तस्माद्यद्यत्तसय् व्याख्यातव्यं सामर्थ्यात्तदेव तस्येत्यनेन षष्ठ()न्तेनोपादीयत इति विज्ञायते। ततश्चान्तरेणापि व्याख्याव्यनामग्रहणं व्याख्यातव्यनामाभिधायिन एव प्रत्ययो भविष्यतीति किं व्याख्यातव्यनामग्रहणेन? तत् क्रियते व्याख्यतव्यतया लोके यः प्रसिद्धस्तदभिधायिन एव प्रत्ययो यथा स्यादित्येवमर्थम्। व्याकरणादयो ग्रन्थविशेषा लोके प्रसिद्धाः, न ते पाटलिपुत्रादयः। एवमपि नामग्रहणं न कत्र्तव्यम्, व्याख्यतव्यग्रहणसामर्थ्यादेव हि व्याख्यातव्यतया प्रसिद्धतरेभ्यः प्रत्ययो लभ्यत एव? नैतदस्ति;व्याख्याने हि प्रत्ययार्थे व्याख्यानादेव व्याख्यातव्यवाचिनः प्रत्यये सिद्धे पुनव्र्याख्यातव्यग्रहणसामर्थ्याद व्याख्यातव्यतया ये प्रसिद्धास्तेब्यः प्रत्ययो लभ्यते, न तु तत्र भवे; तत्र सामर्थ्याभावात्। भवेऽपि चार्थे तत्र व्याख्यातया प्रसिद्धतराः, तदभिधायिभ्य एव प्रत्यय इष्यत इति; न तु यतः कुतश्चित्। तस्माद्भवाधिकारे रूढ()उपसंग्रहार्थं नामग्रहणं कत्र्तव्यम्। अथ किमर्थं भवव्याख्यानयोर्युगपदधिकारः क्रियते? इत्याह-- "भवव्याख्यानयोः" इत्यादि। ठञादीनपवादानत्राभिधास्यामीत्येवमर्थो युगपदनयोरधिकारः। ननु किमुच्यते-- अपवादविधानार्थं इति; प्रकृतानामणादीनां प्रत्ययानामर्थनिर्देशो यथा स्यात्? इत्यत आह-- "कृतनिर्दशौ हि तौ" इति। कृतनिर्देशौ हि तावर्थौ। एकः "तत्र भवः" इति, अपरः "तस्येदम्" इति। तस्येदंविशेषत्वाद्व्याख्यानस्य॥

बाल-मनोरमा

तस्य व्याख्यान इति च व्याख्यातव्यनाम्न १४२४, ४।३।६६

तस्य व्याख्यान इति च। व्याख्यायते अनेनेति व्याख्यानो ग्रन्थः, करणे ल्युट्। तस्य व्याख्यान इति विग्रहे व्याख्यातव्यग्रन्थप्रतिपादकात्षष्ठ()न्तात्, भव इत्यर्थे च सप्तम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। चकारः "तत्र भवः" इत्यस्य समुच्चयार्थः। सौप इति। औत्सर्गिको।ञण्। तैङ इति। तिङां व्याख्यानो ग्रन्थ इत्यर्थः। कार्त इति। कृता

व्याख्यान इत्यर्थः। अणि आदिवृद्धौ रपरत्वम्। भवार्थे उदाहरति--सौपमिति। नच "तस्येदं" "तत्र भवः" इत्याभ्यामेव भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

तस्य व्याख्यात इति च व्याख्यातव्यनाम्नः ११११४, ४।३।६६

तस्य व्याख्यान इति च। व्याख्यायते येन स व्याख्यानः। करणे लुट्। "इति"शब्दो वाक्यार्थ परामृशति। तत्समीपे श्रूयमाणश्चकारः "तत्र भवः"इति वाक्यार्थमाक्षिपति। व्याख्यातव्यस्य=ग्रन्थस्य नाम=प्रतिपादकं, तच्च शक्त्या लक्षणय वेत्य[त्र]नाग्रहः। तथा च "षष्ट()न्ताव्यख्यानकरणार्थे, सप्तन्यन्तात्तु भवार्थे, व्याख्यातव्यस्य ग्रन्थस्य प्रतिपादकात्प्रत्ययाः स्यु"रिति सूत्रार्थः। व्याख्यातव्यस्य नाम्नः किम्()। पाटलिपुत्रस्य व्याख्यानी सुकोसला। पाटलिपुत्रं हि तया व्याख्यायते "ईदृक्संनिवेशविशिष्ट"मिति। न त्विदं व्याख्यातव्यस्य नाम। ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात्, नामग्रहणं हि प्रसिद्ध्युपस्ङ्ग्रहार्थमेव सूत्रे कृतम्।

---

सूत्रम्

काशिका-वृत्तिः

बह्वचो ऽन्तोदात्ताट ठञ् ४।३।६७

बह्वचो व्याख्यातव्यनाम्नः प्रातिपदिकादन्तोदात्ताद् भवव्याख्यानयोः ठञ् प्रत्ययो भवति। अणो ऽपवादः। षात्वणत्विकम्। नातानतिकम्। समासस्वरेण अन्तोदात्ताः प्रकृतयः। बह्वचः इति किम्? द्व्यचः ठकं वक्ष्यति। एकाच् प्रयुदाह्रियते। सौपम्। तैङम्। कार्तम्। अन्योदात्तातिति किम्? संहितायाः सांहितम्। संहिताशब्दो हि गतिस्वरेण अद्युदात्तः।

न्यासः

तदस्मिन्नस्तीति देशे तन्नाम्नि। , ४।३।६७

"प्रत्ययान्तनामा" इति। यदि तर्हि तन्नाम्नि देशे प्रत्ययः, इतिकरणोऽनर्थकः, तन्नामग्रहणादेवातिप्रसङ्गनिवृत्तिः? नैतदस्ति; द्विविधं हि नाम-- सङ्केतितम्, अनुवृत्तञ्च। सङ्केतितं यदद्यापि व्यवहारपदवीं नानुपतति, तत्रानुवृत्तं यन्नाम तत्रायं योगः। अनुवृत्तञ्च व्यावहारिकम्, तत्प्रतिपत्त्यर्थमितिकरणः क्रियते, ग्रामादिविशेषपरिग्रहार्थश्च। यद्येवम्, इतिकरण एव क्रियताम्, किं तन्नाम्नीत्यनेन? एतदपि न कत्र्तव्यम्; नामधेयता विरोधिनोऽपि बलीयसोऽपि प्रत्ययान् बाधित्वम्। कथम्? नाप्राप्ते मतुप्ययं योग आरभ्यमाणे मतुपमवादत्वाद्बाधते। तदपवादैस्त्विनिठनादिभिः सह सम्प्रधारणायामपवादविप्रतिषेधादिनिठनादय एव स्युः। नामग्रहणे तु सति बलीयोभिरपि सम्प्रधारणायाः सम्प्रत्ययो भवति-- यो नामधेयतां गमयति स चातुर्थिक एवेति। अतः स एव भवति॥

न्यासः

बह्वचोऽन्तोदात्ताट्ठञ्। , ४।३।६७

"षात्वणत्विकम्" इति। "नातानतिकम्" इति। उभयत्र द्वन्द्वात्प्रत्ययः। "समासस्वरेणान्तोदात्ताः प्रकृतयः"इति। "समासस्य" ६।१।२१७ इत्यनेन बहुवचननिर्देशश्चैवंजातीयापरप्रकृत्यपेक्षया। द्व्यचष्ठकं वक्ष्यति-- "द्व्यजृद्ब्राआह्मण" ४।३।७२ इत्यादिना। "सौपम्" इति। "तैङम्" इति। सुप्तिङ्शब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ। "गतिस्वरेणाद्युदात्तः"इति। "गतिरनन्तरः" ६।२।४९ इत्यनेन। अन्तग्रहणं विस्पष्टार्थम्; सर्वोदात्तस्य प्रातिपदिकस्यासम्भवात्। सामथ्र्यादेव

तदन्तविधिर्भविष्यतीति, यथा-- "वर्णादनुदात्तात्तोपधात् तो नः" ४।१।३९ इति। अपि चोदात्त इति वर्णग्रहणं सर्वं तदन्तविधिं प्रयोजयतीति युक्त एव तदन्तविधिः॥

बाल-मनोरमा

बह्वचोऽन्तोदात्ताट्ठञ् १४२५, ४।३।६७

बह्वचोऽन्तोदात्ताट्ठञ्। अन्तोदात्ताद्बह्वच उक्तविषये ठञ्स्यात्। अणोऽपवादः।

तत्त्व-बोधिनी

बह्वचोऽन्तोदात्ताट्ठञ् ११११५, ४।३।६७

बह्वचो। अणोऽपवादः। बह्वचः किम्()। व्यचष्ठकं वक्ष्यतीत्येकाच्प्रत्युदाहार्यः। सौपम्। तैङम्। अन्तोदात्तात्किम्()। संहितायाः संहितम्। "गतिरनन्तरः"इत्याद्युदात्तोऽयम्। अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। उदात्तादित्युक्तेऽपि वर्णग्रहणे तदन्तग्रहणात्, "वर्णादनुदात्ता"दित्यत्र यथा।

---

सूत्रम्

काशिका-वृत्तिः

क्रतुयज्ञेभ्यश् च ४।३।६८

क्रतुभ्यो यज्ञेभ्यश्च व्याख्यातव्यनमभ्यः प्रातिपदिकेभ्यः भवव्याख्यानयोरर्थयोः ठञ् प्रत्ययो भवति। अणो ऽपवादः। क्रतुभ्यस् तावत् अग्निष्टोमस्य व्याख्यानः, तत्र भवः आग्निष्टोमिकः। वाजपेयिकः। राजसूयिकः। यज्ञेभ्यः पाकयज्ञिकः। नावयज्ञिकः। अनन्तोदात्तार्थ आरम्भः। क्रतुभ्यः इत्येव सिद्धे यज्ञग्रहणम् असोमयागेभ्यो ऽपि यथा स्यात्। पाञ्चौदनिकः। दाशौदनिकः। बहुवचनं स्वरूपविधिनिरासार्थम्।

न्यासः

क्रतुयज्ञेभ्यश्च। , ४।३।६८

"अनन्तोदात्तार्थ आरम्भः" इति। यद्येवम्, राजसूयिकम्, वाजपेयिकमित्येतदेवोपदाहरणद्वयं युक्तम्। राजसूयवाजपेयशब्दयोः कृदन्तोत्तरपदयोः प्रकृतिस्वरेण मध्योदात्तत्वादुत्तरपदं चाद्युदात्तमत्र। एकं व्याबन्तत्वात् कृत्स्वरेण, अपरं "यतोऽनाचः" ६।१।२०७ इति। समासे च कृते "गतिरकारकोपपदात् कृत्" ६।२।१३८ इति प्रकृतिभावेनाद्युदात्तमेवनावतिष्ठते; "{आग्निष्टोमिकः, नावयज्ञिकः--काशिका} आग्निष्टोमिकं नावयज्ञिकम्" इति। एतदुदादहरणद्वयमयुक्तम्, अग्निष्टोमनवयज्ञशब्दाभ्यां प्रत्ययस्वरेणान्तोदात्ताभ्यामनेनाप्राप्तेः? न हि पूर्वेणानेन वा ठञि विशेषः। क्रतुसाहचर्यादत्रोदाह्रतम्। शब्दः साहचर्याद्वत्र्तत इति विज्ञायते॥

बाल-मनोरमा

क्रतुयज्ञेभ्यश्च १४२६, ४।३।६८

क्रतुयज्ञेभ्यश्च। सोमेति। सोमलताद्रव्यकयोगेषु क्रतुशब्दो यज्ञशब्दश्च प्रसिद्ध इत्यर्थः। तह्र्यन्तरग्रहणं व्यर्थं, बहुवचनेन स्वरूपग्रहणनिवृत्तेरित्यत आह--तत्रेति। गृह्यन्त इति। ततश्च इह क्रतुशब्देन सोमयागाः, यज्ञशब्देन तदितरयागा विवक्षिता इति भावः। एवंच सोमयागविशेषवाचिभ्यस्तदितरयागविशेषवाचिभ्यश्च उक्तविषये ठछञित्यर्थः। पाकयाज्ञिक इति। औपासनाग्निसाध्याः पार्वणस्थालीपाकादयः--पाकयज्ञाः। तेषां व्याख्यानो ग्रन्थः, तेषु भव इति वार्थः। नावयज्ञिक इति। नूतनद्रव्यक आग्रयणाख्यो यज्ञो नवयज्ञः। ननु पूर्वसूत्रेम सिद्धे किमर्थमिदमित्यत आह--अन्तोदात्तार्थ इति।

वाचपेयशब्दो मध्योदात्तस्तैत्तिरीयादौ प्रसिद्धः। यद्यपि अग्निष्टोमशब्दोऽन्तोदात्त एव तैत्तिरीये दृष्टः। नवयज्ञशब्दोऽपि षष्ठीसमासः समासस्वरेणान्तोदात्त एव, तथापि अन्यार्थमिदमन्तोदात्तेष्वपि परत्वात् प्रवर्तत इति न दोषः।

तत्त्व-बोधिनी

क्रतुयज्ञेभ्यश्च १११६, ४।३।६८

क्रतुयज्ञेभ्यश्च। अग्निष्टोमस्य व्याख्यान इति। अग्निष्टोमाद्यर्थेषु मन्त्रब्राआह्()मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणं, ग्रन्थनामेव व्याख्येयताया उक्तत्वादित्याहुः। स्तुतिः---स्तोमः। अग्नेः स्तोमोऽस्मिन्निति बहुव्राहिः। "परादिश्च परान्तश्चे"त्यन्तोदात्तोऽयम्। पीयतेऽस्मिन्निति पेयः। "कृत्यल्युटो बहुल"मित्यधिकरणे यत्। वाजो नाम यवागूभेदस्तस्य पेयो वाजपेयः। अयं हि कृदत्तरपदप्रकृतिस्वरेण मध्योदात्तः। पेयशब्दस्य "यतो नावः"इत्युदात्तत्वात्। राज्ञा क्षत्रियेण सूयते, राजा सोमः सूयते अत्रेति वा राजसूयः। "राजसूयसूर्ये"ति क्यप्। तत एव निपातनात्समासः, षष्ठीसमासे वा। अयमप्युत्तरपदप्रकृतिस्वरेण मध्योदात्त एव। धातुस्वरेण सूयशब्दस्याद्युदात्तत्। असोमकेभ्य उदाहरति--पाकेति। अल्पपर्यायः---पाकशब्दः। पाकश्चासौ यज्ञश्चेति कर्मधारयः। स च समासस्वरेणान्तोदात्तः। नवैर्व्रीहिभिर्यजनं नवयज्ञः----आग्रयणम्। "यजयाचविच्छे"ति नङ्। "कर्तृकरणे कृते"ति समासः। कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तः। अनन्तोदात्तार्थ इति। वाजपेयराजसूयार्थतया अस्मिन्नारब्धे सत्यन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव भाव्यमित्याग्निश्टोमिक इत्याद्युदाह्रतमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अध्यायेष्वेव र्षेः ४।३।६९

ऋषिशब्दाः प्रवर्नामधेयानि, तेभ्यः ऋषिशब्देभ्यो भवव्याख्यानयोः अर्थयोः ठञ् प्रतयो भवति अणो ऽपवादः अध्यायेष्वेव प्रत्ययार्थे विशेषणेषु। व्याख्यातव्यनाम्नः इत्यनुवर्तते, तत्साहचर्यादृषिशब्दैर् ग्रन्थ उच्यते। वसिष्ठस्य व्याख्यानः तत्र भवो वा वासिष्ठिको ऽध्यायः। वैश्वामित्रिकः। अध्यायेषु इति किम्? वासिष्ठी ऋक्।

न्यासः

अध्यायेष्वेवर्षेः। , ४।३।६९

बाल-मनोरमा

अध्याये�ओवर्षेः १४२७, ४।३।६९

अध्यायेष्वेवर्षेः। मन्त्रो वसिष्ठ इति। लक्षणयेति भावः। वासिष्ठिकोऽध्याय इति। कश्चिद्ग्रन्थविशेषोऽयम्। वासिष्ठी ऋगिति। ऋचोऽध्यायसमाख्याऽभावान्न ठञिति भावः।

तत्त्व-बोधिनी

अध्यायेष्वेवर्षेः १११७, ४।३।६९

अध्यायेष्वेवर्षेः। एवकारः स्पष्टप्रतिपत्त्यर्थः। वासिषठीति। भवार्थेऽण्।

---

सूत्रम्

काशिका-वृत्तिः

पौराडाशपुरोडाशात् ष्ठन् ४।३।७०

पौराडाशशब्दात् पुरोडाशशब्दाच् च भवव्याख्यानयोरर्थयोः ष्ठन् प्रत्ययो भवति। पुरोडाशाः पिष्टपिण्डाः, तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य व्याख्यानः तत्र भवो वा पौरोडाशिकः, पौरोडाशिकी। पुरोडाशसहचरितो ग्रन्थः पुरोडाशः, तस्य व्याख्यानस् तत्र भवो वा पुरोडाशिकः, पुरोडाशिकी। षकारो ङीषर्थः।

न्यासः

पौरोडाशपुरोडाशात् ष्ठन्। , ४।३।७०

पुरोडाशस्येदमित्यन्तोदात्तः। तस्माद्वह्वचोऽन्तोदात्ताट्ठञि ४।३।६७ प्राप्ते। पुरोडाशस्तु "लघावन्ते द्वयोश्च बह्वषो गुरुः" (फि।सू।२।४२) इति मध्यादात्तः। अस्मादणि प्राप्ते ष्ठन् विधीयते। वकारो ङीषर्थः, नकार आद्युदात्तार्थः। तेषां संस्कारो मन्त्रः पौरोडाश इति। "पुरोडाशसहचरितःर" इति। सामर्थ्यात् साहचर्याद्वा पुरोडाशा येन मन्त्रण संस्क्रियन्ते पुरोडाशशब्दो वत्र्तते, न पुरोडाशेषु। कृत एतत्? व्याख्यातव्यनामग्रहणानुवृत्तेः। न हि पुरोडाशा व्याख्यातव्यतया प्रसिद्धतराः॥

बाल-मनोरमा

पौरोडाशपुरोजाशात्ष्ठन् १४२८, ४।३।७०

पौरोडाश। "उक्तविषये" इति शेषः। पुरोडाशेति। पुरोडाशशब्दसहितो मन्त्रो लक्षमया पुरोडाश इत्युच्यत इत्यर्थः। स एव पौरोडाश इति। प्रज्ञादित्वात्स्वार्थेऽणिति भावः। पौरोडाशिक इति। पौरोडाशात्ष्ठनि रूपम्। पुरोडाशिक इति। पुरोजाशशब्दात्ष्ठनि रूपम्। षित्त्वान्ङीष्। पौरोडाशिकी--पुरोडाशिकी।

तत्त्व-बोधिनी

पौरोडाशपुरोडाशात्ष्ठन् ११९८, ४।३।७०

पौरोडाश। षित्त्वन्ङीष्। पौरोडाशिकी। पुरोडाशिकी। पुरो दाश्यते इति "पुरोडाषः"। "दाश्रृ दाने"कर्मणि घञि इहैव निपातनाद्दस्य डत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसो यदणौ ४।३।७१

छन्दःशब्दाद् भवव्याख्यानयोरर्थयोः यदणौ प्रत्ययौ भवतः। द्व्यचः इति ठकि प्राप्ते वचनम्। छन्दस्यः छान्दसः।

न्यासः

छन्दसो यदणौ। , ४।३।७१

बाल-मनोरमा

छन्दसो यदणौ १४२९, ४।३।७१

छान्दसो यदणौ। "तस्य व्याख्याने, तत्राभवे चे"ति शेषः। छन्दस्य छान्दस इति। छन्दसां व्याख्यानः, तत्र भवो वेत्यर्थः। द्व्यज्लक्षणस्य वक्ष्यमाणस्य ठकोऽपवादः।

तत्त्व-बोधिनी

छन्दसो यदणौ ११११, ४।३।७१

छन्दसो। छन्दः--शब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ स्तः। व्यज्लक्षणस्य ठकोऽपवादः। छन्दस्य इत्यादि। इहार्थयोर्यदण्भ्यां यथासङ्ख्यं न भवत्यस्वरितत्वादिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट् ठक् ४।३।७२

द्व्यजादिभ्यः प्रातिपदिकेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोः ठक् प्रत्ययो भवति। अणादेरपवादः। द्व्यचस् तावत् ऐष्टिकः। पाशुकः। ऋकारान्तात् चातुर्होतृकः। पाञ्चहोतृकः। ब्राह्मण ब्राह्मणिकः। ऋक् आर्चिकः। प्रथम प्राथमिकः। अध्वर आध्वरिकः। पुरश्चरण पौरश्चरणिकः। नामाख्यातग्रहणं सङ्घातविगृहीतार्थम्। नामिकः। आख्यातिकः। नामख्यातिकः।

न्यासः

द्व्यजृद्?ब्राआह्णर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्। , ४।३।७२

"अणोरपवादः" इति। आदिशब्देन ठञः। तत्र य ऋकारान्ता उद्गातृप्रभृतयो बह्वचोऽन्तोदात्तस्तेभ्यष्ठञोऽपवादः। ब्राआह्णप्रथमाध्वरेभ्योऽपि ठञ एव। तेऽपि बर्वचः प्रातिपदिकस्वरेणान्तोदात्ताः। नामाख्यातशब्दादपि समस्तात् तस्यैव। सोऽपि बह्वच्, समासस्वरेणान्तोदात्तश्च। परिशिष्टेभ्योऽणः। "पांशुकम्, पाञ्चहोतृकम्" इति। "इसुसुक्तान्तात् कः" ७।३।५१। पञ्चहोतृचतुर्होतृशब्दाविगन्ते "द्विगौ" ६।२।२९ इतिपूर्वपदप्रकृतिस्वरेणाद्युदात्तौ। पूर्वपदं हि "न्नः संख्यायाः" (फि।सू।२।२८) इत्युदात्तम्। पुरश्चरणशब्दोल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण ६।२।१३८ मध्योदात्तः। आख्यातशब्दः "गतिरनन्तरः" ६।२।४९ इत्याद्युदात्तः। "सङ्गातविगुहीतार्थम्" इति। तच्चैकशेषसमासाश्रयणाल्लभ्यत इति वेदितव्यम्॥

बाल-मनोरमा

द्व्यजृद्ब्राआह्णर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् १४३०, ४।३।७२

द्व्यजृद्ब्राआह्ण। द्व्यच्, ऋत्, ब्राआह्ण, ऋक्, प्रथम, अध्वर, पुरश्चरण, नामन्स, आख्यात एभ्यष्ठक्स्यात्तस्य व्याख्याने, तत्र भवे च। शैषिक इति। शेषस्य व्याख्यानस्तत्र भवो वेत्यर्थः। पाशुक इति।पशुयागप्रतिपादकग्रन्थः। पशुः, तस्य व्याख्यानस्तत्र भवो वेत्यर्थः। उकः परत्वाट्ठस्य कः। ऋत इति। उदाह्रियत इत्यर्थः। चातुर्होतृक इति। "चित्तिः रुआउक्" इत्यादयो मन्त्राश्चतुर्होतारस्तैत्तिरीये प्रसिद्धाः। तेषां व्याख्यानस्तत्र भवो वेत्यर्थः। ब्राआह्णिकः, आर्चिक इति। ब्राआह्णानि मन्त्रव्यतिरिक्तवेदभागाः, तेषामृचां वा व्याख्यानः, तत्र भवो वेत्यर्थः। ब्राआह्णिकः, आर्चिक इति। ब्राआह्णानि मन्त्रव्यतिरिक्तवेदभागाः, तेषामृचां वा व्याख्यानः, तत्र भवो वेत्यर्थः। इत्यादीति। प्राथमिकः, आध्वरिकः, पौरश्चरणिकः, नामिकः, आख्यातिकः।

तत्त्व-बोधिनी

व्यजृद्ब्राआह्णर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ११२०, ४।३।७२

व्यजृत्। अणोऽपवादः। चातुर्होतृक इति। "पृथिवीहोता द्यौरध्वर्यु"रित्यादिमन्त्रस्य चतुर्होतेति नामधेयम्। इत्यादीति।

आदिशब्दात्प्रथमिकः। आध्वरिकः। पौरश्चरणिकः। "नामख्यातग्रहणं सङ्घातविगृहीतार्थ"मिति वार्तिकम्। तत्र नामशब्दात् व्यच्त्वादेव सिद्धे विगृहीतग्रहणमाख्यातार्थमिति ज्ञेयम्। नामिकः। आख्यातिकः। नामाख्यातिकः।

---

सूत्रम्

काशिका-वृत्तिः

अणृगयनाऽदिभ्यः ४।३।७३

ऋगयनाऽदिभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोः अण् प्रत्ययो भवति। ठञादेरपवादः। आर्गयनः। पादव्याख्यानः। अण्ग्रहणं बाधकबाधनार्थम्। वास्तुविद्यः। ऋगयन। पदव्याख्यान। छन्दोमान। छग्दोभाषा। छन्दोविचिति। न्याय। पुनरुक्त। व्याकरण। निगम। वास्तुविद्या। अङ्गविद्या। क्षत्रविद्या। उत्पात। उत्पाद। संवत्सर। मुहूर्त। निमित्त। उपनिषत्। शिक्षा। ऋगयनादिः।

न्यासः

अणृगयनादिभ्यः। , ४।३।७३

"ठञोरपवादःर" इति। आदिशब्देन ठकश्छस्य च। तत्र ये बह्वचोऽन्तोदात्तस्तेभ्यष्ठञः। विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षमस्य ठकः। व्याकरणशब्दाद्()वृद्धाच्छस्य। अण्ग्रहणं किमर्थम्? न ऋययनादिभ्यो ता विहितमेवोच्येत, न चैवं सत्यपवादाः ष्ठनादयः स्युरिति सम्भाव्यते; अपवादविधानस्य हि वैयथ्र्यं स्यात्। तस्माद्वचनप्रामाण्यद्यो विहितो न च प्राप्नोत्यन्येन बाधितत्वात् स एव भविष्यति, स चाणेव? इत्यत आह-- "अण्ग्रहणम्" इत्यादि। तत्र यद्यण्ग्रहणं न क्रियेत्, तदा यदत्र वृद्धमन्तोदात्तं ठञा बाधिते पुर्वचनाच्छ एव भविष्यति। तस्माच्छस्य बाधकसय् बाधनार्थमण्ग्रहणम्। तेन वास्तुविद्य इति सिद्धं भवति। वास्तुविद्याशब्दो वृद्धः,समासस्वेरमाअन्तोदात्तश्च। "ऋगयन" इत्यादि। ऋगयनमिति। ऋगयनशब्दो भावसाधन ऋचामयनम्,यद्यपि भावे ल्युट्, तथाप्यभदोपचारात् तद्वति ग्रन्थे व्याख्यातव्ये वत्र्तते, स च "अनो भावकर्मवचनः" ६।२।१४९ इत्यन्तोदात्तः। यैस्तु करणे ल्युटं कृत्वाऋगयनशब्दो व्युत्पाद्यते, तेषां स कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तो न गणे पाठं प्रयोजयति ततः "प्राग्दीव्यतोऽण्" ४।१।८३ इत्येव सिद्धः। पदव्याख्यानशब्दः "मन्क्तिन्व्याक्यानशयनासनस्थानयाजकादिक्रीताः" ६।२।१५० इत्यन्तोदात्तः। "{नास्ति--काशिकायां पदमञ्जर्यां च।} मान" इति। मनोर्धातोर्यदा घञ् तदा "थाथषञ्क्ताजवित्रकाणाम्" ६।२।१४३ इत्यन्तोदात्तः। अथ मिनातेर्ल्युट्,तदा "अनो भावकर्मवचने" ६।२।१४९ इत्यन्तोदात्तः। "छन्दोभावः" इति। "गतिकारकोपपदात्" कृत्" ६।२।१३८ इति कृत्स्वरेणान्तोदात्तः। भाषाशब्द "गुरोश्च हलः" ३।३।१०३इत्यकारप्रत्ययान्तो व्युत्पादितः। "छन्दोविचिति" इति। "मन्क्तिन्" ६।२।१५० इत्यादिनान्तोदात्तः। पुनरुक्तशब्दः "थाथघन्क्ता जवित्रकाणाम्" ६।२।१४३ इत्यन्तोदात्तः। "{ नास्ति--काशिकायाम्" } निरुक्तः" "संज्ञायामनाचितादीनाम्" ६।२।१४५ इत्यन्तोदात्तः, व्याकरणशब्दो ल्युडन्तो मध्योदात्तः। निगमशब्दः "गोचरसञ्चर" ३।३।११९ इत्यादिसूत्रे घप्रत्ययान्तो निपातितः प्रत्यस्वरेणान्तोदात्तः। वास्तुविद्याशब्दोऽङ्गविद्या {क्षत्त्रविद्या--काशिका पदमञ्जरी च।} क्षत्त्रियविद्येत्येते च समासस्वरेणान्तोदात्ताः। उत्पात्, "{उत्पाद --काशिका" } उदपाद--इत्येतौ थाथादि ६।२।१४३ सूत्रेणान्तोदात्तौ। संवत्सर इति। "अशेः सर" (द।उ।८।५०) इत्यनुवृत्तौ "वसेः संपूर्वाच्चित्" (द।उ।८।५१,५२) इत्येवं व्युत्पादतित्वात् संवत्सरशब्दोऽन्तोदात्तः। मृह्रतेर्धातोः क्तः, क्ते ऊरागमः, तेन "मुहूर्त" इत्यन्तोदात्तः। "निमित्त" शब्दोऽपि प्रातिपदिकस्वरेण। "उपनिषत्" इति। उपनिपूर्वात् सदेः क्विप्। कृत्स्वरेणान्तोदात्तः॥

बाल-मनोरमा

अणृगयनादिभ्यः १४३१, ४।३।७३

अणृगयनादिभ्यः। "तस्य व्याख्याने तत्र भवे चे"ति शेषः। आर्गयनैति। ऋगयनम्--ऋक्संहिता, तस्य व्याख्यानस्तत्र भवो वेत्यर्थः। "बह्वचोऽन्तोदात्ता"दिति ठञि प्राप्ते अण्। औपनिषद इति। उपनिषदो व्याख्यानस्तत्र भवो वेत्यर्थः। एवं वैयाकरणः। "न य्वाभ्या"मित्यैच्। अण्ग्रहणं तु छबाधनार्थम्, अन्यथा अणा मुक्ते छो दुर्वारः स्यादित्याहुः।

तत्त्व-बोधिनी

अणृगयनादिभ्यः ११२१, ४।३।७३

अणृगय। ऋगयनादिभ्योभवव्याख्यानयोरर्थयोरण्स्यात्। ठञादेरिति। आदिशब्दाट्ठक्छयोः। आर्गयन इति। "अयन"शब्दो भावसाधनः, तेन समासे "अनो भावकर्मवचनः"इत्यन्तोदात्तः। अभेदोपचाराद्भाववचनोऽपि ग्रन्थे वर्तते। इह "बह्वचोऽन्तोदात्ता"दिति ठञ्प्राप्तः। औपनिषद इत्यत्राप्येवम्। विद्यान्यायशिक्षाशब्देभ्यो "व्यजृद्ब्राआह्मणे"ति ठक्प्राप्तः। व्याकरणशब्दात्तु---"वृद्धाच्छः"।

---

सूत्रम्

काशिका-वृत्तिः

तत आगतः ४।३।७४

ततः इति पञ्चमीसमर्थादागतः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्नातागतः स्रौघनः। माथुरः। राष्ट्रियः। ततः इति मुख्यम् अपादानं विवक्षितं यत् तदिह गृह्यते, न नान्तरीयकम्। स्रुघ्नादाग्च्छन् वृक्षमूलादागतः इति।

लघु-सिद्धान्त-कौमुदी

तत आगतः ११०१, ४।३।७४

स्रुग्घ्नादागतः स्रौग्घ्नः॥

न्यासः

तत आगतः। , ४।३।७४

अथ "रुआउघ्नादगच्छन् वृक्षमूलादागतः" इति। अत्र वृक्षमूलशब्दात् प्रत्ययः कस्मान्न भवति? इत्याह-- "मुख्यम्" इत्यादि। मुख्यं प्रधानं विवक्षितम्, तदिह परिगृह्यते; न तु नान्तरीयकप्रधानम्, न हि मुख्ये सतीतरस्याप्रधानस्य ग्रहणं युक्तम्; मुक्ये कार्यसम्प्रत्ययात्॥

बाल-मनोरमा

तत आगतः १४३२, ४।३।७४

तत आगतः। अस्मिन्नर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। स्नौघ्न इति। औतद्सर्गिकोऽण्।

---

सूत्रम्

काशिका-वृत्तिः

ठगायस्थानेभ्यः ४।३।७५

आय इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम्। आयस्थनवाचिभ्यः प्रातिपदिकेभ्यः ठक् प्रत्ययो भवति तत आगतः इत्येतस्मिन् विषये। अणो ऽपवादः। छं तु परत्वाद् बाधते। शुल्कशालाया आगतः शौल्कशालिकः।

आकरिकम्। बहुवचनं स्वरूपविधिनिरासार्थम्।

लघु-सिद्धान्त-कौमुदी

ठगायस्थानेभ्यः ११०२, ४।३।७५

शुल्कशालाया आगतः शौल्कशालिकः॥

न्यासः

ठगायस्थानेभ्यः। , ४।३।७५

बाल-मनोरमा

ठगायस्थानेभ्यः १४३३, ४।३।७५

ठगायस्थानेभ्यः। "तत आगत इत्यर्थे" इति शेषः। हट्टादिषु स्वामिग्राह्यो भागः-आयः। स यस्मिन्गृह्यते तदायस्थानम्, तद्वाचिभ्य इत्यर्थः।

तत्त्व-बोधिनी

ठगायस्थानेभ्यः ११२२, ४।३।७५

ठगाय। एत्येनं स्वामी, स्वमिनमयमेतीति वा--आयः=स्वामिग्राह्यो भागः। स यस्मिन्नुपद्यते तदायस्थानम्। बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः। वृद्धाच्छं परत्वादयं बाधते। आपणिकः। आकरिकः।

---

सूत्रम्

काशिका-वृत्तिः

शुण्डिकादिभ्यो ऽण् ४।३।७६

शुण्डिक इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः अण् प्रत्ययो भवति ततः आगतः इत्येतस्मिन् विषये। आयस्थानठको ऽपवादः। शुण्डिकादागतः शौण्डिकः। कार्कणः। अण्ग्रहणं बाधकबाधनार्थम्। औदपानः। शुण्डिक। कृकण। स्थण्डिल। उदपान। उपल। तीर्थ। भूमि। तृण। पर्ण। शुण्दिकादिः।

न्यासः

शुण्डिकादिभ्योऽण्। , ४।३।७६

"आयस्थानठकोऽपवादः" इति। बाहुल्यादेवमुक्तम्; यस्मात् कृकणशब्दोऽत्र पठ()ते। तत्र हि "कृकणपर्णाद्भारद्वाजे" ४।२।१४४ इति प्राप्तस्य च्छस्यापवादः। तीर्थशब्दश्चेह धूमादिषु पठ()ते, ततः "धूमादिभ्यश्च" ४।२।१२६ इति प्राप्तस्य वुञोऽपवादः। अथाण्ग्रहणं किमर्थम्, न शुण्डिकादिभ्यो यथाविहितमेवोच्येत, न चैवं पठ()मानेऽपवाद एव स्यादित्याशङ्कनीयम्; अपवादविधाने हि वचनवैयथ्र्यं स्यात्, तस्मादन्तरेणाप्यण्ग्रहणमणेव भविष्यति? इत्यत आह--"अण्ग्रहणम्" इत्यादि। "उदपान" शब्दोऽत्र पठ()त आयस्थानवचनम्, उत्सादिष्वसौ पठ()ते; तत्रासत्यग्रहण आयस्थानठकं बाधित्वा "उत्सादिभ्योऽञ्" ४।१।८६ इत्यञेव स्यात्। तस्मात् तस्य बाधकस्य बाधनार्थमण्ग्रहणम्। तेनोदपान इत्यत्राण्सिद्धो भवति॥

बाल-मनोरमा

शुण्डिकादिभ्योऽण् १४३४, ४।३।७६

शुण्डिकादिभ्योऽण्। "तत आगत" इत्येव। शुण्डिकमायस्थानविशेषः। पूर्वसूत्रविहितठगपवादः। कार्कण इति। "कृकणादागत" इति शेषः। "कृकणपर्णाद्भारद्वाजे" इति छस्यापवादः। तैर्थ इति। धूमादिवुञोऽपवादः। औदपान इति। अत्र उत्सादित्वादञ्प्राप्तो न भवति, पुनरण्ग्रहणात्। अन्यथा यथाप्राप्तविधाने आयस्थानठकं बाधित्वा अञेव स्यात्।

तत्त्व-बोधिनी

शुण्डिकादिभ्योऽण् ११२३, ४।३।७६

छादीनां चेति। कार्कण इथ्यत्र "कृकणपर्णाद्भारद्वाजे"इति छः प्राप्तः। तीर्थशब्दात्तु धूमादित्वाद्वुञ्प्राप्तः। उजपानशब्दस्योत्सादित्वदञ्प्राप्त इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

विद्यायोनिसम्बन्धेभ्यो वुञ् ४।३।७७

विद्यायोनिकृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः। तद्वाचिभ्यः शब्देभ्यो वुञ् प्रत्ययो भवति तत आगतः इत्येतस्मिन् विषये। अणो ऽपवादः। छं तु परत्वाद् बाधते। विद्यासम्बन्धेभ्यस् तावत् उपाध्यायादागतं औपाध्यायकम्। शौष्यकम्। आचार्यकम्। योनिसम्बन्धेभ्यः मातामहकः। पैतामहकः। मातुलकः।

लघु-सिद्धान्त-कौमुदी

विद्यायोनिसंबन्धेभ्यो वुञ् ११०३, ४।३।७७

औपाध्यायकः। पैतामहकः॥

न्यासः

विद्यायोनसम्बन्धेभ्यो वुञ्। , ४।३।७७

बाल-मनोरमा

विद्यायोनिसम्बन्धेभ्यो वुञ् १४३५, ४।३।७७

विद्यायोनि। "तत आगत" इत्येव। औपाध्यायकः, पैतामहक इति। उपाध्यायात्पितामहाच्च आगत इत्यर्थः।

तत्त्व-बोधिनी

विद्यायोनिसम्बन्धेभ्यो वुञ् ११२४, ४।३।७७

विद्यायोनि। विद्यायोनिकृतः संबन्धो येषां तेभ्यो वुञ्स्यात्। अणोऽपवादः। छं तु परत्वाद्बाधते। आचार्यकः। मातामहकः। मातुलकः।

---

सूत्रम्

काशिका-वृत्तिः

ऋतष्ठञ् ४।३।७८

विद्यायोनिसम्बन्धेभ्यः इत्येव। ऋकारान्तेभ्यः प्रातिपदिकेभ्यो विद्यायोनिसम्बन्धवाचिभ्यः ठञ् प्रत्ययो भवति तत

आगतः इत्येतस्मिन् विषये। वुञो ऽपवादः। विद्यासम्बन्धवाचिभ्यस् तावत् होतुरागतं हौतृकम्। पौतृकम्। योनिसम्बन्धवाचिभ्यः भ्रातृकम्। स्वासृकम्। मातृकम्। तपरकरणम् मुखसुखार्थम्। विद्यायोनिभ्याम् अन्यत्र, सावित्रम्।

न्यासः

ऋतष्ठञ्। , ४।३।७८

"तपरकरणं मुखसुखार्थम्" इति। अथ दीर्घनिवृत्त्यर्थं कस्मान्न भवति? असम्भवात्। न हि विद्यायोनिसम्बन्धिषु किञ्चिदृकारान्तं प्रातिपदिकमस्ति यन्निवृत्त्यर्थस्तकारः स्यात्॥

बाल-मनोरमा

ऋतष्ठञ् १४३६, ४।३।७८

ञतष्ठञ्। ऋदन्ताद्विद्यायोनिसम्बन्धवाचिन इत्यर्थः। "तत आगत" इत्येव। हौतृकं भ्रातृकमिति। उकः परत्वाड्डस्य कः।

तत्त्व-बोधिनी

ऋतष्ठञ् ११२५, ४।३।७८

ऋतष्ठञ्। "विद्ययोनिसंबन्धेभ्यः" इति वर्ततेस तदाह---वुञोऽपवाद इति। "उष्क"ञिति वक्तव्ये तपरकरणं ठञ्ग्रहणं च चिन्त्यप्रयोजनमिति प्राञ्चः। "पौतृकी विद्ये"त्यत्र ङीबर्थं ठञ्ग्रहणमिति तु तत्त्वम्। न च "टिड्ढे"ति सूत्रे कञ्ग्रहणान्ङीप्सिध्यतीति वाच्यं, यादृशी,तदृशीकत्याद्यसिद्धेः। तदनुबन्धकग्रहणेनाऽतदनुबन्धकस्याऽग्रहणात्, ल्"त्यदादिषु दृशःटैति कञो द्व्यनुबन्धकत्वात्। तपरकरणं विहाय "उष्ठ"ञित्येव सुवचमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

पितुर् यच् च ४।३।७९

पितृशब्दाद् यत् प्रत्ययो भवति, चकाराट् ठञ् च ततागतः इत्येतस्मिन् विषये। पितुरागतं पित्र्यम्, पैतृकम्।

न्यासः

पितुर्यच्च। , ४।३।७९

"पित्र्यम्" इति। "रीङ ऋतः" ७।४।२७ इत रीङ, यस्यति ६।४।१४८ लोपः॥

बाल-मनोरमा

पितुर्यच्च १४३७, ४।३।७९

पुतुर्यच्च। यति प्रक्रियां दर्शयति--रीञ्ङृत इति।

---

सूत्रम्

काशिका-वृत्तिः

गोत्रादङ्कवत् ४।३।८०

अपत्याधिकारादन्यत्र लौकिकं गोत्रम् अपत्यमात्रं गृह्यते। गोत्रप्रत्ययान्तात् प्रातिपदिकादङ्कवत् प्रत्ययविधिर्ब् हवति

ततः आगतः इत्येतस्मिन् विषये। अङ्कग्रहणेन तस्य इदम् अर्थसामान्यं लक्ष्यते। तस्माद् वुञतिदिष्यते, न अण्, सङ्घाङ्कलक्षणेष्वञ्यञिञाम् अण् ४।३।१२७ इति। औपगवानाम् अङ्कः औपगवकः। कापटवकः। नाडायनकः। चारायणकः। एवम् औपगवेभ्य आगतम् औपगवकम्। कापटवकम्। नाडायनकम्। चारायणकम्।

न्यासः

गोत्रादङ्कवत्। , ४।३।८०

यदि गोत्रादङ्कवत्प्रत्ययविधिर्भवतीत्युच्यतेऽण एवातिदेशः प्राप्नोति, न वुञः। यस्मादण्विधावेवाङ्गग्रहणमस्ति। "सङ्घाङ्कलक्षण" ४।३।१२७ इत्यादौ सूत्रेण वुञ्विधौ "गोत्रचरणाद्()वुञ्" (४।३।१२६) इत्यत्र? इत्याह-- "अङ्कग्रहणेन्" इत्यादि। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकग्रहणमुपधातसामान्यस्योपलक्षणम्, एवमिहाप्यङ्कग्रहणं "तस्येदम्" ४।३।१२० इत्यस्य। तेनायं सूत्रार्थो भवति-- यथा "तस्येदम्" ४।३।१२० इत्यत्र प्रत्ययो भवति, तथा "तत आगतः" ४।३।७४इत्यत्रापि। तेन वुञोऽप्यतिदेश उपपद्यते। नन्वेवमप्यणोऽतिदेशो न प्राप्नोति, न हि तद्विधौ गोत्रग्रहणमस्ति? पूर्वसूत्राद्()गोत्रग्रहणमनुवत्र्तत इत्यदोषः। "सङ्घाङ्कलक्षण" ४।३।१२७ #एइत्यादिना येन सूत्रेणाण् विहितस्तद्दर्शयति॥

बाल-मनोरमा

गोत्रादङ्कवत् १४३८, ४।३।८०

गोत्रादङ्कवत्। अङ्के ये प्रत्ययास्ते तत आगत इत्यर्थेऽपि भवन्तीत्यर्थः। बिदेभ्य आगतमिति। विग्रहप्रदर्शनम्। अत्र "यञञोश्चे"ति बहुत्वे अञो लुकि "बिदेभ्य" इति निर्देशः। बैदमिति। "सङ्घाङ्कलक्षणेष्वञ्यञिञाम"णित्युक्तरञन्तादिहाप्यर्थे अणि विवक्षिते "गोत्रेऽलुगची"त्यञो लुङ्निवृत्तौ बैदशब्दादण्। "द्व्यजृद्ब्राआह्मणे"ति द्व्यज्लक्षणस्य ठकोऽपवादः। गार्गमिति। यञन्तादण्। दाक्षमिति। इञन्तादण्। औपगवकमिति। उपगोरपत्यमौपगवः, तस्मादागतमित्यर्थः। "गोत्रचरणाद्व]ञिति वुञ्। यद्यपि तस्येदमित्यर्थे अयं वुञ्विहितः, तथाप्यञ्यञिञन्तादङ्केऽपि स दृष्ट इति तस्याप्यत्रार्थे अतिदेशो भवति। न हि "सङ्घाङ्के"ति प्रतिपदोक्तस्याऽण एवात्राऽतिदेशः, किं तु अङ्के दृष्टस्य सर्वस्यापि, व्याख्यानादिति भावः।

तत्त्व-बोधिनी

गोत्रादङ्कवत् ११२६, ४।३।८०

गोत्रादङ्कवत्। "अपत्याधिकारादन्यत्र लौकिकं गोत्र"मित्युक्तम्। अपत्यप्रत्ययान्तात् "तत आगतः"इत्यस्मिन्नर्थे अङ्कवत्प्रत्ययाः स्युः। अङ्के दृष्टस्य सर्वस्यायमतिदेशो, न तु साक्षाद्विहितस्यैवेत्याग्रहः, तेन "गोत्रचरणाद्वु"ञिति वुञपि लभ्यते। स हि "तस्येद"मिति सामान्येन विधीयमानोऽपि अञ्यञिञन्तादन्यत्र अङ्केऽपि दृष्टः। वेदमित्यादि। सङ्घाङ्के"त्यादिना अङ्कार्थेऽण्विहित इतीहाप्यञ्यञिञन्तादण्। औपगवकमिति। "गोत्रचरणा"दिति वुञ्। अङ्के दृष्ट इतीहाप्यणणन्ताद्वुञ्।

---

सूत्रम्

काशिका-वृत्तिः

हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्यः ४।३।८१

हेतुभ्यो मनुस्येभ्यश्च अन्यतरस्यां रुप्यः प्रत्ययो भवति तत आगतः इत्येतस्मिन् विषये। मनुष्यग्रहणम् अहेत्वर्थम्।

हेतुः कारणम्। हेतुभ्यस् तावत् समादागतम् समरूप्यम्, समीयम्। विषमरूप्यम्, विषमीयम्। गहादित्य्वाच् छः। मनुस्येभ्यः देवदत्तरूप्यम्। यज्ञदत्तरूप्यम् दैवदत्तम्। याज्ञदत्तम्। बहुवचनं स्वरूपविधिनिरासार्थम्।

लघु-सिद्धान्त-कौमुदी

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ११०४, ४।३।८१

समादागतं समरूप्यम्। पक्षे - गहादित्वाच्छः। समीयम्। विषमीयम्। देवदत्तरूप्यम्। दैवदत्तम्॥

न्यासः

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः। , ४।३।८१

"समादगतम्" इति। समाद्धेतोरागतमस्यार्थः। केन पुनरिह पञ्चमी? असमादेव ज्ञापकात्। यदयं पञ्चम्यन्तात् प्रत्ययमाह ततो ज्ञायते-- हेतौ पञ्चमी भवति॥

तत्त्व-बोधिनी

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ११२७, ४।३।८१

हेतुमनुष्येभ्यो। मनुष्यग्रहणमहेत्वर्थं, बहुवचनंम तु स्वरूपविधिनिरासार्थम्। समरूप्यमिति। "विभाषा गुणे" इत्यत्र "विभाषे"ति योगविभागादगुणवचनादपि पञ्चमी। योगविभागे तु "बाहुवकं प्रकृतेस्दनुद्दष्टे"रिति लिङ्गम्।

---

सूत्रम्

काशिका-वृत्तिः

मयट् च ४।३।८२

हेतुभ्यो मनुष्येभ्यः च मयट् प्रत्ययो भवति ततः आगतः इत्येतस्मिन् विषये। सममयम्। विषममयम्। मनुस्येभ्यः देवदत्तमयम्। यज्ञदत्तमयम्। टकारो ङीबर्थः। सममयी। योगविभागो यथासङ्ख्यनिरासार्थः।

लघु-सिद्धान्त-कौमुदी

मयट् च ११०५, ४।३।८२

सममयम्। देवदत्तमयम्॥

न्यासः

मयट् च। , ४।३।८२

"योगविभागो यथासंख्यानिरासार्थः" इति। ननु चान्यतरस्यांग्रहणेनौत्सर्गिकेऽभ्यनुज्ञायमाने वैषम्याद्यथासंख्यस्य प्राप्तेरेव नास्ति? सत्यमेतत्; यस्तु रूप्यमयटोरपूर्वत्वाद्विधीयमानपेक्षया यथासंख्यत्वं मन्येत,तं प्रति योगविभागः क्रियते॥

बाल-मनोरमा

मयट् च १४४१, ४।३।८२

मयट् च। "उक्तविषये" इति शेषः।

तत्त्व-बोधिनी

मयट् च ११२८, ४।३।८२

मयट् च। योगविभागो यथासङ्ख्यनिरासार्थः। ट

#ओ ङीबर्थः।

---

सूत्रम्

काशिका-वृत्तिः

प्रभवति ४।३।८३

ततः इत्येव। पञ्चमीसमर्थात् ङ्याप्प्रातिपदिकात् प्रभवति इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रभवति प्रकाशते, प्रथमत उपलभ्यते इत्यर्थः। हिमवतः प्रभवति गैमवती गङ्गा। दारदी सिन्धुः।

लघु-सिद्धान्त-कौमुदी

प्रभवति ११०६, ४।३।८३

हिमवतः प्रभवति हैमवती गङ्गा॥

न्यासः

प्रभवति। , ४।३।८३

"{प्रथमतः--काशिका"} प्रथम उपलभ्यत इत्यर्थः" इति। प्रथम इत्यनेन प्रशब्दस्यार्थमाचष्टे। "उपलभ्यते" इत्यनेनापि भवतेः। अनेकार्थत्वाद्धातूनां भवतिरिहोपलब्धौ भवतिरिहोपलब्धौ वत्र्तते। "हिमवतः प्रभवति" इति। "भुवः प्रभवः" १।४।३१ इति हिमवतोऽपादानसंज्ञा॥

बाल-मनोरमा

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः १४४०, ४।३।८३

हेतुमनुष्येभ्यः। "तत आगत" इत्येव। हेतुभ्य उदाहरति--समादागतमित्यादि। मनुष्यवाचिन उदाहरति--देवदत्तरूप्यमिति।

बाल-मनोरमा

प्रभवति १४४२, ४।३।८३

प्रभवति। तत इत्येवेति। "आगत" इति तु निवृत्तम्। प्रभवतीत्यर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। प्रभवः-प्रथमप्रकाशः। हिमवतः प्रभवतीति। हिमवति प्रथमं प्रकाशत इत्यर्थः। "भुवः प्रभवः" इत्यापादानत्वम्।

बाल-मनोरमा

अभिनिष्क्रामति द्वारम् १४४५, ४।३।८३

अभिनिष्क्रामति द्वारम्। कान्येति। कान्यकुब्जाख्यजनपदस्य द्वारमित्यर्थः।

तत्त्व-बोधिनी

प्रभवति ११२९, ४।३।८३

हैमवतीति। हिमवतः प्रकाशते। तत्र प्रथमं दृश्यत इत्यर्थः। उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते, "तत्र जातः"इत्यतो भेदेन निर्देशात्।

---

सूत्रम्

काशिका-वृत्तिः

विदूराञ् ञ्यः ४।३।८४

विदूरशब्दात् ञ्यः प्रत्ययो भवति ततः प्रभवति इत्येतस्मिन् विषये। अणो ऽपवादः। विदूरात् प्रभवति वैदूर्यो मणिः। ननु च वालवायादसौ प्रभवति, न विदूरात्, तत्र तु संस्क्रियते? एवं तर्हि वालवायो विदूरं च प्रकृत्यनतरम् एव वा। न वै तत्र इति चेद् ब्रूयाज् जित्वरीवदुपाचरेत्।

न्यासः

विदूराञ्ञ्यः। , ४।३।८४

"तत्र तु संस्क्रियते" इति। तुशब्दोऽवधारणे। संस्क्रियते एव च तत्र विदूरे नगरे, न ततः प्रभवति। "वालवायो विदूरञ्च" इति। वालवायशब्द एव प्रत्ययमुत्पादयति, न विदूरशब्दः। प्रभवतिशब्दस्य प्रथमत उपलभ्यत इत्यर्थः। प्रभवति च वालवाये पर्वते। तस्माद्यतः प्रभवति तद्वाची वालवायशब्दः प्रकृतित्वेनाक्षिप्यते। यथा विश्रवणरवणा इत्यादेशावेव शिवादिषु पठ()एते। अपत्याधिकारात्तु येन तयोरपत्यापत्यवत्ससम्बन्धः स एव प्रकृतित्वेनाक्षिप्यते विश्रवस्शब्दः। विश्रवसोऽपत्यं वैश्रवणः, रावणः। अथ वा प्रकृत्यन्तरमेव विदूरशब्दो वालवाये वत्र्तते। विदूरात् भवति वालवायात् पर्वतात् प्रभवतीत्यर्थः। एवं स्थिते यो ब्राऊयात्-- नैव तत्र वालवाये प्रसिद्धो विदूरशब्द इति,तं प्रत्याह-- "जित्वरीवदूपाचरेत्" इति। यथा वणिज एव वासाणसी नगरीं "जित्वरी" इत्युच्चारयन्ति मङ्गलार्थम्, न लोकाः, एवं वैयाकरणा एव वालवायं विदूरमित्युच्चारयन्ति। नियतदेशपुरुषविषया अपि रूढयो भवन्तीत्येतज्जित्वरीवदित्यनेन कथयति॥

बाल-मनोरमा

विदूराञ्ञ्यः १४४३, ४।३।८४

विदूराञ्ञ्यः। ततः प्रभवतीत्येव। विदूरशब्दो दन्त्यमध्यः। वालवायाख्यदेशपर्यायो विदूरशब्द इति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

विदूराञ्ञ्यः ११३०, ४।३।८४

वैदूर्य इति। दन्त्यमध्योऽयं शाद्वलवत्, न तु नड्वलवन्मूर्धन्यमध्यः। नन्वत्रार्थोऽसङ्गतिः, बालावायपर्वताद्ध्यसौ प्रभवति, विदूरनगरे तु संस्क्रियते। सत्यम्। अतएव समाहितं बाष्ये---"बालवायो विदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति चेद्ब्राऊयाज्जिल्वरीवदुपाचरेत्िति। अस्यार्थः-----बालवायशब्दः प्रत्ययं लभते, विदूरादेशं च, सूत्रे पठितेनादेशेनानुरूपः स्थानीबालवायशब्द आक्षिप्यते, यथाल शिबादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यामनुरूपः स्थानी वि()आवस्शब्द आक्षिप्यते, यथा वा "पद्दन्न"इत्यादौ पदाद्यादेशानुरूपः स्थानी पाददन्तादिराक्षिप्यते तद्वत्। प्रकृत्यन्तरमेवेति। विदूरशब्दो नगरस्येव पर्तस्यापि वाचकोऽस्तीत्यर्थः। एवं चास्मिन्पक्षे "बालवायात्प्रभवती"ति विग्रहे विदूरशब्दात्प्रत्यय इति व्याख्यानक्लेशो नेति भावः। न वै इति। "वै" शब्दोऽक्षमां द्योतयति। तत्र पर्वते विदूरशब्दोऽप्रसिद्ध इति च्द्ब्राऊयाज्जित्वरीवव्द्यवहरेत्। नियतपुरषापेक्षो हि व्यवहारो दृश्यते, यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति,

एवं वैयाकरणा एवाऽदिं()र विदूर इति।

---

सूत्रम्

काशिका-वृत्तिः

तद् गच्छति पथिदूतयोः ४।३।८५

तदिति द्वितीयासमर्थाद् गच्छति इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति, यो ऽसौ गच्छति पन्थाश्चेत् स भवति दूतो वा। स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा। माथुरः। तत्स्थेषु गच्छत्सु पन्था गच्छति इत्युच्यते। अथ वा स्रुघ्नप्राप्तिः पथो गमनम्। पथिदूतयोः इति किम्? स्रुघ्नं गच्छति सार्थः।

लघु-सिद्धान्त-कौमुदी

तद्गच्छति पथिदूतयोः ११०७, ४।३।८५

स्रुग्घ्नं गच्छति स्रौग्घ्नः पन्था दूतो वा॥

न्यासः

तद्गच्छति पथदूतयोः। , ४।३।८५

पथो निष्क्रियत्वाद्गमेः कत्र्तत्वं नोपपद्यत इत्याह-- "तत्स्थेषु" इत्यादि। पुरुषवृत्तिर्गमनं पथ्युपचर्यत इति दर्शयति। "अथ वा" इत्यादि। प्राप्तावत्र गमिर्वत्र्तते। अस्ति च प्रत्यक्षगम्यैव रुआउघ्नादीनां पथोऽस्यैवानन्तर्यलक्षणा प्राप्तिः॥

बाल-मनोरमा

तद्गच्छति पथिदूतयोः १४४४, ४।३।८५

तद्गच्छति पथिदूतयोः। गच्छतीत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युः, स चेद्गन्ता पन्था दूतो वा इत्यर्थः।

तत्त्व-बोधिनी

तद्गच्छति पथिदूतयोः ११३१, ४।३।८५

तद्गच्छति। द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता पन्था दूतो वेत्यर्थः। तत्र साध्वसिश्छनत्ति, काष्ठानि पचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षायां पन्थाः कर्ता।

---

सूत्रम्

काशिका-वृत्तिः

अभिनिष्क्रामति द्वारम् ४।३।८६

तदित्येव। तदिति द्वितीयासमर्थादभिनिष्क्रामति इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यतभिनिष्क्रामति द्वारं चेद् तद् भवति। आभिमुख्येन निष्क्रामति अभिनिष्क्रामति। स्रुघ्नम् अभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम्। माथुरम्। राष्ट्रियम्। द्वारम् अभिनिष्क्रमणक्रियायां करणं प्रसिद्धं, तदिह स्वातन्त्र्येण विवक्ष्यते, यथा साध्वसिश्छिनत्ति इति। द्वारम् इति किम्? स्रुघ्नम् अभिनिष्क्रामति पुरुषः।

लघु-सिद्धान्त-कौमुदी

अभिनिष्क्रामति द्वारम् ११०८, ४।३।८६

स्रुग्घ्नमभिनिष्क्रामति स्रौग्घ्नं कान्यकुब्जद्वारम्॥

न्यासः

अभिनिष्क्रमति द्वारम्। , ४।३।८६

कथं पुनः करणत्वेन प्रसिद्धं द्वारं स्वातन्त्रेणैव विवक्ष्यते?इत्याह-- "यथा" इत्यादि। यथा च्छेदनक्रियायामसिः करणत्वेन प्रसिद्धौऽपि स्वातन्त्र्येण विवक्ष्यते।ननु चेतनावतोऽभिनिष्क्रमणं भवति, चेतनावता प्रयुक्तस्य वा-- देवदत्तोऽभिनिष्क्रामतीति, न च द्वारं चेतनावता प्रयुक्तम्, तस्मान्नोपपद्यते तस्याभिनिष्क्रमणम्? नैष दोषः; अचेतनेष्वप्यभिनिष्क्रामतीति व्यवहारो दृश्यते, तद्यथा अनेन गुहामुखेन वायुरभिनिष्क्रामतीति। निष्क्रीयत्वात् तर्हि नोपपद्यते? तत्स्थेषु निष्क्रामत्सु द्वारमभिनिष्क्रमतीत्युपचर्यत इत्यदोषः॥

तत्त्व-बोधिनी

अभिनिष्क्रामति द्वारम् ११३२, ४।३।८६

अभिनिष्क्रमिति। द्वितीयान्तात्प्रत्ययः स्याद्यन्निष्क्रामति तच्चेद्द्वारमित्यर्थः। रुआऔग्घ्नं कन्यकुब्जद्वारमिति। रुआउग्घ्नाभिमुखनिष्क्रममे करणीभूतमिति फलितोऽर्थः। पूर्ववत्करणस्य कर्तृत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

अधिकृत्य कृते ग्रन्थे ४।३।८७

तदित्येव। अधिकृत्य एतदपेक्ष्य द्वितीया। अधिकृत्य प्रस्तुत्य, आगूर्य इत्यर्थः। तदिति द्वितीयासमर्थादधिकृत्य कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत् तत् कृतं ग्रन्थश्चेत् स भवति। सुभद्रामधित्य कृतो ग्रन्थः सौभद्रः। गैरिमित्रः। यायातः। ग्रन्थे इति किम्? सुभ्द्राम् अधिकृत्य कृतः प्रासादः। लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम्। वासवदत्ताम् अधिकृत्य कृता आख्यायिका वासवदत्ता। सुमनोत्तरा। उर्वशी। न च भवति। भिमरथी।

लघु-सिद्धान्त-कौमुदी

अधिकृत्य कृते ग्रन्थे ११०९, ४।३।८७

शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः॥

न्यासः

अधिकृत्य कृते ग्रन्थे। , ४।३।८७

ननु "कृते" इति कर्मणि निष्ठा, ततश्च तयाऽभिहितत्वात् कर्मणो द्वितीया न प्राप्नोति? इत्याह-- "अधिकृत्येत्येतपेक्षया द्वितीया" इति। ल्यबन्तेन या क्रियाऽभिधीयते तदपेक्षया द्वितीया, न च तस्या यत्कर्म तत्केनचिदभिहितम्। निष्ठया हि ग्रन्थात्मकमेव कर्माभिहितम्, न तु ल्यबन्तक्रियाया यत्कर्म सुभद्रादिकं तदपि। गिरिमित्त्रमधिकृत्य कृतो "गैरिमित्त्रः"। ययातिमधिकृत्य "यायातः"। "लुप्" इत्यादि। आख्यायिकायै इति तादर्थ्ये चतुर्थी। आख्यायिकार्थमाख्यायिकामभिधातुं प्रत्ययस्य लुग्भवतीत्यर्थः॥

बाल-मनोरमा

अधिकृत्य कृते ग्रन्थे १४४६, ४।३।८७

अधिकृत्य। तदित्येवेति। "अदिकृत्य कृतो ग्रन्थः" इत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युरित्यर्थः। शारीरकमिति। शरीरस्यायं

शारीरः=जीवात्मा, तमित्यर्थः। तस्येदमित्यणन्तात्स्वार्थे कः। शारीरकीय इति। वृद्धत्वाच्छः।

तत्त्व-बोधिनी

अधिकृत्य कृते ग्रन्थे ११३३, ४।३।८७

तदित्येवेति। "अधिकृत्ये"त्यतदपेक्षयाऽत्र[अपि]द्वितीया। शारीरकीयेति। कुत्सितं शरीरं शरीरकं, तत्सम्बन्धी शरीरको जीवात्मा, तमधिकृत्य=प्रस्तुत्य कृतो ग्रन्थः शारीरकीयः=चतुर्लक्षणीसूत्रसंदर्भः। "वृद्धाच्छः"। अत्र वार्तिकं "लुबाख्ययिकाभ्यो बहुल"मिति तादथ्र्य एषा चतुर्थी। "अख्यायिका"नाम गद्यरूपो ग्रन्थविशेषः। अतएवाख्यानाऽऽख्यायिकयोस्तत्र तत्र भेदेनोपादानम्। आख्यायिकाभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुगित्यर्थः। वासवदत्तामधिकृत्य कृता आख्यायिका---वासवदत्ता। सुमनोत्तरा। क्वचिन्न---भैमरथी। अभेदोपचारेण गतार्थत्वान्नेदं वार्तिकमावश्यकमिति मूले नोक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

शिशुक्रन्दयमसभद्वन्द्वैन्द्रजननाऽदिभ्यश् छः ४।३।८८

तदित्येव, अधिकृत्य कृते ग्रन्थे इति च। शिशुक्रन्दाऽदिभ्यो द्वितियासमर्थेभ्यः छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे। अणो ऽपवादः। शिशूनां क्रन्दनं शिशुक्रन्दः, तम् अधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य सभा यमसभम्, यमसभीयः। द्वन्द्वात् इन्द्रजननीयम्। प्रद्युम्नागमनीयम्। इन्द्रजननादिराकृतिगणः प्रयोगतो ऽनुसर्तव्यः, प्रातिपदिकेषु न पठ्यते। द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः। दैवासुरम्। राक्षो ऽसुरम्। गौणमुख्यम्। इन्द्रजनादेराकृतिगणत्वात् शिशुक्रन्दादयो ऽपि तत्र एव द्रष्टव्याः। प्रपञ्चार्थम् एषां ग्रहणम्। एवं सति देवासुरादिप्रतिषेधो ऽपि न वक्तव्यः, ततश् छप्रत्ययस्य अदर्शनात्।

न्यासः

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः। , ४।३।८८

"यमसभम्" इति। "सभाराजा" २।४।२३ इत्यादिना नुपंसकलिङ्गता। यदीन्द्रजननादावेव शिशुक्रन्दादयो द्रष्टव्याः,तत्किमर्थं पृथग्ग्रहणम्? इत्यत आह-- "प्रपञ्चार्थम्" इत्यादि। "एवञ्च सति" इत्यादि। चशब्दो हेतौ। यस्मादिन्द्रजननादेराकृतिगणस्य तदन्तर्भूतानामेव शिशुक्रन्दादीनां प्रपञ्चार्थं ग्रहणम्; तस्मादेवमर्थेऽस्मिन् स्थिते देवासुरादीनां प्रतिषेधो न वक्तव्यः, प्राप्त्यभावात्। येभ्य एव च्छप्रत्ययोऽयं दृश्यते, त एवेन्द्रजननादयः, न च देवासुरादिभ्यो दृश्यते॥

बाल-मनोरमा

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः १४४७, ४।३।८८

शिशुक्रन्द। शिशुक्रन्द, यमसभ, द्वन्द्व, इन्द्रजननादि एभ्यश्छः स्यादधिकृत्य कृते ग्रन्थे इत्यर्थे। निपातनादिति। "सभा राजे"ति तु नपुंसकत्वं न भवति, तत्र "अमनुष्यशब्दो रूढ()आ रक्षःपिशाचादीनाहे"त्युक्तेरिति भावः।

तत्त्व-बोधिनी

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ११३४, ४।३।८८

शिशुक्रन्द। अत्र वार्तिकं--"द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः"। दैवासुरम्। राक्षोसुरम्। निपातनादिति। "सभा राजे"ति सूत्रे "अमनुष्यशब्दो रुढ()आ रक्षःपिशाचादीनाहे"त्युक्तत्वात्तेन सूत्रेण क्लीबत्वं न सिध्यतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सो ऽस्य निवासः ४।३।८९

सः इति प्रथमासमर्थातस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं निवासः चेत् स भवति। निवसन्त्यस्मिन् निवासो देश उच्यते। स्रुघ्नो निवासो ऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः।

लघु-सिद्धान्त-कौमुदी

सोऽस्य निवासः १११०, ४।३।८९

स्रुग्घ्नो निवासोऽस्य स्रौग्घ्नः॥

न्यासः

सोऽस्ये निवासः। , ४।३।८९

बाल-मनोरमा

सोऽस्य निवासः १४४८, ४।३।८९

सोऽस्य निवासः। अस्मिन्नर्थे प्रथमान्तात्प्रत्ययाः स्युरित्यर्थः। "यत्र संप्रत्युष्यते स निवास" इति भाष्यम्।

तत्त्व-बोधिनी

सोऽस्य निवासः ११३५, ४।३।८९

सोऽस्य निवासः। "स"इति प्रथमान्तादस्येति षष्ठ()र्थे यथा विहितः प्रत्ययः स्याद्यः प्रथमान्तर्थः स निवासश्चेत्। रुआउग्घ्नो निवास इति।निवासाधिकरणमित्यर्थः। नन्वस्येति कृद्योगे कर्तरि षष्ठी। तथा च विशेषणविशेष्यभावव्यत्यासात्रुआउघ्नाधिकरणवासकर्तेह वृत्त्यर्थः, तथा च "तत्र भवः"इत्येव सिद्धं किमनेनेति चेत्()। अत्राहुः----बासस्य चेतनमात्रकर्तृकतया प्रसिद्धत्वात्प्रकारकृतो भेदोऽस्तीति नास्ति वैयर्थ्यं। "वसन्ति हि प्रेम्णि गुणा न वस्तुनी"त्यादौ तूपचारो बोध्य इति।

---

सूत्रम्

काशिका-वृत्तिः

अभिजनश् च ४।३।९०

सो ऽस्य इत्येव। स इति प्रथमासमर्थादस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थम् अभिजनश्चेत् स भवति। अभिजनः पूर्वबान्धवः। तत्सम्बन्धाद् देशो ऽपि अभिजनः इति उच्यते, यस्मिन् पूर्वबान्धवैरुषितम्। तस्मादिह देशवाचिनः प्रत्ययः, न बन्धुभ्यो, निवासप्रत्यासत्तेः। स्रुघ्नो ऽभिजनो ऽस्य स्रौघ्नः। माथुरः। राष्टियः। निवासाभिजनयोः को विशेषः? यत्र संप्रत्युष्यते स निवासः, यत्र पूर्वैरुषितं सो ऽभिजनः। योगविभाग उत्तरार्थः।

न्यासः

अभिजनश्च। , ४।३।९०

"तत्सम्बन्धाद्देशोऽप्यभिजन उच्यते" इति। यथा यष्टीः प्रवेदशयेति यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वत्र्तते, तथाऽभिजनशब्दो देशे वत्र्तते। कः पुनरसौ योऽभिजनसम्बन्धादभिजन उच्यते? इत्यत आह-- "यस्मिन्" इत्यादि। "इह देशवाचिनः" इत्यादि। कथं पुनर्मुख्येऽभिजने गौणात् प्रत्ययो भवति? इत्याह-- "निवासप्रत्यासत्तेः" इति। निवासो ४।३।८९ऽनुकृष्यते तेनाभिजनो विशेष्यते निवासो योऽभिजन इति। तस्माद्देशवाचिन एव प्रत्ययो भवति, न बन्धुभ्यः ; तेषामनिवसत्वात्। निवासाभिजनयोः को विशेषः? नास्त्येव कश्चिद्विशेषः, अभिजनस्य निवासभूतत्वादिति मन्यते। "यत्र" इत्यादि। विशेषं दर्शयति। "योगविभाग उत्तरार्थः" इति। उत्तरेषु योगेष्वभिजनप्रत्यया यथा स्युः, निवासे मा भूवन्निति॥

बाल-मनोरमा

अभिजनश्च १४४९, ४।३।९०

अभिजनश्च। स इत्यनुवर्तते। पूर्ववद्व्याख्येयम्। "यत्र पूर्वैरुषितं सोऽभिजन" इति भाष्यम्। यत्र स्वयमिति। उदाहृतभाष्यस्यायमर्थ इति भावः।

तत्त्व-बोधिनी

अभिजनश्च ११३६, ४।३।९०

अभिजनश्च। योगविभाग उत्तरार्थः। "अभिजनाः पूर्वबान्धवाः"इति वृत्तिः। अभिजायते येभ्य इति व्युत्पत्तेरिति भावः। पूर्वाबान्धवाः पित्रादयः। बन्धुशब्दः प्रज्ञादिः। पूर्वसूत्रादिह "निवासः"इत्यनुवृत्तम्। तत्सामानादिकरण्यादभिजनशब्दस्यतत्संबन्धिनि लक्षणा। एवं स्थिते फलितमाह---यत्र पूर्वैरिति।

---

सूत्रम्

काशिका-वृत्तिः

आयुधजीविभ्यश् छः पर्वते ४।३।९१

सो ऽस्य अभिजनः इति वर्तते। आयुधजीविभ्यः इति तादर्थ्ये चतुर्थी, पर्वते इति प्रकृतिविशेषणम्। पर्वतवाचिनः प्रथमासमर्थादभिजनादस्य इति षष्ठ्यर्थे छन्|H प्रत्ययो भवति। आयुधजीविभ्यः आयुधजीव्यर्थम् आयुधजीविनो ऽभिधातुं प्रत्ययो भवति इत्यर्थः। हृद्गोलः पर्वतो ऽभिजनः एषाम् आयुधजीविनां हृद्गोलीयाः। अन्धकवर्तीयाः। रोहितगिरीयाः। आयुधजीविभ्यः इति किम्? ऋक्षोदः पर्वतो ऽभिजनः एशां ब्रह्मणानाम् आर्क्षोदा ब्राह्मणाः। पर्वते इति किम्? सांकाश्यका आयुधजीविनः।

न्यासः

आयुधजीविभ्यश्छः पर्वते। , ४।३।९१

"आयुधजीविभ्यः" इति। तादभ्र्य चतुर्थीति पञ्चमीं निराकरोति। यदि ह्येषां पञ्चमी स्यात्, आयुधजीविभ्य एव पर्वतेऽभिधेये छो भवतीत्येष सूत्रार्थः स्यात्, न चेष्यते; तस्मात् एवैषा चतुर्थी, न पञ्चमीति। "साङ्काश्यकाः" इति। "धन्वयोपधाद्()वञ्" ४।२।१२०॥

बाल-मनोरमा

आयुधज़ीविभ्यश्चः पर्वते १४५०, ४।३।९१

आयुधज्ञीविभ्यः। "पर्वता"दिति पाठान्तरम्। अभिजनशब्दादिति। अबिजनदेशवाचिन इत्यर्थः। "आयुधजीविनोऽभिधातु"मिति शेषः। सूत्रे "क्रियार्थोपपदस्ये"ति चतुर्थी। ह्मद्गोल इति। पर्वतविशेषोऽयम्। ऋक्षोद इति। अयमपि पर्वतविशेषः।

तत्त्व-बोधिनी

आयुधजीविभ्यश्छः पर्वते ११३७, ४।३।९१

आयुधजीविभ्यः। तादर्थ्ये एषा चतुर्थी। आयुधजीविभ्यः=आयुधजीब्यर्थम्, आयुधजीविनोऽभिधातुं प्रत्ययः स्यादित्यर्थः। सोऽस्याभिजनः"इत्यनुवर्तते। पर्वत इति प्रकृतिविशेषणं, तदाह---पर्वतवाचिन इत्यादि। पर्वत इति किम्()। साङ्काश्यका आयुधजीविनः। "योपधा"दिति वुञ्। शण्डिकादिभ्यो ञ्यः। शण्डिका सर्वसेन शकेत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

शण्दिकाऽदिभ्यो ञ्यः ४।३।९२

शण्डिक इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः ञ्यः प्रत्ययो भवति सो ऽस्य अभिजनः इत्येतस्मिन् विषये। अणादेरपवादः। शाण्डिक्यः। सार्वसेन्यः। शण्डिक। सर्वसेन। सर्वकेश। शक। सट। रक। शङ्ख। बोध। शण्डिकादिः।

न्यासः

शण्डिकादिभ्यो ञ्यः।, ४।३।९२

"अणादेरपवादः" इति। आदिशब्देन छादेः। अत्र ये शण्डिकादीन् पर्वातनाचक्षते तेषां मतेन पूर्वसूत्रेण प्राप्तस्य छस्यापवादः। ये तु जनपदशब्दाः, तेषां "अवृद्धादपि बहुवचनविषयात्" ४।२।१२४ इति प्राप्तस्य वुञः। शण्डिकशब्दात् "कोपधादण्" ४।२।१३१ इति प्राप्तस्याणः॥

बाल-मनोरमा

शाण्डिकादिभ्यो ञ्यः १४५१, ४।३।९२

शाण्डिकादिभ्यो ञ्यः। "सोऽभिजन इत्यर्थे प्रथमान्तेभ्य" इति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

सिन्धुतक्षशिलाऽअदिभ्यो ऽणञौ ४।३।९३

आदिशब्दः प्रत्येकम् अभिसम्बध्यते। सिन्ध्वादिभ्यः प्रातिपदिकेभ्यः तक्षशिलादिभ्यश्च यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः सो ऽस्य अभिजनः इत्येतस्मिन् विषये। सैन्धवः। वार्णवः। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। किष्किन्धा। गदिका। उरस। दरत्। ये तु कच्छादिषु पठ्यन्ते सिन्धुवर्णुप्रभृतयः, तेभ्यस् तत एव अणि सिद्धे मनुष्यवुञो बाधनार्थं वचनम्। तक्षशिलादिभ्यः खल्वपि ताक्षशिलः। वात्सोद्धरणः। तक्षशिला। वत्सोद्धरण। कौमेदुर। कण्डवारण। ग्रामणी। सरालक। कंस। किन्नर। संकुचित। सिंहकोष्ठ। कर्णकोष्ठ। बर्बर। अवसान।

न्यासः

सिन्धुतक्षसिलादिभ्योऽणञौ।, ४।३।९३

"प्रभृतयः" इति। प्रभृतिशब्देन मधु, वसन्त, कम्बोज, साल्व,कश्मीर-- इत्येते गृह्णन्ते। {गन्धार इति मु।पाठः गन्धारि इति प्राचीनमुद्रित पाठः।}किष्किन्धा, "{नास्ति गण पाठे}सारदि, "{उरस काशिका}उरस्, दरत्--- इत्येतेषाम् "अवृद्धादपि" ४।२।१२४ इत्यादिना वुञि प्राप्ते वचनम्। तक्षशिलादिष्वपि कौमेदुर, काण्()डवारण, ग्रामणी-- इत्येतेषां "वृद्धाच्छः" ४।२।११३ इति छे प्राप्ते। शेषाणां "प्राग्दीव्यतोऽण्" ४।१।८३ इत्यणि॥

बाल-मनोरमा

सिन्धुतक्षशिलादिभ्योऽणञौ १४५२, ४।३।९३

सिन्धुतक्ष। सैन्धव इति। सिन्धुर्देशविशेषोऽभिजनोऽस्येति विग्रहः।

तत्त्व-बोधिनी

सिन्धुतक्षशिलादिभ्योऽणञौ ११३८, ४।३।९३

सिन्धुतक्ष। सिन्धुः वर्णुः गन्धारःकम्बोजादयः सिन्ध्वादयः। ते तु प्रायेण कच्छादिष्वपि पट()न्ते। तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं वचनम्। तक्षशिला वत्सोद्धरणा बर्बरेत्यादयस्तक्षशिलादयः।

---

सूत्रम्

काशिका-वृत्तिः

तूदीशलातुरवर्मतीकूचवाराड् ठक्छण्ढञ्यकः ४।३।९४

तूद्यादिभ्यश्चतुर्भ्यः शब्देभ्यो यथासङ्ख्यं चत्वार एव ढक् छण् ढञ् यकित्येते प्रत्यया भवन्ति सो ऽस्य अभिजनः इत्येतस्मिन् विषये। अणो ऽपवादः। तौदेयः। शालातुरियः। वार्मतेयः। कौचवार्यः।

न्यासः

तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः। , ४।३।९४

बाल-मनोरमा

तूदीसलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः १४५३, ४।३।९४

तुदीसलातुर। तुदी, सलातुर, वर्मती, कूचवार--एभ्यः प्रथमान्तेभ्यो ढक्, छण्, ढञ्, यक् एते स्युः अस्याभिजन इत्यर्थे।

---

सूत्रम्

काशिका-वृत्तिः

भक्तिः ४।३।९५

समर्थविभक्तिः प्रत्ययार्थश्च अनुवर्तते। अभिजन इति निवृत्तम्। स इति प्रथमासमर्थातस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत् प्रथमासमर्थं भक्तिश्चेद् तद् भवति। भज्यते सेव्यते इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः। राष्ट्रियः।

न्यासः

भक्तिः। , ४।३।९५

"भज्यते सेव्यत इति भक्तिः" इति। "भज सेवायाम्" (धा।पा।९९८) इत्येतस्मात् कर्मसाधनः क्तिन्॥

बाल-मनोरमा

भक्तिः १४५४, ४।३।९५

भक्तिः। अनुवर्तते इति। सोऽस्य भक्तिरित्यर्थे प्रथमान्तात्प्रत्ययाः स्युरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अचित्तादेशकालाट् ठक् ४।३।९६

देशकालव्यतिरिक्तादचित्तवाचिनः प्रातिपदिकाट् ठक् प्रत्ययो भवति सो ऽस्य भक्तिरित्येतस्मिन् विषये। अणो ऽपवादः। वृद्धाच् छं परत्वाद् बाधते। अपूपो भक्तिरस्य आपूपिकः। पायसिकः। शाष्कुलिकः। अचित्तादिति किम्? दैवदत्तः। अदेशादिति किम्? स्रौघ्नः। अकालातिति किम्? ग्रैष्मः।

न्यासः

अचित्तादेशकालाट्ठक्। , ४।३।९६

ननु च देशकालयोरचित्तयोः प्रतिषेधान्नञिवयुक्तन्यायेन (व्या।प।६५) प्रकृतिचेतनैव विज्ञास्यते, तत्किमचित्तग्रहणेन? नैतदस्ति; विना हि तेनादेशकालादिति न ज्ञायते-- किमयं प्रकृतिनिर्देशः, उत देशकालयोः प्रतिषेध इति? तत्रानिष्टमपि विज्ञायते-- अदेशशब्दात् , कालशब्दाच्चेति। अचित्तग्रहणे तु सति तेनातिप्रसङ्गे सत्यदेशकालादिति प्रतिषेधो विज्ञायते। अस्मादेव च प्रतिषेधादचित्तादिति स्वरूपग्रहणं न भवति। स्वरूपग्रहणे हि देशकालाभ्यां प्रसङ्गो प्रतिषेधं न कुर्यात्॥

बाल-मनोरमा

अचित्तादेशकालाट्ठक् १४५५, ४।३।९६

अचित्तादेश। देशकालव्यतिरिक्ताऽप्राणिवाचिनः ठक्स्यादुक्तविषये। अपूपाः भक्तिरिति। सामान्याभिप्रायं भक्तिरित्येकवचनं, "वेदाः माण"मितिवत्। पायसिक इति। पयो भक्तिरस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

महाराजाट् ठञ् ४।३।९७

महाराजशब्दात् ठञ् प्रत्ययो भवति सो ऽस्य भक्तिः इत्येतस्मिन् विषये। अणो ऽपवादः। महाराजो भक्तिरस्य माहाराजिकः। प्रत्ययान्तरकरणम् स्वरार्थम्।

न्यासः

महाराजट्ठञ्। , ४।३।९७

ननु च पूर्वसूत्रादेव ठगनुवर्तिष्यते, तेनापि हि महांराजिक इति सिध्यत्येव, तत्कथं ठञ् प्रत्ययान्तरं क्रियते? इत्याह-- "प्रत्ययान्तरकरणम्" इत्यादि। ञित्स्वरेणाद्युदात्तत्वं यथा स्यादिति प्रत्ययान्तरकरणम्। ठकि हि सति तद्धितस्य "कितः" ६।१।१५९ इत्यन्तोदात्तत्वं स्यात्॥

बाल-मनोरमा

सुधातुरकङ् च १०८१, ४।३।९७

सुधातुरकङ् च। चादिञिति। सुधातृशब्दात्षष्ठ()न्तादपत्येऽर्थे इञ्प्रत्ययः, प्रकृतेरकङादेशश्चेत्यर्थः। अकङो ङकार इत्, अकार उच्चारणार्थः। "ङिच्चे"त्यन्तादेशः। तदाह--सौधातकिरिति।

व्यासेति। व्यास, वरुड, निषाद, चण्डाल, बिम्ब-एभ्यश्च इञि प्रकृतेरकङादेश इत्यर्थः।

बाल-मनोरमा

महाराजाट्ठञ् १४५६, ४।३।९७

महाराजाट्ठञ्। "सोऽस्य भक्तिरित्यर्थे" इति शेषः। माहाराजिक इति। महाराजो भक्तिरस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

वासुदेवार्जुनाभ्यां वुन् ४।३।९८

वासुदेवार्जुनशब्दाभ्यां वुन् प्रत्ययो भवति सो ऽस्य भक्तिः इत्येतस्मिन् विषये। छाणोरपवादः। वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः। ननु च वासुदेवशब्दाद् गोत्रक्षत्रियाऽख्येभ्यः इति वुञस्त्येव, न च अत्र वुन्वुञोर् विशेषो विद्यते, किमर्थं वासुदेवग्रहणम्? संज्ञैषा देवताविशेषस्य न क्षत्रियाख्या। अल्पाच्तर २।२।३४, अजाद्यदन्तम् २।२।३३ इति च अर्जुनशब्दस्य पूर्वनिपातम् अकुर्वन् ज्ञापयति अभ्यर्हितं पूर्वम् निपतति इति।

न्यासः

वासुदेवार्जुनाभ्यां वुन्। , ४।३।९८

वासुदेवशब्दाद्()वृद्धाच्छस्यापवादः। अर्जुनशब्दादौत्सर्गिकस्याणः। ननु चार्जुनशब्द क्षत्त्रियाख्यः,तस्मादुत्तरसूत्रेण प्राप्तस्य वुञोऽपवादो युक्तः? एवं मन्यते-- बहुलग्रहणं तत्र क्रियते, तेनार्जुनशब्दाद्()नुञ्प्रत्ययस्य प्राप्तिरेव नास्ति, तस्मादस्मादणेव स्यात्, अतस्तदपवादो न्याय्यः। "ननु च" इत्यादि चोद्यम्। स्यादेतत्--- वुञ्वुनोर्विशेषोऽस्ति, अतो वासुदेवशब्दाद्()वुन् विधीयते? इत्याह-- "न चात्र" इत्यादि। वासुदेवशब्दस्य च वुञि वुनि वा सति नास्ति कश्चिद्विशेष इति। तथा ह्युभयत्र तदेवरूपम्, स एव स्वरः। योऽपि वुञि सति पुंवद्भावप्रतिषेधः "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" ६।३।३८ इति,स वुन्यपि लभ्यत एव "न कोपधायाः" ६।३।३६ इति। "संज्ञेषः" इत्यादिना, यदुक्तम्-- "ननु च वासुदेवशब्दाद्()गोत्रक्षत्रियाख्येभ्यः" ४।३।९९ इति वुञस्त्येव" इति, तन्निराकरोति। गोत्रक्षत्त्रियाख्येभ्यो वुञ् विधीयते। न च वासुदेवशब्दो गोत्राख्यं प्रातिपदिकम्, नापि क्षत्त्रियाख्यम्, तत्कुतो इत्यनेन "अल्पाच्तरम्" २।२।३४ इत्यनेन वार्जुशब्दस्य पूर्वनिपातमकुर्वतैतद्वि ज्ञापितम्--अभ्यर्हितं पूर्वं निपतति। तेन मातापितरौ, श्रद्धमेधे, दीक्षातपसी-- इत्यत्र शास्त्रादेवाभ्यार्हितस्य पूर्वनिपातः सिद्धो भवति। अभ्यर्हितत्वं तु वासुदेवशब्दस्य देवताविशेषत्वात्॥

बाल-मनोरमा

वासुदेवार्जुनाभ्यां वुन् १४५७, ४।३।९८

वासुदेव। "सोऽस्य भक्ति"रित्येव। वासुदेवक इति। वासुदेवो भक्तिरस्येति विग्रहः। एवमर्जुनकः। ननु वसुदेवस्यापत्य"मित्यर्थे "ऋष्यन्धकवृष्णिकुरुभ्यश्चे"ति वाष्र्णेयत्वादणि वासुदेवशब्दात् "गोत्रक्षत्रियाख्येभ्यो बहुलं वु"ञिति वुञैव सिद्धत्वाद्वासुदेवग्रहणं व्यर्थमिति चेत्, सत्यम्, अणन्तो वासुदेवशब्दोऽत्र न गृह्यते किंतु यस्मिन्समस्तं

वसति, यो वा समस्ते वसति स वासुः स चासौ देवश्चेति व्युत्पत्त्या वासुदेवशब्दोऽयं भगवति योगरूढ एवेति न दोषः। उक्तच भाष्ये-"नैषा क्षत्रियाख्या, संज्ञैषा तत्रभवतः" इति।

तत्त्व-बोधिनी

वासुदेवार्जुनाभ्यां वुन् ११३९, ४।३।९८

वासुदेवार्जुनाभ्यां बुन्। छाऽणोरपवादः। "अजाद्यदन्तम्", "अल्पाच्तर"मिति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याऽकरणं "सर्वतोऽभ्यर्हितं पूर्वं निपतती"ति ज्ञापनार्थम्। ननु वसुदेवस्यापत्यमित्यर्थे "ऋष्यन्धके"त्यणि वासुदेवशब्दो निष्पन्नः। तथा च तत्र "गोत्रक्षत्रियाख्येभ्यः"इत्युत्तरसूत्रेण वुञेवाऽस्तु , किमनेन वुना। न ह्मत्र वृद्धौ विशेष, प्रागेव वृद्धत्वात्। न च "वृद्धिनिमित्तस्ये"ति पुंवद्भावनिषेधो दोषः स्यादिति वाच्यं, वुन्यपि "न कोपधायाः इति नि,#एधस्येष्यमाणत्वात्। न वा स्वरे विशेषः, "ञ्नित्यादिर्नित्य"मिति तुल्यस्वरत्वात्। नापि "अभ्यर्हितं पूर्व"मिति ज्ञापनमेव तत्फलमिति वाच्यं, तथात्वे हि पूर्वनिपातप्रकरणे "अभ्यर्हित"मित्येव लाघवात्कुर्यादिति चेत्। अत्र भाष्यं---"संज्ञैषा भगवतः"इति। अयं भावः---"सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते।"इति स्मृतेः परमात्मा इह वासुदेवः। सर्वत्रासौ वसति, सर्वमत्र वसतीति वा व्युत्पत्त्या वासुः। बाहुलकादुण्। वासश्चासौ देवश्चेति विग्रहः। तथा च नेयं गोत्राख्या, नापि क्षत्रियाख्येति युक्त एव विन्विधिः। "भ्यर्हितं पूर्व"मिति तु प्रसङ्गाज्ज्ञापितं। तदप्यनित्यं "()आयुवमघोना"मित्यादिलिङ्गादित्यवधेयम्।

---

सूत्रम्

काशिका-वृत्तिः

गोत्रक्षत्रियाऽख्येभ्यो बहुलं वुञ् ४।३।९९

गोत्राऽख्येभ्यः क्षत्रियाऽख्येभ्यश्च प्रातिपदिकेभ्यः बहुलं वुञ् प्रत्ययो भवति सो ऽस्य भक्तिः इत्येतस्मिन् विषये। अणो ऽपवादः। वृद्धाच् छां परत्वाद् बाधते। ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः। औपगवकः। कापटवकः। क्षत्रियाऽख्येभ्यः नाकुलकः। साहदेवकः। साम्बकः। आख्याग्रहणं प्रसिद्धक्षत्रियशब्दपरिग्रहार्थं, यथाकथंचित् क्षत्रियवृत्तिभ्यो मा भूत्। बहुलग्रहणात् क्वचिदप्रवृत्तिरेव। पाणिनो भक्तिरस्य पाणिनीयः। पौरवीयः।

न्यासः

गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ्। , ४।३।९९

"ग्लौचुकायनकः। म्लौचुकायनकः" इति। ग्लुचुकम्लुचुकशब्दाभ्यां "प्राचावृद्धात् फिन्" ४।१।१६०तदन्ताद्()वुञ्। आख्याग्रहणं किमर्थम्? न गोत्रक्षत्त्रियेभ्य इत्येवोच्येत? इत्यत आह-- "आख्याग्रहणम्" इत्यादि। यद्याख्याग्रहणं न क्रियेत, ततो येऽपि यथाकथञ्चित् क्षत्त्रिये वर्तन्ते तेभ्योऽपि स्यात्, नेष्यते; तस्मात्
प्रसिद्धक्षत्त्रियपरिग्रहार्थमाख्याग्रहणं क्रियते। तेनह न भवति-- विद्वान् क्षत्त्रियो भक्तिरस्येति। न विद्वच्छब्दः क्षत्त्रियशब्द इति प्रसिद्धः। क्षत्त्रियशब्दस्य तु सामानाधिकरण्यात् क्षत्त्रिये वृत्तिर्गम्यते। "पाणिनीयः" इति। पाणिनोऽपत्यमित्यण्; "गाथिविदथ" ६।४।१६५ इत्यादिना प्रकृतिभावः, पाणिनो भक्तिरस्येति "वृद्धाच्छः" ४।२।११३ "पाणिनीयः"। पौरवो भक्तिरस्येति "पौरवीयः"॥

बाल-मनोरमा

गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् १४५८, ४।३।९९

गोत्रक्षत्रिया। गोत्रप्रत्ययान्तेभ्यः क्षत्रियवाचिभ्यश्चोक्तविषये बहुलं वुञ्स्यादित्यर्थः। इह न पारिभाषिकं गोत्रम्। छै बाधते इति। "औपगवक इत्यादी"विति शेषः। ग्लुचुकायनिरिति। "प्राचामवृद्धा"दिति फिनि ग्लुचुकायनिशब्दः। नाकुलक इति। क्षत्रियाख्योदाहरणम्।

तत्त्व-बोधिनी

गोत्रक्षत्रियाख्योभ्यो बहुलं वुञ् ११४०, ४।३।९९

वृद्धाच्छं बाधत इति। औपगवो भक्तिरस्य औपगवकः।

---

सूत्रम्

काशिका-वृत्तिः

जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने ४।३।१००

जनपदिनो ये बहुवचने जनपदेन समानशब्दास् तेषां जनपदवत् सर्वं भवति, प्रत्ययः प्रकृतिश्च सो ऽस्य भक्तिः इत्येतस्मिन् विषये। जनपदतदवध्योश्च इत्यत्र प्रकरणे ये प्रत्यया विहिताः, ते जनपदिभ्यो ऽस्मिन्नर्थे ऽतिदिश्यन्ते। जनपदिनो जनपदस्वामिनः क्षत्रियाः। अङ्गा जनपदो भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। तद्वतङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः। वाङ्गकः। सौह्मकः। पौण्ड्रकः। जनपदिनाम् इति किम्? पञ्चालाः ब्राह्मणा भक्तिरस्य पाञ्चालः। सर्वग्रहणं प्रकृत्यतिदेशार्थं, स च द्व्येकयोः प्रयोजयति, वृद्धिनिमित्तेषु च वुञादिषु विशेषो न अस्ति इति। मद्रवृज्योः कनि विशेषः। मद्रस्यापत्यं, द्व्यञ्मगधकलिङ्गसूरमसादण् ४।१।१६८, माद्रः। वृजिशब्दादपि, वृद्धेत्कोसलाजादाञ् ञ्यङ् ४।१।१६९, वार्ज्यः। स भक्तिरस्य इति प्रकृतिनिर्ह्रासे कृते, मद्रकः। वृजिकः। जनपदेन समानशब्दानाम् इति किम्? अनुष्णडो जनपदः पौरवो राजा, स भक्तिरस्य, पौरवीयः। बहुवचनग्रहणं समानशब्दताविषयलक्षणार्थम्। अन्यथा हि यत्र एव समानशब्दता तत्र एव अतिदेशः स्यात्, एकवचनद्विवचनयोर् न स्यात्, वाङ्गो वङ्गौ वा भक्तिरस्य इति। बहुवचने तु, बहुवचने समानशब्दानाम् एकवचनद्विवचनयोः सत्यपि शब्दभेदे ऽतिदेशो भवति। वाङ्गः वाङ्गौ वा भक्तिरस्य वाङ्गक।

न्यासः

जनपदिनां जनषदवत्सर्वं जनपदेन समानशब्दानां बहुवचने। , ४।३।१००

"{नास्ति--काशिका}एकशब्दाः" इति। एतेन समानशब्दोऽयमेकवाचीति दर्शयति। "प्रत्ययः प्रकृतिश्च" इति। सर्वशब्देन योऽर्थ उपात्तस्तमाचष्टे। "तद्वत् अङ्गा क्षत्त्रिया भक्तिरस्य" इति। अङ्गादिभ्यः क्षत्त्रियेभ्यो बहुष्वपत्येषु "द्व्यञ्मगध" ४।१।१६८ इत्यादिना विहितस्याणः "तद्राजस्य" २।४।६२ इत्यादिना लुक् क्रियते। बहुवचनेऽङ्गदयो जनपदिनो जनपदेन समानशब्दा भवन्ति। अत्र जनपदवृत्तिभ्योऽङ्गादिभ्यो यथा "सोऽस्य भक्तिः" ४।३।९५ इत्येतस्मिन् विषये "जनपदतदवध्योश्च" ४।२।१२३ इति वुञ् भवति, तथा जनपदवृत्तिभ्योऽपि --"पञ्चाला ब्राआह्मणाः"इति। यदा पञ्चालनिवासिषु साहचर्यात् पञ्चालादिशब्दो वत्र्तते, तदा भवन्ति ब्राआह्मणा जनपदेन बहुवचने समानशब्दाः, न तु ते जनपदिनः। तेनातिदेशाभावादणेव भवति-- "पाञ्चालः"। "सर्वग्रहणम्" इत्यादि। यदि सर्वग्रहणं न क्रियते, तदा प्रत्ययस्य विधीयमानतया प्राधान्यात् प्रधाने कार्यसम्प्रत्ययात् तस्यैवातिदेशः स्यात्, न प्रकृतेः। तस्माद्यथा प्रकृतेरप्यतिदेशो भवति तदर्थं सर्वग्रहणं क्रियते। "स च" इत्यादि। स च प्रकृत्यतिदेशः सर्वगर्हणं द्व्येकयोरेव प्रयोजयति, न बहुषु। जनपदशब्दो नात्र वृद्धः, तस्मादवृद्धो जनपदशब्दो दृश्यते। बहुवचने तु "तद्राजस्य बहुषु तेनैवास्त्रियाम्" २।४।६२ इति लुकि कृते विनाप्यतिदेशेनावृद्धः, अत एव भवतीति तत्र प्रकृत्यतिदेशोऽनर्थकः। ततो

नेतदर्थं सर्वग्रहणं कर्तव्यम्। "वृद्धिनिमित्तेषु" इत्यादि। वृद्धिनिमित्तेषु वुञादिष्वादिष्टायामवृद्धायां प्रकृतौ पुनर्वृद्धिभावात्। "प्रकृतिनिह्र्यासेकृते" इति सर्वग्रहणात्प्रकृत्यदेशेन निर्हासः। निह्र्यासोऽल्पतयाऽपक्षय इत्यर्थः। "माद्रः" इति। एताञ्च प्रकृतिमपेक्ष्य मद्र इत्येषा प्रकृतिरल्पा भवति। "वार्ज्यःर" इत्येताञ्च वृजिरिति। ननु वतेः सर्वसादृशस्यार्थत्वनाद्वतिनिर्देशेनैव प्रकृतेरतिदेशो भविष्यतीति, त()त्क सर्वग्रहणेन? नैतदस्ति; यतैव तत्र सर्वसादृश्यार्थे वतौ न प्रत्यार्थो देवतार्थेऽतिदिश्यते, तथेहापि जनपदरूपं जनपदिनि नातिदिश्यते। कस्मात् पुनस्तत्र प्रत्ययार्थो नातिदिश्यते? वतिना तयोर्भेदस्य प्रतिपादितत्वात्। वतिर्हि सादृश्ये रिधीयते, सादृस्यं च भेदाश्रयम्; यदि भवार्थस्यापि देवतार्थतया विपरिणामः स्यात्, तदा वतिरेव न स्यात्। तस्मादन्यस्य कार्यस्य सादृस्यं वतिराचष्टे, प्रत्ययार्थयोस्तु भेदम्, इहापि च जनपदजनपदिनोर्भेदमाचष्ट इति। असति सर्वग्रहणे जनपदरूपं जनपदरूपं जनपदिनि न लभ्यते। तस्मात् सर्वग्रहणं क्रियते। "बहुलग्रहणम्" इत्यादि। समानशब्दताया विषयप्रदर्शनं लक्षणम्। तदर्थं बहुवचनग्रहणम्। "अन्यथा हि" इत्यादि। बहुवचनग्रहणं न क्रियेतेत्यर्थः। "तत्रैव" इति। बहुवचने। बहुवचन एव तद्राजप्रत्ययस्य लुकि कृते समानशब्दता भवति, यतश्च तत्रैवातिदेशः स्यात्। "एकवचनद्विवचनयोर्न स्यात्" इति। तत्र समानशब्दतया अभावात्। "बहुवचने तु" इत्ादि। बहुवचनग्रहणे तु सति बहुवचने ये जनपदेन समानशब्दास्तेषां यत्र वा तत्र वातिदेशे विज्ञायमाने द्व्येकयोरप्यसौ सिद्धो भवति॥

बाल-मनोरमा

जनपदिना जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने १४५९, ४।३।१००

जनपदिनां। बहुवचने परे ये जनपदे समानशब्दाः=जनपदवाचिशब्देन समानः शब्दः=श्रवणं येषां तथाविधाः, तेषां जनपदिनां=जनपदस्वामिवाचिनां जनपदवत्=जनपदे इव सर्वं स्यादित्यर्थः। "जनपदतदवध्योश्चे"ति प्रकरणे ये प्रत्यया विहितास्ते भवन्ति, प्रकृतयोऽपि तथैव भवन्तीति तु "सर्व" शब्दाल्लभ्यते। तदाह--जनपदस्वामिवाचिनामित्यादिना। अङ्गा जनपद इति। दृष्टान्तार्थमिदम्। अङ्गनाम्नां राज्ञां निवासो जनपदः-अङ्गाः। "जनपदे लुप्" इति चातुरर्थिकस्य लुप्। स जनपदो भक्तिरस्येत्यर्थे "जनपदतदवध्योश्चे"ति वुञ्प्रत्यये "आङ्गकः" इति यथा तथा अङ्गदेशस्वामिनः क्षत्रिया अङ्गा भक्तिरस्येत्यर्थे क्षत्रियवाचकादङ्गशब्दाद्वुञि "आङ्गका" इति रूपमित्यर्थः। पञ्चाला ब्राआह्णा इति। अभेदोपचारादिह ब्राआह्णेषु पञ्चालशब्दः। तत्रातिदेशा।त्रभावादणेव भवति। पौरव इति। पौरवशब्दो न जनपदवृत्तिरिति भावः। बहुवचने किम्?। एकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो भवतचि। यथा आङ्गो वा आङ्गौ वा भक्तिरस्य आङ्गक इति। प्रकृतिश्चेति किम्?। मद्राणां राजा माद्रः। "द्व्यञ्मगधे"त्यण्। माद्रो भक्तिरस्येत्यर्थे अतिदेशान्माद्रस्य मद्रत्वे सति "मद्रवृज्यो"रिति कनि "माद्रक" इति सिध्यति।

तत्त्व-बोधिनी

जनपदिनां जनपदवत्सर्व जनपदेन समानशब्दानां बहुवचने ११४१, ४।३।१००

जनपदिनां। स्वस्वामिभावसंबन्धे मत्वर्थयं दर्शयित---जनपदस्वमिवाचिनामिति। प्रत्ययः प्रकृतिश्चेति। अनेन सर्वशब्दस्यार्थो दर्शितः। असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यान्न, तु प्रकृतेरिति हरदत्तः़ष। अत्र वार्तिककारः सर्वशब्दस्य प्रयोजनमाह---"सर्ववचनं प्रकृतिनिह्र्यासार्थं, तच्च मद्रवृज्यर्थ"मिति। अयं भावः--- वृद्धिनिमित्तेषु वुञादिष्वतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्धा भाव्यमिति विशेषस्य तत्र दुर्लभत्वान्मद्रवृज्योः कनि विशेषो बोध्यः। सोऽप्यबहुत्वे एवेति। निह्र्यासोऽपचयोऽल्पता। तथा हि मद्राणां राजा। "व्यञ्मगधे"त्यण्। माद्रः। वजिशब्दातच् "वृद्धेत्कोशले"ति ञ्यङ्। वार्ज्यः। स भक्तिरस्येति प्रकृतिनिह्र्यासे--मद्रकः। वृजिकः। "मद्रवृज्योः कन्। अन्यथा माद्रकः वाञ्यक इति स्यात्। आङ्गक इति। "जनपदतदवध्योश्च" "अवृद्धादपी"ति वुञ्। अङ्गशब्दात्स्वामिवाचिनो

बहुवचनान्तादणि प्राप्ते वुञतिदिश्यते। पञ्चाला ब्राआह्णा इति। अभेदोपचारद्ब्राआह्णेषु पञ्चालशब्दस्य वृत्तिः। बहुवचनग्रहणं किम्()। एकवचनद्विवचनयोः सत्यपि शब्दभेदे अतिदेशो यथा स्यात्। आह्गः आङ्गौ वा भक्तिस्य आङ्गकः। इह वृद्धाच्छ#ए प्राप्ते वुञ्।

---

सूत्रम्

काशिका-वृत्तिः

तेन प्रोक्तम् ४।३।१०१

तेन इति तृतीयासमर्थात् प्रोक्तम् इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकर्षेण उक्तम् प्रोक्तम् इत्युच्यते, न तु कृतम्, कृते ग्रन्थे ४।३।११६ इत्यनेन गतार्थत्वात्। अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः। पाणिनीयम्। आपिशलम्। काशकृत्स्नम्।

लघु-सिद्धान्त-कौमुदी

तेन प्रोक्तम् ११११, ४।३।१०१

पाणिनिना प्रोक्तं पाणिनीयम्॥

न्यासः

तेन प्रोक्तम्। , ४।३।१०१

"प्रकर्षेणोक्तम्" इति। प्रकर्षः = अतिशयः,तेन व्याख्यातं तदध्यापितं वा "प्रोक्तम्" इत्युच्यते। "न तु कृतम्" इति। न तु कृतमुत्पादितं प्रोषतमित्युच्यते। कस्मादित्याह-- "कृते ग्रन्थे" ४।३।११६ इति गतार्थत्वात्। कथं माथुरीत्यण्, यावता वृ()धाच्छेनैव भवितव्यम्? नैष दोषः; "कलापिनोऽण्" ४।३।१०८ इत्यत्राण्ग्रहणस्यान्येभ्यो भवतीत्येतत् प्रयोजनं वक्ष्यति, तेन माथुरशब्दादप्यणभवति। "पाणिनीयम्" इति। पाणिशब्दात् "वृद्धाच्छः" ४।२।११३ इति च्छः। "आपिशलम्,कालकृत्स्नम्" इति। आपिशलिकाशकृत्स्निशब्दाभ्यां "इञश्च" ४।२।१११ इत्यण्॥

बाल-मनोरमा

तेन प्रोक्तम् १४६०, ४।३।१०१

तेन प्रोक्तम्। अस्मिन्नर्थे तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। पाणिनीयमिति। "व्याकरण"मिति शेषः। वृद्धाच्छः। प्रथमं प्रकाशितं--प्रोक्तम्। नेह--"देवदत्तेनाद्यापितम्"।

तत्त्व-बोधिनी

तेन प्रोक्तम् ११४२, ४।३।१०१

तोन प्रोक्तम्। प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतं, "कृते ग्रन्थे"इत्यनेन गतार्थत्वात्। पाणिनिना प्रोक्तमिति। स्वयमन्येवा वा कृतं व्याकरणमध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः। प्रेति किम्()। देवदत्तेनाध्यपितं। प्रख्यातस्यैव ग्रन्थस्याध्यापनमिति नानेन प्रत्ययः।

---

सूत्रम्

काशिका-वृत्तिः

तित्तिरिवरतन्तुखण्डिकौखाच् छण् ४।३।१०२

तित्तिर्यादिभ्यः शब्देभ्यः छण् प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये। अणो ऽपवादः। तित्तिरिणा प्रोक्तम् अधीयते तैत्तिरीयाः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः। छन्दसि च अयम् इष्यते। तित्तिरिणा प्रोक्तः श्लोकः इत्यत्र न भवति। शौनकादिभ्यश् छन्दसि ४।३।१०६ इत्यत्र अस्य अनुवृत्तेः छन्दो ऽधिकारविहितानां च तद्विषयता इष्यते।

न्यासः

तित्तिरिवरतन्तुखण्डिकोखाच्छणः। , ४।३।१०२

"तैत्तिरीयाः" इति। छण्प्रत्ययः, तेभ्यः "तदधीते" ४।२।५८ इत्यण्, तस्य "प्रोक्ताल्लुक्" ४।२।६३ इति लुक्। "छन्दोब्राआह्मणानि च तद्विषयाणि" (४।२।६६ इति तद्विषयता। "छन्दसि" इत्यादि। कथं पुनश्चछन्दसि लभ्यते? न हि च्छन्दोग्रहणमस्तीत्याह-- "शौनकादिभ्यः" इत्यादि॥

बाल-मनोरमा

तित्तिरिवरतन्तुखण्डिकोखाच्छण् १४६१, ४।३।१०२

तित्तिरिवरतन्तु। तेन प्रोक्त"मित्येव। तित्तिरि, वरतन्तु, खण्डिक, उख-एभ्य उक्तविषये छण्स्यादित्यर्थः। इत आरभ्य "तेनैकदि"गितिपर्यन्तं प्रोक्ते वेदे भवन्ति, "शौनकादिभ्यः छन्दसी"ति छन्दोग्रहणस्य ततः पूर्व ततद उत्तरं चापकर्षानुवृत्त्योरभ्युपगमात्। अत्र छणादिप्रत्ययान्तानामेषां केवलानां न प्रयोगः, किंत्वध्येतृवेदितृप्रतययशिरस्काणामेवेत्याह--छन्दोब्राआह्मणानीति। तद्विषयतेति। अध्येतृवेदितृप्रत्ययशिरस्कत्वनियम इत्यर्थः। तैत्तिरीया इति। प्रोक्ते वेदे छण्। ईयः। तैत्तिरीयः=शाखाभेदः, तमधीयते विदन्ति वेत्यर्थे अण्। "प्रोक्ताल्लु"गिति तस्य लुगिति भावः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः। तित्तिरिणा प्रोक्तः श्लोक" इत्यत्र तु न, छन्दसीत्यनुवृत्तेः। छन्दःशब्देन च कल्पसूत्राणामपि ग्रहणं, तेषां सर्वशाखागतविधिवाक्यसङ्ग्रहात्मकत्वात्। काश्यप। "तेन प्रोक्त"मित्येव। छस्यापवादः।

तत्त्व-बोधिनी

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ११४३, ४।३।१०२

तित्तिरिवर। अणोऽपवादः। तद्विषयतेति। "शौनकादिभ्यश्छन्दसी"त्यत्रास्यानुवृत्तिस्तित्तिरिणा प्रोक्तः श्र्लोक इत्यत्र न भवतीति भावः। तैत्तिरीयै इति। "प्रोक्ताल्लु"गित्यध्येतृप्रत्ययस्य लुक्॥ एवमग्रेऽपि।

---

सूत्रम्

काशिका-वृत्तिः

काश्यपकौशिकाभ्याम् ऋषिभ्यां णिनिः ४।३।१०३

काश्यपकौशिकाभ्याम् ऋषिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये। छस्य अपवादः। णकार उत्तरत्र वृद्ध्यर्थः। कल्पस्ताभ्यां प्रोक्तः इति स्मर्यते। तस्य अपि तद्विषयता भवत्येव। शौनकादिभ्यश् छन्दसि ४।३।१०६ इत्यत्र अनुवृत्तेः छन्दो ऽधिकारविहितानां च तत्र तद्विषयता इष्यते। काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः। कौशिकिनः। ऋषिभ्याम् इति किम्? इदानींतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम्।

न्यासः

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः। , ४।३।१०३

"णकार उत्तरत्र वृद्ध्यर्थः" इति। उत्तरेषु योगेषु वृद्धिर्यथा स्यात्। इह हि णकारस्य प्रयोजनं नास्ति, तस्य हि वृद्धिरेव

प्रयोजनम्। काश्यपकौशिकशब्दौ वृद्धिमन्तौ। "तस्यापि च" इत्यादि। ननु च च्छन्दोब्राआह्रणादीनां तद्विषयता युक्ता, तत्कथं कल्पस्यापि सा भवति? इत्याह-- "शौनकादिभ्यः" इत्यादि। स्यादेतत्-- यद्यपीदं न सिद्ध्यत्येव। न हि शौनकादिभ्यश्छन्दसि" ४।३।१०६ इत्यत्रानुवत्र्तते, तथापि छन्दोब्राआह्रणादीनां तद्विषयतोच्यमाना कल्पस्य न सिध्यत्येव। नहि शौनकादिसूत्रा ४।३।१०६ नुवृत्तौ सत्यामस्य योगसय् कल्पश्छन्दोभावं ब्राआह्रणभावमापद्यत इत्याह-- "छन्दोऽधिकारविहितानञ्च" इत्यादि। कथं पुनरिष्यमाणाऽपि छन्दोऽधिकारविहितानां स्वर्यते। तेन "शौनकादिभ्यश्छन्दसि" ४।३।१०६ इतीदम्प्रकृतयो विहिताः प्रोक्तप्रत्ययाः, तेषां सर्वेषामेव कल्पादावपि तद्विषयता भवति। अथ गुणकल्पनया कल्पादीनामपि छन्दस्त्वं विवक्ष्यते। ननुच "छन्दोब्राआह्रणानि च" ४।२।६५ इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् तेनैव प्रागेव कल्पादेस्तद्विषयता प्रतिपादिता, तत्किमर्थं पुनरनेन प्रकारेण प्रतिपाद्यते। तत्र वा कल्पादेस्तद्विषयताप्रतिपादनार्थश्चकारः कत्र्तव्यः, अयं वा प्रकार आश्रयितव्य इति विकल्पप्रदर्शनार्थम्। "इदानीन्तनेन" इत्यादि। इदानीन्तनो यः काश्यपः स काश्यपगोत्रप्रभवत्वात् काश्यप इत्युच्यते, तथेदानीन्तनो यः कौशिकः स कौशिकगोत्रप्रभवत्वात् कौशिक इत्युच्यते; तत्र यदि ऋषिग्रहणं ऋषिशब्दादेव, तथा हि प्रवराध्याये ये पठ()न्ते त ऋषय इति, इमावपि तत्र पठ()एते एव? नैष दोषः; विशेषणोपादानसामथ्र्यादयमृषिशब्दः क्रियाशब्दो विज्ञायते-- ऋषिर्दर्शनादिति। तेन यावनन्यपुरुषसाधारणेनौपदेशिकेन दर्शनेन तद्व्नतौ काश्यपकौशिकशब्दौ तत इदं प्रत्ययविधानम्; न चेदानीन्तनौ काश्यपकौशिकशब्दावेवंविधौ, ताभ्यां छ एव भवति॥

बाल-मनोरमा

काश्यपरकौशिकाभ्यामृषिभ्यां णिनिः १४६२, ४।३।१०३

काश्यपिन इति। काश्यपशब्दाण्णिनिः। णकार इत्। नकारादिकार उच्चारणार्थः। काश्यपिन्शब्दात् "प्रोक्ताल्लु"गित्यध्येतृप्रत्ययस्याऽणो लुगिति भावः। एवं कोशिकिनः। ऋषिभ्यां किम्?। इदानींतनेन काश्यपेन प्रोक्तं काश्यपीयम्।

तत्त्व-बोधिनी

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ११४४, ४।३।१०३

काश्यप। छस्यापवादः। णकार उत्तरत्र वृद्यर्थः। ननु "वृद्धिनिमित्तस्ये"ति पुंवद्भावनिषेधोऽत्र फलमस्तीति चेत्। अत्राहुः--- णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामप्रवृत्तेः। प्रवृत्तावपि "जातेस्चे"ति सिद्धत्वात्, चरणत्वेन जातित्वादिति। ऋषिभ्यामिति किम्()। इदानींतमेन गोत्रकाश्यपेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम्।

---

सूत्रम्

काशिका-वृत्तिः

कलापिवैशम्पायनान्तेवासिभ्यश् च ४।३।१०४

कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनां च ये वाचकाः शब्दास् तेभ्यो णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये। अणो ऽपवादः। छं तु परत्वाद् बाधते। तत्र कलाप्यन्तेवासिनश्चत्वारः हरिद्रुः, छगली, तुम्बुरुः, उलपः इति। वैशम्पायनान्तेवसिनः नव आलम्बिः, पलङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी इति। प्रत्यक्षकारिणो गृह्यन्ते न तु व्यवहिताः शैष्यशिष्याः। कुतः? कलापिखाण्डायनग्रहणात्। तथा हि वैशम्पायनान्तेवासी कलापी, तदन्तेवासिनो वैशम्पायनान्तेवासिन एव भवन्ति, किं कलापिग्रहणेन? तथा वैशम्पायनान्तेवासी कठस् तदन्तेवासी खाण्डायनः, तस्य किं शौनकादिसु पाठेन? तदेतत् प्रत्यक्षकारिग्रहणस्य लिङ्गम्। कलाप्यनतेवासिभ्यः

तावत् हरिद्रुणा प्रोक्तम् अधीयते हारिद्रविणः। तौम्बुरविणः। औलपिनः। छङ्गलिनः ढिनुकं वक्ष्यति।
वैशम्पायनान्तेवासिभ्यः आलम्बिनः। पालङ्गिनः। कामलिनः। आर्चाभिनः। आरुणिनः। ताण्डिनः। श्यामायनिनः।
कठाल्लुकं वक्ष्यति, कलापिनश्चाणम्। हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू। उलपेन चतुर्थेन कालापकम् इह उच्यते।
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ। ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयो ऽपरे। श्यामायन उदिच्येषु उक्तः
कठकलापिनोः। चरकः इति वैशम्पायनस्याख्या, तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरकाः इत्युच्यन्ते।
न्यासः
कलापिवैशम्पायनान्तेवासिभ्यश्च। , ४।३।१०४

अभिधानेऽभियोपचारात् कलापिवैशम्पायनान्तेवास्यभिधायिनः शब्दा इह कलापिवैशम्पायनान्तेवासिशब्देन निर्दिष्टाः।
अत एवाह-- "कलाप्यन्तेवासिनाम्" इति। ननु च ये व्यवहिताः शिष्यशिष्याः, ते कलापिवैशम्पायनान्तेवासिन एव
भवन्ति, तदयुक्तमुक्तम्-- कलाप्यन्तेवासिनश्चत्वारः,वैशम्पायनान्तेवासिनो नव? इत्याह-- "प्रत्यक्षकारिणःर" इत्यादि।
करोतिरत्राध्ययने वत्र्तते। यैः साक्षादधीतं ते प्रत्यक्षकारिणः। इहान्तेवासिनो गृह्णन्ते चैतावन्त एवेति। किमत्रायुक्तम्?
कुत इह साक्षात्कारिणो गृह्णन्ते, न हि व्यवहिता इत्यत्र हेतुं पृच्छति। "कलापिखाण्डायनग्रहणात्" इति। हेतुनिर्देशः।
"{तथा हि--काशिका}तथा च" इत्यादि। अस्यैव विवरणम्। वैशम्पायनसय् कलाप्यन्तेवासी, तस्य येऽन्तेवासिनस्ते
वैशम्पायनान्तेवासिनो भवन्त्येव। यदि तत्र ये व्यवहितास्तेऽप्यन्तेवासिनो गृह्येरन् कलापिग्रहणमनर्थकं स्यात्,
"वैशम्पायनान्तेवासिभ्यः" इत्येवं ब्राऊयात्। तथा वैशम्पायनान्तेवासी खाण्डायनः;तत्र यदि व्यवहिता अपिगृह्येरन्, ततो
वैशम्पायनान्तेवासित्वादनेनैव सूत्रेण सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फल एव स्यात्। तस्मादिहापि
कलापिग्रहणं शौनकादिषु खाण्डायनशब्दस्य पाठ एतदुभयमपि साक्षात्कारिग्रहणस्य लिङ्गं ज्ञापकम्। "हारिद्रविणः"
इत्यादि। हरिद्रुप्रभृतिभ्यः प्रोक्तार्थे णिनिः,तदन्तात् "तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य "प्रोक्ताल्लुक्" "उलपेन
चतुर्थेन" इति। सहार्थे तृतीया। "कालापकम्" इति। कलापिन इदं कालापकम्, "गोत्रचरणाद् वुञ्" ४।३।१२६। ननु च
"धर्माम्नाययोर्वुञ्" (वा।४७६), न चेमे शिव्या धर्माम्नायाः,तत्कथं वुञ्? एवं तर्ह्युपमानाद्भविष्यतीति। कालापकमिव
धर्मवच्छिष्या उच्यन्ते। यथा धर्मः कलापिसम्बन्धी, तथा शिष्या इत्युच्यत उपमानार्थः। "आलम्बिर्नाम प्राचां देशः,
तत्रोत्पन्नः "चरकः"। एवं "पलङ्गकमलावुभौ"। प्राचामेवत्रयः। एते प्राच्याः वैशम्पायनशिष्याः
"ऋचाभारुणिताण्ड()आश्च मध्यमीयास्त्रयोऽपेर" चरकाः। मध्यदेशे भवा मध्यमीयाः। गहादिषु "मध्यमध्यमञ्चाण्
चरणे" (ग।सू।९९) इति पठ()ते। तस्यायमर्थः-- मध्यशब्दो मध्यमभावमापद्यते, छप्रत्ययश्च ततो भवति, चरणे तु
प्रत्ययार्थेऽण् च भवतीति। तत्र यदा ऋचाभादीनां चरणत्वं न विवक्ष्यते,तदा छे कृते मध्यमीया इति भवति।
चरणविवक्षायां त्वणि कृते माध्यमा इति भवति। उदक्षु भवा उदीच्याः, "द्युप्रागपाग्" ४।२।१०० इत्यादिना यत्। उदीच्येषु
मध्ये श्यामायनिश्चरकः।कठकलापिनावप्युदीच्येषु चरकौ, अपरस्याप्युक्तम्-- "कलापिनोऽण्" ४।३।१०८ इति। ननु च
वैशम्पायनान्तेवासिनां कठेनैव चरक इत्येषाख्या, तत्कथं चरक इत्युच्यत? इत्याह-- "चरक इति वैशम्पायनस्य"
इत्यादि। यद्यपि तेषां चरक इत्याख्यानं न भवति, तद्गुरोस्तु वैशम्पायनस्य भवति, तत्सम्बन्धेन तच्छिष्या अपि
तथोच्यन्ते॥
बाल-मनोरमा
कलापिवैशम्पायनान्तेवासिभ्यश्च १४६३, ४।३।१०४

कलापि। "तेन प्राक्त"मित्येव। कलापिशिष्यवाचिभ्यो, वैशम्पायनशिष्यवाचिभ्यश्च णिनिः स्यादित्यर्थः।
कलाप्यन्तेवासिभ्य इति। "उदाह्रियते" इति शेषः। हारिद्रविण इति। हरिद्रुर्नाम कलापिनः शिष्यः। ततः प्रोक्ते णिनिः।
"ओर्गुणः"। आदिवृद्धिः। हरिद्रविन्शब्दादध्येत्रणः "प्रोक्ताल्लु"हिति लुगिति भावः। हरिद्रुः, छगली, तुम्बुरुः, उलप इति

चत्वारः कलापिशिष्याः। तुम्बुरुणा प्रोक्तमधीयते तौम्बुरविणः। छगलिनस्तु ढिनुग्वक्ष्यते। औलपिनः। वैशम्पायनान्तेवासिभ्य इति। "उदाह्रियते" इति शेषः। आलम्बिन इति। आलम्बिः, कलिङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड()ः, श्यामायनः, कठः, कलापी इति नव वैशम्पायशिष्याः। तत्र आलम्बिशब्दादध्येत्रणः प्रोक्ते णिनि। आलम्बिन्शब्दादध्येत्रणः "प्रोक्ताल्लु"गिति लुक्। आलम्बिनः, कालिङ्गिनः, कामलिनः, आर्चाभिनः, आरुणिनः, ताण्डिनः। अत्र "आपत्यस्ये"ति यलोपः। श्यामायनिनः। कठात्तु लुग्वक्ष्यते। कलापिनस्त्वण्वक्ष्यते। वैशम्पायनशिष्यः कलापी। तता च कलाप्यन्तेवासिनां वैशम्पायनशिष्यत्वादेव सिद्धे पृथग्ग्रहणात्तच्छिष्यशिष्याणां न ग्रहणमिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

कलापिवैशम्पयनान्तेवासिभ्यश्च ११४५, ४।३।१०४

कलापिवेशंपायना। अणोऽपवादः छं तु परत्वाद्बाधते। कलाप्यन्तेवासिनश्चत्वारः। हरिद्रुः छगली तुम्बुरुः उलप इति। वैशंपायनान्तेवासिनस्तु नव आलम्बिः कलिङ्गः कमलः ऋचाभः आरुणिः ताण्ड()ः श्यामायनः कठः कलापी-इति। हारिद्रविण इति। एवं तौम्बुरविणः, औलपिनः छगलिनस्तु ढिनुकं वक्ष्यति। आलम्बिन इति। एवं कालिङ्गिनः कामलिनः आर्चाभिनः आरुणिनः ताण्डिनः श्यामायनिनः। कठाल्लुकं वक्ष्यति, कलापिनश्चाणम्। याज्ञवस्क्याश्मरथ्यशब्दौ कण्वादी, तेन ताभ्यां यञन्ताभ्यां वृद्धाच्छो न भवतीत्यशयेनाह अणि आपत्यस्येतीति। "यज्ञवस्क्यादयो ह्यचिरकालाः" इति भारतादिषु व्यवहारः, स एवानुमृत सूत्रकृत।

---

सूत्रम्

काशिका-वृत्तिः

पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ४।३।१०५

प्रत्ययार्थविशेषणम् एतत्। तृतीयासमर्थात् प्रोक्ते णिनिः प्रत्ययो भवति यत् प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास् ते भवन्ति। पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। ब्राह्मणेषु तावत् भाल्लविनः। शाट्यायनिनः। ऐतरेयिणः। कल्पेषु पैङ्गी कल्पः। आरुणपराजी। पुराणप्रोक्तेषु इति किम्? याज्ञवल्कानि ब्राह्मणानि। आश्मरथः कल्पः याज्ञवल्क्यादयो ऽचिरकाला इत्याख्यानेषु वार्ता। तथा व्यवहरति सूत्रकारः। तद्विषयता कस्मान् न भवति? प्रतिपदं ब्राह्मणेसु यः प्रत्ययस् तस्य तद्विषयता विधीयते णिनेः। अयं तु याज्ञवल्क्यशब्दस्य कण्वादिषु पाठादण्। न वा ऽयं योगश् छन्दो ऽधिकारम् अनुवर्तयति, तेन कल्पेष्वपि न भवति। पुराण इति निपातनात् तुडभावः। न वा अत्यन्तबाधैव, तेन पुरातनम् इत्यपि भवति।

न्यासः

पुराणप्रोक्तेषु ब्राआह्णकल्पेषु। , ४।३।१०५

"भाल्लविनः"इति। भाल्लवः, शाट()आयनः,ऐतरेय-- इत्येतेभ्यः प्रोक्तार्थे णिनिः। तदन्तात् "तदधीते" ४।२।५८ इत्युत्पन्नस्य "पोक्ताल्लुक्" ४।२।६३ "छन्दोब्राआहमणानि" ४।२।६५ इत्यादिना तद्विषयता। "पैङ्गी" इति। "आरुणपराजी" इति। पिङ्गारुणपराजशब्दाभ्यां णिनिः। "याज्ञवल्कानि" इति। "आश्मरथः" इति। याज्ञवल्क्य()आरव्यशब्दाभ्यां गर्गादियञन्ताभ्यां "कण्वादिभ्यो गोत्रे" ४।२।५८ इत्युत्पन्नस्य, "आपत्यस्य" ६।४।१५१ इत्यादिना यलोपः। ननु याज्ञवल्कादीन्यपि पुराणप्रोक्तान्येव ब्राआह्णानि, ब्राआह्णान्तरैः पुराणप्रोक्तेस्तुल्यत्वात्? इत्याह-- "याज्ञवल्क्य" इत्यादि। आख्यानेषु ह्येषा वात्र्ता -- याज्ञवल्क्यादयोऽपरकालाः प्रवक्तारोऽन्येभ्यः प्रवक्तृभ्यः। तथा

च वस्तुत्वमनपेक्ष्य व्यवहरति सूत्रकार इत्यदोषः। "तद्विषयता कस्मान्न भवति" (इति)। "छन्दोब्राआह्मणानि" ४।२।६५ इत्यादिनेति भावः। "प्रतिपदम्" इत्यादि। लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) हि प्रतिपदं विशेषणम्। ब्राआह्मणमुच्चार्य ब्राआह्मणेषु यः प्रत्ययो विहितस्तस्य तद्विषयता विधीयते। तस्मात् तद्विषयतास्य न भवति। कल्पेषु तर्हि कस्मान्न भवति; यथा-- काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिन इत्यत्र? "न चायम्" इत्यादि। छन्दोऽधिकारे ये योगस्तद्विहितस्य प्रत्ययस्य तद्विषयता भवति, न चायं योगश्छन्दोऽधिकारमनुवर्त्तते;तेनैतद्विहितस्य प्रत्ययस्याध्येतृवेदितृविषयता कल्पेषु न भवति-- पैङ्गी कल्पः, आरुणपराजी कल्द इति। पुराण इति कोऽयं शब्दः, यावता "सांयचिरम्" (४।३।२३) इत्यादिना ट()उट()उलोः सन्नियोगेन तुटि कृते पुरातनमिति भवितव्यम्? इत्यत आह-- "पुराण इति निपातनात् तुडभावः (इति)। यद्येवम्, न भवति पुरातनम्? इत्याह-- "{न वा काशिका}न च" इत्यादि। ननु "बाधकान्यपि निपातनानि" (वी।प।वृ।१०९) इत्यतो भवितव्यमेव वाचकेनेति? अवाचकान्यपि (नी।प।वृ।११०)। अबाधकान्यपि भवन्ति, एतच्च "शदेरगतौ तः" ७।३।४२ इत्यत्र प्रतिपादितम्॥

बाल-मनोरमा

पुराणप्रोक्तेषु ब्राआह्मणकल्पेषु १४६४, ४।३।१०५

पुराणप्रोक्तेषु। "तेन प्रोक्त"मिति, "णिनि"रिति चानुवर्तते। मन्त्रव्यतिरिक्तवेदभागा ब्राआह्मणानि। बोधायनादिकल्पसूत्राणिकल्पाः। तथाभूतेषु पुरातनमुनिप्रोक्तेषु ग्रन्थेषु वाच्येषु तृतीयान्ताण्णिनिः स्यादित्यर्थः। तदाह-- तृतीयान्तादिति। यत्प्रोक्तमिति। सामान्याभिप्रायमेकवचनम्। प्रत्ययाभिधेयं यत्प्रोक्तं तत्पुरातनमुनिप्रोक्तब्राआह्मणकल्पात्मकं चेदिति यावत्। "पुराणप्रोक्त"मित्येतद्व्याचष्टे--पुराणेनेति। ब्राआह्मणे उदाहरति-- भल्लु-भाल्लविन इति। भल्लु इति प्रकृतिनिर्देशः। भल्लुना पुरातनमुनिना प्रोक्तान्ब्राआह्मणभागानधीयते इत्यर्थो प्रोक्तार्थणिनिः। भाल्लविन्शब्दादध्येत्रणो लुकि "भाल्लविन" इति रूपमिति भावः। ब्राआह्मणे उदाहरणान्तरमाह-- शाठ()आयन शाठ()आयनिन इति। शाठ()आयनेति प्रकृतिनिर्देशः। शाठ()आयनेन पुरातनमुनिना प्रोक्तान्ब्राआह्मणभागानधीयते इत्यर्थे प्रोक्तार्थणिनि प्रत्यये शाठ()आयनिन्शब्दाध्येत्रणो लुकि "शाठ()आयनिन" इति रूपमित्यर्थः। कल्पे इति। "उदाह्रियते" इति शेषः। पिङ्ग-पैङ्गी कल्प इति। पिङ्गेति प्रकृतिनिर्देशः। पिङ्गेन पुरातनमुनिना प्रोक्त इत्यर्थे णिनौ रूपम्।

---

सूत्रम्

काशिका-वृत्तिः

शौनकाऽदिभ्यश् छन्दसि ४।३।१०६

शौनक इत्येवम् आदिभ्यः णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये छन्दस्यभिधेये। छाणोरपवादः। शौनकेन प्रोक्तम् अधीयते शौनकिनः। वाजसनेयिनः। छन्दसि इति किम्? शौनकीया शिक्षा। कठशाठ इत्यत्र पठ्यते तत्संहतार्थं, केवलाद् धि लुकं वक्ष्यति। कटशाठाभ्यां प्रोक्तम् अधीयते काठशाठिनः। शौनक। वाजसनेय। साङ्गरव। शाऽर्ङ्गरव। साम्पेय। शाखेय। खाण्डायन। स्कन्ध। स्कन्द। देवदत्तशठ। रज्जुकण्ठ। रज्जुभार। कठशाठ। कशाय। तलवकार। पुरुषांसक। अश्वपेय। शौनकादिः।

न्यासः

शौनकादिभ्यश्छन्दसि। , ४।३।१०६

"छाणोरपवादः" इति। ये वृद्धास्तेभ्यश्छस्यापवादः, शेषेभ्यस्त्वणः। "शौनकिनः। वाजसनेयिनः" इति। शौनकेन प्रोक्तं

वाजसनेयेन प्रोक्तमिति णिनिः। तदन्तात् ४।२।५८ इत्यण्, तस्य "प्रोक्ताल्लुक्" ४।२।६३, पूर्ववत् तद्विषयता। "केवलाद्धि" इत्यादि। तत् संहतार्थमित्यत्रायं हेतुः। यस्मात् केवलात् कठाल्लकं वक्ष्यति, तस्मात् कठशाठ इति यदत्र पठ()ते तत्संहतार्थम्॥

बाल-मनोरमा

शौनकादिभ्यश्छन्दसि १४६५, ४।३।१०६

"छन्दोब्राआह्मणानि च तद्विषयाणी"त्यध्येतृप्रत्ययान्तत्वनियमस्तु कल्पेषु न सर्वत्र प्रवर्तत इति "छन्दोब्राआह्मणानी"ति सूत्रेभाष्ये स्पष्टम्। याज्ञवल्कानीति। याज्ञवल्क्येन प्रोक्तानीत्यर्थः। आश्मरथ इति। आश्मरथ्येन प्रोक्त इत्यर्थः। यलोप इति। यज्ञवल्का()आरथशब्दौ कण्वादी। ताभ्यां यञन्ताभ्यामणि "आपत्यस्य चे"ति यलोप इत्यर्थः। याज्ञवल्क्याऽऽश्मरथ्यावाधुनिकावित्यभिमानः। भाष्ये तु शाठ()आयनादितुल्यकालत्वाद्याज्ञवल्क्यादिभ्यो णिनिप्रतिषेध इति तद्विषयता च नेति वचनद्वयमारब्धमित्यास्तां तावत्।

---

सूत्रम्

काशिका-वृत्तिः

कठचरकाल् लुक् ४।३।१०७

कठचरकशब्दाभ्यां परस्यप्रोक्तप्रत्ययस्य लुग् भवति। कठशब्दाद् वैशम्पायनान्तेवासिभ्यः इति णिनेः, चरकशब्दादप्यणः। कठेन प्रोक्तम् अधीयते कठाः। चरकाः। छन्दसि इत्येव। काठाः। चारकाः।

न्यासः

कठचरकाल्लुक्। , ४।३।१०७

"कठाः, चरकाः" इति। प्रोक्तप्रत्ययस्य लुकि कृते यो ह्यध्येतर्यण् भवति तस्यापि प्रोक्ताल्लुक् ४।२।६३। पूर्ववत् तद्विषयता॥

बाल-मनोरमा

कठचरकाल्लुक् १४६६, ४।३।१०७

कठचरकाल्लुक्। प्रोक्तप्रत्ययस्येति। प्रकरणलभ्यम्। कठा इति। वैशम्पायनान्तेवासित्वलक्षणणिनो लुक्। अध्येत्रणस्तु "प्रोक्ताल्लु"गिति लुक्। चराका इति। चरकेण प्रोक्तमधीयते। इत्यर्थः। प्रोक्ताणोऽनेन लुक् अध्येत्रणः प्रोक्ताल्लुक्।

तत्त्व-बोधिनी

कठचरकाल्लुक् ११४६, ४।३।१०७

कठचरकाल्लुक्। कठशब्दस्य वेशंपायनान्तेवासित्वा ण्णिनिः चरकादण्। तयोर्लुक्। छन्दसीत्येव। काठाः। चारकाः। श्लोकाः।

---

सूत्रम्

काशिका-वृत्तिः

कलापिनो ऽण् ४।३।१०८

कलापिशब्दादण् प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये। वैशम्पायनान्तेवासित्वाण् णिनेरपवादः। कलापिना

प्रोक्तम् अधीयते कालापाः। इनण्यनपत्ये ६|४|१६४ इति प्रकृतिभावे प्राप्ते, न अन्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलिजाङ्गलि। लाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणाम् उपसङ्ख्यानम्। इति टिलोपः। अथाण्ग्रहणं किम्, यथाप्राप्तम् इत्येव सिद्धम्? अधिकविधानार्थं, तेन माथुरी वृत्तिः, सौलभानि ब्राह्मणानि इत्येवम् आदि सिद्धम्।

न्यासः

कलापिनोऽण्। , ४|३|१०८

"कालापाः"इति। पूर्ववत् प्रोक्तप्रत्ययान्तादध्येतर्युत्पन्नस्याणो लुक्, तद्विषयता च। "अथ" इत्यादि। ननु चासत्यण्ग्रहणे यथा प्राप्ते विधीयमाने णिनेरेवापवादः स्यात्? नैतदस्ति; एवं हि वचनमनर्थकं स्यात्। तस्माद्यो विहितो न च प्राप्नोत्यनेन कबाधितत्वात् स एव भविष्यति, स चाणेव। "एवमादि" इति। आदिशब्देन मौदाः,पैप्पलादाः, शाकलाः, जाजलाः--इत्येतेषां ग्रहणम्। असत, त्वच्ग्रहणे सर्वमेव न सिध्येत्; "वृद्धाच्छः" ४|२|११३ इति छेनाण औत्सर्गिकस्य बाधितत्वात्॥

बाल-मनोरमा

कलापिनोऽण् १४६७, ४|३|१०८

कलापिनोऽण्। "तेन प्रोक्त"मित्येव वैशम्पायनशिष्यत्वात् प्राप्तस्य णिनेरपवादः। कालापा इति। कलापिन्शब्दादणि टिलोपे कालापशब्दादध्येतृप्रत्ययस्य छस्य लुगिति भावः।

"इनण्यनपत्ये" इति प्रकृतिभावमाशङ्क्याह--नान्तस्येति।

तत्त्व-बोधिनी

कलापिनोऽण् ११४७, ४|३|१०८

कलापिनोऽण्। वैशंपायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः। "इनण्यनपत्ये"इति प्रकृतिभावे प्राप्ते आह--।

नान्तस्य टिलोपे सब्राह्मचारिपीठसर्पिकलापिकौथमितैतिलिजाजलिलाङ्गलिशिलालिलशिखाण्डिसूकरसद्मसुपर्वणामुपसङ्ख्यानम्। नान्तस्य टिलोप इति। माथुरी वृत्तिः, मौदाःल पैप्पलादाः शाकला इति सिद्धम्। मुद पिप्पलाद शाकल---एभ्यः "पुरामप्रोक्तेषु"इति णिनेरपवादोऽण्। छगलिनो ढिनुक्। कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादोऽयम्।

---

सूत्रम्

काशिका-वृत्तिः

छगलिनो ढिनुक् ४|३|१०९

छङ्गलिन्शब्दात् ढिनुक् प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये। कलाप्यन्तेवासित्वाण् णिनेरपवादः। छङ्गलिना प्रोक्तम् अधीयते छागलेयिनः।

न्यासः

छगलिनो ढिनुक्। , ४|३|१०९

"छागलेयिनः" इति। इहापि पूर्ववदेवाध्येतर्युत्पन्नस्याणो लुक् च तद्विषयता। एवमुत्तरयोर्योगयोर्वेदितव्यः॥

बाल-मनोरमा

छगलिनोढिनुक् १४६८, ४।३।१०९

छगलिनो। छगलिन्शब्दात्तविषये ढिनुक्प्रत्ययः स्यादित्यर्थः। कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः। छागलेयिन इति। ककार इत्। उकार उच्चारणार्थः। "ढिन्" शिष्यते। ढस्य एय्। टिलोपः। ततोऽध्येतृप्रत्ययस्य लुगिति भावः। पाराशर्य णिनिः स्यादिति। "उक्तविषये" इति शेषः। मण्डूकप्लुत्या णिनिरेवानुवर्तते इति भावः। पाराशर्येण प्रोक्तं भिक्षुसूत्रमित्यर्थे, शिलालिना प्रोक्तं नटसूत्रमित्यर्थे च तृतीयटान्ताण्णिनिः स्यादिति यावत्। भिक्षवः=संन्यासिनः, तदधिकारिकं सूत्रं भिक्षुसूत्रं=व्यासुप्रणीतं प्रसिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ४।३।११०

णिनिरिह अनुवर्तते, न ढिनुक्। पाराशर्यशिलालिभ्यां णिनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये। भिक्षुनटसूत्रयोः इति यथासङ्ख्यं प्रत्ययार्थविशेषणम्। सूत्रशब्दः प्रत्येकम् अभिसम्बध्यते। तद्विषयता चात्रेष्यते, तदर्थं छन्दोग्रहणम् अनुवर्त्यं, गुणकल्पनया च भिक्षुनटसूत्रयोः छन्दस्त्वम्। पाराशर्येण प्रोक्तम् अधीयते पराशरिणो भिक्षवः। शैलालिनो नटाः। भिक्षुनटसूत्रयोः इति किम्? पाराशरम्। शैलालम्।

न्यासः

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः। , ४।३।११०

"यथासंख्यम्" इत्यादि। पाराशर्याद्भिक्षुसूत्रे प्रत्ययः शिलालिनो नटसूत्रे। "तद्विषयता चात्रेष्यते" इति। कथं पुनरिष्यमाणापि सा लभ्यते? इत्याह-- "तदर्थम्" #इत्यादि। ननु चानुवत्र्तमानच्छन्दोहणेनैव तद्विषयता प्राप्नोति? न; भिक्षुवनटसूत्ि‌रयोरच्छन्दसत्वादित्याह-- "गुणकल्पनया च" इत्यादि। छन्दसस्तूपचारनिमित्तं यो धर्मः स इह गुणोऽभिप्रेतः, तद्धेतुका कल्पना। यथा छन्दो यदर्थमधीयते तथा सूत्रमपि तद्धेतुं सम्पादयति। भिक्षुनटयोरित्येवमादिकया गुणकल्पनया भिक्षुनटसूत्रयोश्छन्दस्त्वमौपचारिकम्। "पाराशरिणः" इति। पाराशर्यशबिदो गर्गादिषु वञन्तः, "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ इति यलोपः। "शैलालिनः" इति। "नस्तद्धिते" ६।४।१४४ इति टिलोपः। "पाराशरम्" इति। "कण्वादिभ्यो गोत्रे" ४।२।११० इत्यण्। "शैलालम्" इति। औत्सर्गिकोऽण्, "नान्तस्य टिलोपे सबह्मह्मचारिपीठ" (वा।७९८) इत्यादिना टिलोपः॥

बाल-मनोरमा

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः १४६९, ४।३।११०

पाराशर्येणेति। पराशरशब्दाद्गर्गादित्वाद्गोत्रे यञि-"पाराशर्यः" व्यासः। इह त्वनन्तरापत्ये गोत्रत्वारोपाद्यञ्। तेन प्रोक्ते भिक्षुसूत्रे णिनिः, ततोऽध्येतृप्रत्ययस्य छस्य लुक्। पाराशरिण इति। जसि रूपम्। शैलालिन इति। शिलालिन्शब्दान्नटसूत्रे प्रोक्ते णिनौ टिलोपे शैलालिन्शब्दादध्येतृप्रत्ययस्याऽणो लुकि "शैलालिन" इति जसि रूपमिति भावः।

तत्त्व-बोधिनी

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ११४८, ४।३।११०

पराशर्य। मण्डूकप्लुयाणिनिरिह सम्बध्यत इत्याह---णिनिः स्यादिति। तद्विषयताऽत्रेष्यते, तदर्थं छन्दोग्रहणमनुवर्त्यम्। सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम्। भिक्षुसूत्रमिति। चतुर्लक्षणीरूपम्। पाराशरिण इति। पाराशर्यो---व्यासः। अनन्तरापत्येऽपि गोत्रत्वेनोपचारात् "गर्गादिभ्यः"इति यञ्। "आपत्यस्य चे"ति यलोपः। अध्येत्रणस्तु "प्रोक्ता"दिति लुक्। भिक्षुनटसूत्रयोः किम्()। पराशरम्। शैलालम्।

---

सूत्रम्

काशिका-वृत्तिः

कर्मन्दकृशाश्वादिनिः ४।३।१११

भिक्षुनटसूत्रयोः इत्येव। कर्मन्दकृशाश्वशब्दाभ्याम् इनिः प्रत्ययो भवति तेन प्रोक्तम् इत्येतस्मिन् विषये यथासङ्ख्यं भिक्षुनटसूत्रयोरभिधेययोः। अणो ऽपवादः। अत्र अपि तद्विषयतार्थं छन्दोग्रहणम् अनुवर्त्यम्। कर्मन्देन प्रोक्तम् अधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः। भिक्षुनटसूत्रयोः इत्येव, कार्मन्दम्। कार्शाश्वम्।

न्यासः

कर्मन्दकृशा�आआदिनिः। , ४।३।१११

बाल-मनोरमा

कर्मन्दकृशा�आआदिनिः १४७०, ४।३।१११

कर्मन्द। कर्मन्देन प्रोक्तं भिक्षुसूत्रमित्यर्थे, कृशा()ओन प्रोक्तं नटसूत्रमित्यर्थे च तृतीयान्तादिनिः स्यादिति यावत्। प्रत्यये अन्त्य इकार उच्चारणार्थः। कर्मन्दशब्दादिनिः। ततोऽध्येत्रणो लुक्। एवं "कृशा()इआनः"।

तत्त्व-बोधिनी

कर्मन्दकृशास्वादिनिः ११४९, ४।३।१११

कर्मन्द। इहापि छन्दोनुवृत्त्यादि प्राग्वत्। भिक्षुनटसुत्रयोः किम्()। कार्मन्दम्। कार्श()आम्।

---

सूत्रम्

काशिका-वृत्तिः

तेन एकदिक् ४।३।११२

तेन इति तृतीयासमर्थादेकदिकित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। एकदिक् तुल्यदिक् समानदिकित्यर्थः। सुदाम्ना एकदिक् सौदामनी विद्युत्। हैमवती। त्रैककुदि। पैलुमूली। तेन इति प्रकृते पुनः समर्थविभक्तिग्रहणं छन्दो ऽधिकारनिवृत्त्यर्थम्। पूर्वत्र हि छन्दो ऽधिकारात् तद्विषयता साध्यते।

न्यासः

तेनैकदिक्। , ४।३।११२

"तेन"इति। "तुल्यार्थैरतुलोपमाभ्याम्" २।३।७२ इति तृतीया। "सौदामनी" इति। "अन्" ६।४।१६७ इति प्रकृतिभावाट्टिलोपाद्यभावः। ननु च तेनेति प्रकृतमेव,तत्किमर्थं पुनरिह तृतीया समर्थविभक्तिरुपादीयते? इत्याह-- "तेनेति प्रकृते" इत्यादि। पूर्वत्र हि तेनेति छन्दोऽधिकारसम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्।

तस्माच्छन्दोऽधिकारनिवृत्तयेपुनरिह तृतीया समर्थविभक्तिरुपादीयते। किमर्थः पुनश्छन्दोऽधिकारः पूर्वत्र क्रियते? इत्याह-- "पूर्वत्र" इत्यादि। पूर्वेषु योगेषु च्छन्दोऽधिकारात् तद्विषयता साध्यते। तस्मात् तत्र च्छन्दोऽधिकारः कत्र्तव्यः। त()स्मस्तु क्रियमाणे तन्निवृत्त्यर्थं इह च यत्र आस्थेयः छन्दस्येव प्रत्ययः स्यात्॥

बाल-मनोरमा

तेनैकदिक् १४७१, ४।३।११२

तेनैकदिक्। सहार्थे तृतीया। एका दिक् अधिकरणात्मिका यस्य तदेकदिक्। तेन सह एकस्यां दिशि विद्यमानमित्यर्थे तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। सौदामनीति। अणि "अ"निति प्रकृतिभावान्न टिलोपः।

तत्त्व-बोधिनी

तेनैकदिक् ११५०, ४।३।११२

तेनैकदिक्। तृतीयान्तादेकदिगित्यर्थे अमादयः स्युः। एकदिक्। समाना दिगित्यर्थः। पुनस्तेनेत्युक्तिश्छन्दोऽदिकारनिवृत्त्यर्था। सौदामनीति। "अन्िति प्रकृतिभावान्न टिलोपः। "तडित्सौदामिनी विद्युदि"त्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

तसिश् च ४।३।११३

तसिश्च प्रत्ययो भवति तेन एकदिकित्येतस्मिन् विषये। पूर्वेण् घादिसु अणादिषु च प्राप्तेषु अयम् अपरः प्रत्ययो विधीयते। स्वरादिपाठादव्ययत्वम्। सुदामतः। हिमवत्तः। पिलुमूलतः।

न्यासः

तसिश्च। , ४।३।११३

बाल-मनोरमा

तसिश्च १४७२, ४।३।११३

तसिश्च। "तेनैकदिगि"त्यर्थे तृतीयान्तात्तसिश्च स्यादित्यर्थः। इकार उच्चारणार्थः। स्वरादिपाठादिति। "स्वरादिनिपातमव्यय"मिति प्रकरणे "तद्धितश्चासर्वविभक्ति"रित्यत्र "तसिलादयः" इतिपरिगणने तसेः पाठादित्यर्थः।

तत्त्व-बोधिनी

तसिश्च ११५१, ४।३।११३

तसिश्च। पूर्वोक्तविषये।

---

सूत्रम्

काशिका-वृत्तिः

उरसो यच् च ४।३।११४

उरस्शब्दात् यत् प्रत्ययो भवति, चकारात् तसिश्च, तेन एकदिकित्येतस्मिन् विषये। अणो ऽपवादः। उरसा एकदिगुरस्यः, उरस्तः।

न्यासः

उरसो यच्च।, ४।३।११४

बाल-मनोरमा

उरसो यच्च १४७३, ४।३।११४

उरसो यच्च। उरसा एकदिगित्यर्थे तृतीयान्तादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

उपज्ञाते ४।३।११५

तेन इत्येव। तृतीयासमर्थातुपज्ञाते इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। विना उपदेशेन ज्ञातमौपज्ञातं, स्वयम् अभिसम्बद्धम् इत्यर्थः। पाणिनिना उपज्ञातं पाणिनीयम् अकालकं व्याकरणम्। काशकृत्स्नं गुरुलाघवम्। आपिशलं दुष्करणम्।

न्यासः

उपज्ञाते।, ४।३।११५

"अकालकम्" इति। कालपरिभाषारहितमित्यर्थः॥

बाल-मनोरमा

उपज्ञाते १४७४, ४।३।११५

उपज्ञाते। तेनोपज्ञातमित्यर्थे तृतीयान्ताद्यर्थाविहितं प्रत्ययाः स्युरित्यर्थः। उपज्ञातं-प्रथमज्ञातम्।

तत्त्व-बोधिनी

उपज्ञाते ११५१, ४।३।११५

उपज्ञाते। विनोपदेशं ज्ञातम्--उपज्ञातम्।

---

सूत्रम्

काशिका-वृत्तिः

कृते ग्रन्थे ४।३।११६

तेन इत्येव। तृतीयासमर्थात् कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् तत्कृतं ग्रन्थश्चेत् स भवति। वररुचिना कृताः वाररुचाः श्लोकाः। हैकुपादो ग्रन्थः। भैकुराटो ग्रन्थः। जालूकः। ग्रन्थे इति किम्? तक्षकृतः प्रासादः। उत्पादितं कृतं, विद्यामानाम् एव ज्ञातम् औपज्ञातम् इत्ययम् अनयोर् विशेषः।

न्यासः

कृते ग्रन्थे।, ४।३।११६

कः पुनः कृतोपज्ञयोर्विशेषः, येनोपज्ञायत इति प्रकृते सति कृतग्रहणं क्रियते? इत्याह्-- "उत्पादितम्" इत्यादि॥

बाल-मनोरमा

कृते ग्रन्थे १४७५, ४।३।११६

कृते ग्रन्थे। "तेन कृतो ग्रन्थ" इत्यर्थे तृतीयान्ताद्यर्थाविहितं प्रत्ययाः स्युरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् ४।३।११७

तृतीयासमर्थात् कृते इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत् संज्ञा ज्ञायते। मक्षिकाभि कृतं माक्षिकम्। कार्मुकम्। सारघम्। पौत्तिकम्। मधुनः संज्ञाः एताः।

न्यासः

संज्ञायाम्। , ४।३।११७

बाल-मनोरमा

संज्ञायाम् १४७६, ४।३।११७

संज्ञायां। तेनेत्येवेति। तेन कृतमित्यर्थे संज्ञायां तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। "ग्रन्थे" इति नानुवर्तते। तदाह--अग्रन्थार्थमिति।

बाल-मनोरमा

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् १४८६, ४।३।११७

सङ्घाङ्क। यञन्तात्, अञन्तात्, इञन्ताच्च सङ्गे अङ्के लक्षणे च इदन्त्वेन विवक्षितेऽणित्यर्थः। छस्यापवादः।

घोषेति। "सङ्घाङ्कलक्षणघोषेषु" इति सूत्रं कर्तव्यमित्यर्थः। तथाच तिरुआः प्रकृतयः, प्रत्ययार्थाश्चत्वार इति न यथासङ्ख्यम्। गार्ग इति। सङ्घोऽङ्को घोषो वे"ति शेषः। गार्गमिति। "लक्षण"मिति शेषः। एवं दाक्ष दाक्षमित्यत्रापि नन्वङ्कलक्षणशब्दयोः पर्यायत्वात् पृथग्ग्रहणं व्यर्थमित्यर्त आह--परम्परेति। यथा गवादिनिष्ठस्तप्तमुद्राविशेषोऽङ्कः। तस्य हि गोद्वारा स्वामिसम्बन्धः। साक्षादिति। विद्याविशेषस्तु देवदत्ते साक्षाद्विद्यमानत्वात्तस्य लक्षणमित्यर्थः। वैदी विद्या। "घोष आभीरपल्ली स्या"दित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

कुलालाऽदिभ्यो वुञ् ४।३।११८

तेन, कृते, संज्ञायाम् इति च एतत् सर्वम् अनुवर्तते। कुलालादिभ्यः वुञ् प्रत्ययो भवति तेन कृतम् इत्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम्। कौलालकम्। वारुडकम्। कुलाल। वरुद। चण्डाल। निषाद। कर्मार। सेना। सिरघ्र। सेन्द्रिय। देवराज। परिषत्। वधू। रुरु। ध्रुव। रुद्र। अनडुः। ब्रह्मन्। कुम्भकार। श्वपाक। कुलालादिः।

न्यासः

कुलालादिभ्यो वुञ्। , ४।३।११८

बाल-मनोरमा

कुलालादिभ्यो वुञ् १४७७, ४।३।११८

कुलालादिभ्यो वुञ्। "तेन कृते संज्ञाया"मिति शेषपूरणम्। वारुडकमिति। वरुडो जातिविशेषः।

तत्त्व-बोधिनी

कुलालादिभ्यो वुञ् ११५२, ४।३।११८

कुलालादिभ्यो। कुलाल वरुड चण्डाल निषाद कुम्भकार ()आपाकादयः कुलालादयः। क्षुद्राभ्रमर। पादपशब्दाच्छे प्राप्ते, अन्यब्योऽपि अणि अञ् विधीयते।

---

सूत्रम्

काशिका-वृत्तिः

क्षुद्राभ्रमरवटरपादपादञ् ४।३।११९

तेन, कृते, संज्ञायाम् इति सर्वम् अनुवर्तते। क्षुद्रादिभ्यः अञ् प्रत्ययो भवति तेन कृते इत्येतस्मिन् विषये संज्ञायां गम्यमानायाम्। अणो ऽपवादः। स्वरे विशेषः। क्षुद्रादिभिः कृतं क्षौद्रम्। भ्रामरम्। वाटरम्। पादपम्।

न्यासः

क्षुद्राभ्रमरवटरपादपादञ्। , ४।३।११९

"स्वरे विशेषः" इति। अणि हि प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्। अञि तु सति ञित्स्वरेणाद्युदात्तत्वं भवति॥

बाल-मनोरमा

क्षुद्राभ्रमरवटरपादपादञ् १४७८, ४।३।११९

क्षुद्राभ्रमर। "तेन कृते संज्ञाया"मिति-सेषपूरणम्। क्षुद्राः=मधमक्षिकाः।

---

सूत्रम्

काशिका-वृत्तिः

तस्य इदम् ४।३।१२०

तस्य इति षष्ठीसमर्थादिदम् इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। अणादयः पञ्च महोत्सर्गाः। घादयश्च प्रत्यया यथाविहितं विधीयन्ते। प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं तत्सम्बन्धिमात्रं च विवक्षितं, यदपरं लिङ्गसङ्ख्याप्रत्यक्षपरोक्षादिकं तत्सर्वम् अविवक्षितम्। उपगोरिदम् औपगवम्। कापटवम्। राष्ट्रियम्। अवारपारीणम्। अनन्तरादिष्वनभिधानान् न भवति, देवदत्तस्य अनन्तरम् इति। संवहेस्तुरणिट् च। संवोढुः स्वं सांवहित्रम्। सिद्धः एवात्राण्, इडर्थम् उपसङ्ख्यानम्। आग्नीधः शरणे रण् भं च। आग्नीध्रम्। समिधामाधाने षेण्यण्। सामिधेन्यो मन्त्रः। सामिधेनी ऋक्।

लघु-सिद्धान्त-कौमुदी

तस्येदम् १११२, ४।३।१२०

उपगोरिदम् औपगवम्॥

लघु-सिद्धान्त-कौमुदी

इति शैषिकाः ५ १११२, ४।३।१२०

लघु-सिद्धान्त-कौमुदी

अथ विकारार्थकाः १११२, ४।३।१२०

न्यासः

तस्येदम्। , ४।३।१२०

"तस्य" इति। पुंल्लिङ्गेनायं निर्देशः, पुंस्येव स्यात्, न द्विवचनबहुवचनान्तात्; प्रत्यक्षवाचिनश्च स्यात्; नापि विशेषवाचिनः; तच्छब्दस्य परोक्षवस्तुमात्रवाचित्वात्। प्रत्ययार्थोऽपीदमित्येकवचनेन नपुंसकलिङ्गेन निर्दिष्ट इत्येकस्मिन्नर्थे स्यात्-- नपुंसक एव,नान्यत्र; परोक्षे न स्यात्; इदमः प्रत्यक्षवाचित्वात्? इत्येतत्? सर्वमाशङ्क्याह--"प्रकृतिप्रत्ययार्थयोः" इत्यादि। प्रकृतौ षष्ठ()र्थमात्रं विवक्षितम्। प्रत्ययार्थेऽपि षष्ठ()र्थसम्बन्धिमात्रम्, येन विना षष्ठ()र्थो न सम्पद्यते। "यदपरम्" इत्यादिना मात्रशब्देन यद्व्यवच्छिन्नं तद्दर्शयति। आदिशब्देन सामान्यभिधायित्वं गृह्यते। अस्य तु सर्वत्र विवक्षाकारणम् "तस्यापत्यम्" ४।१।९२ इत्यत्रैवक्तम्। अथेह कस्मान्न भवति-- देवदत्तस्यानन्तरम्, देवदत्तस्य समीपत्यादि? "अनन्तरादिषु" इत्यादि। "अनभिधानात्" इति। प्रत्ययान्तेनानन्तरादीनामप्रत्यायनमित्()यर्थः। "संवहेस्तुः"इति। वहेस्त्रन्तादित्यर्थः। "सांवाहित्रम्" इति। सम्पूर्वाद्वहेस्तुरिट् च, यणादेशः। "सिद्ध एवात्राण्" इति। "प्राग्दीव्यतोऽण्" ४।१।८३ इत्यनेन। यद्येवं किमर्थमुपसंख्यानम्? इत्याह-- "इडर्थम्" इत्यादि। उपसंख्याने ह्रसतीडागमो न स्यात्, "एकाच उपदेशेऽनुदात्तात्" ७।२।१० इतीट्प्रतिषेधात्। "अग्नीधः" इत्यादि। अग्नीध इत्येतस्माच्छरणे गृहे वाच्ये रण् वक्तव्यः, भसंज्ञा च वक्तव्या, भसंज्ञायाञ्च सत्यां पदसंज्ञाभावाज्जशत्वं न भवति। "समिधाम्" इत्यादि। आधीयन्ते येन मन्त्रविशेषेण समिधस्तस्मिन् सनिधामाधानविशेषे समिच्छब्दात् वण्यण् प्रत्ययो वक्तव्यः = व्याख्येयः। व्याख्यानं तु --"हविर्निवाससामिधेनीषु" (३।१।१२९) इत्येतन्निर्देशमाश्रित्य वक्तव्यम्। "सामिधेनी" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्, "हलस्तद्धितस्य" ६।४।१५० इति यलोपः॥

बाल-मनोरमा

तस्येदम् १४७९, ४।३।१२०

तस्येदम्। इदमित्यर्थे षष्ठ()न्तादणादयः साधारणप्रत्यया, राष्ट्रावारेत्यादिभिर्विशिष्य विहिता घादयश्च प्रत्यया यताविहितं स्युरित्यर्थः। अत्र शेषे इत्यनुवृत्तम्। ततश्च अपत्यादिचतुरथ्र्यन्तार्थेभ्योऽन्येषां शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं लभ्यते। अपत्यादीनां तु न केनापि रूपेण इदंशब्दार्थत्वमिति "तस्यापत्य"मित्यत्रोक्तम्।

वहेस्तुरणिट् चेति। वार्तिकमिदम्। "तु"रिति तृन्तृचोः सामान्येन ग्रहणम्। वहधातोर्विहितो यस्तृप्रत्ययस्तस्मादण् स्यात्तृप्रत्ययस्य इडागमश्च। तत्र अण् पूर्वे सिद्ध इड्विध्यर्थमनूद्यते। संवोढुः स्वमिति। विग्रहदर्शनम्। वहेस्तृच्, तृन् वा। वहेरनुदात्तत्वात् "एकाच उपदेशे" इति नेट्। ढत्वधत्वष्टुत्वढलोपाः। "सहिवहोरोदवर्णस्ये"त्योत्वम्। सांवहित्रमिति। ढत्वादीनामसिद्धत्वादलौकिक एव विग्रहवाक्ये पूर्वमिट्। ततो निमित्ताऽभावान्न ढत्वादि।

अग्नीधः शरणे इति। वार्तिकमिदम्। "शरण"मित्यर्थे अग्नीच्छब्दात्षष्ठ()न्ताद्रण्, तस्मिन्परे भत्वं च वक्तव्यमित्यर्थः।

शरणं--गृहम्। अग्नीदिति। ऋत्विग्विशेषोऽयम्। इन्धेः क्विप्। "अनिदिता"मिति नलोपः। आग्नीध्रमिति। सोमे महावेदेरुत्तरार्धे पञ्चरत्नि चतुरश्रस्थानविशेषसंज्ञेयम्। भत्वान्न जश्त्वम्। प्रत्ययस्वरेणान्तोदात्तो।ञयं शब्दः। तैत्तिरीये "एतद्वै यज्ञस्यापराजितं यदाग्नीध्र"दित्यादावाद्युदात्तत्वं तु "आग्नीध्रसाधारणादञ् वक्तव्यः" इति स्वार्थिके अञि बोध्यम्। नन्वेवम् "आग्नीध्रः प्रत्याश्रावये"दित्यादौ कथमृत्विग्विशेषे आग्नीध्रशब्दः। तत्राह--तात्स्थ्यादिति। आग्नीध्राख्यदेशस्थत्वात् ऋत्विग्विशेषे आग्नीध्रशब्दो गौण इति भावः।

समिधामिति। आधीयते अनेनेत्याधानो मन्त्रः। आधानो मन्त्र इत्यर्थे षष्ठ()न्तात्समिच्छब्दात् षेन्यण्प्रत्ययटो वाच्य इत्यर्थः। षत्वं ङीषर्थमित्याह--सामिधेनीति। सामिधेन्यशब्दात् ङीष्। "हलस्तद्धितस्ये"ति यलोपः।

तत्त्व-बोधिनी

तस्येदम् ११५३, ४।३।१२०

तस्येदम्। अणादयः पञ्च महोत्सर्गाः, घादयश्च षष्ठ()न्तात्संबन्धिनि स्युः। अनन्तरदिष्वनभिधानान्न, देवदत्तस्यानन्तरमिति।

वहेस्तु रणिट् च। बहेस्तु। इडर्थमिदमुपसङ्ख्यानम्, अण्, तु सिद्ध एवानूद्यते। "तु"रिति तृन्तृचोः सामान्यग्रहणम्। ढत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट् ततो निमित्ताऽभावान्न ढत्वादोत्याशयेनोदाहरति---सांवहित्रमिति। अग्निदिति। क्विप्। ऋत्विग्विशेषोऽयम्। "त्वमग्निद्दतायते"इत्यत्र तु छान्दसं ह्यस्वत्वम्।

आग्निध्रमिति। भत्वविधानाद्धस्य जशत्वं नेति भावः। सोऽपीति। अग्नीदपीत्यर्थः। ननु "पिबाग्निध्रात्तवे"त्यादावाद्युदात्तं प्रयुज्यते। वार्तिके "तुर"णिति पाठादयमन्तोदात्त इथि चेत्। अत्राहुः--"आग्नीध्रकसाधारणादञि"ति वार्तिकेन विहितो यः स्वार्थेऽञ्जे तत्पक्षे तत्राद्युदात्तत्वं बोध्यमिति।

समिधामाधाने षेण्येण्। समिधामिति। कर्मणि षष्ठीयम्। आधानमिति करणे ल्युट्। कर्मणि षष्ठ()न्तादाधानकरणे षेण्यण् स्यात्। सामिधेन्य इति। यया अग्निः समिध्यते सा--समित्। संपदादित्वात्करणे क्विप्। तस्या आधान इति विग्रहः। सामिधेनीति। षित्वान्ङीष्। हलस्तद्धितस्ये"ति यलोपः। यया ऋचा सामिदाधीयते सा सामिदाधीयते सा सामिधेनीत्यर्थः। "प्रवोवाजा अभिद्यवः"इत्याद्याः "आजुहोता दुवस्यत"इत्यन्ताः "सामिधेन्य" इति व्यवह्रियन्ते।

---

सूत्रम्

काशिका-वृत्तिः

रथाद्यत् ४।३।१२१

रथशब्दात् यत् प्रत्ययो भवति तस्य इदम् इत्येतस्म्न् विषये। अणो ऽपवादः। रथस्य इदम् रथ्यं, चक्रं वा युगं वा। रथाङ्ग एव इष्यते, न अन्यत्र अनभिधानात्। रथसीताहलेभ्यो यद्विधाविति तदन्तविधिरुपसङ्ख्यायते। परमरथ्यम्। उत्तमरथ्यम्।

न्यासः

रथाद्यत्। , ४।३।१२१

"नान्यत्र" इति। सन्नाहादौ॥

बाल-मनोरमा

रथाद्यत् १४८०, ४।३।१२१

रथाद्यत्। "तस्येद"मित्येव। रत्यं चक्रमिति। "रथाद्रथाङ्गे" इति वचनाच्चकमिति विशेष्यम्।

तत्त्व-बोधिनी

रथाद्यत् ११५४, ४।३।१२१

रथाद्यत्। अणोऽपवादः। "रथाद्रथाङ्गे"इति वार्तिकमिभिप्रेत्याह---रथ्यं चक्रमिति। "रथसीताहलेभ्यो यद्विधौ"इति तदन्तविधिरूपसङ्ख्यायते। परमरथ्यम्। उत्तमरथ्यम्। द्वयो रथयोरङ्गं द्विरथम्। इह "द्विगोर्लुगनपत्ये"इति यतो लुक्। ननु यत्प्रत्ययोऽत्र रथाङ्ग एव यदीष्यते कथं तर्हि "रथस्य वोढा रथ्यः"इति?। "तद्वहती"त्यनेनेति चेत्। एवं तर्हि अयमेव यद्रथाङ्ग इव वोढर्यीष्यतां, "तद्वहति रथयुगप्रासङ्ग"मित्यत्र रथग्रहणं त्यज्यतामिति चेत्।मैवम्। द्वौ रथौ वहति द्विरथ्य इत्यत्र "द्विगोर्लुगनपत्ये"इति प्राग्दीव्यतीयस्य लुक्()प्रसङ्गात्। "तद्वहती"ति यत्प्रत्ययस्य तु प्राग्दीव्यतीयत्वाऽभावान्न लुगिति "द्विरथ्य "इति सिध्यतीति। ननु "द्विगोर्लुगनपत्ये"इत्यत्राऽचीत्य[स्या]पकर्षणात्कथमत्र यतो लुक्प्रसक्तिरिति चेत्। अत्राहु---"तद्वहती"त्यत्र रथग्रहणमेव ज्ञापकम्---"एतस्य यतो हलादेरपि लुग् भवती"ति। अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यात्। तथा च द्वयो रथयोरङ्गमिति विग्रहे द्रिरथमिति प्रयोगः सुस्थ इति।

---

सूत्रम्

काशिका-वृत्तिः

पत्रपूर्वा दञ् ४।३।१२२

पतन्ति तेन इति पत्रम् अश्वादिकं वाहनम् उच्यते। तत्पूर्वाद् रथशब्दातञ् प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये। पूर्वस्य यतो ऽपवादः। आश्वरथं चक्रम्। औष्ट्ररथम्। गार्दभरथम्।

न्यासः

पत्त्रपूर्वादञ्। , ४।३।१२२

बाल-मनोरमा

पत्रपूर्वादञ् १४८१, ४।३।१२२

पत्रपूर्वादञ्। रथादित्येव। पत्रं वाहनमिति। "पत्रं वाहनपक्षयो"रिति कोशः।

तत्त्व-बोधिनी

पत्त्रपूर्वादञ् ११५५, ४।३।१२२

पत्त्रपूर्वादञ्। पूर्वस्य यतोऽपवादः। पत्रमिति। पतन्त्यनेनेति विग्रहे "दाम्नि"त्यादिना ष्ट्रन्। अ()आरथस्येदमिति। अ()आयुक्तो रथोऽ()आरथस्तस्याङ्गमित्यर्थः। पत्राध्वर्यु। अणोऽपवादः।

पत्राद्वाह्रे। पत्त्राद्वाह्र इति। इह पत्त्रेत्यर्थग्रहणे, इतरोयस्तु स्वरूपग्रहणे व्याख्यानमेव शरणम्।

---

सूत्रम्

काशिका-वृत्तिः

पत्राध्वर्युपरिषदश् च ४।३।१२३

पत्रं वाहनम्, तद्वाचिनः प्रातिपदिकातध्वर्युपरिषच्छब्दाभ्यां च अञ् प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये। अणो ऽपवादः। पत्राद् वाह्ये। अश्वस्य इदं वहनीयम् आश्वम्। औष्ट्रम्। गार्दभम्। आध्वर्यवम्। पारिषदम्।

न्यासः

पत्त्राध्वर्युपरिषदश्च। , ४।३।१२३

"पत्त्राद्वाह्ये" (वा।४७४) इत्यवधारणमत्र द्रष्टव्यम्-- पत्त्राद्वाह्य एवेति। अन्यत्र कस्मान्न भवत? अनभिधानात्। अथ किमर्थं न पूर्वेण सहैकयोग एव क्रियते-- "पत्त्रपूर्वपत्राध्वर्युपरिषदोऽञ्" इति? नैवं शक्यम्; एवं हि पूर्वपत्त्रपूर्वात् प्रातिपदिकादन्यतोऽपि प्रसज्येत। योगविभागे पूर्वस्मिन् योगे रथादित्यनुवृत्ते रथ एव पत्त्रपूर्वग्रहणेन विशेष्यत इति न भवत्यतिप्रसङ्गः। एकयोगे तु रथाद्यनुवृत्तौ सत्यां यथा पत्त्रपूर्वतया रथो विशेष्यते, तथा पत्त्रादिभिरपि रथ एव निशेष्यते इत्यनिष्टं स्यात्। तस्माद्योगविभाग एव न्याय्यः॥

बाल-मनोरमा

पत्राध्वर्युपरिषटश्च १४८२, ४।३।१२३

पत्राध्वर्यु। अञिति। शेषपूरणम्।

पत्रादिति। "पत्राद्वाह्य एवे"ति वक्तव्यमित्यर्थः। आ()आमिति। पत्रेत्यर्थग्रहणमिति भावः। आध्वर्यवं, पारिषदमिति। अध्वर्योरिदं परिषद इदमिति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

हलसीराट् ठक् ४।३।१२४

हलसीरशब्दाभ्यां ठक् प्रत्ययो भवति तस्य इदम् इत्यस्मिन् विषये। अणो ऽपवादः। हलस्य इदं हालिकम्। सैरिकम्।

न्यासः

हलसीराड्डक्। , ४।३।१२४

बाल-मनोरमा

हलसीराड्डक् १४८३, ४।३।१२४

हलसीराड्डक्। तस्येदमित्येव। हालिकं सैरिकमिति। हलस्येदं, सीरस्येगदमिति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

द्वन्द्वाद् वुन् वैरमैथुनिकयोः ४।३।१२५

द्वन्द्वसंज्ञाकात् वुन् प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये, वैरमैथुनिकयोः प्रत्ययार्थविशषणयोः। अणो ऽपवादः। छं तु परत्वाद् बाधते। वैरे तवत् बाभ्रव्यशालङ्कायनिका। काकोलूकिका। मैथुनिकायाम् अत्रिभरद्वाजिका।

कुत्सकुशिकिका। विवहनमैथुनिका। वैरस्य नपुंसकत्वे ऽप्यमी स्वभावतः स्त्रीलिङ्गाः। वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः। दैवासुरम्। राक्षो ऽसुरं वैरम्।

न्यासः

द्वन्द्वाद्?वुन् वैरमैथुनिकयोः। , ४।३।१२५

"बाभ्रण्यशालङ्कायनिका" इति। वुन्नन्तः स्वभावादेव स्त्रियां वत्र्तत इति टाप्, "प्रत्ययस्थात्" ७।३।४४ इत्यादिनेत्त्वम्॥

बाल-मनोरमा

द्वन्द्वाद्वुन्वैरमैथुनिकयोः १४८५, ४।३।१२५

द्वन्द्वाद्वुन्। वैरे मैथुनिकायां च इदन्त्वेन विवक्षिते द्वन्द्वात्षष्ठ()न्ताद्वुन्स्यादित्यर्थः। काकोलूकिकेति। काकोलूकस्य वैरमित्यर्थः। वुनि स्त्रीत्वं लोकात्। कुत्सकुशिकिकेति। कुत्सकुशिकयोर्विवाह इत्यर्थः। वुनि स्त्रीत्वं लोकात्। मिथुनं--दम्पती। तस्य कर्म मैथुनिका। मनोज्ञादित्वाद्वुञ्। स्त्रीत्वं लोकात्।

वैरे देवासुरेति। वार्तिकमिदम्। दैवासुरमिति। देवासुरयोर्वैरमित्यर्थः। वुनभावेऽण्। मैथुनिकायां तु देवासुरिकेत्येव। "द्वन्द्वे देवासुरे"ति त्वपपाठः, अत्र भाष्ये वैर इत्येव वार्तिकपाठात्। "शिशुक्रन्दे"ति सूत्रभाष्ये तु "द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः" इति पठितम्, दैवासुरम् राक्षोऽसुरमित्युदाह्मतं च। देवासुराद्यधिकृत्य कृतमाख्यानमित्यर्थः।

गोत्रचरणाद्वुञ्। गोत्रप्रत्ययान्ताच्छाखाध्येतृवाचिनश्च षष्ठ()न्तादिदमित्यर्थे वुञित्यर्थः। "प्रवराध्यायप्रसिद्धमिह गोत्र"मित्यभिप्रेत्योदाहरति-औपगवकमिति। औपगवस्येदमित्यर्थः। वस्तुतस्तु औपगवः प्रवरसूत्रेषु न दृष्टः। ग्लौचुकायनकमिति वृत्यादौ उदाह्मतम्।

चरणादिति। चरणाद्यो वुञ्विहितः स धर्मे आम्नाये च वाच्ये भवति, नान्यत्रेत्यर्थः। काठकमिति। कठेन प्रोक्तमधीयते कठाः, तेषां धर्म आम्नायो वेत्यर्थः। आम्नायो-वेदाभ्यासः।

तत्त्व-बोधिनी

द्वन्द्वाद्वुन्वैरमैथुनिकयोः ११५६, ४।३।१२५

द्वन्द्वद्वुन्। अणोऽपवादः। छं तु परत्वाद्बाधते। काकोलूकिकेति। काकोलूकस्य वैरमित्यर्थः। "वुन्नन्तं स्त्रियाम्"। वैरमैथुनिकादिबु"निति स्त्र्यधिकारे अमरः। कुत्सकुशिकिकेति। कुत्सुकु शिकयोर्मैथुनिका। विवाहरूपः संबन्ध इत्यर्थः। मिथुनं हि दन्पती, तस्य कर्म=क्रियानिष्पादनं। मनोज्ञादित्वाद्वुञ्। वुञन्तं चेदं, स्त्रियां स्वभावात्। अत्र वदन्ति----कुत्साश्च कुशिकाश्च कुत्सुकुशिकास्तेषां मैथुनिकेत्यपि विग्रहः। इह कुत्सुश्च कुशिका चेति द्वयोरेव मैथुनिकायां वुनिति नाग्रहः कार्यः। "यूनि लुगि"ति सूत्रे कैयटेन अत्रिभरद्वाजिकेत्यादिकं प्रसङ्गादुदाह्मत्य बहुवचनान्तद्वन्द्वाद्वुनो व्याख्यातत्वादिति। सङ्घाङ्क। पूर्वस्य वुञोऽपवादः।

घोषग्रहणमपि कर्तव्यम्। घोषग्रहणिति। एवं च प्रकृतयस्तिरुआः, प्रत्ययार्थविशेषणानि चत्वारीति वैषम्याद्यथासङ्ख्यमपि न प्रवर्तते। गार्ग इति। "आपत्यस्ये"ति यलोपः। यद्यप्यङ्कलक्षणयोःल पर्यायत्वं प्रसिद्धं "कलङ्काङ्कौ लाञ्छनं च चिह्न लक्ष्म च लक्षण मित्यमरः, तथापि पृथग्ग्रहणसामथ्र्यादिह विशेषपरतेत्याह---परम्परासंबन्ध इति। यथा गवादिनिष्ठः स्वामिना गोद्वारा संबन्धः। साक्षादिति। यथा बिदानां विद्या। घोष आभीरस्थानम्। णित्त्वं ङीबर्थं, पुंवद्भावनिषेधार्थं च। बौदी विद्या यस्य बैदीविद्यः। बिदानामसाधारणी या विद्या तद्वानित्यर्थः।

सूत्रम्

काशिका-वृत्तिः

गोत्रचरणाद् वुञ् ४।३।१२६

गोत्रवाचिभ्यः चरणवाचिभ्यः च प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये अणो ऽपवादः। छं तु प्रत्वाद् बाधते। गोत्रात् तावद् ग्लौचुकायनकम्। औपगवकम्। चरणाद् धर्माम्नाययोरिष्यते। काठकम्। कालापकम्। मौदकम्। पैप्पलादकम्।

न्यासः

गोत्रचरणाद्?वुञ्। , ४।३।१२६

वुनि प्रकृते वुञ्विधानं वृद्ध्यर्थम्। तच्चावृद्धा एव गोत्रचरणशब्दाः प्रयोजयन्ति, न वृद्धाः। तेषु हि वुञि वुनि वा सति न कश्चिद्विशेषः। "ग्लौचुकायनकः" इति। "प्राचामवृद्धात् फिन् बहुलम्" ४।१।१६० इति फिन्, तदन्ताद्()वुञ्। "चरणात्" इत्यादि। चरणाद्धर्माम्नाययोरेवेष्यते, नान्यत्र; अनभिधानादिति॥

---

सूत्रम्

काशिका-वृत्तिः

सङ्घाङ्कलक्षणेष्वञ्यञिञाम् अण् ४।३।१२७

सङ्घाऽदिषु प्रतयार्थविशेषणेषु अञनताद्, यञन्ताद्, इञन्ताच् च प्रातिपदिकादण् प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये। पूर्वस्य वुञो ऽपवादः। घोषग्रहणम् अत्र कर्तव्यम्। तेन वैषम्याद् यथासङ्ख्यं न भवति। अञनतात् बैदः सङ्घः। बैदा ऽङ्कः। बैदम् लक्षणम्। बैदो घोषः। यञन्तात् गार्गः सङ्घः। गार्गो ऽङ्कः। गार्गं लक्षणम्। गार्गो घोषः। इञन्तात् दाक्षः सङ्घः। दाक्षो ऽङ्कः। दाक्षं लक्षणम्। दाक्षो घोषः। अङ्कलक्षणयोः को विशेषः? लक्षणं लक्ष्यभूतस्य एव चिह्नभूतं स्वं यथा विद्या बिदानाम्, अङ्कस्तु गवादिस्थो ऽपि गवादीनां स्वं न भवति। णित्करणं ङीबर्थं पुंवद्भावप्रतिषेधार्थं च। वैदी विद्या अस्य वैदीविद्यः।

न्यासः

सङ्घाङ्कलक्षणेष्वञ्यञिञामण्। , ४।३।१२७

तेन वैषम्याद्यथासंख्यं न भवति। असति तु घोषग्रहणे, अञादयस्त्रयः सङ्घादयोऽपि तत्र इति समानाद्यथासंख्यं स्यात्? घोषे च प्रत्ययो न स्यात्। "बैदः" इति। "अनृष" ४।१।१०४ इत्यादिनाञ्; तदन्तादण्। अङ्कलक्षमयोः को विशेष इति? नास्त्येव कश्चिद्विशेषः। पर्यायत्वादङ्कलक्षमयोरिति मन्यते। "लक्षणम्" इत्यादिना विशेषं दर्शयति। लक्षणं चिह्नं लक्ष्यस्यैव स्वम्, नान्यस्य; यथा विद्या बिदानाम्। बिदानामेव हि लक्षणानां सम्बन्धिनाम् नान्यस्य कस्यचित्। अङ्कस्तु गवादिस्थो न गवादीनां सम्भवति। किं तर्हि? ततोऽन्येषाम्, गवादिस्वामिनाम्। अथ किमर्थं गित्करणं प्रत्ययस्य, यावताञन्ताद्यञन्ताः प्रकृतयो वृद्धा एव? अत आह-- "णित्करणम्" इत्यादि। बैदी विद्येत्यत्र ङीब् यथा स्यात्। इह च बैदीविद्य इत्यत्र "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" ६।३।३८ इति पुंवद्भावप्रतिषेधो यथा स्यात्। एवमर्थं णित्करणम्,न वृद्ध्यर्थम्॥

---

सूत्रम्

काशिका-वृत्तिः

शाकलाद् वा ४।३।१२८

शाकलशब्दात् सङ्घादिषु प्रत्ययार्थविशेषनेषु वा अण्प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये। वुञो ऽपवादः। शाकलेन प्रोक्तम् अधीयते शाकलाः। तेषां सङ्घः शाकलः, शाकलकः। शाकलो ऽङ्कः, शाकलको ऽङ्कः। शाकलं लक्षणम्, शाकलकं लक्षणम्। शाकलो घोषः, शाकलको घोषः।

न्यासः

शाकलाद्वा। , ४।३।१२८

"वुञोऽपवादः" इति। चरणलक्षमस्य शाकलशब्दस्य चरणलक्षणत्वात्। "शाकलाः" इति। शाकल्यशब्दाद्गर्गादियञन्तात् "कण्वादिभ्यो गोत्रे" ४।२।११० इति प्रोक्तार्थेऽ ण्। "आपत्यस्य च तद्धितेनाति" ६।४।१५१ इति यलोपः। शाकल इति स्थिते "तदधीते तद्वेद" ४।२।५८ इत्यण्, तस्य प्रोक्ताल्लुक् ४।२।६३--शाकलाः, तेषां सङ्घः शाकलः, शाकलक इति वा॥

बाल-मनोरमा

शाकलाद्वा १४८७, ४।३।१२८

शाकलाद्वा। शाकलेनेति। शकलशब्दात्प्रोक्ताणन्तादध्येतृप्रत्ययस्य लुकि शाकलशब्दात् "गोत्रचरणा" दिति धर्माम्नाययोर्वुञोऽपवादोऽण्। तदभावे वुञ्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दोगाउक्थिकयाज्ञिकबह्वृचनटाज् ञ्यः ४।३।१२९

सङ्घादयो निवृत्ताः, सामान्येन विवानम्। छन्दोगाऽदिभ्यः शब्देभ्यो ञ्यः प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये। वुञणोरपवादः। चरणाद् धर्माम्नाययोः, तत्साहचर्यान् नटशब्दादपि धर्माम्नाययोरेव भवति। छन्दोगानां धर्मो वा आम्नायो वा छन्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। नाट्यम्। अन्यत्र छान्दोगं कुलम् इत्यादिः।

न्यासः

छन्दोगौक्थिकयाज्ञिकबह्?वृचनटाञ्ञ्यः। , ४।३।१२९

"वुञणोरपवादः" इति। छन्दोगादिभ्यश्चरणलणस्य वुञोऽपवादः। नटादौत्सर्गिकस्याणः॥

बाल-मनोरमा

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः १४८८, ४।३।१२९

छन्दोगौक्थिक। सङ्घादयो निवृत्ताः। छन्दोगादीनां चरणत्वात् धर्माम्नाययोरिति संबध्यते। छन्दोग, औक्थिक, याज्ञिक, बह्वृच, नट-एभ्यो धर्मे आम्नाये च इदंत्वेन विवक्षिते ञ्यः स्यादित्यर्थः। ननु नटस्य अचरणत्वात्तत्र धर्माम्नाययो कथमन्वय इत्याशङ्कते--चरणाद्धर्माम्नाययोरित्युक्तमिति। "यद्यपी"ति शेषः। परिहरति-तत्साहचर्यादिति। तथापि छन्दोगादिसाहचर्यान्नटशब्दादपि धर्माम्नाययोरेव प्रत्यय इत्यर्थः।

तत्त्व-बोधिनी

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ११५७, ४।३।१२९

छन्दोगौक्थिक। सङ्घादयो निवृत्ताः। एभ्यो ञ्यः स्यात्तस्येदमित्यर्थे। चरणशब्देभ्यो बुञोऽपवादः, नटात्त्वौत्सर्गिकस्याऽणः। "धर्माम्नाययो"रित्युक्तेर्नेह--छान्दोगं कुलमित्यादि।

---

सूत्रम्

काशिका-वृत्तिः

न दण्डमाणवान्तेवासिषु ४।३।१३०

दण्डप्रधाना मानवाः दण्डमाणवाः, अन्तेवासिनः शिष्याः। तेष्वभिधेयेषु वुञ् प्रत्ययो न भवति। गोत्रग्रहणम् इह अनुवर्तते, तेन वुञ्प्रतिषेधो विज्ञायते। गौकक्षाः दण्डमाणवाः अन्तेवासिनो वा। दाक्षाः। माहकाः।

न्यासः

न दण्डमाणवान्तेवासिषु। , ४।३।१३०

"दण्डप्रधाना माणवा दण्डमाणवाः" इति। मद्यमपदलोपिसमासं दर्शयति। स पुनर्मयूख्यंसकादित्वाद्वेतिव्यः। मयूरव्यंसकादेराकृतिगणत्वात्। "वुञ्प्रत्ययो न भवति" इति। एतेन वुञोऽयं प्रतिषेध इति दर्शयति। कथं पुनर्ज्ञायते वुञोऽयं प्रतिषेध? इत्याह-- "गोत्रग्रहणम्" इत्यादि। इह हि गोत्रग्रहणमनुवत्र्तते "गोत्रचरणाद्()वुञ्" ४।३।१२६ इत्यतः, तेनायमर्थो भवति-- "तस्येदम्" ४।३।१२० इत्येतस्मिन्नर्थे यः प्रत्ययो गोत्रात् प्राप्नोति स दण्डमाणवान्तेवासिषु न भवतीति, गोत्रे वुञेव प्राप्नोतीति, अतस्तस्यैवायं प्रतिषेधो विधीयते। गौकक्ष्यशब्दाद्गर्गादियञन्तात् "कण्वादिभ्यो गोत्रे" ४।२।११० इत्यण्, पूर्ववद्यलोपः। "दाक्षाः" इति। दाक्षिप्लाक्षिमाहकिब्यः "इञश्च" ४।२।१११ इत्यण्॥

बाल-मनोरमा

न दण्डमाणवान्तेवासिषु १४८९, ४।३।१३०

न दण्ड। दण्डमाणवाश्च अन्तेवासिनश्च तेष्विति द्वन्द्वः। दाक्षा इति। दक्षस्यापत्यं दाक्षिः, तस्येमे दण्डमाणवाः, शिष्या वेत्यर्थे गोत्रत्वलक्षणो वुञ् न भवति, किंत्वौत्सर्गिकोऽणेव।

तत्त्व-बोधिनी

न दण्डमाणवान्तेवासिषु ११५८, ४।३।१३०

न दण्ड।"तस्येदमि"त्यनुवर्तते। तेषु शिष्यषु चेति। "प्रत्ययार्थविशेषणेष्वि"ति शेषः। दाक्षा इति। "इञश्चे"त्यण्।

---

सूत्रम्

काशिका-वृत्तिः

रैवतिकाऽदिभ्यश् छः ४।३।१३१

दैवतिकाऽदिभ्यः छः प्रतयो भवति तस्य इदम् इत्येतस्मिन् विषये। गोत्रप्रत्ययान्ता एते, ततः पूर्वेण वुञि प्राप्ते छविधानार्थं वचनम्। रैवतिकीयः। स्वपिशीयः। रैवतिक। स्वापिशि। क्षैमवृद्धि। गौरग्रीवि। औदमेयि। औदवाहि। बैजवापि।

काशिका-वृत्तिः

कौपिञ्जलहासितपदादण् ४।३।१३२

 

कौपिञ्जलहास्तिपदशब्दाभ्यम् अण् प्रत्ययो भवति तस्य इदम् इत्येतस्मिन् विषये। गोत्रवुञो ऽपवादः, गोत्राधिकारात्। कौपिञ्जलः। हास्तिपदः।

काशिका-वृत्तिः

आथर्वणिकस्य इकलोपश् च ४।३।१३३

अणित्येव। आथर्वणिकशब्दादण् प्रत्ययो भवति, तत्संनिहोगेन च इकलोपः, तस्य इदम् इत्येतस्मिन् विषये। चरनवुञो ऽपवादः। आथर्वणिकस्यायं आथर्वणो धर्मः आम्नायो वा। चरणाद् धर्माम्नाययोः।

न्यासः

रैवतिकादिभ्यश्छः।, ४।३।१३१

"पूर्वेण" इति। "गोत्रचरणाद्()वुञ्" ४।३।१२६ इत्यनेन। "रैवतिकीयम्" इति। रेवत्या अपत्यमिति रैवतिकः, ततश्छः। "स्वापिशीयम्" इति। स्वापिशिशब्दादिञन्ताच्छः। अथ च्छग्रहणं किमर्थम्, नानन्तरसूत्राद्विप्रतिषेधोऽनुवर्तिष्यते, तत्र रेवतिकादिभ्यो वुञि प्रतिषिद्धे वृद्धत्वादेषां छ एव भविष्यति? भवेत् सिद्धं यत्र च्छस्यापवादो नास्ति-- रैवतिकीय इति, ये त्वत्रेञन्ताः पठ()न्ते--स्वापिशि, औदमेधि, औचदवापि-- इत्येवादयः तेभ्यः यावता गहादिरसौ, गहादित्वाच्छ एव भविष्यति? न सिध्यति; गहादिपाठस्यान्यस्तद्धितार्थोऽवकाशः, इदमर्थे तु परत्वाद्()वुञेव स्यात्। तस्मादिदमर्थे तु स्यादिति युक्तस्तस्येह पाठः॥

न्यासः

कौपिञ्जलहास्तिपदादण्।, ४।३।१३१

"गोत्राधिकारात्" इति। "गोत्रावुञोऽपवादः" इत्यत्रायं हेतुः। अत्र हि गोत्रग्रहणेऽधिक्रियमाणे कौपिञ्जलहास्तिपदशब्दाभ्यां गोत्रवाचकाभ्यामण् विधीयते, स च नाप्राप्ते गोत्रवुञीति, तेन तस्यैवापदवादो विज्ञायते। "कौपिञ्जलः" इति। कुपिञ्जलस्यापत्यमित्येतस्मादेव निपातनादण्, तदन्तात् कौपिञ्जलस्येदमिति पुनरण्। "हास्तिपदः" इति। हस्तिन इव पादावस्येति हस्तिपादस्यापत्यमित्यस्मादेव निपातनादण्, पादस्य पद्भावः, हास्तिपदस्येदमिति पुनरनेनाण्। अथाण्ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत? ननु चैवमुच्यमाने "वृद्धाच्छः" (४।२।११४) स्यात्? नैतदस्ति; यद्येताभ्यां छोऽभीष्टः स्यात्, रैवतिकादिष्वेतौ पठ()एयाताम्। रैवतिकादिभ्यस्तु पृथगुपादानाद्वि ज्ञायते--नैताभ्यां छो भवतीति। वुञ् तर्हि स्यात्? नैतदस्ति; आरम्भो ह्येवमनर्थकः स्यात्, गोत्रादित्येवं वुञः सिद्धत्वात्। नानर्थकः, यत्रासौ प्रतिषिध्यते तत्रारम्भस्य सार्थकत्वात्। क्व चासौ प्रतिषिध्यते? "न दण्डमाणवान्तवेवासिषु" ४।३।१३० तस्मादण्ग्रहणं कत्र्तव्यम्। णित्करणं कौपिञ्जली क्रियेति ङीष्यथा स्यात्। इह च कौपिञ्जली क्रियाऽस्य कौपिञ्जलीक्रिय इति "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" ६।३।३८ इति पुंवद्भावप्रतिषेधो यथा स्यात्॥

न्यासः

आथर्वणिकस्येकलोपश्च।, ४।३।१३१

"चरणवुञोऽपवादः" इति। आथर्वणिकस्य चरणवाचित्वात्। "आथर्वणः" इति। अथर्वणा प्रोक्तमित्यण् "अन्" ६।४।१६७ इति प्रकृतिभावः। आथर्वण इति स्थितेऽध्येतरि "तदधीते तद्वेद" ४।२।५३ इत्यनुवत्र्तमाने "वसन्तादिभ्यष्ठक्" ४।२।६२ आथर्वणिकः। अत एव निपातनात् "पोक्ताल्लुक्" ४।२।६३ इति लुग्न भवति। "चरणाद्धर्माम्नाययोः" (वा।४७६) इति पूर्वोक्तमिष्टं स्मारयति॥

बाल-मनोरमा

रैवतिकादिभ्यश्छः १४९०, ४।३।१३१

रैवतिकादिभ्यश्छः। तस्येदमित्यर्थे इति। शेषपूरणम्। वुञ इति। गोत्रत्वलक्षणबुञोऽपवाद इत्यर्थः। रैवातिकीयमिति। रेवत्या अपत्यं रैवतिकः। "रैवत्यादिभ्यष्ठक्"। रैवतिकस्येदमिति विग्रहः। वैजवापीयमिति। वीजवापस्यापत्यं वैजवापिः, तस्येदमिति विग्रहः।

बाल-मनोरमा

कौपिञ्जलहास्तिपदादण् [वाच्यः] १४९१, ४।३।१३१

कौपिञ्जलहास्ति। "कुपिञ्जलस्यापत्य"मित्यनन्तरम् "इत्यर्थे" इति शेषः। इहेति। अस्मिन् वार्तिके कौपिञ्जलेति निर्देशादत इञं बाधित्वा अणित्यर्थः। तदन्तादिति। अणन्तात् "तस्येद"मित्यर्थे अनेन [सूत्रेण]पुनरणित्यर्थः। हस्तिपादस्येति। हस्तिन इव पादौ अस्येति विग्रहः "पादस्य लोप" इति न भवति, "अहस्त्यादिभ्य" इति प्रतिषेधात्। हस्तिपादस्यापत्यं हास्तिपदः। अत इञं बाधित्वा अत एव निपातनागदण्, पद्भावश्च। हास्तिपदस्यायमित्यर्थे अनेन अणिति भावः। होत्रवुञो।ञपवादः। आथर्वणिकस्येकलोपश्च। इदं सूत्रमिति कैयटः। "वार्तिक"मित्यन्ये। अण् स्यादिति। आथर्वणिकशब्दात्तस्येदमित्यर्थे अम् स्यात्। प्रकृतेरिकस्य लोपश्चेत्यर्थः।

बाल-मनोरमा

आथर्वणिकस्येकलोपश्च ४४६, ४।३।१३१

आथर्वणिकस्येति। अथर्वणा प्रोक्तो वेदोऽथर्वेत्युपचर्यते, तमधीते आथर्वणिकः। वसन्तादित्याट्ठक्। आथर्वणिकस्यायमित्यर्थे अनेन अणि, इको लोपे "दाण्डिनायने"ति टिलोपाऽभावे "आथर्वण" इति रूपमित्यर्थः। धर्मे आम्नायो वेति। "चरणाद्धर्माम्नाययो"रित्युक्तेरिति भावः। ननु तस्येदमित्येव सिद्धेऽण्विधिव्यर्थ इत्यत आह--चरणाद्वुञोऽपवाद इति। आथर्वणिकशब्दस्य अथर्वणवेदाध्येतृवाचित्वादिति भावः।

*****इति बालमनोरमायाम् शैषिकाः।*****

तत्त्व-बोधिनी

रैवतिकादिभ्यश्छः ११५९, ४।३।१३१

रैवतिकादिभ्यश्छः। रैवतिकशब्दो रेवत्यादिभ्यष्ठगितिठगन्तः। रैवतिक औदमेथि(घि), वैजवापीत्यादि रेवतिकादयोऽमी गोत्रप्रत्ययान्तास्ततः पूर्वेण वुञि प्राप्ते छविधानार्थमिदमित्याह---वुञोऽपवाद इति। अत इञमाशङ्क्याह--।

तत्त्व-बोधिनी

कौपिञ्जलहास्तिपदादण् [वाच्यः] ११६०, ४।३।१३१

इहैव निपातनादिति। हस्तिनः पाद इव पादो यस्य हस्तिपादः। पादस्य लोपो न भवति, "अहस्त्यादिभ्य"इति वचनात्। तदाह--हस्तिपादस्येति। हास्तिपद इति। अस्मादेव निपातनादण् पद्भावश्चेति भावः।

तत्त्व-बोधिनी

आथर्वणिकस्येकलोपश्च ८०२, ४।३।१३१

आथर्वणिकस्य। अथर्वणा प्रोक्तो वेदोऽथर्वा, अबेदोपचारात्। तमधीते। वसन्तादित्वाट्ठक्। दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाऽभावः। अन्ये त्वाहुः----अथर्वणा प्रोक्तामधीते आथर्वणिकः। इह प्रोक्तेऽण्। ततः "छन्दोब्राआह्मणानी"ति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात्प्रोक्तात्ल्लुह् नेति॥

इति तत्त्वबोधिन्यां समाप्ता शैषिकाः॥

---

सूत्रम्

काशिका-वृत्तिः

तस्य विकारः ४।३।१३४

तस्य इति षष्ठीसमर्थाद् विकारः इत्येतस्मिन् विषये यथाविहितं प्रत्ययो भवति। प्रकृतेरवस्थान्तरं विकारः। किम् इह उदाहरणम्? अप्राण्याद्युदात्तम् अवृद्धं, यस्य च न अन्यत् प्रतिपदं विधानम्। अश्मनो विकारः आश्मनः, आश्मः। अश्मनो विकारे। इति टिलोपः पाक्षिकः। भास्मनः। मार्त्तिकः। नित्स्वरेणाद्युदात्ता एते। तस्य प्रकरणे तस्य इति पुनर् वचनं शैषिकनिवृत्त्यर्थम्। विकारावयवयोर्धादयो न भवन्ति। हालः। सैरः।

लघु-सिद्धान्त-कौमुदी

तस्य विकारः ११**१**३, ४।३।१३२

(अश्मनो विकारे टिलोपो वक्तव्यः)। अश्मनो विकारः आश्मः। भास्मनः। मार्त्तिकः॥

न्यासः

तस्य विकारः। , ४।३।१३२

"प्रकृतेरवस्थान्तरम्" इति। प्रकृतेः कारणस्यावस्थान्तरम् = अनयथात्वम्। "अप्राणी" इति। प्राणिनः "प्राणिरजतादिभ्यः" ४।३।१५२ अञं वक्ष्यति। "आद्युदात्तम्" इति। "अनुदात्तादेश्च" ४।३।१३८ इत्यञं वक्ष्यति। "अवृद्धम्" इति। वृद्धान्मयटं वक्ष्यति--"नित्यं वृद्धशरादिभ्यः" ४।३।१४२ इति, यस्य च नान्यत् प्रतिपदं विधानमिति-- गोपयसोर्यत्" ४।३।१५८ इत्येवमादि। ननु च "अन्" ६।४।१६७ इति प्रकृतिभावेन भवितव्यम्, तत्कथमाश्म इति भवति? इत्याह-- "अश्मनो विकार इति टिलोपः" इति। टिलोपार्थम()आमनो विकार इत्येतदुपसंख्यानं कृतम्। "नित्सरेवाद्युदात्ता एते" इति। अश्मादयः शब्दाः। तत्राश्मभस्मशब्दौ मनिन्प्रत्ययान्तत्वान्नत्स्वरेणाद्युदात्तौ। मृत्तिकाशब्दोऽपि तिकन्प्रत्ययान्तत्वात् -- "मृदस्तिकन्" ५।४।३९ इति। अथ तस्येति वचनं किमर्थम्, यावता तस्यग्रहणं प्रकृतमेव? इत्याह-- "{तस्यप्रकरणम्-- प्राचीन मुद्रित वा} तस्य प्रकरणम्" इत्यादि। तद्धि प्रकृतं तस्येति वचनं शैषिकैर्घादिभिः {सम्बद्ध--मु।पाठः} सम्बद्धम्। अतस्तदनुवृत्तौ तेऽप्यनुवत्र्तेरन्। अ()स्मस्तु तस्यग्रहणे क्रियमाणे पूर्वकं तस्येति वचनं निवत्र्तते। तस्मात् प्रकृतेऽपि तस्येति वचने शैषिक निवृत्त्यर्थं पुनस्तस्येत्युच्यत इति। ननु च प्रधानं घादयः, विधीयमानत्वात्; तस्येति तु वचनप्रधानम्, तदर्थत्वात्; तत्रायुक्ता गुणे निवत्र्तमाने प्रधानस्य निवृत्तिः प्रसज्येत, यथैव हि प्रकृतं तस्येति वचनं घादिभिः सम्बद्धं तथा अणादिभिरपि? नैष दोषः, उभयेषां हि निवृत्ती निष्पलः सूत्रस्यारम्भः स्यात्। विधेयस्य कस्यचिदभावात्, तस्मान्न भवत्युभयेषां निवृत्तिः। ननु चारम्भसामर्थ्यादुभयेषामन्यतमेषां निवृत्तिरित्येतावद्वि ज्ञायते। त()त्क घादयो निवत्र्तन्ते? उताणादयः? सन्देह एव। सन्देहमात्रमेतत्, सर्वसन्देहेष्विदमुपतिष्ठते-- "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" (व्या।प।७५) इति। घादयो निवत्र्तन्त इत्येवं व्याख्यास्यामः, स्वरितत्वादणादीनामनुवृत्तिर्भविष्यति। ननु चास्वरित्वाद्धादीनामनुवृत्तिः, सैव तु तस्येति वचनेनाख्यायते शैषिकनिवृत्त्यर्थम्। "विकारावयवयोः" इत्यादिना विशेषं दर्शयति। केन पुनविकारावयवयोर्घादयः

प्राप्नुवन्ति? "तस्येदम्" ४।३।१२० इत्यनेनच तस्येदंविशेषत्वात् तयोः। "हालः,सैरः" इति। यदि शैषिका अनुवर्त्तेरंस्ततो हलसीरशब्दाभ्यां "हलसीराट्ठक्" ४।३।१२४ इति ठक् स्यात्। तन्निवृत्तौ त्वणेव भवति॥

बाल-मनोरमा

तस्य विकारः १४९३, ४।३।१३२

अथ विकारार्थप्रत्यया निरूप्यते। तस्य विकारः। विक्रियते इति विकारः। कर्मणि घञ्। प्रकृतेकवस्थान्तरात्मिका विक्रियां प्राप्त इत्यर्थः। विकार इत्यर्थे षषथ्ठ()न्तादणादयः साधारणा, वक्ष्यमाणाश्च वैशेषिका यथाविहितं स्युरित्यर्थः।

अश्मनो विकार इति। विकारार्थकप्रत्यये परे अश्मन्शब्दस्य टिलोपो वक्तव्य इत्यर्थः। "अ"निति प्रकृतिभावापवादः। आश्म इति। अणि टिलोपे रूपम्। एवं चर्मणो विकारः चार्मः कोशः। "चर्मणः कोशे" इत्युपसङ्ख्यानाट्टिलोपः। भास्मन इति। भस्मनो विकार इत्यर्थः। अणि "अ"निति प्रकृतिभावान्न टिलोपः। मार्त्तिक इति। मृत्तिकाया विकार इत्यर्थः। अत्र "प्राणिरजतादिभ्योऽञ्" "ओरञ्" "अनुदात्तादेश्चे"त्यादिवक्ष्यमाणपवादविषयभिन्नमुदाहरणम्। तत्र अश्मन्, भस्मन्, चर्मन् इतित्रयं मनिन्प्रत्ययान्तं नित्स्वरेणाद्युदात्तम्। मृत्तिकाशब्दोऽपि "मृदस्तिक"न्निति तिकन्नन्तो नित्स्वरेणाद्युदात्तः।

तत्त्व-बोधिनी

तस्य विकारः ११६२, ४।३।१३२

तस्य विकारः। षष्ठ()न्ताद्विकारे अणादयः स्युः। घादिसंबद्धस्य "तस्य"[इति]ग्रहणस्य निवृत्यै पुनस्तस्येत्युक्तम्। अणादयस्तु न निवर्तन्ते, "प्राग्दीव्यतः" "प्राग्भवना"दिति विशिष्टावधिरिच्चेदनाधिकृतत्वात्। इह "प्राणिरजतादिभ्योञ्", "ओरञ्", "अनुदात्तादेश्च" मयड्वेतयोः", "नित्यं वृद्धशरादिभ्यः", "पिष्टाच्चे"त्यादिभिरपवादानां वक्ष्यमाणत्वादप्राणि, आद्युदात्तम्, अवृद्धं , प्रतिपदमवक्ष्यमाणप्रत्ययं चोदाहरणमिति पर्यालोच्य ततैवोदाहरति--- आश्मैत्यादि। अश्मन्()भस्मन्()शब्दौ मनिन्प्रत्ययान्तौ। "मृदस्तिकन्"। निस्त्वरेण त्रयोऽप्याद्युदात्ताः। प्राचीनस्य तस्येत्यस्य निवृत्तत्वादधिकारोक्तप्रत्यया न प्रवर्तन्त इति नेह ठक्। हालः, सैरः।

---

सूत्रम्

काशिका-वृत्तिः

अवयवे च प्राण्योषधिवृक्षेभ्यः ४।३।१३५

प्राण्योषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः अवयवे यथाविहितं प्रत्ययो भवति, चकाराद् विकारे च। तत्र प्राणिभ्यः अञं वक्ष्यति। कपोतस्य विकारो अवयवो वा कापोतः। मायूरः। तैत्तिरः। ओषधिभ्यः मौर्वं काण्डम्। मौर्वं भस्म। वृक्षेभ्यः कारीरं काण्डम्। कारीरं भस्म। इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यः विकारावयवयोः भवन्ति। अन्येभ्यस् तु विकारमात्रे। कथं द्वयम् अप्यधिक्रियते तस्य विकारः, अवयवे च प्राण्योषधिवृक्षेभ्यः इति? विकारावयवयोर् युगपदधिकारो ऽपवाद। विधानार्थः। कृतनिर्देशौ हि तौ।

लघु-सिद्धान्त-कौमुदी

अवयवे च प्राण्योषधिवृक्षेभ्यः १११४, ४।३।१३३

चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा। पैप्पलम्॥

न्यासः

अवयवे च प्राण्योषधिवृक्षेभ्यः। , ४।३।१३३

"मौर्वं काण्डम्" इति। मूर्वाशब्दादवयवे प्रत्ययः। "मौर्व भस्म" इति। विकारे। "इत उत्तरम्" इत्यादिना वक्ष्यमाणानां प्रत्ययानां विषयविभागं दर्शयति। "कथम्" इति। केन प्रकारेणायं विभागो लभ्यते। प्रत्यक्षमर्थं पृच्छति--"द्वयमपि"इत्यादि। यतो हेतोरेष विषयविभागो लभ्यते तद्दर्शयति। ततर् फलपाकान्ता ओषधः,पुष्पवन्तः फलवन्तश्च वृक्षाः, तद्विशेषा वनस्पतयः फलवन्त एव। तत्र वनस्पतिग्रहणेन वृक्षविशेषास्ततोऽन्येन गृह्न्ते। वृक्षग्रहणे तु वनस्पतेरपि ग्रहणं विज्ञेयम्। "विकारावयवयोः" इत्यादि। युगपदधिकारे ह्णादीन् वक्ष्यामीत्येवमर्थो युगपदधिकारः। अणादीनामर्थनिर्देशार्थोऽपि कस्मान्न भवति? इत्याह-- "कृतनिर्देशो हि तौ" इति। कृतनिर्देशो हि तावर्थौ "तस्येदम्" ४।३।१२० इत्यनेनैव;तस्येदं विशेषत्वात् तयोः॥

बाल-मनोरमा

अव्यवे च प्राण्योषधिवृक्षेभ्यः १४९४, ४।३।१३३

अवयवे च प्रा।प्राणिवाचिन ओषधिवाचिनो वृक्षवाचिनश्च षष्ठ()न्तेभ्योऽवयवे विकारे च अणादयः उक्ता वक्ष्यमाणाश्च प्रत्यया यथाविहितं स्युः, अन्येभ्यस्तु विकारमात्र इत्यर्थः। प्राणिन उदारहरति--मायूर इति। "लघावन्ते" इति मयूरशब्दो भध्योदात्तः। ततः "प्राणिरजतादिभ्यः" इत्यञ्। ओषधेरुदाहरति--मौर्वमिति। मूर्वा ओषधिविशेषः। तस्या अवयवो विकारो वेत्यर्थः। औत्सर्गिकोऽण्। "अनुदात्तादेश्चे"त्यञ् तु वक्ष्यमाणो न भवति, "तृणधान्यानां च द्व्यषा"मित्याद्युदात्तत्वात्। वृक्षस्योदाहरति--पैप्पलमिति। पिप्पलः-अ()आत्थः, तस्यावयवो विकारो वेत्यर्थः। "लघावन्ते" इति मध्योदात्तः पिप्पलशब्दः। "अनुदात्तादेश्चे"ति वक्ष्यमा"णाऽञोभावे औत्सर्गिकोऽण्।

तत्त्व-बोधिनी

अवयवे च प्रण्योषधिवृक्षेभ्यः ११६३, ४।३।१३३

चाद्विकार इति। तेन वक्ष्यमाणप्रत्ययाः प्राण्यदिभ्यस्त्रिभ्योऽर्थद्वये भवन्त्यन्येभ्यस्तु विकार एवेति फलितम्। मायूर इति। "प्राणिरजतादिभ्यः" इत्यञ्। अनुदात्तादेरञः सिद्धत्वादुदात्ताद्यर्थं, वृद्धेषुमयड्बाधनार्थं चावश्यकमिदं परत्वादनुदात्तादिष्वपि प्रवर्तते। ओषधिभ्य उदाहरति---मौर्वमिति। मूर्वाशब्दः "तृणधान्यानां च द्व्यषा"मित्याद्युदात्तः। पिप्पलशब्दस्तु "लघावन्ते"इत्यनेनाद्युदात्तः।

---

सूत्रम्

काशिका-वृत्तिः

बिल्वाऽदिभ्यो ऽण् ४।३।१३६

बिल्व इत्येवम् आदिभ्यो ऽण् प्रत्ययो भवति विकारावयवयोरर्थयोः। यथायोगम् अञ्मयटोरपवादः। बिल्वस्य विकारो ऽवयवो वा बैल्वः। गवेधुकाशब्दो ऽत्र पठ्यते, ततः कोपधातेव सिद्धे मयड्बाधनार्थं ग्रहणम्। विल्व। व्रीहि। काण्ड। मुदग्। मसूर। गोधूम। इक्षु। वेणु। गवेधुका। कर्पासी। पाटली। कर्कन्धू। कुटीर। बिल्वादिः।

न्यासः

बिल्वादिभ्योऽण्। , ४।३।१३४

"अञ्मयटोरपवादः" इति। यदत्रानुदात्तादि तस्मात् "अनुदात्तादेश्च" ४।३।१३८ इति प्राप्तस्याञोऽपवादः। यद्()वृद्धं ततः "नित्यं वृद्धशरादिभ्यः" ४।३।१४२ इति मयटः। तत्र बिल्वशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते

"बिल्वतिष्ययोर्वान्तस्वरितत्वम्" (फि।सू।१।२३) इति स्वरितत्वं भवति, उदात्तो वा। "व्रीहिमुद्ग" शब्दौ घृतादित्वादन्तोदात्तौ। "मसूरगोधूम" शब्दौ "लघावन्ते द्वयोश्च बह्वषो गुरुः" (फि।सू।२।४२) इति मध्योदात्तौ। एवं "गवेधुका" शब्दोऽपि। इषेः क्सुः, "इक्षुः"। प्रत्ययस्वरेणान्तोदात्तः। "वेणुः" शब्दोऽपि "विभाषा वेण्विन्धानयोः" ६।१।२०९ इतिपक्षेऽन्तोदात्त एव। "कर्पासीपाटली" शब्दौ "जातेरस्त्रीविषयादयोपधात्" इति ङीषन्तौ। ङीष्प्रत्ययान्तत्वान्ङीष्स्ययस्वरेणान्तोदात्तौ। "कर्कन्धू" शब्दः "अन्दूदृग्भूजम्बूकफेलूकर्कन्धूदिधिषूः" (द।उ।१।१७६) इति निपातनान्मध्योदात्तः। "कुटीर" शब्दः "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदात्तः। सर्व एते "अनुदात्तं पदमेकवर्जम्" ६।१।१५२ इत्यनुदात्तादयः। तेनाञ्बाधनार्थं ग्रहणमिति। अथाण्ग्रहणं किमर्थम्, न बिल्वादिभ्यो यथाविहितमेवोच्येत? नैवं शक्यम्; पाटलीशब्दो ह्यत्र वृद्धः पठ()ते, तस्मादञो बाधके मयटि प्राप्ते पुनर्वचनादञेव स्यात्। अण्ग्रहणात् त्वणेव भवति। तस्मादण्ग्रहणं क्रियते॥ "यथायोगम्" इति। प्राण्योषधिवृक्षेभ्यो विकारावयवयोः, अन्येभ्यस्तु विकारमात्र इत्येषो यतायोगार्थः। "अञोऽपवादः" इति। "ओरञ्" ४।३।१३७, "अनुदात्तादेः" ४।३।१३८ इत्येताभ्यां प्राप्तस्य। "तित्तिडीकमाण्डूक दर्दुरूकमधूक"शब्दाः "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदाताः,तेनानुदात्तादयो भवन्ति॥

बाल-मनोरमा

बिल्वादिभ्योऽण् १४९५, ४।३।१३४

विल्वादिभ्योऽण्। एषु प्राण्योषधिवृक्षेभ्यः अवयवे विकारे च, इतरेभ्यस्तु विकारे अण् स्यादित्यर्थः। बैल्वमिति। बिल्वस्यावयवो विकारो वेत्यर्थः। बिल्व, व्रीहि काण्ड, मुद्ग, मसूर, गोधूम, इक्षु, वेणु, गवेधुक, कार्पासी, पाटली, कर्कन्धू, कटी"ति बिल्वादयः। तत्र गवेदुकस्य "कोपधाच्चे"त्यणि सिद्धे मयड्बाधनार्थमिह पाठः। इतरेषां तु "अनुदात्तादेश्चे"त्यञो बाधनार्थमिति कौस्तुभे विस्तरः।

तत्त्व-बोधिनी

बिल्वादिभ्योऽण् ११६४, ४।३।१३४

बिल्वादिभ्योऽण्। अञ्मयटोरपवादः। बिल्व व्राहि काण्ड मुद्ग मसूर गोधून इक्षु कर्पासी वेण्वादयो--बिल्वादयः।

---

सूत्रम्

काशिका-वृत्तिः

कौपाधाच् च ४।३।१३७

ककारौपधात् प्रातिपदिकादण् प्रत्ययो भवति यथायोगं विकारावयवयोरर्थयोः। अञो ऽपवादः। तर्कु तार्कवम्। तित्तिडीकतैत्तिडीकम्। माण्डूकम्। दार्दुरूकम्। माधूकम्।

बाल-मनोरमा

कोपधाच्च १४९६, ४।३।१३५

कोपधाच्च। "अ"णिति शेषः। तत्र प्राण्योषधिवृक्षेभ्योऽवयवे विकारे च, इतरेभ्यस्तु विकारे एव तर्कु--तार्कवमिति। तर्कु इति प्रकृतिनिर्देशः। तर्कुर्नाम--वृक्षविशेषः, तस्यावयवो विकारो वेत्यर्थः। "ओर"ञित्यस्यापवादोऽण्। तित्तिडीकशब्दो "लघावन्ते" इति मध्योदात्तः। "अनुदात्तादेश्चे"कत्यञोऽपवादोऽण्।

---

सूत्रम्

काशिका-वृत्तिः

त्रपुजतुनोः षुक् ४।३।१३८

त्रपुजतुशब्दाभ्याम् अण् प्रत्ययो भवति विकरे, तत्सन्नियोगेन तयोः षुगागमो भवति। ओरञो ऽपवादः। त्रपुणो विकारः त्रापुषम्। जातुषम्। अप्राण्यादित्वान् न अवयवे।

न्यासः

त्रपुजतुनोः षुक्। , ४।३।१३६

"ओरञोऽपवादः" इति। अनुदात्तत्वात्। "अप्राण्यादि" इति। आदिशब्देनौषधित्वमवृक्षत्वं च गृह्रते॥

बाल-मनोरमा

त्रपुजतुनो षुक् १४९७, ४।३।१३६

त्रपुजतुनो षक्। त्रापुषं जातुषमिति। त्रपुणो जतुनश्च विकार इत्यर्थः।

तत्त्व-बोधिनी

त्रपुजतुनोः षुक् ११६५, ४।३।१३६

त्रपुजतुनोः। "बिल्वादिभ्योऽणि"त्यतोऽनुवर्तनादाह--अण्स्यादिति। "ओरञि"त्यस्यायमपवादः। अप्राण्यादित्वादवयवे न भवतीत्याशयेनाह---विकारे इति। त्रापुषमिति। त्रपुणो विकारः। एवं जुतनो विकारो जातुषम्।

---

सूत्रम्

काशिका-वृत्तिः

ओरञ् ४।३।१३९

उवर्णान्तात् प्रातिपदिकातञ् प्रतयो भवति विकारावयवयोरर्थयोः। अणो ऽपवादः। अनुदात्तादेरन्यदिहोदाहरणम्। दैवदारम्। भाद्रदारवम्।

न्यासः

ओरञ्। , ४।३।१३७

"अनुदात्तादेरन्यदिहोदाहरणम्" इति। अनुदात्तादेरुत्तरसूत्रेणैव सिद्धत्वात्। "दैवदारवम्, भाद्रदारवम्" इति। देवदारुभद्रदारुशब्दौ "पीतद्रवर्थानाम्" (फि।सू।२।३७) इत्याद्युदात्तौ। तस्यायमर्थः--पीतद्रुः अर्थो येषां ते पीतद्रवर्थाः, तेषां पीतद्रवर्थवचनानामादिरुदायो भवति॥ "दाधित्थम्" इत्यादि। दध्नि तिष्ठतीति, कपौ तिष्ठतीति --सुपि स्थः" ३।२।४ इति कः,"अतो लोपः" ६।४।४८ इत्यकारलोपः, पृषोदरादित्वात् सकारस्य तकारः,उपपदसमासः, समासस्वरेणान्तोदात्तौ। तेन दधित्थकपित्थशब्दावनुदात्तादी भवतः॥

बाल-मनोरमा

ओरञ् १४९८, ४।३।१३७

ओरञ्। उवर्णादढ् स्यादित्यर्थः। प्राण्योषधिवृक्षेभ्योऽवये विकारे च, इतरेभ्यस्तु विकारे। दैवदारवं भाद्रदारवमिति।

देवदारोर्भद्रदारोश्चावयवो विकारो वेत्यर्थः। "पीतद्वर्थाना"मित्याद्युदात्तावेतौ। ततश्च "अनुदात्तादेश्चे"त्यनेन गतार्थता न।

तत्त्व-बोधिनी

ओरञ् ११६६, ४।३।१३७

ओरञ्। अनुदात्तादेरन्यदिहोदाहरणम्। दैवदारवमिति। देवदारु--भद्रदारुशब्दौ "मितद्र्वर्थानामि"त्याद्युदात्तौ।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्ताऽदेश् च ४।३।१४०

अनुदात्तादेः प्रातिपदिकातञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणो ऽपवादः। दाधित्थम्। कापित्थम्। माहित्थम्।

बाल-मनोरमा

अनुदात्तादेश्च १४९९, ४।३।१३८

अनुदात्तादेश्च। "विकारे अ"ञिति शेषः। "अवयवे चे"ति सूत्रमप्यत्र सम्बध्यते। दाधित्थमिति। दधित्थस्यावयवो विकारो वेत्यर्थः। एवं कापित्थम्। "कपित्थे तु दधित्थग्राहिमन्मथाः" इत्यमरः। अव्युत्पन्नप्रातिपदिकत्वात्-
फिट्-स्वरेणान्तोदात्तावेतौ।

तत्त्व-बोधिनी

अनुदात्तादेश्च ११६७, ४।३।१३८

दाधित्थमिति। दधनि तिष्ठतीति "सुपि स्थः"इति कः। उपपदसमासः। पृषोदरादित्वात्सकारस्य तकारः।
कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। एवं कपित्थेऽपि बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

पलाशाऽदिभ्यो वा ४।३।१४१

पलाशाऽदिभ्यः प्रातिपदिकेभ्यः वा अञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। पालाशम्। खादिरम्। यवासम्। उभयत्र विभाषेयम्। पलाशखदिरशिंशिपास्पन्दनानाम् अनुदत्तादित्वात् प्राप्ते अन्येषाम् अप्राप्ते। पलाश। खदिर। शिंशिपा। स्पन्दन। करीर। शिरीष। यवास। विकङ्कत। पलाशादिः।

न्यासः

पलाशादिभ्यो वा। , ४।३।१३९

"उभयत्रविभाषेयम्" इति। प्राप्ते चाप्राप्ते च। तामेवोभयत्रविभाषां स्पष्टीकर्तुमाह-- "पलाशखदिर" इत्यादि। पलाशशब्दो धृतादित्वादन्तोदात्तः,खदिरशब्दोऽपि तित्स्वरेण।
"इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिसिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्" (द।उ।८।२६) इत्यनुवत्र्तमाने "अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः र" (द।उ।८।२७) इति किरच्प्रत्ययान्तो निपातितः। शिंशपाशब्दः "पान्तानां गुर्वादीनाम्" (फिट्।३।५५) इति मध्योदात्तः। तस्यायमर्थः-- पाशब्दान्तानां गुर्वादीनां

द्वितीयमुदात्तं भवतीति। अथख "द्वितीयं प्रागीषात्" (फि।सू।३।५०) इत्यत्रानुवत्र्तते, "स्पदि किञ्चिच्चलने" (धा।पा।१४) अस्मात् "अनुदात्तादेश्च हलादेः" ३।२।१४९ इति युच्-- स्पन्दनः, चित्स्वरेणान्तोदात्तः। "कृशृगृटिपटि{शौटिभ्यः--द।उ।}शटिभ्य ईरन्" (द।उ।८।७२) करीर शब्दो नित्स्वरेणाद्युदात्तः। "कृ()शृगृकटिपटि{शौटिभ्यः द।उ।}शटिभ्य ईरन्" (द।उ।८।७२) करीर शब्दो नित्स्वरेणाद्युदात्तः। "कृह्मभ्यामीषन्" (द।उ।९।९), "शृपृभ्यां {कित् --द।उ।}किच्च" (द।उ।९।१०) इति शिरीषशब्दोऽपि नित्स्वरेणाद्युदात्तः। विकङ्गतपूलासयवासाश्च "ग्रामादीनां च" (फि।सू। २।३८) इत्याद्युदात्ताः॥

बाल-मनोरमा

पलाशादिभ्यो वा १५००, ४।३।१३९

पलाशादिभ्यो वा। "अ" ञिति शेषः। अवयवे चेत्येव पलाशखदिररशिंशपास्यन्दनानामनुदात्तादित्वान्नित्यं प्राप्ते, इतरेषामप्राप्ते विकल्पोऽयम्।

तत्त्व-बोधिनी

पलाशादिभ्यो वा ११६८, ४।३।१३९

पलाशादिभ्यो वा। उभयत्रविभाषेयम्। पलाशखदिरशिंशपास्यन्दनानामनुदात्तादित्वान्नित्यं प्राप्ते, करीरशिरीषविकङ्कतपूलासयवासशब्दानामप्राप्तेविधानात्। पालाशमिति। पलाशब्दो घृतादित्वादन्तोदात्तः। खदिरशब्दः"अजिरशिशिरे"त्यादौ किरच्प्रत्ययान्तो निपातितः। शिंशपाशब्दः "अथ द्वितीयं प्रागीषा"दिति वर्तमाने "पान्तानां गुर्वादीना"मिति मध्योदात्तः। "स्पदि किंचिच्चलने""अनुदात्तेतश्च हलादे"रिति युच्। कारीरमिति। "किरतेरीरन्"। नित्रुओण करीरशब्दोऽयमाद्युदात्तः। "कृ()तृ()भ्यामीषन्" "शृ()पृभ्यां किच्च"। पूर्ववच्छिरीषशब्दोऽप्याद्युदात्तः। विकङ्कतपूलासयवासशब्दाः "ग्रामादीनां चे"त्याद्युदात्ताः।

---

सूत्रम्

काशिका-वृत्तिः

शम्याष् ट्लञ् ४।३।१४२

शमीशब्दाट् ट्लञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अञो ऽपवादः। शामीलं भस्म। शामीलीस्रुक्।

न्यासः

शम्याष्ट्लञ्। , ४।३।१४०

"अञोऽपवादः" इति। शमीशब्दसय् गौरादित्वान्ङीषन्तस्य प्रत्ययस्वरेणान्तोदात्तस्यानुदात्तादित्वात्। टकारो ङीबर्थः॥

तत्त्व-बोधिनी

शम्याः ष्लञ् ११६९, ४।३।१४०

षित्त्वन्ङीषिति। टित्त्वान्ङीषिति। टित्त्वान्ङीबिति तु माधवः।

---

सूत्रम्

काशिका-वृत्तिः

मयड् वाऽ एतयोर् भाषायाम् अभक्ष्य आच्छादनयोः ४।३।१४३

प्रकृतिमात्राद् वा मयट् प्रत्ययो भवति भक्ष्याच्छादनवर्जितयोः विकारावयवयोरर्थयोर् भाषायां विषये यथायथं प्रत्ययेषु प्राप्तेषु। अश्ममयम्, आश्मनम्। मूर्वामयम्, मौर्वाम्। भाषायाम् इति किम्? बैल्वः खादिरो वा यूपः स्यात्। अभक्ष्याच्छादनयोः इति किम्? मौद्गः सूपः। कार्पासमाच्छादनम्। एतयोः इत्यनेन किं यावता विकारावयवौ प्रकृतावेव? ये विशेषप्रत्ययाः प्राणिरजतादिभ्यो ऽञ् ४।३।१५२ इत्येवम् आदयस् तद्विषये ऽपि यथा स्यात्, कपोतमयम्, कापोतम्, लोहमयम्, लौहम् इति।

लघु-सिद्धान्त-कौमुदी

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः १११५, ४।३।१४१

प्रकृतिमात्रान्मयड्वा स्यात् विकारावयवयोः। अश्ममयम्, आश्मनम्। अभक्ष्येत्यादि किम्? मौद्गः सूपः। कार्पासमाच्छादनम्॥

न्यासः

मयड्?वैतयोर्भाषायामभक्ष्याच्छादनयोः। , ४।३।१४१

"एतयोः" इति। "किमनेन"इत्यादि चोद्यम्। "ये विशेषप्रत्ययाः" इत्यादि परिहारः। आदिशब्देन "उष्ट्राद्()वुञ्" ४।३।१५५ इत्येवमादयो गृह्णन्ते। यदि ह्येतयोरिति नोच्येत, ततो य इति उत्तरे विशेषाः प्रत्ययाः अञादयः तैः सह सम्प्रसारणायां परत्वात् त एव स्युः। "एतयोः" इत्युच्यमाने तु विशेषप्रत्ययेष्वपि पक्षे भवन्ति, तेन कपोतमयमित्यादि सिद्धं भवति। अथ क्रियमाणे "एतयोः"इत्येतस्मिन्, कथमवादविषये मयड्? भवति? एतयोरित्यस्य द्वितीयविधानार्थत्वान्मयट्प्रत्ययो विकारावयवयोर्भवति। एकम्-- विधानमेतयोरिति, मयड्()भवतीति-- द्वितीयम्। तत्र यद्येतदद्वितीयं विधानं तदा प्रापणार्थम्। तेन यत्रापि विशेषप्रत्ययैर्बाधितो विज्ञायते। तस्माद्वाग्रहणं कत्र्तव्यम्॥

बाल-मनोरमा

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः १५०२, ४।३।१४१

मयड्वैतयोः। अधिकारादेव "विकारावयवयोट"रिति सिद्धेरेतयोरिति वचनमुक्तवक्ष्यमाणापवादविषयेष्वपि पक्षे मयडर्थमिति भाष्ये स्पष्टम्। तेन विल्वमयं वैल्वमित्यादि सिध्यतीत्यभिप्रेत्य आह--प्रकृतिमात्रादिति। सर्वस्याः प्रकृतेरित्यर्थः। अश्ममयमिति। मयटि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वम्। नलोपः। आश्मनमिति। कल्माषाङ्घ्रिर्नाम कस्चिद्राजा तत्पत्न्यां वसिष्ठेनोत्पदितोऽश्मक इति। अश्मन्शब्दात्स्वार्थे कप्रत्ययः, तदभावे अश्मेत्यपि नाम, तस्य विकारो अवयवो वेत्यर्थः। "अ"न्निति प्रकृतिभावान्न टिलोपः। नच विकारार्थकत्वे "अश्मनो विकारे" इति टिलोपः शङ्क्यः, तत्र पाषाणवाचनत्वेन प्रसिद्धस्याऽश्मन्शब्दस्यैव ग्रहणादिति भावः।

तत्त्व-बोधिनी

मयड्वैतयोर्भाषायामभक्ष्याच्छादानयोः ११७०, ४।३।१४१

मयड्वैतयोः। भाषायां किम्()। खादिरो यूप इति वृत्तिकारः। ननु मयटो वैकल्पिकत्वात्सिद्धमिदमिति चेत्। अत्राहुः---वेदे बह्वचः परस्य मयटोऽर्थान्तरपरत्वमेवेति तात्पर्यग्रहार्थमेवेदम्। "द्व्यचश्छन्दसी"ति सूत्रस्य "द्व्यच एवे"ति नियमार्थत्वे यद्यपीदं गतार्थं तथापि "द्व्यचश्छन्दस्येवे"ति विपरीतनियमशङ्कानिवृत्त्यर्थं भाषाग्रहणं कृतमिति। अधिकारादेव विकारावयवयोर्लाभे एतयोरिति वचनं ये विशेषप्रत्ययाः "प्राणिरजतादिभ्यो"ऽञित्येवमादयस्तद्विषयेऽपि यथा स्यादित्येवमर्थम्। कपोतमयं। लोहमयम्। इह। विकाररावयवाभ्यां सह प्रत्येकम् "अभक्ष्याच्छदनयो"रिति सम्बध्यते समासनिर्देसादतो यथासङ्ख्यं न। आश्मनमिति। "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः"इति

वचनादस्मभेदशब्दे भेदशब्दस्य लोपे आश्मन्निति नान्तमवशिष्यते। तथा कल्मषाङ्घ्रे राज्ञो भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः सुतोऽश्मको नाम, तत्र संज्ञात्वद्योतकस्य कप्रत्ययस्याऽभावे अश्मन्निति नाम भवति, तस्यावयवे आश्मनं, विकारेऽप्याश्मनमित्येव भवति। न च "अश्मनो विकारे"इति टिलोपः स्यादिति वाच्यं, प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वात्। वस्तुतस्तु "तस्येद"मिति सामान्यविवक्षायां पाषाणवाचकस्याप्यश्मन्शब्दस्याऽऽश्मनमिति भविष्यति, पैष्टी सुरेतिवत्। मौद्गः सूपः। कार्पासमिति। मुद्गशब्दो घृतादित्वादन्तोदात्तः।"कृञः पासः" इति पासप्रत्यये गुणे रपरे च कर्पसीशब्दो जातिलक्षणङीषन्तः। ताभ्यां "अनुदात्तादेश्च"इत्यञं बाधित्वा बिल्वादिचादण्।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं वृद्धशराऽदिभ्यः ४।३।१४४

भाषायाम् अभक्ष्याच्छादनयोः इत्येव। वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्च अभक्ष्याच्छादनयोः विकारावयवयोः भाषायां विषये नित्यं मयट् प्रत्ययो भवति। वृद्धेभ्यस् तावत् आम्रमयम्। शालमयम्। शाकमयम्। शरादिभ्यः शरमयम्। दर्भमयम्। मृन्मयम्। नित्यग्रहणं किं यावता आरम्भसामर्थ्यादेव नित्यं भविस्यति? एकाचो नित्यं मयटमिच्छन्ति, तदनेन क्रियते, त्वङ्मयम्, स्रङ्मयम् , वाङ्मयम् इति। शर। दर्भ। मृत्। कुटी। तृण। सोम। बल्वज। शरादिः।

लघु-सिद्धान्त-कौमुदी

नित्यं वृद्धशरादिभ्यः ११९६, ४।३।१४२

आम्रमयम्। शरमयम्॥

बाल-मनोरमा

नित्यं वृद्धशरादिभ्यः १५०३, ४।३।१४२

नित्यं वृद्ध। "मय"डिति शेषः। उक्तविकल्पस्यापवादः।

एकाचो नित्यमिति। "नित्य"मिति योगविभागलब्धमिदम्। अण्णन्तादिति। अपामिदमापम्। "तस्येद"मित्यण्। ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञि आप्यमिति रूपमित्यर्थः।

तत्त्व-बोधिनी

नित्यं वृद्धशरादिभ्यः ११७१, ४।३।१४२

नित्यं वृद्ध। इह "भाषायामभक्ष्याच्छादनयो"रित्यनुवर्तत इति वृत्तिः। नन्वेवमानन्दमयाधिकरणे शङ्कराचार्यैः "अन्योन्तर आत्मानन्दमयः"इति श्रुतौ "आनन्दमय इति विकारे मय"डित्युक्तं तत्कथं सङ्गच्छतां()। "प्राचुर्ये मय"डिति तु वक्तुमुचितमिति चेत्। अत्राहुः---प्राचुर्ये मयट()पि प्रकृत्यर्थविरोधिनो दुःखस्य लेशतोऽनुवृत्तिलाभात्प्रकृते विकारार्थः पर्यवस्यतीति तेषामाशयः। यद्वा "नित्यं वृद्धे"त्यत्र भाषाग्रहणं नानुवर्तते। अनुवृत्तावपि "भाषायां नित्यम्, अन्यत्र क्वाचित्कः"इत्याश्रित्य मयट् सुसाधः। अथ वा "हेतुमनुष्येभ्य"इत्यनुवर्तमाने "मयट् चे"ति सूत्रेण आगतार्थे मयट्। विकार इति त्वार्थिकार्थकथनमेव। अतः शङ्करभगवत्पादोक्तिरनवद्यैवेति। शरमयमिति। शर दर्भ मृत्कटी तृण सोम बल्वज इति शरादिः।

एकाचो नित्यम्। एकाचो नित्यमिति।"नित्यं वृद्धे"ति नित्यग्रहणं योगविभागेनान्यत्रापि क्वचिद्विधानार्थं, तेनैतल्लभ्यत इति भावः। एकाच्त्वादेव सिद्धे शदादिषु मृच्छब्दपठनं विस्पष्टार्थमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

गोश् च पुरीषे ४।३।१४५

गोशब्दात् पुरीषे ऽभिधेये मयट् प्रत्ययो भवति। गोमयम्। पुरीषे इति किम्? गव्यं पयः। पुरीषं न विकारो न च अवयवः, तस्य इदं विषये विधानम्। विकारावयवयोस् तु गोपयसोर्यतं वक्ष्यति।

लघु-सिद्धान्त-कौमुदी

गोश्च पुरीषे १११७, ४।३।१४३

गोः पुरीषं गोमयम्॥

न्यासः

गोश्च पुरीषे। , ४।३।१४३

"गव्यम्" इति। गोरिदमित्यर्थविवक्षायां "सर्वत्र गोरजादिप्रसङ्गे यत्" (वा।३८३) इति यत्, "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः। "पुरीषं न विकारो नाप्यवयवः"इति। प्रकृतत्वाद्गोरिति गम्यते। ततर् विकारस्तावन्न भवति ; प्रकृतेरवस्थान्तरं पुरीषम्; {गोधर्मानन्वयादोदनवस्तूपकास्य --प्रांउ।पाठः} गोधर्मानन्वयात्। वस्तूपकारस्य समुदायस्यैकदेशो ह्यारम्भकोऽवयवो भवति, यथा--हस्तादि शरीरस्य; न चैवं गोः पुरीषम्। क्व तर्हीदं विधानमित्याह--"तस्येदं विषये" इति। गवा भावितत्वात् पुरी स्य, तत् तस्याः कार्यमिति तस्येदनर्थो भवति। तस्मात् तत्रैवेदं मयटो विधानम्। विकारावयवयोस्तर्हि केन भवितव्यम्? इत्याह-- "विकारावयवोस्तु" इत्यादि॥

बाल-मनोरमा

गोश्च पुरीषे १५०४, ४।३।१४३

गोश्च पुरीषे। "नित्यं मय"डित्यनुवर्तते। गोमयमिति। यद्यपि पुरीषं न गोर्विकारो नाप्यवयवस्तथापि त्सयेदमित्यर्थेऽयं प्रत्ययः।

तत्त्व-बोधिनी

गोश्च पुरीषे ११७२, ४।३।१४३

गोस्च पुरीषे। पुरीषं न विकारो, नाप्यवयवः, तथापि "तस्येद" मित्यर्थेऽयं प्रत्ययः। विकारावयवोस्तु गोपयसोर्यतं वक्ष्यति। पुरीषे किम्()। गव्यं पयः।

---

सूत्रम्

काशिका-वृत्तिः

पिष्टाच् च ४।३।१४६

पिष्टशब्दान् नित्यं मयट् प्रत्ययो भवति तस्य विकारः इत्येतस्मिन् विषये। अणो ऽपवादः। पिष्टमयं भस्म।

न्यासः

पिष्टाच्च। , ४।३।१४४

"अणोऽपवादः" इति। पिष्टशब्दोऽयं "निष्ठा च द्व्यजनात्" ६।१।१९९ इत्याद्युदात्तः, तेन तस्मादौत्सर्गिकः प्राप्नोति, ततस्तस्यायमपवादः॥

बाल-मनोरमा

पिष्टाच्च १५०५, ४।३।१४४

पिष्टाच्च। शेषपूरणेन सूत्रं व्याचष्टे--मयट् स्याद्विकारे इति।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां कन् ४।३।१४७

पिष्टशब्दात् कन् प्रत्ययो भवति विकारे संज्ञायां विषये। मयटो ऽपवादः। पिष्टकः।

न्यासः

संज्ञायां कन्। , ४।३।१४५

"मयटोऽपवादःरट इति। पूर्वसूत्रेण प्राप्तस्य। ननु च संज्ञायां कनं वक्ष्यत्येव, तदपार्थकं तद्विधानम्? नैतदस्ति; स ह्रल्पादिष्वर्थेषु, अयं तु विकारे। तदिदं सार्थकम्; अर्थभेदात्॥

बाल-मनोरमा

संज्ञायां कन् १५०६, ४।३।१४५

संज्ञायां कन्। विकारविशेष इति। अपूप इत्यर्थः। तदाह--पूपोऽपूपः पिष्टकः स्यादिति। अमरकोशोऽयम्। पुरोडाशस्तु न पिष्टकः, तस्यानपूपत्वात्। "()तुङ्गमनपूपाकृतिम()आशफमात्रं पुरोडाशं करोती"ति श्रुतेः।

---

सूत्रम्

काशिका-वृत्तिः

व्रीहेः पुरोडाशे ४।३।१४८

व्रीहिशब्दान् मयट् प्रत्ययो भवति पुरोडशे विकारे। बिल्वाद्यणो ऽपवादः। व्रीहिमयः पुरोडाशः। व्रैहम् अन्यत्।

न्यासः

व्रीहेः पुरोडाशे। , ४।३।१४६

बाल-मनोरमा

व्रीहेः पुरोडाशे १५०७, ४।३।१४६

व्रीहेः पुरोडाशे। पुरोडाशात्मके विकारे नित्यं मयट् स्यादित्यर्थः। तर्हि बिल्वादिगणे पाठः किमर्थमित्यत आह--व्रैहमन्यदिति।

---

सूत्रम्

काशिका-वृत्तिः

असंज्ञायां तिलयवाभ्याम् ४।३।१४९

तिलयवशब्दाभ्याम् असंज्ञाविषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। तिलमयम्। यवमयम्। असंज्ञायाम् इति किम्? तैलम्। यावकः। यावादिभ्यः कन् ५।४।२९।

न्यासः

असंज्ञायां तिलयवाभ्याम्। , ४।३।१४७

"तिलयवशब्दावाद्युदात्तौ" इति। तस्मादण्प्राप्नोति, अतस्तस्यायमपवादः। आद्युदात्तत्वं तु तयोः "तृणधान्यानां {गर्मुत्--द।उ। ग्रो मुट् च" पं।उ।}द्व्यषाम्" (फिट्।२।२७) इत्यनेनैव भवितव्यम्। अस्यायमर्थः-- तृणधान्यानां द्व्यचामादिरुदात्तो भवतीति। "यावकःर" इति। विकारेऽण्। तदन्तात्तु "यावादिभ्यः कन्" ५।४।२९ इति कन्॥

बाल-मनोरमा

असंज्ञायां तिलयवाभ्याम् १५०८, ४।३।१४७

असंज्ञायां तिलयवाभ्याम्। "नित्यंमय"डिति शेषः। यावक इति। यवशब्दाद्विकारे अण्। ततः "यावादिभ्यः" इति स्वार्थे कन्।

तत्त्व-बोधिनी

तिलयवाभ्याम् ११७३, ४।३।१४७

यावक इति। यवशब्दाद्विकारेऽण्, तदन्तात् "यावादिभ्यः"इति स्वार्थे कन्।

---

सूत्रम्

काशिका-वृत्तिः

द्व्यचश् छन्दसि ४।३।१५०

द्व्यचः प्रातिपदिकात् छन्दसि विषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। भाषायां मयड्डक्तः, छन्दस्यप्राप्तो विधीयते। यस्य पर्णमयी जुहूर्भवति। दर्भमयं वासो भवति। शरमयं बर्हिर्भवति।

न्यासः

द्व्यचश्छन्दसि। , ४।३।१४८

---

सूत्रम्

काशिका-वृत्तिः

न उत्त्वद्वर्ध्रबिल्वात् ४।३।१५१

उत्वतः प्रातिपदिकाद् वर्ध्रबिल्वशब्दाभ्यां च मयट् प्रत्ययओ न भवति। द्व्यचश् छन्दसि ४।३।१४८ इति प्राप्तः प्रतिषिध्यते। मौञ्जं शिक्यम्। गार्मुतं चरुम्। वार्ध्री बालप्रग्रथिता भवति। बैल्वो ब्रह्मवर्चसकामेन कार्यः। तपरकरणं तत्कालार्थम् धूममयानि अभ्राणि। मतुब्निर्देशस् तदन्तविधिनिरासार्थः। इह एव स्यात् वैणवी यष्टिः इति।

न्यासः

नोत्वद्वध्रबिल्वात्। , ४।३।१४९

"मौञ्जम्" इति। मुञ्जाशब्दस्य पूर्वपदाद्युदात्तत्वेन तस्मादौत्सर्गिक एवाण्। "गार्मुतम्" इति। "मुग्रोरुतिःट (पं।उ।१।९६), "{गर्मुत्-- द।उ। ग्रो मुट् च" (पं।उ।} गोर्मुट् च" (पं।उ।१।९७) इति प्रत्ययस्वरेण गर्मुच्छब्दोऽन्तोदात्तः। तस्मात् "अनुदात्तादेश्च" ४।३।१३८ इत्यञ्। "ब्राआर्ध्री"इति। "वृधिवपभ्यां रन्" (द।उ।८।४५) ब्राध्रशब्दो नित्स्वरेणाद्युदात्तः, तस्मात् "प्राग्दीव्यतोऽण्" ४।१।८३, "टिड्ढाणञ्" ४।१।१५ इति ङीप्। "बैल्वम्" इति। "बिल्वादिभ्योषऽण्" ४।३।१३४। अथ मतुषा निर्देशः किमर्थः? न नोद्वध्रबिल्वादित्येवोच्येतेत्यत आह-- "मतुब्निर्देशः"इति।"नोत्वद्वध्रबिल्वात्" ४।३।१४९ इत्युच्यमान उदिति वर्णग्रहणं स्यात्। अत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयतीति तस्मात्तन्निषेधाय मतुब्निर्देशः। कः पुनस्तदन्तविधौ सति दोषः स्यादित्यत आह-- "इहै व" इत्यादि। एवकारेण मुञ्जादिभ्यो न स्यादिति दर्शयति। "वैष्णवी" इति। बिल्वादित्वादण्॥

---

सूत्रम्

काशिका-वृत्तिः

तालाऽदिभ्यो ऽण् ४।३।१५२

तालाऽदिभ्यः प्रातिपदिकेभ्यः अण् प्रत्ययो भवति विकारावयवयोरर्थयोः। मयडादीनाम् अपवादः। तालं धनुः। बार्हिणम्। ऐन्द्रालिशम्। तालाद्धनुषि। बार्हिण। इन्द्रालिश। इन्द्रादृश। इन्द्रायुध। चाप। श्यामाक। पीयुक्षा। तालादिः।

न्यासः

तालादिभ्योऽण्। , ४।३।१५०

"मयडादीनामपवादः" इति। आदिशब्देनाञः।प्रकृतिभेदात् तयोर्बहुत्वस्य विवक्षित्वाद् द्वयोरपि बहुवचनम्। तत्र तालश्यामाकशब्दाभ्यां वृद्धलक्षणसय् मयटोऽपवादः। बर्हिणो विकारोऽवयवो वेति "प्राणिरजतादिभ्योऽञ्" ४।३।१५२ इत्यनेन बार्हिणशब्दोऽपि विकारावयवप्रत्यान्तः, तेन तस्मादञ् "ञितश्च तत्प्रत्ययात्" ४।३।१५३ इति प्राप्तस्याञोऽपवादः। शेषेभ्यस्त्विन्द्रालिशादिभ्योऽनुदात्तादिलक्षणस्याञः। लिशिदृशिभ्यामिन्द्र उपपदे "कप्रकरणे मूलविभुजादिब्य उपसंख्यानम्" (वा।२३२) इति कप्रत्ययः। "अन्येषामपि दृश्यते" ६।३।१३६ इति दीर्घत्वम्। "गतिकारकोपपदात् कृत्" ६।२।१३८ इति कृत्स्वरेणान्तोदात्तौ "इन्द्रालिशेन्द्रादृश" शब्दो। "इन्द्रा घु" शब्दः समासस्वरेणान्तोदात्तः। "चप सान्त्वने" (धा।पा।३९९) "पचाद्यच्" चपशब्दोऽन्तोदात्तः। पीयूक्षाशब्दः "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्यादात्तः। यद्यप्यस्य टापि कृते "लघावन्ते" (फि।सू।२।४२) नास्ति, प्राक्तु टापो विद्यत एव, तस्यामेवावस्थायां मध्योदात्तत्वं भवति। "तालाद्धनुषि" इति पठ()ते। तालशब्दादण् प्रत्ययो भवति धनुष्यभिधेय इति। तालं धनुः, तालमयमन्यत्। अथाण्ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत? नैवं शक्यम्; बार्हिशब्दाद्()वृदिद्धिलक्षणो मयट् "ञितश्च तत्प्रत्ययात्" ४।३।१५३ इत्यणा बाधितः। तत्रारम्भसामर्थ्यादन्मयडेव स्यात्। "श्यामाक"-शब्दः "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदात्तः। तस्मात् "अनुदात्तादेरञ्" ४।२।४३। परत्वाद्()वृद्धलक्षणेन मय()टा बाधित इतिपुनरारम्भसामर्थ्यादञेव स्यात्। अण्ग्रहमादणेव भवति॥

बाल-मनोरमा

तालादिभ्योऽण् १५०९, ४।३।१५०

तालादिभ्योऽण्। तालाद्धनुषीति। गणसूत्रमिदम्। तालं धनुरिति। "नित्यं वृद्धे"ति मयटोऽपवादः। ऐन्द्रायुधमिति।

"अनुदात्तादेश्चेत्यञोऽपवादः, समासस्वरेणान्तोदात्तत्वात्।

तत्त्व-बोधिनी

तालादिभ्योऽण् ११७४, ४।३।१५०

तालादिभ्योऽण्। अञ्मयटोरिति। तालशब्दश्यामाकशब्दाभ्यां वृद्धत्वान्मयट् प्राप्तः। बर्हिणां विकारो बार्हिणम्। "प्राणिरजतादिभ्योऽञ्"। ततो "ञितश्च तत्प्रत्यया"दित्यञ्प्राप्तः, शेषेभ्यस्त्वनुदात्तादित्वादञ्प्राप्तः। तथाहि विशिदृशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात्कः। "अन्येषामपी"ति दीर्घः। इन्द्राविशः। इन्द्राद्दशः। "चप सान्त्वने"पचाद्यच्। "चापपीयूक्षा"शब्दो "लघावन्ते--इति मध्योदात्तः "फिषः"इत्यदिकाराट्टापः प्रागेव स्वरप्रवृत्तेः। इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः। अण्ग्रहणं बाधकबाधानार्थम्। यथाविहितप्रत्ययविधौ बार्हिशब्दाद्वृद्धलक्षणो मयट् स्यात्, "ञितश्च तत्प्रत्यया"दित्यञो बाधनेन वचनस्य चरितार्थत्वादित्याहुः। तालाद्धनुषीति। गणसूत्रमिदम्। हाटक इति। इह वृद्धलक्षणो मयट् प्राप्तः। तपनीयदेः--"अनुदात्तादेश्चे"त्यञ्प्राप्तः।

---

सूत्रम्

काशिका-वृत्तिः

जातरूपेभ्यः परिमाणे ४।३।१५३

जातरूपं सुवर्णम्। बहुवचननिर्देशात् तद्वाचिनः सर्वे गृह्यन्ते। जातरूपवाचिभ्यः प्रातिपदिकेभ्यः अण् प्रत्ययो भवति परिमाणे विकारे। मयडादीनम् अपवादः। हाटको निष्कः। हाटकं कार्षापणम्। जातरूपम्। तापनीयम्। परिमाणे इति किम्? यष्टिरियं हाटकमयी।

न्यासः

जातरूपेभ्यः परिमाणे। , ४।३।१५१

"बहुवचननिर्देशात्" इत्यादि। यदि स्वरूपग्रहणमभीष्टं स्यात् तस्यैकत्वादेकवचनेनैव निर्देशं कुर्यादिति भावः। "मयडादीनाम्" इति। आदि शब्दोनाञो ग्रहणम्। बहुवचनं तु पूर्ववत्। तत्र ये वृद्धा हाटकजातरूपप्रभृतयः, तेभ्यो मयटोऽपवादः। ये तु तपनीयप्रभृतयोऽनुदात्तादयस्तेभ्योऽञः। "तापनीयम्" इति। तपनीयशब्दः "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदात्तः॥

बाल-मनोरमा

जातरूपेभ्यः परिमाणे १५१०, ४।३।१५१

जातरूपेभ्यः। अणिति। शेषपूरणम्। जातरूपं-सुवर्णं, तद्वाचिभ्योऽण् स्यात्परिमाणे विकारे गम्ये इत्यर्थः। ननु जातरूपशब्दस्यैव कुतो न ग्रहणमित्यत आह--बहुवचनादिति। हाटक इत्यादि। हाटकस्य तपनीयस्य सुवर्णस्य वा निष्कपरिमाणको विकार इत्यर्थः। तापनीय इति। "नित्यं वृद्धशरादिभ्यः" इति मयटोऽपवादः। इतरत्र तु "अनुदात्तादेश्चे"त्यञोऽपवादः। "गुञ्जाः पञ्चाद्यमाषकः। ते षोडशाऽक्षः" इत्यमरः। सुवर्णविस्तौ हेम्नोऽक्षे" इति च।

---

सूत्रम्

काशिका-वृत्तिः

प्राणिरजताऽदिभ्यो ऽञ् ४।३।१५४

प्राणिवाचिभ्यः प्रातिपदिकेभ्यो रजतदिभ्यश्च अञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अणादिनाम् अपवादः। अनुदात्तादेः अञ् विहित एव परिशिष्टम् इह उदाहरणम्। प्राणिभ्यस्तावत् कापोतम्। मायूरम्। तैत्तिरम्। रजतादिभ्यः राजतम्। सैसम्। लौहम्। रजतादिषु ये ऽनुदात्तादयः पट्यन्ते रजतकण्डकरप्रभृतयस्तेभ्यो ऽञि सिद्धे पुनर्वचनं मयड्वाधनार्थम्। रजत। सीस। लोह। उदुम्बर। नीलदारु। रोहितक। बिभीतक। पीतदास। तीव्रदारु। त्रिकण्टक। कण्टकार। रजतादिः।

न्यासः

प्राणिरजतादिभ्योऽञ्।, ४।३।१५२

"अणादीनामपवादः" इति। आदिशब्देन मयट् परिगृह्रते। बहुवचनं तु पूर्ववत्। तत्र ये प्राणिशब्दा आद्युदात्तास्तेभ्योऽणपवाद इति। ये तु वृद्धास्तेभ्यो मयट् परिगृह्रते। रजतादिष्वपि यदाद्युदात्तं तस्मादणोऽपवादः। यत्पुनरनुवात्तादि तस्मान्मयटः। ततो हि "अनुदात्तादेश्च" ४।३।१४२ इत्यनेनैवाञि सिद्धे पुनर्वचनमञेव यथा स्यात्, "मयड्वैतयोः" ४।३।१४१ इत्यादिना मयड् मा भूदित्येवमर्थम्। तत्र "रजतं" घृतादिपाठादन्तोदात्तम्। "सीस, लोह" इति। "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्याद्युदात्तम्। अस्यायमर्थः-- नपुंसकविषयस्य शब्दस्यानिसन्तस्यादिरुदात्तो भवतीति। नबिति नपुंसकस्य संज्ञा। अन्त्यात् पूर्वमित्यनुवत्र्तमाने "शिशृमानोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च" (फि।सू।३।६४) इत्युदुम्बरेऽन्त्यात् पूर्वमक्षरमुदात्तम्। नीलदारुरोहितबिभीतक-- इत्येतेषां "लघावन्ते" (फि।सू।२४२) इत्यादिना मध्यादात्तत्वम्। पीतदारुशब्दमपि केचित् पठन्ति। स "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्याद्युदात्तः। "तरतेर्ड्रिः" (पं।उ।५।६६) इति ड्रिप्रत्ययान्तत्वात् त्रिशब्दस्य प्रत्ययस्वरेणाद्युदात्तत्वम्। त्रयः कण्टका अस्येति बहुव्रीहिः। "बहुव्रीहौ प्रकृत्या पूर्वपदम्" ६।२।१ इति त्रिकण्टकशब्द आद्युदात्तः। "{कण्वं प्रां3।पाठः} कण्टं करोतीति कर्मण्यण्। "{कण्वकार प्रां3।पाठः} कण्टकारशब्दः कृत्स्वरेणान्तोदात्तः॥

बाल-मनोरमा

प्राणिरजतादिभ्योऽञ् १५११, ४।३।१५२

प्राणिरजतादिभ्योऽञ्। शौकंबाकमिति। शुकस्य बकस्य वा अवयवो विकारो वेत्यर्थः। "प्राणिना कुर्पूर्व"मित्याद्युदात्तत्वात् "अनुदात्तादेश्चे"त्यञो न प्राप्तिः। राजतमिति। अनुदात्तादित्वादञि सिद्धे मयड्बाधनार्थमञ्विधिः।

तत्त्व-बोधिनी

प्राणिरजतादिभ्योऽञ् ११७५, ४।३।१५२

प्राणि। अनुदात्तादेरञः सिद्धत्वात्परिशिष्टमिहोदाहरणं। तदाह---शौकं बाकमिति। शुकबकशब्दौ "प्राणिनां कुपूर्वाणा"मित्याद्युदात्तौ। राजतमिति। रजत सीस उदुम्बर कण्ट कारेत्यादयो रजतादयः। तेषु अनुदात्तादीनां पुनः पाठो मयड्बाधनार्थः। अन्यथा हि परत्वान्मयट् स्यादेव।

---

सूत्रम्

काशिका-वृत्तिः

ञितश् च तत्प्रत्ययात् ४।३।१५५

अञित्येव। तदिति विकारावयवयोरर्थयोः प्रत्यवमर्शः। ञिद् यो विकारावयवप्रत्ययस् तदन्तात् प्रातिपदिकातञ् प्रत्ययो

भवति विकारवयवयोः एव। मयटो ऽपवादः। ओरञ् ४।२।७०, शम्याष्टलञ् ४।३।१४०, प्राणिरजतादिभ्यो ऽञ् ४।३।१५२, उष्ट्राद्वुञ् ४।३।१५५, एण्या ढञ् ४।३।१५७, कंसीयपरशव्ययोर् यञञौ लुक् च ४।३।१६६ इत्येते प्रत्ययाः गृह्यन्ते। दैवदारवस्य विकारो ऽवयवो वा दैवदारवम्। दाधित्थस्य दाधित्थम्। पालाशस्य पालाशम्। शामीलस्य शामीलम्। कापोतस्य कापोतम्। औष्ट्रकस्य औष्ट्रकम्। ऐणेयस्य ऐणेयम्। कांस्यस्य कांस्यम्। पारशवस्य पारशवम्। ञितः इति किम्? बैल्वमयम्। तत्प्रत्ययातिति किम्? बैदमयम्।

न्यासः

ञितश्च तत्प्रत्ययात्। , ४।३।१५३

"मयटोऽपवादः" इति। वृद्धलक्षमस्य सर्वस्य ञित्प्रत्ययान्तस्य वृद्धत्वात्।"एते प्रत्यया गृह्नन्ते" इति। ननु चैकानुबन्धपरिभाषया ष्टलञो ग्रहणं न प्राप्नोति? नैष दोषः; "ञितश्च" इति हि चकारस्तत्समुच्चयार्थः। तेन तस्यापि ग्रहणं भविष्यति। ओरञो ४।३।१३७ ग्रहणेन "अनुदात्तदेश्च" ४।३।१३८ "पलाशादिभ्यो वा" ४।३।१३९ इत्येतत्सूत्रग्रहणं वेदितव्यम्; अभिन्नत्वात्। य एवं "ओरञ्" ४।३।१३७ इत्यनेनाञ्विहितः स एवास्मिन् सूत्रद्वयेऽनुवत्र्तते। "दैवदारवस्य विकारोऽवयवो वा" इत्यादिना यथायोगमेषां प्रत्ययानामुदाहरणादीनि दर्शयति। "कांस्यम् पारशवम्" इति। कंसाय हितमिति "प्राक् क्रीताच्छ-" ५।१।१ कंसीयः। परशवे हितमित्युगवादित्वा ५।१।२ यत्। परशव्यस्य विकारोऽवयवो वेति "कंसीयपरशव्ययोर्यञञौ लुक् च" ४।३।१६६ इति यथासंख्यं यञञौ भवतः, छयतोश्च लुक्-- कांस्यम्, पारशवः; तयोर्विकारोऽवयवो वेत्येनेनाञ्। "बैल्वमयम्" इति। बिल्वशब्दो "बिल्वादिब्योऽम्" ४।३।१३४ इत्यणन्तः। ततो वृद्धलक्षमे मयडेव भवति। "वैदमयम्" इति। "अनृष" ४।१।१०४ इत्यादिनाञ्-- वैदः। भवत्ययमञ्प्रत्ययो ञित्, न तु विकारावयवलक्षमः,तेन मयडेव भवति॥

बाल-मनोरमा

ञितश्च तत्प्रत्ययात् १५१२, ४।३।१५३

ञितश्च तत्प्रत्ययात्। तयोः= विकारावयवयोः प्रत्ययः-तत्प्रत्ययः। तदाह--ञिद्य इति। तयोरेवेति। विकारावयवयोरेवेत्यर्थः। शामीलस्येति। शम्या विकारोऽवयवो वा शामीलम्। "शम्याः ष्यञ्"। शामीलस्य विकारोऽवयवो वेत्यर्थे अञि शामीलमिति भवतीत्यर्थः। "नित्यं वृद्धे"ति मयटोऽपवादः। दाधित्थमिति। दधित्थस्य विकारोऽवयवो वा दाधित्थम्। अनुदात्तादित्वादञ्। दाधित्थस्य विकारो दाधित्थम्। मयडपवादोऽञ्। बैल्वमयमिति। "बिस्वादिभ्यो"णिति बिल्वशब्दादणि बैल्वः। तस्य विकार इत्यर्थे मयडेव, न त्वञ्। अणो ञित्त्वाऽभावादिति भावः। भाष्ये तु "विकारावयवप्रत्ययान्तात्पुनस्तत्प्रत्यया अनभिधानान्ने"त्याश्रित्या सूत्रमिदं प्रत्याख्यातम्।

तत्त्व-बोधिनी

ञितश्च तत्प्रत्ययात् ११७६, ४।३।१५३

शामीलमिमि। शामीलशब्दः "शम्याः ष्ल"ञिति ष्लञन्तः। दधित्थात् "अनुदात्तादेश्चे"त्यञ्। दाधित्थस्य दाधित्थम्। बैल्वमयमिति। बिल्वशब्दोऽणन्तः।

---

सूत्रम्

काशिका-वृत्तिः

क्रीतवत् प्रैमाणात् ४।३।१५६

प्राग्वतेष्ठञ् ४।१।१८ इत्यत आरभ्य क्रीतार्थे ये प्रत्ययाः परिमाणाद् विहिताः, ते विकारे ऽतिदिश्यन्ते। परिमाणात् क्रीत इव प्रत्यया भवन्ति तस्य विकारः इत्येतस्मिन् विषये। अणादीनाम् अपवादः। सङ्ख्या अपि परिमाणग्रहणेन गृह्यते, न रूढिपरिमाणम् एव। निष्केण क्रीतं नैष्किकम्। एवं निष्कस्य विकारो नैष्किकः। शतेन क्रीतं शत्यम्, शतिकम्। शतस्य विकारः शत्यः, शतिकः। साहस्रः। वतिः सर्वसादृश्यार्थः। अध्यर्धपूर्वाद् द्विगोर् लुगसंज्ञायाम् ५।१।२८ इत्येवम् आदिकम् अप्यतिदिश्यते। द्विसहस्रः, द्विसाहस्रः। द्विनिष्कः, द्विनैष्किकः।

न्यासः

क्रीतत्परिमाणात्। , ४।३।१५४

"अणादीनामपवादः" इति। आदिशब्देनाञादीनां ग्रहणम्। "संख्यापि परिमाणग्रहणेन गृह्त‍े" इति। कथं पुनरेतल्लभ्यते, यावता परिमाणशब्दः प्रस्थादिषु रूढः, न संख्यायाम्? नैष दोषः; यथैव हि प्रस्थादिपरिच्छेदहेतुस्तथा संख्यापि। अत उपमानात् संख्यायामपि परिमाणशब्दो वर्तिष्यते परिमाणमिव परिमाणमिति। नन्वेवं मुख्ये सति गौणग्रहणमयुक्तम्? अयमत्र दोषः -- इह हि तन्त्रेण द्वौ परिमाणशब्दावुच्चारितौ, तत्र द्वितीयं पदमुदात्तम्, तेन संख्यापि गृह्त‍े। "नैष्किकम्" इति। प्राग्वतेष्ठञ्" ५।१।१८। "शत्यः, शतिकः" इति। "शताच्च ठन्यतावशते" ५।१।२१। "सहरुआम्" इति। "शतमानविंशतिकसहरुआवतनादण्" ५।१।२७। "अध्यर्धपूर्व" ५।१।२८ इत्यादिना सादृशष्यार्थे वतौ सति यदिष्टं सम्पद्यते तद्दर्शयति। आदिशब्देन प्रकृत्यादिपरिग्रहः। "द्विसहरुआम्" इति। द्वयोः सहरुआयोर्विकार इति तद्धितार्थे द्विगुः। "प्राग्वतेः संख्यापूर्वपदात् तदन्तविधिरलुकि" (५।१।२० वा।) इति तदन्तविधिरभ्यनुज्ञानाद्यथा क्रीतार्थे "शतमानविंशतिसहरुआवसनात्" ५।१।२९ इति पक्षे लुग्भवति, ततेहापि। "द्विसाहरुआम्" इति। "संख्यायाः संवत्सरपूर्वस्य" ७।३।१५ इत्युत्तरपदवृद्धिः। "दविनिष्कः" इति। यथा क्रीतार्थे निष्कशब्दात् प्राग्वतेष्ठञ् ५।१।१८ भवति तस्य "द्वित्रिपूर्वान्निष्कात्" ५।१।३० इति पक्षे लुक्, तथेहापि। "द्विनैष्किकम्" इति। "परिमाणान्तस्यासंज्ञान्नाणयोः" ७।३।१७ इत्युत्तरपदवृद्धिर्भवति॥

बाल-मनोरमा

क्रीतवत्परिमाणात् १५१३, ४।३।१५४

क्रीततवत्परि। उपाधिनेति। प्रकृत्यादि विशेषणेनेत्यर्थः। नैष्किक इति। "असमासे निष्कादिभ्यः" इति क्रीते ठक्। शत्यः शतिक इति। "शताच्च ठन्यतौ" इति क्रीते ठन्यतौ।

तत्त्व-बोधिनी

क्रीतवत्परिमाणात् ११७७, ४।३।१५४

नेष्किकमिति। "तेन क्रीत"मिति ठक्। शत्यः। शतिक इति। "शताच्च ठन्यतौ"।

---

सूत्रम्

काशिका-वृत्तिः

उष्ट्राद् वुञ् ४।३।१५७

उष्ट्रशब्दाद् वुञ् प्रत्ययो विकारावयवयोरर्थ्योः। प्राण्यञो ऽपवादः। उष्ट्रस्य विकारो ऽवयवो वा औष्ट्रकः।

न्यासः

उष्ट्राद्?वुञ्। , ४।३।१५५

बाल-मनोरमा

उष्ट्राद्वुञ् १५१४, ४।३।१५५

उष्ट्राद्वुञ्। प्राण्यञ इति। "प्राणिरजतादिभ्योऽञि"त्यस्यापवाद इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

उमाऊर्णयोर् वा ४।३।१५८

उमाशब्दादूर्णाशदच् च वा वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। औमकम्, औमम्। और्णकम् और्णम्।

न्यासः

उमोर्णयोर्वा। , ४।३।१५६

उमाशब्दस्तृणधान्यमित्याह (फि।सू।२।२७) नाद्युदात्तः, ऊर्णाशब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां यथासंख्यमणञोः प्राप्तयोर्विभाषा वुञारभ्यते॥

बाल-मनोरमा

उमोर्णयोर्वा १५१५, ४।३।१५६

उमोर्णयोर्वा। "नु"ञिति शेषः। औमकमिति। उमा--सस्यविशेषः। "उमा स्यादतसी क्षुमा" इत्यमरः। उमाया विकारोऽवयवो वेत्यर्थः। औममिति। "तृणधान्यानां चे"त्युमाशब्द आद्युदात्तः। ततो वुञभावे "अनुदात्तादेश्चे"त्यञभावादौत्सर्गिकोऽण्। ऊर्णाशब्दस्तु फिट्स्वरेणान्तोदात्तः। ततो वुञभावे अनुदात्तादित्वादञित्यर्थः। "ऊर्णा मेषादिलोम्नि स्यादि"त्यमरः। "स्थूणोर्णे नपुंसके चे"ति लिङ्गानुशासनसूत्रम्।

तत्त्व-बोधिनी

उमोर्णयोर्वा ११७८, ४।३।१५६

अणञाविति। उमाशब्दः "तृणधान्यानां च" इत्याद्युदात्तः। ऊर्णाशब्दस्तु प्रातिपदिकस्वरेणान्तोदात्त इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

एण्या ढञ् ४।३।१५९

एणीशब्दाद् ढञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। प्राण्यञो ऽपवादः। ऐणेयम् मांसम्। पुंसस्तु अञेव भवति। एणस्य मांसम् ऐणम्।

न्यासः

एण्या ढञ्। , ४।३।१५७

"पुंसस्त्वञेद भवति" इति। यदिह पुंसो ढञ् स्यात् पुंल्लिङ्गेनैव निर्देशं कुर्यादिति। पुंल्लिङ्ग न हि निर्देशे प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येणीशब्दादपि प्रत्ययो लभ्यत एव। तस्मात् स्त्रीलिङ्गनिर्देशादेव पुंसोऽञ् भवति, न ढञ्॥

बाल-मनोरमा
एण्या ढञ् १५१६, ४।३।१५७

एण्या ढञ्। एण्या अवयवो विकारो वा ऐणेयम्। ढस्य एयादेशः। "यस्येति चे"ति ईकारलोपः। स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह--एणस्य त्विति।

तत्त्व-बोधिनी
एण्या ढञ् ११७९, ४।३।१५७

एण्या ढञ्। प्राण्यञोऽपवादः। स्त्रीलिङ्गनिर्देशादाह---एणस्यत्विति।

---

सूत्रम्
काशिका-वृत्तिः
गोपयसोर् यत् ४।३।१६०

गोपयस्शब्दाभ्यां यत् प्रत्ययो भवति विकारावयवयोरर्थयोः। गव्यम्। पयस्यम्। सर्वत्र गोरजादिप्रसङ्गे यदस्त्येव, मय्ड्विषये तु विधीयते।
लघु-सिद्धान्त-कौमुदी
गोपयसोर्यत् १११८, ४।३।१५८

गव्यम्। पयस्यम्॥
लघु-सिद्धान्त-कौमुदी
इति विकारार्थाः। (प्राग्दीव्यतीयाः) ६ १११८, ४।३।१५८

लघु-सिद्धान्त-कौमुदी
अथ ठगधिकारः १११८, ४।३।१५८

न्यासः
गोपयसोर्यत्। , ४।३।१५८

"मयड्विषये तु विधीयते" इति। अजादिप्रसङ्ग इति वचनात्। मयटोऽनजादित्वात् तद्विषये न प्राप्नोतीत्यतस्तत्र गोशब्दाद्विधीयते। पयःशब्दस्तु पिबतेरित्यसुन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः, तस्मात् प्राग्दीव्यतोऽण्" ४।१।८३ इत्यण् प्राप्नोति। अतस्तदपवादोऽयं यद्विधीयते॥
बाल-मनोरमा
गोपयसोर्यत् १५१७, ४।३।१५८

गोपयसोर्यत्। गव्यमिति। गोर्विकारोऽवयवो वेत्यर्थः। "वान्तो यी"त्यवादेशः। पयस्यमिति। पयसो विकार इत्यर्थः। "सर्वत्र गोरजादिप्रसङ्गे य"दित्येव सिद्धे यद्विधानं "मयड्वैतयो"रिति पाक्षिकमयटो बाधनार्थम्।

तत्त्व-बोधिनी

गोपयसोर्यत् ११८०, ४।३।१५८

गोपयसोः। यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदुक्तस्तथापि "मयड्वैतयो"रिति पक्षे प्राप्तं मयटं बाधितुं पुनरयं यद्विधिः।

---

सूत्रम्

काशिका-वृत्तिः

द्रोश् च ४।३।१६१

द्रुशब्दाद् यत् प्रत्ययो भवति विकारावयवयोरर्थयोः। ओरञो ऽपवादः। द्रव्यम्।

न्यासः

द्रोश्च। , ४।३।१५९

बाल-मनोरमा

द्रोश्च १५१८, ४।३।१५९

द्रोश्च। "य"दिति शेषः। "एकाचो नित्य"मिति मयटः "ओरञि"त्यस्य चापवादः।

तत्त्व-बोधिनी

द्रोश्च ११८१, ४।३।१५९

द्रोश्च। "ओरञः", "एकाचो नित्य"मिति मयटश्चापवादोऽयम्। द्रव्यमिति। "ओर्गुणः", "वान्तो यि प्रत्यये"। "द्रव्यगुणकर्मे"त्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणैर्द्रूयते आश्रीयते इति द्रुधातोः "अचो य"दिति यत्प्रत्ययान्तः।

---

सूत्रम्

काशिका-वृत्तिः

माने वयः ४।३।१६२

द्रशब्दान् माने विकारविशेषे वयः प्रत्ययो भवति। यतो ऽपवादः। द्रुवयम्।

न्यासः

माने वयः। , ४।३।१६०

बाल-मनोरमा

माने वयः १५१९, ४।३।१६०

माने वयः। द्रोरित्येवेति। माने विकारे गम्ये द्रुशब्दाद्वयप्रत्ययः स्यादित्यर्थः।

तत्त्व-बोधिनी

माने वयः ११८२, ४।३।१६०

माने वयः। यतोऽपवादः। द्रुवयमिति। द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

फले लुक् ४।३।१६३

विकारावयवयोरुत्पन्नस्य फले तद्विषये विवक्षिते लुग् भवति। आमलक्याः फलम् आमलकम्। कुवलम्। वदरम्। फलितस्य वृक्षास्य फलम् अवयवो भवति विकारश्च, पल्लवितस्य इव पल्लवः।

बाल-मनोरमा

फले लुक् १५२०, ४।३।१६१

फले लुक्। आमलकमिति। फलितस्य वृक्षस्य फलमवयवो विकारश्च। तस्मिन्मयटो लुकि "लुक्ताद्धितलुकी"ति ङीषो लुक्।

तत्त्व-बोधिनी

फले लुक् ११८३, ४।३।१६१

फले लुक्। विकारावयवेति। फलितस्य वृक्षस्य फलमवयवो, विकारश्च। तेनान्यतरस्मिन्प्रत्ययः। आमलकमिति। मयटो लुक्। "लुक्तद्धितलुकि"ति ङीषो लुक्। न चात्र स्थानिवद्भावने "यस्येति च"इति लोपः शङ्ख्यः, "लुका लुप्तं न स्थानिव"दित्यभ्युपदमात्। अत एव पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुरित्यत्र "अध्यर्धपूर्वे"ति ठञो लुकि कृते "लुक्तद्धिते"तिङीषो लुका लुप्तत्वेन स्थानिवत्त्वाऽभावादुकारस्य यणादेशो न भवति।

---

सूत्रम्

काशिका-वृत्तिः

प्लक्षाऽदिभ्यो ऽण् ४।३।१६४

फले इत्येव। प्लक्षाऽदिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षिते अण् प्रत्ययो भवति। अञो ऽपवादः। विधानसामर्थ्यात् तस्य न लुग् भवति। प्लाक्षम्। नैयग्रोधम्। प्लक्ष। न्यग्रोध। अश्वत्थ। इङ्गुदी। शिग्रु। ककर्न्धु। वुहती। प्लक्षाऽदिः।

न्यासः

कले लुक्। , ४।३।१६२

"तद्विषये" इति। विकारावयवविषये। "आमलकम्" इति। "नित्यं वृद्धशरादिभ्य-" ४।३।१४२ इति मयट्, तस्य लुक्। स्त्रीप्रत्ययस्य लुक् पूर्ववत्। ननु च फलं वृक्षस्य न विकारः नाप्यवयवः। विकारो द्वेधा भवति-- यो वा प्रकृतं निगृह्णाति--खदिरं भस्मेति; यो वा प्रकृतिव्यपदेशं करोति-- खादिरो यूप इति। न च फलं वृक्षमपगृह्णाति, नापि फलेन युक्तस्य व्यपदेशान्तरं जनयति, अथ च तस्य दिकारस्तथा फलमपि। स्यादेतत्। पल्लवितावस्थां वृक्षस्यापगृह्णन् पल्लव उपजायते, अतो युक्ता तस्य तद्विकारावयवतेति; फलमपि तस्य फलितावस्थां वृक्षस्यापगृह्णन् फलमुपजायते, तस्यापि युक्त एव तद्विकारभावः। यदप्युक्तम्-- नावयवोऽनारम्भकत्वादिति, तदप्ययुक्तम्; फलं ह्युपजायमानं शाख्याद्यवयवसहायमन्यमेव विशिष्टं वृक्षावयवमारभते। तद्यथा पल्लवो विशिष्टं समुदायान्तरमारभमाणोऽवयवो भवति तथा फलमपीति वेदितव्यम्॥

न्यासः

प्लक्षादिभ्योऽण्। , ४।३।१६२

"अञोऽपवादः" इति। तत्रेक्षुकर्कन्धूशब्दाभ्यामुवर्णान्तलक्षमस्याञोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्य। सर्वे हि तेऽन्तोदात्तत्वादनुदात्तायः। तत्र प्लक्षन्यग्रोधा()आत्थशब्दाः प्रातिपदिकस्वरेणान्तोदात्ताः। इङ्गुवीबृहतीशब्दौ तु गौरादिङीषन्तत्वात् प्रत्ययस्वरेणान्तोदात्तौ। "विधानसामथ्र्यात्" इत्यादि। यद्यणो लुक् स्याद्वचनमर्थकं स्यात्। न ह्रणो वाञो वा लुकि कृते कश्चिद्विशेषोऽस्ति। "नैयग्रोधम्" इति। "न्यग्रोधस्य च केवलस्य" ७।३।५ इत्यैवागमः॥
बाल-मनोरमा
प्लक्षादिभ्योऽण् १५२१, ४।३।१६२

प्लक्षादिभ्योऽण्। विकारे अवयवे चे"ति शेषः। तत्र शिग्रुकर्कन्धूशब्दयोरुवर्णान्तत्वादञि प्राप्ते, प्लक्षन्यग्रोधादीनामनुदात्तादित्वादञि प्राप्तेऽण्विधिः। नन्वस्य फले अणो लुक्कुतो नेत्यत आह--विधानेति।

तत्त्व-बोधिनी
प्लक्षादिभ्योऽण् ११८४, ४।३।१६२

प्लक्षादिभ्योऽण्। अञोऽपवादः। शिग्रुकर्कन्धूशब्दाभ्याम् "ओर"ञिति, अन्येभ्यस्त्वनुदात्तादित्वादञः प्राप्तिः। प्लक्ष न्याग्रोध अ()आत्थ इङ्गुदी शिग्रु कर्कन्धू बृहती। तत्र प्लक्षशब्दः "फिषः"इत्यन्तोदात्तः। न्ग्रोधशब्दो "लघावन्ते" इति मध्योदात्तः। अ()आत्थशब्दस्तु घृतादित्वादन्तोदात्तः। इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ। "आ()आत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले"इत्यमरः।

---

सूत्रम्
काशिका-वृत्तिः
जम्ब्वा वा ४।३।१६५

फले इत्येव। जम्बूशब्दात् फले ऽभिधेये वा अण् प्रत्ययो भवति। अञो ऽपवादः। अत्र अणो विधान समार्थ्याल् लुग् न भवति, अञस् तु भवत्येव। जाम्बवानि फलानि, जम्बूनि वा।
न्यासः
जम्ब्वा वा। , ४।३।१६३

"अञस्तु भवत्येव" इति। तस्य लुकि सति विधानमनर्थकं भवति; अश्रूयमाणत्वात्। "जम्बूनि" इति। लुकि कृतेऽभिधेयलिङ्गं नपुंसकं भवति। "ह्रस्वो नुपंसके प्रातिपदिकस्य" १।२।४७ इति, "जश्शसोः शिः" (७।१२०),नुम्, "नोपधायाः"६।४।७ इति दीर्घः॥
बाल-मनोरमा
जम्ब्वा वा १५२३, ४।३।१६३

जम्ब्वा वा। जम्ब्विति। जम्ब्वाः फलमित्यर्थः। अञो लुकि विशेष्यानुसारेण नपुंसकत्वाद्ध्रस्व इति भावः।

तत्त्व-बोधिनी
जम्ब्वा वा ११८६, ४।३।१६३

जम्बिवति। नपुंसकह्यस्वः। "फले जम्बा जम्बूः स्त्री जम्बु जाम्बवम्"।

फलपाकशुषामुपसङ्ख्यानम्। फलपाकेति। फलपाकेन शुष्यन्तीति फलपाकशुषः। व्रीहयः। मुद्ग इति। बिल्वाद्यणो लुक्।

फुष्पमूलेषु बहुलम्। मल्लिकेति। अनुदात्तलक्षणस्याऽञो लुप्। "मादीनां चे"ति फिट्सूत्रान्मल्लिकाशब्दे द्वितीयमुदात्तम्। जातीविदारीशब्दौ दौरादिङीषन्तौ। पाटलानीति। बिल्वादित्वादण्। साल्वशब्दः प्रातिपदकस्वरेणान्तोदात्तः।

---

सूत्रम्

काशिका-वृत्तिः

लुप् च ४।३।१६६

वा इत्येव। जम्ब्वाः फले ऽभिधेये प्रत्ययस्य वा लुप् भवति। युक्तवद्भावे विशेषः। जम्ब्वाः फलम् जम्बूः फलम्, जम्बु फलम्, जाम्बवम् इति वा। लुप्प्रकरणे पह्लपाकशुषाम् उपसङ्ख्यानम्। व्रीहयः। यवाः। माषाः। मुद्गाः। तिलाः। पुष्पमूलेसु बहुलम्। मल्लिकायाः पुष्पम् मल्लिका। नवमल्लिका जातिः। बिदार्याः मूलं बिदारी। अंशुमती। बृहती। न च भवति। पाटलानि पुष्पाणि। शाल्वानि मूलनि। बहुलवचनात् क्वचिदन्यदपि भवति, कदम्बं पुष्पम्, अशोकम्, करवीरम्, बैल्वानि फलानि इति।

न्यासः

लुप् च। , ४।३।१६४

कः पुनर्लुपि सति विशेषो यतो लुकि प्रकृते स विधीयते? इत्याह--- "युक्तवद्भावो विशेषः" इति। लुपि सति युक्तवद्भावो भवति "लुपि युक्तवद्()यक्तिवचने" १।२।५१ इति, लुपि सत्येव विशेष इति। "जम्बूः फलम्" इति। अत्र युक्तवद्भावेन प्रकृतिगतमेव लिङ्गं भवति, तेन नपुंसकलिङ्गं न प्रवत्र्तते। "लुप्प्रकरणे" इत्यादि। फलपाकेन शुष्यन्तीति फलपाकशुषः। "अन्येभ्योऽपि दृश्यते" (३।३१३०) इति क्विप्। "व्रीहयः, मुद्गाः" इति। बिल्वादिभ्योऽणो ४।३।१३४ लुप्। "यवाः, माषाः"इति। अत औत्सर्गिकस्याणः। एते "तृणधान्यानाम्" (फि।सू।२।२७) इत्यादिनाद्युदात्ताः। "पुष्पमूलेषु बहुलम्" इति। पुष्पमूलेषु चाभिधेयेषु बहुलं लुब्भवति। मल्लिका,वनमल्लिका, जातिः, विदारी, अंशुमती, बृहती-- अत्रानुदात्तादिलक्षणस्याञो लुप्। मल्लिकानवमल्लिकाशब्दौ "लघावन्ते द्वयोश्च बह्वषो गुरुः" (फि।सू।२।४२) इति मध्योदात्तौ। जातिशब्दश्च "क्विच्क्तौ च संज्ञायाम्" ३।३।१७४ इति क्तिच्प्रत्ययान्तत्वादन्तोदात्तः। बदरीबृहतीशब्दावपि गौरादिङीषन्तत्वादन्तोदात्तावेव। अंशुमतीशब्दः "उगितश्च" ४।१।६ इति ङीबन्तः। अंशुशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वान्मध्योदात्तः। "पाटलानि" इति। बिल्वादित्वादण्। "शाल्वानि मूलानि" इति। शाल्वानीत्यनुदात्तादिलक्षमोऽढ। शाल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। शाल्व इति =शाक इति यस्य प्रसिद्धिः। "क्वचिदन्यदपि" इति। लुपोऽन्यत्रापि क्वचित् कार्यं भवति। तत्पुर्लुक्लुपोरभावश्च। "कदम्बकम्" इत्यादावनुदात्तलक्षणस्याञो लुक्। कदम्बादयः शब्दा "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदात्ताः। "बल्वानि" इति। अत्रोभयाभावः। "बिल्वादिभ्योऽण्" ४।३।१३४। एतत्तु सर्वं हरीतक्यादिपाठादेव सिद्धमिति नापूर्वं वक्तव्यम्। यतो हरीतक्यादिषु "येषाञ्च फलपाक निमित्तः शोषः; पुष्पमूलेष#उ बहुलम्" ४।३।१६५ इति पठ()न्ते॥

बाल-मनोरमा

लुप् च १५२४, ४।३।१६४

लुप् च। लुकैव सिद्धे सुब्विधेः फलमाह--लुपि युक्तवदिति जम्बूरिति। जम्ब्वाः फलमित्यर्थः। फलप्रत्ययस्य लुपि

युक्तवत्त्वेन विशेष्यलिङ्गवचने बाधित्वा स्त्रीत्वमेकवचनं चेत्यर्थः। तथाच जम्ब्वाः फलान्यपि जम्बूरेव।

फलपाकेति। फलपाकेन शुष्यन्तीति फलपाकशुष--ओषधयः, तद्वाचिभ्यः परस्य फलप्रत्ययस्य लुप उपसङ्ख्यानमित्यर्थः। "फले लुगि"त्यस्यापवादः। व्रीहय इति। व्रीह्याख्यानामोषधीनां फलानीत्यर्थः। एवं मुद्गाः। बिल्वाद्यणो लुप्। युक्तवद्भावात्पुंस्त्वं, नतु विशेष्यनिघ्नत्वम्।

पुष्पमूलेष्विति। वार्तिकमिदम्। "विकारावयवप्रत्ययस्य लुप् स्या"दिति शेषः। पुष्पं मल्लिकेति। "अथ द्वितीयं प्रागीषा"दित्यनुवृत्तौ "मादीनां चे"ति फिट्सूत्रेण मध्योदात्तो मल्लिकाशब्दः। ततः "अनुदात्तादेश्चे"त्यञो लुप्। युक्तवत्त्वात्स्त्रीत्वम्। जातीति। "लघावन्ते" इत्यन्तोदात्तो जातिशब्दः। ततः "अनुदात्तादेश्चे"त्यञोऽनेन लुप्। युक्तवत्त्वात्स्त्रीत्वम्। जातीति। "लघावन्ते" इत्यन्तोदात्तो जातिशब्दः। ततः "अनुदात्तादेश्चे"त्यञोऽनेन लुप्। युक्तवत्त्वात्स्त्रीत्वम्।विदारीति। जातिङीषन्तमिदं प्रत्ययस्वरेणान्तोदात्तम्। अनुदात्ता दित्वादञि तस्य लुप्, युक्तवत्त्वात्स्त्रीत्वम्। पाटलानीति। बिल्वादित्वादण्। एवं साल्वानि। नन्वशोकस्य पुष्पम् अशोकं, करवीरस्य पुष्पं-करवीरमित्यत्रापि "पुष्पमूलेषु बहुल"मिति लुपि युक्तवत्त्वात्पुंस्त्वे अशोकः पुष्पं, करवीरः पुष्पमिति स्यादित्यत आह--बहुलग्रहणादिति। तथाच युक्तवत्त्वस्याऽप्रवृत्तेः विशेष्यनिघ्नत्वमेवेति। भावः।

---

सूत्रम्

काशिका-वृत्तिः

हरीतक्यादिभ्य श्च ४।३।१६७

हरीतकी इत्येवम् आदिभ्यः शब्देभ्यः फले प्रत्ययस्य लुब् भवति। लुकि प्राप्ते लुपो विधाने युक्तवद्भावे स्त्रीप्रत्ययश्रवणे च विशेषः। हरीतक्याः फलं हरीतकी। कोशातकी। नखरजनी। अत्र च व्यक्तिर् युक्तवद्भावेन इष्यते, वचनं त्वभिधेयवदेव भवति। हरीतक्याः फलानि हरीतक्यः। हरीतकी। कोशातकी। नखरजनी। शष्कण्डी। दाडी। दोडी। दीडी। श्वेतपाकी। अर्जुनपाकी। काला। द्राक्षा। ध्वङ्क्षा। गर्गरिका। कण्टकारिका। शेफालिका। येषां च फलपाकनिमित्तः शोषः। पुष्पमुलेषु बहुलम्। हरीतक्यादिः।

न्यासः

हरीतक्यादिभ्यश्च। , ४।३।१६५

हरीतक्यादिषु कण्टकारिका,गर्गारिका, शेफालिका-- इत्येते "संज्ञायां कन्" ५।३।७५ इति कन्नन्तत्वान्नित्स्वरेणाद्युदात्ताः। तेनैव तेभ्य औत्सर्गिकस्याणो लुप्। शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः, सर्वे तेऽन्तोदात्तत्वादनुदात्तादयः। तत्र काला, द्राक्षा, ध्राक्षा-- इत्येतेभ्यः प्राग्ये पठ()न्ते ते ङीषन्तत्वादन्तोदात्ताः तत्र ()ओतपाकी, अर्जुनपाकी-- इत्येतौ "पाककर्णपर्ण" ४।१।६४ इत्यादिना ङीषन्तौ। शेषेभ्यस्तु गौरादित्वात् "गौरादिभ्यश्च" ४।१।४१। कालाद्राक्षाध्राक्षाशब्देभ्यः प्रातिपदिकस्वरेणान्तोदात्तेभ्यष्टाप्, सवर्णदीर्घत्वम्, "एकादेश उदात्तेनोदात्तः" ८।२।५ इत्युदात्तत्वम्। अतः कालादयोऽप्यन्तोदात्ताः॥

बाल-मनोरमा

हरितक्यादिभ्यश्च १५२५, ४।३।१६५

हरीतक्यादिभ्यश्च। हरीतक्यादीनामिति। वार्तिकमिदम्। एषां प्रकृतिलिङ्गमेव लुप्तप्रत्ययार्थे अतिदिश्यते, नतु प्रकृतिवचनमपीत्यर्थः। हरीतक्य इति। जातिङीषन्तः प्रत्ययस्वरेणान्तोदात्तो हरीतकीशब्दः। ततोऽनुदात्तादित्वादञि

तस्य "फले लु"गिति लुकि प्राप्ते लुपि युक्तवत्त्वात्स्त्रीत्वे विशेष्यानुरोधाद्बहुवचनम्।

तत्त्व-बोधिनी

हरीतक्यादिभ्यश्च ११८७, ४।३।१६५

हरीतक्यादिभ्यश्च। इह द्राक्षाप्रभृतिभ्यो "नित्यं वृद्धे"ति प्राप्तस्य मयटो लुप्, अनुदात्तादिभ्योऽञः, इतरेभ्यस्त्वणः। लिङ्गमेवेति। वचनं तु विशेष्यवदेव, "हरीतक्यादिषुव्यक्ति"रित्युक्तत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कंसीयपरशव्ययोर् यञञौ लुक् च ४।३।१६८

प्राक् क्रीताच् छः ५।१।१, कंसीयः। उगवादिभ्यो यत् ५।१।२, परशव्यः। कंसीयपरशव्यशब्दाभ्यां यथासङ्ख्यं यञञौ प्रत्ययौ भवतः तस्य विकारः इत्येतस्मिन् विषये, तत्संनियोगेन च कंसीयपरशव्ययोः लुग् भवति। कंसीयस्य विकारः कांस्यः। परशव्यस्य विकारः पारशवः। प्रातिपदिकाधिकाराद् धातुप्रत्ययस्य न लुग् भवति। परशव्यशब्दादनुदात्ताऽदित्वादेव अञि सिद्धे लुगर्थं वचनम्। ननु च यस्य इति च ६।४।१४८ इति लोपे कृते हलस् तद्धितस्य ६।४।१५० इति यलोपो भविष्यति? ना एअदस्ति, ईति इति तत्र वर्तते। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य तृतीयः पादःचतुर्थाध्यायस्य चतुर्थः पादः।

न्यासः

कंसीयपरशव्ययोर्यञञौ लुक्च। , ४।३।१६६

"कंसीयः"इति। उणादौ कंसशब्दः सप्रत्ययान्तो व्युत्पादितः। पशुशब्दोऽपि "पृथिविव्या {धृषिह्मषभ्यः--द।उ।} धृषिभ्यः कुःरक" (द।उ।१।१०८) इत्यनुवत्र्तमाने "आङ्परयोः खनिशृभ्यां {डिच्च--द।उ।, तिच्च इति प्रांउंयासपाठः} णिच्च" (द।उ।१।११८) इति कुप्रत्ययान्तः। तदनयोरपि धातुप्रत्यययोर्लुक्कस्मान्न भवति? इत्याह-- "प्रातिपदिकाधिकारात्" इत्यादि। प्रातिपदिकादिति वत्र्तते, तेन प्रातिपदिकेभ्यो यो विहितस्तस्य लुग्भवति। ने चेमौ प्रातिपदिकाद्विहितौ, किं तर्हि? धातोः, अतोऽनयोर्लुग्न प्रवत्र्तते। "अनुदात्तत्वादेव" इति। परशव्यशब्दो हि "तित्स्वरितम्" ६।१।१७९ इत्यन्तस्वरितः। "तेनानुदात्तादिः" इति। "ईतीति तत्र वत्र्तते" इति। "यस्यते च" ६।४।१४८ इत्यतः॥ इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां चतुर्थाध्याये तृतीयः पादः ------------------ अथ चतुर्थोऽध्यायः चतुर्थः पादः

बाल-मनोरमा

कंसीयपरशब्दयोर्यञञौ लुक् च १६०५, ४।३।१६६

कंसीयपरशब्द। अत्र यञञोर्न लुक्, विधिवैयथ्र्यात्। नापि प्रकृत्योः, प्रत्ययाऽदर्शनस्यैव लुक्त्वात्। अतः परिशेषात्प्रकृत्येकदेशयोश्छयतोरिति लभ्यते। तदाह--छयतोरिति। कंसीयमिति। कंसो नाम धातुर्लोहविशेषः। "तस्मै हित"मिति छः। कांस्यमिति। कंसीयशब्दाद्यञि छस्य लुकि आदिवृद्धौ "यस्येति चे"त्यकारलोपः। परशब्दमिति। "तस्मै हित"मित्यधिकारे "उगवादिभ्यो य"दिति ओर्गुणे "वान्तो यी"त्यवादेशः। पारशव इति। परशब्दशब्दादञि यतो लुकि ओर्गुणे पारशवः। "हलस्तद्धितस्ये"ति तु न, ईतीत्यनुवृत्तेः। अनापत्यत्वात् "आपत्यस्य चे"त्यपि लोपो न प्रसज्यत इति भावः।

*****इति बालमनोरमायाम् प्राग्दीव्यतीयाः।*****

अथ प्राग्घितीय प्रकरणम्।

-------------------

तत्त्व-बोधिनी
कंसीयपरशब्ययोर्यञञौ लुक् च १२१, ४।३।१६६

कंसीयमिति। "प्राक्क्रीताच्छः"इत्यधिकारे "तस्मै हित"मिति छः। तस्यै छस्यापवादतया "उगवादिभ्यो यत्"---परशव्यं दारु। परशव्यशब्दस्याऽनुदात्तादित्वादञि[#ः] सिद्धे तत्संनियोगेन यतो लुगर्थं वचनम्। नच "यस्येति"यलोपे कृते "हलस्तद्धितस्ये"ति यलोपेन सिद्धमिष्टमिति भ्रमितव्यम्, ईतीत्यनुवृत्तेः।

इति तत्त्वबोधिन्याम् विकारार्थाः प्राग्दीव्यतीयाश्च।

अथ विसर्गसन्धिः॥

--------------

विष्णुस्त्रातेति। प्रातिपदिकात् "स्वैजसमौ"डिति सुप्रत्यये तस्य रुत्वे "खरवसानयो"रिति विसर्गे च कृते "विसर्जनीयस्य स" इति सः। अस्य च रुत्वं नाशङ्क्यम्, रुत्वं प्रति विसर्जनीयसत्वस्याऽसिद्धत्वात्।

---

सूत्रम्
काशिका-वृत्तिः
प्राग् वहतेष् ठक् ४।४।१

तद् वहति रथयुगप्रासङ्गम् ४।४।७६ इति वक्ष्यति। प्रागेतस्माद् वहतिसंशब्दनाद् यानर्थाननुक्रममिष्यामः, ठक् प्रत्ययस् तेष्वधिकृतो वेदितव्यः। वक्ष्यति तेन दीव्यति खनति जयति जितम् ४।४।२ इति। अक्षैर् दीव्यति आक्षिकः। ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्। माशब्दः इत्याह माशब्दिकः। नैत्यशब्दिकः कार्यशब्दिकः। वाक्यादेतत् प्रत्ययविधानम्। आहौ प्रभूतादिभ्यः। प्रभूतम् आह प्राभूतिकः। पार्याप्तिकः। क्रियाविशेषणत् प्रत्ययः। पृच्छतौ सुस्नातादिभ्यः। सुस्नतं पृच्छति सौस्नातिकः। सौखरात्रिकः। सौखशायनिकः। गच्छति परदारादिभ्यः। परदारान् गच्छति पारदारिकः। गौरुतल्पिकः।
लघु-सिद्धान्त-कौमुदी
प्राग्वहतेष्ठक् १११९, ४।४।१

तद्वहतीत्यतः प्राक् ठगधिक्रियते॥
न्यासः
प्राग्वहतेष्ठक्। , ४।४।१

अथ प्राग्ग्रहणं किमर्थम्? अर्थविशेषे प्रत्ययान्तरेणापवादेन निवर्तितस्य ठक उत्तरस्मिन् ग्रन्थान्तरे पुनरुपस्थानं यथा स्यादित्यवेमर्थम्। तद्यथा-- "संस्कृतम्" ४।४।३ इत्येतस्मिन्नर्थविशेषे "कुलत्थकोपधात्" ४।४।४ इत्यणा निवर्त्तितस्योत्तरत्रार्थान्तरे "तरति" ४।४।५ इत्येतस्मिन्नर्थे पुनरुपस्थानं यथा स्यादिति। "ठक्प्रकरणे" इत्यादि। तदिति

कर्माभिधायिभ्य आहेत्येतस्मिन्नर्थे माशब्दादिभ्यष्ठक उपसंख्यानन्। "वाक्यादेतत् प्रत्ययविधानम्" इति। स एव हि वाक्यार्थ इति नावमृष्टः कर्मबावमुपगतः। तदाहेति निर्दिश्यते--तदभिदायिन एव वाक्यात् प्रत्यय इति। पदसमुदायो हि वाक्यमिति। "मा" इत्येतस्य च "शब्द" इत्येतस्य च पदस्य यः पदस्य यः समुदायस्तद्वाक्यम्। एवमन्यत्रापि वेदितव्यम्। कथं पुनः प्रातिपदिकाधिकारे वाक्यात्प्रत्ययविधिः? इत्यत आह--- "प्रभूतादिभ्यः" इति। पुनर्वचनात्। यदि ह्यनेनापि प्रातिपदिकादेव प्रत्ययविधिः स्यादेवं सति "{आहेति प्रभूतादिभ्यः---प्रां३।पाठः} आहौ प्रभूतादिभ्यः" (वा।४८३) इति पुनरुपसंख्यानमनर्थकं स्यात्; अनेनैव सिद्धत्वात्। प्रभूतादयोऽपि हि माशब्दादयो भविष्यन्ति, ते च कर्माभिधायिन एव प्रत्ययमुत्पादयन्ति; क्रियाविशेषणाभिधायित्वात्। क्रियाविशेषणानां हि कर्मत्वं "तत्प्रत्यनुपूर्वमीपलोमकूलम्" ४।४।२८ इत्यत्र प्रतिपादयिष्यते-- प्रत्ययार्थोऽप्यहेति। स एव तस्मादाहेति प्रभूतादिभ्य इतिपुनर्वचनाद्वाक्यादेव प्रत्यविधानं विज्ञायते। "क्रियाविसेषणात्" इति। प्रभूतादिशब्दः क्रियाविशेषणाभिधायित्वादभिधानेऽभिधेयोपचारं कृत्वा क्रियाविशेषमशब्देनोक्तः॥

बाल-मनोरमा

प्राग्वहतेष्ठक् १५२७, ४।४।१

प्राग्वहतेष्ठक्। वहतीत्येकदेशेन "तद्वहति रथयुगप्रासङ्ग"मिति सूत्रं परामृश्यते इत्यभिप्रेत्याह--तद्वहतीत्यत आति।

तदाहेति। इतिशब्दो व्युत्क्रमेण तच्छब्दानन्तरं द्रष्टव्यः। तदित्याहेत्यर्थे माशब्द--स्वागतैत्यादिशब्देभ्यष्ठक उपसङ्ख्यानमित्यन्वयः। "त"दित्यनेन वाक्यार्थो विवक्षितः। इतिशब्दस्तस्य वाक्यार्थस्य कर्मत्वं गमयति। "मा शब्दं कार्षी"रित्याहेत्याद्यर्थे तद्वाक्यावयवात् "माशब्द" इत्यादिशब्दाट्ठगिति यावत्। माशाब्दिक इति। शब्दं मा कार्षीरित्यन्वयः। "माङि लुङि"ति लोडर्थे लुङ्। "न माड()ओगे" इत्यजागमनिषेधः। शब्दं न कुरु इत्यर्थः। अत्र आहेति ब्राऊञ्धात्वर्थव्यक्तवचनक्रियां प्रति "मा शब्दं कार्षी"रिति वाक्यार्थः कर्म। तद्वाक्यैकदेशो माशब्देति समुदायः। तस्मान्निर्विभक्तिकादयं प्रत्ययः। न हि माशब्देति समुदायाद्विभक्तिरस्ति। एवंच माशब्देति समुदायाट्ठकि "माशब्दिक" इति रूपम्। "मा शब्दः कारी"ति पाठे तु कारीति कर्मणि लुङ। शब्दो न कार्य इत्यर्थः। नच तदाहेत्यर्थे माशब्दादिभ्यष्ठगिति यथाश्रुतमब्युपगम्य माशब्दमाहेत्याद्यर्थे माशब्देत्यादिशब्देभ्यो द्वितीयान्तेभ्यष्ठगित्येव कुतो न व्याख्यायत इति वाच्यम्, एवं सति "आहौ प्रभूतादिभ्यः" इत्युत्तरवार्तिकारम्भवैयर्थ्यापत्तेरिति भावः।

तत्त्व-बोधिनी

प्राग्वहतेष्ठक् ११८८, ४।४।१

तदाहेति माशब्दादिभ्य उपसंख्यानम्। तदाहेतीति। वाक्यादयं प्रत्ययविधिः, शब्दो माकारीति यो निशेधति स "माशब्दिक"इत्युच्यते। तथा नित्यः शब्द इति य आह स "नैत्यशब्दिकः"। "कार्यशब्दिकः"। इह वाक्याद्द्वितीया न सम्भवति, अप्रतिपदिकत्वात्। तेन तच्छब्देन कर्ममात्रं निर्दिश्यते। तच्च वाक्यार्थरूपमित्याहुः। ऐज्य स्यादिति। "न य्वाभ्या" मिति प्राप्त ऐजागमोऽनेन निषिध्यते, "न कर्मे"त्यतो नञनुवर्तनादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तेन दीव्यति खनति जयति जितम् ४।४।२

तेन इति तृतीयासमर्थाद् दीव्यति खनति जयति जितम् इत्येतेष्वर्थेषु ठक् प्रत्ययो भवति। अक्षैर् दीव्यति आक्षिकः।

शालाकिकः। अभ्र्या खनति आभ्रिकः। कौद्दालिकः। अक्षैर् जयति आक्षिकः। अक्षैर् जितम् आक्षिकम्। शालाकिकम्। सर्वत्र करणे तृतीया समर्थविभक्तिः। देवदत्तेन जितम् इति प्रत्ययो न भवति, अनभिधानात्। अङ्गुल्या खनति इति च। प्रत्ययार्थे सङ्ख्याकालयोरविवक्षा। क्रियाप्रधानत्वे ऽपि चाख्यातस्य तद्धितः स्वभावात् साधनप्रधानः।

लघु-सिद्धान्त-कौमुदी

तेन दीव्यति खनति जयति जितम् ११२०, ४।४।२

अक्षैर्दीव्यति खनति जयति जितो वा आक्षिकः॥

न्यासः

तेन दीव्यति खनति जयति जितम्। , ४।४।२

"तेन" इति प्रत्येकमभिसम्बध्यते। "सर्वत्र करणे तृतीया" इति। दीव्यतीत्यादौ कत्र्तरि लकार इति तेनैव कर्त्तुरभिहितत्वात् कत्र्तरि तृतीया नोपपद्यते। तस्मात् करण एव तृतीया। अथ हेतौ तृतीया कस्मान्न भवति? अनभिधानात्। जितमित्यत्र कर्मणि निष्ठाविधानाद्यद्यपि कत्र्तर्यपि तृतीया सम्भवति, तथापि दीव्यतीत्यादिभिः साहचर्यात् करण एव तृतीया विज्ञायते। देवदत्तेन जितमित्यत्र कत्र्तरि तृतीया; तेन वाक्यमेव भवति; न प्रत्ययः। इह सूत्रे दीव्यतीत्यादिनैकवचनान्तेनैकसंख्यस्य प्रत्ययार्थस्य वत्र्तमानेन च कालेन निर्देशः। ततश्चैकस्मिन्नेव प्रत्ययार्थे प्रत्यय स्यात्, न द्विबह्वोः। तथा वत्र्तमान एव काले, न भूतभविष्यतोरिति यश्चोदयेत्, तं इत्याह-- "प्रत्ययार्थे संख्याकालयोरविवक्षा" इति। अविवक्षातु तयोर्नान्तरीयकत्वात्। अवश्यं हि यया कयाचित् संख्यया येन केनचित् कालेन निर्देशः कत्र्तव्य इति। न तौ प्रधानम्, न च तयोर्विवक्षेति। यदि तर्हि संख्याकालयोरविवक्षेति साधनस्याप्यविवक्षा प्राप्नोति, एकप्रकरणत्वात्? नैष दोषः; यस्य हि विवक्षामन्तरेम द्वितीयस्य पदस्योच्चारणमनर्थकं भवति तन्नियोगतो विवक्षितव्यम्। दीव्यतीत्यादिष्वन्वर्थमात्रे विवक्ष्यमाणे द्वितीयस्य पदस्योच्चारणमनर्थकमापद्येतेति न युक्ता साधनस्याप्यविवक्षा। इह दीव्यतीत्येवमादौ "क्रियाप्रधानमाख्यातम्" इति क्रियैव पदेन प्राधान्येनाख्यायते, कत्र्ता तु गुणीभूतः, तद्धितस्तु--आक्षिक इति प्राधान्येन कत्र्तारमेवात्र वक्ति, क्रिया तु गुणभावेन, एतच्चायुक्तम्; आख्यातेषूत्पन्नैः प्रत्ययैर्यथाऽसौ तिङन्तेनाभिधीयते, तथैव प्रत्ययान्तेनापि युक्तोऽभिधातुमिति यश्चोदयेत्, इत्याह-- "क्रियाप्रधानत्वेऽपि च" इत्यादि। अभिधानस्वभावश्चायम्, येन क्रियाप्राधान्यस्याप्यनुविधीयमानस्तद्धितः कर्त्तुप्रधानो भवति। तस्मात् कर्त्तृत्वभावोऽत्रापेक्षितव्यः। न हि स्वभावोऽपि न हि स्वाभावोऽपि पर्यनुयोगमर्हति॥

बाल-मनोरमा

तेन दीव्यति खनति जयति जितम् १५२९, ४।४।२

तेन दीव्यति। तेन दीव्यति, तेन खनति, तेन जयति, तेन जितमिति विग्रहेषु तृतीयान्ताट्ठगित्यर्थः। पारदारिक इति परदारान्गच्छतीत्यर्थः। अभ्रिः=कुद्दालः। "देवदत्तेन जित"मित्यत्र तु न ठक्, करणतृतीयान्तादेव तद्विधेः।

तत्त्व-बोधिनी

तेन दीव्यति खनति जयति जितम् ११९०, ४।४।२

तेन दीव्यति। इह कालपुरुषसङ्ख्या न विवक्षिताः, तेनाक्षैरदेवीत् देविष्यति वा आक्षिक इति भवति। एवमक्षैर्देविष्यसि देविष्यामि वा आक्षिकः, दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः। कारकं तु विवक्षितमेव, "जयति, जित"मिति कर्तृकर्मणोः पृथगुपादानात्। तेनाक्षैर्द्यूतः, अक्षैः खात इति कर्माद्यर्थे आक्षिक इति न भवति। अभ्र्येति। "अभ्रिः स्त्री काष्ठकुद्दालः"इत्यमरः।

सूत्रम्

काशिका-वृत्तिः

संस्कृतम् ४।४।३

तेन इति तृतीयासमर्थात् संस्कृतम् इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। सत उत्कर्षाधानं संस्कारः। दध्ना संस्कृतम् दाधिकम्। शार्ङ्गवेरिकम्। मारीचिकम्। योगविभाग उत्तरार्थः।

लघु-सिद्धान्त-कौमुदी

संस्कृतम् ११२१, ४।४।३

दध्ना संस्कृतम् दाधिकम्। मारीचिकम्॥

न्यासः

संस्कृतम्। , ४।४।३

योगविभाग उत्तरार्थः-- "कुलत्थकोपधादण्" ४।४।४ इत्ययमपवादः संस्कृत एव यथा स्यात्, "दीव्यति" इत्यादौ मा भूदित्येवमर्थो योगविभागः॥

बाल-मनोरमा

संस्कृतम् १५३०, ४।४।३

संस्कृतम्। तेनेत्येव संस्कृतमित्यर्थे तृतीयान्ताट्ठगित्यर्थः। "सस्कृतं भक्षाः" इत्यत्र तु सप्तम्यन्तादणादि विधिः। मारीचिकमिति। मरीचिभिः संस्कृतमित्यर्थः।

तत्त्व-बोधिनी

संस्कृतम् ११९१, ४।४।३

संस्कृतम्। योग विभाग उत्तरार्थःष। बाहुकेति। सूत्रे षकारः सांहितिको, न त्वनुबन्ध इति न ङीष्। तथा च "आकर्षात्पर्पादेः" इत्यादि श्र्लोकवार्तिकं षित्त्वविवेचनाय प्रकरणान्ते पठिष्यति। निकषोपल इति। सुवर्णपरीक्षार्थः।

---

सूत्रम्

काशिका-वृत्तिः

कुलत्थकौपधादण् ४।४।४

कुलत्थशब्दात् ककारोपधात् शब्दाच् च प्रातिपदिकादण् प्रत्ययो ह्बवति संस्कृतम् इत्येतस्मिन् विषये। ठको ऽपवादः। कुलत्थैः संस्कृतम् कौलत्थम्। ककारोपधात् तैत्तिडीकम्। दार्दभकम्।

न्यासः

कुलत्थकोपधादण्। , ४।४।४

बाल-मनोरमा

कुलत्थकोपधादण् १५३१, ४।४।४

कुलत्थकोपधादण्। "संस्कृतमित्यर्थे तृतीयान्ता"दिति शेषः। तैन्तिणीकमिति। तिन्तिणीकेन संस्कृतमित्यर्थः।

सूत्रम्

काशिका-वृत्तिः

तरति ४।४।५

तेन इति तृतीयासमर्थात् तरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो हबवति। तरति प्लवते इत्यर्थः। काण्डप्लवेन तरति काण्डप्लविकः। औडुपिकः।

लघु-सिद्धान्त-कौमुदी

तरति ११२२, ४।४।५

तेनेत्येव। उडुपेन तरति औडुपिकः॥

न्यासः

तरति। , ४।४।५

बाल-मनोरमा

तरति १५३२, ४।४।५

तरति। तरतीत्यर्थे तृतीयान्ताट्ठगित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

गोपुच्छाट् ठञ् ४।४।६

गोपुच्छशब्दाट् ठञ् प्रत्ययो भवति तरति इत्येतस्मिन्नर्थे। ठको ऽपवादः। स्वरे विशेषः। गौपुच्छिकः।

न्यासः

गोपुच्छाट्ठञ्। , ४।४।६

"स्वरे विशेषः"इति। ठकि हि सति तद्धितस्य "कितः" ६।१।१५९ इत्यन्तोदात्तत्वं स्यात्। ठञि सति ञित्सरेणाद्युदात्तत्वं भवति॥

बाल-मनोरमा

गोपुच्छाट्ठञ् १५३३, ४।४।६

गोपुच्छाट्ठञ्। "तरतीत्यर्थे तृतीयान्ता"दिति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

नौद्व्यचष् ठन् ४।४।७

नौशब्दाद् द्व्यचश्च प्रातिपदिकाट् ठन् प्रत्ययो हबवति तरति इत्येतस्मिनर्थे। ठको ऽपवादः। नावा तरति नाविकः। द्व्यचः खल्वपि घटिकः। प्लविकः। बाहुकः। षकारः सांहितिको नानुबन्धः। बाहुका स्त्री। आकर्षात् पर्पादेर् भस्त्रादिभ्यः

कुसीदसूत्राच् च। आवसथात् किशरादेः षितः षडेते ठगधिकारे। विधिवाक्यापेक्षं च षट्त्वं, प्रत्ययास् तु सप्त।

न्यासः

नौद्व्यचष्ठन्। , ४।४।७

इह प्रकरणे केषुचित् संहितिकः षकारो दृष्टः, केषुचित्प्रत्ययस्यैवानुबन्धः;तदिह ठगधिकारे न ज्ञायते-- कः सांहितिकः? कः प्रत्ययानुबन्धः? इति। अतोऽसन्देहार्थं परिगणनं कृतम्। तच्च "आकर्षात्पर्पादिभ्यः" इत्यादिना श्लोकेन करोति। "आकर्षात् ष्ठल्" ४।४।३१, "पर्गादिभ्यष्ठन्" ४।४।१०, "भस्त्रादिभ्यष्ठन्" ४।४।१६, "कसुसीददशैकदशात् ष्ठन्ष्ठचौ" ४।४।३१, "आवसथात् ष्ठल्" ४।४।७४, "किशरादिभ्यः ष्ठन्" ४।४।५३ इति वितः षडेते। ननु च "अन्यतो ङीष्" ४।१।४० इत्यादयोऽन्येभ्योऽपि वितः सन्त्येव। तत्किमुच्यते षडेते? इत्यत आह-- "ठगधिकारे" इत्यादि। ठकः प्रकृतत्वात् तदधिकारे ये षितः त एव परिगृह्णन्त इति दर्शयति। नन्वेवमपि सति सप्त भवन्ति, कुसादादि (४।४।३१) सूत्रे षित्प्रत्ययद्वयविधानात्? इत्यत्राह-- "विधिवाक्यापेक्षं तु षट्त्वम्" इति। षितः प्रत्ययानां सप्तत्वात्। एतेनैव योगाः षितः प्रयुक्ताः। षित्प्रत्ययार्थाः षडेते योगा इत्यर्थः॥

बाल-मनोरमा

नौद्व्यचष्ठन् १५३४, ४।४।७

नोद्व्यचष्ठन्। "ठ"निति च्छेदः। ष्टुत्वकृतः सस्य षकारः। तरतीत्यर्थे नौशब्दात् द्व्यचश्च तृतीयान्ताट्ठनित्यर्थः। नाविक इति। नावा तरतीत्यर्थः। घटिक इति। घटेन तरतीत्यर्थः। बाहुका स्त्रीति। उकः परत्वाट्ठस्य कः। अदन्तत्वाट्टाप्।

---

सूत्रम्

काशिका-वृत्तिः

परति ४।४।८

तेन इति तृतीयासमर्थाच् चरति इत्येतस्मिन्नर्थे ठक् पत्ययो भवति। चरतिर् भक्षणे गतौ च वर्तते। दध्ना चरति दधिकः। हास्तिकः। शाकटिकः।

लघु-सिद्धान्त-कौमुदी

चरति ११२३, ४।४।८

तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात्। हस्तिना चरति हास्तिकः। दध्ना चरति दाधिकः॥

न्यासः

चरति। , ४।४।८

बाल-मनोरमा

चरति १५३५, ४।४।८

चरति। गच्छतिभक्षयतीति। "चरगतिभक्षणयो"रिति चरधातोरर्थद्वये वृत्तेरिति भावः। हास्तिक इति। ठनि इके "नस्तद्धिते" इति टिलोपः

---

सूत्रम्

काशिका-वृत्तिः

आकर्षात् ष्ठल् ४।४।९

आकर्षशब्दाद् ष्थल् प्रत्ययो भवति चरति इत्येतस्मिन्नर्थे। ठको ऽपवादः। लकारः स्वरार्थः। षकारो ङीषर्थः। आकर्षेण चरति आकर्षिकः। आकर्षिकी। आकर्षः इति सुवर्णपरीक्षार्थो निकषोपलः उच्यते।

न्यासः

आकर्षात् ष्ठल्। , ४।४।९

"लकारः स्वरार्थः" इति। लिति प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्। "षकारो ङीषर्थः" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष् यथा स्यात्। "आकर्षिकी" इति। "स्वर्णपरीक्षार्थो निकषोपल उच्यते" इति। आकृष्यते स्वर्णमिति कृत्वा।

बाल-मनोरमा

आकर्षात् ष्ठल् १५३६, ४।४।९

आकर्षात्ष्ठल्। तेन चरतीत्यर्थे तृतीयान्तादाकर्षशब्दात्ष्ठलित्यर्थः।

तत्त्व-बोधिनी

आकार्षात् ष्ठल् ११९२, ४।४।९

पाठान्तरमिति। एतच्च भ्वादौ "कषखषे"त्यादिदण्डके "आकषात्ष्ठ"लिति माधवेनोपन्यस्तम्। किन्तु "आकर्षात्पर्पादे"रिति वार्तिकस्याननुगुणम्। तत्र हि नीरेफपाठे वृत्ताऽसङ्गप्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

पर्पाऽदिभ्यः ष्ठन् ४।४।१०

पर्प इत्येवम् आदिभ्यः ष्ठन् प्रत्ययो भवति चरति इत्येतस्मिन्नर्थे। ठको ऽपवादः। नकारः स्वरार्थः। षकारो ङीषर्थः। पर्पिकः। पर्पिकी। अश्विकः। अश्विकी। पर्प। अश्व। अश्वत्थ। रथ। जाल। न्यास। व्याल। पाद। पञ्च। पदिक। पर्पादिः।

न्यासः

पर्पादिभ्यः ष्टन्। , ४।४।१०

पर्पादिषु "पादः पच्च" इति पठ()ते, तस्यायमर्थः-- पादशब्दात् ष्ठन् प्रत्ययो भवति तत्सन्नयोगेन चपदित्ययमादेशः पदिकः, पदिकी। यद्येवं "पद्यत्यतदर्थे" ६।३।५२ इति "पद्भाव इके चरतावुपसंख्यानम्" (वा।७४०) इतिकस्मादुपसंख्यायते? नैष दोषः; "पादः पत्" ६।४।१३० इत्यस्यापौराणिकत्वात्॥

बाल-मनोरमा

पर्पादिभ्यः ष्ठन् १५३७, ४।४।१०

पर्पादिभ्यः ष्ठन्। ष्ठन् इति च्छेदः। "चरतीत्यर्थे तृतीयान्तेभ्य" इति शेषः। षित्त्वं ङीषर्थमित्याह--पर्पिकीति। अ()इआक इति। अ()ओन चरतीत्यर्थः।

तत्त्व-बोधिनी

पर्पादिभ्यः ष्ठन् ११९३, ४।४।१०

पर्प इति। "पर्प गतौ"। "हलश्चे"ति करणे घञ्। इहन्तर्गणसूत्रं "पादः पच्चे"ति। पादाभ्यां चरति पदिकः। यत्तु वार्तिकं "पद्भाव इके चरतावुपसङ्ख्यान"मिति सोऽस्यैव प्रपञ्चः। प्रप, अ()आ, अ()आत्थ, रथ, जाल,(जल()) न्या, व्याल, पादः पत्।

---

सूत्रम्

काशिका-वृत्तिः

श्वगणाट् ठञ्च ४।४।११

श्वगणशब्दात् ठञ् प्रत्ययो भवति, चकारात् ष्ठन्, चरति इत्येतस्मिन्नर्थे। ठको ऽपवादः। श्वगणेन चरति श्वागणिकः। श्वागणिकी। ठन् श्वगणिकः। श्वगणिका। श्वाऽदेरिञि ७।३।८ इत् यत्र वक्ष्यति, इकारादिग्रहणं च कर्तव्यम् श्वागणिकाद्यर्थम् ७।३।८ इति। तेन थत्रि द्वरादिकार्यं न भवति।

न्यासः

�आगणाटठ्ञ्च।, ४।४।११

"ष्वागणिकः"इति। शुनां गणः ()आगणः। ननु च ()आञ्शब्दो द्वारादिषु पठ()त इति "द्वारादीनाञ्च" ७।३।४ इति वृद्धिप्रतिषेधेनैवागमेन भवितव्यम्, तत्र तदादिविधेरिष्टत्वात्, तत्कथं ()आआगणिक इति भवति? इत्याह-- "()आआदेरिञिट इत्यादि। द्वारादिकार्ये च प्रतिषिद्धे सत्यादिवृद्धिरेव भवति॥

बाल-मनोरमा

�आगणाट्ठञ्च १५३८, ४।४।११

()आगणाट्ठञ् च। "उक्तविषये" इति शेषः। ()आगणशब्दात्तृतीयान्ताच्चरतीत्यर्थे ठञ् ष्ठन् च स्यादित्यर्थः। ()आआगणिक इत्युदाहरणं वक्ष्यति। तत्र ()आन्शब्दस्य द्वारादित्वादेजागमे प्राप्ते।

तत्त्व-बोधिनी

�आगणाट्ठञ्च ११९४, ४।४।११

()आगणाट्ठञ्च। ठकोऽपादः।

---

सूत्रम्

काशिका-वृत्तिः

वेतनाऽदिभ्यो जीवति ४।४।१२

तेन इति तृतीयासमर्थेभ्यः वेतनादिभ्यः शब्देभ्यः जीवति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। वेतनेन जीवति वैतनिकः कर्मकरः। धनुर्दण्डग्रहणम् अत्र सङ्घातविगृहीतार्थम्। धनुर्दण्डिकः। धानुष्कः। दाण्डिकः। वेतन। वाह। अर्धवाह। धनुर्दण्ड। जाल। वेस। उपवेस। प्रेषन। उपस्ति। सुख। शय्या। शक्ति। उपनिषत्। उपवेष। स्रक्। पाद। उपस्थान। वेतनादिः।

न्यासः

वेतनादिभ्यो जीवति।, ४।४।१२

बाल-मनोरमा

वेतनादिभ्यो जीवति १५४१, ४।४।१२

वेतनादिभ्यो जीवति। "जीवतीत्यर्थे तृतीयान्तेभ्यष्ठ"गिति शेषः। वैतनिक इति। वेतनेन जीवतीत्यर्थः। धानुष्क इति। धनुषा जीवतीत्यर्थः। उसन्तात्परत्वाट्ठस्य कः। "इणः षः" इति षत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

वस्नक्रयविक्रयाट् ठन् ४।४।१३

वस्नक्रयविक्रयशब्दाभ्यां तृतीयासमर्थाभ्यां ठन् प्रत्ययो भवति जीवति इत्येतस्मिन् विषये। ठको ऽपवादः। वस्नेन जीवति वस्निकः। क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम्। क्रयविक्रयीकः। क्रयिकः। विक्रयिकः।

न्यासः

वस्नक्रयविक्रयाटठन्। , ४।४।१३

"क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम्" इति। इह तन्त्रेण क्रयविक्रयशब्दावुच्चारितौ;तत्रैकस्य सङ्घातार्थं ग्रहणम्, अपरस्य तु विगृहीतार्थं वेदितव्यम्॥

बाल-मनोरमा

वस्नक्रयविक्रयाट्ठन् १५४२, ४।४।१३

वस्नक्रयविक्रयाट्ठन्। जीवतीत्यर्थे तृतीयान्तेभ्यो वस्नादिभ्यष्ठन् स्यादित्यर्थः। सङ्घातविगृहीतार्थमिति। व्याख्यानादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

आयुधच् छ च ४।४।१४

आयुधशब्दात् छ प्रत्ययो भवति, चकाराट् ठंश्च, जीवति इत्येतस्मिन् विषये। आयुधेन जीवति आयुधीयः, आयुधिकः।

बाल-मनोरमा

आयुधाच्छ च १५४३, ४।४।१४

आयुधाच्छ च। जीवतीत्यर्थे तृतीयान्तादायुधशब्दाच्छः स्याट्ठन् चेत्यर्थः।

तत्त्व-बोधिनी

आयुधाच्छ च ११९७, ४।४।१४

आयुधाच्छ छ। आयुध्यन्ते अनेनेति आयुधं। "घञर्थे कविधान"मिति कः।

---

सूत्रम्

काशिका-वृत्तिः

हरत्युत्सङ्गाऽदिभ्यः ४।४।१५

तेन इत्येव। उत्सङ्गादिभ्यस् तृतियासमर्थेभ्यो हरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हरतिर् देशान्तरप्रापणे वर्तते। उत्सङ्गेन हरति औत्सङ्गिकः। औडुपिकः। उत्सङ्ग। उडुप। उत्पत। पिटक। उत्सङ्गादिः।

न्यासः

हरत्युत्सङ्गादिभ्यः। , ४।४।१५

बाल-मनोरमा

हरत्युत्सङ्गादिभ्यः १५४४, ४।४।१५

हरत्युत्सङ्गादिभ्यः। हरतीत्यर्थे तृतीयान्तेभ्य इत्सङ्गादिभ्यष्ठक् स्यादित्यर्थः।

तत्त्व-बोधिनी

हरत्युत्सङ्गादिभ्यः ११९८, ४।४।१५

हरत्युत्सङ्गादिभ्यः। एभ्यस्तृतीयान्तेभ्यष्ठक् स्यादुपादत्ते नयति वेत्यर्थे। उत्सङ्ग , उडुप, उत्थित, पिटक, पिटाक।

---

सूत्रम्

काशिका-वृत्तिः

भस्त्रादिभ्यः ष्ठन् ४।४।१६

भस्त्रा इत्येवम् आदिभ्यः तृतीयासम्र्थेभ्यः हरति तियेतस्मिन्नर्थे ष्ठन् प्रत्ययो भवति। भस्त्रया हरति भस्त्रिकः। भस्त्रिकी। भरटिकः। भरटिकी। भस्त्रा। भरट। भरण। शीर्षभार। शीर्षेभार। अंसभार। अंसेभार। भस्त्रादिः।

न्यासः

भस्त्रादिभ्यः ष्ठन्। , ४।४।१६

भस्त्रादिषु "शीर्षेभार" इति पठ()ते। तत्रास्मादेव निपातनाच्छिरसः शीर्षभावः, "सप्तमी" २।१।३९ इति योगविभागात्समासः, "तत्पुरुषे कृति बहुलम्" ६।३।१३ इति पक्षे सप्तम्या अलुक्॥

बाल-मनोरमा

भस्त्रादिभ्यः ष्ठन् १५४५, ४।४।१६

भस्त्रादिभ्यः ष्ठन्। "ष्ठ"निति छेदः। हरतीत्यर्थे तृतीयान्तेभ्यो भस्त्रादिभ्यः ष्ठन् स्यादित्यर्थः। षित्वादिति। "ङी"षिति शेषः।

तत्त्व-बोधिनी

भस्त्रादिभ्यः ष्ठन् ११९९, ४।४।१६

भस्त्रदिभ्यः ष्ठन्। भस्त्रा चर्मबिकारः।"शीर्षेभार"शब्दोऽत्र पट()ते। निपातनाच्छीर्षभावः। सप्तमीसमाश्च, तत्पुरुषे कृती"ति वा अलुक्। पक्षे "शीर्षभारः"।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा विवधवीवधात् ४।४।१७

हरति इत्येव। विवधवीवधशब्दाभ्याम् तृतीयासमर्थाभ्यां विभाषा ष्ठन् प्रत्ययो भवति। तेन मुक्ते प्रकृतः ठग् भवति। विवधेन हरति विवधिकः। विवधिकी। वीवधिकः। विवधिकी। ठक् खल्वपि वैवधिकः। वैवधिकी। विवधवीवधशब्दौ समानार्थौ पथि पर्याहारे च वर्तेते।

न्यासः

विभाषा विवधवीवधात्। , ४।४।१७

"पर्याहारे" इति। परितः स ह्रियत इति पर्याहारः, मण्डलादिकमुच्यते॥

बाल-मनोरमा

विभाषा विवधात् १५४६, ४।४।१७

विभाषा विवधात्। "हरतीत्यर्थे तृतीयान्तात् ष्ठ"निति शेषः।

तत्त्व-बोधिनी

विभाषा विवधात् १२००, ४।४।१७

एकदेशविकृतस्येति। "वीवधाच्चेति वक्तव्य"मिति वार्तिकं न्यायसिद्धार्थकथनपरमिति भावः। वृत्तिकृत्तु सूत्रे वीवशब्दं प्रक्षिप्य "विभाषा विवधवीवधा"दिति पपाठ।

---

सूत्रम्

काशिका-वृत्तिः

अण् कुटिलिकायाः ४।४।१८

हरति इत्येव। कुटिलिकाशब्दात् तृतीयासमर्थादण् प्रत्ययो हबवति हरति इत्येतस्मिन्नर्थे। कुटिलिकाया हरति मृगो व्याधं कौटिलिको मृगः। कुटिलिकया हरत्यङ्गारात् कौटिलिकः कर्मारः। कुटिलिका वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्च उच्यते।

न्यासः

अण् कुटिलिकायाः। , ४।४।१८

बाल-मनोरमा

अण् कुटिलिकायाः १५४७, ४।४।१८

अण् कुटिलिकायाः। हरतीत्यर्थे तृतीयान्तात्कुटिलिकाशब्दादण् स्यादित्यर्थः। कर्मारो लोहकारः, तस्य यत् अङ्गारतप्तलोहादिग्रहणसाधनं लोहविकारभूतं सन्दंशापरनामधेयं, तदपि कुटिलिकेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

निर्वृत्ते ऽक्षद्यूताऽदिभ्यः ४।४।१९

तेन इत्येव। अक्षद्यूतादिभ्यः तृतीयासमर्थेभ्यो निर्वृत्ते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम्। जानुप्रहृतिकम्। अक्षद्यूत। जानुप्रहृत। जङ्घाप्रहृत। पादस्वेदन। कण्टकमर्दन। गतागत। यातोपयात। अनुगत। अक्षद्यूतादिः।
न्यासः
निर्वृत्तेऽक्षद्यूतादिभ्यः। , ४।४।१९

बाल-मनोरमा
निर्वृत्तेऽक्षद्यूतादिभ्यः १५४८, ४।४।१९

निर्वृत्तेऽक्षद्यूतादिभ्यः। निर्वृत्तमित्यर्थे तृतीयान्तेभ्योऽक्षद्यूतादिभ्यष्ठगित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
त्रेर्मम् नित्यम् ४।४।२०

निर्वृत्त इत्येव। ड्वितः क्त्रिः ३।३।८८ इत्ययं त्रिशब्दो गृह्यते। त्र्यन्तान् नित्यं मप् प्रत्ययो भवति तेन विर्वृत्ते इत्येतस्मिन्नर्थे। डुपचष् पाके पक्त्रिमम्। डुवप् उप्त्रिमम्। डुकृञ् कृत्रिमम्। नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्, तेन त्र्यन्तं नित्यं मप्प्रत्ययान्तम् एव भवति, विषयान्तरे न प्रयोक्तव्यम् इति। भावप्रत्ययान्तादिम् अब्वक्तव्यः। पाकेन निर्वृत्तम् पाकिमम्। त्यागिमम्। सेकिमम्। कुट्टिमम्।
लघु-सिद्धान्त-कौमुदी
क्त्रेर्मम्नित्यम् ८६१, ४।४।२०

क्त्रिप्रत्ययान्तात्मप् निर्वृत्तेर्ऽथे। पाकेन निर्वृत्तं पक्त्रिमम्। डुवप् उप्त्रिमम्॥
न्यासः
त्रेर्मम्नित्यम्। , ४।४।२०

"डिवतः क्त्रिरित्ययं त्रिशब्दो गृह्रते" इति। संख्याशब्दः कस्मान्न गृह्रते??नभिधानात्। न हि त्रिरित्युच्यते विवक्षितार्थस्य प्रतीतिर्भवति। "उप्त्रिमम्" इति। "वचिस्वपियजादीनां किति" ६।१।१५ इति सम्प्रसारणम्। "नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्" इति। केवलस्य त्रिप्रत्ययान्तस्य मप्प्रत्ययरहितस्य प्रयोगः स्वातन्त्र्यम्, तन्निवृत्त्यर्थं नित्यग्रहणम्। स्वातन्त्रनिवृत्त्यर्थे नित्यग्रहणे सति योऽर्थः सम्पद्यते तं "{त्र्यन्तः----मु।पाठः} त्र्यन्तम्" इत्यादिना दर्शयति। "विषयान्तरे" इत्यादिना यदेवकारस्य व्यवच्छेद्यं तदाचष्टे। मप्प्रत्ययविषयार्थादन्यविषये यत्र प्रत्ययो न भवति तद्वि यान्तरम्। नित्यग्रहणं तन्निवृत्तिर्यथा स्यादित्येवमर्थं वेदितव्यम्।।
बाल-मनोरमा
त्रेर्मम्नित्यम् १५४९, ४।४।२०

त्रेर्मम्नित्यम्। तेन निर्वृत्तमित्यर्थे "ड्वितः क्रि"रिति क्रिप्रत्ययान्तान्नित्यं मप्प्रत्ययः स्यादित्यर्थः। "समर्थानां प्रथमाद्वे"ति महाविकल्पनिवृत्त्यर्थं नित्यग्रहणात्। ततश्च अस्मिन्नर्थे मप्प्रत्ययं विना क्रियप्रत्ययान्तस्य प्रयोगो नेति

भाष्ये स्पष्टम्। एवं चात्र अस्वपदविग्रहं दर्शयति--कृत्या निर्वृत्तमिति। अत्र विग्रहवाक्ये "स्त्रियां क्तिन्नि"ति क्तिन्नन्तोऽयं कृतिशब्दः। कृत्रिममिति। "डुकृञ् करणे" इति धातोः "ड्वितः क्रि"रिति क्रिप्रत्ययान्तान्मप्। पक्रिममिति। पक्त्या निर्वृत्तमित्यस्वपदविग्रहः। "डुपचष् पाके" इत्यस्मात्क्रियप्रत्ययान्तान्मप्। इमब्वक्तव्य इति। निर्वृत्तमित्यर्थे तृतीयान्ता"दिति शेषः। अत्र नित्यमिति न संबध्यते इत्यभिप्रेत्य लौकिकस्वपदविग्रहं दर्शयति--पाकेन निर्वृत्तमिति।

तत्त्व-बोधिनी

त्रेर्मम्नित्यम् १२०१, ४।४।२०

त्रेर्मम्नित्यम्। नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम्। अतएव लौलिके विग्रहवाक्ये "क्तिन्नदीनां प्रयोगो , न तु त्रेः, तदाह---कृत्या निर्वृत्तमिति। एवमग्रेऽपि पाकेन निर्वृत्तमिति विग्रहो बोध्यः। सङ्ख्यावाची त्रिशब्दो नेह गृह्रते, प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहणात्, "णिजां त्रयाणा"मिति लिङ्गाच्च। ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां मपं विना त्रिप्रत्ययान्तस्य प्रयोगनिवारणेऽपि तदविवक्षायां तस्य स्वातन्त्र्येण प्रयोगो दुर्वार इति चेत्। न। "नित्य"मिति योगं विभज्य तत्सामथ्र्यादर्थ विशेषानादरेणैव स्वातन्त्र्यवारणात्। इमबिति। एवं च मप् कर्तव्यः।

भावप्रत्ययान्तादिमब्वक्तव्यः। तथा हि---"भावप्रत्ययान्तादिमप्। ततः "त्रेः"। पूर्वेण सिद्धे नियमार्थमिदं,---त्रिप्रत्ययान्त इमब्विषय एवेति। तेन त्रिपत्ययान्तस्य प्रयोगो निवर्तते। ततो "नित्यम्"। अनेन निर्वृत्तार्थाऽविवक्षायामपि त्र्यन्तस्य स्वातन्त्रं वार्यते। एवं च सङ्ख्यावाचित्रिशब्दस्य ग्रहणशङ्कैव नास्ति, "भावप्रत्ययान्ता"दित्यनुवृत्तेः। स्वरेऽपि विशेषो नास्ति, उदात्तनिवृत्तिस्वरेण इमप इकारस्योदात्तत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

अपमित्ययाचिताभ्यां कक् कनौ ४।४।२१

निर्वृत्त इत्येव। अपमित्ययाचितशब्दाभ्यां यथासङ्ख्यं कक् कनित्येतौ प्रत्ययौ भवतः निर्वृत्ते इत्येतस्मिन्नर्थे। आपमित्यकम्। याचितकम्।

न्यासः

अपमित्ययाचिताभ्यां कक्कनौ। , ४।४।२१

"अपमित्य" इति। "उदीचां माङो व्यतीहारे" ३।४।१९ इति क्त्वा, तस्य ल्यबादेशे कृते,अपमित्येति भवति। तस्य च "क्त्वासोसुन्कसुनः" १।१।३९ इत्यव्ययसंज्ञा। तेन तृतीयासमर्थविभक्त्याधिकारेऽप्यविभक्तिकादेवास्मात् प्रत्ययविधिः॥ ननु च "संस्कृतम्" ४।४।३ इत्येव संसृष्टे प्रत्यययो भविष्यति, यत् पुनर्येन संसृष्टं तत्तेन संस्कृतं भवति? नैतत्; सतो हुत्कर्षाधानं संस्कारः,एकभावः संसर्गः। न च तत्रोत्कर्षेण भवितव्यम्, स्वशुचिद्रव्यसंसर्गे स्वप्रकर्ष एव भवति, नोत्कर्षः। संसर्गमात्रे प्रत्यय इष्यते; तस्मात् संसृष्ट इति वक्तव्यमेव; एतदेव क्रियताम्; किं "संस्कृतम्" (४।४।३) इत्यनेन? असत्यपि संसर्गे यत्र संस्कृतमस्ति तत्रापि प्रत्यय इष्यते-- वैद्यिकः, न विद्यया संसर्ग उपपद्यते; संसर्गो द्रव्ययोरेव भवति, यथा--दण्डपुरुषयोः। मूर्तिमतस्तद्धर्मत्वात्, रन तु विद्या मूर्त्तिमती। कुलत्थकोलधादणो ४।४।४ विधानार्थं संस्कृतग्रहणं कत्र्तव्यम्। न हि संसृष्टमात्रे प्रत्यय इष्यते; किन्तु तत्कृतगुणाधाने॥

बाल-मनोरमा

अपमित्ययाचिताभ्यां कक्कनौ १५५०, ४।४।२१

अपमित्ययाचिताभ्याम्। ल्यबन्धमिति। "मेङ् प्रणिदाने" इत्यस्यमादिं()वनिमयार्थकात् "उदीचां माहो व्यतिहारे" इति क्त्वाप्रत्यये गतिसमासे ल्यपि "मयतेरिदन्यतरस्या"मिति इत्त्वे "ह्रस्वस्य पिती"ति तुगागमे अपमित्येत्यव्ययम्, "क्त्वातोसुन्कसुनः" इत्युक्तेरित्यर्थः। निर्वृत्तमित्यर्थे अपमित्येत्यव्ययात्प्रथमान्ताद्याचितशब्दाच्च तृतीयान्तात्कक् कन् च यथासङ्ख्यं स्यातामित्यर्थः। अपमित्येत्यंशे तृतीयान्तत्वाऽसंभवात्प्रथमान्ताद्याचितशब्दाच्च तृतीयान्तात्कक् कन् च यथासङ्ख्यं स्यातामित्यर्थः। अपमित्येत्यंशे तृतीयान्तत्वाऽसंभवात्प्रथमान्तादिति लभ्यते।

तत्त्व-बोधिनी

अपमित्ययाचिताभ्यां कक्कनौ १२०२, ४।४।२१

अपमित्येति। "उदीचां माङः"इति क्त्वाप्रत्यनेन सह गतिसमासः। क्त्वो ल्यप्। "मयतेरिदन्यतरस्या"मिति इत्त्वम्। "ह्रस्वस्ये"ति तुक्। ल्यबन्तादस्मात्तृतीयान्तात्प्रत्ययो न भवति, किन्तु वचनात्प्रथमान्तादेव।

---

सूत्रम्

काशिका-वृत्तिः

संसृष्टे ४।४।२२

तेन इत्येव। तृतीयासमर्थात् संसृष्टे इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। संसृष्टम् एकीभूतम् अभिन्नम् इत्यर्थः। दध्ना संसृष्टं दाधिकम्। मारिचिकम्। शार्ङ्गवेरिकम्। पैप्पलिकम्।

लघु-सिद्धान्त-कौमुदी

संसृष्टे ११२४, ४।४।२२

दध्ना संसृष्टं दाधिकम्॥

बाल-मनोरमा

संसृष्टे १५५१, ४।४।२२

संसृष्टे। संसृष्टमित्यर्थे तृतीयान्ताट्ठागित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

चूर्णादिनिः ४।४।२३

चूर्णशब्दादिनिः प्रत्ययो भवति संसृष्ते। ठको ऽपवादः। चूर्णैः संसृष्टाः चूर्णिनो ऽपूपाः। चूर्णिनो धानाः।

न्यासः

चूर्णादिनिः। , ४।४।२३

ननु च चूर्णेन ये संसृष्टास्तेषां चूर्णमस्ति, तत्र मत्वर्थीयेनैवेनिना सिद्धमिति तदपार्थकमिदम्? नैतत् ; अस्तिविवक्षायां मत्वर्थीयेन सिद्धं स्यात्, संसृष्टविवक्षायां पुनर्न सिध्यति, त हि ठक् स्यात्। ठको बाधनार्थत्वे कुतोऽस्यानर्थक्यम्॥

बाल-मनोरमा

चूर्णादिनिः १५५२, ४।४।२३

चूर्णादिनिः। "संसृष्टमित्यर्थे तृतीयान्ता"दिति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

लवणाल् लुक् ४।४।२४

संसृष्ते ४।३।२२ इत्यनेन उत्पन्नस्य ठको लवणशब्दाल् लुक् भवति। लवणः सूपः। लवणं शाकम्। लवणा यवागूः। द्रव्यवाची लवणशब्दो लुकं प्रयोजयति, न गुणवाची।

न्यासः

लवणाल्लुक्। , ४।४।२४

"द्रव्यवाची" इत्यादि। लवणशब्दोऽयमस्त्येव गुणवचनो यो रसविशेषे वत्र्तते, रसस्य गुणत्वात्। अस्ति द्रव्यवचनः, यथा--पञ्च लवणानीति। तत्र यो गुणवचनः स लुकं न प्रयोजनयति। गुणैर्हि यद्यपि द्रव्यं न संसृज्यते, तथापि गुणशब्दाः "सोऽयम्" इत्यभेदेन सम्बन्धाद्द्रव्ये वत्र्तन्ते, यथा-- शुक्लः पटः, {क्षारम्---मुद्रितः पाठः} क्षौरम्, अम्लं दधीति; तथा लवणशब्दोऽपि वर्तिष्यते, ततः किं लुका? अवश्यं तदेवं विज्ञायम्, अन्यथा हि मधुरादिभ्योऽपि लुग्वक्तव्यः स्यात्। द्रव्यशब्दास्त्वन्यत्र सोऽयमित्यभेदसमर्थनान्न वत्र्तन्ते। तस्माद्द्रव्यवाची लवणशब्दो लुकं प्रयोजयति॥

बाल-मनोरमा

लवणाल्लुक् १५५३, ४।४।२४

लवणाल्लुक्। "पूर्वसूत्रविहितस्ये"ति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

मुद्गादण् ४।४।२५

मुद्गशब्दादण् प्रत्ययो भवति संसृष्टे इत्येतस्मिन् विषये। ठको ऽपवादः। मौद्ग ओदनः। मौद्गी यवागूः।

न्यासः

मुद्गादण्। , ४।४।२५

बाल-मनोरमा

मुद्गादण् १५५४, ४।४।२५

मुद्गादण्। "तेन संसृष्टमित्यर्थे तृतीयान्ता"दिति शेषः। मौद्ग ओदन इति। मुद्गैः संसृष्ट इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

व्यञ्जनैरुपसिक्ते ४।४।२६

तेन इत्येव। व्यञ्जनवाचिभ्यः प्रातिपदिकेभ्यः तृतीयासमर्थेभ्यः उपसिक्ते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। दध्ना

उपसिक्तं दाधिकम्। सौपिकम्। खारिकम्। व्यञ्जनैः इति किम्? उदकेन उपसिक्त ओदनः।

न्यासः

व्यञ्जनैरुपसिक्ते। , ४।४।२६

"व्यञ्जनैःर" इति। बहुवचननिर्देशः स्वरूपविधिनिरासार्थः। तेनेत्यधिकारादेव तृतीयायां समर्थविभक्तौ वत्र्तमानायां तृतीयानुवादः सुखप्रतिपत्तये। "संसृष्टे" ४।४।२२ इति वत्र्तमान उपसिक्तस्यैतत् प्रयोजनम्-- ओदनादौ यथा स्यात्। इह मा भूत्-- सूपेन संसृष्टा स्थालीति। उदकेनोदसिक्त ओदन इति। उदकं व्यञ्जनं न भवति; व्यञ्जनशब्दस्य सूपादावेव रूढत्वात्। ननु यद्व्यञ्जनैरुपसिक्तं तत्तैः संस्कृतं भवति; तत्र संस्कृतमेव सिद्धम्? न सिध्यति; सतो ह्युत्कर्षावानं संस्कारः, न चासौ सर्वत्रोपसिक्तः सम्भवति। तथा हि-- व्यपगते स्वादुरसै प्रतिभावापन्नैरुपसिक्तेष्वोदनादिष्वपकर्ष एव भवति, नोत्कर्षः। उपसिक्तमात्रेऽपि चेष्यते। तस्मात् प्राक् तस्य पृथगारम्भः॥

बाल-मनोरमा

व्यजञ्जनैरुपसिक्ते १५५५, ४।४।२६

व्यञ्डनैरुपसिक्ते। उपसिक्तमित्यर्थे तृतीयान्तेभ्यो व्यञ्जनवाचिभ्यष्ठगित्यर्थः। सेचनेन मृदूकरणमुपसेकः। संसृष्ट इत्येव सिद्धे नियमार्थं सूत्रम्--"व्यञ्जनवाचिभ्य उपसिक्त एवे"ति। तेनेह न, सूत्रेन संसृष्टा स्थाली।

तत्त्व-बोधिनी

व्यञ्जनैरुपसिक्ते १२०३, ४।४।२६

व्यञ्जनैरुप। व्यज्यते अनेन ओदनादिरस इति व्यञ्जनां, तद्वाचिभ्य उपसक्ति इत्यर्थे ठक्स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

ओजःसहो ऽम्भसा वर्तते ४।४।२७

ओजस् सहसम्भसित्येतेभ्यः तृतीयासमर्थेभ्यो वर्तते इत्यर्थे ठक् प्रत्ययो भवति। ओजसा वर्तते औजसिकः शूरः। साहसिकश्चौरः। आम्भसिको मत्स्यः।

न्यासः

ओजः सहोम्भसा वर्तते। , ४।४।२७

"वत्र्तते" इति। चेष्टत इत्यर्थः। "तत्प्रक्रियाविशेषणम्" इत्यादि। अनेन हि वृत्यर्थस्य कत्र्तव्यतामाचष्ट। वत्र्तत इति वत्र्तमानं करोत्यर्थः। स हि वृत्यर्थः कत्र्तव्यतया सम्बध्यमानः कर्म सम्पद्यते। तत्सामानादिकरण्याच्च तद्विशेषणमपि कत्र्तव्यतया युज्यते। तदपि कर्म च प्रसक्तम्। क्रियाविशेषणस्यैवाकर्मकेऽपि धातौ कर्मत्वमाख्यातम्। तदित्यनेन द्वितीयासमर्थविभक्तौ लब्धायामपि द्वितीयान्ता इह प्रकृतयो निर्दिष्टा विस्पष्टार्थम्; अन्यथा प्रत्ययविधौ पञ्चमी न्याय्येति तदन्ता एव निर्दिश्येरन्॥

बाल-मनोरमा

ओजःसहोऽम्भसा वर्तते १५५६, ४।४।२७

ओजःसहो। वर्तते व्याप्रियते इत्यर्थे ओजस्, सहस्, अम्भस्--एभ्यः तृतीयान्तेभ्यष्ठक् स्यादित्यर्थः। औजसिक इति।

ओजसा बलेन वर्तते, युद्धे व्याप्रियत इत्यर्थः। साहसिक इति। सहसा=प्राणवियोगाभ्युपगमेन स्तेये व्याप्रियत इत्यर्थः।
आम्भसिक इति। अम्भसा हेतुना संचारे व्याप्रियत इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तत् प्रत्यनुपूर्वम् ईपलोमकूलम् ४।४।२८

तदिति द्वितीयासमर्थविभक्तिः। प्रति अनु इत्येवं पूर्वेभ्यः ईपलोमकूलशब्देभ्यो द्वितियासमर्थेभ्यो वर्तते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। ननु च वृतिरकर्मकः, तस्य कथं कर्मणा सम्बन्धः? क्रियाविश्षणम् अकर्मकाणाम् अपि कर्म भवति। प्रतीपं वर्तते प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। आनुलोमिकः। प्रातिकूलिकः। आनुकूलिकः।

न्यासः

तत्प्रत्यनुपूर्वमीपलोमकूलम्। , ४।४।२८

"प्रातीपिकः" इति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। "ऋक्पूरब्धूःपथामानक्षे" ५।४।७४ इत्यकारः समासान्तः। एवञ्च "द्व्यन्तरुपसर्गेभ्योऽप ईत्" ६।३।९६ इतीत्त्वम्। अपरत्र तु "ऊदनोर्देशे" ६।३।९७ इति देशादन्यत्रोत्त्वमेव, ततष्ठक्। "{प्रातिलोमिकः, आनलोमिकः--काशिका,पदमञ्जरी च।} प्रातिलोमिकम्, आनुलोमिकम्" इति। प्रतिगतानि लोमान्यस्य , अनुगतानि लोमान्यस्येति बहुव्रीहिः। "अच् प्रत्यनु" ५।४।७५ इत्यादिनाऽच् समासान्तः॥

बाल-मनोरमा

तत्प्रत्यनुपूर्वमीपलोमकूलम् १५५७, ४।४।२८

तत्प्रत्यनुपूर्व। "त"दिति द्वितीयान्तानुकरणम्। प्रत्यनुपूर्वेभ्यो द्वितीयान्तेभ्य ईषलोमकूलशब्देभ्यो वर्तते इत्यर्थे ठक् स्यादित्यर्थः। ननु प्रतीपं वर्तते इत्यादिवक्ष्यमाणविग्रहेषु वर्ततेरकर्मकत्वात्कथं द्वितीयेत्यत आह--क्रियाविशेषणत्वादिति। इदंच कारकनिरूपणे निरूपितम्। "क्रियाविशेषणानां प्रतमान्ततवमेवे"ति तु शब्देन्दुशेखरे प्रतीपमिति। प्रतिगता आपो यस्मिन्निति बहुव्रीहिः। "ऋक्पू:" इत्यकारः समासान्तः। द्व्यन्तरूपसर्गेभ्योऽप ई"दिति ईत्त्वम्। अनुगता आपो यस्मिन् तदन्वीपम्। "ऊदनोर्देशे" इत्यूत्वं तु न, अदेशत्वात्। प्रतीपान्वीपशब्दौ हि प्रतिकूलानुकूलशब्दपर्यायौ रूढौ। अवयवार्थेषु तु नाभिनिवेष्टव्यम्।

तत्त्व-बोधिनी

तत्प्रत्यनुपूर्वमीपलोमकूलम् १२०४, ४।४।२८

तत्प्रत्यनु। वृतेरकर्मकत्वात्कथं तस्य द्वितीयान्ते नप्रतीपमित्यादिना सम्बन्ध इत्याशङ्कायामाह---
क्रियाविशेषणत्वादिति। प्रतीपमिति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। "ऋक्पू:"इत्यकारः समासान्तः। "व्द्यन्तरूपसर्गेभ्यः"इति ईत्वम्। व्युत्पत्तिमात्रमिदम्। प्रतिकूलाऽनुकूलपर्याया हीमे रूढिशब्दः। आन्वीपिक इति। "अन्वीप "मित्यत्र "ऊदनोर्देशे"इत्युत्वं तु न भवति, अदेशत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

परिमुखं च ४।४।२९

परिमुखशब्दाद् द्वितीयासमर्थाद् वर्तते इत्येअस्मिन्नर्थे ठक् प्रत्ययो भवति। परिमुखं वर्तते पारिमुखिकः। चकारोऽनुक्तसमुच्चयार्थः। पारिपार्श्विकः।

न्यासः

परिमुखञ्च। , ४।४।२९

"पञ्चम्ययाङ्परिभिः" २।३।१० इति पञ्चमी। "अपपरिबहिररञ्चवः पञ्चम्या" २।१।११ इत्यव्ययीभावसमासः, ततष्ठक्। स्वाभिमुखं वर्जयित्वा यः सेवको वत्र्तते स पारिमुखिकः। सर्वतोभावे वा परिः, तस्य "कुगतिप्रादयः" २।२।१८ इति प्रादिसमासः। यतो यतः स्वामिनो मुखं वत्र्तते ततस्ततो यः सेवको वत्र्तते स पारिमुखिकः॥

बाल-मनोरमा

परिमुखं च १५५८, ४।४।२९

परिमुखं च। अस्माद्द्वितीयान्ताद्वर्तते। इत्यर्थे ठगित्यर्थः। चादिति। चकारादनुक्तसमुच्चयार्थात् परिपार्(ामित्यस्मादपि ठकि पारिपार्(िआकः।

तत्त्व-बोधिनी

परिमुकं च १२०५, ४।४।२९

परिमुखमिति। "अपपरी वर्जने"इति परेः कर्मप्रवचनीयसंज्ञायां "पञ्चम्यपाङ्परिभि"रिति पञ्चमी। "अपपरिबहिरञ्चवः पञ्चम्या"इत्यव्ययीभावः। ततष्ठक्। स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स---"पारिमुखिकः"। यदा तु सर्वतोभावे परिशब्दः, प्रादिसमासश्च, तदा यतो यतः स्वामिनो मुखं ततस्ततो यो वर्तते स एवमुच्यते। एवं पारिपार्(िआकोऽप्यर्थद्वये बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

प्रयच्छति गर्ह्यम् ४।४।३०

ततिति द्वितीयासमर्थात् प्रयच्छति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति, यत् तद् द्वितीयासमर्थं गर्ह्यं चेत् तद् भवति। द्विगुणार्थ द्विगुणं, तादर्थ्यात् ताच्छब्द्यम्। द्विगुणं प्रयच्छति द्वैगुणिकः। त्रिगुणिकः। वृद्धेर् वृधुशिभावो वक्तव्यः। वार्धुषिकः। प्रकृत्यनतरं वा वृद्धिपर्यायो वृधुषिशब्दः। गर्ह्यम् इति किम्? द्विगुणं प्रयच्छत्यधमर्णः।

न्यासः

प्यच्छति गह्र्रम्। , ४।४।३०

"द्विगुणम्" इति। तादथ्र्यात् ताच्छब्ब्यं दर्शयति। आद्विगुणार्थे वस्तुनि द्विगुणशब्दं वत्र्तयित्वा तत्र प्रत्ययं कुर्वतः कोऽभिप्रायः? एवं मन्यते-- द्वैगुणिक इति उत्तमर्ण उच्यते, न चासौ द्विगुणं प्रयच्छति, किं तर्हि? स्कन्दयित्वा द्विगुणं गृह्णाति; अन्यथा हि विपर्यये सति प्रसस्यमेव स्यात्, न तु गह्र्रम्। यदैकस्मिन्नर्थे तादथ्र्याद्()द्विगुणशब्दो वत्र्तते तदैकमेव द्विगुणार्थं प्रयच्छतो द्विगुणमेव भवतीति गह्र्रमिति। गर्हा पुनरिह प्रतिषिद्धस्य शास्त्रेण दीयमानस्य प्रत्यवायहेतुत्वाद्वेतितव्या। "प्रकृत्यन्तरम्" इत्यापिनोपसंख्यानं प्रत्याचष्टे"। तत्रापि तादथ्र्याद्वृद्ध्यर्थं यद्दीयते तद्()वृधुधिशब्देनोच्यते। ननु च तत्प्रत्याख्याने वृद्धिशब्दात् प्रत्यये सति वार्धिक इत्यपि स्यात्? नैष दोषः; अव्यविकन्यायेन हि वृद्धिशब्देन वाक्यमेव भवति। वृधुषिशब्देन वाक्यं वृत्तिश्च॥

बाल-मनोरमा

प्रयच्छति गर्ह्यम् १५५९, ४।४।३०

प्रयच्छति गर्ह्यम्। तदिति द्वितीयान्तमनुवर्तते। गर्ह्यं प्रयच्छतीत्यर्थे द्वितीयान्ताट्ठगित्यर्थः। द्विगुणार्थं द्रव्यं द्विगुणमिति। द्वैगुणिक इति वक्ष्यमाणोदाहरणे द्विगुणशब्देन द्विगुणार्थं द्रव्यं विवक्षितमित्यर्थः। तत्प्रय्च्छति द्वैगुणिक इति। द्विगुणीभवितुं स्वद्रव्यमृणं प्रयच्छतीत्यर्थः। "अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धकः" इत्यादिधर्मशास्त्रविरुद्धत्वादिह गर्ह्यमिति भावः।

वृद्धेरिति। वृद्धिशब्दादुक्तार्थे ठकि प्रकृतेत्र्रधुषि इत्यादेशो वाच्य इत्यर्थः। इकारान्त आदेशः। वार्धुषिक इति। वृद्ध्यर्थं द्रव्यं-वृद्धिः, तत्प्रयच्छतीत्यर्थे वृद्धिशब्दाट्ठक इकादेशे प्रकृतेर्वृधुष्यादेश इति भावः। "वृद्ध्याजीवस्तु वार्धुषि"रिति तु प्रमाद एव।

तत्त्व-बोधिनी

प्रयच्छति गर्ह्यम् १२०६, ४।४।३०

प्रयच्छति। द्वितीयान्तात्प्रच्छतीत्यर्थे ठक्स्याद्यत्प्रयच्छति गर्ह्यं चेत्तत्। द्विगुणार्थे द्विगुणमिति। तादर्थ्यात्ताच्छब्ध्यमिति भावः। बहुवृद्ध्युद्देश्यकदानकर्मतयाऽस्य द्रव्यस्य गर्ह्यत्वम्।

वृद्धेर्वृधुषिभावो वक्तव्यः। वार्द्धुषिक इति। वृद्ध्यर्थं वृद्धिः। तां प्रयच्छतीति विग्रहः। अथ कथं "वृद्ध्याजीवश्च वार्धुषि"रित्यमरः, ठक्सन्नियोगेनैव वृधुषिभावस्वीकारात्। अत्राहुः--निरङ्कुशाः कवय इति। गर्ह्यमिति किम्()। द्विगुणं त्रिगुणं वा वृदिं()ध प्रत्यच्छत्यधमर्ण इत्यर्थे "द्वैगुणिक"इत्यादि माभूत्।

---

सूत्रम्

काशिका-वृत्तिः

कुसीददशएकादशात् ष्ठन्ष्ठचौ ४।४।३१

प्रयच्छति गर्ह्यम् इत्येव। कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसिदम्। एकादशार्था दश दशैकादशशब्देन उच्यन्ते। कुसीददशएकादशशब्दाभ्यां यथासङ्ख्यं ष्ठन् ष्ठचित्येतौ प्रत्ययौ भवतः प्रयच्छति गर्ह्यम् इत्येतस्मिन् विषये। ठको ऽपवादौ। कुसिदं प्रयच्छति कुसीदिकः। कुसीदिकी। दशैकादशिकः। दशैकादशिकी।

न्यासः

कुसीददशैकादशात् ष्ठन्ष्ठचौ। , ४।४।३१

तत्रापि कुसीदार्थे वस्तुनि दशैकादशार्थेषु च दशसु दशैकादशशब्दं वत्र्तयित्वा ततः प्रत्ययः। सर्वतः पूर्ववदभिप्रायो वेदितव्यः। दश चैकादश चेति समानाधिकरणसमासः। ननु च भिन्नविषययोः सामानाधिकरण्यं नोपपद्यते? दशैकादशशभ्दोऽप्येकादशार्थेषु दशस्वेवोपचराद्वत्र्तत इत्यदोषः। यो दश प्रयच्छत्येकादश एव स्युरिति स दशैकादश इत्युच्यते। दशैकादशादिति निर्देशादकारान्तत्वं निपात्यते; किमर्थम्? वाक्येऽप्यकारान्तत्वश्रवणार्थं दशैकादशान् प्रयच्छतीति॥

बाल-मनोरमा

कुसीददशैकादशात् ष्ठन्ष्ठचौ १५६०, ४।४।३१

कुसीद। गह्र्‌रार्थाभ्यामिति। कुसीद, तदशैकादश--आभ्यां द्वितीयान्ताभ्यां गह्र्‌रार्थकाभ्यां प्रयच्छतीत्यर्थे क्रमात्ष्ठन्ष्ठचौ स्त इत्यर्थः। षित्त्वं ङीषर्थमित्याह--कुसीदिकीति। नित्त्वचित्त्वयोस्तु स्वरे विशेषः। अथ ष्ठच् प्रकृतिं दशैकादशशब्दं व्युत्पादयति--एकादशार्थत्वादित्यादिना। यत्र एकादश निष्कान् अधिकान् प्रत्यर्पयेति समयं कृत्वा दश निष्का ऋणत्वेन दीयन्ते, तत्र ऋणत्वेन गृहीता दश निष्का एकादशार्थत्वादेकादशशब्देन उपचर्यन्ते। ततश्च एकादश च ते दश चेति कर्मधारये "सङ्ख्याया अल्पीयस्या" इति दशन्शब्दस्य पूर्वनिपातः। इहैव निपातनादकारः समासान्तः, टिलोपः, दशैकादशा इति रूपमित्यर्थः। दशैकादशिक इति। एकादश निष्खानधिकान् ग्रहीतुं दश निष्कान् अधमर्णाय प्रयच्छतीति यावत्। अथ लौकिकविग्रहवाक्यं दर्शयति--दशैकादशान् प्रयच्छतीति। इहापीति। विग्रहवाक्ये यथा उत्तमर्णः प्रधानत्वेन निर्दिश्यते, तथा समासेऽपि उत्तमर्ण एव ऋणदातैव तद्धितार्थः प्रधानभूत इत्यर्थः।

तत्त्व-बोधिनी

कुसीददशैकादशात् ष्ठन्ष्ठचौ १२०७, ४।४।३१

निपात्यते इति। अतएव व्याख्यातृप्रयोगोऽप्युपपद्यत इत्याशयेनोदाहरति---दशैकादशानिति। "सङ्ख्याया अल्पीयस्याः"इति पूर्वनिपातः। उत्तमर्ण एवेति। दश दत्त्वा एकादश गृह्णातीति तस्यैव गह्र्‌रत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उच्छति ४।४।३२

तदिति द्वितीयासमर्थादुच्छति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। बदराणि उच्छति बादरिकः। श्यामाकिकः। भूमौ पतितस्यैकैकस्य कणस्योपादानमुञ्छः। कणानुञ्छति काणिकः।

लघु-सिद्धान्त-कौमुदी

उञ्छति ११२५, ४।४।३२

बदराण्युञ्छति बादरिकः॥

न्यासः

उञ्छति। , ४।४।३२

"उञ्छति" इति। उद्धुनोतीत्यर्थः॥

बाल-मनोरमा

उञ्छति १५६१, ४।४।३२

उञ्छति। तदिति द्वितीयान्तमनुवर्तते। उञ्छतीत्यर्थे द्वितीयान्ताट्ठगित्यर्थः। भूम्यां निपतितस्य व्रीह्यादेः कणश आदानमुञ्छः।

तत्त्व-बोधिनी

उञ्छति १२०८, ४।४।३२

उञ्छति। भूमौ पतितस्यैकैकस्योपादानमुञ्छः।

---

सूत्रम्
काशिका-वृत्तिः
रक्षति ४।४।३३

तदिति द्वितीयासमर्थाद् रक्षति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। समाजं रक्षति सामाजिकः। सांनिवेशिकः।
लघु-सिद्धान्त-कौमुदी
रक्षति ११२६, ४।४।३३

समाजं रक्षति सामाजिकः॥
न्यासः
रक्षति। , ४।४।३३

बाल-मनोरमा
रक्षति १५६२, ४।४।३३

रक्षति। अस्मिन्नर्थे द्वितीयान्ताट्ठगित्यर्थः।

तत्त्व-बोधिनी
रक्षति १२०९, ४।४।३३

सामाजिक इति। समजन्ति अस्मिन्निति समाजः=समूहः।

---

सूत्रम्
काशिका-वृत्तिः
शब्ददर्दुरं करोति ४।४।३४

तदिति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां करोति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। शब्दं करोति शाब्दिको वैयाकरणः। दार्दुरिकः कुम्भकारः।
लघु-सिद्धान्त-कौमुदी
शब्ददर्दुरं करोति ११२७, ४।४।३४

शब्दं करोति शाब्दिकः। दर्दुरं करोति दार्दुरिकः॥
न्यासः
शब्ददर्दुरं करोति। , ४।४।३४

तदित्यनेनैव द्वितीयासमर्थविभक्तौ लब्धायां शब्ददर्दुरमिति द्वितीयानिर्देशो लौकिकवाक्यप्रदर्शनार्थः। शब्ददर्दुरं करोतीत्येद्व्यावहारिकं वाक्यम्। अस्य प्रतिग्रहो यत्र लोके व्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यर्थ सूचयते, तेन शब्दं करोति रवर इत्यत्र न भवति। लोके स शाब्दिक इत्युच्यते यः शब्दं वेत्ति; वैयाकरण एव शब्दं वेत्ति, तेन तत्रैव प्रत्ययो भवति, न खरे। च असौ वैयाकरणः प्रत्ययप्रकृत्यादिना सर्वं शब्दं जानाति॥
बाल-मनोरमा

शब्ददर्दुरं करोति १५६३, ४।४।३४

शब्ददर्दुरं करोति। शब्दं करोति, दर्दुरं करोतीति विग्रहे द्वितीयान्ताट्ठगित्यर्थः। इह शब्दविषये प्रकृतिप्रत्ययविभादपूर्वकज्ञाने करोतिर्वर्तते, व्याख्यानात्। तेनेह न--शब्दं करोति खरः। दार्दुरिक इति। "दर्दुरस्तोयदे भेके वाद्यभाण्डाऽद्रिभेदयोः। दर्दुरा चण्डिकायां स्यात्पामजाले तु दर्दुर"मिति वि()आः। इह यथायोग्यमन्वयः।

तत्त्व-बोधिनी

शब्ददर्दुरं करोति १२१०, ४।४।३४

शब्दं करोतीति। प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः। अभिधानस्वाभाव्याद्व्युत्पादन एवायं प्रत्ययः। नेह---शब्दं करोति बर्बरः खरो वा। दार्दुरिक इति। कुलाल इत्यर्थः। वाद्यभाण्डवाचीह दर्दुरशब्दः।

स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम्। मात्स्यिक इति। "मत्स्यस्य ङ्या "मिति परिगणनात् "सूर्यतिष्ये"ति यलोपाऽभावः। हारिणिक इति। नन्विदं पर्यायस्योदाहरणं न भवति, हरिणस्य मृगविशेषंत्वात्तथा चात्र पर्यायस्योदाहरणं किमिति न प्रदर्शितमिति चेत्। अत्राहुः----आरण्यकचतुष्पात्सु हरिणे च मृगशब्दो वर्तते। यदा हरिणवाची मृगशब्दः, तदा मृगपर्यायस्योदाहरणं भवत्येवेति।

---

सूत्रम्

काशिका-वृत्तिः

पक्षिमत्स्यमृगान् हन्ति ४।४।३५

तदित्येव। पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो हन्ति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। स्वरूपस्य पर्यायाणां तद्विशेषाणाम् च ग्रहणम् इह इस्यते। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। तैत्तिरिकः। मत्स्य मात्स्यिकः। मैनिकः। शाफरिकः। शाकुलिकः। मृग मार्गिकः। हारिणिकः। सौकरिकः। सारङ्गिकः।

न्यासः

पक्षिमत्स्यमृगान्हन्ति। , ४।४।३५

"स्वरूपस्य पर्यायाणाञ्च तद्विशेषणानाञ्च ग्रहमिष्यते" इति। कथं पुनरिष्यमाणमपि पर्यायादीनां ग्रहणं लभ्यते? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्दे()शे स्वरूपस्य ग्रहणं भवति, नार्थप्रधान इति प्रतिपादितमेतत् प्राक्। यदि तर्हि पर्यायाणामपि ग्रहणम्, अजिह्मआन् हन्त्यनिमिषान् हन्तीत्यत्रापि प्राप्नोति? नैष दोषः इह द्वितीयासमर्थविभक्तौ लब्धायां पुनर्दितीयासमर्थविभक्तिनिर्देशो लौकिकवाक्यप्रदर्शनार्थः। असय् परिग्रहः-- यत्र लौकिकवाक्यव्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यस्यार्थस्य सूचनार्थम्, तेनाजिह्मआन् हन्तीत्यादौ प्रत्ययो न भवति। अजिह्मआन् हन्त्यनिमिषान् हन्तीत्यस्यार्थस्य विवक्षायामाजिहिकः, आनिमिषिक इति लोके न व्यवहारोऽस्ति। तत्र पक्षिषु "पाक्षिकःर" इतचि स्वरूपस्योदाहरणम्। "शाकुनिकः" इति पर्यायस्य। "मायूरिकः, तैत्तिरिकः" इति। विशेषस्य। मत्स्येषु "मात्स्यिकःर" इति स्वरूपस्य। "मैनिकःर" इति पर्यायस्य। "शाफरिकःर, शाकुलिकः"इति विशेषस्य। मृगेषु "मार्गिकः" इति स्वरूपस्य। "हारिणिकःर" इति पर्यायस्य। "सौकरिकः, सारङ्गिकः" इति विशेषस्य॥

बाल-मनोरमा

पक्षिमत्स्यमृगान्हन्ति १५६४, ४।४।३५

पाक्षिमत्स्यमृगान्हन्ति। अस्मिन्नर्थे पक्ष्यादिशब्देभ्यो द्वितीयान्ताट्ठगित्यर्थः।

स्वरूपस्येति। पक्षिमत्स्यमृगशब्दैस्तत्तत्स्वरूपाणां, तत्तत्पर्यायाणां, तद्विशेषवाचिनां च ग्रहणमित्यर्थः, "स्वं रूप"मिति सूत्रभाष्ये तथोक्तेरिति भावः। मीनस्यैवेति। मत्स्यपर्यायेषु मीनस्यैव ग्रहणं, न त्वनिमिषादिशब्दानामित्यर्थः। इदमपि "स्वं रूप"मित्यत्र भाष्ये स्थितम्। पाक्षिक इति --स्वरूपस्योदाहरणम्। शाकुनिक इति--पक्षिपर्यायस्य। मायूरिक इति--पक्षिविशेषस्य। तथा मात्स्यिकः, मैनिकः, शाकलिक इति क्रमेण स्वरूपपर्यायविशेषाणामुदाहरणम्। तथा मार्गिकः, हारिणिकः, सारङ्गिक इति क्रमेण स्वरूपपर्यायविशेषाणामुदाहरणम्।

---

सूत्रम्

काशिका-वृत्तिः

परिपन्थं च तिष्ठति ४।४।३६

परिपन्थशब्दात् तदिति द्वितीयासमर्थात् तिष्ठति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। परिपन्थं तिष्ठति पारिपन्थिकश्चौरः। चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति। परिपन्थं हन्ति पारिपन्थिकः। समर्थविभक्तिप्रकरणे पुनर् द्वितियोच्चारणं लौकिकवाक्यप्रदर्शनार्थम्। परिपथशब्दपर्यायः परिपन्थशब्दो ऽस्ति इति ज्ञापयति। स विषयान्तरे ऽपि प्रयोक्तव्यः।

न्यासः

परिपन्थञ्च तिष्ठति। , ४।४।३६

यथा परिमुखञ्चेति परिमुखशब्दस्याव्ययीभावत्वं तत्पुरुषत्वञ्च, तथेहापि परिपन्थशब्दस्य तदद्वयं वेदितव्यम्। "तदिति द्वितीयासमर्थात्" इति। ननु च तिष्ठतिरयमकर्मकः तत्कथं द्वितीयया सह सम्बन्धः? नैष दोषः; अकर्मणामपि हि {कालभावाध्वनां मुद्रितपाठः} कालभावाध्नः कर्मसंज्ञां प्रतिपद्यन्ते। तथा चोक्तम्-- "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" (वा।१।३।५१) इति। "पारिपन्थिकश्चौरः" इत्यव्ययीभावः। चौरो यः पन्थानं वर्णयित्वा तिष्ठति स पारिपन्थिकशब्देनोच्यते। तत्पुरुषपक्षे तु यश्चौरः पथो व्याप्य तिष्ठति स परिपन्थिक उच्यते। "चकारः" इत्यादि। तिष्ठति चेत्यत्र प्रत्ययार्थसमनन्तरमेव चकारो द्रष्टव्यः, तेन समानजातीयस्यैव प्रत्ययार्थस्य समुच्चयं करोति। अथ प्रकृतेरेव समुच्चयः कस्मान्न विज्ञायते? कर्मत्वानुपपत्तेः। तत्र हि द्वितीया समर्थविभक्तिरनुवत्र्तते, तिष्ठतेश्चाकर्मकत्वात् प्रकृताया मत्स्यादेः प्कृतेः कर्मभावो नोपपद्यते। कालभावाध्वनामेव ह्यकर्मकाणां कर्मसंज्ञेष्यते, न मत्स्यादीनाम्। लौकिकवाक्यप्रदर्शनार्थं तदेतद()द्वितीयोच्चारणं करोतीत्याह-- "{परिपथशब्दपर्यायः---काशिका}परिपथपर्यायः" इति। किमेतस्य ज्ञापने प्रयोजनमित्याह-- "स विषयान्तरे" इत्यादि। असति ह्यस्मिन् ज्ञापने ठक्प्रत्ययसन्नियोगेन प्रकृतिर्निर्दिश्यमाना प्रत्ययाभावेन प्रसज्यते। ज्ञापने तु सति यत्रापि प्रत्ययो न भवति तत्रापि प्रयोग उपपद्यते॥

बाल-मनोरमा

परिपन्थं च तिष्ठति १५६५, ४।४।३६

परिपन्थं च तिष्ठति। अस्मादिति। परिपन्थशब्दादित्यर्थः। चकाराद्धन्तीत्यनुकृष्यते। तदाह--तिष्ठति हन्ति चेति। पन्थानं वर्जयित्वेति। एतेन "अपपरी वर्जने" इति परेः कर्मप्रवचनीयत्वे "पञ्चम्यपाङ्परिभि"रिति पञ्चम्याम् "अपपरिबहिरञ्चवः पञ्चम्ये"ति अव्ययीभावसमासः सुचितः। व्याप्य वेति। एतेन सर्वतःशब्दपर्यायस्य परेः परिगतः पन्था इति प्रादिसमासे परिपन्थशब्द इति सूचितम्। अव्ययीभावः, प्रादिसमासो वेत्यपि बोध्यम्। उभयथाऽपि क्रियाविशेषणत्वाद्द्वितीयान्तत्वम्। इदमेव सूचयितुं प्रकृतेरपि द्वितीयोच्चारणमिति वृत्तिकृतः इदमेवाभिप्रेत्य विग्रहं

दर्शयति--परिपन्थं तिष्ठतीति।

तत्त्व-बोधिनी
परिपन्थं च तिष्ठति १२११, ४।४।३६

परिपन्थं च। परिमुखवदयमव्ययीभावस्तत्पुरुषो वा। क्रियाविषयत्वात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वमस्त्येवेत्याह---द्वितीयान्तादिति। चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोतीत्याह---तिष्ठति हन्ति चेति।

---

सूत्रम्
काशिका-वृत्तिः
माथौत्तरपदपदव्यनुपदं धावति ४।४।३७

माथशब्दौत्तरपदात् प्रातिपैकात् पदवी अनुपद इत्येताभ्यां च धावति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। दण्डमाथं धावति दाण्डमाथिकः। शौल्कमाथिकः। पादविकः। आनुपदिकः। मथशब्दः पथिपर्यायः।
न्यासः
माथोत्तरपदपदव्यनुपदं धावति। , ४।४।३७

दण्डभावो माथो दण्डमाथः = ऋजुः पन्था उच्यते, तं धावति "दाण्डमाथिकः"। शुल्कस्य माथः शुल्कमाथः, "शौल्कमथिकः"। पदस्य पश्चादनुपदम्, पश्चादर्थेऽव्यीभावः, अनुपदं धावति-- "आनुपदिकः"। प्रत्यासत्या धावतीत्यर्थः। द्वितीयायां समर्थविभक्तौ लब्धायां पुनर्द्वितीयानिर्देशः "इष्टाद्()द्वितीयान्ताद्यथा स्यात्, अनिष्टान्मा भूत्" इत्येवमर्थम्। तेन यः "अनुर्यत्समया" २।१।१४ "यस्य चायामः" २।१।१५ "कुगतिप्रदायः" २।२।१८ इत्यादिभिर्योगैरनुशब्दस्य समासः, ततो न भवति॥
बाल-मनोरमा
माथोत्तरपदपदव्यनुपदं धावति १५६६, ४।४।३७

माथोत्तर। मथोत्तरपद, पदवी, अनुपद--एभ्यो द्वितीयान्तेभ्यो धावतीत्यर्थे ठगित्यर्थः। माथपदं व्याचष्टे--माथः पन्था इति। मथ्यते गन्तृभिराहन्यते #इति व्युत्पत्तेरिति भावः। दण्डमाथ इति। शाकपार्थिवादिः। पन्थानं धावतीति धावतेर्गत्यर्थत्वात् सक्रमकत्वम्। पादविक इति। पदवीं धावतीति विग्रहः। आनुपदिक इति। अनुपदं धावतीति विग्रहः।

तत्त्व-बोधिनी
माथोत्तरपदव्यनुपदं धावति १२१२, ४।४।३७

माथ इति। मथ्यते गन्तृभिरिति माथः। "मते विलोडने"। कर्मणि घञ्। पदोत्तरपदं। पदशब्द उत्तरपदं यस्य तत्पदोत्तरपदम्। "पदान्त"मिति तु नोक्तम्, बहुच्पूर्वान्मा भूदिति।

---

सूत्रम्
काशिका-वृत्तिः
आक्रन्दाट् ठञ् च ४।४।३८

आक्रन्दन्ति एतस्मिन् नित्याक्रन्दो देशः। अथ वा आक्रन्द्यते इत्याक्रन्दः आर्तायनम् उच्यते। विशेषाभावाद् द्वयोरपि

ग्रहणम्। आक्रन्दशब्दात् तदिति द्वितीयासमर्थाद् धावति इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति, चकाराट् ठक् च। स्वरे विशेषः। आक्रन्दं धावति आक्रन्दिकः। आक्रन्दिकी।

न्यासः

आक्रन्दाटठ्ञ्च। , ४।४।३८

"आत्त्रायनम्" इति। परित्राणार्थमीयते गम्यत इत्ययनम्, आत्त्रानामयनमात्त्रायनम्। शरणमित्यर्थः॥

बाल-मनोरमा

आक्रन्दाट्ठञ्च १५६७, ४।४।३८

आक्रन्दाट्ठञ्च। अस्मादिति। आक्रन्दशब्दाद्द्वितीयान्तादित्यर्थः। आकन्दन्ति। अस्मिन्नत्याक्रन्दः। तदाह-- रोदनस्थानमिति।

---

सूत्रम्

काशिका-वृत्तिः

पदौत्तरपदं गृह्णाति ४।४।३९

पदशब्दः उत्तरपदं यस्य तस्मात् पदोत्तरपदशब्दात् तदिति द्वितीयासमर्थाद् गृह्णाति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। पूर्वपदं गृह्णाति पौर्वपदिकः। औत्तरपदिकः। पदानतातिति न उक्तं, बहुच्पूर्वान् मा भूतिति।

न्यासः

पदोत्तरपदं गृह्णाति। , ४।४।३९

पदग्रहणेन स्वरूपमेव गृह्रते, न सुप्तिङन्तं पदम्। अत एवाह-- "पदशब्द उत्तरपदं यस्य" इति। एतच्च द्वितीयायां लौकिकरवाक्यप्रदर्शनार्थत्वाद्()द्वितीयानिर्देशाल्लभ्यते। पदोत्तरपदं गृह्णातीत्येतल्लौकिकं वाक्यम्। अस्य प्रदर्शनेनैतत् सूचितम्-- लौकिकस्य हि पदस्य ग्रहणम्, न पारिभाषिकस्येति। अथ पदान्तादित्येव कस्मान्नोक्तम्? इत्याह-- "पदान्तादिति नोक्तम्" इत्यादि। गतार्थम्। पदमेवोत्तरपदं यस्य तस्माद्यथा स्यात्। इह तु श्लोकपादपदं गृह्णातीति भवतीति केचित्॥

बाल-मनोरमा

पदोत्तरपदं गृह्णाति १५६८, ४।४।३९

पदोत्तरपदम्। पदशब्द उत्तरपदं यस्य तस्माद्द्वितीयान्ताद्गृह्णातीत्यर्थे ठक्स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

प्रतिकण्ठार्थललामं च ४।४।४०

प्रतिकण्ठार्थललामशब्देभ्यः तदिति द्वितीयासमर्थेभ्यः गृह्णाति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः। आर्थिकः। लालामिकः।

न्यासः

प्रतिकण्ठार्थललामञ्च। , ४।४।४०

कण्ठं कण्ठं प्रति प्रतिकण्ठम्, यथार्थेऽव्ययीभावः, आभिमुख्ये वा " लक्षणेनाभिप्रती आभिमुख्ये" २।१।१३ इति। कण्ठस्याभिमुख्य इति। कण्ठस्याभिमुख्यं प्रतिकण्ठम्, प्रातिकण्ठिकः स उच्यते सर्व कण्ठं यो गृह्णाति, यो वा कण्ठमाभिमुख्येन गृह्णाति। द्वितीयासमर्थप्रकरणे पुनर्द्वितीयान्त प्रकृतिनिर्देश इष्टाद्यथा स्यात्, अनिष्टान्मा भूत्। तेन प्रतिगतः कण्ठमिति "कुगतिप्रादयः" २।२।१८ इति तत्पुरुषो यः प्रतिकण्ठशब्दस्ततो न भवति॥

बाल-मनोरमा

प्रतिकण्ठार्थललामं च १५६९, ४।४।४०

प्रतिकण्ठार्थ। एभ्य इति। प्रतिकण्ठ, अर्थ, ललाम--इत्येभ्य इत्यर्थः। आर्थिक इति। अर्थं गृह्णातीत्यर्थः। लालामिक इति। ललामं=चिह्नं, तद्गृह्णातीत्यर्थः। "लिङ्गं ललामं च ललाम चे"त्यमरः।

तत्त्व-बोधिनी

प्रितिकण्ठार्थललामं च १२१३, ४।४।४०

प्रतिकण्ठमिति। कण्ठं कण्ठं प्रतीति यथार्थेऽव्ययीभावः, "लक्षणेनाभिप्रती आभिमुख्ये"इत्यनेन वा। यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्येह न ग्रहणं, व्याख्यानादित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

धर्मं चरति ४।४।४१

धर्मशब्दात् तदिति द्वितीयासमर्थाच् चरति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। चरतिरासेबायां नानुष्ठानमात्रे। धर्मं चरति धार्मिकः। अधर्माच् च इति वक्तव्यम्। आधर्मिकः।

लघु-सिद्धान्त-कौमुदी

धर्मं चरति ११२८, ४।४।४१

धार्मिकः (अधर्माच्चेति वक्तव्यम्)। आधर्मिकः॥

न्यासः

धर्मञ्चरति। , ४।४।४१

"चरतिरासेवायाम्" इति। आसेवा = पौनःपुन्यम्। "अधर्माच्च वक्तव्यम्" इति। अधर्मशब्दाच्चरतीत्येतस्मिन्नर्थे ठग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्-- पूर्वसूत्रादिह चकारऽनुवत्र्तते, स चानुक्तसमुच्चयार्थो वेदितव्यः, तेनाधर्मादपि भविष्यति॥

बाल-मनोरमा

धर्मं चरति १५७०, ४।४।४१

धर्मं चरति। चरतीत्यर्थे द्वितीयान्ताद्धर्मशब्दाट्ठगित्यर्थः।

अधर्माच्चेतीति। "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"ति तदन्ताऽग्रहणादप्राप्ते आरम्भः।

तत्त्व-बोधिनी

धर्म चरति १२१४, ४।४।४१

धर्म चरति। चरतिरिहाऽऽसेवायां, न त्वनुष्ठानमात्रे। तेन दैववशाद्धर्मे प्रवृत्तो दुर्वृत्तो धार्मिक इति नोच्यते। आसेवा हि स्वारसिकि प्रवृत्तिः। एवं दैववशादधर्मे प्रवृत्तो यः सद्वृत्तः स आधर्मिक इति नोच्यते।

---

सूत्रम्

काशिका-वृत्तिः

प्रतिपथम् एति ठंश् च ४।४।४२

प्रतिपथशब्दाद् द्वितीयासमर्थादेति इत्यस्मिन्नर्थे ठन् प्रत्ययो भवति, चकाराट् ठक् च। प्रतिपथम् एति प्रतिपथिकः, प्रातिपथिकः।

न्यासः

प्रतिपथमेति ठ#ँश्च। , ४।४।४२

"प्रतिपधिकम्" इति। पूर्ववद्वीप्सायाम्, आभिमुख्ये वाऽव्ययीभावः। पन्थानं पन्थानं प्रति प्रतिपथम्। आभिमुख्ये-- पथ आभिमुख्यं प्रतिपथम्। यः सर्वान् पथ एति, आभिमुख्येन वा पन्थानमेति स प्रातिपदिक इति चाभिधीयते॥

बाल-मनोरमा

प्रतिपथमेति ठञ्च १५७१, ४।४।४२

प्रतिपथमेति ठंश्च। प्रतिपथमित्यव्ययीभावादेतीत्यर्थे ठन्ठक्च स्यादित्यर्थः। प्रतिपथमिति। "लक्षणेनाभिप्रती आभिमुख्ये" इत्यव्ययीभावः। "ऋक्पूः" इति समासान्तः।

तत्त्व-बोधिनी

प्रतिपथमेति ठञ्चे १२१५, ४।४।४२

प्रतिपथमिति। वीप्सयामाभिमुख्ये वाऽव्ययीभावः। "ऋक्पू"रिति समासान्तः।

---

सूत्रम्

काशिका-वृत्तिः

समवायान् समवैति ४।४।४३

समवायावाचिभ्यः शब्देभ्यः तदिति द्वितीयासमर्थेभ्यः समवैति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। समवायः समूहः उच्यते, न संप्रधारणा। समवायानिति बहुवचनं सरूपविधिनिरासार्थम्। समवैति आगत्य तदेकदेशी भवति इत्यर्थः। समवायान् समवैति सामवायिकः। सामाजिकः। सामूहिकः। सान्निवेशिकः।

न्यासः

समवायान् समवैति। , ४।४।४३

"समवायः समूह उच्यते, न सम्प्रसारणा" इति। कुत एतत्? तत्र समवैतीत्यस्य प्रत्ययार्थस्यायोगात्। आगत्य तदेकदेशीभवतीति समवैतिशब्दस्यार्थः। सम्प्रधारणा चामूर्तिः, चैतसिको धर्मः, न च तदेकदेशीभवितुं शक्यते। तस्मात् समूह एव समवायशब्दस्यार्थः, नैतीत्यस्यार्थः। एतीति वत्र्तमाने समवैतीति वचनमर्थविशेषप्रतिपत्त्यर्थम्। एतीति

प्राप्तिमात्रं कुर्वन्नुच्यते। समवैतीत्यागत्य तदेकदेशीभवतीति॥

बाल-मनोरमा

समवायान्समवैति १५७२, ४।४।४३

समवायान्समवैति। द्वितीयान्तेभ्यः समवायवाचिशब्देभ्यः समवैतीत्यर्थे ठगित्यर्थः। बहुवचनात्तदर्थवाचिशब्दग्रहणम्। समवैति=मेलयतीत्यर्थः।

तत्त्व-बोधिनी

समवायान्समवैति १२१६, ४।४।४३

समवायान्। समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक्स्यात्समवैतीत्यर्थे। इह समवपूर्वस्येणोऽर्थः प्राविश्यैकदेशीभवनम्। तत्र गुणभूतप्रवेशाऽपेक्षया समवायानिति द्वितीयानिर्देशः। विशेष्यापेक्षया तु लोके सप्तमी प्रायेण प्रयुज्यते---"कुरुक्षेत्रे समवेताः"इति यथा। "एत्येधती"ति वृद्धिरिह न भवति, एजादित्वाऽभावात्।

---

सूत्रम्

काशिका-वृत्तिः

परिषदो ण्यः ४।४।४४

परिषदः ण्यः प्रत्ययो भवति समवायान् समवैति इत्येतस्मिन् विषये। ठको ऽपवादः। परिषदं समवैति पारिषद्यः।

न्यासः

परिषदो ण्यः। , ४।४।४४

बाल-मनोरमा

परिषदो ण्यः १५७३, ४।४।४४

परिषदो ण्यः। द्वितीयान्तात्परिषच्छब्दात्समवैतीत्यर्थे ठगपवादो ण्य इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सेनाया वा ४।४।४५

सेनाशब्दाद् वा ण्यः प्रत्ययो भवति समवायान् समवैति इत्येतस्मिन्नर्थे। ठको ऽपवादः। पक्षे सो ऽपि भवति। सेनां समवैति सैन्यः, सैनिकः।

न्यासः

सेनाया वा। , ४।४।४५

बाल-मनोरमा

सेनाया वा १५७४, ४।४।४५

सेनाया वा। ण्यः स्यादिति। शेषपूरणमिदम्। द्वितीयान्तात्सेनाशब्दात्समवैतीत्यर्थे ण्यो वा स्यादित्यर्थः। सैन्याः सैनिका

इति। सेनां मेलयन्तीत्यर्थः।

तत्त्व-बोधिनी

सेनाया वा १२१७, ४।४।४५

सैन्याः सैनिका इति। द्वितीयान्ताण्ण्यठकौ। यत्तु "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते"इति निघण्टुषूक्तं तत्फलितार्थकथनपरं बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां ललाटकुक्कुट्यौ पश्यति ४।४।४६

ललाटकुक्कुटीशब्दाभ्यां तदिति द्वितीयासमर्थाभ्यां पश्यति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति संज्ञायां विषये। संज्ञाग्रहणम् अभिधेयनियमार्थं, न तु रूढ्यर्थम्। ललाटं पश्यति लालाटिकः सेवकः। कौक्कुटिको भिक्षुः। सर्वावयवेभ्यो ललाटं दूरे दृश्यते। तदनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रति अनुपश्लेषः कार्येषु अनुपस्थायित्वं लक्ष्यते। लालाटिकः सेवकः। स्वामिनः कार्येषु न उपतिष्ठते इत्यर्थः। कुक्कुटीशब्देन अपि कुक्कुटीपातो लक्ष्यते। देशस्य अल्पतया हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति स उच्यते कौक्कुटिकः इति।

न्यासः

संज्ञायां ललाटकक्कुट्यौ पश्यति। , ४।४।४६

"अभिधेयनियमार्थः" इति। अभिधेये सेवकविशेषे च प्रत्ययान्तस्य नियमः। तत्रैव वृत्तिर्यथा स्यादित्येवमर्थम्। "न तु रूढ()र्थम्" इति। लालाटिककौक्कुटिकशब्दयो रूढ()आमेकत्वात्। "तदनेन" इत्यादि। यत एव सर्वावयवेब्यो ललाटं दूरे दृश्यते, तस्मादनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषो लभ्यते। न त्वत्र ललाटार्थो दर्शनं चास्ति। यादृशश्चानुपश्लेषो विवक्षितः, तं "कार्येष्वनुपस्थायित्वम्" इत्यनेन दर्शयति। "कुक्कुटीशब्देनापि" इत्यादि। कक्कुट()आ ह्रल्पदेशविषयः पातो भवति। तदनेन कुक्कुटीपातदेशस्याल्पता लक्ष्यते। न त्वत्र कुक्कुट()र्थो देशश्च विद्यते॥

बाल-मनोरमा

संज्ञायाललाटकुक्कुट्यौ पश्यति १५७५, ४।४।४६

संज्ञायाम्। ललालकुक्कुटीशब्दाभ्यां फश्यतीत्यर्थे ठक् स्यात्संज्ञायामित्यर्थः। संज्ञा=रूढिः, न त्वाधुनिकः सङ्खेतः। लालाटिकः शेवक इति। दूरे स्थधित्वा प्रभोर्ललाटं पश्यति, नतु कार्ये प्रवर्तत इत्यर्थः। "लालाटिकः प्रभोर्भालदर्शी कार्याऽक्षमश्च यः" इत्यमरः। कौक्कुटिक इति। कुक्कुटीपतनार्हदेशं पश्यतीत्यर्थः।

तत्त्व-बोधिनी

संज्ञायां ललाटकुक्कुट्यौ पश्यति १२१८, ४।४।४६

संज्ञायाम्। ललाटकुक्कुटीशब्दाभ्यां द्वितीया। ताभ्यां पश्यतीत्यर्थे ठक्स्यात्। सम्यग्ज्ञानं संज्ञा=प्रसिद्धिः, तस्याम्। प्रसिद्धिविषयभूतेऽर्थे इत्यर्थः। लालाटिक इति। दूरे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः। "लालाटिकः प्रभोर्भालदर्शी कार्याऽक्षमश्च यः"। कौक्कुटिको भिक्षुरिति। संन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तस्य धर्म्यम् ४।४।४७

तस्य इति षष्ठीसमर्थाद् धर्म्यम् इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। धर्म्यं न्याय्यम्। आचारयुक्तम् इत्यर्थः। शुल्कशालायाः धर्म्यं शौल्कशालिकम्। आकरिकम्। आपणिकम्। गौल्मिकम्।

न्यासः

तस्य धर्म्यम्। , ४।४।४७

बाल-मनोरमा

तस्य धर्म्यम् १५७६, ४।४।४७

तस्य धर्म्यम्। धर्मदनपेतं धर्म्यम्, आचरितुं योग्यमित्यर्थः। धर्म्यमित्यर्थे षष्ठ()न्ताट्ठगित्यर्थः।

तत्त्व-बोधिनी

तस्य धर्म्यम् १२१९, ४।४।४७

धर्म्यमिति। धर्मादनपेतं धर्म्यम्। "धर्मपथ्यर्थन्यायादनपेते"इति यत्।

---

सूत्रम्

काशिका-वृत्तिः

अण् महिष्यादिभ्यः ४।४।४८

महिषी इत्येवम् आदिभ्यः अण् प्रत्ययो भवति तस्य धर्म्यम् इत्येतस्मिन् विषये। ठको ऽपवादः। महिस्याः धर्म्यम् माहिषम्। प्राजावतम्। महिषी। प्रजावती। प्रलेपिका। विलेपिका। अनुलेपिका। पुरोहित। मणिपाली। अनुचारक। होतृ। यजमान। महिष्यादिः।

न्यासः

अण् महिष्यादिभ्यः। , ४।४।४८

बाल-मनोरमा

अण्महिष्यादिभ्यः १५७७, ४।४।४८

अण् महिष्यादिभ्यः। "षष्ठ()न्तेभ्यो धर्म्यमित्यर्थे" इति सेषः।

---

सूत्रम्

काशिका-वृत्तिः

ऋतो ऽञ् ४।४।४९

ऋकारान्तात् प्रातिपदिकातञ् प्रत्ययो भवति तस्य धर्म्यम् इत्येतस्मिन् विषये। ठको ऽपवादः। पोतुर् ध्रम्यं पौत्रम्। औद्गात्रम्। नरच् च एति वक्तव्यम्। नरस्य धर्म्या नारी। विशसितुरिड्लोपश्च। विशसितुः धर्म्यम् वैशस्त्रम्।

विभाजयितुर्णिलोपश्च। विभाजयितुर् धर्म्यम् वैभाजित्रम्।

न्यासः

ऋतोऽञ्। , ४।४।४९

बाल-मनोरमा

ऋतोऽञ् १५७८, ४।४।४९

ऋतोऽञ्। ऋदन्तात्षष्ठ()न्ताद्धर्म्यमित्यर्थे अञित्यर्थः।

नारीति। अञन्तत्वान्ङीबिति भावः। इड्लोप इति। इटो लोप इत्यर्थः।

वैशस्त्रमिति। विशसितृशब्दादञि इटो लोपे ऋकारस्य यणि आदिवृद्धिः।

वैभाजित्रमिति। विभाजयितृशब्दादञि णिलोपः।

---

सूत्रम्

काशिका-वृत्तिः

अवक्रयः ४।४।५०

तस्य इत्येव। षष्ठीसमर्थातवक्रय इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अवक्रीणिते ऽनेन इति अवक्रयः पिण्डकः उच्यते। शुल्कशालायाः अवक्रयः औल्कशालिकः। आकरिकः। आपणिकः। गौल्मिकः। ननु अवक्रयो ऽपि धर्म्यम् एव? न एतदस्ति। लोकपीडया धर्मतिक्रमेण अप्यवक्रयो भवति।

न्यासः

अवक्रयः। , ४।४।५०

बाल-मनोरमा

अवक्रयः १५७९, ४।४।५०

अवक्रयः। तस्येत्यनुवर्तते। तदाह--षष्ठ()न्तादिति।

तत्त्व-बोधिनी

अवक्रयः १२२०, ४।४।५०

अवक्रयः। अवक्रीयते अनेनेति करणे "एरच्"।

---

सूत्रम्

काशिका-वृत्तिः

तदस्य पण्यम् ४।४।५१

तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं पण्यं चेत् तद् भवति। अपूपाः पण्यम् अस्य आपूपिकः। शाष्कुलिकः। मौदकिकः। पण्यम् इति विशेषनं तद्धितवृत्तावन्तर्भूतम् अतः पण्यशब्दो न प्रयुज्यते।

न्यासः

तदस्य पण्यम्। , ४।४।५१

अपूपाः पण्यमस्येत्यापूपिकः। अथ यथा वाक्ये पण्यशब्दो युज्यते तथा वृत्तावपि कस्मान्न युज्यते? इत्याह-- "पण्यम्" इति। "विशेषणम्" इत्यादि। अथ य एवमवेक्ष्यमाणः पण्यार्थं वृत्तावन्तर्भावयति तेन गतार्थत्वात् पण्यशब्दो न प्रयुज्यते॥

बाल-मनोरमा

तदस्य पण्यम् १५८०, ४।४।५१

तदस्य पण्यम्। अस्मिन्नर्थे प्रथमान्ताट्ठगित्यर्थः। विक्रेतव्यं द्रव्यं-पण्यम्। लवणाट्ठञ्। "तदस्य पण्य"मित्येव।

तत्त्व-बोधिनी

तदस्य पण्यम् १२२१, ४।४।५१

पण्यमिति। पणितव्येऽर्थे "अवद्यपण्ये"ति यदन्तो निपातितः।

---

सूत्रम्

काशिका-वृत्तिः

लवणाट् ठञ् ४।४।५२

लवणशब्दाट् ठञ् प्रत्ययो भवति तदस्य पण्यम् इत्येतस्मिन् विषये। ठको ऽपवादः। स्वरे विशेषः। लवणं पण्यम् अस्य लावणिकः।

न्यासः

लवणाट्ठञ्। , ४।४।५२

बाल-मनोरमा

लवणाट्ठञ् १५८१, ४।४।५२

विक्रेतव्यं द्रव्यं-पण्यम्। लवणाट्ठञ्। "तदस्य पण्य"मित्येव। लावणिक इति। लवणमस्य पण्यमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

किशरादिभ्यः ष्ठन् ४।४।५३

किशर इत्येवम् आदिभ्यः ष्ठन् प्रत्ययो तदस्य पण्यम् इत्येतस्मिन् विषये। ठको ऽपवादः। किशरादयो गन्धविशेषवचनाः। किशराः पण्यम् अस्य किशरिकः। किशरिकी। निरदिकः। नरदिकी। किशर। नरद। नलद। सुमङ्गल। तगर। गुग्गुलु। उशीर। हरिद्रा। हरिद्रायणी। किशरादिः।

न्यासः

किशरादिभ्यः ष्ठन्। , ४।४।५३

बाल-मनोरमा

किसरादिभ्यः ष्ठन् १५८२, ४।४।५३

किसरादिभ्यः ष्ठन्। तदस्य पण्यमित्येव। "ष्ठ"न्निति च्छेदः। तदाह--षित्त्लान्ङीषिति।

---

सूत्रम्

काशिका-वृत्तिः

शलालुनो ऽन्यतरस्याम् ४।४।५४

शलालुशब्दादन्यतरस्यां ष्ठन् प्रत्ययो भवति तदस्य पण्यम् इत्येतस्मिन् विषये। ठको ऽपवादः। पक्षे सो ऽपि भवति। शलालुशब्दो गन्धविशेषवचनः। शलालु पण्यम् अस्य शलालुकः। शलालुकी। शालालुकः। शालालुकी।

न्यासः

शलालुनोऽन्यतरस्याम्। , ४।४।५४

"शलालुकः"इति। "इसुसुक्तान्तात् कः" ७।३।५१॥

बाल-मनोरमा

शलालुनोऽन्यतरस्याम् १५८३, ४।४।५४

शलालुनोऽन्यतरस्याम्। "ष्ठ"न्निति शेषः। "तदस्य पण्यमित्येव। "शलालुक इति। शलालु पण्यमस्येति विग्रहः। उकः परत्वाइस्य कः। षित्त्वस्य फलमाह--शलालुकीति।

तत्त्व-बोधिनी

शलालुनोऽन्यतरस्याम् १२२२, ४।४।५४

शलालुक इति। "इसुसुक्तान्तात्कः"। ठक्पक्षे त्वादिवृद्धिः। शालालुकः। मार्दङ्गिक इति। मृदङ्गशब्देन मृदङ्गवादनं लक्ष्यते। मुख्यार्थे तु प्रयोगो न भवति, अनभिधानादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

शिल्पम् ४।४।५५

तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत् प्रथमासमर्थं शिल्पं चेत् तद् भवति। शिल्पं कौशलम्। मृदङ्गवादनं शिल्पम् अस्य मार्दङ्गिकः। पाणविकः। वैणिकः। मृदङ्गवादने वर्तमानो मृदङ्गशब्दः प्रत्ययम् उत्पादयति। शिल्पं तद्धितवृत्तावन्तर्भवति।

लघु-सिद्धान्त-कौमुदी

शिल्पम् ११२९, ४।४।५५

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः॥

न्यासः

शिल्पम्। , ४।४।५५

"शिल्पं कौशलम्" इति। क्रियाभ्यासपूर्वको ज्ञानविशेषः। "मृदङ्गवादनं शिल्पमस्य" इति। मृदङ्गो वाद्यते येन शिल्पेन तन्मृदङ्गवादनम्। ननु च मृदङ्गवादनं शिल्पं यस्येति विगृह्य प्रत्यय उत्पद्यमानो मृदङ्गवादनशब्दादेव प्राप्नोति, न तु मृदङ्गशब्दात्, ततो मार्दङ्गवादनिक इति भवितव्यम्, तत्कथं मार्दङ्गिक इति भवति? इत्याह-- "मृदङ्गवादनम्" इत्यादि। मृदङ्गशब्द एव प्रत्ययमुत्पदयति, स तु मृदङ्गवादने वत्र्तमानः, न मृदङ्गे। अत्रशब्दशक्तिस्वाभाव्यं हेतुः। न चायं नियमः-- येन विग्रहः क्रियते, तत एव प्रत्ययेन भवितव्यमिति। यथा ह्ववेरिदं मांसमाविकम्, मांसमित्यविशब्देन विग्रहः क्रियतेऽविकशब्दादेव प्रत्ययो भवति, तथेहापि मृदङ्गवादनशब्देन विग्रहः क्रियते, प्रत्ययस्तु मृदङ्शब्दाद्भवति। तेन तत्र गतार्थत्वाच्छिल्पशब्दो न प्रयुज्यत इत्यभिप्रायः॥

बाल-मनोरमा

शिल्पम् १५८४, ४।४।५५

शिल्पम्। तदस्य शिल्पमित्यर्थे प्रतमान्ताट्ठगित्यर्थः। क्रियासु कौशलं शिल्पम्। ननु "मार्दङ्गिक" इत्युदाहरणं वक्ष्यति, तत्र मृदङ्गं शिल्पमिति कथं विग्रहः, मृदङ्गस्य शिल्पत्वाऽसंभवात्। तत्राह--मृदङ्गवादनमिति। मृदङ्गवादनविषयकमित्यर्थः। मृदङ्गशब्दो लक्षणया मृदङ्गवादनविषयक इति भावः।

तत्त्व-बोधिनी

शिल्पम् १२२३, ४।४।५५

शिल्पं--क्रियाकौशलम्। तच्च मृदङ्गवादनविषयकम्। तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः।

---

सूत्रम्

काशिका-वृत्तिः

मड्डुकझर्झरादणन्यतरस्याम् ४।४।५६

मड्डुकझर्झरशब्दाभ्याम् अन्यतरस्याम् अण् प्रत्ययो भवति तदस्य शिल्पम् इत्येतस्मिन् विषये। पक्षे सो ऽपि भवति। मड्डुकवादनं शिल्पमस्थ माड्डुकः, माड्डुकिकः। झार्झरः, झार्झरिकः।

न्यासः

मड्डुकझर्झरादणन्यतरस्याम्। , ४।४।५६

बाल-मनोरमा

मड्डुकझर्झरादणन्यतरस्याम् १५८५, ४।४।५६

मड्डुकझर्झरात्। "तदस्य शिल्प"मित्येव। पक्षे ठक्।मड्डुकझर्झरौ--वाद्यविशेषौ।

---

सूत्रम्

काशिका-वृत्तिः

प्रहरणम् ४।४।५७

तदस्य इत्येव। तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत् प्रथमासमर्थं प्रहरणं चेत् तद् भवति। असिः प्रहरणम् अस्य आसिकः। प्रासिकः। चाक्रिकः धानुष्कः।

लघु-सिद्धान्त-कौमुदी

प्रहरणम् ११३०, ४।४।५७

तदस्येत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः॥

न्यासः

प्रहरणम्। , ४।४।५७

"धानुष्कः" इति। कादेशः "इणः षः" ८।३।३९ इति विसर्जनीयस्य षत्वम्॥

बाल-मनोरमा

प्रहरणम् १५८६, ४।४।५७

प्रहरणम्। "तदस्ये"त्येव। प्रहरणवाचिनः प्रथमान्तात्तदस्येत्यर्थे ठगित्यर्थः। प्रह्रियतेऽनेनेति प्रहरणम्ायुधम्। धानुष्क इति। धनुः प्रहरणमस्येति विग्रहः। उसन्तात्परत्वाड्डस्य कः। "इणः षः" इति षः।

तत्त्व-बोधिनी

प्रहरणम् १२२४, ४।४।५७

प्रहरणम्। प्रह्रियते अनेनेति प्रहणमायुधम्। धानुष्क इति। "इसुसुक्तान्तात्कः"। "इणः षः"इति विसर्गस्य षः।

---

सूत्रम्

काशिका-वृत्तिः

परश्वधाट् ठञ् च ४।४।५८

परश्वधशब्दात् ठञ् प्रत्ययो भवति, चकारात् ठक्। स्वरे विशेषः। परश्वधः प्रहरणम् अस्य पारश्वधिकः।

न्यासः

पर�आधाड्ठञ् च। , ४।४।५८

बाल-मनोरमा

पर�आधाड्ठञ् च १५८७, ४।४।५८

पर()आआधाड्ठञ् च। "तदस्य प्रहरण"मित्येव। चाड्ठक्। "परशुश्च पर()आधः" इत्यमरः।

तत्त्व-बोधिनी

पर�आधाड्ठञ् १२२५, ४।४।५८

पर()आधाड्ठञ्। चाड्ठक्। "द्वयोः कुठारः स्वधितिः परशुश्च पर()आधः"। परलोक इति। एतच्चाबिधानशक्तिस्वाभाव्याल्लभ्यते।

---

सूत्रम्

काशिका-वृत्तिः

शक्तियष्ट्योरीकक् ४।४।५९

शक्तियष्टिशब्दाभ्याम् ईकक् प्रत्ययो भवति तदस्य प्रहरणम् इत्येतस्मिन् विषये। ठको ऽपवादः। शक्तिः प्रहरणम् अस्य शाक्तीकः। याष्टीकः।

न्यासः

शक्तियष्ट�ओरीकक्। , ४।४।५९

अथ दीर्घोच्चारणं किमर्थम्, इकगेव नोच्येत, इकक्यपि सवर्णदीर्घत्वे कृते शाक्तीको याष्टीक इति सिध्यत्येव? न सिध्यति; इकारस्य "यस्येति च" ६।४।१४८ इति लोपेन भवितव्यम्। तत्कुतः सवर्णदीर्घत्वम्? इकारोच्चारणसामथ्र्यादेव लोपो न भविष्यति। ननु चावग्रहनिवृत्तिरिकारस्य प्रयोजनं स्यात्? नैतत्; यदि ह्रेतत् प्रयोजनं स्यात् सूत्रारम्भोऽनर्थखः स्यात्; ठकाप्यनवग्रहस्य सिद्धत्वात्? नानर्थकः ; वाक्यनिवृत्त्यर्थत्वात्। एवमपि प्रत्ययग्रहणमनर्थकं स्यात्, ठक्प्रत्ययो हि प्रकृतः , तत्रैतावदेन वक्तव्यम्-- शक्कतियष्ट()ओरिति। एवं पुनर्विधानां वाक्यनिवृत्त्यर्थं भविष्यति, किमीकग्विधानेन? तस्मादिकग्ग्रहणसामथ्र्याल्लोपो न भविष्यति। एवमपि ठकैव "यस्येति च" ६।४।१४८ इति लोपाभावेनानवग्रहे सिद्धे हीकग्ग्रहणमधिकविधानार्थं प्रतीयते। तेन "यस्येति च" ६।४।१४८ इति लोपो न भवति। यथा तस्मादकः सवर्णे ६।१।९७ दीर्घोऽपि न स्यादिति विगृहीतमेव श्रूयेत। तस्मादीकग्वक्तव्यः॥

बाल-मनोरमा

शक्तियष्ट�ओरीकक् १५८८, ४।४।५९

शक्तियष्ट()ओरीकक्। शक्तियष्टिशब्दाभ्यां प्रथमान्ताभ्यां प्रहरणवाचिभ्यामस्येत्यर्थे ईकक् स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अस्तिनास्तिदिष्टं मतिः ४।४।६०

तदस्य इत्येव। तदिति प्रथमासमर्थेभ्यः अस्ति नास्ति दिष्ट इत्येतेभ्यः शब्देभ्यः अस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत् तत् प्रथमासमर्थं मतिश्चेत् तद् भवति। अस्ति मतिः अस्य आस्तिकः। नास्ति मतिः अस्य नास्तिकः। दैष्टिकः। न च मतिसत्तामात्रे प्रत्यय इष्यते, किं तर्हि, परलोको ऽस्ति इति यस्य मतिः स आस्तिकः। तद्विपरीतो नास्तिकः। प्रमाणानुपातिनी यस्य मतिः स दैष्टिकः। तदेतदभिधानशक्तिस्वभावाल् लभ्यते। अस्तिनास्तिशब्दौ निपातौ, वचनसामर्थ्याद् वा आख्याताद् वाक्याच् च प्रत्ययः।

न्यासः

अस्तिनास्तिदिष्टं मतिः। , ४।४।६०

"किं तर्हि परलोकोऽस्तीति {यस्य मतिः---काशिका} मतिर्यस्य" इति। कथं पुनरसति विशेषोपादान एतल्लभ्यते? इत्याह-- "तदेतत्" इत्यादि। अभिधानशक्तिस्वाभाव्याल्लभ्यते। ननु चास्तीति तिङन्तम्, नास्तीति वाक्यम्। अत एताभ्यां न प्राप्नोति प्रत्ययः, प्रातिपदिकाधिकारात् (४।१।१।)? इत्यत आह-- "अस्तिनास्तिशब्दौ" इत्यादि। अभ्युपगम्यापि तिङन्तत्वं वाक्यत्वञ्च परिहारान्तरमाह-- "वचनादाख्याताद्वाक्याच्च प्रत्ययः" इति॥

बाल-मनोरमा

अस्तिनास्ति-दिष्टं मतिः १५८९, ४।४।६०

अस्ति नास्ति। तदस्येत्येवेति। अस्तीति मतिरस्यास्ति, नास्तीति मतिरस्यास्ति, दिष्टमिति मतिरस्यास्तीत्यर्थेषु क्रमेण अस्तीत्यस्मान्नास्तीत्यस्माद्दिष्टमित्यस्माच्च प्रथमान्ताट्ठगित्यर्थः। अस्तिनास्तिशब्दौ निपातौ। यद्वा वचनादेव आख्यातात्प्रत्ययः। "दैवं दिष्ट"मित्यमरः।

तत्त्व-बोधिनी

आस्तिनास्ति--दिष्टं मतिः १२२६, ४।४।६०

आस्तिक इति। अस्तिनास्तिशब्दौ निपातौ। यद्वा वचनसामर्थ्यादस्तीत्याख्यातात्, नास्तीति निपाताख्यातसमुदायाच्च प्रत्ययः। दिष्टमिति। "दैवं दिष्टं भागधेय"मित्यमरः।"नालम्बते दैष्टिकता"मिति माघः। "प्रमाणानुगा मतिर्दिष्टा"--इति प्राचोक्तिस्तूपेक्ष्या। दिष्टशब्दस्य स्त्रीत्वे, प्रमाणानुगमतिवाचकत्वे चोक्तकोशविरोधादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

शीलं ४।४।६१

तदस्य इत्येव। तदिति प्रथमासमर्थादस्य इति षष्ट्यर्थे ठक् प्रत्ययो भवति यत्तत् प्रथमासमर्थं शीलं चेद् तद् भवति। शीलं स्वभावः। अपूपभक्षणं शीलम् अस्य आपूपिकः। शाष्कुलिकः। मौदकिकः। भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति।

लघु-सिद्धान्त-कौमुदी

शीलम् ११३१, ४।४।६१

अपूपभक्षणं शीलमस्य आपूपिकः॥

न्यासः

शीलम्। , ४।४।६१

"अपूपभक्षणं शीलमस्य" इति। शीलविषयत्वादुपाचारात् तथा व्यपदेशः। भक्षणक्रिया तद्विषयञ्च शीलं तद्धितवृत्तावन्तर्भवति। तेन तत्र प्रतीयमानत्वाद्भक्षणशीलशब्दौ न प्रयुज्येते इति भावः॥

बाल-मनोरमा

शीलम् १५९०, ४।४।६१

शीलम्। अस्येत्यर्थे शीलवाचिनः प्रथमान्ताट्ठगित्यर्थः। शीलं=स्वभावः। अपूपभक्षणमिति। अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

छत्रादिभ्यो णः ४।४।६२

छत्र इत्येवम् आदिभ्यः प्रातिपदिकेभ्यो णः प्रत्ययो भवति तदस्य शीलम् इत्येतस्मिन् विषये। ठको ऽपवादः। छत्रं शीलम् अस्य छात्रः। छादनादावरणाच् छत्रम्। गुरुकार्येष्वहितः तच्छिद्रावरणप्रवृत्तः छत्रशीलः शीष्यः छात्रः। स्थाशब्दो

ऽत्र पठ्यते, स उपसर्गपूर्वो ऽत्र गृह्यते आस्था संस्था अवस्था इति। छत्र। बुभुक्षा। शिक्षा। पुरोह। स्था। चुरा। उपस्थान। ऋषि। कर्मन्। विश्वधा। तपस्। सत्य। अनृत। शिबिका। छत्रादिः।

न्यासः

छत्त्रादिभ्यो णः।, ४।४।६२

छत्त्रशीलत्वं शिष्यस्य प्रतिपादयितुमाह-- "छादनादपवारणाच्छत्त्रम्" इत्यादि। अपवारिणादित्यनेन च्छादनादित्यस्यार्थं व्यक्तीकरोति। आच्छादयति हि यत् तच्छत्रमित्युच्यते , तेन शिष्योऽपि गुरुकार्यतत्परो गुरुर्यानि च्छिद्राणि गोपयति तेषामावरणाय प्रवृत्तस्तत्र युक्तः सच्छत्रसहचरितां क्रियामाचरँश्छत्त्रशीलो भवति। "स्थाशब्दोऽत्र पठ()ते, स चोपसर्गपूर्वो गृह्रते" इति। ततश्च तस्य "आतश्चोपसर्गे" ३।३।१०६ इत्यङ्प्रत्ययमुत्पाद्याप्युत्पादितत्वात्। केवलस्य तु पाठः सर्वोपसर्गसंग्रहार्थः। "चुरा" इति, पठ()ते, तत्र निपातनादकारप्रत्ययो गुणाभावश्च॥

बाल-मनोरमा

छत्रादिभ्यो णः १५९१, ४।४।६२

छत्रादिभ्यो णः। एभ्यः प्रथमान्तेभ्योऽस्य शीलमित्यर्थे णप्रत्ययः स्यादित्यर्थः। छत्रं शीलमस्य छात्र इत्युदाहरणं वक्ष्यति, तत्र छत्रस्य शीलत्वानुपपत्तेः छत्रपदं गुरुदोषावरणे गौणमित्याह--गुरोरिति। शीलमित्यर्थे छत्रादित्वाण्णप्रत्यये कृते-।

तत्त्व-बोधिनी

छत्त्रादिभ्यो णः १२२७, ४।४।६२

छत्रादिभ्यो णः। "छत्रादिभ्योऽ"णित्येव सुवचमिति "कार्मस्ताच्छील्ये"इति सूत्रे कैयटः। ताच्छील्ये णे इति। कर्मन्शब्दस्य छत्रादित्वादिति भावः। चौरीत्यादि। चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्तान्ङीप् सिद्ध्यतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कर्माध्ययने वृत्तम् ४।४।६३

तदस्य इत्येव। तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत् तत्प्रथमास्मर्थं कर्म चेत् तद् वृत्तम् अध्ययनविषयं भवति। एकमन्यदध्ययने कर्म वृत्तम् अस्य ऐकान्यिकः। द्वैयन्यिकः। त्रैयन्यिकः। एकमन्यतिति विगृह्य तद्धितार्थ इति समासः। ततश्च ठक् प्रत्ययः। अध्ययने कर्म वृत्तम् इत्येतत् सर्वं तद्धितवृत्तावन्तर्भवति। यस्य अध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितम् अपपाठरूपम् एकं जातं स उच्यते ऐकान्यिकः इति। एवं द्वैयन्यिकः त्रैयन्यिक इति।

न्यासः

कर्माध्ययने वृत्तम्।, ४।४।६३

क्रियया यद्व्याप्यमानमीप्सितततममनीप्सितततमं वा तत् कर्म। इह त्वनीप्सितततमं गम्यते। अत एवाह-- "यस्याध्ययनप्रयुक्तस्य" इत्यादि। न हि कस्यचिदध्ययने युक्तस्य परीक्षाकाले पठतः स्खलितपाठरूपमीप्सितं भवति। अध्ययनशब्दो भावसाधनः, कर्मसाधनो वा। अधीतम्, अधीयते, वाऽध्ययनम्। वृत्तं = भूतम्ुत्पन्नमित्यर्थः।

"एकमन्यत्ित्यादि। सम्यक् पाठापेक्षयान्योऽर्थो वेदितव्यः। "द्वैयन्यिकः; त्रैयन्यिकः" इति। "न य्वाभ्यां पदान्ताभ्याम्" ७।३।३ इत्यैजागमः। "अध्ययने कर्म वृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवति" इति। तेन तत्राध्ययनवृत्तशब्दोऽवगतार्थत्वान्न प्रयुज्यत इति भावः॥

बाल-मनोरमा

कर्माध्ययने वृत्तम् १५९३, ४।४।६३

कर्माध्ययने वृत्तम्। "तदस्य पण्य"मित्यतस्तदस्येत्यनुवर्तते। "तदस्य कर्माध्ययने वृत्त"मित्यर्थनिर्देशः। तत्र "त"दित्यनेन विशेष्येण कर्म वृत्तमित्यन्वेति। कर्मशब्दः क्रियापरः। वृत्तमित्यस्य जातमित्यर्थः। वृत्तं कर्म प्रति विशेष्यसमर्पकं तदिति प्रथमोच्चारितम्। ततश्च स्य अध्ययनविषये "तत्कर्म वृत्त"मित्यर्थे तच्छब्दगम्यविशेष्यवाचकात्प्रथमान्ताट्ठक् स्यादित्यर्थः। तदाह--प्रथमान्तादिति। "वृत्तं कर्म प्रति विशेष्यसमर्पका" दिति शेषः। अध्ययने वृत्तेति। विषयसप्तम्येषा। या क्रियेति। अनेन कर्मशब्दः क्रियापर इति सूचितम्। प्रथमान्तस्यार्थ इति। "अनेन कर्म वृत्त"मित्येतत्तदित्यस्य प्रथमान्तस्य विशेषणमिति सूचितम्। तदित्यननुवृत्तौ कर्मशब्दस्यैव सूत्रे प्रतमानिर्दिष्टत्वात्तत एव प्रत्ययः स्यात्, नतु तद्विशेष्यवाचकात्, तस्य प्रथमानिर्दिष्टत्वाऽभावादित्यभिप्रेत्योदाहरति--एतमन्यद्वृत्तमस्य ऐकान्यिक इति। "तद्धितार्थ" इति समासे एकान्यशब्दाट्ठगिति भावः। द्वैयन्यिकः, त्रैयन्यिकः। ऐजागमो विशेषः।

तत्त्व-बोधिनी

कर्माध्ययने वृत्तम् १२२८, ४।४।६३

कर्माध्ययने। "तदस्ये"त्यनुवर्तते, ठगिहाधिक्रियत। एव तदाह---प्रथमान्तादित्यादि। ऐकान्यिक इति। एकमन्यदिति विगृह्य"तद्धितार्था "इति समासः, ततष्ठक्। एवं द्वैयन्यिकः त्रैयन्यिक इत्युदाहार्यम्। इह तु वृदिं()ध बाधित्वा "न ध्वाभ्या" मित्यैच्।

---

सूत्रम्

काशिका-वृत्तिः

बह्वच्पूर्वपदाट् ठच् ४।४।६४

बह्वच् पूर्वपदं यस्य तस्माद् बह्वच्पूर्वपदात् प्रातिपदिकात् ठच् प्रत्ययो भवति तदस्य कर्माध्ययने वृत्तम् इत्येतस्मिन्नर्थे ठको ऽपवादः। द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। त्रयोदशान्यिकः। चतुर्दशान्यिकः। चतुर्दशापपाठा अस्य जाता इत्यर्थः। उदात्ते कर्तव्ये यो ऽनुदात्तं करोति स उच्यते अन्यत् त्वं करोषि इति।

न्यासः

बह्वच्पूर्वपदाट्ठच्। , ४।४।६४

"द्वादशान्यिकः" इति। द्वादशशब्दो बह्वच्पूर्वपदम्। द्वौ च दश चेति द्वन्द्वः। "द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः" ६।३।४६ इत्यात्त्वम्, ततो द्वादशान्यानीति विगृह्य "तद्धितार्थे" ९२।१।५१) इति समासः। ननु चैकादेशे कृते पूर्वोत्तरपदाभावात् बह्वच्पूर्वपदं न भवति, न चान्तादिवद्भावोऽस्ति -- "उभयत आश्रये नान्तादिवत्" (व्या।प।५१) नैष दोषः; "नेन्द्रस्य परस्य" ७।३।२२ इति ज्ञापकादेशादेशात् पूर्वं प्रत्ययः। "तत्रोदशान्यिकः" इति। त्रयश्च दश चेति द्वन्द्वः, "त्रेस्त्रयः" ६।३।४७ इति त्रय आदेशः। अन्यशब्दोऽत्र सम्यक् पाठापेक्षयापपाठे वत्र्तत इत्यत आह-- "चतुर्दशापपाठाःर" इत्यादि। कथं

पुनर्ज्ञायतेऽपाठेऽन्यशब्दो वर्त्तते? इत्याह-- "उदात्ते" इत्यादि। उदात्ते कर्त्तव्येऽनुदात्तकरणमपपाठः। तत्र य उदात्ते कर्त्तव्येऽनुदात्तं करोति स यस्मादन्यं करोषीत्युच्यते ततो ज्ञायतेऽन्यशब्दोऽपपाठे वर्त्तत इति॥

बाल-मनोरमा

बह्वच्पूर्वपदाट्ठच् १५९४, ४।४।६४

बह्वच्पूर्वपदाट्ठच्। "तदस्य कर्माध्ययने वृत्त"मित्यनुवर्तते। तदाह--प्राग्विषये इति। द्वादशान्यिक इति। "तद्धितार्थ" इति समासः। एवं त्रयोदशान्यिकः चित्त्वान्नादिवृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

हितं भक्षाः ४।४।६५

तदस्य इत्येव। तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत् तत्प्रथमासमर्थं हितं चेत् तद् भवति, तच् च भक्षाः। ननु च हितयोगे चतुर्थ्या भवितव्यं, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते? एवं तर्हि सामर्थ्याद् विभक्तिविपरिणामो भविष्यति। अपूपभक्षणं हितम् अस्मै आपूपिकः। शाष्कुलिकः। मौदकिकः। हितार्थक्रिया च तद्धितवृतावन्तर्भवति।

न्यासः

हितं भक्षाः। , ४।४।६५

ननु हितशब्दयोगे चतुथ्र्या भवितव्यम्, "हितयोगे चतुर्थी भवति" (वा। १२३) इत्युपसंख्यानात्, "तस्मैहितम्" (५।१।५) इति निर्देशात्? "सामथ्र्याद्विभक्तिविपरिणामो भविष्यति" इति। सामथ्र्य पुनस्तदेवोपसंख्यानम्। लिङ्गञ्च----हितार्था क्रिया तद्धितवृत्तान्तर्भवति, तेन न प्रयुज्यत इति॥

बाल-मनोरमा

हितं भक्षाः १५९६, ४।४।६५

हितं भक्षाः। तदस्येत्यनुवृत्तम्। तत्र षष्ठी चतुथ्र्याविपरिणम्यते, हितयोगात्। तत् अस्मै हितमित्यर्थे प्रथमान्ताट्ठक् स्यात्, यद्धितं भक्षाश्चेत्ते स्युरित्यर्थः। संस्कृतं भक्षा इति वद्व्याख्येयम्। अपूपभक्षणमिति। अनेन अपूपशब्दोऽपूपभक्षणे लाक्षणिक इति सूचितम्। अपूपो हितमित्यर्थे तु न ठक्, अभिधानस्वाभाव्यादिति भावः।

तत्त्व-बोधिनी

हितं भक्षाः १२२९, ४।४।६५

हितं भक्षाः। "अस्ये"ति प्रकृतमपीह हितयोगाच्चतुथ्र्या विपरिणम्यते, "तदस्मै"इत्यस्यापकर्षो वेत्याशयेनाह--- अपूपभक्षणं हितमस्मा इति। अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

त दस्मै दीयते नियुक्तम् ४।४।६६

ततिति प्रथमासमर्थादस्मा इति चतुर्थ्यर्थ ठक् प्रत्ययो भवति यत् तत् प्रथमासमर्थं तच् चेद् दीयते नियुक्तम्। नियोगेन

अव्यभिचारेण दीयते इत्यर्थः। अव्यभिचारो नियोगः। अग्रे भोजनम् अस्मै नियुक्तं दीयते आग्रभोजनिकः। आपूपिकः। शाष्कुलिकः। केचित् तु नियुक्तं नित्यम् आहुः। अपूपा नित्यम् अस्मै दीयन्ते आपूपिकः।

न्यासः

तदस्मै दीयते नियुक्तम्। , ४।४।६६

ननु च "तदसय् पण्यम्" ४।४।५१ इत्यतस्तदिति प्रथमा समर्थविभक्तिरनुवर्तिष्यते, तदपार्थकं पुनः प्रथमासमर्थविभक्त्युपादानाम्; "अस्मै" इति प्रत्ययार्थोप्यपार्थक एव। तथा हि "अस्य" ४।४।५१ इत्यनुवत्र्तते, तत्र "दीयतौ" इति इत्यभिसम्बन्धात्तु सम्()परदानत्वेन भवितव्यम्। ततश्च शेषसम्बन्धे निवृत्ते चतुथ्र्यमत्र विपरिणम्यते, तस्मात् "दीयते नियुक्तम्" इत्येतावदेव वक्तव्यम्? अत्रोच्यते-- समर्थविभक्त्युपादानं तावत् पूर्वसूत्रे समर्थविभक्तिविशेषः प्रत्ययनुत्पादयतीत्यसय् सूचनार्थम्। तेनेह न भवति-- दुःखमस्याध्यने वृत्तम्, अजयोऽस्याध्ययने वृत्त इति। अपपाठ एव हि वृत्ते प्रत्यय इष्यते। दीयमाने न सर्वस्मात् चतुर्थी-- अरेः पृष्ठं ददातीति। स च षष्ठ()आ एव विषयोऽर्थः। षष्ठ()र्थे एव प्रत्ययो विज्ञायते, चतुथ्र्यन्ताद्यथा स्यात्। एवं "अस्मै" इति प्रत्ययार्थो निर्दिश्यते॥

बाल-मनोरमा

तदस्मै दीयते नियुक्तम् १५९७, ४।४।६६

तदस्मै दीयते नियतम्। अस्मिन्नर्थे प्रथमान्ताट्ठगित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

श्राणामांसओदनाट् टिठन् ४।४।६७

श्राणामांसओदनशब्दाभ्यां टिठन् प्रत्ययो भवति तदस्मै दीयते नियुक्तम् इत्येतस्मिन्नर्थे। ठको ऽपवादः। इकार उच्चारणार्थः। टकारो ङीबर्थः। श्राणा नियुक्तम् अस्मै दीयते श्राणिकः। श्राणिकी। मांसौदनिकः। मांसौदनिकी। अथ ठञेव कस्मान् न उक्तः, न ह्यत्र ठञष् टिठनो वा विशेषो ऽस्ति? मांसौदनग्रहणं सङ्घातविगृहीतार्थं केचिदिच्छन्ति, तत्र वृद्ध्यभावो विशेषः। ओदनिकः। ओदनिकी।

न्यासः

श्राणामांसौदनाट्?टिठन्। , ४।४।६७

"अथ ठञेव कस्मान्नोक्तः" इति। एव हि लघु सूत्रं भवतीति भावः। स्यादेतत्-- ठञ्टिठनोर्विशेषोऽस्ति, अतष्टिन्नुक्तो न ठञ्? इत्यत आह--- "न ह्त्र" इत्यादि। द्व्योरप्यनयोर्वृद्धत्वान्नास्ति विशेषः। योऽपि "वृद्धिनिमित्तस्य" ६।३।३८ इत्यादिना ठञि पुंवद्भावप्रतिषेधः, तसय् "न कोपधायाः" ६।३।३६ इति टिठ्न्नप्यभावान्नात्र ठञ्टिठनोः कश्चिद्विशेषोऽस्ति। "मांसौदन" इत्यादिना विशेषं दर्शयति। "केचित्" इति वचनाद्विगृहीतग्रहणं केचिन्नेच्छनतीत्येतदुक्तं भवति। तन्मते ठञेव वक्तव्यः। टिठत्वचनं वैचित्र्यार्थं वेदितव्यम्॥

बाल-मनोरमा

श्राणामांसौदनाट्टिठन् १५९८, ४।४।६७

श्राणामांस। "तदस्मै दीयते नियत"मित्येव। श्राणा=यवागूः। "यवागूरुष्णिका श्राणा विलेपी तरला च से"त्यमरः। टित्त्वं ङीबर्थम्। तदाह--श्राणिकीति। सङ्घातविगृहीतार्थमिति। ठकैव सिद्धे "ओदनिक" इत्यत्र आदिवृद्ध्यभावार्थं

प्रत्ययान्तरविधानमिति भावः।

तत्त्व-बोधिनी
श्राणामांसौदनाट्टिठन् १२३०, ४।४।६७

श्राणा। "यवागूरुष्णिक श्राणा विलेपी तरला च से "त्यमरः। टिठनिति। इकार उच्चारणार्थः। टो ङीबर्थः। सङ्घातविगृहीतार्थमिति। "ओदनिक"इत्यत्र हि वृद्धिनिवारणाऽयं टिठन्नारब्धः। अन्यथा लाघवाट्ठत्रमेव ब्राऊयादिति भावः।

---

सूत्रम्
काशिका-वृत्तिः
भक्टादणान्यतरस्याम् ४।४।६८

भक्तशब्दादण् प्रत्ययो भवति अन्यत्रस्याम् तदसमि दीयते नियुक्तम् इत्येतस्मिन् विषये। ठको ऽपवादः। पक्षे सो ऽपि भवति। भक्तम् अस्मै दीयते नियुक्तम् भाक्तः, भक्तिकः।
न्यासः
भक्तादणन्यतरस्याम्। , ४।४।६८

बाल-मनोरमा
भक्तादणन्यतरस्याम् १५९९, ४।४।६८

भक्तादणन्यतरस्याम्। "तदस्मै दीयते नियत"मित्येव।

---

सूत्रम्
काशिका-वृत्तिः
तत्र नियुक्तः ४।४।६९

तत्र इति सप्तमीसमर्थान् नियुक्त इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। नियुक्तः आधिकृतो व्यापारितः इत्यर्थः। शुल्कशालायां नियुक्तः शौल्कशालिकः। आकरिकः। आपणिकः। गौल्मिकः। दौवारिकः।
न्यासः
तत्र नियुक्तः। , ४।४।६९

अथ "नियुक्तः" (४।४।६६) इति वत्र्तमाने पुनर्नियुक्तग्रहणं कस्मात् क्रियते? अर्थभेदात्। न तस्य ह्मकव्यभिचारलक्षणो नित्यभावोऽर्थः। अस्य तु ततोऽन्य एवार्थो यदाह-- "नियुतोऽधिकृतः" इत्यादि॥
बाल-मनोरमा
तत्र नियुक्तः १६००, ४।४।६९

तत्र नियुक्तः। अस्मिन्नर्थे सप्तम्यन्ताट्ठक् स्यादित्यर्थः। नियुक्तः=अधिकृतः। संरक्षणादौ प्रेरित इति यावत्। आकरिक इति। आकरो रत्नाद्युद्भवस्थानम्।

तत्त्व-बोधिनी

तत्र नियुक्तः १२३१, ४।४।६९

आकरिक इति। "खनिः स्त्रियामाकरः स्या"दित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

अगारान्तात् ठन् ४।४।७०

अगारशब्दान्तात् प्रातिपदिकात् ठन् प्रत्ययो भवति तत्र नियुक्तः इत्येतस्मिन् विषये। ठको ऽपवादः। देवागारे नियुक्तः देवागारिकः। कोष्ठागारिकः। भाण्डागारिकः।

न्यासः

अगारान्ताट्ठन्। , ४।४।७०

---

सूत्रम्

काशिका-वृत्तिः

अध्यायिन्यदेशकालात् ४।४।७१

तत्र इत्येव। सप्तमीसमर्थाददेशवाचिनः परतिपदिकादकालवाचिनः च अध्यायिन्यभिधेये ठक् प्रत्ययो भवति। अध्ययनस्य यौ देशकालौ शास्त्रण प्रतिषिद्धौ तावदेशकालशब्देन उच्येते, तत इदं प्रत्ययविधानम्। श्माशाने ऽधीते श्माशानिकः। चातुष्पथिकः। अकालात् चतुरदश्यमधीते चातुर्दशिकः। आमावास्यिकः। अदेशकालातिति किम्? स्रुघ्ने ऽधीते। पूर्वाह्णे ऽधीते।

न्यासः

अध्यायिन्यदेशकालात्। , ४।४।७१

अध्येतुं शीलमस्येत्यध्यायी, ताच्छीलिको णिनिः। "अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते" इति। अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात् पर्युदासवृत्त्याऽभक्ष्यास्पर्शनीयवदध्ययनस्येति। अत आह--- तस्याध्यायिना प्रत्ययार्थेन सन्निधापितत्वात्। न हि विनाध्ययनेनाध्याय्युपपद्यते॥

बाल-मनोरमा

अध्यायिन्यदेशकालात् १६०२, ४।४।७१

अध्यायिन्यदेशकालात्। निषिद्धेति। "अदेशकाले"त्यत्र नञ् निषिद्धे वर्तत इति भावः। श्माशानिकः चातुर्दशिक इति। देशकालभिन्नादिति व्याख्याने तु इह न स्यादिति भावः।

तत्त्व-बोधिनी

अध्यायिन्यदेशकालात् १२३२, ४।४।७१

अध्ययिन्य। अदेशकालात् किम्()। काश्यामधीते। पूर्वाह्णे अधीते।

---

सूत्रम्

काशिका-वृत्तिः

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ४।४।७२

तत्र इत्येव। कठिनशब्दान्तात् सप्तमीसमर्थात् प्रस्तारसंस्थानशब्दाभ्यां च ठक् प्रत्ययो भवति व्यवहरति इत्येतस्म्न्नर्थे। व्यवहारः क्रियातत्त्वम् यथा लौकिकव्यवहारः इति। वंशकठिने व्यवहरति वांशकठिनिकः चक्रचरः। वार्ध्रकठिनिकः। प्रास्तारिकः। सांस्थानिकः।

न्यासः

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति। , ४।४।७२

अल्पाच्तरस्य प्रस्तारशब्दस्य च पूर्वनिपातमकुर्वन्नेतत् सूचयति-- अन्यदपि कार्यं लक्षणप्राप्तं न भवति। तेन कठिनान्तशब्दस्य ग्रहणं न भवतीति कठिनशब्दान्तं प्रातिपदिकं गृह्यते। "{हरतिरयम्-- प्रांउ। पाठः} व्यवहरतिरयमस्ति पणिना समानार्थः-- यस्य "व्यवह्मपणोः समर्थयोः" २।३।५७ इत्यत्र ग्रहणम्, अस्ति विवादे-- व्यवहारे परिह्मतमिति, अस्ति च विक्षेपे शलाकां व्यवहरतीति, अस्ति च लौकिके क्रियातत्वे-- लौकिको व्यवहार इति। इह तु क्रियातत्त्वे वत्र्तमानस्य ग्रहणमित्येतद्दर्शयितुमाह--"व्यवहारः क्रियातत्त्वम्" इति। क्रियाया अविपरीतस्वभावत्वादि क्रियातत्त्वम्। "यथा" इत्यादि। लौकिको व्यवहार इत्यत्र यथा व्यवहारः क्रियातत्त्वे वत्र्तते, तथेहापि दर्शयति। क्रियातत्त्वे वत्र्तमानस्य ग्रहणम्। "तत्र" ४।४।६९ इतिसप्तम्यधिकारे सप्तमीनिर्देशात् प्रसिद्ध्युपसंग्रहणं लभ्यते। "वांशकठिनिकश्छक्रचरःर" इति। यश्चक्रचरः सन्ननुष्ठेयां क्रियां शास्त्रोक्तमविगीता वंशकठिनेऽनुतिष्ठति स एवमुच्यते॥

बाल-मनोरमा

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति १६०३, ४।४।७२

कठिनान्तप्रस्तार। अस्मिन्नर्थे कठिनान्त, प्रस्तार, संस्थान एभ्यः सप्तम्यन्तेभ्यष्ठगित्यर्थः। वंशकठिनशब्दं विवृणोति--वंशा इति। व्यवहरणम्-उचितक्रिया। तदाह--यस्मिन्देशे इति। प्रस्तारसंस्थानशब्दौ अवयवसंनिवेशपर्यायौ।

तत्त्व-बोधिनी

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति १२३३, ४।४।७२

कठिनान्त। प्रस्तारसंस्थानशब्दौ सन्निवेशपर्यायाविति बहवः। प्रस्तारो यज्ञः। "प्रे स्त्रोऽयज्ञे"इति घञ्। संस्थानं संनिवेश इत्येके।

---

सूत्रम्

काशिका-वृत्तिः

निकटे वसति ४।४।७३

निकटशाब्दात् सप्तमीस्मर्थात् वसति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। यस्य शास्त्रतो निकटवासस् तत्र अयं विधिः। आरण्यकेन भिक्षुणा ग्रामात् क्रोशे वस्तव्यम् इति शास्त्रम्। निकटे वसति नैकटिको भिक्षुः।

लघु-सिद्धान्त-कौमुदी

निकटे वसति ११३२, ४।४।७३

नैकटिको भिक्षुकः॥

लघु-सिद्धान्त-कौमुदी

इति ठगधिकारः। (प्राग्वहतीयाः) ७ ११३२, ४।४।७३

लघु-सिद्धान्त-कौमुदी

अथ यदधिकारः ११३२, ४।४।७३

न्यासः

निकटे वसति।, ४।४।७३

निकटे समीप इत्यर्थः। यत्र शास्त्रतो निकटवासस्तत्रायायं विधिः। एतच्च सप्तम्यां समर्थविभक्तौ लब्धायां पुनः सप्तमीनिर्देशात् प्रसिद्ध्युपसंग्रहणेन लभ्यते। स ह्येवमर्थः कृतः--- इष्टे सप्तम्यन्ते यथा स्यात्, अनिष्टान्मा भूत्। स पुनः शास्त्रतो निकटवास आरण्यकस्य भिक्षोरिति दर्शयति-- "आरण्यकेन भिक्षुणा" इत्यादि॥

बाल-मनोरमा

निकटे वसति १६०४, ४।४।७३

निकटे वसति। अस्मिन्नर्थे सप्तम्यन्तातन्निकटशब्दाट्ठगित्यर्थः। नैकटिको भिक्षुरिति। ग्रामात्क्रोशे भिक्षुणा वस्तव्यमिति शास्त्रमुल्लङ्घ्य निकटे यो भिक्षुर्वसति तत्रैवायं ठगिति भावः। अत्र व्याख्यानमेव शरणम्।

तत्त्व-बोधिनी

निकचे वसति १२३४, ४।४।७३

नैकटिको भिक्षुरिति। सन्यासी हिल ग्रामस्य निकटे वसन्भिक्षार्थमेव ग्रामे प्रविशति, न तु तत्र वसतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

आवसथात् ष्ठल् ४।४।७४

तत्र इत्येव। आवसथशब्दात् सप्तमीसमर्थात् वसति इत्येतस्मिन्नर्थे ष्ठल् प्रत्ययो भवति। लकारः स्वरार्थः। षकारो ङीषर्थः। आवसथे वसति आवसथिकः। आवसथिकी। ठकः पूर्णो ऽवधिः, अतः परमन्यः प्रत्ययो विधीयते।

न्यासः

आवस्थात् ष्ठल्।, ४।४।७४

बाल-मनोरमा

आवसथात्ष्ठल् १७१२, ४।४।७४

आवसथाष्ठल्। तत्र वसतीत्यर्थे आवसतात्सप्तमय्न्तात्ष्ठलित्यर्थः। आवसथं--गृहम्। षित्त्वं ङीषर्थम्। तदाह--आवसथिकीति।

आकर्षादित्यादि। श्लोकवार्तिकमिदम्--"प्राग्वहतेष्ठक्" इत्यादौ ठगिति वा ष्ठगिति छेद इति संशयनिवृत्त्यर्थम्

"आकर्षात्ष्ठ"लिति सूत्रभाष्ये पठितम्। तत्र आकर्षादित्यनेन "आकर्षात्ष्ठ"लिति सूत्रं विवक्षितम्। "पर्पादिभ्यः" इत्यनेन "पर्पादिभ्यः ष्ठ न्निति सूत्रं विपक्षितम्। "भस्त्रादिभ्यः" इत्यनेन "भस्त्रादिभ्यः ष्ठ"न्निति सूत्रं विवक्षितम्। कुसीदसूत्रादित्यनेन "कुसीददशैकादशात् ष्ठन्ष्ठचौ" इति सूत्रं विवक्षितम्। आवसथादित्यनेन "आवसथात्ष्ठ"लिति सूत्रं विवक्षितम्। किसरादेरित्यनेन "किसरादिभ्यः ष्ठ"न्निति सूत्रं विवक्षितम्। "प्राग्वहतेष्ठक्" इत्यधिकारे एतैः सूत्रैर्विहिताः षट् प्रत्ययाः षित इत्यर्थः। ननु "कुसीदे"ति सूत्रे प्रत्ययद्वयविधानादेतत्सूत्रषट्कविहिता सप्त प्रत्यया लभ्यन्त इति षट् षित इति कथमित्यत आह--षडितीति। "ष"डित्यनेन सूत्राभिप्रायं षट्त्वं विवक्षितमिति भावः।

*****इति बालमनोरमायाम् प्राग्वहतीयाः।*****

अथ ठञधिकारः।

------------

तत्त्व-बोधिनी

आवसथात्ष्ठल् १३२३, ४।४।७४

आवसथात्। लकारः स्वरार्थः। आवसन्त्यस्मिन्नित्यावसथः। "उपसर्गे वसेः"इत्यप्रत्ययः।

आकर्षत्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च।कुसीदसूत्रादिति। "कुसीददशैकादशा"दिति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः। इह "नौव्द्यचष्ठ"नित्यत्रेव येषां षकारः सांहितिक इति सम्भाव्यते तेषामेव गणने ष्ठलादेः षित्त्वामनार्षमिति भ्रमः स्यादतः श्लोकवार्तिककारः षित्प्रत्ययान्सर्वानपि पर्यजीगणत्।

ठकोऽवधिः समाप्तः।

इति तत्त्वबोधिन्यां ठगधिकारः।

---

सूत्रम्

काशिका-वृत्तिः

प्राग् घिताद् यत् ४।४।७५

तस्मै हितम् ५।१।५ इति वक्ष्यति। प्रागेतस्माद् धितसंशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामो यत् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति

लघु-सिद्धान्त-कौमुदी

प्राग्घिताद्यत् ११३३, ४।४।७५

तस्मै हितमित्यतः प्राग् यदधिक्रियते॥

न्यासः

प्राग्घिताद्यत्। , ४।४।७५

बाल-मनोरमा

प्राग्घिताद्यत् १६०६, ४।४।७५

अथ प्राग्घितीयप्रकरणं निरूप्यते--प्राग्घिताद्यत्। हितशब्दस्तद्घटितसूत्रपरः तदाह--तस्मै हितमिति।

---

सूत्रम्

काशिका-वृत्तिः

तद्वहति रथयुगप्रासङ्गम् ४।४।७६

रथ्यः। युग्यः। प्रासङ्ग्यः। तद्वहति रथयुगप्रासङ्गम् ४।४।७६। तदिति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यो वहति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः। रथसीताहलेभ्यो यद् विधौ इति तदनतविध्युपसङ्ख्यानात् परमरथ्यः इत्यपि भवति।

लघु-सिद्धान्त-कौमुदी

तद्वहति रथयुगप्रासङ्गम् ११३४, ४।४।७६

रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः॥

न्यासः

तद्वहित रथयुगप्रासङ्गम्। , ४।४।७६

तदिति द्वितीयामर्थविभक्तौ लब्धायां रथादीनां द्वितीयानिर्देश इष्टाद्यथा स्यात्, अनिष्टान्मा भूत्। तेनेहव भवति-- गौर्युग्य इति; इह न भवति-- युगं वहति राजा कलिं द्वापरं वेति। तथा प्रासज्यत इति प्रासङ्गः, यत् काष्ठं वहनकाले वत्सानां कण्ठाअसज्यते तत्प्रासङ्गः, तं वहति प्रासङ्ग्यः। इह न भवति-- प्रसङ्गादागतं प्रासङ्गम्। "युग्यञ्च पत्त्रे" ३।१।१२१ इति निपातनाद्युग्यशब्दे सिद्धे युगग्रहणं स्वरार्थम्। न युग्यमयुग्यमित्यत्र नञो गुणप्रतिषेधे "सम्पाद्यर्हहितालमर्थास्तद्धिताः" ६।२।१५४ इत्यतो नञ इत्यनुवर्त्तमाने "ययतोश्चातदर्थे" ६।२।१५५ इति नञ उत्तरस्यान्तोदात्तत्वं यथा स्यात्। तेन न ह्येकस्वरो लभ्यते। तस्य क्यबन्तत्वात्॥

बाल-मनोरमा

तद्विहति रथयुगप्रासङ्गम् १६०७, ४।४।७६

तद्विहति रथ। रथादि वहतीत्यर्थे द्वितीयान्ताद्रथ युग प्रासङ्ग इति त्रयाद्यत्स्यादित्यर्थः। युग्य इति। रथादिवहनकाले अ()आआदिस्कन्धेषु तिर्यग्यत् काष्ठमीषत्प्रोतमासज्यते तद्युगम्। तद्विहतीत्यर्थः। दमनकाले इति। रथादिवहने सुशिक्षिताव()आऔ नियुज्य तत्स्कन्धवाह्ययुगे यद्युगान्तरमासज्य तस्मिन्नशिक्षिता अ()आआदयो वहनशिक्षार्थ नियुज्यन्ते स प्रासङ्ग इत्यर्थः। "प्रासङ्गो ना युगाद्युगे" इत्यमरः।

तत्त्व-बोधिनी

तद्वहति रथयुगप्रासङ्गम् १२३६, ४।४।७६

युग्य इति। युगं रथाङ्गं वहतीत्यर्थः। प्रासङ्ग इति। प्रासज्यते असाविति कर्मणि घञ्।

---

सूत्रम्

काशिका-वृत्तिः

धुरो यड्ढकौ ४।४।७७

तद् वहति इत्येव। धुरित्येतस्माद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे यत् ढकित्येतौ प्रत्ययौ भवतः। धुरं वहति धुर्यः, धौरेयः।

लघु-सिद्धान्त-कौमुदी

धुरो यड्ढकौ ११३५, ४।४।७७

हलि चेति दीर्घे प्राप्ते -।

न्यासः

धुरो यड्ढकौ। , ४।४।७७

अथ "धुरो ठक् च" इत्येवं कस्मान्नोक्तम्, चकारः समुच्चयार्थः, यथाभिहिते प्रत्यये विज्ञायमाने यदेव भविष्यति? नैतदेवम्; यो हि धुरं वहति धुसोऽसौ वोढा भवति।तस्य यथाविहिते प्रत्यये विज्ञायमाने "तस्येदम्" ४।३।१२० इत्यणपि स्यात्। यद्()गर्हणात् तस्येदंविवक्षायामपि यदेव भवति॥

बाल-मनोरमा

धुरो यड्ढकौ १६०८, ४।४।७७

धुरो यड्ढकौ। धुरशब्दाद्द्वितीयान्ताद्वहतीत्यर्थे यत्, ढक्च स्यादित्यर्थः। "यड्ढकञो"विति पाठान्तरम्। हलि चेतीति। "धुर्वी हिंसायां" "भ्राजभासे"ति क्विप्। "राल्लोपः" इति लोपः। अ()आआदिस्कन्धवाह्यप्रदेशो युगावयवो धुः। धुर्शब्दाद्यति "हलि चे"ति दीर्घे प्राप्ते सतीत्यर्थः।

तत्त्व-बोधिनी

धुरो यड्ढकौ १२३७, ४।४।७७

धुरो। "धुरो ढक् चे"त्येव सुवचम्।

---

सूत्रम्

काशिका-वृत्तिः

खः सर्वधुरात् ४।४।७८

तद्वहति इत्येव। सर्वधुराशब्दाद् द्वितीयासमर्थात् वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। सर्वधुरां वहति सर्वधुरीणः। स्त्रीलिङ्गे न्याय्ये सर्वधुरातिति प्रातिपदिकमात्रापेक्षो निर्देशः। खः इति योगविभागः कर्तव्यः इष्टसङ्ग्रहार्थः। उत्तरधुरीणः। दक्षिणधुरीणः।

न्यासः

खः सर्वधुरात्। , ४।४।७८

"सर्वधुरम्" इति। सर्वा चासौ धूश्चेति "पूर्वकालैक" २।१।४८ इत्यादिना समासः। "ऋक्पूरब्धूः" ५।४।७४ इत्यादिना समासान्तः। "स्त्रीलिङ्गे न्याय्ये" इति। तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" २।४।२६ इति धूःशब्दस्य यल्लिङ्गं तदेव न्याय्यमिति। तत्र "सर्वधुरायाः" इति सूत्रे कत्र्तव्ये यतः सर्वधुरादिति नपुंसकलिङ्गेन निर्देशः स शब्दरूपापेक्षः, अर्थापेक्षे हि निर्देशे परवल्लिङ्गता भवति। अयन्तु शब्दरूपापेक्षः,शब्दरूपञ्च नपुंसकमिति नपुंसकेनैव निर्देशो युक्तः। अर्थविवक्षायां तु स्त्रीलिङ्गमेव भवति-- सर्वधुरां वहतीति॥

बाल-मनोरमा

खः सर्वधुरात् १६१०, ४।४।७८

खः सर्वधुरात्। सर्वा धूः सर्वधुरा। "पूर्वकाल" इति तत्पुरुषः। "ऋक्पू"रिति समासान्तः। "परवल्लिङ्ग"मिति स्त्रीत्वाट्टाप्। इह तु शब्दस्वरूपापेक्षया नपुंसकनिर्देशः। द्वितीयान्तात्सर्वधुराशब्दाद्वहतीत्यर्थे खः स्यादित्यर्थः। सर्वधुरीण इति। सर्वधुरां वहतीत्यर्थः। "स तु सर्वधुरीणो यो भवेत्सर्वधुरावहः" इत्यमरः।

तत्त्व-बोधिनी

खः सर्वधुरात् १२३९, ४।४।७८

खः सर्वधुरात्। "सर्वधुराया"इति वक्तव्ये नपुंसकनिर्देशः शब्दस्वरूपापेक्षया "बन्धुनि बहुव्रीहौ"इतिवत्। सर्वधुरामिति। "पूर्वकालैके"ति समासः। "ऋक्पूरब्धुः---"इति समासान्ते अप्रत्यये टाप्।

---

सूत्रम्

काशिका-वृत्तिः

एकधुराल् लुक् च ४।४।७९

तद् वहति इत्येव। एकधुराशब्दाद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति, तस्य च लुग् भवति। वचनसमार्थ्यात् पक्षे लुग् विधीयते। एकधुराम् वहति एकधुरीणः, एकधुरः।

न्यासः

एकधुराल्लुक् च। , ४।४।७९

"एकधुरात्" इत्ययमपि शब्दरूपापेक्षया निर्देशः। अर्थापेक्षया हि परवल्लिङ्गता भवति। अत्रापि पूर्ववत् समाससमासान्तौ वेदितव्यौ। वचनसामथ्र्यात्पक्षे लुग्विधीयते। यदि हि नित्यो लुक् स्यात्, खस्य विधानमनर्थकं स्यात्, यत एव हि लुकं विदध्यात्।ननु चैकधुरशब्दात् केनचिद्विहितो न स्यात्, तस्य कथं लुक् शक्यते विज्ञातुम्? लुग्वचनादेव यतोऽपि विधिरनुगम्यत इत्यदोषः॥

बाल-मनोरमा

एकधुराल्लुक्च १६११, ४।४।७९

एकधुराल्लुक् च। एकधुराशब्दाद्द्वितीयान्ताद्वहतीत्यर्थे खः स्यात्। तस्य पक्षे लुगित्यर्थः। एकधुरीणः। एकधुर इति। एकधुरां वहतीत्यर्थः।

तत्त्व-बोधिनी

न भकुर्च्छुराम् १२३८, ४।४।७९

न भ। उपधाया इति। "उपधायां चे"ति पूर्वसूत्रादेतल्लभ्यत इति भावः। उपधायाः किम्()। प्रतिदीव्नः। इह नान्तस्य भत्वेऽपीकारस्याऽनुपात्वान्निषेधो न प्रवर्तते।

तत्त्व-बोधिनी

एकधुराल्लुक्च १२४०, ४।४।७९

एकधुराल्लुक् च। चात्खः। एवं च प्राकरणिकस्य यतो लुक्, खस्य तु विधानसामर्थ्याच्छ्रवणमिति फलितं, तदाह---एकधुरीण इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

शकटादण् ४।४।८०

तद्वहति इत्येव। शकटशब्दाद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे अण् प्रत्ययो भवति। शकटम् वहति शाकटो गौः।

न्यासः

शकटादण्।, ४।४।८०

रथशकटहलसीरेभ्यः प्रत्ययविधानमनर्थकम्, "तस्येदम्" ४।३।१२० इत्यनेनैव सिद्धत्वात्। शब्दभेदाद्विधानमिति चेदन्यो हि शब्दो रथं वहतीति, अन्यो हि रथस्य वोढेति। तदाऽर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात् सिद्धम्। न हि कश्चिद्रव्यमित्युक्ते रथस्यायमित्येवावैति, वहत्यर्थः प्रतीयते। तस्मात् स्यादेव रथाद्यत्॥

बाल-मनोरमा

शकटादण १६१२, ४।४।८०

शकटादण्। द्वितीयान्ताच्छकटशब्दाद्वहतीत्यर्थे अण् स्यादित्यर्थः। यतोऽपवादः।

बाल-मनोरमा

अगारान्ताट्ठन् १६०१, ४।४।८०

अगारान्ताट्ठन्। तत्र नियुक्त इत्येव। नित्त्वान्नादिवृद्धिः। तदाह--देवगारिक इति।

तत्त्व-बोधिनी

शकटादण् १२४१, ४।४।८०

शाकटो गौरिति। ननु "तस्येद "मित्यणा सिद्धम्। यौ हि शकटं वहति शकटस्यासौ भवति। अत्राहुः---आरम्भसामर्थ्यादत्र तदन्तविधिः। तेन द्वे शकटे वहति द्वैशकट इत्यत्र "द्विगोर्लुगनपत्ये"इति प्राग्दीव्यतीयो लुङ् न भवति, "तस्येद"मित्यणि तु स्यादेव लुगिति।

---

सूत्रम्

काशिका-वृत्तिः

हलसीराट् ठक् ४।४।८१

तद्वहति इत्येव। हलसीरशब्दाभ्यां द्वितीयास्मर्थाभ्यां वहति इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हलं वहति हालिकः। सैरिकः।

न्यासः

हलसीराट्ठक्।, ४।४।८१

शकटादणेवोत्सर्गः कत्र्तव्यः। एवञ्च वाक्यं करिष्यामः; यता--- रथस्य वोत्रा रथ्य इति। न तत् विधीयते; तत्र प्रत्ययविधाने "द्विगोर्लुगनपत्ये" ४।१।८८ इत्यनेन लुक् प्राप्नोति। अनेन पुनर्न प्राप्नोति, कस्मात्? "प्रागादीव्यतोऽण्" ४।१।८३ #इत्यधिकारात्। ननु च क्रियामाणेऽपीह द्विगोरण् प्रत्ययो न प्राप्नोति, "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" (व्या।प।८९) इति? न; एतदेव हि "शकटादण्" ४।४।८० इत्यवमादिकं ज्ञापकं भवति तदन्तविधेरिति। तेन द्वैहलिकः, द्वैशकटः , द्वैसीरिक इत्येवमादिकं सिद्धं भवति॥

बाल-मनोरमा

हलसीराट्ठक् १६१३, ४।४।८१

हलसीराट्ठक्। आभ्यां द्वितीयान्ताभ्यां वहतीत्यर्थे ठगित्यर्थः।

तत्त्व-बोधिनी

हलसीराट्ठक् १२४२, ४।४।८१

हलसीरात्। ननु "तस्येद"मित्युपक्रमे "हलसीताट्ठ"गिति पठितम्। तथा च तेनैव शैषिकेण हालिकः सैरिक इति सिद्धौ किमनेनेति चेत्। सत्यम्। आरम्भसामथ्र्यादत्रापि तदन्तविधिः। तेन द्वैहलिको द्वैसीरिक इति भवति, शैषिके ठकि तु प्राग्दीव्यतीयो लुक् स्यात्। जायते अस्यां गर्भ इति व्युत्पत्तिमाश्रित्य आह--।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां जन्याः ४।४।८२

तद् वहति इत्येव। जनीशब्दाद् द्वितीयासमर्थाद् वहति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, समुदायेन चेत् संज्ञागम्यते। जनीं वहति जन्या, जामातुर्वयस्या। सा हि विहारादिषु जमातृसमीपं प्रापयति। जनी वधूरुच्यते।

न्यासः

संज्ञायां जन्याः। , ४।४।८२

अस्त्यत्र यर्भ इति "{इन् इत्येव सूत्रम्-- द।उ।} इन् सर्वधातुभ्यः" (द।उ।१।४६) जनयतीति वा। "अत्र कृदिकारादक्तिनः" (ग।सू।५०) "सर्वतोऽक्तिन्नर्थात्" (ग।सू।५१) इति ङीप्-- जनी, तां वहन्ति जन्याः = जामातुर्वयस्याः। विवाहमानिताभिधीयते। केचित्तु कत्र्तरि जायतेऽस्यां गर्भ इति "कृत्यल्युटो बहुलम्" ३।३।११३ इति ल्युटि जननशब्दाच्च ङीपि नकाराकारयोर्लोपेन साधयन्ति। ननु च जनीशब्दादेव यद्विधेयः? सर्वकालार्थं निपातनमित्येके॥

बाल-मनोरमा

संज्ञायां जन्याः १६१४, ४।४।८२

संज्ञायां जन्याः। जनीशब्दाद्द्वितीयान्ताद्वहतीत्यर्थे यत्स्यात्संज्ञायामित्यर्थः। जनी वधूरिति। जायतेऽस्यां गर्भ इत्यर्थे "जनिघसिभ्या"मिति जनधातोरिणि "जनिवध्योश्चे"ति वृद्धिप्रतिषेधे "कृदिकारा"दिति ङीषि जनीशब्दस्य निष्पत्तेरिति भावः। "समाः स्नुषाजनीवध्वः" इत्यमरः। वहन्तीत्यस्य विवरणं--"प्राप्यन्ती"ति। "वरगृह" मिति शेषः। जन्या इ।ति। "जामातुर्वयस्या" इति शेषः। "जन्याः स्निग्धा वरस्य ये" इत्यमरः।

तत्त्व-बोधिनी

संज्ञायां जन्याः १२४३, ४।४।८२

जनी वधूरिति। "जनिघसिभ्यामिण्"। "जनिवध्योश्चे"ति न वृद्धि। "कृदिकारा"दिति ङीष्। ततोऽनेन सूत्रेण यति जन्या=जामातुर्वयस्या। सा हि विवादादिषु वधूं जामातृसमीपं प्रापयति। कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्तः---"यतोति जन्यानवदत्कुमारी"ति। जनीं वहन्तीति जन्यस्तानित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

विध्यत्यधनुषा ४।४।८३

ततिति द्वितीयासमर्थाद् विध्यति इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, न चेद् धनुष्करणं भवति। पादौ विध्यन्ति पद्याः शर्कराः। ऊरव्याः कण्टकाः। अधनुषा इति किम्? पादौ विध्यति धनुषा। ननु असमर्थत्वादनभिधानाच् च प्रत्ययो न भवति, न हि धनुषा पद्य इति विवक्षितो ऽर्थः प्रतीयते? एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते, यस्यां धनुष्करणम् न सम्भाव्यते इति। तेन इह न भवति, चौरं विध्यति, शत्रुं विध्यति देवदत्तः इति।

न्यासः

विध्यत्यधनुषा। , ४।४।८३

"पद्याः" इति। "पद्यत्यतदर्थे" ६।३।५२ इतिपादशब्दस्य पद्भावः। "ऊरव्याः" इति। "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः। "ननु च" इत्यादि। धनुरत्र प्रकृत्यर्थः, प्रत्ययार्थेन वाह्नं करणमपेक्ष्यते, तेन सापेक्षमसमर्थं भवतीत्यसामथ्र्यम्? ननु चट व्यधनमेवात्र सापेक्षम्, क्रियया करणं सम्बध्यत इति कृत्वा, तच्च व्यधनं क्रियाप्रधानत्वादाख्यातस्य प्रधानं बवति, प्रधानस् सापेक्षस्य भवत्येव वृत्तिः, यथा-- राजुपुरषोऽयमभिरूप इति? नैतदस्ति; यद्यपि क्रियाप्रधानमाख्यातम्, तथापीह प्रत्ययार्थं एव प्रधानम्। प्रत्ययार्थस्य साधनं व्यद्धा। तथा च प्रागुक्तम्---"क्रियाप्रधानत्वेऽपि चाख्यातस्य तद्धितेः स्वभावात् साधनप्रधानः" इति। अथ क्रियाद्वारेण व्यद्धुरपि करणं प्रत्यपेक्षा भवतीति कल्प्यते, तथा च सति प्रकृत्यर्थस्यापि क्रियाद्वारेणैव करणं प्रत्यपेक्षा भवतीति केन वार्यते ! न हि पादौ विध्यति धनुषेति करणविवक्षायां व्यधनमात्रस्य पादौ कर्म धनुष्करणविशिष्टस्य। तस्माद्व्यधनस्यापि क्रियाकरणे प्रत्यपेक्षेत्यसामथ्र्यात्प्रत्ययो न भविष्यति। "अनभिधानाच्च" इति। अत्रैवोचपपत्त्यनतरम्। कथं पुनरुपपत्त्यन्तरमित्याह--- "न हि" इत्यादि। धनुषा पद्य इत्युक्ते धनुष पद्यं प्रत्युपलक्षणभावः सम्भाव्यते, यथा--शिखया परिव्राजकमद्राक्षीदित्त्र शिखया परिव्राजकं प्रति। धनुषा सह दृष्टः पद्य इत्येषोऽप्यर्थश्चाशङ्क्यते। न तु पादौ विध्यति धनुषेत्ययमर्थो विवक्षितः प्रतीयते। "एवं तर्हि " इत्यादिना क्रियाविशेषणपरो धनुषेति निर्देशः; न धनुषः करणत्वप्रतिषेधः। प्रतिषेधे प्रधानमिति दर्शयति--"तेन" इत्यादिना। क्रियत एव धनुषः प्रतिषेधः, तेन क्रिया विशेष्यते। तेन चौरं विध्यतीत्यादौ न भविष्यति। सम्भाव्यते हि चौरादिव्यधनक्रियया धनुषः करणत्वम्॥

बाल-मनोरमा

विध्यत्यधनुषा १६१५, ४।४।८३

विध्यत्यधनुषा। तदिति द्वितीयान्तमनुवर्तते। अधनुषेति सप्तम्यर्थे तृतीया। धनुषोऽभावः-अधनुः, तस्मिन्सतीत्यर्थः। अर्थाऽभावे नञ्तत्पुरुषः, "अर्थाभावे अव्ययीभावे अयं विकल्प्यते" इत्युक्तत्वात्। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्याद्धनुष करणस्याऽभावे सतीत्यर्थः। न चेत्तत्रेति। तत्र=वेधने धनुः करणं न चेदित्यर्थः। पद्या इति। पादशब्दाद्यति "पद्यत्यतदर्थे" इति पद्भावः। अधनुषेति किम्?। धनुषा चोरं विध्यति देवदत्तः। अत्र चोराद्यन्न भवति। न चाऽसामथ्र्यादेवात्र यन्नेति

वाच्यं, विध्यतीत्यस्य प्रत्ययार्थत्वेन प्रधानतया तस्य सापेक्षत्वेऽपि सामथ्र्याऽविधातात्। अन्यथा "औपगवो देवदत्त उपगुनसृत्वा" दित्यादौ अणादिकं न स्यात्, प्रत्ययार्थैकदेशस्य व्यधनस्य करणविशेषनित्यसापेक्षत्वाच्चेति शब्देन्दुशेखरे विस्तरः।

तत्त्व-बोधिनी

विध्यत्यधनुषा १२४४, ४।४।८३

पद्या इति। "पद्यत्यतदर्थे"इति पद्भावः। अधनुषा किम्()। चोरं विध्यति। सम्भाव्यते हि चोरब्यधने धनुषः करणता। यदा तु धनुषेति प्रयुज्यते तदा सापेक्षत्वादेव न भवति। एवं च "न चेत्तत्र धनुः करण"मित्यत्र "सम्भव्यते"इति शेषो बोध्याः।

---

सूत्रम्

काशिका-वृत्तिः

धनगणं लब्धा ४।४।८४

तदित्येव। धनगणशब्दाभ्यां द्वितीयासमर्थाभ्याम् लब्धा इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। धन्यः। गण्यः। लब्धा इति तृन्नन्तं, तेन द्वितीया समर्था विभक्तिर् युज्यते।

न्यासः

धनगणं लब्धा। , ४।४।८४

कथं पुनरत्र द्वितीया समर्थविभक्तिः, यावता "कर्त्तृकर्मणोः कृति" (२।३।६५) इति षष्ठ()आ भवितव्यम्? इत्याह-- "लब्धेति तृन्नन्तम्" इत्यादि। तृन्नन्तस्य हि प्रयोगे "न लोकाव्ययनिष्षाखलर्थतृनाम्" २।३।६९ इति षष्ठीप्रतिषेधेन द्वितीया भवति॥

बाल-मनोरमा

धनगणं लब्धा १६१६, ४।४।८४

धनगणं लब्धा। धनशब्दाद्गणशब्दाच्च द्वितीयान्ताल्लब्धेत्यर्थे यत्स्यादित्यर्थः। ननु लब्धृशब्दस्य तृजन्तस्य कृदन्तत्वात्तद्योगे कर्मणि षष्ठी स्यादित्यत आह--तृन्नन्तमेतदिति। तथाच "न लोके" ति निषेधान्न षष्ठीति भावः।

तत्त्व-बोधिनी

धनगणं लब्धा १२४५, ४।४।८४

तृन्नन्तमिति। एवं च "न लोके"त्यादिना कृद्योगषष्ठ()आ निषेधात् "धनगण "मिति प्रयोगो निर्बाध इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अन्नाण् णः ४।४।८५

अन्नशब्दात् तदिति द्वितीयासमर्थात् लब्धा इत्येतस्मिनर्थे णः प्रत्ययो भवति। अन्नं लब्धा आन्नः।

न्यासः

अन्नाण्णः। , ४।४।८५

बाल-मनोरमा

अन्नाण्णः १६१७, ४।४।८५

अन्नाण्णः। "लब्धेत्यर्थे द्वितीयान्ता"दिति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

वशं गतः ४।४।८६

वशशब्दात् तदिति द्वितीयासमर्थाद् गतः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। वशं गतः वश्यः। कामप्राप्तो विधेयः इत्यर्थः।

न्यासः

वश गतः। , ४।४।८६

वशः = कामः, इच्छा। वसेर्धातोरत एव निपातनादप्रत्ययः। द्वितीयासमर्थविभक्तौ प्रकृतायां वशमिति द्वितीयानिर्देश इष्टे विषये द्वितीयान्ताद्यथा स्यात्, अनिष्टान्मा भूत्। तेनेहैव भवति-- वशं गतः, इच्छाप्राप्तः, विधेय इत्यत्रैव भवति॥

बाल-मनोरमा

वशं गतः १६१८, ४।४।८६

वशंगतः। वशशब्दाद्द्वितीयान्ताद्गत इत्यर्थे यदित्यर्थः। वश्य इति। वशं गत इति विग्रहः। "वश कान्तौ"। कान्तिरिच्छा। वशनं वशः। "वशिरण्योरुपसङ्ख्यान"मित्यप्। वशम्िच्छां, गतः=प्राप्तः। इच्छाधीन इत्यर्थः। वशाधातुश्छान्दस इति लुग्विकरणे वक्ष्यते, तत्प्रायिकमिति भावः। सर्वस्यापि स्वेच्छानुसारित्वादाह--परेच्छानुसारीति।

तत्त्व-बोधिनी

वशं गतः १२४६, ४।४।८६

वशं गतः। वशनं वशः---इच्छा। "वशिरण्योरुरसङ्ख्यान"मित्यप्।

---

सूत्रम्

काशिका-वृत्तिः

पदम् अस्मिन् दृश्यम् ४।४।८७

निर्देशातेव प्रथमा समर्थविभक्तिः। पदशब्दात् प्रथमासमर्थाद् दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत् प्रत्ययो भवति। पदं दृश्यम् अस्मिन् पद्यः कर्दमः। पद्याः पांसवः। शक्यार्थे कृत्यः। शक्यते यस्मिन् पदं मूल्याः, सुष्ठु द्रष्टुं प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः। कर्दमस्य अवस्था उच्यते नातिद्रवो नातिशुष्क इति।

न्यासः

पदमस्मिन् दृश्यम्। , ४।४।८७

कर्मणः कृतैवाभिहितत्वाद्()द्वितीया न सम्भवति। न च द्वितीयाप्रथमाभ्यामन्यत्र विभक्तौ पदमिति रूपमुपपद्यते। तस्मात् प्रथमान्तमेवैतदिति निश्चित्याह-- "निर्देशादेव" इत्यादि॥

बाल-मनोरमा

पदमस्मिन्दृश्यम् १६१९, ४।४।८७

पदमस्मिन्दृश्यं। प्रथमान्तात्पदशब्दाद्दृश्यत इत्यर्थे यदित्यर्थः। अत्र तदिति द्वितीयान्तमनुवृत्तं प्रथमया विपरिणम्यते।

---

सूत्रम्

काशिका-वृत्तिः

मूलम् अस्य आवर्हि ४।४।८८

मुलशब्दात् प्रथमासमर्थादावर्हि इत्येवम् उपाधिकादस्य इति षष्ठ्यर्थे यत् प्रत्ययो भवति। मूलम् एषाम् आवर्हि मूल्या माषाः। मूल्या मुद्गाः। वृहू उद्यमने। येषां मूलम् आवृह्यते उत्पाट्यते ते मूल्याः, सुष्ठु निष्पन्नाः। मूलोत्पाटनेन विना सङ्ग्रहीतुं न शक्यन्ते इत्यर्थः।

न्यासः

मूलमस्यावर्हि। , ४।४।८८

आवर्हणमावर्हः, उत्पादनमित्यर्थः। वृहेराङ्पूर्वाद्भावे घञ्, आवर्होऽस्यास्तीत्यावर्हीति। द्वितीयाविभक्तिरिह नास्ति। न च प्रथमाद्वितीयाभ्यामन्यस्यां विभक्तौ मूलमित्येतद्रूपमुपपद्यते। तस्मात् प्रथमान्तमेवैतत्। निर्देशादेव प्रथमा समर्थविभक्तिरुपपद्यते इति मत्वाह-- "मूलशब्दात् प्रथमासमर्थात्" इति॥

बाल-मनोरमा

मूलमस्याऽऽबर्हि १६२०, ४।४।८८

मूलमस्याबर्हि। आबर्हणमिति। उत्पाटनमित्यर्थः। उपसर्गवशात् "बृहूउद्यमने" इति धातोरुत्पाठने वृत्तिः। मूल्या मुद्गा इति। मूलत उत्पाटनीया इत्यर्थः।

तत्त्व-बोधिनी

मूलमस्याऽऽबर्हि १२४७, ४।४।८८

मूलमस्याबर्हि। प्रथमान्तादाबर्हि इत्युपाधिकान्मूलशब्दादस्येति षष्ठ()र्थे यत्स्यात्। आवर्ह इति। "वृहू उद्यमने"दन्त्योष्ठ()आदिरयम्, न तु परवर्गादिः, "उद्वृह रक्षः सहमूलनिन्द्रे"त्यादिप्रयोगदर्शनात्। मूल्या मुद्गा इति। मूलोत्पटनं विना सङ्ग्रहीतुमशक्याः, मध्यतो लूयमानेषु कोशस्था अपि सयस्यामवस्थायां पतेयुस्तमवस्थां प्राप्ताः। सुष्ठु शुष्का इति यावत्। यप्रत्यय इति। तेनधेनुष्याशब्दोऽन्त उदात्तः। यतु तु तित्स्वरः स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां धेनुष्या ४।४।८९

धेनुष्या इति निपात्यते संज्ञायां विषये। संज्ञाग्रहणम् अभिधेयनियमार्थम्। धेनोः सुगागमो यश्च प्रत्ययः निपात्यते। अन्तोदात्तो ऽपि ह्ययम् इष्यते। या धेनुरुत्तमर्णाय ऋणप्रदानाद् दोहनार्थं दीयते सा धेनुष्या। पीतदुग्धा इति यस्याः प्रसिद्धिः। धेनुस्यां भवति ददाऽमि।

न्यासः

संज्ञायां धेनुष्या। , ४।४।८९

"यश्च प्रत्ययः" इति। किमर्थं पुनर्यप्रत्ययो निपात्यते? इत्याह-- "अन्तोदात्तो ह्ययमपीष्यते" इति। यति सति तित्स्वरेणान्तस्वरितत्वात्। अन्तोदात्तश्चेष्यते। तस्माद्यप्रत्यय एव न्याय्यः। न केवलं संज्ञाविषय एवेष्यते; अपि त्वन्तोदात्तोऽपीत्येषोऽपिशब्दस्यार्थः॥

बाल-मनोरमा

संज्ञायां धेनुष्या १६२१, ४।४।८९

संज्ञायां धेनुष्या। यप्रत्ययश्चेति। यति तु तित्स्वर) स्यादिति भावः। धेनुष्येति। या धेनुर्दोहनार्थमुत्तमर्णाय अधमर्णेन दीयते तस्या इयं संज्ञा। तदाह--बन्धके स्थितेति। अमरवाक्यमिदम्। संज्ञायामित्या पादपरिसमाप्तेरधिकारः। संज्ञा हि रूठिर्विवक्षिता।

तत्त्व-बोधिनी

संज्ञायां धेनुष्या १२४८, ४।४।८९

संज्ञायामिति। ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्या संज्ञेयम्।

---

सूत्रम्

काशिका-वृत्तिः

गृहपतिना संयुक्ते ञ्यः ४।४।९०

निर्देशादेव तृतीया समर्थविभक्तिः। गृहपतिशब्दात् तृतीयासमर्थात् संयुक्ते इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति। गृहपतिना संयुक्तः गार्हपत्यो ऽग्निः। अन्यस्य अपि गृहपतिना संयोगो ऽस्ति, तत्र संज्ञाधिकारादतिप्रसङ्गनिवृत्तिः।

न्यासः

गृहपितना संयुक्ते ञ्यः। , ४।४।९०

"संयुक्ते" इति। सम्बद्ध इत्यर्थः। "अन्यस्यापि" इत्यादि। यथैव हि गृहपतिर्यजनमानो गार्हपत्ये कार्यं करोति, तथा दक्षिणाग्नावाहवनीये च। तस्मादन्यस्यापि दक्षिणादेर्गृहपतिना संयोगोऽस्ति। यद्येवम्, अतिप्रसङ्गोऽन्यत्र प्राप्नोति? इत्याह-- "तत्र् संज्ञाधिकारात्" इत्यादि। अभिधेयनियमार्थं संज्ञाग्रहणमनुवर्तते, तेनेह न भवत्यतिप्रसङ्गः॥

बाल-मनोरमा

गृहपतिना संयुक्ते ञ्यः १६२२, ४।४।९०

गृहपतिना। अस्मिन्नर्थे गृहपतिशब्दात्तृतीयान्ताञ्ञ्यः स्यादित्यर्#H। गार्हपत्योऽग्निरिति। अग्निविशेष इत्यर्थः। तत्र पत्नीसंयोजेषु अग्निहोत्तरे च गृहपतिदेवताकहोमस्य क्रियमामत्वाद्गृहपतियोगः। यद्यपि "देवसूहविःषु अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति" इति हविर्होम आहबनीये क्रियते, तथापि संज्ञाधिकारादाहरवनीये नास्य प्रयोगः।

तत्त्व-बोधिनी

गृहपतिना संयुक्ते ञ्यः १२४९, ४।४।९०

गार्हपत्य इति। "गृहपतिने"ति निर्देशादेव तृतीयान्तात्प्रत्ययः। "संज्ञाया"मित्यनुवृत्तेराहवनीयादौ नातिप्रसङ्गः।

---

सूत्रम्

काशिका-वृत्तिः

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस् तार्यतुल्यप्राप्यवध्याऽनाम्यसमसमितसंमितेषु ४।४।९१

नावाधिभ्यो ऽष्टभ्यः शब्देभ्यो ऽष्टस्वेव तार्यादिष्वर्थेषु यथासङ्ख्यं यत् प्रत्ययो भवति। प्रत्ययार्थद्वारेण तृतीया समर्थविभक्तिर् लभ्यते। नावा तार्यम् नव्यम् उदकम्। नव्या नदी। शक्यार्थे कृत्यः। वयसा तुल्यः वयस्यः सखा। संज्ञाधिकारो ऽभिधेयनियमार्थः। तेन वयसा तुल्ये शत्रौ न भवति। धर्मेण प्राप्यं धर्म्यम्। ननु च धर्मादनपेते इति वक्ष्यमाणेन एव सिद्धम्? न एतदस्ति। धर्मं यदनुवर्तते तद् धर्मादनपेतम् इत्युच्यते। फलं तु धर्मादपेत्येव, कार्यविरोधित्वाद् धर्मस्य। विषेण वध्यः विष्यः। विषेण वधम् अर्हति इत्यर्थः। मूलेन आनाम्यम् मूल्यम्। आनाम्यम् अभिभवनीयम्। पटादीनाम् उत्पत्तिकारणं मूलं तेन तदभिभूयते शेषीक्रियते। मूलं हि सगुणं मुल्यं करोति। पोरदुपधात् ३।१।९८ इति यति प्राप्ते आनाम्यम् इति निपातनात् ण्यत्। मूलेन समः मूल्यः पटः। उपदानेन समानफलः इत्यर्थः। सीतया समितं सीत्यम् क्षेत्रम्। समितं सङ्गतम् इत्यर्थः। रथसीताहलेभ्यो यद् विधौ इति तदन्तविधिरपि इष्यते। परमसीत्यम्। उत्तरसीत्यम्। द्विसीत्यम्। त्रिसीत्यम्। तुल्या संमितं तुल्यम्। संमितं समानं, सदृशम् इत्यर्थः। यथा तुला परिच्छिनत्ति परम् एवं तदपि इति।

लघु-सिद्धान्त-कौमुदी

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ११३७, ४।४।९१

नावा तार्यं नाव्यं जलम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। मूलेन आनाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितं सीत्यं क्षेत्रम्। तुलया संमितम् तुल्यम्॥

न्यासः

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवद्ध्यानाम्यसमसमितसम्मितेषु। , ४।४।९१

कथं पुनरिहापि समर्थविभक्तिर्लभ्यते? यावता नेहोपात्ता, नाप्यनुवत्र्तत इत्याह--"प्रत्ययार्थद्वारेण" इत्यादि। द्वारम् = उपायः, कारकमित्यर्थः। इह तार्यादयः प्रत्ययार्थाः। तत्सम्बन्धे कत्र्तरि करणे हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति। ततः समर्थविभक्तिर्लभ्यते। "नाव्यम्" इति। "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः। अत्र नावस्तरणक्रियायां कर्त्तृत्वं करणत्वञ्च विवक्षावशाद्भवतीति करणे कत्र्तरि वा तृतीया। एवमन्यत्रापि यथायोगं वेदितव्यम्। "धर्मेण प्राप्यं धम्र्यम्" इति। तत्पुनर्धर्मस्य फलं स्वर्गाद्युच्यते। "ननु च" इत्यादि। ननु च धर्मेण यत्प्राप्यं तद्धर्मादनपेतं भवतीति भावः। "विध्यः" इति। विषेण वधमर्हतीत्यर्थः। वध्यशब्दस्य "दण्डादिभ्यो यः" ५।१।६५ इत्यर्हार्थे व्युत्पादितत्वात्। "आनाम्यमभिभवनीयम्" इति। अनेकार्थत्वाद्धातूनामत्र नमिरभिभवे वत्र्तते। "पटादीनामुत्पत्तिकारणं मूलम्" इति। दत्तेन हिरण्येन पटादीनामुत्पत्तिर्भवति। "तेन" इति। मूलेन। "तत्" इति। मूल्यम्"। "शेषीक्रियते" इति। अनेनाभिभूयत इत्यस्यार्थमाचष्टे। शेषीक्रियते = गुणभावमापाद्यते, अप्रधानीक्रियत इत्यर्थः। अप्रधानीकरणेव अभिभवः। कथं पुनस्तेन तच्छेषीक्रियते? इत्याह-- "मूल्यं हि" इत्यादि। हिशब्दो हेतौ। मूल्यमिह कर्त्तृ, मूलं कर्म। तत्प्रणयेन हिरण्येन पटादयो विक्रीयन्ते। तत्र यन्मूलातिरिक्तं हिरण्यं लाभः, तन्मूल्यं गुणो भावः। सह तेन वत्र्तत इति सगुणः। गुणः पुनरिह तदेव मूल्यं वेदितव्यम्। तदेतदुक्तं भवति-- यस्मान्मूल्यभागेनैव भागभूतेन सभागं मूलं करोति न न्यूनं तन्मूल्यमभिधीयत इति। मूल्ये सति तत् तत्र द्विगुणं करोतीत्युच्यते। का पुनरियं युक्तः, यदि नाम सगुणं मूलं करोतीत्युच्यते तत् कथं

मूल्यमभिभूयते? यतेयं युक्तिस्तदाख्यायते-- इह हि शास्त्रे यत्सिद्धमुपकारि तदङ्गमप्रधानम्, यच्चोपकारसाध्यमनुपकारकं तदङ्गि प्रधानमित्येषा व्यवस्था। तथा चोक्तम्--- शास्ते द्व्यमेवेह स्यादङ्गमथ वा भवेदङ्गि तत्र। उपकारि सिद्दमङ्गं साध्यानुपकारकमङ्गीति॥ इति॥ एवञ्च मूल्येन मूलं सगुणं क्रियामाणमुपकार्यत्वात् प्रधानं सम्पद्यते, मूल्यं त्वनुपकार्यत्वादप्रधानं सम्पद्यते। तन्मूलेन मूल्यमभिभूयते, तदपेक्षया तस्याः प्रधानभावापत्तेः। "तुलया सम्मितं तुल्यम्" इति। अत्र तुल्यार्थयोगे तृतीया। यद्यपि तुल्यार्थयोगे षष्ठ()पि विधीयते,तथापि नौप्रभृतिभ्यस्तृतीयासमर्थेभ्यः प्रत्ययविधानात् तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययो विज्ञायते। "यथा" इत्यादिना तुलया सादृश्यं दर्शयति। ननु च "तुल्यास्यप्रयत्नम्" १।१।९ इति निपातनादेव तुल्यशब्दस्य साधुत्वं भविष्यति, स च सदृश एव लोके प्रसिद्ध इति नार्थस्तुलाशब्दात् सम्मिते प्रत्ययविधानेन? स्वरार्थं तु प्रत्ययविधानात्। "यतोऽनावः" ६।१।२०७ इत्याद्युदात्तत्वं यथा स्यात्। न हि निपातने सत्याद्युदात्तत्वं तुल्यशब्दस्य शक्यते विज्ञातुम्॥

न्यासः

धर्मपथ्यर्थन्यायादनपेते।, ४।४।९१

"निर्देशादेव पञ्चमी समर्थविभक्तिः" इति। यद्येवम्, "धुरो यड्ढकौ" (४।४।७७) इत्येवमादावपि निर्देशादेव समर्थविभक्तिर्विज्ञेया? नैष दोषः; तत्र हि द्वितीया समर्थविभक्तिः। एवं ज्ञानं स्यात्--- द्वितीयानुवृत्तिरपार्थिका स्यात्। इह तु न काचिद्विभक्तिरनुवत्र्तते, पञ्चमी च सूत्रे श्रूयते। तस्मात् सैव समर्थविभक्तिरनुकल्पयितुं युक्ता॥ ४।४।९२

बाल-मनोरमा

नौवयोधर्मविषमूलमूलसीतातुलाभ्यास्तार्यतुल्यप्राप्तबध्याऽऽनाम्यसमसमितसंमितेषु १६२३, ४।४।९१

नौवयोधर्म। "नौ, वयस्, धर्म, विष, मूल, सीता, तुला एभ्योऽष्यभ्यः क्रामात्तार्ये, तुल्ये, प्राप्ये, वध्ये, आनाम्ये, समे, समिते, संमिते चार्थे यत्स्यादित्यर्थः। "तृतीयान्तेभ्य" इत्यर्थाद्गम्यते। तार्यादियोगे करणे कर्तरि हेतौ तुल्यादियोगे च तस्या एव संभवात्। अत्र मूलशब्दयोर्यथासङ्ख्याप्रवृत्तये नैकशेषः। अन्यथा सप्तानां प्रकृतीनाम् एकैकस्या अष्टस्वप्यर्थेषु प्रत्यय इति भ्रमः स्यात्। तार्यमिति। तरीतुं शक्यमित्यर्थः। "ऋहलोण्र्यत्"। वयसा तुल्य इति। मित्रे एवायं प्रत्ययो, नतु शत्रौ, संज्ञार्धिकारात्। मूलेनानाम्यमिति। पटादेरुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यं मूलम्। तेन सह यदधिकं द्रव्यम् आनम्यते=विक्रेतुः संमतीकरणेन लभ्यते तन्मूल्यमित्यर्थः। लोकास्तु विक्रेतुर्लब्धं सर्वं द्रव्यं मूल्यमिति व्यवहन्ति। तत्र लक्षणा बोध्या। सा च सांप्रतिकी, निरूढा वा। सीतयेति। सीता लाङ्गलपद्धतिः। तया समितं=सङ्गतमित्यर्थः। कृष्टमिति यावत्। तुला=धटा, तया उन्मितमित्यर्थः।

तत्त्व-बोधिनी

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यबध्याऽऽनाम्यसमसमितसंमितेषु १२५०, ४।४।९१

नौवयोधर्म। नावादिभ्यो यथासङ्ख्यं तार्यादिष्वष्टस्वर्थेषु यत्स्याते। इह तार्यादियोगे यथासम्भवं करणे कर्तरि हेतौ तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिरर्थाल्लभ्यते। अत्र प्रथमं मूलान्तानां पञ्चानां द्वन्द्वं कृत्वा द्वितीयमूलादिद्वन्द्वेन सह समाहारद्वन्द्वः। मूलान्तानां द्वित्राणां वा मूलादीनामेव वा द्वन्द्वं कृत्वा नावादिषु द्वन्द्वः। तेन सारुप्याऽभावादेकशेषो न भवति। नावा तार्यमिति। शक्यार्थे "ऋहलोण्र्यत्"। करणे तृतीया। वयस्य इति। "रिउआग्धो वयस्यः सवयाः"इत्यमरः। "वयसा तुल्यः शत्रु"रित्यत्र तु न भवति। संज्ञाधिकारात्। विषेण वध्य इति। विषेण वधमर्हतीत्यर्थः। "दण्डादिभ्यः"इति सूत्रेण वधशब्दादर्हार्थे यद्विधानात्। मूलेनाम्यमिति। मूलं नाम पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यम्। तेन स्वस्मादतिरिक्तं लाभाक्यं यद्द्रव्यमात्मानं प्रति शेषीक्रियते=आत्मन उपकारकं क्रियते , तत् ---आनाम्यम्। आङ्पूर्वको नमिरभिभवे वर्तते, तस्मात् "पोरदुपधा"दिति यति प्राप्ते अतएव निपातनाण्ण्यत्। तथा

चानाम्यमभिभवनीयम्ात्मानं प्रति शेषीकर्तव्यम्। स च लाबाख्यो भाग एव।लोके तु यावता द्रव्येण पटादिकं विक्रीयते तत्रैव समुदाये मूल्यशब्दः प्रसिद्धो, न तु मूलातिरिक्तभागमात्रे। एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्यच तद्घटिते सङ्घाते निरूढलक्षणा बोध्या। सीतेति। सीता=हलाग्रं। सम्पूर्वादिणः क्तः। समितं=सङ्गतं, निम्नोन्नता दिरहितं कृतमित्यर्थः। समीकृतमिति यावत्। "रथसीताहलेभ्यो यद्विधौ" इति तदन्तविधिः। परमसीत्यम्। द्वाभ्यां सीताभ्यां समितमिति तद्धितार्थे समासस्ततो यत्। द्विसीत्यम्। तुलया संमितमिति। संमितं=परिच्छिन्नम्। रूढिशब्दोऽयं "संज्ञाया"मित्यधिकारात्। अतएव "तुल्य"मिति सदृशमात्रे प्रयुज्यते, न तु तुलायामागद्रहः क्रियते।

---

सूत्रम्

काशिका-वृत्तिः

धर्मपथ्यर्थन्यायादनपेते ४।४।९२

निर्देशादेव पञ्चमी समर्थविभक्तिः। धर्मादिभ्यः पञ्चमीसमर्थेभ्यो ऽनपेतः इत्यर्थे यत् प्रत्ययो भवति। धर्मातनपेतं धर्म्यम्। पथ्यम्। अर्थ्यम्। न्याय्यम्। संज्ञाधिकारादभिधेयनियमः।

बाल-मनोरमा

धर्मपथ्यर्थन्यायादनपेते १६२४, ४।४।९२

धर्मपथ्यर्थ। धर्म, पथिन्, अर्थ, न्याय एभ्योऽनपेतमित्यर्थे यदित्यर्थः। औचित्यात्पञ्चम्यन्तेभ्य इति लभ्यते। धर्मादनपेतमिति। अप्रच्युतमित्यर्थः। पथ्यमिति। पथोऽनपेतमित्यर्थः। न्याय्यमिति। न्यायदनपेतमित्यर्थः।

तत्त्व-बोधिनी

धर्मपथ्यर्थन्यायादनपेते १२५१, ४।४।९२

पथ्यमिति। संज्ञाधिकारादभिधेयनियमः, तेन शास्त्रीयात्पथोऽनपेतमेव पथ्यम्। न तु मार्गादनपेतश्चोरोऽपि।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसो निर्मिते ४।४।९३

प्रत्ययार्थसामर्थ्यलभ्या समर्थविभक्तिः। छन्दःशब्दात् तृतीयासमर्थान् निर्मिते इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। निर्मितः उत्पादितः। छन्दसा निर्मितः छन्दस्यः। छन्दसा इच्छया कृतः इत्यर्थः। इच्छापर्याय छन्दःशब्दः इह गृह्यते।

न्यासः

छन्दसो निर्मिते। , ४।४।९३

प्रत्ययार्थसामथ्र्यलभ्या" इति। "निर्मिते" इति प्रत्ययार्थः। तत्र च्छन्दसः करणत्वमिति सामथ्र्यात् तृतीया समर्थविभक्तिर्लभ्यते। छन्दःशब्दोऽयं वेदे त्रिष्टुवादौ, इच्छायाश्च वत्र्तते; इह त्विच्छायां वत्र्तमानो गृह्रते, अत एवाह-- "इच्छाया कृतः" इति। इच्छावृत्तिस्तु संज्ञाग्रहणस्याभिधेयनियमार्थस्यानुवृत्तेर्लभ्यते॥

बाल-मनोरमा

छन्दसो निर्मिते १६२५, ४।४।९३

छन्दसो निर्मिते। छन्दश्शब्दात्तृतीयान्तान्निर्मितेऽर्थे। यदित्यर्थः। इच्छयेति। छन्दःशब्द इच्छावाचीति भावः। "छन्दः पद्येऽभिलाषे चे"त्यमरः।

तत्त्व-बोधिनी
छन्दसो निर्मिते १२५२, ४।४।९३

छन्दसो। "छदि संवरे"इति चुरादिरिच्छायामपि वर्तते, धातूनामनेकार्थत्वात्। ततो घञि इच्छापर्यायश्छन्दः--शब्दः प्रसिद्ध एव "स्वच्छन्दोच्छलदच्छकच्छे"त्यादौ। असुनि तु यः सान्तः सोऽत्र प्रकृतिः। तत्र निर्माणे इच्छायाः करणत्वत्सामर्थ्यात्तृतीयान्तात्प्रत्ययः। इच्छया कृतमिति। यद्यपिवेदे त्रिष्टुबादिषु च सान्तश्छन्दः शब्दोऽस्ति, तथापीह न गृह्रते, संज्ञाधिकारात्, किं त्विच्छापर्याय एव स गृ-ह्रत इति भावः।

---

सूत्रम्
काशिका-वृत्तिः
उरसो ऽण् च ४।४।९४

उरःशब्दात् तृतीयासमर्थान् निर्मिते इत्येतस्मिन्नर्थे ऽण् प्रत्ययो भवति, चकारात् यत् च। उरसा निर्मितः औरसः पुत्रः, उरस्यः पुत्रः। संज्ञाधिकारादभिधेयनियमः।
न्यासः
उरसोऽण् च। , ४।४।९४

"संज्ञाधिकारादभिधेयनियमः" इति। तेनोरसा निर्मितं सुखमित्यादौ न भवतीति भावः॥
बाल-मनोरमा
उरसोऽण् च १६२६, ४।४।९४

उरसोऽण्च। "तृतीयान्तान्निर्मिते इत्यर्थे" इति शेषः। उरस्य इति। "अङ्गादङ्गात्सम्भवसि ह्मदयादधिजायसे" इति श्रुतेरिति भावः। "पुत्र" इति संज्ञाधिकाराल्लब्धम्।

तत्त्व-बोधिनी
उरसोऽण् च १२५३, ४।४।९४

पुत्र इति। संज्ञाधिकारान्नेह--उरसा निर्मितं सुखम्।

---

सूत्रम्
काशिका-वृत्तिः
हृदयस्य प्रियः ४।४।९५

निर्देशादेव समर्थविभक्तिः। हृदयशब्दात् षष्ठीसमर्थात् प्रियः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। हृदयस्य प्रियः हृद्यः देशः। हृद्यं वनम्। संज्ञाधिकारादभिधेयनियमः। इह न भवति, हृदयस्य प्रियः पुत्रः इति।
न्यासः
ह्मदयस्य प्रियः। , ४।४।९५

"ह्मद्यः" इति। "ह्मदयस्य ह्मल्लेख" ६।३।४९ इत्यादिना ह्मद्भावः॥

बाल-मनोरमा

ह्मदयस्य प्रियः १६२७, ४।४।९५

ह्मदयस्य प्रियः। षष्ठ()न्ताद्धृदयशब्दात्प्रिय इत्यर्थे यत्स्यादित्यर्थः।

तत्त्व-बोधिनी

ह्मदयस्य प्रियः १२५४, ४।४।९५

ह्मदयस्य। प्रीणतीति प्रियः। "इगुपधे"ति कः। कृद्योगात्कर्मणि षष्ठी, अलौकिके तद्धित प्रकृतिभागे तु वचनसामथ्र्यादेव। एवमन्यत्रापि बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

बन्धने चर्षौ ४।४।९६

हृदयस्य इत्येव। बन्धने इति प्रत्ययार्थः। तद्विशेषणम् ऋषिग्रहनम्। वध्यते येन तद् बन्धनम्। हृदयशब्दात् षष्ठीसमर्थाद् बन्धने ऋषावभिधेये यत् प्रत्ययो भवति। ऋषिर् वेदो गृह्यते। हृदयस्य बन्धनम् ऋषिः हृद्यः। परहृदयं येन बध्यते वशीक्रियते स वशीकरणमन्त्रो हृद्यः इत्युच्यते।

न्यासः

बन्धने चर्षौ। , ४।४।९६

ऋषिशब्दोऽयमस्त्येव गुणवति पुरुषविशेषे, अस्ति च वेदे;इह संज्ञाधिकारादेव न मनुष्यग्रहणमिति दर्शयति-- "ऋषिर्वेदो गृह्रते (इति)॥

बाल-मनोरमा

बन्धने चर्षौ १६२८, ४।४।९६

बन्धने चर्षौ।

तत्त्व-बोधिनी

बन्धने चर्षौ १२५५, ४।४।९६

बन्धने। बध्यतेऽनेनेति बन्धनः। करणे ल्युट्। वशीकरणमन्त्र इति। ते नहि परह्मदयं वशीक्रियते। संज्ञाधिकारद्व सिष्ठादावृषौ नायं यत्।

---

सूत्रम्

काशिका-वृत्तिः

मतजनहलात् करणजल्पकर्षेषु ४।४।९७

मतादिभ्यः त्रिभ्यः शब्देभ्यः त्रिष्वेव करणादिष्वर्थेषु यथासङ्ख्यं यत् प्रत्ययो भवति। प्रत्ययार्थसामर्थ्याल् लब्धा षष्ठी

समर्थविभक्तिः। मतं ज्ञानं तस्य करणं मत्यम्। भावसाधनं वा। जनस्य जल्पः जन्यः। हलस्यः कर्षः हल्यः। द्विहल्यः। त्रिहल्यः। कर्षणं कर्षः, भावसाधनं वा।

न्यासः

मतजनहलात् करणजल्पकर्षेषु। , ४।४।९७

"{प्रत्ययार्थसामश्र्याल्लब्धा--मुद्रितः पाठः।} प्रत्ययार्थसामश्र्यालभ्या" इति। करणादयः प्रत्ययार्थाः। तत्र करणादयः शब्दा भावे करणे च व्युत्पाद्यन्त इति सामश्र्यादेवोपलभ्यमाना षष्ठीविभक्तिर्विज्ञायते। यद्यपि कर्षशब्दः परिमाणवचनोऽप्यस्ति, तथापि करणादीनां साहचर्यात् क्रियाशब्द एव गृह्यते। करणशब्दो भावसाधनः। यदा तु करणसाधनः, तदा क्रियतेऽनेनेति करणम्, "रथसीताहलेभ्यो यद्विधौ" (वा।४७३) इति तदन्तविधिरत्रेष्यते। तस्योदाहरणम्---"द्विहल्यः" इति दर्शयति। "भावसाधनञ्च" इति। अत्रापि पूर्ववद्विभागो वेदितव्यः॥

तत्त्व-बोधिनी

मतजनहलात्कर?णजल्पकर्षेषु १२५६, ४।४।९७

मत। तस्य करणमिति। कर्मणि षष्ठी। कृतिः---करणं, क्रियतेऽनेनेति वा तरणमित्याशयेनाह---भावः साधनं वेति। जल्पशब्दो भावसाधनः। कर्तरि षष्ठी। हलस्येति। कर्षणं---कर्षः। तद्योगात्कर्मणि षष्ठी। करहणस्य कर्तृत्वविवक्षायां कर्तरि षष्ठी वा। "रथसीते"ति तदन्तविधिः। द्विहल्यः। त्रिहल्यः।

---

सूत्रम्

काशिका-वृत्तिः

तत्र साधुः ४।४।९८

तत्र इति सप्तमीसमर्थात् साधुः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। सामसु साधुः सामन्यः। वेमन्यः। कर्मण्यः। शरण्यः। साधुः इह प्रवीणो योग्यो वा गृह्यते, न उपकारकः। तत्र हि परत्वात् तस्मै हितम् ५।१।५ इत्यनेन विधिना भवितव्यम्।

लघु-सिद्धान्त-कौमुदी

तत्र साधुः ११३७, ४।४।९८

अग्रे साधुः - अग्र्यः। सामसु साधुः सामन्यः। ये चाभावकर्मणोरिति प्रकृति भावः। कर्मण्यः। शरण्यः॥

न्यासः

तत्र साधुः। , ४।४।९८

"सामन्यः" इति। "ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिभावः। साधुरिह निपुणः, योग्य इति भावः॥

बाल-मनोरमा

मतजनहलात्करणजल्पकर्षेषु १६२९, ४।४।९८

मतजनहलात्। "यथासङ्ख्यामेभ्यः। एष्वर्थेषु य"दिति शेषः। मतं ज्ञानमिति। मनधातोर्भावे क्त इति भावः। करणं भावः साधनं वेति। कृञ्धातोर्भावे करणे वा ल्युटि करणशब्दः। तेन जननक्रिया वा जननसाधनं वा विवक्षितमित्यर्थः। मत्यमिति। ज्ञानस्य जननक्रिया जननसाधनं वेत्यर्थः।

बाल-मनोरमा

तत्र साधुः १६३०, ४।४।९८

तत्र साधुः। सप्तम्यन्तात्साधुरित्यर्थे यत्स्यादित्यर्थः। अग्रय इति। अग्रे साधुरित्यर्थः। साधुरत्र प्रवीणो गृह्रते, नतु हितः, तत्र "तस्मै हित"मिति वक्ष्यमाणत्वात्।

तत्त्व-बोधिनी

तत्र साधुः १२५७, ४।४।९८

तत्र साधुः। सा४धुरिह प्रवीणो योग्यो वा गृह्रते, निपकर्ता। तत्र हि परत्वात् "तस्मै हित"मित्येन भाव्यम्। संज्ञाधिकारादुपकर्ता न गृह्रत इत्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

प्रतिजनाऽदिभ्यः खञ् ४।४।९९

प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन्नर्थे। यतो ऽपवादः। प्रतिजने साधुः प्रातिजनीनः। जने जने साधुः इत्यर्थः। ऐदंहुगीनः। सांयुगीनः। प्रतिजन। इदंयुग। संयुग। समयुग। परयुग। परकुल। परस्यकुल। अमुष्यकुल। सर्वजन। विश्वजन। पञ्चजन। महाजन। प्रतिजनादिः। यत्र हितार्थ एव साध्वर्थस्तत्र वचनात् प्राक्क्रीतीया बाध्यन्ते।

न्यासः

प्रतिजनादिभ्यः खञ्। , ४।४।९९

जनं जनं प्रति प्रतिजनम्, "यथार्थेऽव्ययम्" २।१।६ इत्यव्ययीभावः। "परस्यकुलम्, अमुष्यकुलम्" इति। निपातनादलुक्। "षष्ठ()आ आक्रोशे" ६।३।२० इति वा यदा परकुलत्वेनाक्रुश्यते। "यत्र" इत्यादि। "प्रतिजन" , "सर्वजन" इत्येवमादिषु केषुचिद्धितार्थ एव प्रतियते, न तु प्रवीणो योग्यशब्दस्यार्थः। तेन तत्र वचनसामर्थ्यात् परेऽपि प्राक्क्रीतीयाः प्रत्यया बाध्यन्ते। अन्यथा हि वचनमनर्थकं स्यात्॥

बाल-मनोरमा

प्रतिजनादिभ्यः खञ् १६३१, ४।४।९९

प्रतिजनादिभ्यः खञ्। तत्र साधुरित्येव। सप्तम्यन्तेभ्य एभ्यः साधुरित्यर्थे खञ् स्यादित्यर्थः। प्रातिजनीन इति। "प्रतिजन"मिति वीप्सायामव्ययीभावः। तत्र साधुरित्यर्थः। एवं-वै()आजनीनः।

तत्त्व-बोधिनी

प्रतिजनादिभ्यः खञ् १२५८, ४।४।९९

प्रतिजनमिति। जनंजनं प्ति[जनो जन इति] प्रतिजनम्। वीप्सायामव्ययीभावः। प्रतिजन, इदंयुग, संयुग, पापकुल, परस्यकुल, अमुष्यकुल, सर्वजन, वि()आजन, पञ्चजन। "परस्य""अमुष्य"इति षष्ठ()एषा निपातनादलुक्।

---

सूत्रम्

काशिका-वृत्तिः

भक्ताण् णः ४।४।१००

भक्तशब्दात् णः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये। यतो ऽपवादः। भक्ते साधुः भक्तः शालिः। भाक्ताः तण्डुलाः।

न्यासः

भक्ताण्ण। , ४।४।१००

बाल-मनोरमा

भक्ताण्णः १६३२, ४।४।१००

भक्ताण्णः। सप्तम्यन्तादस्मात्साधुरित्यर्थ इति शेषः।

तत्त्व-बोधिनी

भक्ताण्णः १२५९, ४।४।१००

भक्ते इति। "भस्सां स्त्री भक्तमन्धोऽन्न"मित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

परिषदो ण्यः ४।४।१०१

परिषच्छब्दाद् ण्यः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये। यतो ऽपवादः। परिषदि साधुः पारिषद्यः। णप्रत्ययो ऽप्यत्र इष्यते। तदर्थं योगविभागः क्रियते। परिषदः णो भवति, परिषदि साधुः पारिषदः। ततः ण्यः। परिषदः इत्येव।

न्यासः

परिषदो ण्यः। , ४।४।१०१

बाल-मनोरमा

परिषदो ण्यः १६३३, ४।४।१०१

परिषदो ण्यः। "सप्तम्यन्तात्साधुरित्यर्थ" इति शेषः। योगेति। परिषद इति प्रथमो योगः। परिषदो णः स्यादित्यर्थः। ततो "ण्यः" इति द्वितीयो योगः। परिषदो ण्यः स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कथादिभ्यष् ठक् ४।४।१०२

कथादिभ्यः शब्देभ्यः ठक् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये। यतो ऽपवादः। कथायां साधुः काथिकः। वैकथिकः। कथा। विकथा। वितण्डा। कुष्टचित्। जनवाद। जनेवाद। वृत्ति। सद्गृह। गुण। गण। आयुर्वेद। कथादिः।

न्यासः

कथादिभ्यष्ठक्। , ४।४।१०२

बाल-मनोरमा

कथादिभ्यष्ठक् १६३४, ४।४।१०२

कथादिभ्यष्ठगित्यादि स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

गुडाऽदिभ्यष् ठञ् ४।४।१०३

गुडाऽदिभ्यः शब्देभ्यः ठञ् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये। यतो ऽपवादः। गुडे साधुः गौदिकः इक्षुः। कौल्माषिको मुद्गः। साक्तुको यवः। गुड। कुल्माष। सक्तु। अपूप। मांसौदन। इअक्षु। वेणु सङ्ग्राम। सङ्घात। प्रवास। निवास। उपवास। गुडादिः।

काशिका-वृत्तिः

पथ्यतिथिवसतिस्वपतेर् ढञ् ४।४।१०४

पथ्यादिभ्यः शब्देभ्यः ढञ् प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये। यतो ऽपवादः। पथि साधु पाथेयम्। आतिथेयम्। वासतेयम्। स्वापतेयम्।

न्यासः

गुडादिभ्यष्ठञ्। , ४।४।१०३

न्यासः

पथ्यतिथिवसतिस्वपतेर्ढञ्। , ४।४।१०३

बाल-मनोरमा

गुडादिभ्यष्ठञ् १६३५, ४।४।१०३

गुडादिभ्यष्ठञ्। साक्तुको यव इति। सक्तुषु साधुरित्यर्थः। गुडादित्वाट्ठञ्। उगन्तत्वाट्ठस्य कः।

बाल-मनोरमा

पथ्यतिथिवसतिस्वपतेर्ढञ् १६३६, ४।४।१०३

पथ्यतिथीत्यादि स्पष्टम्।

तत्त्व-बोधिनी

गुडादिभ्यष्ठञ् १२६०, ४।४।१०३

गुडादिभ्यष्ठञ्। गुड, कुल्माष, सक्तु, अपूप, माष,[मांस], ओदन, इक्षु, वेणु, सङ्ग्रम, सङ्घात, प्रवास, निवास, वृत्।

तत्त्व-बोधिनी

पथ्यतिथिवसतिस्वपतेर्ढञ् १२६१, ४।४।१०३

वसतिरिति। "वसेश्च"त्यतिप्रत्ययः। स्वस्य पति स्वपतिः=आढ्यः, तस्मिन्साधु स्वापतेयम्। सभाया यः। यति तु तित्स्वरः स्यात्, "क्रतुर्भवत्युक्थ्यः"इति वत्। न च "यतोऽनावः"इत्याद्युदात्तता शङ्क्या। "यदुत्पत्तिवेलायां व्यच्कस्य यदन्तस्यादिरुदात्तः"इति वेदभाष्ये स्थापितत्वात्। पक्षान्तरे तु "नमः शष्प्याय च फेन्याय च"इत्यादिवदाद्युदात्तः स्यात्। एवं च व्याख्यानद्वयस्याप्यावश्यकत्वे लक्ष्यमुरोधेन क्वचि()त्कचिव्याख्येयमिति तत्त्वम्।

---

सूत्रम्

काशिका-वृत्तिः

सभायाः यः ४।४।१०५

सभाशब्दाद् यः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये। यतो ऽपवादः। स्वरे विशेषः। सभायां साधुः सभ्यः।

लघु-सिद्धान्त-कौमुदी

सभाया यः ११३९, ४।४।१०४

सभ्यः॥

लघु-सिद्धान्त-कौमुदी

इति यतोऽवधिः। (प्राग्घितीयाः) ८ ११३९, ४।४।१०४

लघु-सिद्धान्त-कौमुदी

अथ छयतोरधिकारः ११३९, ४।४।१०४

न्यासः

सभाया यः। , ४।४।१०४

"स्वरे विशेषः" इति। यति सति "यतोऽनावः" ६।१।२०७ इत्याद्युदात्तं स्यात्, ये तु सति प्रत्ययस्वरेणान्तोदात्तं स्यात्॥

---

सूत्रम्

काशिका-वृत्तिः

ढश् छन्दसि ४।४।१०६

सभाशब्दाड् ढः प्रत्ययो भवति तत्र साधुः इत्येतस्मिन् विषये छन्दसि। यस्य अपवादः। सभेयो युवा ऽस्य यजमानस्य वीरो जायताम्।

न्यासः

ढश्छन्दसि। , ४।४।१०५

---

सूत्रम्

काशिका-वृत्तिः

समानातीर्थे वासी ४।४।१०७

साधुः इति निवृत्तम्। वासी इति प्रत्ययार्थः। समाऽनतीर्थशब्दात् तत्र इति सप्तमीसमर्थाद् वासि इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। समानतीर्थे वासी इति सतीर्थ्यः। समनोपध्यायः इत्यर्थः। तीर्थशब्देन इह गुरुरुच्यते।

न्यासः

समानतीर्थे वासी। , ४।४।१०६

वसतीति वासी। निपातनादेव णिनिः, ग्रहादिलक्षणो वा। अथ वा--- वसनं वासः, सोऽस्यास्तीति वासी, मत्वर्थीय इति। अथ "तत्र" (४।४।९८) इति वत्र्तमाने पुनः "समानतीर्थेट इति सप्तम्युपादानं किमर्थम्? प्रकृतित्वेनेष्ठात् सप्तम्यन्ताद्यथा स्यात्; अनिष्टान्मा भूत्। एतेन गुरुवचनो यस्तीर्थशब्दस्तदन्तात् सप्तमीसमर्थात् प्रत्ययो भवति, न तु यः प्रयोगादिवचनस्तदन्तात्। अमुमेवार्थं चेतसि कृत्वाऽऽह-- "तीर्थशब्देन गुरुरुच्यते" इति॥

बाल-मनोरमा

समानतीर्थे वासी १६३७, ४।४।१०६

समानतीर्थे वासी। समानतीर्थशब्दात्सप्तम्यन्ताद्वसतीत्यर्थे यत्स्यादित्यर्थः। वसतीति वासीति। ग्रह्यदेराकृतिगणत्वाण्णिनिः। तीर्थशब्दस्य विवरणं-गुराविति। सतीथ्र्य इति। समानतीर्थशब्दाद्यति "तीर्थे ये" इति समानस्य सभावः।

तत्त्व-बोधिनी

समानतीर्थे वासी १२६२, ४।४।१०६

समानतीर्थे वासी। निपातनाण्णिनिः, ग्रहादेराकृतिगणत्वान्नन्दिग्रहीत्यनेन वा। सतीथ्र्य इति। "तीर्थे ये"इति सभावः। तरन्त्यनेनेति तीर्थम्। "तरतेस्थक्"। "तीर्तं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारे चे"ति वि()आः। इह तूपाध्यायवाचिन एव ग्रहणं, नाऽन्यस्य, संज्ञाधिकारात्।

---

सूत्रम्

काशिका-वृत्तिः

समानौदरे शयित ओ चोदात्तः ४।४।१०८

समानोदरशब्दात् सप्तमीसमर्थात् शयितः इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, ओकारश्च उदात्तः। शयितः स्थितः इत्यर्थः। समानोदरे शयितः समानोदर्यः भ्राता।

न्यासः

समानोदरे शयित ओ चोदात्तः। , ४।४।१०७

"ओकारश्चोदात्तः" इति। यतः स्वरे प्राप्त ओकारस्योदात्तत्वं विधीयते। "शयितः स्थित इत्यर्थः"(इति)। अनेकार्थत्वात् तस्य स्थितावपि वृत्तेः; तथा हि ---जलाशय इति। समानोदर्यः" इति। समानञ्च तदुदरञ्चेति समानाधिकरणसमासं कृत्वा ततः प्रत्ययः॥

बाल-मनोरमा

समानोदरे शयति ओ चोदात्तः १६३८, ४।४।१०७

समानोदरे। समानोदरशब्दात्सप्तम्यन्ताच्छयित इत्यर्थे यत्स्यादोकाराश्च उदात्त इत्यर्थः। शयित इत्यस्य विवरणं स्थित इति। कुशेशयं जलेशयमित्यादौ तथा दर्शनादिति भावः। समानोदर्य इति। समानमुदरमिति। विग्रहे "पूर्वापरप्रथमे"त्यादिना समासाद्यति कृते तित्स्वरापवाद ओकारस्योदात्तः। "विभाषोदरे" इति सभावेऽसति रूपम्।

तत्त्व-बोधिनी

समानोदरे शयिता ओ चोदात्तः १२६३, ४।४।१०७

शयितः स्थित इति। शीधातुः स्थित्यर्थे वर्तते। "जलाशयः" "कुशेशय"मिति प्रयोगादिति भावः। समानमुदरमिति "पूर्वापरप्रथमे"त्यादिना तत्पुरुषःष ततो यत्, तित्स्वरापवाद ओकारस्योदात्तः।

---

सूत्रम्

काशिका-वृत्तिः

सोदराद् यः ४।४।१०९

सोदरशब्दात् सप्तमीसमर्थात् शयितः इत्येत्स्मिन्नर्थे यः प्रत्ययो भवति। विभाषोदरे ६।३।८७। इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः। समानोदरे शयितः सोदर्यः भ्राता। ओ च उदात्तः इति न अनुवर्तते। यकारे स्वरः।

न्यासः

सोदराद्यः। , ४।४।१०८

एकदेशविकृतस्यानन्यत्वात् सोदर्शशब्दादपि पूर्वेण यत्येव प्राप्ते यो विधीयते। "विभाषोदरे" ६।३।८७ इति विषयसप्तमीति मत्वाऽऽह--- "यकारादौ प्रत्यये" इत्यादि। "ओ चोदात्त इति नानुवत्र्तते" इति। प्रत्यय विधानसामथ्र्याद्य उदात्तः॥

बाल-मनोरमा

सोदराद्यः ८९, ४।४।१०८

सोदराद्यः। "सप्तम्यन्ताच्छयित इत्यर्थे" इति शेषः। तित्वाऽभावात्प्रत्ययस्वेरणान्तोदात्तोऽयम्। "विभाषोदरे"इति सभावः। "अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चती"त्यत्र तु समानपर्यायसहशब्दस्य बहुव्रीहौ "वोपसर्जनस्ये"ति सभावो बोध्यः। एवं "यत्र भ्राता सहोदरः" इत्याद्यपि सिद्धम्।

*****इति बालमनोरमायाम् प्राग्घितीयाः।*****

*****अथ प्रकृतिभावः******

तत्त्व-बोधिनी

सोदराद्यः १४८३, ४।४।१०८

सोदराद्यः। "ओ चोदात्तः"इति नानुवर्तते। "विभाषेदरे"इति समानस्य सभावः। तत्र "तीर्थे ये"इत्यतोऽनुवृत्तं "ये इत्येतद्विषयसप्तमी। तेन सोदर इत्यस्माद्यः। प्रत्ययस्वरः। प्राग्वदीति। समानोदारे शयित इत्येवार्थ इत्यर्थः। कथं तर्हि "अपनेथानं तु गच्छन्तं सोदरोऽपि विमुञ्चती"ति मुरारिरिति चेत्। अत्राहुः----सह=समानमुदरं यस्य सोदरः। "वोपसर्जनस्ये"ति सहस्य सभावः। तस्य च वैकल्पिकत्वात् "यत्र भ्राता सहोदरः"इत्याद्यपि सिद्धमिति।

इति तत्वबोधिन्यां प्राग्घितीयाः।

---

सूत्रम्

काशिका-वृत्तिः
भवे छन्दसि ४।४।११०

तत्र इत्येव। स्प्तमीसमर्थात् भव इत्येतस्मिन्नर्थे छन्दसि विषये यत् प्रत्ययो भवति। अणादीनां घादीनां चापवादः। सति दर्शने ते ऽपि भवन्ति, सर्वविधीनाम् छन्दसि व्यभिचारात्। नमो मेध्याय च विद्युत्याय च नमः। आपादपरिसमाप्तेः छन्दो ऽधिकारः। भवाधिकारश्च समुद्राभ्राद् धः ४।४।११७ इति यावत्।
न्यासः
भवे छन्दसि। , ४।४।१०९

"अणादीनां घादीनाञ्चापवादः" इति। "तत्र भवः" ४।३।५३ इति प्राप्तानाम्। यद्येवम्, यता बाधितत्वाच्छन्दसि तेषामभावः स्यात्, ततश्च मुञ्जावत्यं मौञ्जावतं वेत्येवमादि न सिध्यति? इत्याह--- "सति दर्शने" इत्यादि। कथं पुनरेवं लभ्यते? इत्याह---"सर्वविधीनाम्" इत्यादि। सर्वविधिव्यभिचारस्तु "बहुलं छन्दसि" ३।२।८८ इति बहुलग्रहणाल्लभ्यते। मुञ्जावान् नाम पर्वतः, तत्र भवोऽसौ मौञ्जावतः॥

---

सूत्रम्
काशिका-वृत्तिः
पाथोनदीभ्यां ड्यण् ४।४।१११

पाथःशब्दान् नदीशब्दाच् च ड्यण् प्रत्ययो भवति तत्र भवः इत्येतस्मिन्नर्थे। यतो ऽपवादः। पाथसि भवः पाथ्यो वृषा। च नो दधीत नाद्यो गिरो मे। पाथः अन्तरिक्षम्।
न्यासः
पाथोनदीभ्यां ड�ण्। , ४।४।११०

---

सूत्रम्
काशिका-वृत्तिः
वेशन्तहिमवद्भ्याम् अण् ४।४।११२

वेशन्तशब्दाद् धिमवच्छब्दाच् च अण् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। यतो ऽपवादः वैशन्तीभ्यः स्वाहा। हैमवतीभ्यः स्वाहा।
न्यासः
वेशन्तहिमवद्भ्यामण्। , ४।४।१११

---

सूत्रम्
काशिका-वृत्तिः
स्रोतसो विभाषा ड्यड्ड्यौ ४।४।११३

स्रोतःशब्दाद् विभाषा ड्यत् ड्य इत्येतौ प्रत्ययौ भवतः तत्र भवः इत्येतस्मिन् विषये। यतो ऽपवादः। पक्षे सो ऽपि भवति। स्रोतसि भवः स्रोत्यः। स्रोतस्यः। ड्यड्ड्ययोः स्वरे विशेषः।
न्यासः

रुआओतसो विभाषा ह्रड्ड�औ। , ४।४।११२

ड()ड()ड()योः स्वरे विशेषः। ड()ति हि सति "तित् स्वरितम्" ६।१।१७९ इत्यन्तस्वरितः स्यात्, ड()ए तु प्रत्ययस्वरेणान्तोदात्तत्वं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

सगर्भसयूथसनुताद् यन् ४।४।११४

सगर्भसयूथसनुतशब्देभ्यो यन् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। यतो ऽपवादः। स्वरे विशेषः। अनु भ्राता सगर्भ्यः। अनु सहा सयूथ्यः। यो नः सनुत्यः। सर्वत्र समानस्य छन्दसि इति सभावः।

न्यासः

सगर्भसयूथसनुताद्यन्। , ४।४।११३

समानो गर्भः, समानो यूथ इति कर्मधारयः। "णु स्तुतौ" (धा।पा।१०३५) , भावेक्तः, समानं नुतमस्येति बहुव्रीहिः। समानञ्च तन्नुतञ्चेति कर्मधारयो वा। "स्वरे विशेषः" इति। यति सति "स्वरितम्" ६।१।१७९ इत्यन्तस्वरितत्वं स्यात्, यनिसति नित्स्वरेणाद्युदात्तत्वं स्यात्। "सर्वत्र समानस्य च्छन्दसि" इति। "समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु" ६।३।८३ इत्यस्योपलक्षणपर एकदेश उपात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

तुग्राद् घन् ४।४।११५

तुग्रशब्दाद् घन् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। यतो ऽपवादः। त्वमग्ने वृषभस्तुग्रियाणाम्। अन्नाकाशयज्ञविरिष्ठेषु तुग्रशब्दः।

न्यासः

तुग्राद्घन्। , ४।४।११४

---

सूत्रम्

काशिका-वृत्तिः

अग्राद् यत् ४।४।११६

अग्रशब्दात् यत् प्रत्ययो भवति तत्र भवः इत्येतस्मिन् विषये। अग्रे भवम् अग्र्यम्। किम् अर्थम् इदं यावता सामान्येन यद् विहित एव? घच्छौ च ४।४।११६ इति वक्ष्यति ताभ्यां बाधा मा भूतिति पुनर् विधीयते।

न्यासः

अग्राद्यत्। , ४।४।११५

"सामान्येन यद्विहितः" इति। "भवे च्छन्दसि" ४।४।१०९ इत्यनेन। अथ यद्()ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत? नैवं शक्यम्; "अग्रश्चाड्डिमच्" (वा। ४४८) इत्येवामग्रशब्दाड्()डिमजप्युक्तः, तत्र यथा विहिते प्रत्यय उच्यमाने डिमचपि

स्यात्। तस्माद्यद्()ग्रहणं कत्र्तव्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

घच्छौ च ४।४।११७

अग्रशब्दात् यत् घच्छौ च प्रत्यया भवन्ति तत्र भवः इत्येतस्मिन् विषये। अग्र्यम्, अग्रियम्, अग्रीयम्। चकारः तुग्राद् घन् ४।४।११४ इत्यस्य अनुकर्षणार्थः। अग्रियम्। स्वरे विशेषः।

न्यासः

घच्छौ च। , ४।४।११६

"स्वरे विशेषः" इति। घे विहितेऽन्तोदात्तत्वं स्यात्, घनि तु सत्याद्युदात्तत्वं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

समुद्राभ्राद् घः ४।४।११८

समुद्रशब्दातभ्रशब्दाच् च घः प्रत्ययो भवति तत्र भवः इत्येतस्मिन्नर्थे। यतो ऽपवादः। समुद्रिया नदीनाम्। अभ्रियस्येव घोषाः। अभ्र। शब्दस्य अपूर्वनिपातः, तस्य लक्षणस्य व्यभिचारित्वात्।

न्यासः

समुद्राभ्राद्धः। , ४।४।११७

ननु च "अजाद्यन्तम्" २।२।३३ "अल्पाच्तरम्" २।२।३४ इत्यभ्रशब्दस्य पूर्वनिपातेन भवितव्यम्, तत्कथमपूर्वनिपातः? इत्याह---- "अम्रशब्दस्य" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

बर्हिषि दत्तम् ४।४।११९

भवः इति निवृत्तम्। बर्हिःशब्दात् सप्तमीसमर्थात् दत्तम् इत्येतस्मिनर्थे यत् प्रत्ययो भवति। बर्हिष्येषु निधिसु प्रियेषु।

न्यासः

बर्हिषि दत्तम्। , ४।४।११८

---

सूत्रम्

काशिका-वृत्तिः

दुतस्य भागकर्मणी ४।४।१२०

निर्देशादेव समर्थविभक्तिः। दूतशब्दात् षष्ठीसमर्थाद् भागे कर्मणि च अभिधेये यत् प्रत्ययो भवति। भागः अंशः। कर्म क्रिया। यदग्ने यासि दूत्यम्। दूतभागः दूतकर्क्म वा।

न्यासः

दूतस्य भागकर्मणी। , ४।४।११९

भावे "तस्येदम्" ४।३।१२० इत्यणि प्राप्ते "गुणवचनब्राआह्मणादिभ्यः" ५।१।१२३ इति ष्यञि यतो विधाम्। येषां "सख्युर्यः" ५।१।१२५ इत्यत्र "दूतवणिग्भ्याञ्च" (वा।५४०) इत्युपसंख्यायते, तेषां कर्मणि ये प्राप्ते॥

---

सूत्रम्

काशिका-वृत्तिः

रक्षोयातूनां हननी ४।४।१२१

निर्देशादेव समर्थविभक्तिः। रक्षःशब्दाद् यातुशब्दाच् च षष्ठीसमर्थाद् हननी इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। हन्यते ऽन्या इति हननी। या वां मित्रावरुणौ रक्षस्या तनू यातव्या। रक्षसां हननी। यातूनां हननी। बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थम्। बहुनां रक्षसां हननेन तनूः स्तूयते।

न्यासः

रक्षोयातूनां हननी। , ४।४।१२०

"निर्देशादेव समर्थविभक्तिः" (इति)। सा पुनः षष्ठी "कर्तुकर्मणोः कृति" २।३।६५ इति कर्मणि द्रष्टव्या। योग्यतामात्रे विवक्षिते हन्यतेऽनयेति हननी, करणे ल्युट्, "टिड्ढाणञ्()" ४।१।१५ इति ङीप्। ननु च रक्षीयातुशब्दयोर्द्वित्वाद्()द्विवचनेन भवितव्यम्, तत्कथमिदमुक्तम्? वचनसामश्र्यात् सम्भावनमेव स्तुतिरिति दर्शयितुमाह---"बहुवचनम्" इत्यादि। योगश्चायं "तस्येदम्" ४।३।१२० इत्यणि प्राप्ते वेदितव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

रेवतीजगतीहविष्याभ्यः प्रशस्ये ४।४।१२२

रेवत्यादिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत् प्रत्ययो भवति। प्रशंसनं प्रशस्यम्, भावे क्यप् प्रत्ययो भवति। यद्वो रेवती रेवत्यम्। यद्वो जगती जगत्यम्। यद्वो हविष्या हविष्यम्। हविषे हिता हविष्याः, तासां प्रशंस्नं हविष्यम्। यस्य इति च ६।४।१४८ इति लोपे कृते हलो यमां यमि लोपः ८।४।६३ इति लोपः।

न्यासः

रेवतीजगतीहविष्याभ्यः प्रशस्ये। , ४।४।१२१

"षष्ठीसममर्थेभ्यः" इति। सामश्र्याद्धि षष्ठयेव समर्थविभक्तिर्विज्ञायते। यथा हि-- "{शंस----प्रां३।पाठ}शंसु स्तुतौ" (धा।या।७२८) इत्यतोऽस्मादेव निपातनाद्भावे क्यप्प्रत्ययः; "कृत्यल्युटो बहुलम्" ३।३।११३ इति बहुलवचनात्। तत्रावश्यं कृद्योगलक्षणया षष्ठ()आ भवितव्यम्। अयमपि योगः पूर्ववदणि प्राप्ते वेदितव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

असुरस्य स्वम् ४।४।१२३

असुरशब्दात् षष्ठीसमर्थात् स्वम् इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। अणो ऽपवादः। असुर्यं वा एतत् पात्रं यत् कुलालकृतं चक्रवृत्तम्।

न्यासः

असुरस्य स्वम्। , ४।४।१२२

"षष्ठीसमर्थात्" इति। "असुरस्य" इति निर्देशादेव षष्ठी समर्थविभक्तर्लभ्यते। "स्वम्" इति। आत्मीयमित्यर्थः। "अणोऽपवादः" इति। "तस्येदम्" ४।३।१२० इति प्राप्तस्य॥

---

सूत्रम्

काशिका-वृत्तिः

मायायाम् अण् ४।४।१२४

असुरशब्दात् षष्ठीसमर्थात् मायायां स्वविशेषे अण् प्रत्ययो भवति। पूर्वस्य यतो ऽपवादः। आसुरी माया स्वधया कृतासि।

न्यासः

मायायामण्। , ४।४।१२३

मायायां नेति वक्तव्येऽण्ग्रहणं विस्पष्टार्थम्॥

---

सूत्रम्

काशिका-वृत्तिः

तद्वानासाम् उपधानो मन्त्र इति इष्टकासु लुक् च मतोः ४।४।१२५

तद्वानिति निर्देशादेव समर्थविभक्तिः। मतुबन्तात् प्रातिपदिकात् प्रथमासमर्थादासाम् इति षष्ठ्यर्थे यत् प्रत्ययो भवति, यत् प्रथमासमर्थम् उपधानो मन्त्रश्चेत् स भवति, यत् तदासाम् इति निर्दिष्टम् इष्टकाश्चेत् ता भवन्ति। लुक् च मतोः इति प्रकृतिनिर्ह्रआसः। इतिकरणस् ततश्चेद् विवक्षा। तद्वानित्यवयवेन समुदायो व्यपदिश्यते। वर्चःशब्दो यस्मिन् मन्त्रे ऽस्ति स वर्चस्वान्। उपधीयते येन स उपधानः। चयनवचनः इत्यर्थः। वर्चस्वानुपधानमन्त्रः आसाम् इष्टकानाम् इति विगृह्य यति विहिते मतोर् लुकि कृते, वर्चस्या उपदधाति, तेजस्या उपदधाति। पयस्याः। रेतस्याः। तद्वानिति किम्? मन्त्रसमुदायादेव मा भूत्। उपधानः इति किम्? वर्चस्वानुपस्थानमन्त्रः आसाम् इत्यत्र मा भूत्। मन्त्रः इति किम्? अङ्गुलिमानुपधानो हस्तः आसाम् इत्यत्र मा भूत्। इष्टकासु इति किम्? अङ्गुलिमानुपधानो हस्त आसाम् इत्यत्र मा भूत्। इतिकरणो नियमार्थः। अनेकपदसम्भवे ऽपि केनचिदेव पदेन तद्वान् मन्त्रो गृह्यते, न सर्वेण।

न्यासः

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः। , ४।४।१२४

स विवक्षितोऽवयवोऽस्मिन्निति तद्वान्। कः पुनरसौ? समुदायः। अत एवाह-- "तद्वानित्यवयवेन समुदायो निर्दिश्यते" इति। एतेनैकदेशादिदं प्रत्ययविधानमित्युक्तं भवति। " वर्चःशब्दोऽस्मिन् मन्त्रेऽस्ति" इत्यादिना तत्समुदायं प्रदर्शयति। "चयनवचनः" इति। चिनोतेरेव करणे लुप्। "तेजस्या"इति। तेजःशब्दोऽस्य मन्त्स्यास्तीति तेजस्वानुपधानमन्त्रः। शेषं विग्रहवाक्यादि पूर्ववत्। मन्त्रादेव, समुदायान्मा भत्। यद्यपि समुदायः प्रातिपदिकमं न भवति, तथापि वचनसामथ्र्यापि स्यात्। किं तर्हि वचनान्न लभ्यत इत्यभिप्रायः। "इतिकरणो नियमार्थः" इति। असतीहेतिकरणे मन्त्रे बहूनां सम्भवे सर्वेण पदेन तद्वान् मन्त्रो गृह्यते। अ()स्मस्तु सति तेन नियमार्थेन येनैव पदेन तद्वता मन्त्रेणेष्टकोपलक्ष्यते,तेनैव सर्वो मन्त्रो गृह्यत इत्येतदुपपन्नं भवति। अथ मतुब्ग्रहणं किमर्थम्, यावता मतुबन्तादयं विधीयते, तत्र प्रत्ययस्य लुग् विज्ञायमानो विधानसामथ्र्याच्च मतुप एव भविष्यतीत्यपार्थकं मतुब्ग्रहणं? नैवम्; उत्तरत्र "अ()इआमानण्" ४।४।१२५

इत्यतर् ह्रुपवानमात्रावयवे द्वौ मत्वर्थीयौ-- इनिमतुपौ, तत्रासति मतुब्ग्रहणे लुक् स्यात्; अस्मिन् सति मतुप एव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

अश्विमानण् ४।४।१२६

अश्विशब्दो यस्मिन् मन्त्रे ऽस्ति सो ऽश्विमान्। अश्विमच्छब्दादण् प्रत्ययो भवति। पूर्वस्य यतो ऽपवादः। अश्विमानुपधानो मन्त्रः आसामि ष्टकानाम् इति विगृह्याण् विधीयते, तत्र मतुपो लुकि कृते इनण्यनपत्ये ६।४।१६४ इति प्रकृतिभावः। आश्विनीरुपदधाति।

न्यासः

अ�इआमानण्। , ४।४।१२५

"आ()इआनीः" इति। "टिड्ढाणञ्" ४।१।१५ इति ङीप्॥

---

सूत्रम्

काशिका-वृत्तिः

वयस्यासु मूर्ध्नो मतुप् ४।४।१२७

वयस्वानुपधानो मन्त्रो यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप् प्रत्ययो भवति। पूर्वस्य यतो ऽपवादः। यस्मिन् मन्त्रे वयःशब्दो मूर्धन्शब्दश्च विद्यते स वयस्वानपि भवति मूर्धन्वानपि, यथा मूर्धा वयः प्रजापतिश् छन्दः इति। तत्र वयस्वच्छब्दादिव मूर्धवच्छब्दादपि यति प्राप्ते मतुप् विधास्यते। मूर्धन्वतीर् भवन्ति। वयस्या एव मूर्धन्वत्यः। वयस्यासु इति किम्? यत्र मूर्धन्शब्द एव केवलो न वयःशब्दस्न् तत्र मा भूत्। मूर्धन्वतः इति वक्तव्ये मूर्ध्नः इत्युक्तं, मतुपो लुकं भाविनं चित्ते कृत्वा।

न्यासः

वयस्यासु मूध्र्नो मतुप्। , ४।४।१२६

"मूर्धन्वतीः" इति। "उगितश्च" ४।१।६ इति ङीप्। वयस्यास्ता मूर्धन्वत्यश्चेति वयस्वामनुपधानो मन्त्रः, तासामिति वयस्याः। मूर्धन्वानुपधानो मन्त्रः, तासामिति मूर्धन्दत्यः। "यत्रि" इत्यादि। न ह्येवंविधो यासामुपधानो मन्त्रस्ततो वयस्यात्विति वचनात्। अत्र मूर्धशब्द एवास्ति, न वयः शब्दः, ततो न भवति--मूर्धन्वत्य इति। "वक्तव्ये" इति। तद्वानित्यधिकारान्मतुबन्तान्मर्धशब्दात्प्रत्ययेन भवितव्यम्। अतः "मूर्धन्वतःर" इति युक्तं वक्तुम्, तन्मतुपो भाविनं लुकं चेतसि कृत्वा। एवंलघु सूत्रं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

मत्वर्हे मासतन्वोः ४।४।१२८

यस्मिन्नर्थे मतुब् विहितः, तस्मिन्श् छन्दसि विषये यत् प्रत्ययो भवति मासतन्वोः प्रत्ययार्थविशेषणयोः। प्रथमासमर्थादस्त्युपाधिकात् षष्ठ्यार्थे सप्तम्यर्थे च यत्प्रत्ययो भवति। मत्वर्थीयानाम् अपवादः। नभांसि विद्यन्ते अस्मिन् मासे अभस्यो मासः। सहस्यः। तपस्यः। मधव्यः। नभःशदो ऽभ्रेषु वर्तते। तन्वा खल्वपि ओजो ऽस्यां विद्यते ओजस्या

तनूः। रक्षस्या तनूः। मासतन्वोः इति किम्? मधुमता पात्रेण चरति मासतन्वोरनन्तरार्थे वा। मध्वस्मिन्नस्ति मध्वस्मिन्ननन्तरम् इति वा मध्व्यो मासः। लुगकारेकाररेफाश्च वक्तव्याः। लुक् तावत् तपश्च तपस्यश्च। नभश्च नभस्यश्च। सहश्च सहस्यश्च। नपुंसकलिङ्गं छन्दसत्वात्। अकारः इषो मासः। ऊर्जो मासः। इकारः शुचिर्मासः। रेफः शुक्रो मासः।

न्यासः

मत्वर्थे मासतन्वोः। , ४।४।१२७

मत्वर्थे मासतन्वोरिति प्रत्ययार्थविशेषणम्। मत्वर्थग्रहणादेव प्रथमा समर्थविभक्तिरस्त्युपाधिका लभ्यते? इत्याह--"प्रथमसमर्थादस्त्युपाधिकात्" इति। "{अनन्तरार्थेव वा-- काशिका} अनन्तरार्थे च" इति। न केवलं मत्वर्थ एव त्ययो वक्तव्यः। "ननु च तप) प्रभृतीनां प्रत्ययार्थमासादिवचनानामभिधेयलिङ्गवचनानि भवन्तीति पुंल्लिङ्गता प्राप्वोति, तस्याञ्च सत्यां "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घेण भवितव्यम्; तत्कथं तपश्च सहश्च नभश्चेति प्रयोगः? इत्यत आह--"नपुंसकलिङ्गं छान्दसत्वात्" इति। अयं हि च्छान्दसः प्रयोगः। तत्रेति पुंल्लिङ्गेऽभिधेये नपुंसकलिङ्गमुपपद्यते। "व्यत्ययो बहुलम्" ३।१।८५ इति लिङ्गव्यत्ययस्य च्छन्दसि विधानात्। इडस्मिन्मासेऽस्तीति "इषः"। ऊर्घस्मिन् मासेऽस्तीति "ऊर्जःर"। शुगस्मिन् मासेऽस्तीति "शूचिः" शुग् वास्मिन् मासेऽस्तीति "शुक्रः"। "चोः कुः" ८।२।३० इति कुत्वम्। अर्थग्रहणं किमर्थम्, यावता "मतौ छः सूक्तसाम्नोः" (५२।५९) इत्यत्र यथा "मतौ" इत्युच्यमानो मत्वर्थे प्रत्यय उच्यते, तथेहापि लभ्यते, तस्मात् "मतौ" इत्येवं कस्मान्नोक्तम्? सत्यमेतत्; विस्पष्टार्थमर्थग्रहणम्॥

---

सूत्रम्

काशिका-वृत्तिः

मधोर् ञ च ४।४।१२९

मधुशब्दान् मत्वर्थे ञः प्रत्ययो भवति, चकाराद् यत् च। उअप्सङ्ख्यानाल् लुक् च। माधवः, मधव्यः, मधुः। तन्वां खल्वपि माधवा, मधव्या, मधुः तनूः।

न्यासः

मधोर्ञ च। , ४।४।१२८

---

सूत्रम्

काशिका-वृत्तिः

ओजसो ऽहनि यत्खौ ४।४।१३०

मत्वर्थे इत्येव। ओजःशदान् मत्वयर्थे यत्खौ प्रत्ययौ भवतो ऽहन्यभिधेये। ओजस्यमहः। ओजसीनमहः।

न्यासः

ओजसोऽहनि यत्खौ। , ४।४।१२९

असन्तत्वात् "अस्मायामेधारुआजो विनिः" ५।२।१२० इति विनिप्रत्यये प्राप्ते मतुपोऽपवादैः सह समावेशात् मतुपि यत्खौ विधीयेते। अथ यद्()ग्रहणं किमर्थम्, ननु "ओजसोऽहनि ख च" इत्येवोच्येत, चकारेण यथाविहिते प्रत्यये विज्ञायमाने यदिति च भविष्यति? नैवं शक्यम्; चकारेण हि सन्देहः स्यात्-- किमनेनानन्तरसूत्रविहितो ञोऽनुकृष्यते? अथ प्रकृतो

यदिति? तस्मादसन्देहार्थं यद्ग्रहणं कत्र्तव्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

वेशोयशाऽदेर् भगाद् यल् ४।४।१३१

मत्वर्थे इत्येव वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद् वेशोयशाऽदेर् भगान्तात् प्रातिपदिकात् मत्वर्थे यल् प्रत्ययो भवति। लकारः स्वरार्थः वेशोभगो विद्यते यस्य स वेशोभग्यः। यशोभग्यः। वेशः इति वलम् उच्यते। श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः। वेशश्च असौ भगश्च श्रीप्रभृतिर् वेशोभगः, सो ऽस्य अस्ति इति वेशोभग्यः।

न्यासः

वेशोयशादेर्भगाद्यल्। , ४।४।१३०

लित्करणं स्वरार्थम्॥

---

सूत्रम्

काशिका-वृत्तिः

ख च ४।४।१३२

वेशोयशाऽदेर् भगान्तात् प्रातिपदिकात् मत्वर्थे खः प्रत्ययो भवति। योगविभागो यथासङ्ख्यनिरासार्थः उत्तरार्थश्च। चकारात् यत्। वेशोभगीनः, वेशोभग्यः। यशोभगीनः, यशोभग्यः।

न्यासः

ख च। , ४।४।१३१

"योगविभागः" इत्यादि। यदि पूर्वसूत्र एव खग्रहणं क्रियते; द्वे प्रकृती प्रत्ययावपि द्वावेवेति सामथ्र्याद्यथासंख्यं प्रसज्येत। तस्मात् तन्निरासार्थो योगविभागः।ननु "यथासंख्यमनुदेशः समानाम्" (१।३।१०) इत्यत्र इह कस्मान्न भवति---"वेशोयशत्रादेर्भगाद्यल् ख च" इति दर्शयितवा स्वरितेन लिङ्गेन यथासंख्यमित्युक्तम्? तदेकयोगतामभ्युपेत्य। भवतु नामैकयोगः, तथापि यथासंख्यं न भवतीति दर्शनार्थम्, तत कुतो यथासंख्य निरासार्थो योगविभाग? अत आह--- "उत्तरार्थश्च" इति॥

---

सूत्रम्

काशिका-वृत्तिः

पूर्वैः कृतम् इनयौ च ४।४।१३३

मत्वर्थे इति निवृत्तम्। निर्देशादेव समर्थविभक्तिः। पूर्वशब्दात् तृतीयासमर्थात् कृतम् इत्येतस्मिन्नर्थे इन य इत्येतौ प्रत्ययौ भवतः। चकारात् ख च। गम्भीरेभिः प्रथिभिः पूर्विणेभिः। पूर्व्यैः। पूर्वीणैः। पूर्वैः इति बहुवचनान् तेन पूर्वपुरुषाः उच्यन्ते। तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा।

न्यासः

पूर्वैः कृतमिनयौ च। , ४।४।१३२

"पूर्वः कृत मिनयौ च" इति। ख एव यथा स्यात्, यन्मा भूत्। "पूर्वैरिति बहुवचनान्तेन " इत्यादि। "पथिभिः पूर्वैःर"

इत्येवमादिभिर्वेदवाक्यैः पूर्वपुरुषकृतत्वेनयदा प्रशंसां प्रतिपादयितुं निष्ठा साध्वेव शक्यते विज्ञातुम्, तदा पूर्वपुरुषाभिधायिनः पूर्वशब्दात् प्रत्यय उपपद्यते। तस्मात् पूर्वैरिति बहुवचनान्तेन पूर्वपुरुषा अभिधीयन्ते। छन्दसामर्थपरत्वाद्()बहुवचनस्य।तेन पूर्वपुरुषाणां पन्था आस्थितः सम्पद्यत इति दर्शयितुमाह-------"तत्कृताः पन्थानःर" इति॥

---

सूत्रम्

काशिका-वृत्तिः

अद्भिः संस्कृतम् ४।४।१३४

निर्देशादेव समर्थविभक्तिः। अप्शब्दात् तृतीयासमर्थात् संस्कृतम् इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। यस्य इदम् अप्यं हविः। अद्भिः संस्कृतम् इति।

---

सूत्रम्

काशिका-वृत्तिः

सहस्रेण संमितौ घः ४।४।१३५

निर्देशादेव समर्थविभक्तिअः। सहस्रशब्दात् तृतीयासमर्थात् सम्मित इत्येतस्मिन्नर्थे घः प्रत्ययो भवति। सम्मितः तुल्यः, सदृशः। अयम ग्निः सहस्रियः। सहस्रतुल्यः इत्यर्थः। केचित् तु समितौ इति पठन्ति। तत्र अपि समित्या सम्मितः एव लक्षयितव्यः। तत्र छन्दसि प्रयोगदर्शनात्।

---

सूत्रम्

काशिका-वृत्तिः

मतौ च ४।४।१३६

मत्वर्थे च सहस्रशब्दात् घः प्रत्ययो भवति। सहस्रम् अस्य विद्यते सहस्रियः। तपःसहस्राभ्यां विनीनी ५।२।१०१, अण् च ५।२।१०२ इत्यस्य अपवादः।

न्यासः

मतौ च। , ४।४।१३५

शब्दे कार्यासम्भवात् मतुप्()शब्देन मत्वर्थो लक्ष्यत इत्याह---"मत्वर्थे" इत्यादि। मत्वर्थे च प्र प्रथमासमर्थादस्त्युपाधिकात् प्रत्ययो विज्ञायत इत्याह-- "सहरुआमस्य विद्यते" इति॥

---

सूत्रम्

काशिका-वृत्तिः

सोमम् अर्हति यः ४।४।१३७

निर्देशादेव समर्थविभक्तिः। सोमशब्दात् द्वितीयासमर्थातर्हति इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। सोमम् अर्हन्ति सोम्या ब्राह्मणाः। यज्ञार्हाः इत्यर्थः। यति प्रकृते यग्रहणम्। स्वरे विशेषः।

न्यासः

सोममर्हति यः। , ४।४।१३६

"तदर्हति" ५।१।६२ इत्यर्हार्थे ठकि प्राप्ते यो विधीयते। "स्वरे विशेषः" इति। यत्याद्युदात्तत्वं स्यात्। यप्रत्यये तु सत्यन्तोदात्तत्वं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

मये च ४।४।१३८

सोमग्रहणं यश्च अनुवर्तते। मय इति मयडर्थो लक्ष्यते। सोमशब्दान् मयडर्थे यः प्रत्ययो भवति। आगतविकारावयवप्रकृता मयडर्थाः। हेतुम् अनुष्येभ्यो ऽन्यत्रस्यां रूप्यः ४।३।८१ मयट् च ४।३।८२, मयड्वा एतयोर् भाषायाम् अभक्ष्य आच्छादनयोः ४।३।१४१, तत्प्रकृतवचने मयट् ५।४।२१ इति। तत्र यथायोगं समर्थविभक्तिः। पिबाति सोम्यं मधु। सोमम् अयम् इत्यर्थः।

न्यासः

मये च। , ४।४।१३७

"{नास्तीयं पंक्तिः-- काशिका, पदमञ्जरी च}रूप्यमयटोऽपवादो योगः" इति। "मय इति मयडर्थो लक्ष्यते" इति। शब्दे कार्यासम्भवादिति भावः। "तत्र यथायोगं समर्थविभक्तिःर" इति। तत्रागतार्थे पञ्चमी, विकारावयवयोः षष्ठी। प्रकृतवचने प्रथमेति यथायोगार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

मधोः ४।४।१३९

यशब्दो निवृत्तः। मधुशब्दान् मयडर्थे यत्प्रत्ययो भवति। मधव्यान् स्तोकान्। मधुमयानित्यर्थः।

न्यासः

मधोः। , ४।४।१३८

मयडर्थ आगते प्रकृतवचने यथायोगं रूप्यमयटोः प्राप्तयोर्यद्विधीयते। तत्र मयटो हि "द्व्यचश्छन्दसि" ४।३।१४८ इति प्राप्तस्य "नोत्वद्वर्धविल्वात्" ४।३।१४९ इति प्रतिषेध उच्यते॥ Eन्द् ओf थे पगे इस् नोत् fओउन्द्

श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचिता न्यासापरपर्याया काशिकाविवरणपञ्जिकाख्या काशिकाव्याख्या - द्वितीयो भागः पञ्चमोऽध्यायः प्रथमः पादः

---

सूत्रम्

काशिका-वृत्तिः

वसोः समूहे च ४।४।१४०

वसुशब्दात् समूहे वाच्ये यत् प्रत्ययो भवति, चकारान्मयडर्थे च। यथायोगं समर्थविभक्तिः। वसव्यः समूहः। मयडर्थो वा। अक्षरसमूहे छन्दसः स्वार्थ उपसङ्ख्यानम्। ओ श्रावय इति चतुरक्षरम्। अस्तु श्रौषटिति चतुरक्षरम्। यज इति द्व्यक्षरम्। ये यजामहे इति पञ्चाक्षरम्। द्व्यक्षरो वषट्कारः। एश वै सप्तदशाक्षरश् छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः। सप्तदशाक्षराण्येव छन्दस्यः इत्यर्थः। छन्दःशब्दादक्षरसमूहे वर्तमानात् स्वार्थे यत् प्रत्ययः। वसुशब्दादपि यद्

वक्तव्यः। हस्तो पृणस्व बहुभिर् वसव्यैः। वसुभिः इत्यर्थः। आग्निराशे वसव्यस्य। वसोः इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

नक्षत्राद् घः ४।४।१४१

नक्षत्रशब्दाद् घः प्रत्ययो भवति स्वार्थे। समूहे इति न अनुवर्तते। नक्षत्रियेभ्यः स्वाहा।

---

सूत्रम्

काशिका-वृत्तिः

सर्वदेवात् तातिल् ४।४।१४२

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति छन्दसि विषये स्वार्थिकः। सर्वतातिम्। देवतातिम्।

बाल-मनोरमा

शम्याः ष्लञ् १५०१, ४।४।१४१

शम्याः ष्लञ्। शमीशब्दो गौरादिङीषन्तः, तस्मात्षष्ठ()न्तादवयवे विकारे च ष्लञ् स्यादित्यर्थः। षकारलकारावितौ। "अनुदात्तादेश्चे"त्यञो।ञपवादः। शामीलं भस्मेति। शम्या विकार इत्यर्थः। शामीली रुआउगिति। शम्या विकार इत्यर्थः। वरुणप्रघासेषु शमीमय्यः रुआउचः प्रसिद्धाः। अवयवे तु शामीली शाखा।

---

सूत्रम्

काशिका-वृत्तिः

शिवशमरिष्टस्य करे ४।४।१४३

करोति इति करः प्रत्ययार्थः। तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः। शिवादिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः करे इत्येतस्मिन्नर्थे तातिल् प्रत्ययो भवति। शिवं करोति इति शिवतातिः। शंतातिः। अरिष्टतातिः।

---

सूत्रम्

काशिका-वृत्तिः

भावे च ४।४।१४४

भावे चार्थे छन्दसि विषये शिवादिभ्यः तातिल् प्रत्ययो भवति। शिवस्य भावः शिवतातिः। शंतातिः। श्रिष्टतातिः। यतः पूर्णो ऽवधिः। अतः परमन्यः प्रत्ययो ऽधिक्रियते। इति श्रिजयादित्यविरचितायां काशिकायां वृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः। प्रथमो भागः समाप्तः पञ्चमो ऽध्यायः प्रथमः पादः।

---

सूत्रम्

काशिका-वृत्तिः

प्राक्क्रीताच् छः ५।१।१

तेन क्रीतम् ५।१।३६ इति वक्ष्यति। प्रागेतस्मात् क्रीतसंशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामः छप्रत्ययस्तेष्वधिकृतो

वेदितव्यः। वक्ष्यति तस्मै हितम् ५।१।५ इति। वत्सेभ्यो हितः वत्सीयो गोधुक्। करभीयः उष्ट्रः। अकरभीयः। अवत्सीयः। अर्थो ऽवधित्वेन गृहीतः, न प्रत्ययः। तेन प्राक् ठञः छन्H इति नोक्तम्।

लघु-सिद्धान्त-कौमुदी

प्राक् क्रीताच्छः ११४०, ५।१।१

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते॥

न्यासः

प्राक्? क्रीताच्छः। , ५।१।१

विधिः, अधिकारः, परिभाषा वेति त्रयमत्र सम्भाव्यते। यथा चैतत्? त्रितयमपि निर्दोषम्(), तथा "प्राग्दीव्यतोऽण्()" ४।१।८३ इत्यत्र दर्शतम्()। यद्येवम्(), काशिकाकारेण कस्मान्न सूचितम्()? एकदेशानुस्मरणेन सर्वस्य सूचितत्वादित्यभिप्रायः। अथ प्रागिति कोऽयं निर्देशः, यावता प्रपूर्वस्याञ्चतेः क्विनि नलोपादिके विहिते "उगिदचाम्? ७।१।७० ति नुमि, संयोगान्तलोपे च, "क्विन्प्रत्ययस्य कुः" (८।२।६२) इति नकारस्य ङकारे प्राङिति भवितव्यम्()? अथेदृशी व्युत्पत्तिराश्रीयेत, यावता "अञ्चतेश्चोपसंख्यानम्? (वा।३३६) इति कृते ङीपि प्राच्यां दिशि वसतीति "दिक्शब्देभ्यः सप्तमी" ५।३।२७ इत्यादिना अस्तातिः, तस्य "अञ्चेर्लुक्()" ५।३।३० इति लुक्(), "लुक्तद्धितलुकि" १।२।४९ इति ङीपोऽपि "तसिलादिस्तद्धित एधाच्पर्यन्तः" इत्यव्ययत्वे "अव्ययात्()" २।४।८२ इति सोर्लुकि "न लुमताङ्गस्य" (१।१।६३) इति प्रत्ययलक्षणप्रतिषेधात्? सर्वनामस्थानाभावे नुमोऽप्यभावः, ततः कुत्वे सति प्रागिति सम्पद्यते? यस्तु मन्यते--"आद्येऽपि पक्षे क्रियाविशेषणत्वान्नपुंसकत्वम्(), क्रियाविशेषणानां यथा नपुंसकत्वम्(), कर्मभावश्च; तथा "करणे च स्तोकाल्पकृत्छ्र" २।३।३३ इत्यत्र प्रतिपादितम्(), तत्र कर्मणि द्वितीयायाः "स्वमोर्नपुंसकात्()" ७।१।२३ इति लुकि कृते पूर्ववन्नुमभावः" इति, तन्मते द्वितीयैकवचनान्तं पदं सञ्जायते। तदेवमितरस्मिन्? पक्षे "षष्ठ()तसर्थप्रत्ययेन" २।३।३० इति षष्ठ()आ भवितव्यम्(), तत्कथं "क्रातात्()" इति पञ्चमीनिर्देशः? नै तदस्ति; यावता "अन्यारादितरर्त्तेदिक्शब्दः" २।३।२९ इत्यत्रेदमुक्तम्()दिक्शब्दत्वादेव सिद्धेऽञ्चूत्तरपदग्रहणं "षष्ठ()तसर्थ" इत्यनेन प्राप्तां षष्ठीमपि बाधित्वा पञ्चम्येव यथा स्यादिति कुतः षष्ठीप्रसङ्गः। अतो व्यवस्थितमिदम्()--प्रक्? क्रीतादिति। अथ प्राग्वचनं किम्(), न "क्रीताच्छः" इत्येवोच्येत? नैतदस्ति; एवं ह्यु च्यमाने क्रीतशब्द एव प्रकृतित्वेन ज्ञायेत, ततश्च क्रीतशब्दादेव प्रत्ययः स्यात्()। तस्मात् क्रीतादित्यवधिद्योतनार्थं प्रागिति वक्तव्यम्()। तह्र्रयमर्थः "प्राग्घितात्()" ४।४।७५ इत्यतः प्रकृतेन प्राग्ग्रहणेन हि सम्बध्यते। एवं तत्रैतत्? स्यात्()--तद्धि "भवे च्छन्दसि" ४।४।१०९ इति, तेन च्छन्दोऽधिकारसय निवृत्तेः। तर्हि हि "प्राग्दीव्यतः" (४।१।८३) इत्यतः प्रकृतत्वात्? तेनापि च वहतेरित्येवमादिकं सम्बध्येत, यथा--"स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्()" (४।१।८७) इति? नैतदस्ति; एवं हि "सोमाट्ट()ण्()" ४।२।२९ इत्यादौ यत्र पञ्चमी श्रूयते तत्र सर्वत्र प्राग्वचनेन सम्बन्धे न ज्ञायते--को विधिः, का च प्रकृतिरिति स्यात्()। येषामवधित्वमिष्यते, तेषामेव प्राक्शब्दमधीतवानिति। इह तु प्रकृतेन प्राग्वचनेन सम्बध्यते। तननु च विपर्ययः कसमान्न भवति--भवनादिति प्रकृतिः स्त्रीपुंसाभ्यामित्यवधिनिर्देश इति? नैतदस्ति; अवदेरकत्वादेकवचनेन निर्देसो न्याय्यः प्रकृतिनिर्देशे तु द्वे एव प्रकृती परस्परापेक्षे इति द्विवचनमुपपद्यते। ननु च विशदमिदमुदितमप्यर्थज्ञानम्()। स्वरित लिङ्गादधिकाराणामासङ्ग इत्येतद्भवता विस्मृतम्(), तदेवम्? "सोमाट्ट()ण्()" (४।२।३०) इत्यादौ कः प्राग्वचनसम्बन्धप्रसङ्ग इति नार्थः प्राग्ग्रहणेन? सत्यमेतत्(); किन्तु स्वरितत्वास्वरितत्वख्यापनपरम्परया मन्दधियो मोहमासादयन्तीति तत्प्रतिपत्त्यर्थं प्राग्ग्रहणं कत्र्तव्यम्()। "अवत्सीयः" इति। विकल्पनात्? त्रयमत्र सम्भवति--अनुत्पन्ने प्रत्यये नञास्य सम्बन्ध इति, उत्पन्ने वा संसर्गः, उत्पत्तिकाल एवेति। तत्राद्ये पक्षे वत्सदन्यस्मै हितमितौष्टाभिधानं न प्राप्नोति। न चापि चतुर्थी; हितार्थस्य

प्रतिषिध्यमानत्वत्()। तृतीये तु पक्षे यता दोषो न भवति तथा प्रतिविधीयते। तत्र वत्सहितशब्दयोः पदान्तरनिरपेक्षयोः क्रियापदेन भवतिनानुगम्मानत्वात्(), न च ब्राआह्रसम्बन्धोऽन्तरङ्गसम्बन्धं निवत्र्तयितुं शक्नोति। अत एव न देवदत्ताय गां ददातीति सम्प्रदाने चतुर्थी भवति; कर्मणाभिप्राप्तेरन्तरङ्गत्वादिति। तथानेन च क्रमेण यत्रापि प्राप्तिर्न विद्यते, केवलं त्विच्छामात्रमेव, अत्रापि कर्मसंज्ञा प्रवर्तते, तद्यथा-ग्रामं गन्तुमिच्छामि न कश्चित्? सहायोऽस्तीति। यदप्युच्यते-असामश्र्यात्तद्धितेन न भवितव्यमिति, तदेतदप्यसारम्(); यदयम्(), "नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः" ६।२।१५५ इति तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वत्र्तमानानि पराण्यन्तोदात्तानि भवन्तीति तद्धितग्रहणमनर्थकं स्यात्()। अथ किमर्थमियानवधिरुपादीयते, न हि तत्र तावदस्य व्यापारोऽस्ति; प्रत्ययान्तरैर्बाधितत्वात्()। लघुत्वात्? "प्राक्ठञश्छः" इति वक्तव्यम्()? इत्यत आह-"अर्थोऽवधित्वेन" इत्यादि। कः पुनरर्थमवधित्वेनाङ्गीकुर्वतो गुण इति चेत्()? अयमभिप्रायः-"प्राक्ठञश्छः" इत्युच्यमाने प्राक्? ठञो याः प्रकृतयस्ताभ्यश्छो भवतीत्यर्थः स्यात्()। ततश्चाधिकारस्य प्रतियोगोपस्थानादपवादविषये छप्रत्ययः प्रसज्येत। अर्थे त्ववधित्वेनोपादीयमाने प्राक्? क्रीताद्येऽर्थास्तेषु च्छो भवतीत्ययमर्थः सम्पद्यते, ततोऽतिप्रसङ्गो न भवति। तेन समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानोऽपवादश्छं बाधते। ननु च "प्राक्? ठञः" इत्युच्यमानेऽपवादविषयेऽपि च्छो न भविष्यत्येव; ज्ञापकात्(), यदयं "विभाषा हविरपूपादिभ्यः" ५।१।४ इति विभाषाग्रहणं शास्ति; इतरथा ह्रधिकाराच्छोऽपि लभ्ध एवेति विभाषाग्रहणमनर्थकं स्यात्()? सत्यमेतत्(); किन्तु ज्ञापकद्वारेणार्थप्रतिपत्तौ सत्यां प्रतिपत्तिगौरवं स्यात्()। तस्मात्? सुखप्रतिपत्त्यर्थमर्थोऽवधित्वेनोक्तः। अन्ये पुनराहुः--गृहीत इति "आशंसायां भूतवच्य" ३।३।१३२ इत्यनेन भविष्यति निष्ठाप्रत्यय इति। तेनायमर्थः सम्पद्यते-वत्सीयादिरूपसिद्ध्यर्थमर्थमवधिं ग्रहीष्यामीति। अतः शालातुरीयेण "प्राक्? ठञश्छः" इति नोक्तम्(); अन्यथा हि प्रत्ययावधित्वे प्रतिपदोक्ता अन्तरङ्गा इत्युपात्ताभ्यः प्रकृतिभ्य एव प्रत्ययः स्यादित्याशंक्येत। अन्ये पुनरन्यथा वर्णयन्ति-"परिखया ढञ्()" ५।१।१७ इत्यत्र "छयतोः पूर्णोऽवधिः" इत्यभिधास्यति; ततश्च तेन क्रीतमिति वक्ष्यतीत्युच्यते, ततश्चेदं विरुद्धमित्याह-"अर्थोऽवधित्वेन" इत्यादि। गतार्थम्()। नैयायिक इत्याह-"क्वचिदथोऽवधित्वेन गृह्रते, यता-"आर्हात्()" ५।१।१९ "भवनात्()" ४।१।८७। इति, क्वचित्? प्रत्ययः प्राग्वहतेः--"आ च त्वात्()" ५।१।११९ इति, क्वचित्? प्रकृतिः--"आकडारात्()" १।४।१ "प्राक्कडारात्()" २।१।३ इति, क्वचिदेकदेशः--"प्राग्दीव्यतोऽण्()" ४।१।८३ इति, क्वचिन्निरवधिः प्रत्ययः--"ङ्याप्प्रातिपदिकात्()" ४।१।१ इति; तेनायमात्मनो वैचित्र्यमाचार्यो दर्शयतीत्यवसीयते" इति। अथ क्रीतशब्दादेव पूर्वेण च्छप्रत्ययो भवतीत्येवं कस्मान्न विज्ञायते, यथा-"विभाषा सुपो बहुच्? पुरस्तात्तु" (५।३।६८) इति? अनभिधानात्()। न हि क्रीतशब्दात्? पुरस्तादुत्पद्यमानेन प्रत्ययेन कस्यचिदर्थस्याभिधानमस्ति। न चापि "तेन क्रीतम्()" ५।१।३६ इति निर्देश उपपद्यते। तत्रैवमपि प्राक्? क्रीतशब्दादेव प्रत्ययो भवतीत्येव कस्मान्न विकल्प्यते? अनभिधानादेव। न हि तत उत्पन्नेन प्रत्ययेन विवक्षितोऽर्थोऽवगम्यते। अर्थान्तरं भवादिकम्(), तत्र च वृद्धलक्षणश्छ एव सिद्ध इत्यनर्थकमिदं स्यात्()। तस्मात्? प्रागुदितमेव प्रयोजनं न्याय्यम्()॥

बाल-मनोरमा

प्राक् क्रीताच्छः १६४०, ५।१।१

अथ पञ्चमाध्यायः। प्राक्क्रीताच्छः। क्रीतशब्दस्तद्घटितसूत्रपरः। तदाह--तेन क्रीतिमिति। "तेन क्रीत"मित्यतः प्राग्येषु सूत्रेषु अर्था एव निर्देक्ष्यन्ते नतु प्रत्ययाः, तेशु "छ" इत्युपस्थितं भवतीति यावत्। उगवादिभ्यो यत्। उश्च गवादयश्च इति द्वन्द्वात्पञ्चमी। उवर्णान्तादिति। प्रातिपदिकविशेषणत्वात्तदन्तविदिः। "उगिद्वर्णग्रहणवर्ज"मित्युक्तेः प्रत्ययविधावपि तदन्तविधिरिति भावः। इदमपि सूत्रं प्राक्कीताद्वक्ष्यमाणसूत्रेषु प्रत्ययविशेषाऽनुपादाने उपतिष्ठते। नाभि नभं चेति। गवादिगणसूत्रम्। नाभिशब्दो नभादेशं यत्प्रत्ययं च प्राप्नोतीत्यर्थः। नभ्योऽक्ष इति। यत्र अक्षदण्डः प्रवेश्यते

तच्चक्रमध्यगतच्छिद्रं नाभिरित्युच्यते तस्मै हितोऽक्षदण्डः। स हि अनुगुणत्वान्नाभये हितः। नभ्यमञ्जनमिति। अञ्जनं-तैलसेकः। नाभेरञ्जनेकृते तत्र प्रोतं चक्रं सुपरिवर्तनं भवतीति नाभेः परिवर्तनात्मककार्यक्षमताधायकत्वादञ्जनं नाभये हितम्। अत्र शरीरावयवविशेषवाचिनाभिशब्दो न गृह्रते। भाष्ये रथनाभेरेव ग्रहणादित्यभिप्रेत्य आह--रथनाभावेवेदममिति। शरीरावयवविशेष वाचिनाभिशब्दात्तु "शरीरावयवाद्य"दिति वक्ष्यमाणः केवलो यत्, नतु नभादेश इति भावः। शुनः संप्रसारणमिति। गवादिगणसूत्रम्। ()आन्शब्दाद्यत्स्यात्प्रकृतेः संप्रसारणं, तस्य संप्रसारणस्य पाक्षिकं दीर्घत्वमित्यर्थः। शून्यं--शुन्यमिति। शुने हितमित्यर्थः। ऊधसोऽनङ् चेति। इदमपि गणसूत्रम्। ऊधश्शब्दाद्यत्स्यात्प्रकृतेरनङादेशश्चेत्यर्थः। आदेशे ङकार इत्, नकारादकार उच्चारणार्थः, ङित्त्वादन्तादेशः।

तत्त्व-बोधिनी

प्राक्? क्रीताच्छः १२६५, ५।१।१

प्राक् क्रीताच्छः। इत्यतः प्रागिति। इहार्थोऽवधित्वेन गृह्रते, न तु प्रत्ययः, प्रकृतिर्वा। तेनाऽर्थ एवावधिमान्त इति प्राक्कीताद्येऽर्था हितादयस्तेष्वस्योपस्थानम्। अवधिसजातीयो ह्रवधिमान् भवति। यथा "मासात्परः"इति कालः प्रतीयते, "ग्रामात्पूर्वः"इति देशः, "अलोऽन्त्यात्पूर्व"इत्यलेव। एवं च समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं तक्रकौण्डिन्यन्यायेन बाधते। अन्यथा छस्य यदादेश्च संनिधानाऽविशेषत्तव्यत्तव्यानीयरामिव पर्यायः स्यात्। अतोऽत्रार्थोऽवधित्वेन गृह्रते। ननु यदादिविषये छो न भविष्यति "विभाषा हविरपूपादिभ्यः"इति विभाषागद्रहणाल्लिङ्गात्। तथा च प्रत्ययस्य प्रकृतोर्वा अवधित्वस्वीकारेऽपि न क्षतिः। उक्तज्ञापकेनोगवादिप्रभृतिभ्यश्छस्यातिप्रसङ्गनिरासादिति चेत्। अत्राहुः----एवं सतु "छः"इत्यावाधिकारोऽस्तु, नार्थोऽवधिनिर्देशेन। प्राग्वतेष्ठ"ञित्यादिके तु प्रकरणे नास्याधिकारः, अधिकारान्तरेणोपष्टब्धत्वात्। स्पष्ठप्रतिपत्त्यर्थमवधिनिर्देशः, अन्यथा प्रतिपत्तिगौरवं स्यादिति चेत्। तर्हि "विभाषा हवि"रित्यादिज्ञापकाश्रयणे प्रतिपत्तिगौरवादर्थ एवावधित्वेन निर्देष्टुमुच#इत इति। उगवादिभ्यो। उवर्णादेर्गशब्दादेर्वशब्दादेश्च यत्स्यादित्यर्थो न भवति, गवादिगणपाठात्। गवाद्यन्तर्गणसूत्राण्याह---नाभि नभं चेति। नाबिशब्दो यतं लभते, नभादेशं चेत्यर्थः। नभ्योऽक्ष इति। रथाङ्गं सच्छिद्रं---नाभिः। तदनुप्रविष्टः काष्ठविशेषोऽक्षः। स च तदनुगुणत्वात्तस्मै हितः। अञ्जनं =तैलाभ्यङ्गः, तदपि स्नेहनत्वान्नाभये हितम्। रथमाभावेवेति। शरीरावयवे तु नाभ्यमित्येव, परेण "शरीरावयवाद्य"दित्यनेनाऽस्य बाधादिति भावः। शुनःसं। शून्यमितचि। चकारस्यानुक्तसमुच्चयार्थत्वात् "नस्तद्धिते"इति टिलोपोन भवति। "ये चाभावकर्मणोः"इति प्रकृतिभावस्तु दुर्लभः, संप्रसारणे पररूपे च कृते अन्नूपाऽभावात्। दीर्घपक्षे तु तद्विधान सामथ्र्यादपि टिलोपाऽभावः सुपरिहरः। नङ् चेति। चाद्यत्। "नश्चे"ति सुवचमिति मनोरमा। अन्ये त्वाहुः----ऊधन्यशब्दात् "तत्करोति तदाचष्टे"इति णिचि "णाविष्ठव"दिति टिलोपे णिजन्तात्कर्तरि क्विपि णिलोपयलोपयोः कृतयोः "अनुनासिकस्य क्वी"ति दीर्घे ततः क्विबन्तादाचारक्विपि "ऊधानते"इत्यादावात्मने पदार्थ नङो ङित्करणमावश्यकमिति। ऊधन्य इति। "ये चे"ति प्रकृति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उगवादिभ्यो यत् ५।१।२

प्राक् क्रीतातित्येव। उवर्णान्तात् प्रातिपदिकात् गवाऽदिभ्यश्च यत् प्रत्ययो भवति प्राक्क्रीतियेष्वर्थेषु। छस्य अपवादः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। गवादिभ्यः खल्वपि गव्यम्। हविष्यम्। सनङ्गुर्नाम

चर्मविकारः। ततः परत्वात् चर्मणो ऽञ् ५।१।१५ इत्येष विधिः प्राप्नोति। तथा चरुर्नाम हविः, सक्तुरन्नविकारः। अपूपादिषु अन्नविकारेभ्यश्च इति पठ्यते। ततो विभाषा हविरपूपाऽदिभ्यश्च ५।१।३ इत्येष विधिः प्राप्नोति। तत्र सर्वत्र पूर्वविप्रतिषेधेन यत्प्रत्ययेव इष्यते, सनङ्गव्यं चर्म, चरव्यास्तण्डुलाः, सक्तव्या धानाः इति। गवादिषु नाभि नभ च इति पठ्यते। तस्य अयम् अर्थः। नाभिशब्दो यत्प्रत्ययम् उत्पादयति नभं चादेशम् आपद्यते इति। नाभये हितः नभ्यो ऽक्षः। नभ्यमञ्जनम्। यस् तु शरीरावयवाद् यत् ५।१।६ इति यति कृते, नाभये हितं नाभ्यं तैलम् इति भवितव्यम्। गवाऽदिषु यता सन्नियुक्तो नभभावो ऽत्र न भवति। गो। हविस्। वर्हिष्। खट। अष्टका। युग। मेधा। स्रक्। नाभि नभं च। शुनः सम्प्रसारणं वा च दीर्घत्वं तत्सनियोगेन चान्तोदात्तत्वम्। शुन्यं, शून्यम्। चकारस्य अनुक्तसमुच्चयार्थत्वात् नस् तद्धिते इति लोपो न स्यात्। ऊधसो ऽनङ् च। ऊधन्यः कूपः। खर। स्खद। अक्षर। विष। गवादिः।

न्यासः

उगवादिभ्यो यत्?। , ५।१।२

उगिति प्रत्याहारग्रहणं वा स्यात्? उवर्णग्रहणं वा? तत्राद्ये पक्षेऽयं वाक्यार्थो जायते-उगन्तेभ्यः प्रातिपदिकेभ्योऽवादिभ्योऽवकारादिभ्योऽवसुप्रभृतिभ्य इति। वकारादीन्? वर्जयित्वेत्यर्थः। ननु चैवं सति पञ्चम्या निर्देशः स्यात्()? नैष दोषः; "सुपां सुलुक्()" ७।१।३९ इति लुका निर्दिष्टत्वात्()। एवं तर्हि प्रातिपदिकेषु गवादिपाठसामर्थ्यात्? प्रत्याहारग्रहणं न भवति; अन्यथा हि गवादीनां पाठोऽनर्थकः स्यात्()। एतत्? सर्वं मनसि कृत्वाऽऽह-"उवर्णान्तात्()" इति। सर्वत्रग्रहणे तदन्तविधेरभ्युपगमादित्यभिप्रायः। "शङ्कव्यम्()" इति। "ओर्गुणः" ६।४।१४६ "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः। "सनङ्गुः" इत्यादि। चर्मविकारलक्षणस्याञोऽव काशाः--वाध्रम्(), वारत्रम्(), उवर्णान्तलक्षणस्य यतोऽवकाशः--शङ्कव्यम्? पिचव्यमिति; सनङ्गुर्नाम चर्मविकारः, तत्रोभयप्राप्तौ परत्वात्? "चर्मणोऽञ्()" (५।१।१५) इत्यञ्? प्राप्नोति "तथा" इत्यादि। "अन्नविकारेभ्यश्च" इति। अपूपादिलक्षणास्य प्क्षीकस्य यतोऽवकाशः--अपूप्यास्तण्डुलाः, अपूपीया इति, उवर्णान्तलक्षणस्य स एव; चरुर्नाम हविर्विशेषः; सक्तुश्चान्नविकारः, तत उभयप्रसङ्गे परत्वात्? "विभाषा हविरपूपादिभ्यः" ५।१।४ इति हविर्लक्षणोऽन्नविकारलक्षणश्च विधिः प्राप्नोति। तदेवं सनङ्गुशब्दादञ्? प्राप्तः, चरुसक्तुशब्दाभ्यां विकल्पेन यत्(), नित्यश्चेष्यते, तदर्थं पूर्वविप्रतिषेधो भाषितव्य इति। "ओर्गुणः" ६।४।१४६, "वान्तो यि प्रत्यये" ६।४।७९ इत्यवादेशः। "सनङ्गव्यम्()" इत्यादि। एतच्चेष्टवाचित्वात्? परशब्दस्य लभ्यत इत्यवगन्तव्यम्()। "गवादिषु नाबि नभञ्चेति पठ()ते" इति। अत्र कस्यचिदियमाशङ्का स्यात्()--भसंज्ञाप्रतिषेदो विधियत ति, ततश्च यस्येति लोपेन भवितव्यमित्यत आह--"नाभिशब्दो यत्प्रत्ययम्()" इति। शरीरावयवो यो नाभिशब्दस्तत्र कथं भवितव्यमित्याह--"यस्तु" इत्यादि। ततः शरीरावयवाद्यति कृते परत्वात्? "नाभ्यं तैलम्()" इति। ननु च शरीरावयवलक्षणे यति सति नभभावः कस्मान्न भवतीतियाह-"गवादिषु यता" इत्यादि। स हि गवादियता सह विहितः। तेन "सन्नियोगशिष्टानामन्यतराबाव उभयोरप्यभावः" (व्य।प।४८) इति नभभावो न भवति। "शुनः" इत्यादि। ()आन्नित्येतस्य सम्प्रसारणे कृतेऽन्नन्तताऽस्तीति "नस्तद्धिते" ६।४।१४४ इति टिलोपेन भाव्यमेवेति। एवं तर्हि सम्प्रसारणसामर्थ्यान्न भवति? नैतदस्ति; "यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्तु विदेर्निमित्तमेव नासौ बाध्यते" (व्या।पा।५६) इति तदवस्थो दोषः। दीर्घविधानसामर्थ्यादिति चेत्()? एवमपि पक्षे स्यात्()। एवं तह्र्यन्यथा व्याख्यायते। इह चकारद्वयं पठ()ते--सम्प्रसारणञ्ज, वा दीर्घत्वञ्चेति। द्वितीयश्चकारी भिन्नक्रमः सम्प्रसारणसमीपे द्रष्टव्यः। स च समुच्यार्थोऽन्यस्य समुच्चेतव्यस्याभावात्? तदेव समुच्चिनोति। तत्र सम्प्रसारणमेकेन क्रियते द्वितीयेन तद्रूपस्यैवावस्थितिरिति। "तत्सन्नियोगेन" इत्यादि। तदित्यनेन दीर्घत्वं प्रत्यवमृश्यते। तेन दीर्घत्वेन यत एवान्तोदात्तत्वं भवति; अन्यथा "यतोऽनावः" ६।१।२०७ इत्याद्युदात्तत्वं स्यात्()। "ऊधसोऽनङ्? च" इति। ऊधःशब्दस्यानङादेशो भवति, चकाराद्यच्च। "ऊधन्यः"। पूर्ववत्? प्रकृतिभावः॥

सूत्रम्

काशिका-वृत्तिः

कंवलाच् च संज्ञायाम् ५।१।३

कम्बलात् प्राक्क्रीतीयेष्वर्थेषु यत् प्रत्ययो भवति संज्ञायां विषये। छस्य अपवादः। कम्बल्यम् ऊर्णापलशतम्। संज्ञायाम् इति किम्? कम्बलीया ऊर्णा।

न्यासः

कम्बलाच्च संज्ञायाम्?। , ५।१।३

ननु "अपरिमाणविस्ताचितकम्बल्येभ्यः" ४।१।२२ इति निपातनादेव कम्बल्य इति सिध्यति कम्बल्यं हि परिंमाणविशेषः, इतरथा हि कम्बल्यशब्दस्य तत्र ग्रहणमनर्थकं स्यात्(), परिमाणविशेषस्य कम्बल्यशब्दो नामदेयम्(); अयमपि प्रत्ययः संज्ञायां विधीयमानस्तत्रैव भवति, नान्यत्र; नह्यत्र कम्बल्यशब्दः संज्ञा, तस्मान्नार्थोऽनेन? नैतदस्ति; निपातनेन हि कम्बल्यशब्दः परिमाणे साधुरित्येतावत्? प्रतीयते, न तु यदन्तोऽयमिति। ततश्चान्तस्वरितत्वं न स्यात्। तस्मात्? स्वरितत्वपरिज्ञानार्थमिदं कत्र्तव्यम्()। अनन्तरश्रुतस्य यतोऽनुकर्षणार्थश्चकारः। ननु स्वरितत्वादेव यद्भविष्यति? छोऽपि तर्हि स्यात्()। ननु च च्छस्य सन्निधाने प्रकृतिमात्राच्छ उक्त इति नियमार्थमिदं स्यात्(), तच्चानिष्टम्(), यत्? पुनर्नियतविषय इति तत्सम्बन्धे विध्यर्थता, विधिनियमयोश्च विधेरेव ज्यायान्()? नैतदस्ति; छस्यापि सम्बन्धे विध्यर्थता सम्भवति। कथं संज्ञायामित्युच्यते, संज्ञा चानुपात्तावयवार्थापि भति, तत्रानवयवार्थानामप्राक्क्रीतीयत्वाद्धिताद्यर्थाभावे छप्रत्ययार्थमेतत्? स्यात्(), तस्माच्चकरो यत्प्रतययानुकर्षणार्थः कत्र्तव्यः? न कर्तव्यः; इष्टतोऽप्यधिकाराणां प्रवृत्तिनिवृत्ती भवत इति यत एवानुवृत्तिर्भविष्यति, न तु च्छस्य। एवं तर्हि चकार उगवादिभ्य इत्यनुकर्षणार्थः। किमर्थमिदम्()? सनङ्ग्वादिभ्यः परत्वादञादयः प्राप्नुवन्ति तद्बाधनार्थमिति। अथ गवादिष्वेव "कम्बलाच्च संज्ञायाम्()" इति कस्मान्न पठति? तत्र पाठे न कश्चिद्गुरुलाघवकृतो विशेष इति यत्किञ्चिदेतदिति॥

बाल-मनोरमा

कम्बलाच्च संज्ञायाम् १६४१, ५।१।३

कम्बलाच्च। कम्बलशब्दाद्यत्स्यात्प्राक्कीतीयेष्वर्थेषु संज्ञायामित्यर्थः। कम्बल्यमूर्णापलशमिति। कम्बलाय हितमित्यर्थः।

तत्त्व-बोधिनी

कम्बलाच्च संज्ञायाम् १२६६, ५।१।३

कम्बलाच्च संज्ञायाम्। प्राक्क्()रीतीयेष्वर्थेषु यत्स्यात्। छस्यापवादः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा हविरपूपाऽदिभ्यः ५।१।४

हविर्विशेषवाचिभ्यो ऽपूपाऽदिभ्यश्च प्रातिपदिकेभ्यः प्रक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति। आमिक्ष्यं दधि, आमिक्षीयं दधि। पुरोडाश्यास्तण्डुलाः, पूरोडाशीयाः। हविश्शब्दात् तु गवादिषु पठान् नित्यम् एव भवति। अपूपादिभ्यः

अपूप्यम्, अपूपीयम्। तण्डुल्यम्, तण्डुलीयम्। अपूप। तण्डुल। अभ्यूष। अभ्योष। पृथुक। अभ्येष। अर्गल। मुसल। सूप। कटक। कर्णवेष्टक। किण्व। अन्नविकारेभ्यः। पूप। स्थूणा। पीप। अश्व। पत्र। अपूपादिः।

न्यासः

विभाषा हविरपूपादिभ्यः। , ५।१।४

हविःशब्दो गवादिषु पठ()ते, तेन तस्मान्नित्यं यता भवितव्यम्()। अत्र हविर्विशेषाणां ग्रहणम्(), नस्वरूपस्येति; उगवादिसूत्रे स्वरूपपरिभाषाया उपस्थानात्()। न हि तत्र सोपतिष्ठमाना केनचिनिं()नवार्यते, तेन स्वरूपस्यैव ग्रहणम्()। तत्र स्वरूपग्रहणे सतीह स्वरूपपरिभाषा नोपतिष्ठते; अन्यथा हि यद्यत्रापि स्वरूपग्रहणं स्यात्(), ततः स्वतन्त्र एकस्मात्? शब्दात्? नित्यश्च यतो विधिः स्यादनित्यश्चेत्युभयमेकत्र नोपपद्यत इति न भवति विपर्ययः। अथ वा-हविःशब्दस्येहि पृथगुपादानादर्थप्रधानत्वमवसीयते, अन्यथा ह्यपूपादिष्वेव पठेदिति। "अन्नविकारेभ्यश्च" इति। अन्नविकारः=अन्नप्रकाराः, ते च प्रतययमुत्पादयन्ति विभाषा-उदन्याः, उदनीया इति। यद्येवम्(), अपूपादीनां किण्वपर्यन्तानामत्र विकारत्वादेव सिद्धत्वात्? पाठोऽनर्थको जायते? यदा तर्हि केनचिदाकारसादृश्येनापूपादयोऽर्थान्तरे उपचर्यन्ते, तदर्थमेषां पाठः। किञ्चान्नविकारग्रहणेनापूपादिषु प्रत्यमिच्छत इहापि स्यात्()--यवापूपाः, व्रीहितण्डुला इति। प्रतिपदपाठे तु ग्रहणवत्त्वात्? तदन्दविधिः पर्युदस्तो भवति। ननु च "असमासे निष्कादिभ्यः" ५।१।२० इत्यसमासग्रहणाद्भवितव्यमेवात्र तदन्तविधिना, एतेनासमासग्रहणेन पूर्वत्र तदन्तविधिरस्तीत्येषोऽर्थः प्रतिपाद्यते? सत्यमेतत्(); अपूपादिषु प्रतिपदपाठसामर्थ्यान्न भविष्यति॥

बाल-मनोरमा

विभाषा हविरपूपादिभ्यः १६४२, ५।१।४

विभाषा हविः। हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु यद्वा स्यादित्यर्थः। पक्षे छः। आमिक्ष्यं दधीति। आमिक्षायै हितमित्यर्थः। तप्ते पयसि दध्नि निक्षिप्ते सति यद्घनीभूतं निष्पद्यते सा आमिक्षेत्युच्यते।

तत्त्व-बोधिनी

विभाषा हविरपूपादिभ्यः १२६७, ५।१।४

विभाषा हविरपूपादिभ्यः। गवादिषु हविःशब्दस्य पाठादिह हविविशेषणां ग्रहणम्। न च गवादिष्वेव हविर्विशेषणां ग्रहणं किं न स्यादिति वाच्यम्, असंजातविरो()धित्वेन तत्र स्वरूपग्रहणस्य न्याय्यत्वात्। अपूप्यमिति। अपूपेभ्यो हितं चूर्णमित्यर्थः। अपूप, तण्डुल, पृथक्, मुसल, कर्णवेष्टकेत्याद्यपूपादिगणे अन्नविकारेभ्येश्चेति पठ()ते। अन्नविकाराः=अन्नप्रकारा अदनीयविशेषास्तेभ्यो यद्वा स्यादिति तदर्थः। आदन्या ओदनीयास्तण्डुलाः। एवं चानेनैव गणसूत्रेण सिद्धे अपूपादीनां केषाचिद्गणे पाठः प्रपञ्चार्थः।

---

सूत्रम्

काशिका-वृत्तिः

तस्मै हितम् ५।१।५

तस्मै इति चतुर्थीसमर्थाद् हतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। वत्सेभ्यो हितो गोधुक् वत्सीयः। अवत्सीयः। पटव्यम्। गव्यम्। हविष्यम्। अपूप्यम्। अपूपीयम्।

लघु-सिद्धान्त-कौमुदी

उगवादिभ्यो यत् ११४२, ५।१।५

प्राक् क्रीतादित्येव। उवर्णान्ताद्गवादिभ्यश्च यत् स्यात्। छस्यापवादः। शङ्कवे हितं शङ्कव्यं दारु। गव्यम्। (नाभि नभं च)। नभ्योऽक्षः। नभ्यमञ्जनम्॥तस्मै हितम्॥ वत्सेभ्यो हितो वत्सीयो गोधुक्॥

न्यासः

तस्यै हितम्?। , ५।१।५

एतदेव ज्ञापकम्()-हितयोगे चतुथ्र्यस्तीति। तेन यदुक्तम्()-"हितयोगे चतुर्थी वक्तव्या" (वा। १२३) इत्येतदुपपननं भवति॥

बाल-मनोरमा

तस्मै हितम् १६४३, ५।१।५

तस्मै हितम्। असमिन्नर्थे चतुथ्र्यन्ताद्यथाविहितं प्रत्ययाः स्युः। वत्सीय इति। छे रूपम्। यो गोधुग्वत्सेभ्यः पयः शिष्ट्वा दोग्धि स एवमुच्यते। शङ्कव्यमिति। शङ्कवे हितमित्यर्थः। उवर्णान्तत्वाद्यत्। गव्यमिति। गोभ्यो हितं तृणादिकमित्यर्थः। गवादिलक्षणो यत्। हविष्यमिति। हविषे हितमित्यर्थः। हविःशब्दो गवादिः। "विभाषा हवि"रित्यत्र तु हविर्विशेषवाचिनामेव ग्रहणं, व्याख्यानात्।

तत्त्व-बोधिनी

तस्मै हितम् १२६८, ५।१।५

"हविरपूपादिभ्यो विभाषाया उगवादिभ्यो यत्पूर्वविप्रतिषेधेन"। सक्तव्या धानाः। चरव्यास्तण्डुलाः। चरुर्नाम हविरिति काशिका। स्थालीवचनस्य चरुशब्दस्य तत्रत्ये हविषि उपचाराद्वृत्तिरिति कैयटादयः।

---

सूत्रम्

काशिका-वृत्तिः

शरीरावयवाद् यत् ५।१।६

शरीर प्राणिकायः। शरीरावयववाचिनः प्रातिपदिकात् यत् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् विषये। छस्य अपवादः। दन्त्यम्। कण्ठ्यम्। ओष्ठ्यम्। नाभ्यम्। नस्यम्।

लघु-सिद्धान्त-कौमुदी

शरीरावयवाद्यत् ११४३, ५।१।६

दन्त्यम्। कण्ठ्यम्। नस्यम्॥

न्यासः

शरीरावयवाद्यत्?। , ५।१।६

शीर्यत इति शरीरम्(), तेन घटादेरपि ग्रहणं भविष्यतीत्यत आह--"शरीरं प्राणिकायः" इति। एतेन रूढिरियमिति दर्शयति। गवादावेति शरीरावयववाचिनः। तत्र तु याः प्रकृतयस्ताभ्योऽनेनापि पूर्वेणापि वा यति विशे षो नास्त्येव। यत्र विशेषः--"नाभि नभञ्च" (ग।सू।१०६) इति, स विशेषस्तत्रैव वेदितव्य एव॥

बाल-मनोरमा

शरीरावयवाद्यत् १६४४, ५।१।६

शरीरावयवाद्यत्। शरीरावयवविशेषवाचकाच्चतुर्थ्यन्ताद्धितमित्यर्थे यत्स्यादित्यर्थः। छस्यापवादः।

नस्यमिति। नासिकायै हितमित्यर्थः। "पद्दन्" इति नस्, प्रभृतिग्रहणमस्य प्रकारार्थत्वात्। भाष्ये तु "नासिकाया यत्-तस्-क्षुद्रेषु नस्" इति पठितम्। नाभ्यमिति। नाभये हितमित्यर्थः। नाभिरत्र शरीरावयवः। रथावयवत्वे तु नभादेश उक्तः।

तत्त्व-बोधिनी

शरीरावयवाद्यत १२६९, ५।१।६

नस्यमिति। नासिकायै हितम्। "नासिकायां भव"मिति विग्रहे तु "शरीरैवयवाच्चे"ति यत्। नस्यम्। तस्युदाहरणं---नस्तः। "अपादाने चाहीयरुहो"रिति तसिः। क्षुद्रे तु--नासिकायाः क्षुद्रो नःक्षुद्रः। "सुप्सुपे"ति समासः। नाभ्यमिति। "नाभि नभं चे"ति नभादेशो रथनाभावेव प्रवर्तते, तस्य गवादियता संनियोगशिष्टत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

खलयवमाषतिलवृषब्रह्मणश् च ५।१।७

खलाऽदिभ्यो यत् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् विषये। छस्य अपवादः। खलाय हितम् खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृष्यम्। ब्रह्मण्यम्। वृष्णे हितम्, ब्राह्मणेभ्यो हितम् इति वाक्यम् एव भवति। छप्रत्ययो ऽपि न भवति, अनभिधानात्। चकारो ऽनुक्तसमुच्चयार्थः। रथाय हिता रथ्या।

न्यासः

खलयवमाषतिलवृषब्राह्णश्च। , ५।१।७

खलादीनां वृषपर्यन्तानां "यस्येति" ६।४।१४८ लोपः। "ब्राह्ण्यम्()" इति। "न संयोगाद्वमन्तात्()" (६।४।१३७) इति प्रतिषेधात्? "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपो न भवति। "नस्तद्धिते" ६।४।१४४ इति टिलोपोऽपि न भवित; "ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिभावात्()। वृषशब्दोऽयमत्राकारान्तो गृह्त्ते, न तु ब्राआह्णशब्दोऽकारान्त इति। ननु चाशङ्का वृषशब्दे युक्ता-नलोपे सति किमयमकारान्तः? आहोस्विन्नकारान्तः? इति, ब्राह्न्शब्दाच्च यतो निवृत्तिप्रसङ्गाद्? ब्राह्न्शब्दादपि यचच प्रत्ययो निवत्र्तत इति भावः। अत एवाह--"छप्रत्ययोऽपि" इत्यादि। यत्प्रत्ययापेक्षयापिरयम्()--न केवलं यत्प्रत्ययो न भवति, अपि तु च्छप्रत्ययोऽपीति। ब्राआह्णशब्दाच्छप्रत्ययाभावो योज्यः। ननु चाभ्यामिहानुपादनाद्? यत्प्रत्ययो न भवति, "तस्मै हितम्()" (५।१।५) इति च्छप्रत्ययस्तु कस्मान्न भवति? इत्याह-"अनभिधानात्()" इति। न हीह वृषीयम्(), ब्राआह्णीयमित्युक्ते विवक्षितोऽर्थः प्रतीयते; यतोऽर्थप्रतिपादनं प्रति नियता एव शब्दशक्तयो भवन्तीति क्वचित्? प्रत्ययान्तेनार्थस्याभिधानम्()ष क्वचिद्वाक्येनेति। अतो वाक्यमेवावतिष्ठते-"वृष्णे हितम्(), ब्राआह्णेभ्यो हितम्()" इति। वाक्यसमधिगम्यस्यार्थस्य तद्धितेनानभिधानादितदि यावत्()॥

बाल-मनोरमा

खलयवमाषतिलवृषब्राह्णश्च १६४६, ५।१।७

खलयव। खलादिभ्यश्चतुर्थ्यन्तेभ्यो हितमित्यर्थे यत्स्यादित्यर्थः। वृषशब्दोऽत्र अकारान्त एव गृह्यते, नतु नकारान्तः। तेन "वृष्णे हित"मिति वाक्यमेव। ब्राह्मन्शब्दो ब्राआहृणवाच्येव गृह्यते, नतु वेदादिवाची। तेन "ब्राह्मणे वेदाय हित"मिति वाक्यमेवेति भाष्ये स्पष्टम्। ब्राह्मण्यमित्यत्र "ये चाभावकर्मणो"रिति प्रकृतिभावान्न टिलोपः। चाद्रथ्येति। चकारस्यानुक्तसमुच्चयार्थत्वादिति भावः।

तत्त्व-बोधिनी

खलयवमाषतिलवृषब्राह्मणश्च १२७१, ५।१।७

खलयव। अत्र वृषशब्दोऽकारान्तो गृह्यते न तु नकारान्तः। अन्यथा ह्रसदेहार्थं नलोपमकृत्वै निर्दिशेत्, "आत्मन्वि()आजने"ति वत्। वृषाय हितं वृष्यम्। नान्ताद्यति तु ----वृषण्यमिति स्यात्। ब्राह्मण्यमिति। ब्राह्मन्शब्दो ब्राआहृणपर्यायः। प्रकृतिभावस्तु "ये चे"त्यनेन पूर्ववत्। इह वृषन्शब्दाद्ब्राह्मणशब्दाच्च यतः प्राप्तिरेव नास्ति। छेऽप्यनभिधानान्नेत्याकरः। तेन---वृष्णे हितं , ब्राआहृणेभ्यो हितमिति वाक्यमेव। चाद्रथ्येत। गवादिषुरथशब्दो न पठितः। हितार्थ एव रथ्येति स्यात्, अर्थान्तरे मा भूदिति।

---

सूत्रम्

काशिका-वृत्तिः

अजाविभ्यां थ्यन् ५।१।८

अज अवि इत्येताभ्यां थ्यन् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् विषये। छस्य अपवादः। अजथ्या यूथिः। अविथ्या।

न्यासः

अजाविभ्यां थ्यन्?। , ५।१।८

अजशब्दोऽयमिह पुंल्लिङ्ग उपात्तः; अविशब्दस्य ध्यन्तशब्दस्यापूर्वनिपातात्()। आबन्तस्य ग्रहणे ह्यदिशब्दस्य पूर्वनिपातः स्यात्। अदन्तस्य ग्रहणे "द्वन्द्वे घि" (२।२।३२) इत्येतस्य बाधितत्वात्? "अजाद्यदन्तम्()" २।२।३३ इत्यजब्दस्य पूर्वनिपातो युज्यते। तस्मात्? पुंल्लिङ्गस्य ग्रहणम्()। तथा व "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति" (व्या।प।२९) इति स्त्रीलिङ्गादपि प्रत्ययो भवत्येव-अजाभ्यो हितमजथ्यम्()। "तसिलादिष्वाकृत्वसुचः" ६।३।३४ इति पुंवद्भावः। परिसंख्यायन्ते हि तत्र तसिलादयः, तेषाञ्च मध्ये परिसंख्यातौ --------ग्रहणे शब्दान्तरतवादिकरान्तात् पुंल्लिङ्गान्न स्यात्()॥

बाल-मनोरमा

अजाविभ्यां थ्यन् १६४७, ५।१।८

अजाविभ्यां थ्यन्। अजश्च अविश्चेति द्वन्द्वः। अविशब्दस्य घित्वेऽपि "अजाद्यदन्त"मित्यजशब्दस्य पूर्वनिपातः। अजथ्या यूथिरिति। अजेभ्योऽजाभ्यो वा हितेत्यर्थः। लिङ्गविशिष्यपरिभाषा अजाशब्दादपि थ्यन्। "तसिलादिष्वि"ति पुंवत्त्वम्। अविथ्येति। अविभ्यो हितेत्यर्थः। स्त्रीत्वं लोकात्।

तत्त्व-बोधिनी

अजाविभ्यां थ्यन् १२७२, ५।१।८

अजादिभ्याम्। अजशब्द इह पुंलिङ्ग उपात्तः। अतएव "द्वन्द्वे घी"त्यविशब्दस्य पूर्वनिपातं बाधित्वा "अजाद्यदन्त"मिति

अजशब्दस्य पूर्वनिपातः कृतः। "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापी"ति स्त्रीलिङ्गादपि थ्यन्। तसिलादिषु थ्यनः परिगणनात्पुंवद्भावे रूपं तुल्यम्। अजथ्येति। अजेभ्यो आजाङ्यो वा हितेति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

आत्मन्विश्वजनभोगोत्तरपदात् खः ५।१।९

आत्मन् विश्वजन इत्येताभ्यां भोगोत्तरपदाच् च प्रातिपदिकात् खः प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् विषये। छस्य अपवादः। आत्मन्निति नलोपो न कृतः प्रकृतिपरिमाणज्ञापनार्थम्। तेन उत्तरपदग्रहणम् भोगशब्देन एव सम्बध्यते, न तु प्रत्येकम्। आत्मने हितम् आत्मनीनम्। आत्माध्वानौ खे ६।४।१६९ इति प्रकृतिभावः। विश्वजनेभ्यो हितम् विश्वजनीनम्। कर्मधारयादेव इष्यते। षष्ठीसमासाद् बहुव्रीहेश्च छ एव भवति। विश्वजनाय हितम् विश्वजनीयम्। पञ्चजनादुपसङ्ख्यानम्। पञ्चजनाच् च खः। अत्र अपि कर्मधारयादिष्यते। पञ्चजनीनम्। अन्यत्र पञ्चजनीयम्। सर्वजानाट् ठञ् खश्च। सार्वजनिकम्, सर्वजनीनम्। अत्र अपि कर्मधारयादेव। सर्वजनीयम् अन्यत्र। महाजनान्नित्यं ठञ् वक्तव्यः। महाजनाय हितम् माहाजनिकम्। तत्पुरुषादेव। बहुव्रीहेस् तु छ एव भवति। महाजनीयम्। भोगोत्तरपदात् खल्वपि मातृभोगीणः। पितृभोगीणः। भोगशब्दः शरीरवाची। केवलेभ्यो मात्रादिभ्यः छ एव भवति। मात्रीयम्। पितिरियम्। राजाचार्याभ्यां तु नित्यम्। भोगोत्तरपदाभ्यम् एव खः प्रत्ययः इष्यते, न केवलाभ्याम्। राजभोगीनः। आचार्यादणत्वं च। आचार्यभोगीनः। केवलाभ्यां वाक्यम् एव भवति, राज्ञे हितम्, आचार्याय हितम् इति।

लघु-सिद्धान्त-कौमुदी

आत्मन्विश्वजनभोगोत्तरपदात्खः ११४४, ५।१।९

न्यासः

आत्मन्वि�आजनबोगोत्तरपदात्? खः।, ५।१।९

अयात्मन्नित्यत्र नलोपः कस्मान्न कृतः, यावता द्वन्द्वेनायं निर्देशः क्रियते, तत्र "नलोपः प्रातिपदिकान्तस्य" (८।२।७) इति नलोपः प्राप्नोति? इत्यत आह-"आत्मन्()" इत्यादि। आत्मन्नित्येव भवत्येषा प्राकृतिरिति ज्ञापनार्थं नलोपो न कृतः। कः पुनरेवं सति विशेषः? इत्याह-"तेन" इत्यादि। गतार्थम्()। यद्येवम्(), वि()आजनशब्देन हुत्तरपदस्य सम्बन्धः प्राप्नोति? एवं मन्यते-आत्मन्निति नलोपाबावेन प्रत्येकं वाक्यपरिसमाप्तेव्र्यभिचारस्य दर्शितत्वात्? ततः प्रत्यासतेर्भोगशब्देनैव सम्बध्यते, न तु वि()आजनशब्देनेति नासति दोषः। "कर्मधारयादेवेष्यते" इति। वार्यपारम्पर्योपदेशात्()। विभावाग्रहणानुवृत्तेव्र्यवस्थितविबाषाविज्ञानाद्वेदं वेदितव्यम्()। वि()आस्य जनो वि()आजनः, वि()आओ जनोऽस्येति वि()आजन इति समासेन भवितव्यम्()। यथा खो न भवति तथा च्छोऽपि न भवतीत्याशङ्क्याह-"बहुव्रीहिस्तु" इत्यादि। "उपसंख्यानम्()" इति। प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()-इह हि भोगसमासादिति वाक्तव्ये उत्तरपदग्रहणमधिकविधानार्थम्()। न चैवं सति बहुपूर्वादीषदसमाप्तौ भोगो बहुभोग इत्यस्मात्? खः स्यादित्याशङ्कनीयम्(); बहुच्प्रच्प्रत्ययस्य समासाबावात्()। ततोऽत्रि छेनैव भवितव्यम्()--बहुभोगीय इति। तेन पञ्चजनादपि भविष्यति। संज्ञाशब्दश्चायम्(); "दिक्संख्ये संज्ञायाम्()" २।१।४९ इति समासः। तथा सर्वजनादपि वेदितव्यः। "तत्पुरुषादेव" इति। विशेषानभिधानेऽपि महाजनादिति निर्देशादेव समानाधिकरणादेव भोगशब्दोऽयं भावसाधनः--भुक्तिर्भोग इति, कर्मसाधनो वा--भुज्यत इति भोग इति। अयमव्युत्पन्नः शरीरवाचीस, तस्येह ग्रहणमित्याह--"भोगशब्दः" इत्यादि। भोगशब्दः शरीरमेव प्रतिपादयतीत्यर्थः। यत्र वत्र्तमानोऽयं साक्षात्?

सम्बन्धमाह, तत्रैव खप्रत्ययमासादयति। वत्र्तते च क्रियायां द्रव्ये च। तथा हि--यद्यपि भुजिक्रियया द्रव्येण च सम्बन्धोऽस्ति, तथापि शरीरेण मुख्यः सम्बन्ध इति ततो भवति प्रत्ययः। यथा राजाचार्याभ्यां वाक्यमेव भवति, तथेहापि भवितव्यामिति यश्चोदयेत्(), तं प्रत्याह--"आचार्यादणत्वम्()" इति। क्षुभ्नादिपाठात्()। "केवलाभ्यां वाक्यमेव भवत#इ" इति। छप्रत्ययो न भवति, अनर्भिधानादेव॥

बाल-मनोरमा

आत्मन्वि�आजनभोगोत्तरपदात्खः १६४८, ५।१।९

आत्मन्वि()आजन। अत्मजन्, वि()आजन, भोगोत्तरपद-एभ्यो हितमित्यर्थे खः स्यादित्यर्थः। "आत्मनीन"मित्युदाहरणं वक्ष्यति।

---

सूत्रम्

काशिका-वृत्तिः

सर्वपुरुषाभ्यां णढञौ ५।१।१०

सर्वपुरुषाभ्यां यथासङ्ख्यं णडञौ प्रत्ययौ भवतः तस्मै हितम् इत्येतस्मिन् विषये। छस्य अपवादः। सर्वस्मै हितम् सार्वम्। पौरुषेयम्। सर्वाण्णस्य वा वचनम्। सार्वम्, सर्वीयम्। पुरुषाद्वधविकारसमूहतेन कृतेष्विति वक्तव्यम्। पौरुषेयो वधः, पौरुषेयो विकारः, पौरुषेयः समूहो वा। तेन कृते पौरुषेयो ग्रन्थः।

न्यासः

सर्वपुरुषाभ्यां णढञञौ। , ५।१।१०

"सर्वाण्णस्य वावचनम्()" इति। अभिधानेऽभिधेयोपचाराद्वेति विकल्प्माह। इहापि विभाषाग्रहणानुवृत्तेरेव वेदितव्यम्()। न च सर्वपुरुषाभ्यां विकल्प आशङ्का; व्यवस्थितविभाषात्वात्()। "पुरुषाद्वध" इति। तत्र वधे--"तस्येदम्()" ४।३।१२० इत्यणोऽपवादः, विकारे--"प्राणिरजतादिब्योऽञ्()" ४।३।१५२ इत्यञः, समूहेऽपि--"तस्य समूहः" ४।२।३६ इत्यणः। "तेन कृते ग्रन्थे" ["कृते ग्रन्थे" इत्येव पाणिनीयं सूत्रम्()] ४।३।११६ इत्यण एव॥

बाल-मनोरमा

सर्वपुरुषाभ्यां णढञौ १६५०, ५।१।१०

सर्वपुरुषाभ्याम्। सर्व, पुरुष आभ्यां चतुश्र्यन्ताभ्यां क्रमाण्णढञौ स्तो हितमित्यर्थे इत्यर्थः।

सर्वाण्ण इति। अत्र सर्वशब्दस्य स्वरूपपरत्वान्न सर्वनामकार्यम्।

पुरुषाद्वधेति। वार्तिकमिदम्। पुरुषशब्दाद्वधादिष्वेवार्थेषु ढञ्स्यात्, न हितार्थे इत्यर्थः। ननु "तेन कृत"मिति समुदायस्य असुबन्तत्वात्कथं समासे निवेश इत्यत आह--भाष्येति। अणि प्राप्ते इति। "अनेन ढ"ञिति शेषः। प्राणीति। रजतादित्यादञि प्राप्ते अनेन ढञित्यर्थः। समूहेऽप्यणि प्राप्ते इति। पुरुषाणां समूह इत्यर्थे "तस्य समूहः" इत्यणि प्राप्ते अनेन ढञित्यर्थः। पौरुषेयवृता इवेति। पुरुषसमूहवृता इवेत्यर्थः। परित आदर्शप्रतिफलनादिति भावः। तेन कृते इति। पुरुषेण कृतो ग्रन्थ इत्यर्थे "कृते ग्रन्थे" इत्यणि प्राप्ते, "पुरुषेण कृतः प्रासाद" इत्यर्थे तु कस्मिन्नपि प्रत्यये अप्राप्ते अनेन ढञित्यर्थः। माणव। आभ्यां चतुश्र्यन्ताभ्यां हितमित्यर्थे खञ्स्यादित्यर्थः।

तत्त्व-बोधिनी

सर्वपुरुषाभ्यां णढञौ १२७४, ५।१।१०

सर्वपुरुषाभ्याम्। आभ्यां शब्दाभ्यां यथासङ्ख्यं णढञौ स्तस्तस्मै हितमित्यर्थे, "प्राक्क्रीता"दिति छस्यापवाद इति सूत्रार्थः।

सर्वाण्णो वेति वक्तव्यम्। सर्वादिति। अनुकरणत्वात्सर्वनामकार्याऽभावः।

पुरुषाद्वधविकारसमूहतेनकृतेषु। पुरुषाद्वधविकारेति। योग्यताबलादिह षष्ठी समर्थविभक्तिर्लभ्यते, "तेन कृते"त्यत्र थु उपात्तैव तृतीया। तदाह----पुरुषस्य वध इति। समूहेऽप्यणीति। "तस्य समूहः"इत्यनेन। ग्रन्थेऽणीति। "कृते ग्रन्थे "इत्यनेन। अप्राप्ते इति। "पौरुषेयः प्रासाद"इत्यादौ न कस्याप्यपवादोऽयं ढञिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

माणवचरकाभ्यां खञ् ५।१।११

माणवचरकशब्दाभ्यां खञ् प्रत्ययो भवति तस्मै हितम् इत्येतस्मिन् विषये। छस्य अपवादः। माणवाय हितम् माणवीनम्। चारकीणम्।

न्यासः

माणवचरकाभ्यां खञ्?। , ५।१।११

उभयस्मिन्? ञित्करणं स्वरार्थम्()। चरके वृद्ध्यर्थं च। माणवे तु "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" ६।३।३८ इति पुंवद्भावप्रतिषेधार्थम्()। माणवीना बार्या यस्य स माणवीनाभार्य इति॥

बाल-मनोरमा

माणवचरकाभ्यां खञ् १६५१, ५।१।११

माणवीनमिति। मनोः कुत्सितमपत्यं माणवः। "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकोऽण्स्मृतः। नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः" इत्यपत्याधिकारवार्तिकात्। माणवाय हितमिति विग्रहः। चारकीणमिति चरतीति चरः। पचाद्यच्। ततः स्वार्थिकः कः। [चरकाः]। चरकाय हितमिति विग्रहः।

तत्त्व-बोधिनी

माणवचरकाभ्यां खञ् १२७५, ५।१।११

माणव। खञो ञित्करणं वृद्ध्यर्थं स्वरार्थं च। यद्यपि माणवे वृद्धिः स्वतः सिद्धैव, तथापि "माणविनाभार्य"इत्यत्र "वृद्धिनिमित्तस्य चे"ति पुंवद्भावप्रतिषेधार्थमिति ज्ञेयम्। माणवायेति। मनोः कुत्सितमपत्यं माणवः। "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेन सिद्यति माणवः"इत्यपत्याधिकारस्थवार्तिकाण्णत्वम्, तच्च वार्तिकमेतत्सूत्रस्थनिर्देशसिद्धार्थकथनपरमित्याहुः। चारकीणमिति। चरतीति चरः। पचाद्यच्। "चरिचलिपतिवदीना"मिति द्विर्वचनं विकल्पितत्वादिह नभवति। ततः संज्ञायां कनि---चरकः।

---

सूत्रम्

काशिका-वृत्तिः

तदर्थं विकृतेः प्रकृतौ ५।१।१२

प्रकृतिः उपादानकारणं, तस्य एव उत्तरम् अवस्थान्तरं विकृतिः। विकृतिवाचिनः प्रातिपादिकात् प्रकृतावभिधेयायां यथाविहितं प्रत्ययो भवति। तदर्थम् इति प्रत्ययार्थविशेषणम्। तदिति सर्वनाम्ना विकृतिः परामृश्यते। विकृत्यर्थायां प्रकृतौ प्रत्ययः। तदर्थग्रहणेन प्रकृतेरनन्यार्थता आख्यायते। न प्रकृतिविकारसम्भवम् आत्रे प्रत्ययः, किं तर्हि, प्रकृतेरनन्यार्थत्वे विवक्षिते। प्रत्ययार्थस्य च तदर्थत्वे सति सामर्थ्याल् लभ्या चतुर्थी समर्थविभक्तिः। केचित् तु तस्मै हितम् ५।१।५ इत्यनुवर्तयन्ति। अङ्गारेभ्यो हितानि एतानि काष्ठानि अङ्गारीयाणि काष्ठानि। प्राकारीया इष्टकाः। शङ्कव्यं दारु। पिचव्यः कार्पासः। तदर्थम् इति किम्? यवानां धानाः। धानानां सक्तवः। प्रकृत्यन्तरनिवृत्तिरत्र विवक्षिता न तादर्थ्यम् धानानां सक्तवः, न लाजानाम् इति। विकृतेः इति किम्? उदकार्थः कूपः। विकृतिग्रहणे ऽक्रियमाणे या काचित् प्रक्रितिर् गृह्यते, न उपादानकारणम् एव। भवति च कूप उदकस्य प्रकृतिः, तत्र उत्पादनात्। न तु उदकं तस्यः विकृतिः, अत्यन्तभेदात् प्रकृतौ इति किम्? अस्यर्था कोशी। असिरयसो विकृतिर् भवति, न तु कोशी तस्य प्रकृतिर् भवति। द्वयोरपि प्रकृतिविकृत्योर् ग्रहणे विवक्षितः प्रकृतिविकारभावो लभ्यते।

न्यासः

तदर्थं विकृतेः प्रकृतौ। , ५।१।१२

तस्मै इदं तदर्थम्(), "चतुर्थी तदर्थ" २।१।३५ इत्यादिना समासः। एतदेव वचनं ज्ञापकम्()--अर्थोत्तरपदे समासे समुदायार्थस्य लिङ्गं भवति, न च परवल्लिङ्गतेतिं। एतेन यदुक्तं--"अर्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या" (वा।७८) इति सा सिद्धा भवति। "प्रकृतिरुपादानकारणम्()" इति। समानजातीयमभिन्नसन्तानवृत्ति कारणमुपादनकारणमित्युच्यते। उपादीयत इत्युपादानम्(), बहुलवचनात्? कर्मणि ल्युट्(), तस्य कारणमिति षष्ठीसमासः। "तस्यैव व" इत्यादि। तस्यैवोपादानकारणस्योत्तरभाव्यस्थाविशेषो विकृतिः। "विकृतिवाचिनः" इत्यादि। ननु च "समर्थानां प्रथमाद्वा" (४।१।८२) इति वचनात्तदर्थमिति प्रथमं निर्दिष्टत्वात्? प्रकृतेश्च तदर्थत्वात्? तद्वाचिन एव प्रत्ययः प्राप्नोति? नैष दोषः; प्रथमस्य चाप्रथमस्य च कार्यप्राप्तौ प्रथमादेव यथा स्यादित्येवमर्थं प्रथमग्रहणं नियमार्थं कृतम्()। इह तु प्रथमात्? प्राप्तिरेव नास्ति। "प्रकृतौ" इति। सप्तम्या प्रकृतेः प्रत्ययार्थत्वेन सम्पादितत्वात्()। "विकृतेः" इति। पञ्चम्या विकृतेः प्रकृतित्वेन तस्मान्नायमस्य विषय इति विकृतिवाचिन एव प्रत्ययो भवति। "विकृत्यर्थायाम्()" इति। अनेन तदर्थमित्यत्र सुब्व्यत्ययेन सप्तम्याः स्थाने प्रथमा, लिङ्गव्यत्ययेन च स्त्रीलिङ्गस्य स्थाने नपुंसकलिङ्गं कृतमिति दर्शयति। ननु च छन्दसि व्यत्यय उक्तः, नेदं छन्दः, तत्कुतो व्यत्ययः? "छन्दोवत्सूत्राणि भवन्ति" (म।भा।१।१।१) इत्यदोषः। "तदर्थग्रहणेन" इत्यादि। इह प्रकृत्यन्तरनिवृत्तिः--यवानां धानाः, धानानां सक्तव इति। क्वचिद्विकारस्य प्रकृतिसम्बन्धः--धानानां यवाः, सक्तूनां धाना इति। क्वचित्? प्रकृतेरनन्यार्थता, यथा--काष्ठानामङ्गाराः। प्रकृतेरनन्यार्थताख्यानार्थेन यदिष्टं सम्पद्यते, तद्दर्शयति--"प्रत्ययार्थस्य च" इत्यादि। इह विकृत्यर्थायां प्रकृतौ प्रत्यय उच्यते। तस्य तस्मात्? तादर्थ्ये चतुर्थ्येव शक्यते प्रतिबोधयितुम्()। अतः प्रत्ययार्थस्य तदर्थत्वेन सामथ्र्याच्चतुर्थी समर्थविभक्तिर्लभ्यते। "केचित्तु" इत्यादि। तेषां वचनलभ्यैवु चतुर्थी समर्थविभक्तिः। "तदर्थम्()" इति। किमिति षष्ठी प्रत्युदाह्रियते? षष्ठ()ति तादथ्र्यं ब्राऊते, यथा--गुरोरिदं गुर्वर्थमिति। तथा सति षष्ठ()पि समर्थविभक्तिर्भवति। अङ्गाराणां काष्ठानीति प्रत्युदाहरणं तु प्रकृत्यन्तरनिवृत्त्या, तया यवादेः समर्थ्येते। अङ्गारेभ्यः काष्ठानि, प्राकारेभ्य इष्टका इति। इदमसति तदर्थग्रहणे न ज्ञायते किमर्थं विवक्षितमिति। तस्मादनन्यार्थता प्रकृतेर्विवक्षितेति। एतत्? प्रयोजनं प्रतिपादयितुं तदर्थग्रहणं कृतमिति भावः। तथा च प्रकृत्यन्तरनिवृत्या प्रकृतिरेव सम्बध्यमाना व्यतिरिच्यत इति यवादेरेव व्यतिरेकविभक्तिर्भवति। ये तु चतुर्थीमनुवत्र्तयन्ति, तेषां तदरथग्रहणं चतर्थीविशेषणं विज्ञायते--तादर्थ्ये चतुर्थीति। तत्र मूत्राय कल्पते यवागूरिति प्रत्युदाहरणम्()। तेषां

चतुर्थ्यनुवृत्तिरपार्थिका; तदर्थग्रहणेनैव गतार्थत्वात्()। तथा च या तादर्थ्यसमानार्था षष्ठी सा चासत्यां विशेष्यते। "या काचित्()" इतचि। न तूपादानकारणभूतापीत्यर्थः। स्यादेतत्()--कूपः प्रकृतिरुदकस्य न भवत्येव; ततस्तन्निवृत्त्यर्थं विकृतिग्रहणं न कत्र्तव्यमित्यत आह--"भवति च" इत्यादि। चशब्दोवधारणे। ननु चान्येभ्य एव स्वकारणेभ्य उदकमुत्पाद्यते, तत्कथं कूपस्तस्य प्रकृतिः? इत्याह--"तत्रोत्पादनात्()" इति। यथैव हि प्रयाजादीनां धर्माणामुत्पत्त्याधारभूतौ दर्शपौर्णमासौ प्रकृतौ भवतः, एवमुदकस्योत्पत्त्याधारभूतत्वात्? कूपः प्रकृतिर्भवति। यद्येवम्(), उदकमपि तस्य विकृतिः? इत्याह--"ननु" इत्यादि। अत्रैवोपपत्तिमाह--"अत्यन्तभेदात्()" इति। विकारो हि प्रकृतेरुत्तरमवस्थान्तरमिति ततो नात्यन्तभिन्नो भवति, यथा--काष्ठानामङ्गाराः। ते हि पार्थिवेनाभिन्नसन्तानवर्त्तित्वेन काष्ठेभ्यो नात्यन्तं भिद्यन्ते। उदकं तु भिन्नस्वभावत्वाद्भिन्नसन्तानवर्त्तित्वाच्च कूपादत्यन्तं भिन्नम्()। अतो न तस्योत्तरमवस्तान्तरमिति न भवति विकृतिः। "न तु कोशी तस्य प्रकृतिः" इति। अतत्कारणत्वात्(), अनुत्पत्त्याधारभूतत्वाच्च। ननु च प्रकृतिर्विकृतिरिति सम्बन्धिशब्दावेतौ। सम्बन्धिशब्दश्च नियत एव प्रतियोगिनि प्रतीतिमुपजनयति, यथा हि--"मातरिवर्त्तितव्यम्()" इत्युक्ते न चोच्यते "स्वस्यां मातरि" इति, या यस्या माता तस्यामिति प्रतीयते। एवं सति कूपलक्षणायां प्रकृतौ विकृत्यर्थायां प्रत्ययार्थत्वेन विवक्षितायामसत्यपि विकृतग्रहणे तस्यैव कूपस्य या या विकृतिस्तत एव प्रत्ययो विज्ञायते। तथा च विकारवाचिनोऽसिशब्दात्? प्रत्यये विधित्सिते यस्यासौ प्रकृतिस्तस्यामेव तदर्थायां प्रकृतावसत्यपि प्रकृतिग्रहणे प्रत्ययो विज्ञायते। तस्मादन्यतरोपादानेऽपि सर्वमिष्टं सम्पद्यते। न किञ्चिदनिष्टमापद्यत इत्याह--"तदर्थं द्वयोरपि" इत्यादि। अनेनैवं मन्यते--स्यादेतदेव यदासौ प्रकृतिविकृतिशब्दौ नियोगतः सम्बन्धिशब्दौ, न चेमौ नियोगतः सम्बन्धिशब्दौ। तथा हिं, विपूर्वस्तावदयं करोतिंरस्त्येवापकारे--देवदत्तोऽस्थित्यै विकरोतीति; अस्ति चेष्टानानात्वे--विकुर्वते च्छात्रा इति; अस्त्यनौचित्ये--विकृतिरेषा स्त्रीणां यत्? स्वातन्त्र्यमिति। अस्ति कार्ये--तन्तुनां पटो विकार इति। तता प्रपूर्वोऽप्ययमस्ति कारणे--तन्तवः प्रकृतिः पटस्येति; अ()स्त चौदासीन्ये--सत्त्वानां प्रकृतिरिति। तान्युच्यन्ते यान्यनारम्भकाणि; अस्ति दोषापगमे--प्रकृतिस्तोऽयमिति। अस्ति स्वभ्वे-प्रकृत्याऽभिरूप इति; अस्ति धर्माणामुत्पत्त्याधारे, यथा-दर्शपौर्णमासौ धर्माणां प्रकृतिस्थोऽयमिति। असति स्वभावे-प्रकृत्याऽभिरूप इति; अस्ति धर्माणामुत्पत्त्याधारे, यथा-दर्शपौर्णमासौ धर्माणां प्रकृतिरिति। तदेवमर्थबहुत्वादनयोः सर्म्बान्धत्वमनैकान्तिकमिति, अतोऽन्यतरग्रहणे न सिध्यति। न चान्यतरेण शक्यते वक्तुं विवक्षितः प्रकृतिविकारभावः। अयमुपादानकारणस्य तदुत्तरावस्थाभूतस्य च यो विकारः स इह वेदितव्यः। यदि तु विपूर्वः करोतिरनेकार्थः, "तस्य विकारः" (४।३।१३४) इत्यत्रापि सन्देहापगमाय तर्हि प्रयतितव्यम्()? सत्यमेतत्(); शैलीयमाचार्यस्य यस्य क्वचिदभिधानमाश्रयति, क्वचन्न्यायम्(), क्वचिद्वचनमिति तत्? सर्वमुच्यते। तेन सर्वं प्रत्याय्यते॥

बाल-मनोरमा

तदर्थं विकृतेः प्रकृतौ १६५२, ५।१।१२

तदर्थं विकृतेः प्रकृतौ। तदर्थमिति "सामान्ये नपुंसकम्"। तस्मै इदं तदर्थम्। तच्छब्देन विकृतिः परामृश्यते। सप्तम्यर्थे प्रथमा। विकृत्यर्थायां प्रकृताविति लभ्यते। एवं च तच्छब्देन चतुर्थ्यन्तेन विकृतिरेव प्रथमं निर्दिश्यते। तथा च चतुर्थ्यन्ताद्विकृतिवाचकादिति लभ्यते। तदाह--विकृतिवाचकादित्यादिना। प्रत्ययः स्यादिति। "यथाविहित"मिति शेषः। अङ्गारेब्य एतानीति। अङ्गारार्थानीत्यर्थः। अर्थेन नित्यसमासविधानादस्वपद विग्रहः। अत्र काण्ठानि प्रकृतिद्रव्याणि। अङ्गारा विकृतयः। तद्वाचकादङ्गारशब्दाच्छप्रत्यये "अङ्गारीयाणी"ति रूपम्। प्राकारीया इष्टका इतदि। प्राकारेभ्य इमा इति विग्रहः। प्राकारार्था इत्यर्थः। शङ्कव्यमिति। शङ्कवे इदमिति विग्रहः। शङ्क्वर्थमित्यर्थः। "उगवादिभ्यः" इति यत्।

तत्त्व-बोधिनी

तदर्थं विकृतेः प्रकृतौ १२७६, ५।१।१२

तदर्थं विकृतेः। "तस्मै हित"मित्यतस्तस्मा इत्यनुवर्तते। तदाह---चतुर्थ्यन्तादिति। "तदर्थ"मिति "सामान्ये नपुंसकं"। व्यत्ययेन सप्तमीस्थाने प्रथमेत्याशयेनाह--तदर्थायामिति। विकृत्यर्थायामित्यर्थः। "त"दिति सर्वनाम्ना हि विकृतिः परमृश्यते। एवं च विकृतिरेव प्रथमानिर्दिष्टेति "समर्थाना प्रथमा"दित्यधिकारोऽप्यत्र निर्बाध व। शङ्कव्यमिति। "उगवादिभ्यः" इति यत्।

---

सूत्रम्

काशिका-वृत्तिः

छदिरुपधिबलेर् ढञ् ५।१।१३

छदिरादिभ्यः शब्देभ्यः ढञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतौ ५।१।१२ इत्येतस्मिन् विषये। छस्य अपवादः। छादिषेयाणि तृणानि। औपधेयं दारु। बालेयास्तण्डुलाः। उपधिशब्दात् स्वार्थे प्रत्ययः। उपधीयते इति उपधिः रथाङ्गं औपधेयम् अपि तदेव दारु।

न्यासः

छदिरुपधिबलेर्ढञ्?। , ५।१।१३

यदा छदिश्चर्मविकारो विवक्ष्यते तदापि ढञेवेष्यते--छादिषेयं चर्मेति। ननु च परत्वात्? "चर्मणोऽञ्()" (५।१।१५) इत्यञ्? प्राप्नोति? नैष दोषः; "चर्मणोऽञ्()" इत्यत्र छदिषो ढञनुवर्त्तिष्यते। यथा छदिःशब्दाद्वलिशब्दाच्चतुर्थीसमर्थात्? प्रकृतिविकारभावे प्रत्यय उपजायते, तथोपधिंशब्दादपि भवतिव्यमित्याशङ्क्याह--"उपधिशब्दात्()" इत्यादि। अत्र युक्तिमाह--"उपधीयते" इत्यादि। तेन "कर्मण्युपसर्गे घोः किः" इति दर्शयति। तेन च द्रव्यस्यानासादितोत्तरावस्थस्याभिधानम्()। यद्युपधिंशब्दाद्विकृतिवाचिनः स्यात्(), एवमर्थान्तरे स्यात्()। न चासौ प्रकृतिविशेषे भवति। न तूपधिशब्दाद्वाच्यस्य प्रत्यान्तरस्य प्रकृतिविकारभावोऽस्ति, अबेदात्()। तथा हि--यदेव रथाङ्गमुपधिशब्देनोच्यते तदेवानासादितोत्तरावस्थमौपधेयशब्देनापि। स्यादेतत्()--यदा भावसाधन उपधिंशब्द उपधानमुपधिरिति तदा नास्ति भेदः, क्रियाभिधानात्(); यदाप्युपधिशब्देन क्रियाद्रव्यस्य विकार उच्यते तदौपधेयशब्देन च तत्प्रकृति द्रव्यम्(), अतः प्रकृतिविशेषे परप्रत्ययौ भविष्यतीति? एतच्चायुक्तम्(); न हि क्रियाद्रव्यस्य विकारो युज्यते; अत्यन्तभेदात्()। तस्मात्? स्थार्थं एवोपधिंशब्दात्? प्रत्ययो विज्ञायते॥

बाल-मनोरमा

छदिरुपधिबलेर्ढञ् १६५३, ५।१।१३

छदिरुपधिबलेर्ढञ्। छदिष्, उपधि, बलि-एषां समाहारद्वन्द्वे सौत्रं पुस्त्वम्। एभ्यस्तादर्थ्यचतुर्थ्यन्तेभ्यः प्रकृतौ वाच्यायां ढञित्यर्थः। छादिषेयाणीति। छदिस्तृणपटलः। तस्मै इमानीति विग्रहः। छदिरर्थानीत्यर्थः। ढञि एयादेशे षात्परत्वाण्णत्वम्। बालेयास्तण्डुला इति। बलये इमे इति विग्रहः। बल्यर्था इत्यर्थः। "करोपहारयोः पुंसि बलि"रित्यमरः। "भागधेयः करो वलि"रिति च।

उपधिशब्दादिति। वार्तिकमिदम्। उपधीयते इति। अक्षदण्डाग्रे उपधीयते=प्रोतं क्रियते इत्युपधिः। "उपसर्गे घोः किः" इति धाञः किप्रत्ययः। "आता लोप इटि चे"त्याल्लोपः। उपधी रथाङ्गमिति। तथा भाष्यादिति भावः।

तत्त्व-बोधिनी

छदिरुपधिबलेर्ढञ् १२७७, ५।१।१३

छदिरुपधि। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। छस्यापवादोऽयम्। छादिषेयाणीति। छाद्यतेऽनेनेति छदिः। "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः"। "इस्मन्त्रन्क्विषु च"इति ह्रस्वत्वम्। यदा तु चर्मविकारश्छदिस्तदा परत्वात् "चर्मणोऽ"ञित्यञ् प्राप्नोति। पूर्वविप्रतिषेधेन तु ढञेवेष्यते। छादिषेयं चर्म। आह च "यञ्ञ्यावञः पूर्वविप्रतिषिद्धम्" "ढञ् चे"ति। यत उदाहरणं स्त[स]नङ्गव्यं। स्त[स]नङ्गुश्चर्मविकारस्तदर्थं चर्म। "उगवादिभ्यः"इति यत्। ञ्यस्योदाहरणमौपानह्यमिति अनुपदं वक्ष्यति। बालेया इति। "करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्तरिया"मित्यमरः।

उपधिशब्दात्स्वार्थे इष्यते। उपधिरिति। "उपसर्गे घोः कि"रिति धाञः किः।"आतो लोप इति चे"त्यलोपः विप्रतिषेधेनेति। "यञ्ञ्यावञ"इत्यादिवार्तिकेनेत्यर्थः। ननु ढञ्विधौ छदिरित्यस्य, ञ्यविधौ उपानहश्च विशिष्य ग्रहणेन "प्रतिपदोक्तं बलीयः"इति सिद्धे किमनेन पूर्वविप्रतिषेधेन()। अत्राहुः--"निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकं", न तु सावकाशत्वे"इत्यनेन मुनिवचनेनाऽनुमीयते। तेन "स्वम्पि तडाकानि"इत्येव युक्तं, परत्वान्नुम्प्वृत्तेः। प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य "स्वाम्पि तडाकानी"ति मतं दुर्बलम्। "असृन्" इति दीर्घस्य "आपस्तिष्ठन्ती"

त्युदाहरणे सावकाशतया प्रतिपदोक्तत्वस्याऽबलीयस्त्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

ऋषभौपानहोर् ञ्यः ५।१।१४

ऋषभ उपानः इत्य् रथाङ्गं औपधेयम् अपि एताभ्यां ञ्यः प्रत्ययो भवति तदर्थं विकृटेः प्रकृतौ ५।१।१२ इत्येतस्मिन् विषये। छस्य अपवादः। आर्षभ्यो वत्सः। औपानह्यो मुञ्जः। चर्मण्यपि प्रकृतित्वेन विवक्षिते पूर्वविप्रतिषेधादयम् एव इष्यते। औपानह्यं चर्म।

न्यासः

ऋषभोपानहोर्ञ्यः। , ५।१।१४

"चर्मण्यपि" इत्यादि। ञ्यस्यावकगाशः--औपानह्यो मुञ्जः, अञोऽवकाशः--वाध्रम्(), वारत्रम्(); चर्मणि प्रकृतित्वेन विवक्षिते सत्युभयप्राप्तौ पूर्वविप्रतिषेधेन ञ्य एव भवति--औपानह्यं चर्मेति॥

बाल-मनोरमा

ऋषभोपानहोर्ञ्यः १६५४, ५।१।१४

ऋषभोपानहो। ऋषभ उपानह् अनयोः समाहारद्वन्द्वात्पञ्चमी। ऋषभशब्दादुपानह्()शब्दाच्च तादर्थ्यचतुर्थ्यन्तात्प्रकृतौ वाच्यायां ञ्यप्रत्ययः स्यादित्यर्थः। आर्षभ्य इति। ऋषभाय अयमिति विग्रहः। ऋषभार्थ इत्यर्थः। यो वत्स ऋषभावस्थाप्राप्त्यर्थं पोष्यते स एवमुच्यते। औपानह्यो मुञ्ज इति। उपानहे अयमिति विग्रहः। उपानदर्थो मुञ्ज इत्यर्थः। क्वचिद्देशे मुञ्जतृणैरुपानत् क्रियते।

---

सूत्रम्

काशिका-वृत्तिः

चर्मणो ऽञ् ५।१।१५

चर्मणः इति षष्ठी। चर्मणो या विकृतिः तद्वाचिनः प्रातिपदिकातञ् प्रत्ययो भवति तदर्थं विकृतेः प्रकृतौ ५।१।१२ इत्येतस्मिन् विषये। छस्य अपवादः। वार्ध्रं चर्म। वारत्रं चर्म।

न्यासः

चर्मणोऽञ्?। , ५।१।१५

"चर्मणः" इति पञ्चमी वा स्यात्()? षष्ठी वा? यदि पञ्चमी, चर्मण एव प्रत्ययो भवेत्(), न चर्मविकारवाचिभ्यः। एतच्च कुतो लभ्यते? अनभिधानात्()। तथा हि प्रकृतिविशेष एव प्रत्यय इष्यते। न च चर्मशब्दादुत्पन्ने प्रत्यये विवक्षितार्थस्याभिधानमस्ति। तस्मान्नेयं पञ्चमी, अपि तु षष्ठी॥

बाल-मनोरमा

चर्मणोऽञ् १६५५, ५।१।१५

चर्मण्यपीति। चर्मणि प्रकृतित्वेन वाच्येऽपि अयं ञ्य एव "चर्मणोऽ"ञित्ययं परमपि पूर्वविप्रतिषेधेन बाधित्वा भवतीत्यर्थः। एतच्च "उगवादिभ्यः" इति सूत्रभाष्ये स्थितम्। औपानह्ममिति। उपानदर्तं चर्मेत्यर्थः। चर्मणोऽञ्। "चर्मण" इति षष्ठ()न्तं विकृतावन्वेति। तदाह--चर्मणो या विकृतिस्तद्वाचकादिति। "तादर्थ्यचतुर्थ्यन्ता"दिति शेषः। अञ्स्यादिति। "प्रकृतौ वाच्याया"मिति शेषः। वध्र्यै इद"मिति पाठान्तरम्। "वृधिवपिब्यां रन्" इति वृधेः रनि लघूपधगुणे रपरत्वे वध्रशब्दश्चर्मवाचकः, तस्माद्विकारे अणि वार्ध्री रज्जुः।

तत्व-बोधिनी

चर्मणोऽञ् १२७८, ५।१।१५

चर्मणोऽञ्। "तदर्थ"मित्यादिपूर्वोक्ते अञ्स्यात्। छस्यापवादः। "चर्मणः"इति षष्ठी न तु पञ्चमी। पञ्चम्यां तु चर्मशब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्यात् "चर्मणे द्वीपी"त्यादौ। न चेष्यते "चार्मणो द्वीपी"ति। तदाह---चर्मणो या विकृतिरिति। वार्ध्र्यै इति। "वृधिवपिभ्या"मिति रन्प्रत्यये वध्रशब्द आद्युदात्तश्चर्मवाची, "तस्य विकारः"इत्यण्। "टिड्ढे"तित ङीप्। वार्ध्री रज्जुः, तस्यै। वधेरौणादिके ष्ट्रनि तु वध्रीति भवति। ततोऽञि तु वाध्रम्। "नध्री वध्री वरत्रा स्या"दित्यमरः। "चञ्चाः पश्य, वध्रिकाः पश्य"इति भाष्यम्।

---

सूत्रम्

काशिका-वृत्तिः

तदस्य तदस्मिन् स्यादिति ५।१।१६

तदिति प्रथमा समर्थविभक्तिः, अस्य इति प्रत्ययार्थः, स्यातिति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। एवं द्वितीये ऽपि वाक्ये। सप्तम्यर्थे तु प्रत्यय इत्येतावान् विशेषः। प्रथमासमर्थात् षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति, यत् तत् प्रथमासमर्थं स्याच् चेत् तद् भवति। इतिकरणः ततश्चेद् विवक्षा। प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः। प्रासादीयं दारु। सप्तम्यर्थे खल्वपि प्राकारो ऽस्मिन् देशे स्यात् प्राकारीयो देशः। प्रासादीया भूमिः। स्यादिति सम्भावनायां लिङ्, सम्भावने ऽलम् इति चेदित्यादिना। इष्टकानां वहुत्वेन तत् सम्भाव्यते प्राकार आसामिष्टकानां स्यातिति। देशस्य च गुणेन सम्भाव्यते प्रासादो ऽस्मिन् देशे स्यातिति। प्रकृतिविकारभावस्तादर्थ्यं च इह न विवक्षितम्। किं तर्हि, योग्यतामात्रम्। तेन पूर्वस्य अयम् अविषयः। द्विस्तदग्रहणं न्यायप्रदर्शनार्थम्, अनेकस्मिन् प्रत्ययार्थे प्रत्येकं

समर्थविभक्तिः सम्बन्धनीया इति। अथ इह कस्मान् न भवति, प्रासादो देवदत्तस्य स्यातिति? गुणवानयं सम्भाव्यते प्रासादलाभो ऽस्य इति। इतिकरणो विवक्षार्थः इत्युक्तम्।

न्यासः

तदस्य तदस्मिन्? स्यादिति।, ५।१।१६

द्वितीयाशङ्कामपनिनीषुराह--"तत्()" इत्यादि। अस्तेरकर्मकत्वादित्यभिप्रायः। अवयवार्थपूर्वत्वादवयव्यर्थस्येत्याह--"अस्य" इत्यादि। करोतीति करणः। कत्तरि बहुलवचनाल्लयुट्()। इतिश्चासौ करणश्चेति कर्मधारयः। "सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे" [३।३।१५४]। ननु च प्राकारीया इष्टकाः, प्रासादीयं दार्विति च पूर्वेणैव सिद्धम्(), तथा हि--यासामिष्टकानां यस्य च दारुणो बहुत्वेन प्राकारः प्रासादश्च सम्भाव्यते, तासामिष्टकानां तस्य च दारुणो यथासंख्येन प्राकारप्रासादौ विकारौ भवतः, तादथ्र्याच्चेष्टकानां दारूणाञ्चास्तीवेत्यत आह--"प्रकृतिविकार" इत्यादि। गतार्थम्()। "द्विस्तद्ग्रहणम्()" इत्यादि। इत्येष न्यायोऽनेन प्रदश्र्यते। "तदस्यास्त्यस्मिन्निति मतुप्()" [५।२।९३] इत्यादौ नैकः प्रत्ययार्थः। तत्र तत्समुदायेन समर्थविभक्तेः सम्बन्धो विज्ञायते। ततश्च यत्र द्वाभ्यां प्रत्ययार्थाभ्यां समर्थविभक्तेः सम्बन्धः सम्भवति--शाखावान्? वृक्ष इत्यादौ, तत्रैव तत्? स्यात्()। यत्र त्वन्यतरेणैव सम्बन्धः--गोमान् देवदत्तः, वृक्षवान्? पर्वत इत्यादौ, तत्र न स्यात्()। अ()स्मस्तु न्याये प्रदर्शिशते सर्वत्र भवति॥

बाल-मनोरमा

तदस्य तदस्मिन् स्यादिति १६५६, ५।१।१६

तदस्य तदस्मिन् स्यादिति। "तदर्थं विकृतेः प्रकृतौ" इति निवृत्तमिति कैयटः। "तदस्य स्या"दिति, "तदस्मिन्स्या"दिति चार्थे प्रथमान्ताद्यथाविहितं प्रत्ययः स्यादित्यर्थः। "स्या"दित्यत्र "सम्भावनेऽलमिती"ति सम्भावने लिङ्। प्राकार आसामिति। करणत्वस्य सम्बन्धसामान्यविवक्षायां षष्ठी। आभिरिष्टकाभिः प्राकारः कर्तुं शक्यत इति विग्रहवाक्यस्य फलितोऽर्थः। प्राकारीया इति। प्राकारशब्दात्प्रतमान्ताच्छः। इष्टकाः प्रत्ययार्थः। प्राकारपर्याप्तां इष्टका इति यावत्। प्रासादीयं दार्विति। प्रासादोऽस्य स्यादिति विग्रहः। प्रासादपर्याप्तमिति यावत्। प्राकारीयो देश इति। प्राये प्राकारोऽस्मिन्देशे सम्भाव्यत इत्यर्थः। देशस्य तद्योग्यपाषाणेष्टकादिबहुलत्वादिति भावः। अनेन तदर्थं विकृते" रित्यनुवृत्ताविह न स्यादिति सूचितम्। ननु "प्रासादो देवदत्तस्य स्या"दित्यत्रातिप्रसङ्गः स्यादित्यत आह--इतिशब्दो लौकिकीं विवक्षामिति। शिष्टव्यवहारमित्यर्थः।

तत्त्व-बोधिनी

तदस्य तदस्मिन् स्यादिति १०२३, ५।१।१६

तदस्य। प्रथमा समर्थात्प्रातिपदिकात्षष्ठ()र्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति। स्यादिति। संभावनेऽलमिति चे"दित्यादिना संभावनेलिङ्। इष्टकानां बहुत्वेन प्राकार आसां स्यादित्येतत्सम्भाव्यते। देशस्य हि गुणेन प्राकारोऽस्मिन्स्यादिति सम्भाव्यते। इह प्रकृतिविकारभावस्तादथ्र्यं च न विवक्षितं, कुं तु योग्यतामात्रम्। तेन पूर्वस्याऽयमविषयः। द्विस्तच्छब्दस्य ग्रहणं स्पष्टप्रतिपत्त्यर्थम्, "तदस्यास्त्यस्मि"न्नितिवत्सकृत्तच्छब्दग्रहणेनैवेष्टसिद्धेः।

इति तत्वबोधिन्यां छयतोः पूर्णोऽवधिः।

---

सूत्रम्

काशिका-वृत्तिः

परिखाया ठञ् ५।१।१७

परिखाशब्दात् ढञ् प्रत्ययो भवति तदस्य तदस्मिन् स्यात् ५।१।१६ इत्येतस्मिन्नर्थे। छस्य अपवादः। पारिखेयी भूमिः। छयतोः पूर्णो ऽवधिः। इतः परमन्यः प्रत्ययो विधीयते।

न्यासः

परिखाया ढञ्?। , ५।१।१७

परिखाशब्देन चात्र खेयमुच्यते॥

बाल-मनोरमा

परिखाया ढञ् १७७८, ५।१।१७

परिखाया ढञ्। "पूर्वसूत्रविषये" इति शेषः। पारिखेयी भूमिरिति। परिखा अस्या अस्ति, अस्यामस्तीति वा विग्रहः। परिखायोग्येत्यर्थः। छयतोः पूर्णोऽवधिरिति। "प्राग्वतेष्ठ"ञित्यारभ्य "द्वित्रिपूर्वादण्चे"त्यन्तै सूत्रैः प्रत्ययविशेषेष्वनुक्रान्तेषु "तेनक्रीत"मिति पठितम्। ततश्च प्राक्क्रीतादित्युक्तेस्तेष्वपि सूत्रेषु छयतोरनुवृत्तिः कुतो नेति न शङ्क्यं, प्रत्ययविशेषाणां श्रवणे तयोरनुवृत्त्यसंभवादिति भावः।

*****इति बालमनोरमायाम् छयतोरवधिः*****

अथ पाञ्चमिकाः।

-------------

---

सूत्रम्

काशिका-वृत्तिः

प्राग्वतेष् ठञ् ५।१।१८

तेन तुल्यं क्रिया चेद् वतिः ५।१।११४ इति वक्ष्यति। प्रागेतस्माद् वतिसंशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामः ठञ् प्रत्ययस् तेष्वधिकृतो विदितव्यः। वक्ष्यति पारायणतुरायणचान्द्रायणं वर्तयति। पारायणिकः। तौरायणिकः। चान्द्रायणिकः।

लघु-सिद्धान्त-कौमुदी

प्राग्वतेष्ठञ् ११४६, ५।१।१८

तेन तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते॥

न्यासः

प्राग्वतेष्ठञ्?। , ५।१।१८

प्राग्वचनं "शीर्षच्छेदाद्यच्च" ५।१।६४, "दण्डादिभ्यो यः" ५।१।६५ इत्येवमादिनाधिकारवता ठञि विच्छिन्ने "पारायणतुरायणचान्द्रायणं वत्र्तयति" ५।१।७१ इत्येवमादावर्थनिर्देशे ठञेव यथा स्यादित्येवमर्थम्()॥

बाल-मनोरमा

प्राग्वतेष्ठञ् १६५८, ५।१।१८

अथ आर्हीयाः। प्राग्वतेः। वतिशब्दस्तद्घटितसूत्रपरः। तदाह--तेन तुल्यमिति। "तेनतुल्य"मित्यतः प्राग्येषु सूत्रेषु अर्था एव निर्दिश्यन्ते नतु प्रत्ययाः, तत्र ठञित्युपतिष्ठत इति यावत्।

तत्त्व-बोधिनी

प्राग्वतेष्ठञ् १२८०, ५।१।१८

प्राग्वतेष्ठञ्। "ठ"ञित्येव वक्तव्ये "प्राग्वते"रिति वचनं मध्ये योऽगदिकारवानपवादः, "सर्वभूमिपृथिवीभ्यामणञौ""शीर्षच्चेदाद्यच्चे"त्येवमादिः, तेन विच्छेदेऽपि "पारायणतुरायणे"त्यादौ ठञेव यथा स्यादित्येवमर्थम्। न चैवं पारायणादिसूत्र एव ठञ्निर्दिश्यतामिति वाच्यम्, उत्तरसूत्रे येषां पर्युदासः क्रियते गोपुच्छादीनां तेभ्याष्ठञः प्रकृतसूत्रं विनाऽलाभात्। तथा च गौपुच्छिकः साप्ततिक इत्यादौ ठञर्थमिदं सूत्रमत्र प्रदेशे आरब्धमिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

आऽर्हादगोपुच्छसङ्ख्यापरिमाणाट् ठक् ५।१।१९

तदर्हति ५।१।६२ इति वक्ष्यति। आ एतस्मादर्हसंशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामः ठक् प्रत्ययस् तेष्वधिकृतो वेदितव्यः, गोपुच्छादीन् वर्जयित्वा। अभिविधावयम् आकारः, तेन अर्हत्यर्थो ऽपि ठक् भवत्येव। ठञधिकारम् अध्ये तदपवादः ठग्विधीयते। वक्ष्यति तेन क्रीतम् ५।१।३६। नैष्किकम्। पाणिकम्। अगोपुच्छसङ्ख्यापरिमाणातिति किम्? गोपुच्छेन क्रीतं गौपुच्छिकम्। सङ्ख्या षाष्टिकम्। परिमाण प्रास्थिकम्। कौडविकम्। ठञ् प्रत्युदाह्रियते। सङ्ख्यापरिमाणयोः को विशेषः? भेदगणनं सङ्ख्या एकत्वादिः। गुरुत्वमानम् उन्मानं पलादि। आयाममानं प्रमाणं वितस्त्यादि। आरोहपरिणाहमानं परिमाणं प्रस्थादि। ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः आयामस्तु प्रमाणं स्यात् सङ्ख्या बाह्या तु सर्वतः।

न्यासः

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्?। , ५।१।१९

"तदर्हति" ५।१।६२ इत्येको विधिः, "तदर्हम्()" ५।१।११६ इति द्वितीयः, तत्? कस्येहावधित्वेनोपादानम्()? इत्याह--"तदर्हति" इत्यादि। इतरस्य ग्रहणं कस्मान्न भवति? एवं मन्यते यदि तस्य ग्रहणभिप्रेतं स्यात्? "प्राग्वतेः" ५।१।१८ इत्यनेनैव सम्बन्धं कुर्यात्(), न "आर्हात्()" इत्यनेन। ननु च वत्यर्थेऽपि नैतदस्ति; यद्यपि वत्यर्थेऽपि ठगधिक्रियते, तथापि तत्र तेन न भवितव्यम्(); प्रतिपदविहितेन वतिना बाधितत्वात्(), अनभिधानाद्वा। तस्मादर्हतिशब्दैकदेशस्यैवार्हशब्दस्यावधित्वं न्याय्यम्()। "गोपुच्छादीन्? वर्जयित्वा" इति। कथं पुनरेतज्ज्ञायते--अगोपुच्छादिति प्रतिषेधोऽयमिति? अन्यस्यार्थस्येहासम्भवात्()। ननु चायमर्थः स्यात्()--अगोपुच्छशब्दात्? संख्यायाः परिमाणाच्चेति? अशक्योऽयमर्थ इह सम्भावयितुम्()। यदि ह्ययमर्थः स्यात्(), निष्कादिभ्यः परिमाणादेव सिद्धत्वात्? पुनर्वचनमनर्थकं स्यात्()। ननु च नियमार्थं पुनर्वचनं स्यात्()--असमास एव यथा स्यादिति? नैतदस्ति; न हि विधौ सति नियमार्थता युक्ता। नियमे हि सत्यवक्तव्यस्य त्यागाच्छब्दबाधनम्()। किञ्च, सिद्धञ्च पुनर्वचनमुपादीयत इति, उक्तानुवादे दोषश्च। विधौ तु न शब्दबाधनम्(), नानुवाद#ओष इतदि। विधिनियमसम्भवविचारे विधिनैव युक्तं भवितुम्()।

तस्मादन्यस्येहार्थस्यासम्भवात्? "अगोपुच्छात्()" इति प्रतिषदोऽयमिति विज्ञायते। ज्ञापकात्प्रकृतरतर न विवक्ष्यते, यदयम्? "लोकसर्वलोकाट्ठञ्()" ५।१।४३ इति ठको निवृत्यर्थं ठञं करोति। "अभिविधावयमाकारः" इति। मर्यादायां हि वत्र्तमानस्याकारस्यात्र ग्रहणमनर्थकं स्यात्(), प्राग्ग्रहणानुवृत्त्यैव सिद्धत्वात्। अभिविधिवृत्तेराकारस्य ग्रहणे सत यदिष्टं सम्पद्यते, तद्दर्शयितुमाह--"अर्हत्यर्थेऽपि ठग्भवति" इति। "भेदगणनं संख्या" ति। भिद्यन्त इति भेदाः, भिन्नाः पदार्थाः, ते गण्यन्ते संख्यायन्ते परिच्छिद्यन्ते येन तद्भेदगणनम्(), एकत्वादि। संख्याभेदे हि सति पदार्थनुसङ्कल्पनमेकत्वादिभिः क्रियते। एकत्वसंख्याऽपि बहुषु सन्निवेशितेषु भेदमेकमसहायमाह। "गुरुत्वमानमुन्मानम्()" इति। सुवर्णादेर्वस्तुनो गुरुत्वमुत्क्षिप्यते, येन तदुन्मानं तुलादि। "आयाममानं प्रमाणम्()" इति। तिर्यगभिमुखस्य वस्तुनो येनायामपरिच्छेदः क्रियते तत्? प्रमाणम्(), वितस्त्यादि। "आरोहपरणाहमानं परिमाणम्()" इति। आरोहतः परिणाहतश्च मीयते व्रीह्याद्यर्थो येन तत्परिमाणम्()। आरोहः उच्छ्रायः, परिणाहः विस्तारः। संख्यापरिमाणयोर्भेदे पृष्टे यदुन्मानादीनां विशेषप्रदर्शनं तत्प्रसङ्गेन तद्विषयस्याज्ञानस्यापनयनार्थम्()। संग्रहेण किलशब्द एवमादिमतमाचार्याणामित्यर्थं सूचयति। "सर्वतः" इति। आरोहतः परिणाहतश्चेत्यर्थः। "संख्या बाह्या तु सर्वतः" इति। उन्मानात्? परिमाणात्? प्रमाणाच्च संख्या बाह्या; तत्रानन्तर्भावात्()॥

बाल-मनोरमा

आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक् १६७९, ५।१।१९

आर्हादगो। तदर्हतीति सूत्रगते अर्हतिशब्दे एकदेशानुकरणमर्हेति, तच्च तद्घटितसूत्रपरम्, आङभिव्याप्तौ, व्याख्यानात्। तदाह--तदर्हतीति। इत्येतदभिव्याप्येति। इदमपि सूत्रं प्रत्ययविशेषाऽश्रवणे उपतिष्ठते। अत्र सङ्ख्यापरिमाणयो पृथग्ग्रहणात्सङ्ख्या न परिमाणम्। तथा च वार्तिकम्--"ऊध्र्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्सङ्ख्या बाह्या तु सर्वतः।" इति। तुलायामारोप्य द्रव्यगुरुत्वं येन परिच्छिद्यते तदुन्मानं=गुञ्जामाषनिष्कसुवर्णपलादि। येन काष्ठादिनिर्मितेन आयतविस्तृतोच्छ्रितेन पात्रविशेषेण पात्रगतायामविस्तारोच्छ्रायैः व्रीह्यादि परिच्छिद्यते तत्परिमाणं=प्रस्थादि। आयामो दैध्र्यं येन परिच्छिद्यते तत्प्रमाणम्रत्निप्रादेशादि। सङ्ख्या तु उक्तत्रितयापेक्षया बाह्या=भिन्ना एकत्वद्वित्वादीत्यर्थः।

तत्त्व-बोधिनी

आर्हादगोपुच्छ सङ्ख्यापरिमाणाट्ठक् १२८१, ५।१।१९

आर्हादगोपुच्छ। तदर्हतीति। इह "तदर्ह"मिति सूत्रान्तर्गतमच्प्रत्ययान्तं नाऽनुक्रियते किं तु तिङन्तस्यैकदेशः शबन्त एव, व्याख्यानादिति भावः। अभिव्याप्येति। तेन "()औतच्छत्रिक"इत्यत्रार्हत्यर्थे ठग्भवतीति भावः। ननु परिमाणत्पृथक्सङ्ख्याग्रहणं व्यर्थं, परिमीयते परिच्छिद्यते येन तत्परिमाणं, सङ्ख्ययापि च परिच्छिद्यत इति सापि परिमाणमेवेति चेत्। अत्र श्लोकवार्तिकम्---"ऊध्र्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्सङ्ख्या बाह्या तु सर्वतः"। अस्यार्थः--तुलादावारेप्य येन द्रव्यान्तपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादिगुरुत्वमुन्मीयते तदुन्मानम्। आरोहः=उच्छ्रायः। परिणाहो=विस्तारः। ताभ्यामारोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादिः परिमीयते तत्परिमाणं=प्रस्थादि,। परिः सर्वतोभावे। आयामो=दैघ्र्यं, स येन मीयते तत्प्रमाणम्। तच्च क्वचित्तिर्यगवस्थितस्य वस्तुनो भवति---यथा वस्त्रादेर्हस्तादिः। क्वचिदूध्र्याधोबागावस्थितस्य भवति----यथा हास्तिनमुदकम्। ऊरुद्वयसमुदकमिति। सङ्ख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिप्रस्थादिहस्त्रादिभ्यस्त्रिभ्यो बहुभूता एकत्वद्वित्वादिरिति। इह सङ्ख्यापरिमाणयोरेव प्रकृतत्वेऽप्युन्मानप्रमाण्योर्विवेचनं प्रसङ्गात्कृतमिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

असमासे निष्काऽदिभ्यः ५।१।२०

आर्हातित्येव। विष्कादिभ्यः शब्देभ्यो ऽसमासे ठक् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञो ऽपवादः। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। असमासे इति किम्? परमनैष्किकम्। उत्तमनैष्किकम्। ठजेव भवति, अरिमाणान्तस्य इत्युत्तरपदवृद्धिः। अथ किमर्थम् असमासे इत्युच्यते यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते? निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य। उगवादिभ्यो यत् ५।१।२ गव्यम्, सुगव्यम्, अतिसुगव्यम् विभाषा हविरपूपादिभ्यः ५।१।४ अपूप्यम्, अपूपीयम्, यवापूप्यम्, यवापूपीयम्। शरीरावयवाद् यत् ५।२।६ दन्त्यम्, राजदन्त्यम् इत्येवमादि सिध्दं भवति। इत उत्तरं च सङ्ख्यापूर्वपदानां तदन्तविधिरिष्यते। पारायणतुरायणचान्द्रायणं वर्तयति ५।१।७१ द्वैपारायणिकः, त्रैपारायणिकः। लुगन्तायाः तु प्रकृतेर् न इष्यते। द्वाभ्यां शूर्पाभ्यां क्रीतम् द्विशूर्पम्। त्रिशूर्पम्। द्विशूर्पेण क्रीतम् इति तदन्तविधिप्रतिषेधात् शूर्पादञन्यत्रस्याम् ५।१।२६ इति अञ् न भवति। सामान्यविहितष् ठञेव भवति। द्विशौर्पिकम्। ठञो द्विगुं प्रत्यनिमित्ताल् लुगभावः। तथा च उक्तम्, प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणम् अलुकि इति। निष्क। पण। पाद। माष। वाह। द्रोण। षष्ति। निष्कादिः।

न्यासः

असमासे निष्कादिभ्यः। , ५।१।२०

"ठञोऽपवादः" इति। येन नाप्राप्तित्यायेन (व्या।प।४९)। निष्कादिभ्यो द्रोणपर्यन्तेभ्यः परिमाणशब्दत्वात्? षष्ठिशब्दस्य संख्याशब्दत्वाट्ठकि पर्युदस्ते ठञेव प्राप्नोति, अतस्तस्यैवायमपवादः। "तेदन्ताप्रतिषेधस्य" इति तदन्तविधेरप्रतिषेधस्येत्यर्थः। यदि तर्हि तदन्तात्? प्रत्ययो विज्ञायते, एवं तर्हि "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (शा।प।६५) इति केवलेभ्य- प्रत्ययो नोपपद्यते? नैष दोषः; असमासगरहणेन हि ग्रहणवत्परिभाषाया (व्या।प।८९) निवृत्तिराख्याता, निवृत्तायाञ्च "ये नविधिस्तदन्तस्य" १।१।७१ इति तदन्ताद्भवति। तत्र च "स्वस्य च रूपस्य" (काशिका।१।१।७२) इति प्रकृतत्वात्? केवलादपि भवति। यत्तु मन्यते-"अपूर्वोपादानसामथ्र्यात्? केवलादिति लाघवार्थं केवलानां पाठः स्यात्()" इति, यत्किञ्चदेतत्()। "इत उत्तरञ्च" इत्यादि। कथं पुनरिष्यमाणोऽपि तदन्तविधिर्लभ्यते, यावता "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न" (व्या।प।८९) इति प्रतिषिध्यते? अस्याः परिभाषाया अनित्यत्वात्()। अनित्यत्वं तु तस्या गर्गादिषु "वाजासे" इति समासे प्रत्ययप्रतिषेधाद्गम्यते। नित्यत्वे हि वाजशब्दादुत्पद्यमानस्य प्रत्ययस्य समासे प्राप्तिरेव नास्तीति प्रतिषेधं कुर्यात्()। "द्विशूर्पम्()" इति। द्वाभ्यां शूर्पाभ्यां क्रीतमिति तद्धितार्थे द्विगुं कृत्वा। न तावदेषा लुगन्ता प्रकृतिरिति संख्यापूर्वपदादपि "शूर्पादञन्यतरस्याम्()" ५।१।२६ इत्यञेव क्रियते, तस्य "अव्यद्र्धपूर्वद्विगोर्लुगसंज्ञायाम्()" ५।१।२८ इति लुक्()। "द्विशौर्पिकम्()" इति। "परिमाणान्तस्यासंज्ञाशाणयोः" ७।३।१७ इत्युत्तरपदवृद्धिः। यदुक्तम्()--"संख्यापूर्वपदानां तदन्तविधिरितीष्यते" इति, यच्चोक्तम्()--"लुगन्तायास्तु प्रकृतेर्नेष्यते" इति, तदुभयमाप्तागमेन स्थिरीकर्त्तुमाह--"तथा चोक्तम्()" इत्यादि॥ "कनोऽपवादः" इति। उत्तरसूत्रेण प्राप्तस्य। "शतिकम्()" इति। "तदस्य परिमाणम्()" ५।१।५६ इति वत्र्तमाने "संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" ५।१।५७ इति सङ्घे प्रत्ययार्थे विविक्षित उत्तरसूत्रेण कन्नेव भवति। "प्रत्ययार्थोऽत्र सङ्घः" इति। शतमध्यायानां परिमाणं यस्य निदानख्यग्रन्थस्य, स चेह प्रत्ययार्थः। स च शतसंख्याव्यवच्छिन्नाव्यायसमुदायात्मक इति सङ्घ एव परत्ययार्तो भवति। "शतमेव वस्तुतः" इति। अव्यायशतस्यानन्यार्थत्वात् ततस्च प्रकृत्यर्थात्? न भिद्यते। तदेव ह्रध्यायानां शतं प्रकृत्याभिधीयते, प्रत्ययान्तेनापि तदेवेति नेह प्रकृत्यर्थात्? प्रत्ययार्थभेदः। तदेतेन यत्र चाव्यतिरिक्तः प्रकृत्यार्थात्?

प्रत्ययार्थस्तत्र प्रतिषेधो भविष्यति। न च व्यतिरिक्त इत्येतदाख्यातम्()। ननु च "सङ्घे चानौत्तराधर्ये" ३।३।४२, "संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" ५।१।५७ इत्यत्र च प्राणिसमूहे सङ्घशब्दो गृह्णते, ततर कथं ग्रन्थविषयो गृह्णते/ उपचारेणेत्यदोषः। यदि वा संख्यासूत्रे संज्ञाशब्दसाहचर्याद्विशिष्टः सङ्घो गृह्णते। "सङ्घे चानौत्तराधर्ये" इत्यत्रापि "छन्दोनाम्नि च" ३।३।३४ इत्यतो नामग्रहणानुवृत्तेः प्राणिसङ्घो गृह्णते। इह तु यत्वाभावाद्? गन्थस्यापि ग्रहणमित्यविशेषः। "इह तु" इत्यादि। ननु च शतेऽभिधेये प्रतिषेधेन भवितव्यम्(), इह च शतद्यं शाटकशतम्(), शतिकं शाटकशतमित्युक्ते शतं प्रतीयत एव, तत्किमिति प्रतिषेधो न भवति? इत्याह--"वाक्येन" इत्यादि। शत्यशतिकशब्दौ हि सायान्यशब्दौ, सामान्यशब्दाश्च न प्रकरणादिकमन्तरेण विशेषे वत्र्तन्ते। तेन यावच्छाटकशतिमित्येतत्पदान्तरं न प्रयुज्यते, तावत्? प्रत्ययार्थस्य शतत्वं नावसीयते। तस्मात्? पदान्तरसन्निधौ गम्यमानत्वात्? पदान्तरार्थो भवति, न प्रत्यायार्थः। "न श्रुत्या" इति। गम्यत इति सम्बन्धः। यत्र प्रत्ययान्तेन पदान्तरनिरपेक्षेण प्रत्ययार्थस्य शतताऽऽख्यायते, तत्र श्रुत्या प्रत्ययान्तश्रवणमात्रेणैव गम्यते, यथा--प्रत्युदाहरणे शतं परिमाणमस्य शतकमित्युक्ते गम्यत एवैतत्()--प्रत्ययार्थोऽपि शतमेवेति। इह तु वाक्याच्छतत्वं प्रतीयते। न च पदसंस्कारकाले वाक्यार्थस्तयाङ्गभावोऽस्ति। तदा तस्योपसर्जनत्वात्? प्रकृत्यर्थादतिरिक्ते प्रत्ययार्थे प्रतिषेधो भवति, न तु व्यतिरिक्तवाक्यगम्य इति। तदाप्तवचनेन द्रढयितुमाह--"तथा चोक्तम्()" इत्यादि। शतप्रतिषेधे कत्र्तव्ये प्रकृत्यर्थादन्यस्य प्रत्ययार्थस्य शतत्वेऽप्रतिषेध इत्येतदुक्तं भवति। तत्रान्यत्? प्रकृत्यर्थः शतम्(), अन्यत्? प्रत्ययार्थः शतम्()। तत्र विधिरेव भवति; न प्रतिषेध इति। केन पनः समासे प्राप्नोति, यतस्तत्प्रतिषेदार्थोऽसमासानुकर्षणार्थश्चकारः क्रियते? इत्याह--"प्राग्वतेः" इत्यादि॥

बाल-मनोरमा

असमासे निष्कादिभ्यः १६६०, ५।१।२०

असमासे। इति यावदिति। "तेनक्रिती"मित्येतत्पर्यन्तमित्यर्थः। ठगिति। पूर्वसूत्रात्तदनुवृत्तेरिति भावः। आर्हीयेष्विति। "तदर्हती"त्येतत्पर्यन्तमनुक्रान्तेषु "तेन क्रीत"मित्याद्यर्थेष्वित्यर्थः। नैष्किकमिति। निष्केण क्रीतमित्यर्थः। यथायोगं क्रीताद्यर्थान्वयः। समासे तु ठञ्ेव]इति। परमनिष्कादिशब्दादित्यर्थः।

तत्त्व-बोधिनी

असमासे निष्कदिभ्यः १२८२, ५।१।२०

असमासे निष्कादिभ्यः। निष्क, पण, पाद, माष,वाह,द्रोण, षष्टि--इति सप्त निष्कादयः। तत्र द्रोणशब्दः परिमाणवाची, षष्टिशब्दः सङ्ख्यावाची, ताभ्यां ठञि प्राप्ते वचनम्। इतरेषां तु पञ्तानामुन्मानवाचित्वेन पूर्वसूत्रेणैव ठकि सिद्धे समासप्रतिषेधार्थं वचनमित्येके। अन्ये त्वाहुः----पूर्वसूत्रे परिच्छेदकमात्रं सङ्ख्याभिन्नं परिमाणशब्देन गृह्णते। तेन सर्वेभ्यष्ठञि प्राप्ते ठग्विधानार्थं वचनम्। न चैवं "परिमाणं तु सर्वतः"इति भेदेन व्युत्पादनं व्यर्थमिति वाच्यं, "प्रमाणपरिमाणाभ्या सङ्ख्यायाश्चापि संशये"इत्यादावस्योपयोगादिति पक्ष द्वयमप्येतत्पदमञ्जार्यां स्पष्टम् ।

---

सूत्रम्

काशिका-वृत्तिः

शताच् च ठन्यतावशते ५।१।२१

आर्हातित्येव। शतशब्दात् ठन्यतौ प्रत्ययौ भवतः अशते ऽधिधेये आर्हीयेष्वर्थेषु। कनो ऽपवादः। शतेन क्रीतं शतिकम्, शत्यम्। अशते इति किम्? शतं परिमाणम् अस्य शतकं निदानम्। प्रत्ययार्थो ऽत्र सङ्घः। शतम् एव वस्तुतः प्रकृत्यर्थान्

न भिद्यते। इह तु न भवति, शतेन क्रीतं शत्यं शाटकशतम्, शतिकं शाटकशतम् इति। वाक्येन ह्यत्र प्रत्ययार्थस्य तत्त्वं गम्यते, न श्रुत्या। तथा च उक्तम्, शतप्रतिशेधे ऽन्यशतत्वे ऽप्रतिषेधः इति। चकारो ऽसमास इत्यनुकर्षणार्थः। द्वौ च शतं च द्विशतं, द्विशतेन क्रीतं द्विशतकम्। त्रिशतकम्। प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणम् अलुकि इत्यनया इष्ट्या समासादपि प्राप्नोति।

बाल-मनोरमा

शताच्च ठन्यतावशते १६६४, ५।१।२१

शताच्च। आर्हीयेष्वर्थेषु शताट्ठन्यतौ स्तो नतु शतेऽर्थे इत्यर्थः। उत्तरसूत्रप्राप्तकनोऽपवादः। शतक इति। उत्तरसूत्रेण कन्निति भावः। नन्विह सङ्घस्यैव प्रत्ययार्थत्वात् कथम् "अशते" इति निषेध इत्यत आह--इहेति। प्रत्ययार्थः सङ्घः प्रकृत्यर्थाच्छतात्परिमाणान्न भिद्यते। गुणगुणिनोरभेद एव हि पारमार्थिकः। भेदस्तु काल्पनिक एवेति भावः। यत्र तु शतं प्रत्ययार्थः प्रकृत्यर्थाद्भिद्यते तत्र नायं निषेधः। शतेन क्रीतं शत्यं शाटकशतम्। अत्र हि निष्कशतं प्रकृत्यर्थः। सादकशतं तु प्रत्ययार्थः। एतत्सर्वं भाष्ये स्पष्टम्। असमास इत्येवेति। चकारस्य तदनुकर्षणार्थत्वादिति भावः। द्विशतेनेति। द्विगुणशतेनेत्यर्थः। द्विगुसमासे तु द्विशतशब्दस्य लुगन्ततया लुकि तदन्तविधिनिषेधात् प्राप्तिरेव नेति बोध्यम्।

तत्त्व-बोधिनी

शताच्च ठन्यतावशते १२८४, ५।१।२१

शताच्च। अशतेऽभिधेये आर्हीयष्वर्थेषु ठन्यतौ स्तः। उत्तरसूत्रेण प्राप्तस्य कनोऽपवादः। चकारः "असमासे" इत्यस्यानुकर्षणार्थः। द्विशतकमिति। द्वौ च शतं च तेषां समाहारे द्विशतम्। ततः कन् "प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकी"त्यनया इष्ट()आ समासादपि प्राप्नोतीति "असमासे"इत्यतस्यानयनमुचितमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्याया अतिशदन्तायाः कन् ५।१।२२

आर्हातित्येव। सङ्ख्याया अत्यन्ताया अशदन्तायाश्च कन् प्रत्ययो भवति आर्हीयेषु अर्थेषु। ठञो ऽपवादः। पञ्चभिः क्रीतः पञ्चकः पटः। बहुकः। गणकः। अतिशदन्तायाः इति किम्? साप्ततिकः। चात्वारिंशत्कः। अर्थवतस्तिशब्दस्य ग्रहणाड् डतेः पर्युदासो न भवति, कतिकः।

न्यासः

संख्याया अतिशदन्तायाः कन्?। , ५।१।२२

"पञ्चकः पटः" इति। लौकिक्याः संख्याया उदाहरणम्()। "बहुकः" इत्यादि। परिभाषितायाः। "चत्वारिंशत्कः" इति। "इसुसुक्तान्तात्? कः" ७।३।५१। "अर्थवर्तास्तशब्दस्य ग्रहणात्()" इति। अर्थवद्ग्रहणपरिभाषया (व्या।प।१।)। "डतेः पर्युदासो न भवति" इति। शब्दापेक्षयाऽवयवषष्ठीति। प्रत्ययस्य य एकदेशस्तिशब्दस्तस्य पर्युदासो न भवति, न ह्ययमर्थवान्()। "कतिकः" इति। किं परिमाणमेषामिति "किमः संख्यापरिमाणे डति च" ५।२।४१ इति डतिः, "टेः" ६।४।१४३ इति टिलोपः। कतिभिः क्रीतमिति विगृह्य कन्()। यद्यर्थवतस्तिशब्दस्य ग्रहणम्, नवतेर्यस्तिशब्दस्तस्यापि पर्युदासो न प्राप्नोति; नवतिशब्द एव हि समुदायः संख्याविशेषेणार्थवान्(), न तदेकदेशस्तिशब्दः? नैष दोषः; नवतिशब्दे यो नवशब्दः सोऽनेकार्थः। तथा च संख्याविशेषावगतमतो नवशब्दात्? परो यस्तिशब्दस्तत एत विज्ञायते; तद्भावे

भावात्()। अशीतिशब्दस्य तर्हि तिशब्दस्य पर्युदासो न प्राप्नोति, नासावर्थवान्()? नापि ततः पूर्वो योऽशीशब्दस्तस्य कश्चिदर्थोऽस्ति, समुदाय एव तु संक्याविशेषेणार्थवान्? नैतदस्ति; यद्यप्यशी-इतिशब्दस्य न कश्चनार्थः प्रकाशते, तथापि प्रतिज्ञायते। अशीतिशब्दो ह्येवं व्युत्पाद्यते--अष्टानां दशानामशीभावः, तिशब्दश्च प्रत्ययः। य एवाष्टानां दशानामार्थः सोऽशीशब्दस्य, यस्तु संखघ्याविशेषः सोऽयं तिशब्दस्यैवेति, ततस्तस्य नानर्थक्यम्()। एवमपि विशतेः प्रतिषेधो न सिध्यति? स ह्येवं व्युत्पाद्यते--द्वयोर्दशतोर्विन्भावः, शतिंश्च प्रत्यः। तत्र शतिप्रत्ययात्? पूर्वस्य भागस्य द्वयोर्दशतोर्योऽर्थः स एव प्रतिज्ञायते शतिप्रत्यस्य, संखायविशेषः, तिशब्दस्य न कश्चित्()। इष्टमेव तत्()। संग्राहितः कन्? विंशतेः--"तदिं()वशतिकम्()" इति। अथ "अतिशदन्तायाः" इत्यत्रान्तग्रहणं किमर्थम्(), अतिशच्छब्दस्य न प्राग्वतीयत्वात्? प्रत्ययग्रहणपरिभाषयैव (पु।प।ल।वृ।४४) तदन्तविधिर्भविष्यति/ एवदेव तर्हि प्रयोजनम्()--अनयचा परिभाषया तदन्तविधिर्मा भूदिति। किञ्च स्यात्()? इहैकसप्तत्या क्रीत इति प्रतिषेधो न स्यात्(); एकसप्तदशतस्तिप्रत्ययस्याविधानात्()। अन्तग्रहणे तु क्रियमाणे सति समुदायस्यान्ते तिशब्दः श्रुयत इत्यत्रापि प्रतिषेधः सिद्धो भवति॥

बाल-मनोरमा

सङ्ख्याया अतिशदन्तायाः कन् १६६५, ५।१।२२

सह्ख्यायाः। तिश्च शश्च तिशतौ, तौ अन्ते यस्याः सा तिशदन्ता, न तिशदन्ता अतिशदन्ता। द्वन्द्वगर्भबहुव्रीहिगर्भो नञ्तत्पुरुषः। साप्ततिक इति। सप्तत्या क्रीत इत्यर्थः। "तेन क्रीत"मिति ठञ्। चात्वारिंशत्क इति। चत्वारिंशता क्रीत इत्यर्थः। "तेन क्रीत"मिति ठञष्ठस्य तकारात्परत्वात्कः।

तत्त्व-बोधिनी

सङ्ख्याया अतिशदन्तायाः कन् १२८५, ५।१।२२

त्यन्तशदन्ताया इति। त्यन्तसहिता शदन्तेत्युत्तरपदलोपी समासः।थ पञ्चक इति। लौकिक्याः सङ्ख्याया उदाहरणम्। बहुक इति। पारिभाषिक्याः। साप्ततिक इति। ठञो ञित्त्वादादिवृद्धिः। ठस्येकादेशे "यस्येति चे"तीकारलोपः। अर्थवतस्तिशब्दस्य ग्रहणाड्डत्यवयवस्य तिशब्दस्य पर्युदासो न भवतिष। कतिकः। चात्वारिंशत्क इति। "इसुसुक्तान्तात्कः"।

---

सूत्रम्

काशिका-वृत्तिः

वतोरिड् वा ५।१।२३

वत्वन्तस्य सङ्ख्यात्वात् कन् सिद्ध एव, तस्य त्वनेन वा इडागमो विधीयते। वतोः परस्य अनो वा इडागमो भवति आर्हीयेष्वर्थेषु। तावतिकः, तावत्कः। यावतिकः, यावत्कः।

न्यासः

वतोरिड्? वा। , ५।१।२३

"वत्वन्तस्य संख्यात्वात्()" इति। बहुगणसूत्रेण १।१।२२ संख्यासंज्ञाविंधानत्()। "तस्य" इत्यादि। कथं पुनस्तस्यानेनागमः शक्यो विज्ञातुम्(), यावता नेह कन्ग्रहणम्()? यदपि प्रकृतं तदपि प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः? नैष दोषः, "वतोः" इति पञ्चमी "कन्()" इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति "तस्मादित्युत्तरस्य" १।१।६६ इति।

"तावत्कः" इति। तत्परिमाणमस्येति "यत्तदेतेभ्यः परिमाणे वतुप्()" ५।२।३९, "आ सर्वनाम्नः" ६।३।९० इत्यात्वम्()॥

बाल-मनोरमा

वतोरिड्वा १६६६, ५।१।२३

वतोरिड्वा। "वतो"रित्यनेन प्रत्ययग्रहणपरिभाषया तदन्तं गृह्रते। "क"न्निति प्रथमान्तमनुवृत्तम्, "वतो"रिति पञ्चमी "तस्मादित्युत्तरस्ये"ति परिभाषया षष्ठन्यतं प्रकल्पयति। तदाह--वत्वन्तादिति। तावतिक इति तावता क्रीत इत्यर्थः। "यत्तदेतेभ्यः" इति वतुप्। "बहुगणवतु" इति सङ्ख्यासंज्ञायां सङ्ख्याया अतिशदन्तायाः" इति कन्, तस्य इट्, टित्वादाद्यवयवः।

तत्त्व-बोधिनी

वतोरिड्वा १२८६, ५।१।२३

वतोरिड्वा। "वतोः"इति वञ्चमी, सा च "क"न्निति प्रथमायाः षष्ठीं कल्पतीत्याह--- वत्वन्तात्कन इति। तावतिक इति। "यत्तदेतेभ्यः"इति वतुप्। "आ सर्वनाम्नः" इत्यात्वम्।

---

सूत्रम्

काशिका-वृत्तिः

विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ५।१।२४

विंशतित्रिंशद्भ्यां ड्वुन् प्रत्ययो भवति असंज्ञायां विषये आर्हीयेष्वर्थेषु। विंशकः। त्रिंशकः। ति विंशतेर् डिति ६।४।१४२ इति तिलोपः। असंज्ञायाम् इति किम्? विंशतिकः। त्रिंशत्कः। कथं पुनरत्र कन्, यावता अतिशदन्तायाः इति पर्युदासेन भवितव्यम्? योगविभागः करिष्यते, विंशतित्रिंशद्भ्यां कन् प्रत्ययो भवति, ततो ड्वुनसंज्ञायां इति।

न्यासः

विंशतितिं?रशद्रभ्यां ड्वुनसंज्ञायाम्?। , ५।१।२४

"विंशकः" इति। "ति विंशतेर्डिति" ६।४।१४२ इति तिशब्दस्य लोपः, अतो गुणे ६।१।९४ पररूपत्वम्()। यस्येति ६।४।१४८ लोपो न भवति; "असिध्दवदत्रा भात्()" ६।४।२२ इति लोपस्यासिद्ध्त्वात्()। नन्विहान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञा, तत्कथं पररूपत्वम्()? एवं तह्यरसिद्धत्वस्यानित्यत्वाद्? यस्येति लोपो भविष्यतीत्यदोषः। "कथं पुनरत्र कन्()" इति। तिं()रशत्क इत्यधिकृत्य प्रश्नः विंशतिक इत्यत्रार्थवतस्तिशब्दस्य ग्रहणात्? पर्युदासो न प्रवत्र्तत इति तमधिकृत्यास्य प्रश्नस्योपन्यासो नोपपद्यते। "योगवभागः करिष्यते"इति। तिं()रशदर्थमित्यभिप्रायः॥

बाल-मनोरमा

विंशतितिं?रशद्भ्यां ड्वुन्नसंज्ञायाम् १६६७, ५।१।२४

विंशतित्रिशद्भ्यां। नन्वेकसूत्रत्वे विंशतितिं()रशद्भ्यां ड्वुनेव स्यात्, कन् तु नस्यात्, "अतिशदन्ताया" इति निषेधादित्यत आह--योगेति। विंशतित्रिशद्भ्यामित्येकं सूत्रम्। "ड्वुन्नसंज्ञायां"मित्यपरमित्यर्थः। आद्यं व्याचष्टे--आभ्यां कन्स्यादिति। "शसङ्ख्याया अतिशदन्तायाः"इत्यतः कनित्यनुवर्तते इति भावः। द्वितीयसूत्रे विंशतितिं()रशद्भ्या"मित्यनुवृत्तिभिप्रेत्याह--असंज्ञायामिति। "आभ्या"मिति शेषः। विंशक इति। विंशत्या क्रीत इत्यर्थः। ड्वुन्। अकादेशः। "ति विंशतेर्डिती"ति तिशब्दस्य लोपः। तिं()रशक इति। ड्वुन्। अकादेशः। "टे"रिति टिलोपः। आद्यसूत्रं परिशेषात्संज्ञायामित्यभिप्रेत्याह--संज्ञायां त्विति। कंसात्। इत्यादि स्पष्टम्।

तत्त्व-बोधिनी

विंशतितिं?रशद्भ्यां ड्वुन्नसंज्ञायाम् १२८७, ५।१।२४

कर्तव्य इति। अन्यथा। त्यन्तशदन्तयोः पर्युदासादिं()वशतितिं()रशद्भ्यां कन् दुर्लभ इति भावः। विंशक इथि। "ति विंशतेर्डिती"ति तिशब्दस्य लोपः।

आर्धाच्चेति वक्तव्यम्। अर्धिक इति। अर्धशब्दस्य कार्षापणार्द्धे रुञत्वाद्भागवदपेक्षयाऽत्राऽसामर्थं नाशङ्क्यम्। प्रकरणादिवशेन भावविशेषे विज्ञाते सति नास्त्य[स्याऽ]सामथ्र्यमिति बोध्यम्। एतेनाऽर्धशब्दस्य सापेक्षत्वात्तदन्तादेव टिठन्, द्रोणार्धिकः प्रस्थार्धिक इति केषांचिदुक्तिः परास्ता।

---

सूत्रम्

काशिका-वृत्तिः

कंसाट् टिठण् ५।१।२५

कंसाट् टिठन् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञो ऽपवादः। टकारो ङीबर्थः। इकार उच्चारणार्थः। नकारः स्वरार्थः। कंसिकः। कंसिकी। अर्धाच् च इति वक्तव्यम्। अर्धिकः। अर्धिकी। कार्षापणाट् टिठन् वक्तव्यः। कार्षापणिकः। कार्षापणिकी। प्रतिशब्दश्च अस्य आदेशो वा वक्तव्यः। प्रतिकः। प्रतिकी।

न्यासः

कंसाट्?टिठन्?। , ५।१।२५

"ठञोऽपवादः" इति। न ठकः, कंसशब्दस्य परिमाणवाचित्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

शूर्पादञन्यतरस्याम् ५।१।२६

शूर्पशब्दादन्यतरस्याम् अञ् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठञो ऽपवादः। पक्षे सो ऽपि भवति। शूर्पेण क्रीतम् शौर्पम्, शौर्पिकम्।

न्यासः

शूर्पादञन्यतरस्याम्?। , ५।१।२६

"ठञोऽपवादः" इति। न ठकः, शूर्पशब्दस्य परिमाणवाचित्वात्()॥

बाल-मनोरमा

शूर्पादञन्यतरस्याम् १६६८, ५।१।२६

शूर्पादञ्। "आर्हीयेष्वर्थेष्वि"ति शेषः। शूर्पशब्दस्य परिमाणवाचित्वाट्ठञि प्राप्ते तदपवादोऽञ् पक्षे विधीयते। पक्षे ठञ्।

तत्त्व-बोधिनी

शूर्पादञन्यतरस्याम् १२८८, ५।१।२६

शूर्पादञ्। शूर्पशब्दस्य परिमाणवाचित्वाट्ठञि प्राप्ते तदपवादत्वेनाऽञ् पक्षे विधीयते।

---

सूत्रम्

काशिका-वृत्तिः

शतमानविंशतिकसहस्रवसनादण् ५।१।२७

शतमानादिभ्यः शब्देभ्यः अण् प्रत्ययो भवति आर्हीयेष्वर्थेषु। ठक्ठञोरपवादः। शतमानेन क्रीतं शातमानं शतम्। वैशतिकम्। साहस्रम्। वासनम्।

न्यासः

शतमानविंशतिकसहरुआवसनादण्?। , ५।१।२७

"ठक्ठञोरपवादः" ["ठञोऽपवादः" इति मुद्रितः पाठः] इति। शतमानं परिमाणम्(), सहरुआं संख्या, तेनैताभ्यां ठग्न प्राप्नोतीति ठञोऽपवादः। विंसत्या क्रीतं "विंशातिकम्()" इति। तच्च परमाणमपि सम्भवति। तत्र परिमाणाट्ठञोऽपवादः, अपरिमाणट्ठकः, वसनशब्दाट्ठगपवादः॥

बाल-मनोरमा

शतमानविंशतिकसहरुआवसनादण् १६६९, ५।१।२७

शतमान। शातमानमिति। अत्र ठञ् प्राप्तः। वैंशतिकमिति। विंशत्या क्रीतं विंशतिकम्। संज्ञाशब्दोऽयम्। "विंशतितिं()रशद्भ्या"मिति योगविभागात्कन्। विंशतिकेन क्रीतिमिति विग्रहः। तत्र परिमाणविशेषस्य संज्ञा चेट्ठञ् प्राप्तः, अन्यस्य संज्ञा चेट्ठक् प्राप्तः। साहरुआमिति। सहरुओण क्रीतमिति विग्रहः। "सङ्ख्याया अतिशदन्तायाः" इति कन् प्राप्तः। वासनमिति। वसनेन क्रीतिमिति विग्रहः। अत्र ठक् प्राप्तः।

तत्त्व-बोधिनी

शतमानविंशतिकसहरुआवसनादण् १२८९, ५।१।२७

ठञ्()ठक्कनामिति। शतमानं परिमाणं, ततष्ठञ् प्राप्तः। विंशत्या क्रीतं विंशतिकम्। संज्ञाशब्दोऽयम्। असंज्ञायां हि "विंशति तिं()रशभ्या"मिति ड्वुन् स्यात्। संज्ञा च यदि परिमाणस्य, तदा ठञ् प्राप्तः। अर्थान्तरस्य चेत्तर्हि ठक् प्राप्तः। वसनशब्दात्तु ठगेव। सहरुआशब्दस्य सङ्ख्यावाचित्वात्ततः "सङ्ख्याया अतिशदन्तायाः"इति कन्प्राप्त इति विवेकः।

---

सूत्रम्

काशिका-वृत्तिः

अध्यर्धपूर्वद्विगोर् लुगसंज्ञायाम् ५।१।२८

आर्हातित्येव। अध्यर्धशब्दः पूर्वो यस्मिन् तस्मादध्यर्धपूर्वात् प्रातिपदिकद् द्विगोश्च परस्य आर्हीयस्य लुग् भवति असंज्ञायां इति किम्? पाञ्चलोहितिकम्। पाञ्चकलापिकम्। लोहिनीशब्दस्य भस्याढे तद्धिते इति पुंवद्भावः। प्रत्ययान्तस्य विशेषणम् असंज्ञाग्रहणं न चेत् प्रत्ययान्तं संज्ञा इति। अध्यर्धशब्दः सङ्ख्या एव, किमर्थं भेदेन उपादीयते? ज्ञापकार्थं, क्वचिदस्य सङ्ख्याकार्यं न भवति, सङ्ख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच् ५।४।१७ इति।

न्यासः

अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्?। , ५।१।२८

"अध्यरधकसम्()" इति। अध्यर्धेन कंसेन क्रीतमिति तद्धितार्थे समासः। "प्राग्वतेः संख्यापूर्वदपानां तदन्तविधिरलुकि" (म।भा। २।३४६) इति "कंसाट्()टिठन्? ५।१।२५ इति टिठन्(), तस्य लुक्()। "द्विकंसम्()" इति। "अध्यर्धशूर्पम्()" इति। शूर्पादञन्यतरस्याम्()" ५।१।२६ इत्यञ्(); ठञन्यतरस्याम्(), तस्य लुक्()। यद्यतिर द्विगोः परस्यार्हीयस्य लुग्विधीयते, विशेषानुपादनात्? तद्धितलुगन्तादपि द्विगोः परस्य प्राप्नोति--द्वाब्यां शूर्पाभ्यां क्रीतः पटो द्विशूर्पः पटः, द्विशूर्पेण पटेन क्रीतमिति द्विशौर्पिकमिति? नैष दोषः; वक्ष्यमाणं विभाषाग्रहणं पूर्वेणापि सम्बध्यते। व्यवस्थितविभाषा सा। तेन तद्धितलुगन्ताद्()द्विगोः परस्य न भविष्यति--द्विशौर्पिकमिति। प्राग्वतीये ठञि कृते "परिमाणान्तस्यासंज्ञाशाणयोः" ७।३।१७ इत्युत्तरपदवृद्धिः। "पाञ्चलोहितिकम्(), पाञ्चकलापिकम्" इति। कस्याचित्? परिमाणविशेषस्य नामधेये एते। पञ्च लोहिन्यः परिमाणमस्येति, पञ्च कपालाः परिमाणमस्येति विगृह्य तद्धितार्थे समासः, "तदस्य परिमाम्()" ५।१।५६ इति ठञ्(), "भस्याऽढे तद्धिते" (वा।७३१) इति पुंवद्भावाल्लोहिनीशब्दस्येकारनकारनिवृत्तिः। "अध्यर्धशब्दः संख्यैव" इति। अभिधानेऽभिधेयोपचारं कृत्वा, "अध्यर्धशब्दः संख्यैव" इत्युक्तम्()। यथैव ह्येकादिका लौकिकसंख्या, एवमध्यर्धशब्दोऽपि। "स किमर्थं भेदनोपादीयते" ["सः" नास्ति--कासिका] इति। संख्याया इति शेषः। इह हि द्वगोरध्यर्धपूर्वस्य भेदेनोपादनादध्यर्धपूर्वस्य भेदेन संख्याया उपादानं भवतीति। अतस्तस्याध्यर्धशब्दस्य भेदेनोपादानस्य प्रयोजनं दर्शयितुं पृच्छति। "ज्ञापकार्थम्()" इत्यादिना प्रयोजनमाचष्टे। किं पुनरस्य संख्याकार्यं न भवतीत्याह--"संख्यायाः" इत्यादि॥

बाल-मनोरमा

अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् १६७०, ५।१।२८

अध्यर्धपूर्व। अध्यर्थशब्दः पूर्वो यस्य स अध्यर्धपूर्वः, सच द्विगुश्चेति समाहारद्वन्द्वात्पञ्चमी। सौत्रं पुंस्त्वम्। तदाह--अध्यर्धपूर्वाद्द्विगोश्चेति। आर्हीयस्येति। प्रत्यासात्तिलभ्यम्। अध्यर्थकंसमिति। अध्यारूढमर्द्धं यस्मिन् तत् अध्यर्धम्। "प्रादिभ्यो धातुजस्ये"ति बहुव्रीहौ पूर्वखण्डे उत्तरपदलोपः। सार्धमित्यर्थः। अध्यर्धेन कंसेन क्रीतमिति विग्रहः। तद्धितार्थे द्विगुः। "संख्याया अतिशदन्तायाः" इति कन्। तस्यानेन लुगिति भावः। द्विकंसमिति। द्वाभ्यां कंसाभ्यां क्रीतमिति विग्रहः। तद्धितार्थे द्विगुः। "संक्याया अतिशदन्तायाः" इति कन्। तस्यानेन लुगिति भावः। द्विकंसमिति। द्वाभ्यां कंसाभ्यां क्रीतमिति विग्रहः। ठको लुक्। नच अध्यर्थकंसमित्यत्रापि द्विगुत्वादेव सिद्धमिति वाच्यं, किञ्चित्संख्याकार्यं कृत्वसुजादिकमध्यर्धशब्दस्य नेति ज्ञापनार्थत्वात्। पाञ्चकलायिकमिति। पञ्च कलायाः परिमाणमस्येति। विग्रहे "तद्धितार्थ" इति द्विगुः। "तदस्ये"तिठञ्। सङ्ख्यासंज्ञासूत्रभाष्ये तु "अध्यर्धपूर्वा"दिति पाठो दृश्यते। नच द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं, तेन क्रीतं द्विशौर्पिकमित#इ पूर्वोक्तोदाहरणे ठञो लुक् स्यादिति वाच्यं, द्विगुनिमित्तस्यार्हीयस्य लुगिति व्याख्यानादित्यलम्।

तत्त्व-बोधिनी

अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् १२९०, ५।१।२८

अध्यर्धपूर्व। अध्यारूढमर्धं यस्मिन् तदध्यर्धम्। "प्रादिभ्यो धातुजस्ये "त्युत्तरपदलोपः। अध्यर्धशब्दः पूर्वो यस्मिन्निति बहुव्रीहिगर्भे बहुव्रीहौ कृते अध्यर्धपूर्वं च द्विगुश्चेकति द्वन्द्वः। सौत्रं पुंस्त्वम्। द्विगोरिति पञ्चमी न तु षष्ठीत्याशयेन व्याचष्टे------अध्यर्धपूर्वादित्यादि। एतच्च वृत्तिकाररीत्या व्याख्यातम्। अत्र वार्तिकं "द्विगोर्लुकि तन्निमित्तग्रहणम्"। द्विगोर्निमित्तं यस्तद्धितस्तस्य लुगिति वक्तव्यम्। द्वाभ्यां शूर्पभ्यां क्रीतं द्विशूर्पम्। द्विशूर्पेण क्रीतं द्विशैर्पिकमिति। पूर्वोक्तोदाहरणे तु ठञो लुङ् माभूदिति। ननु द्वयोः शूर्पयोः समाहारो द्विशूर्पी, तया क्रीतमिति विग्रहे द्विशूर्पमिति रूपं न स्यात्। तद्धितस्यात्रे द्विगोरनिमित्ततया "अध्यर्धे"ति लुकोऽप्रवृत्तेः। "द्विगोः परस्ये"ति व्याख्यायां तु नः सिद्धमिष्टमिति

चेन्मैवम्। "अर्थविशेषाऽसंप्रत्यये अतन्निमित्तादपी"ति वचनान्तरस्या वार्तिककृतैवोक्तत्वात्। यत्र तद्धितार्थद्विगुना सहार्थो न भिद्यते तत्र सतद्धितो यस्य निमित्तं न भवति तस्मादपि द्विगोः परस्य लुगिति वक्तव्यमिति तस्यार्थः। एवं च द्विशूर्पमिति तद्धितार्थद्विग#उना सह द्विशूर्प्या क्रीतमित्यस्यार्थो न भिद्यते इति समाहाराद्विगोः परस्य तद्धितस्य लुग् भवत्येवेति न काप्यनुपपत्तिः। वस्तुतस्तु सूत्रे "द्विगो"रिति षष्ठीमाश्रित्य "द्विगोर्निमित्तं यस्तद्धितः"इति व्याख्याय प्रथमं वार्तिकं प्रत्याख्यातुं शक्यम्। "द्वुशूर्प्या क्रीत "मिति विग्रहे तु द्विशूर्पादेव प्रत्ययो भवति, अवयविकन्यायात् , न तु द्विशूर्पीशब्दादित्याश्रित्य द्वितीयमपि प्रत्याख्यातुं शक्यम्। नन्वध्यद्र्धशब्दः संख्यावाच्येव, तथा च लोके गण्यते "एकोऽध्यार्धो द्वौ"इति। अतएव अध्यर्धकमिति कन्, अध्यर्धकंसमिति तद्धितार्थे द्विगुः, अध्यद्र्धसंवत्सरिकमित्यादौ "सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे"त्युत्तरपदवृद्धिश्च भवति, तत्किमध्यर्धपूर्वग्रहणेनेति चेत्। अत्राहुः----"सङ्ख्याकार्यमेतस्य किंचन्ने"ति ज्ञापनार्थमिदम्। तेन कन्द्विगुसमासोत्तरपदवृद्धिभ्योऽन्यत्र भवति। तद्यथा---अध्यर्धं करोति। नेह कुतृवसुच्। यः सकृत्फलान्तां क्रियामभिनिर्वर्त्य पुनस्तामेव कुर्वन्मध्ये निवर्तते स एवमुच्यते इति।

पाञ्चकलायिकमिति। पञ्च कलायाः परिमाणमस्येति विग्रहे "तद्धितार्थ "इति समासकः। "तदस्य परिमाण"मिति ठञ्। एवं पाञ्चलोहितिकमपि बोध्यम्। पञ्च लोहिन्यो गुञ्जाः परिमाणमस्येति विग्रहे पूर्वत्समासतद्धितौ। "भस्याऽढे तद्धिते"इति पुंबद्भावाल्लोहिनीशब्दस्येकारनकारयोरभावः। परिमाणविशेषस्य मानधेये एते। असंज्ञाग्रहणं प्रत्ययान्तस्य विशेषणं, न तु द्विगोः। एतच्च वृत्तिकृता सूत्रशयमनुरुध्य वर्णितमिति इहापि ततैवोक्तम्। भाष्यवार्तिकयोस्त्वसंज्ञाग्रहणं प्रत्याख्यातम्। तथा हि द्विगुविशेषणमसंज्ञाग्रहणम्। पञ्चकलायचपञ्चलोहितशब्दौ च द्विगू कृततद्धितलुकावेव संज्ञे। यस्तु ताभ्यामुत्पद्यते ठन्()स श्रूयते एव, द्विगोरनिमित्तत्वेन तस्य लुगभावादिति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा कार्षापणसहस्राभ्याम् ५।१।२९

अध्यर्धपूर्वाद् द्विगोश्च कार्षापणसहस्रान्तातुत्तरस्य आर्हीयप्रत्ययस्य विभाषा लुग् भवति। पूर्वेण लुकि नित्य प्राप्ते विकल्प्यते। अध्यर्धकार्षापणम्, अध्यर्धकार्शापणिकम्। द्विकार्षापणम्, द्विकार्षापणिकम्। औपसङ्ख्यानिकस्य टिठनो लुक्। अलुक्पक्षे च प्रतिरादेशो विकल्पितः। अध्यर्धप्रतिकम्। द्विप्रतिकम्। त्रिप्रतिकम्। सहस्रात् अध्यर्धसहस्रम्, अध्यर्धसाहस्रम्। द्विसहस्रम्, द्विसाहस्रम्। अलुक्पक्षे सङ्ख्यायाः संवत्सरसङ्ख्यस्य च इत्युत्तरपदवृद्धिः। सौवर्णशतमानयोरुपसङ्ख्यानम्। अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकम्। द्विसुवर्णम्, द्विसौवर्णिकम्। अध्यर्धशतमानम्, अध्यर्धशातमानम्। द्विशतमानम्, द्विशातमानम्। परिमाणान्तस्य इत्युत्तरपदवृद्धिः।

न्यासः

विभाषा कार्षापणसहरुआआभ्याम्?। , ५।१।२९

"अध्यर्धसहरुआम्()" इति। "शतमानविंशतिक" ५।१।२७ इत्यादिना विहितस्याणो लुक्()। "अध्यर्धसाहरुआम्()" इति। "संख्यायाः संवत्सरसंख्यस्य च" ७।३।१५ इत्युत्तरपदवृद्धिः। "सुवर्णशत्मानयोरुपसंख्यानम्()" इति। उपसंख्यानं प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम्()--"विस्ताच्च" ५।१।३१ इत्यतः सिंहावलोकितन्यायेन चकारोऽत्रोपतिष्ठते, स चानुक्तसमुच्चयार्थः, तेन सुवर्णशतमानयोरपि विष्यति। "अध्यर्धसुवर्णम्()" इति। ठञो लुक्(), "अद्यर्धशतमानम्()" इति। "शतमान" ५।१।२७ इत्यादि-विहितस्याणः। "अध्यर्धशतमानम्()" इति। "परिमाणान्तस्य" ७।३।१७

इत्यादिनोत्तरपदवृद्धिः। ननु च सुवर्णमुन्मानम्(), न परिमाणम्(), तत्कुतस्तस्य बुद्धिः? नैष दोषः; उत्तरपदवृद्धौ हयुन्मानमपि परिमाणमिति गृह्यते। कगुतो ज्ञायते? "असंज्ञाशाणयोः" ७।३।१७ इति शाणशब्दस्य प्रतिषेधात्()। यदि तर्हि तत्रोन्मानं न गृह्येत, तदा शाणस्योन्मानार्थस्य प्राप्तिरेव नास्तीति प्रतिषेधं न कुर्यात्()। अध्यर्धपूर्वद्विगुभ्यां कार्षापणसहरुआयोर्यथासंख्यं कस्मान् भवति? लक्षणव्यभिचारेण तदभावस्य सूचितत्वात्()। इह तावत्? "अध्यर्धपूर्वद्विगोः" (५।१।२८) इति निर्देशेऽल्पाच्तरत्वाद्? ध्यन्तत्वाच्च द्विगुशब्दस्य पूर्वनिपातः प्राप्नोति, "कार्षापणसहरुआआभ्याम्()" इत्यत्राल्पाच्तरत्वात्? सहरुआशब्दस्य? तावेतौ निर्देशौ लक्षणान्तरनिरपेक्षतां बोधयन्तौ यतासंख्यपरिभाषाया अप्यभावं बोधयत इति न भवति यथासंख्यपरिभाषा॥

बाल-मनोरमा

विभाषा कार्षापणसहरुआआभ्याम् १६७१, ५।१।२९

विभाषा। लुग्वेति। "आर्हीयस्ये"ति शेषः। औपसंख्यानिकस्येति।"कार्षापणाट्टिन् वक्तव्यः" इत्युक्तस्येत्यर्थः। अध्यर्धप्रतिकमिति। प्रत्यादेशस्य टिठन्संनियोगशिष्टत्वात्प्रत्यादेशपक्षे टिठनो न लुगिति भावः। अध्यर्धसहरुआमिति। "शतमाने"ति विहितस्याऽणो लुक्। लुगभावे तु "सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे"त्युत्तरपदवृद्धिः।

तत्त्व-बोधिनी

वभाषा कार्षापणसहरुआआभ्याम् १२९१, ५।१।२९

विभाषा। टिठनो लुगिति। प्रत्यादेशपक्षे तु लङ् न भवति, प्रत्यादेशस्य प्रत्ययसंनियोगशिष्टत्वादिति बोध्यम्। अध्यर्धसहरुआमिति। "शतमानविंशतिके"ति बिहितस्याऽणो लुक्। तदभावपक्षे तु "सङ्ख्यायाः संवत्सरसंख्यस्य चे"त्युत्तरपदवृद्धिः। अध्यर्धशब्दः सङ्ख्यावाचीत्यधुनैवोक्तत्वात्।द्वित्रिपूर्वात्। अध्यर्धग्रहणमुत्तरार्थमनुवृत्तमपीह न संबध्यते। "द्विगो"रिति तु संबध्यत एव षष्ठीसमासं व्यावर्तयितुम्। अत्र च व्याख्यानमेव शरणम्। "द्वित्रिभ्यां निष्का" दित्येव सिद्धे पूर्वग्रहणं चिन्त्यप्रयोजनमिति हरदत्तः। द्विनैष्किकमिति। "प्राग्वतेष्ठञ्"। मतान्तरे तु ठगिति मनोरमायाम्। "--निष्कादिभ्यः समासे ठगभावात्, "परिच्छेदकमात्रं गृह्यते"इति मतान्तरेऽपि ठञेव भवित, तन्मते उन्मानस्यापि परिमाणत्वात् "अगोपुच्छे"त्यादिना पर्युदस्तत्वाट्ठगभावे निष्कादिभ्यष्ठञि प्राप्ते। असमासे ठग्विधानेऽपि समासे ठञ एव प्राप्तत्वात्----"इत्यन्ये। "परिमाणान्तस्ये"त्युत्तरपदवृद्धिः। "द्विगो"रिति संबन्धान्नेह लुक्। द्वयोर्निष्को द्विनिष्कस्तेन क्रीतं द्विनैष्किकम्। "अध्यर्धपूर्वे"त्यसंबन्धादध्यर्धनैष्किकमित्यत्राप्यनेन लुङ् न भवति।

---

सूत्रम्

काशिका-वृत्तिः

द्वित्रिपूर्वान् निष्कात् ५।१।३०

द्विगोः इत्येव। द्वित्रिपूर्वाद् द्विगोर् निष्कान्तातार्हीयप्रत्ययस्य विभाषा लुग् भवति। द्विनिष्कम्, द्विनैष्किकम्। त्रिनिष्कम्, त्रिनैष्किकम्। बहुपूर्वाच् च इति वक्तव्यम्। बहुनिष्कम्, बहुनैष्किकम्। परिमाणान्तस्य इत्युत्तरपदवृद्धिः।

न्यासः

द्वित्रिपूर्वान्निष्कात्?। , ५।१।३०

अध्यर्धपूर्वग्रहणमस्वरितत्वान्नोपतिष्ठते। "द्विनिष्कम्()" इति। द्वाभ्यां निष्काभ्यां क्रीतमिति असमाने ठको विधानादत्र ठञ्(), तस्य लुक्()। "द्विनैष्किकम्()" इति। "परिमाणान्तस्य" ७।३।१७ इत्यादिनोत्तरपदवृद्धिः। "बहुपूर्वाच्च" इति।

बहुपूर्वद्()द्विगोर्निष्कशब्दान्तादार्हीयस्य प्रत्ययस्य विभाषा लुग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"द्वित्रिभ्यां निष्कात्()" इत्येव सिद्धे पूर्वग्रहणमधिकं कुर्वतै तत्? सूचितम्()--"अन्यदप्यधिकं किञ्चिदस्ति" इति। तेन बहुपूर्वादपि भवति॥

बाल-मनोरमा

द्वित्रिपूर्वान्निष्कात् १६७२, ५।१।३०

द्वित्रिपूर्वान्निष्कात्। लुग्वा स्यादिति। "आर्हीयस्ये"ति शेषः। द्विनिष्कमिति। ठञो लुक्, समासाद्वकोऽसंभवात्।

---

सूत्रम्

काशिका-वृत्तिः

बिस्ताच् च ५।१।३१

द्वित्रिपूर्वातिति चकारेण अनुकृष्यते। द्वित्रिपूर्वाद् बिस्तान्ताद् द्विगोः परस्य आर्हीयप्रत्ययस्य विभाषा लुग् भवति। द्विबिस्तम्, द्विबैस्तिकम्। त्रिबिस्तम्, त्रिबैस्तिकम्। बहुविस्तम्, बहुबैस्तिकम्।

न्यासः

विस्ताच्च। , ५।१।३१

"द्वित्रिपूर्वादिति चकारेणानुकृष्यते" इति। ननु च स्वरितत्वादेव द्वित्रिग्रहणमनुवर्त्तिष्यते, स्वरितत्वे सत्यधिकारपरिमाणं न ज्ञायत इति चेत्()? वात्रमेतत्()। व्याख्यानतोऽदिकारपरमाणं विज्ञास्यते? एवं तर्हि स्वरितत्वादेव द्वित्रिपूर्वग्रहणस्यानुवृत्तौ सिद्धायां यत्तदनुकर्षणार्थं चकरमधिकं करोति, तेनैतत्? सूचयति--अन्यदप्यत्र किञ्चिदधिकं भवतीति। तेन बहुपूर्वादपि विभाषा लुक्? सिद्धो भवति। "बहिबिस्तम्()" इति। "द्विबिस्तम्()" इति द्वौ विस्तो परिमाणमस्येति ठञ्(), तस्य लुक्()। "द्विबैस्तिकम्()" इति। उत्तरपदवृद्धिः॥

बाल-मनोरमा

बिस्ताच्च १६७३, ५।१।३१

विस्ताच्च। "आर्हीयस्य लुग्वे"ति शेषः। द्विबिस्तं द्विबैस्तिकमिति। द्वाभ्यां बिस्ताभ्यां क्रीतमिति विग्रहः। ठञः पाक्षिको लुक्। इत्यादीति। बहुविस्तं बहुबैस्तिकमित्युदाहार्यम्। "बहुपूर्वाच्चे"ति वार्तिकस्य अत्राप्यनुवृत्तेर्भाष्ये उक्तत्वात्।

तत्त्व-बोधिनी

विस्ताच्च १२९२, ५।१।३१

बिस्ताच्च। चकारेण "द्वित्रिपूर्वा"दित्यत्र पूर्वादित्यनुकृष्यते। तत्फलं तचु "चानुकृष्टं नोत्तरत्रे"त्युत्तरत्रानुवृत्त्यभावः।

---

सूत्रम्

काशिका-वृत्तिः

विंशतिकात् खः ५।१।३२

अध्यर्धपूर्वात् प्रातिपदिकाद् द्विगोश्च विंशतिकशब्दान्ताताार्हीयेष्वर्थेषु खः प्रत्ययो भवति। अध्यर्धविंशैकीनम्। द्विविंशतिकीनम्। त्रिविंशतिकीनम्। विधानसामर्थ्यातस्य लुक् न भवति।

न्यासः

विंशतिकात्खः। , ५।१।३२

"द्वित्रिपूर्वग्रहणं निवृत्तम्(); पूर्वत्र चानुकृष्टत्वात्(), अस्वरितत्वाद्वा। शतमानादिसूत्रेण ५।१।२७ अणि प्राप्ते तस्य लुकि खो विधीयते। "विधानसामथ्र्यादस्य लुग्न भवति" इति। यदि लुक्? स्यात्(), खविधानमनर्थकं स्यात्()। न ह्रणः खस्य च लुकि सति कश्चिद्विसेषोऽस्ति॥

बाल-मनोरमा

विंशतिकात्खः १६७४, ५।१।३२

विशतिकात्खः। अद्यर्धपूर्वाद्द्विगोरित्येवेति। पूर्वसूत्रयोरध्यर्धपूर्वादित्यस्याऽसंभवाद्द्विगोरित्यस्य प्रयोजनाऽभावादननुवृत्तावपि इह तदनुवर्तत इति भावः। अध्यर्थविंशतिकीनमिति। अध्यर्धविंशत्या क्रीतमध्यर्थविंशतिकम्। "विशतितिं()रशदभ्र्या"मिति योगविभागात्कन्। अध्यर्थविंशतिकेन क्रीतमिति विग्रहः। द्विविंशतिकीनमिति। द्वाभ्यां विंशतिकाभ्यां क्रीतमिति विग्रहः।

तत्त्व-बोधिनी

विंशतिकात्खः १२९३, ५।१।३२

विंशतिकात्खः। "शतमानविंशतिके"त्यणिप्राप्ते, तस्य च लुकि प्राप्तेखोऽत्र विधीयते।

---

सूत्रम्

काशिका-वृत्तिः

खार्या ईकन् ५।१।३३

अध्यर्धपूर्वद् द्विगोः इत्येव अध्यर्धपूर्वात् प्रातिपदिकाद् द्विगोश्च खारीशब्दानतातार्हीयेष्वर्थेषु ईकन् प्रत्ययो भवति। अध्यर्धखारीकम्। द्विखारीकम्। केवलायाश्च इति वक्तव्यम्। खारीकम्। काकिण्याश्च उपसङ्ख्यानम्। अध्यर्धकाकिणीकम्। द्विकाकिणीकम्। त्रिकाकिणीकम्। केवलायाश्च। काकिणीकम्।

न्यासः

खार्या ईकन्। , ५।१।३३

खारीशब्दस्य परिमाणवाचित्वाट्ठत्रि प्राप्ते तस्येकन्? विधीयते। "केवलायाश्चेति वक्तव्यम्()" इति। केवलो योऽसमस्तः खारीशब्दस्ततश्चेकन्? भवतीत्ये तदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--इकन्निति वक्तव्ये यदिकनोमात्राधिकस्य विधानं तदन्यदप्यत्र किञ्चद्भवतीति सूचयति, तेन केवलादपि खारीशब्दादीकन्? भवतीति। कथं पुनरिकनि रूपं सिध्यति? सवर्णदीर्घत्वेन। ननु च यस्येति लोपः (६।४।१४८) प्राप्नोति? नैतदस्ति; यदि हि यस्येति लोपः स्यात्(), टनमेव ब्राऊयात्()। "काकिंण्याश्चोपसंख्यानम्()" इति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु तस्यैवाधिकसूचनार्थस्येकनो विधानमाश्रित्य कत्र्तव्यम्()। "केवलायाश्चेत्युपसंक्यानम्()" ["केवलायाश्च" इत्येव-काशिका] इति। उपसंखयनशब्दस्य प्रतपादनमर्थः। पूर्ववत्? प्रकृतेन सम्बन्धः॥

न्यासः

शाणाद्वा। , ५।१।३३

"ठञोऽपवादः" इति। न ठकः; शाणस्य परिमाणत्वात्। "शताच्चेति वक्तव्यम्()" इति। शताच्चाध्यर्थपूर्वाद्()द्विगोश्च यत्प्रत्ययो भवतोत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्यख्यानम्()--पूर्वसूत्रादिह शतशब्दोऽनुवत्र्तते, तेन तदन्तादपि यद्भवतीति। यद्येवम्(), पूर्वसूत्रे तस्य पाठोऽनर्थक इति, इहैव शतशाणाब्याञ्चेति वक्तव्यम्()? नैवं शक्यम्(); एवं ह्रुच्यमाने "द्वित्रिपूर्वादण्च" (५।१।३६) इत्यनेनापि शतात्? प्रसज्येत। पूर्वसूत्रे तु पाठसामथ्र्यादण्विधौ नानुवत्र्तते। शतशब्दः स्वरितत्वाच्चेहानुवत्र्तमानो वा यतमुत्पादयति॥

बाल-मनोरमा

खार्या ईकन् , ५।१।३३

खार्या ईकन्। "अध्यद्र्धपूर्वा"दिति द्विगोरिति चानुवर्तत इत्यभिप्रेत्योदाहरति--अध्यर्थखारीकं, द्विखारीकमिति। "तदस्य परिमाण"मिति ठञि तस्य च लुकि प्राप्ते ईकन्।

तत्त्व-बोधिनी

खार्या ईकन् १२९४, ५।१।३३

खार्याः। "तदस्य परिमाण"मिति ठञि प्राप्ते तस्य च लुकि प्राप्ते ईकन्विधीयते। कन्विधौ "केऽणः"इति ह्यस्वः स्यात्। इकन्विधावपि "यस्येति चे"ति लोपादिष्टं न सिध्यतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पणपादमाषशताद् यत् ५।१।३४

अध्यर्धपूर्वाद् द्विगोः इत्येव। अध्यर्धपूर्वाद् द्विगोश्च पणपादमाषशतशब्दान्तातार्हीयेष्वर्थेषु यत् प्रत्ययो भवति। अव्यर्धपण्यम्। द्विपण्यम्। त्रिपण्यम्। पाद अध्यर्धपाद्यम्। द्विपाद्यम्। त्रिपाद्यम्। पद्भावो न भवति पद् यत्यतदर्थे ६।३।५२ इति। प्राण्यङ्गस्य स इष्यते। इदं तु परिमाणम्। माष अध्यर्धमाष्यम्। द्विमास्यम्। त्रिमास्यम्। शत अध्यर्धशत्यम्। द्विशत्यम्। त्रिशत्यम्।

न्यासः

पणपादमाषशताद्यत्?। , ५।१।३४

पणपादमाषेभ्यः "असमासे निष्कादिभ्यः" ५।१।२० इति असमासे ठको विधानाट्ठञि प्राप्ते तस्य लुकि शतशब्दादप्यसमासे "शताच्च ठन्यतावशते" (५।१।२१) इति ठन्यतोर्विधानात्? समासे संख्यालक्षणे कनि यद्? विधीयते। "द्विपाद्यम्()" इत्यादि। ननु पद्भावः कस्मान्न भवति "पद्यत्यतदर्थे" (६।३।५३) इति? सत्यम्(); "पादस्य पदाज्याति" ६।३।५१ इत्यत्र प्राण्यङ्गस्यैव पद्भावविधानात्()। कृत एतत्()? "आज्याति" इत्यादिना गतिवचनेन सम्बन्धस्तस्यैवोपपद्यते; न परिमाणशब्दस्य। स एव प्राण्यङ्गवाच्युत्तरसूत्रेऽप्यनुवर्तिष्यत इति तस्यैव पद्भाव इष्यते। स्यादेतत्()--अयमपीह पादशब्दः प्राण्यङ्गवाची, अतो भवितव्यमेवेह पद्भावेन? इत्यत आह--"पद्भावो न भवति" इति। "पद्यत्यतदर्थे" ६।३।५२ इति पद्भावः प्राप्नोति, स न भवति। किं कारणमित्याह--"प्राण्यङ्गस्य" इत्यादि। "पादस्य पदाज्यातिगोपहतेषु" ६।३।५१ इत्यत्र प्राण्यङ्गस्य पादस्य ग्रहणम्()। "इदं तु परिमाणग्रहणम्()" ["परिमाणम्()-काशिका] इति। पणादिभिः परिमाणैः साहचर्यात्? परिमाणं पादो गृह्रते, न प्राण्यङ्गमिति पद्भावस्याप्रसङ्गः॥

बाल-मनोरमा

केवलायटापणपादमाषशताद्यत् १६७५, ५।१।३४

केवलायाश्चेति। "खार्या" इति शेषः। पणपाद। "अध्यर्धपूर्वा"दिति द्विगोरिति चानुवर्तत इत्यभिप्रेत्योदाहरति--अध्यर्धपण्यम्। द्विपण्यमिति। अध्यर्धपणेन क्रीतमित्यर्थः। द्विपाद्यमिति। द्वाभ्यां पादाभ्यां चतुर्थांशाभ्यां क्रीतमिति विग्रहः। यति "यस्येति चे"त्यकारलोपः। स्थानिवद्भावादिति। "अतःपरस्मि"न्नित्यनेनेति भावः।

बाल-मनोरमा

पणपादमाषशताद्यत् १६७६, ५।१।३४

प्राण्यङ्गार्थस्येति। व्याख्यानादिति भावः। इह सूत्रे पणमाषसाहचर्यात्पादशब्दोऽपि परिमाणविशेषवाची गृह्रते।

तत्त्व-बोधिनी

पणपादमाषशताद्यत् १२९५, ५।१।३४

प्राण्यङ्गार्थस्यैवेति। अयं भावः---"पादस्य पदाज्यातिदोपहतेषु"इत्यत्र प्राण्यङ्गस्यैव हि पादस्य ग्रहणं , तस्यै वाज्यातिभिर्गतिवचनैः संबन्धसंभवात्। तथा च "पद्यती"त्यादावपि तस्यैवानुवृत्तिः। इह तु पणमाषाभ्यां साहचर्यात्परिमाणवाचिनो ग्रहणमिति।

---

सूत्रम्

काशिका-वृत्तिः

शाणाद् वा ५।१।३५

अध्यर्धपूर्वात् द्विगोः इत्येव। शाणशब्दादध्यर्धपूर्वाद् द्विगोरार्हीयेष्वर्थेषु वा यत् प्रत्ययो भवति। ठञो ऽपवादः। पक्षे सो ऽपि भवति, तस्य च लुक्। अध्यर्धशाण्यम्, अध्यर्धशाणम्। द्विशाण्यम्, द्विशाणम्। त्रिशाण्यम्, त्रिशाणम्। शताच् च इति वक्तव्यम्। अध्यर्धशत्यम्, ध्यर्धशतम्। द्विशत्यम्, द्विशतम्। त्रिशत्यम्, त्रिशतम्।

काशिका-वृत्तिः

द्वित्रिपूर्वादण् च ५।१।३६

शाणाद् वा ५।१।३५ इत्येव। द्वित्रिपूर्वाच् छाणान्तात् प्रातिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकाराद् यच् च वा। तेन त्रैरूप्यं समद्यते। द्वैशाणम्, द्विशाण्यम्, द्विशाणम्। त्रैशाणम्, त्रिशाण्यम्, त्रिशाणम्। परिमाणान्तस्य असंज्ञाशाणयोः ७।३।१७ इति पर्युदासादिवृद्धिरेव भवति।

न्यासः

द्वित्रिपूर्वादण्च। , ५।१।३५

"तेन त्रैरूप्यं सम्पद्यते" इति। एकं रूपं सूत्रनिर्दिष्टेऽणि, द्वितीयं चकारसमुच्चिते यति, तृतीयं वाशब्दप्रापितस्य ठञो लुकदि। "द्विशाणम्()" इति। ठञो लुक्()॥

बाल-मनोरमा

शाणाद्वा १६७७, ५।१।३५

शाणाद्वा। पक्षे। ठञिति। आर्हादिति ठग्विधौ परिमाणपर्युदासाट्ठञिचि भावः। तस्य लुगिति। ठञ इति भावः। अत्र अध्यर्थपूर्वादिति द्विगोरिति चानुवर्तत इत्यभिप्रेत्य अध्यर्थपूर्वादुदाहरति--अध्यर्धशाण्यम् अध्यर्धशाणामिति। यति ठञो लुकि च रूपम्।

बाल-मनोरमा

द्वित्रिपूर्वादण् च १६७८, ५।१।३५

अथ शाणान्तद्विगोरुदाहरणं वक्ष्यन्विशेषमाह--द्वित्रिपूर्वादण्। च वार्तिकमिदम्। चाद्यदिति। पाक्षिको यत् चकारेण समुच्चीयत इत्यर्थः। ततश्च यतो।ञभावे ठञपि लभ्यते। तदाह-तेन त्रैरूप्यमिति। अणा, यता, ठञा चेत्यर्थः। अणि परिमाणान्तस्येत्युत्तरपदवृद्धिमाशङ्क्याह--परिमाणान्तस्येति। ठञादयस्त्रयोदशेति। "प्राग्वते"रिति ठञ्, "आर्हा"दिति ठक्, "शताच्चे"ति ठन्यतौ, "संज्ञायाः" इति कन्, "विंशतितिं()रशद्भ्या"ति ड्बुन्, "कंसा"दिति टिठन्, "शूर्पा"दित्यञ्, "शतमाने"त्यण्, "विंशतिकात्खः" इति खः, खार्याः" इति ईकन्, "पणपादे"ति यत्, "द्वित्री"ति वार्तिकोक्ताऽण्। इत्येव त्रयोदशेत्यर्थः। प्रकृता इति। प्रक्रान्ता इत्यर्थः। समर्थविभक्तय इति। "समर्थानां प्रथमाद्वे"ति सूत्रलभ्यसमर्थविशेषणीभूतप्रथमोच्चारिततत्तद्विभक्तय इत्यर्थः।

तत्त्व-बोधिनी

शाणाद्वा १२९६, ५।१।३५

पक्षे ठञिति। यद्यपि शाण उन्मानम्, तथापि "आर्हा"दिति सूत्रे परिमाणग्रहणेन परिमीयते परिच्छिद्यतेऽनेनेति योगवृत्त्या परिच्छेदकमात्रं गृह्रते"इति वादिनां मते अस्यापि पर्युदासाट्ठगभावे ठञिति भावः। मुख्यमते तु ठगेव बोध्यः। शाणाद्वेति सूत्रे "शताच्चेति वक्तव्ये"। पूर्वेण नित्यं प्राप्ते विकल्पार्थम्। एवं च पूर्वसूत्रे शतग्रहणमकृत्वा शतशाणाभ्यां वेत्येव वक्तुं युक्तमित्याहुः। अध्यर्धशत्यम्। अध्यर्धशतम्। पञ्चशत्यम्। पञ्चशतम्। यदभावे सङ्ख्यालक्षणस्य कनो लुक्। "शताच्च ठन्यतौ"इति तु न प्रवर्तते, तत्राऽसमासग्रहणस्यानुवर्तनात्।

तत्त्व-बोधिनी

द्वित्रिपूर्वादण् च [ १२९७, ५।१।३५

द्वित्रिपूर्वादण्। वार्तिकमिदं वृत्तिकृता सूत्रेषु प्रक्षिप्तम्। भाष्यादिप्रामाण्याच्छतग्रहणमिह न संबध्यत इत्याशयेनाह----शाणादित्येवेति। न्यासकृता त्वण्विधायके वार्तिके सूत्रत्वभ्रमणे व्याख्यातम्---"शत शाणाभ्यां वे"ति सूत्रयितव्ये "पणवादे"कति पूर्वसूत्रे शतग्रहणं क्रियते तस्येदं फलं, ---शतशब्दः स्वरितत्वेनानुवर्तमानोऽपि "शाणाद्वा"इत्यत्रैव संबध्यते, तदुत्तरसूत्रे "द्वित्रिपूर्वादण् चे"त्यत्र तु न संबध्यते, तेन शतशब्दादण् नेति। तदिदं सामर्थ्यवर्णनमण्विधायकं यदि सूत्रं स्यात्तदा सङ्गच्छते नान्यथेत्यास्तां तावत्। त्रैरूप्यमिति। तदेतद्दर्शयति----द्वैशाणमित्यादिना। अण्येकं, ठञो लुकि द्वितीयं, यति तृतीयम्। ठञादयस्त्रयोदशेति। ननु एकदशैव प्रत्ययाः प्रकृताः, सूत्रभेदेन विहितत्वाद्यत्प्रत्ययस्य द्विर्गणने तु द्वादशेति त्रयोदशेत्येतद्दुरुपपादमेव। न च "शूर्पादञन्यतरस्या"मित्यन्यतरस्याङ्ग्रहणलभ्यठञमादाय त्रयोदशत्वं सूपपादिमिति वाच्यं, तुल्यन्यायेन "शाणाद्वे"ति सूत्रलभ्ययट्ठञोग्र्रहणेन पञ्चदशत्वप्रसङ्गात्। नापि सूत्रोपात्तैद्र्वादशभिः सह "द्वित्रिपूर्वादण् चे"ति वार्तिकोपात्ताऽण्प्रत्ययस्य गणनेन निर्वाहः।उक्तरीत्या"कंसाट्टिठ"न्निति सूत्रे "अर्धाच्चेति वक्तव्यं", "कार्षापणाट्टिठन्िति सूत्रस्थ एव टिठन् अध्यर्धकार्षापणशब्दाभ्यां परामष्ट इति स नभिद्यते। "द्वित्रिपूर्वादण् चे"ति स वार्तिकस्थोऽण् तु भिद्यते, "शतमानविंशतिके"त्यणो दूरस्थत्वेन परामर्ष्टुमशक्यत्वादिति।

सूत्रम्

काशिका-वृत्तिः

तेन क्रीतम् ५।१।३७

ठञादयस् त्रयोदश प्रत्ययाः प्रकृताः। तेषाम् इतः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते तेन इति तृतीयासमर्थात् क्रीतम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सप्तत्या क्रीतम् साप्ततिकम्। आशीतिकम्। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। शत्यम्। शतिकम्। द्विकम्। त्रिकम्। तेन इति मूल्यात् करणे तृतीया समर्थविभक्तिः। अन्यत्रानभिधानान् न भवति, देवदत्तेन क्रीतम्, पाणिना क्रीतम् इति। द्विवचनबहुवचनान्तात् प्रतययो न भवति, प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतम् इति, अनभिधानादेव। यत्र तु प्रकृत्यर्थस्य सङ्ख्याभेदावगमे प्रमाणम् अस्ति तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति। द्वाभ्यां क्रीतम् द्विकम्। त्रिकम्। पञ्चकम्। तथा मुद्रैः क्रीतम् मौद्रिकम्। माषिकम्। न ह्येकेन मुद्रेन क्रयः सम्भवति।

लघु-सिद्धान्त-कौमुदी

तेन क्रीतम् ११४७, ५।१।३६

सप्तत्या क्रीतं साप्ततिकम्। प्रास्थिकम्॥

न्यासः

तेन क्रीतम्?। , ५।१।३६

"साप्ततिकम्(), आशीतिकम्()" इति। "प्राग्वतेष्ठञ्()" ५।१।१८ "नैष्किकम्()"; पाणिकम्()" इति। "असमासे निष्कादिभ्यः" ५।१।२० इति ठक्()। "शत्यम्(), शतिकम्()" इत। "असमासे निष्कादिभ्यः" ५।१।२० इति ठक्()। "शत्यम्(), शतिकम्()" इति। "शताच्च ठन्यतावशते" ५।१।२१ इति। "द्विकम्(), त्रिकम्()" इति। "संख्याया अतिशदन्तायाः कन्()" ५।१।२२। सामान्यार्थाभिधाने तेनेति तृतीयोपादनादिह कस्मान्न भवति--देवदत्तेन क्रीतम्, पाणिना क्रितम्()? इत्यत आह--"तेन" इत्यादि। करणे तृतीया। परिमूल्यात्? ततः प्रत्ययेन भवितव्यम्()। "अन्यत्र" इति। अन्यतर मूल्यात्? करणे तृतीया भवति। "अनभिधानात्()" इति। न हि या कत्त्तरि तृतीया याप्यमूल्यात्? करणे तृतीयोत्पद्यते, तदन्तादुत्पन्नः प्रत्यायो विवक्षितं वस्तु प्रतिपादयितुमलं सम्भवति। तथा ह--दैवदत्तिकं पाणिकमिति चोक्ते, देवदत्तेन कत्त्रा क्रीतम्? पाणिना करणेन क्रीतमित्येषोऽर्थो नावसीयते। देवदत्तेनेति कत्त्तरि तृतीया, पाणिनेति करणे। तदेतदुक्तं भवति--प्रगत्यासन्नविनिमयद्रव्यसम्बन्धानभिधानादिति। "अनभिधानादेव" इति। न हि प्रास्थिकमित्युक्ते, प्रस्थाभ्यां क्रीतं प्रश्थैर्वा क्रीतमित्येषोऽवगम्यते। तत्र पुनरभिधाने को हेतुः? शब्दशक्तिरीदृशी, किमत्रान्येन हेतुना! अपि च प्रस्थादयः शब्दा अर्थतस्तु परिमाणानामर्थानां वाचका इति तेषामभिधेयस्य प्रचये प्रवृत्तिसम्भवे को हेतुः? नन्वेवं वाक्येऽपि प्रचयो नोपपद्येत? नैष दोषः; वाक्ये हि प्रचयस्य वाचिका विभक्तिरस्तीति प्रचयाभिधानं न विरुध्यते। वृत्तौ तु न कश्चित्? प्रचयमाचष्ट इति नासौ वृत्तिविषये युज्यते। यदि तर्हि द्विवचनबहुवचनान्तात्? प्रत्ययेन न भवितव्यम्(), एवं सति द्वाभ्यां क्रीतं द्विकम्(), त्रिभिः क्रीतं त्रिकमित्येवमादि न सिध्यतीत्यत आह--"यत्र तु" इत्यादि। अनभिधानं द्विवचनान्तात्? प्रत्ययानुत्पत्तेर्हेतुः। तच्चाभिधानं क्व न भवति? यत्र प्रकृत्यर्थस्य संख्याभेदावगमो नास्तीति; प्रमाणाभावात्()। इह तु प्रमाणमस्त्येव किञ्चित्()। द्व्यादय एव शब्दाः प्रकृतित्वेनोपात्ताः। ते हि स्वप्रवृत्तिनिमित्तभूतयैव संख्ययाऽवच्छिन्नं वस्तु प्रतिपादयन्ति। अतः स्वार्थस्य संख्याविसेषावगमे प्रमाणम्()। तेनात्रानभिधानादित्येष हेतुनस्तिति भवति प्रत्ययः। "तथा" इत्यादि। यथा त्रिकमित्यादौ प्रकृत्यर्थसंख्यानभावोपगमे प्रमाणसम्भवाद्बहुवचनान्तादपि प्रत्ययो भवति, तथा मौद्()गिकमित्यादावपि

मुद्रादिशब्दप्रकृतिरत्र स्वार्थस्य संख्यावगमे प्रमाणमित्येतद्दर्शयितुमाह--"न ह्येकेन" इत्यादि। मुद्रादिनैकय व्यक्त्या क्रयो न भवतीति विनापि विभक्त्या मुद्रादिशब्दानुवृत्तौ बहुत्वं गम्यते। तत्र प्रमाणं भवति। एकग्रहण त्रयानुपयोगिनोद्र्वयोरप्युपलक्षणं वेदितव्यम्()॥

बाल-मनोरमा

तेन क्रीतम् १६७९, ५।१।३६

तेन क्रीतम्। अस्मिन्नर्थे तृतीयान्ताद्यथाविहितं ठञादयः स्युरित्यर्थः। ठञिति। "उदाह्रियते इति शेषः। गौ पुच्छिकमिति। "अगोपुच्छे"ति पर्युदासाट्ठगभावे ओत्सर्गिकष्ठञिति भावः। साप्ततिकमिति। सप्तत्या क्रीतमित्यर्थः। "अगोपुच्छसङ्ख्ये"ति पर्युदासाट्ठगभावे ठञिति भावः। प्रास्थिकमिति। प्रस्थेन क्रीतमित्यर्थः। "अगोपुच्छसङ्ख्यापरिमाणा"दिति पर्युदासाट्ठगभावे ठञिति भावः। ठगिति। "उदाह्रियते" इति शेषः। नैष्किकमिति। निष्केण क्रीतमित्यर्थः। "असमासे निष्कादिभ्यः" इति ठगिति भावः।

तत्त्व-बोधिनी

तेन क्रीतम् १२९८, ५।१।३६

तेनक्रीतम्। तेनेति तृतीयान्कात्क्रीतार्थे यथाविहितं प्रत्ययाः स्युः। ठञिति। "आर्हा"दिति सूत्रे "अगोपुच्छे"त्यादिपर्युदासाट्ठगभावे गोपुच्छसप्ततिप्रस्थेभ्यष्ठञ् भवतीत्यर्थः। ननु देव दत्तेन क्रीतं, [पाणिना क्रीतं,]संतोषेण क्रीतमित्यादिवतिप्रसङ्ग इति चेत्। अत्राहुः---करणे तृतीयैवेह समर्थविभक्तिः, सापि मूल्यद्रव्यसमर्पकाच्छब्दादुत्पन्ना, न त्वन्याऽपि, अन्यत्र त्वमिभिधानान्न प्रत्ययः। एतच्च "तद्धिताः"इति महासंज्ञाकरणाल्लभ्यते, तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इति व्याख्यानादिति।

---

सूत्रम्

काशिका-वृत्तिः

तस्य निमित्तं संयोगौत्पातौ ५।१।३८

तस्य इति षष्ठीसमर्थात् निमित्तम् इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत् तन् निमित्तं संयोगश्चेत् स भवति उत्पातो वा संयोगः सम्बन्धः प्राणिनां शुभाशुभसूचकः। महाभूतपरिणामः उत्पातः शतस्य निमित्त धनपतिना संयोगः शत्यः, शतिकः। साहस्रः। उत्पतः खल्वपि शतस्य निमित्तं उत्पातः दक्षिणाक्षिस्पन्दनम् शत्यम्, शतिकम्। साहस्रम्। तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानम्। वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्। सन्निपाताच् च इति वक्तव्यम्। सान्निपातिकम्।

न्यासः

तस्य निमित्तं संयोगोत्पातौ। , ५।१।३७

"महाभूतानाम्()" [महाभूतपरिणामः=उत्पातः--काशिका] इति। पृथिव्यप्तेजोवाय्वाकाशानाम्()। "साहरुआम्()" इति। शतमानादिसूत्रेण ५।१।२७ अण्()॥

बाल-मनोरमा

तस्य निमित्तं संयोगोत्पातौ १६८१, ५।१।३७

तस्य निमित्तम्। तस्य निमित्तं संयोग उत्पातो वेत्यर्थे यथाविहितं षष्ठ()न्ताट्ठञादयः स्युरित्यर्थः। शत्यः शतिको वेति।

शतस्य निमित्तमित्यर्थः। "शताच्चे"ति यट्ठनौ। "धनपतिसंयोग इति। याजनशुश्रूषादिसम्पर्क इत्यर्थः। उत्पाते उदाहरति--शत्यं शतिकं वा दक्षिणाक्षिस्पन्दनमिति। शतस्य निमित्तमित्यर्थः। सूचकत्वमेवात्र निमित्तत्वमिति भावः। उपसङ्ख्यानमिति। "आर्हीयस्य ठक्" इति शेषः। कोपनं-वृद्धिः।

संन्निपाताच्चेति। "तस्य निमित्तं संयोगोत्पातौ" इत्यर्थे ठ"गिति शेषः। सान्निपातिकमिति। सन्निपातो--वाततित्तश्लेष्मणां दोषाणां सङ्कर इति वैद्यके प्रसिद्ध। तस्य निमित्तं--सान्निपातिकम्, ज्वरप्रकोपादौ अपथ्यभक्षणादिसंयोगः, संनिपातसूचकं जिह्वाकाष्ण्र्यादि च।

---

सूत्रम्

काशिका-वृत्तिः

गोद्व्यचो ऽसङ्ख्यापरिमाणाश्वादेर् यत् ५।१।३९

गोशब्दाद् द्व्यचश्च प्रातिपदिकात् सङ्ख्यापरिमाणाश्वादिविवर्जितात् यत् प्रत्ययो भवति तस्य निमित्तं संयोगौत्पातौ ५।१।३७ इत्येतस्मिन्नर्थे। ठञादीनाम् अपवादः। गोः निमित्तं संयोगः उत्पातो वा गव्यः। द्व्यचः खल्वपि धन्यम्। स्वर्ग्यम्। यशस्यम्। आयुष्यम्। असङ्ख्यापरिमाणाश्वादेरिति किम्? पञ्चानां निमित्तम् पञ्चकम्। सप्तकम्। अष्टकम्। परिमाण प्रास्थिकम्। खारीकम्। अश्वादि आश्विकः। ब्रह्मवर्चसादुपसङ्ख्यानम्। ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यम्। अश्व। अश्मन्। गण। ऊर्णा। उमा। वसु। वर्ष। भङ्ग। अश्वादिः।

न्यासः

गोद्व्यचोऽसंख्यापरिमाणा�आआदेर्यत्?। , ५।१।३८

"ठञादीनामपवादः" इति। अदिशब्देन ठगादीनां ग्रहण()। ननु च संख्यापरिमाणयोः पर्युदासात्? कनष्ठकोऽपवाद इति वक्तुं शक्यते, तत्कस्माट्ठञादीनामित्युच्यते? ठञादीनामित्ययमतद्गुणसंविज्ञानो बहुव्रीहिद्र्रष्टव्यः। अनयैवापेक्षयोक्तम्()--अ()आस्य निमित्तमा()इआकमिति। ठक्(), प्रत्युदाह्मतः। सर्वप्रत्ययसम्भवः, तद्बाधनार्थमिदमुक्तम्()। "पञ्चकम्, अष्टकम्()" इति। संख्यालक्षणः कन्? ५।१।२२। "प्रास्थिकः" इति। प्राग्वतीयष्ठञ्(), ५।१।१८॥

बाल-मनोरमा

गोद्व्यचोऽसङ्ख्यापरिमाणा�आआदेर्यत् १६८२, ५।१।३८

गोद्व्यचः। तस्य निमित्तं संयोग उत्पातो वेत्यर्थे गोशब्दात्,द्व्यश्च षष्ठ()न्ताद्यत्प्रत्ययः स्यात्, नतु सङ्ख्यायाः परिमाणाद()आआदेश्चेत्यर्थः। ठकोऽपवादः। द्व्यच इति। "उदाह्रियते" इति शेषः। धन्य इत्यादि। धनस्य यशसः स्वर्गस्य च निमित्तमित्यर्थः। विजयस्येति। "निमित्त"मिति शेषः। वैजयिक इति। आर्हीयष्ठक्। पञ्चानामिति। "निमित्त"मिति शेषः। पञ्चकमिति। "सङ्ख्यायाः" इति कन्। सप्तकमिति। सप्तानां निमित्तमित्यर्थः। प्रास्थिकमिति। प्रस्थस्य निमित्तमित्यर्थः। "आर्हा"दिति ठग्विधौ परिमाणपर्युदासात् प्राग्वतीयष्ठञ्। खारीकमिति। खार्या निमित्तमित्यर्थः। आर्हीयष्ठरक्। आश्मकमिति। अश्मनो निमित्तमित्यर्थः। आर्हीयष्ठक्। "नस्तद्धिते" इति टिलोपः।

ब्राह्वर्चसादिति। "गोद्व्यचः" इति सूत्रे "ब्राह्वर्चसाच्चे"ति वक्तव्यमित्यर्थः। ब्राह्वर्चस्यमिति। ब्राह्वर्चस्य निमित्तमित्यर्थः।

तत्त्व-बोधिनी

गोव्यचोऽसङ्ख्यापरिमाणा�आआदेर्यत् १३००, ५।१।३८

पञ्चकमिति। सङ्ख्यालक्षणैः कन्। आश्मिकमिति। अश्मनो निमित्तमित्यर्थे ठक्। "नस्तद्धिते"इति टिलोपः।

---

सूत्रम्

काशिका-वृत्तिः

पुत्राच् छ च ५।१।४०

पुत्रशब्दाच् छः प्रत्ययो भवति, चकाराद् यत् च तस्य निमित्तं संयोग उत्पातौ ५।१।३७ इत्येतस्मिन् विषये। द्व्यचः इति नित्ये यति प्राप्ते वचनम्। पुत्रस्य निमित्तं संयोगः उत्पातो वा पुत्रीयम्, पुत्र्यम्।

बाल-मनोरमा

पुत्राच्छ च १६८३, ५।१।३९

पुत्राच्छ च। तस्य निमित्तमित्येव। कथं तर्हि "आरेभिरे यतात्मानः पुत्रीयामिष्टिमृत्विजः" इति?। नहीष्टिः संयोग उत्पातो वा। उच्यते--संयुज्यतेऽनेनेति संयोगः इष्टया हि पुत्रेणफलेन युज्यते यष्टा।

तत्त्व-बोधिनी

पुत्राच्छ च १३०१, ५।१।३९

पुत्राच्छ च। "गोव्यचः"इति नित्यं यति प्राप्ते वचनम्। कथं पुत्रीयः क्रतुरिति। नहि कतुः संयोगो, नाप्युत्पात् इति चेत्। अत्राह हरदत्तः---संयुज्यतेऽनेनेति व्युत्पत्त्या क्रतुरपि संयोग एव, यागकरणेन हि पुरषः फलेन संयुज्यते अतो यागादिरपि संयोगो,न केवलं संबन्धएवेत्याग्रह इति।

---

सूत्रम्

काशिका-वृत्तिः

सर्वभूमिपृथिवीभ्याम् अणञौ ५।१।४१

सर्वभूमिपृथिवीशब्दाभ्यां यथासङ्ख्यम् अणञौ प्रत्ययु भवतः तस्य निमित्तं संयोगौत्पातौ ५।१।३७ इत्येतस्मिन् विषये। ठको ऽपवादौ। सर्वभूमेर् निमित्तं संयोग उत्पातो वा सार्वभौमः। पार्थिवः। सर्वभूमेः अनुशतिकादि पाठादुभयपदवृद्धिः।

लघु-सिद्धान्त-कौमुदी

सर्वभूमिपृथिवीभ्यामणञौ ११४८, ५।१।४०

न्यासः

सर्वभूमिपृथिवीभ्यामणञौ। , ५।१।४०

बाल-मनोरमा

सर्वभूमिपृथिवीभ्यामणञौ १६८४, ५।१।४०

सर्वभूमि। तस्य निमित्तमित्येव। सर्वभूमि, पृथिवी--आभ्यां यथासङ्ख्यमणञौ स्तः। सार्वभौम इति। ठञोऽपवादोऽण्। पार्थिव इति। पृथिव्या निमित्तं संयोग उत्पातो वेत्यर्थः। स्त्रिया पार्थिवी। सार्वभौमशब्दे कथमुभयपदवृद्धिरित्यत

आह--अनुशतिकादिषु पठ()त इति। तथाच "अनुशतिकादीनां चे"त्युभयपदवृद्धिरिति भावः।

तत्त्व-बोधिनी
सर्वभूमिपृथिवीभ्यामाणञौ १३०२, ५।१।४०

सर्वभूमि। आभ्यां यथासङ्ख्यमणञौ स्तः।

---

सूत्रम्
काशिका-वृत्तिः
तस्य ईश्वरः ५।१।४२

तस्य इति षष्ठीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः ईश्वरः इत्येतस्मिन् विषये। सर्वभूमेः ईश्वरः सार्वभौमः। पार्थिवः। षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देशः प्रत्ययार्थस्य निवृत्तये। अन्यथा संयोगोत्पाताविव ईश्वरो ऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं संभाव्येत।
लघु-सिद्धान्त-कौमुदी
तस्येश्वरः ११४९, ५।१।४१

सर्वभूमिपृथिवीभ्यामणञौ स्तः। अनुशतिकादीनां च। सर्वभूमेरीश्वरः सार्वभौमः। पार्थिवः॥
न्यासः
तस्ये�आरः। , ५।१।४१

"तस्य निमित्तम्()" ५।१।३७ इत्यतस्तस्यग्रहणमनुवत्र्तते, तत्किमर्थं पुनस्तस्यनिर्देशः? इत्याह--षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देशः" इत्यादि। "प्रत्ययार्थस्य" इति। निमित्तस्य। "अन्यथा" इति। यदि षष्ठीनिर्देशः प्रत्ययार्थे निवृत्त्यर्थो न क्रियते, ततो यथा संयोग उत्पातश्च प्रत्ययार्थविशेषणम्(), तथे()आरोऽपि तस्यैव विशेषणं सम्भाव्येत। तथा चे()आरविशिष्टे निमित्त एव प्रत्ययः स्यात्()॥
बाल-मनोरमा
तस्ये�आरः १६८५, ५।१।४१

तस्ये()आरः।

तत्त्व-बोधिनी
तस्ये�आरः १३०३, ५।१।४१

तस्ये()आरः। "तस्य निमित्त"मित्यतोऽनुवृत्त्यैव सिद्धे पुनः "तस्ये"ति निर्देशो निमित्तरूपप्रत्ययार्थस्य निवृत्तये। अन्यथा हि संयोगोत्पाताविवे()आरोऽपि प्रत्ययार्थस्य विशेषणं संभाव्येत।

---

सूत्रम्
काशिका-वृत्तिः
तत्र विदित इति च ५।१।४३

तत्र इति सप्तमीसमर्थाभ्यां सर्वभूमिपृथिवीशब्दाभ्यां यथासङ्ख्यम् अणञौ प्रत्ययौ भवतः विदितः इत्येतस्मिन्नर्थे। विदितो ज्ञातः प्रकाशितः इत्यर्थः। सर्वभूमौ विदितः सार्वभौमः। पार्थिवः।

न्यासः

तत्र विदिति इति च।, ५।१।४२

ई()आरानुकर्वणार्थश्चकारः। इतिकरणो विवक्षार्थः॥

बाल-मनोरमा

तत्र विदित इति च १६८६, ५।१।४२

तत्र विदित इति च। सूत्रद्वयमिदम्। सर्वभूमिपृथिवीभ्यामित्यनुवर्तते। "तस्य निमित्तं संयोगात्पाता"विति तु निवृत्तम्, पुनस्तस्येत्युक्तेः। तस्ये()आर इत्यर्थे षष्ठ()न्तात्, तत्र विदित इत्यर्थे तु सप्तम्यन्तादणञौ स्त इत्यर्थः। योगविभागो यथासङ्ख्यनिवृत्त्यर्थः, उत्तरसूत्रे "तत्र विदित" इत्यस्यैवानुवृत्त्यर्थश्च।

तत्त्व-बोधिनी

तत्र वदिति इति च १३०४, ५।१।४२

तत्र वदिति इति च। योगविभाग उत्तरार्थो, यथासङ्ख्यनिवृत्त्यर्थश्च।

---

सूत्रम्

काशिका-वृत्तिः

लोकसर्वलोकाट् ठञ् ५।१।४४

लोकसर्वलोकशब्दाभ्यां तत्र इति सप्तमीसमर्थाभ्याम् विदितः इत्येतस्मिन् विषये ठञ् प्रत्ययो भवति। लोके विदितः लौकिकः। सार्वलौकिकः। अनुशतिकादित्वातुभयपदवृद्धिः।

न्यासः

लोकसर्वलोकाट्ठञ्?।, ५।१।४३

सर्वत्र ठञ्ग्रहणं ठको निवृत्त्यर्थम्(), अन्यथा हि प्रकृतिमात्रनिर्देशे क्रियमाणे "आर्हात्" ५।१।१९ इति ठक्प्रसज्येत॥

बाल-मनोरमा

लोकसर्वलोकाट्ठञ् १६८७, ५।१।४३

लोकसर्व। तत्र विदित इत्यर्थे इति। योगविभागसामर्थ्यात्तस्ये()आर इति नानुवर्तत इति भावः। लौकिक इति। लोकेषु विदित इत्यर्थः। सर्वलोकशब्दे विशेषमाह--अनुशतिकादित्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

तस्य वापः ५।१।४५

तस्य इति षष्ठीसमर्थाद् वापः इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। उप्यते ऽस्मिन् वापः क्षेत्रम् उच्यते। प्रस्थस्य वापः क्षेत्रं प्रास्थिकम्। द्रौणिकम्। खारीकम्।

न्यासः

तस्य वापः। , ५।१।४४

"अप्यतेऽस्मिन्? वापः" इति। अधिकरणसाधनः "हलश्च" ३।३।१२१ इति घञ्()॥

बाल-मनोरमा

तस्य वापः १६८८, ५।१।४४

तस्य वापः। अस्मिन्नर्थे षष्ठ()न्ताद्यथाविहितं टञादयः स्युरित्यर्थः। प्रास्थिकमिति। प्रस्थपरिमितबीजवापयोग्यं क्षेत्रमित्यर्थः। "आर्हा"दिति ठग्विधौ परिमाणपर्युदासात् प्राग्वतीष्ठञ्। द्रौणिकमिति। निष्कादित्वाट्ठक्। खारीकमिति। खार्या ईकन्। द्रोणस्य खार्याश्च वाप इत्यर्थः।

तत्त्व-बोधिनी

तस्य वापः १३०५, ५।१।४४

तस्य वापः। "तस्ये"ति वापापेक्षया क्रमणी षष्ठीत्याह----प्रस्थस्येति। कर्तरि षष्ठ()आं तु "देवदत्तस्य वापः क्षेत्र"मित्यादौ स्यादिति भावः। खारीकमिति।

---

सूत्रम्

काशिका-वृत्तिः

पात्रात् ष्ठन् ५।१।४६

पात्रशब्दात् ष्ठन् प्रत्ययो भवति तस्य वापः ५।१।४४ इत्येतस्मिन् विषये। ठञो ऽपवादः। नकारः स्वरार्थः। षकारो ङीषर्थः। पात्रशब्दः परिमाणवाची। पात्रस्य वापः पात्रिकं क्षेत्रम्। पात्रिकी क्षेत्रभक्तिः।

न्यासः

पात्रात्? ष्ठन्?। , ५।१।४५

"पात्रशब्दः परिमाणवाची" इति। "ठञोऽपवादः" इति। अत्रेयं युक्तिः--यदि ह्यपरिमाणवाची स्यात्? तदार्हीयस्य ठकोऽपवादः, न ठञः। "पात्रिकी" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्()॥

बाल-मनोरमा

पात्रात्ष्ठन् १६८९, ५।१।४५

पात्रात् ष्ठन्। तस्य वाप इत्येव। पात्रिकमिति। पात्रस्य वाप इत्यर्थः। षित्त्वं ङीषर्थमित्याह--पात्रिकीति।

---

सूत्रम्

काशिका-वृत्तिः

तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ५।१।४७

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत् तत् प्रथमासमर्थं वृद्ध्यादि चेत् तद् दीयते। दीयते इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकम् अभिसम्बध्यते। तत्र यदधमर्णेन उत्तमर्णाय मूलधनातिरिक्तं देयं तद् वृद्धिः। ग्रामादिषु स्वामिग्राह्यो भागः आयः। पटादीनाम् उपादानमूलादतिरिक्तं द्रव्यं लाभः। रक्षानिर्वेशो राजभागः शुल्कः।

उत्कोचौपदा। पञ्च अस्मिन् वृद्धिर् वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः। सप्तकः। शत्यः, शतिकः। साहस्रः। चतुर्थ्यर्थ उपसङ्ख्यानम्। पञ्च अस्मै वृद्धिर् वा आयो वा लाभो वा उपदा वा दीयते पञ्चको देवदत्तः। सिद्धं त्वधिकरणत्वेन विवक्षितत्वात्। सममब्राह्मणे दानम् इति यथा।

न्यासः

तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते। , ५।१।४६

ननु च वृद्ध्यादीनां बहुत्वाख्यानेनैव बहुवचनं तेन भवितव्यमितित कथं दीयत इत्येकवचनान्तेन तस्य निर्देशः? इत्याह--"दीयत इत्येकवचनम्()" इत्यादि। यदि समुदितैर्वृद्ध्यादिभिः सम्बन्धः क्रियते तर्हि स्याद्बहुवचनम्()। न च तैः समुदितैःस क्रियते, किं तर्हि? प्रत्येकम्(), अत एकवचनमेव। वृद्धिशब्द इह लौकिको धनविशेषवाची गृह्यते, न च संज्ञापदम्(), आयादिभिर्धनविशेषवाचिभिः सह निर्देशात्()। अत एवाह--"तत्र" इत्यादि। उत्तमर्णस्य यद्धनं तस्मादतिरिक्तमधिकं धनमधमर्णेन यद्दातव्यं तद्()वृद्धिः। "ग्रामादिषु" इति। आदिशब्देन क्षेत्रादि। "पटादीनाम्()" इत्यादि। पटादीनां व्यवह्रियमाणानामुपादानं सूत्रादि। तस्य यन्मूल्यं तस्मादतिरिक्तं द्रव्यं पटादिविक्रयेण यल्लभ्यते स लाभ-। "रक्षानिर्वेशः" इति। वणिजां रक्षाकारी राज्ञो भागो रक्षानिर्वेश इत्युच्यते। ननु चासावपयायः, तदपार्थकं शुल्कस्य पृथगुपादानम्()? नैतदस्ति; पञ्चास्मिन्? ग्राम आय इत्यायं प्रति ग्रामस्याधिकरणभावः; उत्पद्यमानस्यायस्याधेयबावात्()। शुल्के तु न सम्भवति। पञ्चास्मिन्? शते शुल्का इति शतं न शुल्कस्याधिकरणम्(), किं तर्हि? इयतापरिच्छेदः शतेन शुल्कस्य क्रियते। तस्मादस्य भिन्नत्वात्? शुल्कः पृथगुक्तः। "सिद्धं तु" इत्यादि। विवक्षातः कारकाणि भवन्तीति सम्प्रदानाख्ये चाधिकरणत्वेन विवक्षेत्याह--"समम्()" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते १६९०, ५।१।४६

तदस्मिन्। वृद्धि, आय, लाभ, शुल्क, उपदा एषां द्वन्द्वात्प्रथमाबहुवचनम्। ननु तर्हि दीयत इति कथमेकवचनमित्यत आह--वृद्धिर्दीयत इत्यादि क्रेमेणेति। एवंच तदस्मिन्वृद्धिर्दीयते, तदस्मिन् आयो दीयते, तदस्मिन् लाभो दीयते, तदस्मिन् शुल्को दीयते, इत्यर्थेषु प्रतमान्ताद्यथाविहितं ठञादयः स्युरित्यर्थः। पञ्चक इति। "सङ्ख्यायाः" इति कन्। शतिकः। शत्य इति। शतमस्मिन्वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा दीयते इति विग्रहः। "शताच्च ठन्यतौ"। साहरुआ इति। सहरुआमस्मिन्दीयते इत्यादि विग्रहः। "शतमानसहरुओ"त्यण्। रक्षानिर्वेश इति। रक्षा=प्रजापरिपालनम्, तदर्थे निर्वेशः=भृतिः रक्षानिर्वेशः। उत्कोच इति। "मह्रं किञ्चिद्दत्तं चेत्तव राजद्वारेऽनुरकूलो भवामी"त्यादि समयं कृत्वा यद्गृह्रते तदुत्कोच इत्युच्यत इत्यर्थः।

चतुथ्र्यर्थ इति। तदस्मै वृद्ध्यादि दीयते इत्युपसंख्यातव्यमित्यर्थः। सममब्राआह्णे इति। एवंच सम्प्रदानस्यैवाधिकरणत्वविवक्षया इष्टसिद्धेरुपसहख्यानमिदं नादर्तव्यमिति भावः।

तत्त्व-बोधिनी

तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते १३०६, ५।१।४६

तदस्मिन्। प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति। शुल्कग्रहणं प्रपञ्चार्थं, तस्याप्यायविशेषत्वात्। तथा च "ठगायस्थानेभ्यः"इति ठग्भवति, शौल्कशालिक इथि हरदत्तः। उपदा दीयत इति। जसः सस्य रुत्वे यत्वे च यलोपः। साहरुआ इति। "शतमाने"त्यादिनाऽण्। रक्षानिर्वेश इति। निर्वेशो ---भृतिः। रक्षानिमित्तको निर्वेशो रक्षानिर्वेशः। संबन्धषष्ठ()आ समासः। सममित्यादि। एवं च सम्प्रदानस्यैवाऽधिकरणत्वविवक्षयेष्टसिद्धौ

उपसङ्ख्यानं नादर्तव्यमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पूरणार्धाट् ठन् ५।१।४८

पूरणवाचिनः शब्दातर्धशब्दाच् च ठन् प्रत्ययो भवति तदस्मिन् वृद्ध्याय। लाभशुल्कौपदा दीयते ५।१।४६ इत्येतस्मिन्नर्थे। यथायथं ठक्टिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः। तृतीयिकः। पञ्चमिकः। सप्तमिकः। अर्धिकः। अर्धशब्दो रुपकार्धस्य रूढिः।

न्यासः

पुत्राच्छ च।, ५।१।४७

न्यासः

पूरणाद्र्धाट्ठन्?।, ५।१।४७

"पूरणवाचिनः" इति। पूर्यते येनार्थेन स पूरणः, तद्वाचिनः प्रातिपदिकात्()। एतेन "पूरण" इत्यर्थस्य ग्रहणम्(), न प्रत्ययस्येति दर्शयति। कथञ्च प्रत्ययस्य ग्रहणं स्यात्()? यदि पूरणग्रहणं स्वर्येत। तस्मिन्? हि स्वर्यमाणे "तस्य पूरणे डट्()" ५।२।४८ इत्यधिकृत्य ये प्रत्यया विहितास्ते गृह्रेरन्()। किञ्च स्यात्()? "पूरणाद्भागे तीयादन्()" (५।३।४८) इत्यन्नन्ताट्ठन्? न स्यात्(); अपूरणप्रत्ययान्तत्वात्()। तस्याग्रहणे तु सति स्वार्थिकः स्यादन्()। तस्मिन्नप्युत्पन्ने पूरण एवार्थे तदन्तमपि वर्तत इति ततोऽपि ठन्? सिद्धो भवति। "ठक्ठनोरपवादः" इति। पूरणादार्हीयस्य ठकोऽपवादः। अर्धादपि "अद्र्धाच्चेति वक्तव्यम्()" (वा।५०२) इत्यौपसंख्यानिकस्य टिठनः। ठकि टिठनि च सति ङीप्? स्यात्(); ठनि तु टाब्भवति। "द्वितीयिकः" इति। द्वयोः पूरण इति "द्वेस्तीयः" ५।२।५३ इति तोयप्रत्ययः। "तृतीयिकः" इति। "त्रेः सम्प्रसारणञ्च" ५।२।५४। "पञ्चमिकः, सप्तमिकः" इति। "तस्य पूरणे डट्()" ५।२।४८ इति डट्प्रत्ययः, तस्य "नान्तादसंखयादेर्मट्()" ५।२।४९ इति मडागमः॥

बाल-मनोरमा

पूरणार्धाट्ठन् १६९१, ५।१।४७

पूरणार्धाट्ठन्। तदस्मिन् वृद्ध्यादि दीयत इत्यर्थे पूरणप्रत्ययान्तादर्धशब्दाच्च प्रथमान्ताट्ठन् स्यादित्यर्थः। द्वितीयिक तृतीयिकः इति। "आर्हा"दिति ठकोऽपवादष्ठन्। अर्धिक इति। अर्धमस्मिन् वृद्ध्यादि दीयते इत्यर्थः। "अर्धाच्चेति वक्तव्य"मिति टिठनोऽपवादष्ठन्। टिठनि सति तु स्त्रियां ङीप् स्यात्। अर्धिकेति तु टाबेवेष्यते। रूपकस्येति। रूप्यस्य कार्षापणस्येत्यर्थः। रूढ इति। अन्यथा अर्धशब्दस्य रूप्यकसापेक्षत्वादसामथ्र्यं स्यादिति भावः। रूप्यकस्यार्धे रूढ इत्यत्र प्रमाणं मृग्यम्। असामथ्र्यं तु नित्यसापेक्षत्वाद्वारयितुं शक्यमित्याहुः।

तत्त्व-बोधिनी

पूरणार्धाट्ठन् १३०७, ५।१।४७

पूरणार्धाट्ठन्। पूर्यतेऽनेनेति पूरणोऽर्थस्तद्वाचिनोऽर्धशब्दाच्च ठन्स्यात्। अर्धिक इति। "अर्धाच्चेति वक्तव्यमिति टिठन्प्राप्तः, सति च तस्मिन्स्त्रियां ङीप्स्यात्। इष्यते तु टाप्।

---

सूत्रम्

काशिका-वृत्तिः

भागाद् यच् च ५।१।४९

भागशदाद् यत् प्रत्ययो भवति, चकारात् ठन् च, तदस्मिन् वृद्ध्यायलाभशुल्कौपदा दीयते ५।१।४६ इत्येतस्मिन्नर्थे। ठञो ऽपवादः। भागो। वृद्ध्यादिरस्मिन् दीयते भाग्यं, भागिकं शतम्। भाग्या, भागिका विंशतिः। भागशब्दो ऽपि रूपकार्धस्य वाचकः।

न्यासः

भागाद्यच्च। , ५।१।४८

"ठञोऽपवादः" इति। न ठकः; भागशब्दस्य परिमाणत्वात्()। ननु चाङ्गमात्रवचनोऽपि भागशब्दोऽस्ति? सत्यमस्ति; न तु तस्येह ग्रहणम्()। तस्य हि ग्रहणे वृद्ध्यादिभिः सम्बन्दो नोपपद्यते। परिमाणवचनस्तु प्रसिद्धो रूपकांशे वत्र्तत इति वृद्ध्यादिभिः सम्बन्धः उपपद्यते॥

बाल-मनोरमा

भागाद्यच्च १६९२, ५।१।४८

भागाद्यच्च। तदस्मिन् वृद्ध्यादि दीयत इत्यर्थे भागशब्दात्प्रथमान्ताद्यत्प्रत्ययश्च स्यादित्यर्थः। चाट्ठनिति। "पूर्वसूत्रादनुकृष्यते" इति शेषः। भागशब्दोऽपि रूपकस्यार्ध इति। "वर्तते" इति शेषः।

तत्त्व-बोधिनी

भागाद्यच्च १३०८, ५।१।४८

रुपकस्येति। रूपकं--कार्षापणम्। रूढैति। तथा च भागवदद्रव्यसापेक्षत्वेनाऽसामथ्र्यमिह नोद्भावनीयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तद् धरति वहव्त्यावहति भाराद् वंशादिभ्यः ५।१।५०

तदिति द्वितीयासमर्थाद् धरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। प्रकृतिविशेषणं भाराद् वंशादिभ्यः इति। वंशादिभ्यः परो यो भारशब्दः तदन्तात् प्रातिपदिकातिति। वंशभारं हरति वहति आवहति वा वांशभारिकः। कौटजभारिकः। बाल्वजभारिकः। भारातिति किम्? वंशं हरति। वंशादिभ्यः इति किम्? व्रीहिभारं हरति। अपरा वृत्तिः भाराद् वंशादिभ्यः इति, भारभूतेभ्यो वंशादिभ्यः इत्यर्थः। भारशब्दो ऽर्थद्वारेण वंशादीनां विशेषणम्। भारभूतान् वंशान् हरति वांशिकः। कौटजिकः। बाल्वजिकः। भारातिति किम्? वंशं हरति। वंशादिभ्याः इति किम्? भारभूतान् व्रीहीन् वहति। सूत्रार्थद्वयम् अपि च एतदाचार्येण शिष्याः प्रतिपादिताः। तदुभयम् अपि ग्राह्यम्। हरति देशान्तरं प्रापयति चोरयति वा। वहत्युत्क्षिप्य धारयति इत्यर्थः। आवहति उत्पादयति इत्यर्थः। वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु। खट्वा। वंशादिः।

न्यासः

तद्धरपि वहत्यावहति भाराद्वंशादिभ्यः। , ५।१।४९

"प्रकृतिविशेषणम्()" इत्यादि। प्रकृतेः प्रातिपदिकस्य। "भाराद्वंशादिभ्य इत्यर्थः" इति। अत्रार्थे वंशादय एव शुद्धाः प्रत्ययमुत्पादयन्ति। ननु च वंशादयः शब्दाः, भार इत्यपि शब्द एव; न च शब्द शब्दान्तरस्य समानाधिकरणं विसेषणमुपपद्यते, तत्कथं भारभूतेभ्यो वंशादिभ्य इत्येषोऽर्थो भवति? इत्याह--"भारशब्दोऽर्थद्वारेण" इत्यादि। वंशादीनांमर्थस्य भारशब्दस्यार्थो मुख्यं विशेषणम्(), अर्थद्वारेण तु वंशादीनां भारशपब्दस्य चोपचरितम्। अर्थधर्मेण शब्दोऽपि तथा व्यपदिश्यत इत्यर्थः॥

बाल-मनोरमा

तद्धरति वहत्वावहति भाराद्वंशादिभ्यः १६९३, ५।१।४९

तद्धरति वहति। वंशाद्भारादिभ्य इत्येकवचनबहुवचनान्तयोः सामानाधिकरण्याऽसम्भावद्वैयधिकरण्येनान्वयः। स च व्युक्रमः, व्याख्यानात्। तदाह--वंशादिभ्यः पर इति। "द्वितीयान्ता"दित्यनन्तरं हरति वहति आवहतीत्यर्थे यथाविहितं प्रत्ययः स्या"दिति शेषः। हरणं कथञ्चिद्देशान्तरप्रापणं, चौर्यं वा। शकटादिना प्रापणं वहनम्। स्वसमीपं प्रापणमावहनम्, उत्पादनं वा। वांशभारिक इति। "आर्हा"दिति ठक्। अत्र पञ्चम्यन्तयोर्व्युक्रमेण वैयधिकरण्येन चान्वये प्रमाणाऽभावादाह--भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरमिति। "भारात्परेभ्यो वंशादिभ्य" इत्यर्थभ्रमव्यावृत्तये व्याख्यान्तरं विशदयति--भारभूतेभ्यो वंशादिभ्य इतीति। वंशादिशब्दानां भारभूतत्वं तु भारबूतवंशादिवृत्तेर्बोध्यम्। अस्मिन्व्याख्याने भारादित्येकवचनमार्षम्। यद्वा प्रत्येकान्वयाभिप्रायम्। वस्तुतो भारबूता ये वंशादयस्तद्वाचिभ्य इति यावत्।

तत्त्व-बोधिनी

तद्धरति वहत्यावहति भाराद्वंशादिभ्यः १३०९, ५।१।४९

भारभूतेभ्यो वंशादिभ्य इथि। ननु वंशादयः शब्दास्ते कथं भारभूता इत्यत आह---भारभूतानिति। भारशब्दोऽर्थद्वारा वंशादीनां विशेषणमिति भावः। "भारेभ्यः"इति वक्तव्येप्रत्येकं संबन्धविवक्षाया सूत्रे "भारात्िति निर्देशः।

---

सूत्रम्

काशिका-वृत्तिः

वस्नद्रव्याभ्यां ठन्कनौ ५।१।५१

वस्नद्रव्यशब्दाभ्याम् द्वितीयासमर्थाभ्यां यथासङ्ख्यं ठन् कनित्यैतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु। वस्नं हरति वहति वा वस्निकः। द्रव्यकः।

न्यासः

वस्नद्रव्याभ्यां ठन्कनौ। , ५।१।५०

पूर्वेण ठकि प्राप्ते तदपवादौ ठन्कनौ विधीयते॥

बाल-मनोरमा

वस्नद्रव्याभ्यां ठन्कनौ १६९४, ५।१।५०

वस्नद्रव्याभ्याम्। तद्धरतिवहत्वायवहतीत्यनुवर्तते इत्यभिप्रेत्याह--वस्नं हरतीत्यादि।

तत्त्व-बोधिनी

वस्नद्रव्याभ्यां ठन्कनौ १३१०, ५।१।५०

वस्निक इति। वस्नं---मूल्यम्।

---

सूत्रम्

काशिका-वृत्तिः

सम्भवत्यवहरति पचति ५।१।५२

ततिति द्वितीया समर्थविभक्तिरनुवर्तते। तदिति द्वितियासमर्थात् सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। तत्र अधेयस्य प्रमाणानतिरेकः सम्भवः। उपसंहरणम् अवहारः। विक्लेदनं पाकः। प्रस्थं सम्भवति अवहरति पचति वा प्रास्थिकः। कौडविकः। खारीकः। ननु च पाके च सम्भवो ऽस्ति? न अस्त्यत्र नियोगः। प्रस्थं पचति ब्राह्मणी प्रास्थिकी। तत्पचति इति द्रोणादण् च। द्रोणं पचति द्रौणी, द्रौणिकी।

न्यासः

सम्भवत्यवहरति पचति। , ५।१।५१

"प्रमाणानतिरेकः" इति। प्रमाणादनाधिक्यमित्यर्थः। "ननु च" इत्यादि। तथा हि--सक्थालीप्रस्थं पचति; तत्रावश्यं प्रस्थस्य सम्भवेन भवितव्यम्(); न ह्रन्यथा शक्यते पक्तुमित्यभिप्रायः। "नास्त्यत्र नियोगः" इति। व्यभिचारमाह--"प्रस्थं पचति ब्राआह्णी" इति। अत्र हि पाक एव गम्यते, न सम्भवः॥ "ठञोऽपवादः" इति। आञकादीनां परिमाणकत्वात्? पूर्वेम प्राप्तस्य॥

बाल-मनोरमा

संभवत्वहरति पचति १६९५, ५।१।५१

संभवत्यवहरति। "त"दिति द्वितीयान्तमनुवर्तते। द्वितीयान्तात्संभवतीत्याद्यर्थेषु यथाविहितं प्रत्ययः स्यादित्यर्थः। प्रास्थिक इति। "आर्हा"दित्यत्र परिमाणपर्युदासाट्ठगभावे प्राग्वतीयष्ठञ्। ननु "संभवती"त्यस्य उपपद्यत इत्यर्थकत्वादकर्मकत्वात्प्रस्थं संभवतीति कथं द्वितीयेत्यत आह--समावेशयतीत्यर्थ इति। उपसर्गवसादिति भावः। प्रास्थिकी ब्राआह्णीति। ठञन्तत्वान्ङीबिति भावः। अवहरतीप्येतीत्यर्थ इति। उपसर्गवशादिति भावः। प्रास्थिकी ब्राआह्णीति। ठञन्तत्वान्ङीबिति भावः। अवहरतीप्येद्व्याचष्टे--उपसंहरतीति। किंचिदूनमपि यया प्रस्थपरिमितं भवति तथा मिमीत इत्यर्थः। तत्पचतीति द्रोणादण् चेति। वार्तिकमिदम्। द्वितीयान्तोद्द्रोणशब्दात्पचतीत्यर्तेऽण्च स्यादित्यर्थः। पचतिग्रहणं सम्भवत्यवहरतिनिवृत्त्यर्थम्। चाट्ठञिति। "आर्हा"दिति ठग्विधौ परिमाणपर्युदासाट्ठगभावे प्राग्वतेष्ठञेव चकारादनुकृष्यत इति भावः। द्रौणीति। अणन्तत्वान्ङीप्। द्रौणिकीति। ठञन्तत्वान्ङीप्।

तत्त्व-बोधिनी

संभवत्यवहरति पचति १३११, ५।१।५१

संभवत्यवहरति। आधारप्रमाणादाधेयप्रमाणस्य यदनाधिक्यं तदुपसर्जनं धारणं संभवतेर्थः। तेन सकर्मकत्वात्तदिति द्वितीयान्तानुवृत्तिर्न विरुध्यते। तदाह---प्रस्थं स्वस्मिन्निति। प्रास्थिकीति। ठञन्तत्वान्ङीप्। अवहरतीत्येतव्द्याचष्टे---उपसंहरतीति।

तत्पचतीति द्रोणादण् च। तत्पचतीति। वार्तेकेऽस्मिन्पचतिग्रहणं संभवत्यवहरतीतिनिवृत्त्यर्थम्। द्रोणपरिमिते व्रीह्यादौ

द्रोणशब्दो लाक्षणिकः। पक्षे ठञिति। आढकादीनां परिमाणत्वाट्टक् नेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

आढकाऽचितपात्रात् खो ऽन्यतरस्याम् ५।१।५३

आढकाऽचितपात्रशदेभ्यो द्वितीयासमर्थभ्यो ऽन्यतरस्यां संभवादिष्वर्थेषु खः भवति। ठञो ऽपवादः। पक्षे सो ऽपि भवति। आढकं संभवति अवहरति पचति वा आढकीना, आढकिकी। आचितीना, आचितिकी। पात्रीणा, पात्रिकी।

बाल-मनोरमा

आढकाचितपात्रात्खोऽन्यतरस्याम् १६९६, ५।१।५२

आढकाचित। आढक, आचित, पात्र--एभ्यो द्वितीयान्तेभ्य सम्भवत्यवहरतिपचतीत्यर्थेषु खो वा स्यादित्यर्थः। पक्षे ठञिति। "आर्हाता" इत्यत्रः परिमाणपर्युदासान्न ठगिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

द्विगोः ष्ठंश् च ५।१।५४

आढकाचितपात्रातित्येव। आढकाऽचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् प्रत्ययो भवति, चकारात् खः, अन्यतरस्याम्। विधानसामर्थ्यादेव अनयोर् लुक् न भवति। ठञस् तु पक्षे ऽनुज्ञातस्य अध्यर्धपूर्वद्विगोः इति लुग् भवत्येव। नकारः स्वरार्थः। षकारो ङीषर्थः। द्व्याढकिकी, द्व्याढकीना, द्व्याढकी। द्व्याचितिकी, द्व्याचितीना, द्व्याचिता। अपरिमाणविब्स्ताऽचितेति ङीपः प्रतिषेधः। द्विपात्रिकी, द्विपात्रीणा, द्विपात्री।

न्यासः

द्विगोष्ष्ठँश्च। , ५।१।५३

पूर्वेण ठन्खयोः प्राप्तयोस्ततश्च लुकीदमुच्यते। "विधानसामथ्र्यादनयोर्लुग्न भवति" इति। यदि ह्रत्रापि लुक्? स्यात्(), विधानमनर्थकं स्यात्()। "ठञस्तु पक्षेऽनुज्ञातस्य" इति। अन्यतरस्यांग्रहणेन। "द्व्याढकी" इति। ठञो लुक्पक्षे "द्विगोः" ४।१।२१ इति ङीप्()। "द्व्याचिता" इति। "अपरिमाण" ४।१।२२ इत्यादिना ङीप्प्रतिषेधे टाप्()॥

बाल-मनोरमा

द्विगोः ष्ठंश्च १६९७, ५।१।५३

द्विगोः ष्ठंश्च। ष्ठन्खाविति। चकारेण खस्यानुकर्षादिति भावः। वा स्त इति। अन्यतरस्यामित्यनुवृत्तेरिति भावः। पक्षे ठञिति। "आर्हात्" इत्यत्र परिमाणपर्युदासान्न ठगिति भावः। षित्त्वान्ङीष्। द्व्याढकिकीति। द्वे आढके सम्भवत्यवहरति पचति वेत्यर्थे "तद्धितार्थ" इति द्विगुः, ष्ठन्, षित्त्वान्ङीष्। द्व्याढकिकीति। द्वे आढके सम्भवत्यवहरति पचति वेत्यर्थे "तद्धितार्थ" इति द्विगुः, ष्ठन्, षित्त्वान्हीषित्यर्थः। अत्र "न य्वाभ्याम्" इत्यैज्न, वृद्धिनिषेधसन्नियोगशिष्टत्वात्, ञ्णित्किदभावेन वृद्धेरप्रसक्तेः। द्व्याकढीनेति। खे रूपम्। द्विगोरिति ङीप्। द्व्याढकीति। ठञि "अध्यर्थे"ति तस्य लुक्। "द्विगोः" इति ङीबित्यर्थः। प्रत्ययलक्षणमाश्रित्य ठञन्तलक्षणङीप्तु नेति "अपरिमाणविस्ते"त्यत्रोक्तम्। "अध्यर्धे"ति लुक्ठञ एव, नतु ष्ठन्खयोरपि, विधिसामथ्र्यात्। द्व्याचितिकी द्व्याचितीनेति। ष्ठनि खे च रूपम्। अथ

द्व्याचितशब्दाट्ठञो लुकि द्विगोः" इति ङीपमाशङ्क्याह--अपरिमाणेति ङीब्निषेधादिति। [एवं ष्ठन् ख ठञ्लुग्भिः] द्विपात्रिकीत्यादि।

तत्त्व-बोधिनी

द्विगोः ष्ठंश्च १३१२, ५।१।५३

द्विगोः ष्ठंश्च। ष्ठनिति छेदः, तदाह---षित्त्वादिति।व्याढकिकीति। "न य्वाभ्या"मित्यैजागमो न शङ्क्यः, वृद्धिनिषेधसंनियोगेन तद्विधानाद्वृद्धेश्च प्राप्त्यभावात्। अपरिमाणेति। आचितस्य परिमाणत्वेऽपि तस्मिन् सूत्रे विशिष्यग्रहणादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कुलिजाल् लुक्खौ च ५।१।५५

द्विगोः इत्येव। कुलिजशब्दानताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः। चकारात् ष्ठन् च। अन्यतरस्याम् ग्रहणानुवृत्त्या लुगपि विकल्प्यते। ठञः पक्षे श्रवणं भवति। तेन चातूरूप्यं संपद्यते। द्वे कुलिजे संभवति अवहरति पचति वा द्विकुलिजिकि, द्विकुलिजीना, द्विकुलिजी, द्वैकुलिजिकि। परिमाणान्तस्य असंज्ञाशाणयोः ७।३।१७ इत्यत्र कुलिजग्रहणम् अपीष्यते, तेन उत्तरपदवृद्धिरपि न भवति।

न्यासः

कुलिजाल्लुक्खौ च। , ५।१।५४

"चातूरूप्यम्()" इति। एकं खे रूपम्(), ष्ठनि द्वितोयम्(), लुकोऽपि विकल्पितत्वाट्ठञोऽलुकि तृतीयम्(), लुकि चतुर्थम्()। ननु च कुलिजशब्दसय परिमाणवाचित्वात्? "परिमाणान्तस्य" (७।३।१७) इत्युत्तरपदवृद्धिः कस्मान्न भवति? इत्यत आआह--"परिमाणान्तस्य" इति। "परिमाणान्तस्यासंज्ञाशाणकुलिजात्()" इत्येवैतत्? सूत्रं प्रत्येतव्यमिति दर्शयति॥

बाल-मनोरमा

कुलिजाल्लुक्खौ च १६९८, ५।१।५४

कुलिजाल्लुक्खौ च। अन्यतरस्यामित्यनुवृत्तिमभिप्रेत्याह--लुक्खौ वा स्त इति। "आर्हात्" इत्यत्र परिमाणपर्युदासाट्ठगभावे प्राग्वहतीयस्य ठञः "अध्यर्धे"ति नित्यं लुकि प्राप्ते लुको विकल्पविधिः। चात्ष्ठंश्चेति। तथाच ठञो लुक्खश्च ष्ठंश्चेति। तथाच ठञो लुक्खश्च ष्ठंश्चेति त्रितयं विकल्प्यते। तत्र ष्ठनः खस्य ठञो लुकश्चाऽभावे ठञः श्रवणं पर्यवस्यति। तदाह--लुगभावे ठञः श्रवणमिति। द्विकुलजीति। ठञो लुकि रूपम्। "द्विगोः" इति ङीप्। द्विकुलिजीनेति। खे रूपम्। द्विकुलिजिकीति। ष्ठनि रूपम्। द्वौकुलिजिकीति। ठञो लुगभावे रूपम्। "परिमाणान्तस्ये"त्यत्र "असंज्ञाशाणकुलिजाना"मित्युक्तेर्नोत्तरपदवृद्धिः।

तत्त्व-बोधिनी

कुलिजाल्लुक्खौ च १३१३, ५।१।५४

द्वैकुलिजिकीति। "असंज्ञाशाणयो"रित्यत्र कुलिजशब्दोऽपि इष्यते, तेनोत्तरपदवृद्धिनेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

सो ऽस्य अंशवस्नभृतयः ५।१।५६

स इति प्रथमासमर्थातस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् प्रथमासमर्थम् अंशवस्नभृतयश्चेत् ता भवति। अंशो भागः। वस्नं मूल्यम्। भृतिर्वेतनम्। पञ्च अंशो वस्नो वा भृतिर्वास्य पञ्चकः। सप्तकः। साहस्रः।

न्यासः

सोऽस्यांशवस्नभृतयः। , ५।१।५५

"वस्नद्रव्याभ्याम्()" ५।१।५० इत्यत्रापि वस्नशब्देन मूल्यमुच्यते॥

बाल-मनोरमा

सोऽस्यांऽशवस्नभृतयः १६९९, ५।१।५५

सोऽस्यांश। स इति प्रत्येकमंशादिष्वन्वेति। सोऽस्यांशः, तदस्य वस्नम्, सास्य भृतिरित्यर्थेषु प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। पञ्चक इति। "संख्यायाः" इति कन्।

---

सूत्रम्

काशिका-वृत्तिः

तदस्य परिमाणम् ५।१।५७

ततिति प्रथमासमर्थातस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् प्रथमासमर्थं परिमाणं चेत् तद् भवति। प्रस्थः परिमाणम् अस्य प्रास्थिको राशिः। खारशतिकः। शत्यः, शतिकः। साहस्रः। द्रौणिकः। कौडविकः। वर्षशतं परिमाणमस्य वार्षशतिकः। वार्षसहस्रिकः। षष्टिर्जीवितपरिमाणम् अस्य इति षाष्टिकः। साप्ततिकः। समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रादेव अनुवर्तिष्यते, किम् अर्थं पुनरनयोरुपादानम्? पुनर् विधानार्थम्। द्वे षष्टी जीवितपरिमाणम् अस्य द्विषाष्टिकः। द्विसाप्ततिकः। पुनर् विधानसामर्थ्याद्ध्यर्धपूर्वद्विगोर् लुक् न भवति।

न्यासः

तदस्य परिमाणम्?। , ५।१।५६

"प्रास्थिको राशिः" इत्यादौ सर्वत्र ठञ्()। "द्विषाष्टिकः" इत्यादि। "संख्यायायाः संवत्सरसंख्यस्य च" ७।३।१५ इत्युत्तरपदवृद्धिः। "पुनर्विधानसामथ्र्यात्()" इत्यादिना पुनर्विधानफलं दर्शयति। "द्विषाष्टिकः" इत्यादौ द्विः प्रत्यविधानम्(), तत्र पूर्वसूत्रात्? समर्थविभक्तेः प्रत्यायार्थसयानुवृत्तेः प्रथमं प्रत्ययो विधीयते, तस्य "अध्यर्धपूर्व" ५।१।२८ सूत्रेण लुग्भवति। नन्विह च यः सूत्रे समर्थविभक्तेः प्रत्ययार्थस्य चोपादनात्? पुनर्विधीयते तस्यापि पुनर्विधानमनर्थकं स्यात्()॥

बाल-मनोरमा

तदस्य परिमाणम् १७००, ५।१।५६

तदस्य परिमाणम्। अस्मिन्नर्थे प्रतमान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। प्रास्थिक इति। "आर्हात्" इत्यत्र परिमाणपर्युदासात् प्राग्वतीयष्ठञ्। अत्र संख्याऽपि परिमाणम्। यद्यपि "अगोपुच्छसंख्यापरिमाणा"दिति पृथग्ग्रहणात् संख्या न परिमाणम्,तथाप्यत्र परिच्छेदकत्वात् संख्यापि परिमाणम्, उत्तरसूत्रे संख्यायाः परिमाणेन

विशेषणाल्लिङ्गात्। तेन षष्टिः परिमाणमस्य षाष्टिकमिति सिद्धम्। द्विषष्ट()आदिभ्यस्त्वनभिधानान्नेति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

तदस्य परिमाणम् १३१४, ५।१।५६

तदस्य परिमाणम्। इह परिमाणशब्देन परिच्छेदकमात्रं गृह्नते, नतु सर्वतोमानमेव, उत्तरसूत्रे सङ्ख्यायाः परिमाणेन विशेषणात्। षष्टिर्जीवितं परिमाणमस्य षाष्टिकः। "सोऽस्ये"ति वर्तमाने पुनः "तदस्ये"ति ग्रहणात् "द्वे षष्टी जीवितं परिमाणमस्य द्विषाष्टिकस्त्रिषाष्टिकः" इत्यादौ "अध्यर्धे"ति लुङ् न भवति। स्पष्टं चेदं काशिकादौ। पूर्वसूत्रमिति। तेन पञ्च गावः परिमाणमस्य पञ्चको गोसङ्घ इत्यादि सिध्यति। यदा तु प्रकत्यर्थस्यैव परिच्छेदिका संख्या---पञ्च गावोऽस्य सङ्घस्येति, तदा तु प्रत्ययो न भव ति, परिमाणस्या प्रत्ययार्थत्वाऽभावात्। एतच्च "आर्हादगोपुच्छे"ति सूत्रे कैयटे स्पष्टम्।

संज्ञायां स्वार्थे प्रत्ययो वाच्यः। पञ्चैवेति। स्तोमे डविधिरिति। डित्करणमेकविंश इत्यत्र तिलोपार्थम्। त्रय()स्त्रशादौ टिलोपार्थं च।

स्तोमे डविधिः। पञ्चदश मन्त्रा इतदि। "साम्ना स्तुवीत", "एकं सामत्र्यृचे क्रियते"इति हि श्रुतिः। तत्र त्र्यृचस्य पञ्चकृत्व आवृत्या पञ्चदशमन्त्राः। सप्तदशे स्तोमे अन्त्याया ऋचः सप्तकृत्व आवृत्तिः। प्रथममध्यमयोस्तु पञ्चकृत्व एव, एकविंशे स्तोमे तु त्र्यृचस्य सप्तकृत्व आवृत्तिरिति ज्ञेयम्। छन्दोगौरिति। सामगैरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ५।१।५८

तदस्य परिमाणम् ५।१।५६ इति वर्तते। सङ्ख्यावाचिनः प्रातिपदिकात् परिमाणोपाधिकात् प्रथमासमर्थादस्य इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति। संज्ञासङ्घसूत्राध्ययनेषु इति प्रत्ययार्थविशेषणम्। तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः। पञ्चैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः। सङ्घ पञ्च परिमाणम् अस्य पञ्चकः सङ्घः। अष्टकः। सूत्र अष्टौ अध्यायाः परिमाणम् अस्य सूत्रस्य अष्टकं पाणिनीयम्। दशकं वैयाघ्रपदीयम्। त्रिकं काशकृत्स्नम्। ननु च अध्यायसमूहः सूत्रसङ्घ एव भवति? न एतदस्ति। प्राणिसमूहे सङ्घशब्दो रूढः। अध्ययन पञ्चको ऽधीतः। सप्तको ऽधीतः। अष्टकः। अनवकः। अधीतिरध्ययनम्। तस्य सङ्ख्यापरिमाणं पञ्चावृत्तयः पञ्चवाराः पञ्च रूपाणि अस्य अध्ययनस्य पञ्चकम् अध्ययनम्। स्तोमे डविधिः पञ्चदशाद्यर्थः। पञ्चदश मन्त्राः परिमाणम् अस्य पञ्चदशः स्तोमः। सप्तदशः। एकविंशः। शन्शतोर् डिनिश् छन्दसि। पञ्चदशिनो ऽर्धमासाः त्रिंशिनो मासाः। विंशतेश्च इति वक्तव्यम्। विंशिनो ऽङ्गिरसः।

न्यासः

संख्यायाः संज्ञासह्घसूत्राध्ययनेषु। , ५।१।५७

"परिमाणोपाधिकात्()" इति। परिमाणमुपाधिर्विशेषणं न सम्भवति, न हि शब्दः परिमाणं शब्दस्य सम्भवतीति? तदर्थस्य विसेषणं विज्ञास्यत इत्यदोषः। ननु चार्थस्यापि न सम्भवति, संख्या हि नैव परिमाणम्()? नैष दोषः; नात्र रूढः परिमाणशब्दो गृह्नते, किं तर्हि? क्रियाशब्दः--परिमायते येन तत्? परिमाणमिति। संख्यायापि च परिमीयत इति सापि परिमाणम्()। नन्वेवमपि विशेषणमनर्थकम्; न ह्यपरिच्छेदिका संख्यास्ति, सञ्चक्षाणा हि संख्योच्यते? सतद्यम्(); परिच्छेदिकैव संख्या, सा तु स्वस्याभिदेयं परिच्छिनत्तीति षष्ठ()र्थमवश्यं न परिच्छिनत्ति। पञ्चास्य सङ्घस्य पुत्रा इति

नात्र सहघस्येयत्ता प्रतीयते। इह तु पञ्चसंख्या परिमाणमस्य सङ्घस्येति भवतीयत्ताप्रतीतिः सङ्घस्य। तस्मादुपपन्नं संख्यायाः परिमाणं विशेषणम्()। "तत्र" इत्यादि। पञ्चशब्दोऽयं संख्येय एव वत्र्तते, न कदाचिदपि संख्यानमात्रे। ततश्च य एव संख्येयाः पञ्चत्वसंख्ययावच्छिन्नाः पञ्चशब्देनोच्यन्ते, प्रत्ययान्तेनापि त एव न हि तेषां भिन्नानामत्र संख्येयान्तरं परिमाणं प्रत्ययवाक्यं सम्भवपति। तस्मात्? संज्ञायां स्वार्थं एव प्रत्ययो वाच्यः। तथा चाह वार्त्तिककारः--"संज्ञायां स्वार्थे उत्पद्यते" इति। "पञ्चकोऽधीतः" इति पाठापेक्षया पुंल्लिङ्गः। "अधीतिरध्ययनम्()" इति। अनेन भावसाधनमध्ययनशब्दं दर्शयति। यद्यधीयत इत्यध्ययनं कर्मसाधनोऽद्ययनशब्दः स्यात्(), सूत्रग्रहणं पृथग्वक्तव्यं न स्यात्(); अध्ययनग्रहणेनैव सिद्धत्वात्(), सूत्रमप्यधीयत एव। "पञ्चावृत्यः" इति पाठे पुनः क्रियात्मिकाः पञ्च वारा इत्यादिना पर्यायान्तरेण पञ्चावृत्य इत्यस्यैवार्थं व्यक्तीकरोति। "स्तोमे डविधिः" इति। अत्रापि च्छन्दसीति सम्बध्यते। मन्त्रसमुदायः स्तोमः। "एकविंशः" इति। "अतो गुणे" ६।१।९४ पररूपत्वं च, "ति विंशतेर्डिति ६।४।१४२ इति तिशब्दलोपः। "शन्शतोः" इत्यादि। शन्नित्येवमन्ताच्छन्दसि डिनिर्वक्तव्यः॥

बाल-मनोरमा

सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु १७०१, ५।१।५७

सङ्ख्यायाः। अनुवर्तत इति। तथाच "तदस्य परिमाण"मित्यर्थे प्रथमान्तात्संख्यात्मकपरिमाणवाचिनो यथाविहितं प्रत्ययाः स्युरित्यर्थः।

संज्ञायां स्वार्थे प्रत्ययो वाच्य इति। "पञ्चकाः शकुनय" इत्यत्र पञ्च परिमाणमेषामित्यर्थो न संभवति, आ दशतः संख्याः संख्येये इति पञ्चन्शब्दस्य संख्येयवृत्तित्वेन पञ्च परिमाणमिति सामानाधिकरण्यानुपपत्तेः। अतः संज्ञायां स्वार्थ #एव संख्यायाः प्रत्यय इति पर्यवस्यतीति भावः। यद्वेति। द्विशब्दस्य एकशब्दस्य च संख्येयवृत्तित्वेऽपि "द्व्येकयोः" इति समासवृत्तावेकत्वद्वित्वपरत्वमभ्युपगम्यते। अन्यथा "द्व्येकयोः" इति द्विवचनानुपपत्तेः। तद्वत्पञ्चकाः शकुनय इति तद्धितवृत्तावपि पञ्चन्शब्दस्य पञ्चत्वसंख्यापरतया पञ्चत्वं परिमाणमस्येति सामानाधिकरण्यं स्वीकृत्य पञ्चत्ववाचिनः पञ्चन्शब्दात् पञ्चत्वरूपपरिमाणवति प्रत्यय उपपद्यत इत्यर्थः। तत्र संज्ञायां स्वार्ते उदाहरति--पञ्चैवेति। परिमाणिनि प्रत्ययमुदाहरति--पञ्च परिमाणमिति। पञ्चत्वमित्यर्थः। सङ्घे इति। उदाहरणं वक्ष्यत इत्यर्थः। पञ्चक इति। पञ्चत्वस्य सङ्घस्य परिमाणमित्यर्थः। सङ्घस्य पञ्चत्वं तु अवयवाद्वारा बोध्यम्। सूत्र इति। उदाह्रियत इति शेषः। अष्टकं पाणिनीयमिति। "सूत्र"मिति शेषः। अष्टावध्यायाः परिमाणमस्येति विग्रहः। अत्राष्टत्वमध्यायद्वार#आ सूत्रेऽन्वेति। सूत्रशब्दश्च सूत्रसंघपरः, एकस्मिन्सूत्रे अष्टकत्वस्याऽसंभवात्। नन्वेवं सति सङ्घग्रहणेनैव सिद्धे सूत्रग्रहणं व्यर्थमित्यत आह--सङ्घशब्दस्येति। पञ्चकमध्ययनमिति। पञ्चावृतयः परिमाणमस्येति विग्रहः।

स्तोमे डविधिरिति। "तदस्य परिमाण"मित्यर्थे सङ्ख्यावाचिन उपसंख्यातव्य" इति शेषः। सामाधारमन्त्रसमूहे स्तोमशब्दः शक्त इति कैयटः। मनुष्यादिसमूहे तु स्तोमशब्दो लाक्षणिक इति तदाशयः। तदाह--पञ्चदश मन्त्रा इति। पञ्चदशः स्तोम इति। पञ्चदशन्शब्दाड्डप्रत्यये "टे"रिति टिलोपः। सामाधारबूतपञ्चदशमन्त्रसमूह इत्यर्थः। ननु डित्त्वाऽभावेऽपि "नस्तद्धिते" इत्येव टिलोपसिद्धेर्डित्त्वं व्यर्थमित्यत आह--एकविंश इति। एकविंशतिर्मन्त्राः परिमाणमस्य समूहस्येति विग्रहः। डप्रत्यये इति। "ति विंशतेर्डिती"ति टिलोपः। मीमासकास्तु पृष्ठरथन्तरादिशब्दवाच्या प्रगीतमन्त्रसाध्या गुणवत्त्वेन वर्णनात्मिका स्तुतिरेव स्तोमः, स एव डप्रत्ययार्थः। प्रगीतपञ्चदशमन्त्रपरिमाणकः स्तोम इत्यर्थः। पञ्चदशत्वसंख्यात्मकपरिमाणं स्तुतौ मन्त्रद्वारा बोध्यम्। एवंच "पञ्चदशेन स्तुवते" इत्यादौ धात्वर्थभूतस्तुतिसामानाधिकरण्यं पञ्चदसादिशब्दानामुपपद्यत इत्याहुः। तन्मतमवलम्ब्याह--सोमयागेष्वित्यादि।

सूत्रम्

काशिका-वृत्तिः

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ५।१।५९

तदस्य परिमाणम् ५।१।४६ इति वर्तते। पङ्क्त्यादयः शब्दा निपात्यन्ते। यदिह लक्षणेन अनुपपन्नं तत् सर्वं निपातनात् सिद्धम्। पञ्चाना टिलोपः तिश्च प्रत्ययः। पञ्च परिमाणम् अस्य पङ्क्तिश् छन्दः। द्वयोर् दशतोः विन्भावः शतिश्च प्रत्ययः द्वौ दशतौ प्रैमाणम् अस्य सङ्घस्य विंशतिः। त्रयाणां दशतां त्रिन्भावः शत् च प्रत्ययः। त्रयो दशतः परिमाणम् अस्य त्रिंशत्। चतुर्णां दशतां चत्वारिन्भावः शत् च प्रत्ययः। चत्वारो दशतः परिमाऽणस्य चत्वारिंशत्। पञ्चानां दशतां पञ्चाभावः शत् च प्रत्ययः। पञ्च दशतः परिमाणाम् अस्य पञ्चाशत्। षण्णां दशतां षड्भावः, तिः प्रत्ययो ऽपदत्वं च। षड् दशतः परिमाणम् अस्य षष्टिः। सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च। सप्त दशतः परिमाणम् अस्य सप्ततिः। अष्टानां दशताम् अशीभावः तिः प्रत्ययश्च। अष्टौ दशतः परिमाणम् अस्य अशीतिः। नवानां दशतां नवभावः तिः प्रत्ययश्च। नव दशतः परिमाणम् अस्य नवतिः। दशनां दशतां शभावः तश्च प्रत्ययः। दश दशतः परिमाणम् अस्य सङ्घस्य शतम्। विंशत्यादयो गुणशब्दाः, ते यथा कथंचिद् व्युत्पाद्याः। न अत्र अवयवार्थे ऽभिनिवेष्टव्यम्। तथा हि पङ्क्तिः इति क्रमसम्निवेशे ऽपि वर्तते, ब्राह्मणपङ्क्तिः, पपीलिकापङ्क्तिः इति। न च अत्र अवयवार्थः कश्चिदस्ति। या च एषां विषयभेदेन गुणमात्रे गुणिनि च वृत्तिः, स्वलिङ्गसङ्ख्यानुविधानं च, एतदपि सर्वं स्वाभाविकम् एव। सहस्रादयो ऽप्येवं जातियकाः तद्वदेव द्रष्टव्याः। उदाहरणमात्रम् एतदिति।

लघु-सिद्धान्त-कौमुदी

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ११५०, ५।१।५८

एते रूढिशब्दा निपात्यन्ते॥

न्यासः

पंक्तिविंशतितिं?रशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्?। , ५।१।५८

"अपदत्वं च" इति। पदनिबन्धनस्य जशत्वादेः कार्यस्य प्रतिषेधार्थमिहैते विंशत्यादयः परिमाणे निपात्यन्ते। "तदस्य परिमाणम्()" ५।१।५६ इत्यधिकारे निपातनात्()। एवञ्च गवां विंशतिरिति षष्ठी व्यतिरेकनिबन्धना न प्राप्नोति। विंशतिशब्देन हि तान्येव गोद्रव्याणि गृह्न्ते, न तदधिकं किञ्चिदर्थान्तरम्()। बहुवचनं प्रसजति तेषां बहुत्वादिति यश्चोदयेत्(), तं प्रत्याह--"विंशत्यादयः" इत्यादि। यथाकथञ्चित्प्रकारेण। विनाप्यवयवार्थेनेति यावत्()। रूपमात्रं प्रधानम्(), नावयवार्थः। यस्त्वेषामर्थः स लोकत एव व्यवतिष्ठत इत्यभिप्रायः। "नात्राभिनिवेष्टव्यम्()" इति। संख्यापरिमाणोपाधिकः प्रकृत्यर्थः। "परिमाणमात्रं प्रत्ययाः" इति नायमत्राभिनिवेशः कत्र्तव्य इत्यर्थः। अनभिनिवेशस्य कारणमाह--"तथा हि" इत्यादि। स्यादेतत्()--"अत्राप्यवयवार्थोऽस्ति" इत्यत आह--"न च" इत्यादि। ब्राआह्णाणानां पंक्तिरित्युक्ते संख्यापरिमाणोपाधिकः प्रकृत्यर्थः, परिमाणो वा कश्टचित्(); प्रत्ययार्थो हि न गम्यते, किं तर्हि? सन्निवेशविशेषः संस्थानात्मको गुण एव प्रतीयते। तथा हि--तस्य सन्निवेशविशेषस्यानवगमे तावत्स्येव ब्राआह्णेषु पंक्तिरिति न प्रयुज्यते। तदेवं गुणशब्दत्वादिं()वशत्यादीनां गवां विंशतिरिति सिध्यति षष्ठी; विंशतिशब्दस्य संख्यानवृत्तित्वात्()। यदि तर्हि गुणशब्दा एते, विंशतिगवि इति द्रव्यशब्देन सामानाधिकरण्यं न प्राप्नोति? गुणिन्यत्र वृत्तिः, गुणमात्रे न ततोऽयमदोष इति। वक्तव्यः स हेतुः यत एतेषा क्वचिद्गुणमात्रे वृत्तिर्भवति, क्वचिद्गुणिनि। बहुवचनप्रसङ्गाच्च गुणिनि वृत्तिरित्येतदेव दुःस्थम्(); बहुत्वाद्गुणिनाम्()। इह च विंशतिः कुण्डानीति नपुंसकलिङ्गं प्राप्नोति, विंशतिब्र्राआह्णा इति पुंल्लिङ्गम्(), गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति,

यथा--शुक्लः कम्बलः, शुक्लं वस्त्रम्(), शुक्ला शाटीति। यदासौ द्रव्यमाश्रित्य भवति गुणः, तस्य लिङ्गवचनं यत्? तद्गुणवचनस्यापि भवति, यथा--गुणशब्दत्वेऽप्येषामाश्रीयमाणे न भवत्येव दोषप्रसङ्गान्मुक्तिः? इत्यत आह--"या चैषाम्()" इत्तयादि। न केवलमर्थाभिदानं स्वाभाविकम्(), किन्त्वेतदपीत्यपिशब्देन दर्शयति। यत्र द्रव्येण गुणिनैषामभिधेयो गुणो विशेष्यते, तत्र स्वभावादेव गुणमात्रे वृत्तिः। यत्र त्वेत उपसर्जनीभूतस्वार्थास्तेन स्वार्थेन द्रव्यं विशेषयन्ति तत्रैषां स्वभावत एव गुणिनि वृत्तिः। "स्वलिङ्गसंख्यानुविधानं च" इति। गुणिन्यणि वत्र्तमानानां ययोर्लिङ्गसंख्ययोर्यदनुविधानमनुवत्र्तमानमेतदपि सर्वं स्वाभाविकम्()। अन्येषामपि, गुणशब्दानामपि क्वचित्? स्वभावत एव गुणिनि वृत्तिर्भवति, तद्यथा-शुक्लः पट इत्यत्र शुक्लशब्दस्य। क्वचिद्गुणमात्रे, यथा--अस्यैव शुक्लो गुणः पटस्येत्यत्र। अन्येषामपि केषाञ्चित्? शब्दानां स्वाभाविकं स्वलिङ्गसंख्यानुविधानं दृश्यत एव, तद्यथा--वेदाः प्रमाणम्(), श्रुतयः प्रमाणमिति। तस्मात्? स्वाभाविकत्वाद्गुणमात्रे गुणिनि च वृत्तेः स्वलिङ्गसंख्यानुविधानस्य च न भवति यथक्तदोषप्रसङ्गः। यदा हि स्वभावत इति संख्यानमात्रे गुणे गुणमात्रे वृत्तिः तदा व्यतिरेकनिबन्धना षष्ठी भवति। यदा तु गुणिनि, तदा तयोरपि च द्रव्यशब्दत्वाकत्? सामानाधिकरण्यमपि भवति। द्रव्येऽपि वत्र्तमानानां स्वाभाविकं स्वलिङ्गसंख्यानुविधानम्()। अथ सहरुआआदयोऽपि कस्मान्न व्युत्पाद्यन्ते? इत्याह--"सहरुआआदयोऽपि" इत्यादि। एवञ्जातीयका एवम्प्रकारा विंशत्यादिभिः सदृशा इत्यर्थः। तेषामपि गुणवत्त्वात्? तद्वदेव विंशात्यादिवदेव द्रष्टव्याः। विंशात्यादय इव तेऽपि प्रकृत्यादिविभागेन व्युत्पाद्यन्त इत्यर्थः। यद्येवम्(), किमर्थं विंशत्यादय एव सूत्रे उपात्ताः? इत्याह्न#ऋ"उदाहरणमात्रम्()" इत्यादि। उदाहरणमात्रं विंशत्यादिग्रहणम्(), अन्येऽप्येवञ्जातीयाः सहरुआआदयस्तथैव व्युत्पाद्याः॥

बाल-मनोरमा

पङ्क्तिविंशतितिं?रशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् १७०२, ५।१।५८

पङ्क्तिविंशति। रूढिशब्दा निपात्यन्त शति। "तदस्य परिमाणमित्यर्थे" इति शेषः। पञ्च पादाः परिमाणमस्येत्यर्थे पञ्चन्शब्दात्तिप्रत्ययः , प्रकृतेष्टिलोपः, चकारस्य कुत्वम्, अनुस्वारपरसवर्णौ। पङ्क्तिरिति रूपम्। "पञ्चाक्षरा पञ्चपदा पङ्क्ति"रिति छन्दःशास्त्रे। दशानां वर्गः दशत्। "पञ्चद्दशतौ वर्गे वा" इति वक्ष्यते। द्वौ दशतौ परिमाणमस्य सङ्घस्येति विंशतिः। शतिच्प्रत्ययः, प्रकृतेर्विन्भावः, अनुस्वारश्च। अत्र सङ्घग्रहणमनुवर्तते। तथा च गवां विंशतिरिति भवति। सङ्घसङ्घिनोस्तादात्म्यविवक्षायां तु विंशतिर्गाव इति भवति। स्वभावादेकवचनं स्त्रीत्वं च। एवं तिं()रशदादावपि। "विंशत्याद्याः सदैकत्वे संख्याः संख्येयसङ्ख्ययो"रिति, "तासु चानवतेः स्त्रियः" इति चाऽमरः। त्रयो दशतः परिमाणमस्य सङ्घस्य त्रिशत्, शत्प्रत्ययः, प्रकृतेः त्रिन्भावश्च। चत्वारो दशतः परिमाणमस्य सङ्घस्य चत्वारिंशत्। शत्प्रत्ययः, प्रकृतेः चत्वारिन्भावश्च। पञ्च दशतः परिमाणमस्य सङ्घस्य पञ्चाशत्। शत्प्रत्ययः, प्रकृतेः पञ्चादेशः। षड् दशतः परिमाणमस्य सहघस्य षष्टिः। तिप्रत्ययः, प्रकृतेः षष्, जश्त्वाऽभावश्च। सप्त दशतः परिमाणमस्य सङ्घस्य सप्ततिः। तिप्रत्ययः, प्रकृतेः सप्तादेशः। अष्टौ दशतः परिमाणमस्य सङ्घस्य अशीतिः। तिप्रत्ययः, प्रकृतेरशीत्यादेशः। नव दशतः परिमाणमस्य सङ्घस्य नवतिः। तिप्रत्ययः, प्रकृतेर्नवादेशः। दश दशतः परिमाणमस्य सङ्घस्य शतम्। तप्रत्ययः, प्रकृतेः शादेशश्च। एतत्सर्वं भाष्ये स्पष्टम्। "एतान्यव्युत्पन्नप्रातिपदिकानी"ति तु भाष्यनिष्कर्षः।

तत्त्व-बोधिनी

पङ्क्तिवंशतितिं?रशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् १३१५, ५।१।५८

पङ्क्तिवंशति। "तदस्य परिमाण"मिति वर्तते। पञ्चन्()शब्दस्य टिलोपः, तिप्रत्ययः, "चोः कु"रिति कुत्वम्। पञ्च पदानि परिमाणमस्य पङ्क्तिश्छन्द इति काशिका। पदशब्दोऽत्र पादपर्याय इति हरदत्तः। रूढिशब्दा इति। तथा चात्र

नाऽवयवर्थेऽभिनिवेष्टव्यम्। पङ्क्तिशब्दो हि नानार्थः। अस्ति क्रमसंनिवेशे ---ब्राआह्मणपङ्क्ति पिपीलिकापङ्क्तिरिति। अस्ति च दशसंख्यायं---, पङ्क्तिरथ इति। दशरथ इत्यर्थः। अस्ति हि छन्दोविशेषे----"यस्य पञ्चाक्षराः पञाच पादाः"। तथा च छन्दोविशेषे एवायवार्थो नान्यत्रेति बोध्यम्। द्वयोर्दशतोर्विन्भावः, शतिश्च प्रत्ययः , अपदत्वं चेति न पठन्ति। त्रयाणां दशतां त्रिन्भावः। शच्च प्रत्ययः। मतान्तरे तु तिं()रभावः। त्रयो दशतः परिमाणमस्य तिं()रशत्। एवं चतुर्णां चत्वारिन्। पञ्चानां पञ्चा। आभ्यामपि शत्प्रत्ययः। षण्णां दशतां षष्,तिश्च प्रत्ययः, अपदत्वं च। षट् दशतः परिमाणमस्य षष्टिः। ततस्त्रिभ्योऽपि तिप्रत्यय एव। सप्तानां दशतां सप्त, अष्टानां दशतामशी, नवानां दशतां नव, दशानां दशतां शभावः, तश्च प्रत्ययः। दश दशतः परिमाणमस्य शतम्।

---

सूत्रम्

काशिका-वृत्तिः

पञ्चद्दशतौ वर्गे वा ५।१।६०

पञ्चत् दशतित्येतौ निपात्येते तदस्य अप्रिमाणम् इत्यस्मिन् विषये वर्गे ऽभिधेये। सङ्ख्यायाः इति कनि प्राप्ते डतिर्निपात्यते। वावचनात् पक्षे सो ऽपि भवति। पञ्च परिमाणस्य पञ्चद् वर्गः। दशद्वर्गः। पञ्चको वर्गः। दशको वर्गः।

न्यासः

पञ्चद्?दशतौ वर्गे वा। , ५।१।५९

ननु च "सङ्घ" इत्यनुवर्त्तिष्यते, किं वर्गग्रहणेन? नैतदस्ति; सङ्घशब्दो हि प्राणिसमुदाये रूढः। वर्गशब्दस्तु समूहमात्रे इति वर्गग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

पञ्चद्दशतौ वर्गे वा १७०३, ५।१।५९

पञ्चद्दशतौ। पञ्च दश वा परिमाणमस्य वर्गस्येत्यर्थे एतौ निपात्येते इत्यर्थः। पञ्चद्वर्ग इति। पञ्च परिमाणमस्येत्यर्थे पञ्चन्शब्दाड्डतिप्रत्ययः। तत्र इकार उच्चारणार्थः। "टे"रिति टिलोपः। दशदिति। दश परिमाणमस्य वर्गस्येति विग्रहः। डतिः। डित्त्वाट्टिलोपः। एतदर्थमेव डित्त्वम्। पक्षे इति। डत्यभावपक्षे "संख्यायाः" इति कन्नित्यर्थः।

तत्त्व-बोधिनी

पञ्चद्दशतौ वर्गे बा १३१६, ५।१।५९

पञ्चद्दशतौ। इमौ डत्यन्तावेव निपात्येते वर्गेऽभिधेये। "तदस्य परिमाण"मित्यनुवर्तत एव। दशदिति। दश परिमाणमस्य। पक्षे इति। वाग्रहणात् "संख्याया"इति कन्नपि भवतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सप्तनो ऽञ् छन्दसि ५।१।६१

वर्गे इत्येव, तदस्य परिमानम् इति च। सप्तन् शब्दाच् छन्दसि विषये ऽञ् प्रत्ययो भवति वर्गे ऽभिधेये। सप्त साप्तानि असृजत्।

न्यासः

सप्तनोऽञ्? छन्दसि। , ५।१।६०

संख्यालक्षणे कनि प्राप्ते सप्तन्शब्दाच्छन्दस्यञ्विधानम्()॥

---

सूत्रम्
काशिका-वृत्तिः
त्रिंशच्चत्वारिंशतोर् ब्राह्मणे संज्ञायां डण् ५।१।६२

तदस्य परिमाणम् इत्येव। वर्गे इति निवृत्तम्। त्रिंशच्चत्वरिंशच्छब्दाभ्यां संज्ञायां विषये डण् प्रत्ययो भवति तदस्य परिमाणम् इत्येतस्मिन् विषये ब्राह्मणे ऽभिधेये। अभिधेयसप्तमी एषा, न विषयसप्तमी। तेन मन्त्रभाषयोरपि भवति। त्रिंशदध्यायाः परिमाणम् एषां ब्राहमणानां त्रैशानि ब्राह्मणानि। चात्वारिंशानि ब्राह्मणानि। कानिचिदेव ब्राह्मणान्युच्यन्ते।
न्यासः
तिं?रशच्चत्वारिंशतोब्र्राआह्मणे संज्ञायां डण्?। , ५।१।६१

तिं()रशच्छब्दात्? "विंशतितिं()रशद्भ्याम्()" ५।१।२४ इति योगविबागेन कनि प्राप्ते चत्वारिंशच्छब्दादपि "प्राग्वतेष्ठञ्()" ५।१।१८ इति ठञि प्राप्तेऽयमारभ्यते। "अभिधेये सप्तम्येषा" इत्यादि। विषयसप्तम्यामस्यां ब्राआह्मणविषयश्चेत्? प्रयोगो भवतीत्येषोऽर्थः स्यात्(), तथा चान्यत्र प्रत्ययान्तस्य प्रयोगो न स्यात्(), तस्मान्न विषयसप्तम्येषा। एतच्च संज्ञाग्रहणादेव विज्ञायते। न हि ब्राआह्मणग्रहणात्? तिं()रशच्चत्वारिंशतौ डण्णन्तौ कस्यचित्? पदार्थस्य संज्ञिनौ स्तः, ब्राआह्मणानां तु विद्यते॥
बाल-मनोरमा
तिं?रशच्चत्वारिंशतोब्र्राआह्मणे संज्ञायां डण् १७०४, ५।१।६१

तिं()रशच्चत्वारिंशतोः। तदस्य परिमाणमित्यर्थे परिमाणिनि ब्राआह्मणे वाच्ये त्रिशच्चत्वारिंशद्भ्यां डण्स्यादित्यर्थः। ब्राआह्मणं=वेदेषु मन्त्रव्यतिरिक्तो भागः। त्रैंशानीति। डित्वात् "टेः" इति टिलोपः।

तत्त्व-बोधिनी
तिं?रशच्चत्वारिंशतोब्र्राआह्मणे संज्ञायां डण् १३१७, ५।१।६१

तिं()रशच्चत्वारिंशतोः। व्यत्ययेन पञ्चम्यर्थे षष्ठीद्विवचनम्। "चत्वारिंशतो ब्राआह्मणे"इति पाठे तु समाहारद्वन्द्वात्पञ्चम्येकवचनम्। इह "ब्राआह्मणसंज्ञाया"मिति षष्ठीसमासेन निर्देष्टुमुचितम्। तथा हि सति "ब्राआह्मणस्य चेत्संज्ञा"इतिस्फुटीभवति। अन्यथा तु यस्य कस्यचित्संज्ञायां ब्राआह्मणस्थे च प्रयोगे इत्यनिष्टोऽर्थः सम्भाव्येत। ततश्च मन्त्रे भाषायां च डण्न सिध्येत्। इष्यते च सः। तस्मादिष्टानुरोधेन षष्ठ()र्थे सप्तमीति व्याख्येयम्। "ब्राआह्मणेऽभिधेये"इति तु काशिकायां व्याख्यातम्। ठञादय इति। ठञ उदाहरणं तु ----प्रस्थमर्हति प्रास्थिकः,द्रौणिकः इत्याद्यूह्यम्। आदिशब्दग्राह्यस्य ठक उदाहरणमाह।

---

सूत्रम्
काशिका-वृत्तिः
तदर्हति ५।१।६३

तितिति द्वितीयासमर्थादर्हति इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। श्वेतच्छत्रम् अर्हति श्वैतछत्रिकः। वास्त्रयुग्मिकः। शत्यः, शतिकः। साहस्रः।

लघु-सिद्धान्त-कौमुदी

तदर्हति ११५१, ५।१।६२

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः॥

न्यासः

तदर्हति। , ५।१।६२

"()औतच्छत्रिकः, वास्त्रयुग्मिकः" इत्यादिषु ठक्()। "आर्हात्? ५।१।१९ इत्यभिविधौ चायमाकार इति॥

बाल-मनोरमा

तदर्हति १७०५, ५।१।६२

तदर्हति। अर्हतीत्यस्य योग्यो भवतीत्यर्थे अकर्मकत्वात्तदिति द्वितीया न स्यात्। इष्यते तु द्वितीयान्तादेव प्रत्ययः। तत्राह--लब्धुमिति। ()औतच्छत्रिक इति। आर्हीयष्ठक्।

तत्त्व-बोधिनी

तदर्हति १३१८, ५।१।६२

()औतच्छत्रिक इति। एवं खारीकाः। शत्यः। शतिकः। साहरुआः। इत्यादीन्युदाहर्तव्यानि।

---

सूत्रम्

काशिका-वृत्तिः

छेदाऽदिभ्यो नित्यम् ५।१।६४

नित्यग्रहणं प्रत्ययार्थविशेषणम्। छेदाऽदिभ्यो द्वितीयासमर्थेभ्यो नित्यम् अर्हति इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। छेदं नित्यम् अर्हति छैदिकः। भैदिकः। छेद। भेद। द्रोह। दोह। वर्त। कर्ष। संप्रयोग। विप्रयोग। प्रेषण। संप्रश्न। विप्रकर्ष। विराग विरङ्गं च। वैरङ्गिकः।

न्यासः

छेदादिभ्यो नित्यम्?। , ५।१।६३

"नित्यग्रहणम्()" इति। अथ विभाषाया निवृत्त्यर्थं नित्यग्रहणेन कस्मान्न विज्ञयते? अशक्यं तन्निवृत्त्यर्थं विज्ञातुम्()। विनापि नित्यग्रहणेन महाविभाषानिवृत्तिः शक्यते विज्ञातुम्()। तथा हि--छेदादिभ्यः पूर्वेणैव ठकि सिद्धे पुनर्वचनादेव नित्यविधिर्भविष्यति, किं नित्यग्रहणेन? ततो नित्यग्रहणमहन्यहन्यर्हत्वात्? "तदर्हति" ५।१।६२ इत्यस्यार्थस्य विशेषणं विज्ञायते। तथा च जातमारम्भस्य प्रयोजनमिति वाक्यं न निवर्तते। "विरागो विरङ्गञ्च" इति। विरागशब्दष्ठकमुत्पादयति विरङ्गादेशं चापद्यते। नित्यं विरागमर्हति वैरङ्गिकः। प्रत्ययसन्नियोगेन चायसादेश इति प्रत्ययाभावाद्वाक्ये न भवति॥

बाल-मनोरमा

छेदादिभ्यो नित्यम् १७०६, ५।१।६३

छेदादिभ्यो आभीक्ष्ण्यमिति। पौनःपुन्यमित्यर्थः। तन्नित्यमर्हतीत्यर्थे द्वितीयान्तेभ्यश्छेदादिभ्यो यथाविहितं प्रत्ययः स्यादित्यर्थः। छैदिको वेतस इति। "आर्हा"दिति ठक्। "तदर्हति" इत्येव सिद्धे आभीक्ष्ण एवेति नियमार्थमिदं सूत्रम्। वस्तुतस्तु नित्यमिति नाभीक्ष्ण्यार्थकं प्रत्ययार्थकोटि प्रविष्टं, किंतु अपाक्षिकार्थकम् "समर्थानां प्रथमाद्वा" इति वाग्रहणानुवृत्तिनिवृत्त्यर्थमित्यभिप्रेत्य विग्रहवाक्यस्यापि लोके दर्शनान्नित्यग्रहणं न कर्तव्यमित्युक्तं भाष्ये। एवंच छेदादिभ्यः पाक्षिकप्रत्ययस्य "तदर्हती"त्येव सिद्धत्वात्सूत्रमेवेदं नारब्धव्यमिति। फलति। विराग विरङ्गं चेति। गणसूत्रमिदम्। उक्तेऽर्थे विरागशब्दो विरङ्गादेशं लभत इत्यर्थः चादार्हीयष्ठक्।

तत्त्व-बोधिनी

छेदादिभ्यो नित्यम् १३१९, ५।१।६३

छेदादिभ्यो। नित्यग्रहणमिह "नित्यं क्रीडाजीविकयो"रित्यत्रेव महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं न भवति, आरम्भसामथ्र्यादेव तन्निवृत्तिसिद्धेः, किं तु प्रत्ययार्थविशेषणमिति द्वनयति---छेदं नित्यमर्हतीति। भाष्ये तु नित्यग्रहणं प्रत्याख्यातं। सूत्रमेव मास्त्विति तदाशय इति मनोरमा। अयं भावः----नित्यग्रहणमिह प्रत्ययार्थविशेषणं न भवति, नित्यं छेदमर्हतीत्यस्यार्थस्यासम्भवात्। कालान्तर एव तस्य छेदप्रवर्तनात्। न चात्र नित्यग्रहणत्यागेऽपि छेदमर्हतीत्यादिविग्रहवाक्यनिवृत्तये सूत्रस्यावश्यकत्वात्तत्प्रत्याख्यानं न युज्यत इति शङ्क्यम्। विग्रहवाक्यस्य भाष्यादिसंमतत्वादिति दिक्। छेद भेद द्रोह दोषेत्यादयश्छेदादयः। गणसूत्रमाह---विरागेति।

---

सूत्रम्

काशिका-वृत्तिः

शीर्षच्छेदाद् यच् च ५।१।६५

शीर्षच्छेदशब्दाद् द्वितीयासमर्थान् नित्यम् अर्हति इत्यस्मिन्नर्थे यत् प्रत्ययो भवति। चकाराद् यथाविहितं च। शिरश्छेदं नित्यम् अर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः। प्रत्ययसंनियोगेन शिरसः शीर्षभावो निपात्यते।

न्यासः

शीर्षच्छेदाद्यच्च। , ५।१।६४

प्रत्ययसन्नियोगेन शीर्षभावः, तेन वाक्ये प्रत्ययाभावान्न भवतीति भावः॥

बाल-मनोरमा

शीर्षच्छेदाद्यच्च १७०७, ५।१।६४

शीर्षच्छेदाद्यच्च। चादार्हीयट्ठक्। ननु "शीर्षंश्छन्दसी"ति छन्दस्येव शिरसः शीर्षादेव विधानात्कथमिह शीर्षादेश इत्यत आह--यड्ठकोरिति।

---

सूत्रम्

काशिका-वृत्तिः

दण्डादिभ्यः ५।१।६६

नित्यम् इति निवृत्तम्। दण्डादिभ्यो द्वितियासमर्थेभ्यः अर्हति इत्यस्मिन्नर्थे यत् प्रत्ययो भवति। ठको ऽपवादः। दण्डम् अर्हति दण्ड्यः। मुसल्यः। दण्ड। मुसल। मधुपर्क। कशा। अर्घ। मेधा। मेघ। युग। उदक। वध। गुहा। भाग। इभ।

दण्डादिः।

लघु-सिद्धान्त-कौमुदी

दण्डादिभ्यो यत् ११५२, ५।१।६५

एभ्यो यत् स्यात्। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः॥

न्यासः

दण्डादिभ्यो यः। , ५।१।६५

दण्डशब्दोऽयमस्ति क्रियावचनः--द्ण्डनं दण्ड इति, अस्ति द्रव्यवचनः; विशेषाभावाद्द्वयोरपि ग्रहणम्()॥

बाल-मनोरमा

दण्डादिभ्यो यत् १७०८, ५।१।६५

दडादिभ्यः। यदित्यनुवर्तते। तदाह--यत्स्यादिति। "दण्डादिभ्यो यः" इति त्वपपाठः, "अचोय"दिति सूत्रभाष्ये तथैव दर्शनात्। अध्र्य इति। मूल्यं, पूजाविधि वार्हतीत्यर्थः। "मूल्ये पूजाविधावर्धः" इत्यमरः। वध्य इति। वधमर्हतीत्यर्थः।

तत्त्व-बोधिनी

दण्डादिभ्यो यत् १३२०, ५।१।६५

दण्डादिभ्यः। पूर्वसूत्राद्यदनुवर्तत इकत्याह--यत्स्यादिति। केचित्तु "दण्डादिभ्यो यः"इति पठन्ति, स चाऽपपाठ एव, भाष्यादिविरोधादित्याहुः। तथा हि "अचो य"दिति सूत्रे भाष्ये उक्तं---"हनो वा यद्वधा देशश्च"। वध्यः घात्यः। "तद्धितो वा"। वधमर्हति वध्य इति। यदि चेह यद्विधीयतेतदैवैतदुपपद्यते, पक्षेद्वयेऽपि "यतोऽनावः"इत्याद्युदात्तत्वात्। यदि त्वर यो विधीयत तदा स्वरो भिद्येत। मनोरमायां तु "क्यब्विधौ हनो वा वधस्तद्धितो वा"इति भाष्यम्। यदि चेह यद्विधीयते, तदैवैतदुपपद्यते। क्यप्याद्युदात्तत्वं, यत्यपि तद्धिते "यतोऽनावः"इत्याद्युदात्तत्वमित्यादि स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि च ५।१।६७

प्रातिपदिकमात्राच् छन्दसि विषये तदर्हति इत्यस्मिन्नर्थे यत् प्रत्ययो भवति। ठञादीनाम् अपवादः। उदक्या वृत्तयः। यूप्यः पलाशः। गर्त्यो देशः।

न्यासः

छन्दसि च। , ५।१।६६

यदनुवत्र्तते, नानन्तरो यः; यत एव स्वरितत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

पात्राद् घंश् च ५।१।६८

पात्रशब्दाद् घन् प्रत्ययो भवति चकाराद् यत् च, तदर्हति इत्यस्मिन्नर्थे। ठक्ठञोरपवादः। पात्रं परिमाणम् अप्यस्ति।

पात्रम् अर्हति पात्रियः। पात्र्यः।

न्यासः

पात्राद्घ#ँश्च।, ५।१।६७

"ठक्ठञोरपवादः" इति। ननु च पात्रं भाजनम्(), न परिमाणम्(), अतस्तद्वाचिनष्ठक्? प्राप्नोति, तस्यैवापवादो युक्तः, तत्किमुच्यते ठक्ठञोरपवादः? इत्याह--"पात्रं परिमाणमप्यस्ति" इति। न केवलं भाजनमित्यपिशब्देन दर्शयति। तत्र यदा परिमाणे पात्रशब्दो वत्र्तते, तदा ठञोऽपवादः; यदा भाजने, तदा ठकः। पात्रं स्थाल्यादि। कोऽर्थः? चण्डालादिर्बाह्मश्च पात्रं परिमाणमर्हति। येन भुक्ते पुनर्न संस्कारेण भाजनं शुध्यति स पात्रियः, पात्र्य इति चोच्यते॥

बाल-मनोरमा

पात्राद्घंश्च १७०९, ५।१।६७

पात्राद्घंश्च। पात्रियः प्रात्र्य इति। पात्रमर्हतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कडङ्करदक्षिणाच् छ च ५।१।६९

कडङ्करदक्षिणाशब्दाभ्यां छः प्रत्ययो भवति, चकाराद् यत् च, तदर्हति इत्यस्मिन् विषये। ठको ऽपवादः। कडङ्करम् अर्हति कडङ्करीयो गौः, कडङ्कर्यः। दक्षिणाम् अर्हति दक्षिणीयो भिक्षुः, दक्षिण्यो ब्राह्मणः। दक्षिणशब्दस्य अल्पाच्तरस्य अपूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासङ्ख्याभावं सूचयति।

न्यासः

कड्ङ्गरदक्षिणाच्छ च।, ५।१।६८

"चकाराद्यच्च" इति। अथानन्तरस्य यतः समुच्चयः कस्मान्न भवति? एवं मन्यते--स्वरतत्वं प्रतिज्ञातमिति। अनन्तराच्च स्वरित आसन्नतरः। स च प्रतियोगमुपतिष्ठमानो वाक्यशेष एव भवति। तस्माद्यत एव समुच्चयो युक्त इति। यो गौर्निर्गुणत्वात्? खलकणाद्यनर्हः स कडङ्गर्यः कडङ्गरीय इति चोच्यते। माषादीनां खलेष्ववस्करनालकाष्ठमतिदुर्जरं बुसाद्यपि कडङ्गरमुच्यते। अथात्र यथासंख्यं कस्मान्न भवति, अस्ति हि तस्य प्राप्तिः, प्रकृतिप्रत्ययानां साम्यात; तथा हि--द्वे प्रकृतौ, द्वौ प्रत्ययौ? इत्यत आह--"अल्पाच्तरस्य" इत्यादि। दक्षिणशब्दस्याल्पाच्तरस्य पूर्वनिपाते प्राप्ते योऽयमिह परनिपातः स लक्षणानपेक्षतां निर्देशस्य दर्शयन्? लक्षणव्यभिचारस्यचिह्नं भवति। अतस्तेन चिह्नेन यथा-संख्याभावं सूचयति सूत्रकारः। तेन न भवति यथासंख्यम्()॥

बाल-मनोरमा

कडङ्करदक्षिणाच्छ च १७१०, ५।१।६८

कडङ्करदक्षिणाच्छ च। "कडमदे" कडनं कडः=मजः। "घञर्थे कविधान"मिति कः। खजिति। तथा च "खित्यनव्ययस्ये"ति मुमिति भावः। कडङ्करं च दक्षिणा चेति समाहारद्वन्द्वात्पञ्चमी।

तत्त्व-बोधिनी

कडङ्करदक्षिणाच्छ च १३२१, ५।१।६८

कडङ्करदक्षिणाच्छ च। "कडङ्गरे"ति पाठस्तूपेक्ष्य इति ध्वनयति---कडं करोतीति। "कड मदे"। कडतीति कडः। माषमुद्गादिकाष्ठमिति। अमरश्चाह "कडङ्करो बुसं क्लीब "मिति। गौरिति। "नीवारपाकादिकडङ्करीयैः"इति रघुः।

---

सूत्रम्

काशिका-वृत्तिः

स्थालीबिलात् ५।१।७०

छयतौ अनुवर्तेते स्थालीबिलशब्दाच् छयतौ प्रत्ययौ भवतः तदर्हति इत्यस्मिन्नर्थे। ठको ऽपवादौ। स्थालीबिमलर्हन्ति स्थालीबिलीयाः तण्डुलाः, स्थालीबिल्याः। पाक्योग्याः इत्यर्थः।

न्यासः

स्थालीबिलात्?। , ५।१।६९

"छयतावनुवर्तेते" इति। ननु चानुकृष्टमुत्तरत्र नानुवत्र्तत इति चानुकृष्टस्य यतः पुनरिह चकारेणानु-वृत्तिर्नोपपद्यते? नैष दोषः; अनित्या ह्येषा परिभाषा। कथं ज्ञायते? "एकाजुत्तरपदे णः" ८।४।१२ इत्यत्र णे प्रकृते पुनर्णग्रहणात्()। तद्धि "वा भावकरणयोः" ८।४।१० इत्यनुवत्र्तमानस्य विकल्पस्य निवृत्त्यर्थं क्रियते। यदि चेयं नित्या स्यातद्(), पूर्वसूत्रे चानुकृष्टत्वादेव हि तस्यानुवृत्तिर्न भवति। अथ वा--चकारोप्यत्रानु-वत्र्तते यतोऽनुकर्षणार्थः। तेन पूर्वत्र चानुकृष्टस्यापि तस्य पुनरिह चकारेणानुकृष्यमाणस्यानुवृत्तिर्भविष्यति। "स्थालीबिलकडङ्गरदक्षिणाच्छ च" इत्येकयोगे कत्र्तव्ये यदिदं योगविभागकरणं तत्स्थालीबिलाद्विशेषे वत्र्तमानात्? प्रत्ययो यथा स्यादित्येवमर्थम्()। तेन स्थालोमुख एव वत्र्तमानः स्थालीविलशब्दः प्रत्ययमुत्पादयति। न तु स्थालीसम्बन्धिनि च्छिद्रमात्रे वत्र्तमानः॥

बाल-मनोरमा

स्थालीबिलात् १७११, ५।१।६९

स्थालीबिलात्। छयतावनुवर्तेते, तदर्हतीति च।

तत्त्व-बोधिनी

स्थालीबिलात् १३२२, ५।१।६९

स्थालीबिलात्। छयतावनुवर्तेते। अस्माच्छयतौ स्तः। ठकोऽपवादः। पाकयोग्या इति। त्रिष्फलीकृता इति यावत्।

---

सूत्रम्

काशिका-वृत्तिः

यज्ञर्त्विग्भ्यां घखञौ ५।१।७१

यज्ञशब्दादृत्विक्शब्दाच् च यथासङ्ख्यं घखञौ प्रत्ययौ भवतः तदर्हति इत्यस्मिन् विषये। ठको ऽपवादौ। यज्ञियो ब्राह्मणः। आर्त्विजीनो ब्राह्मणः। यज्ञर्त्विग्भ्यां तत्कर्मार्हति इत्युपसङ्ख्यानम्। यज्ञकर्म अर्हति यज्ञियो देशः। ऋत्विक्कर्म अर्हति आर्त्विजीनं ब्राह्मणकुलम्। अर्हीयाणां ठगादीनां पूर्णो ऽवधिः। अतः परं प्राग्वतीयः ठञेव भवति।

न्यासः

यज्ञ�त्वग्भ्यां घखञौ। , ५।१।७०

द्वितीयाप्रकरणे पुनर्द्वितोयोच्चारणमिष्टविषये द्वितीयान्ताद्यथा स्यादित्येवमर्थम्()। तेन यद्यपि पारायणं गुरुणा शिष्येण च गम्यते तथापि शिष्य एव प्रत्ययो भवति, न गुरौ। तथा तुरायणो यागो यद्यपि यजमानेन याजकैश्च वर्त्यते तथापि यजमान एव प्रत्ययो भवति, न याजके॥

बाल-मनोरमा

यज्ञर्विग्भ्यां घखञौ ५०३, ५।१।७०

यज्ञ()त्वग्भ्यां घखञौ। तदर्हतीत्येव। यज्ञमृत्विज्ञं वेति। यज्ञमर्हतीति यज्ञिकः। ऋत्विजमर्हतीत्या()त्वजीन इत्यन्वयः। तत्कर्मेति। यज्ञर्मार्हतीत्यर्थे यज्ञशब्दादृत्विक्कर्मार्हतीत्यर्थे ऋत्विक्छब्दाच्च यथासङ्ख्यं घखञोरुपसङ्ख्यानमित्यर्थः। यद्यपि यज्ञ()त्वक्छब्दयोस्तत्कर्मणि लक्षणया सिध्यति तथाप्यत्र प्रकरणे मुख्यार्थेभ्य एव प्रत्यय इति ज्ञापनार्थमिदम्। ठगादीनां द्वादशानामिति। "प्राग्वते"रित्यारभ्य "तेन क्रीत"मित्यतः प्राक्र त्रयोदश प्रत्यया अनुक्रान्ताः। तत्र "प्राग्वते"रिति ठ()#ं विना "आर्हा"दित्यादिविहितानां ठगादीनां द्वादशानां विधिः पूर्ण इत्यर्थः।

***** इति बालमनोरमायाम् आर्हीयाणां द्वादशानां पूर्णोऽवधिः। *****

अथ तिङन्ते आत्मनेपदप्रक्रिया।

तत्त्व-बोधिनी

यज्ञ�त्वग्भ्यां धखञौ ४३१, ५।१।७०

यज्ञमृत्विजं चार्हतीति। अमर्थी सर्थो विद्वान्()। शास्त्रेणाऽपर्युदस्त इत्यर्थः। देसस्यानेवंविधत्वादुपसंख्यातम्।

यज्ञ()त्वग्भ्यांतत्कर्मार्हतीत्युपसङ्ख्यानम्। यज्ञियो देश इति। यज्ञाननुष्ठाने योग्य इत्यर्थः। ऋत्विगिति। स तु ऋत्विक्कर्मार्हति, न तु ऋत्विजमिति सूत्रेण खञोऽप्राप्तावुपसंख्यानम्।

आर्हीयाणां ठगादीनां द्वादशानां गतोऽवधिः।

इति तत्त्वबोधिन्यां आर्हीयादि समाप्तम्।

अथ तिङन्ते आत्मनेपदप्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

पारायणतुरायणचाद्न्रायणं वर्तयति ५।१।७२

समर्थविभक्तिरनुवर्तते। अर्हति इति निवृत्तम्। पारायणादिभ्यो द्वितीयासमर्थेभ्यः वर्तयति इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। पारायणं वर्तयति अधीते पारायणिकश्छात्रः। तौरायणिको यजमानः। चान्द्रायणिकस्तपस्वी।

बाल-मनोरमा

पारायणतुरायटणचान्द्रायणं वर्तयति १७१३, ५।१।७१

अथ तद्धिते प्राग्वतीये ठञधिकारे कालाधिकारो निरूप्यते--अतः परं ठञेवेति। आर्हीयेष्वर्थेषु प्राग्वतीयठ()ञपवादा आर्हीयाष्ठगादयः। आर्हीयार्थेषु निरूपितेषु तत ऊर्ध्वं ठगादिप्रत्ययानामनुवृत्तेरसम्भवात्प्राग्वतीयष्ठञेवानुवर्तत इत्यर्थः।

पारायण। "द्वितीयान्तेभ्यः पारायणादिशब्देभ्यो वर्तयतीत्यर्थे ठञ्स्यादित्यर्थः। पारायणं वर्तयतीति। पारायणं--वेदाध्ययनम्। तद्वर्तयति=आवर्तयतीत्यर्थः। पारायणिकः छात्र इति। गुरौ त्वध्येतरि नायं प्रत्ययः, अनभिधानादिति भावः। तौरायणिको यजमान इति। ऋत्विजिनायं प्रत्ययः, अनभिधानादिति भावः। चान्द्रायणिक इति। चान्द्रायणं कृच्छ्रविशेषः।

तत्त्व-बोधिनी

पारायणतुरायणचान्द्रायणं वर्तयति १३२४, ५।१।७१

पारायण। आदित आरभ्य आन्तादविच्छेदेन वेदस्याध्ययनं पारायणम्। तच्च शिष्येण च निर्वत्र्यते, अन्यतराऽसंनिधौ अध्ययनक्रियाया अनिष्पादनात्, तथापि शिष्ये एव प्रत्यय इष्यते न तु गुरावित्याकरे स्थितम्। तदाह---छात्र इति। यजमान इति। यद्यपि पुरोडाशादिनिर्वर्तनेन ऋत्विगपि यज्ञं वर्तयति, तथापि तत्र "तौरायणिक"इति न प्रयुज्यते, अनभिधानादिति भावः। चान्द्रायणं----व्रतविशेषः।

---

सूत्रम्

काशिका-वृत्तिः

संशयमापन्नः ५।१।७३

संशयशब्दाद् द्वितीयासमर्थातापन्नः इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। संशयम् आपन्नः प्राप्तः सांशयिकः स्थाणुः।

न्यासः

संशयमापन्नः। , ५।१।७२

अत्रापि द्वितीयाप्रकरणे पुनर्द्वितीयोच्चारणमिष्टविषये द्वितीयान्ताद्यथा स्यादित्येवमर्थम्()। तेन यद्यपि द्वे अपि कर्तृकर्मणी संशयमापन्ने, तथापि यद्विषयः संशय उत्पद्यते तत्रैव कर्मणि स्थाण्वादौ प्रत्ययो भवति, न तु संशयस्य कत्र्तरि पुरुषे; अनभिधानात्()॥

बाल-मनोरमा

संशयमापन्नः १७१४, ५।१।७२

संशयमापन्नः। अस्मिन्नर्थे संशयशब्दाद्द्वितीयान्ताट्ठक्स्यादित्यर्थः। अत्र "आपन्न" इति कर्तरि क्तः। विषयतया प्राप्त इत्यर्थः, उपसर्गवशात्। संशयविषयीभूतोऽर्थ इति। तेन समवायेन संशयाधारे संदेग्धरिनायं प्रत्यय इति भावः। अमरस्तु "सांशयिकः संशयापन्नमानसः" इत्याह।

तत्त्व-बोधिनी

संशयमापन्नः १३२५, ५।१।७२

विषयीभूतोऽर्थ इति। "स्थाणुर्वा पुरुषो वे"तित संशयविषयीभूते स्थाण्वादावेव प्रत्यय इष्यते, न तु संदेग्धरीति भावः। कथं तर्हि "सांशयिकऋ संशयापन्नमानसः"इत्यमर इति चेत्। अत्राहुः------संशयापन्नं मानसं यस्मिन्विषये स विषयः संशयापन्नमानस इति।

ततोऽभामनमर्हतीति च वक्तव्यम्। ततोऽभिगमनमिति। अत्र पञ्चम्यन्तात्प्रत्ययः।

---

सूत्रम्

काशिका-वृत्तिः

योजनं गच्छति ५।१।७४

योजनशब्दात् द्वितीयासमर्थाद् गच्छति इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। योजनं गच्छति यौजनिकः। क्रोशशतयोजनशतयोरुपसङ्ख्यानम्। क्रोशशतम् गच्छति क्रौशशतिकः। यौजनशतिकः। ततो ऽभिगमनम् अर्हति इति च क्रोशशतयोजनशतयोरुपसङ्ख्यानम्। क्रोशशतादभिगमनम् अर्हति क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः।

न्यासः

योजनं गच्छति। , ५।१।७३

"क्रोशशतयोजनशतयोरुपसंख्यानम्()" इति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तथा ततोऽभिगमन-मर्हतीति चेत्यादावपि वाक्ये। तत्रेदं प्रतिपादनम्()--इह द्वितीयाधिकारे पुनरद्वितीयोच्चारणमधिकं तु कुर्वतैतत्? सूचितम्()--अन्यदप्यत्र किञ्चिदधिकं भवति। तेन सर्वमेतद्वदितं कार्यमुपपन्नं भवति॥

बाल-मनोरमा

योजनं गच्छति १७१५, ५।१।७३

योजनं गच्छति। द्वितायान्ताद्योजनशब्दाद्गच्छतीत्यर्थे ठञ्स्यादित्यर्थः।

क्रोशशतेति। आभ्यामपि द्वितीयान्ताभ्यां गच्छतीत्यर्थे ठञ उपसङ्ख्यानमित्यर्थः। क्रोशशतादिति। ल्यब्लोपे पञ्चमी। क्रोशशतमतीत्येत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

पथः ष्कन् ५।१।७५

पथिन्शब्दाद् द्वितीयासमर्थाद् गच्छति इत्यस्मिन्नर्थे ष्कन् प्रत्ययो भवति। नकारः स्वरार्थः। षकारो ङीषर्थः। पन्थानं गच्छति पथिकः। पथिकी।

न्यासः

पथः ष्कन्?। , ५।१।७४

बाल-मनोरमा

पथः ष्कन् १७१६, ५।१।७४

पथः ष्कन्। पथः ष्कन्निनितिच्छेदः। द्वितीयान्तात्पथिन्शब्दाद्गच्छतीत्यर्थे ष्कन् स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

पन्थो ण नित्यम् ५।१।७६

नित्यग्रहणं प्रत्ययार्थविशेषणम्। पथः पन्थ इत्ययम् आदेशो भवति णश्च प्रत्ययो नित्यं गच्छति इत्यस्मिन् विषये।

पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते। नित्यम् इति किम्? पथिकः।

न्यासः

पन्थो ण नित्यम्?। , ५।१।७५

"नित्यग्रहणम्()" इत्यादि। अथ वाक्यनिवृत्त्यर्थं कस्मान्न भवति? पन्थशब्दस्य वाक्यासमवायित्वात्()। स हि प्रत्ययसन्नियोगेन विधीयते, न वाक्येन समवैति। ननु च पथिन्शब्देन वाक्यं मा भूदित्येवमर्थं नित्यग्रहणं स्यात्()? नैतदस्ति; यदि तदेवमर्थं स्यात्? पूर्वसूत्र एव कृतं स्यात्()--यत्र पथिन्शब्दः श्रुयते। इह तु करणे प्रत्ययार्थविशेषणं विज्ञायते॥

बाल-मनोरमा

पन्थो ण नित्यम् १७१७, ५।१।७५

पन्थो ण नित्यम्। पथ इत्यनुवर्तते, गच्छतीति च। नित्यमिति गच्छतीत्यत्रान्वितं प्रत्ययार्थप्रविष्यमेव, नतु विधानान्वितं सत् महाविभाषानिवृत्त्यर्थम्। द्वितीयान्तात्पथिन्शब्दान्नित्यं गच्छतीत्यर्थे णप्रत्ययः स्यात्, प्रकृतेः पन्थादेशश्चेत्यर्थः। भाष्ये तु नित्यग्रहणं प्रत्याख्यातम्।

तत्त्व-बोधिनी

पन्थो ण नित्यम् १३२६, ५।१।७५

पन्थो ण। पथः "पन्थ"इत्ययमादेशः स्याण्णश्च प्रत्ययः। नित्यग्रहणमिह प्रत्ययार्थविशेषणं , न तु वाक्यनिवृत्त्यर्थमित्याशयेनाह---नित्यं गच्छतीति। नित्यमिति किम्()। पथिकः। भाष्ये तु नित्यग्रहणं प्रत्याख्यातम्। इहं हि भाष्याशयः---नित्यं पन्थानं गच्छतीत्यर्थोऽत्र यद्यपि संभवति, तथापि नात्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते, कदाचिद्गच्छत्यपि तत्प्रयोगात्। न चैवमपि विग्रहवाक्यनिवृत्त्यर्थं नित्यग्रहणमस्त्विति शङ्क्यम्। शिष्टप्रयोगे विग्रहवाक्यस्य दर्शनादिति। उत्तरपथेन। चकारेण गच्छतीति प्रत्ययार्थः समुच्चीयते।

---

सूत्रम्

काशिका-वृत्तिः

उत्तरपथेनाहृतं च ५।१।७७

निर्देशादेव समर्थविभक्तिः। उत्तरपथशब्दाद् तृतीयासमर्थाताहृतम् इत्येतस्मिन् विषये ठञ् प्रत्ययो भवति। चकारः प्रत्ययार्थसम् उच्चये, गच्छति इति च। अत्र अपि तृतीया एव समर्थविभक्तिः। उत्तरपथेनाऽहृतम् औत्तरपथिकम्। उत्तरपथेन गच्छति औत्तरपथिकः। आहृतप्रकरणे वारिजङ्गलस्थल्कान्तारपूर्वपदादुपसङ्ख्यानम्। वारिपथेन आहृतम् वारिपथिकम्। वारिपथेन गच्छति वारिपथिकः। जङ्गलपथेन आहृतम् जाङ्गलपथिकम्। जङ्गलपथेन गच्छति जाङ्गलपथिकः। स्थलपथेन आहृतम् स्थालपथिकम्। स्थलपथेनगच्छति स्थालपथिकः। कान्तारपथेन आहृतम् कान्तारपथिकम्। कान्तारपथेन गच्छति कान्तारपथिकः। अजपथशङ्कुपथाभ्यां च उपसङ्ख्यानम्। अजपथेन आहृतम् आजपथिकम्, गच्छति वा आजपथिकः। शङ्कुपथेन आहृतम् शाङ्कुपथिकम्। गच्छति वा शाङ्कुपथिकः। मधुकमरिचयोरण् स्थलात्। स्थलपथेन आहृतम् स्थालपथं मधुकम्।

न्यासः

उत्तरपथेनाह्मतञ्च। , ५।१।७६

"चकारः प्रत्ययार्थ" इति। प्रत्ययार्थसमीपे श्रूयमाणत्वात्()। गच्छतीत्यत्र पूर्वं द्वितीयान्तात्? प्रत्यय उत्पन्नः। तदिहापि तत एव प्रत्ययेन भवितव्यमिति भ्रान्तिः स्यात्()। अतस्तां निराकर्त्तुमाह--"अत्रापि" इत्यादि। चकारो ह्यर्थात्? परः श्रूयमाणोऽत्रार्थमात्रस्यैव गच्छतोत्यस्यानुकर्षकः प्रतीयते, न तु विभक्तेरपि; सम्बन्धाभावात्()। तस्मात्? स इहानुवृत्तः सन्निहितया समर्थविभक्त्या सम्बध्यमानस्तृतीयासमर्थादेव प्रत्ययमुत्पादयतीति भावः। "वारिजङ्गल" इत्यादि। वार्यादयः पूर्वपदं यस्य तत्? तथोक्तम्()। एतयोरेवार्थयोरुपसंक्यानम्()। "मधुकमरिचयोः" इत्यादि। मधुकमरिचयोरभिधेययोः स्थलात्? परो यः पथिन्शब्दः, तदन्तादाह्रते वक्तव्यः॥

बाल-मनोरमा

उत्तरथेनाह्रतं च १७१८, ५।१।७६

उत्तरपथेनाह्रतं च। उत्तरपथशब्दात्तृतीयान्तादाह्रतमित्यर्थे, गच्छतीत्यर्थे च ठञ्स्यादित्यर्थः।

वारिजङ्गलेति। वारि, जङ्गल, स्थल, कान्तार--एतत्पूर्वात्पथिन्शब्दात्तृतीयान्तादाह्रतमिति, गच्छतीति चार्थे ठञित्यर्थः। वारिपथेन गच्छति, आह्रतं वेत्यर्थः। जाङ्गलपाथिकः, स्थालपथिकः, कान्तारपथिकः।

तत्त्व-बोधिनी

उत्तरपथेनाह्रतं च १३२७, ५।१।७६

उत्तरपथेन गच्छतीति। वारिपथिकमिति। वारिपथेन गच्छ [ती]ति, वारिपथेनाह्रमिति वा विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

कालात् ५।१।७८

कालातित्यधिकारः। यदित ऊर्ध्वम् अनुक्रमिष्यामः कालातित्येवं तद् वेदितव्यम्।

न्यासः

कालात्?। , ५।१।७७

कालादिति स्वरूपग्रहणं न भवति, कुतः? पृथगस्य योगस्यारम्भात्()। कालशब्दस्यापि यदि स्वरूपग्रहणम भीष्टं स्यादिमं पृथग्योगमकृत्वोत्तरसूत्रे कालशब्दादेव तृतीयामुच्चारयेत्()--कालेन निर्वृत्तमिति। एवं हि निर्देशादेव तृतीयासमर्थात्? प्रत्ययो विज्ञायते। उत्तरसूत्रे च कालशब्दः स्वरितत्वादनुवर्त्तिष्यत इति सिद्धमिष्टम्()। अतो न कत्र्तव्य एवायं पृथग्योगः। स एव क्रियतेऽर्थग्रहणं तदिति दर्शयितुम्()॥

बाल-मनोरमा

कालात् १७१९, ५।१।७७

कालात्। इत्यतः प्रागिति। व्याख्यानादिति भावः।

तत्त्व-बोधिनी

कालात् १३२८, ५।१।७७

कालात्। स्वरूपग्रहणमिह न भवति, "तमधीष्टो भृतो भूतो भावी"त्यत्यन्तसंयोगे द्वितीयानिर्देशात्। "मासाद्वयसो"त्यादौ

मासादीनां कालेन विशेषणाच्च।

---

सूत्रम्

काशिका-वृत्तिः

वक्ष्यति तेन विर्वृत्तम् ५।१।७९

मासेन निर्वृत्तम् मासिकम्। आर्धमासिकम्। सांवत्सरिकम्। कालातित्यधिकारः व्युष्टाऽदिभ्यो ऽण् ५।१।९६ इति यावत्। तेन निर्वृत्तम् ५।१।७८। तेन इति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् विर्वृत्तम् इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। अह्ना विर्वृत्तम् आह्निकम्। आर्धमासिकम्। सांवत्सरिकम्।

लघु-सिद्धान्त-कौमुदी

तेन निर्वृत्तम् ११५३, ५।१।७८

अह्ना निर्वृत्तम् आह्निकम्॥

लघु-सिद्धान्त-कौमुदी

इति ठञोऽवधिः। (प्राग्वतीयाः) १० ११५३, ५।१।७८

लघु-सिद्धान्त-कौमुदी

अथ त्वतलोरधिकारः ११५३, ५।१।७८

न्यासः

तेन निर्वृत्तम्?। , ५।१।७८

"आह्निकः" [आह्निकम्()-काशिका] इति। "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः। टिलोपस्तु "अह्नष्टखोरेव" ६।४।१४५ इति नियमादिह न भवति॥

बाल-मनोरमा

तेन निवृत्तम् १७२०, ५।१।७८

तेन निर्वृत्तम्। तृतीयान्तान्निर्वृत्तमित्यर्थे ठञ्स्यादित्यर्थः। आह्निकमिति। "अह्नष्टखोरेवे"ति नियमान्न टिलोपः।

तत्त्व-बोधिनी

तेन निर्वृत्तम् १३२९, ५।१।७८

तेन निर्वृत्तम्। तृतीयान्कतात्कालवाचिनष्ठञ्स्यात्। तेनेति करणे तृतीया। चतुरथ्र्यान्तर्गते "तेन निर्वृत्त"मित्यत्र तु कर्तरि तृतीयेति विशेषः। उभयत्राप्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः। आह्निकमिति। "अह्नष्टखोरेवे"ति नियमात्। "नस्तद्धिते"इति टिलोपो न।

---

सूत्रम्

काशिका-वृत्तिः

तम् अधीष्टो भृतो भूतो भावी ५।१।८०

तम् इति द्वितीयासमर्थात् कालवाचिनः प्रातिपदिकातधीष्टो भृतो भूतो भावी वा इत्यस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। अधीष्टः सत्कृत्य व्यापादितः। भृतः वेतनेन क्रीतः। भूतः स्वसत्तया व्याप्तकालः। भावी तादृश एवानागतः। कालाध्वनोरत्यन्तसंयोगे २।३।५ इति द्वितीया। मासमधीष्टः मासिको ऽध्यापकः। मासं भृतः मासिकः कर्मकरः। मासं भूतः मासिको व्याधिः। मासं भावी मासिकः उत्सवः। ननु चाध्येषणं भरणं च मुहूर्तं क्रियते तेन कथं मासो व्याप्यते? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस् ताभ्याम् एव व्याप्तः इत्युच्यते।

न्यासः

तमधीष्टो भृतो भूतो भावी।, ५।१।७९

"कालाध्वनोरत्यन्तसंयोगे" २।३।५ इति द्वितीया। "तमधीष्टः" इत्यादौ कर्मणि द्वितीया नोपपद्यते; अध्येष्यमाणादि हि पुरुषादिकर्मानयानिष्टयाभिहितम्(), न चान्या क्रियाऽस्ति यस्यां मासादि कर्म स्यात्()। "ननु च" इत्यादिना, यदुक्तम्()--"कालाध्वनोरत्यन्तसंयोगे" २।३।५ द्वितीयेति तद्विघटयति। तेन कथं मासो व्याप्यत इति? न कथञ्चित्()। विघटत इत्यर्थः। यद्धि मुहूर्तं क्रियते, तेन मुहूत्र्तेन मासैकदेशो व्याप्यते, न तु सकलो मासः। "क्रियार्थे" इति। अध्ययनादिक्रियार्थे। तदर्थं हि ते क्रियेते। "फलभूतया क्रियया" इति। अध्ययनादिकया। "ताब्यामेव व्याप्त इत्युच्यते" इति। तदन्यव्यापारस्य तत्रोपचारात्()। यथा "चौरेण ग्रामो दग्धः" इत्युक्ते न चौरेण ग्रामो दह्रते, अपि तु तदाह्यतेनाग्निना। उपचारेण तु तथा व्यपदेशः॥

बाल-मनोरमा

तमधीष्टो भृतो भूतो भावी १७२१, ५।१।७९

तमधीष्टो द्वितीयान्तादधीष्टादिष्वर्थेषु ठ()ञ्स्यादित्यर्थः। व्यापारित इति। प्रेरित इत्यर्थः। तादृश एवेति। स्वसत्तया व्याप्यमानकाल इत्यर्थः। मासमधीष्य इत्यादौ "कालाध्वनो"रिति द्वितीया।

---

सूत्रम्

काशिका-वृत्तिः

मासाद् वयसि यत्खञौ ५।१।८१

मासशब्दाद् वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः। ठञो ऽपवादौ। अधीष्टादीनां चतुर्णाम् अधिकारे ऽपि सामर्थ्याद् भूत एव अत्र अभिसम्बध्यते। मासं भूतः मास्यः, मासीनः। वयसि ति किम्? मासिकम्।

न्यासः

मासाद्वयसकि यत्खञौ।, ५।१।८०

"सामथ्र्याद्भूत्? एवात्राभिसम्बध्यते" इति। वयसि भूतार्थस्यैव सम्भवादिति भावः। भाव्यर्थोऽपि तत्र सम्भवतीति चिन्त्यमेतत्()। अथ तु नेष्यते, पुनरभिधानं शरणमाश्रयितव्यम्()। खञो ञित्करणं स्वरार्थम्(), वृद्ध्यर्थञ्च। ननु च वृद्ध एव मासशब्दः? सत्यं वृद्धोऽयम्(), तथापि वृद्धस्यापि वृद्धिरेषितव्या। मासीनाभार्य इति "वृद्धिनिमितस्य च तद्धितस्यारक्तविकारे" ६।३।३८ इति पुंवद्भावप्रतिषेदो यथा स्यात्()॥

बाल-मनोरमा

मासाद्वयसि यत्खञौ १७२२, ५।१।८०

मासाद्वयसि। अत्र भूत इत्येवानुवर्तते, व्याख्यानात्। मासशब्दाद्द्वितीयान्ताद्भूत इत्यर्थे यत्खञौ स्तो वयसि गम्ये

इत्यर्थः।

तत्त्व-बोधिनी

मासाद्वयसि यत्खञौ १३३०, ५।१।८०

मासाद्वयसि। खञो ञित्करणं स्वरार्थं, पुवंद्भावप्रतिषेधार्थं च। मासीनाभार्यः। अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद्भूत इत्येतदत्र संबध्यते।न हि मासमधीष्टो भृतो वेत्याद्युक्तौ काचित्कालकृता शरीरावस्था गम्यत इत्याशयेनाह---मासं भूत इति। एतच्च वृत्तिपदमञ्जर्योः स्पष्टम्। मासीन इति। बालकः।

---

सूत्रम्

काशिका-वृत्तिः

द्विगोर् यप् ५।१।८२

मासाद् वयसि ति वर्तते। मासान्ताद् द्विगोर् यप् प्रत्ययो भवति वयस्यभिधेये। द्वौमासौ भूतः द्विमास्यः। त्रिमास्यः।

न्यासः

द्विगोर्यप्?। , ५।१।८१

"प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि" इति (काशिका। ५।१।२०) तदन्तविदेरभ्यनुज्ञानाद्()द्विगोरपि ----। ययः पित्करणननुदात्तार्थम्()। अन्यथा मासशब्दान्तात्? प्रत्यये विहिते सिति शिष्टत्वात्? "इगन्तकाल" (६।२।२९) इति द्विगावेवेति स्वरबाधनात्? प्रत्ययस्वरः स्यात्(), ---- स्यात्()। प्रत्ययेऽनुदात्तार्थे पिति "इगन्त" ६।२।२९ इति पूर्वपदप्रकृतिस्वरः सिद्धो भवति॥

बाल-मनोरमा

द्विगोर्यप् १७२३, ५।१।८१

द्विगोर्यप्। अनुवर्तत इति। मासान्ताद्()द्विगोर्भूत इत्यर्थे यप्स्याद्वयसि गम्ये इत्यर्थः।

तत्त्व-बोधिनी

द्विगोर्यप् १३३१, ५।१।८१

द्विगोर्यप्। प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यब्विधीयते। पित्त्वादनुदात्तःष। तेन "द्विमासः"इत्यादौ "इदन्तकाले"त्यादिना पूर्वपदप्रकृतिस्वरोऽवतिष्ठते। "यः"इत्युक्ते तु प्रत्ययस्योदात्तत्वादन्तोदात्तो द्विमासः स्यात्, सति शिष्टस्वरबलीयस्त्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

षण्मासाण् ण्यच् च ५।१।८३

वयसि इत्येव। षण्मासशब्दाद् वयस्यभिधेये ण्यत् प्रत्ययो भवति, यप् च। औत्सर्गिकष्ठञपीष्यते, स चकारेण समुच्चेतव्यः। स्वरितत्वाच्चानन्तरो ऽनुवर्तिष्यते। तेन त्रैॠऊप्यं भवति। षाण्मासय्H, षण्मास्यः, षाण्मासिकः।

न्यासः

षण्मासाण्ण्यच्च। , ५।१।८२

षण्मासशब्दो द्विगुः। तस्मात्? पूर्वेण यपि प्राप्ते वचनम्()। "स चकारेण समुच्चेतव्यः" इति। यद्येवम्(), कथमनन्तरो यब्भवति? इत्याह--"स्वरितत्वाच्चानुवर्त्तिष्यते" इति। तेनानुवृत्तिसामर्थ्यादनन्तरो यब्भवतीति मन्यते॥

बाल-मनोरमा

षण्मासाण्ण्यच्च १७२४, ५।१।८२

अत्र चकारात्सन्निहितस्य यपोऽनुकर्षणे ण्यद्यवावेव स्यातां, नतु ठञपि। इष्यते तु ठञपि। तत्राह--यवप्यनुवर्तत इति। स्वरितत्वादिति भावः। तर्हि चकारः किमर्थ इत्यत आह--चाट्ठञिति। तथा च ण्यत् यप्-ठिञिति त्रयः प्रत्ययाः फलिताः।

तत्त्व-बोधिनी

षण्मसाण्ण्यच्च १३३२, ५।१।८२

यबप्यनुवर्तत इति। व्याख्यानमेवात्र शरणम्।

---

सूत्रम्

काशिका-वृत्तिः

अवयसि ठंश् च ५।१।८४

षण्मासशब्दाद् वयस्यभिधेये ठण् प्रत्ययो भवति। चकारेण अनन्तरस्य ण्यतः समुच्चयः क्रियते। षण्मासिको रोगः, षाण्मास्यः।

न्यासः

अवयसि ठ#ँश्च। , ५।१।८३

बाल-मनोरमा

अवयसिठंश्च १७२५, ५।१।८३

अवयसि टंश्च। षण्मासशब्दाद्द्वितीयान्ताद्भूते अवयसि ठन् च स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

समायाः खः ५।१।८५

अधीष्टाऽदयश्चत्वारो ऽर्था अनुवर्तन्ते। समाशब्दाद् द्वितीयास्मार्थादधीष्टादिषु अर्थेषु खः प्रत्ययो भवति। ठञो ऽपवादः समामधीष्टो भृतो भूतो भावी वा समीनः। केचित् तु तेन निर्वृत्तम् ५।१।७८ इति सर्वत्र अनुवर्तयन्ति। समया निर्वृत्तः समीनः।

न्यासः

समायाः खः। , ५।१।८४

बाल-मनोरमा

समायाः खः १७२६, ५।१।८४

समायाः खः। मण्डूकप्लुत्या "तमधीष्टो भृतो भूतो भावी"ति कृत्स्नमेव सूत्रमनुवर्तते। समाशब्दाद्द्वितीयान्तादधीष्टादिष्वर्थेषु खः स्यादित्यर्थः।

तत्त्व-बोधिनी

समायाः खः १३३३, ५।१।८४

समायाः खः। "हायनोऽस्त्री शरत्समाः"इत्यमरः। समामधीष्ट इत्यादि। अधीष्टादय श्चात्वारोऽर्था अत्राप्यनुवर्तन्त इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

द्विगोर् वा ५।१।८६

समायाः खः ५।१।८४ इत्येव। समाशब्दान्ताद् द्विगोः निर्वृत्तादिसु अर्थेषु पञ्चसु वा खः प्रत्ययो भवति। पूर्वेण नित्यःप्राप्तो विकल्प्यते। प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणम् अलुकि ७।३।१७ इति प्राप्तिरस्त्येव। खेन मुक्ते पक्षे ठञपि भवति। द्विसमिनः, द्वैसमिकः। त्रिसमीनः, त्रैसमिकः।

न्यासः

द्विगोर्वा। , ५।१।८५

"पूर्वेण" इत्यादि। कथं पुनः समाशब्दाद्विधीयमानः प्रत्ययस्तदन्ताद्()द्विगोः प्राप्नोति? इत्यत आह--"प्राग्वतेः" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

द्विगोर्वा १७२७, ५।१।८५

द्विगोर्वा। समायाः ख इत्येवेति। तथाच समान्ताद्विगोर्द्द्वितीयान्तात्खो वा स्यात्, पक्षे ठञिति फलितम्। "अप्सुमनःसमासिकतावर्षाणां बहुत्वं चे"ति लिङ्गानुशासनसूत्रम्। "हायनोऽस्त्री शरत्समाः" इत्यमरः। "समां समां विजायते" इति सूत्रादेकवचनमप्यस्ति। पञ्चस्विति। "ते निर्वृत्तं" "तमधीष्टो भृतदो भावी"ति पञ्चस्वित्यर्थः। एषां यथायोगमन्वयः। द्वैसमिक इति। खाऽभावे प्राग्वतीयष्ठञ्।

तत्त्व-बोधिनी

द्विगोर्वा १३३४, ५।१।८५

द्विगोर्वा। "संख्यापूर्वपदानांतदन्तग्रहणमलुकी"त्यभ्युपगमात्पूर्वेण नित्ये प्राप्ते विकल्पः। द्वैसमिक इति। खेन मुक्ते पक्षे ठ()ञिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

रात्र्यहःसंवत्सराच् च ५।१।८७

रात्रि अहः संवत्सर इत्येवम् अन्ताद् द्विगोः निर्वृत्तादिषु अर्थेषु वा खः प्रत्ययो भवति। खेन मुक्ते पक्षे ठञपि भवति। द्विरात्रीणः, द्वैरात्रिकः। त्रिरात्रीणः, त्रैरात्रिकः। द्व्यहीनः, द्वैयह्निकः। त्र्यहीणः, त्रैयह्निकः। द्विसंवत्सरीणः, द्विसांवत्सरिकः। त्रिसंवत्सरीणः, त्रिसांवत्सरिकः। सङ्ख्यायाः संवत्सरसङ्ख्यस्य च इत्युत्तरपदवृद्धिः।

न्यासः

रात्र्यहस्संवत्सराच्च। , ५।१।८६

"द्व्यहीनः" इति। "अह्नष्टखोरेव" ६।४।१४५ इति टिलोपः। विभाषानुवत्र्तते, तेन व्यवस्थितविभाषात्वान्न टज्भविष्यति। "द्वैयह्निकः, त्रैयह्निकः" इति। "न य्वाभ्याम्()" ७।३।३ इत्यादिनैजागमः, वृद्धिप्रतिषेधश्च॥

बाल-मनोरमा

रात्र्यहःसंवत्सराच्च १७२८, ५।१।८६

रात्र्यहः। द्विगोरित्येवेति। रात्रि, अहन् संवत्सर--एतदन्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु खो वा स्यादित्यर्थः। पक्षेठञ्। द्विरीत्रीण इति। द्वाभ्यां रात्रिभ्यां निर्वृत्तः, द्वे अहनी अधीष्ट इत्यादिष्वर्थेषु "तद्धितार्थ" इति द्विगोः खः, "अह्नष्टखो"रिति टिलोपः। समाहारद्विगोस्तु न खः, टचि कृते अहन्शब्दाऽभावात्। द्वैयह्निक इति। "अह्नष्टखोरेव"ति नियमान्न टिलोपः, किन्त्वल्लोपः, अह्नादेशो वा। "न य्वाभ्या"मित्यैच्। ननु "द्व्यहीन" इत्यत्र तद्धितार्थ" इति द्विगुसमासे कृते "रात्र्यहःसंवत्सराच्चे"ति खं बाधित्वा परत्वात् "राजाहःसखिभ्यः" इति टचि "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशे तस्य स्थानिवत्त्वेनाऽहन्()शब्दत्वेऽपि टजन्तस्य तदभावात् "रात्र्यहःसखिभ्यः" इति टचि "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशे तस्य स्थानिवत्त्वेनाऽहन्शब्दत्वेऽपि टजन्तस्य तदभावात् "रात्र्यहःसंवत्सराच्चे"ति खप्रत्ययो न स्यात्। कृतेऽपि खप्रत्यये "द्व्यह्नीन" इतिस्यादित्यत आह--समासान्तविधेरनित्यत्वान्न टजिति। एवं च टजभावे सति नाह्नादेशः, समासान्ते पर एव तद्विधानादिति भावः। "समासान्तविधिरनित्यः" इति षष्ठाध्यायस्य द्वितीये पादे "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" इति सूत्रभाष्ये स्पष्टम्। अथ संवत्सरान्तस्य खे उदाहरति--द्विसंवत्सरीण इति।

तत्त्व-बोधिनी

रात्र्यहःसंवत्सराच्च १३३५, ५।१।८६

द्वैयह्निक इति। "टेखोरेवे"ति नियमादिह टिलोपो न। "अल्लोपोऽनः"। "न य्वाभ्यां"मित्यैच्। ननु "तद्धितार्थ"इति द्विगुसमासानन्तरं "रात्र्यहःसंवत्सराच्चे"क्येवं बाधित्वा परत्वाट्टचा भाव्यम्। न च महाविभाषया टचो विकल्प इति वाच्यम्। "बृहतीजात्यन्ताः समासान्ताश्चे"ति नित्येषु परिगणनादत आह---समासान्तविधेरिति। यद्यपि टचि कृतेऽप्यह्नादेशेन "द्वैयह्निकः"इति रूपं सिध्यति, तथापि "द्व्यहीनः"इति हि रूपं न सिध्यति, टचि सति आह्नादेशे तस्य स्थानिवत्त्वात्, "राजाहः"इति समासान्तस्याऽहःशब्दान्तसमासग्रहणेनैव ग्रहणाच्च "रात्र्यहॠसंवत्सराच्च"इति खप्रत्यये कृतेऽपि "द्व्यह्नीन"इति रूपप्रसङ्गादित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

वर्षाल् लुक् च ५।१।८८

द्विगोः इत्येव। वर्षान्ताद् द्विगोर् निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। पक्षे ठञ्। तयोश्च वा लुग् भवति। एवं त्रीणि रूपाणि भवन्ति। द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः। वर्षस्य अभविष्यति ७।३।१६

इत्युत्तरपदवृद्धिः। भाविनि तु त्रैवर्षिकः।

न्यासः

वर्षाल्लुक्? च। , ५।१।८७

"भाविनि तु त्रैवर्षिकः" इति। तत्र हि "अभविष्यति" ७।३।१६ इति वचनात्()। इहादिवृद्धिरेव भवति॥

बाल-मनोरमा

वर्षाल्लुक् च १७३०, ५।१।८७

वर्षाल्लुक् च। वा च लुगिति। "खठञो"रिति शेषः। द्विवर्षीम इति। खे रूपम्। द्विवर्ष इति। खठञोर्लुकि रूपम्।

तत्त्व-बोधिनी

वर्षाल्लुक् च १३३७, ५।१।८७

द्विवर्षीणो ब्याधिरिति। द्विवार्षिको मनुष्य इति। अत्र वदन्ति---मनुष्ये "चित्तवती"ति नित्यलुक्प्रसङ्गात् "मनुष्यो मनुष्यसदृशः प्रतिमादिः"इति व्याख्याय स्थितस्य गतिः समर्थनीयेति।

---

सूत्रम्

काशिका-वृत्तिः

चित्तवति नित्यम् ५।१।८९

चित्तवति प्रत्ययार्थे ऽभिधेये वर्षशब्दान्ताद् द्विगोर् निर्वृत्तादिष्वर्थेषु उत्पन्नस्य प्रत्ययस्य नित्यं लुग् भवति। पूर्वेण विकल्पे प्राप्ते वचनम्। द्विवर्षो दारकः। चित्तवति इति किम्? द्विवर्षीणो व्याधिः।

न्यासः

चित्तवति नित्यम्?। , ५।१।८८

यदि चित्तवति प्रत्ययार्थे नित्यं लुग्भवति, "वर्षस्याभविष्यति" ७।३।१६ इत्यत्र यद्वक्ष्यति--"द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतोति द्विवार्षिको मनुष्यः" इत, तद्विरुध्यते; न हि नित्ये लुक्यधीष्टभृतयोरुत्पन्नस्य प्रत्ययस्य चित्तवत्यभिधेय एवं रूपमुपपद्यते? नैष दोषः; भूत एवास्योत्पन्नस्य प्रत्ययस्य चित्तवति नित्यं लुगिष्यते, न सर्वत्र। कुत एतत्()? नित्यग्रहणात्()। इह नित्यग्रहणमनर्थकमेव। आरम्भसामथ्र्यादेव नित्यो लुग्भविष्यतीति किं नियमग्रहणेन? तत्? क्रियते विशिष्टेऽर्थे नित्यो लुग्यथा स्यादित्येवमर्थम्()। स पुनर्विशिष्टो भूत एव॥

बाल-मनोरमा

चित्तवति नित्यम् १७३२, ५।१।८८

चित्तवति नित्यं। प्रत्ययस्येति। खस्य ठञश्चेत्यर्थः। दारकः। बालकः।

तत्त्व-बोधिनी

चित्तवति नित्यम् १३३८, ५।१।८८

दारक इति।बालकः। "परिजय्ये"त्यस्य विवरणं "जेतुं शक्यः"इति। "क्षय्यजय्यौ शक्यार्थे"इत्ययादेशः।

महानाम्न्यादिभ्यः षष्ठ()न्तेभ्य उपसङ्ख्यानम्। महानाम्न्योनामेति।तथा चाऽभाषितपुंस्कत्वात्पुंवद्भावो नेति भावः। हरदत्तिस्त्विवति। यौगिकोऽयं, न तु रूढ इति मन्यते। माहानामिक इति। पुंवद्भावे कृते "नस्तद्धिते इति टिलोपः।

चतुर्मासाण्ण्यो ज्ञे तत्र भव इत्यर्थे। चतुर्मासादिति। मासशब्दस्य कालवाचित्वात्कालाधिकारे वार्तिकारम्भः। न च विशिष्टस्य कालवाचित्वाऽभावादिह सङ्गतिदुर्निरूपेति शङ्क्यं, "प्राग्वतेः संर()ख्यापूर्वपदानां तदन्तग्रहण"मित्यभ्युपगमादस्त्येव सङ्गतिरिति।

अण्संज्ञायाम्। अण्संज्ञायामिति। "तत्र भवः" इत्यनेनैव सिद्धे पुनरण्विधिः "द्विगोर्लुगनपत्ये"इति लङ्बा भूदित्येतदर्थमिदमत्रारब्धम्। एवं चास्मिन् वार्तिके "चतुर्मासा"दित्यस्यानुवृत्तये पूर्ववार्तिकमत्रैवारब्धमित्यपि ज्ञेयम्। चातुर्मासीति। कस्य संज्ञेत्याकाङ्क्षायामाह---आषाढीति। आषाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

षष्टिकाः षष्टिरात्रेण पच्यन्ते ५।१।९०

षष्टिकशब्दो निपात्यते। बहुवचनम् अतन्त्रम्। षष्टिरात्रशब्दात् तृतीयासमर्थात् कन् प्रत्ययो निपात्यते पच्यन्ते इत्येतस्मिन्नर्थे, रात्रिशब्दस्य च लोपः। षष्टिरात्रेण पच्यन्ते षष्टिकाः। संज्ञा एषा धान्यचिशेषस्य। तेन मुद्गादिष्वतिप्रसङ्गो न भवति।

न्यासः

षष्टिकाः षष्टिरात्रेण पच्यन्ते। , ५।१।८९

"बहुवचवान्तस्य निर्देशाद्बहुवचन एव षष्टिकशब्दस्य साधुत्वम्(), नान्यत्र" इति यश्चोदयेत्(), तं प्रत्याह--"बहुवचनमतन्त्रम्()" इति। अप्रधानमित्यचर्थः। अप्रधानत्वं तु तस्य नान्तरीयकत्वात्()। अवश्यं हि येन केनचिद्वचनेन निर्देशः कत्र्तव्यः। यद्येवम्(), एकवचनेन निर्देशः कस्मान्न कृतः, एवं हि लघुर्भवति? सत्यम्(); वैचित्र्यार्थं बहुवचनेन कृतः। यदि "षष्टिरात्रेण पच्यन्ते" इत्यस्मिन्नयं एतन्निपातनं, मुद्गादिष्वतिप्रसङ्गः, तेऽपि हि षष्टिरात्रेणपच्यन्ते? इत्यत आह--"संज्ञैषा" इत्यातदि। धान्यविशेष एव हिं षष्टिकशब्दः संज्ञात्वेन रूढः। तेनाभिधानाम्मुद्गादिष्वतिप्रसङ्गो न भवति॥

बाल-मनोरमा

षष्टिकाः षष्टिरात्रेण पच्यन्ते १७३३, ५।१।८९

षष्टिकाः। तृतीयान्तादिति। "षष्टिरात्रशब्दा"दिति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

वत्सरान्ताच् छश् छन्दसि ५।१।९१

वत्सरान्तात् प्रातिपदिकात् निवृत्तादिष्वर्थेषु छन्दसि विषये छन्H प्रत्ययो भवति। ठञो ऽपवादः। इद्वत्सरीयः। इदावत्सरीयः।

न्यासः

वत्सरान्ताच्छश्छन्दसि। , ५।१।९०

---

सूत्रम्

काशिका-वृत्तिः

संपरिपूर्वात् ख च ५।१।९२

संपरिपूर्वात् वत्सरान्तात् प्रातिपदिकाच् छन्दसि विषये। निर्वृत्तादिष्वर्थेसु खः प्रत्ययो भवति, चकाराच् छश्च। संवत्सरीणाः, संवत्सरीया। परिवत्सरीणम्, परिवत्सरीया।

न्यासः

संपरिपूर्वात्ख च। , ५।१।९१

---

सूत्रम्

काशिका-वृत्तिः

तेन परिजय्यलभ्यकार्यसुकरम् ५।१।९३

तेन इति तृतीयासमर्थात् कालवाचिनः प्रातिपदिकात् परिजय्य, लभ्य, काय, सुकर इत्येतेष्वर्थेषु ठञ् प्रत्ययो भवति। मासेन परिजय्यः, शक्यते जेतुं, मासिको व्याधिः। सांवत्सरिकः। मासेन लभ्यः मासिकः पटः। मासेन कार्यम् मासिकं चान्द्रायणम्। मासेन सुकरः मासिकः प्रासादः।

न्यासः

तेन परिजय्यलभ्यकाग्र्यसुकरम्?। , ५।१।९२

"परिजय्यः" इति। परिः सर्वतोभावे। शक्यार्थे कृत्यः। सर्वतः शक्यो जेतुं "परिजय्यः" "लभ्यः" इति, "कार्य्यः" इति। अत्रापि शक्यार्थ एव कृत्यौ। मासेन शक्यो लब्यो मासिकः पटः। मासेन शक्यं कर्तु सुकरं वा मासिकं चान्द्रायणम्()। "तेन निर्वृत्तम्()" ५।१।७८ "तमधीष्टः" ५।१।७९ इति विभक्तितद्वये प्रकृते पुनस्तेनेति तृतीयोपादनां द्वितीयानिवृत्त्यर्थम्॥

बाल-मनोरमा

तेन परिजय्यलभ्यकार्यसुकरम् १७३४, ५।१।९२

तेन परिजय्य। निर्वृतायदयः पञ्चार्था निवृताः। तेन परिजय्यं, तेन लभ्यं तेन कार्यं, तेन सुकरमित्यर्थेषु। तृतीयान्ताट्ठञित्यर्थः। परिजय्य इत्यस्य विवरणं--जेतुं शक्य इति।

---

सूत्रम्

काशिका-वृत्तिः

तदस्य ब्रह्मचर्यम् ५।१।९४

तदिति द्वितियासमर्थविभक्तिः। सा च अत्यन्तसंयोगे। अस्य इति प्रत्ययार्थः। ब्रहमचर्यम् इति द्वाभ्याम् अपि सम्बध्यते। कालस्य व्यापकं, प्रत्ययार्थस्य च स्वम् इति। तदिति द्वितीयासमर्थात् कालवाचिनः प्रातिपदिकादस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, ब्रह्मचर्यं चेद् गम्यते। मासं ब्रह्मचर्यमस्य मासिकः ब्रह्मचारी। आर्धमासिकः। सांवत्सरिकः। अपरा वृत्तिः तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत् तदस्य इति निर्दिष्टं ब्रह्मचर्यं चेद् तद् भवति। मासो ऽस्य

ब्रहमचर्यसय् मासिकं ब्रहमचर्यम्। आर्धमासिकम्। सांवत्सरिकम्। पूर्वत्र ब्रहमचारी प्रत्ययार्थः, उत्तरत्र ब्रहमचर्यम् एव। उभयम् अपि प्रमाणम्, उभयथा सूत्रप्रणयनात्। महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसङ्ख्यानम्। माहानामिकम्। गौदानिकम्। आदित्यव्रतिकम्। तच् चरति इति च। महानाम्न्य ऋचः, तत् सहचरितं व्रतं तच्छब्देन उच्यते। महानाम्नीश्चरति माहानामिकः। आदित्यव्रतिकः। गौदानिकः। भस्याढे इति पुंबद्भावेन ङीपि निवृत्ते नस् तद्धिते ६।४।१४४ इति टिलोपः। अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः। अवान्तरदीक्षां चरति अवान्तरदीक्षी। तिलव्रती। अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः। अष्टाचत्वारिंशद् वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः, अष्टाचत्वरिंशी। चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः। चातुर्मास्यानि चरति चातुर्मासकः, चातुरमासी। चतुर्मास्याण् ण्यो यज्ञे तत्र भवे। चतुर्षु मासेषु भवानि चातुर्मास्यानि। संज्ञायामण् वक्तव्यः। चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी। आषाढी। कार्तिकी। फाल्गुनी।

न्यासः

तदस्य ब्राह्मचर्यम्?। , ५।१।९३

"द्वाभ्यामपि सम्बध्यते" इति। समर्थविभक्त्या, प्रत्ययार्थेन च। कथं सम्बध्यते? इत्याह--"कालस्य" इत्यादि। इह हि द्वितीयाऽत्यन्तसंयोगे।सा हियः कालस्य व्यापकस्तमपेक्षते, नान्तरयकत्वात्()। न हि तेन विनाऽत्यन्तसंयोग उपपद्यते। ब्राह्मचर्यं च "कालस्य व्यापकम्()" इति। "व्यापकम्()" इति। व्यापकमपेक्षमाणायां विभक्तौ ब्राह्मचर्यसम्बन्धो भवति। कथं प्रत्ययार्थेन सम्बध्यते? इत्यत आह--"प्रत्ययार्थस्य च स्वम्()" इति। प्रत्ययार्थः प्रतियोगि वसक्तु स्वमपेक्षते।प्रकृतत्वाच्च ब्राह्मचर्यस्यैव प्रतियोगित्वं विज्ञायते, तद्धि तस्य स्वं भवति। अतः प्रतियोग्यपेक्षायां प्रत्ययार्थस्यापि ब्राह्मचर्येण सम्बन्धो भवति। "पूर्वत्र" इत्यादिना पूर्वोत्तरयोर्वृत्त्योर्विशेषं दर्शयति। किं पुनरत्र प्रमाणमित्याह--"द्वयमपि" इत्यादि। कथं पुनद्र्धयमपि प्रमाणमित्याह--"उभयथा" इत्यादि। उभयस्मिन्नपि ह्त्रार्थे सूत्रमेतदाचार्येण प्रणीतम्()। द्वयमपि प्रमाणम्()। "महानाम्न्यादिभ्य" इति। ब्राह्मचर्यं एवार्थ इदमुपसंख्यानाम्()। "तच्चरति" इत्यादि। तदिति द्वितीयासमर्थेभ्यो महानाम्न्यादिभ्यः शब्देभ्यः "चरति" इत्येतस्मिन्नर्थे इदं ठञ उपसंख्यानम्()। "तत्सहचरितं व्रतं तच्छब्देनोच्यते" इति। भवति हि साहचर्यात्? ताच्छब्द्यम्(), यथा--यष्टीः प्रवेशयेति। अथ ऋच एवोच्यन्त इत्येवं कस्मान्न विज्ञायेते? चरणार्थस्यायोगात्()। ब्राह्मचर्य हि चर्यते। "चतुर्मासाण्ण्यो यज्ञे" इत्यादि। चतुमसिशब्दात्? तत्रेति सप्तमीसमर्थाद्भव इत्येतस्मिन्नर्थे यज्ञे विषये ण्यो वक्तव्यः। "संज्ञायामण्वक्तव्यः" इति। चतुर्मासाद्भव इत्येतदपेक्षते। इदञ्च यज्ञादन्यत्रोपसंख्यानम्। ननु च "तत्र भवः ४।३।५३ इत्यनेनाणाभवत्येव, किमर्थमुपसंख्यायते? सत्यमस्ति; तस्य तु द्विगोर्लुगनपत्ये" ४।१।८८ इति लुक्प्रप्नोति। अतो लुग्बाधनार्थं तस्योपसंख्यानम्()॥

बाल-मनोरमा

तदस्य ब्राह्मचर्यम् १७३५, ५।१।९३

तदस्य ब्राह्मचर्यं। ननु द्वितीयान्तादिति, कथं सूत्रे ब्राह्मचर्यविशेषणस्य तच्छब्दस्य प्रतमान्तत्वादित्यत आह--अत्यन्तेति। तता च कालविशेषाभिव्याप्तं ब्राह्मचर्यमस्येत्यर्थे कालात्प्रत्ययः। इदमर्थं प्रति ब्राह्मचर्यं विशेषणम्। मासिको ब्राह्मचारीति। मासाभिव्याप्तब्राह्मचर्यवानित्यर्थः। आर्धमासिक इति। "अर्धात्परिमाणस्ये"त्युभयपदवृद्धिः। अत्र इदंशब्दार्थस्य ब्राह्मचर्यमिति षष्ठ()र्थे प्रथमा। तथाच प्रथमान्तात्कालवाचिनोऽस्य ब्राह्मचर्यस्येत्यर्थे ठञित्यर्थः फलति। तदाह--प्रथमान्तादिति। "कालवाचिन" इति शेषः। अस्येत्यर्थ इति। अस्य ब्राह्मचर्यस्येत्यर्थे इत्यर्थः। मासोऽस्येत्यनन्तरं "ब्राह्मचर्यस्ये"ति शेषः। अस्मिन्पक्षे ब्राह्मचर्यमेव प्रत्ययार्थत्वात्प्रधानम्। इदमर्थस्तु तद्विशेषणिति बोध्यम्। उपसंख्यानमिति। "अस्य ब्राह्मचर्यमित्यर्थे ठञ" इति शेषः।

माहानाम्निक इति। महानाम्नीशब्दस्य ऋग्विशेषेषु रूढस्य नित्यस्त्रीलिङ्गत्वात् भाषितपुंस्कत्वाऽभावात् "भस्याऽढे" इति पुंवत्त्वं नेति भावः। हरदत्तस्त्विति। "माहनाम्निक"मित्येव भाष्ये उदाह्रतत्वादिमुपेक्ष्यमिति भावः।

चतुर्मासाण्ण्यो यज्ञे तत्रेति। वार्तिकमिदम्। तत्र भवो यज्ञ इत्यर्थे चतुर्मासशब्दात्सप्तम्यन्ताण्ण्यो वाच्य इत्यर्थः। चतुर्ष्विति। चतुर्षु मासेषु अतीतेष्वित्यर्थः।

अण् संज्ञायामिति। वार्तिकमिदम्। चतुर्मासब्दाद्भवार्थे अण् वाच्यः संज्ञायामित्यर्थः। चतुर्ष्विति। फाल्गुनीं पौर्णमासीमारभ्य चतुर्षु मासेष्वतीतेष्वित्यर्थः। आषाढीति। आषाढ्याः पौर्णमास्याश्चातुर्मासीति संज्ञेति भाव। नच "तत्र भवः" इत्यणैव सिद्धमिति वाच्यं, "द्विगोर्लुगनपत्ये" इति लुङ्निवृत्त्यर्थत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

तस्य च दक्षिणा यज्ञाख्येभ्यः ५।१।९५

तस्य इति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यो दक्षिणा इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी। राजसूयिकी। आख्याग्रहणम् अकालादपि यज्ञवाचिनो यथा सयातिति। इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्येरन्। प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणम् अलुकि ७।३।१७ इति कालाधिकारे ऽपि द्वादशाहादिष्वस्ति प्राप्तिः।

न्यासः

तस्य च दक्षिणा यज्ञाख्येभ्यः। , ५।१।९४

अथाख्याग्रहणं किमर्थम्()? न यज्ञेब्य इत्युच्येत? इत्यत आह--"आख्याग्रहणम्()" इत्यादि। यज्ञानमधेयमात्रादकालवाचिनोऽपि प्रत्ययो यथा स्यादित्येवमर्थमाक्याग्रहणमिति। "इतरथा हि" इत्यादि। यद्याख्याग्रहणं न क्रियोतेत्यर्थः। ननु चैकाहद्वादशाहादयो नैव कालशब्दाः, तत्कुतस्तेषामेवात्रग्रहणप्रसङ्गः? अथाकालवाचिनामप्येषां ग्रहणं सम्भवति? एवं सत्यग्निष्टोमादीनामपि भविष्यतीत्यपार्थकमाख्याग्रहणम्()? इत्यत आह--"प्राग्वतेः" इत्यादि। यद्यप्येते कालशब्दा न भवन्ति, तथापि प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिरभ्यनुज्ञातः। तेन सत्यपि कालाधिकारेऽप्यस्ति तेषु ग्रहणप्रसङ्गः। तथा च तत्र वचनस्य चरितार्थत्वादग्निष्टोमादिभ्यो न स्यात्(), तेभ्योऽपि यथा स्यादित्याख्याग्रहणम्()। ननु चैवमपि सूत्रमनर्थकम्(), या ह्यग्निष्टोमस्य दक्षिणा साप्यग्निष्टोमे भवति। तत्र "बह्वचोऽन्तोदात्ताट्ठञ्()" ४।३।६७ "क्रतुयज्ञेभ्यश्च" (४।३।६८) इत्येव ठञ्? सिद्धः। इदमपि सूत्रं ठञर्थमेवारभ्यते? सत्यमेतत्(), किन्तु भावर्थे "तस्येदम्()" ४।३।१२० इति विवक्षिते तदा परत्वादणादयः स्युरिति युक्तं विधानम्()। अपि च यज्ञाख्येभ्यस्तेन ठञिष्यते। ग्रहणवता प्रातिपदिकेन तदन्तविध्यभावात्? संख्यापूर्वपदेभ्यष्ठञ्? न लभ्येत-- द्वयोर्वाजपेययोर्भवा दक्षिणा द्वैवाजपेयिकीति। अनेन च विधानेन "प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि" (काशिका। ५।१।२०) इति ठञ्? सिद्धो भवति। अथापि कथञ्चित्? तदन्तविधिर्भवार्थे लभ्यते, तथापि "द्विगोर्लुगनपत्ये" ४।१।८८ इति लुक्प्रसज्येत। तस्माद्युक्तः सूत्रारम्भः।

बाल-मनोरमा

तस्य च दक्षिणा यज्ञाख्येभ्यः १७३६, ५।१।९४

तस्य च दक्षिणा। तस्य दक्षिणेत्यर्थे यज्ञकालवृतिभ्यष्ठञ्स्यादित्यर्थः। द्वादसाहस्येति। द्वादशदिनसाध्यसुत्याकः

क्रतुद्र्वादशाहः। तस्येत्यर्थः। कालोपसर्जनक्रतुवाचित्वादयमपि कालवृत्तिरिति भावः। "काला"दित्यधिकारसूत्रे हि यथाकथञ्चित्कालबोधकस्य ग्रहणमिति "तदस्य परिमाण"मिति सूत्रे भाष्ये स्पष्टम्। नन्वेवं सति अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकीत्यत्र ठञ्न स्यात्। अग्निष्टोमशब्दस्य कथञ्चिदपि कालवाचित्वाऽभावादित्यत आह-- आक्याग्रहणादकालादपीति। अन्यथा "यज्ञेभ्य" इत्येव सिद्धे आख्याग्रहणवैयथ्र्यादिति भावः। वस्तुतस्तु "यज्ञेभ्य" इत्येवात्तौ कालादित्यधिकाराद्द्वादशाहादिशब्देभ्य एव स्यान्नतु अग्निष्टोमादिशब्देभ्यः। आख्याग्रहणे तु अग्निष्टोमादिभ्यो द्वादशाहादिशब्देभ्यश्च सर्वेभ्यो यज्ञवाचिभ्य इति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

तस्य च दक्षिणा यज्ञाख्येभ्यः १३३९, ५।१।९४

तस्य च दक्षिणा। षष्ठ()न्तेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यस्मिन्नर्थे ठञ् स्यात्। कालाधिकारादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं व्यर्थमित्याशङ्क्य परिहरति---आख्याग्रहणादिति।

---

सूत्रम्

काशिका-वृत्तिः

तत्र च दीयते कार्यं भववत् ५।१।९६

तत्र इति सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकाद् दीयते, कार्यम् इत्येतयोरर्थयोर् भववत् प्रत्ययो भवति। यथा मासे भवं मासिकम्। सांवत्सरिकम्। प्रावृषेण्यम्। वासन्तिकम्। वासन्तम्। हैमनम्। हैमन्तम्। हैमन्तिकम्। शारदम्। वतिः सर्वसादृश्यार्थः। योगविभागश्च अत्र कर्तव्यः, तत्र च दीयते, यज्ञाख्येभ्यः इति। आग्निष्टेमिकं भक्तम्। राजसूयिकम्। वाजपेयिकम्। कालाधिकारस्य पूर्णो ऽवधिः। अतः परं सामान्येन प्रत्ययविधानम्।

न्यासः

तत्र च दीयते कार्यं भववत्?। , ५।१।९५

"यथा मासे भवं मासिकम्()" इत्यादि। "कालाट्ठञ्()" ४।३।११ इति। "प्रावृषेण्यम्()" इति। "प्रावृष एण्यः" ४।३।१७। "वासन्तं शारदम्()" इति। सन्धिवेलादिसूत्रे ४।३।१६ णाण्()। "हैमनम्()" इति। "हेमन्ताच्च" ४।३।२१ इति, "सर्वत्राण्च तलोपश्च" ४।३।२२ इति। वतिः सादृश्यार्थः। "कालेभ्यो भववत्()" ४।२।३३ इत्यत्रैतद्व्याख्यातम्()। तत एवानुगन्तव्यम्()। चकारः कालादित्यनुकर्षणार्थः, तेन चानुकृष्टत्वादुत्तरत्र नानुवत्र्तते, अत आह--"कालाधिकारस्य पूर्णोऽवधिः" इत्यादि। ननु च यन्मासे दीयते कार्यं च तन्मासे भवति; मासाधारत्वात्? तत्सत्तायाः। अतः "तत्र भवः" (४।३।५३) इत्यनेनाणैव सिद्धमिति किमतिदेशेन? एवं तेन सत्यपि भवत्यर्थे कार्यदीयमानयोः कार्यतां दीयमानताञ्च कालान्तात्? तैः प्रत्ययैरपि ख्याययितुमतिदेशः। किञ्चानेन च तत्र भवानामपि न। तेन सति तस्मिन्? तदन्तविधेरिष्टत्वाद्()द्वयोर्मासयोर्दीयते कार्यं वा--द्वैमासिकमिति। अथापि कथञ्चिद्भवार्थेऽपि तदन्तविधिर्गृह्रते, एवमपि "द्विगोः" (४।१।८८) इति लुक्? स्यात्()। ननु चात्रापि विधाने सत्यतिदेशादेव लुक्? प्राप्नोति? वचनसामथ्र्यान्? प्रत्ययमात्रस्यातिदेशो विज्ञास्यते, न सर्वकार्याणामित्यदोषः॥

बाल-मनोरमा

तत्र च दीयते कार्यं भववत् १७३७, ५।१।९५

तत्र च दीयते। "तत्र दीयते" "तत्र कार्य"मित्यर्थयोः सप्तम्यन्तात्कालवाचिनो भववत्प्रत्ययाः स्युरित्यर्थः। प्रावृषेण्यमिति।

"प्रावृष एण्यः" इति भवार्थे विहित इहापि भवति। शारदमिति। शरदि दीयते कार्यं वेत्यर्थः। सन्धिवेलाद्यण्भवे विहित इहापि भवति। वस्तुतस्तु तत्र कार्यं दीयते इत्यर्थे यज्ञाख्येभ्यो भववत्प्रत्ययाः स्युरित्यर्थः। अग्निष्टोमे दीयते भक्तम् आग्निष्योमिकम्। कार्यग्रहणादिग्निष्टोमे दीयते हिरण्यमित्यत्र न भवति। न ह्यग्निष्टोमे हिरण्यं क्रियत इति भाष्ये स्पष्टम्। इति प्राग्वतीये ठञधिकारे कालाधिकारः।

तत्त्व-बोधिनी

तत्र च दीयते कार्ये भववत् १३४०, ५।१।९५

तत्र च। कालवाचिनः सप्तम्यन्तद्दीयते कार्यमित्येतयोरर्थयोर्मववत्प्रत्ययः स्यात्। प्रावृषेण्यमिति। "प्रावृष एण्य"इति भवार्थे विहितः, स इहाप्यतिदिश्यत इति भावः। शारदमिति। "सन्दिवेलाद्यृतुनक्षत्रेभ्योण्"। कालाधिकारस्य पूर्णोऽवधिः।

---

सूत्रम्

काशिका-वृत्तिः

व्युष्टाऽदिभ्यो ऽण् ५।१।९७

तत्र इति सप्तमीसमर्थेभ्यः व्युष्टादिभ्यः दीयते, कार्यम् इत्येतयोरण् प्रत्ययो भवति। व्युष्टे दीयते कार्यम् वा वैयुष्टम्। नैत्यम्। अण्प्रकरणे ऽग्निपदादिभ्य उपसङ्ख्यानम्। आग्निपदम्। पैलुमूलम्। किं वक्तव्यम्? न वक्तव्यम्। अत्र एव ते पठितव्याः। व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। सम्भ्रम। आस्तरण। सङ्ग्राम। सङ्घात। अग्निपद। पीलुमूल। प्रवास। उपसङ्क्रमण। व्युष्टादिः।

न्यासः

व्युष्टादिभ्योऽण्?। , ५।१।९६

व्युष्टशब्दोऽयं कालशब्दः। तत्साहचर्यान्नित्यशब्दोऽपि कालशब्द एव गृह्यते। नाकाशादिवचनः। तेन तत्र सप्तम्यपवादः "कालध्वनोरत्यन्तसंयोगे" २।३।५ इति द्वितीया भवति। तेन सप्तम्यधिकारेऽपि नित्यशब्दाद्()द्वितीयासमर्थादेव प्रत्ययः। नित्यं दीयते "नैत्यम्()"। सर्वकाले दीयते इत्यर्थः। "अण्प्रकरणे" इत्यादि। पदेतत्? कात्यायनेनोक्तम्? "अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम्()" (वा।५३२) इत्येतन्न वक्तव्यम्()। कथं तह्र्यण्? स्यात्()? व्युष्टादिष्वेवाग्निपदादयः पठितव्या। अथाण्ग्रहणं किमर्थम्(), यावता भववत्()" ५।१।९५ इत्येतदिहानुवत्र्तते, तेनैवात्राणपि भविष्यति? नैवं शक्यम्(); एवं हि सति व्युष्टनित्यशब्दाभ्यां "कालाट्ठञ्()" (४।३।११) इति ठञ्? स्यात्(); नैष दोषः; तत्र पुनरारम्भसामथ्र्याद्यष्ठञा बाधितः स एव भविष्यति। कः पुनरसौ? अणेव। एवमपि तीर्थशब्दात्? द्व्यजृद्ब्राआह्मणादि४।३।७२सूत्रेण ठग्विहित इति ततष्ठगेव स्यात्()। ये चात्र प्रवेशनादयोऽन्तोदात्ताः; तेभ्यष्ठञ्? स्यात्? "ब्राह्वचोऽन्तोदात्ताट्ठञ्()४।३।९७इति; तेभ्यो भवार्थे ठञो विहितत्वात्()। तस्मादण्ग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

व्युष्टादिभ्योऽण् १७३८, ५।१।९६

अथ ठञ्विधिर्निरूप्यते--व्युष्टादिभ्योऽण्। "तत्र च दीयते कार्य"मित्यनुवर्तते। दीयते कार्यं वेत्यर्थे सप्तम्यन्तेभ्यो व्युष्टादिभ्योऽण्स्याट्ठञोऽपवादः। व्युष्टं--प्रभातम्। वैयुष्टमिति। अणि "न य्वाभ्या"मित्यैच्।

तत्त्व-बोधिनी

व्युष्टादिभ्यो ऽण् १३४१, ५।१।९६

व्युष्टादिभ्योऽण्। व्युष्टशब्दः कालवाची दिवसमुके वर्तते।

---

सूत्रम्

काशिका-वृत्तिः

तेन यथाकथाचहस्ताभ्यां णयतौ ५।१।९८

दीयते, कार्यम् इति वर्तते। तेन इति तृतीयासमर्थाभ्यां यथाकथाचहस्तशब्दाभ्यां यथासङ्ख्यं णयतौ प्रत्ययौ भवतः। दीयते, कार्यम् इत्येतयोरर्थयोः प्रत्येकम् अभिसम्बधः, यथासङ्ख्यं न इष्यते। यथाकथाचशब्दो ऽव्ययसमुदायो ऽनादरे वर्तते। तृतीयार्थमात्रं च अत्र संभवति, न तु तृतीया समर्थविभक्तिः। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम्।

न्यासः

तेन यथाकथाचहस्ताभ्यां णयतौ। , ५।१।९७

"यथासंख्यं नेष्यते" इति। अल्पाच्तरस्य हस्तशब्दस्य परनिपातो लक्षणव्यभिचारस्य वचनहेतुः। "तृतीयार्थमात्रञ्चात्र सम्भवति" इति। तृतीयार्थस्य गम्यमानत्वात्()। तथा हि--यथाकथाच दत्तमित्युक्ते, अनादरेण दत्तमिति गम्यते। "न तृतीयासमर्थविभक्तिः" इति। यथाकथाचशब्दसय वाक्यत्वात्()। प्रत्ययस्तु वचनसामथ्र्याद्वाक्यादपि भवत्येव॥

बाल-मनोरमा

तेन यथाकथाचहस्ताभ्यां णयतौ १७३९, ५।१।९७

तेन यथा।

अर्थाभ्यामिति। प्रकृत्योः प्रत्यययोश्च यथासङ्ख्यम्, नतु दीयते कार्यमित्यनयोरित्यर्थः, वल्याख्यानादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सम्पादिनि ५।१।९९

तेन इत्येव। तृतीयासमर्थात् सम्पादिन्यभिधेये ठञ् प्रत्ययो भवति। गुणोत्कर्षः सम्पत्तिः। आवश्यके णिनिः। कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकं मुखम्। वास्त्रयुगिकं शरीरम्। वस्त्रयुगेन विशेषतः शोभते इत्यर्थः।

न्यासः

सम्पादिनि। , ५।१।९८

"गुणोत्कर्षः सम्पत्तिः" इति। सम्पादिनीत्यत्र प्रकृतिभागस्यार्थमाचष्टे। पूर्वावस्थाया गुणातिरेको गुणोत्कर्षः। "आवश्यके णिनिः" इति। अवश्यं सम्पद्यत इति "आवश्यकाधमर्णयोर्णिनिः" ३।३।१७०। "विशेषतशोभते" इति। शोभनाख्यस्य गुणस्य पूर्वावस्थाया उत्कर्षादतिरिच्यमानत्वात्()॥

बाल-मनोरमा

सम्पादिनि १७४०, ५।१।९८

सम्पादिनि। तेनेत्येवेति। संपाद=संपत्तिः, शोभा, अस्यास्तीति-संपादी। तस्मिन्नर्थे तृतीयान्ताट्ठगित्यर्थः।

तत्त्व-बोधिनी

सम्पादिनि १३४२, ५।१।९८

संपादिनि। गुणोत्कर्षः--संपत्तिः। "आवश्यके णिनि"रिति वृत्तकृत्। एवं वस्त्रयुगेन संपादि वास्त्रयुगिकं शरीरमित्यप्युदाहार्यम्। वस्त्रयुगेन अवश्यं शोभत इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कर्मवेषाद् यत् ५।१।१००

कर्मवेषशब्दाभ्यां तृतीयासमर्थाभ्यां यत् प्रत्ययो भवति सम्पादिनि इत्येतस्मिन् विषये। ठञो ऽपवादः। कर्मणा सम्पद्यते कर्मण्यम् शरीरम्। वेषेण संपद्यते वेष्यो नटः।

न्यासः

कर्मवेषाद्यत्?। , ५।१।९९

"कण्र्यम्()" इति। "ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिभावः॥

बाल-मनोरमा

कर्मवेषाद्यत् १७४१, ५।१।९९

कर्मवेषाद्यत्। तृतीयान्तात्कर्मन्शब्दात्, वेषशब्दाच्च संपादिन्यर्थे यत्स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तस्मै प्रथवति सन्तापाऽदिभ्याः ५।१।१०१

तस्मै इति चतुर्थीसमर्थेभ्यः सन्तापादिभ्यः प्रभवति इत्यस्मिन् विषये ठञ् प्रत्ययो भवति। समर्थः, शक्त प्रभवति इत्युच्यते। अलमर्थे चतुर्थी। संतापाय प्रभवति सान्तापिकः। सान्नाहिकः। सन्ताप। सन्नाह। सङ्ग्राम। संयोग। संपराय। संपेष। निष्पेष। निसर्ग। असर्ग। विसर्ग। उपसर्ग। उपवास। प्रवास। सङ्घात। संमोदन। सक्तुमांसौदनाद्विगृहीतादपि।

न्यासः

तस्मै प्रभवति सन्तापादिभ्यः। , ५।१।१००

"सक्तुमांसौदनाद्विगृहीतादपि" इति। अपिशब्दात्(), सङ्घातादपि। साक्तुमांसौदनिकः। साक्तुकः। मांसिकः। औदनिकः॥

बाल-मनोरमा

तस्मै प्रभवति सन्तापादिभ्यः १७४२, ५।१।१००

तस्मै प्रभवति। चतुर्थ्यन्तेभ्यः संपातादिभ्यः प्रभवतीत्यर्थे ठञ् स्यादित्यर्थः। संतापाय प्रभवतीति। शत्रूणां पीडायै शक्नोतीत्यर्थः।

तत्त्व-बोधिनी

तस्मै प्रभवति सन्तापादिभ्यः १३४३, ५।१।१००

तस्मै प्रभवति। समर्थः शक्तः प्रभवतीत्युच्यते।

---

सूत्रम्

काशिका-वृत्तिः

योगाद् यच् च ५।१।१०२

योगशब्दात् यत् प्रत्ययो भवति, चकारात् ठञ्, तस्मै प्रभवति इत्यस्मिन् विषये। योगाय प्रभवति योग्यः, यौगिकः।

न्यासः

योगाद्यच्च। , ५।१।१०१

बाल-मनोरमा

योगाद्यच्च १७४३, ५।१।१०१

योगाद्यच्च। "चतुथ्र्यन्तात्प्रभवतीत्यर्थे" इति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

कर्मण उकञ् ५।१।१०३

कर्मन्शब्दा उकञ् प्रत्ययो भवति तस्मै प्रभवति इत्येतस्मिन्नर्थे। ठञो ऽपवादः। कर्मणे प्रभवति कार्मुकं धनुः। धनुषो ऽन्यत्र न भवति, अनभिधानात्।

न्यासः

कर्मण उकञ्?। , ५।१।१०२

बाल-मनोरमा

कर्मण उकञ् १७४४, ५।१।१०२

कर्मण उकञ्। "चतुथ्र्यन्तात्प्रभवतीत्यर्थे" इति शेषः। कार्मुकमिति। उकञि टिलोपः।

---

सूत्रम्

काशिका-वृत्तिः

समयस् तदस्य प्राप्तम् ५।१।१०४

समयशब्दात् ततिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत् तत्प्रथमासमर्थं प्राप्तं चेद् तद् भवति। समयः प्राप्तो ऽस्य सामयिकं कार्यम्। उपनतकालम् इत्यर्थः। समर्थविभक्तिनिर्देश उत्तरार्थः।

न्यासः

समयस्तदस्य प्राप्तम्?। , ५।१।१०३

अथ किमर्थं तदिति समर्थविभक्तिर्निर्दिश्यते; यावता समय इति निर्देशादेव सा दृश्यते? इत्यत्राह--"समर्थविभक्तिनिर्देश उत्तरार्थः" इति। "ऋतोरण्()" ५।१।१०४ इन्येवमादौ प्रथमासमर्थाद्यथा स्यादिति उत्तरार्थञ्च क्रियमाणोऽत्रापि विस्पष्टार्थो

भविष्यतीत्यत्रैव कृतः; नोत्तरत्र॥

बाल-मनोरमा

समयस्तदस्य प्राप्तम् १७४५, ५।१।१०३

समयस्तदस्य। तदिति, प्राप्तमिति च सामान्ये नपुंसकम्। समयः प्राप्तोऽस्येत्यर्थे प्रथमान्तात्समयशब्दाट्ठञित्यर्थः। "त"दित्युत्तरार्थम्।

---

सूत्रम्

काशिका-वृत्तिः

ऋतोरण् ५।१।१०५

तदस्य प्राप्तम् इत्यनुवर्तते। ऋतुशब्दात् तदिति प्रथमासमर्थातस्य इति षष्ठ्यर्थे अण् प्रत्ययो भवति तदस्य प्राप्तम् इत्येतस्मिन् विषये। ऋतुः प्राप्तो ऽस्य आर्तवं पुष्पम्। तदस्य प्रकरणे उपवस्त्रादिभ्यः उपसङ्ख्यानम्। उपवस्ता प्राप्तो ऽस्य औपवस्त्रम्। प्राशिता प्राप्तो ऽस्य प्राशित्रम्।

न्यासः

ऋतोरण्?। , ५।१।१०४

वसन्तोऽस्य पुष्पदेरृतुः प्राप्तः, स तस्य जनकत्वात्? प्रयोजको भवतीति "प्रयोजनम्()" ५।१।१०८ इति ठञि प्राप्ते सत्ययमारभ्यते॥

बाल-मनोरमा

ऋतोरण् १७४६, ५।१।१०४

ऋतोरण्। प्राप्तमित्येव। प्राप्तोऽस्येत्यर्थे प्रथमान्तादृतोरणित्यर्थः। आर्तवमिति। अणि ओर्गुणः, आदिवृद्धिः। रपरत्वम्।

तत्त्व-बोधिनी

ऋतोरण् १३४४, ५।१।१०४

आर्तवमिति। "पुष्प"मित्यादि विशेष्यं बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि घस् ५।१।१०६

ऋतुशब्दाच् छन्दसि विषये घस् प्रत्ययो भवति तदस्य प्राप्तम् इत्यस्मिन् विसये। अणो ऽपवादः। अयं ते योनिरृत्वियः।

न्यासः

छन्दसि घस्?। , ५।१।१०५

घसः सकारः "सिति च" १।४।१६ इति पदसंज्ञार्थः। तेन पदत्वेन भत्वे निरस्ते "ऋत्विय" इति। अत्र "ओर्गुणः" ६।४।१४६ इति गुणो न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

कालाद् यत् ५।१।१०७

कालशब्दात् यत् प्रत्ययो भवति तदस्य प्राप्तम् इत्यस्मिन् विषये। कालः प्राप्तो ऽस्य काल्यः तापः। काल्यं शीतम्।

न्यासः

कालाद्यत्?। , ५।१।१०६

बाल-मनोरमा

कालाद्यत् १७४७, ५।१।१०६

कालाद्यत्। तदस्य प्राप्तमित्येव। प्रतमान्तात्कालशब्दादस्य प्राप्त इत्यर्थे यदित्यर्थः। प्रातःकाले काल्यशब्दस्तु कल्यवदव्युत्पन्नं प्रातिपदिकम्। कल्यमेव काल्यं वा।

तत्त्व-बोधिनी

कालाद्यत् १३४५, ५।१।१०६

काल्यं शीतमिति। "प्रत्यूषोऽहर्मुखं कल्य"मित्यमरः। तत्र प्रातःकाले काल्यशब्दस्य व्युत्पत्त्यन्तरं मृग्यम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रकृष्टे ठञ् ५।१।१०८

कालातित्येव, तदस्य इति च। प्राप्तम् इति निवृत्तम्। प्रकर्षेण कालो विशेष्यते। प्रकर्षे वर्तमानात् कालात् प्रथमासमर्थादस्य इति षष्ठ्यर्थे ठञ् प्रत्ययो भवति। प्रकृष्टो दीर्घः कालो ऽस्य कालिकमृणम्। कालिकं वैरम्। ठञ्ग्रहणं विस्पष्टार्थम्।

न्यासः

प्रकृष्टे ठञ्?। , ५।१।१०७

"प्रकृष्टम्()" इति। "नपुंसके भावे क्तः" ३।३।११४। कालस्य दीर्घत्वमिह प्रकृष्टशब्देनोच्यते। अथ ठञ्ग्रहणं किमर्थम्(), यावता प्रकृत एव ठञ्(), तत्र प्रकृष्टमित्येतावदेव वक्तव्यम्()? इत्याह--"ठञ्ग्रहणं विस्पष्टार्थम्()" इति। असति हि ठञ्ग्रहणे यतोऽनन्तरत्वात्? स एव विधीयत इति कस्यचिद्भ्रान्तिः स्यात्। तस्मान्मन्दबुद्धि प्रवक्तारं प्रति विस्पष्टार्थं ग्रहणम्()॥

बाल-मनोरमा

प्रकृष्टे ठञ् १७४८, ५।१।१०७

प्रकृष्टे ठञ्। अस्य प्राप्त इत्यर्थे प्रकृष्टवृत्तेः कालशब्दाट्ठञित्यर्थः। यतोऽपवादः। प्रकृष्टशब्दस्य विवरणं-दीर्घ इति।

तत्त्व-बोधिनी

प्रकृष्टे ठञ् १३४६, ५।१।१०७

प्रकृष्टे ठञ्। प्रकृष्यते अयमिति प्रकृष्टः। कर्मणि क्तः। तेन च प्रकर्षेण कालो विशेष्यते इत्याह---दीर्घः काल इति। ठञ्()ग्रहणं विस्पष्टार्थम्, अन्यथा अनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत।

---

सूत्रम्

काशिका-वृत्तिः

प्रयोजनम् ५।१।१०९

तदस्य इत्येव। तदिति प्रथमसमर्थातस्य इति षष्ठ्यर्थे ठञ् प्रययो भवति, यत् तत् प्रथमासमर्थं प्रयोजनं चेद् तद् भवति। इन्द्रमहः प्रयोजनम् अस्य ऐन्द्रमहिकम्। गाङ्गामहिकम्।

न्यासः

प्रयोजनम्?। , ५।१।१०८

प्रयोजयतीति प्रयोजनम्()। "कृत्यल्युटो बहुलम्()" ३।३।११३ इति कत्र्तरि ल्युट्()॥

बाल-मनोरमा

प्रयोजनम् १७४९, ५।१।१०८

प्रयोजनम्। तदस्येत्येवेति। अस्य प्रयोजनमित्यर्थे प्रथमान्ताट्ठञित्यर्थः। इन्द्रमह इति। इन्द्रोत्सव इत्यर्थः। "मह उद्धव उत्सवः" इत्यमरः। प्रयोजनं फलं कारणं चेति। प्रयुज्यते प्रवृत्त्या निष्पाद्यते इति कर्मणि ल्युटि प्रयोजनशब्दः फलवाची। प्रयुज्यते प्रवर्तते पुरुषोऽनेनेति करणे ल्युटि प्रयोजनशब्दः प्रवर्तकवाचीत्यर्थः।

तत्त्व-बोधिनी

प्रयोजनम् १३४७, ५।१।१०८

इन्द्रमह इति। महः---उत्सवः। वैशाखो मन्थः। आषाढो दण्ड इति। वैशाखाऽऽषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्तेते। तयोस्तु यथा कथंचिद्व्युत्पत्तिः क्रियत इति हरदत्तः। विलोडनदण्डस्यैवाधारभूतः काष्ठविशेषो "मन्थ"इत्युच्यते।

---

सूत्रम्

काशिका-वृत्तिः

विशाखाऽषाढादण् मन्थदण्डयोः ५।१।११०

विशाखाषढाशब्दाभ्याम् अण् प्रत्ययो भवति तदस्य प्रयोजनम् इत्येतस्मिन् विषये यथासङ्ख्यम् मन्थदण्डयोरभिधेययोः। विशाखा प्रयोजनम् अस्य वैशाखो मन्थः। आषाढो दण्डः। चूडादिभ्य उपसङ्ख्यानम्। चूडा प्रयोजनम् अस्य चौडम्। श्रद्धा प्रयोजनम् अस्य श्राद्धम्।

न्यासः

विशाखाषाढादण्मन्थदण्डयोः। , ५।१।१०९

ठञपवादो योगः। मन्थोऽवक्षारो विलोडनदण्डो वा॥

बाल-मनोरमा

विशाखाषाढादण्मन्थदण्डयोः १७५०, ५।१।१०९

विशाखाषाढात्। विशाखाशब्दादाषाढशब्दाच्च प्रथमान्तादस्य प्रयोजनमित्यर्थे अण् स्यात्, समुदायेन मन्थे दण्डे च क्रमाद्गम्ये सतीत्यर्थः। तदाह--आब्यामिति। स्थूणामेका निखाय तस्यां रज्जुद्वयमधरोत्तरमासज्य तयो रज्ज्वोर्मन्थनदण्ड ऊध्र्वमासज्यते। येन रज्ज्वा भ्रामितेन दधि विलोड()ते इति स्थितिः। तत्र स्थूणा मन्थ इत्युच्यते। मन्थानाख्यदण्डो दण्ड उच्यते। अनयोर्वैशाखशब्द आषाढशब्दश्च रूढौ। तत्रावयवार्थाभिनिवेशो न कर्तव्यः।

चूडादिभ्य इति। चूडादिभ्यः प्रतमान्तेभ्योऽस्य प्रयोजनमित्यर्थे अणित्यर्थः। चौडमिति। चूडाप्रयोजनमस्येति विग्रहः। डलयोरभेदाच्चौलमित्यपि। श्राद्धमिति। श्रतद्धा प्रयोजनमस्येति विग्रहः। श्रद्धाशब्दादणि श्राद्धमित्यर्थः। अत्र प्रयोजनशब्दः कारणवाची। श्रद्धाहेतुकमिति यावत्।

---

सूत्रम्

काशिका-वृत्तिः

अनुप्रवचनाऽदिभ्यश् छः ५।१।१११

अनुप्रवचनादिभ्यः प्रातिपदिकेभ्यः छः प्रत्ययो भवति तदस्य प्रयोजनम् इत्यस्मिन् विषये ठञो ऽपवादः। अनुप्रवचनं प्रयोजनम् अस्य अनुप्रवचनीयम्। उत्थापनीयम्। विशिपूरिपतिरुहिप्रकृतेरनात् सपूर्वपदादुपसङ्ख्यानम्। गृहप्रवेशनं प्रयोजनम् अस्य गृहप्रवेशनीयम्। प्रपापूरणीयम्। अश्वप्रपतिनीयम्। प्रासादारोहणीयम्। स्वर्गादिभ्यो यद् वक्तव्यः। स्वर्गः प्रयोजनम् अस्य स्वर्ग्यम्। यशस्यम्। आयुष्यम्। काम्यम्। धन्यम्। पुण्याहवाचनादीभ्यो लुग् वक्तव्यः। पुण्याहवाचनं प्रयोजनम् अस्य पुण्याहवाचनम्। स्वस्तिवाचनम्। शान्तिवाचनम्। अनुप्रवचन। उत्थापन। प्रवेशन। अनुप्रवेशन। उपस्थापन। संवेषन। अनुवेशन। अनुवचन। अनुवादन। अनुवासन। आरम्भण। आरोहण। प्ररोहण। अन्वारोहण। अनुप्रवचनादिः।

न्यासः

अनुप्रवचनादिभ्यश्धः। , ५।१।११०

"विशिपूरी" इत्यादि। "विश प्रवेशने" (धा।पा।१८२४), "पूरी आप्यायने" (धा।पा।१८०३), "पत्लृ गतौ" (दा।पा। ८४५) "रुह बीजजन्मनि" (धा।पा। ८५९)--एताः प्रकृतयो यस्यानस्य "युवोरनाकौ" ७।१।१ इति युस्थाने विहितस्यानः, तस्माद्विद्यमानपूर्वपदाच्छ उपसंख्येयः। केवलस्यानस्य सपूर्वपदत्वं न सम्भवतीति तस्य शब्दस्येदं विशेषणं विज्ञायते। गृहप्रवेशनं प्रयोजनं यस्य तत्र गृहप्रवेशनशब्दो विशिप्रकृत्यनन्तः, गृहशब्देन च सपूर्वपदः। यदि तर्हि विश्यादिप्रकृत्यनन्ताच्छशब्दाच्छ उपसंख्यायते, अनुप्रवचनादिषु संवेशनारोहणादीनां पाठोऽनर्थकः; तस्यैव प्रपञ्चार्थत्वात्()॥

बाल-मनोरमा

अनुप्रवचनादिभ्यश्छः १७५१, ५।१।११०

अनुप्रवचनादिभ्यश्धः। प्रथमान्तादनुप्रवचनादिशब्दादस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः। अनुप्रवचनं नाम उपनयनाङ्गं किञ्चित्कर्म आ()आलायनसूत्रे प्रसिद्धम्।

तत्त्व-बोधिनी

अनुप्रवचनादिभ्यश्छः १३४८, ५।१।११०

अनुप्रवचना। अनुप्रवचनं नाम ब्राह्मौदनमुच्यते।

---

सूत्रम्

काशिका-वृत्तिः

समापनात् सपूर्वपदात् ५।१।११२

समापनशब्दात् सपूर्वपदात् विद्यमानपूर्वपदाच् छः प्रत्ययो भवति तदस्य प्रयोजनम् इत्येतस्मिन् विषये। ठञो ऽपवादः। छन्दःसमापनं प्रयोजनमस्य छन्दःसमापनीयम्। व्याकरणसमापनीयम्। पदग्रहणं बहुच्पूर्वनिरासार्थम्।

न्यासः

समापनात्सपूर्वपदात्?। , ५।१।१११

अथ पदग्रहणं किमर्थम्(), सपूर्वादित्येवोच्येत? इत्यत आह--"पदग्रहणम्()" इत्यादि। असति हि पदग्रहणे, ईषदसमाप्तं समापनं बहुसमापनं तत्? प्रयोजनमस्येति तत्रापि प्राप्नोति; भवति ह्ययं समापनशब्दः सपूर्वः। पदग्रहणे तु सति न भवति; बहुचप्रत्ययस्यापदत्वात्()॥

बाल-मनोरमा

समापनात्सपूर्वपदात् १७५२, ५।१।१११

समापनात्सपूर्वपदात्। सपूर्वपदात्समापनशब्दादस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः। व्याकरणसमापनीय इति। "मङ्गलाचार" इति शेषः।

तत्त्व-बोधिनी

समापनात्सपूर्वपदात् १३४९, ५।१।१११

सपूर्वपदादिति। विद्यमानपूर्वपदादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ऐकागारिकट् चौरे ५।१।११३

ऐकागारिकटिति निपात्यते चौरे ऽभिधेये। एकागारं प्रयोजनम् अस्य ऐकागारिकः चौरः। ऐकागारिकी। किम् अर्थम् इदं निपात्यते, यावता प्रयोजनम् इत्येव सिद्धष्ठञ्? चौरे नियमार्थं वचनम्। इह मा भूत्, एकागारं प्रयोजनम् अस्य भिक्षोः इति। ठकारः कार्यावधारणार्थः, ङीबेव भवति न ञित्स्वरः इति। अपरे पुनरिकट् प्रत्ययं वृद्धिं च निपातयन्ति।

न्यासः

ऐकागारिकट्? चौरे। , ५।१।११२

"चौरे नियमार्थम्()" इति। प्रकृतत्वाच्च ठञ एव। एवं ब्राउवता ठञान्तमेतन्निपात्यत इत्युक्तं भवति। ननु च टकारानुबन्ध एवमर्थमासङ्ग्यते, ङीव्यता स्यादिति, स चात्र ठञन्तत्वादेव सिद्धः, तत्? किमर्थं टकारः? इत्यत आह--"टकारः" इत्यादि। असति हिटकारे, यथा ङीब्भवति तथा ञित्स्वरोऽपि--आद्युदात्तत्वं स्यात्। "कार्यावधारणार्थष्टकारः" क्रियते, तेन ङीबेव भवति, न ञित्स्वरः। "अपर इकट्प्रत्ययं वृदिं()ध च निपातयन्ति" इति। तेषां ङीबर्थ एव टकारः। एकश्बदोऽसहायर्थः, स चासहायवाची द्रष्टव्यः। असहयग्रहणं चौरस्य स्वार्थे, न तूपलक्षणं प्रयोजनम्()॥

बाल-मनोरमा

ऐकागारिकट् चौरे १७५३, ५।१।११२

ऐकागारिकट् चौरे। एकमगारं प्रयोजनं=प्रयोजकस्य चोरस्येति विग्रहे एकागारशब्दादिकट्प्रत्यये ऐकागारिकडिति निपात्यते। टित्त्वं ङीबर्थम्। प्रयोजनमित्येय सिद्धे चोर एवेति नियमार्थ सूत्रम्। एकमित्यस्य विवरणम्--असहायमिति। "एके मुख्यान्यकेवलाः" इत्यमरः। मुमुषिषोरिति। चौर्यं कर्तुमिच्छोरित्यर्थः। चोरस्य हि असहायमगारमिष्टं, गोहान्तरसत्त्वे चौर्यप्रकरटनप्रसङ्गादिति भावः। चोरे किम्?। एकागारं प्रयोजनमस्य भिक्षोरिति वाक्यमेव। भाष्ये तु "एकागाराच्चोरे" इत्येव सुवचं, प्रकृतत्वाट्ठञ् सिद्ध इत्युक्तम्।

तत्त्व-बोधिनी

ऐकागारिकट् चौरे १३५०, ५।१।११२

ऐकागारिकट्। टो ङीबर्थः।ऐकागारिकी। किमर्थमिदमुच्यते यावता "प्रयोजन"मित्येव ठञि सिद्धम्()। सत्यम्। चौरे नियमार्थमावश्यकमिदं सूत्रम्। अन्यथा एकागारं प्रयोजनं यस्य भिक्षोरित्यत्रापि स्यात्। नन्वेवमपि "ऐकागाराच्चौरे"इति ठञेव नियम्यतां किमैकागारिक इति निपातनेन, चित्कणेन च प्रयोजनमिति चेत्। अत्राहुः---टकारः कार्यावधारणार्थः---ङीबेव भवति न ञित्स्वर इति। वृद्धिस्तु निपातनाद्भवत्येवेति।

---

सूत्रम्

काशिका-वृत्तिः

आकालिकडाद्यन्तवचने ५।१।११४

आकालिकटिति निपात्यते आद्यन्तवचने। समानकालशब्दस्य आकालशब्द आदेशः। आद्यन्तयोश्च एतद् विशेषणम्। इकट् प्रत्ययश्च निपात्यते। समानकालौ आद्यन्तौ अस्य आकालिकः स्तनयित्नुः। आकालिकी विद्युत्। जन्मना तुल्यकालविनाशा। उत्पादानन्तरं विनाशिनीत्यर्थः। आकालाट् ठंश्च। चात् ठञ् च। आकालिका विद्युत्। ठञः पूर्णो ऽवधिः।

न्यासः

आकालिकडद्येन्तवचने। , ५।१।११३

आदिः=जन्म, अन्तः=विनाशः, तयोर्वचनमाद्यन्तवचनम्()। तस्मिन्? सत्येतन्निपातनम्()। "समानकालावाद्यन्तावस्य" इति। ननु चोत्पदनविनाशयोरयौगपद्यात्? समनकालत्वं न सम्भवति, न ह्यनेन जन्मनाशयोरेककालता प्रतिपद्यते, किं तर्हि? विद्युदादेरनवस्थायित्वप्रदर्शनपरत्वादस्येत्यत आह--"उत्पादानन्तरं विनाशिनीत्यर्थः" इति। "आकालाट्ठंश्च" इति। यदा ठन्? तदा--आकालिका। यदा ठञ्? तदा--आकालिकी। आकालशब्दश्चायं "आङ्? मर्यादाभिविध्योः" २।१।१२ इत्यव्ययीभावः। आ कालादाकालम्()--"कुगतिप्रादयः" २।२।१८ इति, तत्पुरुषो वा--आवृत्तः काल आकाल इति॥

बाल-मनोरमा

आकालिकडाद्यन्तवचने ३६३, ५।१।११३

आकालिकट्। समानकालाविति बहुव्रीहिः। आद्यन्ताविति। उत्तपत्तिवनाशादित्यर्थः। समानकालस्येति। समानकालशब्दस्य इकप्रत्यये परे आकालादेशो निपात्यत इत्यर्थः

ननूत्पत्तिविनाशयोकेककालिकत्वमसंभवपराहतमित्यत आह--आशु विनाशीति। लक्षणां विनैवाह--पूर्वदिने इति।

आकालाड्ंश्चेति। आकालशब्दादाद्यन्तवचनाड्न्प्रत्ययश्च वक्तव्य इत्यर्थः। चाड्ञ्। आकालिका विद्युदिति। ठनि टाप्। ठञि तु ङीप्। आकालिकी। अर्थः प्राग्वत्।

***** इति बालमनोरमायाम् प्राग्वतीयस्य ठञः पूर्णोऽवधिः। *****

तिङन्ते तुदादयः।

अथ शविकरणा धातवो निरूप्यन्ते। इतः षडिति। "ऋषी गतौ" इत्यतः प्रागित्यर्थः।

तत्त्व-बोधिनी
आकालिकडाद्यन्तवचने ३१७, ५।१।११३

आकाल आदेश इति। "निपात्यते"इति शेषः। आद्यन्तौ यस्येत्यादि। अस्येत्यधिकारात्षष्ठ()र्थे इकट् प्रत्ययो निपात्यत इति भावः।

आकालाड्ंश्च। आकालाड्ंश्चेति। वार्तिकमिदम्।

ठञः पूर्णोऽवधिः।

इति तत्त्वबोधिन्यां ठञधिकारः।

तिङन्ते तुदादयः।

---

सूत्रम्
काशिका-वृत्तिः
तेन तुल्यं क्रिया चेद् वतिः ५।१।११५

तेन इति तृतीयासमर्थात् तुल्यम् इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति, यत् तुल्यं क्रिया चेत् सा भवति। ब्राह्मणेन तुल्यं वर्तते ब्राह्मणवत्। राजवत्। क्रियाग्रहणम् किम्? गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यो गोमान्।
लघु-सिद्धान्त-कौमुदी
तेन तुल्यं क्रिया चेद्वतिः ११५४, ५।१।११४

ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते। क्रिया चेदिति किम्? गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः॥
न्यासः
तेन तुल्यं क्रिया चेद्वतिः। , ५।१।११४

"तुल्यम्()" इति। कर्मपदमेतत्(), क्रियाविशेषणत्वात्()। प्रतिपादितं हि प्राक्? क्रियाविशेषणानां कर्मत्वम्? "स्तोकान्तिकदूरर्थाकृच्छ्राणि क्तेन" २।१।३८ इति सूत्रे। "ब्राआह्ह्मणेन तुल्यं वत्र्तते ब्राआह्मणवत्()" इति। का पुनरत्र क्रिया? ब्राआह्मणेन तुल्यं वत्र्तते क्षत्रियादिगता अध्ययनादिका। ननु च तस्या ब्राआह्मणनिष्ठयाऽध्ययनादिक्रिययैव तुल्यता। न च तां ब्राआह्मणशब्द आह। किं तर्हि? जातिं द्रव्यं वा। न च ताभ्यां क्रियया तुल्यत्वम्(); स्वभावभेदात्()। यत्र हि किञ्चित् सामान्यम्(), कश्चिद्विशेषः, स विषयस्तुल्यतायाः इह त्वत्यन्तभेद एव? नैष दोषः; यद्यपि ब्राआह्मणादिशब्दैः क्रिया

नोच्यते, तथाप्यभिधेयसम्बन्धेन प्रतीयते, यथा--"गुडः" इत्युक्ते गुडेनानभिधीयमाना अपि माधुर्यादयः। तत्र ब्राआहृणादिशब्देन योऽर्थ उच्यते तेन तुल्यत्वं क्रियाया न सम्भवति। उच्यते चेदं वचनसामथ्र्यात्()। यासावभिधेयन ब्राआहृणेन क्रिया गम्यते तया तुलप्याता विज्ञास्यते। ननु च तृतीयासमर्थविभक्तिवाच्यया क्रिययैव प्रत्ययार्थक्रियायास्तुल्यता, तस्याश्च घञन्तोऽवकाशः--तैलपाकेन तुल्यो घृतपाक इत्यादि? नैषोऽस्त्यवकाशः; घात्वर्थो हि क्रिया, सा च पूर्वापरीभूता। अथ वा--असत्त्वभूता। न च तस्यां घञादयो भवन्ति, क्व तर्हि? तस्यैव धात्वर्थस्य धर्मे सिद्धतायामेव। घात्वर्थस्यापि घञादिस्थाया भिद्यते। तत्कथं घञादीनामर्थः क्रियेति शक्यते वक्तुम्()? न च तया घञादिवाच्यसिद्धतया द्रव्यगतायास्तुल्यता। न हि द्रव्यभूतेनासत्त्वभूतस्य वस्तुतुल्यतोपपद्यत इत्यतो नास्ति वचनस्यावकाशः। यदि तर्हि क्रिया घञादिभिर्नाभिधीयते--कर्तुं गमनम्(), भोक्तुं पाकः, करकस्य व्रजतीति "तुमुण्णवुलौ क्रियायं क्रियार्थायाम्()" (३।३।१०) इति तुमुण्ण्वुलौ न प्राप्नुतः? नैष दोषः; यदत्र प्रकृतिरूपं तस्य क्रियैवार्थ इति तदाश्रयौ तुमुण्ण्वुलौ भविष्यत इत्यलमतिप्रसङ्गेन॥

बाल-मनोरमा

तेन तुल्यं क्रिया चेद्वतिः १७५५, ५।१।११४

अथ बावकर्मार्था निरूप्यन्ते। तेन तुल्यं। तुल्यमिति क्रियेत्यस्य विशेषणम्। सामान्याभिप्रायं नपुंसकम्। तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययः स्यात्। यत्तुल्यं सा चेत् क्रियेत्यर्थः। तुल्या क्रियेत्यर्थे वतिः स्यादिति यावत्। ब्राआहृणवदधीते इति। अत्र "ब्राआहृणव"दित्युदाहरणम्। "ब्राआहृणेन तुल्यमधीते" इति विग्रहवाक्यम्। अत्र ब्राआहृणशब्देन ब्राआहृणकर्तृकाध्ययनं लक्ष्यते। ब्राआहृणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकाध्ययनमिति बोधः। गुणतुल्ये इति। द्रव्यतुल्येऽपीति बोध्यम्। तेन "चैत्रेण तुल्यो धनी देवदत्तः" इत्यादौ न भवति। "अयमेवं न तद्व"दित्यादौ वतेः साधुत्वार्थम् आहेति क्रियापदं प्रयुञ्जते वृद्धाः।

तत्त्व-बोधिनी

तेन तुल्यं क्रिया चेद् बतिः १३५२, ५।१।११४

तेन तुल्यं क्रिया चेद् बतिः। "तुल्य"मिति सामान्ये नपुंसकम्। तृतीयान्तात्तुल्यमित्यर्थे वतिः स्याद्यत्तुल्यं क्रिया चेत्सा। ब्राआहृणेन तुल्यमिति। नन्वत्र "ब्राआहृणो यथा वर्तते तथा क्षत्रियादिकर्तृकाध्ययनं वर्तते" इति वाक्यार्थोऽसङ्गत इति चेत्। अत्राहुः----ब्राआहृणशब्दस्यत्कर्तृकाध्ययने लक्षणया वर्तते। "ब्राआहृणकर्तृकाध्ययनतुल्याध्ययनं वाक्यार्थः"इति न कोऽपि दोषः। गुणतुल्ये इति। उपलक्षणमिदम्। अक्रियातुल्य इत्यर्थः। एवं च "ब्राआहृणेन सदृशः क्षत्त्रियः"इत्यर्थे "ब्राआहृणवत् क्षत्त्रियः"इति प्रयोगोऽसाधुरेव [इति]। अतएव "पर्वतो वह्निमान्महानवसदि"ति वाक्ये "महानससदृशः पर्वतः"इत्यर्थे वतेरसाधुत्वं मत्वा तस्य वतेः साधुत्वरक्षमार्थं "पर्वतो वह्निमान्भवितुमर्हती"त्यादि क्रियापदं प्रयुज्यते वृद्धाः।

---

सूत्रम्

काशिका-वृत्तिः

तत्र तस्य इव ५।१।११६

तत्र इति सप्तमीसमर्थात् तस्य इति षष्ठीसमर्थाच् च इवार्थे वतिः प्रत्ययो भवति। मथुरायाम् इव मथुरावत् स्रुघ्ने प्राकारः। पाटलिपुत्रवत् साकेते परिखा। षष्थीसमर्थात् देवदत्तस्य इव देवदत्तवत् यज्ञादत्तस्य गावः। यज्ञदत्तस्य इव यज्ञदत्तवत् देवदत्तस्य दन्ताः।

लघु-सिद्धान्त-कौमुदी

तत्र तस्येव ११५५, ५।१।११५

मथुरायामिव मथुरावत् स्रुग्ध्ने प्रकारः। चैत्रस्येव चैत्रवन्मैत्रस्य गावः॥

न्यासः

तत्र तस्यैव। , ५।१।११५

अथ कियर्थमिवेत्युच्यते, न वत्यर्थे सादृश्ये भविष्यति? भविष्यति? नैतदस्ति; न हि तुल्यग्रहणं शक्यमिहानुवर्त्तयितुम्()। तद्धि क्रियाविशेषणत्वात्? कर्म, तत्र यदीह तस्यानुवृत्तिः स्यात्? तथाभूतस्यैव स्यात्()। ततश्च कर्मण्येव तुल्ये प्रत्ययः स्यात्, तथा च--मथुरायामिव मथुरावत्? स्लुध्ने प्रासाद इत्यादि न सिध्येत्()। तस्मादिवेति वक्तव्यम्()। अक्रियार्थश्चायमारम्भः॥

बाल-मनोरमा

तत्र तस्येव १७५६, ५।१।११५

तत्र तस्येव। तत्रेवेति तस्येवेति चार्थे सप्तम्यन्तात्षष्ठ()न्ताच्च वतिः स्यादित्यर्थः। अतृतीयान्तार्थ आरम्भः। अस्मादेव निर्देशादिवशब्दयोगे षष्ठ()र्थे सप्तम्यपीति भाष्यम्। अत्र "क्रिया चे"दिति नानुवर्तते इत्यभिप्रेत्योदाहरति--मधुरायामिव मधुरावत्स्नुघ्ने प्राकार इति। अत्र मधुरायामिवेति नाधिकरणसप्तमी, तथा सति विद्यमानेति क्रियापदासपेक्षतया असामश्र्यात्। अत एव अस्मादेव सूत्रनिर्देशादिवशब्दायोगे षष्ठ()र्थे सप्तमीति भाष्यं सङ्गच्छते। मधुरासम्बन्दिप्राकारसदृशः रुआउघ्नस्य प्राकार इति बोधः। मैत्रस्य भाव इति। वृत्तमित्यर्थः।

तत्त्व-बोधिनी

तत्र तस्येव १३५३, ५।१।११५

तत्र तस्येव। सप्तम्यन्तात् षष्ठ()न्ताच्च इवार्थे प्रत्ययः। "क्रिया चेत्िति नानुवर्तते इति द्रव्यादितुल्येऽत्र वत्प्रत्ययो भवति। मथुरावत्रुआउघ्ने इति। मथुरायां यादृशः प्राकारस्तेन तुल्यः प्राकारः स्नुघ्ने इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तदर्हम् ५।१।११७

ततिति द्वितीयासमर्थातर्हम् इत्येतस्मिन्नर्थे वतिः प्रत्ययो भवति। राजानम् अर्हति राजवत् पालनम्। ब्राह्मणवतृषिवत्। क्षत्रियवत्।

न्यासः

तदर्हम्?। , ५।१।११६

अरहतीत्यर्थः। क्रियाग्रहणमिहानुवर्त्तते, ततोऽस्यामेवर्हणक्रियायां कर्तृभूतायां प्रत्ययो विधीयत इति। यत्रासौ प्रत्ययार्थत्वेन विवक्ष्यते, तत्र वाक्यमेव भवति--ब्राआह्मणमर्हतीति॥

बाल-मनोरमा

तदर्हम् १७५७, ५।१।११६

तदर्हम्। अर्हतीत्यर्हम्। पचाद्यच्। तदिति कर्मणि द्वितीयान्तम्, लब्धुं योग्यं भवतीत्यर्थात्। कृद्योगलक्षणषष्ठ()भावस्तु आर्षः। वतिरित्यनुवर्तते। द्वितीयान्तादर्हतीत्यर्थे वतिः स्यादित्यर्थः। विधिमर्हतीति। विधिं लब्धुं योग्यं भवतीत्यर्थः। विधिबत्पूज्यत इति। "हरि"रिति शेषः। विंधिं लब्धु योग्यं हरिपूजनमित्यर्थः। विहितं प्रकारमनतिक्रान्तमिति यावत्। मण्डूकप्लुत्येति। पूर्वसूत्रे अननुवृत्तेरिति भावः।

तत्त्व-बोधिनी

तदर्हम् १३५४, ५।१।११६

तदर्हम्। अर्हतीत्यहम्। पचाद्यच्। यद्यपि कृद्योगे कर्मणि षष्ठ()आ भवितव्यम्, तथापि अत्र सौत्रो विभक्तिव्यत्यय इत्येके। "कर्तृकर्मणो"रिति षष्ठ()आ अनित्यत्वे ज्ञापकमिदम्। तेन च "धायैरामोदमुत्तम"मिति भट्टिप्रयोगः सङ्गच्छत इति तु कारकेष्ववोटाम। द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तुं तिङन्तेन वगृह्णाति----विधिमर्हतीति। कथं तर्हि "ततो यथावद्विहिताध्वराये "कि असत्त्वार्थकस्य कर्मत्वाऽसंभवेन द्वितीयान्तत्वाऽभावादिति चेत्। अत्राहुः----यथाशब्दो वृत्तिविषये सत्त्वार्थकः, "तथात्वं" "यथात्व"मित्यादिषु त्वतलादिदर्शनात्। अन्यथा षष्ठ()पि नास्तीति त्वतलौ न स्याताम्। तथा च द्वितीयान्ताद्यशब्दादर्हार्थे वतिः। योग्यतामर्हतीति विधानमित्यर्थोक्रियायोगोऽपि सुलभ इति।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गाच् छन्दसि धात्वर्थे ५।१।११८

उपसर्गात् ससाधने धात्वर्थे वर्तमानात् स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये। यदुद्वतो निवतो यासि वप्सद्। उद्वतानि निगतानि च।

न्यासः

उपसर्गाच्छन्दसि धात्वर्थे। , ५।१।११७

उपसर्गाः प्रादयः, ते चैवमात्मकाः। यत्र क्रियावाची शब्दः प्रयुज्यते, तत्र क्रियाया विशेषका भवन्ति--आगच्छति, प्रगच्छतीति। यत्र न प्रयुज्यते, तत्र समाधनक्रियावाचकाः--सङ्कटः, उत्कट इति। क्रियावाची शब्दः प्रादीनां वत्यन्तानां प्रयोगे न प्रयुज्यते। तेन साधनो धात्वर्थेः स्वार्थः। तेन साधने धात्वर्थे वत्र्तमानादुपसर्गात्? प्रत्ययो विज्ञायति इत्याह--"समाधने धात्वर्थे" इति। यदि ह्वेवमात्मका उपसर्गाः, धात्वर्थग्रहणं न कत्र्तव्यम्()? सत्यमेतत्(); तत्? क्रियते विस्पष्टार्थम्()। "उद्वतः, निवतः" इति। उच्छब्दात्? निशबदात् समाधने धात्वर्थे वतिः। ननु च वतेरव्ययसंज्ञकत्वाद्विभक्तेर्लुक्? प्राप्नोति, स कस्मान्न भवति? अव्ययसंज्ञाया अनित्यत्वात्()। अनित्यत्वं तु तस्याः "सत्यमेतत्(); तत्? क्रियते विस्पष्टार्थम्()। "उद्वतः, निवतः" इति। उच्छब्दात्? निशब्दात्? समाधने धात्वर्थे वतिः। ननु च वतेरवययसंज्ञकतवाद्विभक्तेर्लुक्? प्राप्नोति, स कस्मान्न भवति? अव्ययसंज्ञाया अनित्यत्वात्()। अनित्यत्वं तु तस्याः "सर्वमिदं काण्डं स्वरादावपिं पठ()ते" इत्यादिनाऽव्ययसंज्ञाप्रकरण एव प्रतिपादितम्॥

---

सूत्रम्

काशिका-वृत्तिः

तस्य भावस् त्वतलौ ५।१।११९

तस्य इति षष्थीसमर्थाद् भावः इत्येतस्मिन्नन्नर्थे तवतलौ प्रत्ययौ भवतः। भवतो ऽस्मादभिधानप्रत्ययौ इति भावः। शब्दस्य प्रवृत्तिनिमित्तं भावशब्देन उच्यते। अश्वस्य भावः अश्वत्वम्, अश्वता। गोत्वम्, गोता।

लघु-सिद्धान्त-कौमुदी

तस्य भावस्त्वतलौ ११५६, ५।१।११८

प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्। गोता। त्वान्तं क्लीबम्॥

न्यासः

तस्य भावस्त्वतलौ। , ५।१।११८

भवतेरनेकार्थत्वाद्भवाशब्दोऽयमभिप्रायादिष्वनेकेषु वत्र्तते। तत्र न ज्ञायते-कोऽत्रार्तो भावशब्देन विवक्षितः? इत्यतस्तत्परिज्ञानार्थमाह--"भवतोऽस्मात्()" इति। यस्माद्गोत्रादेर्विशेषणत्वाद्विशेष्ये गवादौ गौरित्येवमादिकः शब्दो भवति, गोत्वाकारवती च बुद्धिस्तेन योऽर्थो गवादेः शब्दस्य प्रवृत्तनिमित्तं स भावशब्देनोच्यते। तथा चोक्तम्()--"यस्य गणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति। गुण इति विशेषणमिहोच्यते, द्रव्यं विशेष्यम्()। यस्य विशेषणस्य भावाद्विद्यमानत्वाद्विशेष्ये शब्दस्य निवेशः प्रवृत्तिर्भवति, तदभिधाने त्वतलादयः प्रत्यायः भवन्ति। तत्? पनः शब्दानां प्रवृत्तिनिमित्तमनेकप्रकारम्(); जातिशब्दानां जातिः--अ()आत्वमिति, गुणशब्दानां गुणः--शुक्लत्वमिति, क्रियाशब्दानां क्रिया-पाचकत्वमिति। केचित्तु क्रियाकारकसम्बन्धं क्रियाशब्दानां प्रवृत्तिनिमित्तमिच्छन्ति। यदृच्छाशब्दानां संज्ञासंज्ञिसम्बन्धित्वमिति संक्षेपेणैतदुक्तम्()। विस्तरेण तु भाष्यादावुक्तमिति तत एवानुगन्तव्यम्()। अथ नानात्वमित्यादौ कथं प्रत्ययो भवति? कथङ्कारं न भवितव्यम्()? षष्ठीसमर्थात् प्रत्ययविधानात्(), नानेत्येवमादीनाञ्चाव्ययानां षष्ठ()र्थेनायोगात्(), अयोगास्तु तेषामसत्त्ववाचित्वात्()? नैष दोषः; ससत्त्वभूतोऽप्यर्थः शब्दान्तरेण प्रत्यवमृष्टः षष्ठ()रेथेन प्रयुज्यते--नानेत्यस्य भाव इति। तञ्च प्रत्यवमृष्टार्थं वृत्तिरेव गमयतीति नानुपपन्ना षष्टीसमर्थता॥

बाल-मनोरमा

तस्य भावस्त्वतलौ १७५८, ५।१।११८

तस्य भावः। षष्ठ()न्ताद्भाव इत्यर्थे त्वतलौ स्त इत्यर्थः। भावशब्दस्य अभिप्रायादावपि वृत्तेराह--प्रकारो भाव इति। त्वतल्प्रत्ययौ यत उत्पत्सेयेते तस्मात्प्रकृतिभूतशब्दाद्()व्यक्तिबोधे जायमाने यज्जात्यादिकं विशेषणतया भासते तद्व्यक्तिविशेषणं भावशब्देन विवक्षितमित्यर्थः। यथा-गोशब्दाद्धि व्यक्तिबोधे जायमाने गोत्वं विशेषणत्वेन भासते, गोशब्दस्य गोत्ववतीषु व्यक्तिषु, गोत्वे च शक्तिग्रहणात्। न हि गोत्वं विहाय गोव्यक्तिषु गोशब्दस्य शक्तिग्रहः। सम्भवति अतीतानागतानां वर्तमानानां चाऽनन्तत्वेन युगपदुपस्थित्यसम्भवाद्गोशब्दात् प्राणित्वपशुत्वादिरूपेणाऽपि गोव्यक्तिप्रतीत्यापत्तेश्च। ततश्च सर्वासु गोव्यक्तिष्वनुगतं तदितरव्यक्तिभ्यो व्यावृत्तं कञ्चिद्धर्मविशेषं शक्यतावच्छेदकं पुरस्कृत्य गोशब्दः प्रवर्तत इति सिद्धान्तः। एवं घटादिशब्दा अपि घटत्वादितद्धर्मं पुरस्कृत्य प्रवर्तन्ते। तदिदं शब्दप्रवृत्तिनिमित्तं बोधः। त्वान्तं क्लीबं तलन्तं स्त्रियामिति। लिङ्गानुशासनसूत्रसिद्धमिदम्।

तत्त्व-बोधिनी

तस्य भावस्त्वतलौ १३५५, ५।१।११८

तस्य भावस्त्वतलौ। प्रकृतीति। न तु यः कश्चिद्धर्मः, घटत्वमित्यत्र द्रव्यत्वपृथिवीत्वादेरभानात्। गोर्भाव इति। इह गोशब्दोऽर्थपरः, शब्दस्वरूपपरो वेति पञ्चद्वयम्। यदाऽर्थपरस्तदा धर्मविशेषः प्रत्ययार्थः, स च धर्मत्वेनैव भासते।

"प्रकृतिजन्ये"त्यादिस्तु प्रयोगोपाधिः। यदा तु शब्दपरस्तदा तज्जन्यबोधप्रकारः प्रत्ययर्थः। स च धर्मविशेष एव। "पाचकत्व"मित्यत्र तु कर्तृत्वरूपसंबन्धः प्रकारः। "पच्यमानत्व"मित्यत्र तु कर्मत्वरूपसंबन्धः। तथा "औपगवत्व"मित्यत्र जन्यत्वरूपसंबन्धः प्रकारः। "राजपुरुषत्व"मित्यत्र तु स्वरूपसंबन्ध इत्याद्यूह्म्। एवं स्थिते हरिटीकायां यदुक्तं "कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति, तत्र नाऽपूर्वं शक्त्यन्तरं कल्प्यम्। उक्तरीत्यैव तत्राप्युपपत्तेरिति संक्षेपः।

---

सूत्रम्

काशिका-वृत्तिः

आ च त्वात् ५।१।१२०

ब्रह्मणस् त्वः ५।१।१३५ इति वक्ष्यति। आ एतस्मात् त्वसंशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामः, तत्र त्वतलौ प्रत्ययावधिकृतौ वेदितव्यौ। वक्ष्यति पृथ्वादिभ्य इमनिज् वा ५।१।१२१ इति। प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता। म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता। अपवादैः सह समावेशार्थं वचनम्। कर्मणि च विधानार्थं गुणवचनब्राह्मणादिभ्यः कर्मणि च ५।१।१२३ इति। चकारो नञ्स्नञ्भ्याम् अपि समावेशार्थः। स्त्रियाः भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता। पुंसो भावः पुंस्त्वम्, पुंस्ता, पौंस्नम्।

लघु-सिद्धान्त-कौमुदी

आ च त्वात् ११५७, ५।१।११९

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते। अपवादैः सह समावेशार्थमिदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः - स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौस्नम्। पुंस्त्वम्। पुंस्ता॥

न्यासः

आ च त्वात्?। , ५।१।११९

"प्रथिमा" इति। "तुरिष्टेमेयस्सु" ६।४।१५४ इति, "टेः" ६।४।१५५ इति टिलोपः। "र ऋतोहलादेर्लघोः" ६।४।१६१ इति ऋकारस्य रेफः, "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इति दीर्घः। "पार्थवम्()" इति। "इगन्ताच्च लघुपूर्वात्()" ५।१।१३० इत्यण्()। "अपवादैः" इत्यादि। इमनिच्प्रभृतीनपवादस्त्वितलोर्वक्ष्यति, तैः सह तयोः समावेशः। एकविषयता यथा स्यादित्येवमर्थमिदम्()। ननु च स्वरितत्वादनुवत्र्तमानावनुवृत्तिसामथ्र्यादेवापवादविषयेऽपि भविष्यतः? नैतदस्ति; अस्ति ह्रनुवृत्तेः प्रयोजनम्(), किंम्()? "गुणवचनब्राआह्णादिभ्यः कर्मणि च" ५।१।१२३ इति कर्मण्यपि यथा स्याताम्(); इतरथा हि भावे विधीयमानौ कर्मणि न स्याताम्()। "कर्मणि च" इत्यादि। ननु चानुवृत्तिसामथ्र्यादेव कर्मण्यपि भविष्यतः? नैतदस्ति; अस्ति ह्रन्यदनुवृत्तेः प्रयोजनम्(), किम्()? अपवादविषयेऽपि यथा स्याताम्()। त()स्मसत्वसति न स्याताम्(), अ()स्मस्तु सत्येतदुभयमपि लभ्यते। "चकारः" इत्यादि। यदि चकारो न क्रियेत ततोऽत्रैव प्रकरणे येऽपवादास्तैरेव समावेशः स्यात्(), न नञ्स्नञ्भ्याम्(); तयोरन्यतर विहितत्वात्()। चकारे त्वपवादसमुच्चयार्थे सति सर्वापवादविषये त्वतलौ लभ्येते। तेन स्त्रीपुंसाभ्यामपि सिद्धौ भवतः। यद्येवम्(), अन्येष्वर्थेषु सावकाशौ नञ्स्नञौ भावे न सिध्यतः, त्वल्लभ्यां बाध्यमानत्वात्()? नैषः दोषः; "भवनात्()" इत्यवध्युपादानसामथ्र्याद्भावेऽपि भविष्यतः; इतरथा हि भावमेव विधित्वेनोपाददीत॥

बाल-मनोरमा

आ च त्वात् १७५९, ५।१।११९

आच त्वात्। त्वलावित्यनुवर्तते। आङ्भर्यादायाम्। तदाह--ब्राह्मणस्त्व इत्तः प्रागिति। ननु "तस्य भावस्त्वतलौ" इत्यतस्त्वतलोरुत्तरसूत्रेष्वनुवृत्त्यैव सिद्धेरधिकारोऽयं व्यर्थ इत्यत-आह--अपवादैरिति। "पृथ्वादिभ्यः इमनिज्वा" इत्यादिविहितैरिमनिजादिभिरपवादैः समुच्चायार्थमित्यर्थः। असति त्वेतस्मिन्नधिकारसूत्रे उत्तरत्र इमनिजादिविधिषु त्वतलोरनुपस्थितिः स्यात्। प्रत्यक्षनिर्दिष्टैरिमनिजादिविशेषैः शान्ताकाङ्क्षत्वात्। अन्यथा "प्राग्दीव्यतोऽ"णित्यधिकृतस्य अणः "अत इ" ञित्यादावपि प्रवृत्तिः स्यादिति भावः। प्रयोजनान्तरमाह--गुणवचनादिभ्य इति। अन्यथा भावेऽर्थे सावकाशयोस्त्वतलोः कर्मण्यर्थे गुणवचनादिभ्यो विशेषविहितेन ष्यञा बाधप्रसङ्ग इति भावः। नन्वेवमपि "आ त्वा"दित्येवास्तु, स्वरितत्वादेव पूर्वसूत्रादिह त्वतलोरनुवृत्तिसिद्धेस्तदनुकर्षार्थश्चकारो व्यर्थ इत्यत आह--चकार इति। अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भावः। पौंस्नमिति। संयोगान्तलोपे पुमः खय्यम्परे" इति रुत्वम्। पाक्षिकावनुनासिकानुस्वारौ। विसर्गे कृतं सत्वम्। एवं पुंस्त्वम्। तत्र "ह्रस्वात्तादौ" इति षत्वं न भवति, सवनादिषु पाठात्।

तत्त्व-बोधिनी

आ च त्वात् १३५६, ५।१।११९

अपवादैः सहेति। "पृथ्वादिभ्य इमनिज्वे"त्यादिभिः। चकार इति। अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्क तयोः सावकाशत्वादिति भावः। पौस्नं पुंस्त्वमिति। संयोगान्तलोपे "पुमः खयी"ति रुत्वम्। पाक्षिकावनुनासिकानुस्वारौ। विसर्गे कृते सत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

न नञ्पूर्वात् तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः ५।१।१२१

इत उत्तरे ये भाव। प्रत्ययाः, ते नञ्पूर्वात् तत्पुरुषात् न भवन्ति चतुरादीन् वर्जयित्वा। वक्ष्यति पत्यन्तपुरोहितादिभ्यो यक् ५।१।१२७ इति। अपतित्वम्, अपतिता। अपटुत्वम्, अपटुता। अरमणीयत्वम्, अरमणीयता। नञ्पूर्वातिति किम्? बार्हस्पत्यम्। प्राजापत्यम्। तत्पुरुषातिति किम्? न अस्य पटवः सन्ति इति अपटुः, तस्य भावः आपटवम्। आलघवम्। अचतुरादिभ्यः इति किम्? आचतुर्यम्। आसङ्गत्यम्। आलवण्यम्। आवट्यम्। आबुध्यम्। आकत्यम्। आरस्यम्। आलस्यम्।

न्यासः

न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः। , ५।१।१२०

अधिकारोऽयम्()। तेनोत्तरेषां भावप्रत्ययानां प्रतिषेधो विज्ञायते; न त्वतलोरिति मत्वाऽऽ-"इत उत्तरे ये भावप्रत्ययाः" इत्यादि। न तु "पृथ्वादिभ्य इमनिज्वा" ५।१।१२१ इत्येवमादिंभिर्योगैः परिगणिताभ्य एव प्रकृतिभ्यः प्रत्ययो विधीयते। न च तत्र काचित्? प्रकृतिर्नञ्पूर्वा गृह्रते, न च तदन्तविधिरस्ति; ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्()। तस्मात् तत्र नञ्पूर्वात्? प्राप्तिर्नास्तीति नास्त्यस्योपयोगः? सत्यम्(); यत्र त्वन्तग्रहण्()--"पत्यन्तपुरोहितादिभ्यो यक्()" ५।१।१२७ इत्येवमादिषु योगेष्वस्ति, यत्र च स्वरूपग्रहणं नास्ति "योपधाद्गुरूपोत्तमाद्वुञ्()" ५।१।१३१ इत्येवमादिषु, तत्र नञ्पूर्वादपि प्राप्तिरस्तीति प्रतिषेधः क्रियते। "अपतित्वम्()" इति। नञ्समासे कृत उत्तरकालं पत्यन्तादभावविवक्षायां "पत्यन्त" ५।१।१२७ इत्यादिना यग्न भवति। "अपटुत्वम्()" इति। "इगन्त" (५।१।१३१) इत्यण्? न भवति। "अरमणीयत्वम्()" इति। "योपदात्()" (५।१।१३२) इत्यादिना वुञ्? न भवति। नास्य पटवः सन्तीत्यपटुरिति

बहुव्रीहिरयम्(), तेनास्मादिगन्तलक्षणोऽण्? भवति--"आपटवम्" इति। "आचतुर्यम्()" इति। ब्राआह्मणादित्वात्? ष्यञ्()। ननु च नञ्समासा ब्राआह्मणादिषु न षठ()न्ते, तत्कुतस्तेन ष्यञ्()? नैष दोषः; आ कृतिगणो हि ब्राआह्मणादिरिष्यते। अचतुरादिप्रतिषेध एवाकृतिग्रहणस्य ज्ञापकम्॥

बाल-मनोरमा

न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः १७६०, ५।१।१२०

न नञ्पूर्वात्। इतः परमिति। त्वतल्विधेरूध्र्वमित्यर्थः, नञ्पूर्वादित्युत्तरस्य प्रतिषेध इति भाष्यादिति। भावः। चतुरादीनिति। चतुर, सङ्गत, लवण, वट, युध, कत, रस, लस,--एतान्वर्जयित्वेत्यर्थः। अपतित्वमिति। इह"पत्यन्तपुरोहितादिभ्यः" इति यक्न भवति। अपटुत्वमिति। इह"इगन्ताच्च लघुपूर्वा"दित्यण्न भवति। बार्हस्पत्यमिति। "पत्यन्तपुरोहितादिभ्यः" इति यक्। आपटवमिति। "इगन्ताच्च लघुपूर्वा"दित्यण्। अपटुशब्दस्य बहुव्रीहित्वात्तत्पुरुषत्वाऽभावान्नास्याऽणो निषेध इति भावः। आचतुर्यमिति। अचतुरस्य भावः। ब्राआह्मणादित्वात्ष्यञ्। आसंगत्यमिति। असङ्गतशब्दात्ष्यञ्। आलवण्यमिति। अलवणशब्दात्ष्यञ्। आवट()मिति। न वटः अवटः, तस्मात्ष्यञ्। आयुध्यमिति। आयुधशब्दात्ष्यञ्। आकत्यमिति। अकतशब्दात्ष्यञ्। आरस्यमिति। अरसशब्दात्ष्यञ्। आलस्यमिति। लसतीति लसः। न लसः अलसः। तस्मात्ष्यञ्।

तत्त्व-बोधिनी

न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलबणवटयुधकतरसलसेभ्यः १३५७, ५।१।१२०

अपतित्वमिति। इह "पत्यन्ये "ति यग् न भवति। अपटुत्वमिति। इह तु "इगन्ताच्च लघुपूर्वा"दित्यण् न भवति। आचतुर्यमित्यादि। ब्राआह्मणादित्वात् ष्यञ्।

---

सूत्रम्

काशिका-वृत्तिः

पृथ्वादिभ्य इमनिज् वा ५।१।१२२

पृथु इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः इमनिच् प्रत्ययो भवति वा तस्य भावः इत्येतस्मिन्नर्थे। वावचनम् अणादेः समावेशार्थम्। पृथोर् भावः प्रथिमा, पार्थवम्। म्रदिमा, मार्दवम्। तुरिष्ठेमेइयःसु ६।४।१५४, टेः ६।४।१५५ इति टिलोपः। र ऋतो हलदेर् लघोः ६।४।१६१ इति रेफादेशः। त्वतलौ सर्वत्र भवत एव। पृथुत्वम्, पृथुता। मृदुत्वम्, मुदुता। पृथु। मृदु। महत्। पटु। तनु। ल्घु। बहु। साधु। वेणु। आशु। बहुल। गुरु। दण्ड। ऊरु। खण्ड। चण्ड। बाल। अकिंचन। होड। पाक। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र। क्षुप्र। क्षुद्र। पृथ्वादिः।

लघु-सिद्धान्त-कौमुदी

पृथ्वादिभ्य इमनिज्वा ११५८, ५।१।१२१

वावचनमणादिसमावेशार्थम्॥

न्यासः

पृथ्वादिभ्य इमनिज्वा। , ५।१।१२१

पृथ्वादिषु य इगन्ता लघुपूर्वाः पृथुमृदुप्रभृतयः, तेषामणि प्राप्ते; ये गुणशब्दाः खण्ड चण्ड--इत्येवमादयः, तेषां ष्यञि; ये वयोवचनाः--बाल वत्स--इत्येवमादयः, तेषां "प्राणभृज्जाति" ५।१।१२८ इत्यादिनाञि सर्वेषामपवाद इमनिज्विधीयते।

"वावचनम्()" इत्यादि। आदिशब्देनष्यत्रादीनामुपसंग्रहः। वाक्यार्थं तु वावचनं न भवति; महाविभाषयैव वाक्यस्य सिद्धत्वात्॥

बाल-मनोरमा

पृथ्वादिभ्य इमनिज्वा १७६१, ५।१।१२१

पृथ्वादिभ्य। तस्य भाव इत्यनुवर्तते। पृथ्वादिभ्यः षष्ठ()न्तेभ्यो भावे इमनिज्वा स्यादित्यर्थः। ननु वाग्रहणं व्यर्थं, "समर्थानां प्रथमाद्वे"ति महाविभाषयैव वाक्यस्य सिद्धत्वात्। नच इमनिजभावेत्वतल्प्रत्ययर्थां वाग्रहणमिति वाच्यम्, "आ च त्वा"दित्येव तत्समावेशसिद्धेरित्यत आह--वपावचनमणादिसभावेशार्थमिति। पृथुमृदुप्रभृतिषु "इगन्ताच्च लघुपूर्वा"दित्यणः, चण्डखण्डादिषु गुणवचनलक्षणष्यत्रः, बालवत्सादिषु वयोवचनलक्षणस्य अत्रश्च औत्सर्गिकस्य समावेशार्थमित्यर्थः। अन्यथा महाविबाषावशादपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते इति "पारे मध्ये षष्ठ()आ वे"ति सूत्रभाष्ये सिद्धान्तिततत्वादिमनिच्त्वतलाभभावे तेषां प्रवृत्तिर्न स्यादिति भावः।

तत्त्व-बोधिनी

पृथ्वादिभ्य इमनिज्वा १३५८, ५।१।१२१

पृथ्वादिभ्यः। अणादीति। इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वणः समावेशः। चण्डखण्डादिषु गुणवचनेषु ष्यत्रः। बालत्सादिषु वयोवचनलक्षणस्याऽत्र इति बोध्यम्। त्वतलौ तु पूर्वसूत्रेणैव लब्धौ।

---

सूत्रम्

काशिका-वृत्तिः

वर्णदृढाऽदिभ्यः ष्यञ् च ५।१।१२३

वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढाऽदिभ्यश्च ष्यञ् प्रत्ययो भवति, चकारातिमनिच् च, तस्य भावः इत्येतस्मिन् विषये। शुक्लस्य भावः शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता। कार्ष्ण्यम्, कृष्णिमा, कृष्णत्वम्, कृष्णता। दृढादिभ्यः दार्ढ्यम्, द्रढिमा, दृढत्वम्, दृढता। षकारो ङीषर्थः। औचिती। याथाकामी। दृढ। परिवृढ। भृश। कृश। चक्र। आम्र। लवण। ताम्र। अम्ल। शीत। उष्ण। जड। बधिर। पण्डित। मधुर। मूर्ख। मूक। वेर्यातलाभमतिमनः शारदानाम्। समो मतिमनसोः।

लघु-सिद्धान्त-कौमुदी

वर्णदृढादिभ्यः ष्यञ्च ११६२, ५।१।१२२

चादिमनिच्। शौक्ल्यम्। शुक्लिमा। दार्ढ्यम्। द्रढिमा॥

न्यासः

वर्णदृढादिभ्यः ष्यञ्च। , ५।१।१२२

बहुवचनं प्रतेयकमभिसम्बध्यते--वर्णेभ्यो दृढादिभ्यश्चेति; तेन बहुवचननिर्देशाद्वर्णशब्देन वर्णवाचिनां ग्रहणमिति विज्ञायते, न स्वरूपग्रहणे तु वर्णशब्दमपि दृढादिषु एवाधीयीत। वर्णशब्दश्च गुणविशेषस्य वाचकः; न ब्राआह्मणादीनाम्()। कुतः? दृढादिभिर्गुणवचनैः साहचर्यात्()। अत एवाह-दृढादिभिः साहचर्याद्रूपविशेषा एव शुक्लादयः प्रत्ययमुत्पादयन्ति, न तु स्वरूपशब्दाः, नापि तत्पर्यायाः। कथम्()? दृढादयो हि गुणा उपसर्जनं द्रव्ये वत्र्तन्ते। तत्साहचर्याद्वर्णशब्दा अपि तत्सदृसा एव गृह्यन्ते। न वर्णश्बदस्य तत्पर्यायाणां वा तादृशी वृत्तिरस्ति; गुणमात्रवचनत्वात्()। वर्णदृढादीनां

गुणवचनत्वादेव सिद्धे पुनर्वचनमिमनिजर्थम्()। यद्येवम्, ष्यञ्ग्रहणनर्थकम्(), इमनिजेव विधेयः, स च विभाषयैव प्रकृतः? तदुच्यते; अवस्यं ष्यञ्ग्रहणमुत्तरार्थ कत्र्तव्यम्। तत्र वा क्रियत इह वेति नास्ति विशेषः। "शुक्लिमा" इति। पूर्ववट्टिलोपः। "द्रढिमा" इति। पूर्वदृकारस्य रभावः। "औचितो, यथाकामी" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्()। "हलस्तद्धितस्य" ६।४।१५० इति यलोपः। "वेयतिलाभमतिमनःशारदानाम्()" इति पठ()ते। तस्यायमर्थः--विशब्दादुत्तरेषां यातादीनां प्रत्ययाभवन्तीति। वियातत्वम्, वियातता, वियातिमा, वैयात्यम्()। विलाभता, विलाभत्वम्(), वैलाभ्यम्(), विलाभिमा। विमतित्वम्(), विमतिता, वैमत्यम्, विमतिमा, "इगन्तात्()" ५।१।१३० इत्यण्(), वैमतम्()। विमनसत्वम्(), विमनस्ता, विमनिमा, वैमनस्याम्()। विशारदत्वम्(), विशारदता, वैशारद्यम्(), विशारदिमा। "समो मतिमनसोः" इति। सम उत्तरयोर्मतिमनसोः प्रत्ययो भवति। संमतिता, संमतित्वम्(), संमतिमा, सांमत्यम्()। संमनस्त्वम्()। संमनस्ता, संमनिमा, सांमनस्यम्()॥

बाल-मनोरमा

वर्णदृढादिभ्यः ष्यञ्च १७६४, ५।१।१२२

वर्णदृढादिभ्यः। षष्ठ()न्तेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ्च स्यादित्यर्थः। गुणवचनत्वादेव ष्यञि सिद्धे इमनिच्समुच्चयार्थं वचनम्।

"पृथु मृदुं भृशं चैव कृशं च दृढमेव च। परिपूर्वं वृढं चैव षडेतान्रविधौ स्मरेत्" इति वार्तिकमर्थतः सङ्गृह्णाति--पृथुमृदुभृशेत्यादि। तेन कृतयतीत्यादाविष्ठवत्त्वेऽपि रभावो न। द्रढिमेति। दृढशब्दादिमनिचि ऋकारस्य रः। भ्रशिमा क्रशिमा द्रढिमा परिव्राढिमा। ननु वर्णदृढादीनां ष्यञन्तानां लोकतो नपुंसकत्वात्ष्यञः षित्वस्य किं प्रयोजनमित्यत आह--षो ङीषर्थ इति। औचितीति। उचितशब्दाद्ब्राआह्मणादित्वात्ष्यञि लोकात्स्त्रीत्वम्। शित्वान्ङीषि "हलस्तद्धितस्ये"ति यलोपः। उचितस्तु न दृढादिः, तद्गणे अदर्शनात्, इनिच्प्रसङ्गाच्च। अस्यैव ष्यञ उत्तरसूत्रे अनुवृत्तेरिहैव तस्य षित्वप्रयोजनकथनमिति बोध्यम्। याथाकामीति। काममनतिक्रम्य यथाकामम्। ततः स्वार्थे चतुर्वर्णादित्वात्ष्यञि लोकात्स्त्रीत्वे षित्वान्ङीष्।

तत्त्व-बोधिनी

वर्णदृढादिभ्यः ष्यञ्च १३६०, ५।१।१२२

वर्णदृढदिभ्यः। गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम्। "पृथुमृदुभृसे"ति परिगणनादिह रभावो न भवति----कृतमाचष्टे कृतयति। णाविष्ठवद्भावः। औचितीति। ब्राआह्मणादेराकृतिगणत्वात् ष्यञ्। "हलसतद्धितस्ये"ति यलोपः। एवं याथाकामी। दृढ, वृढ, परिवृढ। भृश, कृश, इत्यादि। अत्र द्वे गणसूत्रे---"वेर्यातलाभमतिमनःशारदानाम्"। विशब्दादुत्तरे ये यातादयः पञ्च तदन्तानां समासानामनन्तरः ष्यञ् भवतीत्वर्थः। वियातत्वं। वियातता। वियातिमा। वैयात्यम्। विलाभिमा। वैलाब्यम्। विमतिमा। वैमत्यम्। इगन्तत्वादणपि----वैमतम्। विमनिमा। वैमनस्यम्। विशारदिमा। वैशारद्यम्। त्वतलोः समावेशेन---विलाभत्वम्। बिलाभतेत्यादीन्यप्यूह्यानि। "समो मतिमनसोः"। समः परे ये मति मनसी तदन्तयोः समासयोरनन्तरः ष्यञ् भवतीत्यर्थः। संमतित्वम्। संमतिता। संमतिमा। सांमात्यम्। इगन्तत्वादणि---सांमतम्। संमनस्त्वम्। संमनस्ता। संमनिमा। सांमनस्यम्।

---

सूत्रम्

काशिका-वृत्तिः

गुणवचनब्राह्मणादिभ्यः कर्मणि च ५।१।१२४

गुणम् उक्तवन्तो गुणवचनाः। गुणवचनेध्यो ब्राह्मणादिभ्यश्च तस्य इति षष्थीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ् प्रत्ययो भवति। चकाराद् भावे च। कर्मशब्दः क्रियावचनः। जडस्य भावः कर्म वा जाड्यम्। ब्राह्मणादिभ्यः खल्वपि ब्राह्मण्यम्। माणव्यम्। आपादपरिसमाप्तेर् भावकर्माधिकारः। ब्राह्मणादिराकृतिगणः। आदिशब्दः प्रकारवचनः। चतुर्वर्ण्यादिभ्यः स्वार्थे उपसङ्ख्यानम्। चत्वार एव वर्णाः चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैलोक्यम्। त्रैस्वर्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। सामीप्यम्। औपम्यम्। सौख्यम्। ब्राह्मण। वाडव। माणव। चोर। मूक। आराधय। विराधय। अपराधय। उपराधय। एकभाव। द्विभाव। त्रिभाव। अन्यभाव। समस्थ। विषमस्थ। परमस्थ। मध्यमस्थ। अनीश्वर। कुशल। कपि। चपल। अक्षेत्रज्ञ। निपुण। अर्हतो नुम् च आर्हन्त्यम्। संवादिन्। संवेशिन्। बहुभाषिन्। बालिश। दुष्पुरुष। कापुरुष। दायाद्। विशसि। धूर्त। राजन्। संभाषिन्। शीर्षपातिन्। अधिपति। अलस। पिशाच। पिशुन। विशाल। गणपति। धनपति। नरपति। गडुल। निव। निधान। विष। सर्ववेदादिभ्यः स्वार्थे। चतुर्वेदस्य उभयपदवृद्धिश्च। चातुर्वैद्यम्। इति ब्राह्मणादिः।
लघु-सिद्धान्त-कौमुदी

गुणवचनब्राह्मणादिभ्यः कर्मणि च ११६३, ५।१।१२३

चाद्भावे। जडस्य भावः कर्म वा जाड्यम्। मूढस्य भावः कर्म वा मौढ्यम्। ब्राह्मण्यम्। आकृतिगणोऽयम्॥

न्यासः

गुणवचनब्राआह्णादिभ्यः कर्मणि च। , ५।१।१२३

"तस्येदम्()" ४।३।१२० इति शैषिकेषु प्राप्तेषु कर्मणि ष्यञ्विधानम्(), चकारद्भावे च। "कर्मशब्दः क्रियावचनः" इत। साधनकर्मवचनशङ्कामपाकरोति। ये हि जडादिशब्दाः गुणशब्दाः, गुमवचनाः, ब्राआह्णादयश्च तेषां साधनकर्मणा सम्बन्दो न सम्भवति; क्रियावाचकत्वाभावात्()। तस्मात्? क्रियाशब्द एव कर्मशब्दः। "ब्राआह्णादिराकृतिगणः" इति। अवृत्कृतत्वात्()। "आदिशब्दः प्रकारे" ["प्रकारवचनः"--काशिका, पदमञ्जरी च] इति। एवं प्रकारेभ्यः ष्यञ्? भवतीत्येवमर्थमादिशब्दः प्रकरवचनत्वं बोधयति। यद्येवम्(), गुणवचनग्रहणं प्रातिपदिकेषु च ब्राआह्णादीनामनुक्रमणमनर्थकं स्यात्()? नानर्थकम्(); प्रपञ्चार्थं हि तत्? स्वार्थे विधानार्थञ्च। तत्र ब्राआह्णशब्दात्? "प्राणभृज्जाति" ५।१।१२८ इति जातिवचनत्वादञि प्राप्ते तद्बाधनार्थं ष्यञ्विधीयते। माणववाडवाभ्यां गोत्रलक्षणे वुञि। "अर्हतो नुम्? च" इति। अस्य नुमर्थः पाठः--अर्हन्त्यम्()। चोरधूर्त्ताभ्यां मनोज्ञादित्वाद्()वुञि प्राप्ते। आराधय, विराधय, अपराधय--इत्येतेभ्योऽपत्यविवक्षायां "जनपदशब्दात्? क्षत्रियादञ्()" ४।१।१६६, तस्य "कम्बोजाल्लुक्()" ४।१।१७३ इति लुक्()। ततो गोत्रवुञि प्राप्ते पाठः। एकभवादीनामन्यभावपर्यन्तानां स्वार्थे विधानार्थम्। अक्षेत्रज्ञशब्दस्य " नञ्पूर्वात्()" ५।१।१२० इति प्रतिषेधे प्राप्ते। प्राग्बालिशशब्दात्? कुशलादीनां युदादित्वादणि प्राप्ते। बालिशशब्दो वयोवचनः, तस्माद्वयोलक्षणेऽञि प्राप्ते। अनी()आरशब्दस्य "न नञ्पूर्वात्()" ५।१।१२० इति प्रतिषेधे प्राप्ते। "अलस" इति बहुव्रीहिः ष्यञमुत्पादयति, तत्पुरुषात्तु, "न नञ्पूर्वात्()" ५।१।१२० इति प्रतिषेधेन भवितव्यम्(); तस्य प्रपञ्चार्थः पाठः। राजन्()शब्दस्य पुरोहितदित्वाद्यकि प्राप्ते। "संवादिन्()" "संवेशिन्()", "बहुभाषिन्(), "शीर्षधातिन्()", "सयस्थ", "परमस्थ", "दुष्पुरुष"--इत्येवमादीनां नञ्पूर्वार्थः पाठः। "गणपति", "अधिपति"--इत्येतयोः पत्यन्तलक्षणे यकि प्राप्ते। "गडुल", "दायाद", "विशस्ति"--इत्येतेषां त्वतलोर्निवृत्त्यर्थः। शेषाणां प्रपञ्चार्थः। गुणवचना एके राशिः, ब्राआह्णादयो द्वितीयः, ताभ्यां भावे कर्मणि यथासंख्यं प्राप्नोति, तत्? कस्मान्न भवति? ब्राह्णादिशब्दस्याल्पाच्तरस्य परनिपातात्()। स हि लक्षणे निरपेक्षतां निर्देशस्य ज्ञापयन्? यथासंक्यलक्षणानपेक्षतामपि बोधयति, तेन यथासंख्यं न भवति॥
बाल-मनोरमा

गुणवचनब्राआह्णादिभ्यः कर्मणि च १७६५, ५।१।१२३

गुणवचन। गुणोपसर्जनद्रव्यवाचिभ्यो, ब्राआह्मणादिभ्यश्च षष्ठ()न्तेभ्यो भावे कर्मणि च अर्थे ष्यञित्यर्थः।

अर्हतो नुम्चेति। वार्तिकमिदम्। "अर्हः प्रशंसाया"मिति सूत्रेण शतरि अर्हच्छब्दः पूज्यवाचीति कैयटः। अर्हच्छब्दात्ष्यञ्स्यात्प्रकृतेर्नुम्चेत्यर्थः। मित्त्वादन्त्यादचः परः। अनुस्वारपरसवर्णौ। लोकान्नपुंसकत्वं स्त्रीत्वं च। तदाह--आर्हन्त्यम्, आर्हन्तीति। आर्हन्त्यशब्दान्ङीषि "हलस्तद्धितस्ये"ति यलोपः। यथातथेति निपातसमुदायः। यथापुरमिति पुराशब्देन पदार्थनतिवृत्तावव्ययीभावः। इमौ शब्दौ नञ्पूर्वपदौ ब्राआह्मणादी।

तत्त्व-बोधिनी
गुणवचनब्राआह्मणादिभ्यः कर्मणि च १३६१, ५।१।१२३

गुणवचन। ष्यञनुवर्तते, कर्म क्रिया कार्यं च। "शरीरायासमात्रसाध्यं शौचादि क्रिया। शास्त्रेण विहितो यागादिः कार्य"मिति तयोर्भेदमाहुः।

अर्हतो नुम् च। अर्हत इति। "अर्हः प्रशंसाया"मिति शत्रन्तोऽर्हच्छब्दः पूजार्थाभिधायीति कैयटः। आकृतिगण इति। केषांचित्पाठस्तु कार्यान्तराय। तथा हि "अर्हतो नुम् चे"ति नुमर्थः पाठः। एकभावः, त्रिभावः, अन्यभावः,---एषां पाठः स्वार्थे विधानार्थः। तथा च प्रत्याहाराह्निके वार्तिकप्रयोगः---"आन्यभाव्यं तु कालशब्दव्यावाया"दिति। अन्यभाव एव आन्यभाव्यम्। अन्यत्वमित्यर्थः। यत्तु व्याकरणाधिकरणे भट्टपादैरुक्तम् "आन्यभाव्यमपप्रयोगः"इति, तत्त्ववैयाकरण मीमांसकसंतोषार्थमित्यवधेयम्। सर्ववेद इति। "पूर्वकालैके"ति समासः।

चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्। चतुर्वेद इति। तद्धितार्थे द्विगुः। "द्विगोर्सुगनपत्ये"इत्यणो लुक्। चतुर्विद्य इति। "विद्यालक्षणसूत्रान्ता"दिति ठक्। तस्य लुक्।

---

सूत्रम्
काशिका-वृत्तिः
स्तोनाद् यन् नलोपश् च ५।१।१२५

स्तोनशब्दात् षष्ठीसमर्थाद् भावकर्मणोः यत् प्रत्ययो भवति, नशब्दस्य लोपश्च भवति। स्तोनस्य भावः कर्म वा स्तोयम्। स्तोनातिति केचिद् योगविभागं कुर्वन्ति। स्तोनात् ष्यञ् भवति। स्तौन्यम्। ततो यन् नलोपश्च। स्तोयम्।
न्यासः
स्तेनाद्यन्नलोपश्च। , ५।१।१२४

बाल-मनोरमा
स्तेनाद्यन्नलोपश्च १७६७, ५।१।१२४

स्तेनाद्यन्नलोपश्च। "य"दिति च्छेदः। स्तेनशब्दात्षष्ठ()न्ताद्भावे कर्मणि चार्थे यत्स्यादित्यर्थः। नेति सङ्घातग्रहणमिति। "नलोपश्चे"त्यत्र नेत्यकार उच्चारणार्थो न भवति, किंतु नकाराऽकारसङ्गातग्रहणमित्यर्थः। स्तेयमिति। स्तेनशब्दाद्यत्प्रत्यये सति नेति सङ्गातस्य लोप इति भावः। नच नकारमात्रलोपेऽपि "यस्येति चे"त्यकारलोपात्स्तेयमिति सिध्यतीति वाच्यम्, "अचः परस्मि"न्नित्यकारलोपस्य स्थानित्त्वेन तमाश्रित्य एकारस्य अयादेशप्रसङ्गात्। नच सङ्गातग्रहणेऽपि "अलो।ञन्त्यस्ये"त्यकारस्यैव लौपः स्यादिति शङ्क्यं, "यस्येति चे"त्येव

अकारस्य लोपसिद्धाविह नलोपविधिवैयर्थ्यात्, "नानर्थकेऽलोऽन्त्यविधि"रिति निषेधाच्च। योगं विभज्येति। स्तेनादिति पृथक्सूत्रम्। ष्यञित्यनुवर्तते। स्तेन शब्दाद्भावे कर्मणि च ष्यञित्यर्थः।
समासकृदन्ततद्धितान्ताऽव्ययसर्वनामजातिसङ्ख्यासंज्ञाशब्दभिन्नमर्थवच्छब्दरूपं गुणवचनसंज्ञकं भवतीति आकडारसूत्रभाष्यरीत्या स्तेनशब्दस्य पचाद्यजन्तस्य कृदन्तस्य गुणवचनत्वाऽभावादप्राप्ताविदं वचनम्। अव्युत्पन्नप्रतिपदिकतया गुणवचनत्वेऽपि यत्प्रत्ययेनापवादेन पक्षे समावेशार्थं वचनम्। ततो "यन्नवलोपश्चे"ति योगान्तरम्। स्तेनादित्यनुवृत्तावुक्तोऽर्थः। केचिदिति। भाष्याऽदृष्टवाद्योगविभागोऽयप्रमाणिक इति भावः।

तत्त्व-बोधिनी

स्तेनाद्यन्नलोपश्च १३६२, ५।१।१२४

सङ्घातग्रहणमिति। वर्णग्रहणे तु "यस्येति चे"त्यकारलोपे सतीष्टं न सिध्यति, "अचः परस्मि"न्नित्यल्लोपस्य स्थानिवद्भावादयादेशप्रसङ्गादिति भावः। ननु सङ्घातग्रहणेऽपि "अलोऽन्त्यस्ये"त्यकारस्यैव लोपः स्यान्न तु सङ्घातस्येति चेत्। मैवम्। आरम्भसामर्थ्यात्, "नानर्थकेऽलोन्त्यविधि"रिति निषेधाद्वा तत्सिद्धेः।

---

सूत्रम्

काशिका-वृत्तिः

सख्युर् यः ५।१।१२६

सखिशब्दात् यः प्रत्ययो भवति भावकर्मणोरर्थयोः। सख्युः भावः कर्म वा सख्यम्। दूतवणिग्भ्यां च इति वक्तव्यम्। दूत्यम्। वणिज्यम्। कथं वाणिज्यम्? ब्राह्मणादित्वात्।

लघु-सिद्धान्त-कौमुदी

सख्युर्यः ११६४, ५।१।१२५

सख्युर्भावः कर्म वा सख्यम्॥

न्यासः

सख्युर्यः। , ५।१।१२५

"दूतवणिग्भ्याञ्च" इत्यादि। दूतवणिग्भ्यां यो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()-पूर्वसूत्रादिह चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः--"दूतवणिग्भ्याञ्च" इत्यादि। दूतवणिग्भ्यामपि भवति॥

बाल-मनोरमा

सख्युर्यः १७६८, ५।१।१२५

सख्युर्यः। सखिशब्दात्षष्ठ()न्ताद्भावकर्मणोर्यः स्यादिति वक्तव्यमित्यर्थः। नास्त्येवेति। वार्तिकत्वे तस्य भाष्ये पाठावश्यकत्वात्, पाठस्य चाऽभावादप्रामाणिकमेवेदं वृत्तिपठितं वार्तिकमिति भावः। तर्हि दूतवणिग्भ्यां भावकर्मणोः कथं यत्प्रत्ययः, किंतु ष्यञेवेत्याह--ब्राह्मणादित्वाद्वाणिज्यमपीति। अपिना दौत्सयसङ्ग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

कपिज्ञात्योर् ढक् ५।१।१२७

कपिज्ञातिशब्दाभ्यां ढक् प्रययो भवति भावकर्मणोरर्थयोः। कपेर् भावः कर्म वा कापेयम्। ज्ञातेयम्। यथासङ्ख्यम् अर्थयोः सर्वत्र एव अत्र प्रकरणे न इष्यते।

लघु-सिद्धान्त-कौमुदी

कपिज्ञात्योर्ढक् ११६५, ५।१।१२६

कापेयम्। ज्ञातेयम्।

न्यासः

कपिज्ञात्योर्ढक्?। , ५।१।१२६

कपिशब्दात्? "इगन्ताच्च लघुपूर्वात्()" ५।१।१३० इत्यणि प्राप्त इदं विधीयते। "यथासंख्यम्()" इत्यादि। तत्र "गुणवचनब्राह्णादिभ्यः" ५।१।१२३ इत्यत्र यतासंख्याभावः प्रतिपादितः। इहापि प्रतिपाद्यते। तत्रेदं प्रतिपादनम्()--अत्र चकारोऽनुवत्र्तते, स चैकस्याः प्रकृतेर्भावे कर्मणि च ढग्विंधिं समुच्चिनोति। तेन यथांसंख्यं न भवति; अन्यथा हि समुच्ययो नोपपद्यते। अस्वरितत्वाद्वा यथासंख्यं न भविष्यति, प्रतिपादितं हि पूर्वम्()--"स्वरितत्वेन यथासंख्यं भवति" इति। न चेह यथासंख्यार्थं स्वरितत्वं प्रतिज्ञायते॥

बाल-मनोरमा

कपिज्ञात्योर्ढक् १७६९, ५।१।१२६

कपिज्ञात्योर्ढक्। पञ्चम्यर्थे षष्ठी। आभ्यामपि षष्ठ()न्ताभ्यां भावकर्मणोर्ढगित्यर्थः। अत्र कपि ज्ञात्योर्भावकर्मणोश्च न यथासङ्ख्य, व्याख्यानात्।

तत्त्व-बोधिनी

कपिज्ञात्योर्ढक् १३६३, ५।१।१२६

कपिज्ञात्योः। इह कपिज्ञाती द्वौ, भावकर्मणी अर्थावपि द्वौ, तयोर्यथासङ्ख्यं नभवति, अस्वरितत्वप्रतिज्ञानात्। एवं "पत्यन्तपुरोहितादिभ्यःट, "द्वन्द्वमनोज्ञादिभ्यः"इत्यत्रापि बोध्यम्। ब्राआह्णादित्वादिति। यद्यपि ब्राआह्णादिषु राजन् शब्दः केवलः पठितस्तथाप्ययमेव "असे"इति प्रतिषेधो ज्ञापयति "अस्त्यत्र प्रकरणे राजन्()शब्देन तदन्तविधि"रिति। एवं त ब्राआह्णादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति। अन्ये तु ब्राआह्णादेराकृतिगणत्वादेव तदन्तात्कतंचित्ष्यञि सिद्धे राजन्()शब्दस्य तत्रपाठो यका सह समावेशार्थ इति। तथा चावेष्ट()धिकरणे शाबरभाष्ये उक्तं---"राज्ञः कर्म राज्यं, ब्राआह्णादित्वात् ष्यञि"ति। पुरोहित, सङ्ग्रामिक, पथिक, सारथिकेत्यादयः पुरोहितादयः।

---

सूत्रम्

काशिका-वृत्तिः

पत्यन्तपुरोहितादिभ्यो यक् ५।१।१२८

पत्यन्तात् प्रातिपदिकात् पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोरर्थयोः। सेनापतेः भावः कर्म वा सैनापत्यम्। गार्हपत्यम्। प्राजापत्यम्। पौरोहित्यम्। राज्यम्। पुरोहित। राजन्। संग्रामिक। एषिक। वर्मित। खण्डिक। दण्डिक। छत्रिक। मिलिक। पिण्डिक। बाल। मन्द। स्तनिक। चूडितिक। कृषिक। पूतिक। पत्रिक। प्रतिक। अजानिक। सलनिक। सूचिक। शाक्वर। सूचक। पक्षिक। सारथिक। जलिक। सूतिक। अञ्जलिक। राजासे। पुरोहितादिः।

लघु-सिद्धान्त-कौमुदी
पत्यन्तपुरोहितादिभ्यो यक् ११६६, ५।१।१२७

सैनापत्यम्। पौरोहित्यम्॥
लघु-सिद्धान्त-कौमुदी
इति त्वतलोरधिकारः ११ ११६६, ५।१।१२७

लघु-सिद्धान्त-कौमुदी
अथ भवनाद्यर्थकाः ११६६, ५।१।१२७

न्यासः
पत्यन्तपुरुहितादिभ्यो यक्?। , ५।१।१२७

पत्यन्तात्? पूर्ववदणि प्राप्ते, पुरोहितादिषु राजशब्दराद्ब्राआह्मणादिपाठात्? ष्यञि, शेषेब्यस्त्वतलोर्यग्विधीयते। "राजासे" इति। राजशब्दादसे=असमासे यग्भवति--राज्यमिति। समासे तु ब्राआह्मणादित्वात्? ष्यञेव भवति--आधिराज्यमिति। ननु च केवलो राजशब्दो ब्राआह्मणादिषु पठ()ते, तेत्कथमधिराजशब्दात्()? तदन्तविधिना; एतदेव ज्ञापकमस इति वचने--अस्तौहि प्रकरणे राजशब्देन तदन्तविधिरिति। इह पत्यन्तपुरोहितादी इति द्वौ राशी, अर्थावपि भावकर्मणी द्वावेवेति साम्याद्यथासंख्यं प्राप्नोति; तदस्वरितत्वात्? पूर्ववन्न भवति॥
बाल-मनोरमा
पत्यन्तपुरोहितादिभ्यो यक् १७७०, ५।१।१२७

पत्यन्त। पत्यन्तेभ्यः पुरोहितादिभ्यश्च षष्ठ()न्तेभ्यो भावकर्मणोर्याक्स्यादित्यर्थः। राजासे इति। पुरोहितादिगणसूत्रमिदम्। राजा असे इति च्छेदः। "स" इति समासस्य प्राचां संज्ञा। तदाह--राजन्शब्द इति राज्यमिति। यकि टिलोपः। "ये चाऽभावकर्मणो"रिति प्रकृतिभावस्तु न, "अभावकर्मणो"रिति पर्युदासात्। समाऽसे त्विति। अदिको राजा अदिराजः। प्रादिसमासः। "असे" इति पर्युदासाद्यगभावे ब्राआह्मणादित्वात्ष्यञि आधिराज्यमिति रूपमित्यर्थः। यक्ष्यञोः स्वरे विशेषः।

---

सूत्रम्
काशिका-वृत्तिः
प्राणभृज्जातिवयोवचनौद्गात्रादिभ्यो ऽञ् ५।१।१२९

प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्च अञ् प्रत्ययो भवति भावक्रमणोरर्थयोः। अश्वस्य भावः कर्म वा आश्वम्। औष्ट्रम्। वयोवचनेभ्यः कौमारम्। कैशोरम्। उद्गात्रादिभ्यः औद्गात्रम्। औन्नेत्रम्। उद्गातृ। उन्नेतृ। प्रतिहर्तृ। रथगणक। पक्षिगणक। सुष्ठु। दुष्ठु। अध्वर्यु। वधू। सुभग मन्त्रे। उद्गात्रादिः।
न्यासः
प्राणभृज्जातिवयोवचटनोद्रगात्रादिभ्योऽञ्?। , ५।१।१२८

प्राणबृतः प्राणिन उच्यन्ते, तेषां जातिः प्राणभृज्जातिरित्यर्थः। तद्वाचिनो यतासम्भवं त्वतलादिष्वञ्विधीयते। प्राणभृद्ग्रहणात्? तृणादिशब्देभ्यो न भवति-तृणत्वम्, तुणतेति। जातिग्रहणाद्देवदत्तादिशब्देभ्यो न भवति--

देवदत्तत्वम्(), देवदत्तता। यदिगन्तं लघुपूर्वं च तस्मात्? परत्वादण्भवति। "तैत्तिरम्()" इति। वयोवचनादपि यथायोगं त्वतलादिष्वेव प्राप्तेष्वञ्विधानम्()। वचनग्रहणं स्वरूपविधिनिरासार्थम्(); अन्यथा वयःशब्दादेव स्यात्()। तत्रोद्गात्रादिषु "उद्गात्(), उन्नतृ, अध्वयुइत्येतेषामृत्विग्वचनात्? "होत्राभ्यश्छः" ५।१।१३४ इति च्छे प्राप्ते सत्यञर्थः पाठः। सुष्ठु, दुष्ठु, वधू--इत्येतेषां लघुपूर्वलक्षणेऽपि प्राप्ते। "सुभगमन्त्रे" इति। सुभगशब्दो मन्त्रविषयेऽञमुत्पादयति--महते सौभागाय। "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (पु।प।वृ। ५६) इति। "ह्मद्भगसिन्ध्वन्त" ७।३।१९ इत्युत्तरपदवृद्धिर्न भवति। मन्त्र इति किम्()? सौभाग्यम्(), ब्राआह्मणादित्वात्()। शेषणामिह पाठस्त्वतलोः प्राप्तयोः॥

बाल-मनोरमा

प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् १७७१, ५।१।१२८

प्राणभृज्जाति। प्राणभृतः--प्राणिनः, तज्जातिवाचिभ्यो, वयोविशेषवाचिभ्य, उद्गात्रादिभ्यश्च षष्ठ()न्तेभ्यो भावकर्मणोरञित्यर्थः। प्राणभृज्जातीति। उदाहरणसूचनम्। एवं वयोवचनेति।

तत्त्व-बोधिनी

प्राणभृज्जकिवयोवचनोद्गात्रादिभ्योऽञ् १३६४, ५।१।१२८

प्राणभृज्जति। मुखनासासंचारी वायुः प्राणः। "प्राणिजाती"त्येव सुवचम्। प्राणभृदिति किम्()। तृणत्वम्। तृणता। जातीति किम्()। देवदत्तत्वम्। औद्गात्रमिति। उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो "होत्राभ्यश्छः"इति छे प्राप्ते अञ् विधीयते। सुष्ठु दुष्ठु-----द्वाभ्यां गुणलक्षणे ष्यञि प्राप्ते, वधूशब्दादिगन्तलक्षमेऽणि, शेषेभ्यस्त्बतलोः प्राप्तयोः। इह तु "सुभगं मन्तेर"इतिपट()ते। सुभगमित्येतच्छब्दरूपं मन्त्रविषये प्रयोगे अञमुत्पादयतीत्यर्थः। "महते सौभगाय"। सर्वविधीनां छन्दसि वैकल्पिकत्वादिह "ह्मद्भगसिन्ध्वन्ते"इत्युत्तरपदवृद्धिर्न भवति। अतएव मन्तेरऽपि क्वचिदञ् न भवति। "सौभाग्यमस्यै दत्त्वाय"। इह ष्यञ्।

---

सूत्रम्

काशिका-वृत्तिः

हायनान्तयुवादिभ्यो ऽण् ५।१।१३०

हायनान्तेभ्यः प्रातिपदिकेभ्यः युवादिभश्च अण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म ना द्वैहायनम्। त्रैहायनम्। युवादिभ्यः यौवनम् स्थाविरम्। श्रोत्रियस्य यलोपश्च वाच्यः। श्रोत्रियस्य भावः कर्म वा श्रौत्रम्। युवन्। स्थविर। होतृ। यजमान। कमण्डलु। पुरुषासे। सुहृत्। यातृ। श्रवण। कुस्त्री। सुस्त्रि। मुहृदय। सुभ्रातृ। वृषल। दुर्भ्रातृ। हृदयासे। क्षेत्रज्ञ। कृतक। परिव्राजक। कुशल। चपल। निपुण। पिशुन। सब्रह्मचारिन्। कुतूहल। अनृशंस। युवादिः।

न्यासः

हायनान्तयुवादिभ्योऽण्?। , ५।१।१२९

हायनान्तात्? त्वतलोः प्राप्तयोरण्विधानम्()। ननु च "तस्येदम्()" (४।३।१२०) इत्यनेन हायनान्तादण सिद्धः? न सिध्यति; परत्वात्? त्वतल्भ्यां बाध्यते--आषाढहायणस्य भावः कर्म वा आषाढहायण इति "वृद्धाच्छः" ४।२।११३ प्रसज्येत। तस्माद्युक्तं हायनान्तादण्विधानम्()। "यौवनम्()" इति। "अन्()" ६।४।१६७ इति प्रकृतिभावः। युवादिषु युवशब्दस्य वयोलक्षणं बधित्वा मनोज्ञादित्वाद्()वुञि प्राप्ते पाठः। स्थविरशब्दस्य वयोलक्षणेऽञि होतृशब्दस्याप्युद्गात्रादित्वादञेव। "पुरुषासे" इति। पुरुषशब्दादसमासेऽण्()। भवति--पौरुषम्()। अस इति किम्()?

राजपुरुषत्वम्()। अस्य "प्राणभृज्जाति" ५।१।१२८ इत्यप्राप्ते पाठः। कमणाडलुशब्दस्येगन्तत्वादेवाणि सिद्धे त्वतलोर्बाधनार्थः पाठः। "ह्मदयासे" इति। ह्मदयशब्दादसमासेऽण्? भवति। हाद्र्दम्(), "ह्मदयस्य ह्मल्लेखयदण्लासेषु" ६।३।४९ इति ह्मद्भावः। अस इति किम्()? ह्मदयशब्दादसमासेऽण्? भवति। हाद्र्दम्(),"ह्मदयस्य ह्मल्लेखयदण्लासेषु" ६।३।४९ इति ह्मद्भावः। अस इति किम्()? परमह्मदयत्वम्()। कुशलादीनां क्षेत्रज्ञपर्यन्तानां ब्राआह्णादित्वात्? ष्यञि प्राप्ते पाठः, शेषाणां तु त्वतलोः। ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधेरभावात्? समासादण्प्राप्तिरेव नास्ति, तदपर्थकः "पुरुषासे", "ह्मदयासे" इति च प्रतिषेधः? नापार्थकः, एषा हि विषयसप्तमी--समासे चिकीर्षिते विषयभूत एव पुरुषशब्दह्मदयशब्दाविति। यदि प्रतिषेधो नोच्येत, ततो नञ्समासस्य भावप्रत्ययस्य चाणो युगपत्प्रसङ्गे परत्वादणेव स्यात्()। प्रतिषेधात्तु समास एव तावद्भवति। ततो यस्य भावप्रत्ययस्य निमित्तमस्ति स उत्पद्यते। कश्चासौ? त्वतलौ--अपुरुषत्वम्(), अपुरुषता; अह्मदयत्वम्(), अह्मदयता। इह हायनान्त एकरशिः, युवादिद्र्व#इतीयः; अर्थावपि द्वावेव--भावकर्मणी, तेन सामथ्र्याद्यथासंख्यं प्राप्नोति; तदल्पाच्तरस्य युवादिशब्दस्य परनिपातलक्षव्यभिचारचिह्नान्न भवति। अस्वरितत्वाद्वा॥

बाल-मनोरमा

हायान्तदयुवादिभ्योऽण् १७७२, ५।१।१२९

हायनान्त। हायनान्तेभ्यो युवादिभ्यश्च षष्ठ()न्तेभ्यो भावकर्मणोरण्स्यादित्यर्थः। द्वैहायनमिति। द्विहायनस्य भावः कर्म वेति विग्रहः। वयोवचनलक्षणस्य अञो।ञपवादः। एवं--त्रैहायनमपि। यौवनमिति। "अ"निति प्रकृतिभावान्न टिलोपः।

श्रत्रियस्येति। वार्तिकमिदम्। श्रोत्रियशब्दात्षष्ठ()न्ताद्भावकर्मणोरण्, प्रकृतेर्यलोपश्चेत्यर्थः। येति सङ्घातग्रहणम्। श्रोत्रमिति। छन्दोऽधीते इत्यर्थे छन्दस्शब्दाद्घप्रत्यये तस्य इयादेशे प्रकृतेः श्रोत्र इत्यादेशे "यस्येति चे"त्यल्लोपे श्रोत्रियशब्दः। श्रोत्रियस्य भावः कर्म वेत्यर्थे श्रोत्रियशब्दादणि यकाराऽकारसङ्घातस्य लोपे रेफादिकारस्य "यस्येति चे"ति लोपे श्रोत्रमिति रूपम्। यकारादकारस्य "यस्येति चे"ति लोपे सति यकारमात्रस्यानेन लोपे तु रेफादिकारस्य यण्स्यात्। नच तस्य "यस्येति चे"ति लोपः शङ्क्यः, "लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति"रिति न्यायात्। अकारलोपस्य स्थानित्वेन इकारान्तस्य भत्वाऽभावाच्च। "श्रोत्रियस्य घलोपश्चे"त्येके पठन्ति।

तत्त्व-बोधिनी

हायनान्तयुवादिभ्योऽण् १३६५, ५।१।१२९

हायनान्त। अस्मात्त्वतलोः प्राप्तयोरण्विधानम्। युवस्थविरशब्दाभ्यां वयोवचनलक्षणे अञि प्राप्ते। योवनमिति। अणि परतः "अन्िति प्रकृतिभावः। मनोज्ञादिपाठाद्वञपि। यौवनकम्। "प्रकृत्याऽके राजन्यमनुष्ययुवानः"इति प्रकृति भावः।

श्रोत्रियस्य यलोपश्च। श्रोत्रियस्येति। "श्रोत्रियंश्छन्दोऽधीते"इत्यत्र छान्दसः श्रोत्रभावः, घंश्च प्रत्यय इति यदा व्याख्यानं तदेह "घलोपः"इति यथाश्रुतम्। यदा तु "वाक्यार्थे पदवचन"मिति पक्षस्तदा घशब्देन इय इति रूपं लक्ष्यते। क्वचित्तु "यलोपश्चे"ति पाठः, तत्र येति संघातग्रहणं व्याख्येयम्। वर्णग्रहणे त्विकारस्य यणादेशः स्यान्न तु "यस्येति चे"ति लोपः , अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाऽबावात्। एतच्च हरदत्तग्रन्थे स्पष्टम्। मूलपुस्तकेषु "यलोपः"इति मुख्यपाठ एव प्रायेण दृश्यते, न तु "घलोप"इति पाठः।

---

सूत्रम्

काशिका-वृत्तिः

इगन्ताश् च लघुपूर्वात् ५।१।१३१

इगन्ताच् च लघुपूर्वातण् प्रत्ययो भवति भावकर्मणोः। लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यते। लघुः पूर्वो ऽवयवो ऽस्य इति लघुपूर्वः। कुतः पुनरसौ लघुः पूर्वः। इक्सन्निधानादिकः इति वज्ञायते। लघुः पूर्वो यस्मादिकः तदन्तान् प्रातिपदिकादित्ययम् अर्थो विवक्षितः। अपरे तत्पुरुषकर्मधारयं वर्णयन्ति। इक् चासावन्तश्च इति इगन्तः। लघुपूर्वग्रहनेन स एव विशेष्यते, पश्चात् तेन प्रातिपदिकस्य तदन्तविधिः इति। अस्मिन् व्याख्याने ऽन्तग्रहणम् अतिरिच्यते। लघुपुर्वादिकः इत्येतावदेव वाच्यं स्यात्। शुचेर् भावः कर्म वा शौचम्। मौनम्। नागरम् हारीतकम्। पाटवम्। लाघवम्। इगन्तातिति किम्? पटत्वम्। घटत्वम्। लघुपूर्वातिति किम्? कण्डूत्वम्। पाण्डुत्वम्। कथं काव्यम् इति? ब्राह्मणादिषु कविशब्दो द्रष्तव्यः।

लघु-सिद्धान्त-कौमुदी

इगन्ताच्च लघुपूर्वात् ११६१, ५।१।१३०

इगन्ताल्लघुपूर्वात् प्रातिपदिकाद्भावेऽण् प्रत्ययः। पार्थवम्। म्रदिमा, मार्दवम्॥

न्यासः

इगन्ताच्च लघुपूर्वात्?। , ५।१।१३०

"इगन्तात्()" इति। इक्? अन्तो यस्येति बहुव्रीहिः। प्रातिपदिकमन्यपदार्थः। "लघुपूर्वग्रहणे" इत्यादि। अथेगेव कस्मान्न विशेष्यते? तस्य बहुव्रीह्यर्थे गुणभूतत्वाद्विसेषणेन सम्बन्धस्य कर्त्तुमशक्यत्वात्। पूर्वशब्दोऽयं व्यवस्थाशब्दत्वादपरमपेक्षते। इह चापरस्यानिर्दिष्टत्वान्न ज्ञायते--कुतो लघुः पूर्वः? तत्परिज्ञानाय पृच्छति--"कुतः पुनरसौ लघुः पूर्वः" इति। प्रत्यासत्तिन्यायमाश्रित्याह--"सन्निधानात्()" इत्यादि। सन्निधानं त्विह सूत्रे इकः; श्रुतत्वात्()। "तेन" इति। अन्तभूतेन लघुपूर्वेणेकान्तग्रहणमितिरिच्यत इति; निष्फलत्वात्()। यतो हि "लघुपूर्वात्()" इत्युक्ते च प्रातिपदिकस्य तदन्तविधो सति सामथ्र्यादेव तस्यान्तत्वं लभ्यत इत्यपार्थकमन्तग्रहणमस्मिन्? व्याख्याने। पूर्वके तु विधाने, अन्तग्रहणेऽसति "लघुपूर्वेग्वतः" इत्येव विधिनिर्देशो विज्ञायते, ततश्चानन्तस्यापीको विधित्वं स्यात्()। तदा लशुनलकुटप्रभृतिभ्योऽपि प्रत्ययप्रसङ्ग इत्येवमर्थमन्तग्रहणम्()। "कथं काव्यम्()" इति। अन्यथा भवितव्यम्(); कविशब्दस्य लघुपूर्वोगन्तत्वादित्यभिप्रायः॥

बाल-मनोरमा

इगन्ताच्चलघुपूर्वात् १७७३, ५।१।१३०

इगन्ताच्च। लघुः पूर्वोऽवयवो यस्येति विग्रहः। पूर्वत्वं च इगवधिकमेव गृह्रते, व्याख्यानात्। तथा च लघुपूर्वो य इक्तदन्तात्प्रातिपदिकात्षष्ठ()न्ताद्भावकर्मणोरण्स्यादित्यर्थः। "गणवचने"त्यादेरपवादः। कतं काव्यमिति। कविशब्दस्य लघुपूर्वेगन्तत्वात् "गुणवचने"ति ष्यञं बाधित्वा अण्प्रसङ्गात्काव्यमिति कथमित्याक्षेपः। समाधत्तेः--कविशब्दस्येति। ब्राआह्दणादित्वादित्यनन्तरं "ष्यञि उपपाद्य"मिति शेषः।

तत्त्व-बोधिनी

इगन्ताच्चलघुपूर्वात् १३६६, ५।१।१३०

इगन्ताच्च। लघुः पूर्वोऽवयवो यस्येति प्रातिपदिकविशेषणम्। पूर्वत्वं च संनिधानदिगवधिकमेव। तेनाऽतिपाण्डुशब्दान्न भवति। "लघुपूर्वेकः"इत्येव सुवचम्। लघुपूर्वश्चासौ इक् च लघुपूर्वेक्। तस्य प्रातिपदिकविशेषणात्तदन्तलाभ इति नव्याः।

इगन्तात्किम्()। घटत्वम्। लघुपूर्वात्किम्()। पाण्डुत्वम्। कथं काव्यमिति। कुधातोः "ओरावस्यके"इति रूप सिद्धावपि कवेः कर्मेत्यर्थे कावमिति स्यादिति प्रश्नः।

---

सूत्रम्

काशिका-वृत्तिः

यौपधाद् गुरूपोत्तमाद् वुञ् ५।१।१३२

त्रिप्रभृतीनाम् अन्तस्य समीपम् उपोत्तमम्। गुरुः उपोत्तमं यस्य तद् गुरूपोत्तमम्। यकारोपधात् गुरूपोत्तमाद् वुञ् प्रत्ययो भवति भावकर्मणोः। रमणीयस्य भावः कर्म वा रामणीयकम्। वासनीयकम्। योपधातिति किम्? विमानत्वम्। गुरूपोत्तमातिति किम्? क्षत्रियत्वम्। सहायाद्वेति वक्तव्यम्। साहायकम्, साहाय्यम्।

न्यासः

योपधाट्गुरूपोत्तमाद्?वुञ्?। , ५।१।१३१

त्वतलादिषु प्राप्तेषु वुञ्विधीयते। उत्तमशब्दोऽयमिहाव्युत्पन्नं प्रातिपदिकं गृह्यते; तत्स्वभावात्? त्रिप्रभृतीनामन्त्यमाहेति मत्वाऽऽह--"त्रिप्रभृतीनामन्त्यम्()" इत्यादि। तमप्रत्ययान्तस्य तु ग्रहणे सति "अणिओरनार्षयोः" ४।१।७८ इत्यादौ सुतारे यो दोष उक्तः, स इहापि तदनुसारेण वेदितव्यः। उत्तमस्य समीपमुपोत्तमम्(), "अव्ययं विभक्तिसमीप" २।१।६ इत्यव्ययीभावः॥

बाल-मनोरमा

योपधाद्गुरूपोत्तमाद्वुञ् १७७४, ५।१।१३१

योपधात्। योपधाद्गुरूपोत्तमात्प्रातिपदिकात्षष्ठ()न्ताद्भावकर्मणोर्वुञित्यर्थः। रामणीयकमिति। रमणीयशब्दाद्वुञ्। आभिधानीयकमिति। अभिधानीयशब्दाद्वञ्।

सहायाद्वेति। "वु"ञिति शेषः। पक्षे ब्राआह्णादित्वात्ष्यञ्। इदंतु वार्तिकं भाष्ये क्वचिन्मृग्यम्।

तत्त्व-बोधिनी

योपधाद्गुरूपोत्तमाद्वुञ् १३६७, ५।१।१३१

योपधात्। गुरु उपोत्तमं यस्य प्रातिपदिकस्य तस्मादित्यर्थः। योपधात्किम्()। विमानतवम्। गुरुपोत्तमादिति किम्()। क्षत्त्रियत्वम्। आभिधानीयकमिति। अत्र प्रकृतिरभेः परोऽनीयर्()प्रत्ययान्तो दधातिः। अबिदेयस्य भावः कर्म वेत्यर्थः।

सहायाद्वा। सहायाद्वेति। सूत्रेण नित्ये प्राप्ते विकल्पार्थं वचनम्। द्वन्द्वमनोज्ञादिभ्यश्च। मनोज्ञ, प्रियरूप, बहुल , अवश्य, इत्यादिर्मनोज्ञादिः।

---

सूत्रम्

काशिका-वृत्तिः

द्वन्द्वमनोज्ञाऽदिभ्यश् च ५।१।१३३

द्वन्द्वसंज्ञकेभ्यः मनोज्ञाऽदिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः। गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका। शैष्योपाध्यायिका। कौत्सकुशिकिका। मनोज्ञाद्भ्यः मानोज्ञकम्। काल्याणकम्। मनोज्ञ। कल्याण। प्रियरूप। छान्दस।

छात्र। मेधाविन्। अभिरूप। आढ्य। कुलपुत्र। श्रोत्रिय। चोर। धूर्त। वैश्वदेव। युवन्। ग्रामपुत्र। ग्रामखण्ड। ग्रामकुमार। अमुष्यपुत्र। अमुष्यकुल। शतपत्र। कुशल। मनोज्ञादिः।

न्यासः

द्वन्द्वमनोज्ञादिभ्यश्च। , ५।१।१३२

द्वन्द्वात्? त्वतलादिषु प्राप्तेषु वुञ्विधीयते। मनोज्ञादिषु यो गुणवचनस्तस्मात्? ष्यञि, चौरधूर्त्तशब्दाभ्यामपि ब्राआह्मणादित्वात्? ष्यञ्येव; युवशब्दाद्यवादित्वादणि, शेषेभ्यस्त्वतलोः। "अमुष्यपुत्रः" इति। निपातनाद्विभक्तेरलुक्()। इह द्वन्द्वमनोज्ञादी द्वौ राशी, प्रत्ययार्थावपि भावकर्मणी द्वावेव--इति यथासंख्यं प्प्नोति, तत्पूर्ववदस्वरितत्वान्न भवति। अथ वा--चकारोऽत्र समुच्चयार्थः क्रियते। तस्य चान्यत्समुच्चेतव्यं नास्तीति वुञ्विधिमेव प्रत्येकं भावकर्मणोः समुच्चिनोति। तेनैकस्माद्राशेर्भावे कर्मणि च वुञ्? भवति, न तु यथासंख्यम्(); अन्यथा हि समुच्चयो नोपपद्यते॥

बाल-मनोरमा

द्वन्द्वमनोज्ञादिभ्यश्च १७७५, ५।१।१३२

द्वन्द्वमनोज्ञादिभ्यश्च। द्वन्द्वान्मनोज्ञादिभ्यश्च षष्ठ()न्तेभ्यो वुञित्यर्थः। शैष्योपाध्यायिकेति। शिष्यश्च उपाध्यायश्चेति द्वन्द्वाद्वुञ्। स्त्रीत्वं लोकात्। यद्यपि "योपधा"दित्येव सिध्यति तथापि गौपालपशुपालिकेत्युदाहरणं बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

गोत्रचरणाच् छलाघाऽत्याकारतदवेतेषु ५।१।१३४

गोत्रवाचिनः चरनवाचिनः च प्रातिपदिकात् वुञ् प्रत्ययो भवति, प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु। तत्र श्लाघा विकत्थनम्। अत्याकारः पराधिक्षेपः। तदवेतः तत्प्राप्तः तज्ज्ञो वा। तदिति गोत्रचरणयोः भावकर्मणी निर्दिश्येते। तत्प्राप्तः तदवगतवान् दवेत इत्युच्यते। श्लाघायां तावत् गार्गिकया श्लाघते। काठिकया श्लाघते। गार्ग्यत्वेन कठत्वेन च विकत्थते इत्यर्थः। अत्याकारे गार्गिकया अत्याकुरुते। काठिकया अत्याकुरुते। गार्ग्यत्वेन कठत्वेन च परानधिक्षिपति इत्यर्थः। तद्वेतः गार्गिकामवेतः। काठिकामवेतः। गार्ग्यत्वं कठत्वं च प्राप्तः इत्यर्थः। तद् वा अवगतवानित्यर्थः। श्लाघादिषु इति किम्? गार्ग्यत्वम्। कठत्वम्।

न्यासः

गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु। , ५।१।१३३

अपत्यनिमित्ता समाख्या गोत्रख्या, सा च प्रवराध्याये पठ()ते। या च वेदाध्ययनप्रयुक्तान्? पुरुषानाचष्टे सा चरणशब्दस्याख्या। "गोत्रञ्च चरणैः सह" (म।भा।, २।२२५) इति पारिभाषिकं गोत्रचरणयोर्जातित्वमिति "प्राणभृज्जाति" ५।१।१२८ इत्यादिनाऽञि प्राप्ते वुञो विधानम्()। इह गोत्रचरणवाचिनी द्वे प्रातिपदिके, अर्थावपि द्वावेव--तत्र यथासंख्यं प्राप्नोति, तत्? पूर्वपदस्वरितत्वान्न भवति। अत एवाह--"प्रत्येकं भावकर्मणोरर्थयोः" इति। "श्लाघादिषु विषयभूतेषु" इति। तथा हि न भावः श्लाघादीनामन्यतमोऽपि भवितुमर्हति। शब्दप्रवृत्तिनिमित्तं भावः। न च गोत्रचरणशब्दानां श्लाघादयः प्रवृत्तिनिमित्तं भवति। कर्मापि नैव श्लाघादिस्वभावं भवति। न हि गोत्रचरणानां श्लाघादयः कर्मतया रूढाः, यथा--अग्नेस्तापादयः; क्रियारूपत्वात्तेषाम्()। साध्यतया भावकर्मणोः प्रत्ययार्थतया विषयभूतेषु वुञ्? भवति। "तदवेतस्तत्प्राप्तः" इति। इणोऽत्र गत्यर्थत्वात्()। "तज्ज्ञातो वा" इति। अवपूर्वस्येणो ज्ञानेऽपि वृत्तिसम्भवात्()। तच्छब्देन चेह गोत्रचरणयोः सम्बन्धिनी भावकर्मणैइ प्रतिनिर्दिश्येते। "गार्गिकया" इति। "आपत्यस्य च तद्धितेऽनाति"

६।४।१५१ इति यलोपः॥

बाल-मनोरमा

गोत्रचरणाच्छ्लाघाऽत्याकारतदवेतेषु १७७६, ५।१।१३३

गोत्रचरणात्। गोत्रप्रत्ययान्ताच्छाखाध्येतृवाचिनश्च षष्ठ()न्ताद्भावकर्मणोर्वुञ्स्यात्श्लाघादिषु विषयेष्वित्यर्थः। "अपत्याधिकारादन्यत्र प्रवराध्यायप्रसिद्धं गोत्र"मित्युक्तम्। "अत्याकार" इत्यस्य विवरणम्-अधिक्षेप इति। तदवेत इत्येतद्विवृणोति--ते गोत्रेति। तच्छब्देन गोत्र चरणयोर्भावकर्मणी विवक्षिते। अवपूर्वादिणः प्राप्त्यर्थाज्ज्ञानार्थाद्वा कर्तरि क्तः। ते अवेतस्तदवेत इति विग्रहः। "द्वितीये"ति योगविभागात्समासः। अवगतवान्वेति। ज्ञातवानित्यर्थः। गार्गिकयेति। गार्ग्यशब्दाद्वुञि "आपत्यस्ये"ति यलोपे "यस्येति चे"त्यकारलोपे लोकात्स्त्रीत्वे टापि "प्रत्ययस्था"दिति इत्वे गार्गिकाशब्दः। काठिकाया श्लाघते। इति चरणादुदाहार्यम्। अत्र श्लाघादयः पदान्तरोपात्ता एव प्रत्ययर्थान्वयिनो नतु प्रत्ययवाच्या इति बोध्यम्।

तत्त्व-बोधिनी

गोत्रचरणाच्छ्लाघाऽत्याकारतदवेतेषु १३६८, ५।१।१३३

गोत्रचरणात्। गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्वुञ् स्याद्भावकर्मणोः। अपत्याधिकारादन्यत्र लौकिकं गोत्रम्। तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः। प्रवराध्याये ये पठितास्तेभ्य इत्यपरे। "गोत्रं च चरणैः सहे"ति जातित्वात् "प्राणभृज्जाती"त्यादिना अञि प्राप्ते वचनम्। श्र्लोघेत्यादि। श्र्लाघादिषु विषयभूतेष्वित्यर्थः। प्राप्त इति। इणः प्राप्त्यर्थत्वात्। अवपूर्णस्येणो ज्ञाने प्रसिद्धत्वादाह---अवगतवान्वेति। गार्गदिकयेति। "अपत्यस्ये"ति यलोपः। चरणाद्वुञ् उदाहरणं तु "कठिकया श्र्लाघते"इत्यादि बोध्यम्। श्र्लाघादिष्विति किम्()। गार्ग्यत्वम्। कठत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

होत्राभ्यश् छः ५।१।१३५

गोत्राशब्दः ऋत्विग्विशेषवचनः। ऋत्विग्विशेषवाचिभ्यः छः प्रत्ययो भवति भावकर्मणोः। अच्छावाकस्य भावः कर्म वा अच्छावादीयम्। मित्रावरुणीयम्। ब्राह्मणाच्छंसीयम्। आग्नीध्रीयम्। प्रतिप्रस्थीत्रियम्। त्वष्ट्रीयम्। पोत्रीयम्। बहुवचनं स्वरूपविधिनिरासार्थम्।

न्यासः

होत्राभ्याश्छः। , ५।१।१३४

त्वतलोः प्राप्तयोश्छो विधीयते॥

बाल-मनोरमा

होत्राभ्यश्छः १७७७, ५।१।१३४

होत्राभ्यश्छः। ऋत्विग्वाचीति। याज्ञिकप्रसिद्धेरिति भावः। ऋत्विग्विशेषवाचिभ्यः षष्ठ()न्तेभ्यश्छः स्याद्भावकर्मणोरित्यर्थः।अच्छावाकीयमिति। "आ च त्वा"दिति त्वतलोरपि सर्वत्र समावेशो बोध्यः।

तत्त्व-बोधिनी

होत्राभ्यश्छः १३६९, ५।१।१३४

होत्राशब्द इति। जुहोतेरुआन्।

---

सूत्रम्

काशिका-वृत्तिः

ब्रह्मणस् त्वः ५।१।१३६

होत्राभ्यः इत्यनुवर्तते। ब्रह्मन्शब्दाद् होत्रावाचिनः त्वः प्रत्ययो भवति भावकर्मणोः। छस्य अपवादः। ब्रह्मणो भावः कर्म वा ब्रह्मत्वम्। न इति वक्तव्ये त्ववचनं तलो बाधनार्थम्। यस् तु जातिशब्दो ब्राह्मणपर्यायो ब्रह्मन्शब्दः, ततः त्वतलौ भवत एव। ब्रह्मत्वम्, ब्रह्मता। भवनावधिकयोर् नञ्स्तञोरधिकारः समाप्तः। इति काशिकायां वृत्तौ पञ्चमाध्यायस्य प्रथमः पादः पञ्चमाध्यायस्य द्वितीयः पादः।

न्यासः

ब्राह्मणस्त्वः।, ५।१।१३५

"नेति वक्तये" इति। छप्रत्ययेऽप्यपवादे प्रतिषिद्धे त्वप्रत्ययः। "तस्य भावस्त्वतलौ ५।१।११८ इत्येव सिध्यति। तस्मान्नेत्येव वक्तव्ये यदेतद्वचनं तत्त्वेन तलो बाधनं यथा स्यादित्येवमर्थम्। यदि नेत्युच्यते; तदा च्छे प्रतिषिद्धे यथा त्वो भवति तथा तलपि स्यात्()। त्ववचने तु तलो बाधा सिद्धा भवति॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां पञ्चमाध्यायस्य प्रथमः पादः॥ - - - अथ पञ्चमोऽध्यायः द्वितीयः पादः

बाल-मनोरमा

ब्राआह्मणस्त्वः १, ५।१।१३५

ब्राह्मणस्त्वः। "होत्राभ्यः" इत्यनुवृत्तमेकवचनेन विपरिणम्यते। तदाह--होत्रावाचिन इति। ऋत्विग्वाचिन इत्यर्थः। ननु "ब्राह्मणो ने"त्येवास्तु, ब्राह्मणश्छो न इत्यर्थलाभे सति छे निषिद्धे "आ च त्वा"दित्यधिकारात् "होत्राभ्यश्चः" इत्येव भावकर्मणोस्त्वप्रत्ययः सिध्यतीत्यत आह--वेति वाच्ये "तस्य भावस्त्वतलौ" इत्यनेन ब्राह्मणः कर्मणि त्वस्याऽप्राप्तेस्तदर्थं त्वप्रत्ययविधानमिति न शङ्क्यम्। नापि "ब्राआह्मणो ने"त्युक्ते पूर्वसूत्रविहितानां त्वतल्छानां निषेधः स्यादित्यपि शङ्क्यम्, शब्दोपात्तस्य छस्यैव निषेधात्। अत्र होत्राग्रहणानुवृत्तेः प्रयोजनमाह--ब्राआह्मणपर्यायादिति।

**** इति बालमनोरमायाम् नञ्स्नञोरधिकारः। ****

सिद्धान्तकौमुदी

तस्या उत्तरार्द्धम्।

अथ तिङन्ते भ्वादयः।

बालमनोरमा

अस्तु मः पाणिनये भूयो मुनये तथास्तु वररुचये।

किंचास्तु पतञ्जलये भ्रात्रे वि()ओ()आराय गुरवे च॥१॥

व्याख्याता बहुभिः प्रौढैरेषा सिद्धान्तकौमुदी।

वासुदेवस्तु तद्व्याख्यां वष्टि बालमनोरमाम्॥२॥

ॐ "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ताः स्यु"रिति भाष्यप्रमाणकं ग्रन्थमध्ये विघ्नविघातादिप्रयोजनाय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबन्धाति-- श्रोत्रेति। वेदाध्येता श्रोत्रियः। "श्रोत्रियंश्छन्दोऽधीते" इति वेदपर्यायाच्छन्दश्शब्दाद्द्वितीयान्तादधीत इत्यर्थे घन्प्रत्ययः,प्रकृतेः श्रोत्रादेशस्च निपातितः। श्रोत्रियस्य भावः-- श्रौत्रम्। "श्रोत्रियस्य यलोपश्चे"यलोपश्चे"त्यणि इकारादुत्तरस्य यकाराऽकारसङ्घातस्य लोपे इकारस्य "यस्येति चे"ति लोपः। अर्हति--आर्यैः प्रशस्यमानेषु वेदविहितकर्मसु योग्यो भवतीत्यर्हन्। "अर्हः प्रंशसाया"मिति शतृप्रत्ययः। अर्हतो भावः-- आर्हन्ती। "अर्हतो नुम् चे"ति ष्यत्रि आदिवृद्धौ प्रकृतेर्नुमामे षित्वान्ङीषि "हलस्तद्धितस्ये"ति यकारलोपे "यस्येति चे"त्यकारलोपः। स्त्रीत्वं लोकात्। श्रौत्रं च आर्हन्ती च वेदविहितकर्मयोग्यता च प्रसिद्धैरिति यावत्। गुण्यैरिति। नित्याऽनित्यवस्तुविवेकः, इहाऽमुत्रार्थफलभोगविरागः, शमदमादिसम्पत्तिः, मुमुक्षुत्वमित्यादिप्रशस्तगुणसम्पन्नैरित्यर्थः। "रूपादाहतप्रंशसयो"रिति सूत्रे "अन्येभ्योऽपि दृस्यते" इति वार्तिकेन यप् प्रत्ययः, तद्भाष्ये "गुण्या ब्राआह्मण्या" इत्युदाहरणात्। महर्षिभिरिति। महान्तश्च ते ऋषयश्चेति कर्मधारयः। "आन्महत"इत्यात्वम्। अतितपस्विभिरित्यर्थः। अहर्दिवमिति। अहश्च दिवा चेति वीप्सायाम् "अचतुरे"त्यादिना द्वन्द्वो निपातितः। अहन्यहनीत्यर्थः। तोष्टूय्यमानोऽपीति। "ष्टुञ् स्तुतौ", सकर्मकः। गुणवत्त्वेनाऽभिधानं स्तुतिः। अभिधानक्रियानिरूपितं कर्मत्वमादय "देवान् स्तौती" त्यादौ द्वितीया। न तु गुणाभिधानमेव स्तुतिः, तथा सति गुणस्य धात्वर्थोपसङ्गृहीतत्वेनाऽकर्मकत्वापत्तेः। "धात्वादेः षः सः" इति षकारस्य सकारे ष्टुत्वनिवृत्तौ, "धातोरेकाच" इति भृशार्थे यङि, "अकृत्सार्वधातुकयो"रिति दीर्घे, "सन्यङो"रिति द्वित्वे, "शर्पूर्वाः खय" इति सकारस्याभ्यासगतस्य लोपे, "गुणो यङ्लुको"रित्यभ्यासोकारस्य गुणे, ततः परस्य सस्य "आदेशप्रत्यययो"रिति षत्वे, ष्टुत्वेन तकारस्य टकारे, "तोष्टूये"ति यङन्तात् "सनाद्यन्ता" इति धातुसंज्ञकात्कर्मणि लटि लटश्शानचि "आने मु"गिति मुमागमे, "सार्वधातुके य"गिति यकि,यङोऽकारस्य "अतो लोप"इति लोपे, "तोष्टूय्यमान" इति रूपम्। भृशं स्तूयमानोऽपीत्यर्थः। अचिन्त्यजगद्रचनाद्यनन्तगुणसम्पन्नतया भृसं सङ्कीत्र्यमानोऽपीति यावत्। अगुण इति। निर्गुण इत्यर्थः। "साक्षी चेता केवलो निर्गुणश्चे"त्यादिश्रुतेरिति भावः। निर्गुणस्य गुणवत्त्वेन कथनात्मिका स्तुतिर्विरुद्धेत्यापातप्रिपन्नं विरोधमपिशब्दो द्योतयति। गुणानां व्यावहारिकसत्यत्वेऽपि पारमार्थिकत्वाऽभावान्न विरोध इत्युत्तरमीमांसायां स्पष्टम्। विभुरिति। सर्वव्यापकः परमे()आर इत्यर्थः। वि जयतेतरामिति। "जि जये", अकर्मकः। उत्कर्षेण वर्तनं जयः। "विपराभ्यां जे"रित्यात्मनेपदम्। "तिङश्चे"त्यतिशायने तरप्। "किमेत्तिङव्यये"ति तरबन्तात्स्वार्थे आम्प्रत्ययः। "तद्धिश्चाऽसर्वविभक्ति"रित्यत्र तसिलादिषु परिगणनादामन्तमव्ययम्। सर्वोत्कर्षेण वर्तत इत्यर्थः। न च "विजयते" इति समुदायस्याऽतिङन्तत्वात्कथं ततस्तरबिति वाच्यं, "वि" इति हि भिन्नं पदम्, तिङन्तोत्तरपदसमासस्य छन्दोमात्रविषयत्वात्। ततश्च जयत इत्यस्मादेव तरप्। न च "जयते" इत्यस्य "विपराभ्यां जे"रिति कृतात्मनेपदस्य विशब्दसापेक्षत्वादसामथ्र्यं शङ्क्यम्। "वी"त्युपसर्गस्य द्योतकत्वेन पृथगर्थविहीनतया तत्सापेक्षऽभावात्तिङन्तस्य प्रधानतया तस्य विशब्दाऽपेक्षत्वेऽपि बाधकाऽभावाच्चेत्यलम्। वृत्तकथनपूर्वकं वर्तिष्यमाणनिरूपणं प्रतिजानीते-- पूर्वाद्र्ध इति।

तत्रेति। निर्धारणसप्तम्यन्तात्त्रल्। तेषु तृतीयाध्यायवर्तिप्रत्ययेष्वित्यर्थः। दशेति। अनुबन्धभेदाल्लकारभेद इति भावः।

पञ्चम इति। लेडित्यर्थः। छन्दोमात्रेति। "लिङर्थे ले"डित्यत्र "छन्दसि लुङ्लङ्लिटः" इति पूर्वसूत्राच्छन्दसीत्यनुवृत्तेरिति भावः। एतेन लेड()पाणि इह कुतो न प्रदश्र्यन्त इति शङ्का निरस्ता।

तत्त्व-बोधिनी

स्त्वः १, ५।१।१३५

नेति वाच्ये इति। छप्रत्यये निषिद्धे "तस्य भावस्त्वतलौ"इत्यनेनैव त्वप्रत्ययः सिद्यति, विभक्तेरनुच्चारणाल्लाघवं च भवतीति भावः। "होत्राभ्यः"इत्यनुवृत्तेः फलं दर्शयति---ब्राआह्णपर्यायादिति।

इति तत्त्वबोधिन्यां भावकर्मार्थाः।

तत्त्वबोधिनी- बालमनोरमा-शेखर-संवलिता

सिद्धान्तकौमुदी

तस्या उत्तराद्र्धम्

अथ तिङन्ते भ्वादयः

तत्त्वबोधिनी--

श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम्।

स्तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम्॥१॥

अज्ञाननाशने दक्षं दीक्षितं भक्तरक्षणे।

वटमूलाश्रयं त्र्यक्षं दक्षिणामूर्तिमाश्रये॥१॥

ग्रन्थमध्ये विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबन्धाति-- श्रौत्रेत्यादिना। श्रौत्रियस्य भावः श्रौत्रम्। हायनान्तयुवादिभ्योऽणिति सूत्रे श्रोत्रियसय् यलोपश्चेति वार्तिकाद्यलोपेऽण्प्रत्यये च यस्येति चेतीतकारलोपः। अर्हतो भाव आर्हन्ती। गुणवचनब्राआह्णादिभ्यः इति सूत्रे अर्हतो नुम् चेत्युक्तेर्नुम्, ष्यञ् च। षित्त्वान्ङीषि हलस्तद्धितस्येतियलोपः। ताभ्यां वित्तैः-- श्रौत्रार्हन्तीचणैः। तेन वित्तः इति चणप्। श्रोत्रियत्वयोग्यताभ्यां प्रसिद्धैरित्यर्थः।किं च गुण्यैः गुणवद्भिः। प्रशस्तगुणयुक्तैरिति यावत्। रूपादाहतप्रशंसयोरिति सूत्रे [मत्वर्थे] "अन्येभ्योऽपि दृश्यते" इत्युक्ता "गुण्या ब्राआह्णाः" इत्यस्य भाष्यादावुदाह्मतत्वात्। अहर्दिवमिति। अहन्यहनि। प्रत्यहमित्यर्थः। "अचतुरे" त्यादिना निपातनात्साधुः। तोष्टूय्यमान इति। स्तौतेर्यङन्तात्कर्मणि शानच्। "सार्वधातुके य" गिति धातोर्यक्। "आने मु"गिति मुक्। अपिशब्देन आपाततो विरोधं द्योतयति। वस्तुतस्तु न विरोधः। स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिस्मृतिसिद्धत्वेऽपि बियदादिवद्व्यावहारिकत्वात्तदभावस्य पारमार्थिकत्वात्। एतच्चोत्तरमीमांसायां स्पष्टमेव। विभुव्यापकः परमे()आरः। अतिशयेन विजयते विजयतेतराम्। सर्वोत्कर्षेण वर्तत इति फलितोऽर्थः। "विपराभ्यां जे"रिति इत्यस्य अप्रातिपदिकत्वादतिङन्तत्वाच्च। न च "सह सुपे"त्यत्र सहेति योगविभागात्तिङन्तेन विशब्दस्य समासे प्रातिपदिकत्वं स्यादेवेति वाच्यं, "स च छन्दस्येवे"ति तत्रत्यग्रन्थेन सह विरोधापत्तेः। किं च प्रातिपदिकत्वाभ्युपगमे सोरूत्पत्तिः स्यात्, लिङ्गसर्वनामताभ्युपगमेन नपुंसकत्वात्सोर्लुक्यपि "ह्मस्वो नपुंसके" इति ह्मस्वो दुर्वारः स्यात्। समुदायान्तर्गतस्य

"जयते" इत्यस्य तिङन्तत्वेऽपि साकाङ्क्षत्वेनाऽसामर्थ्यात्ततोऽपि भवितुं नार्हति, "समर्थः पदविधि"रिति चेत्। अत्राहुः-- समुदायान्तर्गताज्जयत इत्यस्मादेव तरप्। तस्य विशब्देन सह साकाङ्क्षत्वेनाऽसामर्थ्यं शङ्क्यम्। तिङन्तस्य प्रधानत्वेन सापेक्षत्वेऽपि दोषाऽभावात्, उपसर्गस्य द्योतकत्वेन प्रत्येकमर्थ एव नास्तीति साकाङ्क्षताया वक्तुमशक्यत्वाच्चेति॥

पूर्वार्द्धे कथितास्तुर्यपञ्चमाध्यायवर्तिनः।

प्रत्यया, अथ कथ्यन्ते तृतीयाध्यायगोचराः॥२॥

वृत्तकथनपुर्वकं वर्तिष्यमाणमाह-- पूर्वाद्र्ध इति। हलन्तेषु "स्पृशोऽनुदके क्विन्", "ऋत्विग्दधृक्", "त्यदादिष्वि"त्यादिना क्विन्नादिव्युत्पादनं प्रासङ्गिकमिति भावः। तुर्यः-- चतुर्थः। "चतुरश्छ्यतावाद्यक्षरलोपश्चेत्युक्तत्वात्। अथेति। इहापि कृत्सु "णचः स्त्रियामञ्", "अणिनुणः" इत्यादिव्युत्पादनं प्रासङ्गिकंबोध्यचम्, प्राधान्येन तु तृतीयाध्यायस्था एवेहोच्यन्त इति भावः। अनुबन्धभेदेन भेदमाश्रित्याह-- दश लकारा इति। प्रदश्र्यन्त इति। यद्यपि पञ्चमलकाररूपाण्यधुना न व्युत्पाद्यन्ते तथापि लकारः स्वरूपेण प्रदश्र्यते "लः कर्मणि च बावे चाकर्मकेभ्यः", "लस्ये"त्यादिसूत्रविषयतां व्युत्पादयितुमिति भावः। पञ्चम इति। लेडित्यर्थः। लट्-लिडिति स्वोक्तक्रमापेक्षयैव लेटः पञ्चमत्वं, न तु सूत्रोक्तमेणेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

धान्यानां भवने क्षेत्रे खञ् ५।२।१

निर्देशादेव समर्थविभक्तिः। धान्यविशेषवाचिभ्यः षष्ठीसमर्थेभ्यो भवने ऽभिधेये खञ् प्रत्ययो भवति, तच् चेद् भवनं क्षेत्रं भवति। भवनम् इति भवन्ति जायन्ते ऽस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रम् मौद्गीनम्। कौद्रवीणम्। कौलत्थीनम्। धान्यानाम् इति किम्? तृणानां भवनं क्षेत्रम् इत्यत्र न भवति। क्षेत्रम् इति किम्? मुद्गानां भवनं कुसूलम्। बहुवचनं स्वरूपविधिनिरासार्थम्।

लघु-सिद्धान्त-कौमुदी

धान्यानां भवने क्षेत्रे खञ् ११६७, ५।२।१

भवत्यस्मिन्निति भवनम्। मुद्गानां भवनं क्षेत्रं मौद्गीनम्॥

न्यासः

धान्यनां भवने क्षेत्रे खञ्?। , ५।२।१

"भवन्ति जायन्तेऽस्मिन्निति भवनम्()" इति। अधिकरणे ल्युट्()। जायन्त उत्पद्यन्त इत्यर्थः। एतेनोत्पत्तिवचनो भवतिरत्र गृह्यते, न सत्तावचनः तस्य हि ग्रहणे सत्यन्यत्र चोत्पन्नानां यत्र स्थापनं पश्चाद्यत्र स्थाप्यन्ते तत्रापि प्रसज्येत। यदि तद्ध्युत्पत्तिवचनो भवतिर्गृह्यते, क्षेत्रग्रहणमनर्थकं स्यात्()। तत्र मुद्गानां भवनं कुसूल इत्यत्र मा भूदित्येवमर्थं क्रियते। न चोत्पत्तिवचनस्य भवतेग्र्रहणे सति कुसूले प्रसङ्गः, न ह्यसौ मुद्गादीनामुत्पत्तेरधिकरणम्(), किं तर्हि? सत्तायाः; नैतदस्ति; सति हि क्षेत्रग्रहणे भवतिरत्रोत्पत्तिवचनो भवति। कथम्? क्षेत्रशब्दो ह्ययंधान्यानामुत्पत्त्याधारमाचष्टे। तेन तस्य ग्रहमे सति सत्तां प्रति न भूमिः क्षेत्रव्यपदेशमासादयतीति युक्तं तदुत्पत्तौ भवतिर्वत्र्तत इति। क्षेत्रग्रहणे त्वसति, भवतिः सत्तावचनोऽपि गृह्यते। तथा कुसूलेऽपि प्रसज्येत। अपि च--भवनशब्दो रूढ()आ गृहवचनोऽपयस्ति, सोऽपि

क्षेत्रशब्देन निवत्र्यत इति। अथ कथं षषठी समर्थविभक्तिरुपादीयते, यावता "तस्य भावस्त्वतलौ" ५।१।११८ इत्यतः षष्ठीसमर्थविभक्तिरनुवत्र्तत इति ततैव सिद्धम्()। एवं तह्र्येतज्ज्ञापयति--पूर्वे प्रत्यय#आ नावश्यं षष्ठीसमर्थाद्भवन्तीति। तेन "होत्राभ्याश्छः" ५।१।१३४ इति। होत्रायाः प्रथमासमर्थयाः स्वार्थे च्छः सिद्धो भवति--होत्रैव होत्रीयमिति। एवञ्च चतुर्वर्णादिभ्यः प्रथमासमर्थेभ्यः स्वार्थेष्यञ्? सिद्धो भवति॥

बाल-मनोरमा

धान्यानां भवने क्षेत्रे खञ् १७७९, ५।२।१

अथ पाञ्चमिका निरूप्यन्ते। धान्यानां भवने। धान्यवाचिभ्यः षष्ठ()न्तेभ्यो भने क्षेत्रेऽर्थे खञित्यर्थः। भवनशब्दस्य भावल्युडन्तत्वे क्षेत्रशब्दसामानाधिकरण्यानुपपत्तेराह--भवन्त्यस्मिन्निति। भवनमिति। भूधातुरुत्पत्तिवाची। उत्पत्तिस्थानं भवनमिति लभ्यते। धान्योत्पत्तिस्थानं क्षेत्रम्। "केदारः क्षेत्र"मित्यमरः। क्षेत्रशब्दाऽभावे भूधातोः सत्तावाचित्वमाश्रित्य यत्र विद्यते तद्भवनमिति व्युत्पत्त्या आधारसामान्यं गृहकुसूलादिलभ्येत, अतः क्षेत्रपदम्। भवनपदाऽभावे तु क्षेत्रशब्देन सेतुवन्धकाश्यादिपुण्यप्रदेशोऽपि लभ्येत, अतो भवनपदम्। उभयोपादाने तु धान्योत्पत्तिप्रदेश एव लभ्यत इति न पौनरुक्त्यम्।

तत्त्व-बोधिनी

धान्यानां भवने क्षेत्रे खञ् १३७१, ५।२।१

धान्यानाम्। "धिवि प्रीणने"इत्यस्मात् "कृत्यल्युटो बहुल"मिति कर्तरि ण्यत्। अस्मादेव निपातनादन्त्यस्य लोप इकारस्य चात्वम्। धिनोतीति धान्यम्। मन्त्रश्च "धन्यमसि धिमुहि देवान्िति दृश्यते। "धान्याना"मिति भवनापेक्षया कर्तरि षष्ठी। सा च निर्देशादेव समर्थविभक्तिः। बहुवचनं तु स्वरूपविधिनिरासार्थम्। अलौकिके प्रक्रियावाक्ये तु षष्ठ()न्तत्वानुवादेन तद्विधिसामथ्र्यादेवेति बोध्यम्। भवतिरिहोत्पत्तिवचनः, क्षेत्रग्रहणसामथ्र्यात्। सूत्रे हि सत्तावचनस्यापि भवतेग्र्रहणं माभूदिति क्षेत्रग्रहणं कृतम्। अन्यथा "धान्यानां भवनं कुसूलः"इत्यत्रापि स्यादिति। धान्यानां किम्()। तृणानां भवनं क्षेत्रम्।

---

सूत्रम्

काशिका-वृत्तिः

व्रीहिशाल्योर् ढक् ५।२।२

व्रीहिशालिशब्दाभ्यां ढक् प्रत्ययो भवति भवने क्षेत्रे अभिधेये खञो ऽपवादः। व्रीहीणां भवनं क्षेत्रम् व्रैहेयम्। शालेयम्।

लघु-सिद्धान्त-कौमुदी

व्रीहिशाल्योर्ढक् ११६८, ५।२।२

व्रैहेयम्। शालेयम्॥

न्यासः

व्रीहिशाल्योर्ढक्?।, ५।२।२

बाल-मनोरमा

व्रीहिशाल्योर्ढक् १७८०, ५।२।२

व्रीहिशाल्योर्ढक्। व्रीहिशब्दाच्छालिशब्दाच्च षष्ठ()न्ताद्भवने क्षेत्रेऽर्थे ढगित्यर्थः। खञोऽपवादः।

तत्त्व-बोधिनी

व्रीहिशाल्योर्ढक् १३७२, ५।२।२

व्रीहिशाल्योः। अत्रापि निर्देशादेव षष्ठी समर्थविभक्तिः। सा च भवनापेक्षया कर्तरीत्यादि पूर्ववत्।

---

सूत्रम्

काशिका-वृत्तिः

यवयवकषष्टिकाद् यत् ५।२।३

यवादिभ्यः शब्देभ्यो यत् प्रत्ययो भवति भवने क्षेत्रे ऽभिधेये। खञो ऽपवादः। यवानां भवनं क्षेत्रम् यव्यम्। यवक्यम्। षष्टिक्यम्।

न्यासः

यवयवकषष्टिकाद्यत्?। , ५।२।३

बाल-मनोरमा

यवयवकषष्टिकाद्यत् १७८१, ५।२।३

यवयवक। यव, यवक, षष्टिक-एभ्यः षष्ठ()न्तेभ्यो भवने क्षेत्रे यत्स्यादित्यर्थः। खञोऽपवादः। "धान्याना"मित्यनुवृत्तेरिहापि षष्ठ()एव समर्थविभक्तिः।

तत्त्व-बोधिनी

यवयवकषष्टिकाद्यत् १३७३, ५।२।३

यवयवक। अत्र प्रत्ययार्थसामथ्र्याल्लभ्या षष्ठी समर्थविभक्तिः। विभाषा खञि नित्ये प्राप्ते वचनम्। औमीनं भाङ्गीनमिति। ननूमाभङ्गयोर्धान्यत्वाऽबावात्कथमिह खञ्। "व्राहियश्च मे यवाश्च मे"इति चनकानुवाके हि द्वादशैव धान्यानि पठितानि, न तूमाभङ्गौ पठितौ इति चेत्। मैवम्। "शणसप्तदशानि धान्यानी"ति स्मरणात्। तत्र चोमभङ्गयोरपि पाठाद्धान्यत्वमस्तीति भाष्यादौ स्थितत्वात्। न च चमकानुवाके धान्यपरिगणनेनाऽर्थः, तत्राऽधान्यानामप्यश्मादीनां पाठात्, धान्यानामपि कैषांचित्कोद्रवादीनामपाठात्। तस्मादन्यत एव धान्यनिर्णय इति पूर्वोक्तस्मृत्या तयोर्धान्यत्लमस्तीति ज्ञेयम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा तिलमाषौमाभङ्गाऽणुभ्यः ५।२।४

तिल माष उमा भङ्गा अणु इत्येतेभ्यः विभाषा यत् प्रत्ययो भवति भवने क्षेत्रे ऽभिधेये। खञि प्राप्ते वचनं, पक्षे सो ऽपि भवति। उमाभङ्गयोरपि धान्यत्वम् आश्रितम् एव। तिलानां भवनं क्षेत्रम् तिल्यम्, तैलीनम्। माष्यम्, माषीणम्। उम्यम्, औमीनम्। भङ्ग्यम्, भाङ्गीनम्। अणव्यम्, अणवीनम्।

न्यासः

विभाषा तिलमाषोमाभङ्गाणुभ्यः। , ५।२।४

"खञि प्राप्ते वचनम्(), पक्षे सोऽपि भवति" इति। युक्तं यत्? पक्षे तिलमाषाणुभ्यः खञ्? भवतीति; तेषां धान्यत्वात्()। उमाभङ्गयोस्त्वधान्यत्वात्? खञ्? पाक्षिको न युक्तः। यदेव हि "तिलाश्च मे यवाश्च मे" इत्यादिषु वेदवाक्येषु पठ()ते तदेव धान्यम्()। यावादय एवु मन्त्रे पठ()न्ते, नोमाभङ्गे। यदि तयोरपि धान्यत्वं स्यात्? ते अपि पठ()याताम्(), ततोऽवगम्यते न तयोर्दान्यत्वाम्, एवञ्च न खञस्ताभ्यां प्राप्तिरस्ति, यतः सोऽपि पक्षे स्यादित्येवाह--"उमाभङ्गयोः" इत्यादि। शणसप्तदशमुद्रानि धान्यानीति स्मृतिः। तत्र शणादिषु मध्य उमाभङ्गे अपि धान्यत्वेन संख्यायेते इति तयोर्धान्यत्वमाश्रितमेव। यस्तु पुनर्वेदे तयोरपाठः; स वैदिककर्मण्यनुपयोगात्()। अतो न तत्रापाठादधान्यत्वमित्यभिप्रायः॥

बाल-मनोरमा

विभाषा तिलमाषोमाभङ्गाणुभ्यः। १७८२, ५।२।४

विभाषा तिस। "तिल, माष, उमा, भङ्ग, अणु-एभ्यो धान्यविसेषवाचिभ्यः षष्ठ()न्तेभ्यो यद्वा स्यादित्यर्थः। "उमाभङ्गौ धान्यविशेषौ" इति भाष्यम्। "उमा स्यादतसी क्षुमा" इत्यमरः। अणव्यमिति। अणुर्धान्यविशेषः। यति "ओर्गुणः" "वान्तो यी"त्यवादेशः।

---

सूत्रम्

काशिका-वृत्तिः

सर्वचर्मणः कृतः खखञौ ५।२।५

सर्वचर्मन् शब्दात् तृतीयासमर्थात् कृतः इत्यस्मिन्नर्थे खखञौ प्रत्ययौ भवतः। सर्वशब्दश्च अत्र प्रत्ययार्थेन कृतेन सम्बध्यते, न चर्मणा। तत्र अयम् असमर्थसमासो द्रष्टव्यः। सर्वश्चर्मणा कृतः इत्येतस्मिन् वाक्यार्थे वृत्तिः। सर्वचर्मीणः, सार्वचर्मीणः।

न्यासः

सर्वचर्मणः कृतः खखञौ। , ५।२।५

इह कृतः प्रत्ययार्थः। तत्र चर्मणः करणत्वं स्यात्(), कर्तृत्वं वा। तत्र यदि करणत्वं तदा नियतं करणलक्षणया तृतीयया भवितव्यम्()। अथ कर्त्तृत्वमेव "न लोक" २।३।६९ इत्यादिना षष्ठ()आं प्रतिषिद्धायां कर्तृलक्षणा तृतीयैव। तस्मात्? प्रत्ययार्थसामथ्र्यालभ्या तृतीया समर्थविभक्तिरिति मत्वाऽऽह--"तृतीयासमर्थात्()" इति। स च सर्वचर्मण इति निर्देशः सर्वशब्दस्य चर्मशब्देन समासं कृत्वा कृतः। ततः "चर्मणैवास्य सम्बन्धो न ह्यन्यता समास उपपद्यते" इति यो मन्यते, तं प्रत्याह--"सर्वशब्दश्चात्र" इत्यादि। यद्येवम्(), असामथ्र्यात्? समासो न प्राप्नोति? इत्यत आह--"तत्रायम्()" इत्यादि। अस्मादेव निपातनादित्यभिप्रायः। अथ चर्मणैवभिसम्बन्धः कस्मान्न विज्ञायते? इत्याह--"सर्वश्चर्मणा कृतः" इति। अत्र हि वाक्यार्थे तद्धितवृत्तिरिष्यति। तथा ह्ययमेव वाक्यार्थस्तद्धितानुगतः प्रतीयते। अ()स्मश्चार्थे वाक्यार्थ एवं तद्धितवृत्तिर्लभ्यते, यदि सर्वशब्दः कृतेन सम्बध्यते न चर्मणा। यदि सर्वशब्दश्चर्मणा सम्बध्यते, सर्वचर्मणा इति षष्ठीसमासो वा स्यात्(), कर्मधारयो वा; तत्र षष्ठीसमासे तद्धितान्तात्? सर्वसम्बन्धिना चर्मणा कृत इत्येषोऽर्थः प्रतीयते। कर्मधारये तु सर्वचर्मणा कृत इत्येषोऽर्थः। न चायं द्विष्प्रकारो यस्तद्धितान्तादवसीयते, अपि तु सर्वचर्मणा कृत इत्ययमेव। तस्मादशक्यः सर्वशब्दस्य चर्मणा सम्बन्धो विज्ञातुमिति कृतेनैव सम्बन्धो युक्तः॥

बाल-मनोरमा

सर्वचर्मणः कृतः खखञौ १७८३, ५।२।५

सर्वचर्मणः। सर्वचर्मन्शब्दात्तृतीयान्ताच्चर्मणा सर्वं कृतमित्यर्थः खखञौ स्त इत्यर्थः। औचित्यादिह तृतीया समर्थविभक्तिः। नन्विह सर्वशब्दस्य कृते अन्वयाच्चर्मण्यन्वयाऽभावादसामर्थ्याच्चर्मणा समासाऽसम्भवात्कथं सर्वचर्मन्शब्दात्प्रत्यय इत्यत आह--असामर्थ्येऽपीति। सर्वश्चर्मणा कृत इति विग्रहवाक्यम्। चर्मणा कृत्स्नः कृत इत्यर्थः। सर्वचर्मीण इति। "नस्तद्धिते" इति टिलोपः। सर्वेण चर्मणा कृत इत्यर्थे तु न खखञौ, व्याख्यानात्।

तत्त्व-बोधिनी

सर्वचर्मणः कृतः खखञौ १३७४, ५।२।५

सर्वचर्मणः। "खश्चे"त्येव तु नोक्तं, यतोऽप्यनुकर्षः संभाव्येतेति। अत्र तृतीया समर्थविभक्तिः, कृत इति प्रत्ययार्थे चर्मणः करणत्वस्योचितत्वात्। सर्वश्चर्मणेति। सर्वेण चर्मणा कृत इत्यर्थे तद्धितो नेष्यत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

यथामुखसम्मुखस्य दर्शनः खः ५।२।६

यथामुखशब्दात् सम्मुखशब्दात् षष्ठीसमर्थाद् दर्शनः इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। दृश्यते ऽस्मिनिति दर्शनः आदर्शादिः प्रतिबिम्बाश्रय उच्यते। निपातनात् सादृश्ये ऽव्ययीभावः। यथामुखं दर्शनः यथामुखीनः। सर्वस्य मुखस्य दर्शनः सम्मुखीनः।

न्यासः

यथामुखसम्मुखस्य दर्शनः खः। , ५।२।६

"दृश्यतेऽस्मिन्निति दर्शनः" इति। अधिकरणे ल्युट्()। "यथामुखम्()" इति। "यथाऽसादृश्ये" २।१।७ इत्यव्ययीभावः। मुखस्य सदृशं यथामुखम्()। किं पुनस्तत्()? आदर्शाश्रयं प्रतिबिम्बम्()। ननु च "असादृश्ये" इति प्रतिषेधान्नात्र समासेन भवितव्यम्()? इत्यत आह--"निपातनात्()" इत्यादि। समासश्चायं पूर्वपदार्थप्रधानः। पूर्वपदं चासत्त्ववचनमिति प्रथमासमर्थादेव प्रत्यय उपपद्यते। अथ वा--"नाव्ययीभावादतोऽम्त्वपञ्चम्याः" (२।४।८३) इति ज्ञापकादव्ययीभावाद्()द्वितीयादयो भवन्तीत्यतो द्वितीयासामथ्र्यात्? प्रत्य उपपद्यते। "यथामुखं यतामुखीनः" इति। मुखसदृस्य दर्शनः" इति। कर्मणि षष्ठी। यत्राऽऽदर्शादौ सर्वं मुखं दृश्यते स एवमुच्यते॥

बाल-मनोरमा

यथामुखसंमुखस्य दर्शनः खः १७८४, ५।२।६

यथामुख। यथामुख, समुखं-आभ्यां षष्ठ()न्ताभ्यां दर्शन इत्यर्थे खःस्यादित्यर्थः। दृश्यतेऽस्मिन्निति दर्शनः= आदर्शादिः। ननु मुखस्य सदृशं यथामुखमिति कथमव्ययीभावः?, "यथाऽसादृश्ये" इति सादृश्ये तन्निषेधादित्यत आह--निपातनादिति। सम्मुखशब्दे आभिमुख्यार्थकस्य समित्युपसर्गस्य न प्रवेशः, किंतु समशब्दस्य सर्वपर्ययस्येत्याह--समं सर्वं मुखं संमुखमिति। सममित्यस्य विवरणं सर्वमिति। समं च तन्मुखं चेति कर्मधारये संमुखशब्द इत्यर्थः। निपात्यत इति। इदं च भाष्ये स्पष्टम्। एवञ्च समित्युपसर्गपूर्वादयं प्रत्ययो नेष्यत इति भावः।

तत्त्व-बोधिनी

यतामुकसंमुखस्य दर्शनः खः १३७५, ५।२।६

यथामुख। दृश्यतेऽस्मिन् दर्शनः=आदर्शादिः। अधिक,रणे ल्युट्। "असादृश्ये"इति प्रतिषेधात्सादृश्ये कथं यथाशब्दस्य समासः()। तत्राह----निपातनादिति। एतच्च वृत्तिग्रन्थमनुसृत्योक्तम्। भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः। तथा च मायामृगं प्रकम्योक्तं---"यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्िति। यथामुखं दर्शन इति। अव्ययीभावस्यापि यथामुखशब्दस्येन्मत्तगङ्गादिवत्सत्त्ववचनत्वात्कर्मशक्तियोगे सति कृद्योगलक्षणा षष्ठी। तस्या "नाव्ययीभावा"दित्यमादेशः। सर्वस्य मुखस्येति। "संमुखस्ये"ति नोक्तं, प्रत्ययसंनियोगेनैव समशब्दस्याऽन्त्यलोपनिपातनात्। संशब्दस्तचुसमशब्दार्थे न दृश्यते, "संमुखो भव"इत्यत्र "अभिमुख"इत्यर्थप्रतीतेः। तत्र च खप्रत्ययस्याऽनिष्यमाणत्वात्। कथं तर्हि----"संयुगे संमुखीनं तमुद्गदं प्रसहेत कः"इति भट्टिः। अभिमुखावस्थानात्सामश्र्याद्भविष्यतीति हरदत्तः।

---

सूत्रम्

काशिका-वृत्तिः

तत् सर्वाऽदेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ५।२।७

ततिति द्वितीया समर्थविभक्तिः। व्याप्नोति इति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। सर्वाऽदेः प्रातिपदिकात् पथिनङ्ग कर्मन् पत्र पात्र इत्येवम् अन्ताद् द्वितीयासमर्थाद् व्याप्नोति इत्यस्मिन्नर्थे खः प्रत्ययो भवति। सर्वपथं व्याप्नोति सर्वपथीनो रथः। सर्वाङ्गिणः तापः। सर्वकर्मीणः पुरुषः। सर्वपत्रीणः सारथिः। सर्वपात्रीणः ओदनः।

न्यासः

तत्सर्वादेः पथ्यङ्गकर्मपत्त्रपात्रं व्याप्नोति। , ५।२।७

अथ सूत्र द्वितीयान्तप्रकृत्युच्चारणं किमर्थम्()? तदिति द्वितीयासामश्र्यात्? प्रत्ययो यथा स्यात्()। अथ वा--पथ्यङ्गकर्मपत्त्रपात्रमिति नैवेयं द्वितीया, न हि व्याप्नोतिक्रियया पथ्यादयः सम्बध्यन्ते, किं तर्हि? सर्वादि। तस्मात्? तस्यैव कर्मत्वम्(), न पथ्यादीनां तदवयवानाम्()। तत्? कुतः? न सा द्वितीया, सुब्व्यत्ययेन पञ्चम्याः स्थाने प्रथमा त्वेषा। तस्मात्? समाहारद्वन्द्वस्य नपुंसकलिङ्गत्वात्? "अतोऽम्()" २।४।८३ इत्यम्भावः कृतः। "परिशिष्टम्()" इति। "सर्वादेः पथ्यङ्गकर्मपत्त्रपात्रम्()" इत्येतच्च। सर्वादेः प्रातिपदिकस्य पथ्यादयश्चादौ न भवन्ति। ततः सामश्र्यात्? तदन्तविधिर्विज्ञायत इत्याह--"पथ्यङ्गकर्मपत्त्रपात्रान्तात्()" इति। "सर्वपथीनः" इति। सर्वश्चासौ पन्थाश्चेति "पूर्वकाल" २।१।४८ इत्यादिना समासः, "ऋक्पूरब्धूःपथामानक्षे" ५।४।७४ इत्यकारः समासान्तस्तदतः। ननु च समासान्ते कृते पथ्यन्तमेव न भवति? यदत्र पथ्यन्तं तदाश्रयो विधिरिर्भवतीत्यदोषः। ननु च व्यवधानान्न प्राप्नोति? अन्तग्रहणात्? समासान्ताः समासग्रहणेन गृह्णन्त इति नास्ति व्यवधानम्()॥

बाल-मनोरमा

तत्सर्वादेः पथ्यङ्कर्मपत्रपात्रं व्याप्नोति १७८५, ५।२।७

तत्सर्वादेः। पथिन्, अङ्ग, कर्मन्, पत्र, पात्र-एषां समाहारद्वन्दावात्पञ्चम्यर्थे द्वितीया। प्रातिपदिकविशेषणत्वात्तदन्तविधिः। "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"ति निषेधस्तु न, केवलानामेषां सर्वादित्वस्याऽसंभवात्। "त"दिति तु द्वितीयान्तं व्याप्नोतीत्यत्रान्वेति। ततश्च तद्व्याप्नोतीत्यर्थे सर्वशब्दपूर्वपदकेभ्यः प्रातिपदिकेभ्यो द्वितायान्तेभ्यः पथ्यङ्गकर्मपत्रपात्रान्तेभ्यः खः स्यादित्यर्थः फलति। तदाह--सर्वादेरित्यादिना। सर्वपथानिति। "ऋक्पू"रिति समासान्ताः। आप्रपदम्। "आप्रपद"मित्यव्ययीभावाद्द्वितीयान्तात्प्राप्नोतीत्यर्थे खः

स्यादित्यर्थः। पदस्याग्रं प्रपदमिति। "पादाग्रं प्रपद"मित्यमरः।

तत्त्व-बोधिनी

तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति १३७६, ५।२।७

तत्सर्वादेः। "त"दिति द्वितीया समर्थविभक्तिः। व्याप्नोतीति प्रत्ययार्थः। परिशिष्टं प्रकृतिविशेषणम्। तत्र केवलानां पथ्यादीनां सर्वादित्वाऽसंभवात्प्रातिपदिकैरपि तैस्तदन्तविधिः। तदाह----पथ्याद्यन्तादिति। पथ्यङ्गकर्मपत्रपात्रान्तात्प्रातिपदिकादित्यर्थः। सर्वपथीनि इति। "पूर्वकालैके"ति समासः। "ऋक्पी"रिति समासान्तः। तस्य पथ्यन्तसमासग्रहणेन ग्रहणाद्भवति खप्रत्यय।

---

सूत्रम्

काशिका-वृत्तिः

आप्रपदं प्राप्नोति ५।२।८

प्रपदम् इति पादस्य अग्रम् उच्यते। आङ् मर्यादायाम्। तयोरव्ययीभावः। आप्रपदशब्दात् तदिति द्वितीयासमर्थात् प्राप्नोति इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। आप्रपदं प्राप्नोति आप्रपदीनः पटः। शरीरेण असम्बद्धस्य अपि पटस्य प्रमाणम् आख्यायते।

न्यासः

आप्रपदं प्रप्नोति। , ५।२।८

"तयोरव्ययीभावः" इति। "आङ्मर्यादाभिविध्योः" २।१।१२ इत्यनन। "शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यातम्()" इति। प्राप्तियोग्यतामुपादाय हि योग्योऽसावाप्रपदाच्छरीरं प्राप्तुम्()। अथ व्याप्तिप्राप्त्योः को विशेषः, येन व्याप्नोतीति कृते प्राप्नोतीत्युक्तम्()? सम्बन्धमात्रं प्राप्तिः, सम्बन्ध एव साकल्येन व्याप्तिरित्येव विशेषः॥

बाल-मनोरमा

आप्रपदं प्राप्नोति १७८६, ५।२।८

आप्रपदमिति। "आङ्मर्यादाभिविध्यो"रित्यव्ययीबावः। अनुपद। अनुपद, सर्वान्न, अयानय-एषां समाहारद्वन्द्वाद्द्वितीया। बद्धा, भक्षयति, नेय-एषां द्वन्द्वात्सप्तमी। तिङन्तस्य द्वन्द्वानुप्रवेश आर्षः। अनुपदादिभ्यो द्वितीयान्तेभ्यः क्रमाद्बद्धादिष्वर्थेषु खः स्यादित्यर्थः। अनुरायामे सादृश्ये वेति। आद्ये "यस्य चायामः" इत्यव्ययीभावः, द्वितीये सादृश्ये अव्ययीभावः।

---

सूत्रम्

काशिका-वृत्तिः

अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ५।२।९

अनुपदाऽदिभ्यः शब्देभ्यः तदिति द्वितीयासमर्थेभ्यः यथासङ्ख्यं बद्धा भक्षयति नेय इत्येतेष्वर्थेषु खः प्रत्ययो भवति। अनुः आयामे सादृश्ये वा। अनुपदं बद्धा उपानतनुपदीना। पदप्रमाणा इत्यर्थः। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अयः प्रदक्षिणम्, अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन् परशारैः पदानामसमावेशः सो ऽयानयः। अयानयं नेयः अयानयीनः शारः। फलकशिरःस्थित इत्यर्थः।

न्यासः

अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु। , ५।२।९

"अनुरायामे" इत्तयादि। यदायामे तदा "यस्य चायामः" २।१।१५ इति समास-। यदा सादृश्ये तदा "यतार्ते यदव्ययम्()" तेन "अव्ययं विभक्ति" २।१।६ इत्यादिना। यता पदमायतं तथा च "बद्धोपानदनुपदीना"। सादृश्ये यथानुपदं तता बद्धाऽनुपदीना। "पदप्रमाणेत्यर्थः" इति। यदाप्यनु सादृश्ये, तदाप्ययमर्थ वेदितव्यः, तुल्यप्रमाणतयैव सादृश्यम्()। "अयः प्रदक्षिणम्()" इति। अयनमयः, गमनमित्यर्थः। प्रदक्षिणं गमनमय इत्युच्येत। "अनयः प्रसव्यम्()" इति। अयविपरीतं प्रसव्यमनय इत्युच्यते। एवमवयवार्थं दर्शयित्वा समुदायार्थं दर्शयितुमाह--"प्रदक्षिणप्रसव्यगामिनाम्()" इत्यादि। बहुवचनमयानयनिमित्तप्रदर्शनार्थम्()। यदि शाराः प्रदक्षिणं प्रसव्यं च गच्छन्त्येवमयानयौ भक्तः, नान्यथा। तत्रात्मोयाः शाराः प्रदक्षिणं गच्छन्ति, परकीयाः प्रसव्यम्()। तेषामेवङ्गामिनां यानिस्थानानि तेषां यस्मिन्? प्रदक्षिणप्रसव्यगमनात्मके गतिविशेषे सति परैर्विपक्षभूतैः शारैरसमावेशः=अनध्यासनमनाक्रमणं सोऽयानय इत्युच्यते; न तु प्रदक्षिणप्रसव्यगमनमात्रे स एवायम्()। एवंरूपोऽयानयो यदा समहायैः शारौः पदान्यधिष्ठीयन्ते तदा वेदितव्यः। ससहायानामेव हि शाराणां पदानि परैर्न शक्यन्त#एऽध्यासितुम्। असहायानां तु शक्यत एव। "फलकशिरसि स्थितः" इति। यत्र फलकेऽङ्कऽक्षैर्दीव्यन्ति तस्य शिरोभूतं यत्र स्थानं किंतवानां प्रसिद्धं तत्र स्थितः शारः "अयानयीनः" इत्युच्यते; तत्रैवायानयीनशब्दस्य रूढत्वात्()। अपरे तु, नेयो नेतव्यः, न नोतस्ततः। तत्र "शिरसि स्थितः" इत्यर्थानुपपत्तेः "फलकशिरसि स्थाप्यते" इत्यर्थ इति ग्रन्थेन भवितव्यमित्याहुः। नीतो वा नेयः; तदुपलक्षणत्वात्()। भाविन्यावस्थयोक्तः। अयानयसम्बन्धित्वेऽपि सर्वेषां विशेष्यादेव प्रत्ययोत्पत्तिरुक्तैव। सत्यपि द्वितीयाधिकारे पुनर्द्वितीयोच्चारणं दृष्टाद्()द्वितीयान्तात्यथा स्यादित्येवमर्थम्()। तेन विशिष्टार्थनेयवचनादयानयशब्दाद्()द्वितीयान्तातद्? प्रत्ययो भवति, न नेयवचनमात्रात्()। स एव विशिष्टो यो नयः प्रदक्षिणप्रसव्यगामीत्यादिना ग्रन्थेन दर्शितः। अथायान्य इति कोऽयं शब्दः, यदि ह्ययं समाहारे द्वन्द्वः, तस्य नपुंसकत्वादयानयमिति भवितव्यम्()? अथेतरेतरयोगे, द्व्यर्थत्वादयानयाविति भवितव्यम्()? नायं द्वन्द्वः, किं तर्हि? मयूरव्यंसकादित्वात्? तत्पुरुषः--अयसहितोऽनयोऽयानय इति। अथ बद्धाभक्षयतिनेयेष्विति कथं तिङन्तस्य द्वन्द्वः? कः पुनराहायं द्वन्द्व इति? यदि न द्वन्द्वः, कथं नेयेष्विति बहुवचनम्()? सौत्रत्वान्निर्देशस्य। सुब्व्यत्ययेन वा च्छन्दस्येकवचनस्य स्थाने बहुवचनमुपपन्नम्()। ननु च्छन्दसि सुब्व्यत्यय उक्तः, नेदं छन्दः? "छन्दोवत्सूत्राणि भवन्ति" (म।भा। १-१-१) इत्यदोषः। अथ वा; द्वन्द्व एवायम्(), न तु तिङन्तस्य। न हि भक्षयतिशब्दोऽयं तिङन्तः। किं तर्हि? तिङन्तप्रतिरूपको निपातस्तिङन्तेन समानार्थः, यथा--अस्तिक्षीरा ब्राआहृणीत्यत्रास्तिशब्दः॥

बाल-मनोरमा

अनुपदसरह्यान्नायानयं बद्धाभक्षयतिनेयेषु १७८७, ५।२।९

अनुपदं बद्धेति। क्रियाविशेषणत्वाद्द्वितीया। अनुपदीना उपानदिति। पदसम्बन्धिदैर्ध्योपलक्षितेत्यर्थः। पदेन सदृशीति वा। तत्तुल्यपरिमाणेति यावत्।?यानय इति द्यूते शाराणां प्रदक्षिणपरिवर्तनम्--अयः, प्रसव्यपरिवर्तनम्-अनयः। अयसहितः अनयः-अयानयः। प्रदक्षिणप्रसव्यगामिना यस्मिन्युग्यमादिपदे स्थितानां परकीयैः शारैरनाक्रमणं तत्स्थानमिह अयानयशब्देन लक्षणयोच्यत इत्यर्थः। एतत्सर्वं भाष्ये स्पष्टम्। "समहायस्य शारस्य परैर्नाक्रम्यते पदम्। असहायस्तु शारेण परकीयेण बाध्यते। इति द्यूतशास्त्रामर्यादा। विस्तरस्तु कैयटमनोरमादावनुसन्धेयः। तं नेय इति। तं=स्थानविशेषमयानयाख्यं, प्रापणीय इत्यर्थः। णीञ्द्विकर्मकः। "प्रधाने कर्मणि यत्, अप्रधाने द्वितीया" इति भावकर्मलकारप्रक्रियायां वक्ष्यते।

तत्त्व-बोधिनी

अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु १३७७, ५।२।९

अनुपदसर्वान्नायानयं। "बद्धाभक्षयती"त्यत्र निपातनातिङन्तेन सह द्वन्द्वः। द्वितीयान्तेभ्योऽनुपादादिभ्यो यथासङ्ख्यं बद्धादिष्वर्थेषु खः स्यात्। अनुरायाम इत्यादि। "यस्य चायामः"इति , यथार्थे--"ऽव्यय"मिति वा अव्ययीभाव इत्यर्थः। सर्वान्नीन इति। प्रकारकात्स्न्र्ये सर्वशब्दः। यान्यन्नानि लभ्यन्ते उष्णानि शीतलामि सरसानि वा सर्वाणि भक्षयतीत्यर्थः। "अयः---प्रदक्षिणगमनम्। अनयः---प्रसव्यगमनम्। प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परैरसमावेशः सोऽयमयानः"इति काशिका। तं नेय इति। नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया। आयानयीनः शारैति। "फलकशिरसि स्थित इत्यर्थः"इति काशिका।

---

सूत्रम्

काशिका-वृत्तिः

परोवरपरम्परपुत्रपौत्रम् अनुभवति ५।२।१०

परोवर परम्पर पुत्रपौत्र इत्येतेभ्यः तदिति द्वितीयासमर्थेभ्यः अनुभवति इत्यस्मिनर्थे खः प्रत्ययो भवति। परोवर इति परस्योत्वं प्रत्ययसंनियोगेन निपात्यते। परांश्च अवरांश्च अनुभवति परोवरीणः। परपरतराणां च परम्परभावो निपात्यते। परांश्च परतरांश्च अनुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। परम्परशब्दो विनापि प्रत्ययेन दृश्यते, मन्त्रिपरम्परा मन्त्रं भिनत्ति इति। तच्छब्दान्तरम् एव द्रष्टव्यम्।

न्यासः

परोवरपरम्परपुत्रपौत्रमनुभवति। , ५।२।१०

कथं पुनरप्रत्ययसन्नियोगेन निपातनस्य विना प्रत्ययेन दर्शनमुपपद्यते? इत्याह--"तच्छब्दान्तरमेव द्रष्टव्यम्()" इति॥

बाल-मनोरमा

परोवरपरम्परपुत्रपौत्रमनुभवति १७८८, ५।२।१०

परोवर। परोवर, परम्पर, पुत्रपौत्र-एभ्यो द्वितीयान्तेभ्योऽनुभवतीत्यर्थे खः स्यादित्यर्थः। परोवरीण इति। परे च अवरे च परावरेताननुभवतीत्यर्थः। अवरस्योत्त्वमिति। अवरशब्दस्य आदेरकारस्य खप्रत्ययसंनियोगेन उत्त्वं निपात्यत इत्यर्थः। एवं च विग्रहवाक्ये इदमुत्त्वं न भवति। प्रकृतेरिति। परपरतरशब्दाद्द्वन्द्वात्खे सति तत्सन्नियोगेन प्रकृतेः परम्परभावो निपात्यत इत्यर्थः। नन्वेवं सति "कल्याणपरम्परे"त्यादौ कथं परम्पराशब्दः?, परम्परभावस्य खप्रत्ययसन्नियोगशिष्टत्वादित्यत आह--परम्पराशब्दस्त्विति। तस्मादेवेति। "परम्परे"त्यव्युत्पन्नप्रातिपदिकादेवेत्यर्थः। कथमिति। परावरशब्दाद्भावे वा स्वार्थे वा ष्यञि अवरस्यादेरुत्वे पारोवर्यशब्दान्मतुपि पारोवर्यवदिति कथमित्याक्षेपः, उत्त्वस्य खप्रत्ययसन्नियोगाशिष्टत्वादिति भावः। उत्त्वं दुरुपपादमेवेत्याह--असाधुरेवेति। नन्वत्र परोवरेति निर्देशात्--खादन्यत्राप्युत्त्वं किं न स्यादित्यत आह--खप्रत्ययसन्नियोगेनैवेति। अत एव भाष्ये "परांश्चावरंश्चानुभवती"त्येव विग्रहो दर्शित इति भावः।

तत्त्व-बोधिनी

परोवरपरम्परपुत्रपौत्रमनुभवति १३७८, ५।२।१०

अवरस्येति। "आदे"रिति शेषः। उत्वे कृते "आद्गुणः"। केचुत्तु ओत्वं परशब्दस्य निपात्यते, तस्मात्परस्याऽतः "एङः

पदान्ता"दिति पूर्वरूपादेश इति पक्षान्तरमाहुः।

---

सूत्रम्

काशिका-वृत्तिः

अवारपारात्यन्तानुकामं गामी ५।२।११

अवारपार अत्यन्त अनुकाम इत्येतेभ्यो द्वितीयासमर्थेभ्यः गामी इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। गमिष्यति इति गामी, भविष्यति गम्यादयः ३।३।३ इति। अकैनोर् भविस्यदाधमर्ण्ययोः । इति षष्ठीप्रतिषेधः। अवारपारं गामी अवारपारीणः। विपरीताच् च। पारावारीणः। विगृहीतादपि इष्यते। अवारीणः। अत्यन्तं गामी अत्यन्तीनः। भृशं गन्ता इत्यर्थः। अनुकामं गामी अनुकामीनः। यथा इष्टं गन्ता इत्यर्थः।

न्यासः

अवारपारात्यन्तानुकामं गामी। , ५।२।११

"गामी" इति। "आवश्यकाधमण्र्ययोर्णिनिः" ३।३।१७० इत्यावश्यकार्थे णिनिः। भविष्यति चायं काले गामिशब्दो वत्र्तते, यदाह--"गमिष्यतीति गामी"। सा च भविष्यति वृत्तिः "भविष्यति गम्यादयः" ३।३।३ इति वचनाल्लभ्यते; इत्याह--"भविष्यति" इत्यादि। "अकेनोर्भविष्यदाधमण्र्ययोरिति षष्ठीप्रतिषेधः" इति। तेन द्वितीयासमर्थतोपपद्यत इत्यभिप्रायः। कृद्योगा हि षष्ठी द्वितीयाया अपवादः, तेन षष्ठीप्रतिषेधे हि सति द्वितीययैव भवितव्यम्()। "अवारपारम्()" इति। अवारस्य पारमिति षष्ठीसमासोऽयम्()। वा च षष्ठ्याः पूर्वनिपातो वक्तव्यः। तेन पक्षे पारावारमित्यपि भवति। "विगृहीतादपि" इति। ["भवति"-मुद्रितः पाठः] "विपरीताच्च" इति। कथं पुनरधिकारादेव द्वितीयासमर्थविभक्तौ लब्धायामिहाधिकं द्वितीयोपादानं कृतम्()? एतेन तदधिकस्य विधिर्भवतीति सूचितम्()। तेन विगृहीताद्विपरीताच्च प्रत्यय उपपद्यते। "अत्यन्तम्()" इति। अन्तस्याभावोऽत्ययो वेति। "अव्ययं विभक्ति" २।१।६ इत्यादिनाऽव्ययीभावः। अथ वा--अन्तमतिक्रान्तमिति "कुगति" २।२।१८ इत्यादिना तत्पुरुषः। क्रियाविशेषणञ्चैतत्()। "भृशं गन्तेत्यर्थः" इति। भृशार्थत्वेन लोकेऽत्यन्तशब्दस्य प्रसिद्धत्वात्()। "अनुकामम्()" इति। कामसदृशमनुकामम्()। कामनुरूपमित्यर्थः। यथार्थेऽव्ययीभावः। इदमपि क्रियाविशेषणमेव॥

बाल-मनोरमा

अवारपारात्यन्तानुकामं गामी १७८९, ५।२।११

अवारपार। अवारपार, अत्यन्त, अनुकाम--एभ्यो गामीत्यर्थे खः स्यादित्यर्थः। गामीत्यस्य अवश्यं गमिष्यन्नित्यर्थः। "आवश्यकाधमण्र्ययोर्णिनि"रिति णिनिः। "भविष्यति गम्यादयः" इति भविष्यत्कालता। "बहुलमाभीक्ष्ण्ये" इति वा णिनिः। अवारपारीण इति। अवारपारं गामीति विग्रहः। अवारपारशब्दाद्विगृहीताद्विपरीतादपि, व्याख्यानात्। तदाह--अवारीणः पारीण इति। अत्यन्तीन इति। अत्यन्तशब्दोऽत्र भृशवाची। तदाह--भृशं गन्तेति। अनुकाममिति। कामः=इच्छा। तामनतिक्रम्येत्यर्थः। पदार्थानतिवृत्तावव्यायीभावः।

तत्त्व-बोधिनी

अवारपारात्यन्तानुकामं गामी १३७९, ५।२।११

अवारपार। गामीति। "गमेरिनिः, आङि णिच्चे"ति बहुलवचनात्केवलादपि णिनिः। "भविष्यति गम्यादयः"इति भविष्यत्कालता। न्यासकारस्तु "आवश्यके णिनिः, सोऽपि भविष्यत्येवे"त्याह। अवारपारमिति।

अकतेनोर्भविष्यदाधमण्र्ययो"रिति षषाठीप्रतिषेधः। केचित्तु "गत्र्थकर्मणी"ति सूत्रे द्वितीयाग्रहणमपवादविषये विधानार्थम्। तेन कृद्योगषष्ठी न भवति "ग्रामं गन्ते"तिवदिति व्याचख्युः। तदसत्। "अकेनो"रिति प्रतिषेधे षष्ठीप्रसङ्गस्यैवाऽभावात्। अवारीण इत्यादि। "विगृहीताद्विपरीतादपीष्यते"इति भावः। अत्यन्तमिति। क्रियाविशेषणम्। अनुकाममिति। काम इच्छा , तस्य सद्दशमनुकामम्। कामानुरूपमित्यर्थः। "अव्ययं विभक्ती"ति यथार्थेऽव्ययीभावः।

---

सूत्रम्

काशिका-वृत्तिः

समांसमां विजायते ५।२।१२

समांसमाम् इति वीपसा। सुबन्तसमुदायः प्रकृतिः। विजायते गर्भं धारयति इति प्रत्ययार्थः। गर्भधारणेन सकला ऽपि समा व्याप्यते इति अत्यन्तसंयोगे द्वितीया। समांसमां विजायते समांसमीना गौः। समांसमीना वडवा। पूर्वपदे सुपो ऽलुग् वक्तव्यः। केचित् तु समायां विजायते इति विगृह्णन्ति, गर्भमोचने तु विजनिर् वर्तते इत्याहुः। तेषां पूर्वपदे यलोपमात्रं निपात्यते, परिशिष्टस्य अलुग् वक्तव्यः। अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः। समांसमांविजायते, समायां समायां विजायते इति वा।

न्यासः

समांसमां विजायते। , ५।२।१२

"समां समास" इति। "नित्यवीप्सयोः" ८।१।४ इति वीप्सायां द्विर्वचनम्()। अत आह--"समांसमामिति वीप्सा" इति। "सुबन्तसमुदायः प्रकृतिः" इति। प्रातिपदिकाधिकारे वचनसामथ्र्यात्()। "गर्भं धारयतीत्यर्थः" इति। अनेकार्थत्वाद्धातूनाम्()। "पूर्वपदे सुपोऽलुग्वक्तव्यः" इति। तद्धित उत्पन्ने "कृत्तद्धितसमासाश्च"१।२।४६ इति प्रातिपदिकसंज्ञायां सत्यां "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति सुब्लुक्? प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः। "गर्भविमोचनेऽपि विजनिर्वत्र्तत इत्याहुः" इति। तदेवं मन्यते--यदा गर्भधारणे वत्र्तते तदत्यन्तसंयोगे द्विकतीयैवात्र, न सप्तमी। गर्भविमोचने विजनावुपपद्यते सप्तमी। "यलोपमात्रम्()" इति। न हि गर्भविमोचनेन सकला समा व्याप्यत इति मात्रशब्देन सर्वस्या विभक्तेर्लोपो न भवतीति दर्शयति। "परिशिष्टस्य" इति। आम्शब्दस्य। "अनुत्पत्तौ" इति। तद्धितस्य। "उत्तरपदस्य च" इति। चकारात्? पूर्वपदस्य लोपो वक्तव्य इति यकारस्य प्रत्ययसन्नियोगेन विधीयमानो लोपस्तदभावे न प्राप्नोतीति पक्ष उपसंख्यायते॥

बाल-मनोरमा

समासमां विजायते १७९०, ५।२।१२

समां समाम्। विपूर्वो जनिर्गर्भविमोचने वर्तते। विजायते=गर्भं विमुञ्चतीत्यर्थः। धात्वर्थेनोपसङ्ग्रहादकर्मकः। अतो न कर्मणि द्वितीया। गर्भविमोचनेन कृत्स्नायाः समाया अव्यापनादत्यन्तसंयोगलक्षणा द्वितीयापि न भवति। किंतु सप्तम्येव। तत्र सप्तम्यन्तस्य समाया"मित्यस्य "नित्यवीप्सयो"रिति द्विर्वचने समायां--समायामिति भवितव्यम्। तत्र पदद्वयमपि यकारलोपसहितं निर्दिश्यते--समां समामिति। समायां समायामित्यर्थः। एवं च समायां समायां विजायत इत्यर्थे सप्तम्यन्तद्वयसमुदायाद्विजायत इत्यर्थः। खः स्यादिति फलितम्। ननु सप्तम्यन्तद्वयसमुदायात्खप्रत्ययोत्पत्तौ तदन्तस्य समुदायस्य प्रातिपदिकत्वात्तदवयवयोः सप्तम्योर्लुकि "समासमीन" इति स्यात्, इष्यते तु "समांसमीने"ति। तदा--यलोप इति। पूर्वपदे विभक्ते तदवयवस्य यकारस्य लोपः अवशिष्यस्य विभक्त्यंशस्य अलुक्च निपात्यत इत्यर्थः। भाष्ये तु "यलोपनिपातनादवशिष्टविभक्त्यंशस्य न लु"गित्युक्तम्। ननु समां समामिति निर्देशादुत्तरपदेऽपि यकारलोपः,

अवशिष्टविभक्त्यंशस्य अलुक्च स्यादित्यत आह--पूर्वपदे इति। "पूर्वपदस्य यलोपवचन"मिति वार्तिकादिति भावः।

खप्रत्ययानुत्पत्ताविति। "पदतद्वयेऽपी"ति शेषः। इह विभाषया कदाचित्खप्रत्ययाऽभावे सति "समायां समायं विजायते" इति वाक्यदशायां सप्तम्यन्तद्वये यकारलोपो वा वक्तव्य इत्यर्थः। तत्र पदद्वयेऽपि निपातनादेव यकारलोपः सिद्धः, सूत्रे उभयत्रापि तथोच्चारणात्। विकल्प एव तु यलोपस्य वाक्यदसायां वाचनिक इति बोध्यम्। एतत्सर्वं भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

समांसमां विजायते १३८०, ५।२।१२

समांसमाम्। यलोप इति। "समाया"मित्यत्र यकारलोप इत्यर्थः। पूर्वपदे निपात्यत इति। अन्यथा तद्धिते उत्पन्ने यथोत्तरपदे सुपो लुग्भवति "सुपो धातुप्रातिपदिकयो"रिति, तथा पूर्वपदेऽपि स्यादिति भावः। समांसमीनेचि। वीप्सायां द्विर्वचनम्। सुबन्तसमुदायः प्रकृतिः। विजायत इत्येतद्व्याचष्टे---प्रसूयत इति। विपूर्वको जनिर्गर्भविमोचने वर्तत इति भावः। गर्भविमोचने कृत्स्नायाः समाया व्याप्त्यभावात् "अत्यन्तसंयोगे चे"ति द्वितीया नभवतीत्याशयेनाह---समायामित्यादि।

खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः। "खप्रत्ययानुत्पत्ता"विति। वार्तिकेन समांसमामिति सौत्रप्रयोगस्तूपपन्न इति भावः। अद्य()आईना। अविभक्तिको निर्देशो न तु स्त्रीलिह्गनिर्देशोऽयम्, "अद्य()आईनो गोसमूहः " "अद्य()आईनं गोमण्डल"मित्यादावपीष्टत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

अद्यश्वीना अवष्टब्धे ५।२।१३

विजायते इति वर्तते। अद्यश्वीन इति निपात्यते अवष्टब्धे विजने, आसन्ने प्रसवे। आविदूर्ये हि मूर्धन्यो विधीयते अवाच् च आलम्बनाऽविदूर्ययोः ८।३।६८ इति। अद्य वा श्वो वा विजायते ऽद्यश्वीना गौः। अद्यश्वीना वडवा। केचित् तु विजायते इति न अनुवर्तयन्ति, अवष्टब्धमात्रे निपातनम् इत्याहुः। अद्यश्वीनं मरणम्, अद्यश्वीनो वियोगः इति।

न्यासः

अद्य�आईनावष्टब्धे। , ५।२।१३

"अवष्टब्धे विजन आसन्ने प्रसवे" इति। अत्र पूर्वयोः पदयोरुत्तराभ्यां यथाक्रममर्थाख्यानम्()॥

बाल-मनोरमा

अद्य�आईनावष्टब्धे १७९१, ५।२।१३

अद्य()आईनाऽवष्टब्धे। "अद्य()आईने"त्यविभक्तको निर्देशः। अवष्टब्धम्ासन्नम्। "अवाच्चालम्बनाविदूर्ययो"रित्याविदूर्ये स्तन्भेः षत्वविधानात्। अद्य ()आओ वा विजायत इत्यर्थे अद्य ()आसिति समुदायात्खः स्यादासन्नत्वे गम्ये इत्यर्थः। अद्य()आईना वडवेति। अद्य वा ()आओ वेति वार्थे निपानात्समासः। खे सति "अव्ययानां भमात्रे" इति टिलोपः। सूत्रे अद्य()आईनेति टाबन्तनिर्देशे तु अद्य()आईनो गोसमूहः, अद्य()आईनां गोमण्डलमिति न स्यात्।

तत्त्व-बोधिनी

अद्य�आईनावष्टब्धे १३८१, ५।२।१३

अद्य ()आओ वेति। निपातनाद्वाऽर्थे समासोऽयमिति भावः। "अवाच्चालम्बने"ति सूत्रेण आविदूर्ये स्तन्भेः षत्वविधानादवष्टब्धशब्द आसन्नपरः। "विजायते"इति हि वर्तते। स च गर्भविमोचनार्थकः। तदाह---आसन्नप्रसतेत्यर्थ इति।

---

सूत्रम्

काशिका-वृत्तिः

आगवीनः ५।२।१४

आगवीनः इति निपात्यते। गोः आङ्पूर्वादा तस्य गोः प्रतिपादनात् कर्मकारिणि खः प्रत्ययो निपात्यते। आगवीनः कर्मकरः। यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात्।

न्यासः

आगवीनः। , ५।२।१४

बाल-मनोरमा

आगवीनः १७९२, ५।२।१४

आगवीनः। कर्मकरे इति। वार्तिकलभ्यमिदम्। भृतिं गृहीत्वा यः कर्म करोति स--कर्मकरः। अत्र गोपालो विवक्षितः। स हि प्रातर्गां गृहीत्वा आसायं चारयित्वा स्वाभिनो गृहं नीत्वा प्रत्यर्पयति। तदाह--गोः प्रत्यर्पणेति। आगवीन इति। "गो" शब्दो गोप्रत्यर्पणे लाक्षणिकः। "आङ्मर्यादाभिविध्यो"रित्यव्ययीभावे "गोस्त्रियो"रिति ह्रस्वत्वे, आगुशब्दात्खे "ओर्गुणः" इति भावः।

तत्त्व-बोधिनी

आगवीनः १३८२, ५।२।१४

कर्मकतरे इति। यस्तु प्रातर्गा गृहीत्वा गच्छति गोपालस्तस्मिन्नित्यर्थः। गोः प्रत्यर्पणपर्यन्तमिति। गोशब्दो लक्षणया गोः प्रतिदाने वर्तते इति भाव। आगवीन इति। "आङ्भर्यादाभिविध्यो"रित्यव्ययीभङावे "गोस्त्रियो"रिति ह्रस्वे कृतो खप्रत्ययः। "ओर्गुणः"।

---

सूत्रम्

काशिका-वृत्तिः

अनुग्वलङ्गामी ५।२।१५

गोः पश्चादनुगु। अनुगुशब्दादलङ्गामी इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। अनुगु पर्याप्तं गच्छति अनुगवीनः गोपालकः।

न्यासः

अनुग्वलङ्गामी। , ५।२।१५

बाल-मनोरमा

अनुग्वलंगामी १७९३, ५।२।१५

अनुग्वलंगामी। "अनुगु" इत्यविभक्तिको निर्देशः। गोः पश्चादिति विग्रहे पश्चादर्थे अनोरव्ययीभावे ह्रस्वत्वे अनुगुशब्दः। तस्मादलङ्गामीत्यर्थे खः स्यादित्यर्थः। अत्र "अनुगु" इत्यस्य क्रियाविशेषणत्वाद्द्वितीयैव समर्थविभक्तिरिति हरदत्तः। कृद्योगषष्ठीत्यन्ये। "अलङ्गामी"त्यत्र अलंशब्दस्य विवरणं--पर्याप्तमिति। क्रियाविशेषणम्।

तत्त्व-बोधिनी

अनुग्वलंगामी १३८३, ५।२।१५

अनुग्वलं। "ख"इत्यनुवर्तते। अनुगुशब्दात् "अलंगामी"त्यस्मिन्नर्थे खः स्यात्। गोः पश्चादिति। पश्चादर्थेऽव्ययीभावः। पर्याप्तिमिति। क्रियाविशेषणम्। अत्र हरदत्तः---अनुग्वित्यस्य क्रियाविसेषणत्वाद्द्वितीयान्तादिह प्रत्ययः। न चालङ्गामीत्यस्य "सुप्यजातौ"इति णिनिप्रत्ययान्ततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यं, क्रियाविशेषणात्तदप्रवृत्तेः, "शोभनं पाचक"इत्यादौ तथादर्शनादित्याह। अत्र केचित्---धातूपात्तव्यापारजन्यफलाश्रयत्वं यत्र तन्मुख्यं कर्म, यत्र तु व्यापारजन्यत्वमात्रं तदौपचारिकम्। ततश्च "तण्डुलाना पाचक"इत्यत्र मुख्ये कर्मणि कृद्योगलक्षणा षष्ठी भवति। "मृदु पाचकः" "शोभनं पाचक"इत्यत्र तु सा न भवति, फलव्यापारयोः क्रियाकर्मभावव्यवहारे सत्यपि फलस्योपचारिककर्मत्वात्, तद्विशेषणत्वाच्च मृद्वादेरिति तस्याशयैत्याहुः। अन्ये त्वेवं तर्हि तुल्यन्यायेन क्रियाविशेषणाद्द्वितीययाया अप्यप्रवृत्तिः स्यात्। तस्मात् "तदर्ह मिति निर्देशादनित्या कृद्योगषष्ठीति क्रियाविशेषणात्सान स्वीक्रियत इति हरदत्ताशयः कथं चिद्वर्णनीय इत्याहुः। वस्तुतस्तु पश्चादर्थेऽव्ययीभावोऽयमिति निर्बिवादम्। पश्चादिति चाऽस्तत्यर्थे निप#आतितम्। तच्च यद्यपि विभक्तित्रयसाधारणं तथापीह योग्यताबलात्सप्तम्यर्थवृत्तिः। अतस्तस्य कर्मत्वाऽयोगात्प्रथमान्तादेवेह प्रत्यय इति वक्तुमुचितम्। कृद्योगलक्षणषष्ठीशङ्काऽप्यत एव नेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

अध्वनो यत्खौ ५।२।१६

ततिति द्वितीया समर्थविभक्तिरनुवर्तते। अलङ्गामी इति च प्रत्ययार्थः। अध्वन्शब्दात् द्वितीयासमर्थादलङ्गामी इत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः। अध्वानम् अलङ्गामी अध्वन्यः, अध्वनीनः। ये च अभवकर्मणोः ६।४।१६८, आत्माध्वानौ खे ६।४।१६९ इति प्रकृतिभावः।

न्यासः

अध्वनो यत्खौ। , ५।२।१६

बाल-मनोरमा

अध्वनो यत्खौ १७९४, ५।२।१६

अद्वनो यत्खौ। अध्वन्शब्दादलिङ्गमीत्यर्थे यत्खौ स्त इत्यर्थः। अध्वानमलंगच्छतीति। अलङ्गामीत्यनेन विग्रहे तु अध्वनोऽलङ्गामीत्येव विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

अभ्यमित्राच् छ च ५।२।१७

अभ्यमित्रशदात् द्वितीयासमर्थातलङ्गामी इत्यस्मिन्नर्थे छः प्रत्ययो भवति। चकाराद् यत्खौ च। अभ्यमित्रम् अलङ्गामी अभ्यमित्रीयः अभमित्र्यः, अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छति इत्यर्थः।

न्यासः

अभ्ययित्राच्छ च। , ५।२।१७

"अभ्यमित्रात्()" इति। अमित्रस्याभिमुखमभ्यमित्रम्()। "लक्षणेनाभिप्रती आभिमुख्ये" २।१।१३ इत्यव्ययीभावः। क्रियाविशेषणञ्चैतत्()। तेन द्वितीयैव समर्थविभक्तर्भवति॥

बाल-मनोरमा

अभ्यमित्राच्छ च १७९५, ५।२।१७

अब्यमित्राच्छ च। अमित्रः=शत्रुः। तमभिमुखो भूत्वेत्यर्थे "लक्षणेनाभिप्रती आभिमुख्ये" इत्यव्ययीभावे अभ्यमित्रशब्दः। तस्मादलङ्गामीत्यर्थे छप्रत्ययः स्यादित्यर्थः।

तत्त्व-बोधिनी

अभ्यमित्राच्छ च १३८४, ५।२।१७

अभ्यमित्रात्। अभ्यमित्रशब्दो "लक्षणेनाभिप्रती आभिमुख्ये"इत्यव्ययीबावः। क्रियाविशेषणत्वाद्द्वितीया समर्थविभक्तिः।

---

सूत्रम्

काशिका-वृत्तिः

गोष्ठात् खञ् भूतपूर्वे ५।२।१८

गावस्तिष्ठन्त्यस्मिनिति गोष्ठम्। गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते। भूतपूर्वग्रहणम् तस्य एव विशेषणम्। गोष्ठशब्दाद् भूतपूर्वोपाधिकात् स्वार्थे खञ् प्रत्ययो भवति। गोष्ठो भूतपूर्वः गौष्ठीनो देशः। भूतपूर्वग्रहणं किम्? गोष्ठो वर्तते।

न्यासः

गोष्ठात्खञ्? भूतपूर्वे। , ५।२।१८

"भूतपूर्वं चरट्()" (५।३।५३) इति प्राप्ते खञ्? विधीयते। "गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्()" इति। "सुपिस्थः" ३।२।४ इति कः, "अम्बाम्बगोभूमि" ८।३।९७ इत्यादिना मूर्धन्यः। "भूतपूर्वे" इति। पूर्वं भूत इति भूतपूर्वः। "सुप्सुपा" २।१।४ इति समासः। "भूतपूर्वग्रहणं तस्यैव विशेषणम्()" इति। अर्थद्वारकं वेदितव्यम्(), यथा--"धातोः कर्मणः समान" ३।१।७ इत्यादिसूत्रे कर्मत्वम्(), समानकर्तृकत्वञ्च॥

बाल-मनोरमा

गोष्ठात्खञ्भूतपूर्वे १७९६, ५।२।१८

गोष्ठात्खञ्। बूतपूर्व इति प्रकृतिविशेषणम्। भूतपूर्वार्थवृत्तेर्गोष्ठशब्दात्स्वार्थे खः स्यादिति वृत्तिकृतः।

तत्त्व-बोधिनी

गोष्ठात्खञ्भूतपूर्वे १३८५, ५।२।१८

गोष्ठात्खञ्। गावस्तिष्ठन्त्यस्मिन्निति घोष्ठः। "घञर्थे कविधानं"मित्यदिकरणे कः। "अम्बाम्बोगोभूमी"ति षत्वम्। पूर्वं भूतो भूतपूर्वः। "सुप्सुपे"ति समासः।

---

सूत्रम्

काशिका-वृत्तिः

अश्वस्यैकाहगमः ५।२।१९

निर्देशादेव समर्थविभक्तिः। अश्वशब्दाद् षष्ठीसमर्थातेकाहगमः इत्येतस्मिन्नर्थे खञ् प्रत्ययो भवति। एकाहेन गम्यते इति एकाहगमः। अश्वस्य एकाहगमो ऽध्वा आश्वीनः। आश्वीनानि शतं पतित्वा।

न्यासः

अश्वस्यैकाहगमः। , ५।२।१९

"एकाहेन गम्यत इति एकाहगमः" इति। "अकत्तरि च" ३।३।१९ इत्यादिना घञ्(), निपातनान्न वृद्धिः। "कर्त्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। "आ()आईनानि शतं पतित्वा" इति। एकाहेन यानि गम्यन्ते योजनानि तेषां शतं गत्वेत्यर्थः। शतं संख्येये वत्र्तमानं स्वसंख्योपादान एव स्वभावाद्वत्र्तते। तेना()आईनानि शतमित्या()आईनशब्देन बह्वर्थप्रवृत्तिसामानादिकरण्येऽप्येऽप्येकवचनान्तमेव प्रयुज्यते॥

बाल-मनोरमा

अ�आस्यैकाहगमः १७९७, ५।२।१९

अ()आस्यैकाहगमः। अ()आशब्दात्षष्ठ()न्तादेकाहगम इत्यर्थे खञ्स्यादित्यर्थः। "एकाहगम"शब्दं व्युत्पादयति--एकाहेनेति। अस्मादेव निपातनात्कर्मणि गमेरविति भावः। "कर्तृकरणे कृते"ति समासः। अ()आस्येति कर्तरि षष्ठी। आ()आओनोऽध्वेति। अ()ओन कत्र्रा एकाहेन गन्तुं शक्य इत्यर्थः।

तत्त्व-बोधिनी

अ�आस्यैकाहगमः १३८६, ५।२।१९

अ()आस्य। कर्तरि षष्ठीयं निर्देशादेव समर्थविभक्तिः। एकाहगम इति। "कर्तृकरणे कृते"ति समासः। नन्विह "ग्रहणवृद्दनिश्चिगमश्चे"त्यपं बाधित्वा "पारिमाणाख्यायां सर्वेभ्यः"इति घञ्प्राप्नोति, अस्ति चाऽत्र परिमाणख्या "एकाहेन गम्यते"इति परिच्छेदावगमात्। अत्राहुः---अस्मादेव निपातनादप्द्रष्टव्य इति।

---

सूत्रम्

काशिका-वृत्तिः

शालीनकौपीने अधृष्टाकार्ययोः ५।२।२०

शालीनकौपीनशब्दौ निपात्येते यथासङ्ख्यम् अधृष्टे अकार्ये च अभिधेये। अधृष्टः अप्रगल्भः। अकार्यम् अकरणार्हं विरुद्धम्। शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथञ्चिद् व्युत्पादयितव्यौ। शालाप्रवेशनम् अर्हति, कूपावतारम् अर्हति इति खञ् प्रत्ययः उत्तरपदलोपश्च निपात्यते। शालीनो जडः। कौपीनं पापम्।

न्यासः

शालीनकौपीने अधृष्टाकार्ययोः। , ५।२।२०

"यथाकथञ्चित्()" इति। येन केनचित्? प्रकारेण। नावयवार्थे प्रत्यभिनिवेशः कत्र्तव्य इति दर्शयति--"उत्तरपदलोश्च" इति। उत्तरपदं प्रवेशनशब्दोऽवतरणशब्दश्च, तस्य लोपः। "शालीनो जडः" इति। स हि जाड()आत्? प्रतिवचनमपि दातुं शक्तोऽप्यार्यैराद्रियमाणो न शक्नोति तत्र स्थातुम्()--जनता पश्यतीति, अतः शालाप्रवेशनमर्हति। शालाशब्दोऽयमिहि कुटीरवचनः। "कौपीनं पापम्()" इति। तद्धि लोके निन्धत्वादकाग्र्यत्वाच्चाकाग्र्यम्(), तल्लोके कूपेऽवतरणं प्रवेशनमर्हतीत्युच्यते। तत्सामथ्र्याच्छरीरावयवः कश्चित्कौपीनशब्देनोच्यते। यदपि तस्य शरीरावयवस्याच्छादनार्थं वासः, तदपि तत्सम्बन्धात्? प्रव्रजितादीनां कौपीनमित्युच्यते॥

बाल-मनोरमा

शालीनकौपीने अधृष्टाऽकार्ययोः १७९८, ५।२।२०

शालीन। "शालप्रवेशमर्हत्यधृष्ट" इति, "कूपावतरणमर्हत्यकार्य"मिति चाऽर्थे शालाप्रवेशशब्दात्कूपावतरणशब्दाच्च खञ्। "प्रवेशशब्दस्य अवतरणशब्दस्य चोत्तरपदस्य लोपे शालीनरौपीनशब्दौ निपात्येते" इति भाष्यम्। अधृष्ट इति। अप्रगल्भ इत्यर्थः। अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालाप्रवेशमेवार्हति यः स शालीन इति यावत्। कूपपतनमिति। कूपावतरणशब्दस्य विवरणमिदम्। कूपशब्दो नरकाभिधायी। कौपीनं पापमिति। नरकपतनसाधनमकार्यं पापमित्यर्थः। अनयोरर्थयोरेतौ रूढौ। ननु पुरुषलिङ्गे कौपीनशब्दो लाक्षणिक इत्यर्थः। तत्सम्बन्धादिति। पापसाधनत्वाद्वा, पापवदाच्छादनीयत्वाद्वा पुरुषलिङ्गे कौपीनशब्दो लाक्षणिक इत्यर्थः। तत्सम्बन्धादिति। कौपीनशब्दस्य लक्ष्यपुरुषलिङ्गसंबन्धात्तदाच्छादनवस्त्रखण्डे कौपीनशब्दो लक्षितलक्षणया प्रयुज्यत इत्यर्थः।

तत्त्व-बोधिनी

शालीनकौपीने अधृष्टाऽकार्ययोः १३८७, ५।२।२०

शलीनकौपीने। इमौ खप्रत्ययान्तत्वेन निपात्येते। रूढिशब्दावेतौ कथंचिद्व्युत्पाद्याविति नात्राऽवयवार्थेऽभिनिवेशः कार्यः। शालाप्रवेशमिति। अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः। कूपपतनमिति। यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः। तदाच्छादनमिति। वासःखण्ड इत्यर्थः। अन्ये त्वाहुः---अकार्यशब्दे यः करोति स क्रियासामान्यवचनः, तेन लज्जाहेतुत्वेन अद्रष्टव्यत्वात्पुरुषलिङ्गं "कौपीनम्"ष। अस्पृश्त्वात्तदाच्छादनमिति।

---

सूत्रम्

काशिका-वृत्तिः

व्रातेन जीवति ५।२।२१

निर्देशादेव तृतीया समर्थविभक्तिः। व्रातशब्दात् तृतीयासमर्थात् जीवति इत्यस्मिन्नर्थे खञ् प्रत्ययो भवति। नानाजातीयाः अनियतवृत्तयः उत्सेधजीविनः सङ्घाः व्राताः। उत्सेधः शरीरं, तदायास्य ये जीवन्ति ते उत्सेधजीविनः, तेषा कर्म व्रातम्। तेन व्रातेन जीवति व्रातीनः। तेषाम् एव व्रातानामन्यतम उच्यते। यस्त्वन्यस्तदीयेन जीवति तत्र न इष्यते।

न्यासः

व्रातेन जीवति। , ५।२।२१

"नानाजातीयाः" इति। अनेकजातीयाः। "अनियतवृत्तयः" इति। अनियतक्रियाः। "तेषां कर्म व्रातम्()" इति। व्रातसाहचर्यात्? तदपि व्रातमित्युच्यते। अथ वा--व्रातानामिदमित्यर्थविवक्षायां छे प्राप्ते, अस्मादेव निपातनादण्? भवति। तत्पुनः कर्म भारवहनादि। "तत्र नेष्यते" इति। कथं पुनरिष्यमाणोऽपि न भवति प्रकृतायां महाविभाषायां व्यवस्थितविभाषात्वात्()॥

बाल-मनोरमा

व्रातेन जीवति १७९९, ५।२।२१

व्रातेन जीवति। व्रातशब्दात्तृतीयान्ताज्जीवतीत्यर्थे खञ्स्यादित्यर्थः। नानाजातीयानामलब्धजीवनद्रव्याणां भरवहनादिकष्टकर्मजीविनां सङ्घो--ब्राआतः। तस्य यज्जीवनार्थं कष्टं कर्म तदिह व्रातमिति भाष्यम्। तादृशसङ्घावाचिनो व्रातशब्दात् "तस्येद"मित्यणि व्रातशब्दोऽत्र तदीयकर्मणि विवक्षित इति तदाशयः। तदाह--शरीरायासेनेति।

तत्त्व-बोधिनी

व्रातेन जीवति १३८८, ५।२।२१

शरीरायासेनेति। भारवहनादिनेत्यर्थः। यद्यपि व्रातशब्दो लोके सङ्घातवचनः, तथाप्यत्रत्यभाष्यादिग्रन्थपर्यालोचनया अयमेवार्थ इहोचित इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

साप्तपदीनं सख्यम् ५।२।२२

साप्तपदीनम् इति निपात्यते सख्ये ऽभिधेये। सप्तभिः पदैरवाप्यते साप्तपदीनम्। सख्यं जनाः साप्तपदीनम् आहुः। कथं साप्तपदीनः सखा, साप्तपदीनं मित्रम् इति? यदा गुणप्रधानः साप्तपदीनशब्दः सखिभावे तत्कर्मणि च वर्तते तदा सख्यशब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया वर्तते तदा पुरुषेण सामानाधिकरण्यं भवति।

न्यासः

साप्तपदीनं सख्यम्?। , ५।२।२२

"साप्तपदीनमिति निपात्यते" इति। किं पुनरत्र निपात्यते? प्रत्ययः प्रत्ययार्थश्च प्रकृतः। खञ्प्रत्ययार्थश्चावाप्तिः। सप्तभिः पदैरवाप्यत इति तद्धितार्थे समासः। ततः सप्तपदशब्दात्खञ्()। "कथम्()" इत्यादि। सख्युभविः कर्म वा सख्याम्()। तत्र यदि साप्तपदीनमिति निपत्यते, सखिशब्देन सामानादिकरण्यं न प्राप्नोति, न हि सख्यमेव सखा भवतीति प्रष्टुरभिप्रायः। "गुणप्रधानः" इत्यादि। गुणो भावः कर्म वा प्रधानं यस्य स तथोक्तः। स यदा च गुणमात्रे मुख्यया वृत्त्या वत्र्तते तदा गुणप्रधानो वेदितव्यः। "तदा सख्यशब्देन सामानाधिकरण्यं भवति" इति। द्वयोरप्येकार्थवृत्तित्वात्()। "यदा तु" इत्यादि। लक्षणा उपचारः। धर्मधर्मिणोरभेनोपचारेण गौण्या वृत्त्या तद्धिति संख्यावति पुरुषे वत्र्तते तदानेनैव समानाधिकरणो भवति। यथा यदा शुक्लशब्दो गुणमात्रे वत्र्तते तदा द्रव्यशब्देन समानाधिकरणो न भवति--पटस्य शुक्ल इति, यदा त्वसौ त्वमित्यभिसम्बन्धात्? पटे वत्र्तते तदा सामानाधिकरण्यं भवति--शुक्लः पद इति; तथेहापि वेदितव्यम्()॥

बाल-मनोरमा

साप्तपदीनं सख्यम् १८००, ५।२।२२

साप्तपदीनम्। सप्तपदशब्दात्तृतीयान्तादवाप्यं सख्यमित्यर्थे खञि साप्तपदीनमिति भवतीत्यर्थः। सप्तभिः पदैरिति।

पदविक्षेपैरित्यर्थः।

तत्त्व-बोधिनी

साप्तपदीनं सख्यम् १३८९, ५।२।२२

साप्तपदीनम्। योग्यतया समर्थविभक्तिस्तृतीयेति दर्शयति---सप्तभिः पदैरिति। पदमिह संभाषणं पादवक्षेपो वा तद्धितार्थे द्विगुः। अवाप्यतैत्यर्थे खञ्।

---

सूत्रम्

काशिका-वृत्तिः

हैयङ्गवीनं संज्ञायाम् ५।२।२३

हैयङ्गवीनं निपात्यते संज्ञायां विषये। ह्योगोदोहस्य हियङ्गवादेशः, तस्य विकारे खञ् प्रत्ययो भवति संज्ञायाम्। ह्योगोदोहस्य विकारः हैयङ्गवीनम्। घृतस्य संज्ञा। तेन इह न भवति, ह्योगोदोहस्य विकार उदश्वित्।

लघु-सिद्धान्त-कौमुदी

हैयङ्गवीनं संज्ञायाम् ११६९, ५।२।२३

ह्योगोदोहशब्दस्य हियङ्गुरादेशः विकारार्थे खञ्च निपात्यते। दुह्यत इति दोहः क्षीरम्। ह्योगोदोहस्य विकारः - हैयङ्गवीनं नवनीतम्॥

न्यासः

हैयङ्गवीनं संज्ञायाम्?। , ५।२।२३

"ह्वोगोदोहस्य हियङ्ग्वादेशः" इति। ह्वोगोदोहस्य हियङ्गशब्द आदेश इत्यर्थः। ह्वौ गोदोहनं ह्वोगोदोहः, "सुप्सुपा" २।१।४ इति समासः। "विकारे खञ्प्रत्ययः" इति। "तस्य विकारः" ४।३।१३२ इति प्राप्तसयाणोऽपवाद इति॥

बाल-मनोरमा

हैयङ्गवीनं संज्ञायाम् १८०१, ५।२।२३

हैयङ्गवीनम्। ह्वसित्यव्ययं पूर्वेद्यरित्यर्थे। तत्रोत्पन्नो गोदोहः=गोपयः-ह्वोगोदोहः। तस्मात्षष्ठ()न्ताद्विकारार्थे खञि ईनादेशे प्रकृतेर्हियङ्गु इत्यादेशे ओर्गुणे अवादेशे आदिवृद्धौ "हैयङ्गवीन"मिति भवतिसंज्ञायामिति भाष्यम्। तदाह--ह्वोगोदोहस्येत्यादिना। नवनीतमिति। भाष्ये तु "हैयङ्गवीनं घृत"मिति दृश्यते। "तत्तु हैयङ्गवीनं स्याद् ह्वोगोदोहोद्भवं घृत"मित्यमरः।

तत्त्व-बोधिनी

हैयङ्गवीनं संज्ञायाम् १३९०, ५।२।२३

हैयंगबीनम्। ह्वोगोदोहस्येति। गोर्दोहो गोदोहः। षष्ठीसमासः। तेन सह ह्वस्शब्दस्य "सुप्सुपे"ति समासः। ततो विकारे अनुदात्तलक्षणस्याऽञोऽपवादः खञ्। अत्र ह्वस्शब्देन कालप्रत्यासत्तिर्विवक्षिता। नवनीतमिति। यद्यपि वृत्तौ "घृत"मित्युक्तं, तथैव चामरेणा"पि---"तत्तु हैयङ्गवीनं यद् ह्वोगोहोद्भवं घृत"मित्युक्तम्, तथापि घृतशब्देन नवतीतमेव विवक्षितमिति हरदत्तग्रन्थानुरोधेनेदमुक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

तस्य पाकमूले पील्वदिकर्णादिभ्यः कुणब्जाहचौ ५।२।२४

तस्य इति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासङ्ख्यं पाकमूलयोरर्थयोः कुणप् जाहचित्येतौ प्रत्ययौ भवतः। पीलूनां पाकः पीलुकुणः। कर्कन्धुकुणः। कर्णादिभ्यः कर्णस्य मूलं कर्णजाहम्। पीलु। कर्कन्धु। शमी। करीर। कुवल। बदर। अश्वत्थ। खदिर। पील्वादिः। कर्ण। अक्षि। नख। मुख। मख। केश। पाद। गुल्फ। भ्रूभङ्ग। दन्त। ओष्ठ। पृष्ठ। अङ्गुष्ठ। कर्णादिः।

न्यासः

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ। , ५।२।२४

अणोऽपवादौ। "तस्येदम्()" ४।३।१२० इत्यणि प्राप्ते कुणबदयो विधीयन्ते। जकारस्य प्रयोजनाभावात्? "धुटू" १।३।७ इतीत्संज्ञा न भवति॥

बाल-मनोरमा

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ १८०२, ५।२।२४

तस्य पाफमूले। "पाकमूले" इति समाहारद्वन्द्वात्सप्तमी। पाकः=परिणामः। षष्ठ()न्तेभ्यः पील्वादिभ्यः पाकेऽर्थे कुणप्। कर्णादिभ्यस्तु मूलेऽर्थे जाहजित्यर्थः। कुणपस्तद्धितत्वात्ककारस्य नेत्संज्ञा। जाहचस्तु जकारस्य प्रयोजनाऽभावान्नेत्संज्ञा।

तत्त्व-बोधिनी

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ १३९१, ५।२।२४

तस्य पाक। पाकः=परिणामः। मूलम्--उपक्रमः। "तस्येद"मित्यणादिषु प्राप्तेष्वयमारम्भः। जाहचो जकारस्य प्रयोजनाऽभावान्नेत्वम्। पीलु, कर्कन्धु,शमी, करीर, कुवल, बदर, [अ()आथ] थदिर--पील्वादिः। कर्ण, अक्षि, नख, मुख,केश, पाद,गुल्फ, भ्रू, श्रृङ्ग, दन्त, ओष्ठ, पृष्ठ,---कर्णादिः।मूलग्रहणमात्रमिति। एकादेशे स्वरितत्वप्रतिज्ञानादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पक्षात् तिः ५।२।२५

तस्य इत्येव। तस्य इति षष्ठीसमर्थात् पक्षशब्दात् मूले ऽभिधेये तिः प्रत्ययो भवति। मूलग्रहणम् अनुवर्तते, न पाक्षग्रहणम्। एकयोगनिर्दिष्टानाम् अप्येकदेशो ऽनुवर्तते इति। पक्षस्य मूलं पक्षतिः प्रतिपत्।

न्यासः

पक्षात्तिः। , ५।२।२५

"एकयोगनिर्दिष्टानाम्()" इति। स्वरितत्वेनादिशब्दानामनुवृत्तिर्भवति। स्वरितत्वप्रतिज्ञाप्रतिबद्धत्वात्()। एकयोगनिर्दिष्टानामपि यत्र प्रतिज्ञायते स्वरितत्वं तत्रैव भवति, नान्यत्र।

तेनैकयोगनिर्दिष्टनामप्येकदेशस्यानुवृत्तिरुपपद्यते॥

बाल-मनोरमा

पक्षात्तिः १८०३, ५।२।२५

पक्षात्तिः। मूलग्रहणमात्रमिति। पूर्वसूत्रे पाकमूल इति समासनिर्दिष्टत्वेऽप्येकदेशे स्वरितत्वप्रतिज्ञानादिति भावः। तस्येत्यप्यनुवर्तते। पक्षशब्दात् षष्ठ()न्तान्मूलेर्थे तिप्रत्ययः स्यादित्यर्थः।

तत्त्व-बोधिनी

पक्षात्तिः १३९२, ५।२।२५

पक्षतिरिति। प्रतिवत्, पक्षिणां, पक्षमूलं च।

---

सूत्रम्

काशिका-वृत्तिः

तेन वित्तश् चुञ्चुप्चणपौ ५।२।२६

तेन इति तृतीयासमर्थात् वित्तः इत्येतस्मिन्नर्थे चुञ्चुप् चणपित्येतौ प्रत्ययौ भवतः। वित्तः प्रतीतः ज्ञात इत्यर्थः। विद्यया वित्तः विद्याचुञ्चुः, विद्याचणः।

न्यासः

तेन वित्तश्चुञ्चुप्चणपौ। , ५।२।२६

"विद्याचुञ्चुः, विद्याचणः" इति। अथ "चुटू" (१।३।७) इति चकारस्येत्संज्ञा कस्मान्न भवति? उक्तोऽस्य हेतुस्तत्रैव--पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थमिति॥

बाल-मनोरमा

तेन वित्तश्चुञ्चुप्चणपौ १८०४, ५।२।२६

तेन वित्तः। तृतीयान्ताद्वित्त इत्यर्थे चुञ्चुप्चणपौ भवत इत्यर्थः। वित्तः=प्रसिद्धः। चस्य नेत्संज्ञेति। उपदेशे आदित्वाऽभावादिति भावः।

तत्त्व-बोधिनी

तेन वित्तश्चुञ्चुप्चणपौ १३९३, ५।२।२६

तेन वित्तः। वित्तः=प्रतीतः। "वित्तो भोगप्रत्ययो"रिति निपातनात् "रदाभ्यां निष्ठातो नः"इति नत्वं न। लुप्तनिर्दिष्ट इति। "चुटुषाः प्रत्ययस्ये"ति वक्तव्ये पृथग्योगकरणात् "चुटू" इत्येतदनित्यमिति समाधानान्तरमप्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

विनञ्भ्यां नानाञौ नसह ५।२।२७

वि नञित्येताभ्यां यथासङ्ख्यं ना नाञित्येतौ प्रत्ययौ भवतः। नसह इति प्रकृतिविशेषणम्। असहार्थे पृथग्भावे

वर्तमानाभ्यां विनञ्भ्यां सवार्थे नानाञौ प्रत्ययौ भवतः। विना। नाना।

न्यासः

विनञ्भ्यां नानाञौ नसह। , ५।२।२७

"स्वार्थे नानाञौ प्रत्ययौ भवतः" इति। "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (सी।प। १२५) इति कृत्वा।
ञकारस्त्वाद्युदात्तार्थः॥

बाल-मनोरमा

विनञ्भ्यां नानाञौ नसह १८०५, ५।२।२७

विनञ्भ्यां। "नसहे"ति सङ्घातः पृथक्त्वे वर्तते। प्रकृतिविशेषणमिदम्। तदाह--असहार्थे इति। तस्य विवरणं--पृथग्भावे इति। वर्तमानाभ्यामित्यनन्तरं "विनञ्भ्या"मिति शेषः। स्वार्थ इति। प्रत्ययार्थस्य अनिर्देशादिति भावः। प्रत्ययाविति। "यथासङ्ख्यं नानाञा"विति शेषः। विनेति। वेर्नाप्रत्यये रूपम्। पृथगित्यर्थः। नानेति। नञो नाञि आदिवृद्धौ रूपम्। पृथगित्यर्थः। "नसहे"त्यस्य प्रत्ययार्थत्वे तु नेत्यनेन न सहेति गम्येत। एवं सति नाना न न सह, किंतु सहैवेत्यर्थः स्यात्, "द्वौ नञौ" प्रकृतमर्थं गमयतः" इति न्यायादिति भाष्ये स्पष्टम्।

बाल-मनोरमा

वेः विनञ्भ्यां नानाञौ नसह १८०६, ५।२।२७

वैः शालच्छङ्कटचौ। क्रियाविशिष्टेति। क्रियाविशिष्टकारकवाचकात्स्वार्थे शालच्शङ्कटच्प्रत्ययो स्त इति यावत्। इदं च भाष्ये स्पष्यटम्।

तत्त्व-बोधिनी

विनञ्भ्यां नानाञौ नसह १३९४, ५।२।२७

नानाञाविति। नाञो ञकारो वृद्ध्यर्थः, स्वरार्थश्च। "न सहे"ति प्रकृतिविशेषणं, न प्रत्ययार्थ इत्यादशयेनाह---असहार्थ इत्यादि। यदि प्रत्ययार्थः स्यात्ततो "द्वौ प्रतिषेधौ प्रकृतमर्थ गमयतः"इति सहार्थो गन्येत "न न सह=अपि तु सहैवे"ति। तस्मात्प्रकृतिविशेषणम्। एतच्च व्याख्यानाल्लभ्यते। यद्येवं सहेत्येव प्रत्ययार्थोऽस्तु विनञोः प्रतिषेधार्थत्वादिष्टसिद्धेः "विगार्दभरथकः"इत्यादौ विशब्दस्यापि प्रतिषेधवृत्तिद्र्दष्टैवेति। सत्यम्। क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत,---विगतेन सह, विकृतेन सहेति। सत्याद्यथोक्तमेव न्याय्यम्। एतच्च हरदत्तग्रन्थे स्पष्टम्। स्वार्थ इति। अनिर्दिष्टार्थत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वेः शालच्छङ्कटचौ ५।२।२८

विशदात् शालच् शङ्कटचित्येतौ प्रत्ययौ भवतः। ससाधनकृइयावचनातुपसर्गात् स्वार्थे प्रत्ययौ भवतः। विगते शृङ्गे विशाले, विशङ्कटे। तद्योगाद् गौरपि विशालः, विशङ्कटः इत्युच्यते। परमार्थतस् तु गुणशब्दा एते यथाकथञ्चिद् व्युत्पाद्यन्ते। न अत्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः।

न्यासः

वेः शालच्छङ्कट्चौ। , ५।२।२८

"ससाधनक्रियावचनात्()" इत्यादि। उक्तमेतत्()--उपसर्गा ह्येवमात्मका भवन्ति यत्र कश्चित्? क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषणमाहुः। यत्र न प्रयुज्यते तत्र ससाधनक्रियामिति। इह न कश्चित्? क्रियावाची शब्दः प्रयुज्यते, तस्मात् ससाधनक्रियावाचिन उपसर्गात्? प्रत्ययो भवति। स च भवन्? "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (सी।प। १२५) इत्यनिर्दिष्टार्थत्वात्? स्वार्थे भवति। "विगते शृङ्गे" इति। एतेन विगमनक्रियायां शृङ्गसाधनायां विशब्दो वत्र्तत इति दर्शयति। यदि ससाधनायां क्रियायां प्रत्ययः, विशालो गौर्विशङ्कटो गौरिति न सिध्यति, न हि गौरिह विगमनस्य साधनम्(), किं तर्हि? शृङ्गे? इत्यत आह--"तद्योगात्()" इत्यादि। यथा सास्नाद्यवयवयोगादवयवधर्मेण गौः सास्नेत्युच्यते, तथा विशालविशङ्कटशृङ्गयोगाद्गौस्तथेत्युच्यते। "परमार्थतस्तु" इत्यादि। समुदायो व्युत्पत्त्यर्थः। अतोऽत्र न केवलं ससाधनक्रिया नास्ति, अपि च साधनमिपि नास्ति। तस्माद्गुणशपब्दा विशालादयः परमार्थतो लोके प्रसिद्धाः यथा--शुक्लादयः शब्दाः। तेन नात्र विशालीदिषु प्रकृतिप्रत्ययार्थयोरभिनिवेशः कत्र्तव्यः। तदेवं परमार्थतोऽनर्थकाः। वेः शालच्छङ्कटचावप्यनर्थकावेव विधीयते इत्युक्तं भवति। "एते" इति। व्युत्पादयिष्यमाणान्? सङ्कटादीन्? बुद्धौ कृत्वा बहुवचनं कृतम्(), तेऽपि हि गुणशब्दा एव॥

---

सूत्रम्

काशिका-वृत्तिः

संप्रौदश् च कटच् ५।२।२९

सम् प्र उदित्येतेभ्यः कटच् प्रत्ययो भवति। चकाराद् वेश्च। सङ्कटम्। प्रकटम्। उत्कटम्। विकटम्। कटच्प्रकरणे ऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानम्। अलाबूनां रजः अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्। गोष्ठादयः स्थानादिषु पशुनाम् आदिभ्य उपसङ्ख्यानम्। गवां स्थानं गोगोष्ठम्। महिषीगोष्ठम्। सङ्घाते कटच् वक्तव्यः। अवीनां सङ्घातः अविकटम्। विस्तारे पटच् वक्तव्यः। अविपटम्। द्वित्वे गोयुगच्। उष्ट्रगोयुगम्। अश्वगोयुगम्। प्रकृत्यर्थस्य षट्त्वे षङ्गवच्। हस्तिषङ्गवम्। अश्वषङ्गवम्। विकारे स्नेहे तैलच्। एरण्डतैलम्। इङ्गुदीतैलम्। तिलतैलम्। भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ। इक्षुशाकटम्, इक्षुशाकिनम्। मूलशाकटम्, मूलशाकिनम्।

न्यासः

संप्रोदश्च कटच्?। , ५।२।२९

ससाधनक्रियावचनादुपसर्गात् स्वार्थे प्रत्यय इति सर्वं पूर्ववदेव वेदितव्यम्। "अलाबूतिलोमा" इत्यादि। अलाबूप्रभृतिभ्यो रजस्यभिधेये कटच्प्रत्ययस्योपसंख्यानं कत्र्तव्यम्()। विकारप्रत्ययानामपवादः; अलाबूप्रभृतीनां यद्रजस्तस्य तद्विकारत्वात्()। "गोष्ठादयः" इत्यादि। आदिशब्दः प्रकारे। पशुनामानि गोशब्दादीनि, तेभ्यः स्थानादिष्वभिधेयेषु गोष्ठजादयः प्रत्यया वक्तव्याः। "तस्येदम्()" ४।३।१२० इत्यर्थविवक्षायां स्थानादिषु गोष्ठजादयो विधीयन्ते। ननु "तद्धिताः" (४।१।७६) इति बहुवचनेनैव संगृहीतं सङ्घाते कटजित्यादि सर्वम्()? सत्यम्(); अनन्तरोक्तस्यैव वाक्यस्य प्रपञ्चोऽयम्()। "अविकटम्()" इति। अत्र "तस्य समूहः" ४।२।३६ इति सामूहिके प्रत्ययो कटट्()। "अविपटम्()" इति। प्रकीर्णानामवीनां विस्तार उच्यते। द्वावुष्टौ "उष्ट्रगोयुगम्()"। षङ् हस्तिनो "हस्तिषङ्गवम्()" इङ्गुदस्य स्नेह "इङ्गुदतैलम्()"। तिलस्य "रसास्तिलतैलम्()"। "भवने क्षेत्रे" इत्यादि। इक्षूणां भवनं क्षेत्र "मिक्षुशाकटम्()"। "इक्षुशाकिनम्()"। मूलस्य भवनं क्षेत्रं "मूलशाकटम्()"। मूलशाकिनम्()॥

बाल-मनोरमा

संप्रोदश्चकटच् १८०७, ५।२।२९

संप्रोदश्च कटच्। सं, प्र, उत्? एभ्यश्च क्रियाविशिष्टसाधनवाचिभ्यः स्वार्थे कटच् स्यादित्यर्थः। चाद्वेरपि। संकटं। संहतमित्यर्थः। निबिडीकृतमिति यावत्। रूढशब्दा एते कथञ्चिद्व्युत्पाद्याः।

अलाबूतिलेति। अलाबू, तिल, उमा, भङ्गा-इत्येभ्यः षष्ठ()न्तेभ्योरजसिपशिनामभ्यः स्थानादिष्वर्थेषु गोष्ठजादयः प्रत्यया वक्तव्या इत्यर्थः। गोष्ठजादीनां प्रत्ययानां स्थानादीनां चार्थानां प्रपञ्चनपराणि "सङ्घाते कटजि"त्यादीनि "शाकटशाकिना"वित्यन्तानि षड्वार्तिकानि। तेषु चतुर्षु "पशुनामब्य" इत्यनुवत्रतते।

अप्रसृतावयवः समूहः-सङ्घातः।

प्रसृतावयवस्तु विस्तारः।

द्वित्व इति। प्रकृत्यर्थगतद्वित्व इत्यर्थः। वृषगोयुगमिति। द्व्यवयवकसङ्घामिताभिप्रायमेकवचनम्। द्वयं युग्ममित्यादिवत्। केचित्तु द्वौ वृषावित्यर्थे "वृषगोयुग"मिति स्वभावादेकवचनं विंशतिरित्यादिवदित्याहुः। एवमुष्ट्रगोयुगम्। अ()आषङ्गवम्।

तत्त्व-बोधिनी
संप्रोदश्च कटच् १३९५, ५।२।२९

संप्रोदश्च। क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः। सङ्कटं=संहतम्। संबाध इत्यर्थः। प्रकटं=प्राज्ञातम्। प्रकाशत इत्यर्थः। उत्कटम्ुद्भूतं। विकटं=विकृतं,। रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते।

अलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानम्। अलाबूकटमिति। एभ्यः पञ्चभ्यो रजस्यभिधेये कटच्प्रत्ययो भवति। रजसो विकारत्वाद्विकारप्रत्ययानामपवादोऽयम्। अलाबूकटमिति। "ओरञ्""मयड्वैतयो"रिति मयड्वेह प्राप्तः। तिलकटमिति। "असंज्ञायां तिलयवाभ्या"मिति मयट् प्राप्तः। उमाशब्दाद्धृतादित्वादन्तोदात्तात् "अनुदातादेश्चे"त्यञ्, "उमोर्णयोर्वे"ति वुञ्च प्राप्तः। भङ्गाशब्दात् "तृणधान्यानां च व्यषा"मित्याद्युदात्तत्वादण्डमयड्वा प्राप्त इत्येवं यथासंभवं प्रत्ययप्राप्तिरूह्यां। हरदत्तस्तु---तिलशब्दस्य घृतादित्वादन्तोदात्तत्वमङ्गीकृत्य ततः "अनुदात्तादेश्चे"त्यञ्, "असंज्ञायां तिलयवाभ्या"मिति मयड्वा प्राप्त इत्याह। तत्र तिलशब्दस्य घृतादित्वकल्पनेबीजं चिन्त्यम्। "तृणधान्यानां च व्द्याषा"मिति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वात्।"तिलाश्च मे"इत्यत्र तथैव वेदे पाठाच्च।

गोष्ठजादयः स्थानादिषु पशुनामभ्यः। गोष्ठजादय इति। "सङ्घाते कट"जित्यादीन्यस्यैव प्रपञ्चः। इहोभयत्राऽऽदिशब्दः प्रकारे। पशुनामभ्य इति। "पशुनामादिभ्यः"इति भाष्मे प्रचुरः पाठः। गवां स्थानमिति। "तस्येद"मित्यत्रार्थे "सर्वत्र गोरजादिप्रसङ्गे"इति यति प्राप्ते गोष्ठच्।

सङ्घाते कटच्। सङ्घात इति। अप्रसृताक्यवः समूहः--सङ्घातः। प्रसृतावयवस्तु---बिस्तारः। कठच्पटचौ द्वावपि सामूहिकानामपवादौ।

द्वित्वे गोयुगच्। द्वित्वे इति। प्रकृत्यर्थस्य द्वित्वे द्योत्य इत्यर्थः। उष्ट्रगोयुगमिति। द्वयं युग्ममित्यादिवद्द्व्यवयवसङ्घातप्राधान्यादेकवचनम्। एवमग्रेऽपि।

---

सूत्रम्

काशिका-वृत्तिः

अवात् कुटारच् च ५।२।३०

अवशब्दात् कुटारच् प्रत्ययो भवति। चकारात् कटच्। अवकुटारम्, अबकटम्।

न्यासः

अवात्कुटारच्च। , ५।२।३०

बाल-मनोरमा

अवात्कुटाराच्च १८०८, ५।२।३०

अवात्कुटारच्च। क्रियाविशिष्टसाधानवाचकादवात्स्वार्थे कुटरच स्यादित्यर्थः। अवाचीन इति। अवाचीने विद्यमानादवात्कुटरचि अवकुटार इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ५।२।३१

अवातित्येव। नमनं नतम्। नासिकायाः सम्बन्धिनि नते अभिधेये टिटच् नाटच् भ्रटचित्येते प्रत्यया भवन्ति संज्ञायां विषये। नासिकाया नतम् अवटीटम्, अवनाटम्, अवभ्रटम्। तद्योगान् नासिका ऽपि तथा उच्यते, अवटीटः, अवनाटः, अवभ्रटः इति।

न्यासः

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः। , ५।२।३१

"नमनं नतम्()" इति। भावे निष्ठां दर्शयति। "नासिकायाः सम्बन्धिनी" इति। अनेनापि नासिकाया इत्यपि सम्बन्धलक्षमा षष्टी। यदि नासिकायाः सम्बन्धिनि नते वाच्य एते प्रत्ययाः, कथं तदेतेन नासिका पुरुषश्चाभिधीयते? इत्याह--"तद्योगात्()" इति॥

बाल-मनोरमा

नते नासिकायाः संज्ञायांटीटञ्नाटज्भ्रटचः १८०९, ५।२।३१

नते नासिकायाः। अवादित्येवेति। अवशब्दान्नासिकाया अवनतेऽर्थे टीटच्, नाटच्, भ्रटच् एते प्रत्ययाः स्युरित्यर्थः। "णमु प्रह्वत्वे" इति धातोर्भावे क्तप्रत्यये नतशब्द इत्यभिप्रेत्याह-नतं नमनमिति। प्रह्वत्वमित्यर्थः। ननु यदि नासिकाया नमनमवटीटं तर्हि अवटीटा नासिकेति कथमित्यत आह--तद्योगादिति। नमनयोगात्तत्र लाक्षणिकमिति भावः। पुरुषोऽप्यवटीट इति। तादृशनासिकायोगादिति भावः।

तत्त्व-बोधिनी

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः १३९६, ५।२।३१

नतमिति। नपुंसके भाषे क्तः। नमनमिति। नीचैस्त्वमित्यर्थः। अकटीटमिति। नासिकासाधनके नमने

वर्तमानादवशब्दात्स्वार्थे प्रत्ययः। कथं तर्हि नासिकायां पुरुषे चाऽवटीटशब्दस्य प्रयोग इत्यत आह---तद्योगादिति। नेर्बिडच्। "नते नासिकायाः संज्ञाया"मिति वर्तते।निशब्दान्नासिकाया नतेऽभिधेये बिडज्बिरीसचौ स्तः। निबिडमिति। तद्यागान्निबिडा नासिका, निबिरीसा। कथं तर्हि निबिडाः केशाः", निबिडं वस्त्र "मिति। उपमानाद्भविष्यति। एतच्च काशिकायां स्पष्टम्। केचित्तु उक्तप्योगानुरोधेनेह सूत्रे "नते नासिकायाः"इति नानुवर्तत इति व्याचक्षते। प्रकृतेरिति। निशब्दस्येत्यर्थः। आदेशौ चेति। प्रत्ययौ, तत्संनियोगेन यखासङ्ख्यमिमावादेशौ च स्त इत्यर्थः।

कप्रतययचिकादेशौ च वक्तव्यौ। चिकिनमिति। इनच्प्रत्ययसंनियोगेन चिकादेशः। चिपिटमिति। पिटच्प्रत्ययसंनियोगेन "चि" इत्यादेशः।

क्लिन्नस्य चिल्--पिल्--लश्चाऽस्य चक्षुषी। क्लिन्नस्येति। चिल् पिल् इत्येतावादेशौ भवतो, लश्च प्रत्ययः "अस्य चक्षुषी"इत्येतस्मिन्नर्थे।

चुल् च। चुल् चेति। चाल्लप्रत्ययः। चुल्ल इति। क्लिन्ने अस्म चक्षुषी इति पूर्वोक्त एव विग्रहः। कथं तर्हि "स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्ला क्लिन्नेऽक्ष्णि चाप्यमी"इत्यमर इति चेत्। अत्राहुः--पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्येति। अन्ये त्वाहुः-----"अस्य चक्षुषी"इत्यत्र "अस्ये"ति न वक्तव्यम्। क्लिन्ने चक्षुषी--चिल्ले पिल्ले। पुरुषे तु मत्वर्थेऽच्, अर्सांअदिषु "स्वाङ्गाद्धीना"दिति सूत्रितत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

नेर्बिडज्बिरीसचौ ५।२।३२

नते नासिकायाः इत्यनुवर्तते, संज्ञायाम् इति च। निशब्दान् नासिकाया नते ऽभिधेये बिडच् बिरीसचित्येतौ प्रत्ययौ भवतः। निबिडम्, निबिरीसम्। तद्योगात् नासिका ऽपि। पुरुषो ऽपि, निबिडः, निबिरीसः। कथं निबिडाः केशाः, निबिडं वस्त्रम्? उपमानाद् भविष्यति।

न्यासः

नेर्बिडज्बिरीसचौ। , ५।२।३२

"कथं निबिडाः" इति। तद्योगोऽत्र नास्ति। अतस्तद्योगाभावात्? तथाभिधानं नोपपद्यत इत्यभिप्रायः। "उपमानाद्भविष्यति" इति। निविडतया नासिकया तुल्याः केशा वस्त्राणि च निबिडतया। तेनोपमानात्? तदुभयं निबिडशब्दवाच्यं भविष्यति॥

बाल-मनोरमा

नेर्बिडज्विरीसचौ १८१०, ५।२।३२

नेर्बिडज्विरीसचौ। "नते नासिकायाः संज्ञाया"मित्यनुवर्तते। नेः-नासिकाया नतेऽर्थे बिडच्, विरीसच् द्वौ प्रत्ययौ स्त इत्यर्थः। "निबिडा वृक्षा" इति तु उपमानादित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

इनच् पिटच् चिक चि च ५।२।३३

नेः इत्येव, नते नासिकायाः इति च। निशब्दान् नासिकाया नते ऽभिधेये इनच् पिटचित्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासङ्ख्यं चिक चि इत्येतावादेशौ भवतः। चिकिनः, चिपिटः। ककारः प्रत्ययो वक्तव्यश्चिक् च प्रकृत्यादेशः। चिक्कः। तथा च उक्तम् इनच्पिटच्काश्चिकचिचिकादेशाश्च वक्तव्याः इति। क्लिन्नस्य चिल्पिल्लश्च अस्य चक्षुषी। क्लिन्नस्य चिल् पिलित्येतावादेशौ भवतः लश्च प्रत्ययो ऽस्य चक्षुषी इत्येतस्मिन्नर्थे। क्लिन्ने अस्य चक्षुषी चिल्लः, पिल्लः। चुलादेशो वक्तव्यः। चुल्लः। अस्य इत्यनेन नार्थः। चक्षुषोरेव अभिधाने प्रत्यय इष्यते। क्लिअन्ने चक्षुषी चिल्ले, पिल्ले चुल्ले। तद्योगात् तु पुरुषस् तथा उच्यते।

न्यासः

उपाधिभ्या त्यकन्नासन्नारूढयोः।, ५।२।३३

"संज्ञाधिकाराच्च" इति। "नते नासिकायाः" (५।२।३१) इत्यादिसूत्रात्? संज्ञाधिकारानुवृत्तेः। "नियतविषयम्()" इति। पर्वतविषयमेवासन्नारूढं गृह्रते। तेन वृक्षस्यासन्नम्(), प्लक्षस्यारूढमित्यतर न भवतीति भावः। अथोपत्यका, अधित्यकेत्यत्र "प्रत्ययस्थात्? कात्? पूर्वस्य" (७।३।४४) इत्यनेनेत्त्वं कस्मान्न भवति? इत्यत आह--"प्रत्ययस्थात्? कात्()" इति। यद्यत्रेत्त्वं स्यात्? संज्ञारूपं न सिध्येत्(); नोपत्यिकाधित्यिकेत्येवंरूपा संज्ञा। तस्मात्? संज्ञाधिकारादित्त्वं न भवति॥

बाल-मनोरमा

इनच्पिटच्चिकचि च १८११, ५।२।३३

इनच्पिटच्। इनच् पिटजिति समामहाद्वन्द्वात्प्रथमैकवचनम्। "चिकचि" इत्यपि चिक-चि-इत्यनयोः समाहाद्वन्द्वात्प्रथमैकवचनम्। प्रकृतेरिति। नेरित्यर्थः। तत्र इनचि परे चिक इत्यादेशः। तत्र अकार उच्चारणार्थः। पिटचि तु परे चीत्यादेशः।

कप्रत्ययेति। उक्तनेः कप्रत्ययः, प्रकृतेः चिकादेशश्चेत्यर्थः। अयमपि ककारान्तः एवादेशः। चिकिनमिति। इनचि प्रत्यये कृते नेश्चिकादेशे रूपम्। चिपिटमिति। पिटचि कृते नेश्चीत्यादेशे रूपम्। चिक्कमिति। कप्रत्यये नेश्चिकादेशे रूपम्।

क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी इति। वार्तिकमिदम्। चिल् पिलिति समाहारद्वन्द्वात्प्रथमैकवचनम्। क्लिन्ने अस्य चक्षुषी इति विग्रहे क्लिन्नशब्दादस्य चक्षुषी इत्यर्थे लप्रत्ययः, प्रकृतेश्चिल् पिल् एतावादेशौ स्त इत्यर्थः। क्लिन्ने इति। नेत्रा।ऽत्रमयप्रयुक्तजलनिष्यन्दवतीइत्यर्थः। चिल्ल पिल्ल इति। क्लिन्नचक्षुष्क इत्यर्थः। चुल्चेति। उक्तविषये क्लिन्नस्य चुल् आदेशश्च लप्रत्ययसंनियोगेन वक्तव्य इत्यर्थः। उपाधिभ्याम्। उप, अधि आभ्यां यथासङ्ख्यमासन्नारूढयोर्वर्तमानाभ्यां स्वार्थे त्यकन्प्रत्ययः स्यादित्यर्थः। आसन्नं=समीपम्। आरूढम्ुच्चम्। अनुवर्तत इति। "नते नासिकायाः" इत्यस्मादिति भावः। कस्य समीपं, कस्योच्चमित्याकाङ्क्षायां संज्ञाधिकारात् पर्वतस्येति लभ्यत इत्यभिप्रेत्याह--पर्वतस्येति। उपत्यका, अधित्यकेति। स्त्रीत्वं लोकात्। अत्र "प्रत्ययस्था"दिति इत्त्वं तु न, "त्यकनश्चे"त्युक्तेः।

---

सूत्रम्

काशिका-वृत्तिः

उपाधिभ्यां त्यकन्नासन्नाऽरूढयोः ५।२।३४

उप अधि इत्येताभ्यां यथासङ्ख्यम् आसन्नारूढयोर् वर्तमानाभ्ह्यां स्वार्थे त्यकन् प्रत्ययो भवति। संज्ञाधिकाराच् च

नियतविषयम् आसन्नारूढं गम्यते। पर्वतस्य आसन्नम् उपत्यका। तस्य एस्व आरूढम् अधित्यका। प्रत्ययस्थात् कात्पूर्वस्य इति इत्वम् अत्र न भवति, संज्ञाधिकारादेव।

तत्त्व-बोधिनी

उपाधिभ्यां त्यकन्नासन्नारूढयोः १३९७, ५।२।३४

उपाधिभ्याम्। संज्ञाधिकारादिह नियतविषयमासन्नारूढं गृह्रत इत्याशयेनाह---पर्वतस्येति। आसन्नं=समीपम्। आरूढम्---उच्चस्थानम्। उपत्यकेति। "प्रत्ययस्था"दितीत्त्वं तु न भवति, "त्यकनश्च निषेधः" इत्युक्तत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

कर्मणि घटो ऽठच् ५।२।३५

निर्देशादेव समर्थविभक्तिः। कर्मशब्दात् सप्तमीसमर्थाद् घटः इत्येतस्मिन्नर्थे अठच् प्रत्ययो भवति। ङ्हटते इति ङ्हटः। कर्मणि ङ्हटते कर्मठः पुरुषः।

न्यासः

कर्मणि घटोऽठच्?। , ५।२।३५

"कर्मणि" इत्यनेन कर्मणीति स्वरूपग्रहणं दर्शयिति। अथ पारिबाषिकस्य कर्मणो ग्रहणं कस्मान्न भवति? असम्भवात्()। असम्भवस्तु घटतेरकर्मकत्वात्()। "अठच्प्रत्ययेऽकारोच्चारणं ठस्येकादेशनिवृत्त्यर्थम्()॥

बाल-मनोरमा

कर्मणि घटोऽठच् १८१२, ५।२।३५

कर्मणि घटोऽठच्। सप्तम्यन्तात्कर्मन्शब्दाद्घट इत्यर्थे अठच्स्यादित्यर्थः। घटशब्दस्य कलशषपर्यायत्वभ्रमं वारयति--कर्मणि घटत इति। व्याप्रियत इत्यर्थः। तथाचाऽत्र घटशब्दो यौगिको घटमाने वर्तत इति भावः। कर्मठ इति। अठचि "नस्तद्धिते" इति टिलोपः। अठचि ठस्य अङ्गात्परत्वाऽभावादिकादेशाऽभाव इति भावः।

तत्त्व-बोधिनी

कर्मणि घटोऽठञ् १३९८, ५।२।३५

कर्मणि घटो। सप्तम्यन्तात्कर्मन्()शब्दात् "घटते"इत्यर्थेऽठञ् स्यात्। कर्मठ इति। "ठस्येकः"इतीह नभवति। अठचि ठस्याऽप्रत्ययत्वेनाऽङ्गसंज्ञानिमित्तत्वाऽभावात्।

---

सूत्रम्

काशिका-वृत्तिः

तदस्य सञ्जातं तारकाऽअदिभ्य इतच् ५।२।३६

तदिति प्रथमासमर्थेभ्यस् तारकाऽअदिभ्यः शब्देभ्यः अस्य इति षष्ठ्यर्थे इतच् प्रत्ययो भवति। सञ्जातग्रहणं प्रकृतिविशेषणम्। तारकाः सञ्जाता अस्य नभसः तारकितं नभः। पुष्पितो वृक्षः। तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष। कुड्मल। सूचक। रोग। विचार। व्याधि। निष्क्रमण। मूत्र। पुरीष। किसलय। कुसुम।

प्रचार। तन्द्रा। वेग। पुक्षा। श्रद्धा। उत्कण्ठा। भर। द्रोह। गर्भादप्राणिनि। तारकादिराकृतिगणः।

लघु-सिद्धान्त-कौमुदी

तदस्य संजातं तारकादिभ्य इतच् ११७०, ५।२।३६

तारकाः संजाता अस्य तारकितं नभः। पण्डितः। आकृतिगणोऽयम्॥

न्यासः

तदस्य सञ्जातं तारकादिभ्य इतच्?। , ५।२।३६

तारकादिषु "बुभुक्षापिपासा" शब्दौ पठ()एते, तयोः किमर्थः पाठः, यावता सन्नन्ताभ्यां निष्ठायामिटि च कृते बुभुक्षितः, पिपासितो देवदत्त इति भवति? सत्यम्(); भूते विधानाद्वत्र्तमाने न सिध्यति। अनेन तु वत्र्तमानेऽपि सिध्यति। तस्माद्युक्तस्तयोः पाठः। "गर्भादप्राणिनि" इति। गर्भशब्दादप्राणिन्यभिधेय इतचप्रत्ययो भवति। गर्भिताः शालयः। अप्राणिनीति किम्()? गर्भः सञ्जातोऽस्या गर्भिणी गौः॥

बाल-मनोरमा

तदस्य संजातं तारकादिभ्य इतच् १८१३, ५।२।३६

तदस्य। प्रथमान्तेभ्यस्तारकादिभ्योऽस्य तत्संजातमित्यर्थे इतच् स्यादित्यर्थः। तारकितं नभ इति। संजातनक्षत्रमित्यर्थः। आकृतिगणोऽयमिति। तेन "पुष्पितो वृक्षः""फलित" इत्यादिसंग्रहः।

तत्त्व-बोधिनी

तदस्य संजातं तारकादिभ्य इतच् १३९९, ५।२।३६

तारकितमिति। एवं पुष्पितं फलितं पुलकितं रोमाञ्चितमित्याद्युदाहार्यम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५।२।३७

तदस्य इत्यनुवर्तते। तदिति प्रथमासमर्थादस्य इति षष्ठ्यर्थे द्वयसच् दघ्नच् मात्रचित्येते प्रत्यया भवन्ति यत् तत् प्रथमासमर्थं प्रमाणं चेत् तद् भवति। ऊरुः प्रमाणम् अस्य ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम्। जानुद्वयसम्। जानुदघ्नम्। जानुमात्रम्। प्रथमश्च द्वितियश्च ऊर्ध्वमाने मतौ मम। ऊरुद्वयसम् उदकम्। ऊरुदघ्नम् उदकम्। मात्रच् पुनरविशेषेण, प्रस्थमात्रम् इत्यपि भवति। प्रमाणे लो वक्तव्यः। प्रमाणशब्दा इति ये प्रसिद्धाः, तेभ्य उत्पन्नस्य प्रत्ययस्य लुग् भवति। शमः प्रमाणमस्य शमः। दिष्टिः। वितस्तिः। द्विगोर् नित्यम्। द्वौ शमौ प्रमाणम् अस्य द्विशमः। त्रिशमः। द्विवितस्तिः। नित्यग्रहणं किम्? संशये श्राविणं वक्ष्यति, तत्र अपि द्विगोर् लुगेव यथा स्यात्। द्वे दिष्टी स्यातां वा न वा द्विदिष्टिः। डिट् स्तोमे वक्तव्यः। पञ्चदशः स्तोमः। पञ्चदशी रात्रिः। टित्त्वाद् ङीप्। शन्शतोर्डिनिर्वक्तव्यः। पञ्चदशिनो ऽर्धमासाः, त्रिंशिनो मासाः। विंशतेश्चेति वक्तव्यम्। विंशिनो ऽङ्गिरसः। प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्च अपि संशये मात्रच् वक्तव्यः। शममात्रम्। दिष्टिमात्रम्। प्रस्थमात्रम्। कुडवमात्रम्। पञ्चमात्रम्। दशमात्रा गावः। वत्वन्तात् स्वार्थे द्वयसज्मात्रचौ बहुलम्। तावदेव तावद्द्वयसम्, तावन्मात्रम्। एतावद्द्वयसम्, एतावन्मात्रम्। यावद्द्वयसम्, यावन्मात्रम्।

लघु-सिद्धान्त-कौमुदी

प्रमाणे द्वयसज्दघ्नञ्मात्रचः ११७१, ५।२।३७

तदस्येत्यनुवर्तते। ऊरू प्रमाणमस्य - ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्॥

न्यासः

प्रमाणे द्वयसज्दघ्नञ्मात्रचः। , ५।२।३७

प्रमाणशब्दस्य सम्बन्धिशब्दत्वात्प्रत्ययार्थो विज्ञायते। "प्रथमश्च द्वितीयश्च" इत्यादि। द्वयसज्दघ्नचौ ऊध्र्वमान इष्येते। उपरि निक्षिप्य यत्र मीयते, न तिय्र्यक्? समन्ततो वा, तदूध्र्वमानम्()। "अविशेषेण" इति। प्रमाणे परिमाण उन्माने वाऽविशेषेण सर्वत्र मात्रज्भवतीति। "प्रस्थमात्रमित्यपि भवति" इति। अपिशब्दाद्वितस्तिमात्रमित्यपि भवतीति। "प्रमाणे लोः" इति। लुकश्चायं पूर्वाचार्यविहिता संज्ञा। अयं मात्रच उत्पन्नस्य लुगुच्यते; न द्वयसज्दघ्नयोः। तयोरूध्र्वमाने विधानात्()। अस्मिन्नर्थ उत्पत्तिरपि नास्ति। "द्विगोर्नित्यम्()" इति। द्विगोरप्रमाणत्वात्()। सत्यपि च प्रमाणान्तत्वे तदन्तविदेरभावात्()। पूर्वेण प्राप्त एव लुगुच्यते। "नित्यग्रहणं किम्()" इति। न हि विकल्पः प्रकृतो यन्निवृत्त्यर्थं नित्यग्रहणं क्रियते। न च पूर्वस्य विधेर्विकल्पेन प्रवृतिं()त ज्ञापयितुमिह नित्यग्रहणं कर्तुं युक्तम्()। न ह्रसौ विबाषयेष्यत इत्यभिप्रायः। "संशये", इत्यादिना नित्यग्रहणस्य प्रयोजनमाह। श्रवणं प्रादः, "कृत्वल्युटो बहुलम्()" ३।३।११३ इति भावे घञ्()" श्रावोऽस्यास्तीति श्रावी, स पुनर्वक्ष्यमाणो मात्रच्प्रत्ययः प्रमाणसम्बन्धेनोच्यते। "स्तोमे डट्()" इत्यादि। पञ्चदशाहानि परिमाणमस्य यज्ञस्य "पञ्चदशः"। "पञ्चदशी" इति। टित्त्वान्ङीप्()। "शन्शतोर्डिनिः" इति। स्तोमे चान्यत्राविशेषेणायं विधिः। "विं शिनः" इति। डिनिः, "ति विंशतेर्डिति" ६।४।१४२ इति तिलोपः, यस्येति लोपश्च। "शममात्रं दिष्टिमात्रमिति। प्रमाणस्योदाहरणद्वयम्()। "प्रस्थामात्रम्(), कुडवमात्रमिति" परिमाणस्य। पञ्चमात्रम्(), दशमात्रमिति संख्यायाः। यत्रैतन्न निर्णीयते शमं स्याद्वा न वेति तत्र शममात्रमिति प्रयुच्यते। एवमन्यत्रापि यथायोगं वेदितव्यम्()॥

बाल-मनोरमा

प्रमाणे द्वयसज्दघ्नञ्मात्रचः १८१४, ५।२।३७

प्रमाणे। अनुवर्तत इति। ततश्च अस्य प्रमेयस्य तत्प्रमाणमित्यर्थे प्रमाणे विद्यमानात्प्रथमान्ताद्द्वयसच्, दघ्नच्, मात्रच् एते प्रत्ययाः स्युः। प्रमाणवानिदमर्थोऽत्र प्रत्ययार्थ इति भाष्ये स्पष्टम्। तत्र "प्रथमश्च द्वितीयश्च ऊध्र्वमाने मतौ ममे"ति भाष्ये उक्तम्। प्रमाणमिह परिच्छेदकमात्रम्, तत्र मात्रच्। प्रस्थमात्रमूरुमात्रमित्यादि इति कैयटः ष। वस्तुतस्तु "यत्तदेतेभ्यः" इति सूत्रभाष्यस्वरसादायामपरिच्छेदकमेवात्र प्रमाणमिति शब्देन्दुशेखरे विस्तरः।

प्रमाणे ल इति। लुको "ल" इति पूर्वाचार्यशास्त्रसिद्धा संज्ञा। प्रमाणे वर्तमानाद्विहितस्य द्वयसजादेर्लुग्वक्तव्य इत्यर्थः। शमो दिष्टिर्वितस्तिरिति। रामः प्रमाणमस्येत्यादिविग्रहः। शमादयोऽनूद्र्धमानविशेषाः, तेभ्यो मात्रचो लुक्, इतरयोरसंभवात्। अत्र "आयामस्तु प्रमाणं स्यादि"त्येव गृह्रते। एवंच ऊरुद्वयसमित्यादौ न लुक्।

द्विगोर्नित्यमिति। प्रमाणान्ताद्द्विगोः परस्य द्वयसजादेर्नित्यं लुक् स्यादित्यर्थः। प्माणान्तस्य द्विगोः प्रमाणाऽवृत्तित्वात्सामथ्र्यादिह तदन्तविधिः। पूर्ववार्तिकेन तु नात्र प्राप्तिरस्ति, द्विगोः प्रमाणत्वाऽभावात्। द्विशममिति। तद्धितार्थे द्विगुः। ततो मात्रचोऽनेन लुक्। विकल्पस्याऽप्रकृतत्वादेव सिद्धे नित्यग्रहणं संशये वक्ष्यमाणस्य मात्रचो लुगर्थम्। अन्यथा शममात्रमित्यत्रेव द्विशमशब्दादपि स मात्रच न लुप्येतेति भाष्ये स्पष्टम्।

प्रमाणेति। प्रमाणवाचिनः परिमाणवाचिनः सङ्ख्यावाचिनश्य संशये मात्रज्वक्तव्य इत्यर्थः। अत्र प्रमाणमायाम एव गृह्रते, "आयामस्तु प्रमाणं स्यादि"ति वचनात्। अत एव परिमाणग्रहणमर्थवत्। शममात्रमित्यादि। शमः स्यान्न वेत्यादिर्गविग्रहः।

वत्वन्तादिति। वार्तिकमिदम्। पुरुषहस्तिभ्यामण् च। "उक्तविषये" इति शेषः। चादद्वयसजादयस्त्रयः।

तत्त्व-बोधिनी

प्रमाणे द्वयसज्?दघ्नञ्?मात्रचः १४००, ५।२।३७

प्रमाणे द्वयसज्। प्रमाणे विद्यमाननात्प्रथमान्तात् "अस्ये"ति निर्दिष्टे प्रमेयेऽर्थे त्रयः प्रत्यया‍ः स्युः। प्रमाणमिह परिच्छेदकमात्रम्। तत्र मात्रच्। द्वयसच्()दघ्नचौ तूध्र्वमान एव भवतः, "प्रथमश्च द्वितीयश्च ऊध्र्वमाने मतौ ममे"ति भाष्यात्। ऊध्र्वावस्थितेन येन मीयते तदूध्र्वमानम्---ऊर्वादि। तेन तिर्यङ्भानादौ "दण्डज्वयसं क्षेत्र"मित्यादि न प्रयुज्यते, यथोत्तरं मुनीनां प्रामाण्यात्। अतएव "द्विकाण्डा क्षेत्रभक्ति"रित्यत्र "द्वयसचोलु"गिति प्राचोक्तं नादर्तव्यमित्यवोचाम।

प्रमाणे लः। प्रमाणो ल इति। लुक एषा पूर्वाचार्यसंज्ञा। प्रमाणत्वेन ये प्रसिद्धास्ततः परस्यैवायं लुगित्युदाहरति--शमः दिष्टिः वितस्तिरिति। शमः प्रमाणस्येत्यादिविग्रहः। एषु मात्रचो लुक्, इतरयोरसंभवात्। शमादीनामनूध्र्वमानत्वात्।

द्विगोर्नित्यम्। द्विगोर्नित्यमिति। द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाऽप्राप्तो लुग्विधीयते। ननु विकल्पस्याऽप्रकृतत्वान्नित्यग्रहणमिह निरर्थकमिति चेत्। अत्राहुः----अनुपदं संशये वक्ष्यमाणो मात्रच् शममात्रमित्यादौ यथा न लुप्यते "प्रमाणे लः"इत्यस्य "प्रमाणे द्वयस"जिति यः पूर्वविधिस्तद्विषयत्वात्,---एवं द्विगोरपि न लुप्येत। इष्यते च लुक्। द्वौ शमौ स्यातां न वा द्विशम इति। तथा चाऽधिकसङ्ग्रहार्थं नित्यग्रहणभिति। अत्र केचित्---द्विगोर्लः"इत्युक्तेऽपि पुनर्लग्रहणं नित्यार्थमधिसङ्ग्रहार्थमिति व्याख्यातुं शक्यत इति वैचित्र्यार्थं नित्यग्रहणमित्याहुः।

प्रमाणपरिमाणाभ्यां सङ्ख्यायास्तपि संशये मात्रज्वक्तव्यः। शममात्रमित्यादि। शमः स्यान्न वेत्यादिविग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

पुरुषहस्तिभ्याम् अण् च ५।२।३८

तदस्य इत्येव, प्रमाणे इति च। पुरुषहस्तिभ्यां प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्याम् अस्य इति षष्ठ्यार्थे अण् प्रत्ययो भवति, चकाराद् द्वयसजादयः। पुरुषः प्रमाणम् अस्य पौरुषम्, पुरुषद्वयसम्, पुरुषदघ्नम्, पुरुषमात्रम्। हास्तिनम्, हस्तिद्वयसम्, हस्तिदघ्नम्, हस्तिमात्रम्। द्विगोर् नित्यं लुक्। द्विपुरुषम् उदकम्। त्रिपुरुषम् उदकम्। द्विहस्ति। त्रिहस्ति। द्विपुरुषी। त्रिपुरुषी। द्विहस्तिनि। त्रिहसिनी।

न्यासः

पुरुषहस्तिभ्यामण्? च। , ५।२।३८

"हास्तिनम्()" इति। "हनण्यनपत्ये" ६।४।१६४ इति प्रकृतिभावः। "द्विपुरुषी इति। "पुरुषात्? प्रमाणेऽन्यतरसयाम्()" ४।१।२४ इति ङीप्()। "द्विहस्तिनो इति। अत्र ऋन्नेभ्यो ङीप्()" ४।१।५ इति ङीप्()॥

बाल-मनोरमा

पुरुषहस्तिभ्यामण् च १८१५, ५।२।३८

पुरुषहस्तिभ्यामण् च। "उक्तविषये" इति शेषः। चादद्वयसजादयस्त्रयः।

तत्त्व-बोधिनी

पुरुषहस्तिभ्यामण् च १४०१, ५।२।३८

पुरुषहस्तिभ्यामण्च। "इनण्यनपत्ये" इति प्रकृतिभावः। हस्ती प्रमाणमस्य हास्तिनम्। अत्र काशिकायामिक्तं "द्विगोर्नित्यं लुक। द्बुपुरुषमुदक"मित्यादि। व्याख्यातं च हरदत्तेन---यद्यपि "प्रमाणे लो द्विगोर्नित्य"मित्यस्य नायमनुवादः, पुरुषहस्तिनोः शमादिवत्प्रमाणत्वेनाऽप्रसिद्धत्वात्, अतएव हि "पुरुषद्वयस"मित्यादौ ""प्रमाणे लः"इति लुङ् न भवति, तथाप्यपूर्वोऽत्र लुग्विधीयते इति। एतच्चाऽसङ्गतम्। "द्विगोर्नित्यं लु"गित्यपूर्ववचनस्य मुनित्रयाऽनुक्तत्वात्। वस्तुतस्तु विधीयत इत्यस्याऽनुमीयत इत्यर्थः। अयं भावः---"द्विगोः" "तद्धितलुकी"त्यनुवर्तमाने "पुरुषात्प्रमाणेऽन्यतरस्या"मिति ङीब्विकल्प्यते, तदेव लुकमनुमापयतीति।

---

सूत्रम्

काशिका-वृत्तिः

यत्तदेतेभ्यः परिमाणे वतुप् ५।२।३९

तदस्य इत्येव। यत्तदेतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्यः अस्य इति षष्ठ्यर्थे वतुप् प्रत्ययो भवति। यत् परिमाणम् अस्य यावान्। तावान्। एतावान्। प्रमाणग्रहणे ऽनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर् भेदात्। डावतावर्थवैशेष्यान् निर्देशः पृथगुच्यते। मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः। वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्। न त्वा वां अन्यो दिव्यो न पीर्थिवो अ जातो न जनिस्यते। त्वावतः पुरूवसो यज्ञं विप्रस्य मावतः। त्वत्सदृशस्य, मत्सदृशस्य इत्यर्थः।

लघु-सिद्धान्त-कौमुदी

यत्तदेतेभ्यः परिमाणे वतुप् ११७२, ५।२।३९

यत्परिमाणमस्य यावान्। तावान्। एतावान्॥

लघु-सिद्धान्त-कौमुदी

संख्याया अवयवे तयप् ११७५, ५।२।३९

पञ्च अवयवा अस्य पञ्चतयम्॥

न्यासः

यत्तदेतेभ्यः परिमाणे वतुप्?। , ५।२।३९

"यावान्()" इति। "आ सर्वनाम्नः" ६।३।९० इत्यकारः। उगिदचाम्()" ७।१।७० इति नुम्(), "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। प्रमाणपरिमाणशब्दौ पर्यायाविति मत्यमानो पश्चोदयेत्()--अत्र कस्मात्? परिमाणग्रहणं क्रियते, यावता प्रमाणग्रहणमनुवत्र्तत एवेति? तं प्रत्याह--"प्रमाणे इति वत्र्तमाने" इत्यादि। स पुनरनयोः प्रमाणपरिमाणयोर्भेदः "परिमाणं तु सर्वतः, आयामस्तु प्रमाणं स्यात्()" इति प्रागेव व्याख्यातः। "डावतावर्थवैशेष्यात्()" इति। "डावतौ" इति पूर्वाचार्यसंज्ञाप्रतिपादितापेक्षोऽयं निर्देशः, ते हि यत्तदेतेब्यो डावतुमेव प्रत्ययं कृतवन्तः। विशिष्यत इति विशेषः, विशेषस्य भावो वैशेष्यम्()। अर्थस्य वैशेष्यमर्थस्य विशिष्टत्वमित्यर्थः। प्रमाणशपब्दस्यान्योऽर्थः, परिमाणशब्दस्य चान्योऽर्थ इति भिन्नार्थत्वमनयोः; तस्मादर्थवैशेष्याड्डावतौ विधातव्ये परिमाणशब्दस्य निर्देशः पृथगुच्यते। उच्यत इति क्रियत इत्यर्थः। किमर्थः पृथिग्निर्देशः क्रियते? इत्याह-"मात्राद्यप्रतिघाताय" इति।

पृथिग्निर्देशेनार्थबेदे सिद्धे सति मात्रजादीनां बाधा मा बूदित्येवमर्थः पृथग्निर्देशः क्रियत इत्याह। अथैकत्वे तु प्रकृतिसामान्ये मात्रजादयो विधीयमाना उत्सर्गा भवन्ति, प्रकृतिविशेषात्? तु वतुब्? विधीयमानोऽपवादौ भवति, "अपवादेनोत्सर्गो बाध्यते" इति यत्तदेतेभ्यो मात्र जादयो न स्युः, ततश्च तत्प्रमाणमस्य तन्मात्रमित्यादि न सिध्येत्(), अर्थभेयुत्सर्गापवादभावो नास्तीति न भवत्येष दोषप्रसङ्गः। किञ्च--"भावः सिद्धश्च डावतोः" इति। "डावतोः" इति पञ्चमी। अर्थभेदे सति वतुप्प्रत्ययान्तान्मात्रजादीनामुत्पत्तिश्च सिद्धा भवति। परिमाणे वतुब्? भवति--यत्? परिमाणमस्य यावानिति। तदन्तात्? परिमाणे मात्रजादयो भवन्ति--यावत्? परिमाणमस्य यावन्मात्रम्()। अथैकत्वे तु "उक्तार्थानामप्रयोगः" (व्या।प।६०) ति मतुपाऽबिहितत्वादस्यार्थस्य तदन्तान्मात्रजादयो न स्यु-। "त्वावतः, मावतः" इति। मपर्यन्तयोर्युष्मदस्मदोः "प्रत्ययोत्तरपदयोश्च" ७।२।९८ इति त्वामादेशौ पूर्ववदात्वम्()॥

बाल-मनोरमा

यत्तदेतेभ्यः परिमाणे वतुप् १८१६, ५।२।३९

यत्तदेतेभ्यः। तदस्येत्यनुवर्तते। अस्य तत्परिमाणमित्यर्थे परिमाणवाचिभ्यः प्रथमान्तेभ्यः किम्, यद्, तद्, एतद्, एभ्यो वतुप् स्यादित्यर्थः। यावानिति। यच्छब्दाद्वतुप्। उपावितौ। "आ सर्वनाम्नः" इत्यात्वम्, सुः, "उगिदचामि"ति नुम्, "अत्वसन्तस्ये"ति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। एवं तावान्, एतावान्।

तत्त्व-बोधिनी

यत्तदेतेभ्यः परिमाणे वतुप् १४०२, ५।२।३९

यत्तदेतेभ्यः। यावानित्यादि। "आ सर्वनाम्नः"इत्यात्वे "उगिदचा"मिति नुम्। "अत्वसन्तस्य चे"ति दीर्घः। हल्ङ()आदिलोपसंयोगान्तलोपौ। "प्रमाणे"इत्यनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्कृतम्। तथा च वार्तिकम्---"डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते। मात्राद्यप्रतिघाताय भावः सिद्धश्चडावतोः। इति। अस्यार्थः---इह शास्त्रे वतुपं विधाय तस्मिन् परे आत्वं विहितम्। पूर्वाचार्यास्तु डावतुं विदधिरे, तद्रीत्या निर्देशोऽयं डावताविति। विशेष्यते इति विशेषः, तस्य भावो वैशेष्यं, तस्मात्, अर्थभेदादित्यर्थः। अर्थभेदस्तु---"परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्या"दिति प्रागेवोक्त इति भावः। नन्वनयोरर्थभेदे सति यावानध्वा यावती रज्जुरित्यादि न सिध्येत्, अत्र ह्रायाममात्रं गम्यते। यद्युपमानाद्भविष्यतीति ब्राऊषे, तर्हि प्रमाणग्रहणमेवानुवर्त्यतां, यावानध्वेत्यादिप्रयोगाश्च मुख्याः सन्तु। ये तु परिमाणे प्रयोगाः "यावान् धान्यराशि"रित्यादयः, त एवोपमानाद्भवन्तु। तत्राह---"मात्रादिति"। "यत्तदेतेभ्यः"इति विशेषविहितो हि वतुप् सामान्यविहितान् मात्रजादीन् बाधेत। तेन तन्मात्रमित्यादि न स्यात्। परिमाणग्रहणे सति तु भिन्नोपाधिकत्वाद्वतुपः प्रमाणे विहितमात्रजादिभिः सह बाध्यबाधकभावो नेति भावः। नन्वेवमपि बाधः स्यादेव, "प्रमाणे द्वयस"जित्यत्र प्रस्थमात्रमित्यादिसिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्यातत्वेन वतुपो यत्तदेतेभ्यो विहितत्वेन विशेषविहितत्वातनपायात्। तस्मात् "यत्तदेतेभ्यो वतुप् चे"त्येव सूत्र्यतां, मास्तु परिमाणग्रहणम्, अस्तु च प्रमाणे इत्यर्थाधिकारः, तेन "यावती रज्जुः" "यावान् धान्यराशि"रित्यादिप्रयोगाः सर्वेऽप्युपचारं विनैव निर्वहन्तीत्यपरमनुकूलमत आह---"भावः सिद्धश्चेति"। डावतोरिति पञ्चम्यन्तम्। अर्थभेदे सति वत्वन्तान्मात्रजादीनामुत्पत्तिः सिध्यति। तत्परिमाणमस्य तावद्धान्यं राशीकृतम्। तावत्प्रमाणमस्य कुड()आदेः "तावन्मात्रम्"। यादृग्राशीकृतस्य धान्यादेर्दैध्र्यं तादृशं कुड()आदेरपीत्यर्थः। एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वाद्वतुबन्तान्मात्रजादयो न स्युः। यस्य हि तावत्प्रमाणं तस्यतदपि प्रमाणम्। जानुप्रमाणकं जलादि यस्य प्रमाणं तदपि जानुप्रमाणकमिति वक्तुं शक्यत्वात्। एवं च तावच्छब्द एव प्रयुज्येत न तु "तावन्मात्र"मित्यादि। अन्यथा तत्प्रमाणमस्य तन्मात्रम्। तन्मात्रं प्रमाणमस्य तन्मात्रमात्रमित्येवं मात्रजादिभ्यः प्रत्ययमालाप्रसङ्गात्।

सूत्रम्

काशिका-वृत्तिः

किमिदम्भ्यां वो घः ५।२।४०

किमिदम्भ्याम् उत्तरस्य वतुपो वकारस्य घकारादेशो भवति। कियान्। इयान्। एतदेव चादेशविधानं ज्ञापकं किमिदम्भ्यां वतुप्प्रत्ययो भवति इति। अथ वा योगविभागेन वतुपं विधाय पश्चाद् वो घो विधीयते।

लघु-सिद्धान्त-कौमुदी

किमिदंभ्यां वो घः ११७३, ५।२।४०

आभ्यां वतुप् स्याद् वकारस्य घश्च॥

न्यासः

किमिदम्भ्यां वो घः। , ५।२।४०

"कियान्()। इयान्()" इति। "इदंकिमोरीश्की" ६।३।८९ इति किमः की। "इदम ईश्()" इति। "यस्येति" ६।४।१४८ लोपः। केन पुनः किमिदम्भ्यां विहितस्य वतुपो वकारस्य घत्वं विधीयते? इत्याह--"अथ वा" इत्यादि। "योगविबागेन वा" इति। "किमिदम्भ्याम्()" इत्येतावता योगेन वतुपं विधाय ततः "वो घः" इत्यनेन वतुपो वकारस्य घत्वं विधीयते। अथ वग्रहणं किमर्थम्(), यावता "आदेः परस्य" १।१।५३ इति वकारस्यैव घो विधीयते, ननु चानेकाल्त्वात्? सर्वादेशः प्राप्नोति? नैष दोषः, अकारो ह्यत्रोच्चारणार्थो वर्णमात्रमेव, न त्वादेशः। कुतः पुनरेतद्विज्ञेयम्()? व्याख्यानात्()। तर्हि वकार एवं लघीयानिति युक्तं तस्य स्थानित्वेनोपादनम्()। वकारे त्वस्थानिन्युपात्तै यद्यपि समुदायादेशः, तथापि न दोषः; द्वयोरकारयोः पररूपं भविष्यति॥

बाल-मनोरमा

किमिदंभ्यां वो घः १८१७, ५।२।४०

किमिदंभ्यां वो घः। तदस्येति, परिमाणे वतुविति चानुवर्तते। तदाह--आभ्यां वतुप् स्यादिति। आभ्यां प्रथमान्ताभ्याम् "अस्य तत्परिमाण"मित्यर्थे वतुप्स्यादित्यर्थः। वस्य च घ इति। वकारस्य घकार इत्यर्थः। कियानिति। किं परिमाणमस्येति विग्रहः। किंशब्दाद्वतुप्। उपावितौ। वकारस्य घकारः। इयादेशः। किम् इयत् इति स्थिते "इदङ्किमोरीश्की" इति किमः कीभावे "यस्येति चे"ति ईकारलोपे कियच्छब्दात्सौ "उगिदचा"मिति नुमि अत्वसन्तस्ये"ति दीर्घे, हल्ङ्यादिसंयोगान्तलोपाविति भावः। इयानिति। इदंशब्दाद्वतुपि वकारस्य घकारे इयादेशे इदम् इयत् इति स्थिते "इदङ्किमोरीश्की"ति शित्त्वादिदम ईकारे सर्वादेशे "यस्येति चे"ति ईकारस्य लोपे इयदिति प्रत्ययमात्रं शिष्यते। ततः सौ नुमादि पूर्ववत्।

तत्त्व-बोधिनी

किमिदंभ्यां वो घः १४०३, ५।२।४०

किमिदंभ्याम्। वतुप्स्यादिति। वकारस्य घविधिसामथ्र्याद्वतुपरमनुवर्त्त्य सोऽप्यत्र विधीयत इति भावः। "आदेः परस्ये"त्येव सिद्धे "वः" इथि वचनमादेशप्रतिपत्त्यर्थम्। इतरथा घः प्रत्ययान्तरं विज्ञायते। कियामिति। "इदंकिमोरीश्की" "यस्येति चे"ति लोपः। इयानिति। ईसादेशस्य "यस्ये"ति लोपे प्रत्ययमात्रमवशिष्यते। पठन्ति च ----"उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ, गतवति विलयं च प्रकृतेऽपि प्रपञ्चे। सपदि पदमुदीतं केवलः प्रत्ययो यत्तदियदिति मिमीते

को ह्यदा पण्डितोपि।" वैयाकरणानामौपनिषदानां च प्रक्रियामाश्रित्य प्रवृत्तो व्यर्थोऽयं श्लोकः।

---

सूत्रम्

काशिका-वृत्तिः

किमः सङ्ख्यापरिमाणे डति च ५।२।४१

सङ्ख्यायाः परिमाणं सङ्ख्यापरिच्छेदः इत्यर्थः। सङ्ख्यापरिमाणे वर्तमानात् किमः प्रथमासमर्थादस्य इति षष्ठ्यर्थे डतिः प्रत्ययो भवति, चकाराद् वतुप्। तस्य च वकारस्य घादेशो भवति। पृच्छ्यमानत्वात् परिच्छेदोपाधिकायां सङ्ख्यायां वर्तमानात् किमः प्रत्ययो विज्ञायते। का सङ्ख्या परिमाणम् एषां ब्राह्मणानाम् कति ब्राह्मणाः, कियन्तो ब्राह्मणाः। अथ वा सङ्ख्या एव परिमाणात्मिका परिच्छेदस्वभावा गृह्यते, का सङ्ख्या परिमाणं येषां इति। ननु च सङ्ख्या एवमात्मिकैव परिच्छेदस्वभावा, सा किमर्थं परिमाणेन विशेष्यते? यत्र अपरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति। क्षेपे हि परिच्छेदो न अस्ति, केयम् एषां सङ्ख्या दशानाम् इति।

न्यासः

किमः संख्यापरिमाणे डति च। , ५।२।४१

"संख्यायाः परिमाणम्()" इति। कृद्योगलक्षणा कर्मणि षष्ठी। परिमितिः परिमाणम्()। संख्यापरिच्छेद इत्यर्थः। परिच्छेद ति भावे घञ्()। "संख्यापरिच्छेदे वत्र्तमानात्()" इति। परिच्छेदोपाधिकायां संख्यायां वत्र्तमानादित्येषोऽर्थो विवक्षितः। यथा ह्ययमेवार्थोऽस्य वचनस्योत्तरत्र तथा व्यक्तीकरिष्यते। तस्य वकारस्य घत्वमिति; "वो घः" इत्यनुवृत्तेः। "पृच्छ्यमानत्वात्()" इति। यदा संख्यायाः परिच्छेदे किंशब्दो वत्र्तते। कदा च वत्र्तते? यदा संख्या परिपृच्छ्यमाना भवति। न ह्यपरिपृच्छ्यमानायाः परिच्छेद उपपद्यते। यदा च परिपृटच्छ्यमाना भवति, तदा च किंशब्दः परिच्छेदविशिष्टायां वत्र्तत इति पृच्छ्यमानत्वात्? "परिच्छेदोपादिकायां संख्यायां वत्र्तमानात्? किमः प्रत्ययो भवतीति विज्ञायते। परिच्छेद उपाधिविशेषणभूतो यस्याः सा परिच्छेदोपाधिका। परिचछेदविशेषणेति यावत्()। तदनेन संक्यापरिच्छेदे वत्र्तमानात्? किम इत्यस्य योऽर्थोऽभिमतः स व्यक्तीकृतः। "कति" इति। जसः "षड्भ्यो लुक्()" [७।१।२२](#) इति लुक्()। "अथ वा" इत्यादि। अत्र च व्याख्याने "संख्यापरिमाणे" इति कर्मधारयः, निपातनादुपसर्जनस्यायं परनिपातः। परिमाणशब्दश्च परिमीयतेऽनेनेति करणसाधनः। "एवमात्मिकैव" इति। अस्यार्थं परिच्छेदस्वभावेत्यनेन विस्पष्टीकरोति। परिच्छिद्यतेऽनेनेति परिच्छेदः, स स्वभावो यस्याः सा तथोक्ता। "यत्र" इत्यादिना यदर्थं परिमाणग्रहणेन संख्या विशेष्यते तद्दर्शयति। स्यादेतत्()--नास्त्येव स विशेषो यत्र संख्यायाः परिच्छेदस्वभावो नास्ति, तदपार्थकं विशेषणमिति? अत आह--"क्षेपे हि" इत्यादि। "केयमेषां संख्या दशानाम्()" इति। नात्र संख्या परिच्छेदकत्वेन विवक्षिता। न ह्यत्र परिच्छेदोऽस्ति; क्षेपपरत्वाद्वाक्यस्य। किंशब्दोऽत्र क्षेपे वत्र्तते, न प्रश्ने॥

बाल-मनोरमा

किमः सङ्ख्यापरिमाणे डति च १८१८, ५।२।४१

किमः सङ्ख्या। तदस्येत्यनुवर्तते। सङ्ख्यायाः परिमाणं=परिच्छेदः। किंशब्दःप्रश्ने वर्तते। का अस्य सङ्ख्येत्येवं सङ्ख्या परिच्छेदविषयकप्रश्ने विद्यमाना()त्कशब्दात्प्रथमान्तादस्येत्यर्थे डतिप्रत्ययश्च स्यादित्यर्थः। कतीति। का सङ्ख्या अस्येति, का सङ्ख्या अनयोरिति च प्रश्नो न सम्भवति, "अस्ये"त्यनेन एकत्वस्य, अनयोरित्यनेन द्वित्वस्य च ज्ञातत्वात्, ज्ञाते च प्रश्नाऽसम्भवात्। का सङ्ख्या एषामिति तु प्रश्नः सम्भवति, तत्र एषामित्यनेन बहुत्वस्य ज्ञातत्वेऽपि तद्व्याप्यत्रित्वचतुष्ट्वादिसङ्ख्यानामज्ञातत्वात्। उक्तं च भाष्ये--"न द्व्येकयोः प्रश्नोऽस्ती"ति। ततश्च

नित्यबहुवचनान्तोऽयं कतिशब्दो "डति चे"ति षट्संज्ञकत्वात् "षड्भ्यो लु"गिति जश्शसोर्वुक्। कियन्त इति। कियानितिवत्प्रक्रिया। बहुवचने विशेषः। "सङ्ख्यापरिमाणे" इत्युक्तेः किमः क्षेपार्थकत्वे डतिर्न भवति। का सङ्ख्या एषां दशानामिति। "दशाऽवरा परिष"दित्यत्र ब्राआहृणब्राउवाणां मेलने इदं वाक्यं प्रवृत्तम्। सङ्ख्येयद्वारा सङ्ख्यायाः कुत्साऽत्र गम्यते, "अव्रतानाममत्राणां जातिमात्रोपजीविनाम्। सहरुआशः समेतानां परिषत्त्वं न विद्यते।" इति स्मरणात्।

तत्त्व-बोधिनी

किमः सङ्ख्यापरिमाणे डति च १४०४, ५।२।४१

किमः सङ्ख्या। "तदस्ये"त्यनुवर्तत एव। संख्यायाः परिमाणं=परिच्छेदः, तस्मिन् कर्तव्ये यः प्रश्नस्तस्मिन्वर्तमानात्किमः प्रथमासमर्थादस्येति षष्ठ()र्थे डतिः स्यात्। सङ्ख्यापरिमाणे किम्()। क्षेपे माभूत्। का सङ्ख्येयमेषां दशानाम्। "अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। सहरुआशः समेतानां परिषत्त्वं न विद्यते इत्येवं सङ्ख्येयद्वारेणाऽत्र संख्यायां कुत्सा बोध्या।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्याया अवयवे तयप् ५।२।४२

तदस्य इत्येव। सङ्ख्याया अवयवे वर्तमानायाः अस्य इति षष्ठ्यर्थे तयप् प्रत्ययो भवति। अवयवावयविनः सम्बन्धिनः इति सामर्थ्यातवयवी प्रत्ययार्थो विज्ञायते। पञ्च अवयवा यस्य पञ्चतयम्। दशतयम्। चतुष्टयम्। चतुष्टयी।

न्यासः

संख्याया अवयवे तयप्?। , ५।२।४२

"चतुष्टयी" इति। चतुरो रेफस्य "विसर्जनीयस्य सः" ८।३।३४ इति सः; तस्यापि "ह्रस्वात्तादौ तद्धिते" ८।३।९९ इति मूर्धन्यः, "टिड्ढाणञ्()" ४।१।१५ इत्यादिना ङीप्()॥

बाल-मनोरमा

सङ्ख्याया अवयवे तयप् १८१९, ५।२।४२

सङ्ख्यायाः। तदस्येत्यनुवर्तते। द्वित्र्यादिसङ्ख्याका अवयवा अस्यावयविन इति विग्रहे अवयवीभूतसङ्ख्यावाचिनः प्रथमान्तादस्यावयविन इत्यर्थे तयवित्यर्थः। पञ्चतयमिति। पञ्चावयवकः समुदाय इत्यर्थः।

तत्त्व-बोधिनी

सङ्ख्याया अवयवे तयप् १४०५, ५।२।४२

संख्यायाः। अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमान्तात्षष्ठ()आर्थे तयप् स्यात्। यं प्रत्यवयवः सोऽवयवी प्रत्ययार्थः, "अस्ये"त्यधिकारात्। यथा द्वयसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयं प्रत्ययार्थस्तद्वत्।

---

सूत्रम्

काशिका-वृत्तिः

द्वित्रिभ्यां तयस्य अयज् वा ५।२।४३

पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वा अयजादेशो भवति। द्वौ अवयवौ अस्य द्वयम्, द्वितयम्। त्रयम्, त्रितयम्। तयग्रहणं स्थानिनिर्देशार्थम्। अन्यथा प्रत्ययान्तरम् अयज् विज्ञायेत। तत्र को दोषः? त्रयी गतिः इति तयनिबन्धन ईकारो न स्यात्, प्रथमचरमतयाल्पार्धकतिपय। नेमाश्च १।१।३२। इत्येष विधिर्न स्यात्। द्वये। द्वयाः। चकारः स्वरार्थः।

लघु-सिद्धान्त-कौमुदी

द्वित्रिभ्यां तयस्यायज्वा ११७६, ५।२।४३

द्वयम्। द्वितयम्। त्रयम्। त्रितयम्॥

न्यासः

द्वित्रिभ्यां तयस्यायज्वा। , ५।२।४३

तयप्रत्ययग्रहणं किमर्थम्(), यावता प्रकृत एवासावनुवर्त्तिष्यते? इत्याह--"तयग्रहणम्()" इत्यादि। यदि तयब्ग्रहणं न क्रियते, तदा तयप्रत्ययादन्य एवायमयच्? प्रत्ययो विज्ञायेत, न तयबादेशः। किं पुनः स्याद्यदि प्रत्ययान्तरं स्यात्()? तयष्कार्य्यमयचो न स्यात्()। किं तत्()? "प्रथमचरम्()" १।१।३१ इत्यादिना जसि विभाषा सर्वनामसंज्ञा--द्वये, द्वयाः; "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()--द्वयो। ननु च पूर्वसूत्रेणैव विहितस्य तस्य इह चादेशार्थानुवृत्तिर्विज्ञायते। प्रयोजनान्तराभावात्(), "द्वित्रिभ्याम्()" इति। पञ्चमीनिर्देशः "तस्मादित्युत्तरस्य" १।१।६६ इति षष्ठ()न्तं सम्पादयिष्यते, अतोनेनान्तरेणापि तयब्ग्रहणं तयप्स्थानित्वं लभ्यत एव? नैतदस्ति; यद्यनुवृततिस्तयपोऽन्यार्या न स्यात्(), ततोऽनुवृत्तिसमर्थ्यात्? तयपः स्थानित्वं विज्ञायेत। तस्य त्वनुवृत्तिरुत्तरार्थिपि भवति। "उभादुदात्तो नित्यम्()" ५।२।४४ इत्यव योगविबागेन तयब्विधातव्यः। न चानुवत्र्तमानः शक्यते विधातुम्()। अत उत्तरार्थायामनुवृत्तौ सत्यां तयप्स्थानित्वमयुक्तमिति तयब्ग्रहणं क्रियते॥

बाल-मनोरमा

द्वित्रिभ्यां तयस्याऽयज्वा १८२०, ५।२।४३

द्वित्रिभ्यां द्वित्रिभ्यां परस्य तयपोऽयज्वा स्यादित्यर्थः। द्वयमिति। द्विशब्दात्तयपोऽयचिः "यस्येति चे"ति इकारलोपः। द्व्यवयवकसमुदाय इत्यर्थः। एवम् त्रयम्।

तत्त्व-बोधिनी

द्वित्रिभ्यां तयस्याऽयज्वा १४०६, ५।२।४३

त्रयमिति। ननु "त्रयोऽवयास्तन्तवो यस्य त्रयं सूत्र"मिति प्रयोगे संभवत्यपि "मुनित्रय "मिति प्रयोगो न सङ्गच्छते, अन्यपदार्थस्यावयविनोऽभावादिति चेत्। अत्राहुः---अवयवी त्वत्र समुदाय एव। स चातिरिक्तो वाऽनतिरिक्तो वेति विचारान्तरम्। एवं च समुदायस्यातिरिक्तत्वपक्षेऽपि समुदायघटकत्वेन मुनीनां प्रत्यभिज्ञानान्मुनित्रयनमस्कारस्य विघ्नविघातकत्वमस्त्येवेति।

---

सूत्रम्

काशिका-वृत्तिः

उभादुदात्तो नित्यम् ५।२।४४

उभशब्दात् परस्य तयपो नित्यम् अयजादेशो भवति, स चोदात्तः। वचनसामर्थ्यादादेरुदात्तत्वं विज्ञायते। उभशब्दो यति लौकिकी सङ्ख्या ततः पूर्वेण एव विहितस्य तयप आदेशविधानार्थं वचनम्। अथ न सङ्ख्या, ततो योगविभागेन तयपं

विधाय तस्य नित्यम् अयजादेशो विधीयते। उभयो मणिः। उभये ऽस्य देवमनुष्याः।

लघु-सिद्धान्त-कौमुदी

उभादुदात्तो नित्यम् ११७७, ५।२।४४

उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः। उभयम्॥

न्यासः

उभादुदात्तो नित्यम्?। , ५।२।४४

"वचनसामर्थ्यात्()" इत्यादि। यद्यन्तोदात्तः स्यादुदात्तवचनमनर्थकं स्यात्()। अयचि च कृते चित्स्वरेणैव "सतिशिष्टस्वरो बलीयान्()" (वा। ६।१।१५८) इत्यन्तोदात्तत्वस्य सिद्धत्वात्। आद्युदात्तत्वं ह्नन्यथा न सिध्यतीति तद्रथं क्रियसाणमर्थबद्वचनं भवतीति। "यदि लौकिको संख्या" इति। द्वित्रादिवत्()। पूर्वेण योगेन तययो विधानम्(), तस्यापरेण योगेन नित्यमयजादेशो विधीयते। "उभये देदमनुष्याः" इति। उभाववयवौ येषामित्युभये। कथं बहुत्वे देवमनुष्याणां द्वाववयवौ भवतः? यद्यप्यत्र बहुत्वमस्ति, द्वित्वमपि तु प्रातिपदिकयोरस्त्येव; अत्र हि द्वौ राशी समुदायस्यावयवौ--एको देवनां राशिः, अपरो मनुष्याणामित्यदोषः॥

बाल-मनोरमा

तदस्मिन्नधिकमिति दशान्ताड्डः १८२२, ५।२।४४

अथ मत्वर्थीयाः--तदस्मिन्नधिकं तदधिकमस्मिन्निति विग्रहे प्रथमान्ताद्दशन्शब्दान्तात्समासादस्मिन्नित्यर्थे डप्रत्ययः स्यादित्यर्थः। प्रत्ययविधौ तदन्तविधिप्रतिषेधादन्तग्रहम्। अत एव निर्देशात्पञ्चम्यर्थे सप्तमीत्याहुः। "औपश्लेषिकेऽधिकरणे सप्तमी"ति भाष्यम्। "सामीपिकमधिकरण"मिति कैयटः। एकादश माषा अधिका अस्मिन्निति। अस्मादित्यर्थः। अस्मिन् उपश्लिष्टा इति वा। न च व्यपदेशिवत्त्वे केवलदशन्शब्दादपि स्यादिति शङ्क्यं, व्यपदेशिद्भावोऽप्रातिपदिकेने"त्युक्तेः।

बाल-मनोरमा

उभादुदात्तो नित्यम् ५६९, ५।२।४४

उभादुदात्तो नित्यं। स चोदात्त इति। आद्युदात्त इत्यर्थः। अन्तोदात्तत्वस्य चित्त्वेनैव सिद्धेरिति भाष्ये स्पष्टम्। अत्र "अयच्प्रत्यय एव विधीयते, नतु तयप आदेशः" इति स्थानिवत्सूत्रभाष्ये स्पष्टम्। "तयप आदेश" इति मूलं तु वार्तिकानुरोधेन।

**** इति बालमनोरमायाम् पाञ्चमिकाः। ****

अथ परस्मैपदप्रक्रिया।

अथ परस्मैपदव्यवस्थां निरूपयितुमुपक्रमते -- शेषात्कर्तरीति।

तत्त्व-बोधिनी

उभादुदात्तो नित्यम् १४०७, ५।२।४४

उभादुदात्तो नित्यम्। इह "चितः"इत्यनेनैवान्तोदात्तत्वं सिद्धं, सर्वोदात्तत्वं तु "अनुदात्तं पदमेकवर्ज"मिति वचनाद्बाधितम्।

न च हे उभयेति संबुद्ध्()यन्ते आमन्त्रिताद्युदात्तत्वं बाधितुं वचनमिति शङ्क्यं, पुरस्तादपवादन्येन चित्स्वरस्यैव बाध्यता, न त्वामन्त्रिताद्युदात्तत्वस्येति सुवचत्वात्। तस्मादुदात्तवचनसामर्थ्यादादेरेवायम्। प्रयुज्यते च तथा ---"उभयं श्रृणवच्च न"इति। तदेतत्सकलमभिप्रेत्याह---स चेति।

---

सूत्रम्

काशिका-वृत्तिः

तदस्मिन्नधिकम् इति दशान्ताड् डः ५।२।४५

ततिति प्रथमासमर्थातस्मिनिति सप्तम्यर्थे दशान्तात् प्रातिपदिकात् डः प्रत्ययो भवति यत् तत्प्रथमासमर्थम् अधिकं चेत् तद् भवति। इतिकरणस् ततश्चेद् विवक्षा। एकादश अधिका अस्मिनशते एकादशम् शतम्। एकादशं सहस्त्रम्। द्वादशं शतम्। द्वादशं सहस्रम्। दशान्तातिति किम्? पञ्च अधिका अस्मिन् शते। अन्तग्रहणं किम्? दशाधिका अस्मिन् शते। प्रत्ययार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते। एकादश कार्षापणा अधिका अस्मिन् कार्षापणशते एकादशं कार्षापनशतम् इति। इह तु न भवति, एकादश माषा अधिका अस्मिन् कार्षापणशते इति। शतसहस्रयोश्च इष्यते। इह न भवति, एकादशाधिका अस्यां त्रिंशति इति। इतिकरणो विवक्षार्थ इत्युक्तं, तत इदं सर्वं लभ्यते। कथम् एकादशम् शतसहस्रम् इति? शतानां सहस्रं, सहस्राणाम् वा शतम् इति शतसहस्रम् इत्युच्यते। तत्र शतसहस्रयोः इत्येव सिद्धम्। अधिके समानजाताविष्टं शतसहस्रयोः। यस्य सङ्ख्या तदाधिक्ये डः कर्तव्यो मतो मम।

न्यासः

तदस्मिन्नधिकमिति दशान्ताड्डः।, ५।२।४५

"प्रत्ययार्थेन च" इत्यादि। यथाजातीयः प्रत्ययार्थस्तथाजातीय एव यदि प्रकृत्यर्थो वति एवं प्रत्यय इत्यते, नान्यथा। प्रत्ययार्थेन प्रकृत्यर्थस्य तुल्यजातीयत्वं दर्शयितुमुदाहरणमुपन्यस्यति--"एकादश कार्षापणाः" इति। प्रकृत्यर्थोऽप्येकादश कार्षापणा एवेति प्रकृत्यर्थः प्रत्ययार्थेन समानजातीयः। "इह तु न" इत्यादि। अत्र हि कार्षापणशतं प्रत्ययार्थः। प्रकृत्यर्थस्त्वेकादश माषाः। ते च कार्षापणेभ्यो विजातीया इति न भवति प्रत्ययः। "शतसहरुआयोश्चैवेष्यते" इति। यत्? "तदस्मिन्()" त()स्मश्च शते सहरुओ वा प्रत्यय इष्यते; नान्यतर तिं()रशत्यादौ। कथं पुनरनुपात्तमेव सूत्रे लभ्यते? इत्याह--"इति करणो विवक्षार्थः" इत्यादि। "कथम्()" इत्यादि। यदि शते सहरुओ वाधिकिनि प्रत्ययेन भवितव्यम्(), इह प्रत्ययो न प्राप्नोति--एकादशं शतसहरुआमिति। अत्र हि शतसहरुआं संख्यान्तरञ्चाधिकम्(), न शतं नापि सहरुआमित्यभिप्रायः। "शतानाम्()" इत्यादि। अनेन शतसहरुआस्य संख्यान्तरं निरस्याति। यदा शतशब्दः षष्ठ()न्तः सहरुआशब्देन समस्यते तदा शतानां सहरुआं शतसहरुआशब्देनोच्यते। यदा तु सहरुआशब्दः षष्ठ()न्तशब्देन समस्यते, तदा सहरुआआणाअं शतं शतसहरुआशब्देनोच्यते। ननु च सहरुआशब्दस्य पष्ठ()न्तस्य समासे सहरुआशतमिति भवितव्यम्()? राजदन्तादिषु दर्शनात्? तस्य परनिपातो भविष्यतीत्यदोषः। "तत्र शतसहरुआयोरित्येव सिद्धम्()" इति। शतसहरुआवाच्यस्यार्थस्य शतसहरुआयोरेवान्तर्भावात्()। "अधिके" इत्यादि। लोके प्रत्ययार्थेन समानजातावधिके शतसहरुआयोरेव प्रत्ययाख्यं कार्यमिष्टम्()। यदा त्वसमानजात्यधिकं भवति, न च शतं सहरुआं वा प्रत्ययार्थेन विवक्षितम्(), तदा नेष्यते। अथैकादशं शतसहरुआमित्यत्र कस्याधिक्ये सति डः कत्र्तव्यः? इत्याह--"यस्य" इत्यादि। संख्या संख्यानम्(), गणनमित्यर्थः। यस्य संख्या, तस्याधिक्ये डः कत्र्तव्यः। कस्य च संख्या भवति? अधिकत्वं संख्यायते यस्य। यदा शतानि संक्यायते तदा--शतानां सहरुआमिति शतसहरुआम्(), तदा शताधिक्ये डः कत्र्तव्यः। एकादशाधिकान्स्मिन्? सहरुआ एकादशं शतसहरुआमिति। यदा तु सहरुआआणि संख्यायते--सहरुआआणां शतं सहरुआशत्मिति, तदा सहरुआआधिक्ये डः कत्र्तव्यः। एकादशसहरुआआण्यधिकान्यस्मिन्नेकादशं

शतसहरुआमिति। अथ किमर्थं तदिति प्रथमासमर्थविभक्तिरुपादीयते? यावता "तदस्य सञ्जातम्()" ५।२।३६ इत्यनुवत्र्तत एव, तत्र प्रत्ययार्थ एवास्मिन्निति निर्देष्टव्यः? नैवं शक्यम्(); तदनुवृत्तौ हि तत्सम्बन्धस्यास्येति प्रत्यार्थस्याप्यनुवृत्तिः प्रसज्येत। न च षष्ठीसप्तम्यर्थयोर्विरोधः; ततोऽस्मिन्निति निर्देशात्? पूर्वः प्रत्ययार्थो न निवत्र्तते, तस्यां त्वनुवृत्तौ षष्ठ()र्थेऽपि प्रत्ययः स्यात्()। तस्मादस्येति निवृत्त्यर्थं पुनस्तदिति प्रथमासमर्थविभक्तिरुपादीयते। यद्येवम्(), अस्येति प्रत्ययार्थस्य निवृत्तत्वात्? "संख्याया गुणस्य निमाने मयट्()" ५।२।४७ इत्यत्र षष्ठ()र्थे प्रत्ययो न प्राप्नोति। इह निवृत्तस्यापि मण्डूकप्लुतिन्यायेनानुवृत्तिर्भविष्यतीत्यदोषः। अन्ये तु ज्ञापकं तदित्यस्य वर्णयन्ति। तदिति प्रकृते यत्? तदित्याह, तज्ज्ञापयति--"तदस्य सञ्जातम्()" ५।२।३६ इत्यादौ सूत्रे यन्निर्दिष्टं तदिहानुवत्र्तमानमप्यङ्गभावं न यातीति षष्ठ()र्थे प्रत्ययो न भवति॥

तत्त्व-बोधिनी

तदस्मिन्नधिकमिति दशान्ताड्डः १४०८, ५।२।४५

तदस्मिन्। पुनस्तद्ग्रहणम् "अस्ये"ति षष्ठ()न्तसंबद्धतद्ग्रहणनिरासार्थः प्रत्ययविधौ तदन्तविध्यभावादाह---दशान्तादिति। अन्तग्रहणं किम्()। दश अधिका अस्मिन्शते। न चेह व्यपदेशिवद्भावेन दशान्तत्वमस्तीति वाच्यं, "व्यपदेशिवद्भावोऽप्रातिपदिकेने"त्यभ्युपदमात्। शदन्त प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति "यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्ये"ति परिभाषया तदादिनियमः स्यात्, तं वारयितुमन्तग्रहणम्। तेन "एकतिं()रशं शतम्" "एकचत्वारिंश"मित्यादि सिद्धम्। न चैवं गोतिं()रशदधिका अस्मिन् गोशते इत्यादावतिप्रसङ्गः शङ्क्यः, "सङ्ख्याया अवयवे तय"वित्यतः सङ्ख्याग्रहणानुवृत्तेः। अन्तग्रहणमिह विंशति शब्दानन्तरं कर्तव्यं "ष()ड्वशत्यन्ताच्चे"ति। तेन "एकविंशं शत"मित्यादि सिध्यति। अन्यथा "ग्रहणवते"ति तदन्तविधिप्रतिषेधादिह न स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

शदन्तविंशतेश् च ५।२।४६

तदस्मिन्नधिकम् इत्यनुवर्तते, डः इति च। शदन्तात् प्रातिपदिकात् विंशतेश्च डः प्रत्ययो भवति तदस्मिन्नधिकम् इत्येतस्मिन् विषये। त्रिंशदधिका अस्मित्र् छते त्रिंशं शतम्। शद्ग्रहने ऽन्तग्रहनं प्रत्ययग्रहणे यस्मात् स तदादेरधिकार्थम्। एकत्रिंश शतम्। एकचत्वारिंशं शतम्। सङ्ख्याग्रहणं च कर्तव्यम्। इह मा भूत्, गोत्रिंशदधिका अस्मिन् गोशते इति। विंशतेश्च। विशं शतम्। तदन्तादपि इति वक्तव्यम्। एकविंशं शतम्। सङ्ख्याग्रहणं च कर्तव्यम्। इह मा भूत्, गोविंशतिरधिका ऽस्मिन् गोशते इति।

न्यासः

शदन्तविंशतेश्च। , ५।२।४६

ननु च "पङ्()क्ति" ५।१।५८ इत्यादौ सूत्रे तिं()रशदादयः शब्दाः शत्प्रत्ययान्ताः, ततश्च प्रत्ययग्रहणपरिभाषयैव तदन्तात्? प्रत्ययो लभ्यते, तत्? किमन्तग्रहणेन? इत्याह--"शद्()ग्रहणेऽन्तग्रहणम्()" इत्यादि। यद्यन्तग्रहणं न क्रियेत, तदा प्रत्ययग्रहणपरिभाषया यस्मात्? स विहितस्तदादेरेव स्यान्(); नाधिकात्()। अतोऽधिकादपि यथा स्यादित्येवमर्थमन्तग्रहणम्()। यदि तर्हि यस्मात्? प्रत्ययो विहितस्तदादेरधिकार्थमन्तग्रहणं केवलान्न प्राप्नोति? नैष दोषः; चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन केवलादपि भविष्यति। "संख्याग्रहणञ्च कत्र्तव्यम्()" इति। संख्या

गृह्णते येन तत्? संख्याग्रहणं कत्र्तव्यम्()। किं पुनः कत्र्तव्यम्()? व्याख्यानम्()। तत्रैवं व्याख्यानम्()--"संख्याया अवयवे तयप्()" ५।२।४२ इत्यतः संख्याया इत्यनुवत्र्तते, तेन संख्याधिकादेव भविष्यति, नान्याधिकात्()। "विंशतेश्च" इत्यादि। विंशतिशब्दाच्च तदन्ताच्च प्रातिपदिकाङ्डप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रैदं व्याख्यानम्()--विंशतिशब्दात्तावत्? साक्षात्? सूत्रोपात्तात प्रत्ययो भवति, तदन्तादपि; चकारस्यानुक्तसमुच्चयार्थत्वादिति। "संख्याग्रहणं च" इत्यादौ पूर्व एवार्थः। व्याख्यानमपि पूर्वकमेव॥

बाल-मनोरमा

शदन्तविंशतेश्च १८२३, ५।२।४६

शदन्तविंशतेश्च। शेषपूरणेन सूत्रं व्याचष्टे--डः स्यादुक्तेऽर्थेइति। दशान्तत्वाऽभावात्पूर्वेणाऽप्राप्तिः। तिं()रशं शतमिति। हे सति "टि"रिति टिलोपः। विंशमिति। विंशतिरिस्मिन्नधिका इति विग्रहः। "ति विंशते"रिति तिशब्दस्य लोपः। अन्तग्रहणादेकतिं()रशं शतमिति सिद्धम्। अन्यथा प्रत्ययग्रहणपरिभाषया तदादिनियमः स्यात्। "विंशतावप्यन्तग्रहण"मिति वार्तिकादेकविंशं शतमित्यादि सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्याया गुणस्य निमाने मयट् ५।२।४७

तदस्य इत्यनुवर्तते तदस्य सञ्जातम् इत्यतः। तदिति प्रथमासमर्थात् सङ्ख्यावाचिनः प्रातिपदिकातस्य इति षष्ठ्यर्थे मयट् प्रत्ययो भवति यत् तत् प्रथमासमर्थं गुणस्य चेन् निमाने वर्तते। गुणो भागः निमानं मूल्यम्। गुणो येन निमीयते मूल्यभूतेन सो ऽपि सामर्थ्याद् भाग एव विज्ञायते। यवानां द्वौ भागौ निमानम् अस्य उदश्विद्भागस्य द्विमयमुदश्विद् यवानाम्। त्रिमयम्। चतुर्मयम्। भागे ऽपि तु विधीयामानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे। तेन सामान्याधिकरण्यं भवति द्विमयमुदश्वितिति। गुणस्य इति चैकत्वं विवक्षितं, तेन इह न भवति, द्वौ भागौ यवानां त्रय उदश्वितः इति। भूयसश्च वाचिकायाः सङ्ख्यायाः प्रत्यय इष्यते। इह न भवति, एको भागो निमानमस्य इति। भूयसः इति च प्रत्ययार्थात् प्रकृत्यर्थस्य अधिक्यमात्रं विवक्षितम्। बहुत्वमतन्त्रं, तेन द्विशब्दादपि भवति। गुणशब्दः समानावय्ववचनः। तेन इह न भवति, द्वौ भागौ यवानाम् अध्यर्ध उदश्वितः इति। निमेये चापि दृश्यते। निमेये वर्तमानायाः सङ्ख्याया निमाने प्रत्ययो दृश्यते। उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः। त्रिमया यवा उदश्वितः। चतुर्मयाः। गुणस्य इति किम्? द्वौ व्रीहियवौ निमानमस्य उदश्वितः। निमाने इति किम्? द्वौ गुणौ क्षीरस्य एकस्तैलस्य, द्विगुणं पच्यते तैलं क्षीरेण इत्यत्र मा भूत्।

न्यासः

संख्याया गुणस्य निमाने मयट्?। , ५।२।४७

"गुणो येन निमीयते" इति। परिवर्त्यते, विक्रीयत इत्यर्थः। "सोऽपि" इत्यादि। न हि तस्य भागत्वमन्तरेण निमेयस्य गुण इत्येव निर्दिष्टस्य भागत्वमध्यवसातुं शक्यम्()। यदा हि मूलस्य भागत्वं नास्ति, भागव्यपदेशो न प्रवत्र्तत एव। तेन यद्यपि निमानस्य भागता नोक्ता, तथापि सामथ्र्यात्? सा प्रतीयते। "यवानां द्वौ भागौ निमानमस्य" इति। ननु चोभयत्रापि परिवत्र्तनम्(), तथापि मूल्य एव निमानशब्दो रूढ इति यन्मूल्यत्वेन विवक्षितं तदेव निमानं भवति, नेतरत्()। "यवानाम्()" इति। भागापेक्षया षष्ठी। यद्येवम्(), परापेक्ष उदश्चिच्छब्दे तद्धितस्य वृत्तिर्विरुध्यते। ननूद()इआद्भागे प्रत्ययः, नोद()इआति, तत्कथं द्विमयमुद()इआदिति प्रत्ययान्तस्योद()इआच्छब्देन सामानाधिकरण्यम्()? इत्यत

आह--"भागेऽपि तु" इत्यादि। अत्र पुनरभिधानशक्तिस्वाभाव्यं हेतुः। यथैवाणादयोऽपत्यापत्यवत्सम्बन्धेऽपि विधीयमाना अभिधानशक्तिस्वाभाव्यात्? प्राधान्येन सम्बन्धिनमाचक्षते--औपगवो दाक्षिरिति, तथायमपि भागे विधीमानो भागवन्तमुद()इआदादिकमाचष्टे। "गुणस्येति चैकत्वं विवक्षितम्()" इति। गुणस्येति यैकसंख्या सा विवक्षिता। ननु च "तद्धिताः ४।१।७६ इति निर्देशेऽपि बहुवचनमप्रमाणम्(), तस्याविवक्षितत्वात्()" इत्युक्तम्(), तत्कथमिहैकत्वविवक्षा युज्यते? नैष दोषः; इह हि षष्ठीसमासं कृत्वा गुणनिमान एव कत्र्तव्यम्(), एवं हि लघु सूत्रं भवति। सोऽयमेवं वक्तव्ये सति यद्गुणस्येत्येकवचनमुच्चारयति, तेनैतत्? सूचयति--विवक्षितमत्रैकत्वमिति तेनेत्यादिनैकत्वविवक्षायाः फलं दर्शयति। एकत्वविवक्षायां ह्येतत्? प्रयोजनम्()--एकस्य गुणस्य निमाने वत्र्तमानाद्यथा स्यात्()। "द्वौ भागौ यवानां त्रय उद()इआतः" इति। अत्र त्रयाणां भागानां निमाने द्विशब्दो वत्र्तत इति न भवति प्रत्ययः। ननु च सत्यामप्येकत्वविवक्षायां नैवान्न प्रत्ययेन भवितव्यम्(), यतः "भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते" इति वचनम्()। न ह्यत्र द्विशब्दो भूयसो वाचकः? एवं तर्हि यवानां यौ द्वौ भागौ, ताविह निमेयत्वेन विवक्ष्येते। ये त्रय उद()इआतो भागास्ते निमानत्वेन। तत्र यद्येकत्वविवक्षा न स्यात्? तदा त्रिषूद()इआद्गुणेषु वत्र्तमानात्? प्रत्ययः स्यात्()। भूयसश्चेत्यपि प्रत्ययार्थात्? प्रकृत्यर्थस्य भूयसो वाचिकायाः प्रत्यय इष्यते, नान्यतः। "इह न भवति" इति। अनभिषानात्()। "तदस्मिन्नधिकम्()" ५।२।४५ इत्यादेः सूत्रादितिकरणानुवृत्तेर्वा। यदि भूयसो वाचिकायाः संख्याया इष्यते यवानां द्वौ भागौ निमानमस्येत्यत्र न प्राप्नोति? इत्यत आह--"भूयस इति च" इत्यादि। एवमपि हि प्राप्नोति--द्वौ यवानामष्यद्र्ध उद()इआत इति, अस्ति ह्यत्र प्रत्यर्थात्? प्रकृत्यर्थस्याधिक्यम्()? इत्यत आह--"गुणशब्दः" इत्यादि। गुणशब्दो ह्ययं भागवचनोऽपि समतामपि तस्य भागस्य ब्राऊते, न चाप्यद्र्धशपब्देन समभाग उच्यते। "निमेये चापि दृश्यते" इति। केन पुनर्विहितो दृश्यते? अनेनैव। कथम्()? द्वे अत्र वाक्ये; तत्रैकस्मिन्? वाक्ये निमानशब्दः करणसाधनः--निमीयतेऽनेनेति निमानम्(); द्वितीये तु कर्मसाधनो निमीयत इति निमानम्(); "कृत्यल्युटो बहुलम्()" ३।३।११३ इति कर्मणि ल्युट्()। यदा करणसाधनस्तदा गुणस्येति कर्मणि षष्ठी, यदा तु कर्मसाधनस्तदा कत्र्तरि। गुणो हि निमानक्रियाकरणमिति कर्तृत्वेन विवक्ष्यते। भवति हि करणस्य कर्तृत्वेन विवक्षा, यथा--साध्यसिश्छिनत्तीति। तत्रैकेन वाक्येन निमाने पत्र्तमानायाः संख्याया निमेयेऽभिधेये प्रत्ययो विधीयते। अपरेण निमेये वत्र्तमानाया निमानेऽभिधेयेऽपि प्रत्ययोऽभिधीयते। वाक्यभेदस्य च संख्याग्रहणं निबन्धनम्()--"संख्याया अवयवे तयप्()" ५।२।४२ इत्यतः। एवञ्च संख्याग्रहणमनुवत्र्तते। इदमिह द्वितीयम्()। तत्र यद्यत्रैकं वाक्यं स्याद्()द्वितीयं संख्याग्रहणमनर्थकं स्यात्(), सौत्रानुमिताभ्यां तु द्वे वाक्ये क्रियमाणे तदर्थवद्भवति। तस्माद्द्वे अत्र वाक्ये। "द्वौ व्रीहियवौ" इत्यादि। अत्र नोद()इआद्भागस्य द्वौ व्रीहियवौ निमानत्वेन विवक्षितौ, किं तर्हि? उद()इआतः। एवं "द्वौगुणौ" इत्यादि। अत्र प्रथमासमर्थो गुणस्य निमानेन वत्र्तते। न हि क्षीरस्य भागद्वयेन तैलस्य भागो निमीयते। मयटष्टित्करणं ङीबर्थम्()--द्वौ गुडस्यैको द्राक्षाया द्विमयी द्राक्षेति॥

बाल-मनोरमा

सङ्ख्याया गुणस्य निमाने मयट् १८२४, ५।२।४७

सङ्ख्याया गुणस्य "तदस्ये"त्यनुवर्तते। गुणः=भागः, अंशः। निमीयते क्रीयतेऽनेनेति निमानं=मूल्यद्रव्यम्। "मेङ् प्रणिदाने"। करणे ल्युट्। तदाह--भागस्य मूल्य इत्यादि। षष्ठ()र्थे इति। अस्येत्यर्थे इत्यर्थः। "यवानां द्वौ भागौ निमानमस्योद()इआद्भागस्ये"ति विग्रहवाक्यम्। द्वाभ्यां यवप्रस्थाभ्याम् एक उद()इआत्प्रस्थः क्रियते यत्र तत्रेदं वाक्यं प्रयुज्यते। "द्विमयमुम()इआद्यवाना"मित्युदाहरणम्। "यवाना"मिति संबन्धसामान्ये षष्ठी। यवप्रस्थद्वयेन क्रेतव्यमुद()इआदित्यर्थः। द्विशब्दस्य भागवृत्तेर्नित्यसापेक्षत्वेऽपि प्रत्ययः। द्वौ व्रीहियवौ निमानमस्योद()इआत इति। द्वित्वसङ्ख्याविशिष्टौ व्रीहियवराशी यौ तौ अस्य उद()इआतो निमानमित्यर्थः। अत्र उद()इआद्यावत् तदपेक्षया व्रीहियवराश्योर्द्वि गुणत्वं न विवक्षितं, किंतु राशद्वित्वमेव विवक्षितमिति द्विशब्दस्य भागवृत्तित्वाऽभावान्न प्रत्ययः।

तत्त्व-बोधिनी

सङ्ख्याया गुणस्य निमाने मयट् १४०९, ५।२।४७

सङ्ख्याया गुणस्य। गुणो---भागः। निमीयते=क्रीयतेऽनेनेति निमानं=मूल्यम्। "मेङ् प्रणिदाने---इत्यस्मान्निपूर्वात्करणे ल्युट्। तदाह---भागस्य मूल्ये इति। षष्ठ()आर्थे इति। यद्यपि "तदस्मिन्नधिक "मित्यतः "त"दित्यनुवृत्तौ प्रथमान्तादित्ययमेवार्थो लभ्यते, तथापि मण्डूकप्लुत्या। "तदस्य संजात"मित्यतः "तदस्य"इत्यनुवर्तनात् "षष्ठ()र्थे"इत्येतदपि लभ्यत इति भावः। द्विमयमिति। द्विशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वात् "यवाना"मिति पदे सत्यपि तद्धितोत्पत्तिरिहाऽविरुद्धेति ज्ञेयम्। नन्वेवमपि प्रत्ययान्तस्योद()इआच्छब्देन सामानाधिकरण्यं दुर्लभम्। यावतोद()इआद्भागे प्रत्ययो विहितो, नोद()इआति। अत्राहुः----भागेऽपि विधीयमानः प्रत्ययोऽभिदानस्वाभाव्याद्भागवन्तमाचष्टे। तेन सामानाधिकरण्यं भवतीति। "गुणनिमाने"इति वक्तव्ये व्यस्तोच्चारणात् "एकत्वं गुणस्ये"त्यत्र विवक्षितम्। तेनेह न भवति "यवाना द्वौ भागौ निमानमेषामुद()इआतस्त्रायाणां भागाना"मिति। "भूयसश्च वाचिकायाः सङ्ख्यायाः प्रत्यय इष्यते"। इह न भवति। एको भागो निमानमस्येति। "भूयस"इति च प्रत्ययार्थादाधिक्यमात्रं प्रकृत्यर्थस्य विवक्षितं, न तु बहुत्वम्। तेन द्विशब्दादपि भवत्येव। तस्य पूरणे। "तस्ये"ति षष्ठ()न्तानुकरणम्। एकत्वं त्वविवक्षितम्। एकस्य पूरणाऽसम्भवात्। पूर्यतेऽनेनेति पूरणः। ण्यन्तात्करणे ल्युट्। एकादशानामिति। उद्भूतवयवभेदः समुदायः प्रकृत्यर्थः। अवयवः प्रत्ययार्थः। इह यस्मात्सङ्ख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्ययः। यथा "अतिशायने", "याप्ये"इत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिकं गृह्नते, अन्तरङ्गत्वात्, तथेहापि। तेन "एकादशानां घटानां पूरणो जलादि"रित्यत्र नातिप्रसङ्गशषङ्कालेशोऽपीति भावः। ननु यदि प्रवृत्तिनिमित्तस्य पूरणे प्रत्ययः, तह्र्यत्र एकादशत्वस्य पूरण इति विग्रहो वक्तुं युक्त इति चेत्। अत्राहुः---"वैयाकरणपाशः"इत्यत्र यथा "याप्यो वैयाकरणः"इति विग्रहः, न तु "याप्यं वैयाकरणत्व"मिति, तथेहापि बोध्यमिति। एवं च व्युत्क्रमेणाध्यायेषु गम्यमानेषु "वृद्धिरादै"जित्यध्यायो यदा चरमं गण्यते तदा सोऽप्यष्टमो भवत्येव।

---

सूत्रम्

काशिका-वृत्तिः

तस्य पूरणे डट् ५।२।४८

तस्य इति षष्ठीसमर्थात् सङ्ख्यावाचिनः प्रातिपदिकात् पूरणे इत्यस्मिन्नर्थे डट् प्रत्ययो भवति। पूर्यते ऽनेन इति पूरणम्। येन सङ्ख्या सङ्ख्यानं पूर्यते सम्पद्यते, स तस्याः पूरणः। एकादशानां पूरणः एकदशः। त्रयोदशः। यस्मिन्नुपसञ्जाते ऽन्या सङ्ख्या सम्पद्यते स प्रत्ययार्थः। इह न भवति, पञ्चानां मुष्टिकानां पूरणो घटः इति।

लघु-सिद्धान्त-कौमुदी

तस्य पूरणे डट् ११७८, ५।२।४८

एकादशानां पूरणः एकादशः॥

न्यासः

तस्य पूरणे डट्?। , ५।२।४८

इह द्वे संख्याग्रहणे अनुवत्र्तते, तत्र चैकेन "संख्यावाचिनः प्रातिपदिकात्()" इति ब्राउवता प्रकृतिर्विशेषिता। द्वितीयेन तु प्रत्ययार्थ विशेषयितुमाह--"येन" इत्यादि। संख्यानशब्दं समुच्चारयन्? संख्नावचनः संख्यानशब्देन प्रत्ययार्थो विशेष्यते

इति दर्शयति। द्विविधो हि संख्याशबदः--संख्यानवचनः, संख्येयवचनश्च। तत्र यदि संख्येयवचनेन प्रत्ययार्थो विशेष्यते, तदायमर्थः स्यात्()--संख्येयं मुष्ट()आदिकं येन पूर्यते द्रव्यान्तरेणातिरिक्तं क्रियते स च पूरण इति, ततश्च पञ्चानां मुष्टिकाणां घट इत्यत्रापि स्यात्()। तस्मात्संख्यावचनेनैव प्रत्ययार्थो विशेषयितुं युक्तः। "सम्पद्यते" इति। पूर्‌र्यत इत्यस्यार्थमाचष्टे। एतेनैतद्दर्शयति--संख्यावचनेन प्रत्ययार्थो विशेष्यते। न मुष्टिकाणामिव द्रव्याणां द्रव्यान्तरेणातिरिक्तकरणं संख्यायाः पूरणम्(), किं तर्हि? सम्पत्तिरेवेति। "इह न भवति" इत्यादि। न हि घट उपजाते पञ्चत्वसंख्या मुष्टिकाणा सम्पदयते। किं तर्हि? तत्र पञ्चसंख्यकानामेव द्रव्यान्तरेणातिरिक्तता॥

बाल-मनोरमा

तस्य पूरणे डट् १८२५, ५।२।४८

तस्य पूरणे। सङ्ख्याया इत्यनुवर्तते। सङ्ख्येयार्थकसङ्ख्यावाचिनः षष्ठ()न्तात्प्रवृत्तिनिमित्तसङ्ख्यायाः पूरणे वाच्ये डट्प्रत्ययः स्यादित्यर्थः। पूर्यते अनेनेति पूरणः=अवयवः, स प्रत्ययार्थः। एकादश इति। एकादशत्वसङ्ख्यायाः पूरकोऽवयव इत्यर्थः। यस्मिन्ननुपात्ते एकादशत्वसङ्ख्या न सम्पद्यते, यस्मिन्नुपात्ते तु सा पूर्यते, सोऽवयवः। एकदेश इति यावत्। प्रवृत्तिनिमित्तेति किम्?। पञ्चाना घटानां पूरणं जलादि।

---

सूत्रम्

काशिका-वृत्तिः

न अन्तादसङ्ख्याऽअदेर् मट् ५।२।४९

डटिति वर्तते। नकारान्तात् सङ्ख्यावाचिनः प्रातिपदिकातसंख्यादेः परस्य डटो मडागमो भवति। नान्तातिति पञ्चमी इट आगमसम्बन्धे षष्ठीं प्रकल्पयति। पञ्चानां पूरणः पञ्चमः। सप्तमः। नान्तातिति किम्? विंशतेः पूरणः विंशः। असङ्ख्यादेः इति किम्? एकादशानां पूरणः एकादशः।

लघु-सिद्धान्त-कौमुदी

नान्तादसंख्यादेर्मट् ११७९, ५।२।४९

डटो मडागमः। पञ्चानां पूरणः पञ्चमः। नान्तात्किम्?।

न्यासः

नान्तादसंख्यादेर्मट्?। , ५।२।४९

"डटो मडागमो भवति" इति। अथ प्रत्यय एव नान्तात्? मट्? कस्मान्न भवति? नर्हति प्रत्ययो भवितुम्()। प्रत्यये हि तस्मिन्? सति डटोऽनुवृत्तिरपार्थिका स्यात्(), स हि पूर्वमेव विहितः, न च विहितस्यानुवृत्तिर्विधानार्थोपपद्यत इति। आगमार्थे च सा विज्ञायते। ननु च पञ्चम इत्यादौ न कश्चिद्विशेषः--मट आगमत्वे, प्रत्ययत्वे वा; तदेव हि रूपम्(), स एव हि स्वरः, किञ्चानुवृत्तेन, मट एव प्रत्ययत्वमस्तु? सत्यम्(), इह नास्ति विशेषः; विंशतितम इत्यादौ तु विद्यते। तथा हि "विशत्यादिभ्यस्तमडन्यतरस्याम्()" ५।२।५५ इति मट्प्रत्ययः स्यात्()। ["मयट्()" मुद्रितपाठः] विंशतितमप्रभृतयः शब्दाः प्रत्ययस्वरेण मध्योदात्ताः स्युः। डटि तु प्रत्यये सति तस्याद्युदात्तत्वे कृते ततश्चागमानुदात्तत्वे चान्तोदात्ता भवन्ति। तस्मादुतरार्थेऽनुवर्त्तमानस्येहापि डट एव प्रत्ययत्वं विज्ञायते। कथं पुनर्डटो मडागमः शक्यो विधातुम्(), यावता प्रथमानिर्दिष्टं प्रकृतं डड्ग्रहणम्(), षष्ठीनिर्दिष्टेन चेहार्थः? इत्यादि--"नान्तात्()" इत्यादि। यद्यपि प्रथमान्तं डड्ग्रहणं प्रकृतम्(), तथापि डट आगमसम्बन्धेन "तस्मादित्युत्तरस्य" १।१।६६ इति नान्तादित्येषा पञ्चमी डडिति प्रथमायाः षष्ठीं प्रकलपयतत्यदोषः। "पञ्चमः" इति। टिलोपोऽत्र न भवति; मटि कृते सत्यभसंज्ञकत्वात्()। ननु च

परत्वाट्टिलोपेनैव तावद्भवितव्यम्()? नैतदस्ति; अन्तरङ्गो ह्यागमः, स हि प्रत्ययसन्नियोगेनोच्यते। टिलोपस्तूत्पन्ने प्रत्यये भसंज्ञाया सत्यां प्रकृतिप्रत्ययावाश्रित्य भवतीति बहिरङ्गो भवति। "एकादशानां पूरणा एकादशः" इति। कथं पुनरस्मात्प्राप्तिः, यावता संख्याग्रहणमनुवत्र्तते, संख्यासम्()दायोऽपि हि संख्याग्रहणेन गृह्रते--संख्यायतेऽनयेति कृतवा। अवश्यं चैतदेवं विज्ञेयम्(); अन्यथाऽदशतया न स्यात्()॥

बाल-मनोरमा

नान्तादसङ्ख्यादेर्मट् १८२६, ५।२।४९

नान्तासङ्ख्यादेर्मट्। डटो मडागमः स्यादिति। शेषपूरणमिदम्। डटि टकार इत्। अकार उच्चारणार्थः। पञ्चम इति। पञ्चन्शब्दाड्डटि तस्य भडागमे सति नलोपः। यद्यपिमटः प्रत्ययत्वेऽपि न रूपभेदः, तथापि स्वरविशेषार्थं मडागमाश्रयणमिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

नान्तादसङ्ख्यादेर्मट् १४१०, ५।२।४९

नान्तादसङ्ख्यादेः। डट इति। "डट्िति प्रथमान्तस्यानुवृत्तस्य "नान्ता"दिति पञ्चम्या षष्ठी कल्प्यत इति भावः। यद्यपीह मटः प्रत्ययत्वेऽपि न क्षतिः, तथाप्युत्तरत्र तमट आगमत्वमेवाभ्युपगन्तव्यम्, अनुदात्तता यथा स्यात्। प्रत्ययत्वै ह्याद्युदात्तः स्यात्। तया चैकरूप्येणैव संदर्भव्याख्यानमुचितम्। अन्येत्वाहुः--मटः प्रययत्वे अकारसहितो मकारो विधेयः, आगमत्वे तु मकारमात्रमिति लाघवमस्तीति। विंश इति। विशतेः पूरणः। "ति विंशतेर्डिति"इति लोपः।

---

सूत्रम्

काशिका-वृत्तिः

थट् च छन्दसि ५।२।५०

नान्तादसङ्ख्यादेः परस्य डटः छन्दसि विषये थडागमो भवति। चकारात् पक्षे मडपि भवति। पर्णमयानि पञ्चथानि भवन्ति। पञ्चथः। सप्तथः। मट् पञ्चममिन्द्रियस्यापाक्रामत्।

न्यासः

थट् च च्छन्दसि। , ५।२।५०

---

सूत्रम्

काशिका-वृत्तिः

षट्कतिकतिपयचतुरां थुक् ५।२।५१

डटिति अनुवर्तते,तदिह सप्तम्या विपरिणम्यते। षट् कति कतिपय चतुरित्येषां डटि पुरतस्थुगागमो भवति। कतिपयशब्दो न सङ्ख्या। तस्य अस्मादेव ज्ञापकात् डट् प्रत्ययो विज्ञायते। षण्णां पुरणः षष्ठः। कतिथः। कतिपयथः। चतुर्थः। चतुरश्छयतावाद्यक्षरलोपश्च। चतुर्णां पूरणः तुरीयः, तुर्यः।

लघु-सिद्धान्त-कौमुदी

षट्कतिकतिपयचतुरां थुक् ११८१, ५।२।५१

एषां थुगागमः स्याड्डटि। षण्णां षष्ठः। कतिथः। कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट्। कतिपयथः। चतुर्थः॥

न्यासः

षट्कतिकतिपयचतुरां थुक्?। , ५।२।५१

"तदिह सप्तम्या" इत्यादि। पूरणाधिकारे ह्ययं विधीयमानो डट्सन्नियोगन विधीयते। तत्र यद्यपि सप्तमौ नास्ति, तथापि डटि परतो विज्ञायते। तेनार्थाद्विभक्तिवपरिणामो भवतीति डडिति यद्वत्तेत तदिह सप्तम्या विपरिणम्यते। "कतिपयशब्दो न संख्या" इति। लौकिकत्वाभावात्? संख्या न भवति; लोकेऽस्य संख्यात्वेनाप्रसिद्धत्वात्। शास्त्रीयोऽपि न भवति; शास्त्रे संख्यासंज्ञाऽविधानात्()। यदि न संख्या, कंथमस्य डट्(), यत्र परतस्थुग्विधीयते? इत्याह--"तस्य" इत्यादि। यदेतड्डटि परतः कतिपयशब्दस्य थुग्विधानं तत एव ज्ञापकाड्डट्()प्रत्ययोऽस्य भवतीत्यवसीयते। "षष्ठः" इति। ष्टुत्वम्()। टिलोपोऽत्र न भवति। थुग्विधानसामर्थ्यात्()। आगमस्य पूर्वान्तकरणं भसंज्ञार्थम्()। यदि परादिः क्रियते ततो भसंज्ञा न स्यात्(), तथा चासत्याम्(), "स्वादिष्वसर्वनामस्थाने" १।४।१७ इति पदसंज्ञा स्यात्()। ततश्च षष्ठ इत्यत्र जश्त्वं प्रसज्येत। "चतुर्थः" इति। अत्र रेफस्य "विसर्जनीयस्य सः" ८।३।३४ इति सत्वम्()। पूर्वान्ते तु संज्ञायां सत्यां न भवति॥

बाल-मनोरमा

षट्कतिकतिपयचतुरां थुक् १८२७, ५।२।५१

षट्कति। थुकि ककार इत्। उकार उच्चारणार्थः। कित्त्वादन्त्यादचः परः। षष्ठ इति। अपदान्तत्वात्षस्य न जश्त्वम्। चतुर्थ इति अपदान्तत्वान्न रेफस्य विसर्गः।

चतुर इति। वार्तिकमिदम्। चतुर्शब्दात्षष्ठ()न्तात्पूरणे छयतौ स्तः। आद्यक्षरस्य लोपश्चेति। "च" इति सङ्घातस्य लोपश्चेत्यर्थः।

तत्त्व-बोधिनी

षट्कतिकतिपयचतुरां थुक् १४११, ५।२।५१

षट्कति। इह षष्ठीनिर्देशबवात् षडादीनामागमित्वं स्पष्टमिति तदानुकूल्यंनानुवृत्तो डट् सप्तम्या विपरिणम्यते। तदाह---डटीति। डट एव थुट् तु न कृतः, षष्ठो षकारस्य जश्त्वुप्रसङ्गात्। चतुर्थे रेफस्य विसर्गप्रसङ्गाच्च। न चैवं "नान्ता "दिति सूत्रेऽपि डति परे मुगेव विधीयतामिति वाच्यं, पञ्चमः सप्तम इत्यादौ नलोपाऽभावापत्तेः।

चतुरश्छयता वाद्यक्षरलोपश्च। चतुरश्छयताविति। विशेषविहिताभ्यामपि छयभ्यां डट्प्रत्ययो न बाध्यते, थुग्विधानसामर्थ्यात्। तेन "चतुर्थ"इति सिद्धम्। आद्यक्षरेति। अच्सहितं व्यञ्जनमक्षरशब्देनोच्यते, अच्सहितस्यादेव्र्यञ्जनस्येत्यर्थः। "व्यञ्जनसहितस्यादेरच"इति व्याख्याने तु द्विर्वचनन्यायेन तकारस्यापि लोपः स्यादिति हरदत्तः। "आदेव्र्यञ्जनस्ये"ति व्याख्याने प्रमाणं तु ----"द्वितीयतृतीये"

ति सूत्रे "तुर्याणी"ति निर्देशो बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

बहुपूगगणसङ्घस्य तिथुक् ५।२।५२

डटित्येव। बहु पूग गन सङ्घ इत्येतेषां डटि परतः तिथुगागमो भवति। पूगसङ्घशब्दयोरसङ्ख्यात्वादिदम् एव ज्ञापकं

डटो भावस्य। बहूनां पूरणः बहुतिथः। पूगतिथः। गणतिथः। सङ्घतिथः।

काशिका-वृत्तिः

वतोरिथुक् ५।२।५३

डटित्येव। वतोर् डटि परतः इथुगागमो भवति। वत्वन्तस्य संख्यात्वात् पूर्वेण डड् विहितः, तस्मिन्नयम् आगमः विधीयते। यावतां पूरणः यावतिथः। तावतिथः। एतावतिथः।

न्यासः

बहुपूगगणसङ्खसय तिथुक्?। , ५।२।५२

"पूगसङ्घयोरसंख्यात्वात्()" इति। अत्र कथं प्रत्यय इति, पूगसङ्घशब्दौ हि न लौकिकी संख्या, नापि शास्त्रीया, तत्कथं ताभ्यां डट्प्रत्ययः, यत्र परतस्तयोस्तिथुग्विधीयते, डटि च विधानम्()? अथात्रोत्तरमाह--"इदमेव" इत्यादि। यदेतड्डटि परतस्तयोस्तिथुको विधानमेतदेव ज्ञापयति--भवति ताभ्यां डट्प्रत्यय इति। न ह्रसतस्तिथुगागमं प्रति निमित्तभाव उपपद्यते॥

न्यासः

वतोरथुक्?। , ५।२।५२

"यावतिथः" इति। "यत्तदेतेभ्यः परिमाणे वतुप्()" ५।२।३९, "आ सर्वनाम्नः" ६।३।९०॥

बाल-मनोरमा

बहुपूगगणसङ्घस्य तिथुक् १८२८, ५।२।५२

बहुपूगगण। बहु, पूग, गण, सङ्घ एषां डटि तिथुगागमः स्यादित्यर्थः। ककार इत्। उकार उच्चारणार्थः। कित्त्वादन्त्यादचः परः। इत्यादीति। पूगतिथः गणतिथः, सङ्घतिथः।

बाल-मनोरमा

वतोरिथुक् १८२९, ५।२।५२

वतोरिथुक्। डटीत्येवेति। वतुबन्तस्य इथुगागमः स्याड्डटीत्यर्थः। यावतिथ इति। यावतां पूरण इति विग्रहः। "बहुगणे"ति सङ्ख्यात्वात् "तस्य पूरणे" इति डेटि प्रकृतेरिथुक्।

---

सूत्रम्

काशिका-वृत्तिः

द्वेस् तीयः ५।२।५४

द्विशब्दात् तीयः प्रत्ययो भवति तस्य पूरणे इत्यस्मिन् विषये। डटो ऽपवादः। द्व्योः पूरणः द्वितीयः।

लघु-सिद्धान्त-कौमुदी

द्वेस्तीयः ११८२, ५।२।५३

डटोऽपवादः। द्वयोः पूरणो द्वितीयः॥

न्यासः

द्वेस्तीयः। , ५।२।५३

"द्विशब्दात्? तीयप्रत्ययो भवति" इति। अथ द्विशब्दादुत्तरस्य डटस्तीयादेशः कस्मादेव न भवति? ज्ञापकत्वात्()। यदयम्? "कर्मणि द्वितीया" २।३।२ इति टापा निर्देशं करोति, तज्ज्ञापयति--नायमादेश इति। यद्येवमनेनैव सिद्धत्वात्? प्रत्ययविधानमनर्थकम्()? न; स्वरार्थत्वात्()। निपातनाद्धि प्रातिपदिकस्वरेणान्तोदात्तः स्यात्()। तीयप्रत्यये तु प्रत्ययस्वरेण मध्योदात्तो भवति। किञ्च, यदि प्रत्ययो न विधीयते "बाधकान्यपि निपातनानि भवन्ति" (नी।प।बृ। १०९) इति डडपि स्यात्()। यदि पुनरयं डडादेशः स्यात्(), तर्हि किं स्यात्()? डट्स्वरेण तीयशब्दोऽन्तोदात्तः स्यात्(), स्त्रियां च टित्त्वान्डीप्(), ततश्च द्वितीयेति निर्देशो नोपपद्यते॥

बाल-मनोरमा

द्वेस्तीयः १८३०, ५।२।५३

द्वेस्तीयः। द्विसब्दात्षष्ठ()न्तात्पूरणे तीयप्रत्ययः स्यादित्यर्थः।

तत्त्व-बोधिनी

द्वेस्तीयः १४१२, ५।२।५३

द्वेस्तीयः। डटोऽपवाद इति। डट आदेशस्तु न भवति, टिति "टिड्ढे"ति ङीपः प्रसक्त्या "द्वितीयाश्रिते"ति निर्देशानुपपत्तेः।अतएव निर्देशाद्द्विशब्दस्याप्यादेशो न भवति।

---

सूत्रम्

काशिका-वृत्तिः

त्रेः सम्प्रसारणं च ५।२।५५

त्रिशब्दात् तीयः प्रत्ययः भवति तस्य पूरणे इत्येतद् विषये। डटो ऽपवादः। तत्संनियोगेन त्रेः संप्रसारणं च भवति। त्रयाणाम् पूरणः तृतीयः। हलः (*६,४।२।) इति संप्रसारणस्य दीर्घत्वं न भवति। अणः इति तत्र अनुवर्तते ढ्रलोपे इत्यतः। पूर्वेण च णकारेण अण्ग्रहणं।

लघु-सिद्धान्त-कौमुदी

त्रेः संप्रसारणं च ११८३, ५।२।५४

तृतीयः॥

न्यासः

त्रेः सम्प्रसारणञ्च। , ५।२।५४

"अण इति तत्र वत्र्तते" इति। "ढ्रूलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इत्यतः। ननु च परेण णकारेणाण्ग्रहण ऋकारोऽप्यण्? भविष्यति? इत्यत आह--"पूर्वेण च" इत्यादि। अत्र "त्रेस्तु च" इत्येवं कस्मान्नोक्तम्()? अशक्यमेवं वक्तुम्(), एवं ह्युच्यमाने सन्देहः स्यात्? - किमयमादेशः, उत्त प्रत्यय? इति॥

बाल-मनोरमा

त्रे संप्रसारणं च १८३१, ५।२।५४

त्रेः संप्रसारणं च। त्रेस्तीयः स्यात्प्रकृतेः सम्प्रसारणं चेत्यर्थः। तृतीय इति। त्रयाणां पूरण इति विग्रहः। तीयप्रत्यये सति रेफस्य सम्प्रसारणमृकारः। "सम्प्रसारयणाच्चे"ति पूर्वरूपम्। "हलः" इति दीर्घस्तु न भवति, "ढ्रलोपे" इत्यतोऽण इत्यनुवृत्तेः।

तत्त्व-बोधिनी

त्रेः संप्रसारणं च १४१३, ५।२।५४

तृतीय इति। रेफस्य ऋकारः संप्रसारणम्। "हलः"इति दीर्घस्तु न भवति, "ढ्रलोपे"इति सूत्रादण इत्यनुवृत्तेः "त्रेस्तृ च"इति नोक्तं, प्रत्ययो मा विज्ञायीति।

---

सूत्रम्

काशिका-वृत्तिः

विंशत्यादिभ्यस् तमडन्यतरस्याम् ५।२।५६

विंशत्यादिभ्यः परस्य डटः तमडागमो भवत्यन्यतरसयाम्। पूरणाधिकारात् डट्प्रत्यय आगमी विज्ञायते। विंशतेः पूरणः विंशतितमः, विंशः। एकविंशतितमः, एकविंशः। त्रिविंशतितमः, त्रिविंशः। त्रिंशत्तमः, त्रिंशः। एकत्रिंशत्तमः, एकत्रिंशः। विंशत्यादयो लौकिकाः सङ्ख्याशब्दा गृह्यन्ते, न पङ्क्त्यादिसूत्रसंनिविष्टाः। तद्ग्रहणे ह्येकविंशतिप्रभुऋतिभ्यो न स्यात्। ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। एवं च सति षष्ट्यादेश्च असङ्ख्यादेः ५।२।५७ इति पर्युदासोयुज्यत एव।

न्यासः

विंशत्यादिभ्यस्तमडन्यतरस्याम्?। , ५।२।५५

"विंशत्यादिभ्यः परस्य" इत्यादि। ननु च तीयप्रत्ययेन डङ्? व्यवहितः, तत्कथं तमडागमः शक्यो विज्ञातुम्()? अत आह--"पूरणाधिकारात्()" इति। पूरणार्थे यो विहितसतस्य विंशत्यादिभ्यः परस्य तमङ्()विधीयते, स नान्यो डटः सम्भवतीति डडेव विज्ञायते। "विंशात्यादयो लौकिकाः संख्याशब्दा गुह्णन्ते" इति। व्याप्तेन्र्यायात्()। ते पुनर्विंशत्येकविंशतिप्रभृतयः संगृहीता भवन्ति। किं पुनः स्याद्यदि पङ्क्त्यादिसूत्रे ५।१।५८ तेषामसन्निविष्टत्वात्()।

बाल-मनोरमा

विंशत्यादिभ्यस्तमडन्यतरस्याम् १८३२, ५।२।५५

विंशत्यादिभ्यः। तमटि टकार इत्। मकारादकार उच्चारणार्थः। अत्र "पङ्क्तिविंशती"ति सूत्रानुक्रान्ता एव विंशत्यादयो गृह्न्ते नतु लोकप्रसिद्धा एकविशत्यादयोऽपि, विप्रकर्षादिति कैयटः। एकविंशतितम" इत्यत्र तु तदन्तविधिना तमडित्यग्रे वक्ष्यते।

तत्त्व-बोधिनी

विंशत्यादिभ्यस्तमडन्यतरस्याम् १४१४, ५।२।५५

विंशत्यादिभ्यः। इह प्रत्यासत्त्या "पङ्क्ती"त्यादिसूत्रे निपातिता विंशत्यादयो गृह्न्ते, न लोकप्रसिद्धाः, विप्रकृष्टत्वादिति। भाष्यमतम्। वृत्तिकृता तु विंशत्यादयो लौकिका एव सङ्ख्याशब्द गृह्न्तं, न पङ्क्त्यदिसूत्रनिर्दिष्टाः, तद्ग्रहणं ह्केविंशतिप्रभृतिभ्यो न स्यात्, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। एवं च सति "षष्ठ()आदेश्चाऽसङ्ख्यादे"रिति पर्युदासो युज्यत एवेत्युक्तम्। एकविंशतितम इति। यद्यपि भाष्यमते

तदन्तविधिर्दुर्लभस्तथापि "षष्ट()आदेशश्चे"ति सूत्रे सङ्ख्यादिपर्युदासो ज्ञापयति---"इह प्रकरणे तदन्तानामपि ग्रहण"मिति। एवं च सति एकन्नविंशतेः पूरण एकान्नविंशतितम इत्यपि सिध्यति।"लौकिकानां ग्रहण"मिति वृत्तिमते ति नैतत्सिध्येत्। विंशतिसंख्यातः प्राग्भावित्वादस्याः संख्यायाः। एतच्च कैयटहरदत्तग्रन्थयोः स्पष्टम्। ननु "अनारम्भो वा प्रतिपदिकविज्ञानाद्यथा सहरुआआदिषु" इति वदता कात्यायनेन पङ्क्त्यादिसूत्रस्य प्रत्याख्यातत्वा "तत्सूत्रे"निपातिता विंशत्यादयो गृह्नन्ते"इति भाष्यमतमयुक्तमिति चेदत्राहुः---यद्यपि प्रत्याख्यातं तथापीहार्थमावश्यकं तत्। अतएव तत्र भाष्यकृता "नाऽसूया कर्तव्या यत्रानुगमः क्रियते"इत्युक्तम्। अतः कात्यायनोक्तप्रत्याख्यानं नादर्तव्यमिति। शततम इति। यद्यपीदं "षष्ट()आदेश्चे"त्युत्तरसूत्रेणैव सिध्यति, तथापि संख्याद्यर्थ "नित्यं शतदी"त्यावश्यकमिति ध्वनयन्नुदाहरति---एकशततम इति। मासादेरिति। संख्यावाचित्वाऽभावेऽपीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं शतादिमासार्धमाससंवत्सराच् च ५।२।५७

शतादयः संख्याशब्दाः लौकिका गृह्यन्ते। शतादिभ्यः मासार्धमाससंवत्सरशदेभ्यश्च परस्य डटो नित्यं तमडागमः भवति। मासादयः संख्याशब्दा न भवन्ति, तेभ्यो ऽस्मादेव ज्ञापकात् डट् प्रत्ययो विज्ञायते। शतस्य पूरणः शततमः। सहस्रतमः। लक्षतमः। मासस्य पूरनः मासतमो दिवसः। अर्धमासतमः। संवत्सरतमः। षष्ट्यादेश्च असङ्ख्यादेः ५।२।५७ इति वक्ष्यमाणेन सिद्धे शतादिग्रहणं सङ्ख्याद्यर्थम्। एकशततमः। द्विशततमः।

न्यासः

नित्यं शतादिमासार्धमाससंवत्सराच्च। , ५।२।५६

"शतादिग्रणम्()" इत्यादि। संख्यादिभ्यः शतादिभ्यो यथा स्यादित्येवमर्थं शतादिग्रहणम्()। अथ नित्यग्रहणं किमर्थम्(), यावताऽऽरम्भसामश्र्यादेव नित्यो विधिर्भविष्यति? भवेच्छतादिभ्य आरम्भसामश्र्यादित्येवम्()। मासादिभ्यस्त्वन्यतरस्यांग्रहणातुवृत्तेर्विभाषा स्यात्()। ननु चास्वरितत्वादेव निवर्त्तिष्यतेऽन्यतरस्यांग्रहणम्()? विस्पष्टार्थ तर्हि नित्यग्रहणम्()॥

बाल-मनोरमा

नित्यं शतादिमासार्धमाससंवत्सराच्च १८३३, ५।२।५६

नित्यं शतादि। शतादिभ्यो मासात् अर्धमासात्संवत्सराच्च परस्य डटो नित्यं तमडागमः स्यादित्यर्थः। ननु "षष्ठ()आदेश्चे"त्युत्तरसूत्रेण शततमः सिध्यतीत्यत आह--एकशततम इति। "असङ्ख्यादे"रिति पर्युदासादुत्तरसूत्रस्य नात्र प्रवृत्तिरिति भावः। ननु मासार्धमाससंवत्सरशब्दानां सङ्ख्यावाचित्वाऽभावात्तेभ्यो डट एवाऽप्रसक्तेस्तस्य कथं तदङ्विधिरित्यत आह--मासादेरिति। मासतम इति। मासस्य पूरणः-अर्धमासादिरवयवः। अर्धमासतम इति। अर्धमासस्य पूरणस्तिथ्यादिरवयवः। संवत्सरतम इति। संवत्सरस्य पूरणो मासादिरवयवः।

---

सूत्रम्

काशिका-वृत्तिः

षष्ट्यादेश् च असङ्ख्यादेः ५।२।५८

षष्ट्यादेः सङ्ख्याशब्दादसङ्ख्यादेः परस्य डटो नित्यं तमडागमः भवति। विंशत्यादिभ्यः इति विकल्पेन प्राप्ते नित्यार्थम्।

षष्टितमः। सप्ततितमः। असंख्यादेः इति किम्? एकषष्टः, एकषष्टितमः। एकसप्ततः, एकसप्ततितमः।

न्यासः

षष्ट�आदेश्चासंख्यादेः। , ५।२।५७

प्राक्शतात्? षष्ट()आदायो विज्ञेयाः। शतादीनां स्वशब्देन तमटो विधानात्()॥

बाल-मनोरमा

षष्ठ�आदेश्चाऽसङ्ख्यादेः १८३४, ५।२।५७

षष्ठ()आदेश्चासङ्ख्यादेः। सङ्ख्यापूर्वपदात्पष्ट()आदेः परस्य डटो नित्यं तमडागमः स्यादित्यर्थः। विंशत्यादिभ्यः" इति विकल्पस्याऽपवादः। एकषष्टः एकषष्टितम इति। सङ्ख्यादित्वान्नित्यस तमटोऽभावे "विंशत्यादिभ्यः" इति डटस्तमड्विकल्पः। तमडभावे डटि "यस्येति चे"ति इकारलोपे "एकषष्ट" इति रूपम्। ननु केवलसात्षष्ट()आदेर्विहितस्य नित्यतमटः सङ्ख्यादेः कथं प्रसक्तिः, तमडागमविधेरप्रत्ययविधित्वेऽपि "ग्रहणवता प्रातिपदिकेन तदन्तविधिं ज्ञापयति। तेन "विंशत्यादिभ्यः" इति पूर्वसूत्रमेकविंशतितम इत्यादावपि प्रवर्तत इति भाष्ये स्पष्टम्। एवंच "एकान्नविंशतितमः" इत्यपि सिद्धम्।

तत्त्व-बोधिनी

षष्ट�आदेश्चाऽसङ्ख्यादेः १४१५, ५।२।५७

षष्ट()देश्चेति। "विशत्यादिभ्यः"इति विकल्पे प्राप्ते नित्यार्थोऽमारम्भः। सङ्ख्यादेस्त्विति। एतच्च प्राक्शताब्दोध्यम्, "नित्यं शतादी"त्युक्तत्वात्। मतौ छः। मत्वर्थ इति। मतोर्विषय इत्यर्थः। तेन "त"दिति प्रथमा समर्थविभक्तिः, "अस्याऽस्मि"न्निति प्रत्ययार्थश्चेह लभ्यते।

---

सूत्रम्

काशिका-वृत्तिः

मतौ छः सूक्तसाम्नोः ५।२।५९

मतौ इति मत्वर्थ उच्यते। प्रातिपदिकान् मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि च अभिधेये। मत्वर्थग्रहणेन समर्थविभक्तिः, प्रकृतिविशेषनं, प्रत्ययार्थः इति सर्वम् आक्षिप्यते। अच्छावाकशब्दो ऽस्मिन्निति अच्छावाकीयं सूक्तम्। मित्रावरुणीयम्। यज्ञायज्ञीयं साम। वारवन्तीयम्। अनुकरनशब्दाश्च स्वरूपामात्रप्रधानाः प्रत्ययम् उत्पादयन्ति। तेन अनेकपदादपि सिद्धम्। अस्यवमीयम्। कयाशुभीयम्।

न्यासः

मतौ छः सूक्तसाम्नोः। , ५।२।५८

"मतौ" इति मत्वर्थ उच्यते; साहचर्यात्()। "मत्वर्थेन" इत्यादि। समर्थविभक्तिः प्रथमा, प्रकृतिविशेषणम्()--अस्तित्वम्(), प्रत्ययार्थः--अस्यास्मिन्निति च, सर्वमेतन्मत्वर्थग्रहणेन "आक्षिप्यते" इति। सन्निधाप्यते, उपस्थाप्यत इत्यर्थः। युक्तं यन्मतुब्ग्रहणे प्रत्ययार्थ आक्षिप्यते; तस्य तद्विषयत्वात्()। समर्थविभक्त्यादि कथमाक्षिप्यते? अर्थसाहचर्यात्()॥ अथ वा प्रधानानुवृत्तित्वाद्गुणानाम्(), प्राधान्येन प्रत्ययार्थ उपस्थापिते प्रत्ययसामर्थ्यात्? तदपि गुणभूतमुपस्थाप्यत एव। इहास्यवामादिशब्दोऽनेकपदान्तत्वाद्वाक्यम्()। वाक्यस्य चार्थवत्समुदायानां समासग्रहणं नियमार्थमिति प्रातिपदिकसंज्ञा नास्ति, अतस्तेभ्यो न प्राप्नोति; अप्रातिपदिकत्वादिति

यश्चोदयेत्(), तं प्रत्याह-"अनुकरणशब्दाश्च" इत्यादि। अनुकरणग्रहणेन च वाक्यत्वमस्यवामप्रभृतीनां निरस्यति। न ह्यनुकरणशब्दानामवयवभूतानि पदानि सन्ति, तत्कुतस्तेषां वाक्यत्वम्()? यतः प्रातिपदिकसंज्ञा न स्यात्()। "स्वरूपमात्रप्रधानाः" इत्यनेनार्थवत्त्वं तेषां दर्शयति। अनर्थकत्वे ह्यर्थवतः प्रातिपदिकसंज्ञाविधानात्? प्रातिपदिकत्वं न स्यात्()। तथा च स एव प्रत्ययाभावः प्रसज्येत। मात्रशब्दोऽर्थान्तरव्यवच्छेदाय। स्वरूपमात्रं प्रधानमभिधेयं येषां ते तथोक्ताः। चशब्दो यस्मादर्थे। यस्मादनुकरणशब्दाः स्वरूपमात्रप्रधानाः प्रत्ययमुत्पादयन्ति, तेनानेकदादपि प्रत्ययाख्यं कार्यं सिद्धम्(); तस्य प्रातिपदिकत्वात्()। अप्रातिपदकत्वञ्च वाक्यत्वादनर्थकत्वाद्वा भवेत्()। न चास्यवामप्रभृतीनां वाक्यत्वम्(); अनुकरणशब्दत्वात्()। नाप्यनर्थकत्वम्(); स्वरूपमात्रेणार्थवत्त्वात्। यदि ह्यस्यवामेत्यादावनुकरणशब्देनानेकानि पदान्यस्यावयवभूतानि सन्ति तत्कथं तेनानेकपदादपि सिद्धमित्युक्तम्()? परप्रसिद्ध्या पदस्य। अस्यवामादयोऽप्येवम्()। एषामनेकावयवाः प्रसिद्धाः; तस्मात्? तत्प्रसिद्ध्यैवमुक्तम्(); न तु विद्यमानानेकपदत्वात्()। अथ कथमनुकरणशब्दाः स्वरूपमात्रप्रदाना भवन्ति, यावतानुकार्यमेव तेषामभिधेयम्(), अतस्तदेव प्रधानस्वरूपम्()? नैतदस्ति; इह हि प्रथमासमर्थादस्तिना समानाधिकरणात्? प्रत्ययो विधीयते। अनुकरणशब्दाश्चानुक्रियमाणेनार्थेनार्थवन्तोऽपि प्रत्यवमृष्टा इतिकरणेन शब्दशब्देन वा प्रथमासमर्थास्तिसमानाधिकरणा भवन्ति। अर्थे हि गुणीभूतानां प्रथमासमर्थत्वमस्त्युपाधिकत्वञ्च नोपपद्यते। तथा ह्यस्यवामोऽस्मिन्नस्तीत्युक्तेऽनुकरणप्रत्यायितस्यानुकार्यस्यैव शत्त्दस्य प्रथमासमर्थत्वमस्त्युपाधिकत्वञ्च गम्यते, न त्वनुकरणशब्दस्य। तस्मादितिकरणेन शब्दशब्देन वाऽवश्यम्भावो प्रत्यवमर्शः। अस्यवाम इत्यस्मिन्नस्त्यवामशब्दो वास्मिन्नस्तीति भेदानुक्रियमाणपदार्थता निवत्र्तते, स्वरूपपदार्थतैवानुजायते। नन्वेवं सति मत्वर्थो नोपपद्यते, अनुकार्या ह्याम्नायशब्दाः सूक्तसाम्नोः सन्ति, न तु तदनुकरणशब्दा लौकिकादयः? नैष देषः; वाक्य स्वातन्त्र्यहेतोरितिकरणादेः सन्निधौ तेन प्रत्यवमृश्यमाना अनुकरणशब्दाः स्वरूपेणार्थवन्तो भवन्ति, वृत्तौ त्वनुकार्येणैव; तत्र स्वातन्त्र्यहेतोरितिकरणादेरभावात्()। वृत्तावेव सूक्तसामनी समत्वर्थवत्तया वक्तुमिष्टे, न वाक्य इति किमत्र नोपपद्यते! अस्यवामशब्दोऽस्मिन्नस्त्यस्यवामीयम्()। कयाषुभाशब्दोऽस्मिन्नस्ति "कयाषुभीयम्()"। योगश्चायं मत्वर्थीयानामपवादः॥

बाल-मनोरमा

मतौ छः सूक्तसाम्नोः १८३५, ५।२।५८

मतौ छः। "मतु"शब्दो मत्वर्थे लाक्षणिक इत्याह मत्वर्थे इति। अच्छा वाकीयं सूक्तमिति। अच्छावाकशब्दोऽस्यास्ति, अस्मिन्नस्तीति वा विग्रहः। अच्चावाकशब्दयुक्तमित्यर्थः। अच्छावाकशब्दाच्छब्दस्वरूपपरात् प्रथमान्ताच्छः। वारवन्तीयं सामेति। "अ()आं नत्वा वारवन्त"मित्यस्यामृच्यध्यूढमित्यर्थः। एवमस्यवामीयमित्यपि। "अस्यवामस्ये"त्यस्य एकदेशानुकरणस्यवामेति। तस्माच्छः। अस्यवामशब्दसंयुक्तमित्यर्थः। "प्रकृतिवदनुकरण"मित्यस्याऽनित्यात्वात्सुपो न लुक्।

---

सूत्रम्

काशिका-वृत्तिः

अध्यायानुवाकयोर् लुक् ५।२।६०

मतौ इत्येव। मत्वर्थे उत्पन्नस्य छस्य लुक् भवति अध्यायानुवाकयोः अभिधेययोः। केन पुनरध्यायानुवाकयोः प्रत्ययः? इदम् एव लुग्वचनं ज्ञापकं तद्विधानस्य। विकल्पेन लुगयम् इष्यते। गर्दभाण्डशब्दो ऽस्मिन्निति गर्दभाण्डो ऽध्यायः, अनुवाको वा गर्दभान्डीयः। दीर्घजीवितः, दीर्घजीवितीयः। पलितस्तम्भः, पलितस्तम्भीयः।

न्यासः

अध्यायानुवाकयोर्लुक्?। , ५।२।५९

अनन्तरसूत्रे सूक्तसाम्नोरेव च्छस्य विहितत्वात्? प्रकरणान्तरे च क्वचिदध्यायानुवाकयोश्छस्याविधानात्? पृच्छति--"केन पुनः" इत्यादि। न ह्रसतस्तस्य लुगुपपद्यते, आह एवायं लुकम्()। अत एतदेव लुग्वचनं ज्ञापयति--अध्यायानुवाकयोश्छस्य विधानमस्तीति। "विकल्पेन च" इत्यादि। चशब्दोऽवधारणे, विकल्पेनैवेत्यर्थः। कथं पुनर्विकल्पेन लभ्यते? "विंशत्यादिभ्यस्तमडन्यतरस्याम्()" ५।२।५५ इत्यन्यरस्यांग्रहणानुवृत्तेः। यद्येवम्(), पूर्वत्रापि विकल्पेन विधिः प्राप्नोति? भण्ड्कप्लुतिन्यायेनानुवृत्तिर्भविष्यतीत्यदोषः॥

बाल-मनोरमा

अध्यायानुवाकयोर्लुक् १८३६, ५।२।५९

अध्यायानुवाकयोर्लुक्। नन्वध्यायानुवाकयोरभिधेयत्वे छस्य कथं प्राप्तिः, सूक्तसाम्नोरिति नियमादित्यत आह--अत एवेति। विधानेति। मतुप्प्रकरण एवास्मिन्सूत्रे कर्तव्ये अत्र प्रकरणे छस्य लुग्विधानसामर्थ्यादिति कैयटः। ज्ञापकसिद्धविधानसामथ्र्यादित्यन्ये। भाष्ये तु अध्यायानुवाकयोर्वा लुग्वक्तव्यः" इति वचनमेवारब्धम्। गर्दभाण्डः गर्दभाण्डीय इति। गर्दभाण्डशब्दसंयुक्तोऽध्यायोऽनुवाको वेत्यर्थः। भाष्योदाहरणादेव क्वचिदेतन्नामकोऽध्यायोऽनुवाको वाऽन्वेष्यः।

तत्त्व-बोधिनी

अध्यायानुवाकयोर्लुक् १४१६, ५।२।५९

विधानसामथ्र्यादिति। मतुप्प्रकरण एवास्मिन् सूत्रे कर्तव्ये यदत्रास्य लुग्विधानं तत्पाक्षिकं लुकमनुमापयतीति कैयटः। तत्र कुशलः। सप्तमीसमर्थात्पथिन्शब्दात्कुशल इत्यर्थे वुन्स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

विमुक्ताऽदिभ्यो ऽण् ५।२।६१

मतौ इत्येव, अध्यायानुवाकयोः इति च। विमुक्तादिभ्यः प्रातिपदिकेभ्यो ऽण् प्रत्ययो भवति मत्वर्थे अध्यायानुवाकयोरभिधेययोः। विमुक्तशब्दो ऽस्मिन्नस्ति वैमुक्तो ऽध्यायः अनुवाको वा। दैवासुरः। विमुक्त। देवासुर। वसुमत्। सत्वत्। उपसत्। दशार्हपयस्। हविर्द्धान। मित्री। सोमापूषन्। अग्नाविष्णु। वृत्रहति। इडा। रक्षोसुर। सदसत्। परिषादक्। वसु। मरुत्वत्। पत्नीवत्। महीयल। दशार्ह। वयस्। पतत्रि। सोम। महित्री। हेतु। विमुक्तादिः।

न्यासः

विमुक्तादिभ्योऽण्?। , ५।२।६०

पूर्वेण च्छे तस्य च पक्षे लुकि प्राप्ते विमुक्तादिभ्योऽण्विधीयते॥

बाल-मनोरमा

विमुक्तादिभ्योऽण् १८३७, ५।२।६०

विमुक्तादिभ्योऽण्। वैमुक्त इति। विमुक्तशब्दयुक्तोऽध्यायोऽनुवाको वेत्यर्थः।

सूत्रम्

काशिका-वृत्तिः

गोषदादिभ्यो वुन् ५।२।६२

मतौ इत्येव, अध्यायानुवाकयोः इति च। गोषदादिभ्यः प्रातिपदिकेभ्यः वुन् प्रत्ययो भवति मत्वर्थे ऽध्यायानुवाकयोः। गोषदशब्दो ऽस्मिन्निति गोषडको ऽध्यायो ऽनुवाको वा। इषेत्वकः। मातरिश्वकः। गोषद। इषेत्वा। मातरिश्वन्। देवस्यत्वा। देवीरापः। कृष्णोस्याख्यरेष्टः। दैवींधियम्। रक्षोहण। अञ्जन। प्रभूत। प्रतूर्त। कृशानु। गोषदादिः।

न्यासः

गोषदादिभ्यो वुन्?। , ५।२।६१

"अध्यायानुवाकयोर्लुक्()" ५।२।५९ इति च्छस्य च लुकि प्राप्ते गोषदादिभ्यो वुनारभ्यते॥

बाल-मनोरमा

गोषदादिभ्यो वुन् १८३८, ५।२।६१

गोषदादिभ्यो वुन्। गोषदक इति। गोषदशब्दसंयुक्तोऽध्यायो।ञनुवाको वेत्यर्थः। इषेत्वक इति। "इषेत्वे"ति शब्दयुक्त इत्यर्थः। "अस्यवामीय"मित्यत्रोक्तरीत्या सुपो न लुक्।

---

सूत्रम्

काशिका-वृत्तिः

तत्र कुशलः पथः ५।२।६३

वुनित्येव। तत्र इति सप्तमीसमर्थात् पथिन्शब्दात् कुशलः इत्यस्मिन्नर्थे वुन् प्रत्ययो भवति। पथि कुशलः पथकः।

न्यासः

तत्र कुशलः पथः। , ५।२।६२

"कृतलब्धक्रीतकुशलाः" (४।३।३८) इत्यणि प्राप्ते वुन्? विधीयते॥

बाल-मनोरमा

तत्र कुशलः पथः १८३९, ५।२।६२

तत्र कुशलः पथः। बुन्स्यादिति। सप्तम्यन्तात्पथिन्शब्दात्कुशल इत्यर्थे वुनित्यर्थः। पथक इति। आकादेशे "नस्तद्धिते"इति टिलोपः।

---

सूत्रम्

काशिका-वृत्तिः

आकर्शादिभ्यः कन् ५।२।६४

तत्र इत्येव, कुशलः इति च। आकर्शादिभ्यः प्रातिपदिकेभ्यः सप्तमीसमर्थेभ्यः कुशलः इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। आकर्षे कुशलः आकर्षकः। त्सरुकः। आकर्ष। त्सरु। पिप्पसा। पिचण्ड। अशनि। अश्मन्। विचय। चय। जय। आचय। अय। नय। निपाद। गद्गद। दीप। ह्रद। ह्राद। ह्लाद। शकुनि। आकर्शादिः।

न्यासः

आकर्षादिभ्यः कन्?। , ५।२।६३

आकर्षादिषु यद्()वृद्धं ततश्छे प्राप्ते शेषेभ्यस्त्वणि कन्विधीयते। प्रत्ययान्तरकरणम्()--यदत्रोकारान्तं तस्यात्र गुणो मा भूत्(), यच्चेकारान्तं तस्य "यस्येति" ६।४।१४८ लोपो मा भूदित्येवमर्थम्()। वुनि तु सति तदुभयं प्रसज्येत। तत पुनरिहाशिष्टं प्रसज्येत। तस्य पुनर्वनि कनि वा सति न कश्चिद्विशेष इति न तत्प्रत्ययान्तरं प्रयोजयति॥

बाल-मनोरमा

आकर्षादिभ्यः कन् १८४०, ५।२।६३

आकर्षादिभ्यः कन्। आकर्षक इति। यद्यपि वुनैवाऽनुवृत्तेनेदं सिध्यति तथापि शकुनिक" इत्यद्यर्थं कन्ग्रहणम्।

तत्त्व-बोधिनी

आकर्षादिभ्यः कन् १४१७, ५।२।६३

आकर्षादिभ्यः कन्। वुना सिद्धे कन्()ग्रहणं इदुदन्तार्थम्। शकुनिकः। अशनिकः। त्सरुकः। मुख्यः पाठ इति। "आकषन्त्यस्मिन् सुवर्णादिकमित्याकषः। "पुंसि संज्ञायां घः"इति व्याख्याय, ये तु "आकर्षादिभ्यः" इति सरेफं पठन्ति, तेषाम् "आकर्ष"इति घञि रूपम्"----इति हरदत्तेनोक्तत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

धनहिरण्यात् कामे ५।२।६५

तत्र इत्येव, कनिति च। धनहिरण्यशब्दाभ्यां तत्र इति सप्तमीसमर्थाभ्यां कामे इत्यस्मिन्नर्थे कन् प्रत्ययो भवति। कामः इच्छा, अभिलाषः। धने कामः धनको देवदत्तस्य। हिरण्यको देवदत्तस्य।

न्यासः

धनहिरण्यात्कामे। , ५।२।६४

"धने कामः" इति। धनविषय इच्छेत्यर्थः॥

बाल-मनोरमा

धनहिरण्यात्कामे १८४१, ५।२।६४

धनहिरण्यात्कामे। तत्रेत्यनुवर्तते। धनशब्दाद्धिरण्यशब्दाच्च सप्तम्यन्तात्कामे वाच्ये कन्स्यादित्यर्थः। काम इच्छेति। नतु कामयिता, व्याख्यानादिति भावः।

तत्त्व-बोधिनी

धनहिरण्यात्कामे १४१८, ५।२।६४

धने काम इति। "तत्रे"त्यनुवर्तनात्सप्तम्यन्तात्प्रत्यय इति भावः। उदरात्। आद्यूनशर्दार्थमाह।

---

सूत्रम्

काशिका-वृत्तिः

स्वाङ्गेभ्यः प्रसिते ५।२।६६

तत्र इत्येव, कनिति च। स्वाङ्गवाचिभ्यः शब्देभ्यः तत्र इति सप्तमीसमर्थेभ्यः प्रसिते इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। प्रसितः प्रसक्तस् तत्परः इत्यर्थः। केशेषु प्रसितः केशकः। केशादिरचनायां प्रसक्त एवम् उच्यते। बहुवचनं स्वाङ्गसमुदायशब्दादपि यथा स्यात्। दन्तौष्ठकः। केशनखकः।

न्यासः

स्वाङ्गेभ्यः प्रसिते।, ५।२।६५

"प्रसिते" इति। यद्यपि सिनोतिरयं "षिञ्? बन्धने" (धा। पा। १४७७) इति बन्धने पठ()ते, तथाप्यनेकार्थत्वादिहासक्तौ वत्र्तते। "केशेषु प्रसितः" इति। "प्रसितोत्सुकाभ्यां तृतीया च" २।३।४४ इति सप्तमी। आसक्तिश्च क्रियाविषयो धर्म इति केशादिस्थानबला क्रिया केशादिशब्देनोच्यते। अत एवाह--"केशादिरचनायां प्रसक्त एवमुच्यते" इति। "बहुवचनं स्वाङ्गसमुदायादपि यथा स्यात्()" इति। असति हि तस्मिन्(), यथा जनपदसमुदायो जनपदग्रहणेन न गृह्रते, तथा स्वाङ्गसमुदायोऽपि स्वाङ्ग्रहणेन नेति स्वाङ्गसमुदायान्न स्यात्(), त()स्मस्तु सति भवति; अन्यथा तस्य प्रयोजनाभावात्()। स्वरूपविधिनिरासस्तस्य प्रयोजनमिति चेत्()? न; "अद्रवम्()" (काशिका ४।१।५४) इत्यादिना स्वाङ्गस्य परिभाषितत्वेन स्वरूपविधेरसम्भवात्()॥

बाल-मनोरमा

स्वाङ्गेभ्यः प्रसिते १८४२, ५।२।६५

स्वाङ्गेभ्यः प्रसिते। तत्रेत्यनुवर्तते। स्वाङ्गेभ्यः सप्तम्यन्तेभ्यः प्रसितेऽर्थे कन्स्यादित्यर्थः। प्रसितः=उत्सुकः। तद्रचनायामिति। वेण्यादिग्रथने इत्यर्थः। अत्रैवार्थेऽस्य साधुत्वम्, व्याख्यानादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उदराट् ठगाद्यूने ५।२।६७

तत्र इत्येव, प्रसिते इति च। उदरशब्दात् सप्तमीसमर्थात् प्रसिते इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। आध्यूने इति प्रत्ययार्थविशेषणम्। उदरे ऽविजिगीषुर्भण्यते। यो बुभुक्षया ऽत्यन्तं पीड्यते स एवम् उच्यते। उदरे प्रसितः औदरिकः आद्यूनः। आद्यूने इति किम्? उदरकः।

न्यासः

उदराट्ठगाद्यूने।, ५।२।६६

पूर्वेण कनि प्राप्ते ठग्विधीयते। "आद्यूनोऽविजिगीषुः" इति। "विवोऽविजिगीषायाम्()" ८।२।४९ इत्यविजिगीषायामेव विवो निष्ठातकारस्य नत्वविधानात्()। "उदरकः" पूर्वेण कनेन भवति॥

बाल-मनोरमा

उदराट्ठगाद्यूने १८४३, ५।२।६६

उदराट्ठगाद्यूने। तत्र प्रसित इत्यनुवर्तते। सप्तम्यन्तादुदरशब्दादाद्यूने प्रसितेऽर्थे ठगित्यर्थ इत्यभिप्रेत्य आद्यूनशब्दं विवृण्वन्नाह--अविजिगीषाविति। "दिवोऽविजिगाषाया"मित्यविजिगाषायामेव दिवो निष्ठानत्वविधानादिति भावः।

बुभुक्षयेति। क्षुधा पीडित एव सन् उदरपरिमार्जने प्रसितो नतु मल्लवद्युद्धे विजिगीषयेत्यर्थः। उदरक इति। "मल्ल" इति शेषः। स हि युद्धे विजिगीषया उदरपरिमार्जनादौ उत्सुको भवति। तदाह--उदर परिमार्जनादौ प्रसक्त इति। "विजिगीषये"ति शेषः।

तत्त्व-बोधिनी

उदराट्ठगाद्यूने १४१९, ५।२।६६

अविजिगीषाविति। "दिवोऽविविगीषाया"मिति तत्रैव निष्ठानत्वविधानात्।

---

सूत्रम्

काशिका-वृत्तिः

सस्येन परिजातः ५।२।६८

कन् प्रत्ययः इत्येव स्वर्यते, न ठक्। निर्देशादेव तृतीयासमर्थविभक्तिः। सस्यशब्दात् तृतीयासमर्थात् परिजातः इत्यस्मिन्नर्थे कन् प्रत्ययो भवति। सस्यशब्दो ऽयम् गुणवाचि। परिः सर्वतो भावे वर्तते। यो गुणैः सम्बद्धो जायते, यस्य किञ्चिदपि वैगुण्यं न अस्ति, तस्य इदम् अभिधानम्। सस्येन परिजातः सस्यकः शालिक। सस्यकः साधुः। सस्यको मणिः। आकरशुद्ध इत्यर्थः।

न्यासः

सस्येन परिजातः। , ५।२।६७

"सस्येन इति सहयोगलक्षणे तृतीया, इत्थम्भूतलक्षणे वा। "सस्यशब्दोऽयं गुणवाची" इति। सस्यशब्दो ह्ययं धान्यवचनोऽप्यस्ति, यथा--शालिः सस्यम्(), यवाः सस्यमिति; तस्य ग्रहणं मा विज्ञायीत्येवमर्थमिदमुक्तम्()--"इदमभिधानम्()" इति। सस्यक इत्येतत्? कन्प्रत्यान्तम्()॥

बाल-मनोरमा

सस्येन परिजातः १८४४, ५।२।६७

सस्येन परिजातः। तृतीयान्तात्सस्यशब्दात्परिजात इत्यर्थे कन्स्यादित्यर्थः। सन्निहितष्ठगेव कुतो नानुवर्तत इत्यत आह--कन्स्वर्यते नतु ठगिति। स्वरितत्वप्रतिज्ञायां तु पाणिनीयपरम्परैव प्रमाणम्। गुणवाचीति। व्याख्यानमेवात्र शरणम्। शस्येनेतीति। "शंसु स्तुतौ" इति धातोः कर्मणि यति शस्यशब्दः स्तुत्यपर्यायः। स्तुत्यश्च गुण एवेति भावः। परिजात इत्यस्य विवरणं--संबद्ध इति।

तत्त्व-बोधिनी

सस्येन परिजातः १४२०, ५।२।६७

सस्येन। कर्मकर्तरि तृतीयेयम्। परितो जातः---परिजातः। फलितमाह---संबद्ध इति। अतएवेति। "अके नो"रिति निषेधादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अंशं हारि ५।२।६९

अंशशब्दान् निर्देशादेव द्वितियासमर्थाद् हारी इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। अंशं हारी अंशको दायादः। अंशकः पुत्रः। हारी इति आवश्यके णिनिः। तत्र षष्ठीप्रतिषेधात् कर्मणि द्वितीया एव भवति।

न्यासः

अशं हारी। , ५।२।६८

"कर्मणि द्वितीयैव भवति" इति। कर्मणि द्वितीयायां प्राप्तायां कृद्योगलक्षणा तदपवादा षष्ठ()आरभ्यते। तस्याश्चावश्यके णिनिप्रत्यये "अकेनोर्भविष्यदाधमण्र्ययोः" २।३।७० इति प्रतिषेधः। तेन निरपवादाद्()द्वितीयैव भवति॥

बाल-मनोरमा

अंशं हारी १८४५, ५।२।६८

अंशं हारी। द्वितीयान्तादंशशब्दाद्धरीत्यर्थे कन्स्यादित्यर्थः। ननु कृद्योगषष्ठीप्रसङ्गादंशमिति कथं द्वितीयेत्यत आह--आवश्यके णिनिरिति। "आवश्यकाधमण्र्ययो"रित्यनेने"ति शेषः। षष्ठी नेति। "अकनो"रिति तन्निषेधादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तन्त्रादचिरापहृते ५।२।७०

तन्त्रशब्दान् निर्देशादेव पञ्चमीसमर्थातचिरापहृते इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। अचिरापहृतः स्तोककालापहृतः इत्यर्थः। तन्त्रादचिरापहृतः तन्त्रकः पटः। तन्त्रकः प्रावारः। प्रत्यग्रो नव उच्यते।

न्यासः

तन्त्रादचिरापह्मते। , ५।२।६९

"अचिरापह्मतम्()" इति। अचिरशब्दोऽल्पकालवचनः, तस्यापह्मतशब्देनापह्मतो गतः कालोऽस्येति "कालाः परिमाणिना" २।२।५ इति समासः। "पञ्चमीसमर्थात्()" इति। निर्देशादेव। न हीह काचित्? प्रकृता विभक्तिरनुवत्र्तते, पञ्चमीनिर्देशश्च श्रुयते, तस्मान्निर्देशादेव पञ्चमीसमर्थात्? प्रत्ययो विज्ञायते। सा पुनः पञ्चम्यपहरतेरपायवचनत्वात्? तद्योगेन तन्त्रमपादानमेव भवतीत्यपादानलक्षणा वेदितव्या॥

बाल-मनोरमा

तन्त्रादचिरापह्मते १८४६, ५।२।६९

तन्त्रादचिरापह्मते। तन्त्रशब्दात्पञ्चम्यन्तादचिरापह्मतेऽर्थे कनित्यर्थः। तन्त्रं--तन्तुवायशलाका। अचिरेण कालेन अपह्मतः--अचिरापह्मतः। "कालाः परिमाणिने"ति समासः। प्रत्यग्र इति। नूतन इत्यर्थः।

तत्त्व-बोधिनी

तन्त्रादचिरापह्मते १४२१, ५।२।६९

तन्त्रात्। तन्यन्ते तन्तवोऽस्मिन्निति व्युत्पत्त्या तन्त्रं=तन्तुवायशलाका। अचिरः कालोऽपह्मतस्येत्यचिरापह्मतस्तस्मिन्। "कालाः परिमाणने"ति समासः। प्रत्यग्र इति। नूतन इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ब्राह्मणकौष्णिके संज्ञायाम् ५।२।७१

ब्राह्मणक उष्णिक इत्येतौ शब्दौ निपात्येते कन् प्रत्ययान्तौ संज्ञायाम् विषये। ब्राह्मणको देशः। उष्णिका यवागूः। यत्र अयुधजीविनो ब्राह्मणाः सन्ति तत्र ब्राह्मणकः इति संज्ञा। अल्पान्ना यवागूः उष्णिका इत्युच्यते।

न्यासः

ब्राआह्णकोष्णिके संज्ञायाम्?। , ५।२।७०

किमर्थं पुनरिवम्(), यावता संज्ञायां व्युत्पाद्यते, संज्ञायामेव तु ब्राआह्णकोष्णिके? न; विषयान्तरेऽपि। तमेव विषयं दर्शयितुमाह--"यत्र" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

ब्राआह्णकोष्णिके संज्ञायाम् १८४७, ५।२।७०

ब्राआह्णकोष्णिके। आयुधजीविविषयब्राआह्णशब्दात्प्रथमान्तादस्मिन्नित्यर्थे कन्निपात्यत इत्यर्थः। अल्पान्नशब्दस्येति। अल्पान्नशब्दात्प्रथमान्तादस्मिन्नित्यर्थे कन्प्रत्ययः, प्रकृतेरुष्णादेशश्च निपात्यत इत्यर्थः।

तत्त्व-बोधिनी

ब्राआह्णकोष्णिके संज्ञायाम् १४२२, ५।२।७०

ब्राआह्ण कोष्णिके। ब्राआह्णशब्दादायुधीवित्वोपाधिकात्प्रथमान्तात्सप्तन्यर्थे कन् प्रत्ययो निपात्यते, अन्नशब्दात्तु अल्पत्वौपाधिकात्। तदाह---आयुधेत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

शीतोष्णाभ्यां कारिणि ५।२।७२

शीतोष्णाशब्दाभ्यां कारिण्यभिधेये कन् प्रत्ययो भवति। क्रियाविशेषणाद् द्वितीयासमर्थादयं प्रत्ययः। शीतं करोति शीतकः। अलसो, जड उच्यते। उष्णं करोति उष्णकः। शीघ्रकारी, दक्ष उच्यते।

न्यासः

शीतोष्णाभ्यां कारिणि। , ५।२।७१

"क्रियाविशेषणात्()" इति। क्रियाविशेषणस्य हि कर्मत्वं प्रतिपादितम्()। "कारिणि" इति। ताच्छील्ये णिनिः। तस्य च प्रयोगे षष्ठी प्रतिषिद्धा, तस्मात्? कर्मणि द्वितीययैव भवितव्यम्()।

क्रियाविशेषणाच्छीतादिशब्दाद्()द्वितीयासमर्थात्प्रत्ययो विज्ञायते। तेन नेह शोतोष्णशब्दो स्पर्शविषये वत्र्तमानौ प्रत्ययमुत्पादयतः। क्व तर्हि? मान्द्ये, शैघ्र्ये च; यस्मादावश्यके णिनिः। न स पदार्थोऽस्ति यः शीतोष्णस्पर्शौ नियोगतः करोति। तुषारातपावपि हि नावश्यं कुरुतः; प्रतिबन्धसम्भवात्()। कर्त्तृशक्तिस्तु पदार्थानां नियतेति सा शक्तिः कर्त्तृत्वे कश्चिन्नियोगतो मन्दं करोति, कश्चित्? शीघ्रमिति युज्यत एवावश्यकत्वम्()॥

बाल-मनोरमा

शीतोष्णाभ्यां कारिणि १८४८, ५।२।७१

शीतोष्णाभ्यां शीतमिव शीतं मन्दमित्यर्थः। उष्णमिव उष्णम्। शीघ्रमित्यर्थः। आभ्यां क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां कन्स्यादित्यर्थः। य आशु कर्तव्यानर्थाश्चिरेण करोति स शीतक उच्यते, यस्तु अनाशु कर्तव्याना()ओव करोति स उष्णक उच्यत इति भाष्ये। संज्ञायामित्यनुवृत्तेरयमर्थो लभ्यत इति कैयटः। तदाह--शीतकोऽलस इति। उष्णकः शीघ्रकारीति च।

तत्त्व-बोधिनी

शीतोष्णाभ्यां कारिणि १४२३, ५।२।७१

शीतोष्णाभ्याम्। शीतमिव शीतम्। मन्दमित्यर्थः। शूते सति कार्यकरणे पाटवाऽभावात्। उष्णमिवोष्णम्। शीग्रमित्यर्थः। क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां प्रत्ययः। कृद्योग लक्षणा षष्ठी तु क्रियाविशेषणान्नेत्युक्तम्। मुख्यार्थवृत्तिभ्यां तु प्रत्ययो न भवति, अनभिधानात्।

---

सूत्रम्

काशिका-वृत्तिः

अधिकम् ५।२।७३

अधिकम् इति निपात्यते। अध्यारूढस्य उत्तरपदलोपः कन् च प्रत्ययः। अधिको द्रोणः खार्याम्। अधिका खारी द्रोणेन। कर्तरि कर्मणि च अध्यारूढशब्दः।

न्यासः

अधिकम्?। , ५।२।७२

"अध्यारूढशब्दस्योत्तरपदलोपः" इति। उत्तरपदमारूढशब्दस्तस्य लोपो निपात्यते। कथं पुनरधिको द्रोणः खार्यामित्यस्य प्रथमान्तस्य द्रोणशब्दस्य प्रयोगः, अधिका खारी द्रोणेनेति तृतीयान्तस्य च? इत्यत आह--"कत्र्तरि कर्मणि च" इत्यादि। "गत्यर्थकर्मकश्लिष" ३।४।७२ इत्यादिना सूत्रेण रुहेः कत्र्तरि कर्मणि च क्तो विहितः, तेन कत्र्तरि कत्र्तरि कर्मणि चाध्यरूढशब्दो वत्र्तते, ततश्च तस्यार्थे व्युत्पाद्यमानोऽधिकशब्दोऽपि तत्पर्यायो भवंस्तयोरेवार्थयोर्भवति। तत्र यदा कत्र्तरि वत्र्तते तदा द्रोणशब्दात्? प्रथमा भवति, न तृतीया। यदा कर्मणि वत्र्तते तदा कर्त्तुरनभिहितत्वादधिकशब्देन द्रोणशब्दात्? तृतीया भवति। कर्मणस्त्वभिहितत्वात्? खारीशब्दात्? प्रथमैव भवति, न द्वितीया। "अधिका खारी द्रोणेन" इति। ननु चाधिको द्रोणः खार्यामस्यामित्यत्र कर्मणोऽनभिहितत्वात्? खारीशब्दाद्()द्वितीया प्राप्नोति? नैष दोषः; यदयम्? "यस्मादधिकम्? २।३।९ "तदस्मिन्नधिकम्()" ५।२।४५ इति च निर्देशं करोति तज्ज्ञापयति--अधिकशब्देन योगे पञ्चमीसप्तम्यावेव विभक्ती भवत इति॥

बाल-मनोरमा

अधिकम् १८४९, ५।२।७२

अधिकम्। अध्यारूढशब्दादिति। व्युत्पादनमात्रमिदम्। शुद्धरूढ एवायमिति बोध्यम्।

तत्त्व-बोधिनी

अधिकम् १४२४, ५।२।७२

अधिकम्। अध्यारूढशब्दादिति। "गत्यार्थाकर्मके"त्यादिना रूहेः कर्तरि कर्मणि वा क्तो विहितः। आद्ये क्तप्रत्ययेन कर्मणोऽनभिहितत्वादध्यारूढशब्दयोगे द्वितीया। "अध्यारूढो द्रोणः खारी"मिति, "ग्रामं गत"इतिवत्। तथा अधिकशब्देनापि योगे द्वितीयायां प्राप्तायां "यस्मादधिकं", "तदस्मिन्नधिक"मिति च निर्देशद्वयाकत्पञ्चमीसप्तम्यौ भवतः। "अधिको द्रोणः खार्याः। "अधिको द्रोणः खार्या"मिति। द्वितीये तु क्तेन कर्मणोऽभिहितत्वात्प्रथमा। "अधिका खारी द्रोणेन"। कर्मणोऽभिहितत्वादेव पञ्चमीसप्तम्याविह न शङ्कनीये।

---

सूत्रम्

काशिका-वृत्तिः

अनुकाभिकाभीकः कमिता ५।२।७४

अनुक अभिक अभीक इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते कमिता इत्येतस्मिन्नर्थे। अभेः पक्षे दीर्घत्वं चनिपात्यते। अनुकामयते अनुकः। अभिकः। अभीकः।

न्यासः

अनुकाभिकाभीकः कमिता। , ५।२।७३

"अनुकः" इति। अनुशब्दात्? कन्()। "अभिकोऽभीकः" इति। अत्राप्यभिशब्दात्()॥

बाल-मनोरमा

अनुकाऽभिकाऽभीकः कमिता १८५०, ५।२।७३

अनुकाभिका। अनुक, अभिक, अभीक-एषां समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्।

तत्त्व-बोधिनी

अनुकाऽभिकाऽभीकः कमिता १४२५, ५।२।७३

अनुका। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। सूत्रत्वाल्लिङ्गव्यत्यय इति फलितोऽर्थः। अन्वभिभ्यां कन्निति। क्रियाविशिष्टसाधनवाचिभ्यां स्वार्थे निपात्यत इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

पार्श्वेन अन्विच्छति ५।२।७५

पार्श्वशब्दात् तृतीयासमर्थादन्विच्छति इत्यस्मिन्नर्थे कन् प्रत्ययो भवति। अनृजुरुपायः पार्श्वम्, तेन अर्थानन्विच्छति पार्श्वकः। मायावी, कौसृतिकः, जालिकः उच्यते।

न्यासः

पार्ोनान्विच्छति। , ५।२।७४

निर्देशादेव तृतीयासमर्थविभक्तिर्लभ्यत इत्याह---"पार्(ाशब्दात्? तृतीयासमर्थात्()" इति॥

बाल-मनोरमा

पार्ोनान्विच्छति १८५१, ५।२।७४

पार्(ोनाऽन्विच्छति। तृतीयान्तात्पार्(ाशब्दादन्विच्छतीत्यर्थ संज्ञायां कन्स्यादित्यर्थः। अन्वेषणं=मार्गणम्। पार्व()आमिव पार्(ाम्नुजुरुपायः। "ऋजूपायेन अन्वेष्टव्यानर्थान्योऽनृजुनोपायेनान्विच्छति स पार्(ाक" इति भाष्यम्। तदाह--अनृजुरित्यादि।

तत्त्व-बोधिनी

पार्ोनान्विच्छति १४२६, ५।२।७४

पार्(ोनान्विच्छति। "आकर्षादिभ्यः कन्नि"त्यतः कननुवर्तते। अनृजुरिति। तीर्यगवस्थानात्पार्(ामनृजु, तत्साधम्र्यादुपयोऽपि। इह शीतोष्णपार्(ाआऽयःशूलदण्डाजिनशब्दा गौणा एव गृह्लन्ते। मुख्यार्थेभ्यस्तु प्रत्ययो न भवति, अनभिधानात्।

---

सूत्रम्

काशिका-वृत्तिः

अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ५।२।७६

अन्विच्छति इत्येव। अयःशूलदण्डाजिनाह्ब्यां तृतीयासमर्थाभ्याम् अन्विच्छति इत्येतस्मिन्नर्थे ठक्ठञौ प्रत्ययौ भवतः। तीक्ष्णः उपायः अयञ्शूलम् उच्यते। तेन अन्विच्छति आयःशूलिकः साहसिकः इत्यर्थः दम्भो दण्डाजिनम्, तेन अन्विच्छति दाण्डाजिनिकः। दाम्भिकः इत्यर्थः।

न्यासः

अयःशूलदण्डाजिनाभ्यां ठक्ठञौ। , ५।२।७५

"अयःशूलदण्डाजिनाभ्याम्()" इति। तृतीयान्तनिर्देशादेवार्थात्? तृतीया समर्थविभक्तिलंभ्यत इत्याह--"तृतीयासमर्थातभ्याम्? इति॥

बाल-मनोरमा

अयःशूलदण्डाजिनाभ्यां ठक्ठञौ १८५२, ५।२।७५

अयःशूल। अयःशूल, जण्डाजिन आभ्यां, तृतीयान्ताभ्यामन्विच्छतीत्यर्थे संज्ञायां ठक्ठञौ स्त इत्यर्थः। अयःशूलमिव अयःशूलम्। साहसमित्यर्थः। यो मृदुनोपायेनन्विष्टव्यानर्थास्तीक्ष्णोपायेनान्विच्छति स आयःशूलिक" इति भाष्यम्। तदाह--तीक्ष्णोपाय इत्यादि। दम्भ इति। दम्भार्थत्वाद्दण्डाजिनशब्दो दम्भे लाभणिक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तावतिथं ग्रहणम् इति लुग् वा ५।२।७७

तावतां पूरणं तावतिथाम्। गृह्यते ऽनेन इति ग्रहणम्। प्रकृतिविशेषणं च एतत्। पूरणप्रत्ययान्तात् प्रातिपदिकात् ग्रहणोपाधिकात् स्वार्थे कन् प्रत्ययो भवति। पूरणस्य प्रत्ययस्य वा लुक्। द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम्, द्वितीयकम्। त्रिकम्, तृतीयकम्। चतुष्कम्, चतुर्थकम्। तावतिथेन गृह्णाति इति कन् वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक्। षष्ठेन रूपेण ग्रन्थं गृह्णाति षट्को देवदत्तः। पञ्चकः। चतुष्कः। इतिकरणो विवक्षार्थः। तेन ग्रन्थविषयम् एव ग्रहणम् विज्ञायते, न अन्यविषयम्।

न्यासः

तावतिथं ग्रहणमिति लुग्वा। , ५।२।७६

पूरणप्रतययान्तानां सामान्यनिर्देशोऽयम्()। अथ स्वरूपग्रहणं कस्मान्न भवति? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्देशे स्वरूपग्रहणं भवतीत्युक्तम्()। कथं प्रत्ययः स्वार्थे भवतीति? अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति (पु। प। पा। ९०) कृत्वा। "द्विकं, त्रिकम्()" इति। तीयस्य लुक्()। "चतुष्कम्()" इति। पूरणप्रत्ययस्य डटः सथुकश्च लुक्(), चतूरेफस्य "विसर्जनीयस्य सः ८।३।३४, तस्य "इदुपधस्य चाप्रत्ययस्य" ८।३।४१, इति षत्वम्()। "तावतिथेन" इत्यादि। पूरणप्रत्यान्तात्? प्रातिपदिकात्? तृतीयासमर्थाद्गृह्णातीत्येतस्मिन्नर्थे कन्प्रत्ययो भवतीति वक्तव्यम्()। पूरणप्रत्ययस्य च नित्यं लुक्()। "षट्कः" इति। षकारस्य जश्तवं डकारः, तस्यापि चत्र्व टकारः। अत्र च डटः सथुको लुक्()। "पञ्चकः" इति। अत्रापि डटः। अथेह कस्मान्न भवतीति--द्वितीयेन हस्तेन दण्डं गृह्णाति? इत्याह--"इतिकरणो विवक्षार्थः" इत्यादि। सुबोषम्()॥

बाल-मनोरमा

तावतिथं ग्रहणमिति लुग्वा १८५३, ५।२।७६

तावतिथं। तावतां पूरणं तावतिथमिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः। तृतीयार्थे प्रथमा। "ग्रहण"मिति भावे ल्युडन्तम्। तथा च तृतीयान्तात्पूरणप्रत्ययान्ताद्ग्रहणमित्यर्थे कन्स्यातद्पूरणप्रत्ययस्य च लुग्वेत्यर्थ इत्यभिप्रेत्याह--कन्स्यादित्यादि। पूरणप्रत्ययान्तस्य तु प्रकृतिभूतस्य न लुक्, किंतु पूरणप्रत्ययमात्रस्य, षष्ठेन गृह्णाति षट्क इति भाष्योदाहरणात्। द्वितीयेन रूपेणेति। अनेन तृतीयैव समर्थविभक्तिरिति सूचितम्। इतिना लोकानुसारित्वं गम्यते। एवं च ग्रन्थविषयकमेव ग्रहणिह फलति। तेन "द्वितीयं ग्रहणं देवदत्तेन दण्डस्ये"त्यादौ न भवति।

तावतिथेनेति। ग्रहणे।ञर्थे विहितं ग्रहीतरि न प्राप्नोतीत्यारम्भः। षट्को देवदत्त इति। भाष्ये एवमेवोदाह्वतत्वात्पूरणप्रत्ययस्यैव लुगिति गम्यते, नतु तदन्तस्य।

तत्त्व-बोधिनी

तावतिथं ग्रहणमिति लुग्वा १४२७, ५।२।७६

तावतिथं ग्रहणमिति लुग्वा। तावतां पूरणं---तावतिथम्। "वतोरिथुक्"। यथा "तस्यापत्य"मित्यत्र तस्येति षष्ठ()न्तानां सामान्यनिर्देशस्तथाऽत्र "तावतिथ"मिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः। अनन्तरावपि ठक्()ठञौ नानुवर्तेते, अस्वरितत्वादित्यभिप्रेत्याह---कन्स्यादिति। पूरणप्रत्ययस्येति। नतु कनो लुक्, वाग्रहणानर्थक्यप्रसङ्गात्। पञ्चमं पञ्चमकमित्यादिरूपं हि तेन साध्यम्। तच्च महाविभाषाधिकाराद्विकल्पेन कन उत्पत्त्यापि सिद्धमेव। तस्मात्पूरणप्रत्ययस्यैव लुक्सूत्रकारस्याऽभिमत इति व्याचष्टे---द्विकमिति। वार्तिककारस्तु कन एव लुगिति व्याख्यामभिप्रेत्य "तावतिथं ग्रहणमिति लुग्वा वचनानर्थक्यं, विभाषाग्रहणा"दित्याह। तन्ते द्वितीयकं द्वितीयमित्येव रूपं न द्विकमिति बोध्यम्।

तावतिथेन गृह्णातीति कन्वक्तब्यो नित्यं च लुक्। तावतिथेनेति। पूरणप्रत्ययान्ताद्ग्रहणोपाधिकात् स्वार्थे विधीयमानो ग्रहगीतरि न प्राप्नोतीति वचनमिति कैयटः।

---

सूत्रम्

काशिका-वृत्तिः

स एषां ग्रामणीः ५।२।७८

स इति प्रथमासमर्थातेषाम् इति षष्ठ्यर्थे कन् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं ग्रामणीश्चेत् स भवति। ग्रामणीः प्रधानः, मुख्यः इत्यर्थः। देवदत्तः ग्रामणीः एषाम् देवदत्तकाः। ब्रह्मदत्तकाः। ग्रामणीः इति किम्? देवदत्तः शत्रुरेषाम्।
न्यासः
स एषां ग्रामणीः। , ५।२।७७

बाल-मनोरमा
स एषां ग्रामणीः १८५४, ५।२।७७

स एषा ग्रामणीः। ग्रामणीविशेषवाचकाच्छब्दात्प्रथमान्तादस्येत्यर्थे कन्स्यादित्यर्थः। देवदत्तो मुख्य एषामिति। एतेन ग्रामणीशब्दो मुख्यपर्याय इति सूचितम्। "ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु" इत्यमरः। त्वत्काः मत्का इति। त्वमहं वा मुख्य एषामिति विग्रहः। "प्रत्ययोत्तरपदयोश्चे"ति त्वमौ श्रृङ्खलमस्य। करभ इति। षष्ठ()र्थे सप्तमी। "बन्धन"मिति करणे ल्युट्। अस्य करभस्य श्रृङ्खलं बन्धनमिति विग्रहे बन्धनविशेषणाच्छृङ्खलशब्दात्प्रथमान्तादस्य करभस्येत्यर्थे कन्स्यादित्यर्थः। श्रृङ्खलक इति। श्रृङ्खलेन बद्ध इति यावत्। करभः=बाल उष्ट्रः।

---

सूत्रम्
काशिका-वृत्तिः
शृङ्खलम् अस्य बन्धनं करभे ५।२।७९

शृङ्खलशब्दात् प्रथमासमर्थादस्य इति षष्ठ्यर्थे कन् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं बन्धनं चेद् तद् भवति, यत् तदस्य इति निर्देष्टं करभश्चेत् स भवति। शृङ्खलं बन्धनम् अस्य करभस्य शृङ्खलकः। उष्ट्राणां बालकाः करभाः। तेषां काष्ठमयं पाशकं पादे व्यातिषज्यते, तदुच्यते शृङ्खलम् इति। यद्यपि रज्ज्वादिकम् अपि तत्र अस्ति तथापि शृङ्खलम् अस्य अस्वतन्त्रीकरणे भवति साधनम् इति बन्धनम् इत्युच्यते।
न्यासः
शृङ्खलमस्य बन्धनं करभे। , ५।२।७८

ननु च न शृङ्खलमात्रेण करभो बध्यते, किं तर्हि? रज्जवादिकेन च, तत्कथं शृङ्खलं बन्धनमुच्यते? इत्याह--"यद्यपि" इत्यादि। यद्यपि तत्र रज्ज्वादिकमप्यपरमस्ति, तथापि शृङ्खलमस्य तन्त्रीकरणं प्रति साधनं भवत्येव, न हि तेन तद्भवति। ततः शृङ्खलं बन्धनमुच्यते। रज्ज्वादिकमपि यदि बन्धनं भवति, भवतु! न ह्यत्रावधार्यते--शृङ्खलमेवेति॥
तत्त्व-बोधिनी
स एषां ग्रामणीः १४२८, ५।२।७८

स एषां ग्रामणीः। "ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु" इत्यमरः। करभ इति। उष्ट्रबालकः।

---

सूत्रम्
काशिका-वृत्तिः
उत्क उनमनाः ५।२।८०

उत्कः इति निपात्यते, उन्मनाश्चेद् स भवति। उद्गतं मनो यस्य स उन्मनाः। उच्छब्दात् ससाधनक्रियावचनात् तद्वति कन् प्रत्ययो निपात्यते। उत्को देवदत्तः। उत्कः प्रवासी। उत्सुकः इत्यर्थः।

न्यासः

उत्क उन्मन्गः। , ५।२।७९

"ससाधनक्रियावचनात्()" इति। साधनम्()=मनः; क्रिया=गमनम्(); सह तेन गमनक्रिया। तद्वचनात्? ससाधने गमने वत्र्तमानादित्यर्थः। "तद्वति" इति। तच्छब्देन क्रिया प्रत्यवमृश्यते। ससाधनक्रियावतीत्यर्थः। "उत्सुकः" इति। उत्कण्ष्ठित इत्यर्थः॥

बाल-मनोरमा

उत्क उन्मनाः १८५५, ५।२।७९

उत्क उन्मनाः। उद्गतमनस्कवृत्तेरिति। उत्कण्ठितवृत्तेरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

कालप्रयोजनाद् रोगे ५।२।८१

अर्थलभ्या समर्थविभक्तिः। कालात् प्रयोजनाच् च यथायोगं समर्थविभक्तियुक्तात् रोगे ऽभिधेये कन् प्रत्ययो भवति। कालो देवसादिः। प्रयोजनं कारणं रोगस्य फलं वा। द्वितीये ऽह्नि भवो द्वितीयको ज्वरः। चतुर्थकः। प्रयोजनात् विषपुष्पैर् जनितो विषपुष्पको ज्वरः। काशपुष्पकः। उष्णं कार्यम् अस्य उष्णको ज्वरः। शीतको ज्वरः। उत्तरसूत्रातिह संज्ञाग्रहणम् अपकृष्यते। तेन अयं प्रकारनियमः सर्वो लभ्यते।

न्यासः

कालप्रयोजनाद्रोगे। , ५।२।८०

"अर्थलभ्या" इत्यादि। अर्थोऽधिकरणादिः। तेनात्र सप्तमीप्रभृतिरनुक्तापि समर्थविभक्तिर्लभ्यते। "प्रयोजनं कारणशब्देनोव्यते कालग्रहणं पृथङ्न कर्तव्यम्(), कालोऽपि रोगस्य कारणं भवति? नैतदस्ति; न ह्वश्यं कालो रोगस्य कारणं भवति। तत्र यदा ह्सौ रोगस्य कारणं न भवति, तथापि ततो यथा स्यादित्येवमर्थं कालग्रहणम्()। "द्वितोयेऽह्नि भवो द्वितीयकः" इति। तत्र कारणान्तराद्वातादेः कुतश्चिद्भवतो ज्वरस्य कालः केवलमधिकरणभावेन विवक्षितः, न तु हेतुभावेन। कथं पुनः कालादन्यतः प्रत्ययो द्वितीयादिभ्यः शब्देभ्यो भवति, न ह्येते कालशब्दाः प्रसिद्धाः, सामान्यशब्दा ह्येते, शब्दान्तरसन्निधानात्? तु काले वृत्तिरेषां गम्यते? नैष दोषः; वाक्ये ह्येषां शब्दान्तरसन्निधौ कलि वृत्तिः, वृत्तिगतश्च प्रकृत्यर्थः प्रत्ययानां विशेषणम्(); सन्निहितत्वात्()। न वाक्यगतः; विप्रकर्षात्()। "विषपुष्पैर्जनितः" इति। तृतीया। "उष्णं कार्यमस्य" इति। अत्र कार्यकारणसम्बन्धो विवक्षितः। स चेदंशब्दादेवोत्पन्नया षष्ट()आभिहित इत्युष्णशब्दात्? प्रथमैव भवति। इह कालप्रयोजनविशेषवाचिभ्यः प्रत्ययोऽभिहितः, न कालप्रयोजनशब्दाभ्याम्(); कालविशेषवाचिभ्यो भवन्? क्रियायाः कर्तरि ज्वरे प्रयोजनविशेषवाचिभ्यः प्रयोजनमिति; कार्यकारणविवक्षायाञ्च कार्यसम्बन्धिनि। न चायं प्रकारनियमः सूत्रे उक्तः, तत्कथं लभ्यते? इत्यत आह--"उत्तरसूत्रादिह संज्ञाग्रहणमपकृष्यते" इति। तेन तस्मिन्? सत्ययमर्थो भवति--प्रत्ययान्तश्चेत्? संज्ञा भवति, त()स्मश्चार्थे सति प्रत्ययान्तं यदि संज्ञा भवत्येवं प्रत्य उत्पद्यते, नान्यथेति। संज्ञाग्रहणसन्निधानादिह सर्वप्रकारोऽयं नियमो लभ्यते। न हि विना तेन प्रकारेम प्रत्ययान्तं संज्ञा भवति। ननु चोत्तरसूत्रे संज्ञाग्रहणं तस्यैव शेषभूतम्(), तत्कथं ततोऽपक्रष्ट शक्यते? नैष दोषः; उभयोरपि योगयोस्तच्छेषभूतम्()।

कथम्()? योगविभागः करिष्यते-- "तदस्मिन्नन्नं प्राये" ततः "संज्ञायाम्()" इति; तेन संज्ञाग्रहणमुभयेषां शेषो विज्ञास्यते॥

बाल-मनोरमा

कालप्रयोजनाद्रोगे १८५६, ५।२।८०

कालप्रयोजनाद्रोगे। काल, प्रयोजन--अनयोः समाहारद्वन्द्वः। तदाह--कालवचनात्प्रयोजनवचनाच्चेति। "यथोचितविभक्त्यन्ता"दिति शेषः। कालशब्देनाऽत्र कालवृत्तिःपूरणप्रत्ययान्तो द्वितीयादिशब्द एव गृह्रते, न तु मासादिशब्दः, व्याख्यानात्। तदाह--द्वितीयेऽहनीति। प्रयुज्यतेऽनेनेति करणे ल्युटि "प्रयोजनं"साधनम्। कर्मणि ल्युटि तु फलम्। तदाह--प्रयोजनं कारणं रोगस्य फलं वेति।

तत्त्व-बोधिनी

कालप्रयोजनाद्रोगे १४२९, ५।२।८०

द्वितीयेऽहनीति। यद्यपि द्वितीयशब्दः कालवाची न भवति, तथाप्यप्रकरणादिना वृत्तिविषये काले वर्तत इति भावः। ननु साक्षात्कालवाचिभ्यो मासादिभ्यो न भवति, द्वितीयादिभ्यस्तु भवतीत्यत्र किं मानमिति चेदत्राहुः---उत्तरसूत्रस्थसंज्ञापकर्षणाच्छब्दस्वाभाव्याद्वा तद्बोध्यमिति।

वटकेभ्यैनिर्वाच्यः। वटकेभ्य इति। कमि प्राप्ते वचनम्। ननु संज्ञाग्रहणात्कन्न भविष्यतीति चेत्। किं ततः()। इनेरप्राप्तत्वात्तदर्थं वचनमङ्गीकार्यमेव। "अत इनिठनौ"इत्येव कथंचिदिनिः सिध्यतीत्याशाऽत्र न कार्या, "सप्तम्यां च न तौ स्मृतौ"इति वचनात्।

---

सूत्रम्

काशिका-वृत्तिः

तदस्मिन्नन्नं प्राये संज्ञायाम् ५।२।८२

ततिति प्रथमासमर्थादस्मिनिति सप्तम्यर्थे कन् प्रत्ययो भवति, यत् तत् प्रथमासमर्थं अन्नं चेत् प्रायविषयं तद् भवति। प्रायो बाहुल्यम्। संज्ञाग्रहण तदन्तोपाधिः। गुडापूपाः प्रायेण अन्नम् अस्यां पौर्णमास्यां गुडापूपिका। तिलापूपिका पौर्णमासी। वटकेभ्य इनिर् वक्तव्यः। वटकिनी पौर्णमासी।

न्यासः

तदस्मिन्नन्नं प्राये संज्ञायाम्?। , ५।२।८१

"अन्नं चेत्प्रायविषयम्" इति। प्रायो विषयो यस्य तत्तथोक्तम्। विषयग्रहणे "प्राये" इति सप्तम्या विषयसप्तमीत्वं दर्शयि। "प्रत्ययो भवति" इति। अन्यथा गुडापूपाः प्रायेणान्नमिति ववक्षायाः कारकाणि भवन्तीतिप्रायस्य विषयभूतस्य करणत्वेन विवक्षितत्वात् तृतीया। "गुडापूपिका" इति "प्रत्ययस्थात् कात् पूर्वस्यातः" ७।३।४४ इतीत्त्वम्। "वटकेभ्य इनिर्वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्--इह संज्ञाग्रहणस्य प्रत्ययान्तोपाधिकत्वाद्यत्र प्रत्ययान्तं संज्ञा भवति तत्र प्रत्ययेन भवितव्यम्। न च वटकशब्दः कन्प्रत्ययान्तः कस्यचित् संज्ञा, तेन ततः कन् न भविंष्यति तस्मिंश्चासति मत्वर्थीय इनिर्भविष्यतीति। "वटकिनो" इति। "ऋम्नेभ्यो ङीप्" ४।१।५॥

बाल-मनोरमा

तदस्मिन्नन्नं प्राये संज्ञायाम् १८५७, ५।२।८१

तदस्मिन्नन्नं। प्रथमान्तादन्नवाचकादस्मिन्नित्यर्थे कन् स्यादन्नस्य बाहुल्ये गम्ये संज्ञायामित्यर्थः।

वटकेभ्य इति। संज्ञायामित्येव वटकिनीति। वटकाः प्रायेण अन्नमस्यां प्रौर्णमास्यामिति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

कुल्माषादञ् ५।२।८३

कुल्माषशब्दातञ् प्रत्ययो भवति, तदस्मिन्नन्नं प्राये संज्ञायाम् ५।२।८१ इत्येतस्मिन्नर्थे। ञकारो वृद्धिस्वरार्थः।
कुल्माषाः प्रायेण अन्नमस्याम् कौल्माषी पौर्णमासी।

न्यासः

कुल्माषादञ्। , ५।२।८२

संज्ञाग्रहणेन पूर्वेण कनः प्राप्तावसत्यां वाक्येनाभिधाने प्राप्ते मत्वर्थीये मतुबादाविदमुच्यते। "व्कौल्माणी" इति।
"टिड्ढाणञ्" ४।१।१५ इति ङीप्॥

बाल-मनोरमा

कुल्माषादञ् १८५८, ५।२।८२

कुल्माषादञ्। कनोऽपवादः। "स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

श्रोत्रियं श्छन्दो ऽधीते ५।२।८४

श्रोत्रियनिति निपात्यते छन्दो ऽधीते इत्येतस्मिन्नर्थे। नकारः स्वरार्थः। श्रोत्रियो ब्राह्मणः। श्रोत्रियंश् छन्दो ऽधीते इति
वाक्यार्थे पदवचनम्, छन्दसो वा श्रोत्रभावः, तदधीते इति घन् च प्रत्ययः। कथं छन्दो ऽधीते छन्दसः? बाग्रहणम्
अनुवर्तते तावतिथं ग्रहणम् इति लुग् वा ५।२।७६ इत्यतः।

लघु-सिद्धान्त-कौमुदी

श्रोत्रियंश्छन्दोऽधीते ११८४, ५।२।८३

श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः॥

न्यासः

श्रोत्रियँश्छन्दोऽधीते। , ५।२।८३

"नकारः स्वरार्थः" इति। ननु च नकार इद् यस्य तस्मिंन्निति परतः स्वर उच्यते, न च समुदायानुबन्धे नकारे
नित्परत्वमस्ति? नैष दोषः; न एवेत् नित्, तत्पुरुषोऽयम्। तेन नकार इत्संज्ञे परतः पूर्वस्य स्वरो भविष्यति। किं पुनरत्र
निपात्यते? इत्याह--"छन्दोऽधीते" इति। अस्य वाक्यस्यार्थे श्रोतिं()रयन्निति निपात्यते। "छन्दसो वा" इत्यादि। पूर्वत्र
वाक्यार्थे पदमविद्यमानप्रकृतिप्रत्ययविभागं निपातितम्; इदानीं तु प्रकृतिप्रत्ययौ निपात्येते तदवीत इत्यस्मिन्नर्थे। अत्र
यद्यपि निदित बहुव्रीहिः, तथापि स्वरः सिध्यत्येव; घन्प्रत्ययस्य नितः परस्य विद्यमानत्वात्। "कथम्()" इत्यादि। यदि

च्छब्दःशब्दस्य श्रोत्रशब्द आदेशो घंश्च प्रत्ययः "तदधीते" इत्यस्मिन्नर्थे निपात्यते, निपातनेन बाधितत्वादत्रार्थे च्छान्दस इति न सिष्यतीत्यभिप्रायः॥

बाल-मनोरमा

श्रोत्रियंश्छन्दोऽधीते १८५९, ५।२।८३

श्रोत्रियंश्छन्दोऽधीते। द्वितीयान्ताच्छन्दश्शब्दादधीते इत्यर्थे घन्, प्रकृतेः श्रोत्रादेशश्च निपात्यते। अध्येत्रणोऽपवादः। वेत्यवृत्तेरिति। "तावतिथ"मिति सूत्रान्मण्डूकप्लुत्ये"ति शेषः। ततश्च घनभावे अद्येत्रणिति भावः। वाग्रहणाननुवृत्तौ तु घना अध्येत्रणो बाधः स्यादिति बोध्यम्।

तत्त्व-बोधिनी

श्रोत्रियंश्छन्दोऽधीते १४३०, ५।२।८३

श्रोत्रियन्। यश्छन्दोऽधीते सः श्रोत्रियो भवति। अत्र भाष्ये "छन्दोऽधीते इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यते"इति वाक्यार्थे पदवचनपक्षः। "छन्दसो वा श्रोत्रभावो निपात्यते, तदधीत इत्येतस्मिन्नर्थे, घश्च प्रत्ययः"इति पक्षान्तरं च स्थितम्। व्याख्यातं च कैयटेन "वाक्यार्थस्य =संबन्धरूपस्य क्रियारूपस्य वाऽसत्त्वरूपत्वात्,श्रोत्रियशब्दस्य च सत्त्वरूपार्थाभिधायित्वाद्वाक्यार्थग्रहणेन तदाश्रयश्छन्दोऽध्ययी अभिधीयत इति। "एकां शाखामधीत्य श्रोत्रियो भवती"ति धर्मशास्त्रम्। वेत्यनुवृत्तेरिति। "तावतिथं ग्रहणमिति लुग्वे"त्यतः।

---

सूत्रम्

काशिका-वृत्तिः

श्राद्धम् अनेनन् भुक्तम् इनिठनौ ५।२।८५

श्राद्धम् इति प्रकृतिः। अनेन इति प्रत्ययार्थः। भुक्तम् इति प्रकृतिविशेषणम्। श्राद्धशब्दाद् भुक्तोपाधिकादनेन इत्यस्मिन्नर्थे इनिठनौ प्रत्ययौ भवतः। श्राद्धशब्दः कर्मनामधेयम् तत् साधनद्रव्ये वर्तित्वा प्रत्ययम् उत्पादयति। श्राद्धं भुक्तम् अनेन श्राद्धी, श्राद्धिकः। इनिठनोः समानकालग्रहणं कर्तव्यम्, अद्य भुक्ते श्राद्धे श्वः श्राद्धिकः इति मा भूत्।

न्यासः

श्राद्धमनेन भुक्तमिनिठनौ। , ५।२।८४

"श्राद्धशब्द" इत्यादि। शास्त्रोक्तेन विधिना निष्पाद्यस्य कस्यचिदेव क्रियाविशेषस्य श्राद्धशब्दः संज्ञा। कर्मशब्दोऽयं क्रियावाची। श्रद्धा यत्र कर्मण्यस्ति तच्छ्राद्धम्(), "प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः" ५।२।१०० इति णप्रत्ययः। "तत्साधने" इत्यादि। भूक्तत्वं कर्मणो विशेषणं न सम्भवतीति तत्साधने भवतादौ वर्त्तित्वा श्राद्धं प्रतययमुत्यादयतीति विज्ञायते। तत्साधाने तु तस्य वृत्तिः, तादश्र्यात्(); यथा--प्रदीपार्थायां मल्लिकायां प्रदीयपशब्दस्य। "समानकालग्रहणम्()" इति। समानः कालो गृह्रते येन तत्समानकालग्रहणम्()। व्याख्यानं कत्र्तव्यमित्यर्थः। किमर्थम्()? इत्याह--"अद्य भुक्ते" इत्यादि। यस्मिन्नहनि श्राद्धमनेन भुक्तं तस्मिन्नेव श्राद्धिक इति स्यात्()ष अद्य भक्ते ()आओ मा भूदित्येवमर्थम्()। तत्रेदं व्याख्यानम्()--इहापि वेत्यनुवत्र्तते, सा च व्यवस्थितविभाषा, तेन यस्मिन्नेवाहनि श्राद्धं भुक्तं तस्मिन्नेवेष्यते; नान्यत्रेति॥

बाल-मनोरमा

श्राद्धमनेन भुक्तमिनिठनौ १८६०, ५।२।८४

श्राद्धमनेन। प्रथमान्ताच्छ्राद्धशब्दाद्भुक्तमनेनेत्यर्थे इनिठनौ [एतौ] स्त इत्यर्थः। श्राद्धसाधनद्रव्ये श्राद्धशब्दो लाक्षणिकः। इनिप्रत्यये नकारादिकार उच्चारणार्थः।

तत्त्व-बोधिनी

श्राद्धमनेन भुक्तमिनिठनौ १४३१, ५।२।८४

श्राद्धमनेन। श्रद्धाऽस्मिन्नस्तीति श्राद्धम्। "प्रज्ञाश्रद्धाऽर्चाभ्यो णः"। यद्यपि पित्र्यं कर्मश्राद्धशब्देनोच्यते, तथापीह तत्साधनद्रव्यमुच्यते, मुख्यश्राद्धस्य भोक्तुमशक्यत्वात्। श्राद्धे। श्राद्धिक इति। अद्यतन एवेष्यते, अद्य भुक्ते ()आः श्राद्धिक इति मा भूत्।

---

सूत्रम्

काशिका-वृत्तिः

पूर्वादिनिः ५।२।८६

अनेन इति प्रत्ययार्थः कर्ता ऽनुवर्तते। न च क्रियाम् अन्तरेण कर्ता सम्भवति इति यां काञ्चित् क्रियामध्याहृत्य प्रत्ययो विधेयः। पूर्वातनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। पूर्वं गतम् अनेन पीतम् भुक्तं वा पूर्वी, पूर्विणौ, पूर्विणः।

लघु-सिद्धान्त-कौमुदी

पूर्वादिनिः ११८५, ५।२।८५

पूर्वं कृतमनेन पूर्वी॥

न्यासः

पूर्वादिनिः। , ५।२।८५

"पूर्व गतं पीतं भूक्तम्()" इति। पूर्वशब्दोऽत्र क्रियाविशेषणत्वात्? कर्म भवतीति द्वितीयासमर्थात्? प्रत्ययो विज्ञायते। "पूर्वो" इति। "सौ च" ६।४।१३ इति दीर्घः॥

बाल-मनोरमा

पूर्वादिनिः १८६१, ५।२।८५

पूर्वादिनिः। अनेनेति कर्तृतृतीयान्तमनुवर्तते। कां क्रियां प्रति कर्तेत्याकाङ्क्षायां भुक्तं पीतमित्यादि यत्किञ्चित्क्रियापदमध्याहार्यम्। उपस्थितत्वात् कृञर्छभूतं क्रियासामान्यमेव प्रतीयते। ततश्च पूर्वं कृतमनेनेति विग्रहे कृतमित्यादिक्रियाविशेषणात्पूर्वशब्दादनेनेत्यर्थे इनिः स्यादित्यर्थः।

तत्त्व-बोधिनी

पूर्वादिनिः १४३२, ५।२।८५

पूर्वादिनिः। पूर्वमिति क्रियाविशेषणाद्द्वितीयान्तात्प्रत्ययः। "अनेने"ति कर्तृवाचकमनुवर्तते। न च क्रियामन्तरेण कर्ता संभवतीति कांचित्क्रियामध्याह्नत्य प्रत्ययो विधेयस्तदाह---पूर्व कृतमनेनेति।

---

सूत्रम्

काशिका-वृत्तिः

सपूर्वाच् च ५।२।८७

विद्यमानं पूर्वं यस्मादिति सपूर्वं प्रातिपदिकम्, तस्य पूर्वशब्देन तदन्तविधिः। सपूर्वात् प्रतिपदिकात् पूर्वशब्दान्तातनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। पूर्वं कृतम् अनेन कृतपूर्वी कटम्। भुक्तपूर्वी ओदनम्। सुप् सुपा इति समासं कृत्वा तद्धित उत्पाद्यते। योगद्वयेन च अनेन पूर्वादिनिः ५।२।८५, सपूर्वच् च ५।२।८६ इति परिभाषाद्वयं ज्ञाप्यते, व्यपदेशिवद्भावो ऽप्रातिपदिकेन, ग्रहणवता प्रातिपदिकेन तदन्तविधिर् न अस्ति इति।

लघु-सिद्धान्त-कौमुदी

सपूर्वाच्च ११८६, ५।२।८६

कृतपूर्वा॥

न्यासः

सपूर्वाच्च। , ५।२।८६

सहशब्दो विद्यमानवचनः। अत एवाह--"विद्यमानं पूर्वम्()" इति। "वोपसर्जनस्य" ६।३।७१ इति सहस्य सभावः। "कृतपूर्वो कटमिति" ननु च निष्ठ()आ कर्मणोऽभिहितत्वाद्()द्वितीयाऽतर न प्रापनोति? नैष दोषः; नेयं कर्मणि निष्ठा, किं तर्हि? भावे। यदापि कर्मणि तदापि न दोषः; निष्ठया हि सामान्यं कर्माभिहितम्(), न विशेषकर्म। तस्माद्विशेषकर्मणोऽनभिहितत्वाद्()द्वितीया भविष्यति। ननु च पूर्वं कृतमित्यनेकपदावयवत्वाच्च वाक्यमिदम्()। वाक्यस्य चार्थवत्समुदायानां समासग्रहणं नियमार्थमिति प्रातिपदिकसंज्ञा नास्ति। तत्कथमतः प्रत्ययः? इत्याह--"सुप्सुपा" इत्यादि। "योगद्वयेन च" इत्यादि। यदि "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (शाक। प। ६५) इत्येषा परिभाषा न स्यात्? तदा "सपूर्वात्पूर्वादिनिः" इत्येकयोगं कुर्यात्? किं योगविभागेन! एकयोगे हि सति केवलादपि व्यपदेशिवद्भावेन प्रत्ययो भविष्यति। तदेवमेकयोगेन सिद्धे यत्? "पूर्वादिनिः" ५।२।८५ इति पृथग्योगं करोति, तज्ज्ञापयति--अस्तीयं परिभाषा "व्यपदेशिवद्भावोऽप्रातिपदिकेन" (शाक। प। ६५) इति। यदि वा "ग्रहणवता" (व्या। प। ८९) इत्यादिका परिभाषा न स्यात्? "सपूर्वाच्च" इतीमं योगं न कुर्यात्()। "पूर्वादिनिः" ५।२।८५ इत्यनेनैव हि कृतपूर्वीत्यादावपि भविष्यति तदन्तविधिना। तदेयं पूर्वयोगेणैव पूर्वशब्दादपि सिद्धे प्रत्यये यत्? "सपूर्वाच्च" इतीमं योगं करोति तज्ज्ञापयति---अस्तीयं परिभाषा "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न भवति" (व्या। प। ८९) इति॥

बाल-मनोरमा

सपूर्वाच्च १८६२, ५।२।८६

सपूर्वाच्च। विद्यमानपूर्वादपि पूर्वशब्दादुक्तविषये इनिः स्यादित्यर्थः। पूर्वान्तादिति यावत्। प्रातपदिकविशेषणत्वेऽपि प्रत्ययविधौ तदन्तविधिप्रतिषेधादप्राप्ते सूत्रमिदम्। कृतपूर्वी कटमिति। अत्र यद्वक्तव्यं तत्कर्तृकर्मणोः कृतीत्यत्रोक्तम्।

तत्त्व-बोधिनी

सपूर्वाच्च १४३३, ५।२।८६

सपूर्वाच्च। "अनेने"ति, पूर्वसूत्रं चानुवर्तते। विद्यमानपूर्वकात्पूर्वशब्दादनेनेत्यस्मिन्नर्थे इनिः स्यात्। "पूर्वान्ताच्चे"त्येतत्फलितम्। कृतपूर्वबीति। कृतपूर्वशब्दयोः "सुप्सुपा"इति समासः। इह प्रातिपदिकाधिकारात् "पूर्वादिनि"रित्यनेनैव पूर्वशब्दान्तप्रातिपदिकात्कृतपूर्वशब्दादिनौ सिद्धे "सपूर्वाच्चे"त्येतत् "ग्रहणवता प्रातिपदिकेन तदन्ततविधिर्ने"ति परिभाषां ज्ञापयति। "कृतपूर्वी"त्येतत्सिद्धये "पूर्वान्ताच्चे"ति स्वीकृते तेनैव व्यपदेशिवद्भावेन

पूर्वीत्यपि रूपे सिद्धे "पूर्वादिनिः"इत्येतत् "व्यपदेशिवद्भावोऽप्रातिपदिकेने"ति परिभाषां ज्ञापयति।

---

सूत्रम्

काशिका-वृत्तिः

इष्टाऽदिभ्यश् च ५।२।८८

अनेन इत्येव इष्टादिभ्यः प्रातिपदिकेभ्यः अनेन इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति। इष्टमनेन इष्टी यज्ञे। पूर्ती श्राद्धे। क्तस्येन्विषयस्य कर्मणि इति सप्तम्युअसङ्ख्यायते। इष्ट। पूर्त। उपसादित। निगदित। परिवादित। निकथित। परिकथित। सङ्कलित। निपठित। सङ्कल्पित। अनर्चित। विकलित। संरक्षित। निपतित। पठित। परिकलित। अर्चित। परिरक्षित। पूजित। परिगणित। उपगणित। अवकीर्ण। परित। आयुक्त। आम्नात। श्रुत। अधीत। आसेवित। अपवारित। अवकल्पित। निराकृत। उपकृत। उपाकृत। अनुयुक्त। उपनत। अनुगुणित। अनुपठित। व्याकुलित। निगृहीत। इष्टादिः।

लघु-सिद्धान्त-कौमुदी

इष्टादिभ्यश्च ११८७, ५।२।८७

इष्टमनेन इष्टी। अधीती॥

लघु-सिद्धान्त-कौमुदी

इति भवनाद्यर्थकाः १२ ११८७, ५।२।८७

लघु-सिद्धान्त-कौमुदी

अथ मत्वर्थीयाः ११८७, ५।२।८७

न्यासः

इष्टादिभ्यश्च। , ५।२।८७

"इष्टो यज्ञे" इति। कथं पुनरत्र सपतमी; यावता यज्ञस्य कर्मतायां द्वितीयया भवितव्यम्()? इत्याह--"क्तस्येन्विषयस्य" इत्यादि।

बाल-मनोरमा

इष्टादिभ्यश्च १८६३, ५।२।८७

इष्टादिभ्यश्च। इष्टादिभ्यस्तृतीयान्तेभ्योऽनेनेत्यर्थे इनिः स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ५।२।८९

परिपन्थिन् परिपरिनित्येतौ शब्दौ छन्दसि विषये निपात्येते, पर्यवस्थातरि वाच्ये। पर्यवस्थाता प्रतिपक्षः, सप्त्न उच्यते। मा त्वा परिपन्थिनो विदन् मा त्वा परिपरिणो विदन्।

न्यासः

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि। , ५।२।८८

किं पुनरत्रेवं निपात्यते? पर्यवस्थातृशब्दं व्यवस्थाप्य तदवयवस्यावस्थातृशब्दस्य पम्थ आदेश एकत्र क्रियते, अपरत्र तस्यैव परिशब्दः, पश्चादिनिप्रत्ययः॥

बाल-मनोरमा

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि १८६४, ५।२।८८

छन्दसि परिपन्थि। परिपन्थिन्, परिपरिन् एतौ शब्दौ छन्दसि निपात्येते पर्यवस्थातरि वाच्ये। पर्यवस्थातृशब्दादिनिप्रत्यये अवस्थातृशब्दस्य पन्थादेसे परिपन्थिन्शब्दः। पर्यवस्थातृशब्दादिनिप्रत्यये अवस्थातृशब्दस्य पर इत्यादेसे परिपरिन्शब्दः। "मा त्वा विदन्परिपन्थिनः, मा वा परिपरिणो विदन्" इति श्रुतौ उदाहरणम्। इदं सूत्रं वैदिकप्रक्रियायामेव व्याख्यातुमुचितम्।

तत्त्व-बोधिनी

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि १४३४, ५।२।८८

छन्दसि। पर्यवस्थातृशब्दाच्छत्रुपर्यायात्स्वार्थे इनिप्रत्यचयः, अवस्थातृशब्दस्य च "पन्थ" "पर" एतावादेशौ निपात्येते। "अपत्यं परिपन्थिनम्", "मा त्वा परि परिणो विदन्"। उभयत्रापि परिशब्देऽवग्रहः।लोके त्विति। "अनुपस्थितपरिपन्थिभिः पार्थिवै"रित्यादौ।

---

सूत्रम्

काशिका-वृत्तिः

अनुपद्यन्वेष्टा ५।२।९०

अनुपदी इति निपात्यते अन्वेष्टा चेत् स भवति। पदस्य पश्चादनुपदम्। अनुपदी गवाम्। अनुपदी उष्ट्राणाम्।

न्यासः

अनुपद्येन्वेष्टा। , ५।२।८९

"अनुपदी" इति। पश्चात्? पदस्यानुपदम्(), पश्चादर्थेऽव्ययीभावः। तस्मादिनिप्रत्ययो निपात्यते॥

बाल-मनोरमा

अनुपद्यन्वेष्टा १८६५, ५।२।८९

अनुपद्यन्वेष्टा। पदस्य पश्चादनुपदम्। पश्चादर्थे अव्ययीभावः। सप्तम्या अम्भावः। अनुपदमित्यस्मादन्वेष्टरि अर्थे इनिप्रत्ययो निपात्यते।

तत्त्व-बोधिनी

अनुपद्यन्वेष्टा १४३५, ५।२।८९

अनुपद्यन्वेष्टा। अन्वेष्टरि इनिः प्रत्ययो निपात्यते। अनुपदमिति। पदस्य पश्चात्। पश्चादर्थेऽव्ययीभावः। अनुपदीगवामिति। पदापेक्षया षष्ठी गोपदात्। पश्चादन्वेषणं गवामेव। तेन हिरण्यादावन्येष्ये न भवतीति हरदत्तः।

---

सूत्रम्

काशिका-वृत्तिः

साक्षाद् द्रष्टरि संज्ञायाम् ५।२।९१

साक्षाच्छब्दो ऽव्ययम्। तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये। संज्ञाग्रहणम् अभिधेयनियमार्थम्। साक्षाद् द्रष्टा साक्षी। साक्षिणौ। साक्षिणः। संज्ञाग्रहणादुपद्रष्टा एव उच्यते, न दाता ग्रहीता वा।

न्यासः

साक्षाद्द्रष्टरि संज्ञायाम्?।, ५।२।९०

"संज्ञाग्रहणम्()" इत्यादि। विशिष्ट एवाभिधधेये प्रत्ययान्तस्य वृत्तिरभिधेयनियमः" (वा। ८०२) इति टिलोपः। "संज्ञग्रहणम्()" इत्यादि। असति हि संज्ञाग्रहणे यथोग्रहणे यथोपद्रष्टा साक्षिशब्देनोच्यते, तथा दाता ग्रहीता चोच्येयाताम्(), एतावपि हि द्रष्टारौ भवत एव। संज्ञाग्रहणादुपद्रष्टैवोच्यते। दातृग्रहीतृभ्यां योऽन्यो द्रष्टा समीपे स उपद्रष्टा। ननु च "स्वामी()आराधिपतिदायादसाक्षि" २।३।३९ इति निपातनादेव साक्षिशब्दः साधुर्भाविष्यति, अभिधेयनियमोऽपि लौकिकत्वादस्य पदस्य लोकोक्त एव विज्ञास्यते, तदपार्थकमिदम्()? नैतदस्ति; न हि तस्मिन्? निपातने साक्षिशब्दस्य नकारान्तता शक्यते व्यवसातुम्, प्रमाणाभावात्()। लोके न स्वाभिधेये प्रतीयमाने प्रतिपत्तिगौरवं स्यात्। तस्मान्नकारान्तताप्रतिपत्तिगौरवपरिहारार्थं चेदमुच्यते॥

बाल-मनोरमा

साक्षाद्द्रष्टरि संज्ञायाम् १८६६, ५।२।९०

साक्षाद्द्रष्टरि। "साक्षा"दित्यव्ययम्, इह शब्दस्वरूपपरं लुप्तपञ्चमीकम्। साक्षादित्यव्ययाद्द्रष्टर्यर्थे इनिः स्यादित्यर्थः। साक्षीति। यः कर्मणि स्वयं न व्याप्रियते, किन्तु कर्म क्रियमाणं पश्यति सोऽयं साक्षीत्युच्यते। साक्षादित्यव्ययादिनिप्रत्ययः। "अव्ययानां भमात्रे" इति टिलोपः।

तत्त्व-बोधिनी

साक्षाद्द्रष्टरि संज्ञायाम् १४३६, ५।२।९०

साक्षाद्द्रष्टरि। द्रष्टर्यर्थे इनिः स्यात्। साक्षाच्छ६ब्दोऽव्ययम्, तेन "प्रकृतिवदनुकरण"मित्यतिदेशादिह सूत्रे पञ्चम्या लुक्। "उदः स्थास्तम्भोः", "अवाच्छालम्बने"त्यादौ तु "प्रकृतिव"दित्यतिदेशस्य वैकल्पिकत्वेनाऽभ्ययत्वाऽभावात् पञ्चम्या लुङ् न भवतीति बोध्यम्। साक्षीति। "अव्ययानां भमात्रे"इति टिलोपः। यद्यपि साक्षाद्द्रष्टाररुआयो भवन्ति, दाता ग्रहीता उपद्रष्टा त, तथापीह संज्ञाग्रहणात्साक्षिशब्देनोपद्रष्टैवोच्यत इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

क्षेत्रियच् परक्षेत्रे चिकित्स्यः ५।२।९२

क्षेत्रियचिति निपात्यते परक्षेत्रे चिकित्स्यः इत्येतस्मिन् वाक्यार्थे पदवचनम्। परक्षेत्राद् तत्र इति सप्तमीसमर्थात् चिकित्स्यः इत्येतस्मिन्नर्थे घच् प्रत्ययः परशब्दलोपश्च निपात्यते। परक्षेत्रे चिकित्स्यः क्षेत्रेयो व्याधिः। क्षेत्रियं कुष्ठम्। परक्षेत्रं जन्मान्तरशरीरम्, तत्र चिकित्स्यः क्षेत्रियः। असाध्यः प्रत्याख्येयो व्याधिरुच्यते। नामृतस्य निवर्तते इत्यर्थः। अथ वा क्षेत्रियं विषम् यत् परक्षेत्रे परशरीरे संक्रमय्य चिकित्सते। अथ वा क्षेत्रियाणि तृणानि यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि नाशयितव्यानि। अथ वा क्षेत्रियः पारदारिकः। परदाराः परक्षेत्रं तत्र चिकित्स्यः निग्रहीतव्यः। सर्वं च एतत् प्रमाणम्।

न्यासः

क्षेत्रियच्? परक्षेत्रे चिकित्स्यः। , ५।२।९१

चिकित्स्य इति शक्यार्थे कृत्यः। "वाक्यार्थे" इत्यादि। "परक्षेत्रे चिकित्स्यः" इत्यस्य वाक्यस्यार्थे क्षेत्रिय इत्येतत्? पदवचनमविद्यमानप्रकृतिप्रत्ययविभागं निपात्यते। चकारोऽन्तोदात्तार्थः। "परक्षेत्राद्वा" इत्यादि। वाशब्दः प्रकारान्तरं द्योतयति। अथ वा--परक्षेत्रशब्दात्? तत्रेति सप्तमीसमर्थात्? चिकिस्य इत्यत्रार्थे प्रत्ययो निपात्यते, परशब्दस्य च लोपः। "परक्षेत्रं जन्मान्तरशरीरम्()" इति। इहत्याच्छरीरादन्यत्वादसाध्य इत्यनेन परशब्दस्यार्थं दर्शयति। सस्यार्थं हि यत्? क्षेत्रं संस्कृतं तदनुत्पाद्यत्वात्? तृणानां परक्षेत्रं भवति। "सर्वं चैतत्? प्रमाणम्()" इति। सर्वस्याचार्येण प्रतिपादितत्वतात्()॥

बाल-मनोरमा

क्षेत्रियच् परक्षेत्रे चिकित्स्यः १८६७, ५।२।९१

क्षेत्रियच्। परम् अन्यत् क्षेत्रं=शरीरम्-परक्षेत्रम्। चिकित्स्यः=प्रतीकार्यः, "कितेव्र्याधिप्रतीकारे" इत्युक्तेः। परक्षेत्रशब्दात्सप्तम्यन्ताच्चिकित्स्य इत्यर्थे घच्, परशब्दस्य लोपश्च निपात्यते। शरीरान्तरे इति। भाविनि शरीरे चिकित्स्यः, नतु वर्माने शरीरे इत्यर्थः। फलितमाह--अप्रतिकार्य इति।

तत्त्व-बोधिनी

क्षेत्रियच् परक्षेत्रे चिकित्स्यः १४३७, ५।२।९१

क्षोत्रियच्। "परक्षेत्रशब्दात्सप्तम्यन्ताद्धच्, परशब्दस्य लोपश्च निपात्यते"इति मनोरमा। अन्ये तु "परक्षेत्रे चिकित्स्यः"इत्यर्थे "क्षेत्रायच्िचि निपात्यते। वाक्यार्थे पदवचनं श्रोत्रियवदित्यप्याहुः। एवमन्यत्राप्यूह्रम्। क्षेत्रियोव्याधिरिति। किञ्च क्षेत्रियं विषम्, यत्परशरीरे सङ्क्रमय्य चिकित्स्यते। अपि च क्षेत्रियाणां तृणानि। यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि=विनाशयितव्यानि। किं च क्षेत्रियः पारदारिकः। परदाराः---परक्षेत्रम्। तत्र चिकित्स्यो निग्रहीतव्यः। सर्वेऽप्येते पक्षा आकरे स्थिताः।

---

सूत्रम्

काशिका-वृत्तिः

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तम् इति वा ५।२।९३

इन्द्रियम् इत्यन्तोदात्तं शब्दरूपं निपात्यते। रूढिरेषा चक्षुरादिनां करणानम्। तथा च व्युत्पत्तेरनियमं दर्शयति। इन्द्रशब्दात् षष्ठीसमर्थात् लिङ्गम् इत्येतस्मिन्नर्थे घच्प्रत्ययो भवति। इन्द्रस्य् लिङ्गम् इन्द्रियम्। इन्द्र आत्मा, स चक्षुरादिना करणेन अनुमीयते। नाकर्तृकं करणम् अस्ति। इन्द्रेण दृष्टम्। तृतीयासमर्थात् प्रत्ययः। आत्मना दृष्टम् इत्यर्थः। इन्द्रेण सृष्टम्, आत्मना सृष्टम्। तत्कृतेन शुभाशुभकर्मणोत्पन्नम् इति कृत्वा। इन्द्रेण जुष्टम्, आत्मना जुष्टं, सेवितम्। तद्द्वारेण विज्ञानोत्पादनात्। इन्द्रेण दत्तम्, आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय। इतिकरणः प्रकारार्थः। सति सम्भवे व्युत्पत्तिरन्यथा ऽपि कर्तव्या, रूढेरनियमातिति। वाशब्दः प्रत्येकम् अभिसम्बध्यमानो विकल्पानां स्वातन्त्र्यम् दर्शयति।

न्यासः

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा। , ५।२।९२

"रूढिरेषा" इत्यनेननावयवार्थं त्याजयति। कथं पुनर्जायते रूढिरेषा? इत्याह--"तथा च" इत्यादि। यद्येषा रूढिर्न स्यात्(), व्युत्पत्तेरनियमो न स्यात्(); अरूढिशब्देषु नियतत्वादेव तदर्थस्य। रूढिशब्दे त्वस्मिन्? युज्यते व्युत्पत्तेरनियमः। रूढिशब्दानां हि यथाकथञ्चिद्व्युत्पत्तिः क्रियते परिकल्पितेनावयवार्थेन। कथं पुनरात्मा चक्षुरादिना करणेन शक्योऽनुमातुम्()? इत्याह--"नाकर्तृकम्()" इत्यादि। अनेनाविनाभावं दर्शयति। इतिकरणओ हेतौ। यस्मात्? करणादीनां प्रवृत्तिर्निवृत्तिर्वा कत्र्रधीना, तस्माद्यत्र तानि तत्रावश्यं कत्र्रा भवितव्यम्()। चक्षुरादिना करणेनाविना भावेनालिङ्गेनात्माऽनुमीयते। कथं पुनस्तदात्मना सेवितम्()? इत्याह--"तद्द्वारेण" इत्यादि। द्वारेम हि विषयेष्वात्मनो ज्ञानमुत्पद्यते। तस्माद्विषयान्? ज्ञातुमात्मा चक्षुरादीनद्रियं सेवते। "यथायथम्? इति। यथास्वम्()। यो यस्येन्द्रियस्य विषयस्तत्? तस्मै दत्तम्()। "इतिकरणः प्रकारार्थः" इति। एवं प्रकारान्तरेणापि व्युत्पत्तिः कर्त्()तव्येत्येतदितिकरणः प्रकारर्थं द्योतयति अत एवाह--"सत् सम्भवे" इत्यादि। इन्द्रेण विषया नीयन्ते सम्बध्यन्त इतीन्द्रियमित्येवमादिका सति सम्भवे तथा व्युत्पत्तिः कत्र्तव्या। "वाशब्दः" इत्यादि। असति हि वाशब्दे "इन्द्रलिङ्गम्" इत्येवमादीनां विकल्पप्रकाराणा पारतन्त्र्यं विज्ञायेत। परस्परापेक्षाया समुच्चिताया एव व्युत्पत्तेः कारणमिति। वाशब्दस्तविन्द्रलिङ्गमितीन्द्रदृष्टमिति चेत्येवं सम्बध्यमानस्तेषां स्वातन्त्र्यं दर्शयति। तेनैकैकः प्रकारः प्रकारान्तरनिरपेक्षो व्युत्पत्तादङ्गभावमुपयाति॥

बाल-मनोरमा

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा १८६८, ५।२।९२

इन्द्रियम्। इन्द्रलिङ्गमित्याद्यर्थेषु इन्द्रियमिति भवति। इन्द्रशब्दाद्यथायोगं षष्ठीतृतीयान्ताल्लिङ्गमित्याद्यर्थेषु घच् निपात्यत इति यावत्। इन्द्र आत्मेति। "स एतमेव पुरुषं ब्राह्म ततममपश्यदिदमदर्शमिति। तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्रमित्याचक्षते" इति श्रुतेरिति भावः। तस्यलिङ्गमिति। आत्मनोऽनुमापकमित्यर्थः। लिङ्गत्वमुपपादयति--करणेनेति। "चक्षुरादीन्द्रियं किञ्चित्कत्र्रधिष्ठितं भवितुमर्हति, करणत्वात्, घटकरणदण्डादिव"दित्यनुमानादित्यर्थः। मम चक्षुरित्येवमिन्द्रेण दृष्टं ज्ञातामिन्द्रियम्। इन्द्रेण जुष्टं सेवितं प्रीणितं वा इन्द्रियम्। रूढशब्दोऽयं कथञ्चिद्व्युत्पादितः। इन्द्रेण दुर्जयमिन्द्रियमिति साधयितुमाह--इतिकरणमिति। इतिशब्द इत्यर्थः।

तत्त्व-बोधिनी

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ४७०, ५।२।९२

इन्द्रियमिन्द्र। इन्द्रशब्दाद्घच्। इन्द्रेण दृष्टं=ज्ञातं---"मम चक्षुः, मम श्रोत्रम्" इत्यादिक्रमेण। सृष्टम्---अदृष्टद्वारा। जुष्टं=प्रीणितं सेवितं वा। दत्तं=यथायतं विषयेभ्यः। रूढिशब्दोऽयं यथाकथञ्चिद्व्युत्पादितः।

अथ परस्मैपदप्रक्रिया।

शेषात्कर्तरि। "अनुदात्तङित" इत्यादिष्वात्मनेपदमेवेति नियमान्न तत्र परस्मैपदस्य संभवः। तथा च "कर्तरि परस्मैपद"मित्यनेन "परस्मैपदमेव"ति नियमिते त्दभिन्नानामेव तद्भविष्यतीति शेषग्रहणं स्पष्टप्तिपत्त्यर्थमित्याहुः। "अनुदात्तङितः" इत्यादिष्वेवात्मनेपदमिति नियमात् "शेषात्कर्तरी"इत्यनेन परस्मैपदमेव तत्र भविष्यतीति परस्मैपदग्रहणं स्पष्टप्रतिपत्त्यर्थमिति केचित्।

---

सूत्रम्

काशिका-वृत्तिः

तदस्य अस्त्यस्मिन्निति मतुप् ५।२।९४

टतिति प्रथमा समर्थविभक्तिः। अस्य अस्मिनिति प्रत्ययार्थौ। अस्ति इति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। तदिति प्रथमासमर्थादस्य इति षष्ठ्यार्थे ऽस्मिन्निति सप्तम्यर्थे वा मतुप् प्रत्ययो भवति, यत् तत् प्रथमासमर्थम् अस्ति चेत् तद् भवति। अस्त्यर्थोपाधिकं चेद् तद् भवति इत्यर्थः। इतिकरणस् ततश्चेद् विवक्षा। गावो ऽस्य सन्ति गोमान् देवदत्तः। वृक्षाः अस्मिन् सन्ति वृक्षवान् पर्वतः। यवमान्। प्लक्षवान्। इति करणाद् विषयनियमः। भूमनिन्दाप्रशंसासु नित्ययोगे ऽतिशायने। संसर्गे ऽस्ति विवक्षायां भवन्ति मतुबादयः। भूम्नि तावत् गोमान्। निन्दायाम् कुष्ठी। ककुदावर्तिनी। प्रशंसायाम् रूपवती कन्या। नित्ययोगे क्षीरिणो वृक्षाः। अतिशायने उदरिणी कन्या। संसर्गे दण्डी। छत्री। अस्तिविवक्षायाम् अस्तिमान्। गुणवचनेभ्यो मतुपो लुग्वक्तव्यः। शुक्लो गुणो ऽस्य अस्ति शुक्लः पटः। कृष्णः। श्वेतः।

लघु-सिद्धान्त-कौमुदी

तदस्यास्त्यस्मिन्निति मतुप् ११८८, ५।२।९३

गावोऽस्यास्मिन्वा सन्ति गोमान्॥

न्यासः

तदस्यास्त्यस्मिन्निति मतुप्?। , ५।२।९३

"प्रत्ययार्थो" इति। ननु च यद्? यस्य भवति तत तस्मिन्नस्ति, यद्यस्मिन्नस्ति तत्? तस्य भवति, यथा--वृक्षे शाखा, वृक्षस्य शाखेति; तत्रान्यतरनिर्देशेनैव सिद्धम्(), तत्किमर्थं द्वौ निर्दिश्येते? नैतदस्ति; न हि षष्ठीसप्तम्यर्थयोरवश्यम्भावो समावेशः, तथा हि गावो गङ्गायां भवन्ति, न च ते तस्याः; तथा देशान्तरगतोऽपि पुत्रो देवदत्तस्य च भवति, न चासौ तत्र। तस्मादुभावपि निर्देष्टव्यौ। "अस्तीति प्रकृतिविशेषणम्()" इति। ननु च सम्भवे व्यभिचारे च विशेष्यविशेषणभावो भवति नीलोत्पलवत्(), न चास्तित्वस्य व्यभिचारोऽस्ति, यथोक्तम्()--"न सत्तां पदार्()थो व्यभिचरति" इति। तस्या व्यवच्छेद्याभावादपार्थकमिदं विशेषणम्()? नैतदस्ति; विशेषणोपादानसामर्थ्यादेव विशिष्टैव सत्ता विशेषणत्वेनोपात्ता, न सत्तामात्रमिति प्रतीयते। सा पुनर्विशिष्टसत्ता सप्प्रतिसत्तैव। अस्ति च तस्या व्यभिचार इति प्रसज्यत एव विशेष्यविशेषणभावः। किं पुनः सम्प्रतिसत्ता विशेषणत्वेनोपात्ता? तस्यामेव प्रत्ययो यथा स्यात्? भूतभविष्यत्सत्तायां मा भूदित्येवमर्थम्()। तेन गावोऽस्यासन्(), गावोऽस्य भवितार इत्यतर् न भवति। ननु च गोमानासीत, गोमान्? भवितेति भूतभविष्यत्सत्ताय#आ#ं मतुपं विधाय कथं प्रयुज्यते? नैष दोषः, धातुसम्बन्धेऽयथाकालोक्तानामपि प्रत्ययानां साधुत्वविधानादेवं प्रयुज्यचे; न भूतभविष्यत्सत्तायां प्रत्ययविधानात्()। "अस्त्यर्थोपाधिकं चेद्भवतीत्यर्थः" इति। वत्र्मानसत्ताविशिष्टं यदि तत्र भवतीत्यर्थः। "गोमान्()" इति। "उगिदचाम्()" ७।१।७० इति नुम्()। हल्ङ्यादिसंयोगान्तलोपौ। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्धः। "वृक्ष वान्()" इति "मादुपधायाश्च" ८।२।९ इत्यादिना वत्वम्()। "विषयनियमः" इति। विषये प्रत्ययस्य भावो विषयनियमः। स पुनर्विशिष्टविषयो भूमादिरिति दर्शयन्नाह--"भूमनिन्दा" इत्यादि। बहोर्भावो भूमा। "पृथ्वादिभ्य इमनिच्()" इतीमनिच्()। "बहोर्लोपो भू च वहोः" ६।४।१५८ इति भूभावः, इकारलोपश्च। गावो बहवोऽस्य सन्तीति गोमान्()। एकस्य द्वयोर्वा विद्यमानत्वेऽपि गोमानिति न व्यपदिश्यते। निन्दायां-ककुदावत्र्तीति। निष्फलत्वान्निन्दितः। प्रशंसायाम्()--प्रशस्तं रूपं यस्यास्ति रहूपवानित्युच्यते। नित्ययोगे-क्षीरमेषामस्तीति क्षीरिणो वृक्षाः। नित्यः क्षीरसम्बन्धो येषां त उच्यन्ते। "अतिशायने उदरिणी कन्या" इति। यस्या अतिशयेनोदरमस्ति सैवमुच्यते। "संसर्गे दण्डी" इति। दण्डसंसर्ग उच्यते। तेनेह गृहस्थिते विद्यमानेऽपि दण्डे दण्डीति नाभिधीयते॥

बाल-मनोरमा

तदस्यास्त्यस्मिन्निति मतुप् १८६९, ५।२।९३

तदस्यास्त्यस्मिन्निति मतुप्। तदस्यास्तीति तदस्मिन्नस्तीति विग्रहे अस्मि समानाधिकरणात्प्रथमान्तादस्य अस्मिन्निति चार्थे मतुप्स्यादित्यर्थः। उपावितौ। इतिशब्दो विषयविशेषलाभार्थः। तदाह--भूमनिन्देति। श्लोकवार्तिकमिदम्। भूमा=बहुत्वम्। यथा गोमान्, यवमान्। निन्दायां-ककुदावर्तिनी कन्या। प्रशंसायां-रूपवान्। नित्ययोगे--क्षीरिणो वृक्षाः। अतिशायने-उदरिणी कन्या। संसर्गे-दण्डी। छत्री। वृत्तिनियामकः संसर्गविशेषो विवक्षितः। तेन "परुषी दण्ड" इति नास्ति।

तत्त्व-बोधिनी

तदस्यास्त्यस्मिन्निति मतुप् १४३९, ५।२।९३

तदस्यास्त्यस्मिन्नति मतुप्। "त"दिति प्रथमासमर्थात्प्रत्ययः। अस्तीति पुरुषवचने अविवक्षिते, कालस्तु विवक्षितः, धने गते बाविनि वा "धनवानय"मिति प्रतीत्यभावात्। इति शब्दो विषयविशेषलाभार्थः।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।"भूमिनिन्दाप्रशंसासु नित्ययोगेऽतिशायेन। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः"। अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः। भूमा---बहुत्वम्। तच्चापेक्षिकम्। यस्य हि यावदुचितं तावदेव बहुत्वबोधकबहुशब्देनापि प्रतीयते। तथा पञ्चषाभिरपि गोभिर्देवदत्तस्य "बह्व्यो गाव"इति व्यवहारः। राज्ञस्तु सहरुआगोरपि गावोऽल्पा इति व्यवहारः। गोमान्। यवमान्। यस्य खार्यादिभिः परिच्छिन्ना यवाः सन्ति स एवमुच्यते। नतु सहरुओणापि यवैर्यवमानिति। कथं तर्हि "यवमतीभिरद्भिर्यूपं प्रोक्षति"---इति()। अत्राहुः---जातिमात्रसम्बन्धस्य विवक्षितत्वाद्भूमाऽभावेऽप्यत्र मतुप्। भूमादिग्रहणं तु प्रायेण भूमादयः प्रतीयन्त इत्येवंपरमिति। निन्दायां---ककुदावर्तिनी कन्या। प्रशंसायां---रूपवान्। नित्ययोगे----क्षीरिणो वृक्षाः। अतिशायेन---उदरिणी कन्या। संसर्गे---दण्डी। संसर्गः=संयोगः। तेन संयुक्तदम्ड एवोच्यते, न तु गृहावस्थितदण्डोऽपि। इह दण्डपुरुषयोः संयोगे सत्यपि "दण्डी पुरुष"इत्यादिवत् "पुरुषी दण्डः" "पुरुषवान्दण्डः"इति न प्रयुज्यते, वृत्तिनियामकस्य विलक्षणसम्बन्धस्याऽभावात्। संयोगे समानेऽपि प्रतीतिबलाद्वैलक्षण्यं कल्प्यत इत्याहुः। एवं च यवसंयोगमात्रेण यवमत्य आपो न भवन्ति, किं तु यवमज्जलवच्च पात्रमेवेत्याशयेन "कथं यवमतीभिरद्भिः" इत्याक्षेफो, "भूमादिग्रहणं प्रायिक"मित्याद्युत्तरं च सङ्गच्छत एव।

---

सूत्रम्

काशिका-वृत्तिः

रसादिभ्यश् च ५।२।९५

रसादिभ्यः प्रातिपदिकेभ्यः मतुप् प्रत्ययो भवति तदस्य अस्त्यस्मिनित्येतस्मिन् विषये। रसवान्। रूपवान्। किमर्थम् इदम् उच्यते, न पूर्वसूत्रेण एव मतुप् सिद्धः? रसादिभ्यः पुनर् वचनम् अन्यनिवृत्त्यर्थम्, अन्ये मत्वर्थीया मा भूवन्निति। कथं रूपिणी कन्या, रूपिको दारकः? प्रायिकम् एतद् वचनम्। इतिकरणो विवक्षार्थो ऽनुवर्तते। अथ वा गुणातिति अत्र पठ्यते। तेन ये रसनेन्द्रियादिग्राह्या गुणाः, तेषाम् अत्र पाठः। इह मा भूत्, रूपिणी, रूपिकः इति। शोभायोगो गम्यते। रसिको नटः इत्यत्र भावयोगः। रस। रूप। गन्ध। स्पर्श। शब्द। स्नेह। गुणात्। एकाचः। गुनग्रहणं रसादीनां विशेषणम्।

न्यासः

रसादिभ्यश्च। , ५।२।९४

"अन्यनिवृत्त्यर्थम्()" इति। अन्यस्येनिप्रभृतेर्मत्वर्थीयस्य निवृत्तिरर्थः प्रयोजनं यस्य तत्तथोक्तम्()। "कथम्()" इत्यादि। रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम्()। ततो रूपिणी कन्येत्यादि न सिध्यतीति भावऋः। "प्रायिकम्()" इत्यादि। अन्यनिवृत्तेर्बाहुल्येनार्थः--सोऽस्यास्तीति प्रायिकमेव युक्तं भवतीति। बाहुल्येनास्यान्यनिवृत्तित्वेन रूपणीत्यादौ क्वचिदन्योऽपि भवतीति कथं पुनरस्य प्रायिकत्वं लभ्यते? इत्याह--"इतिकरणः" इत्यादि। इतिकरणश्चेह विवक्षार्थोऽनुवत्र्ते। तेन यतद्र तु मतुबन्तादेव लोकस्य विवक्षा भवति, तत्र तेनान्यनिवृत्तिः क्रियते; न सर्वत्र। "अथ वा" इत्यादि। परिहारान्तरम्()। आदिशब्देन चक्षुरादीन्द्रियपरिग्रहः। गुणादिति गणे पठ()ते। च गुणग्रहणं सर्वेषामेव रसादीनां विशेषणम्()। तेन ये रसनादीन्द्रियग्राह्माः। "तेषामेवायं पाठः" इति। गुणवचनान्तेभ्यो रसनादीन्द्रियग्राह्येभ्योऽन्यनिवृत्तिरनेन क्रियते, नान्येभ्य-। स्यादेतत्--रूपिणीत्यादावपीन्द्रियग्रह्मा ये गुणास्तेभ्यो मत्वर्थीय उत्पन्नः? इत्याह--"रूपिणो, रूपिकः" इत्यादि। रूपिणी, रूपिक इत्यत्र शोभागुणो गम्यते, न चक्षुग्र्राह्येण रूपेण। "रसिको नटः" इत्यत्रापि भावगुणो गम्यते, न तु रसनेन्द्रियग्राह्येण गुणेन। भावाः शृङ्गारवीरबीभत्सादयो रचनाधर्माः। "एकाचः" इति। एकाक्षरादिति। एकोऽज्? यस्य तस्मान्मतुबेव भवतीति--धीमान्(), स्ववानिति॥

बाल-मनोरमा

रसादिभ्यश्च १८७०, ५।२।९४

रसादिभ्यटश्च। मतुबिति। शेषपूरणमिदम्। "उक्तविषये" इति शेषः। पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह--अन्यमत्वर्थीयेति। "अत इनिठनौ" इत्यादिनिवृत्त्यर्थमित्यर्थः। रसादीन्पठति--रसरूपेत्यादि भावेत्यन्तम्। गुणादिति। एकाच इति। गणसूत्रम्। उदाहरति-स्ववानिति। गुणग्रहणमिति। गुणादित्येतद्रसादीनां षण्णां विशेषणमित्यर्थः। तेन गुणवाचकानामेव एषां ग्रहणाज्जलादिवाचकानां रसादिशब्दानां द्रव्यवाचिनां च गन्धादिशब्दानामिह न ग्रहणमिति भावः। "रसिको नटः" "स्पर्शिकं वारि" इत्यादि प्रयोगदर्शनादिदं सूत्रं भाष्ये प्रत्याख्यातम्।

तत्त्व-बोधिनी

रसादिभ्यश्च १४४०, ५।२।९४

अन्यमत्वर्थीयेति। कथं तर्हि "रूपिमी कन्या" "रसिको नटः"इति()। अत्राहुः---रसादिगणे "गुणात्िति पठ()ते। तेन गुणवाचिभ्य एवाऽन्यमत्वर्थीयस्य निषेधः, रूपिणीत्यत्र तु रूपशब्देन सौन्दर्यं गृह्रते। तच्च न गुणः। "रसिक"इत्यत्र तु रसशब्देन भावो गृह्रते, न तु रसनाग्राह्यो गुण इति।

गुणवचनेभ्यो मतुपो लुगिष्ठ। गुणवचनेभ्य इति। गुणे तद्वति च प्रसिद्धा ये शुक्लादयस्त एव गृह्रन्ते न तु रूपादयोऽपि। तेन रूपं वरुआमित्यादिप्रयोगो न भवति।

---

सूत्रम्

काशिका-वृत्तिः

प्राणिस्थादातो लजन्यतरस्याम् ५।२।९६

प्राणिस्थवाचिनः शब्दाताकारान्तात् लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे। चूडालः, चूडावान्। कर्णिकालः, कर्णिकावान्। प्राणिस्थातिति किम्? शिखावान् प्रदीपः। आतिति किम्? हस्तवान्। पादवान्। प्राण्यङ्गादिति वक्तव्यम्। इह मा भूत्,

चिकीर्षा ऽस्य अस्ति चिकीर्षावान्, जिहीर्षा ऽस्य अस्ति जिहीर्षावान्। प्रत्ययस्वरेण एव अन्तोदात्तत्वे सिद्धे, चकारश्चूडालो ऽस्ति इत्यत्र स्वरितो वानुदत्ते पदादौ ८।२।६ इति स्वरितबाधनार्थः।

लघु-सिद्धान्त-कौमुदी

प्राणिस्थादातो लजन्यतरस्याम् ११९०, ५।२।९५

चूडालः। चूडावान्। प्राणिस्थात्किम्? शिखावान्दीपः। प्राण्यङ्गादेव। मेधावान्॥

न्यासः

प्राणिस्थादतो लजन्यतरस्याम्?। , ५।२।९५

"कणिकालः" इति। कणिकादिशब्दोऽयं प्राण्यङ्गस्य वाचकः, नालङ्कारविशेषस्य। प्राण्यङ्गादेव हीष्यते, अत आह--"प्राण्यङ्गादिति वक्तव्यम्()" इति। प्राण्यङ्गत्वादेवाकारान्तल्लज्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--इतिकरणो विवक्षार्थोऽनुवत्र्तते। तेन प्राण्यङ्गदेव भविष्यतीति, नान्यस्मात्()। अनभिधानाद्वाऽप्राण्यङ्गान्न भविष्यतीति। ननु चैकाचो लचः प्रत्ययस्वरेणान्तोदात्तत्वं सिद्धम्(), तत्किमर्थं चकारः? इत्याह--"प्रत्ययस्वरेणैव" इत्यादि। चूडालशब्दात्? प्रथमैकवचनान्तात्? परतोऽसिशब्दे व्यवस्थिते तस्य "तिङ्ङतिङः" ८।१।२८ इति निघातः, सोः "ससजुषो रुः" ८।२।६६ इति रुत्वम्(), "अतो रोरप्लुतादप्लुते" ६।१।१०९ इत्युत्वम्(),ाद्गुणः" ६।१।८४, तस्य च "एकादेश उदात्तेनोदात्तः" ८।२।५ इत्युदात्तत्वम्(), "एङः पदान्तादति" ६।१।१०५ इति पररूपमेकादेशः। असति तु वकारे "स्वरितो वानुदात्तेऽपदादौ" ८।२।६ इति स्वरितः स्यात्()। अतस्तद्बाधनार्थ चकारः क्रियते॥

बाल-मनोरमा

प्राणिस्थादातो लजन्यतरस्याम् १८७८, ५।२।९५

प्राणिस्थात्। आदन्तात्प्राणिस्थवाचिनः शब्दान्मत्वर्थे लज्वा स्यादित्यर्थः। शिखावान् दीप इति। अत्र शिखाशब्दस्य दीपाग्रवाचिनः प्राणिस्थवाचित्वाऽभावान्न लजिति भावः। प्राण्यङ्गादेवेति। भाष्ये तथा वचनादिति भावः। ननु लचिश्चत्करणं व्यर्थं, चित इत्यन्तोदात्तत्वस्य प्रत्ययस्वरेणैव सिद्धेरित्यत आह--प्रत्ययस्वरेणेति। चूडालोऽसीति। तत्र असीत्येतत् "तिङ्ङतिङः" इति निहतम्। चूडालात्सो रुत्वे उत्वे तस्य सुस्वेनाऽनुदात्तस्याद्गुणस्य "एकादेश उदात्तेने"त्युदात्तत्वे तस्य परेण पूर्वरूपैकादेशे तस्य पदाद्यनुदात्ते सहैकादेशत्वात् "स्वरितो वाऽनुदात्ते" इत्यस्य प्राप्तौ तन्निवृत्त्यर्थं चित्करणमित्यर्थः।

तत्त्व-बोधिनी

प्राणिस्थादातो लजन्यतरस्याम् १४४३, ५।२।९५

प्राणिस्थात्। शिखावान्दीप इति। प्रत्युदाहरणदिगियं दर्शिता। शिखशब्दस्य व्रीह्यादिपाठेन लचोऽप्रसङ्गात्। "चूडावान् वृक्षः"इति प्रत्युदाहार्यमिति हरदत्तः। न च वृक्षस्य प्राणित्वमस्तीति शङ्क्यम्, मुखनासासंचारी वायुः प्राणः, तद्वानेव प्राणीति तदाशयात्। प्राण्यङ्गादेवेति। एतच्चेतिकरणानुवृत्त्या लभ्यते। चूडालोऽसीति। "असी"त्यस्य "तिङ्ङतिङः"इति निगातः। चूडालशब्दात्सोरुत्वे तस्य "अतो रोरप्लुता"दित्युकारे कृते, हलां स्नंसनधर्मत्वात्तत्स्थानिकोऽकारोऽनुदात्तः। सुप्स्थानिकस्यापि सुत्वात् "अनुदात्तौ सुप्पितौ"इत्यनुदात्त इत्यन्ये। पूर्वेण सह आद्गुणे सति "एकादेश उदात्तेने"त्योकार उदात्तः। ततः "एङः पदान्तादती"ति पूर्वरूपमेकादेशस्तस्य "स्वरितो वाऽनुदात्ते"इत्यादिना स्वरिते प्राप्ते तद्बाधनाय चकार इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सिध्माऽदिभ्यश् च ५।२।९७

लजन्यतरस्याम् इति वर्तते। सिध्मादिभ्यः प्रातिपदिकेभ्यो लच् प्रत्ययो भवत्यन्यतरस्यां मत्वर्थे। सिध्मलः, सिध्मवान्। गडुलः, गडुमान्। अन्यतरस्यां ग्रहणेन मतुप् समुच्चीयते, न तु प्रत्ययो विकल्प्यते। तस्मातकारान्तेभ्यः इनिठनौ प्रत्ययौ न भवतः। सिध्म। गडु। मणि। नाभि। जीव। निष्पाव। पांसु। सक्तु। हनु। मांस। परशु। पार्ष्णिधमन्योर् दीर्घश्च। पार्ष्णीलः। धमनीलः। पर्ण। उदक। प्रज्ञा। मण्ड। पार्श्व। गण्ड। ग्रन्थि। वातदन्तबलललाटानामूङ् च। वातूलः। दन्तूलः। बलूलः। ललाटूलः। जटाघटाकलाः क्षेपे। जटालः। घटालः। कलालः। सक्थि। कर्ण। स्नेह। शीत। श्याम। पिङ्ग। पित्त। शुष्क। पृथु। मृदु। मञ्जु। पत्र। चटु। कपि। कण्डु। संज्ञा। क्षुद्रजन्तूपतापाच् च इष्यते। क्षुद्रजन्तु यूकालः। मक्षिकालः। उपताप विचर्चिकालः। विपादिकालः। मूर्च्छालः। सिध्मादिः।

न्यासः

सिध्मादिभ्यश्च। , ५।२।९६

यद्यन्यतरस्यांग्रहणेन लज्विकल्पेत, तेन पक्षे यथाप्राप्तमेव स्यादित्यकारान्तात्? सिध्मादेरिनिठनौ स्याताम्()। अत इमं दोषं परिहर्तुमाह--"अन्यतरस्यांग्रहणेन" इत्यादि। अनेकार्थत्वान्निपातानामन्यतरस्यामिह समुच्चते वत्र्तते। तथा च वार्तिककारेणोक्तम्()--"अन्यतरस्यामिति समुच्चयः" इति। मतुबिह स्वरितत्वात्? सन्निहित इति स एव समुच्चीयते, न तु यथाप्राप्तं प्रत्ययान्तरमित्येके। अन्ये त्वाहुः---"अन्यतरस्यांग्रहणं विकल्पार्थमेव। न चेनिठनावुभौ क्रियेते; तयोर्महाविभाषयैव सिद्धत्वात्()। तर्हि प्रत्ययान्तरं पक्षे विधीयते? तदपि न; यथाप्राप्तमापादयित्तुं सन्निहितप्रत्यासत्तेः मतुबेव। तदेवमन्यतरस्यांग्रहणे सति मतुबेव विकल्प्यत इत्यभिप्रायेणान्यतरस्यांग्रहणेन समुच्चीयत इत्युक्तम्()" इति। "न तु प्रत्ययो विकल्प्यते" इति। ननु च लचो भावाभावौ क्रियेते इत्यर्थः। "तस्मात्()" इत्यादि। यत एवमन्यतरस्यांग्रहणेन मतुप्? समुच्चीयते, न तु प्रत्ययो विकल्प्यते, तस्माद्येऽत्राकारान्ताः पठ()न्ते तेभ्य इनिठनौ न भवतः। "पा()ष्णश्रमन्योर्दीर्घश्च" इति। पा()ष्ण, धमनि इति शब्दाभ्यां लज्भवति, तयोश्च दीर्घः--पार्ष्णीलः, धमनीलः। "वातदन्तबलललाटानामूङ् च" इति। वातादीनां, तस्य च लच ऊङगगमः। वातूलः। दन्तूलः। बलूलः। ललाटूलः। "जटाघटाकलाः क्षेपे" गम्यमाने। जटालः, घटालः, कलालः। क्षेप इति किम्()? जटावान्()। "क्षुद्रजन्तूपतापाच्च" इति। क्षुद्रजन्तूपतापाच्च" इति। क्षुद्रजन्तुः=नकुलादिः। उपतापः=रोगः॥ "कामवति बलवति चार्थे" इति। मत्वन्तयोर्निर्देशेन कामबशब्दावर्शाअयकारान्तावुपात्ताविति दर्शयति। ननु च वत्सांसशब्दौ नैव कामबलयोर्वर्तेते, किं तर्हि? वयोविशेषे प्राण्यङ्गविशेषे च, तत्कथं ताभ्यां कामवान्? बलवांश्चोच्यते? इत्याह--"वृत्तिविषये" इत्यादि। कथमेतज्ज्ञायते? इत्याह--"न ह्यत्र" इत्यादि। वत्सशब्दस्य वाक्ये यो वयोविशेषलक्षणोऽर्थः प्रसिद्धः, अंसशब्दस्य च यः प्राण्यङ्गलक्षणविषयः स यस्मादत्र वृत्तौ न विद्यते न ज्ञायत इत्यर्थः। अथ वा--न विद्यत इति नास्तीत्यर्थः। अनेन वाक्ये यौ तयोरथा प्रसिद्धौ वयःप्राण्यङ्गविशेषात्मकौ, तयोर्वृत्तावभावो दर्शितः। इदानीं यौ तयोरभिमतावर्थौ तयोर्भावं दर्शयितुमाह--"वत्सलः" इत्यादि। "स्नेहवान्()" इति। कामवानित्यर्थः। तदेवं यस्माद्वत्सांसशब्दयोर्वाक्ये वयःप्राण्यङ्गलक्षणोऽर्थो न विद्यते, ततश्चवत्सलांसलशब्दाभ्यां यथोक्तः स्नेहवान्? बलवांश्चोच्यते, ततो ज्ञायते--वत्सांसशब्दौ वृत्तिविषये कामबलयोर्वत्र्तमानौ तद्वति प्रत्ययमुत्पादयत इति। अन्यतरस्यांग्रहणं सर्वत्र चात्र प्रकरणे मतुप्समुच्चयार्थे वत्र्तते। ततो मतुपा भवितव्यमिति यो मन्यते, तं प्रत्याह---"न चायम्()" इत्यादि। अनेनैव च हेतुना वाक्यमपि न भवतीति वेदितव्यम्()। व्काये हि नैवायमर्थः सम्भवति

बाल-मनोरमा

सिध्मादिभ्यश्च १८७९, ५।२।९६

सिध्मादिभ्यश्च। लज्वा स्यादिति। "मत्वर्थे" इति शेषः। अन्यतरस्यामिति। पूर्वसूत्रादन्यतरस्यामित्यनुवृत्तं न लचप्रत्ययविकल्पार्थकं, किन्तु मतुप्प्रत्ययसमुच्चयार्थकमेव, अन्यतरस्यामित्यस्याव्ययत्वेनाऽनेकार्थकत्वात्। ततश्च सिध्मादिभ्यो लच्, मतुप्च स्यादिति लभ्यते। नचान्यतरस्यामित्यस्याऽत्र लचप्रत्ययविकल्पार्थकत्वेऽपि तदभावे मतुप्सिद्ध इति वाच्यम्, "लजभावे मतुबेव भवति, नतु अत इनिठनौ" इत्येतदर्थं समुच्चयविधानात्। तदाह--तेनेति। सिध्मादिषु ये अकारान्तास्तेभ्य इनिठनौ नेत्यर्थः। एतत्सर्वं भाष्ये स्पष्टम्। सिध्म, गडु, मणि, विजय, [निष्पाव]पांसु, हनु, पा()ष्ण इत्यादयः सिध्मादिषु पठिताः। एवंच लज्वा स्यादिति विवरणवाक्ये वाशब्दश्चार्थे। इदमन्यतरस्याङ्ग्रहणमुत्तरसूत्रेषु सर्वत्र मत्वर्थीयविधिष्वनुवर्तते, नतु रूढशब्देषु। अतो न तेषु मतुप्समुच्चय इत्यास्तां तावत्। वातदन्तबलललाटानामूङ् चेति। सिघ्मादिगणसूत्रमिदम्। एभ्यो लच्, प्रकृतेरूङ् चादेशः। ङकारस्तु #आदेशत्वसूचनार्थः। अन्यथा प्रत्ययत्वशङ्का स्यात्। वातूलः। एवं दन्तूलः, बलूलः ललाटूलः।

तत्त्व-बोधिनी

सिध्मादिभ्यश्च १४४४, ५।२।९६

सिध्मादिभ्यश्च। सिध्म, गडु, मणि, विजय, निष्पाव, पांसु, हनु, पाष्ण्र्यादयः सिध्मादयः। समुच्चयार्थमिति। निपातानामनेकार्थत्वादिति भावः। न च इनिठनावप्यन्यतरस्याङ्ग्रहणेन समुच्चीयेतामिति शङ्क्यम्। तयोरप्रकृतत्वात्। मतुप्प्रत्ययस्तु समुच्चीयते। तस्य प्रकृतत्वात्। अस्ति चेह लिङ्गं "केशाद्वः"इत्यत्रान्यतरस्याङ्ग्रहणम्। तद्धि इनिठनोः प्राप्त्यर्थं क्रियते। प्रकृतस्याऽन्यतरस्याङ्ग्रहणस्य विकल्पार्थत्वे तदनुवृत्त्यैव सिद्धौ किं तेन ;()। क्रियमाणं तु पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चयार्थतां ज्ञापयत्येव। तथा च वार्तिकं---"लजन्यतरस्यामिति समुच्चयः"इति। अयं भावः---"प्राणिस्था"दिति सूत्रेण लचि विकल्पिते पक्षे मतुबिति चूडालश्चूडावानिति रूपद्वयं यद्यपि सिध्यति, तथापि सिध्मादिषु येऽदन्तास्तेषु इनिठनोः प्रवृत्त्या दोषः। समुच्चयार्थत्वे तु न दोष इति। एवं च "लज्वा स्या"दिति वृत्तौ वाशब्दः समुच्चये बोध्यः। "वा स्याद्विकल्पोपमयोरे वार्थेऽपि समुच्चये"इत्यमरः। वातदन्तेत्यादि। सिध्माद्यन्तर्गणसूत्रम्। ऊङ् चेति। ङित्त्वादन्तादेशः। ऊकारमात्रोक्तावन्तादेशत्वसिद्धावपि प्रत्ययत्वशङ्कानिवारणाय ङानुबन्धः कृतः। न च षष्ठ()न्ताद्विहितस्य प्रत्ययत्वं नेति शङ्क्यम्, "अहंशुभमोर्युस्", "गोपयसोर्य"दित्यादौ प्रत्ययत्वाभ्युपगमात्। वातूल इति। अन्तोदात्तमिदम्। प्राचा तु "बलादूतलः", "वाताच्चे"ति पठित्वा वातूल इत्युक्तं, तदुपेक्ष्यम्, प्रत्ययस्वरेण मध्योदात्तत्वप्रसङ्गात्। गणसूत्रबलेनाऽन्तोदात्तत्वमेवेष्यत इत्याहुः। "पा()ष्णधमन्योर्दीर्घश्च"। "क्षुद्रजन्तूपतापाच्चे"त्यपि गणे पठ()ते। पार्ष्णीलः। धमनीलः। क्षुद्रजन्तुः---यूकालः। मक्षिकालः। उपतापो रोगः। विपादिकालः।

---

सूत्रम्

काशिका-वृत्तिः

वत्सांसाभ्यां कामबले ५।२।९८

वत्सांसशब्दाभ्याम् लच् प्रत्ययो भवति यथासङ्ख्यं कामवति बलवति च अर्थे। वत्सलः। अंसलः। वृत्तिविषये वत्सांसशब्दौ स्वभावात् कामबलयोर् वर्तमानौ तद्वति प्रत्ययम् उत्पादयतः। न ह्यत्र वत्सार्थः अंसार्थो वा विद्यते। वत्सलः इति स्नेहवानुच्यते, वत्सलः स्वामी, वत्सलः पिता इति। अंसलः इति च उपचितमांसो बलवानुच्यते। न च अयम् अर्थो मतुपि सम्भवति इति नित्यं लजेव भवति। अन्यत्र अंसवती गौः, अंसवान् दुर्बलः।

बाल-मनोरमा

वत्साऽसाभ्या कामबले १८८०, ५।२।९७

वत्सासाभ्यां लच्स्यादिति। "मत्वर्थे" इति शेषः। कामबलशब्दौ तद्वति लाक्षणिकावित्यभिप्रेत्याह--कामवति बलवति चेति।

तत्त्व-बोधिनी

वत्साऽसाभ्यां कामबले १४४५, ५।२।९७

वत्सांसाभ्याम्। कामवतीति। कामबलशब्दौ सूत्रे अर्शाअद्यजन्ताविति भावः। वत्सल इति। स्नेहवानित्यर्थः। ननु वत्सांसशब्दौ वयोविशेषे प्राण्यङ्गविशेषे च रूढौ, न कामबलयोः, तत्कथं ताभ्यां लजन्ताभ्यां कामवान्()बलवांश्चेच्यत इति चेत्। अत्राहुः---वृत्तिविषये वत्सांसशब्दौ स्नेहबलयोर्वर्तते इति। अ()स्मस्तु प्रकरणे सर्तर् समुच्चीयमानोऽपि मतुबिह नेष्यते, मतु बन्तेनोक्तार्थस्याऽप्रतीतेः। किं त्वर्थान्तरमेव तेन प्रतीयते। वत्सवती गौः। अंसवान् दुर्लब इति।

---

सूत्रम्

काशिका-वृत्तिः

फेनादिलच् च ५।२।९९

फेनशब्दातिलच् प्रत्ययो भवति मत्वर्थे। चकारात् लच् च। अन्यतरस्याम् ग्रहणम् मतुप् समुच्चयार्थं सर्वत्र एव अनुवर्तते। हेनिलः, फेनलः, फेनवान्।

न्यासः

फेनादिलच्च। , ५।२।९८

बाल-मनोरमा

फेनादिलच्च १८८१, ५।२।९८

फेनादिलच्च। "मत्वर्थ" इति शेषः। चाल्लजिति। संनिहितत्वादिति भावः। नन्वेवं सति मतुब् नैव स्यादित्यत आह--अन्यतरस्यांग्रहणमिति। सिघ्मादिसूत्रे व्याख्यातमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

लोमादिपामादिपिच्छादिभ्यः शनैलचः ५।२।१००

लोमादिभ्यः पामादिभ्यः पिच्छादिभ्यश्च त्रिभ्यो गणेभ्यो यथासङ्ख्यं श न इलचित्येते प्रत्यया भवन्ति मत्वर्थे, मतुप् च। लोमादिभ्यः शो भवति लोमशः, लोमवान्। पामादिभ्यो नो भवति पामनः, पामवान्। पिछादिभः इलच् भवति पिच्छिलः, पिच्छवान्। उरसिलः, उरस्वान्। लोमन्। रोमन्। वल्गु। बभ्रौ। हरि। कपि। शुनि। तरु। लोमादिः। पामन्। वामन्। हेमन्। श्लेष्मन्। कद्रु। बलि। श्रेष्ठ। पलल। सामन्। अङ्गात् कल्याणे। शाकीपललीदद्र्वां ह्रस्वत्वम् च। विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः। लक्ष्म्या अच्च। पामादिः। पिच्छ। उरस्। घ्रुवका। क्षुवका। जटाघटाकलाः क्षेपे। वर्ण। उदक। पङ्क। प्रज्ञा। पिच्छादिः।

लघु-सिद्धान्त-कौमुदी

लोमादिपामादिपिच्छादिभ्यः शनेलचः ११९१, ५।२।९९

लोमादिभ्यः शः। लोमशः। लोमवान्। रोमशः। रोमवान्। पामादिभ्यो नः। पामनः। (ग। सू।) अङ्गात्कल्याणे। अङ्गना। (ग। सू।) लक्ष्म्या अच्च। लक्ष्मणः। पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्॥

न्यासः

लोमादिपामादिपिच्छादिभ्यः शनेलचः।, ५।२।९९

पामादिषु "अङ्गात्()" इति पठ()ते, तत्र कल्याणग्रहणमङ्गविशेषणम्()। कल्याणानि शोभनान्यङ्गान्यस्याः सन्तीत्यङ्गना। कल्याम इति किम्()? अङ्गवती। "शीकीपलालीदद्रवां ह्रस्वत्वञ्च" इति। शाक्यादीनाञ्च प्रत्ययो भवति ह्रस्वत्वञ्च---शाकिनः, पलालिनः दद्रुणः। महच्छाकं शाकी, महापलालं पलालौति केचित्()। नानाजातीयानां शाकानां समाहारः शाकी, पलालानां समाहारः पलालीति। "विष्वक्()" इत्यादि। विष्वक्शब्दान्न प्रत्ययो भवति, उत्तरपदलोपश्च। स चाकृतसन्धेः अकृतयणादेशस्य। विष्वञ्चतीति विषुशब्द उपपदेऽञ्चतेः "ऋत्विक्()" ३।२।५९ इत्यादिना क्विन्(), अनुनासिकलोपः, ततो विषु+अच्? इति स्थिते विष्वञ्चो यस्य सन्()तीति न प्रत्ययः, अकृतयणादेशस्योत्तरपदलोपः--विषुण इति भवति। विषुणशब्दोऽयं निपात्यते। नानार्थे वत्र्तते। "लक्ष्म्या अच्च" इति। लक्ष्माशब्दान्नप्रत्यो भवति, अकारश्चान्तादेशः लक्ष्मीरस्यास्तीति लक्ष्मणः। "जटा घट" इत्यादि। जटादिभ्यः क्षेपे गम्यमान इलचप्रत्ययः। जटिलः, घटिलः, कलिलः। क्षेप इति किम्()? जटावान्(), घटावान्(), कलावान्()॥

बाल-मनोरमा

लोमादिपामादिपिच्छादिभ्यः शनेलचः १८८२, ५।२।९९

लोमादि। श, न, इलच् एते त्रिभ्यो गणेभ्यो यथासङ्ख्यं स्युर्मत्वर्थे अङ्गात्कल्याणे इति। पामादिगणसूत्रम्। कल्याणं=सुन्दरं, तद्विशेषणकादङ्गशब्दान्मत्वर्थे नप्रत्यय इत्यर्थः। अङ्गनेति। कल्याणानि अङ्गानि अस्या इति विग्रहः। "लक्ष्म्याअच्चे"त्यपि पामादिगणसूत्रम्। लक्ष्मीशब्दान्मत्वर्थे नप्रत्ययः स्यात्प्रकृतेरकारोऽन्तादेशश्च। लक्ष्मण इति। लक्ष्मीरस्यास्तीति विग्रहः। नप्रत्यये प्रकृतेकारे अन्तादेशे णत्वम्।

वि()आगिति। इदमपि पामादिगणसूत्रमिति केचित्। भाष्ये तु नप्रकरणे इदं वार्तिकं पठितम्। "विषु" इत्यव्ययं सर्वत इत्यर्थे विषु अञ्चतीति विष्वङ्। सर्वतोगामीत्यर्थ इति धूर्तस्वामी। "विषु" इति तिर्यगर्थे इति भवस्वामी। पराङ्भुख इति भट्टभास्करः। विषु अञ्च् इत्यस्मात् अकृतसन्धेर्मत्वर्थे नप्रत्ययः स्यात्। उत्तरपदलोपश्चेत्यर्थः। विषुण इति। विष्वङ् अस्यास्तीति लौकिकविग्रहः। विषु अञ्च इत्यलौकिकविग्रहवाक्यम्। कृतसन्धेर्नप्रत्यये तु विष्वक्शब्दे उत्तरपदस्य लोपे "लोपो व्यो"रिति यलोपे विष्ण इति स्यादिति भावः। समर्थानामित्यस्यापवादोऽयम्।

तत्त्व-बोधिनी

लोमादिपामादिपिच्छादिभ्यः शनेलचः १४४७, ५।२।९९

लोमादि। इह "नन्दिग्रहिपचादिभ्यः"इतिवत् "लोमपामपिच्छादिभ्यः"इति सुपठम्। "अङ्ग कल्याणे"इति गणसूत्रमर्थतः पठति----अङ्गादिति।

शाकीपलालीदद्र्वा ह्रस्वत्वं च। शाकीपलालीदद्र्वा ह्रस्वत्वं च। चान्नप्रत्ययः। महच्छाकं शाकी। तद्वत्---शाकिनम्। महत्पलालं पलाली। तद्वत् पलालिनम्। "दरिद्रातेर्यालोपश्चे"त्युणादिसूत्रेण इकाराकारयोर्लोपश्चादूप्रत्ययः।

दर्द्रूस्त्वग्रोगविशेषश्च। तद्वान्---दद्रुणः।

विष्वगित्युत्तरपदलोपश्चाऽकृतसन्धेः। विष्वगिति। "समर्थाना"मित्यस्यापवादोऽयम्। अकृत सन्धेरकृतयणादेशस्याऽञ्चतेर्लोपः, चकारान्नप्रत्यय इत्यर्थः। यदि तु कृते यणादेशे उत्तरपदलोपः स्यात्तदा विलिलोपे सति "विष्ण"इति स्यात्। विषुण इति। विषु=नाना अञ्चन्तीति विष्वञ्चि, तान्यस्य सन्ति विषुणः=विषुवदाख्यः कालः। तस्य हि नानागतानि दिनानि सन्ति। दिनान्तराणां न्यूनाधिकभावस्य तन्मूलत्वात्। अयं भावः----विषुवति दिनानां समतायां जातायामग्रे न्यूनान्यधिकानि च दिनानि भवेयुरिति नानागतदिनवत्त्वं यद्यपि विषुवति नास्ति तथापि नानागतदिमूलङ्तदिनानां सत्त्वात्तथोच्यत इति। तथा नानागमनवत्त्वान्मृत्युर्वायुरव्यवस्थितचितश्च "विषुण"शब्देनोच्यते।

प्रज्ञाश्रद्धा। प्राज्ञो व्याकरणमिति। गुणभूतया क्रियया कर्मत्वेन संबन्धः। कृद्ग्रहणात्तद्धितप्रयोगे षष्ठी न, कृतपूर्वी कटमितिवत्। ननु प्रकर्षेण जानातीति प्रज्ञः, स एव प्रज्ञा इत्यणि कृते सिद्धमिष्टं, किमत्र प्रज्ञाग्रहणेनेत्याशङ्कां निराकुर्वन्नाह---प्राज्ञेति। स्त्रियां टाप्। "प्रज्ञादिभ्यश्चे"त्यणि तु "ङीप् स्यादिति भावः।

वृत्तेश्च। वृत्तेश्चेति। वार्तिकमिदम्। काशिकाकृता तु वृत्तिशब्दः सूत्रे प्रक्षिप्तः। विच्छिन्नस्य प्रतिविधानं---वृत्तिः।

---

सूत्रम्
काशिका-वृत्तिः
प्रज्ञाश्रद्धाऽर्चावृत्तिभ्यो णः ५।२।१०१

प्रज्ञा श्रद्धा अर्चा वृत्ति इत्येतेभ्यः णः प्रत्ययो भवति मतुबर्थे। मतुप् सर्वत्र समुच्चीयते। प्राज्ञः, प्रज्ञावान्। श्राद्धः, स्रद्धावान्। आर्चः, अर्चावान्। वार्त्तः, वृत्तिमान्।
न्यासः
प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः। , ५।२।१००

प्रज्ञाशब्दान्मतुपि पिच्छादिपाठादिलचि च प्राप्ते, इतरेभ्यस्तु मतुपि णो विधीयते॥
बाल-मनोरमा
प्रज्ञाश्रद्धाऽर्चाभ्यो णः १८८३, ५।२।१००

प्रज्ञाश्रद्धार्चाभ्योणः। प्रज्ञा, श्रद्धा, अर्चा एभ्यो मत्वर्थे णप्रत्ययः स्यादित्यर्थः। प्राज्ञो व्याकरणमिति। प्रज्ञानं प्रज्ञा। स्त्रियामित्यधिकारे प्रपूर्वकाज्ज्ञाधातोः "आतश्चोपसर्गे" इति भावे अङ्। प्रज्ञा अस्यास्तीति विग्रहः। उपसर्जनभूतामपि प्रज्ञानतन्निषेधात्। अत्र यद्वक्तव्यं तत्कर्तृकर्मणोः कृतीत्यत्र प्रपञ्चितम्। नच प्रजानातीति प्रज्ञः। "इगुपधे"ति कः। प्रज्ञशब्दात्स्वार्थे अणि प्राज्ञ इति सिध्यतीति शङ्क्यं, तथा सति स्त्रिया ङीप्प्रसङ्गात्। तदाह--प्राज्ञेति। श्राद्ध इति। श्रद्धा अस्यास्तीति विग्रहः। आर्च इति। अर्चा अस्यास्तीति विग्रहः।

वृत्तेश्चेति। वार्तिकमिदम्। "मत्वर्थे णप्रत्यय" इति शेषः। वार्त्त इति। वृत्तिरस्यास्तीति विग्रहः।

---

सूत्रम्
काशिका-वृत्तिः

तपःसहस्राभ्यां विनीनी ५।२।१०२

तपःसहस्रशब्दाभ्यां विनि इनि इत्येतौ प्रत्ययौ भवतः मत्वर्थे। प्रत्ययार्थयोस् तु यथासङ्ख्यं सर्वत्र एव अस्मिन् प्रकरणे निस्यते। तपो ऽस्य अस्मिन् वा विद्यते तपस्वी। सहस्री। असन्तत्वाददन्तत्वाच् च सिद्धे प्रत्यये पुनर् वचनम् अणा वक्ष्यमाणेन बाधा मा भूतिति। सहस्रात् तु ठनपि बाध्यते।

न्यासः

तपः सहरुआआभ्यां विनीनी। , ५।२।१०१

अत्र सूत्रे द्वे प्रकृती उपात्ते, प्रत्ययार्थावपि द्वावेव प्रकृतावनुवत्र्तेते। तथा च "वत्सांसाभ्यां कामबले" ५।२।९७ "सिकताशर्कराब्याञ्च" ५।२।१०३ इत्येवमादिष्वपि केषुचिद्योगेषु यथासंख्येन भवितव्यमिति यो मन्यते, तं प्रत्याह--"प्रत्ययार्थयोस्तु" इति। कस्मात्? पुनरिष्यमाणमपि न भवति? "वत्सांसाभ्यां कामबले" ५।२।९७ इत्यत्रांशशब्दस्य परनिपाताल्लक्षमव्यभिचारचिह्यात्()। अंसशब्दस्य हि "अजाद्यदन्तम्()" २।२।३३ इति पूर्वनिपाते बलशब्दस्यापि "लध्वक्षरं पूर्वं निपतति" (वा। १०८) इत्यस्मिन्? प्राप्ते योऽयं परनिपातः स लक्षणान्तरनिरपेक्षतां दर्शयन्निह मतुप्प्रकारणे यथासंख्यं लक्षणस्य व्यभिचारयति। तेन प्रत्ययर्थयोः सर्वत्र मतुप्प्रकरणे यथासंख्यं न भवति। प्रकरण इत्येतत्? कुतः? प्रकरणापेक्षत्वाल्लक्षणव्यभिचारचिह्नस्य। एतदपि कुतः? व्याख्यानात्()। द्वयोर्लक्षणव्यभिचारचिह्नयोरुपादानाद्वा योगापेक्षतायां त्वन्यतरस्यैवोपादानं कुर्यात्()। "असन्तत्वात्()" इति। तपःशब्दादसन्तत्वात्? "अस्मायामेषारुआजो विनिः" ५।२।१२० इत्येवमादिना विनिप्रत्यये सिद्धे सहरुआशब्दाच्चाकारान्तत्वात् "अकत इनिठनौ" ५।२।११४ इतीनिप्रत्यये सिद्धे, पुनरिवं विधानं वक्ष्यमाणेनाणा बाधा मा भूदित्येवमर्थम्()। "सहरुआात्तु" इत्यादि। "अत इनिठनौ" ५।२।११४ इति ठन्नपि प्राप्नोति, सोऽपि बाध्यते। एतन सहरुआशब्दात्? ठनो बाधानमिति पुनर्वचनमिति दर्शयति॥

बाल-मनोरमा

तपः सहरुआआभ्यां विनीनी १८८४, ५।२।१०१

तपः सहरुआआभ्यां। विनिश्च इनिश्चेति द्वन्द्वः। "मत्वर्थे" इति शेषः। यथासंख्यमन्वयः। विनिप्रत्यये इनि प्रत्यये च नकारादिकारौ उच्चारणार्थौ। ननु नकारयोरित्संज्ञा कुतो न स्यात्। नच प्रयोजनाऽभावः, नित्स्वरस्यैव फलत्वादित्यत आह--नकारपरित्राणार्थ इति। तथा च उपदेशे अन्त्यत्वाऽभावान्नेत्संज्ञेचि भावः। यद्यपि "अस्मायामेधे"त्यसन्तत्वादेव तपःशब्दाद्विन्सिद्धः, सहरुआशब्दात्तु "अत इनिठनौ" इत्येवेन्सिद्धस्ततथापि विशिष्य उत्तरसूत्रविहितेन अणा असन्ताऽदन्तलक्षणयोर्विनीन्योः सामान्यलिगितयोर्बाधो मा भूदिति विशिष्येह तपःसहरुआशब्दाभ्यां तयोर्विधानम्। सहरुआशब्दात्तु अदन्तलक्षणठनोऽपि बाधनार्थमिह इन्विधानम्। एतत्समाधानं क्वचिन्मूलपुस्तकेषु दृश्यते।

तत्त्व-बोधिनी

तपःसहरुआआभ्यां विनीनी १४४८, ५।२।१०१

तपस्वी। सहरुआईति। "असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा माभूदिति। सहरुआात्तु ठनोऽपि बादनार्थम्"। एतच्च समाधानं मूलपुस्तकेष्वपि क्वचिद्दृश्यते।

---

सूत्रम्

काशिका-वृत्तिः

अण् च ५।२।१०३

तपःसहस्राभ्याम् अण् च प्रत्ययो भवति। तापसः। साहस्रः। योगविभाग उत्तरार्थः, यथासङ्ख्यार्थश्च। अण्प्रकरणे ज्योत्स्नादिभ्य उप्सङ्ख्यानम्। ज्योत्स्ना विद्यते ऽस्मिन् पक्षे ज्यौत्स्नः पक्षः। तामिस्रः। कौण्डलः। कौतपः। वैसर्पः। वौपादिकः।

न्यासः

अण्? च। , ५।२।१०२

"अण्प्रकरणे" इत्यादि ज्योत्स्नादिराकृतिगणः। येभ्यो मतुबर्थेऽण्? दृश्यते ते ज्योत्स्नादयो द्रष्टव्याः। उपसंख्यानशब्दश्चायं प्रतिपादने वत्र्तते। तत्रेदं प्रतिपादनम्()--उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन ज्योत्स्नादिब्योऽपि भविष्यतीति। "कौण्डलः" इति। कुण्डले योर्ऽहति स एवमुच्यते। अन्यस्तु कुण्डलीत्येव भवति॥

बाल-मनोरमा

अण् च १८८५, ५।२।१०२

अण्च। "तपःसहरुआआभ्यां मत्वर्थे" इति शेषः। ननु "तपःसहरुआआभ्यां विनीन्यणः" इत्येकमेव सूत्रमस्तु। नच तपःसहरुआआभ्यां विनीन्योर्यथासंख्यार्थं पृथक्सूत्रकरणम्, अन्यथा त्रयोऽपि प्रत्यया द्वाभ्यां स्युरिति वाच्यं, "तपःसहरुआआभ्यामण्विनीनी" इति सूत्रकरणे भिन्नविभक्त्युच्चारणादेव अण उभयसम्बन्धस्य, विनीन्योर्यथासंख्य(त्व)स्य च सिद्धेरित्यत आह--योगविभाग उत्तरार्थ इति। उत्तरसूत्रे अण एवानुवृत्त्यर्थ इत्यर्थः।

ज्यौत्स्न इति। "शुक्लपक्ष" इति शेषः। ज्योत्स्ना=चन्द्रिका। सा अस्यास्तीति विग्रहः। तामिरुआ इति। "कृष्णपक्ष" इति शेषः। तमिरुआआः=तमोयुक्ता रात्रयः। ता अस्य सन्तीति विग्रहः। ज्योत्स्नादित्वादण्।

तत्त्व-बोधिनी

अण् च १४४९, ५।२।१०२

उत्तरार्थ इति। विनीन्योर्यथा सङ्ख्यप्रवृत्त्यर्थश्चेत्यपि बोध्यम्।

ज्योत्स्नादिभ्य उपसङ्ख्यानम्। ज्यौत्स्न इति। शुक्लपक्षः। तामिरुआ इथि। कृष्णपक्षो, नरकविशेषश्च। तमःसमूहस्तमिरुआम्। "ज्योत्स्नातमिरुओ"ति निपातनाम्नत्वर्थीयो रः। तत्र ह्लयवभूतानि तमांसि विद्यन्ते। तदस्मिन्नस्तीति विग्रहे रान्तादण्। स्त्रियां---तामरुआई। "तमिरुआआ तामसी रात्रिर्ज्यौत्स्नि चन्द्रिकयान्विता"इत्यमरोक्तौ तु तमिरुओत्येतद्रान्तं न त्वणन्तमिति न विरोधः। एवं च तमिरुआआ रात्रयो अस्मिन् सन्ति "तामिरुआः पक्ष"इत्यपि व्याख्यातुं शक्यम्।

---

सूत्रम्

काशिका-वृत्तिः

सिकताशर्कराभ्यां च ५।२।१०४

सिकताशर्कराभ्याम् अण् प्रत्ययो भवति मत्वर्थे। सैकतो घटः। शार्करं मधु। अदेशे इह उदाहरणम्। देशे तु लुबिलचौ भविष्यतः।

न्यासः

सिकताशरह्कराभ्याञ्च। , ५।२।१०३

"आदेश इहोदाहरणम्()" इति। देश उत्तरसूत्रेण लुबिलचोर्विधास्यमानत्वात्()॥

बाल-मनोरमा

सिकताशर्कगम्यां च १८८६, ५।२।१०३

सिकताशर्कराभ्यां च। "मत्वर्थे अ" णिति शेषः। सैकतो घट इति। सिकता अस्य सन्तीति विग्रहः। देशे लुपो वक्ष्यमाणत्वाद्घट इति विशेष्यम्। "अप्सुमनःसमासिकतावर्षाणां बहुत्वं चे"ति लिङ्गानुशासनसूत्रात्सिकताशब्दो नित्यं बहुवचनान्तः।

तत्त्व-बोधिनी

सिकताशर्कराभ्यां च १४५०, ५।२।१०३

सिकताशर्करा। देशविशेषस्य वक्ष्यमाणत्वादाह---घट इति।

---

सूत्रम्

काशिका-वृत्तिः

देशे लुबिलचौ च ५।२।१०५

सिकताशर्कराभ्यां देशे ऽभिधेये लुबिलचौ भवतः। चकारादण् च, मतुप् च। कस्य पुनरयं लुप्? मतुबादीनाम् अन्यतमस्य, विशेषाभावात्। सिकता अस्मिन् विद्यते सिकता देशः, सिकतिलः, सैकतः, सिकतावान्। एवं शर्करा देशः, शर्करिलः, शार्करः, शर्करावान्। देशे इति किम्? सैकतो घटः। शार्करं मधु।

न्यासः

देशे लुबिलचौ च। , ५।२।१०४

बाल-मनोरमा

देशे लुबिलचौ च १८८७, ५।२।१०४

देशे लुबिलचौ च। पूर्वसूत्रविहितस्या।त्रणो लुप्, इलच्च स्यादित्यर्थः। चादणिति। संनिहितत्वादिति भावः। तर्हि अपवादेन मुक्ते उत्सर्गस्याऽप्रवृत्तेर्मतुब्नैव स्यादित्यत आह--मतुप्चेति। समुच्चयार्थकन्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः। सिकता इति। सिकताशब्दान्नित्यं बहुवचनान्तादणो लुपि प्रातिपदिकावयवत्वात्सुपो लुकि युक्तवद्भावाद्विशेष्यस्य देशस्य एकत्वेऽपि बहुवचनमिति भावः। "हयवर"डिति सूत्रे "एका च सिकता तैलदाने असमर्थेति भाष्ये प्रयोगात्सिकताशब्द एकवचनान्तोऽप्यस्तीति लिङ्गानुशासने मूलकारो वक्ष्यति।

तत्त्व-बोधिनी

देशे लुबिलचौ च १४५१, ५।२।१०४

मतुप् चेति। अन्यतरस्यांग्रहणेन सर्वत्र मतुपः समुच्चयादिति भावः। सिकता इति। लुपि युक्तवद्भावः। अत्र सूत्रद्वस्योदाहरणान्यमरः संजग्राह---"स्त्री शर्करा शर्करिलः शार्करः शर्करावति। देश एवादिमावेवमुन्नेयाः

सिकतावती"ति।

---

सूत्रम्

काशिका-वृत्तिः

दन्त उन्नत उरच् ५।२।१०६

उन्नत इति प्रकृतिविशेषणम्। दन्तशब्दादुनतोपाधिकादुरच् प्रत्ययो भवति मवर्थे। दन्ता उन्नता अस्य सन्ति दन्तुरः उन्नत इति किम्? दन्तवान्।

लघु-सिद्धान्त-कौमुदी

दन्त उन्नत उरच् ११९२, ५।२।१०५

उन्नता दन्ताः सन्त्यस्य दन्तुरः॥

न्यासः

दन्त उन्नत उरच्?। , ५।२।१०५

अकारान्तत्वादिनिठनोः प्राप्तयोः "तुन्दादिषु" ५।२।११६ "स्वाङ्गात्()" इति पाठादिलचि दन्तशब्दादुरज्विधीयते॥

बाल-मनोरमा

दन्त उन्नत उरच् १८८८, ५।२।१०५

दन्त उन्नत उरच्। उन्नतविशेषणकाद्दन्तशब्दान्मत्वर्थेउरच्स्यादित्यर्थः। "उन्नत" इति प्रकृतिविशेषणम्। दन्त इति सप्तमी पञ्चम्यर्थे।

तत्त्व-बोधिनी

दन्त उन्नत उरच् १४५२, ५।२।१०५

दन्त उन्नत। उन्नत इति किम्()। दन्तवान्।

---

सूत्रम्

काशिका-वृत्तिः

ऊषसुषिमुष्कमधो रः ५।२।१०७

ऊष सुषि मष्क मधु इत्येतेभ्यो रः प्रत्ययो भवति मत्वर्थे। ऊषरं क्षेत्रम्। सुषिरं काष्ठम्। मुष्करः पशुः। मधुरो गुडः। इतिकरणो विवक्षार्थः सर्वत्राभिधेयनियमं करोति। इह न भवति, ऊषो ऽस्मिन् घटे विद्यते, मधु अस्मिन् घटे विद्यते इति। रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्। खमस्य अस्ति कण्ठविवरम् महत् खरः। मुखम् अस्य अस्ति इति सर्वस्मिन् वक्तव्ये मुखरः। कुञ्जावस्य स्तः कुञ्जरः। हस्तिहनू कुञ्जशब्देन उच्येते। नगपांसुपाण्डुभ्यश्च इति वक्तव्यम्। नगरम्। पांसुरम्। पाण्डुरम्। कच्छवा ह्रस्वत्वम् च। कच्चुरम्।

न्यासः

ऊषसुषिमुष्कमधो रः। , ५।२।१०६

यथासम्भवं मतुपीनिठनोश्च प्राप्तयोरूषादिभ्यो रो विधीयते। "मधुरः" इति। मधुशब्दोऽत्र रसविशेषे वत्र्तते। "रप्रकरणे"

इत्यादि। उपसंख्यानशब्दः प्रतिपादने वत्र्तते। तत्रेदं प्रतिपादनम्--"देशे लुबिलचौ च" ५।२।१०४ इत्यतश्चकारोऽत्र वत्र्तते, स चानुक्तसमुच्चयार्थः। तेन मुखप्रभृतिभ्योऽपि रो भवति। "नगपाण्डुपांशु" ["नगपांशुपाण्डुभ्यः काशिका] इत्यादि। नगपांशुप्रभृतिभ्यश्च रो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु तामेव चकारस्यानुवृत्तिमाश्रित्य कत्र्तव्यम्()॥

बाल-मनोरमा

ऊषसुषिमुष्कमधो रः , ५।२।१०६

ऊषसुषि। ऊष, सुषि, मुष्क, मधु-एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। सोत्रं पुंस्त्वम्। एभ्यो मत्वर्थे रप्रत्ययः स्यादित्यर्थः। ऊषर इति। ऊषः क्षारमृत्तिकाविशेषोऽस्यास्तीति विग्रहः। सुषिर इति। सुषिः=बिलम्,-अस्यास्तीति विग्रहः। मधुशब्दः क्षोद्रे द्रव्ये, माधुर्यात्मकरसविशेषे च गुणे वर्तते। तत्र रसविशेषवाचिन एवात्र ग्रहणमित्याह--मधुमाधुर्यमिति। तथा भाष्यादिति भावः। अन्यथा मधुद्रव्यवति घटेऽपि मधुरपदप्रयोगः स्यात्। खरो गर्दभः, धिष्णयो वा। मुखरः=शभ्दं कुर्वन्। कुञ्जरो-हल्ती। रूढशब्दा एते।

नगपांस्विति। वार्तिकमिदम्। "नगर"मिति जातिविशेषवाची। अत एव नगरीति ङीष्। पांसुर इति। पांसुरस्यास्तीति विग्रहः। पाण्डुर इति। पाण्डुः=शुक्लवर्णः, स अस्यास्तीति विग्रहः। कथं पाण्डरशब्द इत्यत आह--पाण्डरशब्दस्त्विति। "हरिणः पाण्डरः पाण्डु"रित्यमरः।

कच्छ्वा इति। वार्तिकमिदम्। कच्छूशब्दाप्रत्ययः, प्रकृतेह्र्यस्वश्च अन्तादेश इत्यर्थः। कच्छुरः--शुनां रोगविशेषः।

तत्त्व-बोधिनी

ऊषसुषिमुष्कमधो रः १४५३, ५।२।१०६

ऊषुसुषि। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। "स्यादूषः क्षार मृत्तिका"। "ऊषवानूषरः"इत्यमरः। सुषिस्छिद्रम्।

रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्। खर इति। महत्कण्ठविवरं खं, तद्वानित्यर्थः। गर्दभे रूढोऽयम्। मुखरो वाचाल इति हरदत्तः।

नगपांसुपाण्डुभ्यश्च। नगरमिति। नगा वृक्षाः, पर्वताश्च। जातिशब्दोऽयम्। तथा च "नगरी"त्यत्र ङीष् भवति। नगशब्दोऽयमश्मादिषु पठ()ते इति वुञ्छणादिसूत्रेणास्य सिद्धत्वादस्माद्रोऽयं न वक्तव्य इति हरदत्तः। पाण्डुर इति। पाण्डुः शुक्लो वर्णस्तद्वान्। अव्युत्पन्न एवेति। गुणमात्रे गुणिनि च वर्तते। "हरिणः पाण्डरः पाण्डुः"इत्यमरः। "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वती"ति च।

कच्छ्वा ह्रस्वत्वं च। कच्छ्वा इति। कच्छूस्त्वग्रोगविशेषः।

---

सूत्रम्

काशिका-वृत्तिः

द्युद्रुभ्यां मः ५।२।१०८

द्युद्रुशब्दाभ्यां मः प्रत्ययो भवति मत्वर्थे। द्युमः। द्रुमः। रूढिशब्दौ एतौ। रूढिषु मतुप् पुनर् न विकल्प्यते।

न्यासः

द्युद्रुभ्यां मः। , ५।२।१०७

द्यौश्च द्रुश्च द्युद्रू, ताभ्यां मतुपि प्राप्ते मो विधीयते। धौरस्यास्तीति द्युमः, "दिव उत्()" ६।१।१२७ इत्युत्त्वम्()। केचित्()--"द्युशब्द प्रकृत्यन्तरमह्नो नामधेयम्(), तत इदं प्रत्ययविधानम्()" इत्याहुः। "रूढिषु मतुप्? पुनर्न विकल्प्यते" इति। रूढिशब्दार्थस्य मतुपाऽनभिधानात्()॥

बाल-मनोरमा

द्युद्रुभ्यां मः १८८९, ५।२।१०७

द्युद्रुभ्यां मः। "दिव उ"दिति कृतोत्वस्य दिव्शब्दस्य "द्यु" इति निर्देशः। दिव्शब्दात् द्रुशब्दाच्च मप्रत्ययः स्यादित्यर्थः। द्युमः द्रुम इति। रूढशब्दावेतौ।

तत्त्व-बोधिनी

द्युद्रुभ्यां मः १४५४, ५।२।१०७

द्युद्रुभ्यां मः। द्युम इति। द्यौरस्यास्ति। "दिव उ"दित्युत्वम्। द्रुर्वृक्षः सोऽस्यास्ति जनकतयेति"द्रुमोऽपि वृक्ष एव। "पलाशी द्रुद्रुमाऽगमाः"इत्यमरः। इह सर्वत्र समुच्चीयमानोऽपि मतुब्राऊढशब्देषु नेष्यते, तदर्थस्य मतुपा अभिधातुमशक्यत्वात्। दृश्यत इति। "व"इत्यनुवर्तते।

अर्णसो लोपश्च। अर्णव इति। अर्तेरसुन्, नुट्च। अर्णः=जलं, तद्वान्।

---

सूत्रम्

काशिका-वृत्तिः

केशाद् वो ऽन्यतरस्याम् ५।२।१०९

केशशब्दाद् वः प्रत्ययो भवति मत्वर्थे अन्यतरस्याम्। ननु च प्रकृतम् अन्यतरस्यां ग्रहणम् अनुवर्तत एव? मतुप् समुचायार्थं तदित्युक्तम्। अनेन तु इनिठनौ प्रप्येते। ततश्चातूरूप्यं भवति, केशवः, केशी, केशिकः, केशवानिति। वप्रकरणे ऽन्येभ्यो ऽपि दृश्यते इति वक्तव्यम्। मणिवः। हिरण्यवः। कुररावः। कुमारावः। कुञ्जावः। राजीवम्। इष्टकावः। विम्बावः। अर्णसो लोपश्च। अर्णवः। छन्दसीवनिपौ च वक्तवयौ। रथीरभून् मुद्गलानी गविष्ठौ। सुमङ्गलीरियं वधूः। वनिप् मघवानमीमहे। वकारामतुपौ च। उद्वा च उद्वती च। मेधारथाभ्यामिरन्निरचौ वक्तव्यौ। मेधिरः। रथिरः।

लघु-सिद्धान्त-कौमुदी

केशाद्वोऽन्यतरस्याम् ११९३, ५।२।१०८

केशवः। केशी। केशिकः। केशवान्। (अन्येभ्योऽपि दृश्यते)। मणिवः। (अर्णसो लोपश्च)। अर्णवः॥

न्यासः

केशाद्वोऽन्यतरस्याम्?। , ५।२।१०८

इनिठनोः प्राप्तयोर्मतुपि चेदमारभ्यते। ननु च प्रकृतमन्यतरस्यांग्रहणमस्त्येव, तत्किमर्थं पुनरिवं क्रियते? इत्याह--"ननु च प्रकृतम्()" इत्यादि। "वप्रकरणे" इत्यादि। इतिकरणो हेतौ। केशशब्दाद्यथा वप्रत्ययः, एवमन्येभ्योऽपि तथा वप्रत्ययो दृश्यते, तस्माद्वक्तव्यं व्याख्येयम्()। तथा व्याख्यानं कत्र्तव्यं यथासावन्येभ्यो भवतीत्यर्थः। तत्रेदं व्याख्यानम्()--इहापि

स एव चकारोऽनुक्तसमुच्चयार्थोऽनुवत्र्तते, तेनान्येभ्योऽपि भवतीत्यर्थः।

बाल-मनोरमा

केशाद्वोऽन्यतरस्याम् १८९०, ५।२।१०८

केशाद्रोऽन्यतरस्याम्। "मत्वर्थे" इति शेषः। नन्विहाऽन्यतरस्याङ्ग्रहणं व्यर्थं, समर्थानामिति वाग्रहणेनैव वाक्यस्य सिद्धत्वात्। नच महाविभाषया अपवादेन मुक्ते औत्सर्गिकस्याऽप्रवृत्तेः "पारेमध्ये षष्ठ()आ वे"त्यत्रोक्तत्वादिह मतुपोऽप्रवृत्त्यापत्तौ तत्प्रवृत्त्यर्थमन्यतरस्याङ्ग्रहणमिति वाच्यं, "प्राणिस्था"दिति सूत्रादन्यतरस्याङ्ग्रहणस्य समुच्चयार्थकस्याऽनुवृत्त्यैव तत्सिद्धेरित्यत आह--प्रकृतेनेति। इनिठनोरिति। इनिठनोरपीत्यर्थः। अन्यथा "सिध्मादिभ्यश्चे"त्यत्रेव मतुबेव समुच्चीयेत, नत्विनिठनाविति भावः। तथाच वप्रत्यये इनिठनोर्मतुपि च चत्वारि रूपाणीत्याह--केशव इत्यादि।

अन्येभ्योऽपीति। वार्तिकमिदम्। केशादन्येभ्योऽपि मत्वर्थे वो दृश्यत इत्यर्थः। अर्णस इति। वार्तिकमिदम्। अर्णसो वप्रत्ययः प्रकृतेः सकारस्य लोपश्चेत्यर्थः।

अर्णव इति। अर्णः=जलम्। तत्प्रभूतमस्मिन्नस्तीति विग्रहः। इदं तु वार्तिकं भाष्ये न दृश्यते।

---

सूत्रम्

काशिका-वृत्तिः

गाण्ड्यजगात् संज्ञायाम् ५।२।११०

गाण्दी अजग इत्येताभ्यां वः प्रत्ययो भवति संज्ञायां विषये मत्वर्थे। गान्दीवं धनुः। अजगवम् धनुः। ह्रस्वादपि भवति गाण्डिवं धनुः इति। तत्र तुल्या हि संहिता दीर्घह्रस्वयोः। उभयथा च सूत्रं प्रणीतम्।

न्यासः

गाण्ड�जगात्संज्ञायाम्?।, ५।२।१०९

"ह्यस्वादपि भवति" इति। कथं पुनर्दीर्घस्य ग्रहणे ह्यस्वादपि भवतीति? "तत्र तुल्या हि" हत्यादि। यादृशी दीर्घस्येह संहिता ह्यस्वग्रहणेऽपि तादृश्येव दृश्यते। तस्मात्? ह्यस्वस्यापि ग्रहणमिह न विरुध्यत इति भावः। तत्र चैतत्? स्यात्()--यद्यपि तुल्या संहिता, तथापि कृतयणादेशोऽयमेक एव शब्दः, तस्य स्वरूप इत्यन्यतरस्य परिग्रहणेन भवितव्यम्()। तत्र यदि दीर्घत्य ग्रहणं ह्यस्वान्न प्राप्नोति, अथ ह्यस्वस्य ग्रहणं दीर्घन्न प्राप्नोतीत्यत आह--"उभयथा" इति। उभयप्रकारं ह्राचार्येण प्रणीतं सूत्रम्()। तस्मादुभयोरपि ग्रहणमित्यदोषः। अथ संज्ञाग्रहणं किम्(), यावतेतिकरणस्य चानुवृत्तेरसंज्ञायां न भविष्यति, यथा द्युद्रभ्यां मप्रत्ययः? एवं तर्हि तस्यैवेतिकरणस्य प्रपञ्चः संज्ञाग्रहणमिति द्रष्टव्यम्()॥

बाल-मनोरमा

गाण्ड�जगात्संज्ञायाम् १८९१, ५।२।१०९

गाण्ड()जगात्संज्ञायाम्। ह्यस्वदीर्घयोरिति। गाण्डिशब्दस्य गाण्डीशब्दस्य च कृतयणो गाण्ड() इति युगपन्निर्देशः--"ख्यत्वात्परस्ये"त्यत्र खितिशब्दयोः खीतीशब्दयोश्च यथेत्यर्थः। ततश्च गाण्डिशब्दाद्गाण्जीशब्दादजगशब्दाच्च मत्वर्थे वप्रत्ययः स्यादित्यर्थः। रूढशब्दत्वादिह न मतुप्समुच्चयः।

तत्त्व-बोधिनी

गाण्ड�जगात्संज्ञायाम् १४७५, ५।२।१०९

संज्ञायामिति। "तदस्यास्ती"ति सूत्रस्थेतिशब्दस्यैवायं प्रपञ्चः।यणेति। "ख्यत्या"दिति वत्कृतयणादेशस्यानुकरणं न भवति, लक्ष्ये यणोऽभावात्। किं तु सूत्रे सांहितिकोऽयं यणिति भावः। प्रयिज्यते चोभयथा---"अधिरोहति गाण्डिवं महेषौ"। "गाण्डीवी कनकशिलानिबं भुजाभ्या"मिति च।

---

सूत्रम्

काशिका-वृत्तिः

काण्डाऽण्डादीरन्नीरचौ ५।२।१११

काण्ड अण्ड इत्येताभ्यां यथासङ्ख्यम् ईरन्नीरचौ प्रत्ययौ भवतो मत्वर्थे। काण्दीरः। अण्दीरः।

न्यासः

काण्डाण्डादीरन्नीरचौ। , ५।२।११०

इनिठनोरपवादोऽयम्()॥

बाल-मनोरमा

काण्डाण्डादीरन्नीरचौ १८९२, ५।२।११०

काण्डाण्डादीरन्नीरचौ। काण्ड, आण्ड-आभ्यां ईरन्, ईरच् इति प्रत्ययौ मत्वर्थे स्त इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

रजःकृष्यासुतिपरिषदो वलच् ५।२।११२

रजःप्रभृतिभ्यः प्रातिपदिकेभ्यः वलच् प्रत्ययो भवति मत्वर्थे। रजस्वलास्त्री। कृषीवलः कुटुम्बी। आसुतीवलः शौण्दिकः। परिषद्वलो राजा। वले ६।३।११७ इति दीर्घत्वम्। इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते। तेन इह न भवति, रजो ऽस्मिन् ग्रामे विद्यते इति। वलच्प्रकरणे ऽन्येभ्यो ऽपि दृश्यत इति वक्तव्यम्। भ्रातृवलः। पुत्रवलः। उत्साहवलः।

न्यासः

रजः कृष्यासुतिपरिषदो वलच्?। , ५।२।१११

रजःशब्दात्? "अस्मायामेधारुआजो विनिः" ५।२।१२० इति विनौ प्राप्ते, इतरेभ्यस्तु मतुपि वलज्विधीयते। "वलच्प्रकरणे" इत्यादि। वप्रत्ययस्य व्याख्यानेनेदमपि व्याख्यातप्रायम्()। अत्र "वले" (६।३।११८) इति दीर्घत्वं कस्मान्न भवति? "वनगिर्योः संज्ञायाम्()" ६।३।११६ इत्यतः संज्ञाग्रहणानुवृत्तेः॥

बाल-मनोरमा

रजःकृष्यासुतिपरिषदो बलच् १८९३, ५।२।१११

रजःकृषि। रजस्, कृषि, आसुति, परिषद् एभ्यो मत्वर्थे वलच्स्यादित्यर्थः। आसुतीवल इति। "षुञ् अभिषवे"। आङ्पूर्वात्स्त्रियां क्तिन्। "वले" इति दीर्घः।

अन्येभ्योऽपीति। वार्तिकमिदम्। "रजः कृषी"त्यादिसूत्रोपात्तादन्येभ्योऽपि वलच्दृश्यत इत्यर्थः। भ्रातृवलः। "ढ्रलोपे"

इत्यतोऽण इत्यनुत्तेः "वले" इति न दीर्घः। पुत्रवल इत्यादौ "वले" इति दीर्घमाशङ्क्याह--वले इत्यत्रेति।

तत्त्व-बोधिनी

रजःकृष्यासुतिपरिषदो बलच् १४५६, ५।२।१११

आसुतीवल इति। "षुञ् अभिषवे"। क्तिन्। आसुतिरभिषवः। परिषद्वल इति। परितः सीदतीति परिषत्। "सत्सूद्विषे"त्यादिना क्विप्। "सदिरप्रते"रिति षत्वम्। पाठान्तरमिति। "शृ()द्द()भसोऽदिः"इत्यदिप्रत्ययो बाहुलकात् पृषेरपि भवति। तथा च भाष्यं-----"पार्षदकृतिरेषा तत्रभवतां" "सर्ववेदपार्षदं हीदं शास्त्र"मिति च। भट्टिस्त्वाह---"पर्षद्वलान्महाब्राहृऐराट नैकटिकाश्रमा"निति। "पर्षदेषा दसावरे"ति मनुः।

अन्येभ्योऽपि दृश्यते। भ्रातृवल इति। "वले" इत्यत्राऽण्ग्रहणानुवृत्तेर्नेह दीर्घः। पुत्रवलादौ तु स्यात्तत्राह---संज्ञायामित्यनुवृत्तेरिति। "वनगिर्यो "रिति सूत्रादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दन्तशिखात् संज्ञायाम् ५।२।११३

दन्तशिखाशब्दाभ्यां बलच् प्रत्ययो भवति मत्वर्थे संज्ञायां विषये। दन्तावलः सैन्यः। दन्तावलो गजः। शिखावलं नगरम्। शिखावला स्थूणा।

न्यासः

दन्तशिखात्संज्ञायाम्?। , ५।२।११२

दन्तशब्दादिनिठनोः प्राप्तयोर्वलज्विधीयते। शिखाशब्दादिनिप्रत्ययो वक्ष्यते "व्रीह्यादिभ्यश्च" ५।२।११५ इत्यत्र "शिखादिभ्य इनिर्वाच्यः" (म। भा। २।३९८) इति। अदेशार्थं शिखाग्रहणम्(), शिखावला स्थूणेत्यत्र यथा स्यात्()। देशे तु "शिखाया वलच्()" ४।२।८८ इत्यनेनैव चातुरर्थिक एव सिद्धः। यद्येवम्(), इदमेव वक्तव्यम्(), किं तेन? नैतदस्ति; तदपि हि वक्तव्यमेव--निर्वृत्तादिष्वर्थेषु यथा स्यात्()। अत्रापि संज्ञाग्रहणं तस्यै वार्थस्यानुवादार्थम्()। इतिकरणानुवृत्त्यैवाभिधेयनियमसिद्धेः॥

बाल-मनोरमा

दन्तशिखात्संज्ञायाम् १८९४, ५।२।११२

दन्तशिखात्संज्ञायाम्। समाहारद्वन्द्वात्पञ्चमी। दन्तशब्दाच्छिखाशब्दाच्च मत्वर्थे वलच्स्यात्संज्ञायामित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ज्योत्स्नातमिस्राशृङ्गिणौर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ५।२।११४

ज्योत्स्नादयः शब्दाः निपात्यन्ते मत्वर्थे संज्ञायां विषये। ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते ज्योत्स्ना चन्द्रप्रभा। तमस उपधाया इकारो रश्च तमिस्रा रात्रिः। स्त्रीत्वमतन्त्रम् अन्यत्र अपि दृश्यते तमिस्रं नभः। शृङ्गादिनच् प्रत्ययो निपात्यते शृङ्गिणः। ऊर्जो ऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ ऊर्जस्वी, ऊर्जस्वलः। गोर्मिनि प्रत्ययो

निपात्यते गोमी। मलशब्दादिनजीमसचौ प्रत्ययौ निपात्येते मलिनः, मलीमसः।

न्यासः

ज्योत्स्नातमिरुआआशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः। , ५।२।११३

"स्त्रीत्वमतन्त्रम्()" इति। अप्रधानम्(), अविवक्षितत्वात्? स्त्रीलिङ्गनिर्देशस्तु वैचित्र्यार्थः॥

बाल-मनोरमा

ज्योत्स्नातमिरुआआश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः १८९५, ५।२।११३

ज्योत्स्ना। ज्योतिष इति। ज्योत्स्नावयवाः=ज्योतीषि, तान्यस्यां सन्तीति विग्रहे ज्योतिष्शब्दान्नप्रत्ययः, उपधाभूतस्य इकारस्य लोपश्च निपात्यते। सति च इकारस्य लोपे इणः परत्वाऽभावात्षत्वनिवृत्तौ ज्योत्स्नेति रूपम्। "चन्द्रिका कौमुदी ज्योत्स्ने"त्यमरः। तमस इति। तमोऽस्यास्तीति विग्रहे तमस्मशब्दात् रक्प्रत्ययाः। उपधाभूतस्य मकारादकारस्य इत्वं च निपात्यत इत्यर्थः। "तमिरुआआ तामसी रात्रि"रित्यमरः। ननु "तमिरुओ"ति स्त्रीलिङ्गनिसर्देशात्तमिरुआं गृहमिति कथमित्यत आह--स्त्रीत्वमतन्त्रमिति। श्रृङ्गादिनजिति। "निपात्यते" इति शेषः। श्रृङ्गिण इति। श्रृङ्गमस्यास्तीति विग्रहः। इनचि णत्वम्। ऊर्जसो वलजिति। "निपात्यते" इति शेषः। ऊर्जसित्यसुन्नन्तं प्रातिपदिकम्। ननु "अस्मायामेधे"ति लिनिना सिद्धेरूर्जस्विन्निति भूदित्येतदर्थं विनो निपातनमित्यर्थः। ऊर्ज इति। ऊर्जशब्दाद्वलचि प्रकृतेरसुगागम इति वृत्तिग्रन्थोऽनुपपन्न इत्यर्थः। कुत इत्यत आह--ऊर्जस्वतीरितिवदिति। ऊर्जस्वतीरित्यत्र बलप्रत्ययाऽभावेन तत्सन्नियोगशिष्टस्य असुगागमस्याऽप्रसक्तेस्तत्र ऊर्जसित्यसुन्नन्तं प्रातिपदिकमवयश्यमभ्युपेयम्। तेनैव ऊर्जस्विन्नूर्जस्वलयोर्विनिवलज्मात्रनिपातनोपपत्तेरित्यर्थः। ईमसच्चेति। मलशब्दान्निपात्यत इति शेषः।

तत्त्व-बोधिनी

ज्योत्स्नातमिरुआआश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः १४५७, ५।२।११३

ज्योत्स्ना=चन्द्रप्रभा। तत्रावयवीभूतं ज्योतिरस्तीति मत्वर्थीयोपपत्तिः। एतेन तमःसमूहे तमिरुआआशब्दो व्याख्यातः। निघन्टुषु तमःपर्यायस्तमिरुआशब्दः पठितः। तत्र समूहसमूहिनोरभेदोपचार इति हरदत्तः। स्त्रीत्वमतन्त्रमिति। व्याख्यानमत्र शरणम्। "ऊर्जस्विन्गोमिन्नि"त्यत्र नान्तत्वाभिव्यक्तये नलोपो न कृतः।

---

सूत्रम्

काशिका-वृत्तिः

अत इनिठनौ ५।२।११५

अकारान्तात् प्रातिपदिकातिनिठनौ प्रत्ययौ भवतः। दण्डी, दण्डिकः। छ्न्त्री, च्नत्रिकः। अन्यतरस्याम् इत्यधिकारान् मतुबपि भवति। दण्डवान्। छत्रवान्। तपरकरणं किम्? श्रद्धावान्। एकाक्षरात् कृतो जातेः सप्तम्यां च न तौ स्मृतौ। एकाक्षरात् तावत् स्ववान्। खवान्। कृतः कारकवान्। जातेः व्याघ्रवान्। सिंहवान्। सप्तम्याम् दन्डा अस्यां सन्ति दण्डवती शाला इति। इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते इत्युक्तम्, तेन क्वचिद् भवत्यपि, कार्यी, हार्यी, तण्डुली, तण्दुलिकः इति।

लघु-सिद्धान्त-कौमुदी

अत इनिठनौ ११९४, ५।२।११४

दण्डी। दण्डिकः॥

न्यासः

अत इनिठनौ। , ५।२।११४

अत इत्यकारस्तपरो गृह्यते। अत एवाह--"अकारान्तात्()" इत्यादि। अथाच्छब्दस्य स्वरूपग्रहणं कस्मान्न विज्ञायते--अच्छब्दात्? प्रातिपदिकादिति? अदित्ययुक्तं स्वरूपग्रहणं भवितुम्(); स्वरूपग्रहणे हि रसादिभ्यो मतुपो विधानमनर्थकं स्यात्()। स हीनिठनोर्बाधनार्थं विधीयते। न चेह स्वरूपग्रहणे तेभ्यस्तौ प्रत्ययौ प्राप्नुत इति किं तद्विधानार्थेन मतुपो विधानेन! "तपरकरणं किम्()? श्रद्धावान्()" (इति)। ननु च व्रीह्यादिषु मालादय आकारान्ताः पठ()न्ते, ते च नियमार्था भविष्यन्ति--एतेब्य एवाकारान्तेभ्य इति? नैतदस्ति; तुल्यजातीयस्यैवं नियमः स्यात्(), डाप्चाबन्ताभ्यां स्यातामेवेतीनिठनौ। तस्मादकारस्तपरः कत्र्तव्यः। "कार्यी, इति। कृत इनिः। "तण्डुलिकः" इति। जातेरिनिठनौ॥

बाल-मनोरमा

अत इनिठनौ १८९६, ५।२।११४

अत इनिठनौ। अदन्तान्मत्वर्थे इनि ठन् एतौ स्त इत्यर्थः। समुच्चयार्थकान्यतरस्याङ्ग्रहणानुवृत्तेर्मतुलपि भवति। एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ" इति भाष्यम्। एकाक्षरात्-स्बवान्, कृतः-कारकवान्, जातेः-वृक्षकवान्, सप्तम्यां--दण्जा अस्यां शालायां सन्ति दण्डवती। इदं प्रायिकम्। तेन कार्यी कार्यिकः, तण्डुली तण्डुलिक इत्यादि सिद्धमिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

अत इनिठनौ १४५८, ५।२।११४

अत इनिठनौ। तपरकरणं किम्()। खट्वावान्। "एकाक्षरात्कृतोजातेः सप्तम्यां च न तौ स्मृतौ"। एकाक्षरात्---स्ववान्। कृतः---कारकवान्। जातेः ----व्याघ्रवान्, सिंहवान्। सप्तम्यां--- दण्ड अस्यां सन्ति दण्डवती शाला। "तदस्यास्ती"ति सूत्रस्थेतिकरणो विषयनियमार्थः सर्वत्रापि संबध्यत इति। क्वचित्कृतोऽपि भवति---कार्यी। कार्यिकः। क्वचित्तु जातेरपि---तण्डुली। तण्डुलिकः। एतच्च काशिकादौ स्पष्टम्ष

---

सूत्रम्

काशिका-वृत्तिः

व्रीह्यादिभ्यश् च ५।२।११६

व्रीह्यादिभ्यः प्रातिपदिकेभ्यः इनिठनौ प्रत्ययौ भवतो मत्वर्थे। मतुब् भवत्येव। व्रीही, व्रीहिकः, व्रीहिमान्। मायी, मायिकः, मायावान्। न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयम् इष्यते। किं तर्हि? शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु। परिशिष्टेभ्य उभयम्। शिखा मेखला संज्ञा बलाका माला वीणा वडवा अष्टका पताका कर्मन् चर्मन् हंसा इत्येतेभ्य इनिरेव इष्यते। यवखद कुमारी नौ इत्येतेभ्य इकन्नेव इष्यते। परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः। व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते? एवं तर्हि तुन्दादिसु व्रीहिग्रहणम् अर्थग्रहणम् विज्ञायते। शालयो ऽस्य सन्ति शालिनः, शाली, शालिकः, शालिमानिति। व्रीहिशिखादयः पूर्वं पठिताः। यवखद। कुमारी। नौ। शीर्षान् नञः अशीर्षी, अशीर्षिकः।

लघु-सिद्धान्त-कौमुदी

व्रीह्यादिभ्यश्च ११९५, ५।२।११५

व्रीही। व्रीहिकः॥

न्यासः

व्रीह्मादिभ्यश्च। , ५।२।११५

"शिखादिभ्यः" इत्यादि। उभयत्रादिशब्दः प्रकारे। शिष्टप्रयोगे येभ्य इनिरेव दृश्यते, ते शिखादयो द्रष्टव्याः, ते हि तेभ्यष्ठनं विहितवन्तः। एष तु विषयविभाग इतिकरणानुवृत्तेरेव गृह्यते। "वाच्य" इति। अस्य तु व्याख्येय इत्यर्थः। "यवखदादिषु" इति विषयसप्तमी। "एवं तर्हि" इत्यादि। तुन्दादिषु व्रीहिशब्दस्य स्वरूपग्रहणे सतीह तस्य ग्रहणमनर्थकं ज्ञायत इति सामर्थ्यात्? तत्र व्रीहिग्रहणेनार्थग्रहणं विज्ञायते। अर्थग्रहणे सति यदिष्टं सिध्यति तद्दर्शयितुमाह--"शालयोऽस्य सन्ति शालिकः" इत्यादि। "शीर्षान्नञः" इति। नञ उत्तरलस्य शीर्षन्नित्येतस्य प्रत्ययो भवति। निपातनाच्छिरसः शीर्षभावः--- अशीर्षी, अशीर्षिकः। अन्ये तु शीर्षन्निति शब्दान्तरं पठन्ति। तस्य तु पाठो भाषायामपि यथा स्यादित्येवमर्थः। अन्यथा "शीर्षंश्छन्दसि" (६।१।६०) इति विधानात्? भाषायाम्? अशीर्षिकः, अशीर्षवानिति न स्यात्()॥

बाल-मनोरमा

व्रीह्मादिभ्यश्च १८९७, ५।२।११५

व्रीह्मादिभ्यश्च। "मत्वर्थे इनिठनौ" इति शेषः।

शिखामालेत्यादि। वार्तिकमिदम्। "शिखा, माला, संज्ञा, वीणा, बडवा, बलाका, पताका, वर्मन्, शर्मन् एभ्य इनिरेव, नतु ठनित्यर्थः। यवखलेति। यवखल, नौ, कुमारी एभ्यष्ठनेव, न त्विनिरित्यर्थः। परिशिष्टेभ्यस्तु व्रीह्मादिगणपठितेभ्य उभावित्यर्थसिद्धम्। इदं वृत्तौ स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

तुन्दादिभ्य इलच् च ५।२।११७

तुन्दादिभ्यः प्रातिपदिकेभ्य इलच् प्रत्ययो भवति मत्वर्थे। चकारादिनिठनौ मतुप् च। तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान्। उदरिलः, उदरी, उदरिकः, उदरवान्। तुन्द। उदर। पिचण्ड। घट। यव। व्रीहि। स्वाङ्गाद् विवृद्धौ च। तुन्दादिः।

न्यासः

तुन्दादिभ्य इलच्च। , ५।२।११६

यथासम्भवं मतुबादिषु प्राप्तेष्विदमारभ्यते। "चकारादिनिठनौ मतुप्च" इति। एतेन प्रत्ययचतुष्टयं तुन्दादिभ्यस्त्विनिठनावपि। "स्वाङ्गाद्विवृद्धौ" इति। स्वाङ्गद्विवृद्धौ वत्र्तमानात्? प्रत्ययो भवति। वृद्धौ महान्तौ कर्णावस्य स्तः--कर्णिलः, कर्णिकः, कर्णी, कर्णवान्()॥

बाल-मनोरमा

तुन्दादिभ्य इलच्च १८९८, ५।२।११६

तुन्दादिभ्य इलच्च। मतुप्चेति। समुच्चयार्थकाऽन्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः। उदरादयश्चत्वारस्तुन्दादिगणपठिताः। ()आआङ्गाद्विवृद्धाविति। गणसूत्रमिदम्। वृद्धविषयात्वात्स्वाङ्गादिलच्, इनिठनौ

मतुप्चेत्यर्थः। कर्णिल इति। वृद्धौ कर्णौ यस्येति विग्रहः।

तत्त्व-बोधिनी

तुन्दादिभ्य इलच्च १४५९, ५।२।११६

तुन्दादिभ्य इलच्च। अन्यतरस्यामित्यनुवर्तनादाह---मतुप्()चेति। अत्र "स्वाङ्गाद्विवृद्धौ"इति पठ()ते। विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः। विवृद्धौ कर्णावस्य ---कर्णिलः कर्णी कर्णिकः कर्णवान्।

---

सूत्रम्

काशिका-वृत्तिः

एकगोपूर्वाट् ठञ् नित्यम् ५।२।११८

एकपूर्वाद् गोपूर्वाच् च प्रातिपदिकान् नित्यं ठञ् प्रत्ययो भवति मत्वर्थे। एकशतम् अस्य अस्ति इति ऐकशतिकः। ऐकसहस्रिकः। गोपूर्वात् च गौशतिकः। गौसहस्रिकः। अत इत्येव एकविंशतिरस्य अस्ति इति न भवति। कथम् ऐकगविकः? समासान्ते कृते भविष्यति। कथं गौशकटिकः? शकटीशब्देन समानार्थः शकटशब्दो ऽस्ति, ततो भविष्यति। अवश्यं च अतः इत्यनुवर्त्यम्, द्वन्द्वोपतापगर्ह्यातित्येवम् आद्यर्थम्। नित्यग्रहणं मतुपो बाधनार्थम्। कथम् एकद्रव्यवत्त्वातिति? नैवायं साधुः। एकेन वा द्रव्यवत्त्वादिति समर्थनीयम्।

न्यासः

एकगोपूर्वाट्ठञ्? नित्यम्?। , ५।२।११७

मतुबादिषु प्राप्तेषु ठञ्विधीयते। स च समानाधिकरणतत्पुरुषादेकपूर्वाद्भवति, न तु सर्वत एकपूर्वात्()। एतच्चेतिकरणातुवृत्तेर्लभ्यते। एकञ्च तच्छतं चैकशतम्(), तदस्यास्तीति ऐकशतिकः। षष्ठीतत्पुरुषे--एकशतवान्()। "कथम्()" इत्यादि। यदि "अतः" ५।२।११४ इत्येतदनुवत्र्तते, गोशकटीशब्दान्न सिध्यति, तस्यानकारान्तत्वादिति भावः। "ततो भविष्यति" इति। तदन्ताद्भविष्यतीत्यभिप्रायः। एषोऽर्थः--एकगोपूर्वाददन्तात्()। प्रातिपदिकाट्ठञ्? विधीयत इति सामथ्र्याल्लभ्यते। अथ वा--ततो हेतोर्भविष्यतीत्यदोषः। "अवश्यं च" इत्यादिः असत्यां ह्रत इत्यनुवृत्तौ द्वन्द्वोपतापगह्र्यादिषु (५।२।१२८; ५।२।११५) योगेषु चित्रकललाटिकादिशब्देभ्योऽपि प्रत्ययः स्यात्()। "नित्यग्रहणम्()" इत्यादि। असति हि नित्यगरहणेऽन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रानुवत्र्तत इति मतुबति स्यात्()। तस्मादबाधनार्थं नित्यग्रहणम्()। "कथमेकद्रव्यवत्त्वात्()" इति। यदि नित्यग्रहणं मतुब्बाधनार्थम्(), एवम्(), न ह्रेक द्रव्यवत्त्वादित्यत्रैकपूर्वाद्द्रव्यशब्दान्मतुप्? सिध्यतीति मन्यते। "एकेन" इत्यादि। एकशब्दस्य द्रव्यवत्त्वादित्यनेन "सुप्सुपा" २।१।४ इति समासं कृत्वा साधुत्वमस्य प्रतिपादनीयमित्यर्थः॥

बाल-मनोरमा

एकगोपूर्वाट्ठञ् नित्यम् १८९९, ५।२।११७

एकगोपूर्वाट्ठञ्नित्यम्। एकपूर्वाद्गोपूर्वाच्च नित्यं ठञ्स्यादित्यर्थः। यद्यपि नित्यग्रहणाऽभावेऽपि ठञा इनिठनोर्निर्वृत्तिः सिध्यति, तथापि समुच्चयार्थकाऽन्यतरस्याङ्ग्रहणानुत्त्या मतुप्समुच्चीयेत, तन्निवत्त्यर्थं नित्यग्रहणम्। ऐकशतिक इति। "पूर्वकाल" इति समासः। "सङ्ख्यायाः संवत्सर" इत्युत्तरपदवृद्धिस्तु न, तत्र प्रतिपदोक्ततद्धितार्थसमासस्यैव ग्रहणात्।

तत्त्व-बोधिनी

एकगोपूर्वाट्ठञ् नित्यम् १४६०, ५।२।११७

एकगोपूर्वात्। ऐकशतिक इति। एकं च तच्छतं चेति "पूर्वकाले"त्यादिना कर्मधारयः। षष्ठीतत्पुरुषाद्बहुव्रीहेद्र्वन्द्वाच्च न भवति, अनभिधानादिति हरदत्तादयः। "अत"इत्येव। नेह---एकविंशतिरस्यास्तीति। नित्यग्रहणं मतुपो बाधनार्थम्। अन्यता ठञा इनिठनोर्बाधे कृतेऽप्यन्यतरस्याङ्ग्रहणानुवृत्त्या मतुप् स्यादेवेत्याहुः। कथं "एकद्रव्यवानिति()। असाधुरेवायम्। एकेन द्रव्यवानिति वा विग्रहीतव्यम्। कथमेकदण्डीति()। "एकदेशिनैकाधिकरणे"इति निर्देशो ज्ञापयति----"इनरपि क्वचिद्भवती"ति।

---

सूत्रम्

काशिका-वृत्तिः

शतसहस्रान्ताच् च निष्कात् ५।२।११९

शतान्तात् सहस्रान्तात् च प्रातिपदिकात् ठञ् प्रत्ययो भवति मत्वर्थे तौ चेत् शतसहस्रशब्दौ निष्कात् परौ भवतः। निष्कशतम् अस्य अस्ति नैष्कशतिकः। नैष्कसहस्रिकः। सुवर्णनिष्कशतम् अस्य अस्ति इति अनभिधानान् न भवति।

न्यासः

शतसहरुआआन्ताच्च निष्कात्?। , ५।२।११८

बाल-मनोरमा

शतसहरुआआन्ताच्च निष्कात् १९००, ५।२।११८

शतसहरुआ। निष्कात्पराविति। असामर्थ्येऽपि सौत्रत्वात्समास इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

रूपादाहतप्रशंसयोर् यप् ५।२।१२०

आहतप्रशंसे प्रकृत्युपाधी। आहतप्रशंसाविशिष्टार्थे वर्तमानाद् रूपशब्दात् यप् प्रत्ययो भवति मत्वर्थे। आहतं रूपमस्य रूप्यो दीनारः। रूप्यः केदारः। रूप्यं कार्षापणम्। प्रशस्तं रूपम् अस्य अस्ति रूप्यः पुरुसः। निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतम्नित्युच्यते। आहतप्रशंसयोः इति किम्? रूपवान्। यप्प्रकरणे ऽन्येभ्यो ऽपि दृश्यत इति वक्तव्यम्। हिम्याः पर्वताः। गुण्याः ब्राह्मणाः।

बाल-मनोरमा

रूपादाहतप्रशंसयोर्यप् १९०१, ५।२।११९

रूपादाहत। आहतेति भावे क्तः। आहतविशेषणकात्प्रशंसाविशेषणकाच्च रूपशब्दान्मत्वर्थे यप्स्यादित्यर्थः। आहतं रूपमिति। आहतेन निष्पन्नं स्वरूपं यस्येति विग्रहे रूपशब्द इत्यर्थः। रूप्यः कार्षापण इति। परिमाणविशिष्टो रजतसुवर्णादिर्मुद्रिकाविशेषयुक्तः कार्षापण इत्युच्यते। तत्स्वरूपं च स्वर्णकारकृता हननिष्पाद्यमिति बोध्यम्। रूप्यो गौरिति। प्रशस्तरूपसम्पन्न इत्यर्थः। हिम्याः पर्वता इति। भूम्नि यप्। बहुलं हिममेष्वस्तीति विग्रहः। गुण्या ब्राआह्णा इति। प्रशंसायां यप्। प्रशस्तगुणसम्पन्ना इत्यर्थः।

अन्येभ्योऽपीति। वार्तिकमिदम्। रूपशब्दादन्येभ्योऽपि यप्दृश्यत इत्यर्थः। हिम्याः पर्वता इति। भूम्नि यप्। बहुलं हिममेष्वस्तीति विग्रहः। गुण्या ब्राआह्मणा इति। प्रशंसायां यप्। प्रशस्तगुणसम्पन्ना इत्यर्थः।

तत्त्व-बोधिनी

रूपादाहतप्रशंसयोर्यप् १४६१, ५।२।११९

रूपादाहत। आहतप्रशंसाविशिष्टेऽर्थे वर्तमानाद्रूपशब्दान्मत्वर्थे यप् स्यात्। आहतमिति। आहनमाहतं=ताडनमित्यर्थः। ततो निष्पन्नं यत्कार्षापणादिरूपं तदपि कार्ये कारणोपचारादाहतमित्युच्यते इत्याहतरूपयोः सामानाधिकरण्यमुपपद्यते।

अन्येभ्योऽपि दृश्यते। हिम्या इत। भूम्नि यप्। पर्वता इति। हिमवान्, तत्पर्यन्तवर्तिनश्च। गुण्या इति।दृसिग्रहणादिनिरपि। तथा च माघः---"गुण्यगुण्य इति न व्यजीगणत्"। गुणी--अगुण्य इति पदच्छेदः।

---

सूत्रम्

काशिका-वृत्तिः

अस्मायामेधास्रजो विनिः ५।२।१२१

असन्तात् प्रातिपदिकात्, माया मेधा स्रजित्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे। मतुप् सर्वत्र समुच्चीयते एव। असन्तात् तावत् यशस्वी, पयस्वी। मायावी। मेधावी। स्रग्वी। मायाशब्दाद् व्रीह्यादिषु पाठातिनिठनौ अपि भवतः। मायी, मायिकः।

लघु-सिद्धान्त-कौमुदी

अस्मायामेधास्रजो विनिः ११९६, ५।२।१२०

यशस्वी। यशस्वान्। मायावी। मेधावी। स्रग्वी॥

न्यासः

रूपादाहतप्रशंसयोर्यप्?। , ५।२।१२०

"तदाहतमुच्यते" इति। आहतम्()ाहननम्(), ताडनमित्यर्थः। अतो निष्पन्नं पुरुषादिरूपम्(), तदपि कार्यै कारणोपचारादाहतमित्युच्यते। "यप्प्रकारणे" इति। यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यमिति। अनेनास्य तु तुल्यत्वात्? तद्वदेव व्याख्यानं कत्र्तव्यम्()। चकारस्त्विह "शतसहरुआआन्ताच्च निष्कात्()" ५।२।११८ इत्यतोऽनुवत्र्तते॥

न्यासः

अस्मायामेधारुआजो विनिः। , ५।२।१२०

"यशस्वी"। "तपस्वी"। "पयस्वी"। "तसौ मत्वर्थे" १।४।१९ इति भत्वम्(), अतो भत्वाज्जशत्वं न भवति। जश्त्वेन सकारस्य दकारः प्राप्नोति, स न भवति॥

बाल-मनोरमा

अस्यमायामेधारुआजो विनिः १९०२, ५।२।१२०

अस्मायामेधा। "अ"सित्यनेन असन्तं विवक्षितम्। असन्त, माया, मेधा, रुआज् एभ्यो विनि प्रत्ययः स्यादित्यर्थः।

प्रत्यये नकारादिकार उच्चारणार्थः। यशस्वीति। "तसौ मत्वर्थे" इति भत्वान्न रुत्वमिति भावः। यशस्वानिति। "एकगोपूर्वा"दिति सूत्रे नित्यग्रहणेन निवृत्तमपि समुच्चयार्थमन्यतरस्याङ्ग्रहणमिहमण्डूकप्लुत्या अनुवर्तते, "तसौ मत्वर्थे" इति सूत्रे यशस्वानिति भाष्योदाहरणादिति भावः। रुआग्वीत्यत्र "व्रश्चे"ति षत्वमाशङ्क्याह--क्वन्नन्तत्वादिति।

आमयस्येति। आमशब्दान्मत्वर्थे विनिः प्रकृतेर्दीर्घश्चेत्यर्थः।

श्रृङ्गवृन्दाभ्यामिति।

फलबर्हाभ्यामिति।

ह्मदयाच्चालुरिति। वार्तिकत्रयमिदम्। मतुप्चेति। "वक्तव्य" इति शेषः, भाष्ये तथोक्तत्वात्। चुटू इति चकारस्येत्यसंज्ञा अन्यतरस्यांग्रहणाच्चालोपभावे इनिठनौ। समुच्चयार्थकान्यतरस्याङ्ग्रहणानुवृत्तेर्मतुबपि। तथा चाऽत्र चत्वारः प्रत्ययाः। तदाह--ह्मदयालुरित्यादि।

"शीतोष्णतृप्रेम्यस्तन्न सहते" इति वार्तिकमर्थतः सङ्गृहणाति -- शीतेति। शीत, उष्ण, तृप्र--एभ्यो द्वितीयान्तेभ्यो न सहते इत्यर्थे चालुर्वक्तव्य इत्यर्थः। तृप्रः पुरोडाश इति। मन्त्रभाष्ये तथोक्तत्वादिति भावः।

हिमोच्चेलुरिति। वार्तिकमिदम्। हिमशब्दाद्द्वितीयान्तान्न सहत इत्यर्थे चेलुः स्यादित्यर्थः। चकार इत्।

बलादूल इति। "तन्न सहते इत्यर्थे वक्तव्य" इति शेषः। वातात्समूहे चेति। षष्ठ()न्ताद्वातशब्दात्समूहेऽर्थे, द्वितीयान्तान्न सहते इत्यर्थे च ऊलप्रत्ययो वाच्य इत्यर्थः।

तप्पर्वमरुद्भ्यामिति। वार्तिकमिदम्। पर्वमरुद्भ्यां तप्वक्तव्य #इत्यर्थः। "तन्वक्तव्य" इति वृत्तिकृत्, हरदत्तश्च। प्रौढमनोरमायां तु नित्त्वं निराकृतम्। शब्देन्दुशेखरे तु हरदत्तसंमतं नित्त्वमेव स्थापितम्। रूढत्वादवयवार्थाऽभावान्न मतुप्।

तत्त्व-बोधिनी
अस्मायामेधारुआजो विनिः १४६२, ५।२।१२०

अस्मायामेधा। यशस्वीति। "तसौ मत्वर्थे "इति भत्वाद्रुत्वं न। यशस्वानिति। नित्यग्रहणात्पूर्वत्राऽसंबद्धमप्यन्यतरस्याङ्ग्रहणं मतुप्समुच्चयार्थमिह संबध्यत एव। "तसौ मत्वर्थे"इति सूत्रे यशस्वी यशस्वानिति भाष्योदाहरणादिति भावः। "चोः कु"रित्यनेन सिद्धे व्रश्चादिषत्वमाशङ्क्याह---क्विन्नन्तत्वादिति।

ह्मदयाच्चालुरन्यतरस्याम्। ह्मदयाच्चालुरन्यतरस्याम्। अन्यतरस्याङ्ग्रहणमिनिठनोः प्राप्त्यर्थम्। मतुप् सर्तत्र समुच्चीयत एव। चकारस्य "चुटू"इतीत्संज्ञा। तेन ह्मदयालुशब्दोऽन्तोदात्त इत्याहुः।

शीतोष्णतृप्रेभ्यस्तदसहने। शीतोष्णेति। इह चालुरनुवर्तते। परुडाश इति। "न तृप्रा उरुव्यचस"मिति मन्त्रस्य भाष्ये तथा व्याख्यातत्वादिति भावः। माधव इति। सुब्धातुवृत्तौ स्थितमिदम्।

हिमाच्चेलुः। हिमाच्चेलुरिति। एकारदिरयं प्रत्यय इति माधवः।

बलादलः। बलादिति। सिध्मादिषु बलूलवातूलशब्दौ मत्वर्थे प्रकारान्तरेण व्युत्पादितौ। तप्पर्वमरुद्भ्याम्।

पित्त्वमनुदात्तत्वार्थम्। काशिकायां तु "पर्वमरुद्भ्यां तन्वक्तव्यः"इति स्थितम्। हरदत्तेनतु "त"न्निति प्रतीकमुपादाय आद्युदात्तत्वार्थो नकार इत्युक्तम्। तच्च मनोरमायां महता प्रबन्धेन दीक्षितैर्निराकृतं तत एव तदवधार्यम्।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि ५।२।१२२

छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे। अग्ने तेजस्विन्। न भवति। सूर्यो वर्चस्वान्। छन्दसि विनिप्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घत्वं वेति वक्तव्यम्। अष्ट्रावी। मेखलावी। द्वयावी। उभयावी। रुजावी। हृदयावी। द्वयोभयगृदयानि दीर्घत्वं प्रयोजयन्ति। मर्मणश्च इति वक्तव्यम्। मर्मावी। सर्वत्रामयस्य उपसङ्ख्यानम्। छन्दसि भाषायां च। आमयावी। शृङ्गवृन्दाभ्यामारकन् वक्तव्यः। शृङ्गारकः। वृन्दारकः। फलबर्हाभ्यामिनच् वक्तव्यः। फलिनः। बर्हिणः। हृदयाच्चालुरन्यतरस्याम्। हृदयालुः, हृदयी, हृदयिकः, हृदयवान्। शीतोष्णतृप्रेभ्यस्तन्न सहत इत्यालुच् वक्तव्यः। शीतं न सहते शीतालुः। उष्णालुः। तृप्रालुः। तन्न सहत इति हिमाच्चेलुः। हिमं न सहते हिमेलुः। बलादूलच्। बलं न सहते बलूलः। वातात् समूहे च। वातं न सहत इति च। वातानां समूहः, वातं न सहते इति वा वातूलः। पर्वमरुद्भ्यां तन् वक्तव्यः। पर्वतः। मरुत्तः। अर्थात्तदभाव इनिर्वक्तव्यः। अर्थी। तदभावे इत्येव, अर्थवान्। तदेतत् सर्वं बहुलग्रहणेन सम्पद्यते।

न्यासः

बहुलं छन्दसि। , ५।२।१२१

"द्वयोभयह्मदयानि" इत्यादि। अवधारणमिह द्रष्टव्यम्()। द्वयादीन्येव दीर्घत्वं प्रयोजयन्ति, नेतराणि; स्वत एव दीर्घत्वात्()। "तदेतत्सर्वं बहुलग्रहणेन सम्पद्यते" इति। वक्तव्यशपब्दस्तु व्याख्याने वत्र्तते इत्यभिप्रायः॥

---

सूत्रम्

काशिका-वृत्तिः

ऊर्णाया युस् ५।२।१२३

ऊर्णाशब्दाद् युस् प्रत्ययो भवति मत्यर्थे। सकारः पदसंज्ञार्थः। ऊर्णा अस्य विद्यते ऊर्णायुः। केचिच् छन्दोग्रहणम् अनुवर्तयन्ति।

न्यासः

ऊर्णाया युस। , ५।२।१२२

"ऊर्णायुः" इति। पदत्वेन भसंज्ञाभावाद्यस्येति लोपो न भवति॥

बाल-मनोरमा

ऊर्णाया युस् १९०३, ५।२।१२२

ऊर्णाया युस्। ऊर्णायुशब्दे "यस्येति चे"ति लोपमाशङ्क्याह--सित्त्वादिति। अनुवर्तयन्तीति। "बहुलं छन्दसीत्यस्मा"दिति शेषः।

तत्त्व-बोधिनी

ऊर्णाया युस् १४६३, ५।२।१२२

पदत्वमिति। तेन "यस्येति चे"ति लोपो न प्रवर्तत इति भावः। अनुवर्तयन्तीति। "बहुलं छन्दसी"त्यतः।

---

सूत्रम्

काशिका-वृत्तिः

वाचो ग्मिनिः ५।२।१२४

वाच्शब्दात् ग्मिनिः प्रत्ययो भवति मत्वर्थे। वाग्मी, वाग्मिनौ, वाग्मिनः।

लघु-सिद्धान्त-कौमुदी

वचो ग्मिनिः ११९७, ५।२।१२३

वाग्ग्मी॥

न्यासः

वाचो ग्मिनिः। , ५।२।१२३

अथ मिनिरेव कस्मान्नोच्यते? जश्त्वे कृते वाग्ग्मीति सिध्यति; ननु च "यरोऽनुनासिकेऽनुनासिको वा" (८।४।४५) इत्यनुनासिकः प्राप्नोति? नैष दोषः; व्यवस्थितविभाषां विज्ञास्यते। एवं तर्हि गकारमधिकं कुर्वन्नेतत्? सूचवति--ग्मिनिरयमिति। यः सम्यग्बहु भावते तत्रापि वक्ष्यमाणावालजाटचौ बाधित्वा ग्मिनिरेव भवति। एवं ह्यषिकं भवति यद्यपवादविषयेऽपि क्वचिद्भवति, नान्या। एवञ्चा लजाटचौ कुत्सितं यो बहु भावते तत्रैव पारिशेष्याद्भवत इति वेदितव्यम्()॥

बाल-मनोरमा

वाचो ग्मिनिः १९०४, ५।२।१२३

वाचोग्मिनिः। वाच्शब्दान्मत्वर्थे ग्मिनिप्रत्ययः स्यादित्यर्थः। नकारादिकार उच्चारणार्थः। अतद्धित इति पर्युदासाद्गकारस्य नेत्संज्ञा। वाग्ग्मीति। वाच्शब्दात्-ग्मिनिप्रत्यये कुत्वंस जश्त्वम्। प्रत्यये गकारोच्चारणं तु "प्रत्यये भाषाया"मित्यनुनासिकाऽभावार्थम्।

तत्त्व-बोधिनी

वाचो ग्मिनिः १४६४, ५।२।१२३

वाचो ग्मिनिः। इकारो नकारपरित्राणार्थः। चकारस्य कुत्वे जश्त्वे च कृते वाग्ग्मी वाग्ग्मिनावित्यादौ द्वयोर्गकारयोः श्रवणं भवति। द्वित्वेतु ---त्रयाणाम्। "मिनिः"इत्युक्ते तु द्वित्वे सति द्वयोर्गकारयोः श्रवणं, द्वित्वाऽबावे त्वेकस्यैव श्रवमं स्यात्। किंच "यरोऽनुनासिके", "प्रत्यये भाषायां नित्य"मिति वाङ्भयमित्यत्रेव नित्यमनुनासिकः प्राप्नोति, तच्चाऽनिष्टमिति ग्मिनिः कृतः।

---

सूत्रम्

काशिका-वृत्तिः

आलजाटचौ बहुभाषिणि ५।२।१२५

वाच्शब्दात् प्रथमासमर्थादालचाटचित्येतौ प्रत्ययौ भवतो मत्वर्थे बहुभाषिणि अभिधेये। ग्मिनेरपवादः। वाचालः।

वाचाटः। कुत्सित इति वक्तव्यम्। यो हि सम्यग् बहु भाषते वाग्मीत्येव स भवति।

न्यासः

आलजाटचौ बहुभाषिणि। , ५।२।१२४

"कुत्सिते" इति। वक्तव्यशब्दस्तु व्याख्याने वत्र्तत इत्यभिप्रायः। "वक्तव्यम्()" इति। कुत्सितं यो बहुभाषते तत्रालजाटचौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं पूर्वसूत्र एव कृतम्()॥

बाल-मनोरमा

आलजाटचौ बहुभाषिणि १९०५, ५।२।१२४

आलजाटचौ। वाच्शब्दात्--आलच्, आटच् एतौ मत्वर्थे बहुभाषिणीत्यर्थः। ग्मिनोऽपवादः। यस्तु सम्यगिति। नच अबहु अकुत्सितं च यो वदति तत्रापि वाग्ग्मीति कुतो न भवतीति वाच्यं, "यो हि सम्यग्बहु भाषते वाग्गमीत्येव स भवती"ति भाष्यबलेन पूर्वसूत्रस्य सम्यग्बहुभाषिण्येव प्रवृत्तेरभ्युपगमादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

स्वामिन्नैश्वर्ये ५।२।१२६

स्वामिनिति निपात्यते ऐश्वर्थे गम्यमाने। स्वशदादैश्वर्यवाचिनो मत्वर्थे आमिन् प्रत्ययो निपात्यते। स्वम् अस्य अस्ति इति ऐश्वर्यम् अस्य अस्ति इति स्वामी। स्वामिनौ। स्वामिनः। ऐश्वर्ये इति किम्? स्ववान्।

न्यासः

स्वामिन्नै�आर्ये। , ५।२।१२५

"एकाचः" इति रसादिषु ५।२।९४ पाठान्मतुपि प्राप्त इदमारभ्यते। "ऐ()आर्यवाचिनः इति। धनवचनोऽयं स्वशब्द ऐ()आर्यवाची। तथा च-धनयोगादै()आर्यं तदुच्यते। "स्ववान्()" इति। आत्मादावर्थान्तरे स्वशब्दो वत्र्तते॥

बाल-मनोरमा

स्वामिन्नै�आर्ये १९०६, ५।२।१२५

स्वामिन्नै()आर्ये। "ऐ()आर्ये" इति प्रकृतिविशेषणमित्यभिप्रेत्याह--ऐ()आर्यवाचकादिति। आमिनजिति। "निपात्यते" इति शेषः। स्वामीति। स्वम्ै()आर्यं, तद्वानित्यर्थः। नियन्तेति यावत्। ऐ()आर्ये इत्युक्तेर्धनवानित्यर्थे स्वामीति न भवति।

तत्त्व-बोधिनी

स्वामिन्नै�आर्ये १४६५, ५।२।१२५

स्वामिन्नै()आर्ये। ऐ()आर्यवाचकादिति। स्वशब्दस्यै()आर्यवाचित्वमेतद्वृत्तिविषयकमेवेति बोध्यम्। ईशिता हि ई()आरः। स तु स्वामीत्युच्यते। यथा वागीश एव वाचस्पतिः वाचः स्वामिति। ऐ()आर्ये किम्()। स्ववान्।

---

सूत्रम्

काशिका-वृत्तिः

अर्शाऽदिभ्यो ऽच् ५।२।१२७

अर्शसित्येवम् अदिभ्यः प्रातिपदिकेभ्यो ऽच् प्रत्ययो भवति मत्वर्थे। अर्शांसि अस्य विद्यन्ते अर्शसः। उरसः। आकृतिगणश्च अयम्। यत्र अभिन्नरूपेण शब्देन तद्वतो ऽभिधानं तत् सर्वम् इह द्रष्टव्यम्। अर्शस्। उरस्। तुन्द। चतुर। पलित। जटा। घता। अभ्र। कर्दम। आम। लवण। स्वाङ्गाद्धीनात्। वर्णात्। अर्शाऽदिः।

लघु-सिद्धान्त-कौमुदी

अर्शाअदिभ्योऽच् ११९८, ५।२।१२६

अर्शोऽस्य विद्यते अर्शसः। आकृतिगणोऽयम्॥

न्यासः

अर्शाअदिभ्योऽच्?।, ५।२।१२६

यथासम्भवं मतुबादिष्वज्विधीयते। "आकृतिगणश्चायम्()" इति। अवृत्कृतत्वात्()। आदिशब्दश्चायं प्रकारे। "स्वाङ्गाद्धीनात्()" इति। हीनस्वाङ्गवृत्तेः प्रातिपदिकादज्भवति--खञ्जः पादोऽस्तीति शुक्लम्()। ननु च शुक्लशब्दो गुणवचनः, तत्राभेदोपचारेणाप्येतत्? सिध्यति? एवं तर्हि द्रव्यवृत्तेरपि वर्णवाचिनः प्रातिपदिकाद्यथा स्यादित्येवमर्थं वर्णग्रहणं कृतम्()। शुक्लगुणयुक्ताः प्रासादाः शुक्लाः, तेऽस्मिन्? सन्ति शुक्लं नगरम्()। प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारोऽर्शोऽस्यास्तीति "स्वरितो वानुदात्तेऽपदादौ" ८।२।६ इति स्वरितबाधनार्थः॥

बाल-मनोरमा

अर्शाअदिभ्योऽच् १९०७, ५।२।१२६

अर्शाअदिभ्योऽच्। अर्शस्शब्द आदिरेषामिति विग्रहः। अर्शस इति। अर्शो--गुदरोगविशेषः।

तत्त्व-बोधिनी

अर्शाअदिभ्योऽच १४६६, ५।२।१२६

अर्शाअदिभ्योऽच्। इह "स्वाङ्गाद्धीना"दिति। गणे पठ()ते। खञ्जः पादोऽस्यास्तीति खञ्जः। कां चक्षुर्यस्यास्तीति काणः।

---

सूत्रम्

काशिका-वृत्तिः

द्वन्द्वौपतापगर्ह्यात् प्राणिस्थादिनिः ५।२।१२८

द्वन्द्वः समासः। उपतापो रोगः। गर्ह्यं निन्द्यम्। तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्यः इनिः प्रत्ययो भवति मत्वर्थे। द्वन्द्वात् तावत् कटकवलयिनी। शङ्खनूपुरिणी। उपतापात् कुष्ठी। किलासी। गर्ह्यात् ककुदावर्ती। काकतालुकी। प्राणिस्थातिति किम्? पुष्पफलवान् वृक्षः। प्राण्यङ्गान्नेष्यते, पाणिपादवती। अतः इति अनुवर्तते। तेन इह नि भवति, चित्रललाटिकावती। सिद्धे प्रत्यये पुनर् वचनं ठनादिबाधनार्थम्।

न्यासः

द्वन्द्वोपतापगह्र्रात्प्राणिस्थादिनिः।, ५।२।१२७

"तद्विषयेब्यः" इति। तच्छब्देनोपतापगर्हावेव परामृश्येते। ते उपतापगर्हे विषयो येषामिति बहुव्रीहिः। प्राणिस्थवाचिनां

सर्वेषामेव द्वन्द्वादीनामिवं विशेषणम्()। "प्राण्यङ्गान्नेष्यते" इति। कथं पुनरिष्यमाणोऽपि न भवति? चकारानुवृत्तेः। "सिद्धे प्रत्यये" इति। "अत इनिठनौ" ५।२।११४ इत्यनेनैव। "ठनादिबाधनार्थम्()" इति। इनिरेव यता स्यात्(), ठनादिर्मा भूदित्येवमर्थं पुनर्वचनम्()। आदिशब्देन मतुब्? गृह्त्ते। इत उत्तरे योगा नियमार्था वेदितव्याः॥

बाल-मनोरमा

द्वन्द्वोपतापगह्रात्प्राणिस्थादिनिः १९०८, ५।२।१२७

द्वन्द्वोपताप। द्वन्द्वसमासादुपतापवाचकाद्गह्रवाचकाच्च प्राणिस्थविषयेभ्यो मत्वर्थे इनि स्यादित्यर्थः। द्वन्द्वेति उदाहरण सूचनम्। कटकवलयिनीति। कटकवलययोः कञ्चिदाकृतिभेदं परिकल्प्य द्वन्द्व उपपाद्यः। उपताप इत्यस्य विवरणं--रोग इति। किलासः कुष्ठभेदः। गह्रमित्यस्य विवरणं--निन्द्यमिति। ककुदावर्तीति। ककुदं ग्रीवाया अधस्तात्पृष्ठभागः। तत्र आवर्तः ककुदावर्तः, सोऽस्यास्तीति विग्रहः। काकतालुकिनीति। काकस्येव तालुके काकतालुके, ते अस्याः स्त इति विग्रहः।

प्राण्यङ्गान्नेति। व्याख्यानमेवात्र शरणम्, एवंविधवार्तिकस्य भा,()ये अदर्शनात्। अत इत्येवेति। समासन्त इति सूत्रभाष्यरीत्या मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। चित्रकललाटिकावतीति। चित्रकं च ललाटिका चेति द्वन्द्वः। अदन्तत्वाऽभावादिनिर्नेति भावः। ननु "अत इनिठनौ" इत्यतोऽनुवृत्त्यैव सिद्धे पुनरिह इनिग्रहणं किमर्थमित्यत आह--सिद्धे प्रत्यये इति। ठनादिति। आदिना मतुपः सग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

वातातिसाराभ्यां कुक् च ५।२।१२९

वातातिसारशब्दाभ्यां इनिः प्रत्ययो भवति, तत्संनियोगेन च तयोः कुगागमो भवति। वातातिसारयोरुपतापत्वात् पूर्वेण एव सिद्धे प्रत्यये कुगर्थम् एव इदं वचनम्। वातकी। अतिसारकी। पिशाचाच् च इति वक्तव्यम्। पिशाचकी वैश्रवणः। रोगे च अयम् इष्यते। इह न भवति, वातवती गुहा।

न्यासः

वातातिसाराभ्यां कुक्? च। , ५।२।१२८

"वातातिसाराभ्याम्()" इति। यद्यपि पञ्चमी, तथाप्यर्थाद्विभक्तिविपरिणामो भवति। आगमसम्बन्धे षष्ठीभावेन विपरिणम्यते। अत एवाह--"तस्यन्निनियोगेन च तयोः कुगागमः" इति। अथ प्रत्ययस्यैवागमः कस्मान्न भवति? कुगागमवता प्रत्ययेनार्थस्यानभिधानात्()। स्वरूपं न सिध्यतीति च। "पिशाचाच्चेति वक्तव्यम्()" इति। पिशाचशब्दादिनिप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"बहुलं छन्दसि" ५।२।१२१ इत्यतो बहुलग्रहणमनुवर्त्तते, तेन पिशाचशब्दादपि भविष्यति॥

बाल-मनोरमा

वातातीसाराभ्यां कुक् च १९०९, ५।२।१२८

वातातीसाराभ्यां। चादिनिरिति। वात, अतीसार आभ्यां मत्वर्थे इनिः स्यात् प्रकृतेः कुक् चेत्यर्थः। कुकि ककार इत्। उकार उच्चारणार्थः। कित्त्वादन्तावयवः। वातकीति। वातरोगवानित्यर्थः। अथीसारकीति। अतीसाररोगवानित्यर्थः।

रोगे चायमिति। व्याख्यानादिति भावः। रोग एवेत्यर्थः। वातवती गुहेति। अत्र रोगस्याऽप्रतीतेरिनिकुकौ नेति भावः।

पिशाचाच्चेति। वार्तिकमिदम्। पिशाचादिनिः प्रकृतेः कुक्चेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

वयसि पूरणात् ५।२।१३०

इनिरनुवर्तते। पूरणप्रत्ययान्तात् प्रातिपदिकातिनिः प्रत्ययो भवति मत्वर्थे वयसि द्योत्ये। पञ्चमो ऽस्य अस्ति मासः संवत्सरो वा पञ्चमी उष्ट्रः। नवमी। दशमी। सिद्धे सति नियमार्थं वचनम्, इनिरेव भवति, ठन् न भवति इति। वयसि इति किम्? पञ्चमवान् ग्रामरागः।

न्यासः

वयसि पूरणात्?। , ५।२।१२९

"वयसि द्योत्ये" इति। कथं पुनर्वयो द्योत्यते, यदि पञ्चमादयः शब्दाः काले वत्र्तमानाः प्रत्ययमुत्पादयन्ति। अत एव तेषां काले वृतिं()त दर्शयितुमाह--"पञ्चमो मासोऽस्यास्ति" इति। "सिद्धे सति" इत्यादि। पूरणप्रत्ययानामकारन्तत्वादिनिः सिद्ध एव, तस्मिन्? सिद्धे पुनरिवं वचनं नियमार्थं ज्ञायत इति। "इनिरेव भवति" इति। नियमस्य स्वरूपं दर्शयति॥

बाल-मनोरमा

वयसि पूरणात् १९१०, ५।२।१२९

वयसि पूरणात्। "अत इनिठना"वित्येव इनिसिद्धेः किमर्थमिदिमित्यत आह--ठनादिबाधनार्थमिति।

---

सूत्रम्

काशिका-वृत्तिः

सुखाऽदिभ्यश् च ५।२।१३१

सुख इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः इनिः प्रत्ययो नियम्यते मत्वर्थे। सुही। दुःखी। मालाक्षेपे इति पठ्यते, व्रीह्यादिषु च मालाशब्दो ऽस्ति, तदिह क्षेपे मतुब्बाधनार्थं वचनम्। सुख। दुःख। तृप्र। कृच्छ्र। आम्र। अलीक। करुणा। कृपण। सोढ। प्रमीप। शील। हल। माल क्ष्पे। प्रणय।

न्यासः

सुखादिभ्यश्च। , ५।२।१३०

"इनिप्रत्ययो नियम्यते" इति। पूर्ववन्नियमो वेदितव्यः। "तदिह" इत्यादि। यतो व्रीह्रदिषु मालाशब्दः पठ()ते, तस्माद्यदिह क्षेपे मालाशब्दस्य पुनर्वचनं तन्मतुपो बाधनार्थम्(), न तु ठनः। सुखादिभ्य इति नोच्यत इति; अनेनैव निवर्त्तितत्वात्()। मालाशब्दो हि शिखादिषु, तत्रान्तर्भाविनः क्षेपादन्यत्रेनिर्भवत्येव। शिखादित्वान्मतुप्? च; मतुपस्तस्यान्यतरस्यांग्रहणेन समुच्चितत्वात्()--माली, मालावानिति॥

बाल-मनोरमा

सुखादिभ्यश्च १९११, ५।२।१३०

सुखादिभ्यश्च। इनिर्मत्वर्थे इति। इनिरेव, नतु ठनित्यर्थः। माला क्षेपे इति। शुखादिगणसूत्रमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

धर्मशीलवर्णान्ताच् च ५।२।१३२

अन्तःशब्दः प्रत्येकम् अभिसम्बध्यते। धर्माद्यन्तात् प्रातिपदिकातिनिः प्रत्ययो नियम्यते। ब्रह्मणानां धर्मो ब्राह्मणधर्मः, सो ऽस्य अस्ति इति ब्राह्मणधर्मी। ब्राह्मणशीली। ब्राह्मणवर्णी।

न्यासः

धर्मशीलवर्णान्ताच्च। , ५।२।१३१

बाल-मनोरमा

धर्मशीलवर्णान्ताच्च १९१२, ५।२।१३१

धर्मशील। धर्माद्यन्तादिति। धर्म, शील, वर्ण--एतदन्तादिनिरेवेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

हस्ताज् जातौ ५।२।१३३

हस्तशब्दातिनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज् जातिरभिधीयते। हस्तो ऽस्य अस्ति इति हस्ती। हस्तिनौ हस्तिनः। जातौ इति किम्? हस्तवान् पुरुषः।

न्यासः

हस्ताज्जातौ। , ५।२।१३२

हस्तेन हस्तमात्रं प्रतीयते, न त जातिः। पुरुषशब्दप्रयोगात्? पुरुषजातिर्गम्यते॥

बाल-मनोरमा

हस्ताज्जातौ १९१३, ५।२।१३२

हस्ताज्जातौ। हस्तान्मत्वर्थे इनिरेव, समुदायेन जातिविशेषे गम्ये इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

वर्णाद् ब्राह्मचारिणि ५।२।१३४

वर्णशब्दातिनिः प्रत्ययो भवति मत्वर्थे समुदायेन चेद् ब्रह्मचारी भण्यते। ब्रह्मचारि इति त्रैवर्णिको ऽभिप्रेतः। स हि विद्याग्रहणार्थम् उपनीतो ब्रहम चरति, नियमम् आसेवते इत्यर्थः। वर्णी, वर्णिनौ, वर्णिनः। ब्रह्मचारिणि इति किम्? वर्णवान्। ब्राह्मणादयस्त्रयो वर्णा वर्णिनः उच्यन्ते।

न्यासः

वर्णाद्ब्राह्रचारिणि। , ५।२।१३३

"समुदायेन चेद्ब्राह्रचारी भष्यते" इति। एतेन समुदायोपाधित्वं ब्राह्रचारिणो दर्शयति। विद्याग्रहणार्थं यदोपनीयते ततः

सेवितव्यो यो नियमविशेषस्तद्ब्राह्आ, तच्चरति ब्राह्चारी, आवश्यके णिनिः। तत्र नियमविशेषचरणे ब्राआह्णादीनामेव त्रयाणां वर्णानामधिकारः, न शूद्रस्येत्याह--"ब्राह्चारीति त्रैवर्णिकोऽभिप्रेतः" इति। त्रिषु वर्णेषु भवः, तत्रान्तर्भूतत्वात्? त्रैवणिकः। किं पुनः कारणं स एवाभिप्रेत इत्याह--"स हि" इत्यादि॥

बाल-मनोरमा

वर्णाद्ब्राआह्चारिणि १९१४, ५।२।१३३

वर्णाद्ब्राह्चारिणि। वर्णशब्दान्मत्वर्थे इनिरेव, समुदायेन ब्राह्चारिणि गम्ये इत्यर्थः। वर्णीति। वर्णः=ब्राआह्णादितत्तद्वर्णोचितवसन्तादिकाले उपनयनम्, सोऽस्यास्तीति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

पुष्कराऽदिभ्यो देशे ५।२।१३५

पुष्कर इत्येवम् आदिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो भवति समुदायेन चेद् देशो ऽभिधीयते। पुष्करिणी। पद्मिनी। देशे इति किम्? पुस्करवान् हस्ती। इनिप्रकरणे बलाद् बहूरुपूर्वादुपसङ्ख्यानम्। बाहुवली। ऊरुबली। सर्वादेश्च। सर्वधनी। सर्वबीजी। सर्वकेशी नटः। अर्थाच् च असन्निहिते। अर्थी। असन्निहिते इति किम्? अर्थवान्। तदन्ताच् च इति वक्तव्यम्। धान्यार्थी। हिरण्यार्थी। पुष्कर। पद्म। उत्पल। तमाल। कुमुद। नड। कपित्थ। बिस। मृणाल। कर्दम। शालूक। विगर्ह। करीष। शिरीष। यवास। प्रवास। हिरण्य। पुष्करादिः।

न्यासः

पुष्करादिभ्यो देशे। , ५।२।१३४

इह कस्मान्न भवति--पुष्कराणि पद्मान्यस्मिन्? देशे सन्तीति? इतिकरणानुवृत्तेः। "अर्थाच्चासन्निहिते" इति। असन्निहितग्रहणे तस्य चास्तित्वेन विरोधः। यदि ह्यसन्निहितोऽर्थः, न नाम विद्यते; यदि विद्यते, कथमसन्निहितः? तस्माद्विशेषणोपादानादस्तोत्येतद्विशेषणमुत्सृज्यासन्निधानोपाधिकादर्थात्? प्रत्ययो विधीयते। अभिधानशक्तिस्वाभाव्याच्च। "अर्थी" इति। अभिलाषवानेवोच्यते। न सर्वोऽसन्निहितोऽर्थः प्रत्ययान्तेन तद्विमर्शादसन्निहितवान्(), अतः प्रत्ययो वक्तव्यः? न वक्तव्यः, कथं पुनरनुच्यमानो लभ्यते? "बहुलं छन्दसि" (५।२।१२२) इत्यतो बहुलग्रहणेन यथा "अष्टामेखलाद्वयोभयरजाह्मदयादीनां दीर्घश्च" (बा। ५८६) इत्येवमादिकं कार्यं सम्पाद्यते, तथेदमपि। "तदन्ताच्च" इत्यादि। असन्निहितमित्यनुवत्र्तते, असन्निहितोपाधिकादर्थादिनिप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु कृतप्रायम्()।

बाल-मनोरमा

पुष्करादिभ्यो देशे १९१५, ५।२।१३४

पुष्करादिभ्यो देशे। पुष्करशब्दान्मत्वर्थे इनिरेव स्याद्देशे गम्ये।

बाहुरुपूर्वपदद्बलादिति। वार्तिकमिदम्। बहु, ऊरु एतत्पूर्वपदकाद्बलशब्दान्तान्मत्वर्थे इनिरेवेत्यर्थः।

सर्वादेश्चेति। वार्तिकमिदम्।"इनिरेवे"ति शेषः।

अर्थाच्चासंनिहिते इति। वार्तिकमिदम्। असन्निहितविषयकादर्थशब्दादनिरेवेत्यर्थः। अर्थीति। असंनिहितोर्थोऽस्येति

विग्रहः। अर्थो नास्तीति यावत्।?त्र विरोधादस्तीति न सम्बध्यते। अर्थोऽसंनिहितोऽस्येत्यर्थे अप्राप्त एव इनिर्विधीयत इति कैयटः।

प्रत्ययविधौ तदन्तविधिनिषेधादाह--तदन्ताच्चेति। अर्थशब्दान्तादपि इनिर्वक्तव्य इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

बलादिभ्यो मतुबन्यतरस्याम् ५।२।१३६

बलादिभ्यः प्रातिपदिकेभ्यो मतुप्प्रत्ययो भवति। अन्यतरस्यां ग्रहणेन प्रकृतः इनिः समुच्चीयते। बलवान्, बाली। उत्साहवान्, उत्साही। बल। उत्साह। उद्भाव। उद्वास। उद्वाम। शिखा। पूग। मूल। दंश। कुल। आयाम। व्यायाम। उपयाम। आरोह। अवरोह। परिणाह। युद्ध।

न्यासः

बलपादिभ्यो मतुबन्यतरस्याम्?। , ५।२।१३५

"यद्यन्यतरस्यांग्रहणेन प्रत्ययो विकल्प्यते--बलादिभ्यो मतुब्विकल्पो भवतीति, ततो मतुपा मुक्ते यथाप्राप्तमिनिठनावपि स्याताम्(), इनिरेव चेष्यते, स कथमिनिरेव लभ्यते, यद्यन्यतरस्यांग्रहणेनेनिः समुच्चीयते, न मतुबिति विकल्पेन? इत्येवं चेतसि कृत्वाह--"अन्यतरस्यांग्रहणेन" इत्यादि। ननु यदीनिटनौ द्वावपि स्याताम्(), सूत्रारम्भोऽनर्थकः स्यात्(), विनाऽप्यनेन प्रत्ययस्य सिद्धत्वात्(), तस्मान्मतुपोऽपि विकल्पस्यानेन दोषः? नैतदस्त; आरम्भसामथ्र्यादिनिठनोरन्यतरो भवतीत्येषोऽर्थो लभ्यते, न त्विनिरेव। तस्मादिनिसमुच्चयार्थमेवान्यतरस्यांग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

बलादिभ्यो मतुबन्यतरस्याम् १९१७, ५।२।१३५

बलादिभ्यो। मतुबभावपक्षे संनिहित इनिरित्यभिप्रेत्योदाहरति--बलवान् बलीति।

संज्ञायां मन्माभ्याम्। प्रथमिनीति। "पृथ्वादिभ्य इमनिज्वे"ति इमनिजन्तः प्रथमन्शब्दः। अत्र मनोऽनर्थकत्वेऽपि "अनिनस्म"न्निति तदन्तविधिना इमनिजन्तोऽपि गृह्रते। प्रथमन्शब्दादिनिप्रत्यये टिलोपे नान्तलक्षणङीपि प्रथिमिनीशब्दः। दामिनीति। दामन्शब्दादिनौ टिलोपे ङीबिति भावः। मेति। मान्तोदाहरणसूचनमिदम्। होमिनी सोमिनीति। होमशब्दात्सोमशब्दाच्च इनौ ङीबिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां मन्माभ्याम् ५।२।१३७

मन्नन्तात् प्रातिपदिकान् मशब्दान्ताच् च इनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत् संज्ञा गम्यते। प्रथिमिनी। दामिनी। मशब्दान्तात् होमिनी। सोमिनी। संज्ञायाम् इति किम्? सोमवान्। होमवान्।

न्यासः

संज्ञायां मन्माभ्याम्?। , ५।२।१३६

"प्रथिमिनी, दामिनी" इति। प्रथिमिन्(), दामिन्()--इत्येताभ्यामिनिः, "नस्तद्धिते" ६।४।१४४ इति टिलोपः, "ऋन्नेभ्यो ङीप्()" ४।१।५ इति ङीप्()। अत्रापि संज्ञाग्रहणमितिकरणस्यैव प्रपञ्चः॥

तत्त्व-बोधिनी

संज्ञायां मन्माभ्याम् १४६७, ५।२।१३६

प्रथिमिनीति। "पृथ्वादिभ्यः" इतीमनिचि "टे"रिति टिलोपः। "र ऋतः" इत #इ रभावः। "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ती"ति मन्नन्तादिनौ कृते "नस्तद्धिते"इति टिलोपे नान्तत्वान्ङीप्। दामिनीति। दाधातोर्मनिन्। होमिनी। सोमिनीति। "अर्तिस्तुसुहुसृधृक्षी"त्यौणादिकेन मनिनित्त्वाद्धोमसोमशब्दौ मप्रत्ययान्तौ।

---

सूत्रम्

काशिका-वृत्तिः

कंशंभ्यां बभयुस्तितुतयसः ५।२।१३८

कम् शम् इति मकारान्तौ उद्कसुखयोर् वाचकौ, ताभ्यां ब भ युस् ति तु त यसित्येते सप्त प्रत्यया भवन्ति मत्वर्थे। कम्बः, कम्भः, कंयुः, कन्तिः, कन्तुः, कन्तः, कंयः। शम्बः, शम्भः, शंयुः, शन्तिः, शन्तुः, शन्तः, शंयः। सकारः पदसंज्ञार्थः, तेन अनुस्वारपरसवर्णौ सिद्धौ भवतः। संज्ञायां हि असत्यां कम्यः, शम्यः इति स्यात्।

न्यासः

कंशंभ्यां बभयुस्तितुतयसः। , ५।२।१३७

"उदकसुखयोर्वाचकौ" इति। यथासंख्यं कमित्युदयकस्य वाचकः, शमिति सुखस्य। "शंयुः" इति। "मोऽनुस्वारः" ८।३।२३, तस्य "वा पदान्तस्य" ८।४।५८ इति परसवर्णः, मस्यानुनासिको यकारः। तेनानुस्वारपरसवर्णौ सिद्धौ भवतः" इति। तयोः पदाधिकारे विधानात्()। यदि पुनः पदसंज्ञा न स्यात्(), ततस्तस्यामसत्यां पदनिबन्धनयोरनुस्वारपरसवर्णयोरभावात्()--कम्युः, शम्युरित्यनिष्टं रूपं सम्पद्यते॥

बाल-मनोरमा

कंशंभ्यां बभयुस्तितुतयसः १९१८, ५।२।१३७

कंशंभ्याम्। व, भ, युस्, ति, तु, त, यस्, एषां सप्तानां द्वन्द्वात् प्रथमाबहुवचनम्। सप्त प्रत्ययाः स्युरिति। "मत्वर्थे" इति शेषः। पदत्वार्थ इति। अन्यथा कमित्यस्माद्युप्रत्यये यप्रत्यये च कृते भत्वात्पदत्वाऽभावादनुस्वारो न स्यादिति भावः। वकारयकारपरस्येति-बहुव्रीहि। वकारपरकस्य यकारपरकस्य चानुस्वारस्येत्यर्थः।

तत्त्व-बोधिनी

कंशंभ्यां बभयुस्तितुतयसः १४६८, ५।२।१३७

कंशंभ्याम्। पदत्वार्थ इति। अन्यथा "कम्युः, काम्यः, शम्युः, शाम्यः"इति स्यादिति भावः। वकारयकारपरस्येति। बहुव्रीहिरयम्। अनुनासिकौ वयाविति। एतेन प्रथमप्रत्ययः दन्त्योष्ठ()आदिः, न तु पवर्गतृतीय इथि ध्वनितम्। माधव इति। " तुडि तोडने"इति धातौ तेनोक्तं---"वृद्धा नाभिस्तुण्डिः"। इन्। तुण्डिरस्यास्तीति तुण्डिलः। "तुन्दादिभ्य इलच्चे"त्यत्र "स्वाङ्गाद्विवृद्धौ"इति गणसूत्रेण इलच्। तुण्डिल एव तुण्डिभः। "तुण्डिवलिवटेर्भः"इति मत्वर्थीयो भ"इति।

---

सूत्रम्

काशिका-वृत्तिः

तुन्दिबलिवटेर् भः ५।२।१३९

तुन्दि बलि वटि इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे। तुन्दिः इति वृद्धा नाभिरुच्यते, सा अस्य अस्ति इति तुन्दिभः। बलिभः। वटिभः। वलिशब्दः आमादिषु पठ्यते, तेन बलिनः इत्यपि भवति।

न्यासः

तुन्दिबलिवटेर्भः। , ५।२।१३८

तुन्दिशब्दात्? तुन्दादिषु "स्वाङ्गाद्विवृद्धौ" ५।२।११६ इति पाठादिलचीनिठनोर्मतुपि प्राप्ते, बलेः पामादिपाठान्ने मतुपि, वटेर्मतुप्येव बो विधीयते॥

बाल-मनोरमा

तुन्दिवलिबटेर्भः १९१९, ५।२।१३८

तन्दिवलि। तन्दि, वलि, बटि एभ्यो मत्वर्थे भप्रत्ययः स्यादित्यर्थः। समाहारद्वन्द्वात्पञ्चम्येकवचनम्। पुंस्त्वमार्षम्। वटिभ इति। "वट वेष्टने"। वटनं वटिः। सोऽस्यास्तीति विग्रहः।

तत्त्व-बोधिनी

तुन्दिवलिबटेर्भः १४६९, ५।२।१३८

वटिभ इति। "वट "वेष्टने"इन्। वटिशब्दः पामादिषु पट()ते। तेन "वटिन"इत्यपि भवति।

---

सूत्रम्

काशिका-वृत्तिः

अहंशुभमोर् युस् ५।२।१४०

अहम् इति शब्दान्तरम् अहङ्कारे वर्तते, शुभम् इत्यव्ययं शुभपर्यायः, ताभ्यां युस प्रत्ययो भवति मत्वर्थे। सकारः पदसंज्ञार्थः। अहंयुः। अहङ्कारवानित्यर्थः। शुभंयुः। कल्याणवानित्यर्थः। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य द्वितीयः पादः। पञ्चमाध्यायस्य तृतीयः पादः।

लघु-सिद्धान्त-कौमुदी

अहंशुभमोर्युस् ११९९, ५।२।१३९

अहंयुः अहङ्कारवान्। शुभंयुस्तु शुभान्वितः॥

लघु-सिद्धान्त-कौमुदी

इति मत्वर्थीयाः १३ ११९९, ५।२।१३९

लघु-सिद्धान्त-कौमुदी

अथ प्राग्दिशीयाः ११९९, ५।२।१३९

न्यासः

अहंशुभमोर्युस्?। , ५।२।१३९

"अहमिति शब्दान्तरम्()" इति। अस्मदः "त्वाहौ सौ" ७।२।९४ इति, त्यदाद्यत्वे च कृते यच्छब्दरूपं सम्पद्यते, तस्मादन्य एवाहमव्युत्पन्नः शब्दः, न तु तदित्येवं शब्दान्यत्वं दर्शयित्वाऽर्थान्तरं दर्शयितुमाह--"अहङ्कारे वत्र्तते" इति। "अहंयुः, शुभंयुः" इति। पूर्ववदनुस्वारपरसवर्णौ॥ इति श्रीबोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां पञ्चमाध्यायस्य द्वितीयः पादः * * * अथ पञ्चमोऽध्यायः तृतीयः पादः

बाल-मनोरमा

अहंशुभमोर्युस् १९२०, ५।२।१३९

अहंशुभमोर्युस्। अहंयुः पुंस्त्वमार्षम्। वटिभ इति। "वट वेष्टने"। वटनं वटिः। सोऽस्यास्तीति विग्रहः।

बाल-मनोरमा

अहंशुभमोर्युस् ४८१, ५।२।१३९

अहंशुभमोर्युस्। अहंयुः शुभंयुरित्यत्र सुब्लुकमाशङ्क्याह--अहमित्यादीति। सित्त्वं पदत्वार्थम्। तेन पदत्वादनुस्वारे परसवर्णः सिध्यति।

***** इति बालमनोरमायम् मत्वर्थीयाः। *****

अथ नामधातुप्रक्रिया।

तत्त्व-बोधिनी

अहंशुभमोर्युस् ४१४, ५।२।१३९

अहंयुः। शुभंयुरिति। पूर्ववदनुस्वारपरसवर्णौ।

इति तत्त्वबोधिन्यां मत्वर्थीयाः।

अथ नामधातुप्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

प्राग्दिशो विभक्तिः ५।३।१

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ५।३।२७ इति वक्ष्यति। प्रागेतस्माद् दिक्षं शब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामो विभक्तिसंज्ञास् ते वेदितव्याः। वक्ष्यति पञ्चम्यास् तसिल् ५।३।७। ततः। यतः। कुतः। तसिलादीनां विभक्तित्वे प्रयोजनं त्यदादिविधयः इदमो विभक्तिस्वरश्च। इह। ऊडिदम् इति विभक्त्युदात्तत्वं सिद्धं भवति। अतः परं स्वार्थिकाः प्रत्ययाः, तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान् न उपयुज्यते इति निवृत्तम्। वावचनं तु वर्तत एव। तेन विकल्पेन तसिलादयो भवन्ति, कुतः , कस्मात्, कुत्र, कस्मिनिति।

लघु-सिद्धान्त-कौमुदी

प्राग्दिशो विभक्तिः १२००, ५।३।१

दिक्छब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः॥

न्यासः

प्राग्दिशो विभक्तिः। , ५।३।१

"विभक्तिसंज्ञास्ते वेदिव्याः" इति। विभक्तिरित्येष शब्दः संज्ञा येषां ते तथोक्ताः। ननु च विभक्तिशब्दः सुप्तिङां संज्ञा, संज्ञा च प्रदेशवाक्येषूच्चारिता संज्ञिनं प्रत्याययतीति सुप्तिङां विभक्तिसंज्ञाविधानमनर्थकं स्यात्()। यथा वृद्धिशब्दः स्वाभिधेये लौकिकेऽर्थे गुणीभूतोऽप्यादैच्? प्रति संज्ञात्वमनुभवति, तथा विभक्तिशब्दोऽपि तसिलादीन्? प्रति संज्ञात्वेन वेदितव्यः। अथ तत्रैव कस्मान्नोच्यते--"सुपो विभक्तिश्च प्राग्दिशश्च" इति, एवं सति पुनर्विभक्तिग्रहणं कत्र्तव्यं न भवति? नैवं शक्यम्(); एवं हि न्यासे सति "कुत आरब्य प्राग्दिशीयाः? इति न ज्ञायते। किञ्च "दिगादिभ्यो यत्()" ४।३।५४, "तेनैकदिक्()" ४।३।११२ इति चानेकं शास्त्रे दिग्ग्रहणमित्यवधिरपि सन्दिह्येत। "किंसर्वनामबहुभ्यः" ५।३।२ इत्येवमादेश्च कारह्रस्यावधिदर्शनार्थं पुनरिह "प्राग्दिशः" इति वाच्यमेव स्यात्()। तस्माद्यथान्यासमेव साध। "ततः, यतः" इति। "अष्टन आ विभक्तौ" ७।२।८४ इत्यनुवत्र्तमाने "त्यदादीनामः" ७।२।१०२ इत्यत्वम्(), "न विभक्तौ तुस्माः" १।३।४ इति सकारस्येत्संज्ञाप्रतिषेषः, "तद्धित श्चासर्वविभक्तिः" १।१।३७ इत्यव्ययत्वाद्विभक्त#एर्लुक्()। "कुतः" इति। "कि तिहोः" ७।२।१०४ इति किमः कुभावः। "त्यदादिविधयः" इति। त्यदादयोऽत्र दिभक्तिनिबन्धनाः। "ततः" इति। त्यदादिविधेरत्वस्योदाहरणम्()। "इह इति। इदमो विभक्तिस्वरस्य। इदमः सप्तम्यन्तात्? "इदमो हः" ५।३।११ इति हप्रत्ययः, "इदम इश्()" ५।३।३ इतीशादेशः। "ऊडिदम्पदाद्यप्पुमैद्युभ्यः" ६।१।१६५ इति इदमः परस्योदातत्वं विभक्तित्वे सति सिद्धं भवति। अत्र तु प्रत्ययस्वरेणैव सिद्धमाद्युदात्तत्वम्()। तस्माच्चोदाहरणदिगियं प्रदर्शित। इदं त्वत्रोदाहारणं युक्तम्()--"इतः" इति। इवमस्तसिल्(), पूर्ववदिश्()। अतद्य ह्रसति विभक्तित्वे लिति प्रत्ययात्? पूर्वपदाद्युदात्तत्वं ["पूर्वमाद्युदात्तत्वं"-मुद्रितपाठः (वाराणसी-१९६७)] स्यात्()। तस्मिस्तु "ऊडिदम्()" ६।१।१६५ इत्यादिनेदमः परस्य तस आद्युदात्तत्वं सिद्धं भवति। ननु च सत्यपि विभक्तित्वे परत्वाल्लित्स्वरेण भवितव्यम्()? नैष दोषः; "लिति" ६।१।१८७ इत्यत्र हि "ऊजिदम्()" ६।१।१६५ इत्यादिकं सूत्रमनुवर्त्तिष्यते लित्स्वरबाधनार्थम्()। नन्वेवमपि नैव विभक्तेरुदात्तत्वं सिध्यति? तत्र हि "सावेकाचस्तृतीयादिविभक्तिः" ६।१।१६२ इत्यतस्तृतीयादिग्रहणमनुवत्र्तते, न च तसिलादयस्तृतीयादिगरहणेन गृह्न्ते। तृतीयैकवचनमारन्य आ पञ्चमाध्यायपरिसमाप्तेर्यावान्? प्रत्ययो विभक्तिसंज्ञः सर्वोऽसौ तृतीयादिः। "अतः परम्()" इत्यादि। सामथ्र्यं हि नाम सम्बन्धार्थता; सा च प्रतियोगिनमपेक्षत एव यन सहैकार्थीभावो भवति तस्मिन्? प्रतियोगिनि सति, नान्यथा। प्राथम्यमपि प्रतियोग्यपेक्षमेव। द्वितीयं हि प्रतियोगिनमपेभ्य प्रथममित्युच्यते। इत उत्तरं प्रत्ययाः प्रकृत्यर्थ एव भवन्तीति, न तद्विषौ द्वितीयस्य प्रतियोगिनः सम्भवः; तदभावात्? सामथ्र्यप्राथम्ययोरपि नास्त्येव सम्भवः; तयोः प्रतियोग्यपेक्षत्वात्()। यतश्चैतदेवम्(), ततः "सामथ्र्याधिकारः प्रथमग्रहणञ्च नोपयुज्यते" इति द्वयमपि निवृत्तम्()। यद्येवम्(); वावचनस्यापि निवृत्तिः प्राप्नोति, एकयोगनिर्दिष्टत्वात्()? इत्याह--"वावचनं तु वत्र्तत एव" इति। तस्य स्वरितत्वादिति भावः। "तेन विकल्पेन" इत्यादि। तेनोत्तरसूत्रे वाग्रहणानुवृत्तेः फलं दर्शयति॥

बाल-मनोरमा

प्राग्दिशो विभक्तिः १९२२, ५।३।१

अथ पञ्चमाध्यायस्य तृतीयापादे प्राग्दिशीयप्रकरणं निरूप्यते। प्राग्दिशो विभक्तिः। दिक्छब्देन तद्घटितं सूत्रं विवक्षितमित्यभिप्रेत्याह--दिक्छब्देभ्य इत्यत इति। विभक्तिसंज्ञका इति। तत्फलं तु "न विभक्तौ तुस्माः" इति निषेधः, त्यदाद्यत्वम्, इदम "ऊडिदंपदादी"ति स्वरश्च। स्वार्थिका इति। स्वीयप्रकृत्यर्थे भवा इत्यर्थः। तसिलादिष्वर्थनिर्देशाऽभावात्, "अतिशायने" इत्यादीनां प्रकृत्यर्थविशेषणत्वाच्चेति भावः। निवृत्तमिति। अत्रोपपत्तिः--"समर्थाना"मित्यत्रोक्ता। अनुवर्तत एवेति। व्याख्यानमेवात्र शरणम्।

सूत्रम्

काशिका-वृत्तिः

किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः ५।३।२

प्राग्दिशः इत्येव। किमः सर्वनाम्नो बहुशब्दाच् च प्राग्दिशः प्रत्ययाः वेदितव्याः। सर्वनामत्वात् प्राप्ते ग्रहणे द्व्यादिपर्युदासः क्रियते। कुतः , कुत्र। यतः, यत्र। ततः, तत्र। बहुतः, बहुत्र। अद्व्यादिभ्यः इति किम्? द्वाभ्याम्। द्वयोः। प्रकृतिपरिसङ्ख्यानं किम्? वृक्षात्। वृक्षे। प्राग्दिशः इत्येव, वैयाकरणपाशः। सर्वनामत्वादेव सिद्धे किमो ग्रहणम् द्व्यादिपर्युदासात्। बहुग्रहणे सङ्ख्याग्रहणम्। इह न भवति, बहोः सूपात्, बहौ सूपे इति।

लघु-सिद्धान्त-कौमुदी

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः १२०१, ५।३।२

किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते॥

लघु-सिद्धान्त-कौमुदी

इदम इश् १२०४, ५।३।२

प्राग्दिशीये परे। इतः॥

न्यासः

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः। , ५।३।२

"कुत्र" इति। "सप्तम्यास्त्रल्()" ५।३।१०, पूर्ववत्? कुभावः। "प्रकृतिपरिसंख्यानम्()" इति। प्रकृतिपरिगणनम्()। "वैयाकरणपाशः" इति। "याप्ये पाशप्()" ५।३।४७। अयं चावधेः परो व्य इत्यन्याभ्योऽपि प्रकृतिभ्यो भवति। "सर्वनामत्वादेव सिद्धे" इति। सर्वनामत्वं किमः सर्वादिषु पाठात्()। "किमो ग्रहणम्()" इत्यादि। किंशब्दोऽयं द्व्यादिषु पठ()त इति तस्य "द्व्यादिभ्यः" इति पर्युदासः क्रियते। तस्मात्? सर्वनाम्नोऽपि स्वशब्देनोपादानम्()। यद्येवं द्विशब्दात्? पूर्वं किंशब्दः पठितव्यः, एवं हि तस्य पृथग्ग्रहणं न कत्र्तव्यमेव भवति? सत्यमेतत्(); न सूत्रकारस्येह गणपाठ इति नासावुपालम्भमर्हति। अपि च त्यदादीनां यद्यत्परं तत्तच्छिष्यत इति किमः सर्वैरेव त्यदादिभिः सह विवक्षायां शेय इष्यते--"त्वञ्च कश्च" कौ, भवांश्च कश्च कौ; स चैवं पाठे न सिध्यतीति यथान्यासमेवास्तु। "बहुग्रहणे संख्याग्रहणम्()" इति। कथमिह सर्वनामसंज्ञया सर्वादयः संज्ञिनो निर्दिश्यन्ते? तस्मात्? तैः सह निदेशाद्बहुशब्दस्यापि बहुगणादि १।१।२२ सूत्रेण यस्य संख्यासंज्ञा विहिता तस्यैव संज्ञिता तस्यैव संज्ञिनो ग्रहणं विज्ञायते। "बहोः सूपात्()" इति। अत्र वैपुल्यवाची बहुशब्दः॥

बाल-मनोरमा

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः १९२३, ५।३।२

किंसर्वनाम। अद्व्यादिभ्य इति च्छेदः। प्राग्दिश इत्यनुवर्तते। तदाह--प्राग्दिशोऽधिक्रियत इति। विधेयाऽनिर्देशादधिकारोऽयमिति भावः। किमः सर्वनामत्वेऽपि द्व्यादिपर्युदासात्पृथग्ग्रहणम्। द्व्यादिषु किशब्दपाठस्तु त्वं च कश्च कौ, अहं च कश्च कौ इत्यत्र "त्यदादीनां मिथः सहौक्तौ" इति किमः शेषत्वाऽर्थः। अथ वक्ष्यमाणतसिलादिप्रत्यये परे कार्यविशेषानाह--इदम इशित्यादिना।

तत्त्व-बोधिनी

किंसर्वनामबहुभ्योऽव्यादिभ्यः १४७१, ५।३।२

किंसर्वनाम। द्व्यादिपर्युदासात्किमः पृथग्ग्रहणम्। द्व्यादिषु किंशब्दपाठे प्रयोजनं तु---त्वं च कश्च कौ।अहं च कश्च कौ। भवांश्चकश्च कौ इत्यत्र किमः शेषः, "त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते"इत्युक्तत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

इदम् इश् ५।३।३

प्राग् दिशः। इदम् इशित्ययम् आदेशो भवति प्राग्दिशीयेषु प्रत्ययेशु परतः। शकारः सर्वादेशार्थः। इह।

न्यासः

इदम इश्?।, ५।३।३

"शकारः सर्वादेशार्थः" इति। असकति हि तस्मिन्? "अलोऽन्त्यस्य" १।१।५१ स्यात्()। ततश्चेद्रूपस्य हलि लोपे ७।२।११३ कृते, "आद्गुणे" ६।१।८४ चैतः, एहेत्यनिष्टं रूपं स्यात्()। ननु चेदमस्त्यदाद्यत्वे ७।२।१०२ कृतेऽतो गुणे ६।१।९४ पररूपत्वे चेद्रूपलोपे चान्त्यस्याप्यादेश इतः, इहेति सिध्यत्येव? सिध्येद्यदि प्राक्? त्यदाद्यत्वं लभ्येत; न तु तल्लभ्यम्(), इत्वमेव हि तावदन्तरङ्गं स्यात्()। इत्वं हि तसिलादिप्रत्ययंमात्रमपेक्षत इत्यन्तरङ्गम्(), त्याद्यत्वमङ्गसंज्ञां परस्य प्रत्ययस्य विभ्क्तित्वं चापेक्षत इति बहिरङ्गम्(), तस्माच्छाकरः कत्र्तव्यः॥

बाल-मनोरमा

इदम इश् १९२४, ५।३।३

इदम इश्। "प्रग्दिशीये परे" इति--शेषपूरणम्। प्रकरणलभ्यमिदम्। शित्त्वात्सर्वादेशः। "इत" इत्युदाहरणम्।

---

सूत्रम्

काशिका-वृत्तिः

एतैतौ रथोः ५।३।४

रेफथकारादौ प्राग्दिशीये प्रत्यये परतः इदमः एतैतौ आदेशौ भवतः। इशो ऽपवादः। रेफे ऽकार उच्चारणार्थः। इदमो र्हिल् ५।३।१६ एतर्हि। इदमस् थमुः ५।३।२४ इत्थम्।

लघु-सिद्धान्त-कौमुदी

एतेतौ रथोः १२१५, ५।३।४

इदम्शब्दस्य एत इत् इत्यादेशौ स्तौ रेफादौ थकारादौ च प्राग्दिशीये परे। अस्मिन् काले एतर्हि। काले किम्? इह देशे॥

न्यासः

एतेतौ रथोः।, ५।३।४

"रथोः" इति वर्णयोरिवं ग्रहणम्()। तत्र "यस्मिन्? विधिस्तदादावल्ग्रहणे" (वा। १४) इति रेफादौ थकारादौ च कार्यं विज्ञायत इत्यादि--"रेफादौ" इत्यादि। रेफस्याकार उच्चारणार्थ इति कथं ज्ञायते? इदमः परस्य प्राग्दिशीयस्याकारवतो रेफस्याभावात्()॥

बाल-मनोरमा

एतेतौ रथोः १९२५, ५।३।४

एतेतौ रथोः। "इदम" इत्यनुवर्तते। एतश्च इच्चेति द्वन्द्वात्प्रथमाद्विवचनम्। रश्च थ् च तयोरिति द्वन्द्वः। रेफादकार उच्चारणार्थः। रेफाथकाराभ्यां प्राग्दिशीयं प्रकरणलभ्यं विशेष्यते। "यस्मिन्विधि"रिति तदादिविधिः। तदाह--इदंशब्दस्येत्यादिना। तत्र रेफादौ परे एतः, थादौ तु इदिति यथासङ्ख्यं बोध्यम्। एतर्हि। इत्थम्।

---

सूत्रम्

काशिका-वृत्तिः

एतदो ऽश् ५।३।५

प्राग्दिशः इत्येव। एतदः प्राग्दिशीये परतः अशित्ययम् आदेशो भवति। शकारः सर्वादेशार्थः। अतः। अत्र। एतदः इति योगविभागः कर्तव्यः। एतदो रथोः परत एत इतित्येतावादेशौ भवतः। एतर्हि। इत्थम् रेफादेः अनद्यतने र्हिलन्यतरस्याम् ५।३।२१ इति विद्यत एव। थमुप्रत्ययः पुनरेतद उपसङ्ख्येयः।

लघु-सिद्धान्त-कौमुदी

एतदः १२१७, ५।३।५

एत इत् एतौ स्तौ रेफादौ थादौ च प्राग्दिशीये। एतस्मिन् काले एतर्हि॥

न्यासः

एतदोऽश्?। , ५।३।५

"शकारः सर्वादेशार्थः" इति। ननु चान्त्यस्य स भवन्? यदि तावदकृते त्यदाद्यत्वे भवति ततो दकारस्य भवन्ननर्थकः प्रसज्येत, त्यदाद्यत्वेनापि हि तस्याकारो लभ्यत एव; अथ त्यदाद्यत्वे कृतेऽकारस्य स्थाने भवन्ननर्थक एव प्रसज्यते न ह्रकारस्याकारवचने प्रयोजनमस्ति, कृतवांश्च; तत्र वचनादसत्यपि शकारे सर्वादेशो भविष्यति? नैतदस्ति; अस्ति ह्रकारस्याकारवचने प्रयोजनम्()। किम्()? अतः, अत्रेत्यत्र योऽन्यः प्राप्नोति स मा भृदिति। कः पुनरसौ? लिति प्रत्ययात्? पूर्वस्योदात्तः। तस्माच्छकारः कत्र्तव्यः। "थमुः [थमुप्रत्ययः पुनरेतद उपसंख्येयः---काशिका] पुनरुपसंख्येयः" इति। तस्याविद्यमानत्वत्()। उपसंख्येय इति प्रतिपाद्य इत्यर्थः। तत्रेदं प्रतिपादनम्()--एत एव थकारादावादेशवचनं ज्ञापयति--भवत्येतदस्थमुरिति। कुतो नु खल्वेतत्()? ज्ञापकात्()। थमु भैविष्यति, न पुनर्थं एवासौ "प्रकारवचने थाल्()" (५।३।२३) इत्यविशेषविहितस्थकारादिस्तस्मिन्नेवादेशः स्यात्? नैष दोषः; इदमस्थकारादिविशेष इष्यते। "एतदः" इत्यत्त्रापि ह्रेदम इत्यनुवत्र्तते, तच्च नादेशविधानार्थम्(); आदेशस्य पूर्वमेव विहितत्वात्()। तस्मात्? प्रत्यविशेषणं विज्ञायते। तत एतेन थकारादि विशेषयिष्यामः--इदम इत्येवं यो विहित इदंशब्देनैव यो विहितस्थकारादिरिति, थमुरेव चैवं विहितः, न थालिति युक्तमुक्तमादेशवचनं ज्ञापयति--भवत्येवैतदस्थमुरिति॥

बाल-मनोरमा

एतदोऽन् १९२६, ५।३।५

एतदोऽन्। प्राग्दिशीये प्रत्यये परे एतच्छब्दस्य अन्स्यादित्यर्थः प्रतीयते, एवं सति एतच्छब्दस्य अनेव स्यात्, नत्वेतेतौ। तत्राह--योगविभाग इति। एतद इति। प्रथमसूत्रमिदम्। तस्य शेषपूरणम् "एतेतौ रथोः" इति। एतच्छब्दस्य एतेतौ स्तो रेफथकारादौ प्रत्यये परे इत्यर्थः। एतर्हि, इत्थमित्युदाहरणम्। अन्निति। द्वितीयं सूत्रम्।एतद इत्येवेति रथोरिति तु

नानुवर्तते इति भावः। तथाच "एतद" इत्यस्य अन्स्यात्प्राग्दिशीये परे इत्यर्थः फलति। अतः, अत्र इत्युदाहरणम्। ननु अनादेशे नकारस्य इत्संज्ञायामकारोऽन्तादेशः स्यादित्यत आह--अनेकाल्त्वादिति। नकारस्य प्रयोजनाऽभावान्नेत्संज्ञा, नित्स्वरस्य प्रत्ययविषयत्वादिति भावः। तर्हि "अत" इत्यादौ नकारस्य श्रवणं स्यादित्यत आह--नलोप इति।

तत्त्व-बोधिनी

एतदोऽन् १४७२, ५।३।५

एतदोऽन्। भाष्यारूढोऽयं पाठः। वृत्तिकारस्तु "एतदो"ऽशिति पठित्वा शकारः सर्वादेशार्थ इत्याह। अनिति। प्राग्दिशीये परे अन्स्यात्। अनेकाल्वादिति। नित्करणस्य प्रयोजनं नास्ति, प्रत्ययनित्त्वस्यैव स्वरार्थत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सर्वस्य सो ऽन्यतरस्यां दि ५।३।६

सर्वस्य स इत्ययम् आदेशो भवति प्राग्दिशीये दकारादौ प्रत्यये परतो ऽन्यतरस्याम्। सर्वदा। सदा। प्राग्दिशीये इत्येव, सर्वं ददाति इति सर्वदा ब्राह्मणी।

लघु-सिद्धान्त-कौमुदी

सर्वस्य सोऽन्यतरस्यां दि १२१३, ५।३।६

दादौ प्राग्दिशीये सर्वस्य सो वा स्यात्। सर्वस्मिन् काले सदा सर्वदा। अन्यदा। कदा। यदा। तदा। काले किम्? सर्वत्र देशे॥

न्यासः

सर्वस्य सोऽन्यतरस्यां दि। , ५।३।६

"दीति" दकारादियं सप्तमी। तत्र दकारमात्रस्य प्राग्दिशीयस्याभावात्? "यस्मिन्विधिस्तदादावल्ग्रहणे" (वा। १४) इत्यतो दकारादौ विधिर्ज्ञायत इत्याह--"प्राग्दिशीये दकारादौ" इत्यादि। "सर्वदा ब्राआह्मआणी" इति। "आतोऽनुपसर्गे कः" ३।२।३, ततष्टाप्()॥

बाल-मनोरमा

आत्मनश्च ९४८, ५।३।६

तत्रात्मनश्चेत्यंशं व्याक्यातु पृथगुपादत्ते--आत्मनश्चेति। चकारात्तृतीयाया अलुगिति चानुकृष्यत इत्याह--आत्मनस्तृतीयाया अलुगिति। "उत्तरपदे परे" इति शेषः। पूरण इति वक्तव्यमिति। नाऽत्र पूरणशब्दो गृह्रते, किंतु स्वरितत्वबलेन पूरणाधिकारविहितप्रत्ययग्रहणात् "प्रत्ययग्रहणे" इति तदन्तविधिरित्यभिप्रेत्याह--पूरणप्रत्ययान्ते इति। आत्मनापञ्चम इति आत्मा पञ्चम इत्यर्थः। प्रकृत्यादित्वात्प्रथमार्थे तृतीया। यद्वा आत्मकृतपञ्चमत्ववानित्यर्थः। करणे तृतीया। करोतिक्रियान्तर्भावेण तस्याः "तृतीया तत्कृते"ति समासः। पक्षद्वयमपीदं भाष्ये स्थितम्। ननु सङ्खर्षणप्रद्युम्नाऽनिरुद्धास्त्रयो विष्णुव्यूहाः। जनार्दनस्तु एषां नियन्तेति विष्णुपुराणादौ स्थितम्। तत्रेदमाहुः पौराणिकाः--"जनार्दनस्त्वात्मचतुर्थ एवे"ति। तत्र तृतीयाया अलुकि "आत्मनाचतुर्थ" इति भवितव्यमित्यत आह--जनार्दनास्त्विवति। बहुव्रीहिरिति। आत्मा चतुर्थो यस्येति विग्रहे बहुव्रीहिरित्यर्थः। एकस्याप्यौपाधिकभेदं परिकल्प्य वृत्तिपदार्थत्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः। तदिदं भाष्ये स्पष्टम्।

बाल-मनोरमा

सर्वस्य सोऽन्यतरस्यां दि १९२७, ५।३।६

सर्वस्य सो। "दि" इति सप्तम्येकवचनं प्राग्दिशीयविशेषणम्। "यस्मिन्विधि"रिति तदादिविधिः। तदाह--प्राग्दिशीये दकाराविति। सदा इत्युदाहरणम्।

तत्त्व-बोधिनी

आत्मनश्च ८१९, ५।३।६

आत्मनापञ्चम इति। तृतीयेति योगविभागात्समासः। इह प्रकृत्यादित्वात्प्रथमार्थे तृतीयेत्येके। आत्मना कृतः पञ्चमः इति करोतिक्रियापेक्षा सेत्यन्ये।

पूरण इति वक्तव्यम्। बहुव्रीहर्बोध्य इति। एकस्याप्यौपाधिकभेदं परिकल्प्य वर्तिपदार्थत्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पञ्चम्यास् तसिल् ५।३।७

पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यः तसिल् प्रत्ययो भवति। कुतः। यतः। ततः। बहुतः।

लघु-सिद्धान्त-कौमुदी

पञ्चम्यास्तसिल् १२०२, ५।३।७

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात्॥

न्यासः

पञ्चम्यास्तसिल्?। , ५।३।७

"तसिल प्रत्ययो भवति" इति। आदेशा एवामी तसिलादयः पञ्चम्यादीनां स्थाने कस्मात्र क्रियन्ते, एवं हि विभक्तितसंज्ञा न कत्र्तव्या भवति? अशक्या एत आदेशाः कर्तुम्(); आदेशत्वे ह्येषामव्यायात्? त्यपि ४।२।१०३--ततस्त्यः, यतस्त्य इत्यत्र "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति लुक्()। लभन्ते हि स्थानिवद्भावेन सुबादेशाः सुबाश्रयं कार्यम्()। तत इति, "अनुदात्तौ सुप्पितौ" ३।१।४ इत्यनुदात्तः। कुत इति, "धेङिति" ७।३।१११ इति गुणः। एतर्हीति, "सुपि च" ७।३।१०२ इति दीर्घः। तत्रेति, "बहुवचनेझल्येत्? ७।३।१०३ इत्येत्वम्()। कुत्रेति, "अच्च घेः" ७।३।११८ इत्यौत्वम्()। ततः, तत्रेति, "ङसिङ्योः स्मात्स्मिनौ" ७।१।१५ इति स्मात्स्मिनौ। तस्मान्नादेशा अमी क्रियन्ते। यद्येवम्(), "तसु उपक्षये" (धा। पा। १२१२) इत्यस्मात्? तस्यन्नित्यत्र धातुरूपस्य पञ्चम्याः परस्य "तसेश्च" (५।३।८) इति तसिलादेशः प्राप्नोति? नैष दोषः; स्वार्थिकविज्ञानान्न भविष्यति। स्वार्थिका ह्येते तसिलादयः, तन्मध्ये तसिलादेशो विधीयमानस्तथा विज्ञायते यथा स्वार्थे क्रियामाणः, स्वार्थिकत्वं नातिक्रामति। "अपादाने चाहीयरूहोः" ५।४।४५ इत्यनेन विहितस्तस्य स्व#आर्थिकस्य साथाने भवंस्तसिलपि स्वार्थिक एव भवति। धातुस्तु प्रातिपदिकादर्थान्तरे वत्र्तत इति तदादेशो भवंस्तसिल्? स्वार्थिको न भवति॥

बाल-मनोरमा

पञ्चम्यास्तसिल् १९२८, ५।३।७

तदेव तसिलादिप्रत्ययेषु प्राग्दिशीयेषु परेषु कतिपयान् आदेशान्विधाय तसिलादिप्रत्ययान्वक्तुमुपक्रमते--पञ्चम्यास्तसिल्। किमादिभ्य इति किंसर्वनामबहुभ्य इत्यर्थः। वा स्यादिति। "समर्थाना"मित्यतो वाग्रहणस्याऽनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तसेश् च ५।३।८

प्रतियोगे पञ्चम्यास् तसिः ५।४।४४ , अपादाने च अहीयरुहोः ५।४।४५ इति वक्ष्यति। तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति। कुत आगतः। यतः। ततः। बहुत आगतः। तसेस् तसिल्वचनं स्वरार्थं विभक्त्यर्थं च।

न्यासः

तसेश्च। , ५।३।८

"कुत आगत" इति। "अपादाने चाहीयरुहोः" (५।४।४५) इति परत्वात्? तसौ कृते तस्यानेन तसिल्()। ननु च कृतेऽपि तसिलि तदेव रूपम्(), तत्किमर्थमादिश्यते? इत्याह--"तसेस्तसिल्ववचनम्()" इत्यादि॥

बाल-मनोरमा

तसेश्च १९३०, ५।३।८

तसेश्च। परस्य तसेरिति। "प्रतियोगे पञ्चम्यास्तसिः" "अपादाने चाहीयरुहो"रिति वक्ष्यमाणस्य तसेरित्यर्थः। ननु तसेस्तसिल्किमर्थमित्यत आह--स्वराथमिति। लित्स्वरार्थमित्यर्थः। विभक्त्यर्थमिति। विभक्तिनिमित्तकत्यदाद्यत्वार्थमित्यर्थः। अन्यथा परत्वात्तसौ कृते तस्य अप्राग्दिशीयत्वाद्विभक्तित्वाऽभावात्त्यदाद्यत्वादिकं न स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

पर्यभिभ्यां च ५।३।९

परि अभि इत्येताभ्यां तसिल् प्रत्ययो भवति। सर्वोभयार्थे वर्तमानाभ्यां प्रत्यय इष्यते। परितः। सर्वतः इत्यर्थः। अभितः। उभयतः इत्यर्थः।

लघु-सिद्धान्त-कौमुदी

पर्यभिभ्यां च १२०६, ५।३।९

आभ्यां तसिल् स्यात्। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः॥

न्यासः

पर्यभिभ्याञ्च। , ५।३।९

"सर्वोभयार्ते वत्र्तमानाभ्यामिष्यते" इति। तेनेह न भवति--परिषिञ्चिति, अभियातीति। अत्र चानभिदानं हेतुः।य अत

वा--"सर्वस्य" ५।३।६ इत्यादेः सूत्रादन्यतरस्यांग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेन सर्वोभयार्थं एव वत्र्तमानाभ्यां भवति, नान्यत्र॥

बाल-मनोरमा

पर्यभिभ्यां च १९३१, ५।३।९

पर्यभिभ्यां च।

सर्वोभयार्थाभ्यामेवेति। वार्तिकमिदम्। परिषिञ्चति अबिषिञ्चतीत्यादौ वाग्रहणात्पक्षे न तसिल्।

---

सूत्रम्

काशिका-वृत्तिः

सप्तम्यास् त्रल् ५।३।१०

किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति। कुत्र। यत्र। तत्र। बहुत्र।

लघु-सिद्धान्त-कौमुदी

सप्तम्यास्त्रल् १२०७, ५।३।१०

कुत्र। यत्र। तत्र। बहुत्र॥

न्यासः

सप्तम्यास्त्रल्?। , ५।३।१०

बाल-मनोरमा

सप्तम्यास्त्रल् १९३२, ५।३।१०

सप्तम्यास्त्रल्। किमादिभ्यः सप्तम्यन्तेभ्योऽद्व्यादिभ्यस्त्रलित्यर्थः। "कुत्रे"त्यादिरूपाणि "कुत" इत्यादिवत्।

तत्त्व-बोधिनी

सप्तम्यास्त्रल् १४७४, ५।३।१०

सप्तम्यास्त्रल्। इह त्रल्तसिलौ स्वतन्त्रौ प्रत्ययौ, न तु सप्तमी प()?चम्योरादेशौ। तेन कुत्र बहुत्र कुतः बहुत इत्यादौ "अच्च घेः" "घेर्ङिती"त्यादिकं नेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

इदमो हः ५।३।११

इदमः सप्तम्यन्ताद् हःप्रत्ययो भवति। त्रलो ऽपवादः। इह।

लघु-सिद्धान्त-कौमुदी

इदमो हः १२०८, ५।३।११

त्रलोऽपवादः। इह॥

न्यासः

इदमो हः। , ५।३।११

बाल-मनोरमा

इदमो हः १९३३, ५।३।११

इदमो हः। इदंशब्दात्सप्तम्यन्तात् हप्रत्ययः स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

किमो ऽत् ५।३।१२

किमः सप्तम्यन्तादत् प्रत्ययो भवति। त्रलो ऽपवादः। क्व भोक्ष्यसे। क्वाध्येष्यसे। त्रलम् अपि केचिदिच्छन्ति कुत्र। तत्कथम्? उत्तरसूत्राद् वावचनं पुरस्तादपकृष्यते।

लघु-सिद्धान्त-कौमुदी

किमोऽत् १२०९, ५।३।१२

वाग्रहणमपकृष्यते। सप्तम्यन्तात्किमोऽद्वा स्यात् पक्षे त्रल्॥

न्यासः

किमोऽत्?। , ५।३।१२

"क्व" इति। "क्वाति" ७।२।१०५ इति किमः क्वादेशः "न विभक्तौ तुस्माः १।३।४ इति प्रतिषेधस्य "इवमस्थमुः" ५।३।२४) इत्युकारेणानित्यत्वस्य ज्ञपितत्वादित्संज्ञा तकारस्य। दानीमस्तु प्रतिषेधान्नास्तीत्संज्ञा; प्रयोजनाभावाच्च॥

बाल-मनोरमा

किमोऽत् १९३४, ५।३।१२

किमोऽत्। अपकृष्यत इति। "वा ह च छन्दसी"त्युत्तरसूत्रादिति शेषः। अपकर्षे व्याख्यानमेव शरणम्। अत्प्रत्यये तकार इत्। "न विभक्ता"विति निषेधस्तु न भवति, "तवर्गस्येत्त्वप्रतिषेधोऽतद्धिते" इति वार्तिकात्।

तत्त्व-बोधिनी

किमोऽत् १४७५, ५।३।१२

किमोऽत्। "न विभक्तौ तुस्माः"इतिनिषेधोऽत्र न प्रवर्तते, थमोरुकारेण मकारपरित्राणार्थेनाऽनित्यताज्ञापनात्। वाग्रहणमिति। "किमोऽद्वा"इति सूत्रं पठित्वा "ह च छन्दसी"ति सूत्रयितुं युक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

वा ह च च्छन्दसि ५।३।१३

किमः सप्तम्यनताद् वा हः प्रत्ययो भवति छन्दसि विसये। यथाप्राप्तं च। क्व। कुह। कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः।

न्यासः

वा ह च च्छन्दसि। , ५।३।१३

बाल-मनोरमा

वा ह च च्छन्दसि १९३६, ५।३।१३

वाह च छन्दसि। "हे"ति लुप्तप्रथमाकम्। किमः सप्तम्यन्तात् हप्रत्ययः, स्यादित्यर्थः। चादत्, त्रल्च। यद्यपि वैदिकप्रक्रियायामिदमुपन्यसनीयं, तथापि वाग्रहणस्य पूर्वसूत्रेऽपकर्षज्ञानायाऽत्र तदुपन्यासः।

तत्त्व-बोधिनी

वा ह चच्छन्दसि १४७७, ५।३।१३

वा ह च छन्दसि। पूर्वोक्तस्य वाग्रहणापकर्षणस्य स्फुटीकरणार्थमिदमुपन्यस्तम्। अत इति। एतस्माद्ग्रामादित्यर्थः।

दृशिग्रहणाद्भवदीदियोग एव। तत्रभवन्तमिति। ततो भवता तत्र भवता। ततो भवते थत्रभवते इत्यादि। एवमिति। ततो दीर्घायुस्तत्र दीर्घायुरित्याद्यूह्यमित्यर्थः। सदेति। "सर्वस्य सोऽन्यतरस्यां दी"ति सभावः। कदेति। "किमः कः"।

---

सूत्रम्

काशिका-वृत्तिः

इतराभ्द्यो ऽपि दृश्यन्ते ५।३।१४

सप्तमीपञ्चम्यपेक्षम् इतरत्वम्। इतराभ्यो विभक्तिभ्यस् तसिलादयो दृश्यन्ते। दृशिग्रहणम् प्रायिकविध्यर्थं, तेन भवदादिभिर् योग एव एतद् विधानम्। के पुनर् भवदादयः? भवान् दीर्घायुरायुष्मान् देवानां प्रियः इति। स भवान्, ततो भवान्, तत्र भवान्। तं भवन्तं, तत्र भवन्तम्, ततो भवन्तम्। तेन भवता, तत्र भवता, ततो भवता। तस्मै भवते, तत्र भवते, ततो भवते। तस्माद् भवतः, तत्र भवतः , ततो भवतः। तस्मिन् भवति, तत्र भवति, ततो भवति। एवं दीर्घयुःप्रभृतिष्वप्युदाहार्यम्।

लघु-सिद्धान्त-कौमुदी

इतराभ्योऽपि दृश्यन्ते १२११, ५।३।१४

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रहणाद्भवदादियोग एव। स भवान्। ततो भवान्। तत्र भवान्। तम्भवन्तम्। ततो भवन्तम्। तत्र भवन्तम्। एवं दीर्घायुः, देवानाम्प्रियः, आयुष्मान्॥

न्यासः

इतराभ्योऽपि दृश्यन्ते। , ५।३।१४

"पञ्चमीसप्तम्यपेक्षमितरत्वम्()" इति। तदनन्तरमितरशब्दस्य ज्ञातत्वात्()। अथ दृशिग्रहणं किमर्थम्(), यावता "इतराभ्योऽपि" इत्येतावतैव सिद्धम्()? इत्याह--"दृशिग्रहणम्()" इत्यादि। प्रायिको विधिर्यता स्यादित्येवमर्थं वृशिग्रहणम्()। तस्मिस्तु सति शिष्टप्रयोगेऽनुगम्यमाने यत्र दृश्यते तत्र भवति, नान्यत्रेत्येषोऽर्थो लभ्यते। तेन प्रायिकत्वं

विधेः सिध्यति। "तेन" इत्यादि। दृशिग्रहणे तु सति यत्रेतराभ्यः शिष्टप्रयोगो दृश्यते ताभ्य एव तसिलादिभिर्भवितव्यम्()। भवदादियोग एवेतराभ्यो दृश्यन्ते, तेनेतरत्रैव तद्विधानम्()। यदि ह्यन्येभ्योऽपि तसिलादयो भवन्ति, पूर्वं पञ्चमीसप्तमीभ्यां विधानमनर्थकम्()? नैतदस्ति; नियोगतो हि ताभ्यामिष्यते, इतराभ्यो भवदादियोगे। एतच्च पूर्वस्मिन्? विधावस्मिंश्च सत्युभयं लभ्यत इति कुत आनर्थक्यम्()!॥

बाल-मनोरमा

इतराभ्योऽपि दृश्यन्ते १९३८, ५।३।१४

इतराभ्यो।त्रपि दृश्यन्ते। पञ्चमीसप्तमीतरविभक्तिभ्योऽपीत्यर्थः। फलितमाह--पञ्चमीसप्तमीतरविभक्त्यन्तादपीति। "किमादे"रिति शेषः। एवमिति। स दीर्घायुः, ततो दीर्घायुः, तत्र दीर्घायुरित्याद्यूह्यमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सर्वएकान्यकिंयत्तदः काले दा ५।३।१५

सप्तम्याः इति वर्तते, न तु इतराभ्यः इति। सर्वादिभ्यः प्रातिपदिकेभ्यो दा प्रत्ययो भवति। त्रलो ऽपवादः। सर्वस्मिन् काले सर्वदा। एकदा। अन्यदा। कदा। यदा। तदा। काले इति किम्? सर्वत्र देशे।

लघु-सिद्धान्त-कौमुदी

सर्वैकान्यकिंयत्तदः काले दा १२१२, ५।३।१५

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात्॥

न्यासः

सर्वैकान्यकिंयत्तदः काले दा। , ५।३।१५

"सप्तम्या इत्यनुवत्र्तते" इति। तस्याः स्वरितत्वात्()। "न त्वितराभ्यः" इति। तद्विफर्ययात्()। "त्रलादेरपवादः" इति। यतासम्भवम्()। तत्र किंशब्दात्? "किमोऽत्()" ५।३।१२ इति प्राप्तस्यात्प्रत्ययस्यापवादः। केषाञ्चिन्मतेन तरलोऽपि। तच्छब्दादपि "तयोदर्दाहिलौ च च्छन्दसि" ५।३।२० इति। शेषेभ्यस्तु त्रलः। "कदा" इति। किमः कादेशः॥

बाल-मनोरमा

सर्वैकान्यकिंयत्तदः काले दा १९३९, ५।३।१५

सर्वैकान्य। सप्तम्यन्तेभ्य इति। "सर्वादिभ्य" इति शेषः। "सप्तम्या" इत्येवानुवर्तते, व्याख्यानादिति भावः। सदा सर्वदेति। "सर्वस्य सोऽन्यतरस्यां दी"ति सभावविकल्पः। कदेति। किंशब्दाद्दाप्रत्यये सति तस्य "किमः कः" इति कादेशः।

---

सूत्रम्

काशिका-वृत्तिः

इदमो र्हिल् ५।३।१६

सप्तम्याः इत्येव, काले इति च। इदमः सप्तम्यन्तात् काले वर्तमानात् र्हिल् प्रत्ययो भवति। हस्य अपवादः। लकारः स्वरार्थः। अस्मिन् काले एतर्हि। काले इत्येव, इह देशे।

लघु-सिद्धान्त-कौमुदी

इदमो र्हिल् १२१४, ५।३।१६

सप्तम्यन्तात् काल इत्येव॥

न्यासः

इदमो हिल्?। , ५।३।१६

"हस्यापवादः" इति। "इदमो हः" ५।३।११ इति प्राप्तस्य। "लकारः स्वरार्थः" इति। "लिति"(६।१।१९३) प्रत्ययात्? पूर्वस्योदात्तत्वं यथा स्यात्()। ननु च यथा इत इत्यत्र--"ऊडिदम्()" ६।१।१६५ इत्यादिना विभक्तिस्वरो भवति, तथेहापि तेनैव भवितव्यम्()? नैतदस्ति; तथा हि युक्तमित इत्यत्र यद्विभक्तिस्वरो भवतीति; तसिलो लित्वस्य परितः, अभित इत्यतर चरितार्थत्वात्(), अस्य तु हिलो लित्करणमकृतार्थम्()। तद्यदि विभक्तिस्वरेम बाध्येत तस्यानर्थक्यं स्यात्()। तस्माल्लित्स्वर एव भवति॥

बाल-मनोरमा

इदमो र्हिल् १९४०, ५।३।१६

इदमो र्हिल्। इदमः--र्हिल् इति च्छेदः। एतर्हीति। इदम्()शब्दात् र्हिल्। "एतेतौ रथो"रित्येतादेशः।

तत्त्व-बोधिनी

इदमो र्हिल् १४७८, ५।३।१६

एतर्हीति। "एततौ रथोः"एत्येतादेशः।

---

सूत्रम्

काशिका-वृत्तिः

अधुना ५।३।१७

अधुना इति निपात्यते। इदमो ऽश्भावो धुना च प्रत्ययः। अस्मिन् काले अधुना।

न्यासः

अधुना। , ५।३।१७

बाल-मनोरमा

अधुना १९४१, ५।३।१७

अधुना। "इदम" इति, सप्तम्या" इति, "काले" इति चानुवर्तते। तदाह--इदम इति। इशिति। "इदम इ" शित्यनेने"ति शेषः। अधुनेति। "इय"दितिवत्प्रत्ययमात्रं शिष्यते। पठन्ति चाभियुक्ताः "उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ, गतवति विलयं च प्राकृते।ऽपि प्रपञ्चे। सपदि पदमुदीतं केवलः प्रत्ययो यत् तदियदिति मिमीते कोऽधुना पण्डितोऽपि?।" इति वैयाकरणीमौपनिषदीं च प्रक्रियामाश्रित्य प्रवृत्तो द्व्यर्थोऽयं श्लोकः।

तत्त्व-बोधिनी

अधुना १४७९, ५।३।१७

अधुनाप्रत्यय इति। निपातनान्मध्योदात्तोऽयम्। भाष्यमतं चेदम्। वृत्तिकारस्त्वाह---इदमो अश्भावो धुना च प्रत्यय इति। तत्र "ऊडिद"मित्यादिना विभक्तितस्वरः, स च "आदेः परस्ये"त्यादेर्भवतीति हरदत्तः।

तदो दावचनमनर्थकं विहितत्वात्। दावचनमिति। "तदश्चे

"त्येव सूत्रं पठनीयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दानीं च ५।३।१८

इदमः सप्तम्यन्तात् काले वर्तमानाद् दानीं प्रत्ययो भवति। अस्मिन् काले इदानीम्।

न्यासः

दानीञ्च। , ५।३।१८

दानीञ्चेति योगविभाग उत्तरार्थः--"तदो दा च" ५।३।१९ इत्यत्र दानीमेव यथा स्यात्(), पूर्वसूत्रविहितः प्रत्ययो मा भूदिति॥

बाल-मनोरमा

दानीं च १९४२, ५।३।१८

दानीं च। इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थे दानीमिति च प्रत्ययः स्यादित्यर्थः। इदानीमिति। इदंशब्दाद्दानींप्रत्ययः, इश्।

---

सूत्रम्

काशिका-वृत्तिः

तदो दा च ५।३।१९

तदः सप्तम्यन्तात् काले वर्तमानाद् दा प्रत्ययो भवति, चकाराद् दानीं च। तस्मिन् काले तदा, तदानीम्। तदो दावचनम् अनर्थकं, विहितत्वात्।

न्यासः

तदो दा च। , ५।३।१९

"अनर्थकम्()" इति। वैचित्र्यार्थम्()। अन्यस्याभावादनर्थकं वैचित्र्येण सार्थकमेव। "विहितत्वात्()" इति। "सर्वैकान्य" ५।३।१५ इत्यादिना॥

बाल-मनोरमा

तदो दा च १९४३, ५।३।१९

तदो दा च। सप्तम्यन्तात्कालवृत्तेस्तच्छब्दाद्दाप्रत्ययः, दानींप्रत्ययश्च स्यादित्यर्थः।

तदो दावचनमिति। वार्तिकमिदम्। विहितत्वादिति। "सर्वैकान्ये"त्यनेने"ति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

तयोर् दार्हिलौ च छन्दसि ५।३।२०

तयोः इति प्रातिपदिकनिर्देशः। तयोरिदमः तदश्च यथासङ्ख्यं दार्हिलौ प्रत्ययौ भवतश् छन्दसि विषये। चकाराद् यथाप्राप्तं च। इदावत्सरीयः। इदं तर्हि। इदानीम्। तदानीम्।

न्यासः

तयोर्दार्हिलौ च च्छन्दसि। , ५।३।२०

"इदा"। "इदम इश्()" ५।३।३। तथा वर्णव्यत्ययेन दकारस्य धकारः। "इदानीं, तदानीं इति। दानीम्प्रत्ययस्योदाहरणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अनद्यतने र्हिलन्यतरस्याम् ५।३।२१

छन्दसि इति न स्वर्यते। सामान्येन विधानम्। किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः अनद्यतने कालविशेषे वर्तमानेभ्यः र्हिल् प्रत्ययो भवत्यन्तरस्याम्। कर्हि, कदा। यर्हि, यदा। तर्हि, तदा।

लघु-सिद्धान्त-कौमुदी

अनद्यतने र्हिलन्यतरस्याम् १२१६, ५।३।२१

कर्हि, कदा। यर्हि, यदा। तर्हि, तदा॥

न्यासः

अनद्यतने र्हिलन्यतरस्याम्?। , ५।३।२१

तसिलादिषु प्राप्तेषु हिल्प्रत्ययो विधीयते। "कहि" इति। "किमः कः" ७।२।१०३। "कदा, यदा, तदा" इति। "सर्वैकान्यकियत्तदः काले दा" ५।३।१५॥

बाल-मनोरमा

अनद्यतने र्हिलन्यतरस्याम् १९४४, ५।३।२१

अनद्यतने र्हिल्। अनद्यतनकालवृत्तिभ्यः किमादिभ्यः सप्तम्यन्तेभ्यः र्हिल्प्रत्ययो वा स्यादित्यर्थः। पक्षे दाप्रत्ययः। एतर्हीति। एतच्छब्दात् र्हिल्। "एतद" इति योगविभागाद्रेफादौ एतादेशः।

तत्त्व-बोधिनी

अनद्यतने र्हिलन्यतरस्याम् १४८०, ५।३।२१

एतस्मिन्काले एतर्हीति। "एतदः"इति योगविबागाद्रेफादावेतादेशः।

---

सूत्रम्

काशिका-वृत्तिः

सद्यः परुत् परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ५।३।२२

स्सम्याः इति काले इति च वर्तते। सद्यःप्रभृतयः शब्दाः निपात्यन्ते। प्रकृतिः, प्रत्ययः, आदेशः, कालविशेषः इति सर्वम् एतन् निपातनाल् लभ्यते। समानस्य सभावो निपात्यते द्यश्च प्रत्ययः अहन्यभिधेये। समाने ऽहनि सद्यः। पूर्वपूर्वतरयोः परभावो निपात्यते उदारी च प्रत्ययौ संवत्सरे ऽभिधेये। पूर्वस्मिन् संवत्सरे परुत्। पूर्वतरे संवत्सरे परारी। इदम इश्भावः समसण् प्रत्ययः निपात्यते संवत्सरे ऽभिधेये। अस्मिन् संवत्सरे ऐषमः। परस्मादेद्यवि प्रत्ययो ऽहनि। परस्मिन्नहनि परेद्यवि। इदमो ऽश्भावो द्यश्च प्रत्ययो ऽहनि। अस्मिन्नहनि अद्य। पूर्वान्य। अन्यतरैतरापराद्धरौभयौत्तरेभ्य एद्युस् प्रत्ययो निपात्यते अहन्यभिधेये। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्युः। इतरस्मिन्नहनि इतरेद्युः। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनि अधरेद्युः। उभयोरह्नोः उभयेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः। द्युश्च उभयाद् वक्तव्यः। उभयद्युः।

न्यासः

सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्यरपरेद्युरधरेद्युरुभयेद्युरुत्तेरद्युः। , ५।३।२२

"समानेऽहनि सद्यः" इति। निमित्तनिमित्तिनोः समाने साधारणेऽहनि निपातनमेतत्()। तद्यथा--सद्यः प्राणहरणं मर्मणि ताडनमिति। यस्मिन्नेवाहनि मर्मणि ताडनं तस्मिन्नेवाहनि प्राणरणमित्यर्थः। "उदारी च" इति। उच्च आरिश्चेति उदारी। "परस्मादेद्यवि" इति। परशब्दादेद्यविप्रत्ययो भवत्यहन्यभिधेये॥

बाल-मनोरमा

सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः १९४५, ५।३।२२

सद्यःपरुत्।

"समानस्य सभावो द्यश्चाहनी"ति भाष्यवाक्यमिदम्। अहर्वृत्तेः समानशब्दात्सप्तम्यन्तात् द्यस्प्रत्ययः, समानस्य सभावश्च निपात्यत इत्यर्थः। सद्यः समानेऽहनीत्यर्थः।

"पूर्वपूर्वतरयोः परादेशः उदारी च संवत्सरे" इत्यपि भाष्यवाक्यम्। उच्च--आरिश्चेति द्वन्द्वः। सप्तम्यन्तादिमौ प्रत्ययौ संवत्सरे अभिधेये।

"इदम इश् समसण्" इत्यपि भाष्यवाक्यम्। ऐषम इति। समसणि णकार इत्, सकारादकार उच्चारणार्थः। णित्त्वादादिवृद्धिः।

"परस्मादेद्यव्यहनी"त्यपि भाष्यवाक्यम्। सप्तम्यन्तादेद्यविरिकारान्तः प्रत्ययः।

"इदमोऽश्()भावो द्यश्चे"त्यपि भाष्यवाक्यम्। सप्तम्यन्तादकारान्तो द्यप्रत्ययः। "पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् चे"त्यपि भाष्यवाक्यम्।

तत्त्व-बोधिनी

सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः १४८१, ५।३।२२

सद्यः परुत्। निपातनाद्विषयविशेषो लभ्यत इत्याह----अहनीति। सप्तम्यन्तस्याऽहन्शब्दस्यार्थे इत्यर्थः।

समानस्य सभावो द्यश्चाऽहनि। समानेऽहनीति। पर उदारीचेति। "पर"इत्यादेशः, उदारी प्रत्ययौ।

सूत्रम्

काशिका-वृत्तिः

प्रकारवचने थाल् ५।३।२३

किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः ५।३।२ इति वर्तते। सप्तम्याः इति काले इति च निवृत्तम्। सामान्यस्य भेदकः विशेषः प्रकारः। प्रकृत्यर्थविशेषणं च एतत्। प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति। तेन प्रकारेण तथा। यथा। सर्वथा। जातीयरो ऽपीदृशम् एव लक्षणम्। स तु स्वभावात् प्रकारवति वर्तते, थाल् पुनः प्रकारमात्रे।

लघु-सिद्धान्त-कौमुदी

प्रकारवचने थाल् १२१८, ५।३।२३

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे। तेन प्रकारेण तथा। यथा॥

न्यासः

प्रकारवचने थाल्?। , ५।३।२३

"सामान्यस्य ["सायास्य विशेषो भेदकः=प्रकारः"-काशिका]

बाल-मनोरमा

प्रकारवचने थाल् १९४६, ५।३।२३

प्रकारवचने थाल्। पञ्चम्यर्थे सप्तमीत्याह--प्रकारवृत्तिभ्य इति। सामान्यस्य भेदको विशेषः प्रकारः। यथा "बहुभिः प्रकारैर्भुङ्क्ते" इति। विशेषैरिति गम्यते। सादृश्यं त्विह न गृह्नते, सर्वथेत्यादौ तदप्रतीतेः। तेन प्रकारेणेत्यनन्तरं "विशिष्ट" इति शेषः। "यथा हरिस्तथा हरः" इत्यादौ यत्प्रकारवान्हरिस्तत्प्रकारवान्हर इति बोधे सति हरिसदृशो हर इति फलति। तदभिप्रायेण यथाशब्दस्य सादृश्यार्थकत्वोक्तिः।

तत्त्व-बोधिनी

प्रकारवचने थाल् १४८२, ५।३।२३

प्रकारवचने थाल्। सामान्यस्य भेदको विशेषः प्रकारः। यथा ब्राआह्णसामान्यस्य माठरकाठकादय इति हरदत्तः। यद्यपि "प्रकारे गुणवचनस्ये"त्यत्र सादृश्यं प्रकारस्तथापि नेह सादृश्यं गृह्नते, अनबिधानात्। "अव्ययं विभक्ती"ति सूत्रे सादृश्यमपि यथाशब्दार्थ इत्युक्तम्, इह तु केवलस्य थाल्प्रत्ययस्य सादृश्यं नाऽर्थः, किं तु प्रकार एवेत्युक्तमिति नास्ति पूर्वापरविरोध इति बोध्यम्। तेन प्रकारेण तथेति। प्रथमान्तात्तु न भवति---स प्रकारस्तथेति, अनभिधानादेवेति भावः। किंसर्वनामबहुभ्यो विशेषविहितेनापि थाला जातीर्न बाध्यते, अर्थभेदात्। प्रकारे हि थाल्। जातीयर्तु तद्वति, स्वभावात्। एवं च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयरं प्रयुञ्जते--तथाजातीयो यताजातीयोऽन्यथाजातीय इति।

एतदोऽपि वाच्यः। अनेन एतेन वेति। द्वितीयान्तादपि थमुर्भवत्येव, इममेतं वा प्रकारमापन्न इत्थम्भूतः। अत्र च "लक्षणेत्थम्भूताख्याने"त्यादिसौत्रप्रयोगे लिङ्गम्। एतेन कथम्भूतो व्याख्यातः। इत्थमिति। "एततौ रथो"रिति इदम इतादेशः। "एतदः"इति योगविभागादेतदोऽपि इतादेश इति भावः।

---

सूत्रम्

काशिका-वृत्तिः
इदमस् थमुः ५।३।२४

इदंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति। थालो ऽपवादः अनेन प्रकारेण इत्थम्। उकारो मकारपरित्राणार्थः।
लघु-सिद्धान्त-कौमुदी
इदमस्थमुः १२१९, ५।३।२४

थालोऽपवादः। (एतदोऽपि वाच्यः)। अनेन एतेन वा प्रकारेण इत्थम्॥
न्यासः
इदमस्थमुः। , ५।३।२४

बाल-मनोरमा
इदमस्थमुः १९४७, ५।३।२४

इदमस्थमुः। इदंशब्दात्प्रकारवृत्तेस्थमुप्रत्ययः स्यादित्यर्थः। प्रत्यये उकार उच्चारणार्थः। मकारस्य उपदेशेऽन्त्यत्वाऽभावान्नेत्त्वम्। यद्यपि "न विभक्तौ" इति निषेधादेव मस्येत्त्वं न भवति, ततापि तदनित्यत्वज्ञापनार्थं मकारोच्चारणमित्याहुः। इत्थमिति। "एतेतौ रथो"रिति प्रकृतेरिदम इदादेशः। एतच्छब्दात्थमुप्रत्यये तु "एतद" इति योगविभागादिदादेशः।

---

सूत्रम्
काशिका-वृत्तिः
किमश् च ५।३।२५

किंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति। केन प्रकारेण कथम्। योगविभागः उत्तरार्थः।
लघु-सिद्धान्त-कौमुदी
किमश्च १२२०, ५।३।२५

केन प्रकारेण कथम्॥
लघु-सिद्धान्त-कौमुदी
इति प्राग्दिशीयाः १४ १२२०, ५।३।२५

लघु-सिद्धान्त-कौमुदी
अथ प्रागिवीयाः १२२०, ५।३।२५

न्यासः
किमश्च। , ५।३।२५

"योगविभाग उत्तरार्थः" इति। "था हेतौ च" ५।३।२६ इति वक्ष्यति, स किम एव यथा स्यात्(), इदमो मा भूदिति॥
बाल-मनोरमा
किमश्च , ५।३।२५

किमश्च। "प्रकारवृत्तेस्थमु"रिति शेषः। कथमिति। "किमः कः" इति कादेशः।

**** इति बालमनोरमायाम् प्राग्दिशीयानां विभक्तिसंज्ञकानां पूर्णोऽवधिः। ****

अथ प्रागिवीयाः।

-----------

तत्त्व-बोधिनी

किमश्च १२३५, ५।३।२५

किमश्च। योगविबागः "था हेतौ च छन्दसी"त्युत्तरसूत्रे किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति।

इति तत्त्वबोधिन्याम प्राग्दिशीयानां पूर्णोऽवधिः।

---

सूत्रम्

काशिका-वृत्तिः

था हेतौ च च्छन्दसि ५।३।२६

किंशब्दाद् धेतौ वर्तमानात् था प्रत्ययो भवति, चकारात् प्रकारवचने छन्दसि विषये। हेतौ तावत् कथा ग्रामं न पृच्छसि। केन हेतुना न पृच्छसि इत्यर्थः। प्रकारवचने कथा देवा आसन् पुराविदः। विभक्तिसंज्ञायाः पूर्णो ऽवधिः।

न्यासः

था हेतौ च च्छन्दसि। , ५।३।२६

---

सूत्रम्

काशिका-वृत्तिः

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ५।३।२७

दिशां शब्दाः दिक्शब्दाः। तेभ्यो दिक्शब्देभ्यो दिग्देशकालेषु वर्तमानेभ्यः सप्तमी। पञ्चमीप्रथमान्तेभ्यः अस्तातिः प्रत्ययो भवति स्वार्थे। यथासङ्ख्यम् अत्र न इष्यते। पुरस्ताद् वसति। पुरस्तादागतः। पुरस्ताद् रमणीयम्। अधस्ताद् वसति। अधस्तादागतः। अधस्ताद् रमणीयम्। दिक्शब्देभ्यः इति किम्? ऐन्द्र्यां दिशि वसति। सप्तमीपञ्चमीप्रथमाभ्यः इति किम्? पूर्वं ग्रामं गतः। दिग्देशकालेसु इति किम्? पूर्वस्मिन् गुरौ वसति। इकारस्तकारपरित्राणार्थः।

न्यासः

दिक्शब्देभ्यःसप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः। , ५।३।२७

"दिग्देशकालेषु वर्त्तमानेभ्यः" इति। कथं पुनर्थे दिशां शब्दास्ते देशे काले वर्त्तन्ते? स्वभावात्()। यथैव हि ते दिश स्वबावादेव वर्त्तन्ते, न हेत्वन्तरात्(),; तथा देशकालयोरपि। यद्यवम्(), त्रिषु वर्त्तमानाः कथं दिशा व्यपदिश्यन्ते--दिक्शब्देभ्य इति? कथं तर्हि व्यपदेष्टव्यम्(), दिग्देशकालशब्देभ्य इति? नैतदस्ति; एवं हि व्यपदेशस्यैतत्? फलम्()--ऐन्द्र()आं दिशि निवसतीत्यत्र मा भूदिति। एतच्चान्यतमेनापि लभ्यत इत्यनेनैव व्यापदेशो युक्तः, येन

व्यपदेशाल्लधु सूत्रं भवति। दिशा च व्यपदेशे लघु भवति, दिक्शब्दस्याल्पाच्तरत्वादिति दिशां तेन व्यपदेशः। एवमपि दिक्शब्दस्य दिशि वृत्तेः विशेषणमयुक्तम्(), अवस्यं हि दिक्शब्दो दिशि वत्र्तते, तत्रैवं कत्र्तव्यम्()--देशकालयोरिति? नैतदस्ति; एवं ह्रु च्यमाने सत्युपलक्षणमेव हि दिक्शब्दः स्यात्(), प्रत्यस्तु देशकालवृत्तिभ्य एव स्यात्(), न दिग्वृत्तिभ्यः। दिग्ग्रहणे तु तेभ्योऽपि भवति। इह तिरुआओ विभक्तयः, त्रयश्चार्था दिगादयः, तत्र साम्याद्यथासंख्येन भवितव्यम्()--इति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तामपाकर्तुमाह--"यथासंख्यमत्र नेष्यते" इति। तत्कथमिहेकवचननिर्देशे कत्र्तव्ये बहुवचननिर्देशः? प्रत्येकं दिगादिवृत्तेर्बहुलविभक्त्यन्तात्? प्रत्ययः कत्र्तव्य इति सूचनार्थः। एवञ्चायं बहुलविभक्त्यन्तात्? प्रत्ययः कृतो भवति, यदि दिग्वृत्तेरपि सप्तमीपञ्चमीप्रथमान्तादेव भवति--देशवृत्तेरपि, कालवृत्तेरपि। अथ वा-"था हेतौ च" ५।३।२६ इत्यतश्चकारोऽनुवत्र्तते, स च श्रुतिमेव समुच्चिनोति। तेन दिगादिवृत्तेः प्रत्येकं सप्तमीपञ्चमीप्रथमान्तात्? प्रत्ययो भवति, न यतासंख्यम्()! यथासंख्यं हि समुच्चयो विरुध्यतेत। अथ वा--"स्वरितत्वे सति यथासंख्यं भवति" इत्युक्तम्(), न चेह यथासंख्यार्थं स्वरितत्वं प्रतिज्ञायेत, तेन यथासंक्यं न भविष्यति। "पुरस्तावधस्तात्()" इति। पूर्वाधरशब्दाभ्यामस्तातिः। "अस्ताति च" ५।३।४० इति वक्ष्यमाणेन यथासंख्यं पुर्(), अध--इत्येतौ पूर्वाधरशब्दयोरादेशौ। "ऐन्द्र()आं दिशि वसति" इति। ऐन्द्रीशब्दः सामान्येनेन्द्रसम्बन्धिवस्तुमात्रमाचष्टे, दिक्शब्दसन्निधौ तु दिशि वत्र्तते, तेन दिक्शब्द इति लोके न प्रसिद्ध इतदि न भवत्यतः प्रत्ययः। "पूर्वं ग्रामं गतः" इति। पूर्वशब्दोऽत्र ग्रामस्य देशात्मकत्वाद्देशे वत्र्तते, न त्वत्र सप्तम्यादिविभक्त्यन्तः, किं तु द्वितीयान्त। "पूर्वस्मिन्? गुरौ वसति" इति पूर्वशब्दोऽत्र दिगाद्युपलक्षिते गुरौ वत्र्तते, न दिगादिषु॥

बाल-मनोरमा

दिक्?शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः , ५।३।२७

अथ प्रागिवीयप्रकरणमारभ्यते--दिक्छब्देभ्यः। सप्तम्याद्यन्तेभ्य इति। सप्तमीपञ्चमीप्रथमान्तेभ्य इत्यर्थः। रूढेभ्य इति। शब्दग्रहणलभ्यमिदम्। अस्तातिप्रत्यये इकार उच्चारणार्थः। तकारान्तः प्रत्ययः। "सङ्ख्याया विधार्थे धे"ति सूत्रपर्यन्तमिदं सूत्रमस्तातिवर्जनमनुवर्तते। अत्र विभक्तीनां दिगादीनां च न यथासङ्ख्यं, व्याख्यानात्।

तत्त्व-बोधिनी

दिक्?शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः १४८४, ५।३।२७

दिग्देशकालेष्विति। यतासङ्ख्यमत्र नेष्यते, अस्वरितत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

दिक्षिणौत्तराभ्याम् अतसुच् ५।३।२८

दिक्षिणौत्तराभ्यां दिग्देशकालेषु वर्तमानभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां स्वार्थे ऽतसुच् प्रत्ययो भवति। अस्तातेरपवदः। दक्षिणाशब्दः काले न सम्भवति इति दिग्देशवृत्तिः परिगृह्यते। दक्षिणतो वसति। दक्षिणत आगतः। दक्षिनतो रमणीयम्। उत्तरतो वसति। उत्तरत आगतः। उत्तरतो रमणीयम्। अकारो विशेषणार्थः षष्ठ्यतसर्थप्रत्ययेन २।३।३० इति।

न्यासः

दक्षिणोत्तराभ्यामतसुच्?। , ५।३।२८

"अकारो विशेषणार्थः" इति। यद्यत्राकारो न क्रियते, तदा "षष्ठी तसर्थप्रत्ययेन" २।३।३० इति सूत्रं कत्र्तव्यम्(), एवञ्च सति तसिलोऽपि ग्रहणं स्यात्()। ततश्च ततो हेतुनेत्यत्रापि तृतीयां बाधित्वा षष्ठी स्यात्()। तस्मादकारो विशेषणार्थः कत्र्तव्यः। अथ यदा दक्षिणोत्तरशब्दौ दिशि वत्र्तेते, तदा टाप्श्रवणं मा भूदित्येवमर्थोऽकारः कस्मान्न भवति? "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" (वा। १०४) इति पुंवद्वचनेनैव टापो निवर्त्तितत्वात्()। ननु चासत्यकारे प्रत्ययस्वरेम सिद्धत्वाच्चकारोऽपि नैव कत्र्तव्यः, तत्र, "एकानुबन्धकग्रहणे तु न द्व्यनुबन्धकस्य" (व्या। प। ५२) इति तसिलो ग्रहणं न भविष्यति? एवमपि "प्रतियोगे पञ्चम्यास्तसिः" ५।४।४४, "तेनैकदिक्()"४।३।११२, "तसिश्च" ४।३।११३ इत्यन्यतरग्रहणं स्यात्()। तस्माद्विशेषणार्थश्चकारः कत्र्तव्यः॥

बाल-मनोरमा

दक्षिणोत्तराभ्यामतसुच् , ५।३।२८

दक्षिणोत्तराभ्यां। "दिग्देशकालवृत्तिभ्या"मिति शेषः। दक्षिणत उत्तरत इति। नच तसुजेव प्रत्ययोऽस्तु, दिग्वर्तित्वे तु "सर्वनाम्नो वृत्तिमात्रे" इति पुंवत्वेनैव "दक्षिणतः" इत्यादि सिद्धमिति वाच्यं, स्पष्टार्थत्वात्। अत एव भाष्ये अकारः प्रत्याख्यातः। केचित्तु--अकारोच्चारणमन्यतो विधानार्थं, तेन पुरत इति सिद्धमित्याहुः "समानकालीन"मित्यादिवत् "पुरत" इति प्रामादिकमेवेति बहवः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा परावराभ्याम् ५।३।२९

परावरशब्दाभ्यां विभाषा अतसुच् प्रत्ययो भवति अस्तातेरर्थे। परतो वसति। पर्त आगतः। परतो रमणीयम्। परस्ताद् वसति। परस्तादागतः। परस्ताद् रमणीयम्। अवरतो वसति। अवरत आगतः। अवरतो रमणीयम्। अवरस्तद् वसति। अवरस्तादागतः। अवरस्ताद् रमणीयम्।

न्यासः

विभाषा परावराभ्याम्?। , ५।३।२९

बाल-मनोरमा

विभाषा परावराभ्याम् , ५।३।२९

विभाषा। "अतसु"जिति शेषः। पक्षे अस्तातिः।

---

सूत्रम्

काशिका-वृत्तिः

अञ्चेर् लुक् ५।३।३०

अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्य अस्तातिप्रत्ययस्य लुग् भवति। प्राच्यां दिशि वसति। लुक् तद्धितलुकि १।२।४९ इति स्त्रिप्रत्ययो ऽपि निवर्तते। प्राग् वसति। प्रागागतः। प्राग् रमणियम्। प्रत्यग् वसति। प्रत्यगागतः। प्रत्यग् रमणीयम्।

न्यासः

अञ्चेर्लुक्?। , ५।३।३०

दिक्शब्दादित्यधिकारात्केवलस्य चाञ्चतेरदिक्शब्दत्वात्? "अञ्चेः" इत्यञ्चूत्तरपदस्य निर्देशोऽयं विज्ञायते, अत एवाह--"अञ्चत्यन्तेभ्यः" इति। "दिक्शब्देब्यः" इति। "प्राग्वसति" इति। प्रपूर्वादञ्चतेः "ऋत्विक्()" ३।२।५९ इत्यादिना सूत्रेण क्विन्(), "अञ्चतेश्चोपसंख्यानम्()" (वा। ३३६) इति ङीप्(), "अचः" ६।४।१३८ इत्यल्लोपः, "चौ" ६।३।१३७ इति दीर्घः--प्राची इति स्थिते, अस्तातिः, तस्य लुक्(), क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्()। "प्रत्यक्()" इति। प्रतीचीशब्दात्? प्रत्ययः, स तु पूर्ववदुपपाद्यः॥

न्यासः

लोहतान्मणौ। , ५।३।३०

बाल-मनोरमा

अञ्चेर्लुक् , ५।३।३०

अञ्चेर्लुक्। प्राच्यामिति। लिङ्गविशिष्टपरिभाषयाऽस्तातेर्लुक्।

तत्त्व-बोधिनी

अञ्चेर्लुक् १४८६, ५।३।३०

प्राच्यां प्राच्या इति। प्राच्यादिशि वसति--प्राग्वसति। प्राच्या दिश आगतः प्रागागत इत्यादि योज्यम्।

---

सूत्रम्

काशिका-वृत्तिः

उपर्युपरिष्टात् ५।३।३१

उपरि उपरिष्टतित्येतौ शब्दौ निपात्येते अस्तातेरर्थे। ऊर्ध्वस्य उपभावः रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते। ऊर्ध्वायां दिशि वसति उपरि वसति। उपर्यागतः। उपरि रमणीयम्। उपरिष्टद् वसति। उपरिष्टादागतः। उपरिष्ताद् रमणीयम्।

न्यासः

उपर्युपरिष्टात्?। , ५।३।३१

"रिल्()रिष्टातिलौ च प्रत्ययौ निपात्येते" इति अस्तातेरपवादौ॥

न्यासः

वण चानित्ये। , ५।३।३१

लोहितकः कोपेन" इति। लोहितशब्दवाच्यो वर्णः कोपे सति भवति। स्थित एव च देवदत्ते कोपविगमे गच्छतीत्यनित्यो भवति। अथ वर्णग्रहणं किमर्थम्(), यावता लोहितशब्दो वर्ण एव वत्र्तते? नैतदस्ति; मणिनिमित्तोऽप्ययं द्रव्येऽपि वत्र्तत एव, तत्रासति वर्णग्रहणे द्रव्यस्याप्यनित्यग्रहणं विशेषणं विज्ञायेत, ततश्च लोहितकाः पार्थिवाः परमाणव इति प्रत्ययो न स्यात्(); तेषां नित्यत्वात्()। वर्णग्रहणे तु सति वर्णस्यैवानित्यग्रहणं विशेषणं भवतीति नित्ये प्रत्ययः सिद्धो भवति। अपि च--लोहितशब्दो वर्मनिमित्त एव रुधिराख्ये वत्र्तते। तच्च सर्वत्रैवानित्य इति विशेषणोपादानसामथ्र्यादनित्ये कार्यविशेष उच्यते। स पुनः सत्येवाश्रये कदाचिद्भवति, कदाचिन्नेति। तेन यदेतत्? स्त्रोणामात्र्तवं लोहितं तत्रैव स्यात्()। तस्माद्वर्णग्रहणं कत्र्तव्यम्()। "लोहितो गौः, लोहितं रुधिरम्()" इत्यत्र यावदाश्रयस्तावदवस्थानादनित्यो वर्णो न भवति। ननु चायमप्याश्रयविनाशेन विनाशादनित्य एव? सत्यमेतत्(); सर्व एव हि वर्ण ईद्दशः। उच्यते चेदमनित्य इति

विशेषणोपादानसामर्थ्यात्()। तेन प्रकर्षेण योऽन्त्य इति विज्ञायते, स पनः सत्येवाश्रये, अभूत्वा भवतीति यो भूत्वा प्रतिगच्छति स एव भवितुमर्हति। "लोहितात्लिङ्गबाधनम्()" इत्यादि। लिङ्गधिकारे यो विहितः प्रत्ययः स उपचारालिङ्गशब्देनोक्तः, तस्य लोहितशब्दाद्बाधनं भवतीति वक्तव्यम्(); अन्यथा स्त्रीत्वस्य वर्णानित्यस्य युगपद्विक्षायां लोहितशब्दात्? "वर्णादनुदात्तात्तोपधात्तो नः" (४।१।३९) इति यो ङीप्? प्राप्नोति, स कना नित्यं बाध्येत। तस्य हि हरित वर्णादिरवकाशः प्राप्नोति, तत्र कनि कृते तदन्ताट्टापि लोहितकेत्येव स्तात्? लोहिनिकेत्येवं तु न प्राप्नोति। "तस्माद्धि लिङ्गबाधनं कत्र्तव्यम्()। एवं लोहितशब्दात्? "वर्णादनुदात्तात्()" ४।१।३९ इत्यादिना ङीपि तकारस्य नकारे ततोऽनेन कन्()। "केऽणः" ७।४।१३ इति ह्रस्वत्वे कृते लोहिनिकेति भवति॥

बाल-मनोरमा

उपर्युपरिष्टात् , ५।३।३१

उपर्युपरिष्टात्। "उध्र्वस्य उपभावो रिल्प्रत्ययो रिष्टातिल्प्रत्ययश्चे"ति भाष्यम्। तदाह--अस्तातेर्विषये इत्यादिना। वसति, आगतो, रमणीयं वेति--विभक्तित्रयस्य यथासङ्ख्यमुदाहरणम्।

पश्चात्। "अपरस्य पश्चभावः, आतिश्च प्रत्ययः" इति भाष्यवाक्यमिदम्। प्रत्यये इकार उच्चारणार्थः।

---

सूत्रम्

काशिका-वृत्तिः

पश्चात् ५।३।३२

पश्चादित्ययं शब्दो निपात्यते ऽस्तातेरर्थे। अपरस्य पश्चभावः आतिश्च प्रत्ययः। अपरस्यां दिशि वसति पश्चाद् दिशि वसति। पश्चादागतः। पश्चाद् रमणीयम्। दिक्पूर्वपदस्य अपरस्य पश्चभावो वक्तव्य आतिश्च प्रत्ययः। दक्षिणापश्चात्। उत्तरपश्चात्। अर्धोत्तरपदस्य दिक्पूर्वस्य पश्चभावो वक्तव्यः। दक्षिणपश्चार्धः। उत्तरपश्चार्धः। विना ऽपि पूर्वपदेन पश्चभावो वक्तव्यः। पश्चार्धः।

न्यासः

पश्चात्?। , ५।३।३२

"आतिश्च प्रत्ययः" इति। अयमप्यस्तातेरपवादः। "दक्षिणपश्चादुत्तरपश्चात्()" इति। दक्षिणापरस्यां दिशि वसतीति दक्षिणपश्चात्? एवमुत्तरपश्चात्()। "अर्धोत्तरपदस्य च" इति अपरस्येति सम्बध्यते। "विनापि पूर्वपदेन पश्चभावो वक्तव्यः" इति। अपरस्यार्द्धोत्तरपदस्येति प्रकृतेन सम्बन्धनीयम्()। अत्र सर्वत्र वक्तव्यशब्दो व्याख्याने दत्र्तते। तत्रेदं व्याख्यानम्()--उत्तरसत्रात्? सिंहावलोकितेन चकारोऽत्रावतिष्ठते, स चानुक्तसमुच्चायार्थः। तेन दिक्पूर्वपदस्यापरशब्दस्य पश्चभाव इत्येवमादिकं कार्यं सिद्धं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

पश्च पश्चा च छन्दसि ५।३।३३

पश्चपश्चाशब्दौ निपात्येते छन्दसि विषये अस्तातेरर्थे। चकारात् पश्चादपि भवति। अपरस्य पश्चभावो ऽकाराकारौ च प्रत्ययौ निपात्येते। पुरा व्याघ्रो जायते पश्च सिंहः। पश्चा सिंहः। पश्चात् सिंहः।

न्यासः

पश्च पश्चा च च्छन्दसि। , ५।३।३३

---

सूत्रम्

काशिका-वृत्तिः

उत्तराधरदक्षिणादातिः ५।३।३४

उत्तराधरदक्षिणशब्देभ्यः आतिः प्रत्ययो भवति अस्तातेरर्थे। उत्तरस्यां दिशि वसति उत्तराद् वसति। उत्तरादागतः। उत्तराद् रमणीयम्। अधराद् वसति। अधरादागतः। अधराद् रमणीयम्। दक्षिणाद् वसति। दक्षिणादागतः। दक्षिणाद् रमणीयम्।

न्यासः

उत्तराधरदक्षिणादातिः। , ५।३।३४

उत्तरदक्षिणाभ्यां "दक्षिणोत्तराभ्यामतसुच्()" ५।३।२८ "एनबन्यतरस्यामदूरेऽपञ्चम्याः" ५।३।३५, "दक्षिणादाच्()" ५।३।३६, "आहि च दूरे" ५।३।३७, "उत्तराच्च" ५।३।३८ इत्येभिर्योगैरतसुजादिषु प्राप्तेष्वधरादप्यस्तातावातिर्विधीयते, तस्यास्तातिर्बाध्यत एव। अतसुजादयस्तु वचनात्पक्षे भवन्त्येव। अत्र च यद्यप्युत्तरादीनां सप्तम्यादीनां च विभक्तीनां दिगादीनां चोपाधीनां त्रित्वम्(), तथापि यथासंख्यं न भवति। कुतः? तदर्थस्य स्वरितत्वस्याप्रतिज्ञानात्()। लध्वक्षरस्याधरशब्दस्यापूर्वनिपाताल्लक्षणव्यभिचारचिह्नाद्वाऽस्य लक्षणान्तरनिरपेक्षतां दर्शयन्? यथासंख्यलक्षणमिह नापेक्ष्यत इति सूचयति। तेन विभक्तिभिस्तावद्यथासंख्यं न भवति। उपाधिभिस्तु दक्षिणशब्दस्य काले वृत्त्यसम्भवाच्च॥

बाल-मनोरमा

उत्तराधरदक्षिणादातिः , ५।३।३४

उत्तराधर। आतिप्रत्यये इकार उच्चारणार्थः। अस्तातेरपवादः।

---

सूत्रम्

काशिका-वृत्तिः

एनवन्यतरस्याम् अदूरे ऽपञ्चम्याः ५।३।३५

उत्तराधरदक्षिणशब्देभ्यः एनप् प्रत्ययो भवत्यनतरस्याम् अस्तातेरर्थे अदूरे चेदवधिमानवधेर् भवति। विभक्तित्रये प्रकृते ऽपञ्चम्या इति पञ्चमी पर्युदस्यते। तेन अयं सप्तमीप्रथमान्ताद् विज्ञायते प्रत्ययः। उत्तरेण वसति, उत्तराद् वसति, उत्तरतो वसति। उत्तरेण रमणीयम्, उत्तराद् रमणीयम्, उत्तरतो रमणीयम्। अध्रेण वसति अधराद् वसति, अघस्ताद् वसति। अधरेण रमणीयम्, अधराद् रमणीयम्, अधस्ताद् रमणीयम्। दक्षिणेन वसति, दक्षिणाद् वसति, दक्षिणातो वसति। दक्षिणेन रमणीयम्, दक्षिणाद् रमणीयम्, दक्षिणतो रमणीयम्। अदूरे इति किम्? उत्ताराद् वसति। अपञ्चम्याः इति किम्? उअत्तरादागतः। अपज्चम्याः इति प्रागसेः। असिप्रतयस् तु पञ्चम्यन्तादपि भवति। केचिदिह उत्तरादिग्रहणं न अनुवर्तयन्ति। दिक्शब्दमात्रात् प्रत्ययं मन्यन्ते। पूर्वेण ग्रामम्। अपरेण ग्रामम्।

न्यासः

एनबन्यतरस्यामदूरेऽपञ्चम्याः। , ५।३।३५

"अदूरे चेदवधिमानवधेर्भवति" इति। कथं पुनरेवं विशेषो लभ्यते, यावता सूत्रेऽवधिशब्दो न श्रूयते, नाप्यवधिमान्()?

दिकशब्दानामवध्यपेक्षा प्रवृत्तिर्भवति। अवधिमानष्यवधिमपेक्ष्य भवतीति सामथ्र्यादनुक्तीऽप्येष विशेषो लभ्यत इति। "अधस्ताद्वसति" इति। "अस्ताति च" ५।३।४० इति वक्ष्यमाणेनास्तातौ परतोऽधरशब्दस्यादेशः। "प्रागसेः" इति। "असि पुरधवश्चैषाम्()" ५।३।३९ इति वक्ष्यमाणः। केचिद्दिक्शब्दमात्रात्? प्रत्ययं मन्यन्त इति तेषां मतेन पूर्वेण वसतीत्याद्यपि भवति। यदि दिक्शब्दमात्रात्? प्रत्यो भवतीत्यञ्चात्यन्तादपि स्यात्()? भवतु, "अञ्चेर्लुक्()" (५।३।३०) इति लुम्भविष्यति? नैतदस्ति; "मध्येऽपवादाः पूर्वान्? विधीन्? बाधन्ते" (व्या। प। १०) इत्यस्तातेरेवात्रानेन लुक्(), नान्यस्य। एवं तह्र्यन्यतरस्यामिति व्यवस्थितविभाषेयम्()। तेनाञ्चत्यन्तान्न भविष्यति। पकारः "एनपा द्वितीया" २।३।३१ इति विशेषणार्थः, स्वरार्थश्च॥

बाल-मनोरमा

एनबन्यतरस्यामदूरेऽपञ्चम्याः , ५।३।३५

एनबन्यतरस्याम्। "अपञ्चम्या इति प्रागसे"रिति भाष्यम्। सूत्रक्रमे "पूर्वाधरे"त्यसिं वक्ष्यति ततः प्रागित्यर्थः। उत्तरादिभ्य इति। उत्तराधरदक्षिणादित्यनुवर्तत इति भावः। "अदूरे" इत्येतद्व्याचष्टे--अवध्यवधिमतोः सामीप्ये इति। पञ्चमीं विनेति। पञ्चम्यन्तान्न भवतीत्यर्थः। यथास्वमिति। एनबभावे पक्षे अस्तातिः असिः आतिश्चेत्यर्थः। दिक्छब्दमात्रादिति। अञ्चत्यन्तात्तु नेदम्, व्यवस्थितविभाषाश्रयणात्। तेन प्राचेन ग्राममित्यादि न भवतीत्याहुः।

तत्त्व-बोधिनी

एनबन्यतरस्यामदूरेऽपञ्चम्याः १४८७, ५।३।३५

पञ्चम्यन्तं विनेति। नेह---उत्तरादागतः। अधरादागतः। उत्तरेणेत्यादि। वसति रमणीयं वा। पक्षे यथास्वमिति। दक्षिणतः। उत्तरतः। अधः। अधस्तात्। उत्तारात्।अधरात्। दक्षैणात्।

---

सूत्रम्

काशिका-वृत्तिः

दक्षिणादाच् ५।३।३६

अदूरे इति न स्वर्यते। अपञ्चयाः इति वर्तते। दक्षिणशब्दाताच्प्रत्ययो भवति अस्तातेरर्थे। दक्षिणा वसति। दक्षिणा रमणीयम्। अपञ्चम्याः इत्येव, दक्षिणत आगतः। चकारो विशेषणार्थः। अञ्चूत्तरपदाजाहियुक्ते इति।

न्यासः

दक्षिणादाच्?। , ५।३।३६

"चकारो विशेषणाअरह्थः" इति। असति हि तस्मिन्? पश्चाशब्द आकारान्तो निपातित इति तेनापि योगे पञ्चमी स्यात्()। स्वरार्थस्तु चकारो नोपपद्यते; प्रत्ययस्वरेणैव सिद्धत्वात्()॥

बाल-मनोरमा

दक्षिणादाच् , ५।३।३६

दक्षिणादाच्। अस्तातेर्विषये इति। एतेन अदूरे इति नानुवर्तत इति सूचितम्। एवञ्च आच्प्रत्यये, उत्तराधरदक्षिणा"दित्यातिप्रत्यये, "दक्षिणोत्तराभ्या"मित्यतसुचि च त्रीणि रूपाणि।

बाल-मनोरमा

तद्युक्तात्कर्मणोऽण् , ५।३।३६

तद्युक्तात्। संदिष्टार्थया दूतवाचा यत्प्रयुक्तं कर्म तदभिधायिनः कर्मन्शब्दात्स्वार्थे अण्णित्यर्थः। कर्मैव कार्मणमिति। "अ"न्निति प्रकृतिभावान्न टिलोपः। दूतवाक्यं श्रुत्वा तथैव यत्क्रियते कर्म तत्कार्मणमुच्यते। तदाह--वाचिकं श्रुत्वेति।

तत्त्व-बोधिनी

तद्युक्तात्कर्मणोऽण् १५६६, ५।३।३६

वाचिकमिति। "स्वार्थिकाःस क्वचिल्लिङ्गमतिवर्तन्ते"इति नपुंसकत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

आहि च दूरे ५।३।३७

दक्षिणशब्दादाहिः प्रत्ययो भवति अस्तातेरर्थे, चकारादाच्, दूरे चेदवधिमानवधेर् भवति। दक्षिणाहि वसति, दक्षिणा वसति। दक्षिणाहि रमणीयम्, दक्षिणा रमणीयम्। दूरे इति किम्? दक्षिणतो वसति। अपञ्चमाः इत्येव, दक्षिणत आगतः।

न्यासः

आहि च दूरे। , ५।३।३७

बाल-मनोरमा

आहि च दूरे , ५।३।३७

आहि च दूरे। "दक्षिणाशब्दा"दिति शेषः। चादाजिति। तथा दूरे उक्तरूपत्रयेण सह चत्वारि रूपाणीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उत्तराच् च ५।३।३८

उत्तरशब्दादाजाही प्रत्ययौ भवतः अस्तातेरर्थे दूरे चेदवधिमानवधेर् भवति। उत्तरा वसति, उत्तराहि वसति। उत्तरा रमणीयम्, उत्तराहि रमणीयम्। दूरे इत्येव, उत्तरेण प्रयाति। पञ्चम्याः इत्येव, उत्तरादागतः।

न्यासः

उत्तराच्च। , ५।३।३८

"आजाही प्रत्ययौ भक्तः" इति। ननु चानन्तर्यादाहिरेव प्राप्नोति? ननः; चकारोऽत्र क्रियते, स हि व्यवहितमप्याचं समुच्चिनोति। तेनाऽऽजपि भविष्यतीति॥

बाल-मनोरमा

उत्तराच्च , ५।३।३८

उत्तराच्च। "आच् आहि चे"ति शेषः। अतसुचा आतिना च चत्वारि रूपाणि।

---

सूत्रम्

काशिका-वृत्तिः

पूर्वाधरावरानाम् असि पुरद्वश् च एषाम् ५।३।३९

अपञ्चम्याः इति निवृत्तम्। तिसृणां विभक्तीनाम् इह ग्रहणम्। पूर्वाधरावराणाम् असिः प्रत्ययो भवति अस्तातेरर्थे। तत् संनिओगेन च एषाम् यथासङ्ख्यं पुरद्H अवित्येते आदेशा भवन्ति। असि इत्यविभक्तिको निर्देशः। पुरो वसति। पुर आगतः। पुरो रमणीयम्। अधो वसति। अध आगतः। अधो रमणीयम्। अवो वसति। अव आगतः। अवो रमणीयम्।

न्यासः

पूर्वाधरावराणामसि पुरधवश्चैषाम्?। , ५।३।३९

पूर्वादस्तातौ प्राप्तेस्तातावपवारादपि विभाषातसुचीदमारभ्यते। अथ "एषाम्()" इति किमर्थमिदमुच्यते, यावता येयं पूर्वादिषु षष्ठी सैव प्रत्ययं विधाय स्थाने षष्ठी विज्ञायते, सम्बन्धभेदाच्च षष्ठ()र्थभेदः? सत्यमेतत्(); तथापि सुखप्रतिपत्त्यर्थमेषामित्युक्तम्()॥

बाल-मनोरमा

पूर्वाधरावराणामसिपुरधवश्चैषाम् , ५।३।३९

पूर्वाधरावराणम्। "असी"ति लुप्तप्रथमाकम्। पुर अध्, अव्-एषां द्वन्द्वात्प्रथमाबहुवचनम्। अस्तात्यर्थे इति। दिग्देशकालवृत्तिभ्य इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अस्ताति च ५।३।४०

सप्तम्यान्तम् एतत्। अस्तातिप्रत्यये परतः पुर्वादीनां यथासङ्ख्यं पुरादय आदेशा भवन्ति। इदम् एव आदेशविधानं ज्ञापकम् , अस्तातिरेभ्यो भवति, असिप्रत्ययेन न आध्यते इति। पुरस्ताद् वसति। पुरस्तादागतः। पुरस्ताद् रमणीयम्। अधस्ताद् वसति। अधस्तादागतः। अधस्ताद् रमणीयम्।

न्यासः

अस्ताति च। , ५।३।४०

ननु चासिना बधितत्वात्? पूर्वादिभ्योऽस्तातिना न भवितव्यम्()? इत्याह--"इदमेव" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

अस्ताति च , ५।३।४०

अस्ताति च। "अस्ताती"ति लुप्तसप्तमीकम्, अस्तातीति तकारान्तात्सप्तम्येकवचनं वा। "पूर्वाधरावराणा"मिति "पुरधव" इति चानुवर्तते। तदाह--अस्तातावविति। यद्यपि सूत्रक्रमे "पूर्वाधरे"ति "अस्ताति चे"ति सूत्रमुपन्यसनीयम्। तत्रानुवृत्तिप्रदर्शनाय "पूर्वाधरे"त्यपि सूत्रमिहैवोपन्यस्तम्। पुर इति। पूर्वाशब्दादसिप्रत्ययः प्रकृतेः "पुर्" आदेशः। पुरस्तादिति। पूर्वाशब्दादस्तातिप्रत्ययः, प्रकृतेः "पुर्" आदेशः। अधः, अधस्तादिति। अधरशब्दादसिप्रत्यये अस्तातिप्रत्यये च प्रकृतेः "अध्" आदेशे रूपम्। अव इति। अवरशब्दादसिप्रत्ययेप्रकृतेः "अव्" आदेशे रूपम्।

तत्त्व-बोधिनी

अस्ताति च १४८५, ५।३।४०

पुरः पुरस्तादिति। कथं तर्हि "पश्यामि तामित इतः पुरतश्च पश्चा"दिति भवभूतिः, "स्यात्पुरः परुतोऽग्रतः"इत्यमरः, "पुरतः प्रथमे चाऽग्रे"इति वि()आस्च()। "समानकालीनं" "पूर्वकालीन"मित्यादिवत्प्रामादिकमेवेति बहवः। केचित्तु "दक्षिणोत्तराभ्यां तसुज्विधिनैवेष्टसिद्धौ "अतसु"जित्यकारोच्चारणमन्यतोऽपि विधानार्थम्। तेन पुरत इति सिध्यति। "पुर अग्रगमने" क्विपि--पुर्। "र्वोः"इति दीर्घस्तु न भवति, भत्वात्। न च अतसुचाश्चित्त्वेऽप्यकारोच्चारणं पक्षे आद्युदात्तत्वार्थमिति वाच्यं, बहूनां प्रयोगानुरोधेनाऽन्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वादित्याहुः। यथासङ्ख्यत्वानाश्रयणात् पुरस्ताद्वसति पुरस्तादागतः पुरस्ताद्रमणीयम्। अधस्ताद्वसति अधस्तादागतः--इत्यादि सिध्यति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा ऽवरस्य ५।३।४१

पूर्वेण नित्ये प्राप्ते विकल्प उच्यते। अवरस्य अस्तातौ परतो विभाषा अवित्ययम् आदेशो भवति। अवस्ताद् वसति। अवस्तादागतः। अवस्ताद् रमणीयम्। अवरस्ताद् वसति। अवरस्तादागतः। अवरस्ताद् रमणीयम्।

न्यासः

विभाषाऽवरस्य। , ५।३।४१

बाल-मनोरमा

विभाषाऽवरस्य , ५।३।४१

विभाषाऽवरस्य। "अस्ताति चे"ति पूर्वसूत्रादस्तातीत्यनुवर्तते। तदाह--अवरस्येति। एवमिति। पूर्वस्मिन्पूर्वस्मात्पूर्वो वा देशः, कालो वा--पुरः पुरस्तादित्यादि। पूर्वस्मिन्गुराविति। पूर्वकालिकाध्यापनकर्तरीत्यर्थः। ननु "दिक्छब्देभ्यः" इति सामान्यविहितस्य परादिशब्देषु सावकाशस्य अस्तातेः पूर्वाधरावरशब्देषु असिना विशेषविहितेन बाधः स्यादित्यत आह--अस्ताति चेतीत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्याया विधार्थे धा ५।३।४२

सङ्ख्यावाचिभ्यः प्रातिपदिकेभ्यो विधार्थे वर्तमाणेभ्यो धा प्रत्ययो भवति स्वार्थे। विधा प्रकारः, स च सर्वक्रियाविषय एव गृह्यते। क्रियप्रकारे वर्तमानायाः सङ्ख्याया धा प्रत्ययः। एकधा भुङ्क्ते। द्विधा गच्छति। त्रिधा। चतुर्धा। पञ्चधा।

न्यासः

संख्याया विधार्थे धा। , ५।३।४२

"प्रकारवचने च जातीयर्()" ५।३।६९ इति, तस्यायमपवादः। "विधा=प्रकारः" इत्यक्तः "प्रकारवचने थाल्()" ५।३।२३ इत्यत्र, स च द्रव्यगुणविशेषोऽप्यस्ति; तत्र यदि सोऽपि गृह्येत द्रव्यगुणयोर्लिङ्गसंख्याभ्यां यीगाद्वा

स्ययान्तमलिङ्गमसंख्यं च न स्यात्()। एवञ्च तस्याव्ययत्वं न स्यात्(), तच्चेष्टम्(); तथा हि--धाप्रत्यययोऽव्ययेषु पठ()ते--तसिलादिस्तद्धित एधाच्पर्यन्त इति। क्रियाविषये तु तस्मिन्? गृह्रमाणे न दोषः; क्रियायाः सर्वदा लिङ्गसंख्याभ्यामयोगादित्येतत्? चेतसि कृत्वाऽऽह--"स च" इत्यादि। क्रियाधातुवाच्यो विक्लेदनादिरर्थः, स च विषयोऽस्य स तथोक्तः। कथं पुनः सामान्योक्तौ विशेषस्य ग्रहणं लभ्यते? अर्थग्रहणस्य ह्रेतदेव प्रयोजनम्()--प्रकारविशेषणं यथा स्यादिति, अन्यथा हि "विधायाम्()" इत्येवं हि ब्राऊयात्()। यदि तर्हि प्रकारः क्रियाविषयो गृह्रते, नवधा द्रव्यम्? नदधा गुण इत्यत्र न प्राप्नोति? नैष दोषः? अत्रापि क्रियाऽव्याहत्र्ततव्या। नवधा द्रव्यम्(), नवधा गुण उपपाद्य विगृह्रते चेति॥

बाल-मनोरमा

सङ्ख्याया विधार्थे धा , ५।३।४२

सङ्ख्याया विधार्थे धा। विधाशब्दस्याऽर्थः प्रकारो विधार्थः। "विधा विधौ प्रकारो विधार्थः। "विधा विधौ प्रकारे चे"त्यमरः। सामान्यस्य भेदको विशेषः-प्रकारः। सचाभिधानस्वभावाक्रियाविषयक एव गृह्रते। तदाह--क्रियाप्रकारेति। चतुर्धापञ्चधेति। "गच्छती"त्यादि क्रियापदमध्याहार्यम्। चतुष्प्रकारा गमनादिक्रियेति बोधः। "नवधा द्रव्य"मित्यादावपि "भवती"त्यादि क्रियापदमध्याहार्यम्।

तत्त्व-बोधिनी

सङ्ख्याया विधार्थे धा १४८८, ५।३।४२

सङ्ख्याया विधार्थे धा। विधाशब्दस्याऽर्थो विधार्थः। यद्यप्योदनपिण्डोऽपि विधाशब्देनोच्यते तथापीह न गृह्रते। तेन एका गोविधेत्यादौ न भवति। इह हि "विधाया"मिति वक्तव्ये अर्थग्रहणस्य प्रयोजनं--विधाशब्दो यत्रार्थे प्रसिद्धतरस्तत्रैव यथा स्यात्। तादृशश्चार्थः प्रकार एव, स च क्रियाविषयक एव गृह्रते, अभिदानस्वभावात्। तदाह---क्रियाप्रकारे वर्तमानादिति। कथं तर्हि "नवधा द्रव्यं," बहुधा गुणः" इत्यादि()। अत्रापि ह्रश्रुता क्रिया प्रतीयते "उपदिश्यते इति वा"इति हरदत्तः।

---

सूत्रम्

काशिका-वृत्तिः

अधिकरणविचाले च ५।३।४३

सङ्ख्यायाः इत्येव। अधिकरणं द्रव्यं, तस्य विचालः सङ्ख्यान्तरापादनम्। एकस्य अनेकीकरणम् अनेकस्य वा एकीकरणम्। अधिकरणविचाले गम्यमाने सङ्ख्यायाः स्वार्थे धा प्रत्ययो भवति। एकं राशिं पञ्चधा कुरु। अष्टधा कुरु। अनेकम् एकधा कुरु।

न्यासः

अधिकरणविचाले च। , ५।३।४३

बाल-मनोरमा

अधिकरणविचाले च , ५।३।४३

अधिकरणविचाले च। अधिकरणं--द्रव्यं, तस्य विचालः=विचालनं, सङ्ख्यान्तरापादनम्। तदाह--द्रव्यस्येति। सङ्ख्यान्तरापादनं च न्यूनसङ्ख्यस्य अधिकसङ्ख्याकरणम्, अधिकसङ्ख्यस्य न्यूनसङ्ख्याकरणं च। आद्ये उदाहरति--एकं राशिंपञ्चधा कुर्विति। द्वितीये तु "अनेकमेकधा कुर्वि" त्युदाहार्यम्। इह राशिविषयक एव प्रकारो गम्यते

नतु क्रियाप्रकार इति सूत्रारम्भः।

तत्त्व-बोधिनी
अधिकरणविचाले १४८९, ५।३।४३

अधिकरणविचाले च। अधिकरणं=द्रव्यं, विचलनं विचालः=अन्यथाकरणम्। णिजन्तादेरच्। तच्चेह संख्यासंनिधानात्संख्यान्तरापादनमिति व्याचष्टे---द्रव्यस्येत्यादिना। संख्यान्तरापादनं हि एकस्यानेकीकरणम्, अनेकस्य च एकीकरणम्। तत्राद्ये उदाहरणम्----एकं राशिं पञ्चधेति। पञ्च राशीन्कुर्वित्यर्थः। द्वितीये तु---"अनेकं एकधा कुर्वि"त्युदाहर्तव्यम्। इह क्रियाविषयकप्रकारो न गम्यत इति सूत्रारम्भः।

---

सूत्रम्
काशिका-वृत्तिः
एकाद् धो ध्यमुञन्यतरस्याम् ५।३।४४

एकशब्दात् परस्य धाप्रत्ययस्य ध्यमुञादेशः भवत्यन्यतरस्याम्। एकधा राशिं कुरु, ऐकध्यं कुरु। एकधा भुङ्क्ते, ऐकध्यं भुङ्क्ते। प्रकरणादेव लब्धे पुनर् धाग्रहणम् विधार्थे विहितस्य अपि यथा स्यात्। अनन्तरस्य एव ह्येतत् प्रत्प्नोति।
न्यासः
एकाद्धो ध्यमुञन्यतरस्याम्?। , ५।३।४४

"ऐकध्यं कुरु" इति। अधिकरणविचाल उदाहरणम्()। ऐकध्यं भुङ्क्ते" इति। विधार्थे। अत्र धाग्रहणमनुवर्त्तते, न च तत्र विध्यर्था वृत्तियुक्ता; पूर्वमेव विहितत्वात्()। तस्मादनुवृत्तिसामथ्र्यात्? स्थानित्वं धाप्रत्ययस्य विज्ञायत इत्()याह--"प्रकरणादेव लब्धे" इति। धाप्रत्ययस्य स्थानित्व इति शेषः। किं पुनः कारणमसति धाग्रहणे विधार्थे विहितस्य न भवति? इत्याह--"अनन्तरस्यैव हि" इत्यादि। असति हि पुनर्धाग्रहणे "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या। प। १९) इत्यधिकरणविचालार्थे यो विहितस्तस्यैव स्यात्(), न तु विधार्थे यो विहितस्तस्य। पुनर्धाग्रहणे तु सति धामात्रस्यादेशः सिद्धो भवति॥
बाल-मनोरमा
एकाद्धो ध्यमुञन्यतरस्याम् , ५।३।४४

एकाद्धो। एकात्-ध इति च्छेदः। धाशब्दस्य "ध" इति षष्ठ()एकवचनम्। एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशः स्यादित्यर्थः। ऐकध्यमिति। नच एकशब्दात् ध्यमुञ्प्रत्ययः स्वतन्त्रो विधीयतां नतु धाप्रत्ययस्यादेश इति वाच्यं, तथा सति अधिकरणविचाल एव सन्निहितत्वादापत्तेः।

तत्त्व-बोधिनी
एकद्धो ध्यमुञन्यतरस्याम् १४९०, ५।३।४४

एकाद्धो। शब्दप्रधानत्वात्सर्वनामकार्याऽभावः। इह प्रकरणादेव सिद्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात्। "अनन्तरस्ये"ति न्यायेनाधिकरणविचाले विहितस्यैव हि प्राप्नोतीति वृत्तिपदमञ्जार्योः स्पष्टम्। एतेन ध्युमञ् स्वतन्त्र एव प्रत्ययोऽस्त्वित्याशङ्का परास्ता। ऐकध्यमिति। विधार्थे---"एकेध्यं भुङ्क्ते"। अधिकरणविचाले तु--ऐकध्यं राशिं कुर्वि "त्यादि ज्यम्। एवमग्रेऽपि द्वैधमिच्यादौ योज्यम्।

---

सूत्रम्

काशिका-वृत्तिः

द्वित्र्योश् च धमुञ् ५।३।४५

धा इत्यनुवर्तते। द्वित्र्योः सम्बन्धिनो धाप्रययस्य विधार्थे अधिकरणविचाले च विहितस्य धमुञादेशो भवति अन्यतरस्याम्। चकारो विकल्पानुकर्षणार्थः। द्विधा, द्वैधम्। त्रिधा, त्रैधम्। धमुञन्तात् स्वार्थे डदर्शनम्। मतिद्वैधानि संश्रयन्ते। मतित्रैधानि संश्रयन्ते।

न्यासः

द्वित्र्योश्च धमुञ्। , ५।३।४५

"मतिद्वैधानि" इति। ननु च स्वार्थिकाः प्रकृतिधरहृआननुवत्र्तन्त इति लिङ्गसंख्याभ्यामत्र न भवितव्यम्()? नैव दोषः; अतिवत्र्तन्ते हि कदाचित्? स्वार्थिकाः प्रकृतिधर्मान्? यथा--चत्वार एव वर्णाश्चातुर्वण्र्यमिति॥

बाल-मनोरमा

द्वित्र्योश्च धमुञ् , ५।३।४५

द्वित्र्योश्च धमुञ्। षष्ठी पञ्चम्यर्थे। "ध" इति "अन्यतरस्या"मिति चानुवर्तते। तदाह--आभ्यामिति। "परस्ये"ति शेषः।

धमुञन्तादिति। वार्तिकमिदम्। दृशिग्रहणात्क्वचिदेवायम्। पति द्वैधानीति। "तृणानी"ति शेषः। "द्वैध"मित्यस्माड्डप्रत्यये टिलोपे रूपम्। नच "तसिलादयः प्राक् पाशपः" इति डप्रत्ययान्तस्याप्यव्ययत्वं शह्क्यं, स्वभावतः सत्त्ववचनत्वेनाऽव्ययत्वाऽसंभवात्, "द्वैधानी"ति भाष्यप्रयोगाच्च।

---

सूत्रम्

काशिका-वृत्तिः

एधाच् च ५।३।४६

द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य एधाचादेशो भवत्यन्यत्रस्याम्। चकारो विकल्पानुकर्षणार्थः। द्वेधा, द्वैधम्, द्विधा। त्रेधा, त्रैधम्, त्रिधा।

न्यासः

एधाच्च। , ५।३।४६

बाल-मनोरमा

एधाच्च , ५।३।४६

एधाच्च। द्वित्रिभ्यां परस्य धाप्रत्ययस्यं एधाजित्यादेशः स्यादित्यर्थः। "पञ्चम्यास्तसि"लित्यारभ्य "एधाच्चे"त्यन्तैर्विहितप्रत्ययान्तानामव्ययत्वम्।

तत्त्व-बोधिनी

एधाच्च १४९१, ५।३।४६

एधाच्च। द्वित्र्योः संबन्धिनो धाप्रत्ययस्य एधाच् स्यात्। योगविभागो यथासङ्ख्यनिरासार्थः।

सूत्रम्

काशिका-वृत्तिः

याप्ये पाशप् ५।३।४७

याप्यः कुत्सितः इति उच्यते। याप्ये वर्तमानात् प्रातिपदिकात् स्वार्थे पाशप् प्रत्ययो भवति। याप्यो वैयाकरणः, कुत्सितो वैयाकरणः वैयाकरणपाशः। याज्ञिकपाशः। यो व्याकरनशास्त्रे प्रवीणो दुःशीलः, तत्र कस्मान् न भवति? यस्य गुणस्य सद्भावाद् द्रव्ये शब्दनिवेशः, तस्य कुत्सायां प्रत्ययः।

न्यासः

याप्ये पाशप्?। , ५।३।४७

याप्यशब्दोऽयं गमयितव्ये वत्र्तते--ग्रामान्तरात्? याप्य इति; अस्त्यशक्यप्रतीकारे--याप्यो रोग इति, अस्ति कुत्सिते--याप्योऽयमिति, कुत्सित इति गम्यते। पाशप्प्रत्ययान्तात्? कुत्सित एव प्रतीयत इति तदभिधायिन एव याप्यशब्दस्येवं ग्रहणं युक्ततम्()। अत एवाह--"याप्यः कुत्सित इत्युच्यते" इति याप्यन्ते=अपनीयन्ते तस्माद्गुणा इति याप्यः, "कृत्यल्युटो बहुलम्()" ३।३।११३ इत्यपादाने कृत्यः। "तत्र कस्मान्न भवति" इति। यद्यप्यसौ व्याकरणे प्रवीणः तथापि दुःशीलत्वाद्भवितव्यमेव तत्रेत्यभिप्रायः। "यस्य" इत्यादि। गुणो विशेषणम्? द्रव्यं विशेष्यम्(), तत्र द्रव्ये यद्यपि बहवो गुणाः सन्ति, तथापि यस्य गुणस्य भावे द्रव्ये शब्दो निविशते वत्र्तते प्रत्यासत्तेस्तस्यैव कुत्सायां शब्देन भवितव्यम्(); न तु वैयाकरणस्य दुःशीलत्वं प्रवृत्तिनिमित्तम्()। किं तर्हि? व्याकरणस्य परिज्ञानम्(), अध्ययनं वा। न चेह दुःशीलत्वेन भवितव्यं प्रत्ययेन॥

बाल-मनोरमा

याप्ये पाशप् , ५।३।४७

याप्ये पाशप्। याप्यः=कुत्सितः। "निकृष्टप्रतिकृष्टाऽर्वरेफयाप्याऽवमाऽधमाः" इत्यमरः। कुत्सितेविद्यमानात्स्वार्थे पाशप्स्यादित्यर्थः। प्रवृत्तिनिमित्तकुत्सायामिदम्। अप्रवृत्तिनिमित्तकुत्सायामपि कुत्सित इति वक्ष्यमाणं भवतीति भाष्ये, स्पष्टम्।

तत्त्व-बोधिनी

याप्ये पाशप् १४९२, ५।३।४७

याप्ये पाशप्। "कुत्सिते"इत्यत्रैव नाऽयं विहितः, तिङन्तादपि प्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

पूरणाद् भागे तीयादन् ५।३।४८

पूरणप्रत्ययो यस्तीयः, तदन्तात् प्रातिपदिकाद् भागे वर्तमानात् स्वार्थे अन् प्रत्ययो भवति। स्वरार्थम् वचनम्। द्वितीयो भागः द्वितियः। तृतीयः। भागे इति किम्? द्वितीयम्। तृतीयम्। पूरणग्रहणम् उत्तरार्थम्, न ह्यपूरणस्तीयो ऽस्ति। मुखतीयादिरनर्थकः।

न्यासः

पूरणाद्भागे तीयादन्?। , ५।३।४८

"पूरणप्रत्ययो यस्तीयः" इति। "तस्य पूरणे डट्()" ५।२।४८ इति पूरणाधिकारे विहितत्वात्(), पूरणाभिधेयत्वाद्वा। उपचारेम प्रत्योऽपि तीयः पूरण इत्युच्ये। "भागे" इति। अंश इत्यर्थः। किमर्थं पुनरिदम्(), यावता कृतेऽप्यनि रूपं तदेव? इत्याह--"स्वरार्थं वचनम्()िति। विभागे नित्स्वरेणाद्युदात्तं यथा स्यात्()। "पूरणग्रहणमुत्तरार्थम्()" इति। उत्तरत्र पूरणप्रत्ययान्तात्प्रत्ययो यथा स्यात्()। तस्य च व्यवच्छेदाय क्रियमाणं पूरणमिहाप्यर्थवत्? स्यात्(), स च नास्तीति नेहार्थता तस्योपपद्यते। ननु च "मुखपार्(ातसेरीयः", (वा। ४६०) "पार्(ातीयः" इत्यपूरणोऽपि सोऽस्ति? इत्यत आह--"मुखतीयादिरनर्थकः" इति। अर्थवद्ग्रहणपरिभाषया (व्या।प। १) अर्थवानिह तीयो गृह्रते, न च मुखतीयादिरनर्थवान्()। अतः सत्यपि पूरणग्रहणे तस्य ग्रहणंन भविष्यतीति भावः॥

बाल-मनोरमा

पूरणाद्भागे तीयादन् , ५।३।४८

पूरणाद्भागे। पूरणार्थकतीयप्रत्ययान्ताद्भागे विद्यमानात्स्वार्थे अन्स्यादित्यर्थः। अन्विधेः प्रयोजनमाह--स्वरे विशेष इति। "ञ्नित्यादिर्नित्य"मिति स्वरे इत्यर्थः।

तीयादीकगिति। वार्तिकमिदं "दृष्टं सामे"ति सूत्रभाष्ये स्थितम्।

न विद्याया इति। वार्तिकमिदमपि तत्रैव स्थितम्। विद्यावृत्तेस्तीयप्रत्ययान्तादीकङ्नेत्यर्थः।

तत्त्व-बोधिनी

पूरणाद्भागे तीयादन् १४९३, ५।३।४८

पूरणाद्भागे। पूरणार्थत्वात्तीयप्रत्ययः पूरणशब्देनोक्तः। पूरणग्रहणं चोत्तरार्थम्, न ह्रपूरणस्तीयप्रत्ययो भवति। मुखतीयः इत्यत्र त्वनर्थकत्वान्नतिप्रसङ्गः। भग इति पुंस्त्वं विवक्षितम्। तेन समानेऽप्यर्थे विभक्तौ विवक्षितायां चतुर्थी पञ्चमीत्येव भवति। "प्रागेकादशभ्यः"इत्यनि सति तु टापि चतुर्था पञ्चमेति प्रसज्येत।

---

सूत्रम्

काशिका-वृत्तिः

प्रागेकादशभ्यो ऽच्छन्दसि ५।३।४९

पूरणाद् भागे इत्येव। प्रागेकादशभ्यः सङ्ख्याशब्देभ्यः पूरणप्रत्ययान्तेभ्यः भागे वर्तमानेभ्यः स्वार्थे ऽन् प्रत्ययो भवति अच्छन्दसि विषये। स्वरार्थम् वचनम्। पञ्चमः। सप्तमः। नवमः। दशमः। प्रागेकादशभ्यः इति किम् एकादशः। द्वादशः। अच्छन्दसि इति किम्? तस्य पञ्चममिन्द्रियस्याऽपाक्रामत्।

न्यासः

प्रागेकादशभ्योऽच्छन्दसि। , ५।३।४९

बाल-मनोरमा

प्रागेकादशभ्योऽच्छन्दसि , ५।३।४९

प्रागेकदशभ्यः। शेषपूरणेन सूत्रं व्याचष्टे-पूरणप्रत्ययान्ताद्भागेऽनिति। द्वितीयतृतीयशब्दाभ्यां पूर्वसूत्रेण

सिद्धत्वाच्चतुर्थादिदशमशब्दपर्यन्तविषयकमिदमित्यभिप्रेत्योदाहरति--चतुर्थ इति। नचानेनैव सिद्धत्वात्पूर्वसूत्रं किकिमर्थमिति शङ्क्यं, तस्य छन्दस्यापि प्रवृत्त्यर्थत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

षष्ठाष्टमाभ्यां ञ च ५।३।५०

भागे इत्येव, अच्छन्दसि इति च। षष्ठाष्टमभ्यां भागे अभिधेये अच्छन्दसि विषये ञः प्रत्ययो भवति। चकारादन् च। षष्ठो भागः षष्टः, षष्ठः। आष्टमः, अष्टमः।

न्यासः

षष्ठाष्टमाभ्यां ञ च। , ५।३।५०

यथासंख्ये हि षष्ठादन्यथा प्राप्तं चेत्यन्()। न च पूर्वेणैव सिद्ध इति षष्ठग्रहमनर्थकं स्यात्()। तस्मादुभयाभ्यामुभयं भवति॥

बाल-मनोरमा

षष्ठाष्टमाभ्यां ञ च , ५।३।५०

षष्ठाष्टमाभ्यां ञ च। "पूर्वसूत्रविषये" इति शेषः। "ञे"ति लुप्तप्रथमाकम्। ञे आदिवृद्धिः। चादनिति। इह न यथासह्ख्यं, व्याख्यानात्।

---

सूत्रम्

काशिका-वृत्तिः

मानपश्वङ्गयोः कन्लुकौ च ५।३।५१

भागे इत्येव। षष्ठाष्टमाभ्यां यथासङ्ख्यं कन्लुकौ च भवतो मानपश्वङ्गयोर् भागयोरभिधेययोः। षष्ठको भागो मानं चेत् तद् भवति। अष्टमो भागः पश्वङ्ग चेत् तद् भवति। कस्य लुक्? ञस्य लुक्। अनो वा। चकाराद् यथाप्राप्तं च। षाष्ठः, षष्ठः। आष्टमः, अष्टमः। मानपश्वङ्गयोः इति किम्? षाष्ठः, षष्ठः। आष्टमः, अष्टमः।

न्यासः

मानप�आङ्गयोः कन्लुकौ च। , ५।३।५१

चकाराद्यथाप्राप्तं चेति॥

बाल-मनोरमा

मानप�आङ्गयोः कन्लुकौ च , ५।३।५१

मानप()आङ्गयोः ञस्य अनो वेति। अष्टकशब्दात्पूर्वसूत्रविहितस्य ञप्रत्ययस्य अन्प्रत्ययस्य च अनेन लुगित्यर्थः। चकाराद्यथाप्राप्तमिति। ञप्रत्ययः, अन्प्रत्ययश्चेत्यर्थः। ननु "समर्थाना"मित्यतो वाग्रहणानुवृत्त्यैव ञाऽनोरभावे। सति प()आङ्गे अष्टमो भाव इत्यस्य सिद्धेरिह लुग्विधानं व्यर्थमित्याशङ्क्याह--महाविभाषयेति। पूर्वत्रेति। "षष्ठाऽष्टमाभ्यां ञ चे"ति सूत्रे इत्यर्थः। एवं षष्ठाष्टमाभ्यां शब्दाभ्यां ञाऽनोरिह नित्यं प्राप्तयोः कदाचिल्लुग्विधिरर्थवानित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

एकादाकिनिच् च असहाये ५।३।५२

एकशदाद् सहायवाचिनः स्वार्थे आकिनिच् प्रत्ययो भवति। चकारात् कन्लुकौ च। आकिनिचः कनो वा लुग् विज्ञायते। स च विधानसामर्थ्यात् पक्षे भवति। एकाकी, एककः, एकः। असहायग्रहणं सङ्ख्याशब्दनिरासार्थम्। तदुपादाने हि द्विबह्वोर् न स्यात्, एकाकिनौ, एकाकिनः।

न्यासः

एकादाकिनिच्चासहाये। , ५।३।५२

"आकिनिचः कनो वा लुग्विज्ञायते" इति। प्रत्यासत्तेः। न तु प्रकारणान्तरविहितस्य; विप्रकर्षात्()। "स च" इत्यादि यदि नित्यः स्यात्? तद्विधानमनर्थकं स्यात्()। तस्माद्विधानसामथ्र्यात्? पक्षे भवति। किं पुनः कारणमसहायग्रहणं संख्याशब्दनिरासार्थं क्रियते? इत्याह--"तदुपादाने हि" इत्यादि। असत्यसहायग्रहणे संख्यावाचिनोऽप्येकशब्दस्य ग्रहणं स्यात्()। तस्मिस्तु सति द्विबह्वोर्न स्यात्()। न हि द्वयोर्बहुषु वा चैकत्वसंख्या विद्यते। असहायता तु शतस्यापि भवति; तुल्यजातीयान्यस्याभावात्()--शतमसहायमिति। तेना सहायार्थस्य ग्रहणे द्विबह्वोरपि प्रत्ययः सिध्यति। अथ कस्मादाकिनिज्वधीयते, न अकनिजित्येवोच्येत, अत्रापि सवर्णदीर्घत्वेनेष्टं सिध्यत्येव? न सिध्यति; "अतो गुणे" ६।१।९४ पररूपत्वम्(), यस्येति ६।४।१४८ लोपश्च प्राप्नोति। अकारोच्चारणसामथ्र्यान्न भविष्यति? नैतदस्ति; अस्ति ह्यकारोच्चारणस्य प्रयोजनम्()। किम्()? भसंज्ञायामन्यः पदसंज्ञानिबन्धनोऽवग्रहो मा भूदिति। तस्मादाकिनिजेव विषेयः॥

बाल-मनोरमा

एकादाकिनिच्चाऽसहाये , ५।३।५२

एकादाकिनिच्चा। असहायवाचकादेकशब्दात्स्वार्थे आकिनिच्यप्रत्ययः स्यादित्यर्थः।

तत्त्व-बोधिनी

एकादाकिनिच्चाऽसहाये १४९४, ५।३।५२

एकाधाकिनिच्चा। असहायवाचिन एकशब्दादाकिनिच् स्यात्। कुन्लुकाविति। आकिनिचः कनो वा पक्षे लुक्। तयोरेवानेन सूत्रेण विधानात्। असहायग्रहणं सङ्ख्याशब्दनिरासार्थम्, अन्यथा प्रसद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहणं स्यात्। इष्टापत्तौ तु द्वित्वे बहुत्वे च न स्यादेकाकिनौ एकाकिन इति। न हि द्वयोर्बहुषु वा एकत्वसंख्याऽस्ति। असहायत्वं तु परस्परातिरक्तसहायाऽभावेन द्वयोर्बहूनामपि भवति। इह अकिनिजेवायं वक्तव्यः, सवर्णदजीर्घेण सिद्धमिष्टम्। "यस्येति चे"ति लोपश्चाऽकारोच्चारणसामथ्र्यान्न भवतीत्यादि हरदत्तग्रन्थे स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

भूतपूर्वे चरट् ५।३।५३

पूर्व भूतः इति विगृह्य सुप्सुपेति समासः। भूतपूर्वशब्दो ऽतिक्रान्तकालवचनः। प्रकृतिविशेषणं च एअत्। भूतपूर्वत्वविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट् प्रत्ययो भवति। आढ्यो भूतपूर्वः आढ्यचरः। सुकुमारचरः। टकारो ङीबर्थः। आढ्यचरी।

न्यासः

भूतपूर्वे चरट्?। , ५।३।५३

किमर्थं पुनरेतौ समानार्थो शब्दावुपदिश्येते, नान्यतर एवोपदिश्येत? नैवं शक्यम्(); इह ह्रतिक्रान्तकालविशिष्टेऽर्थे वत्र्तमानात्? प्रत्यग्रहमिष्यते, स चातिक्रान्तः कालोऽन्यतरोक्तौ नैव गृह्रते। तथा हि--भूतशब्दो वत्र्तमानेऽप्यर्थे वत्र्तते, यथा--भूतवानिति, पूर्वशब्दस्तु दिग्देशयोरपि। तस्मादन्यतरोक्तावतिक्रान्तकालो न प्रतीयते। अत एवाऽऽह--"भूतपूर्वशब्दोऽतिक्रान्तकालवचनः" इति। अथ चकारस्य "चुटू()" (१।३।७) इतीत्संज्ञा कस्मान्न भवति? अनित्यत्वात्तस्य विधेः। अनित्यत्वं तु तत्रैव प्रतिपादितम्॥

बाल-मनोरमा

भूतपूर्वे चरट् , ५।३।५३

भूतपूर्वे चरट्। भूतपूर्वे वर्तमानात्प्रातिपदिकात्स्वार्थे चरट् स्यादित्यर्थः।

तत्त्व-बोधिनी

भूतपूर्वे चरट् १४९५, ५।३।५३

भूतपूर्वे। अत्र वर्तमानाच्चरट् स्यात्। "गोष्ठात् खञ्"त्यत्रैव नोक्तं, विशेषविहितेन खञा चरटो बाधा मा भूदिति। संनिधौ हि सामान्यविशेषभावः स्फुटीभवति। यद्यपि दूरस्थस्यापि बाधो न्याय्य एव, तथापीह गौरवं स्वीकृत्य दूरे पाठसामथ्र्याद्बाधो नेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

षष्ठ्या रूप्य च ५।३।५४

षष्ठ्यन्तात् प्रातिपदिकात् रूप्यः प्रत्ययो भवति। चकाराच् चरट् च। षष्ठ्यन्तात् प्रत्ययविधानात् संप्रति भूतपूर्वग्रहणं प्रत्ययार्थस्य विशेषणं, न तु प्रकृत्यर्थविशेषणम्। देवदत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः, देवदत्तचरः।

न्यासः

षष्ठ�आ रूप्य च। , ५।३।५४

इह षष्ठ()न्तं यत्द्विशेषणं परार्थत्वादप्रधानम्(), इतरत्? पुनस्तेनैवोपक्रियमाणत्वाद्विशेष्यं प्रधानम्()। प्रधानेन च कार्यसम्प्रत्यय इतदि यता षष्ठ()न्तात्? प्रत्यविधाने सम्प्रतति षष्ठ()न्तप्रतियोगिनि प्रधाने प्रत्ययो विज्ञायतो, म प्रकृत्यर्थे; तथा भूतपूर्वग्रहणं तस्यैव ज्ञायते, न प्रकृत्यर्थस्येत्येतदालोच्याऽऽह--"षष्ठ()न्तात्()" इत्यादि। प्रत्ययार्थस्तु षष्ठ()न्तस्य यः प्रतियोगी स वेदितव्यः॥

बाल-मनोरमा

षष्ठ�आ रूप्य च , ५।३।५४

षष्ठ()आ रूप्य च। "रूप्ये"ति लुप्तप्रथमाकम्। "भूतपूर्वे" इत्यनुवर्तते। षष्ठ()न्ताद्भूतपूर्वेऽर्थे इति। भूतपूर्वेऽर्थे विद्यमानात्षष्ठ()न्तादित्यन्वयः। भूतपूर्वे इत्यनुवृत्तं हि श्रुतत्वात्षष्ठ()आ विशेषणम्। भूतपूर्वे सम्बन्धे या षष्ठी तदन्तात्स्वार्थे रूप्यः स्यादिति फलति। यथाश्रुते तु स्वार्थिकप्रकरणविरोधः। कृष्णरूप्य इति। भूतपूर्वगत्या

कृष्णसंबन्धी गौरित्यर्थः। शुभ्रारूप्यशब्दे "तसिलादिषु" इति पुंवत्त्वमाशङ्क्य "तसिलादयः प्राक्पाशपः" इत्यादिवार्तिकपरिगणितेषु रूप्यस्यानन्तर्भावात्तस्मिन्परे पुंवत्त्वं नेत्याह--तसिलादि()इआत्यादि। शुभ्राया भूतपूर्व इति। "गौ"रिति शेषः। शुभ्रारूप्य इति। भूतपूर्वगत्या शुभ्रासंबन्धी गौरित्यर्थः।

तत्त्व-बोधिनी

षष्ठ�आ रूप्य च १४९६, ५।३।५४

षष्ठ()आ रूप्य च। भूतपूर्व इत्यनुवर्तते। तच्च यद्यपि पूर्वत्र ङ्याप्प्रातिपदिकस्य विशेषणं, तथापीह न तथा, षष्ठ()न्तार्थस्य विशेषणत्वात्, तदाक्षिप्तस्य "संबन्धिनो गवादेः प्रधानत्वात्, प्रधानेतरसंनिधौ च प्रधाने कार्यसंप्रत्ययस्य न्याय्यत्वात्। त [देत]दाह---भूतपूर्वेऽर्थे रूप्यः स्यादिति।

---

सूत्रम्

काशिका-वृत्तिः

अतिशायने तमबिष्ठनौ ५।३।५५

अतिशयनम् अतिशायनं प्रकर्षः। निपातनाद् दीर्घत्वम्। प्रकृत्यर्थविशेषणं च एतत्। अतिशायनविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे तमबिष्ठनौ प्रत्ययौ भवतः। प्रकृत्यर्थविशेषणं च स्वार्थिकानां द्योत्यं भवति। सर्व इमे आढ्याः, अयम् एषाम् अतिशयेन आढ्यः आढ्यतमः। दर्शनीयतमः। सुकुमारतमः। अयम् एषाम् अतिशयेन पटुः पटिष्थः। लघिष्ठः। गरिष्ठः। यदा च प्रकर्षवतां पुनः प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपरः प्रत्ययो भवत्येव। देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। युधिष्ठिरः श्रेष्ठतमः कुरूणाम् इति।

लघु-सिद्धान्त-कौमुदी

अतिशायने तमबिष्ठनौ १२२१, ५।३।५५

अतिशयविशिष्टार्थवृत्तेः स्वार्थ एतौ स्तः। अयमेषामतिशयेनाढ्यः आढ्यतमः। लघुतमः, लघिष्ठः॥

न्यासः

अतिशायने तमबिष्ठनौ। , ५।३।५५

"अतिशायनम्()" इति। ल्युट्()। यद्यपि शेतिः केवलः स्वप्ने वत्र्तते, तथाप्यतिपूर्वस्य प्रकर्षे वृत्तिः, अत एवाऽऽह--"प्रकर्षः" इति। ननु चातिशयनमिति भवितव्यम्()? इत्याह--"निपातनाद्दीर्घत्वम्()" इति। निपातनं त्वतिशायनशब्दस्य कथम्()? साधुत्वं विज्ञायते इत्येवमर्थम्()। "प्रकृतिविशेषणं चैतत्" इति। प्रत्ययाशङ्कां निराकरोति। प्रकृत्यर्थविशेषणं स्वाथिकानां द्योत्यं भवतीति न वाच्यम्(); तस्य प्रकृतिवाच्यत्वाकत्()। "पटिष्ठः, लघिष्ठः" इति। "तुरिष्ठेमेयस्सु" ६।४।१५४ इति टिलोपः। "गरिष्ठः" इति। "प्रियस्थिरस्फिरोरुबहुलगुरु" ६।४।१५७ इत्यादिना गुरुशब्दस्य गरादेशः। "प्रकर्षप्रत्ययान्तादपरेण प्रत्ययेन न भवितव्यम्(), एकेनैव प्रत्ययस्य द्योतितत्वात्()" इति यो मन्यते, तं प्रत्याह--"यदा च" इति। यत्र प्रथमे प्रकर्षे आतिशायनिको विहितः"; तत्र तेनैव द्योतितत्वाद्()द्वितीयो मा भूत प्रकर्षप्रत्ययः। प्रकर्षान्तरत्वे आतिशायनप्रत्ययान्ताद्युक्तमेवापरेणातिशायिकेन प्रत्ययेन भवितुम्(), तदद्योतितत्वादिति भावः। इष्ठनि परतः "प्रशस्यस्य श्रः" ५।३।६०, पूर्वेण सह "आद्गुणः" ६।१।८४। इष्ठन्प्रत्यान्तात्? तमप्प्रकर्षप्रत्ययः। अत्र प्रतियोग्यपेक्षो यः प्रकर्षः पूर्वस्मात्? प्रकर्षात्? स प्रकर्ष इष्ठन्प्रत्ययेन द्योतितः। ननु च नास्यातिशायिकस्य विधायकं वाक्यमस्ति, येन तस्मिन्? विहिते तदन्तादपरः प्रकर्ष आतिशायानिको विधीयेत, इदमेव ह्येकं वाक्यम्(), तत्रानेनैव

विधीयमाने प्रकर्षप्रत्ययो तदन्तायाः प्रकृतेरसम्भव इत्ययुक्त आतिशायिकादपरस्यातिशायिकस्य भावः? नैष दोषः; इह विधीयमानप्रतत्ययभेदाद्द्वे एते वाक्ये, तत्रैकेनेष्ठन्? विधीयते, अपरेण तु तदन्तात्? तमप्()॥

बाल-मनोरमा

अतिशायने तमबिष्ठनौ , ५।३।५५

अतिशायने। अतिपूर्वकः शीङ्धातुरुपसर्गवसादुत्कर्षे वर्तते। उत्कर्षश्चाधिक्यफलको न्यक्कारः, नत्वाधिक्यमात्रं, तथा सति अकर्मकत्वापातात्। न चेष्टापत्तिः, तथा सति "शुक्लमतिशेते कृष्णतरः" इत्यादिभाष्यविरोधात्। अतिशयिता=अतिशायनः बाहुलकः कर्तरि ल्यु"डिति भाष्यम्। अत एव निपानाद्दीर्घः। "अतिशायने" इति प्रकृत्यर्थविशेषणम्। अतिशयितरि विद्यमानात्प्रातिपदिकात्स्वार्थे तमप् इष्टन् च स्यादित्यर्थः। फलितमाह-- अतिशयविशिष्टार्थवृत्तेरिति। यदि तु अतिशायनशब्दस्य भावल्युडन्तत्वं तर्हि प्रत्ययार्थस्य प्राधान्यापत्तौ शुक्लतरादिशब्दाच्छुक्लादिगतमतिशयनमिति बोधः स्यान्नत्वतिशयितशुक्ल इति। तता च शुक्लतरः शुक्लतरेति पुंस्त्वं स्त्रीत्वं च न स्यात्। "अतिशायने वर्तमाना"दित्यर्थे तु अतिशयप्रकर्षादिशब्देभ्य एव स्यान्नतु पट्वादिभ्यः। अतिशयविशिष्टे लक्षणया विद्यमानादित्यर्थे अतिशय्यमानादपि प्रत्ययापत्तिः। अतिशयनकर्तरि लक्षणायां तु भाष्योक्तमेव साधि इत्यास्तां तावत्। अयमेषामिति। द्वयोरेकस्य निर्धारणे तरबीयसुनावपवादौ वक्ष्येते। अतः परिशेषाद्बहूनामेकस्य निर्धारणे अस्य तमपः प्रवृत्तिरिति भावः। अतिशयेनाढ() इति। द्रव्यस्य जातेर्वा त्वतः प्रकर्षयोगो नास्ति, अन्यथा "घटतम" इत्याद्यापत्तेः। किंतु गुणद्वारैव द्रव्य।जात्योः प्रकर्षयोगः। तथा च "आढ()तम" इत्यत्र उत्कर्षविशिष्ट आढ्यः प्रकृत्यर्थः तमप्तु तद्द्योतकः। तमपि सति "सुपो दाथु" इति सुपो लुक्, "घकालतनेषु" इति योगेन सुबन्तादेव तद्धितोत्पत्तेरुक्तत्वात्। अत्र आतिशायनिकप्रत्ययान्तादातिशायनिकप्रत्ययोऽनभिधानान्न भवति। "श्रेष्ठतमाय कर्मणे" इति नुछान्दसमिति भाष्ये स्पष्टम्। लघिष्ठ इति। लघुशब्दादिष्ठनि ओर्गुणे प्राप्ते "इष्ठेमेयस्सु" इत्यनुवृत्तौ "टे"रिति टिलोपः।

तत्त्व-बोधिनी

अतिशायने तमबिष्ठनौ १४९७, ५।३।५५

अतिशायने। अतिपूर्वाच्छेतेर्ल्युट्। अतिशयनमेवातिशयनम्। अस्मादेव निपातनाद्दीयः। नचु सौत्रः। तेन लोकेऽपि दीर्घः साधुः। "अबाधकान्यपि निपातनानि भवन्ति"। तेन ह्रस्वोऽपि साधुः। यद्यपि केवलः शोतिः स्वप्ने वर्तते तथाप्यतिपूर्वः प्रकर्षे। प्रकर्षश्चात्र नाधिक्यं, किं त्वभिभवः, "पूर्वान्महाभागतयाऽतिशेषे"इति प्रयोगदर्शनात्। न चैवं "प्रकर्षे तमबिष्ठनौ"इत्येव कुतो न सूत्रितमिति शङ्क्यम्, अतिशायनमिति निपातनार्थमेव तथोक्तत्वात्। अतिशयो न प्रत्ययार्थः, तथा हि सति लघोरतिशायनं लघुतममिति स्यात्। प्रत्ययार्थस्य फ्राधान्यात्। नापि प्रकृत्यर्थः, तथा हि सति प्रकर्षातिशयनादिभ्य एव स्यात्, न त्वाढ()आदिभ्यः। किं तु प्रकृत्यर्थविशेषणम्। प्रत्ययस्तु द्योतकः। तदेतदाह--- अतिशयविशिष्टेत्यादि। अयमेषामिति। द्व्यवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते तदा तरबीयसुनावपवादौ वक्ष्येते। तथा च परिशेषाद्बहूनां मध्ये यदा एकदेशस्य निर्धारणं सोऽस्य विषय इति भावः। आढ()तम इति। सुबन्तात्तमप्। "सुपो धात्वि"ति लुक्। यद्यपि "ङ्याप्प्रातिपदिका"दित्येवानुवर्तते तथापि सुबन्तपरतयैव व्याख्येयम्। अन्यथा हि पूर्वाह्णेतमामित्यादौ "घकालतनेषु कालनाम्नः"इति सप्तम्या अलुग्विधानं कथमुपपद्येत()।

---

सूत्रम्

काशिका-वृत्तिः

तिङश् च ५।३।५६

तिङन्तात् च अतिशायने द्योत्ये तमप् प्रत्ययो भवति। ङ्याप्प्रातिपदिकात् ४।१।१ इत्यधिकारात् तिङो न प्राप्नोति इति इदं वचनम्। सर्वे इमे पचन्ति इति, अयम् एषाम् अतिशयेन पचति पचतितमाम्। जल्पतितमाम्। इष्ठन्नोदाह्रियते, गुणवचने तस्य नियतत्वात्।
लघु-सिद्धान्त-कौमुदी
तिङश्च १२२२, ५।३।५६

तिङन्तादतिशये द्योत्ये तमप् स्यात्॥
न्यासः
तिङ्श्च।, ५।३।५६

"पचतितमाम्()" इति। "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" ५।४।११ इत्याम्()। "गुणवचने" इत्यादि। इष्ठनोऽनुदाहरणे हेतुः। "अजादी गुणवचनादेव" ५।३।५८ इति नियम इति, तत एव तेन भवितव्यम्()। न च तिङ्न्तो गुणवचनः, अतो नासावुदाह्रियते॥
बाल-मनोरमा
तिङश्च , ५।३।५६

तिङश्च। अत्राऽप्रातिपदिकत्वादप्राप्ते वचनम्। तमप्स्यादिति। "अजादी गुणवचनादेवे"ति नियमादिष्ठन्नानुवर्तत इति भावः।

बाल-मनोरमा
ह्रस्वे , ५।३।५६

ह्रस्वे। ह्रस्वत्वविशिष्टे वर्तमानाद्यथाविहितं प्रत्यया इत्यर्थः। अल्पत्वं--महत्त्वप्रतिद्वन्द्वि, ह्रस्वत्वं तु दीर्घत्वप्रतिद्वन्द्वीति भेदः।

तत्त्व-बोधिनी
तिङश्च १४९८, ५।३।५६

तिङश्च। अस्मादिष्ठन्न भवति, "अजादी गुणवचनादेवे"ति नियमादित्याशयेनाह--तमप् स्यादिति।

तत्त्व-बोधिनी
ह्रस्वे १५२३, ५।३।५६

ह्रस्वे। तैलादौ ह्रस्वदीर्घादिव्यवहाराऽबावाद्वृक्षक इत्युदाह्रतम्। यद्यपि "अल्पे"इत्यनेनैवेदं रूपं सिध्यति ततापि शाब्दबोदे विशेषोऽस्तीत्याहुः।

---

सूत्रम्
काशिका-वृत्तिः

द्विवचनविभज्यौपपदे तरबीयसुनौ ५।३।५७

द्वयोरर्थयोर् वचनं द्विवचनम् विभक्तव्यो विभज्यः। निपातनाद् यत् भवति। द्व्यर्थे विभज्ये च उपपदे प्रातिपदिकात् तिङन्ताच् च अतिशायने तरबीयसुनौ प्रत्ययौ भवतः। तमबिष्ठनोरपवादौ। यथासङ्ख्यम् अत्र न इष्यते। द्वाविमावाढ्यौ, अयम् अनयोरतिशयेन आढ्यः आढ्यतरः। सुकुमारतरः। पचतितराम्। जल्पतितराम्। ईयसुन् खल्वपि द्वाविमौ पटू, अयम् अनयोरतिशयेन पटुः पटीयान्। विभज्ये च उपपदे माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। दर्शनीयतराः। पटीयांसः। लघीयांसः।

लघु-सिद्धान्त-कौमुदी

द्विवचनविभज्योपपदे तरबीयसुनौ १२२५, ५।३।५७

द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुः लघुतरो लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः॥

न्यासः

द्विवचनविभज्योपपदे तरबीयसुनौ। , ५।३।५७

"द्वयोरर्थयोर्वचनं द्विवचनम्()" इति। एतेनान्वर्थस्य द्विवचनस्य ग्रहणम्(), न पारिभाषिकस्येति दर्शयति यदि हि पारिभाषिकं द्विवचनं, गृह्रेत, "अस्माकं च देवदत्तस्य देवदत्तोऽभिरूपतरः इत्यत्र प्रत्ययो न स्यात्(); पारिभाषिकतस्य द्विवचनस्याभावात्()। अन्वर्थस्य तु ग्रहणे सति भवति द्व्यर्थतोपपदस्य। तथा हि--अस्माकमित्यनेनैकोऽर्थ उच्यते, एकस्मिन्नेवार्थे "अस्मदो द्वयोश्च" १।२।५९ इति बहुवचनस्य विधीनात्()। देवदत्तस्येत्यनेनापि द्वितीयोऽर्थ उच्यत इति भवत्येव तदन्वर्थद्विवचनमुपपदम्()। तदेवमन्वर्थस्य ग्रहणे सर्वत्र सिध्यतीति तस्येदं ग्रहणं युक्तमिति मन्यते। "विभक्तव्यः" इति। पृथक्? कत्र्तव्य इत्यर्थः। यः पुनरतिशय्यमानस्तस्योपपदत्वम्(), नातिशयितुः; ततः प्रत्यविधानात्()। ननु च "ऋहलोण्र्यत्()" ३।१।१२४ इति ण्यति कृते विभाग्य इति भवितव्यम्(), कथं विभज्य इति निर्देश उपपद्यते? इत्याह--"निपातनाद्यद्भवति" इति। इह द्वे उपपदे, एवं प्रकृती च प्रत्ययावपि द्वावेव, ततश्च यथासंख्येन भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तन्निरासार्थमाह--"यथासंख्याम्()"चारचिह्रात्()। स हि लक्षणान्तरनिरपेक्षतां दर्शयन्? यथासंख्यलक्षणमपीह नापेक्षेतेति सूचयति। "पटीयान्? इति। पूर्ववट्टिलोपः, "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। (६।१।६८; ८।२।२३)। "माथुराः पाटलिपुत्रकेभ्य आढ()तराः" इति "पञ्चमी विभक्ते" २।३।४२ इत्यनेन पञ्चमी। पाटलिंपुत्रकेभ्य इत्येदत्र विभज्योपपदम्(), पाटलिपुत्रका हि माथुरेभ्यो विभज्यन्ते=पृथक्? क्रियन्ते। ननू चैतदपि "द्विवचनोपपदे" इत्येव सिद्धम्(), अस्ति ह्रत्र द्विवचनमुपपदम्(), तथा हि--माथुराणामेको राशिः, अपरः पाटलिपुत्रकाणाम्(), तौ च द्विवचनेनोच्येते, तस्माद्विभज्यग्रहणमनर्थकम्()? नैतदस्ति; यद्यप्यत्र राश्यपेक्षा द्व्यर्थताऽस्ति, तथापि नासौ शब्देनोपादीयते। किं तर्हि? अवयवभेदः। अत एव माथुराः पाटलिपुत्रकेभ्य इति बहुवचनम्()। इह राश्यपेक्षापि द्व्यर्थता नास्तीति--साङ्काश्यकेभ्यः पाटलिपुत्रकेभ्यश्च माथुराः सुकुमारतरा इति। तस्माद्विभज्यग्रहणमपि कत्र्तव्यम्()॥

बाल-मनोरमा

द्विवचनविभज्योपपदे तरबीयसुनौ , ५।३।५७

द्विवचन। उच्यतेऽनेनेति वचनम्। द्वयोरर्थयोर्वचनं द्विवचनम्। द्व्यर्थप्रतिपादकमिति यावत्। न द्विवचनसंज्ञकमिह गृह्यते, व्याख्यानात् विभक्तव्यं--विभज्यम्। "ऋहलो"रिति ण्यतं बाधित्वा निपातनाद्यत्। द्विवचनं च विभज्यं चेति समाहारद्वन्द्वः। द्विवचनविभज्यं च तदुपपदं चेति कर्मधारयः। द्व्यर्थप्रतिपादके विभक्तव्यविषयके च उपपदे सतीति

फलितम्। प्रातिपदिकादिति, तिङ इति चानुवर्तते। सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात्सुबन्तत्वं प्रातिपदिकविशेषणं लभ्यते। फलितमाह--द्वयोरेकस्येत्यादिना। द्वयोर्मध्ये अन्यतरापेक्षया अतिशयविशिष्टस्वार्थवृत्तेः, विभागप्रयोजकीभूतधर्मवाचकाच्च शब्दात्स्वार्थे तरबीयसुनौ स्त इति यावत्। यद्यप्यत्र द्वे सुबन्ततिङन्ते प्रकृती, द्वौ च प्रत्ययौ, तथापि न यथासङ्ख्यम्, व्याख्यानात्, अथ द्विवचनोपपदे उदाहरति--अयमनयोरिति। अत्र उपोच्चारितं पदम् उपपदम्, नतु कृत्रमं, तद्धितविधौ तदसंभवात्, धात्वधिकार एव तत्प्रवृत्तेरुक्तत्वात्। तच्चोपपदं विग्रहवाक्येऽवश्यं प्रयुज्यते। तद्धितवृत्तौ तु गतार्थत्वान्नवस्यकम्। लघीयानिति। ईयसुनि नकार इत्, उकार उच्चारणार्थः, उगित्त्वान्नुम्, "सान्ते"ति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ।

अथ विभज्योपपदे उदाहरति--उदीच्याः प्राच्येभ्य इति। "पञ्चमी विभक्ते" इति पञ्चमी। द्विवचनसंज्ञकग्रहणे तु "दन्ताः स्निग्धतराः" इति न सिध्येत्। "बहुषु पुत्रेषु एतदुपपन्नं भवति अयं मे ज्येष्ठोऽयं मे मध्यमः, अयं मे कनीया"निति आद्यन्तवत्सूत्रस्थबाष्यप्रयोगात्, "नैर्देशिकानां वार्ततरका" इति "तस्मिन्" इति सूत्रभाष्यप्रयोगाच्च अद्वयर्थोपपदेऽपि तरबीयसुनावित्याहुः।

तत्त्व-बोधिनी

द्विवचनविभज्योपपदेतरबीयसुनौ १५०१, ५।३।५७

द्विवचनविभज्योपपदे। द्वयोरर्थयोर्वचनं---द्विवचनम्। करणे ल्युट्। कर्मणि षष्ठ()आ समासः। येन पदेन द्वावर्थावुच्येते तद्द्विवचनम्। विभक्तव्यं=विभज्यम्। "ऋहलो"दिति ण्यति प्राप्ते तदपवादो यत् निपात्यते। ण्यति तु "चजो"रिति कुत्वेन विभाग्यमिति स्यात्। विभाज्यशब्दस्य स्मृतिषु प्रयुक्तस्य साधुत्वं चिन्त्यमिति हरदत्तोक्तिश्चिन्त्या। ण्यन्तात् "अयो य"दिति यति विभाज्यमिति रूपसिद्धेः। न चात्राऽर्थबेदः शङ्क्यः, "नुवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिच"इति "णेरणौ"इति सूत्रे व्युत्पादनादिति दिक्। द्विवचनं च विभज्यं चेति द्वन्द्वः। तस्य उपपदेन कर्मधारयः। तथा च व्यर्थवाचके विभजनीये चोपपदे सतीत्यक्षरार्थः। "द्विवचनान्ते उपपदे"इति व्याख्यायां तु "दन्तोष्ठस्य दन्ताः स्निग्धतराः "इत्यादि न सिध्यति। नच "द्वयोर्वचनं द्विवचन"मिति पक्षेऽपि नेदं सिध्यति, समाहारस्यैकत्वात्, गुणभूतवर्तिपदार्थश्रयमे तु द्वातिं()रशद्दन्ताः तु द्वातिं()रशद्दन्ताः , द्वावोष्ठाविति तेषां बहुत्वात्सुतरां न सिध्येदिति चेत्। अत्राहुः----वृत्ताभेदैकत्वसङ्ख्यामुपपाददति वर्तिपदानि। ततश्च ऊभेदस्य परित्यागादभेदैकत्वं , सङ्ख्यायाश्चोपादानाद्दन्तोष्ठलक्षणार्थद्वयं दन्तोष्ठशब्देनोच्यत इति नास्ति द्वयोर्वचनं द्विवचनमित्येतदर्थकद्विवचनोपपदे इति पक्षे दोष इति। विस्तरस्त्तवाकरग्रन्तेब्योऽवगन्तव्यः। अन्वर्थं चोपपदम्,-----उपोच्चारितं पदमिति, न तु कृत्रिमम्। तद्धितविधौ तस्याऽसंभवात्। तच्च विग्रहवाक्य एव प्रयुज्यते। वृत्तौ तु गतार्थत्वान्नावश्यकम्। एवं स्थिते उपपदग्रहणं स्पष्टार्थम्। इह द्वे उपपदे, द्वे च प्रकृती सुबन्ततिङन्तरूपे, द्वौ च प्रत्ययौ, तथापि यथासङ्ख्यं नेष्यते। द्विवचनोपपदमुदाहरति----अनयोरिति। लघीयामिति। "टे"रिति लोपः। उगित्त्वान्नुम्। "सान्तमहतः"इति दीर्घः। हल्ड()आदिसंयोगान्तलोपौ। विभज्योपपदमुदाहरति---प्राच्येभ्य इति। "पञ्चमी विभक्ते"इति पञ्चमी। कथं तर्हि "परुद्भवान् पटुरासीत्, ऐषमस्तु पटुतरः"इति?। अत्राहुः----एकस्यापि धर्मिणस्तत्कालस्थत्वादिरूपधर्मभेदेन भेदाध्यारोपात्प्रतियोग्यपेक्षस्तत्कालस्थप्रकर्षःष तदाश्रयश्चेह तपप्प्रत्यय इति। व्यपदिशन्ति च----"अन्य एवासि संवृत्तः", "कच्चित्स एवासि धनञ्जयस्त्वम्ि ति।

---

सूत्रम्

काशिका-वृत्तिः

अजादि गुणवचनादेव ५।३।५८

इष्ठन्नीयसुनौ अजादी सामान्येन विहितौ, तयोरयं विषयनियमः क्रियते, गुणवचनादेव भवतस्तौ न अन्यस्मादिति। पटीयान्। लघीयान्। पटिष्ठः। लघीष्ठः। इह न भवतः, पाचकतरः, पाचकतमः इति। एव कारः इष्टतो ऽवधारणार्थः, प्रत्ययनियमो ऽयं न प्रकृतिनियमः इति। पटुतरः। पटुतमः।

न्यासः

अजादी गुणवचनादेव।, ५।३।५८

"पाचकतरः" इति। कर्तृशक्तिमतो द्रव्यस्याभिधानाद्द्रव्यवचनोऽयं पाचकशब्दः। अथैवकारः किमर्थः, यावता सिद्धे विधिरारभ्यमाणो विनापि तेन नियमार्थो भवति()इत्याह-"एवकारः" इत्यादि। असति ह्येवकारे विपरीतमवधारणं विज्ञायते--अजादी एव गुणवचनादिति, ततश्च यत एवकारस्ततोऽन्यत्रावधारणमिति प्रकृतिनियमः स्यात्()। एवं च गुणवचनस्याजाद्योनियतत्वात्? ततस्तरबादिर्न स्यात्()। एवकारे तु प्रकृत्यनन्तरमुच्चार्यमाणे सति प्रत्ययार्थनियमोऽयं भवति न प्रकृतिनियम इति पटुतरः, पटुतम इति सिद्धं भवति। एतयोरपि सिद्ध्यर्थं "गुणवचनादिष्ठन्नीयसुनौ" इति सूत्रं न कृतम्()। तदा विध्यर्थत्वादेतौ तरप्तमपोरपवादत्वाद्बाधकाविति तयोरभावे पटुतरः, पटुतम इति न सिध्येत्()॥

बाल-मनोरमा

अजादी गुणवचनादेव , ५।३।५८

अजादी। तरप्तमुपौ इष्ठन्नीयसुनौ चेति चत्वारः प्रत्यया अनुक्रान्ताः। तेषां मध्ये यौ अजादी इष्ठन्नीयसुनौ तावित्यर्थः। तदाह--इष्ठन्नीयसुनाविति। पाचकतरः, पाचकतम इति। क्रियाशब्दत्वादाभ्यामिष्ठन्नीसुनौ नेति भावः। "गुणवचनादजादी एवे"ति विपरीतनियमव्यावृत्त्यर्थ एवकारः। तेन पटुतरः पटुतम इत्यादि सिद्धम्।

तत्त्व-बोधिनी

अजादी गुणवचनादेव १५०२, ५।३।५८

अजादी गुणवचनादेव। इष्टतोऽवधारणार्थ एवकारः। तेन प्रत्यय नियमोऽयम्। एवकाराऽभावे तु "गुणवचनादजादिप्रत्ययावेवे"ति प्रकृतिनियमोऽपि सम्भाव्येत। तथा च पटुतरः, पटुतम इत्यादि न सिध्येत्।

---

सूत्रम्

काशिका-वृत्तिः

तुश् छन्दसि ५।३।५९

तुः इति तृन्तृचोः सामान्येन ग्रहणम्। त्रन्ताच् छन्दसि विषये अजदी प्रत्ययौ भवतः। पूर्वेण गुणवचनादेव नियमे कृते छन्दसि प्रकृत्यन्तराण्यभ्यनुज्ञायन्ते, त्रन्तादप्यजादी भवत इति। आसुतिं करिष्ठः। दोहीयसी धेनुः। भस्याढे तद्धिते इति पुंवद्भावे कृते तुरिष्ठेमेयःसु इति तृचो निवृत्तिः।

न्यासः

तुच्छन्दसि।, ५।३।५९

"करिप्ठः" इति। कर्त्तृशब्दात्? तृन्नन्तादिष्ठन्(), "तुरिष्ठेमेयस्सु" ६।४।१५४ इति तृशब्दलोपः। "दोहीयसी" इति। दोग्ध्रीशब्दात्? तृन्नन्तादीयसुन्(), तृशब्दस्य लोपे कृते निमित्ताभावाद्धत्वादिनिवत्र्तते, "उगितश्च" ४।१।६ इति ङीप्()॥

बाल-मनोरमा

तुश्छन्दसि , ५।३।५९

तुश्छन्दसि। "तृ" इत्यस्य "तु"रिति पञ्चम्येकवचनम्। "तृ" इत्यनेन तृन्तृचोः सामान्येन ग्रहणम्। प्रत्ययत्वात्तदन्तग्रहणम्। अजादी इत्यनुवर्तते। तदाह--तृन्तृजन्तादिति। अगुणवचनादपि तृप्रत्ययान्तात्प्राप्त्यर्थमारम्भः। एवंच पूर्वेण नियमेव व्यावर्तितयोः प्रतिप्रसवोऽयं नत्वपूर्वो विधिरिति सूचयितुं छान्दसमप्यत्रोपन्यस्तम्।

तत्त्व-बोधिनी
तुश्छन्दसि १५०३, ५।३।५९

तुश्छन्दसि। पूर्वेण नियमेव व्यावर्तितयो प्रतिप्रसवोऽयम्, नत्वपूर्वो विधिः। तेन उपाधिसङ्करो न।

---

सूत्रम्
काशिका-वृत्तिः
प्रशस्यस्य श्रः ५।३।६०

प्रशस्य शब्दस्य श्र इत्ययम् आदेशे भवति अजाद्योः प्रत्यययोः परतः। अजादी इति प्रकृतस्य सप्तमी विभक्तिविपरिणम्यते। ननु च प्रशस्य शब्दस्य अगुणवचनत्वादजादी न सम्भवतः? एवं तर्हि आदेशविधानसामर्थ्यात् तद्विषयो नियमो न प्रवर्तते, अजादी गुणवचनादेव इति। एवम् उत्तरेष्वपि योगेषु विज्ञेयम्। सर्वे इमे प्रशस्याः, अयम् एषाम् अतिशयेन प्रशस्यः श्रेष्ठः। उभाविमौ प्रशस्यौ, अयम् अनयोरतिशयेन प्रशस्यः श्रेयान्। अयम् अस्मात् श्रेयान्। प्रकृत्यौ काचिति प्रकृतिभावत् श्रशब्दस्य टिलोपयस्येतिलोपौ न भवतः।
लघु-सिद्धान्त-कौमुदी
प्रशस्यस्य श्रः १२२६, ५।३।६०

अस्य श्रादेशः स्यादजाद्योः परतः॥
न्यासः
प्रशस्यस्य श्रः। , ५।३।६०

ननु चाजीदी इति प्रथमान्तम्(), तत्कथमजाद्योः परत आदेशो लभ्यते? इत्याह--"अजादी" इतचि। "तद्विषयः" इति। स प्रशस्यशब्दो विषयो यस्य स तद्विषयः। "अजादी गुणवचनादेव" ५।३।५८ इतत्यनेन यो नियमः स तद्विषये न प्रवत्र्तत इति दर्शयति। "एवमुत्तरेष्वपि" इति। "वृद्धस्य च" ५।३।६२ इत्येवमादिषु। अयमनयोः अयमनयोः श्रेयानिति द्विवचनोपपद ईयसुन्? अयमस्मात्? श्रेयानिति विभज्योपपदे। पूर्वत्र निर्धारणे षष्ठी २।३।४१, उत्तरत्र "पञ्चमी विभक्ते" २।३।४२ इति पञ्चमी॥
बाल-मनोरमा
प्रशस्यस्य श्रः , ५।३।६०

प्रशस्यस्य श्रः। अजाद्योरिति। इष्ठन्नीयसुनोरित्यर्थः। "अजादी" इत्यनुवृत्तं सप्तम्या विपरिणम्यत इति भावः। प्रशस्यशब्दस्य क्रियाशब्दतया गुमवचनत्वाऽभावेऽपि अत एव ज्ञापकादिष्ठन्नीयसुनौ। श्र-इष्ठ, श्र-ईयस् इति स्थिते इष्ठेमेयःसु विहितटिलोपे प्राप्ते--।

तत्त्व-बोधिनी

प्रशस्यस्य श्रः १५०५, ५।३।६०

प्रशस्यस्य श्रः। "अजादी"इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह---अजाद्योरिति। अजाद्योः किम्()। प्रशस्यतरः। प्रशस्यतमः।

---

सूत्रम्

काशिका-वृत्तिः

ज्य च ५।३।६१

प्रशस्य शब्दस्य ज्य इत्ययम् आदेशो भवति अजाद्योः प्रत्यययोः परतः। सर्वे इमे प्रशस्याः, अयम् एषाम् अतिशयेन प्रशस्यः ज्येष्ठः। उभाविमौ प्रशस्यौ, अयम् अनयोरतिशयेन प्रशस्यः ज्यायान्। अयमस्मात् ज्यायान्। ज्यादादीयसः ६।४।१६० इत्याकारः।

लघु-सिद्धान्त-कौमुदी

ज्य च १२२८, ५।३।६१

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः। ज्येष्ठः॥

न्यासः

ज्य च। , ५।३।६१

योगविभागो यथासंख्यनिवृत्त्यर्थः, उत्तरार्थश्च। उत्तरत्र वृद्धशब्दस्य ज्यादेश एव यथा स्यात्(), श्रादेशो मा भूविति॥

बाल-मनोरमा

ज्य च , ५।३।६१

ज्य च। "ज्ये"ति लुप्तप्रथमाकम्। प्रशस्यस्येति, अजादी इति चानुवर्तते। तदाह--प्रशस्यस्येति। ज्येष्ठ इति। "प्रकृत्यैका"जिति प्रकृतिभावान्न टिलोपः। #ईयसु निज्यादेशे "ज्येया"निति प्राप्ते--।

---

सूत्रम्

काशिका-वृत्तिः

वृद्धस्य च ५।३।६२

वृद्धशब्दस्य च ज्य इत्ययम् आदेशो भवत्यजाद्योः प्रत्यययोः परतः। तयोश्च सत्त्वं नियमाभावेन पूर्ववज् ज्ञाप्यते। सर्वे इमे वृद्धाः, अयम् एषाम् अतिशयेन वृद्धः ज्येष्ठः। उभाविमौ वृद्धौ, अयम् अनयोरतिशयेन वृद्धः ज्यायान्। अयम् अस्माज् ज्यायान्। प्रियस्थिर इत्यादिना वृद्धशब्दस्य वर्षादेशो विधीयते। वचनसामर्थ्यात् पक्षे सो ऽपि भवति। वर्षिष्ठः। वर्षीयान्।

न्यासः

वृद्धस्य च। , ५।३।६२

"वृद्धशब्दस्य" इति। "वृद्ध" इत्येतस्य शब्दस्येत्यर्थः। एतेन "वृद्धस्य" इति स्वरूपग्रहणं दर्शयति। ननु च वृद्धशब्दश्च संज्ञा कृता--"वृद्धिर्यस्याचामादिस्तद्वृद्धम्()" १।१।७२ इति, अतस्तत्प्रत्यायितस्यैव संज्ञिनो ग्रहणं न स्वरूपस्य, "स्वं रूपं शब्दस्याशब्दसंज्ञा" (१।१।६८) इति वचनात्()? नैष दोषः, "प्रशस्यस्य" इत्येतदिहानुवत्र्तते, तेन वृद्धशब्दो विशेष्यते--

प्रशस्यस्य वृद्धस्येति। स्वरूपग्रहणे वयोऽधिके च शब्दार्थे प्रशस्यता युज्यते, न पारिभाषिकग्रहणे। अथ वा--स्थानेऽन्तरतमपरिभाषया १।१।४९ ज्यशब्दस्य योऽन्तरतमः स एव स्थानो विज्ञायते, अन्तरतमश्च तस्य वृद्धशब्द एव, तेन तस्यैव ग्रहणं युक्तम्()। "तयोश्च" इत्यादि। यथा "प्रशस्यस्य श्रः" ५।३।६० इत्यत्र नियमाभावेनाजाद्योः प्रत्यययोः सत्त्वं ज्ञापितम्(), तथेहापि ज्ञाप्यते। नियमाभावस्त्वजाद्योः परतः पूर्ववदादेशविषानादेव वेदितव्यः॥

बाल-मनोरमा

वृद्धस्य च , ५।३।६२

वृद्धस्य च। शेषपूरणेन सूत्रं व्याचष्टे--ज्यादेशः स्यादजाद्योरिति। इष्ठन्नीयसुनोरित्यर्थः। ज्येष्ठ इति। अयमनयोरति शयेन वृद्ध इत्यर्थः।

तत्त्व-बोधिनी

वृद्धस्य च १५०७, ५।३।६२

वृद्धस्य च। स्वरूपस्येह ग्रहणं, न तु "वृद्धिर्यस्याचामादि"रिति पारिभाषिकस्य, व्याख्यानात्। अस्य "प्रियस्थिरे"त्यादिना वर्षादेसोऽपि पक्षे भवति। न च तस्येमनिचि सावकाशता शङ्क्या, वृद्धशब्दादिमनिचोऽभावात्। यदि तु "वृद्धस्य वर्षिश्चे"ति सूत्रमिहैव क्रियेत तदा द्विर्वृद्धग्रहणं न कर्तव्यमिति लाघवं भवतीत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अन्तिकबाढयोर् नेदसाधौ ५।३।६३

अन्तिकबाढयोः यथासङ्ख्यं नेद साध इत्येतावादेशौ भवतो ऽजाद्योः परतः। तयोश्च सत्त्वं पूर्ववद् विज्ञेयम्। निमित्तभूतयोर् यथासङ्ख्यम् अत्र एष्यते सर्वाणीमान्यन्तिकानि, इदमेषामतिशयेन अन्तिकम् नेदिष्ठम्। उभे इमे अन्तिके, इदम् अनयोरतिशयेन अन्तिकं नेदीयः। इदम् अस्मान् नेदियः। सर्वे इमे बाढमधीयते, अयम् एषाम् अतिशयेन बाढम् अधीते सधिष्ठः। उभाविमौ बाढम् अधीयाते, अयम् अनयोरतिशयेन बाढम् अधीते साधीयः। अयम् अस्मात् साधीयो ऽधीते।

न्यासः

अन्तिकबाढयोर्नेदसाधौ। , ५।३।६३

"निमित्त्योः" इत्यादि। निमित्तौ प्रत्ययौ, तयोः परत आदेशविधानात्()। कस्मात्? पुनरिष्यमाणो न भवति? अल्पाच्यतस्य परनिपातात्()। स हि लक्षणान्तरानपेक्षतामाचष्टे। तेन यथासंख्यलक्षणमपीह नापेक्ष्यते। यद्येवम्(), स्थान्यादेशयोरपि यथासंख्यं न प्राप्नोति? मा भूद्यथासंख्यम्(), आन्तरतम्याद्व्यवस्था भविष्यति। ननु च व्यवस्थाकारि चेल्लक्षणान्तरं नापेक्ष्यते, स्थानेऽन्तरतमपरिभाषापि (१।१।५०) न प्राप्नोति? नैतदस्ति; निर्वेशान्यथात्वं हि निर्देशकृता व्यावस्था नास्तीत्येतदेव बोधयति, या त्वर्थकृता व्यवस्था तां न निवत्र्तयति। अपि चादेशप्रतिपत्तये "षष्ठी स्थाने योगा" १।१।४८ इत्येषा परिभाषा नियोगतोऽपेक्षणौया। तच्छेषभूता "स्थानेऽन्तरतमः १।१।४९ इति परिभाषा कथं शक्या नापेक्षितुम्()॥

बाल-मनोरमा

अन्तिकबाढयोर्नेदसाधौ , ५।३।६३

अन्तिकबाढयोः अजाद्योरिति। शेषपूरणमिदम्। अन्तिक, बाढ अनयोरिष्ठेयसुनोः परतः "नेद" "साध" एतावादेशौ स्त इत्यर्थः। नेदिष्ठः नेदीयानिति। अयमनयोरतिशयेनान्तिक इत्यर्थः। साधिष्ठः साधीयनिति। अयमनयोरतिशयेन बाढ इत्यर्थः। बाढो--भृशः। "भृशप्रतिज्ञयोर्बाढ"मित्यमरः। "अतिवेलभृशाऽत्यर्थातिमात्रोद्गाढनिर्भर"मिति च।

---

सूत्रम्

काशिका-वृत्तिः

युवाल्पयोः कनन्यतरस्याम् ५।३।६४

युवाल्पशब्दयोः कनित्ययम् आदेशो भवत्यन्यतरस्याम् अजद्योः परतः। तयोश्च सत्त्वं पूर्ववज् ज्ञेयम्। सर्वे इमे युवानः, अयम् एषम् अतिशयेन युव कनिष्ठः। द्वाविमौ युवानौ, अयम् अनयोरतिशयेन युवा कनीयान्। अयम् अस्मात् कनीयान्। यविष्ठः, यवीयानिति वा। सर्वे इमे ऽल्पाः, अयम् एषाम् अतिशयेन अल्पः कनिष्ठः। उभाविमावल्पौ, अय्म् अनयोरतिशयेन अल्पः कनीयान्। अयम् अस्मात् कनीयान्। अल्पिष्ठः, अल्पीयानिति वा।

न्यासः

युवाल्पयोः कनन्यतरस्याम्?। , ५।३।६४

अत्रापि निमित्तयोर्यथासंख्यं नेष्यते, तस्य ह्रभावः "अजाद्यदन्तम्()" २।२।३३ इत्यल्पशब्दास्य पूर्वनिपाते परनिपाताल्लक्षणानपेक्षाच्चिह्निल्लभ्यते, युवेति स्वरूपगरहणमिष्यते, न जीवत्त्वं वंशस्य। कस्मात्()? इहापि "प्रशस्यस्य" ५।३।६० इत्येतदनुवत्र्तते, तेन युवशब्दो विशेषयितव्यः--प्रशस्यस्य यून इति। स्वरूपग्रहणे सर्वलोकाभिमतयौवनाख्यवयःसम्बन्धे शब्दार्थे प्रशंसोपपद्यते, न पारिभाषिकग्रहणे। अथ वा--स्थानेऽन्तरतमपरिभाषया १।१।४९ कन्नित्यादेशस्य योऽन्तरतमः स एव स्थानिति विज्ञायते, अन्तरतमश्च युवशब्द एव। तस्मात् स्वरूपस्यैव ग्रहणं युक्तम्()। "अन्यतरस्यां" ग्रहणमिहाल्पशब्द एव प्रयोजयति, न युवशब्दः, तस्य विनापि तेन विकल्पः सिद्ध एव; "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" ६।४।१५६ इति वचनात्()। न हि नित्य आदेशे यणादेः परस्य लोपः सम्भवति, नापि पूर्वभागो गुणभाक्()। "यविष्ठः, यवीयान्()" इति। स्थूलदूरादिसूत्रेण ६।४।१५६ यणादेः परं लुप्यते, पूर्वस्य च गुणो भवति॥

बाल-मनोरमा

युवाऽल्पयोः कनन्यतरस्याम् , ५।३।६४

युवाल्पयोः। इष्ठेयसोरिति। "अजादी" इत्यनुवृत्तस्य सप्तम्या विपरिणामादिति भावः। कनिष्ठः कनीयानिति। अयमनयोरतिशयेन युवा अल्पो वेत्यर्थः। पक्षे यविष्ठ इति। युवन्शब्दादिष्ठनि "स्थूलदूरे"ति वनो लोपे उकारस्य गुणेऽवादेशे रूपम्। अल्पिष्ठ इति। अल्पशब्दादिष्ठनि टिलोपः। इत्यादीति। यवीयान्, अल्पीयानिति रूपद्वयमादिपदग्राह्रम्।

तत्त्व-बोधिनी

युवाऽल्पयोः कनन्यतरस्याम् १५१०, ५।३।६४

युवाल्पयोः "युवे"ति स्वरूपग्रहणं , न तु युवापत्यस्य, अल्पसाहचर्याव्द्याख्यानाच्च। "अजादी"इत्यनुवर्तनादरजाद्योरेव परयोर्न तु तरप्तमपोरित्याशयेन व्याचष्टे--इष्ठेयसोरिति।

---

सूत्रम्

काशिका-वृत्तिः

विन्मतोर् लुक् ५।३।६५

विनो मतुपश्च लुग् भवति अजाद्योः प्रत्यययोः परतः। इदम् एव वचनं ज्ञापकम् अजादिसद्भावस्य। सर्वे इमे स्रग्विणः, अयम् एषाम् अतिशयेन स्रग्वी स्रजिष्ठः। उभाविमौ स्रग्विणौ, अयम् अनयोरतिशयेन स्रग्वी स्रजियान्। अयम् अस्मात् स्रजीयान्। सर्वे इमे त्वग्वन्तः, अयम् एषाम् अतिशयेन त्वग्वान् त्वचिष्ठः। उभाविमौ त्वग्वन्तौ, अयम् अनयोरतिशयेन त्वग्वान् त्वचीयान्। अयम् अस्मात् त्वचीयान्।

लघु-सिद्धान्त-कौमुदी

विन्मतोर्लुक् १२३२, ५।३।६५

विनो मतुपश्च लुक् स्यादिष्ठेयसोः। अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान् त्वचिष्ठः। त्वचीयान्॥

न्यासः

विन्मतोर्लुक्?। , ५।३।६५

मतुपा साहचर्यात्? मत्वर्थीय एव विनिप्रत्ययो गृह्रते--"तपः सहरुआआभ्यां विनीनी" ५।२।१०१, "अस्मायामेधारुआजो विनिः" ५।२।१२० इति; आभ्यां चैतदेव लुग्वचनमजाद्योभविं ज्ञापयति। "रुआग्विणौ"। इति। अस्मायादिसूत्रेम ५।२।१२० विनिः। "रुआजिष्ठः" इति। "प्रकृत्यैकाच्()" ६।४।१६३ इति प्रकृतिभावाट्टिलोपाभावः॥

बाल-मनोरमा

विन्मतोर्लुक् , ५।३।६५

विन्मतोर्लुक्। इष्ठेयसोरिति। "अजादी" इत्यनुवृत्तस्य सप्तम्या विपरिणामादिति भावः। रुआजिष्ठ इति। रुआग्विन्शब्दादिष्ठनि विनो लुकि तन्निमित्तपदत्वभङ्गात्रकुत्वनिवृत्तिरिति भावः। एवं रुआजीयानिति। त्वचिष्ठ इति। त्वग्वच्छब्दादिष्ठिनि मतुपो लुकि तन्निमित्तपदत्वभङ्घात्कुत्वनिवृत्तिरिति भावः। एवं त्वचीयान्। अत एव ज्ञापकादाभ्यामिष्ठन्नीयसुनौ।

तत्त्व-बोधिनी

विन्मतोर्लुक् १५११, ५।३।६५

विन्मतोर्लुक्। रुआजिष्ठ इति। विनो लुकि कृते भत्वात्पदकार्याऽभावः। अस्मादेव ज्ञापकादगुणवचनत्वेऽपि विन्मतेरजादी भवतः।

---

सूत्रम्

काशिका-वृत्तिः

प्रशंसायां रूपप् ५।३।६६

प्रशंसा स्तुतिः। प्रकृत्यर्थस्य विशेषणम् च एतत्। प्रशंसाविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे रूपप् प्रत्ययो भवति। स्वार्थिकाश्च प्रत्ययाः प्रकृत्यर्थविशेषस्य द्योतका भवन्ति। प्रशस्तो वैयाकरणो वैयाकरणरूपः। याज्ञिकरूपः। प्रकृत्यर्थस्य वैशिष्ट्ये प्रशंसा भवति। वृषलरूपो ऽयं यः पलाण्डुना सुरां पिबति। चोररूपः, दस्युरूपः, यो ऽक्ष्णोरप्यञ्जनं

हरेत्। तिङश्च ५।३।५६ इत्यनुवर्तते। पचतिरूपम्। पचतोरूपम्। पचन्तिरूपम्। क्रियाप्रधानम् आख्यातम्। एका च क्रिया इति रुपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः। नपुंसकलिङ्गं तु भवति, लोकाश्रयत्वाल्लिङ्गस्य।

न्यासः

प्रशंसायां रूपप्?। , ५।३।६६

"स्वार्थिकाश्च" इत्यादि। प्रकृत्यर्थविशेषणं प्रसंसादि, तस्य द्योतकाः स्वार्थिका भवन्ति, न त्वथन्तिरस्य वाचकाः। यदि प्रशंसायां वत्त्मानाद्रूपब्विधीयते, निन्दायां वत्र्तमानान्न प्राप्नोति-वृषषलरूपोऽयम्(), चौररूपोऽयमिति। वृषलादयो हि शब्दाः सदा निन्दावचनाः; न कदाचित्प्रशंसायां वत्र्तन्ते, यथा काकादयः शब्दा:? इत्यत आह--"प्रकृत्यर्थस्य" इत्यादि। प्रकृत्यर्थस्य वैशिष्ट()ं परिपूर्णत्वम्(), तस्मिन्? सति प्रशंसा भवति। एवञ्च यदा वृषलादिशब्दानामपि पदार्थस्य परिपूर्णता भवति, तदा ते प्रशंसायां वत्र्तन्ते इति तेभ्योऽपि प्रत्ययो भवति। पलाण्डुभक्षणेन सुरापाणेन च प्रकृत्यर्थस्य परिपूर्णता भवति, तदा ते प्रशंसायां वत्र्तन्ते इति तेभ्योऽपि प्रत्ययो भवति। पलाण्डुभक्षणेन सुरापाणेन च प्रकृत्यर्थस्य परिपूर्णतां दर्शयति। वृषलशब्दस्य हि शूद्रो वाच्यः। स यदा पलाण्ड्वादिकमपि साधुजनगहितमभ्यवहरति तदा प रपूर्णत्वं तस्य शूद्रत्वम्()। शूद्रः=सर्वाशी, सर्वविक्रयीति। चौरशब्दार्थस्यापि सुगुप्तवस्त्वपहारेण परिपूर्णता भवति। ननु च "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवत्र्तन्ते" (व्या।प।७४) इति प्रकृत्यर्थस्य ये लिङ्गवचने ते स्वार्थिकप्रत्ययान्तस्यापि भवत इति भावः। ततश्च पचतोरूपम्(), पचन्तिरूपमित्यत्र द्विवचनबहवचनाभ्यां भवितव्यम्()? इत्यत आह--"क्रियाप्रधानम्()" इत्यादि। आख्यातस्य यद्यपि क्रिया साधनञ्चोभयं वाच्यम्(), तथापि तस्य क्रियैव प्रधानमर्थः। यश्च प्रधानं प्रकृत्यर्थस्तस्यैव लिङ्गवचनं स्वार्थिकैरनुवत्र्तयितुं युक्तम्()। क्रियाप्रधानमेकैव च क्रिया। तेन रूपप्प्रत्ययान्तादाख्याताद्()द्विवचनबहवचने न भवतः। नपुंसकलिङ्गमपि तर्हि न स्यात्(), क्रियाया अलिङ्गत्वात्()? इत्यत आह--"नपुंसकलिङ्गं तु" इत्यादि। तत्रैव हेतुमाह--"लोकाश्रयत्वाल्लिङ्गस्य" इति। यदि तर्हि ह्येका क्रिया, पचतः, पचन्तीति द्विवचनबहुवचने न सिध्यतः? नैष दोषः; यद्यपि ह्येका क्रिया, साधनं ह्यनेकम्(), अतस्तदाश्रये द्विवचनबहुवचने भविष्यतः। रूपप्प्रत्ययान्तात्? तर्हि स्याताम्()? तिङन्तेनोक्तत्वान्न भविष्यतः। एकवचनं तु भविष्यति; तस्यौत्सर्गिरकत्वात्(), "एकवचनमुत्सर्गतः करिष्यते" इति वचनात्()॥

बाल-मनोरमा

प्रशंसायां रूपप् , ५।३।६६

प्रशंसायां रूपप्। सुबन्तात्तिङन्ताच्चेति। शेषपूरणमिदम्। "तिङश्चे"त्यनुवृत्तम्, प्रातिपदिकादिति च। "धकाले"त्यादिलिङ्घात्सुबन्तादिति लभ्यत इति भावः। प्रशंसाविसिष्टे स्वार्थे वर्तमानात्तिङन्तात्सुबन्ताच्च रूपविति फलितम्। पचतिरूपमिति। प्रशस्ता पाकक्रियेत्यर्थः। अत्र भाष्ये "क्रियाप्रधानमाख्यातं द्रव्यप्रधानं नामे"ति सिद्धान्तितम्। पचतोरूपं पचन्तिरूपमित्यत्र च न द्विवचनबहुवचने, तिङैव द्वित्वबहुत्वयोरुक्तत्वात्। एकवचनं तूत्सर्गतः करिष्यते, नपुंसकत्वं तु लोकादित्यपि भाष्ये स्पष्टम्।

ईषदसमाप्तौ। ईषदसमाप्तिविशिष्टेऽर्थे। यशस्कल्पमिति। असंपूर्णं यश इत्यर्थः। "सोऽपदादौ" इति सत्वम्। यजुष्कल्पमिति। असंपूर्णं यजुरित्यर्थः। "इणः षः" इति षत्वम्। विद्वद्देश्य इति। असम्पूर्णवैदुष्यवानित्यर्थः। एवं विद्वद्देशीयः। अत्र सर्वत्र "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्नयनुवर्तन्ते" इति वचनात् प्रकृतिलिङ्गत्वं बोध्यम्। पचतिकल्पमिति। असंपूर्णा पाकक्रियेत्यर्थः। "पचतिरूप"मिति वल्लिङ्गवचननिर्वाहः। एवं "वृषभकल्प इयं गौ"रित्यादावपि प्रकृतिलिङ्गत्वं बोध्यम्। "क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गावचनान्यतिवर्तन्ते" इति वचनाद्गुडकल्पा द्राक्षेत्यादौ प्रकृतिलिङ्गातिक्रमः। एतत्सर्वमत्रैव भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

प्रशंसायां रूपप् १५१२, ५।३।६६

प्रशंसायां रूपप्। प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा, न तु स्तुः। तेनेहापि भवति----"चौररूपोऽयं यदक्षणोरप्यञ्झनं हरति। गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते। पचतिरूपमिति। क्रियाप्रधानमाख्यातम्। क्रियायाश्चाऽसत्त्वरूपत्वेऽपि औत्सिर्गिकमेकवचनं भवति। तेन पचतोरूपं पचन्तिरूपमित्यादि। इह प्रथमैव, विबक्त्यन्तराणामप्राप्तेरिति बहुवः। वस्तुतस्तु पश्येत्यादियोगे कर्मणि द्वितीयापि सुलभा। क्लाबत्वं लोकात्। "एवं "पचतिकल्प"मित्यादावपि बोध्यम्।ट

---

सूत्रम्

काशिका-वृत्तिः

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७

सम्पूर्णता पदार्थानां समाप्तिः। स्तोकेनासम्पूर्णता ईषदसमाप्तिः। प्रकृत्यर्थविशेषणं च एतत्। ईषदसमाप्तिविशेष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् कल्पप् देश्य देशीयरित्येते प्रत्यया भवन्ति। ईषदसमाप्तः पटुः पटुकल्पः, पटुदेश्यः, पटुदेशीयः। मृदुकल्पः, मृदुदेश्यः, मृदुदेशीयः। तिङश्च ५।३।५६ इत्येव, पचतिकल्पम्। जल्पतिकल्पम्।

लघु-सिद्धान्त-कौमुदी

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः १२३३, ५।३।६७

ईषदूनो विद्वान् विद्वत्कल्पः। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्॥

न्यासः

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। , ५।३।६७

---

सूत्रम्

काशिका-वृत्तिः

विभाषा सुपो बहुच् परस्तात् तु ५।३।६८

ईषदसमाप्तिविशेष्टे ऽर्थे वर्तमानात् सुबन्तात् विभषा बहुच् प्रत्ययो भवति। स तु पुरस्तादेव भवति, न परतः। चित्करणम् अन्तोदात्तार्थम्। ईषदसमाप्तः पटुः बहुपटुः। बहुमृदुः। बहुगुडो द्राक्षा। विभाषावचनात् कल्पबादयो ऽपि भवन्ति। सुब्ग्रहणं तिङन्तान् मा भूदिति।

लघु-सिद्धान्त-कौमुदी

विभाषा सुपो बहुच् पुरस्तात्तु १२३४, ५।३।६८

ईषदसमाप्तिविशिष्टेर्ऽथे सुबन्ताद्वहुज्वा स्यात्स च प्रागेव न तु परतः। ईषदूनः पटुर्बहुपटुः। पटुकल्पः। सुपः किम्? जयति कल्पम्॥

न्यासः

विभाषा सुपो बहुच्? पुरस्तात्तु। , ५।३।६८

विभाषाग्रहणेनेह बहुच्? सम्बध्यते, न पुरस्तादित्येतत्; तेन बहुचः पूर्वत्वं न विक्ल्प्यत इति नित्यमेव तद्भवति, अत एवाह--"स तु पुरस्तादेव" इति। एवकारेम तुशब्दस्यावधारणार्थतां दर्शयति। यदि पुनस्तुशब्दोऽ वधारणार्थो न क्रियते,

ततो न ज्ञायते--किं विभाषाग्रहणेन बहुच्? सम्बध्यते, अथ पुरस्तादितयेतदिति! तु शब्देन त्ववधारणार्थेन पुरस्तादितत्येतस्मिन्? नियमिते पारिशेष्याद्विभाषावचने बहुजेवाभिसम्बध्यत इति विज्ञायते। "चित्करणमन्तोदात्तार्थम्()" इति। कस्य पुनरन्तोदात्तत्वं चित्कराद्भवति? सप्रकृतेः समुदायस्य;"चितः सप्रकृतेर्ब ह्वकजर्थम्()" (वा।६।१।१६३) इति वचनात्()। यद्येवम्(), पटव इति सुबन्तादुत्पत्तौ जस उदात्तत्वं प्राप्नोति? नैष दोषः; बहुच्युत्पन्ने सति "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्? १।२।४५ इति प्रातिपदिकसंज्ञायां कृतायाम्(), "सुपो धातुप्रातिपादिकयोः" (२।४।७१) इति सुब्लुक्? तावत्? क्रियते, तस्मिन्? कृते पश्चादुदात्तत्वं क्रियमाणं पटुशब्दे य उकारस्तस्य भवति। यस्तु पुनः प्रातिपदिकसंज्ञायां कृतायां सुब्लुकि च कृते अन्यो जस्? उत्पद्यते, तस्योदात्तत्वं नाशङ्कनीयम्(), न ह्यसौ प्रकृत्येकदेशः। ननु चार्थवत्समुदायानां समासग्रहणं नियमार्थमिति बहुच्पूर्वस्य प्रातिपदिकसंज्ञया न भवितव्()यम्()? नैष दोषः; तुल्यजातीयस्य नियमः। कश्च तुल्यजातीयः? यथाजातीयकानां समासः। कथञ्जातीयकानां समासः? भदसंसर्गवताम्()। भेदसंसर्गौ च पृथगर्थानामेव भवतः। द्योतकानाञ्च पृथगर्थवत्ता न सम्भवति। अथ कस्मात्? सुब्लुक्? तावत्? क्रियते, पश्चादन्तोदात्तत्वम्(), यावता परत्वादन्तोदात्तत्वे नै व पूर्वं युक्तं भवितुम्()? नैतदस्ति; नित्यो हि लुक्(), कृताकृतप्रसङ्गित्वात्()। स हि कृतेऽप्यन्तोदात्तत्वे प्राप्नोति, अकृतेऽपि; अन्तोदात्तत्वं त्वन्यस्य लुकि कृते प्राप्नोति। अन्यस्याकृते शब्दान्तरस्य प्राप्नुवन्? विधिरनित्यो भवति, तस्माल्लुगेव तावत्? क्रियते। "बहुगुडा द्राक्षा" इति। कथं पुनरत्रेषदसमाप्तिः, यावता गुडशब्देन गुडजातिरुच्यते, तदाधारो वा द्रव्यम्()। तत्र जातिस्तावदेका, निरवयवा चेति सर्वस्मिन्नाश्रये समाप्ता, द्रव्यमपि यत्? तया सम्बद्धं तत्? सर्वतः पूर्णत्वात्? समाप्तमेव। तस्मादीषदसमाप्तिरयुक्तमिह विशेणम्(), असम्भवात्()? सामानाधिकरण्यं च बहुगुडा द्राक्षेति द्राक्षाशब्देन न प्राप्नेति, तस्यार्थान्तरत्वात्()? स्त्रीलिङ्गमपि "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवत्र्तन्ते" (व्या। प। ७४) इति नोपपद्यते? नैष दोषः; इह शब्दादुच्चारितादद्वयं प्रतीयते--शब्दोऽर्थः, जातिद्र्रव्यञ्च; अभिधेयसम्बन्धेनाशब्दार्थभूता अपि गुणाः, यत्रैतदुभयमस्ति तत्र समाप्तिः। यत्र त्वन्यतरन्नास्ति तत्रेह गुडशब्दो गुडजातिहीने माधुर्यादिगुणहीने वा द्रव्ये वत्र्तते इत्युपपद्यत ईषदसमान्तिः सामानाधिकरण्यमप्युपद्यत एव। कथम्()? यदा तावज्जातिहीने केनचित्? साधम्र्येण द्राक्षादिशब्दाभिधेये वर्त्तित्वा गुडशब्दः प्रत्ययमुत्पदयत, तदा द्राक्षाशब्देन सामानाधिकरण्यं भवति; उभयोरेकार्थवृत्तित्वात्()। यदा तु गुणहीने गुडजीतीय एव, तदापि सामानाधिकरण्यम्(), गौर्वाहीक इति यथा, तथा भविष्यति गुणहीनोऽपि गुडशब्दः। गुडो बहुगुडशब्देनोत्त्यते, तेन च तुल्या द्राक्षेति साऽपि बहुगुडशब्देनाभिदायिष्यते। स्त्रीलिङ्गमपि चोपपद्यते; तस्य लोकाश्रयत्वात्()। अपि च "स्वार्थिकाः प्रकृतेलिंङ्गवचनान्यनुवत्र्तन्ते (व्या। प। ७४) इति प्रायिकमेतत। तेन कदाचिदतिवत्र्ततन्तेऽपि, यथा कुटीरः, शमीर इति। "कुटीशमीशुण्डाभ्यो रः" ५।३।८८ इति स्वार्थिकश्च। "विभाषावचनात्()" इत्यादिना विभाषाग्रहणस्य प्रयोजनमाचष्टे। असति हि विभाषाग्रहणे तिङन्तेषु कृतावकाशाः कल्पबादयो बहुचा सुबन्ताद्विशेषविहितेन बाध्येरन्? तस्मिंस्तु सतदि पक्षे तेऽपि भवन्ति। ननु च भिन्नदेशेन बहुचा नास्ति तेषां विरोधः, तत्कुतो बाधा? असत्यां वा बाधायां कृतेऽपि बहुचि तैर्भवितव्यमेव, परदशस्यानवष्टब्धत्वात्()? नैतदस्ति; न ह्यवश्यं देशकृत एव सामान्यविशेषयोर्विरोधो भवति, किं तर्हि? अर्थकृतोऽपि। बहुचश्च कल्पबादिभिः समानोर्थ इति बहुचा द्योतितत्वात्? तस्यार्थस्य कल्पबादयो न भवविष्यन्ति। न हि द्योतिते पुनर्द्योतनमस्ति, यथाभिहिते नाभिधातव्यम्()। अथ सुब्ग्रहणं किमर्थम्(), यावता प्रातिपदिकग्रहणमनुवत्र्तते, न च प्रातिपदिकात्? सुबन्ताद्वा बहुच उत्पत्तौ कश्चिद्विशेषोऽस्ति? अत आह--"सुब्ग्रहणम्()" इत्यादि। असति हि सुब्ग्रहणे "तिङश्च" (५।३।५६) इति प्रकृतत्वात्? ततो हि प्रत्ययः स्यात्()। अतस्तन्निवृत्त्यर्थं सुबग्रहणम्()॥

बाल-मनोरमा

विभाषा सुपो बहुच् पुरस्तात्तु , ५।३।६८

विभाषा। ईषदसमाप्तावित्यनुवर्तते। तदाह--ईषदसमाप्तिविशिष्ट इति। प्रागेवेति। सूत्रे तुशब्दोऽवधारणे इति भावः। बहुपटुरिति। पटुशब्दात्सुबन्तात्प्राग्बहुचि कृते प्रातिपदिकावयवत्वात्सुपो लुकि समुदायात्पुनः सुबुत्पत्तिः। नच तद्धितान्तत्वाऽभावात्समासत्वाऽभावाच्च पूर्वोत्पन्नसुब्विशिष्टस्य प्रातिपदिकत्वाऽभावात्कथमिह लुगिति वाच्यम्, "अर्थव"दित्यनेन तस्य प्रातिपदित्वसत्त्वात्। पटुरित्यस्य पूर्वोत्पन्नसुप्प्रत्ययान्तत्वेऽपि "बहुपटु"रिति समुदायस्य प्रत्ययान्तत्वाऽभावात्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्। नचैवं सति "कृत्तद्धिते"त्यत्र समासग्रहणं व्यर्थमिति वाच्यं, "पदघटितसङ्घातस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवे"ति नियमार्थत्वात्। नचैवं सति प्रकृते "बहुपटु"रिति समुदायस्य पूर्वोत्पन्नसुब्विशिष्टस्य कथं प्रातिपदिकत्वम्, असमासत्वादिति वाच्यं, "यत्र सङ्घाते पूर्वो भागः पदं तस्य चेत्प्रातिपदिकसंज्ञातर्हि समासस्यैवे"ति नियमशरीराभ्युपगमादिति प्रागुक्तं न विस्मर्तव्यम्। न च "समर्थाना"मिति सूत्रे वाग्रहणादेव सिद्धे विभाषाग्रहणं व्यर्थमिति वाच्यं, बहुजभावपक्षे पूर्वसूत्रविहितकल्पबाद्यर्थत्वात्। अन्यथा "महाविभाषया अपवादेन मुक्ते उत्सर्गस्य न प्रवृत्ति"रिति सिद्धान्ताद्बहुजभावे वाक्यमेव स्यात्। नच कल्पबादीनां बहुचा समानविषयकत्वान्निरवकाशत्वं शङ्क्यं, तेषां तिङन्ते सावकाशत्वादिति भाष्ये स्पष्टम्। एतदभिप्रेत्याह--पटुकल्प इति। ननु लुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तादिह सुब्ग्रहणं व्यर्थमिति पृच्छति--सुपः किमिति। "तिङ्श्चे"त्यनुवृत्तिनिवृत्त्यर्थं सुब्ग्रहणम्। नच अस्वरितत्वादेव तदनुवृत्तिर्न भविष्यति इति वाच्यम्, "अव्ययसर्वनाम्ना"मित्याद्युत्तरसूत्रे "तिङ्श्चे"त्यनुवृत्तेरावश्यकतया तस्य स्वरितत्वावश्यकत्वादिति भाष्ये स्पष्टम्। एतदभिप्रेत्याह--यजतिकल्पमिति। तुग्रहणं तु "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तते, क्वचिदतिवर्तन्ते" इति ज्ञापनार्थमिति भाष्ये प्रपञ्चितम्।

तत्त्व-बोधिनी

विभाषा सुपो बहुच् पुरस्तात्तु १५१३, ५।३।६८

विभाषा सुपः। सूत्रे "सुपः"इति षष्ठ()न्तं, "षष्ठ()तसर्थप्रत्ययेने"त्युक्तेः। सुबन्तादिति। एतच्च पञ्चम्यन्तं युक्तमेव, पुरस्ताच्छब्दपर्यायस्य प्रागितिशब्दस्य वृत्तौ प्रयुक्तत्वात्। प्रागित्यपकृष्यत इथि तु मनोरमायां स्थितम्। नस च सूत्रस्थपुरस्ताच्छब्दसमानार्थकप्राक्()शब्दयोगेऽपि "षष्ठ()तसर्थे"ति षष्ठी स्यादिति वाच्यम्, "अन्यारा"दिति सूत्रेऽञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि "षष्ठ()तसर्थप्रत्ययेने"त्येतद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा "प्राक् प्रत्यग्वा ग्रामा"दित्युदाह्मतत्वात्। काशिकायां तु वृत्तपवि पुरस्ताच्छब्दः प्रयुक्तः, सुबन्तादिति च प्रयुक्तं। तदसमञ्जसमिति मत्वा हरदत्तेन कथंचितं समर्थितं---"ल्यब्लोप एषा पञ्चमी। एवंभूतं प्रकृतित्वेनाश्रित्येत्यर्थ"इति। प्रागेवेति। सौत्रस्तुशब्दोऽवधारणे वर्तत इति भावः। तेन च बहुजेव विकल्प्यते, न तु पूर्वत्वम्। तुशब्दाऽभावे तु प्राक्त्वं विकल्प्येत। तथा च पक्षे बहुच् परः स्यात्। भाष्यकारस्य मते तु नेदं तुशब्दस्य फलम्। तथाहि---"उद()इआतोऽन्यतरस्या"मित्यादौ प्रधानत्वात्प्रत्यय एव विकल्प्यते, न तु परत्वं, प्रत्यय एव हि परत्वविशिष्टो विधीयत इत#इ , विशेषणस्य गुणत्वात्, "गुणानां च परार्थत्वादि"ति न्यायात्। तद्वदिहापि विभाषाग्रहणेन बहुजेब संभन्त्स्यते, न पुरस्तादित्येतत्। तुशब्दस्य तु अवधारणार्थस्याऽन्यदेव प्रयोजनं "पुस्तादेव सर्वं यथा स्या"दिति। तेन लिङ्गसङ्ख्ये अपि प्राक् प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः। बहुचः प्रयोगश्च प्राक् प्रकृतेरेव भवतीति। तेन "बहुगुडो द्राक्षा", "लघुर्बहुतृणं नरः"इत्यादौ प्रकृतिवल्लिङ्गमेव भवति, न त्विभिधेयवल्लिङ्गम्। ननु "स्वार्थिकाः प्रकृतितो लिङ्गवचनामि लभन्ते"इत्येव सिद्धमिति किमनेन तुशब्दग्रहणेनेति चेत्। अत्राहुः---एतदेव ज्ञापयति "ईषदसमाप्तौ ये स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गवचने स्तः"इति। तेन "गुडकल्पा द्राक्षा" "शर्कराकल्पो गुड"इत्यादि सिद्धण्। प्रागिवात्कः। "सुपः"इत्यनुवर्तते, तेन तिङन्तात्को न।

सूत्रम्

काशिका-वृत्तिः

प्रकारवचने जातीयर् ५।३।६९

सामान्यस्य भेदको विशेषः प्रकारः, तस्य वचने। प्रकृत्यर्थविशेषणम् च एतत्। सुबन्तात् प्रकारविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे जातीयर् प्रत्ययो भवति। प्रकारवति च अयं प्रत्ययः। थाल् पुनः प्रकारमात्र एव भवति। पटुप्रकारः पटुजातीयः। मृदुजातीयः। दर्शनीयजतीयः।

न्यासः

प्रकारवचने जातीयर्?। , ५।३।६९

"तस्य वचने" इति। उक्तौ, द्योतन इत्यर्थः। "प्रकारवति चायम्()" इत्यादिना थाल्जातीयरोर्विषयभेदं दर्शयति। विषयभेदे सति विशेषविहितेनापि ताला जातीयरो बाधनं न भवति। थाल्प्रत्यान्तात्? जातीयर्? सिद्धो भवति--कथञ्जातीय इति॥

बाल-मनोरमा

प्रकारवचनेजातीयर् , ५।३।६९

प्रकारवचने। "प्रकारवचने था"लित्यतोऽस्य वैलक्षण्यमाह--प्रकारवति चायमिति। प्रकारवत्येवेत्यर्थः। थाल्तु प्रकारमात्रे इति। वस्तुतस्तु उभयमपि प्रकारवतीति न्याय्यम्, अविशेषात्। अन्यथा "तथे"त्यत्र स प्रकारः इत्येवार्थः स्यात्। नच किमादिभ्यो विशिष्य विहितेन थाला जातीयरो बाधात्तज्जातीय इत्याद्यसिद्धिरिति वाच्यं, "जात्यन्ताच्छ बन्धुनी"ति तज्जात्यादिशब्दाच्छप्रत्ययेनैव तज्जातीयादसिद्धेः। अत एव "यथाजातीयक" इत्यादिभाष्यप्रयोगाः सङ्गच्छन्ते। जयादित्यस्तु-अत्र प्रकारो भेदःस थाल्विधौ सामान्यस्य भेदको विशेषः प्रकार इत्याह--वामनस्तु-सादृश्यं भेदश्चेत्युभयमपि प्रकार इत्याह।

---

सूत्रम्

काशिका-वृत्तिः

प्रागिवात् कः ५।३।७०

इवे प्रतिकृतौ ५।३।९६ इति वक्ष्यति। प्राकेतस्मादिव संशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामः कप्रत्ययस् तेषु अधिकृतो वेदितव्यः। वक्ष्यति अज्ञाते ५।३।७३ इति। अश्वकः। गर्दभकः। तिङन्तादयं प्रत्ययो निष्यते, अकजिष्यते। तिङश्च ५।३।५६ इत्यनुवृत्तम् उत्तरसूत्रेण एव सम्बन्धनीम्।

लघु-सिद्धान्त-कौमुदी

प्रगिवात्कः १२३५, ५।३।७०

इवे प्रतिकृतावित्यतः प्राक्काधिकारः॥

न्यासः

प्रागिवात्कः। , ५।३।७०

तिङन्तादयं प्रत्ययो नेष्यते। "अकजिष्यते" इति। कथं पुनरेतयोर्भावाभावौ लभ्येते? इत्याह--"तिङश्चेत्यनुवृत्तम्()" इत्यादि। उत्तरत्रैवेत्यवधारणेन त्विहानुवृत्तमपि कप्रत्ययेन सम्बन्धनीयमिति दर्शयति। तच्च पूर्वसूत्राद्वचनग्रहणेऽप्यनुवर्त्तमाने यत उत्पद्यमानेन प्रत्ययेनाज्ञातादेरर्थस्य वचनं भवति, तत्रैव तेन भवितव्यम्()। न च

तिङ्न्तादुत्पद्यमानेनापि कप्रत्ययेन सोऽर्थः शक्यते द्योतयितुं, अकचा तु शक्यते। तस्मात्? "तिङ्श्च" ५।३।५६ इत्येतदनुवृत्तमुत्तरसूत्रेणाकचा सम्बन्धनीयम्(), नेह कप्रत्ययेन। प्राग्ग्रहणमपिद्योतनार्थम्(), इवग्रहणमवध्यर्थम्(); अन्यथाधिकारपरिमाणं न ज्ञायते॥

बाल-मनोरमा

प्रागिवात्कः , ५।३।७०

प्रागिवात्कः।इवशब्दस्तद्घटितसूत्रपर इति मत्वाह--इवे प्रतीति।

---

सूत्रम्

काशिका-वृत्तिः

अव्ययसर्वनाम्नाम् अकच् प्राक् टेः ५।३।७१

तिङश्च ५।३।५६ इत्येव। अव्ययानाम् सर्वनाम्नां च प्रागिवीयेष्वर्थेषु अकच् प्रत्ययो भवति, स च प्राक् टेः, न परतः। कस्य अपवादः। उच्चकैः। नीचकैः। शनकैः। सर्वनाम्नः खल्वपि सर्वके। विश्वके। उभयके। प्रातिपदिकात्, सुपः इति द्वयम् अपि इह अनुवर्तते। तत्र अभिधानतो व्यवस्था भवति। क्वचित् प्रातिपदिकस्य प्राक् टेः प्रत्ययो भवति, क्वचित् सुबन्तस्य। युष्मकाभिः , अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोः, इत्यत्र प्रातिपदिकस्य। त्वयका, मयका, त्वयकि, मयकि इत्यत्र सुबन्तस्य। अकच्प्रकरणे तूष्णीमः काम्प्रत्ययो वक्तव्यः। स च मित्त्वादन्त्यातचः परो भवति। तुष्णीकाम् आस्ते। तूष्णीकां तिष्ठति। शीले को मलोपश्च वक्तव्यः। तूष्णींशीलः तूष्णीकः। तिङश्च ५।३।५६ इति प्रकृतमत्र सम्बध्यते। पचतकि। जल्पतकि।

लघु-सिद्धान्त-कौमुदी

अव्ययसर्वनाम्नामकच् प्राक् टेः १२३६, ५।३।७१

कापवादः। तिङश्चेत्यनुवर्तते॥

न्यासः

अव्ययसर्वनाम्नामकच्प्राक्? टेः। , ५।३।७१

"कस्यापवादः" इति। ननु च भिन्नदेशत्वात्? काकचोर्विरोधो नास्ति, न चासति विरोधे बाध्यबाधकभावः, ततः कथं कस्यापवादः? नैष दोषः; नैवावश्यं देशकृत एव विरोधो भवति, अपि त्वर्थकृतोऽपीत्युक्तम्()---"अकच्()प्रत्ययेन समानोर्थः" इति। अकचा द्योतिततवात्? तस्यार्थस्य कप्रत्ययो न भविष्यति। यद्यत्र प्रातिपदिकादित्यनुवृत्तेः प्रातिपदिकस्य प्राक्? टेरकज्विधीयते, त्वयका मयकेत्यादि न सिध्यति? अथ सुप इति प्राक्? टेर्विधीयेत, एवमपि युष्मकाभिरिति न सिष्यति? इत्यत आह--"प्रातिपदिकात्सुपः" इति। "द्वयमपि" इत्यादि। ननु च द्वयानुवृत्तावपि क्वचित्? सुबन्तस्यैव प्राक्टेर्भवति, क्वचित्? प्रातिपदिकस्य--इत्येषा व्यवस्था न लभ्यते? इत्याह--"तत्र" इत्यादि। वचनग्रहणं व्यवस्थार्थमिहानुवत्र्तते। तेन यत्र प्रातिपदिकस्य प्राक्टेरुत्पद्यमानेनार्थद्योतनं शक्यते कर्तुम्(), तत्र प्रातिपदिकस्य प्राक्? टेर्भवति; यत्र सुबन्तादुत्पन्नेनार्थद्योतनं शक्यं सम्पादयितुं, तत्र सुबन्तस्यैव। अकचश्चित्करणमन्तोदात्तार्थम्()। तद्धि सप्रकृतेः समुदायस्य। तथा च वक्ष्यति--"चितः सप्रकृतेर्बह्वकजर्थम्()" (वा। ६।१।१६३)। "तूष्णीमः काम्प्रत्ययो वक्तव्यः" इति। यथासम्भवं कुत्सादिष्वर्थेषु। चकारो देशविध्यर्थः। "शीले को मलोपश्च" इति। शीलमिति न स्वभाव एवोच्यते, किं तर्हि? नियमोऽपि। तथा हि--शीलवान्? भिक्षुरित्यभिधीयते, यः सम्यङ्नियममनुपालयतीति। तेन योऽपि नियमपरतया वाचं नियमयति सोऽपि तूष्णीक उच्यते॥

बाल-मनोरमा

अव्ययसर्वनाम्नामकच् प्राक् टेः , ५।३।७१

अव्ययसर्वनाम्नाम्। अनुवर्तत इति। "मण्डूकप्लुत्ये"ति शेषः। अव्ययसर्वनाम्नां तिङन्तानां च टेः प्रागकच्प्रत्ययः स्यादित्यर्थः। अकचि ककारादकार उच्चारणार्थः। चकार इत्। ककारान्तः प्रत्ययः। अयमपि प्रागिवादधिकारः।

तत्त्व-बोधिनी

अव्ययसर्वनाम्नामकच् प्राक् टेः १५१४, ५।३।७१

अव्ययसर्वनाम्नाम्। अनुवर्तते इति। मण्डूकप्लुत्येति बावः। "ङ्याप्()प्रातिपदिकात्" "सुपः"इति चानुवर्तत एव।

---

सूत्रम्

काशिका-वृत्तिः

कस्य च दः ५।३।७२

ककारान्तस्य प्रातिपदिकस्य अकच्सन्नियोगेन दकारादेशो भवति। चकारः सन्नियोगार्थः। सामर्थ्याच् चाव्ययग्रहणम् अनुवर्तते, न सर्वनामग्रहणम्। ककारान्तस्य सर्वनाम्नो ऽसम्भवात्। धिक् धकित्। हिरुक् हिरकुत्। पृथक् पृथकत्।

न्यासः

कस्य च दः। , ५।३।७२

"अकच्सन्नियोगेन" इत्यादि। कथं पुनरकच्सन्नियोगेनेत्येष विशेषो लभ्यते, यावता न सूत्रे तदुक्तम्()? इत्याह--"चकारः" इत्यादि। चकारस्यैतदेव प्रयोजनम्()--अकच्सन्नियोगेन ककारस्य दकारो यथा स्यादिति भावः॥

बाल-मनोरमा

कस्य च दः , ५।३।७२

कस्य च दः। पूर्वसूत्रे "अव्ययसर्वनाम्ना"मिति समासनिर्देशेऽपि एकादेशे स्वरितत्वप्रतिज्ञाबलादव्ययग्रहणमेवात्राऽनुवर्तते। "कस्ये"त्यत्र ककारादकार उच्चारणार्थः। ककारस्येति विवक्षितम्। तेनाऽव्ययस्य विशेषणात्तदन्तविधिः। तदाह--कान्ताव्ययस्येति। अकच्चेति। चकारेण तदनुकर्षादिति भावः। एतेन अकच्संनियोगशिष्ट एवाऽयं दकार इत्युक्तं भवति। अयमपि प्रागिवादधिकारः।

तत्त्व-बोधिनी

कस्य च दः १५१५, ५।३।७२

कस्य च दः। कान्ताव्ययस्येति। सर्वनामग्रहणं तिङ्ग्रहणं च नेह संबध्यते, तयोः कान्तत्वाऽसंभवात्। न चाऽधोक् अधोगित्यादौ संभवोऽस्तीति वाच्यं , कत्वस्याऽसिद्धत्वात्। यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि "अशाशक्िति संभवति, तथापि यङ्लुकोऽसार्वत्रिकत्वान्नेदृसं लक्ष्यमस्ति। छन्दसि क्वचिल्लक्ष्यसद्भावेऽपि "सर्वे विधाश्छन्दसि वा विधीयन्ते"इति दत्वविधिर्न प्रवर्तत इति भावः।

ओकारसकारभकारादौ सुपि सर्वनाम्नष्टे प्रागकच्। ओकारसकारेति। अकज्विधौ सुपोऽप्यनुवृत्त्या सर्वनाम्ना सुपा च ठेर्विशेषणे कामचारादव्यवस्थाप्रसङ्गे भाष्यकारवचनाव्द्यवस्था श्रीयते। "ओकारसकारे"त्यादिसङ्कोचश्च

युष्मदस्मन्मात्रविषयकः, तथैव भाष्येउदाह्मतत्वात्। अन्येषां त्विवशेषेण प्रातिपदिकस्यैव टेः प्रागकच् न सुबन्तस्य। तेन सर्वकेण इमकेन भवकन्तमित्यादि सिध्यति। त्वयका मयकेति। नन्वत्र सुपः प्रागकचि कृते प्रत्यये परतस्त्वमादेशयोः सतोरपि "योऽची"ति यत्वं न स्याद्विभक्तिपरत्वाऽभावादिति चेत्। मैवम्। अकृतव्यूहपरिभाषाया अनित्यतामाश्रित्याऽकचः पूर्वमेव यत्वविधानात्()। एवं युवकामावकामित्यत्राप्यकचः पूर्वमेव युवावादेशाविति बोध्यम्।

शीले को मलीपश्च। शीले क इति। शीलं स्वभावो नियमश्च। तूष्णीक इति। "केऽणः"इति ह्यस्वस्तु भाष्यकार प्रयोगात् "न कपी"त्यत्र "ने"ति योगविभागाद्वा न भवतीत्याहुः। अकचो द्वितीय अकार उच्चारणार्थ इति ध्वनयन्नुदाहरति--- पचतकीत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

अज्ञाते ५।३।७३

अज्ञातविशेषः अज्ञातः। अज्ञातत्वोपाधिके ऽर्थे वर्तमानात् प्रातिपदिकात् तिङन्ताच् च स्वार्थे यथाविहितं प्रत्ययो भवति। स्वेन रूपेण ज्ञाते पदार्थे विशेषरूपेण अज्ञाते प्रत्ययविधानम् एतत्। कस्य अयम् अश्वः इति स्वस्वामिसम्बन्धेन अज्ञाते अश्वे प्रत्ययः, अश्वकः। गर्दभकः। उष्ट्रकः। एवम् अन्यत्र अपि यथायोगम् अज्ञातता विज्ञेया। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि।

लघु-सिद्धान्त-कौमुदी

अज्ञाते १२३७, ५।३।७३

कस्यायमश्वोऽश्वकः। उच्चकैः। नीचकैः। सर्वके। (ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य)। युष्मकाभिः। युवकयोः। त्वयका॥

न्यासः

अज्ञाते। , ५।३।७३

"अज्ञातविशेषोऽज्ञातः" इति। यदि यस्यात्यन्तमज्ञानं सोऽज्ञातः स्यात्(), एवं सति सर्वथा वस्तुविज्ञाना भावे प्रकृतिरेव न स्यात्(), न हि सर्वथाऽविज्ञातोऽर्थः प्रयोगमर्हति; तस्मात्? स्वेन रूपेण ज्ञातस्य यस्य धर्मान्तरत्वमज्ञातं स इहाज्ञातोऽभिमत इति ज्ञायते--अविज्ञातविशेषोऽज्ञात इति। अस्यैवार्थं विस्पष्टीकर्तुमाह--"स्वेन" इत्यादि। स्वरूपम()आत्वादि, विशेषरूपं स्वस्वामिसम्बन्धादि॥

बाल-मनोरमा

अज्ञाते , ५।३।७३

अज्ञाते। अज्ञातेऽर्थे विद्यमानात्सुबन्तात्स्वार्थे कप्रत्ययः स्यात्। अव्ययसर्वनाम्ना तिङन्तानां च टेः प्रागकच्स्यात्। तत्रापि ककारान्ताव्ययानां दकारोऽन्तादेशः स्यादित्यर्थः। कस्यायमिति। स्यादित्यर्थः। अज्ञातत्वाभिनयोऽयम्। अज्ञातोऽ()आ इति विग्रहः। उच्चकैरिति। उच्चैरित्यव्ययस्य टेः प्रागकच्। सर्वके वि()आके इति। ननु अव्ययसर्वनाम्नामिति सूत्रे "सुप" इत्यनुवृत्तेः सुबन्तानां सर्वनाम्नां टेः प्रागकजिति फलितम्। तथा सति युवयोः आवयोः, युष्मासु अस्मासु, युष्माभिः अस्माभिरित्यत्र सुबन्तानां टेः प्रागकजिति फलितम्। तथा सति युवयोः आवयोः, युष्मासु अस्मासु, युष्माभिः अस्माभिरित्यत्र सुबन्तानां टेः प्रागकचि युवकयोः, आवकयोः, युष्मकासु अस्मकासु,

युष्मकाभिः अस्मकाभिरिति न स्युः। युवयकोः आवयकोः, युष्मासकु अस्मासकु, युष्माभकिः अस्माभकिरिति स्युः। यदि तु "सुप" इत्यननुवर्त्य प्रातिपदकादित्येवानुवर्त्यं प्रातिपदिकादेव सर्वनाम्नां टेः प्रागकजित्यर्थः स्यात् तर्हि त्वयका मयकेति न स्यात्।

त्वकया, मकया इति स्यादित्यत आह--ओकारेति। वार्तिकमिदम्। ओकारादौ सकारादौ भकारादौ च सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्यैव सर्वनाम्नष्टेः प्रागकजित्यर्थः। इदं तु वार्तिकं युष्मदस्मन्मात्रविषयकमेव, भाष्ये तथैवौदाह्मतत्वात्। अन्येषां तु सर्वनाम्नां प्रातिपदिकस्यैव टेः प्रागकच्, नतु सुबन्तानाम्। तेन सर्वकेणेत्यादि सिद्धम्। अत एव "विभक्तौ परतो विहितः किमः क आदेशः साकच्कार्थः, कः कौ के इति भाष्यं सङ्गच्छते। त्वयका मयकेति। इह त्वया मयेति सुबन्तयोष्टेः प्रागकच्। प्रातिपदिकस्य टेः प्रागकचि तु त्वकया मकयेति स्यादिति भावः। काम् वक्तव्य इति। "काम्प्रत्यय" इति वृत्तिस्तु चिन्त्या, भाष्ये प्रत्ययशब्दस्याऽदर्शनात्। किं तु मित्त्वादागम एवायम्। तदाह--मित्त्वादिति। अकचोऽपवादः। तूष्णीकामिति। तूष्णीमित्यव्ययस्य ईकारादुपरि का इत्याकारान्त आगमः।

शीले इति। इदमपि वार्तिकम्। "तूष्णी"मित्यव्ययात्कप्रत्ययः स्यान्मकारस्य लोपश्च शीले गम्ये इत्यर्थः। शीलं=स्वभावः। तूष्णीक इति। मौनस्वभाव इत्यर्थः। भाष्ये दीर्घस्यैव प्रयोगदर्शनात् "केऽणः" इति ह्मस्वो न भवति। "अव्ययसर्वनाम्ना"मित्यत्र तिङश्चेत्यनुवृत्तेः प्रयोजनमाह--पचतकीति। "पचती"त्यत्र इकारात्प्रागकच्। ककारदकार उच्चारणार्थः। अन्यथा इकारात्प्रागकच्प्रत्यये आद्गुणे "पचतके" इति स्यादिति भावः। जल्पतकीति। "जल्पती"त्यस्य टेः प्रागकच्। धकिदिति। "धि"गित्यव्ययस्य टेः प्रागकच्, कान्तस्याव्ययस्य दकारश्चान्तादेश इति बोध्यम्। "तिङश्चे"त्यप्यनुवर्तते। अ()आक इति। धावनस्य असम्यक्त्वाद()आस्य कुत्सा बोध्या। सर्वनामाव्ययतिङन्तानि पूर्ववदुदाहार्याणि। "याप्येपाश"विति प्रवृत्तिनिमित्तकुत्सायामेव भवति, इदं तु सूत्रमप्रवृत्तिनिमित्तकुत्सायामपीति भाष्ये स्पष्टम्।

---

सूत्रम्
काशिका-वृत्तिः
कुत्सिते ५।३।७४

कुत्सितो गर्हितो, निन्दितः। प्रकृत्यर्थविशेषणं च एतत्। कुत्सितस्वोपाधिके ऽर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे यथाविहितं प्रत्ययो भवति। कुत्सितो ऽश्वः अश्वकः। उष्ट्रकः। गर्दभकः। उच्चकैः। नीचकैः। सर्वके। विश्वके। पचतकि। जल्पतकि।
लघु-सिद्धान्त-कौमुदी
कुत्सिते १२३८, ५।३।७४

कुत्सितोऽश्वोऽश्वकः॥
न्यासः
कुत्सिते।, ५।३।७४

---

सूत्रम्
काशिका-वृत्तिः
संज्ञायां कन् ५।३।७५

कुत्सिते इत्येव। कुत्सितत्वोपाधिके ऽर्थे वर्तमानात् प्रातिपैद्कात् कन्प्रत्ययो भवति, कस्य अपवादः, प्रत्ययान्तेन चेत् संज्ञा गम्यते। शूद्रकः। धारकः। पूर्णकः।

न्यासः

संज्ञायां कन्?। , ५।३।७५

बाल-मनोरमा

संज्ञायां कन् , ५।३।७५

संज्ञायां कन्। कुत्सिते इत्यनुवर्तते। तदाह--कुत्सित इति। तदन्तेन चेदिति। कुत्साहेतुकसंज्ञाविषये कनिति यावत्।

---

सूत्रम्

काशिका-वृत्तिः

अनुअम्पायाम् ५।३।७६

कारुण्येन अभ्युपपत्तिः परस्य अनुकम्पा। तस्या गम्यमानायां सुबन्तात् तिङन्ताच् च यथाविहितं प्रत्ययो भवति। पुत्रकः। वत्सकः। दुर्बलकः। बुभुक्षितकः। स्वपितकि। श्वसितकि।

न्यासः

अनुकम्पायाम्?। , ५।३।७६

"कारुण्णेन" इत्यादि। अभ्युपपत्तिरनुग्रह एव। "स्वपितकि, ()आसितकि" इति। "रुदादिभ्यः सार्वधातुके" ७।२।७६ इट्(), अदादित्वाच्छपो लुक्()॥

बाल-मनोरमा

अनुकम्पायाम् , ५।३।७६

अनुकम्पायाम्। अनुकम्पायुक्तार्थाभिधायिनः स्वार्थे कः स्यादित्यर्थः। अनुकम्पा=दया।

तत्त्व-बोधिनी

अनुकम्पायाम्। १५१६, ५।३।७६

अनुकम्पायाम्। "कृपा दयाऽनुकम्पा स्या"दित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

नीतौ च तद्युक्तात् ५।३।७७

सामदानादिरुपायो नीतिः। नीतौ च गम्यमानायां तद्युक्तादनुकम्पायुक्ताद् यथाविहितं प्रत्ययो भवति। हन्त ते धानकाः। हन्त ते तिलकाः। एहकि। अद्धकि। परस्य अनुकम्पामात्रोपादानेनाराधयति। पूर्वेण प्रत्यासन्नानुकम्पासम्बन्धातनुकम्प्यमानादेव प्रत्ययो विहितः। संप्रति व्यवहितादपि यथा स्यादिति वचनम्।

न्यासः

नीतौ च तद्युक्तात्?। , ५।३।७७

"सामदानादिरूपायो नीतिः" इति। आदिशब्देन भेददण्डयोग्ग्रहणम्(); तौत्वनुकम्पायां न सम्भवत इति सामदानादिरेकैव नीतिर्गृह्यते, "एहकि" इति। इण आङ्पूर्वाल्लोण्मध्यमपुरुषैकवचनस्य "सेह्र्यपिच्च" 3।4।87 इति हिरादेशः। ननु पूर्वेणैवात्रापि प्रत्ययः सिद्धः, अत्रापयनुकम्पा गम्यत एव, तत किमर्थम्? इत्याह--"पूर्वेणैव" इत्यादि। प्रत्यासन्नोऽनुकम्पासम्बन्धो यस्यानुकम्पयमानस्य स तथोक्तः। प्रत्यासन्नत्वं तु सम्बन्धसर्यानुकम्प्यानंप्रति; तदाश्रयत्वादनुकम्पायां विधीयमानः प्रत्यासत्तेर्यस्यानुकम्पया प्रत्यासन्नः सम्बन्धस्ततः एव युक्तो विधातुमिति पूर्वेमानुकम्प्यमानादेव प्रत्यो विहितः, न तु व्यवहितात्? पुनर्धानादेः। अतः सम्प्रति ततोऽपि यथा स्यादित्येवमर्थमिदम्()। "व्यवहितात्()" इति। विप्रकृष्टादित्यर्थः। विप्रृष्टत्वमतदाश्रयत्वादनुकम्पायाः। न हि तस्यां धानादिराश्रयः, किं तर्हि? अनुकम्प्यमानो देवदत्तादिः॥

बाल-मनोरमा

नीतौ च तद्युक्तात् , ५।३।७७

नीतौ च तद्युक्तात्। सामदानादीति। आदिना भेददण्डयोग्ग्रहणम्। तद्युक्तादित्येतद्व्याचष्टे--अनुकम्पायुक्तादिति। अव्ययसर्वनाम्नां टेः प्रागिति चानुवर्तते, "कस्य च दः" इति च। हन्त ते धानका इति। "दास्यन्ते" इति शेषः। "हन्ते"त्यव्ययमनुकम्पाद्योतकम्। "हन्त हर्षेऽनुकम्पाया"मित्यमरः। "हन्ते"त्यदन्तम्। "हे पुत्रे"ति शेषः। अनुकम्पायुक्ता धाना इत्यर्थः। धानाशब्दात्कप्रत्यये "केऽणः" इति ह्रस्वे कान्ताट्टापि "अबाषितपुंस्काच्चे"ति विकल्पात्पक्षे इत्त्वाऽभावः। एहकीति। "एही"ति तिङन्तस्य टेः प्रागकच्। "अव्ययसर्वनाम्ना"मित्यत्र तिङस्चेत्यनुवृत्तेरिति भावः। अद्धकीति। "अद्धी"ति तिङन्तस्य टेः प्रागकच्। पूर्वेणेति। अनुकम्पायास्तद्विषयत्वादिति भावः। परम्परासम्बन्धे।त्रपीति। पुत्रः साक्षादनुकम्प्यः, तद्द्वारा धाना अनुकम्पायुक्ता इति भावः।

तत्त्व-बोधिनी

नीतौ च तद्युक्तात् १५१७, ५।३।७७

नीतौ च तद्युक्तात्। अनुकम्पायुक्तादिति। यद्यपि पुत्रादिरेव साक्षादमुकम्पायुक्तो न तु धानादिस्तथापि तदद्वारा धानादीनामप्यस्त्यनुकम्पासंबन्ध इति भावः। धानका इति। "धाना"शब्दः स्त्रीलिङ्गः। ततः कः। "केऽणः"इति ह्रस्वः। कप्रत्ययान्ताट्टाप्। अत्र "प्रत्ययस्था"दितीत्त्वेन भाव्यम्। प्रायेण तु "धानका"इति पट()ते। तत्र लिङ्गातिवृत्तिद्रष्टव्येति हरदत्तः। "कर्मव्यतिहारे णच्()स्त्रिया"मिति सिद्धे "णचः स्त्रियामत्रि"ति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापितं "स्वार्थिकाः प्रकृतिलिङ्गं क्विचदतिवर्तन्ते"इति। तेन "धानका"इत्यत्र पुंस्त्वमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

बह्वचो मनुस्यनाम्नष् ठज् वा ५।३।७८

अनुकम्पायाम् ५।३।७६, नीतौ च तद्युक्तात् ५।३।७७ इति वर्तते। बह्वचः प्रातिपदिकात् मनुष्यनामधेयाद् वा ठच् प्रत्ययो भवति, अनुकम्पायां गम्यमानायां नीतौ च। देविकः, देवदत्तकः। यज्ञिकः, यज्ञदत्तकः। बह्वचः इति किम्? दत्तकः। गुप्तकः। मनुष्यनाम्नः इति किम्? मद्रबाहुकः। भद्रबाहुकः।

न्यासः

बह्वचो मनुष्यनाम्नष्ठज्वा। , ५।३।७८

"देविकः" इति। "यज्ञिकः" इति। "ठाजावूर्ध्वं द्वितीयादचः" ५|३|८३ इति दत्तशब्दस्य लोपे कृते "यस्येति च" ६|४|१४८ इत्यकारलोपः। प्रत्युदाहरणे सर्वत्र क एव वेदितव्यः। "मद्रबाहुकः" इति। मद्रौ बाहू यस्य स मद्रबाहुः। नेदं मनुष्यनाम, किं तर्हि? विशेषणम्()। मनुष्यग्रहणं किमर्थम्()? देवहस्तको हस्तीत्यत्र मा भूत्()। नाम ग्रहणं किमर्थम्()? मृगकः, मत्स्यक इत्यत्र मा भूत्()॥

बाल-मनोरमा

बह्वचो मनुष्यनाम्नष्ठज्वा , ५|३|७८

बह्वचो मनुष्य। "ठ"जिति च्छेदः पूर्वसूत्रद्वयविषये इति शेषपूरणम्। "अनुकम्पाया"मिति "नीतौ च तद्युक्ता"दिति च सूत्रद्वयविषये बह्वचो मनुष्यनाम्नः प्रातिपदिकाट्ठज्वा स्यादित्यर्थः। पक्षे कः।

---

सूत्रम्

काशिका-वृत्तिः

घनिलचौ च ५|३|७९

अनुकम्पायाम् इत्यादि सर्वम् अनुवर्तते। पूर्वेण ठचि विकल्पेन प्राप्ते वचनम्। बह्वचो मनुस्यनाम्नो घनिलचित्येतौ प्रत्ययौ भवतः। चकाराद् यथाप्राप्तं च। देवियः, देविलः, देविकः, देवदत्तकः। यज्ञियः, यज्ञिलः, यज्ञिकः, यज्ञदत्तकः।

न्यासः

घनिलचौ च। , ५|३|७९

"देवियः" इति। घन्? पूर्ववल्लोपः। "देविलः" इति इलच्()। "देविकः" इति। ठन्()। "देवदत्तकः" इति कः॥

बाल-मनोरमा

घनिलचौ च , ५|३|७९

घनिलचौ च। तत्रैवेति। शेषपूरणमिदम्। "बह्वच" इति पूर्वं सूत्रविषये इत्यर्थः। "अनुकम्पाया"मिति, "नीतौ च तद्युक्ता"दिति च सूत्रद्वयविषये बह्वचो मनुष्यनाम्नो घन् इलच् एतौ च प्रत्ययावित्यर्थः।

तत्त्व-बोधिनी

घनिलचौ च १५१८, ५|३|७९

घनिलचौ च। चकाराद्यथाप्राप्तमिति काशिका। इह पूर्वसूत्रेणाव ठञ् विहितः। वावचनात्कोऽपि। चकारेण तु कस्याभ्यनुज्ञेति चिन्त्यं, योगविभागे फलमपि चिन्त्यमिति हरदत्तः।

---

सूत्रम्

काशिका-वृत्तिः

प्राचाम् उपादेरडज्वुचौ च ५|३|८०

पूर्ववत् सर्वम् अनुवर्तते। उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् बह्वचो मनुस्यनाम्नः। अडच्वुच्प्रत्ययौ भवतः। चकाराद् घनिलचौ प्रत्ययौ भवतः ठच् च वा। उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः। प्राचांग्रहणं पूजार्थम्। वा इत्येव हि वर्तते।

न्यासः

प्राचामुपादेरडज्वुचौ च। , ५।३।८०

उपड इत्यादौ उपेन्द्रदत्तशब्दात्प्रत्ययः। विकल्पार्थं प्राग्ग्रहणं कस्मान्न भवति? इत्याह--"वेत्येव हि" इत्यादि। अत्र हे वेत्यनुवत्र्तते, तस्मात्तेनैव विकल्पस्य सम्पादितत्वात्? तदर्थग्रहणं नोपपद्यते॥

बाल-मनोरमा

प्राचामुपादेरडज्बुचौ च , ५।३।८०

प्राचामुपादेरडज्वुचौ च। पूर्वविषये इति। "बह्वचो मनुष्यनाम्नः" इति सूत्रविषये इत्यर्थः। चाद्यथाप्राप्तमिति। ठच्, धन्, इलच्चेत्यर्थः। ठज्वेत्यतो वेत्यनुवृत्त्यैव सिद्धे प्राचाङ्ग्रहणं व्यर्थमित्यत आह--प्राचाङ्ग्रहणमिति। उपड इति उपेन्द्रदत्तशब्दादडचि "द्वितीयं सन्ध्यक्षर"मिति वक्ष्यमाणेन एकारादेर्लोप इति केचित्। "नेन्द्रस्य परस्ये"ति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षया अन्तरङ्गस्याप्येकादेशस्य पूर्वमप्रवृत्तेरिकारादिलोप इति शब्देन्दुशेखरे। उपक इति। वुचि अकादेशे एकारादिलोपे रूपम्। उपिय इति। घनि रूपम्। उपिल इति। इलचि रूपम्। उपिक इति। ठचि रूपम्। उपेन्द्रदत्तक इति। कप्रत्यये रूपम्। ठाजाद्यभावाल्लोपो न।

तत्त्व-बोधिनी

प्राचामुपादेरडज्बुचौ च १५२०, ५।३।८०

प्राचामुपादेः। "बह्वचो मनुष्ये"त्याद्यनुवर्तते। उपेन्द्रदत्त इति। ननु कृतसन्धेरूपेन्द्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणात् "उपादे"रिति विधीयमानौ प्रत्ययौ स्तां नाम, लोपस्तु नकारादेरेव स्यात्। ततश्च "उपक" "उपड"इति रूपे न स्यातां, किं तु "उपयक" "उपयड"इति रूपे स्याताम्। एवं घनिलच्()ठच्()ष्वपि दोष एव। तस्मादिहैव "द्वितीयं सन्ध्यक्षरं चे"दिति वार्तिकं कुतो नोक्तमिति चेत्। अत्राहुः---प्रकारान्तरेण निर्वाहसंभवान्नोक्तम्। तथाहि---आद्गुणे कृते "द्वितीयं सन्ध्यक्षर"मित्यादिना अकारस्यापि लोपप्रक्त्या गुणात्पूर्वमेवाऽकृतव्यूहपरिभाषया प्रत्ययः। नच परिनिष्ठितत्वपरेण समर्थग्रहणेन सौत्थितिरित्यत्रेव परिभाषाबाधः शङ्क्यः। "प्राग्दिशः"इति सूत्रे "समर्थग्रहणं निवृत्त"मित्युक्तत्वात्। "अकृतसन्धे"रिति प्रागुक्तज्ञापकबलेन समर्थग्रहणप्रत्यार्()यानपक्षेऽपि ज्ञापकस्य विशेषपरत्वाश्रयणादिति। उपेन्द्रः ष उपगुः, उपकर्तेत्यादिषूपडादीनां पञ्चानां रूपाणां साम्येऽपि सैन्धवादिष्विव प्रकरणादिना विसेषेऽध्यवसेयः।

---

सूत्रम्

काशिका-वृत्तिः

जातिनाम्नः कन् ५।३।८१

बह्वचः इति न अनुवर्तते। सामान्येन विधानम्। जातिशब्दो यो मनुस्यनामधेयो व्याघ्र सिंह इत्येवम् आदिः, तस्मादनुकम्पायां नीतौ च कन्प्रत्ययो भवति। व्याघ्रकः। सिंहकः। शरभकः। वावचनानुवृत्तेर् यथादर्शनम् अन्यो ऽपि भवति। व्याघ्रिलः। सिंहिलः। नामग्रहणं स्वरूपनिवृत्त्यर्थम्।

न्यासः

जातिनाम्नः कन्?। , ५।३।८१

"नामग्रहणम्()" इति। असति हि नामग्रहणे जातिस्वरूपग्रहणं स्यात्()। अतः स्वरूपग्रवणं मा भूदित्येवमर्थं जातिग्रहणम्()॥

बाल-मनोरमा

जातिनाम्नः कन् , ५।३।८१

जातिनाम्नः कन्। जातिशब्दो य इति। यो जातिप्रवृत्तिनिमित्तकः प्रसिद्धः सन् मनुष्यनामधेयभूतः स इत्यर्थः। "अनुकम्पाया"मिति "नीतौ" इति च सूत्रद्वयविहितस्याऽपवादः।

द्वितीयं सन्ध्यक्षरं चेदिति। "एचः सन्ध्यक्षराणी"ति प्राचामाचार्याणां प्रवादः। कहोड इति। ऋषिविशेषस्य नामेदम्। अत्र द्वितीयोऽच् सन्ध्यक्षरं, तदादेर्लोपो, नतु तदूध्वस्यैव।

एकाक्षरेति। व्यञ्जनसहित एकोऽच--एकाक्षरम्। एकाच्कमिति यावत्। तथाविधं पूर्वपदं येषां पदानां तानि एकाक्षरपूर्वपदानि, तेषां मध्ये उत्तरभूतानि पदानि यावन्ति तेषां लोपः स्यादित्यर्थः। इह उत्तरपदशब्दो यौगिकः, नतु समासस्य चरमावयवे रूढो, व्याख्यानात्। "द्वितीयादच ऊध्र्व"मित्यनेन द्वितीयाज्विशिष्टस्य लोपे अप्राप्ते वचनमिदम्। वागाशीर्दत्त इति। वाचि आशीर्यस्य नतु मनस्येव स वागाशीः। तेन दत्त इति विग्रहः। यद्वा आशासनमाशीः, वाचा आशीः--वागाशीः। "कर्तृकरणे कृते"ति समासः। तया वागाशिषा दत्त इति विग्रहः। वाक्करणकाशासनेन दत्त इत्यर्थः। वाचिक इति। वागाशीर्दत्तशब्दाट्ठचि वागित्येकाक्षरपूर्वपदात्परयोराशीर्दत्तशब्दयोर्लोपे सति अन्तर्वर्तिविभक्त्या पदत्वमाश्रित्य प्रवृत्तकुत्वजश्त्वयोरिकाश्रयभत्वेन पदत्वबाधान्निवृत्तौ वाचिक इति रूपमिति केचित्। वस्तुतस्तु ठचि इकादेशात्प्राक्ठावस्थायामेव उत्तरपदलोपे कर्तव्येऽसिद्धत्वान्न पूर्वं कुत्वादिप्रवृत्तिरित्याहुः। यद्यपि द्वितीयादच ऊध्र्वस्य "शीर्दत्त" शब्दस्य लोपे वागा-इक इति स्थिते "यस्येति चे"त्याकारलोपे उक्तरीत्या कुत्वजश्त्वयोर्निवृत्तौ "वाचिक" इति सिध्यति, तथापि आकारलोपस्य स्थानिवत्त्वेन आकारान्तस्य इकमाश्रित्य भत्वे सति आकारान्तनिष्ठभत्वेन चकारान्तनिष्ठपदत्वस्याऽव्याघातात्कुत्वजश्त्वयोः "वागिक" इति स्यात्। उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाऽभावात्तुल्यावधिकया भसंज्ञया "सुप्तिङन्त"मिति पदसंज्ञा बाध्यतेस, एकसंज्ञाधिकारे परत्वादिति भावः। कथमिति। अत्रापि अङ्गुलिदत्तशब्दस्य लोपे सति इकप्रत्ययाश्रितभत्वेन पदत्वाऽभावाज्जश्त्वं दुर्लभमिति प्रश्नः।

षष इति। षष्शब्दस्य पूर्वपदत्वे "ठाजादौ" इति सूत्रसिद्धो द्वितीयादच ऊध्र्वस्यैव लोपो, न त्वयमुत्तरपदलोप इति वचनात्षडिक इति सिद्धमित्यर्थः। एवंच "षडङ्गुलिदत्त" इत्यत्र डकाराऽकारादूध्र्वस्य लोपे सति डकाराऽकारस्य "यस्येति चे"ति लोपे सति तस्य स्थानिवत्तवेन अकारान्तस्य इकमाश्रित्य भत्वे सति तेन अकारान्तनिष्ठेन षकारान्तस्य पदत्वाऽव्याघाताज्जश्त्वं निर्बाधमिति भावः। स्पष्टं चेदं "स्वादिषु" इति सूत्रे भाष्ये।

तत्त्व-बोधिनी

जातिनाम्नाः कन् १५२१, ५।३।८१

जातिनाम्नः। ये शब्दा जात्यन्तरे प्रसिद्धाः, मनुष्येषु नामत्वेन विनियुक्तास्त इहोदाहरणम्।

द्वितीयं सन्ध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः। द्वितीयमित्यादि। "एचः सन्ध्यक्षराणी"ति प्राचां संज्ञा।

एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः। वागाशीरिति। वाचि आशीर्यस्येति विग्रङः। वाचिक इति। यद्यत्र द्वितीयादच ऊध्र्वस्य लोपः स्यात्तदा वाच् आ इक इति स्थिते "यस्येति चे"त्याकारस्य लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भत्वे अन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन कुत्वजश्त्वयोः सतोर्वागिक इति स्ायात्।उत्तरपदलोपे तु अज्जलादेशत्वेन स्थानिवत्त्वाऽभावात्तुल्यावधिकतया "यचि भ"मिति भसंज्ञाया "सुप्तिङन्त"मिति पदसंज्ञा

एकसंज्ञाधिकारात्परत्वाद्बाध्यते। "स्वादिषु"इति पदसंज्ञा तु न शङ्कनीयेव, "यचि भ"मिति भसंज्ञायास्तदपवादत्वात्। कथमिति। अत्राप्युत्तरपदलोपे जाते जश्त्वं दुर्लभमिति प्रश्नः।

षषष्ठाजादिवचनात्सिद्धम्। षष इति। अत्र सौत्र एव लोप इष्यते, न त्वौपसङ्ख्यानिक इत्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
अजिनान्तस्य उत्तरपदलोपश् च ५।३।८२

कनित्यनुवर्तते, मनुस्यनाम्नः इति च। अजिनशब्दान्तात् प्रातिपदिकान् मनुस्यनाम्नो ऽनुकम्पायां कन्प्रत्ययो भवति, तस्य च उत्तरपदलोपः। व्याघ्राजिनो नाम् अकश्चिन् मनुस्यः, सो ऽनुकम्पितः व्याघ्रकः। सिंहकः।
न्यासः
अजिनान्तस्योत्तरपदलोपश्च। , ५।३।८२

"व्याघ्राजिनो नाम कश्चित्()" इति। व्याघ्रस्याजिनम्(), व्याघ्राजिनमिवाजिनं यस्येति व्याघ्राजिनः। "सप्तम्युपमानपूर्वस्य बहुव्रीहिरुत्तरपदलोपश्च" (वा। ९९) इति बहुव्रीहावुत्तरपदलोपे कृते व्याघ्राजिन इत्येष शब्दः सम्पद्यते। अथाजिनलोपश्चेत्येवं कस्मान्नोक्तम्(), किमुत्तरपदग्रहणेन? नैवं शक्यम्(); व्याघ्रमहाजिनौ नामकश्चित्(), सोऽनुकम्पितः--व्माघ्रक इत्यत्राजिनशब्दस्य लोप उच्यमाने महच्छब्दस्य निवृत्तिर्न स्यात्()। उत्तरपदस्यतु लोपे विधीयमाने भवति। तस्माद्यथान्यासमेवास्तु। महदजिनं महाजिनम्(), व्याघ्रस्य महाजिनमिव महाजिनमस्येति पूर्ववदुत्तरपदलोपी बहुव्रीहिः, ततः कन्()॥
बाल-मनोरमा
अजिनान्तस्योत्तरपदलोपश्च , ५।३।८२

अजिनान्तस्य। व्याघ्रक इति। "व्याघ्राजिन" इति कस्यचिन्मनुष्यस्य नाम। तस्मात्कनि अजिनकस्य लोपः। सिंहक इति। सिंहाजिनशब्दात्कनि अजिनस्य लोपः।

---

सूत्रम्
काशिका-वृत्तिः
ठाजादावूर्ध्वं द्वितीयादचः ५।३।८३

लोपः इत्यनुवर्तते। अस्मिन् प्रकरणे यः ठः अजादिश्च प्रत्ययः, तस्मिन् परतः प्रकृतेर् द्वितीयादच ऊर्ध्वं यच् छब्दरूपं तस्य लोपो भवति। ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः। यज्ञिकः, यज्ञिक्यः, यज्ञिलः। उपडः, उपक, उपियः, उपिलः, उपिकः। ठग्रहणमुको द्वितीयात्वे कविधानार्थम्। अजादिलक्षणे हि माथितिकादिवत् प्रसङ्गः। वायुदत्तः वायुकः। पितृदत्तः पितृकः। चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः। अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः बृहस्पतियः बृहस्पतिलः। अनजादौ विभाषा लोपो वक्तव्यः। देवदत्तकः, देवकः। यज्ञदत्तकः, यज्ञकः। लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः। दत्तिकः, दत्तिलः, दत्तियः, दत्तकः। विना ऽपि प्रत्ययेन पूर्वोत्तरपदयोः विभाषा लोपो वक्तव्यः। देवदत्तो दत्तः, देव इति वा। उवर्णाल् ल इलस्य च। भानुदत्तो भानुलः। वसुदत्तो वसुलः। चतुर्थादनजादौ च लोपः पूर्वपदस्य च। अप्रत्यये तथा एव इष्ट उवर्णाल् ल इलस्य च। द्वितीयादचो लोपे

सन्ध्यक्षरद्वितीयत्वे तदादेर् लोपवचनम्। लहोडः लहिकः। कहोडः कहिकः। एकाक्षरपूर्वपदानाम् उत्तरपदलोपो वक्तव्यः। वागाशीः वाचिकः। स्रुचिकः। त्वचिकः। कथं षडङ्गुलिदत्तः षडिकः इति? षषष्ठाजादिवचनात् सिद्धम्।

न्यासः

ठाजादावूर्ध्वं द्वितीयादचः।, ५।३।८३

"अस्मिन्? प्रकरणे" इत्यादि। अनेनास्मिन्? प्रकरणे यौ विहितौ ठाजादी तत्र लोपी भवति, यौ तु प्रकरणान्तरे तत्र न भवतीति दर्शयति। एतच्चैतत्प्रकरण विहितयोष्ठाजाद्योरिहानुवृत्तेर्लभ्यते। अथोध्र्वग्रहणं किमर्थम्(), यावता "द्वितीयादचः" इति पञ्चमी, तस्मादन्तरेणाप्यूध्र्वग्रहणम्(), "तस्मादित्युत्तरस्य" (१।१।६७) इत्यूर्ध्वं यच्छब्दरूपं तस्यैव लोपो भविष्यति? इत्यत आह--"उध्र्वंग्रहणम्()" इत्()यादि। असत्यूध्र्वंग्रहणे "आदेः परस्य" १।१।५३ इति द्वितीयादचो यः परस्तस्यादेर्लोपः स्यात्(), तस्मिस्तदु सति सर्वे निवत्र्तते। अतः सर्वस्य लोपो यथा स्यादित्येवमर्थमूध्र्वंग्रहणम्()। अथ ठग्रहणं किमर्थम्(), यावता ठस्येकादेशे कृतेऽजादावित्येव सिद्धम्()? इत्यत आह--"ठग्रहणम्()" इत्यादि। उको द्वितीयत्वे सत्यकृत एवेकादेशे ठावस्थायामेव द्वितीयादूध्र्वस्य लोपे कृते "इसुसुक्तान्तात्? कः" ७।३।५१ इति कविधिर्यथा स्यादित्येवमर्थं ठग्रहणम्()। तत्रैतत्? स्यात्? चोद्यम्()--इकादेशे कृतेऽजादिलक्षते च द्वितीयादूध्र्वस्य लोपे स्थानिवद्भावाद्ग्रहणेन ग्रहणात्? कादेशो भविष्यति? इत्याह--"अजादिलक्षणे हि" इत्यादि। इहादेशविधौ तत्र ठग्रहणं वर्णग्रहणं स्यात्(), सङ्घातग्रहणं वा; तत्र वर्णग्रहणेऽल्विधित्वात्? स्थानिवद्भावो नोपपद्यते। सङ्घातग्रहणे यद्यप्युपपद्यते, तथापि "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।प।१२) इत्यजादित्वसन्निपातकृतमुकः ठप्रत्ययेनानन्तर्य्यमिति तदजादित्वविघातं न कुर्यात्()। ततश्च यथा--मथितं पण्यमस्य माथितिक इत्यत्र यस्येति ६।४।१४८ लोपे सत्यपि तकारेण ठस्यानन्तर्य्ये कादेशो न भवति, तता वायुदत्तो वायुक इति न स्यात्()। तस्मादुको द्वितीयत्वे कविधानार्थं ठग्रहणम्()। "उवर्णाल्लः" इति। तस्य च लोप इत्यर्थः। स चादेरेव भवति, न सर्वस्य। अथवा--ल इत्यादेशएवायं सर्वे लस्य विधीयते। च चानेकाल्त्वात्सर्वस्यैव भवति। "द्वितीयादचः" इति। द्वितीयलोपे कत्र्तव्ये सन्ध्यक्षरस्य द्वितीयत्वं भवति यदा, तदादेः शब्दरूपस्य लोपो भवतीति वक्तव्यम्()। सन्ध्यक्षरादूध्र्वस्य लोपोऽपि प्राप्ते सन्ध्यक्षरस्यैकाक्षरपूर्वपदानामित्यादि द्वितीयादच ऊध्र्वस्य लोपः उक्तः, तदपवादः। "एकाक्षर" इति। अक्षरशब्दश्चायमच्यपि वत्र्तते। एकाक्षरमेकाच पूर्वपदं येषां ते, तेषामुत्तरपदलोपो वक्तव्यः। "वागाशीः" इति। वाच्याशीरस्येति कृत्वा वैयधिकरण्ये बहुव्रीहिः। अनुकम्पितो बागाशीरिति विगृह्रठचि कृते द्वितीयादच ऊध्र्वस्य लोपः स्यात्()। तस्मिन्? सति वाच्()ा+इक इति स्थिते यस्येति (६।४।१४८) लोपे कृते "अचः परस्मिन्? पूरवविधौ" १।१।५३ इति स्थानिवद्भावात्पदसंज्ञा न स्यात्()। तस्मात्? तस्यान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञा, "चोः कुः" ८।२।३० इति कुत्वम्()--वागिक इति स्यात्()। आशीःशब्दस्य तस्य परलोपे कृते तस्यानजादेशात्वात्? स्थानिवद्भावो नास्तीति भसंज्ञा भवत्येव, ततस्तया पदसंज्ञाया निषिद्वायां पदनिबन्धनकुत्वादि न भवतीति वाचिक इति सिध्यति। "कथम्()" इत्यादि। यद्येकाक्षरपूर्वपदानामुत्तरपदस्य लोप उच्यते, षडिक इति न सिध्यति। अत्राप्युत्तरलोपे कृते भसंज्ञायानुपजातायां पदसंज्ञायां बाधितायाम्? "झलां जशोऽन्ते" ८।२।३९ इति षषः षकारस्य जश्त्वे कृते षडिक इति न सिध्यति॥

बाल-मनोरमा

ठाऽजादावूर्ध्वं द्वितीयादचः , ५।३।८३

ठाजादौ। अस्मिन्प्रकरणे इति। अनुकम्पायां, नीतौ चेत्यस्मिन्प्रकरणे इत्यर्थः। सन्निधानलभ्यमिदम्। सर्वमिति। ऊर्द्ध्वग्रहणादिदं लभ्यते। अन्यथा "आदेः परस्ये"ति परिभाषया द्वितीयाऽचो यः परस्तस्यादेरेव स्यादिति भावः। "अजिनान्तस्योत्तरपदलोपश्चे"त्यतो लोप इत्यनुवृत्तमिह कर्मसाधनमाश्रीयते इति मत्वाह--लुप्यत इति। देविक इति। देवदत्तशब्दाट्ठचि द्वितीयादचः परस्य दत्तशब्दस्य लोपे इकादेशे रूपम्। देविय इति। देवदत्तशब्दाद्घनि दत्तशब्दस्य लोपे

इयादेशे रूपम्। देविल इति। इलचि दत्तशब्दस्य लोपः। देवदत्तक इति। कप्रत्यये सति ठाऽजाद्यभावान्न दत्तपदलोपः। वायुक इति। वायुदत्तशब्दाद्दत्तशब्दस्य लोपः। उकः परत्वाड्ठस्य कः। नन्विकादेशे सति देविक इत्यत्र अजादित्वादेव सिद्धे ठग्रहणं व्यर्थमित्यत आह--ठग्रहणमिति। कृत एव ठग्रहणे वायुशब्दात्परस्य दत्तशब्दस्य लोपे इयादेशे रूपम्। देविल इति। इलचि दत्तशब्दस्य लोपः। देवदत्तक इति। कप्रत्यये सति ठाऽजाद्यभावान्न दत्तपदलोपः। वायकु इति। वायुदतद्तशब्दाद्दत्तशब्दस्य लोपः। उकःपरत्वाड्ठस्य कः। नन्विकादेशे सति देविक इत्यत्र अजादित्वादेव सिद्धे ठग्रहणं व्यर्थमित्यत आह--ठग्रहणमिति। कृत #एव ठग्रहणे वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव नित्यत्वाल्लोपे कृते ठस्य उकः परत्वात्कादेशः सिध्यति। अन्यथा इकादेशे कृतेऽजादित्वं पुरस्कृत्य दत्तशब्दस्य लोपे सति वायु--इक इति स्थिते ठस्याऽभावात्कादेशो न स्यात्। नच स्थानिवत्त्वादिकस्य ठत्वं शह्क्यं, "ठस्येकः" इत्यत्र स्थान्यादेशयोरकार उच्चारणार्थ इति पक्षे अल्विधित्वात्सन्निपातपरिभाषाविरोधाच्चेति भाष्ये स्पष्टम्। पितृक इति। पितृदत्तशब्दाड्ठचि दत्तशब्दस्य लोपे उकः परत्वाड्ठस्य कः। अथ "चतुर्थादनजादौ वा लोपः पूर्वपदस्य च।

अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च।" इति वक्ष्यमाणश्लोकवार्तिकं भङ्क्त्वा "चतुर्थादच" इत्येतद्व्याचष्टे--चतुर्थादच इति। बृहस्पतिक इति। बृहस्पतिदत्तशब्दाड्ठचि दत्तशब्दस्य लोपे ठस्य इकादेशः। द्वितायादूध्र्वत्वाऽभावादप्राप्ते वचनम्।

"अनजादौ वे"ति वार्तिकभागं व्याचष्टे--अनजादौ चेति। "अनजादौ चे"पाठे विभाषेति भाष्यलब्धम्, तत्र देवत्तको देवक इति कप्रत्यये दत्तलोपविकल्पोदाहरणात्।

लोपः पूर्वपदस्य चेति। "विभाषे"ति शेषः। अनजादाविति तु नात्र सम्बध्यते। तदाह--दत्तिक इत्यादि।

ठचि धनि इलचि के च रूपम्। "अप्रत्यये तथैवेष्ट" इति वार्तिकभागं व्याचष्टे--विनापि प्रत्ययमिति। दत्तः देव इति। देवदत्तशब्दाड्ठाजादिप्रत्ययस्याप्यभावे पूर्वोत्तरपदयोः क्रमेण लोपे रूपम्।

उवर्णादिति। "ल" इति लोपस्य पूर्वाचार्यसंज्ञा। उवर्णात्परस्य इलचो लोपः स्यादित्यर्थः। "आदेः परस्ये"तीकारस्य लोपः। चकारेण ठाजादौ द्वितीयादच ऊध्र्वं लोपः सूत्रसिद्धोऽनुद्यते।

ऋवर्णादपीति। ऋवर्णादपि परस्य इलच आदेर्लोपः स्यादित्यर्थः। सवित्रियः सवितृल इति। धनि इलचि च रूपम्। वस्तुतस्तु ऋवर्णादपीति भाष्याऽदृष्टत्वादुपेक्ष्यम्।

तदेवं व्याख्यातं वार्तिकं समस्तं पठति--चतुर्थादित्यादि।

तत्त्व-बोधिनी
ठाऽजादावूध्र्व द्वितीयादचः १५१९, ५।३।८३

ठाजादौ। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। आदिग्रहणं चिन्त्यप्रयोजनं, "यस्मिन्विधिस्तदादौ"इत्येव सिद्धमिति हरदत्तः। अस्मिन्प्रकरण इति। अनुकम्पायां नीतौ चेत्यर्थद्वस्यैव प्रत्यासत्त्या बुद्धौ सन्निधानादिति भावः। ऊध्र्वग्रहणिह सर्वलोपार्थम्। अन्यथा "आदेः परस्ये"त्यादेरेव स्यादित्यभिप्रेत्याह-----द्वितीयादच ऊध्र्व सर्वमिति। "अजिनान्तस्ये"त्यतो लोप इत्यनुवर्तनादाह---लुप्यत इति। ननु ठग्रहणं व्यर्थम्, इकादेशे कृते अजादावित्येव सिद्धत्वादत आह---ठग्रहणमुको द्वितीयत्व इति। वायुक इति। वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव वलोपे "इसुसुक्तान्ता"दिति कः। किंच पृथक् ठग्रहणस्य प्रयोजनान्तरमप्यस्ति। यदा तु चित्रगुग्रभृतिभ्ष्ठच्, तदोगन्तत्वात्कादेशप्राप्त्या प्रथममिकादेशस्याऽसंभवेनाजादिलक्षणो लोपो न स्यादिति तदर्तमपि ठग्रहणम्। तेन

ठावस्थायामुत्तरपदलोपे कादेशस्याऽसंभवादिकादेशे "चित्रिक"इति रूपं सिध्यतीति बोध्यम। "चतुर्थादनजादौ चे"ति वक्ष्यमाणमेव भङ्क्त्वा व्याचष्टे---चतुर्थादच ऊध्र्वस्येति।

अनजादौ च विभाषा लोपो वक्तव्यः। अनजादाविति। हलादावित्यर्थः। "अस्मिन् प्रकरणे"इत्येव।

लोपः पूर्वपदस्य च। लोपः पूर्वपदस्य चेति। ठाजादावनजादौ चेति बोध्यः। "अप्रत्यये ततैवेष्टः"इत्येतद्व्याचष्टे---विनापि प्रत्ययमिति।

उवर्णाल्ल इलस्य च। ल इलस्य चेति। इलस्य लः=लोपः इत्यर्थः। तत्र "आदेः परस्ये"ति इकारलोपो बोध्याः।

---

सूत्रम्
काशिका-वृत्तिः
शेवलसुपरिविशालावरुणार्यमाऽदिनां तृतीयात् ५।३।८४

शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतः तृतीयादचः ऊर्ध्वस्य लोपो भवति। पूर्वस्य अयम् अपवादः। अनुकम्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः। सुपरिकः, सुपरियः, सुपरिलः। विशालिकः, विशालियः, विशालिलः। वरुणिकः, वरुणियः, वरुणिलः। अर्यमिकः, अर्यमियः, अर्यमिलः। शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनाम् इति वक्तव्यम्। शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः शेवलिकः, सुपरिकः इति यथा स्यात्। शेवल्यिकः, सुपर्यिकः इति मा भूत्।
न्यासः
शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्?। , ५।३।८४

"स चाकृतसन्धीनाम्()" इति। यद्यस्वरसन्धौ लोपो भवत्येवं सिध्यति, नान्यथा। तस्मादकृतस्वरसन्धीनामेव शेवलादीनां लोपो भवतीति वक्तव्यम्()॥
बाल-मनोरमा
शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् , ५।३।८४

शेवल। एषामिति। शेवल, सुपरि, विशाल, वरुण, अर्यमन्-एतत्पूर्वपदकानामित्यर्थः। पूर्वस्येति। "ठाजादौ" इत्यस्येत्यर्थः। शेवलिक इति। शेवलदत्त शब्दाट्ठचि तृतीयादचः परस्य दत्तशब्दस्य लोपः। शेवलिल इति। इलचि रूपम्। सुपरिक इति। सुपरिदत्तशब्दाट्ठचि दत्तशब्दलोपः। विशालिक इति। विशालदत्तशब्दाट्ठचि रूपम्। वरुणिक इति। वरुणदत्तात्--वरुणिकः। अर्यमिक इति। अर्यमदत्तात्-अर्यमिकः। "अकृतसन्धीनामेषा"मिति वार्तिकं भाष्ये स्थितम्। तेन सुपर्याशीर्दत्तः सुपरिक इत्यादि सिध्यति।

तत्त्व-बोधिनी
शेवलसुपरिपिशालवरुणार्यमादीनां तृतीयात् १५२२, ५।३।८४

शेवलसुपरि। शेवलिक इति। "बह्वचो मनुष्यनाम्नः"इति ठच्। घनिलचोस्तु----शेवलियः। शेवलिलः। "शेवलादीनां तृतीयाल्लोपो य उच्यते स चाऽकृतसन्धीनां वक्तव्यः। सुपर्याशीः। सुपरिकः। सुपरियः। सुपरिलः" इति भाष्ये स्थितम्, कैयटेन तु "सुपरिकत"इति प्रतीकमुपादाय "संहिताकार्ये तु कृते लोपे सति "सपर्यिक"इति स्यादिति व्याख्यातम्। अयं भावः---संहिताकार्ये यणि कृते तृतीयादच ऊध्र्वं लोपे सति "शीर्दत्त"इत्यस्यैव लोपः स्यात्, आकारस्य तु "यस्येति

चे"त्यनेन स्यात्, तथाच स्थानिवद्भावाद्यणो निवृत्तिर्न भविष्यतीति।

---

सूत्रम्

काशिका-वृत्तिः

अल्पे ५।३।८५

परिमाणापचये अल्पशब्दः। प्रकृतिविशेषणं च एतत्। अल्पत्वविशिष्टे अर्थे वर्तमानात् प्रातिपदिकात् यथाविहितं पत्ययो भवति। अल्पं तैलम् तैलकम्। घृतकम्। सर्वकम्। विश्वकम्। उच्चकैः। नीचकैः। पचतकि। जल्पतकि।

न्यासः

अल्पे। , ५।३।८५

बाल-मनोरमा

अल्पे , ५।३।८५

अल्पे। अल्पत्वविशिष्टे वर्तमानाद्यथाविहितं प्रत्ययाः स्युः। तैलकमिति। "सर्वकम्" "उच्चकैः" "पचतकी"त्याद्यप्युदाहार्यम्।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वे ५।३।८६

ह्रस्वत्वविशिष्टे ऽर्थे वर्तमानात् प्रातिपदिकात् यथाविहितं प्रत्ययो भवति। दीर्घप्रतियोही ह्रस्वः। ह्रस्वो वृक्षः वृक्षकः। प्लक्षकः। स्तम्भकः।

न्यासः

ह्रंस्वे। , ५।३।८६

"दीर्घप्रतियोगी ह्यस्वः" इति। स पुनर्यमपेक्ष्य दीर्घो भवति स वेदितव्यः। ननु च दीर्घत्वापचये सति ह्यस्वो भवति; यत्र दीर्घत्वापचयस्तत्राल्पतास्तीति पूर्वेणैव सिद्धम्()? न सिध्यति; न ह्ययं नियोगः--यत्र दीर्घस्यापचयस्तत्राल्पत्वेन भवितव्यमिति, तथा हि--सत्यप्यपचये महत्त्वगुणयुक्तं यद्वस्तु तदमहदेव भवति, न चाल्पम्()॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां कन् ५।३।८७

ह्रस्वे इत्येव। ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन्प्रत्ययो भवति। पूर्वस्य अयम् अपवादः। वंशकः। वेणुकः। दण्डकः।

न्यासः

संज्ञायां कन्?। , ५।३।८७

बाल-मनोरमा

संज्ञायां कन् , ५।३।८७

संज्ञायां कन्। वंशक इति। ह्रस्वस्य वेणुजातिविशेषस्य नाम।

---

सूत्रम्

काशिका-वृत्तिः

कुटीशमीशुण्डाभ्यो रः ५।३।८८

ह्रस्वे इत्येव। संज्ञाग्रहणं न अनुवर्तते। सामान्येन विधानम्। कुटीशमीशुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति। कस्य अपवादः। ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः। स्वार्थिकत्वे ऽपि पुंलिङ्गता, लोकाश्रयत्वाल् लिङ्गस्य।

न्यासः

कुटीशमीशुणाडाभ्यो रः। , ५।३।८८

"कुटीरः। शमीरः" इति। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनृवत्र्तते इति प्रकृतिगतेनैव स्त्रीलिङ्गेन भवितव्यम्(), न पुल्लिङ्गेन? इत्यत आह--"स्वार्थिकत्वेऽपि" इत्यादि॥

बाल-मनोरमा

कुटीशमीशुण्जाभ्यो रः , ५।३।८८

कुटीशमी। ह्रस्व इत्येव कुटीर इति। "स्वार्थिकाः क्वचित्प्रकृतितो लिह्गवचनान्यतिवर्तन्ते" इति पुंस्त्वम्। एवं शमीरः शुण्डार इत्यपि। ह्रस्वा शमी, शुण्डा चेत्यर्थः।

तत्त्व-बोधिनी

कुटीशमीशुण्डाभ्यो रः १५२४, ५।३।८८

कुटीर इति। "स्वार्थिकाः प्रकृतितो लिङ्गमतिवर्तन्ते"इति पुंलिङ्गताऽत्र सङ्गच्छते।

---

सूत्रम्

काशिका-वृत्तिः

कुत्वा डुपच् ५।३।८९

ह्रस्वे इत्येव। कुतूशब्दाद् ह्रस्वत्वे द्योत्ये दुपच्प्रत्ययो भवति। कस्य अपवादः। ह्रस्वा कुटूः कुतुपम्। चर्मम् अयं स्नेहभाजनम् उच्यते। कुतूः इत्यावपनस्याख्या।

न्यासः

कुत्वा डुपच्?। , ५।३।८९

बाल-मनोरमा

कुत्वा डुपच् , ५।३।८९

कुत्वा डुपच्। कुतुप इति। कुतूशब्दात् डुपचि डित्त्वाट्टिलोपः। तत्रापि कुटीरादिवत्स्तीर्तवमपहाय पुंस्त्वमेव। तत्राऽमरकोशषमपि प्रमाणयति--कुतूः कृत्तिस्नेहेति।

सूत्रम्
काशिका-वृत्तिः
कासूगोणीभ्यां ष्टरच् ५।३।९०

ह्रस्वे इत्येव। कासूगोणीशब्दाभ्यां ह्रस्वस्वे द्योत्ये ष्टरच् प्रत्ययो भवति। कस्य अपवादः। षकारो ङीषर्थः। ह्रस्वा कासूः कासूतरी। गोणीतरी। कासूः इति शक्तिः, आयुधविशेसः उच्यते।
न्यासः
कासूगोणीभ्यां ष्टरच्?। , ५।३।९०

बाल-मनोरमा
कासूगोणीभ्यां ष्टरच् , ५।३।९०

कासूगोणीभ्यां ष्टरच्। ह्यस्व इत्येव। कासूतरीति। षित्त्वान्ङीषिति भावः। "कासूर्बुद्धे कुवाच्येऽस्त्रे" इति नानार्थरत्नमालायाम्। एवं गोणीतरीति।

---

सूत्रम्
काशिका-वृत्तिः
वत्सौक्षाश्वर्षभेभ्यश् च तनुत्वे ५।३।९१

ह्रस्वे इति निवृत्तम्। वत्स उक्षनश्व ऋषभ इत्येतेभ्यः तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः तस्य तनुत्वे प्रत्ययः। वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः। प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयःप्राप्तिः। तरुण उक्षा, तस्य तनुत्वं तृतीयवयःप्राप्तिः। अश्वेन अश्वायाम् उत्पन्नो ऽस्वः, तस्य तनुत्वम् अन्यपितृकता। अनुड्वानृषभः, तस्य तनुत्वं भारवहने मन्दशक्तिता।
न्यासः
वत्सोक्षा�आर्षभेभ्यश्च तनुत्वे। , ५।३।९१

यदि तनुत्वे वत्सादिशब्देभ्यः प्रत्ययो विधीयते, ये शरीरे कृशा वत्सादयस्तत्राप्यविशेषेण प्रत्ययः प्रसज्येत, विशेषानुपादानात्()? इत्यत आह--"यस्य गुणस्य" इत्यादि। गुणो विशेषणम्(), विशेष्यं द्रव्यम्()। वत्सादिशब्दानां प्रवृत्तिनिमित्तं वयोविशेषादि। यस्मिन्? सति वत्सादयः शब्दा द्रव्ये विशेष्ये निविशन्ते=प्रवत्र्तते, तस्यैव वत्सादिशब्दस्य प्रवृत्तिनिमित्त्स्य तनुत्वे प्रत्यो भवति, न तनुत्वमात्रे; तत्? पुनः प्रत्यासत्तेः। वत्सादिभ्यः प्रकृतिभ्यः प्रत्यये विधीयमाने अन्यत्? प्रवृत्तिनिमित्तं न प्रत्यासन्नम, ततस्तस्यैव तनुत्वे युक्तं प्रत्ययेन भवितव्यम्()। "तस्य तनुत्वं द्वितीयवयसः प्राप्तिः" इति। तृतीयवयःप्राप्तिकाले द्वितीयस्य वयसः। उक्षशब्दस्य प्रवृत्तिनिमित्तस्य निश्चितं तनुत्वमवशिष्यते। "तस्य तनुत्वमन्यपितृकता" इति। गर्दभपितृकेत्यर्थः। तर्हि गर्दभाद()आआयामुत्पन्नोऽ()आतर इत्युच्येते। "तस्य तनुत्वं भारोद्वहर्ने मन्दशक्तिता" इति। भारोद्वहनं प्रति यःसमर्थो न स्यात्? स ऋषभतर इत्युच्यते। यदा तु तस्य भारोद्वहने सामथ्र्यं मन्दं भवति=हीयते, तदा तनुत्वं भवति॥
बाल-मनोरमा
वत्सोक्षा�आर्षभेभ्यश्च तनुत्वे , ५।३।९१

वत्सोक्ष। ह्रस्व इति निवृत्तम्। वत्स, उक्षन्, अ()आ, ऋषभ--एभ्यस्तनुत्वविशिष्टवृत्तिभ्यः ष्टरच्()प्रत्ययः स्यादित्यर्थः। तनुत्वं--न्यूनत्वम्। वत्सः-प्रथमवयाः। वयसश्च प्रथमस्य तनुत्वम्--उत्तर वयः प्राप्त्या ज्ञेयम्। तदाह--द्वितीयं वयःप्राप्त इति। उक्षतर इति। उक्षा--तरुणो बलीवर्दः। तारूण्यस्य तनुत्वं तृतीयवयः प्राप्त्या ज्ञेयम्। अ()आतर इति। गर्दमेन अ()आआयामुत्पादितः। अ()आतरः--अ()आतरत्वं च अ()आत्वापेक्षया न्यूनमेव। ऋषभतर इति। ऋषभो-भारस्य वोढा तस्य तनुत्वं भारोद्वहने मन्दशक्तिता, तद्वानित्यर्थः। तनुः कृशो वत्सो वत्सतर इति कुतो नेत्यत आह--प्रवृत्तिनिमित्ततनुत्वे एवायमिति। एतच्च भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

वत्साक्षा�आर्षभेभ्यश्च तनुत्वे १५२५, ५।३।९१

वत्सोक्षा()आ। तनुत्वं=न्यूनता। सा च प्रवृत्तिनिमित्तस्य, प्रत्यासत्तेः। क्वचित्तु तत्सहचरितधर्मान्तराणाम्। तत्र वत्सः--प्रथमवयाः। वयसश्च प्रथमस्य न्यूनत्वं नाम वयोऽन्तरप्राप्तिः। तदाह---द्वितीयमिति। तरुण उक्षा। तारुण्यस्य चतनुत्वं तृतीयवयःप्राप्तिः। अ()आआयाम()आआदुत्पन्नोऽ()आः। अ()आत्वं च जातिः। तत्सहचरितस्याऽ()आआयाम()आआदुत्पन्नत्वधर्मस्यन्यूनत्वमन्यपितृकता। तथा च गर्दभेनाऽशावायामुत्पादितोऽ()आतरः। ऋषभो भावरस्य वोढा। तस्य तनुत्वं बारोद्वहने मन्दशक्तिता। तद्वांस्तु ऋषभतरः।

---

सूत्रम्

काशिका-वृत्तिः

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ५।३।९२

किम् यत् ततित्येतेभ्यः प्रातिपदिकेभ्य द्वयोरेकस्य निर्धारणे डतरच्प्रत्ययो भवति। निर्धार्यमाणवाचिभ्यः स्वार्थे प्रत्ययः। जात्या, क्रियया, गुनेन, संज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। कतरो भवतोः कठः। कतरो भवतोः कारकः। कतरो भवतोः पटुः। कतरो भवतोर् देवदत्तः। यतरो भवतोः कारकः। यतरो भवतोः पतुः। यतरो भवतोर्देवदत्तः, ततर आगच्छतु। महाविभाषया चात्र प्रत्ययो विकल्प्यते। को भवतोर् देवदत्तः, स आगच्छतु। निर्धारणे इति विसयसप्तमीनिर्देशः। द्वयोः इति समुदायान् निर्धारणविभक्तिः। एकस्य इति निर्देशः निर्धर्यमाणनिर्देशः।

लघु-सिद्धान्त-कौमुदी

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् १२३९, ५।३।९२

अनयोः कतरो वैष्णवः। यतरः। ततरः॥

न्यासः

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्?। , ५।३।९२

"निर्धार्यमार्णेभ्यः प्रत्ययः" इति। "निर्धार्यमाणवाचिभ्यः इत्येतत्? कुतो लभ्यते? तत एवोत्पन्ने प्रत्यये निधरिणस्य गम्यमानत्वत्()। "महाविभाषा" इत्यादि। "समर्थानां प्रथमात्()" ४।१।८२ "निषरिणे" इचि। विषये प्रत्ययो यथा स्यात्()। "द्वयोरिति समुदायान्निर्धारणविभक्तिः#ः" इति। षष्ठी, सप्तमी वा। सा पुनस्तस्य "यतश्च निर्धारणम्? २।३।४१ इत्येनेन। "#एकस्येति निर्देशः निर्धार्यमाणनिर्देशः" इति। एकस्मिन्निर्षार्यमाणे यथा स्यात्। ननु च समुदायादेकदेशस्य पृथक्? करणं निर्धारणम्(), द्वयोरित्यवयवसमुदायो निर्दिष्टो यत एकदेशो निर्धारयितव्यः, स चैकदेशे निर्धारयितव्ये एक एव सम्भवति; अतोऽन्तरेणाप्येकग्रहणमेकस्यैव निर्धारणं भविष्यतीति निष्फलमेकग्रहणम्()? नैतदेवम्(); असति हि

तस्मिन्? द्वयोरिति कर्मणि षष्ठी विज्ञायते, द्वौ चेन्निर्षार्यते कुतश्चिदिति, ततश्चेहापि प्रत्ययः स्यात्()--अस्मिन्? ग्रामे कौ देवदत्तयज्ञदत्ताविति। तस्मादेकग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् , ५।३।९२

किंयत्तदो निर्धारणे। किम्, यत्, तत् एषां समाहारद्वन्द्वात्पञ्चमी। द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरच् स्यादित्यर्थः। अनयोः कतरो वैष्णव इति। को वैष्णव इत्यर्थः। अत्र वैष्णवत्वगुणेन कुंशब्दार्थ इदमर्थाभ्यां निर्धार्यते। अतः किंशब्दाड्डतरचि डित्त्वाट्टिलोपे "कतर" इति भवति। एवं यच्छब्दात्, तच्छब्दाच्च डतरचि टिलोपे यतरः ततर इति भवति। निर्धार्यमाणवाचिभ्य इति किम्?। कयोरन्यतरो देवदत्तः, ययोरन्यतरः, तयोरन्यतर इत्यत्र किमादिभ्यो न भवति।

तत्त्व-बोधिनी

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् १५२६, ५।३।९२

किंयत्तदो। कतरो वैष्णव इति। गुणेन निर्धारणमिदम्। क्रियासंज्ञाभ्यां निर्धारणे ति "कतरोऽध्यापकः" "कतरो देवदत्त"इत्यादि ज्ञेयम्। ननु द्वयोरेकस्य निर्धरणे डतरच्चेद्भवति, तर्हि "कयोरन्यतरो देवदत्तः" "ययोरन्यतरः" "तयोरन्यतरः"इत्यत्रापि प्राप्नोति। अत्राहुः---निर्धार्यमाणवाचिभ्य एवायं प्रत्ययोऽभिधान स्वाभाव्यात्, तेनात्र नातिप्रसङ्ग इति। एकस्येति किम्()। "द्वयो"रिति कर्मणि षष्ठी माभूत्। तथाहि सति "अस्मिन् सङ्घे कौ देवदत्तयज्ञदत्तौ"इत्यादावेव स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

वा बहूनां जातिपरिप्रश्नो डतमच् ५।३।९३

किंयत्तदः इति वर्तते निर्धारने, एकस्य इति च। बहूनाम् इति निर्धारने षष्ठी। बहुनां मध्ये एकस्य निर्धारने गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यः वा डतमच् प्रत्ययो भवति। कतमो भवतां कठः। यतमो भवताम् कठः, ततम आगच्छतु। वावचनम् अकजर्थम्। यको भवतां कठः, सक आगच्छतु। महाविभाषा च प्रत्ययविकलोपार्था अनुवर्तते एव। को भवतां कठः। यो भवतां कठः, स आगच्छतु। जातिपरिप्रश्ने इति किम्? को भवताम् देवदत्तः। परिप्रश्नग्रहणं च किम एव विशेषणं, न यत्तदोः, असम्भवात्। जातिग्रहणं तु सर्वैरेव सम्बध्यते। किमो ऽस्मिन् विषये डतरम् अपि इच्छन्ति केचित्, कतरो भवतां कालापः इति। तत्र कतरकतमौ जातिअपरिप्रश्ने २।१।६२ इति वचनात् सिद्धम्।

लघु-सिद्धान्त-कौमुदी

वा बहूनां जातिपरिप्रश्ने डतमच् १२४०, ५।३।९३

जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात्। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणमकजर्थम्। यकः। सकः॥

लघु-सिद्धान्त-कौमुदी

इति प्रागिवीयाः १५ १२४०, ५।३।९३

लघु-सिद्धान्त-कौमुदी

अथ स्वार्थिकाः १२४०, ५।३।९३

न्यासः

वा बहूनां जातिपरिग्रश्ने डतमच्?। , ५।३।९३

"जातिपरिप्रश्नविषयेभ्यः" इति। जातिपरिप्रश्नो यथासम्भवं येषां ते तथोक्ताः। "कतमो भवतां कटः" इति। "गोत्रञ्च चरणैः सह" (म। भा। २।२२५) इति तस्य जातित्वम्()। सा च कठजातिः किं शब्देन परिपृच्छयते। किंशब्दोऽत्र जातिपरिप्रश्नविषयो भवति। "यतमो भवतां कठस्ततम आगच्छतु" इति। यत्तच्छब्दाविह जातिविषयावेव, न परिप्रश्नविषयो भवति। "यतमो भवतां कठस्ततम आगच्छतु" इति। यत्तच्छब्दाविह जातिविषयावेव, न परिप्रश्नविषयौ; असंभवात्(), न हि ताभ्यां परिप्रश्नः क्रियते, किं तर्हि? किंशब्देन। अत एव वक्ष्यति--"परिप्रश्नग्रहणं किम एव विशेषणम्(), न यत्तदोः, असम्भवात्()" इति। "वावचनमकजर्थम्()" इति। पक्षेऽकजपि यथा स्यात्()। यद्येवम्? वाक्यं न सिध्यति, यदा हि डतमज्? न भवत्यकचैव भवितव्यम्()? इत्यत आह--"महाविभाषा" इत्यादि। अत्र च महीविबाषा प्रत्ययविकल्पार्थाऽनुवत्र्तते, तया प्रत्यये विकल्पिते पक्षे वाक्यमपि भविष्यति। "जातिग्रहणं तु सर्वैः सम्बध्यते" इति। जातिः सवत्रैव भवति, तत्र जात्यादिना किं शब्दे विशेष्यमाणे सामध्र्यादेव तस्य परिप्रश्नविषयत्वं लभ्यते? नैतदस्ति; स हि क्षेपेऽपि वत्र्तते। तत्रासति परिप्रश्नग्रहणे यदा आतौ क्षेपे वत्र्तते, तदा प्रत्ययः स्यात्()॥

बाल-मनोरमा

वा बहूनां जातिपरिप्रश्ने डतमच् , ५।३।९३

वा बहूनाम्। किंयत्तद इति, निर्धारणे इति, एकस्येति चानुवर्तते। बहूनामिति निर्धारणे षष्ठी। तदाह--बहूनां मध्ये निर्धारणे डतमज्वा स्यादिति। "मध्ये" इत्यनन्तरम् --एकस्येति शेषः। जातिपरिप्रश्ने गम्ये इत्यपि बोध्यम्। जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्लः। जातौ परिप्रश्ने च गम्ये इत्यर्थः। तत्र जाताविति किंयत्तदां सर्वेषामेव विशेषणम्। परिप्रश्नग्रहणं तु किम एव विशेषणं, तच्च क्षेपार्थकस्य किमो निवृत्त्यर्थम्। यत्तदोस्तु परिप्रश्नग्रहणं न विशेषणम्, असंभवादिति वृत्तौ स्पष्टम्। अत्र वार्तिकम्--"किमादीनां द्विबह्वर्थे प्रत्ययविधानापरिप्रश्नग्रहणं न विशेषणम्, असंभवादिति वृत्तौ स्पष्टम्। अत्र वार्तिकम्--"किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्य"मिति। "पूर्वसूत्रे द्वयोरिति, अत्र सूत्रे जातिपरिप्रश्ने इति च न कर्तव्ये इति भाव" इति कैयटः। तदाह--प्रत्याख्यातमाकरे इति। क्षेपार्थस्य त्वनभिदानान्न ग्रहणमिति तदाशयः। पूर्वसूत्रे द्वयोरिति चेति बोध्यम्। तथाच "कतम एषां पाचकः, शूरो, देवदत्तः, इत्यत्र क्रियागुणसंज्ञाभिरपि निर्धारणे डतमज् भवति। "एषां कतरो देवदत्तः" इत्यत्र बहूनाम#एकस्य निर्धारणे डतरच् भवति। अत एव प्रत्ययः" इति सूत्रभाष्ये "बहुष्वासीनेषु कस्छित् कंचित्पृच्छति कतरो देवदत्तः" इति प्रयोगः सङ्गच्छते। कतमो भवतां कठ इति। "गोत्रं च चरणैः सहे"ति कठस्य जातित्वम्। वाग्रहणमकजर्थमिति। अन्यथा महाविभाषया।ञपवादेन मुक्ते उत्सर्गस्याऽप्रवृत्तेरुक्तत्वादकच् न स्वादिति भावः। नच "अव्ययसर्वनाम्ना"मित्यस्याधिकारत्वात्तदनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमेवेति वाच्यम्, इहैव सूत्रे तदनुवृत्तिर्नतु पूर्वसूत्रे इति ज्ञापनार्थत्वात्। अतो डतरज्विषये नाऽकच्। महाविभाषयेति। अत एव "अवक्षेपणे" इति सूत्रे भाष्ये "क एतयोरर्थयोर्विशेषः" इति प्रयोगः सङ्गच्छते। "तमबादयः प्रागवक्षेपणकनो नित्याः प्रत्ययाः" इति तु प्रायिकमिति भावः।

किमोऽस्मिन्निति। "वा बहूना"मिति प्रकृतसूत्रविषयेऽपीत्यर्थः, बहुष्वासीनषु इत्याद्युदाह्मतभाष्यप्रयोगादिति भावः।

तत्त्व-बोधिनी

वा बहूनां जातिपरिप्रश्ने डतमच् १५२७, ५।३।९३

वा बहूनाम्। "किंयत्तदः"इति वर्तते। जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः। तत्र जाताविति सर्वेषां विशेषणम्। षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्यं संबन्धोऽनुपपन्नः स्यात्। परिप्रश्नग्रहणं तु किम एव विशषणम्। तच्च क्षेपनिवृत्त्यर्थम्। तत्र जातिग्रहणं प्रायोऽभिप्रायम्। क्रियागुणसंज्ञाभिरपि निर्धारणे डतरच इष्टत्वात्। तता पूर्वसूत्रे द्वयोरिति प्रायोऽभिप्रायम्। बहूनां निर्धारणेऽपि ढतरच इष्टत्वात्। तथा च वार्तिकम्---"किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्य"मिति। अत्र कैयटः--- "द्वयो"रिति , "जातिपरिप्रश्ने"इति च न कर्तव्यमिति भाव इति। तदेतदाह---प्रत्याख्यातमाकर इति। कठैति। "कतमो भवतामध्यापकः, शूरो, देवदत्तो वे"त्यप्युदाहर्तव्यम्। यकः सक इति। "कक"इति तु नोक्तम्। अकच्सहितस्यापि "किमः कः"इत्ययमादेश इति व्याख्यातत्वात्। महाविभाषयेति। "प्रागिदिशः" इति सूत्रे समर्थप्रथमग्रहणयोर्निवृत्तत्वेऽपि वाग्रहणमनुवर्तते इत्युक्तत्वादिति भावः। "किंयत्तदः"इति सूत्रे द्वयोरित्यस्य प्रत्याख्यानादाह---किमोऽस्मिन्निति।

---

सूत्रम्

काशिका-वृत्तिः

एकाच् च प्राचाम् ५।३।९४

एकशब्दात् प्राचाम् आचार्याणां मतेन डतरच् डतमचित्येतौ प्रत्ययौ भवतः स्वस्मिन् विष्यए। चकारो डतरचो ऽनुकर्सणार्थः। द्वयोर् निर्धारने डतरच्, बहूनां निर्धारने डतमच्। जातिपरिप्रश्ने इति न अनुवर्तते। सामान्येन विधानम्। एकतरो भवतोर् देवदत्तः। एकतमो भवतां देवदत्तः। प्राचांग्रहणं पूजार्थं, विकल्पो ऽनुवर्तते एव।

न्यासः

एकच्च प्राचाम्?। , ५।३।९४

"स्वस्मिन्? विषये" इति। आत्मीये विषये। तत्र द्वयोरेकस्य निर्वारणं डतरचो विषयः बहूनामेकस्य निर्धारणे डतमचः। चकारोऽनुकर्षणार्थः। असति हि तस्मिन्? "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या। प। १९) इति डतमजेव स्यात्(); द्वयोनिर्धारणे द्वयोरेकस्य डतरजित्यनुवृत्तेः, बहूनां निर्धारणे डतमजित्यनुवृत्तेः। विकल्पार्थं प्राग्ग्रहणं कस्()मान्न भवति? इत्याह--"विकल्पोऽनुवत्र्तत एव" इति। अनन्तरसूत्राद्वेत्यनुवत्र्तत एवेति विक्लप इत्युक्तम्(), तेनैव प्रत्ययविकल्पः सिद्धः। तसमात्? पूजार्थमेव प्राग्ग्रहणम्(), न दिकल्पार्थम्()॥

बाल-मनोरमा

एकाच्च प्राचाम् , ५।३।९४

एकाच्च प्राचाम्। शेषपूरणेन सूत्रं व्याचष्टे--डतरच्--डतमच्च स्यादिति। "पूर्वसूत्रद्वयविषये" इति शेषः। "महाविभाषयैव सिद्धे प्राचाङ्ग्रहणं न कर्तव्य"मिति भाष्यम्। अत एव नाऽकजर्थं तत्।

तत्त्व-बोधिनी

एकाच्च प्राचाम् १५२८, ५।३।९४

एकाच्च। प्राचांग्रहणं पूजार्थम्। विकल्पोऽनुवर्तत एव।

---

सूत्रम्

काशिका-वृत्तिः

अवक्षेपणे कन् ५।३।९५

अवक्षियते येन तदवक्षेपणम्। तस्मिन् वर्तमानात् प्रतिपदिकात् कन्प्रत्ययो भवति। व्याकरणकेन नाम त्वं गर्वितः। याज्ञिक्यकेन नाम त्वं गर्वितः। परस्य कुत्सार्थं यदुपादीयते तदिह उदाहरणम्। यत् पुनः स्वयम् एव कुत्सितं तत्र कुत्सिते ५।३।७४ इत्यनेन कन्प्रत्ययो भवति, देवदत्तकः, यज्ञदत्तकः इति। प्रागिवीयस्य पूर्णो ऽवधिः।

न्यासः

अवक्षेपणे कन्?। , ५।३।९५

"व्याकरणकेन" इत्यादि। कथं पुनव्र्याकरणमवक्षेपणम्(), तस्याध्ययनं शास्त्रविहितम्(), वेदाङ्गत्वात्()? तथापि यत्राश्रये तदवक्षेपणमुपसंहरति, तं प्रति तस्यावक्षेपणत्वमुपपद्यते; दोषहेतुत्वात्()। "परस्य" इत्यादिना "कुत्सिते" ५।३।७४ इत्यवक्षेपणे कन्नित्यस्य विभागं दर्शयति॥

बाल-मनोरमा

अवक्षेपणे कन् १४९२, ५।३।९५

अपक्षेपणे कन्। व्याकरणकेन गर्वित इति। व्याकरणं हि स्वतो न कुत्सितं, किं तु अधीतं सदध्येतृकुत्साहेतुभूतं गर्मावहदवक्षेपणम्। नन्ववक्षेपणं कुत्सा। तत्कथं व्याकरणमवक्षेपणं स्यात्, "कुत्सित" इत्यनेन गतार्थं चेदमित्यत आह--येनेतर इति। अवक्षेपणशब्दः करणे ल्युडन्त इति भावः।

***** इति बालमनोरमायाम् प्रागिवीयानां पूर्णोऽवधिः। *****

अथ प्राग्दीव्यतीयाः।

--------------

तत्त्व-बोधिनी

अवक्षेपणे कन् ७३, ५।३।९५

अवक्षेपणे कन्। कुत्सिते तु कः। स्वरे विशेषः। येनेतर इति। अवक्षिप्यते येनेत्यवक्षेपणशब्दः करणे ल्युडन्त इति भावः।

इति तत्त्वबोधिन्यां प्रागिवीयानां पूर्णोऽवधिः।

अथ प्रकृतिभावः।

------------

---

सूत्रम्

काशिका-वृत्तिः

इवे प्रतिकृतौ ५।३।९६

कनित्यनुवर्तते। इवार्थे यत् प्रातिपदिकं वर्तते तस्मात् कन् प्रत्ययो भवति। इवार्थः सादृश्यं, तस्य विशेसणं प्रतिकृतिग्रहणम्। प्रतिकृतिः प्रतिरूपकं, प्रतिच्छन्दकम्। अश्व इव अयम् अश्वप्रतिकृतिः अश्वकः। उष्ट्रकः। गर्दभकः। प्रतिकृतौ इति किम्? गौरिव गवयः।

लघु-सिद्धान्त-कौमुदी

इवे प्रतिकृतौ १२४१, ५।३।९६

कन् स्यात्। अश्व इव प्रतिकृतिरश्वकः। (सर्वप्रातिपदिकेभ्यः स्वार्थे कन्)। अश्वकः॥

न्यासः

इवे प्रतिकृतौ। , ५।३।९६

"तद्विशेषणं प्रतिकृतिग्रहणम्()" इति। प्रतकृतिविषयं यत्र सादृश्यं तत्र प्रयोगो यथा स्यात्()। गौरिवगवय इत्यत्रास्ति सादृश्यम्(), न तु प्रतिकृतिविषयम्(); न हि गौर्गवयप्रतिकृतिः। काष्ठादिमयं हि यत्? प्रतिच्छन्देकं तत्? प्रकृतिच्यते॥

बाल-मनोरमा

इवे प्रतिकृतौ , ५।३।९६

अथ तद्धिते स्वार्थिकप्रकरणं निरूप्यते। इवे प्रतिकृतौ। कन्स्यादिति। "अवक्षेपणे क"न्नित्यतस्तदनुवृत्तेरिति भावः। इवार्थौपमानत्वम्। तद्वति वर्तमानात्प्रातिपदिकात्कन्स्यात्प्रतिकृतिभूते उपमेये इति फलितम्। मृदादिनिर्मिता प्रतिमा प्रतिकृतिः। अ()आक इति। प्रतिकृतेः स्त्रीत्वेऽपि "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते" इति पुंलिङ्गत्वम्।

तत्त्व-बोधिनी

इवे प्रतिकृतौ १५३०, ५।३।९६

अ()आक इति। अ()आशब्दोऽस्वे एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इति नाऽयं स्वार्थिक इत्येके। अन्ये तु सादृश्यनिबन्धनादभेदोपचाराद्गौर्वाहिक इति वद()आशब्द एव प्रतिकृतौ वर्तते। प्रत्ययस्तु तस्यैवौपचारि कत्वस्य बोधक इत्याहुः। प्रतिकृतौ किम्()। गौरवि गवयः। तृणचर्मकाष्ठादिनिर्मितं प्रतिमाऽपरपर्यायं वस्तु प्रतिकृतिः। गवयस्तु नैवम्।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां च ५।३।९७

इव इत्यनुवर्तते, कनिति च। इवार्थे गम्यमाने कन्प्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते। अप्रतिकृत्यर्थ आरम्भः। अश्वसदृशस्य संज्ञा अश्वकः। उष्ट्रकः। गर्दभकः।

न्यासः

संज्ञायाञ्च। , ५।३।९७

बाल-मनोरमा

संज्ञायां च , ५।३।९७

संज्ञायां च। "क"निति शेषः। समुदायश्चेदिति। प्रकृतिप्रत्ययसमुदायश्चेत्प्रकृत्यर्थसदृशस्य संज्ञेत्यर्थः। पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह--अप्रतिकृत्यर्थमारम्भ इति तथाच प्रतिकृताविति निवृत्तम्। इव इति त्वनुवर्तत एव। तदाह--अ()आसदृशस्येति। अ()आसदृशश्य अमनुष्यस्य कस्यचित्संज्ञैषा। अ()आसदृशोऽयम()आकसंज्ञक इति बोधः।

तत्त्व-बोधिनी

संज्ञायां च १५३१, ५।३।९७

समुदायश्चेदिति। प्रकृतिप्रत्ययसमुदायश्चेद()आसदृशस्य संज्ञेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

लुम्मनुस्ये ५।३।९८

संज्ञायाम् इत्येव। संज्ञायां विहितस्य कनो मनुस्ये ऽभिधेये लुब् भवति। चञ्चेव मनुष्यः चञ्चा। दासी। खरकुटी। मनुस्ये इति किम्? अश्वकः। उष्ट्रकः। गर्दभकः। देवपथादेराकृतिगणत्वात् तस्य एव अयं प्रपञ्चो वेदितव्यः।

न्यासः

लुम्मनुष्ये। , ५।३।९८

चञ्चे इति तृणपुरुष उच्यते। सादृश्याच्च मनुष्यश्चञ्चा। "लुपि युक्तवद्व्यक्तियचने" १।२।५१ इति प्रकृतिगतमेव लिङ्गं भवति। ननु च "मनुष्यलूपि प्रतिषेधः" (वा।२१) इति वचनाद्युक्तवद्भावो न प्राप्नोति? नैतदस्ति; विशेषणानां प्रतिषेधः, न लुबन्तस्य॥

बाल-मनोरमा

लुम्मनुष्ये , ५।३।९८

लुम्मनुष्ये। संज्ञायां चेति विहितस्येति। नतु "इवेप्रतिकृतौ" इति विहतस्य प्रतिकृतित्वाऽसंभवादिति भावः। चञ्चेव मनुष्यः चञ्चेत्युदाहरणं वक्ष्यन्चञ्चाशब्दं व्याचष्टे--चञ्चा तृणमयः पुमानिति। चञ्चेति। चञ्चातुल्यो मनुष्योऽयं चञ्चासंज्ञक इत्यर्थः। वर्ध्रिकेति। वर्ध्रि चर्ममयी प्रतिकृतिः। तत्तुल्यो मनुष्योऽयं वर्ध्रिकासंज्ञक इत्यर्थः। लुपि युक्तवत्वात्स्त्रीत्वम्। वचनं तु विशेष्यवदेव, "हरीतक्यादिषु व्यक्ति"रित्युक्तेः। तेन "चञ्चे इव मनुष्यौ" इत्यत्र चञ्चा इति न भवति।

तत्त्व-बोधिनी

लुम्मनुष्ये १५३२, ५।३।९८

चञ्चा। वर्ध्रिकेति। लुपि युक्तवद्भावात्स्त्रीलिङ्गता।

---

सूत्रम्

काशिका-वृत्तिः

जीविकार्थे चापण्ये ५।३।९९

जीविकार्थं यदपण्यम् तस्मिन्नभिधेये कनो लुब् भवति। विक्रीयते यत् तत् पण्य। वासुदेवः। शिवः। स्कन्दः। विष्णुः। आदित्यः। देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते। अपण्ये इति किम्? हस्तिकान् विक्रीणीते। अश्वकान्। रथकान्। देवपथादेरेव अयं प्रपञ्चः।

न्यासः

जीविकार्थे चापण्ये। , ५।३।९९

बाल-मनोरमा

जीविकार्थे चापण्ये , ५।३।९९

जीविकार्थे चापण्ये। पण्यं--विक्रीयमाणम्। तदाह--अविक्रीयमाणमिति। वासुदेव इति। वासुदेवतुल्या जीविकार्था अविक्रेया प्रतिकृतिरित्यर्थः। एवं शिव इत्यादि। कथं प्रतिकृतेरविक्रेयाया जीविकार्थत्वमित्यत आह--देवलकानामिति। प्रतिमां गृहीत्वा भिक्षार्थं प्रतिगृहमटतामित्यर्थः। तत्तदायतनेषु प्रतिष्ठितासु पूजार्थप्रतिमासु उत्तरसूत्रेण लुब्वक्ष्यते। हस्तिकान्विक्रीणीते इति। जीविकार्थं हस्तितुल्यप्रतिकृतीर्विक्रीणीते इत्यर्थः। अत्र पण्यत्वप्रतीतेः कनो न लुक्। "सज्ञायां चे"तिज विहितस्य नायं लुप्, किन्तु "इवे प्रतिकृतौ" इति विहितस्यैव, भाष्ये प्रतिकृतावेव एतदुदाहरणात्। पठन्ति। चाभियुक्ताः--"रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो रामादिशब्दाः प्रतिकृतिषु वर्तन्ते। तासां चात्र पण्यतया कनो लुब्दुर्लभ इति रामसीतालक्ष्मणशब्दानामपशब्दत्वमित्याशयः।

तत्त्व-बोधिनी

जीविकाऽर्थे चाऽपण्ये १५३३, ५।३।९९

वासुदेवः। शिव इत्यादि। याः प्रतिमाः प्रतिगृह्य गृहाद्गृहं भिक्षमाणाअटन्ति ता एवमुच्यन्ते। देवलका अपि त एव भिक्षवोऽभिप्रेताः। यास्त्वायतनेषु प्रतिष्ठाप्यन्ते पूज्यन्ते च तासूत्तरसूत्रेण लुप्। तदुक्तम्---"अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोपः कनो देवपथादिषु"। इति। अर्चासु=प्रतिमासु---कीदृशीषु()। पूजनार्हासु। गेहेष्वायतनेषु वा याः पूज्यन्ते तासु। चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते। अर्चासूदाहरणं--शिवः। विष्णुः। चित्ककर्मणि--अर्जुनः। दुर्योधनः। ध्वजेषु--कपिः। गरुडः। सिंहः। सुपर्णसिंहमकरादयो राज्ञां ध्वजेषु सन्ति। हस्तिकानिति। ईदृशमेव विषयमभिप्रेत्य पठन्ति---"रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक्। अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक्िति। अयं भावः--"अपण्ये"इत्युक्तत्वात्पण्ये हस्तिकानितिवत् रामकं सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव इति।

---

सूत्रम्

काशिका-वृत्तिः

देवपथादिभ्यश् च ५।३।१००

इवे प्रतिकृतौ ५।३।९६, संज्ञायां च ५।३।९७ विहितस्य कनो देवपथादिभ्य उत्तरस्य लुब् भवति। आदिशब्दः प्रकारे। आकृतिगणश्च अयम्। देवपथः। हंसपथः। अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोपः कनो देवपथादिषु। अर्चासु तावत् शिवः। विष्णुः। चित्रकर्मणि अर्जुनः। दुर्योधनः। ध्वजेषु कपिः। गरुडः। सिंहः। देवपथ। हंस्पथ। वारिपथ। जलपथ। राजपथ। शतपथ। सिंहगति। उष्ट्रग्रीवा। चामरज्जु। रज्जु। हस्त। इन्द्र। दण्द। पुष्प। मत्स्य।

न्यासः

देवपथादिभ्यश्च। , ५।३।१००

"देवपद्यः" इति। देवानां पन्था इति षष्ठीसमासः। "ऋक्पः ५।४।७४ इत्यादिनाकारः समासान्तः, कन्(), तस्य सुप्()॥

बाल-मनोरमा

देवपथादिभ्यश्च , ५।३।१००

देवपथादिभ्यश्च। कनो लुप् स्यादिति। शेषपूरणमिदम्। "इवे प्रतिकृतौ" इति विहितस्य देवपथादिभ्यः परस्य कनो

लुप्स्यादिति यावत्। देवपथ इति। देवानां पन्थाः देवपथः। तत्प्रतिकृतिरित्यर्थः। "इवे प्रतिकृतौ लोपः कनो देवपथादिषु" इति। अर्चाः=प्रतिमाः। पूजार्थासु तासु, चित्रकर्मसु, ध्वजेषु देवपथादिगणपठितेषु "इवे प्रतिकृतौ"विहितस्य कनो लुबित्यर्थः। "तद्राजस्ये" ति सूत्रे कैयटोऽप्येतं श्लोकं पपाठ। अर्चासु यथा--शिवो विष्णुर्गणपतिरित्यादि। चित्रकर्मसु यथा--रावणः कुम्भकर्णः इन्द्रजिदित्यादि। ध्वजेषु यथाकपिः गरुडः वृषभ इत्यादि।

तत्त्व-बोधिनी

देवपथादिभ्यश्च १५३४, ५।३।१००

देवपथ इत्यादि। देवपथ इव प्रतिकृतिः हंसपथ इव प्रकृतिरिति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

वस्तेर् धञ् ५।३।१०१

इव इत्यनुवर्तते। इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति, प्रतिकृतौ चप्रतिकृतौ च। वस्तिशब्दादिवार्थे द्योत्ये ठञ् प्रत्ययो भवति। वस्तिरिव वास्तेयः। वास्तेयी।

न्यासः

वस्तेर्ढञ्?। , ५।३।१०१

"इतः प्रभति" इत्यादि। तत्र प्रतिकृतौ "इवे प्रतिकृतौ" ५।३।९६ इति कनि प्राप्ते, इतः प्रभृति प्रत्यया भवन्ति। अप्रतिकृतौ तवसंज्ञायां वाक्येनैवाभिधाने प्राप्ते। संज्ञायां तु प्रतिकृतावप्रकृतौ च ढञेव; वस्तिः=वृतिविकारः। "वास्तेयी" इति "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()॥

बाल-मनोरमा

वस्तेर्ढञ् , ५।३।१०१

वस्तेर्ढञ्। निवृत्तमिति। अस्वरितत्वादिति भावः। "संज्ञायां चे"त्यादिपूर्वसूत्रेषु क्वापि प्रतिकृतावित्यस्याऽनिवृत्तेर्न लुब्विधिषु तेषु तदनुवृत्तिरपेक्षिता। वस्तिरिवेति। "बस्तिर्नाभेरधो द्वयो"रित्यमरः।

तत्त्व-बोधिनी

वस्तेर्ढञ् १५३५, ५।३।१०१

बस्तिरिति। "बस्तिर्नाबेरधो द्वयो"रित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

शिलाया ढः ५।३।१०२

शिलाशब्दादिवार्थे ढः प्रत्ययो भवति। शिलेव शिलेयं दधि। केचिदत्र ढञम् अपि इच्छन्ति, तदर्थं योगविभागः कर्तव्यः। शिलायाः ढञ् प्रत्ययो भवति। शैलेयम्। ततो धः। शिलेयम्।

न्यासः

शिलाया ढः। , ५।३।१०२

बाल-मनोरमा

शिलाया ढः , ५।३।१०२

शिलाया ढः। इवे इत्येव। शिलेव शिलेयमिति। "दध्यादी"ति शेषः। योगेति। "शिलाया" इत्येको योगः। ढञित्यनुवर्तते, इवे इति च। शैलेयमिति। ञित्त्वादादिवृद्धिः, स्त्रियां, ङीप् च फलम्। "ढः" इति द्वितीयो योगः। शिलाया इत्यनुवर्तते। उक्तोऽर्थः।

---

सूत्रम्

काशिका-वृत्तिः

शाखादिभ्यो यत् ५।३।१०३

शाखा इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः पत्प्रत्ययो भवति इवार्थे शाखेव शख्यः। मुख्यः। जघन्यः। शाखा। मुख। जघन। शृङ्ग। मेघ। चरण। स्कन्ध। शिरस्। उरस्। अग्र। शरन। शाखादिः।

न्यासः

शाखादिभ्यो यत्। , ५।३।१०३

बाल-मनोरमा

शाखादिभ्यो यः , ५।३।१०३

शाखादिभ्यो यत्। "य" इति त्वपपाठः। तैत्तिरीये"मुख्यो भवती"त्यादौ मुख्यशब्दस्य आद्युदात्तत्वदर्शनात्, उगवादिसूत्रभाष्यविरुद्धत्वाच्च।

---

सूत्रम्

काशिका-वृत्तिः

द्रव्यं च भव्ये ५।३।१०४

द्रव्यशब्दो विपात्यते भव्ये ऽभिधेये। द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते। द्रव्यम्, भव्यः, आत्मवानधिप्रेतानाम् अर्थनां पात्रभूत उच्यते। द्रव्यो ऽयं राजपुत्रः। द्रव्यो ऽयं माणवकः।

न्यासः

द्रव्यञ्च भव्ये। , ५।३।१०४

बाल-मनोरमा

द्रव्यं च भव्ये , ५।३।१०४

द्रव्यं च भव्ये। द्रुशब्दादिवार्थवृत्तेर्यप्रत्ययो निपात्यते भव्ये उपमेये गम्ये। भव्य आत्मवान्। "अभिप्रेतानामर्थानां पात्रभूतः" इति वृत्तिः। द्रव्यमयमिति। द्रुः=वृक्षः, स यथा पुष्पफलादिभागेवमभिमतफलपात्रभूत इत्यर्थः। यद्वा द्रुः=कल्पवृक्षो।ऽत्र विवक्षितः, स इव अभिमतार्थभागित्यर्थः। यप्रत्यये ओर्गुणः। अवादेशः।

तत्त्व-बोधिनी

द्रव्य च भव्ये १५३६, ५|३|१०४

द्रव्यं च भव्ये। द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते। समासाच्च तद्विषयात्। तच्छब्देन प्रकृत इवार्थो निर्दिश्यते इत्याह---इवार्थविषयादिति। थः स्यादिति। इवार्थे इति बोध्यम्। "पूगाञ्ञ्यः"इत्यतः प्रागिवेत्याधिकारात्। शास्त्री श्यामेत्यादौ तु एक एव इवार्थः, स च समासान्तर्भूत इति छो न भवत्युक्तार्थानामप्रयोगात्।

---

सूत्रम्

काशिका-वृत्तिः

कुशाग्राच् छः ५|३|१०५

कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति। कुशाग्रम् इव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः। कुशाग्रीयं शस्त्रम्।

न्यासः

कुशाग्राच्छः। , ५|३|१०५

बाल-मनोरमा

कुशाग्राच्छः , ५|३|१०५

कुशाग्राच्छः। इवे इत्येव। कुशाग्रमिवेति। सूक्ष्मत्वेन सादृश्यम्। कुशाग्रवत्सूक्ष्मेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

समासाच् च तद्विषयात् ५|३|१०६

तदित्यनेन प्रकृत इवार्थो निर्देश्यते। इवार्थविषयात् समासादपरस्मिन्निवार्थे एव छन्H प्रत्ययो भवति। कालतालीयम्। अजाकृपाणीयम्। अन्धकवर्तकीयम्। अतर्कितोपनतं चित्रीकरणमुच्यते। तत् कथम्? काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च। तेन तलेन पतता काकस्य वधःकृतः। एवम् एव देवदत्तस्य तत्रागमनं, दस्यूनां च उपनिपातः। तैश्च तस्य वधः कृतः। तत्र यो देवदत्तस्य दस्यूनां च समागमः, स काकतालसमागमसदृशः इत्येकः उपमार्थः, अतश्च देवदत्तस्य वधः, स कालतालवधसदृशः इति द्वितीयः उपमार्थः। तत्र प्रथमे समासः, द्वितीये प्रत्ययः। समासश्च अयम् अस्मादेव ज्ञापकात्, न ह्यस्य अपरं सक्षणम् अस्ति। सुप्सुपेति वा समासः। स च एवम् विषय एव।

न्यासः

समासाच्च तद्विषयात्?। , ५|३|१०६

"इदार्थविषयात्? समासात्()" इति। इवशब्दस्यार्थ इवार्थः=सादृश्यं विषयो यस्य स तथोक्तः। यदि इवार्थविषयात्? समासाच्छो विधीयते, शस्त्रोश्यामा, पुरुषव्याघ्र इत्यत्रापि प्रप्नोति? नैष दोषः, न ह्त्र समास इवार्थे वत्र्तते, किं तर्हि? पूर्वपदमुत्तरपदं वा--शस्त्रीव श्यामा, पुरुषोऽयं व्याघ्र इवेति। अथाप्येकदेशस्येवार्थे वत्र्तमानत्वात्? समासोऽणीवार्थं उच्यते, तथापि समासेनैवोक्तत्वान्न भविष्यति, यस्तु समासः स क इवार्थे वत्र्तेते? समासार्थावपर इवार्थो यत्रास्ति तत्रायं प्रत्य उक्तः। "परस्मिन्निवायं एव" इति। "इव" इत्यभिकारात्()। "अतर्कितोपनतम्()" इति। अबुद्धिपूर्वमुपस्थितमित्यर्थः। "चित्रिकरणम्()" इति।विस्मयकरणमित्यर्थः। "तत्कथम्()" इति। केन प्रकारेणातर्कितोपनतं चित्रीकरणमिति? --

इममर्थं पृच्छति--तत्कमित्यादि। "समासश्चायम्()" इत्यादि। यदेतदिवार्थविषयात्? समासात्? प्रत्ययविधानम्(), अत एव ज्ञापकादवसीयते--समासो भवति। कथं पुनरेतज्ज्ञापकमिति? आह--"न ह्रस्य" इत्यादि। इवार्थविषयस्य समाससामान्यस्य लक्षणं नास्तीति। तस्माद्यदेतत्? ततः प्रत्ययविधानम्(), एतदेव तद्भावस्य ज्ञापकमुपपद्यते। अथ वा--किं पुनः कारणं ज्ञापकेन तद्भावः प्रतिपाद्यत इति? आह--"न ह्रस्य" इत्यादि। "स चैवं विषय एव" इति। इवार्थविषय एवेत्यर्थः॥

बाल-मनोरमा

समासाच्च तद्विषयात् , ५।३।१०६

समासाच्चा। तच्छब्देन प्रकृत इवार्थः परामृश्यते। तदाह--इवार्थविषयादिति। इवार्थः सादृश्यमुपमानोपमेयभावात्मकं, तद्विषयकादित्यर्थः। सादृस्यवदथबोधकात्समासादिति यावत्। यद्यपि घनश्याम इति समासोऽपि सादृश्यवदर्थबोधकस्तथापि सादृश्यवदर्थबोधकसमस्यमानयावत्पदावयवकात्समासादिति विवक्षितमिति न दोषः। छः स्यादिति। चकारेण पूर्वसूत्रोपात्तच्छस्यानुकर्षादिति भावः। "इवार्थे"इति शेषः। "पूगाञ्ञ्यः" इत्यतः प्रागिवाधिकारात्। ततश्च इवार्थसमस्यमानयावत्पकात्समासादिवार्थे छः स्यादिति लभ्यते। काकतालीयो देवदत्तस्य वध इति। काकः कश्चिदकस्मात्ताल वृक्षस्य मूलं गतस्तालफलपतनान्भृतः। तथैव कश्चिद्देवदत्तोऽकस्मान्निर्जनप्रदेशे क्वचिद्गतश्चोरेण हतस्तत्रेदं वाक्यं प्रवृत्तम्। अत्र समासार्थगतं सादृश्यमेकं, प्रत्ययार्थगतम् अन्यत्सादृश्यं च भासते। तथाहि--काकगमनमिव तालपतनमिव काकतालमिति समासस्य विग्रहः। अत्र "काक" शब्दः काकागमनसदृशे देवदत्तागमने लाक्षणिकः। "ताल"शब्दस्तु तालपतनसदृशे चोरागमने लाक्षणिकः। काकागमनसदृशं देतवदत्तागमनं, तालपतनसदृशं चोरागमनमिति च काकतालमिति समासाद्बोधः। यद्यप्यत्र काकतालशब्दयोर्मिलितय#ओरेकत्रान्वयाऽभावाद्द्वन्द्वसमासो न संभवति, परस्परान्वयाऽभावेन असामथ्र्याच्च, तथापि अस्मादेव विधिबलात् "सुप्सुपा" इति समासः। तथाच काकतालसमागमसदृशो देवदत्तचोरसमागम इति समासार्थः। तदाह--इहेत्यादि। अत्र चोरसमागम इत्यस्य चोरेण देवदत्तस्य समागम इत्यर्थः। तदेवंविदात्समासात्काकतालशब्दादिवान्तरार्थे सादृश्यान्तरे छप्रत्ययः। तत्र समासात्मककाकतालशब्दबूतप्रकृत्यर्थरूपकाकतालसमागमसदृशदेवदत्तचोरसमागमे सति तालपतनकृतकाकमरणे उपस्थिते उपमानत्वं, देवदत्तवधे चोरागमकृते उपमेयत्वं च छप्रत्ययेन गम्यते। ततश्च तादृशचोरसमागमे सति तालपतनकृतकाकमरणसदृशो देवदत्तस्य चोरकृतो वध इति छप्रत्ययेन लभ्यते। तदाह--तत्प्रयुक्त इति। तादृशतालपतनप्रयुक्तेत्यर्थः। सदृश इत्यनन्तरं "देवदत्तवध" इति शेषः। तथा च काकतालसमागमसदृशो देवदत्तचोरसमागमः, तद्धेतुकस्तालपतनकृत काकमरणसदृशश्चोरकृतो देवदत्तवध इत्येवं "काकलतालीयो देवदत्तवध" इति समासाद्बोधः।एतदेवाभिप्रेत्योक्तं भाष्ये "काकागमनमिव तालपतनमिव काकतालम्। काकतालमिव काकतालीय"मिति। अत्र काकतालमिति इवार्थगर्भितकेवलद्वन्द्वान्न भवति, इवान्तरार्थस्य सादृश्यान्तरस्याऽप्रतीतेरित्यलम्। अजाकृपाणीय इति। अजागमनमिव कृपाणपतनमिव अजाकृपाणम्, तदिव अजाकृपाणीयः। अजाकृपाणसमागमसदृशो देवदत्तचोरसमागमः समासार्थः, कृपाणपतनप्रयुक्ताऽजामरणसदृशो देवदत्तवधश्चोरकृतः प्रत्ययार्थः। अत्र सर्वत्र अतर्कितोपनतत्वं साधारणो धर्म इत्याह--अतर्कितेति।

तत्त्व-बोधिनी

समासाच्च तद्विषयात् १५३७, ५।३।१०६

काकतालीय इति। प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः। सुप्सुपेति वा। उभयथापि विशेषसंज्ञाविनिर्मुक्तः। स च

छप्रत्ययविषय एव। तेनेह स्वातन्त्र्यमुपाध्यन्तरयोगो विग्रहश्च नेत्याकरः। इह काकतालेत्यादि। आगच्छतः काकस्याऽकस्मात्ताल फलपतनाद्यथा वधः, तथैव चाकस्मिकचोरसमागमाद्देवदत्तवधः। एवमजाया आगच्छन्त्याः कृपापतनाद्यथ वधः, तत्सदृशं मरणमिति फलितोऽर्थः। अतर्कितोपनत इति। अचिन्तितोपपन्नः। यादृस्छिक इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

शर्कराऽअदिभ्यो ऽण् ५।३।१०७

शर्करा इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः इवार्थे अण् प्रत्ययो भवति। शर्करा इव शार्करम्। कापालिकम्। शर्करा। कपालिका। पिष्टिक। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नरालि। नकुला। सिकता। शर्करादिः।

न्यासः

शर्करादिभ्योऽण्?। , ५।३।१०७

बाल-मनोरमा

शर्करादिभ्योऽण् , ५।३।१०७

शर्करादिभ्योऽण्। इवे इत्येव। शार्करमिति। "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते" इति विशेष्यनिघ्नतेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अङ्गुल्यादिभ्यष् ठक् ५।३।१०८

अङ्गुल्यादिभ्यः इवार्थे ठक् प्रत्ययो भवति। अङ्गुलीव आङ्गुलिकः। भारुजिकः। अङ्गुलि। भरुज। बभ्रु। वल्गु। मण्डर। मण्डल। शष्कुल। कपि। उदश्वित्। गोणी। उरस्। शिखर। कुलिश। अङ्गुल्यादिः।

न्यासः

अङ्गुल्यादिभ्यष्ठक्?। , ५।३।१०८

बाल-मनोरमा

अङ्गुल्यादिभ्यष्ठक् , ५।३।१०८

अङ्गुल्यादिभ्यष्ठक्। इवे इत्येव। अङ्गुलीवेति। अङ्गुलिशब्दात् कृदिकारादक्तिनः" इति ङीष्। आङ्गुलिक इति। पूर्ववद्विशेष्यनिघ्नता। भारूजिक इति। पूर्ववद्विशेष्यनिघ्नता।

---

सूत्रम्

काशिका-वृत्तिः

एकशालायाष् ठजन्यतरस्याम् ५।३।१०९

एकशालाशब्ददिवार्थे ऽन्यतरस्यां ठच् प्रत्ययो भवति। अन्यतरस्यांग्रहणेन अनन्तरः ठक् प्राप्यते। एकशालेव

एकशालिकः, ऐकशालिकः।

न्यासः

एकशालायाष्ठजन्यतरस्याम्?। , ५।३।१०९

"अन्यतरस्यांग्रहणेन" इत्यादि। पूर्वसूत्रेण ५।३।१०८ विहितत्वाट्ठगेवानन्तरः। अन्यतरस्यांग्रहणं समुच्चयार्थम्()। अतस्तेन "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति स एव प्राप्यते॥

बाल-मनोरमा

एकशालायाष्ठजन्यतरस्याम् , ५।३।१०९

एकशालायाः। पक्षे ठगिति। अन्यतरस्याङ्ग्रहणम् अनन्तरठ,कः समुच्चयार्थमिति भावः। "ठज्वे"त्येव सुवचम्।

---

सूत्रम्

काशिका-वृत्तिः

कर्कलोहितादीकक् ५।३।११०

कर्कलोहितशब्दाभ्याम् इवार्थे ईकक् प्रत्ययो भवति। कर्कः शुक्लो ऽश्वः, तेन सदृशः कार्कीकः। लौहितीकः स्फटिकः। स्वयमलोहितो ऽप्युपाश्रयवशात् तथा प्रतीयते।

न्यासः

कर्कलोहितादीकक्?। , ५।३।११०

"इमथ" इति। इमेतीदमा समानार्थं प्रकृत्यन्तरमस्ति। तत इदं प्रत्ययविषानम्()॥

बाल-मनोरमा

कर्कलोहितादीकक् , ५।३।११०

कर्कलोहितादीकक्। कर्कः शुक्लोऽ()आ इति। अ()आउपर्यायेषु "सितः कर्कः" इत्यमरः। लौहितीकः स्फटिक इति। जपापुष्पादिसम्पर्कवशाल्लोहित इवेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

प्रत्नपूर्वविश्वैमात् थाल् छन्दसि ५।३।१११

प्रत्न पूर्व विश्व इम इत्येतेभ्यः इवार्थे थाल्प्रत्ययो भवति छन्दसि विषये। तं प्रत्नथा पूर्वथा विश्वथेमथा।

---

सूत्रम्

काशिका-वृत्तिः

पूगाञ् ञ्यो ऽग्रामणीपूर्वात् ५।३।११२

इवार्थे इति निवृत्तम्। नानाजातिया अनियतवृत्तयो ऽर्थकाम् अप्रधानाः सङ्घाः पूगाः। पूगवाचिनः प्रातिपदिकातग्रामणीपूर्वात् स्वार्थे ञ्यः प्रत्ययो भवति। लौहध्वज्यः, लौहध्वज्यौ, लोहध्वजाः। शैव्यः, शैब्यौ, शिबयः। चातक्यः, चातक्यौ, चातकाः। अग्रामणीपूर्वातिति किम्? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः। यज्ञदत्तकाः।

न्यासः

पूगाञ्ञ्योऽग्रामणीपूर्वात्?। , ५।३।११२

"पूर्वात्? इति। पूर्वशब्दोऽवयववाची। ग्रामणीः पूर्वो यस्य तत्? ग्रामणीपूर्वम्()। प्रतिषेधेन च स्वरूपग्रहणं भवतीति विज्ञायते। पूगशब्देन स्वरूपे गृह्रमाणे ग्रामणीपूर्वतः प्राप्तिरेव नास्ति; ग्रहणवता प्रातिपादिकेन (व्या।प।८९) तदन्तविधः प्रतिषेधात्()। "लोहष्वजाः" इति कन्()। अत्र देवदत्तशब्दः पूर्वग्रामणीरवयव इति न प्रत्ययः॥

बाल-मनोरमा

पूगाञ्ञ्योऽग्रामणीपूर्वात् , ५।३।११२

पूगाञ्ञ्यः। इवार्थो निवृत्त इति। व्याख्यानादिति भावः। अनियतवृत्तय इति। उद्वृत्ता इत्यर्थः। तद्वाचकादिति। पूगेति न स्वरूपग्रहणं, व्याख्यानात्। ग्रामणीवाचकपूर्वावयवकभिन्नात्पूगवाचकादित्यर्थः। लौहितध्वज्य इति। लोहिता ध्वजा यस्य पूगस्य स लोहितध्वजः। सएव लौहितध्वज्यः। व्रातच्फञोरस्त्रियामिति। इदं सूत्रम्। "गोत्रे कुञ्जादिभ्यः" इत्यत्र प्रसङ्गादुपादाय व्याख्यातम्। व्रात इति। उदाहरणसूचनमिदम्।
भारोद्वहनादिशरीरायासजीवनान्नानाजातीयानामनियतवृत्तीनां सङ्घो व्रातः। कापोतपाक्य इति। कपोतान्=पक्षिविशेषान् भक्षणाय पचतीति कपोतपाकः, स एव कापोतवाक्यः। पचेः कर्तरि घञ्, "चजोः कु घिण्ण्यतो"रिति कुत्वम्। च्फञिति। उदाहरणसूचनमिदम्। कौञ्जायन्य इति। गोत्रे कुञ्जादिभ्यः" इति च्फञ्। आयन्नादेशः। ततः स्वार्थे अनेन ञ्यः। एवं व्राध्नायन्यः।

तत्त्व-बोधिनी

पूगाञ्?ञ्योऽग्रामणीपूर्वात् १५३८, ५।३।११२

पूगाञ्()ञ्यो। स्वरूपग्रहणं तु न भवति, "अग्रामणीपूर्वा"दिति वचनात्। पूर्वशब्दो ह्रवयववचनः। अग्रामणो पूर्वादिति किम्()। देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः। "स एषां ग्रामणी"रिति कन्। अत्र समुदायः पूगवचनः। लौहितध्वज्य इति। लोहितो ध्वजो यस्य सङ्घस्य स लोहितध्वजः। स एव लौहितध्वज्यः। व्रातच्फञोः। उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः। उत्सेधः=शरीरायासः। कौञ्जायन्य इति। "गोत्रे कुञ्जादिभ्यः"इति च्फञ्।

---

सूत्रम्

काशिका-वृत्तिः

व्रातच्फञोरस्त्रियाम् ५।३।११३

नानाजातियाः अनियतवृत्तयः उत्सेधजीविनः सङ्घाः व्राताः। व्रातवाचिभ्यः प्रातिपदिकेभ्यः च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम्। कापोतपाक्यः, कापोतपाक्यौ, कपोतपाकाः। व्रैहिमत्यः, व्रैहिमत्यौ, व्रीहिमताः। च्फञः खल्वपि कौञ्जायन्यः, कौञ्जायनयौ, कौञ्जायनाः। ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नयनाः। अस्त्रियाम् इति किम्? कपोतपाकी। व्रीहिमती। कौञ्जायनी। ब्राध्नायनी।

न्यासः

व्रातच्फञोरस्त्रियाम्?। , ५।३।११३

"व्रातवाचिभ्यः" इति। अथ स्वरूपस्यैव ग्रहणं कस्मान्न भवति? च्फञोरल्पाच्तरस्य परनिपातात्(); स हि लक्षणान्तरानपेक्षतामाचष्टे। तेन "स्वं रूपं शब्दस्य १।१।६७ इत्येतदपीह नापेक्ष्यत इति न भवति स्वरूपग्रहणम्()।

"कौञ्जायान्यः" इति। "गोत्रे कुञ्जादिभ्यश्च्फञ्()" [४।१।९८](#) "कौञ्जायनो" इति। "जतेरस्त्रीविषयात्()" [४।१।६३](#) इति ङीष्()। जातित्वं तु "गोत्रं च चरणैः सह" (मा।भा। २ २२५) इति॥

बाल-मनोरमा

ब्राआतच्फञोरस्त्रियाम् १०८४, ५।३।११३

ब्राआतच्फञोः। ब्राआतश्च च्फञ्च इति द्वन्द्वाद्व्यत्यनेन पञ्चम्यर्थे षष्ठी। तदाह--ब्राआतवाचिभ्य इति। स्वार्थे ञ्यः स्यादिति। "पूगाञ्ञ्योऽग्रामणीपूर्वा"दित्यतो "ञ्य" इत्यनुवर्तते। स च स्वार्थिकः, "ञ्यादयः प्राग्वुनः" इति स्वार्थिकेषु परिगणनादिति भावः। कौञ्जायन्य इति। कुञ्जस्य गोत्रापत्यमिति विग्रहः। च्फञि चञावितौ। आयन्नादेशः, आदिवृद्धिः, ततो ञ्यः, ञकार इत्, "यस्येति चे"त्यकारलोपः। तद्वाजत्वादिति। "ञ्यादयस्तद्राजाः" इति वचनादिति भावः। लुग्वक्ष्यते इति। "तद्राजस्य बहुषु-इत्यनेने"ति शेषः। ब्राआध्नायन्य इति। ब्राध्नस्य गोत्रापत्यमिति विग्रहः। च्फञादि पूर्ववत्। व्यविधावस्त्रियामित्यस्य प्रयोजनमाह--स्त्रियां कौञ्जायनीति। कुञ्स्यापत्यं स्त्रीति विग्रहः। स्त्रीत्वादिह न ञ्यप्रत्यय इति भावः। अदन्तत्वादिह टापमाशङ्क्याह--गोत्रत्वेनेति। कृते तु ञ्यप्रत्यये योपधत्वाज्जातिलक्षणङीषभावे टाप् स्यादिति भावः। च्फञ्विधौ गोत्रग्रहणस्य प्रयोजनमाह--अनन्तरात्पत्ये कौञ्जिरिति।

बाल-मनोरमा

आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राआहृणराजन्यात् , ५।३।११३

आयुधजीवि। बाहीकेष्विति। बाहीकाख्यग्रामविशेषेष्वित्यर्थः। क्षौद्रक्य इति। क्षुद्रको नाम कश्चिदायुधजीविनां बाहीक देशवासिनां सङ्घः। स एव क्षौद्रक्यः। मालव्य इति। मालवो नाम कश्चिद्वाहीकेषु आयुधजीविनांसङ्घः। स एव मालव्यः। टित्त्वान्ङीबिति। एवं च अस्त्रियामिति नात्र सम्बध्यत इति भावः। तद्विशेषेति। व्याख्यानादिति भावः।

तत्त्व-बोधिनी

व्रातञ्फञोरस्त्रियाम् ९०७, ५।३।११३

ब्राआतच्फञो। "पूगाञ्()ञ्योऽग्रामणी"त्यतोऽनुवर्तनादाह---ञ्यः स्यादिति। व्रातवाचिभ्यः "कापोतपाक्यः"इत्युदाहरिष्यति। अस्त्रियां किम्()। कपोतपाका स्त्री। तद्राजत्वादिति। "ञ्यादयस्तद्राजाः"इति सूत्रेणे"ति शेषः। लुग्वक्ष्यत इति। "तद्राजस्य बहुषु"इत्यनेने"ति शेषः। कौञ्जायानीति। इह सति ञ्याप्रत्यये योपधत्वात् "जातेः"इति ङीषबावे चापि रूपे स्वरे च विशेषो बोध्या इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

आयुधजीविसङ्क्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ५।३।११४

आयुधजीविनां सङ्घः आयुधजीविसङ्घः। स वाहीकैर् विशेष्यते। वाहीकेषु य आयुधजीविसङ्घः, तद्वाचिनः प्रातिपदिकात् ब्राह्मणराजन्यवर्जितात् स्वार्थे ञ्यट् प्रत्ययो भवति। ब्राह्मणे तद्विशेषग्रहणम्। राजन्ये तु स्वरूपग्रहणम् एव। टकारो ङीबर्थः, तेन अस्त्रियाम् इति न अनुवर्तते। कौण्डिबृस्यः, कौण्डीवृस्यौ, कौण्डीवृसाः। क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः। मालव्यः, मालव्यौ, मालवाः। स्त्रियाम् कौण्दिवृसी। क्षौद्रकी। मालवी। आयुधजीविग्रहणं किम्? मल्लाः। शयण्डाः। सङ्घग्रहणं किम्? सम्राट्। वाहीकेसु इति किम्? शबराः। पुलिन्दाः। अब्राह्मणराजन्यातिति किम्? गोपालवा ब्राह्मणाः। शालङ्कायना राजन्याः।

न्यासः

आयुधजीविसङ्घाञ्ञ्यङ्वाहीकेष्वब्राआह्मणराजन्यात्?। , ५।३।११४

"वाहीकेषु" इति। निर्धारणे २।३।४१ सप्तमी। "वाहोकेषु मध्ये य आयुधजीविसङ्घः" इति। निधरिम्ञ्च समानजातीयस्यैव भवतत्यायुधजीविसङ्घोऽपि वाहीक एव विज्ञायते। अथ वा--देशवाचिनो वाहोकशब्दादधिकरण एवैषा सप्तमी; वाहिकदेशविशेष आयुधजीविसङ्घो वसतीति। "ब्राआह्मणे तद्विशेषग्रहणम्()" इति। अथ स्वरूपग्रहणं कस्मान्न भवति? अत एव प्रतिषेधात्()। यदि स्वरूपग्रहणं स्यात्(), ब्राआह्मणप्रतिषेधोऽनर्थकः स्यात्()। प्राप्तिपूर्वको हि प्रतिषेधो भवति। ब्राआह्मणशब्द आयुधजीविसङ्घो वाहीकेषु न विद्यत इति किं ब्राआह्मणप्रतिषेधेन! ब्राआह्मणविशेषवाचितस्तु ये गोपालप्रभृतयः शब्दास्तद्वाच्या आयुध जीविङ्घा वाहीकेषु भवन्ति; तत्र यदि प्रतिषेधो न क्रियेत, तदा तेभ्योऽपि स्यात्()। अतस्तन्निवृत्त्यर्थोऽर्थवान्? विशेषग्रहणे प्रतिषेधो भवति। तस्मात्()--"ब्राआह्मणे तद्विशेषग्रहणम्(), राजन्ये तु स्वरूपाग्रहणमेव" इति। तद्वाच्यस्यायुधजीविसङ्घस्य वाहीकेषु सत्त्वात्(); "स्व रूपं शब्दस्याशब्दसंज्ञा" इति वचनाच्च। "तेन" इत्यादि। यस्माद्? ङीबर्थोत्र टकारः कृतस्तेन "अस्त्रियाम्" ५।३।११३ इति नानुवर्त्तते। तदनुवृत्तौ ञ्यट्प्रत्ययान्तं स्त्रियां न भवतीति ङीबर्थं टित्करणनर्थकं स्यात्()। तस्मादस्त्रियामिति निवृत्तम्(), अतः स्त्रियामपि भवति। "कौण्डीबृसी" "क्षौद्रकी" इति। "हलस्तद्धितस्य" ६।४।१५० इति यकारलोपः॥

---

सूत्रम्

काशिका-वृत्तिः

वृकाट् टेण्यण् ५।३।११५

आयुधजीविसङ्घातिति वर्तते। वृकशदातायुधजीविनः स्वार्थे टेण्यण् प्रत्ययो भवति। टकारो ङीबर्थो, णकारो वृद्ध्यर्थः। वार्केण्यः, वार्केण्यौ, वृकाः। आयुधजीविसङ्घविशेषणं, जातिशब्दान् मा भूत्। कामक्रोधौ मनुस्याणां खादितारौ वृकाविव।

न्यासः

वृकाट्टेण्यण्?। , ५।३।११५

यदि वाहीकेषु वृकशब्दस्य वाच्य आयुधजीविसङ्घो भवति, ततो ञ्यटि प्राप्तेऽन्यत्राप्राप्त एव कस्मिंश्चित्? प्रत्ययविधानं वेदितव्यम्()। "वृकाविव" इति। वृकशब्दोऽत्र जातिवचनः॥

बाल-मनोरमा

वृकाट्टेण्यण् , ५।३।११५

वृकाट्टेण्यण्()। वृको नाम कश्चिदायुधजीविसङ्घः। स एव वार्केण्यः। आदिवृद्धिः। रपरत्वम्। जातिविशेषादिति। वृको नाम कश्चिन्मनुष्यखादी चतुष्पाज्जातिविशेषः प्रसिद्धः,तस्मान्नेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

दामन्यादित्रिगर्तषष्ठाच् छः ५।३।११६

आयुधजीविसङ्घातिति वर्तते। दामन्यादिभ्यः प्रातिपदिकेभ्यः त्रिगर्तषष्ठेभ्यः च आयुधजीविसङ्घवाचिभ्यः स्वार्थे छः प्रत्ययो भवति। येषाम् आयुधजीविनां सङ्घानां षडन्तवर्गास् तेषाम् च त्रिगर्तः षष्ठः। त्रिगर्तः षष्ठो येषां ते त्रिगर्तषष्ठाः

इत्युच्यन्ते। तेषु च इयं स्मृतिः आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी। क्रौष्टकिर्जालमानिश्च ब्राह्मगुप्तो ऽर्थ जानकिः। इति। दामन्यादिभ्यस् तावत् दामनीयः, दामनीयौ, दामनयः। औलपीयः, औलपीयौ, उलपयः। त्रिगर्तषष्ठेभ्यः खल्वपि कोण्डोपरथीयः, कौण्डोपरथीयौ, कौण्डोपरथाः। दाण्डकीयः, दाण्डकीयौ, दाण्डकयः। कौष्टकीयः। जालमानीयः। ब्रहमगुप्तीयः। जानकीयः। दामनी। औलपि। आकिदन्ती। काकरन्ति। काकदन्ति। शत्रुन्तपि। सार्वसेनि। बिन्दु। मौञ्जायन। उलभ। सावित्रीपुत्र। दामन्यादिः।

न्यासः

दामन्यादित्रिगर्तषष्ठाच्छः। , ५।३।११६

"तेषु चेयं स्मृतिः" इति त्रिगत्र्तषष्ठाः स्मग्र्यन्ते ज्ञायन्तेऽनयेति स्मृतिः। सा पुनः--"आहुस्त्रिगत्र्तषष्ठान्()" इति। अयमेवाप्तप्रणीतश्लोकः एषु च त्रिगत्र्तषष्ठेषु प्रथमपञ्चमौ शिवाद्यणन्तौ, शेषास्त्विञन्ताः। केचिदतद्धितान्तमेव पञ्चमं पठन्ति। तेषां ब्राह्गुप्तशब्दादेव च्छो भवति॥

बाल-मनोरमा

दामन्यादित्रिगर्तषष्ठाच्छः , ५।३।११६

दामन्यादि। दानिरादिर्यस्य दामन्यादिः। त्रिगर्तः षष्ठो यस्य वर्गस्य स त्रिगर्तषष्ठः। दामन्यादिश्च त्रिगत्र्तषष्ठश्चेति समाहार द्वन्द्वात्पञ्चमी। फलितमाह--दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चेति। आयुधजीविनां हि षड्वर्गाः, तत्र षष्ठस्त्रिगत्र्तो वर्गः, तेभ्यः षड्वर्गेभ्य इति यावत्। के ते त्रिगर्तषष्ठा इत्यत आह--आहुरिति। कौण्डोपरथः, दाण्डकिः, क्रौष्टुकिः, जालमानिः, ब्राआह्गुप्तः, जालकिरित्येतान् त्रिगर्तषष्ठान् आहुरित्यर्थः। "जालकि"रिति त्रिगर्तस्य नामान्तरम्। एतेषु षट्सु कौण्डोपरथब्राआह्गुप्तशब्दौ शिवाद्यणन्तौ। शेष इञन्तः। दामादिगणमुदाहरति--दामनीय इति। दामनिरेव दामनीयः। औलपीति। प्रकृतिप्रदर्शना। औलपीय इति। औलपिशब्दात्स्वार्थे छः। त्रिगर्तेति। त्रिगर्तषष्ठानामुदाहरणसूचनमिदम्। कौण्डोपरथीय इति। कौण्डोपरथशब्दात्स्वार्थे छः। दाण्डकीय इति। दाण्डकिशब्दात्वार्थे छः। क्रौष्टुकीयः, जालमानीयः, ब्राआह्गुप्तीयः, जालकीयः--इत्यप्युदाहार्यम्।

तत्त्व-बोधिनी

दामन्यादित्रागर्तषष्ठाच्छः १५३९, ५।३।११६

दामन्यादित्रिगर्तषष्ठात्। समाहारद्वन्द्वात्पञ्चमी। त्रिगर्तषष्ठेभ्य इति। येषामायुधजीविनां षडन्तर्वर्गाः, षष्ठवर्गस्तु त्रिगर्तस्तेभ्य इत्यर्थः। त्रिगर्तवर्गषष्ठकाः के इत्याकाङ्क्षायामाह---आहुस्त्रिगर्तषष्ठांश्चेति। अत्र जानकयस्त्रिगर्तवर्गः। तेषु च त्रिगर्तषष्ठेषु[तु]प्रथमपञ्चमौ कौण्डोपरथब्राआह्गुप्तशब्दौ शिवाद्यणन्तौ, शेषास्त्विञन्ताः। केचित्तु अतद्धितान्तमेव पञ्चमं ब्राह्गुप्तशब्दं पठन्ति। कौण्डोपरथीय इति। बहुवचने तु कौण्डोरपथाः दाण्डकय इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

पर्श्वादियौधेयादिभ्याम् अणञौ ५।३।११७

आयुधजीविसङ्घातित्येव। पर्श्वादिभ्यः यौधेयादिभ्यश्च प्रातिपदिकेभ्यः आयुधजीविसङ्घवाचिभ्यः स्वार्थे ऽणञौ प्रत्ययौ भवतः। पार्शवः, पर्शवौ, पार्शवः। आसुरः, आसुरौ, असुराः। यौधेयः। शौक्रेयः। पर्शु। असुर। रक्षस्। बाह्लीक। वयस्। मरुत्। दशार्ह। पिशाच। विशाल। अशनि। कार्षापण। सत्वत्। वसु। पर्श्वादिः। यौधेय। कौशेय। क्रौशेय। शौक्रेय। शौभ्रेय। धार्तेय।

वार्तेय। जाबालेय। त्रिगर्त। भरत। उशीनर। यौधेयादिः।

न्यासः

पर्ादियौर्धयादिभ्यामणञौ। , ५।३।११७

किमर्थं पुनरिह यौधेयादयः पठ()न्ते, यावता लुक्प्रतिषेधार्थं चतुर्थे यौधेयादयः समाम्नाता एव, त एव चेह गृह्न्ते? सत्यमेतत्(); विचित्रा हि गणानां कृतिर्गणकारेस्येति पुनः पठिताः। पर्(ाआदिषु सत्वच्छशब्दो पठ()ते। स च सत्वच्छब्दपरकृतिर्मतुप्प्रत्ययान्तो वेदितव्यः॥

बाल-मनोरमा

पर्ाआदियौधेयादिभ्योऽणञौ , ५।३।११७

पर्(ाआदियौधेयादि। एभ्य इति। पर्(ाआदिभ्यो यौधेयादिभ्यश्चेत्यर्थः। पार्शव इति। पर्शुशब्दाज्जनपदक्षत्रियविशेषयोर्वाचकादपत्येष्वर्थेषु "द्व्यञ्मगधे"त्यण्। ततोऽपत्यसङ्घविवक्षायामनेन अणिति भावः। पर्शव इति। अपत्वसङ्गबहुत्वविवक्षायां प्रकृतस्याऽणोऽपि तद्राजत्वाल्लुक्, "ञ्यादस्तद्राजाः" इति वक्ष्यमाणत्वादिति भावः। यौधेय इति। युधाशब्दादपत्येऽर्थे "द्व्यचः" इति ढक्। तदन्ताऽपत्यसङ्घविवक्षायामनेन अञ्। ञित्वमाद्युदात्तत्वफलकम्। यौधेया इति। अपत्यसङ्घबहुत्वविवक्षायां "तद्राजस्ये"त्यञो लुक्। "कितः" इत्यन्तोदात्तं फलम्।

तत्त्व-बोधिनी

पर्ाआदियौधेयादिभ्योऽणञौ १५४०, ५।३।११७

पार्शव इति। "पर्शु"रितिस जनपदशब्दस्ततोऽपत्ये "व्यञ्()मगधे"त्यण्। बहुत्वे तद्राजत्वाल्लुक्। पुनः सङ्घविवक्षायामनेनाऽण्। अस्याप्यणो बहुत्वे तद्राजत्वाल्लुक्। तदाह---पर्शव इति। ननु "पर्शु"रिति यो जनपदशब्दस्तस्मादेवाऽनेन स्वार्थेऽम् विधीयताम्, अपत्यवाचिपर्शुशब्दात्सङ्घविवक्षायामण्विधौ तु स्वार्थिकत्वं न सिध्येदिति चेत्। अत्राहुः---केवलः पर्शुशब्द एव जनपदवाचीस न त्वणन्त इति जनपदवाचिनः स्वार्थेऽण् न विधीयते, किंतु "व्यञ्()मगधे"त्यणः "तद्राजस्य बहुषु"इत्यादिना लुकि बह्वपत्यवाचिपर्शुशब्दादेव स्वार्थे विधीयते। स्वार्थश्चात्र सङ्घ एव। न च पर्शुशब्दस्य सङ्घवाचित्वं नेति शङ्क्यं, बह्वपत्यवाचित्वे सङ्घवाचितवध्रौव्यादिति न काप्यनुपपत्तिरिति। यौधेय इति। युध्यतेऽसौ युधा। युधेरिगुपधलक्षणः कः। युधाया अपत्यं। "व्यचः"इति ढक्। तदन्तात्सङ्घाविवक्षायामनेनाऽञ्। तेन "यौधेय"इति आद्युदात्तं भवति। किं च यौधेयस्याऽङ्को लक्षणं वा यौधेयः। "संघाङ्कलक्षणे"त्यञन्तादञ्। एवं यौधेयाधिषु ये ढगन्ताः शौक्रेयदयस्तेषु सर्वेषु प्रयोजनद्वयमह्नम्। यौधेया इति। अञो लुक्। अन्तोदात्तम्। न च "न प्राच्यभर्गे"त्यादिना न#इषेधः शङ्क्यः, स्त्रियामेव तन्निषेधात्।

---

सूत्रम्

काशिका-वृत्तिः

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ५।३।११८

आयुधजीविसङ्घातिति निवृत्तम्। अभिजिदादिभ्यो ऽणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ् प्रत्ययो भवति। अभिजितो ऽपत्यम् इत्यण्, तदन्ताद् यञ्। आभिजित्यः, आभिजित्यौ, आभिजिताः। वैदभृत्यः, वैदभृत्यौ, वैदभृताः। शालावत्यः, शालावत्यौ, शालावताः। शैखावत्यः। शामीवत्यः। और्णावत्यः। श्रौमत्यः। गोत्रप्रत्ययस्य अत्र अणो ग्रहणम् इष्यते।

अभिजितो मुहुर्तः, आभिजितःस्थालीपाकः इत्यत्र न भवति।

न्यासः

अभिजिद्विदभृच्छालावच्?छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्?। , ५।३।११८

"अभिजितोऽपत्यमित्यण्()" इति। "प्राग्दीष्यतोऽण्()" ४।१।८३ इत्यौत्सर्गिकः। एवमुत्त्रत्रापि। "गोत्रप्रत्ययस्याणो ग्रहणमिष्यते" इति। तत्कथं जातिनाम्न इत्यनुवत्र्तते? तेनाणन्तं यज्जातिनाम तदेव ग्रहीष्यते। यश्च गोत्र्रऽण्? विहितस्तदन्तमेव जातिनाम भवति; "गोत्रं च चरणैः सह" (म। भा। २।२२५) इति आतित्वात्()। "आभिजितो मुहूततत्त्#ं#ः, आभिजीतः स्थालीपाकः" इति। एकत्र "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यण्(), अपरत्र "सास्य देवता" ४।२।२३ इति॥

बाल-मनोरमा

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ�मदणो यञ् , ५।३।११८

अभिजिद्विदभृत्। अभिजित्, पिदभृत्, शालावत्, शिखावत्, शमीवत्, ऊर्णावत्, श्रुमत्--एषां समाहारद्वन्द्वात्पञ्चम्या लुक्। अण इति प्रत्ययत्वात्तदन्तग्रहणम्। तदाह--अभिजिदादिभ्य इति। अत्र "आयुधजीविसङ्घादिति निवृत्त"मिति वृत्तिः।आभिजित्य इति। अभिजितोऽपत्यम् आभिजितः। अपत्येऽण्। आभिजित एव आभिजित्यः। वैदभृत्य इति। विदभृत्यः। शालावत्य इति। शालावतोऽपत्यं शालावतः, स एव शालावत्यः। शैखावत्यैति। शिखावतोऽपत्यं शैखावतः। स एव शैखावत्यः। शामीवत्य इति। "शमीवतोऽपत्यं शामीवतः, स एव शामीवत्यः। और्णावत्य इति। ऊर्णावतोऽपत्यमौर्णावतः, स एव और्णावत्यः। श्रौमत्य इति। श्रुमतोऽपत्यं श्रौमतः, स एव श्रौमत्यः। अत्र अभिजिदित्यादिशब्देषु यञः स्वार्थिकतया गोत्रार्थकत्वादाभिजित्यस्यायमिति विग्रहे "गोत्रचरणा"दिति वुञि"आपत्यस्य चे"ति यलोपे "आभिजितक" इति भवति। "अपत्याऽणन्तेभ्य एवायं यञ्। तेन आभिजितो मुहूर्त इत्यादौ न य"ञिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

अबिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ�मदणो यञ् १५४१, ५।३।११८

आभिजित्य इति। आभिजितशब्दादणन्ताद्यञ्। एवं विदभृत्प्रभृतिभ्योऽणि तदन्तेभ्यो वैदभृत ----शालावतः--- शैखावतादिब्योयञ्।

---

सूत्रम्

काशिका-वृत्तिः

ञ्यादयस् तद्राजाः ५।३।११९

पूगाञ् ञ्यो ऽग्रामणीपूर्वात् ५।३।११२ इत्यतः प्रभृति ये प्रत्ययाः, ते तद्राजसंज्ञा भवन्ति। तथा च एव उदाहृतम्। तद्राजप्रदेशाः तद्राजस्य बहुसु इत्येवम् आदयः। इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य तृतीयः पादःपञ्चमाध्यायस्य चतुर्थः पादः।

न्यासः

ञ्यादयस्तद्राजाः। , ५।३।११९

इति श्रीबोधिसत्त्वदेशीपाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां पञ्चमस्याध्यायस्य तृतीय

पादः॥ * * * अथ पञ्चमोऽध्यायः चतुर्थः पादः

बाल-मनोरमा

ञ्यादयस्तद्राजाः , ५।३।११९

ञ्यादयस्तद्राजाः। लोहितध्वजा इति। "पूगा"दिति विहितस्य ञ्यस्य तद्राजत्वाद्बहुत्वे लुक्। कपोतपाकाः कौञ्जायनाः ब्राआध्नायना इति। "व्रातच्फञो"रिति विहितस्य ञ्यस्य लुक्। इत्यादीति। क्षौद्रक्यौ, क्षुद्रकाः। "आयुधजीवी"ति ञ्यटो लुक्। वार्केण्यः, वार्केण्यौ, वृकाः। वृकाट्टेण्यणो लुक्। दामनीयः, दीमनीयौ, दामनयः, कौण्डोपरथाः इत्यादौ "दामन्यादित्रिगर्तषष्ठा"दिति छस्य लुक्। पार्शवौः, पार्शव, पर्शवः, यौधेयाः इत्यत्र पर्(ाआदियौधेयाद्यणञोर्लुक्। आभिजित्यः आभिजित्यौ, अभिजितः, विदभृत इत्यादौ "अभिजिद्विदभृ"दित्यादिविहितस्य यञो लुगिति भावः। इति पञ्चमस्य तृतीयपादः।

---

सूत्रम्

काशिका-वृत्तिः

पादशतस्य सङ्ख्यादेर् वीप्सायां वुन् लोपश् च ५।४।१

पादशतान्तस्य सङ्ख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् प्रत्ययो भवति। तत्सन्नियोगेन चान्तस्य लोपो भवति। यस्य इति लोपेन एव सिद्धे पुनर् वचनम् अनैमित्तिकार्थम्। यस्य इति लोपः परनिमित्तकः। तस्य स्थानिवद्भावात् पादः पत् ६।४।१३० इति पद्भावो न स्यात्। अस्य त्वनैमित्तिकत्वान् न स्थानिवत्त्वम्। द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति। द्वे द्वे शते ददाति द्विशतिकां ददाति। तद्धितार्थ इति समासः। ततः प्रत्ययः। स्वभावाच् च वुन्प्रत्ययान्तं स्त्रियाम् एव वर्तते। पादशतस्य इति किम्? द्वौ द्वौ माषौ ददाति। सङ्ख्यादेः इति किम्? पादं पादं ददाति। वीप्सायाम् इति किम्? द्वौ पादौ ददाति। द्वे शते ददाति। पादशतग्रहणम् अनर्थकम्। अन्यत्र अपि दर्शनात्। द्विमोदकिकां ददाति त्रिमोदकिकां ददाति।

न्यासः

पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च। , ५।४।१

प्रतिपदिकादिति वत्र्तते, तस्य विशेषणं पादशतस्यग्रहणम्(), विशेषणेन तदन्तविधिर्भवतदीत्याह--"पादशतान्तस्य" इति। आदिशब्दोऽवयववचनः। न च संख्याशब्दः पदशतशब्दयोरवयव उपपद्यते; पृथाग्भावादनारंभकत्वात्()। न हि पृथग्भूतमनारम्भकं शब्दान्तरस्यावयवो युज्यते, यथा घटशब्दः पटशब्दस्य। विपरिते तु युज्यते, यथा--पटस्य समुदायात्मनः तन्त्वादिकारणं समदेशमवयदमाहः। तस्मात्? "संख्यादेः" इत्येतदपि प्रातिपदिकस्य विज्ञायते, न पादशतशब्दयोरित्याह--"संख्यादेः" इत्यादि। आनन्तर्य्यलक्षणा चेयं षष्ठो, यथा--गापोष्टकं ३।२।८ इति गापोष्टक्प्रत्ययो भवतीत्यनन्तरमिति शेषः। "तत्सन्नियोगेन च" इति। चकारस्य सन्नियोगार्थत्वात्()। "अन्तस्य" इति। अलोऽन्त्यपरिभाषया १।१।५१। "पुनः" इत्यादि। निमित्ते भवो नैमित्तिकः, अध्यात्मादित्वाट्ठञ् (वा। ४५६), न नैमित्तिकोऽनैमित्तिकः। लोपः स्यावित्येवमर्थं पुनर्लोपवचनम्()। वुनापि सह लोपो विधीयमानः परनिमित्तं नापेक्षत इत्यनैमित्तिको भवति। यस्येति ६।४।१४८ लोपः। "परनिमित्तकः" इति। ईति तद्धिते च परस्मिन्निमित्ते विधानात्? तस्य स्थानिवद्भावात्(), "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति लोपस्य स्थानिवद्भावेन पाच्छब्दरूपस्य विहितत्वात्()। अनच्को हि पाच्छब्दः स्थान्युपात्तः, तस्य चानच्कत्वं स्थानिवद्भावे सति हीयते। अस्य त्वनैमित्तिकत्वान्न स्थानिवद्भाव इति पद्भावो भवतीति भावः। "द्वौ द्वौ पादौ" इति। पीप्सायां द्विर्वचनं भवति॥

बाल-मनोरमा
पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च , ५।४।१

अथ पञ्चमस्य चतुर्थपादः-पादशतस्य। पादश्चशतं चेति समाहारद्वन्द्वाल्लोपापेक्षया षष्ठी। वुन्प्रत्ययापेक्षया तु सा पञ्चम्यर्थे। सङ्ख्यावचकशब्दपूर्वकात्पादशब्दाच्च वीप्साविशिष्टार्थवृत्तेः स्वार्ते वुन्प्रत्ययः स्यात्, प्रकृतेरन्त्यस्य लोपश्चेत्यर्थः। ननु वुनोऽकादेशे सति "यस्येति चे"त्येव लोपसिद्धेरिह लोपविधिव्र्यर्थ इत्यत आह--अनैमित्तिकत्वार्थमिति। "यस्येति चे"ति लोपस्य परनिमित्तकतया तस्य "अचः परस्मिन्" इति स्थानिवत्त्वा "पादः प"दिति पदादेशो न स्यात्। अस्य तु लोपस्य परनिमित्तकत्वाऽभावेन स्थानिवत्त्वाऽप्रसक्तेः पद्भावो निर्बाध इति भावः। तद्धितार्थ इति। नच वीप्सायाः प्रकृत्यर्थविशेषणतया वुनोऽर्थाऽभावात्कथमिह"तद्धितार्थ" इति समास इति वाच्यं, वुनो द्योतकतया द्योत्यार्थेनैवार्थवत्त्वात्। वुन्नयं स्त्रियामेवेति। स्वभावादिति भावः। द्विशति कामिति। द्वे द्वे शते ददातीति विग्रहः।

पादशतेत्यादि। वार्तिकमिदम्। अनर्थकमिति कथं, पादशतभिन्नव्यावृत्त्यर्थत्वादित्यत आह--अन्यत्रापि दर्शनादिति। तदुदाहृत्य दर्शयति--द्विमोदकिकामिति। द्वौ द्वौ मोदकौ ददातीति विग्रहः।

तत्त्व-बोधिनी
पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च १५४२, ५।४।१

पादशतस्य सङ्ख्यादेः। पादशतस्य किम्()। द्वौ द्वौ माषौ ददाति। संख्यादेरिति किम्()। पादं पादं ददाति। वीप्सीयामिति किम्()। द्वौ पादौ ददाति। अनैमित्तिकत्वार्थमिति। निमितिते भवो नैमित्तिकः। अध्यात्मादित्वाट्ठञ्। तद्धितार्थ इति। समास इति। यद्यपि प्रकृत्युपाधिवीप्सा, तथापि वुनो द्योत्येति तद्धितार्थो भवत्येवेति भावः। ददातीति। समर्पणमात्रमिह ददातेरर्थः, न तु परस्वत्वापादनपर्यन्तम्। तथात्वे हि उत्तरसूत्रविषयत्वं स्यात्। केचित्तु व्यवसृजेर्धातोः प्रयोगे सत्येव उत्तरसूत्रस्य प्रवृत्तिमाहुः। अन्यत्रापि दर्शनादिति। "द्वौ द्वौ माषौ ददाती"त्यादौ त्वनभिधानान्नतिप्रसङ्ग इति भावः।

---

सूत्रम्
काशिका-वृत्तिः
दण्डव्यवसर्गयोश् च ५।४।२

दमनं दण्डः। दानं व्यवसर्गः। दण्डव्यवसर्गयोः गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य सङ्ख्यादेः वुन्प्रत्ययो भवति, अन्तलोपश्च। अवीप्सार्थो ऽयम् आरम्भः। द्वौ पादौ दण्डितः द्विपदिकां दण्डितः। द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति। द्विशतिकां दण्डितः। त्रिशतिकाम्। द्विशतिकां व्यवसृजति। त्रिशतिकाम्।
न्यासः
दण्डव्यवसर्गयोश्च। , ५।४।२

"दमनं दण्डः" इति। ननु दण्डशब्दोऽयं यष्ट()आदावपि वत्र्तते? सत्यम्(); तथापीह दमने वत्र्तमानस्य ग्रहणं युक्तम्(), दमनस्यैव प्रत्ययान्तेन गम्यमानत्वात्()। "दानं व्यवसर्गः" इति। यद्येवम्(), तत्? पूर्वयोग उदाहृतं दत्तं तदा चोपपद्यते यद्ययं योगोऽधिकविधानार्थो भवति; न त्वपवादः; तस्मान्नार्थोऽनेन योगेन? इत्यत आह--"अवीप्सार्थः" इत्यादि। तेन दानमात्रेऽनेन वुन्()। दानवीप्सायां पूर्वयोगेन पुनर्भवत्येव॥
बाल-मनोरमा

दण्डव्यवसर्गयोश्च , ५।४।२

दण्डव्यवसर्गयोश्च। बुन्स्यादिति सङ्ख्यादेः पादशताद्दण्जव्यवसर्गयोर्गम्ययोर्वुन्स्यात्प्रकृतेरन्तलोपश्चेत्यर्थः। दण्डनं-दण्डः=बलाकृत्य द्रव्यग्रहणम्। व्यवसर्गो-दानम्। ननु पूर्वेण सिद्धे किमर्थमिदमित्यत आह--अवीप्सार्थमिति। द्वौ पादौ दण्डित इति। बलाकृत्य ग्राहित इत्यर्थः।

तत्त्व-बोधिनी

दण्डव्यवसर्गयोश्च १५४३, ५।४।२

दण्डव्यवसर्ग। दण्डनं दडः। दण्डेस्चुरादित्वाद्भावे घञ्। अत्राप्युदाहरणे "तद्धितार्थ"इति समासः। स्त्रीलिह्गं च तद्धितार्थः। यद्वा प्रकृत्यर्थ एव तद्धितार्थः, स्वार्थिकत्वाद्वुनः। द्वौ पादौ दण्डित इति। "देवदत्तेन यज्ञदत्त"इति शेषः। दण्डेरप्रधाने कर्मणि क्त इति यज्ञदत्त इत्यत्र प्रथमा। द्वौ पादावित्यत्र द्विपदिकामित्यत्र च द्वितीया भवति। "दण्डिग्र्रहणार्थ"इति तु द्विकर्मकेषूक्तम्। तथा च द्विपदिकाकर्मकग्रहणविषयीभूतो यज्ञदत्त इत्यादिर्थ इति नव्याः।

---

सूत्रम्

काशिका-वृत्तिः

स्थूलादिभ्यः प्रकारवचने कन् ५।४।३

स्थूलादिभ्यः प्रकारवचने द्योत्ये कन्प्रत्ययो भवति। जातीयरः अपवादः। प्रकारो विशेषः। स्थूलप्रकारः स्थूलकः। अणुकः। माषकः। कन्प्रकरणे चञ्चद्बृहतोरुपसङ्ख्यानम्। चञ्चत्प्रकारः चञ्चत्कः। बृहत्कः। चञ्चद्बृहयोः इति केचित् पठन्ति। तेषां चञ्चकः, बृहकः इति उदाहरणं द्रष्टव्यम्। स्थूल। अणु। माष। इषु। कृष्ण तिलेषु। यव व्रीहिषु। पाद्यकालावदाताः सुरायाम्। गोमूत्र आच्छादने। सुराया अहौ। जीर्ण शालिषु। पत्रमूले समस्तव्यस्ते। कुमारीपुत्र। कुमार। श्वशुर। मणि। इति स्थूलादिः।

न्यासः

स्थूलादिभ्यः प्रकारवचने कन्?। , ५।४।३

"जातयरोऽपवादः" इति। एतेन यथा प्रकारवचने विधीयमानो जातीयर्? प्रकारवति न प्रकारमात्रे, तथायमपीति दर्शयति; अन्यथा हि जातीयरोयं विषयभेदादपवादो नोपपद्यते, अथ किमर्थ "प्रकारवचने जातीयर्()" (५।३।६९) इत्यस्यैवानन्तरं स्थूलादिभ्यः कन्? न विधीयते? किं कृतं भवति? कन्? प्रकारवचनं न वक्तव्यं भवति? नैवं शक्यम्(); स्थूलादीनां हि प्रकारस्याज्ञातादीनां च युगपद्विवक्षायां परत्वात्? के कृते कन्न स्यात्(); शब्दान्तरत्वात्()। अथापि स्यात्()? एवमपि स्थूलक इत्याद्युदात्तत्वं स्यात्(), इह तु कनो विधाने परत्वात्? परत्वात्? कनि कृति ततः क इत्यन्तोदात्तत्वं सिद्धं भवति। "चञ्चद्बृहतोः" इत्यादि। स्थालादिषु चञ्चद्बृहतोरपाठात्? तन्न प्राप्नोति। तस्मादुपसंख्यानं प्रतिपादनं कत्र्तव्यम्()। तत्रेदं प्रतिपादनम्()--पूर्वसूत्रादिह चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः। तेन चञ्चद्बृहतोरपि भविष्यतीति। "स्थालाणुमाषेषु" इति। केचिदेताश्चतरुआः प्रकृतस्य इति वर्णयन्ति। स्थूलकः अणुकः। माषकः। इषुकः। अपरे तु स्थूलाणुशब्दौ प्रकृती, माषेष्वित्ययं तपाधिनिर्देश इत्याहः। अन्ये त्वानन्तर्य्यादणुशपब्दस्यैव माषग्रहणं विशेषणमाचक्षते। आद्यमेव दर्शनं न्याय्यम्(); तथा हि--स्थूलकादयः तद्विशेषमम्()। कृष्णकास्तिलाः। "यव व्रीहिषु" इति। यव इति प्रकृतिः, व्रीहिष्विति तद्विशेषणम्()। यवको व्रीहिः। "पाद्यकालवदाताः सुरायाम्()" इति। अपरे पुनरानन्तर्य्यदवदातशब्दस्य सुराग्रहणं विशेषणं पाद्यकालयोर्न विशेषणत्वं भवतीत्याहुः। "गोमूत्रादाच्छादने" ["गोमूत्र

आच्छादने"-काशिका] इति। गोमूत्रशब्दः प्रकृतिः, आच्छादने इति तद्विशेषणम्()। गोमूत्रप्रकारकमाच्छादनं गोमूत्रकम्()। "सुराहौ" ["सुराया अहौ"-काशिका] इति। सुरेति प्रकृतिः अहाविति विशेषणम्()। सुरावर्णोऽहिरिति सुरकः। "जीर्णशालिषु" इति। पत्रमूले इत्येते शब्दरूपे समस्तव्यस्ते प्रत्ययमुत्पादयतः--पत्रकम्(), मूलकम्()॥

बाल-मनोरमा

स्थूलादिभ्यः प्रकारवचने कन् , ५।४।३

स्थूलादिभ्यः। प्रकारो भेदः सादृश्यं च, व्याख्यानात्, तद्वति वर्तमानाद्यथायोयं कन्नित्यर्थः। जातीयरोऽपवाद इति। एतेन अयमपि तद्वदेव प्रकारवति भवति, नतु प्रकारमात्रे इति सूचितम्।

चञ्चत्क इति। चञ्चधातुश्चलने। अचञ्चन्नपि यश्चञ्चन्निव दृश्यते स चञ्चत्कः। यथा स्पन्दमानस्वच्छजनमध्यवर्ती मणिः। बृहत्क इति। अबृहन्नपि बृहन्निव दृश्यते स बृहत्कः, बृहदाख्यसामविशेषो वा। सुराया अहाविति। गणसूत्रमिदम्।"प्रकारवचने क"न्निति शेषः। सुराया अहावेवेति नियमार्थमिदम्। सुरक इति। "केऽण" इति ह्रस्वः।

तत्त्व-बोधिनी

स्थूलादिभ्यः प्रकारवचने कन् १५४४, ५।४।३

स्थूलादिभ्यः। प्रकारोभेदः सादृश्यं च। उभयत्रापि यथासंभवं कन्। जातीयरोऽपवाद इति। तेनायमपि तद्वदेव प्रकारवति भवति न तु प्रकारमात्रे इत्युक्तं भवति।

चञ्चद्बृहतोरूपसंख्यानम्। चञ्चाद्बृहतोरिति। एंतावपि स्थूलादिष्वेव पठितव्याविति भावः। चञ्चत्क इति। चञ्चतिश्चलनकर्मा। चञ्चत्कः। एवं बृहद्विशेषो बृहत्कः। अचञ्चन्नबृहन्नपि प्रभाविशेषाच्चञ्चन्निव बृहन्निव मणिविशेषो लक्ष्यते स चञ्चत्कः। बृहत्कः। सुरक इति। "केऽणः"इति ह्रस्वः।

---

सूत्रम्

काशिका-वृत्तिः

अनत्यन्तगतौ क्तात् ५।४।४

अत्यन्तगतिः अशेषसम्बन्धः, तदभावो ऽन्त्यन्तगतिः। अनत्यन्तगतौ गम्यमानायां क्तान्तात् कन्प्रत्ययो भवति। भिन्नकः। छन्नकः। अनत्यन्तगतौ इति किम्? भिन्नम्। छिन्नम्।

न्यासः

अनत्यन्तगतौ क्तात्?। , ५।४।४

"अशेषसम्बन्धः" इति। अशेषस्य स्वेन सम्बन्धिना भेदनादीनां व्याप्तिरित्यर्थः। "भिन्नकम्()" इति। न तु यस्याशेषस्य भेदेन सम्बन्धः, अपि त्वेकदेशस्य तद्भिन्नकमित्युच्यते। भिन्नमित्यत्राशेषसम्बन्ध एव गम्यते। यद्यशेषं भिदिक्रियाव्याप्तं घटादि तद्भिन्नमित्यभिधीयते॥

बाल-मनोरमा

अनत्यन्तगतौ क्तात् , ५।४।४

अनत्यन्तगतौ क्तात्। अत्यन्तगतिरशेषावयवसम्बन्धः, तदभावः=अनत्यन्तगतिः, तस्यां गम्यमानायां

क्तान्तात्कन्नित्यर्थः। छिन्नकमिति। किञ्चिदवयवावच्छेदेन छिन्नमित्यर्थः।

तत्त्व-बोधिनी
अनत्यन्तगतौ क्तात् १५४५, ५।४।४

छिन्नकमिति। ईषच्छिन्नमित्यर्थः। क्तप्रकृतिवाच्यया क्रियया कप्रत्ययवाच्यस्य साधनस्य व्याप्तिरत्यन्तगतिः। सेह नास्ति।

---

सूत्रम्
काशिका-वृत्तिः
न सामिवचने ५।४।५

सामिवचने उपपदे क्तान्तात् कन्प्रत्ययो न भवति। सामिकृतम्। सामिभुक्तम्। वानग्रहणं पर्यायार्थम्। अर्धकृतम्। नेमकृतम्। सामिवचने प्रतिषेधानर्थक्यम्, प्रकृत्याभिहितत्वात्? एवं तर्हि न एव अयम् अनत्यन्तगतौ विहितस्य कनः प्रतिषेधः, किं तर्हि, स्वार्थिकस्य। केन पुनः स्वर्थिकः कन् विहितः? एतदेव ज्ञापकं भवति स्वार्थे कनिति। तत्र यदेतदुच्यते, एवं हि सूत्रम् अभिन्नतरकं भवति, एतैर् हि बहुतरकं व्याप्यते इत्येवम् आदि, तदुपपन्नं भवति।
न्यासः
न सामिवचने। , ५।४।५

"सामिवचने" इति। साम्युच्यते येन तत्? सामिवचनम्()। "सामिकृतम्()" इति। बहुव्रीहिः, विशेषणसमासो वा। "प्रकृत्याभिहितत्वात्()" इति। प्रतिषेधानर्थस्ये हेतुः। अनत्यन्तगतिं गमयितुं कन्? विधीयते। सा च सामिशब्देनैव गमितेति कनः प्राप्तिरेव नास्ति। अतोऽनर्थकः प्रतिषेधः। स्वार्थमात्रेणैव कनो विधायकं लक्षणमस्तीति मन्यमान आह--"केन पुनः" इत्यादि। यदेतत् प्रतिषेधवचनम्(), एतदेव ज्ञापयति---भवति स्वार्थे कन्? इति, अन्यथा प्रतिषेधवचनमनर्थकं स्यात्()। अर्धकृतम्()। नेमिकृतम्()॥
बाल-मनोरमा
न सामिवचने , ५।४।५

न सामिवचने। वचनग्रहणं पर्यायलाभार्थमिति मत्वाऽऽह--सामिपर्याये उपपदे इति। सामिकृतमिति। "सामी"त्यव्ययमर्धे। "सामी"ति समासः। अर्धकृतमिति। अर्धं कृतमिति कर्मधारयः। "सामी"त्यस्य क्रियाविशेषणत्वेन कारकत्वात्समुदायस्य क्तान्तत्वं, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। नन्विह अनत्यन्तगतेः प्रकृत्यैवाभिहितत्वात् "उक्तार्थानामप्रयोगः" इति न्यायेन पूर्वसूत्रविहितस्य कनोऽप्रसक्तेरिह तन्निषेधो व्यर्थ इति शङ्कते--अनत्यन्तगतेरिति। परिहरति--इदमेवेति। "तथापी"ति पूर्वमध्याहार्यम्। ज्ञापयतीति। न ह्ययमनत्यन्तगताविति कनः प्रतिषेधः। किं तर्हि, अत्यन्तस्वार्थिकस्य कनः। तत्र च इदमेव ज्ञापकम्। अन्यथा तद्वैयथ्र्यादिति भावः। बहुतरकमिति। बहुतरमेव बहुतरकम्। भाष्ये तु इदं सूत्रं प्रत्याख्यातम्। "तमबाद्यन्तात्स्वार्थे कन्वक्तव्यः" इति वचनेन, यावादित्वाद्वा स्वार्थे कनाबहुतरक सुकरतरकमित्यादि सिद्धमिति तदाशयः।

तत्त्व-बोधिनी
न सामिवचने १५४६, ५।४।५

न सामिवचने। सामि अर्थ उच्यते ये तत्सामिवचनमिति व्यत्पत्त्या वचनग्रहणं पर्यायार्थमित्याह---सामिपर्याये इति। सामिकृतमिति। "सामी"ति समासः। अर्धकृतमिति। विशेषणसमासो बहुव्रीहिर्वा। प्रकृत्यैवेति। सामिवचनेनैवेत्यर्थः। ज्ञापयतीति। अयं भावः---"न सामिवचने"इत्यनेन "अनत्यन्तगतौ"इति कनो न निषेधः, सामिकृतादिभ्यस्तस्य प्राप्त्यभावात्, एतभ्योऽसमासे सामिपदेनैव अनत्यन्तागतेर्द्योतनात्। समासेभ्यस्तु क्तान्तत्वाऽबावाच्च। न च कृद्ग्रहणपरिभाषया समासस्य क्तान्तत्वमस्तीति शङ्क्यं, सामिशब्दस्य गतिकारकत्वाऽभावात्। तस्मात् स्वार्थिक एव कन्निषिध्यति इति। इदमेव निषेधवचनं क्चित्स्वार्थिकं कनं ज्ञापयतीति।

---

सूत्रम्

काशिका-वृत्तिः

बृहत्या आच्छादने ५।४।६

कन्ननुवर्तते, न प्रतिषेधः। बृहतीशब्दादाच्छादने वर्तमानात् स्वार्थे कन् प्रत्ययो भवति। बृहतिका। आच्छादने इति किम्? बृहतीछन्दः।

न्यासः

बृहत्या आच्छादने। , ५।४।६

"कन्ननुवत्र्तते" इति। स्वरितत्वात्()। "न प्रतिषेधः" इति। विपर्ययात्()। "बृहतिका" इति। केऽणः" ७।४।१३ इति ह्रस्वः॥

बाल-मनोरमा

बृहत्या आच्छादने , ५।४।६

वृहत्या आच्छादने। "कन्" इति शेषः। बृहत्येव बृहतिका=उत्तरीयं वासः। तदाह--द्वौ प्रावार इति। अमरवाक्यमिदम्। अषडक्षा। स्वार्थे इति। शेषपूरणमिदम्। अषडक्ष, आशितङ्गु, अलङ्कर्मन्, अलम्पुरुष एभ्योऽध्युत्तरपदाच्च स्वार्थे खः स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अषडक्षाऽशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात् खः ५।४।७

अषडक्ष आशितङ्गु अलग्कर्म अलम्पुरुष इत्येतेभ्यः अध्युत्तरपदात् च स्वार्थे खः प्रत्ययो भवति। अविद्यमानानि षड्क्षीणि अस्य इति बहुव्रीहिः। बहुव्रीहौ सक्थ्यक्ष्णोः इति षच्, ततः खप्रत्ययः। अषडक्षीणो मन्त्रः। यो द्वाभ्यम् एव क्रियते न बहुभिः। आशिता गावो ऽस्मिन्नरण्ये आशितङ्गवीनम् अरण्यम्। निपातनात् पूर्वपदस्य मुमागमः। अकङ्कर्मन्, अलम्पुरुषः इति पर्यादयो ग्लानद्यर्थे चतुर्थ्या इति समासः। अलं कर्मणे अलङ्ककर्मीणः। अलं पुरुषाय अलंपुरुषीणः। अध्युत्तरपदस् तत्पुरुसः। अधिशब्दः शौण्डादिसु पठ्यते। राजाधीनः। नित्यश्च अयं प्रत्ययः, उत्तरत्र विभाषाग्रहणात्। अन्ये ऽपि स्वार्थिका नित्याः प्रत्ययाः स्मर्यन्ते, तमबादयः प्रक्क्नः, ञ्यादयः प्राग्वुनः, आमादयः प्राङ् मयटः, बृहतीजात्यन्ताः समानान्ताश्च इति।

न्यासः

अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्? रवः। , ५।४।७

"अविद्यमानानि ष()डक्षीण्यस्मिन्निति बहुव्रीहिः" इति। ततः "बहुव्रीहौ सक्थ्यक्ष्णोः ५।४।११३ इति षच्()। राजशब्दात्? सप्तमी। राजन्यथीति विगृह्य "सप्तमी शौण्डैः" २।१।३९ इति समासः। "तमबादयः" इति। "अतिशायेन तमबिष्ठनौ" ५।३।५५ इत्येवमादयः। "प्राक्? कनः" इति। "युवाल्पयोः कनन्यतरस्याम्()" ५।३।६४ इत्ययम्()। "ञ्यादयः" इति। "पूगाञ्ञ्योऽग्रामणीपूर्वात्? ५।३।११२ इत्यादयः। "प्राग्वृनः" इति। "पादशतस्य" ५।४।१ इत्यादिसूत्रेण विहितत्वात्()। "आमादयः" इति। "किमेत्तिङव्ययघात्()" ५।४।११ इत्येवमादयः। "प्राङ्मयटः" इति। "तत्प्रकृतवचने मयट्()" ५।४।२१ इत्यतः। "बृहतीजात्यन्ताः" इति। "बृहत्या आच्छदने" (५।४।६) इत्येतत्? सूत्रं कनमुपलक्षयति। जात्यन्तशब्देनापि "जात्यन्ताच्छ बन्धुनि" ५।४।९ इत्येतत्()। बहुवचननिर्देशोऽषडक्षादिसूत्राविहितस्य परिग्रहार्थः॥

बाल-मनोरमा

अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः , ५।४।७

अषडक्षीणो मन्त्र इति। मन्त्रणं मन्त्रः। रहसि राजतदमात्यादिभिर्युक्तिभिः क्रियमाणं निर्धारणम्। अविद्यमानानि षट् अक्षीणि श्रोत्रेन्द्रियाणि यस्मिन्निति बहुव्रीहिः। "बहुव्रीहौ सवथ्यक्ष्णो"रिति षच्। तदन्तादनेन स्वार्थे खः। द्वाभ्या मेवेति। "पुरुषाभ्या"मिति शेषः। आशिता इति। "अश भोजने" इत्यस्मादाशितः कर्तेति ज्ञापकात्कर्तरि क्तः। पूर्वस्य मुमिति। आशितशब्दस्येत्यर्थः। अलङ्कर्मीण इति। "पर्यादयो ग्लानाद्यर्थे" इति चतुर्थीसमासात्खः, टिलोपः अलम्पुरुषीण इति। अलं पुरुषायेति विग्रहः। "मातृभोगीण" इत्यादाविव अषडक्षीणादौ णत्वम्। "पदव्यवायेऽपी"ति निषेधस्तु न, पदे परतो यत्पदं तेन व्यवाये इत्याश्रयणात्। ई()आराधीन इति। "यस्मादधिक"मिति ई()आरशब्दात्सप्तमी। शौण्डादित्वादधिशब्देन समासः। ततः स्वार्थे खः। "समर्थाना"मित्यतो वाग्रहणानुवृत्त्या अस्य वैकल्पकत्वभ्रमं वारयति--नित्यो।ञयं ख इति। उत्तरेति। "विभाषाऽञ्चे"रित्युत्तरसूत्रे "समर्थाना"मित्यतो वाग्रहणानुवृत्त्यैव सिद्धे विभाषाग्रहणादिह पूर्वसूत्रे वाग्रहणानुवृत्त्यभावो ज्ञाप्यत इत्यर्थः। नचैवं सति आशिता गावोऽस्मिन्निति, अलं कर्मणे इति च विग्रहप्रदर्शनमनुपपन्नमिति वाच्यम्, तस्य खप्रत्ययप्रकृतिकथनार्थत्वेन अलौकिकविग्रहवाक्यप्रायत्वात्। प्रसङ्गादाह--अन्येऽपीति। इष्यन्त इति। "भाष्यकृते"ति शेषः। तमबादयः प्राक्कन इति। "अतिशायने तम"वित्यारभ्य "अवक्षेपणे क"न्नित्यतः प्राग्विहिताः प्रत्यया इत्यर्थः। ञ्यादयः प्राग्वुन इति। "पूगाञ्ञ्योऽग्रामणीपूर्वा"दित्यारभ्य "अवक्षेपणे क"न्नित्यतः प्राग्विहिताः प्रत्यया इत्यर्थः। आमादयः प्राङ्मयट इति। "किमेत्तिङव्ययघादा"मित्यारभ्य "तत्प्रकृतवचने मयट्" इत्यतः प्राग्विहिता इत्यर्थः। बृहतीजात्यन्ता इति। बृहतीशब्देन "बृहत्या आच्छादने" इति कन् लक्ष्यते। जात्यन्तशब्देन तु "जात्यन्ताच्छ बन्धुनी"ति छो लक्ष्यते। बहुवचननिर्देशात्पाशबादयो।ञपि "षष्ठ()आ रूप्य चे"त्यन्ता गृह्णन्त इति कैयटः। वस्तुतस्तु परिगणिता एव नित्या, नतु पाशबादयोऽपि। "बृहतीजात्यन्ताः" इति बहुवचनं तु "बृहत्या आच्छादने" इति "जात्यन्ताच्छ बन्धुनी"ति च सूत्रयोर्मध्यगतेन "अषडक्षे"ति सूत्रेण विहितं खप्रत्ययमभिप्रेत्येति न दोषः। "विभाषाऽञ्चे"रिति उत्तरसूत्रे खविधौ विभाषाग्रहणं तु तस्यापि बृहजात्यन्तरालवर्तित्वाऽविशेषान्नित्यत्वे प्राप्ते विकल्पार्थम्। "अनित्योऽयं खः, उत्तरसूत्रेषु विभाषाग्रहणा"दिति मूलं तु अभ्युच्चययुक्तिरिति शब्देन्दुशेस्वरे स्थितम्।

तत्त्व-बोधिनी

अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः १५४७, ५।४।७

अषडक्षीण इति। अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिः अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते। "बहुव्रीहौ सक्थ्यक्ष्णो"रिति षच्। तदन्तादनेन खः। मन्त्रो मन्त्रणम्। आशितंगवीनमिति। आङ्पूर्वादश्नोतेः "अशितः कर्ते"ति ज्ञापकात्कर्तरि क्तः, ण्यन्तात्कर्मणि वा। उभयथापि प्रभूतयवसमिति फलितोऽर्थः। अलङ्कर्मीण इति। अलङ्कर्म

अलंपुरुषेति "पर्यादयो ग्लानाद्यर्थे चतुर्थ्ये"ति समासः। अलंपुरुषीण इति। प्रतिमल्लादिः। ई()आराधीन इति। अधिशपब्दः शौण्डाडिरित्युक्तम्। तमबादय इत। "अतिशायने तमबि"त्यादयः। प्राक्कन इति। "अवक्षेपणे कन्िति विहितात्। ञ्यादय इति। "पूगात्र्()ञ्योऽग्रामणीपूर्वा"दित्यादयः। प्राग्वुन इति। "पादशतस्य सङ्ख्यादेः"इति बिहितात्। आमादय इति। "किमेत्तिङ्व्ययगादामु---"इत्यादयः। प्राञ्मयट इति। "तत्प्रकृतवचने मयट्ित्यतः प्रागित्यर्थः। बृहतीजात्यन्ता इति। "बृहती"शब्देन "बृहत्या आच्छादने"इति विहितः कन्नुपलक्ष्यते। "जात्यन्त"शब्देन "जात्यन्ताच्चे"ति च्छः। बहुवचननिर्देशबादयो गृह्णन्ते। यो हि वैयाकरणपाशादिशब्दैरर्थः प्रतीयते नासौ प्रकृतिमात्रेण प्रतीयते इति तेऽपि तमबादिवन्नित्या एवेति स्थितमाकरे। कन्छौ मुक्त्वा मूले बृहतीमात्रप्रयोगो जात्यन्तमात्रप्रयोगास्च कृतः, स तु अवाचकोऽप्यार्षग्रन्थानुवादकत्वान्न दोषाय।

---

सूत्रम्

काशिका-वृत्तिः

विभाषाऽञ्चेरदिक्स्त्रियाम् ५।४।८

अञ्चत्यन्तात् प्रातिपदिकातदिक्स्त्रियां वर्तमानात् स्वार्थे विभाषा खः प्रत्ययो भवति। प्राक् प्राचीनम्। अर्वाक्, अर्वाचीनम्। अदिक्स्त्रियाम् इति किम्? प्राची दिक्। प्रतीची दिक्। दिग्ग्रहणं किम्? प्राचीना ब्राह्मणी। अवाचीना। स्त्रीग्रहणं किम्? प्राचीनं दिग्रमणीयम्। उदीचीनं दिग्ररमणीयम्।

न्यासः

विभाषाञ्चेरदिक्स्त्रियाम्?। , ५।४।८

बाल-मनोरमा

विभाषाऽञ्चेरदिक्?स्त्रियाम् , ५।४।८

विभाषाञ्चेरदिक्स्त्रियाम्। अदिक्()स्त्रियामिति कर्मधारयगर्बो नञ्तत्पुरुषः। तदाह--अदिक्स्त्रीवृत्तेरिति। प्रागिति। "अञ्चेर्लु"गिति लुप्ताऽस्तात्यन्तमिदम् प्राचि देशे इत्यर्थे। प्राचीनमिति। खान्तमिदं स्वभावादाधेयपरम्। स्वभावादेव सामान्ये नपुंसकमेकवचनान्तत्वं च। इदं तु पदसंस्कारपक्षे। वाक्यसंस्कारपक्षे तु प्रागादिशब्देभ्यः समभिव्याह्मतदेशकालस्थवृक्षादिबोधकेभ्यः खः। तत्र उपस्थितविशेष्यलिङ्गत्यागे मानाऽभावात् "प्राचीना आम्रा", "प्राचीना वाटी" "प्राचीनं वन"मिति भवतीत्याहुः। अर्वन्तमञ्चतीति वक्ष्यन्नर्वच्छब्दं विवृणोति--निकृष्टेति। अमरवाक्यमिदम्। प्राची दिगिति। लिङ्गविशिष्टपरिभाषया प्राप्तिः। दिग्ग्रहणं किमिति। "अस्त्रिया"मित्ये तावतैव प्राची दिगित्यत्रातिप्रसङ्घनिराशा()त्क तेनेति प्रश्नः। अव्याप्तिपरिहारार्थमित्याह--प्राचीना ब्राआह्मणीति। नेयं दिग्रूपा स्त्री, किंतु तद्भिन्ना स्त्रीति खो भवत्येवेति भावः। स्त्रीग्रहणं किमिति। "अदिशी"त्येतावतैव प्राचीना ब्राआह्मणीत्यत्राऽव्याप्तिनिरासात्प्रश्नः। इदमप्यव्याप्तिपरिहारार्थमित्याह--प्राचीनं ग्रामादाम्रा इति। स्थानिवत्सूत्रभ#आष्येऽयं प्रयोगः स्थितः। अत्र प्राच्यां दिशीत्यर्थे लुप्ताऽस्तात्यन्ता प्रागिति प्रकृतिः। स च अव्ययत्वादस्त्रीति खो भवेत्येववेति भावः।

तत्त्व-बोधिनी

विभाषाऽञ्चेरदिक्?स्त्रियाम् १५४८, ५।४।८

विभाषाञ्चेर। दिक् चासौ स्त्री चेति दिक्()स्त्री, तत्र प्रतिषेधो, न तु दिशि, स्त्रियां च, स्त्रीलिङ्गैकवचननिर्देशात्।

प्राचीनमिति। "अचः"इत्यकारलोपे कृते "चौ" इति दीर्घः। एवमग्रे क्वचिदूह्रम्। प्राचीना ब्राआह्णणीति। प्रकर्षेणाञ्चतीति प्राचीनेत्येवं क्रियानिमित्तको वा, देशकालनिमित्तको वा अयं शब्दो ब्राआह्णण्यां वर्तते, न तु दिशीति प्रतिषेधाऽभावः। प्राचीनमिति। प्राच्यां दिशीत्यर्थे "दिक्शब्देभ्यः"इत्यस्तीतिः "अञ्चेर्लु"गिति लुक्। "लुक्तद्धितलुकी"ति ङीपो लुक्। "तद्धितश्चाऽसर्वविभक्ति"रित्यव्ययत्वात् स्त्रीत्वाऽबावः। खे तु कृते स्वभावान्नपुंसकत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

जात्यन्ताच् छ बन्धुनि ५।४।९

जात्यन्तात् प्रातिपदिकात् बन्धुनि वर्तमानात् स्वार्थे छः प्रत्ययो भवति। बध्यते ऽस्मिन् जातिः इति बन्धुशब्देन द्रव्यम् उच्यते। येन ब्राह्मणत्वादिजातिर् व्यज्यते तद्बन्धु द्रव्यम्। ब्राह्मणमातीयः, क्षत्रियजातीयः, वैश्यजातीयः इति ब्राह्मणादिरेव उच्यते। बन्धुनि इति किम्? ब्राह्मणजातिः शोभना।

न्यासः

जात्यन्ताच्छ बन्धुनि। , ५।४।९

बाल-मनोरमा

जात्यन्ताच्छ बन्धुनि , ५।४।९

जात्यन्ताच्छ बन्धुनि। छेति लुप्तप्रथमाकम्। जातिशब्दान्तात्प्रातिपदिकाद्बन्धुनि वर्तमानात्स्वार्थे छप्रत्ययः स्यादित्यर्थः। बन्धुशब्दो द्रव्यवाचीति वक्ष्यति। तथाच बन्धुनि वर्तमानादित्यनेन जात्याश्रयद्रव्यलक्षकादिति फलितम्। ब्राआह्णणजातीय इति। ब्राआह्णणत्वजात्याश्रयो व्यक्तिविशेष इत्यर्थः। ब्राआह्णणजातिः शोभनेति। ब्राआह्णणत्वजातिरित्यर्थः। बद्यते ब्राआह्णणत्वादिजातिव्र्यज्यतेऽस्मिन्निति बन्धु=द्रव्यम्। "शृ()स्वृस्निही"त्यादिनाऽधिकरणे उप्रत्ययः। तदाह--जातेव्र्यञ्जकं द्रव्यं बन्ध्विति। आप्तपर्यायस्तु बन्धुशब्दो नेह गृह्रते, "बन्धुनी"ति नपुंसकनिर्देशादिति भावः।

तत्त्व-बोधिनी

जात्यन्ताच्छ बन्धुनि १५४९, ५।४।९

ब्राआह्णणजातीय इति। द्व्येकयोरितिवद्भावप्रधानो ब्राआह्णणशब्दः, तस्य जातिशब्देन सह बहुव्रीहिः। ब्राआह्णणत्वजात्याधारभूतः पिण्ड इत्यर्थः। ब्राआह्णणजातीरिति। षष्ठीतत्पुरुषः। भावप्रधानेन सह कर्मधारयो वा। जातेव्र्यञ्जकमिति। बद्यते जातिरस्मिन्निति बन्धु[#ाः]। "शृ()स्वृस्निहि"इत्यादिना अधिकरणे उप्रत्ययः। रूढोऽपि बन्धुशब्दाअप्चपर्यायः पुंलिङ्गोऽस्ति, तथापि स नेह गृह्रते, "बन्धुनी"ति नपुंसकनिर्देषादिति भावः। "सस्थानेने"त्यस्यैव व्याख्यानं---तुल्येनेति।

---

सूत्रम्

काशिका-वृत्तिः

स्थानान्ताद् विभाषा सस्थानेन इति चेत् ५।४।१०

स्थानान्तात् प्रातिपदिकात् विभाषा छः प्रत्ययो भवति सस्थानेन चेत् स्थानान्तमर्थवद् भवति। सस्थानः इति तुल्य

उच्यते, समानं स्थानम् अस्य इति कृत्वा। पित्रा तुल्यः पितृस्थानीयः, पितृस्थानः। मातृस्थानीयः, मातृस्थानः। राजस्थानीयः, राजस्थानः। सस्थानेन इति किम्? गोस्थानम्। अश्वस्थानम्। इतिकरणो विवक्षार्थः। तेन बहुव्रीहिः सस्थानशब्दार्थम् उपस्थापयति, न तत्पुरुषः। चेच्छब्दः सम्बन्धार्थः। द्व्योर् विभाषयोर् नित्या विधयः इति पूर्वत्र नित्यविधयः।

न्यासः

स्थानान्तद्विभाषा सस्थानेनेति चेत्?। , ५।४।१०

"सस्थानेन" इति। करणे तृतीया। स्थानेन स्थानवाच्येनार्थेन तुल्यपर्यायेण स्थानान्तं यद्यर्थवद्भवत्येवं प्रत्ययो भवति, नान्यथा। कथं पुनः स्थानशब्देन तुल्यत्वमुच्यते? इत्याह--"समानम्()" इत्यादि। यस्य समानं स्थानं स सस्थान इत्युच्यते। यश्चैवंविधं स यदपेक्षं तस्य समानं स्थानं स तेन तुल्यो भवतीति। "पितृस्थानीयः" इति। पितृस्थानमिव स्थानं यस्येति "सप्तम्युपमान" (वा। ९९) इत्यादिनोत्तरपदलोपो बहुव्रीहिः। "गोस्थानम" इति। षष्ठीतत्पुरुषोऽयम्()। भवति ह्येतत्? स्थानान्तं प्रातिपदिकम्(), न तु स्थानेन तुल्यार्थेनार्थवत्। यथा स्थानान्तात्? प्रत्ययो भवति, तथा तत्पुरुषेणापि स्वस्थानशब्देनार्थ उपस्थापिते तेनार्थेनार्थवतः स्थानात्? प्रत्ययेन भवितव्यम्(); विशेषानुपादानात्()। ततश्च तुल्यञ्च तत् स्तानान्तं प्रतिपदिकं स्थानवाच्येनार्थेनार्थवदितियश्चोदयेत्? तं प्रत्याह--"इतिकरणो विवक्षार्थः" इति। इतिकरणो ह्यत्र विवक्षार्थः क्रियते, तेनायमर्थो लभ्यतेततश्चेद्विवक्षा भवतीति। बहुव्रीह्यर्थेनार्थवतः स्थानात्? प्रत्ययोत्पत्तौ लोकस्य विवक्षा भवति, न तत्पुरुषार्थेनार्थवतः। तस्मात्? स्थानान्तस्यार्थमुत्पादयितुं बहुव्रीहिरेव स्थानशब्दार्थमुत्पादयति; न तु तत्पुरुषः। तेन न भवत्यतिप्रसङ्गः। "चच्छब्दः स्मबन्धार्थः" इति। स्थानान्तस्य सस्थानसम्बन्धो यथा स्यादित्येवमर्थं चेच्छब्दः; अन्यथा प्रत्ययं प्रति पञ्चस्या स्थानान्तस्य निर्देशात्? स्थानान्तस्य सस्थानेन सम्बन्धो न स्यात्()। न हि पञ्चम्यन्तेन तस्य सम्बन्धः शक्यते कर्त्तुम्()। चेच्छब्दे तु स चेत्? स्थानेनार्थवद्वतीत्युपपद्यते, न तु सम्बन्धः। "द्वयोर्विभाषयोर्मध्ये नित्यविधयः" इति। यदि नित्या न स्युः, पूर्वैव विभाषोत्तरत्रानुवर्त्तिष्यत इत्युत्तरं विभाषाग्रहणमनर्थकं स्यात्()॥

बाल-मनोरमा

स्थानान्ताद्विभाषा सस्थानेनेति चेत् , ५।४।१०

स्थानान्तात्। "संस्थानेने"त्यस्य विवरणंतुल्येनेति। इतिशब्दादर्थवदिति लभ्यते। तुल्यरूपेणाऽर्थेन यदि स्थानान्तं शब्दस्वरूपमर्थवद्भवति, तदा स्थानान्ताच्छो वा स्यादित्यर्थः। तुल्यरूपार्थे वर्तमानात्स्थानान्ताच्छोवा स्यादिति यावत्। पितृस्थानीय इति। स्थानं-पूज्यत्वादिपदम्। पितृस्थानमिव स्थानं यस्येति बहुव्रीहिः। पितृनिष्ठपूज्यत्वादितुल्यपूज्यत्वादिमानित्यर्थः। गोस्थानमिति। गवां निवास इत्यर्थः। अत्र तुल्यत्वाऽप्रतीतेर्न च्छः। "किमेत्तिङव्यये"त्युत्तरसूत्रं प्रसङ्गात्पूर्वमेव व्याख्यातम्। "अमु च च्छन्दसी"ति तु वैदिकप्रक्रियायां व्याख्यास्यते।

तत्त्व-बोधिनी

स्थानान्ताद्विभाषा सस्थानेनेति चेत् १५५०, ५।४।१०

पितृस्थानीय इति। स्थानमात्र संबन्धविशेषः, पदमिति यस्य प्रसिद्धिः। पितुरिव स्थानमस्य पितृस्थानः। पितृतुल्य इत्यर्थः। "गो[#ः]स्थानमिति। तिष्ठन्त्यस्मिन्निति स्थानं देशः। इति। करणं विवक्षार्थम्। तेन तत्पुरुषो बहुव्रीहिर्वा यस्तुल्यस्थानशब्दस्तस्माच्छो न भवति।

---

सूत्रम्

काशिका-वृत्तिः

किमेत्तिङव्ययघादांवद्रव्यप्रकर्षे ५।४।११

किम एकारान्तात् तिङन्तादव्ययेभ्यश्च यो विहितो घः स किमेत्तिङव्ययघः, तदन्तात् प्रातिपदिकातद्रव्यप्रकर्षे आमुप्रत्ययो भवति। यद्यपि द्रव्यस्य स्वतः प्रकर्षो न अस्ति, तथा अपि क्रियागुणस्थः प्रकर्षो यदा द्रव्ये उपचर्यते तदा ऽयं प्रतिषेधः। क्रियागुणयोरेव अयं प्रकर्षे प्रत्ययः। किंतराम्। किंतमाम्। पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्। पचतितराम्। पचतितमाम्। उच्चैस्तराम्। उच्चैस्तमाम्। अद्रव्यप्रकर्षे इति किम्? उच्चैस्तरः। उच्चैस्तमः।

लघु-सिद्धान्त-कौमुदी

किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे १२२४, ५।४।११

किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। किन्तमाम्। प्राह्णेतमाम्। पचतिमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः॥

न्यासः

किमेत्तिह्व्ययघादाभ्वद्रव्यप्रकर्षे। , ५।४।११

"अद्रव्यप्रकर्षे" इति। ननु च द्रव्यस्य न प्रकर्षोऽस्ति; तथा च भाष्ये उक्तम्()--"न वै द्रव्यस्य प्रकर्षोऽस्ति" इति, अतः प्रतिषेधोऽनर्थकः? इत्यत आह--"यद्यपि" इत्यादि। दृश्यते चाधेयधर्मस्याधार उपचारः, यथा--मञ्चाः ऋशन्तीति। तस्मादाधाराधेययोः क्रियागुणयोर्धर्मः प्रकर्षः। स यदाधारद्रव्य उपचर्यते तदासौ द्रव्यधर्मत्वादुपचारेण द्रव्यधर्मो भवति। अतोऽयं प्रतिषेधः क्रियते। "क्रियागुणयोरेव" इत्यादि। क्रियाया गुणस्य प्रकर्षो यदा द्रव्ये नोपचयंते क्रियागुणयोरेव प्रकर्षः, तत्रैव प्रत्ययः। यदि तु द्रव्ये उपचर्यते ततो द्रव्यप्रकर्ष इति वचनात्()। "किन्तराम्()" इति। वस्तुनो बहवो विशेषाः, तत्र प्रश्नः किंशब्दार्थः। "पूर्वाह्णेतराम्()" इति। "घकालतनेषु कालानाम्नः" ६।३।१६ इति सम्पम्या अलुक्()। ननु च पूर्वाह्णः कालः, कालश्च द्रव्यम्(), द्रव्यप्रकर्षे प्रत्ययेन न भवित्व्यम्(); अद्रव्यप्रकर्ष इति प्रतिषेधात्()? नैव दोषः; न ह्त्र प्रातिपदिकार्थः प्रकर्षे वत्र्तते, किं तर्हि? विभक्त्यर्थः, स च गुम एव; द्रव्यशक्तिस्वरूपत्वात्? कारकाणाम्()। अथ वा--वचनसामथ्र्यात्? कालप्रकर्षे भवति। न हि कालादन्यस्यस्मादेकारात्? परो घ#ओ भवति। "कालनाम्नः" इति परतः सप्तम्या अलुग्विधानात्()। "उच्चैस्तराम्()" इति॥

बाल-मनोरमा

द्वित्रिभ्यां ष मूध्र्नः ८४५, ५।४।११

द्वित्रिभ्यां। "षे"ति लुप्तप्रथमाकं पदम्। द्विमूद्र्ध इति। द्वौ मूर्धानौ यस्येति विग्रहः। त्रिमूर्ध इति। त्रयो मूर्धानो यस्येति विग्रहः। समासान्तः। "नस्तद्धिते" इति टिलोपः। षचि अनुवर्तमाने षग्रहणं चित्स्वरनिवृत्त्यर्थम्।

नेतुरिति। नक्षत्रे विद्यमानो यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरब्वक्तव्य इत्यर्थः। नेता-नायकः। मृगो नेतेति। मृगः=मृगशीर्षम्। रात्रिनेता चन्द्रः। तद्योगान्नक्षत्रस्यापि बोध्यम्। मृगनेत्रा इति। मृगनेतृशब्दादप्, ऋकारस्य यण्, रेफः, टाप्। पुष्यनेत्रा इति। पुष्टो नेता यासामिति विग्रहः।

तत्त्व-बोधिनी

व्यवघादाम्बद्रव्यप्रकर्षे १५००, ५।४।११

किमेत्। ओमोरुकारो यदि नुटा त्यज्येत तर्हि पचतितरामित्यादौ "ह्रस्वानद्यापः"इति नुटि "पचतितरणा"मिति

स्यात्,यस्येतिलोपस्य परेण नुटा बाधात्। सिद्धान्ते तु "निरनुबन्धकग्रहणे न सानुबन्धकस्ये"ति परिभाषया नुड्विधौ नाऽस्य ग्रहणम्।

---

सूत्रम्

काशिका-वृत्तिः

अमु च च्छन्दसि ५।४।१२

किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमु प्रत्ययो भवति छन्दसि विषये। चकारादामु च। प्रतरं न आयुः। प्रतरां नय। स्वरादिषु अम् आम् इति पठ्यते, तस्मात् तदन्तस्य अव्ययत्वम्।

न्यासः

अमु च च्छन्दसि। , ५।४।१२

---

सूत्रम्

काशिका-वृत्तिः

अनुगादिनष् ठक् ५।४।१३

अनुगदति इति अनुगादि। अनुगादिन्शब्दात् स्वार्थे ठक् प्रत्ययो भवति। आनुगादिकः।

न्यासः

अनुगादिनष्ठक्?। , ५।४।१३

"अनुगदतीत्यनुगादी" इति। ग्रहादित्वाण्णिनिः। आवाश्यके वा, ताच्छील्ये वा, अस्मादेव निपातनाच्च॥

बाल-मनोरमा

अनुगादिनष्ठक् , ५।४।१३

अनुगादिनष्ठक्। "स्वार्थे" इति शेषः। "आमादयः प्राङ्भयटः" इत्युक्तेष्ठगादयो नित्या एव प्रत्ययाः। अनुगादीति। "सुप्यजातौ" इति णिनिः। प्रकृतिप्रदर्शनमिदम्। ठको नित्यत्वात्स एवेत्यस्वपदविग्रहप्रदर्शनम्। आनुगादिक इति। "नस्तद्धिते" इति टिलोपः। इह क्रमे "णचः स्त्रिया"मिति "अणिनुणः" इति च सूत्रद्वयं पठितं कृदधिकारे व्याख्यास्यते।

तत्त्व-बोधिनी

अनुगादिनष्ठक् १५५१, ५।४।१३

अनुगादिनः। प्रकृति रुआऊपप्रदर्शनपरं चैतन्न त्वयं केवलः प्रयोगार्हः, ठको नित्यत्वादिति हरदत्तः। "सुप्यजातौ"इति णिनिः।

---

सूत्रम्

काशिका-वृत्तिः

णचः स्त्रियाम् अञ् ५।४।१४

कर्मव्यतिहारे णच् स्त्रियाम् 3।3।43। इति णच् विहितः, तदन्तात् स्वार्थे अञ् प्रत्ययो भवति स्त्रियां विषये। व्यावक्रोशी।

व्यावहासी वर्तते। स्त्रीग्रहणं किमर्थम्, यावता णच् स्त्रियाम् एव विहितः, ततः स्वार्थिकस् तत्र एव भविष्यति? एवं तर्ह्येतज् ज्ञापयति स्वार्थिकाः प्रत्यया प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ऽपि इति। तेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवता इत्येवम् आदि उपपन्नं भवति।

न्यासः

णचः स्त्रियामञ्?। , ५।४।१४

"व्यावक्रोशी" इति। "क्रुश आह्वाने" (धा। पा। ८५६) इत्यस्माण्णच, लघूपधगुणः, णजन्तादञ्()। स च कृदग्रहणपरिभाषया (व्या। प। १२६) सगतिकाद्भवति। तेन सगतिकमेवेह प्रतिपदिकसंज्ञां प्रतिपद्यते, न कर्मव्यतिहार इति प्रतिषेधादेव वृद्धिप्रतिषेधयोरादिवृद्धिरेव भवति। "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()। "व्यावहासी" इति। "अत उपदायाः" ७।२।११६ इति वृद्धिः। "ततः" इति। णजन्तादिति यावत्()। "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्ते (जै।प।वृ। ९५) इति कृत्वा। "एवं तर्हि" इत्यादिना स्त्रीग्रहणं ज्ञापकं दर्शयति। "तेन" इत्यादिना ज्ञापकस्य प्रयोजनम्()। "अतिवर्तन्तेऽपि" इति। व्यभिचरन्त्यपीत्यर्थः। अपिशब्दादनुवर्त्तन्तेऽणीति। यदि स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तिव्यभिचारो ज्ञाप्यते, ततो गुडादिभ्यः पुंलिङ्गाद्यनुगतेभ्यश्च स्वार्थे कल्पबादयो भवति, तेषां पुंल्लिङ्गवचनं च तदैव भवेत्? ततश्च गुडकल्पा द्रक्षेत्येवमादि नोपपद्यते। त()स्मस्तु ज्ञापिते लिङ्गान्तरञ्च भवतीति। तेन सर्वमेतदुपपन्नं भवति। आदिशब्देनापि तैलकल्पा, चातुर्वण्र्यम्(), त्रैलोक्यमित्येवमादीनां ग्रहणम्()॥

तत्त्व-बोधिनी

णचः स्त्रियामञ् १५३१, ५।४।१४

णचः स्त्रि। अनेन णजिति चकारोऽत्र विशेषणार्थं इति ध्वनितम्। स्त्रियां किम्?। व्यतिपाको वर्तते।

---

सूत्रम्

काशिका-वृत्तिः

अणिनुणः ५।४।१५

अभिविधौ भाव इनुण् ३।३।४४ विहितः, तदन्तात् स्वार्थे अण् प्रत्ययो भवति। सांराविणं वर्तते। सांकूटिनम्।

न्यासः

अणिनुणः। , ५।४।१५

"सांराविणम्()" इति। "रु शब्दे" (धा। पा। १०३४) इत्येतस्मादिनुण्(), "अचो ञ्णिति"७।२।११५ इति वृद्धिः, इनुणन्तादण्()। स च पूर्ववत्? सगतेरेव भवति। "इनण्यनपत्ये" ६।४।१६४ इति प्रकृतिभावः। "सांकूटिनम्()" इति। "कूट दाहे" (धा। पा। १८९०) इति, "मृजूष्? शुद्धौ" (धा। पा। १०६६), "मृजेर्वृद्धिः" ७।२।११४, "शमित्याष्टाभ्यो घिनुण्()" ३।२।१४१। घकारे लुप्ते यद्यपीनुण्? भवति, तथापि तस्मादण्? न भवति; "स्थानान्ताद्विभाषा" ५।४।१० इत्यतो विवक्षार्थस्येतिकरणस्यानुवृत्तेः॥

तत्त्व-बोधिनी

अणिनुणः १५३४, ५।४।१५

अणिनुणः। अनेननुणोणानुबन्धो विशेषणार्थ इति ध्वनितम्। सांराविममिति॥ समन्ताच्छब्द इत्यर्थः। संशब्दोऽभिविधिद्योतकः। पर्ववत्सगतिकादण्। अणस्तद्धितत्वादादिवृद्धिः। "इनण्यनपत्ये" इत्यनपत्याऽणि इनः

प्रकृतिभावात् "नस्तद्धिते" इति टिलोपेन न निवृत्तिः। स्वभावतश्चेदमणिनुणन्तं नपुंसकम्।

---

सूत्रम्

काशिका-वृत्तिः

विसारिणो मत्स्ये ५।४।१६

विसरति इति विसारी। विसारिन्शब्दात् स्वार्थे अण् प्रत्ययो भवति मत्स्ये ऽभिधेये। वैसारिणो मत्स्यः। मत्स्ये इति किम्? विसारी देवदत्तः।

न्यासः

विसारिणो मत्स्ये। , ५।४।१६

"विसारी" इति। पूर्ववण्णिनिः। "वैसारिणः" इति। पूर्ववत्प्रकृतिभावः॥

बाल-मनोरमा

विसारिणो मत्स्ये , ५।४।१६

विसारिणो मत्स्ये। "अणिनुणः" इति पूर्वसूत्रादण्णित्यनुवर्तते। तदाह--अण् स्यादिति। मत्स्ये विद्यमानाद्विसारिन्शब्दात्स्वार्थे अण् स्यादित्यर्थः। वैसारिण इति। इनण्यनपत्ये" इति प्रकृकतिभावाट्टिलोपो न।

तत्त्व-बोधिनी

विसारिणो मत्स्ये १५५२, ५।४।१६

विसारिणो। पूर्ववदिहापि णिनिः। हरदत्तस्तु---"सुप्यजातौ"इति णिनिरूपसर्गभिन्न एव सुप्यपपदे भवतीत्याशयेन पूर्वसूत्रेऽ()स्मश्च अतएव निपातनाण्णिनिरित्याह। तदयुक्तम्। "स बभूवोपजीविनाम्", "अनुयायिवर्गः", "न वञ्चनीयाः प्रभावोऽनुजीविभि"रित्यादिप्रयोगानुरोधेन उपसर्गे सुप्युपपदेऽपि णिनेरवश्यस्वीकर्तव्यतया निपातनाश्रयणस्य व्यर्थत्वात्। "अणिनुणः"इत्यतोऽनुवर्तनादाह---अण् स्यादिति। वैसारिण इति। "इनण्यनपत्ये"इति प्रकृतिभावः। सङ्ख्यायाः। अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्रते, तदा षट्कृत्वः प्रवृत्तौ पञ्चकृत्व इति स्यात्, अतोऽत्र विवक्षितमर्थमाह---अभ्यावृत्तिर्जन्मेति।

---

सूत्रम्

काशिका-वृत्तिः

सङ्क्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच् ५।४।१७

सङ्ख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति। पौनःपुन्यम् अभ्यावृत्तिः। एककर्तृणां तुल्यजातीयानां क्रियाणां जन्मसङ्ख्यानं क्रियाभ्यावृत्तिगणनं, तत्र प्रत्ययः। पञ्चवारान् भुङ्क्ते पञ्चकृत्वः। सप्तकृत्वः। सङ्ख्यायाः इति किम्? भूरीन् वारान् भुङ्क्ते। क्रियाग्रहणम् किमर्थम्, यावता अभ्यवृत्तिः क्रियाया एव सम्भवति, न द्रव्यगुणयोः? उत्तरार्थं क्रियाग्रहणम्। एकस्य सकृच् च ५।४।१९ इत्यत्र क्रिय एव गण्यते, न अभ्यावृत्तिः, असम्भवात्। अभ्यावृत्तिग्रहणं किम्? क्रियामात्रग्रहणे मा भूत्। पञ्च पाकाः। दश पाकाः। गणनग्रहणं किमर्थम्, यावता गणनात्मिकैव सङ्ख्या? अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्तमानेभ्यः सङ्ख्येयवचनेभ्य एव प्रत्ययः स्यात्, शतवारान् भुङ्क्ते शतकृत्वः इति? इह न स्यात्, शतं वाराणां भुङ्क्ते इति? न ह्यत्र अभ्यावृत्तौ शतशब्दः,

सङ्ख्यानमात्रवृत्तित्वात्। गणनग्रहणात् तु सर्वत्र सिद्धं भवति।

न्यासः

संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्?। , ५।४।१७

"पौनःपुन्यमभ्यावृत्तिः" इति। पौनः पुन्येनात्र साहचर्यादेककर्तृकाणां तुल्यजातीयानां सोपलक्ष्यते, अत एवाह--"एककर्तृकाणाम्()" इत्यादि। एककर्तृकाणामित्यत्र हि संख्येयानुकृष्ट उपसंख्यातगुणस्तन्मात्रे वत्र्तते। संख्याशब्देऽत एव व्यतिरेकनिबन्धना षष्ठी भवति। क्रियागणनमभ्यावृत्तिर्भवत्येव। "पञ्चकृत्वो भुङ्क्ते" इति। क्रियायाः पञ्चोत्पत्तीः करोतीत्यर्थः। "भूरीन्? वारान्? भुङ्क्ते" इति। यदि संख्याग्रहणं न क्रियते, ततो यथा पञ्चादिभ्यः संख्याशब्देभ्यः प्रत्ययो भवति, तथा भूर्य्यादिभ्योऽपि स्यात्(); संख्याग्रहणान्न भवति। "अभ्यावृत्तिः क्रियाया एव सम्भवति" इत्यादी। ननु च द्रव्यगुणयोरपि सम्भवति--पुनः पुनर्दण्डी, पुनः पुनः स्थूल इत्यादि? नैतदस्ति; अत्र सामथ्र्यात्? क्रियाभ्यावृत्तिः--पुनः पुनर्दण्डी भवति, पुनःपुनः स्थूलो भवतीति। तस्मादभ्यावृत्तिः क्रियाया एव सम्भवति, न द्रव्यगुणयोरपि। पुनः पुनर्दण्डीति--अत्र सामथ्र्याल्लभ्या क्रियेति क्रियाग्रहणं न कत्र्तव्यम्()। "एकस्य सकृच्चेत्यत्र" इत्यादि। एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते। न चैकस्यां क्रियाव्यक्तावभ्यावृत्तिः सम्भवति, किं तर्हि? अनेकासु क्रियाव्यक्तिषु। तथा च प्रागुक्तम्()--एककर्तृकाणामित्यादि। तस्मादेकस्य सकृच्च क्रियैव गण्यते, नाभ्यावृत्तिः। तस्मादसति क्रियाग्रहणे एकशब्दात्? क्रियागणने प्रत्ययो न लभ्यते। तस्मादुत्तरार्थं क्रियाग्रहणं कत्र्तव्यम्()। "पञ्चपाकाः" इति। "क्रियागणने" इत्येतावत्युच्यमानेऽत्रापि स्यात्(), अस्ति ह्यत्र क्रियागणनम्()। अभ्यावृत्तिर्हि भिन्नकालानां क्रियाणां भवति, इह त्वभिन्नकाला एव पाका गण्यन्ते, अतस्तद्व्यावृत्तिः। ननु च क्रियाप्यत्र नास्त्येव, धात्वर्थस्य सिद्धताख्यो यो धर्मस्तस्मिन्? घञो विधानात्()? नैष दोषः; सापि सिद्धता क्रियाप्रदेशेषु क्रियागरहणेन गृह्यत एव; धर्मधर्मिणोर्भेदस्याविवक्षितत्वात्()। अन्यथा कारकस्य गतिः, कारकस्य व्रज्येत्यत्र "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्()" (३।३।१०) इति ण्वुल्? न स्यात्()। "अक्रियमाणे" इत्यादि। द्विविधाः संख्येयेवत्र्तमानेभ्यः संख्येयवचनेभ्य एव प्रत्ययः स्यात्()। "शतं वारान्? भुङ्क्ते शतकृत्वो भुङ्क्ते" इति। अत्र सोऽयमित्यभिसम्बन्धेन क्रियाभ्यावृत्तौ संख्येये शतशब्दो वत्र्तते। अत एव सामानाधिकरण्यम्()। शतं वारानिति संख्याने पत्र्तमानेभ्यो न स्यादिति दर्शयितुमाह--"इह न स्यात्()" इति। कुत एतदित्याह--"संख्यानमात्रवृत्तित्वात्()" इति। मात्रशब्दः संख्येयं विहाय शतं वाराणामिति स्यात्॥

बाल-मनोरमा

संख्यायाः क्रियाभ्यावृत्तिगणने कुत्वसुच् , ५।४।१७

संङ्ख्यायाः। अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्येत, तदा चतुर्वारं पाकप्रवृत्तौ त्रिः पचतीति स्यादित्यत आह--अभ्यावृत्तिर्जन्मेति। उपसर्गवशात् "वृतु वर्तने" इति धातोरुत्पत्तौ वृत्तिरिति भावः। कुत्वसुचि चकार इत्। उकार उच्चारणार्थः। "तद्धितश्चाऽसर्वविभक्ति"रित्यत्र तसिलादिषु परिगणनात्कृत्वोऽर्थानामव्ययत्वम्। पञ्चकृत् वो भुङ्क्त इति। पञ्चत्वसङ्ख्याकोत्पत्तिविशिष्टा भोजनक्रियेत्यर्थः। सङ्ख्यायाः किमिति। गणने वृत्तिः सङ्ख्याशब्दानामेवेति प्रश्नः। भूरिवारान्भुङ्क्ते इति। भूरिशब्दो बहुशब्दपर्यायः। वारशब्दस्तु समभिव्याहृतक्रियापर्याप्ते काले वर्तते। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। बहुकालेषु कात्स्न्येन व्याप्ता भोजनक्रियेत्यर्थः। भोजनबहुत्वं त्वर्थाद्गम्यते। तथा च वारशब्दोऽयं न गणनवाची। भूरिशब्दोऽपि न सङ्ख्याशब्देन गृह्यते, "बहुगणवतुडति सङ्ख्ये"त्यत्र बहुग्रहणेन तत्पर्यायस्य असङ्ख्यात्वबोधनात्, अतोऽत्र न कृत्वसुच्।

तत्त्व-बोधिनी

संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् १५५३, ५।४।१७

भूरिवारानिति। भूरिशब्दस्य लौकिकसङ्ख्यावाचित्वेऽपि नेह ग्रहणम्, "बहुगणे"ति सूत्रे बहुग्रहणमस्य नियमार्थत्वात्। "अनियतसङ्ख्यावाचिनां चेद्भवति बहोरेवे"ति नियमशरीरमिति मनोरमा। "बहुगणयोरेवे"ति नियमशरीरिमित्यन्ये। वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात् "कालाध्वनो"रिति द्वितीयेति हरदत्तः। ननु वारशब्दस्य कालवाचित्वे भूरिशब्दोऽपि तत्समानाधिकरणात्वात्काल एव वर्तत इति कथमत्र प्रसङ्ग इति चेत्। अत्राहुः-----कालवाचित्वेऽपि क्रियाभ्यावृत्तेरपि गम्यमानत्वात्प्रसङ्गैति। अभ्यावृत्तिगणने किम्()। पञ्चपाकाः, दश पाकाः---इत्यत्र क्रियामात्रगणने माभूत्। क्रियाग्रहणं किमर्थम्। यावताऽभ्यावृत्तिः क्रियाया एव भवति, साध्यार्थविषयत्वात्तस्याः,न द्रव्यगुणयोः, तयोस्तु सिद्धस्वभावतया शब्दाभिधानात्। "पुनःपुनर्दण्डः", "पुनः--पुनः स्थूलः"---इत्यत्रापि दम्यामानाया भवतिक्रियाया एवाभ्यावृत्तिर्न तु द्रव्यगुणयोरिति चेत्। मैवम्। उत्तरार्थं क्रियाग्रहणस्यावश्यकत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

द्वित्रिचतुर्भ्यः सुच् ५।४।१८

द्वि त्रि चतुरित्येतेभ्यः सङ्ख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच् प्रत्ययो भवति। कृत्वसुचो ऽपवादः। द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। चत्रुभुक्तम्। चकारः स्वरार्थः।

न्यासः

द्वित्रिचतुभ्र्यः सुच्?। , ५।४।१८

"चतुर्भुक्तम्()" इति। "रात्? सस्य" ८।२।२४ इति सकारलोपः। "चकारः स्वरार्थः" इति। प्रकृतेरन्तोदात्तत्वं यता स्यादिति। प्रत्ययस्य तु चकारः स्वरार्थं नोपपद्यते; तस्यानच्कत्वात्()। चतुःशब्दमेव प्रकृतं प्रति चकारस्य स्वरार्थत्वम्(), नोत्तरयोः; तयोरुदात्तत्वात्()। चतुःशब्दस्तु "चतेरुरन्()" (द।उ।८।७८) इत्युरन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः॥

बाल-मनोरमा

द्वित्रिचतुभ्र्यः सुच् , ५।४।१८

द्वित्रिचतुभ्र्यः। क्रियाभ्यावृत्तिगणने इत्येव। सुचि चकार इत्, उकार उच्चारणार्थः। पूर्ववदव्ययत्वम्। त्रिरिति। भुङ्क्ते" इत्यनुषज्यते। रादिति। चतुर्शब्दात्सुचि चतुर्()स् इति स्थिते "रात्सस्ये"ति सकारस्य लोपे चतुरिति रूपमित्यर्थः। अत्र "भुङ्क्ते" इत्यनुषज्यते।

---

सूत्रम्

काशिका-वृत्तिः

एकस्य सकृच् च ५।४।१९

एकशब्दस्य सकृतित्ययम् आदेशो भवति सुच् च प्रत्ययः क्रियागणेन। कृत्वसुचो ऽपवादः। अभ्यावृत्तिस् त्विह न सम्भवति। सकृद् भुङ्क्ते। सकृदधीते। एकः पाकः इत्यत्र न भवति, अनभिधानात्।

न्यासः

एकस्य सकृच्च। , ५।४।१९

"सकृद्भुक्तम्()" इति। "संयोगान्तस्य" ८।२।२३ इति प्रत्ययसकारलोपः। चकारोऽन्तोदात्तार्थः। असति तु तस्मिन "इण्भीकापाशल्यतिमर्चिभ्यः कन्()" (द।उ। ३।२१) इति कन्प्रत्ययान्तत्वान्नित्स्वरेणैकशब्द आद्युदात्त इति स्थानिवद्भावादादेशोऽप्याद्युदात्त एव स्यात्(), चित्त्वादन्तोदात्तो भवति। अथैकः पाक इत्यत्र कस्मान्न भवति, अस्ति ह्यत्र क्रियागणनम्()? इत्याह--"एकः पाकः" इत्यादि॥ बहुशब्देऽपि सामान्य एव; प्रकारेऽपि वृत्तेः। तत्रानेकक्रियाभ्यावृत्तेरविप्रकर्ष एव तावन्न्याय्यः, प्रकरणाद्यपेक्षश्च। कृत्वसुजापि न शक्नोत्यस्मिन्? विषये वर्त्तितुम्()। तस्माद्विभाषाग्रहणं न कत्र्तव्यम्()॥

बाल-मनोरमा

एकस्य सकृच्च , ५।४।१९

एकस्य सकृच्च। शेषपूरणेन सूत्रं व्याचष्टे--सकृदित्यादेशः स्यादिति। सकृद्भुङ्क्ते इति। एकशब्दात्सुच्, प्रकृतेः सकृदित्यादेशश्च। अत्र एकशब्दः क्रियाविशेषणम्।एकत्वविशिष्टा भुजिक्रियेत्यर्थः। "स्वादु पचती"त्यादिवदेकं भुङ्क्ते इति प्रयोगे प्राप्ते इदं सूत्रमिति कैयटः। "एको भुङ्क्ते" इत्यत्र तु नायं विधिः प्रवर्तते, क्रियाग्रहणमनुवर्त्य क्रियाविशेषणस्यैव एकशब्दस्य ग्रहणादित्यास्तां तावत्। ननु "संयोगान्तस्ये"ति सुचो लोप इत्यनुपपन्नम्। "हल्ङ्याब्भ्यः" इत्येव हि सुलोपोऽत्र युक्तः तस्मिन्कर्तव्ये संयोगान्तस्ये"ति सुचो लोप इत्यनुपपन्नम्। "हल्ङ्याब्भ्यः" इत्येव हि सुलोपोऽत्र युक्तः, तस्मिन्कर्तव्ये संयोगान्तलोपस्य त्रैपादिकस्याऽसिद्धत्वादित्यत आह--नतु हल्याङ्यबितीति। सिच इवेति। "अभैत्सी"त्यत्रि सिचो लोपनिवृत्तये "हल्ङ्या"वित्यत्र सिग्रहणेन सिचो न ग्रहणं, तत्साहचर्यात्सुग्रहणेनापि सुजयं न गृह्त इति भावः।

तत्त्व-बोधिनी

एकस्य सकृच्च १५५४, ५।४।१९

एकस्य सकृच्च। अभ्यावृत्तिरिति न संबध्यते, एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते, तस्यास्त्वावृत्तेरसंभवात्। क्रियाग्रहणमिहार्थमावश्यकम्, अन्यथा "आ दशतः सङ्ख्या सङ्ख्येये वर्तते"इत्येको भुङ्क्ते इत्यत्रापि स्यादिति। इह साधु पचतीत्यादिवदेकं भुङ्क्ते इति प्रयोगे प्राप्ते सकृच्छब्दप्रयोगार्थमिदं सूत्रमिति कैयटः। "एकः पाक"इत्यत्र तु अनभिधानान्नेति काशिका। संयोगान्तस्येति। "हल्ङ्यादिना सुलोप"इति प्राचो ग्रन्थोऽयुक्त इत्याह---न त्विति। "सुतिसी"ति साहचर्याद्विभक्तय एव तत्र गृह्न्त इथ्यभिप्रेत्याह ---सिच इवेति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा बहोर् धा ऽविप्रक्रष्टकाले ५।४।२०

बहुशब्दात् क्रियाभ्यावृतिगणने वर्तमानात् विभाषा धा प्रत्ययो भवति। कृत्वसुचो ऽपवादः। पक्षे सो ऽपि भवति। अविप्रकृष्टग्रहणं क्रियाभ्यावृत्तिविशेषणम्। क्रियाणामुत्पत्तयश्चेदासन्नकालाः भवन्ति, न विप्रकृष्टकालाः। बहुधा दिवसस्य भुङ्क्ते, बहुकृत्वो दिवसस्य भुङ्क्ते। अविप्रकृष्टकाले इति किम्? बहुकृत्वो मासस्य भुङ्क्ते।

बाल-मनोरमा

विभाषा बहोर्धाऽविप्रकृष्टकाले , ५।४।२०

विभाषा बहोर्धा। अविप्रकृष्टकालिकक्रियाजन्मगणनवृत्तेर्बहुशब्दाद्धाप्रत्ययो वा स्यात्। पक्षे कृत्वसुच्। बहुधा बहुकृत्वो वा

दिवसस्य भुङ्क्ते इति। दिवसे प्रातःसङ्गवाद्यव्यवहितकालिकोत्पत्तिविशिष्टा भोजनक्रियेत्यर्थः। "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे" इति दिवसात्षष्ठीति हरदत्तः। शेषत्वविवक्षायां षष्ठी इति तु नवीनाः।

तत्त्व-बोधिनी
विभाषा बहोऽर्धाऽविप्रकृष्टकाले १५५५, ५।४।२०

बहुधा दिवसस्य भुङ्क्ते इति। शेषत्वविवक्षायां षष्ठी। "कृत्वोऽर्थप्रयोगे कालेऽधिकरणे"इत्यनेन षष्ठी"ति हरदत्तोक्तिस्तु नादर्तव्या, "शेषाधिकारबलेनाष्टसूत्र्याः समासनिवृत्तिफलकतया तिङन्तेनोदाहरण"मिति प्रागुक्तनिष्कर्षविरोधादित्याहुः।

---

सूत्रम्
काशिका-वृत्तिः
तत् प्रकृतवचने मयट् ५।४।२१

तदिति प्रथमासमर्थविभक्तिः। प्राचुर्येण प्रस्तुतं प्रकृतम्। प्रथमासमर्थात् प्रकृतोपाधिके ऽर्थे वर्तमानात् स्वार्थे मयट् प्रत्ययो भवति। टकारो ङीबर्थः। अन्नं प्रकृतम् अन्नमयम्। अपूपमयम्। अपरे पुनरेवम् सूत्रार्थम् आहुः। प्रक्रतम् इति उच्यते ऽस्मिनिति प्रकृतवचनम्। तदिति प्रथमासमर्थात् प्रकृतवचने ऽभिधेये मयट् प्रत्ययो भवति। अन्नं प्रकृतम् अस्मिनन्नमयो यज्ञः। अपूपमयं पर्व। वटकमयी यात्रा। द्वयम् अपि प्रमाणम्, उभयथा सूत्रप्रणयनात्।
लघु-सिद्धान्त-कौमुदी
तत्प्रकृतवचने मयट् १२४२, ५।४।२१

प्राचुर्येण प्रस्तुतं प्रकृतम्, तस्य वचनं प्रतिपादनम्। भावे अधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नमन्नमयम्। अपूपमयम्। द्वितीये तु अन्नमयो यज्ञः। अपूपमयं पर्व॥
न्यासः
तत्प्रकृतवचने मयट्?। , ५।४।२१

"प्राचुर्येण प्रस्तुतं प्रकृतम्()" इति। कृतः पुनरयं विशेषो लभ्यते, यावता प्रस्तुतमात्रवचनः प्रकृतशब्दः वचनग्रहणादिह प्रकृत इति वक्तव्ये वचनग्रहणम्()--यादृशस्य लोके प्रकृतस्य मयटो वचनं प्रत्ययान्तेन दृष्टं तत्रैव मयड()था स्यादित्येवमर्थम्()। लोके च मयट्प्रत्ययान्तं रन्नमयादिशब्दैः प्रकृतस्य प्राचुर्यमुच्यत इति वचनग्रहणादेव विशेषो लभ्यते। "अपरे तु" इत्यादि। अत्र प्रकृत्यर्थादर्थान्तर एव प्रत्ययः। प्रकृतशब्देन प्रस्तुतमात्रमुच्यते। न तु प्राचुर्य्यविशिष्टं प्रकृतमित्येष विशेषः। "उभयथा" इत्यादि। उभयथाप्यस्मिन्नर्थे सूत्रस्य प्रणयनादित्यर्थः॥

---

सूत्रम्
काशिका-वृत्तिः
समूहवच् च बहुषु ५।४।२२

तत्प्रकृतवचने इत्येव। बहुसु प्रकृतेषु उच्यमानेसु समूहवत् प्रत्यया भवन्ति। चकारात् मयट् च। मोदकाः प्रकृताः प्राचुर्येण प्रस्तुताः मौदकिकम्, मोदकमयम्। शाष्कुलिकम्, शष्कुलीमयम्। अतिवर्तन्ते ऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनानि। द्वितीये सूत्रार्थे मोदकाः प्रकृताः अस्मिन् यज्ञे मौदकिको यज्ञः, मोदकमयः। शाष्कुलिकः, शष्कुलीमयः।
न्यासः

समूहवच्च बहुषु। , ५।४।२२

"मौदकिकम्()" इति। यथा समूहे "अचित्तहस्तिधेनोष्ठक्()" (४।२।४७) इति ठग्? मोदकादिभ्यो भवति; तथेहापि च मोदकशब्दात्(), स्वार्थवाचिनः पुंल्लिङ्गाच्च। स्त्रीलिङ्गादिभ्यः स्वार्थे ठग्विहितः, ततश्च "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्ते" (व्या।प। ७४) इति प्रकृतिगतेनैव लिङ्गादिना भवितध्यम्(); तत्कथमिदं प्रत्ययान्तरस्य नपुंसकलिङ्गं वचनान्तरं च? इत्यत आह--"अतिवर्त्तन्तेऽपि" इत्यादि। एतच्च "णचः स्त्रियाम्()" ५।४।१४ इत्यत्र ज्ञापितम्()॥

बाल-मनोरमा

तत्प्रकृतवचने मयट् , ५।४।२२

तत्प्रकृतवचने। "त"दिति प्रथमान्तनिर्देशः। प्राचुर्येणेति। बहुलतया उपस्थितं प्रकृतशब्देन विवक्षितमित्यर्थः। उपसर्गबलादिति भावः। प्रतिपादनमिति। बोधनमित्यर्थः। भावे इति। तथाच प्रकृतस्य बोधने सतीत्यर्थः। प्राचुर्यविशेषणकवस्तुवृत्तेः प्रथमान्तात्स्वार्थे मयडिति फलति। अत्र प्राचुर्यविशिष्टं वस्तु प्रकृतेरर्थः। प्रत्ययस्तु तद्द्योतकः। अधिकरणे वेति। तथाच प्राचुर्यविशेषकं यद्वस्तु यस्मिन्नुच्यते तदधिकरणे वाच्ये तादृशवस्तुवृत्तेः शब्दान्मयडिति फलितम्। अत्र पक्षे प्राचुर्यविशिष्टमुच्यमानं वस्तु प्रकृत्यर्थः। तदधिकरणं प्रत्ययार्थः। तन्त्रेणाऽर्थद्वये सूत्रतात्पर्यम्, व्याख्यानात्। यद्यप्याद्यपक्षे स्वार्थिकप्रकरणपाठः समञ्जसो नतु द्वितीयपक्षे, तथापि "अथ स्वार्थिकाः" इति मूलं प्रायिकाऽभिप्रायमिति न दोषः। आद्ये इति। भावल्युट्पक्षे इत्यर्थः।

प्रकृतमन्नमन्नमयमिति। प्रचुरमन्नमित्यर्थः। स्वार्थिकत्वात्प्रकृतिलिङ्गता। अपूपमय इति। प्रचुरोऽपूप इत्यर्थः। यवागूमयीति। प्रचुरा यवागूरित्यर्थः। टित्वान्ङीबिति भावः। द्विताये इति। अधिकरणल्युट्पक्षे इत्यर्थः। अन्नमयो यज्ञ इति। "इष्टिषु दशौदनाः पशौ तं सोमसहरुआ"मित्यादिवाक्यैरुच्यमानानि प्राचुर्यविशिष्टाऽन्नानीत्यर्थः। अस्वार्थिकत्वेन प्रकृतिलिङ्गत्वाऽभावाद्विशेष्यनिघ्नता। केचित्तु द्वितीयपक्षेवचनशब्दोऽधिकरणल्युडन्तः, प्रकृत्यर्थो न विवक्षित इत्याहुः। तथा सति प्राचुर्यविशिष्टान्नाद्यधिकरणं यज्ञ इत्येव बोधः, नतु उच्यमानत्वस्य बोधः।

बाल-मनोरमा

समूहवच्च बहुषु , ५।४।२२

समूहवच्च। बहुषु। तत्प्रकृतवचने इत्येव। सामूहिका इति। "तस्य समूहः" इत्यधिकारविहिताः प्रत्यया इत्यर्थः। बहुषु प्राचुर्यविशिष्टेषु वर्तमानाच्छब्दात्स्वार्थे समूहवत्प्रत्ययाः स्युरित्यर्थः। यद्वा बहुत्वविशिष्टानि प्राचुर्यविशिष्टानि वस्तूनि यस्मिन्नधिकरणे उच्यन्ते, तदधिकरणे वाच्ये तद्वस्तुवृत्तेः शब्दात्समूहवत्प्रत्ययाः स्युरित्यर्थः। आद्ये उदाहरति--मोदकाः प्रकृता मौदकिकमिति। "अचित्तहस्तिधेनो"रिति सामूहिकष्ठक्। स्वार्थिकत्वेऽपि प्रकृतिलिङ्गातिक्रमः कुटीरवत्। शाष्कुलिकमिति। शष्कुलयः प्रचुरा इत्यर्थः। पूर्ववट्ठक्, प्रकृतिलिङ्गातिकमश्च। द्वितीयेऽर्ते मौदिकको यज्ञ इति। मोदका अस्मिन्यज्ञे उच्यन्त इति विग्रहः।

तत्त्व-बोधिनी

तत्प्रकृतवचने मयट् १५५६, ५।४।२२

तत्प्रकृत। प्राचुर्येण प्रस्तुतमिति। यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढः, तथापि वचनग्रहणादयं विशेषो लङ्यते। वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा स्यीदित्येवमर्थम्। आद्ये इथि। प्रथमान्तात्प्रकृते

द्योत्ये प्रत्ययः। स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनम्। "अपूपमय"मित्यपि क्वचितत्पठ()ते। प्रस्तुतोऽपूपोऽपूपमयम्। "क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते"। अस्मिन्पक्षे तद्ग्रहणं व्यर्थम्। द्वितीये त्वावश्यकं, ---प्रथमान्तादेव प्रत्ययलाभार्थम्। द्वितीयेत इति। अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम्। ल्युटोक्तमधिकरणं तु मयडर्थः। अतएव विशेष्यनिघ्नता। तदाह---अन्नमयो यज्ञ इति। अन्नं प्रकृतमुच्यते अस्मिन्नित्यर्थः।

तत्त्व-बोधिनी

समूहवच्च बहुषु १५५७, ५।४।२२

मौदकिकम्। शाष्कुलिकमिति। "अचित्तहस्तिधेनोष्ठक्"।

---

सूत्रम्

काशिका-वृत्तिः

अनन्ताऽवसथैतिहभेषजात् ञ्यः ५।४।२३

अनन्तादिभ्यः स्वार्थे ञ्यः प्रत्ययो भवति। अनन्त एव आनन्त्यम्। आवसथ एव आवसथ्यम्। इति ह ऐतिह्यम्। निपातसमुदायो ऽयम् उपदेशपारम्पर्ये वर्तते। भेषजम् एव भैषज्यम्। महाविभाषया विकल्पते प्रत्ययः।

न्यासः

अनन्तावसथेतिहभेषजाञ्ञ्यः। , ५।४।२३

"उपदेशपारम्पर्ये वत्र्तते" इति। ह स्मोपाध्यायः कथयति, इति ह स्म पिता कययतीत्यत्रैवा प्रयोगदर्शनात्()॥

बाल-मनोरमा

अनन्तावसथेतिहभेषजाञ्ञ्यः , ५।४।२३

अनन्तावथेतिह। अनन्त, आवसथ, इतिह, भेषज एभ्यः स्वार्थे ञ्यप्रत्ययः स्यादित्यर्थः। अनन्त एवेति। अन्तोनाशः। तस्याऽभावः अनन्तः। अर्थाऽभावे अव्ययीभावेन तद्विकल्पस्योक्तत्वात्। आनन्त्यमिति। स्वार्थिकत्वेऽपि प्रकृतिलिङ्गव्यतिक्रम। आवसथो-गृहम्। निपातसमुदाय इति। स च उपदेश परम्पर्ये वर्तते। तस्मात्स्वार्थे ञ्यः। "पारम्पर्योपदेशे स्यादैतिह्ममितिहाव्यय"मित्यमरः। भैषज्यमिति। भैषजम्ौषधम्, तदेव भैषज्यम्। "भेषजौषधभैषज्यानी"त्यमरः।

तत्त्व-बोधिनी

अनन्तावसथेतिहभेषजाञ्ञ्यः १५५८, ५।४।२३

आवसथ इति। "उपसर्गे वसेः"इत्यथप्रत्ययः। निपातसमुदाय इति। उपदेश पारम्पर्ये वर्तते, वचनाच्चाऽप्रातिपदिकादेव प्रत्ययः। "ऐतिह्ममितिहाऽव्यय"मिति कोशः। भेषजमिति। भिषज्यतेः कण्ड्वादियगन्तत्क्विपे। भिषक्। भिषजामिदं भेषजम्। अस्मादेव निपातनादेकारः।

---

सूत्रम्

काशिका-वृत्तिः

देवतान्तात् तादर्थ्ये यत् ५।४।२४

देवताशब्दान्तात् प्रातिपदिकात् चतुर्थीसमर्थात् तादर्थे यत्प्रत्ययो भवति। तदर्थ एव तादर्थ्यम्। चातुवर्ण्यादित्वात् ष्यञ्। तदिति प्रकृत्यर्थे निर्दिश्यते। आग्निदेवतायै इदम् अग्निदेवत्यम्। पितृदेवत्यम्। वायुदेवत्यम्।
न्यासः
देवतान्तात्तादर्थ्ये यत्?। , ५।४।२४

"चतुर्थोसमर्थात्()" इति। तादर्थ्ये चतुर्थी; उपसंख्यानात्()। "चतुर्थी तदर्थार्थ" २।१।३५ इति चतुर्थे भवतीति ज्ञापकाद्वा। "तादर्थ्ये चतुश्र्या भवितव्यम्()" इति चतुर्थीसमर्थात्? प्रत्ययो विज्ञायते। तदर्थ एव तादश्र्यमिति स्वार्थे ष्यत्रं दर्शयति। कथं पुनः स्वार्थे ष्यत्र्()? इत्याह--"चातुर्व ष्र्यादि" इत्यादिना। चातुवैण्र्यादिसिद्ध्यर्थ स्वार्थे ष्यज उपसंख्यानं कृतम्(), अयं तु चातुर्वण्र्यादित्वात्? स्वार्थे ष्यत्र। "अग्निदेवतायै" इति। अग्निश्चासौ देवतः चेति विशेषणसमासः॥
बाल-मनोरमा
देवतान्तात्तादर्थ्ये यत् , ५।४।२४

देवतान्तात्तादर्थ्ये यत्। तदर्थ एवेति। तच्छब्देन देवतान्तस्यार्थ उच्यते, तस्मै अयं तदर्थः, ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञित्यर्थः। देवतान्तात्प्रातिपदिकाद्यत्स्यात्प्रकृत्यार्थे वस्तुनि वाच्य इत्यर्थः। "त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या चे"त्युक्तं "सास्य देवते"त्यत्र अतः पितृदेवत्यं रक्षोदेवत्यमित्यादौ नाव्याप्तिः। तदाह--पितृदेवत्यमिति। देवताशब्दस्य देवा भावः। भाष्ये तु"पितृदेवत्यमिति न सिध्यती"त्याक्षिप्य "दिवैरे()आर्यकर्मणो देवः, तस्मात्स्वार्थे त"लिति समाहितम्। हविः प्रति पित्रादीनामी()आरत्वं स्वामित्यम्। हविस्तु यजमानस्य स्वम्। तच्च यजमानेन अग्न्याद्युद्देशेन त्यक्तं चेत्तदाग्न्यादिस्वामिकं भवितुमर्हति। अतो देवतात्वं त्यज्यमानद्रव्योद्देश्यत्वविसेषात्मकमेव भाष्यरीत्याऽपि पर्यवस्य तीत्यलम्।

तत्त्व-बोधिनी
देवतान्तात्तादर्थ्ये यत् १५५९, ५।४।२४

पितृदेवत्यमिति। पितरश्च ता देवताश्च पितृदेवताः। पितृदेवताभ्य इदमिति विग्रहः।

---

सूत्रम्
काशिका-वृत्तिः
पादार्घाभ्यां च ५।४।२५

तादर्थ्ये इत्येव। पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तादर्थ्ये अभिधेये यत्प्रत्ययो भवति। पादर्थमुदकं पाद्यम्। अघ्र्यम्। अनुक्तसमुच्चयार्थश्चकारः। यथादर्शनम् अन्यत्र अपि प्रत्ययो भवति। एष वै छन्दस्यः प्रजापतिः। वसु, अपस्, ओक, कवि, क्षेम, उदक, वर्चस्, निष्केवल, उक्थ, जन, पूर्व, नव, सूर, मर्त, यविष्ठ इत्येतेभ्यः छन्दसि स्वार्थे यत्प्रत्ययो भवति। अग्निरीशे वसव्यस्य। अपस्यो वसानाः। द्वितीयाबहुवचनस्य अलुक्। अपो वसानाः इत्यर्थः। स्व ओक्ये। कव्यो ऽसि कव्यवाहनः। क्षेम्यमध्यवस्यति। वायुर् वर्चस्यः। निष्केवल्यं शंसन्ति। उक्थ्यं शंसति। जन्यं ताभिः। पूर्व्या विदुः। स्तोमं जनयामि नव्यम्। सूर्यः। मत्यः। यविष्ठ्यः। आमुष्यायणामुष्यपुत्रिकेत्युपसङ्ख्यानम्। समशब्दादावतुप्रत्ययो वक्तव्यः। समावद् वसति। नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्ययाः। नूत्नम्, नूतनम्, नवीनम्। नश्च पुराणे प्रात्। पुराने वर्तमानात् प्रशब्दान् नप्रत्ययो भवति। चकारान् नप्तनप्खाश्च। प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम्। भागरूपनामभ्यो धेयः

प्रत्ययो वक्तव्यः। भागधेयम्। रूपधेयम्। नामधेयम्। मित्राच्छन्दसि। मित्रधेये यतस्व। आग्नीध्रासाधरणादञ्।
आग्नीध्रम्। साधारणम्। स्त्रियां ङीप् आग्नीध्री साधारणी। वाप्रकरनाच् च विकल्पन्ते एतान्युपसंख्यानानि, तेन
यथाप्राप्तम् अपि भवति, आग्नीध्रा शाला, साधारणा भूः इति। अयवसमरुद्भ्यां छन्दस्यञ् वक्तव्यः। आयवसे रमन्ते।
मारुतं शर्धाः।

न्यासः

पादार्घाभ्याञ्च। , ५।४।२५

"छब्दस्यः" इति। सप्तवशाक्षरसमाहाराभिषायिनश्छप्दःशब्दात्? स्वार्थे यत्प्रत्ययो भवति। "द्वितीयाबहुवचनस्यालुक्()"
इति। अप्शब्दाद्()द्वितीयाबहुवचनान्ताद्यति कृते "सुपो धातुप्रातपदिकयोः" २।४।७१ इति सुपो लुकि ------ , "सर्वे
विषयश्छन्दसि विकल्प्यन्ते" (पु।प।वृ। ५६) इति कृत्वा। "आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम्()" इति।
विभक्तेरलुगर्थमेतदुपसंख्यानान्तरम्(), न प्रत्ययार्थम्()। आमुष्यायणमित्यमुष्यशब्दो नडादिषु पठ()ते, ततः फकि कृते
विभक्तेर्लुकि प्राप्तेऽलुग्वक्तव्यः। नडादिषु सविभक्तिकस्य पाठसामथ्र्याद्ध्यलुग्भविष्यति। अमुष्यपुत्रिकेत्यत्र
त्वमुष्यपुत्रशब्दो मनोज्ञादिषु पठ()त इति विभ्केर्लुकि प्राप्तेऽलुग्वक्तव्यः। मनोज्ञादिषु पाठाद्वा सिद्धमिति न वक्तव्यम्()।
उभयत्र "अदसोऽसेर्दादु वो मः" ८।२।८० इति मत्वोत्वे॥

बाल-मनोरमा

पादाऽर्धाभ्यां च , ५।४।२५

पादार्धाभ्यां च। "तादर्थ्ये य"दिति शेषः। अध्र्यमिति। अर्धार्थमुदकमिति विग्रहः। अर्ध--पूजा। "मूल्ये पूजाविधावर्धः"
इत्यमरः।

नवस्येति। वार्तिकमिदम्। एते प्रत्यया अत्यन्तस्वार्थिकाः। नवीनमिति। नवशब्दात्खप्रत्यये, तस्य ईनादेशे प्रकृतेर्नूभावे,
ओर्गुणः, अवादेशः।

नश्च पुराणे प्रादिति। वार्तिकमिदम्। चात्पूर्वोक्ता इति। त्नप्, तनप्, ख इत्यर्थः। प्रीणमिति। खे रूपम्।

भागरूपेति। वार्तिकमिदम्। आग्नीध्रेति। वार्तिकमिदम्।

आग्नीध्रमिति। अग्नीधः शरणम्--आग्नीध्रम्। ततः स्वार्थे अञि आग्नीध्रमेव। अनेकं प्रत्यविशिष्टसम्बन्धं
साधारणमुच्यते। ततः स्वार्थे अञि साधारणमित्येव। अञ्विधेः प्रयोजनमाह--स्त्रिया ङीबिति।

तत्त्व-बोधिनी

पादाऽर्धाभ्यां च १५६०, ५।४।२५

अध्र्यमिति। "मूल्ये पूजाविधावर्घः" इत्यमरः। पूर्वोक्ता इति। त्नप्तनप्खप्रत्यया इत्यर्थः।

आग्नीध्रसाधारणादञ्। आग्नीध्रमिति। "अग्नीधः शरणे रण् भं चे"ति शैषिकेषु व्युत्पादितं, तच्चान्तोदात्तम्, ततः
स्वार्थेऽनेनाऽञ्। आद्युदात्तत्वं फलम्। फलन्तारमप्याह----स्त्रियामिति। आग्नीध्रीति।सालेति विशेष्यम्। समानं
धारणमस्याः साधारणी। अनेकं प्रत्यविशिष्टसम्बन्धो भूम्यादिः। पृषोदरादित्वात्वात्समानस्य सभावः।
विभाषाप्रकरणादञभावे टाप्। आग्नीध्रा शाला। साधारणा भूमिः। नन्वञभावपक्षे समानस्य सधारण इत्येव स्यान्न
त्वत्रादिवृद्धिरिति चेत्। अत्राहुः---"साधारणाद"ञित्यतएव निपातनात्, समानस्य साभावविधानाद्वा इष्टसिद्धिरिति।

सूत्रम्

काशिका-वृत्तिः

अतिथेर् ञ्यः ५।४।२६

तादर्थ्ये इत्येव। अतिथिशब्दात् चतुर्थिसमर्थात् तादर्थ्ये अभिधेये ञ्यः प्रत्ययो भवति। अतिथये इदम् आतिथम्।

न्यासः

अतिथेञ्र्यः। , ५।४।२६

बाल-मनोरमा

अतिथेञ्र्यः , ५।४।२६

अतिथेञ्र्यः। तादर्थ्ये इत्येवेति। अतिथये इदमित्यर्थे अतिथिशब्दाच्चतुथ्र्यन्ताण्ण्यः लिङ्गातिक्रमात्स्त्रीत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

देवात् तल् ५।४।२७

तादर्थ्ये इति निवृत्तम्। देवशब्दात् स्वार्थे तल्प्रत्ययो भवति। देव एव देवता।

न्यासः

देवात्तल्?। , ५।४।२७

तत्त्व-बोधिनी

देवात्तल् १५६१, ५।४।२७

देवतेति। "तलन्तं स्त्रियाम"।

---

सूत्रम्

काशिका-वृत्तिः

अवेः कः ५।४।२८

अविशब्दात् स्वार्थे कः प्रत्ययो भवति। अविरेव अविकः।

न्यासः

अवेः कः। , ५।४।२८

बाल-मनोरमा

अवेः कः , ५।४।२८

अवेः कः। अयमपि केवलस्वार्थिकः। "अवयः शैलमेषाऽर्काः" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

यावादिभ्यः कन् ५।४।२९

याव इत्येवम् आदिभ्यः स्वार्थे कन्प्रत्ययो भवति। याव एव यावकः। माणिकः। याव। मणि। अस्थि। चण्ड। पीत। स्तम्ब। ऋतावुष्णशीते। पशौ लूनवियाते। अणु निपुणे। पुत्र कृत्रिमे। स्नात वेदसमाप्तौ। शून्य रिक्ते। दान कुत्सिते। तनु सूत्रे। ईयसश्च। श्रेयस्कः। ज्ञात। कुमारीक्रीडनकानि च। यावादिः।

न्यासः

यवादिभ्यः कन्?। , ५।४।२९

"ऋतौ" इत्यादि। उष्णशीते शब्दरूपे कनमुत्पादयत ऋतावभिधेये--उष्णक ऋतुः शीतक ऋतुः। अन्यत्र उष्णः, शीत इत्येव भवति। "पशौ लुनवियाते" इति। लूनवियाते शब्दरपे कनमुत्पादयतः पशावभिधेये--लूनकः पशुः, वियातकः पशुः। पशोरन्यत्र लूनम्(), वियातम्()। "अणु निपुणे" इति। अणुशब्दो निपुणार्थः कनमुत्पादयति--पुत्रकः। अन्यत्र पुत्रः। "स्नात वेदसमाप्तौ" इति। स्नातशब्दः कनमुत्पादयति वेदसमाप्तौ विवक्षितायाम्()। यस्य वेदः समाप्तः स स्नातक इत्युच्यते। वेदसमाप्तावपिति किम्()? नद्यां स्नातः। "शून्य रिक्ते" इति। शून्यशब्दः कनमुत्पादयति रिक्ते तच्छेऽभिधेये--शून्यकः, तुक्छ इत्यर्थः। अन्यत्र शून्यम्()। "दान कुत्सिते" इति। दानशब्दः कुत्सिते कनमुत्पादयति--कृत्सितं दानं दानकम्()। अन्यत्र तु दानम्()। "तेनु सूत्रे" इति। तनुशब्दः प्रत्यमुत्पादयति सूत्रे--तनुकम्()। अन्यत्र तनुः। "ईयसश्च" इति। ईयस्प्रत्यान्तात्? कन्? भवति--शेयस्कः। "कुमारीक्रीडनकानि च" इति। कुमारीणां यानि क्रीडनकानि तानि कनमुत्पादयन्ति--कन्दुकम्()॥

बाल-मनोरमा

यावादिभ्यः कन् , ५।४।२९

यावादिभ्यः कन्। यावक इति। यवानामयं यावः=ओदनादिः, स एव यावकः। अलक्तवृक्षो वा यावः, स एव यावकः। "यवोऽलक्तो द्रुमामयः" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

लोहितान् मणौ ५।४।३०

लोहितशब्दात् मणौ वर्तमानात् स्वार्थे कन्प्रत्ययो भवति। लोहितो मणिः लोहितकः। मणौ इति किम्? लोहितः।

बाल-मनोरमा

लोहितान्मणौ , ५।४।३०

लोहितान्मणौ। मणौ वर्तमानाल्लोहितशब्दात्स्वार्थे कन्स्यादित्यर्थः। माणिक्य मयो मणिरेवेह मणिर्विवक्षितः। यस्तु जपाकुसुमादिनिमित्तलौहित्यवान्स्फटिकमणिस्तस्य तु "रक्ते" इत्युत्तरसूत्रेण सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

वर्णे च अनित्ये ५।४।३१

अनित्ये वर्णे वर्तमानात् लोहितशब्दात् स्वार्थे कन्प्रत्ययो भवति। लोहितकः कोपेन। लोहितकः पीडनेन। अनित्ये इति किम्? लोहितो गौः। लोहितं रुधिरम्। लोहिताल्लिङ्गबाधनं वा वक्तव्यम्। लोहितिका कोपेन। लोहिनिका कोपेन।

बाल-मनोरमा

वर्णे चाऽनित्ये , ५।४।३१

वर्णे चाऽनित्ये। अनित्ये वर्णे विद्यमानाल्लोहितशब्दात्स्वार्थे कन्स्यादित्यर्थः। अमण्यर्थमिदम्।

लोहितकः कोपेनेति। "देवदत्तादि"रिति शेषः। कोपनिमित्तकं देवदत्तादेर्लौहित्यमनित्यमेव, कोपाऽभावे तदभावात्। यद्यपि माणिक्यमणिलौहित्यमपि अनित्यमेव, माणिक्ये नष्टे तन्नाशात्, तथापि आश्रयद्रव्यस्य उत्पत्तिप्रभृति नाशपर्यन्तं यो वर्णो वर्तते, स वर्णो नित्य इत्यभिमतमिति न दोषः। स्यादेतत्। "लोहितिकालोहितिका वा कोपेन"ति स्त्रियां रूपद्वयमिध्यते। तत्र लोहितशब्दात् "वर्णादनुदात्ता"दिति नत्वसन्नियोगशिष्टं ङीपं परत्वात्स्यार्थिकतया अन्तरङ्गत्वाच्च बाधित्वा कनि कृते सति नत्वसन्नियोगशिष्टङीपो न प्रसक्तिः, कोपधत्वेन तोपधत्वाऽभावात्। ततश्च लोहितकशब्दात् "अजाद्यतः" इति टापि "प्रत्ययस्था"दिति इत्त्वे लोहितिकेत्येव स्यान्नतु तत्र लोहिनिकेति। अत आह--लोहिताल्लिङ्गबाधनं वेति। वार्तिकमिदम्। लोहितशब्दात्परस्य स्त्रीलिङ्गबोधकप्रत्ययस्य कना बाधो वा स्यादित्यर्थः। असति तु कना ङीपो बाधे लोहिनीशब्दात्परस्य स्त्रीलिङ्गबोधकप्रत्ययस्य कना बाधो वा स्यादित्यर्थः। असति तु कना ङीपो बाधे लोहिताशब्दात्कनि "केऽणः" इति ह्रस्वे कन्नन्ताट्टपि लोहिनिकेति सिध्यति। सति तु कना ङीपो बाधे लोहिताशब्दात्कनि "केऽणः" इत#इ ह्रस्वे टापि लोहितिकेति भवति। ननु "ङ्याप् प्रातिपदिका"दित्यत्र लिङ्गविशिष्टपरिभाषयैव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तादेव तद्धिता भवन्ति, नतु ङ्याब्भ्यां प्रागित्येवमर्थमित्युक्तम्। एवंच ङीपः प्राक् कनः प्रसक्तेरेवाऽभावादिदं वार्तिकं व्यर्थमिति चेत्, अत एव वार्तिकाल्लिङ्गात्स्वार्थिकतद्धितेषु ङ्याब्ग्रहणं न संबध्यते। न च "सुबन्तात्तद्धितोत्पत्ति"रिति सिद्धान्तात् "कुत्सिते" इति सूत्रस्थभाष्यरीत्या स्वार्थद्रव्यलिङ्गसङ्ख्याकारककुत्सादिप्रयुक्तकार्याणां क्रमिकतया ङ्याबन्तादेव सुपि ततः कनि रूपसिद्धेर्वचमिदं व्यर्थमिति वाच्यम्, कारककुत्सादिप्रयुक्तकार्याणां क्रमिकतया ङ्याबन्तादेव सुपि ततः कनि रूपसिद्धेर्वचनमिदं व्यर्थमिति वाच्यम्, अत एव स्वार्थिकतद्धितानां प्रातिपदिकादेव प्रवृत्तिविज्ञानादित्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

वर्णे चाऽनित्ये १५६२, ५।४।३१

वर्णे चाऽनित्ये। अनित्ये किम्()। लहितं रुधिरम्। लोहिता लाक्षा। अनित्यत्वमिह स्वसमानाधिकरणध्वंसप्रतियोगित्वाम्। अतएव "रक्ते"इत्युत्तरसूत्रं सार्थकम्। लाक्षादिना रक्ते लौहित्यस्य यावदाश्रयमवस्थानेन नित्यतया पूर्वेणाऽसिद्धेः।

लोहिताल्लिङ्गबाधनं वा। लोहितक इथि। कोपेन लोहितो यः परुषस्तस्मिन्नेव क्षणादूर्ध्वं कोपशान्तौ लौहित्यं नश्यतीति भवत्यत्राऽनित्यो वर्णः। "प्रातिपदिकात्तद्धिताः"इति पक्षस्य "प्रतिपदविधानमात्रेणाऽपवादत्वे"मिति पक्षस्य चाश्रयणे "वर्णादनुदात्ता"दित्यतः प्रागेव कनि कृते लोहितिकेति रूपं न स्यादित्याशङ्कायामाह---।

---

सूत्रम्

काशिका-वृत्तिः

रक्ते ५।४।३२

लाक्षादिना रक्ते यो लोहितशब्दः, तस्मात् कन्प्रत्ययो भवति। लोहितकः कम्बलः। लोहितकः पटः। लिङ्गबाधनं वा इत्येव, लोहितिका, कोहिनिका शाटी।

न्यासः

रक्ते। , ५।४।३२

"लाक्षादिना रक्ते" इति। ननु च लाक्षादिना य आधीयते लोहितो वर्णः, तस्यानित्यत्वात्? पूर्वसूत्रेणैव सिद्धम्()? यदा हि ते योगविशेषेण तथाविधं स्थैर्यमुत्पद्यते; यतः स्वाश्रयं न जहाति तदा नित्यत्वान्न प्राप्नोति, तदर्थमिदमुच्यते॥

बाल-मनोरमा

रक्ते , ५।४।३२

रक्ते। लाक्षादिना रक्ते पटादौ लौहित्यस्य यावद्द्रव्यमवस्थानेन नित्यतया पूर्वेणाऽप्राप्तौ वचनम्।

तत्त्व-बोधिनी

रक्ते १५६३, ५।४।३२

लिङ्गबाधनं वेति। लोहितादित्युपलक्षणम्। एतिका एनिकेत्यादेरपि सङ्ग्रह्रत्वात्। "सुबन्तात्तद्धिताः"इति पक्षस्य "निरवकाशत्वमपवादत्व"मिति पक्षस्य च मुख्यत्वात्तदाश्रयणे तु "वर्णादनुदात्ता"दित्यास्यानन्तरमेव कनः प्रवृत्तेः कन्प्रतद्ययस्य पुंल्लिङ्गे सावकाशतया निरवकाशत्वाऽभावाच्च वार्तिकमिदं न कर्तव्यम्। अतएव ङ्याब्ग्रहणं व्यर्थमिति, स्वाम्पीति रूपं प्रबलमिति च मनोरमादावुक्तमिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

कालाच् च ५।४।३३

वर्ने च अनित्ये ५।४।३१, रक्ते ५।४।३२ इति द्वयम् अप्यनुवर्तते। कालशब्दातनित्ये वर्तमानात् रक्ते च कन्प्रत्ययो भवति। कालकं मुखं वैलक्ष्येण। रक्ते कालकः पटः। कालिका शाटी।

न्यासः

कालाच्च्। , ५।४।३३

बाल-मनोरमा

कालाच्च , ५।४।३३

कालाच्च। द्व्यमनुवर्तत इति। अनित्ये वर्णे रक्ते च वर्तमानात्स्वार्थे कन्निति फलितम्। अनित्ये वर्णे उदाहरति--कालकं मुखं वैलक्ष्येणेति। लज्जाऽसूयादिनेत्यर्थः। रक्ते उदाहरति--कालकः पट इति। "नील्यादिने"ति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

विनयादिभ्यष् ठक् ५।४।३४

विनय इत्येवम् आदिभ्यः स्वार्थे ठक् प्रत्ययो भवति। विनय एव वैनयिकः। सामयिकः। औपयिकः। विभाषाग्रहणेन

प्रत्ययो विकल्प्यते। विनय। समय। उपायाद्घ्रस्वत्वं च। सङ्गति। कथञ्चित्। अकस्मात्। समयाचार। उपचार। समाचार। व्यवहार। सम्प्रदान। समुत्कर्ष। समूह। विशेष। अत्यय। विनयादिः।

न्यासः

विनयादिभ्यष्ठक्?। , ५।४।३४

"उपायाध्यस्वत्वञ्च" इति। उपायशब्दठकमुत्पादयति, ह्रस्वत्वञ्च प्रतिपद्यते--औपयिकः॥

बाल-मनोरमा

विनयादिभ्यष्ठक् , ५।४।३४

विनयादिभ्यः। उपायाद्ध्रस्वत्वं चेति। गणसूत्रमिदम्। उपायशब्दात्स्वार्थे। ठक्, प्रकृतेदर्दीर्घस्य ह्रस्वत्वं चेत्यर्थः। ह्रस्वस्य ह्रस्वविधौ वैयथ्र्याद्दीर्घस्येति गम्यते।

वाचो व्याह्रतार्थायाम्। "इदमस्य वक्तव्य"मिति दूतं प्रति योऽर्थ उच्यते स व्याह्रतः,व्याह्रतोऽर्थो यस्या इति विग्रहः। तदाह--संदिष्टार्थायामिति।

तत्त्व-बोधिनी

विनयादिभ्यष्ठक् १५६४, ५।४।३४

उपाय इति। उपायशब्दष्ठकं लभते ह्रस्वत्वं चेत्यर्थः। अकस्माच्छब्दोऽत्र पठ()ते स तु दान्तो न तु तान्तः। तेन कादेशो न। "अव्ययाना भमात्रे टिलोपः"। आकस्मिकम्।

---

सूत्रम्

काशिका-वृत्तिः

वाचो व्याहृतार्थायाम् ५।४।३५

व्याहृतः प्रकाशितो ऽर्थो यस्यास्तस्यां वाचि वर्तमानाद् वाच्शब्दात् स्वार्थे ठक्प्रत्ययो भवति। पूर्वम्न्येन उक्तार्थत्वात् सन्देशवाग् व्याहृतार्था इत्युच्यते। वाचिकं कथयति। वाचिकं श्रद्दधे। व्याहृतार्थायाम् इति किम्? मधुरा वाक् देवदत्तस्य।

न्यासः

वाचो व्याह्रतार्थायाम्?। , ५।४।३५

"व्याह्रतः" इति। उक्त इत्यर्थः। "अन्येन" इति। सन्देष्ट्रा। न हि पूर्वं सा वाक्? संदिष्टा। तेन हि पूर्वं सन्दिशता सन्देशवाक्? भवति। यया सन्दिष्टोऽर्थोऽभिधीयते, सा च सन्देशवागुच्यते॥

तत्त्व-बोधिनी

वाचो व्याह्रतार्थयाम् १५६५, ५।४।३५

वाचो व्याह्रता। व्याह्रतार्थायां किम्()। मधुरा वाग्देवदत्तस्य।

---

सूत्रम्

काशिका-वृत्तिः

तद्युक्तात् कर्मणो ऽण् ५।४।३६

व्याहृतार्थया वाचा यत् कर्म युक्तं, तदभिधायिनः कर्मशब्दात् स्वार्थे अण् प्रत्ययो भवति। कर्म एव कार्मणम्। वाचिकं श्रुत्वा तथैव यत् कर्म क्रियते तत् कार्मणम् इत्युच्यते। अण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्रामित्रेभ्यश् छन्दस्युपसङ्ख्यानम्। कुलाल एव कौलालः। वारुडः। नैषादः। कार्मारः। चाण्डालः। मैत्रः। आमित्रः। सान्नायानुजावरानुषूकाष्टुभचातुष्प्राश्यराक्षोघ्न वैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः। एते ऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते। सान्नाय्यम्। आनुजावरः। आनुषूकः। आष्टुभः। चातुष्प्राश्यः। राक्षोघ्नम्। वैयातः। वैकृतः। वारिवस्कृतः। आग्रायणः। आग्रहायणः। सान्तपनः।

न्यासः

तद्युक्तात्कर्मणोऽण्?। , ५।४।३६

"कर्मशब्दात्()" इति। एतेन कर्मण इति स्वरूपस्य ग्रहणम्(), नेप्सिततमस्येति दर्शयति। ननु च कर्मशब्दस्य संज्ञाशब्दत्वादीप्सिततमस्यैव ग्रहणं युक्तम्(), न स्वरूपस्येति? नैतदस्ति; इह हि "स्थानान्तात्()" ५।४।१० इत्यादेः सूत्रादितिकरणोऽनुवर्त्तते, तेनायमर्थो लभ्यते--ततश्चेद्विवक्षा भवतीति। कर्मशब्दाच्च प्रत्ययोत्पत्तौ लोके विवक्षा भवति, नेप्सिततमात्()। न हि तत उत्पन्नेनाणा व्याह्मतार्थवाचा युक्तं कर्म शक्यते द्योतयितुम्(), कर्मशब्दात्तूत्पन्नेन शक्यते। तस्मात्? स्वरूपस्यैव ग्रहणं युक्तम्()। "कार्मणम्()" इति। "अन्()" ६।४।१६ इति प्रकृतिभावः। "तथैव" इति। यथैव व्याह्मतार्थया वाचा प्रतिपादितम्()--एवं कत्र्तव्यमिति, तेनैव प्रकारेणेत्यर्थः। "अण्प्रकरणे" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेवं प्रतिपादनम्()---प्रज्ञादेराकृतिगणत्वात्? कुलालादयस्तत्रैव द्रष्टष्याः। तेन "प्रज्ञादिभ्यश्च" (५।३।३८) इत्यण्? भविष्यतीति। यद्येवम्(), भाषायामपि स्यात्()? नैष दोषः; "विभाषा बहोः" ५।४।२० इत्यादिसूत्राद्विभाषेत्यनुवत्र्तते, सा च व्यवस्थितविभाषा छन्दस्येव भविष्यति, न भाषायामिति। "सान्नाय" [सान्नय्य-काशिका, पदमञ्जरी च] इत्यादि। सान्नायानुजावरानुषूकानुष्टुभचातुष्प्राश्यराक्षोध्ववैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाश्छन्दसि भाषायाञ्चेष्यन्ते। तस्मात्सान्नायादयः। एषां प्रकृतयः प्रज्ञादिष्वेव द्रष्टव्याः। अत्र चाग्रायणाग्रहायण--इत्यत्रेकारान्ताभ्यामाग्रायण्यग्रहायणीशब्दाभ्यामन्यत्राकारान्तेभ्योऽनुजावरादिभ्यः प्रत्ययः। सान्नाय्यशब्दस्य चेहान्तोदात्तार्थ ग्रहणम्()। रूपं तु "पाय्यसान्नाय्य" ३।१।१२९ इति निपातनादेव सिद्धम्()॥ष

---

सूत्रम्

काशिका-वृत्तिः

ओषधेरजातौ ५।४।३७

ओषधिशब्दादजातौ वर्तमानात् स्वार्थे ऽण्प्रत्ययो भवति। औषधं पिबति। औषधं ददाति। अजातौ इति किम्? ओषधयः क्षेत्रे रूढा भवन्ति।

न्यासः

ओषधेरजातौ। , ५।४।३७

"औषधं पिवति" इति। फलादौ वत्र्तमानादोषधिशब्दात्? प्रत्ययः, स च जातिर्न भवति; "आकृतिग्रहणा जातिः" (काशिका। ४।१।६३) इत्यादेर्लक्षणस्याभावात्()। ओषधयः क्षेत्रे रूढा भवन्ति। अत्र फलपाकान्ता जातिः, तत्रौषधिशब्दो वत्र्तते॥

बाल-मनोरमा

ओषधेरजातौ , ५।४।३७

ओषधेरजातौ। औषधं पिबतीति। शुण्ठीमरीचादिचूर्णमबादिद्रव्यसंसृष्टं विवक्षितम्। तस्य न जातिवचनत्वमिति भावः। क्षेत्रे रूढा इति। उत्पन्ना इत्यर्थः। शाल्यादिसस्यात्मका इति फलितम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रज्ञादिभ्यश् च ५।४।३८

प्रजानाति इति प्रज्ञः। प्रज्ञ इत्येवम् आदिभ्यः प्रातिपदिकेभ्यः स्वार्थे अण्प्रत्ययो भवति। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। यस्य अस्तु प्रज्ञा विद्यते सा प्राज्ञा प्रज्ञाश्रद्धाऽर्चावृत्तिभ्यो णः ५।२।१०० इति। विदन्नित्यत्र पठ्यते। विदेः शत्रन्तस्य ग्रहणं, विदेः शतुर्वसुः ७।२।३६ इत्यत एव ज्ञापकात् पाक्षिको वस्वादेशः। अन्यतरस्यांग्रहणं वा तत्र अनुवर्तते, तुह्योस् तातङाशिष्यन्यतरस्याम् ७।१।३५ इति। प्रज्ञ। वणिज्। उशिज्। उष्णिज्। प्रत्यक्ष। विद्वस्। विदन्। षोडन्। षोडश। विद्या। मनस्। श्रोत्र शरीरे श्रौत्रम्। जुहृत् कृष्णमृगे। चिकीर्षत्। चोर। शत्रु। योध। चक्षुस्। वक्षस्। धूर्त। वस्। एत्। मरुत्। क्रुङ्। राजा। सत्वन्तु। दशार्ह। वयस्। आतुर। रक्षस्। पिशाच। अशनि। कार्षापण। देवता। बन्धु। प्रज्ञादिः।

लघु-सिद्धान्त-कौमुदी

प्रज्ञादिभ्यश्च १२४३, ५।४।३८

अण् स्यात्। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः॥

न्यासः

प्रज्ञादिभ्यश्च। , ५।४।३८

"प्रजानातीति प्रज्ञः" इति। "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५। ननु च यः प्रजानाति तस्य प्रज्ञास्तीति "प्रज्ञश्रद्धार्चावृत्तिभ्योऽण्()" ५।२।१०० इति मत्वर्थेनैव णेन सिद्धम्(), तत्? किमर्थं प्रज्ञाशब्दादण्? विधीयत इति? अस्य चोद्यस्य निराकरणाय स्त्रियां विशेषं दर्शयन्नाह--"स्त्रो प्राज्ञी" इत्यादि। "विदेः शत्रन्तस्य ग्रहणम्()" इति। न तु "विदेः शतुर्वसुः" ७।१।३६ इत्यादि। "श्रोत्र शरीरे" इति। शरीरे यः श्रोत्रशब्दो वत्र्तते तस्मादण्? भवति-श्रौत्रम्()। अन्यत्र शोत्रम्()। "जुहृत्()" इति। जुहृच्छब्दात्? कृष्णमृगे वत्र्तमानादण भवति--जौहृतः। जुहृदित्येवान्यत्र। अन्ये "कृष्ण मृगे" इति पृथक्? पठन्ति। कृष्णशब्दादण्? भवति मृगेऽभिधेये---कार्ष्णो मृगः, कृष्ण एवान्यत्र। जुहृच्छबदादविशेषेणास्मिन्? पाठे प्रत्ययः। "सत्वन्तु" इति। सच्छब्दो यो मतुप्प्रत्ययान्तः सः सत्वानेव सात्वतः। "प्रज्ञादिरयमाकृतिगणः। तामेवास्याकृतिगणतां बोधयितुमनुक्तसमुच्चयार्थश्चाकाः कृतः। तेन कुलालकुक्कुटादिभ्योऽण्? सिद्धो भवति।

बाल-मनोरमा

प्रज्ञादिभ्यश्च , ५।४।३८

प्रज्ञादिभ्यश्च। "स्वार्थे"ऽणिति शेषः। प्राज्ञ इति। प्रजानातीति प्रज्ञः। "इगुपधज्ञे"ति कः। प्रज्ञशब्दात्स्वार्थे अण्। प्राज्ञीति। अण्णन्तत्वान्ङीप्। प्रज्ञाअस्यास्तीति विग्रहे तु "प्रज्ञाश्रद्धार्चाभ्यः" इति णाऽन्ताट्टापि प्राज्ञेति रूपम्।

तत्त्व-बोधिनी

प्राज्ञादिभ्यश्च १५६७, ५।४।३८

प्रज्ञ एवेति। प्रजानातीति प्रज्ञः। "इगुपधज्ञे;ति कः। ततः स्वार्थेऽण्। प्राज्ञः। प्राज्ञिति। "टिड्ढे"ति ङीप्। प्रज्ञानं प्रज्ञा। "आतश्चोपसर्गे"त्यङि टाप्। प्रज्ञा विद्यते यस्याः सा तु प्राज्ञा भवति। "प्रज्ञाश्रद्धार्चाभ्यः" इति णः।

---

सूत्रम्

काशिका-वृत्तिः

मृदस् तिकन् ५।४।३९

मृच्छब्दात् स्वार्थे तिकन्प्रत्ययो भवति। विकल्पः स्वत्रानुवर्तते। मृदेव मृत्तिका।

न्यासः

मृदस्तिकन्?। , ५।४।३९

किमर्थं पुनस्तिकन्? विधीयते, न तकन्नेव विधीयेत, नित्यश्च स्त्रीप्रत्ययोऽयम्(), तत्र टापि कृते "प्रत्ययस्थात्? कात्()" (७।३।४४) इतीत्त्वेनैव सिद्धम्()? यत्र तर्हि लुग्भावः क्रियते, तत्र न सिद्ध्येत्()--पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिक इति। तत्र हि "अध्यर्द्धपूर्वद्विगोः" (५।१।२८) इत्यादिनाऽऽर्हीयस्य ठ को लुकि कृते "लुक्? तद्धितलुकि" १।२।४९ इति स्त्रीप्रत्ययस्यापि लुक्()। तत्र यदि तकन्? विधीयते, तदा टापोऽभावादिकारो न न श्रूयेत, प्रक्रयागौरवं स्यात्(); इकगारस्य शास्त्रान्तरेण विधीयमानत्वात्()॥

तत्त्व-बोधिनी

मृदस्तिकन् १५६८, ५।४।३९

मृदस्तकन्। "प्रत्ययस्था"दित्येव सिद्धे इकारोच्चारणं प्रक्रियालाघवार्थं , टापो लुक्यपि श्रवणार्थं च। पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिकः पटः।

---

सूत्रम्

काशिका-वृत्तिः

सस्नौ प्रशंसायां ५।४।४०

प्रशंसोपाधिके ऽर्थे वर्तमानान् मृच्छब्दात् स स्न इत्येतौ प्रत्ययौ भवतः। रूपपः अपवादः। प्रशस्ता मृद् मृत्सा, मृत्स्ना। नित्यश्च अयं प्रत्ययः, उत्तरसूत्रे ऽन्यतरस्यां ग्रहणात्।

न्यासः

सस्नौ प्रशंसायाम्?। , ५।४।४०

बाल-मनोरमा

सस्नौ प्रशंसायाम् , ५।४।४०

सस्नौ। प्रशस्तायां मृदि वर्तमानान्भृच्छब्दात्स्वार्थे स स्न एतौ प्रत्ययौ स्त इत्यर्थः। रूपप इति। "प्रशंसायां रूपबि"ति विहितस्येत्यर्थः। नित्योऽयमिति। सस्नविधिरित्यर्थः। वस्तुतस्तु "ञ्यादयः प्राग्वुनः" इत्यादिपरिगणितेष्वनयोः प्रत्ययोरनन्तर्भावादनित्यत्वमेवाऽनयोरुचितमित्याहुः।

तत्त्व-बोधिनी

सस्नौ प्रशंसायाम् १५६९, ५।४।४०

सस्नौ। इह "प्रशंसायां रूप"बित्यस्यानन्तरं "वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि"। मृदः सस्नौ"। "तिकंश्चे"ति वक्तुमुचितम्। नचैवं सस्नाविति कन्प्रत्ययोऽपि प्रसंशायामेवेत्येवमतिप्रसङ्ग। "तिकश्चे"त्यत्र "प्रशंसाया"मिति निवृत्तिमिति कल्पनायां मानाऽबावादिति वाच्यं, "मृदः सस्नतिकनः"इति वक्तव्ये तिकनः पृखक्करणस्यैव तत्र मानत्वात्। प्रशस्ता मृदिति। "मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च भृत्तिके"त्यमरः। नित्योऽयमिति। मृदित्येतावदुक्ते प्रशस्तत्वानवगमाद्विभाषाऽत्र नानुवर्तत इति सस्नावित्ययं विधिर्नित्य एव। उत्तरसूत्रस्थाऽन्यतरस्याङ्ग्रहणात्तु सुतरामिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि ५।४।४१

प्रशंसायाम् इत्येव। वृकज्येष्ठाभ्यां प्रशंसोपाधिके ऽर्थे वर्तमानाभ्यां यथासङ्ख्यम् तिल्तातिलौ प्रत्ययौ भवतः छन्दसि विषये। रूपपो ऽपवादौ। वृकतिः। ज्येष्ठतातिः।

न्यासः

वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि। , ५।४।४१

---

सूत्रम्

काशिका-वृत्तिः

बह्वल्पार्थाच् छस्कारकादन्यतरस्याम् ५।४।४२

बह्वर्थातल्पार्थाच् च कारकाभिधायिनः शब्दात् शस्प्रत्ययो भवति अन्यतरस्याम्। विशेषानभिधानाच् च सर्वं कर्मादिकारकं गृह्यते। बहूनि ददाति बहुशो ददाति। अल्पं ददाति अल्पशो ददाति। बहुभिर् ददाति बहुशो ददाति। अल्पेन, अल्पशः। बहुभ्यः, बहुशः। अल्पाय, अल्पशः इत्येवम् आद्युदाहार्यम्। बह्वल्पार्थातिति किम्? गां ददाति। अश्वं ददाति। कारकातिति किम्? बहूनां स्वामी। अल्पानाम् स्वामी। अर्थग्रहणात् पर्यायेभ्यो ऽपि भवति। भूरिशो ददाति। स्तोकशो ददाति। बह्वल्पार्थान् मङ्गलामङ्गलवचनम्। यत्र मङ्गलं गम्यते तत्र अयं प्रत्यय इस्यते। बहुशो ददाति इति आभ्युदयिकेषु कर्मसु। अल्पशो ददाति इति अनिष्टेषु कर्मसु।

लघु-सिद्धान्त-कौमुदी

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् १२४४, ५।४।४२

बहूनि ददाति बहुशः। अल्पशः। (आद्यादिभ्यस्तसेरुपसंख्यानम्)। आदौ आदितः। मध्यतः। अन्ततः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण, स्वरतः। वर्णतः॥

न्यासः

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्?। , ५।४।४२

"इत्येवमादीनि" इति। आदिशब्देनापादानादिकरणविषयोदाहरणपरिभाषाग्रहणम्()--बहुभ्यो ह्त्रागच्छति बहुश आगच्छतति, अल्पश आगच्छतीति। बहुशो निदधाति। "बहूनां स्वामी" इत्यत्र शेषस्य विवक्षितकारकाभिधायी बहुशब्दो

न भवति। "अर्थग्रहणात्()" इत्यादि। असति ह्यर्थग्रहणे बहवल्पशब्दाभ्यामेव प्रत्ययः स्यात्?। त()स्मस्तु सति पर्यायेभ्योऽपि भवति। "बह्वल्पार्थात्()" इत्यादि। वह्वल्पार्थात्? प्रत्यये विधातव्ये मङ्गलवचटनं कत्र्तव्यम्()। भङ्गलवचनेन चेह व्याख्यानमुच्यते, व्याख्यायते तेनेति कृत्वा। कथं पुनः कारणस्य मङ्गलवचनं कत्र्तव्यम्()? इत्याह--"यत्र" इत्यादि। तत्रेदं व्याख्यानम्()--इह प्रशंसाग्रहणमनुवत्र्तते, प्रशंशायां प्रत्ययेन भवितव्यम्(), तच्छाभ्युदयिकेषु। बहुशो ददाति, नाल्पशः--एवं प्रशंसा भवति। इदमेव वचनमाभ्युदयिकेषु बहुशो लोके दानविषयेषु; अन्यता तेनास्य ग्रहणान्()वृत्तेर्मङ्गले गम्यमाने प्रत्ययो न भवतीति। अथ वा--इहापीतिकरणानुवृत्तेर्मङ्गल एव भवति, नान्यत्रेति। शसः सकारस्येत्संज्ञा न भवति; प्रयोजनाभावात्()॥

बाल-मनोरमा

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् , ५।४।४२

बह्वल्पार्थादिति। वार्तिकमिदम्। मह्गलाऽमङ्गलेगम्ये एवायं शसित्यर्थः। बहूनि ददात्यनिष्टेष्विति। भयादिनिमित्तेष्वित्यर्थः। अल्पं ददात्याभ्युदयिकेष्विति। अभ्युदयः=श्रेयः, तत्प्रयोजनकेष्विष्टापूर्तेष्वित्यर्थः। आभ्युदयिकेषु बहुदानम्, अनिष्टेषु अल्पदानं च मङ्गलम्। तद्विपरीतदानं त्वमङ्गलमिति भावः। अर्थग्रहणाद्भूरिशो ददाति, स्तोकशो ददाति इत्याद्यप्युदाहार्यम्।

तत्त्व-बोधिनी

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् १५७०, ५।४।४२

बह्वल्पार्थात्। बहूनीति। "बहुभ्यो ददाति बहुशः" "अल्पेब्योऽल्पश"थिय्द्यपि बोध्यम्। बह्वल्पार्थात्किम्()। गां ददाति। अ()आं ददाति। अर्थग्रहणात्पर्यायेभ्यो विशेषभ्यश्च। भूरिशो ददाति। त्रिशः। कारकात्किम्()। बहूनां स्वामी, अल्पानां स्वामी।

बह्वल्पार्थामन्ङ्ग[लाऽभङ्ग]लवचनम्। मङ्गलवचनमिति। "बहुशो ददात्याभ्युदयिकेषु कर्मसु। अल्पशो ददात्यनिष्टेषु"। आभ्युदयिकेषु बहुदानम्, अनिष्टेष्वल्पदानं च मङ्गलम्। तद्वैपरीत्येव दानं तु मङ्गसं न भवतीत्याशयेनाह---नेहेति। अनिष्टेष्विति। भयादिनिमित्तेषु दानेषु। आभ्युदयिकेष्विति। अभ्युदयप्रयोजनेऽग्न्याधेयादिषु। मूलपुस्तकेषु "मङ्गलाऽमङ्गलवचन"मिति प्रायेण पठ()ते, तत्राऽमङ्गलग्रहणं वृथेत्याहुः। प्रायिकं चैतन्मङ्गलवचनमन्यत्रापि हि दृश्यते "अपेतापोढमुक्तपतितापात्रस्तैरल्पशः" इति। कारकत्वं तु समसनक्रियां प्रति पञ्चम्याः कर्मत्वात्दभिधायकत्वाच्चाल्पशब्दस्य। तथा च व्याचक्षते---अल्पा पञ्चमी समस्यत इति। "आचार्येणे"ति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्याएकवचनाच् च वीप्सायाम् ५।४।४३

सङ्ख्यावाचिभ्यः प्रातिपदिकेभ्यः एकवचनाच् च वीप्सायां द्योत्यायां शस्प्रत्ययो भवति अन्यतरस्याम्। द्वौ द्वौ मोदकौ ददाति द्विशः। त्रिशः। एकवचनात् खल्वपि कार्षापणं कार्षापणं ददाति कर्षापणशः। माषशः। पादशो ददाति। एको ऽर्थ उच्यते येन तदेकवचनम्। कार्षापणादयश्च परिमाणशब्दाः वृत्तावेकार्था एव भवन्ति। सङ्ख्यैकवचनातिति किम्? घटं घटं ददाति। वीप्सायाम् इति किम्? द्वौ ददाति। कार्षापणम् ददाति। कारकातित्येव, द्वयोर् द्वयोः स्वामी। कार्षापणस्य कार्षापणस्य स्वामी।

न्यासः

संख्यैकवचनाच्च वीप्सायाम्?। , ५।४।४३

"नित्यवीप्सयोः" ८।१।४ इति द्विर्वचनेन तदपवादः शस्विधीयते। "एकोऽर्थ उच्यते येन तदेकवचनम्()" इति। एतेन सहार्थैकवचनान्तादित्यभिप्रायः। ननु चान्वर्थग्रहणेन च प्राप्नोत्येव, भवति ह्येकवचनम्(), एकार्थवृत्तित्वात्()? नैषः, न हि वाक्यस्यैकार्थता प्रत्ययविदावाश्रीयते। किं तर्हि? वृत्तिस्था। न वृत्तौ च निवृत्तायां विभक्तौ घटादय एव शब्दा एकवचनान्ता भवन्ति; जातिशब्दत्वात्()। जातिशब्दा हि नैकस्यामेकजात्याधारभूतायां व्यक्तौ वर्त्तन्ते, किं तर्हि? अनेकस्यामपि। तदेषामेकार्थवृत्तित्वं वाक्य एव विभक्तिसंख्याश्रयणे प्रतीयते, न वृत्तौ; विभक्तेर्निवृत्तत्वात्()। "कार्षापणादयश्च" इत्यादि। "कार्षापणादयः शब्दाः परिमाणाः" इत्युक्तम्()। परिमाणस्य विसेषस्य वाचका इत्यर्थस्याधिक्ये तेषां वृत्तिर्न सम्भवति। वाक्ये तु तेषां प्रयोगेऽनेकार्थप्रतीतिः--कार्षापणौ, कार्षापणा इति, सा विभक्तिर्न तेभ्यः। वृत्तौ तु सा विभक्तिर्नास्तीति तेनैकार्था भवन्ति। वृत्तिस्थैकार्थता प्रत्ययविधावाश्रीयते, न वाक्यस्थेत्युक्तमेतत्()। "घटं घटं ददाति" इति। घटादयः सब्दा वृत्तावेकार्था न भवन्ति। एतच्च प्रतिपादितम्()। यदान्वर्थाः प्रकरणादिसहिता घटादयोऽपि जातिशब्दा एकार्था भवन्ति, तदा भवितव्यमेव शसा; अन्यथा "जश्शसोः शिः" ७।१।२० इत्यत्र यद्वक्ष्यति--जसा सहचरितस्य शसो ग्रहणमित्यत्र न भवति--"कुडवशो ददाति, शतशः प्रविशति" इति, तद्व्याहन्यते; कुडवादिशब्दस्यापि जातिशब्दत्वात्()॥

बाल-मनोरमा

सङ्ख्यैकचनाच्च वीप्सायाम् , ५।४।४३

सङ्ख्यैकवचनाच्च। सङ्ख्या च एकवचनं चेति समाहारद्वन्द्वात्पञ्चमी। एकत्वविशिष्टोऽर्थ उच्यतेऽनेनेत्येकवचनः। एकत्वविशिष्टस्यार्थस्य वचन इति विग्रहः। सङ्ख्यावाचकात्तदन्यस्माच्चैकत्वविशिष्टवाचकात्कारकाभिधायिनः प्रातिपदिकाद्वीप्सायां शस् वेत्यर्थः। सङ्ख्यावाचिन उदाहरति--द्वौ द्वौ ददातीति। "नित्यवीप्सयो"रिति द्विर्वचनम्। "द्विश" इत्यत्र तु न, शसैव वीप्साया उक्तत्वात्। "तद्धितश्चासर्वविभक्ति"रित्यत्र "शस्()प्रभृतयः प्राक् समासान्तेभ्यः" इति परिगणनाच्छसादीनां डाच्पर्यन्तानामव्ययत्वम्। एकत्वविशिष्टवाचिन उदाहरति--माषं माषं माषश इति। माषं माषमित्यन्तरं "ददाती"ति शेषः। माषशब्दः परिमाणविशेषवाची। प्रस्थश इति। प्रस्थं प्रस्थं ददातीति विग्रहः। ननु "घटं घटं ददाती"त्यत्रापि "घटश" इति स्यात्, घटशब्दस्याऽप्येकत्वविशिष्टार्थवाचकत्वात्। न च एकत्वविशिष्टस्यैवार्थस्य वाचक एकवचनशब्देन विवक्षितः, घटशब्दस्तु नैवं, घटो घटा इत्यादौ द्वित्वबहुत्वविशिष्टवाचकत्वादिति वाच्यम्। एवं सति "माषशः" "प्रस्थशः" इत्यत्रापि शसभावप्रसङ्गादित्यत आह--परिमाणशब्दावृत्तावेकार्था एवेति। अयमाशयः--समासादिवृत्ततौ एकत्वव#इशिष्टस्यैवाऽर्थस्य वाचका एकवचनशब्देन विवक्षिताः। तथाविधाश्च परिमाणशब्दा एव, नतु घटादिजातिशब्दा अपि। "माषदाते"त्युक्ते हि माषपरिमितस्य हिरण्यादेर्दातेति प्रतीयते, नतु माषाणामिति। अतो माषशब्दोऽयं भवति वृत्तावेकत्वविशिष्टार्थनियतः। एवं प्रस्थादिशब्दोऽपि। घटशब्दस्तु नैवम्। "गठदाते"त्युक्ते घटानां दातेत्यपि प्रतीतेः। एतदेवाभिप्रेत्य प्रत्युदाहरति--घटं घटमिति। एतत्सर्वं जयादित्यमतम्। वामनस्तु उक्तनियमे प्रमाणाऽभावाज्जातिशब्दोभ्योऽपि शस् भवत्येव, एकवचनग्रहणं तु घटौ घटौ ददातीत्यादौ शसभावार्थमित्याह। "एकैकशः पितृसंयुक्ता"नित्यत्र तु शसैव वीप्साया उक्तत्वाद्द्विर्वचनमार्षमिति हरदत्तः। प्रत्याहाराह्निकभाष्ये "एकैकशः" "सहरुआकृत्वः" इति भाष्यप्रयोगात्स्वार्थिकशसा समाधेयमित्यन्ये।

बाल-मनोरमा

प्रतियोगे पञ्चम्यास्तसिः , ५।४।४३

प्रतियोगे। विहितेति। "प्रतिः प्रतिनिधिप्रतिदानयो"रिति प्रते कर्मप्रवचनीयत्वे तद्योगे "प्रतिनिधिप्रतिदाने च यस्मा"दिति पञ्चमी विहितेत्यर्थः। प्रद्यचुम्नः कृष्णतः प्रतीति। कृष्णस्य प्रतिनिधिरित्यर्थः। आद्यादिभ्य इति। अयं सार्वविभक्तिकस्तसिः। अपादाने चाऽहोयरुहोः। "अहीयरूहो"रिति छेदः। "हीयते" इत्यादौ कर्मणि लकारे यगन्तस्य एकदेशस्य "हीये"त्यनुकरणम्। हीयरुहोः संबन्धि यन्न भवति तन्मिन्नपादाने इत्यर्थः। अतिग्रहा व्यथने अतिक्रम्य ग्रह इति। लोकवृत्तमतिक्रम्य तद्विलक्षणतया प्रतीयमानत्वमित्यर्थः। चारित्रेणेति। चरित्रमेव चारित्रम्, तेन हेतुना इतरविलक्षणत्वेन दृश्यते इत्यर्थः। फलितमाह--अन्यानतिक्रम्य वर्तत इति। "व्यथ भयसंचलनयो"रिति चलनार्थाल्ल्युटि व्यथनशब्दः। तदाह--अव्यथनमचलनमिति। क्षेपे इति। "उदाह्रियते" इति शेषः। क्षेपो निन्दा। हीयमानपापयोगाच्च। हीयमानेति। हीयमानयुक्तात् पापयुक्ताच्चेत्यर्थः। ननु पूर्वसूत्रे क्षेपग्रहणादेव सिद्धे किमर्थमिदमित्यत आह--क्षेपस्याऽविवक्षायामिति। तत्त्वकथने इत्यर्थः। षष्ट()आ व्याश्रये ष। नानापक्षसमाश्रयणे इति। सर्वसाधारण्यं विहाय एकपक्षाश्रय इति यावत्। पक्षः--स्वीयत्वेन परिग्रहः। देवा अर्जुनतोऽभवन्निति। अर्जुनस्य पक्षे आसन्नित्यर्थः। रोगाच्चा। रोगस्य प्रतीकारः--चिकित्सा। प्रवाहिकात इति। विषूचिकाप्रतीकारमित्यर्थः।

तत्त्व-बोधिनी
सङ्ख्यैकचनाच्च वीप्सायाम् १५७१, ५।४।४३

परिमाणशब्दा इति। तथा चैकवचनग्रहणेन एकोऽर्थ उच्यते येनेत्यर्थकेन वृत्तावेकार्थतानियताः परिमाणशब्दा एव गृह्रन्त इति भावः। माषं माषमिति। माषदातेत्युक्ते माषमात्रस्य हिरण्यादेर्दातेति प्रतीयते, न तु माषाणामिति प्रतीतिरिति भवत्ययं वृत्तावेकार्थतानियमः। एवं प्रस्थादिरपि। घटादयस्तु नैवम्। घटदातेत्युक्ते तु घटानां दातेत्यर्थस्यापि प्रतीयमानत्वात्। अतएव च प्रत्युदाहरति---घटं घटमिति। घटादयो हि जातिशब्दा नैकार्था भवन्तिस जातियोगस्यैकानेकसाधारणत्वात्, किं त्वभेदैकत्वसङ्ख्यामुपाददते। एतच्च सर्वं जयादित्यमतानुसारेणोक्तम्। वामनमते जातिशब्देभ्योऽपि बवत्येव। तथा च "जश्शसो "रिति सूत्रे तेनोक्तम्,---जसा सहचरितस्य शसो ग्रहणादिह न भवति---"कुण्डशो ददाति वनशः प्रविशती"ति, तस्यायमाशयः---जातिशब्दोऽपि यद्यर्थप्रकरणादिना वृत्तावेकार्थो भवति, तदा भवत्येव ततोऽपि शसिति। अथ कथम् "एकैकशः पितृसंयुक्ता"निति द्विर्वचनशसोः सह प्रयोद इति चेत्। "छन्दोवद्दषयः कुर्वन्ती"ति हरदत्तः। अतएव "सुपः"इति सूत्रे "एकैकश"इति प्राचो ग्रन्थः प्रामादिक"इत्यवोचामेति मनोरमायां स्थितम्। वस्तुतस्तु एकैकमेव एकैकशः। स्वार्थे शस्, न तु वीप्सायाम्, "एकां कपिलामेकैकशः सहरुआकृत्वो दत्त्वे"ति भाष्यादिति "तान्येकवचने"त्यादिसूत्रे वक्ष्यामः। द्वौ ददातीति। कथं तर्हि---"अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। सहरुआशः समेतानां परिषत्तवं न विद्यते"इति। न ह्रत्र वीप्सास्ति, नापि कारकत्वमिति चेत्। अत्राहुः सहरुआं सहरुआं ये समेतास्तेषामपि परिषत्त्वं नेत्यर्थः। तथा च समवायक्रियां प्रति कर्तृत्वं, वीप्सा चस्त्येवेति। एतेन "एकश एकवचनादिसंज्ञानि स्यु"रिति व्याख्यातम्। एकशब्दार्थस्याऽस्तिक्रियां प्रति कर्तृत्वात्। कृष्णतः प्रतीति। "प्रतिः प्रतिनिधिप्रतिदानयो"रिति कर्मप्रवचनीयसंज्ञायां "प्रतिनिधिप्रतिदाने च यस्मा"दिति पञ्चमी।

आद्यादिभ्य उपसङ्ख्यानम्। आद्यादिभ्य इति। "स्यादित उदात्तमद्र्धह्यस्व"मित्येतदत्र लिङ्गम्।

---

सूत्रम्
काशिका-वृत्तिः
प्रतियोगे पञ्चम्यास् तसिः ५।४।४४

प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात् तसिः प्रत्ययो भवति। प्रद्युम्नो वासुदेवतः प्रति।

अभिमन्युरर्जुनतः प्रति। वाग्रहणानुवृत्तेर् विकल्पेन भवति। वासुदेवादर्जुनादित्यपि भवति। तसिप्रकरण आद्यादिभ्य उपसङ्ख्यानम्। आदौ आदितः। मद्यतः। पार्श्वतः। पृष्ठतः। आकृतिगणश्च अयम्।

न्यासः

प्रतियोगे पञ्चम्यास्तसिः।, ५।४।४४

"प्रद्युम्नो वासुदेवतः प्रति" इति। "प्रतिनिधिप्रतिदाने च यस्मात्()" २।३।११ इति पञ्चमी, ततस्तसिः। तसेरिकारो मुखमुखार्थः। ननु च सकारस्येत्संज्ञा मा भूदित्येवमर्थः स्यात्()? नैतदस्ति; प्रयोजनाभावादेव हि तस्येत्संज्ञा न भविष्यति। "आद्यादिभ्य उपसंख्यनम्()" इति। आद्यादिभ्यसतसेरुपसंख्यानमिति प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन आद्यादिभास्तसिर्भविष्यतीति। अनुक्तसमुच्चयार्थत्वे चकारस्य "तस्यादित उदात्तमर्धह्रस्वम्()" १।२।३२ इति निर्देशः॥

---

सूत्रम्

काशिका-वृत्तिः

अपादाने च अहीयरुहोः ५।४।४५

अपादाने या पञ्चमी तस्याः पञ्चम्याः वा तसिः प्रत्ययो भवति, तच् चेदपादानं हीयरुहोः सम्बन्धि न भवति। ग्रामतः आगच्छति, ग्रामात्। चोरतः बिभेति, चोरात्। अध्ययनतः पराजयते, अध्ययनात्। अहीयरुहोः इति किम्? सार्थाद् हीयते। पर्वतादवरोहति। हीयते इति क्विकारनिर्देशो जहातेः प्रतिपत्त्यर्थः, जिहीतेर् मा भूत्, भूमित उज्जिहीते, भूमेरुज्जिहीते। कथं मन्त्रो हीनः स्वरतो वर्णतो वा इति। न एषा पञ्चमी। किं तर्हि, तृतीया। स्वरेण वर्णेन वा हीनः इत्यर्थः।

न्यासः

अपादाने चाहीयरूहोः।, ५।४।४५

"ग्रामादागच्छति" इति। "घ्रुवमपायेऽपादानम्()" १।४।२४ इत्यपादानसंज्ञा। "चौरेभ्यो बिभेति" इति। "भित्रार्थानां भयहेतुः" १।४।२५ इति। "अध्ययनात्? पराजयते" इति। "पराजेरसोढः" १।४।२६ इति। "सार्थाद्धीयते" इति। "ओहाक्? त्यागे" (धा। पा। १०९०), लः कर्मण्यात्मनपदम्(), यक्(), "घुमास्था" ६।४।६६ इत्यादिसूत्रेणेत्वम्()। ननु चाकर्तृकं कर्म नास्ति, "कर्त्तुरीप्सिततमं कर्म" १।४।४९ इति वचनात्(); सार्थश्चात्र न कर्म, किं तर्हि? अपादानम्()? नैष दोषः; कर्मसंज्ञायां हि कर्तृग्रहणं स्वातन्त्र्योपलक्षणार्थम्()। कृत एतत्()? क्रियाविशेषणत्वात्()। कत्र्तरि च द्वयमस्ति--स्वातन्त्रयम्(), कर्तृसंज्ञा च। तत्र संज्ञायाः क्रियाविशेषणत्वं नोपपद्यते। यद्धि तस्याः कारणं तेनैव सा युक्ता विशेषयितुम्()। न च तस्याः कर्त्तृसंज्ञा कारणम्(), किं तर्हि? स्वातन्त्र्यम्();तस्य कर्त्तृस्वरूपत्वात्()। भवति क्रियां प्रति यदा कारणभावः; कर्मणा च नैव क्रिया विशेष्यते, तदायमर्थो भवति---स्वातन्त्र्यस्य क्रियाया यदीप्सिततमं तत्कर्मसंज्ञं भवतीति। सार्थस्यापि देवदत्तेन तस्याभिधानम्()। तस्य त()स्मस्त्वसत्यपादानमपि न स्यादेव। तस्माद्देवदत्तः कर्म। जहातेरेव सार्थस्यापादानेन भवितव्यम्()। तत्रापादानस्यापि सतः सार्थस्य हानक्रियायां यत्? स्वातन्त्र्यं तत्क्रियाविवक्षयैव देवदत्तस्य कर्मसंज्ञा भवति। अथ किमर्थं यका निर्देशः क्रियते, न "हारुहोः" इत्येवोच्येत? इत्यत आह--"विकारनिर्देशः" इत्यादि। विक्रियते तस्मिन्? रूपमिति विकारः, स पुनरिह यगेव--हीयेति। तत्र हि धुमास्तादिसूत्रेमेकारस्य (६।४।६६) विधानात्? विक्रियते जहाते रूपम्()। अथ वा--विकृतिः=विकारः, तेन विकारेण निर्देशः। कथं नाम? जहातेः प्रतिपत्तिर्यथा स्यात्(), जिहीतेर्मा भूदित्येवमर्थम्(); अन्यथा हि जीहीतेरपि ग्रहणं स्यात्()। विकारनिर्देशे तु यस्येदृशं रूपं तस्यैव ग्रहणं भवतीति न भवत्येष प्रसङ्गः। "भूमित उज्जिहोते" इति।

जिहीतेरिहाग्रहणात्? तत्सम्बन्धिनोऽपादानाद्भवत्येव। हाङो ङित्वादात्मनेपदम्(), "भृजामित्()" ७।४।७६ इत्यभ्यासस्येत्वम्(), "ई हल्यघोः" ६।४।११३ इति धातोरीत्वम्()। "कथं मन्त्रो हीनः स्वरतो वर्णतो वा" इति? यदाह--जहातेः प्रतिषेधः क्रियते ततस्तस्मिन्न प्राप्नेती त्यभिप्रायः। "नैषा पञ्चमी" इति। पञ्चम्या अविहितत्वा।, उपचारेण तसिः, नैषा पञ्चमीत्युक्तम्()। किं तर्हि? तृतीयेति। अत्रापि तृतीयाया विहितत्वात्()। तृतीयेत्युक्तस्तसिः। तेनैतत्? सूचयति--नायमिह तसिरनेन सूत्रेण पञ्चम्या विहितः, किं तर्हि? "अतिग्रहाव्यथनक्षे पेष्वकत्र्तरि तृतीयायाः" ५।४।४६ इत्यनुवत्र्तमानं "हीयमानपापयोगच्च" ५।४।४७ इति तृतीयाया इति। सा च तृतीया हेतौ करणे वा द्रष्टव्या॥

तत्त्व-बोधिनी

अपादाने चाऽहीयरूहोः १५७२, ५।४।४५

ग्रामत इथि। एवम् अध्ययनात्पराजयते, अध्ययनत इत्याद्यपि बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ५।४।४६

अतिक्रम्य ग्रहः अतिग्रहः। अचलनम् अव्यथनम्। क्षेपो निन्दा। अतिग्रहादिविषये या तृतीया तदन्ताद् वा तसिः प्रत्ययो भवति, सा चेत् कर्तरि न भवति। वृत्तेन अतिगृह्यते वृत्ततो ऽतिगृह्यते। चारित्रेण अतिगृह्यते चारित्रतो ऽतिगृह्यते। सुष्ठुवृत्तवानन्यानतिक्रम्य वृत्तेन गृह्यते इत्यर्थः। अव्यथने वृत्तेन न व्यथते वृत्ततो न व्यथते। चारित्रेण न व्यथते चारित्रतो न व्यथते। वृत्तेन न चलति इत्यर्थः। क्षेपे वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः। चारित्रेण क्षिप्तः चारित्रतः क्षिप्तः। वृत्तेन निन्दितः इत्यर्थः। अकर्तरि इति किम्? देवदत्तेन क्षिप्तः।

न्यासः

अतिग्रहाव्यथनक्षेपेष्वकत्र्तरि तृतीयायाः। , ५।४।४६

"अतिक्रम्य" इति। अनेनातिशब्दोऽत्रातिक्रमे वत्र्तत इति दर्शयति। "अचलनमध्यथनम्()" इति। "व्यथभयचलनयोः" (धा।पा। ७६४) इति पठ()ते, तस्येह चलने वृत्तिमाचष्टे। वृत्तेनेति हेतौ करणे वा तृतीया॥

तत्त्व-बोधिनी

अतिग्रहाऽव्यथनक्षेपेष्वकर्तरि तृतीयायाः १५७३, ५।४।४६

अतिगृह्त इति। अन्याऽतिक्रमेण लौकैर्गृह्त इत्यर्थः। फलितमाह---अन्यानतिक्रम्य वर्तत इति।

---

सूत्रम्

काशिका-वृत्तिः

हीयमानपापयोगाच् च ५।४।४७

अकर्तरि तृतीयायाः ५।४।४६ इत्येव। हीयमानेन पापेन च योगो यस्य तद् वाचिनः शब्दात् परा या तृतीया विभक्तिरकर्तरि तदन्ताद् वा तसिः प्रत्ययो भवति। वृत्तेन हीयते वृत्ततो हीयते। चारित्रेण हीयते चारित्रतो हीयते। पापयोगात् वृत्तेन पापः वृत्ततः पापः। चारित्रेण पापः चारित्रतः पापः। क्षेपस्य च अविवक्षायां तत् त्वाख्यायाम् इदम् उदाहरणम्। क्षेपे हि पूर्वेण एव सिद्धम्। अकर्तरि इत्येव, देवदत्तेन हीयते।

न्यासः

हीयमानपापयोगाच्च। , ५।४।४७

"वृत्तेन हीयते, वृत्ततः पापः" इत्यत्र वृत्तस्य हीयमानेन पापेन योगे तृतीया हेतौ, करणे वा। क्षेपविवक्षायामिदमुदाहरणं कस्मान्न भवति? इत्याह--"क्षेपस्य च" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

षष्ठ्या व्याश्रये ५।४।४८

नानापक्षसमाश्रयो व्याश्रयः। व्याश्रये गम्यमाने षष्ठ्यन्ताद् वा तसिः प्रत्ययो भवति। देवा अर्जुनतो ऽभवन्। आदित्याः कर्णतो ऽभवन्। षष्ठी च अत्र पक्षापेक्षैव। अर्जुनस्य पक्षे, कर्णस्य पक्षे इत्यर्थः। व्याश्रये इति किम्? वृक्षस्य शाखा।

न्यासः

षष्ठ�आ व्याश्रये। , ५।४।४८

---

सूत्रम्

काशिका-वृत्तिः

रोगाच् च अपनयने ५।४।४९

रोगो व्याधिः। तद् वाचिनः शब्दाद् या षष्थी विभक्तिः, तदन्ताद् वा तसिः प्रत्ययो भवति अपनयने गम्यमाने। अपनयनं प्रतीकारः। चिकित्सा इत्यर्थः। प्रवाहिकातः कुरु। कासतः कुरु। छर्दिकातः कुरु। प्रतीकारमस्याः कुरु इत्यर्थः। अपनयने इति किम्? प्रवाहिकायाः प्रकोपनं कुरु।

न्यासः

रोगाच्चापनयने। , ५।४।४९

"प्रवाहिकातः" इति। प्रवाहिकाशब्दात्? प्रतीकारापेक्षया षष्ठी, ततस्तसिः॥

तत्त्व-बोधिनी

रोगाच्चापनयने १५७४, ५।४।४९

प्रवाहिकात इति। "प्रच्छर्दिकातः कुर्वि"त्याद्यप्युदाहरणम्। प्रवाहिका---विषूचिका। प्रच्छर्दिका तु---वमनव्याधिः।

---

सूत्रम्

काशिका-वृत्तिः

अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५।४।५०

कारणस्य विकाररूपेण अभूतस्य तदात्मना भावः अभूततद्भावः। सम्पद्यतेः कर्ता सम्पद्यकर्ता। सम्पद्यकर्तरि वर्तमानात् प्रातिपदिकातभूततद्भावे गम्यमाने कृभ्वस्तिभिर् धातुभिर् योगे च्विः प्रत्ययो भवति। अशुक्लः शुक्लः सम्पद्यते, तं करोति शुक्लीकरोति। मलिनं शुक्लीकरोति। शुक्लीभवति। शुक्लीस्यात्। घटीकरोति मृदम्। घटीभवति। घटीस्यात्। अभूततद्भावे इति किम्? शुक्लं करोति। न अत्र प्रकृतिर् विवक्षिता। कृभ्वस्तियोगे इति किम्? अशुक्लः शुक्लो जायते।

सम्पद्यक्रतरि इति किम्, यावता अभूततद्भावसामर्थ्याल् लब्धम् एव सम्पद्यकर्तृत्वम्? कारकान्तरसम्पत्तौ मा भूत्, अदेवगृहे देवगृहे सम्पद्यते। देवगृहस्याधेयविशेषसम्बन्धेन अभूततद्भावः सत्त्वाधिकरणस्य, न कर्तुः इति?।

लघु-सिद्धान्त-कौमुदी

कृभ्वस्तियोगे संपद्यकर्तरि च्विः १२४५, ५।४।५०

(अभूततद्भाव इति वक्तव्यम्)। विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे॥

न्यासः

अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः। , ५।४।५०

"कारणस्य विकाररूपेणाभूतस्य" इति। कारणम्()=प्रकृतिः, तस्यैवोत्तरमवस्थान्तरम्()=विकारः। तेन विकाररूपेणाभूतस्याजातस्येत्यर्थः। कुतः पुनरयमभूततद्भावविशेषो लभ्यते? अभूतग्रहणादिह हि भावः=जन्म, सत्ता वा। यदि हि सत्ता भावः स्यात्(), भ्वस्तिभ्यामेव सम्बन्धः स्यात्(), न करोतिना। न हि यत्? क्रियते सा सत्ता। धातुत्रयोपादाने च सति यस्मिन्नर्थे गृह्यमाणे त्रिभिरपि धातुभिर्योगोऽस्ति स एवाश्रयितुं युक्तः; स च जन्मैव, न सत्ता। कृगरहणादेष विशेषो लभ्यते। "तदात्मना भावः" इति। तच्छब्देन विकारः परामृश्यते, स एव विकारः; आत्मा=स्वभावः, तेन विकारात्मा=अभूततद्भावः। अपि तु लब्धसत्ताकस्यैव कारणस्य प्रागप्रतिपन्नविकारस्योत्तरकालविकारभूमावाप्तिरभूततद्भाव इत्युक्तं भवति। तेन यत्र प्रकृतिर्न विवक्ष्यते, तत्र प्रत्यो न भवति, यथाशुक्लं करोतीति प्रत्युदाहरणे। न हि प्रकृतावत्र विवक्षितायामेवंविधोऽभूततद्भावो गम्यते। तच्छब्देन प्रकृतिविकारयोरभेदविवक्षा प्रतिपाद्यते। तेन यत्र प्रकृतिविकाररूपमापद्यमाना तस्मादभिन्ना विवक्ष्यते, तत्रैव प्रत्ययो भवति; न तु यत्र कारणतः कार्यस्य भेदो विवक्ष्यते। यत्र तु भेवः, यथा--पटं करोतीति, न तत्र। "सम्पद्यतेः कत्र्ता सम्पद्यकत्र्ता" इति। कथं पुनस्तिङन्तेन समासः? कथं च तिङो लोपः? सौत्रत्वात्()? निर्देशस्य सत्त्वात् सर्वमिदमुपपद्यते। अथ वा--सम्पूर्वात्? पदेरत एव निपातनाद्यत्प्रत्ययः, तदन्तस्यायं विशेषमसमासः। तत्? तिङन्तस्य वृत्तिकरणे त्वर्थप्रदर्शनमात्रं कृतम्(); न पुनरेतद्विग्रहवाक्यम्()। "सम्पत्तिः" इति वक्तव्ये, "सम्पद्यकत्र्तेरि" इत्युक्तं वैचित्र्यार्थम्? "शूक्लीकरोति" इति। "अस्य च्वौ" ७।४।३२ इतीत्त्वे "च्वौ" ७।४।२६ इति दीर्घत्वम्()। चव्यन्तस्याव्ययत्वात्? सोर्लोपः। "नात्र प्रकृतिविवक्षिता" इति। विकारमात्रस्य विवक्षितत्वात्()। यत्र च प्रकृतिर्न विवक्ष्वते, नात्राभूततद्भावो गम्यत इति न भवति प्रत्ययः। "अभूततद्भावसामत्र्याल्लब्धमेव" इत्यादि। यो ह्यविकाररूपेण भूतो विकारात्माना भवति, स नियोगतस्तेन रपेण सम्पद्यमानः सम्पद्यकत्र्ता भवतीत्येतत्? सामथ्र्यात्? स्वरूपान्तरेण सम्पद्यते। तत् कर्त्तृसंज्ञकमेव भवतीति नायं नियोगत इत्यभिप्रायेणाह--"कारकान्तरसम्पत्तौ मा भूत्()" इति। "अदेवगृहे" इत्यादि। अत्र देवगृहस्य देवताराधनत्वेनाभूतस्य प्रागुत्तरकालं देवतादेयसम्बन्धेन तदात्मकत्वमापद्यमानस्य भवत्ययमभूततद्भावः; स त्वधिकरणस्य, न कर्त्तुः। तथा हि--तद्रूपान्तरमापद्यमानमपि न कर्त्तृसंज्ञम्(), किं तर्हि? अधिकरणसंज्ञमेव; अन्यथा सप्तमी न स्यात्()। च्वौ इकार उच्चारणार्थः। चकारः प्रकृतदेरन्तोदात्तार्थश्चः। वकारस्य "वेरपृक्तस्य" ६।१।६५ इति लोपः॥

बाल-मनोरमा

कृभ्वस्तियोगे संपद्यकर्तरि च्विः , ५।४।५०

कृभ्वस्तियोगे। अभूतेति। येन रूपेण प्रागभूतं यद्वस्तु तस्य तद्रूपप्राप्तावित्यर्थः। एवंच यत्र प्रकृतिस्वरूपमेव विकाररूपमापद्यमानं विकाराऽभेदेन विवक्ष्यते, तत्रैवायं प्रत्यय इति लभ्यते। संपद्यकर्तरीत्येकं पदम्। संपदनं--सम्पद्यः। संपूर्वकात्पदधातोरत एव निपातनादेव भावे कृत्संज्ञः शः, दिवादित्वाच्छ्यन्। संपद्यस्य कर्तेति षष्ठीसमासः।

संपद्यमाने वर्तमानादिति यावत्। केन रूपेण कस्य संपत्तिरित्याकाङ्क्षायाम्, "अभूततद्भावे" इति वार्तिकात्प्रकृतेर्विकाररूपेण संपत्तिरिति लभ्यते। तत्र विकारवाचकादेव प्रत्ययः, अस भुवी"ति धातुभिर्योगे सतीत्यर्थः। "च्विप्रत्यये चकार इत्, इकार उच्चारणार्थः।

तत्त्व-बोधिनी
कृभ्वस्तियोगे संपद्यकर्तरि च्विः १५७५, ५।४।५०

कृभ्वस्तियोगे। योग इति किम्()। अशुक्लः शुक्लो जायते।

---

सूत्रम्
काशिका-वृत्तिः
अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश् च ५।४।५१

अरुःप्रभ्र्तीनाम् अन्तस्य लोपो भवति च्विश्च प्रत्ययः। अत्र सर्वविशेषणसम्बन्धात् पूर्वेण एव प्रत्ययः सिद्धः, लोपमात्रार्थ आरम्भः। अनरुररुः सम्पद्यते, तं करोति अरूकरोति। अरूभवति। अरूस्यात्। मनस् उन्मनीकरोति। उन्मनीभवति। उन्मनीस्यात्। चक्षुस् उच्चक्षूकरोति। उच्चक्षूभवति। उच्चक्षूस्यात्। चेतस् विचेतीकरोति। विचेतीभवति। विचेतीस्यात्। रहस् विरहीकरोति। विरहीभवति। विरहीस्यात्। रजस् विरजीकरोति। विरजीभवति। विरजीस्यात्।
न्यासः
अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च। , ५।४।५१

"अत्र विशेषणसम्बन्धात्()" इत्यादि। अभूततद्भावादीनि सर्वाणि विशेषणानीह पूर्वसूत्रादनुवत्र्तन्ते। तस्मात्? सर्वविशेषणसम्बन्धात्? पूर्वेणैवारुःप्रभृतिभ्यः प्रत्ययः सिद्ध इति नासौ दिधीयते, लोपमात्रं तु न प्राप्नोति। अतस्तदर्थ वचनम्()। यदि पुनरनेनैव प्रत्ययविधिः स्यातद्(), दुर्मनीकरोतीत्यादौ प्रत्ययो न स्यात्(); ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात्? (व्या।प। ८९) पूर्वेण तु तदन्तादपि भवति; तत्र ग्रहणवत्प्रातिपदिकस्याभावात्()। "उन्मनीकरोति" इत्येवमादौ बहुव्रीहेः प्रत्ययः॥
बाल-मनोरमा
अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च , ५।४।५१

अरुर्मनश्चक्षुः।एषामिति। अरुस्, मनस्, चक्षुस्, चेतस्, रहस्, रजस् इत्येतेषामित्यर्थः। पूर्वेणैव प्रत्ययसिद्धेस्तत्संनियोगेन अन्त्यलोप इह विधीयते। अरूकरोतीति। अनरुः अरुः सम्पद्यते, तत्करोतीत्यर्थः। प्रकृतेरन्त्यलोपे उकारस्य "च्वौ चे"ति दीर्घः। उन्मनीकरोतीति। अनुन्मना उन्मनाः संपद्यते तं करोतीत्यर्थः। च्वौ अन्त्यलोपः, ईत्त्वं च। उच्चक्षूकरोतीति। अनुच्चक्षुरुच्चक्षुः सम्पद्यते, तं करोतीत्यर्थः। च्वौ अन्त्यलोपः, दीर्घश्च। उच्चेतीकरोतीति। अनुञ्चेता उच्चेताः सम्पद्यते, तं करोतीत्यर्थः। च्वौ अन्त्यलोपः, ईत्त्वं च। विरहीकरोतीति। रहो विजनप्रदेशः, विशिष्टं रहो विरहः। अविरहो विरहः संपद्यते तत्करोतीत्यर्थः। च्वौ अन्त्यलोपः, ईत्त्वं च। विरजीकरोतीति। अविरजा विरजाः सम्पद्यते तं करोतीत्यर्थः। अन्त्यलोपे अस्य च्वौ ईत्त्वं च।

तत्त्व-बोधिनी
अरुर्मनश्चक्षु श्चेतोरहोरजसां लोपश्च १५७८, ५।४।५१

अरुर्मनः। च्विश्चेति। पूर्वेण सिद्धस्यापि च्वेरयमनुवादः। लोपस्तु तत्संनियोगशिष्टत्वार्थः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा साति कात्स्न्र्ये ५।४।५२

अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि इति सर्वम् अनुवर्तते। अस्मिन् विषये विभाष सातिः प्रययो भवति कात्स्न्र्ये गम्यमाने। यदि प्रक्रितः कृत्स्नां विकारात्मतामापद्यते इत्यर्थः। अग्निसाद्भवति शस्त्रम्, अग्नीभवति शस्त्रम्। उदकसाद्भवति, उदकीभवति लवणम्। कात्स्न्र्ये इति किम्? एकदेशेन पटः शुक्लीभवति। विभाषाग्रहणम् च्वेः प्रापकम्। प्रत्ययविकल्पस् तु महाविभाषय एव सिद्धः।

लघु-सिद्धान्त-कौमुदी

विभाषा साति कात्स्न्र्ये १२४७, ५।४।५२

च्विविषये सातिर्वा स्यात्साकल्ये॥

न्यासः

विभाषा साति कात्स्न्र्ये। , ५।४।५२

"विभाषाग्रहणं च्वेः प्रापकम्()" इति। समुच्चयार्थत्वात्()। समुच्चयार्थत्वं त्वनेकार्थत्वान्निपातस्य। यद्येवम्(), चकार एव कस्मान्नोह्नः? वैचित्र्यात्? सूत्रकृतेः। अथ प्रत्ययदिकल्पार्थमेवेति विभाषाग्रहणं कस्मान्न भवति? इत्याह--"प्रत्ययविकल्पस्तु" इत्यादि॥

बाल-मनोरमा

विभाषा साति कात्स्न्र्ये , ५।४।५२

विभाषा साति। "साती"ति लुप्तप्रथमाकम्। च्विविषये इति। अभूततद्भावे संपद्यकर्तरि कृभ्यस्तियोगे इत्यर्थः।

तत्त्व-बोधिनी

विभाषा साति कात्स्न्र्ये १५७९, ५।४।५२

विभाषा साति। विभाष्यते विकल्प्यते इति विभाषा। "गुरोश्च हलः"इत्यकारप्रत्ययः। ततः टाप्। न त्विदमव्ययं "द्वयोर्विभाषयोर्मध्ये","पयसस्तु विभाषया"इत्यादौ बिभक्तेर्दर्शनात्। कृत्स्नमिति। सर्वावयवोपेतमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अभिविधौ सम्पदा च ५।४।५३

अभिविधिः अभिव्याप्तिः। अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति सम्पदा योगे, चकारात् कृभ्वस्तिभिश्च। विभाषाग्रहणानुवृत्तेः च्विरप्यभ्यनुज्ञायते। स तु कृभ्वस्तिभिरेव योगे भवति, न सम्पदा। अग्निसात्सम्पद्यते, अग्निसाद्भवति। उदकसात्सम्पद्यते, उदकसाद्भवति लवणम्। अग्नीभवति। उदकीभवति। अथाभिविधेः कात्स्न्र्यस्य च को विशेषः? यत्र एकदेशेन अपि सर्वा प्रकृतिर् विकारम् आपद्यते सो ऽभिविधिः, यथा अस्यां सेनायाम् उत्पातेन सर्वं

शस्त्रम् अग्निसात्सम्पद्यते, वर्षासु सर्वं लवणमुदकसात्सम्पद्यते इति। कात्स्न्यं तु सर्वात्मना द्रव्यस्य विकाररूपापत्तौ भवति।

न्यासः

अभिविधौ सम्पदा च। , ५।४।५३

"स तु कृभ्वस्तिभिरेव योगे भवति" इति। कृभ्वस्तिभिरित्येव योग इत्यनेन सम्बन्धस्यव तस्येहानुवृत्तेः। अभिविधेः कात्स्न्यस्य चावश्यं विशेषेण भवितव्यम्(); अन्यथा सूत्रद्वयारम्भो निष्फलः स्यात्(), एकेनैव सिद्धत्वात्()। स च विशेषो न ज्ञायते, इत्यतस्तत्? पृच्छति--"अताभिविधेः" इत्यादि। "यथास्यां सेनायाम्()" इत्यादि। अथ शेषाणां शस्त्राणामेकदेशेन ह्यात्मना सम्बन्धमात्रं विवक्षितम्(), न सर्वात्मना विकाररूपापत्तिः। "वर्षासु सर्वं लवणमुदकसात्सम्पद्यते" इति। अत्रापि सर्वासां लवणव्यक्तीनामेकदेशेनोदकात्मताविकारेण सम्बन्धमात्रं विवक्षितम्()। न त्वेकस्य सर्वात्मना विकाररूपापत्तिः। "कात्स्न्यं तु" इत्यादि। यत्र ह्येकस्यापि द्रव्यस्य सर्वात्मना विकाररूपापत्तिः, न त्वेकदेशेन, तत्र कात्स्न्यं भवति। तत्र यदि पूर्वो योगो नारब्येत, यत्रैकद्रव्यविशेषविषयं कात्स्न्यं तत्र प्रत्ययोगो न स्यात्(); अभिविधेरभावात्()। अथायं नारभ्येत? यत्र सर्वाः प्रकृतय एकदेशेन विकारमापद्यन्ते न स्यत्()। तस्मादुभयमारब्धध्यम्()॥

तत्त्व-बोधिनी

अबिविधौ संपदा च १५८०, ५।४।५३

अग्निसाद्भवति शस्त्रमिति। जातावेकवचनम्। सर्वाणि शस्त्राणीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तदधीनवचने ५।४।५४

अभूततद्भावे इति निवृत्तम्, अर्थान्तरोपादानात्। कृभ्वस्तियोगे सम्पदा च इति वर्तते। तदधीनं तदायत्तं, तत्स्वामिकम् इत्यर्थः। स्वामिसामान्यम्, ईशितव्यसामान्यम् च तदधीनशब्देन निर्दिश्यते। स्वामिविशेषवाचिनः प्रातिपदिकातीशितव्ये ऽभिधेये सातिः प्रत्ययो भवति कृभ्वस्तिभिः सम्पदा च योगे। राजाधीनं करोति राजसात्करोति। राजसाद्भवति। राजसत्स्यात्। राजसात्सम्पद्यते। ब्राह्मणसत्करोति। ब्राह्मणसाद्भवति। ब्राह्मणसात्स्यात्। ब्राह्मणसात्सम्पद्यते।

न्यासः

तदधीनवचने। , ५।४।५४

"तदधीनं तदायत्तम्()" इति। तस्यायत्तं तदायत्तम्()। तच्छब्देन स्वामिसामान्यमुच्यते। अधीनशब्देनापीशितव्यसामान्यम्()। अनन्तरोक्तमेवार्थं विस्पष्टीकर्तुमाह---"तत्स्वमिकमित्यर्थः" इति। स स्वामी यस्य तत्? तत्स्वामिकम्()। अत्राप्यन्यपदार्थप्रधानत्वाद्बहुव्रीहिः। ईशितव्यस्य चान्यपदार्थत्वात्? तस्य प्रधानभावः। स्वामिनस्तु तदुपलक्षणत्वाद्गुणभावः। "स्वामिसामान्यम्()" इत्यादि। स्वामिसामान्यम्()ी()आरसामान्यम्(), ईशितव्यसामान्यमितततततत्येतदुभयं तदधीनशब्देनोच्यते। कथं कृत्वा? इह "अधिरी()आरे" १।४।९६ इत्यधिशब्दस्य कर्मप्रवचनीयसंज्ञा, तेन योगे "यस्मादधिकं यस्य चे()आर" २।३।९ इति च सप्तमी। स चे()आर ईशितव्यापेक्षित इति सामर्थ्यादीशितव्याभिधानमधिशब्देन योगे भवति। अदिशब्दश्चायं शौण्डादिषु पठ()ते, तत्र "सप्तमी शौण्डैः" २।१।३९

इति समासे कृते पूर्वपदस्य स्वाभिसामान्यमर्थो भवति, उत्तरपदस्य चेशितव्यसामान्यम्()। अवडक्षादिसूत्रेण ५।४।७ खप्रत्यये कृते स एवायमर्थो भवति, तस्य तत्स्वामिकत्वादित्येवं च कृत्वा। स्वामिसामान्यमीशितव्यासामान्यं तदधीनशब्देनोच्यते। तत्र स्वामिसामान्यं प्रकृत्यर्थः, ईशितव्यसामान्यं तु प्रत्यायर्थ इत्यत आह--"स्वामिविशेषवाचिनः" इत्यादि॥

बाल-मनोरमा

तदधीनवचने , ५।४।५४

तदधीनवचे। शेषपूरणेन सूत्रं व्याचष्टे--सातिः स्यादित्यादिना। "अभूततद्भावे" इति निवृत्तमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

देये त्रा च ५।४।५५

तदधीनवचने च इति अनुवर्ते। तस्य विशेषणं देयग्रहणम्। दातव्यं देयम्। तदधीने देये त्रा प्रत्ययो भवति, चकारात् सातिश्च कृभ्वस्तिभिः सम्पदा च योगे। ब्राह्मनेभ्यो देयम् इति यद् विज्ञातम्, तद् यदा तेषा समर्पणेन तदधीनं क्रियते तदात्रा प्रत्ययः। ब्राह्मणाधीनं देयं करोति ब्राह्मणसात्करोति। ब्राह्मणत्रा करोति। ब्राह्मणत्रा भवति। ब्राह्मणत्रा स्यात्। ब्राह्मणत्रा सम्पद्यते। देये इति किम्? राजसाद् भवति राष्ट्रम्।

न्यासः

देये त्रा च। , ५।४।५५

"राजसाद्भवति राष्टम्()" इति। पूर्वेण सातिरेव भवति॥

बाल-मनोरमा

देये त्रा च , ५।४।५५

देये त्रा च। तदधीनवचन इत्येवानुवर्तते। कृभ्वादियोगे इति। कृभ्वस्तिभिः संपदा च योगे इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर् बहुलम् ५।४।५६

सातिर् निवृत्तः, त्रा प्रत्ययो ऽनुवर्तते। देवादिभ्यः प्रातिपदिकेभ्यः द्वितीयासप्तम्यन्तेभ्यः त्रा प्रत्ययो भवति बहुलम्। कृभ्वस्तिभिः इति न अत्र सम्बध्यते। सामान्येन विधानम्। देवान् गच्छति देवत्रा गच्छति। देवेषु वस्ति देवत्रा वसति। मनुष्यान् गच्छति मनुष्यत्रा गच्छति। मनुष्येषु वसति मनुष्यत्रा वसति। एवम् अन्येष्वप्युदाहार्यम्। पुरुषान् गच्छति पुरुत्रा गच्छति। मर्त्यान् गच्छति मर्त्यत्रा गच्छति। मर्त्येषु वसति मर्त्यत्रा वसति। बहुलवचनादन्यत्र अपि भवति, बहुत्रा जीवतो मनः इति।

न्यासः

देवमनुष्यपुरुषपुरुमत्र्येभ्यो द्वितीयासप्तम्योर्बहुलम्?। , ५।४।५६

अथ बहुलग्रहणं किमर्थम्(), यावता "दिभाषा साति कात्र्स्न्ये" ५।४।५२ इत्यत्र विभाषाग्रहमनुवर्त्तिष्यत एव, विकल्पेन

प्रत्ययो भविष्यति? इत्याह--"बहुलग्रहणादन्यत्रापि लभ्यते" इति। तस्माद्विभाषायां प्रकृतायां यद्बहुलवचनं कृतम्(), तदन्यत्रापि यथा स्यादित्यभिप्रयः॥

बाल-मनोरमा

देवमनुष्यपुरुषपुरुमत्र्येभ्योद्वितीयासप्तम्योर्बहुलम् , ५।४।५६

देवमनुष्यपुरुष। एभ्य इति। देव, मनुष्य, पुरुष, पुरु, मत्र्य-इत्येतेभ्य इत्यर्थः। अत्यन्तस्वार्थिकोऽयम्। "साती"ति "कृभ्वस्तियोगे" इत्यपि निवृत्तम्। देवत्रा वन्दे रमे वेति। देवान् वन्दे, देवेषु रमे वेत्यर्थः। मनुष्यत्रा, पुरुषत्रा। पुरुशब्दो बहुलपर्यायः। पुरुत्रा। मत्र्यत्रा। अन्यत्रापीति। देवादिभ्योःऽन्यत्रापीत्यर्थः। बहुत्रा जीवतो मन इति। जीवतो जन्तोर्मनो बहुषु विषयेषु गच्छति। बहून् व्याप्नोतीत्यर्थः।

तत्त्व-बोधिनी

देवमनुष्यपुरुषपुरुमत्र्येभ्योद्वितीयासप्तम्योर्बहुलम् १५८१, ५।४।५६

वन्दे रमे इति। देवान् बन्दे--देवत्रा वन्दे। देवेषु रमे--देवत्रा रमे इत्यर्थोऽत्र पर्यवसन्नः। एवं मनुष्यन् गच्छति--मनुष्यत्रा गच्छति। मनुष्येषु वसति। पुरुषान् गच्छति---परुरत्रा गच्छति। पुरुषेषु वसति---पुरषत्रा वसति। "पुरु"शब्दो बहुपर्यायः। पुरून् गच्छति पुरुष वसति वा पुरुत्रा। मत्र्यान्मत्र्येषु वा---मत्र्यत्रा।

डाचि विवक्षिते द्वे बहुलम्। डाचि विवक्षित इति। परसप्तम्यां त्वन्योन्याश्रयः स्यात्। डाचि कृते द्वित्वे सति व्द्यजवरार्धता, तस्यां च सत्यां डाजिति भावः।

नित्यमाम्नेडिते डाचीति वक्तव्यम्।खरटखरटाकरोतीति। द्वित्वपररूपादि प्राग्वात्। "व्द्यजवरार्धा"दित्यक्ते त्वत्र डाज्न स्यात्। न ह्यत्रार्ध व्द्यच्, किं तु्त्र्यच्। अनेकाच इत्येवेति। "व्दयजवरार्धा"दित्यपनीयेत्यर्थः। पटितीति। "अव्यक्तानुकरणस्यात इतौ"इति पररूपम्। नन्वत्र करोतिना योगो दुर्लभः, इतिशब्देन व्यवधानात्, तथा चाऽनिताविति व्यर्थमिति चेत्। अत्राहुः---इतिशब्देन करोत्यर्थगतप्रकार एव परामृश्यते, इत्येवंप्रकारेण करोतीति। तथा च पटच्छब्दस्यार्थद्वारा योगोऽस्त्येवेति।

---

सूत्रम्

काशिका-वृत्तिः

अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् ५।४।५७

यत्र ध्वनावकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते सो ऽव्यक्तः। तस्य अनुकरणम् अव्यक्तानुकरणम्। द्व्यचवरार्धं यस्य तद् द्व्यजवरार्धम्। अवरशब्दो ऽपकर्षे। यस्य अपकर्षे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यच्कं सम्पद्यते, तस्मादव्यक्तानुकरणादनितिपराड् डाच् प्रत्ययो भवति। कृभ्वस्तियोगे इत्यनुवर्तते। यस्य च द्विर्वचने कृते द्व्यजवरार्धं ततः प्रत्ययः। डाचि बहुलं द्वे भवतः इति विषयसप्तमी। डाचि विवक्षिते द्विर्वचनम् एव पूर्वं क्रियते, पश्चात् प्रत्ययः। पटपटाकरोति। पटपटाभवति। पटपटास्यात्। दमदमाकरोति। दमदमाभवति। दमदमास्यात्। अव्यक्तानुकरणातिति किम्? दृषत्करोति। द्वजवरार्धातिति किम्? श्रत्करोति। अवरग्रहणम् किम्? खरटखरटाकरोति। त्रपटत्रपटाकरोति। अनितौ इति किम्? पटिति करोति। चकारः स्वरार्थः, स्वरितबाधनार्थः। पटपटासि, अत्र स्वरितो वा ऽनुदात्ते पदादौ ८।२।६ इति स्वरितो न भवति। केचिद् द्व्यजवरार्ध्यादिति यकारं पठन्ति, स स्वर्थिको विज्ञेयः।

लघु-सिद्धान्त-कौमुदी

अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् १२५०, ५।४।५७

द्व्यजेवावरं न्यूनं न तु ततो न्यूनमनेकाजिति यावत्। तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे। (डाचि विवक्षिते द्वे बहुलम्)। इति डाचि विवक्षिते द्वित्वम्। (नित्यमाम्रेडिते डाचीति वक्तव्यम्)। डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटाकरोति। अव्यक्तानुकरणात्किम्? ईषत्करोति। द्व्यजवरार्धात्किम्? श्रत्करोति। अवरेति किम्? खरटखरटाकरोति। अनितौ किम्? पटिति करोति॥
लघु-सिद्धान्त-कौमुदी
इति स्वार्थिकाः १६ १२५०, ५।४।५७

॥ इति तद्धिताः॥
लघु-सिद्धान्त-कौमुदी
अथ स्त्रीप्रत्ययाः १२५०, ५।४।५७

न्यासः
अव्यक्तानुकरणाद्द्व्यजवराद्र्धदनितौ डाच्?। , ५।४।५७

"अव्यकतस्यानुकरणमव्यक्तानुकरणम्()" इति। यद्यप्यनुकरणे वर्णविशेषो रूपेण न प्रकाशते, तथापि ध्वनेः समानतया तन्मात्रसादृश्येन स तवनुक्रियत इति तस्याप्यनुकरणमित्युच्यते। द्व्यजर्द्धं भवति तस्मात्? प्रत्ययो भवति, यस्य न ततोऽपि न्यूनतरमेकाज्भवति। यद्यकृते द्विवचने यस्य द्व्यजवराद्र्धता ततो डाज्भवतीति ज्ञायते, ततः पटदित्यादेर्न स्यात्(); न ह्त्र द्व्यजवरमर्द्धं भवतीत्येतच्छेतसि कृत्वाऽऽह--"यस्य च" इत्यादि। नन्वेवं सति डाचि परभूते तदाश्रये द्विर्वचने कृते द्व्यजवराद्र्धता भवति, तस्याञ्च सत्यां डाजितीतरेतराश्रयः प्रसजति। इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्पन्ते? इत्याह---"डाचि बहुलम्()" इत्यादि। यद्येषा परसप्तमी स्यात्(), स्यादेष दोषः; न चैषा परसप्तमी, किं तर्हि? विषयसप्तमी। "पटपटाकरोति" इति। पटच्छब्दाड्डाचि विवक्षिते विषयभूते बुद्धिस्थेऽनुत्पन्न एव पूर्वं तावद्()द्विर्वचनं पटच्छब्दस्य क्रियते, तस्मिन्? कृते द्व्यजवराद्र्धतायामुपजातायां डाचि टिलोपः, "नित्यमाभ्रेडिते डाचि" ६।१।९६ इति पूर्वस्य तकारस्य पररपत्वलम्(), "दमदमाकरोति" इति। वमच्छब्दस्य पूर्ववद्()द्विर्वचनम्(), ततो डाच्()। "दृषत्करोति" इति। अत्रापि द्विर्वचने कृते द्व्यजवराद्र्धत भवतीति। नाव्यक्तस्येदमनुकरणम्()। "श्रत्करोति" इति। भवत्येतदव्यक्तानुकरणम्(), न द्व्यजवराद्र्धम्()। कृतेऽपि ह्त्र द्विर्वचने एकाजवरमर्द्धं सम्पद्यते। "खरटखरटाकरोति" इति। खरटवित्येतस्यानुकरणस्यात्र पटदित्येतस्यानुकरणस्येव पूर्ववद्()द्विर्वचनम्(), ततो डाच्()। यदि "द्व्यजद्र्धम्()" एतावदुच्येत, इह प्रत्ययो न स्यात्(), न ह्त्र द्व्यजद्र्धतास्ति। अवरग्रहणे तु सतीहापि भवति। तत्र हि द्व्यचोऽद्र्धाद्यस्य न्यूनतरमद्र्ध तत एव प्रत्ययेन भवितव्यम्(), अन्यतस्तु सर्वतो भवितव्यमेव; अन्यथाऽवरग्रहणमनर्थकमेवेति द्व्यजद्र्धादित्येवं ब्रायात्()। "पटिति करोति" इति। "अध्यक्तानुकरणस्यात इतौ" ६।१।९५ इत्यच्छब्दस्य पररूपत्वम्()। यद्यत्र डाच्? स्यात्(), तस्य डाजन्तस्य परमिति शब्दमुच्चार्य करोतिरनन्तरः स्यादिति, न च तत्परम्(); तच्चानिष्टम्()। अथ चकारः किमर्थः, यावलतान्तोदात्तत्वं कृत्वादस्य प्रत्ययस्वरेणैव सिद्धम्()? इत्यत आह--"चकारः" इत्यादि। पटपटा असि इति स्थिते "तिङ्ङतिङः" ८।१।२८ इत्यसिशब्दस्य निघाते कृते "स्वरितो वानुदात्तेऽपदादौ" ८।२।६ इति स्वरित एकादेशः प्राप्नेति, न च स्वरित इष्यते, तदर्थ चकारः। "स्वार्थिको विज्ञेयः" इति। व्यतिरिक्तस्यार्थस्याभावात्()। केन पुनः स्वार्थिको यकारः? अनेनैव निपातनेन॥
बाल-मनोरमा
अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् , ५।४।५७

अव्यक्तानुकरणात्। यत्र ध्वनौ अकारादयो वर्णविशेषा न व्यज्यन्ते सोऽव्यक्तो ध्वनिः। तस्यानुकरणम्--अव्यक्तानुकरणम्। "द्व्यजवरार्ध"शब्दं व्याचष्टे--द्व्यजिति। द्वावचौ यस्येति विग्रहः। अवरशब्दं व्याचष्टे--न्यूनमिति। द्व्यजेव अवरं=न्यूनसंख्याकमिति सामानाधिकरण्येनान्वयः। न तु ततो न्यूनमिति। एकाच्कमित्यर्थः। फलितमाह--अनेकाजिति यावदिति। तादृशमर्थमिति। अनेकाच्कम् अर्धं=भागो यस्य तत्--द्व्यजवरार्धम्। तस्मादित्यर्थः। कृभ्वस्तिभिर्योगे इति। मण्डूकप्लुत्या तदनुवृत्तेरिति भावः।

तथा च अनेकाच्कभागयुक्तादव्यक्तानुकरणाच्छब्दात्कृभ्वस्तियोगे डाच् स्यादिति फलितम्। अथ पटच्छब्दादव्यक्तानुकरणाड्डाटमुदाहरिष्यन्पटच्छब्दस्य द्विर्वचनमाह--डाचि विवक्षिते द्वे बहुलमिति। यद्यपि "सर्वस्य द्वे" इति प्रकरणे "डाचि द्वे भवत इति वक्तव्य"मित्येव भाष्ये वार्तिकं पठितम्। तत्र डाचि परत इति नाऽर्थः, तथा सति डाचि सतु पटच्छब्दस्य द्विर्वचनं, सति च द्विर्वचने अद्र्धस्याऽनेकाच्त्वाड्डाजित्यन्योन्याश्रयापत्तेः। अतो डाचि विवक्षिते इत्याश्रितम्।

एवंच डाचि विवक्षिते पटच्छब्दस्य द्विर्वचने सति पटत् पटत् इत्यस्यानेकाच्कार्धभागयुक्तत्वाड्डाच् सूपपादः। पटत्, पटत् आ करोतीति स्थिते प्रक्रियां दर्शयति--नित्यमाम्रेडिते डाचीति। "एकः पूर्वपरयो"रित्यधिकारे पररूपप्रकरणे "नाम्रेडितस्यान्त्यस्य तु वे"ति सूत्रभाष्ये इदं वार्तिकं पठितम्। डाच्परमिति। डाच् परं यस्मादिति विग्रहः। पकार इति। तथा च पटपठत् आ करोतीति स्थिते डित्त्वाट्टिलोपे पटपटाकरोतीति रूपमित्यर्थः। अवरेति किमिति। द्व्यजर्दादित्येवास्त्वित्यर्थः। घरटघरटाकरोतीति। घरटत् इत्यव्यक्तानुकरणाड्डाचि द्विर्वचने पररूपे टिलोपे रूपम्। "द्व्यजर्धा"दित्युक्ते तु अर्धभागस्य घरटदित्यस्य बह्वच्कत्वाड्डाच् न स्यादित्यर्थः। अनेकाच इत्येवेति। "द्व्यजवरार्धा"दित्यपनीय "अव्यक्तानुकरणादनेकाचोऽनितौ डाजि"त्येव सूत्रयितुमुचितमित्यर्थः। एवं हीति। "अनेकाचोऽनितौ" इति पाठे सति पटच्छब्दस्य द्वित्वात्प्रागेव अनेकाच्कत्वाड्डाच् संभवतीति "डाचि परतो द्वित्व"मिति वक्तुं शक्यमिति भावः। पटितीति। "अव्यक्तानुकरणस्ये"ति पररूपम्।

---

सूत्रम्

काशिका-वृत्तिः

कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ५।४।५८

द्वितीयतृतीयादिभ्यः शब्देभ्यः कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे, न अन्यत्र। पुनः कृञ्ग्रहणम् भ्वस्त्योर् निवृत्त्यर्थम्। द्वितीयाकरोति। द्वितीयं कर्षणं विलेखनं करोति इत्यर्थः। तृतीयाकरोति। शम्बाकरोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषति इत्यर्थः। बीजाकरोति। सह बीजेन विलेहनं करोति इत्यर्थः। कृषौ इति किम्? क्वितीयं करोति पदम्।

न्यासः

कृञो द्वितीयतृतीयशभ्बवीजात्? कृषौ। , ५।४।५८

ननु कृभ्बस्तियोग इत्यतः करोतिरनुवत्र्तते, तत्? किमर्थं कञ्ग्रहणम्()? इत्यादि। धातुत्र्यं प्रकृतम्(), तत्रासति कृञ्ग्रहणे यथा कृञो भवति, तथा भ्वस्त्योरपि स्यात्()। तस्मात्? कृञो ग्रहणं भ्वस्तिनिवृत्त्यर्थम्()॥ "संक्यायाः" इति सामीप्यसम्बन्धे षष्ठी। "गुणान्तायाः" इति प्रत्ययविधौ संख्यावाचिनः शब्दस्येत्यनेन संख्याशब्दस्य षष्ठ()न्ततां दर्शयति। अन्तशब्दोऽवयववचनोऽप्यस्ति, तस्येह ग्रहणे संख्याशब्देन सम्बन्धो न स्यात्(), न हि संख्याशब्दस्य गुणशब्दोऽवयव उपपद्यते--इति मत्वा सामीप्यवचनोऽयमन्त शब्द इति दर्शयन्नाह--"गुणशब्दोऽन्ते समीपे" इति।

"यत्र" इति। अनेन प्रकृतिनिर्द्दिश्यते। "सा" इत्यादि। सा प्रकृतिः संख्या गुणान्तेनाभिधीयत इत्यर्थः। गुणशब्दोऽन्ते यस्य स तथोक्तः। "तादृशात्()" इत्यादिना तथाभूतात्? संख्याशब्दात्? सामीप्यवर्त्तिगुणशब्दादित्यर्थः। ननु च सामीप्यवचनान्तशब्दे संख्यायाः पूर्वः परो वा गुण इति विशेषो नावधार्ग्यते, तथा च यत्राप्यसौ पूर्वस्तत्रापि स्यात्()? नैष दोषः; सामीप्येऽयं वर्त्तमानो नियतदेशमेव पराश्रयं वा यत्? सामीप्यं तदाचष्टे, न सामीप्यमात्रम्(); यथा--अवयवे वर्त्तमानो नावयवमात्रमभिधत्ते, किं तर्हि? विशिष्टवेशमेवादयवम्()--"द्विगुणं विलेखनं करोति" इति॥

बाल-मनोरमा

कृञो द्वितीयतृतीयशम्बबीजात्कृषौ , ५।४।५८

कृञो द्वितीय। द्वितीयादिभ्य इति। द्वितीय, तृतीय, शम्ब, बीज इत्येतेभ्य इत्यर्थः। कृञ एव योगे इति। कृञ्ग्रहणात्कृभ्वस्तिर्नानुवर्तत इति भावः। "मद्रात्परिवापणे" इति यावत्कृञ इत्यनुवर्त्तते। बहुलोक्तेरिति। "डाचि बहुलं द्वे भवतः" इति बहुलग्रहणादव्यक्तानुकरणस्यैव डाचि द्वित्वम्। नतु तदन्यस्येत्यर्थः। शम्बशब्दः प्रतिलोमे इति। "वर्तते" इति शेषः। बीजेन सह कर्षतीति। आदौ कृष्टक्षेत्रे कुलत्थादिबीजानां वापे कृते पुनर्बीजैः सह कर्षणं प्रसिद्धम्। "कर्षात्वत" इति सूत्रभाष्यप्रामाण्यात्कृषधातुः शब्विकरणोऽस्ति। तेन शविकरणत्वात्कृषतीत्येव युक्तमिति न शङ्क्यम्।

तत्त्व-बोधिनी

कृञो द्वितीयतृतीयशम्बबीजात्कृषौ १५८२, ५।४।५८

बीजेन सहेति। ननु बीजेन सह भूतलस्य कर्षणे बीजानामपि कर्षणप्रसङ्गाद्विवक्षितार्थो न सिध्यतीति चेत्। अत्राहुः--- वृत्तिविषये बीजशब्दो बीजावापसहिते विलेखने वर्तते। तथा च बीजावापसहितं विलेखनं करोतीत्यर्थ इति।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्यायाश् च गुणान्तायाः ५।४।५९

कृञः इति अनुवर्तते, कृषौ इति च। सङ्ख्यावाचिनः शब्दस्य गुनशब्दो ऽन्ते समीपे यत्र सम्भवति सा सङ्ख्या गुणान्ता इत्युच्यते। तादृशात् प्रातिपदिकात् कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे। द्विगुणं विलेखनं करोति क्षेत्रस्य द्विगुणाकरोति क्षेत्रम्। त्रिगुणाकरोति। कृषौ इति किम्? क्विगुणां करोति रज्जुम्।

बाल-मनोरमा

सङ्ख्यायाश्च गुणान्तायाः , ५।४।५९

सङ्ख्यायाश्च। शेषपूरणेन सूत्रं व्याचष्टे--कृञो योगे इति।

---

सूत्रम्

काशिका-वृत्तिः

समयाच् च यापनायाम् ५।४।६०

कृञः इत्येव। कृषौ इति निवृत्तम्। कर्तव्यस्यावसरप्राप्तिः समयः, तस्य अतिक्रमणं यापना। समयशब्दाद् यापनायां गम्यमानायां डाच् प्रत्ययो भवति कृञो योगे। समयाकरोति। समयं यापयति, कालक्षेपं करोति इत्यर्थः। यापनायाम् इति किम्? समयं करोति।

न्यासः

समयाच्च यापनायाम्?। , ५।४।६०

बाल-मनोरमा

समयाच्च यापनायाम् , ५।४।६०

समयाच्च। कृषाविति निवृत्तम्। समयशब्दाद्यापनायां गम्यमानायां डाजित्यर्थः। समयाकरोतीति। करोतिरिह यापनायामित्याह--यापयतीति।अतिक्रान्तं करोतीत्यर्थः। "अद्येदं कर्तव्य"मित्युक्ते विघ्नं कञ्चिदापाद्य कालक्षेपं करोतीति यावत्।

तत्त्व-बोधिनी

समयाच्च यापनायाम् १५८३, ५।४।६०

समाच्च। कालं यापयतीत्यर्थ इति। "कर्तव्यस्याऽवसरप्राप्तिः समयस्तस्यातिक्रमणं यापना"इति वृत्तिग्रन्थमुपादाय हरदत्तत आह----"अद्य मे पारवस्यं, ()आः पर()आओ वा अस्य समय इत्येव बहुषु दिवसेषु य आह स एवमुच्यते"इति।

---

सूत्रम्

काशिका-वृत्तिः

सपत्रनिष्पत्रादतिव्यथने ५।४।६१

कृञः इत्येव। सपत्रनिष्पत्रशब्दाभ्याम् अतिव्यथने डाच् प्रत्ययो भवति कृञो योगे सति। अतिव्यथनम् अतिपीडनम्। सपत्राकरोति मृगं व्याधः। सपत्रं शरमस्य शरीरे प्रवेशयति इत्यर्थः। निष्पत्राक्रोति। शरीराच्छरमपरपार्श्वे निष्क्रामयति इत्यर्थः। अतिव्यथने इति किम्? सप्त्रं वृक्षं करोति जलसेचकः। निष्पत्रं वृक्षतलं करोति भूमिशोधकः।

न्यासः

सपत्त्रनिष्पत्त्रादतिव्यथने , ५।४।६१

सह त्पत्रेण सपत्त्रः। निर्गतं पत्त्रं यस्मान्निष्पत्त्रः। अतिपीडनम्()तिबाधनम्()॥

बाल-मनोरमा

सपत्रनिष्पत्रादतिव्यथने , ५।४।६१

सपत्र। सपत्रशब्दान्निष्पत्रशब्दाच्च अतिव्यधने डाजित्यर्थः। "व्यध ताडने"चतुर्थान्तः। अतिक्रम्य वेधः। अतिव्यधनम्। लक्ष्ये शराः पतन्त्यनेनेति पत्रं=शराणां पुङ्खगतो बर्हः। भूतलमिति। "पुङ्खपर्यन्तं पुङ्खवर्जं वा शरप्रवेशनेन सपत्र" "निष्पत्र"वा भूतलं करोतीत्यर्थः।

तत्त्व-बोधिनी

सपत्त्रनिष्पत्त्रादतिव्यथने १५८४, ५।४।६१

सपत्त्रनिष्पत्त्रात्। लक्ष्ये शराः पतन्त्यनेनेति पात्त्रम्=शराणां पुङ्खगतो बर्हः। सपत्त्रं निष्पत्त्रं वा करोतीति। पत्त्राणि=पर्णानि तत्सहितं तद्रहितं वेति यथा सम्भवमर्थः।

---

सूत्रम्

काशिका-वृत्तिः

निष्कुलान् निष्कोषणे ५।४।६२

कृञः इत्येव। निष्कुलशब्दात् निष्कोषने वर्तमानात् कृञो योगे डाच् प्रत्ययो भवति। निष्कोषणम् अन्तरवयवानां बहिर्निष्कासनम्। निष्कुलाकरोति पशून्। निष्कुष्णाति इत्यर्थः। निष्कोषणे इति किम्? निष्कुलान् करोति शत्रून्।

न्यासः

निष्कुलान्निष्कोषणे , ५।४।६२

"निकुष्लान्? करोति" इति। निर्दिष्टं कुलं यस्येति स निष्कुलः। कुलशब्दोऽत्र बन्धुषु वत्र्तते॥ "आराध्यचित्तानुवत्र्तनम्()" इति। स्वाम्यादेरनभिमतानुष्ठानेनाभिमताननुष्ठानेन वा चित्तस्य पीडनं दुःखम्()=प्रातिलोम्यम्()। तदपि प्राणिधर्म एव॥

बाल-मनोरमा

निष्कुलान्निष्कोषणे , ५।४।६२

निष्कुलान्निष्कोषणे। "डा"जिति शेषः। निष्कोषणम्--अन्तर्गतावयवानां बहिःकरणम्। निष्कुलाकरोति दाडिममिति। निर्गतं कुलं यस्मादिति बहुव्रीहिः। कुलशब्दश्च अन्तरवयवसमूहे वर्तते। तदाह--निर्गतमित्यादि।

तत्त्व-बोधिनी

निष्कुलान्निष्कोषणे १५८५, ५।४।६२

निष्कुलात्। निष्कोषणमन्तरवयवानां बहिर्निष्कासनम्। निष्कोषणे किम्()। निष्कुलं करोति शत्रुम्।

---

सूत्रम्

काशिका-वृत्तिः

सुखप्रियादानुलोम्ये ५।४।६३

सुखप्रियशब्दाभ्याम् आनुलोम्ये वर्तमानाभ्यां कृञो योगे डाच् प्रत्ययो भवति। आनुलोम्यम् अनुकूलता, आराध्यचित्तानुवर्त्तनम्। सुखाकरोति। प्रियाकरोति। स्वाम्यादेः चित्तमाराधयति इत्यर्थः। सुखं प्रियं वा कुर्वन्नप्यानुलोम्ये ऽवस्थित एवम् उच्यते। आनुलोम्ये इति किम्? सुखं करोति, प्रियं करोति औषधपानम्।

बाल-मनोरमा

अभिविधौ संपदा च , ५।४।६३

अभिविधौ संपदा च। चकारः कृभ्यस्तिसमुच्चयार्थः। तदाह--संपदा कृभ्वस्तिभिश्चेति। अभिविधावित्यस्य विवरणम्- व्याप्ताविति। पक्षे इति। सातिप्रत्ययाऽभावपक्षे कृभ्वस्तियोगे पूर्वेण च्विः, संपदा योगे तु सातेरभावे वाक्यमेव, नतु च्विः, कृभ्वस्तियोग एव तद्विधानादित्यर्थः। सम्पदा योगे उदाहरति--अग्निसात्संपद्यत इति। कृभ्वस्तियोगे उदाहरति-- अग्निसाद्भवति शस्त्रमिति। अग्निसात्करोति अग्निसात्स्यादित्यप्युदाहार्यम्। कात्स्न्र्याऽभिविध्योर्विशेषमाह--एकस्या व्यक्तेरित्यादिना।

बाल-मनोरमा

सुखप्रियादनुलोम्ये , ५।४।६३

सुखप्रियादानुलोम्ये। सुखशब्दात्प्रियशब्दाच्च आनुलोम्ये गम्ये डाच् स्यादित्यर्थः। आराध्यगुर्वादिचित्तानुवर्तमानुलोम्यम्। सुखाकरोति प्रियाकरोति गुरुमिति। चित्तानुवर्तनेन गुरु" सुखसंपन्नं प्रयसंपन्नं च करोतीत्यर्थः। तदाह--अनुकूलेति।

---

सूत्रम्

काशिका-वृत्तिः

दुःखात् प्रातिलोम्ये ५।४।६४

कृञः इत्येव। दुःखशब्दात् प्रातिपदिकात् प्रातिलोम्ये गम्यमाने डाच् प्रत्ययो भवति कृञो योगे। प्रातिकूल्यं प्रतिकूलता। स्वाम्यादेश्चित्तपीडनम्। कुःखाकरोति भृत्यः। प्रातिलोम्ये इति किम्? दुःखं करोति कदन्नम्।

न्यासः

दुःखात्प्रातिलोम्ये।, ५।४।६४

"स्वाम्यादेश्चित्तपीडनम्()" इति। स्वाम्यादेरनभिमतानुष्ठानेनाभिमताननुष्ठानेन वा चित्तस्य पीडनं दुःखम्()=प्रातिलोम्यम्()। तदपि प्राणिधर्म एव॥

बाल-मनोरमा

दुःखात्प्रातिलोम्ये , ५।४।६४

दुःखात्। "डा"जिति शेषः। आराध्यप्रतिकूलाचरणं प्रातिलोम्यम्। अन्यत्पूर्ववत्।

---

सूत्रम्

काशिका-वृत्तिः

शूलात् पाके ५।४।६५

कृञः इत्येव। शूलशब्दात् पाकविषये डाच् प्रत्ययो भव्ति कृञो योगे। शूले पचति शूलाकरोति मांसम्। पाके इति किम्? शूलं करोति कृदन्नम्।

न्यासः

शूलात्पाके।, ५।४।६५

"शूलाकरोति मांसम्()" इति। पचतीत्यर्थः॥

बाल-मनोरमा

शूलात्पाके , ५।४।६५

शूलात्पाके। "डा"जिति शेषः। शूलाकरोतीति। अत्र करोतिः पाके वर्तते। तदाह--शूलेन पचतीत्यर्थ इति।

तत्त्व-बोधिनी

शूलात्पाके १५८७, ५।४।६५

शूलात्पाके। पाके किम्()। शूलं करोति कदन्नं। शूलमुदररोगः।

सत्यादशपथे। सत्सु साधु सत्यम्। "तत्र साधु"रिति प्राग्घितीयत्वाद्यति प्राप्ते अतएव निपातनाद्यः। अन्तोदात्तोऽयम्। "सत्येनोत्तभिता भूनिः" "ऋतं च सत्यं चे"त्यत्र तथा दर्शनात्। सत्याकरोतीति। भाण्डं----रत्नादिद्रव्यजातम्। क्रेतव्यमिति। "मयैवैतद्ग्राह्य"मिति बुद्ध्या परीक्षादिना, सत्यङ्कारद्रव्यप्रदानेन च दृढं करोतीत्यर्थः। तथ्यमिति। तथैव तथ्यम्। "पादार्घाभ्यां च"इति चकारस्यानुक्तसमुच्चयार्()थत्वात्स्वार्थे यत्।

---

सूत्रम्

काशिका-वृत्तिः

सत्यादशपथे ५।४।६६

कृञः इत्येव। सत्यशब्दातशपथे डाच् प्रत्ययो भवति कृञो योगे। सत्यशब्दो ऽनृतप्रतिपक्षवचनः। क्वचित् तु शपथे च वर्तते, सत्येन शापयेद् द्विजम् इति, तस्य अयं प्रतिषेधः। सत्याकरोति वणिक् भाण्डम्। मयैतत् क्रेतव्यम् इति तथ्यं करोति। अशपथे इति किम्? सत्यं करोति ब्राह्मणः।

न्यासः

सत्यादशपथे। , ५।४।६६

बाल-मनोरमा

सत्यादशपथे , ५।४।६६

सत्यादशपथे। "डा"जिति शेषः। सत्याकरोति भाण्डमिति। रत्नादिद्रव्यजातमित्यर्थः। सत्यशब्दोऽत्र तथ्ये वर्तते। "सत्यं तथ्यमृतं सम्य"गित्यमरः। क्रेत्वयमितीति। "एतावतैव मूल्येनेदं क्रयणार्हं नातोऽधिकमूल्येने"त्येवं यथाभूतार्थं वदतीत्यर्थः। सत्यंकरोति विप्र इति। शपथं करोतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

मद्रात् परिवापणे ५।४।६७

कृञः इत्येव। मद्रशब्दात् परिवापणे डाच् प्रत्ययो भवति कृञो योगे। परिवापणं मुण्डनम्। मद्रशब्दो मङ्गलार्थः। मङ्गलं मण्डनं करोति मद्राकरोति। भद्राच् च इति वक्तव्यम्। भद्राकरोति नापितः कुमारम्। परिवापणे इति किम्? भद्रं करोति।

न्यासः

मद्रात्परिवापणे। , ५।४।६७

"मद्राकरोति" इति। मङ्गलपूर्वं मुण्डनं करोतीत्यर्थः। "भद्राच्चेति वक्तव्यम्()" इति। भद्रशब्दाच्च डाज्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"समयाच्च यापनायाम्()" ५।४।६० इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन भद्रादपि भविष्यतीति॥

बाल-मनोरमा

मद्रात्परिवापणे ११८३, ५।४।६७

मद्रात्परिवापणे। "डा"जिचि शेषः। मङ्गलार्थ इति। मङ्गलपर्याय इत्यर्थः। परिवापणंमुण्डनमिति। "केशान्वपते" इत्यादौ तथा दर्शनादिति भावः। माङ्गल्यमुण्डनेनेति। चौलेनेत्यर्थः। मद्रं करोसि भद्रं करोतीति। क्षेमं करोतीत्यर्थः। अत्र परिवापणाऽप्रतीतेर्न डाजिति भावः।

**** इति बालमनोरमायाम् तद्धितप्रक्रिया। ****

अथ तद्धितेषु रक्ताद्यर्थकाः।

-------------------

तत्त्व-बोधिनी

मद्रात्परिवापणे ३३०, ५।४।६७

परिवापणमिति। कर्मव्यापारमात्रवाचिनो वपेर्हेतुमण्णिचि ल्युडिति हरदत्त#H। कर्मव्यापारः---फलं, तस्य कर्मनिष्ठत्वात्। तथा च फलमात्रवाचिन इत्यर्थः फलित इत्याहुः। माङ्गल्यमुण्डनेनेति। चौलदीक्षादौ।

भद्राच्चेति वक्तव्यम्। भद्राच्चेति। भद्रादित्यर्थग्रहणमिति व्याख्याने तु मङ्गलादिभ्योऽपि स्यादिति बोध्यम्।

इति तत्वबोधिन्यां तद्धितप्रक्रिया।

अथ तनादयः।

---

सूत्रम्

काशिका-वृत्तिः

समासान्ताः ५।४।६८

अधिकारो ऽयम्। आपादपरिसमाप्तेः ये प्रत्ययाः विहितास् ते समासान्तावयवा एकदेशाः भवन्ति, तद्ग्रहणेन गृह्यन्ते इति वेदितव्यम्। प्रयोजनम् अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः। उपराजम्। अधिराजम्। न अव्ययीभावातित्येष विधिर् भवति, अनश्च ५।४।१०८ इति टच्। द्विपुरी, तिर्पुरी इति। द्विगोः ४।१।२१ इति ङीप् भवति। कटकवलयिनी। शङ्खनूपुरिणी। कोशनिषदिनी। स्रक्त्वचिनी। द्वन्द्वोपतापगर्ह्यातिति इनिर् भवति। विधुरः। प्रधुरः। तत्पुरुषे तुल्यार्थ इत्येष स्वरो भवति। उच्चैर् धुरः। नीचैर् धुरः। बहुव्रीहौ प्रकृत्या पूर्वपदम् ६।२।१ इत्येतद् भवति।

न्यासः

समासान्ताः। , ५।४।६८

"समासान्ताः" इत्ययमधिकारः" इति। वक्ष्यमाणेन "बहुव्रीहौ संख्येये डजबहुगणात्()" ५।४।७३ इत्यादिना बहुव्रीह्यादित्वेन समासविशेषाद्विधास्यन्ते; यत्रापि बहुव्रीह्यादिग्रहणं नास्ति, तत्र सङ्घातः प्रकृतित्वेन निर्दिश्यते। यता--"अच्? प्रत्यन्ववपूर्वात्? सामलोम्नः" ५।४।७५ इति, ततश्च सामथ्र्यादेव समासान्ताः प्रत्याय विज्ञास्यन्ते, त()त्क समासग्रहणेन? यत्रैतदुभयं नास्ति--यथा--"ऋक्पूरब्धूःपथामानक्षे" ५।४।७४ इति, तदर्थं समासान्तग्रहणं क्रियते। अन्तशब्दोऽयं सामीप्यवचनोऽप्यस्ति, यदि तस्येह ग्रहणं स्यात्? प्रत्ययपरत्वेनैव डजादीनां सामीप्यस्य सिद्धत्वादन्तशब्दोऽनर्थकः स्यादिति मत्वाऽऽह--अवयववचनोऽयमन्तशब्दो गृह्रत इति दर्शयन्नाह--अवयवा इति अस्य पर्यायेण वृतिं()त कर्तुमाह--"एकदेशाः" इति। एकदेशशब्दमिहाश्रयता प्राक्समासविधेः समासार्थादुत्तरपदात्? वक्ष्यमाणाः

प्रत्यया भवन्ति, पश्चात्? समासः--इत्युक्तं भवति। एवं हि ते समासस्यैकदेशा भवन्ति यदि प्राक्? समासवृत्तेः स्यात्()। समासान्तान्? कृत्वा पश्चात्? तदन्तेन समासः क्रियते। एवञ्च तैः सह समाससंज्ञा बवतीत्युपपद्यते डजादीनां समासावयवत्वम्()। अतश्चैतदेवं विज्ञेयम्()। योऽभिमन्यतेसमासे कृते डजादिभिर्भवितव्यमिति, तस्य "न कपि" (७।४।१४) इत्यत्र यद्वक्ष्यति वृत्तिकारः--"समासार्थे ह्रु तरपदे कपि कृते पश्चात्? समासेन भक्तिव्यम्()" इति, तद्विरुध्यते। ननु च समासार्थादुत्तरपदाड्डजादिषु कृतेषु पश्चात्? तदन्तेन समासः क्रियते--इत्यस्मिन्नपि पक्षे समानो दोषः, यतः "पथो विभाषा" (५।४।७२) इत्येवमादिषु नञः परो यः पथिन्()शब्दस्तदन्तात्? तत्पुरुषाद्विभाषा समासान्तो भवतीत्येवमादयो निर्देशा विरुध्यन्त एव? नैतदस्ति; तदविरोधस्य "ङ्याप्प्रातिपदिकात्()" ४।१।१ इत्यत्र प्रतिपादितत्वात्()। "तद्ग्रहणेन गृह्न्ते" इति तच्छब्देन समासः प्रत्यवमृश्यते। समासावयवत्वे सति तेषामपि तदनुप्रदेशो भवति। अतस्ते। समासग्रहणेन गृह्न्त इति। अथ समासावयवत्वे प्रत्ययस्य किं प्रयोजनम्()? इत्याह--"प्रयोजनम्()" इत्यादि। "अधिराजम्(), उपराजम्()" इति। यताक्रमं विभक्त्यर्थे सामीप्येऽव्ययीभावः। "अव्ययीभावे शरत्प्रभृतिभ्यः" ५।४।१०७, "अनश्च" (५।४।१०८) इति टजन्तस्याव्ययीभावग्रहणेन ग्रहणात्? "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" २।४।८३ इति विभक्तेरलुक्(), अमन्तभावश्च भवति। द्वे पुरी समाह्यते इति "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति समातः। स च "संख्यापूर्वो द्विगुः" २।१।५१ इति द्विगुसंज्ञः, "ऋक्पूरब्धूःपथाम्()" (५।४।७४) इत्यकारप्रत्ययान्तस्य द्विगुग्रहणेन ग्रहणावकारान्तात्? "द्विगोः" (४।१।२१) इति ङीप्? सिद्धो भवति। कोशनिषदिनीति। कोशश्च निषच्चेति समाहारद्वन्द्वः, "द्वन्द्वाच्चुदषहान्तात्? समाहारे" (५।४।१०६) इति टच्? तस्य द्वन्द्वग्रहणेन ग्रहणात्? कोशनिषदमस्या अस्तीति "द्वन्द्वोपतापगह्र्रात" ५।२।१२७ प्राणिस्थादिनिर्भवति, "ऋन्नेभ्यो ङीप्()" ४।१।५ इति ङीप्()। रुआक्त्वचिनीति। पूर्वेण तुल्यम्()। "विधुरः" प्रधुरः" इति। विगतो धुरः, प्रगतो धुर इति "कुगतिप्रादयः" २।२।१८ इति प्रादितत्पुरुषसमासः। पूर्ववदकारस्येह तत्पुरुषग्रहणेन ग्रहणात्? "तत्पुरुषे तुल्यार्थतृतीया" ६।२।२ इत्यादिना पूर्वपदप्रकृतिस्वरः सिद्धो भवति। पूर्वपदं पुनरतर निपात आद्युदात्तः। असति तु समासान्तत्वे प्रत्ययस्वरेणान्तोदात्तता स्यात्()। "उच्चैर्धुरः, नीचैर्धुरः" इति। उच्चैर्धूरस्येति नीचैर्धूरस्येति बहुव्रीहिः। पूर्ववदकारप्रत्ययः, तस्य बहुव्रीहिग्रहणेन ग्रहणात्? "बहुव्रीहौ प्रकृतया पूर्वपदम्()" ६।२।१ इति पूर्वपदप्रकृतिस्वरो भवति। पूर्वपदप्रकृतिस्वरस्त्विहान्तोदात्()तः। सनुतर्(), उच्चैस्(), नीचैस्(), शनैस, ऋधक्(), ऋते, युगपत्(), आरात्(), पृथगित्येते सनुतर्()प्रभृतयोऽन्तोदात्ताः, स्वरादिषु पाठात्()॥

बाल-मनोरमा

समासान्ताः ६६८, ५।४।६८

समासान्ताः। इत्यधिकृत्येति। "आपादपरिसमाप्ते"रिति भावः। अत्र समासपदमलौकिकविग्रहवाक्यपरमेव। अत एव "बहुकुमारीक" इत्यत्र ह्यस्वो न। "गोस्त्रियोः" इति सूत्रे "अन्तः" इति सूत्रे च भाष्ये स्पष्टमेतत्। एवंचाऽलौकिकविग्रहवाक्ये समाससंज्ञासमकालमेव समासान्ता इति सिद्धान्तः। अन्तशब्दश्चरमावयववाची। अत एव उपशरदमित्यादौ "नाव्ययीभावा"दित्यम्। तत्र टचस्तदनवयवत्वे टजन्तस्याव्ययीभावसमासत्वाऽभावादम् न स्यात्। तथाच टचस्तदनवयवत्वे "अव्ययानां भमात्रे टिलोपः" इति प्रसज्येत। टचस्तदवयवत्वे तु तदन्तस्यैवाव्ययीभावसमासतया अव्ययत्वादुपशरदित्यस्याव्ययत्वाऽभावान्न टिलोपः। समासान्तप्रत्ययाश्चलौकिकविग्रवाक्ये सुपः परस्तादेव भवन्ति। अत एव "प्रत्ययस्थात्" इति सूत्राभाष्ये "बहुचर्मिका" इत्युदाह्यतं सङ्गच्छते। विस्तरस्तु शब्देन्दुशेखरे ज्ञेयः।

तत्त्व-बोधिनी

समासान्ताः ५९२, ५।४।६८

समासान्त इति। समासस्य समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः। तेनोपशरदमित्यत्र "नव्ययीभावा"दित्यम् सिध्यति, अव्ययीभावस्याऽदन्तत्वात्, द्विपुरीत्यादौतु "ऋक्()पूरब्धू"रित्यप्रत्यय उत्तरपदस्यावयव इति "अकारान्तोत्तर पदो द्विगुः स्त्रियो"मिति स्त्रीत्वे "द्विगो"रिति ङीप्सिध्यतीति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

न पूजनात् ५।४।६९

यान् शब्दानुपादाय समासान्ता विधीयन्ते राजाहःसखिभ्यष् टच् ५।४।९१ इत्येवम् आदीन्, यदा ते पूजनात् पूजनवचनात् परे भवन्ति तदा समासान्तो न भवति। सुराजा। अतिराजा। सुगौः। अतिगौः। पूजायां स्वतिग्रहणं कर्तव्यम्। इह मा भूत्, परमराजः, परमगवः इति। प्राग्बहुव्रीहिग्रहणं च कर्तव्यम्। बहुव्रीहौ सक्थ्यक्ष्णोः इत्येवम् आदौ प्रतिषेधो न भवति। सुसक्थः। अतिसक्थः। स्वक्षः। अत्यक्षः।

लघु-सिद्धान्त-कौमुदी

न पूजनात् ९९९, ५।४।६९

पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा। अतिराजा॥

लघु-सिद्धान्त-कौमुदी

इति समासान्ताः ९९९, ५।४।६९

लघु-सिद्धान्त-कौमुदी

अथ तद्धिताः, तत्रादौ साधारणप्रत्ययाः ९९९, ५।४।६९

न्यासः

न पजनात्?। , ५।४।६९

"सुराजा, अतिराजा" इति। शोभनो राजा, अतिशयितः राजेति विगृह्य "कुगतिप्रादयः २।२।१८ इति समासः। "सुगौः" इति। पूर्ववत्समासः। अत्र "गोरतद्धितलुकि" (५।४।९२) इति टच्? प्राप्नोति; अस्माद्वचनान्न भवति। "परमराजः, परमगवः" इति। "सन्महत्()" २।१।६३ इति समासः। "सुसक्थः" इति। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्? षच्()" ५।४।११३ इति षच्()॥

बाल-मनोरमा

न पूजनात् ९४०, ५।४।६९

न पूजनात्। "परेभ्य" इत्यध्याहार्यम्। "समासान्ता" इति पूर्वसूत्रमनुवर्तते। तदाह--पूजनार्थादिति। "पूजायां स्वतिग्रहणं कर्तव्य"मिति वार्तिकमभिप्रेत्योदाहरति--सुराजेति। सु=शोभनो राजेति प्रादिसमासः। अतिराजेति। पूज्यो राजेत्यर्थः। उभयत्रापि "राजाहःसखिभ्यः" इति टज्न भवति। स्वतिभ्यामेवेति। स्वतिभ्यां परो यो राजन्शब्दस्तस्मादेवेत्यर्थः, तथा वार्तिकादिति भावः। नेहेति। "निषेधे" इति शेषः। परमराज इति। परमश्चासौ राजा चेति विग्रहः। अतिगव इति। "अत्यादयः" इति समासः। अतेः पूजनार्थकत्वाऽभावान्न टचो निषेधः। एवं "परमराज" इत्यत्रापि। इत्यतः प्रागिति। "प्राग्बहुव्रीहिग्रहणं कर्तव्य"मिति वार्तिकार्थसङ्ग्रहोऽयम्। सुसक्थः स्वक्ष इति। सु=शोभने सक्थिनी यस्य, सु=शोभने अक्षिणी यस्येति च विघः। "बहुव्रीहौ सक्थ्यक्ष्णो"रिति षच्। किमः क्षेपे। किंराजा किंसखेति। इह "राजाहःसखिभ्यः" इति

टज्नभवति, "किं क्षेपे" इति समासः। किंराजः किंसख इति। किंशब्दोऽत्र प्रश्ने। कस्य राजा, को राजेति वा विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

किमः क्षेपे ५।४।७०

क्षेपे यः किंशब्दः ततः परस्य समासान्तो न भवति। किंराजा यो न रक्षति। किंसखा यो ऽभिद्रुह्यति। किंगौर्यो न वहति। किं क्षेपे २।१।६३ इति समासः। क्षेपे इति किम्? कस्य राजा किंराजः। किं सखः। किंगवः।

न्यासः

किमः क्षेपे। , ५।४।७०

"किंराजा" इति। निन्दितो राजेति विगृह्य "किं क्षेपे" २।१।६३ इति समासः। किंराज इत्यत्र प्रश्ने किंशब्दः, न क्षेपे, षष्ठीसमासः। ननु "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्()" (व्या।प।३) इति प्रतिपदोक्तो यः किमः समासः "किं क्षेपे"(२।१।६४) इत्यनेन विहितः स एव ग्रहीष्यत इति क्षेपग्रहणमनर्थकम्()? एवं तर्हि क्षेपग्रहणेनै तदेव ज्ञापयति--इयं परिभाषा नावतिष्ठत इति। तेन बहुव्रीहावपि प्रतिषेधः सिद्धो भवति--निन्दिता धूरस्य किन्धुरं शकटम्(), निर्धरं शकटमिति॥

तत्त्व-बोधिनी

किमः क्षेपे ८१३, ५।४।७०

किमः क्षेपे। क्षेपग्रहणमिह शक्यमवक्तुं, प्रतिपदोक्तपरिभाषया "किं क्षेपे" इति विहितसमासस्यैव ग्रहणात्। किंराज इत्यादि। किमत्र प्रश्ने षष्ठीसमासः, कर्मधारयो वा।

---

सूत्रम्

काशिका-वृत्तिः

नञस् तत्पुरुषात् ५।४।७१

नञः परे वक्ष्यमाणा ये राजादयस् तदन्तात् तत्पुरुषात् समासान्तो न भवति। अराजा असखा। अगौः। तत्पुर्षातिति किम्? अनृचो माणवकः। अधुरं शकटम्।

न्यासः

नञस्तत्पुरुषात्?। , ५।४।७१

"अराजा" इति। तत्पुरुषऽयम्()। "अनृचो माणवकः, अधुरं शकटम्()" इति। द्वावपि बहुव्रीहि। पूर्ववदकारः॥

बाल-मनोरमा

नञस्तत्पुरुषात् ९४१, ५।४।७१

निन्दानवगमान्न टचो निषेधः। नञस्तत्पुरुषात्। शेषपूरणेन सूत्रं व्याचष्ट--समासान्तो नेति। नञ्पूर्वपदात्तत्पुरुषात्समासान्तो नेति फलितम्। अधुरं शकटमिति। अविद्यमाना धूर्यस्येति विग्रहः। नञ्पूर्वपदत्वेऽप्यतत्पुरुषत्वात् "ऋक्पू"रिति समासान्तस्य न निषेधः।

तत्त्व-बोधिनी

नञस्तत्पुरुषात् ८१४, ५।४।७१

नञस्तत्पुरुषात्। "नञः"इति षष्ठी। नञः सम्बन्धी यस्तत्पुरुषो नञवयवकस्तस्मादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

पथो विभाषा ५।४।७२

नञः परो यः पथिन्शब्दः, तदन्तात् तत्पुरुषात् समासान्तो विभाषा न भवति। पुर्वेण नित्यः प्रतिसेधः प्राप्तो विकल्प्यते। अपथम्, अपन्थाः।

न्यासः

पथो विभाषा। , ५।४।७२

अपथम्()" इत्यत्र पूर्ववदकारः। "अपथं नपुंसकम्()" २।४।३० इति नपुंसकलिङ्गता॥

बाल-मनोरमा

पथोविभाषा ९६९, ५।४।७२

पथो विभाषा। पथ इति। पथिन्शब्दादित्यर्थः। अपथिमिति। न पन्था इति विग्रहे नञ्तत्पुरुषः।"ऋक्पूः" इत्यप्रत्यये सति "नस्तद्धिते" इति टिलोपः। "पथः सङ्ख्याव्ययादे"रिति नपुंसकत्वम्। अपन्था इति। अप्रत्ययाऽभावे रूपम्। तत्पुरुषादित्येवेति। अनुवर्तत एवेत्यर्थः। अपथो देश इति। अविद्यमानः पन्था यस्येति विग्रहः। बहुव्रीहित्वात् "ऋक्पू"रित्यप्रत्ययस्य न पाक्षिकोऽपि निषेधः।

*****इति बालमनोरमायाम् समासान्तप्रकरणम्।*****

अथ समासाश्रयविधिः।

----------------

तत्त्व-बोधिनी

पथोविभाषा ८२५, ५।४।७२

अपथं वर्तत इति। अर्थाऽभावेऽव्ययीभाव।

इति सकलसमाससाधारणाः समासान्ताः।

इति तत्त्वबोधिन्यां समासान्तप्रकरणम्॥

---

सूत्रम्

काशिका-वृत्तिः

बहुव्रीहौ सङ्ख्येये डजबहुगणात् ५।४।७३

सङ्ख्येये यो बहुव्रीहिर् वर्तते तस्मादबहुगणान्तात् डच् प्रत्ययो भवति। सङ्ख्ययाव्ययासन्न इति यो बहुव्रीहिः तस्य इदं ग्रहणम्। उपदशाः। उपविंशाः। उपत्रिंशाः। आसन्नदशाः। अदूरदशाः। अधिकदशाः। द्वित्राः। पञ्चषाः। पञ्चदशाः। सङ्ख्येये इति किम्? चित्रगुः। शबलगुः। अबहुगणातिति किम्? उपबहवः। उपगणाः। अत्र स्वरे विशेषः। डच्प्रकरणे सङ्ख्यायास् तत्पुरुषस्य उपसङ्ख्यानं कर्तव्यं निस्त्रिंशाद्यर्थम्। निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि देवदत्तस्य। निश्चत्वारिंशानि यज्ञदत्तस्य। निर्गतस्त्रिंशतो ऽङ्गुलिभ्यो निस्त्रिंशः खड्गः।

न्यासः

बहुव्रीहौ संख्येये डजबहुगणात्?। , ५।४।७३

बहुव्रीहाविति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी। "संख्याव्ययासन्न" २।२।२५ इत्यादिना यो बहुव्रीहिः, तस्येदं ग्रहणमिति। तस्यैव संख्येये वृत्तिः। यत्तर्हि वार्थे वत्र्तते--द्वित्राः, पञ्चषा इति, यश्च सुजर्थे--द्विदशाः, त्रिदशा इति, तत्र न प्राप्नोति? नैष दोषः; तावपि संख्येये वत्र्तत एव; संख्येयतयैव वार्थस्य सुजर्थस्य चाभिधानात्()। दशानां च समीपे उपदशाः। विशतेः समीपे उपविंशाः। विशतेः समीपे उपविंशाः। "तिविंशतेडिति" ६।४।१४२ इति तिलोपः, द्वयोरप्यकारयोः "अतो गुणे" ६।१।९४ पररूपत्वम्()। दशानामासन्ना "आसन्नदशाः"। दशानामदूरा "अदूरदशाः" दशानामधिका "अधिकदशाः" द्वौ वा त्रयो वा "द्वित्रा"। पञ्च वा षङ्वा "पञ्चषाः"। सर्वत्र "संख्याव्ययासन्न" २।२।२४ इत्यादिना बहुव्रीहिः। "चित्रगुः इति। "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्यस्वः। ननु च नञिवयुक्तन्यायेन (व्या।प।६५) बहुगणपरतिषेधात्? तत्सदृशविज्ञानेन संख्योत्तरपद एव बहुव्रीहिविज्ञास्यते, एवञ्च चित्रगुप्रभृतिषु प्राप्तिरेव नास्तीति किं संख्याग्रहणेन? स्यादेतदेवं यदि बहुशब्दः संख्येयपदमेव स्यात्(); स च वैपुल्यवचनोऽप्यस्ति, तेनासति संख्येयग्रहणे संख्योत्तरपदग्रहणं न स्यात्()। "उपबहवः, उपगणाः" इति पूर्ववद्बहुव्रीहीः। "अत्र" इत्यादि। उपगणा इत्यत्र सत्यसति वा डाचि रूपं प्रति विशेषो नास्तीति। स्वरे तु विद्यते--डचि हि सत्यन्तोदात्तत्वं स्यात्(), तस्मिन्नसति पूर्वपदप्रकृतिभावेनाद्युदात्तं भवति। "संख्यायाः" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्पुरुषस्य संख्यावाचि यदुत्तरपदं ततो डचः प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--"संख्यायाश्च गुणान्तायाः" ५।४।५९ इत्यतश्चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः तेन संख्यायास्तुत्पुरुषस्य डज्भविष्यतीति। "नि()स्त्रशाद्यर्थम्? इति। आदिशब्दः प्रकारे। "निस्त्रिशाः"["नि()स्त्रशानि, नि()स्त्रशः" इत्येव मूलोपात्ते पदे] इति। "कुगतिप्रादयः" २।२।१८ इति तत्पुरुषः। डचश्चित्करणमन्तोदात्तार्थम्()। अन्यथा हि प्रत्ययस्य समासैकदेशत्वात्? प्रत्यस्वरो बहुव्रीहिस्वरेण बाध्यते॥

बाल-मनोरमा

बहुव्रीहौ सङ्ख्येये डजबहुगणात् ८४२, ५।४।७३

अथ बहुव्रीहावसाधारणसमासान्तानाह--बहुव्रीहौ। सङ्ख्येये यो बहुव्रीहिरिति। "सङ्ख्ययाव्यये"ति विहित" इति शेषः। तस्मादिति। बहुव्रीहाविति। पञ्चम्यर्ते सप्तमीति भावः। डच्स्यादिति। समासान्तस्तद्धितश्चेति ज्ञेयम्। उपदशा इति। दशानां समीपे ये सन्तीति विग्रहः। "सङ्ख्ययाऽव्यये"ति बहुव्रीहिः। सुब्लुक्। उपदशन्शब्दाड्डचि "नस्तद्धिते" इति टिलोपः। उपबहवः। उपगणा इति। बहूनां समीपे ये सन्तीति, गणस्य समीपे ये सन्तीति च विग्रहः। "बहुगणवतुडति सङ्ख्ये"ति सङ्ख्यात्वात् "सङ्ख्ययाव्यये"ति समासः। अबहुगणादिति निषेधान्न डच्। ननूपगणा इत्यत्र डचि सत्यसति च रूपसाम्या()त्क तन्निषेधेनेत्यत आह--स्वरेविशेष इति। डचि सति "चित" इति अन्तोदात्तत्वं स्यादित्यर्थः।

सङ्ख्याया इति। सङ्ख्यान्ततत्पुरुषस्य समासान्तो डज्वक्तव्य इत्यर्थः। नि()स्त्रशानीति। "निरादयः क्रान्ते"ति तत्पुरुषः, डच्, "टे"रिति टिलोपः। तिं()रशतोऽधिकानीति यावत्। नि()स्त्रश इति। समासादि पूर्ववत्।
तिं()रशदधिकाङ्गुलिरित्यर्थः। न च गवां विंशतिर्गोविंशतिरित्यत्रातिप्रसङ्गः शङ्क्यः, "अव्ययादे"रिति विशेषणादिति

भाष्ये स्पष्टम्। नचैकाधिका विंशतिरेकविंशतिरित्यत्र "सङ्ख्ययाव्यये"ति समासे सति "बहुव्रीहौ सङ्ख्येये" इति डच्शङ्क्यः, "अन्यत्राधिकलोपा"दिति वार्तिकादित्यास्तां तावत्।

तत्त्व-बोधिनी

बहुव्रीहौ सङ्ख्येये डजबहुगणात् ७३८, ५।४।७३

बहुव्रीहौ सङ्ख्येये। व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह---यो बहुव्रीहिस्तस्मादिति। "उपगणा"इत्यत्र डचि सत्यसति च रूपे विशेषो नास्तीत्यत आह--स्वरे विशेष इति। डचि सति "चितः" इत्यन्तोदात्तत्वं स्यात्, असति तु पूर्वपदप्रकृतिस्वर इत्यर्थः। न च सत्यपि डचि परत्वात्पूर्वपदप्रकृतिस्वर एव स्यादिति शङ्क्यमं, "चितः"इति स्वरस्य सतिशिष्टत्वात्, डचश्चित्करणस्य वैयर्थ्यापत्तेश्च।

सङ्ख्यायास्तत्पुरुषस्य वाच्यः। सङ्ख्याया इति। सङ्ख्यान्तस्य तत्पुरुषस्य चरमावयवो डज्वक्तव्य इत्यर्थः। "एकविंशति"रित्यादौ तु न भवति, "अन्यत्राधिकलोपा"दिति वार्तिककारोक्तेः।

---

सूत्रम्

काशिका-वृत्तिः

ऋक्पूरब्धूःपथाम् आनक्षे ५।४।७४

बहुव्रीहौ इति न स्वर्यते। सामान्येन विधानम्। ऋक् पुरप् धुर् पथिनित्येवम् अन्तानां समासानाम् अकारः प्रत्ययो भवति समासान्तो ऽक्षे न। सामर्थ्याद् धुर एतद् विशेषणम्, ऋगादीनां न भवति। अक्षेसम्बन्धिनी या धूः तदन्तस्य न भवति। अनृचः। बह्वृचः। अर्धर्चः। पुर् ललाटपुरम्। नान्दीपुरम्। अप् द्वीपम्। अन्तरीपम्। समीपम्। धुर् राजधुरा। महाधुरः। पथिन् स्थलप्थः। जलपथः। अनृचो अनक्षे इति किम्? अक्षस्य धूः अक्षधूः। दृढधूः अक्षः। अनृचो माणवको ञ्जेजो, बः वृचश्चरणाख्यायाम्। माणवकः। बह्वृचो ब्राह्मणः। अनृक्कं साम, बह्वृक्कं सूक्तम् इत्यत्र न भवति।

लघु-सिद्धान्त-कौमुदी

ऋक्पूरब्धूःपथामानक्षे ९९६, ५।४।७४

अ अनक्षे इतिच्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवोऽक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। विष्णुपुरम्। विमलापं सरः। राजधुरा। अक्षे तु अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो देशः॥

न्यासः

ऋक्पूरब्धूःपथामानक्षे। , ५।४।७४

"सामथ्र्यात्()" इति। यस्य येन सम्बन्धोऽस्ति तत्? तस्य विशेषणं भवति; धुर #एव चाक्षेम सम्बन्धोऽस्ति, नेतरेषाम्()। अतः समथ्र्यात्? तस्यैवानक्ष इत्येतद्विशेषणं विज्ञायते, न ऋगादीनाम्()। "अनक्षे" इति च षष्ठ()र्थे सप्तमी सुब्व्यत्ययेन। अत एवाह--"अनक्षसम्बन्धिनी" इत्यादि। अक्षेण सम्बन्धोऽवयवावयविलक्षणः, सोऽस्या अस्तीत्यक्षस्मबन्धिनी। सा धूर्यस्यां तस्या न भवति। अथैवं कस्मान्न विज्ञायते--अक्षेऽभिधेये न भवतीति? अशक्यमेवं विज्ञातुम्(); एवं हि विज्ञायमान इहैव प्रतिषेधः स्यात्()--दृढा धूरस्याक्षस्य दृढधूरक्ष इति। इह तु न स्यात्()--अक्षस्य धूरक्षधूरिति, एवं तर्हि विज्ञायते--अक्षे पूर्वपदे न भवतीति? एवमप्यशक्यं विज्ञातुम्(); तथा ह्येवं विज्ञायमान इहैव प्रतिषेधः स्यात्()--अक्षधूरिति। इह तु न स्यात्()--दृढधूरक्ष इति। यथा वृत्ति कारेम व्याख्यातं तथोभत्रापि भवति। अक्षसम्बन्धिनी या धूः, तदन्तत्वात्? समासस्य। "अद्र्धर्चः" इति। ऋचोद्र्धमिति "अर्धं नपुंसकम्()" २।२।२ इति

समासः। "अद्र्धर्चा पुंसि च २।४।३१ इति नपुंसकलिङ्गता च। "बहवृचः" इति। बहव ऋचोऽस्य सन्तीति बहुव्रीहिः। "ललाटपुरम्()" इति। षष्ठीतत्पुरुषोऽयम्()। अथ वा--ललाटं पूरिवेति "उपमितं व्याघ्रादिभिः" २।१।५५ इत्यादिना समासः। "नान्दीपुरम्()" इति। षष्ठीसमासः। यद्यप्यकारान्तेन पुरशब्देन समासे कृत एतत्? सिध्यति, तथापि व्यञ्जनान्तेन पूःशब्देन यदि समासः क्रियते, तदा व्यञ्जनान्तस्य श्रवणं मा भूदित्येवमर्थं पुरो ग्रहणम्()। "द्वीपम्()" इति "अन्तरीपम्()" इति "समीपम्()" इति। द्विर्गता आपोऽस्मिन्(), अन्तर्गता आपोऽस्मिन्(), सङ्गता आपोस्मिन्निति बहुव्रीहिः। "द्व्यन्तरुपसर्गेभ्योऽप ईत्()"६।३।९६ इतीत्त्वम्()। "राजधूरा" इति। षष्ठीसमासः। "महाधुरः" इति। बहुव्रीहिः, "आन्महतः" ६।३।४५ इत्यात्त्वम्(), "स्त्रियाः पुंवत्()" ६।३।३३ इत्यादिना पुंवद्भावः। "स्थलपथः, जलपथः" इति षष्ठीसमासः। सप्तमीति (२।१।४०) योगविभागात्? सपतमीसमासो वा। ऋगन्तस्य यो बहुव्रीहिर्नञ्पूर्वपदः, तस्य माणवक एवाभिधेये प्रत्यय इष्यते, यो बहुपूर्वपदो बहुव्रीहिरृगन्तः, तस्य चरणा ख्यायामेव इष्यत इति दर्शयति--"अनृचो माणवको ज्ञेयः" इत्यादि। एतच्च "पथो विभाषा" ५।४।७२ इत्यतो विभाषाग्रहानुवृत्तेव्र्यवस्थितविभाषात्वं चोपलभ्यमिति वेदितव्यम्()। "अनृक्कः, बहवृक्कः" इति। "शेषाद्विभाषा" ५।४।१५४ इति कप। "चोः कुः" ८।२।३० इति कुत्वम्()--चकारस्य ककारः॥

बाल-मनोरमा

ऋक्पूरब्धूःपथामाऽनक्षे ९२७, ५।४।७४

अथ सर्वसमाससाधारमसमासान्ता निरूप्यते--ऋक्पूरब्धूः। छेद इति। सूत्रे "अ" इति लुप्तप्रथमान्तनिर्देश इति भावः। "समासान्ता" इत्यधिकृतम्। ऋगादिभिः समासो विशेष्यते। तदन्तविधिः। तदाह--ऋगाद्यन्तस्येति। ऋक्, पुर्, अप्, धुर्, पथिन्-एतदन्तस्येत्यर्थः। अप्रत्यय इति। अकारात्मकप्रत्यय इत्यर्थः। अक्षे या धूरिति। अक्षसंबन्धिनी या धूरित्यर्थः। सूत्रे संबन्धिनोऽधिकरणत्वविक्षया अनक्षे इति सप्तमी। "अनक्षे" इति च धुर्शब्देनैव संबध्यते, अन्यैरसंभवादिति भावः। अर्धर्च इति। ऋचोऽर्धमिति विग्रहः। "अर्धं नपुंसक"मिति समासः। अकारः समासान्तः। "अर्धर्चाः पुंसि चे"ति पुंस्त्वम्। अनृचबह्वृचावध्येतर्येवेति। अविद्यमाना ऋचो यस्येति विग्रहः। बहव ऋचो यस्येति बह्वृचः-ऋक्छाखीत्युदाहरणम्। "अध्येतर्येवे"ति नियमस्य प्रयोजनमाह--नेहेति। अनृक्सामेति। अविद्यमाना ऋचो यस्मिन्निति विग्रहः। ऋच्यनध्यूढं प्रजापतेह्र्मदयं साम। बह्वृक्सूक्तमिति। बहवो ऋचो यस्मिन्निति विग्रहः। अथ पुर्शब्दान्तस्योदाहरति--विष्णोरिति। ननु पुर्शब्दस्य स्त्रीत्वा "परवल्लिङ्ग"मिति विष्णुपुरशब्दस्य स्त्रीत्वं युक्तमित्यत आत--क्लीबत्व#ं लोकादिति। अथाऽप्शब्दान्तस्योदाहरति--विमलापं सर इति। विमला आपो यस्मिन्निति विग्रहः।

तत्त्व-बोधिनी

ऋक्पूरब्धूःपथामाऽनक्षे ८०३, ५।४।७४

ऋक्पूर। "अ"इति लुप्तप्रथमैकवचनान्तं, "समासान्ताः"इति त्वधिक्रियते, तदाह---समासस्याप्रत्ययोऽन्तावयव इति। "अनक्षे"इत्येतत्सामान्यतः श्रुतमपि धुरैव संबध्यते, सामथ्र्यात्, नान्यैरित्याशयेन व्याचष्टे--अक्षे या धूरिति। तदन्तस्य तु नेति। सूत्रे संबन्धिनोऽधिकरणत्वविवक्षया सप्तमी। तेन अक्षसंबन्धिनी या धूस्तदन्तस्य नेत्यर्थः। यद्यत्र "अक्षे पूर्वपदे ने"ति व्याख्यायेत, तर्हि "दृढधूरक्षः"इत्यत्र निषेधो न स्यात्। यदि तु "अक्षे समासार्थेने"ति व्याख्यायेत, तदा "अक्षधू"रित्यत्र न स्यात्। तस्मादुभयसंग्रहार्थमुक्तव्याख्यानमेव ज्यायः। अद्र्धर्च इति। "अर्द्धं नपुंसक"मिति समासः। "अर्धर्चाः पुंसि चे"ति पुंस्त्वम्। अनृगित्यादि। अनुक्तसमासान्तत्वात् "शेषाद्विभाषे"ति कप्प्रत्यये "अनृच्कं" "बह्वृच्कं"मित्यपि बोध्यम्। विष्णुपुरमिति। यद्यपि पुरशब्देन समासेऽप्येतत्सिध्यति, तथापि "विष्णुपू"रित्यनिष्टवारणाय सूत्रे पूग्ररहणम्।

सूत्रम्

काशिका-वृत्तिः

अच् प्रत्यन्ववपूर्वात् सामलोम्नः ५।४।७५

प्रति अनु अव इत्येवं पूर्वात् सामान्तात् लोमान्तात् च समासादच् प्रत्ययो भवति। प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। अवलोमम्। कृश्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः। गोदावर्याश्च नद्याश्च सङ्ख्याया उत्तरे यदि। कृष्णभूमः। पाण्डुभूमः। उदग्भूमः। पञ्चनदम्। पञ्चगोदावरम्। नदीभिश्च इति अव्ययीभावः। भूमेरपि सङ्ख्यापूर्वायाः अच् प्रत्यय इष्यते द्विभूमः प्रासादः। त्रिभूमः। दशभूमकं सुत्रम् अन्यत्र अपि च दृश्यते पद्मनाभः। ऊर्णनाभः। दीर्घरात्रः। समरात्रः। अरात्रः। तदेतत् सर्वम् इह योगविभागं कृत्वा साधयन्ति।

न्यासः

अच्? प्रत्यन्वपूर्वात्सामलोम्नः। , ५।४।७५

"प्रतिसामम्()" इति। प्रतिगतं साम प्रतिसामम्()। प्रादिसमासः। प्रतिगतं वा सामास्येति बहुव्रीहिः। गतशब्दो गतार्थत्वाद्वृत्तौ न प्रयुज्यते। अथ वा--साम प्रतीति यथार्थे "अव्ययं विभक्ति" २।१।६ इत्यादिनाव्ययीभावः। अनुगतं सामानेनेति बहुव्रीहिर्वा। "अवसामम्()" इति। पूर्वेण तुल्यम्()। "अनुलोमम्()" इत्यादौ पूर्वेण तुल्यम्()। "()वलोमम्()" इत्यादि पूर्ववतप्रादिसमासादयो वेदितव्याः। "कृष्णोदक्पाण्डुपूर्वायाः" इति। कृष्णोदक्पाण्डुशब्दाः पूर्वे यस्या भूमेस्तस्या अच्प्रत्ययः स्मृतः। कृष्णा भूमिरस्मिन्? देशे कृष्णभूमो देशः। उदीची भूमिरस्मिन्? देश उदग्भूमः। पाण्डुर्भूमिरस्मिन्? पाण्डुभूमः। गोदावय्र्याश्च नद्याश्चाच्प्रत्ययः स्मृतः ते चेन्नदगोदवर्यौ संख्याया उत्तरे भवतः। पञ्चानां गोदावरीणां समाहारः; "नदीभिश्च" २।१।१९ इति समाहारेऽव्ययीभावः--पञ्चगोदावरम्(), पञ्चनदम्()। "भूमेरपि" इत्यादि। न केवलं नदीगीदावरीभ्याम्(), अपि तु भूमेरपि संख्यापूर्वाया इष्यते। "द्विभूमः" इत्यादौ सर्वत्र बहुव्रीहिः। "तत्()" इत्यादि। एतत्? कृष्णभूमाद्यपि योगविभागं कृत्वाऽऽचार्याः साधयन्ति॥

बाल-मनोरमा

अच् प्रत्यन्ववपूर्वात्सामलोम्नः ९३०, ५।४।७५

अच्प्रत्ययन्वव। एतत्पूर्वादिति। प्रति-अनु-अव-एतत्पूर्वकादित्यर्थः। प्रतिसाममिति। प्रतिगतं सामेति विग्रहः। अच्। "नस्तद्धिते" इति। टिलोपः। अनुसाममिति। अनुगतं सामेति विग्रहः। अच्। टिलोपः। अवसाममिति। अवकृष्टं सामेति विग्रहः। अच्। टिलोपः। प्रतिलोममिति। प्रतिगतं लोमेति विग्रहः। अनुलोममिति। अनुगतं लोमेति विग्रहः। अवलोममिति। अवगतं लोमेति विग्रहः। सर्वात्राऽच्, टिलोपः। कृष्णोदगिति। नेदं वार्तिकं। किं त्वच्प्रत्येत्यत्र अजिति योगविबागमूलाभियुक्तोक्तिरेषा। कृष्णेति। कृष्णा भूमिर्यस्य, उदीची भूमिर्यस्य, पाण्डुर्भूमिर्यस्य, द्वे भूमी यस्य, तिरुआओ भूमयो यस्येति च विग्रहः। प्रासादः सर्वत्र विशेष्यः। सङ्ख्याया इति। इदमप्यजिति योगविभागमूलकमेव। सङ्ख्यायाः परो यो नदीशब्दो, गोदावरीशब्दश्च ताभ्यामजिष्यत इत्यर्थः। पञ्चनदमिति। पञ्चानां नदीनां समाहार इति विग्रहः। सप्तगोदावरमिति। सप्तानां गोदावरीणां समाहार इति विग्रहः। "नदीभिश्चे"त्यव्ययीभावः। अचि "यस्येति चे"ति लोपः। "नाव्ययीभावा"दित्यम्। अन्यत्रापीति। "अ"जिति सेषः। पद्मनाभ इति। पद्मं नाभौ यस्येति विग्रहः। वस्तुतस्तु यागविभागस्य भाष्येऽदर्शनात्पृषोदरादित्वमेवोचितम्।

तत्त्व-बोधिनी

अच् प्रत्यन्ववपूर्वात्समलोम्नः ८०६, ५।४।७५

प्रतिसाममिति। अव्ययीभावः, प्रादिसमासो, बहुव्रीहिर्वा। एवमनुसामादवप्यूह्यम्। कृष्णोदगिति। "अ"जिति योगविभागेन गतार्थमिदम्। एवमुत्तरवार्तिकमपि। "कृष्णभूम"इत्यादयौ बहुव्रीहयः। पद्मनाभ इति। "पद्मं नाभा वस्ये"ति विग्रहः। गड्वादित्वात्सप्तम्यन्तस्य परनिपातः। "पदमाकारा नाभिरस्ये"ति वा। एवमूर्णनाबोऽपि ज्ञेयः। तत्र तु "ङ्यापोः संज्ञाछन्दसो"रिति ह्रस्वो विशेषः।

---

सूत्रम्

काशिका-वृत्तिः

अक्ष्णो ऽदर्शनात् ५।४।७६

अचित्यनुवर्तते। दर्शनादन्यत्र यो ऽक्षिशब्दः तदन्तातच् प्रत्ययो भवति। लबणाक्षं। पुष्कराक्षम्। उपमितं व्याघ्रादिभिः इति समासः। अदर्शनातिति किम्? ब्राह्मणाक्षि। कथं कबराक्षम्, गवाक्षम् इति? अश्वादीनां मुखप्रच्छादनार्थं बहुच्छिद्रं कबराक्षम्, तेन अपि हि दृश्यते, गवाक्षेण च? न एष दोषः। चक्षुःपर्यायवचनो दर्शनशब्दः प्राण्यङ्गवचन इह अश्रीयते।

लघु-सिद्धान्त-कौमुदी

अक्ष्णोऽदर्शनात् ९९७, ५।४।७६

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। [] गवामक्षीव गवाक्षः’॥

न्यासः

अक्ष्णोऽदर्शनात्?। , ५।४।७६

"अदर्शनात्()" इति प्रतिषेधः क्रियते। "कबराक्षम्(), गवाक्षम्()" इति। रूढिउब्दावेतौ, नात्रावयवार्थेऽभिनिवेशः कार्यः। कबराक्षं गवाक्षमिति न सिध्यतीत्यभिप्रायः। स्यादेतत्()--दर्शनप्रतिषेधात्? सिद्धमेतत्(), दृश्यतेऽनेनेति; न दर्शनम्(), न च कबराक्षेम दृश्यते, नापि गवाक्षेण? इत्यत आह--"तेनापि" इत्यादि। दर्शनशब्दोऽयं चक्षुषि प्राण्यङ्गे प्रसिद्धः। तथा हि दर्शनं प्रयुङ्क्ते चक्षुग्र्राह्यमपि। तस्मात्? प्रसिद्धिवशेन चक्षुष्पर्यायो दर्शनशब्दः, स इहाश्रीयते॥

बाल-मनोरमा

अक्ष्णोऽदर्शनात् ९३१, ५।४।७६

अक्ष्णोऽदर्शनात्। "अदर्शना"दिति च्छेदः। दृश्यतेऽनेनेति दर्शनं--चक्षुः। करणे ल्युट्। अचक्षुर्वाचिन इति फलितम्। तदाह--अचक्षुःपर्यायादिति। गवामक्षीवेति। अक्षिशब्दस्तत्सदृशे लाक्षणिकैति सूचयितुमिवशब्दः प्रयुज्यते। मुख्यवृत्त्या चक्षुर्वाचकत्वाऽभावादच्। पुंस्त्वं लोकात्।

बाल-मनोरमा

तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः ७७६, ५।४।७६

अथ तत्पुरुषेष्वसाधारणसमासान्तान् वक्तुमुपक्रमते--तत्पुरुषस्याङ्गुलेः। "अच्प्रत्यन्ववपूर्वा"दित्यतोऽजित्यनुवर्तते, "समासान्त" इत्यधिकृतम्। तेन समासस्य अन्तावयव इति लभ्यते। प्रत्ययः परश्च इत्यधिकारादच्प्रत्ययस्य तत्पुरुषात्परत्वेऽपि तस्य तदवयवत्वादङ्गुलेरित्यवयवषष्ठी। अङ्गुलेरिति तत्पुरुषविशेषणं, तदान्तविधिः। तदाह संख्याव्ययादेरिति। सङ्ख्या च अव्ययं च सङ्ख्याव्यये, ते आदी यस्येति विग्रहः। द्व्यङ्गुलमिति। तद्धितार्थ" इति द्विगुः। प्रमामे द्वयसज्दघ्नञ्मात्रचः "प्रमाणेलो द्विगोर्नित्य"मिति लुक्। द्व्यङ्गुलिशब्दादचि तस्य तद्धितत्वात्तस्मिन् परे "यस्येति चे"ति इकारलोपः। निरङ्गुलमिति। "निरादयः क्रान्ताद्यर्थे" इति समासः अच् इलोपः।

तत्त्व-बोधिनी

अक्ष्णोऽदर्शनात् ८०७, ५।४।७६

अक्ष्णो। दृश्यतेनेनेति दर्शनं चक्षुः, तद्वाचिनोऽक्षिशब्दस्य पर्युदासादमुख्यस्य ग्रहणमित्याशयेनाह---अचक्षुःपर्यायादिति। गवाक्ष इति। गावः--किरणाः। अक्षिशब्दो रन्ध्रवाची। षष्ठीसमासः।

---

सूत्रम्

काशिका-वृत्तिः

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्षामवाङ्मनसाक्षिभ्रुवदारगवौउर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसप
५।४।७७

अच्प्रत्ययान्ता एते शब्दा निपात्यन्ते। समासे व्यवस्था अपि निपातनादेव प्रतिपत्तव्या। आद्यास्त्रयो बहुव्रीहयः। अदृश्यानि अविद्यमानानि वा चत्वारि यस्य सो ऽचतुरः। विगतानि चत्वारि यस्य स विचतुरः। शोभनानि चत्वारि यस्य स सुचतुरः। अतः परे एकादश द्वन्द्वाः। स्त्री च पुमांश्च स्त्रीपुंसौ। इह न भवति, स्त्रियाः पुमानिति। धेनुश्च अनड्वांश्च धेन्वनडुहौ। ऋक् च साम च ऋक्षामे। वाक् च मनश्च वाङ्मनसे। अक्षि च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्। टिलोपो निपात्यते। पादौ च अष्ठीवन्तौ च पदष्ठीवम्। पादस्य पद्भावो निपात्यते। नक्तं च दिवा च नक्तंदिवम्। दसम्यर्थवृत्तयोरव्ययसोः समासो ऽपि निपातनादेव। रात्रौ च दिवा च रात्रिंदिवम्। पूर्वपदस्य मान्तत्वं निपात्यते। अहनि च दिवा च अहर्दिवम्। ननु च पर्यायावेतौ, कथम् अनयोर् द्वन्द्वः? वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनि इत्यर्थः। एको ऽव्यव्यीभावः साकल्ये सरजसमभ्यवहरति। बहुव्रीहौ न भवति, सह रजसा सरजः पङ्कजम् इति। ततः तत्पुरुषः निश्चितं श्रेयो निःश्रेयसम्। निःश्रेयस्कः पुरुषः इत्यत्र न भवति। ततः षष्ठीसमासः पुरुषस्य आयुः पुरुषायुषम्। द्वन्द्वे न भवति, पुरुषश्च आयुश्च पुरुषायुषी। ततो द्विगू द्वे आयुषी समाहृते द्व्यायुषम्। त्र्यायुषम्। इह न भवति, द्व्योरायुः द्व्यायुः त्र्यायुः इति। ततो द्वन्द्वः ऋक् च यजुश्च ऋग्यजुषम्। इह न भवति, ऋग्यजुरस्य उन्मुग्धस्य ऋग्यजुरुन्मुग्धः। जातादिपूर्वपदा उक्षशब्दान्तास्त्रयः कर्मधारयाः जातोक्षः। महोक्षः। वृद्धोक्षः। बहुव्रीहौ न भवति, जातोक्षा ब्राह्मणः। महोक्षा, वृद्धोक्षा इति। ततो ऽव्ययीभावः शुनः समीपम् उपशुनम्। टिलोपाभावः सम्प्रसारणं च निपातनादेव। ततः सप्तमीसमासः गोष्ठे श्वा गोष्ठश्वः। चतुरो ऽच्प्रकरणे त्र्युपाभ्याम् उपसङ्ख्यानम्। त्रिचतुराः। उपचतुराः।

न्यासः

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहक्र्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिश्श्रेय
, ५।४।७७

"समासे व्यवस्थाऽपि" इत्यादि। समासव्यवस्था=समासनियमः--क्वचिद्बहुव्रीहिरेव, क्वचिद्द्वन्द्व इत्येवमादिका निपातनादेव वेदितव्या; व्यवस्थाभेदस्यान्यस्याभावात्()। अपिशब्दादन्यदपि टिलोपादि कार्यं निपातनादेव वेदितव्यम्()। "सप्तम्यर्थवृत्तयोः" इत्यादिना हि सप्तम्यर्थवृत्तयोरव्यययोराधेयप्रधानयोः समासो विद्यते। तस्मान्निपातनादेव च भवतीति वेदितवयम्()। अपिशब्दात्? समासोऽपि निपातनादेव। "अहर्दिवम्()" इति। "रोऽसुपि" ८।२।६९ इति नकारस्य रेफः। "ननु च" इत्यादि। अर्थगत्यर्थो हि शब्दप्रयोगः। पर्यायणाञ्चंकेनैवार्थस्योक्तत्वात्? द्वितीयस्य प्रयोगो न सम्भवति। अहर्दिवाशब्दौ पर्यायौ, तत्? कथमनयोद्र्वन्द्वः! न कथञ्चिदिति भावः। वीप्साद्योतनार्थमुक्तस्यापि प्रयोगो न विरुध्यत इति मन्यमान आह--"वीप्सायाम्()" इत्यादि। चार्थ उत्पद्यमानो द्वन्द्वो वीप्सायां न प्राप्नोतीत्यतो निपात्यते। एको। एकोऽव्ययीभावः। "साकल्ये" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिना।

"सरजसम्()" इति। "अव्ययीभावे चकाले" ६।३।८० इति सहस्य सभावः। "निःश्रेयसम्()" इति। प्रादिसमासः। "निश्रेयस्कः" इति। निश्चितं श्रेयोऽनेनेति बहुव्रीहिः, "शेषाद्विभाषा" ५।४।१५४ इति कप्()। "ऋग्यजुरुन्मुग्धः" इति। य उन्मुग्धत्वादृचो यजूंषि मन्यते स ऋग्यजुरिति बहुव्रीहिणोच्यते। "ततोऽव्ययीभावः" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिना सामीप्ये। "टिलोपाभावः" इत्यादि। उपशुन इत्यत्र "नस्तद्धिते" ६।४।१४४ इति टिलोपाभावो निपातनादेव। ()आयुवमघोनामतद्धिते" ६।४।१३३ इति तद्धितादन्यत्र सम्प्रसारणमुच्यमानं तद्धिते न प्राप्नोतीति तदेव निपातनादेव भवतीति। "चतुरोच्प्रकरणे" इत्यादि। त्रिशब्दादुपशब्दात्? परो यश्चतुरशब्दस्तस्मादच उपसंख्यानं प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्? पूर्वमिव योगविभागमाश्रित्य कत्र्तव्यम्()। त्रयो वा चत्वारो वा "त्रिचतुराः" इति। चतुर्णा समीपे "उपचतुराः"। "संख्याव्ययासन्न" २।२।२५ इत्यादिना बहुव्रीहिः। तत्र "बहुव्रीहौ संख्येये डजबहुगणात्()" ५।४।७३ इति डचि प्राप्तेऽज्विधीयते॥

बाल-मनोरमा

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहक्र्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेय ९३२, ५।४।७७

अचतुर। आद्यास्त्रयो बहुव्रीहय इति। बहुव्रीहय एवेत्यर्थः। भाष्यवाक्यमिदम्। अचतुर इति। "नञोऽस्त्यर्थाना"मिति विद्मानपदलोपः। विचतुर इति। विगतानि चत्वारि यस्येति विग्रहः। सुचतुर इति। सु=शोभनानि चत्वारि यस्येति विग्रहः। "न पूजना"दिति निषेधो बाध्यते।

त्र्युपाभ्यामिति। वार्तिकमिदम्। त्रि उप आभ्यां परो यश्चतुर्शब्दस्तस्मादजिष्यते। त्रिचतुरा इति। त्रयो वा चत्वारो वेति विग्रहः। "सङ्ख्याव्ययासन्ने"ति बहुव्रीहिः। "बहुव्रीहौ सह्ख्येये ड"जिति डचं बाधित्वाऽच्। डचि तु टिलोपः स्यात्। उपचतुरा इति। त्रयः पञ्च वेत्यर्थः। "सङ्ख्ययाव्यये"ति बहुव्रीहिः। अच्। तत एकादश द्वन्द्वा इति। द्वन्द्वा एवेत्यर्थः। इदमपि भाष्यवाक्यम्। स्त्रीपुंसाविति। स्त्री च पुमांश्चेति विग्रहः। अच्। धेन्वड्वाहाविति न भवति। समाहारद्वन्द्वे तु "द्वन्द्वाच्चुदषहान्ता"दित्येव सिद्धम्। ऋक्सामे इति। ऋक्च साम चेति विग्रहः। अच्। टिलोपः। ऋक्सामनी इति न भवति। वाङ्मनसे इति। वाक् च मनस्चेति विग्रहः। अच्। वाङ्मनसी इति न भवति। अक्षिभ्रुवमिति। अच्। प्राण्यङ्गत्वादेकवत्त्वम्। अक्षिभ्रु इति न भवति। दारगवमिति। समाहारद्वन्द्वादच्। "दारगु" इति न भवति। इतरेतरयोगद्वन्द्वे तु दारगावः। ऊर्वष्ठीवमिति। प्राण्यङ्गत्वादेकवत्त्वम्। ऊरू-सक्थिनी। अष्ठीवन्तौ=जानुनी। "सक्थि क्लीबे पुमानू रूः" इति, "जानूरूपर्वाष्ठीवदस्त्रिया"मिति चामरः। नन्वडित्त्वादनान्तत्वाच्च कथं टिलोप इत्यत आह--निपातनाट्टिलोप इति। पटष्ठीवमिति। पादौ चाऽष्ठीवन्तौ चेति द्वन्द्वादच्। प्राण्यङ्गत्वादेकवत्त्वम्। नन्वभत्वात्कथमिह पादशब्दस्य पद्भाव इत्यत आह--निपातनादिति। नक्तमिति मान्तमव्ययम्। दिवेत्याकारान्तमव्ययम्। नक्तंदिवेति द्वन्द्वादच्। "यस्येति चे"त्याकारलोपः, "अव्ययीभावश्चे"त्यव्ययत्वम्, नपुंसकत्वं च। "नाव्ययीभावा"दित्यम्भावः। मान्तत्वमिति। रात्रौ च दिवा चेति द्वन्द्वे कृते सुब्लुकि कृते रात्रेर्मान्तत्वं निपात्यत इत्यर्थः। यस्येति चे"त्याकारलोपः, अम्भावश्च। नन्वहन्शब्दार्थस्य दिवाशब्दार्थस्य च एकत्वात्साहित्याऽभावात्कथमिह द्वन्द्वः। अहव्र्यक्तिभेदमादाय द्वन्द्वप्रसक्तावपि "विरूपाणामपि समानार्थकाना"मित्येकशेषो दुर्वार इत्यत आह-वीप्सायां द्वन्द्वो निपात्यत इति। "नित्यवीप्सयो"रिति वीप्सायां द्विर्वचने कृते एकशेषं बाधित्वा द्वन्द्वो निपात्यत इत्यर्थः। सरजसमिति। रजोऽप्यपरित्यज्य इत्यस्वपदविग्रहः। रजः=धूलिः। साकल्ये सहशब्दस्य रजश्शब्देनाऽव्ययीभावः। "अव्ययीभावे चाकाले" इति सह शब्दस्य सभावः। अच्। अव्ययीभाव इति। भाष्ये तथावचनादव्ययीभावस्य ग्रहणमिति भावः। सरजः पङ्कजमिति। रजोभिः परागैः सहेति विग्रहः। "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। "वोपसर्जनस्ये"ति सहस्य सः। बहुव्रीहित्वान्नाऽच्। निऋश्रेयसमिति। कर्मधारयादच्। तत्पुरुष एवेति। तथा भाष्यादिति

भावः।निःश्रेयानिति। निश्चितं श्रेयो यस्येति बहुव्रीहित्वान्नाऽजिति भावः। "ईथसश्चे"ति निषेधान्न कप्। पुरुषायुषमिति। षष्ठीसमासादजिति भाष्यम्। ततो द्विगू इति। भाष्यवाक्यमिदम्। द्व्यायुषं त्र्यायुषमिति। द्वयोरायुषोः समाहार इति, त्रयाणामायुषां समाहार इति च विग्रहः। "तद्धितार्थ" इति द्विगोरच्। ततो द्वन्द्व इति। भाष्यवाक्यमिदम्। ऋग्यजुषमिति। ऋचश्च यजूंषि च एषां समाहार इति समाहारद्वन्द्वः। ततस्त्रयः कर्मधारया इति। तथा भाष्यादिति भावः। जातोक्ष इति। जातश्चासावुक्षा चेति विग्रहः। अचि सत्युक्षन्शब्दे टिलोपः। महोक्ष इति। महांश्चासावुक्षा चेति विग्रहः। "आन्महतः" इत्यात्त्वम्। अचि टिलोपः। वृद्धोक्ष इति। वृद्धश्चासावुक्षा चेति विग्रहः। अचि टिलोपः। उपशुनमिति। अव्ययीभावादच्, तथा बाष्यात्। नन्वत्र "नस्तद्धिते" इति टिलोपः कुतो न स्यात्, "अतद्धिते" इति पर्युदासात् "()आयुवमघोनामतद्धिते" इति कथं वा संप्रसारणं स्यादित्यत आह--टिलोपाऽभाः संप्रसारणं च निपात्यत इति। गोष्ठ()आ इति। "सप्तमीसमासाद"जिति भाष्यम्। अत एव भाष्यात्सप्तमीसमासः। टिलोपः। "अतद्धिते" इति निषेधान्न संप्रसारणम्। षष्ठीतत्पुरुषे तु--गोष्ठ()आआ।

तत्त्व-बोधिनी
अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहक्र्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेय ८०८, ५।४।७७

अचतुर। निपात्यन्त इति। निपातनफलं तु समासविशेषनियमः, टिलोपादिकं च। तदाह---आद्या इति। बहुब्राईहय इति। बहुव्रीहय एवेत्यर्थः। तेन तत्पुरुषो अचत्वारो विचत्वार इत्येव भवतीति भावः। एवमुत्तरत्राप्यवधारणमुह्यम्।

त्र्युपाभ्यां चतुरोऽजिष्यते। त्रिचतुरा इति। त्रयश्चत्वारो वेति विग्रहः। "सङ्ख्याव्ययासन्ने"ति बहुव्रीहिः। "बहुव्रीहौ सङ्ख्येये"इति डचोऽपवादोऽच्। अक्षिभ्रुवमिति। प्राण्यङ्गत्वादेकवत्। ऊरू चाष्ठीवन्तौ चेति। "सक्थि क्लीबे पुमानूरुः"इत्यमरः। "जानूरुपूर्वाऽष्ठीवदस्त्रिया"मिति च। ऊर्वष्ठीवं। पदष्ठीवमिति। प्राण्यङ्गत्वादेकवद्भावः। द्वन्द्वो निपात्यत इति। "विरूपाणामपू"त्येकशेषं बाधित्वेति शेषः। सरजसमिति। "अव्ययीभावे चाऽकाले"इति सहस्य सभावः। सरजः पङ्कजमिति।"सरजसमकरन्दमिर्भरासु"इति माघप्रयोगस्तु चिन्त्य इति भावः। निःश्रेयानिति। "निश्चितं श्रेयो येने"ति विग्रहः। "निः श्रेयस्कः"इति केषाञ्चित्प्त्र्युदाहरणमशुद्धम्, "ईयसश्चे"ति कपो निषेधात्। गोष्ठे ()ओति। एतेन "सप्तमीतत्पुरुष एवे"ति नियमो दर्शितः, तेन षष्ठीतत्पुरुषे "गोष्ठ()आआ"इत्येव।

---

सूत्रम्
काशिका-वृत्तिः
ब्रह्महस्तिभ्यां वर्चसः ५।४।७८

ब्रह्महस्तिभ्यां परो यो वर्चःशब्दस् तदन्तात् समासादच् प्रत्ययो भवति। ब्रह्मवर्चसम्। हस्तिवर्चसम्। पल्यराजभ्यां च इति वक्तव्यम्। पल्यवर्चसम्। राजवर्चसम्।
न्यासः
ब्राह्हस्तिभ्यां वर्चसः। , ५।४।७८

"ब्राह्वर्चसम्(), हस्तिवर्चसम्()" इति। षष्ठीसमासौ। वर्चःशब्दोऽयं दीप्तिवचनः। "पल्यराजशब्दाभ्याञ्चेति वक्तव्यम्()" ["पल्यराजभ्याम्()--काशिका] (इति)। पल्यशब्दाद्राजशब्दाच्च परो यो वर्चस्()शब्दस्तस्माच्चाज्भवतीत्येवमर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं चास्य पूर्वमेव योगविभागमाश्रित्य कत्र्तव्यम्()॥

बाल-मनोरमा

ब्राह्महस्तिभ्यां वर्चसः ९३३, ५।४।७८

ब्राह्म। शेषपूरणेन सूत्रं व्याचष्टे--अच्स्यादिति। ब्राह्मवर्चसमिति। ब्राह्मणो वर्च इति विग्रहः। हस्तिवर्चसमिति। हस्तिनो वर्च इति विग्रहः।

पल्यराजभ्यामिति। आभ्यां परो यो वर्चश्शब्दस्मादपि अजिति वक्तव्यमित्यर्थः। पल्यवर्चसमिति। पलं मांसं, तदर्हति पल्यः। मांसभोजीत्यर्थः। तस्य वर्च इति विग्रहः। राजवर्चसमिति। राज्ञां वर्च इति विग्रहः।

तत्त्व-बोधिनी

ब्राह्महस्तिभ्यां वर्चसः ८०९, ५।४।७८

ब्राह्मवर्चसमिति। षष्ठीतत्पुरुषः। एवं हस्तिवर्चसमपि।

पल्यराजभ्यां चेतिवक्तव्यम्। पल्येति। पलं मांसमर्हती"ति पल्यो मांसभोजी, तदीयं वर्चः--पल्यवर्चसम्।

---

सूत्रम्

काशिका-वृत्तिः

अवसमन्धेभ्यस् तमसः ५।४।७९

अव सम् अन्ध इत्येतेभ्यो यः परः तमस्शब्दः तदन्तात् समासातच् प्रत्ययो भवति। अवतमसम्। सन्तमसम्। अन्धतमसम्।

न्यासः

अवसमन्धेभ्यस्तमसः। , ५।४।७९

"अवतमसम्()" इति। अवहीनं तमसा, अवहीनं वा तम इति प्रादिसमासो वाऽयम्()। एवं सङ्गतं तमसा, सङ्गतं तमः--"सन्तमसम्()"। अन्धं करोतीति णिच्(), तदन्तात्(), अन्धयतीत्यन्धम्()। अन्धञ्च तत्? तमश्चेति "अन्धतमसम्()"। यदन्धं तमः करोतीति तदेवमुच्यते॥

बाल-मनोरमा

अवसमन्धेभ्यस्तमसः ९३४, ५।४।७९

अवसमन्धेभ्यस्तमसः। अव सम् अन्ध एभ्यः परो यस्तमश्शब्दस्तस्मादच्स्यादित्यर्थः। अवतमसमिति। अवहीनं तम इति विग्रहः। प्रादिसमासः। संतमसमिति। संततं तम इति विग्रहः। प्रादिसमासः। अन्धयतीत्यन्धमिति। "अन्ध दृष्ट()उपघाते" चुरादिः। दृ()ष्ट प्रतिबध्नातीत्यर्थः। पचाद्यजिति। "नन्दिग्राहिपचादिभ्यो ल्युणिन्यचः" इति पचादित्वप्रयुक्तोऽच्प्रत्यय इत्यर्थः। अचि णिलोपेऽन्धमिति रूपम्। गाढमित्यर्थः। फलति। गाढस्यैव तमसो दर्शनप्रतिबन्धकत्वात्। अन्धतमसमिति। कर्मधारयादच्।

तत्त्व-बोधिनी

अबसमन्धेभ्यस्तमसः ८१०, ५।४।७९

अवतमसमित्यादिष अवहीनं संततं च तम इथि विग्रहः। अन्धयतीति। "अन्ध दृष्ट()उपघाते" चुरादिः। अन्धमिति। गाढमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

श्वसो वसीयःश्रेयसः ५।४।८०

श्वसः परौ यौ वसीयस्श्रेयस्शब्दौ तदन्तात् समासातच् प्रत्ययो भवति। श्वोवसीयसम्। श्वःश्रेयसम्। मयूरव्यंसकादित्वात् समासः। स्वभावाच् च इह श्वःशब्दः उत्तरपदार्थस्य प्रशंसामाशीर् विषयाम् आचश्टे, श्वःश्रेयसं ते भूयत्। शोभनं श्रेयस् ते भूयातित्यर्थः। श्वोवसीयसम् इत्यस्य एव अयं पर्यायः।

न्यासः

�आसो वसीयःश्रेयसः। , ५।४।८०

"()आओवसीयम्()। ()आःश्रेयसम्()" इति। ()आओवसीयः, ()आः श्रेय इति विगृह्र मयूरव्यंसकादित्वात्? समासः। "स्वभावाच्च" इत्यादि। यद्यपि ()आःशब्दोऽन्यत्र कालविशेषे वत्र्तते, तथापीह समास उत्तरपदार्थस्य प्रशंसां स्तुतिमाशीर्विषयां प्रतिपादयति। कुतः? स्वभावात्()। शब्दानां ह्र्थाभिधानं स्वाभाविकम्। तत्र स्वभाव एवात्र हेतुः। "()आओवसीयसमित्यस्यैवायं पर्यायः" इति। अस्येत्यनेन च ()आःश्रेयसमित्येष शब्दो निर्दिश्यते॥

बाल-मनोरमा

�आसीवसीयश्श्रेयसः ९३५, ५।४।८०

()आसः। "()आ"सित्यव्ययात् परो यो वसीयश्शब्दः, श्रेयश्शब्दश्च तस्मादच्स्यादित्यर्थः। वसुशब्दः प्रशस्तवाचीति। "यं कामयेत वसीयान् स्यादि"त्यादौ तथा दर्शनादिति भावः। तत इति। अतिशयेन वसुरिति विग्रहे "द्विवचनविभज्योपपद" इतीयसुनि, "तुरिष्ठेमेयस्सु" इत्यनुवृत्तौ "टे"रिति टिलोपे वसीयश्शब्द इत्यर्थः। ()आस्()शब्द इति। यद्यपि ()आस्शब्दः कालविशेषवाची तथापि प्रकृते शब्दशक्तिस्वबावादुत्तरपदार्थगतां प्रशंसामाशीर्विषयं द्योतयतीत्यर्थः। आशिषो वियः आशीर्विषयः, तमिति षष्ठीसमासः। प्रशंसाविशेषणम्। विषयशब्दस्य नित्यपुंलिङ्गत्वान्न स्त्रीलिङ्गता। एवं च ()आस्शब्द उत्तरपदार्थंगतप्राशस्त्यस्य द्योतक इति फलितोऽर्थः। ननु तर्हि ()आस्()शब्दस्योत्तरपदार्थगतप्राशस्त्यद्योतकत्वेऽप्युत्तरपदसामानाधिकरण्याऽभावात्कथं विशेषण समास इत्यत आह--मयूरेति। तथाचाशीर्लिङ्गादिप्रयोग एवास्य साधुत्वमित्यभिप्रेत्योदाहरति--()आओवसीयसमिति। अतिशयेन प्रशस्तमित्यर्थः। ()आःश्रेयसमिति। अतिशयेन प्रशत्मिति विग्रहे प्रशस्तशब्दादीयसुन्, "प्रशस्यस्य श्रः"। "प्रकृत्यैका"जिति प्रकृतिभावान्न टिलोपः। आद्गुणः। श्रेयसिति रूपम्। ()आस्शब्दस्तु उत्तरपदार्थगतप्रशंसाद्योतकः। "()आःश्रेयसं शिवं भद्र"मित्यमरः। "ते भूया"दिति तु उभयत्रापि संबध्यते,-()आओवसीयसं ते भूयात्, ()आःश्रेयसं ते भूयादिति।

तत्त्व-बोधिनी

�आसीवसीयश्श्रेयसः ८११, ५।४।८०

()आसो। "अवस् शब्दात्प्रशस्तवचनादीयसुन्नि"त्याकरविरुद्धं व्याचक्षाणा उपेक्ष्या इति ध्वनयति--वसुशब्द इति। वसीय इति। "यः कामयेत वसीयान् स्या"मिति श्रौतप्रयोगोऽप्यत्रानुकूल इति भावः। ()आस्()शब्द इति। कालवाच्यप्ययं, प्रकृते

त्वर्थविशेषपरः, शक्तिस्वाभाव्यात्तमेवाह---उत्तरपदार्थप्रशंसामिति। उत्तरपदार्थभूतां प्रशंसामित्यर्थः। आशीर्विषयमिति। षष्ठीसमासः। विषयशब्दस्याऽजहल्लिङ्गत्वात्पुंलिङ्गनिर्देशः। "उत्तरपदार्थप्रशंसाया आशीर्विषयतामाहे"ति पाठान्तरं क्वचिदस्ति। उभयथापि आशीर्विषयताया द्योतकोऽयमिति फलितोऽर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अन्ववतप्ताद् रहसः ५।४।८१

अनु अव तप्त इत्येतेभ्यः परो यो रहस्शब्दः तदन्तात् समासादच् प्रत्ययः भवति। अनुरहसम्। अवरहसम्। तप्तरहसम्।

न्यासः

अन्ववतप्राद्रहसः। , ५।४।८१

"अनुरहसम्()" इति। रहःशब्दोऽयमप्रकाशे वत्र्तते। अनुगतं रहसः, अनुगतं रह इति वा प्रादिसमासः। अनुगतं रहोऽस्मिन्निति बहुव्रीहिर्वा। "अवरहसम्()" इति। अवहीनं रहसाऽवहीनं रह इति वा प्रादिसमासः। अवहीनं वा रहोऽस्मिन्निति बहुव्रीहिः। तप्तञ्च तद्रहश्चेति "तप्तरहसम्()" विशेषणसमासः। यदुत्पन्नं रहो लोते न केनचिदवगम्यते, तत्? तप्तरहसमित्युच्यते। तपतमिव तप्तम्(), यथैव ह्यग्निना तप्तं न केनचिदवगम्यते, तथेदमिति॥

बाल-मनोरमा

अन्ववतप्ताद्रहसः ९३६, ५।४।८१

अन्ववतप्ताद्रहसः। अनु अव तप्त एतेषां समाहारद्वन्द्वः। एभ्यः परो यो रहश्शब्दस्तस्मादच्स्यादित्यर्थः। रहः-अप्रकाशप्रदेशः। अनुरहसमिति। अनुगतं रह इति विग्रहः। अवरहसमिति। अवहीनं रह इति। विग्रहः। उभयत्र प्रादिसमासः। तप्तरहसमिति। तप्तं रह इति विग्रहः। प्रतेरुरसः। सप्तम्यर्थे द्योतकतया वर्तत इति सप्तमीस्थम्। सप्तम्यर्थद्योतकात् प्रतेः परो य उरश्शब्दस्तस्मादच् स्यादित्यर्थः। उरसीति। अनेन यदुच्यते तदेव प्रत्युरसमित्यनेनोच्यत इत्यर्थः। सप्तम्यर्थद्योतकः प्रतिः। तस्य विभक्त्यर्थे विद्यमानस्य "अव्ययं विभक्ती"त्यादिनाऽव्ययीभाव इति भावः।

तत्त्व-बोधिनी

अन्ववतप्ताद्रहसः ८१२, ५।४।८१

अन्वव। इह "रहः "इत्यप्रकाशमुच्यते। "अनुगतमवहीनं च रहः"इति प्रादिसमासः, "अनुगतं रहोऽस्मिन्नि"त्यादिबहुव्रीहिर्वा। प्तरहसमिति। "तप्तं च तद्रहश्चे"ति विग्रहः। परेणानधिगम्यमित्यर्थः। इत्यतः प्रागिति। "प्राग्बहुव्रीहिग्रहणं कर्तव्य"मिति वार्तिकोक्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

प्रतेरुरसः सप्तमीस्थात् ५।४।८२

प्रतेः परो य उरस्शब्दः तदन्तात् समासातच् प्रत्ययो भवति, स चेदुरस्शब्दः सप्तमीस्थो भवति। सप्तम्यर्थे वर्तते इत्यर्थः। उरसि वर्तते। विभक्त्यर्थे अव्ययम् इति समासः। प्रत्युरसम्। सप्तमीस्थातिति किम्? प्रतिगतम् उरः प्रत्युरः।

न्यासः

प्रतेरुरसः सप्तमीस्थात्?। , ५।४।८२

"सप्तमीस्थात्()" इति। सप्तम्यां तिष्ठतीति सप्तमीस्थः, "सुपि स्()थः" ३।२।४ इति कप्रत्ययः। यश्च सप्तम्यर्थे वत्र्तते, एवं सप्तमीस्थो भवतीत्याह--"सप्तम्यर्थे वत्र्तते" इति। "प्रतिगतमुरः प्रत्युरः" इति। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा। ९१) इति समासः॥

---

सूत्रम्

काशिका-वृत्तिः

अनुगवम् आयामे ५।४।८३

अनुगवम् इत्यच्प्रत्ययान्तं निपात्यते आयमे ऽभिधेये। अनुगवम् यानम्। यस्य चायामः २।१।१५ इति समासः। आयमे इति किम्? गवां पश्चदनुगु।

न्यासः

अनुगवमायामे। , ५।४।८३

"आयामेऽभिधेये" इति। आयामः=दैध्र्यम्()। मत्वर्थीयाकारान्तश्चायम्()। आयामे चेत्यभिदेय इत्यर्थः। अन्यताऽनुगवं यानमिति सामानाधिकरण्यं न स्यात्()। यानम्()ायामः। "अनुगवं यानम्()" इति। गावो यथा तथा यानमायातमित्यर्थः। "गवां पश्चात्()" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिनाव्ययीभावः पश्चादर्थे च। पूर्ववद्गोशब्दस्य ह्यस्वः। अनुशब्दात्प्रत्यये विधातव्ये यदनुगवमिति निपातनं तत्प्रसिद्ध्युपसंग्रहार्थम्()। तेन यद्गवा बाहं गोभिश्च तुल्यामामं तत्रैव भवति, नान्यत्र॥

बाल-मनोरमा

अनुगवमायामे ९३७, ५।४।८३

अनुगवमायामे। एतदिति। अनुगवमित्येतदित्यर्थः। अनुना दीर्घत्वे द्योत्येऽच्प्रत्ययान्तो निपात्यत इत्यर्थः। आयामशब्दो दीर्घपर इति भावः। अनुगवंयानामिति। अनुगोशब्दादचि अवादेश इति भावः। यस्य चेति। "यस्य चायामः" इत्यव्ययीभावसमासः। तथा च गोदैध्र्यकं यानमित्यर्थः फलतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

द्विस्तावा तिर्स्तावा वेदिः ५।४।८४

द्विस्तावा त्रिस्तावा इति वेदिश्चेदभिधेया भवति। अच्प्रत्ययः, टिलोपः, समासश्च निपात्यते। यावती प्रकृतौ वेदिः ततो द्विगुणा वा त्रिगुणा वा कस्यांचिद् विकृतौ तत्र इदं निपातनम्। द्विस्तावा वेदिः। त्रिस्तावा वेदिः। वेदिः इति किम्? द्विस्तावती, त्रिस्तावती रज्जुः।

न्यासः

द्विस्तावा त्रिस्तावा वेदिः। , ५।४।८४

द्विस्तावा त्रिस्तावा वेदिः। ६।४।१४८ लोपे कृते तावच्छब्शदस्य टिलोपो निपात्यते। "समासश्च" इति।

द्वित्रिशब्दयोर्निपात्यते। "यावतो प्रकृतौ" इत्यादिना नपातनस्य फलं दर्शयति। प्रकृतिविकृतिशब्दौ कार्यविशेषवचनौ। कर्मविशेषे हि कश्चित्? यागाख्यः प्रकृतिशब्देनोच्यते, कश्चिद्विकृतितश्बदेन॥

बाल-मनोरमा

द्विस्तावा त्रिस्तावा वेदिः ९३८, ५।४।८४

द्विस्तावा। यावती प्रकृताविति। यतोऽङ्गकलाप स्यातिदेशः। सा प्रकृतिः। अ()आमेघस्य प्रकृतिरग्निष्टोमः, तत्राम्नाताऽङ्गकलापानाम()आमेधेऽतिदेशात्। तदुक्तं कल्पसूत्रे"सर्वसोमक्रतूनामग्निष्टोमः प्रकृति"रिति। तस्मिन्नग्निष्टोमे वेदिपरिमाणं श्रुतम्। तत्र च "त्रिशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची ष()ट्त्रशत्, प्राची चतुर्विंशतिः, पुरस्तात्तिरश्ची"ति प्रकृतौ वेदिपरिमाणमुक्तम्। अस्यां तु वेद्यां ततो द्विगुणितं त्रिगुणितं च क्षेत्रपरिमाणमुक्तं कल्पसूत्रेषु-"अष्टाविंशत्यूनं पदसहरुआं माहावेदि"रिति। पदग्रहणमत्र प्रक्रमस्याप्युपलक्षणम्। तथाच प्रकृतौ अग्निष्टोमे यावती वेदिस्तदपेक्षया द्विगुणा त्रिगुणा वाऽ()आमेधादौ वेदिरस्ति, तत्र आ()आमेधिकवेद्यामभिधेयायां द्विस्तावेति त्रिस्तावेति च भवतीत्यर्थः। "सङ्ख्यायाः क्रियाभ्युवृत्तिगणने कृत्सुच्" "द्वित्रिचतुभ्र्यः सुच्" इति द्विशब्दत् क्रियाभ्यावृत्तौ सुचि कृते द्विरिति त्रिरिति च रूपम्। तत्र प्राकृतं परिमाणम् अस्या अस्तीति तावती। प्राकृतपरिमाणेति यावत्। द्विरिति तच्छब्दार्थे प्रकृतिपरिमाणेऽन्वेति। द्विः -तावतीति विग्रहः द्विरावृत्तं प्राक#ऋतं यत् परिमाणं तद्वत्या()आमेधिकी वेदिरित्यर्थः। अत एव निपातनात्समासः, अच्प्रत्ययः, तावतीशब्दस्य "भस्याऽढे" इति पुंवत्त्वे ङीपो निवृत्तौ प्रत्ययस्याऽडित्त्वेऽपि प्रकृतेर्नान्तत्वाऽभावेऽपि टिलोपः। द्विस्तावती त्रिस्तावती रज्जुरिति। अत्र वेद्यामप्रवृत्तेरच्प्रत्ययटिलोपसमासा न भवन्तीत्यर्थः। तथाच प्रत्युदाहरणे "द्वि"रिति भिन्नं पदम्।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गादध्वनः ५।४।८५

उपसर्गात् परो यो ऽध्वन्शब्दः तदन्तात् समासातच् प्रत्ययो भवति। प्रगतो ऽध्वानं प्राध्वोरथः। प्राध्वं शकटम्। निरध्वम्। प्रत्यध्वम्। उपसर्गातिति किम्? परमाध्वा। उत्तमध्वा।

लघु-सिद्धान्त-कौमुदी

उपसर्गादध्वनः ९९८, ५।४।८५

प्रगतोऽध्वानं प्राध्वो रथः॥

न्यासः

उपसर्गादध्वनः।, ५।४।८५

"प्राध्वम्()" इति। प्रादिसमामः। तत्र प्राध्वमिति "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा।९१) इति समासः। निष्क्रान्तमध्वन इति "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वा।९५)"अत्यध्वम्()" इति। प्राध्वमित्यनेन तुल्यमेतत्()। उपसर्गश्चात्र न गत्युपलक्षणम्()। कुत एतत्()? क्रियायोगाभावात्()॥

बाल-मनोरमा

उपसर्गादध्वनः ९३९, ५।४।८५

उपसर्गादध्वनः। उपसर्गात् परो योऽध्वन्शब्दस्तस्मादच् स्यादित्यर्थः। प्राध्वो रथ इति। "अत्यादयः" इति समासादच्।

"नस्तद्धिते" इति टिलोपः।

---

सूत्रम्

काशिका-वृत्तिः

तत्पुरुषस्य अङ्गुलेः सङ्ख्याऽव्ययादेः ५।४।८६

अङ्गुलिशब्दान्तस्य तत्पुरुषस्य सङ्ख्यादेः अव्ययादेश्च अच् प्रत्ययो भवति। द्वे अङ्गुली प्रमानम् अस्य द्व्यङ्गुलम्। त्र्यङ्गुलम्। तद्धितार्थ इति समासः। प्रमाणे लो द्विगोर् नित्यम् ६।२।१२ इति मात्रचो लोपः। अव्ययादेः निर्गतम् अङ्गुलिभ्यः निरङ्गुलम्। अत्यङ्गुलम्। तत्प्रुषस्य इति किम्? पञ्चाङ्गुलिः। अत्यङ्गुलिः पुरुषः। तत्पुरुषाधिकारश्च द्वन्द्वाच्चुदषहान्तातिति यावत्।

लघु-सिद्धान्त-कौमुदी

तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ९५८, ५।४।८६

संख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। निर्गतमङ्गुल्यो निरङ्गुलम्॥

न्यासः

तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः। , ५।४।८६

"मात्रचो लोपः" इति। "प्रमाणे द्वयसच्()" ५।२।३७ इत्यादिना विहितस्य। "निरङ्गुलम्()" इति। निरध्वमित्यनेन तुल्यमेतत्()। "अत्यङ्गुलम्()" इति। एतदप्यत्यध्वमित्यनेन तुल्यम्()। "पञ्चाङ्गुलिः" इति बहुव्रीहिः॥

तत्त्व-बोधिनी

तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः ६८५, ५।४।८६

तत्पुरुषस्येति। अलोन्त्यविधिं बाधित्वा "प्रत्ययः" "परश्चे"ति परत्वात्तत्पुरुषस्याऽङ्गुले"रिति तु समासान्तापेक्षया अवयवषष्ठीत्याहुः। व्यङ्गुलमिति। "तद्धितार्थ"इति समासः। "द्विगोर्नित्य"मिति मात्रचो लोप इति वृत्तिकृत्। मनोरमायां तु द्वयसचो लुगिति स्थितम्।

अहग्र्रहणं द्वन्द्वर्थम्। द्वन्द्वार्थमिति। "अह्नो रात्रि"रिति षष्ठीतत्पुरुषस्याऽसम्भवादिति भावः। नन्वहःशब्दस्याऽहस्तुल्यतायां, रात्रिशब्दस्य वा रात्रितुल्यतायां गौणत्वसम्भवादहश्चासौ रात्रिश्चेति कर्मधारयोऽस्त्विवति चेन्न। मुक्यसम्भवे गौणग्रहणाऽयोगात्। "हेमन्तशिशिरावहोरात्रे चे"त्यत्र द्वन्द्वे समासान्तदर्शनाच्च। अहोरात्र इति। "जातिरप्रणिना"मित्येकवद्भावः। "स नपुंसक"मित्येतद्बाधित्वा परत्वात् "रात्राह्नाहाः"इति पुस्त्वम्। एतेनैकवद्भावात् क्लीबतेति प्राचो ग्रन्थः परास्तः। "मासेन स्यादहोरत्रः" इत्यादिग्रन्थविरोधाच्च। सर्वरात्र इथि। "पूर्वकालैके"ति समासः। पूर्वरात्र इति। "पूर्वापराधरोत्तर"मित्येकदेशिसमासः। यदा तु रात्रिशब्दस्यैकदेसे लक्षणां स्वीकृत्य कर्मधारयोऽभ्युपगम्यते तदा पूर्वरात्रिरित्येव भवति। द्विरात्रमिति। "सङ्ख्यापूर्वं रात्रं क्लीब"मिति वक्ष्यते। अह्नष्टखोरेव। "नस्त्त्द्धते"इत्येव सिद्धे नियमार्थमिदम्। एवकारस्त्वह्न एव टखयोरिति विपरीतनियमशङ्कानिरासार्थः। "आत्माध्वनौ खे"इति प्रकृतिभावविधानेन तन्निरासे प्रतिपत्तिगौरवं स्यादिति भावः। टखोरेवेति किम्()। अह्ना निर्बृत्तमाह्निकम्। "काला"दित्यधिकारे "तेन निर्वृत्त"मिति ठञ्। टिलोपाऽभावात् "अल्लोपोऽनः"इत्यकारलोपः।

---

सूत्रम्

काशिका-वृत्तिः

अहःसर्वएकदेशसङ्ख्यातपुण्याच् च रात्रेः ५।४।८७

अहरादिभ्यः परो यो रात्रिशब्दः तदन्तस्य तत्पुरुषस्य अच् प्रत्ययो भवति, चकारात् सङ्ख्यादेः अव्ययादेश्च। अहर्ग्रहणं द्वन्द्वार्थम्। अहश्च रात्रिश्च अहोरात्रः। सर्वरात्रः। एकदेशे पूर्वं रात्रेः पूर्वरात्रः। अपररात्रः। पूर्वपरावर इति समासः। सङ्ख्याता रात्रिः सङ्ख्यातरात्रः। विशेषणं विशेष्येण इति समासः। एवं पुण्या रत्रिः पुण्यरात्रः। सङ्ख्याव्यायदेः खल्वपि द्वे रात्री समाहृते द्विरात्रः। त्रिरात्रः। अतिक्रान्तो रात्रिम् अतिरात्रः। नीरात्रः।

लघु-सिद्धान्त-कौमुदी

अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ९५९, ५।४।८७

एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्॥

न्यासः

अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः। , ५।४।८७

"अहग्र्रहणं द्वान्द्वार्थम्()" इति। इष्टिरियम्()। न तत्पुरुषार्थम्(); मुख्यार्थे तत्पुरुषस्यासम्भवात्()। द्वन्द्वार्थे पदार्थं प्रत्याश्रयः। तथा हि--यद्यहर्गुणा रात्रिरहः शब्देनीच्यते, रात्रिगुणं वाहो रात्रिशब्देन गौण्या कल्पनया, तदाहश्च रात्रिश्चेति समानाधिकरणस्तत्पुरुषः सम्भवत्येव। तस्मादिष्टिरियम्()। एतावदुक्तं स्यात्()--द्वन्द्व इष्यत इति। अत्र च ज्ञापकम्--"हेमन्तशिशिरावहोरात्रे च च्छन्दसि" २।४।२८ इति द्वन्द्वे समासन्तस्य रात्रिशब्दस्य निपातनम्()। "अहोरात्रः" इति। "रात्राह्नाहाः पुंसि" २।४।२९ इति पुंल्लिङ्गता। "अहन्()" ८।२।६८ इति "रूपरात्रिरथन्तरेषूपसंख्यानम्()" (वा। ९२४) इति नकारस्य रुत्वाद्गुणः। "सर्वरात्रः" इति। "पूर्वकालैक सर्व" २।१।४८ इत्यादिना समानाधिकरणस्तत्पुरुषः। "द्विरात्रः" इति "तद्धितार्थोत्तरपद" २।१।५० इत्यादिना समाहारे द्विगुः, "द्विगुश्च" २।१।२२ इति तत्पुरुषसंज्ञा। "अतिरात्रः" इति। अत्यध्वमित्यनेन तुल्यमेत्()। "नीरात्रः" इति। "रोरि" ८।३।१४ इति रेफलोपः। "ढ्रलोपे पूर्वस्य" ६।३।११० इति दीर्घः॥

बाल-मनोरमा

अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ७७७, ५।४।८७

अहःसर्वैकदेश। एभ्यो रात्रेरिति। अहन्, सर्व, एकदेश, सङ्ख्यात, पुण्य--एभ्यः परस्य रात्रिशब्दस्येत्यर्थः। अहन्नादिपूर्वपदकस्य रात्र्यन्तस्य तत्पुरुषस्येति यावत्।

ननु अहरादी रात्र्यन्तस्तत्पुरुषो नास्त्येव, अह्नो रात्रिरिति वा, अहश्चासौ रात्रिश्चेति वा, असंभवादित्यत आह-अहग्र्रहणं द्वन्द्वार्थमिति। नच ब्राह्मणो यदहस्तस्यावयवभूता या मानुषीरात्रिरिति षष्ठीतत्पुरुषः संभवतीति वाच्यम्, "अहग्रहणं द्वन्द्वार्थ"मिति भाष्यप्रामाण्येन एवंजातीयकतत्पुरुषस्य प्रयोगाऽभावोन्नयनात्। अहोरात्र इति। द्वन्द्वादच्, इलोपः, "जातिरप्राणिना"मित्येकवत्त्वम्। "स नपुंसक"मिति बाधित्वा "रात्राह्नाहाः पुंसी"ति पुंस्त्वम्। सर्वा रात्रिः सर्वरात्र इति। सर्वा रात्रिरिति विग्रहे "पूर्वकालैके"ति कर्मधारयः। अच्। इकारलोपः। "रात्राह्नाहा"इति पुंस्त्वम्। "सर्वनाम्नो वृत्तिमात्रे" इति पुंवत्त्वम्। एकदेशेत्यर्थग्रहणमित्यभिप्रेत्योदाहरति--पूर्वमिति। पूर्वं रात्रेरिति विग्रहे "पूर्वपराधरोत्तर"मित्येकदेशिसमासः। अच्, इलोपः, "रात्राह्ने"ति पुंस्त्वम्। सङ्ख्यातरात्र इति। सङ्ख्याता रात्रिरिति विग्रहे कर्मधारायः। "पुंवत्कर्मधारये"ति पुंवत्त्वम्। अच्, इलोपः। "रात्राह्ने"ति पुंस्त्वम्। द्विरात्रमिति। "तद्धितार्थे"ति द्विगुः।

सङ्ख्यादित्वादच्, इलोपः। "सङ्ख्यापूर्वं रात्रं क्लीब"मिति नपुंसकत्वम्। अतिरात्र इति। "अत्यादयः क्रान्ताद्यर्थे" इति समासः। अव्ययादित्वादच्, इलोपः, "रात्राह्ने"ति पुंस्त्वम्।

---

सूत्रम्

काशिका-वृत्तिः

अह्नो ऽह्न एतेभ्यः ५।४।८८

राजाहःसखिभ्यष् टच् ५।४।९१ इति वक्ष्यति, तस्मिन् परभूते अहनित्येतस्य अह्नः इत्ययम् आदेशो भवति एतेभ्य उत्तरस्य। सङ्ख्याव्ययादयःप्रक्रान्ताः सर्वनाम्ना प्रत्यवमृश्यन्ते। सामर्थ्याच्चाहःशब्दः पूर्वत्वेन नाश्रीयते। परिशिष्टानां ग्रहणम्। न हि अहःशब्दात् परो ऽहःशब्दः सम्भवति। सङ्ख्यायास्तावत् द्व्योरह्नोर् भवः द्व्यह्नः। त्र्यह्नः। अव्ययात् अहरतिक्रान्तः अत्यह्नः। निरह्नः। सर्वाह्णः। पूर्वाह्णः। अपराह्णः। सङ्ख्याताह्नः। पुण्यशब्दात् प्रतिषेधं वक्ष्यति।

न्यासः

अह्नोऽह्न एतेभ्यः। , ५।४।८८

"राजाहःसखिभ्यष्टच्? इति टच्प्रत्ययं वक्ष्यति" इति। अथ परकृत एवाचि कस्मादादेशो न विज्ञायते? अशक्यस्तत्रायं विज्ञातुम्(), न ह्रहःशब्दातात्? तत्पुरुषात्? केनचिदज्विहितः, तत्? कथमादेशस्य निमित्तं स्यात्()। अथ "अच्? (५।४।७५) इति योगविभागेनाज्विधीयते? एवमप्येतद्वचनेमनर्थकं स्यात्(); अचि कृते "अल्लोऽपोनः" ६।४।१३४ इत्यनेनाह्नादेशस्य सिद्धत्वात्()। न च टिलोपः प्राप्नोतीति मन्तव्यम्(); "अह्नष्टखोरेव" ६।४।१३४ इति नियमात्()। तस्मादच्येव टिलोपापवादोऽयम्()। आदेशोऽयमयुक्तः। किं पुनस्तत्? सामथ्र्यम्(), यतोऽहःशब्दः पूर्वत्वेन नाश्रीयते? इत्याह--"न ह्रहःशब्दात्()"--इत्यादि। "द्व्यह्नः" इति। द्वयोरह्नोर्भव इति "तदधितार्थ" २।१।५० इत्यादिना समासः, "तत्र भवः ४।३।५३ इत्यण्(), तस्य "द्विगोर्लुगनपत्ये" ४।१।८८ इति लुक्()। "आत्यह्नः" इति। अत्यध्ववत्समासः। "निरह्नः" इति। अत्रापि निरध्ववत्? समासः। "सर्वाह्णः" इति। विशेषणसमासः। प्रतिषेधं वक्ष्यतीति। "उत्तर्मकाभ्याञ्च" ५।४।९० इति॥

बाल-मनोरमा

अह्नोऽह्न एतेभ्यः ७८०, ५।४।८८

अह्नोऽह्न एतेब्यः। पूर्वसूत्रे अहःसर्वैकदेशसङ्ख्यातपुण्यशब्दा निर्दिष्टाः तत्र चकारेण सङ्ख्याव्यये अनुकृष्टे। अहन्शब्दवर्जं ते सर्वे एतच्छब्देन परामृश्यन्ते, नत्वहःशब्दः, अहःशब्दात्परस्य अहन्शब्दस्य तत्पुरुषे असंभवादित्यभिप्रेत्य व्याचष्टे-सर्वादिभ्य इति। समासान्ते पर इति। एतत्तु प्रकरणाल्लब्धम्।

तत्त्व-बोधिनी

अह्नोऽह्न एतेभ्यः ६८७, ५।४।८८

अह्नोऽह्न एतेभ्यः। एतच्छब्देन "अहःसर्वैकदेश---"इति सूत्रस्थाः परामृश्यन्ते। सूत्रे तु तस्मिन्नहरादयो निर्दिष्टाश्चकारेण च सङ्ख्याव्यये अनुकष्टे। तत्र बुद्धिस्थत्वाऽविशेषेऽप्यहःशब्द इह न गृह्नते, असंभवादित्यशयेनाह---सर्वादिभ्यैति। समासान्ते पर इति। एतच्च प्रकारणाल्लब्धम्। भाष्ये तु अह्नादेशः प्रत्याख्यातः, "अह्न एभ्योऽच्स्याट्टचोऽपवादः" इति व्याख्यायाम्, "अह्नष्टखोरेवे ति नियमाट्टिलोपाऽभावे "अल्लोपोऽनः" इत्यकारलोपात्सर्वाह्न इत्यादिरूपसिद्धेः।

---

सूत्रम्

काशिका-वृत्तिः

न सङ्ख्यादेः समाहारे ५।४।८९

सङ्ख्यादेस् तत्पुरुषस्य समाहारे वर्तमानस्य अहःशब्दस्य अह्नादेशो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। द्वे अहनी समाहृते द्व्यहः। त्र्यहः। समाहारे इति किम्? द्वयोरह्नोः भवः द्व्यह्नः। त्र्यह्नः। तद्धितार्थ इति समासे कृते अणः आगतस्य द्विगोर् लुगनपत्ये ४।१।८८ इति लुक्।

न्यासः

न संख्यादेः समाहारे। , ५।४।८९

"द्व्यहः" इति। "अह्नष्टखोरेव" ६।४।१४५ इति टिलोपः॥

बाल-मनोरमा

न सङ्ख्यादेः समाहारे ७८३, ५।४।८९

न सङ्ख्यादेः। अह्नादेश इति। "अह्नोऽह्नः" इत्यतस्तदनुवृत्तेरिति भावः। ननु सङ्ख्यादिभिन्नस्य तत्पुरुषस्य समाहारेऽभावादेव सिद्धे सङ्ख्यादेरिति व्यर्थमित्यत आह--स्पष्टार्थमिति। द्व्यह इति। समाहारे द्विगुः। टच्, "रात्राह्ने"ति पुंस्त्वम्। सङ्ख्यादित्वात्प्राप्तस्याऽह्नादेशस्य निषेधः। त्र्यह इति। त्रयाणामह्नां समाहार इति विग्रहः। समासादि द्व्यहवत्।

---

सूत्रम्

काशिका-वृत्तिः

उत्तमएकाभ्यां च ५।४।९०

उत्तमैकाभ्यां च परस्य अह्नः इत्ययम् आदेशो न भवति। उत्तमशब्दो ऽन्यवचनः पुण्यशब्दम् आचष्टे। पुण्यग्रहणम् एव न कृतम् वैचित्र्यार्थम् पुण्याहः। एकाहः। केचित् तु उपोत्तमस्य अपि प्रतिपत्त्यर्थं वर्णयन्ति। तेन सङ्ख्यातशब्दादपि परस्य न भवति, सङ्ख्याताहः इति।

न्यासः

उत्तमैकाभ्याञ्च। , ५।४।९०

"पुण्याहम्()" ["पुण्याहः"--काशिका] इति। विशेषणम्? २।१।५६ इत्यादिना समासः। "एकाहः" इति। अत्रापि "पूर्वकालैक" २।१।४८ इत्यादिना। कथं पुनः "उत्तमैकाभ्याम्()" पुण्यशब्दात्? प्रतिषेधो लभ्यते? इत्यत आह--"उत्तमशब्दोऽन्त्यवचनः" इत्यादि। "अहःसर्वैकदेश" ५।४।८७ इत्यादौ सूत्रे पुण्यशखब्दस्यान्ते नदिष्टत्वात्()। "अग्त्यः" इति। उत्तमशब्देऽपि प्रतिषेधार्थ इहान्त्यवचन उपात्तः। तस्मात्? पुण्यशब्दमाचष्टे। अथ पुण्यग्रहणमेव कस्मान्न कृतम्(), लरघु ह्येवं सूत्रं भवति? इत्याह--"पुण्यग्रहणमेव" इत्यादि। वैचित्र्यं हि सूत्रकृतेरिष्यते, तच्चोत्तमग्रहणे सति सम्पद्यते। यस्माद्वैचित्र्यार्थमुत्तमग्रहणं कृतम् न पुण्यग्रहणम्()। "केचि" इत्यादि। पुण्यग्रहणे कत्र्तव्ये यदुत्तमग्रहणं कृतं तत्()प्रयोजनम्()--उत्तमशब्दस्यापि संखक्यातस्य प्रतिषेधप्रतिपत्तिर्यथा स्यादित्येवं केचिद्वर्णयन्ति। भवति तत्सामीप्यात्? ताच्छब्द्यम्()--गङ्गायां घोष इत्यादि। तस्माच्छक्त उत्तमशब्दः सामीप्यादुपोत्तमशब्दमभिधातुमिति तेषामभिप्रायः। "तेन" इत्यादिना प्रतिषेधस्योपोत्तमशब्दप्रतिपत्तेः पलं दर्शयति॥

बाल-मनोरमा

उत्तमैकाभ्यां च ७८४, ५।४।९०

उत्तमैकाभ्यां च। ननु उत्तमशब्दात्परस्याऽहन्शब्दस्याऽह्नादेशाऽप्रसक्तेरुत्तमग्रहणं व्यर्थमित्यत आह--उत्तमशब्द इति। उत्तमशब्दोऽन्त्ये वर्तते। यथा द्वादशाहे "उदयनीयातिरात्र उत्तममहः" इति अन्त्यमिति गम्यते। "अहःसर्वैकदेशसङ्ख्यातपुण्या"दित्युपात्तेषु अन्त्यः पुण्यशब्दो विवक्षित इत्यर्थः। तर्हि "पुण्यैकाभ्या"मित्येव कुतो न सूत्रितमित्याशङ्क्य स्वतन्त्रेच्छत्वान्नमहर्षेरित्याह--पुण्यैकाभ्यामित्येवेति। पुण्याहमिति। पुण्यमहरिति विग्रहे विशेषणसमासः, टच्, टिलोपः। "पुण्यसुदिनाभ्यां चे"ति नपुंसकत्वम्। एकाह इति। एकमहरिति विग्रहे "पूर्वकालैके"ति समासः। टच् टिलोपः। उपान्त्यस्यापीति। "लक्षणये"ति शेषः। परुण्येत्यनुक्त्वा उत्तमग्रहणमेव लक्षणाबीजम्। उत्तमे च एकं चेति द्वन्द्वः, सौत्रं द्विवचनमिति भावः। सङ्ख्याताह इति। सङ्ख्यातमहरिति विग्रहे विशेषणसमासः, टच्, टिलोपः। "रात्राह्नाहा" इति पुंस्त्वम्। उपान्त्यसङ्खातशब्दपूर्वकत्वान्नाऽह्नादेशः।

तत्त्व-बोधिनी

उत्मैकाभ्यां च ६९०, ५।४।९०

पुण्याहमिति। "पुण्यसुदिनाभ्या"मिति क्लीबत्वं वक्ष्यति। उपान्त्यस्यापीति। यथा "प्रथमयो"रिति प्रथमाद्वितीययोग्र्रहणं द्विवचननिर्देशात्, तथेहापि उत्तमग्रहणसामथ्र्यादन्त्ययोद्र्वयोग्र्रहणम्। उत्तमौ चैकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः।

---

सूत्रम्

काशिका-वृत्तिः

राजाहःसखिभ्यष् टच् ५।४।९१

राजनहन् सखि इत्येवम् अन्तात् प्रातिपदिकात् टच् प्रत्ययो भवति। महाराजः। मद्रराजः। परमाहः। उत्तमाहः। राज्ञः सखा राजसखः। ब्राह्मणसखः। इह कस्मान् न भवति, मद्राणाम् राज्ञी मद्रराज्ञी? लिङ्गविशिष्टपरिभाषया प्राप्नोति? लघ्वक्षरस्य पूर्वनिपाते प्राप्ते राजशब्दस्य सवर्णदीर्घार्थं प्रथमं प्रयोगं कुर्वन्नेतद् ज्ञापयति यस्य अकारेण सवर्णदीर्घत्वं सम्भवति तस्य इदं ग्रहणम् इति।

लघु-सिद्धान्त-कौमुदी

राजाहः सखिभ्यष्टच् ९६१, ५।४।९१

एतदन्तात्तत्पुरुषाट्टच् स्यात्। परमराजः॥

न्यासः

राजाहस्सखिभ्यष्टच्?।, ५।४।९१

"परमाहः, उत्तमाहः" इति "सन्महत्()" २।१।६० इत्यादिना कर्मधारयः। "मद्रराजः" इति। षष्ठीतत्पुरुषः। कथं पुना राजशब्दग्रहणे राज्ञीशब्दस्य प्राप्नोति? इत्यत आह--"लिङ्गविष्टिपरिभाषया" इत्यीदि। "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति" (व्या।प।२९) इत्येवा लिङ्गविशिष्टपरिभाषा। "लध्वक्षरस्य" इति। सवर्णदीर्घोऽर्थः प्रयोजनं यस्य प्रथमप्रयोगसर्य स तथोक्तः। अत्रह लध्वक्षरं पूर्वं निपततीति सख्युरह्नो वा पूर्वानिपाते प्राप्ते योऽहशब्दस्य परनिपातः स राजशब्दस्य सवर्णदीर्धार्थः। प्रयोगस्तु क्वचिन्नैतज्ज्ञापयति--अकारवत एव राजशब्दाट्टज्? भवति।

ईकारान्तान्न, ईकारस्याकारेण सवर्णदोर्घान्तस्या सम्भवात्()॥

बाल-मनोरमा

राजाहःसखिभ्यष्टच् ७७८, ५।४।९१

राजाहःसखिभ्यष्टच्। "तत्पुरुषस्याङ्गुलेः" इत्यतस्तत्पुरुषस्येत्यनुवृत्तं पञ्चमीबहुवचनत्वेन विपरिणतं "राजाहःसखिभ्यः" इत्यनेन विशेष्यते। तदन्तविधिः। तदाह--एतदन्तादिति। परमराज इति। परमश्चासौ राजा चेति विग्रहः। "अत्यादयः" इति समासः। टचि टिलोपः। कृष्णसख इति। कृष्णस्य सखेति विग्रहः। समासान्तष्टच्। "यस्येति चे"ति इकारलोपः।

---

सूत्रम्

काशिका-वृत्तिः

गोरतद्धितलुकि ५।४।९२

गोशब्दान्तात् तत्पुरुषात् टच् प्रत्ययो भवति, स चेत् तपुरुषस् तद्धितलुग्विषयो न भवति। परमगवः। उत्तमगवः। पञ्चगवम्। दशगवम्। अतद्धितलुकि इति किम्? पञ्चभिर् गोभिः क्रीतः पण्चगुः। दशगुः। तेन क्रीतम् ५।१।३६ इत्यागतस्य आर्हीयस्य ठको ऽध्यर्धपूर्वाद् द्विगोः इति लुक्। तद्धितग्रहणं किम्? सुब्लुकि प्रतिषेधो मा भूत्। राजगवमिच्छति राजगवीयति। लुग्ग्रहणं किम्? तद्धित एव मा भूत्। पञ्चभ्यो गोभ्यः आगतं पञ्चगवरूप्यम्, पञ्चगवमयम्। दशगवरूप्यम्, दशगवमयम्।

लघु-सिद्धान्त-कौमुदी

गोरतद्धितलुकि ९४२, ५।४।९२

गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि। पञ्चगवधनः॥

न्यासः

गोरतद्धितलुकि। , ५।४।९२

पञ्चगवमिति। "तद्धितार्थ" २।१।५० इति समाहारे द्विगुः। "पञ्चगुः" इत्यत्रापि तद्धिनार्थे। "राजगवम्()" इति। षष्ठीसमासः। "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति सुपो लुक्()। "राजगवीयति" इति। "सुप आत्मनः क्यच्()" ३।१।८, सुब्लुक्(), "क्यचि च" ७।४।३३ इतीत्वम्()। अस्त्यत्र लुक्(), स तु सुपः; न तद्धितस्य। परव्यत्ययेनात्र पञ्चम्यर्थे सप्तमी। कुत एतत्()? पञ्चम्यन्तेन गोशब्देन सामानाधिकरण्यात्()॥

बाल-मनोरमा

गोरतद्धितलुकि ७१९, ५।४।९२

गोरतद्धितलुकि। "तत्पुरुषस्याङ्गुले"रित्यतस्तत्पुरुषस्येत्यनुवृत्तं पञ्चम्या विपरिणतं गोरित्यनेन विशेष्यते। तदन्तविधिः।"राजाहः सखिभ्यः" इत्यतष्टजित्यनुवर्तते। "समासान्त" इत्यधिकृतम्। तदाह--गोऽन्तादित्यादिना। अतद्धितलुकीति किम्?। पञ्चभिर्गोभिः क्रीतः पञ्चगुः। अत्र तद्धितस्य "अध्यर्धे"ति लुक्। पञ्चगवधन इति। त्रिपदबहुव्रीहौ कृते सति धनशब्दे उत्तरपदे परे पूर्वयोस्तत्पुरुषे टचि अवादेश इति भावः। अत्र "द्वन्द्वतत्पुरुषयो"रिति वार्तिके द्वन्द्वस्योदाहरणं तु वाक् च त्वक् च प्रिया यस्य स वाक्त्वचप्रिय इति बोध्यम्। इह त्रिपदबहुव्रीहौ कृते पूर्वयोर्नित्यद्वन्द्वः। तेन "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टजपि नित्य एव। न च वाक्त्वक्छब्दयोः

परस्परसामानाधिकरण्याऽभावात्कथमिह त्रिपदबहुव्रीहिरिति वाच्यं, द्वयोः प्रियाशब्दसामानाधिकरण्यमादाय तदुपपत्तेः। सप्तमीविशेषणे बहुव्रीहौ" इति ज्ञापकेन "कण्ठेकाल" इत्यादाविव व्यधिकरणबहुव्रीहिसंभवाच्च। "वाक्त्वचप्रियः" इति भाष्ये उदाहरणमेवात्र लिङ्गमित्यलम्। अथ समाहारे उदाहर्तुं विग्रहं दर्शयति--पञ्चानां गवां समाहार इति।

तत्त्व-बोधिनी
गोरतद्धितलुकि ६३७, ५।४।९२

गोरतद्धित। "तत्पुरुषस्ये"त्यनुवर्तते, टच्च,तदाह--गोन्तादित्यादिष। ननु ग्रहणवता प्रातिपदिकेन तदन्तविधेरभावत्तत्पुरुषस्यावयवो यो गोशब्दस्तस्माट्टजित्यर्थः स्यात्। तथा च "गोमूत्र"मित्यादावतिप्रसङ्गः स्यादत आह--समासान्त इति। अयं भावओः--"समासान्ताः" इत्यधिकाराट्टचा समासान्तेन भवितव्यम्, गोरिति पञ्चमीश्रवणात्ततः परेणापि। न चैतत्तदन्तविधिमन्तरेणोपपद्यत इति सामथ्र्यात्तदन्तविधिलाभः, ततश्च तत्पुरुषस्येति षष्ठ()न्तं पञ्चम्यन्तेन विपरिणम्यत इति। न तु तद्धितलुकीति। लुग्विषय इत्य्रथो, न तु तद्धितलुकि सतीति, समासान्ता नामन्तरङ्गत्वात्। अतद्धितलुकीति किम्()। पञ्चभिर्गोभिः क्रीतः पञ्चगुः। अत्र तद्धितस्य ठको "ऽध्यर्धपूर्वे"ति लुक्।

---

सूत्रम्
काशिका-वृत्तिः
अग्राऽख्यायाम् उरसः ५।४।९३

उरस्शब्दान्तात् तत्पुरुषाट् टच् प्रत्ययो भवति, स चेदुरस्शब्दः अग्राख्यायां भवति। अग्र प्रधानम् उच्यते। यथा शरीरावयवानाम् उच्यते उरः प्रधानम्, एवम् अन्यो ऽपि प्रधानभूत उरस्शब्देन उच्यते। अश्वानाम् उरः अश्वोरसम्। हस्त्युरसम्। रथोरसम्। अग्राख्यायाम् इति किम्? देवदत्तस्य उरः देवदत्तोरः।
न्यासः
अग्राख्यायामुरसः। , ५।४।९३

स चेदुरःशब्दोऽग्रस्याख्या भवतीत्येनेन दर्शितम्()। "अ()आओरसम्()" इति। षष्ठीसमासः। अ()आआनां प्रधानमित्यर्थः। "हस्त्युरसम्(), रथोरसम्()" इति॥
बाल-मनोरमा
अग्राख्यायामुरसः ७८५, ५।४।९३

अग्राख्याया। शेषपूरणेन सूत्रं व्याचष्टे--टच् स्यादिति। पञ्चम्यर्थे सप्तमी। अग्रं प्रधानं, तद्वाची य उपश्शब्दस्तदन्तात्तत्पुरुषाट्टाच्स्यादित्यर्थः। "अग्नाख्याया"मिति पाठान्तरम्। अग्रे भवमग्रयं। मुख्यमिति यावत्। अ()आआनामुर इवेति। उरो यथा प्रधानं तथेत्यर्थः। उपश्शब्दस्य मुख्ये वृत्तौ लक्षणाबीजमिदम्। अ()आओरसमिति। उरश्शब्देन मुख्यवाचिना षष्ठीसमासः। टच्। "परल्लिङ्गम्" इति नपुंसकत्वम्। अग्राख्यायामिति किं?। देवदत्तस्योरः देवदत्तोरः।

तत्त्व-बोधिनी
अग्राख्यायामुरसः ६९१, ५।४।९३

अग्राख्यायाम्। पञ्चम्यर्थे सप्तमी। अग्रं प्रधानम्। अग्रवाची य उरःशब्दस्तदन्तात्तत्पुरुषाट्टच्स्यात्। अग्राख्यायां किम्()।

देवदत्तस्योरो देवदत्तोरः।

---

सूत्रम्

काशिका-वृत्तिः

अनो ऽश्मायस्सरसां जातिसंज्ञायोः ५।४।९४

अनसश्मनयस् सरसित्येवम् अन्तात् तत्पुरुसात् टच् प्रत्ययो भवति जातौ संज्ञायान् च विषये। उपानसम् इति जातिः। महानसम् इति संज्ञा। अमृताश्म इति जातिः। पिण्डाश्म इति संज्ञा। कालायसम् इति जातिः। लोहितायसम् इति संज्ञा। मण्डूकसरसम् इति जातिः। जलसरसम् इति संज्ञा। जातिसंज्ञयोः इति किम्? सदनः। सदश्मा। सत्सरः।

न्यासः

अनोऽश्मायस्सरसां जातिसंज्ञयोः। , ५।४।९४

"उपानसम्()" इति। उपगतमन इति प्रादिसमासः। "महानसम्()" इति। महदन इति "सन्महत्()" २।१।६० इत्यादिना कर्मधारयसमासः। "अमृताश्मः, पिण्डाश्मः" इति। विशेषणसमासौ। एवं "कालायसम्()" "लोहितायसम्()" इति। "मण्डूकसरसम्(), जलसरसम्()" इति। षष्ठीसमासौ। "सदनः" इति। महानसवत्समासः॥

बाल-मनोरमा

अनोश्माऽयः सरसां जातिसंज्ञयोः ७८६, ५।४।९४

अनोऽश्यमायस्। उपानसमिति। उपगतमन इति प्रादिसमासः। अमृताश्म इति। अमृतोऽश्मेति विग्रहः। टचि टिलोपः। कालायसमिति। कालम् अय इति विग्रहः। टच्। "परवल्लिङ्ग"मिति नपुंसकत्वम्। मण्डूकसरसमिति। षष्ठीसमासः। टच्। जातिविशेषा एते। महानसं, पिण्डाश्मः, लोहितायसं, जलसरसमिति संज्ञाविशेषाः।

---

सूत्रम्

काशिका-वृत्तिः

ग्रामकौटाभ्यां च तक्ष्णः ५।४।९५

जातिसंज्ञयोः इति न अनुवर्तते। ग्रामकौटाभ्यां परो यः तक्षन्शब्दः तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। ग्रामस्य तक्ष ग्रामतक्षः। बहूनं साधारणः इत्यर्थः। कुट्यां भवः कौटः, तस्य तक्षा कौटतक्षः। स्वतन्त्रः कर्मजीवी, न कस्य चित् प्रतिबद्धः इत्यर्थः। ग्रामकाउटाभ्याम् इति किम्? राजतक्षा।

न्यासः

ग्रामकौटाभ्याञ्च तक्ष्णः। , ५।४।९५

"बहूनां साधारण इत्यर्थः" इति। ग्रामशब्दस्य जनपदसमुदाये वृत्तेः। "कौटतक्षः" इति। पूर्ववत्समासः॥

बाल-मनोरमा

ग्रामकौटाभ्यां च तक्ष्णः ७८७, ५।४।९५

ग्रामकौटाभ्यां च। आभ्यां टजिति। ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्तात्तत्पुरुषाट्टच्स्यादित्यर्थः। ग्रामतक्ष इति। टचि टिलोपः। साधारण इति। ग्रामे यावन्तो जनाः सन्ति तावतां विधेय इत्यर्थः। कुट()आं भव इति। कुटीमेकां क्रयादिना सम्पाद्य तत्र यो वसति, न तु परकीयभूमिप्रदेशे स कौट इत्यर्थः। फलितमाह--स्वतन्त्र इति। कौटतक्ष इति। टचि,

टिलोपः।

तत्त्व-बोधिनी

ग्रामकौटभ्यां च तक्ष्णः ६९२, ५।४।९५

ग्रामकौटाभ्यां। "जातिसंज्ञयोः"इति नानुवर्तते। ग्रामेति किम्()। राज्ञस्तक्षा राजतक्षा। अति()आ इति। ()आआनमतिक्रान्तो जेवेनेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अतेः शुनः ५।४।९६

अतिशब्दात् परः यः श्वन्शब्दः तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। अतिक्रान्तः श्वानम् अतिश्वो वराहः। जववानित्यर्थः। अतिश्वः सेवकः। सुष्ठु स्वामिभक्तः इत्यर्थः। अतिश्वी सेवा। अतिनीचा इत्यर्थः।

न्यासः

अतेः शुनः। , ५।४।९६

"अति()आः" इति। प्रादिसमासः॥

बाल-मनोरमा

अतेः शुनः ७८८, ५।४।९६

अतेश्शुनः। अतीत्यव्ययात्परो यः ()आन्शब्दस्तदन्तात्तत्पुरुषाट्टजित्यर्थः। अति()आ इति। ()आआनमतिकान्त इति विग्रहः। अत्यादय इति समासः। टचि, टिलोपः। ()आआपेक्षयाधिकवेगवान्वराह इत्यर्थः। अति()आई सेवेति। ()आआनमतिक्रान्तेत्यर्थः। ()आआपेक्षया नीचा सेवेति यावत्। टच्, टिलोपः। टित्त्वान्ङीप्, यस्येति चेत्यकारलोपः।

तत्त्व-बोधिनी

अतेः शुनः ६९३, ५।४।९६

अति()आईति। नीचेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

उअप्मानादप्राणिषु ५।४।९७

उपमानवाची यः श्वन्शब्दो ऽप्राणिषु वर्तते तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। आकर्षः श्वेव आकर्षश्वः। फलकश्वः। उपमितं व्याघ्रादिभिः इति समासः। उपमानातिति किम्? न श्वा अश्वा लोष्टः। अप्राणिषु इति किम्? वानरः श्वेव वानरश्वा।

न्यासः

उपमानादप्राणिषु। , ५।४।९७

"आकर्श()आः" इति। अत्र ()आआ उपमानम्()। "अ()आआ लोष्टः" इति। अत्रा()आशब्दोऽप्राणिनि लोष्टे वत्र्तते, न

तूपमानम्()। "वानर()आआ" इति। उपमितं व्याघ्रादिभिः" इति समासः। अत्र प्राणिनि वानर()ओति शब्दो वत्र्तते॥

बाल-मनोरमा

उपमानादप्राणिषु ७८९, ५।४।९७

उपमानादप्राणिषु। आकर्षः ()ओवेति। आकृष्यते कुसूलदिगतधान्यमनेनेत्याकर्षः--पञ्चाङ्गुलो दारुविशेषः। "उपमितं व्याघ्रादिभिः" इति समासः। टच् टिलोपः, आकर्ष()आ इति रूपम्। उपमानात्किम्?। शुनो निष्क्रान्तो निः()आआ।

तत्त्व-बोधिनी

उपमानादप्राणिषु ६९४, ५।४।९७

आकर्षः ()ओवेति। "उपमितं व्याघ्रादी"ति समासः। आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः काष्ठविशेषः। उपमानात्किम्()। निष्क्रान्तः शुनो निः()आआ।

---

सूत्रम्

काशिका-वृत्तिः

उत्तरमृगपूर्वाच् च सक्थ्नः ५।४।९८

उत्तर मृग पूर्व इत्येतेभ्यः परो यः सक्थिशब्दः, चकारादुपमानं च, तदन्तात् तत्पुरुषाट् टच् प्रत्ययो भवति समासान्तः। उत्तरसक्थम्। मृगसक्थम्। पूर्वस्क्थम्। उपमानात् खल्वपि फलकम् इव सक्थि फलकसक्थम्।

न्यासः

उत्तरमृगपूर्वाच्च सक्थ्नः। , ५।४।९८

"उत्तरसक्थम्()" इति। उत्तरं सक्थ्न इति पूर्वापरादिशूत्रेण २।१।५७ समासः। अथ वा--उत्तरं सक्थीति विशेषणसमासः। "मृगसक्थम्()" इति। षष्ठीसमासः। "पूर्वसक्थम्()" इति। उत्तरसक्थमित्यनेन तुल्यमेतत्()। "फलकसक्थम्()" इति। "विशेषणम्()" २।१।५६ इत्यादिना समासः॥

बाल-मनोरमा

उत्तरमृगपूर्वाच्च सक्थ्नः ७९०, ५।४।९८

उत्तरमृग। "उत्तर" "मृग" "पूर्व" एभ्य, उपमानाच्च परो यः सक्थिशब्दत्तदन्तास्तत्पुरुषाट्टच्स्यादित्यर्थः। उत्तरसक्थमिति। उत्तरं सक्थीति विग्रहः। पूर्वं सक्थीति विग्रहे "पूर्वकालैके"ति समासः। फलकसक्थमिति। फलकमिव सक्थीति विग्रहे मयूरव्यंसकादित्वात्समासः। सर्वत्र टच्, टिलोपः।

तत्त्व-बोधिनी

उत्तरमृगपूर्वाच्च सक्न्थः ६९५, ५।४।९८

फलकसक्थमिति। अतएव ज्ञापकादसामान्यवचनेनाप्युपमानस्य समास इति माधवः।

---

सूत्रम्

काशिका-वृत्तिः

नावो द्विगोः ५।४।९९

नौशब्दान्तात् द्विगोः टच् प्रत्ययो भवति समासान्तः। द्वे नावौ समाहृते द्विनावम्। त्रिनावम्। द्विनावधनः। पञ्चनावप्रियः। द्वाभ्यां नौभ्यामागतं द्विनावरूप्यम्। द्विनावमयम्। द्विगोः इति किम्? राजनौः। अतद्धितलुकि इत्येव, पञ्चभिर् नौभिः क्रीतः पञ्चनौः। दशनौः।

न्यासः

नावो द्विगोः। , ५।४।९९

"द्विनावम्? त्रिनावम्()" इति। "तद्धितार्थोत्तरपद" २।१।५० इत्यादिना द्विगुः। "द्विनावधनः" इति। द्वे नावौ धनं यस्येति बहुव्रीहौ कृते पूर्वयोः पदयोस्तेनैव सूत्रेणोत्तरपदे द्विगुः। पञ्चनावप्रियम्? इति। पूर्वेण तुल्यमेतत्? द्विनावरूप्यम्(), द्विनावमयम्()" इति। तेनैव सूत्रेम तद्धितार्थे द्विगुः। पूर्ववद्रूप्यमयटौ। "राजनौः" इति। षष्ठीसमासः। "पञ्चनौः" इति आर्हीयस्य ५।१।१९ ठकः "अध्यर्धपूर्वं" ५।१।२८ इत्यादिना लुक्()॥

बाल-मनोरमा

नावो द्विगोः ७९१, ५।४।९९

नावो द्विगोः। न तु तद्धितलुकीति। "गोरतद्धितलुकी"त्यतो मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। द्विनावरूप्य इति। तद्धितार्थे समासः, टच्, आवादेशः। "हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः"। तस्य "द्विगोर्लुगनपत्ये" इति लुकमाशङ्क्याह--द्विगोर्लुगनपत्ये इत्यत्रेति। अपकर्षणादिति। "गोत्रेऽलुगची"त्यत्तरसूत्रादित्यर्थः। पञ्चनावप्रिय इति। पञ्च नावः प्रिया यस्येति विग्रहे उत्तरपदे द्विगुः, टचि, आवादेशः। द्विनावमिति। द्वयोर्नावोः समाहार इति विग्रहे द्विगुः। टच्। आवादेशः। "सनपुंसकम्" इति नपुंसकत्वम्। त्रिनावमिति। तिसृणां नावां समाहार इति विगरहः। द्विनाववत्। पञ्चनौरिति। तद्धितार्थे समासः। आर्हीयष्ठक्, "अध्यर्धे"ति लुक्।

तत्त्व-बोधिनी

नावो द्विगोः ६९६, ५।४।९९

द्विनावरूप इति। "हेतुमनुष्येभ्यः--"इति रूप्यः। पञ्चनौरिति। आर्हीयष्ठत्। "अध्यर्धपूर्वे"ति लुक्। खार्याः। द्विगोरिति। खारीशब्दान्ताद्द्विगोरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अर्धाच् च ५।४।१००

अर्धशब्दात् परो यो नौशब्दः तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। अर्धं नावः अर्धनावम्। अर्धं नपुंसकम् २।२।२ इति समासः। परवल्लिङ्गं न भवति, लोकाश्रयत्वात् लिङ्गस्य।

न्यासः

अर्धाच्च। , ५।४।१००

"अर्धनावम्()" इति। ननु च "परवल्लिङ्गं द्वन्दतत्पुरुषयोः" (२।४।२६) इति स्त्रीलिङ्गेनात्र भवितव्यमिति? अत आह--"परवल्लिह्गं न भवति" इत्यादि॥

बाल-मनोरमा

अद्र्धाच्च ७९२, ५।४।१००

अद्र्धाच्च। अद्र्धशब्दात्परो यो नौशब्दस्तदन्तात्तत्पुरुषाट्टजित्यर्थः। अर्धनावमिति। "अर्धं नपुंसक"मिति समासः, टच्, आवादेशः। अत्र परवल्लिङ्ग"मिति स्त्रीत्वामशङ्क्याह--क्लीबत्वं लोकादिति।

तत्त्व-बोधिनी

अद्र्धाच्च ६९७, ५।४।१००

अद्र्धखारीति। "परवल्लिङ्ग"मिति स्त्रीत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

खार्याः प्राचाम् ५।४।१०१

द्विगोः, अर्धच् च इति द्वयम् अप्यनुवर्तते। खारीशब्दान्तात् द्विगोरर्धाच् च परो यः खारीशब्दः तदन्तात् तत्पुरुषाट् टच् प्रत्ययो भवति प्राचाम् आचार्याणां मतेन। द्वे खर्यौ समाहृते द्विखारम्, द्विखारि। त्रिखारम्, त्रिखारि। अर्धं खार्याः अर्धखारम्, अर्धखारि।

न्यासः

खार्याः प्राचाम्?। , ५।४।१०१

"द्विखारि" इति। "त्रिखारि" इति। पूर्ववदुपसर्जनह्रस्वः। क्वचिदर्धखारीति पाठः। अत्रैचोरुपसर्जनह्रस्वत्वे कृते "सर्वतोऽक्तिन्नर्थादित्येके" (ग। सू।५१) इति बह्वादिपाठान्? ङीष॥

बाल-मनोरमा

खार्याः प्राचाम् ७९३, ५।४।१०१

खार्या) प्राचाम्। खारीशब्दान्ताद्द्विगोरर्धपूर्वकात्खारीशब्दान्तात्तत्पुरुषाच्चेत्यर्थः। द्विखारमिति। द्वयोः खार्योः समाहार इति विग्रहे द्विगुः। टच्। "यस्येति च"। "स नपुंसक"मिति नपुंसकत्वम्। टजभावपक्षे "स नपुंसक"मिति नपुंसकत्वान्नपुंसकह्रस्वः। अर्धखारमिति। खार्या अर्धमिति विग्रहः। "अर्धं नपुंसक"मिति समासः, टच्, यस्येति च। क्लीबत्वं लोकात्। अर्धखारीति। पूर्ववत्समासः। टजभावपक्षे "परवल्लिङ्ग"मिति स्त्रीत्वम्। एकविभक्तावषष्ठ()न्तवचनादुपसर्जनत्वाऽभावान्न ह्रस्वः। "अर्धखारि" इति क्वचिद्ध्रस्वान्तपाठः। तदा क्लीबत्वं लोकात्, ततो नपुंसकह्रस्वः।

तत्त्व-बोधिनी

खार्याः प्राचाम् ६९८, ५।४।१०१

अद्र्धखारमिति। अद्र्धनावमिव क्लीबत्वं लोकात्। टज्वा स्याद्द्विगाविति। द्विगाविति किम्()। द्वयोरञ्जलिः---व्द्यञ्जलिः।

---

सूत्रम्

काशिका-वृत्तिः

द्वित्रिभ्याम् अञ्जलेः ५।४।१०२

द्वित्रिभ्यां परो यो ऽञ्जलिशब्दः तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवति। द्वावञ्जली समाहृतौ द्व्यञ्जलम्। त्र्यञ्जलम्। द्विगोः इत्येव, द्व्योरञ्जलिः द्व्यञ्जलिः। अतद्धितलुकि इत्येव, द्वाभ्याम् अञ्जलिभ्यां क्रीतः द्व्यञ्जलिः। त्र्यञ्जलिः। प्राचाम् इत्येव, द्व्यञ्जलिप्रियः।

न्यासः

द्वित्रिभ्यामञ्जलेः। , ५।४।१०२

"द्वाब्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः" इति। पूर्ववदर्हीयस्य लुक्()। "दे()व्यञ्जलिप्रियः" इति। पूर्ववदुत्तरपदे द्विगुः॥

बाल-मनोरमा

द्वित्रिभ्यामञ्जलेः ७९४, ५।४।१०२

द्वित्रिभ्यामञ्जलेः। शेषपूरणेन सूत्रं व्याचष्टे--टज्वा स्यादिति। द्विगाविति। द्व्यञ्जलमिति। द्वयोरञ्जल्योः समाहार इति विग्रहे द्विगुः, टच् "यस्येति च", "स नपुंसकम्"। द्व्यञ्जलीति। समाहारे द्विगुः। टजभावे सति नपुंसकह्रस्वत्वम्। अतद्धितलुकीत्येवेति। अनुवर्तत एवेत्यर्थः। अञ्जलिभ्यां क्रीत इति। अञ्जलिशब्दोऽञ्जलिपरिमितधान्यादौ वर्तते, केवलस्थाऽञ्जलेर्मूल्यत्वाऽडसम्भवात्। परिमाणत्वाट्ठञ्। "अध्यर्धे"ति तस्य लुक्।

तत्त्व-बोधिनी

द्वित्रिभ्यामञ्जलेः ६९९, ५।४।१०२

व्यञ्जलमिति। समाहारे द्विगुः। अतद्धितलुकीत्येवेति। एतच्च पूर्वसूत्रेऽपि बोध्यम्। अञ्जलिभ्यां क्रीत इति। नात्राऽञ्जलिः पाणिद्वयं, तस्य मूल्यत्वाऽसंभवात्, किन्तु अञ्जलिपरिमितो व्रीह्यादिर्विवक्षितः। ततश्टच परिमाणत्वादूव्यञ्जलिरित्यत्र ठञ्। तस्य तु "अध्यर्धपूर्वे "ति लुक्।

---

सूत्रम्

काशिका-वृत्तिः

अनसन्तान् नपुंसकाच् छन्दसि ५।४।१०३

अन्नन्तातसन्तात् च नपुंसकलिङ्गात् तत्पुरुषात् टच् प्रत्ययो भवति छन्दसि विषये। हस्तिचर्मे जुहोति। ऋषभचर्मे ऽभिषिच्यते। असन्तात् देवच्छन्दसानि। मनुष्यच्छन्दसम्। अनसन्तादिति किम्? बिल्वादारु जुहोति। नपुंसकादिति किम्? सुत्रामाणं पृथिवीं द्यामनेहसम्। अनसन्तान्नपुंसकाच्छन्दसि वावचनम्। ब्रहमसाम, ब्रहमसामम्। देवच्छन्दः, देवच्छन्दसम्।

न्यासः

अनसन्तान्नंपुसकाच्छन्दसि। , ५।४।१०३

"हस्तिचर्म" इत्यादयः षष्ठीसमासाः। "सुत्रामाणम्()" इति। शोभनस्त्रामा इति प्रादिसमासः, "अन्येषामपि वृश्यते" ६।३।१३६ इति पूर्वपदस्य दीर्घः, द्वितीयै कवचनम्? "सर्वनामस्थाने च" ६।४।८ इत्यादिनोपधादीर्घत्वम्(), "अट्? कुप्वाङ्()" ८।४।२ इत्यादिना णत्वम्()। "अनेहसाम्()" इति। अनेहःशब्दात्? पुंल्लिङ्गात्? षष्ठीबहुवचनम्()। वावचनमित्यनुवत्र्तत इति शेषः। वावचनशब्देनेह प्राग्ग्रहणं विवक्षितम्(); तेन विकल्प्य उच्यन्ते, प्रत्याय्यते प्रत्ययोऽनेनेति कृत्वा। तदेतदुक्तं भवति--" "खार्याः प्राचम्()" ५।४।१०१ इत्यतः प्राग्ग्रहणमनुवत्र्तते" इति। प्राग्ग्रहणानुवृत्तौ तु यदिष्टं सिध्यति तद्दर्शयति---"ब्राहृसाम" इति। "देवच्छन्दः" इति। उभयत्र षष्ठीसमासः॥

सूत्रम्

काशिका-वृत्तिः

ब्रह्मणो जानपदाख्यायाम् ५।४।१०४

ब्रह्मन्शब्दानतात् तत्पुरुषात् टच् प्रत्ययो भवति समासेन चेद् ब्रह्मणो जानपदत्वम् आख्यायते। जनपदेषु भवः जानपदः। यस्य तत्प्रुषस्य जनपदशब्दः पूर्वपदं तस्मादेतत् प्रत्ययविधानम्। सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रहमः। अवन्तिब्रह्मः। योगविभागात् सप्तमीसमासः। जानपदाख्यायम् इति किम्? देवब्रह्मा नारदः।

न्यासः

ब्राहृणो जानपदाख्यायाम्?। , ५।४।१०४

"जानपदाख्यायाम्()" इति। भावप्रधानोऽत्र जानपदशब्दः। अत एव वृत्तावाह--"समासेन चेद्ब्राहृणो जानपदत्वमाख्यायते" इति। भवति हि भावप्रत्ययमन्तरेणापि भावप्रधानो निर्देशः, यथा--"द्व्येकयोर्द्विवचनैकवचने" १।४।२२ इति। कथं पुनब्र्राहृणो जानपदत्वं शक्यं विशेषयितुम्(), यावतैकमिह ब्राहृग्रहणम्(), तेन च समासो विशेषितः? नैतदस्ति; तन्त्रेण द्वौ ब्राहृशब्दावृच्चरितौ--तत्रैकेन समासो विशेष्यते, अपरेण जानपदत्वम्(), यस्य तत्पुरुषस्य जनपदशब्दः पुर्वपदम्()। पूर्ववत्? समासः॥

बाल-मनोरमा

ब्राहृणो जानपदाख्यायाम् ७९५, ५।४।१०४

ब्राहृणो जानपदाख्यायां। जनपदे भवो जानपदः। भावप्रधानो निर्देशः। तस्य केनाख्येत्याकाङ्क्षायां प्रकृतत्वात्समासेनेति लभ्यते। तदाह--समासेनेत्यादि। जानपदत्वमित्यनन्तरं "ब्राहृण" इति शेषः। सुराष्ट्रे ब्राहृएति। ब्राहृशब्दोऽत्र पुंलिङ्गः। ब्राहृआ--विप्रः। "वेदस्तत्त्वं तपो ब्राहृ ब्राहृआ विप्रः प्रजापतिः" इत्यमरः। सप्तमीति योगुविभागात्समासः। टच्, टिलोपः, "परवल्लिङ्ग"मिति पुंस्त्वम्। जानपदेति किं?। देवब्राहृआ नारदः।

तत्त्व-बोधिनी

ब्राहृणो जानपदाख्यायाम् ७००, ५।४।१०४

ब्राहृणो। जनपदे भवो जानपदः। "द्व्येकयो"रितिवद्भावप्रधानो निर्देशस्तस्याख्यायां, प्रत्यासत्त्या समासेनेत्येतल्लभ्यते। तदाह---समासेन जानपदत्विमिति। कस्येत्याकाङ्क्षायां संनिधानाद्ब्राआहृण इति लभ्यते। सुराष्ट्रब्राहृ इति। "सप्तमी"ति योगविभागात्समासः। जानपदेति किम्()। देवब्राहृआ नारदः।

---

सूत्रम्

काशिका-वृत्तिः

कुमहद्भ्याम् अन्यतरस्याम् ५।४।१०५

कुमहद्भ्यां परो यो ब्रह्मा तदन्तात् तत्पुरुषात् टच् प्रत्ययो भवत्यन्यतरस्याम्। कुब्रह्मः, कुब्रह्मा। महाब्रह्मः, महाब्रह्मा। ब्रह्मणपर्यायो ब्रह्मन्शब्दः।

न्यासः

कुमहद्भ्यामन्यतरस्याम्?। , ५।४।१०५

बाल-मनोरमा

कुमहद्भ्यामन्यतरस्याम् ७९६, ५।४।१०५

कुमहद्भ्याम्। कुब्राह्मएति। टजभावे रूपम्। "कुगतिप्रादयः" इति समासः। कुब्राह्म इति। टचि रूपं, टिलोपः।

तत्त्व-बोधिनी

कुमहभ्द्यमन्यतरस्याम् ७०१, ५।४।१०५

कुब्राह्म इति। ब्राआह्मणपर्यायो ब्राह्मन्शब्दः।

---

सूत्रम्

काशिका-वृत्तिः

द्वन्द्वाच् चुदषहान्तात् समाहारे ५।४।१०६

तत्पुरुषाधिकारो निवृत्तः। द्वन्द्वात् चवर्गान्तात्, दकारान्तात्, षकारान्तात्, हकारान्तात् च टच् प्रत्ययो भवति, स चेद् द्वन्द्वः समाहारे वर्तते, न इतरेतरयोगे। वाक् च त्वक् च वाक्त्वचम्। स्रक् च त्वक् च स्रक्त्वचम्। श्रीस्रजम्। इडूर्जम्। वागूर्जम्। समिद्दृषदम्। सम्पद्विपदम्। वाग्विप्रुषम्। छत्रोपानहम्। धेनुगोदुहम्। द्वन्द्वादिति किम्? तत्पुरुषान् मा भूत्, पञ्च वाचः समाहृताः पञ्चवाक्। चुदषहान्तादिति किम्? वाक्षमित्। समाहारे इति किम्? प्रावृट्शरदौ।

लघु-सिद्धान्त-कौमुदी

द्वन्द्वाच्चुदषहान्तात्समाहारे ९९५, ५।४।१०६

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्? प्रावृट्शरदौ॥

लघु-सिद्धान्त-कौमुदी

इति द्वन्द्वः ५ ९९५, ५।४।१०६

लघु-सिद्धान्त-कौमुदी

अथ समासान्ताः ९९५, ५।४।१०६

न्यासः

द्वन्द्वाच्चुदषहान्तात्समाहारे। , ५।४।१०६

"वाक्? च त्वक्? च वाक्त्वचम्()" "रुआउक्? च त्वक्? च रुआउक्त्वचम्()"। "श्रीश्च रुआउक्? च श्रीरुआजम्()। "वाक्? च ऊर्क्चे वागूर्जम्()। "समिच्च दृषच्च समिद्()दृषदम्()" "सम्पच्च विपच्च सम्पद्विपदम्()" "वाक्? च त्विट्? च वाक्त्विवम्()। "वाक्? च विप्रुट्? च वाग्विप्रुषम्()"। "छत्त्रञ्च उपानच्च छत्त्रोपानहम्()"। "धत्त्रञ्च उपानच्च छत्त्रोपानहम्()"। "श्रेनुश्च गोधुक्? च धेनुगोदुहम्()"। "पञ्चवाक्()" इति समाहारे द्विगुः। "वाक्समित्()" इति। धकारान्तोऽयम्()। धकारस्य "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वम्()--दकारः; "वाऽवसाने" (८।४५६) इति चत्र्वम्()--तकारः॥

न्यासः

अव्ययीभावे शरत्प्रभृतिभ्यः। , ५।४।१०६

"उपशरदम्()" इति। सामीप्येऽव्ययीभावः। शरद आभिमुख्ये "प्रतिशरदम्()" "लक्षणेनाभिप्रती आभिमुख्ये"२।१।१३ इत्यव्ययीभावः। "उपविपाशम्? परतिविपाशम्()" इति। पूर्ववत्()। अत्र ये झयन्ताः पठ()न्ते तेषां किमर्थं ग्रहणम्(), यावता "झयः" (५।४।१११) इति वक्ष्यमाणेन तदन्तात्? प्रत्ययः सिध्यति? इत्यत आह--"ये त्वत्र" इत्यादि। यद्यत्र ते न गृह्नेरंस्ततः "झयः" ५।४।१११ इति विकल्पेन टच्प्रसज्येत। तस्मान्नित्यं यथा स्यादिति--एवमर्थं झयन्तानां पृथग्ग्रणम्()। "जराया जरश्च" इति। जराशब्दाट्टज्? भवत्यव्ययीभावे, जरसादेशश्च--जरायाः समीपमुपजरसमिति। प्रतिपरसमनुभ्योऽक्ष्यणः" इति। अक्षिशब्दात्? प्रति, पर सम्(), अनु--इत्येतेभ्यः परस्माट्टज्? भवति--"प्रत्यक्षम्()। परोक्षम्()"--"परोक्षे लिट्()" ३।२।११५ इति निपातनादुत्वम्()। "समक्षम्()। अन्वक्षम्()"॥

तत्त्व-बोधिनी

द्वन्द्वाच्चुदषहान्तात्समाहारे १५८८, ५।४।१०६

द्वन्द्वात्। अन्तग्रहणं विस्पष्टार्थं। चु इति वर्गग्रहणस्य प्रयोजनं ध्वनयति---त्वक्रुआजमिति। बहूनां द्वन्द्वे तु वाक्त्वक्रुआजम्। द्वन्द्वगर्भे द्वन्द्वे तु वाक्त्वाचरुआजम्।

इति तत्त्वबोधिन्यां द्वन्द्वः।

---

सूत्रम्

काशिका-वृत्तिः

अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७

शरतित्येवम् आदिभ्यः प्रातिपदिकेभ्यः टच् प्रत्ययो भवति अव्ययीभावे। शरदः समीपम् उपशरदम्। प्रतिशरदम्। उपविपाशम्। प्रतिविपाशम् अव्ययीभावे इति किम्? पारमशरत्। ये ऽत्र ज़यन्तः पठ्यन्ते तेषां नित्यार्थं ग्रहणम्। स्वर्यते च इदम् अव्ययीभावग्रहणम् प्राग् बहुव्रीहेः। शरत्। विपाश्। अनस्। मनस्। उपानः। दिव्। हिमवत्। अनडुः। दिश्। दृश्। उअतुर्। यद्। तद्। जराया जरश्च। सदृश्। प्रतिपरसमनुभ्यो ऽक्ष्णः। पथिन्। प्रत्यक्षम्। परोक्षम्। समक्षम्। अन्वक्षम्। प्रतिपथम्। परपथम्। संपथम्। अनुपथम्।

लघु-सिद्धान्त-कौमुदी

अव्ययीभावे शरत्प्रभृतिभ्यः ९२०, ५।४।१०७

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे। शरदः समीपमुपशरदम्। प्रतिविपाशम्। (जराया जरश्च)। उपजरसमित्यादि॥

बाल-मनोरमा

अव्ययीभावे शरत्प्रभृतिभ्यः ६६९, ५।४।१०७

अव्ययीभावे। "राजाहः सखिभ्यष्ट"जित्यतष्टजित्यनुवर्तते। तदाह--शरदादिभ्य इति। अव्ययीभावे उत्तरपदं यच्छरदादिप्रकृतिकं सुबन्तं तदन्ताट्टच्स्यात्। स च अलौकिकविग्रहवाक्यान्तावयव इत्यर्थः। उपशरदमिति। "अव्ययं विभक्ती"त्यादिना समीपार्थकस्य उपेत्यव्ययस्य शरद इति षष्ठ()न्तेनाव्ययीभावः। टच्। टचः। समासावयवत्वेन तदन्तस्याव्ययीभावसमासत्वान्नाव्ययीभावादित्यम्। अपशरदित्यस्य अव्ययीभावसमासत्वाऽभावादनव्ययत्वात् "अव्ययानां भमात्रे टिलोपः" इति न भवति। विपाट्शब्दो नदीविशेषे वर्तते। "विपाशा तु विपाट् स्त्रियाम्" इत्यमरः।

"लक्षणेनाभिप्रती" इति अव्ययीभावसमासः। शरदादिगणं पठति-शरदित्यादिना। अत्र झयन्तानां "झयः" इति विकल्पे प्राप्ते नित्यार्थः पाठः। "जराया जरश्चे"ति शरदादिगणसूत्रम्। जराशब्दस्य जरसादेशश्चाऽस्मिन्गणे वाच्य इत्यर्थः। उपजरसमिति। जरायाः समीपमित्यर्थः। सामीप्ये उपेत्यव्ययस्य जराया इति षष्ठ()न्तेनाव्ययीभावसमासे कृते टच्, सुब्लुक्, उपेत्यस्य पूर्वनिपातः। टचो विभक्तित्वाऽभावात्तस्मिन्परेऽप्राप्तेजरसि अनेन जरस्। टजन्ताद्यथायथं सुपोऽम्भाव इति भावः। "प्रतिपरसम्" इत्यपि गुणसूत्रम्। एतेभ्यः परस्याऽक्षिरशब्दस्य इह गणे पाठ इत्यर्थः। यस्येति चेति। टचस्तद्धितत्वात्तस्मिन्परे इकारस्य लोप इति भावः।

प्रत्यक्षमिति। अक्षिणी प्रतीति विग्रहः। अक्ष्णोरभिमुखमित्यर्थः। "लक्षणेत्थम्" इति कर्मप्रवचनीयत्वात् द्वितीया। "लक्षणेनांभिप्रती" इत्यव्ययीभावः। टच्, सुब्लुक् "यस्येति च" इति इकारलोपः। प्रत्यक्षशब्दाद्यथायथं सुबुत्पत्तिः, अम्भाव इति भावः। परमिति। व्यवहितमित्यर्थः। अविषय इति यावत्। अक्ष्णः परमिति विग्रहे अव्ययीभाव इत्यन्वयः। ननु परशब्दस्याऽनव्ययत्वात्कथमिहाव्ययीभाव इत्यत आह--समासान्तविधानसामथ्र्यादिति। "प्रतिपरम"मिति परशब्दात्परस्याक्षिशब्दस्य टजर्थं शरदादिगणे पाठोऽवगतः। "अव्ययीभावे शरत्प्रभृतिभ्यः" इत्यव्ययीभावे टज्विहितः। तत्सामथ्र्यादनव्ययस्यापि परशब्दस्याव्ययीभाव इत्यर्थः। परोक्षमिति। अक्ष्णः परमिति विग्रहे परमित्यस्य अक्षि इत्यनेनाव्ययीभावसमासः। टच्, सुब्लुक्। परशब्दस्य ओकारोन्तादेशः। पररूपम्। परोक्षाद्यथायथं सुप्। अम्भाव इति भावः। अर्शाअद्यचीति। परोक्षमस्यास्तीत्यर्थे परोक्षशब्दाद्धर्मप्रधानात् "अर्शाअदिभ्योऽच्" इति मत्वर्थीये अच्प्रत्यये कृते "यस्येति च" इत्यकारलोपे टापि च कृते परोक्षा क्रिया इत्यादि ज्ञेयमित्यर्थः। अत्र गणसूत्रे परग्रहणं प्रक्षिप्तमित#इ युक्तम्। "परोक्षे लिट्" इति सूत्रस्थबाष्यकैयटयोरत्र समासान्तस्यापि निपातनेनैव साधितत्वात्। समक्षमिति। अक्ष्णोर्योग्यमित्यर्थः। यथार्थेऽव्ययीभावः। टच्, इकारलोप इति भावः। अन्वक्षमिति। अक्ष्णोः पञ्चादित्यर्थः। पश्चादर्थेऽव्ययीभावः। शेषं समक्षवत्।

तत्त्व-बोधिनी

अव्ययीभावे शरत्प्रभृतिभ्यः ५९३, ५।४।१०७

प्रतिविपाशमिति। "लक्षनेनाभिप्रती---"इति समासः। "विपाशा तु विपाट् स्त्रिया"मित्यमरः। गणं पठति--शरदित्यादिना। अत्र ये झयन्तास्तेषां "झयः" इति विकल्पे प्राप्ते नित्यार्थः पाठः। इह "जराया जरस्", "प्रतिपरे"ति च द्वयं गणसूत्रम्। उपजरसमिति। जरायाः समीपमित्यर्थः। यस्येतिचेति। टचस्तद्धितकत्वात्तस्मिन्परे इकारलोप इति भावः। प्रत्यक्षमिति। वीप्सायां यथार्थत्वेन समासः। अक्ष्णो राभिमुख्यमित्यर्थे "लक्षणेनाभिप्रती---" इति वा समासः। अक्ष्णः परमिति। अविषय इत्यर्थः। वृत्तिविषये "अक्षि" शब्द इन्द्रियमात्रपरः। अव्ययाऽघटितसमुदायस्य कथमिहाव्ययीभावो, विधायकसूत्राऽभावादित्याशङ्क्याह--विधानसामथ्र्यादिति। समक्षमिति। अक्ष्णो योग्यम्। अन्वक्षमिति। अक्ष्णः पश्चादित्यर्थेऽव्ययीभावः।

---

सूत्रम्

काशिका-वृत्तिः

अनश् च ५।४।१०८

अन्नन्तादव्ययीभावात् टच् प्रत्ययो भवति समासान्तः। उपराजम्। प्रतिराजम्। अध्यात्मम्। प्रत्यात्मम्।

लघु-सिद्धान्त-कौमुदी

अनश्च ९२१, ५।४।१०८

अन्नन्तादव्ययीभावाट्टच् स्यात्॥

न्यासः

अनश्च। , ५।४।१०८

"उपराजम्(), प्रतिराजम्()" इति। उपशरदं प्रतिशरदमितिवदव्ययीभावः। "अव्यात्मम्()" इति। आत्मन्यधीति विभक्त्यर्थे। "प्रत्यात्मम्()" इति। पूर्ववदाभिमुख्ये॥

बाल-मनोरमा

अनश्च ६७०, ५।४।१०८

अनश्च। "अव्ययीभावे" इत्यनुवृत्तं पञ्चम्या विपरिणम्यते। "अन" इति तद्विशेषणम्। तदन्तविधिः। तदाह अन्नन्तादिति।

---

सूत्रम्

काशिका-वृत्तिः

नपुंसकादन्यतरस्याम् ५।४।१०९

अनः इत्येव। नपुंसकग्रहणम् उत्तरपदविशेषणम्। अन्नन्तं यद् नपुंसकं तदन्तादव्ययीभावातन्यतरस्यां टच् प्रत्ययो भवति समासान्तः। पूर्वेण नित्ये प्राप्ते विकल्प्यते। प्रतिचर्मम्, प्रतिचर्म। उपचर्मम्, उपचर्म।

लघु-सिद्धान्त-कौमुदी

नपुंसकादन्यतरस्याम् ९२३, ५।४।१०९

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात्। उपचर्मम्। उपचर्म॥

न्यासः

नपुंसकादन्यतरस्याम्?। , ५।४।१०९

बाल-मनोरमा

नपुंसकादन्तयतरस्याम् ६७२, ५।४।१०९

नपुंसकादन्यतरस्याम्। "अन" इत्यनुवृत्तं नपुंसकस्य विशेषणं। तदन्तविधिः। अन्नन्तात्क्लीबादिति लब्धम्। तेनाव्ययीभावे इत्यनुवृत्तं पञ्चम्या विपरिणतं विशेष्यते, तदन्तविधिः। तदाह--अन्नन्तादित्यादि। उपचर्मम् उपचर्मेति। चर्मणः समीपमित्यर्थः। सामीप्ये उपेत्यव्ययस्याव्ययीभावः। टचि टिलोपः। अम्भावः। टजभावे उपचर्मेति रूपम्।

तत्त्व-बोधिनी

नपुंसकादन्यतरस्याम् ५९५, ५।४।१०९

नपुंसकादन्य। नपुंसकग्रहणमन्नन्तस्य विशेषणं नाव्ययीभावस्य, अव्यभिचारादित्याह--अन्नन्तं यत्क्लीवमिति। अन्नन्तचेन चाव्ययीभावविशेषणात्तदन्तविधिरित्याह--तदन्तादिति। उपचर्ममिति। टचि टिलोपपोऽदन्तत्वादम्भावश्च। तत्त्व]।

---

सूत्रम्

काशिका-वृत्तिः

नदी पौर्णमास्याग्रहायणीभ्यः ५।४।११०

नदी पौर्णमासी आग्रहायणी इत्येवम् अन्तादव्ययीभावातन्यतरस्यां टच् प्रत्ययो भवति। नद्याः समीपम् उपनदम्, उपनदि। उपपौर्णमासम्, उपपौर्णमासि। उपाग्रहायणम्, उपाग्रहायणि।

न्यासः

नदीपौर्णमास्याग्रहायणीभ्यः। , ५।४।११०

नदीग्रहणेन स्वरूपं गृह्यते, न संज्ञा। यदि संज्ञा गृह्येत, पौर्णमास्याग्रहायणीग्रहणं न कुर्यात्()। ननु च नियमार्थमेतत्? स्यात्? ईकारान्तस्यापि नद्योः पौर्णमास्याग्रहायण्योरेव भवतीति? नैतदस्ति; यद्येतत्? प्रयोजनं स्यात्? "पौर्णमास्याग्रहायणी" इत्येवं ब्राऊयात्()। "तस्मात्()" स्वरपग्रहणमिति। "उपनदि" इति "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्यस्वः॥

बाल-मनोरमा

नदीपौर्णमास्याग्रहायणीभ्यः ६७३, ५।४।११०

नदीपौर्णमासी। शेषपूरणेन सूत्रं व्याचष्टे-वा टजिति। "अन्यतरस्या"मिति "ट"जिति चानुवर्तत इति भावः। नदी पौर्णमासी आग्रहायणी-एतदन्तादव्ययीभावसमासाट्टज्वा स्यादिति यावत्। अत्र नदीसंज्ञकस्य न ग्रहणम्, पौर्णमास्याग्रहायणीग्रहणाल्लिङ्गात्। उपनदमिति। नद्याः समीपमित्यर्थः। सामीप्ये उपेत्यस्याव्ययीभावसमासः। टच्। "यस्येति च" इतीकारलोपः। उपनदशब्दात्सुप्। अम्भाव इति भावः। उपनदीति। टजभावे रूपम्। नपुंसकह्यस्वः। "अव्ययादाप्सुपः" इति लुक्। उपपौर्णमासमिति। पौर्णमास्याः समीपमित्यर्थः। टचि उपनदमितिवद्रूपम्। उपपौर्णमासीति। टजभावे रूपम्। एवम्--उपाग्रहायणम् उपाग्रहायणीति ज्ञेयम्। अग्रे हायनमस्याः। आग्रहायणी=मार्गशीर्षपौर्णमासी। अत ऊध्र्वं मकरायनप्रवृत्त्या उदगयनप्रवृत्तेः। उदगयनादिरेव हि संवत्सरस्यादिः। "अयन द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः" इति प्रसिद्धेः।

तत्त्व-बोधिनी

नदीपौर्णमास्याग्रहायणीभ्यः ५९६, ५।४।११०

नदीपौर्ण। इह स्वरूपस्यैव ग्रहणं न संज्ञायाः, पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात्। उपनदीति। टचभावे नपुंसकह्यस्वः। अत्र व्याचक्षते--"वृत्तिग्रन्थमनुरुध्येदं विकल्पकथनम्। परमार्थतस्तु नेहान्यतरस्यामित्यनुवर्तते। "बहुगणे"ति सूत्रस्थभाष्यविरोधात्। तत्र हि--नदीशब्देन नदीविशेषाणां गङ्गायमुनादीनां ग्रहणमाशङ्क्य शरत्प्रभृतिषु विपाट्शब्दपाठान्नेति समाहितम्। न चेदं भाष्यं "नदीपौर्णमासी"त्यत्र टचः पाक्षिकत्वे सङ्गच्छते,नित्यार्थतया तत्पाठस्योपपत्तेः। अतएव सेनकग्रहणमुत्तरत्राऽर्थवत्। कैयटस्तु व्यवस्थितविभाषामाश्रित्य वृत्तिग्रन्थं कथंचित्समर्थितवानिति।

---

सूत्रम्

काशिका-वृत्तिः

झयः ५।४।१११

झयः इति प्रयाहारग्रहणम्। झयन्तादव्ययीभावादन्यतरस्याम् टच् प्रत्ययो भवति। उपसमिमिधम्, उपसमित्।

उपदृषदम्, उपदृषत्।

लघु-सिद्धान्त-कौमुदी

झयः ९२४, ५।४।१११

झयन्तादव्ययीभावाट्टज्वा स्यात्। उपसमिधम्। उपसमित्॥

लघु-सिद्धान्त-कौमुदी

इत्यव्ययीभावः २ ९२४, ५।४।१११

लघु-सिद्धान्त-कौमुदी

अथ तत्पुरुषः ९२४, ५।४।१११

न्यासः

झयः। , ५।४।१११

बाल-मनोरमा

झयः ६७४, ५।४।१११

झयः। झया अव्ययीभावे इत्यनुवृत्तं पञ्चम्या विपरिणतं विशेष्यते। तदन्तविधिः। अन्यतरस्यामिति टजिति चानुवर्तते। तदाह--झयन्तादिति।

---

सूत्रम्

काशिका-वृत्तिः

गिरेश् च ५।४।११२

गिरिशब्दान्तातव्ययीभावाट् टच् प्रत्ययो भवति सेनकस्य आचार्यस्य मतेन। अन्तर्गिरम्, अन्तर्गिरि। उपगिरम्, उपगिरि। सेनकग्रहणं पूजार्थम्। विकल्पो ऽनुवर्तते एव।

न्यासः

गिरेश्च सेनकस्य। , ५।४।११२

"अन्तगिरम्()" इति। गिरेरन्तरित विभक्त्यर्थेऽव्ययीभावः। अन्तः शब्दो हि सप्तम्यर्थवृत्तित्वाद्विभक्त्यर्थे वत्र्तते। विकल्पार्थमेव सेनकग्रहणं कस्मान्न भवति? इत्याह--"विकल्पोऽनुवत्र्तत एव" इति। विकल्पार्थत्वात्()। विकल्प्यते वानेन सः। अन्यतरस्यांग्रहणं विकल्प इत्युक्तम्(), तदिह "नपुंसकादन्यतरस्याम्()" ५।४।१०९ इत्यतोऽनुवत्र्तते। तस्मात्? तेनैव विकल्पस्य सिद्धत्वात्? पूजार्थमेव सेनकग्रहणमुक्तम्(), न विकल्पार्थम्()। ननु च "विभाषयोद्र्वयोर्मध्ये नित्या विधयो भवन्ति" (का। प। वृ। ११) इति पूर्वस्य विधेर्नित्यतां सम्पादयितुं विकल्पार्थमेव सेनकग्रहणं स्यात्() ? नैतदस्ति; यदि हि पूर्वो विधिर्नित्यः स्यात्(), झयन्तानां शरत्प्रभृतिषु पाठोऽनर्थकः स्यात्(), "झयः" ५।४।१११ इत्यनेनैव सिद्धत्वात्()। तस्मान्न विकल्पार्थं सेनकग्रहणम्(); पूजार्थमेव॥

बाल-मनोरमा

गिरेश्च सेनकस्य ८१८, ५।४।११२

गिरेश्च सेनकस्य। सेनको नामाचार्यः। पूजार्थमिति। अन्यतरस्याङ्ग्रहणानुवृत्त्यैव विकल्पसिद्धेरिति भावः। उपगिरमिति। गिरेः समीपमित्यर्थः। टचि "यस्येति चे"तीकारलोपः। अम्भावः। इह सेनकग्रहणान्नदीपौर्णमासीत्यत्र "झयः" इत्यत्र चाऽन्यतरस्याङ्गरहणं नानुवर्तत इति केचित्।

इति बालमनोरमायामव्ययीभावः।

----------------------

****अथ बहुव्रीहिसमासप्रकरणम् *****

तत्त्व-बोधिनी
गिरेश्च सेनकस्य ७१८, ५।४।११२

पूजार्थमिति। अन्यतरस्यामित्यनुवृत्त्या विकल्पसिद्धेरिति भावः।

इतितत्त्वबोधिन्यामव्ययीभावः॥

---

सूत्रम्
काशिका-वृत्तिः
बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५।४।११३

स्वाङ्गवाची यः सक्थिशब्दः अक्षिशब्दश्च तदन्तात् बहुव्रीहेः षच् प्रत्ययो भवति समासान्तः। अयम् अर्थो ऽभिप्रेतः। सूत्रे तु दुःश्लिष्टविभक्तीनि पदानि। दीर्घं सक्थि यस्य दीर्घसक्थः। कल्याणाक्षः। लोहिताक्षः। विशालाक्षः। बहुव्रीहौ इति किम्? परमसक्थिः। परमाक्षिः। सक्थ्यक्ष्णोः इति किम्? दीर्घजानुः। सुबाहुः। स्वाङ्गातिति किम्? दीर्घस्क्थि शकटम् स्थुलाक्षिः इक्षुः। टचि प्रकृते षज्ग्रहणं स्वरार्थम्। चक्रसक्थी स्त्री। दीर्घसक्थी स्त्री। सक्थं चाक्रान्तात् ६।२।१९७ इति विभाषयोत्तरपदस्य अन्तोदात्तता विधीयते। तत्र यस्मिन् पक्षे न अस्त्युदात्तत्वं तत्र ङीपि सति उदात्तनिवृत्तिस्वरस्य अभावादनुदात्तः श्रूयेत। ङीषि तु सर्वत्र उदात्तः सिद्धो भवति। बहुव्रीहिग्रहणम् आ पादपरिसमाप्तेरनुवर्तते।
लघु-सिद्धान्त-कौमुदी
बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ९७४, ५।४।११३

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात्। दीर्घसक्थः। जलजाक्षी। स्वाङ्गात्किम्? दीर्घसक्थि शकटम्। स्थूलाक्षा वेणुयष्टिः। अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच्॥
बाल-मनोरमा
बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ८४३, ५।४।११३

बहुव्रीहौ। व्यत्ययेनेति। "सक्थ्यक्ष्णो"रिति षष्ठी पञ्चम्यर्थे, "व्यत्ययो बहुल"मिति छन्दसिवचनादित्यर्थः। "छन्दोवत्सूत्राणि भवन्ती"ति भाष्यम्। "बहुव्रीहा"विति सप्तमी व्यत्ययेन पञ्चम्यर्थे। तदाह--स्वाङ्गवाचीति। सक्थ्यक्ष्यन्तादिति। बहुव्रीहिविशेषणत्वात्तदन्तविधिरिति भावः। षच्स्यादिति। समासान्तस्तद्धितश्चेति ज्ञेयम्। दीर्घसक्थ इति। "षच्"। यस्येति चे"ति लोपः। जलजाक्षीति। जलजे इव अक्षिणी यस्या इति विग्रहः। समासे षचि "नस्तद्धिते" इति टिलोपः। षित्वान्ङीप्। षित्त्वं ङीषर्थमिति भावः। दीर्घसक्थि शकटमिति। दीर्घे

सक्थिनी=सक्थिसदृशावोषादण्डौ यस्येति विग्रहः। अत्र सक्थिशब्दार्थयोरीषादण्डयोः "अद्रवं मूर्तिमत्स्वाङ्ग"मित्यादिस्वाङ्गलक्षणाऽभावान्न षजिति भावः। अत्र "स्वाङ्गा"दित्यस्य प्रत्युदाहरणान्तरमाह--स्थूलाक्षेति। स्थूलानि अक्षाणि=पर्वग्रन्थयो यस्या इति बहुव्रीहिः। अस्वाङ्गत्वादिह न षजिति भावः। ननु षजभावेऽपि नान्तलक्षणङीपि स्थूलाक्षिणीति स्यादित्यत आह--अक्ष्णोऽदर्शनादित्यजिति। षचि तु षित्त्वलक्षणङीष्स्यादिति भावः।

तत्त्व-बोधिनी

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ७३९, ५।४।११३

व्यत्ययेन षष्ठीति। एतच्चोपलक्षणं, सप्तम्यपि व्यत्ययेनैव। तदाह---स्वाङ्गवाचीत्यादि। "अद्रवं मूर्तिम"दित्यादिलक्षणलक्षितं स्वाङ्गं गृह्रते। तेन "शोभनाक्षी प्रतिमे"त्यादिप्रयोगो निर्बाध एवेत्याहुः। षच्स्यादिति। षो ङीषर्थः। चस्तु "चितः" इत्यन्तोदात्तार्थः। तेनात्र पूर्वपजप्रकृतिस्वरो न भवति। स्थूलाक्षेति। स्थूलानि अक्षीण्=पर्वाङ्कुराणि यस्याः सा। प्राचा तु स्थूलाक्षिरिक्षुरिति प्रत्युदाह्मतम्। तन्न। "अक्षाणोऽदर्शना"दित्यचो दुर्वारत्वात्। यदपि समासान्तविधेरनित्यत्वात्स न कृत इति कैश्चिव्द्याख्यातं, तदसारम्। एवंहि षजपि तथैव न भविष्यतीति प्रत्युदाहरणस्याऽसङ्गतिप्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

अङ्गुलेर् दारुणि ५।४।११४

अङ्गुलिशब्दान्ताद् बहुव्रीहेः षच् प्रत्ययो भवति समासान्तः दारुणि समासार्थे। द्व्यङ्गुलं दारु। त्र्यङ्गुलं दारु। पञ्चाङ्गुलं दारु। अङ्गुलिसदृशावयवं धान्यादीनां विक्षेपणकाष्ठम् उच्यते। यस्य तु द्वे अङ्गुली प्रमाणम् दारुणः तत्र तद्धितार्थ इति समासे इऋते तत्प्रुषस्य अङ्गुलेः इत्यचा भवितव्यम्। दारुणि इति किम्? पञ्चाङ्गुलिर् हस्तः।

न्यासः

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गत्? षच्?। , ५।४।११४

"अद्रवं मूर्त्तिमत्()" (म। भा। २।२२२ का। ४।१।५५४) इत्यादिना प्रारिभाषिकं यत्? स्वाङ्गं तदिह गृह्रते। "दुःश्लिष्ट विभक्तिनि" इति। दुःखेन कष्टेन श्लिष्टाः सम्बद्धा विभक्तयो येषु तानि दुःश्लिष्टविभक्तीनि। तथा च--प्रत्ययसम्बन्धेन षष्ठ()आ भवितव्यम्(), यथा "तत्पुरुषस्याङ्गुलेः" ५।४।८६ इति। सक्थ्यक्षिप्रगहणेन चेह तदन्ततया बहुव्रीहेर्विशेषयितुमिष्टत्वात्()। बहुव्रीहौ यद्विभक्तिवचनं ततोऽपि तेनैव भवितुं युक्तम्()। इह तु बहुव्रीहौ सप्तम्येकवचनम्()। सकव्यक्षिशब्दाभ्यां तु षष्ठीद्विवचनम्(), सप्तमीद्विवचनं वा। स्वाङ्गग्रहणं सक्थ्यक्ष्णोरिह समानाधिकरणं विशेषणम्(), ततश्च सक्थ्यक्षिशब्दाभ्यां या विभक्तिस्तद्विभतिकं समानाधिकरणविशेषणमुपपद्यते। एवं विधविभक्तिभिः पदैः कश्चिद्()दुःखेन कृच्छ्रेण युक्तो यामाश्रित्य विभक्तिमेवार्थं प्रतिपद्यते। तस्मात्? तानि दुःश्लिष्टविभक्तीनि। किमर्थं पुनस्तानि पदानि कृतानि? वैचित्र्यार्थम्()। "दीर्घसक्थि शकटम्(), स्थूलाक्षिरिक्षुः" इति। अत्र सक्थ्यक्षिशब्दौ स्वाङ्गं न भवतः। शकटस्य कश्चिदवयवस्तथेक्षोश्च तथाऽभिधीयते। न तु तत्र "अद्रवं मूर्त्तिमत्? (म। भा। २।२२२) इत्यादिकं स्वाङ्गलक्षणमस्ति। ननु च टचापि प्रकृतेन सर्वमेतत्? सिध्यति, तत्? किमर्थं षजिति प्रत्ययान्तरमुपात्तम्()? इत्याह--"टचि प्रकृते" इत्यादि। दीर्घसक्थी स्त्री--टचि ङीबनुदात्तः स्यात्(), षचि तु सति "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीषुदात्तः सिद्धो भवति। ननु च ङीप्यनुदात्()त उदात्तनिवृत्तिस्वरेणोदात्त एव भवति। अतः स्वरार्थमपि नैव प्रत्ययान्तरमुपादेयम्()? इत्याह--"सकथ्ञ्चाक्रान्तात्()" इति। "विभाषोत्पुच्छे" ६।२।१०६ इत्यतो

विभाषेत्यनुवर्त्तनमाने "सक्थञ्चाक्रान्तात्()" [६।२।१९७](#) इति विकल्पेनोत्तरपदस्यान्तोदात्तत्वं विधीयते। यस्मिन्? पक्ष उदात्तं भवति, तत्र ङीपि परतः, "यस्येति च" [६।४।१४८](#) इत्यकारस्योदात्तस्य लोपे कृते "अनुदात्तस्य च यत्रोदात्तलोपः" [६।१।१५५](#) इति ङीप्युदात्तत्वेन भवितव्यम्(), अतो नास्ति ङीपि विरोधः। यस्मिन्? पक्ष उदात्तं न सम्भवति तस्मिन्? ङीपि स्त्युदात्तनिवृत्तिस्वरो नास्ति, उदात्तश्चाश्रीयते। ङीषि तु सति सर्वत्रोदात्तः सिद्धो भवति; ङीष्प्रत्ययस्वरेणान्तोदात्तत्वात्()॥

न्यासः

अङ्गुलेर्दारुणि। , ५।४।११४

द्वे अङ्गुली यस्य तत्()। दारुणि समासार्थे मुख्याभिरङ्लीभिः सम्बन्धस्तत्र नोपपद्यते। तस्मात्? सामथ्र्यात्? द्व्यङ्गुलीसदृशेषु दार्ववयवेष्वङ्गुलिशब्दो वर्त्तमानः समास आश्रीयत इति मत्वाऽऽह--"अङ्गुलिसदृशावयवम्()" इत्यादि। "ननु च द्वे अङ्गुली प्रमाणमस्य दारुण इत्यादौ मुख्याभिरङ्गुलीभिः सम्बन्धः, तत्र मुख्याङ्गुलीभिः सम्बन्ध इति मुख्ये सम्भवति, अतो गौणस्य ग्रहममयुक्तम्()? इत्याह--"यस्य तु" इत्यादि। बहुव्रीहिग्रहणानुवृत्तेरिह बहुव्रीहेः प्रत्ययो विधीयते। द्वे अङ्गुली प्रमाणमस्येत्येकार्थविवक्षायां तद्धितार्थे तत्पुरुषः कत्र्तव्यः। तस्मिस्तु कृते "तत्पुरुस्याङ्गुलेः संख्याव्ययादेः" [५।४।८६](#) इत्यचा भवितव्यमेव। यश्च गौणोऽङ्गुलिशब्दः स एवं समामथ्र्यादेव योगस्य विषय इत्युक्तं भवति॥

बाल-मनोरमा

अङ्गुलेर्दारुणि ८४४, ५।४।११४

अङ्गुलेर्दारुणि। बहुव्रीहावित्यनुवृत्तस्य पञ्चम्यर्थे सप्तम्यन्तस्य अङ्गुल्या विशेषणात्तदन्तविधिरित्यभिप्रेत्याह--अङ्गुल्यन्तादिति। पञ्चाङ्गुलं दार्विति। षचि "यस्येति चे"तीकारलोपः। ननु दारुणः कथमङ्गुलय इत्यत आह--अङ्गुलिसदृशावयवमिति। अङ्गुलिसदृशा अवयवा यस्येति विग्रहः। धान्येति कुसूलादिस्थितधान्याद्याकर्षकमिति यावत्। उच्यत इति। "लक्षणये"ति शेषः। द्व्यङ्गुलेति। "प्रमाणे द्वयस"जिति विहितस्य मात्रचो "द्विगोर्नित्य"मिति लुक्। अबहुव्रीहित्वादत्र न षजिति भावः। तर्हि "द्व्यङ्गुलि"रिति स्यादित्यत आह--तद्धितार्थे इति। षचि तु ङीष् स्यादिति भावः।

तत्त्व-बोधिनी

अङ्गुलेर्दारुणि ७४०, ५।४।११४

अङ्गुलेति। मात्रचो "द्विगोर्नित्यम्" इति लुक्।

नेतुर्नक्षत्रेऽब्वक्तव्यः। नेतुरिति। नेता--नायकः। नक्षत्रे यो नेतृशब्दस्तदन्ताब्दहुव्रीहेरित्यर्थः। मृगनेत्रा इति। मृगः--मृगशीर्षनक्षत्रम्। चन्द्रो नेता यस्य मृगनक्षत्रस्य "चन्द्रनेता मृग"इत्यत्र तु न भवति, इह हि नेतृशब्दान्तो बहुव्रीहिर्नक्षत्रे वर्तते न तु नेतृशब्द इति।

खुरखराभ्यां वा नस्। खुराखराभ्यामिति। "नासिकायाः"इति वर्तते। केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम्। खुरणा इति। "अत्वसन्तस्ये"ति दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

द्वित्रिभ्यां ष मूर्ध्नः ५।४।११५

द्वित्रिभ्यां परो यो मूर्धन्शब्दः तदन्ताद् बहुव्रीहेः षप्रत्ययः भवति समासान्तः। द्विमूर्धः। त्रिमूर्धः। द्वित्रिभ्याम् इति किम्? उच्चैर् मूर्धा।
लघु-सिद्धान्त-कौमुदी
द्वित्रिभ्यां ष मूर्ध्नः ९७५, ५।४।११५

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः॥

---

सूत्रम्
काशिका-वृत्तिः
अप् पूरणीप्रमाण्योः ५।४।११६

पूरणप्रत्याऽन्ताः स्त्रीलिङ्गाः शब्दाः पूरणीग्रहणेन गृह्यन्ते। प्रमाणी इति स्वरूपग्रहणम्। पूरण्यनतात् प्रमाण्यन्तात् च भुव्रीहेः अप् प्रत्ययो भवति समासान्तः। कल्याणी पञ्चमी आसां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। कल्याणीदशमा रात्रयः। स्त्री प्रमाणी एशाम् स्त्रीप्रमाणाः कुटुम्बिनः। भार्याप्रधानाः इत्यर्थः। अपि प्रधानपूरणीग्रहणम् कर्तव्यम्। यत्र अन्यपदार्थे पूरणी अनुप्रविशति न केवलं वर्तिपदार्थ एव, तत्र पूरण्याः प्राधान्यम्। पुंबद्भावप्रतिषेधे ऽपि प्रधानपूरण्येव गृह्यते। इह न भवति, कल्याणी पञ्चमी अस्मिन् पक्षे कल्याणपञ्चमीकः पक्षः इति। नेतुर्नक्षत्र उपसङ्ख्यानम्। मृगो नेता आसां रात्रीणाम् मृगनेत्रा रात्रयः। पुष्यनेत्राः। नक्षत्रे इति किम्? देवदत्तनेतृकाः। छन्दसि च नेतुरुपसङ्ख्यानम्। वृहस्पतिनेत्रा देवाः। सोमनेत्राः। मासाद् भृतिप्रत्ययपूर्वपदाट् ठञ्विधिः। पञ्चको मासो ऽस्य पञ्चकमासिकः कर्मकरः। दशकमासिकः। सो ऽस्यांशवस्नभृतयः ५।१।५५ इति सङ्ख्याया अतिशदन्तायाः कन् ५।१।५१।
लघु-सिद्धान्त-कौमुदी
अप्पूरणीप्रमाण्योः ९७३, ५।४।११६

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहे रप्स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणी पञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। अप्रियादिषु किम्? कल्याणीप्रिय इत्यादि॥
न्यासः
द्वित्रिभ्यां ष मूध्र्नः। , ५।४।११६

अथ किमर्थं षः प्रत्ययान्तरं विधीयते, न प्रकृतः षजेव विधीयते? विकल्पेनान्तोदात्तत्वं यथा स्यात्()। "विभाषोत्पुच्छे" ६।२।१९५ इत्यतो विभाषेत्यनुवत्र्तमाने "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" ६।२।१९६ इति नकारान्तस्य मूर्धन्शब्दस्य निर्देशाद्()द्वित्रिभ्यामुत्तरो यत्र नकारान्तो मूर्धन्शब्दस्तत्र बहुव्रीहेरन्तोदात्तत्वं पाक्षिकं विधीयते; अन्यथाऽकारान्तमुर्धशब्द उत्तरपदोदात्तत्वं विधीयते, कृतसमासान्तमेव निर्दिशेत्()। तत्र यदि षच्प्रत्ययो विधीयते, ततः पाक्षिकमन्तोदात्तत्वं बाधित्वा चित्करणसामथ्र्यान्नित्यमन्तोदात्तत्वं स्यात्()। विभाषान्तोदात्तवचनस्य तु यत्र समासान्तो नास्ति सोऽवकाशः। अ()स्मस्तु प्रत्ययान्तरसमासान्ते कृते विकल्पेनान्तोदात्तत्वं सिध्यति। ननु च नकारान्तनिर्देशान्नकारान्त एव हि मूर्धन्शब्दः, उत्तरपदे विभाषान्तोदात्तेन भवितव्यम्(), तत्कथं समासान्ताद्भवेत्()? नैष दोषः; वक्ष्यति--"यत्रापि समासान्तः क्रियते तत्रापि बहुव्रीहिकार्यत्वात्? तदेकदेशत्वाच्च समासान्तोदात्तत्वं भवत्येव" इति। अथ किमर्थं बहुव्रीहौ द्वित्रिभ्यामुत्तरो मूर्धन्शब्दो नकारान्तः सम्भवति, यावता नित्यं समासान्तेन भवितव्यम्(), न

हि सूत्रे विभाषाग्रहणस्ति? नैष दोषः; स एव हि नकारान्तनिर्देशो ज्ञापयति--विकल्पेन समासान्तो न भवतीति॥
न्यासः
अप्पूरणीप्रमाण्योः। , ५।४।११६

"पूरणाप्रत्ययान्ताः" इति। "तस्य पूरणे डट्()" (५।२।४८) इत्यवमादिना प्रकरणेन ये पूरणार्थे विहितास्ते तत्साहचर्यात्? पूरणशब्देनोच्यन्ते। पूरणप्रत्ययोन्ते येषां ते पूरणप्रत्ययान्ताः। "अपि प्रधानपूरणीग्रहणम्()" इति। अपि प्रत्यये विधातव्ये प्रधाना या पूरणी तस्या ग्रहणं कत्र्तव्यम्()--तत एव प्रयोगो यथा स्यात्(), अन्यतो मा भूत्()। क्व पुनरस्याः प्रधान्यम्? इत्यत आह--"यत्र" इत्यादी। यत्राभिधेयत्वेनान्यपदार्थेन पूरण्यनुप्रविशति न केवलं वर्तिपदार्थस्यैव समासावयवभूतस्य पदार्थः, तत्र पूरण्याः प्राधान्यम्(), यथा--कल्याणीपञ्चमा रात्रय इति। अत्र हि न केवलमवयवेन विग्रहः क्रियते, रात्रय एव प्रत्ययेनाख्यायन्ते, सहपञ्चमीकाः। सह पञ्चम्या समुदितोऽन्यपदार्थः, न तु ताभिराब्धमर्थान्तरम्()। यथा--कल्याणपञ्चमीकः पक्ष इति। न भिन्नावयवः समासार्थः, किं तर्हि? तदारब्धः समुदायः पक्षाख्यः। पूरणी--कल्याण पञ्चमीकः पक्ष इति। न भिन्नावयवः समासार्थः, किं तर्हि? तदारब्धः समुदायः पक्षाख्यः। पूरणी तु समासावयवभूता नाभीधीयत इति, अन्यपदार्थेनानुप्रवेशादप्राधान्यमिह तस्याः। "पुंवद्भावप्रतिषेधेऽपि" इत्यादि। न केवलमिहापि, अपि तु "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्()" ६।३।३३ इत्यादिना सूत्रेण पुंवद्भावप्रतिषेधेऽपीत्यादि। न केवलमिहाप्यपि तु स्त्रियाः पुंवद्भाषितपुंस्कादनुङ्" ६।३।३३ इत्यादिना सूत्रेण पुंवद्भ#आवपरतिषेधेऽपीत्यादि। न केवलमिहाप्यपि तु स्त्रियामिति प्रधानपूरण्येव गृह्रते। "इह तु" इत्यादि। अप्प्रत्ययः पुंबद्भावप्रतिषेधः कल्याणपञ्चमीकः पक्षः इत्यत्र न भवति। "शेषाद्विभाषा" ५।४।१५४ इति कप्()। "नेतुः" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। नक्षत्रे यो नेतृशब्दो वत्र्तते तदन्ताद्बहुव्रीहेरपः प्रतिपादनं कत्र्तव्यमित्यर्थः। प्रतिपादनं तूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थमाश्रित्य कत्र्तव्यम्? "देवदत्तनेतृकाः" (इति) "नद्यृतश्च" ५।४।१५३ इति कप्()। "छन्दसि" इत्यादि। "मासात्()" इत्यादि। भृत्यर्थे यो विहितः प्रत्ययः स भृतिसाहचर्याद्भृतिरित्युच्चते। भृतिः प्रत्ययो यस्य तत्()। भृतिप्रत्ययं पूर्वपदं यस्य बहुव्रीहेः स भृतिपूर्वपदः। तस्मान्मसशब्दाट्टचो विधिः चित्करणं बहुव्रीहिस्वरबाधनार्थम्()। पञ्चास्य माससय भृतयः "सोऽस्यांशवस्नभृतयः" ५।१।५५ इति "संख्याया अतिशदन्तायाः कन्()" ५।१।२२ पञ्चकः, पञ्चको मासोऽस्य पञ्चकमासिकः। "अपः पित्करणं यत्र बहुव्रीहावुत्तरपदान्तोदात्तत्वमारभ्यते तत्र तद्बाधनार्थम्()--शोभना पञ्चमी आसां रात्रीणां सुपञ्चमाः, अविद्यमाना पञ्चमी आसां रात्रीणामपञ्चमा इति। अत्र ह्रसति पित्करणे "नञ्सुभ्याम्()" ६।२।१७१ इत्युत्तरपदान्तोदात्तत्वं स्यात्()॥
बाल-मनोरमा
अप्पूरणीप्रमाण्योः ८२२, ५।४।११६

अप्पूरणी। अविति छेदः। "बहुव्रीहौ सक्थ्यक्ष्णो"रित्यतो बहुव्रीहावित्यनुवृत्तं पूरणीप्रमाणीभ्यां विशेष्यते, तदन्तविधिः, स्त्रीलिङ्गनिर्देशात्पूरणप्रत्ययान्तं स्त्रीलिङ्गमिह गृह्रते। तदाह--पूर्वणार्थेत्यादिना। अप् स्यादिति। समासान्तस्तद्धित इत्यपि बोध्यम्। पञ्चमीति। पञ्चानां पूरणीत्यर्थः। "तस्य पूरणे डट्" "नान्तादसंख्यादे"रिति तस्य मडागमः। टित्त्वान्ङीप्। कल्याणीपञ्चमा रात्रय इति। इह बहुव्रीहौ कृते पञ्चमीशब्दे पूर्वणार्थप्रत्ययान्ते परे कल्याणीशब्दस्य पुंवत्त्वनिषेधः। अप्। समासान्तस्तद्धितः। टाप् "यस्येति चे"तीकारलोपः। ननु पञ्चमी रात्रिरन्यपदार्थप्रविष्या वा, न वा()। नाद्यः। तस्याः समस्यमानपदार्थत्वेन तदन्यत्वानुपपत्तेः। नान्त्यः। पञ्चम्या रात्रेरन्यपदार्थप्रवेशाऽभावे "कल्याणीपञ्चमा" इति समासात्पञ्चमीं रातिं()र विना चतुर्णामेव बोधनापत्तौ पञ्चपदस्याऽसङ्गत्यापादनादिति चेत्, सत्यम्-पञ्चानां रात्रीणामुद्भूतावयवभेदः समुदाय एवान्यपदार्थः। तत्र पञ्चम्या रात्रेः प्रवेशेऽपि तद्घटितसमुदायस्यान्यपदार्थत्वं न विरुध्यते, समुदायस्यावयवापेक्षया अन्यत्वात्। "रात्रय" इति बहुवचनं

त्ववयवबहुत्वापेक्षम्। यथा चैतत्तथा सर्वनामसंज्ञासूत्रे प्रपञ्चितम्। अथ प्रमाण्यन्तादब्विधेरुदाहरणमाह--स्त्रीप्रमाण इति। प्रमाणशब्दोऽत्र करणल्युडन्तो विशेष्यनिघ्नः। टित्त्वान्ङीप्। बहुव्रीहौ सति अप्प्रत्यये "यस्येति चे"ति ईकारलोपे "स्त्रीप्रमाण" इति रूपम्। पूर्वपदस्य तु नित्यस्त्रीलिङ्गत्वादभाषितपुंस्कत्वान्न पुंवत्त्वप्रसक्तिः। प्रधानपूरण्यामेवेति। "स्त्रियाः पुंव"दिति सूत्रे, "अप्पूरणी"ति सूत्रे च प्रधानपूरणीग्रहणं कर्तव्यमिति भावः। ननु "कल्याणीपञ्चमा रात्रय" इत्यत्र पञ्चम्या रात्रे समस्यमानपदार्थत्वात्कथं प्राधान्यं, बहुव्रीहेरन्यपदार्थप्रधानत्वादित्यत आह--रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्येति। "कल्याणीपञ्चमा रात्रय" इत्युक्तोदाहरणे पञ्चानां पूरणी रात्रिः समस्यमानपञ्चमीपदार्थत्वेऽपि अन्यपदार्थसमुदाय वटकतया बहुव्रीहिसमासवाच्यापि भवतीति कृत्वा मुख्या भवतीत्यर्थः। उद्भूतावयवस्य रात्रिसमुदायस्य प्रधानत्वेऽपि तद्घटकतया यता प्रथमाद्याश्चतरुआओ रात्रयः समासाभिधेयाः, एवं पञ्चम्यपि रात्रिः समासाभिधेया भवतीति समस्यमानपञ्चमीपदार्थस्य अन्यपदार्थानुप्रवेसात्प्राधान्यमिति भावः। अन्यत्र त्विति। "कल्याणपञ्चमीकः पक्ष" इत्यत्र पूरण्या रात्रेरन्यपदार्थप्रवेशाऽभावादप्राधान्यादप्प्रत्ययाऽभावे सति विशेषो वक्ष्यत इत्यर्थः।

तत्त्व-बोधिनी

अप्पूरणी प्रमाण्योः ७२२, ५।४।११६

प्रमाणीति। करणे ल्युट्। तदन्तस्य विशेष्यनिन्घत्वात्स्त्रियां ङीप्। कथं तर्हि "प्रमाणायां स्मृतौ" इति शाबरभाष्यमिति चेत्()। अत्र भट्टाः-----"प्रमाणमयते याति मूलभूतां श्रुति यतः। क्वीबन्तादयतेस्तस्मात्प्रमाण स्मृतिरुच्यते॥" इत्याहुः। तत्राऽयतेः क्विपि "ह्रस्वस्य पिति कृती"ति तुकि टाब्दुर्लभः, तथाप्यागमशास्त्रस्याऽनित्यत्वात्तुङ्नेति बोध्यम्। क्विबिववाचरति क्विब्, विजित्यर्थ इति वा व्याख्येयम्। अन्ये तु प्रमाणं वेदस्तद्वदाचरतीत्याचारक्वीबन्तात्प्रमाणशब्दात्पचाद्यचि टाबित्याहुः। प्रधानपूरण्या मेवेति। प्रधाने कार्यसंप्रत्ययान्न्यायसिद्धमिदम्। नद्यृतः। तपरत्वं स्पष्टार्थम्।

---

सूत्रम्

काशिका-वृत्तिः

अन्तर्बहिर्भ्यां च लोम्नः ५।४।११७

अन्तर् बहिसित्येताभ्यां परो यो लोमन्शब्दः तदन्ताद् बहुव्रीहेः अप् प्रत्ययो भवति। अन्तर्गतानि लोमानि अस्य अन्तर्लोमः प्रावारः। बहिर्लोमः पतः।

लघु-सिद्धान्त-कौमुदी

अन्तर्बहिर्भ्यां च लोम्नः ९७६, ५।४।११७

आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ। अन्तर्लोमः। बहिर्लोमः॥

न्यासः

अन्तर्बहिर्भ्यां च लोम्नः। , ५।४।११७

बाल-मनोरमा

अन्तर्बहिर्भ्यां च लोम्नः ८४६, ५।४।११७

अन्तर्बहिर्भ्यां च। अन्तर्लोम इति। अन्तर्लोमानि यस्येति विग्रहः। अप्। टिलोपः। एवं बहिर्लोमः।

सूत्रम्

काशिका-वृत्तिः

अञ् नासिकायाः संज्ञायां नसं च अस्थूलात् ५।४।११८

नासिकान्तात् बहुव्रीहेः अच् प्रत्ययो भवति, नासिकाशब्दश्च न समादेशम् आपद्यते। अस्थूलातिति नासिकाविशेषणं, न चेत् स्थूलशब्दात् परा नासिका भवति इति। संज्ञायाम् इति समुदायोपाधिः। द्रुरिव नासिका अस्य द्रुणसः। वाद्ग्रीणसः। पूर्वपदात् संज्ञायाम् अगः ८।४।३ इति णत्वम्। गोनसः। संज्ञायाम् इति किम्? तुङ्गनासिकः। अस्थूलातिति किम्? स्थूलनासिको वराहः। खुरखराभ्यां नस् वक्तव्यः। खुरणाः। खरणाः। पक्षे ऽच्प्रत्ययो ऽपि इष्यते। खुरणसः। खरणसः। शितिनाः, अहिनाः, अर्चनाः इति निगम इष्यते।

न्यासः

अञ्नासिकायाः संज्ञायां नसं चास्थूलात्?। , ५।४।११८

"संज्ञायामिति समुदायोपाधिः" इति। एतेन यदि प्रकृतिप्रत्ययसमुदायः कस्याचित्? संज्ञा भवत्येवं प्रत्ययो भवति, नान्यथेति दर्शयति। "द्रुणसः" इति। "पूर्वपदात्? संज्ञायामगः" ८।४।३ इति णत्वम्()। वर्ध्रे भवा स्त्री वार्ध्री, सा नासिका यस्य स "वार्ध्रीणसः" इति। "वृद्धिनिमित्तस्य च तद्धितस्यरक्तविकारे" ६।३।३८ इति पुंवद्भावप्रतिषेधः। गौरिव नासिकास्य गोनसः। अच श्चित्करणं बहुव्रीहिस्वरबाधनार्थम्()। "खरणाः खुरणाः" इति। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। शितर्नासिकास्य "शितिनाः"। अहिरिव नासिकास्य "अहिनाः"। अर्चेव नासिकास्य "अर्चनाः"। "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्()" ६।३।६२ इति ह्रस्वः॥

बाल-मनोरमा

अञ् नासिकायाः संज्ञायां नसं चाऽस्थूलात् ८४७, ५।४।११८

अञ्नासिकायाः। "अ"जिति च्छेदः। नासिकाया" इत्यस्य बहुव्रीहेर्विशेषणणत्वात्तदन्तविदिमभिप्रेत्याह--नासिकान्तादिति।नसमित्यनन्तरं "प्राप्नोती"त्यध्याहार्यम्। उपस्तितत्वान्नासिकाशब्द इति लभ्यते। तदाह--नासिकाशब्दश्च नसं प्राप्नोतीति।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गाच् च ५।४।११९

उपसर्गात् परो यो नासिकाशब्दः तदन्तात् बहुव्रीहेः अच् प्रत्ययो भवति, नासिकाशब्दश्च न समापद्यते। असंज्ञार्थं वचनम्। उन्नता नासिका अस्य उन्नसः। प्रनसः। उपसर्गाद् बहुलम् ८।४।२७ इति णत्वम्। वेग्रो वक्तव्यः। विगता नासिका अस्य विग्रः।

न्यासः

उपसर्गाच्च। , ५।४।११९

उपसर्गग्रहणं प्राद्युपलक्षणार्थम्(); नासिकां प्रति क्रियायोगाभावात्()। "वेग्रो वक्तव्यः" इति। विशब्दात्? परस्य नासिकाया ग्रशब्द आदेशो भवतीति वक्तव्यम्()। विग्रः। प्रत्ययोऽजेव॥

बाल-मनोरमा

उपसर्गाच्च ८४९, ५।४।११९

उपसर्गाच्च। नन्वञ्नासिकाया इत्येव सिद्धे किमर्थमिदमित्यत आह--असंज्ञार्थमिदमिति। उपसर्गादनोत्पर इति सूत्रमिति। तत्र हि "नश्च धातुस्थो"इति सूत्रान्नसिति लुप्तषष्ठीकमनुवर्तते। "रषाभ्यां नो णः" इत्यनुवर्तते। उपसर्गस्थाद्रेफषकारात्परस्य नसो नस्य णः स्यात्, ओत्परस्तु नकारो णत्वं न प्राप्नोतीत्यर्थः। खण्डपदस्थत्वादप्राप्ताविदं सूत्रम्। "प्र ण आयूँषि तारिषत्" इत्याद्युदाहरणम्। अनोत्परः किम्?। "प्र नो मुञ्चतम्"। अत्र ओत्परकत्वान्न णत्वमिति स्थितिः। तद्धङ्क्त्वेति।

तत्त्व-बोधिनी

उपसर्गाच्च ७४१, ५।४।११९

उपसर्गाच्च उपसर्गग्रहणं प्रादीनामुपलक्षणं, नासिकाशब्दस्याऽक्रियार्थत्वेन तं प्रत्युपसर्गत्वाऽयोगात्। न च क्रियायोगाभावेऽप्युपसर्गत्वमस्त्विति शङ्क्यं, सावके[इति]अधिसावकमित्यव्ययीभावे "उपसर्गात्सुनोती"ति सस्य षत्वप्रसङ्गात्। तदाह--प्रादेरिति।

---

सूत्रम्

काशिका-वृत्तिः

सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रएणीपदाजपदप्रोष्ठपदाः ५।४।१२०

सुप्रातादयो बहुव्रीहिसमासा अच्प्रत्ययान्ता निपात्यन्ते। अन्यदपि च टिलोपादिकं निपातनादेव सिद्धम्। शोभनं प्रातरस्य सुप्रातः। शोभनं श्वो ऽस्य सुश्वः। शोभनं दिवा अस्य सुदिवः। शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रो ऽश्रयो ऽस्य चतुरश्रः। एण्या इव पादौ अस्य एणीपदः। अजस्य इव पादावस्य अजपदः। प्रोष्ठो गोः, तस्य इव पादावय प्रोष्ठपदः।

न्यासः

सुप्रातसु�आसुदिवशारिकुक्षचतुरश्रौणीपदाजपदप्रोष्ठपदाः। , ५।४।१२०

"टिलोपादिकम्" इति। आदिशब्देन सुशब्दश्च कर्मविशेषणं गृह्यते। "शोभनं प्रातरस्य" इति। शोभनमित्येतदिह कर्मणो विशेषणम्()। शोभनं प्रातःकाले कर्मास्येत्यर्थः। एवमुत्तरत्रापि शोभनमित्येतत्कर्मणो विशेषणं वेदिव्यम्()।

बाल-मनोरमा

सुप्रातसु�आसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ८५१, ५।४।१२०

सुप्रात। सुप्रात इति। अच्प्रत्ययः।"अव्ययानां भमात्रे टिलोपः"। सु()आ इति। अच्। पूर्ववट्टिलोपः। सुदिव इति। शोभनं दिवा यस्येति विग्रहः। "दिवे"त्याकारान्तमव्ययम्। "अव्ययानां भमात्रे टिलोप" इति टिलोपः। शारिकुक्ष इति। "शारिः--पक्षिविशेषः। अचि "यस्येति चे"तीकारलोपः। चतरुआओऽश्रय इति। कोणा इत्यर्थः। अचि "यस्येति चे"तीकारलोपः। एण्या इवेति। एणी-मृगी। अजपद इति। अजः-छागः, तस्येव पादावस्येति विग्रहः। एणीपदादिषु अच् निपातनात्। "पादः पत्"।

तत्त्व-बोधिनी

सुप्रातसु�आसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ७४३, ५।४।१२०

शोभनं प्रातस्स्येति। अधिकरणशक्तिप्रधानस्य सामानाधिकरण्याऽसम्भवात्प्रातः शब्देन प्रातस्तनं कर्म लक्ष्यत इत्याहुः। "प्रातःकल्प"मित्यत्रेव प्रातःशब्दो वृत्तिविषये शक्तिमत्पर इति सामानाधिकरण्यानुपपत्तिरित्यन्ये। एणीपदादिषु निपातनात्पद्भावः।

---

सूत्रम्

काशिका-वृत्तिः

नञ्दुःसुभ्यो हलिसक्थ्योरन्यारस्याम् ५।४।१२१

नञ् दुस् सु इत्येतेभ्यः परौ यौ हलिसक्थिशब्दौ तदन्तद् बहुव्रीहेरन्यतरस्याम् अच् प्रत्ययो भवति समासान्तः। अविद्यमाना हलिरस्य अहलः, अहलिः। दुर्हलः, दुर्हलिः। सुहलः, सुहलिः। अविद्यमानं सक्थि अस्य असक्थः, असक्थिः। दुःसक्थः, दुःसक्थिः। सुसक्थः, सुसक्थिः। हलिशक्त्योः इति केचित् पठन्ति। अविद्यमाना शक्तिः अस्य अशक्तः, अशक्तिः। विरूपा शक्तिः अस्य दुःशक्तः, दुःशक्तः, दुःशक्तिः। शोभना शक्तिः अस्य सुशक्तः, सुशक्तिः।

न्यासः

नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्?। , ५।४।१२१

"अकारान्तोऽपि हलशब्दोऽस्ति; तत्र यदा तेन समासः तदा हल इति भविष्यति, यदा त्विकारान्तेन तदा हलिरिति, तदनर्थकं हलिग्रहणम्()? नानर्थकम्(); भिन्नार्थत्वात्()। तेन यो महद्धलं हलिः, तस्मिन्? विषये विवक्षिते, अहल इति न सिध्यति, अहल इति यदाकारान्तेन समासः क्रियते, पूर्ववत्? प्रकृतेभावेनाद्युदात्तत्वं चेष्यते, "शेषाद्विभाषा" (५।४।१५४) इति कप्? प्रसज्येत। तस्माद्युक्तं हलिग्रहणम्()॥

बाल-मनोरमा

नञ्दुःसुभ्यो हलिसक्त्योरन्यतरस्याम् ८५२, ५।४।१२१

नञ्दुःसुभ्यः। शेषरपूरणेन सूत्रं व्याचष्टे--अच्स्यादिति। अहलः, अहलिरिति। अविद्यमानो हलिर्यस्येति विग्रहः। हलिशब्द इदन्तो हलपर्यायः। तदन्तादचि "यस्येति चे"तीकारलोपे तदभावे च रूपम्। यद्यपि हलशब्देन हलिशब्देन च रूपद्वयं सिद्धन्तथापि अनुक्तसमासान्तत्वाऽभावादत्र न कप्। असक्थः, असक्थिरिति। अविद्यमानं सक्थि यस्येति विग्रहः। एवं दुःसुभ्यामिति। दुर्हलः, दुर्हलिः। दुःसक्थ, दुःसक्थिः। शक्त्योरिति। "हलिशक्त्योः" इति केचित्पाणिनीया पठन्तीत्यर्थः। केचिच्छिष्याः पाणिनिना तता पाठिता इति वदन्तीति भावः।

तत्त्व-बोधिनी

नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ७४४, ५।४।१२१

नञ्दुःसुभ्यो। नन्वत्र हलिग्रहणं व्यर्थं, हलशब्दमादायाऽहल इति प्रयोगसम्भवात्। न च मदद्धलं हलिः, तद्रहितोऽहलिस्तत्रैवार्थेऽहल इति प्रयोगार्थं तद्ग्रहणमिति वाच्यम्, अहल इत्यत्र पूर्वपदप्रकृतिस्वरः स्यादिति सङ्क्यं, "नञ्सुभ्या"मित्यनेनान्तोदात्तत्वविधानात्। अत्राहुः---शैषिकस्य कपो निवृत्यर्थं, "दुर्हलः" इत्यत्रान्तोदात्तत्वार्थं च तदिति। शक्त्योरिति। आचार्येण केचिच्छात्रा "हलिशक्त्यो"रिति पाठिता इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

नित्यम् असिच् प्रजामेधयोः ५।४।१२२

नञ्दुस्सुभ्यः इत्येव। नञ् दुस् सु इत्येतेभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद् बहुव्रीहेः नित्यम् असिच् प्रत्ययो भवति समासान्तः। अविद्यमाना प्रजा अस्य अप्रजाः। दुष्प्रजाः। सुप्रजाः। अविद्यमाना मेधा यस्य अमेधाः। दुर्मेधाः। सुमेधाः। नित्यग्रहणं किम्, यावता पूर्वसूत्रे ऽन्यतरस्याम् ग्रहणं न एव स्वर्यते? एवं तर्हि नित्यग्रहणादन्यत्र अपि भवति इति सूच्यते। श्रोत्रियस्य इव ते राजन् मन्दकस्याल्पमेधसः। अनुवाकहता बुद्धिर् न एषा तत्त्वार्थदर्शिनी।

न्यासः

नित्यमसिच प्रजामेधयोः। , ५।४।१२२

"एवं तर्हि नित्यग्रहणेनान्यत्रापि सूच्यते" इति। ग्रन्ताधिक्यादर्थाधिक्यं भवतीति कृत्वा। असिचश्चित्करणं दुष्प्रजाः, दुर्मेधा इत्यन्तोदात्तत्वं यथा स्यात्? अप्रजाः, इत्यादौ तु नार्थश्चित्करणेन; "नञ्सुभ्याम्()" ६।२।१६१ इत्यनेनैवोत्तरपदान्तोदात्तत्वस्य सिद्धत्वात्()॥

बाल-मनोरमा

नित्यमसिच् प्रजामेधयोः ८५३, ५।४।१२२

नित्यमसिच्। नञ्दुःसुभ्य इत्येवेति। पूर्वसूत्रादनुवर्तत इति भावः। एतेभ्यः पराभ्यां प्रजामेधाशब्दाभ्यां नित्यमसिच्समासान्त स्यात्, स तद्धित इत्यर्थः। असिचस्चकार इत्। इकार उच्चारणार्थः। "अन्यतरस्या"मित्यनुवृत्तिनिवृत्त्यर्थं नित्यग्रहणम्। अस्वरितत्वादेव तदनुवृत्त्यभावे सिद्धे स्पष्टार्थमिति तत्त्वम्। अप्रजा इति। अविद्यमाना प्रजा यस्येति विग्रहः। "नञोऽस्त्यर्थाना"मिति समासः। असिचि "यस्येति चे"त्यकारलोपादप्रजस्शब्दात्सुबुत्पत्तिः। सौ तु "अत्वसन्तस्ये"ति दीर्घः। "हल्ङ्या"बिति सुलोपः। यद्यप्यकारं विना सिचि विहितेऽपि सिद्धमिदन्तथापि सिच्यभत्वेन आकारलोपाऽभावादप्रजास्शब्दात्सुबुत्पत्तौ, प्रथमैकवचने "अप्रजा" इति रूपसिद्धावपि अप्रजासाविति न स्यात्। किंतु अप्रजासावित्यादि स्यात्। तस्मादकारोच्चारमं भत्वसंपादनार्थमावश्यकम्। दुष्प्रजा इति। दुर्गता प्रजा यस्येति विग्रहः। "प्रादिभ्यो धातुजस्ये"ति समासः। असिजादि पूर्ववत्। अमेधा इत्यादि।अविद्यमानां मेधा यस्येति विग्रहः। असिजादि पूर्ववत्। केचित्तु नित्यग्रहणमन्यतो विदानार्थं तेनाल्पमेधस इत्यादि सिध्यतीत्यप्याहुः।

तत्त्व-बोधिनी

नित्यमसिच् प्रजामेधयोः ७४५, ५।४।१२२

नित्यमसिच्। अकारोच्चारणं भत्वसम्पादनार्थम्, ते नसुप्रजसावित्यादौ "यस्येति चे" त्यकारलोपः सिध्यति। अस्वरितत्वादेव अन्यतरस्याङ्ग्रहणा ननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो विधानार्थम्। तेन "अल्पमेधस"इति सिध्यतीति वृत्तिकारादयः।

---

सूत्रम्

काशिका-वृत्तिः

बहुप्रजाश्छन्दसि ५।४।१२३

बहुप्रजाः इति छन्दसि निपात्यसे। बहुप्रजा निरृतिमाविवेश। छन्दसि इति किम्? बहुप्रजो ब्राह्मणः।

न्यासः

बहुप्रजाश्छन्दसि। , ५।४।१२३

---

सूत्रम्

काशिका-वृत्तिः

धर्मादनिच् केवलात् ५।४।१२४

केवलाद् यो धर्मशब्दः तदन्ताद् बहुव्रीहेः अनिच् प्रत्ययो भवति समासन्तः। कल्याणो धर्मो ऽस्य कल्याणधर्मा। प्रियधर्मा। केवलातिति इम्? परमः स्वो धर्मः अस्य परमस्वधर्मः। यद्येवं त्रिपदे बहुव्रीहौ प्राप्नोति, परमः स्वो धर्मः अस्य इति? एवं तर्हि केवलातिति पूर्वपदं निर्दिश्यते, केवलात् पदाद् यो धर्मशब्दो न पदसमुदायात्, तदन्ताद् भौव्रीहेः प्रत्ययः।

न्यासः

धर्मादनिच्? केवलात्?। , ५।४।१२४

"असमस्तः" [नास्ति--काशिकायाम्()] इति। असमासः क्रियत इत्यर्थः। "परमस्वधर्मः" इति। स्वश्चासौ धर्मश्चेति स्वधर्मः, परमश्चासौ स्वधर्मश्चेति परमस्वधर्मः। "यद्येवम्? इत्यादि। यदि केवलग्रहणेन धर्मो विशेष्यते परमस्वधर्मश्चेति न, परमस्वधरह्रएति स्यात्()। "केवलात्? पूर्वपदात्()" इति। धर्मस्य असहायात्? पूर्वपदादित्यर्थः। "न पदसमुदायात्()" इति। परमो धर्म इति प्रकृतेन सम्बन्धः। अत्र व्याख्याने त्रिपदे बहुव्रीहौ न भवति प्रसङ्गः, पदसमुदायाद्धि परमो धर्मशब्दो न केवलात्? पूर्वपदात्()। अनिचश्चित्करणं पूर्वपदप्रकृतिस्वरं बाधित्वाऽन्तोदात्तमेव यथा स्यात्()॥

बाल-मनोरमा

धर्मादनिच्केवलात् ८५४, ५।४।१२४

धर्मादनिच्केवलात्। "पूर्वपदा"दित्यध्याहृत्य "केवला"दित्यस्य तद्विशेषणत्वमाह--केवलात्पूर्वपदादिति। अनिचि चकार इत्। इकार उच्चारणार्थः। मद्यमपदत्वानाक्रान्तत्वं केवलपूर्वपदत्वम्। कल्याणधर्मेति। कल्याणो धर्मो यस्येति विग्रहः। अनिचि "यस्येति चे"त्यकारलोपः। परम इति। परमः स्वो धर्मो यस्येति बहुव्रीहौ परमस्वधर्मशब्दे स्वशब्दस्य धर्मशब्दापेक्षया पूर्वपदत्वात्ततः परमस्वधर्मशब्दादप्यचः प्राप्तौ तन्निवृत्त्यर्थं केवलग्रहणमिति भावः। केवलग्रहणे कृते तु न दोष इत्याह--स्वशब्दो हीह न केवलं पूर्वपदमिति। किं त्विति। किं तु स्वशब्दो धर्मपदापेक्षया पूर्वत्वात्पूर्वपदं, न तु केवलं, मध्यमत्वात्। केवलशब्देन च पदान्तरराहित्य वाचिना मध्यमपद्तावनाक्रान्तत्वलाभादित्यर्थः। इदंच "इजादे"रिति सूत्रभाष्ये स्पष्टम्।एवं च त्रिपदबहुव्रीहौ परमस्वधर्म इत्येव भवति। नत्वनिच्। "सर्वनामसङ्ख्ययोरुपङ्ख्यान"मिति स्वशब्दस्य पूर्वनिपातस्तु "वाहिताग्न्यादिषु" इति पाक्षिकत्वान्न भवति। नन्वेवं सति सन्दिग्धः साध्यो धर्मो यस्य स "सन्दिग्धसाध्यधर्मे"त्यत्र कथमनिच्। अत्र हि सन्दिग्धेति केवलं पूर्वपदं, धर्मशब्दस्तस्म#आत्परो न भवति। यस्मात्साध्यशब्दात्परो धर्मशब्दः, तस्य तु न पूर्वपदत्वं, मध्यमपदत्वादित्यत आह--सन्दिग्धेति। सन्दिग्धश्चासौ साध्यश्चेति कर्मधारयः। सन्दिग्धसाध्यो धर्मो यस्येति कर्मधारयगर्भो बहुव्रीहिः। एवञ्च सन्दिग्धसाध्यशब्दस्य केवलपूर्वपदत्वात्तत्राऽनिच्निर्बाध #इति भावः। एवं चेति। उक्तरीत्या परमश्चासौ स्वश्च परमस्वः, परमस्वो धर्मो यस्येति कर्मधारयाश्रयणे तु केवलपूर्वपदत्वादनिच्। परमस्वधर्मेत्यपि साद्वेवेत्यर्थः। निवृत्तीति। निवृत्तिः धर्मो यस्येति कर्मधारयाश्रयणे तु केवलपूर्वपदत्वादनिच्। परमस्वधर्मेत्यपि साध्वेवेत्यर्थः। निवृत्तीति। निवृत्तिः धर्मो यस्येति, अनुच्छित्तिः धर्मो यस्येति च विग्रहः। अत्र समासे निवृत्तिशब्दस्य अनुच्छित्तिशब्दस्य च केवलपूर्वपदत्वाद्यथायोग्यमनिजिति भावः।

तत्त्व-बोधिनी

धर्मादनिच्केवलात् ७४६, ५।४।१२४

धर्मादनिच्। अनिचोऽकारश्चिन्त्यप्रयोजन इत्येके। अन्ये तु धर्मं करोत्याचष्टे वा, "तत्करोती"ति ण्यन्तात्क्विपि धर्म्, परमो धर्म् यस्य सः परमधर्म्। एकदेशविकृतस्यानन्यत्वाद्धर्मशब्दोऽयमित्यकारोच्चारणमिह सप्रयोजनमेवेत्याहुः। बहुव्राहिणात्र पूर्वपदमाक्षिप्यत इत्यनुपदमेव वक्ष्यति। तच्च "केवला"दित्यनेन विशेष्यत इत्याह---केवलात्पूर्वपदादिति। प्राचा तूत्तरपदमपि विशेषितम्। प्रसादकृतापि केवलादिति धर्मशब्दस्य पूर्वपदस्य च विशेषणमिति व्याख्यातम्, तदुभयमपि चिन्त्यम्। आवृत्तौ मानाऽभावात्, धर्मपदविशेषणे प्रयोजनाऽभावाच्च। न च धर्मशब्दान्तं यत्रोत्तरपदं तव्द्यवृत्तिः फलमिति वाच्यं , तत्र बहुव्रीह्ववयवीभूतपूर्वपदात्परस्य धर्मपदेऽसम्भवादेवाऽदोषत्वात्। मध्यमत्वादिति। न च "सर्वनामसङ्ख्ययो"रिति स्वशब्दस्य पूर्वनिपातः शङ्क्यः, आहिताग्न्यादेराकृतिगणत्वादिति हरदत्तदिभिः समाहितत्वात्। आपेक्षिकमिति। नन्वत एव केवलग्रहणं व्यर्थं, पूर्वशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यमपदव्यावृत्तिसम्भवादिति चेत्। अत्राहुः--पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेन केवलपदस्य सार्थकत्वादिति। कर्मधारयपूर्वपद इति। नन्वत्राऽनिच् द#उर्लभः, "केवला"दित्यस्य समासानातच्मकत्वादित्यर्थादिति चेत्, मैवम्। केवलग्रहणस्य समासानात्मकपूर्वपदपरत्वे मानाऽभावात्। "निवृत्तिधर्मा हि स्थानी भवती"त्यादिप्रयोगविरोधाच्च। अस्मदुक्तार्थस्तु "धृञ् धारणे"इति धातौ माधवग्रन्थे स्पष्टः। एतेन साध्योः धर्मोऽस्येति साध्यधर्मा, संदिग्धश्चासौ साध्यधर्मा चेति विग्रहः। स च सन्देहः साध्यधर्मद्वारक एव पर्यवस्यतीति केषाञ्चिव्द्याख्यानं परास्तम्। उक्तिरीत्यैव साध्यस्य साक्षात्सन्दिग्धत्वलाभे तत्समर्थनप्रयासस्य व्यर्थत्वात्। साध्वेवेति। परमश्चासौ स्वश्च परमस्वः, स धर्मो यस्येति यदा विगृह्रते तदेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

जम्भा सुहरिततृणसोमेभ्यः ५।४।१२५

बहुव्रीहौ समासे स्वादिभ्यः परं जम्भा इति कृतसमासान्तम् उत्तरपदं निपात्यते जम्भशब्दः अभ्यवहार्यवची दन्तविशेषवाची च। शोभनो जम्भः अस्य सुजम्भा देवदत्तः। शोभनाभ्यवहार्यः शोभनदन्तो वा। एवं हरितजम्भा। तृणजम्भा। सोमजम्भा। दन्तवचने तृणम् इव जम्भः अस्य, सोम इव जम्भः अस्य इति विग्रहीतव्यम्। सुहरिततृणसोमेभ्यः इति किम्? पतितजम्भः।

न्यासः

जम्भा सुहरिततृणसोमेभ्यः। , ५।४।१२५

जम्भवचनेन तृणमिव जम्भोऽस्य, सोम इव जम्भोऽस्येति विग्रहीतव्यमिति। ननु तृणं जम्भोऽस्य, सोमो जम्भोऽस्येत्येवं विग्रहीतव्यम्(), न हि तृणं जम्भः, न च सोमः। अभ्यवहारह्रवचने तु--तृं जम्भोऽस्य, सोमोजम्भोऽस्येत्यवमेव विहग्रहः कार्यः; तृणसोमयोरभ्यवहारह्थत्वात्()॥

बाल-मनोरमा

जम्भा सुहरिततृणसोमेभ्यः ८५५, ५।४।१२५

नन्विह सूत्रे पूर्वपदशब्दस्याऽश्रवणादनुवृत्त्यभावाच्च कथं पूर्वपदादिति लभ्यत इत्यत आह--पूर्वपदं त्विति। जम्भा सुहरित। "जम्भे"ति नकारान्तं पदम्। तदाह--जम्भेति कृतसमासान्तमिति। अनिजन्तनित्यर्थः। सु-हरुत-तृण-सोम-इत्येतेभ्यः परो यो जम्भशब्दस्तदन्ताद्बहुव्रीहेरनिच्प्रत्ययो निपातित इति भावः। जम्भो भक्ष्ये दन्ते चेति। अत्र कोशो

मृग्यः। सुजम्भेति। सुजम्भशब्दादनिचि "यस्येति चे"त्यकारलोपः। हरितजम्भेति। हरितो जम्भो यस्येति विग्रहः। तृणमिवेति। तृणशब्दस्य दन्तवाचिना जम्भशब्देन सामानाधिकरण्यलाभाय तृणशब्दस्य तत्सदृशे लक्षणेति भावः। सोमजम्भेति। सोमः=चन्द्रः, स इव शुभ्रा जम्भाः=दन्ता यस्येति विग्रहः। "सोमः=सोमलता वा, सैव जम्भः=भक्ष्यं यस्येति विग्रहः। पतितिजम्भ इति। पतिता जम्भाः=दन्ता यस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

दक्षिणेर् मा लुब्धयोगे ५।४।१२६

दक्षिणेर्मा इति कृतस्मासान्तः निपात्यते बहुव्रीहौ समासे लुब्धयोगे। दक्षिणम् ईर्मम् अस्य दक्षिणेर्मा मृगः। ईर्मम् व्रणम् उच्यते। दक्षिणम् अङ्गं व्रणितम् अस्य व्याधेन इत्यर्थः। लुब्धयोगे इति किम्? दक्षिणेर्म शकटम्।

न्यासः

दक्षिणर्मा लुब्धयोगे। , ५।४।१२६

बाल-मनोरमा

दक्षिणेर्मा लुब्धयोगे ८५६, ५।४।१२६

दक्षिणेर्मा। लुब्धो-व्याधः, तद्योगे "दक्षिणेरमा" इत्यनिच्प्रत्ययः, बहुव्रीहिश्च निपात्यते। दक्षिणे ईर्मं यस्येति विग्रहः। ईर्ममित्यस्य व्याख्यानं "व्रण"मिति व्यधिकरणत्वेऽपि बहुव्रीहिर्निपातनात्। अनिचि "यस्येति चे"त्यकारलोपे "दक्षिणेर्मे"ति रूपम्। लुब्धशब्दं विवृण्वन्नाह-व्याधेनेति। रोगादिना व्रणे तु दक्षिणेर्म इत्येवेति भावः।

तत्त्व-बोधिनी

दक्षिणेर्मा लुब्धयोगे ७४७, ५।४।१२६

दक्षिणर्मा। लुब्धो--व्याधः। तद्योगादेवेर्मनिष्पात्ताविगं निपातनं नान्यदेत्यर्थस्तदेतदाह---व्याधेनेति। "वाली हेमाब्दमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा"इति प्रयोगस्त्वौपचारिक इति कथंचिन्नेयः।

---

सूत्रम्

काशिका-वृत्तिः

इच् कर्मव्यतिहारे ५।४।१२७

कर्मव्यतिहारे यो बहुव्रीहिः तस्मादिच् प्रत्ययो भवति। तत्र तेन इदम् इति सरूपे २।२।२७ इत्ययं बहुव्रीहिर् गृह्यते। केशेसु केशेसु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। मृसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि। दण्डादण्डि। तिष्ठद्गुप्रभृतिषु अयम् इच् प्रत्ययः पठ्यते।

न्यासः

इच्? कर्मव्यतिहारे। , ५।४।१२७

"तत्र तेनेदमिति सरूपे" इत्ययं बहुव्रीहिर्गृह्यते" इति। अस्यैव कर्मध्यतिहारे वृत्तेः "केशाकेशि" (इति) "अन्येषामपि दृश्यते" ६।३।१३६ इति दीर्घः। तिष्ठद्गुप्रभृतिष्विच्प्रत्यस्य पाठादव्ययीभावसंज्ञा, अव्ययीभावश्च समासोऽव्ययसंज्ञो

भवतीति। तेन सुब्लुग्भवतीति भावः। इचश्चित्करणं विशेषार्थम्()। यदि ह्रत्र चकारो न क्रियते, तदा तिष्ठद्गुप्रभृतिष्वपीकारमात्रं पठ()एत, तदेकारमात्रस्यापि ग्रहणं स्यात्()॥

बाल-मनोरमा

इच् कर्मव्यतिहारे ८५७, ५।४।१२७

इच्कर्मव्यतिहारे। समासान्त इति। तद्धित इत्यरि ज्ञेयम्। केशाकेशीति। अत्र प्रक्रिया प्रागेव प्रदर्शिता।

तत्त्व-बोधिनी

इच् कर्मव्यतिहारे ७४८, ५।४।१२७

केशकेशीति। "तत्र तेनेद"मिति कर्मव्यतिहारे बहुव्रीहिः। इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्बेऽव्ययत्वम्। नन्वेवमिचश्चित्करणं व्यर्थम्, अव्ययीभावसंज्ञाया बहुव्रीहिसंज्ञाया बाधात्समासस्वरेणान्तोदात्तत्वसिद्धेः। अत्राहुः--विशेषणार्तं तदावश्यकमेव। तिष्ठद्गुणप्रभृतिषु इकारमात्रपाठे हि सुगन्धिरित्यादावतिव्याप्तिप्रसङ्गात्। किञ्चात्राऽव्ययीभावसंज्ञया बहुव्राहिसंज्ञा न बाध्यते, किं तु द्वयोः समावेश एव, उपजीव्यविरोधस्याऽन्याय्यत्वात्। एवं च स्वरार्थमपि चित्त्वं कर्तव्यमेवेति।

---

सूत्रम्

काशिका-वृत्तिः

द्विदण्ड्यादिभ्यश् च ५।४।१२८

द्विदण्ड्यादयः शब्दाः इच् प्रत्ययान्ताः साधवो भवन्ति। द्विदण्ड्यादिभ्यः इति तादर्थ्ये एषा चतुर्थी, न पञ्चमी। द्विदण्ड्याद्यर्थम् इच् प्रत्ययो भवति तथा भवति यथा द्विदण्ड्यादयः सिद्ध्यन्ति इत्यर्थः। समुदायनिपातनाच् च अर्थविशेषे ऽवरुध्यन्ते। द्विदण्डि प्रहरति। द्विमुसलि प्रहरति। इह न भवति, द्विदण्डा शाला इति। बहुव्रीह्यधिकारे ऽपि तत्पुरुषात् क्वचिद् विधानम् इच्छन्ति। निकुच्य कर्णौ धावति निकुच्यकर्णि धावति। प्रोह्य पादौ हस्तिनं वाहयति प्रोह्यपादि हस्तिनं वाहयति। मयूरव्यंसकादित्वात् समासः। द्विदण्डि। द्विमुसलि। उभाञ्जलि। उभयाञ्जलि। उभाकर्णि। उभयाकर्णि। उभादन्ति। उभयादन्ति। उभाहस्ति। उभयाहस्ति। उभापाणि। उभयापाणि। उभाबाहु। उभयाबाहु। एकपदि। प्रोह्यपदि। आढ्यपदि। सपति। निकुच्यकर्णि। संहतपुच्छि। उभाबाहु, उभयाबाहु इति निपातनादिच्प्रत्ययलोपः। प्रत्ययलक्षणेन अव्ययीभावसंज्ञा।

न्यासः

द्विदण्ड�आदिभ्यश्च। , ५।४।१२८

"द्विदण्ड()आदिभ्य इति तादथ्र्य एषा चतुर्थी" इत्यादि। द्विदण्ड()आदयो हि प्रतपदिकेष्विच्प्रत्ययान्ता एव पठ()न्त इति तेभ्यः पुनरिज्विधातुं न शक्यते, विधीयमानोऽपि निष्प्योजनः स्यात्(), तस्मान्नेयं पञ्चमी, किं तर्हि? तादर्थ्ये चतुर्थी। द्विदण्ड()आद्यर्थमिच्()परत्ययो भवतीत्यनेन तादथ्र्यं दर्शयति। अस्यैवार्थं विस्पष्टीकर्त्तुमाह--"तत्तथा भवति" इत्यादि। एवं ब्राउवाणेन "द्विदण्ड()आदिभ्यः प्रत्ययो भवति, न द्विदण्डादिभ्यः" इत्युक्तम्()। एवं ते सिध्यन्ति; नान्यथा। अथ किमर्थं समुदायानां निपातनशुद्धा एव प्रकृतीः प्रातिपदिकेषु पठित्वा ततः प्रत्ययो दिधीयते? इत्यत आह--"समुदायनिपातनाच्च" इत्यादि। प्रातिपदिकेषु प्रकृतीः पठित्वा ताभ्यः प्रत्ययमात्रं विधीयते, ततो नियमः स्यात्()--समुदायनिपातनाद्यत्रारथविशेषे ते प्रसिद्धास्तत्रैव विशेष्यन्ते। तत्रैव भवन्तीत्यर्थः। "द्विदण्डि प्रहरति" इति। द्वौ

द्डौ यस्मिन्? प्रहरणे। "इह भवति" इति। द्विदण्डीत्येतच्छब्दरूपमत्रार्थे साधुर्न भवतीत्यर्थः। "बहुव्रीहेधिकारात्? तत्पुरुषान्न क्वचित्? प्रत्ययविधानं स्यात्()। समुदायनिपातनात्? तु क्वचित्? तत्पुरुषादपि भवति। यदा प्रत्यस्य लोपो भवत्यव्ययोभावसंज्ञा, तदा न प्रप्नोतीत्यत आह--"प्रत्ययलक्षणेन" इत्यादि॥

बाल-मनोरमा

द्विदण्ढ�आदिभ्यश्च ८५८, ५।४।१२८

द्विदण्ड()आदिभ्यश्च। द्विदण्ड()आदिषु इदन्तानामेव निपातनात्तेभ्यः परत्वेन इच्प्रत्ययविधिरनर्थक इत्याशङ्क्य नेयं पञ्चमीत्याह--तादर्थ्ये चतुर्थ्येषेति। द्वौ दण्डाविति। कर्मव्यतिहाराभावेऽपि वैरूप्येऽपि बहुव्रीहिरिच्प्रत्ययश्च निपात्यते। द्विदण्डीति। दण्डादण्डीतिवत् प्रक्रिया। कर्मव्यतिहाराऽभावात् पूर्वपदस्य न दीर्घ इति विशेषः। द्विमुसलीति। द्वे मुसले यस्मिन् प्रहरणे इति विग्रहः। उभाहस्ति। उभयाहस्तीति। उभौ हस्तौ यस्मिन् प्रहरण इति विग्रहः। "उभयोऽन्यत्रे"ति नित्यमयचि प्राप्ते निपातनेन विकल्प्यते। कर्मव्यतिहाराभावेऽपि दीर्घश्च।

तत्त्व-बोधिनी

द्विदण्ड�आदिभ्यश्च ७४९, ५।४।१२८

द्विदण्डीति। समुदायनिपातनस्य विषयविशेषपरिग्रहार्थत्वाद्द्विदण्डा शालेत्यत्र त्विज् न भवति। उभाहस्तीत्यादि। इह निपातनादेवाऽयचः पाक्षिकत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रसंभ्यां जानुनोर् ज्ञुः ५।४।१२९

प्र सम् इत्येताभ्याम् उत्तरस्य जानुशब्दस्य ज्ञुरादेशो भवति समासान्तो बहुव्रीहौ। प्रकृष्टे जानुनी अस्य प्रज्ञुः। संज्ञौः।

न्यासः

प्रसम्भ्यां जानुनोर्ज्ञुः। , ५।४।१२९

"जानुशब्दस्यादेशो भवति" इति। कथं पुनर्ज्ञायते--आदेशोऽयम्? न प्रत्यम इति? यदि प्रत्ययः स्यात्(), "जानुनः" इत्येकवचनेनैव निर्द्देशं कुर्यात्(); षष्ठीद्विवचनेनैव निर्देशः कृतः। तस्मादावेशोऽयं न प्रत्यय इति विज्ञायते। षष्ठीद्विवचनेन निर्देशोऽसन्देहार्थः कृतः--स्थानषष्ठीत्वमसन्दिग्धं यता विज्ञायेतेति। जानुन इत्युच्चमानं सन्देहः स्यात्()--किमियं षष्ठी, उत पञ्चमीति॥

बाल-मनोरमा

प्रसंभ्यां जानुनोर्ज्ञुः ८५९, ५।४।१२९

प्रसंभ्यां। जानुशब्दयोरिति।"प्र" "सम्" इति पूर्वपदद्वित्वादुत्तरपदभूतजानुशब्दस्यापि द्वित्वं बोध्यम्। "जानुन" इत्युक्ते तु "प्रत्ययः, परश्चे"त्यधिकारात् पञ्चम्यन्तत्वसंभवाज्ज्ञोः प्रत्ययत्वं च सम्भाव्येत। तस्यादेशत्वसिद्धये षष्ठीद्विवचननिर्देशः। तदाह--ज्ञुरादेश इति। प्रज्ञुरिति। "प्रादिभ्यो धातुजस्ये"ति समासः। संज्ञुरिति। सङ्गते जानुनी यस्येति विग्रहः।

तत्त्व-बोधिनी

प्रसंभ्यां जानुनोर्ज्ञुः ७५०, ५।४।१२९

प्रसंभ्याम्। जानुशब्दस्यैकत्वेऽप्युपपजनिबन्धनं द्वित्वमाश्रित्य जानुनोरिति द्विचननिर्देशः, तत्फलं तु स्थानषष्ठीत्वस्फुटीकरणम्। "जानुनः"इत्युक्ते तु किमियं पञ्चमी, प्रत्ययाधिकारात् ज्ञुरपु प्रत्यय इत्येवं सन्देहः स्यात्, तदेततद्ध्वनयन्नाह---जानुशब्दयोर्ज्ञुरादेश इति।

---

सूत्रम्

काशिका-वृत्तिः

ऊर्ध्वाद् विभाषा ५।४।१३०

ऊर्ध्वशब्दादुत्तरस्य जानुशब्दस्य विभाषा ज्ञुः इत्ययम् आदेशो भवति। ऊर्ध्वे जानुनी अस्य ऊर्ध्वजानुः, ऊर्ध्वज्ञुः।

न्यासः

ऊध्र्वाद्विभाषा। , ५।४।१३०

बाल-मनोरमा

ऊध्र्वाद्विभाषा ८६०, ५।४।१३०

ऊध्र्वाद्विभाषा। ऊध्र्वशब्दात् परो यो जानुशब्दस्तस्य ज्ञुरादेशो वा स्यात्, बहुव्रीहावित्यर्थः। ऊध्र्वज्ञुरिति। ऊर्ध्वे जानुनी यस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

ऊधसो ऽनङ् ५।४।१३१

ऊधस्शब्दान्तस्य बहुव्रीहेः अनङादेशो भवति समासान्तः। कुण्डम् इव ऊधः अस्याः सा कुण्दोध्नी। घटोध्नी। ऊधसो ऽनङि स्त्रीग्रहणं कर्तव्यम्। इह मा भूत्, महोधाः पर्जन्यः। घटोधो धैनुकम्।

न्यासः

ऊधसोऽनङ्। , ५।४।१३१

"अनङादेशोऽयं भवति" इति। कथं पुनर्विज्ञायते---आदेशोऽयं न प्रत्यय इति ? यद्येष प्रत्ययः स्यात्? ङित्करणमनर्थकं स्यात्? आदेशो ह्यस्मिन्ननन्त्यादेशार्थं ङित्त्वमर्थवद्भवति। तस्मान्ङित्त्वादेवायमादेशो भवतीति विज्ञायते। "कुण्डोध्नी" इति। अनङि कृते "अतो गुणे" ६।१।९४ पररूपत्वम्(), "बहुव्रीहेरूधसो ङीष्()" (४।१।२५) इति ङीष्? "अल्लोपोऽनः" ६।४।१३४। "स्त्रीग्रहणं कत्र्तव्यम्()" इति। स्त्री गृह्रते येनाभिधेयनित्यत्वेन ततः स्त्रीग्रहणं कत्र्तव्यम्()। एतदुक्तं भवति--तथा व्याख्यानं कत्र्तव्यं यथा स्त्रियामभिधेयायामनङ् भवतीति। तत्रेदं व्याख्यानम्()--"ऊध्र्वाद्विभाषा" ५।४।१३० इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यस्थितविभाषा, तेन स्त्रियामेव भवति, नान्यत्रेति।

अनङ्ऽकारादित्वमुत्तरार्थम्()। इह विनापि तेन सिध्यत्येव॥

बाल-मनोरमा

ऊधसोऽनङ् ४७७, ५।४।१३१

तत्र विशेषमाह--ऊधसोऽनङ्। बहुव्रीहौ सक्थ्यक्ष्णो"रित्यतो बहुवीहावित्यनुवृत्तं षष्ठ()आ विपरिणम्यते, "ऊधसः" इत्यनेन विशेष्यते, तदन्तविधिः। तदाह--ऊधोऽन्तस्येति। समासान्तप्रकरणस्थत्वेऽपि ङित्त्वादस्यादेशत्वं बोध्यम्। इत्यनङि कृते इति। अनङि ङकार इत्, अकार उच्चारणार्थः, "ङिच्चे"त्यन्त्यस्य सकारस्य अन्, पररूपम्, कुण्जोधन् इति स्थिते सतीत्यर्थः। डाब्डीब्निषेधेष्विति। "डाबुभाभ्या"मिति वैकल्पिके डापि, "अन उपधालोपिनः" इति वैकल्पिके ङीपि, तदुभयाऽभावे "ऋन्नेभ्यः" इति प्राप्तस्य ङीपः "अनो बहुव्रीहे"रिति निषेधे च प्राप्ते इत्यर्थः।

तत्त्व-बोधिनी

ऊधशोऽनङ् ४३०, ५।४।१३१

ऊधसोऽनङ्। नादेशेनैव सिद्धेऽनङ्करणं "धनुषश्चे"त्युत्तरार्थम्, अन्यथा "शाङ्र्गधन्वे"ति न सिद्ध्येदित्याहुः। वस्तुत इहार्थमप्यावश्यकमेव, अन्यथा अनोलक्षणिकत्वेनाऽल्लोपाऽपर्सङ्गादित्यन्ये। इह "बहुव्रीहौ सक्थ्यक्ष्णो"रित्यतो बहुव्रीहावित्यनुवर्तते इत्याह--

---

सूत्रम्

काशिका-वृत्तिः

धनुषश् च ५।४।१३२

धनुःशब्दान्तस्य बहुव्रीहेः अनङादेशो भवति समासान्तः। शार्ङ्गं धनुरस्य शार्ङ्गधन्वा। गाण्डीवधन्वा। पुष्पधन्वा। अधिज्यधन्वा।

न्यासः

धनुषश्च।, ५।४।१३२

"शाङ्गधन्वा" इति। अनङि कृते यणादेशः, "सर्वनामस्थाने च" ६।४।८ इति दीर्घः॥

बाल-मनोरमा

धनुषश्च ८६१, ५।४।१३२

धनुषश्च। "ऊधसोऽनङि"ति पूर्वसूत्रं स्त्रीप्रत्ययादिकारे व्याख्यातं, तस्मादनङित्यनुवर्तते। तदाह--अनङादेश इति। ङित्त्वादन्तादेश इति भावः। द्विधन्वेति। द्वे धनुषी यस्येति विग्रहः। समासे द्विधनुशब्दे सकारस्य अनङादेशः। ङकार इत्। अकार उच्चारणार्थः। उकारस्य यणिति भावः। शाङ्र्गधन्वेति। श्रृङ्गस्येदं शाङ्र्गं। "तस्येद"मित्यण्, तत् धनुर्यस्येति विग्रहः। समासे शाङ्र्गधनुःशब्दे सकारस्यानङ्, ङकार इत्, अकार उच्चारणार्थः। उकारस्य यणिति भावः। महिम्नःस्तवे "स्वलावण्याशंसाधृतधनुषमि"ति प्रयोगस्त्वार्षः।

---

सूत्रम्

काशिका-वृत्तिः

वा संज्ञायाम् ५।४।१३३

धनुःशब्दान्ताद् बहुव्रीहेरन्डादेशो वा भवति संज्ञायां विषये। पूर्वेण नित्यः प्रप्तः विकल्प्यते। शतधनुः, शतधन्वा। दृढधनुः, दृढधन्वा।

न्यासः

वा संज्ञायाम्?। , ५।४।१३३

बाल-मनोरमा

वा संज्ञायाम् ८६२, ५।४।१३३

वा शंज्ञायां। "धनुषश्च" इत्युक्तोऽनङ् संज्ञायां वा स्यादित्यर्थः। शतधन्वेति। शतधन्वा नाम राजविशेषः स्यमन्तकोपाक्याने प्रसिद्ध। जायाया निङ्। आदेश इति। "प्रत्ययः, परश्चे"त्यधिकारस्थत्वेऽपि ङित्त्वादन्तादेशोऽयमिति भावः।

तत्त्व-बोधिनी

वा संज्ञायाम् ७५१, ५।४।१३३

शार्ङ्गधन्वेति। कथं तर्हि "स्वलालण्याशंसाधृतधनुषमह्नाय तृणव"दिति पुष्पदन्तप्रयोग इति चेदत्राहुः---समासान्तविधेरनित्यत्वान्नत्रानुपपत्तिः। अनीयत्वे प्रमाणं त्वं()आआदिगणे राजन्()शब्दपाठः। स हि "प्रतेरं()आदयस्तत्पुरुषे"इत्यन्तोदात्तार्थः। "राजाहःसखी"ति टचो नित्यत्वे तु किं तेनेति।

---

सूत्रम्

काशिका-वृत्तिः

जायाया निङ् ५।४।१३४

जायाशब्दान्तस्य बहुव्रीहेर् निङादेशः भवति। युवतिः जाया यस्य युवजानिः। वृद्धजानिः।

न्यासः

जायाया निङ्। , ५।४।१३४

"निङादेशो भवति" इति। आदेशत्वमस्य पूर्ववद्? ङित्त्वादेव विज्ञायते। "युवजानिः" इति। लोपो व्योर्वलि" ६।१।६४ इति यलोपः। "स्त्रियाः पुंवत्()" ६।३।३३ इति पुंवद्भावः॥

---

सूत्रम्

काशिका-वृत्तिः

गन्धस्य इदुत्पूतिसुसुरभिभ्यः ५।४।१३५

उत् पूति सु सुरभि इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे। तकार उच्चारणार्थः। उद्गतो गन्धो ऽस्य उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। एतेभ्यः इति किम्? तीव्रगन्धो वातः। गन्धस्येत्वे तदेकान्तग्रहणम्। तेन शोभनः गन्धः अस्य सुगन्धः आपणिकः।

न्यासः

गन्धस्येदुत्पूतिसुसुरभिभ्यः। , ५।४।१३५

"इका आदेशो भवति" इति। कथं पुनर्ज्ञायते--आदेशोऽयं न प्रत्यय इति? "गन्धस्य" इति षष्ठ()आ निर्देशात्()। यदि हि प्रत्ययः स्यात्? असन्दिग्धार्थं "गन्धात्()" इति पञ्चम्या निर्देशं कुर्यात्(), षष्ठ()आ तु निर्देशः। तस्मादादेशोऽयमिति विज्ञायते। "गन्धस्येत्त्वे" इत्यादि। गन्धो द्विविधः। गुणो गन्धः, सोऽन्यपदार्थस्यैकान्तो न भवति। यस्तु शोभनो

गन्दोऽस्येति सुगन्ध आपणिक इति तत्र द्रव्यगन्धो गन्धशब्देनोच्यते, तच्चापणिकस्यैकदेशो भवति। तत्र गुणगन्धे यथा स्यात्(), द्रव्यगन्धे मा भूदित्येवमर्थं गन्धस्येत्त्वे विधेये तदेकान्तग्रहणं कत्र्तव्यम्()। तदित्यनेन बहुव्रीह्यर्थः सामथ्र्यान्निर्दिश्यते। तस्यैकान्त एकदेशो वा धर्मोऽवयवस्तदेकान्तः संगृह्रते। येन तदेकान्तग्रहणं कत्र्तव्यम्()। एतदुक्तं भवति--तादृशं व्याख्यानं कत्र्तव्यं येनेत्त्वविधाविह गन्धोऽन्यपदार्थस्यैकदेशात्? तत आश्रयितव्य इति। तत्रेदं व्याख्यानम्()--"वा संज्ञायाम्()" ५।४।१३३ इत्यतो वाग्रहममनुवत्र्तते, सा च व्यवस्थितविभाषा। तेन यत्र गन्धोऽन्यपदार्थस्यैकदेशभूतस्तत्रैवेत्त्वं भवति, नान्यत्रेति। अथ वा--अस्त्ययं गन्धशब्दो द्रव्यवचनः---गन्धान्? विक्रीणीत इति। अस्ति गुणवचनो यथा--गन्धवती पृथिवी। तत्र गुणवचनस्येदं ग्रहणम्(), न द्रव्यवचनस्य। तस्माद्द्रव्यवचनो बहवचनान्त एव द्रव्ये वत्र्तते--गन्धान विक्रीणीते, गन्धाः पण्यमस्येति। इह गन्धस्येत्यकवचनेनैव निर्देशः। तस्मादवसीयते--गुणवचनस्येदं ग्रहणमिति। गुणवचनस्य तु ग्रहणे तत्र गुणो गन्धोऽन्यपदार्थस्यैकदेशो भवति, तेन तदेकान्तभूतस्यैव गन्धस्येत्त्वं भवति॥

बाल-मनोरमा

गन्धस्येदुत्पूतिसुसुरभिभ्यः ८६४, ५।४।१३५

गन्धस्येदुत्। "गन्धस्य-इत्" इति च्छेदः। एभ्य इति। उत्-पूति-सु-सुरभि-एतेभ्यः इत्यर्थः। इकारोऽन्तादेश इति। पूर्वोत्तरसाहचर्यादिकार आदेश एवेति भावः। समासान्ताधिकारात् "आदेः परस्ये"ति न भवति। उद्गन्धिरिति। उद्गतो गन्धो यस्येति विग्रहः। पूतिगन्धिरिति। पूतिशब्दोऽसुरबौ। पूर्तिर्गन्धो यस्येति विग्रहः। सुगन्धिरिति। शोभनो गन्धो यस्येति विग्रहः। पूतिगन्धिरिति। पूतिशब्दोऽसुरभौ। पूर्तिर्गन्धो यस्येति विग्रहः। सर्वत्र "वायु"रिति विशेष्यम्। तदेकान्तेति। तस्य =विशेष्यभूतद्रव्यस्य, एकान्तः=एकदेश इव प्रतीयमान इत्यर्थः। अत्र गन्धस्य गुणस्य द्रव्यैकदेशत्वं न युज्यत इत्याशङ्क्य एकान्तशब्द एकदेशवदविभक्ते लाक्षणिक इत्याह--एकान्त एकदेश इवेति। सुगन्धि पुष्पं सलिलं चेति। अत्र गन्धस्य पुष्पात्सलिलाच्च द्रव्यात्पृथगलक्ष्यमाणत्वादिति भावः। सु शोभना इति। "सु" इत्यस्य व्याख्यानं-शोभना इति। गन्धा इति। गन्धवन्त इत्यर्थः। "गुणवचनेभ्यो मतुपो लुगिष्टः" इति लुक्। द्रव्याणीति। चन्दनादीनीत्यर्थः। "गन्धा" इत्यस्य विशेष्यमेतत्। गन्धशब्दस्य नपुंसकद्रव्यविशेषणत्वेऽपि नियतलिङ्गत्वात्पुंस्त्व#ं युज्यते। "गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः" इति कोशात्। गन्ध आपण इति। अत्र गन्धशब्दवाच्यानां चन्दनादिद्रव्याणां विशेष्यभूतापणापेक्षया पृथग् लक्ष्यमाणत्वादित्त्वं नेति भावः।

तत्त्व-बोधिनी

गन्धस्येदुत्पूतिसुसुरभिभ्यः ७५३, ५।४।१३५

गन्धस्येत्। तकार उच्चारणार्थ इत्याशयेनाह---इकारोऽन्तादेश इति। "आदेः परस्ये"तीह न भवति, "समासान्ताः"इत्यधिकारात्। अत्र केचिदाहुः--इकारस्य प्रत्ययत्वेऽपि न क्षतिः, "यस्येति[चे"ति] लोपेनोद्गन्धिरित्यादिरूपसिद्धेः। न च "तित्स्वरित"मित्यन्तस्वरितत्वापत्तिर्न शङ्क्या, तकारस्योच्चारणार्थत्वाभ्युपगमात्। नापि षष्ठीनिर्देशादादेशत्वमेव न प्रत्ययत्वमिति वाच्यं, "गापोष्ट"गित्यादिप्रत्ययविधिष्वपि षष्ठीदर्शनादीति।

गन्धस्येत्वे तदेकान्तग्रहणम्। अविभागेनेति। एवं च गुणवाचिन एव ग्रहणं, न तु द्रव्यवाचिन इति फलितोऽर्थः। द्रव्याणीति। अस्ति च गन्धशब्दो द्रव्यवचनः, "वहति जलमियं पिनष्टि गन्धा"निति प्रयोगात्, "गन्धस्तु सौरबे नृत्ये गन्धके गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः" इति कोशाच्च। केचित्तु---"गन्धस्येत्वे"इति वार्तिके

तदेकान्तशब्देन स्वाभाविकत्वं विवक्षितं, तेनागन्तुकस्य नेत्याहुः। तथा च भट्टिः---"आघ्रायिवान् गन्धवहः सुगन्धः"इति। व्याख्यातं च जयमङ्गलायां--"गन्धस्ये"त्यादिनेकारः समासान्तो न, "गन्धस्येत्वे तदेकान्तग्रहण"मिति वचनात्। सुगन्ध आपणिक इति यथेति। अतएव "भग्नबालसहकारसुगन्धौ"इत्यादीनां प्रमादिकत्वं दुर्घटवृत्तिकृतोक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

अल्पाऽख्यायाम् ५।४।१३६

अल्पाख्यायां योगन्धशब्दः तस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे। सूपो ऽल्पो ऽस्मिन् सूपगन्धि भोजनम्। अल्पम् अस्मिन् भोजने घृतम् घृतगन्धि। क्षीरगन्धि। अल्पपर्यायो गन्धशब्दः।

न्यासः

अल्पाख्यायाम्?। , ५।४।१३६

बाल-मनोरमा

अल्पाख्यायाम् ८६५, ५।४।१३६

अल्पाख्यायाम्। अल्पवचने सति गन्धशब्दस्य इकारोऽन्तादेशः स्याद्बहुव्रीहावित्यर्थः। "लेशः" इति गन्धशब्दस्य विवरणम्। सूपस्य गन्धो यस्मिन्नित्येव विग्रहः। सूपगन्धि भोजनमिति। उत्पूतिसुसुरभिपूर्वकत्वाऽभावादेकान्तत्वाऽभावाच्चाऽप्राप्ते वचनमिदम्। व्यधिकरणपदानामपि क्वचिदस्ति बहुव्रीहिरिति मूल एवानुपदं वक्ष्यते। घृतगन्धीति। घृतस्य गन्धो लेशो यस्मिन्निति विग्रहः। गन्धशब्दस्याऽल्पवाचित्वे प्रमाणमाह--गन्धो गन्धक इति।

तत्त्व-बोधिनी

अल्पाख्ययाम् ७५४, ५।४।१३६

अल्पाख्यायाम्। अल्पवाचिनो गन्धस्येकारान्तादेशः स्याद्बहुव्रीहौ। सूपस्य गन्ध इति। अतएव ज्ञापकाव्द्यधिकरणपदो बहुव्रीहिः। यद्वा फलितार्थकनमेतत्। सूपो गन्धो यस्मिन्नित्येव विग्रहः। गन्धशब्दस्य विसेषणत्वेऽप्यस्मादेव ज्ञापकात्परनिपातः।

---

सूत्रम्

काशिका-वृत्तिः

उपमानाच् च ५।४।१३७

उपमानात् परो यो गन्धशब्दः तस्य इकारादेशो भवति समासान्तो बहुव्रीहौ समासे। पद्मस्य इव गन्धो ऽस्य पद्मगन्धिः। उत्पलगन्धिः। करीषगन्धिः।

न्यासः

उपमानाच्च। , ५।४।१३७

बाल-मनोरमा

उपमानाच्च ८६६, ५।४।१३७

उपमानाच्च। उपमानवाचिपूर्वपदात्परस्यापि गन्धशब्दस्य इकारोऽन्तादेशः स्याद्बहुव्रीहावित्यर्थः। पद्मस्येवेति। फलितार्थकथनमिदम्। पद्मगन्ध इव गन्धो यस्येति विग्रहः। पद्मपदं पद्मसंबन्धिगन्धसदृशो लाक्षणिकम्। "सप्तम्युपमानपूर्वपदस्ये"ति समासः।

---

सूत्रम्

काशिका-वृत्तिः

पादस्य लोपो ऽहस्त्यादिभ्यः ५।४।१३८

उपमानातित्येव। उपमानातिहस्त्यादिवर्जितात् परस्य पादशब्दस्य लोपो भवति समासान्तो बहुव्रीहौ समासे। स्थानिद्वारेण लोपस्य समासान्तता विज्ञायते। व्याघ्रस्य इव पादौ अस्य व्यघ्रपात्। संहपात्। अहस्त्यादिभ्यः इति किम्? हस्तिपादः। कटोलपादः। हस्तिन्। कटोल। गण्डोल। गण्डोलक। महिला। दासी। गणिका। कुसूल।

लघु-सिद्धान्त-कौमुदी

पादस्य लोपोऽहस्त्यादिभ्यः ९७७, ५।४।१३८

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्यः किम्? हस्तिपादः। कुसूलपादः॥

न्यासः

पादस्य लोपोऽहस्त्यादिभ्यः। , ५।४।१३८

"लोपो भवति समासान्तः" इति। किं पुनः स्यात्? समासान्तो न स्यात्()? "आदेः परस्य" १।१।५३ इत्यादेरेव स्यात्()। समासान्तत्वे सत्यन्तशब्दोऽयं नियतदेशमेवावयवमाचष्ट इत्यन्तस्यैव भवति। एवञ्च समासान्तो भवति यद्यन्तस्य भवति, नान्यथा। ननु च लोपस्याभावरूपबत्वात्? समन्सान्तो नोपपद्यते? इत्याह--"स्थानिद्वारेण" इत्यादि। स्थानिनोऽकारस्य समासान्तत्वादुपचारेण लोपोऽपि समासान्त उच्यत इति दर्शयति॥

बाल-मनोरमा

पादस्य लोपोऽहस्त्यादिभ्यः ८६७, ५।४।१३८

पादस्य लोपः। "अहस्त्यादिभ्य" इति च्छेदः। उपमानादित्यनुवर्तते। तदाह--हस्त्यादिवर्जितादिति। "आदेः परस्ये"त्यप्रवृत्तये आह--समासान्तो बहुव्रीहाविति। शैषिकस्य कपो निवृत्त्यर्थमपि लोपस्य समासान्तत्वम्। अन्यताऽनुक्तसमासान्तत्वात्कप्प्रसज्येत। नन्वभावात्मकस्य लोपस्य कथं समासान्तावयवत्वमित्यत आह--स्थानीति। व्याघ्रस्येवेति। फलितार्थकथनमिदम्। व्याघ्रपादाविव पादावस्येति विग्रहः। "सप्तम्युपमानपूर्वपदस्ये"ति समासः।

तत्त्व-बोधिनी

पादस्य लोपोऽहस्त्यादिभ्यः ७५५, ५।४।१३८

पादस्य। यद्ययं लोपः समासान्तो न स्यात् "आदेः परस्ये"त्यादेः स्यात्। शैषैकः कप्()च प्रसज्येत, "शेषद्विभाषा"इत्यत्र समासान्तापेक्षस्य शेषस्याश्रयणात्। अत आह--समासान्त इति। कथं पुनरभावो भावस्यावयवः स्यात्तत्राह--

स्थानिद्वरेणेति। वचनबलादौपचारिकमवयवत्वं गृह्णत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कुम्भपदीषु च ५।४।१३९

कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्ते। तत्र एवं सूत्रम् ज्ञेयम्। पादस्य लोपो भवति कुम्भपद्यादिविषये यथा कुम्भपद्यादयः। सिध्यन्ति। समुदायपाठस्य च प्रयोजनं विषयनियमः स्त्रियाम् एव, तत्र ङीप्प्रत्यये एव, न अन्यदा। कुम्भपदी। शतपदी। यच् च इह उपमानपूर्वं सङ्ख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे नित्यङीबर्थं वचनम्। पादो ऽन्यतरस्याम् ४।१।८ इति विकओपो न भवति। कुम्भपदी। शतपदी। अष्टापदी। जालपदी। एकपदी। मालापदी। मुनिपदी। गोधापदी। गोपदी। कलशीपदी। घृतपदी। दासीपदी। निष्पदी। आर्द्रपदी। कुणपदी। कृष्णपदी। द्रोणपदी। द्रुपदी। शकृत्पदी। सूपपदी। पज्चपदी। अर्वपदी। स्तनपदी। कुम्भपद्यादिः।

न्यासः

कुम्भपदीषु च। , ५।४।१३९

"कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ()न्ते" इति। यद्येवम्(), कथमिदं नेतव्यम्()? इत्याह--"तत्रैवम्()" इत्यादि। तत्र तेषु कुम्भपदीप्रभृतिषु कृतपादलोपेषु पठितेष्वेवं व्याख्येयमित्यर्थः। कुम्भपद्यादिविषयेय यथा कुम्भपद्यादयः सम्भवन्तीति। किमर्थं पुनः समुदाया एव पठ()न्ते, न कुम्भपदादीन्? शब्दान्? प्रातिपदिकेषु पठित्वा तेभ्यः परस्य पादशब्दस्य लोपो विधीयेत? इत्याह--"समुदायपाठस्य च" इत्यादि। यदि कुम्भादिभ्यः परस्य पादस्य स लोप उच्येत, "कृतपादलोपाः समुदाया एव न पठ()एरन्()" इति नियमो न लभ्येत। ततस्त्रिष्वपि लिङ्गेषु स्युः, स्त्रियामेव चेष्यन्ते। समुदायपाठे सति स्त्रियां ङीप्प्रत्यय एव विषयभूते भवति। "नान्यदा" इति। "कुम्भपदी" इति। "पादोऽन्यतरस्याम्()" ४।१।८ इति ङीपि विषयभूते पादस्य लोपः ततो ङीप्(), तस्मिन्? "पादः पत्()" ६।४।१३० इति पद्भावः। "यच्चेहोपमानपूर्वम्()" इति--कुम्भपदी, जालपदीत्येवमादि। "संख्यापूर्वपदञ्च" इति--एकपदी शतपदीत्येवमादि। "तस्य सिद्धे" इति। उपमानपूर्वस्य पूर्वेणैव सिद्धे संख्यापूर्वस्य तूत्तरेण। "अष्टापदी" इत्यस्मिन्? पठ()ते। तत्र निपातनं दीर्घत्वार्थम्()। "अष्टनः संज्ञायाम्()" ६।३।१२४ इति वा॥

बाल-मनोरमा

कुम्भपदीषु च ८६८, ५।४।१३९

कुम्भपदीषु च। कुम्भपदीष्विति बहुवचननिर्देशाद्गणपाठाच्च कुम्भपद्यादिग्रहणमिति भावः। ङीप् चेति। "पादोऽन्यतरस्या"मिति विकल्पापवाद इति। भावः। स्त्रियामिति। कुम्भपद्यादीनां स्त्रीलिङ्गानामेव गणे पाठादिति भावः। कुम्भपदीति। कुम्भस्येव पादावस्येति विग्रहः। "पदास्य लोपोऽहस्त्यादिभ्यः" इति लोपे सिद्धे तदनुवादेन नित्यं ङीबर्थं वचनम्।

तत्त्व-बोधिनी

कुम्भपदीषु च ७५६, ५।४।१३९

कुम्भपदीषु च। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिरित्यभिप्रेत्याह--कुम्भपद्यादिष्विति। इह गणे--कुम्भपदी एकपदी जानपदीत्येवं समुदाया एव पठ()न्ते, तस्य च प्रयोजनं विषयविशेषपरिग्रह इत्याशयेनाह---

स्त्रियामिति। यच्चेहोपमानपूर्वं संख्यापूर्वं च पठ()ते तस्य सिद्धे लोपे नित्यङीबर्थं वचनं तेन "पादोऽन्यतरस्या"मिति विकल्पा न भवति।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्यासुपूर्वस्य ५।४।१४०

सङ्ख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेः पादशब्दान्तस्य लोपो भवति समासान्तः। द्वौ पादौ अस्य द्विपात्। त्रिपात्। शोभनौ पादौ अस्य सुपात्।

लघु-सिद्धान्त-कौमुदी

संख्यासुपूर्वस्य ९७८, ५।४।१४०

पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ। द्विपात्। सुपात्॥

न्यासः

संख्यासुपूर्वस्य। , ५।४।१४०

अनुपमानार्थमिदम्()॥

बाल-मनोरमा

सङ्ख्यासुपूर्वस्य ८६९, ५।४।१४०

सङ्ख्यासुपूर्वस्य। शेषपूरणेन सूत्रं व्याचष्टे--पादस्येति। उपमानात्परत्वाऽभावादप्राप्तौ वचनम्। द्विपादिति। द्वौ पादावस्येति विग्रहः। सुपादिति। शोभनौ पादावस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

वयसि दन्तस्य दतृ ५।४।१४१

सङ्ख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेर्यो दन्तशब्दः, तस्य दतृ इत्ययम् आदेशो भवति समासान्तः वयसि गम्यमाने। ऋकार उगित्कार्यार्थः। द्वौ दन्तौ अस्य द्विदन्। त्रिदन्। चतुर्दन्। शोभना दन्ताः अस्य समस्ताः जाताः सुदन् कुमारः। वयसि इति किम्? द्वैदन्तः कुञ्जरः। सुदन्तो दाक्षिणात्यः।

न्यासः

वयसि दन्तस्य दतृ। , ५।४।१४१

"द्विदन्()" इति। ऋकारस्योगित्कार्यार्थत्वात्? "उगिदचाम्? ७।१।७० इति नुम्(); हल्ङ्यादिसंयोगान्तलोपौ (६।१।६८, ८।२।२३) "सुदन्तो दाक्षिणात्यः" ति। शोभनत्वमिह गम्यते, न वयः॥

बाल-मनोरमा

वयसि दन्तस्य दतृ ८७०, ५।४।१४१

वयसि दन्तस्य दतृ। द्विदन्निति। द्वौ दन्तौ यस्येति विग्रहः। शिशुत्वं गम्यते। दन्तस्य दत्रादेशः। ऋकार इत्।

उगित्त्वान्नुम्। सुलोपः। संयोगान्तलोपः। तस्याऽसिद्धत्वादुपधादीर्घो न। चतुर्दन्निति। चत्वारा दन्ता यस्येति विग्रहः। दत्रादि पूर्ववत्। षोडन्निति। षट् दन्ता यस्येति विग्रहः। दत्रादि पूर्ववत्। "षष उत्त्व"मिति ष्टुत्वोत्त्वे। सुदन्निति। सु=शोभना दन्ताः समस्ता जाता यस्येति विग्रहः। वयाविशेषावगतये समस्तस्य निवेशः। सुदतीति। शोभना दन्ताः समस्ता यस्या इति विग्रहः। दत्रादेशः। "उगितश्चे"ति ङीप्। द्विदन्तः करीति। हस्तिनः सर्वदा द्विदन्तत्वेन वयोविशेषानवगतिरिति भावः।

तत्त्व-बोधिनी

वयसि दन्तस्य दतृ ७५७, ५।४।१४१

द्विदन्निति। द्वौ दन्तावस्य जातौ। शिशुत्वावस्था त्विह गम्यते। "उगिदचा"मिति नुम्। संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न। षोडन्निति। "षष उत्वं दतृदशधे"त्यने नोत्वष्टुत्वे। सुदतीति। "उगितश्चे"ति ङीप्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि च ५।४।१४२

छन्दसि च दन्तशदस्य दतृ इत्ययम् आदेशो भवति समासान्तः बहुव्रीहौ समासे। पत्रदतमालभेत। उभयादतः आलभते।

न्यासः

छन्दसि च। , ५।४।१४२

अवयोऽर्थम्(), असंख्यापूर्वपदार्थञ्च वचनम्()। "उभयतोदतः" इति। शासन्तमेतत्()॥

---

सूत्रम्

काशिका-वृत्तिः

स्त्रियां संज्ञायाम् ५।४।१४३

स्त्रियाम् अन्यपदार्थे संज्ञायां विषये दन्तशब्दस्य दतृ इत्ययम् आदेशो भवति। अयोदती। फालदती। संज्ञायाम् इति किम्? समदन्ती। स्निग्धदन्ती।

न्यासः

स्त्रियां संज्ञायाम्?। , ५।४।१४३

अच्छन्दोऽपर्थमेतत्()। अय इव दन्ता अस्या "अयोदती" इति। शासन्तमेतत्()॥ "समदन्ती" इति। "नासिकोदर" ४।१।५५ इत्यादिना ङीष्()॥

बाल-मनोरमा

स्त्रियां संज्ञायाम् ८७१, ५।४।१४३

स्त्रियां संज्ञायाम्। शेषपूरणेन सूत्रं व्याचष्टे--दन्तस्येति। वयोविशेषानवगमेऽपि प्राप्त्यर्थमिदम्। अयोदतीति। फालदतीति। संज्ञाविशेषाविमो। समदन्तीति। समा दन्ता यस्या इति विग्रहः "नासिकोदरे"ति ङीष्।

तत्त्व-बोधिनी

स्त्रियां संज्ञायाम् ७५८, ५।४।१४३

समदन्तीति। "नासिकेदरे"त्यदिना ङीष्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा श्यावारोकाभ्याम् ५।४।१४४

श्याव अरोक इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्ययम् आदेशो भवति विभाषा समासान्तो बहुव्रीहौ। श्यावदन्, श्यावदन्तः। अरोकदन्, अरोकदन्तः। अरोको निर्दीप्तिः। संज्ञायाम् इत्येव, श्यवदन्तः। अरोकदन्तः।

न्यासः

विभाषा श्यावारोकाभ्याम्?। , ५।४।१४४

"स्त्रियाम्()" इति निवृत्तम्()। रोकः=रोचनम्(), दीप्तिः। "रुच दीप्तौ" (धा। पा।७४५), भावे घञ्(), "चजोः कुघिण्ण्यतोः" ७।३।५२ इति कुत्वम्()। अविद्यमानो रोकोऽस्येत्यरोकशब्दस्य व्युत्पतिं()त ह्यदि कृत्वा तस्यार्थं दर्शयितुमाह--"अरोको निर्दीप्तिः" इति॥

बाल-मनोरमा

विभाषा श्यावारोकाभ्याम् ८७२, ५।४।१४४

विभाषा श्यावारोकाभ्यां। शेषपूरणेन सूत्रं व्याचष्टे--दन्तस्येति। श्यावदन्निति। श्यावा धूम्रा दन्ताः यस्येति विग्रहः। "श्यावः स्यात्कपिशो धूम्रः" इत्यमरः। अरोकदन्निति। अरोकाः=अदीप्ताः अच्छिद्रा वा दन्ता यस्येति विग्रहः।

तत्त्व-बोधिनी

बिभाषा श्यावारोकाभ्याम् ७५९, ५।४।१४४

श्यावदन्निति। "श्यावः स्यात्कपिशः"इत्यमरः। अरोकदन्निति। अरोकाः=अच्छिद्रा दन्ता यस्य सः।

---

सूत्रम्

काशिका-वृत्तिः

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश् च ५।४।१४५

विभाषा इत्येव। अग्रान्तात् शब्दात् शुद्ध शुभ्र वृष वराह इत्येतेभ्यश्च परस्य दन्तशब्दस्य विभाषा दतृ इत्ययम् आदेशो भवति समासान्तो बहुव्रीहौ समासे। कुड्मलाग्रदन्,कुड्मलाग्रदन्तः। शुद्धदन्, शुद्धदन्तः। शुभ्रदन्, शुभ्रदन्तः। वृषदन्, वृषदन्तः। वराहदन्, वराहदन्तः। अनुक्तसमुच्चयार्थः चकारः। अहिदन्, अहिदन्तः। मूषिकदन्, मूषिकदन्तः। गर्दभदन्, गर्दभदन्तः। शिखरदन्, शिखरदन्तः।

न्यासः

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च। , ५।४।१४५

बाल-मनोरमा

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ८७३, ५।४।१४५

अग्रान्त। अग्रः=अग्रशब्दोऽन्तेऽवसाने यस्य स अग्रान्त इत्यभिप्रेत्योदाहरति--कुड्मलाग्रदन्निति। कुड्मलानां-मुकुलानाम्--अग्राणि, तानीव दन्ता यस्येति विग्रहः। शुद्धदन्। शुद्धदन्तः। शुभ्रदन्-शुभ्रदन्तः। वृषदन्-वृषदन्तः। वराहदन्-वराहदन्तः।

तत्त्व-बोधिनी

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ७६०, ५।४।१४५

अग्रान्त। इहाऽनुक्तसमुच्चयार्थश्चकारः, तेन मूषिकदन्निति सि व्यतीत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

ककुदस्य अवस्थायां लोपः ५।४।१४६

ककुदशब्दान्तस्य बहुव्रीहेर् लोपो भवति समासान्तः अवस्थायां गम्यमानायाम्। कालादिकृता वस्तुधर्मा वयःप्रभृतयः अवस्था इत्युच्यते। असञ्जातं ककुदम् अस्य असञ्जातककुत्। बालः इत्यर्थः। पूर्णककुत्। मध्यमवयाः इत्यर्थः। उन्नतककुत्। वृद्धवयाः इत्यर्थः। स्थूलककुत्। वलवानित्यर्थः। यष्टिककुत्। नातिस्थूलो नातिकृशः इत्यर्थः। अवस्थायाम् इति किम्? श्वेतककुदः।

न्यासः

ककुदस्यावस्थायां लोपः। , ५।४।१४६

"कालादिकृता" इति। आदिशब्देनाहारादयो गृह्यन्ते॥

बाल-मनोरमा

ककुदस्यावस्थायां लोपः ८७४, ५।४।१४६

ककुदस्य। अवस्थायां गम्यमानायां ककुदस्य लोपः स्याद्बहुव्रीहावित्यर्थः। आहारकालादिकृतोऽवयवनामुपचयोऽपचयश्चावस्थेत्युच्यते। बलीवर्ददोर्मूलगतो बाल्ये उद्भूतोऽवयवः ककुदम्। अजातककुदिति। अजातं ककुदमस्येति विग्रहः। बाल इत्यर्थः। पूर्णककुदिति। पूर्णं ककुदमस्येति विग्रहः। युवेत्यर्थः।

तत्त्व-बोधिनी

ककुदस्यावस्थायां लोपः ७६१, ५।४।१४६

अजातेति। अजातं ककुदमस्येति विग्रहः। इह हि बाल्यावस्था गम्यते।

---

सूत्रम्

काशिका-वृत्तिः

त्रिककुत् पर्वते ५।४।१४७

त्रिककुदि बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वते ऽभिधेये। त्रीणि ककुदान्यस्य त्रिककुत् पर्वतः।

ककुदाकारं पर्वतस्य शृङ्गं ककुदम् इत्युच्यते। न च सर्वस्त्रिशिखरः पर्वतः त्रिककुत्। किं तर्हि? संज्ञैषा पर्वतविशेषस्य। पर्वते इति किम्? त्रिककुदो ऽन्यः।

न्यासः

त्रिककुत्पर्वते। , ५।४।१४७

अनवस्थार्थमिदम्()। पर्वतेऽन्यपदार्ते मुख्यं ककुटं न सम्भवति; उच्यते चेदम्()--त्रिककुत्? पर्वत इति। तत्र सामथ्र्यात्ककुदाकारे पर्वतशिखरे सादृश्यात्? ककुदशब्दो वत्र्तते, तस्येदं ग्रहणं ककुदाकाराणि श्रृङ्गाणि तस्य सर्वस्य त्रिककुदभिधानं प्राप्नोति? अत--"न च" इत्यादि। "उच्यते" इति प्रकृतेन सम्बन्धः। "संज्ञैषा" इत्यादि। एतेन यस्यैषा संज्ञा त्रिककुच्छब्देनोच्यत इति तद्दर्शयति। एतच्च निपातनात्? "स्त्रियां संज्ञायाम्()" ५।४।१४३ इत्यतः संज्ञाग्रहणानुवृत्तेर्लभ्यते। ननु चाभिधेयनियमोऽपि तत एव लभ्यत इति पर्वतग्रहणं न कत्र्तव्यम्()? नैतदस्ति; शैलीयमाचार्यस्य यत्? प्रसद्धेष्वपि नित्यरेष्वभिधेयनिमित्तमाचष्टे, यथा--"पुष्यसिद्ध्यौ नक्षत्रे" ३।१।११६ इति,किं पुनर्यत्र प्रसिद्धिर्नास्ति! सा तु लौकिकी॥

बाल-मनोरमा

त्रिककुत्पर्वते ८७५, ५।४।१४७

त्रिककुत्पर्वते। पर्वतविशेषे गम्ये इत्यर्थः। त्रिककुदिति कृताऽकारलोपो निपात्यते। त्रीणि ककुदानि श्रृङ्गाणि यस्येत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

उद्विभ्यां काकुदस्य ५।४।१४८

उत् वि इत्येताभ्यां परस्य काकुदशब्दस्य लोपो भवति बहुव्रीहौ समासे। उद्गतं काकुदम् अस्य उत्का कुत्। विकाकुत्। तालु काकुदम् उच्यते।

लघु-सिद्धान्त-कौमुदी

उद्विभ्यां काकुदस्य ९७९, ५।४।१४८

लोपः स्यात्। उत्काकुत्। विकाकुत्॥

न्यासः

उद्विभ्यां काकुदस्य। , ५।४।१४८

"उत्काकुत्(), विकाकुत्()" इति। अन्त्यस्य लोपे कृते "वाऽवसाने" ८।४।५५ इति चत्र्वम्()। ननु च "आदेः परस्य" १।१।५३ इत्यादिलोपेन भवितव्यम्(), तत्कथमन्त्यस्य भवति? अन्त्यवचनो ह्रवयववचनोऽपि, स नियतदेशावयवमाचष्ट इत्युक्तम्()। तत्र यद्यादेः स्यात्(), समासान्तता नोपपद्यते॥

बाल-मनोरमा

उद्विभ्यां काकुदस्य ८७६, ५।४।१४८

उद्विभ्यां काकुदस्य। लोप इति। उद्विभ्यां परस्य काकुदस्य लोपः स्याद्बहुव्रीहावित्यर्थः। उत्काकुदिति। उन्नतं काकुदं यस्येति विग्रहः। काकुदशब्दं व्याचष्टे-काकुदं ताल्विति।

---

सूत्रम्

काशिका-वृत्तिः

पूर्णाद् विभाषा ५।४।१४९

पूर्णात् परस्य काकुदशब्दस्य विभाषा लोपो भवति बहुव्रीहौ समासे। पूर्णं काकुदम् अस्य पूर्णकाकुत् पूर्णकाकुदः।

लघु-सिद्धान्त-कौमुदी

पूर्णाद्विभाषा ९८०, ५।४।१४९

पूर्णकाकुत्। पूर्णकाकुदः॥

न्यासः

पूर्णाद्विभाषा। , ५।४।१४९

बाल-मनोरमा

पूर्णाद्विभाषा। ८७८, ५।४।१४९

पूर्णाद्विभाषा। पूर्णात्परस्य काकुदस्य लोपा वा स्यादित्यर्थः। पूर्णं काकुदं यस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

सुहृद्दुर्हृदौ मित्रामित्रयोः ५।४।१५०

सुहृत् दुर्हृतिति निपात्यते यथासङ्ख्यं मित्रामित्रयोरभिधेययोः। सुशब्दात् परस्य हृदयशब्दस्य हृद्भावो निपात्यते बहुव्रीहौ, तथा दुःशब्दात् परस्य। शोभनं हृदयम् अस्य सुहृत् मित्रम्। दुष्टं हृदयम् अस्य दुर्हृतमित्रम्। मित्रामित्रयोः इति किम्? सुहृदयः कारुणिकः। दुर्हृदयः चोरः।

लघु-सिद्धान्त-कौमुदी

सुहृद्दुर्हृदौ मित्रामित्रयोः ९८१, ५।४।१५०

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रः॥

न्यासः

सुह्मद्रदुह्र्मदौ मित्त्रामित्रयोः। , ५।४।१५०

बाल-मनोरमा

सुह्मद्दुह्र्मदौमित्राऽमित्रयोः ८७९, ५।४।१५०

सुह्मद्दुह्र्मदौ। यथासङ्ख्यमभिप्रेत्योदाहरति--सुह्मन्मित्रमिति। सु शोभनं ह्मदयं यस्येति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

उरःप्रभृतिभ्यः कप् ५।४।१५१

उरःप्रभृत्यन्तात् बहुव्रीहेः कप्प्रत्ययो भवति। व्यूढम् उरः अस्य व्यूढोरस्कः। प्रियसर्पिष्कः। अवमुक्तोपानत्कः। पुमाननड्वान् पयः नौः लक्ष्मीः इति विभक्त्यन्ताः पठ्यन्ते, न प्रातिपदिकानि। तत्र इदं प्रयोजनम् एकवचनान्तानाम् एव ग्रहणम् इह विज्ञायेत, द्विवचनबहुवचनान्तानां मा भूतिति। तत्र शेषद् विभाषा [५।४।१५४] इति विकल्प एव भवति इति। द्विपुमान्, द्विपुंस्कः। बहुपुमान्, बहुपुंस्कः। उरस्। सर्पिस्। उपानः। पुमान्। अनड्वान्। नौः। पयः। लक्ष्मीः। दधि। मधु। शालि। अर्थान् नञः अनर्थकः।

लघु-सिद्धान्त-कौमुदी

उरः प्रभृतिभ्यः कप् ९८२, ५।४।१५१

न्यासः

उरःप्रभृतिभ्यः कप्?। , ५।४।१५१

"शेषाद्विभाषा" [५।४।१५४] इति कपि सिद्धे नित्यार्थं वचनम्()। "प्रियसपिष्कः" इति। "इणः षः" [८।३।३९] इति विषर्सनीयस्य षकारः। अवमुक्ते उपानहौ येन स "अवमुक्तोपानत्कः" इति। "नहो धः" [८।२।३४] इति विहितस्य धकारस्य "झलां जशोऽन्ते" [८।२।३९] इति जश्त्वम्()--दकारः, तस्य "खरि च" [८।४।५४] इति चत्र्वम्()--तकारः। किं पुनरेतद्विभक्त्यन्तानां पाठे प्रयोजनम्()? इत्याह--"तत्र" इत्यादि। तत्त्रेत्यनेन विभक्त्यन्तानां पाठः प्रत्यवमृश्यते। "अर्थान्नञः" इति। नञ्परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कब्भवति। नास्त्यर्थोऽस्येति अनर्थकः॥

न्यासः

नाडतन्त्र्योः स्वाङ्गे। , ५।४।१५१

अयपपि "नद्यृतश्च" [५।४।१५३] इति प्राप्तस्य कपः प्रतिषेधः। स्वाङ्गमिह पारिभाषिकं गृह्यते। "बहुनाडिः" इति। पूर्ववदुपसर्जनह्रस्वत्वम्()। "बहुतन्त्रीः" इति। अत्र ह्रस्वत्वं न भवति; "कृतः स्त्रियाः प्रतिषेधो वक्तव्यः" इति चचनात्()। तथा चोक्तम्? "स्त्रीग्रहणं स्वरयिष्यति" (म।भा।१।२।४८) इति॥

बाल-मनोरमा

उरःप्रभृतिभ्यः कप् ८८०, ५।४।१५१

उरःप्रभृतिभ्यः कप्। बहुव्रीहौ समासान्तस्तद्धित इति विशेषः। तद्धितत्वात् ककारस्य नेत्संज्ञा। व्यूढोरस्क इति। व्यूढं=विशालम् उर=वक्षो यस्येति विग्रहः। कप्। "सोऽपदादौ" इति सत्वम्। प्रियसर्पिष्क इति। प्रियं सर्पिर्यस्येति विग्रहः। कप्। "इणः ष" इति षत्वम्। ननु द्वौ पुमांसौ यस्य स द्विपुमानित्यनुपपन्नम्, उरः प्रभृतिषु पुमानिति पुंस्शब्दस्य पाठादित्यत आह--इहेति। गणेऽविभक्तिकानामेव पाठः। इह तु केषांचिदेकवचनान्तानामेव पाठस्तद्विवक्षार्थ इति भावः। द्विपुंस्क इति। "संपुंकाना"मिति सः। अर्थान्नञ इति। गणसूत्रम्। नञ परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कप् स्यादिति तदर्थः। अनर्थकमिति। अविद्यमानोऽर्थो यस्येति विग्रहः। अपार्थम्-अपार्थकमिति। अपगतोऽर्थो यस्मादिति विग्रहः। अत्र नञ्()पूर्वकत्वान्न नित्यः कविति भावः।

तत्त्व-बोधिनी

उरःप्रभृतिभ्यः कप् ७६२, ५।४।१५१

उरः प्रभृतिभ्यः कप्। उरः प्रभृत्यन्ताद्बहुब्राईहेः कप्स्याते। "समासार्थोत्तरपदान्ताः समासान्ताः"इति पक्षे तु बहुव्रीहेश्चरमावयवेभ्य उरःप्रभृतिभ्यः कबिति ब्याख्येयम्। तद्धितत्वात्कस्य नेत्वम्। व्यूढोरस्क इति। व्यूढं विशालमुरो

यस्य सः। "सोऽपदादौ"इति विसर्जनीयस्य सः। प्रियसर्पिष्क इति। "इणः षः" इति विसर्गस्य षत्वम्। एकवचनान्तनीति। "नद्यृतश्चे"ति सिद्धे लक्षामीशब्दपाठस्त्विह एकवचनान्तलक्ष्मी शब्दावयवकबहुव्रीहेरेव नित्यं कप्, अन्यत्र "शेषा"दिति विकल्प एवेति नियमार्थः। तेन "अकृशमकृशलक्ष्मीश्चेतसा शंसितं सः"इति भारविप्रयोगः सिद्धः। अकृशा लक्ष्म्यो यस्येति विग्रहः। यत्तु प्राचोक्तं="नद्यृतश्चे"ति कप्, बहुलक्ष्मीक इति। तदयुक्तम्। सङ्ख्यावाचिबहुशब्दस्यैकवचनान्तत्वाऽभावात्प्रकृतनियमेन वारितत्वात्। बह्वी अधिका लक्ष्मीर्यस्येति विग्रहे वैपुल्यवाचिन एकवचनान्तत्वसंभवेऽपि विशेषनविधेर्बलीयस्त्वेन "उरःप्रभृतिभ्यः कप्" इत्येव वक्तुमुचितत्वात्। यदा तु "नियमशास्त्राणां निषेधमुखेन प्रवृत्ति" रित्याश्रीयते तदा प्राचोक्तमपि सम्यगेवेति ज्ञेयम्। अर्थान्नञ इति। गणसूत्रमिदम्। अनर्थकेनापीति। कथं तर्हि "सुपथ#ई नगरी"ति हलन्तेषूक्तं, कपोऽत्र दुर्वारत्वात्। न च "न पूजनात्ित्यनेन "ऋक्पूरब्धूः----"इत्यस्यैव कपोऽपि निषेधः शङ्क्यः। षचः प्राचीनानामेव स निषेध इति वक्ष्यमाणत्वात्। कप्प्रत्ययस्य षच उत्तरत्वात्। सत्यम्। समासान्तविधेरनित्यत्वात्साधुरिति समाधेयम्। "युवोरनाकौ"इति सूत्रे सुपथीति भाष्याच्चेत्युक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

इनः स्त्रियाम् ५।४।१५२

इन्नन्ताद् बहुव्रीहेः कप् प्रत्ययो भवति स्त्रियां विषये। बहवो दण्दिनः अस्यां शालायां बहुदण्दिका शाला। बहुच्छत्रिका। बहुस्वामिका नगरी। बहुवाग्मिका सभा। स्त्रियाम् इति किम्? बहुदण्डी राजा, बहुदण्डिकः। शेषद्विभाषा ५।४।१५४ इत्येतद् भवति।

न्यासः

इनः स्त्रियाम्?। , ५।४।१५२

"इदमपि पूर्ववत्? कपि सिद्धे नित्यार्थमेव। "बहुदण्डिकः" इति। "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नलोपः॥

बाल-मनोरमा

इनः स्त्रियाम् ८८१, ५।४।१५२

इनः स्त्रियाम्। इन्नन्तात् पर् स्याद्बहुव्रीहावित्यर्थः। बहुदण्डिका नगरीति। दण्डोऽस्या अस्तीति दण्डी। "अत इनिठनौ" इति इनिः। बहवो दण्डिनो यस्यामिति विग्रहः। बहुवाग्ग्मिकेति। वागस्यास्तीति वाग्ग्मी। वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः। नकारादिकार उच्चारणार्थः। तद्धितत्वाद्गकारस्य नेत्संज्ञा, चकारस्य कुत्वम्, जश्त्वम्, वाग्ग्मीति रूपम्। बहवो वाग्ग्मिनो यस्यामिति विग्रहः। अत्रेन अनर्थकत्वेऽपि "अनिनस्मन्नि"ति वचनात्तदन्तस्याप्यत्र ग्रहणमिति भावः। बहुदण्डी बहुदण्डिको ग्राम इति। बहवो दण्डिनो यस्मिन्निति विग्रहः। अत्र समासस्याऽस्तरीलिङ्गत्वान्न नित्यः कविति भावः।

तत्त्व-बोधिनी

इनः स्त्रियाम् ७६३, ५।४।१५२

बहुवाग्ग्मिकेति। "वाचो ग्मिनिः"।

---

सूत्रम्

काशिका-वृत्तिः

नद्यृतश् च ५।४।१५३

नद्यन्तात् बहुव्रीहेः ऋकारान्तात् च कप् प्रत्ययो भवति। बह्व्यः कुमार्य अस्मिन् देशे बहुकुमारीकः देशः। बहुब्रह्मबन्धूकः। ऋतः खल्वपि बहुकर्तृकः। तकारः मुखसुखार्थः।

न्यासः

नद्यृतश्च। , ५।४।१५३

बाल-मनोरमा

नद्यृतश्च ८२३, ५।४।१५३

नद्यृतश्च। नदी च ऋच्चेति समाहारद्वन्द्वात्पञ्चमी। "बहुव्रीहौ सक्थ्यक्ष्णो"रित्यतो बहुव्रीहावित्यनुवृत्तं पञ्चम्या विपरिणम्यते। तदाक्षिप्तमुत्तरपदं नद्यृद्भ्यां विशेष्यते। तदन्तविधिः। "उरः प्रभृतिभ्यः" इत्यतः कबित्यनुवर्तते। तदाह--नद्युत्तरपदादिति। नद्यन्तोत्तरपदादित्यर्थः। कप् स्यादिति। तद्धितः समासान्तश्चेत्यपि बोध्यम्। तथाच कल्याणी पञ्चमी यस्य पक्षस्येति विग्रहे बहुव्रीहौ सति व्यपदेशिवत्त्वेन पञ्चम्युत्तरपदस्य नद्यन्तत्वात्तदुत्तरपदकबहुव्रीहेः कविति भावः। "नद्यन्ताद्बहुव्रीहे"रिति न व्याख्यातं, बहुधीवरीति बहुव्रीहेर्नद्यन्तत्वात्कबापत्तेः। "नद्यन्तोत्तरपदा"दिति व्याख्याने तु न दोषः, धीवन्शब्दयोत्तरपदस्य नकारान्तत्वेन नदीत्वाऽभावादिति शब्देन्दुशेखरे विस्तरः। पुंवद्भाव इति। पूरण्या रात्रेः समासवाच्यत्वाऽभावेन निषेधाऽभावादिति भावः।

तत्त्व-बोधिनी

नद्यृतश्च ७२३, ५।४।१५३

नद्युत्तरपदादिति। "नद्यन्ता"दिति नोक्तं, कप्रत्ययेन सह समासे कृते बहुव्रीहेरनद्यन्तत्वात्। उत्तरपदं तु नद्यन्तं भवत्येव, "समासे अन्तः समासान्तः"इति पक्षाश्रयणादिति बोध्यम्। दृढमिति। अदाढर्()निवृत्तिमात्रपरत्वेनात्र दृढशब्दप्रयोगान्न लिङ्गविशेषविवक्षेति भावः। लिङ्गविशेषविवक्षायां तु दृढभक्तिरित्यादिसिद्धये प्रियादिषु भक्तिशब्दपाठः।

---

सूत्रम्

काशिका-वृत्तिः

शेषाद् विभाषा ५।४।१५४

यस्माद् बहुव्रीहेः समासान्तो न विहितः स शेषः तस्माद् विभाषा कप् प्रत्ययो भवति। बह्व्यः खट्वाः अस्मिन् बहुखट्वकः। बहुमालकः। बहुवीणकः। बहुखट्वाकः। बहुमालाकः। बहुवीणाकः। बहुखट्वः। बहुमालः। बहुवीणः। कथम् अनृक्कं साम, बह्वृक्कं सूक्तम् इति, यावता विहितो ऽत्र सामान्येन समासान्तः ऋष्पूः इति। न एतदस्ति। विशेषे स इष्यते, अनृचो माणदको ज्ञेयो बह्वृचश्चरणाख्यायाम् इति। शेषातिति किम्? प्रियपथः। प्रियधुरः।

लघु-सिद्धान्त-कौमुदी

शेषाद्विभाषा ९८७, ५।४।१५४

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा। महायशस्कः, महायशाः॥

लघु-सिद्धान्त-कौमुदी
इति बहुव्रीहिः ४ ९८७, ५।४।१५४

लघु-सिद्धान्त-कौमुदी
अथ द्वन्द्वः ९८७, ५।४।१५४

न्यासः
शेषाद्विभाषा। , ५।४।१५४

शेषः कबपेक्षो वा स्यात्()---यस्माद्बहुव्रीहेः कब्न विहितः स शेष इति? समासान्तापेक्षो वा--यस्माद्()बहुव्रीहेः समासान्तो न विहितः स शेष इति? तत्र यदि कबपेक्षः शेषः स्यात्()---अनृचः, व्याघ्रपात्(), सुगन्धिरित्यत्रापि स्यात्()। न ह्रतः केनचित्? कब्विहित इति कबपेक्षे शेषे दोषं दृष्ट्वा समासान्तापेक्षया शेष इति दर्शयन्नाह--"यस्माद्बहुव्रीहेः समासान्तो न भवति स शेषः" इति। कथं ज्ञायते--समासान्तापेक्षः शेष इति? शेषग्रहणात्()। तत्र यदि कबपेक्षः शेषः स्यात्(), शेषग्रहणनर्थकं स्यात्()। आरम्भसामथ्र्यादेव हि शेषविषय एव विकल्पो भविष्यति; अन्यथा यदि यतोऽपि पूर्वैविधिवाक्यैः कब्विहितस्ततोऽप्यनेन विभाषा विधीयते, विधिवाक्यानामानर्थक्यमापद्येत। तस्माच्छेषग्रहणात्? समासान्तापेक्षः शेषो विज्ञायते। "बहूखट्वकः" इति "आपोऽन्यतरस्याम्()" ७।४।१५ इति ह्रस्वः। "बहुखट्वः" इत्यत्रापि "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति। "कथम्()" इत्यादि। यदि समासान्तापेक्षः शेषः; अनृक्कं साम, बह्? वृक्कं सूक्तमित्यत्र कब्न सिध्यतीत्यभिप्रायः। "विशेषे स इष्यते" इति। स ह्रकारः समासान्तो विशेषे माणवे चरणाख्यायां चेष्यत इति तत्राकारो विहितः। न चापि तत्रैव विशेष कब्विहितः, किं तर्हि? विषयान्तरे--सामनि, सूक्ते च। तत्र बहुव्रीहेः समासान्तापेक्षः शेषः। तेन च प्रियपथः, प्रियमधुर इति "ऋक्पूरब्धूः" ५।४।७४ इत्यादिनाऽकारः समासान्तः। अथ किमर्थं शेषग्रहणम्(), यावता याभ्यः प्रकृतिभ्यः समासान्ता विहिताः, ताभ्यस्त एव बाधका भविष्यन्ति? नैतदस्ति; निरवकाशा हि विषयो बाधका भविष्यन्ति, सावकाशाश्च समासान्ताः। कोऽवकाशः? प्रतिपदोपात्तप्रकृतयः; याभ्यः समासान्ता अर्थविशेषे समासविशेषं प्रति प्रतिपदमुपादाय विहिताः सोऽवुकाशः; विशेष प्रकृतिभ्यः प्रसङ्गे सत्युभयप्राप्तौ परत्वात्? कप्रत्ययः स्यात्()। तस्माच्छेषग्रहणं कत्र्तव्यम्()॥
बाल-मनोरमा
शेषाद्विभाषा ८८२, ५।४।१५४

शेषाद्विभाषा। इतः पूर्वं येब्यः समासान्ता विहितास्तेभ्योऽन्यः शेषः। तदाह--अनुक्तसमासान्तादिति। शेषाधिकारस्थादिति। "शेषा"दित्यनेन शेषाधिकारस्थादित्यपि विवक्षितमिति भावः। महयशस्क इति। महत् यशः यस्येति विग्रहः "आन्महतः" इत्यात्वे, कपि, "सोऽपदादौ" इति सत्वम्। महायशा इति। कबभावे "अत्वसन्तस्ये"ति दीर्घः। व्याघ्रपादिति। "पादस्य लोपोऽहस्त्यादिभ्यः" इत्युक्तसमासान्तोऽयम् स्थानिद्वारा लोपस्यापि समासान्तत्वात्। सुगन्धिरिति। "गन्धस्येदुत्पूती"ति कृतसमासान्तोऽयम्। प्रियपथ इति। "ऋक्पू"रिति कृतसमासान्तोऽयम्। उपबहव इति। सङ्ख्ययाव्यये"ति बहुव्रीहिरयं, न शेषाधिकारस्थः। उत्तरपूर्वेति। अयमपि "दिङ्नामान्यन्तराले" इति बहुव्रीहिः न सेषाधिकारस्थः। सपुत्र इति। "तेन सह" इत्ययमपि बहुव्रीहिः न शेषाधिकारस्थः। ननु सकृदुच्चारिताच्छेषशब्दात् कथमर्थद्वयलाभ इत्यत आह--तन्त्रादिनेति। आदिना आवृत्तिसंग्रहः। एकमनेकोपयोगि तन्त्रम्। उच्चारयित्रा तन्त्रेणोच्चारिताच्छब्दादावृत्या बोध इति बोध्यम्। "()ओतो धावती"त्यादौ सकृदुच्चारणेऽपि "()आआ इतो धावति, ()ओत गुणको धावती"त्येवमनेकार्थबोधदर्शनादिति भावः।

तत्त्व-बोधिनी

शेषद्विभाषा ७६४, ५।४।१५४

शेषद्वि। यद्यत्र प्रागुक्तकब्मात्रापेक्षः शेषः स्यात्तर्हि व्याघ्रपात्सुगन्धिरित्यादावपि स्यादतः समासान्तापेक्षः शेष इह गृह्रत इत्याह---अनुक्तसमासान्तादिति। व्याघ्रपादिति। स्थानिद्वारा लोपोऽपि समासान्तापेक्ष इत्युक्तम्। सुगन्धिरिति। "गन्धस्ये"दित्यादिना इत्समासान्तः। प्रियपथ इति। "ऋक्पूः---"इत्युप्प्रत्ययः समासान्तः। उपबहव इति। "संङ्ख्याव्यये"त्यादिना समासः। उत्तरपूर्वेति। "दिङ्नामे"त्यादिना समासः। सुपुत्र इति। "तेन सहेती"त्यादिना समासः। अयं भावः--"शेषो बहुव्राहि"रित्यतत्र शेषपदम् "अनेकमन्यपदार्थे"इत्येतस्मिन्नेव सूत्रेऽनुवर्तते, "सङ्ख्यायाव्ययासन्ने"त्यादिषु च निवर्तते। तथा च शेषधिकारस्थात्वाऽभावादुपबहव इत्यादिषु कप्प्रत्ययो नेति। एवं च "अनेकमन्यपादर्थे"इति सूत्रत्पृथक् "सङ्ख्ययाव्ययासन्ने"त्यादीनामारम्भः कबभावार्थमप्यावश्यक इति स्थितम्। ननु सकृदुच्चरितस्य शेषशब्दस्याऽनुक्तसमासान्तपरत्वं शेषाधिकारस्थपरत्वं च कथमित्यत आह---तन्त्रादिनेति। "अर्थभेदेन शष शब्दभेदः", "सत्यप्यर्थभेदे ब्दस्याऽभेदः"इति मतद्वयम्। आद्ये आवृत्तिर्द्वितीये तन्त्रमिति विवेकः। यत्तु वदन्ति---"प्रतिपदोक्ताः समासान्ताः स्वविषये बाधका भवन्ति, तत्किमनुक्तसमासान्तपरेण शेषग्रहणेने"ति। तन्न। "ऋक्पूः" इत्यादीनां समासान्तरे चरितार्थतया "प्रियपथ"इत्यादौ परेण कपा बाधापत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

न संज्ञायाम् ५।४।१५५

संज्ञायां विषये बहुव्रीहौ समासे कप् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते। विश्वे देवा अस्य विश्वदेवः। विश्वयशाः।

न्यासः

न संज्ञायाम्?। , ५।४।१५५

बाल-मनोरमा

न संज्ञायाम् ८८४, ५।४।१५५

न संज्ञायाम्। शेषादिति प्राप्त इति। "अनन्तरस्ये"ति न्यायात्। "सेषाद्विभाषा" इति विहितस्य कपएवायं निषेधो, नतु व्यवहितस्य "नद्यृतश्चे"त्यादिकप इति भावः। वि()ओ देवा अस्येति। अत्र संज्ञायां समासस्य नित्यत्वाल्लौकिकविग्रहप्रदर्शनं चिन्त्यमेव।

---

सूत्रम्

काशिका-वृत्तिः

ईयसश् च ५।४।१५६

ईयसन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। सर्वा प्राप्तिः प्रतिषिध्यते। बहवः श्रेयांसः अस्य बहुश्रेयान्। शेषाद् विभाषा ५।४।१५४ इत्यस्य प्रतिषेधः। बह्व्यः श्रेयस्यः अस्य बहुश्रेयसी। नद्यृतश्च ५।४।१५३ इत्यसय् प्रतिषेधः। ह्रस्वत्वम् अपि न भवति, ईयसो बहुव्रीहौ पुंवतिति वचनात्।

न्यासः

ईयसश्च। , ५।४।१५६

"सर्वा प्राप्तिः प्रतिषिध्यते" इति। ननु "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या। प। १९) इति शेषलक्षणस्यैव कपः प्रतिषेधः प्राप्नोति? नैष दोषः; कबत्रानुवत्र्तते, न शेषादिति। तेनायं कब्मात्रस्य प्रतिषेधो भविष्यति। "बहवः श्रेयांसः" इति। "द्विवचनविभज्योपपदे" ५।३।५७ इत्यादिनेयसुन्(), "प्रशस्यस्य श्रः" ५।३।६० इति श्रः। "ह्रस्वत्वमपि न भवति" इति। "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्रस्वत्वं प्राप्नोति, तदपि न भवति। कस्मान्न भवति? इत्याह--"ईयसो बहुव्रीहेः" इत्यादिना। नात्र पुंवद्वचनेन स्त्रीप्रत्ययस्य निवृत्तिरभिप्रेता, किं तर्हि? ह्रस्वत्वप्रकरणात्? तदभावः। एतदुक्तं भवति---यथा पुंवद्भावे सतीकारस्य ह्रस्वोनभवति एवमीयसः परस्य स्त्रीप्रत्ययस्यापि न भवति॥

बाल-मनोरमा

ईयसश्च ८८५, ५।४।१५६

ईयसश्च। बहुश्रेयसीशब्दे श्रेयसीशब्दस्यैव प्रत्ययग्रहणपरिभाषया ईयसन्तत्वादाह--ईयसन्तोत्तरपदादिति। बहुव्रीहिणा उत्तरपदादित्याक्षिप्यत #इति भावः। न कबिति। "न संज्ञेयसो"रिति वक्तव्ये पृथग्योगकरणान्नित्यस्य वैकल्पिकत्य च कपोऽयं निषेध इति भावः। श्रेयांस इति। अतिशयेन प्रशस्ता इत्यर्थः। "द्विवचनविभज्य" इति ईयसुन्। "प्रशस्यस्य श्रः" इति श्रः, "आद्गुणः" इति गुणः। बहुश्रेयानिति। शैषिकः कब्निषिध्यते। ह्रस्वत्वे प्राप्ते इति। बह्व्यः श्रेयस्यो यस्येति बहुव्रीहिः। तत्र श्रेयसीशब्दस्योपसर्जनस्त्रीप्रत्ययान्तत्वात् "गोस्त्रियो"रिति ह्रस्वत्वे प्राप्ते इत्यर्थः।

ईयसो बहुव्रीहेरिति। ईयसन्ताद्बहुव्रीहेः परस्य स्त्रीप्रत्ययस्य ह्रस्वो नेति वाच्यमित्यर्थः। बहुश्रेयसीति। "नद्यृतश्चे"ति नित्यः कबिह निषिध्यते, लिङ्गविसिष्टपरिभाषया ईयस्ग्रहणेन स्त्रीप्रत्ययान्तश्रेयसीशब्दस्यापि ग्रहणादिति भावः। बहुव्रीहेः किमिति। ईयसो बहुव्रीहेरित्यत्र"ति शेषः। अतिश्रेयसिरिति। श्रेयसीमतिक्रान्त इति तत्पुरुषोऽयमिति भावः।

तत्त्व-बोधिनी

ईयसश्च ७६५, ५।४।१५६

ईयसश्च। नित्यो वैकल्पिकश्च कप्सर्वोऽपि निषिध्यते। बहुश्रेयानिति। अतिशयेन प्रशस्यः--श्रेयान्। "द्विवचनविभज्योपे"तीयसुन्। "प्रशस्यस्य श्रः"। "शेषद्विभाषे"ति कप्प्राप्तः।

ईयसो बहुव्रीहेर्नेति वाच्यम्। बहुश्रेयसीति। "नद्यृतश्चे"ति नित्यं प्राप्तः कब्लङ्गविशिष्टपरिभाषया "ईयसश्चे"ति प्रतिषिध्यते।

---

सूत्रम्

काशिका-वृत्तिः

वन्दिते भ्रातुः ५।४।१५७

वन्दिते ऽर्थे यो भ्रातृशब्दो वर्तते तदन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। वन्दितः स्तुतः पूजितः इत्युच्यते। शोभनो भ्राता अस्य सुभ्राता। वन्दितः इति किम्? मूर्खभ्रातृकः। दुष्टभ्रातृकः।

न्यासः

वन्दिते भ्रातुः। , ५।४।१५७

"नद्युतश्च" ५।४।१५३ इति प्राप्तस्य कपोऽयं प्रतिषेधः। "वदि अभिवादनस्तुत्योः" (धा।पा।११) इति यद्यपि वदिरभिवादने वत्र्तते, तथापीह स्तुतावेव वत्र्तमान आश्रीयते, अत एवाह--"वन्दितः स्तुतः" इति॥ "अयमपि पूर्ववत्? प्राप्तस्य कपः प्रतिषेधः॥

बाल-मनोरमा

वन्दिते भ्रातुः ८८६, ५।४।१५७

वन्दिते भ्रातुः। पूजितेऽर्ते इति। "वदि अभिवादनस्तुत्यो"रित्युभयार्थकवदिधातोरिह उभयसाधारमपूजार्थकत्वमाश्रीयत इति भावः। प्रशस्तभ्रातेति। "नद्यृतश्चे"ति प्राप्तः कबिह निषेध्यते। सुभ्रातेति। सु=शोभनो भ्राता यस्य स इति विग्रहः। अत्रापि "नद्यृतश्चे"ति प्राप्तस्य कपो निषेधः। ननु "न पूजना"दित्येव निषेधे सिद्धे किमर्थमिदमित्यत आह--न पूजनादिति। प्रागेवेति। एवंच "नद्यृतश्चे" त्यादिकपस्तेन निषेधाऽप्राप्तौ इदं वचनमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ऋतश् छन्दसि ५।४।१५८

ऋवर्नान्ताद् बहुव्रीहेः छन्दसि विषये कप् प्रत्ययो न भव्ति। हता माता अस्य हतमाता। हतपिता। हतस्वसा। सुहोता।

---

सूत्रम्

काशिका-वृत्तिः

नाडीतन्त्र्योः स्वाङ्गे ५।४।१५९

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्ताद् बहुव्रीहेः कप् प्रत्ययो न भवति। बह्व्यः नाड्यः अस्य बहुनाडिः कायः। बहुतन्त्री ग्रीवा। धमनीवचनस् तन्त्रीशबः। स्वाङ्गे इति किम्? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा।

बाल-मनोरमा

नाडीतन्त्र्योः स्वाङ्गेः ८८७, ५।४।१५९

नाडीतन्त्र्योः स्वाङ्गे। बहुनाडिः काय इति। प्राणिस्थत्वात्स्वाङ्गत्वसूचनाय "काय इति विशेष्यम्। उपसर्जह्रस्वः। "नद्यृतश्चे"ति प्राप्तः कब्न भवति। बहुतन्त्रीग्रीवेति। बह्व्यस्तन्त्र्यो यस्या इति विग्रहः। वीणातन्तुषु तन्त्रीशब्दस्य प्रसिद्धत्वादाह--तन्त्रीर्धमनीति। बहुतन्त्रीशब्दे "गोस्त्रियो"रिति ह्रस्वमाशङ्क्याह--स्त्रीप्रत्ययान्तत्वाऽभावादिति। "अवितृ()स्तृ()तन्त्रीभ्य ईः" इत्यौणादिकस्य "स्त्रिया"मित्यधिकारेऽविहितत्वादिति भावः।

तत्त्व-बोधिनी

नाडीतन्त्र्योः स्वाङ्गे ७६६, ५।४।१५९

बहुनाडिरिति। उपसर्जनह्रस्वः। स्त्रीप्रत्ययान्तत्वाभावादिति। "अवितृ()स्तृ()तन्त्रिभ्यः"इतीप्रत्ययस्य "स्त्रिया"मित्यधिकारेऽविहितत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

निष्प्रवाणिश् च ५।४।१६०

निष्प्रवाणिः इति नदीलक्षणस्य कपः प्रतिषेधो निपात्यते। प्रोयते ऽस्याम् इति प्रवाणी। प्रवयन्ति तया वा इति प्रावाणी। करणसाधनो ऽयं ल्युट्। तन्तुवायशलाका भ्ण्यते। निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः। निष्प्रवाणिः कम्बलः। अपनीतशलाकः समाप्तवानः प्रत्यग्रो नवकः उच्यते। इति श्रीवामनविरचितायां काशिकायां वृत्तौ पञ्चमाध्यायस्य चतुर्थः पदःषष्ठो ऽध्यायः प्रथमः पादः।

न्यासः

निष्प्रवाणिश्च। , ५।४।१६०

इति बोधिसत्त्वदेशीयाचार्य श्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां पञ्चमाध्यायस्य चतुर्थः पादः॥ समाप्तश्चायं पञ्चमोऽध्यायः * * * षष्ठोऽध्यायः प्रथमः पादः

बाल-मनोरमा

निष्प्रवाणिश्च ८८८, ५।४।१६०

निष्प्रवाणिश्च। प्रपूर्वादिति। "वेञ्तन्तुसंताने" इत्यस्मात्प्रपूर्वात् "करणाधिकरणयोश्चे"त्यधिकरणे ल्युट्। प्रोयते अस्यामिति प्रवाणी। "पूर्वपदात्संज्ञाया"मिति णत्वम्। समाप्तवान इति। समाप्तं वानं=वानक्रिया यस्येति विग्रहः। अत्र शैषिककबभावो निपात्यते।

---

सूत्रम्

काशिका-वृत्तिः

एकाचो द्वे प्रथमस्य ६।१।१

अधिकारो ऽयम्। एकाचः इति च, द्वे इति च, प्रथमस्य इति च त्रितयम् अधिकृतं वेदितव्यम्। इत उत्तरं यद् वक्ष्यामः प्राक् संप्रसारणविधानात् तत्र एकाचः प्रथमस्य द्वे भवतः इत्येवं तद् वेदितव्यम्। वक्ष्यति लिटि धातोरनभ्यासस्य ६।१।८ इति। तत्र धातोरवयवयस्य अनभ्यासस्य प्रथमस्य एकाचो द्वे भवतः। जजागार। पपाच। इयाय। आर। एकाच इति बहुव्रीहिनिर्देशः। एको ऽच् यस्य सो ऽयम् एकाचित्यवयवेन विग्रहः। तत्र समुदायः समासार्थः। अभ्यन्तरश्च समुदाये ऽवयवो भवति इति साच्कस्य एव द्विर्वचनं भवति। एवं च पचित्यत्र येन एव अचा समुदायः एकाच्, तेना एव तदवयवो ऽच्छब्दः पशब्दश्च। तत्र पृथगवयवैकाच् न द्विरुच्यते, किं तर्हि, समुदायैकाजेव। तथा हि सकृच्छास्त्रप्रवृत्त्या सावयवः समुदायो ऽनुगृह्यते। पपाच इत्यत्र प्रथमत्वं व्यपदेशिवद्भावात्। इयाय, आर इत्यत्र एकाच्त्वम् अपि व्यपदेशिभावादेव। द्विःप्रयोगश्च द्विर्वचनम् इदम्। आवृत्तिसङ्ख्या हि द्वे इति विधीयते। तेन स एव शब्दो द्विरुचार्यते, न च शब्दान्तरं तस्य स्थाने विधीयते।

न्यासः

एकाचो द्वे प्रथमस्य। , ६।१।१

इह केचित्? स्वार्था एव विधयो भवन्ति, न पदार्थाः, तद्यथा--"अण्कुटिलिकायाः" (४।४।१८) इति कुटिलिकाशब्दादण्? विधीयमानः स्वार्थो भवति। केचित्? पुनः स्वार्थाः, परार्थश्च तद्यथा--"पदरुजविशस्पृशो घञ्()" (३।३।१६) इति पदादिभ्यो घञ्? विधीयमानः स्वार्थो भवति, स्वरितलिङ्गासङ्गादुत्तरेषु योगेष्वनुवत्र्तमानः परार्थश्च। केचित्? पुनः परार्था एवाधिकारा भवन्ति, न स्वार्थाः, यथा--"समर्थानां प्रथमाद्वा" ४।१।८२ इति; तत्? किमयं स्वार्थ एव? अथोभयार्थ

एवाधिकारः? उत परार्थ एवेति सन्देहापनयनाय परार्थतामेवास्य दर्शयितुमाह--"एकाच इति च" इत्यादि। एतद्ग्रहणकं वाक्यम्(), अस्य च "इत उत्तरम्()" इत्यादि। विवरणम्()। सिंहावलोकितन्यायेन पूर्वत्राप्यधिकाराणामनुवृत्तिर्भवति, अतस्तन्निवृत्तिरस्वरितत्वाद्विज्ञेया। कस्य पुनः "एकाचो द्वे भवतः" इत्येवं तद्वेदितव्यम्()? इत्यत यद्येषा धातोरेव्? समानाधिकरणा षष्ठी स्यात्(), तदा पचादीनामेव द्विर्वचनं स्यात्(), न जागर्त्यादीनाम्(), न हि तत्रैकाच इति मन्यमानो नैषैकाच इति सामानाधिकरणा षष्ठी--धातोरेकाच इति, अपि त्ववयवयोगा--धातोर्योऽवयव एकाच इति दर्शयितुमाह--"धातोरवयवस्य" इति। "जजागार" इत्यत्र जागित्येतद्()द्विरुच्यतदे, "पपाच" इत्यत्र पच्छब्दः; पूर्वत्र "अचो ञ्णिति" ७।२।११५ इति वृद्धिः, उत्तरत्र "अत उपधायाः" ७।२।११६ इति। "इयाय" इति। "इण्? गतौ (धा।पा।१०४५) "अचो ञ्णिति"७।२।११५ इति वृद्धौ कृतायां "द्विर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावादिकारो द्विरुच्यते, आयादेशः, "अभ्यासस्यासवर्णे" ६।४।७८ इतीयङ्()। "आर इति। "ऋ गतौ" (धा। पा। १०९८) ऋ इत्येतस्य द्विर्वचनम्(), "उरत्()" (७।४।६६) इत्यत्त्वम्? रपरत्वम्(), "अत आदेः" ७।४।७० इति दीर्घः, सर्वर्णदीर्घत्वञ्च। एकाच इति तत्पुरुषोऽयं वा स्यात्? एकश्चासावच्चेति एकाच्(), बहुव्रीहिर्वा एकोऽञ्? यस्येति? तत्र यद्ययं तत्पुरुषः स्यात्(), इणादीनामेव द्विरुक्तिः स्यात्()--इयाय आरेत्येवमादौ; पचादीनां तु पपाचेत्यादौ न स्यात्(), तेषामज्झल्समुदायात्मकत्वादित्येतन्मनसि कृत्वाऽऽह--"एकाच इति बहुव्रीहनिर्देशोऽयम्()" इति। बहुव्रीहिणा विवक्षितस्यार्थस्य निर्देशः=कथनम्()। बहुव्रीहेर्निर्देशः=कथनम्(), उच्चारणं वा बहुव्रीहिनिर्देशः। कुतः पुनरेतदवसितम्()--बहुव्रीहेनिर्देशोऽयमिति? "हलादिः शेषः", ७।४।६० "शर्पूर्वाः खयः" ७।४।६१ इत्येवमादिलिङ्गात्()। ननु च तत्पुरुषस्यापि लिङ्गमस्ति--"दीर्घ इणः किति" (७।४।६९) इतीणोऽभ्यासस्य दीर्घविधानम्()? नैतदस्()ति; बहुव्रीहावपि ह्यस्मिन्? व्यपदेशिवद्भावादिणो द्विर्वचनेऽभ्यासस्य दीर्घविधानमुपपद्यत एव, न तु तत्पुरुषेऽस्मिन्? हलादिशेषादिकार्यमुपपद्यतेः पचादीनामज्झल्समुदायानां द्विर्वचनानुपपत्तेः। तस्माद्बहुव्रीहेरेव लिङ्गमस्ति, न तत्पुरुषस्येति बहुव्रीहिनिर्देश एवायम्()। यद्येवम्(); बहुव्रीहेरेवान्यपदार्थप्रधानत्वादुपलक्षणविनिर्मुक्तस्य शुद्धस्यैवान्यार्थस्य बहुव्रीहिणाभिधानादचावयवेन य उपलक्षितोऽन्यपदार्थस्तस्यैवानच्कस्य द्विर्वचनं प्राप्नोति, न तूपलक्षणभूतस्यापि। न ह्युपलक्षणं कार्योपयोगि भवति। तथा हि यथा चित्रगुरानीयतामित्युक्ते यस्य चित्रागावः सन्ति स एव आनीयते, न तूपलक्षमभूता गावोऽपि। अत एव तस्य निरासाय तद्गुणसंविज्ञानोऽयं बहुव्रीहिरित दर्शयन्नाह--"तत्र" इत्यादि। "समुदायः समासार्थः" इति। सह तेनोपलक्षणभूतेनाचावयवेन समुदाय एवान्यपदार्थ इत्यर्थः। "उभ्यन्तरश्च" इति। तदन्तर्भूत इत्यर्थः। चशब्दोऽवधारणे। अभ्यन्तर एवेत्यर्थः। इतिकरणो हेतौ। यस्मात्? समुदाये समासार्थेऽवयवोऽभ्यन्तरो भवति, तस्मात्? साच्कस्यैव द्विर्वचनं भवति। लोकेऽपि क्वचिदुपलक्षणस्य समासेऽन्तर्भावात्? कार्योपयोगित्वं दृष्टमेव, यथा शुकलवाससमानयेत्युक्ते सहैव शुक्लेन वाससानीयते। पचित्यत्र यनैवाचा समुदाय एकाच्? तेनैव तदवयवोऽप्यच्छब्दः पशब्दश्चेति, तत()आआवयवानिमपि प्रत्येकं द्विर्वचनं प्राप्नोति। यथा यनैव हस्तेनावयवेन बाहुर्हस्तवान्? भवति, तेनैव देवदत्तोऽपि हस्तवान्? भवति; तथा पचतौ घातौ येनैवाकारेम पच्छब्दः समुदाय एकाच्? तेनैव तदवयवोऽप्यच्छब्दः पशब्दश्तेति। ततश्चावयवानमपि प्रत्येकं द्विर्वचनं प्राप्नोत्येव। द्विर्वचनञ्च कायिण एकाचः, सामान्येन निर्देशात्()। एवञ्च समुदायस्य तदवयवनाञ्चैकाचां पृथग्द्विर्वचने कृतेऽन्ष्यटं रूपं स्यात्(), अत एतद्द्वेष्यमपाकर्तुमाह--"तत्र" इत्यादि। तेषु समुदायेष्वेकाक्षु मध्ये पृथगवयवैकाचो न द्विरुच्यन्ते। किं तर्हि? समुदायैकाजेव। अवयवैकाजिति कर्मधारयः। "समुदायैकाच्()" इति। अयमपि कर्मधारय एव। कुतः पुनरयं सामान्याभिधाने विशेषो लभ्यते? इत्यत आह--"तथा हि" इत्यादि। यद्यपि समुदायीऽवयवश्चैकाच्(), तथापि यस्य द्विर्वचने कृते सर्वेषामनुग्रहो भवति तस्यैव द्विर्वचनं युक्तम्()। एवं शास्त्रहानिनं भवति; सर्वेषामेव शास्त्रविहितकार्यस्य निष्पत्तेः। अयमेवानुग्रहो या शास्त्रविहितकार्यस्य निष्पत्तिः। समुदायस्यैव द्विर्वचने कृते सर्वेषामनुग्रहो भवति। यथा वृक्षः प्रचलन्? सहावयवैः प्रचलति, तथैकयैव शास्त्रप्रवृत्त्या समुदायो द्विरुच्यमानः सहावयवैद्विरुच्यते, न हि विनावयवैः समुदायो द्विर्वक्तुं शक्यते; तस्य तदात्मकत्वात्। अवयवानां

तु द्विर्वचनं नैकया प्रवृत्त्या सर्वेषां कर्तुं शक्यते। न तद्()द्विरुक्तौ सर्वेषामनुग्रहो भवति। कथम्()? सर्वेषां हि तेषामेकाज्व्यपदेश एकोऽजिति हेतुः; तत्र यदा येनाचैकोऽवयव एकाजिति व्यपदिष्यते, तदा तेनैव तस्याक्षिप्तत्वान्न शक्यतेऽपर एकाजिति व्यपदेष्टुम्()। ततश्चैकस्य द्विर्वचने विधित्सिते तदेदानीं तेनाचा य एकगाच्? कश्चिदवयवस्तस्यैव द्विर्वचनं स्यात्(), नेतरस्य; अनच्कत्वात्()। अत्रैतत्? स्यात्? "एकाचः" (६।१।१) इति सर्वेषां पष्ठ()आ निर्दिष्टत्वात्? सर्वेषामेव तेषां द्विर्वचनं कर्तव्यम्(), न च तद्युगपत्? सम्भवति, अत एकस्य तावत्? क्रियते। एकस्मिन्? कृते पुनः प्रवृत्त्यन्तरेणापरस्यापि करिष्यत" इति? एतच्च न; यस्य ह्यवयवस्य पूर्वं द्विर्वचनं कृतं तेनैव सहाचो द्विरुक्तत्वान्न युज्यते पुनस्तस्यावयवान्तरेम द्विर्वचनं कर्तुम्()। अकृतद्विरुक्तस्य हि द्विर्वचनं क्रियते, न द्विरुक्तस्य; अन्यथा ह्यनवस्था स्यात्()। "अनभ्यासस्य" ६।१।८ इति वचनाच्चायुक्तमेवैकस्मिन्नवयवे द्विरुक्तेऽपरस्य द्विर्वचनं कर्तुम्()। अतो नावयवद्विर्वचने सर्वेषामनुग्रहः सम्भवति। तत्र यसय द्विर्वचनं न सम्भवति तस्य शास्त्रहानिः स्यात्()। तदयुक्तमवयवानां प्रत्येकं द्विर्वचनम्()। अथैषां युगपदवयवानां द्विर्वचनं न सम्भवतीति प्रयोगान्तरे पर्यायेण करिष्यते पूर्वोक्तदोषपरिहारार्थम्()? एवमपि यदा पचेरच्छब्दस्य द्विर्वचनं स्यात्(), तदा पपाचेत्येवमादि न सिध्येत्()। किञ्च "णिजिर्? शौचपोषणयोः" (धा।पा।१०९३) इत्यस्त्राल्लट्(), झि, शप्(), तस्य जुहोत्यादित्वात्? श्लुः, "श्लौ" ६।१।१० इति द्वर्वचनम्()। तत्र यदि निशब्दमात्रस्य द्विर्वचनं क्रियते तदा "णिजां त्रयाणाम्()" ७।४।७५ इति गुणः। अत्रेदानीम्? "अदभ्यस्तात्()" ७।१।४ इत्यदादेश इष्यते--तेनिजतीति रूपं यथा स्यादित्येवमर्थम्(), स च न प्राप्नोति; जकारेण व्यवहितत्वात्()। न हि जकारस्याभ्यस्तसंज्ञा, किं तर्हि? निशब्दस्य; द्विरुक्तत्वात्(), जकारस्य चाद्विरुक्तत्वात्()। अनेनिजुरिति--अत्र लङादेशस्य झेः "सिजभ्यस्तविदिभ्यश्च" (३।४।१०९) इति जुस्? न प्राप्नोति; पूर्वस्मादेव हेतोः। नेनिजदित्यत्र "नाभ्यस्ताच्छतुः" ७।१।७८ इति नुम्प्रतिषधो न स्यात्(), अत एव हेतोः। न च शक्यते वक्तुम्()--वचनसामथ्र्याद्व्यवधानेऽपि भविष्यतीति; यदा समुदायस्य द्विर्वचनं तदा वचनस्य सावकाशत्वात्()। यदा त्विकारसहितस्य जकारसय द्विर्वचनं तदा नेनिजतीत्यादिकं रूपमेव न स्यात्()। तस्मादयुक्तमवयवानां द्विर्वचनम्()। अतः समुदाय एव द्विर्वक्तव्यः। अथ पपाचेत्यत्र कथं द्विर्वचनम्(), यावता "एकाचो द्वे प्रथमस्य ६।१।१ इत्युच्यते, न चात्रैकाचः प्रथमव्यपदेशोऽस्ति, प्रथमशब्दो ह्यप्रथमापेक्षो भवति, सम्बन्धिशब्दत्वात्(); सत्स्वनेकेषु यस्मात्? पूर्वो नास्ति स प्रथमः, यः पुनरेक एव नासौ प्रथमव्यपदेशं लभते, एकश्चात्रैकाच्()। तेनात्र द्विर्वचनं न स्यात्(), जजागारेत्यादावेव स्यात्()? इयाय, आरेत्यत्रापि कथं द्विर्वचनम्(), यावतैकाचस्तदुच्यते, न चैकाच्त्वमस्ति, अज्व्यतिरिक्तस्यानच एकाज्व्यपदेशहेतोरभावात्()? इत्यत आह--"पपाचेत्यत्र" इत्यादि। एकसंख्याव्यवच्छिन्नस्वरसम्बनधहेतुको व्यपदेशः, स यस्यास्ति स व्यपदेशी। जागर्त्यादिषु धातुषु जागित्येवमादिः। "तेन तुल्यं वत्र्तते"५।१।११४ इति व्यपदेशिवत्(), तस्य भावो व्यपदेशिवद्भावः। एकाच्त्वमपीत्यपिशब्दादद्वितीयत्वमपीति। ततोऽनेन जजागारेत्यत्र यथा वास्तवे प्रथमत्वे जाग्? इत्येतस्य प्रथमस्यैकाचो द्विर्वचनं भवति, तथा परमार्थतो सत्यपि प्रथमत्वे प्रथमस्यैकाचो द्विर्वचनं भवति व्यपदेशिवद्भावेन पपाचेत्यत्र पच्छब्दस्य। इयाय, आरेत्यत्राप्यसति वास्तव एकाच्त्वे द्वितीयत्वे च व्यपदेशिवद्भावेन द्विर्वचनं भवति; यथा--अटिटिषतीत्यत्र वस्तुत एवैकाचो द्वितीयस्य टिशब्दस्येति। न चै तद्वक्तव्यम्()--"यस्मादप्रथमस्यापि पच्? इत्येवम्प्रकारस्य व्यपदेशिवद्भावेन द्विर्वचनं भवति" इति। अत्र "लिट()भ्यासस्योभयेषाम्()" ६।१।१७ इति वचनं ज्ञापकम्(), असत्यपि वास्तव एकाच्त्वे द्वितीयत्वे च पुनव्र्यपदेशिवद्भावेन चेण्प्रभृतनां द्विर्वचनं भवतति। अत्राभ्यासस्य दीर्घविधानार्थम्? "दीर्घ इणः किति" ७।४।६९ इति वचनं ज्ञापकम्। इह "आदशभ्यः संख्याः संख्येये वत्र्तन्ते न तु संख्यानमात्रे" इति द्विशब्दोऽत्र संख्येये वत्र्तते। तच्च संख्येयं शब्दरूपं वा स्यात्()? उच्चारणं वा? तत्र यदि शब्दरूपं संख्येयं स्यात्? तदा "द्वे" इत्यनेन द्विशब्दरूपे भाव्यमानतया निर्दिश्येते इति। अत एकाच इत्यस्य च स्चाने योगलक्षणः सम्बन्धो भवति, अतः "स्थाने द्विर्वचनम्()" इत्येष पक्षो भवति। तदैकाच इति स्थानषष्ठी जायते। अथ पुनरुच्चारणं सख्येयं तदा स्थान्यादेशसम्बन्धो न भवति। उच्चारणं नाम शब्दानुगतो धर्मः। यद्यसावदेशो विदीयते तदा निवृत्तिधर्मा

स्थानी भवतीति शपब्दस्य स्थानिनो निवृत्त्या भवितव्यम्(), ततश्चोच्चारणमपि न स्यात्(); तस्य तद्धर्मत्वात्()। तस्मादुच्चारणे संख्येये स्थाने द्विर्वचनं न सम्भवतीति "द्विष्प्रयोगो द्विर्वचनम्" इत्येष पक्षो भवतीति। तदैकाच इति "कर्तृकर्मणोः कृति" २।३।६५ इति कर्मणि षष्ठी, सा ह्यैकाजुच्चारणक्रियया व्याप्तुमिष्टतमत्वात्? कर्म भवति। तत्र यदि "स्थाने द्विर्वचनम्()" इत्येष पक्ष आश्रीयेत, तदा जिघांसतीत हन्तः कुत्वं न स्यात्()। समुदायस्य हि सन्नन्तस्य समुदायः सन्नन्त आदेशः, तत्र कृत आश्रीयेत, तदा जीघांसतीति हन्तेः कुत्वं न स्यात्()। समुदायस्य हि सन्नन्तस्य समुदायः सन्नन्त आदेशः, तत्र कृत एतन्नास्ति। अयं प्रत्ययः इयं प्रकृतिरिति सन्दिग्धत्वात्? प्रकृतिप्रत्ययस्य हन्तिर्नष्टो भवतीति "अभ्यासाच्च" ७।३।५५ इति कुत्वं हन्तिहकारस्य न स्यादितीमं स्थानेद्विर्वचनपक्षे दोषं दृष्ट्वा द्विष्प्रयोगो द्विर्वचनमिति पक्षमाश्रित्याह--"द्विष्प्रयोगश्च" इत्यादि। चकारोऽवधारणे। द्विष्प्रयोग एवेत्यर्थः। न स्थाने द्विष्प्रयोग इत्यर्थः। अथ द्विष्प्रयोगद्विर्वचने कथमयं दोषो न भवति? इत्याह--"आवृत्तिसंख्या हि" इत्यादि। पुनः पुनरुच्चारणम्()ावृत्तिः। तत्? पुनः संख्याव्यवस्थितस्यैव धातोर्विधीयते। "तेन" इत्यादि। यस्मादावृत्तिः सख्याव्यवस्थितस्यैव धातोर्विधीयते, तेन स एव शब्दो व्यवस्थित एव द्विरुच्चार्यते, न तु तस्य स्ताने शब्दान्तरं विधीयत इति कुतः पुनः पूर्वोक्तदोषाव सरप्रसङ्गः! यदि तर्ही द्विष्प्रयोगो द्विर्वचनमित्येष पक्ष आक्षीयते, एवं च सति "वस्वेकाजाद्घसाम्()" ७।२।६७ इत्यत्रादिवान्(), आशिवान्(), पेचिवान्(), शेकिवान्(), इत्युदाहृत्य यद्वक्ष्यति--"धात्वभ्यासयोरेकादेशे कृत एवाभ्यासलोपयोः कृतयोः कृतद्विर्वचना एत एकाचो न भवन्ति" इति, तन्न युज्यते; अकृतेऽपि धात्वभ्यासयोरेकादेशेऽकृतयोरपि चैत्वाभ्यासलोपयोः कृतद्विर्वचनानामष्येषामेकाच्त्वात्()। स्थाने द्विर्वचने हि शब्दान्तरमेवा नेकाजादिश्यत इति स्यादेषां कृतद्विर्वचनानामनेकाच्त्वम्(), न तु द्विष्प्रयोगपक्षे। तत्र हि स एव शब्दो द्विरुच्चार्यते। न चासौ शतकृत्वोऽप्युच्चार्यमाम एकाच्त्वं जहाति, किं पुनर्द्विरुच्यमानः। यदपि नियमस्य व्यवच्छेद्यचं दर्शयितुं बिभिद्वानित्यादि तत्रोपन्यसिष्यति, तदप्ययुक्तमेव; भिविप्रभृतीनामेव यथोक्तादेव हेतोः कृतद्विर्वचनानामप्येकाच्त्वात्()। यदप्याद्ग्रहणमनेकाजर्थमित्यभिधास्यति, तदप्ययुक्तमेव; तत एव हेतोराकारान्तानां कृतद्विर्वचनानामप्यनेकाच्त्वानुपपत्तेः। तस्मात्? स्थाने कृतद्विर्वचनपक्षोऽप्यङ्गीकत्र्तव्यः। एवं तह्र्यन्यथा व्याख्यायते। इह पक्षद्वयं पूर्वोक्तं, सम्भवति। तत्र किं द्विष्प्रयोगो द्विर्वचनमित्येष पक्ष आश्रीयते? उत स्थाने द्विर्वचनपक्षः()--इति प्रश्नावसर इदमाह--"द्विष्प्रयोगश्च द्विर्वचनम्()" इति। चकारः स्थाने द्विर्वचनमित्यमुमर्थं द्योतयति। ननु च "षष्ठी स्थानेयोगा" (१।१।४९) इति वचनात्? स्थाने द्विर्वचनपक्षेमात्र [द्विर्वचनपक्षे नात्र--मुद्रितः पाठः] भवितुं युक्तम्(), तत्? कथं द्विष्प्रयोगपक्षोऽप्युपपद्यत इत्यत आह--"आवृत्तिसंख्या हि" इत्यादि। यदि शब्दान्तरं तस्य स्थाने विधीयते तदा स्थान्यादेशसम्बन्धे प्रतिस्थाने द्विर्वचनमित्येष पक्षो जायत इत्यक्तम्()। यदा त्वावृत्तिसंख्या विधीयते तदेतरः पक्षो भवतीति। एदपि प्रतिपादितं प्राक्()। तस्मात्? द्विष्प्रयोगपक्षो यदाङ्ग#ईकर्तुमिष्यते, तदावृत्तिसंख्या द्वे इति विधीयते, तेन स एव शब्दो द्विरुच्चार्यते, न तु शब्दान्तरं तस्य स्थाने विदीयते। तस्माद्()द्विष्प्रयोगद्विर्वचनपक्षोऽप्यङ्गीकत्र्तव्यः। अथ कथं स्थाने द्विर्वचनमित्येषोऽपि पक्ष आश्रीयते, यावता जिघांसतीत्यत्र हन्तेर्हकारस्य कुत्वं न प्राप्नोतीत्युक्तम्()? नैष दोषः; उच्यते चेदम्()--अब्यासाच्च ७।३।५५ हन्तेः कुत्वं भवतीति। न च तस्य स्थाने शब्दान्तर एवादेशे कृते हन्तिरस्ति। तत्र वचनसामथ्र्यादादेशैकदेशे हन्तिप्रतिरूपके हन्तिशब्दो विज्ञास्यते। अन्ये त्वनयोः पक्षयोर्दोषा य आशङ्क्यन्ते ते भाष्य एवोत्क्षिप्य प्रतिक्षिप्ताः। इह त्वतिविस्तरग्रन्थभयान्न लिख्यन्ते॥

बाल-मनोरमा

एकाचो द्वे प्रथमस्य २५, ६।१।१

भूव्-अ इति स्थिते। एकाचः। अजादेः इत्यधिकृत्येति। षष्ठाध्यायारम्भे द्वे इमे सूत्रोते च न विधायके, अतिप्रसङ्गात्, किन्तु "ष्यङः संप्रसारण"मित्यतः प्रागनुवर्तते एवेति भावः।

तत्त्व-बोधिनी

आस्पदं प्रतिष्ठायाम् ८७४, ६।१।१

आत्मयापनायेति। कालक्षेपाय, शरीरपक्षणाय वेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अजादेर् द्वितीयस्य ६।१।२

प्रथमद्विर्वचनापवादो ऽयम्। अजादेर् द्वितियस्य एकचो द्विर्वचनम् अधिक्रियते। अचादिर् यस्य धातोः तदवयवस्य द्वितीयस्य एकाचो द्वे भवतः। अटिटिषति। अशिशिषति। अरिरिषति। अर्तेः स्मिपूङ्रञ्ज्वशां सनि ७।२।७४ इति इट् क्रियते। तस्मिन् कृते गुणे च रपरत्वे च द्विर्वचने ऽचि १।२।५९ इति स्थानिवद्भावः प्राप्नोति। तत्र प्रतिविधानं द्विर्वचननिमित्ते ऽचि इति उच्यते। न च अत्र द्विर्वचननिमित्तमिट्। किं तर्हि? कार्यी। न च कार्यी निमित्तत्वेन अश्रीयते। तथा हि क्ङिनिमित्तयोर् गुणवृद्ध्योः प्रतिषेधो विधीयमानः शयिता इत्यत्र न भवति, न हि कार्यिणः शीङो गुणं प्रति निमित्तभावः इति। अत्र केचिदजादेः इति कर्मधारयात् पञ्चमीम् इच्छन्ति। अच् च असौ आदिश्च इत्यजादिः, तस्मातजादेरुत्तरस्य एकाचो द्वे भवतः इति। तेषां द्वितीयस्य इति विस्पष्टर्थं द्रष्टाव्यम्।

न्यासः

अजादेर्द्वितीयस्य। , ६।१।२

"प्रथमद्विर्वचनापवादोऽयम्()" इति। ननु च "एकाचो द्वे प्रथमस्य" ६।१।१ इत्यनेन प्रथमस्यैकाचो द्विर्वचनं विधीयते, "अजादेर्द्वितीयस्य" ६।१।२ इत्यनेन तु द्वितीयस्य; तत्? कथमन्यस्योच्यमानमिदमन्यस्य बाधकं स्यात्()? सति खलु सम्भवे बाधकं भवति, अस्ति च सम्भवो यदुभयं स्यात्()। स्यादेतत्()--घातोरित्येषा षष्ठी, तसया द्वितीयेनैकाचा प्रथमेन च सम्बन्धो नोपपद्यते, अतो नास्त्युभयसम्भव इति? एतच्च नास्ति; अन्यद्धि वाक्यं प्रथमद्विर्वचनस्य विधायकम्(), अन्यचच द्वितीयद्विर्वचनस्य। तत्र वाक्यबेदे च सति किमिति सम्बन्धो नोपपद्यते, तस्मात्? कृतेऽपि द्वितीयद्विर्वचने प्रथमद्विर्वचनं सम्भवत्येवेत्युक्तं बाधनम्()? नैष दोषः; इह द्वीपम्(), अन्तरीपमित्यत्र "द्व्यन्तरुपसर्गेभ्योऽप ईत्()" ६।३।९६ इतीत्त्वम्(), "अलोऽन्त्यस्य" (१।१।५२) इत्यनैनान्तस्यालः प्राप्तम्? "आदेः परस्य" १।१।५३ इत्यनेनादेर्विधीयते, तत्र यथा सत्यपि सम्भवेऽनन्त्यविकारोन्त्यविकारं बाधते, तथा द्वितीयद्विर्वचनं प्रथमद्विर्वचनं बाधिष्यते। यदि तर्हि प्रथमस्यैकाचो द्विर्वचनमनेन बाध्यते, व्यञ्जनस्यापि प्रथमद्विवचनसम्बन्धिनो द्विर्वचनं बाध्येत। तद्यथाभूतस्यैव प्रसङ्गस्तथाभूतस्यैव द्विर्वचननिवृत्तिर्भवति। किम्भूतस्य च प्रथमद्विर्वचनस्य प्रसङ्गः? सव्यञ्जनस्य। तत्र यथा प्रथमस्यैकाचो द्विर्वचनं न भवति, एवमेकाज्व्यपदेशिनो व्यञ्जनस्यापि न स्यात्()? नैष दोषः; यदयं "न न्द्राः संयोगादयः" ६।१।३ इति प्रतिषेधं शास्ति, तज्ज्ञापयति--व्यञ्जनस्य द्विर्वचननिवृत्तिर्न भवति। अन्यता हि नदराणां द्विर्वचनप्रतिषेधोऽनर्थकः स्यात्(), प्राप्त्यभावात्()। "अटिटिषति; अशिशिषति" इति। अटेरशेश्च सनीटि कृते टिष्शबदः, शिष्शब्दश्च द्विरुच्यते। "अरिरिषति" इति अर्तेः सन्निङ्गुणरपरत्वेषु कृतेषु रिष्शब्दो द्विरुच्यते। "स्थानिवद्भावः प्राप्नोति" इति। "सन्यङोः" ६।१।९ इत्यनेन सन्नन्तस्य द्विर्वचनमुच्यते, इट्? च सम्भक्तः। तस्मादसौ द्विर्वचनस्य निमित्तमित्यभिप्रायः। स्थानिवद्भावे च सति रेफरहितस्येषो द्विर्वचने कृते सवर्णदीर्घत्वे चारीषतीत्यनिष्टं रूपं स्यात्()। "कार्यी" इति। द्विरुक्तिरेव कार्यम्(), तदस्यास्तीति कार्यी। स्यादेतत्()--यद्यप्यसौ कार्यी तथापि कार्ये। स्यादेतत्()--यद्यप्यसौ कार्यी तथापि कार्यं प्रति निमित्तमेवेत्यादह--"न च" इत्यादि। कथं पुनर्ज्ञायते एतत्? कार्यी

निमित्तत्वेनाश्रीयते इति? अत आह--"तथा हि" इत्यादि। तथा हीति यस्मादित्यर्थे। इतिकरणः प्रकारे। यस्मात्? क्ङिन्निमित्तयोः गुणवृद्ध्योः "क्ङिति च" १।१।५ इति प्रतिषेधो विधीयमानः शयितेत्येवम्प्रकारविषये न भवति, ततो ज्ञायते--न हि कार्यी निमित्तत्वेनाश्रीयत इति। यदि ह्याश्रीयेत, तदा शीङो ङित्वात्? तन्निमित्ताच्च गुणवृद्ध्योः "क्ङिति च" १।१।५ इति विधीयमानः शयितेत्यत्र गुणप्रतिषेधश्च स्यात्(), शायक इत्यत्र वृद्धिप्रतिषेधश्च। ननु च येन विना यन्न भवति तत्? तस्य निमित्तम्(), यथा--वृष्टेर्मेघः। यथा च प्रत्ययेन विना गुणवृद्धी न भवतस्तथा कार्येणापि; तत्? कथं शीङो गुणबुद्धिप्रतिषेधो नेह भवति? इत्यत आह--"न हि कार्यिणः" इत्यादि। अत्राश्रीयत इत्यध्याहर्यम्()। सत्यम्(), कार्यपि शीङ्निमितम्(), तस्य गुणं प्रति वृदिं()ध द्रष्टव्यम्()। इतिकरणोऽनन्तरोऽस्यप्रतिविधानस्य स्वरूपं दर्शयति। कथं पुनज्र्ञायत#ए--न हि कार्यी निमित्तत्वेनाश्रीयत इति? "दीधीवेवीटाम्()" गुणवृद्ध्योः "क्ङिति च" १।१।५ इति फार्यो प्रतिषेधः सिद्ध #एवेति तयोर्गुणप्रतिषेधोऽनर्थकः स्यात्()। "अत्र केचिदजादेरिति कर्मधारयात्? पञ्चमीमिच्छन्ति" इति। "अच्चासावादिश्चेत्यजादिः, तस्मादजादेः" इति। एवं वर्णयन्तः कर्मधारयात्? पञ्चमीमिच्छन्ति। यदि तर्हि कर्मधारयादियं पञ्चमी तेषां द्वितीयग्रहणमनर्थकम्(); यस्मात्? तृतीयस्य प्राप्तिरेव नास्ति। येषां बहुव्रीहेरियं षष्ठ()भिमता, तेषामक्रियमाणे द्वितीयग्रहणे तृतीयस्यापि द्विर्वचनं प्राप्तिरेव नास्ति। येषां बहुव्रीहेरियं षष्ठ()भिमता, तेषामक्रियमाणे द्वितीयग्रहणे तृतीयस्यापि द्विर्वचनं प्राप्नोतीति तन्निवृत्त्यर्थं युक्तं द्वितीयग्रहणम्()। येषां च कर्मधारयादियं पञ्चम्यभिमता तेषां द्वितीय ग्रहणमनर्थकम्(); "तस्मादित्युत्तरस्य" १।१।६६ इत्यनेनानन्तरस्यैव द्वितीयस्य भविष्यति, न तृतीयस्य, व्यवहितत्वात्()? इत्यत आह--तेषाम्()" इत्यादि॥

तत्त्व-बोधिनी

अजादेर्द्वितीयस्य २१, ६।१।२

यदि बहुव्रीहेः षष्ठी तदा इन्द्रमात्मन इच्छति इन्द्रीयति, इन्द्रीयितुमिच्छति इन्दिद्रीयिषतीत्यत्र दकारस्य "नन्द्राःर" इति द्वित्वनिषेधः स्यात्, किंतु अञ्चासावादिश्चाऽजादिस्तस्मादिति कर्मधारयादेषापञ्चमी।

---

सूत्रम्

काशिका-वृत्तिः

न न्द्राः संयोगादयः ६।१।३

द्वितीयस्य इति वर्तते। द्वितीयस्य एकाचो ऽवयवभूतानां न्द्राणां तदन्तर्भावात् प्राप्तं द्विर्वचनं प्रतिषिध्यते। नकारदकाररेफा द्वितीयैकाचो ऽवयवभूताः संयोगादयो न द्विरुच्यन्ते। उन्दिदिषति। अड्डिडिषति। अर्चिचिषति। न्द्राः इति किम्? ईचिक्षिषते। संयोगादयः इति किम्? प्राणिणिषति। अनितेः ८।४।१९ उभौ साभ्यासस्य ८।४।२० इति णत्वम्। अजादेः इत्येव, दिद्रासति। केचिदजादेः इत्यपि पञ्चम्यन्तं कर्मधारयम् अनुवर्तयन्ति। तस्य प्रयोजनम्, इन्दिद्रीयिषति इति। अजादेरनन्तरत्वाभावाद् दकारो द्विरुच्यत एव, नकारो न द्विरुच्यते। इन्द्रम् इच्छति इति क्यच्। तदन्तातिन्द्रीयितुम् इच्छति इति सन्। बकारस्य अप्ययं प्रतिषेधो वक्तव्यः। उब्जिजिषति। यदा बकरोपध उब्जिरुपदिश्यते तदा अयं प्रतिषेधः। दकारोपधोपदेशे तु न वक्तव्यः। बत्वं तु दकारस्य विधातव्यम्। यकारपरस्य रेफस्य प्रतिषेधो न भवति इति वक्तव्यम्। अरार्यते। अर्तेः अट्यर्तिशूर्णोतीनाम् उपसंख्यानम् ७।४।८२ इति यङ्। तत्र यङि च ७।४।३० इति गुणः, ततो द्विर्वचनम्। ईर्ष्यतेस् तृतीयस्य द्वे भवत इति वक्तव्यम्। कस्य तृतीयस्य? केचिदाहुर् व्यञ्जनस्य इति। ईर्ष्यियिषति। अपरे पुनः तृतीयस्य एकाचः इति व्याचक्षते। ईर्ष्यिषिषति। कण्ड्वादीनां तृतीयस्य एअकाचो द्वे भवत इति वक्त्व्यम्। कण्डूयियिषति। असुयियिषति। वा नामधातूनां तृतीयस्य एकाच् द्वे भवत इति वक्तव्यम्। अश्वीयियिषति। अशिश्वीयिषति। अपर आह यथा इष्टं नामधातुष्विति वक्तव्यम्। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति।

पुपुतित्रीयियिषति। पुत्रीयिषिषति।

लघु-सिद्धान्त-कौमुदी

न न्द्राः संयोगादयः ६०३, ६।१।३

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः॥

न्यासः

न न्द्राः संयोगादयः। , ६।१।३

"तदन्तर्भावात्()" इति। अवयवानां समुदायाभ्यन्तरत्वात्? तदन्तभविः। "अवयवभूताः" इति। आदिशब्दस्य नियतदेशावयववाचित्वाद्विशिष्टदेशावयवभूता इत्येषोऽर्थो वेदितव्यः। "अन्दिविषति" इति। "उन्दी क्लेदने", (धा।प।१४५७) सनीट च कृते दिष्शब्दस्य द्विर्वचनम्()। "अड्डिडिषति" इति। "अद्ड अभियोगे (धा।पा।३४८) इत्यत्र यः संयोगः स दकारादिः, तस्य ष्टुत्वेन दकारस्य डकारः, ष्टुत्वञ्च द्विर्वचनेऽसिद्धम्(), तेन सनीटि कृते विष्शब्दो द्विरुच्यते ततः ष्टुत्वम्। "अर्चिचिषति" इति "अर्च पूजायाम्()" (धा।पा।२०४), चिष्शब्दस्य द्विर्वचनम्()। "ईचिक्षिषते" इति। "ईक्ष दर्शने" (धा।पा।६१०) सनीटि च कृते क्षिष्शब्दस्य द्विर्वचनम्? "हलादिः शेषः" ७।४।६०, "कुहोश्चुः" ७।४।६२ इति चुत्वम्()। "प्राणिणिषति" इति। "()आस प्राणने" (धा।पा।१०६९), "अन च" (धा।पा।१०७०) प्रपूर्वः। "दिद्रासति" इति। "द्रा कुत्सितायाङ्गतौ" (धा।पा।१०५४)। "केचिदजादेः" इत्यादि। तेषां मतेनाजादेरुत्तरे ये नकारादयः संयोगादिभूतास्ते न द्विरुच्यन्त इति शूत्रार्थः। किं पुनस्तदनुवर्तनस्य प्रयोजनम्()? इत्यत आह--"तस्य" इत्यादि। दकारस्तु द्विरुच्यत एवेति कर्मधारयपञ्चम्यन्तानुवृत्तौ हि "तस्मादित्युत्तरस्य" १।१।६६ इत्यनन्तराणामेव नकारादीनां द्विर्वचनप्रतिषेधेन भवितव्यम्(); निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात्()। दकारस्तत्र यद्यपि रेफदकारयोर्यः संयोगस्तदादिभूतः, तथापि नकारेण व्यवहितः। तस्माद्दकारोऽपि द्विरुच्यत एव। "इन्दिद्रीयिषति" इति। इन्द्रशब्दात्? क्वचि कृते "क्यचि च" ७।४।३३ इतीत्वम्(), क्यजन्तात्? सन्(), इट्(), "अतो लोपः" ६।४।४८ इत्यकारलोपः। "उब्जिजिषति" इति। "उब्ज आर्जवे" (धा।पा।१३०३)। "यदा बकारोपध उब्जरुपदिश्यते तदायं प्रतिषेधो वक्तव्यः। दकारोपदेशे तु न वक्तव्यः "न न्द्राः" इत्यनेनैव सिद्धत्वात्()। "बत्वं तु तदा दकारस्य विधातव्यम्()" इति। उब्जित, उब्जिजिषतीति यथा स्यात्()। तदपि बतद्वमकुत्वविषये विधातव्यम्(); अन्यथाऽभ्युद्गः, समुद्ग इति न सिध्येत्()। दकारोपधस्यैव युक्तः पाठः। बत्वमात्रं वक्तव्यम्()? तदपि न वक्तवयम्(); तत्र "भुजन्युब्जौ पाण्युपतापयोः" (७।३।६१) इति निपातनादेव लिङ्गाव्? बत्वं लभ्यते। न चाभ्युद्गः, समुद्ग इत्यत्रापि प्रसज्येत, अकृत्वविषयत्वान्निपातनस्य; यत्र कुत्वं नास्ति तत्रैव बत्वं विज्ञायते, न तु कुत्वविषये। "यकारपरस्य" इत्यादि। यकारः परो यस्मात्? तस्य प्रतिषेधो न स्यादित्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्र कैश्चिदेवं व्याख्यायते--बहिरङ्गो रेफः, "गुणोऽर्त्तिसंयोगाद्योः" ७।४।२९ "यङि च" ७।४।३० इति गुणोऽङ्गस्य विधीयमानो यङि भवति बहिरङ्गः, तदाश्रितो रेफोऽपि बहिरह्ग एव, ततश्च सोऽन्तरङ्गे प्रतिषेऽसद्धः। तस्मात्? तसय द्विर्वचनप्रतिषेधो न भवतीति। यद्येवम्(), इन्दिदिषतीति नुमोऽपि प्रतिषेधो न प्राप्नोतीति? नैष दोषः; वक्ष्यति ह्येतत्()--नुम्विषावुपदेशिवद्वचनमिति। नैयायिकास्त्वन्यथा वर्णयन्ति--"न न्द्राः संयोगादयः" ६।१।३ इति। तैः किमुक्तम्()? संयोगात्? पूर्वे नकारादयो न द्विरुच्यन्ते स चेद्भवति यकारान्तः संयोगः" इति तेनाराय्र्यत इत्यत्र संयोगस्य यकारान्तत्वात्? प्रतिषेधो न भवतीति। "अराय्र्यते" इति। "यङि च" ७।४।३० इति गुणे रपत्वे च र्यशब्दस्य द्विवचनम्(), हलादिशेषः ७।४।६० "दीर्घोऽकितः" ७।४।८३ इति दीर्घः। ननु चार्तेरहलादित्वाद्()यङा न भवितव्यम्(), स हि "धातोरेकाचः" (३।१।२२) इत्यादिना हलादेरेव धातोर्विधीयते? इत्याह--"अर्त्तेः" इत्यादि। "व्यञ्जनस्य" इति। ईष्र्यतेव्र्यञ्जनं यदेकाच्? द्विर्वचनं कत्र्तव्यम्()। तच्च व्यञ्जनं यकारः, तस्येटि कृते साच्कस्यैव द्विर्वचनं कत्र्तव्यमम्()। "एकाचः" इति। सनः। स हीटि कृते तृतीय एकाज्? भवति। तस्य द्विर्वचने कृते "सन्यतः" ७।४।७९ इतीत्त्वम्()। पूर्वं

पूर्वमिणमाश्रित्य सर्वसकाराणां षत्वम्()। "कण्डूयियिषति" इति। "असूयियिषति" इति। "कण्डूञ्()", "असूञ्()" इति कण्ड्वादिषु पठ()एते, ततः "कण्ड्वादिभ्यो यक्()" ३।१।२७। "वा नामधातूनाम्()" इति। सुब्धातुर्नामधातुरभिधीयते। "अ()आईयियिषति" इति। अ()आशब्दात्? क्यजन्तात्? सनीटि च कृते यिष्शब्दस्य द्विर्वचनम्()। "आशि()आईयिषति" इति। ()आईशब्दस्य द्विर्वचनम्(), ह्रस्वत्वम्(), हलादिशेषः ७।४।६०। "यथेष्टम्()" इति। प्रथमादीनामन्यतरस्य यस्येष्यते तस्य कत्र्तव्यमिति॥

बाल-मनोरमा

न न्द्राः संयोगादयः २७७, ६।१।३

न न्द्राः। "एकाचो द्वे प्रथमस्ये"त्यतो "द्वे" इत्यनुवर्तते। "अजादेर्द्वितीयस्ये"त्यतोऽजादेरिति। अञ्चासौ आदिश्चेति कर्मदारयात्पञ्चमी। न्, द्, र् एषां द्वन्द्वः। तदाह--अचः परा इति। ननु "णु"इत्यस्य द्वित्वे खण्डद्वयेऽपि णकारः श्रूयेतेत्यत आह-- नुशब्दस्य द्वित्वमिति। णत्वस्येति। धातुपाठे "ऊर्णु" इति नकारस्य कृतणत्वस्य निर्देशः, द्वित्वे कर्तव्ये तस्य णत्वस्याऽसिद्धत्वादित्यर्थः। लिङ्गादिति। "उभौ साभ्यासस्ये"त्यस्याऽयमर्थः--
साभ्यासस्याऽनितेरुपसर्गस्थान्निमित्तात्परौ खण्डद्वयगतौ नकारौ णत्वं प्राप्नुत इति। प्राणिणदित्युदाहरणम्। "अत्र अनिते"रिति णत्वे कृते "पूर्वत्रासिद्धीयमद्विर्वचने" इति णत्वस्याऽसिद्धत्वाऽभावमाश्रित्य "णी"त्यस्य द्वित्वादेव खण्डद्वये मकारश्रवणसिद्धेः "उभौ साभ्यासस्ये"ति वचनं "पूर्वत्रासिद्धीयमद्विर्वचने" इत्यस्याऽनित्यतां गमयतीत्यर्थः। ऊर्णुनावेति। नुशब्दस्य द्वित्वे पूर्वनकारस्य "रषाभ्या"मिति णत्वम्। द्वितीयस्य तु "अट्कुप्वा"ङिति न णत्वम्, "उभौ साभ्यासस्ये"ति लिङ्गादेव।

तत्त्व-बोधिनी

न न्द्राः संयोगादयः २४३, ६।१।३

न न्द्राः। अजादेरिति वर्तते। स च कर्मधारयः। आदिग्रहणस्य तु प्रकृतेऽनुप्रयोगः। तदेतदाह-- अचः परा इति। उन्दिदिषति। इन्दिदिषति। अड्डिडिषति। अर्चिचिषति। "न न्द्राः" इति किम्?। ईक्षतेः सनि ईचिक्षिषते। संयोगादयः किम्?। प्राणिणिशति। अरिरिषति। अचः पराः किम्?। इन्द्रीयितुमिच्छतीति क्यजन्तात्सनि इन्दिद्रीयिषति। इह नकारस्य द्वित्वाऽभावेऽपि दकारस्तु द्विरुच्यत एव, अचः परत्वाऽभावात्। नुशब्दस्येति। उपदेशे नकारएव, णत्वं तु "रषाभ्या"मित्यनेनेति भावः। पूर्वत्रासिद्धीयमिति। अत्र द्विर्वचनशब्देन षाष्ठ()आष्टमिकं चोभयं गृह्रते। तत्र षाष्ठस्य ऊढिमाख्यत् औडिढदित्युदाहरणम्। आष्टमिकस्य तु द्रोग्धा,द्रोग्धा, द्रोढा- द्रोढेति। इह त्रिपादीस्थं घत्वढत्वादिकं द्विर्वचने सिद्धमेव। असिद्धत्वे तु त्रिपादीस्थकार्यात्पूर्वमेव द्रोहता इत्यस्य द्वित्वे, पश्चात् "वाह द्रुहे" ति घत्वढत्वयोः प्रवृत्तौ द्रोग्धा द्रोढेत्यपि द्विर्वचनं कदाचित्स्यान्न तु द्रोग्धा-- द्रोग्धेति। समानजातीयस्यैव नियमेन द्विर्वचनं सिध्यति। किंच षट् सन्त इत्यत्र धस्य जश्त्वेन दकारे व्यक्तिभेदाद्दकारस्यापि द्वित्वं सुवचमेवेत्याहुः। अनित्यमित#इ। अत एव हतिशब्दस्य द्वित्वमौजिढदित्यपि नामधातुषु वक्ष्यति। उभौ साभ्यासस्येति। "अनिते" रित्यनेन णत्वं कृत्वा द्विर्वचने कृते प्राणिणत् प्राणिणिषतीति सिद्धमिति सूत्रमिदं ज्ञापकमित्यर्थः। एवं च "प्रणिनाये"त्यादौ द्वितीयस्य णत्वाऽभावः सिद्धः। विभाषोर्णोः। "गाङ्कुटादिभ्यः" इत्यतो ङिदिति, "विज इ" डित्यत इडिति चानुवर्तते इत्याशयेनाह-इडादिप्रत्यय इत्यादि। तेन गुणविकल्पे पक्षे उवङ्।

---

सूत्रम्

काशिका-वृत्तिः

पूर्वो ऽभ्यासः ६।१।४

द्वे इति प्रथमन्तं यदनुवर्तते तदर्थादिह षष्ठ्यन्तं जायते। तत्र प्रत्यासत्तेरस्मिन् प्रकरणे ये द्वे विहिते तयोर् यः पूर्वो ऽवयवः सो ऽभ्याससंज्ञो भवति। पपाच। पिपक्षति। पापच्यते। जुहोति। अपीपचत्। अभ्यासप्रदेशास् तु अत्र लोपो ऽभ्यासस्य ७।४।५८ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

पूर्वोऽभ्यासः ३९७, ६।१।४

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात्॥

न्यासः

पूर्वोऽभ्यासः। , ६।१।४

अभ्यासशब्दोऽयमावृत्तिवचनो लोके प्रसिद्ध एव। सा चावृततिः प्रथमस्य नास्तीत्यभ्यासप्रदेशेषु परस्य ग्रहणे प्राप्ते पूर्वस्य ग्रहणं यथा स्यावित्येवमर्थं तस्याभ्याससंज्ञा विधीयते। पूर्वशब्दोऽवयववचनः, यथा--पूर्वं कायस्य पशोरिति। अवयवाश्चावयविनो भवन्ति, स चेह यद्यपि न निर्दिश्यते, तथापि "द्वे" ६।१।१ इत्युनुवृत्तेस्तद्वाच्यस्यैवार्थस्य पूर्वो विज्ञायत इत्याह--"द्वे इति प्रथमन्तं यदनुवत्र्तते" इत्यादि। ननु च "द्वे" इति प्रथमन्तमनुवत्र्तते, षष्ठ()न्तेन चेहार्थः, न ह्रटन्यथा पूर्वशब्देन सम्भन्धः शक्यते दर्शयितुमित्यत आह--"तदर्थात्()" इत्यादि। अर्थाद्विभक्तिविपरिणामो भवतीति। तदिह षष्ठ()न्तं जयत इत्यर्थः। अथ पुनरत्रावयवावयविलक्षणा षष्ठी भवति, यथा वृक्षस्य शाखेति? एवमपि यदि "द्वे" इत्यनुवृत्तेद्र्वयोर्यः पूर्वस्तस्याभ्याससंज्ञा विधीयते तदा "सर्वस्य द्वे" ८।१।१ इत्यत्रापि प्रकारणे ये द्वे विहिते तयोर्यः पूर्वस्तस्याप्यभ्याससंज्ञा प्राप्नोतीत्यत आह--"तत्र" इत्यादि"। "पूर्वोऽवयवः" इति। पूर्वशब्दो व्यवस्थावचनोऽप्यस्ति, अतस्तद्व्यवच्छेदार्थमवयवग्रहणम्(), पपाचेत्यत्राभ्याससंज्ञायां सत्यां "ह्रस्वः ७।४।५९ इत्यभ्यासस्य ह्रस्वत्वम्(), हलादिशेषः ७।४।६०, प्रकृतिचरां प्रकृतिचरो भवन्तीति चत्र्वम्()। "पिपक्षति" इति। "जुहोति" इति पूर्ववद्धकारस्य चुत्वम्(), तस्य "अभ्यासे चर्च" ८।४।५३ चकारः। "अपिपचत्()" इति। पचेण्र्यन्ताच्()च्लेश्चङ्(), णिलोपः, "णौ चङ्युपधाया ह्रस्वः" ७।४।१ द्विर्वचनम्(), "सन्वल्लघुनि" ७।४।९३ इतीत्वम्(), "दीर्घो लघोः" ७।४।९४ इति दीर्घः। सर्वाण्यभ्याससंज्ञायाः प्रयोजनान्येतानि॥

बाल-मनोरमा

पूर्वोऽभ्यासः २७, ६।१।४

पूर्वः। अत्रेति। "एकाचो द्वे प्रथमस्ये"ति षाष्ठद्वित्वप्रकरम इत्यर्थः। तेन "सर्वस्य द्वे" इत्यादिविहितस्य द्वित्वस्य न सङ्ग्रहः। कस्य पूर्व इत्याकाङ्क्षायां "द्वे" इत्यनुवृत्तं षष्ठ()आ विपरिणतं संबध्यते। तदाह--ये द्वे विहिते तयोरिति।

तत्त्व-बोधिनी

पूर्वोऽभ्यासः २३, ६।१।४

"एकाचो द्वे" इति प्रकरणे।

---

सूत्रम्

काशिका-वृत्तिः

उभे अभ्यस्तम् ६।१।५

द्वे इति वर्तमाने उभेग्रहणं समुदायसञ्ज्ञाप्रतिपत्त्यर्थम्। ये एवे विहिते ते उभे अपि समुदिते अभ्यस्तसंज्ञे भवतः। ददति। ददत्। दधतु। उभेग्रहणं किम्? नेनिजति इत्यत्र अभ्यस्तानाम् आदिः इति समुदाये उदात्तत्वं यथा स्यात्, प्रत्येकं पर्यायेण वा मा भूतिति। अभ्यस्तप्रदेशाः अभ्यस्तानाम् आदिः ६।१।१८३ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

उभे अभ्यस्तम् ३४६, ६।१।५

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः॥ ,

न्यासः

उभे अभ्यस्तम्?। , ६।१।५

इह उभेग्रहणं संज्ञिनिर्देशार्थं क्रियते। स च संज्ञिनिर्देशः "द्वे" ६।१।१ इत्यनुवृत्तेरन्तरेणाप्युभेग्रहणं प्रकल्प्यत एव, तत्? किमर्थं द्वे इत्यनुवर्त्तमान उभेग्रहणं क्रियते? इत्यत आह--"द्वे इत्यनुवर्त्तमाने" इत्यादि। यद्युभेग्रहणं न क्रियेत, तदा प्रत्येकमभ्यस्तसंज्ञा प्रवर्तते। प्रत्येकमपि हि तयोः प्रवर्तमानासौ प्रवृत्तैव भवति। तथा हि द्वावानीयेयातामित्युक्ते प्रत्येकमप्यानयनेन तावानीतौ भवतः। तस्मात्? समुदाये संज्ञायाः प्रवृत्तिर्यथा स्यादेकैकस्य मा भूदित्येवमर्थमुभेग्रहणम्()। "समुदिते" इति। सहिते समुदाभूते इत्यर्थः। ननु च यत्राभ्यासः श्रूयते तत्रैव यथा स्यात्(), यत्र तु न श्रूयते तत्र मा भूत। ईप्सन्ति, ईप्सन्(), ऐप्सन्नित्यादौ विषये मा भूदित्येवमर्थमुभेग्रहणं स्यात्()? नैतदस्ति; अभ्यासग्रहणं ह्रनुवर्त्तते, तत्रैवमभिसम्बन्धः क्रियते---द्वे अभ्यस्तसंज्ञे भवतः, अभ्यासश्चेदस्तीति। एवच्च सति विनाप्यभेग्रहणं यत्राभ्यासः श्रूयते, तत्रैव भविष्यति, नान्यत्र। तस्माद्वृत्तिकारोपदर्शितमेवोभेग्रहणस्य प्रयोजनं युक्तम्()। "ददति" इति। ददातेर्लट्(), झि, शप्(), "जुहोत्यादिभ्यः श्लुः" २।४।७५ "श्लौ" ६।१।१० इति द्विर्वचनम्()। अत्राब्यस्तसंज्ञायां सत्यां "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपः, "अदभ्यस्तात्()" ७।१।४ इति झेरदादेशः। "दधातु" ["दधतु"--काशिका] इति। लोट्(), "एरुः" ३।४।८६ "समुदाय उदात्तत्वं यथा स्यात्()" इति। उभेग्रहणे ह्रसति प्रत्यकमभ्यस्तसंज्ञा स्यात्()। तस्मात्? "अभ्यस्तानामादिः" ६।१।१८३ इत्याद्युदात्तमपि प्रत्येकं स्यात्()। अथपि "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इति नास्ति यौगपद्यसम्भवः, एवमपि पर्यायेण स्यात्()? तस्मात्? "अम्यस्तानामादिः" (६।१।१८९) इत्येतत्? कार्यं समुदाये यथा स्यात्(), प्रत्येकं पर्यायेण वा मा भूदित्येवमर्थमुभेग्रहणम्()॥

बाल-मनोरमा

उभे अभ्यस्तम् , ६।१।५

"उगिदचा"मिति नुमि प्राप्ते "नाब्यस्ता"दिति तन्निषेधं वक्ष्यन्नभ्यस्तसंज्ञामाह--उभे अभ्यस्तम्। "एकाचो द्वे प्रथमस्ये"त्यतो "द्वे" इत्यनुवर्तते। "उबे"ग्रहणं समुदायप्रतिपत्त्यर्थम्। "द्वे" इत्यनेन च षष्ठाध्यायविहितमेव द्वित्वं विवक्षितम्, "अनन्तरस्य विधिर्वा प्रतिषेधो वा" इति न्यायात्। तदाह--षाष्ठेत्यादिना। समुदिते किम्?। नेनिजतीत्यत्र प्रत्येकमभ्यस्तसंज्ञायाम् "अभ्यस्तानामादिः" इत्युदात्तः प्रत्येकं स्यात्।

तत्त्व-बोधिनी

उभे अभ्यस्तम् ३७९, ६।१।५

"द्वे"इत्येनुवृत्त्यैव सिद्धे "उभे"ग्रहणं समुदजायप्रतिपत्त्यर्थमिति व्याचष्टे--उभे समुदिते इति। अन्यथा "नेनिजतीत्यत्र "अभ्यस्तानामादि"रित्याद्युदात्तत्वं प्रत्येकं पर्यायेण स्यात्।

सूत्रम्

काशिका-वृत्तिः

जक्षित्यादयः षट् ६।१।६

अभ्यस्तम् इति वर्तते। जक्ष इत्ययं धातुः इत्यादयश्च अन्ये षट् धातवः अभ्यस्तसंज्ञा भवन्ति। सेयं सप्तानां धातूनाम् अभ्यस्तसंज्ञा विधीयते। जक्ष भक्षहसन्योः इत्यतः प्रभृति वेवीङ् वेतिना तुल्ये इति यावत्। जक्षति। जाग्रति। दरिद्रति। चकासति। शासति। दीध्यते, वेव्यते इत्यत्र अभ्यस्तानाम् आदिः इत्येष स्वरः प्रयोजनम्। दीध्यतिति च शतरि व्यत्ययेन सम्पादिते न अभ्यस्ताच् छतुः ७।१।७८ इति नुमः प्रतिषेधः।

लघु-सिद्धान्त-कौमुदी

जक्षित्यादयः षट् ३४८, ६।१।६

षड्धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्, जक्षद्। जक्षतौ। जक्षतः॥ एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्॥ गुप्, गुब्। गुपौ। गुपः। गुब्भ्याम्॥ ,

न्यासः

जक्षित्यादयः षट्?। , ६।१।६

"जक्षित्यादयः" इति। एष निदशो जक्षेः श्तिबन्तस्यादिशब्देन बहुव्रीहावपि कृते भवति, द्वन्द्वेऽपि--यदा जक्षेरनजन्तस्येत्यादिशब्दस्य च द्वन्द्वः क्रियते। वाक्येऽपि यदानयोरनन्तरोक्तयोरुभयोरपि प्रयोगो भवति, तदा तत्र बहुव्रीहौ गृह्यमाणे यदि तद्गुणसंविज्ञानोऽयं बहुव्रीहिराश्रीयेत, तदा वेवीङो ग्रहणं न स्यात्(); अथातद्गुणसंविज्ञानोऽयम्(), तदा जक्षेर्न स्यादितीमं बहुव्रीहेराश्रयणे दोषं दृष्ट्वेतरयोः पक्षरोरन्यतरमाश्रित्याह--"जक्षित्ययं धातुरित्यादयश्च" इत्यादि अत्रेतिशब्देऽतिक्रान्तप्रत्यवमर्शी। जक्षित्ययं धातुरनन्तरमतिक्रान्त इति स एव तेन प्रत्यवमृश्यते। इति आदिर्येषां त इत्यादयः, जक्षादय इत्यर्थः। ते पुनर्जागृप्रभृतयो वेवीङ्पर्यन्ताः। "सेयं सप्तानां धातूनामभ्यस्तसंज्ञा" इति। जक्षित्येतदुपलक्षितानां जागर्तिप्रभृतीनां षण्णां जक्षितिरित्येतस्य च सप्तमस्य तेभ्यः पृथग्निर्दिष्टस्य। ननु च दीध्यते, वेव्यत इत्यत्रादादेशः "आत्मनेपदेष्वनतः" ७।१।५ इत्यनेनैव सिद्धः, शेषं चाभ्यस्त कार्यमाकारलोपादिकम्? तच्च दीधीवेव्योर्न सम्भवत्येव, तत्राकारलोपस्तावदाकारस्याभावान्न सम्भवति; जुस्भावोऽपि झेरभावात्(), नुम्प्रतिषेधोऽपि ङित्वादात्मनेपदित्वाच्छतुः, तत्? किमर्थमनयोरभ्यस्तसंज्ञा विधीयते? इत्याह--"दीध्यते वेव्यते" इत्यादि। "दीष्यदिति च शतरि" इत्यादिना प्रयोजनान्तरमपि दर्शयति। आत्मनेपदित्वादनयोर्व्यत्ययेन विना शता न सम्भवतीति व्यत्ययग्रहणम्()॥

बाल-मनोरमा

जक्षित्यादयः षट् , ६।१।६

अभ्यस्तसंज्ञायाश्च द्वित्वनिबन्धनत्वादिहाऽप्राप्ताविदमारभ्यते--जक्षित्यादयः। "अभ्यस्त"मित्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। तत्र जक्षितिरादिर्येषामिति तद्गुणसंविज्ञानबहुव्रीहौ सति जक्ष धातुमारभ्य षण्णामेव ग्रहणं स्यात्, वेवीङो न स्यात्। अतद्गुणसंविज्ञानबहुव्रीहौ तु जागृ इत्यारभ्य षण्णां ग्रहणं स्यान्नतु जक्षेः। अतो व्याचष्टे--षड्धातव इत्यादि। अत्र विवरणवाक्ये "जक्षिति"रिति श्तिपा निर्देशः। जक्षधातुरित्यर्थः। "रुदादिभ्यः सार्वधातुके" इति इडागमे रूपम्। सूत्रे जक्षिति पृथक्पदम्। इतिना जक्षिः परामृश्यते। इति आदिर्येषामित्यद्गुणसंविज्ञानबहुव्रीहिः। ततस्च "इत्यादयः षट्" इत्यनेन जक्षधातोरन्ये जागृ इत्यारभ्य षड् धातवो विवक्षिताः। चशब्दोऽध्याहार्यः। एवं च जक्षधातुश्च, जागृधातुमारभ्य

षड् धातवश्चेत्येव सप्त धातवोऽभ्यस्तसंज्ञकाः स्युरिति फलतीत्यर्थः। तदिदं भाष्ये स्पष्टम्। जक्षदिति। अभ्यस्तत्वान्नुम्निषेध इति भावः। ननु दीधीवेव्योर्ङित्वात् "अनुदात्तङित" इति आत्नेपरदसंज्ञक एव लटः शानजादेशः स्यान्न तु शत्रादेश इत्यत आह--दीधीवेव्योरिति। दीधीवेव्योश्छन्दोमात्रविषयत्वं तिङन्ताधिकारे वक्ष्यते। ततश्च "व्यत्ययो बहुव"मिति छान्दसं परस्मैपदम्। अतः शानजसंभवात् शत्रादेश एवेत्यर्थः। दीध्यद्वेव्यदिति। दीधी वेवी इत्याभ्यां लटः शत्रादेशे कृते शब्लुकि यणादेशः। अभ्यस्तत्वाच्च नुम्नेति भावः। इति तान्ताः। अथ पान्ताः। गुबिति। "गुपू रक्षणे" क्विप्। "आयादय आर्धधातुके वा" इति वैकल्पिकत्वादायप्रत्ययो नेति भावः। गुब्भ्यामिति। "स्वादिषु" इति पदत्वाद्भ्यामादौ जश्त्वमिति भावः। इति पान्ताः।

---

सूत्रम्

काशिका-वृत्तिः

तुजादीनां दीर्घो ऽभ्यासस्य ६।१।७

तुजादीनाम् इति प्रकारे आधिशब्दः। कश्च प्रकारः? तुजेर् दीर्घो ऽभ्यासस्य न विहितः, दृश्यते च। ये तथाभूताः ते तुजादयः, तेषाम् अभ्यासस्य दीर्घः साधुर् भवति। तूतुजानः। मामहानः। अनड्वान् दाधार। व्रतं मीमाय। दाधार। स तूताव दीर्घश्च एषां छन्दसि प्रत्ययविशेषे एव दृश्यते, ततो ऽन्यत्र न भवति। तुतोज शबलान् हरीन्।

न्यासः

तुजादीनां दीर्घोऽभ्यासस्य। , ६।१।७

आदिशब्दोऽयमस्त्येव व्यवस्थायाम्(), अस्ति च प्रकारे, तत्र यदि व्यवस्थायां वर्त्तमानो गृह्येत, तदा "तुज पिज हिंसायाम्()" (धा।पा।१५६६,१५६७) इत्यत आरभ्य ये पठितास्तेषामेव ग्रहणं स्यात्(); एवञ्च सौत्राणां गणान्तरपठितानाञ्च दीर्घो न स्यादित्येतदालोच्याह--"तुजादीनाम्()" इत्यादि। "प्रकार आदिशब्दः" इति। स च प्रकारोऽनिर्दिष्टत्वान्न ज्ञायत इति पृच्छति--"कश्च प्रकारः" इति। तुजो दीर्घत्वमित्यादिना प्रकारार्थत्वं दर्शयति। "ये तथाभूताः" इति। अनन्तरोक्तप्रकारमापन्ना इत्यर्थः। "दीर्घः साधुर्भवति" इति। एतेन सत एव दीर्घस्य साधुत्वमात्रमनेन क्रियते। न त्वपूर्वो दीर्घ इति दर्शयति। "तूतुजानः" इति। लिट्()। एतच्च प्रकारवाचिन आदिशब्दस्य परिग्रहाल्लभ्यते, तस्य कनाच्()। "मामहानः" इति। "मह पूजायाम्()" (धा।प।७३०) शेषं पूर्ववत्()। "दधान" [उदाहरणमिदं नास्ति--काशिका] इति। "डुधाञ्? धारणपोषणयोः" (धा।पा।१०९२)। "मीमाय" इति। "डुमिञ्? प्रक्षेपणे", (धा।पा।१२५०) लिट्? णल्()। "दधार" इति। "धृञ्? धारणे" (धा।पा।९००) "तूनाव" इति। "तु" इति सौत्रो धातुः; "तुरुस्तुशम्यम" ७।३।९५ इत्यादिसूत्रे पठितत्वात्()। "दीर्घश्चैषाम्()" इत्यादिना यस्य सत एव साधुत्वमनेन क्रियते, स च दीर्घश्छन्दस्येव दृश्यते, न भाषायाम्()। तत्रापि च्छन्दसि विषये प्रत्ययविषये कानजादौ, न प्रत्ययमात्रे। "ततोऽन्यत्र न भवति" इति। यथोक्ताद्विषयादन्यत्र न भवतीत्यर्थः। तुजेश्छन्दसि कानचि दृष्टः, ततोऽन्यत्र भाषायां छन्दस्यपि कानजादौ प्रत्ययान्तरे न भवति। यच्चैवं तेनास्यान्यत्राव्यापारः। सत एव दीर्घस्य साधुत्वमात्रमनेन विधीयते। न चान्यत्र दीर्घोऽस्ति यस्यानेन विधीयेत साधुत्वम्()। एतच्च प्रकारवाचिन आदिशब्दाल्लभ्यत इति। "तुतोज" इति। भाषायां प्रयोगः। यदि तर्हि च्छन्दसि सत एव दीर्घस्य साधुत्वमनेन विधीयते, "व्यत्ययो बहुलम्()" (३।१।८५) इत्यनेन सुब्व्यत्ययस्य विहितत्वादपार्थकमेतत्()? नापार्थकम्(); तस्यैव प्रपञ्चार्थत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

लिटि धातोरनभ्यासस्य ६।१।८

लिटि परतो ऽनभ्यासस्य धातोरवयवस्य प्रथमस्य एकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पपाच। पपाठ। प्रोर्णुनाव। वाच्य ऊर्णोर्णुवद्भावः इति वचनादूर्णोतेः इजादेः इति आम् न भवति। लिटि इति किम्? कर्ता। हर्ता। धातोः इति किम्? ससृवांसो विशृण्विरे इम इन्द्राय सुन्विरे अनभ्यासस्य इति किम्? कृष्णो नोनाव वृषभो यदीदम् नोनूयतेर्नोनाव। समान्या मरुतः संमिमिक्षुः। लिटि उसन्तः। द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्। यो जागार तमृचः कामयन्ते। दाति प्रियाणि इति।

लघु-सिद्धान्त-कौमुदी

लिटि धातोरनभ्यासस्य ३९६, ६।१।८

लिटि परेऽनभ्यासधात्ववयस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य। भूव् भूव् अ इति स्थिते --।

न्यासः

लिटि धातोरनभ्यासस्य। , ६।१।८

"एकाचो द्वे प्रथमस्य" ६।१।१ इति, "अजादेर्द्वितीयस्य" ६।१।२ इति चानुवत्र्तते। धातोरित्यवयवयोगा षष्ठी। सामानादिकरण्ये हि प्रथमस्य द्वितीयस्येति च सम्बन्धो नोपपद्यते। "अनभ्यासस्य" इति च प्रतिषेधाच्च। सामानाधिकरण्ये हि प्रतिषधोऽनर्थकः स्यात्(), न ह्रभ्यासवानेकाज धातुः सम्भवति। "यथायोगम्()" इति। हलादेः प्रथमस्यैकाचोऽवयवस्य, अजादेस्तु द्वितीयस्येत्येष यथायोगार्थः। "प्रोर्णनाव" इति। "ऊर्णुञ्? आच्छादने" (धा।पा।१०३९) "अजादेर्द्वितीयस्य" ६।१।२ इति नुशब्दस्य द्विर्वचनम्()। रेफस्य तु "न न्द्राः" ६।१।३ इति प्रतिषेधान्न भवति। ननु चोर्णोतेरिजादित्वात्? "इजादेश्च गुरुमतोऽनृच्छः" ३।१।३६ इत्यामि कृते "आमः" २।४।८१ इति लेर्लुक्(), "कृञ्चानुप्रयुज्यते लिटि" ३।१।४० इति कृञो लिट्()परस्यानुप्रयोगः, ततश्च प्रोर्णुवाञ्चकारेति भविष्यति, तत्कथं प्रोर्णनावेति? अत आह--"वाच्य ऊर्णोः" इत्यादि। नुवद्भावेन यथा नौतेराम्? न भवति, तथोर्णोतेरपीति दर्शयति। "विश्रृण्विरे" इति। "श्रु श्रवणे" (धा।पा।९४२) "लिटस्तझयोरेशिरैच्? ३।४।८१ इति इरेच्()। "छन्दस्युभयथा" ३।४।११७ इति लिटः सार्वधातुकत्वम्(), ततः "श्रुवः शृ च" ३।१।७४ इति श्नुः श्रृभावश्च। "हुश्नुवोः सार्वधातुके" ६।४।८७ इति यणादेशः। "सुन्विरे" इति। "षुञ्? अभिषवे" (धा।पा।१२४७)। धातुग्रहणादिह विकरणस्य द्विर्वचनं न भवति। यतस्तत्र धातुस्तस्य विकरणेन व्यवहितत्वान्न भवतीत्येके। छन्दसत्वादित्यपरे, "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (पु।प।पा।३५) इति। एतच्च "व्यवहितत्वान्नभवतीत्येके। छन्दसत्वादित्यपरे, "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (पु।प।पा।३५) इति। एतच्च "व्यत्ययो बहुलम्()" ३।१।८५ इत्यस्माद्बहुलग्रहणाल्लभ्यते। एवञ्च कृत्वा "द्विर्वचनप्रकरणे छन्दसि वा" (वा। ६५६) इत्येतन्न कत्र्तव्यं भवति। "नोनाव" इति। "णु स्तोतौ" (धा।पा।१०३५), यङ्, द्विर्वचनम्(), "गुणो यङ्लुकोः ७।४।८२ इति गुणः, "नोनूय" इति गुणः, "नोनूय" इति स्थिते "यङोऽचि च" २।४।७४ इति यङो लुक्(), लिट्()। "अमन्त्रे" ३।१।३५ इति निषेधाद्र भवति। "सस्मिमिक्षुः" इति। "मिह सेचने" (धा।पा।९९२), अतः सम्पूर्वात्? सन्? "हो ढः" ८।२।३१ इति ढत्वम्(), "षढोः कः सि" ८।२।४१ इति कत्वम्(), "एकाचः" ७।२।१० इत्यादिनेट्प्रतिषेधः "हलन्ताच्च" १।२।१० इति कित्वाद्गुणः, द्विर्वचनम्(), षत्वम्(); सम्मिमिक्ष इति स्थिते लिट्(), "अमन्त्रे" ३।१।३५ इति प्रतिषेधादाम्(), न भवति। झि, तस्य उस्(), अतो लोपः" ६।४।४८। "जागार" इति। लिट्()। "दाति" इति। श्लुः। वेति वचनात्? पक्षे जजागार, ददातीत्यपि भवति॥

बाल-मनोरमा

लिटि धातोरनभ्यासस्य २६, ६।१।८

लिटि धातोः। "एकाचो द्वे प्रथमस्ये"त्यधिकृतं। धातोरित्यवयवषष्ठी। तदाह---धात्ववयवस्येति। "एकाच" इति "प्रथमस्ये"ति च धात्ववयवस्य विशेषणम्। एकोऽच् यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। तथा च लिटि परेऽभ्यासभिन्नस्यैकाऽच्कस्य प्रथमस्य धात्वयवस्य द्वे उच्चारणे स्त इत्यर्थः। "एकाच"इत्यत्र कर्मधारयाश्रयणे तु पपाचेत्यादि न सिध्येदिति भाष्ये स्पष्टम्। "अजादेर्द्वितीयस्ये"त्यप्यधिकृतम्। तत्राऽच्चासावादिश्च अजादिः, तस्मादिति कर्मधारयात्पञ्चमी। तदाह-- आदिभूतादचः परस्य तु द्वितीयस्येति। "एकाच" इति शेषः। अजादिधात्ववयवस्य एकाचश्चेद्द्वित्वं तर्हि द्वितीयस्यैवैकाचो द्वित्वं नतु प्रथमस्येति यावत्। अत्र द्वे इत्यनन्तरमुच्चारणे इत्यध्याहृत्यैकाचः प्रथमस्येति कृद्योगलक्षमषष्ठी चाश्रित्य द्विः प्रयोग एवात्र विधीयते, न स्थानषष्ठीमाश्रित्यादेशपक्ष इति प्रकृतसूत्रभाष्ये प्रपञ्चितम्। "आदेशप्रत्यययो"रिति सूत्रभाष्येऽपि द्विःप्रयोगपक्ष एवोक्तः। तदिह विस्तरभयान्न लिखितम्। पपाच इयायेत्यादौ प्रथमत्वमेकाच्कत्वं च व्यपदेशिवत्त्वेन बोध्यम्। अजादेरिति बहुव्रीह्याश्रयणे तु इन्द्रमात्मन इच्छति इन्द्रीयति, इन्द्रीयित#उमिच्छति इन्दिद्रीयषतीत्यादौ "न न्द्राः संयोगादय" इति दकारस्य द्वित्वनिषेधश्च स्यत्, तत्राऽजादेरित्यनुवृत्तेः। धातोरिति किम्?। तदभावे हि लिटि परे यः प्रथम एकाच् तस्य द्वे इत्यर्थः स्यात्। एवं सति पपाचेत्यादावेव स्यान्न तु जजागारेत्यादाविति भाष्ये स्पष्टम्। न च पपाचेत्यादौ "लिटि धातो"रिति द्वित्वे कृते "लक्ष्ये लक्षणस्ये"ति न्यायेन पुनर्द्वित्वस्याऽप्रसक्तेनरनभ्यासग्रहमं व्यर्थमिति वाच्यं, यङन्तात् "सन्यङो"रिति यङ्निमित्तकद्वित्वविशिष्टत्वात्सनि सन्निमित्तकद्वित्वनिवृत्तये, सन्नन्तात् "सन्यङो"रिति कृतद्वित्वाण्णिचि लुङि चङि कृते "चङी"ति द्वित्वनिवृत्तये चाऽनभ्यासग्रहणस्यावश्यकत्वात्। भाष्ये तु-- "कृष्णो नोनाव वृषभो यदीद"मित्यादौ नुधातोर्यङन्तात् "सन्यङो"रिति कृतद्वित्वान्नोनूयेत्यस्माल्लिटि "कास्प्रत्ययादाममन्त्रे लिटी"ति मन्त्रपर्युदासादामभावे "यस्य हल" इति यकारलोपे अतो तिपो णलि वृद्धावावादेशो नोनावेत्यत्र यङन्तात्सनि, सन्नन्ताण्णिचि चङि च प्रयोगो लोके नास्त्येवेति तदाशय इति शब्देन्दुशेखरे स्पष्टम्। प्रकृते च भूव् अ इत्यत्र चत्वार एकाचः। तत्र "भू" इति प्रथमः, "ऊ"विति द्वितीयः, "ऊ" इति व्यपदेशिवद्भावेन तृतीय एकाच्, "भू"विति समुदायस्तु चतुर्थः। तत्र समुदाये द्विरुच्यमाने सर्वेऽवयवा द्विरुच्यन्त इति "भू"विति समुदायस्यैव द्विर्वचनमिति भाष्ये स्पष्टं। तदाह--भूव् भूव् अ इति स्थित इति। अत्र "भू"वित्यस्य एकाचो धात्ववयवत्वं प्रथमत्वं च व्यपदेशिवत्त्वाद्बोध्यम्।

तत्त्व-बोधिनी

लिटि धातोरनभ्यासस्य २२, ६।१।८

तदाह-- आदिभूतादचः परस्य त्विति॥ भूव्भूविति। यद्यप्यत्र धात्ववयवत्वं प्राथम्यं च न सङ्गच्छते, तथापि व्यपदेशिवद्भावेन तद्बोध्यम्। नन्विह चत्वार एकाचस्तत्रावयवास्त्रयः, तत्र भू, ऊ, ऊविति। भूविति समुदायश्चतुर्थः। तथा चाऽनियमेन यस्य कस्यचिद्द्वित्वं स्यात्। मैवम्। समुदायस्यैकाच एव द्विर्वचनस्य न्याय्यत्वात्, तस्मिन्हि द्विरुच्यमाने अवयवा अपि द्विरुच्यन्त एव, वृक्षचलनेन सर्वावयवचलनवत्॥

---

सूत्रम्

काशिका-वृत्तिः

सन्यङोः ६।१।९

धातोरनभ्यासस्य इति वर्तते। सन्यङोः इति च षष्ठ्यन्तम् एतत्। सनन्तस्य यङन्तस्य च अनभ्यासस्य धातोरवयवस्य प्रथमस्य एकाचो द्वितीयस्य वा यथायोगं द्वे भवतः। पिपक्षति। पिपतिषति। अरिरिषति। उन्दिदिषति। यङन्तस्य पापच्यते। अटाट्यते। यायज्यते। अरार्यते। प्रोर्णोनूयते। अनभ्यासस्य इत्येव जुगुप्सिषते। लोलूयिषते।

लघु-सिद्धान्त-कौमुदी

सन्यङोः ७०९, ६।१।९

सन्नन्तस्य यङन्तस्य च धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। सन्यतः। पठितुमिच्छति पिपठिषति। कर्मणः किम्? गमनेनेच्छति। समान कर्तृकात् किम्? शिष्याः पठन्त्वितीच्छति गुरुः। वा ग्रहणाद्वाक्यमपि॥ लुङ्सनोर्घसॢ॥

बाल-मनोरमा

सन्यङोः २३१, ६।१।९

सन्यङोः। अवयवषष्ठ()एषा। प्रत्ययत्वात्तदन्तग्रहणम्। "एकाचो द्वे प्रथमस्ये"ति "अजादेर्द्वितीयस्ये"ति चाधिकृतं। तदाह--सन्नन्तस्येत्यादिना। "सनि यङि च परे" इति तु न व्याख्येयम्, तथा सति प्रतिपर्वादिणः सनि अटधातोर्यङि च प्रतीषिषति, अटाट()ते इत्यत्र प्रत्ययसहितस्य द्वित्वाऽनापत्तेः। अभ्यासकार्यमिति। हलादिशेषादिकमित्यर्थः। गुपिप्रभृतय इति। कितधातुभिन्ना गुप्तिजमानबधाश्चत्वारो "गुपेनिन्दाया"मित्यादिनिबद्धनिन्दाद्यर्थका एव अनुदात्तेतः सन्भाज इत्यर्थः। कितधातुस्तु परस्मैपदिषु पठिष्यमाणत्वादुदात्तेदेव सन् व्याधिप्रतिकारादिषु पञ्चस्वेवार्थेषु सन्भागिति भावः। दानशानौ त्विति। "दान खण्डने" "शान तेजने" इति धातू स्वरितेतावेव सन्तौ आर्जवे निशाने चाऽर्थे सन्भाजावित्यर्थः, तयोरनुपदमेव स्वरितेत्सु पाठादिति भावः। एते नित्यं सन्नन्ता इति। एते गुप्तिजादयः सप्त धातवो "गुपेर्निन्दाया"मित्यादिनिबद्धेष्वर्थेषु नित्यं सन्नन्ताः। निन्द्याद्यर्थकत्वे सनं विना एषां प्रयोगो नास्तीत्यर्थः। अर्थान्तरेषु तविति। निन्दादिभ्योऽन्येषु धातुपाठनिर्दिष्टेषु तदन्येषु चार्थेषु अनुदात्तानुबन्धहिताः सन्तश्चौरादिका एव भवन्ति, न तु भौवादिका इत्यर्थः। चुरादिष्वेतेषामनुदात्तानुबन्धकत्वे अनुबन्धकरणस्य केवलेष्वचरितार्थतया ण्यन्तादकर्तृगेऽपि फले तङ् स्यादिति भावः। नन्वेवं सति भ्वादिगणे गुपादेरनुदात्तानुबन्धकरणं व्यर्थम्, उक्तरीत्या गोपनाद्यर्थकानामेषामनुबन्धरहितचौरादिकत्वनियमेन, निन्दाद्यर्थेषु सन्नन्तनियमेन च ततोऽन्यत्र प्रयोगाऽभावादित्यत आह--अनुबन्धकस्येति। गुपादिषु केवलेष्वनुबन्धनिर्देशस्य निष्पलतया अनुबन्धनिर्देशस्य सन्नन्तार्थत्वं विज्ञायत इतिकृत्वा सन्नन्तात्तङित्यर्थः। नचैवमपि भ्वादिगणे एषां गोपनाद्यर्थनिर्देशो व्यर्थ एवेति वाच्यं, भ्वादौ तदर्थनिर्देशस्य अपाणिनीयत्वादिति भावः तदुक्तं भाष्ये--
"गुपादिष्वनुबन्धकरणसामर्थ्यात्सन्नन्तादात्मनेपद"मिति। अत्र सन्नन्तादात्मनेपदमित्यक्त्वा केवलानामेषां शब्विकरणानां नास्ति प्रयोग इति सूचितम्। तथा चुरादिष्वेषामनुदात्तानुबन्धराहित्यपि सूचितम्। अन्यथा अनुबन्धकरणस्य केवलेष्वचरितार्थत्वात्सन्नन्तादिव ण्यन्तादपि अकर्तृगे फले आत्मनेपदार्थत्वापातत्सन्नन्तादात्मनेपदमित्युक्तिरसङ्गता स्यादित्यन्यत्र विस्तरः। धातोरितीति। "आद्र्धधातुकं शेषः" इत्यत्र धातोर्विहितः प्रत्यय इति व#इहितविशेषणाश्रयणात्सनश्चास्य धात्वधिकारविहितत्वाऽभावान्नाद्र्धधातुकत्वमित्यर्थः। तेनेति। सन आद्र्धधातुकत्वाऽभावेनेत्यर्थः। जुगुप्सते इति। निन्दतीत्यर्थः। गुपेः सनि अनाद्र्धधातुकत्वादिड्()गुणेयोरभावे "सन्यङो"रिति द्वित्वे हलादिशेषेऽभ्यासचुत्वमिति भावः। जुगुप्सांचक्रे इति। "कास्प्रत्यया"दित्याम्। जुगुप्सिता। जुगुप्सिष्यते। जुगुप्सताम्। अजुगुप्सत। जुगुप्सेत। जुगुप्सिषीष्ट। अजुगुप्सिष्ट। अजुगुप्सिष्यत। तितिक्षते इति। तिक्ष्णीकरोतीत्यर्थः। मान्धातोः सनिद्वित्वे हलादिशेषे अभ्यासह्रस्वे "सन्यतः" इति इत्त्वे "मान्बधे" त्यभ्यासदीर्घे, "नश्चे"त्यनुस्वारे, मीमांसधातोर्लडादीति भावः। बधधातोः सनि विशेषमाह-- भष्भाव इति। बकारस्य भकार इत्यर्थः। चत्र्वमिति। धस्य तकार इत्यर्थः। तथा च "भत्से"ति सन्नन्तं संपन्नम्। बीभत्सते इति। भष्त्वचत्र्वयोरसिद्धत्वात् बध् इत्यस्य द्वित्वे हलादिशेषे "सन्यतः" इति इत्त्वे "मान्बधे"ति दीर्घे बीभत्सधातोर्लडादिति भावः। तदेवं गुपादिषु सप्तसु सन्नन्तेषु अत्र क्रमे धातुपाठे निबद्धाश्चत्वार उदाह्रताः।

कितमानशानधातवस्तु अनुपदमेव धातुपाठक्रमे पठिष्यमाणास्तत्र तत्रोदाहरिष्यन्ते। रभ राभस्ये इति। अनिडयम्। राभस्यं--शीघ्रीभावः। आङ्पूर्वकस्तु प्रारम्भर्थकः। तदाह--आरभते इति। रब्धेति। "झषस्तथो"रिति धत्वं, भस्य जश्त्वम्। रप्स्यत इति। रभताम्। अरभत। रभेत। रप्सीष्ट। अरब्ध। अरप्स्यत। डु लभषिति। डुरित् षकारश्च। "ड्वितः क्त्रिः" "षिद्भिदादिभ्यो"ऽङिति प्रयोजनम्। अनिट्। रभधातुवद्रूपाणि। ष्वञ्ज परिष्वङ्गे इति। षोपदेशोऽयमनिट्।

तत्त्व-बोधिनी

सन्यङोः २०३, ६।१।९

सन्यङोः। सप्तमीमाश्रित्य सनि यङि च परे इति व्याख्यायां-- "प्रतीषिषति," "अटाट()ते" इत्यादि न सिध्येत्, सन्यङोः प्रकृतिभागस्यैव द्वित्वप्रसक्तेरत आह-- सन्नन्तस्येति। ननु सप्तमीपक्षेऽपि सन्यङोरेव द्वित्वं स्यान्न तु प्रकृतिभागस्य, शपोऽकारेणैव जुगुप्सते तितिक्षते इत्यादिरूपसिद्धेस्तयोरकारोच्चारणस्य "अजादेर्द्वितीयस्ये"ति द्वित्वार्थत्वात्। यद्यपि निमित्तस्य कार्यित्वस्वीकारे आट आटतुरित्यादौ। लिटि परतः पूर्वभागमात्रस्य द्वित्वं न सिध्येत्तथाप्यकारोच्चारणसामर्थ्यात्सन्यङोः कार्यित्वमभ्युपगन्तुं शक्यमिति चेन्मैवम्।अकारफलानां बहूनां सत्त्वात्। तथाहि---- दित्स्यं धित्स्यमित्यत्राऽचो यति कृते "यतोऽनावः" इत्याद्युदात्तः सिध्यति। अकाराऽभावे तु "ऋहलो"रिति ण्यतीष्टस्वरो न सिध्येत्। किंच "पिपठिषि ब्राआह्मणकुलानी"त्यत्राऽल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न भवति, अकाराऽभावे तु स्यादेव नुम्। अपिच "पापचक" इत्यादावल्लोपस्य स्थानिवत्त्वात् "अत उपधायाः" इति वृद्धिर्न प्रवर्तते। अपि च "यस्य हलः" इत्यत्र यस्येति सङ्घातग्रहणमहर्यीदित्यादौ यलोपव्यावृत्त्यर्थमिति सर्वसंमतम्। तथा च "अपापचिष्टे" त्यादौ यलोपोऽप्यकारफलमिति "सन्यङो" रिति षष्ठ()एव युक्ता। एवं हि यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वं सिध्यति। परसप्तम्यां तु द्वित्वस्याऽङ्गकार्यत्वात् "न लुमते" ति निषेधः प्रवर्तेतेति दिक्। दानशानौ चेति। आर्जवनिशानार्थविति भावः। अर्थान्तरे त्विति। धातुपाठोपात्ते गोपनादिरूपेऽर्थे इत्यर्थः। अननुबन्धका इति। सानुबन्धकत्वे तु केवलेऽचरितार्थत्वादऽनुबन्धस्य सन्नन्तादिवाऽकर्तृगफलाण्ण्यन्तादपि तङ् स्यादिति भावः। एवं चानुपूर्वीमात्रसाम्येऽपि भ्वादयश्चुरादिभ्यो भिन्ना एवेति फलितम्। इङ्गुणौ नेति। यद्यपि "हलन्ताच्चे"ति सनः कित्त्वेनापि गुणाऽभावः सुसाधस्ततापीडभावार्थमुक्तहेतुरेवाश्रयणीय इति किं हेत्वन्तराश्रयणेनेति भावः। केचित्तु अर्थवद्ग्रहणपरिभाषया इच्छासन एव "हलन्चाच्चे"ति सूत्रे ग्रहणमिति नाऽस्य स्वार्थसनः कित्त्वमित्याहुः। रभ राभस्ये। राभस्यमुपक्रमः। लिटि रेभे। रेभाते। लुङि अरब्ध। अरप्साताम्। डुलभष्। "ड्वितः क्त्रिः" लप्त्रिमम्। "षिद्भिदादिभ्य" इत्यङ्। लभा। लिटि-- लेभे। लुङि--अलब्ध।

---

सूत्रम्

काशिका-वृत्तिः

श्लौ ६।१।१०

श्लौ परतः अनभ्यासस्य धातोरवयवस्य प्रथमस्य एकाचो द्वितियस्य वा यथायोगं द्वे भवतः। जुहोति। बिभेति। जिह्रेति।

लघु-सिद्धान्त-कौमुदी

श्लौ ६०८, ६।१।१०

धातोर्द्वे स्तः। जुहोति। जुहुतः।

न्यासः

श्लौ। , ६।१।१०

"क्ष्नौ परतः" इति। ननु च प्रत्ययादर्शननं श्लुः, तच्चाभावरूपम्(), न चाभावे पौर्वापर्यमस्ति, तदुयुक्तमुक्तम्? श्लौ परत इति? स्थानिनः परत्त्वात्त्स्यापि तद्()द्वारेण पौर्वापर्यमौपचारिकं गृहीत्वैव युक्तमुक्तमित्यदोषः॥

बाल-मनोरमा

श्लौ ३२०, ६।१।१०

शेषं पूरयति--धातोद्र्वे स्त इति। "एकाचो द्वे"इत्यतो "लिटि धातो"इत्यतश्च तदनुवृत्तेरिति भावः। द्वित्वे कृते अभ्यासकार्यमभिप्रेत्य आह--जुहोतीति। यणिति। उवङ्पवाद इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

चङि ६।१।११

चङि परतो ऽनभ्यासस्य धातोरवयवस्य प्रथमस्य एकाचो द्वितीयस्य वा यथायोगम् द्वे भवतः। अपीपचत्। अपीपठत्। आटिटत्। आशिशत्। आर्दिदत्। पचादीनां ण्यनतानाम् चङि कृते णिलोपः, उपधाह्रस्वत्वं, द्विर्वचनम् इत्येषां कार्याणां प्रवृत्तिक्रमः। तथा च सन्वल्लघुनि चङ्परे इति सन्वद्भावो विधीयमानो ह्रस्वस्य स्थानिवद्भावान् न प्रतिषिध्यते। यो ह्यनादिष्टादचः पूर्वः तस्य विधिं प्रति स्थानिवद्भावो भवति। न च अस्मिन् कार्याणां क्रमेणानिष्टादचः पूर्वो ऽभ्यासो भवति इति। आटिटतिति द्विर्वचने ऽचि १।१।५८ इति स्थानिवद्भावात् द्वितीयस्य एकाचः द्विर्वचनं भवति।

लघु-सिद्धान्त-कौमुदी

चङि ५३३, ६।१।११

चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य॥

न्यासः

चङि। , ६।१।११

"अपीपचत्()" इत्यादि। पचादिभ्यो ण्यन्तेभ्यो लुङ्(), अडागमः, च्लिः, "णिश्रि" ३।१।४८ इत्यादिना च्लेश्चङ्()। अत्रेदानीं द्विर्वचनं प्राप्नोति णिलोपश्च; द्वयोरपि कृताकृतप्रसङ्गित्वान्नित्यत्वम्(), ततश्चोभयोस्तुल्यबलत्वात्? परत्वाण्णिलोपः। "आटिटत्()" इति। अत्रापि णिलोपे कृते णिलोपस्य स्थानिवत्वादद्विर्वचनं भवत्येव। स्थानिवद्भावस्तु "द्विर्वचनेऽचि" १।१।५८ इत्यनेन। णिलोपोऽपि नित्यः, अकृतेऽपि द्विर्वचने तेन भवितव्यम्(), कृतेऽपि। न च शब्दान्तरप्राप्तिः, द्विष्प्रयोगो द्विर्वचनं भवतीति कृत्वा। स्थाने द्विर्वचनं त्वत्र न स्वीक्रियते; लक्ष्यानुरोधात्()। ततश्चोभयोस्तुल्यबलयोः परत्वाणिणलोपः। तत्र कृते द्विर्वचनं प्राप्नोत्युपधाह्यस्वश्च; तयोरपि कृताकृतप्रसङ्गित्वान्नित्यत्वम्()। द्विर्वचनमपि ह्रकृते ह्यस्वत्वे प्राप्नोति, कृतेऽपि। न च शब्दान्तरप्राप्तिः; "एकदेशविकृतमनन्यवद्भवति" (व्या।प।१६) इति वचनात्()। ह्यस्वत्वमपि कृते द्विर्वचने प्राप्नोत्यकृतेऽपि। न च शब्दान्तरप्राप्तिः, स एव शब्दो द्विरुच्यत इति कृत्वा। स्थाने द्विर्वचनं त्वत्र नाश्रीयते; लक्ष्यानुरोधात्()। तत्रोभयोस्तुल्यबलयोः परत्वाद्? ह्यस्वत्वम्(), ततो द्विर्वचनेन "सन्वल्लघुनि" ७।४।९३ इति सन्वद्भावादित्वम्(), "दीर्घो लघोः" ७।४।९४ इति दीर्घः--इत्येतानि काय्र्याणि कत्र्तव्यानि। अत एवाह वृत्तौ--"पचादीनाम्()" इत्यादि। किं पुनः कारणं तथा शास्त्रप्रवृत्तिः क्रियते, यथैषां कार्याणामयं प्रवृत्तिक्रमो भवति? इत्याह--"तथा च" इत्यादि। "ह्यस्वस्य स्थानिवद्भावान्न प्रतिषिध्यते" इति। तस्याभावादिति भावः। ह#एतौ चेयं पञ्चमी। यथा--"तदशिष्यं संज्ञाप्रमाणत्वात्()" १।२।५३ इति। अत्र हि "सन्वल्लधुनि" ७।४।९३ इत्यादिना लघुनि धात्वक्षरे परे सन्दद्भावो विधीयमानो ह्यस्वस्य स्थानिवद्भावाद्धेतोः प्रतिषिष्यते, तस्मिन्? सति लघुता निवत्र्तत इति

कृत्वा। स चास्मिन्? क्रमे सति स्थानिवद्भावो न सम्भवतति सन्वद्भावो न प्रतिषिध्यते; प्रतिबन्धहेतोरभावात्()। कथं पुनरस्मिन्? क्रमे सति कार्याणां स्थानिवद्भावो न सम्भवतीत्याह--"यो ह्यनादिष्टात्()" इत्यादि। "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इत्यत्र यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवतीत्येष सूत्रार्थो व्यवस्थितः। न चास्मिन्? क्रमे सत्यत्राभ्यासोऽनादिष्टदचः पूर्वो भवति, किं तर्हि? आदिष्टादेव। तेन तस्य विधौ कत्र्तव्ये ह्यस्वस्य स्थानिवद्भावो न भवतीति लघुत्वं न निवत्र्तते। ततश्च "सन्वत्()" ७।४।९३ इत्यादिना लघुनिमित्तकः सन्वद्भावो विधीयमानो न व्याहन्यते। यदि पुनर्द्विर्वचनं कृत्वा ह्यस्वादिकार्यं विधीयते ततोऽनादिष्टादचः पूर्वोऽभ्यासः स्यात्(), ततश्च तस्य विधौ कत्र्तव्ये ह्यस्वस्य स्थानिवद्भावः स्यादेव। एवं "दीर्घञ्च" १।४।१२ इति लब्धस्वभावया गुरुसंज्ञया लघुसंज्ञायां निस्तायां सन्वद्भावोऽयन्त्र सावकाश इह न स्यात्()। कः पुनस्तस्यावकाशः? अशीशमदित्यादि। अत्र हि णौ परभूते प्रागेव "मितां ह्यस्वः" ६।४।९२ विधीयते। यदि तह्र्ययं कार्यक्रमः, आटिटदित्यत्र णिलापे कृते द्वितीयस्यैकाचष्टिशब्दस्य द्विर्वचनं न प्राप्नोति; तदभावात्()? इत्यत आह--"आटिटदित्यत्र द्विर्वचनेऽचि" इत्यादि। अथ किमर्थमेतानि त्रीणि सूत्राणि पृथक्? क्रियन्ते--"लिटि धातोरनभ्यासस्य", "श्लौ", "चङि" इति, न "लिङ्श्लुचङ्क्षु" इत्येक एव योगः क्रियताम्(); तत्रायमप्यर्थः--पुनः पुनर्विभक्तिर्नोच्चार यितव्या, लिटि श्लौ च द्विर्वचनम्()? तदनित्यमिति ज्ञापनार्थं पृथग्योकरणम्()। तेन "यो जागार तमृचः कामयन्ते" "दाति प्रियाणि" "धाति प्रियाणि" इत्यत्र न भवति द्विर्वचनम्(), ततश्च "द्विर्वचनप्रकरणे छन्दसि वा" (वा।६५६) इत्येतन्न कत्र्तव्यं भवति॥

न्यासः

अकः सवर्णे दीर्घः। , ६।१।११

"अग्नये" इति। परत्वात्? "घेङिति" ७।३।१११ इति गुणे कृतेऽगभावादत्र न भवति। "दध्यत्र" इति। ननु च यणादेशोऽत्र बाधको भविष्यति, तत्? किमेतन्निवृत्यर्थेन सवर्णग्रहणेन? इहापि तर्हि बाधकः स्यात्()--दधीन्द्रः, मधूष्णमिति। तस्माद्विषयविभागार्थं सवरणग्रहणं कत्र्तव्यम्()। "कुमारी शेते" इति। अत्र "इचुयशास्तालव्याः" इति, "विवृत्तं करणमूष्मणां स्वराणां च" इतीकारस्य सवर्णः शकारो यद्यपि भवति, तथाप्यज्ग्रहणानुवृत्तेर्न भवति। न च सावण्र्यमप्यत्र नास्ति। "नाज्झलौ" इत्यत्र "अणुदित्? सवर्णस्य चाप्रत्ययः" (१।१।६९) इत्येतत्? ग्रहणकशास्त्रमभिनिर्वृत्तं स्यात्(), एवमिकारो गुह्रमाण ईकारस्यापि ग्राहको भवति, ततश्च हि शास्त्रस्य सवर्णसंज्ञाङ्गं निमित्तम्(), ततो यावत्? सा न प्रवत्र्तते तावदङ्गवैकल्याद्ग्रहमकशास्त्रमनभिनिर्वृत्तम्(), एवं सवर्णसंज्ञापि यावदपवादो नाभिनिर्वृत्तो भवति, तावत् क्व मया प्रवर्त्तितव्यमिति स्वविषयमजानाना न प्रवर्तते, ततो "नाज्झलौ" इत्यस्यापवादस्यानाभिनिर्वृत्तत्वात्? सवर्णसंज्ञा न प्रवर्तते। तेनाङ्गवैकल्याद्ग्रहणकशास्त्रमपरिनिष्पन्नम्(), अतोऽकः सवर्णा गृह्नन्ते, तेनागृहीतसवर्णानामेव प्रत्यहारसन्निविष्टानामयं प्रतिषेधः। न चायमीकरोऽक्षु सन्निविष्ट #इति नासौ "नाज्झलौ" इत्याजिति प्रत्याहारग्रहणेन गृह्नते। तेन सवर्णत्वमीकारशकारयोरप्रतिषिद्धम्()। "होल्ल्लृकारः, होतृ()कारः" इति। कथं पुनरत्र दीर्घत्वम्(), यावता ऋकारलृकारयोर्भिन्नस्थानत्वात्? सवर्णसंज्ञा नास्ति? इत्यत आह--"ऋकारलृकारयोः सवर्मसंज्ञाविधिरुक्तः" इति। ननु च ऋकारलृकारसमुदायोऽत्र स्थानीति तस्यैव योऽन्तरतमसतेनैव युकतमादेशेन भवितुम्(), न च ऋकारसतस्यान्तरतमस्तत्? कथं स भवति? इत्यत आह--"दीर्घपक्षे तु" इत्यादि। समुदायान्तरतमस्याभावादिति। ऋकारलृकारसमुदायोऽत्रि स्थानी, तस्य चान्तरतमो दीर्घो न सम्भवतीत्यवयवस्य योऽन्तरतस्तेनैव युक्तमादेशेन भत्रितुम्()। तत्रापि लृकारस्य दीर्घो न सम्भवतीति ऋकारस्य योऽन्तरतमो दीर्घः स एव ऋकारो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

दाश्वान् साह्वान् मीड्वांश् च ६।१।१२

दाश्वान् साह्वान् मीड्वानित्येते शदाः छन्दसि भाषायाम् च अविशेषेण निपायने। दाश्वानिति दाशृ दाने इत्येतस्य धातोः क्वसौ अद्विर्वचनम् अनिट्त्वं च निपात्यते। दाश्वांसो दाशुषः सुतम् इति। साह्वानिति षह मर्षणे इत्येतस्य परस्मैपदम्, उपधादीर्घत्वम्, अद्विर्वचनम् अनिट्त्वं च निपातनात्। साह्वान् बलाहकः। मीड्वानिति मिह सेचने इत्येतस्य अद्विर्वचनम्, अनिट्त्वम्, उपधादीर्घत्वं ढत्वं च निपातनात्। मीड्वस्तोकाय तनयाय मृल। एकवचनम् अतन्त्रम्। कृञादीनां के द्वे भवत इति वक्तव्यम्। क्रियते ऽनेन इति चक्रम्। चिक्लिदम्। कृञः क्लिदेश्च घञर्थे कविधानम् इति कः प्रत्ययः। चरिचलिपतिवदीनां द्वित्वमच्याक् च अभ्यासस्य। चरादीनां धातूनाम् अपि प्रत्यये परतः द्वे भवतः। अभ्यासस्य आगागमो भवति। आगागमविधानसामर्थ्याच् च हलादिशेषो न भवति। हलादिशेषे हि सयागमस्य आदेशस्य च विशेषो न अस्ति। चराचरः। चलाचल। पतापतः। वचावदः। वेति वक्तव्यम्। तेन चरः पुरुषः, चलो रथः , पतं यानम्, वदो मनुष्यः इत्येवम् आदि सिद्धं भवति। हन्तेर् घत्वं च। हन्तेरचि प्रत्यये परतो द्वे भवतः, अभ्यासस्य च हकारस्य च घत्वम्, आक् चागमो भवति। परस्य अभ्यासाच् च ७।३।५५ इति कुत्वम् घनाघनः क्षोभणश्चर्षणीनाम्। पाटेर् णिलुक् चोक् च दीर्घश्च अभ्यासस्य। पाटेरचि परतो द्वे भवतो णिलुक् च भवति। अभ्यासस्य च ऊगागमो दीर्घश्च भवति। पाटूपटः।

न्यासः

दा�आआन्? साह्वान्? मीढ्वांश्च। , ६।१।१२

"अविशेषेण निपात्यन्ते" इति। विशेषानुपादानात्()। "अनिट्त्वं च" इति। "वस्वेकाजाद्घसाम्()" (७।२।६७) इतीट्? प्राप्नोति, अतस्तदभावो निपात्यते। ननु च कृतद्विर्वचनानामेकाचामिङ् विधास्यते, अयंचाकृतद्विर्वचनमेकाज्? भवति; अकृतद्विर्वचनत्वात्(), तदयुक्तमनिट्त्वनिपातनम्()? नैतदस्ति; लिटि हि श्रूयमाणैकाजुपलक्षणार्थं तत्र कृतद्विर्वचनग्रहणं कृतम्()। अस्ति चात्र लिटि श्रूयमाणैकाच्त्वमिति कात्रायुक्तता? "परस्मैपदम्()" इति। सहेरात्मनेपदित्वात्? परस्मैपदं न प्राप्नोतीत्यतस्तन्निपात्यते। किं पुनः समाश्र्यमित्याह--"हलादिशेषः" इत्यादि। यदि हलादिशेषः स्यात्(), एवञ्च सत्यामाकारादेशमेव कुर्यात्(), न हि हलादिशेषे सत्यागमस्यादेशस्य वा विशोषोऽस्ति। णिलुक्चेति। "णेरनिटि" ६।४।५१ इति णिलोपे सिद्धे लुग्वचनं प्रत्ययलक्षणेनोपधावृद्धिर्माभूदित्येवमर्थम्()। लोपे हि सति प्रत्यलक्षमेनोपधावृद्धिः स्यात्(), लुकि तु "न लुयताङ्गस्य" १।१।६२ इति प्रतिषेधान्न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

ष्यङः सम्प्रसारणं पुत्रपत्योस् तत्पुरुषे ६।१।१३

पुत्र पति इत्येतस्योरुत्तरपदयोस् तत्पुरुषे समासे ष्यङः संप्रसारणं भवति। यणः स्थाने इग् भवति इत्यर्थः। कारीषगन्धीपुत्रः। कारिषगन्धीपति। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। करीषस्य इव गन्धो ऽस्य, कुमुदस्य इव गन्धो ऽस्य इति बहुव्रीहिः, तत्र उपमानाच् च ५।४।१३७ इति गन्धस्य इदन्तादेशः। करीषगन्धेः अपत्यम् इत्यण्, तदन्तात् स्त्रियाम् अणिञोरन्नर्षयोर् गुरूपत्तमयोः ष्यङ् गोत्रे ४।१।७८ इति ष्यङ्, ततश्च अपि विहिते षष्ठीसमासः, सम्प्रसारणस्य ६।३।१३८ इति दीर्घत्वम्। ष्यङः इति इम्? भ्यापुत्रः। क्षत्रियापुत्रः। पुत्रपत्योः इति किम्? कारीषगन्ध्याकुलम्। कौमुदगन्ध्याकुलम्। तत्पुरुषे इति किम्? कारीषगन्ध्या पतिरस्य ग्रामस्य कारीषगन्ध्यापतिः अयं ग्रामः। ष्यङः इति स्त्रीप्रत्ययग्रहणं न स्त्रीप्रत्यये चानुपसर्जने इति प्रत्ययग्रहणपरिभाषया यस्मात् स विहितः तदादेः इत्येष नियमो न अस्ति, तेन परमकारीषगन्ध्यायाः पुत्रः परमकारीषगन्धीपुत्रः, परमकारीषगन्धीपतिः इत्यपि भवति। उपसर्जने तु ष्यङि न भवति। अतिक्रान्ता कारीषगन्ध्याम् अतिकारीषगन्ध्या, तस्य पुत्रः अतिकारीषगन्ध्यापुत्रः। अतिकारीषगन्ध्यापति। पुत्रपत्योः केवलयोः उत्तरपदयोः इदं सम्प्रसारणं, तदादौ तदन्ते च न भवति,

कारीषगन्ध्यापुत्रकुलम्, कारिषगन्ध्यापरमपुत्रः इति। ष्यङन्ते च यद्यप्यन्ये यणः सन्ति, तथापि ष्यङः एव सम्प्रसारणं, निर्दिश्यमानस्य आदेशा भवन्ति इति। सम्प्रसारणम् इति चाधिक्रियते विभाषा परेः ६।१।४३ इति यावत्।

न्यासः

ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे। , ६।१।१३

सम्प्रसारणमिति यण्स्थानिकस्येक एषा संज्ञा विहिता, वाक्यार्थस्य च। "इग्यणः" १।१।४४ इति योऽयं वाक्यार्थः स्थान्यादेशसम्बन्धलक्षणस्तस्य तत्र चेदमुक्तमनुवादे वर्ण उपतिष्ठते, विधौ तु वाक्यार्थ इति; विधिश्चायम्(), अतो वाक्यार्थस्यैवोपस्थानमित्याह--"यणः स्थाने" इत्यादि। "ततश्चापि विहिते" इति। "यङ्श्चाप्()" ४।१।७४ इत्येनेन। "इभ्यापुत्रः" इति। इभमैइतीति "दण्डादिभ्यो यः" ५।१।६५। "क्षत्रियापुत्रः" इति। क्षतत्रस्यापत्यमिति "क्षत्रात्? धः" ४।१।१३८ इति धः। "ष्यङः" इति प्रत्ययग्रहणमिदम्(), तत्र प्रत्यग्रहणपरिभाषाया (पु।प।वृ।४४) अपस्थानाद्? यस्मात्? स विहितस्तदादेस्तदन्तस्येति तदादितदन्तग्रहणमिहैव स्यात्()--कारीषगन्धीपुत्र इति, इह तु न स्यात्()--परमकारोषगन्धीपुत्र इति; कारीषगन्धशब्दाद्धि ष्यङ् विहितः, न परमकारीषगन्धशब्दात्()? अत इदं द्वेष्यमपाकर्त्तु माह--"ष्यङिति स्त्रीप्रत्ययग्रहणम्()" इति "स्त्रियाम्()" ४।१।३ इत्यधिकृत्य विहितत्वात्()। स्त्रीत्वं स्थानिवद्वावेन च प्रत्ययत्वं ष्यङः, न हि तस्यान्यथा स्त्रीप्रत्ययत्वमुपपद्यते; आदेशपक्षस्य च तत्राश्रितत्वात्()। यदि स्त्रीप्रत्ययग्रहणमेतत्(); ततश्च किमिति? तदादिनियमो न भवति; यतोऽधिकस्याप्यत्र ग्रहणं स्यात्(), अतिप्रसङ्गो वा। असति हि नियमे यथेह भवति--परमकारीषगन्धीपुत्र इति, तथेहापि स्यात्()--अतिकारीषग्न्ध्यापुत्र इति, अत आह--"नस्त्रीप्रत्यये च" इत्यादि। प्रत्यग्रहणपरिभाषाया "न स्त्रीप्रत्यये चानुपसर्जने" (पु।प।वृ।४५) इत्ययमपवादः कृतः। तेन यत्रानुपसर्जनः स्त्रीप्रत्ययस्तत्रैषा प्रत्ययग्रहणपरिभाषां न प्रवत्र्तत इति तदादिनियमो नास्ति, तेन परमकारीषन्धीपुत्र इत्यत्र भवत्येव। अत्र हि परमाचासौ कारीषगन्ध्य#आ चेति "सन्महत्()" २।१।६० इत्यादिना समासः, स्त्रीप्रत्ययस्य प्राधान्यम्(), "स्त्रियाः पुंवत्()" ६।३।३३ इत्यादिना पुंवद्भावः। यत्र तूपसर्जनं स्त्रीप्रत्ययस्तत्रानुपर्जन इति वचनादुपतिष्ठत एवैषा परिभावा। तेन भवत्येवात्र तदादिनियमः। तेनेह न भवति--अतिकारीषन्ध्यापुत्र इति। अत्र हि कारीषगन्ध्यामतिक्रान्त इति प्रादिसमासः। अत्र योसावतिक्रान्तः स प्रधानम्(), कारिषगन्ध्या तूपसर्जनम्()। अत एव "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्यस्वो भवति। पुत्रपत्योः सम्प्रससारणे तदादावतिप्रसङ्गः। इहापि प्राप्नोति--कारीषगन्ध्यापुत्रकुलमिति। तथा हि--पुत्रपत्योरिति सप्तमी कार्यिण आनन्तर्यमाचष्टे, ततश्च शुद्धयोस्तदादौ चाविशिष्टम्()। अथापि कथञ्चित्? तदादौ न स्यात्(), एवमपि "येन विधिस्तदन्तस्य" १।१।७१ इति तदन्तेऽतिप्रसङ्ग इहापि प्राप्नोति--करीषगन्ध्या परमपुत्र इति। विधिविधानविधिभाजां त्रयाणां सन्निधाने तदन्तर्विधिर्भवति। ते चेह सन्ति--विधिः सम्प्रसारणम्(), विधिभाक्? ष्यङ्(), विधानं पतिपुत्रशब्दौ। इह च तत्पुरुषेमाव्यभिचारात्? सन्निधापितं यदुत्तरपदं तत्? पुत्रपतिशब्दाभ्यां विशेष्यते, विशेषणेन च तदन्तर्विधिर्भवतीति पुत्रशब्दान्ते पतिशब्दान्ते चोत्तरपदे सम्प्रसारणं भवतीति कस्यचित्? भ्रान्तिः स्यात्(), अस्तां निराकर्त्तुमाह--"पुत्रपत्योः" इत्यादि। एवं मन्यते--तत्पुरुषोऽत्र पुत्रपत्योः ष्यङ्श्चाधिकरणभूतो निर्दिश्यमानस्तत्पुरुषावयवत्वं पुत्रपत्योः ख्यापयति, तद्यथा--वृक्षे शाखेति। वृक्षः शाखाया अधिकरणत्वेन निर्दिश्यमानः शाखायाः वृक्षावयवत्वं बोधयति; तत्र प्रत्यासत्तेः। यत्र तत्पुरुषे ष्यङ् कार्यभागवयवः स्थितः, तस्यैव तत्पुरुषस्य याववयवौ पुत्रपती तयोरेव ग्रहणम्(), न तु पुत्रपत्यादावुत्तरपदे यौ पुत्रपतिशब्दौ तौ तस्यैव ष्यङः पूर्वपदस्य तत्परुरुषस्यावयवौ। अति तु तत्पुरुषान्तरस्यापि पुत्रकुलशब्दस्य पतिकुलशब्तदस्य च। तस्मात्? तदादौ तावन्न भवत्यतिप्रसंगः। तदन्तेऽपि न भवत्येव; यस्मादिह पुत्रपतिग्रहणं यच्च ततपुरुषेण सन्धापितमुत्तरपदं तयोर्विशेषणविशेष्यभावं प्रति कामचारः। तत्र यदीहोत्तरपदं पुत्रपतिशब्दाभ्यां विशिष्येत तदा स्यात्? तदन्तविधिः, विशेषणेन तदन्तविधिर्भवतीति कृत्वा। न चेह ताभ्यां तद्विशिष्यते, अपि तु तावेव तेन; ततश्च

तदन्तरविधेरभावात्? केवलयोरेवेदं विशेषणं भवतीति कुतस्तदन्तोऽतिप्रसङ्ग? ननु च यद्युत्तरपदेन पुत्रपती विशिष्येते तेन तयोस्तदन्तता विज्ञायते, ततश्चोत्तरपदपदान्तयोरेव ग्रहणं, न केवलयोः, एवञ्च तदादावतिप्रसङ्गः? नैतदस्ति; न हि पुत्रपतिशब्दावुत्तरपदान्तौ सम्भवतः। यस्मादयमन्तशब्दोऽवयववचनः। न च पुत्रपतिशब्दयोरहुत्तरपदमवयवः। किं तर्हि? समासस्य, न च तौ समासौ। तस्मानन्नैवं विज्ञायते---उत्तरपदान्तयोःस पुत्रपतिशब्दयोरिति, किं तर्हि? पुत्रपत्योरेवोत्तरपदयोः केवलयोरिति। "येन विधिस्तदन्तस्य" [१।१।७१](#) इति तदन्तविधिनाऽत्र ष्यङन्तस्य सम्प्रसारणं विज्ञायते, ततश्च वाराहीपुत्र इत्यत्र वकारसयापि सभ्प्रसारणं प्राप्नोतीत्यत आह--"ष्यङ्न्ते च" इत्यादि। तत्रैव कारणमाह--"निर्दिश्यमानस्य" इत्यादि। सम्प्रसारणगरहणमुत्तरार्थम्()। अति हिकारग्रहणेनापि सिध्यत्येव। तां चोत्तरार्थतां तत्रैव दर्शयिष्यामः। तामेवोत्तरार्थतां सूचयन्नाह--"सम्प्रसारणम्()" इत्यादि॥

बाल-मनोरमा

ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ९८८, ६।१।१३

ष्यङः संप्रसारणं। प्रत्ययग्रहणपरिभाषया "ष्यङ" इति तदन्तग्रहणम्। तदाह--ष्यङन्तस्य पूर्वपदस्येति। तस्य सूत्रस्य उत्तरपदाधिकारस्थत्वेऽपि तत्पुरुषग्रहणेन पूर्वपदलाभ इति भावः। उत्तरपदयोरिति। इदमपि तत्पुरुषपदलभ्यम्। यद्वा उत्तरपदाधिकारेण पूर्वपदमाक्षिप्यते।

बाल-मनोरमा

संप्रसारणं पुत्रपत्योस्तत्पुरुषे ९८९, ६।१।१३

संप्रसारणस्य दीर्घ इति। "ढ्रलोपे" इत्यतस्तदनुवृत्तेरिति भावः। उत्तरपदे इति। "अलुगुत्तरपदे" इति तदधिकारादिति भावः। कौमुदगन्ध्यायाः पुत्र इति। विग्रहवाक्यमिदम्। कुमुदगन्ध इव गन्धो यस्य स कुमुदगन्धिः। "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिः, कुमुदगन्धशब्दे पूर्वखण्डे उत्तरस्य गन्धशब्दस्य लोपश्च। "उपमानाच्चे"तीत्त्वम्। कुमुदगन्धेरपत्यं स्त्रीत्यर्थे तस्यापत्यमित्यण्। "अणिञोरनार्षयो"रिति तस्य ष्यङादेशः। "यस्येति चे"तीकारलोपः। आदिवृद्धिः। "यङ्श्चाप्। कौमुदगन्ध्याशब्द इति भावः। कौमुदगन्ध्यायाः पुत्र इति। षष्ठीसमासः। सुब्लुकि "कौमुदगन्ध्या-पुत्र" इति स्थिते ष्यङः संप्रसारणेन यकारस्य इकारः। तस्य, तदुत्तराऽऽकारस्य च "संप्रसारणाच्चे"ति पूर्वरूपेण इकारे "संप्रसारणस्ये"ति दीर्घे "कौमुदगन्धीपुत्र" इति रूपमिति भावः। "हलः" इति दीर्घस्य तु नात्र प्रसक्तिः, संप्रसारणात् पूर्वस्य हलः संप्रसारमनिमित्तनिरूपिताङ्गावयवत्वाऽभावात्।कौमुदगन्धीपतिरिति। कौमुदगन्ध्यायाः पतिरिति विग्रहः। पूर्ववत्प्रक्रिया। "इको ह्रस्वोऽङ्यो गालवस्ये"ति पाक्षिकं ह्रस्वम#आशङ्क्याह--व्यवस्थितविभाषया ह्रस्वो नेति। अत्र तु व्याख्यानमेव शरणम्। स्यादेतत्। करी()षं--गोमहिषादिषुरीषम्, करीषगन्ध इव गन्धो यस्य सः करीषगन्धिः, तस्यापत्यं स्त्री--कारीषगन्ध्या, परमा चासौ कारीषगन्ध्या च परमकारीषगन्ध्या, तस्याः पुत्रः परमकारीषगन्धीपुत्र इत्यत्रापि ष्यङः संप्रसारणं, तस्य दीर्घश्चेति स्थितिः। अत्र संप्रसारणं दुर्लभम्। ष्यङः करीषगन्धिशब्दादेव विहितत्वेन परमकारीषगन्ध्याशब्दस्य पूर्वपदस्य ष्यङन्तत्वाऽभावात्प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणादित्यत आह--स्त्रीप्रत्यये चेति। ष्यः स्त्रियां विहितत्वात्स स्त्रीप्रत्ययः। ततश्च "स्त्रीप्रत्यये चानुपसर्जने ने"ति परभाषया तदादिनियमाऽभावात्परमकारीषगन्ध्याशब्दोऽपि ष्यङन्त एवेति तत्र संप्रसारणे दीर्घे च "परमकारीषगन्धीपुत्र" इति रूपमिति भावः। इयं परिभाषा "ष्यङः संप्रसारण"मिति प्रकृत सूत्रेभाष्ये पठिता। तत्रानुपसर्जनग्रहणस्य प्रयोजनमाह--उपसर्जने त्विति। कारीषगन्ध्यामतिक्रान्तः अतिकारीषगन्ध्यः, "अत्यादयः"इति समासे, उपसर्जनह्रस्वः। तस्य पुत्रोऽतिकारीषगन्ध्यपुत्रः। अत्र "स्त्रीप्रत्यये तदादिनियमो ने"ति निषेध#ओ न भवति,

अनुपसर्जन एव स्त्रीप्रत्यये तस्य निषेधस्य प्रवृत्तेः। ष्यङ् त्वयं स्त्रीप्रत्ययोऽत्र उपसर्जन एव। अतस्तत्र तदादिनियमसत्त्वादतिकारीषगन्ध्यशब्दो नैव ष्यङन्त इति न संप्रसारणमिति भावः।

तत्त्व-बोधिनी

ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ८४०, ६।१।१३

ष्यङः। इह तत्पुरुषपदेन पूर्वपदमुत्तरपदं चाक्षिप्यते, तत्र ष्याङा पूर्वपदस्य विशेषणात्तदन्तं गृह्नत इत्याह--ष्यङन्तस्येति। पुत्रपत्योरुत्तरपदयोरिति। "पुत्रपत्यन्तयो"रिति व्याख्याने तु "कारीषगन्ध्यापरमपुत्रः"इत्यादावतिप्रसङ्गः स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

बन्धुनि बहुव्रीहौ ६।१।१४

स्यङः संप्रसारणम् इति अनुवर्तते। बन्धुशब्दे उत्तरपदे बहुव्रीहौ समासे ष्यङः सम्प्रसारणम् भवति। कारीषगन्ध्या बन्धुः अस्य कारीषगन्धीबन्धुः। कौमुदगन्धीबन्धुः। बहुव्रीहौ इति किम्? कारीषगन्ध्यायाः बन्धुः कारीषगन्ध्याबन्धुः। अत्र अपि पूर्ववदेव। परमकारीषगन्धीबन्धुः इत्यत्र भवति। अतिकारीषगन्ध्याबन्धुः इति च न भवति, तथा कारीषगन्ध्याबन्धुधनः, कारीषगन्ध्यापरमबन्धुः इति। बन्धुनि इति नपुंसकालिङ्गनिर्देशः शब्दरूपापेक्षया, पुंलिङ्गाभिधेयस् तु अयं बन्धुशब्दः। मातच् मातृकमातृषु। ष्यङः सम्प्रसारणं भवति विभाषया बहुव्रीहावेव। कारीषगन्ध्या माता अस्य इत्येवं बहुव्रीहौ कृते एतस्मादेव उपसङ्ख्यानात् पक्षे मतृशब्दस्य मातजादेशः। तत्र चित्करनसमर्थ्याद् बहुव्रीहिस्वरम् अन्तोदात्तत्वं बाधते। मातृमातृकशब्दयोश्च भेदेन उपादानात् नद्यृतश्च [५।४।१५३](#) इति कबपि विकल्प्यते। कारीषगन्धीमातः, कारीषगन्ध्यमातः, कारीषगन्धीमातृकः, कारिषगन्ध्यामातृकः, कारीषगन्धीमाता, कारीषगन्ध्यामाता।

न्यासः

बन्धुनि बहुव्रीहौ। , ६।१।१४

"बन्धुनीति नपुंसकनिर्देशः" इत्यादि। बन्धुनीति शब्दरूपापेक्षया नपुंसकलिङ्गन निर्देशः कृत इत्यर्थः। किं पुनः कारणमेवं व्याख्यायते? इत्याह--"पुलिङ्गाभिधेयोऽयम्()" इत्यादि। ननु बन्धाविति पुलिङ्गेनैव निर्देशः कस्मान्न कृतः/ पर्यायेषु मा भूत्()। एवं हि क्रियमाणेऽर्थप्रधानोऽयं निर्देश इत्यादिः स्यात्(), ततश्च पर्यायेष्वपि प्रसज्येत। अर्थप्रधाने निर्देशे स्वरूपपरिभाषा नोपतिष्ठत इत्युक्तम्()। "मातच्()" इत्यादि। ननु च मातजिति शब्दरूपं नास्त्येव, न ह्रस्य स्वतन्त्रस्य क्वचित्? प्रयोगो लभ्यते, कथं तत्र सम्प्रसारणं कर्तं शक्यम्()? इत्यत आह "अस्मादेव" इत्यादि। "तत्र" इत्यादि। यदि च "बहुव्रीहौ प्रकृत्या पूर्वपदम्()" [६।२।१](#) इति बहुव्रीहिस्वरः स्यात्(), चित्करणमनर्थकं स्यात्()। तस्मान्मा भूत्? तस्यानर्थक्यमिति चित्कारणसामथ्र्याम्? बहुव्रीहिस्वर" "चितः" [६।१।१५७](#) इत्यन्तोदात्तत्वं विधीयमानं बाधते। ननु च मातृशब्दो बहुव्रीहावुत्तरपदं न सम्भवत्येव, "नद्युतश्च" [५।४।१५३](#) इति नित्यं कपा भवितव्यम्(), तत्? कथं तत्रोत्तरपदे बहुव्रीहौ ष्यङः सम्प्रसारणमुपपद्यते? इत्याह--"मातृमातृकयोश्च" इत्यादि। यदि च नित्यं कप्? स्यात्? मातृमातृकयोर्भेदेनोपादानं न कुर्यात्(), कृतञ्च। तस्माद्भेदेनोपादानात्? कब्? विकल्पेन क्रियते, न केवलं मातजादेश इत्यपिशब्दस्यार्थः॥

बाल-मनोरमा

बन्धुनि बहुव्रीहौ ९९०, ६।१।१४

बन्धुनि बहुव्रीहौ। कारीषगन्धीबन्धुरिति। तत्र पत्युत्तरपदत्वाऽभावात्तत्पुरुषत्वाऽभावाच्च पूर्वेण न प्राप्तिः।

मातञ्मातृकमातृषु वेति। वार्तिकमिदम्। मातच्, मातृक, मातृ-एषु परेषु ष्यङः संप्रसारणं वा वक्तव्यमित्यर्थः। मातचि उदाहरति--कारीषगन्धीमातः, कारीषगन्ध्यामात इति। मातृशब्दस्य मातजादेशः। अदन्तमेतत्।

मातृके उदाहरति--कारीषगन्धीमातृकः कारीषगन्ध्यामातृक इति। "नद्यृतश्चे"ति कप्। मातृशब्दे उदाहरति--कारीषगन्धीमाता, कारीषगन्ध्यामातेति। शैषिककबभावे रूपम्। ननु मातृशब्दस्य मातजादेशे किं प्रमाणं, "नद्यृतश्चे"ति नित्यविधानात्पाक्षिककप्च दुर्लभ इत्यत आह--अत एवेति। बहुव्रीहावेवेदमिति। "बन्धुनि बहुव्रीहौ इति सूत्रे अस्य वार्तिकस्य पठितत्वादिति भावः। "मात"जिति चित्करणं स्वरार्थमित्याह--चित्वसामर्थ्यादिति।

---

सूत्रम्

काशिका-वृत्तिः

वचिस्वपियजादीनां किति ६।१।१५

सम्प्रसारणम् इति वर्तते। ष्यङः इति निवृत्तम्। वचि वच परिभाषणे, ब्रुवो वचिः २।४।५३ इति च। स्वपि ञिष्वप शये। यजादयः यज देवपूजासंगतिकरनदानेसु इत्यतः प्रभृति आगणान्ताः। तेषां वचिस्वपि यजादीनां किति प्रत्यये परतः सम्प्रसारणम् भवति। वचि उक्तः। उक्तवा। स्वपि सुप्तः। सुप्तवान्। यज इष्टः। इष्टवान्। वप उप्तः। उप्तवान्। वहौउढः। ऊढवान्। वसौषितः। उषितवान्। वेञुतः। उतवान्। व्येञ् संवीतः। संवीतवान्। ह्वेञ् आहूतवान्। वद उदितः। उदितवान्। टुओश्वि शूनः। शूनवान्। धातोः स्वरूपग्रहणे तत्प्रत्ययेकार्यं विज्ञायते। तेन इह न भवति, वाच्यते, वाचिकः इति।

लघु-सिद्धान्त-कौमुदी

वचिस्वपियजादीनां किति ५४९, ६।१।१५

वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति। ईजतुः। ईजुः। इयजिथ, इयष्ठ। ईजे। यष्टा॥

न्यासः

वचिस्वपियजादीनां किति। , ६।१।१५

आदिशब्दोऽयं यजिनैव सम्बध्य इति, न वच्यादिभिः प्रत्येकम्()। यदि हि प्रत्येकमभिसम्बन्धोऽभिमतः स्यात्? "वच भाषणे" (धा।पा।१०६३) इत्यधीत्य "ञिष्वप्? शये" (धा।पा।१०६८) इत्यधीयताम्(), तत्र वच्यादीनामित्येवं स्वपेरपि सिध्यतीति पृथगुपादानं न कत्र्तव्यं जायते। नन्वेवम्(), "रुदश्च पञ्चभ्यः" (७।३।९८) इत्यत्र स्वपेग्र्रहणं च स्यात्()? नैष दोषः; शक्यते हि रुदादीनामादौ स्वपिमधीत्य "स्वपश्च पञ्चभ्यः" इत्येवं सूत्रं प्रणेतुम्()। तस्मायुक्तमुक्तम्()---यजिनैव सम्बध्यत इति। वचेः स्वपिना साहचर्य्याद्धातुनिर्देशार्थ इकारः, न विशेषणार्थः। तेन च ब्राञादेशस्यैव ग्रहणं भवतीत्याह--"वच परिभाषणे, ब्राउवो वचिरिति च" इति। "उक्तः" इति। "सम्प्रसारणाच्च" ६।१।१०४ इति परपर्वत्वम्()। "इष्टः" इति। व्रश्चादिना ८।२।३६ षत्वम्(), ततः ष्टुत्वम्()। "ऊढः" इति। "हो ढः" ८।२।३१ इति ढत्वम्(), "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्(), "ढो ढे लोपः" ८।३।१३ इति ढकारलोपः, "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इति दीर्घत्वम्()। "उषितम्()" इति। "शासिवसिघसीनाञ्च" ८।३।६० इति षत्वम्()। "संवीतः आहूतः, शूनः" इति। "हलः" ६।४।२ इती दीर्घः। "शूनः" इत्यत्र "ओदितश्च" ८।२।४५ निष्ठानत्वम्()। अथेह कस्मान्न भवति--वाचमिच्छति वाचा तरतीति ठक्? वाच्यति वाचिक इति? यद्यपि वचेः "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसप्रसारणञ्च" (वा।२८८) इति वा दीर्घः

कृतः, तथापि "एकदेशविकृतमनन्यवद्भवति" इत्यस्ति प्राप्तिरित्याह--"धातोः" इत्यादि। यत्र धातुः सामान्यवाचिना धातुशब्देन नोपादीयते, अपि तु स्वशब्देनैव, तत्र तत्प्रत्यये दातोरित्येवं यो विहितः प्रत्ययस्तत्रैव कार्यं विज्ञायते। एतच्च भ्रौणहत्येति निपातनं कुर्वन्? ज्ञापयति--तद्धितत्वार्थं निपातनम्()। यदि च धातोः स्वरूपग्रहणे तत्प्रत्यय एव कार्यं न विज्ञायेत, तत्वनिपातनमनर्थकं स्यात्()। "हनस्तोऽचिण्णलोः" ७।३।३२ इत्यनेनैव तत्वस्य सिद्धत्वात्()। "वाच्यति वाचिकः" इत्यत्र यद्यपि "क्विबन्ता धातुत्वं न जहति" (व्या।प।१३२) इति, तथापि धातोरित्येवं नासौ प्रत्ययो विहितः। तथा ह्येकत्र सुप इत्येवं प्रत्ययो विहितः--"सुप आत्मनः क्यच्()" ३।१।८ इति, इतरत्र च "प्रातिपदिकात्()" इत्येवं ङ्याप्प्रातिपदिकाधिकारात्? (४।१।१।)। तस्मादिह वचेः स्वरूपग्रहणात्? तत्प्रत्यय एव कार्यसंविज्ञानं न भवति॥

बाल-मनोरमा

वचिस्वपियजादीनां किति २४१, ६।१।१५

यज् अतुस् इति स्थिते द्वित्वे अभ्यासयकारस्य संप्रसारणे पूर्वरूपे च इयजतुरिति प्राप्ते-- वचिस्वपि। "वचिस्वपी"ति तिइका निर्देशः। सौत्रः संप्रसारणाऽभावः। आदिशब्दो यजिनैव संबध्यते, न तु वचिस्वपिब्याम्, तथा सति हि वच्यादेःस्वप्यादेर्यजादेश्चेत्यर्थः स्यात्। तथा सति पृथक्स्वपिग्रहणं व्यर्थं स्यात्, अदादिगणे लुग्विकरणे "वच परिभाषणे" इत्यारभ्य षष्ठस्य "ञि ष्वप् शये" इत्यस्य वच्यादिग्रहणेनैव सिद्धेः। तदाह--वचिस्वप्योर्यजादीनां चेति। ननु यज् अतुस् इति स्थिते द्वित्वात्परत्वात्संप्रसारणे कृते "विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न्यायेन द्वित्वस्य कथं प्राप्तिरित्याशङ्क्याह-- पुनः प्रसङ्गेति। ईजतुरिति। यज् अतुस् इति स्थिते संप्रसारणे पूर्वरूपे च कृते द्वित्वे सवर्णदीर्घ इति भावः। एवं चाऽत्र किति लिटि "वचिस्वपी"ति सूत्रम्, अकिति लिटि तु "लिट()भ्यासस्ये"ति सूत्रमिति स्थितिः। भारद्वाजनियमात्थलि वेट्। कृते द्वित्वेऽकित्त्वाद्वचिस्वपीत्यप्रवृत्तौ "लिट()भ्यासस्ये"त्यभ्यासयकारस्य संप्रसारणम्। तदाह--इयजिथ इयष्ठेति। अनिट्पक्षे व्रश्चादिना जस्य षत्वे ष्टुत्वेन थस्य ठः। ईजथुः ईज। इयाज--इयज, ईजिव ईजिम। ईजे इति। "असंयोगा"दिति कित्त्वात् "वचिस्वपी"ति संप्रसारणे कृते द्वित्वे सवर्णदीर्घ इति भावः। ईजाते ईजिरे क्रादिनियमादिट्। ईजिषे ईजाथे ईजिध्वे। ईजे ईजिवहे ईजिमहे। यष्टेति। तासि व्रश्चादिना जस्य षत्वे ष्टुत्वेन तकारस्य टः। यक्ष्यति यक्ष्यते इति। व्रश्चादिना जस्य षत्वे "षढो"रिति षस्य कत्वे सस्य षत्वमिति भावः। अयाक्षीदिति। सिचि हलन्तलक्षणा वृद्धिः। जस्य षः, तस्य कः, सस्य ष इति भावः। अयष्टेति। अयज् स् त इति स्थिते "झलो झलीति सलोपे, जस्य षः, ष्टुत्वेन तकारस्य ट इति भावः। अयक्षाताम् अयक्षत। अयक्ष्यत्, अयक्ष्यत। डु वप् बीजसंताने इति। प्ररोहार्थं बीजानां क्षेत्रेषु प्रक्षेपणे इत्यर्थः। तदाह-- क्षेत्रे विकिरणमिति। "वपिः प्रकिरणार्थ" इति "सन्यङो"रित्यत्र भाष्यम्। गर्भाधानं चेति। "अप्रमत्तारक्षत तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सु"रित्यादौ तथा दर्शनादिति भावः। अयं छेदनेऽपीति। "वर्तते" इति शेषः। केशान्वपतीति। छिनत्तीत्यर्थः। अनिडयम्। उवापेति। "लिट()भ्यासस्ये"त्यकित्यभ्यासस्य संप्रसारणमिति भावः। किति तु "वचिस्वपी"ति द्वित्वात्प्राक्संप्रसारणे कृते द्वित्वम्। ऊपतुः ऊपुः। उवपिथ--उवप्थ, ऊपथुः ऊप। उवाप-- उवप ऊपिव ऊपिम। ऊपे इति। ऊपाते ऊपिरे। ऊपिषे ऊपाथे ऊपिध्वे। ऊपे ऊपिवहे ऊपिमहे। वप्तेति। वप्स्यति। वप्स्यते। वपतु वपताम्। अवपत् अवपत। वपेत् वपेत। उप्यादिति। आशिषि यासुटः कित्वात् "वचिस्वपी"ति संप्रसारणम्। वप्सीष्टेति। सीयुटि रूपम्। प्रण्यवाप्सीदिति। लुङि परस्मैपदे सिचि हलन्तलक्षणा वृद्धिः। "नेर्गदे"ति णत्वम्। अवाप्ताम् अवाप्सुः। अवप्तेति। आत्मनेपदे लुङि "झलो झली"ति सलोपः। अवप्साताम्। वह प्रापणे इति। अयमनिट्। वहति वहते। उवाहेति। "लिट()भ्यासस्ये"ति अकिति अभ्यासस्य संप्रसारणमिति भावः। किति "वचिस्वपी"ति संप्रसारणे कृते द्वित्वम्। ऊहतुः ऊहुः। भारद्वाजनियमात्थलि वेट्। तदाह-- उवहिथेति। "न शसददेति निषेधात् "थलि च सेटी"ति न भवति। अथ थलि अनिट्पक्षे आह--सहिवहोरोदवर्णस्येति। सहिवहोरवर्णस्य ओत्स्याड्()ढ्रलोपे परत इत्यर्थः। "ढ्रलोप" इति दीर्घं बाधित्वा ओत्वमिति भावः। उवोढेति। तासि

ढत्वधत्वष्टुत्वढलोपाः, ओत्त्वं च। लृटि स्ये, हस्य ढः, तस्य कः,षत्वम्। तदाह-- वक्ष्यति वक्ष्यते इति। वहतु वहताम्। अवहत् अवहत। वहेत्। वहेत। उह्यात्। अवाक्षीदिति। हलन्तलक्षणवृद्धौ ढकषाः प्राग्वत्। अवोढामिति। "झलो झली"ति सलोपे ढत्वधत्वष्टुत्वढलोपाः, ओत्त्वं चेति भावः। अवाक्षुरिति। उसि सिचि वृद्धौ ढकषाः। अवाक्षीः अवोढम् अवोढ। अवाक्षम् अवाक्ष्व अवाक्ष्म। अवोढेति। लुङि आत्मनेपदे प्रथमपुरुषैकवचने अवह् स् त इति स्थिते सलोपः, ढत्वधत्वष्टुत्वढलोपाः, ओत्त्वं च। अवक्षातामिति। आतामि सिचि ढकषा इति भावः। अवक्षतेति। "आत्मनेपदेष्वनतः" इत्यदादेशः। अवोढ्वमिति। अवक्षि अवक्ष्वहि अवक्ष्महि। अवक्ष्यत् अवक्ष्यत। इति वहत्यन्ताः स्वरितेतो गताः। वसधातुरनिट्। अकिति लिटि परे "लिट()भ्यासस्ये"त्यभ्यासस्य संप्रसारणम्। तदाह-- उवासेति। किति तु "वचिस्वपी"ति संप्रासरणे कृते द्वित्वादौ लिटि परे "लिट()भ्यासस्ये"त्यभ्यासस्य #आदेशप्रत्ययावयवत्वाऽभावादप्राप्ते षत्वे-

---

सूत्रम्

काशिका-वृत्तिः

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६

ग्रह उपादाने, ज्या वयोहानौ, वेञो वयिः २।४।४१, व्यध ताडने, वश कान्तौ, व्यच् व्याजीकरणे, ओव्रश्चू छेदने, प्रच्छ ज्ञीप्सायाम्, भ्रस्ज पाके इत्येतेषां धातूनां ङीति प्रत्यये परतः चकारात् कति च संप्रसारणं भवति। ग्रह गृहीतः। गृहीतवान्। ङिति गृह्णाति जरीगृह्यते। ज्या जीनः। जीनवान्। ल्वादिभ्यः ८।२।४४ इति निष्ठानत्वम्। ङिति जिनाति। जेजीयते। हलः ६।४।२ इति सम्प्रसारणदीर्घे कृते प्वादीनां इति ह्रस्वः क्रियते। वयि लिटि परतः वेञो वयिः आदेशः, तस्य ङिद्भावात् किदेवोदाह्रियते। ऊयतुः। ऊयुः। यद्येवं वयिग्रहणम् अनर्थकम्, यजादिषु वेञ् पठ्यते? न एवं शक्यम्। लिटि तस्य वेञः ६।१।३९ इति प्रतिषेधो वक्ष्यते, तत्र यथा एव स्थानिवद्भावाद् व्येर्विधिः एवं प्रतिषेधो ऽपि प्राप्नोति? न एष दोषः। लिटि वयो यः ६।१।३७ इति यकारस्य संप्रसारणप्रतिषेधाद् वयेर्विधौ ग्रहणं प्रतिषेधे चाग्रहणमनुमास्यते? सत्यम् एतत्। एष एव अर्थः साक्षान् निर्देशेन व्येः स्पष्टीक्रियते। व्यध विद्धः। विद्धवान्। ङिति विध्यति। वेविध्यते। वश उशितः। उशितवान्। ङिति उष्टः। उशन्ति। व्यच विचितः। विचितवान्। ङिति विचति। वेविच्यते। व्यचेः कुटादित्वमनसि प्रतिपादितम्, तेन सर्वत्र अञ्णिति प्रत्यये सम्प्रसारणं भवति, उद्विचिता, उद्विचितुम्, उद्विचितव्यम् इति। व्रश्चेः वृक्णः। वृक्णवान्। अथ कथम् अत्र कुत्वं, व्रश्चभ्रस्ज इति हि षत्वेन भवितव्यम्? निष्ठादेशः षत्वस्वरप्रत्ययविधीड्विधिषु सिद्धो वक्तव्यः। तत्र ष्त्वं प्रति नत्वस्य सिद्धत्वाद् ज़लादिर् निष्ठा न भवति। कुत्वे तु कर्तव्ये तदसिद्धम् एव इति प्रवर्तते कुत्वम्। ङिति वृश्चति। वरीवृश्च्यते। प्रच्छ पृष्टः। पृष्टवन्। ङिति पृच्छति। परीपृछ्यते। प्रश्नः। नङि तु प्रश्ने च आसन्नकाले ३।२।११७ इति निपातनादसंप्रसारणम्। भ्रस्ज भृष्टः। भृष्टवान्। ङिति भृज्जति। बरीभृज्यते। सकारस्य ज़लां जश् ज़शि ७।४।५३ इति जश्त्वेन दकारः, स्तोः श्चुना श्चुः ८।४।३९ इति श्चुत्वेन जकारः।

लघु-सिद्धान्त-कौमुदी

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृञ्जतीनां ङिति च ६३७, ६।१।१६

एषां सम्प्रसारणं स्यात्किति ङिति च। विध्यति। विव्याध। विविधतुः। विविधुः। विव्यधिथ, विव्यद्ध। व्यद्धा। व्यत्स्यति। विध्येत्। विध्यात्। अव्यात्सीत्॥ पुष पुष्टौ॥ १०॥ पुष्यति। पुपोष। पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादीत्यङ्। अपुषत्॥ शुष शोषणे॥ ११॥ शुष्यति। शुशोष। अशुषत्॥ णश अदर्शने॥ १२॥ नश्यति। ननाश। नेशतुः॥

न्यासः

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च। , ६।१।१६

"गृहीतम्()" इति। "ग्रहोऽलिटि" ७।२।३७ इति दीर्घः। "जरीगृह्यते" इति। यङि सम्प्रसारणं द्विर्वचनम्()। "रीगृदुपधस्य" ७।४।९० इति रीगागमः। वयिरयमस्त्येवात्मनेपदी--"अय वय गतौ (धा।पा।४७४,४७५) अस्ति च परस्मैपदी--"वेत्रो वयिः" २।४।४२ इति; तत्र ग्रह्यादिभिरनात्मनेपदिभिः साहचर्यादनात्मनेपदी गृह्यते? इत्याह--"वयिर्लिटि" इत्यादि। तस्माच्च परस्य लिटः "असंयोगाल्लिट्? कित्()" (१।२।५) इति कित्त्वेन भवितव्यम्()? इत्यत आह--"तस्य" इत्यादि। "यद्येवम्()" इति। यदि वेत्रादेशस्य वयेग्रर्हणमित्यर्थः। "यजादिषु वेञ्? पठ()ते" इति। ततश्च पूर्वसूत्रेणैव तस्य स्थानिवद्भावात्? सम्प्रसारणं सिद्धमित्यभिप्रायः। "नैवं शक्यम्()" इति। विज्ञातुमिति शेषः। नानयोपपत्त्या वयिग्रहणमनर्थकं शक्यं विज्ञातुमित्यर्थः। किं कारणम्()? इत्याह--"लिटि तस्य" इत्यादि।
स्यादेतत्()--विधिप्रतिषेधयोर्विरोधादेकत्र विधिरेव भविष्यति, न प्रतिषेध इति? अत आह--"अत्र यतैव" इत्यादि।
स्यादेतत्()--विधिप्रतिषेधयोर्विरोधादेकत्र विधिरेव भविष्यति, न प्रतिषेध इति? अत आह--"अत्र यथैव" इत्यादि। यदि विरोधादेकत्रासम्भवः, पर्यायोऽस्तु, न तु द्वयोरन्यत्र चरितार्थत्वादेकेनैव भवितव्यम्()। नापरेणेत्येषोऽर्थो लभ्यत इति भवाः। "नैष दोषः" इति। कथं नैष दोषः? इत्यत आह--"लिटि" इत्यादि। "लिटि वयो यः" इति यकारस्य सम्प्रसारणप्रतिषेधो लिङ्गम्()--विधो वेञोग्रहणेन वयिग्रहणं भवतीत्यस्यार्थस्य। असति विधौ ग्रहणे प्राप्तेरसम्भवात्? प्रतिषेधोऽनर्थकः स्यात्()। वेञ इत्यत्र प्रतिषेधे वयेग्रर्हणं न भवतीति अत्राप्येतदेव प्रतिषेधवचनं लिङ्गम्()। सति हि वेञ्()ग्रहणे वेञ इत्यनेनैव प्रतिषेधस्य सिद्धत्त्वात्(), पनः "लिटि वयो यः" ६।१।३७ इति। अनन्तरोक्तमर्थमभ्यनुजानाति। यदि सत्यमेतत्(), तर्हि किमर्थं वयिग्रहणम्()? इत्याह--"एष एव" इत्यादि। तेन स्पष्टीकरणार्थं वयिग्रहणमित्याचष्टे। "विध्यति" इति। दिवादित्वाच्छ्यन्()। "उष्टः" इति। तसन्तमेतत्(), अदादित्वाच्छपो लुक्? व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), ष्टुत्वम्()। "विचति" इति। तुदादित्वाच्छः। वृक्ण इति पूर्ववन्नत्वम्(), "स्कोः" ८।२।२९ इति सलोपः। "झलादिर्निष्ठा न भवति" इति। तेनात्र षत्वं न भवतीति भावः। झलाचौ हि तद्विधीयते; "झलो झलि" ८।२।२६ इत्यतो झल्ग्रहणानुवृत्तेः। "कृत्वे तु कत्र्तव्ये तदसिद्धमेव" इति। न हि यथा षत्वादौ निष्ठादेशस्य सिद्धत्वमुच्यते, तथा कुत्वेऽपि, तेन तत्? प्रवर्तत एव। "वृश्चति" इति। पूर्ववच्छः। "वरीवृश्च्यते" इति। "रीगृत्वत इति वक्तव्यम्()" (वा।८८०) इति रीगागमः। "पृष्टः" इति। पूर्ववत्? षत्वम्()। "यजयाच" (३।३।९०) इत्यादिना नङि विहिते प्रश्न इत्यत्र सम्प्रसारणं कस्मान्न भवति? इत्यत आह--"नङि" इत्यादि। "भृष्टः" इति। पूर्ववत्? षत्वम्()। "भृज्जति" इति। पूर्ववच्छः। "बरीभृज्यते" इति। पूर्ववद् रीक्()। "सकालस्य" इत्यादि। ननु स्खोः संयोगाद्योरन्ते च" ८।२।२९ इति तस्य लोपेन भवितव्यम्()?? नैतदस्ति; झलि पदान्ते च स उच्यत इति॥
बाल-मनोरमा
ग्रहिज्यावयिव्यधिविष्ठिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च २४३, ६।१।१६

ग्रहिज्या। चकारेण "वचिसवपियजादीना"मित्यतः कितीति समुच्चीयते। "ष्यङः संप्रसारण"मित्यनुवर्तते।तदाह--एषामित्यादि। अत्र परस्मैपदिग्रह्यादिसाहचर्यात् "अय वय पय [गतौ]" इति पठितस्यात्मनेपदिनो वयेर्न ग्रहणम्। यजादित्वादेव वयेः संप्रसारणे सिद्धे अत्र वयग्रहणं स्पष्टार्थमिति भाष्ये स्पष्टम् [इति] यकारस्य प्राप्ते इति। "न संप्रसारणे संप्रसारण"मिति लिङ्गादन्त्यस्य यणः पूर्वं संप्रसारणमिति विज्ञानाद्यकारस्य संप्रसारणे प्राप्ते सतीत्यर्थः।

तत्त्व-बोधिनी
ग्रहिज्यावयिव्यधिवष्ठिविचतिवृश्चतिपृतच्छतिभृज्जतीनां ङिति च २१५, ६।१।१६

ग्रहिज्यावयि। गृह्णाति। गृह्णीतः। जिनाति। जिनीतः। जीनः। ङिति वयेरुदाहरणं नास्ति। किति तु "वचिस्वपियजादीना"मिति सिद्धम्, यजादिषु वेञः पाठात्। अत एवाऽभ्याससंप्रसारणमपि सिद्धम्। "वेञ" इति

संप्रसारणनिषेधस्तु "लिटि वयो य" इति निषेधारम्भान्न प्रवर्तते। तस्माद्ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थमेवेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

लिट्यभ्यासस्य उभयेषाम् ६।१।१७

उभयेषां वच्यादीनां ग्रह्यादीनां च लिटि परतो ऽभ्यासस्य सम्प्रसारणं भवति। वचि उवाच। उवचिथ। स्वपि सुष्वाप। सुष्वपिथ। यज इयाज। इयजिथ। डुवप् उवाप। उअवपिथ। ग्रह्यादीनाम् तत्र ग्रहेरविशेषः। जग्राह। जग्रहिथ। ज्या जिज्यौ। जिज्यिथ। वयि उवाय। उवयिथ। व्यध विव्याध। विव्यधिथ। वश उवाश। उवशिथ। व्यच विव्याच। विव्यचिथ। वृश्चतेः सत्यसति वा योगे न अस्ति विशेषः। योगारम्भे तु सति यदि सम्प्रसारणम् अकृत्वा हलादिशेषेण रेफो निवर्त्यते, तदा वकारस्य सम्प्रसारणं प्राप्नोति। अथ रेफस्य सम्प्रसारणं कृत्वा उरदत्वं रपरत्वं च क्रियते, तदानी मुरदत्वस्य स्थानिवद्भावात् न सम्प्रसारणे सम्प्रसारणम् ६।१।३६ इति प्रतिषेधो भवति इत्यस्ति विशेषः। वव्रश्च। वव्रश्चिथ। पृच्छति भृज्जत्योरविशेषः। अकिदर्थं च इदम् अभ्यासस्य सम्प्रसारणं विधीयते। किति हि परत्वाद् धातोः सम्प्रसारणे कृते पुनः प्रसङ्गविज्ञानाद् द्विर्वचनम्, ऊचतुः, ऊचुः इति। अधिकारादेव उभयेषां ग्रहणे सिद्धे पुनरुभयेषाम् इति वचनं हलादिः शेषम् अपि बाधित्वा सम्प्रसारणम् एव यथा स्यातिति। विव्याध।

लघु-सिद्धान्त-कौमुदी

लिट्यभ्यासस्योभयेषाम् ५४८, ६।१।१७

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं लिटि। इयाज॥

न्यासः

लिट�भ्यासस्योभयेषाम्?। , ६।१।१७

"उवयिथ" इति। क्रादिनियमादिट्? प्राप्तः "उपदेशेऽत्वतः" ७।२।६२ इति प्रतिषिद्धः "ऋतो भारद्वाजस्य" (७।२।६३) इति नियमात्? पुनर्भवति। "ग्रहेरविशेषः" इति। यस्मात्? सति सम्प्रसारणे हलादिशेषेण ७।४।६० रेफनिवृत्तौ जग्राहेति ग्रहेर्यद्रूपं भवति, सत्यपि सम्प्रसारण उरत्वरपरत्वहलादिशेषेष्वपि कृतेषु तदेव भवति। "जिज्यौ" इति। "आत औ णलः" ७।१।३४। "जिज्यथ" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "वृश्चतेः सत्यसति वा योगे नास्ति विशेषः" इति। यद्यन्यार्थो योग आरभ्यते न वृश्चत्यर्थः, ततो वृश्चत्यर्थमेतद्वचनं न भवतीति सत्यप्येतस्मिन्नन्यार्थवचने वृश्चतेरभ्यासस्य नैव सम्प्रसारणेन भवितव्यम्()। न ह्रसति तदर्थे वचने केनचित्? प्रकारेण सम्प्रसारणमुपपद्यत इत्यभिप्रायः ततश्चासत्यस्मिन्? योगे वव्रश्चेति यद्रूपं भवति सत्यपि तदेवेति नास्ति वृश्चतेर्विशेषः। एतच्च वृत्तिकारमतेनोक्तम्()। भाष्यकारमतेन त्वाह--"योगारम्बे" इत्यादि। तस्यायं भावः--सति वचऽनेन्यार्थो क्रियमाणे तस्य वृश्चत्यर्थतापि भवति; वृश्चतेरहपि ग्रह्नादिष्वन्तर्भावात्()। ततश्च तदर्थोऽप्ययं योगारम्भ इति तदभ्यासस्यापि सम्प्रसारणेन भवितव्यमिति तुशब्दो वृत्तिकारमताद्विशेषं दर्शयति। "यदि सम्प्रसारणमकृत्वा" इत्यादि। ननु चोभयग्रहमस्य प्रयोजनं वक्ष्यति--हलादिशेषं ७।४।६० परमपि बाधित्व#आ सम्प्रसारणमेव यथा स्यादितदि, तत्? कुतोऽस्य पक्षस्य सम्भवः? उभयग्रहणरहिते योगे सतीत्यभिप्रायः। "अथ रेफस्य" इत्यादि। उभयग्रहणसहिते योगे सतीति भावः। "उरदत्वस्य स्थानिवद्भावात्()" इति। केन पुनः स्थानिवद्भावः? "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति। कः पुनरसौ? प्रत्यययोऽचः परः, यन्निमित्तमोरत्वं स्यात्()। अहगस्य योऽभ्यास इति विज्ञायमाने सामथ्र्यात्? प्रत्यय

आश्रितो भवति; विना तेनाहृगव्यपदेशाभावात्? वृत्तिकारमतं चेषितव्यम्(); अन्यथा तत्रोभयग्रहणाभावात्? हलादिशेषेण ७।४।६० प्रागेव सम्प्रसारणाद्रेफे निवर्त्तिते वकारस्य सम्प्रसारणं स्यात्()। ततश्च उव्रश्चेत्यनिष्टं रूपं स्यात्()। "पृच्छतिभृज्जत्यीरविशेषः" इति। ग्रहेरिव वेदितव्यः। "अकिदर्थम्()" इत्यादि। किं पुनः कारणमकिदर्थं मिदं व्याख्येयम्()? इत्यत आह--"किति" इत्यादि। यस्मात्? किति परत्वात्? सम्प्रसारण कृते कृतसम्प्रसारणस्य पुनः प्रसङ्गविज्ञानाद्()द्विर्वचने कृतेऽन्तरेणाप्येतद्वचनम्(), ऊचतुरित्यादि सिद्ध्यत्येव। तस्मान्नेदं किदर्थम्(), अपि त्वकिदर्थमेवेति। अथ किमर्थमुभयेषामित्युच्यते, यावता स्वरितलिङ्गासङ्गादेवोभयेषामित्यस्यानुवृत्तिर्भविष्यति? न चानुवृत्तौ सत्यां ङिति वच्यादीनामपि सम्प्रसारणं प्राप्नोतीत्येतच्च नाशङ्कनीयम्(); यदि वच्यादीनामपि ङिति सम्प्रसारणं स्याद्योगविभागोऽनर्थकः स्यात्(); मण्डूकप्लुतिन्यायेन वा व्रच्यादीनामनुवृत्तिर्भविष्यति, तत्कुतोऽस्य दोषस्यावसरः? इत्याह--"अधिकारादेव" इत्यादि। अधिकारादेवोभयग्रहणे सिद्धे पुनरुभयेषांग्रहणात्? पुनःश्रुतिर्भवति। तस्याश्चैतदेव प्रयोजनम्()---यत्र सम्प्रसारणं चान्यच्च प्राप्नोति तत्र सम्प्रसारणमेव यथा स्यात्(), मा भूदन्यदिति। तेन विव्याध, विव्यधिथ इत्यत्र हलादिशेषं ७।४।६० परमपि बाधित्वा सम्प्रसारणमेव भवति; अन्यथात्र परत्वात्? प्राक्? प्रवर्तमानेन हलादिशेषेण यकारस्य निवृत्तौ कृतायां वकारस्य सम्प्रसारणमापद्येत, ततश्च--उव्याध उव्यधिथेत्यनिष्टं रूपं स्यात्()॥

बाल-मनोरमा

लिट�भ्यासस्योभयेषाम् २४१, ६।१।१७

णलि द्वित्वादौ तु ययाज् अ इति स्थिते-- लिट()भ्यासस्योभयेषाम्। "ष्यङः संप्रसारण"मित्यतः संप्रसारणमित्यनुवर्तते। "वचिस्वपियजादीना"मिति सूत्रोपात्ताः, "ग्रहिज्यावयी"ति सूत्रोपात्ताश्च उभयशब्देन गृह्न्ते। तदाह--वच्यादीनां ग्रह्यादीनां चेति। अत्र वच्यादीनामित्यनेन वचिः स्वपिः यजादयश्च विवक्षिताः। "यज देवपूजेत्यारभ्य "टु ओ ()इआ गतिवृद्ध्यो"रित्येतत्पर्यन्ता यजादयः। तदुक्तम्--"यजिवपिर्वहिश्चैव वसिर्वेञ्व्येञ इत्यपि। ह्वेञ् वदिः ()आयतिश्चैव यजाद्याः स्युरिमे नव"। इति। तेष्वनन्तर्भावाद्वचिस्वप्योः पृथग्ग्रहणम्। ग्रह्यादीनामित्यनेन तु ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतयो विवक्षिताः। इयाजेति। अभ्यासयकारस्य संप्रसारणे इकारे "संप्रसारणाच्चे"ति पूर्वरूपमिति भावः।

तत्त्व-बोधिनी

लिट�भ्यासस्योभयेषाम् २१३, ६।१।१७

लिट()भ्यासस्येति। वच्यादयो-- वचिस्वपियजादयः। ग्रह्यादयस्तु-- "ग्रहिज्यावयी"त्यादयः। यद्यपि ग्रहिपृच्छतभृज्जतीनामभ्यासस्य संप्रसारणे कृतेऽकृते च विशेषो नास्ति, तथापि पर्जन्यवल्लक्षणं प्रवर्तते। जग्राह। पप्रच्छ। बभ्रज्ज। वृश्चतेस्तु विशेषः,--- संप्रसारणस्याऽकरणे वव्रश्चेत्यत्र वकारस्य संप्रसारणं स्यात्, कृते तु संप्रसारणे "न संप्रसारणे" इति निषेधप्रवृत्तिरिति। लटीति किम्?। विवक्षति। पिपक्षति। वचिस्वपि। आगणान्ता यजादयः। "यजिर्वपिर्वहिश्चैव वसिर्वेञ्? व्येञ इत्यपि। ह्वेञ्()वदी ()आयतिश्चेति यजाद्याः स्युरिमे नव"। कितीति किम्?। इयष्ठ। डुवप्।"ड्वितः क्रिः"। उप्त्रिमम्।

---

सूत्रम्

काशिका-वृत्तिः

स्वापेश् चङि ६।१।१८

स्वापेः इति स्वपेर् ण्यन्तस्य ग्रहणम्। तस्य चङि परतः संप्रसारणम् भवति। असूषुपत्, असूषुपताम्, असूषुपन्। द्विर्वचनात् पूर्वम् अत्र संप्रसारणम्, तत्र कृते लघूपधगुणः, तस्य णौ चङ्युपधायाः ह्रस्वत्वम्, ततो द्विर्वचनम्, दीर्घो लघोः ७।४।९४ इति दीर्घत्वम्। चङि इति किम्? स्वाप्यते। स्वापितः। किति इति निवृत्तम्। ङिति इति केवलम् इह अनुवर्तते इत्येतद् दुर्विज्ञानम्।

न्यासः

स्वापेश्चङि। , ६।१।१८

"स्वापेः" इति। "आप्लृ व्याप्तौ" (धा।पा। १२६०) इत्यस्यापि सुपर्वस्येका निर्देशः सम्भवति, अतस्तद्ग्रहणाशङ्कानिराकरणायाह--"स्वपेण्र्यन्तस्य ग्रहणम्()" इति। ण्यन्तस्य ग्रहणं चङ्ग्रहणाद्विज्ञायते, न ह्रण्यन्ताच्चङ्? सम्भवति। "असूषुपत्()" इति। "हेतुमति च" ३।१।२६ इति णिच्()। "द्विर्वचनात् पर्वमत्र सम्प्रसारणम्()" इति। परत्वात्()। "स्वाप्यते" इति। कर्मणि लकारः, "सार्वधातुके यक्()" ३।१।६७। "स्वापितम्()" इति। "निष्ठायां सेटि" ६।४।५२ इति णिलोपः। ननु च ग्रहादि (६।१।१६) सूत्रात्? ङितोत्यनुवत्र्तते, न च स्वापेश्चङोऽन्यो ङिदस्ति, तत्र सामथ्र्याचचङ्येव भविष्यतीति न कत्र्तव्यमेव चङ्ग्रहणम्()? इत्यत आह--"ङितिति केवलम्()" इत्यादि। ग्रहादिसूत्रे ह्रुभयं सन्निहितम्--किद्ग्रहणम्(), ङिद्ग्रहणञ्च, तत्रोभयोरविशेषेण सन्निधाने ङिद्ग्रहणमेवानुवत्र्तते, न किद्ग्रहणमिति मन्दधिया दुर्बोधम्()। अतः सुखप्रतिपत्त्ये मन्दबुद्धेश्चङ्ग्रहणं क्रियत इति भावः॥

बाल-मनोरमा

स्वापेचङि ४१२, ६।१।१८

स्वापेश्चङि। संप्रसारणमिति। "ष्यङः संप्रसारण"मित्यतस्तदनुवृत्तेरिति भावः। असू षुपदिति। संप्रसारणं तदाश्रयं चकार्यं बलव"दिति वचनात्कृते संप्रासरणेद्वित्वं पूर्वरूपं सन्वत्तवदीर्घौ षत्वमिति भावः।

तत्त्व-बोधिनी

स्वापेश्चङि ३६०, ६।१।१८

स्वापेश्चङि। चङि किम्?। स्वापयति। असूषुपदिति। इह संप्रसारणोत्तरं द्वित्वम्।

---

सूत्रम्

काशिका-वृत्तिः

स्वपिस्यमिव्येञां यङि ६।१।१९

ञिष्वप शये, स्यमु, स्वन, ध्वन शब्दे, व्येञ् संवरणे इत्येतेषां धातूनां यङि परतः सम्प्रसारणं भवति। सोषुप्यते। सेसिम्यते। वेवीयते। यङि इति किम्? स्वप्नक्।

न्यासः

स्वपिस्यमिव्येञां यङि। , ६।१।१९

"स्वप्नक्()" इति। "स्वपितृषोर्नजिङ्" ३।२।१७२॥

तत्त्व-बोधिनी

स्वपिस्यमिव्येञां यङिः ४०७, ६।१।१९

स्()वपिस्यमि। यङि किम्?। स्वप्नक्।सेसिम्यते इति। "स्यमु शब्दे" दन्त्याऽजन्तसदित्वाऽभावेनाऽषोपदेशत्वान्न यङलुगर्थम्। अत एव "न लुमते"ति निषेधोऽपि न प्रवर्तत इति यङ्लुक्यपि चायः की स्यादेव। चेकीतः।

---

सूत्रम्

काशिका-वृत्तिः

न वशः ६।१।२०

यगि इति वर्तते। वशेर्धातोर् यङि परतः संप्रसारणं न भवति। वावश्यते, वावश्येते, वावश्यन्ते। यगि इति किम्? उष्टः। उशन्ति।

---

सूत्रम्

काशिका-वृत्तिः

चायः की ६।१।२१

यगि इति वर्तते। चायृ पूजानिशामनयोः इत्येतस्य धातोः यगि परतः की इत्ययम् आदेशो भवति। चेकीयते, चेकीयेते, चेकीयन्ते। दीर्घोच्चारणं यङ्लुगर्थम्। चेकीतः।

न्यासः

चायः की। , ६।१।२१

अथ किमर्थं दीर्घोच्चारणम्(), यावता ह्रस्वादेशेऽपि "अकृत्सार्वधातुकयोः" (७।४।२५) इति दीर्घत्वेन चेकीयत इति सिद्धत्येव? इत्याह--"दीर्घोच्चारणम्()" इत्यादि। कथं पुनः "यङि च" (७।४।३०) इत्युच्यमाने आदेशो यङ्लुकि स्यात्()? प्रत्ययलक्षणेन स्यात्()। अथापि "न लुमताङ्गस्य" (१।१।६३) इति प्रत्ययलक्षणं प्रतिषिध्यते? एवमप्यस्मादेव दीर्घोच्चारमाद्यङ्लुकि भवतीति विज्ञायते, अन्यथा तदपार्थकं स्यात्()! "चेकीतः" इति। तसन्तमेतत्()। "यङोऽचि च" २।४।७४ इति यङो लुक्()॥

---

सूत्रम्

काशिका-वृत्तिः

स्फायः स्फी निष्ठायाम् ६।१।२२

स्फायी ओप्यायी वृद्धौ इत्यसय् धातोः निष्ठायां परतः स्फी इत्ययम् आदेशो भवति। स्फीतः। स्फीतवान्। निष्थायाम् इति किम्? शातिः। स्फातीभवति इत्येतदपि क्तिन्नन्तस्य एव रूपं, न निष्थान्तस्य। निष्ठायाम् इत्येतदधीक्रीयते लिङ्यङोश्च ६।१।२९ इति प्रागेतस्मात् सूत्रात्।

न्यासः

स्फायः स्फी निष्ठायाम्?। , ६।१।२२

"स्फातिः" इति। "स्त्रियां क्तिन्()" ३।३।९४ वलि ६।१।६४ यलोपः। "स्फातीभवति" इति। स्फायतेर्निष्ठान्ताच्चवौ कृते "अस्य च्वौ ७।४।३२ इतीत्वे सतीदं रूपं भवतीति मन्यमानो यश्चोदयेत्()--अथ कथं स्फातीभवतीत्येतद्रूपम्(), यावताऽत्रापि निष्ठायामस्मिन्नादेशे स्फीतिभवतीत्येवं भवितव्यमिति? तं प्रत्याह--"स्फातीभवतीत्येतदपि" इत्यादि। एतदपि स्फातिशब्दात्? क्तिन्नन्ताच्च्वौ कृते "च्वौ च" ७।४।२६ इति दीर्घत्वे च क्तिन्नन्तस्यैव रूपम्()। अतो न भवत्येष

दोषप्रसङ्गः॥

बाल-मनोरमा

स्फायः स्फी निष्ठायाम् ८५१, ६।१।२२

स्फायः स्फी। "स्फायी वृद्धौ" अस्य स्फीभावः स्यान्निष्ठायां परत इत्यर्थः।

तत्त्व-बोधिनी

स्फायः स्फी निष्ठायाम् ६९७, ६।१।२२

स्फायः स्फी। स्फायी वृद्धौ। कथं तर्हि स्फीतिकाम इति?। स्फीतमाष्टे इति ण्यन्तादच इः, अल्लोपणिलोपौ।

---

सूत्रम्

काशिका-वृत्तिः

स्त्यः प्रपूर्वस्य ६।१।२३

निष्ठायाम् इति वर्तते, संप्रसारणम् इति च। स्फी इत्येतन् न स्वर्यते। स्त्यै ष्ट्यै शब्दसंघातयोः। द्वयोरप्येतयोः धात्वोः स्त्यारूपमापन्नयोः सामान्येन ग्रहणम्। स्त्या इत्यस्य प्रपूर्वस्य धातोर् निष्ठायां परतः सम्प्रसारणं भवति। प्रस्तीतः। प्रस्तीतवान्। सम्प्रसारणे कृते यण्वत्त्वं विहतम् इति। निष्ठानत्वं न भवति। प्रस्त्यो ऽन्यतरस्याम् ८।२।५४ इति तु पक्षे मकारः क्रियते। प्रस्तीमः प्रस्तीमवान्। प्रपूर्वस्य इति किम्? संस्त्यानः। संस्त्यानवान्। प्रस्त्यः इत्येव सिद्धे पूर्वग्रहणम् इह अपि य्था स्यात्, प्रसंस्तीतः, प्रसं्स्तीतवान्। तत् कथं प्रपूर्वस्य इति षष्ठ्यर्थे बहुव्रीहिः? प्रः पूर्वो यस्य धातूपसर्गसमुदायस्य स प्रपूर्वः तदवयवस्य स्त्यः इति व्यधिकरणे षष्ठ्यौ। तत्र प्रसंस्तीतः इत्यत्र अपि प्रपूर्वसमुदायावयवः स्त्याशब्दो भवति।

न्यासः

स्त्यः प्रपूर्वस्य। , ६।१।२३

"सामान्येन ग्रहणम्()" ति। द्वयोरप्यात्वे कृते पूर्वस्य "धात्वादेः षः सः ६।१।६२ इति सत्वे समानत्वाद्रूपस्य। लक्षणप्रतिपदोक्तपरिभाषा (व्या।प।३) च नेहोपतदिष्ठते; उभयोलक्षिणिकत्वात्()। अथात्र--"संयोगादेरातो धातोर्यण्वतः" (८।२।४३) इति निष्ठानत्वं कस्मान्न भवति? इत्यत आह--"सम्प्रसारणे" इत्यादि। न त्वस्य पूर्वत्रासिद्धत्वात्? पूर्वं सम्प्रसारणं क्रियत इति, तत्र कृते च यण्वत्ता नास्तीति नत्वं न भवति। "प्रस्त्य इत्येवं सिद्धे" इति। ननु चैवमुच्यमाने प्रशब्दस्यापि सम्प्रसारणं स्यात्(), ततश्च प्रस्तीत इति रूपं स्यात्(), तत्? किमुच्यते--प्रस्त्य इत्येवं सिद्ध इति? "अनन्त्यविकारेऽन्त्यसदेशस्य" (व्या।प।६३) इति न भवत्येष दोष इति मन्यते। "इहापि यथा स्यात्()" इति। कस्मात्? पुनर्न प्राप्नोति? संशब्देन व्यवहितत्वात्()। किं पूर्वग्रहणे क्रियमाणे शब्दार्थं एव तथाविदो भवति येनात्रापि भवति? अथ ग्रन्थाधिक्यादर्थाधिक्यं सूचयतीत्याभिप्रायेणाह--"तत्? कथम्()" इति। प्रथमकल्पं दर्शन्नाह--"प्रपूर्वस्य" इति। "षष्ठ()र्थे बहुव्रीहिः" इति। पूर्वशब्दोऽयमवयववचन इति षष्ठ()र्थे बहुव्रीहिर्भवति। अवयववाचिनि पूर्वशब्दे धातुरन्यपदार्थो नोपपद्यते। न हि धातोः प्रशब्दोऽयमवयवो भवति, अपि तु धातूपसर्गसमुदायस्य। तस्मात्? स एवान्यपदार्थो युक्त इत्याह--"प्रः पूर्वो यस्य" इत्यादि। "तदवयवस्य" इति। तस्यावयवस्तदवयव इति षष्ठीसमासः। तच्छब्देन धातूपसर्गसमुदायः परामृश्यते। "व्यधिकरणषष्ठ्यौ" इति। "प्रपूर्वस्य" इति। स्त्यावयवापेक्षया योऽयमवयवावयविसम्बन्धस्तत्र षष्ठी, "स्त्यः" इत्येषा तु यणवयवापेक्षया यः सम्बन्धस्तत्र। तेन भिन्नाभिदेयत्वात्?

"सत्यः", "प्रवूर्वस्य" इति व्यधिकरणे षष्ठ्यौ। स्यादेवम्(), प्रसंस्तीत इत्यत्र प्रपूर्वसमुदायावयवः स्त्याशब्दो न सम्भवति इत्यत आह--"तत्र" इत्यादि॥

बाल-मनोरमा

स्त्यः प्रपूर्वस्य ८४०, ६।१।२३

स्त्यः प्रपूर्वस्य। "स्त्यै"इत्यस्य कृताऽऽत्वस्य "स्त्य" इति षष्ठ()न्तम्। "ष्यङः संप्रसारण"मित्यतः संप्रसारणमिति, "स्फाय स्फी"त्यतो निष्ठायामिति चानुवर्तते। तदाह-- प्रादित्यादि। संप्रसारणे पूर्वरूपे "हलः" इति दीर्घे प्रस्ती- त इति स्थिते--

---

सूत्रम्

काशिका-वृत्तिः

द्रवमूर्तिस्पर्शयोः श्यः ६।१।२४

द्रवमूर्तौ द्रवकाठिन्ये, स्पर्शे वर्तमानस्य श्यैङ् गतौ इत्यस्य धातोर् निष्ठायां परतः सम्प्रसारणं भवति। शिनं घृतम्। शीना वसा। शीनम् मेदः। द्रवावस्थायाः काठिन्यं गतम् इत्यर्थः। श्यो ऽस्पर्शे ८।२।४७ इति निष्थानत्वम्। स्पर्शे शीतं वर्तते। शीतो वायुः। शीतमुदकम्। गुणमात्रे तद्वति च अस्य शीतशब्दस्य वृत्तिर् द्रष्टव्या। द्रवमूर्तिस्पर्शयोः इति किम्? संश्यानो वृश्चिकः।

न्यासः

द्रवमूर्त्तिस्पर्शयोः श्यः। , ६।१।२४

"द्रवमूर्त्तौ द्रवकाठिन्ये" इति। अनेन द्रवमूर्त्तिशब्दस्यार्थमाचष्टे। द्रवावस्थाया उत्तरोऽवस्थाविशेषः काठिन्याख्योऽत्र द्रवमूर्त्तिशब्देनोच्यते। "स्पर्शे च" इति। रूपादिसहचरितो गुणः स्पर्श इत्युच्यते। "शीतमुदकम्" इति। कथं पुनरत्र सामानाधिकरण्यम्(), यावता शीतशब्देन गुणविशेषोऽभिधीयते। वाय्वादिशब्देन तु द्रव्यविशेष इत्यत आह--"गुणमात्रे" इत्यादि। यथा--शुक्लादिशब्दा कदाचिद्गुणमात्रे वत्र्तन्ते, यता--पटस्य शुक्ल इति; कदाचित्तु तद्वति द्रव्ये सोऽयमित्यभेदसम्बन्धतद्वान्मतुब्लोपान्मत्वर्थीयाकारप्रत्ययान्तत्वाद्वा शुक्लः पट इति, तथा शीतशब्दोऽपि। तेन यदा तद्वति द्रव्ये वत्र्तते, तदोभयोरेकद्रव्ये निवेशितत्वादुपपद्यते सामानाधिकरण्यमिति भावः। "संश्यानः" इति। "संयोगादेः" ८।२।४३ इत्यादिना नत्वम्()॥

बाल-मनोरमा

द्रवमूर्तिस्पर्शयोः श्यः ८२९, ६।१।२४

द्रवमूर्ति। "श्यैङ् गतौ" इत्यस्य कृतात्वस्य "श्य" इति षष्ठी। द्रवमूर्तिश्च, स्पर्शश्चेति विग्रहः। मूर्तावित्यस्य विवरणं--काठिन्ये इति। संप्रसारणं स्यादिति। "ष्यङः संप्रसारण"मित्यतस्तदनुवृत्तेरिति भावः। तथा च श्यैङः क्ते आत्वे संप्रसारमे पूर्वरूपे शि त इति स्थिते--

---

सूत्रम्

काशिका-वृत्तिः

प्रतेश् च ६।१।२५

श्यः इति वर्तते। प्रतेरुत्तरस्य श्यायतेर् निष्ठायां परतः सम्प्रसरणं भवति। प्रतिशीनः। प्रतिशीनवान्। द्रवमूर्तिस्पर्शाभ्याम् अन्यत्र अपि यथा स्यातिति सूत्रारम्भः।

न्यासः

प्रतेश्च। , ६।१।२५

बाल-मनोरमा

प्रतेश्च ८३१, ६।१।२५

प्रतेश्च। द्रवमूर्तिस्पर्शाभ्यामन्यत्रापि संप्रसारणप्राप्त्यर्थमिदम्। प्रतिशीन इति। प्रतिगत इत्यर्थः। अत्र "श्योऽस्पर्शे" इति नत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा ऽभ्यवपूर्वस्य ६।१।२६

श्यः इति वर्तते। अभि अव इत्येवं पूर्वस्य श्यायतेर् निष्थायां विभाषा सम्प्रसारणम् भवति। अभिशीनम् अभिश्यानम्। अवशीनम्, अवश्यानम्। द्रवमूर्तिस्पर्शविवक्षायाम् अपि विकल्पो भवति। अभिशीनं घृतम्, अभिश्यानं घृतम्। अवशीनं मेदः, अवश्यानं मेदः। अभिशीतो वायुः, अभिश्यानः। अवशीतमुदकम् , अवश्यानमुदकम्। सेयमुभयत्रविभाषा द्रष्टव्या। पूर्वग्रहणस्य च प्रयोजनम्, सम्भिश्यानं, समवश्यानम् इत्यत्र मा भूतिति केचिद् व्यचक्षते , नकिलायम् अभ्यवपूर्वः समुदायः इति यो ऽत्र अभ्यवपूर्वः समुदायस्तदाश्रयो विक्लपः कस्मान् न भवति? तस्मातत्र भवितव्यम् एव। यदि तु न इष्यते ततो यत्नानतरमास्थेयम् अस्माद् विह्बाषाविज्ञानात्। व्यवस्थेयम्। पूर्वग्रहणस्य च अन्यत् प्रयोजनं वक्तव्यम्।

न्यासः

विभाषाऽभ्यवपूर्वस्य। , ६।१।२६

"सेयमुभयत्र विभाषा" इति। द्रवमूर्तिस्पर्शविषये पूर्वेण प्राप्ते, अन्यत्राप्राप्ते। अथ पूर्वग्रहणं किमर्थम्(), न "विभाषाऽभ्यवाभ्याम्()" इत्येवोच्येत? अत आह--"पूर्वग्रहणस्य" इत्यादि। क्रियमाणे पूर्वग्रहणे कस्मादेवात्र न भवतीत्याह--"न किल" इत्यादि। अयं हि द्विविधोऽपि समुदायो नाभिपूर्वः; नाप्यवपूर्वः, किं तर्हि? सम्पूर्वः। तेन पूर्वग्रहणादत्र न भवति। क्रियमाणेऽपि पूर्वग्रहणे प्राप्नोत्येवेति मन्यमानः किलशब्दमरुचिसूचनार्थं प्रयुक्तवान्()। तामेव प्राप्ति दर्शयन्नाह--"योऽत्र" इत्यादि। समूशब्दात्? परो यो धातूपसर्गसमुदायस्तदाश्रयो विकल्पः कस्मान्न भवति, भवति ह्रसावब्यवपूर्व इत्यस्ति प्राप्ति? अत आह--"यत्नान्तरमास्थेयम्()" इति। विभाषाग्रहणमिह क्रियते, सा च व्यवस्थितविभाषा विज्ञायते, तेनेह न भवतीति यतनान्तरम्()। "पूर्वग्रहणस्य चान्यत्प्रयोजनं वक्तव्यम्()" इति। तत्? पुनरभिसंशीनम्(), अभिसंश्यानम्(), अवसंशीनम्(), अवसंश्यानम्()--इत्यत्रापि विकल्पो यथा स्यादित्येवं तद्वेदितव्यम्()। एतच्च पूर्वग्रहणए क्रियमाणे यतोपपद्यते तथा "स्त्यः प्रपूर्वस्य" ६।१।२३ इत्यत्र "प्रपूर्वस्येति षष्ठ()र्थे बहुव्रीहिः" इत्य#आदिना व्याख्यातम्()॥

बाल-मनोरमा

विभाषाऽभ्यवपूर्वस्य ८३२, ६।१।२६

विभाषा। "श्यैङ" इति शेषः। संप्रसारणं वा स्यादिति। शेषपूरणमिदम्। द्रवमूर्तिस्पर्शयोर्नित्यं संप्रसारणे प्राप्ते,

ततोऽन्यत्राऽप्राप्ते विभाषेयम्। अभिश्यानं घृतमिति। अत्र द्रवमूर्तौ संप्रसारणविकल्पः। अवश्यानः अवशीनो वृश्चिक इति। अत्र द्रवमूर्तिस्पर्शाऽभावेऽपि संप्रसारणविकल्पः। समवश्यान इत्यत्रापि संप्रसारणविकल्पमाशङ्क्याऽऽह - व्यवस्थितेति।

---

सूत्रम्

काशिका-वृत्तिः

शृतं पाके ६।१।२७

विभाषा इत्यनुवर्तते। श्रा पाके इत्येतस्य धातोः ण्यन्तस्य अण्यन्तस्य च पाके ऽभिधेये क्तप्रत्यये परतः शृभावो निपात्यते विभाषा। शृतं क्षीरम्। शृतं हविः। व्यवस्थितविभाषा च इयम्, तेन क्षीरहविषोर् नित्यं शृभावो भवति, अन्यत्र न भवति श्राणा यवागूः श्रपिता यवागूः इति। यदा अपि बाह्ये प्रयोजके द्वितीयो णिचुत्पद्यते तदा अपि निष्यते, श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेन इति। श्रातिरयम् अकर्मकः कर्मकर्तृविषयस्य पचेरर्थे वर्तते, स ण्यन्तः अपि प्राकृतं पच्यर्थमाहुः। तदत्र द्वयोरपि शृतम् इति इष्यते। शृतं क्षीरं स्वयम् एव। शृतं क्षीरं देवदत्तेन। पाकग्रहणं निपातनविषयप्रदर्शनार्थम्, तेन क्षीरहविषोरेव।

न्यासः

श्रुतं पाके। , ६।१।२७

""श्रा पाके" इत्यस्य धातोः" इति। "श्रा पाके" (धा।पा।१०५३) इत्यदादौ पठ()ते घटादौ (धा।पा।८१०) च मित्संज्ञार्थम्()। कैश्चिच्चुरादावपि, "श्रै पाके" (धा।पा।९१९) इति भ्वादौ, तत्रेहाविशेषेण ग्रहणं प्राप्तम्()। श्रायतेरपि हि कृतात्वस्यैतद्रूपं भवत्येव। निपातनाच्च लक्षणप्रतिपदोक्तपरिभाषा (व्या।प।३) प्रतिबन्धं न करोति। "णन्तस्याण्यन्तस्य च" इति। विशेषानुपादानात्()। तथा चोक्तम्()--श्राश्रप्योः श्रृतमिति। यदि विभाषेत्यनुवत्र्तते क्षीरहविषोरपि पक्षे श्राणम्(), श्रपितमिति स्यात्(); ताभ्यामन्यत्रापि पक्षे श्रृतमिति प्रसज्येत? इत्यत आह--"व्यवस्थितविभाषेयम्()" इति। "यदापि" इत्यादि। प्रयोजकव्यापारः प्रेषणाध्येषणादिः कार्ये कारणोपचारं कृत्वा प्रयोजकशब्देनोक्तः। स हि प्राकृतादर्थाद्बाह्यो भवति, तत्र तस्यानन्तर्भावात्()। तत्र यदा "हेतुमति च" ३।१।२६ इति द्वितीयो णिजुत्पद्यते, तदापि क्षीरहविषोरपि निपातनमेतन्नेष्यते; व्यवस्थितविभाषाविज्ञानादेव। तथा चोक्तम्()--श्रपेः शृतमन्यत्र हतोरिति। हेतुमाण्णिचोऽन्यत्रेत्यर्थः। द्वितीयग्रहणं यदैकमेव भवति, तदेष्टत्त्वाच्? श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेनेति तत्प्रयोजको हेतुश्च" १।४।५५ इति चकाराद्देवदत्तयज्ञदत्तयोः कर्तृ संज्ञाविधानादुभयत्रापि कत्र्तरि तृतीया। "श्रपितम्()" इति। श्रातेर्णिच कृते "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्(), "मितां ह्रस्वः" ६।४।९२ क्षीरं स्वयमेव श्राति स्म--तद्यदा देवदत्तदेन प्रयुज्यते स्म तदा "हेतुमति च ३।१।२६ इति प्रथमो णिच्()। सोऽपि श्रपयन्? यदा यज्ञदत्तेन प्रयुज्यते स्म तदा द्वितीयः। "णेरनिटि" ६।४।५१ इति पूर्वस्य णेर्लोपः, ततः क्षीरे प्रयोज्ये कर्मणि निष्ठा--श्रृतमिति। "ण्यन्तस्याण्यान्तस्य च निपात्येते" इति प्रतिज्ञाते सति युक्तं ण्यन्तस्याप्येतन्निपातनम्()--येषां श्रातिश्चुरादावपि पठ()ते इत्यभ्युपगमः। ये तु चुरादावस्य पाठं न प्रतिजानते तेषां कथं ण्यन्तस्येतन्निपातनं युज्यते, न च शक्यते वक्तुम्()--तेषामपि हेतुमण्ण्यन्तरयैतन्निपातनं युज्यते; "श्रपेः शृतमन्यत्र हेतौः" इति भाष्यकारवचनादिति यश्चोदयेत्(), तं प्रत्याह--"श्रातिरयम्()" इत्यादि। कर्मभावापन्नेऽपि योऽर्थः सौकर्य्यात्? स्वातन्त्र्येण विवक्ष्यते स कर्मकत्र्ता, कर्म कर्ता भवतीति कृत्वा। कर्म चासौ कत्र्ता चेति विशेषणसमासः, स यस्य विषयः स कर्मकर्तृविषयः। अर्थद्वारकं चेदं विशेषणं पचेः कर्मकर्तृविषयत्वं वेदितव्यम्()। तस्य योऽर्थः पच्यमानकर्तृकत्वं विक्लेदनमात्रं तत्रायमकर्मकः--श्रातिर्वत्र्तते। यदा तु स ण्यन्तो भवति तदा प्राकृतं पच्यर्थमाह। प्रकृतौ भवः प्राकृतः, स पुनर्यः प्रकृत्यन्तस्य पचेरर्थः पक्तृकर्तृको विक्लेदनोपसंहारादिः स इह वेदितव्यः। देवदत्तादिपक्तृकर्तृकं प्राकृतं पाकाख्यं पच्यर्थमाहेत्यर्थः। तत्र द्वयोरपि शृतमिष्यत

इति योऽण्यन्तः श्रातिः कर्मकर्तृविषयेण पचिना समानार्थस्तत्रापीष्यते। योऽपि ण्यन्तः प्राकृतं पच्यर्थमाह तत्रापीष्यते। तत्र शृतं क्षीरं स्वयमेवेति प्रथमस्योदाहरणम्()। शृतं क्षीरं देवदत्तेनेति द्वितीयस्य। ननु च "श्रपेः शृतमन्यत्र हेतोः" इति भाष्ये उक्तम्(), तत्? कथं द्वयोरपीष्यते? एवं मन्यते--यदिदं भाष्ये उक्तम्()--"श्रपेः शृतमन्यत्र हेतोः" इति, तत्र "अन्यत्र हेतोः" इत्यनेन सर्वस्य हेतुमण्णिचः पर्युदासो न विधित्सितः अन्यथा विप्रतिषिद्धमिदं स्यात्(), असति हि श्रातेश्चुरादौ पाठे यदि श्रपेः शृतमिति निपात्यते, कथमन्यत्र हेतोरिति पर्युदासः! अथान्यत्र हेतोरिति पर्युदासो न तर्हि श्रपेः शृतमिति निपातनमुपपद्यते। न हि श्रातेश्चुरादावसत पाठे श्रातेर्हेतुमण्णिचं त्यत्क्वाऽन्यस्ततो णिजस्ति। तस्माद्यस्य हेतुमण्णिचो न केनचित्? प्रकारेण स्वार्थिकत्वमुपपद्यते स एव भाष्यकारस्य पर्युदासविषयत्वेनाभीष्टः। स पुनर्यो बाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते स विज्ञेयः। यस्य तु केनचित्? प्रकारेण स्वार्थिकत्वमुपपद्यते, स एव भाष्यकारस्य पर्युदासविषयत्वेन न प्रकल्प्यते, तस्यैतन्निपातनमिष्टमेव। स पुनर्यस्मिन्नुत्पन्ने श्रातिः प्राकृतं पच्यर्थमाह स विज्ञेयः, शक्यते हि तस्य पचिना प्रकृत्यर्थेन समानार्थत्वात्? स्वार्थिकत्वमुपचारेणाभिधातुमिति। तदेवमिह पाठेऽपि चुरादौ श्रातेण्र्यन्तस्याप्येतन्निपातनं युज्यत एवेति॥

बाल-मनोरमा

शृतं पाके ८७४, ६।१।२७

शृतं पाके। "श्रा पाके" घटादिः। तस्माद्धेतुमण्णिचि पुकि मित्त्वाद्ध्रस्वे श्रपि इति भवतीति स्थितिः। श्रातिश्रपयत्योरिति। अण्यन्तस्य, ण्यन्तस्य च श्राधोतरित्यर्थः। क्षीरहविषोरिति। एतच्च वार्तिकाल्लभ्यते। अण्यन्तं व्याचष्टे---स्वयमेव विक्लिन्नमिति। श्राधातुरण्यन्तः पाके वर्तते। पाकश्चाऽत्र विक्लित्तिरेव विवक्षिता, न तु तदनुकूलव्यापारोऽपि। तथा च श्राधातोर्विक्लपित्तावकर्मकत्वात् "गत्यर्थाऽकर्मके"ति कर्तरि क्तः। तथा च क्षीरं विक्लित्त्याश्रय इत फलितम्। ततो णिचि विक्लित्त्यनुकूलव्यापारार्थकपचिना समानार्थकात् "श्रपी" त्यस्मात्कर्मणि क्तप्रत्यये फलितमाह--- पक्वमिति। एतच्च भाष्यकैयटयोः स्पष्टम्। "क्षीराज्यहविषां शृत"मित्यमरस्य तु प्रमाद एव, "क्षीरहविषो"रिति वार्तिकविरोधात्।

तत्त्व-बोधिनी

शृतं पाके ७१८, ६।१।२७

शृतम्। श्रातिश्रपयत्योरिति। श्रापाके इत्यदादौ पठ()ते, चुरादावपि, घटादिष्वपि पठ()ते मित्त्वार्थम्, श्रै पाक इति च भ्वादौ , तस्यापि कृतात्वस्येह ग्रहणम्। निपातनसामत्र्याल्लक्षमप्रतिपदोक्तपरिभाषा नाश्रीयत इत्याहुः। शृभावो निपात्यत इति। "ष्यङः संप्रसारण"मिति प्रकृतमेव संप्रसारणं न विहितम्, श्रयतेरपि श्रितमेव यथा स्यादिति। अत्र "विभाषाभ्यवपूर्वस्ये"ति विभाषाऽनुवर्तते, सा च व्यवस्थिता, तेन क्षीरहविषोरेव शृभावो नित्यश्च, अन्यत्र तु नैव भवतीत्याशयेनाह--क्षीरहविषोः पाक इति। अन्यत्त्विति। शाकादि। श्रपितमिति। णौ मितां ह्रस्वः।

---

सूत्रम्

काशिका-वृत्तिः

प्यायः पी ६।१।२८

विभाषा इत्येव। ओप्यायी वृद्धौ इत्यस्य धातोः निष्ठायां विभाषा पी इत्ययम् आदेशो भवति। पीनं मुखम्। पीनौ बाहू। पीनमुरः। इयम् अपि व्यवस्थितविभाषा एव। तेन अनुपसर्गस्य नित्यं भवति, सोपसर्गस्य तु न एस्व भवति। आप्यानश्चन्द्रमाः। आङ्पूर्वस्यान्धूधसोः भवत्येव, आपीनो ऽन्धुः, आपीनमूधः इति।

न्यासः

प्यायः पी। , ६।१।२८

"पीनम्()" इति। "ओदितश्च" ८।२।४५ इति निष्ठानत्वम्()। "इत्यमपि" इत्यादि। अपिशब्देन न केवलं पूर्वसूत्रे या विभाषा सैव व्यवस्थितविभाषा, अपि त्वेषापीति दर्शयति। तेन किं सिद्धं भवति? इत्याह--"तेन" इत्यादि। सोपसर्गस्य तु नैव भवतीत्यस्यापवादमाह--"आङ्पूर्वस्य" इत्यादि। नित्यश्चायमन्धूधसोः पीभावः। व्यवस्थितविभाषैव॥

बाल-मनोरमा

प्यायः पी ८७९, ६।१।२८

प्यायः पी। वा स्यान्निष्ठायामिति। शेषपूरणमिदम्। "विभाषाऽभ्यवपूर्वस्ये"त्यतो विभाषेति, "स्फायः स्फी"त्यतो निष्ठायामिति चानुवर्तते इति भाव-। व्यवस्थतविभाषेति। अत्र व्याख्यानमेव शरणम्। "सोपसर्गस्य ने"त्यादि भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

प्यायः पी ७२३, ६।१।२८

पीनमिति। ओदित्त्वान्निष्ठानत्वम्। प्यान इति "()आईदितो निष्ठायाटमितीडभावे यलोपः। नत्वे व्यवस्थान्तरमाह---सोपसर्गस्य नेत्यादि। अन्धुः- कूपः।

---

सूत्रम्

काशिका-वृत्तिः

लिड्यङोश् च ६।१।२९

विभाषा इति निवृत्तम्। प्यायः पी ६।१।२८ इत्येतत् चशब्देन अनुकृष्यते। लिटि यङि च परतः प्यायः पी इत्ययम् आदेशो भवति। आपिप्ये, आपिप्याते, आपिप्यिरे। परत्वात् पीभावे कृते पुनः प्रसङ्गविज्ञानात् द्विर्वचनम्, एरनेकाचः इति यणादेशः। यङि आपेपीयते, आपेपीयेते, अपेपीयन्ते।

न्यासः

लिड्यङोश्च। , ६।१।२९

"विभाषेति निवृत्तम्()" इति। उत्तरसूत्रे पुनर्विभाषाग्रहणात्()। अन्यथापीदमेव तत्रानुवर्त्तिष्यत इति तन्न कुर्यात्()। अत एवोच्यते--द्वयोर्दिभाषयार्मध्ये ये विधयस्ते नित्या भवन्तीति। "प्यायः पीत्येतच्चशब्देनानुकृष्यते" इति। इतरथा हि सम्प्रसारणस्य प्रकृतत्वाल्लिड्यङोः प्यायः सम्प्रसारणं विज्ञायेत। चशब्दे तु सत्यनन्तरेणैवपीभावेन सम्बन्धः सुखमवसीयते। नाप्राप्ते द्विर्वचने पीभावो विधीयते। तेन तस्य बाधकं प्राप्नोतीति कस्यचिदाशङ्का स्यात्()। अतस्तां निराकर्तुमाह--"परत्वात्()" इत्यादि। विरोधे हि सति बाधा स्यात्(), इह तु विरोधो नास्ति। अतः परत्वात्? पीभावे कृते पुनःप्रसङ्गवज्ञानात्? सिद्धमिति द्विर्वचनं भवतीति॥

बाल-मनोरमा

लिड्यङोश्च १६७, ६।१।२९

लिड्यङोश्च। लिट् च यङ् चेति द्वन्द्वात्सप्तमी। "प्यायपी"ति सूत्रमनुवर्तते। तदाह--लिटि यङि चेति। ननु प्यायेर्लिटि दित्वं बाधित्वा परत्वात्पीभावे द्वित्वे "एरनेकाच"इति यणि "पिप्ये" इति रूपमिष्यते। तत्र द्वित्वं बाधित्वा परत्वात् पीभावे कृते

पुनर्द्वित्वं न संभवति, "विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न्यायादित आह-- पुनः प्रसङ्गेति। "पुनः प्रसङ्गविज्ञानात्सिद्ध"मिति परिभाषा। विप्रतिषेधे बाधितस्यापि पुनः प्रवृत्तेरभ्युपगमात्कृतेऽपि पीभावे द्वित्वादिकं सिद्धमिति तदर्थः।

तत्त्व-बोधिनी

लिङ्यङोश्च १४०, ६।१।२९

यङि --पेपीयते।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा श्वेः ६।१।३०

लिड्य्ङोः इति वर्तते, सम्प्रसरणम् इति च। लिटि यङि च श्वयतेर् धातोः विभाषा सम्प्रसारणं भवति। शुशाव, शिश्वाय। शुशुवतुः, शिश्वियतुः। यगि शोशूयते, शेश्वीयते। तदत्र यङि सम्प्रसारणम् अप्राप्तं विभाष विधीयते। लिटि तु किति यजादित्वात् नित्यं प्राप्तं, तत्र सर्वत्रविकल्पो भवति इत्येषा उभयत्रविभाषा। यदा च धातोर् न भवति तदा लिट्यभ्यासस्य उभयेषाम् [६।१।१७] इत्यभ्यासस्य अपि न भवति।

न्यासः

विभाषा श्वेः। , ६।१।३०

"शुशाव" इति। लिटि णलि सम्प्रसारणे कृते वृद्ध्यावादेशौ। "शि()आआय" इति। यदा न सम्प्रसारणं तदा वृद्ध्यायादेशौ। "शुशुवतुः, शि()इआयतुः, इति। यदा सम्प्रसारणं तदोवङ्(), अन्यदेयङ्। "अप्राप्तम्()" इति। केनचिवविहितत्वात्()। "लिट()भ्यासस्योभयेषाम्()" (६।१।१७) इत्युभयत्रोभयग्रहणादन्यत्? कार्यं प्रवर्तमानमपास्याभ्यासस्य सम्प्रसारणमेव यथा स्यादित्येतदुभयेषांग्रहणस्य प्रयोजनमुक्तम्()। ततश्चेयमपि विकल्पं बाधित्वा नित्यं सम्प्रसारण मेव स्यादिति कस्यचिद्भ्रान्तिः स्यात्? अतस्तां निराकर्तुमाह--"यदा च" इत्यादि। अत्र ()आयतेर्विभाषा सम्प्रसारणमुच्यते, यदि कदाचिद्धातोर्न सम्प्रसारणं भवति तदाब्यासस्य स्यात्? ततश्च ()आयतेः सम्प्रसारणं पाक्षिकं न कृतं स्यात्()। स्यादेतत्()--लिट्परस्य शक्यतेरिदं विकल्पेन कार्यं विधीयते, तस्य च तदस्त्येवेति? असम्यगेतत्(); द्विष्प्रयोगे हि द्विर्वचने क्रियामात्रं भिद्यते, न धातुरूपमिति कुतः पूर्वपरयोः कार्यसम्बन्धं प्रति भेदः? तस्माद्यदा धातोर्न भवति तदाभ्यासस्यापि न भवत्येव॥

बाल-मनोरमा

विभाषा श्वेः २५१, ६।१।३०

संप्रसारणमिति। "ष्यङ संप्रसारण""मित्यतस्तदनुवृत्तेरिति भावः। लिटि यङि चेति। "लिङ्यङो"रित्यनुवृत्तेरिति भावः। शुशावेति। णलि अभ्याससंप्रसारणं बाधित्वा द्वित्वात्प्रागेव परत्वादनेन संप्रसारणे कृते ततो द्वित्वे वृद्ध्यावादेशाविति भावः। अकित्त्वाद्वचिस्वपीत्यस्य नाऽत्र प्राप्तिः। तथा च लिट()कित्स्वेकवचनेषु द्वित्वात्प्रागप्राप्तस्य संप्रसारणस्य विकल्पविधिः। "शुशुवतु"रित्यादिद्विवचनबहुवचनेषु तु द्वित्वात्प्राग्वचिसवपीति प्राप्तस्य संप्रसारणसय विकलपविधिः। तथा च उभयत्र विभाषेयम्। यङंशे त्वप्राप्तविभाषैवेयम्-- शोशूयते। शे()आईयते। तत्र णलि एतत्संप्रसारणाऽभावपक्षे "()आईत्यस्य द्वित्वानन्तरमभ्याससंप्रसारणे शु()आआय इति प्राप्ते आह--()आयतेर्लिट()भ्यासलक्षणप्रतिषेध इति।

लिट()भ्याससंप्रसारणस्य प्रतिषेधो वक्तव्य इत्यर्थः। तथा च "()इआ"इत्यभ्यासस्य संप्रसारणे पूर्वरूपे "अकृत्सार्वधातुकयो"रिति दीर्घ इति भावः। लुङि विशेषमाह-- जृ()स्तन्भ्विति। तथा च अ()इआ अ त् इति स्थिते इयङि प्राप्ते--

तत्त्व-बोधिनी

विभाषा श्वेः २२२, ६।१।३०

विभाषा श्वेः। लिटि यङि चेति। "लिड()ङोश्चे"ति पूर्वसूत्रमिहानुवर्तत इति भावः। उभयत्रविभाषेयम्। लिडंशे अतुसादौ नित्यं प्राप्ते, णलादावप्राप्ते। यङंशे त्वप्राप्तविभाषा। शोशूयते। शे()आईयते। संप्रसारणं नेति। अन्यथा शु()आआयेत्यादि स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

णौ च संश्चङोः ६।१।३१

विभाषा श्वेः ६।१।३० इति वर्तते। सन्परे चङ्परे च णौ परतः श्वयतेर् धातोः विभाषा सम्प्रसारणं भवति। शुशावयिषति। चङि अशूशवत्, अशिश्वयत्। सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयो भवति इति वचनादन्तरङ्गम् अपि वृद्ध्यादिकं सम्प्रसारणेन बाध्यते। कृते तु संप्रसारणे वृद्धिरावादेशश्च। ततः ओः पुयण्ज्यपरे ७।४।८० इत्येतद् वचनं ज्ञापकं णौ कृतस्थानिवद्भावस्य, इति स्थानिवद्भावात् शुशब्दो द्विरुच्यते।

न्यासः

णौ च संश्चङोः। , ६।१।३१

"णौ च संश्चङोः" इति भिन्नाधिकरणे सप्तम्यौ---संश्चङोः परतो यो णिस्त()स्मण्णौ परतो यः ()आयतिरिति। "शुशावयिषति" इति। ()आयतेर्णिच्(), सन्(), सम्प्रसारणम्(), वृद्धिरावादेशः "शु" इत्येतस्य द्विर्वचनम्()। "अशूशवत्()" इति। लुङ्, च्लेश्चङ्, सम्प्रसारणादिकम्(), पूर्ववण्णिलोपः, "णौ चङि" ७।४।१ इति ह्रस्वः, द्विर्वचनम्(), "दीर्घो लघोः" ७।४।९४ इति दीर्घः। ननु च ()आयतेर्णिचि तदन्ताच्च सनि कृते चङि चान्तरङ्गत्वात्? पूर्ववृद्ध्यायादेशाब्यां भवितव्यम्(), ततः सम्प्रसारणेन। तथा च सति शुशुययिषतीति सन्परे णौ भवितव्यम्(), चङ्परे तु--अशूशुयदिति, तत्? कथं शुशावयिषति, अशूशवदिति चोदाहृतम्()? इत्याह--"सम्प्रसारणम्()" इत्यादि। आदिशब्देनायावेशः परिगृह्रते। सम्प्रसारणाश्रयं पुनरत्र "सम्प्रसारणाच्च" ६।१।१०४ इति परपूर्वत्वम्()। "तेनापि वृद्ध्यादिकं बाध्यते" इति। नन्वेवमपि वृद्ध्यावादेशयोः कृतयोः शावित्यस्य द्विर्वचनं प्राप्नोति न केनचित्? णौ स्थानिवद्भावो विहितः? इत्यत आह--"ओः पुयण्ज्यपरे" इत्यादि। यत्र चैतज्ज्ञापकं तथा तस्यैव वृत्तावुपपादयिष्यामः॥

बाल-मनोरमा

णौ च संश्चङोः ४०७, ६।१।३१

णौ च संश्चङोः। "विभाषा ()ओ" रिति सूत्रमनुवर्तते। "ष्यङ संप्रसारण"मिति चातदाह-- सन्तपर इत्यादिना। नन्वन्तरङ्गत्वात्संप्रसारणात्पूर्वं वृद्ध्यायादेशयोः कृतयोः पश्चात्संप्रसारणे पूर्वरूपे अशीशवदिति स्यात्, अशूशवदिति न स्यादित्यत आह-- संप्रसारण तदाश्रयं चेति। इदं वचनं "लिट()भ्यासस्ये"ति सूत्रभाष्ये स्थितम्। एवं च अ()इआ इ अत् इत्यत्र वृद्ध्यायादेशाभ्यां प्रागेव वकारस्य संप्रसारणमुकार इति फलितम्। पूर्वरूपमिति। ततश्च शु इत्यस्य द्वित्वे

उत्तरखण्डस्य णिचमाश्रित्य वृद्ध्यावादेशयोरुपधाह्रस्वे सन्वत्त्वविषयत्वादभ्यासदीर्घे फलितमाह-- अशूशवदिति। संप्रसारणाऽभावपक्षे अशि()आयदित्यत्र अभ्यास्दीर्घमाशङ्क्य आह-- अलघुत्वादिति। संयोगापरकत्वादिति भावः। अवपूर्वात्स्तम्भेण्र्यन्तादवष्टम्भयतीत्यादि। "अवाच्चालम्बनादविदूर्ययो"रिति षत्वम्। चङि अवातस्तम्भदित्यत्र षत्वे प्राप्ते--

तत्त्व-बोधिनी

णौ च संश्चङोः ३५६, ६।१।३१

णौ च। "विभाषा ()ओ"रित्यनुवर्तते। "संश्चङो"रिति णावित्यस्य विशेषणं। "ह्वः संप्रसारण"मित्यतः संप्रसारणमित्यनुवर्तत एवेत्याह-- सन्परे चङ्परे इति। वचनादिति। इयं च परिभाषा "लिट()भ्यासस्योभयेषा"मित्यत्र वच्यादीनां ग्रह्वादीनामनुवृत्त्यैवेष्टसिद्धावुभयेषांग्रहणसामथ्र्याल्लभ्यते। अन्यथा वव्रश्चेत्यत्र हलादिःशेषे कृते वस्य संप्रसारणं स्यादित्याहुः। स्तन्भुसिव।

---

सूत्रम्

काशिका-वृत्तिः

ह्वः संप्रसारणम् ६।१।३२

णौ च संश्चङोः ६।१।३१ इति वर्तते। सन्परे चङ्परे च नौ परतो ह्वः संप्रसारणं भवति। जुहावयिषति, जुहावयिष्तः, जुहावयिषन्ति। अजूहवत्, अजूहवताम्, अजूहवन्। संप्रसारणस्य बलीयस्त्वात् शाच्छासाह्वाव्यावेपां युक् ७।३।३७ इति प्रागेव युक् न भवति। सम्प्रसारणम् इति वर्तमाने पुनः सम्प्रसारणम् इत्युक्तं विभाषा इत्यस्य निवृत्त्यर्थम्। ह्वः सम्प्रसारणम् अभ्यस्तस्य इत्येकयोगेन सिद्धे पृथग्योगकरनम् अनभ्यस्तनिमित्तप्रत्ययव्यवधाने सम्प्रसारणाभावज्ञापनार्थम्। ह्वयकम् इच्छति ह्वायकीयते। ह्वायकीयतेः सन् जिह्वायकीयिषति।

काशिका-वृत्तिः

अभ्यस्तस्य च ६।१।३३

ह्वः इति वर्तते, तदभ्यस्तस्य इत्यनेन व्यधिकरणम्। अभ्यस्तस्य यो ह्वयतिः। कश्च अभ्यस्तस्य ह्वयतिः? कारणम्। तेन अभ्यस्तकारणस्य ह्वयतिः प्रागेव द्विर्वचनात् सम्प्रसारणं भवति। जुहाव। जुहूयते। जुहूषति।

न्यासः

ह्वः सम्प्रसारणम्?। , ६।१।३२

"जुहावयिषति" इति। अत्रापि पूर्ववद्बलीयस्त्वाद्वृद्ध्यादेः प्राक्? सम्प्रसारणं भवति, अभ्यासस्य "कुहोश्चुः" ७।४।६२ इति चुत्वम्()--हकारस्य झकारः। तस्य "अभ्यासे चर्च" ८।४।५३ इति जश्त्वम्()--जकारः। अथात्र कस्मात्? "साच्छाशाह्वा" (७।३।३७) इत्यादिना प्रागेव सम्प्रसारणाद्युगागमो न भवति? इत्याह--"सम्प्रसारणस्य" इत्यादि। ननु च सम्प्रसारणग्रहणमनुवत्र्तत एव, तत्? किमर्थं पुनः सम्प्रसारणमित्युच्यते? इत्याह--"सम्प्रसारणमिति" इत्यादि। पूर्वकं हि सम्प्रसारणग्रहणं विभाषेत्यनेन सम्बद्धम्(), अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्()। तस्माद्विभाषेत्यस्य निवृत्तये पुनः सम्प्रसारणमित्युक्तम्()। अथ कस्माद्योगविभागः क्रियते, यावता "ह्वः सम्प्रसारणमभ्यस्तस्य च" इत्येकयागेऽपि जुहावयिषतीत्यादि सिद्ध्यत्येव, अत्रापि ह्वयतरभ्यस्तस्य कारणत्वेन सम्बन्धी भवत्येव, तथा च"एकाचो द्वे प्रथमस्य" (६।१।१) इति स एव द्विरुच्यमानोभ्यसतस्य कारणं भवत्येव? इत्याह--"ह्वः सम्प्रसारणम्()" इत्यादि। एकयोगेनैव सिद्धे

पृथग्योगकरणेनायमर्थो न ज्ञाप्येत, तदा स्यादेवात्र सम्प्रसारणम्()। भवति ह्वत्रापि ह्वपतिरभ्यस्तस्य निमित्त्म्()। ह्वायकशब्दाण्ण्वुलन्तात्? क्यच्(), "क्यति च" ७।४।३३ इतीत्त्वम्(), क्यजन्तात्? सन्(), इट्(), "अतो लोपः ६।४।४८ द्विर्वचनम्()॥

न्यासः

अभ्यस्तस्य च। , ६।१।३२

चकारः "ह्वः" इत्यनुकर्षणार्थः, अत एवाह--"ह्व इत्यनुवत्र्तते" इति। यदि "ह्वः" इत्येतन्नानुवत्र्तते ततोऽभ्यस्तमात्रस्य स्यात्()। तत्र "ह्वः" इत्यनुवत्र्तमानस्याभ्यस्तस्येत्यनेन यदि समानाधिकरण्यं स्यात्(), तदा द्विर्वचने कृतेऽभ्यस्तसंज्ञायामुपजातायां सम्प्रसारणं स्यात्()। एवञ्च "न सम्प्रसारणे सम्प्रसारणम्? ६।१।३६ इत्यभ्यासस्य सम्प्रसारणं न स्यात्()। यद्यपि परेण हरूपेण व्यवधानम्(), तथापि समानाङ्गग्रहणात्? तस्य व्यवधानेऽपि प्राप्नोत्येवात्र प्रतिषेधः, यथा यूनेत्यत्र--इतीमं पक्षे सामानाधिकरण्ये दोषं पश्यन्नाह--"तदभ्यस्तस्येत्यनेन व्यधिकरणम्()" इति। भिन्नाभिधेयमित्यर्थः। "अब्यस्तस्य यो ह्वयतिः" इत्यादिना सम्बन्धलक्षणां षष्ठीं ख्यापयंस्तदेव वैयधिकरण्यं दर्शयति। तेन किं सिद्धं भवति? इत्याह--"तेन" इत्यादि। "जुहाव" इति। सम्प्रसारणे वृद्ध्यावादेशयोः स्थानिवद्भावेन हु इत्यस्य द्विर्वचनम्()॥

बाल-मनोरमा

ह्वः संप्रसारणम् ४१४, ६।१।३२

ह्वः संप्रसारणम्। ह्वेञः कृतात्त्वस्य "ह्व" इति षष्ठी। "णौ च संश्चङो"रित्यनुवृत्तिमभिप्रेत्य आह-- सन्पर इत्यादि। अजूहवदिति। ह्वा इ अ त् इति स्थिते "संप्रसारणं तदाश्रयं च कार्यं बलव"दिति वचनात्कृते संप्रसारणे पूर्वरूपे च "हु" इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वे सन्वत्त्वदीर्घाविति भावः। अत्र कृते संप्रसारणे पूर्वरूपे च ह्वारूपाऽभावान्न युक्। पाधातोर्णौ युगागमे पायि इत्यस्माल्लुङि चङि द्वित्वादौ अपीपय् अ त् इति स्थिते -

बाल-मनोरमा

अभ्यस्तस्य च २४८, ६।१।३२

अभ्यस्त स्य च। "ह्वः संप्रसारण"मित्यनुवर्तते। "ह्व" इति कृतात्त्वस्य "हवे" इत्यस्य षष्ठ()न्तम्। तथा च अभ्यस्तीभूतस्य ह्वेञः संप्रसारणे कृते पूर्वखण्डस्याऽभ्यासस्य "न संप्रसारणे संप्रसारण"मिति निषेधः स्यादित्यत आह-अभ्यस्तीभविष्यत इति। ननु यद्यभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं तर्हि द्वित्वं बाधित्वा परत्वात्संप्रसारणे सति "विप्रतिषेधे यद्बाधितं तद्बाधित"मिति न्यायाद्द्वित्वं न स्यादित्यत आह--ततो द्वित्वमिति। संप्रसारणानन्तरं द्वित्वमित्यर्थः, पुनः प्रसङ्गविज्ञानादिति भावः। तथा च णलि आत्त्वे कृते संप्रसारणे पररूपे "हु" इत्यस्य द्वित्वे "कुहोश्चु"रिति चुत्वे तस्य जश्त्वे "अचो ञ्णिती"ति वृद्धौ अवादेशे परिनिष्ठितं रूपमाह--जुहावेति। जुहुवतुरिति। अतुसि आत्त्वे आल्लोपं बाधित्वा अन्तरङ्गत्वात् "अभ्यस्तस्य चे"त्यनेन संप्रसारणे "वार्णादाङ्गं बलीयः" इत्यस्याऽनित्यतयाऽन्तरङ्गत्वात्पूर्वरूपे कृते द्वित्वे उवङिति भावः। यद्यपि किति "वचिस्वपी"ति संप्रसारणेऽपि सिद्धमिदम्, तथापि अकिति आवश्यकमभ्यस्तस्य चेत्येत न्न्याय्यत्वादिहापि भवतीति बोध्यम्। एवं जुहुवुः। भारद्वाजनियमात्थलि वेट्। तदाह--जुहोथ जुहविथेति। जुहुवथुः जुहुव। जुहाव जुहव जुहुविव जुहुविम। क्रादिनियमादिट्। जुहुवे जुहुवाते जुहुविरे। जुहुविषे जुहुवाथे जुहुविढ्वे जुहुविध्वे। जुहुवे जुहुविवहे जुहुविमहे। ह्वातेति। तासि आत्त्वम्। ह्वास्यति ह्वास्यते। ह्वयतु ह्वयताम्। अह्वयत् अह्वयत। ह्वयेत् ह्वयेत। हूयादिति। आशीर्लिङि आत्त्वे यासुटि कित्त्वात् "वचिस्वपी"ति संप्रसारणे पूर्वरूपे "अकृत्सार्वधातुकयो"रिति दीर्घ इति भावः। ह्वासीष्टेति। आशीर्लिङि सीयुटि रूपम्। लुङि विशेषमाह--

तत्त्व-बोधिनी

ह्वः संप्रसारणम् ३६२, ६।१।३२

ह्वः संप्र। "णौ च संश्चङो"रिति वर्तते। तदाह--सन्पर इत्यादि। अजूहवत्।अजुहाविति। "काण्यादीनां वे"ति ह्रस्वविकल्पः।

तत्त्व-बोधिनी

अभ्यस्तस्य च २१९, ६।१।३२

अभ्यस्तस्य चेति। पूर्वयोगस्तु "णौ च संश्चङो"र्विषये प्रवर्तते। जुहावयिषति। अजूहवत्। अभ्यस्तीभविष्यतो ह्वेञ इति। अभ्यस्तनिमित्ते प्रत्यये परे द्विर्वचनात्प्रागेव ह्वेञः संप्रसारणमिति फलितोऽर्थः। अभ्यस्तमस्यास्तीति अभ्यस्तः = सनादिः, तस्य यो ह्वेञ् = तत्प्रकृतिभूतस्तस्येत्यादिव्याख्यानस्य स्वीकारात्। तेन जिह्वायकमात्मन इच्छति जिह्वायकीषतीत्यत्र ह्वेञः संप्रसारणं न भवति, ण्वुलो द्वित्वनिमित्तत्वाऽभावात्। अत एव णिचो द्वित्वनिमित्तत्वं नेति "ह्वः संप्रसारण"मिति योगविभागः क्रियते। एतच्च आकरे स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि ६।१।३४

हवः इति वर्तते। छन्दसि विषये ह्वयतेर् धातोर् बहुलं संप्रसारणं भवति। इन्द्राग्नी हुवे। देवीं सरस्वतीं हुवे। ह्वेञो लटि आत्मनेपदोत्तमैकवचने बहुलं छन्दसि इति शपो लुकि कृते सम्प्रसारणमुवङादेशश्च। न च भवति। ह्वयामि मरुतः शिवान्। ह्वयामि देवां।

न्यासः

बहुलं छन्दसि। , ६।१।३३

---

सूत्रम्

काशिका-वृत्तिः

चायः की ६।१।३५

बहुलं छन्दसि इति वर्तते। चायतेर् धातोः छन्दसि विषये बहुलं की इत्ययम् आदेशो भवति। वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यम्। लिटि उसि रूपम्। न भवति। अग्नेर् ज्योतिर् निचाय्यः।

न्यासः

चायः की। , ६।१।३४

"निचिक्यु" इति। "एरनेकाचः" ६।४।८२ इत्यादिना यणादेशः। "निचाय्य" इति। ल्यबन्तमेतत्()। दीर्घोच्चारणं चिकीवानित्यत्र दीर्घस्य श्रवणार्थम्()। इदं क्वसौ रूपम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्ताः ६।१।३६

छन्दसि इति वर्तते। अपस्पृधेथाम् इति स्पर्ध सङ्घर्षे इत्यस्य लङि आथामि द्विवर्चनं रेफस्य संप्रसारणम् अकारलोपश्च निपातनात्। इन्द्रश्च विष्णो यदपस्पृधेथाम्। अपस्पर्धेथाम् इति भाषायाम्। अपर आह स्पर्धः अपपूर्वस्य लिङि आथामि सम्प्रसरणम् अकारलोपश्च निपातनात्। बहुलं छन्दस्यमङ्योगे ऽपि ६।४।७५ इत्यडागमाभावः। अत्र प्रत्युदाहरणम् अपास्पर्धेथाम् इति भषायाम्। आनृचुः, आनृहुः इति। अर्च पूजायाम्, अर्ह पूजायम् इत्यनयोर् धात्वोलिट्युसि सम्प्रसारणम् अकारलोपश्च निपातनात्। ततो द्विर्वचनम्, उरदत्वम्, अत आदेः ७।४।७० इति दीर्घत्वम्। तस्मान् नुड् द्विहलः ७।४।७१ इति नुडागमः। य उग्रा अर्कमानृचुः। न वसून्यानृहुः। आनर्चुः, आनर्हुः इति भाषायाम्। चिच्युषे। च्युङ् गतौ इत्यस्य धातोः लिति सेशब्दे अभ्यासय सम्प्रसारणम् अनिट् च निपातनात्। चिच्युषे। चुच्युविषे इति भाषायाम्। तित्याज। त्यज हानौ इत्यसय् धातोः लिटि अभ्यासस्य सम्प्रसारणं निपात्यते। तित्याज। तत्याज इति भाषायाम्। श्राताः इति। श्रीञ् पाके इत्येतस्य धातोः निष्ठायां श्राभावः। श्रातास्त इन्द्रसोमाः। श्रितम् इति तस्य एव श्रीणातेः ह्रस्वत्वम्। सोमो गौरी अधिश्रितः। श्रिता नो गृहाः। अनयोः श्राभावश्रिभावयोर् विषयविभागम् इच्छति, सोमेषु बहुषु श्राभाव एव, अन्यत्र श्रिभावः इति। सोमादन्यत्र क्वचिदेकस्मिन्नपि श्राभावो दृश्यते। यदि श्रातो जुहोतन। तस्य श्राताः इति बहुवचनस्य अविवक्षितत्वादुपसंग्रहो द्रष्टव्यः। आशीः, आशीर्तः इति। तस्य एव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशः, निष्ठायाश्च नत्वाभावो निपातनात्। तामाशीरा दुहन्ति। आशीर्त ऊर्जम्। क्षीरैर् मध्यत आशीर्तः।

न्यासः

अपस्पृधेथामानृचुरानृहुश्चिच्युषेतत्याजश्राताः श्रितमाशीराशीर्त्ताः। , ६।१।३५

"अकारलोपश्च" इति। धातोरवयवो योऽकारस्तस्य निपातनाल्लोपः। "अपास्पर्द्धेथाम्()" इति। अपाकारस्य "आटश्च" ६।१।८७ इति सवर्णदीर्घत्वम्()। "विषयविभागमिच्छति" इति। स च निपातनसामश्र्यालल्लभ्यत इति वेदितव्यम्()। यदिक्वचिदप्येकस्मिन्? श्राभावो दृश्यते, तदर्थं तर्हि यत्नान्तरमास्थेयम्()। न हि श्राता इत्यनेनैतदपि सिद्धयति; सूत्रे बहुवचननिर्देशात्()। अत आह--"तस्य" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

न सम्प्रसारणे सम्प्रसारणम् ६।१।३७

सम्प्रसारने परतः पूर्वस्य यणः सम्प्रसारणं न भवति। व्यध विद्धः। व्यच विचितः। व्येञ् संवीतः। एकयोगलक्षनम् अपि सम्प्रसारणम् अत एव वचनात् प्रथमं परस्य यणः क्रियते, पूर्वस्य च प्रसक्तं प्रतिषिध्यते। सम्प्रसारणम् इति वर्तमाने पुनः सम्प्रसारनग्रहणं विदेशस्थस्य अपि सम्प्रसारणस्य प्रतिषेधो यथा स्यातिति। श्वयुवमघोनाम् अतद्धिते ६।४।१३३ यूनः। यूना। सम्प्रसारणग्रहणसामर्थ्यातेव पूर्वस्य प्रतिषेधे वक्तव्ये स्वर्णदीर्घत्वम् एकादेशो न स्थानिवद् भवति। सति वा स्थानिवत्त्वे व्यवधानमेतावदाश्रयिष्यते। ऋचि त्रेरुत्तरपदादिलोपश् छन्दसि। ऋचि परतः त्रेः सम्प्रसारणम् भवति उत्तरपदादिलोपश्च छन्दसि विषये। तिस्र ऋचः यस्मिन् तत् तृचं सूक्तम्। तृचं साम। ऋक्पूरब्धूःपथामानक्षे ५।४।७४ इति समासान्तः। छन्दसि ति किम्? त्यृचं कर्म। रयेर्मतौ बहुलम्। रयिशब्दस्य छन्दसि विषये मतौ परतो बहुलं सम्प्रसारणं भवति। आ रेवानेतु नो विशः। न च भवति। रयिमान् पुष्टिवर्धनः।

लघु-सिद्धान्त-कौमुदी

न संप्रसारणे संप्रसारणम् २९३, ६।१।३६

संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं

संप्रसारणम्। यूनः। यूना। युवभ्याम् इत्यादि॥ अर्वा। हे अर्वन्॥

न्यासः

न सम्प्रसारहणे सम्प्रसारणम्?। , ६।१।३६

येषां सम्प्रसारमुक्तं तेषां यावन्तो यणः सम्भवन्ति तेषां सर्वेषां सम्प्रसारणं प्राप्तमिति प्रतिषेधोऽयमारभ्यते। ननु चालोऽन्त्यपरिभाषया १।१।५१ अन्त्यस्यैव भविष्यति, नानन्त्यस्य? नैतदस्ति; न ह्यनया परिभाषया शक्यमिहोपस्थातुम्()। विचस्वपियजादीनामन्त्यस्य यणोऽसम्भवात्()। एवं तर्हि "अनन्त्यविकारेऽन्त्यसदेशस्य" (व्या।प।६३) इत्यन्त्यसदेशस्य कार्यं भविष्यति--अन्त्यसदेशो यो यण्? तस्यैव कार्यं भविष्यति, नैतरस्य? नैषास्ति परिभाषा; प्रयोजनाभावात्()। यदाह--तस्याः परिभाषाया सन्ति प्रयोजनातीति। तस्मात्? कत्र्तव्यमेतत्? सूत्रम्()। ननु च पूर्वपरयोरेकयोगलक्षणं सम्प्रसारहणम्(), ततो यदि तत्? परस्याभिनिर्वृत्तं तदा पूर्वस्याप्यभिनिर्वृत्तमेव, न चाभिनिर्वृत्तस्य निवृत्तिः शक्यते कर्त्तुम्(), नाप्यनभिनिर्वृत्तस्य निमित्तत्वेनाश्रयणं युज्यते, ततोऽस्मादेव प्रतिषेधवचनात्? तत्? परस्य तावत्? क्रियते; तत्र कृते तु पूर्वस्यापि प्राप्तं प्रतिषिध्यते। अथ सम्प्रसारणमित्यनुवत्र्तमाने पुनः सम्प्रसारणं किमर्थम्()? इत्याह--"सम्प्रसारणम्()" इत्यादि। असति पुनः सम्प्रसारणग्रहणे "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या। प।१९) इति प्रकृतस्यैव सम्प्रसारणस्य प्रतिषेधः स्यात्(), न विदेशस्थस्य। तस्माद्विदेशस्थस्यापि भिन्नप्रकारणविहितस्य प्रतिषेधो यथा स्यादित्येवमर्थं पुनः सम्प्रसारणग्रहणम्()। "यूनो यूना" इति। सम्प्रसारणे कृते परपूर्वत्वे कृते च "अकः सवर्णे दीर्घः" ६।१।९७। ननु च क्रियमाणेऽपि पुनः सम्प्रसारणग्रहणे तत्र प्रतिषेधो न स्यात्(), सवर्णदीर्घत्वस्य पूर्वविधौ स्थानिवद्भावे सत्युकारव्यवहितत्वात्()? अत आह--"सम्प्रसारणग्रहणसामथ्र्यदेव" इत्यादि। यदि स्थानिवद्भावः स्यात्(), अनर्थकं पुनः सम्प्रसारणग्रहणं स्यादित्यभिप्रायः। अभ्युपेत्य पुनः परिहारान्तरमाह--"सति वा" इत्यादि। सम्प्रसारणग्रहणसामथ्र्यादेवात्राश्रूयमाणोऽपिशास्तरान्तरेण स्थानिवद्भावमापन्नो योऽज्? व्यवधानं करोति, तन्मात्रेण व्यवधानं नाश्रयिष्यते--मा भूत्? सम्प्रसारणग्रहणमनर्थकमिति। ननु च "यूनश्च कुत्सायाम्? ४।१।१६५, "वृद्धो यूना" १।२।६५ इति निपातनादेव यूनः, यूनेत्यत्र सम्प्रसारणं न भविष्यति, तत्? किमेतन्निवृत्त्यर्थेन पुनः सम्प्रसारणग्रहणेन? नैतदस्ति; अबाधकन्यपि निपातनानि भवन्तीत्युक्तम्()। अपि चैतद्विषयमेव निपातनं विज्ञायते, तथा च--यूनः, यूना यूनीत्यत्र सम्प्रसारणं स्यादेवेति। "आरेवान्()" इति। रयिरस्यास्तीति मतुप्()। सम्प्रसारणे कृते "आद्गुणः"; ६।१।८४, "छन्दसीरः" ८।२।१५ इति वत्वम्()॥

बाल-मनोरमा

न संप्रसारणे संप्रसारणम् , ६।१।३६

न संप्रसारणे। इति यकारस्येति। सवर्णदीर्घनिष्पन्नस्य ऊकारस्य "अचः परस्मिन्" इति स्थानिवत्त्वेन संप्रसारणतया यकारस्य संप्रसारणपरकत्वान्न संप्रसारणमिकार इत्यर्थ#ः। ननूकारद्वयस्थानिकस्य ऊकारस्य स्थानिवत्त्वे सति तस्य उकारद्वयात्मकतया प्रथमेन उकारेण व्यवधानात्संप्रसारणपरत्वाऽभावात्कथमिह निषेधः()। "येन नाव्यवधान"मिति न्यायस्य तु नायं विषयः, विव्याथेत्यादौ "व्यथो लिटी"ति वकारस्याऽव्यवहितसंप्रसारणपरत्वे निषेधस्य चरितार्थत्वादिति चेन्मैवम्। एवं हि सति "न संप्रसारणे संप्रसारण"मिति निषेधस्य "व्यथो लिटी"ति संप्रसारणमात्रविषयकत्वमापद्येत। एवंच सति "व्यथो यो लिटी"ति यकारग्रहणेनैव सिद्धे "न संप्रसारणे संप्रसारण"मिति सूत्रमनर्थकमेव स्यात्। अतः "()आयुवे"ति संप्रसारणनिषेधकत्वमस्यावश्यकमिति व्यवहितेऽपि संप्रसारणे परे "यून" इत्यादौ निषेधो निर्बाधः, "यूनस्ति"रित्यादिनिर्देशाच्चेत्यलम्। ननु सकृत्प्रवृत्त्यैव युवन्शब्दे यवयोः संप्रसारणे जाते निषेधो व्यर्थः। निमित्तत्वानुपपत्तिश्च। यद्वा प्रथमं यकारस्य संप्रसारणमस्तु। तदानीं संप्रसारणपरत्वाऽभावेन निषेधाऽप्रवृत्तेः। अनन्तरं तु वकारस्यापि संप्रसारणमस्तु। तत्राह--अत एव ज्ञापकादिति। अन्यथा

एतन्निषेधारम्भवैयथ्र्यापातादिति भावः। इत्यादिति। यूने। यूनः, २। यूनोः। यूनि। "आतो मनिन्क्वनिब्वनिपश्च", "अन्येभ्योऽपि दृश्यते" इति ऋधातोर्वनिपि गुणे रपरत्वेऽर्वन्शब्दोऽ()ओ योगरूढः।

तत्त्व-बोधिनी

न संप्रसारेण संप्रसारणम् ३२४, ६।१।३६

न संप्रसारणे। "ह्वः" संप्रसारण"मित्यतः "संप्रसारणमित्यनुवर्तमानेऽपि पुनः सम्प्रसारणग्रहणात्प्रदेशान्तरस्थं "()आयुवमघोना"मित्यपि संप्रसारणं निषिध्यते, तदाह--इति यकारस्य नेत्वमिति। यून इति। ननू कारेण व्यवधानात्कथमत्र निपेधः(), "विव्याध""विव्यथे"इत्यादावव्यवधानेऽपि निषेधस्य चरितार्थत्वात्। न च सम्प्रसारणग्रहणादेव व्यवधानमिति वाच्यम्, "अचः परस्मि"न्निति स्थानिवत्त्वात्। अत्राहुः--विदेशस्थानिषेधार्थत्पुनः सम्प्रसारणग्रहणादेव व्यवधानेऽप्यत्र निषेधोभविष्यतीत्यदोषः। न च"व्यथो लिटी"ति विदेशस्थेन यकारस्य संप्रसारणे कृते वकारस्य तदभावाय "न सम्प्रसारणे"इति सूत्रं प्रवर्त्त्य पुनः संप्रसारणग्रहणं चरितार्थमिति व्यवधेने निषेधो न भविष्यतीति शङ्क्यं, "व्यथो लिटी"त्येतद्धलादिः शेषापवाद"इत्याकरे स्पष्टत्वात्। "उत्सर्गसदेशश्चापवाद"इति परस्यैव संप्रसारणं भवति न पूर्वस्ये"ति कैयटेन व्याख्यातत्वाच्चेचि।

---

सूत्रम्

काशिका-वृत्तिः

लिटि व्यो यः ६।१।३८

न सम्प्रसारणम् इति अनुवर्तते। लिटि परतो वयो यकारस्य सम्प्रसारणं न भवति। उवाय, ऊयतुः, ऊयुः। लिड्ग्रहणम् उत्तरार्थम्।

न्यासः

लिटि वयो यः। , ६।१।३७

वयेद्र्वौ यणौ, तत्र पूर्वण वकारस्य सम्प्रसारणप्रतिषेधे प्राप्ते यकारस्यानेन सम्प्रसारणं लिटि प्रतिषिद्ध्यते। तत्र प्रतिषिद्धे यकारः सम्प्रसारणभाग्न भवतीति वकारस्य सम्प्रसारणं भवति धातोरभ्यासस्य च; तत्र धातोग्र्रह्यादिसूत्रेण ६।१।१६ अभ्यासस्य "लिट()ब्यासस्योभयेषाम्()" ६।१।१७ इत्यनेन। अथ किमर्थं लिह्ग्रहणम्(), यावता वयेरादेशस्य लिटोऽन्यत्र सम्भवो नास्ति, तद्विधौ "लिट()न्यतरस्याम्()" २।४।४० इत्यतो लिङ्ग्रहणानुवृत्तेः, तत्सामथ्र्यादेव लिटि भविष्यति? इत्यत आह--"लिङ्ग्रहणमुत्तरार्थम्()" इति। "वेञः" ६।१।३९ इति प्रतिषेधो लिटि यथा स्यादित्येवमर्थं लिङ्ग्रहणम्()॥

बाल-मनोरमा

लिटि वयो यः २४४, ६।१।३७

लिटि वयो। संप्रसारणं नेति। "न संप्रसारणे संप्रसारण"मित्यतस्तदनुवृत्तेरिति भावः। तथा च यकारस्य संप्रसारणनिषेधे वकारस्य संप्रसारणमिति भावः। तदाह--ऊयतुरिति।

---

सूत्रम्

काशिका-वृत्तिः

वश् च अस्य अन्यतरस्यां किति ६।१।३९

अस्य वयो यकारस्य किति लिटि परतो वकारादेशो भवति अन्यतरस्याम्। ऊवतुः, ऊवुः। ऊयतुः, ऊयुः। किति इति किम्? उवाय। उवयिथ।

न्यासः

वश्चास्यान्यतरस्यां किति। , ६।१।३८

बाल-मनोरमा

वश्चास्याऽन्यतरस्यां किति २४५, ६।१।३८

वश्चास्या। "लिटि वयो यः" इत्यनुवर्तते। तदाह--वयोयस्येत्यादि। उवयिथेति। अकित्त्वान्न वः। अजन्तत्वादकारवत्त्वाच्च थलि इड्विकल्पमाशङ्क्याह-- वयेस्तासावभावात्थलि नित्यमिडिति। वयेर्लिट()एव विहितत्वेन तासावभवात् "अचस्तास्व"दिति "उपदेशेऽत्वतः" इति च इण्निषेधऽप्रसक्त्या क्रादिनयिमान्नित्यनिडित्यर्थः। "यस्तासावस्ति नित्याऽनिट् चे"ति भाष्यम्। ऊयथुः- ऊवथुः ऊय-ऊव। उवाय, उवय, ऊयिव-ऊविव, ऊयिम--ऊविम। ननु वयेरञित्त्वात्कथमुभयपदत्वमित्यत आह-- स्थानिवद्भावेनेति। ऊये ऊवे इति। "वश्चास्यान्यतरस्या"मिति वत्वविकल्पः। वत्वाऽभावे "लिटि वयो यः" इति यकारस्य संप्रसारणनिषेधः। वकारस्य "ग्रहिज्ये"ति, "वचिस्वपी"ति वा संप्रसारणम्। ऊयाते ऊयिरे। ऊयिषे ऊयाथे [ऊयिढ्वे] ऊयिध्वे। ऊये उयिवहे ऊयिमहे। क्रादिनियमादिट्। एवम् ऊवाते ऊविरे इत्यादि। वयादेशाऽभावे इति। यजादित्वात् "लिट()भ्यासस्ये"ति "वचिस्वपी"ति च संप्रसारणे प्राप्ते सती"ति शेषः।

तत्त्व-बोधिनी

वश्चास्याऽन्यतरस्यां किति २१६, ६।१।३८

वश्चास्या।"अस्ये"त्यनेन "वयो यः" इति परामृश्यते। तदाह-- वयो यस्येति। "वो वा किती"त्येव सुवचं, लिटि वयो यः" इति प्रकृतत्वात्। "उपदेशेऽत्वतः" इति निषेधमाशङ्क्याह--- वयस्तासावभावादिति। ननु स्थानिनस्तासौ विद्यमानत्वात् स्थानिवद्भावेन तासौ विद्यमानत्वं सुलभमिति चेत्। अत्राहुः--- शास्त्रीयकार्ये हि स्थानिवद्भावो न तु लौकिके। "अचस्तास्व"दिति निषेधस्य शास्त्रीयत्वेऽपि सोऽत्र नातिदिश्यते, "अच" इत्युक्तेरल्विधित्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

वेञः ६।१।४०

लिटि इत्यनुवर्तते। वेञ् तन्तुसन्ताने इत्यस्य धातोः लिति परतः सम्प्रसारणं न भवति। ववौ, ववतुः, ववुः। किति यजादित्वात् धातोः प्राप्तम् अकित्यपि लिट्यभ्यासस्य उभयेषाम् ६।१।१७ इत्यभ्यासस्य, अतः उभयं प्रतिषिध्यते।

न्यासः

वेञः। , ६।१।३९

बाल-मनोरमा

वेञः २४६, ६।१।३९

वेञः। "लिटि वयो यः" इत्यतो लिटीति, "न संप्रसारणे संप्रसारण"मित्यतो न संप्रसारणमिति चानुवर्तते।तदाह--वेञो नेति। अत्र कितीति नानुवर्तते। तदाह--ववाविति। णलि संप्रसारणनिषेधे "आदेच उपदेशे" इत्यात्वे "आत औ णलः"

इत्यौभावे "वृद्धिरेची"ति वृद्धौ रूपम्। ववतुरिति। "आदेचः" इत्यात्त्वे "आतो लोपः"। एवं ववुः। भारद्वाजनियमात्थलि वेट्, वेञस्तासावनिट्कत्वात्। तदाह--वविथ ववाथेति। इट्पक्षे अकित्त्वेऽपि इट्परत्वादाल्लोप इति भावः। ववथुः वव। ववौ वविव वविम। क्रादिनियमादिट्। ववे इति। ववाते वविरे। वविषे ववाथे [वविढ्वे]। वविध्वे। ववे वविवहे वविमहे। वातेति। लुटि तासि आत्त्वम्। वास्यति वास्यते। वयतु वयताम्। अवयत् अवयत। वयेत् वयेत। ऊयादिति। आशीर्लिङि यासुटि कित्त्वात् "वचिस्वपी"ति संप्रसारणे पूर्वरूपे "अकृत्सार्वधातुकयो"रिति दीर्ग इति भावः। वासीष्टेति। आशीर्लिङि आत्मनेपदे, सीयुटि आत्त्वे रूपम्। वासीयास्ताम्। अवासीदिति। आत्त्वे कृते इट्पकौ। अवास् इ स् ईदिति स्थिते "इट ईटी"ति सिज्लोपः। अवासिष्टामित्यादि। आत्मनेपदे--अवास्त अवासातामित्यादि। अवास्यत् अवास्यत। व्येञ् संवरणे इति। ञित्त्वादुभयपदी। अनिट्। व्ययति व्ययते इति। शपि अयादेशः। णलादौ तु आत्त्वे विव्यौ विव्यतुरित्यादि प्राप्तम्।

तत्त्व-बोधिनी

वेञः २१७, ६।१।३९

वेञः। लिटि किम्?। उतम्। उतवान्।

---

सूत्रम्

काशिका-वृत्तिः

ल्यपि च ६।१।४१

वेञः इत्यनुवर्तते। ल्यपि च पर्तो वेञः सम्प्रसारणं न भवति। प्रवाय। उपवाय। पृथग्योगकरणम् उत्तरार्थम्।

न्यासः

ल्यपि च। , ६।१।४०

---

सूत्रम्

काशिका-वृत्तिः

ज्यश् च ६।१।४२

ल्यपि इत्येव। ज्या वयोहानौ इत्यस्य धातोः ल्यपि परतः सम्प्रसारणं न भवति। प्रज्याय। उपज्याय।

न्यासः

ज्यश्च। , ६।१।४१

तत्त्व-बोधिनी

ज्यश्च १६०६, ६।१।४१

ज्यश्च। संप्रसारणं न स्यात्। एवं व्यश्चेत्यत्रापि व्याख्येयम्।

---

सूत्रम्

काशिका-वृत्तिः

व्यश् च ६।१।४३

ल्यपि इत्येव। व्येञ् संवरणे इत्येतस्य धातोः ल्यपि परतः सम्प्रसारणं न भवति। प्रव्याय। उपव्याय। योगविभागः उत्तरार्थः।

न्यासः

व्यश्च।, ६।१।४२

"योगविभाग उत्तरार्थः" इति। उत्तरत्र व्येञ एव विभाषा सम्प्रसारणं यथा स्यात्(), "ज्या" इत्यस्य मा भूदित्येवमर्थो योगविभागः॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा परेः ६।१।४४

ल्यपि च व्यश्च इति अनुवर्तते। परेरुत्तरस्य व्येञित्येतस्य धातोः ल्यपि परतः विभाषा सम्प्रसारणं न भवति। परिवीय यूपम्, परिव्याय। सम्प्रसारणे कृते परपूर्वत्वे च ह्रस्वस्य इति तुक प्राप्नोति, स हलः [६।४।२](#) इति दीर्घत्वेन परत्वाद् बाध्यते।

न्यासः

विभाषा परेः।, ६।१।४३

तत्त्व-बोधिनी

विभाषा परेः १६०७, ६।१।४३

कथमिति। ल्यबादेशस्य स्थानिभूतः क्त्वाप्रत्ययो दुर्लभः तद्वधौ पूर्वकाल इत्युक्तेः। न चेह तदस्ति। पूर्वं ह्रसौ स्वपिति पश्चान्मुखं व्यादत्ते। यदैव हसति तदैव नेत्रे संभीलयति। तथा च क्त्वाप्रत्ययस्य दुर्लभत्वाल्ल्यपः प्रसक्तिरेव नास्तीति प्रश्नः। समाधत्ते-- व्यादानेत्यादिना। एतेने()आरःसर्वं व्याप्य वर्तते, ज्ञात्वा तिष्ठतीत्यादि व्याख्यातम्। "श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते" इत्यादौ तु समानकर्तृकतानिर्वाहार्थं "स्थितस्ये"त्यादि यथासंभवमध्याहार्यम्।

---

सूत्रम्

काशिका-वृत्तिः

आदेच उपदेशे ऽशिति ६।१।४५

धातोः इति वर्तते। एजन्तो यो धातुरुपदेशे तस्य अकारादेशो भवति, शिति तु प्रत्यये न भवति। ग्लै ग्लाता। ग्लातुम्। ग्लातव्यम्। शो निशाता। निशातुम्। निशातव्यम्। एचः इति किम्? कर्ता। हर्ता। उपदेशे इति किम्? चेता। स्तोता। अशिति इति किम्? ग्लायति। म्लायति। कथं जग्ले, मम्ले? न एवं विज्ञायते, शकार इद् यस्य सो ऽयं शितिति, किं तर्हि, श एव इत् शित्। तत्र यस्मिन् विधिस्तदादावल्ग्रहणे इति शिदादौ प्रत्यये प्रतिषेधः। एश् शकारान्तो भवति। अशिति इति प्रसज्यप्रतिषेधो ऽयम्, तेन एतदात्वम् अनैमित्तिकं प्रागेव प्रत्ययोत्पत्तेर् भवति इति, सुग्लः, सुम्लः इति आतश्चोपसर्गे [३।१।१३६](#) इति कप्रत्ययः, सुग्लानः, सुम्लानः इति आतो युच् [३।३।१२८](#) इत्येवम् आदि सिद्धम् भवति इति। आकाराधिकारस्त्वयं नित्यं सम्यतेः [६।१।५६](#) इति यावत्।

लघु-सिद्धान्त-कौमुदी

आदेच उपदेशेऽशिति ४९५, ६।१।४४

उपदेशे एजन्तस्य धातोरात्वं न तु शिति। जग्लौ। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्॥

न्यासः

आदेच उपदेशेऽशिति। , ६।१।४४

"धातोरिति वत्र्तते" इति। "लिटि धातोरनभ्यासस्य" ६।१।८ इत्यत; तस्य च धातोरेवैच इति विशेषणम्(), विशेषमेन च तदन्तविधिर्भवतीत्याह--"एजन्तो यो धातुः" इति। "उपदेशे" इति। आद्युच्चारणे गणपाठ इत्यार्थः। "चेता, स्तोता" इति। ननु च लक्षणप्रतिपदोक्तपरिभाषयैवात्र (व्या।प।३) न भविष्यति, तत्? किमुपदेशग्रहणेन? एवं तर्हि उपदेशग्रहणमतेतज्ज्ञापयति--अनित्यैषा परिभाषेति। एतेन "अर्त्तिह्री" (७।३।३६) इत्यादिसूत्रे लाक्षणिकस्याप्याकारस्य ग्रहणे सति क्रापयतीत्यादावपि पुक्? सिद्धो भवति। "श इद्? यस्य सोऽयं शित्()" इति। यश्च "लिटस्तझयोरेशिरेच्()" ३।४।८१ इत्येशादेशः स शिद्भवति, ततश्च शिति प्रतिषेधे क्रियमाण एश्यप्यात्वं न प्राप्नोति। अत्रायादेशे कृते स्थानिवद्भावेन "ग्लै" इत्यस्य द्विर्वचने "जग्लाय" इत्यनिष्टं रूपं स्यात्()--इति मन्यमान आह--"कथम्()" इत्यादि। "ग्लै इत्यादौ "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "नैवम्()" इत्यादिना परिहारः। श एव इत्? शिदिति विज्ञायमाने सत्यल्ग्रहणमेव भवति। तत्र "यस्मिन्? विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) परिभाषया शिदादौ प्रत्यये प्रतिषेधेन भवितव्यम्(), न चैश्? शिदादिः; किं तर्हि? श#इदन्तः शिदन्तस्यैवोच्चारणात्()। तस्मादत्रैशि प्रतिषेधो न भवति। अशितीति पर्युदासो वा? प्रसज्यप्रतिषेधो वा? तत्र यदि पर्युदासः, तदा शितोऽन्यदात्वनिमित्तमाश्रितं स्यात्()। एवञ्च यावदात्वस्य निमित्तं न भवति तावदात्()वेन भवितव्यमिति; अनाकारान्तत्वात्()। "सुगलः" इत्यादावाकारान्तलक्षणः कप्रत्ययो न स्यादित्येच्चेतसिकृत्वाऽऽह--"अशति" इत्यादि। तेन किं सिद्धं भवति? इत्याह--"तेन" इत्यादि। प्रसज्यप्रतिषेधे ह्यात्वस्य शिति प्रतिषेधः क्रियते, न तु किञ्चिन्निमित्त्माश्रीयत इति तदनैमित्तिकं भवति। अतः प्रागेव प्रत्ययोत्पत्तेरात्वं भवतीत्याकारान्तलक्षण) प्रत्ययः सिद्ध्यति, तेन "सुग्लः" इत्यादि। सिद्धं भवति। आदिशब्देन सुग्लः, सुग्ला--इत्यादेग्र्रहणम्()। तत्र हि स्त्रियाम्? "आतश्चोपसर्गे ३।३।१०६ इत्यङ्॥

बाल-मनोरमा

आदेच उपदेशेऽशिति २०७, ६।१।४४

आदेच। एजन्तस्य धातोरिति। "लिटि धातो"रित्यतो धातोरित्यनुवृत्तमेचा विशेष्यते, तदन्तविधिरिति बावः। न तु शितीति। श् चासौ इच्चेति कर्मधारयात्सप्तमी, प्रत्ययविशेषणत्वात्तदादिविधिः, इत्संज्ञकशकारादौ प्रत्यये परे इति लभ्यते। "ल्यपि च" "न व्यो लिटी"त्यादिपूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्त्या "प्रत्यये" इति विशेष्यलाभः। "अशिती"ति न पर्युदासः। तथा सति शिद्भिन्ने प्रत्यये परे इत्यर्थः स्यात्। ततश्च "सुग्ल" इत्यत्र ग्लैघाटोः "आतश्चोपसर्गे" इति कप्रत्ययो न स्यात्, कप्रत्ययनिमित्तमात्वम्, आदन्तात्प्रत्यय इत्यन्योन्याश्रयात्। "शिति ने"ति प्रसज्यप्रतिषेधे तु आत्वस्य अनैमित्तिकतया कप्रत्ययनिमित्तकत्वाऽभावात् प्रथमात्वे कृते कप्रत्ययः सूपपादः। "शिती"ति बहुव्रीह्याश्रयणे ग्लैधातोर्भावे लिटि "भावकर्मणो"रिति तङि एशि आत्वे आतो लोपे "जग्ले" इति न सिध्येत्, एशः शित्त्वेन तस्मिन्परे आत्वस्य निषेधात्। अतः कर्मधारयमाश्रित्य इत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थ आश्रितः। एवं च पर्युदासेऽपि न क्षतिः। इत्संज्ञकशकारादिभिन्नप्रत्यये विवक्षिते इत्याश्रयणेन "सुग्ल" इत्यत्र कप्रत्ययात्प्रागेव आत्वोपपत्तेः। उपदेशे किम्?। चेता, स्तोता। दातोः किम्?। गोभ्याम्। "गमेर्डो"रिति डोप्रत्ययोपदेशात् उपदेशे एच् तदन्तत्वाद्गो इत्यस्य प्राप्तिः। न च मेङादीनामुपदेशे एजन्तत्वाऽभावात्कथमात्वमिति न शङ्क्यम्, "उदीचां माङः" इति निर्देशेन "नानुबन्धकृतमनेजन्तत्व"मिति ज्ञापनादित्यास्तां तावत्।

तत्त्व-बोधिनी

आदेच उपदेशेऽशिति १७९, ६।१।४४

आदेच उपदेशेऽशिति। "लिटि धातो"रित्यनुवृत्तमेचा विशेष्यते। तदाह-- एजन्तस्य धातोरिति। उपदेशे किम्?। चेता। स्तोता। ननु लाक्षणिकत्वादेवाऽत्र न भविष्यतीति चेत्। अत्राहुः वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति ज्ञापनार्थमुपदेशग्रहणम्। तेन "क्रीङ्जीनां णौ" इति कृतात्वे क्रापयीत्यादौ पुक् सिध्यतीति मनोरमाकृत्। धातोः किम्?। गोभ्याम्। नौभ्याम्। अस्ति ह्रत्रापि "गमेर्डोः" "ग्लानुदिभ्यां डौ" रित्युपदेशे एच्। "अशिती"ति प्रसज्यप्रतिषेध इत्याह--- न तु शितीति। पर्युदासे तु जग्ले मग्ले इत्यादौ "द्विर्वचनेऽची"ति निषेधादात्वं न स्यात्, अभ्यासे इकारश्च श्रूयेत। किं च "सुग्ल" इत्यत्र "आतश्चोपसर्गे" इति कः, "सुग्ले"त्यत्र "आतश्चोपसर्गे" इति रिउआयामङ्, "सुग्लान" इत्यत्र "आतो युजि"ति युज्न स्यात्। प्रत्ययनिमित्तं ह्यात्वम्, आदन्ताच्च प्रत्यय इत्यन्योन्याश्रयात्। प्रसज्यप्रतिषेधे तु न कोऽपि दोषः। "ह्वावामश्चे"ति सूत्रेण कबाधनार्थं पुनरण्विधानं च प्रतिषेधपक्षे ज्ञापकम्। तदाहुः--- अनैमित्तिकमात्वं, शिति तु प्रतिषेध इति। नन्वेमपि एशः शित्वाकाले मम्ले इत्यादि न सिध्यतीति चेत्। अत्राहुः---- यदि त#उ शितीति बहव्रीहिः स्यात्तदाऽत्र स्यादेव दोषः। किं तु क्रमधारयोऽयम्। तथा चाऽशितीत्यत्रेत्संज्ञकारादौ प्रत्यये परे नेत्यर्थः। धातुग्रहणाक्षिप्तस्य प्रत्ययस्य शितीति कर्मधारयेण विशेषणात्॥ विषयसप्तम्यां तु इत्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्वमित्यर्थात्पर्युदासेऽपि न क्षतिरिति।

---

सूत्रम्

काशिका-वृत्तिः

न व्यो लिटि ६।१।४६

व्येञित्येतस्य धातोः लिटि परत आकारादेशो न भवति। संविव्याय। सविव्ययिथ। लिट्यभ्यासस्य उभयेषाम् ६।१।१७ इति अभ्यासस्य सम्प्रसारणम्। णलि अचो ञ्णिति ७।२।११५ इति वृद्धिः।

न्यासः

न व्यो लिटि। , ६।१।४५

"व्येञ् संवरणे" (धा।पा।१००७)। अथालिटीति कस्मान्न ज्ञायते, तुल्या हि संहिता? नैतदस्ति; यदि ह्येवं स्यात्(), "लिटि व्यः" इति नियम एव कृतः स्यात्()--लिट्()एवात्त्वम्(), नान्यत्रेति। लक्ष्यस्थित्या च विपरीतनियमो भविष्यति। द्विवचनबहुवचनयोः सम्प्रसारणे पूर्वरूपत्व आत्()वे च सत्यसति वा नास्ति विशेष इत्येकवचनान्तमुदाह्यतम्()। "संविव्ययिर्थः" इति। थलि वलादिलक्षणस्येटः "एकाचः" ७।२।१० इत्यादिना प्रतिषेधः। पुनरपि क्रादिनियमार्थः प्राप्तः, सोऽपि "अचस्तास्वत्? ७।२।६१ इत्यादिना प्रतिषिद्धः, पुनः "ऋतो भारद्वाजस्य" ७।२।६३ इति नियमाद्विकल्पे प्राप्ते "इडर्त्तिव्ययतीनाम्()" ७।२।६६ इति नित्यं क्रियते॥

बाल-मनोरमा

न व्यो लिटिः २४७, ६।१।४५

तत्राह-- न व्यो लिटि। "व्ये" इत्यस्य कृतात्त्वस्य षष्ठ()न्तस्य "व्य" इति निर्देशः। आत्त्वमिति। "आदेच उपदेशे" इत्यत आदित्यनुवृत्तेरिति भावः। वृद्धिरिति। णलि व्ये अ इति स्थिते "अचो ञ्णिती"ति वृद्धिरित्यर्थः। तथा च व्यै-अ इति स्थितम्। ननु तत्र द्वित्वे "लिट()भ्यासस्ये"त्यभ्यासे यकारस्य संप्रसारमे पूर्वरूपे उत्तरखण्डस्य आयादेशे "विव्याये"ति रूपं वक्ष्यति, तदयुक्तं, संप्रसारणात्प्राक् परत्वाद्धलादिशेषेण यकारस्य निवृत्तौ वकारस्य संप्रसारणे उकारे सति

उव्यायेत्यापत्तेरित्यत आह-- परमपीति। उभयेषामिति। "लिट()भ्यासस्ये"ति सूत्रे "उभयेषा"मिति ग्रहणसामर्थ्यादित्यर्थः। तदेवोपपादयति--अन्यथेति। "वचिस्वपियजादीना"मित्यस्य, "ग्रहिज्यावयिव्यधिविष्टिविचतिवृश्चतिपृच्छतिभृज्जतीना"मित्यस्य च स्वरितत्वादेवात्रानुवृत्त्यैव सिद्धे पुन"र्लिट()भ्यासस्ये"त्यत्र "उभयेषां"ग्रहणं पुनर्विधानार्थम्। तथा च वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटीति द्विर्विधानं लब्धम्। तत्र द्वितीयं विधानं नियमार्थम्--"उभयेषामभ्यासस्य संप्रसारणमेव स्यान्नेतर"दिति। तेनाभ्यासे एतत्संप्रसारणविषये कार्यान्तरनिवृत्तिः सिद्धेत्यर्थः। तथा च प्रकृतेऽभ्यासयकारस्य संप्रासरणे सिद्धं रूपमाह-- विव्यतुः विव्युरिति। "वचिस्वपी"ति संप्रसारणे द्वित्वे यणिति भावः। थलि भारद्वाजनियमादिड्विकल्पमाशङ्क्याह-- इडन्त्यर्तीति। विव्ययिथेति। अकित्वादभ्यासस्य संप्रसारणमिति भावः। विव्यथुः विव्य। विव्याय विव्ययेति। अकित्वादभ्यासस्य संप्रसारणे णित्वविकल्पाद्वृद्धिविकल्प इति भावः। विव्यिव विव्यिम। विव्ये इति। कित्वात् "वचिस्वपी"ति संप्रसारणे पूर्वरूपे "वी"त्यस्य द्वित्वे यणिति भावः। विव्याते विव्यिरे। विव्यिषे विव्याथे [विव्यिढ्वे] विव्यिध्वे। विव्ये विव्यिवहे विव्यिमहे। व्यातेति। तासि एकारस्य आत्वम्। व्यास्यति व्यास्यते। व्ययतु व्ययताम्। अव्ययत् अव्ययत। व्ययेत् व्ययेत। वीयादिति। आशीर्लिङि सीयुटि आत्वम्। अव्यासीदिति। लुङि सिचि आत्वे इट्सकोः सिज्लोपः। अव्यासिष्टामित्यादि। स्यत। ह्वेञ्धातुरनिट्। ञित्वादुभयपदी। शब्दे चेति। आकारणार्थः "आगच्छे"त्यादशब्दोऽत्र विवक्षितः। ह्वयति ह्वयते इति। शपि अयादेशः। णलादौ अकिति "लिट()भ्यासस्ये"ति अभ्यासस्यैव संप्रसारणे प्राप्ते--

तत्त्व-बोधिनी

न व्यो लिटि २१८, ६।१।४५

लिटि किम?। व्याता। व्यास्यति।

---

सूत्रम्

काशिका-वृत्तिः

स्फुरतिस्फुलत्योर् घञि ६।१।४७

अदेचः इति वर्तते। स्फुर स्फुल चलने इत्येतयोर् धात्वोः एचः स्थाने घञि परतः आकारादेशो भवति। विस्फारः। विस्फालः। विष्फारः। विष्फालः स्फुरतिस्फुलत्योर् निर्निविभ्यः ८।३।७६ इति वा षत्वम्।

न्यासः

स्फुरतिस्फुलत्योर्घञि। , ६।१।४६

"विस्फारः, विस्फालः" इति। भावे घञ्(), "हलश्च" ३।३।१२१ इति करणाधिकरणयोर्वा॥

तत्त्व-बोधिनी

रफुरतिस्फुलत्योर्घञि १५१६, ६।१।४६

आचमेति। "नोदात्ते"ति सूत्रे "अनाचमे"रित्युक्तत्वादिति भावः। तत्रैव सूत्रे"ऽनाचमिकमिवमीना"मिति वार्तिकाद्वृद्धिनिषेधो नेत्याह-- कामः वाम इति। अपाणिनीयमिति। श्रमेरुदात्तोपदेशत्वाद्घञि, वृद्धेर्दुर्लभत्वात्। यदि तु "धुर्यान्विश्रामय"न्नित्यादिवण्णिचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते तदा रूपं सिध्यति। न च णिच्यपि वृद्धिनिषेधः शङ्क्यः। "नोदात्ते"त्यत्र "कृती"त्यनुवृत्त्या णिचि निषेधाऽभावात्। न चैवमपि "मितां ह्रस्वः" इति ह्रस्वः स्यादिति

शङ्क्यं, वेत्यनुवर्त्य व्यवस्थिविभाषाश्रयणेन ह्यस्वाऽभावसिद्धेः। परन्तु णिजन्तकल्पनायामर्थो भिद्यत इति भावः। वस्तुतस्तु "निवृत्तप्रेषमाद्धातोः प्राकृतेऽर्थे णि"जिति विवक्षायां तु न दोष इत्यवधेयम्। एवं च "रोगी चिरप्रवासी परान्नभोजी परावसथशायी। यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः" इत्यादिकविप्रयोगाः साधव एवेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

क्रीङ्जीनां णौ ६।१।४८

डुक्रीञ् द्रव्यविनिमये, इङध्ययने जि जये इत्येतेषां धातूनां एचः स्थाने णौ परतः आकारादेशो भवति। क्रापयति। अध्यापयति। जापयति।

न्यासः

क्रीङ्जीनां णौ। , ६।१।४७

"डुक्रीञ्? द्रव्यविनिमये" (धा।पा।१४७३) "इङ् अध्ययने" (धा।पा।१०४६) "जि जये" (धा।पा।५६१)। अनुपदेशार्थ आरम्भः। क्रापयतीत्यादावात्वे कृते "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्()। किमर्थमिदमुच्यते, न "क्रप कुत्सायां गतौ" (धा।पा।७७१), "जप जल्प व्यक्तायां वाचि" (धा।पा।३९७,३९८), "आप्लृ व्याप्तौ (धा।पा।१२६०) इत्यस्य चाधिपूर्वस्य णिचि कृते क्रापयतीत्यादिकं रूपं सिद्धम्(), अनेकार्थत्वाद्()धातुनां क्रोणात्याद्यर्थे क्रपादयो वर्त्तिष्यन्ते? उच्यते; क्रीणात्यादीनां णिचि प्रयोगान्तरनिवृत्त्यर्थम्()। अथ करोतेः" ईङ्? गतौ" (धा।पा।११४३) इत्यस्य ग्रहणं कस्मान्न विज्ञायते? उच्यते; करोतेस्तावन्न सम्भवति, एच इत्यधिकारात्()। अत एव वृत्तिकृता "एचः" इत्यनुवर्त्तितम्()। वचनसामथ्र्याद्वा तस्य हि वृद्ध्यैवात्त्वं सिद्धम्()? नैतदस्ति; नियमार्थहि स्यात्()--आत्त्वमेव, न पुना रपरत्वामिति? नैतदस्ति; "विधिनियमसम्भवे विधिरेव ज्यायान्()" (व्या।प।१३०) इति क्रीणातेरेव ग्रहणम्()। न करोतेः, तस्य नियमार्थत्वात्()। क्रीणातेस्तु विध्यर्थत्वात्()। "ईङ् गतौ" (धा।पा।११४३) इत्यस्यापि ग्रहणं न सम्भवति; जयतिना हरस्वान्तेन साहचय्र्यात्()। इङ्? ह्रस्वान्तो ग्रहीष्यते, न दीर्घान्तः; शब्दपरविप्रतिषेधात्()। जयतिना साहचय्र्यम्(), न क्रीणातिना। व्याख्यानतो वा विशेषोऽवसेयः॥

बाल-मनोरमा

क्रीङ्जीनां णौ ४२८, ६।१।४७

क्रीङ्जीनां णौ। "डु क्रीञ् द्रव्यविनिमये, "इङ् अध्ययने", "जि जये" एषां द्वन्द्वः। एच आत्त्वमिति। "आदेच उपदेशे" इतस्तदनुवृत्तेरिति भावः। क्रापयति जापयतीति। आत्त्वे पुक् लुङि अचिक्रपत् अजीजपत्। अध्यापयतीति। इङ आत्त्वे पुकि रूपम्। अधि इ इ अ त् इति स्थिते।

तत्त्व-बोधिनी

क्रीङ्जीनां णौ ३७२, ६।१।४७

क्रीङ्जीनाम्। "डुक्रीञ् द्रव्य विनिमये"। "इङ् अध्ययने"। "जि जये"। अचिक्रपत्। अध्यजीगपदिति। नाऽत्र णिज्निमित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो, निषेधो वा शङ्क्यः, यत्राऽभ्यासोत्तरखण्डे आद्योऽवर्णोऽस्ति तत्रैव स्थानिवद्भावो, निषेधो वेत्युक्तत्वात्। इह तु गाङ् पूर्वं सतिहि द्वित्वे "अजादेर्द्वितीयस्य" इति णिच एव द्वित्वं

भवेत्तत्श्चहृपरणिज्निमित्तो गाङ्, ततश्च प्रक्रयायां परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्डं दर्लुभं, कीर्तयतिसाम्यादिति नोक्तशङ्कावकाशः।अध्यापिपदिति। पिशब्दस्यात्र दित्वम्।

---

सूत्रम्

काशिका-वृत्तिः

सिध्यतेरपारलौकिके ६।१।४९

णौ इत्यनुवर्तते। षिधु हिंसासम्राध्योः इत्यस्य धातोः अपारलौकिके ऽर्थे वर्तमानस्य एचः स्थाने णौ परतः आकारादेशो भवति। अन्नं साधयति। ग्रामं साधयति। अपारलौकिके इति किम्? तपस्तापसं सेधयति। स्वान्येवैनं कर्माणि सेधयन्ति। अत्र हि सिध्यतिः पारलौकिके ज्ञानविशेषे वर्तते। तापसः सिध्यति ज्ञानविशेषमासादयति, तं तपः प्रयुङ्क्ते। स च ज्ञानविशेषः उत्पन्नः परलोके जन्मान्तरे फलम् अभ्युदयलक्षणम् उपसंहरन् परलोकप्रयोजनो भवति। इह कस्मान् न भवति, अन्नं साधयति ब्राह्मनेभ्यो दास्यामि इति? सिध्यते रत्रार्थो निष्पत्तिः। तस्याः प्रयोजनम् अन्नम्। तस्य यद् दानं तत् पारलौकिकम्, न पुनः सिद्धिरेव इति न आत्वं पर्युदस्यते। सक्षात् परलोकप्रयोजने च सिध्यर्थे कृतवकाशं वचनम् एवं विषयं न अवगाहते। सिध्यतेः इति श्यना निर्देशः, षिध गत्याम् इत्यस्य भौवादिकस्य निवृत्त्यर्थः।

न्यासः

सिध्यतेरपारलौकिके। , ६।१।४८

"अन्नं साध्यति" इति। अन्नं निष्पादयतीत्यर्थः। अत्र हि सिधिः पारलौकिके()र्थे ज्ञानविशेषे वत्र्तत इति। अस्यार्थं--"तापसः सिध्यति" इत्यादिना स्पष्टीकरोति। "उपसंहारन्()" इति। निष्पादयन्नित्यर्थः। "इह कस्मान्न भवति" इत्यादि। एवं मन्यन्ते--ब्राआहृणेभ्यो दास्यामीत्यनेनाभिप्रायेण योऽन्नं साधयति स जमान्तरे भवन्? फलमभ्युदयलक्षणं प्राप्नोति, तस्मात्? पारलौकिकेऽर्थे सिधिरत्र वत्र्तत इति पर्युदासेन भवितव्यमिति। सिध्यतेरत्रार्थो निष्पत्तिरित्यादिनेहलोकार्थतां त्वस्य दर्शयति। "तस्याः प्रयोजनमन्नम्()" इति। अन्नमुद्दिश्य प्रवृत्तत्वात्()। "तस्य" इति। अन्नस्य। "न पुनः सिद्धिरेवेति" इति। अर्थाल्लिङ्गविपरिणामं कृत्वा न पुनः सिद्धिरेव पारलौकिकीति सम्बन्धनीयम्()। सिद्धिर्निष्पत्तिरित्यर्थः। इतिकरणो हेतौ। यस्मात्? सिद्धो धातुर्वत्र्तते। अत्र सिद्धिः पारलौकिकी न भवति, तस्मान्नात्रात्वं पर्युदस्यते। स्यादेतत्? यद्यपि साक्षाद्()धातुः परलोकार्थो न भवति, पारम्पर्येण तु भवत्येव, तस्माद्भवितव्यमेव प्रतिषेधेन इत्याह--"साक्षात्()" इत्यादि। यदि साक्षादव्यवधानेन परलोकार्थो यः सिद्ध्यतेरर्थः, तत्रापि पारलौकिक इतीदं वचनं न कृतार्थं स्यात्(), तदा पारम्पर्येणापि यः परलोकार्थस्तत्र व्याप्रियेत--मा भूद्वचनवैयथ्र्यमिति। इदं तु ज्ञानविशेषे साक्षात्? परलोकार्थे सिध्यत्यर्थे चरितार्थम्(), ततो नोत्सहत एवंविधविषयमवगाहितुम्()। न शक्नोत्येवम्प्रकारे विषये नि,#एधः प्रवर्त्तितुमित्यर्थः। अथ सिद्ध्यतेः श्यना निर्देशः किमर्थः, न सिधेरित्येवोच्येत, एवं हि लघु सूत्रं भवति? इत्याह--"सिद्ध्यतेः" इत्यादि॥

तत्त्व-बोधिनी

सिध्यतेरपारलौकिके ३७३, ६।१।४८

सिध्यतेरपार। श्यना निर्देशाद्भौवादिकस्याऽग्रहणम्। तत्त्वं निश्चिनोतीति। तत्त्वनिश्चयश्चात्मविषयकः। स च परलोके उपयुज्यते।

---

सूत्रम्

काशिका-वृत्तिः

मीनातिमिनोतिदीङां ल्यपि च ६।१।५०

आदेच उपदेशे ६।१।४४ इति वर्तते। मीञ् हिंसायाम्, डुमिञ् प्रक्षेपणे, दीङ् क्षये इत्येतेषं धातूनां ल्यपि विषये, चकारादेचश्च विषये उपदेशे एव प्राक् प्रत्ययोत्पत्तेः अलो ऽन्यस्य स्थाने आकारादेशो भवति। प्रमाता। प्रमातव्यम्। प्रमातुम्। प्रमाय। निमाता। निमातव्यम्। निमातुम्। निमाय। उपदाता। उपदातव्यम्। उपदातुम्। उपदाय। उपदेशे एव आत्वविधानादिवर्णान्तलक्षणः प्रत्ययो न भवति। आकारलक्षणश्च भवति, उपदायो वर्तते। ईषदुपदानम् इति घञ्युचौ भवतः।

लघु-सिद्धान्त-कौमुदी

मीनातिमिनोतिदीङां ल्यपि च ६४१, ६।१।४९

एषामात्वं स्याल्ल्यपि चादशित्येज्निमित्ते। दाता। दास्यति। (स्थाघ्वोरित्त्वे दीङः प्रतिषेधः)। अदास्त॥ डीङ् विहायसा गतौ॥ १६॥ डीयते। डिड्ये। डयिता॥ पीङ् पाने॥ १७॥ पीयते। पेता। अपेष्ट॥ माङ् माने॥ १८॥ मायते। ममे॥ जनी प्रादुर्भावे॥ १९॥

न्यासः

मीनातिमिनोतिदीङां ल्यपि च। , ६।१।४९

"उपदेश" ६।१।४४ इत्यनुवृत्तेः प्रागेव प्रत्ययोत्पत्तेरात्त्वेन भवितव्यमिति, अत आत्वविधानकाले ल्यपः परत्वं न सम्भवतीति तस्माल्ल्यपीति विषयसप्तमीयं विज्ञायत इत्याह--"ल्यपि विषये" इति। एच इति यद्यपि प्रकृतविशेषणं प्रागासीत्(), तथापीहोपदेशाधिकारान्मीनातिप्रभृतीनां चोपदेशावस्थायामेचोऽसम्भवात्? सामर्थ्याद्विषयविशेषणं विज्ञायत इत्याह--"एचश्च विषये" इति। "उपदेशे" इत्यस्य प्रागित्यादिनार्थमाचष्टे। "प्रमाय" इति। "समासेऽनञ्()" ७।१।३७ इति ल्यप्()। कः पुनरुपदेशावस्थायामेवात्वविधानेऽर्थः सम्पद्यते, यदर्थमुपदेशावस्थायामात्वं क्रियते? इत्याह--"उपदेश एव" इत्यादि। इवर्णान्तलक्षणः "एरच्()" ३।३।५६ इत्यच, आकारान्तलक्षणः "आतो युच्()" ३।३।१२८ "उपदायः" इति। उपदेश एवात्त्वे कृते सत्यचो निमित्तं विहितमित्युसर्ग एव "भावे" (३।३।१८) इति घञ्? सिद्धो भवति। "आतो युक्? चिष्कृतोः" ७।३।३३ इति युक्()। "ईषदुपदानम्()" इति। उपदेशावस्थायामात्त्वे खलपवादो युच्? सिद्धो भवति॥

बाल-मनोरमा

मीनातिमिनोतिदीङां ल्यपि च ३३७, ६।१।४९

मीनातिमिनोति। "आदेच उपदेशेऽशिती"त्यताअदित्यनुवर्तते। तदाह-- एषामात्त्वं स्याल्ल्यपीति। चकारात् एचः, अशितीति परनिमित्तं समुच्चीयते। तत्र "एचट इत्यनन्तरं "निमित्ते" इति शेषः। एज्निमित्ते अशिति प्रत्यये च परे इति फलितम्। तदाह--अशित्येज्निमित्ते इति। "इति समुच्चीयते" इति शेषः। लुङ्याह--- अदास्तेति। इह आत्त्वे कृते घुत्वे सत्यपि स्थाध्वोरिच्चेति न भवति, "स्थाध्वोरित्त्वे दीङः प्रतिषेधः" इति घुसंज्ञासूत्रस्थभाष्यपठितवात्र्तकादिति भावः। धीङ् आधारे इति। आधारः-- आधारणम्। स्थापनमिति यावत्। लीङ् श्लेषणे इति। लीयते। लिल्ये।लिल्यिषे। [लिल्यिढ्वे। लिल्यिध्वे]।

तत्त्व-बोधिनी

मीनातिमिनोतिदीङां ल्यपि च २९३, ६।१।४९

मीनाति। मीञ् हिंसायाम्। डुमिञ् प्रक्षेपणे। प्रमाय। उपदाय। प्रमातव्यम्। उपदातव्य्। एज्निमित्त इति विषयसप्तमी। तेन आदावात्वं पश्चाद्वञ्। "आतो यु"गिति युक्। उपदाय इति सिध्यति। अन्यथा एरचि कृते तत आत्वे उपदा इति स्यात्। अदास्तेति। "दीङः प्रतिषेधः "स्थाध्वोरित्त्वेट इति न घुत्वमित्यदितेति रूपं न भवतीत्येके। अन्ये तु "स्थाध्वोरिच्चे"त्येतत्तु न भवति, दीङोऽनुकरणे दारूपाऽसंभवेनाऽघुत्वात्। अत एव प्रनिदातेत्यादौ "नेर्गदे"ति णत्वम् [अपि] न भवतीत्याहुः अयं भावः-- "द अवखण्डने" इत्यादेर्दारूपत्वं संभवति। "आदेच उपदेशे" इत्यस्याऽनैमित्तिकत्वात्।दीङस्तु एज्निमित्तप्रत्ययविषये आत्वं, दा इत्यनुकरणे एज्निमित्तस्याऽभावित्वान्न घुत्वम्। एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याऽप्रसक्तिरिति। डीङ्। डीनः। डीनवान्। स्वादिषु पाठसामथ्र्यान्निष्ठायामिण्न। इटि हि सति व्यवधानात्। "ओदितश्चे"ति नत्वं नस्यादिति। स्वादिषु पाठसमाथ्र्यादिड्व्यवधानेऽपि णत्वमस्त्विति न शङ्क्यम्, इष्टानुरोधात्। डयति इति प्रयोगस्तु भौवादिकस्य। "निष्ठा शीङ्" इत्यत्र निष्ठेति योगविभागादकत्त्वे गुण इत्याहुः। मीङ् हिंसायाम्। मीञिति क्र्य#आदौ। प्राणवियोग इति। मीयते। प्राणैर्वियुज्यत इत्यर्थः। लीङ्। ली श्लेषण इति क्र्यादौ।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा लीयतेः ६।१।५१

ल्यपि इति वर्तते, आदेच उपदेशे इति च। लीङ् श्लेषणे इति दिवादिः। ली श्लेषणे इति क्र्यादिः। तयोः उभयोः अपि यका निर्देशः स्मर्यते। लीयतेर् धतोः ल्यपि च एचश्च विषये उपदेशे एव अलो ऽन्त्यस्य स्थाने विभाषा आकारादेशो भवति। विलता। विलातुम्। विलातव्यम्। विलाय। विलेता। विलेतुम्। विलेतव्यम्। विलीय। निमिमीलियं खलचोः प्रतिषेधो वक्तव्यः। ईषत् प्रमयः। प्रमयो वर्तते। ईषन्निमयः। निमयो वर्तते। ईषद् विलयः। विलयो वर्तते। अत्र तु लियो व्यवस्थितविभाषाविज्ञानात् सिद्धम्। एवं च प्रलम्भनशालीनीकरनयोश्च णौ नित्यमात्त्वं भवति, कस्त्वामुल्लापयते, श्येनो वर्तिकामुल्लापयते।

न्यासः

विभाषा लीयतेः। , ६।१।५०

"तयोरुभयोरपि यका निर्देशः स्मर्यते" इति। आचार्यैः। अथ दैवादिकस्यायं श्यना निर्देशः कस्मान्न विज्ञायते? अत एव निर्देशात्()। यदि दैवादिक एवात्र निर्देष्टुमभीष्टः स्यात्(), अनुबन्धेन लीङ इति निर्देशं कुर्यात्()। तस्मात्? साधारणेनागन्तुकेन यकायमुभयोर्निर्देशः। "ईषत्प्रमयः" इति। "ईषद्()दुःसुषु" ३।३।१२६ इत्यादिना खल्()। "निमयो वत्र्तते" इति। "एरच्()" ३।३।५६ इत्यच्()। "अत्र तु लियो व्यवस्थितविभाषया विज्ञानात्? सिद्धम्()" इति। "लियः" इत्युपलक्षणमात्रम्(), इतरयोरपि सिद्ध एव; विभाषाग्रहणस्य पूर्वेणापि सूत्रेण सम्बन्धात्()। व्यवस्थितविभाषाविज्ञानात्? प्रलम्भनशालीनीकरणयोश्च णौ नित्यमात्त्वं भवति। व्यवस्थितविभाषाविज्ञानादेव। "उल्लापयते, अपलापयते" इति। "लियः सम्माननशालीनीकरणयोः" १।३।७० इत्यात्मनेपदम्()॥

बाल-मनोरमा

विभाषा लीयतेः ३३८, ६।१।५०

विभाषा लीयतेः। ननु लीयतेरिति श्यना निर्देशात् "लीङ् श्लेषणे" इति स्नाविकरणस्य ग्रहणं न स्यादित्यत आह-- यका निर्देश इति। "सार्वधातुके य"गिति विहितयका लीयतेरिति निर्देशः। स च श्यन्श्नान्तसाधारणः,यक उभयत्रापि

साधारण्यादिति भावः। "मीनातिमिनोती"त्यतो ल्यपीति, "आदेचः" इत्यत आदिति, एच इति चाऽनुवर्तते। तदाह-- लीलीङोरित्यादिना। स्वादय ओदित इति। धातुपाठपठितं गणसूत्रमिदम्। "षूङ् प्राणिप्रसवे" इत्यारभ्य व्रीङन्ता ओदित्कार्यभाज इत्यर्थः। निष्ठानत्वमिति। "ओदितश्चे"त्यनेनेति भावः। प्रीङ् प्रीताविति। प्रीतिस्तुष्टिः। "मुत्प्रीतिः प्रमदो हर्षः" इत्यमरः। एवं सत्यकर्मकः। यथा-- फलमूलादिना हरिः प्रीयते। ह्रष्यतीत्यर्थः।यदा तु प्रीतिः तर्पणं, "प्रीञ् तर्पणे" इति क्रैयादिकात् क्तिनि प्रीतिशब्दनिष्पत्तः, तदा तु सकर्मकः। तदाह-- सकर्मक इति। प्रीयते इति। तर्पयतीत्यर्थः। अथ चत्वारः परस्मैपदिन इति। "दो अवखण्डने" इत्यन्ता इति भावः। शो तनूकरणे। अनिट्।

तत्त्व-बोधिनी

विभाषा लीयते २९४, ६।१।५०

यकेति। "सार्वधातुके य"गिति विहितेन। न तु श्यनेति। अन्यथा "लीङ" इत्येव ब्राऊयादिति भावः। यका निर्देशस्य फलमाह-- लीलीङोरिति। ल्यपि-- विलाय। विलीय। व्ीङ्। वृणोत्यर्थो-- वरणम्। वृञ्? वरण इति स्वादौ पठिष्यमाणत्वात्। "वरणे" इति वक्तव्ये वृणोत्यर्थ इति वचनं वैचित्र्यार्थम्। व्री वरण इति क्र्यादौ। माङ्। मायत इति। "घुमास्थे" तीत्तवं तु न, तत्राद्र्धधातुक इत्यधिकारात्।

---

सूत्रम्

काशिका-वृत्तिः

खिदेश् छन्दसि ६।१।५२

विभाषा इति वर्तते। खिद दैन्ये इत्यस्य धातोः एचः स्थाने छन्दसि विषये विभाषा आकारः आदेशो भवति। चित्तं चिखाद। चित्तं चिखेद। छन्दसि इति किम्? चित्तं खेदयति।

न्यासः

खिदेश्छन्दसि। , ६।१।५१

"चिखाद" इति। "पुगन्तलघूपधस्य" ७।३।८६ इति गुणे कृत आकारः। यदि खादिरपि खिदेरर्थे वत्र्तते, ततोऽयं योगः शक्योऽकर्त्तुम्(); खादेस्तु--चखादेति भविष्यति, खिदेस्तु--चिखेदेति॥

---

सूत्रम्

काशिका-वृत्तिः

अपगुरो णमुलि ६।१।५३

गुरी उद्यमने इत्यस्य धातोः अपपूरस्य णमुलि परतः एचः स्थाने विभाषा आकारः आदेशो भवति। अपगारमपगारम्। अपगोरमपगोरम्। आभीक्ष्ण्ये णमुल् च ३।४।२२ इति णमुल्। अस्यपगारम् युध्यन्ते, अस्यपगोरम् युध्यन्ते इत्यत्र द्वितीयायां च ३।४।५६ इति णमुल्।

न्यासः

अपगुरो णमुलि। , ६।१।५२

"अपगारमपगारम्()" इति। "आभीक्ष्ण्ये द्वे भवतः" (वा।८८७) इति द्वित्वम्()॥

तत्त्व-बोधिनी

अपगुरो णमुलि १६२९, ६।१।५२

अस्यपगोरमिति। असिमुद्यम्येत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

चिस्फुरोर् णौ ६।१।५४

चित्र् स्फुर इत्येतयोः धात्वोः णौ परतः एचः स्थाने विभाष आकारादेशो भवति। चापयति, चययति। स्फारयति, स्फोरयति।

न्यासः

चिस्फुरोर्णौ। , ६।१।५३

"क्रीङ्जीनां णौ" ६।१।४६ इत्यत्र प्रदेश इदं नोक्तम्(); नित्यं मा भूदित्येवमर्थम्()॥

बाल-मनोरमा

चिस्फुरोर्णौ ३९६, ६।१।५३

चिस्फुरोर्णौ। "आदेच उपदेशे" इत्यत आदिति, "विभाषा लीयते"रित्यतो विभाषेति चानुवर्तते इति मत्वा शेषं पूरयति-- आत्वं वा स्यादिति। चित्रो णिचि आत्वे चा इ इति स्थिते --

तत्त्व-बोधिनी

चिस्फुरोर्णौ ३४६, ६।१।५३

चिस्फुरोर्णौ। "आदेच उपदेशे" इत्यत आदित्यनुवर्तते "विभाषा लीयतेः" इत्यतो विभाषाग्रहणं च। तदाह-- आत्वं वा स्यादिति।

---

सूत्रम्

काशिका-वृत्तिः

प्रजने वीयतेः ६।१।५५

णौ इति वर्तते। वी गतिप्रजनकान्त्यसनखादनेषु इत्यस्य धातोः प्रजने वर्तमानस्य णौ परतः विभाषा आकारादेशो भवति। पुरोवातो गः प्रवापयति, पुरोवातो गाः प्रवाययति। गर्भं ग्राहयति इत्यर्थः। प्रजनो हि जन्मन उपक्रमो गर्भग्रहणम्।

न्यासः

प्रजने वीयतेः। , ६।१।५४

यदि "वा गतिगन्धनयोः (धा।पा।१०५०) इत्ययं धातुः प्रजने वत्र्तते, ततः शक्यतेऽपि योगोऽवक्तुम्(); वातेर्हि--वापयतीति भविष्यति, वीयतेस्तु--वाययतीति॥

बाल-मनोरमा

प्रजने वीयतेः ४३०, ६।१।५४

प्रजन वीयतेः। "आदेच उपदेशे" इत्यस्मादादेच इति,"चिस्फुरो"रित्तो णाविति, "विभाषा लीयतेः" इत्यतो विभाषेति चानुवर्तते। तदाह -- अस्यैच इत्यादि। "वीयते"रिति न स्यना निर्देशः, "वी गतिप्रजनस्थानार्जनोपार्जनेषु" केचित्। वस्तुतस्तु व्येञो न ग्रहणं, तस्य प्रजनार्थकत्वाऽभावात् , तस्य णौ "शाच्छासे"ति पुगपवादयुग्विधानेन व्याययतीति रूपे विशेषाऽभावाच्चेति शब्देन्दुशेखरे प्रपञ्चितम्। गर्भं ग्राहयतीति। पुरोवातकाले गावो गर्भं गृह्णन्तीति प्रसिद्धिः। अथ "गुहू संवरणे" इत्यस्य गुणनिमित्तेऽजादौ प्रत्यये परे उपधाया ऊत्वविधिं स्मारयति-- ऊदुपधाया गोह इति। गूहयतीति। लघूपधगुणापवाद ऊत्वमिति भावः।

तत्त्व-बोधिनी

प्रजने वीयतेः ३७४, ६।१।५४

प्रजने। "वीयते" रितिवी गतिप्रजनादौ,आदादिकस्य यका निर्देशः। अत्र केचिदुत्प्रेक्षयन्ति--वीतेरिति वक्तव्ये यका निर्देशाद्वेञोऽपि ग्रहणम्, तस्यापियकि संप्रसारणे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेऽर्थे आत्वं वा स्यात्। तत्र आत्वे, तदभावे च यद्यपि व्येञः व्याययतीति रूपं तुल्यं, "शाच्छासे"ति पुकोऽपवादतया युग्विधानात्, तथापि णिजन्तात्क्विप-- व्याः व्यौ व्याः। आत्वाऽभावपक्षे व्यैः व्यायौ व्याय इत्यस्ति विशेषः। विभाषाविधानसामश्र्यात्पक्षेऽपि "आदेच उपदेशेऽशिती"ति न प्रवर्तते। अनेकार्थत्वाच्च धातूनां व्ययतेरपि प्रयोजनोऽर्थ इति।

---

सूत्रम्

काशिका-वृत्तिः

बिभेतेर् हेतुभये ६।१।५६

णौ इति वर्तते, विभाषा इति च। हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकः, ततो यद् भयम्, स यस्य भयस्य साक्षाद् हेतुः, तद्भयम् हेतुभयम्। तत्र वर्तमानस्य ञिभी भये इत्यस्य धातोः णौ परतः विभाषा आकारादेशो भवति। मुण्डो भापयते, मुण्डो भीषयते। जटिलो भापयते, जटिलो भीषयते। भीस्म्योर् हेतुभये १।३।३८ इत्यात्मनेपदम्। भियो हेतुभये षुक् ७।३।४०। स च आत्वपक्षे न भवति। लिभियोः ईकारप्रश्लेषनिर्देशादीकारान्तस्य भियः षुक् विधीयते। हेतुभये इति किम्? कुञ्चिकयैनं भाययति। अत्र हि कुञ्चिकातो भयं करणात्, न हेतोर् देवदत्तात्।

न्यासः

बिभेतेर्हेतुभये। , ६।१।५५

"हतुभये" इति। "पञ्चमी भयेन" २।१।३६ इति पञ्चमीसमासोऽयमित्याह--"ततो यद्भयम्()" इति। किं पुनस्ततो भयम्()? इत्याह--"स यस्य भयस्य" इत्यादि। अथात्वपक्षे षुगागमः कस्मान्न भवति? अस्ति ह्यत्रापि प्राप्तिः--"एकदेशविकृतमनन्यवद्भवति" (व्या।प।१६) इत्यत आह--"स च" इत्यादि। "भियो हेतुभये षुक्()" (७।३।४०) इत्यत्र हि भी+ई इ त ईकारेण प्रश्लिष्टस्य निर्देशः कृतः--ईकारान्तस्यैव षुग्? यथा स्यात्(), आकारान्तस्य मा भूदीति। तथा लियो ग्रहणम्(), तस्याप्यात्वपक्षे "लीलोर्नुक्लुकावन्यतरस्यां स्नेहविपातने" ७।३।३९ इति नुग्न भवति। ईकारप्रश्लेषनिर्देशादेवेति प्रसङ्गेन व्युत्पादितम्()॥

बाल-मनोरमा

बिभेतेर्हेतुभये ४२१, ६।१।५५

बिभेतेर्हेतुभये। "आदेच उपदेशे" इत्यत एच इति,आदिति चानुवर्तते। "वभाषा लीयते" रित्यतो विभाषेति,

"चिस्फुरो"रित्यतो णाविति च। हेतुभयं - प्रयोजकाद्भयम्। तदाह --बिभेतेरेच इत्यादिना।

तत्त्व-बोधिनी

बिभेतेर्हेतुभये ३६९, ६।१।५५

बिभेतेर्हेतुभये। हेतुः-- प्रयोजकः। इह "आदेच उपदेशे" इत्यत एच आदित्यनुवर्तते, "विभाषा लीयते"रित्यतो विभाषा, "चिस्फुरो"रित्यतो णाविति च। तदाह-- बिभेतेरेच इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं स्मयतेः ६।१।५७

णौ इति वर्तते, हेतुभये इति च। नित्यग्रहणाद् विभाषा इति निवृत्तम्। ष्मिङीषद्धसने इत्यस्य धातोः हेतुभये ऽर्थे णौ परतो नित्यमकारादेशो भवति। मुण्डो विस्मापयते। जटिलो विस्मापयते। भये इति किम्? कुञ्चिकया एनं विस्मापयति। भयशब्देन हेत्वर्थसामान्या, इह स्मयतेरर्थो ऽभिधीयते। न हि मुख्ये भये स्मयतेर् वृत्तिरस्ति।

न्यासः

नित्यं स्मयतेः। , ६।१।५६

"भयशब्देन धात्वर्थसाम्यात्()" इत्यादि। यश्च बिभेतरर्थो यश्च स्मयतेः, तौ द्वापि सदृशौ; चित्तविकार स्वभावतया। द्वावपि तौ चित्तसंक्षोभलक्षणौ, अतो द्वयोरपि यत्? सामान्यं तत्? सादृश्यम्()। तस्माद्भयशब्देनात्र स्मयतेरर्थोऽभिधीयते। दृश्यते हि सादृश्यादर्थान्तरेऽपि शब्दानां वृत्तिः, यथा--सिंहो माणवक इति। किं पुनः कारणमेवं व्याख्यायते? इत्याह--"न हि" इत्यादि। "हेतुभये" ६।१।५५ इत्यनुवत्र्तते। उच्यते चेदं विशेषणम्()। न च मुख्ये भये स्मयतेर्वृत्तिस्ति। तत्र सामथ्र्यात्? केनचित्? सादृश्येन स्मयत्यर्थ एव भयशब्देनात्राभिधीयत इति विज्ञायते॥

बाल-मनोरमा

नित्यं स्मयतेः ४२४, ६।१।५६

नित्यं स्मयतेः। "आदेच उपदेशे" इत्यत एच इति, आदिति चानुवर्तते। चित्फुरो"रित्यतो णाविति, "बिभेतेर्हेतुभये" इत्यतो हेतुभये इति च। तत्र च भयग्रहणं स्मयस्याप्युपलक्षणम्, अत्र तु स्मय एव विवक्षितः, स्मयतेर्भीत्यर्थकत्वाऽसंभवात्। तदाह -- स्मयतेरेच इत्यादि। "विभाषा लीयते" रित्यतो विभाषानुवृत्तिनिवृत्तये नित्यग्रहणम्। अथ "बिभेतेर्हेतुभये" इति, "नित्यं स्मयते"रिति च आत्वविधौ, "भीस्म्योर्हेतुभये"इति आत्मनेपदविधौ च हेतुग्रहणस्य प्रयोजनमाह-- हेतोश्चेद्भयस्मयावित्युक्तेर्नेहेति। कुञ्चिकयैनमिति। केशबन्धविशएषः कुञ्चिका। तस्याश्च करणतया प्रयोजककर्तृत्वाऽभावादात्वं षुक् च नेति भावः। आक्षिपति-- कथमिति। रघुवंशकारव्ये-- "तमार्यगृह्रं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्। विस्मापयन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः॥ इति श्लोके विस्मापयन्निति कथमित्याक्षेपः। प्रयोजकाद्भ्याऽभावेन आत्वपुगनुपपत्तेरिति भावः। ननु मनुष्यवागेव तत्र प्रयोजिककेत्यत आह-- मनुष्येति। मनुष्यवाचेति तृतीयान्तगम्यकरणान्मनुष्यवागात्मकादेव हि तत्र स्मयः। ननु करणभूताऽपि मनुष्यवाक् प्रयोजिका कुतो नेत्यत आह-- अन्यथेति। मनुष्यवाचः स्मयप्रयोजकत्वमभ्युपगम्य आत्वाश्रयणे "भीस्म्योर्हेतुभये" इत्यात्मनेपदमपि स्यादित्यर्थः। स्मयोऽत्र प्रयोजकमूलको नेति युक्तमेव, किन्त्वात्त्वपुगाक्षेपो न युज्यते इत्यद्र्धाङ्गीकरेण परिहरति - सत्यमिति। विस्माययन्नित्येति। णौ आयादेशे

स्मायीत्यस्माल्लटः शतरि शपि णेर्गुणे अयादेशे विस्माययन्नित्येव कालिदासो महाकविः प्रायुङ्क्त। "विस्मापय" न्निति पकारपाठस्तु लेखप्रमादकृत इति भावः। यद्वेति। राजा दिलीपो विस्मयते। तं सिंहोच्चारिता मनुष्यवाक् प्रयोजयति-- "विस्मापयते मनुष्यवाक् राजानम्"। अत्र मनुष्यवाक् प्रयोजककत्र्री। राजा तु प्रयोज्यकर्तेति स्थितिः। अत्र स्मयस्य प्रयोजककर्तृभूतमनुष्यवाङ्मूलकत्वादात्वे पुक्। मूले "प्रयोज्यकत्र्री"त्येव पाठः सुगमः। तां विस्मापयमानां प्रयोजककत्र्री मनुष्यवाचं प्रयोजयति सिंहः विस्मापयति। स्मापीति ण्यन्ताण्णौ प्रथमणेर्लोपे स्मापि इत्यस्माच्चतृप्रत्यये शपि णेर्गुणे अयादेशे विस्मापयन्निति भवतीत्यप्रेत्य आह --तया सिंह इति। प्रयोजककर्तरि तृतीया। आत्मनेपदं भीस्मिप्रकृतिकण्यन्तादेव, नतु ण्यन्तप्रकृतिकण्यन्तादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सृजिदृशोर् ज्ञल्यम् अकिति ६।१।५८

सृज विसर्गे, दृशिर् प्रेक्षणे इत्येतयोः धात्वोः ज्ञलादावकिति प्रत्यये परतः अम् आगमो भवति। स्रष्टा। स्रष्टुम्। स्रष्टव्यम्। द्रष्टा। द्रष्टुम्। द्रष्टव्यम्। लघूपधगुणापवादो ऽयम् अमागमः। अस्राक्षीत्। अद्राक्षीत्। सिचि वृद्धिः अमि कृते भवति, पूर्वं तु बाध्यते। ज्ञलि इति किम्? सर्जनम्। दर्शनम्। अकिति इति किम्? सृष्टः। दृष्टः। धातोः स्वरूपग्रहणे तत्प्रतये कार्यविज्ञानादिह न भवति, रज्जुसृड्भ्याम्, देवदृग्भ्याम् इति।

लघु-सिद्धान्त-कौमुदी

सृजिदृशोर्झल्यमकिति ६४७, ६।१।५७

अनयोरमागमः स्याज्झलादावकिति। स्रष्टा। स्रक्ष्यति। सृक्षीष्ट। असृष्ट। असृक्षाताम्॥ मृष तितिक्षायाम्॥ २६॥ मृष्यति, मृष्यते॥ ममर्ष। ममर्षिथ। ममृषिषे। मर्षितासि। मर्षिष्यति, मर्षिष्यते॥ णह बन्धने॥ २७॥ नह्यति, नह्यते। ननाह। नेहिथ, ननद्ध। नेहे। नद्धा। नत्स्यति। अनात्सीत्, अनद्ध॥

लघु-सिद्धान्त-कौमुदी

इति दिवादयः ४ ६४७, ६।१।५७

लघु-सिद्धान्त-कौमुदी

अथ स्वादयः ६४७, ६।१।५७

लघु-सिद्धान्त-कौमुदी

षुञ् अभिषवे १ ६४७, ६।१।५७

न्यासः

सृजिदृशोर्झल्यमकिति। , ६।१।५७

"रुआष्टा, द्रष्टा" इति। उमागमे कृते यणादेशः, व्रश्चादि ८।२।३६ सूत्रेण षत्वम्()। "लघूपधगुणापवादौऽयम्()" इत्यादि। ननु चासति सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यादिति, तत्र गुणे कृतेऽमागमो भविष्यति? नैतदेवम्(); सामान्यविहितो गुणः विशेषविहितस्त्वमागमः, सामान्यविहितस्य च विशेषविहितो बाधको भवति, यथा--ब्राआह्मणेभ्यो दधिदीयतां तक्रं कौण्जन्यायेति। यथा सामान्यविहितस्य दधिदानस्य विशेषविहितं तक्रदानं बाधकं भवति तथेहापि युक्ताऽमागममेन गुणस्य बाधा। "अरुआआक्षीत्(), अद्राक्षीत्()" इति। "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्(), "अस्ति

सिचोऽपृक्ते" ७।३।९६ इतीट्(), "वदव्रजहलन्तस्याचः" ७।२।३ इति वृद्धिः, "षढोः कः सि" ८।२।४१ इति कत्वम्()। "वृद्धिरमिकृते भवति" इति। अथ प्रागेव वृद्धिः कस्मान्न भवति? इत्याह--"पूर्वन्तु बाध्यते" इति। यथैव हि विशेषविहितत्वादमागमेन सामान्यविहितो गुणो बाध्यते, तथा वृद्धिरपि सामान्यविहितैवामागमे कृते पश्चात्? पुनःप्रसङ्गविज्ञानात्? सिद्धमिति सापि भवति। गुणस्त्वमागमे कृते न भवति; निमित्तस्य विहितत्वात्()। न ह्यमागमे कृत उपधा लघ्वी गुणभाविन्युपपद्यते। अथेह कस्मान्न भवति--रज्जुसृड्भ्याम्(), देवदृग्भ्यामिति; सत्यपि धात्वधिकारे "क्विबन्ता धातुत्वं न जहति (व्या।प।१३२) इति भ्याम्प्रत्ययमकितमाश्रित्यामागमः प्राप्नोति? इत्यत आह--"धातोः" इत्यादि॥

बाल-मनोरमा

सृजिदृशोर्झल्यमकिति २३८, ६।१।५७

इडभावपक्षे "अनुदात्तस्य" इति अमागमविकल्पे प्राप्ते-- सृजिदृशोः। अम्-अकिति इति च्छेदः। नित्यार्थमिदम्। दद्रष्ठेति। ददृश् थ इति स्थिते इडभावपक्षे अमागमे ऋकारस्य यणि व्रश्चादिना शस्य षत्वे थस्य ष्टुत्वेन ठ इति भावः। इट्पक्षे त्वाह-- ददर्शिथेति। अझलादित्वादम् नेति भावः। द्रष्टेति। तासि अमागमे शस्य षत्वे तकारस्य ष्टुत्वेन टकार इति भावः। द्रक्ष्यतीति। अमागमे शस्य षत्वे "षढो"रिति कत्वे सस्य ष इति भावः। पश्यतु। अपश्यत्। पश्येत्। आशीर्लिङि आह--दृश्यादिति। अझलादित्वादम् नेति भावः। लुङि विशेषमाह-- इरित्त्वादङ् वेति। अत्र अङ्पक्षे गुणनिषेधे प्राप्ते--

तत्त्व-बोधिनी

सृजिदृशोर्झल्यमकिति २१०, ६।१।५७

झलि किम्?। ससर्ज। ददर्श। अकितीति किम्?। सृष्टः। सृष्टवान्। दृष्टः। दृष्टवान्।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तस्य च र्दुपधस्य अन्यतर्स्याम् ६।१।५९

उपदेशे इति वर्तते, ज्ञल्यम् अकिति इति च। उपदेशे ऽनुदात्तस्य धातोः ऋकारोपधस्य ज्ञलादावकिति प्रत्यये परतो ऽन्यतरस्याम् अमागमो भवति। त्रप्ता, तर्पिता, तर्प्ता। द्रप्ता, दर्पिता, दर्प्ता। तृप प्रीणने, दृप हर्षमोचनयोः, इत्येतौ रधादी धतू, तयोः इडागमः रधादिभ्यश्च ७।२।४५ इति विकल्प्यते। अनुदात्तोपदेशः पुनरमर्थ एव। अनुदात्तस्य इति किम्? वर्ढा, वर्ढुम्, वर्ढव्यम्। वृहू उद्यमने इत्ययम् उदात्तोपदेशः ऊदित्वाच्चास्येड् विकलोप्यते। ऋदुपधस्य इति किम्? भेत्ता। छेत्ता। ज्ञलि इत्येव, तर्पणम्। दर्पणम्। अकिति इत्येव, तृप्तः। दृप्तः।

लघु-सिद्धान्त-कौमुदी

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६५६, ६।१।५८

उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति। क्रष्टा, कर्ष्टा। कृक्षीष्ट। (स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः)। अक्राक्षीत्, अकार्क्षीत्, अकृक्षत्। अकृष्ट। अकृक्षाताम्। अकृक्षत। क्सपक्षे अकृक्षत। अकृक्षाताम्। अकृक्षन्त॥ मिल संगमे॥ ५॥ मिलति, मिलते, मिमेल। मेलिता। अमेलीत्॥ मुचॢ मोचने॥ ६॥

न्यासः

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्?। , ६।१।५८

"उपदेश इति वर्तते" इति। अनुदात्तस्य विशेषणार्थम्()। तेन त्रप्तेत्यत्र यद्यपि तृनि विहिते नित्स्वरेण धातोरुदात्तत्वम्(), तथाप्युपदेशावस्थायामनुदात्त इत्यमागमः सिद्धो भवति; इह च वर्ढेति यद्यपि तृचि कृते धातुरनुदात्तो भवति, तथाप्युपदेशावस्थायान्नायमनुदात्त इत्यमागमो न प्रवर्तते; किमर्थं पुनरनुदात्तस्येत्युच्यते, अनिट इत्येव नोच्येत, एवं हि लघु सूत्रं भवति? इत्याह--"तृप प्रीणने" इत्यादि। तृप्यतिदृप्यत्योः "रधाधिभ्यश्च" (७।२।४५) इतीट्? विकल्प्यते, ततो यद्यनिट एवोच्येत, तदा पाक्षिकेणेटा नैतावनिटाविति तयोरमागमो न स्यत्()। अथ पाक्षिकेणेङ्भावेन तयोर्निट्त्वादमागमो भवति, तथा च सति "वृहू उद्यमने (धा।पा।१३४७) इत्यस्यापि स्यात्(), अयमप्यूदित्वात्(), पाक्षिकेङ्भावादनिङ्भवति। तस्मान्न शक्यतेऽनिट इति वक्तुमित्यभिप्रायः। यदि तहृरनयोरिङ्विकल्प्यते, तदानुदात्तोपदेशः किमर्थः? स ह्येवमर्थः क्रियते--"अनुदात्तात्()" ७।२।१० इतीट्प्रतिषेधो यथा स्यात्()। यदि तहृरनयोरिङ्विकल्प्यते, किं तेन? इत्यत आह--"अनुदात्तोपदेशः पुनरमर्थ एव" इति। "वर्ढा" इति। "होः ढः" ८।२।३१, "ष्टुना ष्टुः", ८।४।४० "ढो ढे लोपः" ८।३।१३। यदाप्युदात्तोपदेशस्तदेडत्र प्राप्नोति? इत्याह--"उदित्वात्()" इत्यादि। "स्वरतिसूति" ७।२।४४ इत्यादिनास्योदित्त्वादिङ्विकल्प्यते, ततस्तेन सत्युदात्तत्वे पक्ष इडभावो न भवति। चकारोऽपमनुकर्षणार्थः। तेनोत्तरत्र तस्यानुवृत्तिर्न भवति॥

न्यासः

कर्षात्वतो धञोऽन्त उदात्तः। , ६।१।५८

"कर्षात्वतः" इति। कर्षश्चात्वांश्चेति कर्षात्वत्()--समाहारद्वन्द्वः। आकारोऽस्यास्तीत्यात्वान्()। "कर्षतेर्धातोः" इति। "कृष विलेखने" (धा।पा।१२८६) इत्यस्याकारवतश्चेति सम्बध्यते। कर्षतिना दातुना साहचर्यदात्वोऽपि धातोरेव ग्रहणम्()। "धञः" इति प्रत्ययग्रहणम्(), अतः प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यं ज्ञायत इत्याह--"घञन्तस्य" इति। एतच्च कर्षतेरात्वतश्च समानाधिकरणं विशेषणम्()। "पाकः" इत्यादि। "अत उपधायाः" ७।२।११६ इति वृद्धौ कृतायां धातोराकारवत्त्वम्()। "दायः धायः" इति। "आतो यक्? चिण्()कृतोः" ७।३।३३ इति युक्()। किमर्थं पनः प्रकृते विकृतसय ग्रहणं क्रियते न "कृषातः इत्येवोच्यते? इत्यत आह--"कर्ष इति विकृतिनिर्देशः" इत्यादि। कृषिर्विलेखनार्थो भ्वादौ तुदादौ च पठ()ते, तत्र यस्य विकरणे परतो गुणात्मको विकारो भवति तस्यैव भौवादिकस्य ग्रहणमिष्यते, नेतरस्य। एतच्च विकृतनिर्देशे सति लभ्यते। तस्मात्? कृषतेस्तौदादिकस्य निवृत्तिर्यथा स्यदित्येवमर्थो विकृतिर्देशः। कस्मात्? पुनस्तौदादिकसय निवृत्तिरिष्यते? इत्यत आह--"तौदीदिकस्य" इत्यादि। अथ किमर्थं मतुपा निर्देशः क्रियते, न कर्षात इत्योवोच्येत? नैवं शक्यम्(), विहितविशेषणस्याकारस्य ग्रहणं विज्ञायते--आकारान्ताद्यो विहित इति। तथा च दाय इत्यादादेव स्यात्(), पाक इत्यादौ न स्यात्()। मतुब्()ग्रहणे तु सति न दोषः। अन्तग्रहणमुत्तरार्थम्(), इह हि "अलोऽन्त्यस्य" १।१।५१ इति भविष्यति॥

तत्त्व-बोधिनी

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् २०७, ६।१।५८

अनुदात्तस्य। "आदेच उपदेशेऽशिती"त्यत उपदेश इत्यनुवर्तते। उपदेशे किम्?। रुआसुम्। तुमुनि उदात्तः। ऋदुपधस्य किम्?। कर्ता। झलीति किम्?। ससर्प। अकितीति किम्()। सृप्तः। असृपदिति। लृदित्त्वादङ्। "स्पृशमृशे"ति सिज्विकल्पवार्तिके सृपं प्रक्षिप्य "अरुआआप्सीदसाप्र्सी"दिति केचिदुदाहरन्ति, तत्प्रामादिकमित्याहुः। अयंसीदिति। "यमरमे"तीट्सकौ।

---

सूत्रम्

काशिका-वृत्तिः

शीर्षंश् छन्दसि ६।१।६०

शीर्षनिति शब्दान्तरं शिरःशब्देन समानार्थं छन्दसि विषये निपात्यते, न पुनरयम् आदेशः शिरःशब्दस्य। शो ऽपि हि छन्दसि प्रयुज्यत एव। शीर्ष्णा हि तत्र सोमं क्रीतं हरन्ति। यत्ते शीर्ष्णो दौर्भाग्यम्। छन्दसि इति किम्? शिरः।
न्यासः
शीर्षंश्छन्दसि। , ६।१।५९

किं पुनः कारणमादेशो नेष्यते? इत्याह--"सोऽपि हि" इत्यादि। यतः शिरःशब्दोऽपि च्छन्दति प्रयुच्यते, ततो नायमादेशः प्रयुज्यते। आदेशे हि सति शिरःशब्दस्य च्छन्दसि विषये प्रयोगो न स्यात्(), निवृत्तिधर्मत्वात्? स्थानिनः। यद्यन्यतरस्यांग्रहणमिहानुवत्र्तते तदादेशेऽप्यदोषः। "शीर्षा" इति। "नोपधायाः" ६।४।७ इति दीर्धः। क्वचित्? शीष्र्णेति पठ()ते, तत्? तृतीयान्तं द्रष्टव्यम्()। "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः। "शीर्ष्णः" इति। षष्ठ()एकवचनान्तमेतत्()॥

---

सूत्रम्
काशिका-वृत्तिः
ये च तद्धिते ६।१।६१

शीर्षनिति वर्तते। आदेशो ऽयम् इष्यते। स कथम्? तद्धिते इति हि परं निमित्तम् उपादीयते, स तदनुरूपां प्रकृतिं शिरःशब्दम् आक्षिपति। यकारादौ तद्धिते परतः शिरःशब्दस्य शीर्षन्नादेशो भवति। शिर्षण्यो हि मुख्यो भवति। शीर्षण्यः स्वरः। शिरसि भवः इति शरीरावयवाच् च ४।३।५५ इति यत्, ये च अभावकर्मणोः ६।४।१३८ इति प्रकृतिभावः। तद्धिते इति किम्? शिरः इच्छति शिरस्यति। वा केशेषु। शिरसः शीर्षन्नादेशो वक्तव्यः। शीषर्ण्याः केशाः, शिरस्याः केशाः।
काशिका-वृत्तिः
अचि शीर्षः ६।१।६२

श्जादौ तद्धिते शिरसः शीर्षशब्दः आदेशो भवति। हस्तिशिरसः अपत्यं हास्तिशीर्षिः। बाह्वादिभ्यश्च ४।१।९६ इति इञ्। स्थूलशिरसः इदं स्थौ लशीर्षम्। शीर्षन्भावे हि अन् ६।४।१६७ इति प्रकृतिभावः स्यात्। हास्तिशीर्षिशब्दात् स्त्रियाम् इञो ऽणिञोरनार्षयोः ष्यङादेशे कृते शीर्षस्य शिरःशब्दग्रहणेन ग्रहणात् शीर्षन्नादेशः प्राप्नोति। तत्र प्रकृतिभावे सति हास्तिशीर्षण्या इत्यनिष्टं रूपं स्यात्। इष्यते तु हास्तिशीर्ष्या इति। तत् कथम्? कर्तव्यो ऽत्र यत्नः। अणिञन्ताद् वा परः प्रत्ययः ष्यङाश्रयितव्यः, तत्र यस्य इति लोपस्य स्थानिवद्भावाद् व्यवधानम्।
न्यासः
ये च तद्धिते। , ६।१।६०

यदि यकारादावपि तद्धिते प्रकृत्यन्तरं विज्ञायते ततो यदि शिरःशब्दाद्यकारादिस्तद्धित उत्पद्यते, तदा तस्य श्रवणमापद्येत, न चेष्यते इत्यत आह--"आदेशोऽयमिष्यते" इति। स्वानिनोऽनुपादानादिहाप्यादेशी न युज्यत इत्यभिप्रायेणाह--"स कथम्()" इति। "तद्धित इति हि" इत्यादि। यस्मादिह यकारादिस्तद्धितः परनिमित्तमुपा दीयते, न चानुपादाय प्रकृतिं तद्धित उत्पद्यते, न च शीर्पञ्शब्द एव प्रकृतिर्युक्ता; तस्य भाषायामसम्भवात्()। स हि च्छन्दसि निपातितः, भाषायाञ्चेदम्()। तस्मात्? प्रकृत्यन्तरादुत्पन्ने यकारादौ तद्धिते विधीयमाने या तेन प्रकृतिराक्षिप्ता तस्या आदेशोऽयं विज्ञायते। आदेशोऽपि हि विज्ञायमानो न यस्य कस्यचिद्विज्ञायते, अपि तु शिरःशब्दस्यैव। यतः स तद्धितस्तदनुरूपां

तस्यादेशस्य शब्दतश्चार्थतश्चान्तरतमां प्रकृतिं शिरःशब्दमेवाक्षिपति। "शीर्षण्यः" इति। अट्कुप्वादिना ८।४।२ णत्वम्()। "शिरस्यति" इति। "सुप आत्मनः क्यच्()" ३।१।८। "वा केशेषु" इति। केशेष्वभिधेयेषु शिरशब्दस्य शीर्षन्नित्यादेशी वा वक्व्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--अन्यतरस्यांग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन शिरसः केशेषु वा शीर्षन्नादोशो भविष्यतीति॥

न्यासः

अचि शीर्?षः। , ६।१।६०

"स्थौलशीर्षम्()" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। किमर्थं पुनरादेशान्तरं विधीयते, न प्रकृत एव शीर्षन्नादेशो विधीयताम्()? तत्रापि "नस्तद्धिते" ६।४।१४४ इति टिलोपे कृते सिध्यत्येवेष्टमित्याह--"शीर्षम्भावे" इत्यादि। "ष्यङादेशे" कृते" इत्यादि। "अणिञोरनार्षयोः" ४।१।७८ इत्यादिना, तस्य शीर्षस्य शिरःशब्दग्रहणेन ग्रहणादिति स्थानिवद्भावेन शीर्षन्नादेशः प्राप्नोतीति। "ये च तद्धिते" ६।१।६० इत्यनेनैव। "तत्र" इत्यादि। प्रकृतिभावप्राप्तिस्तु "ये चाभावकर्मणोः" ६।४।१६८ इत्यनेन। "हास्तिशीर्षण्या, हास्तिशीष्र्या" इति। "यङश्चाप्()" ४।१।७४ इति चाप्()। तत्? कथमिति हास्तिशीष्र्येति। कथमिष्टं सिध्यतीत्यर्थः। "कत्र्तव्योऽत्र यत्नः" इति। स पुनर्यत्नः--शिरस्याः केशा इत्यसय सिद्धये य एव प्रकृतः स #एव वेदितव्यः। व्यवस्थितविभाषयैव हि शीर्षशब्दस्य शिरःशब्देन ग्रहणाच्()शीर्षन्नादेशो न भविष्यतीति; तेन हास्तिशीष्र्येत्येवं भवति, न हास्तिशीर्षण्येति। "अणिञन्ताद्वा" इत्यादि। "अणिञोरनार्षयोः" ४।१।७८ इत्यत्र सूत्रे द्वौ पक्षौ--अणिञोः स्थान आदेश ष्यङ् विधीयत इत्येकः पक्षः, अणिञन्तात्? परः ष्यङ्प्रत्ययो भवतीति द्वितीयः तत्रादेशपक्षेऽयं दोषः आपततीत्यणिञन्तात्? परः ष्यङाश्रयितव्य इति प्रत्ययपक्ष आश्रायितव्य इत्यर्थः। आदेशपक्षे "येत्नो वा कत्र्तव्यः" इति। विकल्पार्थो वा वाशब्दः। अथ तत्रापि प्रत्यपक्ष आश्रीयमाणे शीर्षस्य शीर्षन्नादेशः कस्मान्न भवति? इत्याह--"तत्र" इत्यादि। यदा प्रत्ययः ष्यङ् तदा तस्मिन्? परतो योऽसाविञः "यस्येत च" ६।४।१४८ इति लोपस्तस्य पूर्वविधौ कत्र्तव्ये स्थानिवद्भावाद्()व्यवधानम्()। अतो यकारादेः शीर्षन्नादेशनिमित्तस्य तद्धितस्य व्यवधानादादेशो न प्राप्नोतीति भावः॥

बाल-मनोरमा

ये च तद्धिते १६४५, ६।१।६०

ये च तद्धिते। शीर्षन्नादेश इति। शीर्षंश्छन्दसीत्यतस्तदनुवृत्तेरिति भावः। शीर्षण्य इति शिरसे हित इत्यर्थः। शरीरावयवत्वाद्यति शीर्षन्नादेशे "ये चाऽभावकर्मणो"रिति प्रकृतिभावान्न टिलोपः। शिरस्यतीति। शिर आत्मन इच्छतीत्यर्थे "सुप आत्मनः" इति क्यचि, "नः क्ये" इति नियमात्पदत्वाऽभावान्न रुत्वम्।

वा केशेषु। केशेषु वाच्येषु यो यकारादिस्तद्धितस्तस्मिन्परे शिरसः शीर्षन्नादेशो वा स्यादित्यर्थः।

प्रसङ्गादाह--अचीति।

तत्त्व-बोधिनी

ये च तद्धिते १२७०, ६।१।६०

ये च त। "शीर्षंश्छन्दसी"त्यतोऽनुवर्तनादाह---शीर्षन्नादेश इति।

वा केशेषु। शीर्षण्य इति। "ये चाऽभावे"ति प्रकृतिभावः। शिरस्यतीति। "न क्ये"इति नियमेन पदत्वाऽभावाद्रुत्वाऽभावः।

---

सूत्रम्

काशिका-वृत्तिः

पद्दन्नोमाशृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ् छस्प्रभृतिषु ६।१।६३

पाद दन्त नासिका मास हृदय निशा असृज् यूष दोष यकृत् शकृतुदक आसन इत्येतेषां शब्दानां स्थाने शस्प्रभृतिप्रत्ययेषु परतः पद् दत् नस् मास् हृद् निशसन् यूषन् दोषन् यकन् शकनुदनासनित्येते आदेशाः यथासङ्ख्यं भवन्ति। पद् निपदश्चतुरो जहि। पदा वर्तय गोदुहम्। पादः पत् ६।४।१३०। दत् या दतो धावते तस्यै श्यावदन्। नस् सूकरस्त्वा खनन्नसा। मास् मासि त्वा पश्यामि चक्षुषा। हृद् हृदा पूतं मनसा जातवेदो। निश् अमावास्यायां निशि यजेत्। असन् असिक्तो ऽस्ना ऽवरोहति। यूषन् या पात्राणि यूष्ण आसेचनानि। दोषन् यत्ते दोष्णो दौर्भाग्यम्। यकन् यक्नो ऽवद्यति। शकन् शक्नो ऽवद्यति। उदन् उद्नो दिव्यस्य नो देहि। आसन् आसनि किं लभे मधूनि। शस्प्रभृतिषु इति किम्? पादौ ते प्रतिपीड्यौ। नासिके ते कृशे। केचिदत्र छन्दसि इत्यनुवर्तयन्ति। अपरे पुनरविशेषेण इच्छन्ति। तथा हि भाषायाम् अपि पदादयः शब्दाः प्रयुज्यन्ते। व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च। व्याधयो न उपसर्पन्ति वैनतेर्यामवोरगाः। इत्येवम् आदयः। अन्यतरस्याम् इत्येतदनुवर्तयन्ति। तेन पादादयो ऽपि प्रयुज्यन्ते। शस्प्रभृतिषु इति प्रकारार्थे प्रभृतिशब्द इति शला दोषणी इत्यत्र अपि दोषन्नादेशो भवति। पदादिषु मांस्पृत्स्नूनाम् उपसङ्ख्यानम्। मांस पृतना सानु इत्येतेषां स्थाने यथासङ्ख्यम् मांस् पृत् स्नु इत्येते आदेशाः भवन्ति। मांस्पचन्या उखायाः। मांसपचन्या इति प्राप्ते। पृत्सु मर्त्यम्। पृतनासु मर्त्यम् इति प्राप्ते। न ते दिवो न पृथिव्या अधिस्नुषु। अधिसानुषु इति प्राप्ते। नस् नासिकाया यत्तस्क्षुद्रेषु। नासिकाया नस्भावो वक्तव्यः यत् तस् क्षुद्र इत्येतेषु परतः। नस्यम्। नस्तः। नःक्षुः। यति वर्णनगरयोर् न इति वक्तव्यम्। नासिक्यो वर्णः। नासिक्यं नगरं।

न्यासः

पद्दन्नोमाश्मन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु। , ६।१।६१

इहापि शस्प्रभृतयो निमित्तत्वेनोपादीयन्ते, ते च प्रकृत्या विना नोपपद्यन्त इति भावः। तेषु प्रकृत्यन्तराद्विहितेषु विधीयमानाः पदादय आदेशा विज्ञायन्ते। न च स्थानिनोऽनुपादानादियमेनादेशप्रसङ्गः, यतस्तेष्वादिश्यमानेषु शस्प्रभृतयोऽनुरूपमेव पादादिकां स्वार्थिकीं प्रकृतिमाक्षिपन्तीत्याह--"पाददन्तनासिका" इत्यादि। पदित्याद्युदाहरणेषु पदो दत इति शसन्ते। "यूष्णः, दोष्णः, यक्नः, शक्नः" ति षष्ठ()एकवचनान्तानि। "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः। "मासि, निशि, आसनि" इति सप्तम्येकवचनान्तानि। आसनीत्यत्र "विभाषाङिश्योः" ६।४।१३६ इति पक्षेऽकारलोपो न भवति। शेषाणि तृतीयैकवचनान्तानि। "पादौ, नासिके" इति प्रथमाद्विवचनान्ते। कस्मात्? पुनरन्यतरस्यामित्येतदनुवत्र्तयन्ति? इत्याह--"तेन पादादयोऽपि" इत्यादि। यस्मात्? पादादयोऽपि प्रयुज्यन्ते तस्मादन्यतरस्यामित्यनुवत्र्तयन्ति। व्यवस्थावाचिनि प्रभृतिशब्द आश्रोयमाणे शस्प्रभृतिभ्योऽन्यत्रादेशो न सिध्यतीत्यभिप्रायेणाह--"प्रकारार्थे प्रभृतिशब्दः" इति। "दोषणी" इति। केचिदाहुः--प्रथमाद्विवचने दोषन्नादेशः, औङः शीभावः। अन्ये त्वाहुः--दोषणीति ङीबन्तमेतत्(), ङीपि विषयभूते दोषन्नादेशः, ततः "ऋन्नेभ्यो ङीप्()" ४।१।५। "नस्यम्()" इति। हितार्थे "शरीरावयवाद्यत्()" ५।१।६। "नस्तः" इति। "अपादाने चाहीयरुहोः" ५।४।४५ तसिः। "नःक्षुद्रः" इति। नासिका क्षुद्रा यस्येति बहुव्रीहिः। "नासिक्यो वर्णः" इति। भवार्थे "शरीरावयवात्()" ५।१।६ इति यत्()। नासिक्यं नगरमिति अत्र हितार्थे यत्()॥

बाल-मनोरमा

पद्दनोमाश्मन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु २२६, ६।१।६१

अथ पादशब्दस्य शसादौ विशेषं दर्शयितुमाह--पद्दन्नो। पद्-दत्-नस्-मास्-ह्मद्-निश्-असन्-यूषन्-दोषन्-यकन्-शकन्-उदन्-आसन्-इत्येषां समाहरद्वन्द्वः। शश्-द्वितीयाबहुवचनं प्रभृति=आदिः येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः। "अनुदात्तस्य चर्दुपधस्यान्यतरस्या"मित्यतोऽन्यतरस्यामित्यनुवर्तते। शसादिषु परेषु पदादय आदेशा वा स्युरित्यर्थः। पदाद्यादेशैश्च स्वानुरूपाः स्थानिन आक्षिप्यन्ते। तदाह--पदादन्तेत्यादिना। यथासङ्ख्यापरिभाषया, पादादीनां क्रमेण पदादय आदेशाः प्रत्येतव्याः। तत्प्रामादिकमिति। भ्रममूलकमित्यर्थः। "हव्या जुहान आसनि" इति मन्त्रे "आसन्यं प्राणमूचु"रित्यादौ च आस्यार्थकत्वस्यैव दर्शनादिति भावः। दन्तशब्दस्य सुटि रामवत्। शसि पद्दन्निति ददादेशः। दत्-अस् इति स्थिते तकारस्य "झलां जशोऽन्ते" इति पदान्ते विधीयमानं जश्त्वमाशङ्कितुं पदसंज्ञाविधायकं सूत्रं वक्ष्यति--"स्वादिष्वसर्वनामस्थान" इति।

तत्त्व-बोधिनी
पद्दन्नोमाश्मन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु १९१, ६।१।६१

पद्दन्नो। शसादौ वेति। "अनुदात्तस्य चर्दुपधस्ये"त्यतोऽन्यतरस्यामित्यनुवर्तत इति भावः। अत्र शस्प्रभृतयो निमित्ततयोपात्ताः, ते च पदाद्यादेशानुरूपान्प्रकृतिविशेषानाक्षिपन्तीत्याह-पाददन्तेति। यद्यपि "शीर्षंश्छन्दसी"त्यतः "छन्दसी"त्यनुवर्तते, तथापि भाषायामपि क्वचित्पदादयो भवन्ति, "मासश्छन्दसी"ति वार्तिके छन्दोग्रहणसामर्थ्यादिति वक्ष्यति। प्रामादिकमिति। तथाहि-"आस्नो वृकस्य वर्तिका"मिति मन्त्रे मुखादित्यर्थः, औचित्यात्। "वृकस्य चिद्वर्तिकामन्तरास्यात्" इति मन्त्रान्तरसंवादाच्च। तथा "हव्या जुह्वान आसनि" इति मन्त्रे मुखे इत्यर्थः। एवम् "आसन्यं प्राणमूचुः" इत्यादावपि बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ धात्वादेः ६।१ ६३ षः ६।१ सः १।१ उपदेशे ७।१ ४४

समासः॥

धातोः आदिः धात्वादिः, तस्य ॰ षष्ठीतत्पुरुषः।

अर्थः॥

धात्वादेः षकारस्य स्थाने उपदेशावस्थायां सकारादेशः भवति।

उदाहरणम्॥

षह -- सहते। षिच -- सिञ्चति॥
काशिका-वृत्तिः
धात्वादेः षः सः ६।१।६४

धातोरादेः षकारस्य स्थाने सकारादेशो भवति। षह सहते। षिच सिञ्चति। धातुग्रहणं किम्? सोडश। षोडन्। षण्डः। षडिकः। आदेः इति किम्? कषति। लषति। कृषति। आदेश प्रत्यययोः ८।३।५९ इत्यत्र षत्वव्यवस्थार्थम् षादयो धातवः

केचिदुपदिष्टाः। के पुनस् ते? ये तथा पठ्यन्ते। अथवा लक्षणं क्रियते, अज्दन्त्यपराः सादयः षोपदेशाः स्मिस्विदिस्वदिस्वञ्जिस्वपितयश्च, सृपिसृजिस्तृस्त्यासेक्षृवर्जम्। सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः। षोडीयति। षण्डीयति। ष्ठीवति। ष्वष्कते। ष्ठिवु इत्यस्य द्वितीयस्थकारष्ठकारश्च इष्यते। तेन तेष्ठीव्यते, टेष्ठीव्यते इति च अभ्यासरूपं द्विधा भवति।

लघु-सिद्धान्त-कौमुदी

धात्वादेः षः सः २५६, ६।१।६२

स्नुक्, स्नुग्, स्नुट्, स्नुड्। एवं स्निक्, स्निग्, स्निट्, स्निड्॥ विश्ववाट्, विश्ववाड्। विश्ववाहौ। विश्ववाहः। विश्ववाहम्। विश्ववाहौ॥

न्यासः

धात्वादेः पः सः। , ६।१।६२

"सिञ्चिति" इति। "शे मुचादीनाम्()" ७।१।५९ इति नुम्()। "षोडश" इति। षट्? वा दश वास्येति "संख्यायाव्यय" २।२।२५ इत्यादिना बहुव्रीहिः, "संख्येये ड्च्()" ५।४।७३ इत्यादिना समासान्तो ड्च्()। "षोडन्()" इति। षट्? दन्ता अस्येति बहव्रीहिः, "वयसि दन्तस्य दतृ" ५।४।१४१ इति दन्तशब्दस्य दत्रादेशः। "षष उत्त्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च" (वा।७६५) इति षष उत्वम्(), उत्तरपदादेश्च ष्टुत्वम्()--डकारः। "षण्डः" इति। प्रातिपदिकान्तमेतदव्युत्पन्नम्()। "षडिकः इति। अनुकम्पितः षडङ्गुलिदत्त इति "बह्वचो मनुष्यनाम्नष्ठच्()" (५।३।७८) इति ठच्? ठाजादावूध्र्वं द्वितीयादचः" ५।३।८३ इत्यङ्गुलिदत्तशब्दस्य लोपः। ननु च "लिटि धातोः" ६।१।८ इत्यतोऽत्र धातुग्रहणमनुवर्त्तिष्यते, तदिह किं पुनर्धातुग्रहणेन? एवं तरह्हि एतज्ज्ञापयति--तन्निवृत्तमिति। तस्य ह्रनुवृत्तौ "लोपो व्योर्वलि ६।१।६४ इत्ययमपि लोपो धात्ववयवस्यैव विज्ञायते। क्नूयी (धा।पा४८५), क्तः--क्नूतः क्ष्मयी (धा।पा।४८६), क्तः--क्ष्मात इत्यत्रैव स्यात्(); गौधरः, पचेरन्नित्यत्र न स्यात्()। नन्वेवमपि धातुग्रहणमनर्थकमेव, यस्मादुपदेश इति वत्र्तत एव, न च प्रातिपदिकानामुपदेशः, केषां तर्हि उपदेशः? धातूनाम्()? नैतदस्ति; उपदेशाधिकारो।()युपदेशग्रहणेन षकारो विशिष्यते, षषश्च षकार उपदेशो भवति। "षष उत्त्वं दतृदशधासूत्तरपदादेः (वा।७६५) इति सूत्रे पाठात्()। तस्मात्? धातुग्रहणं कत्र्तव्यम्()। "कषति" इति। भ्वादौ कषसिधेत्यादिहिसार्थो धातुवर्गे पठ()ते। "लषति" इति। "लष कान्तो"(धा।पा।८८८) अनयोरादिगारहणस्य भवति। ननु चोपदेशसामथ्र्यादेवात्र न भविष्यतीति, अन्यथा ह्रुपदेशस्य वैयथ्र्य स्यात्()? नैतस्ति; अस्ति ह्रन्यतूपदेशस्य प्रयोजनम्()। किं तत्()?--"शेषे विभाषाऽकखादाववान्त उपेदेशे" ८।४।१७ इत्यत्र केषेग्रहणं मा भूत; लेषतुः, लेषुरिति षत्वं यथा स्यात्()। किमर्थं पुनः षादयो उपदष्टाः, न सादयो ह्रुपदिश्येरन्(), एवं ह्रेतत्? सूत्रं न कत्र्तवयं भवति? इत्यत आह--"आदेशप्रत्ययोः" इत्यादि। षत्वव्यवस्थां=षत्वनियमः। "आदेशप्रत्यययोः" ८।३।५९ इत्यनेन सहादीनामेव षत्वव्यवस्था यथा स्थादित्येवमर्थम्()। षादपः केचिदुपदिष्टाः अन्यथा सहादीनां षत्वार्थ यत्नान्तरं कत्र्तव्यं स्यात्()। तच्च गुरु भवतीत्यभिप्रायः। यद्यपि षकारादिषु सन्देहो न भवति, सकारादिषु च भवत्येव। अत्र हि न ज्ञायते--किं षोपदेशा एव सन्तः "धात्वादेः षः सः" (६।१।६४) इत्यनेन कृतसत्वा उच्चारिताः? उत सकारादय एव? इति सन्दिह्र पृच्छति--"के पुनस्ते" इति। "ये यथा पठ()न्ते" इति। षादयो ये यथा पठ()न्ते सन्निधानात्? त एव षोपदेशा अवगन्तव्याः। "अज्दन्त्यपराः" इत्यादि। अज्दन्त्यौ परौ येषामिति तेऽब्दन्त्यपराः। परशब्दोऽत्रावयवे वत्र्तते। तच्चाच्दन्त्ययोः परत्वमवयवान्तरापेक्षं विज्ञायमानं सन्निधानात्? सकारापेक्षं विज्ञायते। "स्मिस्विदिस्वञ्जिस्वपयश्च" इति। "ष्मिङीषद्धमने" (धा।पा।९४८), "ञिष्विदा गात्रप्रक्षरणे" (धा।पा।११८८), "ष्वन्ज परिष्वङ्गे" (धा।पा।९७६) "ञिष्वप्? शये" (धा।पा।१०६८) एते स्वरूपेणाख्यायन्ते; मकारवकारयोरज्दन्त्यत्वाभावात्()। केचित् स्मिस्वदिस्वदिस्वञ्जिस्वपयश्चेति स्विदिस्थाने स्वदिं पठन्ति, तेषां "तेषां स्वद ["ष्वद"--धातुपाठः ] स्वर्द आस्वादने"

(धा।पा।१८,१९) इति स्वदिरपि षोपदेश एव। "सृपिसृजिस्तृस्त्यासेकृसृवर्जम्()" इति। "गम्लृ सृप्लृ गतौ (धा।पा।९८२,९८३), "सृज विसर्गे (धा।पा।११७८), "स्तृञ्? आच्छादने" (धा।पा।१२५२), "ष्ट() स्त्यै शब्दसङ्घातयोः", (धा।पा।९११,९१०) "सेक [सेकृ, रुओक--धा।पा।] सेकृ श्रकि श्लकि गत्यर्थाः" (धा।पा।८१,८२,८४,८५), "सृ गतौ" (धा।पा।९३५) एतान्? वर्जयित्वा येऽन्येऽज्दन्तत्यपरास्ते षोपदेशाः। "सुब्धातु" इत्यादि। सुब्धातुः क्यजाद्यन्तः। "ष्ठिच्? निरसने" (धा।पा।५६०), "ष्वक्क [अत्रत्याःधातवः केचन धातुपाठे न सन्ति] वुक्क मक्कतिक्क टिक्क टीक्क वगि लगि गत्यर्थाः--एषां प्रतिषेधो वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--सुब्धातौतावत्? षोडीयतीत्यादौ नैव धात्वादिः षकारः, तथा ह्वादिरवयवः। आरम्भकश्चावयवो भवति, सुब्दातुः सबन्तेन क्यचा चारभ्यते। न च षकारेणापि वर्णान्तरेणेति कुतस्तस्य षकारादित्वम्()? सहादयस्तु षकारादिभिरेव वर्णैरारभ्यन्त इति युक्तं तेषां षकारादित्वम्()। ष्ठिवेरपि निपातनान्न भवति, किं तन्निपातनम्()? "ष्टिवुक्लमुचमां शिति" ७।३।७५ इति। यस्य हि सत्वं भवति तमयं प्रदेशेषु कृतसत्बमेवोच्चारयति यथा प्रदेशे--"स्थाध्वोरिच्च" १।२।१७ इति। ष्वक्केरप्यज्दन्त्यपरा इत्यनेन निवर्त्तितत्वान्न भवति। वकारस्य दन्त्यौष्ठ()त्वादज्दन्त्यग्रहणेन न गृह्नते। अथ वा यादित्यात्? ष्ठिवुष्वक्कोर्न भविष्यति, यकारस्तु लुप्तनिर्दिष्टत्वान्न श्रूयते। अथ वा--अन्यतरस्यांग्रहणमत्रानुवत्र्तते सा च व्यवस्थितविभाषा विज्ञायते, तेन सुब्धात्वादीनां न भवतीति। "षष्ठीवति" इति। "ष्ठिवुक्लमुचमां शिति" ७।३।७५ इति दीर्घः। "ष्वक्कते" इति। अनुदात्तेत्त्वादात्मनेपदम्()। अथ ष्ठिवो द्वितीयवर्णः किं ठकार इष्यते? उत थकारः? यदि ठकारस्तदा सिद्धम्()--टेष्ठीष्यत इति, न सिध्यति--तेष्ठीव्यत इति, "अभ्यासे चर्च्च" ८।४।५३ इति टकार एवान्तरतमष्ठकारस्य स्थाने प्राप्नोतीति कृत्वा; अथ थकारस्तदा सिद्धम्()--तेष्ठीव्यत इति, एतन्न सिध्यति--टेष्ठीव्यत इति, आन्तरतम्याद्विधीयमानस्थकारस्य स्थाने तकार एव प्राप्नोतीत्यत आह--"ष्ठिवु इत्येतस्य" इत्यादि। ब्यासस्य द्वैरूप्यं यथा स्यादिति। केचिदाचार्येम शिष्या "ठकारोऽयम्()" इत्युपदिष्टाः। अपरे पुनः "थकारोऽयं ष्टुत्वेन ठकारः श्रूयते" इतीममर्थं ग्राहिताः। उभयं चैतत्? प्रयोजनम्()। अन्ये पुनरहुः--ष्ठिवुर्दिवादिष्वपि पुनरधीयते, तत्रैकस्य द्वितोयस्थाकारः, अपरस्य तु ठकार इति। तेष्ठीव्यत इति "शर्पूर्वाः खयः" ७।४।६१ शेषः॥

बाल-मनोरमा

धात्वादेः षः सः १०८, ६।१।६२

दात्वादेः। "ष" इति षष्ठ()न्तं। तदाह--धातोरादेः षस्य सः स्यादिति। षकारस्य सः स्यादित्यर्थ-। धातुग्रहणं किम्?। षट्। अत्र धात्वादित्वाऽभावान्न सकारः। आदिग्रहणं किम्?। लषति। न चैवमपि षकारीत्यतीत्यादौ सुब्धात्वादेरपि षस्य सकारः स्यादिति वाच्यम्, "आदेच उपदेशेऽशिती"त्यत उपदेश इत्यनुवृत्तेः। एवं च ष()डित्यादावप्युदेशग्रहणानुवृत्त्यैव व्यावृत्तिसिद्धेर्धातुग्रहणं भाष्ये प्रत्याख्यातम्। ननु धातुपाठे स्वद स्वर्देत्येवं सकार एव उपदिश्यताम्। एवं च "धात्वादेः षः सः" इत्यपि मास्त्विति चेन्मैवं, ण्यन्ताल्लुङि असिष्वददित्यत्र षकारश्रवणार्थकत्वात्। धातुपाठे सकारस्यैवोपदेशे तु असिष्वददित्यत्र सकारस्य आदेशसकारत्वाऽभावेन षत्वाऽसंभवात्। नन्वेवं सति अनुस्वदत इत्यत्रादेशसकारत्वात्त्वापत्तिरित्यत आह-- सात्पदाद्योरिति। सस्वद इति। लिटि द्वित्वे संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः। उर्देति। चकारादास्वादनेऽपीति केचित्।

तत्त्व-बोधिनी

धात्वादेः षः सः ८३, ६।१।६२

धातुग्रहणं किम्?। षट् षड्। आदेः किम्?। लषति।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ णः ६।१ नः १।१ धात्वादेः ६।१ ६२ उपदेशे ७।१ ४४

अर्थः॥

धात्वादेः ण-कारस्य स्थाने उपदेशावस्थायां न-कारः आदेशः भवति

उदाहरणम्॥

णीञ् - नयति। णम - नमति। णह - नह्यति॥

काशिका-वृत्तिः

णो नः ६।१।६५

धातोरादेः इत्यनुवर्तते। धातोरादेर् णकारस्य नकार आदेशो भवति। णीञ् नयति। णम नमति। णह नह्यति। धात्वादेः इत्येव, अणति। सुब्धातोरयम् अपि नेष्यते, णकारम् इच्छति णकारीयति। उपसर्गादसमासे ऽपि णोपदेशस्य ८।४।१४ इत्यत्र णत्वविधेर् व्यवस्थार्थं णादयो धात्वः केचिदुपदिष्यन्ते। के पुनस् ते? ये तथा पठ्यन्ते। अथवा लक्षणं क्रियते, सर्वे णादयो णोपदेशाः, नृतीनन्दिनर्दिनक्कनाटिनाथृनाधृवर्जम्।

लघु-सिद्धान्त-कौमुदी

णो नः ४६०, ६।१।६३

धात्वादेर्णस्य नः। णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्दनक्कनॄनृतः॥

न्यासः

णो नः। , ६।१।६३

"सुब्धातोरयमपि नेष्यते" इति। पूर्वस्मदेव हेतोः। "उपसर्गादसमासेऽपि" इत्यादि। अत्र पूर्वानुसारेण पूर्वपक्षो विज्ञेयः। "नृतीनन्दि" इत्यादि। "नृती गात्रविक्षे#एपे" (धा।पा।१११६), "टुनदि समृद्धौ" (धा।पा।६७), "नर्द गद्रद शब्दे" (धा।पा।५६,५७), "नक्क वक्क ["धक्क"--घातुपाठः] नाशने" (धा।पा।१५९३,१५९४), "नट अवस्यन्दने" [अवस्पन्दने--घातुपाठः] (धाचपा।१५४५) चुरादिणिजन्तः, "नाथृ नाधृ याञ्चोपतापै()आर्याशीःषु" (धा।पा।६।७), "नॄ नये" (धा।पा।८०९,१४९५)॥

बाल-मनोरमा

णो नः १३०, ६।१।६३

णो नः। "ण" इति षष्ठ()न्तं। "धात्वादेः षः सः" इत्यतोऽनुवर्तनादाह---धातोरादेरिति। तेन अणतीत्यादौ न नत्वम्। नः स्यादिति। नकारः स्यादित्यर्थः। नदतीति। "मेघादि"रिति शेषः। "णो नः" इति नत्वस्याऽनैमित्तकतया लिण्निमित्तादेशादित्वाऽभावादेत्वाभ्यासलोपौ स्त एव, नेदतुरित्यादि। अथ "नृत्()ननर्द्()नन्दनक्क्()नाट्नाथृनानृ()वर्जे णोपदेशाः" इति भाष्यं श्लोकार्धेन सङ्गृह्णाति-- णोपदेशास्त्विति। "नर्द शब्दे"। "नट अवस्यन्दने" चुरादिः। नाथृ नाधृ याञ्चादौ, द्वितीयचतुर्थान्तौ। "टु नदि समृद्धौ"। "नक्क नाशने"। नॄ? नये"। "नृती गात्रविक्षेपे" एभ्योऽष्टभ्योऽन्ये

णकारादिधातव इदानीं नकारादित्वेन दृश्यमाना अपि नत्वसंपन्ननकारादितयाणोपदेशाः प्रत्येतव्या इत्यर्थः। "नाटी"ति ण्यन्तस्य प्रयोजनमाह-- नाटेरिति। घटादिरिति। "नटनृत्ता"विति घटादिपठित इत्यर्थः। तत्फलं घटादौ वक्ष्यते। मतान्तरमाह-- तवर्गेति। तवर्गचतुर्थान्तनाधधातोर्नृ()नन्द्योश्च णोपदेशेषु पर्युदासाऽभावमङ्गीकृत्य तेषामपि णोपदेशत्वमाहुरित्यर्थः। अत्र मते पञ्चभ्यो भिन्ना णोपदेशा इति फलितम्। भाष्यविरोधोऽत्रारुचिबीजम्।

तत्त्व-बोधिनी

णो नः १०४, ६।१।६३

णो नः। धातोरिति। "धात्वादेः षः सः इत्यतोऽनुवर्तनाद्धात्वादेरित्येव। नेह--अणति। णोपदेशान्पर्युदासमुखेनाह-- णोपदेशास्त्विति। "नर्द शब्दे"। "नट अवस्यन्दने"। चुरादिः। यस्तु नट नृत्ताविति घटादिः स नेह गृह्रते, नाटीति दीर्घनिर्देशात्। "नाथृ नाधृ याच्ञादौ"। "टुनदि समृद्धौ"। "नक्क नाशने"। "नॄ? नये"। "नृती गात्रविक्षेपे"। एभ्योऽष्टाभ्यो भिन्ना इत्यर्थः। तवर्गेति। तेषां मते तु पञ्चब्यो भिन्ना णोपदेशाः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लोपः १।१ ६८ व्योः ६।२ वलि ७।१

समासः॥

वश्च यश्च व्यौ, तयोः ॰ इतरेतरद्वन्द्वः।

अर्थः॥

वकार-यकारयोः लोपः भवति वलि परतः।

उदाहरणम्॥

दिव् -- दिदिवान् दिदिवांसौ दिदिवांसः। ऊयी -- ऊतम्। क्नूयी -- क्नूतम्। गौधेरः। पचेरन् यजेरन्। जीरदानुः। आस्रेमाणम्।

काशिका-वृत्तिः

लोपो व्योर् वलि ६।१।६६

धतोः इति प्रकृतं यत् तद् धात्वादेः इति पुनर् धातुग्रहणान् निवृत्तम्। तेन धातोरधातोश्च वकारयकारयोः वलि परतो लोपो भवति। दिव् दिदिवान्, दिदिवांसौ, दिदिवांसः। ऊयी ऊतम्। क्नूयी क्नूतम्। गोधाया ढ्रक् ४।१।१२९। घौधेरः। पचेरन्। यजेरन्। वकारस्य जीवेरदानुक्, जीरदानुः। स्रिवेः आस्रेमाणम्। उणादयो बहुलम् ३।३।१ इति बहुलवचनाच् च्छ्Hवोः शूडनुनासिके च ६।४।१९ इति ऊथ् न भवति। बलि इति किम्? ऊय्यते। क्नूय्यते। ऊर्वं लोपग्रहणं किम्? वेरपृक्तलोपात् पूर्वं वलि लोपो यथा स्यात्। कण्डूयतेः क्विप्कण्डूः। लोलूयतेः लोलूः। व्रश्चादीनाम् उपदेशसामर्थ्यात् वलि लोपो न भवति। वृश्चति। ववृश्च इत्यत्र अपि हि सम्प्रसारणहलादिःशेषयोर् बहिरङ्गत्वात् प्राप्नोति।

लघु-सिद्धान्त-कौमुदी

लोपो व्योर्वलि ४३१, ६।१।६४

भवेत्। भवेताम्।

न्यासः

लोपो व्योर्वलि। , ६।१।६४

"लिटि धातोः" ६।१।८ इत्यस्य धातुग्रहणस्य दृष्टानुवृत्तिसामथ्र्यादिहाप्यनुवृत्तिरिति मन्यमानस्य धातोरेवायं वलि व्यलोपो विधीयत इति कस्याचिद्भ्रान्तिः स्यात्, अतस्तं निरकर्त्तुमाह--"धातोरिति यत्? प्रकृतम्()" इत्यादि। "दिदिवान्()" इति। दिवेः क्वसौ रूपम्()। "ऊयी" इति। "ऊयी तन्तुसन्ताने (धा।पा।४८३) "क्नूयो" इति। "क्नूयी शब्दे" (धा।पा।४८५) "गौदेरः" इति। "गोधाया ढ्रक्()" ४।१।१२९ ढस्यैयादेशः, यकारलोपः। "पचेरन्()" इति। सीयुड()कारस्य लोपः। "जीवेः" इति। "जीव प्राणधारणे" (धा।पा।५६२) इत्यस्य। "रिउआवेः" इति। "रिउआवु गतिशोषणयोः" (धा।पा।११०९) इत्येतस्य। "आरुओमाणम्()" इति। औणादिकोऽयं मनिन्()। कथं पुनरेतदिहोदाहरणम्(), यावता परत्वात्? "वार्णादाङ्गं बलीयो भवति" (व्या।प।३९) इति बलीयस्त्वात्? "च्छ्वोः शूड्नुनासिके च" (६।४।१९) इत्यादिनोठादेशेनात्र भवितव्यम्()? इत्यत आह--"उणादयो बहुलम्()" इत्यादि। बहुलग्रहणस्य सर्वविधिव्यभिचारार्थत्वान्न भवत्येष दोषप्रसङ्ग इति। पश्चाल्लोपग्रहणे क्रियमाणे पकारात्? परेणाध्यर्धमात्रोच्चारयितव्या भवति, अकगारो हि मात्रा, विसजं नीयस्त्वर्धमात्रः। पूर्वं तु लोपग्रहणे क्रियमाणे मात्राद्वयमुच्चारयितव्यं जायते; ओकारस्य द्विमात्रिकत्वात्()। तत्र लाघवार्थं पश्चादेव लोपग्रहणं कर्त्तु युक्तम्(), तत्? किं पूर्वं क्रियते? इत्यत आह--"पूर्वम्()" इत्यादि। अन्यस्तु पूर्व कार्यिनिर्देशो युक्तः, पश्चात्? कर्यनिर्देश इति पूर्व व्योग्रहणे कत्र्तव्ये किमर्थं लोपग्रहणं क्रियत इति पूर्वपक्षं वर्णयति, स चायुक्तः "लुगणिञोः" २।४।५८ इत्यत्र कार्यस्यापि पूर्व निदशात्()। "वेरपृक्तलोपात्()" इत्यादि। कण्डूयतेर्लोलूयतेश्च क्विपि कृते वलि लोपात्? परत्वात्? कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च पूर्वं वेरपृक्तलोप एव स्यात्()। अ()स्मश्च सति निमित्ताभावात्? वर्णाश्रये प्रत्ययलक्षणाभाद्वलि लोपो न स्यात्? तस्मात्? पूर्वं लोपग्रहणं क्रियते--वलि लोप एव पूर्वं यथा स्यात्()। पूर्वं लोपग्रहणे ह्रयमर्थः सूच्यते--वेरृक्तलोपत्? पूर्व वलि लोप एव कत्र्तव्यमिति। "कण्डूः" इति। "अतो लोपः" ६।४।४८ इत्यकारलोपः। क्विलुगुपधात्वचङ्गपरनिह्यसिकुत्वेषु न स्थानिवत्()" (१।१।५८ वा।२) इत्यकारस्य स्थानिवद्भावो न भवति वलि लोपः। अथ व्रश्चकः, व्रश्चन इत्यत्र रेफे वलि परतो वकगारलोपः कस्मान्न भवति? इत्याह--"व्रश्चादीनाम्()" इत्यादि। यद्येषामपि लोपः स्यात्(), वकारोच्चारणमनर्थकं स्यात्()। अतश्चोच्चारणसामथ्र्याद्व्रश्चादीनां वलि लोपो न भवति। स्यादेतत्()--वृश्चति, वव्रश्चेत्यत्र सम्प्रसारणे हलादिशेषे च वकारस्य श्रवणं यथा स्यात्(), तत्? कुत उपदेशस्य वैयथ्र्यम्()? अत आह--"वृश्चति" इत्यादि। यथा व्रश्चक इत्यादौ लोपस्य प्राप्तिः, एवं वृश्चतीत्यादावपि सम्प्रसारणादौ कार्ये कृतेऽपि; तस्य बहिरङ्गत्वेनासिद्धत्वात्()। तत्र सम्प्रसारणं ङित्प्रत्ययापेक्षत्वात्? बहिरङ्गम्()। हलादिशेषेऽभ्यासापेक्षत्वाद्बहिरङ्गः, वलि यलोपस्तु वर्णमात्राश्रयत्वादन्तरङ्गः। तस्मात्? सर्वत्रैव व्रश्()चेर्वकारलोपः प्राप्नोति। क्रियते चास्यो पदेशः, अत उपदेशसामथ्र्यान्न भविष्यतीति तदेवावस्थितम्()॥

बाल-मनोरमा

लोपो व्योर्वलि ८६३, ६।१।६४

लोपो व्योर्वलि। "व्" "य्" अनयोद्र्वन्द्वात् षष्ठीद्विवचनम्। तदाह--वकारयकारयोरिति। पुंवद्भाव इति। "स्त्रियाः पुंवदि"त्यनेने"ति शेषः। युवजानिरिति। जायाशब्दे यकारादाकारस्य निङ्।

तत्त्व-बोधिनी

लोपो व्योर्वलि ७५२, ६।१।६४

लोपो व्योर्वलि। "व्योर्लोप"इति वक्तव्ये "वेरपृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेन"इति ज्ञापयितुमादौ विधेयनिर्देशः कृतः। तेन सुखीयतेः क्विपि सुखीरिति सिद्ध्म्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वेः ६।१ अपृक्तस्य ६।१ लोपः १।१ ६४

अर्थः॥

अपृक्तस्य वेः लोपः भवति।

उदाहरणम्॥

ब्रह्महा, भ्रूणहा। घृतस्पृक्, तैलस्पृक्। अर्द्धभाक्, पादभाक्, तुरीयभाक्।
काशिका-वृत्तिः
वेरपृक्तस्य ६।१।६७

लोपः इति वर्तते। वेः इति क्विबादयो विशेषाननुबन्धानुत्सृज्य सामान्येन गृह्यन्ते। वेरपृक्तस्य लोपो भवति। ब्रह्मभ्रूणवृत्रेषु क्विप् ६।२।८७। ब्रह्महा। मूर्णहा। स्पृशो ऽनुदके क्विन् ६।२।५८। घृतस्पृक्। तैलस्पृक्। भजो ण्विः ३।२।६२। अर्धभाक्। पादभाक्। तुरीयभाक्। अपृक्तस्य इति किम्? वृदृभ्यां क्विन् दर्विः। कृगृशृसृजागृभ्यः क्वि। जागृविः।
लघु-सिद्धान्त-कौमुदी
वेरपृक्तस्य ३०५, ६।१।६५

अपृक्तस्य वस्य लोपः॥
न्यासः
वेरपृक्तस्य। , ६।१।६५

"वेः" इत्यादि। क्विबादेरन्यस्य वेरपृक्तसंज्ञकसयाभावात्? क्विबादय एव गृह्न्ते, कथं पुनर्वेरित्युच्यमाने क्विबादीनां सामान्येन ग्रहणमुपपद्यते, यावता प्रकारादयस्येषां विशेषा अनुबन्धाः सन्ति? इति चोद्यनिरासाये दमुक्तम्()--"विशेषाननुबन्धानुत्सृज्य" इति। "ब्राह्हहा, भ्रूणहा" इति। "सौ च" ६।४।१३ इति दीर्घः "घृतस्पृक्()" इति। "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्()। "अर्धभाक्()" इति। "चोः कुः" ८।२।३० इति कुत्वम्()। दर्विरित्यादौ "उणादयो बहुलम्()" ३।३।१ इति बहुलग्रहणादेव लोपो न भवतीति शक्यते वक्तुम्(), अतः प्रपञ्चार्थम्()। वैचित्र्यार्थं वाऽपृक्तग्रहणम्()॥
बाल-मनोरमा
वेरपृक्तस्य , ६।१।६५

वेरपृक्तस्य। लोपो व्योः" इत्यतो "लोप" इत्यनुवर्तते। उत्सृष्टानुबन्धाः। सरक्वे क्विबादयो "वे"रित्यनेन गृह्न्ते। इकार

उच्चारणार्षथः, अपृक्तग्रहणात्, तदाह--अपृक्तस्य वस्येति। अपृक्तस्येति किम्?। जागृविः। क्विनः कृत्संज्ञायाः प्रयोजनमाह--कृत्तद्धितेति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हल्ङ्याब्भ्यः ५।३ दीर्घात् ५।१ सुतिसि १।१ अपृक्तम् १।१ हल् १।१ ६७ लोपः १।१ ६४

समासः॥

हल् च ङी च आप् च हल्ङ्यापः तेभ्यः ॰ इतरेतरद्वन्द्वः। सुश्च तिश्च सिश्च च सुतिसि, समाहारो द्वन्द्वः।

अर्थः॥

हलन्ताद् ङ्यन्ताद् आबन्ताच्च दीर्घात् परं सु, ति, सि, इत्येतत् अपृक्तं हल् लुप्यते।

उदाहरणम्॥

हलन्तात् सुलोपः -- राजा, तक्षा, अखास्रत्, पर्णध्वत्। ङ्यन्तात् -- कुमारी, गौरी, शार्ङ्गरवी। आबन्तात् -- खट्वा, बहुराजा, कारीषगन्ध्या। तिलोपः सिलोपश्च हलन्तादेव। तिलोपस्तावत् -- अबिभर्भवान्, अजागर्भवान्। सिलोपः -- अभिनोऽत्र, अच्छिनोऽत्र॥

काशिका-वृत्तिः

हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६।१।६८

लोप इति वर्तते। तदिह लौकिकेन अर्थवत् कर्मसाधनं द्रष्टव्यम्। लुप्यते इति लोपः। हलन्ताद्, ङ्यन्तादाबन्ताच् च दीर्घात् परं सु ति सि इत्येतदपृक्तं हल् लुप्यते। हलन्तात् सुलोपः राजा। तक्षा। उखास्रत्। पर्णध्वत्। ङ्यन्तात् कुमारी। गौरी। शार्ङ्गरवी। आबन्तात् खट्वा। बहुराजा। कारीषगन्ध्या। हलन्तादेव तिलोपः सिलोपश्च। तत्र तिलोपस्तावत् अबिभर् भवात्। भृञो लङि तिपि श्लौ भृञामितित्यभ्यासस्य इत्वम्। अजागर् भबान्। सिलोपःअभिनो ऽत्र अच्छिनो ऽत्र। दस्य रेफः। हल्ङ्याब्भ्यः इति किम्? ग्रामणीः। सेननीः। दीर्घातिति किम्? निष्कौशाम्बिः। अतिखट्वः। सुतिसि इति किम्? अभैत्सीत्। तिपा सहचरितस्य सिशब्दस्य ग्रहणात् सिचो ग्रहणं न अस्ति। अपृक्तम् इति किम्? भिनत्ति। छिनत्ति। हलि इति किम्? बिभेद। चिच्छेद। अथ किमर्थं हलन्तात् सुतिसिनां लोपो विधीयते, संयोगान्तलोपेन एव सिद्धम्? न सिध्यति। राजा, तक्षा इत्यत्र संयोगान्तलोपस्य असिद्धत्वान् नलोपो न स्यात्। उखास्रत्, पर्णध्वतित्यत्र अपदन्तत्वाद् दत्वं च न स्यात्। अभिनो ऽत्र इत्यत्र अतो रोरप्लुतादप्लुते ६।१।१०९ इत्युत्वं न स्यात्। अबिभर् भवानित्यत्र तु रात् सस्य ८।३।२४ इति नियमाल् लोप एव न स्यात्। संयोगान्तस्य लोपे हि नलोपादिर् न सिध्यति। रात्तु ते न एव लोपः स्याद् धलस् तस्माद् विधीयते।

लघु-सिद्धान्त-कौमुदी

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् १७९, ६।१।६६

हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते॥

न्यासः

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्त हल्?। , ६।१।६६

यदि लोप इति इहानुवत्र्तमानं शास्त्रीयेणार्थेनैवार्थवत्? स्यात् तदा तेन हलित्यस्य प्रथमान्तस्य सामानाधिकरण्येन सम्बन्धो नोपपद्यते। शास्त्रीयस्य हि लोपशब्दस्यार्थः---दर्शनाभावः=आदर्शनम्(), न च हलदर्शनं भवति। न च "हल्ङ्याब्भ्यः" इति पञ्चमी हलिति प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति। सामथ्र्याद्वा हलित्यस्य षष्ठ()न्ततया विपरिणामो भविष्यति, अतः षष्ठ()न्तस्य लोपशब्देन सम्बन्धो भवष्यतीति शक्यं प्रकल्पयितुम्(); अकृतार्थत्वात्? प्रथमायाः षष्ठीभावस्यानुपपत्तेरित्येतदालोच्याह--"तदिह" इत्यादि। "लुप्यत इति लोपः"। कर्मणि घञ्()। एतेन लौकिकार्थेनार्थवत्त्वं लोपशब्दस्य दर्शयति। लुप्यत इति निरुध्यत इत्यर्थः। लौकिकेनार्थेनार्थवता कर्मसाधनेन लोपशब्देन हलित्येतस्य विशेषणविशेष्यबाव उपपद्यते। लोपशब्देन हि लुप्यमानं वर्णमात्रमुच्यते। " सुतिस्यपृक्तं हल्()" इति। अनेन च तदेव विशिष्यते। "दीर्घात्()" इति। एतच्च ङ्यापोरेव विशेषणम्(); सम्भवाव्यभिचारात्(), न तु हलन्तस्य; असम्भवात्()। "उखारुआत्(); पर्णध्वत्? इति। "रुआन्सु ध्वन्सु अधःपतने;, (धा।पा।७५४,७५५) उखायां रुआंसते पर्णानि ध्वंसत इति क्विप्? "अनिदिताम्()" ८।४।५५ चत्र्वम्()--तकारः। "कुमारी" ति। "वयसि प्रथमे" ४।१।२० इति ङीष्()। "गौरी" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्()। "शाङ्गरवी" इति। "शाङ्गरवाद्यञो ङीन्()" ४।१।१३ इति डाप्()। "कारीषगन्ध्या इति। "यङश्चाप्()" ४।१।७४। "हलन्तादेव तिलोपः सिलोपश्च" इति। ननु ङ्याबन्तादित्येकारेण दर्शयति, न हि ङ्याबन्तात्? परौ तिसी सम्भवतः, धातोरेव परस्य लकारस्य तयोर्विधानात्()। "अबिभर्भवान्()" इति। गुणे रपरत्वे च कृते तिलोपः। "अजागर्भवान्()" इति। "जाग्रोऽविचिण्णल्ङित्सु" ७।३।८५ इति गुणः। भवानित्यनुप्रयोगस्तिशब्दाभिव्यक्तये। "अभिनः" इति। भिदेर्लङ् "दश्च" ८।२।७५ इति रुत्वम्(), "अतो रोरप्लुतादप्लुते" ६।१।१०९ इत्युत्त्वम्(), इनमोऽकारेण सह "आद्? गुणः, ६।१।८४ "एङः पदान्तादति" ६।१।१०५ इति पूर्वरूपत्वम्()। "ग्रामणीः" इति। ग्रामं नयतीति "सत्सूद्विष" ३।२।६१ इत्यादिना क्विप्()। "निष्कौशाम्बिः" इति निर्गतः कौशाम्ब्या इति प्रादिसमासः, "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्रस्वत्वम्()। "अतिखटवः" इति। खट्वामतिक्रान्त इति पूर्ववत्? समासे कृते ह्रस्वः। "अभैत्सीत्()" इति। "वदव्रज" ७।२।३ इति वृद्धिः, अपृक्त इट्()। ननु सीति सामान्येन निदशात्? सिचोऽपि गरहणम्(), अतो न युक्तमिदं प्रत्युदाहरणम्()? अत आह--"तिसहचरितस्य" इत्यादि। तिङ्()तिशब्देन साहचर्यात्? तिङ एव सेग्ररहणम्(), न सिच इति किमत्रायुक्तम्()। "बिभेद" इति। णलोऽकारोऽत्र भवत्यपृकतः, न तु हल्? इति नासौ लुप्यते। "संयोगान्तलोपेनैव सिद्धम्()" इति। राजेत्यादिकमुदाहरणमिति शेषः। कथं पुनर्न सिध्यति? इत्यत आह--"राजा, तक्षा" इत्यादि। यथा पचन्नित्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न भवति; तथा राजा, तक्षेत्यादावपि न स्यात्()। संयोगान्तलोपासिद्धत्वं चात्र पारम्पर्येण हेतुः। तस्मिन्? सति हि सौ परतः पूर्वस्य पदसंज्ञा न भवति; "असर्वनामस्थाने" १।४।१७ इति प्रतिषेधात्()। तस्यां चासत्यां पदस्येत्युच्यमानो नलोपो न स्यात्(), नलोपे चासति राजेत्यादिकं रूपं न सिध्येत्()। "दत्वम्()" इति। न स्यादिति प्रकृतेन सम्बन्धनीयम्()। दत्वमपि हि संयोगान्तलोपस्यासिद्धत्वादसत्यां पदसंज्ञायां न स्यात्()। अथ वा--संयोगान्तलोपोऽत्र न प्रवत्र्तत एव, तस्य "स्कोःसंयोगाद्योरन्ते च" ८।२।२९ इति संयोगादिलोपोऽपवादभूत इति स एव स्यात्(), यथा--काष्टं तक्ष्णोतीति काष्ठतडित्यत्र। त()स्मश्च सति विभक्तिसकारस्य रुत्वविसर्गौ स्यातामिति कुतो दत्त्वम्()! "उत्त्वम्()" इति। न स्यादित्यपेक्षते, एतदपि संयोगान्तलोपस्यासिद्धत्वात्()। अलब्धपदव्यपदेशस्य न स्यात्()। "रात्सस्य" ८।२।२४ इति "नियमात्()" इति। "संयोगान्तस्य लोपः" ८।२।२३ इत्यनेनैव सिद्धेः। "रात्सस्य" ८।२।२४ इति "नियमात्()" इति। "संयोगान्तस्य लोपः" ८।२।२३ इत्यनेनैव सिद्धेः। "रात्सस्य" ८।२।२४ इति नियमार्थमिदम्()--रात्सस्यैव लोपो यथा स्यात्(), नान्यस्येति। ततश्चाबिभर्भवानित्यत्र तकारस्य लोप एव न स्यात्()। तस्मात्? संयोगान्तलोपेन न सिध्यतीति

हलन्ताल्लोप उच्यते। अस्यैवार्थस्य सुखोपग्रहणार्थं "संयोगान्तस्यलोपे हि" इत्यादि। सङ्ग्रहश्लोकस्योपन्यासः। हिशब्दो हेतौ। यस्मात्? संयोगान्तलोप आश्रीयमाणे नलोपादिकं कार्यं न सिध्यतीति। किञ्च--ते=तव, भवतः संयोगान्तलोपवादिनः रात्तु रेफात्तु परस्य तकारस्याबिभर्भवानजगर्भवानित्यत्र नैव लोपः स्यात्()। तस्माद्धलन्तात्? सुतिसीनां लोपो विधीयते॥

बाल-मनोरमा

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् २५०, ६।१।६६

हल्ङ्याब्भ्यो। हल् च ङीच आप् चेति द्वन्द्वः। दिग्योगे पञ्चमी। परमित्यध्याहार्यम्। समासैकदेशयोरपि ङ्यापोरेव दीर्घादिति विशेषणं, न तुहलः, असम्भवात्। एवं च दीर्घादिति द्वित्वे एकवचनमार्षम्। "हल्ङ्याब्भ्य" इत्यस्य सुतिस्याक्षिप्तप्रकृतिविशेषणतया, प्रत्ययग्रहणपरिभा,या च तदन्तविधिः। ततश्च हलन्ताच्च दीर्घङ्याबन्ताच्च परमिति लब्धम्। "सुतिसि" इति समाहारद्वन्द्वः। अपृक्तमिति हलिति च सामानाधिकरण्येनान्वेति। उकारे इकारे च लुप्ते परिशिष्टः सकारस्तकारश्च सुतिसि इत्यनेन विवक्षितः। ततश्च हलित्यनेन सामानाधिकरण्यं न विरुध्यते। "लोपोः व्योः" इत्यतो लोप इत्यनुवर्तते। तच्चेह कर्मसाधनमाश्रीयते। लुप्यते इति लोपः। क्रमणि घञ्। तदाह--हलन्तात्परमित्यादिना। हल्ङ्याब्भ्यः किमिति। "राम" इत्यादावदीर्घान्तत्वान्नदोष इति प्रश्नः। ग्रामणीरिति। ग्रमां नयतीति विग्रहः। "णीञ् प्रापणे"। "सत्सूद्विषे"त्यादिना क्विप्। "अग्रग्रमाभ्यां नयतेर्णो वाच्यः" इति णत्वम्। हल्ङ्याबन्तत्वाऽभावान्न सुलोपः। दीर्घात्किमिति। ङ्यापोर्दीर्घत्वाऽव्यभिचारात्किमर्थं दीर्घत्वविशेषणमिति प्रश्नः। निष्कौशाम्बिः अतिखट्व इति। निष्क्रान्तः कौशाम्ब्याः, खट्वामतिक्रान्त इति विग्रहे "निरादयः क्रान्ताद्यर्थे पञ्चम्या" "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। "गोस्त्रियोः" इति ह्यस्वत्वम्। अत्र ह्वापोह्र्यस्वत्वान्न सुलोपः। अभैत्सीदिति। भिदेर्लुङि सिच्। अत्र तकारात्परस्य सकारस्य लोपो न, सुतिस्यन्यतमत्वाऽभावादित्यर्थः। ननु सिचस्सिरेवायमित्यत आह--तिपेति। तिपा सहचरितस्य विभक्तिरूपस्यैव ग्रहणात्सिचो ग्रहणं नेत्यर्थः। विभर्तीति। अत्र तीति समुदायस्य न हल्त्वम्। तकारस्तु यद्यपि तेरवयवो हल्, तथापि तस्य नाऽपृक्तत्वम्। वस्तुतस्तु उकारे इकारे च लुप्ते परिशिष्टः सकारस्त कारश्च सुतिसीत्यनेन गृह्रते, हल्शब्दसामानाधिकरण्यादित्युक्तम्। नात्र इकारलोपोऽस्ति। अतो हल्ग्रहणेनैव विभर्तीत्यत्र लोपाऽभावासिद्धेरपृक्तग्रहणस्य नेदं प्रत्युदाहरणम्। द्वितीयहल्ग्रहणस्य प्रयोजनं पृच्छति--हल् किमिति।

बिभेदेति। भिदेर्लिट् तिप् णल्। णलोऽकारस्य हल्त्वाऽभावान्न लोपः। प्रथमहल् किमिति। राजन् स् इति स्थिते उपधादीर्घे संयोगान्तलोपेनैव राजेत्यादिसिद्धेरिति प्रश्नः। नन्विदं राजेति कथं प्रत्युदाहरणं, संयोगान्तलोपेनैव अन्यथासिद्धत्वादित्यत आह--नलोपादिर्न स्यादिति। संयोगान्तलोपे सति नलोपो न स्यादिति भावः। "अभिनोऽत्रे"त्यत्र उत्वमादिशब्दार्थः। भिदेर्लङि सिप्। "इतश्चे "तीकरलोपः। "सिपि धातो रूर्वे"ति रुत्वम्। सलोपः। अत्र "अतोरोरप्लुता"दित्युत्वं न स्यात्। कुत इत्यत आह--संयोगान्तलोपस्यासिद्धत्वादिति। हल्ङ्यादिलोपस्तु नासिद्धः, षष्ठप्रथमपादस्थत्वादिति भावः। अत्र क्वचित्पुस्तकेषु "दीर्घात्किमित्यारभ्य संदर्भस्य प्रदर्शितत्वादिति शब्देन्दुशेखरे व्यक्तम्। सखेति। सुलोपे सति "न लोपः" इति नकारलोपः। नचेह "सु"माश्रित्य अनङि कृते तन्नकारमाश्रित्य सोर्लोपो न संभवति, संनिपातपरिभाषाविरोधादिति वाच्#ं, "स्वतन्त्रः कर्ता" इत्यादिनिर्देशेनाऽनङो नकारमाश्रित्य सुलोपे कर्तव्येसन्निपातपरिभाषाया अप्रवृत्तेरित्याहुः। हे सखे इति। "अनङ् सौ" इत्यत्र असम्बुद्धावित्यनुवृत्तेरनङभावे ह्रस्वस्य गुणे "एङ्ह्यस्वा"दिति सुलोपे रूपम्।

तत्त्व-बोधिनी

हल्ङ्याब्भ्यो दीर्घासुतिस्यषृक्तं हल् २११, ६।१।६६

हल्ङ्याब्भ्यो। "दीर्घा"दित्येतन्ङ्यापोरेव विशेषणं न तु हलोऽसंभावदित्याहदीर्घौ याविति। परमिति। न त्विदं "यः""स" इत्यादावतिव्याप्तेः। "कर्ता""सखे"त्यादावव्याप्तेश्च। यद्यपि त्यदाद्यत्वविधौ "विभक्ता"वित्यस्य विषयसप्तमीत्वे स्वीकृते "या" "से" त्यादौ नोक्तदोषः, सुविभक्तेराबन्ताद्विहितत्वस्य संभवात्। तथा अनङ्विधौ सावित्यस्य विषयसप्तमीत्वे "कर्ता""सखे"त्यादावपि न दोषः, हलन्ताद्विहितस्य सोः सम्भवात्तथापि "बहुश्रेयसो त्यत्राऽव्यप्तिप्रसङ्ग इथि भावः। हलिति। तस्य सुतिसीत्येवंरूत्वमेकादेशविकृतन्यायेन बोध्यम्। लुप्यत इति। यद्यपीह "लोपो व्योर्वली"त्यतो "लोप" इत्यनुवर्तते, तच्च तत्र भावसाधनं, तथापीह कर्मसाधनं, "ह"लिति प्रथमान्तेन सामानाधिकरण्यादिति भावः। निष्कौशाम्बिः। अतिखट्व इति। प्रादिसमासे "गोस्त्रियो"रिति ह्रस्वः नन्विह समस्तस्य ङ्यबन्तत्वं नास्ति, न च स्त्रीप्रत्यये तदादिनियमो नास्तीति वाच्यम्, अनुपर्जने हि तथा, इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येव। अन्यथा "अतिकारीषगन्ध्यापुत्र"इत्यत्र ष्यडन्तपूर्वपदलक्षणसंप्रसारणप्रसङ्गात्। सत्यम्। तथाप्युत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वाऽनपायाद्दीर्घग्रहणाऽभावे सुलोपः स्यादेव। नहीदं ङ्याब्ग्रहणं विहितविशेषणमित्यधुनैवोक्तम्। स्यादेतत्। गङ्गामात्मन इच्छति गङ्गीति। ततः क्विपि अल्लोप च "गङ्गीः"। इह ईकारस्य

स्थानिवद्भावेनाप्त्वाद्दीर्घत्वाच्चाऽतिव्याप्तिः। नचाऽल्लोपस्य स्थानिवत्त्वात्सोरापः परत्वं नेति शङ्क्यम्।"क्वौ लुप्तं न स्थानिव"दिति निषेधादिति चैन्मैवम्, ङी-ई आ-आबिति पश्लिष्य दीर्घग्रहणस्य प्रत्याख्यातत्वेन प्रकृते आकाररूपस्य आपोऽभावादुक्तातिप्रसङ्गाऽभावात्। निष्कौशाम्बीयतेः क्विपि तु "निष्कौशाम्वी"ति भवत्येव, ईकाररूपङीबन्तत्वेन सुलोपप्रवृत्तेः। अपृक्तं किं बिभर्तीति। इदं च पत्र्यदाहरणं चित्यं, विशिष्टस्याऽहल्वात्। "सुतिसीनां ह"लिति क्लिष्टं व्याख्यायाऽतिप्रसङ्गापादमस्यानुचितत्वात्। यत्तु व्याचख्युः--"सुरां" सुनोतीति सुरासुत्, तमाचष्टे सुरासयति, ततः किप्--सुराः। सुरासौ।सुरासः। इह सुनोतेरवयवस्य सस्य लोपं व्यवर्तयितुमप्टक्तग्रहण"मिति। तदपि चिन्त्यम्। परस्परसाहचर्येण सुतुसीनां विभक्तिनामेव ग्रहणात्। अन्यथा सिचो लोपापत्तेरुक्तत्वात्। प्रत्ययाऽप्रत्याययोः प्रत्ययस्यैव ग्रहणाच्च। यत्तु "तित्स्वरित"मिति सूत्रे कैयटेनोक्तं-"न क्वचिदियं परिभाषा भाष्यवातिककाराभ्यामाश्रिते"-ति, तद्रभसात्।"अङ्गस्ये"ति सूत्रे भाष्यादौ तस्याः पठितत्वात्स स्वयमपि तत्र व्याख्यातत्वाच्च।

संयोगान्तलोपस्यासिद्धत्वादिति।ननु संयोगान्तलोपो नाऽसिद्धः, "न ङिसंबुज्यो"रिति सूत्रे संबुद्धिग्रहणाज्ज्ञापकात्। न चैवं "गोमा"नित्यादावपि नलोपापत्तिः, ज्ञापकस्य विशेषविषयत्वात्। यत्र हि नकारविभक्त्योरानन्तर्यं तत्रैव सिद्धत्वं, व्याख्यानात्। यत्त्वाहुः-"हे ब्राह्नआन्निति नपुंसकार्थत्वान्नैतज्ज्ञापक"मिति, तन्न, लुका लुप्ते प्रत्ययलक्षणाऽभावात्। "संबुद्धौ वा नपुंसकाना" मित्यस्यावश्यकत्वाच्च। समबुद्धिग्रहणस्य नपुंसकविषयत्वाऽसंभवेनोक्तज्ञापकस्य सुस्थत्वात्। तस्मान्नलोपो न प्रयोजनमिति चेदिह तर्हि "अभिनोऽत्रे"त्यत्र रोरुत्वं न स्यात्। सिपि "दश्चे"ति रुत्वे विभक्तिसकारस्य संयोगान्तलोपे तस्याऽसिद्धात्वात्। तथा "अबिभर्भवान्"जागर्भवा"नित्यत्र तिलोपो न स्यात्, "रात्सस्ये"ति नियमात्।तदुक्तम्-"संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति। रात्तु कतैर्नैव लोपः स्याद्धलस्तस्माद्विधीयते"इतिष नलोपादिरित्यादिशब्देनोत्त्वं सङ्गृह्नते। अत्रेदमवधेयम्-ङ्याब्ग्रहणं सोर#एव विशेषणं न तु तिस्योः, व्याख्यानात्, तेन मालेवाचरत्-अमलात्। गङ्गेवाचरत्-अगङ्गादित्यत्र नातिप्रसङ्गः। तथा च "हलन्तात्परं सुतिसीत्येतदपृक्तं हल्लुप्यते, दीर्घौ यौ ङ्यपौ तदन्तात्परं "सु" इत्येतदपृक्तं हल्लुप्यते"इति वाक्यार्थोऽत्र पर्यवसन्नः। यत्तु व्याचख्युः-ङ्याब्भ्यां तिस्योरसंभव एवेति, तत्र "ङ्यन्तादसंभव"इति सत्यम्। आबन्तात्तु आचारक्विबन्ताल्लङस्तिप्सिपौ स्त एव। "अगङ्गात्"गङ्गा इति यथा। न च शपा व्यवधानम्, एकादेशस्य पूर्वान्तत्वेन ग्रहणात्। न च स्थानिवद्भावः, अपूर्वविधित्वात्। अन्ये त्वाहुः--ङ्याब्ग्रहणमसंभवादेव तिस्योर्विशेषणं न भवतीति यदुक्तं तत्सम्यगेव। नच अगङ्गादगङ्गा इत्यत्र संभवोऽस्तीत्युक्तमिति वाच्यं, तत्र स्थानिभूतस्य शपः पूर्वस्मान्निमित्तभूतादापः परयोस्तिस्योर्लोपे कर्तब्ये स्थानिवद्भावेन शपा व्यवधानात्तिस्योलौपस्याऽप्रसक्तेः। न च फलाऽभावात्पञ्चमीसमासपक्षे न स्वीक्रियत इत्यपि वाच्यं, तत्प्रयोजनस्य प्रागेव प्रदर्शितत्वादिति। सखेति। समानं ख्यायते जनैरिति "सखा"। "ङिच्च"

"यलोप" इति चानुवर्तमाने "समाने ख्यः स चोदात्तः"इति ख्या इत्यस्मादिण्, समानशब्दस्योदात्तः, सभावश्च। न चेह सुविभक्तिसंनियोगेन सखिशब्दस्यानङि कृते संनिपातकपरिभाषाया "हल्ङ्या"बिति सुलोपो न भवतीति शङ्क्यम्, "स्वतन्त्रः कत्र्ते"त्यादिनिर्देशेनाऽनङो नकारमाश्रित्य सुलोपे कर्तव्ये तत्परिभाषाया अप्रवृत्तेः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एङ्ह्रस्वात् ५।१ सम्बुद्धेः ६।१ हल् १।१ ६६ लोपः १।१ ६४

समासः॥

एङ् च ह्रस्वश्च एङ्ह्रस्वं, तस्मात् ॰ समाहारो द्वन्द्वः।

अर्थः॥

एङन्तात् ह्रस्वन्तात् च प्रातिपदिकात् उत्तरस्य हल् लुप्यते, सः चेत् सम्बुद्धेः भवति।

उदाहरणम्॥

एङन्तात् -- हे अग्ने, हे वायो। ह्रस्वन्तात् -- हे देवदत्त, हे नदि, हे वधु, हे कुण्ड।
काशिका-वृत्तिः
एङ् ह्रस्वात् सम्बुद्धेः ६।१।६९

लोपः इति वर्तते, हलिति च। अपृक्तम् इति न अधिक्रियते, तथा च पूर्वसूत्रे पुनरपृक्तग्रहणं कृतम्। एङन्तात् प्रातिपदिकात् ह्रस्वन्ताच् च परो हल् लुप्यते स चेत् सम्बुद्धेर् भवति। एङन्तात् हे अग्ने। हे वायो। ह्रस्वान्तात् हे देवदत्त। हे नदि। हे वधु। हे कुण्ड। कुण्डशब्दाततो ऽम् ७।१।२४ इति अम्। अमि पूर्वः ६।१।१०३ इति पूर्वत्वे क्र्ते लह्मात्रस्य मकारस्य लोपः। हे कतरतित्यत्र डिदयम् अद्डादेशः, तत्र टिलोपे सति ह्रस्वाभावान् न अस्ति सम्बुद्धिलोपः। एङ्ग्रहणम् क्रियते सम्बुद्धिगुणबलीयस्त्वात्।
लघु-सिद्धान्त-कौमुदी
एङ्ह्रस्वात्सम्बुद्धेः १३४, ६।१।६७

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः॥
न्यासः
एङ्हस्वात्सम्बुद्धेः। , ६।१।६७

"हलिति च" इति। वत्र्तत इत्यपेक्षते। यदि हलिति नानुवत्र्तेत, तदा हे कुण्ड+सु इति स्थिते लोपात्? परत्वादम्भावे कृते "आदेः परस्य" १।१।५३ इत्यकारलोपे "सुपि च" ७।३।१०२ इति दीर्घत्वे च हे कुण्डमित्यनिष्टं रूपं स्यादित्यभिप्रायः। "अपृक्तमिति नाधिक्रियते" इति। यदि ह्यपृक्तमिहानुवर्तेत, तर्हि हे कुण्डेत्यत्र लोपो न स्यात्(); अपृक्तसंज्ञाया अभावादिति भावः। कथं पुनज्र्ञायते--अपुक्त इह नानुवत्र्तते? इत्याह--"तथा च" इत्यादि। तथा चेति हितौ। यस्मात् पूर्वसूत्रेऽपृक्तग्रहणं कृतमतोऽवसीयते--नात्र प्रकरणेऽपृक्तग्रहणस्यानुवृत्तिरस्तौति; अन्यथा हि "वेरपृक्तस्य" ६।१।६५ इत्यत

एवापृक्तग्रहणमनुवर्त्तिष्यत इति पुनरपृक्तग्रहणं पूर्वसूत्रे न क्रियेतेति। "स चेत्? सम्बुद्धेर्भवति" इति। यदि सम्बुद्धेः सम्बद्धो भवतीत्यर्थः। एतेन सम्बुद्धेरित्यस्यावयवषष्ठ()न्ततां दर्शयति। "हे अग्ने, हे वायो" इति। "ह्रस्वस्य गुणः" ७।३।१०८। "हे नदि, हे वधु" इति। "अम्बार्थनद्योह्र्यस्वः" ७।३।१०७ इति ह्रस्वत्वम्()। "हल्मात्रस्य मकारस्य लोपः" इति। हलित्यनुवृत्तेः। हे कतरदित्यत्रैकादेशे कृते ह्रस्वात्? सम्बुद्धेर्हल्? भवतीति तस्य लोपः कस्मान्न भवति? इत्याह--"हे कतरत्()" इत्यादि। "अद्ड्डतरादिभ्यः" (७।१।२५) इत्यत्र द्विडकारनिर्देशात्? डिच्छब्द आदेशो भवतीति डित्वाट्? टिलोपे ह्रसवो नास्तीति न भवति लोपः। अथैङ्ग्रहणं किमर्थम्(), यावता हे अग्ने इत्यादावपि प्रागेव सम्बुद्()धिगुणाद्? ह्रस्वादित्येवं लोपे न भवितव्यम्()? इत्यत आह--"एङ्ग्रहणम्()" इत्यादि। नित्यत्वात्? परत्वाच्च सम्बुद्धिगुमो बलीयानिति तनैव तावत्? भवितव्यम्(), तत्र कृते ह्रस्वात्? परः सम्बुद्धेर्हल्? न सम्भवतीति लोपो न प्राप्नोति, अत एङ्ग्रहणं क्रियते। ननु च विहितविशेषणं विज्ञास्यते--ह्रस्वाद्विहितायाः सम्बुद्धेरिति? नैतदस्ति; एका हीयं पञ्चमी, तत्र यदि ह्रस्वाद्विहिति विशेषणं विज्ञायते तदैङन्तादपि विज्ञायेत। तथा च --हे गौरित्यत्रापि स्यात्()। तस्मादेङ्ग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

एङ्?ह्रस्वात्संबुद्धेः १९२, ६।१।६७

एङ्ह्रस्वात्। "एङ्ह्रस्वा"दित्यङ्गविशेषणं, तदन्तविधिः। सुतिस्यपृक्तं हलित्यतो हलिति प्रथमान्तमनुवर्तते, तच्चाङ्गादित्यत्रान्वेति - "अङ्गात् परं ह"सिति। "लोपो व्यो"रित्यतो "लोप" इत्यनुवर्तते। तच्च हलित्यनेन सामानाधिकरण्येनान्वेति। लुप्यते इति लोपः। कर्मणि घञ्। "संबुद्धे"रित्यवयवषष्ठी-हलित्यत्रान्वेति। ततस्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परं यत् संबुद्ध्यवयवभूतं "तल्लुप्यते इत्यर्थः फलति। तदाह--एङन्तादित्यादिना। ननु एङ्ह्रस्वादित्यस्याङ्गधिकारस्थत्वाभावात् कथमङ्गस्य विशेष्यत्वलाभः। तस्य वा किं प्रयोजनम्। एङो ह्रस्वाच्च परं संबुद्ध्यवयवभूतं हल्लुप्यत इत्येवास्तु। तत्राह-सम्बुद्ध्यक्षिप्तस्येत्यादि। संबुद्धेः प्रत्ययत्वात्तत्प्रकृतेरङ्गत्वमर्थाल्लब्धम्। तस्य च एङा ह्रस्वेन च विशेषितत्वात्तदन्तविधौ एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परं हल्लुप्यत इत्यर्थलाभादिह लोपो नेत्यर्थः। इहेत्यस्य विशेष्यमाह-हे कतरत्कुलेतीति। कतरशब्दस्य नपुंसकत्वस्फोरणाय कुलशब्दः। कतरशब्दान्नपुंसकलिङ्गात्संबुद्धिः सुः। "अद्()डादेशः। डकार इत्। डित्वसामथ्र्यादभत्वेऽपि टेरिति रेफादकारस्य लोपः "वाऽवसान#ए" इति चर्त्वे कतरदिति रूपम्। यदि एङ्ह्रस्वादित्यत्राङ्गस्य विशेष्यत्वं न स्यात्, तदा कतरदित्यत्र तकारस्य हलो ह्रस्वादकारात् परत्वात्संबुद्ध्यवयवत्वाच्च लोपः प्रसज्येत। अङ्गस्य विशेष्यत्वे तु न दोषः। अत्र हि टिलोपानन्तरं कतरिति रेफान्तमङ्गम्। तत्तु न ह्रस्वान्तम्। यत्तु तन्नाङ्गम्। रेफादकारस्य सुस्थानिकाद्डादेशावयवत्वेन प्रत्ययावयवतया प्रकृतिभागानन्तर्भावात्। नन्विह हल्ग्रहणानुवृत्तिव्र्यर्था, एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परस्य संबुद्धेर्लोपः स्यादित्येव व्याख्यायाताम्। अस्तु वा हलनुवृत्तिः , तथापि "एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परा या संबुद्धिस्तदवयवो हल्लुप्यते" इति कुतो न व्याख्यायत इति चेत्, एवं सति हे ज्ञानाति न सिध्येत्। तदिदमजन्तनपुंसकलिङ्गाधिकारे ज्ञानशब्दाप्रक्रियावासरे मूल एव स्पष्टीभविष्यति। हे हरे हे विष्णो इति। हरिशब्दाद्विष्णुशब्दाच्च संबुद्धिः सुः। "ह्रस्वस्य गुण" इति गुणः। हे हरेस्, हे विष्णोसिति स्थिते, ह्रस्वात्परत्वाऽभावात्सुलोपो न स्यादत एङ्ग्रहणमित्यर्थः। ननु गुणात्पूर्वं हे हरि स्, हे विष्णु सित्यस्यामेव दशायां ह्रस्वात्परत्वादेव सुलोपसंभवादेङ्ग्रग्रहणं व्यर्थमित्यत आह--अत्रेति। संबुद्धिलोपापेक्षयाऽयं गुणः परः, नित्यश्च, अकृतेऽपि संबुद्धिलोपे तत्प्रवृत्तेः, कृते।ञपि संबुद्धिलोपे प्रत्ययलक्षणमाश्रित्य तत्प्रवृत्तेः, कृतेऽपि संबुद्धिलोपे प्रत्ययलक्षणमाश्रित्य तत्प्रवृत्ते, अतः संबुद्धिलोपात्प्रागेव ह्रस्वस्य गुणे कृते सति ह्रस्वात्परत्वा।ञभावात्सोर्लोपो न स्यात्। अत एङ्ग्रहणमित्यर्थः।

अथ द्वितीया विभक्तिः। राम अमिति स्थिते, "न विभक्तौ तुस्मा" इति मकारस्य नेत्त्वम्।

तत्त्व-बोधिनी

एङ्ह्रस्वात्संबुद्धेः १६०, ६।१।६७

संबुद्ध्याक्षिप्तस्येति। तदन्तस्यैव संज्ञाभ्युपगमे तु सम्बुद्ध्याऽङ्गमाक्षेप्तुं न शक्यते इति बोध्यम्। ह्रस्वात्परत्वं नास्तीति। तथा च सूत्रे एङ्ग्रहणमावश्यकमिति भावः। किं च "इमां किमाचामयसे न चक्षुषी"इति श्रीहर्षप्रयोगे "से" इति पृथक्पदं, "सलक्ष्मीके हे दमयन्ती"त्यर्थ इति "निगरणचलनार्थेभ्यश्चे"ति सूत्रे मनोरमायां व्युत्पादितम्। ततश्च तत्रापि संबुद्धिलोपार्थमेङ्ग्रहणमावश्यकमेव। स्यादेतत्। एङ्ग्रहणस्य "से" इत्यत्र सावकाशतया "हे हरे" इत्यादौ संबुद्धिलोपो न स्यात्, संनिपातपरिभाषाविरोधात्। तथा ह्रस्वग्रहणस्यापि "हे रामे"त्यत्र सावकाशत्वात् "हे गौरी"-त्यादौ परत्वाद्धल्ङ्यादिलोपं बाधित्वा "अम्बार्थनाद्यो"रिति ह्रस्वे कृते संबुद्धिलोपो न स्यात्। लक्ष्मीशब्दे तु हल्ङ्यादिलोपस्याप्यभावाद्धे लक्ष्मीत्यत्र सुतरां संबुद्धिलोपो न स्यात्। सत्यम्, "गुणात्संबुद्धे"रिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषां बाधित्वाऽपि संबुद्धिलोपः प्रवर्तते इति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

शेः छन्दसि बहुलम् ६।१।७०

शि इत्येतस्य बहुलं छन्दसि विषये लोपो भवति। या क्षेत्रा। या वना। यानि क्षेत्राणि। यानि वनानि।

न्यासः

शेश्छन्दसि बहुलम्?। , ६।१।६८

"जस्()शसोः शिः" ७।१।२० इति यः शिरादेशस्तस्यायं लोपो विधीयते। "या क्षेत्रा, या वना" इति। शेर्लोपे कृते प्रत्यलक्षणेन "नपुंसकस्य झलचः" ७।१।७२ इति नुम्(), "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इति दीर्घः, "नलोपः प्रातिपदिकान्तस्य ८।२।७ इति नलोपः। वेति कत्त्वव्ये बहुलग्रहणं सर्वविधिव्यभिचारार्थम्()। "तेन सर्वे विधयश्छन्दसि विक्ल्प्यन्ते" (पु।प।वृ।५६), इत्युपपन्नं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वस्य पिति कृति तुक् ६।१।७१

पिति कृति परतो ह्रस्वान्तस्य धातोः तुगागमो भवति। अग्निचित्। सोमसुत्। प्रकृत्य। प्रहृत्य। उपस्तुत्य। ह्रस्वस्य इति किम्? आलूय। ग्रामणीः। पिति इति किम्? कृतम्। हृतम्। कृति इति किम्? पटुतरः। पटुतमः। ग्रामणि ब्राह्मणकुलम् इत्यत्र ह्रस्वस्य बहिरङ्गस्य असिद्धत्वात् तुग् न भवति।

लघु-सिद्धान्त-कौमुदी

ह्रस्वस्य पिति कृति तुक् ७८०, ६।१।६९

इत्यः। स्तुत्यः। शासु अनुशिष्टौ॥

न्यासः

ह्रस्वस्य पिति कृति तुक्?। , ६।१।६९

कृतात्र प्रत्ययेन धातुरुपस्थाप्यते, ह्रस्वेन च स एव विशेष्यते, च तदन्तविधिर्भवतीत्यतो ह्रस्वान्तो धातुरागमी विज्ञायत इत्याह--"ह्रस्वान्तस्य धातोः" इत्यादि। "अग्निचित्()" इति। "अग्नौ चेः" ३।२।९१ इति क्विप्()। "सोमसुत्()" इति। "सोमे सुञः" ३।२।९० इत्युभयत्रोपपदसमासः। "प्रकृत्य"इत्यादौ प्रादिसमासः। "समासेऽनञ्पूर्वे क्त्वो ल्यप्()" ७।१।३७ इति ल्यप्()। अथ ग्रामं नयतीति--ग्रामणि ब्राआहमणकुलमित्यत्र नपुंसकह्रस्वत्वे कृते ह्रस्वाश्रयस्तुक्? कस्मान्न भवति? इत्याह--"ग्रामणि ब्राआह्मणकुलम्()" इत्यादि। ह्रस्वत्वं हि नपुंसकार्थवृत्तिप्रातिपदिकमपेक्षत इति बहिरङ्गम्(), अन्तरङ्गस्तु तुक्(); वर्णमात्रापेक्षताव्त्()। "आसिद्धं बहिरङ्गमन्तरङ्गे (व्या।प।४२) इति तुग्नात्र भवति॥

बाल-मनोरमा

ह्रस्वस्य पिति कृति तुक् ६७९, ६।१।६९

ह्रस्वस्य। स्पष्टमिति न व्याख्याताम्। इत्य इति। इणः क्यपि तुक्। उपेयमित्यत्र तु "ईङो दैवादिकाद्यत्। वृञो ग्रहणमिति। वार्तिकमिदम्। न वृङ इति। "वृङ् संभक्तौ" इति ङितः क्रैयादिकस्य न ग्रहणमित्यर्थः। वार्या ऋत्विज इति। अवश्यं भजनीया इत्यर्थः। अत्र "वृङ् संभक्तौ" इत्यस्माण्ण्यदित्यर्थः। "अवद्यपण्यवर्या"दिति निपातनसिद्धो यत्तु न , अत्र निरोध्स्य नियमस्य विवक्षितत्वात्। ननु "वदः सुपी"त्यतोऽनुवृत्त्यैव सिद्धे क्यब्ग्रहणमिह व्यर्थम्। नच चकारानुकृष्टयतोऽप्यनुवृत्तिनिवृत्तये क्यब्ग्रहणमिति वाच्यं, चकारस्य अस्वरितत्वेन "भुवो भावे" इत्याद्युत्तरसूत्रेष्वनुवृत्त्यभावादित्यत आह-- परस्यापीति। "ओरावश्यके" इति विहितस्येत्यर्थः। वेति काशिकेति। वा क्यप्। तदभावे हलन्तत्वाण्ण्यत्। भाष्ये त्वेतन्न दृश्यते इति भावः। शस्यं शंस्यमिति। क्यप्पक्षे "अनिदिता"मिति नलोपः। दुह्यमिति। क्यप्पक्षे कित्त्वान्न गुणः। अत्र "शंसिदुहिगुहिभ्यो वे"त्यस्य भाष्येऽदर्शनेऽपि शंसेण्र्यत्क्यपौ प्रामाणिकावित्याह-- प्रशस्यस्येति। "प्रशस्यस्य श्रः" इति निर्देशबलादच्छंसेः क्यप्सिद्धः। "ईडवन्दवृशंसदुहा ण्यतः" इत्याद्युदात्तत्वविधौ शंसेण्र्यदन्तत्वानुवादबलाण्ण्यत्सिद्धः। ततश्च शस्यं शंस्यमिति रूपद्वयं सिद्धम्। इतरयोस्तु दुहिगुह्योः क्यब्विकल्पे मूलं नास्तीत्यर्थः। उपसङ्ख्यानमिति। "क्यप" इति शेषः। आज्यमितिन चाङ्()पूर्वकत्वे पदपाठे अवग्रहः स्यादिति वाच्यम्, इष्टापत्तेः। पदकाराणामवग्रहाऽभावस्त्वप्रामाणिक एव, पदपाठस्याऽऽधुनिकत्वादिति भाष्ये स्पष्टम्। एवं च "अस्मद्रियगित्यस्मद्रिय"गित्यवग्रहोऽप्रामाणिक एव। अस्मद्रि - अक् इत्येवाऽवग्रहो युक्तः, अस्मच्छब्दस्य टेरद्र()आदेशविधानादित्याद्यूह्रम्।

तत्त्व-बोधिनी

ह्रस्वस्य पिति कृति तुक् ५६३, ६।१।६९

कथं तर्हि उपेयमिति?। ईङ्गताविति दैवादिकाद्यत्।

* वृ इति वृञो ग्रहणं। न वृङ इति। "ईडवन्दे"ति ज्ञापकात्। तत्र हि ईडवन्दिभ्यां साहचर्यादात्मनेपदिनो वृङ एव ग्रहणमिति भावः। परस्यापीति। "ओरावश्यके" इति प्राप्तस्य ण्यस्यावकाशोऽवश्यलाव्यमिति।आवश्यकाऽविवक्षायां स्तुत्य इत्यादौ क्यपोऽवकाशः। अवश्यस्तुत्य इत्यादावुभयप्राप्तौ "विप्रतिषेधे पर"मिति ण्यत्स्यात्, तन्माभूदिति पुनः क्यबुक्तिरिति भावः।

* आङ्पूर्वादञ्जेः संज्ञायामुपसङ्ख्यानम्। आङ्पूर्वाञ्जेरिति। ननु ण्यत्येव नलोपः कस्मान्नोक्कत इति चेन्न, कुत्वप्रसह्गातित्स्वप्रसङ्गाच्च। तस्मात्क्यबन्त एवाऽऽज्यशब्दः। नन्वेवमवग्रहः प्राप्नोति। नचेष्टापत्तिः। "आज्यं

किमासी"दित्यादौ" पदकारैस्तदकरणादितिचेत्। अत्र भाष्यम्-- न लक्षणेन पदकारा अनुवर्त्याः पदकारैस्तु लक्षममनुवर्त्यमिति। सत्यपि अवान्तरपदत्वे "ऋत्विजं", "पूर्वेभिः" इत्यादाविव संप्रदायानुरोधेन क्वचिदवग्रहो न क्रियते इत्यादि तदाशयः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ संहितायाम् ७।१ १५२

अर्थः॥

अधिकारः अयम् {अनुदात्तं पदमेकवर्जम्} इति यावत्, प्रागेस्तस्मात् सूत्रात् यत् वक्ष्यति तत् संहितायाम् इत्येवं वेदितव्यम्।

उदाहरणम्॥

वक्ष्यति {इको यणचि} - दध्यत्र, मध्वत्र
काशिका-वृत्तिः
संहितायाम् ६।१।७२

अधिकारो ऽयम् अनुदात्तं पदम् एकवर्जम् ६।१।१५२ इति यावत्। प्रागेतस्मत् सूत्रादित उत्तरं यद् वक्ष्यामः संहितायाम् इत्येवं तद् वेदितव्यम्। वक्ष्यति इको यणचि ६।१।७४, दध्यत्र। मध्वत्र। संहितायाम् इति किम्? दधि अत्र। मधु अत्र।
न्यासः
संहितायाम्?। , ६।१।७०

"संहितायाम्()" इति विषयसप्तमीयम्()। तेन यदि कार्यिनिमित्तयोः संहिता विषयभूता भवति, तह्र्येवं वक्ष्यमाणं कार्यं भवति; नान्यर्थेति वेदितव्यम्()।
बाल-मनोरमा
संहितायाम् १४४, ६।१।७०

संहितायाम्। इत्यधिकृत्येति। "छे चेत्यादि विधीयते" इति शेषः। यद्यप्येतदिको यणचीत्यत्रैव वक्तव्यन्तथापि सूत्रक्रमानुरोधादिहोक्तम्।

तत्त्व-बोधिनी
संहितायाम् ११७, ६।१।७०

संहितायाम्। इत्यधिकृत्येति। एतच्च "इकोयणची"त्यत्रैव वक्तव्यमपि सूत्रक्रमानुरोधेनात्रोक्तम्।

---

सूत्रम्
काशिका-वृत्तिः

छे च ६।१।७३

ह्रस्वस्य तुकिति वर्तते। छकारे परतः संहितायां विषये ह्रस्वस्य तुगागमो भवति। इच्छति। यच्छति। ह्रस्व एव अत्र आगमी, न तु तदन्तः। तेन चिच्छदतुः, चिच्छिदुः इत्यत्र तुकभ्यासस्य ग्रहणेन न गृह्यते इति हलदिःशेषेण न निवर्त्यते, नावयवावयवः समुदायावयवो भवति इति।

लघु-सिद्धान्त-कौमुदी

छे च १०१, ६।१।७१

ह्रस्वस्य छे तुक्। शिवच्छाया॥

न्यासः

छे च। , ६।१।७१

"छे" इति यद्यप्यकारवतश्छकारादेषा सप्तमी तथापि च्छकार एव केवलस्तुको निमित्तम्(), अकारस्तूच्चारणार्थः। एतच्च "इजादेश्च गुरुमतोऽनृच्छः" ३।१।३६ इत्याम्प्रतिषेधादवसीयते। यदि ह्रकारसहितश्छकारस्तुको निमित्तं स्यात्(), तदा ऋच्छेस्तुगभावादसति गुरुमत्वं आमः प्रसङ्गो नास्तीति प्रतिषेधं न कुर्यात्()। "इच्छति" इति। "इषुगमियमां छः" (७।३।७७) तुक्? चुत्वम्()। पूर्व()स्मस्तुग्विधौ ह्यस्वान्त आगमी, अतः स एवात्रागमीति कस्य चिद्? भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"ह्यस्व एव" इत्यादि। एवं मन्यते--ह्यस्वानुकर्षणार्थश्चकारोऽत्र क्रियते--ह्यसव एवागमी यथा स्यात्(), तदन्तो मा भूदित्येवमर्थम्()"; अन्यथा स्वरितत्वादनन्तरत्त्वाच्च पूर्वसूत्रे य आगमी, स एवेहापि विज्ञास्यत इत्यनर्थकश्चकारः स्यात्(), ह्यस्व एवागमिनि सति किमिष्टं सिध्यति, यतस्तदर्तोऽयं यत्नः क्रियते? इत्याह--"तेन" इत्यादि। यदि ह्यस्वान्तस्य तुक्? स्यात्? तदा चिच्छिदतुरित्यादौ तस्याभ्यासग्रहणेन ग्रहणाद्धलादिशेषेण निवृत्तिः स्यात्()। ह्यस्वे त्वागमिनि नायमभ्यासस्य हलिति न भवत्येव दोषः। कथं पुनह्र्यस्व आगमिनि तुगब्यासग्रहणेन गृह्नते? इत्याह--"नावयवावयवः" इत्यादि। इतिकरणो हेतौ। यस्मादवयवस्य योऽवयवः स समुदायस्यावयवो न भवति। तस्मात्? ह्यस्व एवागमिनि तुकोऽभ्यासग्रहणेन न ग्रहणं भवति। नावयवावयवः समुदायस्यावयवो भवतीत्यत्र चैतत्? सूत्रविहितस्तुगित्याभिप्रायो वेदितव्यः। यदि ह्रविशेषेणावयवावयवः समुदायावयवो न स्यात्(), एवं सति "शेरते" इत्यत्र रुडागमः सावैधातुकस्याव्यवस्य झादेशस्यातोऽवय इति सोऽपि समुदायस्य सार्वधातुकस्यावयवो न स्यात्()। ततः "शीङः सार्वधातुके गुणः" ७।४।२१ इति गुणो न स्यात्(); रुटा सार्वधातुकस्य व्यवहितत्वात्? स ह्रवयव उक्तस्तमेव व्यवदध्यात्(), स समुदायं तु न व्यवदधात्येव। तस्मात्? पूर्वोक्त एवाभिप्रायो वृत्तिकारस्य वेदितव्यः। कस्मात्? पुनरेतत्? सत्रविहितोऽवयवावयवः समुदायस्यावयवो न भवति? ह्यस्वानुकर्षणार्थचकारकरण सामथ्र्यात्()। स हि चकारो ह्यस्वानुकर्षणार्थ एवमर्थः क्रियते--ह्यस्वमात्र आगमिनि तुकोऽभ्यासग्रहणेनाग्रहणाद्धलादिशेषेण निवृत्तिर्मा भूदिति। यदि चैतत्सूत्रविहितोऽप्यवयवायवः समुदायावयवः स्यात्(), तदा ह्यस्वेऽप्यागमिनि तुकस्तु तदवयवयस्याप्यभ्यासग्रहणेन ग्रहणाद्धलादिशेषेण निवृत्त्या भवितव्यमिति चकारो ह्यस्वानुकर्षणार्थो निष्फलः स्यात्()। तस्मादयमेव तुगवयवावयवः समुदायावयवो न भवति, अन्यस्तु भवत्येव। युक्तं चैतत्()। तथा हि बाहोर्योऽवयवो हस्तः स देवदत्तस्याप्यवयवो भवत्येव, अन्यथा हस्तावन्? देवदत्त इति प्रयोगो न स्यात्()।

तत्त्व-बोधिनी

छे च ११८, ६।१।७१

छे च। छकारोपरि अकार उच्चारणार्थः, "विदिभिदिच्छिदे"रिति निर्देसात्। तेन "विच्छिन्न"मित्यादि सिद्धम्। ह्यस्वस्येति। एतच्च "ह्यस्वस्य पिति कृती"त्यतोऽनुवर्तते, तुक् च।

सूत्रम्

काशिका-वृत्तिः

आङ्माङोश् च ६।१।७४

तुकिति अनुवर्तते, छे इति च। आङो ङित ईषदादिषु चतुर्ष्वर्थेषु वर्तमानस्य, माङश्च प्रतिषेधवचनस्य छकारे परतस्तुगागमो भवति। पदान्ताद् वा ६।१।७३ इति विकल्पे प्राप्ते नित्यं तुगागमो भवति। ईषदर्थे ईषच्छाया आच्छाया। क्रियायोगे आच्छादयति। मर्यादाभिविध्योः आ च्छायायाः आच्चायम्। माङः खल्वपि मा च्छैत्सीत्। मा च्छिदत्। ङिद्विशिष्टग्रहणं किम्? आछाया, आच्छाया। प्रमाछन्दः, प्रमाच्छन्दः।

लघु-सिद्धान्त-कौमुदी

श्रुवः शृ च ५०१, ६।१।७२

श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च। शृणोति॥

न्यासः

आङ्माङोश्च।, ६।१।७२

अत्राकारो ङिदुपात्तः स चेषदादावर्ते वत्र्तत इत्याह--"आङ्()" ["अङः" काशिका, पदमञ्जरी च] इत्यादि। माशब्दोऽपि ङिदुपात्तः, सोऽपि निषेधे वर्तत इत्याह--"माङश्च प्रतिषेधवचनस्य" इति। "आच्छादयति" इत्यादि। "छद अपवारणे" (धा।प।१९३५) चौरादिकः। अत्र "छादनक्रियाङा विशिष्यत इति स क्रियायोगे वत्र्तते। "आच्छायायाः" इति। मर्यादायामङ्()। छायाम्()=मर्यादां परिवृत्येत्यर्थः। "आङ् मर्यादावचने १।४।८८ इत्याङश्च कर्मप्रवचनीयसंज्ञकस्य योगे "पञ्चम्यपाङ्परिभिः" २।३।१० इति पञ्चमी। "आच्छायम्()" इति। छायामभिव्याप्येत्यर्थः। "आङ्मर्यादाभिविव्योः" २।१।१२ इति पञ्चम्यन्तेनाव्ययीभावः, "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" २।४।८३ इति विभक्तेर्लुगम्भावश्च। "मा च्छिदत्? इति। इरित्वाच्चलेरङ्()। "आछाया, आच्छाया" इति। अत्राकारः स्मरणए वत्र्तते, तत्र चास्य ङित्त्वं नास्ति; "वाक्यस्मरणयोरङित्()" इति वचनात्()। तेनात्र "पदान्ताद्वा" ६।१।७३ इति विकल्पो भवति। "प्रमाछन्दः" इति। "माङ्? माने" (धा।पा।११४२) प्रपूर्वः "आतश्चोपसर्गे" ३।३।१०६ इत्यङ्(), स्त्रियाम्? "अजाद्यतष्टाप्()" ४।१।४। ननु च लाक्षणिकत्वादेवात्र न भविष्यति? नैतदस्ति; "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति वचनात्()॥

बाल-मनोरमा

छे च १४५, ६।१।७२

छे च। "ह्रस्वस्य पिती"त्यतो "ह्रस्वस्ये"ति "तु"गिति चानुवर्तते। "संहिताया"मित्यधिकृतं, तदाह--ह्रस्वस्येति। तुकः ककार इत्। उकार उच्चारणार्थः। कित्त्वाद्ध्रस्वस्यान्तावयवः। स्वस्य-छाये"ति षष्ठीसमासे सुब्लुकि वकारादकारस्य तुकि स्वच्छायेति स्थिते वस्तुगत्या प्रक्रियाक्रमं दर्शयति--चुत्वस्येत्यादिना। ननु स्वच्-छायेति स्थिते तुको ह्रस्वावयवस्य पदान्तात्वात्तत्स्थानिकचकारस्य चोः कुरिति कुत्वं स्यादित्याशङ्क्याह--चुत्वस्येति।

बाल-मनोरमा

आङ्भाङोश्च १४६, ६।१।७२

आङ्भाङोश्च। छे तुगित्यनुवर्तते। तदाह-एतयोरिति। आङ्भाङोरित्यर्थः। ननु दीर्घादित्येव सिद्धे किमर्थमिदमित्यत आह-विकल्पापवाद इति। आच्छादयति। माच्छिदिदिति। तुकि पूर्ववत्प्रक्रिया। दीर्घात्। छे तुगित्यनुवर्तते।

सूत्रम्

काशिका-वृत्तिः

दीर्घात् ६।१।७५

छे तुकिति वर्तते। दीर्घात् परो यः छकारः तस्मिन् पूर्वस्य तस्य एव दीर्घस्य तुगागमो भवति। ह्रीच्छति। म्लेच्छति। अपचाच्छायते। विचाच्छायते।

काशिका-वृत्तिः

पदान्ताद् वा ६।१।७६

दीर्घात् छे तुकिति वर्तते। पदान्ताद् दीर्घात् परो यः छकारः तस्मिन् पूर्वस्य तस्य एव दीर्घस्य पूर्वेण नित्यं प्राप्तो वा तुगागमो भवति। कुटीच्छाया, कुटीछाया। कुवलीच्छाया, कुवलीछाया। विश्वजनादीनां छदसि वा तुगागमो भवति इति वक्तव्यम्। विश्वजनच्छत्रम्, विश्वजनछत्रम्। नच्छायां करवो ऽपरम्। न छायां करवो ऽपरम्।

न्यासः

दीर्घात्?। , ६।१।७३

"उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्()" (शाकटायन।प।९७) दीर्घादिति पञ्चम्याश्छे इत्यस्याः सप्तम्याः षष्ठ()आं प्रकल्पितायाम्? "तस्मादित्युत्तरस्य" (१।१।६७) इति च्छकारस्यैव तुक्? प्राप्नोतीति कस्याचिद्भ्रान्तिः स्यत्त्, अतस्तां निराकर्त्तुमाह--"दीर्गात्? परो यश्छकारः तस्मिन्? परतः पूर्वस्य" इत्यादि। एवं मन्यते--"तस्मादित्यत्तरस्य" १।१।६६ इत्यत्र तस्मादिति योगविभागः कत्र्तव्यः, "पूर्वस्य" इति पूर्वसूत्रादनुवत्र्तते, तेन दीर्घादित्यादौ सत्यपि पञ्चमीनिर्देशे पूर्वस्यैव कार्यं भवति, नोत्तरस्य। न चातिप्रसङ्गः योगविभागादिष्टसिद्धेरिति। "ह्यीच्छति" इति। "ह्यीच्छ लज्जायाम्()" (धा।पा।२१०)। "म्लेच्छति" इति। "म्लेच्छ अव्यक्तायां वाचि" (धा।पा।१६६२)। "अपचाच्छायते" इति। "छो छेदने" (धा।पा।११४६), "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्वम्(), यङ्? "दीर्घोऽकितः" ७।४।८३ इत्याभ्यासस्य दीर्घः॥

न्यासः

पदान्ताद्वा। , ६।१।७३

"कुटीछाया" इति। षष्ठीसमासः, असमासो वा। "दि()आजनादीनाम्()" इत्यादि। "वि()आजन" इत्येवमादीनां छन्दसि विषये विकल्पेन तुग्भवतीत्येतदर्थरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्()--"सर्वे विधयश्चन्दसि विकल्प्यन्ते" (पु।प।वृ।५६) इति प्राक्? प्रतिपादितमेतत्()। तेन वि()आजनादीनां छन्दसि वा तुग्भवतीति॥

बाल-मनोरमा

दीर्घात् ३१८, ६।१।७३

तदाह--दीर्घादित्यादिना। "उभयनिर्देशे पञ्चमीनिर्देशो बलीया"निति छकारस्य तुगन्तावयवः स्यात्। ततश्च छिदिधातोर्यङि, द्वित्वे, हलादिशेषे अभ्यासचर्त्वे "गुणो यङ्लुको"रिति अभ्यासगुणे, तङि, चे-छिद्यते इति स्थिते, छकारस्यान्त्यवयवे तुकि, तस्य चुत्वेन चकारे सति तत्पूर्वस्य छकारस्य खरि चेति चर्त्वेन चकारे सति, चेच्चिद्यत इति एकारोत्तरद्विचकारकमेव रूपं स्यात्, छकारो न श्रूयेतेत्यत आह--दीर्घस्यायं तुगिति। ततश्च छकारात्प्राग्दीर्घस्योपरि तुकि, जश्त्वचुत्वचर्त्वेषु चेच्छिद्यत इति भवति। छकारस्य खर्परकत्वाभावाच्चर्त्वं न भवतीति चकाराच्छकारश्रवणं निर्बाधम्। ननु दीर्घस्यायं तुगिति कुत इत्यत आह--सेनेति। उत्तरसूत्रे पदान्तदीर्घाच्छे तुग्विकल्पविधानादिदं सूत्पमुपदान्तविषयमित्यभिप्रेत्य उदाहरति-चेच्छिद्यत इति। (१४७) पदान्ताद्वा।६।१।७६।

पदान्ताद्वा। "तुक्" "छे" "दीर्घात्" इत्यनुवर्तते। तदाह--दीर्घात् पदान्तादित्यादिना। अयमपि तुग्दीर्घस्यैव नतु छस्य। उक्तज्ञापकात्॥

इति बालमनोरमायां हल्सन्धिप्रकरणम्।

अथ जुहोत्यादयः।

अथ श्लुविकरणा धातवो निरूप्यन्ते। हु दानाऽदनयोरिति। दाने अदने चेत्यर्थः। भाष्यमिति। "तृतीया च होश्छन्दसी"ति सूत्रस्थ"मिति शेषः। ननु यदि दानमिह प्रसिद्धं विवक्षितं तर्हि "ब्राआह्मणाय गां ददाती"त्यत्र जुहोतीत्यपि प्रयोगः स्यादित्यत आह--दानं चेह प्रक्षेप इति। नन्वेवमपि कूपे घटं प्रक्षिपति, आहवनीये जलं प्रक्षिपतीत्यत्रापि जुहोतीति प्रयोगः स्यादित्यत आह-- स चेति। सः = प्रक्षेपो, विधिबोधिते आधारे = आहवनीयादौ पुरोडाशादिहविष इति लभ्यते इत्यन्वयः। कुत इत्यत आह--- स्वभावादिति। अनादिसिद्धलोकव्यवहारादित्यर्थः। तथाच विधिबोधिते आधारे विधिबोधितस्य देवतायै त्यज्यमानसय् हविषः हुधातुर्वर्तते इति फलितम्। एतच्च पूर्वमीमांसायां तृतीये "सर्वप्रदानं हविषस्तदर्थत्वा"दित्यधिकरणेऽध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः।

तत्त्व-बोधिनी
दीर्घात् ११९, ६।१।७३

सेनासुरेति। यदि हि छस्य तुक्()स्यात्तर्हि छस्य चर्त्वे सति चद्वयं स्यात् संनिपातपरिभाषया चर्त्वाऽप्रवृत्तौ तु छकारोपरि चकारः श्रूयतेति भावः।

तत्त्व-बोधिनी
पदान्ताद्वा २७६, ६।१।७३

पदान्ताद्वा। प्रकृतेन दीर्घेण पदविशेषणात्तदन्तविधिलाभेनेष्टसिद्धावप्यन्तग्रहणं पदान्तस्यैव तुग्यथा स्यात्पदस्य मा भूदित्येतदर्थम्। अन्यथा पदविधित्वात्समर्थपरिभाषोपस्थितौ समर्थेषु "लक्ष्मीच्छाये"त्यादिष्वेव स्यात्, "तिष्ठतु कुमारी, छत्रं हर देवदत्ते"त्यत्र न स्यात्, असामर्थ्यात्। एवं "न पदान्ताट्टो"रिति सूत्रे "पदाट्टो"रिति वक्तव्येऽन्तग्रहणं "दुष्टाः षट्", "सन्तस्त्रय" इत्यत्रापि ष्टुत्वनिषेधार्थमित्याहुः।

इति तत्त्वबोधिन्यां हल्सन्धिप्रकरणम्।

-------------------------

अथ जुहोत्यादयः॥

अथ जुहोत्यादयः। हु दाना। यद्यपि स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वाऽऽपादनमेव दानं, तथापि प्रयोगमनुसृत्य व्याचष्टे--प्रक्षेप इति। वैध इति। आहवनीयादौ। इविष इति। विधिबोधितद्रव्यस्येत्यर्थः। स्वभावादिति। तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन [कामेन] वा पाषाणः प्रक्षिप्तः, पुरोडाशो वा गर्तादौ, स तु प्रक्षेपो न होम इति ज्ञेयम्। परस्मपैदिन इति। तेन "होष्ये" इति केषांचित्प्रयोगोऽसाधुरेव। "स्मराग्नौ जुह्वानाः" इत्यानन्दलहरीप्रयोगस्तु साधुरेव, शानचोऽप्रवृत्तावपि चानशन्तत्वात्।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इकः ६।१ यण् १।१ अचि ७।१ १२१ संहितायाम् ७।१ ७०

अर्थः॥

इकः स्थाने यणादेशः भवति अचि परतः संहितायां विषये।

उदाहरणम्॥

दध्यत्र, मध्वत्र, कर्त्रर्थम्, लृ + आकृतिः = लाकृतिः॥

काशिका-वृत्तिः

इको यणचि ६।१।७७

अचि परतः इको यणादेशो भवति। दध्यत्र। मध्वत्र। कर्त्रर्थम्। लाकृतिः। इकः प्लुतपूर्वस्य सवर्नदीर्घबाधनार्थं यणादेशो वक्तव्यः। भो३इ इन्द्रम्। भो३यिन्द्रम्। अचि इति च अयम् अधिकारः संप्रसारणाच् च ६।१।१०४ इति यावत्।

लघु-सिद्धान्त-कौमुदी

इको यणचि १५, ६।१।७४

इकः स्थाने यण् स्यादचि संहितायां विषये। सुधी उपास्य इति स्थिते॥

न्यासः

इको यणचि। , ६।१।७४

"इको यणादेशो भवति" इति। इकां यणां च साम्यात्? यथासंख्यं भवतीति वेदितव्यम्()। यश्च सवर्णोऽच्? तत्र दीर्घविधानसामर्थ्यात्? असवर्णेऽचि यणादेशो विज्ञायत इति। इक इति किम्()? वागत्रेत्यत्र कुत्वादेव सिद्धत्वाद्यणादेशो मा भूदिति। अचीति किम्()? दधि करोति। "प्लुतपूर्वस्य" इति। प्लुतः पूर्वो यस्मात्? स प्लुतपूर्वः। वक्तव्यः=व्याख्येयः। तत्रेदं व्याख्यानम्()--"इको यणचि" इत्यत्र तन्त्रेण द्वौ योगावृच्चारितौ; तत्रैको यणादेशार्थः, अपरस्त्विकः प्लुतपूर्वस्य सवर्णदीर्घबाधनार्थो भविष्यतीति। भो यिदम्()--भो+इ+इदमिति स्थिते "गुरोरनृतोऽनन्तस्याप्येकैकस्य प्राचाम्()" ८।२।८६ इत्यनेन दूराद्धूतेऽर्थे भोशब्दस्य प्लुतः कृतः, ततः सवर्णदीर्घत्वे प्राप्ते यणादेशः॥

बाल-मनोरमा

इको यणचि ४९, ६।१।७४

इको यणचि। "इक" इति षष्ठी। अतः "षष्ठी स्थानेयोगे"ति परिभाषया स्थान इति लभ्यते। स्थानं प्रसङ्ग इत्युक्तम्। वर्णानां वर्णान्तराधिकरणत्वाऽसम्भवात्, अचीति सतिसप्तमी। "तस्मिन्निति निर्दिष्टे पूर्वस्ये"ति परिभाषाया वर्णान्तराव्यवहितोच्चारितेऽचि सति पूर्वस्येति लभ्यते। एवं चाऽचि परत इत्यर्थलभ्यम्। संहितायामित्यधिकृतम्। ततश्चार्धमात्राधिककालव्यवधानाऽभावो लभ्यते। एवं च फलितमाह-इकः स्थान इत्यादिना। इदं च सूत्राक्षरानुसारिप्राचीनमतानसारेण। "संहिताया"मिति सूत्रभाष्ये तु सामीपिकात्मकौपश्लेषिकाधिकरणे अचीति सप्तमीं तस्मिन्नित्यनेनाश्रित्य संहिताधिकारः प्रत्याख्यातः। इत्थं हि तत्र भाष्यम् - "अयं योगः शक्योऽवक्तुम्। कथम्()।

अधिकरणं नाम त्रिप्रकारं व्यापकमौपश्लेषिकं वैषयिकमिति। शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हत्यन्यदत उपश्लेषात्। इको यणचि अच्युपश्लिष्टस्येति। तत्रान्तरेण संहिताग्रहणं संहितायामेव भविष्यती"ति। उप=समीपे श्लेषः=संबन्धः-उपश्लेषः, तत्कृतमधिकरणमौवश्लेषिकं सामीपिकमिति यावत्। एवं चाऽच्समीपवर्तिन इक इति फलति। सामीप्यं च कालतो वर्णतश्च व्यवधानाऽभावः। एवं चाऽसंहितायामुक्तसामीप्याऽभावादेव यणभावसिद्धेः संहिताधिकारो न कर्तव्य इति भाष्यार्थः। एवं च तुस्यन्यायात्तस्मिन्निति निर्दिष्टे पूर्वस्येत्यत्राप्यौपश्लेषिकाधिकरणे सप्तमी। ततश्चाऽचीत्यादिसप्तम्यन्तार्थेऽकारादावुच्चारिते सामीप्यसम्बन्धेन विद्यमानस्य पूर्वस्य कार्यं स्यादित्यर्थः। फलति। नत्वव्यवहितोच्चारिते इत्यव्यवहितत्वविशेषणमुच्चारिते देयम्, सामीपिकाधिकरणसप्तम्यैव तल्लाभात्। सामीप्यस्य च तत्र कालतो वर्णतश्च व्यवधानाऽभावात्मकत्वात्। एवं च तत्र नैरन्तर्यार्थं निग्रहणं न कर्तव्यम्। इदं च "स्नुक्रमो"रिति सूत्रे, "तत्र च दीयते" इति सूत्रे च कैयटे सपष्टम्। अधिकरणत्रैविध्यं तु कारकाधिकारे "आधारोऽधिकरण"मित्यत्र स्पष्टीकरिष्यते। सुधी इति। ध्यै चिन्तायामिति धातोध्र्यायतेः सम्प्रसारणं चेति क्विपि यकारस्य सम्प्रसारणे इकारे पूर्वरूपे हलश्चेति दीर्घे च धीशब्दः। सुष्ठु ध्यायन्तीति सुधियः। सु=शोभना धीर्येषामिति वा सुधियः। सुधीभि रूपास्य इति विग्रहः। "कर्तृकरणे कृता बहुल"मिति समासः। "सुपो धातुप्रातिपदिकयो"रिति भिसो लुक्। "सुधी उपास्य इति स्थिते ईकारस्य यकार इत्यन्वयः। प्रत्याह#आरेषु तद्वाच्यवाच्येषु लक्षणा नाज्झलाविति सूत्रे प्रपञ्चिता। तत्स्फोरणाय ईकार उदाह्रतः। ननु ईकारस्य वरलाः कुतो न स्युः, यण्त्वाऽविशेषांदित्यत आह-स्थानत आन्तर्यादिति। तालुस्थानकत्वसाम्यादीकारस्य स्थाने स्थानेऽन्तरतम इति यकार एव भवति; न तु वरलाः, भिन्नस्थानकत्वादित्यर्थः। अत एव "यथासंख्यमनुदेशः समाना"मिति सूत्रे भाष्यं-किमिहोदाहरणम्()। इको यणचि। दध्यत्र। मध्वत्र। नैतदस्ति। स्थानेऽन्तरतमेनाप्येतत्सिद्ध"मिति। "स्थानेऽन्तरतम" इति सूत्रभाष्ये तु "किमिहोदाहरणम्?। इको यणचि। दध्यत्र नैतदस्ति। संख्यातानुदेशेनाप्येतत्सिद्ध"मित्युक्तम्। यथासंख्यसूत्रेणेत्यर्थः। नन्विह यण्शब्देन निरनुनासिका यवला रेफश्चेति चत्वारो गृह्णन्ते, यणो भाव्यमानतया तेन सवर्णानां ग्रहणाऽभावात्। गुणानामभेदकत्वेऽपि यवलाः षट् रेफश्चेति सप्त गृह्णन्ते। इक्शब्देन तु षट्षष्टिर्गृह्णत इति विषमसंख्याकत्वात्कथमिह यथासंख्यसूत्रप्रवृत्तिरिति चेन्न, इक्()त्वयण्त्वादिनाऽनुगतीकृतानां समत्वात्। ननु ॠलवर्णाभ्यां प्रत्येकं तिं()रशदुपस्थितौ लृवर्णानां रेफादेशस्य ॠवर्णानां लादेशस्य च प्रसङ्ग इति न यथासंख्यसूत्रेण निर्वाह इति चेत्, श्रृणु-ॠत्वावच्छिन्नस्य रेफो भवति, लृत्त्वावच्छिन्नस्य लकारो भवतीति यथासंख्यसूत्राल्लभ्यते। ॠत्वजातिश्च न लृवर्णेषु। लृत्वजातिश्च न ॠवर्णेषु। ॠलृवर्णयोः सावण्र्यविधिबलात्तु ॠत्वम् लृकारे, लृत्वमृकारे च आरोप्यते कार्यार्थम्। एवं च वास्तवमृत्वं लृत्वं च आदायात्र यथासंख्यप्रवृत्तिर्निर्बाधेत्यास्तां तावत्।

तत्त्व-बोधिनी

इको यणचि ४२, ६।१।७४

इकोयणचि। प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा, "यूस्त्र्याख्यौ" "ल्वादिभ्यः" इति च निर्देशात्। तेन इक्शब्देन षट्()षष्टिर्गृह्रन्ते, यण्शब्देन चत्वारः, भाव्यमानस्याऽणः सवर्णाग्राहकत्वात्। एवं चेह यणि तद्वाच्यवाच्ये लक्षणा तु न शङ्क्यैव, भाव्यमानस्याऽणः सवर्णग्राहकत्वाऽभावेन यण्वाच्ययकारादिवाच्यानामभावात्। अतो नास्ति यथासङ्ख्यम्। न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थज्ञानमादाय यथासङ्ख्यमस्त्विति वाच्यम्; एवमपि तृतीयचतुर्थाभ्युमृकारलृकाराभ्यां प्रत्येकं तिं()रशदुपस्थितौ लृवर्णानां रेफादेशस्य, ॠवर्णानां लादेशस्य च प्रसङ्गात्। तस्मादिह "स्थानेऽन्तरतमः" इति सूत्रेणैवेष्टसिद्धिरित्यनुपदं वक्ष्यति-"स्थानत आन्तर्या"दिति। अचीति। "कस्मादचि परे" इत्याकाङ्क्षायामर्थादिक इति संबध्यते। संहितायां विषय इति। "दध्यत्रे"-त्यादौ कार्यिनिमित्तयोर्यदाऽतिशयितसंनिधिर्विवक्ष्यते तदैव यण्भवतीति भावः।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एचः ६।१ ७७ अयवायावः १।३ अचि ७।१ ७४ संहितायाम् ७।१ ७०

समासः॥

अय् च अव् च आय् च आव् च अयवायावः, इतरेतरद्वन्द्वः

अर्थः॥

एचः स्थाने अय्, अव्, आय्, आव् इत्येते आदेशाः यथासङ्ख्यं अचि परतः भवन्ति, संहितायां विषये

उदाहरणम्॥

चयनम्, लवनम्, चायकः, लावकः

काशिका-वृत्तिः

एचो ऽयवायावः ६।१।७८

एचः स्थाने अचि परतः अयवायावित्येते आदेशाः यथासङ्ख्यम् भवन्ति। चयनम्। लवनम्। चायकः। लावकः। कयेते। ययेते। वायाववरुणद्धि।

लघु-सिद्धान्त-कौमुदी

एचोऽयवायावः २२, ६।१।७५

एचः क्रमादय् अव् आय् आव् एते स्युरचि॥

न्यासः

एचोऽयवायावः। , ६।१।७५

"कयेते, ययेते" इति। के+एते, ये+एत इति स्थितेऽयादेशः। "वायाववरुणद्धि" इति। वायौ+अवरुणद्धीति स्थित आवादेशः॥

बाल-मनोरमा

एचोऽयवायावः ६२, ६।१।७५

एचोऽयवायावः। अय्()च अव्()च आय्()च आव्()चेति विग्रहः। इको यणचीत्यतोऽचीत्यनुवर्तते। यथासंख्यपरिभाषया एकारस्य अय्(), ओकारस्य-अव्, ऐकारस्य-आय्, औकारस्य-आविति लभ्यते। तदाह--एचः क्रमादिति। यथासंख्यसूत्रभाष्यरीत्या त्वन्तरतमपरिभाषयैवात्र व्यवस्था ज्ञेया। इह "इचोऽचि यणयवायाव" इत्येव सूत्रयितुमुचितम्।

तत्त्व-बोधिनी

एचोऽयवायावः ५२, ६।१।७५

एचः क्रमादिति। नन्वत्रैव यथासङ्ख्यसूत्रं वक्तुमुचितम्। प्रत्याहारग्रहणेषुतद्वाच्यवाच्ये निरूढलक्षाभ्युपगमेऽपि

लक्ष्यार्थबोधात्पूर्वभाविशक्यार्थज्ञानमादाय यथासङ्खयत्वस्यावश्यं वक्तव्यत्वात्। अन्यथा एचां क्रमेणायवायावो न सिध्येरन्। मैवम्। अन्तरतमत्वेनापि तत्सिद्धेः। तथाहि एचः सन्ध्यक्षराणि। ततश्च संवृताकारतालव्यस्य एकारस्य संवृताकारतालव्योऽय्, संवृताकारोष्ठ()स्य ओकारस्य तादृश एव अव्, ऐचश्चोत्तरभूयस्त्वादैकारे इकारोऽध्यर्थमात्रः, अकारस्त्वर्धमात्र एव। एवमोकारेऽप्युकारोऽध्यद्र्धमात्रः, अकारस्त्वर्धमात्रः। एवंच विवृताकारतालव्यस्य ऐकारस्य विवृताकारतालव्य आय्। विवृताकारौष्ठ() आव्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वान्तः १।१ ७७ यि ७।१ ८० प्रत्यये ७।१ ८० एचः ६।१ ७५ अचि ७।१ ७४ संहितायाम् ७।१ ७०

समासः॥

वकारः अन्ते यस्य सः वान्तः, बहुव्रीहिः।

अर्थः॥

यकारादौ प्रत्यये परतः संहितायां विषये एचः स्थाने वान्तादेशः भवति।

उदाहरणम्॥

बाभ्रव्यः, माण्डव्यः, शङ्कव्यं दारुः, पिचव्यः कार्पासः, नाव्यो ह्रदः।
काशिका-वृत्तिः
वान्तो यि प्रत्यये ६।१।७९

यो ऽयम् एचः स्याने वन्तादेशः ओकारस्य अव्, औकारस्य आव्, स यकारादौ प्रत्यये परतो भवति। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। नाव्यो ह्रदः। वान्तः इति किम्? रायम् इच्छति रैयति। यि इति किम्? योभ्याम्। नौभ्याम्। प्रत्यये इति किम्? गोयानम्। नौयानम्। गोर्यूतौ छन्दसि। गोशब्दस्य यूतौ परतः छन्दसि विसये वान्तादेशो वक्तव्यः। आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। छन्दसि इति किम्? गोयूतिः। अध्वपरिमाणे च। गोर्यूतौ परतो वान्तादेशो वक्तव्यः। गव्यूतिमात्रम् अध्वानं गतः।
लघु-सिद्धान्त-कौमुदी
वान्तो यि प्रत्यये २४, ६।१।७६

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गव्यम्। नाव्यम्। (अध्वपरमाणे चि)। गव्यूतिः॥
लघु-सिद्धान्त-कौमुदी
पदान्ताद्वा १०२, ६।१।७६

दीर्घात् पदान्तात् छे तुग्वा। लक्ष्मीच्छाया, लक्ष्मी छाया॥
लघु-सिद्धान्त-कौमुदी
इति हल्सन्धिः। १०२, ६।१।७६

लघु-सिद्धान्त-कौमुदी
अथ विसर्गसन्धिः १०२, ६।१।७६

लघु-सिद्धान्त-कौमुदी
तनादिकृञ्भ्य उः ६७६, ६।१।७६

शपोऽपवादः। तनोति, तनुते। ततान, तेने। तनितासि, तनितासे। तनोतु। तनुताम्। अतनोत्, अतनुत। तनुयात्, तन्वीत। तन्यात्, तनिषीष्ट। अतानीत्, अतनीत्॥

न्यासः

वान्तो यि प्रत्यये। , ६।१।७६

यीति दर्णग्रहणम्(), तेन "यस्मिन्? विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) इति यकारादौ प्रत्यये कार्यं विज्ञायत इत्यत आह--"यकारादौ प्रत्यये" इति। यद्यपीह स्थानी न निर्दिष्टः, तथाप्यावादेश ओकारस्य स्थाने, आवादेशोऽयौकारस्थ स्थाने भवतीति वेदितव्यम्()। कथम्()? पूर्वयोगे हि यद्धर्मा वान्त आदेशो दृष्टः, इहापि तदद्धर्मेवानुवत्र्तते। कश्च पूर्वयोगे तद्धर्मा दृष्टः? अवादेशस्यौकारस्य स्थानित्वम्()। आवादेशस्याप्यौकारस्य स्थानित्वम्(), अत इहापि स्वधर्ममजहतोऽनुवृत्तस्य वान्तादेशस्य पूर्वक एव स्थानि विज्ञायते। "बाभ्रव्यः" इति। बभ्रूशपब्दादपत्येऽर्थे "मधूबभ्व्रोब्र्राआह्मणकौशिकयोः (४।१।१०६) इति यञ्? "ओर्गुण-" ६।४।१४० इति गुणः। "माण्डव्यः" इति। "गर्गादिभ्यो यञ्()" ४।१।१०५ इति यञ्()। "शङ्कव्यम्()" इति। शङ्कुशब्दात्? "तस्मै गुणः। "माण्डव्यः" इति। "गर्गादिभ्यो यञ्()" ४।१।१०५ इति यञ्()। "शङ्कव्यम्()" इति। शङ्कुशब्दात्? "तस्मै हितम्()" ५।१।५ इति "उगवादिभ्यो यत्()" ५।१।२ इति यत्()। "नाव्यः" इति। नावा तर्यत इति "नौवयोधर्मविष" ४।४।९१ इत्यादिना यत्()। "रैयति" इति। "सुप आत्मनः क्यच्()" ३।१।८ इति क्यच्()। "गोयानम्()" इति। षष्ठीसमासः। "गोर्यूतो छन्दसि" इत्यादि। वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थो वेदितव्यः। तत्रेदं व्याख्यानम्()--"वान्तो यि" इति योगविभागोऽत्रि क्रियते तेन गोशब्दस्य यूतौ परतश्चन्दसि विषयेऽवादेशो भवति। "अध्वपरिमाणे च" इति। "गौर्यूतौ" इति वर्तते। तत्रापि वक्तव्यशब्दस्य स एवार्थः। व्याख्यानमपि तदेव। इदं च सामान्येन वचनम्(), तेन भाषायामध्वपरिमाणे भवति॥

बाल-मनोरमा

वान्तो यि प्रत्यये ६४, ६।१।७६

वान्तो यि प्रत्यये। "यि"इति सप्तम्यन्तम्। तेन यकारादाविति लभ्यते। "यस्मिन्विधिस्तदादावल्ग्रहणे" इति वार्त्तिकात्। तत्र यस्मिन्निति सप्तम्यन्तं विवक्षितम्। अलिति वर्णपर्यायः। सप्तम्यन्ते वर्णग्रहणे यो विधिः स तद्वर्णादौ ज्ञेय इति तदर्थः। येन विधिरित्यस्यायमपवादः। वकारोऽन्ते यस्य स वान्तः। पूर्वसूत्रोपात्तोऽवादेश आवादेशश्च विवक्षितः। तौ च कयोर्भवत इत्याकाङ्क्षायामोदौतोरित्यर्थाल्लभ्यते, पूर्वसूत्रे तयोरेव तदुभयस्थानित्वेन क्लृप्तत्वात्। तदाह--यकारादावित्यादिना। गव्यमिति। गो--य इति स्थिते ओकारस्याऽच्परकत्वाऽभावादेचोऽयवायाव इत्यप्राप्तेऽवादेशोऽत्र विधीयते। अस्ति चात्र यु इत्यस्य प्रत्ययत्वमित्याह--गोपयसोर्यदिति। "अनेन सूत्रेण गोशब्दाद्विकारार्थे यत्प्रत्यय" इति शेषः नाव्यमिति। नौ-य इति स्थिते औकारस्य अचपरकत्वाऽभावादेचोऽयवायाव इत्यप्राप्तेऽवादेशोऽत्र विधीयते। अस्ति चात्र य इत्यस्य प्रत्ययत्वमित्याह--गोपयसोर्यदिति। "अनेन सूत्रेण गोशब्दाद्विकारार्थे यत्प्रत्यय" इति शेषः। नाव्यमिति। नौ--य इति स्थिते औकारस्य अच्परकत्वाऽभावादेचोऽयवायाव इत्यप्राप्ते वचनमिदम्। अस्ति चात्र य इत्यस्य प्रत्ययत्वमित्याह--नौवय इति। गव्यं नाव्यमित्यत्र लोपः शाकल्यस्येति हलि सर्वेषामिति च वकारस्य लोपो न भवति, तयोः पदान्तविषयत्वात्, इह च भत्वेन पदत्वबाधात्।

गोर्यूतौ छन्दस्युपसंख्यानम्। छन्दसि=वेदे यूतिशब्दे परे गोशब्दावयवस्य ओकारस्य स्थाने अविति वान्तादेसो भवतीति उपसंख्यानम्धिकवचनं कर्तव्यमिति सूत्रकारः शिक्ष्यते। "आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षत"मित्युदाहरणम्। गव्यूतिः=गोप्रचारभूमिः। गावो यूयन्ते मिश्र्यन्तेऽस्यामित्यधिकरणे युधातो क्तिनिति वेदभाष्ये भट्टभास्करः। अत्र यूतिशब्दस्य प्रत्ययत्वाऽभावात्तस्मिन् परतो "वान्ते यि प्रत्यये" इत्यप्राप्तौ वचनमिदम्।

अध्वपरिमाणे च मार्गपरिमाणविशेषे गम्येऽपि यूतिशब्दे परे गोशब्दावयवस्य ओकारस्य अविति वान्तादेशस्य उपसङ्ख्यानं कर्तव्यमित्यर्थः। लोकेऽपि प्रास्त्यर्थमिदम्। यद्यपि पूर्ववार्तिकं वैदिकप्रक्रियायामेव उपन्यसनीयं, तथाप्यत्राऽनुवृत्तिबोधसौकर्यार्थमिह तदुपन्यासः। गव्यूतिरिति। यावति गोशब्दो यूयते मिश्र्यते श्रूयते तावानध्वा गव्यूति-क्रेशयुगम्। "गव्यूतिः स्त्री कोशयुग"मित्यमरः। युधातोरधिकरणे क्तिन्। कथमिह युधातोदीर्घ इत्यत आह--ऊतियूतीति। निपातनादेव दीर्घ इति भावः। सिद्धप्रक्रियस्य निर्देशो निपातनम्। ननु गव्यं नाव्यमित्यत्र भत्वेन पदत्वबाधाल्लोपः शाकल्यस्येति "हलि सर्वेषा"-मिति च वलोपाभावेऽपि गव्यूतिरित्यत्र लोपः स्यात्, अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् यूतिशब्दस्य यजादि-स्वादिप्रत्यत्वाऽभावेन तस्मिन् परतो भत्वाऽभावाच्चेत्यत आह--वान्त इत्यत्रेत्यादि। "वान्तो यि प्रत्यय" इत्यत्र वकाराद्गोर्यूतावित्यत्र छकाराद्वा पूर्वभागे वकारः प्रश्लिष्यत इत्यन्वयः। तर्हि व् वान्त इति, व् छन्दसीति च वकारः कुतो न श्रूयत इत्यत आह-लोपो व्योरितिलोपेनेति। "अन्तर्हित" इति शेषः। ननु प्रश्लेष#ए सति किमायातमित्यत आह--तेनेति। "वान्ते यी"ति सूत्रे वकरात् प्राग्विति प्रश्लिष्यमाणं वान्तस्य विशेषणम्। विशेषणत्वाच्च तदन्तविधौ सति वकारान्त इति लभ्यते। तत्र वान्तस्य पुनर्वान्ततत्ववचनसामर्थ्यात्च्छ()यमाणवकारवान् वान्त आदेशः स्यादिति लभ्यते। गोर्यूतावित्यत्र चेदमेव वान्तग्रहणमनुवर्तत इति तत्रापि श्रूयमाणवकारवान् वान्तादेश इति लभ्यते। गोर्यूतावित्यत्र छकारात्प्राग्विति प्रश्लिष्यमाणमपि पूर्वसूत्रादनुवृत्तस्य वान्त #इत्यस्य विशेषणमिति तदन्तविधिना वान्तत्वलाभे वान्तस्य पुनर्वान्कतत्ववचनसामर्थ्याच्छ()यमाणवकारवानिति लभ्यत इत्यर्थः। नन्वेतावता गव्यूतिरित्यत्राऽवादेशे वकारस्य श्रूयमाणत्वलाभेऽपि लोपशङ्का न परिह्रतेत्यत आह--वकारो न लुप्यत इति यावदिति। वकारस्य श्रूयमाणत्ववचनं वकारो न लुप्यत इत्यर्थे पर्यवसन्नमित्यर्थः, अश्रवणस्यैव, लोपशब्दार्थत्वादिति बावः। यद्यपि "वान्तो यी"ति सूत्रे वकारप्रश्लेषस्य तदुदाहरणे गव्यं नाव्यमित्यत्र प्रयोजनं नास्ति, तत्र भत्वेन पदत्वस्य बाधेनोक्तलोपस्याऽप्राप्तेः। लव्यमित्यादौ स्वत #एव पदत्वाऽभावाल्लोपस्याऽप्राप्तिः। गामिच्छति गव्यतीत्यत्र क्यजन्तेऽपि वकारस्य न लोपप्रसक्तिः, " न क्ये" इति नियमेन तत्र पदत्वाऽभावात्। तथापि गोर्यूताविति वार्तिके तदनुवृत्तौ गव्यूतिरित्यत्र प्रयोजनमस्त्येव। एवं च वार्तिक एवन तत्प्रश्लेष उचितः। एतस्मादेवाऽस्वरसाच्छकाराद्वेत्युक्तम्। वस्तुतस्तु वकार प्रश्लेषोऽनुपपन्नः, तथा सति सूत्रे वार्तिके च प्रश्लिष्टस्य तस्य श्रवणप्रसङ्गात्। न च "लोपो व्यो"रिति लोपात्तदश्रवणमिति वाच्यम्, "वकारलोपस्य उदाहरणाऽभावाद्वकारग्रहणं न कर्तव्य"मिति लोपो व्योरिति सूत्रस्थभाष्यविरोधात्। अतोऽत्र प्रश्लिष्टवकारस्य छान्दस एव लोपो वर्णनीयः। प्रक्रियाप्रकाशे तु "संज्ञापूर्वको विधिरनित्य" इति वचनाद्गव्यूतिरित्यत्र न वकारलोप इत्युक्तम्। अन्येत्विको गुणवृद्धी इति सूत्रे अतो लान्तस्येत्र लुप्तनिर्दिष्टो वकार इति भाष्यप्रामाण्यात् क्वचिदस्ति वकारलोप इत्याहुः।

तत्त्व-बोधिनी
वान्तो यि प्रत्यये ५३, ६।१।७६

वान्तो यि प्रत्यये। यीति किम्?। गोभ्याम्। नौभ्याम्। प्रत्यये किम्?। गोयानाम्। यकारादाविति। "येन विधि"रिति

सूत्रस्यापवादभूतेन "यस्मिन्विधिस्तदादावल्ग्रहणे" इति वार्तिकेनाऽयमार्थो लभ्यते। ओदौतोरिति। ["उपस्थितानुपस्तितयोरुपस्थितं बलीयः"।] पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादिति भावः।

अद्वेति। भाषार्थमिदम्। गोर्यतौ लोकेऽपि वान्तादेशः स्यात्समुदायेनाऽध्वनः परिमाणं गम्यते चेदित्यर्थः। "गव्यूतिः स्त्री क्रोशयुग"मित्यमरः। निपातित इति। क्तिन्नन्तत्वेनेत्यर्थः। ननु "गव्य" "नाव्य"मित्यत्र भत्वेनाऽपदत्वाद्वलोपाभावेऽपि "गव्यूति"रित्यत्र "हलि सर्वेषा"मिति, "लोपः शाकल्यस्ये"ति वा लोपः स्यादत आह--वान्तैत्यत्रेति। वकारो न लुप्यत इति। एवं च "हलि सर्वेषा"मिति सूत्रे "व्यो"रित्यनुवृत्तावपि वकारं परित्यज्य "यस्य लोपः स्या"दिति व्याख्यास्यमानं सङ्गच्छते। एतच्च तत्रैव स्फुटीकरिष्यते।

---

सूत्रम्

काशिका-वृत्तिः

धातोस् तन्निमित्तस्य एव ६।१।८०

एचः इति वर्तते, वान्तो यि प्रत्यये इति च। धातोर् य एच् तन्निमित्तो यकारादिप्रत्ययनिमित्तः, तस्य यकारादौ प्रत्यये परतो वान्तादेशो भवति। लव्यम्। पव्यम्। अवश्यलाव्यम्। अवश्यपाव्यम्। धातोः इति किम्? प्रातिपदिकस्य नियमो म भूत्। तत्र को दोषः? बाभ्रव्यः इत्यत्रा एव स्यात्, इह न स्यात् गव्यम्, नाव्यम् इति। तन्निमित्तस्य इति किम्? अतन्निमित्तस्य मा भूत्। उपोयते। औयत। लौयमानिः। पौयमानिः। अत इञ् ४।१।९५। एवकारकरणम् किम्? धात्ववधारणम् यथा स्यात्, तन्निमित्तावधारणम् मा भूतिति तानिमित्तस्य हि धातोश्च अधातोश्च भवति। बाभ्रव्यः। अवश्यलाव्यम्। लवम्।

न्यासः

धातोस्तन्निमित्तस्यैव। , ६।१।७७

पूर्वेणैव सिद्धे नियमार्थं वचनम्()। "तन्निमित्तस्य" इति। तच्छब्देन यकारादिप्रत्ययः प्रत्यवमृश्यते, स निमित्तं यस्य स तथोक्तः। "लव्यम्()" इति। "अचो यत्()" (३।१।९७) इति यत्? तमेव वकारमाश्रित्य "सार्वधातुकार्थधातकयोः" ७।३।८४ इत्योकारो विधीयमानस्तन्निमित्तो भवति। "अवश्यलाव्यम्()" इति। "ओरावश्यके" ३।१।१२५ इति ण्यत्(), "मयूरव्यंसकादयश्च" २।१।७१ इति समासः, "लुम्पेदवश्यमः कृत्ये" (काशिका।६।१।१४४) इति मकारलोपः। अत्रापि ण्यतमाश्रित्य "अचो ञ्णिति" ७।२।११५ इति विधीयमान औकारस्तन्निमित्तो भवतति। "प्रातिपदिकसय नियमो मा भूत्()" इति। असति हि धातुग्रहणे प्रातिपदिकस्यापि नियमः स्यात्()। ननु च प्रातिपदिकस्यापि नियम एतन्निमित्त्स्यैव भवति, नातनिमित्तस्येत्यर्थः स्यात, तथा च--पूर्वसूत्रस्यारम्भोऽनर्थकः स्यात्(), निर्विषयत्वात्()? नैष दोषः; यो हि धातोरिति किमिति पृच्छति स पूर्वयोगस्यारम्भं पृथङ्? नेच्छत्येव। स ह्येवं मन्यते--"वान्तो यि प्रत्यये" ६।१।७६ तन्निमित्तस्यैवेत्येको योगः कत्र्तव्य इति। तत्र को दोष इति प्रातिपदिकनियमे सति यदि कश्चिद्दोष आपद्येत ततस्तन्निवृत्तये क्रियमाणं धातुग्रहणं शोभत इत्यभिप्रायः। "बाभ्रव्य इत्यत्रैव स्यात्()" इति। एतस्तन्निमित्तत्वात्()। "इह तु न स्यात्()--गव्यम्(), नाव्यम्()" इति। अतन्निमित्तत्वादेचः। "उपोयते" इति। वेञ एच आत्वे कृत उपपूर्वाल्लट्(), "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्(), "सार्वधातुके यक्()" ३।१।६७ इति यक्(), यजादित्वात्? सस्प्रसारणम्(), "अकृत्सार्वधातुकयोर्दीर्घः" ७।४।२५ इति दीर्घः, उपाकारेण सह "आद्गुणः" ६।१।८४ "औयत" इति। तस्यैव धातोर्लङ्(), पूर्ववदात्मनेपदादि, आडजादीनाम्()" ६।४।७२ इत्यट्(), "आटश्च" ६।१।८७ इति वृद्धिः। अयमौकारः पूर्वक ओकारश्च एतदुभयमप्यतन्निमित्तम्(), एतस्य मा भूदित्येवमर्थं तन्निमित्तगर्हणम्()। ननु चान्तरङ्गो यणादेशो

वर्णमात्राश्रयत्वात्(), बहिरङ्गस्त्वेकादेश उभयपदाश्रयत्वात्(), ततश्च "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यसिद्धत्वादेवात्र न भविष्यति? एवं तह्र्रोतज्ज्ञापयति--नेयमिह परिभाषोपतिष्ठत इति। तेनाक्षद्यूरित्यत्र बहिङ्गोऽप्यूडादेशोऽन्तरङ्गे यणादेशे कत्र्तव्ये नासिद्धो भवति। अन्यथा यद्ययमर्थो न ज्ञाप्येत तदाक्षैर्दीव्यतति क्विपि कृते "च्छ्वोः शुड--नुनासिके च" (६।४।१९) इत्यूडादेशे कृते तस्यासिद्धत्वात्? यणादेशो न स्यात्()। "लौयमानिः" इति। लूयमानस्यायत्यमित्यर्थे "अत इञ्()" (४।१।९५) इतीञ्? "तद्धितेष्वचामादेः" ७।२।११७ इति वृद्धिः, सा च तद्धितनिमित्ता, न तु यकारादिप्रत्ययनिमित्ता। सिद्धे हि विधिरारभ्यमाणः विनाप्येवकारकारणं नियमार्थो भविष्यतीत्यभिप्रायेणाह--"एवकारः किम्()" इति। इष्टतोऽवधारणार्थमेवकारकारणं क्रियत इति दर्शयन्नाह--"धात्ववधारणम्()" इत्यादि। एवकारे तन्निमित्तशब्दानन्तरमुच्चार्यमाणे यत एवकारकारणं ततोऽन्यत्रावधारणार्थमिति धात्वधारणं भवति। असति ह्वेवकारकारणे धातेरेव तन्निमित्तस्येति तन्निमित्तावधारणमप्यनिष्टं विज्ञायेत। तस्माद्धात्ववधारणं यथा स्यात्(), तन्निमित्तावधारणं मा भूदित्येवमर्थमेवकारकारणम्()। किं पुनर्धात्ववधारणे सतीष्टं रूपं सिध्यति यतस्तदिष्यते? इत्यत आह--"तन्निमित्त्स्य हि" इत्यादि। धात्ववधारणे हि सति तन्निमित्त्स्यानियतत्वादधातोश्च भवति बाभ्रव्य इति धातोश्च भवति--लव्यम्(), अवश्यलाव्यमिति। यदि तन्निमित्तावधारणं कृतं स्यात्? तदा धातोरेव तन्निमित्तस्येति। ततो बाभ्रव्य इत्यत्र न स्यात्(), न हि बभ्रूशब्दो धातुः। तस्माद्वात्ववधारणमितीष्यते॥

बाल-मनोरमा

धातोस्तन्निमित्तस्यैव ६५, ६।१।७७

ननु ओयते औयतेत्यत्रापि ओकारस्य औकारस्य च वान्तो यीति वान्तादेशः स्यादित्याशङ्क्य वान्तो यीति सूत्र नियमयति--धातोस्तन्निमित्तस्यैव। एच इति, वान्तो यि प्रत्यय इति चानुवर्तते। स यादिप्रत्ययो निमित्तं यस्य स तन्निमित्तः। यादिप्रत्यये परे धातोरेचो भवन् वान्तादेशो यादिप्रत्ययनिमित्तकस्यैव एचो भवति, नान्यस्येत्यर्थः। तदाह--यादौ प्रत्यय इत्यादिना। लव्यमिति। लूञ्? छेदने। अचो यत्। "सार्वधातुकार्धधातुकयो"रित्यूकारस्य गुण ओकारः। तस्य धात्ववयवत्वाद्यादिप्रत्ययानिमित्तकत्वाच्च वान्तादेशः। अवश्यलाव्यमिति। "ओरावश्यके" इति लूञो ण्यत्। "अचो ञ्णिती"त्यूकारस्य वृद्धिरौकारः। "अवश्य"मित्यव्ययम्। मयूरव्यंसकादित्वात्समासः। "लुम्पेदवश्यमः कृत्ये"इति मलोपः। अत्र औकारस्य धात्ववयवत्वाद्यादिप्रत्ययनिमित्तकत्वाच्च वान्तादेशः। ननु लव्यमवश्यलाव्यमित्यत्र वान्तो यीत्येव वान्तादेशः सिद्धः, अतस्तन्निमित्तस्यैवेति नियमार्थमिदं सूत्रमिति स्थितिः। तन्नियमविधेः किं प्रयोजनमिति पृच्छति--तन्निमित्तस्यैवेति किमिति। नियमस्य किं प्रयोजनमित्यर्थः। ओयते इति। वेञ् तन्तुसन्ताने। कर्मणि लट् बावकर्मणोरित्यात्मनेपदम्। यक्। वचिस्वपियजादीना"मिति वकापरस्य संप्रसारणमुकारः पूर्वरूपम्। "अकृत्सार्वधातुकयो"रित्युकारस्य दीर्घः। आङा सह उकारस्य आद्गुण इति गुण ओकारः। तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाऽभावान्न वान्तादेशः। नन्वत्र न धातुलोपसूत्रस्थभाष्यरीत्या आद्गुण इति गुणस्य ओकारस्य पदद्वयापेक्षत्वेन बहिरङ्गतया वान्तादेशे कर्तव्ये असिद्धत्वादोकाराऽभावान्न वान्तादेशप्रसक्तिरत्यस्वरसादाह--औयतेति। वैञः केवलात्कर्मणि तङ्। आत्मनेपदादि पूर्ववत्। आडजादीनामित्याट्। आटश्चेति वृद्धिरौकारः। तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाऽभावान्न वान्तादेशः। नात्र वृद्धेर्बहिरङ्गत्वं, पदद्वयापेक्षत्वाऽभावात्। "सिद्धे सत्यारम्भो नियमार्थः" इति न्यायेन नियमविधिसिद्धेः, तन्निमित्तस्यैवेत्येवकारस्तु विपरीतनियमव्यावृत्त्यर्थः। #एवकाराऽभावे हि "यादिप्रत्ययनिमित्तकस्य चेदेचो वान्तादेशस्तर्हि धातोरेवैच" इत्यपि नियमः प्रतीयेत। तथा च "बाभ्रव्य" इत्यत्र वान्तादेशो न स्यात्। बभ्रोरपत्यं बाभ्रव्यः। "मधुबभ्र्वोब्र्राआह्मणकौशिकयो"रिति यञ्। "ओर्गुण" इत्युकारस्य गुण

ओकारः। तस्य यादिप्रत्ययनिमित्तकस्य धात्ववयवत्वाऽभावाद्वान्तादेशो न स्यात्। अत इष्टनिमावधारणार्थं तन्निमित्तस्यैवेत्येवकारः।

तत्त्व-बोधिनी

धातोस्तन्निमित्तस्यैव ५४, ६।१।७७

धातोस्तन्निमित्तस्यैव। पूर्वेण सिद्धे नियमार्थमिदम्। अत्र पूर्वसूत्रमनुवर्तते, "एच" इति च। तच्छब्देन यादिप्रत्ययः परामृश्यते योग्यत्वान्नतु संनिहितोऽपि धातुः। नहि स्वावयवस्यैचः स्वयं निमित्तं भवति। एवकारस्त्विष्टतोऽवधारणार्थः। अन्यथा हि "तन्निमित्तस्यैचो यदि भवति तर्हि धातोरेवे"ति विपरीतनियमः संभाव्येत। ततश्च "बाभ्रव्य" इत्यत्र न स्यात्। धातोस्त्वतन्निमित्तस्यापि स्यात्-ओयते इत्यादौ। तदेतत्सकलमभिप्रेत्याह-यादो प्रत्यये परे धातोरेचश्चेद्वान्तादेशा इत्यादि। लव्यमिति। लुनातेरचो यदिति यत्। सार्वधातुकार्धधातुकयोः" इति गुणः। अवश्यलाव्यमिति। "ओरावश्यके" इति ण्यत्। मयूरव्यंसकादित्वात् समासः। "लुम्पेदवश्यमः कृत्ये" इति मकारलोपः। "लव्य"मित्यादेः पूर्वसूत्रेणैव सिद्धे नियमसूत्रमिदं व्यर्थमित्याक्षिपति-तन्निमित्तस्यैवेति किमिति। एकदेशाक्षेपेऽपि सूत्रस्यैवायमाक्षेपः पर्यवसन्नः। ओयत इति। आङ्पूर्वाद्वेञः कर्मणि लट् ; यगात्मनेपदे यजादित्वात्संप्रसारणम्। पूर्वरूपम्। "अकृ"दिति दीर्घः। आद्गुणस्य परादिवद्भावेन दातोरेच्यत्वेऽपि यादिप्रत्ययनिमित्तकत्वं नास्तीति भावः। ओयत इति। वेञः कर्मणि लङ्। यगादि प्राग्वत्। "आडजादीनाम्"। "आटश्चे"ति वृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

क्षय्यजय्यौ शक्यार्थे ६।१।८१

क्षि जि इत्येतयोर् धात्वोः यति रत्यये परतः शक्यार्थे गम्यमाने एकारस्य अयादेशो निपात्यते। शक्यः क्षेतुम् क्षय्यः। शक्यो जेतुम् जय्यः। शक्यार्थे इति किम्? क्षेयं पापम्। जेयो वृषलः।

न्यासः

क्षय्यजय्यौ शक्यार्थे। , ६।१।७८

""क्षि" "जि" इत्येतयोर्धात्वोः" इति। क्षिग्रहणेन "क्षि क्षये" (धा।पा।२३६) "क्षि वासगत्योः" (धा।पा।१४०७) क्षिष्? ["क्षीष हिंसायाम्()"--धातुपाठः। "क्षि हिंसायाम्()" (१२७६)--धातुपाठः] हिंसायाम्? (धा।पा।१५०६) इत्येषां ग्रहणम्(), जिग्रणे तु "जि जये (धा।पा।५६१) इत्येतस्य। ननु च "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इत्यनया परिभाषया "क्षिष्? हिंसायाम्()" इत्यस्य ग्रहणं न प्राप्नोति? नैष दोषः निपातनात्? भविष्यति। किं हि निपातनान्न लभ्यते? यथैव हि ततोऽन्यदलाक्षिकं कार्यं किञ्चिद्भविष्यति, तथेदमपि स्यात्()। अर्थग्रहणं कर्मण्यपबि यता स्यात्(); अन्यथा शकेरकर्मकत्वात्? भाव एव निपातनं विज्ञायते--क्षय्यं देवदत्तेनेति। कर्मणि तु न स्यात्()--क्षय्यो व्यधिरिति, न ह्यकर्मकेभ्यः कर्मणि कृत्यप्रत्यय उपपद्यते। अर्थग्रहणेन तु कृत्यार्थ उपलक्ष्यते। कृत्याश्च कर्मण्यपि विहिताः, तेन तत्रापि निपातनाद्विज्ञायते॥

बाल-मनोरमा

क्षय्यजय्यौ शक्यार्थे ६६, ६।१।७८

क्षय्यजय्यौ शक्यार्थे। शक्यार्थे क्षय्यजय्यशब्दौ वाचकतया वर्तेते इत्यर्थः। ननु किमपि कार्यं विधेयमत्र न दृश्यते इत्यत

आह--यान्तेति। प्रातिस्विकविधिं विंना सिद्धप्रक्रियस्य शब्दस्वरूपस्य निर्देशो निपातनम्। ततश्च शक्यार्थके यादौ प्रत्यये परे "क्षि क्षये""जि जये"इति धातोरेचोऽयिति यान्तादेशः स्यादिति विधानमत्र फलति। शक्यार्थे क्षिज्योर्यान्त इति प्रातिस्विकविधौ गौरवादेवं निपातनमिति भावः। क्षय्यमिति। "कृत्या"इत्यधिकारे क्षिधातोरचो यदिति यत्प्रत्ययः। स च "शकि लिङ् चे"ति शक्यार्थः। शक्यार्थे लिङ् स्याच्चात्कृत्या इति तदर्थः। "सार्वधातुकार्धधातुकयो"रिति इकारस्य गुण एकारः। तस्याज्चपरकत्वाऽभावादप्राप्तोऽयादेशोऽत्र निपात्यते। जय्यमित्यपि पूर्ववत्। शक्यार्थे किमिति। "शक्यार्थे" इत्यस्य किं प्रयोजनमिति प्रश्नः। क्षेतुमित्यादि। क्षेतुं योग्यं क्षेयं पापम्। जेतुं योग्यं जेयं मन इत्यन्वयः। "अर्हे कृत्यतृचश्चे"ति यत्। स च न शक्यार्थक इति नात्र यान्तादेश इत्यर्थः।

तत्त्व-बोधिनी

क्षय्यजय्यौ शक्यार्थे ५५, ६।१।७८

क्षय्यमिति। "शकिलिङ् चे"ति यत्। चात्कृत्याः। क्षेयमिति। "अर्हे कृत्यतृचश्चे"ति यत्।

---

सूत्रम्

काशिका-वृत्तिः

क्रय्यस् तदर्थे ६।१।८२

क्रीणातेः धातोः तदर्थे क्रयार्थे यत् तस्मिन्नभिधेये यति प्रत्यये परतः अयादेशो निपात्यते। क्रय्यो गौः। क्रय्यः कम्बलः। क्रयार्थं यः प्रसारितः स उच्यते। तदर्थे इति किम्? क्रेयं नो धान्यं, न च अस्ति क्रय्यम्।

न्यासः

क्रययस्तदृथे। , ६।१।७९

"क्रय्यः" इति। अत्र प्रत्ययार्थश्च कर्म विदयते; कर्मणि कृत्यविधानात्()। प्रकृत्यर्थश्च विनिमयः, क्रीणातेर्विनिमयार्थत्वात्()। तत्र प्रतययार्थः प्रधानम्(), "प्रकृतिप्रत्यौ प्रत्ययार्थं सह ब्राऊतः" इति कृत्वा। प्रकृत्यर्थस्तूपसर्जनम्(), प्रतत्ययार्थविशेषणमिति कृत्वा। तत्र यदि प्रधानत्वात्? तदित्यनेन प्रत्यार्थो निर्दिश्येत तदायमर्थः स्यात्()--स क्रय्योऽर्थो यस्य शब्दस्य स तदर्थः, तस्मिन्नभिधेये ॠय्य इत्येष शब्दो निपात्यत इति? अयुक्तश्चायम्(); न ह्यत्र क्रय्यशब्दस्य क्रय्यार्थः कश्चिच्छब्दोऽभिधेयोऽस्ति, ततस्तस्याप्रतीतेः। अथैवं विज्ञायेत--स एवार्थस्तदर्थ इति? एवमपि तदर्थग्रहणमनर्थकम्()। अवश्यमेव हि क्रय्यशब्दो यत्प्रतययान्तस्तस्मिन्? यत्प्रत्ययार्थे वत्र्तते। तस्मात्? तच्छब्देन प्रधाननिर्देशे सति तदर्थग्रहणस्यानर्थक्यम्()। अतो गुणभूतोऽपि प्रकृत्यर्थो निर्दिश्यत इति मत्वाऽऽह--"तदर्थे क्रयार्थं यत्? तस्मिन्नभिधेये" इति। तस्मै इदं तदर्थम्()। क्रयार्थमित्यनेन क्रीणात्यर्थस्तच्छब्देन निर्दिश्यत इति दर्शयति। क्रयणं क्रयः, विनियम इत्यर्थः। क्रयार्थमित्यत्रापि चतुर्थीसमास एव--क्रयाय इदं क्रयार्थम्()। "क्रायार्थ यः प्रसारितः" इति। विनिमयार्थं य उपन्यस्त इत्यर्थः। "क्रेयं नो धान्यम्()" इति। क्रेतव्यम्()=ग्रहीतव्यम्(), स्वीकत्र्तव्यमितय्र्थः। "न चास्ति क्रव्यम्()" इति। न चात्र क्रयार्थमुपन्यस्तं धान्यमस्तीत्यर्थः।

बाल-मनोरमा

क्रय्यस्तदर्थे ६७, ६।१।७९

क्रय्यस्तदर्थे। इदमपि यान्तादेशनिपातनार्थम्। तदर्थशब्दं व्याचष्टे - तस्मा इति। क्रय्यशब्दे यः क्रीञ्धातुर्यत्प्रत्ययप्रकृतिभूतस्तस्ययोऽर्थोऽभिधेयो द्रव्यविनिमयरूपः क्रयः स प्रकृत्यर्थस्तच्छब्देन विवक्षितः। तस्मै

इदं तदर्थं=क्रयार्थं वस्तु। तथाच क्रयार्थे वस्तुनि गम्ये क्रीञ्धातोर्यादौ प्रत्यये परे इति फलति। "यान्तः क्रीञस्तदर्थ" इति विधौगौरवान्निपातनमाश्रितम्। क्रयार्थत्वं चात्र फलोपधायकं विवक्षितमित्याह--क्रेतार इत्यादि क्रय्यमित्यन्तम्। योग्यतामात्रग्रहणे तु "तदर्थे"इत्यव्यावर्तकं स्यादिति भावः। क्रीञः कर्मणि "अचो यत्" इति यत्। "सार्वधातुके"ति गुण एकारः। अत्रैकारस्याऽच्परकत्वाऽभावादनेनाऽयादेशविधिः। क्रेयमन्यदिति। गृहादौ भोजनाद्यर्थं संगृहीतं धान्यादीत्यर्थः। "अर्हे कृत्यतृचश्चेति"यत्। अत्राऽयादेशो न भवति, फलोपधानस्य क्रयार्थत्वस्य तत्राऽभावादित्यर्थः।

तत्त्व-बोधिनी

क्रय्यस्तदर्थे ५६, ६।१।७९

प्रकृत्यर्थायेति। प्रकृत्यर्थो द्रव्यविनिमयः।

---

सूत्रम्

काशिका-वृत्तिः

भय्यप्रवय्ये च च्छन्दसि ६।१।८३

बिभेतेर् धातोः रपुर्वस्य च वी इत्येतस्य् यति प्रत्यये परतः छन्दसि विषये अयादेशः निपात्यते। भय्यं किलासीत्। वत्सतरी प्रवय्या। भय्येति कृत्यल्युटो बहुलम् ३।३।११३ इत्यपदाने यत् प्रत्ययः। बिभेत्यस्मादिति भय्यम्। प्रव्य्या इति स्त्रियाम् एव निपातनम्। अन्यत्र प्रवेयम् इत्येव भवति। छन्दसि इति किम्? भेयम् प्रवेयम्। ह्रदय्या आप उपसङ्ख्यानम्। ह्रदय्या आपः। ह्रदे भवा, भवे छन्दसि ४।४।१०९ इति यत् प्रत्ययः।

न्यासः

भय्यप्रवय्ये च च्छन्दसि। , ६।१।८०

"वी इत्येतस्य" इति। गतिप्रजनादिषु यो वी पठ()ते तस्य, "अजेव्र्यघञपोः" २।४।५६ इत्यजेर्यो वी आदेशस्तस्य वा। "ह्यदय्या आप उपसंख्यानम्()" इति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। ह्यदय्या हत्यस्य प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन ह्यदय्या इत्यपि भविष्यतीति॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एकः १।१ १०७ पूर्व-परयोः ६।२ १०७ संहितायाम् ७।१ ७०

समासः॥

पूर्व॰ इत्यत्र इतरेतरद्वन्द्वः।

अर्थः॥

अधिकारोऽयम्, {ऋत् उत् (६।१।१०७)} इति यावत्। तत्र पर्यन्तं यद् वक्ष्यति तत्र पूर्वस्य परस्य द्वयोः अपि स्थाने एकादेशः भवति इति वेदितव्यम्॥ वक्ष्यति {आद् गुणः (६।१।८४)} इति तत्राचि पूर्वस्य अवर्णात् च द्वयोः अपि स्थाने गुनः एकः भवति।

उदाहरणम्॥

खट्वेन्द्रः, मालेन्द्रः॥

काशिका-वृत्तिः

एकः पूर्वपरयोः ६।१।८४

अधिकारो ऽयम्। ख्यत्यात् परस्य ६।१।१०८ इति प्रागेतस्मात् सूत्रातिति उत्तरं यद् वक्ष्यामस् तत्र पूर्वस्य परस्य द्वयोरपि स्थाने एकादेशो भवति इत्येतद् वेदितव्यम्। वक्ष्यति आद् गुणः ६।१।८४ इति। तत्र अचि पूर्वस्य अवर्णात् च परस्य स्थाने एको गुणो भवति। खट्वेन्द्रः मालेन्द्रः। पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम्, एकस्य एव हि स्यात्, नोभे सप्तमीपञ्चम्यौ युगपत् प्रकल्पिके भवतः इति। एकग्रहणम् पृथगादेशनिवृत्यर्थं, स्थानिभेदाद् धि भिन्नादिषु नत्ववद् द्वावादेशौ स्याताम्।

न्यासः

एकः पूर्वपरयोः। , ६।१।८१

अथ पूर्वपरग्रहणं किमर्थम्(), यावता "आद्गुणः" ६।१।८४ इत्यादादादित्येषा पञ्चमी अचीत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति; "तस्मादित्युत्तरस्य" १।१।६६ इति वचनात्()। तथाचीत्येषा सप्तम्यादित्यस्याः पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति; "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति वचनात्()। तत्रान्तरेणापि पूर्वपरग्रहणं पूर्वपरयोद्र्वयोरपि भविष्यति? इत्याह--"पूर्वपरग्रहणम्()" इत्यादि। किं पुनः कारणमसति पूर्वपरग्रहणे द्वयोरपि युगपदादेशो न सिध्यति? इत्यत आह--"एकस्यैव हि" इत्यादि। एवं मन्यते--अचत्येषा सप्तमी यणादेशादिविधौ चरितार्था; आदित्येषां तु पञ्चमी न क्वचिच्चरितार्था, अतः सा सप्तम्याः षष्ठीत्वं प्रकल्पयेत्()। तत्रासति पूर्वपरग्रहणेऽच एव स्थाने गुणः स्यत्()। "बृद्धिरेचि" ६।१।८५ इत्यत्र च गणविधावादिति पञ्चमी कृतार्थे ति तस्या एचीति सप्तम्यकृतार्था षष्ठीत्वं प्रकल्पयेत्()। एवं च वृद्धिरवर्णस्यैव प्रसज्येत। "उपसर्गादृति धातौ" (६।१।९१) इत्यतर द्वयोरपि पञ्चमीसप्तम्योरकृतार्थत्वात्? पर्यायेण परस्परं षष्ठीपरकल्पनेति पर्यायेणैव वृद्धिः स्यात्()। यत्? पुनः परस्याभिमतं पञ्चमी सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति, सप्तम्यपि पञ्चम्याः, ततोऽन्तरेणापि पर्वपरग्रहणं द्व्योरप्यादेशो भविष्यतीति? तन्निरासायाह--"नोभे" इत्यादि। निवृत्तिधर्मा हि स्थानी भवति, श्रूयमाणस्य च षष्ठीप्रकल्पनं प्रति निमित्तभावः। कथं पूर्वपरौ निवत्र्तेयाताम्()? षष्ठीप्रकल्पनं च प्रति निमित्तभावमुपगच्छेतातम्? अत एवानिवृत्तेर्निमित्तभावस्य चासम्भवान्नोभे सप्तमीपञ्चम्यौ युगयत्प्रकल्पिके भवतः। तस्मादेकस्यैव स्यात्(), नोभयोः। अथैकग्रहणं किमर्थम्(), यावता "भ्रस्जो रोपधयो रमन्यतरस्याम्()" ६।४।४७ इत्यत्र विनाप्येकग्रहणमेक एव सम्भवति, तथाप्यत्रैकग्रहणेन विनाप्येक एव भवष्यतीत्याह--"एकम्()" इत्यादि। रमागमेन हि मित्वात्? "मिदचोन्त्यात्परः" (१।१।४७) इत्यचोऽन्त्यात्? परेण भवितव्यम्()। न च द्वयो रमोर्भृज्जातवचोऽन्त्यात्? परेण सम्भवोऽस्ति। ततो युक्तं तद्विनाप्येकग्रहणम्()। एक एव रम्? भवतीति गुणादिस्त्वादेशः। सम्भवति च स्थानिभेदे सत्येकैकस्य स्थानिनो गुणादिः पृथगादेशः तत्रासत्येकग्रहणे पृथगादेशः स्यात्()। तस्मात्? पूर्वपरयोद्र्वयोः स्थानिनोः पृथगदेशो मा भूदित्येवमर्थमेकग्रहणम्()। असति पुनरेकग्रहम आदेशश्च द्वयं प्राप्नोतीत्यमुमर्थं सोपपत्तिकं प्रतिपादयितुमाह--"स्थानिभेदाद्धि" इत्यादि। यता "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" ८।२।४२ इति स्थानिभेदाद्धेतोर्भिन्नं छिन्नमित्येवमादिषु द्वावेवादेशौ भवतः, तथा खट्वेन्द्र इत्येवमादिष्वपि द्वावादेशौ स्याताम्()॥

बाल-मनोरमा

एकः पूर्वपरयोः ६९, ६।१।८१

तर्हि कुतोऽत्र यणावलादेशौ न भवत इत्यत आह--न पदान्तेति सूत्रेण पदान्तविधौ तन्निषेधादिति।
पदान्तभूतेकारौकारयोः स्थाने भवतोर्यणावादेशयोः पदचरमावयवतया तयो कर्तव्ययोः
परनिमित्तकस्याऽजादेशस्या।त्रल्लोपस्य स्थानिवत्त्वनिषेधादित्यर्थः। अथ एकादेशसन्धिं निरूपयितुमाह--एकः
पूर्वपरयोः इत्यधिकृत्येति। पदद्वयात्मकमिदं सूत्रमुत्तरत्रानुवृत्त्यर्थं पठित्वा कतिपयसन्धयो विधास्यन्त इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अन्तादिवच् च ६।१।८५

एकः इति वर्तते, पूर्वपरयोः इति च। एकः पूर्वपरयोः ६।१।८१ इति यो ऽयम् एकादेशो विधीयते स पूर्वस्य अन्तवद् भवति, परस्यादिवद् भवति। यथा तस्यान्तः आदिर् वा तदन्तर्भूतः तद्ग्रहणेन गृह्यते, तद्वदेकादेशो ऽपि तद्ग्रहणेन ग्ह्यते इत्येषो ऽतिदेशार्थः। ब्रह्मबन्धूः इत्यत्र ब्रह्मबन्धु इति प्रातिपदिकम्, ऊङिति अप्रातिपदिकम्, तयोः प्रातिपदिकाप्रातिपदिकयोर् यः एकादेशः स प्रातिपदिकस्य अन्तवद् भवति, यथा शक्यते कर्तुं ङ्याप् प्रातिपदिकात् ४।१।१ इति स्वादिविधिः। वृक्षौ इत्यत्र सुबौकारः असुबकारः, तयोः सुबसुपोरेकादेशः सुपः आदिवद् भवति, यथा शक्यते वक्तुं सुबन्तं पदम् इति। वर्णाश्रयविधौ अयम् अनतादिवद्भावो निस्यते। तथा हि खट्वाभिः इत्यत्र अन्तवद्भावाभावातातो भिस ऐस् ७।१।९ इति न भवति। ह्वयतेः जुहाव इति सम्प्रसारणपूर्वत्वस्य आदिवद्भावाहावातात औ णलः ७।१।३४ इति न भर्वात। अस्यै अश्वः, अस्या अश्वः इति वृद्धिरेचि ६।१।८५ इति वृद्धिः, एङः पदान्तादति ६।१।१०५ इत्यत्र विधौ आदिवन् न भवति। पूर्वपरसमुदाय एकादेशस्य स्थानी, स हि तेन निवर्तयते। तत्र अवयवयोरानुमानिकं स्थानित्वम् इति तदाश्रयं कार्यं स्थानिवद्भावादप्राप्तम् इत्यन्तादिवद्भावो विधीयते।

लघु-सिद्धान्त-कौमुदी

अन्तादिवच्च ४१, ६।१।८२

योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्। शिवेहि॥

न्यासः

अन्तादिवच्च। , ६।१।८२

अन्तादिवदित्युक्ते न ज्ञायते--कोऽस्यातिदेशस्यार्थ इत्यतस्तत्परिज्ञानायाह--"यथा" इत्यादि। "इत्येषोऽतिदेशस्यार्थः" इति। इतिशब्द्वोऽतिक्रान्तप्रत्यवमर्शी-अतिदिश्येऽनेनेत्यतिदेशः, स पुनः "अन्तदिवच्च" इत्येष एव योग इत्येषोऽनन्तरोक्तोऽस्यातिदेशस्यार्थ इत्यर्थः। "वर्णाश्रयविधावयमन्तादिवद्भावो नेष्यते" इति। कथमेतज्ज्ञायते? इत्याह--"तथाहि" इत्यादि। "ओभिस ऐस्? ७।१।९ इत्यकारवर्णाश्रयो विधिः; तत्र कत्र्तव्ये खट्वाभिरित्यत्र सवर्णदीर्घत्वं पूर्वस्यानतवन्न भवति। "आत औ णलः" ७।१।३४ इत्याकारवर्णाश्रयोऽयं विधिः। तत्र कत्र्तव्ये वर्णाश्रये जुहावेत्यत्र "अभ्यस्तस्य च" (६।१।३३) इति ह्वयतेः सम्प्रसारणे कृते यत्? पूर्वरूपत्वमाकारस्य तन्नादिवद्भवकति। एङः पदान्तादति" ६।१।१०५ इत्येष विधिरेङ्वर्णाश्रयः। तत्र कत्र्तव्ये--अस्यै अ()आ इत्यत्र "आटश्च" ६।१।८७ इति वृद्धिः परस्यादिवन्न भवति, तदभावादायादेशः, "लोपः शाकल्यस्य" ८।३।१९ इति यकारलोपः, तत्? किमेतद्वक्तव्यम्()--वर्णाश्रये नान्तादिवदिति? न वक्तवयम्()। कथम्()? अताद्रूप्यातिदेशात्()। नेह ताद्रूप्यमतिदिश्यते, रूपाश्रयाश्चैते विषयः, तेनाताद्रूप्यान्न भविष्यन्ति। किमर्थं पुनरयमन्तादिवद्भावो विधीयते, यावता पूर्वपरावुक्तावेकादेशस्य स्थानिनौ, अत्र स्थानिवद्भावादेव तदाश्रयं कार्यं भविष्यति? इत्यत आह--"पूर्वपरसमुदाय

एकादेशस्य स्थानी" इति। कथं ज्ञायते? इत्याह--"स हि" इत्यादि। येन हि यो निवर्त्त्यत आदेशेन स तस्य स्थानीति, तद्यथा--"अस्तेर्भूः" [२।४।५२](#) इति। अत्र भूवोऽस्तिः, समुदायश्चेहैकादेशेन निर्वर्त्यत इति स एव तस्य स्थानी, न पूर्वपरौ समुदायिनौ। स्यादेतत्()--अवयवस्य समुदायाभ्यान्तरत्वात्? समुदाय आदेशेन निवर्त्त्यमानेऽवयवावपि निवर्त्त्येते, तस्मात्? तयोरपि स्थानित्वम्()? इत्यत आह--"तत्र" इत्यादि। इतिकरणौ द्वावपि हेतौ। तत्र समुदाये स्थानिन्यवयवयोर्यत्? स्थानित्वं तदानुमानिकम्(), समुदाय एकादेशस्य आदेशेन निवर्त्त्यमाने तयोरपि निवत्र्तनं नान्तरीयकमिति कृत्वा। न हि विनावयवनिवत्र्तनेन समुदायः शक्यते निवर्तयितुम्(), तस्य तदात्मकत्वात्()। समुदायस्य तु प्रत्यक्षंस्थानित्वम्()। "पूर्वपरयोः" इति स्थानषष्ठ()न्तस्य साक्षाच्? श्रवणात्? "श्रुतानुमितयोः श्रौतः सम्बन्धो गरीयान्()" (चां।प।पा।४९) इति "स्थानिवदादेशोऽनल्विधौ" (१।१।५६) इत्यनेन यस्य प्रत्यक्षं साक्षात्? श्रुतम्(), स्थानित्वं तदाश्रयमेव कार्यमादेशे विधीयते। अवयवयोश्चानुमानिकं स्थानित्वं न प्रत्यक्षम्(), अतस्तदाश्रयं कार्यं नातिदिश्यते। तेन तदाश्रयं कार्यं स्थानिवद्भावादेशे न प्राप्नोति, इष्यते च। तदर्थमयमन्ताविवद्भावो विधीयते॥

बाल-मनोरमा

अन्तादिवच्च ७६, ६।१।८२

अथ तस्य रेफस्य पदान्ते विहितं विसर्गमाशङ्कितुं तस्य पदान्तत्वसाधनायाह-अन्तादिवच्च। एकः पूर्वपरयोरिति सूत्रमनुवर्तते। यथासंख्यपरिभाषया अन्तादिवदित्यस्य क्रमेणान्वयः। ततश्च पूर्वपरयोर्भवन्नेक आदेशः पूर्वस्यान्तवत्परस्यादिवदिति लभ्यते। यद्यपि एकादेशस्य द्वौ वर्णौ स्थानिनौ-पूर्वः परश्च, तयोश्च वर्णयोः प्रत्येकमेकत्वादखण्डत्वात्तदपेक्षया एकादेशस्य अन्तादिवत्त्वकथनमसङ्गतम्, तथापि पूर्वपरवर्णयोर्भवन्नेकादेशः प्रथमस्थानिघटितसमुदायस्य पूर्वस्य योऽन्तः। प्रथमस्थानी तत्कार्यकारी भवति। द्वितीयस्थानिघटितसमुदायस्य उत्तरस्य य आदिर्द्वितीयस्थानी तत्कार्यकारी भवतीत्यर्थो विवक्षितः। तत्र पूर्वान्तवत्त्वे यताक्षीरपेण। क्षीरप-इनेति स्थिते "आद्गुण" इत्येकादेश एकारः। तत्र पूर्वान्तवत्त्वेन पे इत्युत्तरपदस्य एकाच्त्वादेकाजुत्तरपदेण इति णत्वं भवति। अत्र एकादेशे स्थानिवत्सूत्रं तु न प्रवर्तते, एकदेशस्थानीभूतं पकारादकारमालम्ब्य पे इत्यस्य एकाजुत्तरपदत्वाश्रयेम प्रवर्तमानस्य णत्वस्य स्थान्यलाश्रयत्वात्। यद्यपि एकाजुत्तरपदत्वमेव प्राधान्येन णत्वविधिराश्रयति, पकारादकारं स्थान्यलं तु तद्विशेषणीभूताऽच्वेनाश्रयति, तथाप्यनल्विधाविति निषेधोऽत्र भवत्येव, यथाकथञ्चित्स्थान्यलाश्रयणस्यैव तत्र विवक्षितत्वात्। अन्यता प्रतिदीव्येत्यत्र क्त्वादेशं ल्यपं स्थानिगतवलाद्यर्थधातुकत्वेनाश्रित्येडागमेकर्तव्येऽनल्विधाविति निषेधानुपपत्तिः, तत्र वलः प्राधान्येनाश्रयणाऽभावात्। एतेन स्थानिवत्सूत्रेण गतार्थमिदं सूत्रमिति निरस्तम्। परादिवत्त्वे यथा-खट्वा। अत्र खट्वाशब्दादजाद्यतष्टाप्। सवर्णदीर्घः आकारः। तस्य परादिवत्त्वेन टाप्त्वात्ततः परस्य सोर्हल्ङ्यादिलोपः। इदमपि स्तानिवद्भावेन अनिर्वाह्यम्। हल्ङ्यादिलोपस्यात्र स्थान्यलाश्रयताया मूलकृतैव वक्ष्यमाणत्वात्। नचैवं सति यजेर्लङि उत्तमपुरुषैकवचने इटि शपि आद्गुणे अडागमे अयजे इन्द्रमित्यत्र गुणस्य एकादेशस्य परादिवत्त्वेन इकारत्वात्तत्रेकारे परे सवर्णदीर्घः स्यादिति वाच्यम, इह हि अल्समुदायधर्मास एव प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयोऽतिदिश्यन्ते, नतु वर्णमात्रधर्मा अत्वह्रस्वत्वादयः। उक्तञ्च भाष्ये-"न वा अताद्रूप्यातिदेशा"दिति। अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशादयज इन्द्रमित्येवंजातीयकेषु सवर्णदीर्घादिकं न भवतीत्यर्थ इत्यलमतिविस्तरेण।

तत्त्व-बोधिनी

अन्तादिवच्च ६३, ६।१।८२

अन्तादिवच्च। इह "एकः पूर्वपरयोः" इत्यनुवर्तते, यथासङ्ख्यं चाश्रीयत इत्यभिप्रेत्याह-पूर्वस्यान्तवदिति।

स्थानिवत्सूत्रेणैव गतार्थमिदम्। न चाल्विध्यर्थमिदमस्त्विति शङ्क्यम् ; अस्याऽप्यल्विधावनिष्टत्वात्। अन्यथा "अयजे इन्द्र"मित्यत्र सवर्णदीर्घापत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

षत्वतुकोरसिद्धः ६।१।८६

षत्वे तुकि च कर्तव्ये एकदेशो ऽसिद्धो भवति, सिद्धकार्यं न करोति इत्यर्थः। असिद्धवचनम् आदेशलक्षणप्रतिषेधर्थम्, उत्सर्गलक्षणभावार्थं च। को ऽसिचतित्यत्र एङः पदान्तादति ६।१।१०५ इति एकादेशस्य परं प्रत्यादिवद्भावातपदादेरिण उत्तरस्य आदेशस्य सकारस्य षत्वं प्राप्नोति, तदसिद्धत्वान् न भवति। को ऽस्य, यो ऽस्य, को ऽस्मै, यो ऽस्मै इत्येकादेशस्य असिद्धत्वातिणः इति षत्वं न भवति। तुग्विधौ अधीत्य, प्रेत इत्यत्र एकादेशस्य असिद्धत्वात् ह्रस्वस्य पिति कृति तुक् ६।१।६९ इति तुग् भवति। सम्प्रसारनङीट्सु प्रतिषेधो वक्तव्यः। सम्प्रसारणे ब्रह्महूषु। सम्प्रसारणपूर्वत्वस्य असिद्धत्वात् षत्वं न प्राप्नोति। ङौ वृक्षे च्छत्रम्, वृक्षे छत्रम्। इटि अपचे च्छत्रम्, अपचे छत्रम्। आद्गुणस्य असिद्धत्वाद् ह्रस्वलक्षणो नित्यो ऽत्र तुक् प्राप्नोति, दीर्घात्, पदान्ताद् वा ६।१।७३ इति तुग्विकल्प इष्यते।

न्यासः

षत्वतुकोरसिद्धः। , ६।१।८३

इहासिद्धवचनेनकादेशस्याभावो वा क्रियते? तत्कार्यसामथ्र्य वा प्रतिपाद्यते? सिद्धमपि हि वस्तु सिद्धकार्यं कर्तुमसामथ्र्यादसिद्धमित्युच्यते, यथा--पुत्रकार्यकरणेऽसामथ्र्यात्? पुत्रोऽप्यपुत्र इति। तत्र यद्यनेनैकादेशस्याभावः क्रियते तदाधीत्येत्यत्र तुग्न स्यात्(), न हीह ह्यस्वोऽस्ति; एकादेशेन निवर्त्तितत्वात्()। न चासिद्धवचनेनैकादेशे निवर्त्तिते ह्यस्वस्य प्रादुर्बावो भवति, न हि देवदत्तस्य हन्तरि हते पुनर्देवदत्तस्य प्रादुर्भावो भवतीतिममाद्ये पक्षे दोषं दृष्ट्वा कार्यसामथ्र्यमेकादेशस्यासिद्धत्वश्रुत्या प्रत्याय्यत इति दर्शयन्नाह--"सिद्धकार्यं न करोतीत्यर्थः" इति। सिद्धस्य निष्पन्नस्य यत्? कार्यं तदेकादेशः सिद्धो निष्पन्नोऽपि न करोतीत्ययमस्य वचनस्यार्थः। "असिद्धवचनम्()" इत्यादिना सूत्रस्य प्रयोजनमाचष्टे। आदेशे च कृते यत्कार्यं तद्धेतुकं प्राप्नोति तदादेशलक्षणम्(), आदेशो लक्षणं निमित्तमस्येति कृत्वा। तस्य प्रतिषेधो यथा स्यादित्येवमर्थमसिद्धवचनम्()। उतसृज्यते निवर्त्यत इत्युत्सर्गः, स्थान्यभिधीयते। उत्सर्गो लक्षणं यस्य तदुत्सर्गलक्षणम्(), तद्भावो यथा स्यादित्येवमर्थञ्चासिद्धवचनम्()। "कोऽसिचत्()" इति। सिचेर्लुहि च्लिः, "लिपिसिचिह्श्च" ३।१।५३ इति च्लेरङ्, किंशब्दात्? परस्य सकारस्य रुत्वम्? "अतो रोरप्लुतादप्लुते" ६।१।१०९ इत्युत्त्वम्(), "आद्गुणः" ६।१।८४ इति गुणः, "एङः पदान्तादति"६।१।१०५ इति परपूर्वत्वम्(), "परं प्रत्यादिवद्भावात्()" इत्यादि। असिचदित्यत्र योऽकारस्तं प्रत्येकादेशस्य "अन्तादिवच्च" ६।१।८२ इत्यनेनादिवद्भावः। अयञ्चापदादित्वे हेतुः। "असिद्धत्त्वान्न भवति" इति। असिद्धत्त्वे हि सति सकारोऽत्रादिरेव पदस्य भवति, तेन "सात्पदद्योः" ८।३।१११ इति षत्वप्रतिषेधो भवति। "कोऽस्य" इति। इदमः षष्ठ()एकवचनम्(), "त्यदादीनामः"७।२।१०२ इत्यत्वम्(), "टाङसिङ्सामिनात्स्याः" ७।१।१२ इति स्यभावः "हलि लोपः" ७।२।११३ इतीद्रूपस्य लोपः। शेषं पूर्ववत्()। एतदादेशलक्षणप्रतिषेधस्योदाहरणम्()। उत्सर्गलक्षणभावस्य तु "अधीत्य, प्रेत्य" इति। ननु च बहिरङ्ग एकादेशो द्विपदाश्रयत्वात्(); अन्तरङ्गादेव षत्वतुकौ, एकपदाश्रयत्वात्(), तत्र "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यनया परिभाषयैवात्रासिद्धत्वं भविष्यतीति निरर्थकमिदं वचनम्()? एवं तर्हि सैव परिभाषाऽत्र प्रकरणे षत्वतुकोनियम्यते। तेनाक्षद्यूरित्यत्र बहिरङ्गलक्षणोऽप्यूडादेशोऽन्तरङ्गयणादेशे कत्र्तव्ये नासिद्धो भवति। "सम्प्रसारण" इत्यादि। सम्प्रसारणे ङौ इटि च य एकादेशस्तस्यासिद्धत्वपरतिषेदो वक्तव्यः। "ब्राह्हूषु" इति। ब्राह्आणं ह्वयतीति क्विप्(),

यजादित्वात्? सम्प्रसारणम्(), "सम्प्रसारणाच्च" ६।१।१९२ ति परपूर्वत्वम्(), "हलः" ६।४।२ इति दीर्घः।
सप्तमीबहुवचनम्()। "परिवीषु" इति वेञः परिपूर्वसय पूर्ववत्? क्विदादिषु कृतेषु रूपम्। "अपचेच्छत्रम्()" इति।
पचेर्लङ्युत्तमपुरुषैकवचनमिट्(), "कर्त्तरि शप्()" ३।१।६८ इति शप; "आदगुणः" ६।१।८४ इति गुणः॥
तत्त्व-बोधिनी
षत्वतुकोरसिद्धः १६०१, ६।१।८३

षत्वतुकोः। प्रासङ्गिकषत्वविषयमुदाहरति-- कोऽसिचदिति। को-- असिचदिति स्थिते "एङः पदान्तादती"ति पूर्वरूपमेकादेशः। तस्य "अन्तादिवच्चे"ति परादिवत्त्वेन "सात्पदाद्यो"रिति निषेधाऽभावादिणः परत्वेन षत्वं प्राप्तमेकादेशस्याऽसिद्धत्वे सति अकारेण व्यवधानादिणः परत्वाऽभावान्न भवति। प्रकृतं ल्यपि कार्यमुदाहरति-- अधीत्येति। विधायेति। दधातेर्हिर्न।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आत् ५।१ ९३ गुणः १।१ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ अचि ७।१ ७४ संहितायाम् ७।१ ७०

अर्थः॥

अचि पूर्वः यः अवर्णः, अवर्णात् च परः यः अच्, तयोः द्वयोः पूर्वपरयोः स्थाने एकः गुणादेशः भवति, संहितायां विषये।

उदाहरणम्॥

तव + इदम् = तवेदम्। खट्वा + इन्द्रः = खट्वेन्द्रः, मालेन्द्रः। तव + ईहते = तवेहते, खट्वेहते। तव + उदकम् = तवोदकम्, खट्वोदकम्। तव ऋश्यः = तवर्श्यः। तवल्कारः, खट्वल्कारः।
काशिका-वृत्तिः
आद्गुणः ६।१।८७

अचि इत्यनुवर्तते। अवर्नात् परो यो ऽच् च पूर्वो यो ऽवर्णः तयोः पूर्वपरयोः अवर्णाचोः स्थाने एको गुण आदेशो भवति। तवेदम्। खट्वेन्द्रः। मालेन्द्रः। तवेहते। खट्वेहते। तवोदकम्। खट्वोदकम्। तवर्श्यः। खट्वर्श्यः। तवल्कारः। खट्वल्कारः। ॡकारस्य स्थाने यो ऽने यो ऽण् तस्य लप्रत्वम् इष्यते।
लघु-सिद्धान्त-कौमुदी
आद्गुणः २७, ६।१।८४

अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्। उपेन्द्रः। गङ्गोदकम्॥
न्यासः
आद्रगुणः। , ६।१।८४

"तवल्कारः; खट्वल्कारः" इति। कथं पुनरत्र लपरत्वम्()? इत्याह--"ॡकारस्य स्थाने" इत्यादि। एतच्च "ॡकारऋकारयोः सवर्णसञ्ज्ञा वक्तव्या" (वा।३) इत्युपसंख्यानात्? "उरण्? रपरः" १।१।५० इत्यत्र रप्रत्याहारग्रहणाल्लभ्यते। उक्तं

ह्क्षरसमम्नाये--"हकारादिषु वर्णोष्वकार उच्चारणार्थः, लकारे त्वनुनासिक इत्संज्ञकः प्रतिज्ञायते" इति। तत्र रेफादारभ्य लणकारेण प्रत्याहारे सति लृकारस्य ऋकारग्रहणेन गृहीतस्य स्थानेऽण्? विधीयमानो लपरः सम्पद्यते॥

बाल-मनोरमा

आद्गुणः ७०, ६।१।८४

आद्गुणः। आदिति पञ्चमी नतु तपरकरणम्। एकः पूर्वपरयोरित्यधिकृतम्। तदाह-अवर्णादचीत्यादिना। उपेन्द्र इति। उप-इन्द्र इति स्थिते पकारादकारस्य तस्मादिकारस्य च पूर्वपरयोः कण्ठतालुस्थानकयोस्तथाविध एको गुण एकारः, आन्तरतम्यात्। अथ?प्रत्याहारेषु स्ववाच्यवाच्येषूक्तां लक्षणां स्मारयितुं दीर्घविषयोदाहरणमाह-रमेश इति। रमा-ईश इति स्थिते आकारस्य ईकारस्य च स्थाने पूर्ववदेको गुण एकारः। गङ्गोदकमिति। गङ्गा-उदकमिति स्थिते आकारस्य उकारस्य च कण्ठोष्टस्थानकयोस्तथाविध एको गुण ओकारः। कृष्णर्द्धिरित्यत्र कृष्ण ऋद्धिरिति स्थिते आद्गुण इति प्राप्तम्। अत्र अकार ऋकारश्चेति द्वौ स्थानिनौ। तयोरकार एकार ओकारश्चेति त्रयोऽपि गुणः प्रसक्ताः, अकारेण तेषां कण्ठस्थानसाम्याऽविशेषात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वृद्धिः १।१ ८९ एचि ७।१ ८६ आत् ५।१ ८४ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ संहितायाम् ७।१ ७०

अर्थः॥

अवर्णात् परः यः एच्, एचि च परतः यः अवर्णः, तयोः पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति संहितायां विषये॥ पूर्वस्य अपवादः अयम्।

उदाहरणम्॥

ब्रह्म + एडका = ब्रह्मैडका, खट्वैडका। ब्रह्म + ऐतिकायनः = ब्रह्मैतिकायनः, खट्वैतिकायनः। ब्रह्म + ओदनः = ब्रह्मौदनः, खट्वैदनः। ब्रह्म + औपगवः = ब्रह्मौपगवः, खट्वैपगवः॥

काशिका-वृत्तिः

वृद्धिरेचि ६।१।८८

आतिति वर्तते। अवर्णात् परो य एच्, एचि च पूर्वो यः अवर्णः, तयोः पूर्वपरयोः अवर्णैचोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणस्य अपवादः। ब्रहमैडका। खट्वैडका। ब्रह्मैतिकायनः। खट्वैतिकायनः। ब्रह्मौदनः। खट्वौदनः। ब्रह्मौपगवः। खट्वौपगवः।

लघु-सिद्धान्त-कौमुदी

वृद्धिरेचि ३३, ६।१।८५

आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम्॥

न्यासः

वृद्धिरेचि। , ६।१।८५

बाल-मनोरमा

वृद्धिरेचि ७३, ६।१।८५

वृद्धिरेचि। आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवत्र्तते। एकऋ पूर्वपरयोरित्यधिकृतम्। तदाह--आदेचीत्यादिना। गुणापवाद इति। आद्गुण इति प्राप्तावेतदारम्भादिति भावः। कृष्णैकत्वमिति। कृष्णस्य-एकत्वमिति षष्ठीसमासः। "पूरणगणे"ति निषेधस्त्वनित्य इति तत्रैव मूले वक्ष्यते। कृष्णेति सम्बुद्ध्यन्तं पृथक्पदमित्यन्ये। अत्र अकारस्य एकारस्य च कण्ठतालुस्थानकस्य स्थाने तथाविध ऐकार एकादेशः। गङ्गा-ओघ इति स्थिते आकारस्य ओकारस्य च कण्ठोष्ठस्थानकस्य स्थाने तथाविध औकारः। एवं देवै()आर्य कृष्णौत्कण्ठ()मित्यत्रापि। वस्तुतस्तु सङ्ख्यादिशब्दा न गुणवचना इति त्रैव वक्ष्यामः।

तत्त्व-बोधिनी

वृद्धिरेचि ६०, ६।१।८५

वृद्धिरेचि। पूर्वसूत्रादादित्यनुवर्तते। तदाह-आदेचीति। "कृष्णे"ति संबोधने पृथक् पदम्। एवं "देवे"त्यपि। इत्थं चात्र षष्ठीसमासत्वमभ्युपेत्य "पूरणगुणे"ति निषेधमाशङ्क्य "संज्ञाप्रमाणत्वा"दित्यादिनिर्देशेन "गुणेन निषेधोऽनित्यः" इति केषाचिद्व्याख्यानं नात्यन्तावश्यकमिति बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एत्येधत्यूठ्सु ७।३ वृद्धिः १।१ ८५ एचि ७।१ ८५ आत् ५।१ ८४ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ अचि ७।१ ७४ संहितायाम् ७।१ ७०

समासः॥

एतिश्च एधतिश्च ऊठ् च एत्येधत्यूठः, तेषु ॰ इतरेतरद्वन्द्वः।

अर्थः॥

अवर्णात् परः यः इण् गतौ इत्येतस्य एच्, एध वृद्धौ ऊठ् इत्येतयोश्च यः अच्, एतेषु च पूर्वः यः अवर्णः, तयोः पूर्वपरयोः अवर्णाचोः स्थाने वृद्धिः एकादेशः भवति, संहितायां विषये॥

उदाहरणम्॥

उपैति, उपैषि, उपैमि। उपैधते, प्रैधते। प्रष्ठोहः, प्रष्ठोहा, प्रष्ठौहे॥

काशिका-वृत्तिः

एत्येधत्यूठ्सु ६।१।८९

वृद्धिरेचि इति वर्तते, आतिति च। तदेततेज्ग्रहणम् एतेरेव विशेषणं , न पुनरेधतेः, अव्यभिचारात्, ऊठश्च सम्भवात्। इण् गतौ इत्येतस्मिन् धातौ एचि, एध वृद्धौ इत्येतस्मिनूठि च पूर्वं यदवर्णं ततश्च परो यो ऽच्, तयोः पूर्वपर्योः अवर्णाचोः स्थाने

वृद्धिरेकादेशो भवति। उपैति। उपैषि। उपैमि। उपैधते। प्रैधते। प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौहे। ऊठि आद्गुणापवादो वृद्धिर् विधीयते। एत्येधत्योः तु एङि पररूपापवादः। ओमाङोश्च ६।१।९२ इत्येतत् तु पररूपं न बाध्यते, येन न अप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इति, पुरस्तादपवादा अनन्तरान् विधीन् बधन्ते इति वा। तेन इह न भवति, उप आ इतः उपेतः इति। एचि इतेव, उप इतः उपेतः। अक्षादूहिन्यां वृद्धिर् वक्तव्या। अक्षौहिणी। स्वादीरेरिण्योर् वृद्धिर् वक्तव्या। स्वैरम्। स्वैरिणी। प्रादूढोढ्येषैष्येषु वृद्धिर् वक्तव्या। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः। ऋते च तृतीयासमासे ऽवर्णाद् वृद्धिर् वक्तव्या। सुखेन ऋतः सुखार्तः। दुःखेन ऋतः दुःखार्तः। ऋतः इति किम्? सुखेन इतः सुखेतः। तृतीया इति किम्? परमर्तः। समासे इति किम्? सुखेनर्तः। प्रवत्सतरकम्बलवसनानाम्र्णे वृद्धिर् वक्तव्या। प्र प्रार्णम्। वत्सतर वत्सतरार्णम्। कम्बल कम्बलार्णम्। वसन वसनार्णम्। ऋणदशाभ्यां वृद्धिर् वक्तव्या। ऋणार्णम्। दशार्णम्।

लघु-सिद्धान्त-कौमुदी

एत्येधत्यूठ्सु ३४, ६।१।८६

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। उपैति। उपैधते। प्रष्ठौहः। एजाद्योः किम्? उपेतः। मा भवान्प्रेदिधत्। (अक्षादूहन्यामुपिसंख्यानम्)। अक्षौहणी सेना। (प्रादूहोढोढ्येषैष्येषु)। प्रौहः। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः। (ऋते च तृतीयासमासे)। सुखेन ऋतः सुखार्तः। तृतीयेति किम्? परमर्तः। (प्रवत्सतरकम्बलवसनार्णदशानामृणे)। प्रार्णम्, वत्सतर्राणम्, इत्यादि॥

न्यासः

एत्येधत्यूदसु। , ६।१।८६

सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवति, तौ च सम्भवव्यभिचारावेतादेव धातौ स्तः, नेतरत्रेत्याह--"तदेतदेज्ग्रहणम्()" इत्यादि। "प्रष्ठौहः" इति। प्रष्ठं बहतीति "छन्दसि सहः" ३।२।६३ इति "वहश्च" ३।२।६४ इति ण्विप्रत्ययः "वाह ऊठ्()" (६।४।१३२) इत्यूठ्? सम्प्रसारणसंज्ञकः, "सम्प्रसारणाच्च" ६।१।१०४ इति परपूर्वत्वम्(), ततो वृद्धिः। "एत्येधत्योरेङि पररूपापवादः" इति वृद्धिर्विधीयत इति प्रकृतेन सम्बन्धः। अथ "ओमाङोश्च" ६।१।९२ इत्यस्याप्याङि पररूपापवादो वृद्धिः कस्मान्न भवति, नाप्राप्ते हि पररूप इयं वृद्धिरारभ्यत इति मा यथैङि पररूपं बाधते तथाङि पररूपमपि बाधेत, ततश्चेहापि स्यात्()--आ+इतः=एतः, उप+एतः=उपेतः? इत्यत आह--"ओमाङोश्चेत्येतत्()" इत्यादि। अत्रैव कारणमाह--"येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" (इति)। नाप्रप्त एङि पररूपे इयं वृद्धिरारभ्यत इति युक्तं यत्? तस्य बाधिका भवति। आङि पररूपे तु प्राप्ते चाप्राप्ते चैषा वृद्धिरारभ्यते। आ+इतः=एतः, प्र+एतः=प्रेतः, परेतः इत्यत्र प्राप्त आङि पररूपे तु प्राप्ते चाप्राप्ते चैषा वृद्धिरारभ्यते। आ+इतः=एतः, प्र+एतः=प्रेतः, परेतः इत्यत्र प्राप्त आङि पररूपे उप+एति=उपैतीति--अत्र त्वप्राप्ते। तस्मादेषा वृद्धिराङि पररूपत्वं न बाधते। "पुरस्तादपवादाः" इत्यादिना परीहारान्तरमाह--"पुरस्तादपवादा अनन्तरान्? विधीन्? बाधन्ते नोत्तरान्()" (व्या।प।९) इति, इयं च वृद्धिः पुरस्तादपवादः, अस्याश्()चैहि पररूपमेवानन्तरम्(), अतस्तदेव तया बाध्यते, नाङि पररूपम्(), तस्यान्तरत्वात्()। "अक्षात्()" इत्यादि। "वक्तव्या" इति। व्याख्येयेत्यर्थः। तत्रेदं व्याख्यानम्()--उत्तरसूत्रे चकारोऽधिकविधानार्थः। तेनाक्षशब्दादूहिनीशब्दे परतो वृद्धिर्भविष्यतीति। एवमुत्तरत्रापि वक्तव्यशब्दस्यार्थः, व्याख्यानमप्येवमेव वेदितव्यम्()। अक्षाणामूहः, सोऽस्यास्तीति मत्वर्थीयः इनिः। "ऋन्नेभ्यो ङीप्()" ४।१।५ इति ङीप्()--"अक्षौहिणो"। "स्वैरम्()" इति। "ईर गतौ" (धा।पा।१०१८) ईरणमीरः, भावे घञ्? स्वस्य ईरः स्वैरः। क्रियविशेषणत्वात्? स्वैरमिति वृत्तौ नपुंसकलिङ्गेन निर्देशः। क्रिया तु काचिदत्राध्याहऽत्तव्या। अथ वा स्व ईरो यस्य कुलस्य तत्? स्वैरं कुलम्()। नपुंसकस्य कुलादेरन्यपदार्थत्वान्नपुंसकलिङ्गत्वम्()। "स्वैरी" [स्वैरिणी--काशिका] इति। स्वमीरितुं शीलमस्येति "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति णिनिः। ऊढ, ऊढिरिति शब्दौ निष्ठाक्तिन्नन्तौ। "प्रैषः" इति। "इष गतिरहिसादानेषु"

(धा।पा।११२७) "इषु इच्छायाम्()" (धा।पा।१३५१) इति वा, अभ्यां प्रपूर्वाभ्यां यदा घञ्? तदा प्रैषः, यदा तु ण्यत्? तदा प्रैष्य इति। "सुखार्त्तः" इति। "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः॥

बाल-मनोरमा

एत्येधत्यूठसु ७४, ६।१।८६

एत्येधत्यूठसु। एतिश्च एधतिश्च ऊठ्चेति विग्रहः। एतीति एधतीति च "ईक्श्तिपौ धातुनिर्देशे" इति श्तिपा निर्देशः। इण् गताविति, एध वृद्धाविति च धातू विवक्षितौ। एचीत्यनुवर्तते। "यस्मिन्विधि"रिति तदादिग्रहणम्। एजादाविति लभ्यते। तच्च एत्येधत्योरेव विशेषणं, न तूठोऽसंभवात्। "एकः पूर्वपरयो"रित्यधिकृतम्। आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवर्तते। तदाह--अवर्णादित्यादिना। उपैतीति। इण्()धातोर्लट्। तिप् शप् लुक्। "सार्वधातुक" इति इकारस्य गुण एकारः। उप-एतीति स्थितेऽनेन वृद्धिः। उपैधत इति। एधधातोर्लट्। आत्मनेपदं तादेशः। शप्। "टित आत्मनेपदाना"मित्येत्वम्। उप एधते इति स्थितेऽनेन वृद्धिः। प्रष्ठौह इति। प्रष्ठं वहतीति प्रष्ठवाट्। "वहश्चे"ति ण्विः। "वेरपृक्तस्ये" इति वलोपः। "अत उपधाया" इति वृद्धिः। ततः शसि "वसोः सम्प्रसारण"मित्यतः संप्रसारणमित्यनुवृत्तौ "वाह ऊठ्" इति संप्रसारण संज्ञकस्य ऊठः "सम्प्रसारणाच्चे"ति पूर्वरूपम्। प्रष्ठ ऊहिति स्थितेऽनेन वृद्धिरौकारः। नन्वत्र एत्येधतिग्रहणं व्यर्थम्, उपैति उपैधत इत्यत्र वृद्धिरैचीत्यनेनैव वृद्धिसंभवात्। ऊठग्रहणमपि व्यर्थं, वृद्धिरेचीत्य#एव सिद्धेः। वाह ऊठग्रहणानार्थक्यं, संप्रासरणेन कृतत्वात्। गुणस्तु प्रत्ययलक्षणत्वात्। एज्ग्रहणाद्वृद्धिः" इति वार्तिककृता तथैवोक्तत्वात्। ऊठ्ग्रहणं न कर्तव्यम्। "वाह"इत्येव सूत्पमस्तु। भस्य वाहः संप्रसारणं स्यादिति संप्रसारणमेव विधीयतां, ततश्च वकारस्य उकारे संप्रसारणे पूर्वरूपे सति उहिति स्थिते प्रत्ययलक्षणमाश्रित्य ण्विप्रत्यये परे उकारस्य लघूपधगुणे ओकारे कृते प्रष्ठ-ओहिति स्थिते वृद्धिरेचीति वृद्धिरिति वार्तिकार्थः। तस्मादेत्येधत्यूठसु इति सूत्रं व्यर्थमित्यत आह--पररूपगुणापवाद इति। एत्येधत्योरेङि पररूपमित्यस्य, ऊठि आद्गुण इत्यस्यायमपवाद इत्यर्थः। यदि हि बाहः सम्प्रसारणमेव विधीयेत न तूठ्, तर्हि वस्य संप्रसारणेन उत्वे कृते पूर्वरूपे सति तस्य लघूपधगुणो न भवति तस्मिन् कर्तव्ये बहिर्भूतशस्प्रत्ययापेक्षभसंज्ञापेक्षसंप्रसारणाश्रित पूर्वरूपस्य बहिरङ्गतयाऽत्राऽसिद्धत्वात्। तथाच गुणाऽभावे प्रष्ठ-उ-आहिति स्थिते पूर्वरूपे प्रष्ठ-उह्? इति स्थिते "आद्गुण" इति गुणे ओकारे "प्रष्ठोह" इति स्यात्। संप्रसारणसंज्ञकस्य ऊठो विधौ तु प्रष्ठ ऊ आहिति स्थिते पूर्वरूपे लघूपधगुणस्याऽप्रसक्ततया ओकारस्याऽभावादूकारस्यैव सत्त्वाद्वृद्धिरेचीत्यस्याऽप्रसक्तेराद्गुण इति प्राप्ते एत्येधत्यूठ्()स्विति वृद्धौ "प्रष्ठौह" इति सिध्यतीत्यूठ्ग्रहणमावश्यकमिति वाहौउठ सूत्रे समुदाहृतवार्तिकं भाष्ये दूषितमित्यास्तां तावत्। उपेत इति। इण्धातोर्लट् तस्? शप् लुक्। "सार्वधातुकमपि "दिति तसो ङित्त्वात्तास्मिन् परत इकारस्य न गुणः। अत्र इण्()धातोरेजादित्वाऽभावात्तस्मिन्परतो न वृद्धिः। मा भवान्प्रेदिधदिति। एधधातोर्णिच्। लुङ् तिप्। "नित्यं ङितः" इति इकारलोपः। "णिश्रिद्रुरुआउभ्य" इति चङ्()। "णौ चङ्युपधाया ह्रस्वः"। "चङी"त्यजादेर्द्वितीयस्य धिशब्दस्य द्वित्वम्। "अभ्यासे चर्चे"ति जश्त्वम्। "न माङ्योग" इत्याडभावः। भवच्छब्दयोहगात्प्रथमपुरुषः। तच्च तिङन्ताधिकारे स्पष्टीभविष्यति। प्र-इदिधदिति स्थिते एत्येधतीति न वृद्धिः, एधधातोरेजादित्वाऽभावात्। तत्र एजादित्वविशेषणाऽभावे तु इहापि वृद्धिः स्यात्। न च णौ चङीत्येकारस्य ह्रस्वेन इकारे सति नायमेधधातुरिति वाच्यम्, एकदेशविकृतस्यानन्यत्वात्। अत्र माङं विहाय प्रेदिधदिति न प्रत्युदाहृतम्। तथा सति आडजादीनामित्याडागमे आटश्चेति वृद्धौ ऐदिधदिति स्यात्। तत्र एधतेरेजादित्वाद्वृद्धिरिष्टैव। भवच्छब्दस्तु चिन्त्यप्रयोजनः। ननु आ इहि, आद्गुणः, एहि, अव-एहीति स्थिते एकादेशस्य गुणस्य एकारस्य अन्तादिवच्चेति परादिवद्भावेन, "आद्यन्तवदेकस्मि"न्निति व्यपदेशिवद्भावेन च , च इण्()धातोरेजादित्वात्तस्मिन् परे "एङिपररूप"मिति पररूपं बाधित्वा एत्येधत्यत्यूठ्()स्विति वृद्धौ "अवैही"ति इष्टं न स्यात्। न च ओमाङोश्चेति पररूपेण तन्निर्वाहः शङ्क्यः। एत्येधतीति वृद्धिर्हि यथा एङि पररूपमित्यस्यापवादस्तथा ओमाङित्यस्याप्यपवादः;येन नाप्राप्तिन्यायसाम्यादित्यत

आह--पुरस्तादिति। "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा"निति न्यायः। पूर्वपठिता अपवादा अव्यवहितानेवोत्तररान्विधीन्बाधन्ते न तु व्यवहितानित्यर्थः। प्रकृते च एत्येधत्यूठ्सु इत्युत्तरं कानिचित् सूत्राणि पठित्वा "एङि पररूप"मिति पठित्वा पुनः कतिपयसूत्राणि पठित्वा पुनः ओमाङोश्चेति पठितम्। ततश्चोक्तन्यायेन "एत्येधती"ति वृद्ध्या "एङि पररूप"मित्येव बाध्यते न त्वोमाङोश्चेति पररूपमपीति भावः। वस्तुतस्तु एत्येधतीति वृद्धिरोमाङोश्चात्यस्यापवाद एव न भवति, उपैतीत्यादावप्राप्तेऽपि तस्मिन्नेत्येधतीति वृद्धेरारम्भात्। अतः पुरस्तादपवादा" इति न्यायस्य नायं विषयः। ततस्च अव-एहीत्यत्र एत्येधतीति बाधित्वा परत्वादोमाङोश्चेति पररूपं न्याय्यमित्येव वक्तुमुचितम्। अत एव भाष्ये -- नाप्राप्ते एङि पररूपे एत्येधतीति बाधित्वा परत्वादोमाहोश्चेति पररूपं न्याय्यमित्येव वक्तुमुचितम्। अत एव भाष्ये--"नाप्राप्ते एङि पररूपे एत्येधतीति वृद्धिरारभ्यमाणा भवति तस्यापवादः। आङि पररूपे तु प्राप्ते चाऽप्राप्ते च आरभ्यमाणा वृद्धिर्न तदपवाद" इति स्पष्टमेवोक्तम्। यत्तु भाष्ये पक्षान्तरमुक्तम्--"अथवा पुरस्तादपवादा अनन्तरान्विधीन् बाधन्त इत्येवमेत्येधतीति वृद्धिरेङि पररूपमेव बाधते न त्वोमाङोश्चेति पररूपमपी"ति। तत्तु एत्येधतीति वृद्धिरेङि पररूपमोमाङोश्चेति सूत्रद्वयापवादत्वाब्युपगमवादमात्रमाश्रित्य, बाध्यसामान्याचिन्तामाश्रित्य वेत्यलं बहुना।

अक्षादूहिन्यामुपसंख्यानम्। आदिति अचीति वृद्धिरिति चानुवर्तते। "एकः पूर्वपरयो"रिति च। "ऊह वितर्के"। ऊहनमूहः, सोऽस्या अस्तीत्यूहिनी। अक्षशब्दादूहिनीशब्दे परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः। अक्षौहिणीति मत्वर्थीय इनिः। नान्तत्वान्ङीप्। अक्षाणामूहिनीति विग्रहः। परिमाणविशेषविशिष्टा सेना अक्षोहिणी। "पूर्वपदात्संज्ञाया"मिति णत्वम्। अक्ष--ऊहिनीति स्थिते गुण प्राप्तेऽनेन वार्तिकेन वृद्धिः।

स्वादीरेरिणोः। स्वशब्दादीरशब्दे ईरिन्शब्दे च परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः। स्वैर इति ईरगतौ। भावे घञ्। स्वेन च्छन्देन ईर इति विग्रहः। "कर्तृकरणे कृता बहुल"मिति समासः। स्व--ईर इति स्थिते गुणेप्राप्तेऽनेन वार्तिकेन वृद्धिः। स्वेनेरितुमिति। स्वेनच्छन्देन ईरितुं संचरितुं शीलमस्येत्यर्थे "सुप्यजाता"विति णिनिः। स्वच्छन्दचारीत्यर्थः। उपपदसमासः। स्व--ईरिन्निति स्थिते गुणे प्राप्तेऽनेन वृद्धिः।

प्रादूहोढोढ()एषेष्येषु। प्रेत्युपसर्गात् "ऊह" "ऊढ" "एष""एष्य" एतेषु परेषु पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः। प्रौह इति। ऊहवितर्के। भावे घञ्। गतिसमासः। प्र-ऊह इति स्थितेऽनेन वार्तिकेन वृद्धिः प्रौढ इति। बह प्रापणे। क्तः। "वचिस्वपी"ति सम्प्रसारणम्। पूर्वरूपम्। "हो ढ" इति ढत्वम्। झषस्तथोरिति धत्वम्। ष्टुत्वम्। "ढो ढे लोपः" "ढ्रलोप" इति दीर्घः। प्र-ऊढ इत,#इ स्थिते गुणे प्राप्तेऽनेन वृद्धिः। ननु प्रोढवानित्यत्रापि वहधातोः क्तवतुप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु प्र-ऊढवदिति स्थिते प्रादूहोढेति वृद्धि स्यात्, तत्रापि ऊढशब्दस्य परत्वेन श्रवणादित्यत आह--अर्थवदिति। अर्थवतः शब्दस्य ग्रहणसम्भवेऽनर्थकस्य शब्दस्य ग्रहणं न भवतीत्यर्थः। इयं परिभाषा"स्वं रूप" मित्यत्र रूपग्रहणात्सिद्धेति तत्रैव सूत्रे भाष्ये स्पष्टम्। तेनेति। अर्थवत एव ग्रहणनियमेनेत्यर्थः। क्तान्तमेवेति। क्तप्रत्ययस्तावदर्थवान्, भावकर्मणोस्तद्विधानात्। क्तवतुप्रत्ययस्तु कर्तरि विहितः। अतस्तदेकदेशस्य क्तस्यानर्थकत्वात्प्रादूहोढेत्यत्र ऊढग्रहणेन ग्रहणं न भवति, अतस्तस्मिन्, परे वृद्धिर्न भवति, किन्त#उ गुण एवेत्यर्थः। प्रौढिरिति। वहधातोः क्तिन्। ढत्वधत्वष्टुत्वढलोपदीर्घाः। प्र-ऊढिरिति स्थिते गुणं बाधित्वाऽनेन वृद्दिः। इष-इच्छायामित्यादि। गणत्रयेऽपि ह्रस्वोपधा एव एते धातवः। तेषामिति निर्धारणे षष्ठी। तेषां मद्येऽन्यतमाद्व्वञि ण्यति च सति लघूपधगुणे कृते एष एष्य इति च रूपे सिद्धे। प्र एष प्र एष्य इति स्थिते एङि पररूपं बाधित्वाऽनेन वृद्धिः। #एतेन वृद्धिरेचीत्यनेन एवैषैष्यग्रहणयोर्गतार्थत्वं निरस्तम्। नन्वेवं सति प्रेष इति प्रेष्य इति च कथं प्रयोग इत्यत आह--यस्त्विति। तयोर्दीर्घोपधत्वेन लङूपधगुणाऽभावे ईष ईष्य इति च सिध्यति। तयोस्तु एतद्वार्तिके ग्रहणाऽभावात्तयोः

परतो वृद्ध्यभावे "आद्गुण" इति गुणे प्रेषः प्रेष्य इत्यपि रूपद्वयमस्तीत्यर्थः। एषशब्दसाहचर्यादेष्यशब्दोऽपि कृदन्त एव गृह्यते। तेन तिङन्ते ल्यबन्ते च न वृद्धिः। अग्नये प्रेष्य दूतम्, प्रेष्य गतः।

ऋते च तृतीयासमासे। तृतीया समासेऽकारादृतशब्दे परे पूर्वपरयोरचोर्वृद्धिः स्यादित्यर्थः। सुखेन ऋत इति विग्रहप्रदर्शनम्। ऋ गतौ। गत्यर्थाकर्मकेति कर्तरि क्तः। प्रकृत्यादित्वात्तृतीया। सुप्सुपेति समासः। सुख-ऋत इति स्थिते गुणे प्राप्तेऽनेन वृद्धिराकारः। रपरत्वे सुखार्त इति रूपम्। समसग्रहणस्योदाह्मतविग्रहवाक्यमेव प्रत्युदाहरणं दर्शितप्रायमिति तृतीयेत्यंशस्य प्रयोजनं पृच्छति--तृतीयेति किमिति। परमर्त इति। परमश्चासौ ऋतश्चेति कर्मधारयः। आद्गुणः।

प्रवत्सतर पञ्चम्यर्थे षष्ठी। "प्र""वत्सतर""कम्बल""वसन""ऋण" "दश" एतेषामृणशब्दे परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः। प्रार्णामिति। प्रगतमृणमिति विग्रहे, "प्रादयो गताद्यर्थे प्रथमये"ति गतिसमासः। प्र-ऋणिमिति स्थिते गुणं बाधित्वाऽनेन वार्तिकेन वृद्धिराकारः। रपरत्वम्। वत्सतरः=शिशुवत्सः, तस्य ऋणमिति विग्रहः। वत्सतरमधिकृत्य वा तद्ग्रहणार्थं वा यदृणं गृह्यते तद्वत्सतरार्णम्। एवमग्रेऽपि द्रष्टव्यम्। आदिशब्देन कम्बलार्णं वसनार्णं दशामृणार्णमिति च गृह्यते। सर्वत्र षष्ठीसमासः। ऋणशब्दस्य ऋणशब्दे परे कथमन्वय इत्यत आह-ऋणस्येति। देशनदीविशेषयोः कथं दशार्णशब्दप्रवृत्तिरित्यत आह--ऋणशब्द इति। तथा च दश ऋणानि दुर्गभूमयो यस्मिन् देशे स दशार्णो देशविशेषः। दशविधानि ऋणानि जलानि यस्यां नद्यां सा दशार्णेति विग्रहः।

तत्त्व-बोधिनी

एत्येधत्यूठसु ६१, ६।१।८६

एत्येधत्यूठसु। अत्र "एची"त्यनुवर्तते। तच्च एत्येधत्योर्विशेषणं न तूठः, असंभवात्। "आद्गुणः" इत्यत आदित्यनुवर्तत एवाऽतो व्याचष्टे-अवर्णादेजाद्योरिति। प्रष्ठौह इति। प्रष्ठं वहतीति प्रष्ठवाट्। "वहश्चे"ति ण्विः। ततः शसि "वाह ऊठ्"। गुणापवादतयाऽनेन वृद्धिः। प्रेदिधदिति। प्रपूर्वस्यैधतेण्र्यन्तस्य लुङि रूपम्। "न माङ्योगे" इत्याडागमाऽभावः। पुरस्तादिति। "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा"निति न्यायेनेत्यर्थः। अक्षादिति। "आ"दित्यनुवर्तते, "अची"ति च। तेन पूर्वपरयोर्वर्णयोरेव भवति। एवमन्यत्राप्यूह्यम्।

अक्षादूहिन्यामुपसङ्ख्यानम्। अक्षौहिणीति। ऊहः=समूहः, सोऽस्त्यस्याः सा ऊहिनी। अक्षाणामूहिनीति विग्रहः। परिमाणविशेषविशिष्टा सेना अक्षौहिणी। "पूर्वपदात्संज्ञायाम्-" इति णत्वम्। "अक्षणा"मित्यस्य "ऊह"-शब्देन समासे तत इनौ तु "अक्षौहिणी"त्येव भवति, न तु तत्र वृद्धिः, अन्तरङ्गेण गुणेन बाधात्। अपवादभूताया अपि वृद्धेरूहिनीशब्देन समासे चरितार्थत्वात्। यथोक्तं प्राक् "यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गभ्यां बाध्यते" इति।

स्वादीरेरिणोः। "ईरेरिण्योः इति क्वाचित्कोऽपपाठः। "स्वैरी"ति णिन्यन्तस्य अस्त्रियां वृध्यभावप्रसङ्गात्। "ईरि"न्ग्रहणस्य फलमाह-स्वेनेरितुमिति। यदा त्वी(रणमी)र इति घञन्तेन स्वशब्दस्य समासे "स्वादीरे" इति वृद्धौ कृतायां मत्वर्थीय इनिः, यदा वा मत्वर्थीयेनिप्रत्ययान्तेन ईरिन्शब्देन स्वशब्दस्य समासस्तदापि तदेकदेश ईरशब्दोऽस्त्येवेति पृथगीरिन्ग्रहणं व्यर्थं स्यादिति भावः।स्वैरीति। "सुप्यजातौ" इति णिनिः। उपपदसमासः। स्वैरिणीति। ङीपः प्राग्भागमीरिन्शब्दमादाय वृद्धिः। केचित्तु लिङ्गविशिष्टपरिभाषयाऽत्र वृद्धिरित्याहुस्तन्निष्फलमिति। भावः।

नानर्थकस्येति। उपस्थितस्याऽर्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागाऽयोगादिति भावः। प्रैष्य इति।

एषसाहचर्यादेष्योऽप्यनव्ययं गृह्नते; तेन ण्यन्तादिषेः त्क्वो ल्यपि पररूपमेव, न तु वृद्धिः। प्रेष्य गतः।
लघूपधगुणमाशङ्क्याह-तयोर्दीर्घोपधत्वादिति।

प्रवत्सतरेति। इह केचिद्वत्सशब्दं वत्सरशब्दं च प्रक्षिपन्ति, तद्भाष्यादावदृष्टत्वादुपेक्ष्यम्। वत्सतरार्णमिति।
तकारमकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि। रेफात्परस्य तु "अचो रहाभ्या"मिति द्वित्वे "यणो मयः" इति वचनान्तरेण
पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश। "खयः शरः" इति सकारद्वित्वे चतुर्विंशतिः(२४)। न चेह "शरोऽची"ति
द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात्। अतएव "खयः शरः" इति वार्तिकस्य "वत्स्सरः" "अप्स्सराः"
इत्युदाहरणं भाष्ये दत्तम्। न च वदेः सरप्रत्यये परतश्चर्त्वे कृते तस्याऽसिद्धत्वात्सस्य खयः परत्वं नेति शङ्क्यम् ;
"पूर्वत्रासिद्धीयमद्वित्वे" इत्युक्तेः। अतएव मनोरमायां "षट् सन्तः" इत्यत्र टकारात्परस्य सस्य द्वित्वं स्वीकृतमिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

आटश् च ६।१।९०

एचि इति निवृत्तम्। अचि इत्यनुवर्तते। आटः परो यो अच्, अचि च पूर्वो य आट्, तयोः पूर्वपरयोः आडचोः स्थाने
वृद्धिरेकादेशो भवति। ऐक्षिष्ट। ऐक्षत। ऐक्षिष्यत। औभीत्। आर्ध्नोन्। औब्जीत्। चकारो ऽधिकविधानार्थः, उसि ओमाङोश्च
६।१।९२ इति पररूपबाधनार्थः। औस्रीयत्। औङ्कारीयत्। आ ऊढा ओढा, तामैच्छतौढीयत्।

लघु-सिद्धान्त-कौमुदी

आटश्च १९८, ६।१।८७

आटोऽचि परे वृद्धिरेकादेशः। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयसीनाम्॥

न्यासः

आटश्च। , ६।१।८७

"एक्षत" इति। "ईक्ष दर्शने" (धा।पा।६१०) इति लङ्()। "ऐक्षिष्ट" इति। लुङ्()। "ऐक्षिष्यत" इति। लृङ्()। "औम्भीत्()"
इति। "उभ उम्भ पूरणे" (धा।पा।१३१९,१३२०) इति लुङ्(), इट्(), अस्तिसिचोऽयुक्ते" ७।३।९६ इतीट्()। "ईटि" ८।२।२८
इति सिचो लोपः। "औब्जीत्()" इति। "उब्ज आर्जवे" (धा।पा।१३०३)। "आर्ध्नोत्()" इति। "ऋधु वृद्धौ" (धा।पा।१२७१)
इति लङ्, "स्वादिभ्यः श्नुः" ३।१।७३ इति श्नुः। "चकारोऽधिकविधानार्थः" इति। न तु वृद्धेरनुकर्षणार्थः; तदनुवृत्तेः
स्वरितत्वादेव सिद्धत्वादित्यभिप्रायः। अधिकविधानार्थ इत्यस्यार्थं वाक्यान्तरेण त्रिस्पष्टीकर्त्तुमाह--"उस्योमाङोश्चेति
पररूपबाधनार्थः" इति। उसिओमि आङि च यत्? पररूपं प्राप्नोति तद्बाधनार्थ इत्यर्थः। चकारेम हि द्विर्वृद्धिविधानं
विज्ञापयति। तत्र यद्द्वितीयं विधानं तद्? बाधकबाधनार्थं भवति। तेन "उस्यपदान्तात्()" ६।१।९३ इति यत्पररूपं
प्राप्नोति, यच्च "ओमाङोश्च" ६।१।९२ इति तदपि बाधित्वा वृद्धिरेव भवति। "औरुआईयत्()" "औङ्कारीयत्()" इति।
उरुआशब्दादोङ्कारशब्दाच्च "सुप आत्मनः क्यच्()" ३।१।८, "क्यचि च" ७।४।३३ इतीत्वम्(), क्यजन्ताल्लुङ्, आट्?
"उस्यपदान्तात्()" ६।१।९३ इति पररूपे बाधके प्राप्ते चकारस्याधिकविधानार्थत्वाद्वृद्धिरेव भवति। "औढीयत्()" इति।
ओढाशब्दात्? क्यजन्तल्लुङ्, आडागमे कृते "ओमाङोश्च" ६।१।९२ इति पररूपे बाधके प्राप्ते
चकारस्याधिकविधानार्थत्वाद्()वृद्धिरेव भवति॥

बाल-मनोरमा

आटश्च २६७, ६।१।८७

टित्वादाद्यवयवः। बहुश्रेयसी आ ए इति स्थिते-आटश्चा। "इकोयणची"त्यतः अचीति "वृद्धिरेचि" इत्यतो वृद्धिरिति चानुवर्तते। "एकः पूर्वपरयो"रिति चाधिकृतम्। तदाह-आटोऽचीत्यादिना। बहुश्रेयस्यै इति। "बहुश्रेयसी आ ए" इति स्थिते "आटश्चे"ति वृद्धौ यणादेशे च रूपमिति भावः। यद्यपि "वृद्धिरेची"त्येव सिद्धं तथापि ऐक्षतेत्याद्यर्थ"माटश्चे"ति सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। बहुश्रेयस्या इति। ङसि ङसोर्बहुश्रेयसी आ अस् इति स्थिते "आटश्चे"ति वृद्धावाकारे यणि रूपमिति भावः। अत्रापि सवर्णदीर्घेण सिद्धम्। न्याय्यत्वादाटश्चेति वृद्धिः। नद्यन्तात्परत्वादिति। श्रेयसीशब्दस्य ईकारान्तनित्यस्त्रीलिङ्गतया नदीत्वेन बहुश्रेयत्वात्। सवर्णदीर्घे प्राप्ते-।

तत्त्व-बोधिनी

आटश्च २२९, ६।१।८७

आटश्च। यद्यपि इह ङयि "वृद्धिरेची"त्येव सिद्धं, ङे सिङ्सोर्ङेरामि च सवर्णदीर्घेण, तथाप्यैन्दिददित्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। "अजादीनामटा सिद्धम्" "आडजादीनाम्िति सूत्रं मास्तु इति वदतो वार्तिककारस्य मतेतु "अटश्चे"त्येव सूत्रमिति बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ उपसर्गात् ५।१ ६।२।९१ ऋति ७।१ धातौ ७।१ ६।२।९१ वृद्धिः १।१ ८९ आत् ५।१ ८४ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ अचि ७।१ ७४ संहितायाम् ७।१ ७०

अर्थः॥

अवर्णान्तात् उपसर्गात् ऋकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशः भवति, संहितायां विषये॥ {आद् गुणः(६।१।८४)} इत्येतस्य अपवादः अयम्।

उदाहरणम्॥

उप + ऋच्छति = उपार्च्छति। प्र + ऋच्छति = प्रार्च्छति। उप + ऋध्नोति = उपार्ध्नोति॥

काशिका-वृत्तिः

उपसर्गादृति धातौ ६।१।९१

आतित्येव। अवर्णान्तादुपसर्गातृकारादौ धातौ परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशो भवति। आद्गुणापवादः। उपार्च्छति। प्रार्च्छति। उपार्ध्नोति। उपसर्गातिति किम्? खट्वर्च्छति। मालर्च्छति। प्रगता ऋ च्छका अस्माद् देशात् प्रर्च्छको देशः। यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसंज्ञकाः इति। ऋति इति किम्? उप इतः उपेतः। तपरकरणम् किम्? उप ऋकरीयति उपर्कारीयति। वा सुप्यापिशलेः ६।१।८९ इति विकल्पः स्यात्। उपसर्गग्रहणादेव धातुग्रहणे सिद्धे धातुग्रहणं शाकलनिवृत्त्यर्थम्। ऋत्यकः ६।१।१२४ इति हि शाकल्यस्य प्रक्रितभावः प्राप्नोति।

लघु-सिद्धान्त-कौमुदी

उपसर्गादृति धातौ ३७, ६।१।८८

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। प्रार्च्छति॥

न्यासः

उपसर्गादृति धातौ। , ६।१।८८

"उपार्च्छति" इति। "ऋच्छ गतन्द्रियप्रलयमूर्तिभावेषु" (धा।प।१२९६) "प्रगता ऋच्छका अस्माद्देशात्? प्रच्छको देशः" इति। अत्र "यं प्रति क्रियायुक्ता प्रादयस्तं प्रत गत्यपसर्गसंज्ञका भवन्ति" इति गमिं प्रति प्रशब्दो गत्युपसर्गसंज्ञकः, न ऋच्छतिं परतीति भवति प्रत्युदाहरणमिदम्()। "वा सुप्यापिशलेरिति विकल्पः स्यत्" इति। एतेनोत्तरार्थतां तपरकरणस्य दर्शयति। अथ धातग्रहणं किमर्थम्(), यावत सम्बन्धिशब्दा हि नियतं प्रतयोगिनमुपस्थापयन्ति, तद्यथा--पुत्रादशब्दाः, उपसर्गश्चायं धात्वपेक्षत्वात्? सम्बन्धिशब्दः तत्रोपसर्गग्रहणादेव धातुग्रहणं सिध्यति? अत आह--"उपसर्गग्रहणादेव" इत्यादि। यदि धातुग्रहणं न क्रयेत, तदा परार्च्छतीत्यत्र "ऋत्यकः" (६।१।१२८) इति परत्वात्? शाकल्यस्य मतेन परकृतवद्भावः ल्यात्()। तस्मात् तस्य शाकल्यस्य प्रकृतिवद्भावस्य निवृत्त्यर्थं धातुग्रहणं क्रियते। कथं पुनः क्रियमाणे धातग्रहणे शाकल्यस्य प्रकृतवद्भावनिवृत्तिर्लभ्यते? योगविभागकारणात्()। सति हि धातुग्रहणे योगविभागः क्रियते--उपसर्गावृत्ति वृद्धिर्भवतीति; ततो धाताविति, इहोपसर्गादिति वत्र्तते। ततो द्वितीयो योगो बाधकबाधनार्थो विज्ञायते। अथ "उपसर्गाच्छन्दसि धात्वर्थे" ५।१।११७ इत्यत्र यथा प्राद्युपलक्षणार्थमुपसर्गग्रहणं विज्ञायते, तथेहापि कस्मान्न विज्ञायेत? अशक्यत्वात्()। "उपसर्गाच्छन्दसि धात्वर्थे" इत्यत्र हि धातोरुपस्थानं न सम्भवतीति युक्तं प्राद्युपलक्षणार्थमुपसर्गग्रहणम्()। इह हि धातोरुपस्थानं सम्भवतीत्ययुक्तम्()॥

बाल-मनोरमा

उपसर्गादृति धातौ ७५, ६।१।८८

उपसर्गादृति। आद्गुण इत्यत आदिति पञ्चम्यन्तमनुवर्तते। तच्च उपसर्गाविशेषणम्, अतस्तदन्तविधिः। अकारान्तादिति लभ्यते। ऋतीति धातोर्विशेषणम्। यस्मिन्विधिरिति तदादिविधिः। ऋकारादाविति लभ्यते। वृद्धिरेचीत्यतो वृद्धिरिति चानुवर्तते। "एकः पूर्वपरयो"रित्यधिकृतम्। तदाह--अवर्णान्तादित्यादिना। एकादेश इति। "पूर्वपरयोरचो"रिति शेषः। अन्यथा उपसर्गस्य धातोश्च सर्वादेशः स्यात्। उपार्च्छति प्रार्च्छतीति। उप ऋच्छतिं प्रऋच्छति इति स्थिते गुणे प्राप्तेऽनेन वृद्धी-रपरत्वम्।

तत्त्व-बोधिनी

उपसर्गादृति धातौ ६२, ६।१।८८

उपसर्गादृति। उपसर्गात्किम्?, खट्वर्च्छति। ऋति किम्?, उपेतः। तपरकरणमुत्तरार्थम्। इह दीर्घर्कारादेर्धातोरसंभवेन व्यावर्त्त्याऽलाभात्। धातौ किम्?, उपर्कारः। नन्वत्र "उपेत्युपसर्ग एव न भवति, क्रियायोग एवोपसर्गत्वात्। उपगत ऋकार इति विगृह्र क्रियायोगत्वसंपादनेऽपि "यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञः" इति ऋकारं प्रति अनुपसर्ग एव। तथा चाऽकृतेऽपि धातुग्रहणे ऋकारादिधातावेव वृद्धिर्भविष्त्यनुपसर्गेण धातोराक्षेपात्, नत्वत्रेति चेत्सत्यम्; अतएव "योगविभागेन पुनर्विधानार्थ"मित्यनुपदं वक्ष्यतीति न काप्यनुपपत्तिः।

---

सूत्रम्

काशिका-वृत्तिः

वा सुप्यापिशलेः ६।१।९२

आतित्येव, उपसर्गातृति धातौ इति च। सुबन्तावयवे धातौ ऋकारादौ परतः अवर्णान्तातुपसर्गात् पूर्वपरयोः आपिशलेराचार्यस्य मतेन वा वृद्धिरेकादेशो भवति। उपर्शभीयति, उपार्षभीयति। उपल्कारीयति, उपाल्कारीयति। ऋकारलृकारयोः सावर्ण्यविधिः इति ऋति इति लृकारो ऽपि गृह्यते। आपिशलिग्रहणं पूजर्थम्, वा इति ह्युच्यते एव।

न्यासः

वा सप्यापशलेः। , ६।१।८९

धातावित्यनुवर्तते, सुपीति चोच्यते, न च सुबन्तो धातुरस्ति, तत्र समर्थ्याद्धात्वेकदेशे वत्र्तमानं सुपत्येतदिह विशेषणं विज्ञायते, इत्याह--"सुबन्तावयवे धातौ" इत्यादि। "उपाल्कारीयति" इति। कथं पुनरृतीतयुच्यमाने लुकारे वृद्धिः प्रवत्र्तते? इत्याह--"ऋकारलृकारयोः" इत्यादि। ऋकारलृकारयोः सवर्णसंज्ञा विहितेति ऋकारो गृह्रमाण लृकारमपि ग्राहयतीति तत्रापि वृद्धिर्भवति। "आपिशलिग्रहणं पूजार्थम्()" इति। अथ विकल्पार्थं कस्मान्न भवति? इत्याह---"वेत्युच्यत एव" इति। यद्यप्याचार्यग्रहणेनैव पूजा, विकल्पश्चोभयं सम्पद्यते; तथाप्याचार्यग्रहणस्य प्राधान्येन पूजां ख्यापयितुं वाग्रहणं कृतमिति भावः॥

बाल-मनोरमा

वा सुप्यापिशलेः ७८, ६।१।८९

न भवतीति। परोऽपि प्रकृतिभावः पुनर्विधानसामथ्र्याद्बाध्यत इत्यर्थः। वा सुपि। उपसर्गादृति धाताविति पूर्वसूत्रमनुवर्तते। आद्गुण #इत्यतो वृद्धिरेचीत्यतश्च आदिति वृद्धिरिति चानुवर्तते। आदित्यनेन उपसर्गादिति विशेष्यत इति तदन्तविधिः। प्रत्ययग्रहणपरिभाषया सुप्शब्देन सुबन्तप्रकृतिको धातुर्विवक्षितः। एकः पूर्वपरयोरिति चाधिकृतम्। तदाह--अवर्णान्तादित्यादिना। सुब्धाताविति। सुबन्तप्रकृतकधातौ परत इत्यर्थः, सुबन्तस्य धातोरसंभवात्। एकादेश इति। "पूर्वपरयोरचो"रिति शेषः। यद्यपि ऋच्छ गतावित्यादीनां क्विपि धातुत्वं सुबन्तत्वं च संभवति, तथापि तुस्यास्यसूत्रभाष्ये उपार्कारीयतीत्यादेरेतदुदाहरणत्वेन भाष्ये उक्तत्वात्सुबन्तप्रकृतिके इत्येव व्याख्यानमुचितम्।

ननु वाग्रहणादेव सिद्धे आपिशालिग्रहणं व्यर्थमित्यत आह--आपिशलिग्रहणमिति। आपिशलेराचार्यस्याप्ययमर्थः संमत इत्यादेर्लाभार्थमित्यर्थः। प्रार्षभीयतीति। ऋषभमात्मन इच्छतीत्यर्थे "सुप आत्मनः क्यच्""सनाद्यन्ताः" इति धातुत्वम्। "सुपो धातुप्रातिपदिकयोः" इति सुपो लुक्। "क्यचि चे"ति ईत्वम्। लट्, तिप्, शप्। पररूपम्। प्र ऋषभीयति इति स्थितेऽनेन वृद्धिराकारः। रपत्वम्। प्रर्षभीयतीति। वृद्ध्यभावपक्षे आद्गुणः, रपरत्वम्। सावण्र्यादिति। ऋलृवर्णयोरिति सावण्र्यादृतीत्यनेन लृतोऽपि ग्रहणमित्यर्थः। उपाल्कारीयतीति। लृकारमात्मान इच्छतीत्यर्थे क्यजादि पूर्ववत्। लपरत्वं विशेषः। उपल्कारीयतीति। वृद्ध्वभावादत्र गुणः। लपरत्वम्। तपरत्वादिति। ऋतीति तपरकरणेन तत्कालस्यैव ग्रहणाद्दीर्घऋकारे परे वृद्धिविकल्पोऽयं न भवति, किं तु गुण एवेत्यर्थः। ऋकारीयतीति। ऋकारमात्मन इच्छतीत्यर्थे क्यजादि पूर्ववत्। वृद्ध्यभावादत्र गुण एव।

तत्त्व-बोधिनी

वा सुप्यापिशलेः ६५, ६।१।८९

सुब्धाताविति। सुबन्तावयवके इत्यर्थः। सुबन्तस्य धातोरसंभवात्। यद्यपि "ऋज गतौ" इत्यादीनां क्विपि धातुत्वं सुबन्तत्वं च संभवति, तथापि न तादृशेषु तपरत्वव्यावर्त्त्यत्वं प्रसिद्धं, नामधातुष्वेव तत्संभवतीति न त एवेह गृह्रन्ते इति भावः। प्रार्षभीयतीति। "शरोऽची"ति वक्ष्यमाणेन द्वित्वनिषेधः।

---

सूत्रम्

काशिका-वृत्तिः

आओतो ऽम्शसोः ६।१।९३

ओतः अमि शसि च परतः पूर्वपरयोः आकारः आदेशो भवति। गां पश्य। गाः पश्य। द्यां पश्य। द्याः पश्य। द्योशब्दो ऽपि ओकारान्त एव विद्यते, ततो ऽपि परं सर्वनामस्थानं णितिष्यते, तेन नाप्राप्तायां वृद्धौ अयम् आकारो विधीयमानस्तां बाधते। अम् इति द्वितीयैकवचनं गृह्यते, शसा साहचर्यात्, सुपि इति चाधिकारात्। तेन अचिनवम्, असुनवम् इत्यत्र न भवति।

लघु-सिद्धान्त-कौमुदी

औतोऽम्शसोः २१५, ६।१।९०

ओतोऽम्शसोरचि आकार एकादेशः। गाम्। गावौ। गाः। गवा। गवे। गोः। इत्यादि॥

न्यासः

औतोऽम्शसोः। , ६।१।९०

"गाम्पश्य" इति। कथं पुनरेतदुदह्मतम्(), यावता "गोतो णित्()" (७।१।९०) इति णित्त्वे सति परत्वात्? वृद्ध्यात्र भवितव्यम्()? इत्यत आह--"द्योशब्दोऽप्योकारान्तः" इत्यादि। तपरकरणं हि वर्णनिर्देशेषु प्रसिद्धमिति "गोतः" इति तपरनिर्देश ओकारान्तोपलक्षमार्थो विज्ञायते, ततश्च द्योशब्दादपि परं सर्वनामस्थानं णिद्भवति। यद्येवम्(), तत्? किमिति वृद्धर्नात्र भवति? इत्याह--"तेन" इत्यादि। यदि द्योशब्दात्? परस्य सर्वनामस्थानस्य णित्त्वं न स्यात्, ततो द्यां पश्येत्यत्र सावकाशमात्वं गां पश्येत्यत्र परत्वाद्वृद्ध्या बाध्येत। यदि तु द्योशब्दादपि परं सर्वनामस्थानं णिद्भवतीति, तदा द्यां पश्येत्यत्र वृद्धिः प्राप्नोत्येव। ततो नाप्राप्तायां वृद्धाविदमात्वं विधीयमानमनवकाशत्वाद्()वृदिं()ध बाधते। ततश्च युकतमेव गां पश्येत्येतदुदाहरणम्()। अथेहाप्यचिनवम्(), असुनवमित्यत्र चिनोतेः सुनोतेश्च लङि मिपि विकरणस्य गुणे कृते मिपः "तस्थस्थमिपाम्()" (३।४।१०१) इत्यादिनाम्भावे चौकारस्यात्वं कस्मान्न भवति? इत्याह--"अमि" इत्यादि। शसा साहचर्यात्? सुबधिकाराद्वा सुप एवाम इदं ग्रहणम्()। अतो नात्रात्वस्य प्रसङ्गः। चित्रगुं पश्येत्यत्र तु ह्रस्वत्वे कृत ओकाराभावात्? "अनल्विधौ" १।१।५५ इति स्थानिवद्भावप्रतिषेधादात्वं न भवति॥

बाल-मनोरमा

औतोऽम्शसोः २८३, ६।१।९०

औतोऽम्शसोः। छेद इति। आ-ओत इति च्छेदः, व्याख्यानादिति भावः। "ओत" इति तपरकरणम्। ओकारादित्यर्थः। अम्च शश्च अम्शसौ, तयोरिति विग्रहः। अवयवषष्ठ()न्तमेतत्। "इको यणची"त्यतोऽचीत्यनुवर्तते। "एकः पूर्वपरयोः" इत्यधिकृतम्। तदाह--ओकारादित्यादिना। शस इह सुबेव गृह्रते ननु बह्वल्पार्थादिति तद्धितः शंस्, अचीत्यनुवृत्तेः, तद्धितस्य च शसोऽजादित्वाऽसंभवात्, "लशक्वतद्धिते" इत्यत्र तद्धितपर्युदासात्। ननु "चिञ् चयने" लङ्, अडागमः, उत्तमपुरुषो मिप्। "तस्थस्थमिपा"मिति तस्य अमादेशः। श्नुर्विकरणः। "सार्वधातुकार्धधातुकयोः" इति गुण ओकारः। अचिनो इति स्थितेऽवादेशे अचिनवमिति रूपम्। तत्र अचिनो अम् इति स्थिते अवादेशं बाधित्वा "औतोऽम्शसोः" इत्यात्वे "अचिताम्" इति स्यादित्यत आह--शसेति। गामिति। परापि "अञ्चोणिती"ति वृद्धिरिह न भवति, आत्वस्य निरवकाशतया तदपवादत्वादिति भाष्यम्। नहि वृद्धिविषयादन्यत्राऽऽत्वस्य प्रवृत्तिरस्तीति तदाशयः। नच द्योशब्दादमि आत्वं सावकाशं "गोतोणि"दिति णित्वस्य तत्राऽभावे वृद्धेरप्रसक्तेरिति वाच्यम्। अस्मादेव भाष्यादोतोणिदिति णित्वस्य वक्ष्यमाणत्वेन तस्यापि वृद्धिविषयत्वादिति भावः। गा इति। असर्वनामस्थानत्वान्न णिद्वत्त्वम्। नापि वृद्धिः।

"औतोऽम्शसोः" इत्यात्वमिति भावः। टादावच्यावादेशं मत्वाह--गवा गवे इति। गोरिति। "ङसिङसोश्चे"ति पूर्वरूपमिति भावः। इत्यादीति। गवोः गवाम्। गवि इत्यादिशब्दार्थः। द्योशब्दओकारान्तः स्त्रीलिङ्गः। "सुरलोको द्योदिवौ द्वे स्त्रिया"मित्यमरः। सु=शोभना द्यौर्यस्येति बहुव्रीहौ पुंलिङ्गः। सुद्योस् इत्यादिसर्वनामस्थाने "गोतो णि"दित्यप्राप्ते।

ओतो णिदिति वाच्यं। गोत इति गकारमपनीय "ओतो णित्" इति वाच्यमित्यर्थः। तत्र प्रमाणमनुपदमेवोक्तम्। नन्विदं वार्तिकम्। तत्र ओत इति तपरकरणम्। ओकारात् सर्वनामस्थानं णिदिति लभ्यते।

विहितेति। ओकारद्विहितं सर्वनामस्थानमित्येवमोत इत्येतद्विहिताविशेषणमाश्रयणीयमित्यर्थः। तेनेति। गोत इति गकारमपनीय ओत इति वचनेनेत्यर्थः। सुद्यामित्यादीति। गोशब्दवद्रूपाणीति भावः। हे भानो इति। "ओकारात्परं सर्वनामस्थानं णि"दिति व्याख्याने तु भानुशब्दात्सम्बुद्धौ "ह्रस्वस्य गुणः" इति गुणे ओकारे सति सोरोकारात् परत्वाण्णिद्वत्त्वे वृद्धौ औकारे एङः परत्वाऽभावात्सुलोपाऽभावे रुत्वविसर्गयोः हे "भानौ"रिति स्यात्। अतो विहितविशेषणमित्यर्थः। ननु "एङ्ह्रस्वात्सम्बुद्धेः" इत्यत्र-एङ्ग्रहणसामर्थ्यादेव हे भानो इत्यत्र णित्त्वं तत्प्रयुक्तवृद्धिश्च न भवति। अन्यथा "एङ्ह्रस्वात्" इत्येव ब्राऊयात्। अतो विहितविशेषणमनर्थकमित्यस्वारस्यादाह--हे भानव इति। तत्र "जसि चे"ति गुणे भानो अस् इति स्थिते ओतः परत्वाणिद्वत्त्वे वृद्धौ आवादेशे "भानावः" इति स्यात्। अतो विहितविशेषणमिति भावः। वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया हे भानो हे भानव इत्यत्र णिद्वत्त्वाऽभावोपपत्तेर्विहितविशेषणत्वाश्रयणं व्यर्थमेव। उः शम्भुरिति। उरित्यस्य विवरणं शम्भुरिति। उः स्मृतो येनेति विग्रहे बहुव्रीहिः। "निष्ठ"ति स्मृतशब्दस्य पूर्वनिपातः। "आद्गुणः"। स्मृतो इति रूपम्। ततः सुबुत्पत्तौ गोशब्दवद्रूपाणि। वस्तुतस्तु "गोतो णि"दिति सूत्रशेषतया "द्योश्च वृद्धिवक्तव्ये"त्येव वार्तिकं भाष्ये दृश्यते। "औतोऽम्शसोः" इत्यत्र ओतो णिदिति तु न दृश्यते। अतोऽन्यदोकारान्तं प्रातिपदिकं नास्तीत्याहुः। इत्योदन्ताः। अथैदन्ताः। रैशब्दो धनवाची। "अर्थरैविभवा अपि" इत्यमरः।

तत्त्व-बोधिनी

औतोऽम्शसोः २४५, ६।१।९०

गौरित्यादि। "चित्रगु"रित्यत्र तु न भवति "ओत"इति वक्ष्यमाणत्वात्। "तद्धितो यः शस् स ओकारान्तान्न संभवती"त्याशयेनाह--शसा साहचर्यादिति। "सुपी"--त्यनुवर्तनाच्चेत्यपि काशिकयामुक्तम्। कैयटस्तु "तद्धितोऽपि शसस्तीति कथमिह साहचर्यादमः सुप्त्व"मित्याशङ्क्य, "अचीत्यधिकारदजादि शस सुबेव संभवति, न तु तद्धित"इत्याह। अचिनवमिति। चिनोतेर्लहृशब्देशस्य मिपः "तस्थस्थामिपाम्----"इत्यम्।

ओतो णिदिति वाच्यम्। ओतो णिदिति वाच्यमिति। "गोत"इत्यपहाय "ओत"इति वाच्यमित्यर्थः। एवंच "गा"मित्यत्र परत्वाद्वृद्धिः स्यादिति शङ्कया अनवकाशः, नरवकाशतया आत्वेन वृद्धेरेव बाधनात्।इत्योदन्ताः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एङि ७।१ पररूपम् १।१ ९६ उपसर्गात् ५।१ ८८ धातौ ७।१ ८८ आत् ५।१ ८४ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ संहितायाम् ७।१ ७०

अर्थः॥

अवर्णान्तात् उपसर्गात् एङादौ धातौ परतः पूर्वपरयोः स्थाने पररूपमेकादेशः भवति, संहितायां विषये॥

उदाहरणम्॥

उप + एलयति = उपेलयति, प्रेलयति। उप + ओषति = उपोषति, प्रोषति॥
काशिका-वृत्तिः
एङि पररूपम् ६।१।९४

आतित्येव, उपसर्गाद् धातौ इति च। अवर्णान्तातुपसर्गातेङादौ धातौ पूर्वपरयोः पररूपम् एकादेशो भवति। वृद्धिरेचि ६।१।८५ इत्यस्य अपवादः। उपेलयति। प्रेलयति। उपोषति। प्रोषति। केचित् वा सुप्यापिशलेः ६।१।८९ इत्यनुवर्त्यन्ति, तच् च वाक्यभेदेन सुब्धातौ विकल्पं करोति। उपेडकीयति, उपैडकीयति। उपोदनीयति, उपौदनीयति। शकन्ध्वादिषु पररूपं वाच्यम्। शक अन्धुः शकन्धुः। कुल अटा कुलटा। सीमन्तः केशेषु। सीम्नो ऽन्तः सीमन्तः। अन्यत्र सीमान्तः। एवे चानियोगे पररूपं वक्तव्यम्। इह एव इहेव। अद्य एव अद्येव। अनियोगे इति किम्? इहैअ भव, मा अन्यत्र गाः। ओत्वोष्ठयोः समासे वा पररूपं वक्तव्यम्। स्थूल ओतुः स्थूलौतुः, स्थूलोतुः। बिम्बौष्ठी, बिम्बोष्ठी। समासे इति किम्? तिष्ठ देवदत्तौष्ठं पश्य। एमन्नादिषु छन्दसि पररूपं वक्तव्यम्। अपां त्वा एमनपां त्वेमन्। अपां त्वा ओद्मनपां त्वोद्मन्।
लघु-सिद्धान्त-कौमुदी
एङि पररूपम् ३८, ६।१।९१

आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात्। प्रेजते। उपोषति॥
न्यासः
एङि पररूपम्?। , ६।१।९१

"उपेलयति" इति। "इल प्रेरणे" (धा।पा।१६६०) चुरादिणिच्()। "प्रोखति इति। "उख नख" (धा। पा। १२८,१३४) इत्युखिर्गत्यर्थो भ्यादौ पठ()ते। यदि "वा सुपि" ६।१।८९ इत्यनुवत्र्तयन्ति, एवं सति तेन सहास्यैकवाक्यतायां सुबधातोरेवानेन विकल्पेन पररूपं क्रियते, असुपि तु पररूपं न स्यादेवेत्याह--"तच्च" इत्यादि। एकवाक्यत्वे हि सत्येष दोषः स्यात्()। न चात्रैकवाक्यता, किं तर्हि? वाक्यभेदः। तेन तदिहानुवत्र्तमानं सुब्धातावेव विकल्पं करोति, इतरतर तु नित्यमेव पररूपं प्रवत्र्तते। तत्रावर्णान्तादुपसर्गादसुबन्तावयवे धातावेङादौ पूर्वपरयोः पररूपमेकादेशो भवतीत्येकं वाक्यम्(), अवर्णान्तादुपसर्गात्? सुबन्तावयवे धातावेङादौ पूर्वपरमोर्वा पररूपमेकादेशो भवतीति द्वितीयम्()। तत्र पूर्वेण वाक्येनासुबन्तावयवे धातावुपेलयतत्यादौ नित्यं पररूपं दिधीयते। द्वितीयेन तु सुबन्तावयवे धातावुपेङकीयतीत्येवमादौ विकल्पेन पररूपं विधीयते। वाक्यभेदस्तु "एङि पररूपम्()" इति तन्त्रेण सूत्रद्वयोच्चारणाल्लभ्यते। सूत्रद्वये तूच्चार्यमाणे सत्येक एव "वा सुप्यापिशलेः" ६।१।८९ इत्येदनुवर्तमानमपि लभ्यानुरोधान्नाभिसम्बध्यते, द्वितीये तु सम्बध्यत एव। तेन वाक्यद्वयं पूर्वोक्तं सम्पद्यते। "वक्तव्यम्()" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानाम्()--उत्तरसूत्रे चकारोऽधिकविधानार्थः, तेन शकन्ध्वादिषु पररूपं भविष्यतीति। उत्तरत्रापि वक्तव्यशब्दस्यायमर्थो व्याख्यानं चैतददेव वेदितव्यम्()। "एवे चानियोगे" इति। नियोगः=नियोजनम्(), व्यापारणमित्यर्थः। न नियोगोऽनियोगः=अनवक्लृप्तिः। तत्रैवशब्दे पररूपं वेदितव्यम्()। एवशब्दोऽनियमे वर्तते। यदा तमेव केवलं नियमं व्यापारेणाविशिष्टं ब्राऊते तदा पररूपं भवति। यदा तु व्यापारेम विशिष्टं तदा वृद्धिरेव। "बिम्बोष्ठी" इति। "नासिकोदरौष्ठ" ४।१।५५ इति ङीष्()। "तिष्ठ देवदत्तौष्ठं

पश्य" इति वाक्यमेतत्? न तु समासः। देवदत्तशब्दात्? "एङ् ह्रस्वात्? सम्बुद्धेः" ६।१।६७ इति सोर्लोपः॥

बाल-मनोरमा

एङि पररूपम् ७९, ६।१।९१

एङि पररूपम्। उपसर्गादीति धाताविति चानुवर्तते। आदित्यनुवृत्तमुपसर्गादित्यस्य विशेषणमिति तदन्तविधिः। "यस्मिन्विधि"रिति परिभाषया तदादिग्रहणम्। "एकः पूर्वपरयो"रिति चाधिकृतम्। तदाह--अवर्णान्तादित्या दिना। एकादेश इति। पूर्वपरयो"रिति शेषः। प्रेजत इति। एजृ दीप्तौ। प्र-एजते इति स्थिते वृद्धिरेचीति वृदिं()ध बाधित्वाऽनेन पररूपमेकारः। एजृ कम्पने इति तु परस्मैपदी। उपोषतीति। उष दाहे। लट् तिप् शप्। लघूपधगुणः। उष ओषतीति स्थिते वृदिं()ध बाधित्वाऽनेन ओकारः। ननु एकडो मेषः, तमात्मन इच्छति एडकीयति , उप एडकीयतीति स्थितेऽनेन नित्यमेव पररूपं स्यात्, इष्यते तु वृद्धिरपि--उपैडकीयति उपैडकीयतीति। तत्राह--इहेति। "एङि पररूप"मित्यत्र वा सुपीत्यनुवत्र्तते। तच्च नैकवाक्यतया संबध्यते। तथा सति अवर्णान्तादुपसर्गादेङादौ सुब्धातौ परे पररूपमेकादेशो वा स्यादित्येवार्थः स्यात्। एवं सति प्रेजते उपोषतीत्यत्र नित्यं पररूपं न स्यात्। अतो वाक्यभेदेन व्याख्येयम्। "एङि पररूप"मिति प्रथमं वाक्यम्। अवर्णान्तादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यादिति तदर्थः। "वा सुपी"ति द्वितीयं वाक्यम्। तत्र एङि पररूपमित्यनुवर्तते। धातौ उपसर्गादित्यादि च। ततश्च उक्तपररूपविषये सुब्धातौ परे पररूपं वा स्यादिति लभ्यते। तदाह--तेनेति। उक्तरीत्या वाक्यभेदाश्रयणेन एङादौ सुब्धातौ पररूपं पाक्षिकं भवति, तदितरधातौ तु नित्यमित्यर्थः। एवे चानियोगे। नियोगशब्दं व्याचष्टे--नियोगोऽवधारणमिति। अवधारणम्न्ययोगव्यवच्छेदः। तदन्यस्मिन्नर्थे य एवशब्दस्तस्मिन्नकारात्परे पूर्वपरयोः पररूपमेकादेशः स्यादित्यर्थः। क्वेव भोक्ष्यस इति। अत्रेति न निश्चिनुम इत्यर्थः। क्व-एव इति स्थिते वृदिं()ध बाधित्वाऽनेन वार्तिकेन पररूपमेकारः। अनवक्लृप्ताविति। अनवधारण इत्यर्थः। तवैवेति। नान्यस्येत्यर्थः। अत्रैवशब्दस्याऽवधारणार्थत्वान्न तस्मिन् परे पररूपम्। अथ क्वचिट्टेः पररूपं विधातुं टिसंज्ञामाह-अचोऽन्त्यादि टि। "अच" इति निर्धारणे षष्ठी। जातावकवचनम्। अन्ते भवेऽन्त्यः, अन्त्य आदिर्यस्य तत्-अन्त्यादीति विग्रहः। फलितमाह-अचां मध्य इति। शकन्ध्वादिष्विति। शकन्ध्वादिषु विषये तत्सिद्ध्यर्थं पूर्वपरयोः पररूपं वक्तव्यमित्यर्थः। ततश्च शकादिशब्दानां टेरचि परे टेश्च परस्याचश्च स्थाने पररूपमेकादेश इत्यर्थाल्लभ्यते। आदित्यनुवृत्त#औ शकन्ध्वादिगणे सीमन्त इत्यादिकतिपयरूपाणामसिद्धेः। तदाह-तच्च टेरिति। शकन्ध्वादिगणं पठति--शकन्धुरित्यादिना। शकानां-देशविशेषाणाम्, अन्धुः=कूप इति विग्रहः। कर्क-अन्धुरिति स्थिते पररूपम्। कुलटेति। अट गतौ। पचाद्यच्। टाप् कुलानामटेति विग्रहः। भिक्षार्थं व्यभिचारार्थं वा या गृहानटति सा कुलटा। कुलान्यटतीति विग्रहे तु कर्मण्यणि टिड्ढाणञिति ङीप्स्यात्। कुल-अटेति स्थिते पररूपम्।

सीमन्तः केशवेशे इति। गणान्तर्गतवार्तिकमेतत्। केशानां वेशः=सन्निवेशविशेषः। तस्मिन् गम्येसीमन्शब्दस्य टेः-"अ"नित्यस्य अन्तशब्दस्थावर्णस्य च स्थाने पररूपमित्यर्थः। आदित्यनुवृत्तौ तु इदं न सिध्येत्।

सीमान्तोऽन्य इति। ग्रामान्तप्रदेश इत्यर्थः। मनीषेति। मनस-ईषेति विग्रहः,। अत्र "अ"सिति टेरीकारस्य च स्थाने पररूपमीकारः। ईष गतौ। "गुरोश्च हलः" इत्यप्रत्ययः। टाप्। बुद्धिर्मनीषा"इत्यमरः। हलीषेति। "ईषा लाङ्गलदण्डः स्यादि"त्यमरः। हलस्य ईषेति विग्रहः। "करिकलभ" इतिवत्पुनरुक्तिः समाधेया। अत्र गुणे प्राप्ते पररूपम्। एवं लाङ्गलीषेत्यत्रापि। पतञ्जलिरिति। पतन् अञ्जलिर्यस्मिन्नमस्कार्यत्वादिति विग्रहः। अत्र "अ"दिति टेरकारस्य च स्थाने पररूपमकारः। केचित्तु गोनर्दाख्यदेशे कस्यचिदृषेः सन्ध्योपालनसमयेऽञ्जलेर्निर्गत इत्यैतिह्या दञ्जलेः पतन्निति विगृह्णन्तिव। मयूरव्यंसकादित्वात्समासः। सारङ्गः पशुपक्षिणोरिति। इदमपि गणान्तर्गतं वार्तिकम्। भाष्ये तु न दृश्यते। "सार"शब्द उत्कृष्टे। "सारो बले स्थिरांशे च न्याय्ये क्लीबेऽम्बरे त्रिषु" इत्यमरः। साराणि अङ्गानि यस्येति

विग्रहः। सार-अङ्ग इति स्थिते सवर्णदीर्घे प्राप्तेऽनेन पररूपम्। "चातके हरिणे पुंसि सारङ्गः शबले त्रिषु" इत्यनरः। आकृतिगणोऽयमिति। आकृत्या= एवञ्जातीयकतया निर्णेतव्योऽयं गण इत्यर्थः। लोकप्रयोगानुसारेणैवंजातीयकाः शब्द#आ अस्मिन् गणे निवेशनीय इति यावत्। तत्फलमाह--मार्तण्ड इति। मृतमण्डं यस्य स मृतण्डः कश्चिदृषिः। मृत-अण्ड इति स्थिते सवर्णदीर्घं बाधित्वाऽनेन पररूपम्। ततेऽपत्येऽणि मार्तण्डः। "परामार्ताण्डमास्थ"दिति सवर्णदीर्घस्तु च्छान्दसः। ओत्वोष्ठयोः। अवर्णादोतुशब्दे ओष्ठशब्दे च परे पूर्वपरयो रचोः स्थाने पररूपं वक्तव्यमित्यर्थः। स्थूलोतुरिति। "ओतुर्बिडालो मार्जारः" इत्यमरः। स्थूल--ओतुरिति स्थिते वृदिं()ध बाधित्वा पाक्षिकं पररूपम्। बिम्बोष्ठ इति। बिम्बफलवद्रक्तवर्णावोष्ठौ यस्येति विग्रहः।

तत्त्व-बोधिनी

एङि पररूपम् ६७, ६।१।९१

एङि पररूपम्। "एङ्ये"ङित्येव सिद्धे "पर"-ग्रहणमुत्तरार्थम्। "रूप" ग्रहणं तु स्पष्टार्थम्, "अमि पूर्व"वदेङि पर इत्येव सिद्धेः। प्रेजत इति। "एजृ दीप्तौ"। कम्पनार्थस्तु परस्मैपदी। प्रेजति।

एवे चाऽनियोगे। नियोगोऽवधारणमिति। निर्धारणमित्यर्थः। तदुक्तम्-"अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः। एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्।" इति। अस्यार्थः-अनवक्लृप्तौ अनिश्चये यदा एवकारो दृष्टः स पररूपस्य विषयः। यस्तु नियमे निर्धारणे यदा दृष्टः स वृद्धेर्विषय इति। ये तु "नियोगे त्वद्यैव गच्छे"ति प्राचोग्रन्थे स्थितस्य प्रत्युदाहरणस्यानुगुणतया "नियोजनं नियोगो व्यापार" इति व्याचक्षते, तेषां "यदैव पूर्वं ज्वलने शरीरं" "ममैव जन्मान्तरपातकाना"मिति लौकिकप्रयोगाः, "तपस्तपःकर्मकस्यैव" "लङः शाकटायनस्यैवे"त्यादिसौत्रप्रयोगाश्चन सिद्धयेयुः। उदाह्रतवृत्तिश्लोकविरोधश्च स्यात्। "अवधारण"मिति व्याकुर्वतां तु सर्वेष्टसिद्धिः। (६६) अचोऽन्त्यादि टि।१।१।६४।

अचोऽन्त्यादि टि। "अच" इति निर्धारणे षष्ठी। जातावेकवचनं, तदाह-अचां मध्य इति।

शकन्ध्वादिषु पररूपं वाच्यम्। शकन्ध्वादिष्विति। शकन्ध्वादिविषये तत्सिद्धयनुगुणं पररूपं वाच्यमित्यर्थः। अतएवाह-तच्च टेरिति। यदि तु "आ"दित्यधिकारादकारस्यैवेष्येत तर्हि मनीषा पतञ्जलिरिति न सिध्येत्। केचितु मनःपतच्छब्दयोः पृषोदरादित्वादन्त्यलोपे अकारस्यैव पररूपमाहुः। शकानां देशविशेषाणामन्धुः कूपः। कर्काणां राजविशेषाणामन्धुः कर्कन्धुः अटतीत्यटा। पचाद्यचि टाप्। कुलस्य अटा कुलटा। यदि तु कुलमटतीति विगृह्लते तदा कर्मण्यणि ङीपि "कुलाटी"ति त्यात्। "ईष उञ्छे"। "ईष गत्यादिषु"। आभ्यां "गुरोश्च हलः" इत्यप्रत्यये ईषा। मनस ईषा मनीषा। हलस्य ईषा हलीषा। ईषा-लाङ्गलदण्डः। पतन्तोऽञ्जलयो यस्मिन्नमस्कार्यत्वादिति पतञ्जलिः। मार्तण्ड इति। पररूपेणानेन "मृतण्ड" इति सिद्धे तत अण्यादिवृद्धिः। "परा मार्ताण्डमास्यत्" "पुनर्मार्ताण्डमाभरत्" इत्यादिषु तु दीर्घश्छान्दस इति भावः। केचिदत्र सवर्णदीर्घमेवाहुः। पूर्वोक्तवैदिकप्रयोगास्तेषामनुकूलः।

ओत्वोष्ठयोरिति। अकारस्य ओत्वोष्ठयोश्च एकत्र समासे स्थितौ सत्यामिदं प्रवर्तते। तेनेह न,-"वृषलसुतौष्ठव्रणस्ते" इति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ओमाङोः ७।२ च ० पररूपम् १।१ ९१ आत् ५।१ ८४ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ संहितायाम् ७।१ ७०

समासः॥

ओम् च आङ् च ओमाङौ, तयोः ॰ इतरेतरद्वन्द्वः॥

अर्थः॥

ओमि आङि च परतः अवर्णात् पूर्वपरयोः स्थाने पररूपमेकादेशः भवति, संहितायां विषये॥

उदाहरणम्॥

कन्या + ओम् = कन्योम् इत्यवोचत्। आ + ऊढा = ओढा, अद्य + ओढा = अद्योढा, कदोढा, तदोढा॥
काशिका-वृत्तिः
ओमाङोश् च ६।१।९५

आतित्येव। अवर्णान्तातोमि आङि च परतः पूर्वपरयोः स्थाने पररूपम् एकादेशो भवति। का ओम् इत्यवोचत्, कोम् इत्यवोचत्। योम् इत्यवोचत्। आगि खल्वपि आ ऊढा ओढा। अद्य ओढा अद्योढा। कदा ओढा कदोढा। तदा ओढा तदोढा। वृद्धिरेचि ६।१।८५ इत्यस्य पवादः। इह तु आ ऋश्यातश्यात्, अद्य अश्यातद्यश्यातिति अकः सवर्णे दीर्घत्वं बाधते।
लघु-सिद्धान्त-कौमुदी
ओमाङोश्च ४०, ६।१।९२

ओमि आङि चात्परे पररूपमेकादेशः स्यात्। शिवायोंं नमः। शिव एहि॥
लघु-सिद्धान्त-कौमुदी
तृज्वत्क्रोष्टुः २०४, ६।१।९२

असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥
न्यासः
ओमाङोश्च। , ६।१।९२

"अद्योढा" इति। अद्य+ओढा। ननु च "आदगुणः" (६।१।८७) इत्यनेनाङो निवर्त्तितत्वादिदमाङ उदाहरणं युज्यते? आङ्माङोरेकादेशस्त्वाङ्ग्रहणेन गृह्त इत्यदोषः। पूर्वमेव हीदमुक्तम्()--"द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यो भवति लभतेऽसावन्यतरव्यपदेशम्()" इति। किमर्थं पुनराङो ग्रहणम्(), यावता प्रागेवाङः पूर्वेम सह "अकः सवर्णे दीर्घः" ६।१।९७ इति दीर्घत्वे कृते ततः परेण सह "आद्गुणः" (६।१।८७) इति गुणे चाद्योढेत्यादि सिद्धमेव? न सिध्यति, यतः "धातूपसर्गयोः कार्यमन्तरङ्गम्()" (व्या।वृ।३७) इति पूर्वमाद्गुणेन भवितव्यम्(), तथा च सति वृद्धिः स्यात्()। अत आङोऽपि ग्रहणं कत्र्तव्यम्()। "इह त्वकः सवर्णे दीर्घत्वं बाध्यते" इति। अस्य विधेरविशेषविहितत्वात्(), अकः सवरणे दीर्घस्य च सामान्यविहितत्वात्()। विशेषविहितोऽपि सामान्यविहितस्य बाधको भवतीति प्रतिपादितमेतत्()॥
बाल-मनोरमा
ओमाङोश्च ८०, ६।१।९२

ओमाङोश्च। ओम् च आङ्चेति विग्रहः। आदिति पररूपमिति चानुवरग्तते, एकः पूर्वपरयो"रिति च। तदाह--

ओमीत्यादिना। शिवार्योनम इति। अत्र वृदिं()ध बाधित्वा पररूपम्। शिवहीति। आःइहीति स्थिते गुणे "एही"ति रूपम्। ततः शिव-एहि इति स्थिते वृदिं()ध बाधित्वा पररूपमेकारः। नच "शिव-अःइही"ति स्थिते सवर्णदीर्घे कृते पश्चाद्गुणे शिवेहीति रूपसिद्धेराङ्ग्रहणं व्यर्थमिति वाच्यं, "धातूपसर्गयोः कार्यमन्तरङ्ग"मिति न्यायेन प्रथमाद्गुण इति गुणे कृते शिव-एहीति स्थिते वृद्धौ प्राप्तायां तन्निवृत्त्यर्थत्वात्। भाष्ये तु-आ ऋश्यात्, गुणः अश्र्यात्, अद्य-अश्र्यात्-अद्यश्र्यादित्यत्र सवर्णदीर्घनिवृत्त्यर्थमाद्ग्रहणमिति स्थितम्।

तत्त्व-बोधिनी

ओमाङोश्च ६८, ६।१।९२

शिवेहीति। ननु "शिव आ इही"त्यत्र सवर्णदीर्घे कृते पश्चादाद्गुणे च सिद्ध मिष्टं तत्किमाङ्ग्रहणेन?। सत्यम्। "पूर्वं धातुरूपसर्गेण युज्यते" इति दर्शने "धातूपसर्गयोः कार्यमन्तरङ्ग"मिति पूर्वं गुणे कृते वृद्धिः स्यात्, तन्मा भूदित्याग्रहणम्।

अव्यक्तानुकरणस्यात इतौ। यद्यपि "अतो गुणे" इति पूर्वसूत्रादत इत्यनुवर्त्त्याऽतो ग्रहणमिह त्यक्तुं शक्यं, तथापि पूर्वसूत्रे "अत"इति तपरकरणाद्ध्रस्वाकारस्य ग्रहणमिह तु शब्दाधिकारपक्षाश्रयणादच्छब्दस्य ग्रहणमिति व्याख्याने क्लेशः स्यादिति पुनरत्राऽतो ग्रहणं कृतम्।

"अव्यक्त"शब्दं व्याचष्टे-ध्वनेरिति। अनुकरणस्येति। परिस्फुटाऽकारादिवर्णस्येति भावः। तस्य चानुकरणत्वं किंचित्साम्येन बोध्यम्। पररूपस्याऽस्य नित्यत्वेऽपि संहितायामविवक्षितायां तदभावादाह-पटत्-इतीदी।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ असि ७।१ ९४ अपदान्तात् ५।१ ९४ पररूपम् १।१ ९१ आत् ५।१ ८४ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ संहितायाम् ७।१ ७०

समासः॥

पदस्य अन्तः पदान्तः। न पदान्तः अपदान्तः, तस्मात् ॰ पूर्वं षष्ठीतत्पुरुषः, ततः नञ्तत्पुरुषः।

अर्थः॥

अपदान्तात् अवर्णात् असि परतः पूर्वपरयोः स्थाने पररूपम् एकादेशः भवति संहितायां विषये। आद्गुणापवादः॥

उदाहरणम्॥

भिन्द्या + उस् = भिन्द्युः, छिन्द्युः। अदा + उस् = अदुः, अयुः।

काशिका-वृत्तिः

उस्यपदान्तात् ६।१।९६

आतित्येव। अवर्णातपदान्तातुसि पूर्वपरयोः आद्गुणापवादः पररूपम् एकादेशो भवति। भिन्द्या उस् भिन्द्युः। छिन्द्या उस्

छिन्द्युः। अदा उसदुः। अया उसयुः। अपदान्तातिति किम्? का उस्रा कोस्रा। का उषिता कोषिता। आतित्येव, चक्रुः। अबिभयुः।

लघु-सिद्धान्त-कौमुदी

उस्यपदान्तात् ४९४, ६।१।९३

अपदान्तादकारादुसि पररूपमेकादेशः। अपुः। अपास्यत्॥ ग्लै हर्षक्षये॥ १७॥ ग्लायति॥

न्यासः

उस्यपदान्तात्?। , ६।१।९३

"भिन्द्युः" इति। भिदेर्लिङ्(), झि, यासुट्? "झेर्जुस्()" ३।४।१०८ इति जुस्(), श्नम्(), "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः, "लिङः सलोपोऽनन्तयस्य" ७।२।७९ इति सकारलोपः, भिन्द्या+उसिति स्थितेऽनेन पररूपत्वम्()। "अदुः" इति। ददातेर्लुङ्(), झि, "आतः" ३।४।११० इति झेर्जस्(), "गातिस्थाट २।४।७७ इति सिचो लुक्, अदा+उसिति स्थितेऽनेन पररूपत्वम्()। "कोरुआआ, कोषिता" इति। ननु चात्रैकस्मिन्? प्रत्युदाहरणे "अर्थवद्ग्रहणे नानर्थकस्य" (व्या।प।१) इत्यनया परिभाषयैव न भविष्यति, उरुआआशब्दो हि समुदायोऽर्थवान्(), न तूसित्येष तदवयवः। द्वितीये तु "लक्षणप्रतपदोक्तयोः प्रतपदोकतस्यैव ग्रहणं न तु लाक्षणिकस्य" (व्या।प।३) इत्यनया परिभाषयाऽपि न भविष्यति, लाक्षणिको हि तत्रोस्? तथा हि वसेर्निष्ठायां "वसतिक्षुधोरिट्()" (७।२।५२) यजादित्वात्? सम्प्रसारणे कृते--उषितेति, तत्र पररूपं न सम्पद्यते, तत्? किमपदान्तादित्यनेन? एवं तह्र्येतदतिरिच्यमानमपदान्तग्रहममर्थवदनर्थवत्त्वादिकं विशेषमनपेक्ष्योस्मात्रे पररूपं भवतीत्यमुमर्थं द्योतयति। तेन नानर्थके "उस्यपदान्तात्()" इत्येतद्भवति। भिन्द्युरित्यत्र हि यासुडादिः समुदायोऽर्थवान्(), न तु तदवयव उस्()। लाक्षणिकेऽपि भवतीति--बभुषः पश्येति। "भा दीप्तौ", (धा।पा।१०५१) लिटः क्वसुः; शस्(), "वसोः सम्प्रसारणम्()" ६।४।१३१ इति सम्प्रसारणम्(); "सम्प्रसारणाच्च" ६।१।१०४ इति पूर्वरूपम्, बभा उस अस्? इति स्थितेऽनेन पररूपत्वम्()। एतत्? सार्वधातुकपक्ष उदाहरणं वेदितव्यम्()। अर्धधातुकपक्षे ह्नकारलोपेनैव सिद्धम्()। सानुबन्धकेऽपि भवति--अधुर#इति। क्व तर्हि स्यात्()? बभूरिति। ननु चानर्थक्ये सत्यपदान्तग्रहणस्यायमर्थः परिकल्प्येत, अस्ति चास्योक्तसूत्रे प्रयोजनम्(), किं तत्? अपदान्ताद्यथा स्यादिह मा भूदिति--दण्डाग्रमिति? नैतदस्ति; यद्येतदेव प्रयोजनमभिमतं स्यात्(), तदोत्तरसूत्र एवेदं कुर्यात्()। इह करणात्तु यथोक्तार्थप्रतिपादनपरतैव तस्यावगम्यते। अधिकाराच्चोत्तरार्थतापि भवत्येव। कोषितेत्यत्र "वसतिक्षूधोः" ७।२।५२ इतीट्(), "शासवसिघसीनां च" ८।३।६० इति षत्वम्(), तस्य चासिद्धत्वात्? पररूपत्वप्राप्तिर्वेदितव्या। "चक्रुः" इति। कृञो लिट्()उसि रूपम्()। "अबिभयुः" इति। "ञिभी भये" (धा।प।१०८४) लङ्, शप्(), "जुहोत्यादिभ्यः श्लुः" २।४।७५ इति श्लुः, द्विर्वचनम्(), "सिजभ्यस्तविदिभ्यश्च" (३।४।१०९) इति झेर्जुस्? "जुसि च" ७।३।८३ इति गुणः॥

तत्त्व-बोधिनी

उस्यपदान्तात् ४७, ६।१।९३

अन्तरङ्गत्वादिति। प्रत्ययमात्रापेक्षत्वात्। "अतो येयः" इत्यस्य त्वाङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वेन बहिरङ्गत्वादिति भावः। नचाऽपदान्ताऽकारस्य जुसश्चाश्रयणात्पररूपस्याप्युभयसापेक्षत्वमस्त्येवेति चेन्मैवम्, अनेकाश्रयणेऽपि प्रत्ययमात्राश्रयतया प्रकृतेरनाश्रयणात्। व्याख्येयमिति। एतच्च विप्रतिषेधसूत्रे भाष्ये स्पष्टम्॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अतः ५।१ गुणे ७।१ पररूपम् १।१ ९१ अपदान्तात् ५।१ ९३ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ संहितायाम् ७।१ ७०

अर्थः॥

अपदान्तात् अकारात् गुणे परतः पूर्वपरयोः स्थाने पररूपम् एकादेशः भवति संहितायां विषये।

उदाहरणम्॥

पचन्ति, यजन्ति, पठन्ति, पचे, यजे॥
काशिका-वृत्तिः
अतो गुणे ६।१।९७

अपदान्तातिति वर्तते। अकारातपदन्तात् गुणे परतः पूर्वपरयोः स्थने पररूपम् एकादेशो भवति। पचन्ति। यजन्ति। अकः सवर्ने दीर्घस्य अपवादः। पचे, यजे इत्यत्र वृद्धिरेचि इति वृद्धिः प्राप्नोति। अतः इति किम्? यान्ति। वान्ति। गुणे इति किम्? अपचे। अयजे। अपदान्तातित्येव, दण्डाग्रम्। युपाग्रम्।
लघु-सिद्धान्त-कौमुदी
अतो गुणे २७६, ६।१।९४

अपदान्तादतो गुणे पररूपमेकादेशः॥
न्यासः
अतो गुणे। , ६।१।९४

"पचे, यजे"- इत्यत्र "वृद्धिरेचि" ६।१।८५ इति वृद्धिः प्राप्नोति, तेन तस्या एव पररूपत्वमपबाद इत्यभिप्रायः। "आद्गुमः" ६।१।८४ इत्यत आदित्यनुवत्र्तत एवेति मन्यमान आह--"अत इति किम्()" इति। दीर्घनिवृत्यर्थ इह तपरस्याकारस्य निर्देशः क्रियत इति दर्शयितुमाह--"यान्ति, वान्ति" इति। "अपचे" इति। लङ्यात्मनेपदोत्तमपुरुषैकवचन इट्(), अतर "आद्गुणः" ६।१।८४। पररूपे तु सति स गुणो न लभ्यते॥
बाल-मनोरमा
अतो गुणे १९०, ६।१।९४

अथ राम असिति स्थिते "अकः सवर्णे दीर्घ" इति सवर्णदीर्घस्यापवादं पररूपमाशङ्कितुमाह-अतो गुणे। "एङि पररूप" मित्यतः पररूपमित्यनुवर्तते। "उस्यपदान्ता"दित्यतोऽपदान्तादित्यनुवर्तते। "एकः पूर्वपरयो"रित्यधिकृतम्। "अत" इति पञ्चमी। तदाह--अपदान्तादित्यादिना। इति प्राप्त इति। नच परत्वादत्वात्, परादपवादस्य बलीयस्त्वादिति भावः। परत्वादिति। अतो गुणे" इत्यपेक्षया "प्रथमयोः पूर्वसवर्ण" इत्यस्य परत्वादित्यर्थः। ननु पररूपमिदमपवादत्वात् सवर्णदीर्घमिव पूर्वसवर्णदीर्घमपि कुतो न बाधत इत्यत आह-अतो गुण इतीत्यादि। अनन्तरान्। अव्यवहितानित्यर्थः। उत्तरानिति। व्यवहितानित्यर्थः। "अतो गुण" इत्युत्तरम् अव्यक्तानुकरणस्येत्यादि पठित्वा, "अकःसवर्णे दीर्घः" "प्रथमयोः पूर्वसवर्णः" इति पठितम्। ततश्च पररूपमिदं सवर्णदीर्घमेव बाधते, नतु तद्व्यवहितं पूर्वसवर्णदीर्घमपीति भावः। वस्तुतस्तु पुरस्तादपवादन्यायस्य नायं विषयः। नहि पररूपमिदं पूर्वसवर्णदीर्घस्यापवादः। भवन्तीत्यादावप्राप्ते।ऽपि पूर्वसवर्णदीर्घे एतस्य पररूपस्यारम्भादित्यलम्। रुत्वविसर्गौ सिद्धवत्कृत्याह--रामा इति।

---

सूत्रम्

काशिका-वृत्तिः

अव्यक्तानुकरणस्य अत इतौ ६।१।९८

अव्यक्तम् अपरिस्फुटवर्णम्, तदनुकरणं परिस्फुटवर्णम् एव केनचित् सादृश्येन तदव्यक्तम् अनुकरोति, तस्य यो अत्शब्दः तस्मातितौ पूर्वपरयोः स्थाने पररूपम् एकादेशो भवति। पटतिति पटिति। घटतिति घटिति। ज्ञटतिति ज्ञतिति। छमितिति छमिति। अव्यक्तानुकरणस्य इति किम्? जगतिति जगदिति। अतः इति किम्? मरटिति मरडिति। इतौ इति किम्? पटतत्र पटदत्र। अनेकाच इति वक्तव्यम्। इह मा भूत्, श्रतिति श्रदिति। कथम् घटदिति गम्भीरमम्बुदैर्नदितम् इति? दकारान्तम् एतदनुकरणं द्रष्टव्यम्।

न्यासः

अव्यक्तानुकरणस्यात इतौ। , ६।१।९५

"अव्यक्तमपरिस्फुटवर्णम्()" इति। अपरिस्फुटा=अव्यक्ता, अनभिव्यक्ता अकारदयो वर्णा यत्र तत् तथोक्तम्। यद्येवम्(), तदनुकरणेनापि तथाविधन भवितव्यम्, सदृशं ह्रनुकरणं भवति न त्वसदृशम्(), ततश्चानुकार्य इवानुकरणेऽपि नैवाच्छब्दोऽवधार्यते, अनवधारितस्य च कथं शक्यते पररूपतवं विधातुम्()? इत्यत आह--"तदनुकरणम्()" इत्यादि। यदि तर्हि तदनुकरणं परिस्फुटवर्णम्(), एवं सति तत्? तस्यानुकरणमेव न स्यात्(), न हि विसदृशमनुकरणं भवति, तेनानुकर्त्तुमशक्यत्वात्(), अतिप्रसङ्गो वेत्यत आह--"केनचित्()" इत्यादि। तत् पुनः सादृश्यं ध्वनेसतुल्यता, उभयोरपि तयोः समानो ध्वनिः। तेन यद्यप्यनुकरणे वर्मविशेषा अवधार्यन्ते, तथापि ध्वनेः समानतया तदवयक्तमप्यनुकार्यमनुकरोति। "पटिति" इति। ननु च "अलोऽन्त्यस्य" १।१।५१ इत्यनया परिभाषयान्त्यस्य भवितव्यम्(), तत्कथं सर्वस्यैवाच्छब्दस्य भवति? नैष दोषः; "नानर्थकेऽलोन्त्यविधिः" (व्या।प।६२) इति। अथ वा--यदयम्? "नाम्रेडितस्यान्त्यस्य तु व" ६।१।९६ इत्यत्रान्त्यगरहणं करोति, ततोऽवसीयते--नात्रालोऽन्त्यस्येत्येषा परिभाषा प्रवत्र्तत इति। कथं पुनः पररूपे कृते तदनुकार्यस्य प्रतिपादनं भवति, कुतश्च न भविष्यति? न्यूनत्वात्()? नैष दोषः; यथैव हि व्यकतवर्ममपि तस्य केनचित्साधम्र्येण प्रतिपादकं भवति तथा न्यूनमपि भविष्यतीति। "अनेकाच इति वक्तव्यम्()" इति। अनेकाचोऽव्यक्तानुकरणस्य पररूपं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--उत्तरसूत्रे वाग्रहममुभयोरपि योगयोः शेषः। सा च व्यवस्थितविभाषा विज्ञायते। तेनानेकाच एव भविष्यति, न त्वेकाच इति। "कथम्()" इति। तकरान्तमेतदव्यकतमनुकरणमिति मन्यमानस्य प्रश्नः॥

बाल-मनोरमा

अव्यक्तानुकरणस्यात इतो ८१, ६।१।९५

अव्यक्तानुकरणस्य। पररूपमिति वत्र्तते। अव्यक्तः=अस्फुटवर्णविभागो वृक्षपतनादिजनितध्वनिः। तस्यानुकरणं=तत्प्रतिपादकस्तत्सदृशोऽपरिस्फुटवर्णविभागः शब्दः। तस्यावयवो यो।ञच्छब्दस्तस्मादितिशब्दे परेऽच्छब्दस्य इकारस्य च स्थाने पररूपं स्यादित्यर्थः। अत्र इतिशब्दे यः प्रथम इकारस्तस्मिन्परे इति व्याख्येयम्। अन्यथा इतिशब्दस्य कृत्स्नस्यादेशप्रसङ्गात्। तदाह-धवनेरित्यादिना। अत्राऽलोऽन्त्यस्येति न भवति, "नानर्थकेऽलोऽन्त्यविधि"रिति निषेधात्। पटत्-इतीति प्रक्रियावाक्यप्रदर्शनम्। न तु पररूपाऽभावपक्षे रूपमिति भ्रमितव्यम्, अत्र पररूपस्य नित्यत्वात्। असंहितायां निर्देशो वा। पटितीति। उदाहरणमेतत्। "वृक्षः पतित" इत्याद्यध्याहार्यम्।

अत्राऽनेकाज्ग्रहणं कर्तव्यमिति वार्तिकमर्थतः सङ्गृह्णाति--एकाचो नेति। एकोऽच् यस्य स एकाच्,

तथाभूतस्यानुकरणस्य उक्त पररूपं नेत्यर्थः। श्रदितीति। अत्र एकाच्त्वान्न पररूपम्। ननु पटत्पटत्-इतीत्यत्र पटत्पटेति रूपमिष्यते। तत्राव्यक्तानुकरणस्येति पररूपे पटत्पटितीत्येव स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

न आम्रेडितस्य अनत्यस्य तु वा ६।१।९९

अव्यक्तानुकरणस्य आम्रेडितस्य यो अत्शब्दः इतौ तस्य पररूपं न भवति, तस्य यो ऽन्त्यस्तकारस्तस्य वा भवति। पटत्पटदिति, पटत्पटेति करोति। नित्यवीप्सयोः ८।१।४ इति द्विर्वचनम्। यदा तु समुदायानुकरणं तदा भवत्येव पूर्वेण पररूपम्, पटत्पटेति करोति।

काशिका-वृत्तिः

नित्यम् आम्रेडिते डाचि ६।१।१००

अव्यक्तानुकरणस्य, अतः, अन्त्यस्य इति च अनुवर्तते। डाच्परं यदम्रेदितं तस्मिन् पूर्वस्य अव्यक्तानुकरनस्य अच्छब्दस्य यो ऽन्त्यः तकारः तस्य पूर्वस्य परस्य चाद्यस्य वर्णस्य नित्यं पररूपम् एकदेशो भवति। पटपटा करोति। दमदमा करोति। पटदित्यस्मातव्यक्तानुकरणातिति डाचि विहिते डाचि बहुलम् इति द्विर्वचनम्, तच् च टिलोपात् पूर्वम् एव इष्यते।

न्यासः

नाम्रेडितस्यान्त्यस्य तु वा। , ६।१।९६

"यदा तु" इत्यादि। पटत्पटदित्येष शब्दः समुदाय एवानुकरणम्(), तदा तस्याद्विरुक्तत्वातपरस्यावयवस्य पटच्छब्दस्याम्रेडितसंज्ञा नास्तीति पूर्वेम पररूपं भवत्येव॥

न्यासः

नित्यमाम्रेडिते डाचि। , ६।१।९६

"डाचपरम्()" इति। डाच् परो यस्मात्? तत् तथोक्तम्()। "डाचि विहिते" इत्यादि। विहित इति "हि गतौ (धा।पा।१२५७) इत्यस्य विपूर्वस्य रपमिदम्()। असय च "सर्वे गत्यर्था ज्ञानारथाः" इति विहिते=विज्ञाते बुद्धिस्थ एवेत्येषोऽर्थो वेदितव्यः। तेनायमर्थो भवति--डाचि विहिते बुद्धिस्थविषयभूत एवानुत्पन्ने "डाचि बहुलं द्वे" (वा।८८८) इति द्विर्वचनमिति। अवश्यञ्चैतदेवं विज्ञेयम्(); अन्यथा हि यदि डाचि विहिते कृत इत्येषोऽर्थः स्यात, तदा डाच परभूते "डाचि बहुलं द्वे" (वा।८८८) इत्यनेन द्विर्वचनं विधीयते। तथा च यद्वक्ष्यति--"डाचीति विषयसप्तमीयम्()" इति तद्विरुध्यते। किं पुनः कारणम्()--डाचि विहिते बुद्धिविषयीभूत एवानुत्पन्ने द्विर्वचनं विधीयते? इत्याह--"तच्च" इत्यादि। चशब्दो हेतौ। यस्माद्()द्विरवचनं टिलोपात्? पूरवमिष्यते तस्माड्डाचि विहिते बुद्धिस्थे विषयभूते एवानुतपन्ने द्विर्वचनं विधीयते न परभूते। एवं तट्टिलोपात्? पूर्वं सिध्यति; नान्यथा। यदि हे डाचि परभूते द्विर्वचनं न क्रियते, तदान्तरङ्गत्वाट्टिलोपे कृते पश्चाट्टकारान्तस्य द्विर्वचनमापद्येत, तथा च पटपटेति न सिध्येत्()। न च शक्यते वक्तुम्()--"नित्यमाम्रेडितं डाचि" इत्येतद्वचनं ज्ञापकं पूर्वं द्विर्वचनं भवति ततष्टिलोपः" इति; यस्मात्? पटदित्यादिकं टिलोपे कृते द्विरुच्यमानं यच्छब्दान्तं भवति तदर्थमेवेदं स्यात्()--पटपटाकरोतीति। अथ वा--डाचीति डाचि विहिते सति परसप्तम्यामदोष इति मन्यमानेन "डाचि विहिते" इत्युक्तम्()। डाचि विहिते सति "डाचि बहुलं द्वे" (वा।८८८) इत्यनेनोपसंख्यानेन दविर्वचनम्()। ननु चैवं सति "सर्वविधिभ्यो लोपविधिरबलीयान्()" (व्या।प।७०) इति द्विर्वचनात्? प्राक्? टिलोपः स्यात्(), तथा चानिष्टं रूपं

प्रसज्येत? इत्यत आह--"तच्च" इत्यादि। कथं पुनष्टिलोपात्? पूर्वमिष्यमाणमेतल्लभ्यते? बहुलग्रहणात्()। अस्मिंस्तु व्याख्याने विहित इति दधातेरेव तद्()रूपं तद्रूपं वेदितव्यम्()॥

बाल-मनोरमा

नाऽऽम्रेडितस्यान्त्यस्य तु वा ८२, ६।१।९६

तत्राह-नाम्रेडितस्य। "अव्यक्तानुकरणस्यात #इता"विति "पररूप"मिति "एकः पूर्वपरयो"रिति चानुवर्तते। आम्रेडितस्याव्यक्तानुकरणस्यावयवो योऽच्छब्दस्तस्येतिशब्दे परे पररूपं न स्यात्। अन्त्यस्य तु वा। तुरवधारणे। अच्छब्दान्त्यस्य तकारस्यैव इकारस्य च पररूपं वा स्यान्नत्वकारस्यापीत्यर्थः। तदाह--आम्रेडीतस्य प्रागुक्तमित्यादिना। ननु पटत् पटदित्यत्र कथं द्वित्वमित्यत आह--डाचीति। "डाचि बहुलं द्वे भवत इति द्वित्व"मित्यन्वयः। नन्वव्यक्तानुकरणाद्()द्?व्यजवरार्धादनितौ डाच्" इति डाचः कथमिह संभवः, इतिशब्दे परतस्तत्पर्युदासः स्यादित्यत आह--बहुलग्रहणादिति। वेत्यनुक्त्वा बहुलग्रहणमदिकविधानार्थं, बहूनर्थान् लाति गृह्णातीति तद्व्युत्पत्तेरिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अकः ५।१ १०३ सवर्णे ७।१ दीर्घः १।१ १०२ अचि ७।१ ९६ एकः १।१ ८१ पूर्वपरयोः ६।१ ८१ संहितायाम् ७।१ ७०

अर्थः॥

अकः उत्तरस्य सवर्णे अचि परतः पूर्वपरयोः स्थाने दीर्घः एकादेशः भवति, संहितायां विषये

उदाहरणम्॥

दण्ड + अग्रम् = दण्डाग्रम्, दधीन्द्रः, मधूदके, होतृ + ऋश्यः = होतॄश्यः

काशिका-वृत्तिः

अकः सवर्णे दीर्घः ६।१।१०१

अकः सवर्णे अचि परतः पूर्वपरयोः स्थाने दीर्घ एकादेशो भवति। दण्डाग्रम्। दधीन्द्रः। मधूदके। होतॄश्यः। अकः इति किम्? अग्नये। सवर्ने इति किम्? दध्यत्र। अचि इत्येव, कुमारी शेते। नाज्झलौ १।१।१० इत्यत्र यतचिति प्रत्याहारग्रहणं तत्र ग्रहणकशास्त्रस्य अनभिनिर्वृत्तत्वात् सवर्णा न गृह्यन्त इति सवर्नत्वमीकारशकारयोरप्रतिषिद्धम्। सवर्णदीर्घत्वे ऋति ऋ वा वचनम्। ऋति सवर्णे परभूते तत्र ऋ वा भवति इति वक्तव्यम्। होतृ ऋकारः होतृकारः। यदा न ऋ तदा दीर्घ एव होतॄकारः। लृति लृ वा वक्तव्यम्। ल्ट्ति सवर्णे परतो लृ वा भवति इति वक्तव्यम्। होतृ लृकारः होत्लृकारः। होतॄकारः। ऋकारलृकारयोः सवर्णासंज्ञाविधिरुक्तः। दीर्घपक्षे तु समुदायान्तरतमस्य लृवर्णस्य दीर्घस्य अभावातॄकारः क्रियते।

लघु-सिद्धान्त-कौमुदी

अकः सवर्णे दीर्घः ४२, ६।१।९७

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। दैत्यारः। श्रीशिः। विष्णूदयः। होतॄकारः॥

बाल-मनोरमा

अकः सवर्णे दीर्घः ८५, ६।१।९७

अकः सवर्णे। "अक" इति पञ्चमी। "इको यणची"त्यतोऽचीत्यनुवर्तते। "एकः पूर्वपरयो"रित्यधिकृतम्। तदाह-अकः सवर्णेऽचीत्यादिना। दैत्यारिरिति। दैत्य-अरिरिति स्थिते द्वयोरकारयोरेको दीर्घ आकारः, स्थानसाम्यात्। श्री-ईश इति स्थिते ईकारयोरेक ईकारः। विष्णु-उदय इति स्थिते उकारयोरूकारः।?त्राचीत्यनुवृत्तेः किं प्रयोजनमिति पृच्छति-अचि किमिति। कुमारी शेत इति। "अची"त्यननुवृत्तावीकारस्य शकारस्य च तालुस्थानविवृतप्रयत्नसाम्येन सवर्णतया तयोर्दीर्घ ईकार एकादेशः स्यात्। तन्निवृत्त्यर्थमचीत्यनुवर्तनीयमिति भावः। ननु ईकारशकारयोः स्थानप्रयत्नसाम्येऽपि न सावर्ण्यं, "नाज्झला"विति निषेर्धात्। अतः "कुमारी शेते" इत्यत्र "अकःसवर्ण" इत्यस्याऽप्रसक्तेरचीत्यनुवृत्तिर्व्यर्थैवेत्यत आह--नाज्झलावितीति। नाज्झलाविति सावर्ण्यनिषेधो वार्णसमाम्नायिकानामेव, नतु दीर्घप्लुतानामपि, "आदिरन्त्येन सहेते"त्यनेन वार्णसमाम्नायिकानामेवाऽच्शब्दवाच्यत्वावगमात्। अत ईकारशकारयोः सावर्ण्यसत्त्वात्कुमारी शेत इत्यत्रातिप्रसङ्गः स्यादित्यचीत्यनुवृत्तिरावश्यकीत्यर्थः। ननु वार्णसमाम्नायिकानामेव अच्शब्दवाच्यत्वेऽपि अच्()शब्दोपस्थितैरकारादिभिर्ह्रस्वदीर्घप्लुतानामपि ग्रहणं भवति, अणुदित्सूत्रबलात्। अत ईकारशकारयोर्न सावर्ण्यप्रसक्तिरित्यजनुवृत्तिर्व्यर्थैवेत्यत आह--ग्रहणकेति। अणुदित्सवर्णस्येति ग्रहणकसूत्रं हि लब्धात्मकमेव सत् "अस्य च्वौ" इत्यादौ प्रवृत्तिमर्हति। नाज्झलाविति प्रवृत्तिदशायां च ग्रहणकशास्त्रमिदं न लब्धात्मकं। तद्धि सवर्णपदघटितत्वात्सवर्णपदार्थावगमोत्तरमेव लब्धात्मकम्। सवर्णसंज्ञाविधायकं च तुल्यास्यसूत्रं सामान्यतः स्वार्थं बोधयदपि नाज्झलावित्यपवादविषयं परिह्रत्य तदन्यत्रैव पर्यवसानं लब्ध्वा स्वकार्यक्षमतामश्नुते। उक्तं च --"प्रकल्प्यापवादविषयमुत्सर्गोऽभिनिविशते" इति। एवं चाऽणुदित्सूत्रस्य नाज्झलाविति निषेधसहिततुल्यास्यसूत्रप्रवृत्तेः प्रागलब्धात्मकतया नाज्झलावित्यत्राऽज्ग्रहणेन दीर्घप्लुतानां ग्रहणाऽभावेन ईकारशकारयोः सावर्ण्यनिषेधाऽभावेन सावर्ण्यसत्त्वात्कुमारी शेत इत्यत्राऽकः सवर्ण इति प्राप्तौ तन्निवृत्त्यर्थमचीत्यनुवृत्तिराश्रयणीयेत्यर्थः। तदेतन्नाज्झलाविति सावर्ण्यनिषेधो यद्यपीति ग्रन्थव्याख्यावसरे प्रपञ्चितम्। अकोऽकि दीर्घ इत्येव सुवचमिति। एवंच सवर्णग्रहणं न कर्तव्यमिति लाघवम्। दध्युकार इत्यत्र तु यथासंख्याश्रयणान्नातिप्रसङ्गः। ततश्च अचीत्यनुवृत्तिरपि नाश्रयणीयेति भावः।

"ऋति ऋ वा" इति वार्तिकमकः सवर्ण इत्यतोऽनुवृत्तसवर्णपदेन योजयित्वा पठति--ऋति सवर्णे ऋ वा। अक इत्यनुवर्तते। एकः पूर्वपरयोरिति च। अकः सवर्णे ऋति परे पूर्वपरयोरृइत्येकादेशः स्यादित्यर्थः। होतृकार इति। होतृ-ऋकार इति स्थितेऽनेन द्वयोरृकारयोः स्थाने ऋकारविलक्षणो नृसिंहवद्()द्व्यन्तरात्मा ऋकारो रेफद्वयवान् कश्चिद्वर्णो भवति। एतदभावपक्षे रूपं दर्शयति--होतृ()कार इति। "अकः सवर्ण" इति दीर्घः।

लृति सवर्णे लृ वा। अकः सवर्णे लृति परे पूर्वपरयोर्लृ इत्येकादेशो वा स्यादित्यर्थः। होत्लृकार इति। होतृ-लृकार इति स्थिते ऋकारस्य लृकारस्य च स्थाने नृसिंहपद्()द्व्यन्तरात्मा लृकारो द्विलकारवान् कश्चिद्वर्णो भवति। पक्ष इति। उक्तद्व्यन्तरात्मकवर्णाऽभावपक्षे ऋकारस् लृकारस्य च स्थानेऽकः सवर्ण इति दीर्घो भवन्नृलृवर्णयोरिति सावर्ण्याद्दृ()कार एव भवति, लृकारस्य दीर्घाऽभावादिति भावः। अत एव होतृ-लृकार इत्यत्र सवर्णदीर्घपक्षे होतृ()कार इत्येवोदाह्रतं भाष्ये। अथ "ऋति ऋ वा" "लृति लृ वे"त्यत्र विधेयवर्णस्वरूपं विविनक्ति--उभयत्रापि विधेयं वर्णद्वयं द्विमात्रमिति। तदेवोपपादयति--आद्यस्य मध्य इति। एका मात्रेति। व्यञ्जनानामर्धमात्रतया एकैकस्य रेफस्य अर्धमात्रत्वादिति भावः। अभितोऽज्भक्तेरिति। "अभित" इत्यनन्तरं "रेफा"विति शेषः। "अज्भक्ते"रिति सामान्याभिप्रायमेकवचनम्। रेफद्वयस्य पुरस्तादुपरिष्टाच्च विद्यमानयोर्ह्रस्वऋकारांशयोरन्या मात्रेत्यर्थः। द्वितीयस्य इति। "विधेयस्ये"ति शेषः। शेषं प्राग्वदिति। लकारयोरेका मात्रा, तावभितो विद्यमानयोर्लृकारांशयोरन्या मात्रेत्यर्थः। एतच्च तुल्यास्यसूत्रे भाष्यकैयटयोः

स्पष्टम्। एतेन दीर्घे प्राप्ते ह्रस्व ऋकारो लृकारश्चात्र विधीयत इति प्राचीनग्रन्थः परास्तः। पाक्षिक इति। वैकल्पिक इत्यर्थः। प्रकृतिभाव इति। निर्विकारस्वरूपेणावस्थानमित्यर्थः। सन्ध्यभाव इति यावत्।

तत्त्व-बोधिनी

अकः सवर्णे दीर्घः ६९, ६।१।९७

नाज्झलावित्यादि। अयं भावः--विधेयभेदे वाक्यभेदात्संभवन्त्यामेकवाक्यतायां तदयोगात् "तुल्यास्यप्रयत्न"मित्यस्य "नाज्झलौ" इत्यस्य च एकवाक्यत्वलाभाय "अज्झल्भिन्नं सवर्ण"मित्यर्थोऽभ्युपेयते। "अज्झल्भिन्न"मित्यत्र परस्परनिरूपिततुस्यत्वविशिष्टास्यप्रयत्नकौ यावज्झलौ, तदुभयभिन्नत्वं विवक्षितम्। तथाच "यो ह्रस्वदीर्घात्मको वर्णो येन वर्णेन तादृशेन तुल्यास्यप्रयत्नस्तदुभयं मिथः सवर्णं भवति", तथा "येन हला तुस्यास्यप्रयत्नकं यद्धल्, तदुभयंमिथः सवर्णं स्यात्", "यश्च दीर्घप्लुतात्मको वर्णो येन हला तुल्यास्यप्रयत्नस्तदुभयमपि मिथः सवर्ण"मित्यर्थः फलितः। ततश्चानेन सूत्रद्वयेन सवर्णसंज्ञायां सिद्धायाम् "अणुदित्सवर्णस्ये"ति ग्राहकशास्त्रं प्रवर्तते, ननु ततः प्राक्। अतो "नाज्झलौ" इत्यनेन आक्षरसमाम्नायिकानामेव सावर्ण्यं व्युदस्यते, नतु सर्वेषाम्। तेनात्र दीर्घशकारयोः सावर्ण्यमस्त्येवेति तद्वारणाय "अकः सवर्णे" इत्यात्राऽचीत्यनुवर्तनं युक्तमिदम्। यदा तूष्मणामीषद्विधृतत्वं परिकल्प्य "नाज्झलौ" इति सूत्रं प्रत्याख्यायते, तदेह सवर्णसूत्रे "अची"ति नानुवर्तनीयम्। "हे पिषासो इत्यादौ गुरोरनृतः-"इत्याकारस्य प्लुते कृते ततः परस्य सस्य इणः परत्वेन षत्वं स्यात्, "नाज्झलौ" इत्यत्राकारप्रश्लेषेण दीर्घहकारयोः सावर्ण्याऽभावेऽपि प्लुताकारस्य हकारसवर्णत्वेनेण्त्वादित्याशङ्क्य तत्समाधानार्थमाश्च आश्चेति द्वन्द्वं कृत्वा सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति क्लिष्टव्याख्यानमपि नाश्रयणीयम्। वि()आपाभिरित्यादौ ढत्वादेरप्यप्रसक्तिः। स्वराणामूष्माणां च प्रयत्नभेदेन सावर्ण्याऽभावादिति सुगमोऽयं पन्थाः। अकोऽकीत्येवेति। "अकोऽकि दीर्घः" इत्येवेत्यर्थः। सुवचमिति। यथासङ्ख्यसंबन्धेन "दध्यत्रे"त्यादावतिप्रसङ्गाऽभावात् , "ऋ"इति तिं()रशतः संज्ञेत्युक्तत्वात् "होतृ-लृकार" इत्यत्र ऋकारस्य ऋकारपरत्वमस्त्येवेत्यप्रसङ्गाभावादीकारशकारयोः सावर्ण्ये सत्यप्यचीत्यनुवर्तनं विनैव समीहीतिरूपसिद्धेश्चेति भावः। "ऋति ऋ वा" लृति लृ वे"ति वार्तिकं सूत्रस्थेन सवर्णपदेन योजयित्वा पठति।

ऋति सवर्ण इत्यादि। नन्वेवम् "अकः सवर्णे-" इति सवर्णपदाऽकरणे वार्तिकयोः सवर्णग्रहणं कर्तव्यम्, सूत्रे तु "अकोऽकी"ति कर्तव्यमिति विपरीतगौरवात्कथम् "अकोऽकीत्येव सुवच"मित्युक्तमिति चेदत्राहुः--भाष्यकारैरेतद्वार्तिकद्वयस्य प्रत्याख्यानान्नास्त्येव गौरवमिति। प्रत्याश्याने तूपपत्तिर्लृकारान्तेषु विचारयिष्यते।

वर्णद्वयं द्विमात्रमिति। एतेन "दीर्घे प्राप्ते ह्रस्वलृकारश्च विधीयते" इति प्राचो व्याख्यानमाकरविरुद्धमिति ध्वनितम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रथमयोः पूर्वसवर्णः ६।१।१०२

अकः इति दीर्घः इति वर्तते। प्रथमाशब्दो विभक्तिविशेषे रूढः, तत्साहचर्याद् द्वितीया ऽपि प्रथमा इति उक्ता। तस्यां प्रथमायां द्वितीयायां च विभक्तौ अचि अकः पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घः एकादेशो भवति। अग्नी। वायू। वृक्षाः। प्लक्षाः। वृक्षान्। प्लक्षान्। अतो गुणे ६।१।९४ इति यदकारे पररूपं ततकः सवर्णे दीर्घत्वम् एव बाधते, न तु पूर्वसवर्नदीर्घत्वम्, पुरस्तादपवाद अनन्तरान् विधीन् बाधन्ते न उत्तराततिति। अचि इत्येव, वृक्षः। प्लक्षः। अकः इत्येव,

नावौ। पूर्वसवर्नग्रहणं किम्? अग्नी इत्यत्र पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं किम्? त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थम्।

लघु-सिद्धान्त-कौमुदी

प्रथमयोः पूर्वसवर्णः १२६, ६।१।९८

अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥

न्यासः

प्रथमयोः पूर्वसवर्णः। , ६।१।९८

प्रथमशब्दोऽयं सन्निवेशविशेषापेक्षेऽभिधेये वत्तते। परेष्वभिसमीक्षितेषु यस्मात्पूर्वो नास्ति स प्रथमशब्दाभिधेयः। इह च "प्रथमयोः" इति सामान्येन निर्देशान्न ज्ञायते--कयोः प्रथमयोरिवं ग्रहणमित्यतस्तत्परिज्ञानायाह--"प्रथमाशब्दः" इत्यादि। प्रथमशब्दोऽयमिह शास्त्रे विभक्तिविशेष रूढः, सुपां यदाद्यं त्रिकं तत्र प्रसिद्धः। तथा हि--"सपूर्वयोः प्रथमयोर्विभाषा" ८।१।२६, "सप्तमीपञ्चमीप्रथमाभ्यः" ५।३।२७ इत्येवमादिषु निर्देशेषु प्रथमाशब्देन स एव विभक्तिविशेषो निर्दिष्टः। तस्माद्रूढिशब्दत्वादिह प्रथमाशब्दो विभक्तिविशेषे वत्तत इति विज्ञायते। ननु च स्त्रीलिङ्गो यः प्रथमाशब्दः स इह शास्त्रे विभक्तिविशेषे रूढः, अस्य च स्त्रीलिङ्गतैव सन्दिग्धा? नैतदस्ति; प्रथमशब्दोपादानादेव स्त्रीलिङ्गोऽयमुपात्त इत्यवसीयते। यदि हि पुंल्लिङ्गस्येदमुपादानं स्यादेयं सति प्रत्ययग्रहणेव स्यात्()। यदि च प्रत्ययग्रहणमभीष्टं स्यात्? तदौजसोरित्येवं ब्राऊयात्()। न चैवमुच्यमाने द्वितीयासम्बन्धिनोऽप्यौकारस्य ग्रहणप्रसङ्गः; इह जसा साहचर्यात्? प्रथमासम्बन्धिन एवौकारस्य ग्रहणं विज्ञास्यते। तस्मात्? स्त्रीलिङ्गस्येदं ग्रहममित्यसन्दिग्धमेतत्()। ननु च यदि प्रथमाशब्दोऽयमिह शास्त्रे विभक्तिविशेषे रूढः, एवं सति विभक्तिविशेष एक इत्येकवचनेनैव भवितव्यम्(), तत्? कथं प्रथमयोरिति द्विवचनम्()? इत्यत आह--"तत्साहचर्यात्()" इत्यादि। तेन प्रथमाख्येन विभक्तिविशेषेण साहचर्याद्()द्वितीयापि विभक्तिः प्रथमेत्युक्ता, ततश्च द्वित्वाद्()द्विवचनमेव न्याय्यम्()। तदेतेन प्रथमयोरिति विभक्त्योरिदं गरहणं न प्रतद्ययोरिति दर्शयति। "वृक्षाः "लक्षाः" इति। कथमिदमुदाह्रतम्()? यावता "अतो गुणे" (६।१।९७) इत्यनेन पररूपेणात्र भवितव्यम्? तद्धि नाप्रापते वभक्त्यन्तर आरभ्यमाणं यथाऽकः सवर्णे दीर्घत्वं बाधते, तथा "प्रथमयोः पूर्वसवर्णः" इति दीर्घत्वमपि बाधेत? इत्यत आह--"अतो गुणे" इत्यादि। अत्रैवोपपत्तिमाह--"पुरस्तात्()" इत्यादि। इतिकरणो हेतौ। यस्मात्? "पुरस्तादपवादा अनन्तरान्? विधीन्? बाधन्ते नोत्तरान्()" (व्या।प।९) इति तस्मात्? "अतो गुणे" (६।१।९७) पररूपम्? "अकः सवर्णे दीरघः" ६।१।९७ दीर्घत्वं बाधते; तस्यैव तदनन्तरत्वात्()। "प्रथमयोः पूर्वसवर्मः" इति दीर्घत्वं तु न बाध्यते; विपर्ययात्()। "अग्नी इत्यत्र" इत्यादि। असति पूर्वगरहणे अग्नी इतयत्र पर्वपरसमुदयः स्थानी, तस्य चान्तरतमो दीर्घ आदेशो नास्तीत्यवयवान्तरतमो यस्तेन भवितव्यम्()। अवयवौ चात्र द्वौ--पूर्वः, परश्चेति; तत्र च पूर्वस्यैव भवितव्यमिति नियमो न लभ्यते, नियमकरणाभावादिति तयोः पर्यायेण भवन्नादेशः पक्षे परसवर्णो वा स्यात्()। अतस्तन्निवृत्यर्थं पूर्वग्रहणम्()। सवर्णग्रहणं तु विप्रतिषेधनिरासार्थम्()। असति हि तस्मिन्? दीर्घ इत्यनुवत्तमानेऽग्नी इत्यत्र विप्रतिषिद्धित्वमापद्येत यदि पूर्वो न दीर्घः; अथ दीर्घो न पूर्वः। यदि पूर्वो न दीर्घः; अथ दीर्घो न पूर्वः। यदि च पूर्वशब्देन पूर्वाकृतिरुच्येत्(), दीर्घादनुवृत्तेः पूर्वस्येति षष्ठी वा क्रियेत। तथा च सवर्णग्रहणं शक्यमकत्तम्()। क्रियमाणं वा तत्? सुखप्रतिपत्यर्थं वेदितव्यम्()। "दीर्घग्रहणं त्रिमात्रे स्थानिनि" इत्यादि। अग्नि औ+इति स्थिते, असति दीर्घग्रहण एकादेशः क्रियमाणः स्थानिन आन्तरतम्यात्? त्रिमात्रः प्राप्नोति; स्थानिनस्त्रिमात्रकत्वात्()। तथा हि--अग्निशब्दस्येकार एकमात्रः औकारो द्विमात्र इत्येतत्समुदायात्मकश्चात्र स्थानी। तस्मात्? त्रिमात्रे स्थानिन्यन्तरतमस्त्रिमात्र आदेशो मा भूदित्येवमर्थं दीर्घग्रहणम्()। दीर्घग्रहणे हि सति तेनादेशे विशिष्यमाणे त्रिमात्रस्यादेशप्रसङ्गो न भवति; द्विमात्रस्यैव

दीर्घसंज्ञाविधानात्()॥

बाल-मनोरमा

प्रथमयोः पूर्वसवर्णः १६३, ६।१।९८

शिव उ अच्र्य इति स्थिते-प्रथमयोः। "अकः सवर्णे" इत्यतोऽक इति, इको यणचीत्यतोऽचीति चानुवर्तते। "एकः पूर्वपरयो"रित्यधिकृतम्। प्रथमयोरित्यवयवषष्ठी। प्रथमाद्वितीये सुब्विभक्ती विवक्षिते। तदाह--अकः प्रथमेत्यादिना। इति प्राप्त इति। शिव--उ इत्यत्र अकारस्य उकारस्य च स्थाने पूर्वसवर्णे आकारे प्राप्त इत्यर्थः।

तत्त्व-बोधिनी

प्रथमयोः पूर्वसवर्णः १३४, ६।१।९८

प्रथमयोः। अत्र प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौणः, द्विवचनं तु समुदाय्यपेक्षया। "इको यणची"त्यतोऽचीति "अकः सवर्णे दीर्घः" इत्यतो"ऽको दीर्घ"इति "एकः पूर्वपरयो"रिति सूत्रं चानुवर्तते इत्याशयेन व्याचष्टे--अकः प्रथमाद्वितीययोरचीत्यादिना। अचि किम्?। रामः। अकः किम्? गावौ, नावौ। प्रथमयोः किम्?। वृक्षे, प्लक्षे। यद्यपीदं "नादिची"त्यनेनैव सिध्यति, तथापि "हरी" इत्यत्रेव "हर्यो"रित्यत्रापि पूर्वसवर्णदीर्घः स्यत्। तद्वारणाय "प्रथमयो"रित्युक्तमिति दिक्। पूर्वग्र्रहणं किम्?। "अग्नी"इत्यत्र पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं किम्?। त्रिमात्रे स्थानिनि त्रिमात्रो मा भूत्। "आद्गुण" इति। अपवादे निषिद्धे पुनरुत्सर्गस्य स्थिति"रिति न्यायादिति भावः। अत्र "भिद्योध्द्यौ नदे" "तौ स"दित्यादि लिङ्गम्।

---

सूत्रम्

काशिका-वृत्तिः

तस्माच् छसो नः पुंसि ६।१।१०३

तस्मात् पूर्वसवर्णदीर्घातुत्तरस्य शसो ऽवयवस्य सकारस्य पुंसि नकारादेशो भवति। वृक्षान्। अग्नीन्। वायून्। कर्तॄन्। हर्तॄन्। षण्डकान्। षण्ढकान्। षण्ढकान्। स्थूरान्। अररकान् पश्य। सर्व एते पुंलिङ्गविशिष्टं स्वार्थं प्रतिपादयन्ति। इह तु चञ्चेव चञ्चा, लुम्मनुष्ये इति कनो लुपि कृते लुपि युक्तवद् व्यक्तिवचने १।२।५ इति पुंसो ऽपि स्त्रीलिङ्गत, तेन नत्वं न भवति, चञ्चाः पश्य, वध्रिकाः पश्य इति। तस्मातिति किम्? एतांश्चरतो गाः पश्य। शासः इति किम्। वृक्षाः। प्लक्षाः। पुंसि इति किम्? धेनूः। बह्वीः। कुमरीः।

लघु-सिद्धान्त-कौमुदी

तस्माच्छसो नः पुंसि १३७, ६।१।९९

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि॥

न्यासः

तस्माच्छसो नः पुंसि। , ६।१।९९

"तस्मात्? पूर्वसवर्णदीर्घात्()" इति। एतेन तस्मादित्यनेनान्तरः पूर्वसवर्णदीर्घो निर्दिष्ट इति दर्शयति। "शसोऽवयवस्य सकारस्य" इति। अनेन शस इति सकारावयवापेक्षयावयवषष्ठीति पुंसीति प्रत्ययार्थस्येदं वा विशेषणम्()--"पुंसां [पुंसि--मु। पाठः] चेद्बहुत्वे शसुत्पन्न इति। प्रकृतिविशेषणं वा--पुंशब्दाच्चेत्? परः शसिति। तत्र यदा प्रत्ययार्थस्य विशेषमं तवा "सर्व एते" इत्यादेरयं पूर्वपक्षः--वृक्षान्(), अग्नीनित्यादिकं युक्तमुदाहरणम्(); पुसां बहुत्वेऽत्र शस

उत्पन्नत्वात्()। षण्डकान्? पण्डकानिति--एतदुदाहरणद्वयमयुक्तम्(), न ह्तर पुंसां बहत्वे शस्? उत्पन्नः, किं तर्हि? नपुंसकानामित्यत आह--"सर्व एते" इत्यादि। सर्वग्रहणेन न केवलं वृक्षादयः शब्दा पुंल्लिङ्गेन सामान्यविशेषेण विशिष्टं स्वार्थं प्रतिपादयन्ति, अपि तु षण्डकपण्डकशब्दावपीति दर्शयति। स्वार्थः पनरेषा पुंस्त्वेन सामान्यविशेषेणावच्छिन्नं वृक्षादिकं द्रव्यम्()। तदेवं यतः सर्व एते पुंल्लिङ्गविशिष्टार्थाभिधायिनः, तेनैतेभ्य उत्पद्यमानः शस्? पुंसामेव बहुत्वे उत्पद्यत इति पूर्वपक्षो निराकृतो भवति। यदा तु प्रकृतिविशेषणं तदायं पूर्वपक्षः--वृक्षानित्यादिकमित्युदाहरणमुपपद्यते, तत्र हि पुंशब्दात्? परः शस्? भवति; स्थूरान्(), अररकानिति इदमुदाहरणद्वयं नोपपद्यते; तथा हि स्थूराया अपत्यानि अररकाया अपत्यानीति "गर्गादिभ्यो यञ्()" ४।१।१०५ इति यञ्(), "यञञोश्च" (२।४।६४) इति लुकि कृते स्त्रीप्रत्ययस्यापि "लुक्? तद्धितलकि" १।२।४९ इति लुक्()--स्थूर, अररक, इत्येताभ्यां स्त्रीशब्दाभ्यामुत्पन्नोऽत्रि शस्? स्त्रीशब्दाभ्यां परो भवति, न नपुंसकशब्दाभ्याम्()? इत्यत आह--"सर्व एते" इत्यादि। प्रकृतिरेव ह्त्र तद्धितलुगन्ता प्रत्ययार्थे वत्र्तते, स च प्रत्ययार्थः, पुंल्लिङ्गेन विशिष्टः। तस्मान्न केवलं वृक्षादयः शब्दाः पुंल्लिङ्गेन विशिष्टं वृक्षादिकं स्वार्थं प्रतिपादयन्ति, अपि तु स्थूराररकशब्दावपीति पूर्वपक्षः प्रतिक्षिप्तो भवति। अयं तर्हि प्रत्ययार्थविशेषणपक्षे दोषः--चञ्चेव चञ्चा पुमांस इति। "इवे प्रतिकृतौ" (५।३।९६) कन्? "लुम्मनुष्ये" ५।३।९८ इति लुप्(); यदा लुबन्ताच्चञ्चाशब्दात्? पुसां बहुत्वे शस्? उत्पद्यते तदा चञ्चाः पश्येत्यत्र नत्वं प्राप्नोति? इत्यत आह--"इह तु" इत्यादि। नैव ह्त्र पुंबहुत्वे शस्? उत्पन्नः, किं तर्हि? स्त्रीबहुत्वे; पुंसोऽपि युक्तवद्भावेन स्त्रीत्वातिदेशात्()। ततोऽत्र नत्वं न भवति। दीर्घग्रहणं प्रकृतम्(), तस्य चेहार्थवशेन पञ्चम्यन्तस्योपस्थाने सत्यन्तरेणापि तस्मादित्येतद्ववचनं दीर्घादेवोत्तरस्य शसो नत्वं भविष्यतीत्यभिप्रायेणाह--"इह तु" इत्यादि। नैव ह्त्र पुंबहुत्वे शस्? उत्पन्नः, किं तर्हि? स्त्रीबहुत्वे; पुंसोऽपि युक्तवद्भावेन स्त्रीत्वातिदेशात्()। ततोऽत्र नत्वं न भवति। दीर्घग्रहणं प्रकृतम्(), तस्य चेहार्थवशेन पञ्चम्यन्तस्योपसथाने सत्यन्तरेणापि तस्मादित्येतद्ववचनं दीर्घादेवोत्तरस्य शसो नत्वं भविष्यतीत्यभिप्रायेणाह--"तस्मादिति किम्()" इति। "एतान्? गाश्चरतः पश्च" इति। "औतोऽम्शसोः" ६।१।९० इत्यात्वम्()। यद्यनन्तरदीर्घप्रत्यवमर्शी तच्छब्देनोपादीयेत, तदाऽविशेषेण दीर्घमात्रान्नत्वं विधीयमानम्()--एतान्? गाश्चरतः पश्येत्यत्रापि स्यात्(), भवति ह्यमाकारो दीर्घः। तस्मात्? तच्छब्दे तु न दोषः; न ह्यमननतरसूत्रविहित आकारः॥

बाल-मनोरमा

तस्माच्छसो नः पुंसि १९५, ६।१।९९

तस्माच्छसोनः। "प्रथमयोः पूर्वसवर्ण" इति पूर्वसूत्रकृतः संनिहितः पूर्वसवर्णदीर्घस्तस्मादित्यनेन परामृश्यते। दिक्()शब्दयोगे पञ्चम्येषा। तेन "परस्ये"त्यध्याहार्यम्। "शस" इत्यवयवषष्ठी। स चावयवः परत्वेन विशेष्यते। स चावयवोऽर्थात् सकार एव, अन्यस्याऽसंभवात्। तदाह--[कृत]पूर्वेत्यादिना। कृतपूर्वेति किम्?। दीर्घात्परस्य शसवयवस्येत्युक्तौ, "एतान् गाः पश्ये"त्यत्र गोशब्दात् शसःसस्यापि नत्वप्रसङ्गः। अतः [कृत] पूर्वसवर्णदीर्घादिति। "गा" इत्यत्र च औतोम्शसोरित्याकार एकादेशः, न तु पूर्व सवर्णदीर्घ इति ततः परस्य न नत्वम्। शसः किम्?। रामाः प्रकृते च नत्वे रामानिति रूपम्।

तत्त्व-बोधिनी

तस्माच्छसो नः पुंसि १६३, ६।१।९९

तस्माच्छसो। "त"च्छब्देन संनिहितः पूर्वसवर्णदीर्घः परामृश्यते। दीर्घमात्रपरामर्शे तु "एतान् गाः पश्ये"त्यत्रापि नत्वप्रसङ्गात्। "शस"इत्यवयवषष्ठी, स चावयवः परत्वेन विशेष्यते-पूर्वसवर्णदीर्घात्परस्य शसोऽवयवस्येति, तदेतदाह-परो यः शसः सकार इति। "परो यः श"सिति न व्याख्यातम्। कृते पूर्वसवर्णदीर्घे ततः परस्य शसोऽसंभवात्।

सूत्रम्

काशिका-वृत्तिः

नादिचि ६।१।१०४

अवर्णातिचि पूर्वसवर्णदीर्घो न भवति। वृक्षौ। प्लक्षौ खट्वे। कुण्डे। आतिति किम्? अग्नी। इचि इति किम्? वृक्षाः।

लघु-सिद्धान्त-कौमुदी

नादिचि १२७, ६।१।१००

आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि। रामौ॥

न्यासः

नादिचि। , ६।१।१००

"खट्वे" इति। "औङ आपः" ७।१।१८ इति शीभावः। "कुण्डे" इति। अत्रापि "नपुंसकाच्च" ७।१।१९ इति, तत्र कृते "आद्गुणः" ६।१।८४ इति गुणः॥

बाल-मनोरमा

नादिचि १६४, ६।१।१००

नादिचि। न-आदिति छेदः। आदिति पञ्चमी। पूर्वसवर्ण इत्यनुवर्तते। तदाह--अवर्णादिति। अनेन शिव--उ इत्यत्र पूर्वसवर्णदीर्घनिषेधः। आद्गुण इति। शिव उ इति स्थिते आद्गुणे इति गुणं बाधित्वा पूर्वसवर्णदीर्घे प्राप्ते तस्मिन्निषिद्धे सति बाधके निवृत्ते गुणः पुनरुन्मिषति। "देवदत्तस्य हन्तरि हते देवदत्तस्य न पुनरुन्मज्जन"मिति न्यायस्तु नात्र प्रवर्तते। देवदत्ते हते सति तद्धन्तुर्हने देवदत्तस्य न पुनरुन्मेष इति हि तदर्थः। देवदत्तं हन्तुमुद्युक्तस्य हनने तु देवदत्तस्य उन्मेषोऽस्त्येव। प्रकृते च पूर्वसवर्णदीर्घेण गुणो न हतः। किन्तु हननोद्यम सजातीयं प्रसक्तिमात्रं पूर्वसवर्णदीर्घस्य स्थितम्। प्रसक्ते च तस्मिन्निषदे गुणोन्मेषो निर्बाध एवेति स्वादिष्विति सूत्रे कैयटे स्पष्टम्। "अपवादे निषिद्धे उत्सर्गस्य स्थितिः" इति न्यायश्च एतन्मूलक एव। "तौ सत्" "भिद्योद्ध्यौ नदे" इत्यादिनिर्देशाश्चात्रानुकूला इत्यलम्। एङः पदान्तादतीति। शिवो-अच्र्य इति स्थिते ओकारस्य अकारस्य च स्थाने पूर्वरूपमोकारः। देवा अत्रेति। देवास्-अत्रेति स्थिते, सस्य रुः तस्य दीर्घादाकारात्परत्वादतः परत्वाऽभावादुत्वं न,--किन्तु "भोभगो" इति यत्वे, लोपः शाकल्यस्ये"ति [यकार]लोपः। ()आ आगन्तेति। ()आस्-आगन्तेति स्थिते सस्य रुः। तस्य ह्रस्वाकारपरकत्वाऽभावादुत्वं न, किन्तु--यत्वं, लोपश्च। एहीति। सुरुआओत३र्--अत्रेति स्थिते प्लुतात्परस्य रोरुत्वनिवृत्तये अप्लुतादिति पदमित्यर्थः। नन्वत्र रोरतः परत्वाभावादेव उत्वनिवृत्तिसिद्धेरप्लुतादिति व्यर्थमेवेत्यत आह--प्लुतस्यासिद्धत्वादिति। उत्वे कर्तव्ये प्लुतस्यासिद्धत्वादतः परोऽयं रुः। अतस्तस्य उत्वे प्राप्ते तन्निवृत्त्यर्थमप्लुतादित्यावश्यकमित्यर्थः। नन्वप्लुतादित्युक्ते।ऽपि रोरुत्वमत्र दुर्वारम्, उत्वे कर्तव्ये प्लुतस्यासिद्धतया अप्लुतात्परत्वस्यापि सत्त्वादित्यत आह--प्लुतादितीति। विशेषणे तु तत्सामथ्र्यान्नासिद्धत्वमिति। यदि उत्वे कर्तव्ये प्लुतस्यासिद्धत्वं, तर्हि अप्लुतादिति विशेषणं व्यर्थमेव स्यात्। दत्तेऽपि विसेषणे प्लुतस्यासिद्धतयाऽप्लुतात्परत्वस्यापि सत्त्वेन उत्लप्राप्तिदोषतादवस्थ्यात्। अतोऽप्लुतादिति विशेषणसामथ्र्यात्प्लुतस्य नाऽसिद्धत्वमिति विज्ञायते इत्यर्थः। नन्वेवमपि अप्लुतादिति व्यर्थं, "प्लुतात् परस्य रोरत" इति तपरकरणादेव उत्वनिवृत्तिसिद्धेः। नच उत्वे कर्तव्ये प्लुतस्याऽसिद्धत्वादतः परत्वस्यापि सत्त्वादुत्वं स्यादिति वाच्यं; तपरकरणसामथ्र्यादेव प्लुतस्याऽसिद्धत्वाऽबावविज्ञानेन अतः परत्वाभावेनैव उत्वनिवृत्तेः सम्भवादित्यत आह--तपरकरणस्येति। "प्लुतस्यासिद्धत्वाऽभावसाधने" इति शेषः। कुत एतदत आह--दीर्घनिवृत्त्येति।

"देवा-अत्रे"त्यादौ दीर्घव्यावृत्त्या लब्धप्रयोजनकत्वादित्यर्थः। येन विना यदनुपपन्नं तत्तस्य गमकम्। यथा दिवा अभुञ्जानस्य पीनत्वं रात्रिभोजनं विना अनुपपद्यमानं रात्रिभोजनस्य गमकम्। प्रकृते तु प्लुतस्यासिद्धत्वेऽपि "अत" इति तपरकरणं "देवा अत्रे"त्यादौ दीर्घव्यावृत्तिरूपं प्रयोजनं लब्ध्वा उपपद्यमानं सत्कथं प्लुतस्यासिद्धत्वाऽभावं गमयितुं शक्नुयादिति भावः। तिष्ठतु पय आ३ग्निदत्तेति। अत्र पयस् इति स्थिते, सस्य रुः, तस्य प्लुतपरकत्वादुत्वं न। ननु दूराद्धूते चेति वाक्यस्य टेः प्लुतविधानात् कथमिह अग्निदत्तशब्दे आद्यवर्णस्य प्लुत इत्यत आह--गुरोरिति।

तत्त्व-बोधिनी

नादिचि १३५, ६।१।१००

तद्धि "नादिची"ति पूर्वसवर्णदीर्घे निषिद्धे पुनरुत्सर्गस्य वृद्धेः प्रवृत्त्यैव सिध्यति नान्यथेति। नन्वेवं "नान्तःपादमव्यपरे" इति पाठे "सुजाते अ()आसूनृते" "उपप्रयन्तो अध्वर"मित्यादौ "एङः पदान्तादती"ति पूर्वरूपमेव हि तेन निषिध्येत, त()स्मश्च निषिद्धे "एचोऽडयवायावः" इत्युत्सर्गोऽपि प्रवर्तेत।मैवम् ; बाधके निषिद्धे बाध्यमपि क्वचिन्नेति स्वीकारात्तत्सिद्धेः।

---

सूत्रम्

काशिका-वृत्तिः

दीर्घाज् जसि च ६।१।१०५

दीर्घात् जसि इचि च परतः पूर्वसवर्णदीर्घः न भवति। कुमार्यौ। कुमार्यः। ब्रह्मबन्ध्वौ। ब्रह्मबन्ध्वः।

लघु-सिद्धान्त-कौमुदी

दीर्घाज्जसि च १६२, ६।१।१०१

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात्। विश्वपौ। विश्वपाः। हे विश्वपाः। विश्वपाम्। विश्वपौ॥

लघु-सिद्धान्त-कौमुदी

दीर्घाज्जसि च १९४, ६।१।१०१

पप्यौ २। पप्यः। हे पपीः। पपीम्। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः २। पप्योः। दीर्घत्वान्न नुट्, पप्याम्। ङौ तु सवर्णदीर्घः, पपी। पप्योः। पपीषु। एवं वातप्रम्यादयः॥ बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी॥

न्यासः

दीर्घाज्जसि च। , ६।१।१०१

"आत्()" इति नानुवत्र्तते, तेनाऽयं दीर्घामात्रात्? पूर्वसवर्णस्य प्रतिषेधः। अथ खट्वा इत्यत्र कथं "प्रथमयोः पूर्वसवर्णः" (६।१।१०२) इति दीर्घत्वम्()? दीर्घादिति वचनं स्पष्टार्थम्()। ननु चासति तस्मिन्? वृक्षा इत्यत्रापि स्यात्()? नैतदस्ति; यदि ह्रत्रापि स्यात्(), तदा पूर्वसत्रे "इचि" इत्येतदपार्थकं स्यात्()। इह तर्हि स्यात्--अग्नये इति? इष्टत्वाददोषः। अत्र हि परत्वात्? "जसि च" ७।३।१०९ इति गुण एव भवति। उत्तरार्थ तर्हि स्यात्()--"वा छन्दसि" (६।१।१०६) इति दीर्घाद्यथा स्यात्()? नैतदस्ति; वाग्रहणस्य तत्र व्यवस्थितविभाषाविज्ञानात्()--दीर्घादेव भविष्यति न ह्यस्वात्()। "जसि च" ७।३।१०९ इत्येतदपि स्पष्टार्थमेव। ननु चासति "जसि च" इत्येतस्मिन्? युवतीः पश्य, पद्धतीः पश्येत्यादौ शस्यपि प्रतिषेधः स्यात्()? ज्ञापकान्न भविष्यति, यदयं "तस्माच्छसो नः पुंसि" ६।१।९९ इति पुंग्रहणं करोति, तज्ज्ञापयति--शसि प्रतिषेधो न भवतीति। तद्धि नपुंसके पूर्वसवर्णदीर्घत्वासम्भवात्? स्त्रीनिवृत्त्यर्थमेव क्रियते। यदि च

स्तिरियामप्ययं युवतीः पश्येत्यादौ प्रतिषेधः स्यात्(), तदा पूर्वसवर्णदीर्घत्वाभावान्नत्वस्य प्रतिप्तिरेव नास्तीति किं पुंग्रहणेन? उत्तरार्थं तर्हि जस्ग्रहणम्()? नैतदस्ति; वाग्रहणस्य तत्र व्यवस्थितविभाषात्वविज्ञानादेव जसोऽन्यत्र न भविष्यति॥

बाल-मनोरमा

दीर्घाज्जसि च २३७, ६।१।१०१

दीर्घाज्जसि च। "प्रथमयोः" इत्यतः "पूर्वसवर्ण" इति "नादिची"त्यतो "ने"ति "इची"ति चानुवर्तते। तदाह दीर्घादित्यादिना। नन्विदं सूत्रं व्यर्थं, "नादिची"त्येव सिद्धेरिति शङ्कते-यद्यपीहेति। ननु जसि वि()आपा-असिति स्थिते पूर्वसवर्णदीर्घनिषेधार्थमिदं सूत्रमावश्यकं, तत्र "नादिची"त्यस्याऽप्रवृत्तेरित्यत आह-जसि त्विति। माऽस्तु पूर्वसवर्णदीर्घनिषेधः। पूर्वसवर्णदीर्घे सत्यपि जसि "वि()आपाः" इति सिध्यति। तन्निषेधे सत्यपि "अकः सवर्णे दीर्घः" इति कृते।ऽपि "वि()आपाः" इत्येवं रूपं सिध्यति। अतः किं तन्निषेधेनेत्यर्थः। परिहरति--तथापीति। इत्यादीति। आदिना लक्ष्म्यावित्यादिसङ्ग्रहः। तत्र "नादिची"त्यस्याऽप्रसक्त्या तन्निषेध आवश्यक इति भावः। ननु दीर्घाज्जसि चे"ति सूत्रं यदि "गोर्यौ" इत्याद्यर्थमेव, तर्हि ईदन्ताधिकारे गौरीशब्दनिरूपणावसर एव तदुपन्यासो युक्त इत्यत आह-इहापीति। वि()आपावित्यत्र "नादिची"त्यस्य "दीर्घाज्जसि चे"त्यस्य च प्राप्तौ परत्वेन "दीर्घाज्जसि चे"त्यस्यैवोपन्यासौचित्यादित्यर्थः। "अमि पूर्वः"। वि()आपाम्।

तत्त्व-बोधिनी

दीर्घाज्जसि च २०१, ६।१।१०१

दीर्घाज्जसि च। चकारादिचीत्यनुकृष्यते, नेति चानुवर्तते, तदाह-दीर्घाज्जसि इचि चेति। सूत्रे चकाराऽभावे ह्रस्वाऽकारादिचि दीर्घाकारात्तु जसीति व्यवस्था संभाव्येतेति भावः। इत्याद्यर्थमिति।

ननु "यू स्त्र्याख्यौ" "ल्वादिभ्यः" इति निर्देशादिक्प्रत्याहाराऽच्प्रत्याहारयोरेव निरूढलक्षणेति व्याख्यायतां, तथाच दीर्घस्याऽच्त्वाऽभावाद्गौर्यावित्यादौ पूर्वसवर्णदीर्घो न प्राप्नोतीति किमनेन निषेधसूत्रेणेति चेन्मैवम्, अस्मादेव निषेधाज्ज्ञापकादिगज्भिन्नेष्वपि प्रत्याहरेषु लक्षणा स्वीक्रियते। अन्यथा "गौरी"रित्यादौ शसि परतः पूर्वसवर्णदीर्घो न स्यात्। किंच "उपार्छती"त्यादौ "उरण्रपरः," "नैषादकर्षुकः" इत्यादौ "इसुसु"गिति ठस्य कादेशः, "अमीषा"मित्यादौ इणः परस्य सस्य च षत्वं न सिध्यतीति दिक्। "प्रथमयोः--" इति सूत्रानन्तरं "दीर्घाच्छसी"त्येव सुवचम्। दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इति तस्यार्थः। एवं च चकारो न कर्तव्यो, नेति च नानुवर्तनीयमिति महल्लाघवमित्येके। "शसि दीर्घादेवे"ति विपरीतनियमवारणाय "नृ()न्पे", "कानाम्रेडिते" इति निर्देशाश्रयणे प्रतिपत्तिगौरवं स्यादिति यतान्यास एव श्रेय इत्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

वा छन्दसि ६।१।१०६

दीर्घात् छन्दसि विषये जसि च इचि च परतो वा पूर्वसवर्नदीर्घो न भवति। मारुतीश्चतस्रः पिण्डीः। मारुत्यश्चतस्रः पिण्ड्यः। वाराही। उपानही। वाराह्यौ। उपानह्यौ।

न्यासः

वा छन्दसि। , ६।१।१०२

"मारुतीः" इति। मरुद्()देवता आसामिति "सास्य देवता" (४।२।२४) इत्यण्? "टिड्ढाणञ्()" ४।१।१५ इति ङीप्(); सवर्णदीर्घत्वम्()। "वाराहीः" [वाराही--काशिका पदमंजरी च] इति। वराहस्य विकार ति "अवयवे च प्राण्योषधिवृक्षेभ्यः" ४।३।१३३ इत्यण्(), पूर्ववन्ङीप्()। "उपानही" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्()॥

---

सूत्रम्

काशिका-वृत्तिः

अमि पूर्वः ६।१।१०७

अकः इत्येव। अमि परतोटकः पूर्वपरयोः स्थाने पूर्वरुपम् एकादेशो भवति। वृक्षम्। प्लक्षम्। अग्निम्। वायुम्। पूर्वग्रहणम् किम्? पूर्व एव यथा स्यात्, पूर्वसवर्णो ऽन्तरतमो मा भूतिति, कुमारीम् इत्यत्र हि त्रिमात्रः स्यात्। वा छन्दसि ६।१।१०२ इत्येव, शमीं च, शम्यं च। गौरीं च, गौर्यं च।

लघु-सिद्धान्त-कौमुदी

अमि पूर्वः १३५, ६।१।१०३

अकोऽम्यचि पूर्वरूपमेकादेशः। रामम्। रामौ॥

न्यासः

अमि पूर्वः। , ६।१।१०३

पूर्वसवर्णदीर्घत्वे प्राप्ते वचनमिदम्()। दीर्घ इति चेहानुवत्र्तते, अन्यथा हीदं वचनमनर्थकं स्यात्()। अथ पूर्वग्रहणं किमर्थम्(), यावता प्रकृतं यत्? पूर्वग्रहणं तदेवेहानुवर्त्तिष्यत इति? अत आह--"पूर्वग्रहणम्()" इत्यादि। यथाजातीयकः पूर्वस्तथाजातीयक एव यथा स्यादित्येवमर्थं पूर्वग्रहणम्()। एवकारेण यद्व्यवच्छिन्नं तद्दर्शयितुमाह--"पूर्वसवर्णान्तरतमो मा भूत्()" इति। पूर्वसवर्णश्चासावन्तरतमश्चेति कर्मधारयः। असति हि पूर्वग्रहणे यत्? पूर्वकं पूर्वग्रहणं तेनैवानुवर्त्तितव्यम्(), तस्मिश्चानुवर्तमाने ततसम्बद्धं सव्रणग्रहणपि अनुवत्र्तेत, तथा च "स्थानेऽन्तरतमः" १।१।४९ इत्यनया परिभाषया पूर्वस्य यः सवर्णः स एव परसज्येत। किं पुनरेवं सत्यनिष्टं स्यात्(), वृक्षमित्यादौ द्विमात्रस्य स्थानिनो द्विमात्र एव स्यादिति चेत्()? नैतदस्ति; एवं हि वचनमिदमनर्थकं स्यात्(), "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इत्यनेन सिद्धत्वादित्यत आह--"कुमारिमित्यत्र हि" इत्यादि। कुमारीशब्दस्येकारो द्विमात्रः, अमोऽकारो मात्रिकः; तत्समुदायात्मकश्चात्र स्थानी, तत्र पूर्वसवर्णो विधीयमानस्त्रिमात्रलस्य स्थानिनोऽन्तरतमस्त्रिमात्र एव स्यात्, पूर्वग्रहणे तु सति यथाजातीयक एव पूर्वः, तथाजातीयक एव द्विमात्रो भवति। "वा छन्दसीत्येव" इत्यादि। यदि तरहि "वा छन्दसि" ६।१।१०२ इत्यनुवत्र्तते, तेन सहास्यैकवाक्यतायां भाषायां परपूर्वत्वं न सिध्यति? नैतदस्ति; यस्मात्? तदिहानुवर्तमानं पूर्ववद्वाक्यभेदेन च्छन्दस्येव विकल्पं करोति, न भाषायाम्()॥

बाल-मनोरमा

अमि पूर्वः १९३, ६।१।१०३

"अकः सवर्णे" इति बाधित्वा "अतो गुणे" इति पररूपं प्राप्तम्-तद्बाधित्वा"प्रथमयो"रिति पूर्वसवर्णदीर्घे प्राप्ते -- अमिपूर्वः। "अकः सवर्णे दीर्घ" इत्यतोऽक इति पञ्चम्यन्तमनुवर्तते। "एकः पूर्वपरयो"रित्यधिकृतम्। "इको यणची"त्यतोऽचीत्यनुवर्तते। तदाह--अकोऽम्यचीति। अमि विद्यमानो योऽच् तस्मिन् परे इत्यर्थः। "राम"मिति

मकारादकारस्य अमवयवाऽकारस्य च पूर्वरूपमकार एको भवति। अचीत्यनुवृत्तौ "अकोऽमि परे पूर्वपरयोः पूर्वरूपमेकादेशः स्या"दिति लभ्यते। तथा सति अमो मकारसहितस्य पूर्वरूपं स्यात्। तन्मा भूदित्यजनुवृत्तिः। रामाविति। राम औडिति स्थिते हलन्त्यमिति टकारस्य इत्संज्ञायां लोपः औटष्टकारः सुडिति प्रत्याहारार्थः।

तत्त्व-बोधिनी

अमिपूर्वः १६१, ६।१।१०३

अमिपूर्वः। "प्रथमयो"रिति पूर्वसवर्णदीर्घे प्राप्तेऽयमारम्भः। "इको यणची"त्यतोऽचीत्यनुवर्तते, तदाह--अम्यचीति। अमि योऽच् तस्मिन्। अमोऽवयवे अचीति यावत्। तेन मकारसहितस्य पूर्वरूपं नेति स्थितं मनोरमायाम्। एवम् "अक्षादूहिन्या"मित्यादावपि "ऊहिन्यां योऽच्तस्मि"न्नित्यादि बोध्यम्। "पदास्वैरिबाह्ये"त्यादिनिर्देशाश्चास्मिन्व्याख्याने लिङ्गमित्यपि स्थितम्। कथं तर्हि काशिकादावमि परत इत्येवोक्तं, न त्वम्यचीति चेदत्राहुः-"तस्मादित्युत्तरस्या," "आदेः परस्ये"त्यादेरेवादेश इति निर्णीते "एकः पूर्वपरयो"रित्यादेशः पूर्वपरयोर्वर्णयोरेव भविष्यतीत्याशयेन नोक्तमिति।

---

सूत्रम्

काशिका-वृत्तिः

सम्प्रसारणाच् च ६।१।१०८

पूर्वः इत्येव। सम्प्रसारणातचि परतः पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशो भवति। यजि इष्टम्। वपि उप्तम्। ग्रहि गृहीतम्। सम्प्रसरणविधानसामर्थ्यात् विगृहीतस्य श्रवणे प्राप्ते पूर्वत्वं विधीयते। वा छन्दसि ६।१।१०२ इत्येव, मित्रो नो अत्र वरुणो यज्यमानः। परपूर्वत्वविधाने सत्यर्थवत् सम्प्रसारणविधानम् इति इष्ट इत्येवम् आदिषु पूर्वत्वभावे यणादेशो भवत्येव। अन्तरङ्गे च अचि इक्र्तार्थं वचनम् इति बाह्ये पश्चात् सन्निपतिते पूर्वत्वं न भवति। शकह्वौ। शकह्वर्थम्।

लघु-सिद्धान्त-कौमुदी

संप्रसारणाच्च २५९, ६।१।१०४

संप्रसारणादचि पूर्वरूपमेकादेशः। एत्येधत्यूठ्स्विति वृद्धिः। विश्वौहः, इत्यादि॥

न्यासः

सम्प्रसारणाच्च। , ६।१।१०४

सम्प्रसारणस्य यणादेशो मा भूदित्येवमर्थमिदं परपूर्वत्वं विधीयते। यदि चात्र यणादेशः स्यात्(), तदा संप्रसारणविधानामनर्थकं स्यात्? तस्मात्()। सम्प्रसारणविधानसामथ्र्यादेव यणादेशो न भविष्यति, तत्? किमर्थमिदं विधीयते? इत्याह--"सभ्प्रसारणविधानसामथ्र्यात्()" इत्यादि। सम्प्रसारणविधानसामथ्र्याद्यणादेशो न भवतीति विगृहीतस्याकृतसंहिताकार्यस्य श्रवणं प्राप्नोति, तस्मान्मा भूदेष दोष इति परपूर्वत्वं विधीयते। "वा च्छन्दसीत्येव" इत्यादि। अत्रापि पूर्ववद्वाक्यभेदो द्रष्टव्यः; अन्यथा भाषायां न स्यात्()। "यज्यमानः" [यज्यमानौ--काशिका] इति। परपूर्वत्वाभावपक्षे यणादेशः। कथं पुनरत्र यणादेशः, यावता विगृहीतस्यैव ग्रहणेन भवितव्यम्(), इदानीमेव ह्रुक्तम्()--सम्प्रसारणविधानसामथ्र्याद्विगृहीतस्यैव श्रवणे प्राप्ते परपूर्वत्वं विधीयते? इत्यत आह--परपूर्वत्वविधाने" इत्यादि। अनारब्धे हि परपूर्वत्वे विगृहीतस्यैव श्रवणं प्राप्नोति, मा भूत्? सम्प्रसारणस्य वैय्यथ्र्यमिति कृत्वा। सति तु परपूर्वत्वे यत्र परपूर्वत्वम्()--इष्टमित्यादौ, तत्रार्थवत्? सम्प्रसारणम्()। अतः परपूर्वत्वाभावपक्षे यणादेशो भवत्येव। अथेह कस्मान्न भवति--शकह्वौ शकह्वर्थमिति; अत्र हि शकं ह्वयतीति क्विप्(), यजादित्वात्? सम्प्रसारणम्(), परपूर्वत्वम्(),

तस्य "अग्तादिवच्च" (६।१।८५) इति सम्प्रसारणग्रहणेन ग्रहणात्? सम्प्रसारणासम्प्रसारणयोरेकादेशस्य सम्प्रसारणस्य व्यपदेशभावत्वात्(), औकारेऽर्थशब्दे च परतो व्यवस्थिते "सम्प्रसारणाच्च" (६।१।१०८) इति परपूर्वत्वं प्राप्नोति? इत्यत आह--"अन्तरङ्गे चाचि" इत्यादि। योऽयं ह्वयतेरेचः स्थाने विहित आकारः स सम्प्रसारणस्यान्तरङ्गः प्रत्यासन्नः; उभयोरप्येकधात्वन्तर्गतत्वात्()। औकारोऽर्थशब्दाकारश्च विप्रकृष्टः। विप्रकृष्टस्तु देशतः कालतश्च, यदाह--"ब्राआह्वे" इति। यस्य धातोः सम्प्रसारणमवयवः, तत्रानन्तर्भावाद्वाह्वः। कालतश्च, यदाह--"पश्चात्? सन्निपतिते" इति। पूर्वरूपविधानकालादुतरकालं सन्निहित इत्यर्थः। तत्र सन्निकृष्टविप्रकृष्टयोरचोः प्रत्यासत्तेरन्तरङ्गो योऽच्? तत्रेदं वचनं प्रवत्र्तते, ततर चरितार्थमिति विप्रकृष्ट औकारादौ पश्चात्? सन्निहते न भवति॥

बाल-मनोरमा

संप्रसारणाच्च , ६।१।१०४

संप्रसारणमिति। तेन वाहो यो यण् वकारस्तस्य ऊडिति लभ्यते। संप्रसारणमित्यननुवृत्तौ "अलोऽन्त्यस्य" इति हकारस्य स्यात्। तदनुवृत्तौ तु ऊठो यण्स्थानिकत्वूलाभान्नालोऽन्त्यस्येति भवति। वि()आ ऊ आह् असिति स्थिते-। संप्रसारणाच्च। "इको यणची"त्यतोऽचीति "अमि पूर्वः" इत्यतः पूर्व इति चानुवर्तते। "एकः पूर्वपरयोः" इत्यधिकृतम्। तदाह--संप्रसारणादित्यादिना। वि()आ ऊह असिति स्थिते आद्गुणमाशङ्क्याह--एत्येधत्यूठ्स्विति। "अनेन गुणापवादो वृद्धि"रिति शेषः। वि()आऔहः। वि()आऔहा। इत्यादीति। वि()आवाड्भ्याम् वि()आवाड्भिः। वि()आवाड्भ्यः। वि()आऔहे। वि()आऔहः। वि()आऔहः। वि()आऔहोः वि()आऔहाम्। वि()आवाट्त्सु वि()आवाट्सु। ननु वहश्चेति ण्विविधौ "छन्दसि सहः" इत्यतश्छन्दसीति केचिदनुवर्तयन्ति। तन्मते वि()आआहशब्दस्य लोके कथं प्रयोग इत्यत आह--छन्दस्येव ण्विरितिपक्षे णिजन्ताद्विजिति। वि()आं वाहयतीत्यर्थे वाह् इ इति ण्यन्तात् "अन्येभ्योऽपि दृश्यते" इति विचि "नेड्वशि कृती"ति इडभावे णिलोपेऽपृक्तलोपे उपपदसमासे वि()आआहशब्दो सोते प्रयोगार्हः। किन्तु तस्य ऊठ् न भवति, "अचः परस्मि"न्निति णिलोपस्य स्थानिवत्त्वाऽभावेन तस्य भत्वाऽभावात्। वाहयतेः क्विपि वि()आवाहशब्दस्य तूठ् निर्हाध एव, "क्वौ लुप्त"मिति णिलोपस्य स्थानिवत्त्वाऽभावेन तस्य भत्वाऽनपायात्। अत एव "विभाषा पूर्वाह्णापरह्णाभ्या"मिति सूत्रे प्रष्ठौह आगतं प्रष्ठवाड्रूपर्यमिति लौकिकविग्रहवाक्ये "प्रष्ठौह" इति प्रयोगः सङ्गच्छते। क्वचित्पुस्तके "छन्दस्येव ण्विरिति प्रामाणिकाः" इति पठ()ते। "कव्यपुरीष" इत्याद्युत्तरसूत्रे तदनुवृत्तेरावश्यकत्वादिति तदाशयः। अनः=शकटं वहतीत्यर्थे अनसि वहेः क्विप्, अनसो डश्चेति सस्य डश्च। "वचिस्वपियजादीनां किती"ति यजादित्वाद्वकारस्य सम्प्रसापरणमुकारः। "संप्रसारणाच्चे"ति पूर्वरूपम्। अनडुहिति रूपं। ततः सुबुत्पत्तिः।

तत्त्व-बोधिनी

संप्रसारणाच्च २९०, ६।१।१०४

संप्रसारणाच्च। "अमि पूर्वः"इत्यतः "पूर्व"इति वर्तते" "इकोयणची"त्यतोऽचीति च, "एकः पूर्वपरयो"रिति ताधिक्रियते। तदाह----संप्रसारणादचीत्यादिना।छन्दस्येव ण्विरिति। "वहश्चे"ति सूत्रे "भजो ण्विः""छन्दसि सहः"इत्यतो ण्विप्रत्यस्य "च्छन्दसी"त्यस्य चाऽनुवृत्तेरिति भावः। स्यादेतत्--"वाहः"इत्येव सूत्रमस्तु, संप्रसारणमेवाऽन्न विधीयतां, तस्य लघूपधगुणो कृते "वृद्धिरेची"ति वृद्धौ सिद्धं "वि()आऔह"इत्यादि, किमूठ्ग्रहणेन()। सत्यम्। एवं स्थिते क्रियमाणमूठ्ग्रहणं बहिरङ्गपरिभाषां ज्ञापयति। तस्यां हि सत्यां जातस्य बहिरङ्गस्य संप्रसारणस्याऽसिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम्। नन्वनकारान्तोपपदेऽकारान्तोपसर्गोपपदे च रूपे विशेषः स्यादिति कथमऋठग्रहणं ज्ञापकमिति चेत्, अत्राहुः कैयटादयः---भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाऽभावोऽनुमीयत इति। एतेन भुवं वहतीति भूवाट्। भूहः। भूहा। प्रौहः। प्रौहेत्यादिप्रयोगाः परास्ताः।

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एङः ५।१ ११८ पदान्तात् ५।१ अति ७।१ ११८ पूर्वः १।१ १०३ एकः १।१ ८१ पूर्व-परयोः ६।२ ८१ संहितायाम् ७।१ ७०

अर्थः॥

पदान्तात् एङः अति परतः पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः भवति, संहितायां विषये॥

उदाहरणम्॥

अग्नेऽत्र, वायोऽत्र॥

काशिका-वृत्तिः

एङः पदान्तादति ६।१।१०९

एङ् यः पदान्तः तस्मादति परतः पूर्वपरयोः स्थाने पूर्वरूपम् एकाद्शो भवति। अग्ने ऽत्र। वायो ऽत्र। अयवादेशयोरयम् अपवादः। एङः इति किम्। दध्यत्र। मध्वत्र। पदान्तातिति किम्? चयनम्। लवनम्। अति इति इम्। वायो इति। भानो इति। वायविति। भानविति। तपरकरणम् इति किम्? वायवायाहि।

लघु-सिद्धान्त-कौमुदी

एङः पदान्तादति ४३, ६।१।१०५

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णोऽव॥

न्यासः

एङः पदान्तादति। , ६।१।१०५

"अग्नेऽत्र" इति। "सम्बुद्धौ च" ७।३।१०६ इति गुणः॥

बाल-मनोरमा

एङः पदान्तादति ८६, ६।१।१०५

एङः पदान्तादति। "अमि पूर्व" इत्यतः पूर्व इत्यनुवर्तते। एकः पूर्वपरयोरित्यधिकृतं। तदाह--पदान्तादित्यादिना। हरे-अवेति स्थितेऽयादेशं बाधित्वा पूर्वरूपमेकारः। विष्णो-अवेत्यत्राऽवादेशं बाधित्वा पूर्वरूपमोकारः।

तत्त्व-बोधिनी

एङः पदान्तादति ७०, ६।१।१०५

एङः पदान्तादति। अयवोरपवादः। "ङसिङसोश्चे"त्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टप्रतिपत्तये इहैव कृतमिति मनोरमायां स्थितम्। केचित्तु "पदान्ता"दित्येतदिहाप्यावश्यकमेव, अन्यथाऽपदान्तादपि स्यात्। "ङसिङसोश्चे"ति सूत्रं तु "सुप्सम्बन्धिन्यति परतः पूर्वरूपं चेन्ङसिङसोरेवाऽति परे" इति नियमार्थं स्यात्। तत्फलं तु हरयः, गुरवः, इः स्मृतो यैस्ते स्मृतय इत्यादौ पूर्वरूपाऽप्रवृत्तिरित्याहुः। एङः किम्?। दध्यत्र। पदान्तात्किम्?,

चयनम्। लवणम्। अचिनवम्। अति किम्?, हरयिह। विष्णविह। तपरः किम्?, वायवायाहि।

---

सूत्रम्

काशिका-वृत्तिः

ङसिङसोश् च ६।१।११०

एङः इति वर्तते, अति इति च। एङः उत्तरयोः ङसिङसोः अति परतः पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशो भवति। अग्नेरागच्छति। वायोरागच्छति। अग्नेः स्वम्। वायोः स्वम्। अपदान्तार्थः आरम्भः।

लघु-सिद्धान्त-कौमुदी

ङसिङसोश्च १७३, ६।१।१०६

एङो ङसिङसोरति पूर्वरूपमेकादेशः। हरेः २। हर्योः २। हरीणाम्॥

न्यासः

ङसिङसोश्च। , ६।१।१०६

"एङ उत्तरयोः" इत्यादि। एङ उत्तरौ यौ ङसिङसौ तयोः सम्बन्ध्यवयवो योऽत्? तस्मिन्? परत इत्यर्थः। "अग्नेरागच्छति" इति। "घेङिति" ७।३।१११ इति गुणः। अथ कस्मादत्र यथासंख्यं न भवति, एङावपि हि द्वौ, ङसिङ्सावपि द्वावेवेति प्राप्नोति? नैष दोषः, न ह्यत्र ङसिङसोः परतः कार्यं विधीयते, किं तर्हि? तत्सम्बन्धिन इति, स चैक एव। अथापि सम्बन्धिभेदेन भेदः स्यात्()? एवमप्यदोषः, चकारोऽत्र समुच्चायर्थः क्रियते। एवं च समुच्चयो भवति यद्यकैकस्यैङो ङसिङसोः प्रत्येकमपि परतः परपूर्वत्वं भवति; नान्यथा। "ईदग्नेः सोमरुणयोः" ६।३।२६, "ओरावश्यके" ३।१।१२५ इति च निर्देशस्तदभावं ज्ञापयति। लक्षणव्यभिचारचिह्नेन वा। अल्पाच्तरस्य ङसः परनिपातेन यथासंख्याभावोऽवसीयते॥

बाल-मनोरमा

ङसिङसोश्च २४४, ६।१।१०६

ङसिङसोश्च। "एङः पदान्ता"दित्यत "एङ" इति, "अती"ति चानुवर्तते। "अमि पूर्व" इत्यतः "पूर्व" इत्यनुवर्तते। "एकः पूर्वपरयोः" इत्यधिकृतं, तदाह--एङो ङसिङसोरिति। हरेरिति। पूर्वरूपे रुत्वविसर्गौ पञ्चम्येकवचनस्य षष्ठ()एकवचनस्य च रूपमेतत्। यद्यपि ङसिङसौ द्वौ, एङौ च द्वौ, तथापि न यथासङ्ख्यमिष्यते। "यथासङ्ख्यमनुदेशः समाना, स्वरितेने"ति सूत्रच्छेदमभ्युपगम्य यत्र स्वरितत्वं प्रतिज्ञातं तत्रैव यथासङ्ख्याविज्ञानादिति यथासङ्ख्यसूत्रभाष्ये स्पष्टम्। "अच्च घेः" "उपसर्गे घोः किः" इत्यादिनिर्देशाच्च। हर्योरिति। षष्ठीद्विवचने यणादेशे रूपम्। हरीणामिति। "ह्रस्वनद्यापः" इति नुट्। "नामी"ति दीर्घः। "अट्कुप्वा"ङिति णत्वम्।

तत्त्व-बोधिनी

ङसिङसोश्च २०५, ६।१।१०६

ङसिङसोश्च। इह ङसिङसौ द्वौ, एङावपि द्वौ, तयोर्यथासङ्ख्यं न, अस्वरितत्वात्। अल्पाच्यतरस्य पूर्वनिपाताऽकरणाल्लिङ्गात्, "अच्च घेः" "उपसर्गे घोः कि"रिति निर्देशाच्च।

---

सूत्रम्

काशिका-वृत्तिः

ऋत उत् ६।१।१११

ङसिङसोः इत्येव। ऋकारान्तादुत्तरयोः ङ्सिङसोः अति परतः पूर्वपरयोः उकार एकादेशो भवति। होतुरागच्छति। होतुः स्वम्। द्वयोः षष्ठीनिर्दिष्टयोः स्थाने यः स लभते ऽन्यतरव्यपदेशं इति उरण् रपरः १।१।५० इति रपरत्वम् अत्र कृत्वा रात् सस्य ८।२।२४ इति सलोपः कर्तव्यः।

लघु-सिद्धान्त-कौमुदी

ऋत उत् २०९, ६।१।१०७

ऋतो ङसिङसोरति उदेकादेशः। रपरः॥

न्यासः

ऋत उत्?। , ६।१।१०७

"द्वयोः षष्ठीनिर्दिष्टयोः स्थाने" इत्यादि। किं पुनर्होतुरित्यादावनिष्टं स्याद्यदि रपरत्वं न क्रियेत? न किञ्चित्(); न्यायतस्तु प्राप्नोति रपरत्वमपि, तदवश्यं कत्र्तव्यम्()। तमेव न्यायं न्यां दर्शयितुम्()--"द्वयोः षष्ठीनिर्दिष्टयोः स्थाने" इत्युक्तम्()। ऋत इति तपकरणं दिर्घनिवृत्त्यर्थम्()। तेन "उन्योर्ग्रः" ३।३।२९ "प्रे स्त्रोऽयज्ञे" ३।३।३२ इत्यादौ न भवति। उदित्येतदपि तपरकरणं दीर्घनिवृत्त्यर्थमेव, आन्तरतम्याद्()द्विमात्रस्य स्थाने द्विमात्र एव प्राप्नोति। ननु च "भाव्यमनोऽण्? सवर्णान्? न गृह्णाति"(व्या।प।३५) इति सवर्णानां ग्रहणं न भविष्यतीति तत्? किमेतन्निवृत्यर्थेन तपरकरणेन? एवं तह्र्येतज्ज्ञापयति--भवत्यत्र ह्रुकरेम भाव्यमानेन सवर्णस्य ग्रहणमिति। तेनामू, अमूभ्यामित्यत्र "अदसोऽसेर्दादु दो मः" ८।२।८० इति दीर्घस्य स्थाने दीर्घ ऊकारो भवति॥

बाल-मनोरमा

ऋत उत् २७७, ६।१।१०७

ङसिङसोस्तृज्वत्त्वे क्रोष्टृ अस् इति स्थिते--ऋत उत्। "एङः पदान्तादति" "ङसि ङसोश्चे"त्यतः-"अती"ति "ङसिङसो"रिति चानुवर्तते। "ङसिङसो"रित्यवयवषष्ठी,-"अती"त्यत्रान्वेति। "अङ्गस्ये"त्यधिकृतम् "ऋत" #इत्यनेन विशेष्यते, ततस्तदन्तविधिसत्दाह--ऋदन्तादित्यादिना। रपरत्वमिति। ऋकारस्य अकारस्य च स्थाने प्राप्नुवत उकारस्य ऋकारस्थानिकत्वानपायादिति भावः। उदिति तपरकरणं द्विमात्रनिवृत्त्यर्थम्। न च "भाव्यमानोऽसवर्णान्न गृह्णाती"त्येव तन्निवृत्तिः सिध्यतीति वाच्यं, तस्याऽनित्यत्वादिह द्विमात्रप्राप्तौ तन्निवृत्त्यर्थत्वात्। तदनित्यत्वं त्वनेनैव तपरकरणेन ज्ञाप्यते। ततश्च "यवलपरे यवला वेति मकारस्याऽनुनासिका एव भवन्ती"ति "च्छवो"रिति सूत्रे कैयटः। यत्तु "तपरत्वं ढ्रलोपे इति दीर्घनिवृत्त्यर्थ"मिति, तन्न। "उरण्रपरः" इति सूत्रे "ऊ,-रपरः" इति भाष्यप्रयोग विराधाता। सुपत्रवाहिता बाणा ज्वलिता इव पन्नगाः। नैरृतोरस्यभाव्यन्त सवितू रश्मयो यथा" इति रामायणप्रयोगविरोधाच्चेत्यलम्।

तत्त्व-बोधिनी

ऋत उत् २३९, ६।१।१०७

ऋत उत्। ऋकाराकारयोरेकादेशे सति ह्यस्व एव उकारः स्यान्न तु दीर्घ इत्येतदर्थकेन तपरकरणेन भाव्यमानोऽण्क्वचित्सवर्णान्गृह्णातीति ज्ञाप्यते, तेन यवलपरे हकारे मस्य विधीयमाना यवला अनुनासिका भवन्ति।

---

सूत्रम्

काशिका-वृत्तिः

ख्यत्यात् परस्य ६।१।११२

ङसिङसोः इति वर्तते, उतिति च। ख्यत्यातिति खिशब्दखीशब्दयोः तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणं, ताभ्यां परस्य ङसिङसोः अत उकारादेशो भवति। सख्युरागच्छति। सख्युः स्वम्। पत्युरागच्छति। पत्युः स्वम्। खीशब्दस्य उदाहरणम् सह खेन वर्तते इति सखः, तम् इच्छति इति क्यच् सखीयति। सख यतेः क्विप् सखीः, तस्य ङसिङसोः सख्युः इति। तीशब्दस्य अपि लूनम् इच्छति लूनीयति, लूनीयतेः क्विपि लुप्ते, लून्युराग्च्छति। लून्युः स्वम्। निष्ठानत्वं पूर्वत्रासिद्धम् ८।२।१ इत्यसिद्धम्। विकृतनिर्देशादेव इह न भवति, अतिसखेरागच्छति, सेनापतेरागच्छति इति। सखिशब्दस्य केवलस्य घिसंज्ञा प्रतिषिध्यते, न तदन्तस्य।

लघु-सिद्धान्त-कौमुदी

ख्यत्यात्परस्य १८३, ६।१।१०८

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः। सख्युः॥

न्यासः

ख्यत्यात्परस्य। , ६।१।१०८

"ख्यत्यादिति खिशब्दखीशब्दयोस्तिशब्दतीशब्दयोश्च कृतयणादेशयोरिदं ग्रहणम्()" इति। यमादेशे कृते तुल्यं रूपमिति विशेषाभावात्()। अथ कस्मादत्राकारान्तयोरेव ख्यशब्दत्यशब्दयोरिदं ग्रहणं न भवति? केवलस्य ख्यशब्दस्य त्यशब्दस्यासम्भवादिति चेत्()? न; यदि केवलौ न स्तः, तदन्तानां तर्हि मुख्यगोसंख्यादीनामपत्य गार्हपत्यादीनाञ्च ग्रहणमस्तु? नैतदस्ति; एवं हि--"सख्युरसम्बुद्धौ" ७।१।९२, "पत्युर्नो यज्ञसंयोगे" ४।१।३३ इति निर्देशौ नोपपद्येयाताम्()। "सह खेन वत्र्तत इति सखः" इति। "तेन सहेति तुल्ययोगे" २।२।२८ इति बहुव्रीहिः, "वोपसर्जनस्य" ६।३।८१ इति सहस्य सभावः। "सखीयति" इति। "क्यचि च" ७।४।३३ इतीत्वम्()। "सखीः" इति। क्विप्? "अतो लोपः" ६।४।४८ इत्यकारलोपः "लोपो व्योरवलि" ६।१।६४ इति यकारस्य च। "लुनम्" इति। "ल्वादिभ्य" ८।२।४४ इति निष्ठानत्वम्()। ननु च नायं तीशब्दः, तत्कथं तस्योदमुदाहरणमित्यत आह--"निष्ठानत्वम्()" इत्यादि। अथेह कस्मान्न भवति--अतसखेरागच्छति, सेनापतेरागच्छतीति, असति ह्यत्रापि खिशब्दः तिशब्दश्च? इत्यत आह--"विकृतनिर्देशात्()" इत्यादि। योऽयं ख्यत्यादित्यागन्तुकेनाकारेम यणादेशं कृत्वा विकृतनिर्देशः कृतस्तस्यैतदेव प्रयोजनम्()--यत्र यणादेशः, तत्रैव यथा स्यात्()। न चात्र यणादेशोऽस्ति, अतो न भवति, अन्यथा हि विकृतनिर्देशोऽनर्थकः स्यात्()। ननु च लध्वर्थः स्यात्(), अन्यथा हि "खितिखीतीभ्यः" इत्युच्यमाने गौरवं स्यात्()? एवं मन्यते--यदि यतर यण्? न भवति, तत्रापि भवितव्यम्(), तदा खीतीभ्यामित्येवं ब्राऊयात्()। न चैवमुच्यमाने ह्रस्वन्ताभ्यान्न प्राप्नोति; खिशब्दात्? "सख्युर्यः", (५।१।१२६) तिशब्दात्? "पत्युर्नो यज्ञसंयोगे" ४।१।३३ इति निर्देशाभ्यामेव सिद्धेः अत्र हि सखिपतिशब्दयोग्र्रहणम्(), न सखीपतीशब्दयोः। न हीह पतीशब्दस्य यज्ञेन संयोगोऽस्ति, नापि "सह खेन वत्र्तते" इत्यादिना प्रकारेम व्युत्पादितो यः सखीशब्दस्तत उत्पन्नो यः प्रत्ययः स प्रकृत्यर्थाभिधाने समर्थो भवति; यतोऽभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति। तस्माद्विकृतनिर्देशस्य पूर्वोक्तमेव प्रयोजनमिति। अथ स यणादेशोऽतर कस्मान्न भवति यस्मिन्? सत्युत्त्वेन भवितव्यम्()? "घेङिति" (७।३।१११) इति गुणेन बाधितत्वादिति चेत्()? न; "शेषो ध्यसखिः १।४।७ इति धिसंज्ञाप्रतिषेधादिति चेत्यत आह--"सखीशब्दस्य" इत्यादि। अत्र च "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" (व्या।प।८९) इति प्रतिषेधो हेतुः। परस्येति किमर्थम्()? पूर्वपरयोर्मा भूत्()। इतश्चारभ्य पूर्वपरयोरित्येतन्नानुवत्र्तते॥

बाल-मनोरमा

ख्यात्यात्परस्य २५३, ६।१।१०८

ख्यत्यात्परस्य। "खिखी"-त्यनयोः, ति-ती"त्यनयोश्च कृतयणादेशयोः "ख्य" "त्य" इति निर्देशः। यकारादकार उच्चारणार्थः। "एङः पदान्ता"दित्यतोऽतीत्यनुवर्तते। तच्च परस्येति सामानाधिकरण्यात्षष्ठ()न्ततया विपरिणम्यते। "ङसिङसोश्चे"त्यो "ङसिङसो"रित्यनुवर्तते। अवयवषष्ठ()एषा। ततश्च "ङसिङसोरवयवस्य अत" इति लभ्यते। "ऋत् उ"दित्यत, उदित्यनुवर्तते। "एकः पूर्वपरयोः" इति तु निवृत्तम्, "पर"ग्रहणसामर्थ्यात्। अन्यथा "ख्यत्या"दिति पञ्चमीनिर्देशादेव सिद्धे किं तेन?। तदाह--खितिशब्दाभ्यामित्यादिना। सख्युरिति। सख्यस् इति स्थिते यकारादकारस्य उकारे रुत्वविसर्गौ।

तत्त्व-बोधिनी

ख्यत्यात्परस्य २१४, ६।१।१०८

ख्यत्यात्। पञ्चमीनिर्देशादेव"परस्ये"ति लब्धे"परस्ये"ति ग्रहणमेकः पूर्वपरयोरिति नवृत्तमिह तु नाधिक्रियते इहि ध्वननार्थम्। ख्यश्च त्यश्चेति समाहारद्वन्द्वे ख्यत्यं, तत्र खिखीशब्दयोः कृतयणादेशयोरनुकरणं "ख्य"इति। एवं तितीशब्दयोस्त्येति। उभयत्राप्यकार उच्चाणार्थौ न तु मुख्यापत्यादिशब्दैकदेशानुकरणमिदं, "सख्युर्यः""पत्युर्नः,""सङ्ख्यायाः संवत्सरसङ्ख्यस्य च", "आपत्यस्य चे" त्यादिनिर्देशादित्यभिप्रेत्याहखितिशब्दाभ्यामित्यादि। एवं च यत्र यण्प्रवृत्तिः तत्रैवोत्त्वं न त्वतिसखेरित्यादौ। न चैवं यणा निर्देशस्योक्तप्रयोजनत्वाद्ध्रस्वान्तयोरेव ग्रहणं स्यान्न तु दीर्घन्तयोरिति शङ्क्यम्। निर्देशस्य ह्रस्वदीर्घसाधारणत्वाच्छास्त्रस्य बहुविषयत्वसंभवे तत्सङ्कोचस्याऽन्याय्यत्वाच्चेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अतो रोरप्लुतादप्लुते ६।१।११३

अति, उतिति वर्तते। अकारादप्लुतादुत्तरस्य रो रेफस्य उकारानुबन्धविशिष्टस्य अकारे ऽप्लुते परत उकारादेशो भवति। वृक्षो ऽत्र। प्लक्षो ऽत्र। भोभगोअघोअपूर्वस्य यो ऽशि ८।३।१७ इत्यस्मिन् प्राप्ते उत्वं विधीयते। रुत्वम् अपि आश्रयात् पूर्वत्र असिद्धम् ८।२।१ इति असिद्धं न भवति। अतः इति किम्? अग्निरत्र। तपरकरणं किम्? वृक्षा अत्र। सानुबन्धग्रहणं किम्? स्वरत्र। प्रातरत्र। अति इत्येव, वृक्ष इह। तस्य अपि तपरत्वादत्र न भवति। वृक्ष आश्रितः। अलुतातिति किम्? सुस्रोता३अत्र न्वसि। अप्लुते इति किम्? तिष्ठतु पय अ३च्छिश्रन्। अत्र प्लुतस्य असिद्धत्वातुत्वं प्राप्नोति इति अप्लुतादप्लुते इति उच्यते।

लघु-सिद्धान्त-कौमुदी

अतो रोरप्लुतादप्लुतादप्लुते १०६, ६।१।१०९

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति। शिवोऽर्च्यः॥

न्यासः

अतो रोरप्लुतादपलुते। , ६।१।१०९

"उकारानुबन्धकस्य" इति। यदि रुशब्दः समुदायः स्थानो स्यात्(), तदा महातरुवनमित्यत्रापि "हशि च" ६।१।११० इत्युत्वं प्रसज्येत। किञ्च "ससजुषो रुः" ८।२।६६ इत्युकारानुबन्धकरणमनर्थकं स्यात्()। तत्र ह्रु कारोऽस्य सूत्रसय विशेषणार्थः क्रियते, स इह समुदाये स्थानिन्यनर्थको जायते। तस्मादुकारानुबन्धवत इदं ग्रहणम्()। ननु चोत्त्वे कत्र्तव्ये

"पूर्वत्रासिद्धम्()" ८।२।१ इति रुत्वमसिद्धम्(), तदसतो रोः कथमुत्वं शक्यते विधातुम्()? इत्यत आह--"रुत्वमप्याश्रयात्? सिद्धम्()" इति। यदि रुत्वमसिद्धं स्यात्(), तदा स्थानित्वेन रोराश्रयणमनर्थकं स्यात्(); कस्यचिदुकारानुबन्धविशिष्टस्य रोरसम्भवात्()। तस्मादाश्रयादेव रोरसिद्धत्वं नास्तीति। "तस्यापि" इति। यत्रापि परतो रोरुत्वमुच्यते तस्य "सुरुआओता ३ अत्र" इति "दूराद्धूते च" ८।२।८४ इति प्लुतः। "देवदत्ता ३ अत्र" इति। अत्रापि "गुरोऽनृतोऽनन्तस्याप्येकैकसय प्राचाम्()" ८।२।८६ इत्यनेन। अथ किमर्थं "अप्लुतादप्लुते" इत्युच्यते? न ह्रतोऽतीति च तपरकरणस्य वर्णस्य निर्देशे क्रियमाणे प्लुतात्परस्य प्लुते वा परतः प्राप्नोति? इत्यत आह--"प्लुतस्य" इत्यादि। ननु च सिद्धः प्लुतः स्वरसन्धिषु, यदयम्? "प्लुतप्रगृह्रा आचि" (६।१।१२५) इति प्रकृतिभावं शास्ति? एवं मन्यते--प्रकृतिभाव एवैतज्ज्ञापकं स्यात्()। अथापि कथञ्चित्? स्वरसन्धिविषयं ज्ञापकं स्यात्(), तथा रोदत्वं स्वरसन्धिर्न भवति। अथापि संहिता काय्र्यविषयं ज्ञापकं स्यात्(), तथापि रोरुत्वं मंहिताकार्य्यं न भवति। येन हि वर्णाः सन्धीयन्ते तत्? संहिताकार्यम्(), न चोत्त्वेन वर्णाः संहिता भवन्ति; पुनरप्याद्गुणाद्यपेक्षणादिति॥

बाल-मनोरमा

अतो रोरप्लुतादप्लुते १६२, ६।१।१०९

शिवर् अच्र्य इति स्थिते--अतो रोः। "ऋत उ"दित्यत उदित्यनुवर्तते। "अत" इति पञ्चमी। "एङः पदान्तादती"त्यतोऽतीत्यनुवर्तते। तदाह--अप्लुतादिति। नन्वत्र उत्वं बाधित्वा "भोभगोअघोअपूर्वस्य योऽशि" इति यत्वं परत्वात्स्यात्। नच यत्वस्यासिद्धत्वादुत्वं निर्बाधमिति वाच्यं, कृते।ऽपि उत्वे तस्य स्थानिवत्त्वेन रुत्वाद्यत्वस्य दुर्निवारत्वादत आह--यत्वस्यापवाद इति। यद्यपि भोभगोअघो इत्यंशे उत्वं नापवादः, तथाप्यपूर्वस्येत्यंशे उत्वमपवादः प्राप्त एव अपूर्वकस्य रोर्यत्वे अतो रोरित्यस्यारम्भादिति भावः। ननूत्वं प्रति रोरसिद्धत्वात् कथमुत्वं तस्येत्यत आह--उत्वं प्रतीति।

तत्त्व-बोधिनी

अतो रोरप्लुतादप्लुते १३३, ६।१।१०९

यत्वस्यासिद्धत्वादुत्वे कृतेऽपि तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं स्यादित्याशङ्कायामाह-यत्वस्यापवाद इति। उत्वविधेः सामथ्र्यादिति। न च "अतो रोरप्लुता"दिति सूत्रं परित्यज्य "रोः सुपी"ति सूत्रानन्तरम् "अत उरती"त्येव लाघवादुच्यतां किमनेन सामथ्र्याश्रयणप्रयासेनेति वाच्यम्; तथाहि सति उत्बस्यासिद्धतया "शिवोऽच्र्य" इत्यादावाद्गुणस्याऽप्रवृत्तिप्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

हशि च ६।१।११४

हशि च परतः अत उत्तरस्य रोरुकारादेशो भवति। पुरुषो याति। पुरुषो हसति। पुरुषो ददाति।

लघु-सिद्धान्त-कौमुदी

हशि च १०७, ६।१।११०

तथा। शिवो वन्द्यः॥

न्यासः

हशि च। , ६।१।११०

पूर्वत्रातीत्यनुवृत्तेर्हश्युत्वमप्राप्तमेवानेन विधीयते। चकारः "अप्लुतात्? ६।१।१०९ इत्यस्यानुकर्षणार्थः। तेनेह न भवति--सुरुआओता ३ वेहीति॥

बाल-मनोरमा

हशि च १६५, ६।१।११०

हशि च। "अतो रोरप्लुता"दिति पदत्रयमनुवर्तते। "ऋत उ"दित्यत "उ"दिति च। तदाह-अप्लुतादिति। शिवो वन्द्य इति। शिवस् वन्द्य इति स्थिते सस्य रुः। तस्याऽत्परकत्वाभावात्पूर्वसूत्रेण उत्वं न प्राप्तमिति वचनमिदम्। ननु प्रातरत्र धातर्गच्छत्यत्र रेफस्य अतो रोरिति हशि चेति च उत्वं कुतो न स्यादित्यत आह--रोरित्यनुकारेति। उकारोऽनुबन्ध इग्यस्य स उकारानुबन्धः, तस्यैव उत्वविधौ ग्रहणात् प्रातरत्र उत्वं न भवति। प्रातरिति हि रेफान्तमव्ययम्। न तत्र रेफ उकारानुबन्धवान्। धातृशब्दात् सम्बुद्धिः सुः, "ऋतो ङि सर्वनामस्थानयोः" इति ऋकारस्य गुणोऽकारो रपरः, हल्ङ्यादिना सुलोपः। अत्रापि न रेफ उकारानुबन्धवान्। अत उभयत्रापि रेफस्य उत्वं न भवतीत्यर्थः।

अथ देवा इहेति रूपं दर्शयितुमाह--देवास् इह इति स्थिते रुत्वमिति।

---

सूत्रम्

काशिका-वृत्तिः

प्रकृत्या ऽन्तःपादम् अव्यपरे ६।१।११५

एङो ऽति ६।१।१०५ इत्येव। एङः इति यत् पञ्चम्यन्तम् अनुवर्तते, तदर्थादिह प्रथमान्तं भवति। प्रकृतिः इति स्वभावः कारणम् वा ऽभिधीयते। अन्तरिति अव्ययम् अधिकरनभूतं मध्यम् आचष्टे। पादशब्देन च ऋक्पादस्य एव ग्रहणम् इष्यते, न तु श्लोकपदस्य। अवकारयकारपरे अति परतः एङ् प्रकृत्या भवति। स्वभावेन अवतिष्ठते कारणात्मना वा भवति, न विकारम् आपद्यते। तौ चेन् निमित्तकार्यिणौ अन्तःपादमृक्पादमध्ये भवतः। ते अग्रे अश्वमायुञ्जन्। ते अस्मिञ्जवमादधुः। उपप्रयन्तो अध्वरम्। शिरो अपश्यम् सुजाते अश्वसूनृते। अध्वर्यो अद्रिभिः सुतम्। अन्तःपादम् इति किम्। कया मती कुत एतास एते ऽर्चन्ति। अव्यपरे इति किम्। ते ऽवदन्। तेजो ऽयस्मयम्। एङिति किम्? अन्वग्निरुषसामग्रमख्यत्। केचिदिदं सूत्रं न अन्तःपादम् अव्यपरे इति पठन्ति, ते संहितायाम् इह यदुच्यते तस्य सर्वस्य प्रतिषेधं वर्णयन्ति।

न्यासः

प्रकृत्याऽन्तःपादमव्यपरे। , ६।१।१११

"प्रकृत्या" इति। करणे तृतीया। "अन्तःपादम्()" इति। सप्तम्यन्तमेतत्()। विभक्त्यर्थेऽव्ययीभावं विधाय ततः सप्तमी, तस्याः "तृतीयासप्तम्योर्बहुलम्()" २।४।८४ इत्यम्भावः कृतः। "एङः" इत्यादि। पञ्चम्यन्तस्यैङः प्रकृत्या भवतीत्यनेन सम्बन्धो नोपपद्यते। तस्मादिहार्थादेङ्ग्रहणं प्रथमान्तमुपजायते। "प्रकृतिः" इत्यादिना प्रकृतिशब्दस्यामाचष्टे। प्रकृतिशब्दो हि लोके स्वभावे प्रयुज्यते, यता--दुस्त्यजा प्रकृतिरिति, कारणेऽपि यथा--दध्नः क्षीरं प्रकृति रति, तदिहापि स एवार्थस्तस्य विज्ञायते। अन्तरित्यव्ययमधिकरणभूतमिति। अत एवान्तः-पादमित्यव्ययीभावो भवति। "पादशब्देन" इत्यादि। कथं पुनरृक्पादस्यैव ग्रहणं लभ्यते, यावता पादशब्दः सामान्यवाची? एवं मन्यते---"वा छन्दास" ६।१।१०२ इत्यतः छन्दोग्रहणमिह मण्डूकप्लुतिन्यायेनानुवत्र्तते, तेन ऋक्पादस्यैव ग्रहणं विज्ञायते। अथ "सर्वत्र विभाषा गोः"

(६।१।१२२) इत्यतः सूत्रात्? प्राक्छन्दस्येव कार्यं विज्ञायते। एवं हि तत्र सर्वत्रगरहणमर्थवद्भवति यदि च्छन्दसि पूर्वं विधानं भवति। एवमवयवानापर्थमाख्याय "अवकारयकार" इत्यादिना समुदायस्यार्थमाचष्टे। अविद्यमानौ वकारयकारौ यस्य स तथोक्तः। "स्वभावेन" इत्यादि। यदा प्रकृतिशब्दः स्वबावे वत्र्तमानो गृह्रते, तदायमर्थः--एङ्? स्वभावेन भवति। स्वभावपरत्यागेन संहिताकार्यं नोपपद्यत इति। यदा तु कारणे वत्र्तमानस्य प्रकृतिशब्दस्य परिग्रहस्तदायमर्थः--एङ्? कारणात्मना भवतीति। कारणं परपूर्वत्वादेः कार्यस्यैङ, तस्य य आत्मा स्वरूपं तेनैवात्मनैङ्? भवतीत्येतदुक्तं भवति--प्राक्? संहिताकार्याद्यदेङो रूपं तेनैव तदवतिष्ठत इति। अनन्तरोक्तमेवार्थद्वयं स्पष्टीकर्त्तुमाह--न "विकारमापद्यते" इति। एवं हि स्वभावेन भवति, यदि स्वभावादन्दथालक्षणा विकारावस्था नोत्पद्येत। तदैवं कारणात्मनापि भवति, यदि विकारभावं नोत्पद्यते। यदि कार्यात्मना न विपरिणमतीत्यर्थः। "नो चेन्निमित्तकायणौ" इति। निमित्तं परत्वविशिष्टोऽकारः। तत्र हि परतः प्रकृतिभावो विधीयते। कार्यी त्वेङ्(), तस्य हि कार्यं प्रकृतिभावोऽस्ति। "ते अग्रे अश्वमायुञ्जन्()" इति। अस्य ऋक्पादस्य मध्ये य एङ् एकारस्तेशब्देऽग्रेशब्दे च तसय तदनन्तरे प्रकृतिभावत्? "एङः पदान्तादाति" ६।१।१०५ इति पूर्वरूपं न भवति, अयादेशश्च। "उपप्रयन्तो अध्वरम्()" इति। अत्रापि प्रयन्त इति शब्दौकारस्यैङोऽध्वरशब्दस्यानन्तरे प्रकृतभावात्? पूर्वरूपं न भवति, अवादेशश्च। एवं "सुजाते अ()आ" इत्यादावपि प्रकृतिभावात्? पूर्वरूपा दकार्यस्याभावो वेदितव्यः। "एतेऽर्चयन्ति" इति। अत्रेते शब्दे य एङ् एकारः स पदान्ते वत्र्तते। तदनन्तरस्त्वकारः पादादौ, न पादमध्ये। "तेऽवदन्()" इति। अत्र तेशब्दे य एङ् तस्य प्रकृतिभावो न भवति; तदनन्तरस्यातो वकारपरत्वात्()। "अवदन्()" इति। वदतेर्लङि प्रथमपुरुषबहुवचनान्तम्()। "तेऽयजान्()" इति। अत्रापि तेशब्दे य एङ् तस्य प्रकृतिभावो न भवति। तदनन्तरस्यातो यकारपरत्वात्()। "अन्वग्नि" इत्यादि। सर्वमत्रास्ति, न त्वनुशब्द उकार एङ् भवति, नास्य प्रकृतिभावः। "केचित्()" इत्यादि। यदि तर्हि "नान्तःपादमव्यपरे" इति सूत्रं पठन्ति, एवं सति परपूर्वस्यैव प्रतिषेधः कृतः स्यात्(), नायवोः; तथा हि--परपूर्वत्वमेङोऽनन्तरविहितम्()? इत्यत्? आह--"ते संहितायाम्()" इत्यादि। यदि परपूर्वत्वं संहिताकार्यं विशेषणमपेक्ष्यायं प्रतिषेधः क्रियते, तदायं दोषः स्यात्()। यदा तु संहिताधिकारविहितं कार्यमात्रमपेक्ष्य प्रतिषेधो विधीयते, तदा सर्वस्यैव संहिताधिकारविहितस्य कार्यस्य प्रतिषेधो युक्त इति तेषां भावः॥

---

सूत्रम्

काशिका-वृत्तिः

अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युसु च ६।१।११६

अव्यातवद्यातवक्रमुः अव्रत अयम् अवन्तु अवस्यु इत्येतेषु वकारयकारपरे ऽप्यति परतः अन्तःपादम् एङ् प्रकृत्या भवति। अग्निः प्रथमो वसुभिर्नो अव्यात्। मित्रमहो अवद्यात्। मा शिवासो अवकृअमुः। ते नो अव्रताः। शतधारो अयं मणिः। ते नो अवन्तु पितरः। कुशिकासो अवस्यवः।

न्यासः

अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च। , ६।१।११२

"नो अव्यात्()" इति। अस्मादो द्वितीयबहुवचनान्तस्य "बहुवचनस्य वस्नसो" ८।२।२१ इति नसि रुत्वे "अतो रोरप्लुतादप्लुते" (६।१।११३) इत्युत्वे "आद्? गुणः" ६।१।८४ इति गुणे कृते "नो" इति भवति। "अव रक्षणे" (धा।प।६००) इत्यस्मादाशिषि लिङि यासुटि तिपि "इतश्च" ३।४।९७ इतीकारलोपे "स्कोः संयोगाद्योरन्ते च" ८।२।२९ इति सकरलोपे च कृते "अव्यात्()" इति भवति। "अवद्यात" इति। अवद्यशब्दोऽयं पञ्चम्येकवचनान्तः। "अवक्रमुः" इति। अवपूर्वात्? क्रमेर्लिट()उसि रूपमेतत्()। अन्ये तु लुङि वर्णयन्ति--"बहुलं छन्दसि" २।४।७६ इति च्लेः श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्(), जुस्भावश्छान्दसः। "अवन्तु" इति। अवतेर्लोट्(), झेरन्तादेशः, "एरुः" ३।४।७६ इत्युत्वम्()। "अवस्यवः"

इति। अवतेः "सर्वधातभ्योऽसुन्()" (द।उ।९।४९) इति असुन्()--अवस्? इति, ततः "सुप आत्मनः क्यच्()" ३।१।८ इति क्यच्(), तदन्तात्? "क्याच्छन्दसि" ३।२।१७० इत्युप्रत्ययः, ततो जस्(), "जसि च" ७।३।१०९ इति गुणः--ओकारः, "एचोऽयवायावः" ६।१।७५ इत्यवादेशः॥

---

सूत्रम्

काशिका-वृत्तिः

यजुष्युरः ६।१।११७

उरःशब्दः एङन्तः यजुषि विषये अति रकृत्या भवति। उरो अन्तरिक्षम्। अपरे यजुष्युरो इति सूत्रं पठन्ति, उकारान्तम् उरुशब्दं सम्बुद्ध्यन्तम् अधीयते, ते इदम् उदाहरन्ति उरो अन्तरिक्षं सजूः इति। यजुषि पादानाम् अभावातनन्तःपादर्थं वचनम्।

न्यासः

यजुष्युरः। , ६।१।११३

"उरो अन्तरिक्षम्()" इति। उरःशब्दस्योत्त्वम्, "आद्? गुणः" इति गुणः। "ओकारान्तमुरोशब्दं ["उकारान्तमुरुशब्द"--काशिका] सम्बुद्ध्यन्तमधीयते" इति। उरुशब्दस्य "सम्बुद्धौ च" ७।३।१०६ इति गुणे कृते "उरो" इति भवति॥

---

सूत्रम्

काशिका-वृत्तिः

आपोजुषणोवृष्णोवर्षिष्ठे ऽम्बे ऽम्बाले ऽम्बिकेपूर्वे ६।१।११८

यजुषि इत्येव। आपो जुषाणो वृष्णो वर्षिष्ठे इत्येते शब्दाः अम्बे अम्बाले इत्येतौ च यावम्बिके शब्दात् पूर्वौ यजुषि पठितौ ते अति परतः प्रकृत्या भवन्ति। आपो अस्मान् मातरः शुन्धयन्तु। जुषणो अप्तुराज्यस्य। वृष्णो अंशुभ्यां गभस्तिपूतः। वर्षिष्ठे अधि नाके। अम्बे अम्बाल्यम्बिके यजुषीदमीदृशम् एव पठ्यते। अस्मादेव निपातनातम्बार्थनद्योर् ह्रस्वः इति ह्रस्वत्वं न भवति।

न्यासः

आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे। , ६।१।११४

आपो--इत्येवमादीनि सर्वाण्येतान्यनुकरणान्यविभक्तिकानि; "सुपां सुलुक्()" ७।१।३९ इत्यादिना तेभ्य उत्पन्नाया विभक्तेर्लुप्तत्वात्()। अत्रापो इति प्रथमाबहुवचनान्तस्यानुकारणम्()। "जुषाणो" इति। प्रथमैक वचनान्तस्य। "वृष्णो" इति। षष्ठ()एकवचनान्तस्य। "वर्षिष्ठे" इति। सप्तम्येकवचनान्तस्य। "अम्ब, अम्बाले" इत्येतयोर्विशेषणम्()। अम्बिकेशब्दात्? पूर्वे अम्बिकेपूर्वे, अस्मादेव निपातनात् समासः। ननु च "अम्बे" इति सम्बुद्ध्यन्तस्यानुकरणम्()? ततश्च "अम्बार्थनद्योह्र्यस्वः" ७।३।१०७ इति ह्रस्वेनैत्त्वापवादेन भवितव्यम्(), तत्? कथमम्बे इत्यत्रैत्त्वम्()? इत्यत आह--"अस्मादेव" इत्यादि। अम्बाले अम्बिके--इत्येतयोस्तु युक्तमेवैत्त्वम्()। वक्ष्यति हि ह्रस्वविधाने--"अम्बार्थं द्व्यक्षरं यदि" (वा।७।३।१०७) इति॥

---

सूत्रम्

काशिका-वृत्तिः

अङ्ग इत्यादौ च ६।१।११९

अङ्गशब्दे य एङ् तदादौ चाकारे यः पूर्वः स यजुसि विषये अति प्रकृत्या भवति। ऐन्द्रः प्राणो अङ्गे अङ्गे अदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे अरोचिषम्।

न्यासः

अङ्ग इत्यादौ च। , ६।१।११५

"अङ्ग इत्यादौ च" इति। इतिकरणेनान्तरोक्तोऽङ्गशब्दः प्रत्यवमृश्यते। "तदादौ चाकारे" इति। समानाधिकरणे सप्तम्यौ। तच्छब्देनातिक्रान्तप्रत्यवमर्शिनेतिकरणस्यार्थमाचष्टे--तदादाविति। अङ्गशब्दादावित्यर्थः। "यः पूर्वः" इति। "एङ्" इति सम्बध्यते। चकारोऽङ्गशब्दस्यादौ योऽकारसतत्राप परतः पूर्वस्यैङः प्रकृतिभावो यथा स्यादिति समुच्चयार्थः क्रियते। तत्र ह्रसत्यङ्गशब्दाकारे परतोऽङ्गशब्दस्य य एङ् तस्यैव प्रकृतिभावः स्यात्()। यस्त्वङ्गशब्दे परतोऽनङ्गशब्दस्यैङ् तत्र न स्यात्()। "प्राणो अङ्गे" इत्यादि। अत्र प्राणो-शब्दे य एङ् अङ्गशब्दादावकारे प्रकृत्या भवति। "अङ्ग अङ्गे अदीध्यत्()" इति। अत्राङ्गशब्दे य एङ् तस्याङ्गशब्दादावकारेऽदीध्यच्छब्दादौ प्रकृतिभावो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्ते च कुधपरे ६।१।१२०

यजुषि इत्येव। अनुदात्ते च अति कवर्गधकारपरे परतो यजुसि विषये एङ् प्रकृत्या भवति। अयं सो अग्निः। अयं सो अध्वरः। अनुदाते इति किम्? अधोग्रे। अग्रशब्द आद्युदात्तो निपात्यते। कुधपरे इति किम्? सो ऽयम् अग्निः सहस्रियः।

न्यासः

अनुदात्ते च कुधपरे। , ६।१।११६

"कुधपरे" इति। अकारविशेषममेतत्()। कुधौ परौ यस्मात्? स तथोक्तः। धकारेऽकार उच्चारणार्थः। "अयं सो अग्निः" इति। अग्निशब्दः "अङ्गेर्निर्नलोपश्च" [अङ्गेर्नलोपश्च--द।उ।] (द।उ।१।२०) इति निप्रत्ययान्तो व्युत्पादित इति प्रत्ययस्वरेणान्तोदात्तः, शषोऽनुदात्त इत्यकारस्यानुदात्तत्वम्()। "अयं सो अध्वरः" इति। अध्वरशब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः, तदादिरप्यकारोऽनुदात्त एव। "आद्युदात्तो निपात्यते" इति। ऋडज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुकरशुक्लगौरवनरेरामलाः (द।उ।८।४६) इत्यनेन। "सोऽयम्()" इति। अयंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, तस्यादिरनुदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

अवपथासि च ६।१।१२१

यजुषि इत्येव। अनुदात्ते इति चशब्देन अनुकृष्यते। अवपथाःशब्दे ऽनुदात्ते अकारादौ परतो यजुषि विषये एङ् प्रकृत्या भवति। त्री रुद्रेभ्यो अवपथाः। वपेर् लङि थासि तिङ्ङतिङः ८।१।२८ इति निघातेन अनुदात्तत्वम्। अनुदात्ते इत्येव, यद्रुद्रेभ्यो ऽवपथाः। निपातैर् यद्यदिहन्त इति निघातः प्रतिषिध्यते।

न्यासः

अवपथासि च। , ६।१।११७

"यद्रुद्रेभ्योऽवपथाः" इति। अटः स्वरेणाद्युदात्तोऽयमवपथाःशब्दः॥

---

सूत्रम्

काशिका-वृत्तिः

सर्वत्र विभाषा गोः ६।१।१२२

सर्वत्र छन्दसि भाषायां च अति परतो गोः एङ् प्रकृत्या भवति विभाषा। गो ऽग्रम्, गो अग्रम्। छन्दसि अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वान्।

लघु-सिद्धान्त-कौमुदी

सर्वत्र विभाषाः गोः ४४, ६।१।११८

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते। गोअग्रम्, गोऽग्रम्। एङन्तस्य किम्? चित्रग्वग्रम्। पदान्ते किम्? गोः॥

न्यासः

सर्वत्र विभाषा गोः। , ६।१।११८

बाल-मनोरमा

सर्वत्र विभाषा गोः ८७, ६।१।११८

सर्वत्र विभाषा। पदान्तादित्यनुवर्तते। "प्रकृत्यान्तः पाद"मित्यतः "प्रकृत्ये"त्यनुवर्तते। प्रकृत्या=स्वभावेन निर्विकारस्वरूपेणाऽवतिष्ठते इत्यर्थः। "यजुष्युर" इत्यतो यजुषीति निवृत्तं। तत्सूचनाय "सर्वत्रे"त्युपात्तम्। तेन लोके वेदे चेति लभ्यते। तदाह--लोक इत्यादि। प्रकृतिभाव इति। स्वभावेनावस्थानमित्यर्थः। एवं च पूर्वरूपमवादेशश्च न। गो-अग्रमिति प्रकृतिभावे रूपम्। पूर्वरूपे गोऽग्रमिति। अत्र एङ इत्यप्यनुवर्तते। ततश्चैकदेशविकृतमनन्यवद्भवतीति न्यायेन चित्रग्वग्रमित्यत्र नातिप्रसङ्गः। हे चित्रगोऽग्रमित्यत्रापि न प्रकृतिभावः, प्रतिपदोक्तस्यैवैङो ग्रहणात्। प्रकृते च "ह्रस्वस्य गुण" इत्योकारस्य लाक्षणिकत्वात्। गोरिति। गो असिति स्थिते गो इत्योकारस्य पदान्तत्वाऽभावान्न प्रकृतिभावः। नचैवमपदान्तत्वादेङः पदान्तादिति पूर्वरूपमपि दुर्लभमिति वाच्यम्, अत एव "ङसिङसोश्चे"ति तत्र पूर्वरूपारम्भात्।

तत्त्व-बोधिनी

सर्वत्र विभाषा गोः ७१, ६।१।११८

सर्वत्र विभाषा। यद्यपीह "छन्दसि" इति न पकृतम्, तथापि "यजुष्युरः" इत्यादिप्रक्रमाच्छन्दस्येवेति संभाव्येत, अतः "सर्वत्रेत्युक्तम्। तद्व्याचश्टे-लोके वेदे चेति। इह "एङ" इत्यनुवर्त्य "एङन्तस्य गो"रिति व्याख्येयम्। तेनेह न--चित्रग्वग्रम्। प्रकृतिभाव इति। एतच्च "प्रकृत्यान्तःपाद"मिति सूत्रात्प्रकृत्येत्यनुवृत्त्या लभ्यते। "नान्तःपाद"मिति पाठे तु "सर्वत्र विभाषे"ति सूत्रेण पूर्वरूपमेव विभाषा निषिध्यत इत्यवधेयम्। निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन पूर्वरूपमेवविकल्प्यत इति मनोरमायां स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

अवङ् स्फोटायनस्य ६।१।१२३

अति इति निवृत्तम्। अचि इत्येतत् त्वनुवर्तत एव। अचि परतः गोः स्फोटायनस्य आचार्यस्य मतेन अवङादेशो भवति। गवाग्रम्, गो ऽग्रम्। गवाजिनम्, गो ऽजिनम्। गवौ दनम्, गवोदनम्। गवोष्ट्रम्, गवुष्ट्रम्। आद्युदात्तश्च अयम् आदेशो निपात्यते, स निपातनस्वरो बहुव्रीहौ प्रकृतिस्वरविधाने भवति। गावः अग्रम् अस्य गवाग्रः इति। अन्यत्र तु समासान्तौदात्तत्वेन बाध्यते। स्फोटायनग्रहणं पूजार्थं, विभाषा इत्येव हि वर्तते। व्यवस्थितविभाषा इयं, तेन गवाक्षः इत्यत्र नित्यम् अवङ् भवति।

न्यासः

अवङ् स्फोटायनस्य। , ६।१।११९

"अतीति निवृत्तम्()" इति। यद्यपीत्यनुवत्र्तेत तदा गवौदनादौ न स्यात्(), तस्मादतीत्येतदस्वरितत्वा न्निवृतम्()। हल्यपि तर्हि प्राप्नोति? इत्यत आह--"अचीत्येतत्पुनरनुवत्र्तते" इति। "इको यणचि" ६।१।७४ इत्यतः; सा पुनस्तस्यानुवृत्तिर्मण्डूकपलुतिन्यायेन वेदितव्या। न हि "सम्प्रसारणाच्च" (६।१।१०८) इत्यतः परेण ये योगा अस्माद्योगात्? पूर्वं तेषु "अति" इत्यस्यानुवृत्तिरस्ति। तथा च पूर्वमुक्तम्()--"अचीति चायमधिकारः "सम्प्रसारणाच्च" ६।१।१०४ इति यावत" इति। "गवाग्रहम्(), गवाजिनम्()" इति। बहुव्रीहिः, तत्पुरुषो वा। "गवोष्ट्रम्()" इति द्वन्द्वः। "आद्युदात्तश्चायम्()" इत्यादि। इह गावोऽग्रमस्येति बहुव्रीहौ कृते पूर्वपदप्रकृतिस्वरत्वं च च प्राप्नोति, अवङादेशश्च, तत्रान्तरङ्गत्वादवङ्भवति, स च भवन्? प्रातिपदेकस्वरेणान्तोदात्तस्य गोशब्दस्य स्थान आन्तरयतोऽन्तोदात्त एव स्यात्()। तस्मिन्? सति पश्चात्? प्रकृतिस्वरे कृतेऽन्तोदात्तत्वं पूर्वपदस्यापद्येत, आद्युदात्तश्चेष्यते, तस्मादाद्युदात्तोऽयमादेशो निपात्यते। यद्येवम्(), तत्पुरुषादावपि स एव निपातनस्वरः प्राप्नोति? इत्यत आह--"अन्यत्र तु" इत्यादि। अन्यत्रेति--तत्पुरुषे, द्वन्द्वे च। गोशब्दस्यायमादेश इति तत्सम्बन्ध्येव शब्दान्तरं निपातनस्वरेण बाध्यते, न समासस्वरः। तस्माद्बहुव्रीहेरन्यत्र तत्पुरषादौ समासान्तोदात्तत्वेन निपातनस्वरो बाध्यते, "स्फोटायनग्रहणं पूजार्थम्()" इति। किं पुनः कारणं विकल्पार्थं न भवति? इत्याह--विभाषेत्येव हि वत्र्तते" इति। किमर्थं पुनरवङ् विधीयते? अगेव न विधीयेत, तत्रापि ह्रवादेशेन सिध्यत्येव? सिध्यति; "एङः पदान्तादति" ६।१।१०५ इति पूर्वरूपत्वं प्राप्नोति। ननु चाकि विहिते सति तदन्तो न भवति? आगमस्य तद्ग्रहणेन ग्रहणात्()।न ह्योकारस्य प्राक्? प्रवृत्ता पदान्तता नास्तीति शक्यं वक्तुम्()॥

बाल-मनोरमा

अवङ् स्फोटायनस्य ८८, ६।१।११९

अवङ् स्फोटायनस्य। अतीति निवृत्तमिति। "एङः पदान्तादित्यत" इति शेषः, व्याख्यानादिति भावः। पदान्तादिति, गोरिति, अचीति चानुवर्तते। स्फोटायनस्य ऋषेर्मतेऽवङ्। अन्यस्य तु न। ततश्च विकल्पः सिद्धः। तदाह--अचि पर इत्यादिना। "ङिच्चे"त्यन्तादेशः। गवाग्रमिति। गो-अग्रहमिति स्थिते गकारादोकारस्यावङ्। गव-अग्रमिति स्थिते सवर्णदीर्घः। न चाऽग्रशब्देऽकारमचं परत्वेनाश्रित्य प्रवृत्तोऽवङ् कथं तद्विघातकं सवर्णदीर्घं प्रवर्तयति, संनिपातपरिभाषाविरोधादिति वाच्यं, संनिपातपरिभाषाया अनित्यत्वस्य रामायेत्यत्र वक्ष्यमाणत्वात्। गवीति। "गो इ"-इति स्थिते ओकारस्य पदान्तत्वविरहान्नावङ्। नापि पूर्वसूत्राभ्यां प्रकृतिभावपररूपे किन्त्ववादेशः। अतीत्यनुवृत्तौ तु गवेश इत्यादि न सिध्येत्। व्यवस्तितेति। क्वचिद्भवतीत्यंश एव प्रवर्तते, क्वचित्तु न भवतीत्यंश एव, क्वचिदुभयमित्येवं

लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थितविभाषा सर्वत्र विभाषा गोरित्यत्राश्रीयते। ततश्च गवाक्ष इत्यत्र नित्यमवङित्यर्थः। इदं च--"देवत्रातो""गलो""ग्राह" "इतयोगे च सद्विधिः"। मिथस्ते न विभाष्यन्ते "गवाक्षः" "संशितव्रतः"॥ इति शाच्छोरिति सूत्रे भाष्ये स्पष्टम्। गवाक्ष इति। गवां किरणानामक्षीवेति विग्रहः। "अक्ष्णोऽदर्शना"दित्यच। पुंस्त्वं लोकात्। "वातायनं गवाक्षः स्यात्" इत्यमरः।

तत्त्व-बोधिनी

अवङ् स्फोटायनस्य ७२, ६।१।११९

अवङ् स्फोटायनस्य। स्फोटोऽयनं परायणं यस्य सः स्फोटप्रतिपादनपरो वैयाकरणः। तस्य स्फोटायनस्य। अत्रापि "एङन्तस्या गो"रिति व्याख्येयम्। "अ"गित्येव सूत्रयितुमुचितम्। विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थम्। अतीति निवृत्तमिति। अन्यथा "गवेशः" "गवोद्धः" इत्यादि न सिद्ध्येदिति भावः। अचि पर इति। अत्रा"चीत्यनुवर्तते, अतीति तु निवृत्तमित्यत्र व्याख्यानमेव शरणम्। गवाक्ष इति। गवां=किरणानाम् अक्षीवेति विग्रहः। "अक्ष्णोऽदर्शना"दित्यच्समासान्तः। वातायने रूढोऽयम्। पुंस्त्वं लोकात्।

---

सूत्रम्

काशिका-वृत्तिः

इन्द्रे च नित्यम् ६।१।१२४

इन्द्रशब्दस्थे अचि परतो गोर्नित्यम् अवङादेशो भवति। गवेन्द्रः। गवेन्द्रयज्ञस्वरः।

लघु-सिद्धान्त-कौमुदी

इन्द्रे च ४८, ६।१।१२०

गोरवङ् स्यादिन्द्रे। गवेन्द्रः॥

न्यासः

इन्द्रे च नित्यम्?। , ६।१।१२०

"इन्द्रशब्दस्थे" इति। य इन्द्रशब्दे तिष्ठति स इन्दरशब्दस्यः, स पुनर्य इन्द्रशब्दस्थावयवः स वेदितव्यः। पूर्वेण विकल्पः सिद्ध एव, तत्रारम्भसामव्र्यादेव नित्ये विधाव()स्मल्लब्धे नित्यग्रहणमुत्तरार्थम्()॥

बाल-मनोरमा

इन्द्रे च २५२, ६।१।१२०

इन्द्रे च। "गोः", "अवङ्", "अची"त्यनुवर्तते। तदाह--गोरिति। विकल्पनिवृत्त्यर्थः। गवेन्द्र इति। गो-इन्द्र इति स्थिते अवङ्। आद्गुणः।

*****समाप्तम्*****

अथ अदादिप्रकरणम्।

तत्त्व-बोधिनी

इन्द्रे च २२३, ६।१।१२०

इन्द्रे च। आरम्भसामर्थ्यान्नित्यमिदम्। इदं च सूत्रंत्यक्तुं शक्यम्। अन्यार्थं स्वीकृतेन व्यवस्थितविभाषाश्रयणेनैवेष्टसिद्धेरित्याहुः। प्लुतप्रगृह्याः--" इति सूत्रादव्यवहितपूर्वः "अथ प्रकृतिभावः" इति पाठो मूलपुस्तकेषु प्रायेण दृश्यते, स चाऽपपाठ पव। "सर्वत्र विभाषा गोः;" इति प्रकृतिभावस्य प्रागेवारब्धत्वादित्येके। अन्ये तु "अवङ् स्फोटायनस्य" इन्द्रे चे"ति सूत्रद्वयं प्रकृतिभावप्रकरणे पठितमपि तद्बहिर्भूतमित्यवश्यं वक्तव्यं, ताभ्यां तदविधानात्। न च "अवङ्"सूत्रस्य प्रकृतिभावापवादत्वेनोत्सर्गापवादरूपत्वात्तत्प्रकरणस्थत्वं सूपपादमित्यवङादेशानुवृत्त्यर्थं तदनन्तरं पठितस्य "इन्द्रे चे"ति सूत्रस्यापीति वाच्यम् ; पूर्वरूपापवादत्वस्यापि "अवङ्"सूत्रस्य सुवचत्वात्। एतत्प्रकरणपाठस्य गोशब्दानुवृत्त्यर्थतया चरितार्थत्वात्। एवं च स्वलेख्यप्रकृतिभावप्रकरणाद्बहिस्तत्सूत्रद्वयं लिखितं, तदनुकूलत्वेन "सर्वत्र विषाषे"ति सूत्रमपि तत्रैवेति स्थितस्य गतिर्बोध्येत्याहुः।

अथ तत्त्वबोधिन्याम् अदादिप्रकरणम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ प्लुतप्रकृह्या १।३ अचि ७।१ १२६ नित्यम् १।१ प्रकृत्या ३।२१ १११ संहितायाम् ७।१ ७०

समासः॥

प्लुताश्च प्रगृह्याश्च प्लुतप्रगृह्याः, इतरेतरद्वन्द्वः॥

अर्थः॥

प्लुताश्च प्रगृह्याश्च अचि प्रकृत्या भवन्ति नित्यम्॥

उदाहरणम्॥

प्लुताः -- देवदत्ता३ अत्र न्वसि। यज्ञदत्ता३ इदमानय॥ प्रगृह्याः -- अग्नी इति। वायू इति। खट्वे इति। माले इति॥
काशिका-वृत्तिः
प्लुतप्रगृह्या अचि ६।१।१२५

प्लुताश्च प्रगृह्याश्च अचि प्रकृत्या भवन्ति। देवदत्त३अत्र न्वसि। यज्ञदत्त३इदम् आनय। आश्रयादत्र प्लुतः सिद्धः। प्रगृह्याः अग्नी इति। वायू इति। खट्वे इति। माले इति। अचि इत्यनुवर्तमाने पुनरज्ग्रहणम् आदेशनिमित्तस्य अचिः परिग्रहार्थम्। तेन इह न भवति, जानु उ अस्य रुजति जान्वस्य रुजति। प्रगृह्यादुकारात् परस्य अकारस्य सवर्णदीर्घत्वं प्रत्यनिमित्तत्वादत्र प्रकृतिभावो न भवति। नित्यग्रहणम् इह अनुवर्तते। प्लुतप्रगृह्याणां नित्यम् अयम् एव प्रकृतिभावो यथा स्याद्, इको ऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२३ इत्येतन् मा भूतिति।
लघु-सिद्धान्त-कौमुदी
प्लुतप्रगृह्या अचि नित्यम् ५०, ६।१।१२१

एतेऽचि प्रकृत्या स्युः। आगच्छ कृष्ण ३ अत्र गौश्चरति॥

न्यासः

प्लुतपृगृह्रा अचि। , ६।१।१२१

"देवदत्ता ३ अत्र त्वसि" इति। "दूराद्धूते च" ८।२।८४ इति प्लुतः। ननु च "पूर्वत्रासिद्बम्()" ८।२।१ इत्यसिद्धः प्लुतः, तदसतसतसय कथं शक्यते परकृतिभावो विधातुम्()? इत्यत आह--"आश्रयात्()" इत्यादि। आश्रयणमाश्रयः। तदेतत्? प्रकृतिभावकार्यं विधातुं प्लुतस्य कार्यिण आश्रयणम्()। अस्मादेवात्र प्रकृतिभावे कत्र्तव्ये सिद्धः प्लुतः, अन्यथा तस्य कार्यित्वेनाश्रयणमनर्थकं स्यात्। "अग्नी" इत्यादि। "ईदूदेद्()द्विवचनम्()" १।१।११ इत्यादिना अत्र प्रगृह्रसंज्ञा। अथाचीति किमर्थम्(), यावताऽचीत्यनुवत्र्तत एव? इत्यत आह--"अचीत्यनुवत्र्तमाने" इत्यादि। आदेशस्य निमित्तं योऽच्? तस्य परकृतिभावनिमित्तत्वेन परिग्रहो यथा स्यादित्येवमर्थं पुनरज्ग्रहणम्()। आदेशस्त्वत्र यत्राचि प्रकृतिभावः--जानु+उ अस्य रुजति जानू अत्य रुजतीति। न हि ज नुशब्दे य उकारो यश्च तदनन्तरः प्रगृह्रसंज्ञकस्तयोः सवर्णदीर्घत्वं प्रति प्रगृह्रसंज्ञकादुकारात परस्याकारस्य निमित्तभावः। इह च न भवति--जान्वस्य रुजतीति। तेन पूर्वपरयोरुकारयोर्य एकादेशः, स यद्यपि "अन्तादिवच्च" (६।१।८५) इत्यादिवद्भावात्? प्रगृह्रसंज्ञकोकारग्रहणेन गृह्रते, तथापि यणादेशोऽकारे परतो भवत्येव। न ह्रत्राप्यकार एकादेशनिमित्तम्()। यदि तु विशिष्टाच्परिग्रहार्थं पुनरज्ग्रहणं न क्रियते, तदाऽस्मात्रे प्रकृतिभावो विधीयमान इहापि स्यादेव। प्रगृह्रसंज्ञा पुनरकारपूरवस्योकारस्य "निपात एकाजनाङ्" १।१।१४ इत्यनेन। "नित्यगरहणम्()" इत्यादि। यदि नित्यग्रहणमिहानुवत्र्तते, तदाग्नी+इतीत्यादौ अस्य विधेः कृतार्थत्वात्त वायू+अत्रेत्यादौ परत्वाच्छाकलौ विधिः प्रसज्येत। तस्मात्? प्रकृतिभाव एव यथा स्यात्()--इत्येवमर्थं नित्यग्रहणमिहानुवत्र्तते॥

बाल-मनोरमा

प्लुतप्रगृह्रा अचि नित्यम् ९०, ६।१।१२१

अथ प्रकृतिभाव इति। "निरूप्यते" इति शेषः। प्लतुप्रगृह्राः। वक्ष्यन्त इति। "दूराद्धूते चे"त्यादिना, ईदूदेदित्यादिना चेत्यर्थः। प्रकृत्येति। "प्रकृत्यान्तः पाद" मित्यतदस्तदनुवृत्तेरिति भावः। प्रकृत्या स्वभावेनाऽवस्थिताः स्युरित्यर्थः। सन्धयो न भवन्तीति यावत्। एहि कृष्णा३ अत्रेति। "दूराद्धूते चे"ति णकारादकारः प्लुतः। तस्य अकारे न सवर्णदीर्घः। हरी एताविति। "ईदूदे"दिति रेफादीकारः प्रगृह्रः। तस्य यणादेशो न भवति। ननु सर्वत्र विभाषेति पूर्वसूत्रे विभाषेत्यस्याऽस्वरितत्वादेव निवृत्तिसिद्धेरिह नित्यग्रहणं किमर्थमिति पृच्छति-नित्यमिति किमिति। उत्तरमाह-हरी एताविति। नित्यग्रहणे सत्येव हरी एतावित्यादौ "प्लुतप्रगृह्रा अची" त्ययमेव केवलः प्रकृतिभावः स्यादित्यर्थः। "यथा"शब्दो योग्यतायाम्। अयमेव प्रकृतिभावः प्राप्तुं योग्यः। स च नित्यग्रहणे सति प्राप्नुयादित्यर्थः। एवमग्रेऽप्येवंजातीयकेषु। "एव"शब्दव्यवच्छेद्यं दर्शयति-इक इति। "इकोऽसवर्णे शाकल्यस्य ह्यस्वश्चे"ति वक्ष्यमाणः ह्यस्वसमुच्चितः प्रकृतिभावो माभूत्=न भवेत्। माङि लुङ्। सर्वलकारापवादः। अकृते सति नित्यग्रहणे परत्वाच्छाकलह्यस्वसहितप्रकृतिभावः प्रसज्येत। नित्यग्रहणे कृते तु तत्सामर्थ्यादेव परमपि शाकलं ह्यस्वसमुच्चितप्रक-तिभावं "प्लुतप्रगृह्रा" इति केवलः प्रकृतिभावो बाधत इत्यर्थः।

तत्त्व-बोधिनी

प्लुतप्रगृह्रा अचि नित्यम् ७४, ६।१।१२१

प्लुतप्रगृह्राः। प्रकृति भावं प्रति प्लुतो नाऽसिद्धः, प्लुतमनूद्य प्रकृतिभावविधानसामथ्र्यात्। अचि किम्?, "जानु उ जानू"। उञः प्रगृह्रत्वेऽपीह सवर्णदीर्घः। "अची"त्यनुवर्तमाने पुनरचिग्रहणमादेशनिमित्ते एवाऽचि प्रकृतिभावः। तेन इहाप्येकादेशः स्यादेव-"जानु उ अस्य रुजति", "जानू अस्य रुजति"। इह "मय उञः" इति पाक्षिके वकारे तु "जान्वस्य रुजति"। एहि

कृष्णेति। "दूराद्धूते चे"ति प्लुतः। प्राचा तु-"कृष्णा एही"ति उदाह्मतम्। तदसत्। "वाक्यस्य टेः"-इत्यधिकारात्। ह्रस्वसमुच्चितो मा भूदिति। अयं भावः-"हरी ईशा"वित्यादौ "प्लुतप्रगृह्याः"इत्येतत्सावकाशम्, "चक्री अत्रे"त्यत्र तु "इकोऽसवर्णे-" इति। ततश्च "हरी एता"वित्यत्र परत्वाद्ध्रस्वसमुच्चित एव स्यात्। नित्यग्रहणे तु कृते तत्सामथ्र्यात्परमपि बाधत इति।

चक्रयत्रेति। इह "स्कोः" इति कलोपो न, यणः कार्यकालपक्षे बहिरङ्गपरिभाषया असिद्धत्वात्, स्थानिवद्भावाच्च। "पूर्वत्रासिद्धे न स्थानिव"दिति तु नास्ति, "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति वक्ष्यमाणत्वात्।

पार्(ामिति। पर्शूनां समूहः। "पर्(ाआ णस् वक्तव्यः" इति णस्। ओर्गुणस्तु न, "सिति चे"ति पदत्वस्य भत्वापवादत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

आङो ऽनुनासिकश् छन्दसि ६।१।१२६

आङो ऽचि परतः संहितायां छन्दसि विषये ऽनुनासिकादेशो भवति, स च प्रकृत्या भवति। अभ्र आँ अपः। गभीर आँ उग्रपुत्रे जिघांसतः। केचिदाङो ऽनुनासिकश् छन्दसि बहुलम् इत्यधीयते। तेन इह न भवति, इन्द्रो बाहुभ्यामातरत्। आ अतरत्।

न्यासः

आङोऽनुनासिकश्छन्दसि। , ६।१।१२२

"आङः" इति। ङिद्विशिष्टस्याकरस्योपादानम्()। ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः"--तस्यैव ग्रहणं यथा स्यात्(), वाक्यस्मरणयोर्यः तस्य मा भूदित्येवमर्थम्()। असति प्रकृतिभावे विहितेऽप्याङोऽनुनासिकत्वे स्यादेव स्वरसन्धिः। अनुनासिकविधानं त्वादेशस्य सानुनासिकत्वार्थं स्यादित्येतन्मनसि कृत्वाऽऽह--"न च प्रकृत्या भवति" इति। "आतरत्()" इति। तरतेराङ्पूर्वाल्लङ्, अडागमः, अटा सह सवर्णदीर्घत्वम्()॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इकः १।३ असवर्णे ७।१ शाकल्यस्य ६।१ १२४ ह्रस्वः १।१ १२४ च ० १२४ अचि ७।१ १२१ प्रकृत्या ३।२१ १११ संहितायाम् ७।१ ७०

समासः॥

न सवर्णः असवर्णः, नञ्तत्पुरुषः॥

अर्थः॥

असवर्णे अचि परतः इकः शाकल्यस्य आचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वः च तस्य इकः स्थाने भवति।

उदाहरणम्॥

दधि अत्र, मधु अत्र, कुमारि अत्र् किशोरि अत्र॥ इको यणचि इत्यपि भवति विधानसामर्थ्यात्। तेन पक्षे दध्यत्र मध्वत्र कुमार्यत्र कोशोर्यत्र इति यणादेशाः भवन्ति॥

काशिका-वृत्तिः

इको ऽसवर्णे शाकल्यस्य ह्रस्वश् च ६।१।१२७

इको ऽसवर्ने अचि परतः शाकल्यस्य आचार्यस्य मतेन प्रकृत्या भवन्ति, ह्रस्वश्च तस्य इकः स्थाने भवति। दधि अत्र, दध्यत्र। मधु अत्र, मध्वत्र। कुमारि अत्र, कुमार्यत्र। किशोरि अत्र, किशोर्यत्र। इकः इति किम्? खट्वेन्द्रः। असवर्णे इति किम्। कुमारीन्द्रः। शाकल्यस्य ग्रहणं पूजार्थम्। आरम्भसामर्थ्यादेव हि यणादेशेन सह विकल्पः सिद्धः। सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्यः। सिति अयं ते योनिरृत्वियः। नित्यसमासे व्याकरनम्। कुमार्यर्थम्। ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यम्। ईषा अक्षो हिरण्ययः। का इमरे पिशङ्गिला। पथा अगमन्।

लघु-सिद्धान्त-कौमुदी

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ५९, ६।१।१२३

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि। ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः। चक्रि अत्र, चक्रय्त्र। पदान्ता इति किम्? गौर्यौ -।

न्यासः

इकोऽसवर्णे शाकलयस्य ह्रस्वश्च। , ६।१।१२३

"ह्यस्वश्च तस्येकः स्थाने भवति" इति। यद्येवम्(), "प्रकृत्या" ६।१।१११ इत्यस्यानुकर्षणार्थश्चकारो न कत्र्तव्यः, ह्यस्वविधानसामथ्र्यादेव हि स्वरसन्धिर्न भविष्यति? अत्रैतत्? स्यात्()--दीर्घाणामेव ह्यस्वविधानसामथ्र्यात्? स्वरसन्धिर्न स्यात्()। ह्यस्वानां तु स्यादेव, न हि तेषां ह्यस्वा भवन्ति। प्रयोजनाभावादित्येतच्च नास्ति; ह्यस्वानामपि हि स्वरसन्धिबाधनार्थं ह्यस्वो भवत्येव। कृतकारि खल्विदं शास्त्रम्(), पर्जन्यवत्(); नाकृतकारि दहनवत्()। एवं तर्हि चकारेणैतदाख्यायते--क्वचिद्? ईषा+अक्षादौ प्रकृतिभाव एव भवति, न ह्यस्वत्वमिति। तेन यदुक्तामीषा अक्षादौ प्रकृतभावमात्रमिति, तन्न वक्तव्यं भवति। यणादेशेन सह विकल्पार्थं शाकल्यग्रहणं कस्मान्न भवति? इत्याह--"आरम्भसामथ्र्यादेव हि" इत्यादि। यणादेशस्य ह्रसवर्ण एवाज्विषयः; सवर्णे तु "अकः सवर्णे दीर्घः" ६।१।९७ इति दीर्घविधानात्()। अयमपि च शाकलो ह्यस्वो विधीयते। अत एवास्मिन्? विषय आरम्भसामथ्र्यादेवास्य विधेर्यणादेशेन सह विकल्पः सिद्ध इति न तदर्थमाचार्यग्रहणम्()। "सिन्नित्यसमासयोः" इत्यादि। एकापि सप्तमी द्विधा भिद्यते; अपेक्षाभेदात्()। सिदपेक्षया परसप्तमी, नित्ससमासापेक्षया विषयसप्तमी। सिच्च नित्यसमासश्चेति द्वन्द्वः--स इद्यस्य स सित्()। नित्याधिकारे विहितः समासो नित्यसमासः। शाकल्यस्यायं विधिः शाकलः--"कण्वादिभ्यो गोत्रे" (४।२।१११) इत्यण्? "यस्येति च" ६।४।१४८ इत्यकारलोपः, "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ इति यकारलोपः। शाकलस्य प्रतिषेधः शाकलप्रतिषेधः। "वक्तव्य" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्(), "सर्वत्र विभाषा गोः" ६।१।११८ इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन सिन्नित्यसमासयोः शाकलप्रतिषेधो भविष्यति। "ऋत्वियः" इति। ऋतुः प्राप्तोऽस्येति "ऋतोरण्()" ५।१।१०४ "छन्दसि घस्()" ५।१।१०५ इति घस्()। "व्याकरणम्()" इति। "कुगतिप्रादयः" २।२।१८ इति समासः। अत्र हि "नित्यं क्रीडाजीविकयोः" २।२।१७ इत्यतो नित्यग्रहणानुवृत्तेर्नितयसमासोऽयम्()। "कुमार्यर्थम" इति। कुमार्या इदं कुमार्यर्थमिति। "अर्थशब्देन सह" समासवचनं सर्वलिङ्गता च" (वा।७८) इत्ययमपि नित्यसमास एव। सर्वत्र शाकलविधौ प्रतिषिद्धे यणादेशो भवत्येव॥

बाल-मनोरमा

ह्रस्वश्च ९२, ६।१।१२३

भाष्यकारमतमाह--अत्र ह्रस्वेति। अत्र चकारो न कर्तव्यः, प्रकृत्येत्यनुकर्षस्य व्यर्थत्वात्। नच विहितस्य ह्रस्वस्य यण्निवृत्त्यर्थः स इति वाच्यं, ह्रस्वविधिसामथ्र्यादेव यणो निवृत्तिसिद्धेः। अन्यथा यणमेव विदध्यात्। अतः प्रकृत्येत्यनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितमित्यर्थः। चक्रि-अत्रेति ह्रस्वमनुच्चितप्रकृतिभावपक्षे रूपम्। तदभावपक्षे तु यणि चक्र्यत्रेति रूपम्। नचात्र ककारस्य "स्कोः संयोगाद्यो"रिति लोपः शङ्क्यः, "अचः परस्मि"न्निति यणः स्थानिवत्त्वेनाऽच्त्वेन पदान्तसंयोगाऽभावात्। नच "पूर्वत्रासिद्धे न स्थानिव"दिति तन्निषेधः शङ्क्यः, "तस्य दोषः संयोगादिलोपलत्वणत्वे"ष्विति वचनात्।

न समासे। वार्तिकमेतत्। समासे उक्तशाकलविधिर्न भवतीत्यर्थः। वाप्य()आ इति। वाप्याम()आ इति विग्रहः। शौण्डादेराकृतिगणत्वात्सुप्सुपेति वा समासः।

सिति च। सकार इद्यस्य स सित्, तस्मिन् परे उक्तः शाकलविधिर्न भवतीत्यर्थः। पार्(ामिति। पर्शु=पार्(ाआस्थि। पर्शूनां समूहः पार्(ाम्। "पर्(ाआ णस् वक्तव्यः" इति णस्। आदिवृद्धिः। यणादेशः। अत्र पार्शु-अ इति स्थिते उक्तः शाकलो विधिर्न भवति। ओर्गुणस्तु न, भस्यैव तद्विधानात्, "सिति चे"ति पदत्वेन भत्वबाधात्। "अचो ञ्णिती"ति वृद्धिरपि न भवति, आदिवृद्ध्या तद्बाधात्। तथाच मूलकारो वक्ष्यति-"आदिवृद्धिरन्त्योपधावृद्धी बाधते" इति। अत्र सिन्नित्यसमासयोः शाकलप्रतिषेधः" इति वार्तिकं, तदिह द्विधा विभज्य व्याख्यातम्। नचैव सति वोप्य()आ इत्यत्र कथं शाकलप्रतिषेधः, तत्र समासस्य वैकल्पिकत्वादिति वाच्यम्, भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ऋति ७।१ अकः १।३ शाकल्यस्य ६।१ ? ह्रस्वः १।१ ? च ० ? अचि ७।१ १२१ प्रकृत्या ३।२१ १११ संहितायाम् ७।१ ७०

अर्थः॥

ऋकारे परतः शाकल्यस्य आचार्यस्य मतेन अकः प्रकृत्याः भवन्ति, ह्रस्वः च तस्य अकः स्थाने भवति॥

उदाहरणम्॥

खट्व + ऋश्यः, माल + ऋश्यः, मुमारि + ऋश्यः, होतृ + ऋश्यः॥ पक्षे यथायथमादेशाः भवन्ति॥

काशिका-वृत्तिः

ऋत्यकः ६।१।१२८

शाकल्यस्य ह्रस्वश्च इत्येतदनुवर्तते। ऋकारे परतः शाक्ल्यस्य आचार्यस्य मतेन अकः प्रकृत्या भवन्ति ह्रस्वश्च तस्यकः स्थाने भवति। खट्व ऋश्यः। माल ऋश्यः। कुमारि ऋश्यः। होतृ ऋश्यः। ऋति इति किम्? खट्वेन्द्रः। अकः इति किम्। वृक्षावृश्यः। सवर्णार्थमनिगर्थं च वचनम्।

लघु-सिद्धान्त-कौमुदी

ऋत्यकः ६१, ६।१।१२४

ऋति परे पदान्ता अकः प्राग्वद्वा। ब्रह्म ऋषिः, ब्रह्मर्षिः। पदान्ताः किम्? आर्छत्॥
लघु-सिद्धान्त-कौमुदी
इत्यच्सन्धिः ६१, ६।१।१२४

लघु-सिद्धान्त-कौमुदी
अथ हल् सन्धिः ६१, ६।१।१२४

न्यासः

ऋत्यकः। , ६।१।१२४

"सवर्णार्थमनिगर्थञ्च वचनम्()" इति। अन्यत्र पूर्वेणैव सिद्धत्वात्()। यदि सवर्णार्थं वचनम्(), कथं तर्हि खट्वश्र्य इत्युदाहरणम्(), न ह्यत्र सवर्णोऽच्परः नैतदस्ति; "अनिगर्थञ्च" इति यदुक्तं तस्योदाहरणम्()। अत एवाक इत्युपात्तं सूत्रे; अन्यथेक इत्यनुवत्र्तनीयं स्यात्()। सत्यस्मिन्? योगे सवर्णार्थेऽप्यकोऽनेनैव युक्तो ह्रस्वप्रकृतिभावो परत्वादत्यस्योदाहरणस्योपन्यासः॥
बाल-मनोरमा
ऋत्यकः ९३, ६।१।१२४

ऋत्यकः। "अकः" इति षष्ठी। "शाकल्यस्य ह्रस्वश्चे"त्यनुवर्तते। असवर्णं इति निवृत्तम्। "एङः पदान्ता"दित्यतः पदान्तादित्यनुवर्तते। तच्च षष्ट()न्ततया विपरिणम्यते। ततः "पदान्तस्याऽक ऋति ह्रस्वो वा स्या"दित्येकं वाक्यं सम्पद्यते। चकारात्प्रकृत्येत्यनुकृष्यते। "उक्तो ह्रस्वः प्रकृत्या अवतिष्ठते" इति द्वितीयं वाक्यं संपद्यते। तदाह--ऋति परेऽकः प्राग्वदिति। ब्राह्म ऋषिरिति। ब्राह्मआ--ऋषिरिति स्थिते आकारस्य ह्रस्वः प्रकृतिभावश्च। ततश्चाद्गुण इति परपः अकारो न भवति। अत्रा।त्रऽकारस्य इक्त्वाऽभावादिकोऽसवर्णे इत्यप्राप्ते इदं वचनम्। ब्राह्मर्षिरिति। उक्तह्रस्वसमुच्चितप्रकृतिभावाऽभावपक्षे आद्गुण इति अकारः। रपरत्वम्। "ऋत्यस्ये"त्येव तु न सूत्रितम्। होतृ-ऋकार इत्यत्र प्रकृतिभावार्थमग्ग्रहणस्यावश्यरकत्वात्। पदान्ता इत्येवेति। पदान्तग्रहणमत्राप्यनुवर्तनीयमेवेत्यर्थः। आच्छदिति। ऋ गतौ। लङ् तिप् शप्। पाघ्राध्मेति ऋच्छादेशः। "इतश्चे"ति इकारलोपः, "आडजादीना"मित्याडागमः, आटश्चेति वृद्धिः। आ ऋच्छदिति स्थिते आकारस्याऽकः पदान्तत्वाऽभावान्नोक्तः प्रकृतिभावः। न समास इति पूर्वसूत्रस्थं निषेधवार्तिकमिह न संबध्यत इत्याह--समासेऽपीति। सप्तऋषीणामिति। "दिक्संख्ये संज्ञाया"मिति समासः। सप्तऋषीणासिति प्रकृतिभावपक्षे रूपं तदभावपक्षे तु आद्गुण इति गुणे रपरत्वे सप्तर्षीणामिति भवति।

तत्त्व-बोधिनी
ऋत्यकः ७५, ६।१।१२४

ऋत्यकः। ब्राह्म ऋषिरिति। ननु "ऋत्यस्ये"त्येव सूत्रमस्तु। "दधि ऋच्छती"त्यादौ "इकोऽसवर्णे"इत्यनेनैव प्रकृतिभावसिद्धेः। मैवम्। "होतृ-ऋकार" इत्यत्र प्रकृतिभावार्थमग्ग्रहणस्यावश्यकत्वात्। एतेन "अकोऽसवर्णे" इत्येकमेव सूत्रमस्त्विवति शङ्काया निरवकाश एव, उक्तदोषाऽनिवृत्तेः, सप्तऋषीणामित्यत्र "न समासे" इति निषेधापत्तेश्च। "न समासे" इति निषेधवार्तिकं हि "इकोऽसवर्णे" इति सूत्र एव, न तु "ऋत्यकः" इत्यत्रेति सिद्धान्तः। अत एवाह--समासेऽप्ययमिति। एवं च "ऋलृवर्णयोः" इति पूर्वोक्तो निर्देशः सङ्गच्छते।

सूत्रम्

काशिका-वृत्तिः

अप्लुतवदुपस्थिते ६।१।१२९

उपस्थितं नाम अनार्षः अतिकरणः, समुदायादवच्छिद्य पदं येन स्वरूपे ऽवस्थाप्यते। तस्मिन् परतः प्लुतः अप्लुतवद् भवति। प्लुतकार्यं प्रकृतिभावं न करोति। सुश्लोक३ इति सुश्लोकेति। सुमङ्गल३ इति सुमङ्गलेति। वत्करणं किम्? अप्लुत इति उच्यमाने प्लुत एव प्रतिषिद्यते। तत्र को दोषः? प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्, अग्नी३ इति, वायू३ इति।

न्यासः

अप्लुतवदुपस्थिते। , ६।१।१२५

ऋषौ=वेदे भव आर्षः, तस्मादन्यो लौकिकोऽनार्षः। "समुदायात्()" इति। वाक्यादित्यर्थः। कुत एतत? पदरहितस्य वक्यस्याप्रयोगात्()। वाक्यस्य च समुदयात्मकत्वात्()। "अवच्छिद्य" इति। पृथक्? कृत्वेत्यर्थः। "स्वरूपे व्यवस्थाप्यते" [स्वरूपेऽवस्थाप्यते--काशिका] इति। शब्दपदात्मकतायां व्यवस्थाप्यत इत्यर्थः। "अप्लुतवत्()" इति। अप्लुतेन तुल्यं वत्र्तत इत्यप्लुतवत्()। येन साधम्र्येणाप्लुतवद्भवति तद्दर्शयितुमाह--"प्लुतकार्यम्()" इत्यादि। तदनेन प्लुतकार्यस्यार्थं प्रतिषेधः, न तु प्लुतस्येति दर्शितं भवति। "सुश्लोका ३" इति। "दूराद्धूते च" ८।२।८४ इति प्लुतः। "सुश्लोका" इति। प्लुतकार्यस्याकरणादेकादेशो भवत्येव। ननु चैकादेशेनापि न भवितव्यम्(), तस्यापि प्लुतकार्यत्वात्()? नैतदस्ति; एवं हि वचनस्य वैयथ्र्यं स्यात्()। तस्मात्? प्लुतसंशब्दनेनैव प्लुतस्य यत्कार्यं विहितं तस्यैव प्रतिषेधः, न सर्वस्य प्लृतकार्यस्य। न चैकादेश एवं विहितः। "वत्करणं किम्()" इति। कार्यमात्रस्य प्रतिषेधे सति प्लुतस्य धवणं यथा स्यादित्येवमर्थं वत्करणं स्यात्()। सत्यपि च कार्यमात्रस्य प्रकृतिभावस्य प्रतिषेधेनैव प्लुतश्रुत्या भवितव्यम्(); एकदेशेन निवर्त्तितत्वात्()। तत्? कस्मात्? प्लुतस्यैव प्रतिषेधो न क्रियत इत्यभिप्रायः। प्लुतप्रतिषेधे वक्ष्यमाणं दोषं चेतसि कृत्वाऽऽह--"प्लुत इत्युच्यमाने" इत्यादि। "तत्र को दोषः" इति। यो वत्करणे सति न भवतीति भावः। "प्रगृह्राश्रये" इत्यादि। प्रगृह्र आश्रयो यस्य तस्मिन्? प्रतिभावे सति प्रगृह्रसंज्ञको यः प्लुतस्तस्य श्रवणं न स्यात्(), यदि प्लुत एव प्रतिषिध्येत। वत्करणे तु सति प्लुतकार्यस्यायं प्रतिषेधो भवति न प्लुतस्यैव। तत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धेऽपि प्रगृह्राश्रयस्याप्रतिषिद्धत्वादसत्येकादेश एव दोषो न भवति। "अग्नी इति"। "इदूदेद्()द्विवचनम्()" १।१।११ इत्यादिना प्रगृहयसंज्ञा, "गुरोरनृत" ८।२।८६ इत्यादिना प्लुतः॥

बाल-मनोरमा

अप्लुतवदुपस्थिते ९९, ६।१।१२५

तदाह--उपस्थितोऽनार्ष इति। अप्सुतवद्भावस्य प्रयोजनमाह--प्लुतकार्यं प्रकृतिभावमिति। "अप्लुतकार्यं यणादिकं करोती"ति पाठान्तरम्। सुश्लोकं३ इतीति। तैत्तिरीये "सुश्लोक३" इति प्लुतान्तो मन्त्रः पठितः। पदकालेऽवग्रहे तस्मात्परत इतिशब्दं पदकाराः पठन्ति। तत्र "सुश्लोक३ इती"ति स्थितेऽप्लुतवद्भावेन प्रकृतिभावाऽभावे सत्याद्गुणे सुश्लोकेतीति भवति। अत्रेतिशब्दः पदकारप्रक्षिप्तत्वादवैदिकः। तदेव "सुश्लोकेति" इत्युदाहरणं भाष्ये स्थितम्। पदकारास्तु "सुश्लोक३ इति सुश्लोक३ इती"त्येव अवगृह्णन्ति। तदपि संहिताया अविवक्षितत्वान्निर्वाह्रम्। संहितायामेव यणादिसन्धिविधानात्। वत्किमिति। "अप्लुत्तव"दित्यत्र वद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः। उत्तरमाह--अप्लुत इत्यादिना। वद्ग्रहणं विहायाऽप्लुत उपस्थित इत्युक्तेप्लुतस्य स्थानेऽप्लुत एव विधीयते। अतः प्लुत एव निवर्तेत। ततश्च अग्नी३ इतीत्यत्र सम्बोधनप्रथमाद्विवचनान्तस्यानुकरणे प्रगृह्र ईकारस्त्रिमात्रो न श्रूयते। वत्करणे तु प्लुतकार्यस्य प्रकृतिभावस्यैव

निवृत्तिर्गम्यते न तु प्लुतस्यापीति नोक्तदोष इत्यर्थः।

तत्त्व-बोधिनी

अप्लुतवदुपस्थिते ७९, ६।१।१२५

यणादिकं करोतीति। अत्र नव्याः-"यद्येवम् "अग्नी इति " विष्णू इति " इत्यत्र प्रगृह्याश्रयं प्रकृतिभावं बाधित्वा परत्वादनेन यणादिकार्यं स्यात्, ततश्च वत्करणप्रयोजन यणादिकमेव स्यात्, तस्मात् "प्लुतकार्यं प्रकृतिभावं न करोतीत्यर्थः" इति प्राचां व्याख्यैव ज्यायसी। एवं च "इको यणची"त्यत्रेग्ग्रहणस्य वैयथ्र्यशङ्काऽपि नास्ति। तथाहि--तत्रेग्ग्रहणाऽभावेऽपि "ह्यस्वस्य पिति कृति तुक्" "दीर्घा"दित्यतो ह्यस्वदीर्घपदानुवृत्त्या तयोर्यण्विधानान्न व्यञ्जनस्य भविष्यति। प्लुतस्य तु प्रकृतिभावेनैव न भवितव्यमेव।?योदयोऽपवादा "हरय" इत्यादौ। "उपेन्द्रः" "कृष्णैकत्व"मित्यादौ तु "आद्गुणः" "वृद्धिरेचि" इति बाधके भविष्यतः। यथा सत्यपीग्ग्रहणे "श्रीश" इत्यादौ सवर्णदीर्घत्वं बाधकम्। अतो नार्थ इग्ग्रहणेन। तथापि "एहि करभोरु ३ इति" "सुतनु ३ इति" चिनुहि ३ अत्रे"त्यादौ "अप्लुतवदुपस्थिते" "ई ३ चाक्रवर्मणस्ये"ति प्रकृतिभावनिषेधेऽपि आभ्यां यणादिकार्याऽविधानात् प्लुतस्याऽस्य यण्न स्यात्। ह्यस्वदीर्घपदाननुवृत्तौ तु व्यञ्जनस्य स्यात्। तस्मादिग्ग्रहणं व्यर्थमिति न शक्यते शङ्कितु"मित्याहुः। अन्ये त्विग्ग्रहणस्य प्रयोजनान्तरमप्याहुः,-इको यणेव क्वचिद्यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूत्। किंचाऽन्यत् प्राप्नोति?, "इकोऽसवर्णे" इति शाकलम्। एवं च यदुक्तं "न समासे" "सिति चे"ति, तदनेन सङ्गृहीतं भवती"ति।

---

सूत्रम्

काशिका-वृत्तिः

ई३ चाक्रवर्मणस्य ६।१।१३०

ई३कारः प्लुतो ऽचि परतः चाक्रवर्मणस्य आचार्यस्य मतेन प्लुतवद् भवति। अस्तु हीत्यब्रूताम्, अस्तु ही३ इत्यब्रूताम्। चिनु हीदम्। चिनु ही३ इदम्। चाक्रवर्मणग्रहणम् विकल्पार्थम्, तदुपस्थिते निवृत्त्यर्थम् अनुपस्थिते प्राप्त्यर्थम् इत्युभयत्रविभाषा इयम्। ईकारादन्यत्र अप्ययम् अप्लुतवद्भाव इष्यते। वशा३ इयम् वशेयम्।

न्यासः

ई ३ चाक्रवर्मणस्य। , ६।१।१२६

"अचि परतः" इति। एतेन "उपस्थिते" इत्येतन्निवृत्तम्(); अस्वरितत्वादिति सूचयति। "अस्तु ही ३" इति। "असु क्षेपणे", (धा।पा।१२०९) लोट्(), सिप्()। "सेह्रपिच्च" ३।४।८७ इति सेहिः, व्यत्यनेन श्नुः। "क्षियाशीः-प्रैषेषु तिङाकाङ्क्षम्()" ८।२।१०४ इति प्लुतः। "तदुपस्थिते निवृत्त्यर्थम्()" इति। तत्र पूर्वेणाप्लुतवद्भावस्य नित्यं प्रापतत्वात्()। "अनुयस्थिते प्राप्त्यर्थम्()" इति। तत्र केनचिदप्राप्तत्वात्()। "ईकारात्()" इत्यादि। कथं पुनरिकारादन्यत्रापीष्यमाणोऽप्येषोऽप्लुतवदभावो लभ्यते? "इकोऽसवर्णे शाकल्यस्य ह्यस्वश्च" ६।१।१२३ इत्यतोऽनुवृत्तस्य चकारस्यानुक्तसमुच्चयार्थत्वात्()॥

बाल-मनोरमा

ई३चाक्रवर्मणस्य १००, ६।१।१२६

ई३चाक्र। ई३ इति प्लुतस्य लुप्तप्रथमाविभक्तिको निर्देशः। उपस्थित #इत्यस्वरितत्वान्निवृत्तम्। "अप्लुतव"दित्यनुवर्तते। "इको यणची"त्यतोऽचीत्यनुवर्तते। चाक्रवर्मणमुनेर्मते ईकारोऽचि परेऽप्लुतवद्भवति,

नत्वन्यमत इत्यर्थः। तदाह-प्लुतोऽचीत्यादि। चिनु हि३ इदमिति। "किं मया कत्र्तव्य"मिति पृष्टस्यैदं प्रतिवचनम्। "चिन्वि"ति लोडन्तम्। "उतश्च प्रत्यया"दिति हेर्लुक्। "हीति त्वव्ययम्। "विभाषा पृष्टप्रतिवचने हेः" इति तस्य प्लुतः। चिन्वित्यतः प्राग् "देवदत्ते"त्यध्याहार्यम्। "इद"मिति तु वाक्यान्तरस्थं, नतु चिन्वित्येतेनैकवाक्यतामापन्नम्। अन्यथा "वाक्यस्य टे"रित्यधिकाराद्धिशब्दे इकारस्य प्लुतो न स्यात्। उभयत्रेति। इतिशब्दे परतो नित्यतया प्राप्ते, तदन्यत्राऽप्राप्ते चारम्भादुभयत्र विभाषेयमित्यर्थः। विभाषाशब्दस्त्वव्ययमिति न ब्रामतिव्यं, "न वेति विभाषाया"मिति भाष्यप्रयोगात्। विभाष्यते विकल्प्यत इति विभाषा। "गुरोश्च हल" इत्यप्रत्ययः। टाप्।

तत्त्व-बोधिनी

ई३चाक्रवर्मणस्य ८०, ६।१।१२६

चिनु हीति। "चि"न्विति लोडन्तम्। "ही"त्यव्ययम्। "अनन्त्यस्यापि प्रश्नाख्यानयोः" इत्यनेन प्लुतः। उभयत्रविभाषेयमिति। "इति" शब्दे परतः पूर्वेण प्राप्ते, अन्यत्राऽप्राप्ते चारम्भादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दिव उत् ६।१।१३१

एङः पदान्तादति ६।१।१०५ इत्यतः पदग्रहणम् अनुवर्तते। दिवः इति प्रातिपदिकं गृह्यते, न धातुः, सानुबन्धकत्वात्। दिवः पदस्य उकारादेशो भवति। दिवि कामो यस्य द्युकामः। द्युमान्। विमलद्यु दिनम्। द्युभ्याम्। द्युभिः। निरनुबन्धकग्रहणादिह न भवति, अक्षद्यूभ्याम्, अक्षद्यूभिः इति। तपरकरनम् ऊठो निवृत्त्यर्थम्, द्युभ्याम्, द्युभिः इति। अत्र हि परत्वातूथ् प्राप्नोति। पदस्य इति किम्? दिवौ। दिवः।

लघु-सिद्धान्त-कौमुदी

दिव उत् २६६, ६।१।१२७

दिवोऽन्तादेश उकारः स्यात् पदान्ते। सुद्युभ्यामित्यादि॥ चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः॥

न्यासः

दिव उत्?। , ६।१।१२७

"सानुबन्धकत्वात्()" इति। कस्य धातोरनन्तरम्()? प्रकृतत्वात्? तस्यैव। दीव्यतिर्धातुः सानुबन्धः, प्रतिपदिकं तु दिवित्येतन्निरनुबन्धकम्(), निरनुबन्धकस्य च सूत्र उपादानम्(); तस्मात्? "निरनुबन्धकस्य ग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति प्रातिपदिकस्येदं ग्रहणम्(), न धातोरिति। "द्युकामः" इति। दिविकामोऽस्येति बहुव्रीहिः, दिवं कामयत इति वा। "शीलिकामिभिक्षाचरिभ्यो णो वक्तव्यः" (वा।२२९) इति णप्रत्ययः। "द्युमान" इति। द्यौरस्यास्तीति "तदस्यास्त्यस्मिन्निति मतुप्()" ५।२।९३। "विमलद्यु दिनम्()" इति। विमला द्यौरस्मिन्निति बहुव्रीहिः। "अक्षद्यूभ्याम्(), अक्षद्यूभिः" इति। अक्षशब्द उपपदे दीव्यतेर्धातोः क्विप्(), "च्छ्वोः शूडनुनासिके च" ६।४।१९ इत्यूठ्()। अथ तपकरणं किमर्थम्(), यावता यद्यपि "ऋत उत्()" (६।१।१११) इत्यत्र तपकरणेन "भाव्यमानोऽप्युकारः सवर्णान्? गृह्णाति" (चां।प।पा।४४) इति ज्ञापितम्(), तथाप्यत्रान्तर्यतोऽद्र्धमात्राकालस्य व्यजञ्जनस्य मात्रिक एव भविष्यति; न दीर्घः? इत्यत आह--"तपकरणम्()" इत्यादि। यद्यप्यनेन दीर्गो न प्राप्नोति, लक्षणान्तरेण तु द्युभ्यां द्युभिः--इत्यत्रोठ्? प्राप्नोति, अतः स मा भूदित्येवमर्थं तपरकरणम्()। स्यादेतत्()। ननु चोठ्प्राप्तिरेव नास्ति, किं तन्निवृत्त्यर्थेन

तपरकरणेन? इत्यत आह--"द्युभ्याम्(), द्युभिः" इति। "अत्र हि" इत्यादि। उत्त्वस्यावकाशो यत्र झलादिः क्विप्परो न विद्यते--विमलद्यु दिनमिति, ऊठोऽवकाशः--अक्षद्यूभ्यामिति; द्युभ्यामित्यादावुभयप्रसङ्गे परत्वादूठ् प्राप्नोति, तपरकरणादुत्त्वमेव भवति। यदि तर्हि प्राप्तस्योठो निवृत्त्ये तपरकरणं क्रियते, एवं सति "चछ्वोः शूड्नुनासिके च" (६।४।१९) इत्यतर कथं "द्युभ्याम्? द्युभिः" इति परेण चोदिते यद्वक्ष्यति--"ऊठि कृते "दिव उत्()" इति परत्वान्मात्राकालो भविष्यति" इति, तद्विरुध्यते; तस्योठि कृतेऽभिनिवृत्ते तस्य स्थाने मात्राकाल उकारो भविष्यतीत्ययमर्थः? नास्ति विरोधः; "ऊठि कृते" इत्यस्य हि ग्रन्थस्य पूर्वेण चोद्यग्रन्थेन सह सम्बन्धः, नेतरेण परिहारग्रन्थेन। तत्र "केचिदत्र क्ङितीति नानुवर्त्तयन्ति" इत्यस्मिन्? दर्शनान्तरे उपन्यस्ते "कथं द्युभ्यां द्युभिरित्यूठि कृते" इति देश्यम्()। तत्रायं चोदयितुरभिप्रायः--यदि क्ङितीति नानुवर्त्तेत, तदा द्युभ्यां द्युभिरितयतराप्यूडेव कर्त्तवयः, ततश्चोठि कृते कथं द्युभ्यां द्युभिरिति सिध्यति, यावता द्यूभ्यां द्यूभिरिति भवितव्यमित्यस्य देश्यस्य "दिव उत्()" इति तपरत्वान्मात्राकालो भविष्यतीत्येष परिहारः। अत्राप्ययं परिहर्त्तरभिप्रायः--तपरकरणस्यैतदेव प्रयोजनम्()--ऊठ्? मा भूदति; अन्यथा तदनर्थकं स्यात्(), तस्मादुत्त्वमेव कर्त्तव्यम्? न तूड्भाव इति। ये तु "क्ङिति" इत्यनुवर्त्तयन्ति, तेषां तपरकरणं विस्पष्टार्थम्()॥

बाल-मनोरमा

दिव उत् , ६।१।१२७

भ्यामादौ हलि विशेषमाह--दिव उत्। अन्तादेश इति। अलोऽन्त्यसूत्रलभ्यम्। पदान्त इति। पदान्तादित्युनुवृत्तं सप्तम्या विपरिणम्यत इति भावः। उतस्तपरत्वं तु "भाव्यमान उकारः सवर्णग्राहकः" इति ज्ञापनार्थमिति "तित्स्वरित"मिति सूत्रे भाष्ये स्पष्टम्। सुद्युभ्यामिति। वकारस्य उत्त्वे इकारस्य यण्। अत्र उकारस्य "हल" इति दीर्घस्तु न, वकारस्थाने उकारस्य संप्रसारणत्वाऽनवसायात्, संप्रसारणशब्देन विहितस्यैव इक्स्थानिकस्य यणः संप्रसारणत्वादिति "इग्यणः" इति सूत्रे शब्देन्दुशेखरे स्पष्टम्। इत्यादीति। सुदिवे। सुद्युभ्यः। सुदिवः सुदिवोः सुदिवाम्। सुद्युषु। इति वान्ताः। अथ रेफान्ताः। "चतेरुरन्" इत्युणादिषु चतुर्()शब्दो व्युत्पादितो नित्यं बहुवचनान्तः। चत्वार इति। जसि रूपम्। "चतुरनडुहोः" इत्युकारादाम्। उकारस्य यणिति भावः। चतुर इति। शसादौ सर्वनामस्थानत्वाऽभावान्नाम्। चतुर् आमिति स्थिते ह्रस्वाद्यन्तत्वाऽभावान्नुट()प्राप्ते--।

तत्त्व-बोधिनी

दिव उत् २९७, ६।१।१२७

दिव उत्। तपरकरणमिह "द्युभ्या"मित्यादावुकारस्य संप्रसारणत्वात् "हलः"इति दीर्घे प्राप्ते तन्निवारणायेत्याहुः। इति वान्ताः। चत्वार इति। "चतेरुरन्ित्युरन्प्रत्ययान्तश्चतुर्श ब्दः। ततो जसि "चतुरनडुहो"रित्याम्।

---

सूत्रम्

काशिका-वृत्तिः

एतत्तदोः सुलोपो ऽकोरनञ्समासे हलि ६।१।१३२

एतत्तदौ यावककारौ नञ्समासे न वर्तते तयोर् यः सुशब्दः, कश्च तयोः सुशब्दः? यः तदर्थेन सम्बद्धः, तस्य संहितायां विषये हलि परतो लोपो भवति। एष ददाति। स ददाति। एष भुङ्क्ते। स भुङ्क्ते। एतत्तदोः इति किं? यो ददाति। यो भुङ्क्ते। सुग्रहणं किम्? एतौ गावौ चरतः। अकोः इति किम्? एषको ददाति। सको ददाति। तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति रूपभेदे ऽपि साकच्कावेतत्तदावेव भवतः। अनञ्समासे इति किम्? अनेषो ददाति। असो ददाति।

उत्तरपदार्थप्रधानत्वान्नञ्समासस्य एतत्तदोरेव अत्र सम्बद्धः सुशब्दः। हलि इति किम्? एषो ऽत्र सो ऽत्र।

लघु-सिद्धान्त-कौमुदी

एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ११४, ६।१।१२८

अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। अकोः किम्? एषको रुद्रः। अनञ्समासे किम्? असः शिवः। हलि किम्? एषोऽत्र॥

न्यासः

एतत्तदोः सुलोपोऽकोऽनञ्समासे हलि। , ६।१।१२८

"नञ्समासे न वर्त्तेते" इति। अनेन क्रियासम्बन्धं दर्शयन्? "अनञ्समासे इति प्रसज्यप्रतिषेधोऽयमिति दर्शयति। पर्युदासे हि सति नञिवयुक्तन्यायेन (व्या।प।६५) नञ्समासादन्यस्मिन्? समासे वर्तमानयोः स्यात्()--परमैष ददाति, परमस ददातीति; एष ददाति, स ददातीत्यत्र न स्यात्()। अथ "स सम्प्रदानम्()" (१।४।३२) इत्यादिको निर्देशो ज्ञापयति--असमासेऽपि भवतीति? उच्यते; एवमप्येतच्छब्दस्य न स्यात्(), योगापेक्षे तु ज्ञापक आश्रीयमाणे प्रतिपत्तिगौरवं स्यादित्यभिप्रायः। "तयोर्यः सुशब्दः" इति। एतेन "एतत्तदोः" इति सुशब्दापेक्षया सम्बन्धलक्षणेयं षष्ठीत्याचष्टे। यद्यवम्(), सुशब्दस्य सापेक्षत्वादसामर्थ्ये सति लोपशब्देन सह समासो नोपपद्यते। गमकत्वत्? सापेक्षस्यापि समासो भविष्यतीत्यदोषः। अथ वा--असमाननिर्देश सति लोपशब्देन सह समासो नोपपद्यते। गमकत्वाकत्? सापेक्षस्यापि समासो भविष्यतीत्यदोषः। अथ वा--असमाननिर्देश एवायम्(), षष्ठी तु "सुपां सुलुक्()" [७।१।३९](#) इत्यनेनैव लुप्तत्वान्न श्रूयते। "कश्च तयोः सुशब्दः" इति। एवं मन्यते--आनन्तर्यलक्षणेन वा सम्बन्देनैतत्तदोः सुशब्दः सम्बन्धी स्यात्(), अर्थद्वारेण वा; तत्र हि पूर्वस्मिन्? पक्षे सप्तमीबहुवचनस्यापि ग्रहणं स्यात्()। भवति हि तदेतदोरानन्तर्यलक्षमेन सम्बन्धेन सम्बन्धी। इतरस्मिन्? "अनञ्समासे" इति प्रतिषेधस्यैव वैयर्थ्य स्यात्()--अनेषो ददाति, असो ददातीति। अत्र हि समासद्वारेण सुशब्दः समासत्यैव सम्बन्धी, न त्वेतत्तदोरिति। ननु च सानुबन्धकत्वात्? सप्तमीबहुवचनं नाशङ्कनीयमेव? नैतदस्ति; प्रथमैकवचनमपि हि तद्गणसंविज्ञाने बहुव्रीहौ सानुबन्धकमेव। तद्गुणसंविज्ञान इति "एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य" (व्या।प।५२) इत्यतर यदस्त्येकानुबन्धग्रहणं तदपेक्ष्य बोध्यम्()। तत्रातद्गुणसंविज्ञानेऽङ्गीकृत एतद्वचनं न घटते; अनुबन्धं त्यक्त्वा सुशब्दो नास्ति, किं तर्हि? सशब्दः। इयाँस्तु विशेषः--एकसय पकारोऽनुबन्धः, अपरस्य तूकार इति। तस्माद्()द्वयोरपि सानुबन्धकत्वात्? सपतमीबहुवचनमपि युक्तमाशङ्कितुम्()। द्वितीये तु पक्षे यो दोषः, तमुत्तरत्र परिहरियिष्यामीति चेतसि कृत्वाऽऽह--"यस्तदर्थेन सम्बन्धः" इति। एवं ब्राउवता प्रथमैकवचनं तयोः सम्बन्धीत्युक्तं भवति। कथं कृत्वा? एतत्तच्छब्दौ हि प्रातिपदिके। "त्रिकश्च प्रातिपदिकार्थः" इतीदमत्र दर्शनमाश्रितम्()। तथा हि "बहुषु बहुवचनम्()" [१।४।२१](#) इत्यत्र बहुषु बहवचनं भवति। बहुत्वमससय वाच्यं भवतीत्यर्थः। "कर्मादयोऽप्यपरे विभक्तीनां वाच्यास्तदीये" [१।४।२१](#) इत्यत्र ब्राउवाणेन संख्यायाः कर्मादीनां च विभक्ति वाच्यत्वमिति दर्शितम्(), अर्थाच्च त्रिकत्वम्(), "स्वार्थद्रव्यलिङ्गात्मकं प्रातिपदिकार्थः" इति तस्य प्रातिपदिकार्थस्य यदेकत्वं तत्र प्रथमैकवचनमेव भवति, न सप्तमीबहुवचनम्()। तद्()व्यधिकरणस्यैव बहुत्वे भवति। तस्मादेतत्तदोरर्थद्वारकेण प्रथमैकवचनमेव सम्बद्धम्(), न सप्तमीबहुवचनम्()। "एष ददाति" इति। "तदो सः सावनन्त्ययोः" [७।२।१०६](#) इति सत्वम्(), त्यदाद्यत्वम्(), "आदेशप्रत्यययोः" [८।३।५९](#) इति षत्वम्()। "एषकः" इति। "अव्ययसरवनाम्नामकच्? प्राक्? टेः" [५।३।७१](#) इत्यकच्()। ननु साकच्कावेतौ भिन्नरूपत्वादेतत्तदौ न भवतः, तत्? किम्? "अकोः" इति प्रतिषेधेन? इत्यत आह--"तन्मध्ययतितः" इत्यादि। तस्माश्च परिभाषाया (व्या।प।२१) अस्तित्व एष एव "अकोः" इति प्रतिषेधो ज्ञापकः, "नेदमदसोरकोः" [७।१।११](#) इति च। ननु च नञ्समासे कृते शब्दान्तरस्य सम्बन्धी सुर्भवति, नैतत्तदौः, ततश्च प्रसङ्गो नास्तीति किम्?

"अनञ्समासे इति परतिषेधेन? इत्यत आह--"उत्तरपदार्थप्रधानत्वात्()" इत्यादि। यद्यपि शब्दान्तरं नञ्समासः, तथापि तस्योत्तरपदार्थप्रधानत्वादेतत्तदोश्चोत्तरपदत्वात्? तत्सम्बन्धिन्यामेव संख्यायां सुशब्द उत्पन्न इति तयोरेव सुर्भवति। तस्मादस्ति प्राप्तिरिति प्रतिषेधः। क्रियते। समास इति किम्()? वाक्ये प्रतिषेधो मा भूत्()--नैष ददाति, न स पश्यतीति॥

बाल-मनोरमा

एतत्तदोः सु लोपोऽकोरनञ्समासे हलि १७५, ६।१।१२८

एतत्तदोः। "एतत्तदो"रित्यत्र "त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते" इत्येकशेषस्य, त्यदाद्यत्वस्य चाऽभाव आर्षः। "सु" इति लुप्तषष्ठीकं पदम्-"एतत्तदो"रित्यनेनान्वेति-एतत्तदोः सकारस्येति। अत एव सोर्लोपः सुलोप इति न षष्ठीसमासः, असामथ्र्यात्। अविद्यमानः ककारो ययोस्तौ अकौ, तयोः अकोरिति बहुव्रीहिः। तदाह-अककारयोरित्यादिना। "अनञ्समासे" इति न पर्युदासः। तथा सति नञिवयुक्तन्यायान्नञ्समाससदृशे समास एव स्यात्, नतु एष विष्णुरित्यादिवाक्येषु इत्यभिप्रेत्याह-न तु नञ्समास इति। एष विष्णुः, स शम्भुरिति। एषस् विष्णुः, सस् शम्भुरिति स्थिते सकारस्य लोपः। एषको रुद्र इति। "अव्ययसर्वनाम्नामकच्प्राक्टेः" इति अकच्। अत्र एतच्छब्दस्य सककारत्वान्न सुलोपः। तच्छब्देऽकचि सको रुद्र इत्यपि प्रत्युदाहरणम्। न चाऽकचि सति शब्दान्तरत्वात्प्राप्तिरेव नेति वाच्यम्, "तन्मध्यपतितस्तद्ग्रहणेन गृह्रते" इति परिभाषया साकच्कस्य अशब्दान्तरत्वात्। परिभाषाया तु इदमेव ज्ञापकम्। असश्शिव इति। न सः-अस इति विग्रहः। "विसर्जनीयस्य स" इति सत्वे श्चुत्वे शकारः। नञ्समासत्वान्न सुलोपः। अनेश्शिव इत्यपि प्रत्युदाहरणम्। एषोऽत्रेति। एषस्-अत्रेति स्थिते, सस्य रुत्वम्, उत्वम्, आद्गुणः, हल्परकत्वाभावान्न लोपः। अत्र "एतत्तदोरवयवस्य सो"रिति न व्याख्याम्, असम्भवात्, सोः परत्वेन विहितस्य प्रातिपदिकावयवत्वाभावात्। "एतत्तद्भ्यां परस्य सो"रित्यपि न भवति, एतत्तदोरिति षष्ठीविरोधात्। "एतत्तद्भ्यां विहितस्ये"ति व्याख्याने तु परमैष ददाति, परमस ददातीत्यत्र अव्याप्तिः। तत्र सोः समासाद्विहितत्वेन एतत्तद्भ्यां विहितत्वाभावात्। अनञ्समास इति प्रतिषेधवैयथ्र्याच्च। अत "एतत्तदर्थगतसङ्ख्याभिधायिनः सो"रिति व्याख्येयम्।

तत्त्व-बोधिनी

एतत्तदोः सु लोपोऽकोरनञ्समासे हलि १४५, ६।१।१२८

एतत्तदोः। अत्र त्यदाद्यत्वमेकशेषश्च न कृतः, सौत्रत्वात्, "प्रकृतिवदनुकरण"दिति वैकल्पिकातिदेशाद्वा। एवं च वृत्तावप्येतत्तदोरिति प्रयोगः साधुः। "हल्ङ्याब्भ्यः"-इत्यस्यानन्तरमेवेदं लाघवाय न कृतं, संहिताधिकारोपजीवनादित्याहुः। सूत्रे "सु" इति पृथक् पदं लुप्तषष्ठीकमित्याह-एतत्तदोर्यः सुरिति। एतत्तदर्थगतसङ्ख्याभिधायी यः सुस्तस्येत्यर्थः। "एतत्तदोर्विहिकत" इति व्याख्याने तु परमैष ददाति परमस ददातीत्यादौ सुलोपो न स्यात्। "एतत्तदौः पर" इति व्याख्यानं तु न संभवति, "एतत्तभ्द्या"मिति पञ्चम्यभावात्। "एतत्तदोरवयव" इति तु न संभवत्येव, सोः प्रत्ययत्वात्। तस्मादर्थद्वारकसंबन्ध एवाश्रितः। तदाश्रयणे लिङ्गं तु "अनञ्समासे"-इति बोध्यम्। एतत्तदोः किम्(), यो ददाति। अकोः किमिति। साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः। एषक इति। अकोरिति प्रतिषेध एव "तन्मध्यपतितस्तद्ग्रहणेन गृह्रते" इति परिभाषां ज्ञापयतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

स्यश् छन्दसि बहुलम् ६।१।१३३

स्य इत्येतस्य छन्दसि हलि परतः बहुलं सोर्लोपो भवति। उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपि कक्ष

आसनि। एष स्य ते पवत इन्द्र सोमः। न च भवति, यत्र स्यो निपतेत्।
लघु-सिद्धान्त-कौमुदी
अवङ् स्फोटायनस्य ४७, ६।१।१२९

पदान्ते एङन्तस्य गोरवङ् वाचि। गवाग्रम्, गोऽग्रम्। पदान्ते किम्? गवि॥
न्यासः
स्यश्छन्दसि बहुलम्?। , ६।१।१२९

"स्यः" इति त्यदः प्रथमैकवचनम्(), तस्यानुकरणम्()। तस्माच्च या षष्ठ्युत्पन्ना तस्याः "सुपां सुलुक्()" ७।१।३९ इत्यादिना लुक्()। अनुत्पत्तिरेव तस्याः, अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात्(), यथा--गवित्ययमाहेति। उदाहरणे तु पूर्ववत्? सत्वादि कार्यम्()॥

---

सूत्रम्
काशिका-वृत्तिः
सो ऽचि लोपे चेत् पादपूरणम् ६।१।१३४

सः इत्येतस्य अचि परतः सुलोपो भवति, लोपे सति चेत् पादः पूर्यते। सेदु राजा क्षयते चर्षणीनाम्। सौषधीरनुरुध्यसे। लोपे चेत् पादपूरणम् इति किम्? स इव व्याघ्रो भवेत्। अचि इति वस्पष्टार्थम्। पादग्रहणेन अत्र श्लोकपादस्य अपि ग्रहणं केचिदिच्छन्ति, तेन इदं सिद्धं भवति। सैष दाशरथी रामः सैष राजा युधिष्ठिरः। सैष कर्णो महात्यागी सैषा भीमो महाबलः।
लघु-सिद्धान्त-कौमुदी
सोऽचि लोपे चेत्पादपूरणम् ११५, ६।१।१३०

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत। सेमामविड्ढि प्रभृतिम्। सैष दाशरथी रामः॥
लघु-सिद्धान्त-कौमुदी
इति विसर्गसन्धिः ११५, ६।१।१३०

इति पञ्चसन्धिप्रकरणम्।
लघु-सिद्धान्त-कौमुदी
अथ षड्लिङ्गेषु अजन्तपुंल्लिङ्गाः ११५, ६।१।१३०

न्यासः
सोऽचि लोपे चेत्पादपूरणम्?। , ६।१।१३०

सोऽचीति पूर्ववत्? तस्य प्रथमैकवचनान्तस्यानुकरणम्()। पादपूरणम्()=पादनिष्पत्तिः। ननु चारम्भसामर्थ्यादेवाचि विज्ञायते, हलि हि पूर्वेणैव सिद्धत्वात्(), तत्? किमर्थमचीति क्रियते? इत्याह-"अचीति विस्पष्टार्थम्()" इति। "केचिदिच्छन्ति" इति। ते च्छन्दोग्रहणं नानुवर्त्तयन्तीति॥
बाल-मनोरमा
सोऽचि लोपे चेत्पादपूरणम् ३५२, ६।१।१३०

सोऽचि। "स" इति प्रथमैकवचनान्तस्वरूपपरं , ततः षष्ट()आ लुक्। एवञ्च "सस्"-शब्दस्येति लभ्यते। "सुलोप" इत्यनुवर्तते। तदाह-सस् इत्यादिना।

***** इति बालमनोरमायां स्वादिसन्धिः *****

अथ स्वादयः।

अथ श्नुविकरणा धातवो निरूप्यन्ते। षुञ्धातुः षोपदेशः। अनिट्। इत आरभ्य ञित्त्वादुभयपदिनः। सुरासन्धानमिति। सुरोत्पादनमित्यर्थः।

तत्त्व-बोधिनी

सोऽचि लोपे चेत्पादपूरणम् १५२९, ६।१।१३०

सोऽचि लोपे। "अचीति विस्पष्टार्थ"मिति वृत्तौ स्थितम्। "सस्िति तच्छब्दस्य प्रथमैकवचनान्तस्यानुकरणं लुप्तषष्ठीक्रमित्याह--स इत्यस्येति। बहुलग्रहणेति। अतएव लोपं विना पादपूरणेऽपि क्वचिद्भवति-"सास्मा अरम्" इति। अत्र वदन्ति--ये तु "सोऽहमाजन्मशुद्धना"मित्यादिसिध्यर्थं "पादश्चेल्लोपे सत्येव पूर्यते"ति सावधारणं व्याचख्युस्तेषां "सास्मा अर"मित्यादौ सलोपानापत्तिः। अत्र हि "सः-अस्मै" इति च्छेदः। बहुलग्रहणानुवृत्त्या तदुपपादने तु "सोऽहमाजन्मे"त्याद्येव तथोपपाद्यतां, किमवधारणेनेति।

* इति तत्त्वबोधिन्यां स्वादिसन्धिप्रकरणम्। *

---

सूत्रम्

काशिका-वृत्तिः

सुट् कात् पूर्वः ६।१।१३५

अधिकारो ऽयम् पारस्करप्रभृतीनां च संज्ञायाम् ६।१।१६९ इति यावत्। इत उत्तरं यद् वक्ष्यामस्तत्र सुटिति , कात् पूर्वः इति च एतदधिकृतं वेदितव्यम्। वक्ष्यति सम्पर्युपेभ्यः करोतौभूषणे ६।१।१३२। संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्। कात् पूर्वग्रहणं सुटो ऽभक्तत्वज्ञापनार्थम्। तथा हि संस्कृषीष्ट, संस्क्रियते इति संयोगादिलक्षणौ इड्गुणौ न भवतः। तिङ्ङतिङः ८।१।१८ इति निघातो ऽपि तर्हि न प्राप्नोति, सुटा व्यवहितत्वात्? स्वरविधौ व्यञ्जनम् अविद्यमानवतिति वचनान् न अस्ति व्यवधानम् संचस्करतुः, संचस्करुः इति गुणः कथम्? तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति। संयोगोपधग्रहणं च ऋतश्च संयोगादेर् गुणः ७।४।१० इत्यत्र कर्तव्यम्। टित्करणं सुट्स्तुस्वञ्जाम् इत्यत्र विशेषणार्थम्।

काशिका-वृत्तिः

अडभ्यासव्यवाये ऽपि ६।१।१३६

अड्व्यवाये, अभ्यासव्यवाये अपि सुट् कात् पूर्वः भवति। संस्करोत्। समस्कार्षीत्। सञ्चस्कर। परिचस्कार। किमर्थं पुनरिदम् उच्यते, पूर्वम् धातुरुपसर्गेण युज्यते इति तत्र धातूपसर्गयोः कर्यम् अन्तरङ्गम् इति पूर्वं सुट् क्रियते पश्चादडभ्यासौ? अभक्तश्च सुटित्युक्तम्, ततः सकारादुत्तरावडभ्यासौ अनिष्टे देशे स्याताम्। एतस्मिंस् तु सत्यत एव वचनात् कृतयोरडभ्यासयोः तद्व्यवाये अपि सुट् कात् पूर्वः क्रियते इति सिद्धम् इष्टं भवति।

न्यासः

सुट्? कात्पूर्वः। , ६।१।१३१

"संस्कात्ता" इति। "सम्पुंकानां सत्वम्()" (वा।९३६) इति वचनात्? "समः सुटि" ८।३।५ इति निर्देशाद्वा समो मकारस्य सकारः, "अत्रानुनासिकः पूर्वस्य तु वा" ८।३।२ इति पूर्वाकारस्यानुनासिकः। अथ कात्पूर्वग्रहणं किमर्थम्(), यावता सुडयमादिलिङ्गः, करोतिश्च ककारादिः, तत्रान्तरेणापि कात्पूर्वग्रहणं "आद्यन्तौ टकितौ" (१।१।४६) इति कात्पूर्वं एव सुङ्भविष्यति? इत्यत आह--"कात्पूर्वग्रहणम्()" इत्यादि। किं पुनरभक्तत्वे सतीष्टं सिध्यतीति, अतस्तज्ज्ञापकं प्रति यत्नः क्रियते? इत्याह--"तथा हि" इत्यादि। "किं पुनरभक्तत्वे सतीष्टं सिध्यतीति, अतस्तज्ज्ञापकं प्रति यत्नः क्रियते? इत्याह--"तथा हि" इत्यादि। "संस्कृषीष्ट" इति। आशिषि लिङ्? सीयुट्? आमनेपदम्(), "उश्च" १।२।१२ इति कित्त्वाद्गुणाभावः, "सुट्()तियोः" ३।४।१०७ इति तकारसय सुडागमः, कात्पूर्वः सुट्, स यदि करोतेर्भक्तः स्यात्? ततस्तस्य करोतिग्रहणेन ग्रहमात्? कृञः संयोगादित्वं जातमिति "ऋतश्च संयोगादेः" (७।२।४३) इतीट्? प्रसज्येत। "संस्क्रियते" इति। लट्? कर्मण्यात्मनेपदम्(), यक्(), "रिङ्? शयग्लिङ्क्षु" ७।४।२८ इति रिङादेशः। तत्र यदि करोतिभक्तत्वं सुटः स्यात्(), ततश्च संयोगादित्वं करोतेर्जातमिति "गुणोऽर्तिसंयोगाद्योः" ७।४।२९ इति गुणः स्यात्()। अभक्तत्वे तु सुटः संयोगादित्वादिङ्गुणौ न भवतः। "तिङ्ङतिङः" इत्यादि। यद्यभक्तः सुट्(), तदा संस्क्रियत इत्यत्र समः पदस्य सुटा व्यवहितत्वात्? "तिङ्ङतिङः" ८।१।२८ इति निघातो न सिध्यति। न च सुट एव पदस्य तिङो लभ्यते; "पदात्()" (८।१।१७) इत्यधिकारात्? सुटश्चापदत्वात्()। "स्वरविधौ" इत्यादि परिहारः। "ऋतश्च संयोगादेः" ७।२।४३ इत्यनेन ऋकारान्तस्याङ्गसय संयोगादेर्लिटि गुणो विधीयते, स चाभक्ते सुटि करोतेरसंयोगादित्वान्नोपपद्यत इति मन्यमान आह--"सञ्चस्करतुः" इत्यादि। गुणः कथम्()? न कथञ्चिदित्यर्थः। "तन्मध्य" इत्यादि। द्विर्वचने कृते द्वौ करोती भवतः तन्मध्ये चायं वर्तते सुट्(), अतः "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते"(व्या।प।२९) इति करोतिग्रहणेनैव गृह्यते, ततो नास्त्यसंयोगादित्वं कृञ इति भावः। ननु च "द्विष्प्रयोगो द्विर्वचनम्()" इत्यस्मिन्? पक्ष उच्चारणमात्रं भिद्यते, धातुस्त्वेक एव, तत्कथं करोतेर्द्वित्वम्()? नैष दोषः, यद्यपि धातुरभिन्नः तथाप्युच्चारणभेदाद्()भेदस्तस्याश्रित इति; "अङभ्यासव्यवायेऽपि" ६।१।१३१ इति वचनात्()। अभेदे हि व्यवाय एव नास्तीत्यभ्यासग्रहणमनर्थकं स्यात्()। अथापि कथञ्चित्? स तद्ग्रहणेन गृहयते, एवमपि गुणो भवत्येवेति दर्शयन्नाह--"संयोग" इत्यादि। संयोगोपधग्रहणे हि सति संयोग उपधा यस्येति संयोगोपधत्वेन--ऋकारं विशेष्य पश्चात्? तेनाङ्गं विशिष्येत--तदन्तस्याङ्गस्येति। तत्र यद्यपि करोतेरङ्गं संयोगोपधं न भवति, ऋकारस्तु भवतीति गुणो भवत्येव। तह्रभक्तः सुट्()। टित्करणं किमर्थम्()? तद्धि तदादित्वात्? तद्भक्तता यथा स्यादित्येवमर्थं क्रियते। अभक्तश्चेत्? सुट्? तदा टित्करणस्य वैयथ्र्यमेवापन्नमित्यत आह--"टित्करणम्()" इत्यादि। "सुट्स्तुसवञ्जाम्()" इत्युच्यमाने सुरेत्यादौ यः सुशब्दो यश्चोपसर्यस्तस्यापि ग्रहणं स्यात्()। ततश्चातिसुस्थिरः, अतिसुस्थित इत्यादावपि षत्वं प्रसज्येत। तस्माद्विशेषणार्थं टित्करणम्()॥

न्यासः

अडभ्यासव्यवायेऽपि। , ६।१।१३१

"अङ्व्यवायेऽभ्यासव्यवायेऽपि" इति। व्यवायः=व्यवधानम्()। अपिशब्दादव्यवायेऽपि। असत्यपिशब्दे व्यवाय एव स्यात्()। "समस्करोत्()" इति। लङ्। "समस्कार्षीत्()" इति। लुङ्(), च्लिः, तस्य सिच्(), "सिचि वृद्धिः" ७।२।१ इत्यादिना वृद्धिः, "इतश्च" ३।४।१०० इतीकारलोपः, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्()। "सञ्चस्करतुः" इति। लिट्()। यदि पूर्वं धातुः साधनेन युज्यते, तदा साधनाभिधायिनि प्राग्लकारे कृते तन्निमित्ताभ्यामडभ्यासाभ्यां भवितव्यम्, ततश्च तद्व्यवधाने सति सुड्न प्राप्नोतीति तदर्थं युज्यतेऽस्यारम्भः। न च पूर्वं धातुः साधनेन युज्यते, किं तर्हि? उपसर्गेण। यदि हि पूर्वं धातुः साधनेन युज्येत पश्चादुपसर्गेण, ततोऽनुभूयते कम्बलो देवदत्तेनेत्यत्र कर्मणि लकारो न स्यात्(); भवतेरकर्मकत्वात्()। उपसर्गेण पूर्वं धातौ सम्बन्ध्यमाने न भवत्येव दोषः; अकर्मका अपि धातवः सोपसर्गाः

सकर्मका भवन्तीति। तस्मात्? पूर्वं धातुरुपसर्गेण युज्यते, ततश्च धातूपसर्गयोः कार्यमन्तरङ्गम्();
तन्निमितयोर्धातूपसर्गयोरडभ्यासनिमित्तात्? प्रत्यविशेषात्? प्रागेव संविधानात्()। अडभ्यासौ तु बहिरङ्गौ;
उत्तरकालभाविप्रत्ययविशेषापेक्षत्वात्()। धातूपसर्गकार्यञ्च सुट्(), तन्निमितत्वात्()।
अतस्तेनान्तरङ्गत्वाद्()धातूपसर्गयोरुपादनमनन्तरमेव भवितव्यम्()। न ह्यसावुपजातनिमित्तो लकारस्य
तावदुत्पतिं()त प्रयोक्षते। कुतः पुनरडभ्यासौ? इत्यभिप्रायेणाह--"किमर्थं पुनरिदमुच्यते" इत्यादि। इतरस्तु
नैवेदमप्राप्तस्य सुटः प्रापणार्थमारभ्यते। किं तर्हि? कृतयोरडभ्यासयोस्तद्व्यवाये कत्पूर्वः सुङ्यथा स्यात्(), अकृतयोर्मा
भूदित्येवमर्थमिति दर्शयितुमाह--"पूर्वम्()" इत्यादि। इतिकरणो हेत्वर्थः। तत्र धातोः पूर्वमुपसर्गेण योगः
सुटोऽन्तरहगतायां हेतुः पूर्वं सुट्करणस्य, तदपि "पश्चादडभ्यासौ" इति। कत्र्तव्याविति शेषः। यतो धातुः पूर्वमुपसर्गेण
युज्यते, तेन धातूपसर्गयोः कार्यं नैव किञ्चिद निष्टमापद्यते? इत्याह--"उभक्तश्च सुडित्युक्तम्(), इत्यादि। पूर्वमेव ह्यभक्तत्वं
सुटः प्रतिपादितम्(), अतस्तस्य करोतिग्रहणेनाग्रहणे सति पश्चाद्भवन्तौ सकारात्? परावडभ्यासावनिष्टे देशे स्याताम्(),
ततश्चेष्टरूपं न सिध्यतीत्यभिप्रायः। अथ सत्यप्यस्मिन्? कथमयं दोषो न भवतीत्याह--"एत()स्मस्तु सत्यत एव"
इत्यादि। अत्र तु सुत्रे सत्यत एव यावदडभ्यासव्यवायो न भवति तावत्? सुटा भवितव्यमेव। तस्मात्? पूर्वमडभ्यासौ
कत्र्तव्यौ, ततस्तद्()व्यवाये सति कात्? पूर्वं सुडिति सर्वमिष्टं सिध्यति॥

बाल-मनोरमा

सुट्कात्पूर्वः ६७५, ६।१।१३१

सुट् कात्पूर्वः। षष्ठ()स्याद्यपादे इदं सूत्रम्। "संपरिभ्यां करोतौ भूषणे" "समवाये च" "उपात्प्रतियत्ने"त्यारभ्य "अनुदात्तं
पदमेकवर्जमित्यतः प्रागिदमधिकृतं वेदितव्यमित्यर्थः। एवं च कात्पूर्व इत्युक्तेरभ्यासात्प्राङ्नं सुडिति भावः।
नन्वभ्यासेन व्यवधानात्कथमिह उत्तरखण्डस्य सुट्, संस्करोतीत्यादौ अव्यहिते सुड्विधेश्चरितार्थत्वात्। किंच
समस्करोदित्यत्राऽटा व्यवधानात्कथं सुट्। नह्यडागमः कृञ्भक्तःत्वात्। विकरणान्तस्यैवाङ्गत्वादित्यत आह--
अडभ्याससव्यवायेऽपीत्युक्तमिति। "वार्तिक"मिति शेषः। अटा अभ्यासेन च व्यवधानेऽपि संपर्यादिभ्यः परस्मात्कात्पूर्वः
सुडित्यर्थः। इत्यादीति। सुडित्येवाधिकृतमस्तु, "कात्पूर्वः" इति "अडभ्यासव्यवायेऽपी"ति मास्त्वित्येवं भाष्ये
प्रत्याख्यातमित्यर्थः। तदेवोपपादयितुं प्रतिजानीते -- तथा हीति। पूर्वं धातुरुपसर्गेण युज्यते इति। "पश्चात्साधनेने"ति
शेषः। ततश्च पूर्वोपनिपतितधातूपसर्गसम्बन्धनिमित्तकं कार्यं
पश्चादनुपतिष्यद्धातुप्रत्ययसंबन्धनिमित्तकात्कार्यादन्तरङ्गम्, प्रथमोपस्थितत्वात्। तदुक्तं भाष्ये-- "पूर्वं
धातुरुपसर्गेणेति कृत्वा धातूपसर्गयोः कार्यमन्तरङ्ग" मिति। तदाह -- अन्तरङ्गत्वात्सुट्। ततो द्वित्वमिति। तथा सुटि
कृते "स्कृ" इत्यस्य द्वित्वे उरदत्त्वे रपरत्वे "शर्पूर्वाः खयः" इति रेफसकारयोर्निवृत्तौ अभ्यासचुत्वे संचस्कारेति रूपसिद्धेः
"कात्पूर्वः" इति, "अडभ्यासव्यवायेऽपी"ति च न कर्तव्यमिति भावः। एवं समस्करोदित्यत्रापि
विकरणान्ताऽङ्गभक्ताऽडागमापेक्षयाऽन्तरङ्गत्वात्प्रथमं सुड्भविष्यतीति कृत्वा "अड्व्यवायेऽपी"त्यंशो न कर्तव्य
इत्यूह्यम्। "पूर्वं धातुरुपसर्गेण"त्याश्रयणे फलान्तरमप्याह -- एवं चेति। उक्तरीत्या अन्तरङ्गत्वात्सुटि कृते संस्कृ
इत्यस्माल्लिटोऽतुसि "ऋतश्च संयोगादेर्गुणः" इति गुणे संचस्करतुरिति सिद्ध्यति। "पूर्वं धातुः साधनेन युज्यते"
इत्याश्रयणे तु चक्रतुरिति परिनिष्ठितस्य समित्युपसर्गयोगात्संयोगादित्वाऽभावाद्गुणस्याऽसिद्धिरिति भावः। ननु
संचस्करिव, संचस्करिथ इत्यत्र च "कृ()सृ()वृ()भृ()"इति "ऋतो भारद्वाजस्ये"ति च इण्निषेधः स्यादित्यत आह--
कृसृभृवृसूत्रे इत्यादि। नन्वाशीर्लिङि संस्क्रियादित्यत्र "गुणोऽर्तिसंयोगाद्यो"रिति गुणः कुतो नेत्यत आह--
गुणोऽर्तीत्यादि। ननु तङि संस्कृषीष्ट इति लिङि, समस्कृत समस्कृत समस्कृषातामिति लुङि च "ऋतश्च संयोगादे"रिति
इट् कुतो नेत्यत आह-ऋतश्चेत्यादि।

॥ इति बालमनोरमायाम् तनादयः॥

अथ तत्पुरुषसमासप्रकरणम्।

--------------------

---

सूत्रम्

काशिका-वृत्तिः

सम्पर्युपेभ्यः करोतौ भूषणे ६।१।१३७

सम् परि उप इत्येतेभ्यः भुषणार्थे करोतौ परतः सुट् कात् पूर्वो भवति। संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्। अत्र संपुंकानां सत्वम् इति समो मकारस्य सकारः, पूर्वस्य चाकारस्य अनुनासिकः। परिष्कर्ता। परिष्कर्तुम्। परिष्कर्तव्यम्। सुट्स्तुस्वञ्जाम् इति षत्वम्। उपस्कर्ता। उपस्कर्तुम्। उपस्कर्तव्यम्। भूषणे इति किम्? उपकरोति। सम्पूर्वस्य क्वचिदभूषणे ऽपि सुडिष्यते, संस्कृतमन्नम् इति।

लघु-सिद्धान्त-कौमुदी

सम्परिभ्यां करोतौ भूषणे ६८४, ६।१।१३२

न्यासः

सम्पर्युपेभ्यः करोतौ भूषणे। , ६।१।१३२

"सम्पूर्वस्य क्वचिदभूषणेऽपीष्यते" इति। कथं पुनरिष्यमाणो लभ्यते? "संस्कृतं भक्षाः" ४।२।१५ इत्याचार्यप्रवृत्तेलिङ्गात्()॥

बाल-मनोरमा

संपरिभ्यां करोतौ भूषणे ३७८, ६।१।१३२

संपरिभ्याम्।

---

सूत्रम्

काशिका-वृत्तिः

समवाये च ६।१।१३८

समवायः समुदायः, तस्मिंश्चार्थे करोतौ सम्पर्युपेभ्यः कात् पूर्वः सुडागमो भवति। तत्र नः संस्कृतम्। तत्र नः परिष्कृतम्। तत्र न उपस्कृतम्। समुदितम् इत्यर्थः।

लघु-सिद्धान्त-कौमुदी

समवाये च ६८५, ६।१।१३३

सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे संघाते चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्। संस्कृतं भक्षा इति ज्ञापकात्॥

न्यासः

समवाये च। , ६।१।१३३

"समवायः समुदायः" इति। समवपूर्वादिमो भावे "एरच्()" ३।३।५६ इत्यच्()। समवाय इति सङ्घात्? इत्यर्थः। "समुदित इत्यर्थः" इति। भावे निष्ठा॥

बाल-मनोरमा

समवाये च ३७९, ६।१।१३३

समवाये च। कोरतेः सुट् स्यादिति। "सुट् कात्पूर्वः" इत्यतो, "नित्यं करोते"रित्यतश्च तदनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उपात् प्रतियत्नवैकृतवाक्याध्याहारेसु ६।१।१३९

सतो गुणान्तराधानमाधिक्याय वृद्धस्य वा तादवस्थ्याय समीहा प्रतियत्नः। विकृतम् एव वैकृतम्। प्रज्ञादित्वादण्। गम्यमानार्थस्य वाक्यस्य स्वरूपेण उपादानं वाक्यस्य अध्याहारः। एतेष्वर्थेषु गम्यमानेसु करोतौ धातौ परतः उपात् सुट् कात् पूर्वः भवति। प्रतियत्ने तावत् एधो दकस्य उपस्कुरुते। काण्डगुणस्य उपस्कुरुते। वैकृते उपस्कृतं भुङ्क्ते। उपस्कृतं गच्छति। वाक्याध्याहारे उपस्कृतं जल्पति। उपस्कृतम् अधीते। एतेषु इति किम्? उपकरोति।

लघु-सिद्धान्त-कौमुदी

उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६८६, ६।१।१३४

उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृता ब्राह्मणाः। एधोदकस्योपस्करोति। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते॥ वनु याचने॥ ७॥ वनुते। ववने॥ मनु अवबोधने॥ ८॥ मनुते। मेने। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ट। अमत, अमनिष्ट। अमनिष्यत॥

लघु-सिद्धान्त-कौमुदी

इति तनादयः ८ ६८६, ६।१।१३४

लघु-सिद्धान्त-कौमुदी

अथ क्र्यादयः ६८६, ६।१।१३४

लघु-सिद्धान्त-कौमुदी

डुक्रीञ् द्रव्यविनिमये १ ६८६, ६।१।१३४

न्यासः

उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु। , ६।१।१३४

"सतः" इत्यादि। लब्धसत्ताकस्यार्थस्य पुर्वोत्पन्नोभ्यो गुणेभ्यो योऽन्यो गुणस्तद्गुणान्तरम्(), तदाधीयत उत्पाद्यते येन तद्गुणान्तराधानम्()। तत्पुनः किमर्थम्()? इत्याह--"आधिक्याय" इत्यादि। किं तत्()? इत्याह--"समीहा" इति। तदेवं विद्यमानस्य वस्तन आधिक्याय वृद्धये वृद्धस्य चैव तादवस्थ्याय तस्या वृद्धावस्थाया अपरिहाणाय गुणान्तराधानं ययाधीयते समीहयां चेष्टया स प्रतियत्न इत्युच्यते। "विकृतम्" इति। जातविक्रियमित्यर्थः। "गम्यमानार्थस्य वाक्यस्य स्वरपेण" इति। "समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वत्र्तन्ते" (व्या प।सू।८५) इति प्रतीयमानोऽर्थः

प्रकरणादिवाक्यस्यैकदेशो वाक्यशब्देनोक्तः। गम्यमानार्थस्यापि सुखप्रतिपत्तये स्वरूपेणोपादानं वाक्याध्याहारः॥

बाल-मनोरमा

उपात्प्रतियत्नवैकृतवक्याध्याहारेषु च। ३८०, ६।१।१३४

प्रागुक्तयोरिति। भूषणसमवाययोरित्यर्थः। ननु "संपरिभ्या"मिति सुट् पदद्वयोपेक्षत्वाद्बहिरङ्गः। "लिटि धातो"रिति द्वित्वं तु प्रकृतिप्रत्ययमात्रोपेक्षत्वादन्तरङ्गम्। ततस्च संचस्कारेत्यत्र परमपि सुटं बाधित्वा द्वित्वे कृतेऽभ्यासात्प्रागेव सुटि प्राप्ते--

---

सूत्रम्

काशिका-वृत्तिः

किरतौ लवने ६।१।१४०

उपातित्येव। उपादुत्तरस्मिन् किरतौ धातौ लवनविषये सुत् कत् पूर्वः भवति। उपस्कारं मद्रका लुनन्ति। उपस्कारं काश्मीरका लुनन्ति। विक्षिप्य लुनन्ति इत्यर्थः। णमुलत्र वक्तव्यः। लवने इति किम्? उपकिरति देवदत्तः।

लघु-सिद्धान्त-कौमुदी

किरतौ लवने ६६४, ६।१।१३५

उपात्किरतेः सुट् छेदने। उपस्किरति। (अडभ्यासव्यवायेऽपि सुट्कात् पूर्व इति वक्तव्यम्)। उपास्किरत्। उपचस्कार॥

न्यासः

किरतौ लवने। , ६।१।१३५

"लवनविषये" इत्यादि। अनेन लवनं किरतेर्नाभिधेयतया विशेषणम्(), अपि तु तदर्थस्य विषयभावनेति दर्शयति। केन पुनरत्र णमुल्(), यावता "आभीक्ष्ण्ये णमुल्? च" ३।४।२२ इत्यादिना शास्त्रेण स आभीक्ष्ण्यादावप्यर्थे विधीयते। न चात्र सोऽर्तो विवक्षितः, नापि प्रतीयत इत्याह--"णमुलत्र" इत्यादि। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेव व्याख्यानम्()--"कृत्यल्युटो बहुलम्? (३।३।११३) इत्यतो बहुलवचनात्? भविष्यति॥

बाल-मनोरमा

किरतौ लवने ३६९, ६।१।१३५

किरतौ लवने। उपादिति। "उपात्प्रतियत्ने" इत्यतस्तदनुवृत्तेरिति भावः। सुडागम इति। "सुट कात्पूर्व" इत्यस्तदनुवृत्तेरिति भाव-। अडभ्यासव्यवायेऽपीति वार्तिकम्। "सुट् कात्पूर्वः" इत्यनुवृत्तिलभ्यम्।

तत्त्व-बोधिनी

किरतौ लवने ३२३, ६।१।१३५

किरतौ लवने। "उपात्प्रतियत्ने"ति सूतरादुपादिति वर्तते। लवने किम्?। उपकिरति।

---

सूत्रम्

काशिका-वृत्तिः

हिंसायां प्रतेश् च ६।१।१४१

किरतौ इत्येव। उपात् प्रतेश्च उत्तरस्मिन् किरतौ सुट् कात् पूर्वः भवति हिंसयां विषये। उपस्कीर्णं हं ते वृषल भूयात्। प्रतिस्कीर्णं हं ते वृषल भूयात्। तथा ते वृषल विक्षेपो भूयात् यथा हिंसामनुबध्नाति इत्यर्थः। हिंसायाम् इति किम्। प्रतिकीर्णम्।

लघु-सिद्धान्त-कौमुदी

हिंसायां प्रतेश्च ६६५, ६।१।१३६

उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उपस्किरति। प्रतिस्किरति॥ गॄ निगरणे॥ ४०॥

न्यासः

हिंसायां प्रतेश्च। , ६।१।१३६

"हिंसायां विषये" इति। एतेन किरतेर्नाभिधेयत्वेन हिंसा विशेषणम्()। अपि तु तदर्थस्य विषयभावेनेति दर्शयति। "प्रतिस्कीर्णम्()" इति। "ॠत इद्धातोः" ७।१।१०० इतीत्वम्(), रपरत्वञ्च, "रदाभ्याम्()" ८।२।४२ इत्यादिना निष्ठानत्वम्(), "हलि च" ८।२।७७ इती दीर्घत्वम्()। "तथा" इत्यादिना किरतेरर्थस्य हिंसाविषयतां दर्शयति। "अनुबध्नाति" इति। अनुगच्छतीत्यर्थः॥

बाल-मनोरमा

हिंसायां प्रतेश्च ३७०, ६।१।१३६

हिंसायां प्रतेश्च। चकारादुपादिति समुच्चीयते। तदाह - उपादिति। गृ? निगरणे इति। निगरणं - भक्षणम्। सेट्।

तत्त्व-बोधिनी

हिंसायां प्रतेश्च ३२४, ६।१।१३६

हिंसायां प्रतेश्च। चादुपात्। "उरोविदारं प्रतिचस्करे नखै"रिति माघः। कर्मणि लिट्। "ॠच्छत्यृ()ता"मिति गुणः।

---

सूत्रम्

काशिका-वृत्तिः

अपाच् चतुष्पाच्छकुनिष्वालेखने ६।१।१४२

किरतौ इत्येव। अपातुत्तरस्मिन् किरतौ चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विसये सुत् कात् पूर्वः भवति। अपस्किरते वृषभो हृष्टः। अपस्किरते कुक्कुटो भक्ष्यार्थी। अपस्किरते श्वा आश्रयार्थी। आलिख्य विक्षिपति इत्यर्थः। चतुष्पाच्छकुनिषु इति किम्? अपकिरति देवदत्तः। हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्। इह मा भूत्, अपकिरति श्वा ओदनपिण्डमाशितः। हर्षजीविकाकुलायकरणेष्वेव किरतेरात्मनेपदस्य उपसंख्यानम्।

न्यासः

अपाच्चतुष्पाच्छकनिष्वालेखने। , ६।१।१३७

"तस्मिन्? विषये" इत्यादि। अनेनाप्यालेखनं किरतेर्नाभिधेयतया विशेषणम्(), अपि तु तदर्थस्य विषयभावेनेति दर्शयति। "अपस्किरते" इति। "तुदादिभ्यः शः" ३।१।७७ इति शः, पूर्ववदित्वं रपत्वम्()। "आलिख्य" इत्यादिना लेखनस्य किरत्यर्थस्य विषयतामुद्भावयति। आलिख्येति आकृष्येत्यर्थः। चतुष्पाच्छकुनिसाधनस्य लेखनस्य सामान्येनोपादानादिहापि प्राप्नोति--अपकिरति ()आऔदनपिण्डमाशित इति, अत

इदमालेखनविशेषणमाह--"हर्षजीविका" इत्यादि। हर्षः=प्रमोदः। जीविका=प्राणधारणोपायः। कुलायः=आश्रमः। किं पुनः कारणं हर्षादिष्वात्मनेपदं भवति, न त्विह प्रत्युदाहरणे? इत्याह--"हर्षजीविकाकुलायकरणेष्वेव" इत्यादि।

बाल-मनोरमा

अपाच्चतुष्पाच्छकुनिष्वालेखने ५१३, ६।१।१३७

अपाच्चतुष्पात्। "सुट्कात्पूर्वः" इत्यधिकृतम्। "किरतौ लवने" इत्यतः किरतावित्यनुवर्तते। तदाह---अपात्किरतेः सुट् स्यादिति। चतुष्पात्सु शकुनिषु च गम्येष्वित्यपि ज्ञेयम्। आलेखनं = खननम्। "सुडपि हर्षादिष्वेवे"ति - वार्तिकम्। अपस्किरते वृषो ह्मष्ट इति। हर्षाद्भूमिं लिखन् धूल्यादि विक्षिपतीत्यर्थः। कुक्कुटो भक्षार्थीति। "अपस्किरते" इत्यनुषज्यते। ()आआ आश्रयार्थीति। "अपस्किरते" इत्यनुषज्यते। अपकिरति कुसुममिति। "वृषादि"रिति शेषः। ह्मियमाणो वृषादिः पादैः कुसुममवकिरतीत्यर्थः। अत्र हर्षाद्यभावान्नात्मनेपदम्, नापि सुट्। तदाह--इह तङ्सुटौ नेति। ननु "अपस्किरते वृषो ह्मष्ट" इत्याद्युदादहरणत्रये यदि हर्षजीविकाकुलायकरणान्येव विवक्षितानि न त्वासेखनमपि, तदा तङेव स्यान्न तु सुडित्यत आह--- हर्षादिमात्रेत्यादि। आलेखनाऽभावेऽपीत्यर्थः। नेष्यते इति। "करितेर्षर्षजीविके"त्यात्मनेपदविधौ ससुक्टानामेव भाष्ये उदाहरणादिति भावः। भाष्यस्थान्युदाहरणान्यालेखनविषयाण्येव भविष्यन्तीत्यस्वरसं सूचयति--- आहुरिति। गजोऽपकिरतीति। स्वभावाख्यानमत्रेति भावः। "आङि नुप्रच्छ्यो" रिति वार्तिकम्। आनुते इति। सृगाल इति भाष्यम्। सृगाल उत्कण्ठ#आपूर्वकं शब्दं कोरतीत्यर्थ इति कैयटः। ननु "शप आक्रोशे" इत्यस्य स्वरितेत्त्वादेव सिद्धे "शप उपालम्भे" इत्यात्मनेपदविधिव्र्यर्थ इत्यत आह-- आक्रेशार्थादिति। "शप आक्रोशे" इति स्वरितेतः कर्तृगामिन्येव फले आत्मनेपदं प्राप्तम्, अकर्तृगेऽपि फले शपथात्मकनिन्दाविशेषे विद्यमानात्तस्मात् शपधातोरात्मनेपदार्थमिदमित्यर्थः। कृष्णाय शपते इति। "श्लाघह्नुङ्स्थाशपा" मिति संप्रदानत्वाच्चतुर्थी।

तत्त्व-बोधिनी

अपाच्चतुष्पाच्छकुनिष्वालेखने ४३९, ६।१।१३७

* गचोऽपकिरतीति। अत्र हर्षे सत्यपि आलेखनाऽभावात् सुटोऽप्राप्तिः।

* शप उपालम्भे। कृष्णाय शपते इति। "श्लाघह्नु" ङिति संप्रदानसंज्ञा। "नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः ! शपामि यदि किंचिदपि स्मरामी"त्यत्र तु स्वाशयं प्रकाशयामीत्यर्थो विवक्षितो न तु शपथ इति न तङित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

कुस्तुम्बुरूणि जातिः ६।१।१४३

कुस्तुम्बुरूणि इति सुट् निपात्यते जातिश्चेद् भवति। कुस्तुम्बुरुर्नामौषधिजातिः धान्यकम्। तत्फलान्यपि कुसुम्बुरुणि सूत्रनिर्देशे नपुंसकमविवक्षितम्। जातिः इति किम्? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि। तुम्बुरुशब्देन तिन्दुकीफलान्युच्यन्ते, समासेन तेषां कुत्सा।

न्यासः

कुस्तुस्बुरूणि जातिः। , ६।१।१३८

ननु च सूत्रे नपुंसकलिङ्गेन निर्देशान्नपुंसकलिङ्गतायां फलजातावेव भवितव्यम्(), नान्यलिङ्गतायाम्(), औषधजातौ

बहुवचन एव भवितव्यम्(), नान्यत्र, बहुवचनेन निर्देशात्(); तत्? कथं कुस्तुम्बुवरित्यत्र पुल्लिङ्गतयामेकवचने च भवति? इत्यत आह--"सूत्रनिर्देशे" इत्यादि। नपुंसकग्रहणमुपलक्षणमात्रम्()। बहुवचनमपि ह्रतन्त्रमेव सूत्रे। तथा चोक्तम्()--"सूत्रे [सूत्रनिर्देशे नपुंसकलिङ्गमविवक्षितम्()--काशिका। पदमंजरी च] लिङ्गवचनमतन्त्रम्? "तस्याविवक्षितत्वात्()" [नास्ति--काशिका] इति॥

बाल-मनोरमा

कुस्तुम्बुरूणि जातिः १०४३, ६।१।१३८

अथ "सुट् कात्पूर्वः" इत्यतः सुडित्यनुवृत्तौ कतिचित्सूत्राणि व्याख्यातुमुपक्रमते-कुस्तुम्बुरूणि। अत्रेति। जातिविशेषे वाच्ये कुस्तुम्बुरुशब्दः ससुट्को निपात्यत इत्यर्थः। कुस्तुम्बुरुर्धान्याकमिति। गुल्मविशेषे प्रसिद्धः। क्लीबत्वमतन्त्रमिति। अविवक्षितमित्यर्थः। वचनमप्यतन्त्रमिति बोध्यम्। कुतुम्बुरूणीति। धान्याकजातिवाचकत्वाऽभावान्न सुडिति भावः। तदाह--कुत्सितानि तिन्दुकीफलानीत्यर्थ इति तुम्बुरुशब्दस्य तिन्दुकवाचकत्वे कोशो मृग्यः।

---

सूत्रम्

काशिका-वृत्तिः

अपरस्पराः क्रियासातत्ये ६।१।१४४

अपरास्परा इति सुट् निपात्यते क्रियासातत्ये गम्यमाने। अपरस्पराः सार्थाः गच्छन्ति। सन्ततमविच्छेदेन गच्छन्ति इत्यर्थः। क्रियासातत्ये इति किम्? अपरपराः सार्थाः गच्छन्ति। अपरे च परे च सकृदेव गच्छन्ति इत्यर्थः। न अत्र गमनस्य सातत्यप्रबन्धो विवक्षितः। किम् इदं सातत्यम् इति? सततस्य भावः सातत्यम्। कथं सततम्? समस्तते विकल्पेन मकारलोपो विधीयते। लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि। समो वा हिततयोर्मांसस्य पचियुड्घञोः।

न्यासः

अपरसपराः क्रियासातत्ये।, ६।१।१३९

"अपरस्पराः" इति। अपरे च परे चेति द्वन्द्वः। सन्ततशब्दाद्भावप्रत्यय उत्पन्ने सान्तत्यमिति भवितव्यमित्यभिप्रायेणाय--"किमिदम्()" इत्यादि। सततशब्दादेवायं भावप्रत्य उत्पन्न इति दर्शयन्नाह--"सततस्य भावः" इत्यादि। "कथं सततम्()" इति। एवं मन्यते--समो मकारलोपस्य लक्षणं तावदिह शास्त्रे नास्ति। अथ सातत्य इत्येतदेव निपातनम्(), ततशब्दे परतः समो मकारस्य लोपो भविष्यतीत्यस्यार्थस्य ज्ञापनं कल्प्येत, एवं सति सन्ततमिति न सिध्यति? इत्यत आह--"समस्तते विकल्पेन" इत्यादि। अयमभिप्रायः--सातत्यशब्दं पूर्वाचार्यलक्षणप्रसिद्धमुच्चारयता पूर्वाचार्यलक्षणमप्याश्रितम्()। अतस्तेन समो मकारस्यात्र लोपो विधीयते। एतञ्च कृत्वाऽवश्यम्प्रभृतीनामपि कृत्यादिषु लोपः सिद्धो भवति। अतस्तदेव पूर्वाचार्यलक्षणं दर्शयति--"लुम्पेत्()" इत्यादि। अन्त्यमिति शेषः। अवश्यंशब्दस्य कृत्यप्रत्ययान्ते परतो लुम्पेत्? अन्त्यलोपमस्य कुर्यादित्यर्थः। अवश्यकत्तव्यम्()। तुमुन्()प्रत्ययान्तस्याप्यान्त्यं लुम्पेत्(), काममनसोश्च शब्दयोः परतः--कर्तुं कामोऽस्येति कर्तुकामः, हर्तु मनोऽस्येति हर्तुमनाः। सम्शब्दस्य चान्त्यं लुम्पेद्विकल्पेन हिततयोः शब्दयोः परतः--सहितम्(), सततम्(), सन्ततम्()। "कुगतिप्रादयः" २।२।१८ इति समासः। मांसशब्दस्यान्त्यं लुम्पेत्(), क्व? पचि। "डुपचष्? पाके" (धा।पा।९९६) इत्येतस्मिन्? धातौ। किं विशिष्टे? "युङ्घञोः" इति। ल्युटि घञि च प्रत्यये परतो यः पचिस्तस्मिन्नित्यर्थः। अत्रापि वाग्रहणं सम्बध्यते। मांस्पचनम्(), मांसपचनम्()। मांस्पाकः, मांसपाकः। "कृद्योगा च षष्ठी समस्यते" (वा।८६) इति

समासः। समासेऽयं लोपः पूर्वाचार्याणामभिप्रायः, संहितायां च। तेन वाक्ये विच्छिद्यपाठे न भवति॥

बाल-मनोरमा

अपरस्पराः क्रियासातत्ये १०४४, ६।१।१३९

अपरस्पराः। स्पष्टम्। गोष्पदम्। असेविते गोष्पदशब्दस्य वृत्त्यसंभवान्नञ्पूर्वकमुदाहरति--अगोष्पदानीति। गवां सञ्चारो यत्र नैव संभवति तत्रापि सुडिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

गोष्पदं सेवितासेवितप्रमाणेसु ६।१।१४५

गोष्पदम् इति सुट् निपात्यते, तस्य च षत्वं सेविते असेविते प्रमाने च विषये। गोष्पदो देशः। गावः पद्यन्ते यस्मिन् देशे स गोभिः सेवितो देशो गोष्पदः इत्युच्यते। असेविते अगोष्पदान्यरण्यानि। असेविते गोष्पदशब्दो न सम्भवति इत्यगोष्पदशब्दार्थं निपातनम्। यद्येवं न अर्थ एतेन, गोष्पदप्रतिषेधादगोष्पदं भविस्यति? सत्यम् एतत्, यत्र तु सेवितप्रसङ्गो ऽस्ति तत्र एव स्यादगोष्पदम् इति, यत्र त्वत्यन्तासम्भव एव तत्र न स्यात्, अगोष्पदान्यरण्यानि इति? असेवितग्रहणात् तत्र अपि भवति। यानि हि महान्त्यरणानि येषु गवाम् अत्यन्तासम्भवस् तान्येवम् उच्यन्ते। प्रमाणे गोस्पदमात्रं क्षेत्रम्। गोष्पदपूरं वृष्टो देवः। न अत्र गोष्पदं स्वार्थप्रतिपादनार्थम् उपादीयते, किं तर्हि, क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम्। सेवितासेवितप्रमाणेसु इति किम्? गोः पदम् गोपदम्।

न्यासः

गोष्पदं सेवितासेवितप्रमाणेषु। , ६।१।१४०

"तस्य च षत्वम्()" इति। अनादेशप्रत्ययसकारत्वात्? सुटः षत्वं न प्राप्नोतीत्यतस्तदपि निपात्यते। "गावः पद्यन्ते" इत्यादिना देशस्य सेवितत्वं दर्शयति। "असेविते" इत्यादि। ननु च गोष्पदशब्दः सूत्र उपात्तः, तत्? कस्मादसेवितेऽगोष्पदादीनीत्याद्युदाह्रियते? इत्याह--"असेविते" इत्यादि। ननु च गोष्पदशब्दः सूत्र उपातः, तत्? कस्मादसेवितेऽगोष्पदादीनीत्याद्युदाह्रियते? इत्याह--"असेविते" इत्यादि। क्रियते चेदमसेवितग्रहणम्(), न च तत्र गोष्पदशब्दः सम्भवति; तस्मादसेवितेऽगोष्पदार्थं निपातनं विज्ञायते। "यद्येवम्()" इति। यद्यसेवितेऽगोष्पदार्थं निपातनमित्यर्थः। "नार्थ एतेन" इति। असेवितग्रहणेन। कथं तेन विना सिध्यति? इत्याह--"गोष्पदप्रतिषेधात्()"त्यादि। "सत्यमेवैतत्()" इति। गोष्पदपरतिषेधादित्यादि यदुक्तं तस्य सत्यतामाह, न तु "नार्थं एतेन" इत्यस्यार्थः। यदि तर्हि सत्यमेवैतत्()" तत्? किमर्थं सेवितग्रहणमिह क्रियते? इत्याह--"यत्र तु" इत्यादि। नञ्समासेऽगोष्पद इत्येष तत्पुरुषः स्वभावादुत्तरपदर्थसदृशमर्थमाचष्टे" अब्राआह्णवत्()। ततश्च न गोष्पदमगोष्पदमिति तत्पुरुषे कृते यत्र सेवितसय सेवनस्य प्रसङ्गोऽस्ति तत्रैवागोष्पदमित्येतत्? तथापि भवति" इति। अपिशब्दो न केवलं यत्र सेवतप्रसङ्गोऽस्ति तत्रैवागोष्पदमित्यमुमर्थं द्योतयति। कस्मात्()? पुनरत्रासेवितग्रहणात्()। तत्राऽपि भवतीत्यत आह--"यानि हि" इति। "एवम्()" इति। असेवितग्रहणार्थकः प्रकारः प्रत्यवमृश्यते। असेवितग्रहणे हि सति मा भूत्? तस्य वैयथ्र्यमित बहुव्रीहिरयं भावसाधनेनासेवितशब्देन विज्ञास्यते। अविद्यमानं सेवितमस्मिन्निति बहुव्रीहिश्चात्यन्ताभावेऽपि भवतीति येषु गवामत्यन्तासम्भवस्तान्यरण्यान्यासेवितशब्देनोच्यन्ते। ततश्च तत्राप्यगोष्पदमिति भवति। "गोष्पदपूरम्()" इति। "वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्()" 3।4।32 इति णमुल्()। ननु च गोष्पदमिति षष्ठीसमासोऽयम्(), तस्य च गोसम्बन्धि पदमर्थः, न तु प्रमाणम्(), तत्? कथं गोष्पदमात्रं क्षेत्रमित्यादि उदाहरणं प्रमाणे युज्यतदे? इत्यत

आह--"नात्र" इत्यादि। न ह्यत्र स्वार्थप्रतिपादनार्थमेव गोष्पदमित्युपादीयते। किं तर्हि? क्षेत्रादेरियत्तां परिच्छेत्तुम्()। तस्मात्? क्षेत्रादेरियत्ता तेन परिच्छिद्यते= प्रमीयत इति भवति प्रमाणम्()। न चात्र प्रमाणशब्देनायाम उच्यते, किं तर्हि? परिच्छेदमात्रम्()। कुत एतत्()? निपातनसामर्थ्यात्()। निपातनं हि वस्त्वप्रसिद्धमप्युपादत्ते॥

बाल-मनोरमा

गोष्पदं सेविताऽसेवितप्रमाणेषु १०४५, ६।१।१४०

गोष्पदमात्रं क्षेत्रमिति। क्षेत्रस्याल्पप्रमाणत्वमनेन ज्ञाप्यते। अतो गोष्पदात् क्षेत्रस्याधिक्येऽपि न क्षतिः।

तत्त्व-बोधिनी

गोषपदं सेविताऽसेवितप्रमाणेषु ८७३, ६।१।१४०

गोष्पदम्। असेविते गोष्पदशब्दस्य वृत्तयसंभावान्नञ्पूर्वकमुदाहरति---अगोष्पदानोति। गवां संचारो यत्र नैव संभवति तत्रापि सुडागमार्थमसेवितग्रहणमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

आस्पदं प्रतिष्ठायाम् ६।१।१४६

आत्मयापनाय स्थानं प्रतिष्ठा, तस्याम् आस्पदम् इति सुट् निपात्यते। आस्पदम् अनेन लब्धम्। प्रतिष्थायाम् इति किम्? आ पदातापदम्।

न्यासः

आस्पदं प्रतिष्टायाम्?। , ६।१।१४१

"आत्मयापनाय" इति। आत्मयापनम्()=प्राणधारणम्()। तदर्थं यत्? स्थापनं तत्? प्रतिष्ठेत्युच्यते। "आसपदम्()" इति। आङः परस्य पदस्य सुट्? निपात्यते। "आपदम्()" इति। "आङ्? मर्यादावचने" १।४।८८ इत्याङः कर्मप्रवचनीयत्वम्(), तद्योगे "पञ्चम्यपाङ्? परिभिः" २।३।१० इति पञ्चमी, तदन्तेन "आङ् मर्यादाभि विध्योः" २।१।१२ इत्यव्ययीभावसमासः॥

बाल-मनोरमा

आस्पदं प्रतिष्ठायाम् १०४६, ६।१।१४१

आस्पदं प्रतिष्ठायाम्। आत्मेति। आत्मयापनं=शरीरसंरक्षणं, तदर्थं यत् स्थानं तस्मिन् गम्ये सुडित्यर्थः। आपदादापदमिति। आ पदादिति विग्रहे अव्ययीभावे आपदमिति भावतीत्यर्थः। "आपदापद"मिति पाठे तु-आपदमित्यस्य आपदित्यर्थ इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

आश्चर्यम् अनित्ये ६।१।१४७

अनित्यतया विषयभूतया अद्भुतत्वम् इह उपलक्ष्यते, तस्मिन्नाचर्यं निपात्यते। चरेराङि चागुरौ इति यत्प्रत्यये कृते

निपातनात् सुट्। आश्चर्यं यदि स भुञ्जीत। आश्चर्यं यदि सो ऽधीयीत। चित्रम् अद्भुतम् इत्यर्थः। अनित्ये इति किम्? आचर्यं कर्म शोभनम्।

न्यासः

आश्चर्यमनित्ये।, ६।१।१४२

यद्यनित्येऽशा()आतिक आश्चर्यमिति निपात्यते, ततो, घटादिष्वपि स्यादित्येतं दोषं परिजिहीर्षुराह--"अनित्यतया" इत्यादि। अद्भुतम्()=चित्रमित्युच्यते। यल्लोकेऽद्भुतं तच्चित्रम्(), तस्य भावोऽद्भुतत्वम्()। तस्य चान्यत्राभावादनित्यता विषयभूता, न हि तत्र ततोऽन्यत्र सम्भवति। तस्मात्? तया विषयभूतयाऽद्भुतत्वमुपलक्ष्यते। "आशस्चर्यं यदि स भुञ्जीत" इति। "अनवक्लृस्यमर्षयोरकिंवृत्तेऽपि" ३।३।१४५ इत्यनवक्लृप्तावसम्भावनायां लिङ्। भोजनं कस्यचिद्विशिष्टकालादावदृष्टपूर्वम्()। अतस्तत्र भवत्? तदद्भुतं भवति॥

बाल-मनोरमा

आश्चर्यमानित्ये १०४७, ६।१।१४२

आश्चर्यमनित्ये। अद्भुते गम्ये आङ्पूर्वकस्य चरेः सुट्। "चरेराङि चाऽगुरौ" इति यत्। अनित्यग्रहणमपनीय अद्भुते इति वक्तव्यमिति वार्तिकमभिप्रेत्याह--अद्भुते सुडिति। तेन आश्चर्य नीला द्यौः, आश्चर्यमन्तरिक्षे यदबन्धनानि नक्षत्राणि न पतन्तीत्यादिसंग्रहः। अनित्ये इत्यनेन कादाचित्कतया अद्भुतं लक्ष्यत इत्युक्ते तु एतन्न सिध्येत्।

तत्त्व-बोधिनी

आश्चर्यमानत्ये ८७५, ६।१।१४२

आश्चर्यमिति। आङः परस्य चरेः सुट्। "चरेराङि चाऽगुरौ"इति यत्।

---

सूत्रम्

काशिका-वृत्तिः

वर्चस्के ऽवस्करः ६।१।१४८

कुत्सितं वर्चः वर्चस्कम् अन्नमलम्, तस्मिन्नभिधेये ऽवस्करः इति निपात्यते। अवपूर्वस्य किरतेः कर्मणि ऋदोरप् ३।३।५७ इत्यप्, निपातनाप् सुट्। अवकीर्यते इत्यवस्करो ऽन्नमलम्, तत्सम्बन्धात् देशो ऽपि तथा उच्यते। वर्चस्के इति किम्? अवकरः।

बाल-मनोरमा

वर्चस्केऽवस्करः १०४८, ६।१।१४३

वर्चस्केऽवस्करः। "मूत्रं प्ररुआआव उच्चारावस्करौ शमलं शकृत्। गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रिया"मित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

अपस्करो रथाङ्गम् ६।१।१४९

अपस्करः इति निपात्यते रथाङ्गं चेद् भवति। अपपूर्वात् किरतेः ऋदोरप् इत्यप्, निपातनात् सुट्। अपस्करो रथावयवः।

रथाङ्गम् इति किम्? अपकरः।

न्यासः

अपस्करो रथाङ्गम्?। , ६।१।१४४

"रथावयवः" इति। अनेनादिशब्दस्थावयववचनमाचष्टे॥

बाल-मनोरमा

अपस्करो रथाङ्गम् १०४९, ६।१।१४४

अपस्करो। "स्याद्रथाङ्गमपस्करः" इत्यमरः। "चक्रं रथाङ्गमि"ति च।

---

सूत्रम्

काशिका-वृत्तिः

विष्किरः शुकुम्निर्विकिरो वा ६।१।१५०

विष्किरः इति किरतेः विपूर्वस्य इगुपधज्ञाप्रीकिरः कः [३।१।१३५](#) इति कप्रत्यये विहिते सुट् निपात्यते शुकुनिश्चेद् भवति। विकिरशब्दाभिधेयो वा शकुनिर् भवति। सर्वे शकुनयो भक्ष्या विष्किराः कुक्कुटादृते। विष्किरो वा शकुनौ इति व ग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणम् इह तस्य अपि शकुनेरन्यत्र प्रयोगो म भूत्।

लघु-सिद्धान्त-कौमुदी

हलस्तद्धितस्य १२५६, ६।१।१४५

हलः परस्य तद्धितयकारस्योपधाभूतस्य सोप ईति परे। गार्गी॥

न्यासः

विष्किरः शकुनिर्विकिरो वा। , ६।१।१४५

ननु च "विष्किरः शकुनौ वा" इत्येतावतैव सुङ्()विक्लपः सिद्धः, तत्र किमर्थं विकिरग्रहणम्()? इत्यत आह--"शकुनावेव विकिरशब्दस्य प्रयोगो यथा स्यादन्यत्र मा भूदित्येवमर्थं विकिराग्रहणम्()" (इति)॥

बाल-मनोरमा

विष्किरः शकुनौ वा १०५०, ६।१।१४५

विष्किरः। विकिरतीति विकारः। "कृ? विक्षेपे" "इगुपधज्ञे"ति कः। शकुनौ गम्ये सुड्वा, "परिनिविभ्यः" इति षत्वम्। "नगौकोवाजिविकिरविविष्करपतत्रयः" इत्यमरः। वावचनेनैवेति। वृत्तिग्रन्थे "विष्किरः शकुनौ विकिरो वे"ति सूत्रपाठः। तत्र वाग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणं विष्किरो विकिर इति शकुनावेवेति नियमार्थम्। अतः शकुनेरन्यत्र उभयोरपि शब्दयोः प्रयोगो नास्तीति लभ्यत इत्यर्थः। भाष्ये हि "विष्किरः शकुनौ वे"ति सूत्रं पठित्वा वाग्रहणेन सुड्विकल्पः, नतु शकुनेरन्यत्र विकिरशब्दस्य प्रयोगो नेति स्थितम्, अन्यत्रापि "विकिपरं वै()आदेविक"मित्यत्र दर्शनादिति भावः।

तत्त्व-बोधिनी

वपिष्किरः शकुनौ वा ८७६, ६।१।१४५

विष्किरः। "कृ? विक्षेपे"इत्यस्मात् "इगुपधे"त्यादिना कप्रत्यये सुडागमोऽनेन निपात्यते। षत्वं तु "परिनिविभ्यः" इत्यनेन। विकिरग्रहणमिति। "विष्किरः शकुनौ विकिरो वा"इति वृत्तिग्रन्थे पाठः, सूत्रपाठे तु विकिरग्रहणं नास्त्येवेति बोध्यम्। तस्यापीति। विकिरशब्दस्यापीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वाच् चन्द्रौत्तरपदे मन्त्रे ६।१।१५१

चन्द्रशब्दे उत्तरपदे ह्रस्वात् परः सुडागमो भवति मन्त्रविसये। सुश्चन्द्रः युष्मान्। ह्रस्वातिति किम्? सूर्याचन्द्रमसाविव। मन्त्रे इति किम्? सुचन्द्रा पौर्णमासी। उत्तरपदं समास एव भवति इति प्रसिद्धम्, तत इह न भवति, शुक्रमसि, चन्द्रमसि।

न्यासः

हवस्वाच्चन्द्रोत्तरपदे मन्त्रे।, ६।१।१४६

पूर्वं कात्पूर्वग्रहणादभक्तः सुडित्युक्तम्()। इह कात्? पूर्वत्वं न सम्भवति, आगमलिङ्गं चास्य टित्त्वमस्ति, तत आगम एव सुङ्? विज्ञायत इत्याह--"सुडागमो भवति" इति। स च भवन्? "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्()" (शाक।प।प।९७) इति ह्यस्वादिति पञ्चम्याः, चन्द्रोततरपद इति च सप्तम्याः षष्ठ()आं प्रकल्पितायां चन्द्रशबदस्यैव भवति। "सुश्चन्द्रः" इति। प्रादिसमासः। "सूर्याचन्द्रमसौ" इति। द्वन्द्वः "देवताद्वन्द्वे च" ६।३।२५ इत्यानङ्। अथेह कस्मान्न भवति-- शुक्लमसि, चन्द्रमसीति, अत्रापि ह्यस्वात्? परश्चन्द्रशब्द उत्तरपदमस्ति? इत्यत आह--"उत्तरपदम्()" इत्यादि। शुक्लमसि, चन्द्रमसति वाक्ये। तस्मादिह चन्द्रशब्द उत्तरपदग्रहणेन न गृह्णत एव। यस्मादुत्तरपदं समास एव प्रसिद्धम्()॥

---

सूत्रम्

काशिका-वृत्तिः

प्रतिष्कशश् च कशेः ६।१।१५२

कश गतिशासनयोः इत्येतस्य धातोः प्रतिपूर्वस्य पचाद्यचि कृते सुट् निपात्यते, तस्य एव षत्वम्। ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः। वार्तापुरुषः, सहायः, पुरोयायी वा प्रतिष्कशः इत्यभिधीयते। कशेः इति किम्। प्रतिगतः कशां प्रतिकशो ऽश्वः। अत्र यद्यपि कशेरेव कशाशब्दः, तथा अपि कशेरिति धातोरुपादानं तदुपसर्गस्य प्रतेः प्रतिपत्त्यर्थम्। तेन धात्वन्तरोपसर्गान् न भवति।

न्यासः

प्रतिष्कशश्च कशेः।, ६।१।१४७

"प्रतिगतः कशां प्रतिकशोऽ()आः" इति। प्रादिसमासः। ननु च कशाशब्दोऽपि कशेरेव धातोः पचाद्यचमुत्पाद्य साध्यते, तदिहापि सुटा भवितव्यम्()? इत्यत आह--"यद्यपि" इत्यादि। कशेरेव धातोर्यदुपादानं तत्? तस्यैव कशेर्यं उपसर्गः परतिशब्दस्तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थम्()। न च कशेः प्रतिरुपसर्गः, किं तर्हि? गमेः।

बाल-मनोरमा

प्रतिष्कशश्च कशेः १०५१, ६।१।१४७

प्रतिष्कशश्च कशेः। कशेरिति कश इत्यत्रान्वेति। तथाच कशधातोर्निष्पन्नस्य कशशब्दस्य प्रतेः परस्य सुट् स्यादित्यर्थः। कशेरेवेति। कशधातोरेव कशाशब्दो निष्पन्न इत्यर्थः। धात्वन्तरेति। प्रतिगतः कशां प्रतिकश इत्यत्र गभिं प्रत्येव प्रतिरुपसर्गः, नतु कशिं प्रति, "यत्क्रियायुक्ताः प्रादयः" इति नियमादित्यर्थः।

तत्त्व-बोधिनी

प्रतिष्कशश्च कशेः ८७७, ६।१।१४७

कशेरेव कशेति। कशधातोरेव कशाशब्दो निष्पन्न इत्यर्थः। धात्वन्तरेति। "प्रतिकशः"इत्यत्र प्रतिर्गमेरुपसर्गो, न तु कशेः, "यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवे"ति न्यायादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

प्रस्कण्वहरिश्चन्द्रावृषी ६।१।१५३

प्रस्कण्व हरिश्चन्द्र इति सुट् निपात्यते ऋषी चेदभिधेयौ भवतः। प्रस्कण्व ऋषिः। हरिश्चन्द्र ऋषिः। हरिश्चन्द्रग्रहणम् अमन्त्रार्थम्। ऋषी इति किम्? प्रकण्वो देशः। हरिचन्द्रो माणवकः।

न्यासः

प्रस्कण्वहरिश्चन्द्रावृषी। , ६।१।१४८

"प्रस्कण्वहरिश्चन्द्रौ" इति। प्रकृष्टः कण्वोऽस्येति प्रसकण्वः। हरिश्चन्द्रोऽस्येति हरिश्चन्द्रः। व्युत्पत्तिमातरमेतत्? कृतम्(), न त्वत्रावयवार्थोऽस्ति। रूढिशब्दौ ह्येतौ प्रत्यस्तमितावयवार्थौ क्वचिदेव ऋषिविशेषे वर्तेते। ननु च हरिश्चन्द्रे "ह्रस्वाच्चन्द्रोत्तरपदे" (६।१।१५१) इत्यनेनैव सुट्? सिद्धः, तत्किमर्थं हरिश्चन्द्रग्रहणम्()? इत्यत आह--"हरिश्चन्द्रग्रहणम्()" इत्यादि। "प्रकण्वः" इति। प्रगतः कण्वोऽस्मादिति प्रकण्वः। हरिरिव चन्द्रोऽस्येति हरिचन्द्रः॥

बाल-मनोरमा

प्रस्कण्वहरिश्चन्द्रावृषी १०५२, ६।१।१४८

प्रस्कण्वहरिश्चन्द्रावृषी। अमन्त्रार्थमिति। मन्त्रे तु "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे" इति पूर्वसूत्रेणैव सिद्धमिति भावः। तत्सूत्रं वैदिकप्रक्रियायां व्याख्यास्यते।

तत्त्व-बोधिनी

प्रस्कण्वहरिश्चन्द्रावृषी ८७८, ६।१।१४८

अमन्त्रार्तमिति। मन्त्रे तु "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे"इत्यनेनैव सिद्ध्यतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

मस्करमस्करिणौ वेणुपरिव्राजकयोः ६।१।१५४

मस्कर मस्करिनित्येतौ यथासङ्ख्यं वेणौ परिव्राजके च निपात्येते। मकरशब्दो ह्यव्युत्पन्नं प्रातिपदिकम्, तस्य वेणौ

अभिधेये सुट् निपात्यते, परिव्राजके त्विनिः अपि। मस्करः वेणुः। मस्करी परिव्राजकः। वेणुपरिव्राजकयोः इति किम्? मकरो ग्राहः। मकरी समुद्रः। केचित् पुनरत्र माङि उपपदे करोतेः करणे ऽच्प्रत्ययम् अपि निपातयन्तिक् माङ्श्च ह्रस्वत्वम् सुट् च। मा क्रियते येन प्रतिषिध्यते स मस्करो वेणुः। वेणुग्रहणं च प्रदर्शनार्थम् अन्यत्र अपि भवति, मस्करो दण्डः इति। परिव्राजके अपि माङि उपपदे करोतेस्ताच्छील्ये इनिर्निपात्यते, माङो ह्रस्वत्वं सुट् च तथा एव। माकरणशीलो मस्करी कर्मापवादित्वात् परिव्राज्क उच्यते। स ह्येवम् आह मा कुरुत कर्माणि शान्तिर्वः श्रेयसी इति।

न्यासः

मस्करमस्करिणौ वेणुपरिव्राजकयोः। , ६।१।१४९

"परिव्राजके तविनिरपि" इति। निपात्यत इत्यपेक्षते। किं पुनः कारणम्()? न प्राप्नोतीति, मात्वार्थामावात्()। अविद्यमानमस्करोऽपि परिव्राजको मस्करीतयुचयते; मस्करिशब्दस्य तत्रैव रूढत्वात्()। "अच्प्रत्ययमपि निपातयन्ति" इति कत्र्तर्युच्यमानः करणे न प्राप्नोतीत्यच्प्रत्ययमपि निपातयन्ति। यदि चेह वेणौ मस्करशब्दो निपत्यते तदा दण्डे न प्राप्नोति, तत्रापि चासौ लोके प्रयुज्यते? इत्याह--"वेणुग्रहणम्()" इत्यादि। येन निवार्यते तदपलक्षणार्थं वेणुग्रहणम्()। दण्डेनापि निवार्यत इत्यत्रापि भवत्येव। "कमपिवादित्वात्()" इति। सांसारिकं फलं कर्म। तदपदिदितुं प्रतिषेद्धं शीलं यस्य स कर्मापवादी, तस्य भवाः कर्मापवादित्वम्()। "स हि" इत्यादिना तदेव कर्मापवादित्वं दर्शयति॥

बाल-मनोरमा

मस्करमस्करिणौ वेणुपरिव्राजकयोः १०५३, ६।१।१४९

मस्करमस्करिणौ। यथासंख्यमन्वयः। मस्करिग्रहणात्परिव्राजक एव मस्करिशब्दः, अन्यत्र तु मकरीत्येवेत्याहुः।

तत्त्व-बोधिनी

मस्करमस्करिणौ वेणुपरिव्राजकयोः ८७९, ६।१।१४९

मस्कर। मस्करशब्दादिनिना मत्वर्थीयेनेष्टसिद्धौ मस्करिग्रहणं "परिव्राजक एवायं प्रयोगो यथा स्या"दित्येवमर्थमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

कास्तीराजस्तुन्दे नगरे ६।१।१५५

कास्तीर अजस्तुन्द इत्येतौ शब्दौ निपात्येते नगरे ऽभिधेये। ईषत्तीरमस्य, अजस्येव तुन्दमस्य इति व्युत्पत्तिरेव क्रियते, नगरं तु वाच्यम् एतयोः। कास्तीरं नाम नगरं। अजस्तुन्दं नाम नगरम्। नगरे इति किम्? कातीरम्। अजतुनदम्।

काशिका-वृत्तिः

कारस्करो वृक्षः ६।१।१५६

कारस्कर इति सुट् निपात्यते व्रक्षश्चेद् भवति। कारं करोति इति दिवाविभानिशाप्रभाभास्करान्त इति टप्रत्ययः। कारस्करो वृक्षः। वृक्षः इति किम्? कारकरः। केचिदिदं नाधीयते, पारस्करप्रभृतिष्वेव कारस्करो वृक्षः इति पठन्ति।

न्यासः

कास्तीराजस्तुन्दे नगरे। , ६।१।१५०

न्यासः

कारस्करो वृक्षः। , ६।१।१५०

"केचित्()" इति। यदि तर्हि सूत्रमेतत्? केचिन्नाधीयते तत्? कथं तेषां कारस्कशब्दो वृक्षे सिध्यति? इत्याह--"पारस्करप्रभृतिष्वेव" इत्यादि॥

बाल-मनोरमा

कास्तीराऽजस्तुन्दे नगरे १०५४, ६।१।१५०

कास्तीराऽजस्तुन्दे। कास्तीरशब्दोऽजस्तुन्दशब्दश्च नगरे निपात्येते इत्यर्थः।

बाल-मनोरमा

कारस्करो वृक्षः १०५५, ६।१।१५०

कारस्करो वृक्ष। कारं करोतीति विग्रहः। "कृञो हेतुताच्छील्ये" इति टः।

तत्त्व-बोधिनी

कास्तीराऽजस्तुन्दे नगरे ८८०, ६।१।१५०

कातीरमिति। "ईषदर्थे" इति कोः कादेशः।

---

सूत्रम्

काशिका-वृत्तिः

पारस्करप्रभृतीनि च संज्ञायाम् ६।१।१५७

पारस्करप्रभृतीनि च शब्दरूपाणि निपात्यन्ते संज्ञायां विषये। पारस्करो देशः। कारस्करो वृक्षः। रथस्पा नदी। किष्कुः प्रमाणम्। किष्किन्धा गुहा। तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च। तस्करश्चोरः। वृहस्पतिदेवता। चोरदेवतयोः इति किम्? तत्करः। बृहत्पतिः। संज्ञाग्रहणादुपाधिपरिग्रहे सिद्धे गणे चोरदेवताग्रहणं प्रपञ्चार्थम्। प्रात्तुम्पतौ गवि कर्तरि। तुम्पतौ धातौ प्रशब्दात् परः सुट् भवति गवि कर्तरि। प्रस्तुम्पति गौः। गवि इति किम्? प्रतुम्पति वनस्पतिः। पारस्करप्रभृतिराकृतिगणः। अविहितलक्षणः सुट् पारस्करप्रभृतिषु द्रष्टव्यः। प्रायश्चित्तम्। प्रायश्चित्तिः। यदुक्तं प्रायस्य चितिचित्तयोः सुडस्कारो वा इति तत् सङ्गृहीतं भवति।

न्यासः

पारस्करप्रभृतीनि च संज्ञायाम्?। , ६।१।१५१

पारस्करप्रभृतयो रूढिशब्दा यथाकथञ्चिद्व्युत्पाद्याः। नात्रावयवार्थं प्रत्यभिनिवेष्टव्यम्()। पारं करोतीति परस्करः "कृञो हेतुताच्छील्यानुलोम्येषु" ३।२।२० इति टः। रयं पातीति "रथस्पा"। "आतोनुपसर्गे कः" ३।२।३। कार्यं करोतीति करोतेःर्डुः, कार्यस्य च किरादेशः--"किष्कुः"। किमप्यन्तर्दधातीति दधातेः पूर्ववत्? कः, किमो द्विर्वचनम्(), पूर्वस्य च मकारस्य लोपः--"किष्किन्धा"। "तद्बृहतोः" इत्यादि। तत्(), बृहत्()--इत्येतयोर्यथाक्रमं करपतिशब्दयोः परतश्चोरे देवतायाञ्चाभिधेयायां सुङ्? भवति, अन्त्यस्य च तकारस्य लोपः। तत्? करोतीति "किं यत्तद्बहुषु" (वा।२४२) इत्यज्विधानम्(), तसकरश्चौरः, तत्करोऽन्यः। बृहतां पतिर्बृहस्पतिर्देवता, बृहत्पतिरन्यः। अथ किमर्थं

चौरदेवतयोरित्युपाधिरुपादीयते, यावता संज्ञाग्रहणादेव तत्परिग्रहः सिद्धः, न ह्न्यस्य तस्करबृहसपतिशब्दौ संज्ञा? इत्यत आह--"संज्ञाग्रहणम्()" इत्यादि। "प्रात्तुम्पतौ" इत्यादि। "तुप तुम्प तृप्सौ" (धा।पा।१३०९,१३६०()) इति परतः प्रशब्दात्? परस्य सुङ्भवति गवि कत्र्तरि। "प्रस्तुम्पति गौः"। प्रतुम्पत्येवान्यः "यदुक्तम्()" इति भाष्ये। यदि तर्हि पारस्करपरभृतिराकृतिगणः, "प्रतिष्कशश्च कशेः" ६।१।१४७ इत्यारभ्य पूर्वं सूत्रं न पठितव्यम्(), तस्याप्यनेनैव सङ्ग्रहात्()? सत्यमेतत्(); प्रपञ्चार्थं तु पठितव्यम्()॥

बाल-मनोरमा

पारस्करप्रभृतीनि च संज्ञायाम् १, ६।१।१५१

पारस्करप्रभृतीनि च। परस्कर इति। पारं करोतीति विग्रहः। पूर्ववट्टः। किष्किन्धेति। किं=किमपि वानरसैन्यं धत्ते इति किष्किन्धा। "आतोऽनुपसर्गे कः"। टाप्। निपातनात् किमो द्वित्वम्। मलोपः सुट्, षत्वं च। रूढशब्दा एते कथञ्चिद्व्युत्पाद्यन्ते, एषामवयवार्तोन विचारणीयः। तद्बृहतोरिति। पारस्करादिगणसूत्रमेतत्। तच्छब्दे तकारस्याऽन्त्यस्याऽभावादाह--तात्पूर्वमिति। तलोपश्चेत्यत्र तकारात्पूर्वमित्यर्थः। तत्--चौर्यं-करोतीति विग्रहः। "कृञो हेतुताच्छील्ये" इति टः। बृहस्पतिरिति। बृहती=वाक्, तस्याः पतिरिति विग्रहः। ["कुक्कुठ()आदीनामण्डादिष्वि"ति] पुंवत्त्वम्, तलोपः। सुट्। "वाग्धि बृहती, तस्या एष पतिः" इति च्छन्दोगब्राआह्मणम्। प्रायस्य चित्तिचित्तयोरिति। गणसूत्रमिदम्। प्रायस्य चित्तिः चित्तं वेति विग्रहः। "प्रायं पापं विजानीयाच्चित्तं तस्य विशोधन"मिति स्मृतिः। वनस्पतिरिति। वनस्य पतिरिति विग्रहः। आकृतिगणोऽयमिति। तेन शतात्पराणि परश्शतानीत्यादि सिद्धम्।

*****इति बालमनोरमायां समासाश्रयविधयः।*****

* अथ वासुदेवदीक्षितकृता बालमनोरमा *

स जयति दिव्यनटेशो नृत्यति योऽसौ चिदम्बरसभायाम्।

पाणिन्याद्या मुनयो यस्य च दयया मनोरथानभजन्॥ १॥

अस्तु नमः पाणिनये भूयो मुनये तथास्तु वररुचये।

किंचास्तु पतञ्जलये भ्रात्रे वि()ओ()आराय गुरवे च॥ २॥

व्याख्याता बहुभिः प्रौढेरेषा सिद्धांन्तकौमुदी।

वासुदेवस्तु तद्व्याख्यां वष्टि बालमनोरमाम्॥ ३॥

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च, अध्येतारश्च वृद्धियुक्ता यथा स्युः" इति वृद्धिसूत्रस्थभाष्यादिस्मृतिसिद्धकर्तव्यताकं ग्रन्थादौ कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नन् प्राचीनग्रन्थैरगतार्थतांष विषयप्रयोजनसम्बन्धाधिकारिणश्च सूचयन् चिकीर्षितं प्रतिजानीते--मुनित्रयमिति श्लोकेन। "इयं वैयाकरणसिद्धान्तकौमुदी विरच्यते" इत्यन्वयः। "इय"मिति ग्रन्थरूपा वाक्यावलिर्विवक्षिता। भाविन्या अपि तस्या बुद्ध्या विषयीकरणादियमिति प्रत्यक्षवन्निर्देशः। व्याकरणमधीयते विदन्ति वा वैयाकरणाः, तेषां सिद्धान्ताः-एते शब्दाः साधव इति निश्चितार्थाः, तेषां कौमुदी चन्द्रिका। अत्यन्तसादृश्यात्ताद्रूप्यव्यपदेशः। चन्द्रिका-हि तमो निरस्यति, भावान् सुखं प्रकाशयति, दिन करकिरणसंपर्कजनितं संतापमपगमयति। एवमियमपि

ग्रन्थरूपवाक्यावलिरज्ञानात्मकं तमो निरस्यति, मुनित्रयग्रन्थभावाननायासं प्रकाशयति, अतिविस्तृतदुरूहभाष्यकैयटादिमहाग्रन्थपरिशीलनजनितं चित्तसंतापं च शमयतीति अत्यन्तसादृश्याद्युज्यते चन्द्रिकातादात्म्याध्यवसायः। विरच्यते=क्रियते। वर्तमानसामीप्याद्वर्तमानव्यपदेशः। किं कृत्वेत्यत आह--मुनित्रयं नमस्कृत्येति। त्रयोऽवयवा अस्य समुदायस्य त्रयं। त्र्यवयवकसमुदायः। "संख्याया अवयवे तयप्()" इति तयप्तद्धितः। "द्वित्रिभ्यां तयस्यायज्वा" इति तयस्याऽयजादेशः। मुनीनां त्रयमिति षष्ठीसमासः। त्रयाणां मुनीनां समुदाय इति यावत्। यद्यपि मुनिशब्दस्य त्रिशब्दस्य चाऽभेदान्वये त्रिशब्दस्य मुनिशब्दसापेक्षत्वादसामथ्र्यात्तद्धितानुपपत्तिः, तथापि त्रयोऽवयवा अस्य समुदायस्य त्रयमिति प्रथमं व्युत्पाद्यम्। अत्र त्रिशब्दस्य मुनिशब्दमनपेक्ष्यैव समुदायेऽन्वयान्नास्त्यसामथ्र्यम्। ततो मुनीनां त्रयमिति मुनिशब्दः समुदायेऽन्वेति, तस्य प्रत्ययार्थतया प्रधानत्वात्। न तु मुनिशब्दस्य त्रयशब्दैकदेशभूतत्रिशब्देनाभेदान्वयः, "पदार्थः पदार्थेनान्वेति न तु तदेकदेशेन" इति न्यायात्। ततश्च मुनिशब्दत्रिशब्दयोः परस्परवार्तानभिज्ञयोरेव शब्दमर्यादया समुदायेऽन्वये सति पश्चात्संख्यायाः परिच्छेदकत्वस्वभावतया त्रित्वस्य परिच्छेद्यपर्यालोचनायां संनिहितपदान्तरोपस्थितत्वान्भुनय एव परिच्छेंद्यतया संबध्यन्ते---त्रयाणां मुनीनां समुदाय इति। सोऽयं पार्ष्ठिकान्वयोऽरुणाधिकरणन्यायविदां सुगम इत्यलं विस्तरेण। मुनित्रयमिति कर्मणि द्वितीया। "नमः स्वस्ति" इति चतुर्थी तु न,कारकविभक्तेर्बलीयस्त्वस्य वक्ष्यमाणत्वात्। नमस्कृत्य। अजलिशिरः-संयोगादिव्यापारेण तोषयित्वेत्यर्थः। नमस्करोतेरजलिशिरः संयोगादिरूपव्यापारमात्रार्थकत्वेऽकर्मकत्वापत्त्या द्वितीयानुपपत्तेः। ननु प्राचीनेषु प्रक्रियाकौमुद्यादिग्रन्थेषु वैयाकरणसिद्धान्तानां सङ्ग्रहात्तैरेव ग्रन्तैश्चरितार्थत्वात्। किमनेन ग्रन्थेनेत्यत आह--तदुक्तीः परिभाव्य चेति। तस्य मुनित्रयस्य उक्तयः तदुक्तयः=सूत्रवार्तिकभाष्यात्मकग्रन्थरूपवाक्याबलयः। ताः परिभाव्य च=सम्यगालोच्य चेत्यर्थः। भूधातोः स्वार्थिकणिजन्ताद्रूपम्। चुरादौ हि "भुवोऽवकल्कने" इत्यत्र ण्यन्तभूधातोश्चन्तनार्थकत्वमपि वक्ष्यते मूलकृतैव। नच "अनादरः परिभवः परीभावस्तिरक्रिया" इति कोशविरोधः शङ्क्यः, कोशस्य अण्यन्तभूधातुविषयत्वात्। "परौ भुवोऽवज्ञाने" इति सूत्रेण तिरस्कारार्थे वर्तमानादण्यन्तात्परिपूर्वकभूधातोर्भावे घञि परिभावशब्दस्य व्युत्पत्त्यवगमात्। एवं च तदुक्तीरिति तच्छब्दस्य बुद्धिस्थपरामर्शित्वात्प्राचां प्रक्रियाकौमुदीप्रसीदादिकृतामुक्तीस्तिरस्कृत्येत्यर्थ इति व्याख्यानं क्लिष्टत्वादुपेक्षितम्। अनेन स्वग्रन्थस्य मुनित्रयग्रन्थानुयायित्वं, प्राचीनप्रक्रियाकौमुद्यादिग्रन्थानां तद्विरुद्धत्वं च सूचितम्। तच्च प्रौढमनोरमायां स्वयमेव मूलकृता प्रपञ्चितमेव। वैयाकरणसिद्धान्तकौमुदीत्यन्वर्थसंज्ञया वैयाकरणसिद्धान्ताःप्रतिपाद्यत्वेन विषयाः। अनायासेन तदवगमः प्रयोजनम्। तस्य ग्रन्थस्य च जन्यजनकभावः संबन्धः। वैयकरणसिद्धान्तजिज्ञासुरधिकारीति सूचितम्। अथ वैयाकरणसिद्धान्तानिरूपयिष्यन्, व्याकरणशास्त्रस्य मूलभूतानि चतुर्दश सूत्राणि पठति--ऐउणित्यादिना। नन्विमानि सूत्राणि मुनित्रयग्रन्थबर्हिभूतत्वादप्रमाणमित्यत आह--इति माहे()आराणि सूत्राणीति। मबे()आरादागतानि माहे()आराणि। "तत आगतः" इत्यण्()। महे()आरादधिगतानीति यावत्। तदुक्तं पाणिनिशिष्टप्रणीतशिक्षयाम्--"येनाक्षरसमास्नायमधिगम्य महे()आरात्। कृत्स्नं व्याकरणं प्रोक्तं तस्यै पाणिनये नमः॥" इति। एतचतुर्दशसूत्रव्याख्यायां नन्दिके()आरकृतायां काशिकायामप्युक्तम्--"नृतावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्। उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥" इति।

अत्र ननादेत्यन्तर्भावितण्यर्थो नदधातुः। ढक्कां नादयामासेत्यर्थः। नवपञ्चवारं=चतुर्दशकृत्वः। एतत्=शिवढक्कोत्थितं वर्णजालं, शिवसूत्रजालतया विमर्शे=जानामीत्यर्थः। आर्षस्तङ्()। एवं च महे()आरेण प्रोक्तानि माहे()आराणीति निरस्तम्। एतेन माहे()आरत्वादेतेषां सूत्राणां नाऽप्रामाण्यमित्युक्तं भवति। नन्वेवमपि अनर्थकवर्णराश्यात्मकानामेषां सूत्राणां वैयाकरणसिद्धान्तप्रकाशने उपयोगाऽभावादिह तदुपन्यासो व्यर्थ इत्यत आह--अणाअदिसंज्ञार्थानीति। अण्? आदिर्यासां

ताः अणादयः, अणादयश्च ताः संज्ञाश्च अणादिसंज्ञाः, ताः अर्थः प्रयोजनं येषां तानि--अणादिसंज्ञार्थानि। अनर्थकवर्णराशित्वेऽपि एषां सूत्राणां व्याकरणशास्त्रगतव्यवहारोपय ग्यणादिसंज्ञासु उपयोगान्नाऽऽनर्थक्यमिति भावः। कथमेषां सूत्राणामणादिसंज्ञार्थत्वमित्यत आह--एषामन्त्या इत इति। एषामुदाह्यतसूत्राणामन्त्याः अन्ते भवा णकारादिवर्णाः इत्संज्ञकाः प्रत्येतव्या इत्यर्थः। लण्()सूत्रे अकारश्चेति। "इत"इत्यनुषज्यते। तच्च एकवचनान्ततया विपरिणम्यते। लण्सूत्रे लकारात्परोऽकारश्च इत्संज्ञकः प्रत्येतव्य इत्यर्थः। अनन्त्यत्वात्पृथक्()प्रतिज्ञा। ननु लण्सूत्र एव अकारस्य इत्संज्ञकत्वे हयवरेत्यादौ पुनःपुनरकारोच्चारणस्य किं प्रयोजनमित्यत आह--हकारादिष्वकार उच्चारणार्थ इति। हकारादीनां सुखोच्चारणार्थं पुनः पुनरकारपाठ इत्यर्थः। अन्यता ह्()य्?व्()रित्येवं क्लिष्टोच्चारणापत्तेरिति भावः। अथवा अचं विना हलामुच्चारणाऽभावात् पुनः पुनरकारपाठो हकाराद्युच्चारणार्थ इत्येव व्याख्येयम्। अत एव "उच्चैरुदात्तः" इति सूत्रे भाष्यम्--"नान्तरेणाऽचं व्यञ्जनस्योच्चारणं भवति" इति। अत्र च इदमेव अकारस्य पुनः पुनरुच्चारणं ज्ञापकम्। एवं च "वर्णात्कारः" इति कारप्रत्यये सति ककार इत्यादि (रूपाणि)। वागित्याद्यवसानेषु, वृक्ष इत्यादौ संयुक्त वर्णेषु च पदान्ते "चोः कुः" इत्यादिविधिबलात्, "हलोऽनन्तराः संयोगः" इत्यादिशास्त्रबलाच्च नायं नियम इत्यलम्। ननु चतुर्दशसूत्र्यां णकाराद्यन्तवर्णानामित्संज्ञा प्रतिज्ञाता--"एषामन्त्या इत" इति। तदनुपपन्नम्। तेषां हि "हलन्त्यम्" इति सूत्रेण इत्संज्ञा वक्तव्या। तच्च सूत्रं हल्पदार्थावगमोत्तरमेव प्रवृत्तिमर्हति। हल्संज्ञा च हलिति सूत्रे लकारस्य इत्संज्ञायां सत्याम् "आदिरन्त्येन सहेता" इति सूत्रेण वाच्या। हलिति सूत्रे लकारस्य इत्संज्ञा च "हलन्त्यम्" इति सूत्रप्रवृत्तिः, "हलन्त्यम्" इति सूत्रे हल्सूत्रे लकारस्य इत्संज्ञायाम् "आदिरन्त्येन सहेता" इति हल्संज्ञासिद्धिरित्येवं "हलन्त्यम्" "आदिरन्त्येन" इत्यनयोः परस्परसापेक्षत्वेन अन्योन्याश्रयत्वादबोधः। एवं च हल्संज्ञामनुपजीव्यैव हल्सूत्रे लकारस्य केनचित्सूत्रेण इत्संज्ञामबोधयित्वा "हलन्त्यम्" इति हलामित्संज्ञाबोधनं पाणिनेरयुक्तमित्याशङ्क्य हल्संज्ञामनुपजीव्यैव हल्सूत्रे लकारस्य इत्संज्ञां विधातुं "हलन्त्यम्" इति सूत्रं द्विरावृत्य प्रथमसूत्रमुपक्षिपति--हलन्त्यम्।

तत्त्व-बोधिनी

पारस्करप्रभृतीनि च संज्ञायाम् ३, ६।१।१५१

पारस्कर इति। "पारं करोती"ति विग्रहः। "कृञो हेतुताच्छील्ये"ति टः। किष्किन्धेति। "किमपि धत्ते"इति विग्रहे "आतोऽनुपसर्गे कः"। टाप्। निपातनात्किमोद्वित्वं। पूर्वस्य मलोपः। सुट् षत्वं च। "किं किं दधाती"ति विगृह्णतां तु मते वीप्सीयां द्वित्वं सिद्धम्। अन्यत्र तु निपातनादेव। वस्तुतस्तु रूढिशब्दा एते कथंचिद्व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः।

तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च। तद्बृहतोरिति। गणसूत्रमेतत्। तादिति। "तलोपश्चे"त्यत्रे"ति शेषः।

प्रायस्य चित्तिचित्तयोः। प्रायस्येति। गणसूत्रमेतदपि। "प्रायः पापं विजानीयाच्चित्तं तस्य विशोधन"मिति स्मृतिः। आकृतिगणोऽयमिति। तेन शतात्पराणि परश्शतानि कार्याणीत्यादि सिद्धम्। इह "सुप्सुपे"ति वा, "पञ्चमी"ति योगविभागाद्वा समासः। राजदन्तादित्वाच्छतशब्दस्य परनिपातः, पारस्करादित्वात्सुट्।

इति तत्त्वबोधिन्यां समासाश्रयविधयः।

* ॐ श्रीगणेशाय नमः *

तत्त्वबोधिनी-बालमनोरमा-व्याख्याद्वयविराजिता

वैयाकरण-सिद्धान्तकौमुदी।

-------------------

तस्याः पूर्वाद्र्धम्।

अथ संज्ञाप्रकरणम्

------------

मुनित्रयं

-----

सिद्धान्तकौमिदीव्याख्या क्रियते तत्त्वबोधिनी॥ १॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नंश्चिकीर्षितं प्रतिजानीते-मुनित्रयमित्यादिना। त्रयोऽवयवा यस्येति त्रयम्। "संख्याया अवयवे तयप्"। "द्वित्रिभ्यां तयस्य-" इत्ययच्। मन्तारे वेदशास्त्रार्थतत्त्वावगन्तारो मुनयः। "मनेरुच्च" इत्यौणादिकसूत्रेण मनेरत उकारो मनेः पर इन् प्रत्ययश्च। गुणस्तु नेह भवति, किदित्यनुवर्तनात्, तपरकरणाद्वा। तेषा पाणिनिकात्यायनपतञ्जलीनां त्रयं मिनित्रयम्। ननु "स्वयंभुवे नमस्कृत्य" इत्यत्रेवात्रापि "नमःस्वस्ति-" इत्यादिना चतुर्थी स्यात्। मैवम्। "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति वक्ष्यमाणत्वात् "नमस्करोति देवान्" इतिवद्द्वितीयाया एव युक्तत्वात्। किंच "जहत्स्वार्था वृत्तिः" इति पक्षे नमःशब्दस्यात्र निरर्थकत्वात्तद्योगे चतुर्थी न भवति, अर्थवद्ग्रहणपरिभाषायाः प्रवृत्तेः। "स्वयंभुवे नमस्कृत्य" इत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां "क्रियार्थोपपदस्य-" इत्यादिना चतुर्थीति मूल एव स्फुटीभविष्यति। नचैवं "नमःस्वस्ति-" इति सूत्रे नमःपदं व्यर्थमिति शङ्क्यम्, हरये नम इत्यत्र हरिमनुकूलयितुमित्यर्थेऽविवक्षिते संबन्धसामान्ये षष्ठ()आं प्राप्तायां तदपवादतया तस्यावश्यकत्वात्। तदुक्तीरिति। तेषांपाणिन्यादीनामुक्तीः। सूत्रवार्तिकभाष्याणीत्यर्थः। तस्य मुनित्रयस्योक्तीरिति व्याख्यानेऽपि समुदायेन सूत्रं वार्तिकं भाष्यं वा नोक्तमिति समुदायिनां मुनीनामेवोक्तीरिति पर्यवस्यति।

परिभाव्येति। पर्यालोच्येत्यर्थः। नच परिपूर्वस्य भवतेस्तिरस्कारार्थत्वात्कथमत्र ज्ञानार्थतेति शङ्क्यम्, परीत्यस्य भावीति चुरादिणिजन्तेन योगात्। केचिदत्र भवतिना योगमभ्युपेत्याहुः-"पुरौ भुवोऽवज्ञाने" इति सूत्रे परौ भुव इत्यस्यावज्ञान #इति विशेषणान्न तिरस्कारार्थत्वनियमः। "मनसा परिभाव्य किंचित्" इत्यादि-श्रीहर्षप्रयोगाच्च। अतएवात्राऽप्रयुक्तत्वदोषशङ्कापि नास्तीति। अन्ये तु-"अनादरः परिभवः परीभावस्तिरस्क्रिया" इति कोशात्परिपूर्वकाद्भवतेर्घञन्तादेव तिरस्कारप्रतीतिर्नान्यस्मादित्याशङ्कैवात्र नास्तीत्याहुः। तन्मन्दम्। परिभूय परिभवतीत्यतोऽपि तिरस्कारप्रतीतेः।

वैयाकरणेति। व्याकरणमधीयते विदन्ति वा वैयाकरणाः। तत्सिद्धान्ताना कौमुदी। प्रकाशिकेत्यर्थः। निर्दुष्टसकलजनाह्लादकत्वसाम्येन"कौमिदी"शब्दप्रयोगः। करिष्यमाणाया अपि कौमुद्या बुद्ध्या संनिधापितत्वादियमित्यङ्गुल्या निर्देशः। विरच्यत इति। "मये"ति शेषः। "रच प्रतियत्ने। प्रतियन्त्रो गुणाधानम्। विपूर्वादस्माद्वर्तमानसामीप्ये भविष्यदर्थे वर्तमानप्रत्ययः।

ऐउणिति। णोऽनुबन्धोऽण्संज्ञार्थः। या या संज्ञा सा सा प्रयोजनवती। ऋलृगिति। ककारस्त्वक्(िकुसंज्ञार्थः॥ एओङिति। ङकार एङ्संज्ञार्थः॥ ऐऔजिति। चकारस्वचिचेचैच्()संज्ञार्थः। वर्णानामसन्दिग्धत्वेन बोधनाय संहिताया

अविवक्षणादेतेष्वसन्धिः। स्वराणां चादिषु पाठात् "चादयोऽसत्त्वे" इति निपातसंज्ञायां "निपात एकाजनाङ्" इति प्रगृह्यत्वे प्रकृतिभावान्न सन्धिरित्यन्ये। स्यादेतत्। अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां लाभात्पृथगाकारादयो नोपदिष्टास्तथा ॠऌवर्णयोरपि सावर्ण्यादृकारोपदेशेनैवेभयसिद्धेः किं पृथगुपदेशेन?। न च जातिपक्षे ॠऌवर्णयोः पृथगुपदेश-आवश्यकस्तयोर्भिन्नजातित्वादिति वाच्यम्, सावर्ण्यादेवैकजात्युपदेशे जात्यन्तरस्यापि लाभात्। ॠऌवर्णयोः प्रत्येकं तिं()रशतः संज्ञासिद्धये "अणुदित्सवर्णस्य-" इति सूत्रे अणग्रहणस्य जातिपक्षेऽप्यावश्यकत्वादिति चेत्। अत्राहुः-ॠऌवर्णयोः सावर्ण्यस्याऽनित्यतां ज्ञापयितुमुभयोर्निर्देशः, तत्फलं तु क्लृप्ता शिखा यस्य क्लृप्तशिखः, तस्य दूरात्संबोधने क्लृप्तशिखेति प्लुतः। ॠऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु "अनृतः" इति पर्युदासादृकारस्येव लृकारस्यापि प्लुतो न स्यादिति समाधानान्तरमपि "ओर्गुणः" इत्यत्र दर्शयिष्यते॥ हयवरडिति। टोऽनुबन्धोऽट्संज्ञार्थः। हकारोपदेशस्तु अटाश्()हश्(िण्()ग्रहणेषु हकारग्रहणार्थः। अर्हेण। "अङ्वयवायेऽपि" इति णत्वम्। देवा हसन्ति। "भोभगो-" इति रोर्यत्वम्। देवो हसति। "हशि च" इत्युत्वम्। लिलिहिंध्वे लिलिहिढ्व। "विभाषेटः" इति वा ढः। लणिति। णकारोऽनुबन्धोऽण्(िण्()यण्()संज्ञार्थः। नन्वणिति क्वचित्पूर्वणकारेण गृह्यते, क्वचित्तु परेण णकारेण, इणिति तु परणकारेणैव। तथाच निःसन्देहार्थमनुबन्धान्तरमेव कर्तुमुचितम्। सत्यम्। "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्" इति परिभाषाज्ञापनाय पुनर्णकारोऽनुबन्ध इति स्थितमाकरे। ञमङणनमिति। मकार इह अम्()यम्()ञम्()ङम्()संज्ञार्थः। झभञिति। ञकारोयञ्()संज्ञार्थः। घढधषिति। षकारस्तु झष्()भष्()संज्ञार्थः। जबगडदशिति। शोऽनुबन्धो अश्()हश्()वश्()झश्()जश्()बश्()संज्ञार्थः। खफछठथचटतविति। वकारस्तु छव्()संज्ञार्थः। कपयिति। यकारो यय्()मय्()झय्()खय्()चय्()संज्ञार्थः। शषसरिति। रेफस्तु यर्()झर्()खर्()चर्()शर्()संज्ञार्थः। हलिति। लकारः अल्()हल्()वल्()रल्()झल्()शल्()संज्ञार्थः। पुनर्हकारोपदेशस्तु वल्()रल्()झल्()शल्()षु हकारग्रहणार्थः। रुदिहि। स्वपिहि। "रुदादिभ्यः सार्वधातुके" इति वलादिलक्षण इट्। स्निहित्वा। "नक्त्वा सेट्" इति निषेधं बाधित्वा "रलो व्युपधात्-"इति वा कित्वम्। अदाग्धाम्। घत्वस्याऽसिद्धत्वेऽपि हकारस्य झल्त्वात् "झलो झलि" इति सलोपः। अलिक्षत्। "शलः-" इति क्सः। ननु पुनर्हकारोपदेशस्यावश्यकत्वेऽपि शर्मध्या एव हकारं पठित्वा "अलोऽन्त्यस्य", "हलोऽनन्तराः संयोगः", "झलो झलि", "शल इगुपधा-" इत्यादिसूत्राणि यावन्ति लानुबन्धानि तानि "अरोऽन्त्यस्य", "हरोष()नन्तराः" इत्येवंरूपेण रेफानुबन्धान्येव च कृत्वा "हल्" इति पृथक् सूत्रं त्यज्यताम्। मैवम्। तथाहि सति हरिर्हसति हरिर्हरिरित्यादि न सिध्येत्। तत्र "खरवसानयोर्विसर्जनीयः", "वा शरि" इत्यादिप्रसङ्गात्। अतो "हल्" इति सूत्रमावश्यकमेव। एवञ्च "हलिति सूत्रेऽन्त्यम्-" इति वक्ष्यमाणग्रन्थोऽपि स्वरसतः सङ्गच्छते। अणादिसंज्ञार्थानीति। अणादिसंज्ञा अर्थः प्रयोजनं येषा तानीति विग्रहः। अणादिसंज्ञाभ्य इमानि इत्यस्वपदविग्रहो वा। "अर्थेन नित्यसमासो विशेष्यलिङ्गता च" इति वक्ष्यमाणत्वात्। एषामन्त्या इति इति। एषां सूत्राणामन्त्या णादयो "हलन्त्यम्" इत्यनुपदं वक्ष्यमाणेनेत्संज्ञका इत्यर्थः। लण्सूत्रेऽकारश्चेति। अनन्त्यत्वात्पृथगुक्तिः। वचनविपरिणामेनेदिति सम्बध्यते। इत्संज्ञा चास्य "उपदेशेऽजनुनासिक इत्" इत्यनेन। एवञ्च णादिभिरिद्भिः "आदिरन्त्येन-" इति वक्ष्यमाणेन प्रत्याहारग्रहणात् "अणादिसंज्ञार्थानि" इति यदुक्तं तत्सङ्गच्छत् इति भावः। अकार उच्चारणार्थ इति। नतु लण्सूत्रस्थाऽकार इव प्रयोजनार्थ इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तं पदम् एकवर्जम् ६।१।१५८

परिभाषा इयम् स्वरविधिविषया। यत्र अन्यः स्वरः उदात्तः स्वरितो वा विधीयते, तत्र अनुदात्तं पदम् एकं वर्जयित्वा भवति

इत्येतदुपस्थितं द्रष्टव्यम्। अनुदात्ताच्कम् अनुदात्तम्। कः पुनरेको वर्ज्यते? यस्य असौ स्वरो विधीयते। वक्ष्यति धातोः ६।१।१५६ अन्तः उदात्तो भवति। गोपायति। धूपायति। धातोरन्त्यम् अचं वर्जयित्वा परिशिष्टम् अनुदात्तं भवति। धातुस्वरं श्नाश्वरो बाधते। लुनाति। पुनाति। श्नाश्वरं तस्स्वरः। लुनीतः। पुनीतः। तस्स्वरमांस्वरः। लुनीतस्तराम्। पुनीतस्तराम्। आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च। पृथक्स्वरनिवृत्त्यर्थम् एकवर्जं पदस्वरः। आगमस्य चितुरनुडुहोरामुदात्तः ७।१।९८। चत्वारः। अनड्वाहः। आगमस्वरः प्रकृतिस्वरं बाधते। विकारस्य अस्थनि, दधनि इत्यनङ्स्वरः प्रकृतिस्वरं बाधते। प्रकृतेः गोपायति। धूपायति। प्रकृतिस्वरः प्रत्ययस्वरं बाधते। प्रत्ययस्य कर्तव्यम्। हर्तव्यम्। प्रत्ययस्वरः प्रकृतेः स्वरस्य बाधकः। परनित्यान्तरङ्गापवादैः स्वैरैर् व्यावस्था सतिशिष्टेन च। यो हि यस्मिन् सति शिष्यते स तस्य बाधको भवति। तथा हि गोपायति इत्यत्र धातुस्वरापवादः प्रत्ययस्वरः, तेन एव धातुस्वरेण प्रत्ययान्तस्य धातोः सतिशिष्टत्वाद् बाध्यते। कार्ष्णोत्तरासङ्गपुत्रः इत्यत्र च समासस्वरापवादो बहुव्रिहिस्वरः सतिशिष्टेन समासान्तोदात्तत्वेन वाध्यते। विकरणस्वरस् तु सतिशिष्टो ऽपि सार्वधातुकस्वरं न बाधते। लुनीतः इति तस एव स्वरो भवति। विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम्। अतिस्रः इत्यत्र तिसृभ्यो जसः ६।१।१६० इति सतिशिष्टो ऽपि विभक्तिस्वरो नञ्स्वरेण बाध्यते। विभक्तिनिमित्तस्वराच् च नञ्स्वरो बलीयानिति वक्तव्यम्। अचत्वारः, अनन्ड्वाहः इति। यस्य विभक्तिर् निमित्तमामः, तस्य यदुदात्तत्वं तनप्रस्वरेण बाद्यते। पदग्रहनं किम्? देवदत्त गामभ्याज शुक्लाम् इति वाक्ये हि प्रतिपदं स्वरःपृथग् भवति। परिमाणार्थं च इदं पदग्रहणम् पदाधिकारस्य निवृत्तिं करोति। तेन प्रागेव पदव्यपदेशात् स्वरविधिसमकालेम् एव शिष्टस्य अनुदात्तत्वं भवति। तथा च कुवल्या विकारः कौवलम् इत्यत्र अनुदात्तादिलक्षणो ऽञ् सिद्धो भवति। तथा गर्भिणीशब्दश्च अनुदात्तादिलक्षणस्य अञो बाधनर्थं भिक्षादिषु पठ्यते। कुवलगर्भशब्दौ आद्युदात्तौ।

न्यासः

अनुदात्तं पदमेकवर्जम्?। , ६।१।१५२

"एकवर्जम्()" इति। एकं वर्जयित्वेत्यर्थः। "द्वितीयायाञ्च" ३।४।५३ इति णमुल्प्रत्ययः। यद्ययमधिकारार्थः स्यात्(), तत्? षाष्ठिक एव स्वरः सङ्गृहीतः स्यात्()। ये त्वन्ये स्वराः "समानोदरे शयित ओ चोदात्तः" ४।४।१०७, "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" ७।१।७५ इत्येवमादयः सप्ताध्याय्याम्(), ते न संगृहीता स्युः। परिभाषायां त्वस्यां तेऽपि संगृहीता भवन्ति। सा ह्येकदेशे स्थितापि सकलं शास्त्रमभिज्वलयति, यथा वेश्म प्रदीप इवेत्यालोच्याह--"परिभाषेयम्()" इति। विध्यङ्गशेषभूता चेयम्()। परिभाषा हि कार्यवाक्यानां शेषभावगता। यस्य पदादयवस्य स्वरित उदात्तो वा विधीयते तत्र शेषमनुदात्तं भवति। "स्वरविधिविषया" इति। स्वरविधिर्विषयोऽस्या इति विग्रहः। "यत्रान्यः" इति। अनुदात्तापेक्षमन्यत्वम्()। "तत्रानुदात्तं पदम्()" इति। ननु च "नीचैरनुदात्तः" १।२।३० इत्यनुदात्तशब्दो विशिष्टगुणेऽवसङ्गीतः, तत्राज्झललक्षणञ्च पदम्(), पदशब्दस्यार्थस्तत्? कथमत्र सामानाधिकरण्यम्()? नैष दोषः; अनुदात्ताच्कमनुदात्तं पदमिहाभिमतम्(), तेन पद एवानुदात्तशब्दो वत्र्तते। कथम्()? मत्वर्थीयाकारान्तत्वात्()। अनुदात्ता अस्य सन्तीत्यनुदात्तम्()। अर्श आदेराकृतिगणत्वादत्राच्()। एकवर्जमित्युक्तम्(), स त्वेको न ज्ञायते यो वर्जनीयः, तस्याभिव्यक्तये पृच्छति--"कः पुनः" इत्यादि। यस्य चोदात्तः स्वरतो वा विधीयते स एवाको वज्र्यते। यदि ह्यसावपि न वज्र्यते तस्य तत्? स्वरविधानमनर्थकं स्यात्()। "गोपायति, धूपायति" इति। "गुपू रक्षणे" (धा।पा।३९५) "धीप सन्तापे" (धा।पा।३९६) "गुपूधूप" ३।१।२८ इत्यादिनाऽऽयपरत्ययान्तस्य "सनाद्यन्ता धातवः ३।१।३२ इति धातुसंज्ञा, "धातोः" ६।१।१५६ इति धातोश्चान्तोदात्तत्वम्(), आयप्रत्ययान्तस्यान्त्ययकाराकारस्य धातुस्वरत्वम्()। "धातुस्वरं श्नास्वरो बाधते" इति। सतिशिष्टस्वरत्वात्(), सतिशिष्टसय वलीयस्त्वात्()। तथा ह्यु कतम्()--"सतिशिष्टस्वरो बलीयानिति वक्तव्यम्()"। (वा।६।१।१६८) इति। "लुनाति, पुनाति" इति। "प्वादीनां ह्रस्वः" ७।३।८० इति ह्रस्वः। श्नाप्रत्ययसय च प्रत्ययस्वरेणाद्युदात्तत्वम्()। "श्नास्वरम्()" इति। बाधत इति सम्बध्यते। ननु

परत्वात्? तिबादिषु कृतेषु विकरणैर्भवितव्यम्(), अतः सति सार्वधातुकस्वरे श्नास्वरस्य शिष्यमाणत्वात्? तस्य सतिशिष्टत्वम्(); एवञ्च श्नास्वरेणैव बाधा युक्ता ततस्वरस्य? एवं मन्यते यत्? "तास्यनुदात्तेन्ङिदुपदेश" ६।१।१८० इत्यादिना तासेः परस्य लसार्वधातुकत्वं शास्ति तज्ज्ञापयति--शिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरेण बाध्यत इति। "लुनीतः, पुनीतः" इति। "ई हल्यधोः ६।४।११३ इतीत्वम्()। "तस्स्वरमाम्स्वरः" इति। बाधत इति सम्बन्धः। बाधकत्वे तस्य हेतुः सतिशिष्टत्वमेव। "लुनीतस्तराम्()" इति। "तिङ्श्च" ५।३।५६ इति तसन्तात्तरप्(), तदन्तात्? "किमेतिङ्व्यय" ५।४।११ इत्यादिनाऽऽमुप्रत्ययः। किमर्थं पुनरयमेकवर्जपदस्वरो विधीयते? इत्याह--"आगमस्य" इत्यादि। आगमादीनां पृथक्? स्वरो मा मुदित्येवमर्थमेकं वर्जयित्वा पदानुदात्त्वं विधीयते। "आगमस्वरः प्रकृतिस्वरं वाधते" इति। सत्यस्मिन्नेकवर्जं पदं स्वरे। असति तवस्मिन्? परकृतेरागमस्य च पृथगेव स्वरः स्यात्()। "चत्वारः" इति। प्रकृतिस्वरः पुनराद्युदात्तत्वम्()। तथा हि "चतेरुरन" (द।उ।८।७८) इत्युरन्प्रत्ययान्तश्चतुःशब्दो व्युत्पाद्यत इति स नित्स्वरेणाद्युदात्तो भवति। "अनड्वाहः" इति। अनुड्होऽप्येवं व्युत्पत्तिः क्रियते। "अन प्राणने" (धा।पा।१०७०) अस्मात्? "सर्वधातुभ्योऽसुन्()" (द।उ।९।४९) इत्यसुन्प्रत्ययान्तत्वादनःशब्दो नित्स्वरेणाद्युदात्तः। अनो बहतोत्यनसि वहेः क्विप्? "उश्वानसः" (द।उ।९।४९) इत्यसुन्परतययान्तत्वादनःशब्दो नित्स्वरेणाद्युदात्तः। अनो बहतोत्यनसि वहेः क्विप्? "उश्वानसः" (द।उ।९।१०७) इत्यनस्युपपदे वहेर्धातोः क्विप्(), अनश्चोकारादेशः। वहेर्यजादित्वात्? सम्प्रसारणम्(), उपपदसमासः, "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना पूर्वपदप्रकृतिस्वरत्वम्()। तस्मादनुड्होऽप्येवं व्युत्पादितस्य स्यादाद्युदात्तत्वम्()। विकारः=आदेशः। "अनङ्स्वरः प्रकृते" इति। दध्यसथिशब्दावाद्युदात्तौ। तथा हि "असु क्षेपणे" (धा।पा।१२०९) "असिसञ्जिभ्यां क्थिन्()" (द।उ।१।१०) इति क्थिन्प्रत्ययान्तत्वान्नित्स्वरेणास्थिशब्द आद्युदात्तः। दधिशब्दोऽपि किन्प्रत्ययान्तत्वादाद्युदात्त एव। धाधातोः "आदृगमहनजनः किकिनौ लिट्? च" ३।२।१७१ इति किन्प्रत्ययः, तत्र द्विर्वचने कृत आकारलोपे च दधीति भवति। "अस्थिदधि" ७।१।७५ इत्यादिनाऽनङि कृते तस्य यः स्वरः स च कत्र्तवयः, तस्याप्यसत्यस्मिन्नस्थिदधिशब्दयोरनङश्च प्रथगेवोदात्तत्वं तु स्यात्()। अ()स्मस्तु सत्यनङ एव भवति। "प्रकृतेः" इत्यादि। "गोपायति, धूपायति" इति। अत्र प्रकृतेर्गुपेर्धूपेश्च "धातोः" ६।१।१५६ इत्यन्तोदात्त्वे आयप्रत्ययादेरप्याकारस्य प्रत्ययाद्युदात्तत्वम्()। गोपायधूपायशब्दयोरपि "सनाद्यन्ता धातवः" (३।१।३२) इति धातुसंज्ञायां कृतायाम्? "धातोः" ६।१।१५६ इत्यन्तोदात्तमेव प्राप्नोति। एवं पृथक्? स्वरप्रसंगे यकाराकारस्यैव धातुस्वरो भवति, न गुपिधूप्योः, नापि प्रत्ययाकारस्य। "कत्र्तव्यम्()" इति। धातोरन्तोदात्तत्वे प्रत्ययस्याद्युदात्तत्वे च प्राप्ते प्रत्ययाद्युदात्तत्वमेव भवति, न तु धातुस्वरः। अथानियमेनैकस्वरस्य वर्जयमानता कस्मान्न भवति, न ह्त्र सूत्रे कश्चिद्()व्यवस्थाहेतुरुपात्तः, न च विना व्यवस्थाहेतुना सा लभ्यते? इत्याह--"परनित्यान्तरङ्ग" इत्यादि। यत्र परादिस्वराः प्राप्नुवन्ति, तद्विपक्षाश्च, तत्र परादीनां बलीयस्त्वात्? तत एव वर्जयं न, इतरे तु निवर्त्यन्ते। यत्र तु परनित्यान्तरङ्गापवादेऽपि क्वचिदिष्टं न सिध्यति, तत्र सतिशिष्टेन व्यवस्था भवति, तस्य हि वलीयसत्वमुक्तम्()। अतः सतिशिष्टेतरस्वरप्राप्तौ सतिशिष्ट एव वज्र्यते, मेतरः। कथं पुनः सतिशिष्टे न व्यवस्था? इत्यत आह--"यो हि" इत्यादि। कथमेतज्ज्ञायते? इत्याह--"तथा हि" इत्यादि। "गोपायति" इति। अत्रायप्रत्ययस्य प्रत्ययस्वरेणाद्युदात्तत्वम्()। स च स्वरो धातुस्वरस्यापवादोऽपि सन्नायप्रत्ययान्तस्य धातुसंज्ञायां कृतायां पुनस्तेन धातुस्वरेण सतिशिष्टेन बाध्यते। "काष्णोंत्तरासङ्गपुत्रः" इति। बहुव्रीहिं कृत्वा तत्पुरुषः कत्र्तव्यः। "बहुव्रीहिस्वरः" इति। "बहुव्रीहौ प्रकृत्या" ६।२।१ इत्यादिनोक्तः। पूर्वकं ज्ञापकं चेतस कृत्वाऽऽह--"विकरणस्वरस्तु" इत्यादि। "विभक्तिस्वरात्()" इत्यादि। "निपाता आद्युदात्ताः" (फि।सू।४।८०) इति नञुदात्तः। तत्र तत्पुरुष समासे कृते "तत्पुरेषे तुल्यार्थ" ६।२।२ इत्यदिवा प्रकृतस्वरादुदात्तत्वमेव भवति। यदा तु नञ्स्वराद्विभक्तिसवरः प्राप्नोति नञ्स्वरश्चेष्यते, तस्माद्विभक्तिस्वरो "बलीयानिति वक्तव्यम्()। बलीयस्त्वे सति किं भवति? इत्याह--"अतिस्तर इत्यत्र" इत्यादि। "तिसृभ्यो जसः" ६।१।१६० इत्यनेन विभक्तेरुदात्तत्वं विधीयते। तद्बलीयस्त्वात्? सतिशिष्टमपि नञ्सवरेण बाध्यते। विभक्तस्वरस्य तु--तिरुआः,

त्रिसृष्वित्येषोऽवकाशः। "विभक्तिनिमित्तस्वराच्च" इत्यादि। विभक्तिर्निमित्तं यस्य स स्वरो विभक्तिनिमित्तस्वरः। "यस्य विभक्तिर्निमित्तमामः" इति। आमो विभक्तिनिमित्तत्वं, "पथमथोः सर्वनामस्थाने" ६।१।१९३ इत्यतः सर्वनामस्थानग्रहणानुवृत्तेः। तस्य "यदुदात्तत्वम्()" इत्यादिना बलीयस्त्वस्य फलं दर्शयति। विभक्तिनिमित्तस्वरस्य--चत्वारः, अनड्वाह इतत्येषोऽवकाशः। "वाक्ये हि" इत्यादि। देवदत्तशब्द आमन्त्रितस्वरेणाद्युदात्तत्वम्(), गोशब्दो हि प्रातिपदिकस्वरेणान्तोदात्तः, तस्य "औतोऽम्शसोः" ६।१।९० इत्याकारोऽपि स्थानिवद्भावेनोदात्त एव। तथा विभक्त्या सहैकादेशेऽपि "एकादेश उदात्तेनोदात्तः" ८।२।५ इति वचनात्()। अभिशब्दोऽन्तोदात्तः, तस्य "निपाता आद्युदात्ताः" (फि।सू।४।८०), "उपसर्गाश्चाभिवर्जम्()" (फि।सू।४।८१) इत्याद्युदात्तविधाने वर्जितत्वात्? प्रातिपदिकस्वर एव भवति। आङुपसर्गस्वरेणाद्युदात्तः। अजित्येष तु लोडन्तः "तिङ्ङतिङ" ८।१।२८ इति निधातेनानुदात्तः। शुक्लशब्दो हि प्रातिपदिकस्वरेणान्तोदात्त इति तस्य "एकादेश उदात्तेनोदात्तः" ८।२।५ इति टापा सहैकादेशे कृतेऽन्तोदात्त एव भवति। एवममिपूरवत्वे कृते वेदितव्यम्()। तदेवं पदग्रहणाद्वाक्य एकैकस्मिन्? पदे पृथगेव स्वरो भवति। यद्यनुदात्तं पदमेकवर्जं भवति, एवं सति यावत्? पदसंज्ञा न भवति तावदेकं वर्जयित्वा परिशिष्टस्यानुदात्तत्वेन भवितव्यम्(), ततश्च कुवल्या विकारः, कौवलमित्यत्र "अनुदात्तादेश्च" ४।२।१३९ इत्येनेनाञ्()प्रत्ययो न स्यात्()। यत कुवलशब्दोयं "ग्रामदीनाञ्च" (फि।सू।२।३८) इत्याद्युदात्तः, गौरादित्वान्ङीषि विहतेऽपि पदव्यपदेशाभावादाद्युदात्तत्वं न परित्यजतीत्याह--"परिमाणार्थं चेदम्()" इत्यादि। पदमत्र गौणमभिप्रेतम्? न मुख्यम्(); अन्यथा पदाधिकारे सति पुनः पदग्रहणमनर्थकं स्यात्()। तस्मादुत्तरकालं यस्य पदसंज्ञा भविष्यति, तदिह पदमभिप्रेतमिति वेदितव्यम्()। असति पदग्रहणे न ज्ञायते--कियतामचामनुदात्तत्वं भवतीति। पदग्रहणे तु सत्येकस्मिन्? पदे यावन्तोऽचस्तावतामनुदात्तत्वं भवतीत्येषोऽर्थो ज्ञायते, तस्मात्? परमाणार्थमिति। नतु सुबन्तस्य तिङ्न्तस्य वा प्रतिपादनार्थम्()। तेन प्रागेव पदव्यदैशादनुदात्तत्वेन भवितव्यमिति न भवति पूर्वोक्तदोषप्रसङ्गः। स्यादेतत्()--यद्यपि पदमित्यनेन मुख्यं पदं न प्रत्याय्यते, तथापि पदाधिकारेण तदिह सन्निधाप्यत इति तदवस्थ एव स दोषः? इत्यत आह--"पदाधिकारस्य निवृर्तिं()त करोति" इति। एतत्? पदग्रहणं गौणमर्थं प्रतिपादयन्? मुख्यपदधिकारं निवत्र्तयति। तेन किमिष्टं भवति? इत्याह--"तेन" इत्यादि। "तथा च" इति। एवं च सतीत्यर्थः प्रागेव पदवयपदेशात् स्वरविधानतुल्यकालमेव परिशिष्टतस्यानुदात्तत्वं भवतीति। अमुमेवार्थं द्रढयितमाह--"गर्भिणी" इत्यादि। गर्भोऽस्या अस्तीतीनिः, "ऋन्नेभ्यो ङीप्" ४।१।५ इति ङीप्()। गर्भशब्दोऽयं कुवलशब्दवदाद्युदात्तः। तत्र यदीनिप्रत्ययस्योदात्तत्वसमकालमेवानुदात्तत्वं भवति ततो गर्भिणीशब्दस्यानुदाततादित्वात्? "अनुदाततादेरञ्? (४।२।४४) इत्यञ्? प्राप्नोतीति तद्बाधनार्थं युज्यते तस्य भिक्षादिषु पाठः। तस्य तूत्तरकालं पदसंज्ञायामुपजातायामवशिष्टस्यानुदात्तत्वं स्यात्()। एवं सति गर्भिणी शब्द आद्युदात्तः स्यात्()। ततश्चाणो बाधनार्त भिक्षादिषु न पठ()एत, पठ()ते च। तस्मात्? ततो विज्ञायते--प्रागेव पदव्यपदेशात्? स्वरविधिसमकालमेवावशिष्टस्यानुदात्तत्वं भवतीत्यभिप्रायः। किं पुनः कारणं लब्धायां पदसंज्ञायामवशिष्टस्यानुदात्त्वे विधीयमाने कुवलशब्दावञ्? न सिध्यति, कथञ्च गर्भिणीशब्दस्यानुदात्तादिलक्षमस्याञो बाधनार्थो भिक्षादिषु पाठः प्रागेव पदवयपदेशात्? स्वरविधिसमकालमेवावशिष्टस्यानुदात्तत्वं भवतीत्यस्यार्थस्य ज्ञापकः? इत्याह--"कुवलगर्भशब्दौ" इत्यादि। आद्युदात्त्वे ह्यनयोर्यदि पदसंज्ञायां सत्यामवशिष्टस्यानुदात्तत्वं स्यात्(), कुवलीशब्दस्य च स्यात्? ततश्च कुवलीशब्दाद्विकारेऽर्थेऽञ्? न स्यात्()। गर्भिणीशब्दस्याद्युदात्तत्वादञ्? प्राप्नोति, ततस्तद्बाधनर्थं भिक्षादिषु न पठ()एत, पठ()ते च, तस्मादवसीयते--प्रागेव पदव्यपदेशादवशिष्टस्यानुदात्तत्वं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

कर्षाऽत्वतो घञो ऽन्त उदात्तः ६।१।१५९

कर्षतेर् धातोराकारवतश्च घञन्तस्यान्त उदात्तो भवति। कर्षः। पाकः। त्यागः। रागः। दायः। धायः। ञ्नित्यादिर्नित्यम् ६।१।१९१ इत्यस्य अपवादः। कर्षः इति विकृतनिर्देशः कृषतेर् निवृत्त्यर्थः। तौदादिकस्य घञन्तस्य कर्षः इत्याद्युदात्तः एव भवति।

---

सूत्रम्

काशिका-वृत्तिः

उच्छादीनां च ६।१।१६०

उच्छ इत्येवम् आदीनाम् अन्त उदात्तो भवति। उञ्छः, म्लेच्छः, जञ्जः, जल्पः एते घञन्ताः इति ञित्स्वरः प्राप्तः। जपः, व्यधः इत्यबन्तौ, तयोर् धातुस्वरः प्राप्तः। केचित् तु वधः इति पठन्ति। युगः। युजेर् घञन्तस्य निपातनादगुणत्वं विशिष्टविषये च निपातनम् इदम् इष्यते। कालविशेषे रथाद्युपकरणे च युगशब्दस्य प्रयोगः अन्यत्र हि योगः एव भवति। गरो दूष्ये ऽबन्तः। गरशब्दो ऽबन्तः, स दूष्य एव अन्तोदात्तः। गरो विषम्। अन्यत्राद्युदात्त एव। वेदवेगवेष्टबन्धाः करणे। हलश्च ३।३।१२१ इति घञन्ता एते करणे ऽन्तोदात्ता भवन्ति। भावे आद्युदात्ता एव। स्तुयुद्रुवश्छन्दसि। उपसमस्तार्थम् एतत्। परिष्टुत्। संयुत्। परिद्रुत्। वर्तनिः स्तोत्रे। स्तोत्रं साम। तत्स्थो वर्तनिशब्दो ऽन्तोदात्तो भवति, अन्यत्र मध्योदात्तः। श्वभ्रे दरः। श्वभ्रे ऽभिधेये दरशब्दो ऽन्तोदत्तः, अन्यत्राबन्तत्वादाद्युदात्तः। साम्बतापौ भावगर्हायाम्। अन्तोदातौ अन्यत्राद्युदात्तौ। उत्तमशश्वत्तमौ सर्वत्र। केचित् तु भावगर्हायाम् इत्यत्र अपि अनुवर्तयन्ति। भक्षमन्थभोगदेहाः एते घञन्ताः। भक्षिर्ण्यन्तो ऽपि घञन्त एव, एरच् ३।३।५६ अण्यन्तानाम् इति वचनात्।

न्यासः

उञ्छादीनां च। , ६।१।१५४

"उञ्छः, म्लेच्छः, जञ्जः, जल्पः" इति। "उछि उञ्छे (धा।पा।२९५) "म्लेच्छ अव्यक्तायां वाचि" (धा।पा।१६६२), "जज जजि युद्धे" (धा।पा।२४२,२४३), "जप जल्प व्यक्तायां वाचि" (धा।पा।३९७,३९८)। जञ्जेः कुत्वाभावो निपातनात्()। "जपो व्यध इत्यवन्तौ" इति। तत्र "व्यधजपोरनुपसर्गे" ३।३।६१ इत्यबन्तत्वम्()। बधशब्दो हि "हनश्च वधः" ३।३।७६ इति। "तयोर्धातुसवरः प्राप्तः" इति। "धातोः" ६।१।१५६ इत्युदात्तत्वम्()। "व्यधः" इति। "व्यध ताडने" (धा।पा।११८१)। अत्रापि व्यधजपोरित्यबन्तत्वम्(), पूर्ववद्धातुस्वरः प्राप्तः। "कालविशेषे" इति। कृतद्वापरादौ। "रथाद्युपकरणे च" इति। आदिशब्देन हलादेग्र्रहणम्()। "गरः" इति। "गृ निगरणे" (धा।पा।१४१०)। "ऋदोरप्()" ३।३।५७ इत्यबन्तः। "विषम्()" इत्यनेन दूष्यशब्दस्य विशेषे वृतिं()त दर्शयति। "अन्यत्राद्युदात्त एव" इति। धातुस्वरेण। "वेदवेगवेष्टबन्धाः" इति। "विद ज्ञाने (धा।पा।१०६४) "विचिर्? पृथगभावे" (धा।पा।१४४२) "वेष्ट वेष्टने" (धायपा।२५५) "बन्ध बन्धने" (धा।पा।१५०८)। एभ्यो यथायोगं पर्याद्युपसर्गपूर्वेभ्यः क्विप्(), प्रादसमासः। "अन्यत्र मध्योदात्तः" इति। वत्र्तनिशब्दो हि "अर्त्तिसृ()घृ()" (द।उ।१।२) इत्यतोऽनिप्रत्ययेऽनुवत्र्तमाने "वृतेश्च" (द।३।१।६) इत्यनेन "वृतु वत्र्तने (धा।पा।७५८) इत्येतस्मादनिप्रत्ययमुत्पाद्य व्युत्पाद्यते। तस्मात्? प्रत्ययस्वरेण मध्योदात्तो भवति। "दरः" इति। "दृ विदारणे" (धा।पा।१४९३) ऋकारान्तत्वादबन्तः। "साम्बतापौ भावग्रर्हायाम्()" इति। सहाम्बया वर्तत इति साम्बः, "बहुव्रीहौ प्रकृत्या पूर्वपदम्()" ६।२।१ इति प्रकृतिस्वरेण सहशब्दस्य "निपाता आद्युदात्ताः" (फि।सू।४।८०) इत्युदात्तत्वे प्राप्ते भावगर्हायामन्तोदात्तत्वं विधीयते। साम्बो भिक्षते। भिक्षणमत्र भावग्रर्हा। तपनं तापः "तप सन्तापे" (धा।पा।९८५) इत्यस्माद्घञ्()। आद्युदात्तत्वे प्राप्ते वचनम्()। तापो दस्यूनां धार्मिकेषु भावगर्हायामिति किम्()? साम्बस्तिष्टति, तापो महान्? ग्रीष्मस्य। अनयोराद्युदात्तत्वमेव। "उत्तमश()आत्तमौ" इति। एतौ तमप्प्रत्ययान्तो। पित्त्वात्? प्रत्ययस्यानुदात्तत्वे उच्छब्दस्य "निपाता आद्युदात्ताः" (फि।सू।४।८०) इत्युदात्तत्वमित्यत आद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थमुत्तमशब्दः पठ()ते।

श()आच्छब्दोऽपि प्रतिपदिकस्वरेणान्तोदात्तः, ततो मध्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थमेव पठ()ते। "सर्वत्र" इति। भावगर्हायाम्(), अन्यत्र च। "भक्ष--मन्थ" इत्यादि। "भक्ष भक्षणे" (धा।पा।१५५७), [भक्ष अदने--धा।पा।] "मन्थ विलोडने" (धा।पा।४२) "भुजकौटिल्ये" (धा।पा।१४१७), [भुजो--धा।पा।] "दिह उपचये" (धा।पा।१०१५)। ननु भक्षिश्शुरादित्वाण्ण्यन्त इति तत्? "एरच्()" ३।३।५६ इत्यचा भवितव्यम्(), तत्? कथमसौ घञन्तः? इत्याह--"भक्षिण्यन्तोऽपि" इत्यादि। अत्रैव कारणमाह--"एरजण्यन्तानाम्()" इति॥

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तस्य च यत्र उदात्तलोपः ६।१।१६१

उदात्तः इति वर्तते। यस्मिन्ननुदात्ते परतः उदात्तो लुप्यते तस्य अनुदात्तस्यादिरुदात्तो भवति। कुमार ई कुमारी। कुमारशब्दो ऽन्तोदात्तः, तस्य ङीप्यनुदाते उदात्तो लुप्यते। अनुदात्तो ङीपुदात्तः। भस्य टेर्लोपः ७।१।८८। पथः। पथा। पथे। पथिन्शब्दो ऽन्तोदात्तः। कुमुदनडवेतसेभ्यो ड्मतुप्। कुमुद्वान्। नड्वान्। वेतस्वान्। कुमुदादयो ऽन्तोदात्ताः। ड्मतुबनुदात्तः। अनुदात्तस्य इति किम्? प्रासङ्गं वहति प्रासङ्ग्यः। प्रासङ्गशब्दस्थाथादिस्वरेण अन्तोदात्तः। तस्य यति तित्स्वरितम् इति स्वरिते उदात्तो लुप्यते? न एतदस्ति, स्वरिते हि विधीयमाने परिशिष्टम् अनुदात्तम्, तत् कुत उदात्तलोपः। तदेतदनुदात्तग्रहणमादेरनुदात्तस्य उदात्तार्थम्। अन्तः इति हि प्रकृतत्वादन्तस्य स्यात्, मा हि धुक्षाताम्, मा हि धुक्षाथाम्। यत्र इति किम्? भर्गवः, भार्गवौ, भृगवः। प्राक् सुबुत्पत्तेर् गोत्रप्रत्ययस्य लुक्। उदात्तग्रहणं किम्? बैदी और्वी।

न्यासः

अनुदात्तस्य च यत्रोदात्तलोपः।, ६।१।१५५

"कुमारौ" इति। "वयसि प्रथमे" ४।१।२० इति ङीप्(), "यस्येति च" ६।४।१४८ इत्यकारलोपः। "कुमारशब्दोऽन्तोदात्तः" इति। प्रातपदिकस्वरेण। एवमुत्तरत्राप्यन्तोदाततता वेदितव्या। "ङीप्()" इति। "अनुदात्तः" इति। पित्त्वात्()। "प्रासङ्ग्यः" इति। "तद्वहति" ४।४।७६ इत्यादिना प्राग्घितीयो यत्()। "प्रसङ्गशब्दः" इत्यादि। "षन्ज सङ्गे" (धा।पा।९८७) इत्यस्माद्घञमुत्पाद्य प्रासङ्गशब्दो व्युत्पाद्यते, तस्य "गतिकारकोपपदात्()" ६।२।१३८ इति "तत्पुरुषे" ६।२।१२२ इति वरत्तमाने "थाथघञ्क्ताजबित्रकाणाम्()" ६।२।१४३ इत्यन्तोदात्तत्वं विहितम्(), अतो।सावन्तोदात्तः। "नैतदस्ति" इति। "उदात्तो लुप्तते" इति यदुक्तं तस्य प्रतिषेधः। कस्मान्नैतदस्तीत्याह--"स्वरिते हि" इत्यादि। स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं भवतीति प्रातिपदिकमेतत्()। तस्मात्? स्वरिते विधीयमाने परिशिष्टस्यानुदात्तत्वेन भवितव्यम्()। तत्? कुत उदात्तलोपः? न कुतश्चिदित्यर्थः। "तदेतत्()" इत्यादि। यस्मादेवमनुदात्तग्रहणस्य प्रत्युदाहरणं न सम्भवति, तस्मादनुदात्तग्रहणमेतदादेरनुदात्तस्योदात्तत्वं यथा स्यादित्येवमर्थम्(); अन्यथा ह्रस्यानर्थक्यमेव स्यात्()। किं पुनः कारणमादेरनुदात्तस्योदात्तो न सिध्यति, यतस्तदर्थमनुदात्तग्रहणं क्रियते? इत्यत आह--"अन्त इति हि" इत्यादि। अवधारणमात्रं द्रष्टष्यम्()। अन्तस्यैव स्यात्, नादेरित्यर्थः। क्व पुनरादेरुदात्तार्थमनुदात्तग्रहणं क्रियते? इत्याह--"मा हि धुक्षाताम्()" इत्यादि। दुहेर्लुङ्(), आत्मनेपदमातामाथाम्(), ततश्च "शल इगुपधादनिटः क्सः" ३।१।४५ इति च्लेः क्सादेशः, "तास्यानुदात्त" ६।१।१८० इत्यादिना लसार्वधातुकस्यानुदात्तत्वम्(), "क्सस्याचि" ७।३।७२ इत्यकारलोपः, क्सस्याकारः प्रत्ययस्वरेणोदात्तः, "दादेर्धातोर्घः" ८।२।३२ "खरि च" ८।४।५४ इति चत्र्वम्(), घकारस्य ककारः, षत्वम्()। अत्रासत्यनुदात्तग्रहण आतामाथामाकारस्यादिभूतस्यानुदात्तत्वं न स्यात्(), सति त्वस्मिन्नाकारस्यादिभूतस्योदात्तत्वं स्यात्()। हिशब्दस्य प्रयोगे "हि च" ८।१।३४ इति निघातप्रतिषेधो न स्यात्()। निघाते हि तिङन्तस्यासत्युदात्तलोपो न स्यात्()। माङ्प्रयोगोऽप्यटः "न माङ्योगे" ६।४।७४ इति प्रतिषेधो यथा स्यात्()। अटि हि तस्योदात्तत्वाच्छेषस्यानुदात्तत्वं

स्यात्(), तथा च सत्यनुदात्तस्थाकारलोपः स्यात्(), नोदात्तस्य। "भृगवः" इति। भृगोरपत्यानि "ऋष्यन्धकवृष्णि" ४।१।११४ इत्यादिना ऋष्यण, तस्य "अत्रिभृगुकुत्स" २।४।६५ इत्यादिना बहुषु लुक्()। ननु चात्रापि विभक्तावुत्पन्नायामुदात्तस्य लोपः, तस्मादिहापि भवितव्यमेव? इत्यत आह--"प्राक्? सुबुत्पत्तेः" इत्यादि। न हि गोत्रप्रत्ययसय लुग्विधौ विभक्तिर्निमित्तत्वेनाश्रीयते। तस्मात्? प्रागेव गोत्रप्रत्ययस्य लुक्(), ततो नात्रानुवात्तत्वम्()। "बैदी, और्वी" इति। विदस्यापत्यम्(), उर्वस्यापत्यमिति "अनृष्यानन्तर्य्ये बिदादिभ्योऽञ्()" ४।१।१०४ इत्यञ्(), ञित्स्वरेणाद्युदात्तः "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()॥

---

सूत्रम्

काशिका-वृत्तिः

धातोः ६।१।१६२

अन्तः इत्येव। धातोरन्त उदात्तो भवति। पचति। पठति। ऊर्णोति। गोपायति। याति।

न्यासः

धातोः। , ६।१।१५६

"ऊर्णोति" इति। अदादित्वाच्छपो लुक्()॥

---

सूत्रम्

काशिका-वृत्तिः

चितः ६।१।१६३

चितो ऽन्त उदात्तो भवति। भञ्जभासमिदो घुरच् ३।२।१६१ भङ्गुरम्। भासुरम्। मेदुरम्। आगस्त्यकौण्डिनययोरगस्तिकुण्डिनच् २।४।७०। कुण्डिनाः। चिति प्रत्यये प्रकृतिप्रत्ययसमुदायस्य अन्त उदात्त इष्यते। बहुपटुः। उच्चकैः।

न्यासः

चितः। , ६।१।१५७

"भङगुरम्()" इत्यादौ प्रत्ययस्वरस्यापवादोऽन्तोदात्तत्वं विधीयते। "कुण्डिनाः" इति। अत्र तु स्थानिवद्भावः स्वरस्य। कुण्डिनोशब्दस्यायमादेशः, स च प्रतययस्वरेण मध्योदात्त इति तदादेशोऽपि मध्योदात्त एव सात्()। कुण्डमस्यास्तीतीनिः, तदन्तात्? स्त्रियां "ऋन्नेभ्यो ङीप्()" ४।१।५ इती ङीप्()। कुण्डिन्या अपत्यानि बहुनीति गर्गादित्वात्? यञ्? ४।१।१०५, तस्य बहुषु लुक्()। परिशिष्टस्य कुण्डिनजादेशः। "चिति प्रतयये" इत्यादि। कथं पुनः प्रकृतिप्रत्ययसमुदायस्यान्तोदात्तत्वं लभ्यते? यथा लभ्यते तथाख्यायते--इह चित इति समुदायसम्बन्धेऽवयवादेषा षष्ठी। चितोऽवयवस्य सम्बन्धी यः समुदायः तस्यान्तोदात्तत्वं भवतीत्यर्थः। अथ वा चित इति मत्वर्थीयाच्प्रत्ययान्तमेतत्--चिदस्यास्तीति चितः, तस्यान्तोदात्तत्वं भवतीत्यर्थः। तेन प्रकृतिप्रत्ययसमुदायस्यान्तोदात्तत्वं सिध्यति। यदि तर्हि चित इति मत्वर्थीयाकारप्रत्ययान्तमेतत्(), तर्हि सुब्व्यत्ययेन षष्ठ्याः प्रसङ्गे प्रथमा भविष्यति। "बहुपटवः" इति। ईषदसमाप्ताः पटव इति "विभावा सुपो बहुच्? पुरस्तात्तु" ५।३।६८ इति बहुच्()। "उच्चकैः" इति। "अव्ययसर्वनाम्नामकच्? प्राक्टेः ५।३।७२ इत्यकच्()॥

---

सूत्रम्

काशिका-वृत्तिः

तद्धितस्य ६।१।१६४

चितः इत्येव। चितस् तद्धितस्य अन्त उदात्तो भवति। गोत्रे कुञ्जाऽदिभ्यश्च्फञ् ४।१।९८ कौञ्जायनाः। मौञ्जायनाः। किम् अर्थम् इदम्? परम् अपि ञित्स्वरं बाधित्वा ऽन्तोदात्तत्वम् एव यथा स्यादिति।

न्यासः

तद्धितस्य। , ६।१।१५८

"कौञ्जायनाः" इति। "कुञ्जादिभ्यश्च्फञ्()" (४।१।९८) इति च्फञन्तात्? "व्रातच्फञोरस्त्रियाम्()" ५।३।११३ इत्यागतस्य अप्रत्ययस्य "तद्राजस्य बहुषु" २।४।६२ इत्यादिना लुक्()। "किमर्थम्()" इति। पुर्वेणैव सिद्धमिति मन्यमानस्य प्रश्नः। "परमपि" इत्यादि। च्फञो हि चकारः "व्रातच्फञोरस्त्रियाम्()" ५।३।११३ इत्यत्र विशेषणेन चरितार्थः। ञकारोऽपि वृद्धौ। यद्येवं नोच्येत तदा परत्वान्()ञित्स्वरः स्यात्()। तस्मात्तमपि बाधित्वान्तोदात्तत्वमेव यथा स्यादित्येवमर्थं क्रियते॥

---

सूत्रम्

काशिका-वृत्तिः

कितः ६।१।१६५

तद्धितस्य इत्येव। तद्धितस्य कितो ऽन्त उदात्तो भवति। नडादिभ्यः फक् ४।१।९९ नाडायनः। चारायणः। प्राग्वहतेष्ठक् ४।४।१ आक्षिकः। शालाकिकः।

न्यासः

कितः। , ६।१।१५९

प्रत्ययस्वरस्यापवादोऽयम्()। "आक्षिकः, शालाकिकः" इति। "तेन दीव्यति" ४।४।२ इत्यर्थे ठक्()॥

---

सूत्रम्

काशिका-वृत्तिः

तिसृभ्यो जसः ६।१।१६६

तिसृभ्य उत्तरस्य जसो ऽन्त उदात्तो भवति। तिस्रस्तिष्ठन्ति। उदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४ इत्यस्य अपवादः। शसि उदात्तयणो हल्पूर्वात् ६।१।१६८ इति सिद्धे ऽन्यत्र बहुवचने षट्त्रिचतुर्भ्यो हलादिः ६।१।१७३ इति विधानात् जसेव लभ्यते इति जस्ग्रहणम् उपसमस्तार्थम् एके इच्छन्ति अतितिस्रौ इत्यत्र स्वरो मा भूतिति।

न्यासः

तिसृभ्यो जसः। , ६।१।१६०

"तिरुआस्तष्ठन्ति" इति। "त्रिचतुरोः स्त्रियां तिसृचतसृ" ७।२।९९ इति तिरुआआदेशः, "अचि र ऋतः" ७।२।१०० इति ऋकारस्य रादेशः। "उदात्तस्वरितयोः" इत्यादि। त्रिशब्दः प्रातपदिकस्वरेणान्तोदात्त इति तदादेशोऽपि तिसृशब्दोऽन्तोदात्त एव। तत्र ऋकारस्यान्तोदात्तस्य स्थाने विहितो रफ उदात्तयण्? न भवति। ततः परस्य जसः "उदात्तस्वरितयोः" ८।२।४ इत्यादिना स्वरितः प्राप्नोति, अतोऽस्यायमपवादः। अथ जस्ग्रहमं किमर्थम्(), तिसृकेऽप्यत्र मा भूदिति चेत्()? स्यादेतत्()--त्रिशब्दात्? संज्ञायां कनि कृते तत्र च "तिसृभावे कन्युपसंख्यानम्()" (वा।८३७) इति तिरुआआदेशे

तिसृकेत्यत्रापि स्यात्? असति जस्()ग्रहण इति नैतदस्ति; नित्स्वरोऽत्र बाधको भविष्यति। नाप्रापते स्वरान्तरे तिसृस्वर आरभ्यते, स यथैव "अनुदात्तौ सुप्पितौ" (३।१।४) इत्येतत्स्वरं बाधते तथा नित्स्वरमिति चेत्()? नैतदस्ति; यस्माद्येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते "अनुदात्तौ सुप्पितौ" (३।१।४) इत्येतस्मिन्? तिसृस्वर आरभ्यते, नित्स्वरे पुनः प्राप्ते चाप्राप्ते च। अथ वा मध्येऽपवादाः पूर्वान्? विधीन्? बाधन्ते" (व्या।प।१०) इत्येव तिसृस्वरे "अनुदात्तौ सुप्पितौ" ३।१।४ एत्येतं बाधिष्यते, न नित्स्वरम्()। शसादिनिवृत्त्यर्थं तर्हि जस्ग्रहणमिति चेत्()? एतदपि नास्ति; शसि तावद्भवितव्यमेवान्तोदात्तेन--"उदात्तयणो हल्पूर्वात्? ६।१।१६८ इति। अन्यानि सर्वाणि बहुवचनानि हलादीनि, तत्र "षट्त्रिचतुर्भ्यो हलादिः" ६।१।१६८ इति। अन्यानि सर्वाणि बहुवचनानि हलादीनि, तत्र "षट्त्रिचतुर्भ्यो हलादिः" ६।१।१७३ इति "झल्युपोत्तमम्()" ६।१।७७ इत्युदात्तत्वेन भव#इतव्यम्()। बहुवचनविषयत्वाच्च तिसृशब्दसय द्विवचनैकवचने न स्तः। तत्रान्तरेण जस्ग्रहणं जस एव भविष्यतीत्यत आह--"जस्ग्रहणम्()" इत्यादि। एके भाष्यकारादयः। असति जस्ग्रहणे तिसृ अतिक्रान्ताविति प्रादिसमासे कृते अतितिरुआआवित्यत्रापि स्यात्(), तन्मा भूदित्येष दोष इत्युपसमस्तार्थं जस्ग्रहणमिच्छन्ति॥

---

सूत्रम्

काशिका-वृत्तिः

चतुरः शसि ६।१।१६७

चतुरः शसि परतो ऽन्त उदात्तो भवति। चतुरः पश्य। चतस्रादेशे आद्युदात्तनिपातनाद् यणादेशस्य च पूर्वविधौ स्थानिवत्त्वादयं स्वरो न भवति चतस्रः पश्य इति।

न्यासः

चतुरः शसि। , ६।१।१६१

"चतेरुरन्()" (द।उ।८।७८) इत्युरन्प्रत्ययान्तत्वाच्चतुःशब्द आद्युदात्तः, तस्य हि शसि परतोऽनेनान्तो दात्तत्वं विधीयते। अथेह कस्मान्न भवति--चतरुआः पश्येति, चतरुआआदेशेऽपि चतुरः कृते स्थानिवद्भावेन न प्राप्नोति? इत्यत आह--"चतरुआआदेश" इत्यादि। चतरुआआदेश कृत आद्युदाततनिपातनं करिष्यते, स निपातनस्वरः शसि स्वरस्य बाधक इत्याद्युदात्तत्वनिपातनाच्यतन्नः पश्येत्यत्रायं स्वरो न भवति। अथ वा पुरावात्? "अचि र ऋतः" ७।२।१०० इति रादेशे कृत ऋकारसय तावन्न भवितव्यम्()। अकारस्यापि "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति यणादेशस्य स्थानिवद्भावद्दकारेम व्यवधाने सति न भवितव्यमेव। ननु च "न पदान्तद्विर्वचन" (१।१।५८) इत्यादिना स्वरविधौ प्रतिषिध्यते स्थानिवद्भावः? नैतदस्ति; उक्तं हि तत्र "स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्()" (का।वृ।१।१।५८) इति, न चायं लोपाजादेशः॥

---

सूत्रम्

काशिका-वृत्तिः

सावेकाचस् तृतीयाऽअदिर् विभक्तिः ६।१।१६८

सौ इति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणम्। तत्र सौ य एकाच् तस्मत् परा तृतीयादिर् विभक्तिरुदात्ता भवति। वाचा। वाग्भ्याम्। वाग्भिः। वाग्भ्यः। याता। यादभ्याम्। याद्भिः। सौ इति किम्? राज्ञा। रज्ञे। एकाचः इति किम्? हरिणा। गरिणा। राजसु। तृतीयादिः इति किम्? वाचौ। वाचः। विभक्तिः इति किम्? वाक्तरा। वाक्तमा। सप्तमीबहुवचनस्य ग्रहणादिह न भवति त्वया, त्वयि इति।

न्यासः

सावेकाचस्तृतीयादिर्विभक्तिः।, ६।१।१६२

साविति प्रथमैकवचनस्येदं ग्रहणं स्यात्()? सप्तमीबहुवचनस्य वा? उभयोर्वा? तत्र यदि प्रथमैकवचनस्य ग्रहणं स्यात्(), त्वाया त्वयि इत्यत्रापि स्यात्()। भवति हि युष्मच्छब्दसय "त्वाहौ सौ" ७।२।९४ इति त्वादेशे कृते प्रथमैकवचने परत एकाच्त्वम्()। सामान्येनोभयग्रहणेऽप्येष दोषः। सप्तमीबहुवचनस्य ग्रहणे नायं दोषः प्रसज्येत्(), युष्मास्वित्यत्र युष्मच्छब्दस्यानेकाच्त्वमित्येतत्? सर्वं ह्यदि कृत्वाऽऽह--"साविति सप्तमीबहुवचनस्य ग्रहणम्()" इति। "याद्भ्याम्()" इति। याच्छब्दाच्छत्रन्तात्? तृतीया। "राज्ञे" इति। भवति राजन्शब्दो भसंज्ञके परतो लोपे कृत एकाच्(), न तुल सौ राजस्विति; तत्रानेकाच्त्वात्? "वाक्तरा, वाक्तमा" इति। तरप्तमबिति भवति वा तृतीयादिः, न तु विभक्तिः। अथ कस्मात्? सप्तमीबहुवचनग्रहणम्()? इत्याह--"सप्तमीबहुवचनस्य" इत्यादि। "त्वया त्वयि" इति। युष्मदस्मदोः "मपर्यन्तस्य" ७।२।९१ "त्वमावेकवचने" ७।२।९७ इति त्वादेशः। परिशिष्टस्य "योऽचि" ७।२।८९ इति यकारः॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तौदात्तादुत्तरपदादन्यतरस्याम् अनित्यसमासे ६।१।१६९

एकाचः इति वर्तते, तृतीयादिर् विभक्तिरिति च। नित्यशब्दः स्वर्यते, तेन नित्याधिकारविहितः समासः पर्युदस्यते। नित्यसमासादन्यत्रानित्यसमासे यदुत्तरपदम् अन्तोदात्तम् एकाच्च तस्मात् परा तृतीयादिर् विभक्तिरन्यतरस्याम् उदात्ता भवति। परमवाच, परमवाचा। परमवाचे, परमवाचे। परमत्वचा, पर्मत्वचा। परमत्वचे, परमत्वचे। यदा विभक्तिरुदात्ता न भवति, तदा समासान्तोदात्तत्वम् एव। अन्तोदात्तातिति किम्? अवाचा। सुवाचा। सुत्वचा। तत्पुरुषो ऽयम्। तत्र तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमान। अव्ययय (*६,२।२।) इति पूर्वपदप्रकृतिस्वरः। उत्तरपदग्रहणम् एकाच्त्वेन उत्तरपदं विशेषयितुम्, अन्यथा हि समासविशेषणम् एतत् स्यात्। तत्र शुनः ऊर्क, श्वोर्जा इत्यत्र एव अयं विधिः स्यात्। अनित्यसमासे इति किम्। अग्निचिता। सोमसुता उपपदम् अतिङ् २।२।१९ इत्ययं नित्याधिकारे समासो विधीयते। तत्र गतिकारकौपपदात् कृत् ६।२।१३८ इत्युत्तरपदप्रकृतिस्वरेन चित्शब्दः उदात्तः। यस् तु विग्रहाभावेन नित्यसमासस् तत्र भवत्येव विकल्पः, अवाचा ब्राह्मणेन, सुबाचा ब्राह्मणेन इति। बहुव्रीहौ नञ्सुभ्याम् ६।२।१७१ इत्युत्तरपदान्तौदात्तत्वं भवति।

न्यासः

अन्तोदात्तादुततरपदादन्यतरस्यामनित्यसमासे।, ६।१।१६३

यदि विग्रहाभावेन यो नित्यसमासः स इह नित्यसमासग्रहणेन गृह्लेत्? ततोऽवाचा, सुवचा ब्राआह्नणेनेत्यत्रापि विकल्पेन स्यादित्येतच्चेतसि कृत्वाऽऽह--"नित्यशब्दः स्वर्यते" इति। स्वरितत्वमस्य क्रियत इत्यर्थः। तेन किं भवति? इत्याह--"तेन" इत्यादि। स्वरितत्वेन ह्यधिकारगतिर्भवति। तेन नित्याधिकारो यो विहितः समासः। स च नित्याधिकारविहितसमासो न भवतीत्यनित्यसमासः। "सुवाचा" इति। "कुगति" २।२।१८ इत्यादिना समासः। "अव्ययपूर्वपदप्रकृतिस्वरः" ["तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय" इति पूर्वपदप्रकृतिस्वरः--काशिका] इति। स पुनरुदात्तः; "निपाताश्चाद्युदात्ताः", "उपसर्गाश्चाभिवर्जम्()" (फि।सू।४।८०,८१) इति वचनात्()। यथात्रोत्तरपदस्यान्तोदात्तत्वं नास्ति, एवमनित्यसमासत्वमपि; "कुगति" २।२।१८ इत्यादावपि नित्यग्रहणानुवृत्तेः। एवं सति "मयूरव्यंसकादयश्च" २।१।७१ इत्यनेनात्र समासो द्रष्टव्यः; मरव्यूयंसकादेराकृतिगणत्वात्()। "अन्यथा हि" इति। यद्युत्तरपदग्रहणं न क्रियेत, तदैकाज्ग्रहणं समासविशेषणं स्यात्()। तत्र को दोषः स्यात्()? इत्याह--"तत्र" इत्यादि।

ऊर्क्()शब्दः सम्पदादित्वात्? क्विबन्तः। "अग्निचिता, सोमसुता" इति। "अग्नौ चेः" ३|२|९१ "सोमे सुञः" ३|२|९० इति क्विप्()। "अयं नित्याधिकारे समासो विधीयते" इति। तत्र "नित्यं क्रीडाजीविकयोः" २|२|१८ इत्यतो नित्यग्रहणानुवृत्तेः। "तत्र" इत्याद्। "गतिकारकोपपदात्()" कृत्? ६|२|१३८ इत्यनेनोत्तरपदस्य प्रकृतिस्वरो विधीयते। उत्तरपदं च धातुस्वरेणान्तोदात्तम्(), तेन चिच्छब्द उदात्तो भवति। एवं सोमसुच्छब्दोऽपि। "यस्तु" इत्यादि। "नित्यशब्दः स्वय्र्यते" (का|६|१|१६९) इति यदुक्तम्(), तस्यानेन प्रयोजनं दर्शयति। "अवाचा, सुवाचा" इति। अत्राकारेण पूर्वपदेन सुशब्देन च विग्रहो नोपपद्यते, तयोरिह प्रयोगाभावान्नत्यसमासावेतौ, न तु नित्याधिकारविधानात्()॥

न्यासः

निष्ठोपमानादन्यतरस्याम्?। , ६|१|१६३

"मुखं स्वाङ्गम्()" ६|२|१६६ इति नित्ये प्राप्ते विकल्पवचनमेतत्()। "यदैतदुत्तरपदान्तोदात्तत्वम्()" इत्यादि। अन्यतरस्यांग्रहणाद्विकस्पेनैतदुत्तरपदान्तोदात्तत्वं विधीयते। तेन यदैतन्न भवति तदा निष्ठोपसर्गपूर्वपदस्यान्यतरस्याम्()" ६|२|१०९ [निष्ठोपसर्गपूर्वमन्यतरस्याम्()--पा|सू|] इति पक्षे पूर्वपदान्तोदात्तत्वं भवति। तस्यापि विकल्पेन विधानाद्यादास्याभावस्तदा "गतिरनन्तरः" ६|२|४९ इति पूर्वपदस्य प्रकृतिभावविधानाद्गतिस्वर एव। तेनाद्युदात्तत्वं भवति। यत एवं ततस्त्रीण्युदाहरणानि भवन्ति--एकमनेन सूत्रेणोत्तरपदस्यान्तोदात्तत्वविधानम्(), द्वितीयं "निष्ठोपसर्गपूर्वादन्यतरस्याम्()" ६|२|१०९ [निष्ठोपसर्गपूर्वमन्यतरस्याम्()--पा|सू|] इत्यादिना पूर्वपदान्तोदात्तत्वविधानम्(), तृतयं "गतरनन्तरः" ६|२|४९ इति गतेः प्रकृतिस्वरविधानम्()। "सिंहमुखः" इति। सिंहशब्दः पचाद्यजन्तत्वादन्तोदात्तः। "तृहि हिसि हिंसायाम्()" (धा|पा|१४५५,१४५६), ["तृह"--धा|पा|] हिनस्तीति सिंहः--पृषोदरादित्वाद्वर्णव्यत्ययः। "व्याघ्रमुखः" इति। "घ्रा गन्धोपादाने" (धा|पा|९२६) इत्यस्माद्व्याङ्पूर्वात्? "आतश्चोपसर्गे कः", ३|१|१३६, तेन व्याघ्रशब्दोऽप्यन्तोदात्त एव॥

---

सूत्रम्

काशिका-वृत्तिः

अञ्चेश् छन्दस्यसर्वनामस्थानम् ६|१|१७०

अञ्चेः परा असर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि विषये। इन्द्रो दधीचो अस्थभिः। चौ इति पूर्वपदान्तोदात्तत्वं प्राप्तम्। तृतीयादिः इति वर्तमानेन् शसो ऽपि परिग्रहार्थम् असर्वनामस्थानग्रहणम्। इह अपि यथा स्यात्, प्रतीचो बाहून् प्रतिभङ्ग्ध्येषाम् इति।

न्यासः

अञ्चेश्छन्दस्यसर्वनामस्थानम्?। , ६|१|१६४

"इन्द्रो दधीचः" इति। दध्यञ्चतीति "ऋत्विक्()" (३|२|५९) इत्यादिना क्विन्? अनुनासिकलोपः, षष्ठ()एकवचनम्(), "अचः" ६|४|१३८ इत्यकारलोपः, "चौ" ६|३|१३७ इति दीर्घः। "तृतीयादिः" इत्यादि। यदि सर्वनामस्थानग्रहणं क्रियते तदा शसो न स्यात्(); तस्यातृतीयादित्वात्()। अथापि तृतीयादिग्रहणं निवर्त्यत, एवमपि सर्वनामस्थानेऽपि स्यात्()। "प्रतीचः" इति। पूर्वेण तुल्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ६|१|१७१

ऊथ् इदम् पदादि अप् पुम् रै दिवित्येतेभ्यो ऽसर्वनामस्थानविभक्तिरुदात्ता भवति। ऊथ् प्रष्ठौहः। प्रष्ठौहा। ऊठ्युपधाग्रहणं कर्तव्यम्। इह मा भूत्, अक्षद्युवा। अक्षद्युवे। इदम् आभ्याम्। एभिः। अन्तोदात्तातित्यधिकारादन्वादेशे न भवति, अथो आभ्यां निपुणमधीतम् इति। पदादयः पद्दन्नोमास ६।१।६१ इत्येवम् आदयो निश्पर्यन्ता इह गृह्यन्ते। नि पदश्चतुरो जहि। या दतो धावते। असन्प्रभृतिभ्यो विभक्तिरनुदात्तैव भवति। ग्रीवायां बद्धो अपि कक्ष आसनि। मत्स्यं न दीन उदनि क्षियन्तम्। अप् अपः पश्य। अद्भिः। अद्भ्यः। पुम् पुंसः। पुम्भ्याम्। पुम्भ्यः। पुंसा। पुंसे। रै रायः पश्य। राभ्याम्। राभिः। दिव् दिवः पश्य। दिवा। दिवे।

न्यासः

ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः। , ६।१।१६५

"प्रष्ठौहः" इति। "वहश्च" ३।२।६४ इति ण्विः, "वाह ऊठ्()" ६।४।१३२ इत्यूठ्(), "एत्येधत्यूठ्()सु" ६।१।८६ इति वृद्धिः। "ऊठ्युपधाग्रहणम्()" इति। उपदाभूत ऊड्? गृह्र्ते येन तदुपधाग्रहणम्()" इति व्याख्यानं कत्र्तव्यमित्यर्थः। किमर्थम्()? इत्यत आह--"इह मा भूत्()" इति। तत्रैदं व्याख्यानम्()--"अन्तोदात्तात्()" ६।१।१६३ इत्यादिसुत्रादिहान्यतरस्यांग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते, तेनोपधाभूतादेव भवितव्यमिति तस्यैव ग्रहणं युक्तमिति। "अक्षद्युवा" इति। अक्षैर्दीष्यतीति क्विप्? "च्छ्वोः शूडनुनासिके च" ६।४।१९ इति वकारस्योठ्(), यणादेशः। "आभ्याम्()" इति। इदमस्त्यदाद्यत्वम्(), "हलि लोपः" ७।२।११३ इतीद्रूपस्य लोपः। "अथो आभ्याम्()" इति। "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" २।४।३२ इत्यशादेशः। "निश्पर्यन्ता इह गृह्र्न्ते" इति। एतदपि पूर्ववद्व्यवस्थितविभाषया लभ्यते, तस्यां हि सत्यां निश्पर्यन्तेभ्य एव भवितव्यम्()। तेषामेव ग्रहणं युक्तमिति त एव गृह्र्न्ते। "निपदः" इति। शसि परतः पादस्य पदादेशः। "दतः" इति। अत्रापि दन्तशब्दस्य ददादेशः। "आसन्()" इति। अत्रासन्()शब्दस्य सप्तम्येकवचनेऽसन्नित्ययमादेशः। "उदन्()" इति। अत्रापयुदकशब्दस्योदन्नादेश-। "अद्भिः" इति। पकारस्य तकारः, तस्य जश्त्वम्()--दकारः। "राभ्याम्()" इति। "रायो हलि" ७।२।८५ इत्यात्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अष्टनो दीर्घात् ६।१।१७२

अष्टनो दीर्घान्तादसर्वनामस्थानविभक्तिरुदात्ता भवति। अष्टाभिः। अष्टाभ्यः। अष्टासु। घृतादिपाठातष्टन्शब्दो ऽन्तोदात्तः, तत्र ज्ञल्युपोत्तमम् ६।१।१७४ इत्यस्य अपवादो विभक्तिरेव उदात्तत्वं विधीयते। दीर्घातिति किम्? अष्टसु प्रक्रमेषु ब्राह्मणो ऽग्नीनादधीत। इदम् एव दीर्घग्रहणम् अष्टन आत्वविकल्पं ज्ञापयति, कृतात्वस्य च षट्संज्ञां ज्ञापयति। अन्यथा ह्यात्वपक्षे सावकाशो ऽष्टनः। स्वरः परत्वादनात्वपक्षे षट्स्वरेण बाधिष्यते इति किम् दीर्घग्रहणेन।

न्यासः

अष्टनो दीर्घात्?। , ६।१।१६६

"अष्टाभिः" इत्यादि। "अष्टन आ विभक्तौ" ७।२।८४ इत्यात्वम्()। "अष्टसु" इति। ननु चात्रापि भवितव्यमेवात्वेन, न हि तद्विधौ विकल्पप्रतिपादकं वचनमस्ति, नापि प्रकृतम्()? इत्यत आह--"इदमेव" इत्यादि। यदि हि नित्यमात्वं स्यादिह दीर्घग्रहणमनर्थकं स्यात्(), व्यावत्र्याभावात्(), कृतात्वस्य च षट्संज्ञामिति? इदमेव हि दीर्घग्रहणमष्टनो ज्ञापयतीति सम्बन्धनीयम्()। कथं पुनज्र्ज्ञापयति? इत्याह--"अन्यथा हि" इत्यादि। दीर्घग्रहणं ह्रेवमर्थं क्रियते--यत्रात्वं नास्ति तत्रायं स्वरो मा भूदिति। यदि कृत्वपात्वसयाष्टनः षट्संज्ञा न स्यात्(), तदात्वपक्षे षट्संज्ञायामसत्यां सावकाशोऽष्टनः स्वरः,

तत्रापि षट्()स्वरः प्राप्नोतीति कृत्वा। ततश्च यदि दीर्घग्रहणं न क्रियेत, तदानवकाशत्वाद्यदात्वपक्षेऽष्टनः स्वरो न भवति, तदेतरस्मिन्नपि पक्षे स्यात्()। अतस्तन्निवृत्त्ये दीर्घग्रहणं क्रियमाणमर्थवद्भवति। कृतात्वस्याष्टनः षट्संज्ञायाम्()--अष्टानामित्यत्र "षट्चतुभ्र्यश्च" (७।१।५५) इति नुट्? सिद्धो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

शतुरनुमो नद्यजादी ६।१।१७३

अद्न्तोदात्तातिति वर्तते। अनुम् यः शतृप्रत्ययस् तदन्तात् परा नदी अजादिर् विभक्तिरसर्वनामस्थानम् उदात्ता भवति। तुदती। नुदती। लुनती। पुनती। तुदता। लुनता। पुनता। अनुमः। इति किम्? तुदन्ती। नुदन्ती। अत्र अप्युपदेशातिति लसार्वधातुकादनुदात्तत्वे एकादेशः, तस्य एकादेश उदात्तेन उदात्तः ८।२।५ इत्युदात्तत्वम् , तस्य पूर्वत्र असिद्धत्वम् न इष्यते इति शत्रन्तम् अन्तोदात्तं भवति। नद्यजादी इति किम्? तुदद्भ्याम्। नुदद्भ्याम्। तुदद्भिः। अन्तोदात्तातित्येव, ददती। दधतः। अभ्यस्तानाम् आदिः ६।१।१८३ इत्याद्युदात्तवेतौ। बृहन्महतोरुपसङ्ख्यानम्। बृहती। महती। बृहता। महता।

न्यासः

शतुरनुमो नद्यजादी। , ६।१।१६७

"तुदति, नुदति" इति। तुदादित्वाच्छः। "लुनती, पुनती" इति। "श्नाभ्यसतयोरातः" ६।४।११२ इत्याकारलोपः। प्रतययस्वरेण शत्रन्तमिहान्तोदात्तं वेदितव्यम्()। "तस्य" इत्यादि। कथं पुनरिष्यमाणमपि न भवति? "न मु ने" ८।२।३ इत्यत्र नेति योगविभागात्()। "बृहन्महतोः" इत्यादि। उपसंख्यानशब्दस्य प्रतिपदनमर्थः। तत्रेदं प्रतिपादनम्()--"ड()आश्छन्दसि" ६।१।१७२ इत्यतः सिंहावलोकितन्यायेन बहुलग्रहणमुपतिष्ठते, तेन बृहन्महद्भ्यामपि भवतीति॥

---

सूत्रम्

काशिका-वृत्तिः

उदात्तयणो हल्पूर्वात् ६।१।१७४

उदात्तस्थाने यो यण् हलपूर्वस् तस्मात् परा नदी अजादिर् या असर्वनामविद्भक्तिरुदात्ता भवति। कर्त्री। हर्त्री। प्रलवित्री। प्रसवित्री। कर्त्रा। हर्त्रा। प्रलवित्रा। प्रसवित्रा। तृजन्ता एते ऽन्तोदात्ताः। उदात्तग्रहणं किम्? कर्त्री। हर्त्री। कर्त्रा। हर्त्रा। तृन्नन्तो ऽयम् आद्युदात्तः। हल्पूर्वातिति किम्? बहुतितवा ब्राह्मण्या। नकारग्रहणं कर्तव्यम्। वाक्पत्नी इयं कन्या।

न्यासः

उदात्तयणो हल्पूर्वात्?। , ६।१।१६८

"उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" ८।२।४ इति प्राप्ते वचनम्()। "तृन्नन्तोऽयमाद्युदातः" इति। नित्स्वरेण। "बहुतितवा" इति। वहवस्तितवो यस्या इति बहुव्रीहिः, तया बहुतितवेति। तितौशब्दोऽयं "बहोर्न ञ्चदुत्तरपदभूम्नि" ६।२।१७४ इत्यन्तोदात्तः। "नकारग्रहणं कत्र्तव्यम्()" इति। नकारो गृह्यते येन तन्नकारग्रहणं व्याख्यानं कत्र्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्()--इहापि पूर्ववद्बहुलग्रहणमनुवत्र्तते। तेनोदात्तस्य स्थाने यो नकारस्ततोऽपि न भविष्यतीति। अथ वा--नकारस्यात्र प्रश्लेषः--हल्पूर्वात्? "नोङ्धात्वोः" ६।१।७३ इति, तथा चायमर्थो भवति--उदात्तयण

उदात्तनकारच्चेति। तेनोदात्तनकारादपि भविष्यतीति। "वाक्पत्नी" इति। पतिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। तत्र "विभाषा सपूर्वस्य" ४।१।३४ इति नकारान्तादेशः, "ऋन्नेभ्यो ङीप्()" ४।१।५ इति ङीप्()॥

---

सूत्रम्

काशिका-वृत्तिः

न उङ्धात्वोः ६।१।१७५

ऊङो धातोश्च य उदात्तयण् हलपूर्वः, तस्मात् परा तृतीयादिर् विभक्तिर् न उदात्ता भवति। ब्रह्मबन्ध्वा। ब्रह्मबन्ध्वे। वीरबन्ध्वा। वीरबन्ध्वे। ऊङ् प्रत्ययस्वरेण उदात्तः। तेन सह य एकादेशः सो ऽप्युदात्तः इति उदात्तयण्वकारः, तस्मादुदात्तत्वे प्रतिषिद्धे उदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४ इति विभक्तिः स्वर्यते। धातुयणः खल्वपि सकृल्ल्वा। सकृल्ल्वे। खलप्वे। क्विबन्द्तस्य कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तस्य ओः सुपि ६।४।८३ यणादेशः।

न्यासः

नोङ्दात्वोः। , ६।१।१६९

"ब्राह्मबन्ध्वा" इति। ब्राह्आ बन्धुरस्या इति विगृह्य बहुव्रीहिः। तस्मात्? "ऊङुतः" ४।१।६६ इत्यूङ्()। "तेन सह य एकादेशः सोऽप्युदात्तः" इति। "एकादेश उदात्तेनोदात्तः" ८।२।५ इति वचनात्()। "स्वर्यते" इति। स्वरितः क्रियत इत्यर्थः। "कुदुत्तरपद" इत्यादि। ऊकारोऽत्र दातुस्वरेणान्तोदात्तः। सः "गतिकारकोपपादात्()" ६।२।१३८ इत्युदाततस्तिष्ठति प्रकृतिस्वरेण॥

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वनुड्भ्यां मतुप् ६।१।१७६

अन्तोदात्तातित्येव। ह्रस्वान्तादन्तोदात्तान् नुटश्च परो मतुबुदात्तो भवति। अग्निमात्। वायुमान्। कर्तृमान्। हर्तृमान्। नुटः खल्वपि अक्षण्वता। शीर्षण्वता। अन्तोदात्तातित्येव, वसुमान्। वसुशब्द आद्युदात्तः, तस्मान् मतुबनुदात्त एव भवति। अत्र च स्वरविधौ व्यञ्जनम् अविद्यमानवतित्येषा परिभाषा न अश्रीयते नुड्ग्रहणात्, तेन मरुत्वानित्यत्र न भवति। रेशब्दाच् च मतुप उदात्तत्वं वक्तव्यम्। आरेवान्। त्रेश्च प्रतिषेधो वक्तव्यः। त्रिवतीर्याज्यानुवाक्या भवति इति।

न्यासः

ह्यस्वनुड्भ्यां मतुप्?। , ६।१।१७०

पित्वान्मतुपोऽनुदात्तत्वे प्राप्तेऽयं विधिरारभ्यते। "अक्षण्वता" इति। अक्षमस्यास्तीति मतुप्(), "छन्दस्यपि दृश्यते" ७।१।७६ इत्यनङ्, "अनो नुट्()" ८।२।१३ इति नुडागमः, पूर्वसय नकारस्य "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति लोपः। "शीर्षण्वता" इति। शीर्षन्निति "शीर्षञ्शब्दः" शीर्षश्चन्दसि" ६।१।५९ इति निपातितः। "वसुशब्द आद्युदात्तः" इति। स हि "भृमृशीतॄ()चरित्सरितनिधनिमिमस्जिभ्य उः" (द।उ।१।९२) इति वर्तमाने "धान्ये नित्()" (द।उ।१।९४) इत्यतो निद्ग्रहणे "शृ()स्वृ()स्विहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" (द।उ।१।९५) इति व्युत्पाद्यते। तेन नित्स्वरेणाद्युदात्तो भवति। अथेह कस्मान्न भवति--मरुतोऽस्य सन्ति मरुत्वानिति, मरुच्छब्दोऽपि "मृग्रेरुतिः (द।उ।६।१) इत्युतिप्रत्ययान्तत्वात्? प्रत्ययस्वरेणान्तोदात्त इत्यस्त्यत्र प्राप्तिः, अतो नकारेम व्यवधानान्न भवतीति चेत्()? न; तस्य लुप्तत्वात्()। अथापि स्वरसिद्धौ नलोपस्यासिद्धत्वम्()? एवमपि "स्वरविधौ व्यञ्जनमविद्यमानवत्()"

(व्या।पा।३७) इति नास्ति व्यवधानम्()? इत्यत आह--"स्वरिविधौ" इत्यादि। कथं पुनर्ज्ञायते--नाश्रीयत इति? नुङ्ग्रहणात्()। नुडागमो ह्ययं मतुप एव भक्त इति तद्ग्रहणेनैव गृह्यते। यद्येषा परिभाषाऽऽश्रीयेत, तदा नकारस्य व्यञ्जनस्याविद्यमानत्वाद्? ह्रस्वादित्येव सिध्यति नुङ्ग्रहणं न कुर्यात्(), कृतं च। ततो ज्ञायते--नेयमिह परिभाषाश्रीयत इति। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। उत्तरत्रापि वक्तव्यशब्दस्यायमेवार्थः। व्याख्यानं तु पूर्ववद्बहुलग्रहणानुवृत्तिमाश्रित्य कत्र्तव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

नाम् अन्यतरस्याम् ६।१।१७७

ह्रस्वग्रहणाम् अनुवर्तते, मतुब्ग्रहणं च। तेन मतुपा ह्रस्वो विशेष्यते। मतुपि यो ह्रस्वः, तदन्तादन्तोदात्तादन्यतरस्यां नाम् उदात्तो भवति। अग्नीनाम्, अग्नीनाम्। वायूनाम् वायूनाम्। कर्तृणाम्, कर्तृणाम्। मतुपा ह्रस्वविशेषनं किम्? भूतपूर्वे ऽपि ह्रस्वे यथा स्यात्। अन्यथा हि साम्प्रतिक एव स्यात्, तिसृणाम्, चतसृणाम् इति। सनुट्कस्य ग्रहणं किम्? धेन्वाम्। शकट्याम्। उदात्तयणो हल्पूर्वात् ६।१।१६८ इत्ययम् अन्तोदात्तः। ह्रस्वातित्येव, कुमारीणाम्। अन्तोदात्तातित्येव, त्रपूणाम्। वसूनाम्।

न्यासः

नामन्यतरस्याम्?। , ६।१।१७१

"नाम्()" इति। सनुट्कस्य षष्ठीबहुवचनस्य ग्रहणम्()। किं पुनः कारणं मतुपा ह्रस्वो विशेष्यते? इत्याह--"अन्यथा हि" इत्यादि। सम्प्रति भवः साम्प्रतिकः, अध्यात्मादित्वट्ठञ्()। "तिसृणाम्()" इति। अत्र "न तिसृचतसृ" (६।४।४) इति दीर्घत्वप्रतिषेधात्? साम्प्रतिकः, अध्यात्मादित्वट्ठञ्()। "तिसृणाम्()" इति। अत्र "न तिसृचतसृ" (६।४।४) इति दीर्घत्वप्रतिषेधात्? साम्प्रतिक एव ह्रस्वो विद्यते। न तु साम्प्रतिके सति भूतपूर्वगतिर्युक्ता। अत्र यदि मतुपा ह्रस्वो न विशेष्येत? इह नैव स्यात्()--अग्नीनामिति। "नामि" ६।४।३ इति दीर्घत्वे कृते न स्यात्(); ह्रस्वाभावात्()। तस्माद्भूतपूर्वेऽपि ह्रस्वो यथा स्यादित्येवमर्थं मतुपा ह्रस्वो विशेष्यते। "धेन्वाम्(), शकट्()याम्()" इति। यदि सनुट्कस्य ग्रहणं न क्रियेत तदानीं सप्तम्यादेशस्याप्यामो ग्रहणं स्यात्(), ततश्च धेन्वामित्यादावपि स्यात्()। सनुट्कस्य ग्रहणे तुन भवति, तस्मिन्नसति धेनुशकटिशब्दयोः प्रातिपदिकस्वरेणान्तोदात्तयोरन्त्यस्य यणादेशे कृते "उदात्तयणः" ६।१।१६८ इत्यादनान्तोदात्तो नित्यो भवति। "त्रपूणाम्()" इति। त्रपुशब्दो वसुशब्दवदाद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

ङ्याश् छन्दसि बहुलम् ६।१।१७८

ङ्यन्तात् छन्दसि विषये नामुदात्तो भवति बहुलम्। देवसेनानामभिभञ्जतीनाम्। बह्वीनां पिता। न च भवति, नदीनां पारे। जयनतीनां मरुतः।

न्यासः

ङ्याश्छन्दसि बहुलम्?। , ६।१।१७२

---

सूत्रम्

काशिका-वृत्तिः

षट्त्रिचतुर्भ्यो हलादिः ६।१।१७९

अन्तोदात्तातित्येतन् निवृत्तम्। षट्सञ्ज्ञाकेभ्यः, त्रि चतुरित्येताभ्यां च परा हलादिर् विभक्तिरुदात्ता भवति। षड्भिः। षड्भ्यः। पञ्चानाम्। षण्णाम्। सप्तानाम्। त्रि त्रिभिः। तिभ्र्यः। त्रयाणाम्। चतुर् चतुर्भ्यः। चतुर्णाम्। हलादिः इति किम्? चतस्रः पश्य।

न्यासः

षट्त्रिचतुर्भ्यो हलादिः। , ६।१।१७३

"अन्तोदात्तादित्येतन्निवृत्तम्()" इति। यद्येतदनुवत्र्तेत, पञ्चानाम्(), सप्तानाम्(), चतुर्णामित्यत्र न स्यात्()। पञ्चादीनां शब्दादीनां "न्रः संख्यायाः (फि।सू।२।२८) इत्युदात्तत्वात्? "न्रः" इति रेफनकारान्तयोः संख्याशब्दयोग्र्रहणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

ज्ञल्युपोत्तमम् ६।१।१८०

षट्त्रिचतुर्भ्यो या ज्ञालादिर् विभक्तिः तदन्ते पदे उपोत्तमं उदात्तं भवति। त्रिप्रभृतीनाम् अन्त्यम् उत्तमम्, तत्समीपे च यत् तदुपोत्तमम्। पञ्चभिः तपस् तपति। सप्तभिः परात्र् जयति। तिसृभिश्च वहसे त्रिंशता। चत्रुभिः। ज्ञलि इति किम्? पञ्चानाम्। सप्तानाम्। उपोत्तमम् इति किम्? षड्भिः। षड्भ्यः।

न्यासः

झल्युपोत्तमम्?। , ६।१।१७४

"त्रिप्रभृतीनामन्त्यमुत्तमम्()" इति। उत्तमशब्दस्याव्युत्पन्नस्येह ग्रहणम्()। स च स्वभावात्? त्रिप्रभृतीनामन्त्यमाहेति कृत्वा। "तत्समीपे यत्? तदुपोत्तमम्()" इति। "अव्ययं विभक्ति" २।१।६ इत्यादिनाऽव्ययीभावः॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा भाषायाम् ६।१।१८१

षट्त्रिचतुर्भ्यो या झलादिर् विभक्तिस् तदन्ते पदे उपोत्तमम् उदात्तं भवति विभाषा भषायां विषये। पञ्चभिः, पञ्चभिः। सप्तभिः, सप्तभिः। तिसृभिः, तिसृभिः। चतुर्भिः, चतुर्भिः।

न्यासः

विभाषा भाषायाम्?। , ६।१।१७५

पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ६।१।१८२

गो श्वन्, साववर्णः सौ प्रथमैकवचने यदवर्णान्तम्, राडङ् क्रुङ् कृदित्येतेभ्यो यदुक्तं तन् न भवति। गवा, गवे, गोभ्याम् इति। सावेकाचस् तृतीयादिर् विभक्तिः ६।१।१६२ इति प्राप्तिः प्रतिषिध्यते। सुगुना, सुगवे, सुगुभ्याम्। अन्तोदात्तादुत्तरपदातिति प्राप्तिः। श्वन् शुना, शुने, श्वभ्याम्। परमशुना, परमशुने, परमश्वभ्याम्। पूर्ववत् प्राप्तिः। साववर्णः सौ प्रथमैकवचने यदवर्णान्तं तस्य ग्रहणम्। येभ्यः। तेभ्यः। केभ्यः। राट् राजतिः क्विबन्तः। राजा। परमराजः। अङ् अञ्चतिः क्विबन्तः, तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्, यत्र अस्य नलोपो न अस्ति तत्र प्रतिषेधो यथा स्यात्। नाञ्चेः पूजायाम् ६।४।६०। इति प्रतिषिध्यते नलोपः। प्राञ्चा। प्राङ्भ्याम्। नलोपविषये तु भवत्येव विभक्तेरुदात्तत्वम्। प्राचा। प्राचे। प्राग्भ्याम्। क्रुङ् क्विन्नन्त एव क्रुञ्चा। परमक्रुञ्चा। कृत् करोति कृतिर् वा क्विबन्तः। कृता। परमकृता।

न्यासः

न गो�आन्साववर्णराडङ्क्रुङ्कृद्भ्यः। , ६।१।१७६

"सौ" इति। प्रथमैकवचनस्य सुशब्दस्य ग्रहणं वा स्यात्()? सप्तमी बहुवचनस्य वा? तत्र यदि सप्तमीबहुवचनस्य ग्रहणं स्यात्(), केभ्यः, तेभ्य इत्यत्र न स्यात्(), किंतच्छब्दयोः सप्तमीबहुवचने परतो नावर्णान्तत्वमुपपद्यते; कृतेऽपि त्यादाद्यत्वे "बहुवचने झल्येत्? ७।३।१०३ इत्येत्वविधानात्()। प्रथमैकवचनस्य तु ग्रहणे सत्यत्रापि भवति। तस्मादसप्तम्यां एव ग्रहणं युक्तमिति मत्वाऽऽह--"प्रथमैकवचने यदवर्णान्तम्()" इति। अनन्तरमिह प्रतिषेध्यं न भवतीति सर्वस्य षाष्ठिकस्वरस्य प्रतिषेधोऽयं विज्ञायत इतत्याह--"इत्येतेभ्यो यदुक्तं तन्न भवति" इति। शोभना गावोऽस्येति सुगुः, "गोस्त्रियोः" १।२।४८ इत्यादिना ह्रस्वः, "नञ्सुभ्याम्()" ६।२।१७१ इत्युत्तरपदस्यान्तोदात्तत्वम्()। "शुना" इति "()आयुवमघोनामतद्धिते" ६।४।१३३ इति सम्प्रसारणम्()। "पूर्ववत्? प्राप्तिः" इति। शुना, ()आभ्यामित्यत्र "सावेकाचः" ६।१।१६२ इत्यादिना प्राप्तिः। "परमशुना" इति। अत्राति "अन्तोदात्तादुत्तरपदात्()" ६।१।१६३ इत्यन्तोदात्तत्वं तु समासस्वरेण। "राजा, परमराजः" इति। अत्रापि पूर्ववत्प्राप्तिः। "अञ्चतिः क्विन्नन्तः" इति। यद्येवम्(), तर्हि तत्र नकारलोपेन न भवितव्यं तस्यैव सनकारस्य ग्रहणं कत्र्तव्यम्()। किमर्थं सनकारस्य ग्रहणम्()? इत्याह--"तस्य" इत्यादि। एतदपि किमर्थम्()? इत्याह--"यत्रास्य" इत्यादि। ननु च सर्वत्रैव लोपेन भवितव्यम्(), तत्? कथं नलोपस्याभावः इत्याह--"नाञ्चेः" इत्यादि। "प्राञ्चा" इति। पूर्ववत्? प्रापतिः। प्राञ्चतीति क्विन्()। "प्राचा" इति। पूर्ववल्लोपदीर्घत्वे। "क्रुञ्चा" इति। "क्रुच क्रुञ्च कौटिल्याल्पीभावयोः" [ कुत्व क्रुच्च कौटिल्याल्पीभावयोः--धा।पा।] (धा।पा।१८५,१८६), क्विन्? क्रुञ्चेति निपातनान्नलोपाभावः। "परमक्रुञ्चा" इति। समासस्वरेणान्तोदात्तत्वम्()। "परमकृता" इति। अत्रापि। "कृतिर्वा" इति। "कृती छेदने" (धा।पा।१४३५) इत्येषः॥

---

सूत्रम्

काशिका-वृत्तिः

दिवो झल् ६।१।१८३

दिवः परा झलादिर् विभक्तिः न उदात्ता भवति। द्युभ्याम्। द्युभिः। सावेकाचः ६।१।१६२ इति ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ६।१।१६५ इति वा प्राप्तिः प्रतिषिध्यते। झलि इति किम्? दिवा।

न्यासः

दिवो झल्?। , ६।१।१७७

---

सूत्रम्

काशिका-वृत्तिः

नृ च अन्यतरस्याम् ६।१।१८४

नृ इत्येतस्मात् परा झलादिर् विभक्तिः अन्यतरस्यां न उदात्ता भवति। नृभ्याम्। नृभिः। नृभ्यः। नृषु झलित्येव न्रा। न्रे।

न्यासः

नृ चान्यतरस्याम्?। , ६।१।१७८

नृशब्दात्? "सावेकाचः" ६।१।१६२ इति, "न गो()आन्सावर्ण"६।१।१७६ इति नित्ये प्रतिषेधे च प्राप्ते विभाषेयमारभ्यते॥

---

सूत्रम्

काशिका-वृत्तिः

तित् स्वरितम् ६।१।१८५

तित् स्वरितं भवति। सन्नन्ताद् यत् चिकीर्ष्यम्। जिहीर्ष्यम्। ऋहलोर् ण्यत् ३।१।१२४ कार्यम्। हार्यम्। प्रत्ययाद्युदात्तस्य अपवादः।

न्यासः

तित्स्वरितम्?। , ६।१।१७९

"चिकीष्र्यम्(), जिहीष्र्यम्()" इति, "न गो()आन्सावर्ण" ६।१।१७६ इति नित्ये प्रतिषेधे च प्राप्ते विभाषेयमारभ्यते॥

---

सूत्रम्

काशिका-वृत्तिः

तास्यनुदात्तेन्ङिददुपदेशाल् लसार्वधातुकम् अनुदात्तम् अह्न्विङोः ६।१।१८६

तासेरनुदात्तेतो ङितो ऽकारान्तोपदेशाच् च शब्दात् परं लसार्वधातुकम् अनुदात्तं च भवति ह्नुङिङित्येताभ्यां परं वर्जयित्वा। तासेस्तावत् कर्ता, कर्तारौ, कर्तारः। प्रत्ययस्वरापवादो ऽयम्। अनुदात्तेतः आस आस्ते। वस वस्ते। ङित् षूङ् सूते। शीङ् शेते। अदुपदेशात् तुदतः। नुदतः। पचतः। पठतः। अनुबन्धस्य अनैकान्तिकत्वादकारान्तोपदेश एव शप्। पचमानः। यजमानः। यद्यत्र मुककारमात्रस्य स्यात् तदा लसार्वधातुकम् अदुपदेशादनन्तरम् इति सिद्धो निघातः। अथाकारान्तस्य अङ्गस्य, तथा अपि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वातसिद्धः इति सिद्धम्। चित्स्वरो ऽप्यनेन लसार्वधातुकानुदात्तत्वेन परत्वाद् बाध्यते। तास्यादिभ्यः इति किम्? चिनुतः। चिन्वन्ति। ङिदयं श्नुः पूर्वस्य कार्यं प्रति न तु परस्य। उपदेशग्रहणं किम्? इह च यथा स्यात्, पचावः, पचामः इति। इह च मा भूत्, हतो, हथः इति। लग्रहणं किम्? कतीहपचमानाः। सार्वधातुकम् इति किम्? शिश्ये, शिश्याते, शिशियरे। अह्न्विङोः इति किम्? ह्नुते। यदधीते।

न्यासः

तास्यनुदात्तेन्ङिददुपदेशाल्लसर्वधातुकमनुदात्तमहन्विङोः। , ६।१।१८०

तासिप्रभृतीनां समाहारद्वन्द्वेन निर्देशः। "अद्रुपदेशात्()" इति। उपदिश्यत इत्युपदेशः, शास्त्रवाक्येषु खिलपाठे च यः प्रथममुच्चार्यते स इत्यर्थः। अच्चासावुपदेशश्चेत्यदुपदेशः। कर्मसाधनस्योपदेशशब्दस्याश्रयणम्(), भावसाधनस्य वा, नानेन सामानाधिकरण्यानुपपत्तेः। "लसार्वधातुकम्()" इति। षष्ठीसमासः। "अदुपदेशात्()" इति। पूर्ववत्? कर्मसाधनेनोपदेशशब्देन कर्मधारयः। वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतित्यकारन्तोपदेशादित्यर्थः। "कत्र्ता" इति। करोतेर्लुट्(), आत्मनेपदपरथमपुरुषः, तस्य डारौरसः। एकवचने टेर्लोपः। द्विवचनबहुवचनयोः "रि च" ७।४।५१ इति

सकारस्य। "आस्ते" इत्येवमादिषु "शेते" इत्येवंपर्यन्तेष्वदादित्वाच्छपो लुक्()। "वस्ते" इति। "वस आच्छादने" (धा।पा।१०२३)। "सूते" इति। "षूङ्? प्राणिगर्भविमोचने" (धा।पा।१०३१)। "शेते" इति। शीङः सार्वधातुके गुणः" ७।४।२१ इति गुणः। "तुदतः नुदतः" इति। तसन्ते एते। एवं "पचतः, पठतः" इत्येते अपि। ननु च व्यञ्जनान्तोऽयमुपदेशे शप्(), नकारान्तः, तत्? कथमिहानुदात्तत्वं भवति? इत्याह--"अनुबन्धस्य" इत्यादि। एकान्तः=एकदेशः; नैकान्तोऽनेकान्तः, तद्ग्रहणेन गृह्नत इति यावत्(), अनेकान्तस्य भावोऽनेकान्तत्वम्()। ततो हेतोरकारान्तोपदेश एव शप्(), न व्यञ्जनान्तः। तेन पचते--इत्यादावनुदात्तत्वं भवतीति भावः। अकारान्तत्वं तु शबकारस्य व्यपदेशिवद्भावात्()। "पचमानः, यजमानः" इति। शानच्()। कथं पुनरिहानुदात्तत्वम्(), यावता मुकाऽत्र व्यवधानम्()? इत्याह--"यद्यत्र" इत्यादि। मुगागमोऽयमकारमात्रस्य वा स्यात्()? अकारान्ताङ्गस्य वा? तत्र यद्यकारमात्रस्य तदाऽदुपदेशग्रहणेनैव तस्य ग्रहणमिति लसर्वधातुकमदुपदेशादनन्तरमेव भवति, व्यवधानाभावात्(), न हि स्वावयवो व्यवधायको भवति। तेनान्तरङ्गत्वात्? सिद्धो निघातः। "अथ" इत्यादिना द्वितीये पक्षे निधातस्यासिद्धत्वात्? प्रतिपादयति--"तथापि" इति। एवमपीत्यर्थः। लसर्वधातुकस्येत्यस्य सिद्धो निघात इति वक्ष्यमाणेन सम्बन्धः। "असिद्धः" इत्यस्यापि मुगित्यनेन प्रकृतेन। इतिकरणो हेतौ। तदयमर्थः--यस्माल्लसार्वधातुकानुदात्ते बहिरङ्गत्वान्म#उगसिद्धः, तस्मादेवमपि सार्वधातुकस्यानुदात्तत्वम्()। बहिरङ्गत्वं तु मुको बह्वपेक्षत्वात्()। स ह्रकारान्तविशिष्टमङ्गमाश्रयति, आनञ्च प्रत्ययविशेषम्()। अङ्गावयवमदुपदेशं लसार्वधातुकामात्रं निघातः। तस्मादसावन्तरङ्गः। स्वरविधित्वाच्च, उकग्तं हि स्वरविधेर्भाव्येऽन्तरहगत्त्वम्()। ननु चाद्ये पक्षे मुकि कृते निघातो न सिध्यति, अदुपदेशादिति तपरकरणात्(), मुकि च कृते कालस्यातिरिच्यमानत्वात्()? नैष दोषः; यद्यवमपि कृतेऽर्धमात्राधिका भवति, तथाप्युपदेशग्रहणात्? सिध्यत्येव, उपदेशे मात्रिकस्यैवोच्चारणात्()। "चित्स्वरोऽप्यनेन" इत्यादि। चित्स्वरस्यावकाशः--"चलनशब्दार्थादकर्मकाद्युच्()" ३।२।१४८ चलनम्(), चोपनमिति, तास्यादिभ्योऽनुदात्तस्यावकाशः--आस्ते, शेत इति; इहोभयं प्राप्नोति--पचमानो यजमान इति परत्वाल्लसार्वधातुकानुदात्तत्वमेव चित्स्वरं बाधित्वा प्रवत्र्तते। "चिनुतः, चिन्वन्ति" इति। नु "सार्वधातुकमपित्()" १।२।४ इति श्नुरपि ङिदेव, तत्कथमिदं प्रत्युदाहरणमुपपद्यते? इत्याह--"ङिदयम्()" इत्यादि। "सार्वधातुकमपित्()" १।२।४ इत्यनेन पूर्वस्य कार्यमतिदिश्यते, न परस्य। तथा चोक्तम्()--सिद्धं तु पूर्वस्य कार्यातिदेशादिति। तस्मात्? पूर्वस्य कार्यं प्रति ङित्वं भवति, न तु परस्येत किमत्र नोपपद्यते। "इह च" इत्यादि। पचावः पचामः इत्यत्र हि "अतो दीर्घो यञि" (७।३।१०१) इति दीर्घत्वे कृते न स्यात्? असत्युपदेशग्रहणे। त()स्मस्तु सति शबकारोऽपि मात्रिक एवोपदिष्ट इति यद्यप्युत्तरकाल दीर्घत्वं भवति तथापि निघातो न भवतीति। "इह च मा भूदिति--हतः; हथ" इति। अत्र "अनुदात्तोपदेश" ६।४।३७ इत्यादिनाऽनुनासिकलोपे सत्युपदेशात्परं लसार्वधातुकं भवति, तत्रासत्युपदेशग्रहण इहापि स्यात्()। अस्मिंस्तु सति न भवति, न हि हन्तिरवर्णान्त उपदिश्यते। किं तर्हि? व्यञ्जनान्तः। "पचमानाः" इति। "ताच्छील्यवयोवचनशक्तिषु चानश्()" ३।२।१२९ न च स लादेशः, अपि तु प्रत्ययः। लसर्वधातुकत्वं त्वस्य न विद्यते। "शिश्ये" इति। शीङो ह्यात्मनेपदे रूपम्(), "एरनेकाचः" ६।४।८२ इत्यादिना यणादेशः। "लिट्? च" ३।४।११५ इत्यार्धधातुकमेतत्()। "शिश्याते" इति। लिट()आतामि रूपम्()। नानुदात्तत्वम्(), असार्वधातुकसंज्ञाविधानात्()। "ह्यु ते, यदधीते" इति। "ह्यु ङ्? अपनयने" (धा।पा।१०८२) "इङ्? अध्ययने" (धा।पा।१०४६) यच्छब्दस्य प्रयोगः "निपातैर्यैद्यदि" ८।१।३० इति निघातप्रतिषेधो यथा स्यात्()॥

---

सूत्रम्

काशिका-वृत्तिः

आदिः सिचो ऽन्यतरस्याम् ६।१।१८७

उदात्तः इति वर्तते। सिजन्तस्य अन्यतरस्याम् आदिरुदात्तो भवति। मा हि कार्ष्टाम्, मा हि कार्ष्टाम्। एको ऽत्र आद्युदात्तः,

अपरो ऽन्तोदात्तः। मा हि लाविष्टाम्, मा हि लाविष्टाम्। एको ऽत्र आद्युदात्तः, अपरो मद्योदात्तः।
सिचश्चित्करणादागमानुदात्तत्वं हि वाध्यते। सिच आद्युदात्तत्वे ऽनिटः पितः पक्षे उदात्तत्वं वक्तव्यम्। मा हि कर्षम्, मा हि कार्षम्। अनिटः इति किम्? मा हि लाविसम्। मध्योदात्त एव आद्युदात्ताभावपक्षे भवति।

न्यासः

आदिः सिचोऽन्यतरस्याम्?। , ६।१।१८१

"मा हि कार्ष्ठाम्()" इति। हेः, माङश्च प्रयोगो प्रयोजनं पूर्वमेवोक्तम्()। "अपरोऽन्तोदात्तः" इति। प्रत्ययस्वरेण। "अपरो मध्योदात्तः" इति। प्रत्ययस्वरेणैव। ननु च वलादिरिह प्रत्ययः, इट्? चागमः, आगमानां चानुदात्तत्वं भवति, तस्मादिहाप्यन्तोदात्तेनैव भवितव्यम्(), तत्? कथं मध्योदात्तत्वम्()? इत्याह--"सिचश्चित्कारणात्()" इत्यादि। सिचश्चित्करणेनानुदात्तत्वे बाधिते चित्स्वर एव भवतीति युक्तं मध्योदात्तत्वम्()। "सिच आद्युदात्त" इत्यादि। सिच आद्युदात्तत्वे कत्र्तव्येऽनिटो विद्यमानो सिचः परो यश्चित्प्रत्ययस्तस्योदात्तत्वं वक्तव्यम्()। "मा हि कार्षम्()" इति। पक्षे सर्वानुदात्तं पदं मा भूदित्येवमर्थमिदम्()। पक्षे तूदात्तत्वेन मुक्ते सर्वानुदात्तमेव पदं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

स्वपादिहिंसाम् अच्यनिटि ६।१।१८८

लसार्वधातुकग्रहणं यदनुवर्तते तदचि अनिटि इति सम्बन्धादिह सप्तम्यन्तम् उपजायते स्वपादिरावृत्करणात्। स्वपादीनां हिंसेश्च अजादवनिटि लसार्वधातुके परतो ऽन्यतरस्याम् आदिरुदात्तो भवति। स्वपन्ति, स्वपन्ति। श्वसन्ति, श्वसन्ति। हिंसेः खल्वपि हिंसन्ति, हिंसन्ति। प्रत्ययस्वरेण पक्षे मध्योदात्तः। अचि इति किम्? स्वप्यात्। हिंस्यात्। अनिटि इति किम्? स्वपितः। श्वसितः। ङित्यजादावयं विधिरिष्यते। इह न भवति, स्वपानि, हिनसानि।

न्यासः

स्वपादिहिंसामच्यनिटि। , ६।१।१८२

"सार्वधातुकग्रहणम्()" इत्यादि। "अचि" इत्येतत्? सप्तम्यन्तं लसार्वधातुकस्य समानाधिकरणं विशषणम्(), न च प्रथमान्तस्य सप्तम्यन्तेन सामानाधिकरण्यमुपपद्यते। तस्मात्? "अचि" इत्यनेन सम्बन्धाद्विविशेषणविशेष्यलक्षणाल्लसार्वधातुकग्रहणादित्याह--"सप्तम्यन्तमुपजायते। "स्वपादिरा वृत्करणात्()" इति। यद्यप्येतदेवम्(), तथापि "ञिष्वप्? शये" (धा।पा।१०६८) "()आस प्राणने" (धा।पा।१०६९), "अन च" (धा।पा।१०७०) इत्येत एव ये, ते इह स्वपादिग्रहणेन गृह्न्ते। परेऽपि ये जक्षित्यादयोऽभ्यस्तसंज्ञाः, तेषु परत्वात्? "अभ्यस्तानामादिः" ६।१।१८३ इत्यनेन नित्यमाद्युदात्तत्वं भवति। "हिंसन्ति" इति। "तृह हिसि हिंसायाम्()" (धा।पा।१४५५,१४५६), रुधादित्वाच्? श्नम्(), "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः "श्नान्नलोपः" ६।४।२३ इति परस्य नकारस्य। "स्वप्यात्()" इति। लिङ्? अदादित्वाच्छपो लुक्()। "स्वपितः" इति। "रुदादिभ्यः सार्वधातुके" ७।२।७६ इतीट्()॥

---

सूत्रम्

काशिका-वृत्तिः

अभ्यस्तानाम् आदिः ६।१।१८९

अभ्यस्तानाम् अजादावनिति लसार्वधातुके परतः आदिरुदात्तो भवति। ददति। ददतु। अधति। दधतु। जक्षति। जक्षतु।

जाग्रति। जाग्रतु। अचि इत्येव, दद्यात्। अनिटि इत्येव, जक्षितः। आदिः इति वर्तमाने पुनरादिग्रहणं नित्यार्थम्।
न्यासः
अभ्यस्तानामादिः। , ६।१।१८३

प्रत्ययस्वरेण प्राप्ते तदपवादोऽभ्यस्तानां धातूनामादेर्विधीयते। दधतीत्यादौ "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपः, "उभे अभ्यस्तम्()" ६।१।५ इत्यभ्यस्तसंज्ञा। "जक्षति, जाग्रति" इति। अत्रापि "जक्षित्यादयः षट्()" ६।१।६ इति सर्वत्र "अदभ्यस्तात्()" ७।१।४ इति झेरदादेशः। "जक्षितः" इति। पूर्ववदिट्()। अथादिग्रहणं किमर्थम्(), यावता "आदिः सिचोन्यतरस्याम्()" (६।१।१८७) इत्यत आदिरित्यनुवत्र्तते? इत्यत आह--"आदिरिति वत्र्तमाने इत्यादि। पूर्वकं ह्यादिग्रहणमन्यतरस्यांग्रहणेन सम्बद्धम्(), अतस्तनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्()। तस्मान्नित्यर्थं पुनरादिग्रहणं क्रियते॥

---

सूत्रम्
काशिका-वृत्तिः
अनुदात्ते च ६।१।१९०

अविद्यमानोदात्ते च लसार्वधातुके परतो ऽभ्यस्तानाम् आदिरुदात्तो भवति। अनजाद्यर्थ आरम्भः। ददाति। जहाति। दधाति। जहीते। मिमीते। अनुदात्ते इति बहुव्रीहिनिर्देशो लोपयणादेशार्थः। मा हि स्म दधात्। दधात्यत्र।
न्यासः
अनुदात्ते च। , ६।१।१८४

अनजाद्यर्थमिदम्()। अजादौ त्वनुदात्ते पूर्वणैव सिद्धम्()। "जिहीते, मिमीते" इति। अत्र "तास्यनुदात्तेत्()" ६।१।१८० इत्यादिना लसार्वधातुकस्यानुदात्तत्वम्()। "भृञामित्()" ७।४।७६ इत्यभ्यासस्येत्त्वम्()। "अनुदात्ते" इति शास्त्रीयस्यानुदात्तस्यायं निर्देश इति कस्यचिद्भ्रान्तिः स्यात्? अतस्तन्निरासार्थमाह--"अनुदात्त ति बहुव्रीहिनिर्देशः" इति अविद्यमानमुदात्तमस्मिन्नित्यनुदात्तम्()। किमर्थं पुनर्बहुव्रीहिनिर्देशः? इत्याह--"लोपपणादेशार्थः" इति। लोपयणादेशयोः कृतयोरप्याद्युदात्तत्वं यथा स्यात्()। "मा हि स्म दधात्()। दधात्यत्र" इति। स्मशब्दस्य प्रयोगः स्मोत्तरे लङ्? यथा स्यात्()। अत्र यदि शास्त्रीयस्यायं निर्देशः स्यात्(), "इतश्च" ३।४।१०० इतीकारलापे कृते यणादेशे चोदात्तं न स्यात्(), शास्त्रीयस्यानुदात्तस्याभावात्()। बहुव्रीहिनिर्देशे चात्रापि भवति; उदात्तस्येहाविद्यमानत्वात्()॥

---

सूत्रम्
काशिका-वृत्तिः
सर्वस्य सुपि ६।१।१९१

सर्वशब्दस्य सुपि परतः आद्युदात्तो भवति। सर्वः, सर्वौ, सर्वे। सुपि इति किम्? सर्वतरः। सर्वतमः। प्रत्ययलक्षणे ऽप्ययं स्वर इष्यते सर्वस्तोमः इति। सर्वस्वरो ऽनकच्कस्य इति वक्तव्यम्। सर्वकः। चित्स्वरेण अन्तोदात्तो भवति।
न्यासः
सर्वस्य सुपि। , ६।१।१८५

"इष्शीभ्यां वन्? (द।उ।८।१२६) इति प्रकृत्य "सर्वनीधृधरिष्वलष्वशिवपट्()वप्रेष्वा अस्वतन्त्रे" ["सर्वनिधृष्वरिष्वलिष्पशिपद्मस्वपद्वप्रहेष्वा अतन्त्रे"--द।उ।] (द।उ।८।१२७) इति सर्वशब्दोऽन्तोदात्तो निपातितः। तेन

तस्य सुप्याद्युदात्तत्वं विधीयते। अन्तोदात्तत्वनिपातनं तु सर्वस्य विकारः सार्वं इत्यत्र "अनुदात्तादेरञ्()" ४।२।४३ यथा स्यात्()। "प्रत्ययलक्षणेनापि" इत्यादि। कथं पुनरिष्यमाणोऽपि लभ्यते, यावता सर्वस्तोम इत्यत्र "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति लुमता लुप्तम्(), ततश्च "न लुमताङ्गस्य" (१।१।६३) इति प्रत्ययलक्षलस्य प्रतिषेधेन भवितव्यम्()? नैष दोषः; पूर्वसूत्राच्चकारोऽनुवर्त्तते, स च समुच्चयार्थः। तेन प्रतिषेधविषयेऽप्येष स्वरो भविष्यति। "सर्वस्वरोऽनकच्कस्य" इत्यादि। योऽयं सर्वशब्दस्य स्वरो विधीयते स तस्याविद्यमानाकच्कस्य भवतीत्येतदर्थरूप् व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"आदिः सिचोऽन्यतरस्याम्()" ६।१।१८१ इत्यतोऽन्य तरस्यांग्रहणमिह मण्डूकप्लुतिन्यायेनानुत्तते, सा च व्यवस्थितविभाषा, तेनानकच्कस्य भवति॥

---

सूत्रम्

काशिका-वृत्तिः

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ६।१।१९२

भी ह्री भृ हु मद जन धन दरिद्रा जागृ इत्येतेषां अभ्यस्तानां लसार्वधातुके पिति प्रत्ययात् पूर्वम् उदात्तं भवति। बिभेति। जिह्रेति। बिभर्ति। जुहोति। ममत्तु नः परिज्मा। मदेः बहुलं छन्दसि इति विकरणस्य श्लुः। जजनदिन्द्रम्। जन जनने इत्यस्य पञ्चमे लकारे रूपम्। धन धान्ये इत्यस्य पञ्चमे लकारे दधनत्। दरिद्राति। जागर्ति। भ्यादीनाम् इति किम्? ददाति। पिति इति किम्? दरिद्रति।

न्यासः

भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति। , ६।१।१८६

"अनुदात्ते च" (६।१।१९०) इत्याद्युदात्ते प्राप्ते प्रत्ययात्? पूर्वस्य भीह्यप्रभृतीनामुदात्तो विधीयते।

---

सूत्रम्

काशिका-वृत्तिः

लिति ६।१।१९३

लिति प्रत्ययात् पूर्वम् उदात्तं भवति। चिकीर्षकः। जिहीर्षकः। भौरिकिविधम्। भौलिकिविधम्। ऐषुकारिभक्तम्।

न्यासः

लिति। , ६।१।१८७

"लकारेत्संज्ञके" इति। लकार इत्संज्ञको यस्य स तथोक्तः। "चिकीर्षकः" इति। सन्नन्ताण्ण्वुल्()। तत्र "अतो लोपः" ६।४।४८ इत्कारलोपे कृते ण्वुलः पूर्वस्येकारस्योदात्तत्वम्()। "भौरिकविधम्()" इति "भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ" ४।२।५३ इति विधल्प्रत्ययः। भौरिकिर्विषयो देश इति "ऐषुकारिभक्तम्()" ऐषुकारिर्विषयो देश इति। पूर्वसूत्रेणैव भक्तल्प्रत्ययः॥

---

सूत्रम्

काशिका-वृत्तिः

आदिर् णमुल्यन्यतरस्याम् ६।१।१९४

णमुलि परतो ऽन्यतरस्याम् आदिरुदात्तो भवति। लोलूयं लोलूयम्, लोलूयं लोलूयम्। पोपूयं पोपूयम्, पोपूयं पोपूयम्।

आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयंशब्द एकत्राद्युदात्तः, अपरत्र लित्स्वरेण मध्योदात्तः।

न्यासः

आदिर्णमुल्यन्यतरस्याम्?। , ६।१।१८८

लित्स्वरे प्राप्ते णमुलि परत आद्युदात्तत्वं विकल्पेन विधीयते। तेन मुक्ते पक्षे लित्स्वरोऽपि भवत्येव। अनेकाचश्च धातवो विकल्पं प्रयोजयन्तीति। ये त्वेकाचस्तेषां लित्स्वरेणानेन वा विशेषो नास्ति। "लोलुयं लोलूयम्(), "पोपूयम्पोपूयम्()" इति। यदन्ताण्णमुल्(), तस्य "आभीक्ष्णे द्वे भवतः" (वा।८८७) इति द्विर्दचनम्()। "अनुदात्तं च ८।१।३ इत्याम्रेडितस्यानुदात्तत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अचः कर्तृयकि ६।१।१९५

उपदेशे इति वर्तते। अजन्ता ये उपदेशे धातवः तेषां कर्तृयकि अन्यतरस्याम् आदिरुदात्तो भवति। लूयते केदारः स्वयम् एव, लूयते केदारः स्वयम् एव। स्तीर्यते केदारः स्वयम् एव, स्तीर्यते केदरः स्वयम् एव। यदा आद्युदात्तत्वं न भवति तदा लसर्वधातुकनिघाते कृते यक एव स्वरो भवति। जनादीनाम् उपदेशे एवात्वं द्रष्टव्यम्। तत्र अप्ययं स्वर इष्यते। जायते स्वयम् एव। सायते स्वयम् एव। खायते स्वयम् एव। अचः इति किम्? भिद्यते स्वयम् एव। कर्तृग्रहणं किम्? लूयते केदारो देवदत्तेन।

न्यासः

अचः कर्तृयकि। , ६।१।१८९

"कर्तृयकि" इति। सार्वधातुकं कर्तृशब्देनोक्तम्()। अभिधानेऽभिधेयोपचारात्()। तत्र यः कत्तरि यक्? स कर्तृयक्(), "सप्तमी" (२।१।४०) इति योगविभागात्? समासः। "लूयते केदारः स्वयमेव" इति। लुनाति केदारं देवदत्तः, केदारो लवनक्रियया व्याप्तुमिष्टतमत्वात्? कर्म। यदा तु सौकार्यात्? तस्यैव कर्तृत्वं विवक्ष्यते तदाऽसौ कत्ता भवति; "कर्मवत्? कर्मणा तुल्यक्रियः" (३।१।८७) इत्यतिदेशात्? यगात्मनेपदञ्च। "स्तीर्यते" इति। "स्तृ आच्छादने" (धा।पा।१२५२) [स्तृञ्? आचछादने--धा।पा।] "ॠत इद्धातोः" ७।१।१००, "हलि च" ८।२।७७ इती दीर्घः। "लसार्वधातुकनिघाते कृते" इति। "अदुपदेशभक्तयक एव स्वरो भवति" इति। प्रत्ययलक्षणः। अथेह कथं भवति--जायते स्वयमेव, सायते स्वयमेव, खायते स्वयमेवेति, यावता "ये विभाषा" ६।४।४३ इत्यात्वे कृते सत्युत्तरकालं जनादयोऽजन्ता भवन्ति, न तूपदेश? इत्याह--"जनादनाम्()" इत्यादि। जनादीनां ह्यात्वविधावनुदात्तोपदेशग्रहणमनुवत्र्तते। तेन तेषामुपदेश एवात्त्वं द्रष्टव्यम्()। "जायते स्वयमेव" इति। कथं पुनरकर्मकत्र्ता, यावता जनिरकर्मकः? अन्तर्भावितण्यर्थ सकर्मको भवतीत्यदोषः। "लूयते केदारो देवदत्तेन" इति। अत्र शुद्धकर्मण्यात्मनेपदविधानात्? कर्तृयग्न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

थलि च सेटीडन्तो वा ६।१।१९६

सेटि थलि इट् वा उदात्तो भवति अन्तो वा आदिर् वा अन्यतरस्याम्। लुलविथ, लुलविथ, लुलविथ। यदा न एते त्रयः स्वराः , तदा लिति प्रत्ययात् पूर्वम् उदात्तं भवति। तेन एते चत्वारः स्वरा पर्यायेण भवन्ति। सेटि इति किम्? ययाथ।

लिति प्रत्ययात् पूर्वम् उदात्तम् इत्ययम् एव स्वरो भवति।

न्यासः

थलि च सेटीडन्तो वा। , ६।१।१९०

"अन्यतरस्याम्()" ६।१।१८८ इत्यनुवर्त्तमाने वाग्रहणं कार्यिणो विकल्पार्थम्()। अन्यतरस्यांग्रहणेन कार्यं विकल्प्यते वाग्रहणेन तु कार्यिणः। तेनेडादयः पर्यायेण कार्य प्रतिपद्यन्ते। "लुलविथ" इति। क्रादिनियमादिट्()। "ययाथ" इति। "अचस्तास्वत्थल्यनिटो नित्यम्()" ७।२।६१ इतीटो वा प्रतिषेधः॥

---

सूत्रम्

काशिका-वृत्तिः

ञ्नित्यादिर् नित्यम् ६।१।१९७

ञिति निति च नित्यम् आदिरुदात्तो भवति। गर्गादिभ्यो यञ् गार्ग्यः। वात्स्यः। वासुदेवार्जुनाभ्यां वुन् ४।३।९८ वासुदेवकः। अर्जुनकः। प्रत्ययस्वरापवादो ऽयं योगः। प्रत्ययलक्षणम् अत्र न इष्यते, तेन गर्गाः, बिदाः, चञ्चाः इत्यत्र यञि कनि च लुप्ते न भवति।

न्यासः

ञ्नित्यादिर्नित्यम्?। , ६।१।१९१

"वासुदेवकः" इति। वासुदेवे भक्तिरस्येत्यर्थे वुन्()। अथेह गर्गा, विदा इति "यञञोश्च" २।४।६४ इति बहुषु लुकि कृते, चञ्चेव चञ्चेत्यत्र च "इवे प्रतिकृतौ" (५।३।९६) इत्युत्पन्नस्य कनः "लुम्? मनुष्ये" ५।२।९७ इति लुपि कृते कस्मान्न भवति, लुप्तेऽपि प्रत्यये "प्रत्ययलोपे प्रत्ययलक्षणम्? (१।१।६२) इत्यस्ति प्राप्ति? इत्यत आह--"प्रत्ययलक्षणमत्र नेष्यते" इति। तत्? कथं पुनरिष्यमाणो न भवति? "संज्ञायामुपमानम्()" ६।१।१९८ इत्यत्र वक्ष्यमाणाज्ज्ञापकात्()। अथ वा "न लुमताङ्गस्य" १।१।६२ इत्यनेन यन्नाम किञ्चिदङ्गस्य कार्यमङ्गाधिकारे विहितमेव, तेन प्रतिषेधादिह प्रत्ययलक्षणं स्वीकार्यं न भविष्यति। एवमुत्तरात्रापि प्रत्ययलक्षणाभावो वेदितव्यः। "यञि कनि च लुप्ते" इति। चकाराद्()विदाधञि च॥

---

सूत्रम्

काशिका-वृत्तिः

आमन्त्रितस्य च ६।१।१९८

आमन्त्रितस्य आदिरुदात्तो भवति। देवदत्त, देवदत्तौ, देवदत्ताः। अत्र कारकाद् दत्तश्रुतयोरेव आशिषि ६।२।१४७। इति प्राप्तिर् बाध्यते। लुमता ऽपि लुप्ते प्रत्ययलक्षणम् अत्र इष्यते, सर्पिरागच्छ, सप्तागच्छ इति।

न्यासः

आमन्त्रितस्य च। , ६।१।१९२

"देवदत्त" इति। ददातेः "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इत्याशिवि क्तः, "वो वद्? घोः" ७।४।४६ इति धातोर्ददादेशः। दत्तशब्दस्य देवशब्देन "कर्त्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। "सपिरागच्छ" इति। "स्वमोर्नपुंसकात्()" ७।१।२३ इति विभक्तेर्लुक्()। "सप्तागच्छत" इति। अत्रापि "षड्भ्यो लुक्()" ७।१।२२ इति च॥

---

सूत्रम्

काशिका-वृत्तिः

पथिमथोः सर्वनामस्थाने ६।१।१९९

पथिमथिशब्दावौणादिकाविनिप्रत्ययान्तौ प्रत्ययस्वरेण अन्तोदात्तौ, तयोः सर्वनामस्थाने परतः आदिरुदात्तो भवति। पन्थाः, पन्थानौ, पन्थानः। मन्थाः, मन्थानौ, मन्थानः। सर्वनामस्थाने इति किम्? पथः पश्य। मथः पश्य। उदात्तनिवृत्तिस्वरेण अन्तोदात्तो भवति। प्रत्ययलक्षणम् अत्र अपि न इष्यते। पथिप्रियः इत्यत्र पूर्वपदप्रकृतिस्वरेण अन्तोदात्तः पथिशब्दः।

न्यासः

पथिमथोः सर्वनामस्थाने। , ६।१।१९३

"पथिमथिशब्दो" इत्यादि। "गमेरिनिः" (द।उ।६।५७) इत्यत इनिप्रत्यये वत्र्तमाने "मन्थः" (द।उ।६।६२) इतीनिप्रत्ययः, अतो मथिञ्शब्दो व्युत्पाद्यते, "परमे कित्()" (द।उ।६।६१) इत्यतः किद्ग्रहणानुवृत्तेर्मनथेरनुनासिकलोपः। "पतस्थ च" (द।उ।६।६३) इति पथिञ्शब्दोऽपीनित्प्रत्ययान्त इति तेनेतौ प्रत्ययस्वरेणान्तोदात्तौ। "पन्थाः" इति। "पथिमथ्यृभुक्षामात्()" ७।१।८७ इत्यकरान्तादेशः। "इतोऽत्? सर्वनामस्थाने" ७।१।८६ इतीकारस्यात्त्वम्(), "थो न्थः" ७।१।८७ इति थस्य न्थादेशः। "पथः पश्य" इति। "भस्य टेर्लोपः" ७।१।८८ इति टिलोपः। तत्र कृते "अनुदात्तस्य च यत्रोदात्त लोपः" ६।१।१५५ इत्यन्तोदात्तत्वम्()। "पथिप्रियः" इति। पन्थाः प्रियो यस्येति बहुव्रीहिः। "वा प्रियस्य" (वा।११४) इति प्रियशब्दस्य पक्षे परनिपातः॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तश् च तवै युगपत् ६।१।२००

तवैप्रत्ययान्तस्य अन्तः, चशब्दादादिश्च युगपदुदात्तौ भवतः। कर्तवै। हर्तवै। प्रत्ययाद्युदात्तत्वापवादः। युगपद्ग्रहणं पर्यायनिवृत्तयर्थम्। एकवर्जम् इति वचनाद् यौगपद्यं न स्यात्।

न्यासः

अन्तश्चे तवै युगपत्?। , ६।१।१९४

"कत्र्तवा" ["कत्र्तवै" इति काशिका, पदमञ्जरी च] इति। "कृत्यार्थे तवैकेन्केन्यतावनः" ३।४।१४ इति तवैप्रत्ययः। किं पुनः कारणं पर्यायनिवृत्तये यत्नः क्रियते? इत्याह--"एकवर्जम्()" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

क्षयो निवासे ६।१।२०१

क्षयशदो निवासे ऽभिधेये आद्युदात्तो भवति। क्षियन्ति निवसन्ति अस्मिनिति क्षयः। पुंसि संज्ञायां घः प्रयेण ३।३।११८ इति घप्रत्ययान्तस्य प्रत्ययस्वरः प्राप्तः। क्षये जागृहि प्रप्श्यन्। निवासे इति किम्? क्षयो वर्तते दस्यूनाम्। एरच् ३।३।५६ इत्ययम् अजन्तः।

न्यासः

क्षयो निवासे। , ६।१।१९५

"क्षयः" इति। "क्षि निवासगत्योः" (धा।पा।१४०७) इत्यस्येदं रूपमिति॥

---

सूत्रम्

काशिका-वृत्तिः

जयः करणम् ६।१।२०२

जयशब्दः करणवाची आद्युदात्तो भवति। जयन्ति तेन इति जयः। पुंसि संज्ञायां घः प्रायेण 3।3।118 इति घः, तस्य प्रत्ययस्वरः प्राप्तः। जयो ऽश्वः। करणम् इति किम्? जयो वर्तते ब्राह्मणानाम्। अत्र अपि एरच् 3।3।56 इत्ययम् अजन्तः।

न्यासः

जयः करणम्?। , ६।१।१९६

"जयः" इति। "जि ज्रि अभिभवे" (धा।पा।९४६,९४७) इत्यस्य जयते रूपमेतत्()। "जयो ब्राआह्नणानाम्()" इति। भावे "एरच्()" 3।3।56॥

---

सूत्रम्

काशिका-वृत्तिः

वृषाऽदीनां च ६।१।२०३

वृषः इत्येवम् आदीनाम् आदिरुदात्तो भवति। वृषः। जनः। ज्वरः। ग्रहः। हयः। गयः। एते सर्वे पचाद्यच्प्रत्ययान्ताः। गयः इत्यत्र गायतेर् निपातनादेत्वम्। नयः। तयः। अयः। वेदः। अंशः। अशः। दवः। एते ऽपि तथा एव अच्प्रत्ययान्ताः। सूदः। इगुपधातिति कप्रत्ययान्तः। गुहा। भिदादिरङ्प्रत्ययान्तः। शमरणौ संज्ञायां सम्मतौ भावकर्मणोः। शमो भावे। रणः करमणि। अजन्तावेतौ निपातनाद् भावकर्मणोः भवतः। मन्त्रः पचाद्यजन्तः। शान्तिः इति क्तिजन्तः। कामः। यामः। घञन्तावेतौ। आरा। धारा। कारा। भिदादयः। वहः। गोचरादिषु घप्रत्ययान्तः। कल्पः। अजन्तः। पादः। घञन्तः। तत्र क्वचित् प्रत्ययस्वरः प्राप्तः, क्वचित् कर्षात्वतो घञो ऽन्त उदात्तः 6।1।153 इति। वृषादिराकृतिगणः। अविहितम् आद्युदात्तत्वं वृषादिषु द्रष्टव्यम्।

न्यासः

वृषादीनां च। , ६।१।१९७

"वृषः, जनः, ज्वरः, ग्रहः, हयः, गयः" इति। "वृषु मृषु सेचने" (धा।पा।७०६,७०७) "जनी प्रादुर्भावे" (धा।पा।११४९) "ज्वर रोगे" (धा।पा।७७६) "ग्रह उपादाने" (धा।पा।१५३३) "हि गतौ" (धा।पा।१२५७) "कै गै" शब्दे" (धा।पा।९१६,९१७) "सर्वे एतेऽच्प्रतययान्ताः" इति। पचादित्वात्()। एतेन चित्स्वरे प्राप्ते पाठ एषामिति दर्शयति। "नयः, तयः, अयः, अंशः, वेदः, सूदः, अशः" इति। "णीञ्? प्रापणे" (धा।पा।९०१) "तायृ सन्तानपालनयोः" (धा।पा।४८९) क्वचित्? "तयः" इत्यस्य स्थाने "चयः" इति पठ()ते, स चिनोतेद्र्रष्टव्यः। "इण्? गतौ" (धा।पा।१०४५)। अथ वा अय वय मय चय (धा।पा।४७४)-४७८) इत्यादेः। "अंश समाधाने" (धा।पा।१९१८), "विद ज्ञाने" "(धा।पा।१०६४) "षूद रक्षणे" (धा।पा।१७१७) "अश भोजने" (धा।पा।१५२३)। "सूदः--इगुपधेति कप्रत्ययान्तः" इति। "एतेऽपि" इति यदुक्तम्(), तस्यायमपवादः। "गुह" इति। "गुहू संवरणे" (धा।पा।८९६)। "शमरणौ संज्ञायाम्()" इति। "शम्? उपशमे" (धा।पा।१२०१) "अण रण" (धा।पा।४४४,४४५) इति शब्दार्थः। संज्ञाया अन्यत्रान्तोदात्तादेव भवतः। "सम्मतौ भावकर्मणोः" इति। शमरणादिति वत्र्तते। सम्मतावर्थे विवक्षिते शमरणौ भावकर्मणोर्यथाक्रममाद्युदात्तौ भवतः। "मन्त्रः" इति। "मत्रि गुप्तभाषणे" (धा।पा।१६७९)

केचित्तु--"सम्मतौ भावकर्मणोर्मणोर्मन्त्रः" इति पठन्ति। तस्य मन्त्रे विषयीभूत इत्येषोऽर्थो वेदितव्यः। "शान्तिः" इति। "शमु उपशमे" (धा।पा।१२०१) "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इति क्तिच्()। "कामः, यामः" इति। "कमु कान्तौ" (धा।पा।४४३) "यम उपरमे" (धा।पा९८४)। "घञन्तौ" इति। "कर्षात्वतो घञोऽन्त उदात्तः" (६।१।१५९) इत्येतस्मिन्? प्राप्तेऽस्य पाठः। "कल्पः" इति। "कृपू सामर्थ्ये" (धा।पा।७६२)। "पादः" इति। "पद गतौ" (धा।पा।११६९)। "वृषादिराकृतिगणः" इति। तदेव चाकृतिगणत्वं ज्ञापयितुं चकारः कृतः॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् उपमानम् ६।१।२०४

उपमानशब्दः संज्ञायाम् आद्युदात्तो भवति। चञ्चा। वध्रिका। खरकुटी। दासी। उपमानशब्दा एते उपमेयस्य संज्ञाः। तत्र इवे प्रतिकृतौ ५।३।९६ इति यः कन्, तस्य लुम्मनुष्ये ५।३।९८ इति लुप्। यद्येवं किम् अर्थम् इदम् उच्यते प्रत्ययलक्षणेन सिद्धम् आद्युदात्तत्वम्? एतदेव ज्ञापयति क्वचिदिह स्वरविधौ प्रत्ययलक्षणं न भवति इति। तथा च पूर्वत्र उदाहृतम्। संज्ञायाम् इति किम्? अग्निर् माणवकः। उपमानम् इति किम्? देवदत्तः।

न्यासः

संज्ञायामुपमानम्?।, ६।१।१९८

"यद्येवम्()" इति। यदि कनो लुबित्यर्थः, कनोऽपु लुपि सत्यपि प्रत्ययलक्षणेनैव सिद्धमेषां हि नित्स्वरेणाद्युदात्तत्वम्(), तदपार्थकमित्यभिप्रायः। "एतदेव" इत्यादि। यदि हि क्वचित्? स्वरविधौ प्रत्ययलक्षणं स्यात्(), कत्र्तव्यमेवेदं वचनं स्यात्()। प्रत्ययलक्षणेन सिद्धत्वात्(), कृतञ्च। तस्मादेतज्ज्ञापयति--प्रत्ययलक्षणं स्यात्(), कत्र्तव्यमेवेदं वचनं स्यात्()। प्रत्ययलक्षणेन सिद्धत्वात्(), कृतञ्च। तस्मादेतज्ज्ञापयति--प्रत्ययलक्षणमिह स्वरविधौ न भवतीति। क्वचिद्ग्रहणं क्वचित्तु भवतीति प्रदर्शनार्थम्(), तथा हि "सर्वस्य सुपि" ६।१।१८५ इत्यत्रोक्तम्()--प्रत्ययलक्षणेनाप्ययं स्वर इष्यत इति। "तथा च" इत्यादिना ज्ञापनस्य प्रयोजनमाह। "अग्निर्माणवकः" इति। भवत्यग्निशब्द उपमानम्()। तथा ह्यग्निरेवेति गम्यते, नासौ माणवकस्य संज्ञा॥

---

सूत्रम्

काशिका-वृत्तिः

निष्ठा च द्व्यजनात् ६।१।२०५

निष्ठान्तं द्व्यच् संज्ञायां विषये आद्युदात्तं भवति स चेदादिराकारो न भवति। दत्तः। गुप्तः। बुद्धः। प्रत्ययस्वरापवादः। निष्ठा इति किम्? देवः। भीमः। द्व्यचिति किम्? चिन्तितः। रक्षितः। अनातिति किम्? त्रातः। आप्तः। संज्ञायाम् इति किम्? कृतम्। हृतम्।

न्यासः

निष्ठा च द्व्यजनात्?।, ६।१।१९९

"गुप्तः" इति "गुपू रक्षणे" (धा।पा।३९५)। "बुद्धः" इति। "बुध अवगमने" (धा।पा।८५८)। "देवः" इति। देवशब्दः पचाद्यजन्तत्वादन्तोदात्तः। भीमशब्दोऽपि मगन्तत्वात्? प्रत्यस्वरेण। "इषियुधि" (द।उ।७।३१) इत्याद्यधिकृत्य "भियः षुग्वा" (द।उ।७।३५) इति मक्प्रत्ययान्तो व्युत्पाद्यते। "चिन्तितः" इति। "चिति स्मृत्याम्()" (धा।पा।१५३५), चौरादिकः,

"निष्ठायां सेटि" ६।४।५२ इति णिलोपः। "रक्षितः" इति। "रक्ष पालने" (धा।पा।६५८)। "त्रातः, आप्तः" इति। "त्रैङ पालने" (धा।पा।९६५), "आप्लृ व्याप्तौ" (धा।पा।१२६०)॥

---

सूत्रम्

काशिका-वृत्तिः

शुष्कधृष्टौ ६।१।२०६

आदिः उदात्तः इति वर्तते। शुष्क धृष्ट इत्येतावाद्युदात्तौ भवतः। शुष्कः। धृष्टः। असंज्ञार्थ आरम्भः।

न्यासः

शुष्कधृष्टौ।, ६।१।२००

"शुष्कः" इति। "शुष शोषणे" (धा।पा।११८३) "शुषः कः" ८।२।५१ इति क्तस्य कादेशः। "धृष्टः" इति। ञिधृषा प्रागल्भ्ये" (धा।पा।१२६९) ष्टुत्वम्()। कत्वष्टुत्वयोरसिद्धत्वादिह निष्ठान्तत्वं वेदितव्यम्()। "असंज्ञार्थं आरम्भः" इति। संज्ञायां पूर्वेणैव सिद्धत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

आशितः कर्ता ६।१।२०७

आशितशब्दः कर्तृवाचि आद्युदात्तो भवति। आशितो देवदत्तः। अशेरयमाङ्पूर्वादविवक्षिते कर्मणि कर्तरि क्तः। तत्र था ऽथघञ् ६।२।१४३ इति प्राप्तः स्वरो बाध्यते। कर्तरि इति किम्? आशितमन्नम्। आशितं देवदत्तेन। पूर्वत्र कर्मणि क्तः, उत्तरत्र भावे।

न्यासः

आशितः कत्र्ता।, ६।१।२०१

"अशेः" इति। "अश भोजने" (धा।पा।१५२३) इत्यस्मात् कत्र्तरि क्तो निपात्यते। "गत्यर्थाकर्मक" ३।४।७२ इत्यादिना। "पूर्ववत्? कर्मणि क्तः" ["पूर्वत्र"--काशिका] इति। "तयोरेव" ३।४।७० इत्यादिना। "उत्तरत्र भावे" इति। "नपुंसके" "भावे क्तः" ३।३।११४ इति॥

---

सूत्रम्

काशिका-वृत्तिः

रिक्ते विभाषा ६।१।२०८

रिक्तशब्दे विभाष आदिरुदात्तो भवति। रिक्तः, रिक्तः। संज्ञायाम्, निष्ठा च द्व्यजनात् ६।१।१९९ इत्यनेन पूर्वविप्रतिषेधेन नित्यम् आद्युदात्तः।

न्यासः

रिक्ते विभाषा।, ६।१।२०२

"रिक्तः" इति। "रिचिर्? विरेचने" (धा।पा।१४४१)। प्रत्ययस्वरे प्राप्त आदेर्विभाषोदात्तत्वं विधीयते। "संज्ञायाम्()" इत्यादि। "निष्ठा च द्व्यजनात्()" ६।१।१९९ इत्यस्यावकाशः--दत्तः, गुप्त इति। अस्यावकशोऽसंज्ञायाम्()--रिक्तो घट इति; यदा तु

रिक्तशब्दः कस्यचित्? संज्ञा भवति तदोभयोः प्राप्तौ पूर्वविप्रतिषेधेन "निष्ठा च द्व्यजनात्()" ६।१।१९९ इति नित्यमाद्युदात्तो भवति। न च पूर्वविप्रतिषेधो वक्तव्यः, परशब्दस्येष्टवाचित्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

जुष्टार्पिते च च्छन्दसि ६।१।२०९

जुष्ट अर्पित इति शब्दरूपे छन्दसि विषये विभाषा आद्युदात्ते भवतः। जुष्टः, जुष्टः। अर्पितः, अर्पितः। छन्दसि इति किम्? भाषायां प्रत्ययस्वरेण अन्तोदात्तवेतौ।

न्यासः

जुष्टार्पिते च च्छन्दसि। , ६।१।२०३

"जुष्टः" इति। "जुषी प्रीतिसेवनयोः" (धा।पा।१२८८)। "अर्पितः" इति। अत्तेर्णिच, "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्()॥

---

सूत्रम्

काशिका-वृत्तिः

नित्यं मन्त्रे ६।१।२१०

जुष्ट अर्पित इत्येते शब्दरूपे मन्त्रविषये नित्यम् आद्युदात्ते भवतः। जुष्टं देवानाम्। अर्पितं पितृणाम्। पूर्वेण अत्र विकल्पः प्राप्तः। केचिदत्र जुष्ट इत्येतदेव अनुवर्तयन्ति। अर्पितशब्दस्य विभाषा मन्त्रे ऽपि इच्छन्ति। अन्तोदात्तो ऽपि ह्ययं मन्त्रे पठयते, तस्मिन् साकं त्रिशता न शङ्कवो ऽर्पिताः इति।

न्यासः

नित्यं मन्त्रे। , ६।१।२०४

"केचिदत्र" इत्यादि। किं पुनः कारणं जुष्टशब्द एवावनुवत्र्तयन्ति? इत्याह--"अर्पितशब्दस्य" इत्यादि। अत्रापि किं कारणम्()? इत्याह--"अन्तोदात्तोऽपि" इत्यादि। तमेवान्तोदात्तस्य पाठमन्त्रं दर्शयितुमाह--"तस्मिन्? साकं त्रिशता" इत्यादि। आरम्भसामथ्र्यादेव नित्यत्वे सिद्धे नित्यग्रहणं विस्पष्टार्थम्(), उत्तरार्थं च॥

---

सूत्रम्

काशिका-वृत्तिः

युष्मदस्मदोर् ङसि ६।१।२११

युष्मदस्मदी मदिक्प्रत्ययान्ते ऽन्तोदात्ते, तयोर् ङसि परतः आदिः उदात्तो भवति। तव स्वम्। मम स्वम्।

न्यासः

युष्मदस्मदोर्ङसि। , ६।१।२०५

"युष्मदस्मदी मदिक्प्रत्ययान्ते" इति। "युष्यसिभ्यां मदिक्()" (द।उ।६।५०) मदिक्प्रत्ययमुत्पाद्य तयोर्व्युत्पादनात्()। एतेन युष्मदस्मदोः प्रत्ययस्वरेणाअन्तोदात्तत्वं दर्शयति। "तव ममौ ङसि" ७।२।९६ इति युष्मदस्मदोर्मपर्यन्तस्य तवममौ, शेषे लोपे ७।२।९० कृते "अतो गुणे" ६।१।९४ पररूपत्वम्()। युष्मदस्मदोरादेशस्य स्थानिवद्भावादन्तोदात्तत्वम्। एवं च यो ह्रशादेशेन सहैकादेशः, सोऽपि "एकादेश उदात्तेनोदात्तः" ८।२।५ इत्युदात्त एवेत्यनेन क्रमेण विभक्तिस्वरे प्राप्त

इदमुच्यते॥

---

सूत्रम्

काशिका-वृत्तिः

ङयि च ६।१।२१२

युष्मदस्मदोः इति वर्तते, आदिरुदात्तः इति च। ङे इत्येतस्मिंश्च परतो युष्मदस्मदोः आदिरुदात्तो भवति। तुभ्यम्। मह्यम्। पृथग्योगकरणं यथासङ्ख्यशङ्कानिवृत्त्यर्थम्।

न्यासः

ङयि च।, ६।१।२०६

"तुभ्यम्(), मह्मम्()" इति। "ङे प्रथमयोरम्()" ७।१।२८ इत्यम्भावः, "तुम्यमह्मौ ङयि" ७।२।९५ इति युष्मदस्मदोस्तुभ्यमह्मावादेशौ। किमर्थं पृथगयं योगः क्रियते? इत्यत आह--"पृथग्योगकरणम्()" इत्यादि। एकयोगे हि कार्यिणोः, निमित्तयोश्च समानत्वाद्यथासंख्यमत्र भवितव्यमिति कस्यचिदाशङ्का स्यात्()। अतः पृथग्योगकरणं यथासंख्यनिरासार्थमिति प्रदर्शनार्थम्()। ततश्चास्वरितत्वादेव यतासंख्यं न भविष्यति। आशङ्कातः कस्यचिन्मन्दबुद्धेः स्यादिति तन्निरासार्थं पृथग्योगकरणम्()। अयमपि पूर्ववदेव विभक्तिस्वरापवादः॥

---

सूत्रम्

काशिका-वृत्तिः

यतो ऽनावः ६।१।२१३

निष्था च द्व्यजनात् ६।१।१९९। इत्यतो द्व्यज्ग्रहणम् अनुवर्तते। यत् प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति न चेन् नौशब्दात् परो भवति। अचो यत् ३।१।९७ च इयम्। जेयम्। शरीरावयवाद् यत् ५।१।६ कण्ठ्यम्। ओष्ठ्यम्। तस्वरितम् ६।१।१७९ इत्यस्य अपवादः। अनावः इति किम्? नाव्यम्। द्व्यचः इत्येव, चिकीर्ष्यम्। ललाट्यम्।

न्यासः

यतोऽनावः।, ६।१।२०७

"कण्ठ()म्(), ओष्ठ()म्()" इति। भावार्थे तद्धितः। "नाव्यम्()" इति। नावा तार्यमित्यस्मिन्नर्थे "नौवयोधर्म" ४।४।९१ इत्यादिना यत्()। अत्र "वान्तो यि प्रत्यये" (६।१।७९) इत्यवादेशे कृते व्यञ्जनस्य स्वरविधावविद्यमानत्वात्? ततः पूर्वस्य स्यादिति नावः प्रतिषेधः क्रियते। "ललाट()म्()" इति। "शरीरावयवाद्यत्()" ५।१।६ इति यत्()॥

---

सूत्रम्

काशिका-वृत्तिः

ईडवन्दवृशंसदुहां ण्यतः ६।१।२१४

ईड वन्द वृ शंस दुह इत्येतेषां यो ण्यत् तदन्तस्य आदिरुदात्तो भवति। ईड्यम्। वन्द्यम्। वार्यम्। शंस्यम्। दोह्या धेनुः। द्व्यनुबन्धकत्वात् ण्यतो यद् ग्रहणेन ग्रहणं न अस्ति इति तित् स्वरितम् ६।१।१७९ इत्येतत् प्राप्तम्। वार्यम् इति वृङ् सम्भक्तौ इत्यस्य अयं ण्यत्। क्यब्विधौ हि वृञ एव ग्रहणम् इष्यते।

न्यासः

ईडवन्दवृशंसदुहां ण्यतः। , ६।१।२०८

"ईड स्तुतौ" (धा।पा।१६६७) "वदि अभिवादनस्तुत्योः" (धा।पा।११) "वृङ्? सम्भक्तौ" (धा।पा।१५०९) "शंस स्तुतौ" (धा।पा।७२८) [शंसु--धा।पा।] "दुह प्रपूरणे" (धा।पा।१०१४)--एतेभ्यो धातुभ्यः "ऋहलोण्र्यत्()" (३।१।१२४) इति ण्यत्? प्रत्ययः। कस्मिन्? पुनः प्राप्त इदमारभ्यते? इत्याह--"द्व्यनुबन्धकत्वात्()" इत्यादि। अथ कथं पुनर्वार्यमित्यत्र ण्यत्प्रत्ययः, यावता "एतिस्तुशासु" (३।१।१०९) इत्यादिना विशेषविहितेन क्यपा भवितव्यम्()? इत्याह--"वार्यम्()" इत्यादि। ननु च वृङोऽपि क्यपैव भवितव्यम्()। "वृ" इति सामान्यनिर्देशात्()? इत्याह--"क्यब्विधौ हि" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा वेण्विन्धानयोः ६।१।२१५

वेणु इन्धान इत्येतयोः विभाषा आदिरुदात्तो भवति। वेणुः, वेणुः। इन्धानः, इन्धानः, इन्धानः। वेणुशब्दो ऽयम् अजिवृरीभ्यो निच्च इति णुप्रत्ययान्तो नित्वान् नित्यम् आद्युदात्तः प्राप्तः। इन्धानशब्दो ऽपि यदा चानशन्तस् तदा चित्त्वदन्तोदात्तः। अथ शानजन्तस् तदा लसार्वधतुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः। तदेवम् इन्धाने सर्वथा अप्राप्तम् उदात्तत्वं पक्षे विधीयते। वेणुरिव वेणुः इत्युपमानं यदा संज्ञा भवति, तदा संज्ञायाम् उपमानम् ६।१।१९८ इति नित्यम् आद्युदात्तत्वम् इष्यते।

न्यासः

विभाषा वेण्विन्धानयोः। , ६।१।२०९

"णुप्रत्ययान्त" इति। तद्विधौ "स्थो णुः" (द।उ।१।१४७) इत्यतो णुग्रहणानुवृत्ते। "यदि चानशन्तः" ["यदा--काशिका] इति। "ताच्छील्यवयोवचनशक्तिषु चानश्? ३।२।१२९ इत्यनेन। "अथ शानजन्तः" इति। "लट) शतृशानचो" ३।२।१२४ इत्यादिना। "लसार्वधातुकनिघाते कृते" इति। "तास्यनुदात्तेत्()" ६।१।१८० इत्यादिना। इन्धाने" इति। अस्यानुदात्तत्वात्()। "उदात्तनिवृत्तिस्वरेण" इति। "अनुदात्तस्य च यत्रोदात्तलोपः"६।१।१५५ इत्यनेन। "वेणुः" इत्यादि। "संज्ञायामुपमानम्()" ६।१।१९८ इत्यस्यावकाशः--चञ्चा, वध्रिकेति, अस्या विभाषाया अवकाशः--अनुपमानो वेणुशब्दः शुष्को वने वेणुरिति वेति, यदा वेणुरिवेत्युपमानवेणुशब्दः कस्यचित्? संज्ञा भवति तदा "संज्ञायामुपमानम्()" ६।१।१९८ इति तस्याद्युदात्तत्वमिष्यते, तच्च पूर्वविप्रतिषेधाल्लभ्यते॥

---

सूत्रम्

काशिका-वृत्तिः

त्यागरागहासकुहश्वठक्रथानाम् ६।१।२१६

त्याग राग हास कुह श्वठ क्रथ इत्येतेषां विभाषा आदिरुदात्तो भवति। त्यागः तयागः। रागः, रागः। हासः, हासः। एते घञन्ताः, तेषां पक्षे कर्षात्वतो घञो ऽन्त उदात्तः ६।१।१५३ इत्युदात्तत्वम् एव भवति। कुहः, कुहः। श्वठः, श्वठः। क्रथः, क्रथः। एते पचाद् यजन्ताः।

न्यासः

त्यागरागहासकुह�आठक्रथानाम्?। , ६।१।२१०

"कुह विस्मापने", (धा।पा।१९०१) "शठ ()आठ सम्यगवभाषणे" (धा।पा।१८५४,१८५५)--एतौ चौरादिकौ। "श्रथ क्लथ क्रथ

वलथ हिंसार्थाः" (धा।पा७९९,८०१,८०२)॥

---

सूत्रम्

काशिका-वृत्तिः

उपोत्तमं रिति ६।१।२१७

रिदन्तस्य उपोत्तमम् उदात्तं भवति। त्रिप्रभृतीनाम् अन्त्यम् उत्तमम् तस्य समीपे यत् तदुपोत्तमम्। करणीयम्। हरणीयम्। पठुजातीयः। मृदुजातीयः। प्रत्ययस्वरापवादो ऽयम्।

न्यासः

उपोत्तमं रिति। , ६।१।२११

---

सूत्रम्

काशिका-वृत्तिः

चङ्यन्यतरस्याम् ६।१।२१८

चङन्ते ऽन्यतरस्याम् उपोत्तमम् उदात्तं भवति। मा हि चीकरताम्, मा हि चीकरताम्। न माङ्योगे ६।४।७४ इत्यटि प्रतिषिद्धे हि च ८।१।३४ इति निघाते ऽदुपदेशातिति लसार्वधातुकानुदात्तत्वे इऋते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तो भवति। उपोत्तमग्रहणाद् द्व्यचो न भवति, मा हि दधत्।

न्यासः

चङ्यन्यतरस्याम्?। , ६।१।२१२

"मा हि चीकरताम्()" इति। "सन्वल्लघुनि चङ्परेऽनग्लोपे" ७।४।९३ इत्यभ्यासस्येत्त्वम्()। "अटि प्रतिषिद्धे" इति। यद्यटः प्रतिषेधो यस्य तस्यैव स्वरः स्याद्धात्वकारस्य। "हि च" इति "निघातः" इति। प्रतिषिद्ध इत्यपेक्षते। यदि निघातो न प्रतिषिध्येत, तदा चङन्तस्योदात्तस्याभाव एव स्यात्()। "मा हि दधत्()" इति। "विभाषा धेट्श्व्योः" ३।१।४९ इति च्लेश्चङ्()॥

---

सूत्रम्

काशिका-वृत्तिः

मतोः पूर्वमात् संज्ञायां स्त्रियाम् ६।१।२१९

मतोः पूर्वः आकार उदात्तो भवति तच् चेन् मत्वन्तं स्त्रीलिङ्गे संज्ञा भवति। उदुम्बरावती। पुष्करावती। वीरणावती। शरावती। शरादीनां च ६।३।११९ इति दीर्घः। आतिति किम्? इक्षुमती। द्रुमवती। संज्ञायम् इति किम्? खट्वावती। स्त्रियाम् इति किम्? शरावान्। मतोः इति किम्? गवादिनी।

न्यासः

मतोः पूर्वमात्संज्ञायां स्त्रियाम्?। , ६।१।२१३

"उदुम्बरावती" इति। उदुम्बरा अस्यां सन्तीति चातुरर्थिको मतुप्(), "मतौ बह्वचोऽनजिरादीनाम्()" ६।३।११८ इति दीर्घत्वम्()। "शरावती" इति। अत्र "शरादीनाञ्च" ६।३।११९ इति। "मतोरिति किम्? गवादिनी" इति। "मतोः" इत्यस्मिन्ननुच्यमाने तत्सम्बद्धं पूर्वग्रहणमपि नोच्येत, संज्ञाशब्दस्याकारमात्र स्योदात्तत्वं प्रसज्येत। पूर्वग्रहणं

मतोरनन्तरस्यास्य यथा स्यात्()। इह मा भूत्()--सानुमतीति। लक्षणप्रतिपदोक्त परिभाषया (व्या।प।३) चेहैव स्यात्()--श्यमावती, उदुम्बरावतीत्यादि न स्यात्()। पूर्वग्रहणात्? पूर्वमात्रस्य भवति॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तो ऽवत्याः ६।१।२२०

संज्ञायाम् इत्येव। अवतीशब्दान्तस्य संज्ञायाम् अन्त उदात्तो भवति। अजिरवती। खदिरवती। हंसवती। कारण्डवती। ङीपः पित्त्वादनुदात्तत्वं प्राप्तम्। अवत्याः इति किम् उच्यते, न वत्या इत्येवम् उच्येत? न एवं शक्यम् इह अपि स्यात्, राजवती। स्वरविधौ नलोपस्य असिद्धत्वान् न अयम् अवतीशब्दः। वत्वं पुनराश्रयात् सिद्धम्।

न्यासः

अन्तोऽवत्याः। , ६।१।२१४

"अजिरवती" इत्यादि। पूर्ववन्मतुप्()। "पित्त्वादनुदात्तत्वं प्राप्तम्()" इति। अतसतस्यायमपवाद इति शेषः। अथावत्या इत्युच्यमाने राजवतीत्येतस्मान्न भवति, अस्ति ह्येतदपि नलोपे कृतेऽवतीशब्दान्तम्()? इत्याह--"स्वरविधौ" इत्यादि। कथमुदाहरणम्(), यावत मतोर्वत्वस्यासिद्धत्वादत्रादतीशब्दान्तत्वं नास्ति? इत्याह--"वत्वं पुनः"--इत्यादि। पुनःशब्देन नलोपाद्विशेषं दर्शयति। लोपो ह्यसिद्धः, वत्वं पुनः सिद्धम्()। कुतः? आश्रयात्()। आश्रयः स्वरविधौ निमित्तत्वेनोपादानमित्यर्थः। अवतीशब्दस्यान्तोदात्तत्वं ब्राउवता वत्वमाश्रितम्(), तस्मादाश्रयात्तस्य सिद्धत्वम्(), अन्यथैव वचनमनर्थकं स्यात्। न हि वत्वस्य सिद्धत्वमन्तरेणावतीशब्दान्तं किञ्चिदस्ति॥

---

सूत्रम्

काशिका-वृत्तिः

ईवत्याः ६।१।२२१

ईवतीशब्दान्तस्य अन्त उदातो भवति स्त्रियां संज्ञायां विषये। अहीवती। कृषीवती। मुनीवती।

न्यासः

ईवत्याः। , ६।१।२१५

अयमपि पित्त्वानुदात्तस्यैवापवादः "अहीवती" इत्यादि। "शरादीनाञ्च" ६।३।११९ इति दीर्घः, "संज्ञायाम्()" ८।२।११ इति च वत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

चौ ६।१।२२२

चौ इति अञ्चतिर्लुप्तनकारो गृह्यते। तस्मिन् परतः पूर्वस्य अन्त उदात्तो भवति। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। उदात्तनिवृत्तिस्वरापवादो ऽयम्। चावतद्धित इति वक्तव्यम्। दाधीचः। माधूचः। प्रत्ययस्वर एव अत्र भवति।

न्यासः

चौ। , ६।१।२१६

"उदात्तनिवृत्तिस्वरापवादोऽयम्()" इति। "दधीचः" इति। दध्यञ्चतीति क्विन्(), "गतिकारकोपपदात्()" ६।२।१३८ इत्युत्तरपदप्रकृतिस्वरेणाञ्चेरकार उदात्तः। विभक्तावजादावसर्वनामस्थाने "अचः" ६।४।१३८ इत्यकारलोपे कृते "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इत्युदात्तनिवृत्तिस्वरः प्राप्नोति, अतस्यस्याय मपवादः। "चावतद्धिते" इत्यादि। यदिदमञ्चेः पूर्वस्यान्तोदात्तत्वं विधीयते, तदा तद्धितं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानञ्चेदम्()--अन्यतरस्यांग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा, तेन तद्धिते न भविष्यतीति॥

---

सूत्रम्

काशिका-वृत्तिः

समासस्य ६।१।२२३

समासस्यन्त उदात्तो भवति। राजपुरुषः। ब्रहमणकम्बलः। कन्यास्वनः। पटहशब्दः। नदीघोषः। राजपृषत्। ब्राह्मणसमित्। स्वरविधौ व्यञ्जनमविद्यमानवतिति हलन्तेष्वप्यन्तोदात्तत्वं भवति। नानापदस्वरस्य अपवादः। इति काशिकायां वृत्तौ षष्ठाध्यायस्य प्रथमाः पादः। षष्ठाध्यायस्य द्वितीयः पादः।

न्यासः

समासस्य। , ६।१।२१७

"राजपुरुषः" इत्यादिषूदहरणेषु समासपदानां त()स्मस्तस्मिन्? स्वरे प्राप्ते सतीदमारभ्यते, स आख्यायते। राजशब्दे तावत्? "कनिन्? युवृषितक्षिराजि" (द।उ।६।५१) इति कनिन्प्रत्ययान्तत्वात्? नित्स्वरेणाद्युदात्तत्वम्()। एवं पुरुषेऽपि, स हि "पुरः कुषन्()" (द।उ।६।५१) इति कुषन्प्रत्ययान्तो व्युत्पाद्यते। ब्राहृण इदमिति "तस्येदम्()" ४।३।१२० इति ब्राआहृणशब्दोऽणन्तः प्रत्ययस्वरेणान्तोदात्तः। "कलस्तृपश्च" (दा।उ।८।१०७) इति "बृषादिभ्यश्चित्()" (द।उ।८।१०९) बहुलवचनात्? "कमेर्बुक्()" (द।उ।८।११४()) इति कम्बलशब्दो व्युत्पाद्यते, तेनायं चित्स्वरेणान्तोदात्तः। कन्यशब्दोऽन्तस्वरित; "अध्न्यादयश्च" (द।उ।८।१४) इति निपात्यते। अथ वा--"कनी ["कन"--धा।पा।] दीप्तिकान्तिगतिषु" (धा।पा।४६०) इत्यस्मात्? "ऋहलोण्र्यत्()" ३।१।१२४ इति ण्यत्(), "कन्यायाः कनीन च" (४।१।११६) इति निपातनात्? वृद्ध्यभावः। तित्स्वरेणायमन्तस्वरितः सम्पद्यते। स्वनशब्दः "स्वनहसोर्वा" (३।३।६२) इत्यबन्तत्वात्? धातुस्वरेणाद्युदात्तः। पटत्? पटद्? ष्यन्यत इति पटहशब्दः पृषोदरादित्वादन्तोदात्तः। शब्दशब्दः "शाशपिभ्यां ददनौ" (द।उ६।४८) इति दन्प्रत्ययान्तत्वान्नित्स्वर#एणाद्युदात्तः। पचादिषु "नदट्()" इति पठ()ते, तेन "टिड्ढाणञ्()" ४।१।१५ इति ङीपि कृते तत्र च "यस्येति च" ६।४।१४८ इत्यकारलोपे कृत उदात्तनिवृत्तिस्वरेणान्तोदात्तो नदीशब्दो भवति। घोशब्दो घञन्तत्वान्? ञित्स्वरेणाद्युदात्तः। पृषत्समिच्छब्दौ प्रातिपदिकस्दरेणान्तोदात्तौ। अथ राजपृषत्(), ब्राआहृणसमिदित्यत्र कथमन्तो भवति, यावता योऽत्र समासस्यान्तो नासौ स्वरभाक्? यस्तु तस्मात्? पूर्वः स तकारेण व्यवहितः? इत्याह--"स्वरविधौ" इतद्यादि। "हलन्तेऽपि" इति। समासस्येदं विशेषणम्()। "अन्तोदात्तत्वम्()" इति। समासे येऽचः पूर्वे तदपेक्षया परस्याचोऽन्तत्वं वेदित्वयम्। तेन "नानपदस्वरस्यापवादः" इति। समासे हि पदानां पृथक्? स्वरो भवति। यदिवं नोच्येत ततो नानापृथक्पदानां स्वरः प्राप्नोति। अतस्तदपवादोऽयमुच्यते॥ इति बोधिसत्त्वदेशीयाचार्य श्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां षष्ठाध्यायस्य प्रथमः पादः॥ - - - अथ षष्ठोऽध्यायः द्वितीयः पादः

---

सूत्रम्

काशिका-वृत्तिः

बहुव्रीहौ प्रकृत्या पूर्वपदम् ६।२।१

पूर्वपदग्रहणं अत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति, स्वभावेन अवतिष्ठते, न विकारमनुदात्तत्वम् आपद्यते। समासान्तोदात्तत्वे हि सति अनुदात्तं पदम् एकवर्जम् ६।१।१५२ इति सो ऽनुदात्तः स्यातिति समासान्तोदात्तत्वापवादो ऽयम् आरभ्यते। कार्ष्णोत्तरासङ्गाः। कृष्णो मृगः तस्य विकारः कार्ष्णः, प्राणिरजताऽदिभ्यो ऽञ् ४।३।१५२ इति अञ्प्रत्ययान्तो ञित्स्वरेण आद्युदात्तः। यूपवलजः। यूपशब्दः उणादिषु कुसुयुभ्यश्च इति पप्रत्ययान्तः। तत्र च दीर्घः इति निदिति च वर्तते तेन आद्युदात्तः। ब्रह्मचारिपरिस्कन्दः। ब्रहमचारिशब्दः कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तः। स्नातकपुत्रः। स्नातकशब्दः कन्प्रत्ययान्तो नित्स्वरेण आद्युदात्तः। अध्यापकपुत्रः। लित्स्वरेण अध्यापकशब्दो मध्योदात्तः। श्रोत्रियपुत्रः। श्रोत्रियशब्दो नित्वादाद्युदात्तः। मन्ष्यनाथः। मनुष्यशब्दः तित् स्वरितं ६।१।१७९ इति स्वरितान्तः। उदात्तग्रहणम् स्वरितग्रहणं च अत्र अनुवर्तते, तेन सर्वानुदात्ते पूर्वपदे विधिरेव न अस्ति इति समासान्तोदात्तत्वं भवति। समाभ्यागः इति समशब्दो हि सर्वानुदात्तः।

न्यासः

बहुब्राईहौ प्रकृत्या पूर्वपदम्?। , ६।२।१

"पूर्वपदग्रहणम्()" इत्यादि। प्रकृतिभावो ह्यत्र तस्य यूज्यते विधातुम्(), यस्यानुदात्तलक्षणो विकारः प्राप्नोति। नच पूर्वपदस्याज्झल्समुदायस्यासौ प्राप्नोति, किं तर्हि? स्वरितस्य, उदात्तस्य वा। तत्र यदीह पूर्वपदग्रहणं पूर्वपद एव वत्र्तते, अपार्थकमेवेदं वचनं स्यात्()! तस्मात्? पूर्वपदस्ये स्वर उदात्ते स्वरिते वा पूर्वपदग्रहणं वर्तत इति विज्ञायते। भवति हि तात्स्थ्यात्? ताच्छब्ध्यम्(), यथा--"मञ्चाः क्रोशन्ति" इति। "स्वभावेनावतिष्ठते" इति। अनेन प्रकृत्या भवतीतयस्यार्थमाचष्टे। तमेव वाक्यान्तरेण स्पष्टीकर्तुमाह--"विकारमनुदात्तत्वमापद्यते" इति। कथं पनरनुदात्तलक्षणो विकारः प्राप्नोति, यन्निवृत्तये प्रकृतिभावोऽयमारभ्यते? इत्याह--"समासान्तोदात्तत्वे हि सति" इत्यादि। "समासान्तोदात्तत्वापवादोऽयम्()" इति। नाप्राप्ते तस्मिन्नारम्भात्()। "कृष्णो मृगः" इति। कृष्णगृणत्वात्()। "आद्युदात्तः" इति। ञित्स्वरेण। "तत्र च" इत्यादि। तत्र "स्तुवो दीर्घश्च" (द।उ७।४) इति दीर्घग्रहणमनुवत्र्तते। "सुशृभ्यां निच्च" (द।उ।७।६) [सृशृभ्यामूर्च--द।उ।] इत्यतो निच्चेति च। "तेनाद्युदात्तः" इति। नित्स्वरेण। "कृदुत्तरपद" इत्यादि। ब्राह्चारीति "व्रते" ३।२।८० इति णिनिः, उपपदसमासः। तत्र "गतिकारकोपपदात्? कृत्()" ६।२।१३८ इति ब्राह्चारीति शब्दः कृत्स्वरेणान्तोदात्तः। "स्नातकशब्दः कन्प्रत्ययान्तः" [स्नातशब्दः--मुद्रितः पाठः---काशिका] इति। क्षोत्रियँश्छन्दोऽदीते" ५।२।७३ इति निपात्यते, तेन नित्सवरेणाद्युदात्तः। "मनुष्यशब्दस्तित्स्वरितमिति" इति। "मनोर्जातावञ्यतौ षुक्च" ४।१।१६१ इति यत्प्रत्ययान्तत्वात्()। "उदात्तग्रहणम्()" इत्यादि। तत्रोदात्तग्रहणम्? "कर्षात्वतो घञोऽन्त उदात्त" ६।१।१५३ इत्यतोऽनुवर्तते। "स्वरितग्रहणम्()" इति। "तित्? स्वरितम्()" (६।१।१।८५) इत्यतः। ततः किं सिद्धं भवति? इत्याह--"तेन" इत्यादि। उदात्तसरितानुवृत्तेह्र्येतदेव प्रयोजनम्()--यत्रोदात्तः स्वरितो वास्ति तत्रैव यता स्यात्()। समशब्दो हि "सुनोतेर्डमप्()" (()) इति डमप्प्रतययान्तो व्युत्पाद्यते, तेन धातोष्टिलोपे कृते प्रत्यस्य पित्त्वात्? सर्वानुदात्तो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६।२।२

तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तम् उपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत् पूर्वपदं तत्

प्रकृतिस्वरं भवति। तुल्यार्थ तुल्यार्थ तुल्यश्वेतः। तुल्यलोहितः। तुल्यमहान्। सदृक्श्वेतः। सदृशमहान्। एते कृत्यतुल्याऽख्या अजात्या २।१।६७ इति कर्मधरयाः। तत्र तुल्यशब्दः यतो ऽनावः ६।१।२०७ इत्याद्युदात्तः। सदृक्शब्दः समानान्ययोश्च इति क्विन्प्रत्ययान्तः, कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तः। सदृशशब्दो ऽपि कञन्तो मध्योदात्तः। तुल्यार्थ। तृतीया शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः। शङ्कुपूर्वाल् लातेः घञर्थे कविधानम् इति वा कप्रत्ययान्तः शङ्कुलाशब्दो ऽन्तोदात्तः। किरिशब्दो ऽपि किरतेः कृगॄशॄपृकुटि भिदिच्छिदिभ्यश्च इति इकारप्रत्ययः किदौणादिकः, तेन असावन्तोदात्तः। तृतीया। सप्तमी अक्षेषु शौण्डः अक्षशौण्डः। पानशौण्डः। अशेर्देवने इति सप्रत्ययान्तो ऽक्षशब्दो ऽन्तोदात्तः। पानशब्दो ल्युडन्तो लित्स्वरेण आद्युदात्तः। सप्तमी। उपमान शस्त्रीश्यामा। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला। दूर्वाकाण्डश्यामा। शरकाण्डगौरी। उपमानानि सामान्यवचनैः २।१।५५ इति समासः। शस्त्रीशब्दो ङीष्प्रत्ययान्तो ऽन्तोदात्तः। कुमुदशब्दो ऽपि कौ मोदते इति मूलविभुजादित्वात् कप्रत्ययान्तः, नब्विषयस्य अनिसन्तस्य इति वा आद्युदात्तः। हंसशब्दो वृतृविदिहनिकमिकशिभ्यः सः इति सप्रत्ययन्तः। न्यग्रोहति इति न्यग्रोधः, पचादित्वादच्प्रत्ययान्तः तस्य न्यग्रोधस्य च केवलस्य ७।३।५ इति निपातनाद् हकारस्य धकारो मध्योदात्तत्वं च। दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तरपदाद्युदात्तौ। उपमान। अव्यय अब्राह्मणः। अवृषलः। कुब्राह्मणः। कुवृषलः। निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। एतान्यव्ययान्याद्युदात्तानि। अव्यये नञ्कुनिपातानाम् इति वक्तव्यम्। इह मा भूत्, स्नत्वाकालकः इति। अव्यय। द्वितीया मुहूर्तसुखम्। मुहूर्तरमणीयम्। सर्वरात्रकल्याणी। सर्वरात्रशीभना। अत्यन्तसंयोगे च २।२।२१ इति द्वितीयासमसः। मुहूर्तशब्दः पृषोदरादिरन्तोदात्तः। सर्वरात्रशब्दो ऽप्यच्प्रत्ययान्तः। द्वितीया। कृत्य भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। हरणीयचूर्णम्। भोज्यशब्दो ण्यदन्तो ऽन्तस्वरितः। पाणीयहरणीयशब्दयोः उपोत्तमं रिति ६।१।२११ इति ईकार उदात्तः।

न्यासः

तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः।, ६।२।२

"यतोऽनाव इत्याद्युदात्तः" इति। "नौवयोधर्म" ४।४।९१ इत्यादिना यत्प्रत्ययान्तस्य तुल्यशब्दस्य व्युत्पादितत्वात्()--तुलया सम्मितं तुल्यमिति। "सदृक्()शब्दः" इत्यादि। "त्यादादिषु दृशोऽनालोचने कञ्च" (३।२।६०) इत्यत्र "समानान्ययोश्चेति वक्तव्यम्()" (वा।२६१) इत्युपसंख्यानं कृतम्, तेन सदृक्छब्दः कन्नन्तः। "दृग्दृशतुषु" ६।३।८८ इति समानस्य सभावः। "सदृशशब्दोऽपि" इत्यादि। कृदुत्तरपदप्रकृतिस्वरेणेत्यपेक्षते। "इकारः प्रत्ययः" [इकारप्रत्ययः--काशिका] इति। तत्र "अत्र इः" (द।उ।१।६७) इत्यत इकार प्रत्ययानुवृत्तेः। "कित्()" इति। "भुजेः किच्च" (द।उ।१।७१) इत्यतः किद्ग्रहणानुवृत्तेः। "सप्रत्ययान्तोऽक्षशब्दः" इति। "अशेर्देवने" (द।उ।९।२४) इत्यत्र "वृ()तृ()वदिहनिकमिकषिभ्यः सः" (द।उ।९।२१) ["कमिकषियुमुचिभ्यः"--द।उ।] इत्यतः सप्रतययानुवृत्तेः। "नब्विषयस्य" इति। नपुंसकलिङ्गविषयस्येत्यर्थः। "मध्योदात्तत्वञ्च" इति। "न्यग्रोधस्य च केवलस्य" इति। निपातनादित्यनेन सम्बन्धः। "अब्राआहृणः" इति। नञ्समासः। "कुब्राहृणः" इत्यादौ "कुगतिप्रादयः" २।२।१८ इति। "एतान्यव्ययान्याद्युदात्तानि" इति। "निपाता आद्युदात्ताः" (फि।सू।८०) इति वचनात्(), एषां च निपातत्वात्()। तत्र न्कुशब्दयोः "चादयो।सत्वे" १।४।५७ इति चादिषु पाठान्निपातत्वम्(), निरतिशब्दयोस्तु "प्रादयः" १।४।५८ इति, तयोः प्रादिषु पाठात्()। "अव्यये" इत्यादि। अव्यये पूर्वपदे प्रकृतिभावे कत्र्तव्ये नञ्प्रभृतीनामेव भवतीत्येतदर्थरूपं व्याख्येयम्()। तत्रेदं व्याख्यानम्()--"चङ्यन्यतरस्याम्()" ६।१।२१२ इत्यतोऽनयतरस्यांग्रहणमनुवर्तते; सा च व्यवस्थितविभाषा, तेन नञ्कुनिपातानामेव भविष्यतीति। "स्वात्वाकालकः" इति। "मयूरव्यंसकादित्वात्()" २।१।७१ समासः "क्त्वातोसुन्कसुनः" १।१।३९ इति पूर्वपदस्याव्ययत्वम्()। "मुहूत्र्तसुखम्()" इत्यादौ "कालाध्वनोरत्यन्तसंयोगे" २।३।५ इति द्वितीया। "सर्वरात्रशब्दोऽप्यच्प्रत्यान्तः" इति। सर्वा च रात्रिश्चेति "पूर्वकालैक"

२।१।४८ इत्यादिना समासे "अहः सर्वैक" ५।४।८७ इत्यादिनाचप्रत्ययविधानात्()॥

---

सूत्रम्

काशिका-वृत्तिः

वर्णो वर्नेष्वनेते ६।२।३

प्रकृत्या पूर्वपदम्, तत्पुरुषे इति च वर्तते। वर्णं वर्णवाचि पूर्वपदं वर्नवाचिष्वेव उत्तरपदेषू एतशब्दवर्जितेषु परतस् तत्पुरुषे समसे प्रकृतिस्वरम् भवति। कृष्णसारङ्गः। लोहितसारङ्गः। कृष्णकल्माषः। लोहितकल्माषः। कृषेर्वर्ने इति कृष्णशब्दो नक्प्रत्ययान्तः अन्तोदात्तः। लोहितशब्दो ऽपि रुहेरश्च लो वा इति इतन्प्रययान्तः आद्युदात्तः। वर्नः इति किम्? परमकृष्णः। वर्नेषु इति किम्? कृष्णतिलाः। अनेते इति किम्? कृष्णैतः। लोहितैतः।

न्यासः

वर्णौ वर्णोष्वनेते। , ६।२।३

"रुहे रश्च लो वा" इति। अत्र "ह्रश्याभ्यामितन्()" (द।उ।६।१२) इतीतनोऽनुवर्तनात्()। "परमकृष्णः" इति। अत्र समासान्तोदात्तत्वमेव॥

---

सूत्रम्

काशिका-वृत्तिः

गाधलवनयोः प्रमाणे ६।२।४

प्रमाणवाचिनि तत्पुरुषे समासे गाध लवण इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति। शम्बगाधमुदकम्। अरित्रगाधमुदकम्। तत्प्रमाणम् इत्यर्थः। गोलवणम्। अश्वलवणम्। अश्वलवणम्। यावद् गवे दीयते तावदित्यर्थः। षष्ठीसमासा एते। तत्र शमेर्बनिति बन्प्रत्ययान्तत्वाच् छम्बशब्द आद्युदात्तः। अरित्रशब्दः अर्तिलूधूसू इति इत्रप्रत्ययान्तो मध्योदात्तः। गोशब्दो डोप्रत्ययान्तः अन्तोदात्तः। अश्वशब्दो अशूप्रुषिलटिकणिखतिविशिभ्यः क्वनिति क्वन्प्रत्ययान्तः आद्युदात्तः। प्रमाणम् इयत्तापरिच्छेदमात्रम् इह द्रष्टव्यं न पुनरायाम एव। स्वरव्यङ्ग्यं च प्रमानविशेषविषयत्वम् एतेषाम्। प्रमाणे इति किम्? परमगाधम्। परमलवणम्।

न्यासः

गाधलवणयोः प्रमाणे। , ६।२।४

"शम्बगाधम्()" इति। गाध्यत इति गाधः, "गाधृ "प्रतिष्ठालिप्सयोः" (धा।पा।४) [प्रतिष्ठालिप्सयोग्र्रन्थे च--धा।पा।] अर्धर्चादित्वात्? २।४।३१ पक्षे नपुंसकत्वम्()। "अर्तिलूधूसू" इति। अनेन सूत्रैकदेशेन "अर्तिलूधूसूखनसहचर इत्रः" ३।२।१८४ इत्येतत्सूत्रमुपलक्ष्यते। "मध्योदात्तः" इति। प्रत्ययस्वरेण। "अशूप्रुषि" इति। "अशूप्रुषिलटिकणिघटिविशिभ्यः कन्()" (द।उ।८।१२५) [अशूप्रुषिप्लुषिलटिकटिकणिखटिविशिभ्य) क्वन्()--द।उ।] इति सूत्रमुपलक्षयति। ननु चायामः=प्रमाणम्(), "आयामस्तु प्रमाणं स्यात्()" इति वचनात्(); न च शम्बगाधमित्यादिस्तत्पुरुषः प्रमाणवाची, किं तर्हि, इयत्तावाची? इत्याह--"प्रमाणम्()" इत्यादि। इयतो भाव इयत्ता, सा परिच्छिद्यते येन स इयत्तापरिच्छेदः, स एवात्र प्रमाणं वेदितव्यम्()। न पुनरायाम एव। तत्? कथम्()? प्रमीयतेऽनेनेति प्रमाणमिति क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्णते, न तु रूढिशब्दः; लक्ष्यानुरोधात्()। तेन येनेयत्ता परिच्छिद्यते तत्? सर्वं प्रमाणम्()। "स्वरव्यङ्ग्यं च" इति। अस्य स्वरे योऽयं प्रकृतिभावो विधीयते तेन व्यङ्ग्यं द्योत्यमित्यर्थ-। "एतेषाम्()" इति। शम्बगाधादीनाम्()॥

---

सूत्रम्

काशिका-वृत्तिः

दायाद्यं दायादे ६।२।५

तत्पुरुषे समासे दायादशब्दे उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं भवति। विद्यादायादः। धनदायादः। संज्ञायां समजनिषद इति विद्याशब्दः क्यप्प्रत्ययान्तः। उदात्तः इति च तत्र वर्तते, तेन अयम् अन्तोदात्तः। कृपृवृजिमन्दिनिधाञ्भ्यः क्युः इति बहुलवचनात् केवलादपि धाञः क्युः प्रत्ययः, तेन धनशब्दः प्रत्ययस्वरेण आद्युदात्तः। अथ विद्यादायादः इति केन षष्ठी? स्वामीरीश्वराधिपतिदायाद इति। यद्येवं प्रतिपदविधाना च षष्ठी न समस्यते इति समासप्रतिषेधः प्राप्नोति? एवं तर्हि शेषलक्षणैवात्र षष्ठी, तस्यस् तु सप्तमी विधीयमाना बाधिका मा विज्ञायि इति पुनरभ्यनुज्ञायते। दायाद्यम् इति किम्? परमदायादः। अत्र समासान्तोदातत्वम् एव भवति।

न्यासः

दायाद्यं दायादे। , ६।२।५

दायः=भागः, अंश इत्यर्थः। दायमादत्त इति दायादः। मूलविभुजादित्वात्? कः (वा।२३२)। दायादस्य कर्म दायाद्यम्()। किं पुनस्तत्()? दाय एव। स हि दायादिरादीयमानः कर्म भवति। "उदात्त इति च तन्न वर्तते" इति। "मन्त्रे वृष" ३।३।९६ इत्यादेः सूत्रात्()। ननु च निपूर्वः सूत्रे धातुरुदात्तः तत्? कथं केवलाद्भवति? इत्याह--"बहुलवचनात्()" इत्यादि। यदि "स्वामी()आराधिपति" २।३।३९ इत्यादिना षष्ठी विधीयते। सप्तम्येव हि विधातव्या, न षष्ठी, तस्याः "शेषे" (२।३।५०) इत्येव सिद्धत्वात्()? इत्यत आह--"तस्यास्तु" इत्यादि। यदि सप्तम्येव विधीयते, ततोऽसौ विशेषविहितत्वात्? षष्ठ()आ बाधिका विज्ञायेत, न त्वेवं विज्ञायेतेति पुनरनयैव शेषलक्षणषष्ठ()भ्यनुज्ञायते, न त्वपूर्वा विधीयते। तेनाप्रतिपदविहितत्वाद्भवत्येव समासः। "परमदायादः" इति। अत्र पूर्वपदं पूजावाचि, न दायाद्यवाचि॥

---

सूत्रम्

काशिका-वृत्तिः

प्रतिबन्धि चिरकृच्छ्रयोः ६।२।६

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृतिस्वरं भवति। गमनचिरम्। गमनकृच्छ्रम्। व्याहरणचिरम्। व्याहरणकृच्छ्रम्। गमनव्याहरनशब्दौ ल्युडन्तौ, तयोर् लित्स्वरः। गमनं च यच्चिरं च इति विशेषणसमासो ऽयम्, मयूरव्यंसकादिर् वा एष द्रष्टव्यः। गमनं हि कारणविकलतया विरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते। प्रतिबन्धि इति किम्? मूत्रकृच्छ्रम्।

न्यासः

प्रतिबन्धि चिरकृच्छ्रयोः। , ६।२।६

कार्यसिदिं()ध प्रतिवध्नाति विहन्तीति प्रतिबन्धि। ताच्छील्य आवश्यके वा णिनिः। "विशेषणसमासे कृते" इति। ननु च विशेषणसमासः सामानाधिकरण्ये भवति; न चेदं सामानाधिकरण्यम्(), कथं पुनरत्र पूर्वपदं प्रतिबन्धि भवति? इत्याह--"गमनम्()" इत्यादि। अचिरकालभाविनि गमने कार्यसिद्धिर्निष्पद्यते। "कृच्छ्रयोगि च" इति। कृच्छ्रम्()=दुःखम्(), तद्योगिनि गमने गन्ता प्राप्यमर्थं दुःखेनाभिहन्यमानो न प्राप्नोति तस्माच्चिरकालभावि कृच्छ्रयोगि वा यद्? गमनं तत्? कार्यसिद्धेः प्रतिबन्धि जायते॥

---

सूत्रम्

काशिका-वृत्तिः

पदे ऽपदेशे ६।२।७

अपदेशो व्याजः, तद्वाचिनि तत्पुरुषे समासे पदशब्दे उत्तरपदे पूर्वपदं प्रकृतिस्वरं भवति। मूत्रपदेन प्रस्थितः। उच्चारपदेन प्रस्थितः। मूत्रशब्दः सिविमुच्योष्टेरू च इति ष्ट्रन्प्रत्ययान्तः, मूत्रयतेर् वा घञन्तः आद्युदात्तः। उच्चारशब्दो ऽपि घञन्तः थाथघञ्क्ताजबित्रकाणाम् ६।२।१४३ इत्यन्तोदात्तः। विशेषनसमासो ऽयं मयूरव्यंसकादिर् वा। अपदेशे इति किम्? विष्णोः पदम् विष्णुपदम्।

न्यासः

पदेऽपदेशे। , ६।२।७

"व्याजः" इति। छद्मेत्यर्थः। "मूत्रपदेन" इति। मूत्रव्याजेनेत्यर्थः। "ष्ट्रन्प्रत्ययान्तः" इति। "सिविमुच्योष्टेरूच्च" (द।उ।८।८३) [षिविमुच्योष्टेरू च-द।उ।] इत्यत्र ष्ट्रन्नित्यस्यानुवृत्तेः। "मूत्रयतेः" इति। "मूत्र पररुआवणे" (धा।पा।१९०९)। उच्चारशब्दोऽपि घञन्तः। ""थाथादि" इत्यादि। "घञन्तत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

निवाते वातत्राणे ६।२।८

निवातशब्दे उत्तरपदे वातत्राणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। कुट्येव निवातम् कुटीनिवातम्। शमीनिवातम्। कुड्यनिवातम्। वातस्याभावो निवातम्, अर्थाभावः इत्यव्ययीभावः। निरुद्धो वातो ऽस्मिनिति वा निवातम् इति बहुव्रीहिः। तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवातशब्देन सह समस्यन्ते। कुटीशमीशब्दौ गौरादिङोषन्तावन्तोदातौ। कुड्यशब्दो ऽपि कवतेर् यत् डक्किच्च इति यत्प्रत्ययान्त आद्युदात्त इत्येके। ड्यक्प्रत्ययान्तो ऽन्तोदात्तः इत्यपरे। वातत्राने इति किम्? राजनिवाते वसति। सुखं मातृनिवातम्। निवातशब्दो ऽयं पार्श्ववाची रूढिशब्दस् तत्रोभयत्र षष्ठीसमासः।

न्यासः

निवाते वातत्राणे। , ६।२।८

"कुड()आदिहेतुके" इत्याद। कुड()आदिहेतुके वर्तन्ते; कार्ये कारणोपचारात्()। भवति कारणे कार्योपचारः, यथा--"सर्वमिदं पुरातनं कर्म भुजयते" इति। "कवतेः" इति। "कु शब्दे (धा।पा।१०४२)। "आद्युदात्तः" इति। "यतोऽनावः" ६।१।२०७ इत्यनेन। "ड()क्प्रत्ययांन्तोऽन्तोदात्त इत्यपरे" इति। ते "कवतेडर्()क्()" (द।उ।८।२०) इति सूत्रमधीयते॥

---

सूत्रम्

काशिका-वृत्तिः

शारदे ऽनार्तवे ६।२।९

ऋतौ भवमार्तवम्। अनार्तववाचिनि शारदशब्दे उत्तरपदे उत्तरपदे तत्पुरुषे समासे पूर्वपदम् प्रकृतिस्वरं भवति। रज्जुशारदमुदकम्। दृषत्शारदाः सक्तवः। शारदशब्दो ऽयं प्रत्यग्रवाची, तस्य नित्यसमासो ऽस्वपदविग्रह इष्यते। सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशाराम् उच्यते। रज्जुशदः सृजेरसुम् च इति उप्रत्ययान्तः आदिलोपश्च। धान्ये

नितिति च तत्र वर्तते, तेन आद्युदात्तः। दृषत्शब्दः दृणातेः षुक् ह्रस्वश्च इति अदिप्रत्ययान्तो ऽन्तोदात्तः। अनार्तवे इति किम्? पर्मशारदम्। उत्तरमशारदम्। शरदि ऋतुविशेषे भवं यत् तदिह शारदम्।

न्यासः

शारदेऽनार्तवे।, ६।२।९

"रज्जुशारदम्(), "दृषच्छारदम्()" [दृषच्छारदाः--काशिका] इति। योगविभागात्? समासः। "शारदशब्दोऽय प्रत्यग्रवाची" इति। प्रत्यग्रम्()भिनवम्(), अचिरकालभावीत्यर्थः। एतेन नानार्थवाचित्वं शारदशब्दस्य दर्शयति। "नित्यसमासः" इति। महाविभाषायाः प्रकृताया व्यवस्थितविभाषात्वात्()। "अनुपहतम्()" इति। रजोभिः। अनुपहतत्वं तु सद्यौद्()धृतत्वात्()। "उप्रत्ययान्तः" इति। "सृजेरसुं च" (द।उ।१।१००) इत्यत्र "भृमृशीतृ()चरित्सरितनिधनिमिमस्जिभ्य उः" (द।उ।१।९२) [भृमृशीतृ()चरित्सरितनिमिमस्जिब्यः उः--द।उ।] इत्यत उकारप्रत्ययानुवृत्तेः। "अदिप्रत्ययान्तः" [अदिक्प्रत्ययान्तः--मुद्रितकाशिका, आदिप्रत्ययान्तः--मुद्रितन्यासः] इति। "दृणातेः षुग्? ह्यस्वश्च" (द।उ।६।४५) इत्यत्र "शृ()दृ()भसोऽदिः" (द।उ।६।४२) इत्यतोऽदिप्रत्ययानुवृत्तेः। "परमशारदम्()" इति। शरदि भवं शारदम्()। "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्()" ४।३।१६ इति सूत्रेणोत्पन्नोऽयं शब्दः॥

---

सूत्रम्

काशिका-वृत्तिः

अध्वर्युकषाययोर् जातौ ६।२।१०

अध्वर्यु कषाय इत्येतयोः जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्याध्वर्युः। कठाद्वर्युः। कलापाध्वर्युः। एते समानाधिकरणसमासाः जातिवाचिनो नियतविषयाः। तत्र प्राच्यशब्दः यत्प्रत्ययान्त आद्युदात्तः। कठशब्दः पचाद्यचि व्युत्पादितः। ततः कठेन प्रोक्तम् इति वैशम्पायनान्तेवासिभ्यश्च ४।३।१०४ इति णिनिः, तस्य कठचरकाल् लुक् ४।३।१०७ इति लुक्। कलापिना प्रोक्तम् इति कलापिनो ऽण् ४।३।१०८, तस्मिन्निनण्यनपत्ये ६।४।१६४ इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिल। अङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणाम् उपसङ्ख्यानम् इति टिलोपः। तदेवं कलापशब्दो ऽन्तोदात्तः। सर्पिर्मण्डकषायम्। उमापुष्पकषायम्। दौवारिककषायम्। षष्ठीसमासव्युत्पादिता रूढिशब्दा एते। तत्र सर्पिर्मण्डशब्दः उमापुष्पशब्दश्च षष्ठीसमासाबन्दोदात्तौ। दौवारिकशब्दो ऽपि द्वारि नियुक्तः इति ठकि सत्यन्तोदात्तः एव। जातौ इति किम्? परमाध्वर्युः। परमकषायः।

न्यासः

अध्वर्युकषाययोर्जातौ।, ६।२।१०

"जातिवाचिनो नियतविषयाः" इति। नियतो विषयो येषामिति विग्रहः। नियतविषयत्वं तु जातिविशेषत्व एव वर्तमानत्वात्()। अध्वर्युप्रभृ()तीनाम्? "गोत्रञ्च चरणैः" (का।वृ।४।१।६३) इति चरणत्वाज्जातित्वम्()। "यत्प्रत्ययान्तः" इति। "द्युप्रागपागुदक्प्रतीचो यत्()" ४।२।१०० इति। "कठशब्दः पचाद्यचि व्युत्पादितः" इति। "कठ कृच्छ्रजीवने" (धा।पा।३३३) इत्यस्मात्()। "तदेवम्()" इति। यस्मादेदं कालापशब्दोऽणन्तः, तस्मात्? प्रत्ययस्वरेणान्तोदात्तः। "ठकि सत्यन्तोदात्तः" इति। "कितः" ६।१।१५९ इत्यनेन॥

---

सूत्रम्

काशिका-वृत्तिः

सदृशप्रतिरूपयोः सादृश्ये ६।२।११

सदृश प्रतिरूप इत्येतयोः उत्तरपदयोः सादृश्यवाचिनि तत्प्रुषे समासे पूर्वपदम् प्रकृतिस्वरं भवति। पितृसदृशः। मातृसदृशः। पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातितौ। षष्ठीसमासार्थं च सदृशग्रहणम् इह तदलुकि षष्ठ्याः प्रयोजयति, दास्याः सदृशः, वृषल्याः सदृशः इति। अत्र दासीवृषलीशब्दयोरन्तोदात्तत्वादुदात्तयणो हल् पूर्वत् ६।१।१६८ इति विभक्तिरन्तोदात्ता। पितृप्रतिरूपः। मातृप्रतिरूपः। सादृश्ये इति किम्? परमसदृशः। उत्तमसदृशः। समासार्थो ऽत्र पूज्यमानता न सादृश्यम्।

न्यासः

सदृशप्रतिरूपयोः सादृश्ये। , ६।२।११

"पितृसदृशः" इति। "तुल्यार्थैः" २।३।७२ इत्यादिना षष्ठी, तृतीया च, "पूर्वसदृश" २।१।३० इत्यादिना समासः। "पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातितौ" इति। "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृपितृदुहितृ" (द।उ।२।३) इत्यत्र। अथ सदृशग्रहणं किमर्थम्(), यावता मातृसादृश पितृसदृश इत्यत्र "तत्पुरुषे तुल्यार्थं" (६।२।२) इत्येव सिद्धम्()? इत्यत आह--"षष्ठीसमासार्थञ्च" इत्यादि। तुल्यार्थे हि प्रयोगे षष्ठ()पि विधीयते। तत्र यदा मातृसदृश इति षष्ठीसमासः क्रियते, तदपि यथा स्यादित्येवमर्थं सदृशग्रहणम्()। सति त्वस्यारम्भे तृतीयासमानसेऽपि सदृशग्रहणं कत्र्तव्यमित्यत आह--"इह" इत्यादि। "दास्याः सदृशः, वृषल्याः सदृस" इति अत्र "षष्ठ()आ आक्रोशे" ६।३।२० इत्यलुकि कृते षष्ठीसमासस्तत्सदृशग्रहणं प्रयोजयति; अलुकि सति रूपविशेषस्य विद्यमानत्वात्()। यदि षष्ठीसमासार्थं सदृशग्रहणमिह क्रियते, तृतीयासमासो न कर्तवयः; विशेषाभावात्()? नैतदस्ति; तत्रापि हि कत्र्तव्य एव यत्र षष्ठ()र्थे नास्ति तदर्थः, यथा--विद्यया सदृशो विद्यासदृश इति, न ह्यत्र षष्ठ()र्थो विद्यते, किं तर्हि? तृतीयार्थः, विद्यया हेतुना सदृश इत्यर्थः। "अत्र" इत्यादि। तत्र दासीशब्दस्य ङीबुदात्तनिवृत्तिस्वरेणान्तोदात्तार्थः। "दशि सेवने" (धा।पा।१७८६) [दसि आप्यायने--धा।पा] इति, "दंशेष्टटनौ न आ च" (द।उ।९।१०३) इति टप्रत्ययान्तो नकारस्य चाकारादेशः। "टिड्ढाणञ्()" ४।१।१५ इति ङीप्(), "यस्येति" ६।४।१४८ लोपः "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इत्युदात्तत्वम्()। वृषलीशब्दः "जातेरस्त्रीविषयात्()" ४।१।६३ इति ङीषन्तोऽन्तोदात्तो भवति प्रत्ययस्वरेण॥

---

सूत्रम्

काशिका-वृत्तिः

द्विगौ प्रमाणे ६।२।१२

द्विगावुत्तरपदे प्रमणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्यसप्तशमः। गान्धारिसप्तशमः। सप्तशमाः प्रमाणम् अस्य इति मात्रचः उत्पन्नस्य प्रमाणे लः द्विगोर् नित्यम् इति लुक्। प्राच्यश्च असौ सप्तशमश्च प्राच्यसप्तशमः। प्राच्यशब्दः आद्युदात्तः। गान्धरिशब्दः कर्दमादित्वादाद्युदात्तो मद्योदत्तो वा। द्विगौ इति किम्? व्रीहिप्रस्थः प्रमाणे इति किम्? परमसप्तशमम्।

न्यासः

द्विगौ प्रमाणे। , ६।२।१२

"प्राच्यसप्तशमः" इति। षष्ठीसमासः। "प्राच्यशब्द आद्युदात्तः" इति। यत्प्रत्ययान्तत्वात्? "यतोऽनावः ६।१।२०७ इति। "गान्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वा" इति। "कर्दमादीनाञ्च" (फि।सू।३।१०) इत्यत्रादिग्रहणं चानुवर्तते, तत्र यदादेरुदात्तो विधीयते तदाऽऽद्युदात्तो भवति; यदा तु द्वितीयस्य तदा मध्योदात्तः।

---

सूत्रम्

काशिका-वृत्तिः

गन्तव्यपण्य वाणिजे ६।२।१३

वाणिजशब्दे उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति। मद्रवाणिजः। काश्मीरवाणिजः। गान्धारिवाणिजः। मद्रादिषु गत्वा व्यवहरन्ति इत्यर्थः। सप्तमीसमासा एते। तत्र मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः। काश्मीरशब्दो ऽपि पृषोदरादिषु मद्योदात्तः। गान्धारिशब्दः कर्दमादिषु पठ्यते, तत्र कर्दमादीनां च इति पक्षे आद्युदात्तो भवति, द्वितीयो वा। पण्ये गोवाणिजः। अश्ववाणिजः। गोशब्दो ऽन्तोदात्तः। अश्वशब्दः आद्युदात्तः। गन्तव्याण्यम् इति किम्? परमवाणिजः। उत्तमवाणिजः।

न्यासः

गन्तव्यपण्यं वाणिजे। , ६।२।१३

गमनीयम्()=गन्तव्यम्()। पण्यम्()=व्यवहत्र्तव्यमिति। "मद्रवाणिजः" इति। मद्रेषु यो व्यवहरति स एवमुच्यते। "सप्तमीसमासः" [सप्तमीसमासाः--काशिका] इति। "सप्तमी" २।१।३९ इति योगविभागात्()। "रक्प्रत्ययान्तत्वात्()" इति। "स्फयितञ्चि" (द।३।८।३१) इत्यादिना मदे रकं विधाय व्युत्पादितत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

मात्रोपज्ञोपक्रमच्छाये नपुंसके ६।२।१४

मात्रा उपज्ञा उपक्रम छाया एतेषु उत्तरपदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। भिक्षामात्रं न ददाति याचितः। समुद्रमात्रं न सरो ऽस्ति किंचन। मात्रशब्दो ऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्तते। तत्र भिक्षायास् तुल्यप्रमाणम् इति अस्वपदविग्रहः षष्ठीसमासः। तत्र भिक्षाशब्दः गुरोश्च हलः ३।३।१०३ इत्यप्रत्ययान्तो ऽन्तोदात्तः। समुद्रशब्दो ऽपि फिषि पाटलापालङ्काम्बासागरार्थानाम् इत्यन्तोदात्त एव। उपज्ञा पाणिनोपज्ञम् अकालकम् व्याकरणम्। व्याड्युपज्ञं दुष्करणम्। आपिशल्युपज्ञं गुरुलाघवम्। षष्ठीसमासा एते। तत्र पणिनो ऽस्यम् इत्यणन्तः पाणिनशब्दः प्रत्ययस्वरेण अन्तोदात्तः। व्याडिरिञन्तत्वादाद्युदात्तः। तद्वदापिशलिः। उपक्रम् आढ्योपक्रमम् प्रासादः। दर्शनीयोओपक्रमम्। सुकुमारोपक्रमम्। नन्दोपक्रमाणि मानानि। एते ऽपि षष्ठीसमासा एव। तत्रैत्यैनं ध्यायन्ति इत्याढ्याः। घत्रर्थे कविधानम् इति कप्रत्ययः। आङ्पूर्वाद् ध्यायतेः पृषोदरादित्वाद्धस्य ढत्वम्। तदयम् आढ्यशब्दः थाथादिस्वरेण अन्तोदात्तः। दर्शनीयशब्दो रित्वादुपोत्तमोदात्तः। सुकुमारशब्दः नञ्सुभ्याम् ६।२।१७१ इत्यन्तोदात्तः। दर्शनियशब्दो रित्वादुपोत्तमोदात्तः। सुकुमारशब्दः नञ्सुभ्याम् ६।२।१७१ इत्यन्तोदात्तः। नन्दशब्दः पचाद्यचि व्युत्पादितः। उपज्ञोपक्रमान्तस्य तत्पुरुषस्य नपुंसकलिङ्गता उपज्ञोपक्रमं तदाद्याचिख्यासायाम् २।३।२१ इति। छाया इषुच्छायम्। धनुश्छायम्। इषुशब्दः ईषेः किच्च इत्युप्रत्ययान्तः, तत्र च धान्ये नितिति वर्तते, तेन आद्युदात्तः। धनुः शब्दो ऽपि नब्विषयस्य अनिसन्तस्य इत्याद्युदात्त एव। इषूणां छाया इति षष्ठीसमासः। छाया बाहुल्ये २।४।२२ इति नपुंसकलिङ्गता। नपुंसके इति किम्? कुड्यच्छाया।

न्यासः

मात्रोपज्ञोपक्रमच्छाये नपुंसके। , ६।२।१४

"तुल्यप्रमाणे वर्तते" [तुल्यप्रमाणं--मुद्रिपाठः] इति। तुल्यं प्रमाणं यस्येति विग्रहः। "अस्वपदविग्रहः" इति स्वपदविग्रहः

कस्मान्न भवति? ताशं हि--वाक्यं कर्तव्यं यथा समासार्थः प्रतीयते। "भक्षामात्रम्()" इति। अस्य च भिक्षायास्तुल्यप्रमाणमित्येषोऽर्थः। न चायं स्वपदविग्रहेण शक्यः प्रतिपादयितुम्(); मात्रशब्दस्य तुल्यप्रमाणवृत्तित्वात्()। स हि समास एव तुल्यप्रमाणे वर्तते, न वाक्ये। अत एवोक्तम्()--"मात्रशब्दोऽयं वृत्तिविषयः" इत्यादि। वृत्तिरिह समासवृत्तिरेव विषयः। "अप्रत्ययाऽन्तोदात्तः" [अप्रत्ययान्तोदात्तः--काशिकामुद्रितः पाठः] इति। टापा सहैकदेश उदात्तनोदात्तत्वात्()।

---

सूत्रम्

काशिका-वृत्तिः

सुखप्रिययोर् हिते ६।२।१५

सुख प्रिय इत्येतयोरुत्तरपद्योर् हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। गमनसुखम्। वचनसुखम्। व्याहरणसुखम्। प्रिय गमनप्रियम्। वचनप्रियम्। व्याहरणप्रियम्। समानाधिकरणसमासा एते। तत्र सुखप्रियशब्दौ तद्धेतावायत्यां प्रीतिकरे वर्तते। तद् धि हितं यदायत्यं प्रीतिं करोति। गमनादिषु ल्युडन्तेषु लित्वरः। हिते इति किम्? परमसुखम्। परमप्रियम्।

न्यासः

सुखप्रिययोर्हिते। , ६।२।१५

"तत्र सुखप्रियशब्दौ" इत्यादि। तच्छब्देन सुखप्रिययोः प्रत्यवमर्शः, तयोः सुशप्रिययोः हेतुरायत्याम्()=जन्मान्तरे प्रीतिकरः। तत्र सुखप्रियशब्दौ वत्र्तते। किं कारणमेवं व्याख्यायते? इत्याह--"तद्धि हितम्()" इत्यादि। हि तदा चेत्यर्थः। तत्पुरुषे प्रकृतिभावोच्यं विधीयते। एष हि तत्पुरुषो हितवाची भवति, यदि सुखप्रियशब्दावुत्तरपदे हितहोतौ वत्र्तते। हितञ्च किम्()? यदायत्यां प्रीति करोति। कथं पुनः सुखाप्रियशब्दौ तद्धेतौ वत्र्तते कारणे कार्योपचारात्(), यथा --नड्वलोदकं पादरोग इति॥

---

सूत्रम्

काशिका-वृत्तिः

प्रीतौ च ६।२।१६

प्रीतौ गमयमानायां सुख प्रिय इत्येतयोः उत्तपदयोः तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। ब्राह्मणसुखं पायसम्। छात्रप्रियो ऽनध्यायः। कन्यप्रियो मृदङ्गः। सुखप्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशयप्रतिपत्त्यर्थम्। ब्राह्मणछात्रशब्दौ प्रत्ययस्वरेण अन्तोदातौ। कन्याशब्दः स्वरितान्तः। प्रीतौ इति किम्? राजसुखम्। राजप्रियम्।

न्यासः

प्रीतौ च। , ६।२।१६

अथ प्रीतौ चेतीदं ग्रहणं किमर्थम्(), यावता सुखप्रिययोः प्रीत्यव्यभिचारात्()। एवं प्रीतौ गम्यमानायां भविष्यति? इत्यत आह--"सुखप्रिययोः प्रीति" [प्रीत्येत्यादि--मुद्रितः पाठः] इत्यादि। प्रीतिग्रहणमन्तरेणापि सिद्धे सुखप्रिययोः प्रीत्यव्यभिचाराद्यदिह प्रीतिग्रहणं क्रियते, तदतिशयिता या प्रीतिस्तस्या यथा स्यादित्येवमर्थम्()। "ब्राआह्णच्छात्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ" इति। ब्राआह्णशब्दोऽणन्तः। छात्रशब्दः "छत्त्रादिभ्यो णः" ४।४।६२ इति णप्रत्ययान्तः। "कन्याशब्दः स्वरितान्तः" इति। अध्न्यादिषु (द।उ।८।१४) तथा भूतस्यैव पाठात्()। "राजसुखं राजप्रीयम्()" इति। अत्र

यद्यपि सुखप्रिययोः प्रीत्यव्यभिचारित्वात्? प्रीतिर्गम्यते, तथाप्यतिशयेन या प्रीतिः सा न गम्यत इति भवति प्रत्युदाहरणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

स्वं स्वामिनि ६।२।१७

स्वामिशब्दे उत्तरपदे तत्पुरुषे समासे स्ववाचि पूर्वपदं प्रकृतिस्वरं भवति। गोस्वामी। अश्वस्वामी। धनस्वामी। अश्वधनगवां कथित एव स्वरः। स्वम् इति किम्? परमस्वामी।

न्यासः

स्वं स्वामिनि। , ६।२।१७

---

सूत्रम्

काशिका-वृत्तिः

पत्यावैश्वर्ये ६।२।१८

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं भवति। गृहपतिः। सेनापतिः। नरपतिः। धान्यपतिः। गेहे कः ३।१।१४४ इति प्रकृतिस्वरेण अन्तोदात्तो गृहशब्दः। सह इनेन वर्तते इति बहुव्रीहौ प्रकृत्या पूर्वपदम् ६।२।१ इति सेनाशब्द आद्युदात्तः। नृ नये एतस्माद्दृदोरप् ३।३।५७ इति अप्प्रत्ययान्त आद्युदात्तो नरशब्दः। धान्यम् अन्तस्वरितम्। ऐश्वर्यम् इति किम्? ब्राह्मणो वृषलीपतिः। वृषल्या भर्ता इत्यर्थः।

न्यासः

पत्यावै�आर्ये। , ६।२।१८

"धान्यमन्तःस्वरितम्()" इति। ण्यदन्तत्वात्? तित्सवरेण। "वृषल्या भत्र्तेत्यर्थः" इति। वृषल्याः कामयितेति यावत्()॥

---

सूत्रम्

काशिका-वृत्तिः

न भूवाक्चिद्दिधिषु ६।२।१९

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भू वाक् चित् दिधिषू इत्येतानि पूर्वपदानि प्रकृतिस्वराणि न भवन्ति। पूर्वेण प्राप्तः स्वरः प्रतिषिध्यते। भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः। षष्ठीसमासा एते समासस्वरेण अन्तोदात्ता भवन्ति।

न्यासः

नभूवाक्चिद्दिधिषु। , ६।२।१९

"भुवः संज्ञान्तरयोः" ३।२।१७९ इति क्विपा भूशब्दो धातुस्वरेणान्तोदात्तः। एवं वाक्()शब्दः, वचः "क्विब्वचिप्रच्छि" (द।उ।१०।२) इत्यादिना क्विप्()। "चित्()" इति। "चितौ संज्ञाने" (धा।पा।३९) इत्यस्मात्? "अन्येभ्योऽपि दृश्यते" ३।२।१८७ इति क्विप्()। "नृतिशृध्योः कूः" (द।उ।१।१७४) इत्यधिकृत्य "अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः (द।उ।१।१७६) दिधिषूशब्दः कूप्रत्ययान्तोऽन्तोदात्त इति॥

---

सूत्रम्

काशिका-वृत्तिः

वा भूवनम् ६।२।२०

पतिशब्दे उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुष समासे भुवनशब्दः पूर्वपदं वा प्रकृतिस्वरम् भवति। भुवनपतिः, भुवनपतिः। पूर्वपदप्रकृतिस्वरपक्षे आदिरुदात्तः। रञ्जेः क्युनिति वर्तमाने भुसूधूभ्रास्जिभ्यश् छन्दसि इति क्युन्प्रत्ययान्तो भुवनशब्दः आद्युदात्तो व्युत्पादितः। कथं भुवनपतिरादित्यः इति? उणादयो बहुलम् ३।३।१ इति बहुलवचनाद् भषायाम् अपि प्रयुज्यते।

न्यासः

वा भूवनम्?। , ६।२।२०

---

सूत्रम्

काशिका-वृत्तिः

आशङ्काऽबाधनेदीयस्सु सम्भावने ६।२।२१

प्रकृत्या पूर्वपदम्, तत्पुरुषे इति वर्तते। आशङ्क आबाध नेदियसित्येतेषु उत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। अस्तित्वाध्यवसायः सम्भावनम्। गमनाशङ्कं वर्तते। गमनमाशङ्क्यते इति सम्भाव्यते। वचनाशङ्कम्। व्याहरणाशङ्कम्। आबाध गमनाबाधम्। वचनाबाधम्। व्यहरणाबाधम्। गमनं बाध्यते इति सम्भाव्यते। नेदीयस् गमननेदीयः। व्याहरणनेदीयः। गमनमतिनिकटतरम् इति सम्भाव्यते। सम्भावने इति किम्? परमनेदियः। पूर्वपदानि ल्युडन्तान्युक्तस्वराणि।

न्यासः

आशङ्काबाधनेदियःसु सम्भावने। , ६।२।२१

"शकि शङ्कायाम्()" (धा।पा।८६) इत्येतस्मात्? "गुरोश्च हलः" ३।३।१०३ इत्यकारप्रत्ययः। केचित्तु घञन्तसय शङ्कशब्दस्य ग्रहणमिति वर्णयन्ति। "बाधु लोडने" (धा।पा।५) इत्यस्मादाङ्पूर्वात्? धत्रि "आबाधः"। अत्यर्थमन्तिकं "नेदीयः"। अन्तिकशब्दस्य "अन्तिकबाढयोर्नेदसाधौ" ५।३।६३ इतीयसुनि परतोनेदादेशः। "अस्तित्वाध्यवसायः" इति। असतित्वनिश्चय इत्यर्थः। "गमनाशङ्कम्()" इति। षष्ठीसमासः। क्रियाविशेषणत्वान्नपुंसकलिङ्गम्(), लोकाश्रयत्वाद्वा लिङ्गस्य॥

---

सूत्रम्

काशिका-वृत्तिः

पूर्वे भूतपूर्वे ६।२।२२

पूर्वशदे उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। आढ्यो भूतपूर्वः आढ्यपूर्वः। पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्तते, तत्र विशेषणं विशेष्येण इति समासः, मयूरव्यंसकादिर्वा द्रष्टव्यः। दर्शनीयपूर्वः। सुकुमारपूर्वः। भूतपूर्वे इति किम्? परमपूर्वः। उत्तमपूर्वः। अत्र प्रमश्चासौ पूर्वश्च इति समासो, न तु परमो भूतपूर्वः इति। तथा हि सति उदाहरणम् एव भवति।

न्यासः

पूर्वो भूतपूर्वे। , ६।२।२२

"आढ()ओ भूतपूर्वः" इति। यः पूर्वमाढ() आसीत्? स एवमुच्यते। समासे गम्यमानार्थत्वाद्भूतशब्दो न प्रयज्यते, यथा--दध्योदन इत्यत्रोपसिक्तशब्दः। "परमपूर्वः" इति। अत्र "सन्महत्()" २।१।६० इत्यादिना समासः। "अत्र परमश्चासौ पूर्वश्चेति समासः" इति। इतिकरणोऽर्थनिर्देशार्थः। परमश्चसौ पूर्वश्चेति योऽयं वाक्यार्थः पूज्यमानतालक्षणः, तस्मिन्निह प्रत्युदाहरणे समास इत्यर्थः। "न तु परमो भूतः" इति। तुशब्दोऽवधारणे। परमो भूतपूर्व इति योऽयं वाक्यार्थः परमपूर्वकाललक्षणः, तस्मिन्नेवातर समास इत्यर्थः। किं कारणम्()? इत्याह--"तथा च" इत्यादि। चशब्दो हि हीत्यर्थे। अयं समासो न भवति। एवं सत्यदाहरणमेवेदं भवति, न प्रत्युदाहरणम्(), पूर्वशब्दस्य भूतपूर्ववाचित्वात्()। यस्तु प्रायेण पुस्तकेषु पाठोऽत्र "परमश्चासौ भूतपूर्वश्चेति विग्रहो न तु परमो भूतपूर्वः" इति; स प्रमादपाठो वेदितव्यः; वाक्यद्वयेऽपि भूतपूर्वयोर्गम्यमानत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ६।२।२३

सविध सनीड समर्याद सवेश सदेश इत्येतेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। मद्रसविधम्। गान्धारिसविधम्। काश्मीरसविधम्। मद्रसनीडम्। गान्धारिसनीडम्। काश्मीरसनीडम्। मद्रसमर्यादम्। गान्धरिसमर्यादम्। काश्मीरसमर्यादम्। मद्रसवेशम्। गान्धारिसवेशम्। काश्मीरसवेशम्। मद्रसदेशम्। गान्धरिसदेशम्। काश्मीरसदेशम्। पूर्वपदान्युक्तस्वराणि। सविधादीनां सह विधया इत्येवम् आदिका व्युत्पत्तिरेव केवलम्। समीपवाचिनस्त्वेते समुदायाः। मद्राणां सविधम् समीपम् इत्यर्थः। समीप्ये इति किम्? सह मर्यादया वर्तते समर्यादं क्षेत्रम्। देवदत्तस्य समर्यादम् देवदत्तसमर्यादम्। सविधादिसु इति किम्? देवदत्तसमया।

न्यासः

सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये। , ६।२।२३

सह विषया सविधः, "तेन सहेति तुल्ययोगे" २।२।२८ इति बहुव्रीहिः, "वोपसर्जनस्य" ६।३।८१ इति सहसय सभावः। एवं सनीडादिष्वपि बहुव्रीहिः सभावश्च वेदितव्यः। मद्रसविधमित्यादयः षष्ठीसमासाः। ननु च सह विषयेत्येवमादावर्थे सविधादयः शब्दा व्युत्पाद्यन्ते, तत् कथमेषां सामीप्ये वृत्तिः? इत्याह--"सह विषयेत्यवमादिका" इत्यादि। आदिशब्देन सह नीडेन सह मर्यादयेत्येवमादीनां ग्रहणम्()। एवकारोऽवधारणार्थोऽभिधेयव्यवच्छेदं करोति--व्युत्पत्तिनिमित्तमेव, नाभिधेयमिति। "समीपवाचिनस्त्वेते" इति। अत्रापि तुशब्दोऽवधारणार्थ एव। वसमीपवाचिन एव, न तु सह विधयेत्येवमादिवाक्यार्थवाचिन इति॥

---

सूत्रम्

काशिका-वृत्तिः

विस्पष्टाऽदीनि गुणवचनेषु ६।२।२४

विस्पष्टादिनि पूर्वपदानि गुनवानेषु उत्तरपदेषु प्रकृतिस्वराणि भवन्ति। विस्पष्टकटुकम्। विचित्रकटुकम्। व्यक्तकटुकम्। विस्पष्टलवणम्। विचित्रलवणम्। व्यक्तलवणम्। विस्पष्टं कटुकम् इति विगृह्य सुप्सुपा इति समासः। विस्पष्टादयो ह्यत्र प्रवृत्तिनिमित्तस्य विशेषणम्। कटुकादिभिश्च शब्दैर् गुनवद् द्रव्यम् अभिधीयते इत्यसामानाधिकरन्यम् अतो न अस्ति

कर्मधारयः। विस्पष्टशब्दो गतिरनन्तरः ६।२।४९ इत्याद्युदात्तः। विचित्रशब्दो ऽपि अव्ययस्वरेण। विचित्तशब्दमन्ये अहन्ति। सो ऽपि बहुव्रीहिस्वरेण आद्युदात्त एव। व्यक्तशब्दः उदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४ इत्यादिस्वरितः। ये च अत्र अपरे पठ्यन्ते तत्र सम्पन्नशब्दस्थाथादिस्वरेण अन्तोदात्तः। पटुपण्डितशब्दौ प्रत्ययस्वरेण। कुशलशब्दः कृत्स्वरेण अन्तोदत्तः। चपलशब्दश्चित्स्वरेण अन्तोदात्तः, चुपेरच्चोपधायाः इत्यत्र हि चिदिति वर्तते। निपुणशब्दस्थाथादिस्वरेण अन्तोदत्तः, पुणेरिगुपधलक्षणः कप्रत्ययो ऽयम्। विस्पष्टादीनि इति किम्? परमलवणम्। उत्तमलवणम्। गुणवचनेषु इति किम्? विस्पष्टब्राह्मणः। विस्पष्ट। विचित्र। व्यक्त। सम्पन्न। पटु। पण्डित। कुशल। चपल। निपुण। विस्पष्टादिः।

न्यासः

विस्पष्टादीनि गणवचनेषु। , ६।२।२४

"विस्पष्टकटुकम्()" इति। कटुशब्दात्? "संज्ञायां कन्()" ४।३।१४५। "सुप्सेति समासः" इति। अथ "विशेषणं विशेष्येण बहुलम्()" (२।१।५७) इति विस्पष्टकटुकमित्यत्र विगृह्य कस्मात्? कर्मधारय एव न क्रियते? इत्याह--"विस्पष्टादयो ह्यत्र" इत्यादि। कर्मधारयो हि सामानाधिकरण्ये सति भवति। न चेह सामानाधिकरण्यमस्ति। तस्माद्विस्पष्टादयोऽत्र कटुकादेः शब्दस्य यत्? प्रवृत्तिनिमित्तं कटुकत्वादि तस्य विशेषणम्(), न तद्वतो द्रव्यस्य। कटुकादिभिश्च शब्दैः कटुकत्वलक्षणो [कटुकस्यास्तित्लक्षणो यस्यास्ति--इति मुद्रितः पाठः] गुणो यस्यास्ति तद्गुणवद्()द्रव्यमभिधीयते। ततो वैयधिकरण्ये नास्ति कर्मधारायः। तस्माद्यथोक्तेन विधिना समासोऽत्रि कत्र्तव्यः। "विस्पष्टः" [विस्पष्टशब्दः--काशिका] इति। "स्पश बाधनस्पर्शनयोः" (धा।पा।८८७) इत्यस्य निष्ठायाम्? "दस्तस्पष्टच्छन्नज्ञप्ताः" [वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः--पा।सू।] ७।२।२७ इति स्पष्टशब्दो निपतितः, तस्य विशब्देन गतसमासः। "विचित्रशब्दः" इत्यादि। "चित्र चित्री करणे" (धा।पा।१९१७) चुरादि, तस्माद्वञ, विशेषेण चित्रं विचित्रम्(), प्रादिसमासः। "अव्ययस्वरेण" इति। "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना विहितेन। अवययं पुनरत्र विशब्दः, तस्य च "निपाता आद्युदात्ताः" (फि।सू।४।८०) इत्याद्युदात्तत्वम्()। "विचित्तशब्दम्()" इति। चिती संज्ञाने" (धा।पा।३९) इत्यस्य निष्ठायां चित्तम्()। विगतं चित्तमस्येति बहुव्रीहि। "बहुव्रीहिस्वरेण" इति। "चिती संज्ञाने" (धा।पा।३९) इत्यस्य निष्ठायां चित्तम्()। विगतं चित्तमस्येति बहुव्रीहि। "बहुव्रीहिस्वरेण" इति। "बहुव्रीहौ प्रकृत्या" ६।२।१ इति विहितेन। "व्यक्तशब्दः" इत्यादि। अञ्जेर्विपूर्वस्य निष्ठायां गतिस्वर उदात्तः, तत्रेकारस्य स्थाने यो यण्? स उदात्तयण्? भवति, ततः परस्यकारस्यानुदात्तस्य स्वरितः। "सम्पन्नशब्द" इत्यादि। पदेः सम्पूर्वस्य निष्ठायां सम्पन्नशब्दः कत्र्तरि चेति। "पटुपण्डितशब्दौ प्रत्ययस्वरेण" इति। अन्तोदात्तग्रहणमेकवचनान्तं यत्? प्रकृतं तस्य विपरिणामं कृत्वाऽन्तोदात्ताविति सम्बन्धः कत्र्तव्यः। पाटयतेः "फलिपाटिनमिजनीनां गुक्? पाटिनाकिधश्च" [फलिपाटिनमिमनिजनां गुक्()पटिनाकिधतश्च--द।उ।] (द।उ।१।१०३) इत्युप्रत्ययः, पटिशब्दश्चादेशः--पटुः। "पडि गतौ" (धा।पा।२८१) अस्मान्निष्ठायां "पण्डितः"। "कुशलः" इति। कुशाँल्लातीति "लाऽऽदाने" (धा।पा।१०५८) इत्यस्मात्? "आतोऽनुपसर्गे कः" ३।२।३ इति कः, उपपदसमासः, "गतिकारकोपपदात्? कृत्()" ६।२।१३८ इत्युत्तरपदप्रकृतिस्वरः। "चपलशब्दश्चित्स्वरेण" इति। अन्तोदत्त इत्यपेक्षते। कथमयमन्तोदात्तश्चित्स्वरेण? इत्याह--"कलस्तृपश्च" (द।उ।८।१०७) इत्यतः कलप्रत्ययान्तो व्युत्पाद्यते। तत्र "बृषादिभ्यश्चित्()" (द।उ।८।१०९) इत्यतश्चिद्ग्रहणमनुवत्र्तते। तेन चित्स्वरेणान्तोदात्तः। "निपुणशब्दः" इत्यादि। "अन्तोदात्तः" इति। प्रकृतेन सम्बन्धः। "पुणेः" इति "पुण कर्मणि शुने" (धा।पा।१३३३) इत्यस्मात्? "इगुपधाज्ञाप्रीकिरः कः ३।१।१३५ इति कप्रत्ययः॥

---

सूत्रम्

काशिका-वृत्तिः

श्रज्यावमकन्पापवत्सु भावे कर्मधारये ६।२।२५

श्र ज्य अवम कनित्येतेषु पापशब्दवति च उत्तरपदे कर्मधार्ये समासे भाववाचि पूर्वपदं प्रकृतिस्वरं भवति। गमनश्रेष्ठम्। गमनश्रेयः। ज्य वचनज्येष्ठम्। वचनज्यायः। अवम गमनावमम्। वचनावमम्। कन् गमनकनिष्ठम्। गमनकनीयः। पापवत् गमनपापिष्ठम्। गमनपापीयः। ल्युडन्तान्येतानि पूर्वपदानि लित्स्वरेण आद्युदात्तानि। श्रज्यकनाम् आदेशानां ग्रहणम् इति सामर्थ्यात्तद्वदुत्तरपदं गृह्यते। आदिष्विति किम्? गमनशोभनम्। भावे इति किम्? गम्यते ऽनेन इति गमनं तत् श्रेयः, गमनश्रेयः। कर्मधारये इति किम्? गमनं श्रेयः गमनश्रेयः।

न्यासः

श्रज्यावमकन्पापवत्मु भावे कर्मधारये। , ६।२।२५

"गमनश्रेष्ठम्()" इति। "ल्युट्? च" ३।३।११५ इति ल्युट्(); विशेषणसमासः। अतिशयेन प्रशस्यः श्रेयः। दृष्ठन्नीयसुनोः "प्रशस्यस्य श्रः" ५।३।६० इति श्रादेशः। "वचनज्येष्ठम्()" इति। अत्रापि। तयोरेव प्रत्यययोः परतः प्रशस्यशब्दस्य ज्यादेशः। "गमनकनिष्ठम्(), गमनकनीयः" इति। इष्ठन्नीयसुनोः परतो युवशब्दस्याल्यशब्दस्य च "युवाल्पयोः कनन्यतरस्याम्()" ५।३।६४ इति कनादेशः। ननु च "श्रज्यकनाम्()" इति कथम्()? इतिकरणो हेतौ। यस्माच्छ्रज्यकनामिहादेशानां ग्रहणं ते चाजादौ प्रत्यये प्रशस्यादीनां विधीयन्त इति केवलानामसम्भवः। तस्मात्? सामश्र्यात्? तद्वदुत्तरपदं गृह्रते॥

---

सूत्रम्

काशिका-वृत्तिः

कुमारश् च ६।२।२६

कुमारशब्दः पूर्वपदं कर्मधारये समासे प्रकृतिस्वरम् भवति। कुमारश्रमणा। कुमारकुलटा। कुमारतापसी। कुमारशब्दो ऽन्तोदात्तः। अत्र केचित् लक्षणप्रतिपदोकयोः प्रतिपदोक्तस्य एव ग्रहणम् इत् परिभाषया कुमारः श्रमणादिभिः २।१।६९ इत्यत्र एव समासे स्वरम् एतम् इच्छन्ति। केचित् पुनरविशेषेण सर्वत्र एव कर्मधारये।

न्यासः

कुमारश्च। , ६।२।२६

"कुमारश्रमणा" इति। "प्रातपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्()" (व्या।पा।२१) इति कुमारीशब्दोऽत्र समस्यते। एवं हि श्रमणशब्देन स्त्रीलिङ्गेन सामानादिकरण्यमुपपद्यते; नान्यथा। "कुमारशब्दोऽन्तोदात्तः" इति। "कुमार क्रीडायाम्()" (धा।पा।१८७७) इत्यस्मात्? पचाद्यचि व्युत्पादितत्वात्()। "केचित्? पुनः" इत्यादि। कथं पुनर्लक्षणप्रतिपदोक्तपरिभाषायां (व्या।प।३) सत्यामविशेषेणेति लभ्यते? एवं मन्यते--चकारोऽत्र क्रियते। स चास्यैव विधेः समुच्चयार्थः। तेन सर्वत्राविशेषेण भवति। एवं हि समुच्चयो भवति, नान्यथेति। ये तु "कुमारः श्रमणादिभिः" २।१।६९ इत्यत्रैव समासमिच्छन्ति, ते पूर्वविध्यपेक्षया चकारमिह समुच्चयार्थं वर्णयन्ति॥

---

सूत्रम्

काशिका-वृत्तिः

आदिः प्रत्येनसि ६।२।२७

कर्मधारये इति वर्तते। प्रतिगत एनसा, प्रतिगतमेनो वा यस्य स प्रत्येनाः। तस्मिन्नुत्तरपदे कर्मधारये कुमारस्य

आदिरुदात्तो भवति। कुमारप्रत्येनाः। उअदात्तः इत्येतदत्र सामर्थ्याद् वेदितव्यम्। पूर्वपदप्रकृतिस्वर एव ह्ययम् आदेरुपदिश्यते।

न्यासः

आदिः प्रत्येनसि। , ६।२।२७

"प्रतिगत एनसा" इति। अनेन "अवादयः क्रुष्टाद्यर्थे तृतीयया" (वा।९२) इति तत्पुरुषत्वं प्रत्येनःशब्दस्य दर्शयति। "प्रतिगतमेनो वा यस्य" इति। अनेन बहुव्रीहित्वम्()। "कुमारप्रत्येनाः" इति। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। ननु च नेह सूत्र उदात्तग्रहणमस्ति, तत्? कथमुदात्तस्वरो लभ्यते? इत्याह--"उदात्त इत्येतदिह" इत्यादि। किं पुनस्तत्सामथ्र्यम्()? इत्याह--"पूर्वपद" इत्यादि। न हि प्रकृतिस्वरादन्य एव स्वर उच्यते। किं तर्हि? प्रकृतिस्वर एव; यतः प्रकृत्येति वर्तते। तत्रैवमभिसम्बन्धः क्रियते--प्रकृतिभावेन कमारशब्दस्य यः स्वरः प्राप्तः स आदेर्भवतीति। एवञ्च सामथ्र्यादुदात्तो लभ्यते। स एव हि कुमारशब्दस्य प्रकृतिभावेन स्वरः॥

---

सूत्रम्

काशिका-वृत्तिः

पूगेष्वन्यतरस्याम् ६।२।२८

पूगा गणाः, तद्वाचिनि उत्तरपदे कर्मधारये समासे कुमारस्य अन्यतरस्याम् आदिरुदात्तो भवति। कुमारचातकाः, कुमारचातकाः, कुमारचातकाः। कुमारलोहध्वजाः, कुमारलोहध्वजाः, कुमारलोहध्वजाः। कुमारबलाहकाः, कुमारबलाहकाः, कुमारबलाहकाः। कुमारजीमूताः, कुमारजीमूताः, कुमारजीमूताः। चातकादयः पूगशब्दाः, तेभ्यः पूगाञ्ञ्यो ऽग्रामणीपूर्वात् ५।३।११२ इति ञ्यः प्रत्ययः, तस्य तद्राजस्य बहुषु तेन एव स्त्रियाम् २।४।६२ इति लुक्। अत्र यदा आद्युदात्तत्वं न भवति तदा कुमारश्च ६।२।२६ इति पूर्वपदप्रकृतिस्वरत्वम् एके कुर्वन्ति। ये तु तत्र प्रतिपदोक्तस्य ग्रहणम् इच्छन्ति तेषां समासान्तोदात्तत्वम् एव भवति।

न्यासः

पूगेष्वन्यतरस्याम्?। , ६।२।२८

---

सूत्रम्

काशिका-वृत्तिः

इगन्तकालकपालभगालशरावेषु द्विगौ ६।२।२९

इगन्ते उत्तरपदे, कालवाचिनि, कपाल भगाल शराव इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति। इगन्त पञ्चारत्निः। दशारत्निः। पञ्चारत्नयः प्रमाणमस्य, दशारत्नयः प्रमाणमस्य इति तद्धितार्थे द्विगुः, प्रमाणे लः द्विगोर् नित्यम् इति मात्रचो लोपः। इगन्त। काल पञ्चमास्यः। दशमास्यः। पञ्च मासान् भृतो भूतो भावी वा इति तद्धितार्थे द्विगोर् यप् ५।१।८१। पञ्चवर्षः। दशवर्षः। वर्षाल् लुक् च ५।१।८७ इति ठञो लुक्। काल। कपाल पञ्चकपालः। दशकपालः। कपाल। भगाल पञ्चभगालः। दशभगालः। भगाल। शराव पञ्चशरावः। दशशरावः। संस्कृतं भक्षाः ४।२।१५ इति तद्धितार्थे एते समासाः द्विगोर् लुगनपत्ये ४।१।८८ इति कृताण्प्रत्ययलोपा द्रष्टव्याः। इगन्तादिषु इति किम्? पञ्चभिरश्वैः क्रीतः पञ्चाश्वः। दशाश्वः। द्विगौ इति किम्? परमारत्निः। परमशरावम्। पञ्चारत्न्यो दशारत्न्यः इति च यण्गुणयोः बहिरङ्गलक्षणयोरसिद्धत्वात् स्थानिवद्भावाद् वा द्विगुस्वर इगन्तलक्षणः प्रवर्तते।

न्यासः

इगन्तकालकपालभगालशरावेषु द्विगौ। , ६।२।२९

"तद्धितार्थे द्विगोर्यप्()" इति। "मासाद्व्यसि" ५।१।८० इत्यनुवत्र्तमाने "द्विगोर्यष्()" ५।१।८१ इति यप्()। "ठञो लुक्()" इति। प्राग्वतीयस्य। "पञ्चकपलः" इति। पञ्चसु कपालेषु संस्कृतः पुरोडाश इति "संस्कृतं भक्षाः" ४।२।१५ इत्यण्(), तस्य "द्विगोः" ४।१।८८ इत्यादिना लुक्()। "एते समासाः" इति। पञ्चकपाल इत्येवमादयो दशशरावपर्यन्ताः। "कृताष्प्रत्ययलोपा" इति। कृतोऽण्प्रत्ययलोपो येषां ते तथोक्ताः। पञ्()चदशशब्दावत्र "ग्रः संख्यायाः" (फि।सू।२।२८) इत्युदात्तौ। "पञ्चा()आः" इति। तद्धितार्थे समासः। "आर्हादगोपुच्छ" ५।१।१९ इत्यादिना ठक्()। "अध्यर्धपूर्व" ५।१।२८ इत्यादिना लुक्()। पञ्च शरावाण्यस्मिन्निति बहुव्रीहिः। अथेह कथं भवति()--पञ्चारत्न्यो दशारत्न्य इति, यवाता यणादेशे कृते गुणे च नात्रेगन्तमुत्तरपदम्()? इत्याह--"पञ्चारत्न्यः" इत्यादि। यद्? यण्गुणौ ह्लजादौ विभक्तौ परत इति ताविह बहिरङ्गौ, स्वरस्त्वन्तरङ्ग; प्राग्विभक्त्युत्पत्तेर्भावात्(), "असिद्धं बहिरङ्गमन्तरङ्गे" (व्य।प।४२)। तेन पञ्चारत्न्य इत्यत्रापि द्विगुस्वर इगन्तलक्षणः प्रवत्र्तते। "स्थानिवद्भावाद्वा" इति। "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति पूर्वस्वरे कत्र्तव्यो यो गुणः स्थानिवद्भावेनेगन्तलक्षणः प्रवर्तते। ननु च स्वरविधौ "न पदन्त" (१।१।५८) इत्यादिना स्थानिवद्भावः प्रतिषिध्यते? नैतदस्ति; "स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्()" इत्युक्तत्वात्? (का।१।१।५८) न चैवमिको यण्गुणौ लोपाजादेशौ। "पञ्चारत्न्यः" इति। अरत्निशब्दोऽत्र "कृदिकारादक्तिनः" (ग।सू।५०) "सर्वतोऽक्तिन्नर्थादित्येके" (ग।सू।५१) इति बह्वादिषु पाठान्ङीषन्तः। इहापि पूर्ववत्? तद्धितार्थे द्विगुः, मात्रचस्तु लोपः॥

---

सूत्रम्

काशिका-वृत्तिः

बह्वन्यतरस्याम् ६।२।३०

बहुशब्दः पूर्वपदम् इगन्तादिषु उत्तरपदेषु द्विगौ समासे ऽन्यतरस्यां प्रकृतिस्वरं भवति। पूर्वेण नित्यं प्राप्ते विकल्पः। बह्वरत्निः, बह्वरत्निः। भौमास्यः, बहुमास्यः। बहुकपालः, बहुकपालः। बहुभगालः, बहुभगालः। बहुशरावः, बहुशरावः। बहुशब्दो ऽन्तोदात्तः, तस्य प्रकृतिस्वरे कृते यत्र यणादेशः तत्र उदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४ इत्येष स्वरो भवति।

न्यासः

बह्वन्यतरस्याम्?। , ६।२।३०

पूर्वोणेगन्तादिषूत्तरपदेषु बहुशब्दस्यापि नित्यं प्रकृतिस्वरे प्राप्ते विकल्पोऽयमुच्यते। "बहुरत्निः" इति। पूर्ववत्? समासादि। "बहुमास्यः" इति। पूर्ववद्यप्()। बहुकपालादयः समासाः, इहपि "संस्कृतं भक्षाः" ४।२।१५ इत्यत्रापि तद्धितार्थे कृतेऽण्प्रत्ययलोपा द्रष्टव्याः। "बहुशब्दोऽन्तोदात्तः" इति। स हि "कुभ्र्रश्च" (द।उ।१।१०७) इत्यनुवत्र्तमाने "बहि महि वृद्धौ" (धा।पा।६३३,६३४) इत्यस्मात्()। "लन्धिब्र्राह्योर्नलोपश्च" (द।उ।१।११४) इति कुप्रत्ययं विधाय व्युत्पाद्यते, तेन प्रत्ययस्वरेणान्तोदात्तः। "यत्र यणादेशः" इति। बह्वरत्निरित्यत्र॥

---

सूत्रम्

काशिका-वृत्तिः

दिष्टिवितस्त्योश् च ६।२।३१

दिष्टि वितस्ति इत्येतयोरुत्तरपदयोः द्विगौ समासे पूर्वपदम् अन्यतरस्यां प्रकृतिस्वरम् भवति। पञ्चदिष्टिः, पञ्चदिष्टिः।

पञ्चवितस्तिः, पञ्चवितस्तिः। दिष्टिवितस्ती प्रमाणे, तेन अत्र मात्रचो लुक्।

न्यासः

दिष्टिवितस्त्योश्च। , ६।२।३१

अबह्वर्थोऽयमारम्भः। "पञ्चदिष्टिः" इति। पञ्चारत्निरित्यनेन तुल्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ६।२।३२

सप्तम्यन्तं पूर्वपदं सिद्ध शुष्क पक्व बन्ध इत्येतेषु उत्तरपदेषु रकृतिस्वरं भवति सा चेत् सप्तमी कालान् न भवति। सांकश्यसिद्धः, सांकाश्यसिद्धः। काम्पिल्यसिद्धः, काम्पिल्यसिद्धः। सांकाश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तौ अन्तोदात्तौ। फिषि तु सांकाश्यकाम्पिल्यनसिक्यदार्वाघाटानाम् अन्तः पूर्वं वा इति पठ्यते, तत्र पक्षे मध्योदात्तावपि भवतः। शुष्क ऊकशुष्कः। निधनशुष्कः। ऊकशब्दो बहुलवचनादवतेः कक्प्रत्ययान्तो ऽन्तोदात्तः। निधनशब्दः निधाञः क्यप्रत्यये मध्योदात्तः। पक्व कुम्भीपक्वः। कलसीपक्वः। भ्राष्ट्रपक्वः। कुम्भीकलसीशब्दौ ङीषन्तावन्तोदात्तौ। भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्तः आद्युदात्तः। बन्ध चक्रबन्धः। चारकबन्धः। चक्रशब्दो ऽन्तोदात्तः। चारकशब्दो ण्वलन्त आद्युदात्तः। अकालातिति किम्? पूर्वाह्णसिद्धः। अपराह्णसिद्धः। सप्तमीस्वरः कृत्स्वरेण बाधितः पुनरयं विधीयते।

न्यासः

सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्?। , ६।२।३२

"साङ्काश्यसिद्धः" इति। "सिद्धशुष्कपक्वबन्धैश्च" २।१।४० इति समासः।
"साङ्काश्यकाम्पिल्यशब्दौण्यप्रत्ययान्तत्वात्()" इति। "वुच्छण्()" ४।२।७९ इत्यादिना सङ्काशादिलक्षणं चातुरार्थिकप्रत्ययं विधाय व्युत्पादितत्वात्()। "ऊकशब्दः" इत्यादि। "कृदाधारार्चिकलिभ्यः कः (द।उ।३।१८) इत्यधिकृत्य "सृदृभूशुषिमुषिभ्य कक्()" [कित्()--द।उंउद्रितः पाठः] (द।उ।उ।१९) इति कक्प्रत्ययः किद्? विधीयमानोऽवतेरपि भवतीति। तनोकशब्दः कक्प्रत्ययान्तः। "ज्वरत्वर" ६।४।२० इत्यादिना वतेरूठ्()। "निधनशब्दो निघाञः क्युप्रत्यये मध्योदात्तः" इति। निधनशब्दोऽयं "कृ()पृ()वृजिमन्दि निधाञः क्युः" (द।उ।५।२६) ["निधाञ्भ्यः" मुद्रितः पाठः--द।उ। सप्तम्येकवचने "इकोऽचि विभक्तौ" ७।१।७३ इति नुमं कृत्वा शब्दरूपापेक्षया नपुंसकलिङ्गं वेदितव्यम्()। क्युरित्येतस्मिन्? शब्दरूपे प्रत्ययसंज्ञकं इत्यर्थः। "कुम्भीकलसीशब्दौ ङीपन्तौ" इति। तेनान्तोदात्ताविति भावः। ङीषन्तता तु "जातेरस्त्रीविषयात्()" ४।१।६३ इत्यादिना विहितेन ङीषा वेदितव्यमा। "भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्तः" इति। "ष्ट्रन्()" (द।उ।८।७९) इति वत्र्तमाने "भ्रस्जिगमिनमिहनिविष्यशां वृद्धिश्च" ["विश्यशां" इति मुद्रितन्यासपाठः]

---

सूत्रम्

काशिका-वृत्तिः

परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ६।२।३३

परि प्रति उप अप इत्येते पूर्वपदभूता वर्ज्यमानवाचिनि अहरवयववाचिनि रात्र्यवयववाचिनि च उत्तरपदे प्रकृतिस्वरा भवन्ति। परित्रिगर्तं वृष्टो देवः। परिसौवीरम्। परिसार्वसेनि। प्रति प्रतिपूर्वाह्णम्। प्रत्यपराह्णम्। प्रतिपूर्वरात्रम्। प्रत्यपररात्रम्। उप उपपूर्वाह्णम्। उपापराह्णम्। उपपूर्वरात्रम्। उपापररात्रम्। अप अपत्रिगर्तं वृष्टो देवः। अपसौवीरम्।

अपसार्वसेनि। निपाता आद्युदात्ता उपसर्गाश्च अभिवर्जम् इति आद्युदात्तानि पूर्वपदानि। तत्पुरुषे बहुव्रीहौ च सिद्धत्वातव्ययैइभावार्थो ऽयम् आरम्भः। तत्र अपपरीवर्जने वर्तेते, इति तयोरेव वर्ज्यमानम् उत्तरपदं, नेतरयोः। अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर् भवन्ति इति न पृथगुदाह्रियते। वर्ज्यमानाहोरात्रावयवेषु इति किम्? प्रत्यग्नि शलभाः पतन्ति। परिवनम् इत्यत्र वनं समासे ६।२।१७७ इत्येतद् भवति।

---

सूत्रम्

काशिका-वृत्तिः

राजन्यबहुवचनद्वन्द्वे ऽन्धकवृष्णिषु ६।२।३४

राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वो ऽन्धकवृष्णिषु वर्तते तत्र पूर्वपदं प्रकृतिस्वरम् भवति। श्वाफल्कचैत्रकाः। चैत्रकरोधकाः। शिनिवासुदेवाः। श्वाफल्कशब्दः चैत्रकशब्दश्च ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४ इति अणन्तावन्तोदात्तौ। शिनिशब्द आद्युदात्तः, स तदपत्येष्वभेदेन वर्तते। राजन्य इति किम्? द्वैप्यहैमायनाः। द्वीपे भवाः इति द्वीपादनुसमुद्रं यत्र् ४।३।१०। हैमेरपत्यं युवा हैमायनः। अन्धकवृष्णय एते न तु राजन्याः। राजन्यग्रहणम् इह अभिषिक्तवंश्यानां क्षत्रियाणां ग्रहणार्थम्। एते च न अभिषिक्तवंश्याः। बहुवचनग्रहणं किम्? सङ्कर्षणवासुदेवौ। द्वन्द्वे इति किम्? वृष्णीनां कुमाराः वृष्णिकुमाराः। अन्धकवृष्णिषु इति किम्? कुरुपञ्चालाः।

न्यासः

राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु। , ६।२।३४

राजन्यवाचीनि यान्यसमस्तानि बहुवचनान्तानि तदवयवको यो द्वन्द्वः स राजन्यबहुवचनद्वन्दव इत्युक्तः। "()आआफल्कचैत्रकरोधकाः" इति। ()आआफल्काश्च चैत्रकाश्च रोधकाश्चेति द्वन्द्वः। तत्र रोधकशब्दमपेक्ष्य चैत्रकशब्दस्य पूर्वपदत्वम्(), चैत्रकशब्दमपेक्ष्य ()आआफल्कशब्दस्य, तयोरपि प्रकृतिभावः। अत एव तयोद्र्वयोरपि स्वरं दर्शयितुमाह--"()आआफल्कशपब्दश्चैत्रकशब्दश्च" इत्यादि। "शिनिशब्द आद्युदात्तः" इति। स हि--"वीज्याज्वरिभ्योनिः" (द।उ।१।१८) इति निप्रत्ययेऽनुवर्तमाने "वहिश्रिश्रुद्रुग्लाहात्वरिभ्यो नित्()" (द।उ।१।२१) [वहिश्रियुश्रुग्लाहात्वरिभ्यो--द।उ।] इति विधीयमाने शीङोऽपि भवति। बहुलवचनाद्? ह्रस्वत्वं च तत एव। तेनाद्युदात्तो भविता नित्स्वरेण। "तदपत्येषु" इति। तस्य शिनेः श्र्त्त्रियस्य यान्यपत्यानि तेष्वित्यर्थः। "अभेदेन" इति। उपचरेणेत्यर्थः। "हैमायनाः" इति। "यञिञोश्च" ४।१।१०१ इति फक्()। ननु च राजन्यशब्दोऽयं क्षत्रियजातिवचनः, तथा चोक्तम्()--"राज्ञोऽपत्ये जातिग्रहणम्()" (वा।३९२) इति; राजन्यो भवति क्षत्रियश्चेत्()" इति। यश्चान्धकवृष्णिषु वर्तते द्वन्द्वः स तु क्षत्रियवाचिनामेव भवति; अन्धकवृष्णीनां क्षत्रियत्वात्()। ततश्च द्वैप्यहैमायना इत्युक्तं प्रत्युदाहरणम्()। अयमपि हि राजन्यवाचिनामेव द्वन्द्वः; अन्धकवृष्णिषु वर्तमानत्वदित्यत आह--"अन्धकवृष्णयः" इत्यादि। "अन्धकवृष्णिषु" इत्येतावतैव क्षत्रियग्रहणे सिद्धे यद्राजन्यग्रहणं क्रियते, तस्यैतत्? प्रयोजनम्()--विशिष्टा येऽभिषिक्तवंश्यास्तेषां ग्रहणं यथा स्यादित्येवमर्थम्()। विद्यया जन्मना वा प्राणिनामेकलक्षणः सन्तानः=वंशः, इह तु जन्मना य एकलक्षणः सोऽभिप्रेतः, तत्र भवो वंश्यः, दिगादित्वात्? ४।३।५४। यत्()। तत्रैतत्? स्यात्()। द्वैप्यहैमायना अप्यभिषिक्तवंश्य एव क्षत्त्रियाः? इत्यत आह--"एते च" इत्यादि। "सङ्कर्षणवासुदेवौ" इति। सङ्कर्षणश्च वासुदेवश्चेत्येकवचनान्तयोरयं द्वन्द्वः। "वृष्णिकुमाराः" इति। तत्पुरुषोऽयम्()। "कुरुपाञ्चालाः" इति। अत्र सर्वमस्ति, तथाप्यन्धकवृष्णिग्रहणान्न भवति; तत्रावृत्तेः॥

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्या ६।२।३५

द्वन्द्वसमासे सङ्ख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति। एकादश। द्वादश। त्रयोदश, त्रयोदश। इण्भीकापाशल्यतिमर्चिभ्यः कनिति नित्त्वादाद्युदात्त एकशब्दः। त्रेस्त्रयसदेशो ऽन्तोदात्तो निपात्यते।

न्यासः

संख्या।, ६।२।३५

"एकादश" इति। एकश्च दश चेति द्वन्द्वः। "द्वादश" इति द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ६।३।४६ इत्यात्तवम्()॥

---

सूत्रम्

काशिका-वृत्तिः

आचार्योपसर्जनश् च अन्तेवासी ६।२।३६

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वः, तत्र पूर्वपदं प्रकृतिस्वरं भवति। आपिशलपाणिनीयाः। पाणिनीयरौढीयाः। रौढीयकाशकृत्स्नाः। अपिशलस्यापत्यमापिशलिराचर्यः, अत इञ् ४।१।९५। तेन प्रोक्तम् आपिशलम्, इञश्च ४।२।१११ इत्यण्। तदधीयते ये ऽन्तेवासिनः ते ऽप्यापिशलाः, प्रोक्ताल् लुक् ४।२।६३ इति तस्य तद्धितस्याध्येतरि विहितस्य लुक् क्रियते। आपिशलेर् वा छात्राः आपिशलाः, इत्युभयथाप्याचर्योपसर्जनश्चान्तेवासी भवति। आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणार्थम्, सकलो द्वन्द्वः आचार्योपसर्जनो यथा विज्ञायेत। इह मा भूत्, पाणिनियदेवदत्तौ। आचार्योपसर्जने इति किम्? छान्दसवैयाकरणाः। अन्तेवासी इति किम्? आपिशलपाणिनीये शास्त्रे।

न्यासः

आचार्योपसर्जनश्चान्तेवासी।, ६।२।३६

आचार्य उपसर्जनं प्रधानं यस्य स ततोक्तः। अन्ते वसतीत्यन्तेवासी। गौणश्चायं निर्देशः। द्वन्द्वस्य यान्यवयवभूतानि तान्याचार्योपसर्जनवाचीनि। तस्मादन्तेवासिवाचित्वाच्चाभिधेय उपचारेण तान्याचार्योपसर्जनान्तेवासिशब्दाभ्यामुच्यन्ते। तदवयवोऽपि द्वन्द्वावयवधर्मेणाचार्योपसर्जनान्तेवासीति चोच्यते। "आपिशलिराचार्यः" इति। "अत इञ्()" ४।१।९५। "आपिशलिरेव वा छात्रा आपिशालाः" इति। पूर्ववदण्()। "उभयथा" इत्यादि। उभयप्रकारेणापि व्युत्पत्तावचार्योपसर्जनश्चान्तेवासी भवति। तथा हि--उभयतर शिष्या एव प्रधानभूता एवमुच्यन्ते, आचार्यस्तु तद्विशेषणत्वादुयसर्जनीभूतः। आपिशलशब्दोऽणन्तत्वात्? प्रत्ययसवरेणान्तोदात्तः। पाणिनिना प्रोक्तमिति "वृद्धाच्छः" ४।२।११३ "तदधीते" ४।२।५८ इत्यण्(), तस्य लुक्()। पाणिनीयशब्दः प्रत्ययस्वरेण मध्योदात्तः। "पाणिनीयरौढीयाः" इति। रोढस्यापत्यं रौढिः, "अत इञ्()" ४।१।९५ रौढेराचार्यस्य च्छात्रा इति "इञश्च" ४।२।१११ इत्यणः प्रापतस्य "न द्व्यचः" ४।२।११२ इति प्रतिषेधे कृते "वृद्धाच्छः" ४।२।११३। अथ वा--रौढिना प्रोक्तं रौढियम्(), ततश्च "तदधीते" ४।२।५८ इत्यण्(), तस्य पूर्ववल्लुक्()--रौढीयाः। रौढीयशब्दोऽपि पूर्ववन्मध्योदात्तः। काशकृत्स्नेन प्रोक्तमित्यण्? तदधीयते काशकृत्स्नाः, पूर्ववदणो लुक्()। "छान्दसवैयाकरणाः" इति। भवत्ययमन्तेवासिना द्वन्द्वः, न त्वाचार्योपसर्जनः। त्र ह्यन्तेवासिन एव छान्दसवैयाकरणाभ्यामुच्यन्ते, न त्वाचार्योपसर्जनीभूताः। छन्दोऽधीयते च्छान्दसाः, व्याकरणमधीयत इति वैयाकरणाः। तत्र ते च यत आचार्यादधीयते तस्यान्तेवासिनः। "आपिशलपाणिनीये शास्त्रे" इति। आपिशलिना प्रोक्तमापिशलम्()। पाणिनिना प्रोक्तं पाणिनीयम्()। यत्र शास्त्रे प्राधान्येनोच्येत तत्र प्रत्ययस्य विधानादाचार्यः प्रधानभूतः; तद्विशेषणत्वात्()। आचार्यत्वं तस्येह शास्तरापेक्षम्()। न ह्याचार्यतान्तेवास्यपेक्षैव भवति,

अपि तु शासत्रापेक्षापि॥

---

सूत्रम्

काशिका-वृत्तिः

कार्तकौजपाऽदयश् च ६।२।३७

कार्तकौजपादयो ये द्वन्द्वाः तेषु पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति। विभक्त्यन्तानां पाठो वचनविवक्षार्थः। चकारो द्वन्द्वाधिकारानुवृत्त्यर्थः। कार्तकौजपौ। कृतस्य अपत्यं, कुजपस्य अपत्यम् इत्यणन्तावेतौ। सावर्णिमाण्डूकेयौ। सावर्णिरिञन्तः। अवन्त्यश्मकाः। अवन्तेरपत्यानि वहूनि, तन्निवासो जनपदो ऽवन्तयः। तथा अश्मकाः। पैलश्यापर्णेयाः। युवद्वन्द्वो ऽयम्। पीलायाः अपत्यं पैलः, तस्य अपत्यं युवा इति अणो द्व्यचः ४।१।१५६ इति विहितस्य फिञः पैलादिभ्यश्च २।४।५९ इति लुक्। श्यापर्णशब्दो बिदादिः, तस्य अपत्यं स्त्री श्यापर्णी, तदपत्यं युवा श्यापर्णेयः। बहुवचनमतन्त्रम्, तेन पैलश्यापर्णेयौ इत्यत्र अपि भवति। कपिश्यापर्णेयाः। कपिरन्तोदात्तः, तस्य अपत्यं बहुत्वे कपिबोधाङ्गिरसे ४।१।१०७ इति उत्पन्नस्य यञः यञञोश्च इति लुक्, तेन अत्र बहुत्वम् आश्रीयत एव। शैतिकाक्षपाञ्चालेयाः। शितिकाक्षो नाम ऋषिः, तस्य अपत्यम् इति ऋष्यण्, तदपत्ये यूनि य इञ् तस्य ण्यक्षत्रियार्षञितो यूनि लुगणिञोः २।४।५८ इति लुक्। पाञ्चालस्य अपत्यं स्त्री पाञ्चाली, तदपत्यम् युवा पाञ्चालेयः। अत्र अपि बहुवचनम् अविवक्षितम् इति शैतिकाक्षपञ्चालेयौ इत्यत्र अपि भवति। कटुकवार्चलेयाः। कटुकस्य अपत्यम् इति अत इञ् ४।१।९५, तस्य बह्वच इञः प्राच्यभरतेषु २।४।६६ इति बहुषु लुक्। वर्चलायाः अपत्यं वार्चलेयः। शाकलशुनकाः। शकलस्य अपत्यं शाकल्यः, तस्य छात्राः शाकलाः। कण्वादिभ्यो गोत्रे ४।२।१११ इत्यण्। शुनकस्य अपतय्म् इति बिदादिभ्यो ऽञ् ४।१।१०४, तस्य बहुषु लुक्। शाकलशणकाः इति केचित् पठन्ति। तेषां शणकशबादुत्पन्नस्य इञः बह्वच इञः प्राच्यभरतेषु २।४।६६ इति बहुषु लुक्। शुनकधात्रेयाः। धात्र्या अपत्यं धात्रेयः। शणकबाभ्रवाः। बभ्रोरपत्यं बाभ्रवः। आर्चाभिमौद्गलाः। ऋचाभेन प्रोक्तम् अधीयते आर्चाभिनः। वैशम्पायनान्तेवासित्वात् णिनिः। मुद्गलः कण्वादिः, तदपत्यस्य छात्रा मौद्गलाः। कुन्तिसुराष्ट्राः। कुन्तेः सुराष्ट्रस्य च अपत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वो ऽयम्। कुन्तिचिन्तिशब्दौ अन्तोदात्तौ। चिन्तिसुराष्ट्राः कुन्तिसुराष्ट्रवत्। तण्डवतण्डाः। पचाद्यच्प्रत्ययान्तौ अन्तोदात्तौ एतौ गर्गादिषु पठ्येते। तत्र अपत्यबहुत्वे यञो लुक् क्रियते। गर्गवत्साः। अत्र अपि अपत्येषु बहुषु इञः बह्वच इञः प्राच्यभरतेषु २।४।६६ इति लुक् क्रियते। बाभ्रवशालङ्कायनाः। बभ्रोरपत्यं बाभ्रवः। शलङ्कु शलङ्कं च इति शालङ्कायनः। बाभ्रवदानच्युताः। दानच्युतशब्दातिञः बह्वचः इति लुक्। कठकालापाः। कठेन प्रोक्तम् अधीयते कठाः, वैशम्पायनान्तेवासित्वात् णिनिः, तस्य कठचरकाल् लुक्। कलापिना प्रोक्तमधीयते कालापाः। कलापिनो ऽण् ४।३।१०८ इत्यण् प्रत्ययः, तस्मिनिनिनण्यनपत्ये ६।४।१६४ इति प्रकृतिभावे प्राप्ते न अन्तस्य टिलोपे सब्रह्मचारिपीठसर्पि इत्यादिनोपसङ्ख्यानेन टिलोपः। कठकौथुमाः। कुथुमिना प्रोक्तमधीयते इति प्राग्दीव्यतो ऽण् ४।१।८३, तस्य पूर्ववत् टिलोपः। कौथुमलौकाक्षाः। लोकाक्षेण प्रोक्तम् अधीयते लौकाक्षाः। लोकाक्षस्य वा अपत्यं लौकाक्षिः, तस्य छात्राः लौकाक्षाः। स्त्रीकुमारम्। स्त्रीशब्दो ऽन्तोदात्तः। मौदपैप्पलादाः। मुदस्य अपत्यं मौदिः। तस्य छात्रा मौदाः। तथा पैप्पलादाः। मौदपैप्पलादाः इति द्विः पठ्यते, तस्य प्रयोजनं पक्षे समासान्तोदात्तत्वम् एव यथा स्यादिति। वत्सजरत्। वत्सश्च जरच् च। वत्सशब्दो ऽन्तोदात्तः। सौश्रुतपार्थवाः। सुश्रुतस्य पृथोश्च छात्राः, प्राग्दीव्यतो ऽण् ४।१।८३। जरामृत्यू। याज्यानुवाक्ये। यजेर्ण्यत्, यजयाचरुचप्रवचर्चश्च ७।३।६६ इति कुत्वाभावः। तत्स्वरितम् ६।१।१७९ इत्यन्तस्वरितः। अनुवाक्या इति वचेरनुपूर्वात् ण्यत्। आचार्योपसर्जनान्तेवासिनाम् इह पाठः प्रप्ञ्चार्थः।

न्यासः

कार्तकौजपादयश्च। , ६।२।३७

"अणन्तावेतौ" इति। तेन प्रत्ययस्वरेणान्तोदात्ताविति भावः। उत्तरत्राप्यणन्तस्यानोदात्तता वेदितव्या। "सौवर्णिरिञन्तः" ["सावर्णिः--काशिका] इति। ञित्स्वरेणाद्युदात्त इत्यभिप्रायः। एवमुत्तरत्रापीञन्तस्याद्युदात्तत वेदितव्या। माण्डूकेयशब्दः "ढक्? च मण्डूकात्()" ४।१।११९ इति ढगन्तः। "अवन्तेः" इत्यादि। अवन्तेरपत्यानि बहूनीति "बृद्धेत्कोशलाजादाञ्ञ्यङ्()" ४।१।१६९ इति ञ्यङ्(), तस्य "तद्राजस्य" २।४।६२ इत्यादिना लुक्। अवन्तीनां निवासो जनपदः "तस्य निवासः" ४।२।६८ इति चातुर्थिकोऽण्()। तस्य "जनपदे लुप्()" ४।२।८० इति लुप्। "अवन्तयः, तथाश्मकाः" इति। यथावन्तय इति कृतस्तथाश्मका इत्यत्रापि। अत्र क्षत्त्रियवाचिनो जनपदवाचिनश्च शब्दाः। तद्धितेऽपत्येषु यो बहुषत्पद्यते तदन्ताचच निवासे चातुरर्थिकः। तस्य लुप्? कृतः। तथाश्मका इत्यत्रापि। एतावन्मात्रमतिदिश्यते। अश्मकस्यापत्यानि बहूनि, "साल्वावयव" ४।१।१७१ इत्यादिनेञ्(), तस्य लुक्? पूर्ववत्(), तेषां निवासेऽण्(), तस्य पूर्ववल्लुप्()। अवन्तिशब्दो घृतादित्वादन्तोदात्त इत्येके। चित्स्वरेणेत्यपरे, ते हि "भुवो झिच्()" (पं।उ।३३०) बहुलवचनादवतेरपि झिज्भवतीति वर्णयन्ति। "युवद्वन्द्वोऽयम्()" इति युदसंज्ञकप्रत्ययान्तयोरयं द्वन्द्व इत्यर्थः। "फैलः" इति। "पीलाया वा" ४।१।११८ इत्यण्()। "श्यायर्णशब्दो बिदादिः" इति तेन ततोऽस्यविवक्षायामञ्? भवतीति भवाः। "स्त्री" इति। "शाङ्गरवाद्यञो ङीन्()" ४।१।७३। "श्यापर्णेयः" इति। "स्त्रीभ्यो ढक्()" ४।१।१२०। "बहुचचनमतन्त्रम्()" इति। अविवक्षितत्वात्()। "तेन" इत्यादिना बहुवचनाविवक्षायाः फलं दर्शयति। "कपिरन्तोदात्तः" इति। प्रातिपदिकस्वरेण। "तेन" इत्यादि। यस्मात्? कपिशब्दोऽयं लुगन्त; तेन बहुवचनमत्राश्रीयत एव। "ऋष्यण्()" इति। "ऋष्यन्धक" ४।१।११४ इत्यादिना। "यूनि य इञ्()" इति। "अत इञ्()" (श्र४।१।९५) इत्यनेन। "पाञ्चाली" इति। "जनपदशब्दात्? क्षत्रियादञ्()" ४।१।१६६ इत्यञ्()। तदन्तात्? पूर्ववन्ङीप्()। "पाञ्चालेयी" [पाञ्चालेयः--काशिका] पूर्ववड्ढक्()। एवं "वार्चलयी" इत्यत्रापि। "शाकल्यः" इति। गर्गादित्वात्? यञ्()। शाकल्यशब्दो ञित्स्वरेणाद्युदात्तः। "शणकबाभ्रवाः" इति। शणं करोतीति "कै गै शब्दे" (धा।पा।९१६,९१७) इत्यस्माद्धात्तोः "आतोऽनुपसर्गे कः" ३।२।३, तेन प्रत्ययस्वरेण शणकशब्दोऽन्तोदात्तः। "बाभ्रवः" इति। "ओर्गुणः" ६।४।१४६। "आर्चाभिनः" इति। प्रोक्तार्थे णिनिः, तस्मादध्येतर्यण्(), तस्य "प्रोक्ताल्लुक्()" ४।२।६३ इति लुक्()। एवमुत्तरत्रापि प्रोक्तप्रत्ययान्तादध्येतृप्रत्ययस्य लुग्वेदितव्यः। "मुद्गलः कण्वादिः" इति। गर्गाद्यन्तर्गणः। "तदपत्यस्य" इति। मौद्गलाः" इति। मौद्गल्यशब्दात्? "कण्वादिभ्यो गोत्र" ४।२।११० इत्यण्(), "यस्येति च" ६।४।१४८ इत्यकारलोपः। "आपत्यस्य च तद्धेतेऽनाति" ६।४।१५१ इति यकारस्य। आर्चाभिशब्दः प्रत्ययस्वरेणान्तोदात्तः। "कुन्ते सुराष्ट्रस्य" इत्यादि। "कमु कान्तौ" (धा।पा।४४३) इत्यस्मात्? पूर्ववत्? क्तिच्(), बहुलवचनादुत्वम्()। कुन्ति शोभनं राष्ट्रमस्येति सुराष्ट्रः। कुन्तेरपत्यानि बहूनि "वृद्धेत्कोशलाजादञ्ञ्यङ्()" ४।१।१६९; सुराष्ट्रस्यापत्यानि बहूनि, जनपदशब्दादिना ४।१।१६६ अण्(), तयोः "तद्राजस्य" २।४।६२ इत्यादिना बहुषु लुक्()। ततः कुन्तीनां निवासो जनपदः "तस्य निवासः" ४।२।६८ इति चातुरर्थिकोऽण्(), "तस्य जनपदे लुप्()" ४।२।८० इति लुप्()। कुन्तयश्च सुराष्ट्राश्च कुन्तिसुराष्ट्राः। एवं कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे जनपदद्वन्द्वादयं भवति। कुन्तिशब्दाश्चित्स्वरेणान्तोदात्तः। "चिन्तिसुराष्ट्राः" इति। चिन्तिशब्दोऽप्यान्तोदात्त एव। सोऽपि "चिति समृत्याम्()" (धा।पा।१५३५) इत्यस्मात्()। क्तिच्प्रत्ययान्तः। केचिदवन्तिकुन्तिशब्दौ "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इति क्तिच्प्रत्ययान्तौ व्युत्पादयन्ति। "पचाद्यन्प्रत्ययान्तौ" इति। "तडि हर्षे" (धा।प।२८०) इत्यस्मात्? केवलादवपूर्वाच्च पचाद्यच्()। "वष्टि भागुरिरल्लोपमवाप्योरुपसरगयोः" इत्यवशब्दाकारस्य लोपः। "यञो लुक्? क्रियते" इति। "यञञोश्च" २।४।६४ इति। "अविमत्तकामविद्धा" इति। "मदी हर्षे" (धा।पा।१२०८) इत्यस्माद्विपूर्वान्निष्ठा--विमत्तः, न विमत्तोऽविमत्त इति। "तत्पुरुषे तुल्यार्थे" (६।२।२।) इत्यादिना पूर्वपदसय प्रकृतिभावे कृते नञ्स्वरेणाद्युदात्तः। "बह्वचः" इति। अनेन सूत्रैकदेशेन "बह्वच इञः प्राचयभरतेषु" (२।४।६६) इत्येतत्? सूत्रमुपलक्षयति। "शलङ्कु शलङ्कञ्च" इति। नडादिष्वेतत् पठ()ते। अस्यायमर्थः--शलङ्कुशब्दः फकमुत्पादयति शलङ्कादेशञ्चापद्यत इति। "बाभ्रवदानच्युताः" इति। ब्राभ्रोरपत्यं बाभ्रवः, अणन्तः। दानच्युतशब्दादिञो बह्वचो लुगिति पूर्ववत्()। "कठकालपाः" इति। कठशब्दः

पचाद्यचि व्युत्पादितत्वादन्तोदात्तः। लोकाक्षस्यापत्यं "लौकाक्षि)" तसय च्छात्रा "लौकाक्षाः"। "स्त्रीकुमाम्()" इति। "सत्यायतेर्ड्रट्()" (पं।उ।४।१६५) तदन्तात्? "टिड्()ढाणञ्()" ४।१।१५ इति ङीप्(), तत्र प्रतद्ययस्वरेणान्तोदात्ताकारस्य "यस्येति च" ६।४।१४८ इति लोपः, "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इति ङीप उदात्तत्वे कृते स्त्रीशब्दो ह्रुदात्तः। "तस्य च्छात्रा मीदाः" इति। "इञश्च" ४।२।१११ इत्यण्()। "तथा पैप्पलादाः" इति। पिप्पलावस्यापत्यं पौप्यलादिः, तस्य च्छात्राः पैप्पलादाः। "वत्सजरत्()" इति। "वृ()तृ()वदिहनिकमिकषिभ्यः सः" (द।उ।९।२१) [वृ()तृ()वदिहिनिकमिकषियुमुचिभ्यः सः--द।उ।] इति वदेः सः, अनेन वतसशब्दोऽन्तोदात्तः, "जीर्यतेरतृन्" ३।२।१०४। जरत्(), तयोद्र्वन्द्वः। "सौश्रुतपर्थवाः" इति। सुश्रुतस्य छात्राः सौश्रुताः। "पृथोश्छात्राः पार्थवाः" इति। उभयत्र "तस्येदम्()" ४।३।१२० इत्यण्()। "जरामृत्यु" इति। जृ()षित्येतस्मात्? "षिद्भिदादिभ्योऽङ्()" ३।३।१०४ इत्यङ्(), जरा, तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्()। म्रियतेः "भृजडिमृङ्भ्यां युक्त्युकौ" (द।उ।१।१३५) इति त्युक्(), मृत्युः॥

---

सूत्रम्

काशिका-वृत्तिः

महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ६।२।३८

प्रकृत्या पूर्वपदम् इति वर्तते, द्वन्द्वे इति निवृत्तम्। महानित्येतत् पूर्वपदं व्रीहि अपराह्ण गृष्टि इष्वास जाबाल भार भारत हैलिहिल लौरव प्रवृद्ध इत्येतेषु उत्तरपदेषु प्रकृतिस्वरं भवति। महव्रीहिः। महापराह्णः। महागृष्टिः। महेष्वासः। महाजाबालः। महाभारः। महाभारतः। महाहैलिहिलः। महारौरवः। महाप्रवृद्धः। महच्छब्दो ऽन्तोदात्तः, तस्य रतिपदोक्तो यः समासः सन्महत्परमोत्कृष्टाः पूज्यमानैः २।१।६० इति तत्र एष स्वरः। तेन एषां षष्ठीसमासो ऽन्तोदात्त एव भवति, महतो व्रीहिः महद्व्रीहिः इति। कर्मधारये ऽनिष्ठा ६।२।४६ इत्ययम् अपि श्रेण्यादिसमासे विधिः इति प्रवृद्धशब्दः इह पठ्यते।

न्यासः

महान्? व्रीह्रपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु। , ६।२।३८

"महच्छब्दोऽन्तोदात्तः" इति। "वत्र्तमाने पृषद्बृहन्महत्()" (द।उ।६।५) इत्यन्तोदात्तस्य तस्योणादिषु निपातनात्()। अथेह कस्मान्न भवति। महतो व्रीहिर्महद्व्रीहिः? इत्यात आह--"तस्य" इत्यादि। एतच्च लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) लभ्यते। अथ किमर्थं प्रवृद्धशब्द इह पठ()ते, यावता निष्ठान्तोऽसौ, तत्र "कर्मधारयेऽनिष्ठा" (६।२।४६) इति वक्ष्यमाणेनैव सिदधम्()? इत्यत आह--"कर्मधारयेऽनिष्ठ" इत्यादि। तथैव हि परिभाषया "श्रेण्यादयः कृतादिभः" २।१।५८ इति तेन प्रतिपदोक्तेनायं समासः। तत्र "कर्षारयेऽनिष्ठा" ६।२।४६ इत्यनेन प्रकृतिबावस्याविधिः। न च महाप्रवृद्ध इत्ययं प्रतिपदोक्तेन निष्ठान्तेन कर्मधारयः; तत्र यदि प्रवृद्धशब्दोऽत्र न पठ()ते, तत्र परतः प्रकृतिभावो न स्यात्()। तस्मात्? तस्येह पाठः क्रियते। योगश्चायं समासस्वरस्यापवादः॥

---

सूत्रम्

काशिका-वृत्तिः

क्षुल्लकश् च वैश्वदेवे ६।२।३९

क्षुल्लक इत्येतत् पूर्वपदं महांश्च वैश्वदेवे उत्तरपदे प्रकृतिस्वरं भवति। क्षुल्लकवैश्वदेवम्। महावैश्वदेवम् क्षुधं लाति इति क्षुल्लः। तस्मादज्ञातादिसु प्रगिवात् के ऽन्तोदात्तः क्षुल्लकशब्दः।

न्यासः

क्षुल्लकश्च वै�आदेवे। , ६।२।३९

"क्षुधं लातीति क्षुल्लः" इति। "आतोऽनुपसर्गे कः" ३।२।३ इति कप्रत्ययः। "तोर्लि" ८।४।५९ इति परसवर्णः॥

---

सूत्रम्

काशिका-वृत्तिः

उष्ट्रः सादिवाम्योः ६।२।४०

उष्ट्रशब्दः पूर्वपदं सादिवाम्योरुत्तरपदयोः प्रकृतिस्वरं भवति। उष्ट्रसादि। उष्ट्रवामि। उष्ट्रशब्द उषेः ष्ट्रन् प्रत्ययान्तः आद्युदात्तः। कर्मधारयो ऽयं षष्ठीसमासो वा।

न्यासः

उष्ट्रः सादिवाम्योः। , ६।२।४०

"सर्वधातुभ्यः ष्ट्रन्()" (पं।उ।४।१५८) इत्यस्मात्? ष्ट्रन्नितयनुवरतमाने उषिखनिभ्यां कित्? (पं।उ।४।१६१) इत्येवं व्युत्पादितत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

गौः सादसादिसारथिषु ६।२।४१

गोशब्दः पूर्वपदं साद सादि सारथि इत्येतेषु उत्तरपदेषु प्रकृतिस्वरं भवति। गोः सादः गोसादः। गां सादयति इति वा गोसादः। गोः सादिः गोसादिः। गोसारथिः।

न्यासः

गौः सादसादिसारथिषु। , ६।२।४१

"गोः सादः" इत्यनेन वाक्यशेषेण गोसादशब्दस्य षष्ठीसमासत्वं दर्शयति। "गां सादयतीति च" [वा--काशिका] इति। एतेनाप्युपदसमासत्वम्(); सवेर्विशरणार्थत्वात्? गोशब्दे कर्मण्युपपदे कृते गोसाद इति भवति। गोशब्दः "गमेर्डोस्()" (द।उ।२।११) [गमेर्डोः--पं।उ;द।उ।] इति डोस्प्रत्ययान्तत्वात्? प्रत्ययसवरेणान्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूपण्यकम्बलो दासीभाराणां च ६।२।४२

कुरुगार्हपत रिक्तगुरु असूतजरती अश्लीलदृढरूपापारेवडवा तैतिलकद्रू पण्यकम्बल इत्येते समासाः, तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति। कुरूणां गार्हपतं कुरुगार्हपतम्। कृग्रोरुच्च इति कुरुशब्दः कुप्रत्ययान्तो ऽन्तोदात्तः। कुरुवृज्योर् गार्हपत इति वक्तव्यम्। वृजीनां गार्हपतं वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः। रिक्तो गुरुः रिक्तगुरुः, रिक्तगुरुः। रिक्ते विभाषा ६।१।२०२ इति पूर्वपदम् आद्युदात्तम् अन्तोदत्तं वा। असूता जरती असूतजरती। अश्लीला दृढरूपा अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीः यस्य अस्ति तत् श्लीलम्। सिध्मादेराकृतिगणत्वाल् लच्। कपिलकादित्वाच् च लत्वम्। अश्लीलदृढरूपा इति हि संस्थानमात्रेण शोभना निःश्रीका लावण्यविरहिता उच्यते। पारे वडवा इव पारेवडवा। निपातनादिवार्थे समासो विभक्त्यलोपश्च। पारशदो घृतादित्वादन्तोदात्तः। तैतिलानां कद्रूः तैतिलकद्रूः। तितिलिनो ऽपत्यं छात्रो वा तैतिलः इत्यणन्तः। पण्यकम्बलः। पण्यशब्दो यदन्तत्वादाद्युदात्तः। पण्यकम्बलः संज्ञायाम् इति वक्तव्यम्।

अन्यत्र पणितव्ये कम्बले समासान्तोदात्तत्वम् एव। प्रतिपदोक्ते हि कृत्यानां समासे द्वितीया इत्या इत्येष विहितः स्वरितः। दास्या भारः दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। अन्तोदात्तं पूर्वपदम्। वसुनीतिः। वसुशदः आद्युदात्तः। शृस्वृस्निहित्रप्यसिवसि इत्यत्र धान्ये नितिति वर्तते। ओषधिः। ओषो धीयते ऽस्याम् इति कर्मण्यधिकरणे च 3|3|93 इति किप्रत्ययः। ओषशब्दो घञन्तत्वादाद्युदात्तः। चन्द्रमाः। चन्द्रे मो डितिति असिप्रत्ययान्तो ऽयम्। चन्द्रशब्दस् तु रक्प्रत्यान्तत्वादन्तोदात्तः। यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वम् इष्यते, न च विहितं, स सर्वो दासीभारादिसु द्रष्टव्यः।

न्यासः

कुरुगारहपतिरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च। , ६।२।४२

अत्र "कुरुगार्हपत" इत्येवमादयः पण्यकम्बलपरयन्ताः समस्ता-। तत्र कुरुगार्हपत--रिषतगुरु--इत्येतावविभक्तिकौ। इतरे तु असूतजरतीतयेवमादयः प्रथमैकवचनान्ताः। सा च प्रथमा सुबध्यत्ययेन षष्ठ्याः स्थाने वेदितव्या। "दासीभाराणाम्()" इति बहुवचनं गणस्य सूचनार्थम्()। अत एवाह--"दासाभारादीनां च" इति। "कुरुशब्दः कुप्रत्ययान्तः" इति। "कुभ्रश्च" (द।उ।१।१०७) इत्यतः "कु" इत्यधिकृत्य "कृग्रोरुचच" (द।उ।१।१०९) इति कुप्रतययान्तत्वेन व्युत्पादितत्वात्()। "कुरुवृज्योर्गार्हपत इति वक्तव्यम्()" इति। कुरुवृजिशब्दयोर्गार्हपतशब्द उत्तरपदे प्रकृतिभावो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--कुरुशब्दस्य तावत्? "कुरुगार्हपत" 6|2|42 इति सूतद्र एवोपादानाद्भविष्यति। वृजिशब्दस्यापि चकारस्येहानुक्तसमुच्चयार्थत्वादिति। "वृजिशब्द आद्युदात्तः" इति। वृजेरिन्()। "इगुपधात्? किच्च" (द।उ।१।४८) इत्येवं व्युत्पादितत्वात्()। "रिक्तगुरुः" इति। रिक्तगुरुशब्दस्य समानाधिकरणसमासतां दर्शयति। एवं "असूता जरती" इत्यनेनाप्यस्यासूतजरतीशब्दस्य। "अश्लौला दृढरूपा" इत्यनेनाश्लीलदृढरूपशब्दसाय। न सूतेत्यसूताशब्दोऽपि नञ्स्वरेणाद्युदात्तः। एवमश्लीलाशब्दोऽपि। न श्लीलाऽश्लीला। "सिध्मादेराकृतिगणत्वाल्लच्()" इति। "सिध्मादिभ्यश्च" 5|2|96 इति "प्राणिस्थादातो लजन्यतरसयाम्()" 5|2|95 इत्यतो लजितयस्यानुवृत्तेः। "कपिलकादित्वाच्च लत्वम्()" इति। "कृपो रो लः" 8|2|18 इत्यत्र "कपिलकादीनाञ्चोपसंख्यानम्()" (वा।९१५) इति लत्वस्योपसंख्यानात्()। कथं पुनर्ज्ञायते---श्रीर्यस्यास्ति तच्श्लीलशब्देनीच्यते? इत्याह--"अश्लीलदृढरूपा" इत्यादि। न श्लीलमश्लीलमिति अश्लोलशब्दस्यार्थः प्रतिषिध्यते। तत्र यदि श्लीलशब्दस्य श्रीर्यस्यास्ति स इत्यर्थो न स्यादश्लीलदृढरूपेत्यत्र निःश्रीका नोच्येत, उच्यते च, ततो ज्ञायते श्रीमदद्वस्तु श्लीलशब्देनोच्यत इति। "संख्थानमात्रेण शोभना" इति। दृढत्वाच्च संस्थानस्य। श्रीरहितत्वाच्च संस्थानमात्रेण शोभना। मात्रशब्दः श्रीमत्ताया व्यवच्छेदकः। "लावण्यरहिता" इत्यनेन निःश्रीकेत्यस्यार्थं विस्पष्टीकरोति। "पारे वडवेव पारेवडवा" इति। केन पुनरत्र समासः? न हीवार्थे समासस्य किञ्चिल्लक्षणमस्ति। अथापि कथञ्तित्? समासः स्यात्()। एवमपि "सुपो धातुप्रातिपदिकयोः" (२।४।७१) इति विभक्तिलोपः कस्मान्न भवति? इत्याह--"निपातनादेव" इत्यादि। "तितिलिनोऽपत्यम्()" इति एतेनापत्यार्थे तितिलिञ्शब्दात्? तद्धितोत्पत्तिमिह दर्शयति। "छात्रा वा" [छात्रो वा तैतिलः--काशिका] इति। तितिलिन इत्यपेश्रते। एतेनापि "तस्येदम्()" 4|3|120 इत्यर्थे तैतिला इति। पूर्ववदुपसंख्यानाट्टिलोपः। "यदन्तत्वात्()" इति। "अवद्यपण्य" 3|1|101 इति यदन्तस्य निपातनात्()। "आद्युदात्तः" इति। "यतोऽनावः" 6|1|207 इत्यनेन। "पण्यकम्बलः संज्ञायामिति वक्त्व्यम्()" ["संज्ञायां वक्तव्यम्()" इति मुद्रितः पाठः] इति। पण्यकम्बलशब्दः संज्ञायां पूर्वपदप्रकृतिसवरो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः, तत्रेदं व्याख्यानम्()--"पूगेष्वन्यतरस्याम्()" 6|2|28 इत्यतो मण्डूकप्लुतिन्यायेनान्यतरस्यांग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा। संज्ञायामेव पण्यकम्बलशब्दः पूरग्वपदप्रकृतिस्वरो भवति, नान्यत्रेति। "अन्यत्र समासान्तोदात्तत्वमेव" इति। ननु च पण्यशब्दोऽयं कृत्यप्रत्ययान्तः "तत्पुरुषे" (६।२।२) इत्यादिना तवस्मिन्? पणितव्ये पूर्वपदस्य प्रकृतिसवरेणैव भवितव्यम्(), तत्? कथं

समासन्तोदात्तत्वम्()? इत्याह--"प्रतिपदोक्ते हि" इत्यादि। "कृत्यतुल्याख्या अजात्या" २।१।६७ इति यः कृत्यसमासः प्रतिपदोक्तः तत्र "द्वितीयाकृत्याः" ६।२।२ इति पूर्वपदस्य प्रकृतिभावो विहितः। न चायं प्रतिपदोक्तः समासः। "विशेषणं विशेष्येण २।१।५६ इति समान्येन विहितत्वात्()। कुत एतत्()? कम्बलशब्दस्य जातिशब्दत्वात्()। "द्वितीयाकृत्या" इत्यनेन सूत्रैकदेशेन "तत्पुरुषे तुल्यार्थ" इत्यादिकं सूत्रमुपलक्षयति। "दासीभारः" इति। दासीशब्दः पूर्वमुक्तस्वर। "देवहूतिः" इति। पचाद्यजन्तत्वादन्तोदात्तः। "ओषशब्दो घञन्तत्वात्()" इति। "उष दाहे" (दा।पा।६९६) इत्यस्य घञि व्युत्पादितत्वात्()। "चन्द्रे माङो डित्()" [चन्द्रे मो डित्()--द।उ।,पं।उ।--"चन्द्रे मोऽसिः"--काशिकामुद्रितः पाठः] (द।उ।९।८८) इत्यसिपरत्ययान्तोऽयम्()। "मिथुनेऽसिः पूर्ववच्च सर्वम्()" (द।उ।९।८२) इत्यतोऽसिप्रत्ययस्यानुवृत्तेः। "चन्द्रशब्दस्तु रक्प्रतययान्तत्वात्()" इति। "स्फायितञ्चि" (द।उ।८।३१) इत्यादिना सूत्रेण रक्प्रत्ययान्तत्वेन व्युत्पादितत्वात्()। "स सर्वो दासीभारादिषु द्रष्टव्यः" इति। दासीभारादेराकृतिगणत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

चतुर्थी तदर्थे ६।२।४३

चतुर्थ्यन्तं पूर्वपदं तदर्थे उत्तरपदे तदभिधेयार्थं यत् तद्वाचिन्युत्तरपदे प्रकृतिस्वरं भवति। तदिति चतुर्थ्यन्तस्य अर्थः परामृश्यते। यूपदारु। कुण्डलहिरण्यम्। यूपशब्द आद्युदात्तः। कुसुयुभ्यश्च इत्यत्र नितिति वर्तते। कुन्डलशब्दो ऽपि वृषादिभ्यश्चितिति कलप्रत्ययान्तो ऽन्तोदात्तः। रथदारु। वल्लीहिरण्यम्। रथशब्द आद्युदात्तः। हनिकुषिनीरमिकाशिभ्यः क्थनित्यादिना क्थन्प्रत्ययः। वल्लीशब्दो ङीषः स्वरेण अन्तोदात्तः। तदर्थे इति किम्? कुबेरबलिः। प्रकृतिविकारभावे स्वरो ऽयम् इष्यते।

न्यासः

चतुर्थी तदर्थे। , ६।२।४३

"तदर्थे" इति। तस्मै इदम्(), चतुश्र्यन्तम्(), तस्य योर्थस्तदर्थ इत्यर्थः। कथं पुनर्यूपशब्द आद्युदात्त? इत्याह--"कुसुयुभ्याञ्च" इत्यादि। "पानीविषिभ्यः पः" (द।उ।७।२) इत्यतः "पः" इत्यनुवत्र्तमाने "कुसुयुभ्याञ्च" (द।उ।७।५) [कुयुभ्याञ्च--मुद्रितः पाठः] इति यूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते। तत्र "सुशृ()भ्यां निच्च" (पं।उ।३।२६) इत्यतो निदिति वर्तते, तेनादयुदात्तो भवति। दीर्घत्वं तु "स्तुवो दीर्घश्च" (पं।उ।३।२५) इत्यतो दीर्घग्रहणानुवृत्तेः। "कलप्रत्ययान्तः" इति। "वृषादिभ्यश्चित्? (द।उ।८।१०९) इत्यत्र "कलस्तृपशच" (द।उ।८।१०७) इत्यतः कलप्रत्ययानुवृत्तेः। "रथशब्द आद्युदात्तः" इति। हनिकुषिनीरमिकाशिभ्यः क्थन्" (द।उ।८।१०७) इत्यतः कलप्रत्ययानुवृत्तेः। "रथशब्द आद्युदत्तः" इति। "हनिकुषिनीरमिकाशिभ्यः क्थन्()" (द।उ।८।१०७) इत्यतः कलप्रत्ययानुवृत्तेः। "रथशब्द आद्युदात्तः" इति। "हनिकुषिनीरमिकाशिभ्यः क्थन्()" (द।उ।६।२७) इति कथन्प्रत्ययान्तत्वात्()। "वल्लीशब्दो ङीषः स्वरेणान्तोदात्तः" इति। ङीष्()प्रत्ययस्तु गौरादित्वात्()। ४।१।४१ वेदितव्यः। "प्रकृतिविकारभावे" इत्यादि। कथं पुनः सामान्येनोच्यमानः प्रकृतिविकारभावे लभ्यते? पूर्ववदन्यतरस्यांग्रहणानुवृत्तेः। तस्य च व्यवस्थितविभाषात्वाद्वक्ष्यमाणज्ञापकात्()॥

---

सूत्रम्

काशिका-वृत्तिः

अर्थे ६।२।४४

चतुर्थी इति वर्तते। अर्थशब्दे उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति। मात्रे इदं मात्रर्थम्। पित्रर्थम्। देवतार्थम्। अतिथ्यर्थम्। मातृपितृशब्दावन्तोदात्तावुणादिषु निपातितौ। देवताशब्दो लित्स्वरेण मध्योदात्तः। अतिथिः इति अतेरिथिनिति इथिन्प्रत्ययान्तः। तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति, न त्वर्थशब्दवाच्यं सामान्यं इत्यतदर्थार्थो ऽयम् आरम्भः। केचित् पुनराहुः ज्ञापकार्थम् इदम्। एतदनेन ज्ञाप्यते, पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति। अश्वघासः, श्वश्रूसुरम् इत्यत्र सत्यपि तादर्थ्ये न भवति।

न्यासः

अर्थे। , ६।२।४४

"मातृपितृशब्दावन्तोदात्तौ" इति। "नप्तृनेष्ट्" (द।उ।२।३) इत्यादौ तृजन्तयोस्तयोर्निपातितत्वात्()। "लित्स्वरेण मध्योदात्तः" इति। "देवात्? तल्()" ५।४।२७ इति तल्()प्रत्ययन्तत्वात्()। किमर्थं पुनरेतत्(), न "चतुर्थी तदथे" ६।२।४३ इत्येवं सिद्धम्(), अर्थशब्दोऽपि तदर्थमेवोत्तरपदं भवति? इत्याह--"तदर्थविशेषा एव" इत्यादि। एवं मन्यते--अर्थशब्दोऽपि वृत्तौ विशेषवाची भवतीति। युक्तञ्चैतत्()। तदा मात्रर्थमित्युक्ते मात्रादिभ्यो व्यावृत्तरूपं विशिष्टमेव मात्रर्थं वस्तु प्रतीयते। "अ()आधासः" इत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति॥

---

सूत्रम्

काशिका-वृत्तिः

क्ते च ६।२।४५

क्तान्ते च उत्तरपदे चतुर्थ्यन्तं प्रकृतिस्वरं भवति। गोहितम्। अश्वहितम्। मनुष्यहितम्। गोरक्षितम्। अश्वरक्षितम्। वनं तापसरक्षितम्। अश्वशब्द आद्युदात्तः। मनुष्यशब्दो ऽन्तस्वरितः। परिशिष्ट पूर्वपदमन्तोदात्तम्। गोभ्यो रक्षितम् इति सम्प्रदाने चतुर्थी।

न्यासः

क्ते च। , ६।२।४५

"अ()आशब्द आद्युदात्तः" इति। क्वन्परत्ययान्तत्वत्()। "मनुष्यशब्दोऽन्तस्वरितः" इति। "मनोर्धातावञ्यतौ षुक्च" ४।१।१६१ इति यत्प्रत्ययान्तत्वात्()। "परिशिष्टमन्तोदात्तम्()" इति। तत्? पुनर्गोशब्दः, तापसशब्दश्च। तत्र "गमेर्डोस्()" (द।उ।२।११) [गोमर्डोः--द।उ; पं।उ।] इति डोस्प्रत्ययान्तत्वाद्गोशब्दः प्रत्ययस्वरेणान्तोदात्तः। तापसशब्दोऽपयण्प्रत्ययान्तत्वात्()। स हि "तपःसहरुआआभ्यां विनीनी" (५।२।१०२) "अण्? च" ५।२।१०२ इत्यण्प्रत्ययान्तो व्युत्पाद्यते। अथ "गोरक्षितम्()" इति कथमिदमस्योदाहरणम्(), यावता गोभ्यो रक्षिमिति तादर्थ्ये चतुर्थी, तत्र हि योगत उत्तरपदेन भवितवयम्()? इत्यत आह--"गोभ्यो रक्षितम्()" इत्यादि। न ह्यत्र गवार्थं रक्षित इत्येषोऽर्थो विवक्षितः, किं तर्हि? गोभ्यो रक्षितं दीयते इत्येतदध्याहार्यम्()। तस्मात्? सम्प्रदान एषा चतुर्थी, तत्? कुतस्तादर्थ्यम्()!॥

---

सूत्रम्

काशिका-वृत्तिः

कर्मधारये ऽनिष्ठा ६।२।४६

कर्मधार्ये समासे क्तान्ते उत्तरपदे ऽनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं भवति। श्रेणिकृताः। ऊककृताः। पूगकृताः। निधनकृताः।

श्रेणिशब्द आद्युदात्तः। ऊकपूगशब्दावन्तोदात्तौ। निधनशब्दो ऽयं मध्योदात्तः। कर्मधारये इति किम्? श्रेण्या कृतं श्रेणिकृतम्। अनिष्ठा इति किम्? कृताकृतम्।

न्यासः

कर्मधारयेऽनिष्ठा। , ६।२।४६

"श्रेणिकृताः" इत्यादि। "श्रेण्यादयः कृतादिभिः" २।१।५८ इति समासः। "श्रेणिशब्द आद्युदात्तः" इति। नित्स्वरेण। स हि "वीज्याज्वरिभ्यो निः" (द।उ।१।१८) इत्यतो निरिति वत्र्तमाने "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्()" (द।उ।१।२१) ["वहिश्रियुश्रुग्लाहात्वरिभ्यो नित्()" द।उ।] इत्येवं व्युत्पाद्यते, तेनाद्युदात्तः। "पूगशब्दोऽन्तोदात्तः" इति। "मुदिग्रोर्गग्गौ" (द।उ।३।६६) इति बहुलवचनात्? पूञोऽपि गक्()। तेन प्रत्ययस्वरेणान्तोदात्तः। "कृताकृतम्()" इति। कृतञ्च तदकृतं चेति "क्तेन नञ्विविशिष्टेनानञ्()" २।१।५९ इति समासः। एकदेशस्य कृतत्वात्? कृतम्, तदैवैकदेशस्याकृतत्वादकृतम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अहीने द्वितीया ६।२।४७

अहीनवाचिनि समासे क्तान्ते उत्तरपदे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। कष्टश्रितः। त्रिशकलपतितः। ग्रामगतः। कष्टशब्दो ऽन्तोदात्तः। त्रीणि शकलानि अस्य त्रिशकलः, बहुव्रीहिस्वरेण आद्युदात्तः। ग्रामशब्दो नित्स्वरेण आद्युदात्तः। अहीने इति किम्? कान्तारातीतः। योजनातीतः। द्वितीया ऽनुपसर्गे इति वक्तव्यम्। इह मा भूत्, सुखप्राप्तः। दुःखप्राप्तः। सुखापन्नः। दुःखापन्नः। अन्तः थाथेत्यस्य अपवादो ऽयम्।

न्यासः

अहीने द्वितीया। , ६।२।४७

हीनम्()=त्यक्तम्(), न हीनमहीनम्()। "कष्टशब्दोऽन्तोदात्तः" इति। क्तप्रत्ययान्तत्वात्? प्रत्ययस्वरेण। "कृच्छ्रगहनयोः कष" ७।२।२२ इतीट्()प्रतिषेधः। "बहुविरीहिस्वरेणाद्युदात्तः" इति। त्रिशब्दो हि प्रातिपदिकस्वरेणान्तोदात्तः। तत्र "बहुव्रीहौ प्रकृत्या" ६।२।१ इति प्रकृतिस्वरे कृते बहुव्रीहिस्वरेण त्रिशकलशब्द आद्युदात्तः। ग्रामशब्दोऽपि आद्युदात्()त एव। तथा ह्रसौ "अर्तिस्तुसुहुसृधुक्षि" (द।उ।७।२६) इत्यतो मन्परतययेऽनुवर्तमाने "अवतेष्टिलोपश्च" (द।उ।७।२७) "ग्रसतेरा च" (द।उ।७।२८) इति मन्प्रत्ययान्तो व्युत्पाद्यते। "कान्तारातीतः" इति। कान्तारमतीतवान्(), त्यक्तवानित्यर्थः। कान्तारातीतशब्दोऽत्रि हीनशब्दवची। "द्वितीयानुपसर्ग इति वक्तव्यम्()" इति। द्वितीयान्तमनुपसर्गे क्तन्ते प्रकृतिस्वरं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्विहापि तस्यैवान्यतरस्यांग्रहणस्यानुवृतिं()त व्यवस्थितविभाषात्वं चाश्रित्य कर्तव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

तृतीया कर्मणि ६।२।४८

कर्मवाचिनि क्तान्ते उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। अहिहतः, अहिहतः। वज्रहतः। महाराजहतः। नखनिर्भिन्ना। दात्रलूना। आङि श्रिहनिभ्यां ह्रस्वश्च इति अहिरन्तोदात्तो व्युत्पादितः। केचिदाद्युदात्तम् इच्छन्ति। वज्रो

रक्प्रत्ययान्तः। महाराजश्टच्प्रत्ययान्तः। नास्य खमस्तीति बहुव्रीहौ नकुलनखेति नखशब्दो निपातितः। तेन नञ्सुभ्याम् ६।२।१७१ इत्यन्तोदात्तः। दात्रशब्दो दाम्नीशस इति ष्ट्रन्प्रत्ययान्तः। कर्मणि इति किम्? रथेन यातः रथयातः। गत्यर्थत्वात् कर्तरि क्तः।

न्यासः

तृतीया कर्मणि। , ६।२।४८

"तत्पुरुषे तुल्यार्थ" ६।२।२ इत्येव सिद्धे पूर्वपदप्रकृतिस्वरे च कृत्सवरेण थाथादिस्वरेण ६।२।१४३ बाधिते तत्प्रतिपादनार्थं वचनम्()। "अहिहतः" इति। "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। "अहिरन्तोदात्तो व्युत्पादतः" इति। आङ्पूर्वाद्धन्तेः "जनिघसिभ्यामिण्()" (द।उ।१।५८) इति वर्तमाने "वातेर्डिचच" इति डिदिति च "आङिश्रिहनिभ्यां ह्रस्वश्च" (द।उ।१।६६) इत्यनेनाहिरिणन्तो व्युत्पादितः। "केचिदादयुदात्तमिच्छन्ति" इति। ते "समाने ख्यः स चोदात्तः" (पं।उ।४।१३६) इत्युदात्तग्रहणमप्यनुवर्तयन्ति। "रक्प्रत्ययान्तः" इति। "स्फायितञ्चि" (द।उ।८।३१) इत्यादिना रक्प्रत्ययान्तत्वेन व्युत्पादितत्वात्()। "महाराजष्टच्प्रत्ययान्तः" इति। "स्फायितञ्चि" (द।उ।८।३१) इत्यादिना रक्प्रत्ययान्तत्वेन व्युत्वादितत्वात्()। "महाराजष्टच्परत्ययान्तः" इति। "राजाहःसखिभ्यष्टच्()" ५।४।९१ इति टच्()प्रत्ययान्तत्वात्()। "दात्रलूना" इति। "धः कर्मणि ष्ट्रन्()" ३।२।१८१ इत्यनुवत्र्तमाने "दाम्नीशस्()" (३।२।१८२) इत्यादिना ष्ट्रन्? प्रत्ययान्तो दात्रशब्दो व्युत्पाद्यते, तेनाद्युदात्तः। सर्वत्र "तयोरेव कृत्यतखलार्थाः" ३।४।७० इति कर्मणि क्तः॥

---

सूत्रम्

काशिका-वृत्तिः

गतिरनन्तरः ६।२।४९

क्ते कर्मणि इति वर्तते। कर्मवाचिनि क्तान्ते उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतः। प्रहृतः। अनन्तरः इति किम्? अभ्युद्धृतः। समुद्धृतः। समुदाहृतः। व्यवहितस्य गतेरयं स्वरो न भवति। अनन्तरे पुनरिष्यते। कारकपूर्वस्य तु सति शिष्टत्वात् थाथादिस्वर एव भवति दूरादागतः इति। अनन्तरग्रहणसामर्थ्यादेव कृद्ग्रहणे गतिकारकपूर्वस्य अपि इत्येतन् न अश्रीयते। कर्मणि इत्येव, प्रकृतः कटं देवदत्तः। थाथादिस्वरापवादो योगः।

न्यासः

गतिरनन्तरः। , ६।२।४९

"प्रकृतः" इति। कुगतिप्रादयः" २।२।१८ इति समासः। प्रादयोऽबिवर्जिता आद्युदात्तगणे निपात्यन्ते, तेन प्रशब्द आद्युदात्तः। "अभ्युद्()धृतः" इति। अत्र अभिशब्दस्यानन्तरस्य न भवति; अत्रोच्छशब्दस्य क्तान्तेन समासं कृत्वा पश्चादभिशब्दस्योद्()धृशब्देन समासः कत्र्तव्यः। अथ वा--"कुगतिप्रादयः" २।२।१८ इत्यत्र सुब्ग्रहणस्य निवर्तितत्वादनेकसर्यापि समासो भवति। "समुदाह्रतः" इति। अत्रापि समुदोरन्तरयोर्न भवति। "कारकपूर्वस्य ति" इत्यादि। दूरादागत इत्यत्राङी गतिसमासे कृते सत्यनेन प्रकृतिस्वरः, तत उदात्तो भवति। ततो दूरादागत इति "स्तोकान्तिक" २।१।३८ इत्यादिना पञ्चमीसमासः, तस्मिन्? कृते "गतिकारकोपपदात्? कृत्()" ६।२।१३८ इति वर्तमाने "थाथघञ्()" ६।२।१४३ इत्यादिनोततरपदस्यान्तोदत्तत्वं विधीयते। स च गतिस्वरे सति विधीयत इति शिष्टत्वेन स एव भवति। "पञ्चम्याः स्तोकादिभ्यः" ६।३।२ इत्यलुक्()। अथ कथं "समुद्धृतः" इत्यादि प्रत्युदाहरणमुपपद्यते, यावता "कृद्ग्रहणे गतकारकपूर्वस्यापि ग्रहणम्()" (व्या।प।१२६) इति गतिरिह निष्ठाग्रहणेनैव गृह्रते, एवञ्चानन्तर एव समुद्धृत

इत्यत्र सम्शब्दः, समुदाह्मत इत्यत्रापि समुच्छब्दौ? इत्यत आह--"अनन्तरग्रहणसामथ्र्यात्()" इति। अनन्तरगरहणेन ह्रेवमर्थः क्रियते--समुद्धृतमित्यादौ मा भूदिति। यदि परिबाषेयमिहश्रीयतेत, तदा हि उद्धृत इत्यादौ गतिरनन्तर एवेति व्यावत्र्याभावादनन्तरग्रहणमपार्थकं स्यात्()। "प्रकृतः कटं देवदत्तः" इति। "आदिकर्मणि क्तः कत्र्तरि च" [३।४।७१](#) इति करत्तरि हि क्वप्रत्ययः॥

---

सूत्रम्

काशिका-वृत्तिः

ताऽदौ च निति कृत्यतौ ६।२।५०

तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरः प्रकृतिस्वरो भवति। प्रकर्ता। प्रकर्तुम्। प्रकृतिः। प्रकर्ता इति तृन्नन्तः। कृत्स्वरबाधनार्थं वचनम्। तादौ इति किम्? प्रजल्पाकः। निति इति किम्? प्रकर्ता। तृजन्तः। कृद्ग्रहणम् उपदेशे ताद्यर्थम्। इह अपि यथा स्यात्, प्रलपिता। प्रलपितुम्। अतौ इति किम्? आगन्तुः।

न्यासः

तादौ च निति कृत्यतौ। , ६।२।५०

"प्रकर्तुम्()" इति। तुमुन्()। "प्रकर्तेति तृन्नन्तः" इति। तृजन्ताशङ्कां निराकरोति। "कृत्स्वरबाधनार्थम्()" इत्यादि। अव्ययस्वरापवादः "गतिकारकोपपदात्? कृत्()" [६।२।१३८](#) इति कृत्स्वरः प्राप्नोति, अतस्तद्बाधनार्थं वचनम्()। "प्रजल्पाकः" इति। "जल्पभिक्ष" [३।२।१५५](#) इत्यादिना षाकन्()। "तृजन्तः" इति। तृन्नन्ताशङ्कां निराकरोति। अथ निद्ग्रहणं किमर्थम्()? प्रकृष्टमृष्टमृत्तिका प्रभृत्तिका इत्यतर मा भूदिति चेत्()? नैतदस्ति; तथा हि--यत्क्रयायुक्ताः प्रादयः तं प्रति गत्युपसर्गसंज्ञकाः भवन्ति, (जै।प।वृ।९९) मृत्तिकाशब्दश्चायं नामधेयत्वात्? क्रियावची न भवति, तेन तं प्रत्युपसर्गसंज्ञा नास्त्येव? इत्यत आह--"कृद्ग्रहणम्()" इत्यादि। "कृति" इत्यनेन संज्ञासम्बन्धकालो लक्ष्यते, तेन कृत्संज्ञावेलायां यस्तादिरित्येषोऽर्थः सम्पद्यत इति कृद्ग्रहणमुपदेशे ताद्यर्थं भवति; कृत्संज्ञाप्रतिपत्तिकालस्योपदेशकालत्वात्()। तस्मात्? पुनरुपदेशे यस्तादिस्तदर्थं यत्नः क्रियत इत्याह--"इह" इत्यादि। यदि तदुपदेशग्रहणं ताद्यर्थं न क्रियेत, तदा प्रलपितेत्यत्र न स्यात्(); इटा तादिताया विहतत्वात्()। य()स्मश्च सतद्युपदेश एव तादिर्भतीति यद्यप्युत्तरकालं तादिता विहन्यते, तथापि भवत्येव। "आगन्तुः" इति। "सितनिगमिमसि" (द।उ।१।१२२) इत्यादना तन्? प्रत्ययः॥

---

सूत्रम्

काशिका-वृत्तिः

तवै च अन्तश् च युगपत् ६।२।५१

तवैप्रत्ययस्य अन्त उदात्तो भवति गतिश्च अनन्तरः प्रकृतिस्वरः इति एतदुभयं युगपद् भवति। अन्वेतवै। परिस्तरितवै। परिपातवै। तस्मादग्निचिन् न अभिचरितवै। उपसर्गा आद्युदात्ता अभिवर्जम् इत्यभिरन्तोदात्तः। कृत्स्वरापवादो योगः।

न्यासः

तवै चान्तश्च युगपत्?। , ६।२।५१

"अन्त उदात्तो भवति" इति। कथं पुनरुदात्तो भवतीत्येषो लभ्यते, नेहोदात्तग्रहणमस्ति? न ह्रत्रापूर्व एव स्वरो विधीयते, किं तर्हि? "तिकारकोपपदत्? कृत्()" [६।२।१३८](#) इति प्रकृतिभावेनादेर्यः स्वरः प्राप्नोति न एव, तत्? कथं प्रकृत्येति वर्तते?

तत्रैवमभिसम्बन्धः क्रियते--तवापरत्ययान्तस्य यः प्राप्नोति सोऽन्त्यस्य भवतीति। स चोदात्त एवेति समाश्र्यादुदात्तो लभ्यते। युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम्()। "अन्वेतवा" [आम्वेतवै--काशिका] इति। अनुपूर्वादेतेः "कृत्यार्थे "तवैकेन्केन्यत्वनः" ३।४।१४ इति तवैप्रत्ययः, गुणः। "परिपातवा" [परिपातवै--काशिका] इति। परिपूर्वात्? विबातेः। "अभिचरितवा" [अभिचरितवै--काशिका] इति। अभिपूर्वाच्चरतेः। "अभिरन्तोदात्तः" इति। प्रातिपदकस्वरेण।

---

सूत्रम्

काशिका-वृत्तिः

अनिगन्तो ऽञ्चतौ वप्रत्यये ६।२।५२

अनिगन्तो गतिः प्रकृतिस्वरो भवति अञ्चतौ वप्रत्यये परतः। प्राङ्, प्राञ्चौ, प्राञ्चः। प्राङ्, प्राञ्चौ, प्राञ्चः। स्वरितो वा अनुदात्ते पदादौ ८।२।६ इत्ययम् एकादेशः उदात्तः स्वरितो वा। पराङ्, पराञ्चौ, पराञ्चः। अनिगन्तः इति किम्? प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः। कृदुत्तरपदप्रकृतिस्वर इह भवति। वप्रत्यये इति किम्? उदञ्चनः। चोरनिगन्तो ऽञ्चतौ वप्रत्ययः इत्येव स्वरो भवति वप्रतिषेधेन। पराचः। पराचा।

न्यासः

अनिगन्तोऽञ्चतौ वप्रत्यये। , ६।२।५२

"वप्रत्यये" इति। वकारः प्रत्ययो यस्य स तथोक्तः। "प्राङ्()" इत्यादि। प्राञ्चीतीति "ऋत्विक्()" ३।२।५९ इत्यादिना क्विन्प्रत्ययः, स च वकारमात्र एव; ककारादीनामनुबन्धत्वात्(); तेषां चानैकान्तत्वात्()। "उगिदचाम्()" ७।१।७० इति नुम्(), एकवचने हल्ङ्यादि ६।१।६६ संयोगान्तलोपौ ८।२।२३, "क्विन्? प्रत्ययस्य कुः" ८।२।६२ इति नकारस्य कुत्वं ङ्कारः। द्विवचनबहुवचनयोस्तु "स्तोश्चुना श्चुः" ८।४।३९ इति श्चुत्वं ञकारः। उपसर्गाकारेण सह "अकः सवर्णे दीर्घः" ६।१।९७। "पराङ्()" इत्यादि। पराशब्द आद्युदात्तः। तेन "स्वरितो वानुदात्ते पदादौ" ["स्वरिते वाऽनुदातेऽपदादौ" इति मुद्रितः पाठः--न्यासः काशिका, पदमंजरी च] ८।२।६ इत्येष विधिर्न भवति। "प्रत्यङ्" इति। अत्र प्रतिशब्दस्येगन्तत्वात्? परकृतिभावो न भवति। ननु च यणादेशे कृते सोऽप्यनिगन्त एष? स्थानिवद्भावादिगन्तव्यपदेशः कृतेऽपि यणादेशे भविष्यतीत्यदीषः। स्वरविधौ स्थानिवद्भावः प्रतिषिध्यत इति चेत्()? नैतदस्ति; "स्वरदीर्घयलोपेषु लोपाजादेशौ न स्थानिवत्(), अन्यस्तु स्थानिवदेव" (का।वृ।१।१।५८) इत्युक्तमेतत्()। "उदञ्चनः" इति। ल्युट्()। अत्राप्युत्तरपदप्रकृतिस्वर एव भवति। "चोरनिगन्तोऽञ्चतौ" इत्यादि। चोरित्यनेन "चौ" ६।१।२१६ इत्यनेन यदन्तोदात्तत्वं विधीयते तदुपलक्षयति। चोरितयस्यावकाशः--दधीचः, यत्र गतिर्न भवति; अनिगन्तसवरस्यावकाशो यत्राञ्चतेरकारनकारौ न लुप्येते--पराङ्(), पराञ्चादिति; इहोभयं प्राप्नोति--पराचः पराचेति अनिगन्तः स्वरो वति विप्रतिषेधेन। प्रतिषेधशब्दस्तत्राध्याहार्यः॥

---

सूत्रम्

काशिका-वृत्तिः

न्यधी च ६।२।५३

नि अधि इत्येतौ चाञ्चतौ वप्रत्यये परतः प्रकृतिस्वरौ भवतः। न्यङ्, न्यञ्चौ, न्यञ्चः। उदात्तस्वरितयोर् यनः स्वरितो ऽनुदात्तस्य ८।२।४ इत्यञ्चतेरकारः स्वरितः। अध्यङ्, अध्यञ्चौ, अध्यञ्चः। अधीचः। अधीचा।

न्यासः

न्यधी च। , ६।२।५३

इगन्तार्थोऽयमारम्भः। "उदाततसवरितयोः" इत्यादि। निरुदात्तः "उपसर्गाश्चाभिवर्जम्()" (फि।सू।४।८१) इति, तेन तदकारस्थाने यो यणादेशः स उदात्तयण्()। तेन "उदात्तस्वरितयोः" ८।२।४ इत्यादिना ततः परमञ्चतेरकारः स्वरितो भवति। अध्यङ्क्त्यादौ तु न भवति; आदेशाद्युदात्तत्वात्(), यणादेश उदत्तयण्? न भवतीति कृत्वा॥ समासस्वरापवादोऽयं योगः। "ईषत्कडारः" इति। "ईषदकृता" २।२।७ इति समासः। यदायं प्रकृतिभावो न भवति, तदा समासान्तोदात्तत्वमेव भवति। "ईषद्भेद इत्येवमादौ कृत्स्वर एव भवति" इति। परत्वादिति भावः। आदिशब्देन ईषत्कर इत्यादीनां ग्रहणम्()। "ईषद्()दुःसुषु" ३।३।१२६ इत्यादिना खल्()॥

---

सूत्रम्

काशिका-वृत्तिः

ईषदन्यतरस्याम् ६।२।५४

ईषतित्येतत् पूर्वपदम् अन्यतरस्यां प्रक्रितस्वरं भवति। ईषत्कडारः, ईषत्कडारः। ईषत्पिङ्गलः, ईषत्पिङ्गलः। ईषतित्ययम् अन्तोदात्तः। ईषद्भेदः इत्येवम् आदौ कृत्स्वर एव भवति।

---

सूत्रम्

काशिका-वृत्तिः

हिरण्यपरिमाणं धने ६।२।५५

हिरण्यपरिमाणवाचि पूर्वपदं धनशब्दे उत्तरपदे ऽन्यतरस्यां प्रक्रितस्वरं भवति। द्विसुवर्णधनम्, द्विसुवर्णधनम्। द्वौ सुवर्णौ परिमाणम् अस्य द्विसुवर्णम्, तदेव धनम् इति कर्मधारयः। बहुव्रीहावपि परत्वाद् विकल्प एव भवति। द्विसुवर्नधनः, द्विसुवर्णधनः। हिरण्यग्रहणम् किम्? प्रस्थधनम्। परिमाणग्रहणं किम्? काञ्चनधनम्। धने इति किम्? निष्कमाला।

न्यासः

हिरण्यपरिमाणं धने। , ६।२।५५

हिरण्यपरिमाणं परिमाणवद् हिरण्यमित्यर्थः। इह तु तद्वाचिशब्दरूपं गृह्रते। "द्विसुवर्णधनम्()" इति। सुवर्णशब्दो हिरण्यपरिमाणविशेषवाची। द्वे सुवर्णे परिमाणमस्येति "तद्धितार्थ" २।१।५० इति समासः। "तदस्य परिमाणम्()" ५।१।५६ इति "प्राग्वतेष्ठञ्()" ५।१।१८ "अध्यर्धपूर्व" (५।१।२८ इत्यादिना लुक्(), ततो धनशब्देन सह कर्मधारयः। द्विसुवर्णशब्दः समासस्वरेणान्तोदात्तः। "बहुव्रीहावपि" इत्यादि। यद्वा--द्विसुवर्ण धनं यस्येति बहुव्रीहिः; तदपि परत्वाद्विकल्प एव भवति; न तु "बहुव्रीहौ प्रकृत्या" ६।२।१ इत्येष नित्यो विधिः। "प्रस्थधनम्()" इति। अयमपि कर्मधारयः। बहुव्रीहिर्वा। प्रस्थशब्दो भवति परिमाणं, न तु हिरण्यसय, किं तर्हि? धान्यादेः। "काञ्चनधनम्()" इति। यदि परिमाणग्रहणं न क्रियेत, तदा "हिरण्यम्()" इत्येतादद्युच्यमान इहापि स्यात्(); काञ्चनशब्दस्य हिरण्यवाचित्वात्()। हिरण्यवाच्यपि परिमाणवाची न भवतीति न भवत्येष प्रसङ्गः। अयमपि समासस्वरापवादो योगः॥

---

सूत्रम्

काशिका-वृत्तिः

प्रथमो ऽचिरौपसम्पत्तौ ६।२।५६

प्रथमशब्दः पूर्वपदम् अचिरोपसम्पत्तौ गम्यमानायाम् अन्यतरस्यां प्रक्रितस्वरं भवति। अचिरोपसम्पत्तिः अचिरोपश्लेषः, अभिनवत्वम्। प्रथ्मवैयाकरणः, प्रथमवैयाकरणः। अभिनववैयाकरणः, सम्प्रति व्याकरणम् अध्येतुं प्रवृत्तः इत्यर्थः।

प्रथमशब्दः प्रथेरमचिति चित्त्वादन्तोदात्तः। अचिरोपसम्पत्तौ इति किम्? प्रथमवैयाकरणः। वैयाकरणानामाद्यो मुख्यो वा यः स नित्यो ऽन्तोदात्तः एव।

न्यासः

प्रथमोऽचिरोपसम्पत्तौ। , ६।२।५६

"अचिरोपश्लेषः" इति। अचिरकालसम्बन्ध इत्यर्थ-। अस्यैवार्थं प्रसिद्धतरार्थेन प्रदर्शयतुमाह--"अभिनवत्वम्()" इति। "प्रथमवैयाकरणः" इति। प्रथमश्च वैयाकरणश्चेति "पूर्वापर" २।१।५७ इत्यादिना समासः। तत्र यत्तद्वैयाकरणत्वं व्याकरणस्याध्येतृत्वम्()। अनेनाचिरकालसम्बन्धोऽध्येतुर्गम्यते। अभिनववैयाकरणादिनाऽचिरकालोपसम्पत्तिमुदाहरणे दर्शयति। "आद्यो मुख्यो यः सः" इति। अनेनापि प्रत्युदाहरणविषयस्य प्रथमशब्दस्यान्यार्थतां च पक्षेऽचिरोपसम्पत्तेरभावं च। अयमपि समासस्वरापवादो योगः। एवमुत्तरेऽपि॥

---

सूत्रम्

काशिका-वृत्तिः

कतरकतमौ कर्मधारये ६।२।५७

कतरशब्दः कतमशदश्च पूर्वपदम् कर्मधारये समासे ऽन्यतरस्यां प्रकृतिस्वरं भवति। कतरकठः, कतरकठः। कतमकठः, कतमकठः। कर्मधारयग्रहणम् उत्तरार्थम् इह तु प्रतिपदोक्तत्वादेव सिद्धम्।

न्यासः

कतरकतमौ कर्मधारये। , ६।२।५७

"किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्()" ५।३।९२ "वा बूनां जातिपरिप्रश्ने डतमच्()" ५।३।९३ इति कतरकतमशब्दौ व्युत्पाद्येते, तेन तौ चित्स्वरेणान्तोदात्तौ। "कतरकठः" इति। "कतरकतमौ जातिपरिप्रश्ने" २।१।६२ इति समानाधिकरणसमासः। एतदर्थमपि कर्मधारयग्रहणं कस्मान्न भवति? इत्याह--"इह तु" इत्यादि। कतरकतमशब्दयोर्हि यः प्रतिपदसमासः स एव लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) विज्ञायते। स च कर्मधारय एव। तस्मात्? प्रतिपदोक्तत्वादेवैतत्समासस्य कर्मधारयत्वम्()। तस्मन्नैतदर्थं कर्मधारयग्रहणमुपपद्यते॥

---

सूत्रम्

काशिका-वृत्तिः

आर्यो ब्राह्मणकुमारयोः ६।२।५८

आर्यशब्दः पूर्वपदं ब्रह्मणकुमारयोः कर्मधारये समासे ऽन्यतरस्यां प्रकृतिस्वरं भवति। आर्यब्रह्मणः, आर्यब्राह्मणः। आर्यकुमारः, आर्यकुमारः। आर्यशब्दः ण्यदन्तो ऽन्तस्वरितः। आर्यः इति किम्? परमब्रह्मणः। परमकुमारः। ब्रह्मणकुमारयोः इति किम्? आर्यक्षत्रियः। कर्मधारये इत्येव, आर्यस्य ब्राह्मणः आर्यब्राह्मणः।

न्यासः

आर्यो ब्राआह्र्णकुमारयोः। , ६।२।५८

"आर्यब्राआह्र्णः" इति। आर्यश्चासौ ब्राआह्र्णश्चेति विशेषणसमासः। "आर्यशब्दो ण्यदन्तः" इति। "ऋहलोण्र्यत्()" ३।१।१२४ इति ण्यति व्युत्पादितत्वात्()। "अन्तस्वरितः" इति। तित्स्वरेण। प्रत्युदाहरणे तु समासान्तोदात्तत्वमेव

भवति॥

---

सूत्रम्

काशिका-वृत्तिः

राजा च ६।२।५९

राजा च पूर्वपदं ब्राह्मणकुमारयोः उत्तरपदयोः कर्मधारये समासे अन्यतरस्यां प्रक्तिस्वरं भवति। राजब्राह्मणः, राजब्राह्मणः। राजकुमारः, राजकुमारः। कर्मधारये इत्येव, राज्ञो ब्राह्मणः राजब्रहमणः। राजकुमारः। पृथग्योगकरणम् उत्तरार्थम्।

न्यासः

राजा च। , ६।२।५९

राजब्राआह्हणम्()" ["राजब्राआह्हणः"--काशिका] इति। पूर्ववत्? समासः। प्रत्युदाहरणेऽपि पूर्ववत्()। राजशब्दः क्वनिन्प्रतययान्तत्वादाद्युदात्तः। "पृथग्योगकरणमुत्तरार्थम्()" इति। उत्तरो विधी राजशब्दस्यैव यथा स्यात्()। आर्यशब्दस्य मा भूदिति॥

---

सूत्रम्

काशिका-वृत्तिः

षष्ठी प्रत्येनसि ६।२।६०

राजा इति वर्तते, अन्यतरस्याम् इति च। षष्ठ्यन्तो राजशब्दः पूर्वपदम् प्रत्येनसि उत्तरपदे ऽन्यतरस्यां प्रकृतिस्वरं भवति। राज्ञः प्रत्येनाः राजप्रत्येनाः, राजप्रत्येनाः। षष्ठी इति किम्? राजा चासौ प्रत्येनाश्च राजप्रत्येनाः।

न्यासः

षष्ठी प्रत्यनसि। , ६।२।६०

"राज्ञ) प्रत्येनाः" इति। "षष्ठ()आ आक्रोशे" ६।३।२० इति विभक्तेरलुक्()॥

---

सूत्रम्

काशिका-वृत्तिः

क्ते नित्यार्थे ६।२।६१

क्तान्ते उत्तरपदे नित्यार्थे समासे पूर्वपदम् अन्यतरस्यां प्रक्तिस्वरम् भवति। नित्यप्रहसितः, नित्यप्रहसितः। सततप्रहसितः, सततप्रहसितः। कालाः इति द्वितीयासमासो ऽयम्। नित्यशब्दः त्यब्नेर्ध्रुवे इति त्यबन्तः आद्युदात्तः। सतत इति यदा भावे क्तः तदा थाथादिस्वरेण अन्तोदात्तः। नित्यार्थे इति किम्? मुहूर्तप्रहसितः।

न्यासः

क्ते नित्यार्थे। , ६।२।६१

नित्यशब्द आभीक्ष्ण्ये, न कूटस्थे। कुत एतत्()? क्त इत्युच्यते, क्तश्च धातोर्विधीयते, धातुश्च क्रियावचनः। क्रियापाश्च कौटस्थ्यं नोपपद्यते; क्षणिकत्वात्? क्रियायाः। तस्यास्तु पौनःपुन्याद्यपेक्षया युक्तमाभीक्ष्ण्यम्()। "कालाः २।१।२७ इति द्वितीयासमासोऽयम्()" इति। द्वितीया तु "कालाध्वनोरत्यन्तसंयोगे" २।३।५ इति। अथ वा--कर्मण्येव। कर्मसंज्ञा तु "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्()" (म।भा।१।४।५१) इति वचनात्()। "नित्यशब्दः" इत्यादि। अनेन "ध्रुव

उपसंक्यानम्()" (वा।४३४) इति नेर्नित्यशब्दो व्युत्पाद्यते त्यदन्तः। ततश्च त्यपः पित्त्वेनानुदात्तत्वान्नेश्चोदात्तत्वादाद्युदात्तो भवति। "सततमिति यदा कर्मणि क्तस्तदा थाथादिस्वरेणान्तोदात्तः" इति--अयुक्तोऽयं पाठः। यदा हि कर्मणि क्तस्तदा "गतिरनन्तरः" ६।२।४९ इति गतेः प्रकृतिभावे सत्याद्युदात्तेन सततशब्देन भवितव्यम्()। तस्मात्? "सततमिति यदा भावे क्तस्तदा थाथादि ६।२।१४३ स्वरेणान्तोदात्तः" इत्ययं तत्रानवद्यः पाठो वेदितव्यः। तथा हि सततशब्दोऽपि थाथादिस्वरेणान्तोदात्तः ६।२।१४३। भावे हीयं निष्ठेति गतिस्वरो न भवतीत्युक्तम्()। यदा तु क्रमणि क्तस्तदा तु गतिस्वरेण सततशब्द घुदात्त एव भवति। "समो वा हिततततयोः" (वपा।६।१।१४४) इति समो मकारलोपः। "मुहूर्तप्रहसितः" इति। अत्र थाथादिस्वर (६।२।१४४) एव भवति प्रहसित इति हसेरकर्मकत्वावत्? कर्तरि क्तः। समासस्वरे द्वितीयापूर्वपदप्रकृतिसवरेण बाधिते सति थाथादिस्वरः प्राप्नोति। अतस्तदपदादो योगः॥

---

सूत्रम्

काशिका-वृत्तिः

ग्रामः शिल्पिनि ६।२।६२

ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदे ऽन्यत्रस्यां प्रकृतिस्वरं भवति। ग्रामनापितः, ग्रामनापितः। ग्रामकुलालः, ग्रामकुलालः। ग्रामशब्दः आद्युदात्तः। ग्रामः इति किम्? परमनापितः। शिल्पिनि इति किम्? ग्रामरथ्या।

न्यासः

ग्रामः शिल्पिनि। , ६।२।६२

सप्तमीनिर्दिष्टग्रहणमनुवर्तते। तेन शिल्पिनीत्यर्थग्रहणम्()। ग्राम इति स्वरूपग्रहणमेव। "ग्रामनापितः" इति। षष्ठीसमासः समासस्वरापवादो योगः। एवमुत्तरोऽपि॥

---

सूत्रम्

काशिका-वृत्तिः

राजा च प्रशंसायाम् ६।२।६३

राजशब्दः पूर्वपदं शिलिवाचिनि उत्तरपदे प्रशंसायां गम्यमानायाम् अन्यतरस्यां प्रक्रितस्वरं भवति। राजनापितः, राजनापितः। राजकुलालः, राजकुलालः। कर्मधारये राजगुणाध्यरोपेणोत्तरपदार्थस्य प्रशंसा। षष्ठीसमासे च राजयोग्यतया तस्य। राजा इति किम्? परमनापितः। प्रशंसायाम् इति किम्? राजनापितः। शिल्पिनि इत्येव, राजहस्ती।

न्यासः

राजा च प्रशंसायाम्?। , ६।२।६३

"कर्मधारये" इत्यादि। राजनापितः" इति। कर्मधारयोऽयं वा स्यात्(), षष्ठीतत्पुरुषो वा? तत्र यदा कर्मधारयस्तदा राजशब्दस्य नापित उपचारेण वृत्तिः। उपचारस्तु राजगुणारोपनिबन्धनः, अतस्तेनैवोत्तरपदस्य प्रशंसा भवति। कथं पुनर्नापितः षष्ठीसमासेन राजनापितशब्देनोच्यते? इत्याह "राजयोग्यतया तस्य" इत्यादि। स हि स्वकर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति। अतोऽपि राजनापित इति षष्ठीसमासेनोच्यते। अत्र पक्षे तस्यैव योग्यतयोत्तरपदस्य प्रशंसा वेदितव्या॥

---

सूत्रम्

काशिका-वृत्तिः

आदिरुदात्तः ६।२।६४

आदिरुदात्तः इत्येतदधिकृतम्। इत उत्तरं यद् वक्ष्यामः तत्र पूर्वपदस्य आदिरुदात्तो भवति इत्येवं तद्वेदितव्यम्। वक्ष्यति सप्तमीहारिणौ धर्म्ये ऽहरणे ६।२।६५ इति। स्तूपेशाणः। सुकुटेकार्षापणम्। याज्ञिकाश्वः। वैयाकरणहस्ती। दृषदिमाषकः। आदिरिति प्रागन्ताधिकारात्। उदात्तः इति प्रकृत्या भगालम् ६।२।१३६ इति यावत्।

न्यासः

आदिरुदात्तः। , ६।२।६४

"अदिः" इत्यादिनाद्यधिकारस्यावधिं दर्शयति। "उदात्तः" इत्यादिनाप्युदात्ताधिकारस्य॥

---

सूत्रम्

काशिका-वृत्तिः

सप्तमीहारिणौ धर्म्ये ऽहरणे ६।२।६५

सप्तम्यन्तं हारिवाचि च पूर्वपदं धर्म्येवाचिनि हरणशब्दादन्यस्मिन्नुत्तरपदे आद्युदात्तं भवति। हारि इति देयं यः स्वीकरोति सो ऽभिधीयते। धर्म्यम् इत्याचारनियतं देयम् उच्यते। धर्मो हि अनुवृत्त आचारः, तस्मादनपेतं तेन वा प्राप्यम् इति। स्तूपेशाणः। मुकुटेकार्षापणम्। हलेद्विपदिका। हलेत्रिपदिका। दृषदिमाषकः। संज्ञायाम् इति सप्तमीसमासः, कारनाम्नि च इति विभक्तेरलुक्। हारिणि याज्ञिकाश्वः। वैयाकरणहस्ती। मातुलाश्वः। पितृव्यगवः। क्वचिदयम् आचारो व्यवस्थितः, स्तूपादिषु शाणादि दातव्यम्, याज्ञिकादीनाम् अश्वादि इति। धर्म्ये इति किम्? स्तम्बेरमः। कर्मकरवर्धितकः। अहरणे इति किम्? वाडवहरणम्। वडवायाः अयं वाडवः। तस्य बीजनिषेकादुत्तरकालं शरीरपूष्ट्यर्थं यद् दीयते हरणम् इति तदुच्यते। परो ऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेन इत्येतदहरणे इत्यनेन ज्ञाप्यते, तेन वाडवहार्यम् इति हारिस्वरः सिद्धो भवति।

न्यासः

सप्तमीहारिणौ धम्र्येऽहरणे। , ६।२।६५

हारीत्यावश्यके णिनिः। सप्तमीत्यनेन साहचर्याधारीति स्वरूपग्रहणं न भवति। अत एवाह--"हारिवाचि पर्वपदम्()" इति। "धम्र्ये" इत्यत्रापि स्वरूपग्रहणं न भवति; अहरण इति प्रतिषेधात्()। अत एवाह--"धम्र्यवाचिनि" इति। "आचारनियतम्()" इति। आचारे नियतमिति; ततोऽन्यत्राभावत्()। आचारे नियतम्(), आचारेण वा नियतमाचारनियतम्()। यदाचारवशादवश्यकत्र्तव्यं तदाचारनियतं भवति। कथं पुनराचारनियतं धर्मयमुच्यते? इत्याह--"धर्मो ह्रनुवृत्तः" इत्यादि। अनुवृत्त इति व्यवस्थित इत्यर्थः। "तस्मात्()" इति। धर्मादनपेतमिति। अनुगतमित्यर्थः। "तेन" इति। धर्मेण। "प्राप्तम्()" इति। लभ्यमित्यर्थः। उभयथाप्यर्थे "नौवयोधर्म" ४।४।९१ इत्यादिना यत्()। इतिकरणो हिशब्दश्च हेतौ। यस्मादाचारविशेषो धर्म उच्यते, यच्च तस्माद्धर्मादनपेतम्()। यद्वा तेन प्राप्यं तद्धम्र्यम्()। तेनाचारनियतं धम्र्यमित्युच्यते। "संज्ञायाम्()" २।१।४३ इति सप्तमीसगासः" इति। यद्येवम्(), विभक्तेर्लुक्? प्राप्नोति? इत्यत आह--"कारनाम्नि च" इत्यादि। "याज्ञिका()आः" इत्यादौ तु षष्ठीसमासः। "क्वचित्" इत्यादिना स्तूपेशाण इत्याद्युदाहरणेषु शाणादेर्यस्याचारनियततां दर्शयत्? उत्तरपदस्य धम्र्यवाचित्वं दर्शयति--"याज्ञिकादीनाम()आआदि" इति। क्वचिदयमाचारे व्यवस्थित इत्यनेन दातव्यमित्यनेन च सम्बन्धः। याज्ञिकादयो हि हारिणः, ते देयम()आआदिकं स्वीकुर्वन्ति। "स्तम्बेरमः" इति। म्तम्बकर्णयो रमिजपोः" ३।२।१३ इत्यच्(), उपपदसमासः, "तत्पुरुषे कृति बहुलम्()" ६।३।१३ इति विभक्तेरलुग्भवति। अत्र स्तम्बेरम इत्यत्र स्तम्ब

इत्येत्? सप्तम्यन्तम्(), न तु रमशब्दो धम्र्यवाची। "कर्मकरवर्द्धितकः" इति। अत्र कर्मकरो हारी भवति, स हि वर्द्धितकं स्वीकरोति। न तु वर्द्धितकशब्दो धम्र्यवाची। न हि क्वचिदयमाचारो व्यवस्थितः कर्मकराय वर्द्धितको दातव्य इति। "वडवाया अयं वाडवः" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। "बीजनिषेकात्()" इति। गर्भाधानम्()=बीजनिषेकः। अत्र वाडवोऽ()आओ हारी स हि हरणं देयं स्वीकरोति। हरणम्()=देयं धम्र्यम्()। क्वचिदयमाचारो व्यवस्थितः--येना()ओन वडवायां गर्भ आधीयते तस्य बीजनिषेकादुत्तरकलं शरीरपुष्ट()र्थं योग्याशनादिकं दातव्यमिति। तेन हरणशब्दो धम्र्यवाची भवति। तथाप्यहरण इति प्रतिषेधान्न भवति। ततश्च कृत्स्वरे प्राप्ते "अनो भावकर्मवचनः" ६।२।१४९ इत्युत्तरपदं ल्युडन्तमन्तोदात्तं भवति। ननु च परत्वादेवायं स्वरो भविष्यति, तत्? किमहरण इति प्रतिषेधेन? इत्यत आह--"परोऽपि" इत्यादि। तेनेत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति। "वाडवहार्यम्()" इति। "ऋहलोण्र्यत्()" ३।१।१२४ इति हरतेण्र्यत्()--हार्यम्(), तत्? पुनस्तदेव ग्रहणम्()। वाडवस्य हार्यं वाडवहार्यम्()। तत्र यदि ज्ञापनार्थमनन्तरोक्तस्यार्थस्य हरणप्रतिषेधो न क्रियेत, तदा परत्वात्? "गतिकारकोपपदात्? कृत्? ६।२।१३८ इति कृत्स्वरेणोत्तरपदस्यान्तस्वरितत्वं स्यात्()। अ()स्मस्तु सत्ययमेव हारिस्वरो भवति। स्तूपेशाण इत्यादौ यत्र सम्पम्यन्तं पूर्वपदं तत्र "समासस्य" ६।१।२१७ इत्यस्यापवादे "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना पूर्वपदप्रकृतित्वरे प्राप्ते पूर्ववदाद्युदात्तमिदमुच्यते। पूर्वपदानि च प्रायेणान्तोदात्तानि, तथा हि--"स्टूप समुच्छ्राये" (धा।पा।१६७२) इत्यस्य चौरादिकस्य पचाद्यचि स्तूपशब्दो व्युत्पाद्यते, तेनाऽसावन्तोदात्तः। सप्तम्या सहैकदेशे विकृतेऽन्तोदात्त एव भवति। "एकादेश उदात्तेनोदात्तः" ८।२।५ इति। "मकि मण्डने" (धा।पा।८९) इत्येतस्मात्? "उणादयो बहुलम्()", ३।३।१ इत्युणादित्वम्(), नलोपश्च, तेन मकुटशब्द आद्युदात्तः। "हल विलेखने" (धा।पा।८३७) इत्येतस्मात्? "खनो घ च" ३।३।१२५ इति घित्करणेनान्यतोऽदि घो भवतीति ज्ञापितत्वाद्धप्रत्ययः। तेन हलशब्दोऽन्तोदात्तः। "दृ? विदारणे" (धा।पा।१४९३) इत्यस्मात्? "शृदृ()भसोऽदिः" (द।उ।६।४२) इति, "दृणातेः षुग्? ह्रसवश्च" (द।उ।६।४५) इति दृषच्छब्दो व्युत्पाद्यते, तेन सोऽप्यन्तोदात्तः। "याज्ञिका()आः" इत्यादयः षष्ठीसमासाः। तत्र समासस्वरे प्राप्ते हारिवाचिनः पूर्वपवस्याद्युदात्तत्वं यथा स्यादित्येवमर्थमिदम्()। अत्र च पूर्वपदानामुत्तरपदानां चासमासावस्थायां यः स्वरः स नाऽऽख्यायते; समासे कृते तस्य प्रयोगसमवायित्वात्()। नापि समासे कृते तस्य प्राप्तिरसति। स "प्रकृतिभावेन तस्मिन्? प्राप्ते सतीदमारभ्यते" इत्यस्यार्थस्य प्रदर्शनार्थमाख्यायते। अत एव च पूर्वत्रापि नाख्यातः॥

---

सूत्रम्

काशिका-वृत्तिः

युक्ते च ६।२।६६

युक्तवाचिनि च समासे पूर्वपदम् आद्युदात्तम् भवति। गोबल्लवः। अश्वबल्लवः। गोमणिन्दः। अश्वमणिनदः। गोसङ्ख्यः। अश्वसङ्ख्यः। युक्तः इति समाहितः, कर्तव्ये तत्परो यः स उच्यते।

न्यासः

युक्ते च। , ६।२।६६

युक्तः=समाहितः, कार्ये तत्पर इत्युच्यते। "गोबल्लवः" इति। अधिकारनाम, सोऽस्यास्तीति "वप्रकरणेऽन्येभ्योऽपि दृश्यते (वा।५८०) इति वप्रत्ययः, गवां बल्लव इति षष्ठीसमासः। अत्रापि समासस्वर एव प्राप्ते पूर्वपदाद्युदात्तत्वं विधीयते। "गोमणिन्दः" इति। मणिं ददातीति "आतोऽनुपसर्गे कः" ३।२।३, "तत्पुरुषे कृति बहुलम्()" ६।३।१३ इति विभक्तेरलुक्(), ततो गवां मणिन्द इति षष्ठीसमासः। अत्रापि समासस्वर एव प्राप्तेऽयं विधिः। "गोसंख्यः" इति। गां सञ्चष्ट इति "समि ख्यः" ३।२।७ इति कः, उपपदसमासः "गतिकारकोपपदात्()" (६।२।१३९) इति कृत्स्वरे प्राप्ते पूर्वपदस्योदात्तार्थमिहापि

वचनम्()! ननु च परत्वात्? थाथादिस्वरः ६।२।१४३ प्राप्नोति, तस्माद्गोबल्लवादौ कथमिदं वचनमिति, युक्तस्वरं कृत्सवर एव बाधेत? एवं तर्हि पूर्वविप्रतिषेधो वक्तव्यः; परशब्दस्येष्टवाचित्वात्()। गोबल्लव इत्येवमादयः समासाः सर्वे युक्तवाचिन इति दर्शयन्नाह--"युक्त इति समाहितः" इत्यादि। अनेन "युज समाधौ" (धा।प।११७७) इत्यस्य निष्ठायां युक्त इत्येतद्दर्शयति॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा अध्यक्षे ६।२।६७

अध्यक्षशब्दे उत्तरपदे विभाषा पूर्वपदम् आद्युदात्तं भवति। गवाद्यक्षः, गवाध्यक्षः। अश्वाध्यक्षः, अश्वाध्यक्षः।

न्यासः

विभाषाऽध्यक्षे। , ६।२।६७

अध्यक्षशब्दोऽपि समासे युक्तवाच्येव, तत्र पूर्वेण नित्यमाद्युदात्तत्वे प्राप्ते विभाषेयमारभ्यते। आद्युदात्तत्वेन मुक्ते समासान्तोदात्तत्वमेव भवति। गवामध्यक्ष इति षष्ठीसमासः॥

---

सूत्रम्

काशिका-वृत्तिः

पापं च शिल्पिनि ६।२।६८

पापशदः शिल्पिवाचिनि उतरपदे विभाषा आद्युदात्तो भवति। पापनापितः, पापनापितः। पापकुलालः, पापकुलालः। पापाणके कुत्सितैः २।१।५३ इति पापशब्दस्य प्रतिपदोक्तः समानाधिकरणसमासः इति षष्ठीसमसे न भवति, पापस्य नापितः पापनापितः इति।

न्यासः

पापं च शिल्पिनि। , ६।२।६८

पापमिति स्वरूपग्रहणम्()। शिल्पिनीत्यत्रार्थग्रहणम्()। अर्थग्रहणं किमर्थम्(), ग्रामशिल्पिनीत्यत्र शिल्पिग्रहणादर्थग्रहणं प्रसिद्धम्(), अत इहाप्यर्थग्रहणं विज्ञायते? नित्यं समासस्वरे प्राप्ते विकल्पेन पूर्वपदस्याद्युदात्तत्वं विधीयते, तेनमुक्ते समासस्वर एव भवति। अथेह कस्मान्न भवति--पापस्य नापित इति? अत आह--"पापशब्दस्य प्रतिपदोक्तः" इति। "तस्मात्? षष्ठी समासे न भवति" इति। प्रतिपदोक्ते हि समासे सति लक्षण प्रतिपदोक्तपरिभाषया (व्या।प।३) तस्यैव ग्रहणं भविष्यति; नान्यस्य॥

---

सूत्रम्

काशिका-वृत्तिः

गोत्रान्तेवासिमानवब्राह्मणेसु क्षेपे ६।२।६९

गोत्रवाचिनि अन्तेवासिवाचिनि च उत्तरपदे मानवब्राह्मनयोश्च क्षेपवाचिनि समासे पूर्वपदम् आद्युदात्तं भवति। जङ्घावात्स्यः। यो जङ्घादानं ददान्यहम् इति वात्स्यः सम्पद्यते स जङ्घावात्स्यः इति क्षिप्यते। भार्यासौश्रुतः। सुश्रुतापत्यस्य बार्याप्रधानतया क्षेपः। वाशाब्राह्मकृतेयः। ब्रह्मकृतशदः शुभ्रादिसु पठ्यते। गोत्र। अन्तेवासि कुमारीदाक्षाः।

कम्बलचारायणीयाः। घृतरौढीयाः। ओदनपाणिनीयाः। कुमार्यादिलाभकामा ये दाक्षादिभिः प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते। अन्तेवासि। माणव भिक्षामाणवः। भिक्षां लप्स्ये ऽहमिति माणवो भवति। माणव। ब्राह्मण दासीब्राह्मणः। वृषलीब्राह्मणः। भयब्राह्मणः। यो भयेन ब्राह्मणः सम्पद्यते। अत्र यस्य अन्यत् समासलक्षणं न अस्ति, सुप्सुपा इत्येव तत्र समासः कर्तव्यः। गोत्रादिषु इति किम्? दासीश्रोत्रियः। क्षेपे इति किम्? महाब्राह्मणः।

न्यासः

गोत्रान्तेवासिमाणवब्राआह्णेषु क्षेपे। , ६।२।६९

"गोत्राधिकारादन्यत्र गोत्रग्रहणे लोकिकं गोत्रं गृहते" (का।वृ।४।२।३९) इत्युक्तम्()। लोके चापत्यमात्रे प्रसिद्धम्(), तेनेह तस्यैव ग्रहणम्(), न तु पारिभाषिकस्य। अन्तेवासी=शिष्यः। तत्रान्तेवसिग्रहणादर्थग्रहणं प्रसिद्धम्()। अत इहाप्यर्थ एव गृह्रते, न स्वरूपम्()। माणवब्राआह्णयोः स्वरूपमेव। मनोरयं माणवः, अस्मादेव निपातनाण्णत्वम्()। "अबाधकान्यपि निपातनानि भवन्ति" (पु।प।वृ।९९) इति पक्षे मानव इत्यपि भवति। ब्राह्णोऽयं ब्राआह्णः। यस्तु "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः" (का।वृ।४।१।१६१) इति माणवकशब्दो व्युत्पाद्यते, यश्च ब्राह्णोऽपत्यं ब्राआह्ण इत्यर्थे ब्राआह्णशब्दः तयोर्गोत्रग्रहणेनैव सिद्धम्()। क्षेपः निन्दा। "जङ्घावात्स्यः" इति। "सुप्? सुपा" २।१।४ इति समासः। कथं पुनरत्र क्षेपः? इत्याह--"यो जङ्घादानम्()" इत्यादि। जङ्घादानं किमप्याचारनियतं देयमुच्यते, तद्ददान्यहमित्यतोऽभिप्रायेण वात्स्यः सम्पद्यते। वात्स्योऽहमित्यभ्युपगच्छति यः सः जङ्घावात्स्य इत्येवं निन्द्यते। अवात्स्यस्यापि सतो जङ्घादानं प्रति वात्स्यत्वाभ्युपगमात्()। वात्स्यशब्दोऽयं गर्गादिः। "भार्यासौश्रुतः" इति। सुश्रुतोऽपत्यं सौश्रुत इत्यण्(), भार्याप्रधानः सौश्रुतो भार्यासौश्रुतः। "समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च" (वा।८३) इति समासः। सुश्रुतस्य भार्याप्रधानतयेत्यनेन समानाधिकरणेनात्र समास इति दर्शयति। सुश्रुतोऽपत्यमित्यनेनापि सौश्रुतस्याण्प्रतययान्तत्वम्()। "वशाब्राआह्कृतेयः" इति। तेनैवोपसंख्यानेन समासः। अत्रापि वशाप्रधानतया ब्राह्कृतापत्यस्य क्षेपः। "कुमारीदीक्षाः" इति। "सुप्? सुपा" २।१।४ इति समासः। एवं "कम्बलचारायणीयाः" इत्यत्रापि। दाक्षिणा प्रोक्तं दाक्षं शास्त्रम्()। "इञश्च" ४।२।१११ इत्यण्(), दाक्षमधीयते तद्वेत्तीति वा पुनरण्(), तस्य "प्रोक्ताल्लुक्()" ४।२।६३ इति लुक्()। चरशब्दो नडादिः, चरस्यापत्यं चारायणः, तेन प्रोक्तं चारायणीयम्()। "वृद्धाच्छः" ४।२।११३, "तदधीते" ४।२।५८ इति पूर्ववदण्()। पाणिना प्रोक्तं पाणनीयम्(), ततः पूर्ववदध्येतर्यण्? तस्य च लुक्()। "कमार्यादिलाभकामाः" इति। आदिशब्देन कम्बलौदनादीनां ग्रहणम्()। अत्रापि "सुप्? सुपा" २।१।४ इति समासः। तेनैवोपसंख्यानेन वा कुमारीलाभकामा दाक्षाः कुमारीदाक्षाः। "भिक्षामाणवः" इति। पूर्ववत्? समासः। भिक्षालाभकामो माणवो भिक्षामाणवः। "दासीब्राआह्णः" इति। दास्याः कामयिता ब्राआह्णो दासीब्राआह्णः। एवं "वृषलीब्राआह्णः" इति। "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति बहुलवचनादकृतापि समासः। "तृतीया" २।३।१८ इति योगविभागाद्वा। "दासीश्रोत्रियः" इति। दासीब्राआह्ण इत्यनेन तुल्यम्()। समासस्वरापवायो योगः॥

---

सूत्रम्

काशिका-वृत्तिः

अङ्गानि मैरेये ६।२।७०

मैरेयशब्दे उत्तरपदे तदङ्गवाचिनि पूर्वपदान्याद्युदात्तानि भवन्ति। गुडमैरेयः। मधुमैरेयः। मद्यविशेषो मैरेयस्तस्य गुडविकारस्य गुदो ऽङ्गं भवति, मधुविकारस्य तस्य मधु अङ्गम्। अङ्गानि इति किम्? परममैरेयः। मैरेये इति किम्? पुष्पासवः। फलासवः।

न्यासः

अङ्गानि मैरेये। , ६।२।७०

अङ्गशब्दोऽयं कारणवाची। आरम्भकं यत्? तदङ्गमुच्यते। अङ्गानीति बहुवचनं स्वरूपविधिनिरासार्थम्()। सुरावर्ज्यं मद्यम्()=मैरेयमित्यभिधीयते। "गुडमैरेयः, मधुमैरेयः" इति। ष्ठासमासः। "गुडविकारस्य मैरयस्य गुडोऽङ्गम्()" इति। तत्कारणत्वात्()। अयमपि समासस्वरापवादो योगः॥

---

सूत्रम्

काशिका-वृत्तिः

भक्ताऽख्यास् तदर्थेषु ६।२।७१

भक्तमन्नम्, तदाख्यास् तद्वाचिनः शब्दाः, तदर्थेषु उत्तरपदेषु आद्युदाता बवन्ति। भिक्षाकंसः। श्राणाकंसः। भाजीकंसः। भिक्षादयो ऽन्नवचनाः। भक्ताख्याः इति किम्? समाशशालयः। समशनं समाशः इति क्रियामात्रम् उच्यते, न द्रव्यम्। तदर्थेसु इति किम्? भिक्षाप्रियः। बहुव्रीहिरयम्, अत्र पूर्वपदम् अन्तोदात्तम्।

न्यासः

भक्तख्यास्तदर्थेषु। , ६।२।७१

आख्याग्रहणं स्वरूपविधिनिरासार्थम्()। ननु च बहुवचनादेव स्वरूपविधिर्न भविष्यति? नैतदस्ति; बहुवचनं ह्येतदर्थस्यैव बहुत्वमाचक्षीत--बह्वर्थवृत्तिर्यो भक्तशब्द इति। अपि च बहुवचनेन स्वरूपविधौ बाधितेऽन्नादय एव ये भक्तशब्देन समासार्थपर्यायास्ते गृह्येरन्(), न तु भकतविशेषवाचिनो भिक्षादयः। आख्याग्रहणे तु स्वरूपविदौ बाधिते बहुवचनेन तद्विशेषाणां ग्रहणं सम्पद्यते। तस्मा इदं तदर्थम्()। तच्छब्देन भक्ताख्यानामर्थो निर्दिश्यते। "भिक्षाकंसः" इत्येवमादयः "चतुर्थी तदर्थार्थ" २।१।३५ इति चतुर्थीसमासाः। ननु च प्रकृतिविकृतिग्रहणं तत्र चोद्यते, न चेह प्रकृतिविकारभावः? सत्यमेतत्(); इदमेव तु वचनं ज्ञापकम्--भक्ताख्यायां तादर्थ्यमात्रे चतुर्थी समस्यत इति। "समशनं समाशः" इति। "अशू भोजने" (धा।पा।१५२३) [अश भोजने--धा।पा] इत्यस्मात्? सम्पूर्वाद्भावे घञ्()। "क्रियामात्रमुच्यते" इति। मात्रशब्देन भक्तव्यवच्छेदं करोति। "अत्र पूर्वपदमन्तोदात्तम्()" इति। भिक्षाशब्दः "गुरोश्च हलः" ३।३।१०३ इति भिक्षेरप्रत्ययं कृत्वा व्युत्पाद्यते, श्राणाशब्दोऽपि "श्रै पाके" (धा।पा।९१९) इत्यस्मात्? क्तप्रत्ययम्()। तेन द्वावपि प्रत्ययस्वरेणान्तोदात्तौ। "बहुव्रीहौ प्रकृत्या" ६।२।१ इति प्रकृतिभावेनान्तोदात्तादेव भवतः। समाससवरापवादो योगः॥

---

सूत्रम्

काशिका-वृत्तिः

गोबिडालसिंहसैन्धवेषु उपमाने ६।२।७२

गवादिषु उपमानवाचिषु उत्तरपदेषु पूर्वपदम् आद्युदात्तं भवति। धान्यगवः। भिक्षाबिडालः। तृणसिंहः। काष्ठसिंहः। सक्तुसैन्धवः। पानसैन्धवः। धान्यं गौरिव इति विगृह्य व्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिः इति समासः। उपमानार्थो ऽपि यथासम्भवम् यथाप्रसिद्धि च योजयितव्यः। गवाकृत्या संनिवेशितं धान्यम् धान्यगवशब्देन उच्यते। उपमाने इति किम्? परमसिंहः।

न्यासः

गोबिडालासिंहसैन्धवेषूपमाने। , ६।२।७२

उपमानशब्दोऽयं गवादिभिः प्रत्येकमभिमसम्बध्यते; अन्यथैकवचनान्तस्य बहुवचनान्तैः समानाधिकरणेन विशेष्यविशेषणभावो न स्यात्()। थ वा सुब्व्यत्यये बहुवचनस्यैव स्थान इदमेकवचनं द्रष्टव्यम्()। "धान्यगवः" इति। "गोरतद्धितलुकि" ५।४।९१ टच समासान्तः। अत्र चित्स्वरे प्राप्ते पूर्वपदस्याद्युदात्तत्वं विधीयते। "भिक्षाबिडालः" इत्येवमादौ समासस्वरे। उपमानार्थोऽपि" इत्यादि। योऽयमत्रोदाहरणे उपमानार्थः सम्भवति, स तत्र योजयितव्यः। "यथाप्रसिद्धि च" इति। यस्योपमानस्यार्थस्य च लोके प्रसिद्धिः स तथा योजयितव्यः। तत्र दिङ्मात्रमुपमानार्थयोजनस्य दर्शयितुमाह--गवाकृतिः=गोसंस्थानम्(), तया सन्निवेशितं गोर्यत्संस्थानं तेन सन्निवेशितं व्यवस्थापितं धान्यगवशब्देनोच्यते; तुल्याकृतित्वात्()। एवमन्यत्रापि यत्? किञ्चित्? सादृश्यं योज्यम्()। यथा गोरचनाविशेषावयवानामेवं यस्य हिरण्यस्य तद्धिरण्यं हिरण्यगवशब्देनोच्यते। यथा बिडाला अल्पप्रमाणास्तथा हि भिक्षा, यथा वा बिडालाः क्वचिद्भवन्ति न सर्वत्र तथा भिक्षापि। एवं श्राणाबिडालयोः सादृश्यमेवञ्जातीयकं योजयितव्यम्()। सिंहाकृत्या सन्निविष्टं तृणं तृणसिंहः। यथा सैन्धवं शुक्लमेवं सक्तुः सक्तुस#ऐन्धवः। एवं पानसैन्धवः॥

---

सूत्रम्

काशिका-वृत्तिः

अके जीविकाऽर्थे ६।२।७३

अकप्रत्ययान्ते उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदम् आद्युदात्तं भवति। दन्तलेखकः। नखलेखकः। अवस्करशोधकः। रमणीयकारकः। दन्तलेखनादिभिर् येषां जीविका त एवम् उच्यन्ते। नित्यं क्रीडाजीविकयोः २।२।१७ इति समासः। अके इति किम्। रमणीयकर्ता। जीविकार्थे इति किम्? इक्षुभक्षिकां मे धारयसि।

न्यासः

अके जीविकार्थे। , ६।२।७३

"अके इति प्रत्ययग्रहणम्()। तत्र प्रत्ययग्रहणपरिभाषया (नी।प।वृ।३१) तदन्तस्य ग्रहणं विज्ञायत इत्याह--"अकप्रत्ययान्त उत्तरपदे" इति। "जीविकावाचिनि" इति। जीविका=जीवकः तद्वाचिनीत्यर्थः। जीविकाशब्दो ह्रर्शाअदेराकृतिगणत्वान्मत्वर्थीयाकारान्तः सूत्र उपात्तः। अत एव वृत्तौ दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्त इत्याह--"दन्तलेखलः" इति। लिकेर्ण्वुल्(), षष्ठीसमासः। षष्ठी पुनः "कर्तृकर्मणोः कृति" २।३।६५ इति कर्मणि। "अवस्करशोधकः" इति। "शुध शौचकर्मणि" (धा।पा।११९१) ["शौचे"--धा।पा।] इत्यस्माण्ण्यन्ताण्ण्वुल्()। "रमणीयकारकः" इत्यत्रापि करोतेः। "रमणीयकत्र्ता" इति। पूर्ववत्? समासः। अत्र "गतिकारकोपपदात्? कृत्()" ६।२।१३८ इति प्रकृतिभावेनोत्तरपदमन्तोदात्तम्()। "इक्षुभक्षिकाम्()" इत्यादि। "पर्यायर्हणोत्पत्तिषु ण्वच्()" ३।३।१११ इति भक्षयतेर्ण्वुच्()। अत्र "षष्ठी" २।२।८ इति समासलक्षणेनैव समासः। अत्रापि पूर्ववदुत्तरपदमन्तोदात्तम्()। कृत्स्वरापवादो योगः। एवमुत्तरत्रापि योगाः। "युक्तारोह्यादयश्च" (६।२।८१) इत्यतः प्राक्? कृत्स्वरापवादो वेदितव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

प्राचां क्रीडायां ६।२।७४

प्राग्देशवर्तिनां या क्रीडा तद्वाचिनि समासे अकप्रत्ययान्ते उत्तरपदे पूर्वपदम् आद्युदात्तं भवति। उद्दालकपुष्पभञ्जिका। वीरणपुष्पप्रचायिका। शालभञ्जिका। तालभञ्जिका। संज्ञायाम् ३।३।१०९ इति ण्वुल्। नित्यं क्रीडाजीविकयोः २।२।१७ इति षष्ठीसमासः। प्राचाम् इति किम्? जीवपुत्रप्रचायिका। इयम् उदीचां क्रीडा। क्रीडायाम् इति किम्? तवपुष्पप्रचायिका।

पर्याये ण्वुच्प्रत्ययो भवति।

---

सूत्रम्

काशिका-वृत्तिः

अणि नियुक्ते ६।२।७५

अणन्ते उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदम् आद्युदात्तं भवति। छत्रधारः। तूणीरधारः। कमण्डलुग्राहः। भृङ्गारधारः। नियुक्तो ऽधिकृतः, स च कस्मिंश्चित् कर्तव्ये तत्परो न भवति इति नियुक्तः इत्यनेन सिध्यति। नियुक्तः इति किम्? काण्डलावः। शरलावः।

न्यासः

अणि नियुक्ते। , ६।२।७५

"छत्त्रधारः" इति। "कर्मण्यण्()" ३।२।१।। किमर्थं पुनरिदम्(), यावता युक्तोऽभिमतः, तद्वाची न भवति? "नियुक्तोऽधिकृतः" इत्यादि। "युक्ते च" ६।२।६६ इत्यनेन हि यः कर्तव्ये युक्तः समाहितः तस्य पूर्वपदस्याद्युदात्तत्वम्(), तेनाधिकृतवाचिनि न सिध्यति। तस्मादधिकृतच्छत्त्रादिषु यः सहिनियुक्तोऽभिप्रेतः, स च क()स्मश्चिच्छत्त्रधारणे तत्परो न भवति तेन च्छत्रधार इत्यादिसमासो यादृशः "युक्ते च" ६।२।६६ इत्यत्र युक्तोऽभिमतस्तद्वाची न भवति। "नियुक्तोऽधिकृतः" इत्यनेन "युजिर्? योगे" (धा।पा।१४४४) इत्यस्य निष्ठायां नियुक्त इत्येतद्रूपमिति दर्शयति। "काण्डलावः" इति। अत्र काण्डलवनक्रियां प्रति कर्तृत्वमात्रं गम्यते, नादिकृतत्वम्()। तेनेष स्वरो न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

शिल्पिनि च अकृञः ६।२।७६

शिल्पिवाचिनि समासे अणन्ते उत्तरपदे पूर्वपदम् आद्युदात्तं भवति, स चेदण् कृञो न भवति। तन्तुवायः। तुन्नवायः। वालवायः। शिल्पिनि इति किम्? काण्डलावः। शरलावः। अकृञः इति किम्? कुम्भकारः। अयस्कारः।

न्यासः

शिल्पिनि चाकृञः। , ६।२।७६

अनियुक्तार्थ वचनम्()। "अकृञः" इति। शिल्पिवशेषे प्रतिषेधं वक्ष्यामीत्येवमर्थञ्च। "तन्तुवायः" इति। "वेञ्? तन्तुसन्ताने" (धा।पा।१००६) इति। तन्तून्? वयतीति ह्वावामश्च" ३।२।२ इत्यण्(), "आतो युक्? चिण्कृतोः" ७।३।३३ इति युक्()। "अयस्कारः" ति। "अतः कृकमि" ८।३।४६ इत्यादिना विसर्जनीयस्य सकारः। प्रत्युदाहरणेषु कृत्स्वर एव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां च ६।२।७७

संज्ञायां विषये अणन्ते उत्तरपदे अकृञः पूर्वपदम् आद्युदात्तं भवति। तन्तुवायो नाम कीटः। वालवायो नाम पर्वतः। अकृञः इत्येव, रथकारो नाम ब्राह्मणः।

न्यासः

संज्ञायां च। , ६।२।७७

---

सूत्रम्

काशिका-वृत्तिः

गोतन्तियवं पाले ६।२।७८

गो तन्ति यव इत्येतानि पूर्वपदानि पालशब्दे अद्युदात्तनि भवन्ति। गोपालः। तन्तिपालः। यवपालः। अनियुक्तार्थ आरम्भः। गोतन्तियवम् इति किम्? वत्सपालः। पाले इति किम्? गोरक्षः।

न्यासः

गोतन्तियवं पाले। , ६।२।७८

"गोपालः" इति। "पा रक्षणे" (धा।पा।१०५६), पूर्ववदण्()। "अनियुक्तार्थ आरम्भः" इति। नियुक्ते "अणि नियुक्ते" ६।२।७५ इत्यनेनैव सिद्धत्वात्()। "गोरक्षः" इति। "रक्ष पालने" (धा।पा।६५८)॥

---

सूत्रम्

काशिका-वृत्तिः

णिनि ६।२।७९

णिनन्ते उत्तरपदे पूर्वपदम् आद्युदात्तं भवति। पुष्पहारी। फलहारी। पर्णहारी।

न्यासः

णिनिः। , ६।२।७९

"पूष्पहारी" इति हरतेः "व्रते" ३।२।८० "बहुलमाभीक्ष्ण्ये" ३।२।८१ इति वा णिनिः॥

---

सूत्रम्

काशिका-वृत्तिः

उपमनं शब्दार्थप्रकृतावेव ६।२।८०

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतौ एव णिनन्ते उत्तरपदे आद्युदात्तं भवति। उपमानं नियम्यते। उष्ट्रक्रोशी। ध्वाङ्क्षरावी। खरनादी। उपमानग्रहनम् अस्य पूर्वस च योगस्य विषयविभागार्थम्। शब्दार्थप्रकृतौ इति किम्? वृकवञ्ची। वृकप्रेक्षी। प्रकृतिग्रहणं किम्? प्रकृतिरेव यत्र उपसर्गनिरपेक्षा शब्दार्था भवति तत्र एव यथा स्याद्, इह मा भूद् गर्दभोच्चारी, कोकिलाभिव्याहारी इति। एवकारकरणम् उपमानावधारणार्थम्। शब्दार्थम्। शब्दार्थप्रकृतौ त्वनुपमानमुपमानं च आद्युदात्तं भवति। सिंहविनर्दी। पुष्कलजल्पी।

न्यासः

उपमानं शब्दार्थप्रकृतावेव। , ६।२।८०

"शब्दार्थप्रकृतौ" इति। शब्दार्थः प्रकृतिर्यस्मिन्निति बहुव्रीहिः। "उपमानं नियम्यते" ति। यत एवकारस्ततोऽन्यत्रावधारणं भवति। इह च शब्दार्थप्रकृतेरेवकारः, तस्मादुपमाननियमो भवति, अतस्तन्नियम्यते। "उष्ट्रकोशी" इति। "क्रुश आह्वाने" (धा।पा।८५६) [आह्वाने रोदने च--धा।पा।] इत्यस्मात्? "कत्र्तर्युपमाने" ३।२।७९ इति

णिनिः। णिनिनैव सादृश्यस्योक्तत्वाद्वृत्ताविवशब्दो न प्रयुज्यते। "ध्वाङ्क्षरावी" इति। "रु शब्दे" (धा।पा।१०३४) पूर्वलक्षणाण्णिनिः। "खरनादी" इति। "णद अव्यक्ते शब्दे" (धा।पा।५४)। "उपमानग्रहणम्()" इत्यादि। यद्युपमानग्रहणं न क्रियते, तदा पूर्वस्य योगस्यास्य च विषयविभागो न ज्ञायेत। यदि योगविभागकरणसामर्थ्याद्विषयान्तरम्य कल्प्येत, तथापीष्टो विषयविभागो न ज्ञायेत। उपमानग्रहणे तु सति पूर्वस्य सामान्यं विषयः, अस्य तु विशेष उपमानमिति विषयविभागो निश्चीयेत। तेन विषयविभागार्थमुपमानग्रहणम्()। "वृकवञ्ची" इति। "वञ्चु प्रलम्भने" (धा।पा।१७०३)। "वृकप्रेक्षी" इति। "ईक्ष दर्शने" (धा।पा।६१०) प्रपूर्वः। अत्र कृत्स्वर एव भवति। "प्रकृतिरेव" इत्यादि। यदि प्रकृतिग्रहणं न क्रियेत, तदा शब्दार्थात्? परो यो णिनिस्तदन्त उत्तरपद इत्येवं विज्ञायेत? ततश्च गर्दभोच्चारी कोकिलाभिव्याहारीत्यस्यापि स्यात्(); भवति ह्यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात्? परो णिनिः, अतस्तदन्तमुत्तरपदम्()। तस्मादिह मा भूदिति प्रकृतिग्रहणं क्रियते, तेनेह न भवति। प्रकृतिग्रहणे सति यत्रोपसर्गनिरपेक्षा गत्यर्थत्वात्(), हरतेश्च हरणार्थत्वात्()। यद्वा--योऽत्र शब्दार्थो धातूपसर्गसमुदायः, न तस्माण्णिनेर्विधानम्()। यदि पूर्वेणैव सिद्धे नियमार्थं वचनम्(), एवं सिद्धे विधिरारभ्यमाणो नियमाय भवतीत्यनर्थकमेवकारकरणम्()? इत्याह--"एवकारकरणम्()" इत्यादि। असति ह्येवकार उपमान एव शब्दार्थप्रकृतावित्येवमवधारणं स्यात्(), ततश्च शब्दार्थप्रकृतिरेव नियम्येत--शब्दार्थप्रकृतौ यदि भवत्युपमान एव भवति, नानुपमान इति। ततश्चानुपमाने न स्यात्()। तस्मादुपमानावधारणं यथा स्यादित्येवमर्थमेवकारः क्रियते। किं कारणम्()? इत्याह--"शब्दार्थप्रकृतौ तु" इत्यादि। तुशब्दो हेतौ। तस्मात्? शब्दार्थप्रकृतावुपमानमनुपमानं चाद्युदात्तं भवति। तस्मादुपमानावधारणार्थमेवकारकरणम्()। उपमाननियमे हि सति शब्दार्थप्रकृतेरनियतत्वात्? तत्राविशेषेण सर्वस्याद्युदात्तत्वं लभ्यते। "सिंहविनर्दी" इति। उपमानस्योदाहरणम्()। "पुष्कलजल्पी" इति। अनुपमानस्य। पुष्कलजल्पीत्यत्र "व्रते" ३।२।८० "बहुलमाभीक्ष्ण्ये" ३।२।८१ इति वा णिनिः॥

---

सूत्रम्

काशिका-वृत्तिः

युक्तारोह्यादयश् च ६।२।८१

युक्तारोह्यादयः समासाः आद्युदात्ता भवन्ति। युक्तारोही। आगतरोही। आगतयोधी। आगतवञ्ची। आगतनर्दी। आगतप्रहारी। एते णिनन्ताः णिनि ६।२।७९ इत्यस्य एव उदाहरनार्थं पथ्यन्ते पुर्वोत्तरपदनियमार्था इति केचित्। इह मा भूत्, वृक्षारोहि, युक्ताध्यायी इति। आगतमत्स्या। क्षीरहोता। भगिनीभर्ता। याजकादित्वात् षष्ठीसमासावेतौ। ग्रामगोधुक्। अश्वत्रिरात्रः। गर्गत्रिरात्रः। व्युष्टत्रिरात्रः। शणपादः। समपादः। षष्ठीसमासा एते। एकशितिपत्। एकः शितिः पादो ऽस्य इति त्रिपदो बहुव्रीहिः। तत्र एकशितिशब्दस् तद्धितार्थोत्तरपदः इति तत्पुरुषसंज्ञः, तस्य निमित्तिस्वरबलीयस्त्वादन्तोदात्तत्वं प्राप्तम् इत्याद्युदात्तत्वं विधीयते। एवम् अपि न अर्थ एतेन, इगन्त द्विगौ ६।२।२९ इति सिद्धत्वात्? एवं तर्हि ज्ञापनार्थम्। एतज् ज्ञापयति शित्यन्तस्य उत्तरपदे द्विगुस्वरो न भवति इति। तेन द्विशितिपादित्यत्र तिशब्द उदात्तो भवति। निमित्तिस्वरबलीयस्त्वस्य अप्येकशितिपात्स्वरवचनम् एव ज्ञापकं वर्णयन्ति। पात्रेसमितादयश्च युक्तारोह्यादयस् ततस् ते ऽप्याद्युदात्ता भवन्ति।

न्यासः

प्राचां क्रीडायाम्?। , ६।२।८१

"प्राग्देशवर्त्तिनां या क्रीडा" इति। एतेन प्राग्ग्रहणमिह न विभाषार्थम्(), किञ्च क्रियाविशेषणमिति दर्शयति। "उद्दालक्पुष्पभञ्जिका" इत्यादि। उद्यालकपुष्पादिषु कृद्योगे कर्मणि षष्ठी। "जीवपुत्रप्रचायिका" इति। अत्रापि

प्रपूर्वाच्छिनोतेः संज्ञायां ण्वुल्()। पूर्ववत्? समासः। लित्स्वरेणोत्तरपदं मध्योदात्तम्()। "तव पुष्पप्रचायिका" इति। "षष्ठी" २।२।८ इत्यनेनैवात्र समासः। चित्स्वरेरेणोत्तरपदं मद्योदात्तम्()॥

न्यासः

युक्तारोह्यादयश्च। , ६।२।८१

"युक्तारोहि" इत्यादिषु यत्र कृदन्तमुत्तरपदं तत्र कृत्स्वरापवादो योगः। अन्येषु तु समासस्वरापवादः। युक्तारोहीत्येवमादिषु आगतप्रहारीत्येवम्यर्यन्तेषु "रुह जन्मनि" (धा।पा।८५९), [रुह बाजजन्मनि प्रादुर्भावे च--धा।पा।] "युध सम्प्रहारे (धा।पा।११७३), "वञ्चु प्रलम्भने" (धा।पा।१७०३), "टुणदि समृद्धौ" (धा।पा।६७) [टु नदि समृद्धौ--धा।पा।] "ह्मञ्? हरणे" (धा।पा।८९९) प्रपूर्वः--इत्येभ्यो धातुभ्यो यथायोगं युक्तागतपूर्वभ्यः "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति णिनिः। यद्येते णिन्यन्तास्तत्? किमर्थमिह पठ()न्ते यावता "णिनि" (६।२।७९) इत्यनेनैव सिद्धम्()? इत्यत आह--"णिनीत्यस्यैवोदाहरणार्थं पठ()न्ते" इति। "पूर्वोत्तरपद" इत्यादिना केषांचिन्मतेन तेषामिह पाठस्य प्रयोजनान्तरं दर्शयति। पूर्वोत्तरपदयोनिर्यमोऽर्थो येषां ते तथोक्ताः। यत्र युक्तादीन्येव पूर्वपदान्यारोह्यादीन्येव चोत्तरपदानि तत्रैव यथा स्यादिति, इह मा भूत्()--ध्वाङ्क्षारोही, वृक्षारोहीति, अत्रान्यत्पूर्वपदम्()। युक्ताध्यायीत्यत्रान्यदुत्तरपदम्()। "इङ्? अध्ययने" (धा।पा।१०४६) इत्यस्माण्णिनिः। "आगतमतस्या" इति। विशेषणसमासः। "क्षीरहोता" इति। क्षीरस्य होता। अस्मादेव निपातनात्? षष्ठीसमासः। याजकादित्वाद्वा (२।२।९) "हु" इत्येतस्मात्? तृच्()। "भगिनीभर्ता" इति। अयमपि पूर्ववत्? षष्ठीसमासः। भृञस्तृच्()। "ग्रामगोधुक्()" इति। दुहेः क्विप्(), "दादेर्धातोर्धः" ८।२।३२। "एकाचो बशो भष्()" ८।२।३७ इत्यादिना दकारस्य धकारः, "झलां जशोऽन्ते" ८।२।३९ इति घकारस्य गकारः, तस्य "वाऽवसाने" ८।४।५५ इति चर्त्वम्()--ककारः। "त्रिरात्रः" इति। तिरुआओ रात्रस्यः समाह्मताः इति समाहारे द्विगुः। "अहःसर्वैकदेश" (५।४।८७) इत्यादिनाऽच्? समासान्तः। "एकशितिपात्()" इति। "पादस्य लोपोऽहस्त्यादिभ्यः" ५।४।१३८ इत्यकारलोपः। ननु चैकशब्दोऽयम्? "इष्भीकापाशल्पतिमर्चिभ्यः कन्()" (द।उ।३।२१) इति कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। तत्रैकः शितिः पादोऽस्येति बहुव्रीहिः। तत्र कृते प्रकृतिभावेनैव सिद्धमिहाद्युदात्तत्वम्(), ततो नार्थ इहास्य पाठेन? इत्यत आह--"एकः शितिः पादोऽस्य" इति। द्विपदे बहुव्रीहावेष दोषः स्यात्(), न चायं द्विपदः, किं तर्हि? त्रिपदः। अत्र पादशब्द उत्तरपदे परतः "तद्धितार्थोत्तरपद" २।१।५० इति पूर्वपदयोरेकशितिशब्दस्यान्तोदात्तत्वं प्राप्तमिति "समासस्य" ६।१।२१७ इत्यनेन। इतिकरणो हेतौ। यस्मात्? तस्यान्तोदात्तत्वं प्राप्तं तस्मात्? तस्याद्युदात्तत्वं विधीयते। ततो नापार्थक एकशितिपाच्छब्दस्य पाठ इत्यभिप्रायः। कस्मात्? पुनस्तस्यान्तोदात्तत्वं प्राप्नोति, बहुव्रीहिस्वरेणैव हि परत्वादन्तोदात्तत्वं बाधित्वा युक्तं भवितुम्()? इत्याह--"निमित्तस्वरबलीयस्त्वात्()" इति। निमित्तपदं द्विगोस्त्रिपदबहुव्रीहिः। तत्र हि कृते द्विगुत्तरपदे परतः पूर्वपदयोर्भवति। यच्च यस्मिन्? सति भवति तत्? तस्य निमित्तम्(), तस्य निमित्तस्य बहुव्रीहिस्वरो निमित्तस्वरः, तस्माद्बलीयस्त्वं निमित्तस्वरबलीयस्त्वम्()। "पञ्चमी" २।१।३६ इति योगविभागात समासः। तदेतदुक्तं भवति--तस्माद्बहुव्रीहिस्वरात्? समासान्तोदत्तत्वमस्य बलीयस्त्वम्(), तस्मात्? तत्? प्राप्नोतीति। बलीयस्त्वं तु तस्य सतिशिष्टत्वात्()। तद्धि बहुव्रीहोराद्युदात्तत्वे सति भवति। तस्मात्? सतिशिष्टस्य बलीयस्त्वमुक्तम्()। वक्ष्यमामज्ञापकाद्वा निमित्तस्वरबलीयस्त्वम्()। "एवमपि" इत्यादि। एवमपि त्रिपदे बहुव्रीहौ कल्प्यमानेऽपि। "नार्थ एतेन" इति। एकशितिपाच्छब्देनेह भवति नार्थः। कस्मात्()? इत्याह--"इगन्त" इत्यादि। त्रिपदे हि बहुव्रीहावेकशितिशब्दयोरुत्तरपदे यः समासः "संख्यापूर्वो द्विगुः" २।१।५१ इति द्विगुसंज्ञः स इगन्तश्च भवति। ततश्च "इगन्त--द्विगौ" ६।२।२९ इत्याद्युदात्तत्वं सिद्धम्(), ततो नार्थ एतेन। "एवं तर्हीत्यादिनैकशितिपाच्छब्दपाठस्य ज्ञापकत्वं दर्शयति। किं पुनस्तज्ज्ञापयति? इत्याह--"एतत्()" इत्यादि। "तेन" इत्यादिना प्रयोजनं दर्शयति। यद्येषोऽर्थो न ज्ञाप्यते, तेन द्वौ शिति पादावस्येति त्रिपदे बहुव्रीहौ कृते, तत्र चोत्तरपदे परतः पूर्वपदयोर्द्विगौ सति "इगन्त--द्विगौ" ६।२।२९ इति

पूर्वपदप्रकृतस्वरे कृते तिशब्दो द्विशितिपादित्यत्रोदात्तः स्यात्()। अस्मिस्त्वर्ये ज्ञापिते "इगन्त--द्विगौ" ६।२।२९ इत्येष स्वरो न भवति। त()स्मश्चासति समासस्वरेण तिशब्द उदात्तो भवति, निमित्तस्वरबलीयस्त्वं न स्यात्()। ततक्च त्रिपदे हि बहुव्रीहौ परत्वात्? समासस्वरं बाधित्वा बहुव्रीहिस्वर एव भवति, ततस्तेनैव सिद्धत्वादेकशितिपाच्छब्दस्येह पाठो न क्रियेत, कृतश्च। तस्मात्? स एव ज्ञापयति--निमित्तस्वरबलीयस्त्वमिति॥

---

सूत्रम्

काशिका-वृत्तिः

दीर्घकाशतुषभ्राष्ट्रवटं जे ६।२।८२

दीर्घान्तं पूर्वपदम्, काश तुष भ्राष्ट्र वट इत्येतानि च जे उत्तरपदे आद्युदात्तानि भवन्ति। कुटीजः। शमीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः।

न्यासः

दीर्घकाशतुषभ्राष्ट्रवटं जे। , ६।२।८२

कृत्स्वरापवादो योगः। "कृटीजः" इति। कुट()आं जात इति "सप्तम्यां जनेर्डः ३।२।९७ इति डप्रत्ययः॥

---

सूत्रम्

काशिका-वृत्तिः

अन्त्यात् पूर्वं बह्वचः ६।२।८३

जे उत्तरपदे बह्वचः पूर्वपदस्य अन्त्यात् पूर्वम् उदात्तं भवति। उपसरजः। मन्दुरजः। आमलकीजः। वडवाजः। बह्वचः इति किम्? दग्धजानि तृणानि।

न्यासः

अन्त्यात्पूर्वं बह्वचः। , ६।२।८३

अयमपि कृत्स्वरपबादो योगः। "दग्धजानि" इति। अत्र कृत्स्वर एव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

ग्रामे ऽनिवसन्तः ६।२।८४

ग्रामशब्दे उत्तरपदे पूर्वपदम् आद्युदात्तं भवति न चेद् निवसद्वाचि भवति। मल्लग्रामः। विणिग्ग्रामः। ग्रामशब्दो ऽत्र समूहवाची। देवग्रामः। देवस्वामिकः इत्यर्थः। अनिवसन्तः इति किम्? दाक्षिग्रामः। माहकिग्रामः। दाक्ष्यादयो निवसन्ति यस्मिन् ग्रामे स तेषाम् इति व्यपदिश्यते।

न्यासः

ग्रामेऽनिवसन्तः। , ६।२।८४

"निवसन्तशब्दोऽयमौणादिको गृह्नते। "जृविशिभ्यां झच्()" (द।उ।६।१७) इति वर्तमाने "तृ()भूवहिवसिभासिसाधिगतिमण्डिजिनन्दिभ्यश्च" (द।उ।६।१९) [तृ()भृवहिवसिभासिसाधिगाडिमण्डिजिवन्दिभ्यश्च--द।उ।] इति वसेर्निपूर्वाज्झच्()। निवसतीति निवसन्तः।

केचिच्छन्नन्तस्य वसच्छब्दसय ग्रहणं वर्णयन्ति। "मल्लग्रामः" इति। षष्ठीसमासः। "देवग्रामः" इति। वाटकपरिक्षिप्ते गृहसमुदाये ग्रामशब्दो वर्तते। तस्माद्देवस्वामिक इत्यर्थः। एतेन स्वस्वामिभावसम्बन्धा या साऽत्र षष्ठी समस्यते, न तु क्रियावाससम्बन्धेति दर्शयति; अन्यथा देवशब्दः पूर्वपद निवसन्तवाच्येव स्यादित्यभिप्रायः। "दाक्ष्यादयो निवसन्ति यस्मिन्()" इत्यादिना प्रत्युदाहरणे पूर्वपदस्य निवसन्तवाचित्वं दर्शयति॥

---

सूत्रम्

काशिका-वृत्तिः

घोषाऽदिषु च ६।२।८५

घ्षादिषु च उत्तरपदेषु पूर्वपदम् आद्युदात्तं भवति। दाक्षिघोषः। दाक्षिकटः। दाक्षिपल्वलः। दाक्षिह्रदः। दाक्षिबदरी। दाक्षिपिङ्गलः। दाक्षिपिशङ्गः। दाक्षिशालः। दाक्षिरक्षा। दाक्षिशिल्पी। दाक्ष्यश्वत्थः। कुन्दतृणम्। दाक्षिशाल्मली। आश्रममुनिः। शाल्मलिमुनिः। दाक्षिप्रेक्षा। दाक्षिकूटः। यान्यत्र निवासनाम् अधेयानि तेषु निवसद्वाचीनि अपि पूर्वपदानि आद्युदात्तानि भवन्ति। अनिवसन्तः इति न अनुवर्तयन्ति केचित्। अपरे पुनरनुवर्तयन्ति।

न्यासः

घोषादिषु च। , ६।२।८५

समाससवरापवादो योगः। एवमुत्तरेऽपि। "न भूताधिकसञ्जीव" ६।२।९१ इत्यादेः सूत्राद्ये योगास्त समासस्वरापवादा द्रष्टव्याः। "दाक्षीघोषः"इत्येवमादयः षष्ठीसमासाः। "यानयत्र" इत्यादि। कथं पुनरेतललभ्यते, यावताऽनिवसन्त इति प्रकृतम्()? इत्यत आह--"अनिवसन्तः" इति। "अपरे" इत्यादि। तेषां मतेन यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यप्युदात्ता भवन्ति॥

---

सूत्रम्

काशिका-वृत्तिः

छात्र्यादयः शालायाम् ६।२।८६

शालायाम् उत्तरपदे छात्र्यादयः आद्युदात्ता भवन्ति। छात्रिशाला। ऐलिशाला। भाण्दिशाला छात्रि। ऐलि। भाण्दि। व्याडि। आपिशलि। आख्यण्डि। आपारि। गोमि। यदा शालान्तस् तत्पुरुषो नपुंसकलिङ्गो भवति तदा अपि तत्पुरुषे शालायां नपुंसके ६।२।१२२ इत्येतस्मात् पूर्वविप्रतिषेधेन पूर्वपदम् आद्युदात्तं भवति। छात्रिशालम्। ऐलिशालम्।

न्यासः

छात्त्र्यादयः शालायाम्?। , ६।२।८६

"यदा शालान्तः" इत्यादि। "विभाषा सेनासुरा" (२।४।२५) इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम्()? इह च शालाशब्दस्य स्त्रीलिङ्गस्य ग्रहणम्()। तत्र यथा समासो नपुंसकलिङ्गो न भवति तथा "तत्पुरुषे शालायां नपुंसके" ६।२।१२२ इत्यनेन परत्वादुत्तरपदाद्युदात्तत्वेन भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्()। अतस्तन्निरासाय "यदा शालान्तः" इत्यादेग्र्रन्थस्योपन्यासः। यो नपुंसकलिङ्गः शालान्ततत्पुरुषो न भवति सोऽस्यावकाशः--छात्त्रिशाला, ऐलिशालेति। यस्तु नपुंसकलिङ्गो न छात्त्रादिपूर्वपदस्तत्पुरुषः स "शालायां नपुंसके" ६।२।१२२ इत्यस्यावकाशः--ब्राआह्मणशालम्(), क्षत्त्रियशालमिति; इहोभयं प्राप्नोति--छात्त्रिशालमिति, पूर्वविप्रतिषेधेनायमेव स्वरो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

प्रस्थे ऽवृद्धम् अकर्क्यादीनाम् ६।२।८७

प्रस्थशब्दे उत्तरपदे कर्क्यादिवर्जितम् अवृद्धं पूर्वपदम् आद्युदात्तं भवति। इन्द्रप्रस्थः। कुण्डप्रस्थः। ह्रदप्रस्थः। सुवर्णप्रस्थः। अवृद्धम् इति किम्? दाक्षिप्रस्थः। माहकिप्रस्थः। अकर्क्यादीनाम् इति किम्? कर्कीप्रस्थः। मघीप्रस्थः। कर्की। मघी। मकरी। कर्कन्धू। शमी। करीर। कटुक। कुरल। बदर। कर्क्यादिः।

न्यासः

प्रस्थेऽवृद्धमकर्क्यादीनाम्?। , ६।२।८७

प्रस्थशब्दो यदि व्युत्पाद्यते "घञर्थे कविधानं स्थास्नपाव्यधिहनियुध्यर्थम्()" (वा।३०६) इति, तदा थाथादिस्वरे ६।२।१४३ प्राप्ते। अथ न व्युत्पाद्यते, तदा समासान्तोदात्तत्वे। "इन्द्रप्रस्थः" इत्यादयः षष्ठीसमासाः॥

---

सूत्रम्

काशिका-वृत्तिः

मालादीनां च ६।२।८८

प्रस्थे इति वर्तते। प्रस्थे उत्तरपदे मालादीनम् आदिरुदात्तो भवति। मालाप्रस्थः। शालाप्रस्थः। माला। शाला। शोणा। द्राक्षा। क्षौमा। क्षामा। काञ्ची। एक। काम। मालदिः। वृद्धार्थ आरम्भः। एकाशोणाशब्दयोः एङ् प्राचां देशे १।१।७४ इति वृद्धसञ्ज्ञा।

न्यासः

मालादीनां च। , ६।२।८८

---

सूत्रम्

काशिका-वृत्तिः

अमहन्नवं नगरे ऽनुदीचाम् ६।२।८९

नगरशब्दे उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदम् आद्युदात्तं भवति, तच् चेदुदीचां न भवति। सुह्मनगरम्। पुण्ड्रनगरम्। अमहन्नवम् इति किम्? महानगरम्। नवनगरम्। अनुदीचाम् इति किम्? नदीनगरम्। कान्तीनगरम्।

न्यासः

अमहन्नवं नगरेऽनुदीचाम्?। , ६।२।८९

"सुह्नगरम्()" इत्यादयोऽपि षष्ठीसमासा एव। किमर्थं प्राचामित्येवं नोच्यते, [नोच्येत--मुद्रितः पाठः] लघु हि प्राचामिति वचनमनुदीचामिति वचनात्()? नैवं शक्यम्(); मध्यदेशनगरे विराटनगरमित्यत्र न स्यात्()। पूर्वपदाद्युदात्तत्वे प्राप्ते प्रतिषेधोऽमुच्यते, न समास एव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

अर्मे च अवर्णम् द्व्यच् त्र्यच् ६।२।९०

अर्मशब्दे उत्तरपदे द्व्यच् त्र्यच् पूर्वपदम् अवर्णान्तम् आद्युदात्तं भवति। दत्तार्मम्। गुप्तार्मम्। कुक्कुटार्मम्। वायसार्मम्। अवर्णम् इति किम्? वृहदर्मम्। द्व्यच् त्र्यचिति किम्? कपिञ्जलार्मम्। अमहन्नवम् इत्येव, महार्मम्। नवार्मम्।

न्यासः

अर्मे चावर्णं द्व्यच्त्र्यच्?। , ६।२।९०

---

सूत्रम्

काशिका-वृत्तिः

न भूताधिकसञ्जीवमद्राश्मकज्जलम् ६।२।९१

भूत अधिक सञ्जीव मद्र अश्मन् कज्जल इत्येतानि पूर्वपदानि अर्मशब्दे उत्तरपदे नाद्युदात्तानि भवन्ति। भूतार्मम्। अधिकार्मम्। सञ्जीवार्मम्। मद्राश्मग्रहणं सङ्घातविगृहीतार्थम्। मद्रार्मम्। अश्मार्मम्। मद्राश्मार्मम्। कज्जलार्मम्। समासान्तोदात्तत्वम् एव अत्र भवति। आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम्। दिवोदासं वध्र्यश्वाय दाशुषे।

न्यासः

न भूताधिकसञ्जीवमद्राश्मकज्जलम्?। , ६।२।९१

"मद्राश्मग्रहणम्()" इत्यादि। उभयत्रापि द्व्यच्? त्र्यजिति च प्राप्तिरस्ति। तस्मात्? सङ्घातार्थं विगृहीतार्थञ्च वचनम्()। कथं पुनः संघातविगृहीतार्थत्वं लभ्यते? एकाशेषं कृत्वा मद्राश्म इति निर्देशात्()। मद्राश्मा च मद्राश्मानौ चेत्येकशेषः। एकशेषे सति मद्रशब्दस्य केवलस्य, मद्रशब्दस्य च सङ्घातस्य प्रतिषेध उपपद्यते। आद्युदात्तस्य प्रकरणमित्याद्युदात्तप्रकरणम्(), प्रकान्तम्()। तत्र दिवोदासा दीनां छन्दस्याद्युदात्तो भवतीत्येत दर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानां तु--"युक्ते च" (६।२।६६) इत्येवमादौ येऽस्मिन्? प्रकरणे चकाराः, तेषामन्यतमस्यानुक्तसमुच्चयार्थतामाश्रित्य कत्र्तव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तः ६।२।९२

अन्तः इत्यधिकृतम्। इत उत्तरं यद् वक्ष्यामस् तत्र पूर्वपदस्य अन्तः उदात्तो भवति इत्येवं वेदितव्यम्।

न्यासः

अन्तः। , ६।२।९२

---

सूत्रम्

काशिका-वृत्तिः

व्क्ष्यति सर्वं गुणकात्स्न्र्ये ६।२।९३

सर्वश्वेतः। सर्वकृष्णः। प्राकुत्तरपदादिः ६।२।११० इत्येतस्मादयम् अधिकारो वेदितव्यः। सर्वं गुणकात्स्न्र्ये ६।२।९३। सर्वशब्दः पूर्वपदम् गुणकात्स्न्र्ये वर्तमानम् अन्तोदात्तं भवति। सर्वश्वेतः। सर्वकृष्णः। सर्वमहान्। सर्वम् इति किम्। परमश्वेतः। आश्रयव्याप्त्या परमत्वं श्वेतत्वस्य इति गुणकात्स्न्र्ये वर्तते। गुणग्रहणं किम्? सर्वसौवर्णः। सर्वराजतः। कात्स्न्र्ये इति किम्? सर्वेषां श्वेततत्रः सर्वश्वेतः। गुणात्तरेण समासस्तरलोपश्च वक्तव्यः इत्येवम् अत्र समासस्तरलोपश्च।

न्यासः

संर्व गुणकात्स्न्र्ये। , ६।२।९३

"गुणकात्स्न्र्ये" इति। गुणकात्स्न्र्यं गुणस्य सर्वत्राभावः। "सर्व()ओतः" इति। "पूर्वकालैक" २।१।४८ इत्यादिना समानाधिकरणसमासः। अत्र समुदायगुणस्य सर्वत्र भावः। न तु तदवयवे तत्र सर्वशब्दो वर्तत इति गुणकात्स्न्र्यस्य वृत्तिर्भवति। "परम()ओतः" इति। कथं पुनरत्र गुणकात्स्न्र्ये परमशब्दो वर्तते, यावतासौ प्रकर्षवाची, अन्यश्च प्रकर्षः, अन्यच्च गुणकात्स्न्र्यम्()? इत्यत आह--"आश्रयव्याप्त्या" इत्यादि। इतिकरणो हेतौ। यस्मादाश्रयव्याप्त्या परमत्वमुत्कर्षे भवति, नान्यथा। एवं हि तस्योत्कर्ष उपपद्यते यदि सर्वमाश्रयं व्याप्नोति। तस्माद्गुणकात्स्न्र्यं इह परमशब्दो वर्तते। "सर्वसौवर्णः, सर्वराजतः" इति। सुवर्णस्य विकारः सौवर्णः, रजतस्य विकारो राजतः--नात्र गुणकात्स्न्र्यम्(), किं तर्हि? जातियुक्तस्य विकारवषयं कात्स्न्र्यम्()। सर्वं हि विकारद्रव्यं प्रकृतिभावेन व्याप्नोतीति द्रव्यकात्स्न्र्यमिह, तत्र च सर्वशब्दो वर्तते। "सर्वेषां ()ओततरः सर्व()ओतः" इति। अत्र गुणकात्स्न्र्ये। कथं पुनरत्र समासः, यावता "पूरणगणसुहित" (२।२।११) इत्यादिना गुणवचनेन षष्ठीसमासः प्रतिषिद्धः? अथापि कथञ्चित्? समासः स्यात्(), एवमपि ()ओततरशब्देन समासे कृते सर्व()ओततरमिति वक्तव्यम्()? इत्यत आह--"गुणात्? तरेण समासः" इत्यादि। औपसंख्यानिकाविह समासतरलोपाविति दर्शयति। समासस्वरापवादो योगः। एवमुत्तरेऽपि योगाः। "न हास्तिनफलकमार्देयाः" (६।२।१०१) इत्यतः प्राक्? समासस्वरापवादो वेदितव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां गिरिनिकाययोः ६।२।९४

संज्ञायां विषये गिरि निकाय इत्येतयोः उत्तरपदयोः पूर्वपदम् अन्तोदात्तं भवति। अञ्जनागिरिः। भञ्जनागिरिः। निकाये शापिण्दिनिकायः। मौण्डिनिकायः। चिखिल्लिनिकायः। संज्ञायाम् इति किम्? परमगिरिः। ब्राह्मणनिकायः।

न्यासः

संज्ञायां गिरिनिकाययोः। , ६।२।९४

"अञ्जनागिरिः" इत्येवमादयः षष्ठीसमासाः। अञ्जनभञ्जनशब्दयोः "वनगिर्योः संज्ञायाम्()" ६।३।११६ इति दीर्घत्वम्()। "शापिण्डिमौण्डिशब्दौ" इञन्तौ। "चिखिल्लिशब्दः" मत्वर्थीयेनिप्रत्ययान्तः॥

---

सूत्रम्

काशिका-वृत्तिः

कुमार्याम् वयसि ६।२।९५

कुमार्याम् उत्तरपदे वयसि गम्यमाने पूर्वपदम् अन्तोदात्तं भवति। वृद्धकुमारी। जरत्कुमारी। कुमारीशब्दः पुंसा सहासंप्रयोगमात्रं प्रवृत्तिनिमित्तम् उपादाय प्रयुक्तो वृद्धादिभिर् वयो विशेषवचनैः समानाधिकरणो भवति। तच् च वयः इह गृह्यते, न कुमारत्वम् एव। वयसि इति किम्? परमकुमारी।

न्यासः

कुमार्यां वयसि। , ६।२।९५

"वृद्धकुमारी" इति। "विशेषणं विशेष्येण" २।१।५६ इति समासः। "जरत्कुमारी" इति। जरती चासौ कुमारी चेति

"पूर्वकाल" २।१।४८ इत्यादिना समासः। उभयत्र "पुंवत्? कर्मधारय" ६।३।४१ इत्यादिना पुंवद्भावः। ननु च कुमारीशब्दः प्रथमे वयसि वर्तते, तथा हि "वयसि प्रथमे" ४।१।२० इति ङीबत्र विहितः, वृद्धाजरतीशब्दौ चरमे वयसि वर्तते, तत्कथमिह सामानाधिकरण्यम्()? इत्यत आह--"कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तः" इति। असम्प्रयोगः=असम्बन्धः। तन्मात्रप्रवृत्तिनिवृत्तिसमुदायावयवः सामान्ये प्रवृत्तः। कुमारीशब्दो यथा वृद्धादिभिः वयोविशेषवचनैर्विशेष्यते तदा तैः समानाधिकरणो भवति। वयोविशेषोऽन्त्यं वयः। कथं पुनर्विशेषवचनं सामान्ये वर्तते? वयोग्रहणसामर्थ्यात्()। यदि वृद्धकुमारीशब्दः प्रथमे वयसि वर्तते वयोग्रहणमनर्थकं स्यात्()। यतर कुमारीशब्दः प्रयुज्यते प्रथमवयोवाची, तत्र नियोगतो वयो गम्यत एवेति किं वयोग्रहणेन! तस्माद्वयोग्रहणसामर्थ्यात्? यथोक्तेन प्रकारेण वयःसामान्ये प्रवर्तते। वयोग्रहणेन हि तस्माद्विशेषादपनीयासौ सामान्यवृत्तिराश्रीयते। "तच्च वय इह गृह्रते" इति। यत्र वत्र्तमानो विशेषवचनैः सह समानाधिकरणो भवति, तच्च वयो गृह्रते। चशब्दादन्यच्च यौवनादीनकुमारत्वमेवेति, न प्रथमवय इत्यर्थः। "परमकुमारी" इति। अत्र समासात्? पूज्यमानता; पूज्यमानत्वं तु दर्शनीयत्वात्()। दर्शनीया कन्येत्यर्थः। न ह्रत्र समासो वयोऽभिधानपरः। नापयुत्तरपदं वयःसामान्ये वर्तते॥

---

सूत्रम्

काशिका-वृत्तिः

उदके ऽकेवले ६।२।९६

अकेवलं मिश्रम्। तद्वाचिनि समासे उदकशब्दे उत्तरपदे पूर्वपदम् अन्तोदात्तं भवति। गुडमिश्रम् उदकम् गुडोदकम्, गुडोदकम्। तिलोदकम्, तिलोदकम्। स्वरे कृते एकादेशः स्वरितो वानुदात्ते पदादौ ८।२।६ इति पक्षे स्वरितो भवति। अकेवले इति किम्? शीतोदकम्। उष्णोदकम्।

न्यासः

उदकेऽकेवले। , ६।२।९६

"मिश्रम्()" इति। द्रव्यान्तरसम्पृक्तमित्यर्थः। "गुडमिश्रम्()" इति। शाकपार्थिवादित्वा(वा।८३)दुत्तरपदलोपिसमासः। "शीतोदकम्()" इति। विशेषणसमासः। पूर्वपदमत्र गुणोपसर्जनमुदकं ब्राऊते। उत्तरपदमपि जात्युपसर्जनम्()। तथैव तेनैकमेव वस्तु जातिगुणाब्यामुच्यत इति केवलोदकवाचिसमासः॥

---

सूत्रम्

काशिका-वृत्तिः

द्विगौ क्रतौ ६।२।९७

द्विगौ उत्तरपदे क्रतुवाचिनि समासे पूर्वपदम् अन्तोदात्तं भवति। गर्गत्रिरात्रः। चरकत्रिरात्रः। कुसुरविन्दसप्तरात्रः। गर्गाणां त्रिरात्रः गर्गत्रिरात्रः। द्विगौ इति किम्? अतिरात्रः। अचश्चित्वा दन्तोदात्तः। क्रतौ इति किम्? बिल्वसप्तरात्रः। बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रः बिल्वसप्तरात्रः।

न्यासः

द्विगौ क्रतौ। , ६।२।९७

"गर्गत्रिरात्रादयः" षष्ठीसमासाः। तिसृणां रात्रीणां समाहारस्त्रिरत्रः। "अहःसर्वेकदेश (५।४।८७) इत्यादिनाच्? समासान्तः। "अतिरात्रः" इति। रात्रिमतिक्रान्त इति प्रादिसमासः॥

---

सूत्रम्

काशिका-वृत्तिः

सभायां नपुंसके ६।२।९८

सभाशब्दे उत्तरपदे नपुंसकलिङ्गे समासे पूर्वपदम् अन्तोदात्तं भवति। गोपालसभम्। पशुपालसभम्। स्त्रीसभम्। दासीसभम्। सभायाम् इति किम्? ब्राह्मणसेनम्। नपुंसकम् इति किम्? राजसभा। ब्राह्मणसभा। सभायां प्रतिपदोक्तं नपुंसकलिङ्गं गृह्यते इति समणीयसभम्, ब्राह्मणकुलम् इत्यत्र न भवति।

न्यासः

सभायां नपुंसके। , ६।२।९८

"गोपालसभम्()" इत्येवमादयोऽपि षष्ठीसमासाः, "सभाराजाऽमनुष्यपूर्वा" २।४।२३ इति नपुंसकत्वम्()। "राजसभा, ब्राआह्णसभा" इत्यत्र "अमनुष्यपूर्वा" इति प्रतिषेधान्नपुंसकता न भवति। अथेह कस्मान्न भवति--रमणीया सभाऽस्य ब्राआह्णकुलस्य रमणीयसभम्()? इत्यत आह--"प्रतिपदोक्तम्()" इत्यादि। लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) यत्? प्रतिपदोक्तं नपुंसकं तदिह गृह्रते। न चेह तथाविधं नपुंसकत्वम्()। अत्र तु "अभिधेयवल्लिङ्गवचनानि भवन्ति" (व्या।प।७३) इति ब्राआह्णकुलस्याभिधेयसय नपुंसकत्वात्()। न तत्? प्रतिपदोक्तम्()॥

---

सूत्रम्

काशिका-वृत्तिः

पुरे प्राचाम् ६।२।९९

पुरशब्दे उत्तरपदे प्राचाम् देशे पूर्वपदम् अन्तोदात्तं भवति। ललाटपुरम्। काञ्चीपुरम्। शिवदत्तपुरम्। कार्णिपुरम्। नार्मपुरम्। प्राचाम् इति किम्? शिवपुरम्।

न्यासः

पुरे प्राचाम्?। , ६।२।९९

"ललाटपुरम्()" इत्येवमादयः षष्टीसमासाः॥

---

सूत्रम्

काशिका-वृत्तिः

अरिष्टगौडपूर्वे च ६।२।१००

अरिष्त गौड इत्येवं पूर्वे समासे पुरशब्दे उत्तरपदे पूर्वपदम् अन्तोदात्तं भवति। अरिष्टपुरम्। गौडपुरम्। पूर्वग्रहणं किम्? इह अपि यथा स्यात्। अरिष्टश्रितपुरम्। गौडभृत्यपुरम्।

न्यासः

अरिष्टगौडपूर्वे च। , ६।२।१००

"अरिष्टपुरम्? गौडपुरम्()" इति। एतावपि षष्ठीसमासावेव। "पूर्वग्रहणं किम्()" इति। एवं मन्यते--अरिष्टगौडयोरिति वक्तव्यम्(), एवमप्युच्यमानेऽरिष्टगोडयोः पुरशब्द उत्तरपदेऽन्तोदात्ततवं सिध्यत्येवेति। "इहापि यथा स्यात्()" इति। यदि पूर्वग्रहणं न क्रियेत्? तदारिष्टं श्रितस्तस्य पुरमरिष्टश्रितपुरमिति। गौडानां भृत्या गौडशब्दौ। पूर्वग्रहणे तु सति

बहुव्रीहिर्लभ्यते--अरिष्टगौडौ पूर्वौ यस्मिन्? समासे सोऽरिष्टगौडपूर्व इति। तेनारिष्टश्रितपुरम्(), गौडभृत्यपुरमित्यत्रापि यदुत्तरपदं तस्याप्यन्तोदात्तत्वं भवत्येव। अत्रापि ह्यरिष्टशब्दो गौडशब्दश्च पूर्वः। पूर्वश्चायमवयववचनः॥

---

सूत्रम्

काशिका-वृत्तिः

न हास्तिनफलकमार्देयाः ६।२।१०१

हास्तिन फलक मार्देय इत्येतानि पूर्वपदानि पुरशब्दे उत्तरपदे न अन्तोदात्तानि भवन्ति। पुरे प्राचाम् ६।२।९९ इति प्राप्तिः प्रतिषिध्यते। हास्तिनपुरम्। फलकपुरम्। मार्देयपुरम्। मृदोरपत्यं मार्देयः। शुभ्रादित्वात् ढक् ४।१।१२३।

न्यासः

न हास्तिनफलकमार्देयाः। , ६।२।१०१

---

सूत्रम्

काशिका-वृत्तिः

कुसूलकूपकुम्भशालं बिले ६।२।१०२

कुसूल कूप कुम्भ शाला इत्येतानि पूर्वपदानि बिलशब्दे उत्तरपदे अन्तोदात्तानि भवन्ति। कुसूलबिलम्। कूपबिलम्। कुम्भबिलम् शालाबिलम्। कुसूलादिग्रहणं किम्? सर्पबिलम्। बिले इति किम्? कुसूलस्वामी।

न्यासः

कुसूलकूपकुम्भशालं बिले। , ६।२।१०२

"कुसूलबिलम्()" इत्येवमादयः षष्ठीसमासाः। समासस्वरापवादो योगः। एवमुत्तरेऽपि "बहुव्रीहौ वि()आं संज्ञायाम्()" ६।२।१०६ इत्यतः प्राग्योगाः समासस्वरापवादाः वेदितव्याः॥

---

सूत्रम्

काशिका-वृत्तिः

दिक्शब्दा ग्रामजनपदाऽख्यानचानराटेषु ६।२।१०३

दिक्शब्दाः पूर्वपदानि अन्तोदात्तनि भवन्ति ग्रामजनपदाख्यानवाचिषु उत्तरपदेषु, चानराटशब्दे च। पूर्वेषुकामशमी, पूर्वेषुकामशमी। अपरेषुकामशमी, अपरेषुकामशमी। पूर्वकृष्णमृत्तिका। अपरकृष्णमृत्तिका। जनपद पूर्वपञ्चालाः। अपरपञ्चालाः। आख्यान पूर्वाधिरामम्, पूर्वाधिरामम्। पूर्वयायातम्। अपरयायातम्। अधिरामम् अधिकृत्य कृतो ग्रन्थः आधिरामम्। तथा यायातम्। चानराट पूर्वचानराटम्। अपरचानराटम्। शब्दग्रहणं कालवाचिनो ऽपि दिक्शब्दस्य परिग्रहार्थम्।

न्यासः

दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु। , ६।२।१०३

"पूर्वेषुकामशमी" इति। "दिक्संख्ये संज्ञायाम्()" २।१।४९ इति समासः। एवं "अपरेषुकामशमी" इत्यत्रापि। "पूर्वकृष्णमृत्तिका" इति। पूर्वा चासौ कृष्ममृत्तिका चेति "पूर्वापर" २।१।५७ इत्यादिना समासः। एवं "अपरकृष्णमृत्तिका" इत्येवमादावपि। अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम्()। "अधिकृत्य कृते ग्रन्थे" ४।३।८७ इत्यण्()। अथ

यता--चानराटे रूपग्रहणं तथा ग्रामादिष्वपि कस्मान्न भवति? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्देशस्य स्वरूपग्रहणं भवतीत्युक्तम्()। इह चानराट एव शब्दप्रधानो निर्देश, ग्रामादिष्वर्थप्रधान एव। अथ शब्दग्रहणं किमर्थम्(), न दिगित्येवोच्यते? इत्यत आह--"शब्दग्रहणम्()" इत्यादि। असति हि शब्दग्रहणे पूर्वाधिरामम्(), पूर्वयायातमित्यत्र न स्यात्()। कस्मात्()िहि कालवाची पूर्वशब्दः। दिग्वाचिशब्दग्रहणे सति दिक्शब्दमात्रग्रहणं भवति। तस्मात्? कालवाचिनोऽपि दिक्शब्दस्य परिग्रहो यथा स्यादित्येवमर्थं शब्दग्रहणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

आचार्यौपसर्जनश् च अन्तेवासिनि ६।२।१०४

आचार्योपसर्जनान्तेवासिवाचिनि उत्तरपदे दिक्शब्दा अन्तोदात्ताः भवन्ति। पुर्वपाणिनीयाः। अपरपाणिनीयाः। पूर्वकाशकृत्स्नाः। अपरकाशकृत्स्नाः। आचार्योपसर्जनः इति किम्? पूर्वशिष्याः। अन्तेवासिनि इति किम्? पूर्वपाणिनीयं शास्त्रम्।

न्यासः

आचार्योपसरजनश्चान्तेवासिनि। , ६।२।१०४

"आचार्योपसर्जनश्च" इति। सुपां सुर्भवतीति सप्तम्येकवचनस्य स्थाने प्रथमैकवचनम्(), एतच्चान्तेवासिविशेषणम्()। "आचार्योपसर्जनान्तेवाचिन्युत्तरपदे" इति। आचार्य उपसर्जनम्()प्रधानं यस्य अन्तेवासिनः स तथोक्तः। आचार्योपसर्जनश्चान्तेवासी चाचार्योपसर्जनान्तेवासी, तं वक्तुं शीलं यसयोत्तरपदस्य तदाचार्योपसर्जनान्तेवासिवाचि। "पूर्वपाणिनीयाः" इति। "पूर्वापर" २।१।५७ इत्यादिना समासः पाणिनेराचार्यस्यान्तेवासिनः पाणिनीयाः, अत्रान्तेवासिनः प्राधान्येनोच्यन्ते प्रत्ययान्तेन; आचार्यस्तु तद्विशेषणत्वादुपसर्जनभावेनेत्याचर्योपसर्जनान्तेवासिवाच्युत्तरपदं भवति। "पूर्वकाशकृत्स्नाः" इति। काशकृत्स्नस्येमे काशकृत्स्नाः, औत्सर्गिकोऽण्()। "पूर्वपाणिनीयं शास्त्रम्()" इति। पाणिना प्रोक्तं पाणिनीयम्(), अत्राचार्योपसर्जनशास्त्रवाच्युत्तरपदम्(), न त्वाचार्योपसर्जनान्तेवासिवाचि॥

---

सूत्रम्

काशिका-वृत्तिः

उत्तरपदवृद्धौ सर्वं च ६।२।१०५

उत्तरपदस्य ७।३।१० इत्यधिकृत्य या विहिता वृद्धिः, तद्वत्युत्तरपदे सर्वशब्दो दिक्शब्दाश्च अन्तोदात्ता भवन्ति। सर्वपञ्चालकः। पूर्वपञ्चालकः। उत्तरपाञ्चालकः। सुसर्वार्धदिक्शब्देभ्यो जनपदस्य इति तदन्तविधिना जनपदलक्षणो वुञ् प्रत्ययः। सुसर्वार्धाज्जनपदस्य ७।३।१२ दिशो ऽमद्राणाम् ७।३।१३ इति च उत्तरपदवृद्धिः। अधिकारलक्षणादिह न भवति, सर्वमासः, सर्वकारकः इति।

न्यासः

उत्तरपदवृद्धौ सर्वं च। , ६।२।१०५

"उत्तरपदवृद्धौ" इति। उत्तरपदाधिकारविहिता वृद्धिरुत्तरपदवृद्धिः, इह तु तद्वदुत्तरपदं गृह्यते। तमेवार्थं दर्शयितुमाह--"उत्तरपदस्योत्येवम्()" इत्यादि। कथं पुनरुत्तरपदवृदधावित्युच्यमान एषोऽर्थः शक्यते विज्ञातुम्()? तदुच्यते; उत्तरपदं स्वर्यते, स्वरितेनाधिकारो लक्ष्यते, तेनोत्तरपदस्येत्यधिकृत्य या विहिता वृद्धिस्तास्यास्तावद्ग्रहणं

विज्ञायते। पूर्वपदस्येदमन्तोदात्तत्वं विधीयते। पूर्वपदं च सम्बन्धिशब्दत्वादुत्तरपदमुपस्थापयति। न च वृद्धिमात्र उत्तरपदमुपपद्यत इति सामर्थ्याद्वृद्धिशब्दसाहचर्यादुत्तरपदं वृद्धिमुपलक्षयति। तेनोत्तरपदाधिकारे वृद्धिमत्युत्तरपद एष स्वरो भवतीति विज्ञायते। "सर्वपाञ्चालकः" इति। "पूर्वकालैक" २।१।४८ इत्यादिना समासः। "पूर्वपाञ्चालकः" इत्यादौ "पूर्वापर" २।१।५७ इत्यादिना। "जनपदलक्षणो वृञ्प्रत्ययः" इति। "धन्वयोपधाद्वुञ्()" ४।२।१२० इत्यनुवर्त्तमाने "जनपदतदवध्योश्च" ४।२।१२३ इत्यतो जनपदग्रहणे च "अवृद्धादपि बहुवचनविषयात्()" ४।२।१२४ इत्यनेन वञ्()। "सुसर्वाद्र्धात्()" इत्यादि। "सर्वपाञ्चालकः" इति। "सुसर्वर्धाज्जनपदस्य" ७।३।१२ इत्युत्तरपदवृद्धिः। "पूर्वपाञ्चालकः" इत्यादौ तु "दिशोऽमद्राणाम्()" ७।३।१३ इति। एषा चोत्तरपदाधिकारविहिता, तत्र चोत्तरपदस्येत्यनुवृत्तेः। किं पुनः कारणमुत्तरपदाधिकार उत्तरपदग्रहणेन लक्ष्यत इत्येवं विज्ञायते? इत्याह--"अधिकार लक्षणात्()" इत्यादि। यद्युत्तरपदग्रहणेनोत्तरपदाधिकारो लक्ष्येत, तदा वृद्धिमात्रवत्युत्तरपदे वैतद्वुञो ह्र वात्तत्वं भवतीत्युक्तं स्यात्()। तथा च सर्वभासः, सर्वकारक इत्यत्रापि स्यात्()। अधिकारलक्षणे तु न भवति, न ह्रुदात्तत्वं भवतीत्युक्तं स्यात्()। तथा च सर्वभासः, सर्वकारक इत्यत्रापि स्यात्()। अधिकारलक्षणे तु न भवति, न ह्रुत्तरपदाधिकारविहिता वृद्धिः। "भासृ दीप्तौ" (धा।पा।६२४) भासत इति भासः, पचाद्यच्()। करोतीति कारकः, ण्वुल्(), "अचो ञ्णिति" ७।२।११५ इति वृद्धिः, सा चोत्तरपदाधिकारविहिता न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

बहुव्रीहौ विश्वं संज्ञायां ६।२।१०६

बहुव्रीहौ समासे विश्वशब्दः पूर्वपदं संज्ञायां विषये ऽन्तोदात्तं भवति। विश्वदेवः। विश्वयशाः। विश्वमहान्। पूर्वपदप्रकृतिस्वरत्वेन आद्युदात्तत्वं प्राप्तम्। बहुव्रीहौ इति किम्? विश्वे च ते देवाः विश्वदेवाः। संज्ञायाम् इति किम्? विश्वे देवा अस्य विश्वदेवः। विश्वामित्रः, विश्वाजिनः इत्यत्र संज्ञायां मित्राजिनयोः ६।२।१६४ इत्येतद् भवति परत्वात्। बहुव्रीहौ इत्येतदधिक्रियते प्रागव्ययीभावसंज्ञानात्।

न्यासः

बहुव्रीहौ वि�आं संज्ञायाम्?। , ६।२।१०६

"पूर्वपदकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तम्()" इति। "बहुव्रीहौ प्रकृत्या" ६।२।१। इत्यादिना वि()ओ च ते देवा वि()आवेवा इति विशेषणसमासः, तत्पुरुषोऽयम्()। अत्र समासान्तोदात्तत्वमेव भवति। "वि()आदेवः" इति। अत्र पूर्वपदप्रकृतिस्परत्वेनाद्यदात्तत्वमेव भवति। वि()आशब्दसय क्वन्प्रतयन्तस्य नित्स्वरेणाद्युदात्तत्वम्()। "वि()आआमित्रः" इति। "बहुवरीहौ वि()आं संज्ञायाम्()" ६।२।१०६ इति पूर्वपदान्तोदात्तस्यावकाशः--वि()आदेवः, वि()आयशा इति। "संज्ञायां मित्त्राजिनयोः" ६।२।१६४ इत्युत्तरपदान्तोदात्तत्वस्यावकाशः--कुलमित्त्रम्(), कुलाजिनमिति; वि()आआमित्त्रः, वि()आआजिन इत्यत्रोभयं प्राप्नोति, "संज्ञायां मित्राजिनयो" ६।२।१६४ इत्येतत्तु भवति विप्रतिषेधेन॥

---

सूत्रम्

काशिका-वृत्तिः

उदराश्वेषुषु ६।२।१०७

उदर अश्व इषु इत्येतेषु उत्तरपदेसु बहुव्रीहौ समासे संज्ञायांविषये पूर्वपदम् अन्तोदात्तं भवति। वृकोदरः। दामोदरः। हर्यश्वः।

यौवनाश्वः। सुवर्णपुङ्खेषुः। महेषुः।

काशिका-वृत्तिः

क्षेपे ६।२।१०८

क्षेपे गम्यमाने उदरादिषु उत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदम् अन्तोदात्तं भवति। कुण्दोदरः। घटोदरः। कटुकाश्वः। स्पन्दिताश्वः। अनिघातेषुः। चलाचलेषुः। अनुदरः, सूदरः इत्यत्र नञ्सुभ्याम् ६।२।१७१ इत्येतद् भवति विप्रतिषेधेन।

न्यासः

उदरा�ओषुषु। , ६।२।१०७

वृकस्येवोदरमस्य "वृकोदरः"। दाम उदरे यस्येति "दामोदरः"। हरिर()आओ यस्येति "हर्य()आः"। यौवनमेव अ()आओ यस्य स "यौवना()आः"। शोभनो वर्णो येषां ते सुवर्णाः पुङ्खां येषामिषूणां ते सुवर्णपुङ्खाः, सुवर्णपुङ्खा इषवो यस्य सः "सुवर्णपुङ्खेषुः। महान्त इषवो यस्य स "महेषुः"। "आन्महतः" ६।३।४५ इत्यात्त्वम्()। अत्र पूर्वपदानाम्? "बहुव्रीहौ प्रकृत्या" ६।२।१ इति प्रकृतिभावः। यतर स्वरे प्राप्तेऽयं विधिरारब्धः स आख्यायते। "कृदाधारार्चिकलिभ्यः कः" (पं।उ।३।४०) इत्यतः "कः" इत्यानुवर्तमाने "अजिवृरीभ्यो निच्च" (पं।उ।३।३८) इत्यतो निद्ग्रहणे "सृवृभूशुषिमुषिभ्यः कक्()" (पं।उ।३।४१) इति ककपरत्ययान्तो वृकशब्दो व्युत्पाद्यते, तेनायमाद्युदात्तः। एवं दामन्शब्दोऽपि; मनिन्प्रत्ययान्तत्वात्()। ह्रञित्येतस्मात्? "सर्वधातुभ्य इन्()" (पंउ।४।११७) इति हरिशब्द आद्युदात्तः॥

न्यासः

क्षेपे। , ६।२।१०७

"कुण्डोदरः" इति। "शकिशम्योर्नित्()" (पं।उ।१।१११) इति वर्तमाने "क्वादिभ्य कित्? (पं।उ।१।११४) इत्यतः किद्ग्रहणे च "कुडि दाहे" (धा।पा।२७०) इत्येतस्मात्? "अमन्ताड्डः" (पं।उ।११३) इति डप्रत्यये कुण्डमाद्युदत्तम्()। "घटोदरः" इति। घटशब्दोऽयम्? "घट चेष्टायाम्()" (धा।पा।७६३) इत्यस्य पचाद्यचि व्युत्पादितत्वादन्तोदात्तः। तस्मात्? पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति त्वस्यान्यार्थ आरम्भेऽपवादत्वात्? पचाद्यजन्तादनेनैवान्तोदात्तत्वं युक्तमिति मन्यमानो वृत्तिकार एतदप्युदाहरति। "कटुका()आः" इति। कटुकोऽस्वो यस्य स कटुका()आः। कटुशब्दात्? "संज्ञायां कन्()" (५।३।८७) इति कन्? ते न कटुकशब्द आद्युदात्तः। स्पान्दितोऽ()आओऽस्य "स्पन्दिता()आः"। "स्पदि किञ्चिच्चलने" (धा।पा।१४) इत्यस्मात्? क्तः। तेन स्यन्दितशब्दः प्रत्ययस्वरेणान्तोदात्तः। अनिघात इषुरस्येति "अनिघातेषुः"। निहन्यतेऽनेनेति निघातः, "हलश्च" ३।३।१२१ इति घञ्(), न निघातोऽनिघातः "तत्पुरेषे तुल्यार्थ" ६।२।२ इत्यादिनाऽव्ययप्रकृतिभावादनिघातशब्द आद्युदात्तः। चलाचल इषुरस्य "चलाचलेषुः"। "चल कम्पने" (धा।पा।८३२) तस्य पचाद्यचि "चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य" (वा।६५८) इति द्विर्वचनम्(), अभ्यासस्यागागमश्च। एतेन चलाचलशब्दोऽन्तोदात्तः। "अनुदरः" इत्यादि। "उदरा()ओषुषु" ६।२।१०७ "क्षेषे" ६।२।१०७ इत्यस्यावकशः--कुण्डीदरः, घटोदर इति, "नञ्सुभ्याम्()" ६।२।१७१ इत्युत्तरपदान्तोदात्तस्यावकाशः--अयवः, सुयव इति; इहोभयं प्राप्नोति--अनुदरः सूदर इति। "नञ्सुभ्याम्()" ६।२।१७१ इत्येतद्भवति विप्रतिषेधेन॥

---

सूत्रम्

काशिका-वृत्तिः

नदी बन्धुनि ६।२।१०९

बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदम् अन्तोदात्तं भवति। गार्गीबन्धुः। वात्सीबन्धुः। नदी इति किम्? ब्रह्मबन्धुः। ब्रह्मशब्द आद्युदात्तः। बन्धुनि इति किम्? गार्गीप्रियः।

न्यासः

नदी बन्धुनि। , ६।२।१०८

"बन्धुनि" इति। शब्दरूपापेक्षया नपुंसकलिङ्गनिर्देशः, अन्यथा बन्धुशब्दस्य पुंल्लिङ्गत्वात्? "बन्धौ" इति निर्देशं कुर्यात्()। "गार्गीबन्धुः, वात्सीबन्धुः" इति। गर्गवत्सशब्दाभ्यां गर्गादित्वात्? (४।१।१०५) यञ्? तदन्तात्? "यञश्च" ४।१।१६ इति ङीप्()। गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ। "ब्राह्मबन्धुः" इति। अत्र प्रकृतिभाव एव भवति पूर्वपदस्य। ब्राह्मशब्दश्चायं "मनिन्()" (द।उ।६।७३) इत्यनुवत्र्तमाने "बृहेर्नोऽच्च" (द।उ।६।७४) इति भनिन्प्रत्ययान्तो व्युत्पाद्यते, तेनाद्युदात्तः। "गार्गीप्रियः" इति। गार्गीशब्दोऽपि प्रकृतिभावेनाद्युदात्त एव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

निष्ठाउपसर्गपूर्वम् अन्यतरस्याम् ६।२।११०

बहुव्रीहौ समासे निष्ठान्तम् उपसर्गपूर्वं पूर्वपदम् अनतरस्याम् अनतोदात्तं भवति। प्रधौतमुखः, प्रधौतमुखः प्रधौतमुखः। प्रक्षालितपादः, प्रक्षालितपादः। यदि मुखशब्दः स्वाङ्गवाची तदा पक्षे मुखं स्वाङ्गम् ६।२।१६६ इत्येतद् भवति, न चेत् पूर्वपदप्रकृतिस्वरत्वेन गतिरनन्तरः ६।२।४९ इत्येतद् भवति। निष्ठा इति किम्? प्रसेचकमुखः। उपसर्गपूर्वम् इति किम्? शुष्कमुखः।

न्यासः

निष्ठोपसर्गपूर्वमन्यतरस्याम्?। , ६।२।१०९

"प्रक्षालितपादः" इति। "क्षल शौचकर्मणि" (धा।पा।१५९७) अस्माण्णयन्तात्? क्तः। पक्षालितशब्दः "गतिरनन्तरः" ६।२।४९ इत्याद्युदात्तः। "प्रधौतमुखम्()" इति। "धावु गतिशुद्ध्योः" (धा।पा।६०१) अस्मात्? क्तः। "च्छ्वोः शूडनुनासिके च" ६।४।१९ इत्यूठ्(), "एत्येधत्यूठ्()सु" ६।१।८६ इति वृद्धिः। "यदि मुखशब्दः" इत्यादि। मुखशब्दोऽयं स्वाङ्गवाच्यपि। तत्र यद्ययमिह स्वाङ्गवाची तदानेन पूर्वपदान्तोदात्तत्वमेव। मुक्ते पक्षे "मुखं स्वाङ्गम्()" ६।२।१६६ इत्युत्तरपदाद्युदात्तत्वं भवति। अत्र निष्ठोपसर्गपूर्वमन्यतरस्यांग्रहणानुवृत्तेर्यदाऽन्तोदान्तत्वं भवति तदा "गतिरनन्तरः" ६।२।४९ इत्येतत्()। तेन स्वाङ्गवाचिनि मुखशब्दे त्रयः स्वरा भवन्ति। अनेन पूर्वपदान्तोदात्तत्वम्(), "मुखं स्वाह्गम्()" ६।२।१६६ इत्यनेनोत्तरपदन्तोदात्तत्वम्(), "गतिरनन्तरः" (६।२।४९) इति प्रकृतिभावात्? पूर्वपदस्याद्युदात्तत्वम्()। "न चेत्()" इत्यादि। यदि मुखशब्दोऽत्र स्वाङ्गावची न भवति तदा "मुखं स्वाङ्गम्()" ६।२।१६६ इत्यस्यायं विषयो न भवतौति "गतिरनन्तरः" ६।२।४९ इति विधिना मुक्ते प्रवर्तते। तेन स्वाङ्गवाचिनि मुखशब्दे द्वौ स्वरौ भवतः--पूर्वपदस्याद्युदात्तत्वम्(), अन्तोदात्तत्वञ्च। "प्रसेचकमुखम्()" [प्रसेचकमुखः--काशिका] इति। अत्र पूर्वपदप्रकृतिस्वर एव भवति। प्रसिच्यत इति प्रसेचकः "कृत्यल्युटो बहुलम्()" ३।३।११३ इति कर्मणि ण्वुल्(), "कुगतिप्रादयः" २।२।१८ इति समासः, "तत्पुरुषे तुल्यार्थे" ६।२।२ इत्यादिनाऽव्ययप्रकृतिभावः। तेन प्रसेचकशब्द आद्युदात्त इति। "शुष्कमुखः" इति। "शुषः कः" ८।२।५१ इति निष्ठायां कादेशः। प्रत्ययस्वरेण शुष्कशब्दोऽन्तोदात्तः। बहुव्रीबौ प्रकृतिभावेन नित्यमेवान्तोदात्तो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

उत्तरपदाऽदिः ६।२।१११

उत्तरपदादिः इत्येतदधिकृतम्। यदित ऊर्ध्वम् अनुक्रमिष्याम उत्तरपदस्य आदिरुदात्तो भवति इत्येवं तद्वेदितव्यम्।

न्यासः

उत्तरपदादिः।, ६।२।११०

---

सूत्रम्

काशिका-वृत्तिः

वक्ष्यति कर्णो वर्णलक्षणात् ६।२।११२

शुक्लकर्णः। कृष्णकर्णः। उत्तरपदस्य इत्येतदपादपरिसमाप्तेः। आदिः इति प्रकृत्या भगालम् ६।२।१२६ इति यावत्। कर्णो वर्णलक्षणात् ६।२।१११। बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदम् आद्युदात्तं भवति। शुक्लकर्णः। कृष्णकर्णः। लक्षणात् दात्राकर्णः। शङ्कूकर्णः। लक्षणस्य इति दीर्घत्वम्। पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं कर्णादिषु चिह्नं यत् क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्णः इत्यत्र न भवति। कर्णः इति किम्? श्वेतपादः। कूटशृङ्गः। वर्णलक्षणातिति किम्? शोभनकर्णः।

न्यासः

कर्णौ वर्णलक्षणात्?।, ६।२।१११

वर्णम्()=शुकलादि, लक्ष्यतेऽनेनेति लक्षणम्()=चिह्नम्(), वर्णञ्च लक्षणञ्च वर्णलक्षणम्। द्वन्द्व एकवद्भावः। अर्थग्रहणं चेह वर्णलक्षणयोः; अर्थप्रधानत्वान्निर्देशस्य। "()ओतकर्णः कृष्णकर्णः" इति। ()ओतकृष्णशब्दावन्तोदात्तौ। तथा हि--"शिता वर्णे" (धा।पा।७४२) इत्यस्मात्? पचाद्यचि ()ओतशब्दो व्युत्पाद्यते। कृष्मशब्दोऽपि "इण्सिञ्चिदीङ्युष्यविभ्यो नक्()" (द।उ।५।३५) [इण्सिन्दीङ्ष्वविभ्यो नक्()--द।उ।] इत्यनुवर्तमाने "कृषेर्वर्णे" (द।उ।५।३७) इति नक्प्रत्यये। "दात्राकर्णः" इति। "धः कर्मणि ष्ट्रन्()" ३।२।१८१ इति वर्तमाने "दाम्नीशस्()" ३।२।१८२ इत्यादिना ष्ट्रन्प्रत्ययः, तेन दात्रशब्द आद्युदात्तः। "शङ्कूकर्णः इति। "कृग्रोरुच्च" (द।उ।१।१०९) [कृग्रोरुच्च--द।उ।] इत्यनुवर्तमाने "खरुशङ्कुपीयुनीलङ्गुलिगु (द।उ।१।१२०) इति कुप्रत्ययान्तः शङ्कुशब्दोऽन्तोदात्तो निपात्यते। "धापृवस्यज्यतिभ्यो नः" (द।उ।५।३९) इत्यधिकृत्य "कृ()वृ()च्छसिद्रूपन्यनिस्वपिभ्यो नित्()" (द।उ।५।४२) [कृ()वृ()जृ()सिद्रुपन्यनिस्वपिभ्यो नित्()--द।उ] इति कर्णशब्दो व्युत्पाद्यते, भिन्नच्छिन्नद्ररुआउवस्वस्तिकस्य" ६।३।११४ इति सूत्रमुपलक्षयति। "()ओतपादः" इत्यादि। पूर्वपदस्य प्रकृतिस्वर एव भवति। अथेह कस्मान्न भवति--स्थूलकर्ण इति, स्थूलेनापि हि कर्णेन लक्ष्यत एव ततश्च लक्षणादित्येव सिद्धम्()? इत्यत आह--"पशूनां विभागज्ञापनार्थम्()" इत्यादि। तेन स्थूलकर्ण इत्यत्र न भवतीति भावः। कथं पुनः सामान्येनोक्तौ विशेषसय ग्रहणं लभ्यते? वर्णग्रहणाज्ज्ञापकात्()। यदि लक्षणमात्रस्येह ग्रहणभिमतं स्याद्वर्णग्रहणं न क्रियेत, वर्णो हि लक्षणं भवत्येव। तेनापि लक्ष्यत इति कृत्वा, कृतश्च। तस्मात्? तदेव ज्ञापयति--विशिष्टमिह लक्षणं गुह्यत इति। यत्? पुनर्विशिष्टं व्याख्यानात्? तद्विज्ञेयम्()। "()ओतपादः" इति। "()इआता वर्णे" (धा।पा।७४२) इत्यस्मातद्? पचाद्यचि ()ओतशब्दो व्युत्पाद्यते, तेनान्तोदात्तोऽयम्()। "कूटशृङ्गः" इति। "कूट दाहे" (धा।पा।१८९०) [कूट परितापे (परिदाहे इत्यन्ये) धा।पा।] इति, अस्मादिगुपधलक्षणः ३।१।१३५ कः, तेन कूटशब्दोऽप्यन्तोदात्त एव। "शोभनकर्णः" इति। "शुभ शुम्भ शोभार्थे" (धा।पा।१३२१,१३२२) अस्मात्? "अनुदात्तेतश्च हलादेः" ३।२।१४९ इति युच्()। चित्स्वरेण शोभनशब्दोऽप्यन्तोदात्तः।

पूर्वपदप्रकृतिस्वरापदादो योगः। एवमुत्तरेऽपि योगाः प्रागव्ययीभावसंशब्दनात्()। तेन सर्वत्र प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरः प्रत्युदाहार्यः॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञाऽउपम्ययोश् च ६।२।११३

संज्ञायाम् औपम्ये च यो बहुव्रीहिर् वर्तते तत्र कर्णशब्द उत्तरपदम् आद्युदात्तं भवति। संज्ञायाम् कुञ्चिकर्णः। मणिकर्णः। औपम्ये गोकर्णः। खरकर्णः।

न्यासः

संज्ञौपम्ययोश्च। , ६।२।११२

"कुञ्चि कर्णः, मणिकर्णः" इति। "कुचि शब्दे तारे" (धा।पा।१८४) [कुच--धा।पा।] "अण रण वण भण मण" (धा।पा।४४४।४४८) इति मणिर्भ्वादौ पठ()ते आभ्याम्? "सर्वधातुभ्य इन्()" (पं।उ।४।११७) "इगुपधात्? कित्()" (पंउ।४।११९) इतीन्प्रत्ययः, किच्च। तेन कुञ्चि। तेन कुञ्चिमणिशब्दावाद्युदात्तौ। "गोकर्णः" इति। गौरिव कर्णोऽस्येति विग्रहः। गोशब्द उक्तस्वरः। "खरकर्णः" इति। खरस्येत्यादि विग्रहः। खमस्यास्तीति "रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्? (वा।५७७) इति रप्रत्ययः, तेन खरशब्दोऽन्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

कण्ठपृष्थग्रीवाजङ्घं च ६।२।११४

कण्ठ पृष्ठ ग्रीवा जङ्घा इत्येतानि उत्तरपदानि बहुव्रीहौ समासे संज्ञौपम्ययोराद्युदात्तानि भवन्ति। कण्ठः संज्ञायाम् शितिकण्ठः। नीलकण्ठः। औपम्ये खरकण्ठः। उष्ट्रकण्ठः। पृष्ठः संज्ञायाम् काण्डपृष्ठः। नाकपृष्ठः। औपम्ये गोपृष्ठः। अजपृष्ठः। ग्रीवा संज्ञायाम् सुग्रीवः। नीलग्रीवः। दशग्रीवः। औपम्ये गोग्रीवः। अश्वग्रीवः। जङ्घा संज्ञायाम् नाडीजङ्घः। तालजङ्घः। औपम्ये गोजङ्घः। अश्वजङ्घः। एणीजङ्घः।

न्यासः

कण्ठपृष्ठग्रीवाजङ्घं च। , ६।२।११३

"कणेष्ठः" (पं।उ।१।१०५) इति ठप्रत्ययान्तत्वात्? कण्ठशब्दोऽन्तोदात्तः। "डित्यपृष्ठगूथयूथप्रोथाः" (द।उ।६।३७) [तिथ--द।उ; पं।उ।] इति पृष्ठशब्दोऽन्तोदात्तो निपात्यते। "इण्शीभ्यां वन्()" (द।उ।८।१२६) इत्यतो वन्प्रत्ययेऽनुवर्तमाने "शेवयह्वजिह्वाग्रीवाप्वमावाः" (द।उ।८।१२८) इति ग्रीवाशब्दोऽन्तोदात्तो निपात्यते। अत्यन्तं हनित गच्छतीति हन्तेर्यङ्(), द्विर्वचनम्(), नुगतोऽनुनासिकान्तस्य" ७।४।८५ इति नुक्(), "अभ्यासाच्च" ७।३।५५ इति कुत्वम्(), जङ्घन्य इति स्थिते पचाद्यच्? "यङोऽचि च" २।४।७४ इति यङो लुक्(); टाप्(), चित्स्वरेण जङ्घाशब्दोऽन्तोदात्तः। अथ वा--"हन्तेरच्? जङ्घ च" २।४।७४ इति यङो लुक्(); टाप्(), चित्स्वरेण जङ्घाशब्दोऽन्तोदात्तः। अथ वा--"हन्तेरच्? जङ्घ च" (पं।उ।५।३१) ["अच्? तस्य जङ्घ च--पं।उ।] इति हन्तेरच्प्रत्ययो जङ्घ इत्ययमादेश इत्येवं वा जङ्घशब्दो व्युत्पाद्यते। एषां कण्ठादीनां समाहारे द्वन्द्वः। "शितिकण्ठः" इति। "सर्वधातुभ्य इन्()" (पं।उ।४।११७) इति वर्तमानं "क्रमितमिशाडिस्तम्भामत इच्च" (पं।उ।४।१२१) [शति--पं।उ।] इति शितिशब्द आद्युदात्तः। "नीलकण्ठः" इति। "नील वर्णे" (धा।पा।५२२), ["नील

वर्णे--धा।प।] अस्मात्? घञ्(), तेन नीलशब्दोऽप्याद्युदात्तः। "खरकण्ठः" इति। खरस्येव कण्ठोऽस्येति विग्रहः। खमस्यास्तीति "रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानात्? (वा।५७७) रप्रत्ययः, तेन खरोऽन्तोदात्तः। "उष्ट्रकण्ठः" इति। उष्ट्रस्येव कण्ठोऽस्येति "ष्ट्रन्()" (द।उ।८।७९) इति वर्तमाने "उषखनिब्यां कित्()" (द।उ।८।८२) इति "उष दाहे" (धा।पा।६९६) इत्यस्मात्? ष्ट्रन्(), किच्च। तेनोष्ट्रशब्द आद्युदात्तः। "काण्डपृष्ठः" इति। काण्डं पृष्ठमस्येति काण्डशब्दः "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्युदात्तः। "नाकपृष्ठम्()" इति। नास्याकमस्तीति "न भ्राट्()" ६।३।७४ इत्यादिना प्रकृतिभावान्नलोपाभावः। "नञ्सुभ्याम्()" ६।२।१७१ इत्युत्तरपदान्तोदात्तविधानान्नाकशब्दोऽन्तोदात्तः "गोपृष्ठम्()" इ। गोरिव पृष्ठमस्येति। गोशब्द उक्तस्वरः। "अजपृष्ठम्()" इति। अजस्येव पृष्ठमस्येति "अज गतिक्षेपणयोः" (धा।पा।२३०) अस्मात्? पचाद्यच्()। अजादिष्वजाशब्दस्य पाठाद्वीभावो न भवति। चित्स्वरेणाजशब्दोऽन्तोदात्तः। "सुगरीवः" इति। शोभना ग्रीवाऽस्येति "निपाता आद्युदात्ताः" (फि।सू।४।८०) इति सुशब्द आद्युदात्तः। "नीलग्रीवः" इति। नीला ग्रीवाऽस्येति "नील वर्णे" (धा।पा।५२२) ["नील वर्णे--धा।प।] अस्मात्? घञ्()। तेन नीलशब्द आद्युदात्तः। "दशग्रीवः" इति। दश ग्रीवा अस्येति दशशब्दः "न्रः संख्यायाः" (फि।सू२।२८) इत्याद्युदात्तः। "अ()आग्रीवः" इति। अ()आस्येव ग्रीवाऽस्येति। गोशब्दोऽ()आशब्दश्चोक्तस्वरः। "नारीजङ्घः" इति। नारी जङ्घा यस्येति। शङ्गरवादिषु "नृनरयोश्च" (ग।सू।५७) इति पठयन्ते, तेनाद्युदात्तः। "तालजङ्घः" इति। तालो जङ्घा यस्येति "तल प्रतिष्ठाकरणे (धा।पा।१५९८) [प्रतिष्ठायाम्()--धा।पा।] चुरादिः, तस्मात्? वचाद्यच्()। तेन तालशब्दोऽन्तोदात्तः। "गोजङ्घः" इति। एण्या इव जङ्घा यस्येति। एणीशब्दः "जातेरस्त्रीविषयात्()" ४।१।६३ इति ङीषन्तः। तेनान्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

शृङ्गम् अवस्थायां च ६।२।११५

शृङ्गशब्दः उत्तारपदम् अवस्थायां संज्ञौ पम्ययोश्च बहुव्रीहौ आद्युदात्तं भवति। उद्गतशृङ्ः। द्व्यङ्गुलशृङ्गः। अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषो ऽवस्थ। असंज्ञायाम् ऋष्यशृङ्गः। औपम्ये गोशृङ्गः मेषशृङ्गः। अवस्थादिषु इति किम्? स्थूलशृङ्गः।

न्यासः

शृङ्गमवस्थायां च। , ६।२।११४

"उद्गतशृङ्गः" इति। "गन्गम्यद्योः" (पं उ।१।१२२) इत्यधिकृत्य "भृञः किन्नुट्? च" (पं।उ।१।१२४) इति च "शृणातेह्र्यस्वश्च" (पं।उ।१।१२५) इति गन्प्रत्ययान्तः शृङ्गशब्दो व्युत्पाद्यते। तेनायमाद्युदात्तः। उद्गतशब्दस्थाथादि६।२।१४३स्वरेणान्तोदात्तः। "द्व्यङ्गुलशृङ्गः" इति। द्वे अङ्गुली प्रमाणमस्येति तद्धितार्थे द्विगुः "प्रमाणे द्वयसच्()" ५।२।३७ इत्यादिना विहितस्य मात्रच आगतस्य लोपः। "प्रमाणे लो द्विगोर्नित्यम्()" (वा।५५८,५५९) इति "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" (५।४।८६) इत्यच्? समासान्तः। तेन द्व्यङ्गुलशब्दोऽन्तोदात्तः। द्व्यङ्गुलं शृङ्गमस्येति। "त्र्यङ्गुलशृङ्गः" इति। पूर्वेण तुल्यम्()। "अत्र" इत्यादि। आदिशब्देन द्व्यङ्गुलाविग्रहणम्()। "ऋष्यशृङ्गः" इति। ऋष्यं शृङ्गंयस्येति। "अध्न्यादयश्च" इत्याद्युदात्त ऋष्यशब्दो निपात्यते। "मेषशृङ्गः" इति। मेषस्येव शृङ्गो यस्येति "मिष स्वर्धायाम्()" (धा।पा।१३५२), अस्मात्? पचाद्यच्()। तेन मेषशब्दोऽन्तोदात्तः। "स्थूलशृङ्गः" इति। स्थूलशब्दः प्रातिपदिकस्वरेणान्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

नञो जरमरमित्रमृताः ६।२।११६

नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति। अजरः। अमरः। अमित्रः। अमृतः। नञः इति किम्? ब्राह्मणमित्रः। जरादयः इति किम्? अशत्रुः, नञ्सुभ्यम् ६।२।१७१ इति उत्तरपदान्तोदात्तत्वम् एव अत्र भवति।

न्यासः

नञो जरमरमित्त्रमृताः। , ६।२।११५

"अजरः" इति। जरणं जरः "ऋदोरप्()" ३।३।५७। तेनायं धातुस्वरेणाद्युदात्तः। अविद्यमानो जरोऽस्येति। "अमरः" इति। मरणं मरः, "कृत्यल्युटो बहुलम्()" ३।३।११३ इत्यप्()। तेनायमपि पूर्ववदाद्युदात्तः। "अमित्त्रः" इति। "अमिचिमिदिशसिभ्यः क्त्रः" (द।उ।८।८६) इदि मिदेः क्त्रः। तेन मित्त्रशब्दोऽन्तोदात्तः। "अमृतः" इति। "मृङ् प्राणत्यागे" (धा।पा।१४०३) मरणम्()=मृतम्()। "नपुंसके भावे क्तः" ३।३।११४। तेन मृतशब्दोऽन्तोदात्तः। "ब्राआह्णमित्त्रः" इति। ब्राआह्णशब्दोऽणन्तत्वादन्तोदात्तः। अत्र पूर्वपदप्रकृतिस्वर एव भवति। "अशत्रुः" इति। "रुशातिभ्यां (द।उ।१।१५९) इति क्रुन्नन्तः शत्रुशब्द आद्युदात्तः। "नञ्सुभ्याम्()" ६।२।१७१ इत्युत्तरपदान्तोदात्ततवापवादो योगः। एवमुत्तरेऽपि योगः प्राक्? "कूलतीरतूल" ६।२।१२० इत्यतः द्रष्टव्याः॥

---

सूत्रम्

काशिका-वृत्तिः

सोर् मनसी अलोमौषसी ६।२।११७

सोः उत्तरं मनन्तम् असन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति लोमोषसी वर्जयित्वा। सुकर्मा। सुधर्मा। सुप्रथिमा। असन्तम् सुपयाः। सुयशाः। सुस्रोताः। सुस्रत्। सुध्वत्। सोः इति किम्? कृतक्रमा। कृतयशाः। मनसी इति किम्? सुराजा। सुतक्षा। अलोमोषसी इति किम्? सुलोमा। सूषाः। अनिनस्मङ्ग्रहणान्यर्थवता च अनर्थकेन च तदन्तविधिं प्रयोजयन्ति इत्यनर्थकयोरपि मनसोरिह ग्रहणम्। नञ्सुभ्याम् ६।२।१७१ इत्यस्य अयम् अपवादः। कपि तु परत्वात् कपि पूर्वम् इत्येतद् भवति। सुकर्मकः। सुस्रोतस्कः।

न्यासः

सोर्मनसी अलोमोषसी। , ६।२।११६

"सुकर्मा" इति। "कृदृचरिभ्यो मनिन्()" (द।उ।६।७३) ["मनिन्()" इत्येव द।उ।पाठः; "सर्वधातुभ्यो मनिन्()" इति।पं।उ।पाठ--४।१४४] "सर्वनामस्थाने च" ६।४।८ इति दीर्घः। "सुप्रथिमा" इति। पृथोर्भावः प्रथिमा, "पृथ्वादिभ्यः" ५।१।१२१ इतीमनिच्()। "र ऋतो हलादेर्लघोः" ६।४।१६१ इति ऋकारस्य रेफः। "सुपयाः" इति। "असुन्()" (द।उ।९।४९) इति वर्त्तमाने "पिबतेरिच्च" (द।उ।९।५०) [पिबतेरि च--द।उ।] इति पयःशब्दो व्युत्पाद्यते। तेनायमाद्युदात्तः। "अत्वसन्तस्य"६।४।१४ इति दीर्घः। "सुयशाः" इति। "अश भोजने" (धा।पा।१५२३) ["अशू भोजने"--मुद्रितः पाठः] "अशर्देवने युट्? च" (द।उ।९।२४;पं।उ।३।६५) [पंचपारिवशपाद्युणाद्योरुभयत्रापि "यूट्? च" इति नास्ति] इत्यसुन्येव यशःशब्दो व्युत्पाद्यते। तेनायमाद्युदात्तः, पूर्ववद्दीर्घः। "सुरुआओताः" इति। "सर्वधातुब्योऽसुन्? (पं।उ।४।१८८) इति वर्त्तमाने "रुआऊरिभ्यां तुट्? च" (द।उ।९।६२) [रुआऊरीभ्यां--पं।उ।द।उ।] इति। "सुरुआत्? सुध्वत्()" इति। रुआन्सुध्वनसुभ्यां क्विप्? "वसुरुआंसु" ८।२।७२ इत्यादिना दत्वम्(), तस्यासिद्धत्वादवासन्तत्वम्()। "सुराजा, सुतक्षा" इति। राजन्(), तक्षन्निति कनिन्नन्तः। "सुलोमा" इति। लुनातेर्मनिनि लोमेति। "सुधा" इति। "उष दाहे" (दा।पा।६९६)

"मिथुनेऽसिः" (पं।उ।४।२२२) इति वर्तमाने "उषः कित्()" (पं।उ।४।२३४) इति कित्()। अथ कथं सुप्रथिमेत्यतर सुरुआओताः, सुरुआत्(), सुध्वदित्येतेषु चोत्तरपदमाद्युदात्तं भवति, यावतार्थवतोर्मनसोरर्थवद्ग्रहणपरिभाषयेह ग्रहणम्(), न चेह तावर्थवन्तौ? इत्यत आह--"अनिनस्मन्()" इत्यादि। "अनिनस्मन्? ग्रहणान्यनर्थवता चानर्थकेन च तदन्तविधि प्रयोजयन्ति" (व्या।पा।१२९) इति ब्राउवता वाक्यकारेणानिनस्मन्प्रभृतीनामनर्थकानामपि ग्रहणं भवतीत्युक्तं भवति। अन्यथाप्येतत्? तदन्तविधेः प्रदर्शनार्थं स्यात्()। "कपि तु परत्वात्()" इत्यादि। "सोर्मनसी" ६।२।११६ इति सूत्रस्यावकाशः--सुकर्माः, सुवयाः, "कपि पूर्वम्()" ६।२।१७२ इत्यस्यावकाशः--अयवकः, सुयवक इति, "शेषाद्विभाषा" ५।४।१५४ इति कप्()। इहोभयं प्राप्नोति--सुकर्मकः, सुरुआओतस्क इति, "कपि पूर्वम्()" ६।२।१७२ इत्येतद्भवति विप्रतिषेधेन॥

---

सूत्रम्

काशिका-वृत्तिः

क्रत्वादयश् च ६।२।११८

क्रत्वादयः सोरुत्तरे बहुव्रीहौ समासे आद्युदात्ता भवन्ति। सुक्रतुः। सुदृशीकः। क्रतु। दृशीक। प्रतीक। प्रतूर्ति। हव्य। भग। क्रत्वादिः।

न्यासः

क्रत्वादयश्च। , ६।२।११७

कृञः क्रतुः, तेन नित्स्वरेण क्रतुराद्युदात्तः। दृशीकप्रतीकशब्दौ "अध्यादयश्च" इत्याद्युदात्तौ। सूपूर्वस्यत्वरतेः क्तिन्()। "तादौ च निति कृत्यतौ" ६।२।५० इति गतिस्वरेम प्रतूर्तिशब्द ["प्रपूर्ति" क्रत्व दिषु पठ()ते--काशिका] आद्युदात्तः, "ज्वरत्वर" ६।४।२० इत्यादिनोठ्()। जुहोतेः "अचो यत्()" ३।१।९७ "यतोऽनावः" ६।१।२०७ इत्याद्युदात्तो भवति हव्यशब्दः। भजेः "खनो घ च" इति घः। अत्र हि घित्करणेन ज्ञापितम्()--अन्येभ्योऽपि धो भवतीति। वृषादित्वाद्भगशब्द आद्युदात्तः।

---

सूत्रम्

काशिका-वृत्तिः

आद्युदात्तं द्व्यच् छन्दसि ६।२।११९

यदाद्युदात्तं द्व्यचुत्तरपदं बबुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तम् एव भवति छन्दसि विसय। स्वश्वास्त्वा सुरथा मर्जयेम। नित्स्वरेण अश्वरथशब्दावाद्युदात्तौ। आद्युदात्तम् इति किम्? या सुबाहुः स्वङ्गुरिः। बाहुशब्दः प्रत्ययस्वरेण अन्तोदात्तः। द्व्यचिति किम्? सुगुरसत्। सुहिरण्यः। नञ्सुभ्याम् ६।२।१६१ इत्यस्य अयम् अपवादः।

न्यासः

आद्यदात्तं द्वयच्छन्दसि। , ६।२।११८

"नित्स्वरेणा()आरथशब्दावाद्युदात्तौ" इति। अ()आशब्दस्य "अशिपुषि" (पं।उ।१।१५१) ["अशूप्रुपि॥॥"पं।उ।] इत्यादिना क्वन्()प्रत्ययान्तस्य व्युत्पादितत्वात्()। रथशब्दस्यापि "हनिकुषिनीरमिकाशिभ्यः क्थन्()" (द।उ।६।२७) इति क्थन्()प्रत्ययान्तस्य। "बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः" इति। "कुभ्रश्च" (द।उ।१।१०७) इत्यतः कुरिति वर्तमाने "अर्जिदृशिकम्यमिपशिबाधामृजिपसितुग्दीर्घहकारश्च" (द।उ।१।११२) [अर्जिदृशिकम्यमिपशिबाधामृजितुग्धुग्दीर्घहकारश्च--द।उ।] इति कुप्रत्ययान्तस्य व्युत्पादितत्वात्()। "सुहिरण्यः"

इति। हिरण्यशब्दः "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्याद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

वीरवीर्यौ च ६।२।१२०

वीर वीर्य इत्येतौ च शब्दौ शोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषये आद्युदात्तौ भवतः। सुवीरस्ते। सुवीर्यस्य पतयः स्यम। वीर्यम् इति यत्प्रत्ययान्तं तत्र यतो ऽनावः ६।१।११९ इति आद्युदात्तत्वं न भवति इत्येतदेव वीर्यग्रहणं ज्ञापकम्। तत्र हि सति पूर्वेण एव सिद्धं स्यात्।

न्यासः

वीरवीर्यौ च। , ६।२।११९

"स्फायितञ्चि" (द।उ।८।३१) इत्यादिनाऽजे रकिप्रत्यये वीरशब्दो व्युत्पाद्यते। तेनान्तोदात्तः। अथ वा--"वीर विक्रान्तौ" (धा।पा।१९०३) इत्यस्य पचाद्यचि व्युत्पादितत्वात्()। "वीर्यमिति यत्प्रत्ययान्तम्()" इति। वीरे साधुः, "तत्र साधुः" ४।४।९८ इति प्राग्घितीयो यत्()। अथ वा--वीर इत्यसमाच्चौरादिकादस्मादेव निपातनात् "अचो यत्()" ३।१।९७, तेन वीर्यमिति यत्प्रत्ययान्तम्()। एवं सति "यतोऽनावः" (६।१।२१३) इत्याद्युदात्तत्वं प्राप्नोति? इत्यत आह--"तत्र" इत्यादि। कथं पुनर्वीर्यग्रहणं ज्ञापकम्()? इत्याह--"तत्र हि" इत्यादि। यद्याद्युदात्तं स्यात्? तदा "आद्युदात्तं द्व्यच्छन्दसि" ६।२।११८ इत्यनेनैव सिद्धं स्यात्()। ततश्चेह वीर्यग्रहणं न कुर्यात्(), कृतञ्च; तस्मात्? तदेव ज्ञापयति--वीर्यशब्दस्य यदन्तस्याप्याद्युदात्तत्वं न भवतीति। तस्मिन्नसति "तित्स्वरितम्()" ६।१।१७९ इत्यन्तस्वरितमेव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

कूलतीरतूलमूलशालाऽक्षसमम् अव्ययीभावे ६।२।१२१

कूल तीर तूल मूल शाला अक्ष सम इत्येतानि उत्तरपदानि अवयीभावसमासे आद्युदात्तानि भवन्ति। परिकूलम्। उपकूलम्। परितीरम्। उपतीरम्। परितूलम्। उपतूलम्। परिमूलम्। उपमूलम्। परिशालम्। उपशालम्। पर्यक्षम्। उपाक्षम्। सुषमम्। विषमम्। निषमम्। दुःषमम्। तिष्ठद्गुप्रभृतिषु एते पठ्यन्ते। कूलादिग्रहणं किम्? उपकुम्भम्। अव्ययीभावे इति किम्? परमकूलम्। उत्तरमकूलम्। पर्यादिभ्यः कूलादीनाम् आद्युदात्तत्वं विप्रतिषेधेन भवति। परिकूलम्। उपकूलम्।

न्यासः

कूलतीरतूलमूलशालाक्षसममव्ययीभावे। , ६।२।१२०

"कूल संवरणे" (धा।पा।५२५), ["कूल आवरणे--धा।पा।] "पार तीर कर्मसमाप्तौ" (धा।प।१९११,१९१२), "तूल निष्कर्षे" (धा।पा।५२७), "मूल प्रतिष्ठायाम्()" (धा।पा।५२९)--एभ्यो घञ्(), तेनैते कूलादय आद्युदात्तः। "शुल हुल पत्लृ गतौ"--(धा।पा।८४३,८४४,८४५) अस्माद्धञ्()। शालाप्याद्युदात्ता। स्त्रीत्वम्? "तत्पुरुषे शालायाम्()" ६।२।१२२ इति निपातनात्()। "तृ()वदिहनिकमिकसिभ्यः सः" (द।उ।९।२१,पं।उ।३।६२) [वृ()तृ()वदिहनिकमिकषियुमुचिभ्यः सः--द।उ; वृ()तृ()वदिनिकमिकषिभ्यः सः--पं।उ।] इति "अशेर्देवने" (द।उ।९।२४) इति च सप्रत्ययान्तत्वादक्षशब्दोऽन्तोदात्तः। योऽपि "अक्ष्णोऽदर्शनात्()" ५।४।७६ इत्यचि समासान्ते कृतेऽक्षशब्दः सम्पद्यते, सोऽप चित्स्वरेणान्तोदात्तः, तस्यापीह ग्रहणम्()। "षमु वैकल्ये"--(धा।पा।८२९) [षम अवैकल्ये--धा।पा।] अस्मात्?

पचाद्यच्(), तेन समोऽन्तोदात्तः। यस्तु सर्वादिषु समशब्दः सोऽनुदात्तस्तत्रैव पठ()ते, तस्यापीह ग्रहणम्()। "उपकूलम्()" इति। कूलस्य समीपमिति "अव्ययं विभक्ति" २।१।६ इत्यादिनाव्ययीभावः। "परिकूलम्()" इति। "उपपरी वर्जने" १।४।८७ इति परिशब्दः कर्मप्रवचनीयसंज्ञ)। तेन योगे "पञ्चम्यपाङ्परिभिः" (२।३।१०) इति क#ऊलात्? पञ्चमी। "अपपरिबहिरञ्चवः पञ्चम्या" २।१।११ इत्यव्ययीभावः। "सुषमम्()" इत्यादौ "सुषमादिषु च" ८।३।९८ इति षत्वम्(), तस्यासिद्धत्वात्? समशब्द एवायम्()। "तिष्ठद्गुप्रभृतिष्वेते पठ()न्ते" इति। तेन "तिष्ठद्गुप्रभृतीनि च" २।१।१६ इत्येतेऽव्ययीभावा इति दर्शयति। "उपकुम्भम्()" इति। अत्र समासान्तोदात्तत्वमेव। "परमकूलम्(), उत्तमकूलम्()" इति। परमं कूलमस्योत्तमं कूलमस्येति बहुव्रीहिः। अत्र पूर्वपदप्रकृतिस्वर एव भवति। यौ तु तत्पुरुषौ परमकूलोत्तमकूलशब्दौ, तत्र बहुव्रीह्यधिकारादेव न भविष्यतीति तन्निवृत्त्यर्थमव्ययीभावग्रहणमयुक्तम्()। "पर्यादिभ्यः" इत्यादि। "परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु" ६।२।३३ इत्यस्यावकाशो यत्र कूलादयो न सन्ति। परिंत्रिगर्तमिति, कूलादीनामाद्युदात्तस्यावकाशो यत्र पर्यादयो विद्यन्ते---अपकूलमिति; परिकूलमित्यत्र तूभयं प्राप्नोति, तत्र विप्रतिषेधेनेदमेवाद्युदात्तत्वं भवति। समासस्वरापवादो योगः। एवमुत्तरेऽपि "नाचार्यराज" (६।२।१३३) इत्यादे सूत्रात्? प्राक्()॥

---

सूत्रम्

काशिका-वृत्तिः

किंसमन्थशूर्पपाय्यकाण्डं द्विगौ ६।२।१२२

कंस मन्थ शूर्प पाय्य काण्ड इत्येतानि उत्तरपदानि द्विगौ समासे आद्युदात्तानि भवन्ति। द्विकंसः। त्रिकंसः। द्विमन्थः। त्रिमन्थः। द्विशूर्पः। त्रिशूर्पः। द्विपाय्यः। त्रिपाय्यः। द्विकाण्डः। त्रिकाण्डः द्विगौ इति किम्? परमकंसः। उत्तरमकंसः।

न्यासः

कंसमन्थशूर्पपाय्यकाण्डं द्वीगौ। , ६।२।१२१

"वृ()तृ()वदिहनिकमिकषिभ्यः सः" (पं।उ।३।६२) इति कमेः सः, तेन कंसोऽन्तोदात्तः। "मन्थ विलोड्ने" (दा।पा।४२) अस्मात्? "अकत्तरि च कारके संज्ञायाम्()" ३।३।१९ इति घञ्(), तेन मन्थ आद्युदात्तः। "पानीविषिब्यः पः" (पं।उ।३।२३) इति वर्तमाने "सुशृब्यां निच्च" (पं।उ।३।२६) इति शृणातेः पः निच्च। बाहुलकादूत्त्वं च। अथ वा--"शूर्प माने" (धा।पा।१६१२) असमाद्घञ्(), तेन शूर्पशब्द आद्युदात्तः। पाय्यशब्दो ण्यति "पाय्यसान्नाय्य" ३।१।१२९ इति निपात्यते तेनायमन्तस्वरितः। कुण्डशब्दः पूर्वमेवोक्तस्वरः। "द्विकंसः" इति। द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः, ततः प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्? "कंसाट्टिठन्()" ५।१।२५ इति टिठन्(), तस्य चापि "अध्यद्र्धपूर्व" ५।१।२८ इत्यादिना लुक्()। "त्रिकंसः" इति। पूर्वेण तुल्यम्()। "द्विमन्थः" इति। "आर्हादगोपुच्छ" ५।१।१९ इत्यादिना ठक्()। शेषं समासादि पूर्ववत्()। "द्विशूर्पः" इतिष "शूर्पादन्यतरस्याम्()" ५।१।२६ इत्यञ्()। शेषं पूर्ववत्()। "द्विपाय्यः" इति। प्राग्वती यष्ठञ्()। शेषं पूर्ववत्()। "द्विकाण्डम्()" [द्विकाण्डः--काशिका] इति। द्वे काण्डे प्रमाणमस्येति "प्रमाणे द्वयसच्" ५।२।३७ इत्यादिना मात्रजादयः, तेषाम्? "प्रमाणे लो द्विगोर्नित्यम्()" (वा।५५८, ५५९) इति लोपः, समासः पूर्ववत्()। "परमकंसः" इति। अत्र समासस्वर एव भवति।

---

सूत्रम्

काशिका-वृत्तिः

तत्पुरुषे शालायां नपुंसके ६।२।१२३

शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदम् आद्युदात्तं भवति। ब्राह्मनशालम्। क्षत्रियशालम्। विभाषा सेनासुराच्छायाशालानिशानाम् २।४।२५ इति नपुंसकलिङ्गता। तत्पुरुषे इति किम्? दृढशालं ब्राह्मणकुलस्। शालायाम् इति किम्? ब्राह्मणसेनम् नपुंसके इति किम्? ब्राह्मणशाला।

न्यासः

ततपुरुषे शालायां नपुंसके। , ६।२।१२२

शालशब्दः "कूलतीर" ६।२।१२० इत्यत्रोक्तस्वरः। "ब्राआह्मणशालम्(), क्षत्त्रियशालम्()" इति ब्राआह्मणशब्दोऽणन्तत्वादन्तोदात्तः। क्षत्रियशब्दस्तु मध्योदात्तः, "क्षत्राद्? धः" ४।१।१३८ इति घप्रत्ययान्तत्वात्()। "दृढशालम्()" इति। बहुव्रीहिरयम्(), तेन पूर्वपदप्रकृतिस्वर एव भवति। पूर्वपदं च निष्ठान्तत्वादन्तोदात्तम्()। ननु च लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) "विभाषा सेना" २।४।२५ इति प्रतिपदोक्ता या नपुंसकलिङ्गता सैव ग्रहिष्यते। न हि दृढशालमित्यत्र प्रतिपदोक्ता नपुंसकता, किं तर्हि? अभिधेयवशेन लक्षणोक्ता "अभिधेयवल्लिङ्गवचनानि भवन्ति" (व्या।प।७३) इति। तत्? किमेतन्निवृत्यर्थेन तत्पुरुषग्रहणेन? एवं तर्हु त्तरार्थं तत्पुरुषग्रहणम्()। "चेलखेट कटुककाण्डं गर्हायाम्()" (६।२।१२६) इत्यनेन दधि च तत्? कटुकं चेति दधिकटुकमित्यत्रैव यथा स्यात्()। दधिकटुकम्(), "उद()इआत्कटुकम्()" इति। उत्तरार्थं तु तत्क्रियमाणं विस्पष्टार्थत्वमुपपादयतीत्येतदर्थमपि भवति। लक्षणप्रतिपदोक्तपरिबाषा (व्या।प।३) चेह नाश्रयितव्या भवति--एतदर्थं तत्पुरुषग्रहणस्य दृढशालमित्येतत्? प्रत्युदाहरणमुपन्यस्तम्()॥

---

सूत्रम्

काशिका-वृत्तिः

कन्था च ६।२।१२४

तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्दः उत्तरपदम् आद्युदात्तं भवति। सौशमिकन्थम्। आह्वकन्थम्। चप्पकन्थम्। संज्ञायां कन्थोशीनरेषु २।४।२० इति नपुंसकलिङ्गता। षष्ठीसमासा एते। नपुंसके इत्येव, दाक्षिकन्था।

न्यासः

कन्था च। , ६।२।१२३

कथि "क्लेशने" (()) अस्मात्? "गुरोश्च हलः" ३।३।१०३ इत्यकारः, तेन कन्थान्तोदात्ता। "सौशमिकन्थम्()" इति। शोभनः शमोऽस्य शुशमः "तस्यापत्यम्()" ४।१।९५ इत्यत इञ्()। तेनाद्युदात्तः सौशमिशब्दः। "आह्वकन्थम्()" इति। आङ्पूर्वस्य ह्वयतेः "आतश्चोपसर्गे" ३।१।१३६ इति कः, तेनाह्वशब्दस्याथादिस्वरेणा ६।२।१४३ न्तोदात्तः। "चप्पकन्थम्()" इति। "चप सान्त्वने" (धा।पा।३९९), अस्मात्? "पानी विषिभ्यः पः" (द।उ।७।२) इति बहुलवचनाच्चपोऽपि भवति। तेन चप्पशब्दोऽन्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

आदिश्चिहणादीनां ६।२।१२५

कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनाम् आदिरुदात्तो भवति। चिहणकन्थम्। मडरकन्थम्। मडुर इति केचित् पठन्ति। मडुरकन्थम्। चिहण। मडर। मडुर। वैतुल। पटत्क। चैत्तलिकर्णः। वैतालिकर्णिः इत्यन्ये पथन्ति।

कुक्कुट। चिक्कण। चित्कण इत्यपरे पथन्ति। आदिः इति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम्।

न्यासः

आर्दिश्चहणादीनाम्?। , ६।२।१२४

पूर्वेणोत्तरपदस्य सिद्धेऽयं पूर्वपदस्याद्युदात्तत्वार्थ आरम्भः। चिनोतेः क्विप्? चित्()। हन्तेः पचाद्यच्? हनः। निपातनात्? तलोपो णत्वं च चिहणः। "मल मल्ल धारणे"--(दा।पा।४९३,४९४) आभ्यां रप्रत्ययः, लस्य निपातनात्? तलोपो णत्वं च चिहणः। "मल मल्ल धारणे"--(धा।पा।४९३,४९४) आभ्यां रप्रत्ययः, लस्य निपातनात्? डत्वम्()। मडरमडडरशब्दौ मद्योदात्तौ। विगता तुला तस्य स वितुलः, तस्यायं वैतुलः। अणन्तत्वादन्तोदात्तः। पटदिति कायतीति "कै गै शब्दे" (धा।पा।९१६,९१७) "आतोऽनुपसर्गे कः" ३।१।१३६ पटत्कोऽन्तोदात्तः। चित्तमादत्त इति "ला आदाने" (धा।पा।१०५८) इत्यस्मादाङ्पूर्वादस्मादेव निपातनात्? कः--चित्तालः, तस्यापत्यमिति "अत इञ्? ४।१।९५ चैत्तालिः, स कर्मावस्य चैत्तालिकर्णः। बहुव्रीहिरयं पूर्वपदप्रकृतिस्वरेणाद्युदात्तः। पूर्वपदं हि ञित्स्वरेणाद्युदात्त्म्()। अन्ये त्विञन्तं चैत्तालिकर्णिरिति समुदायमधीयते। "कुक वृक आदाने" (धा।पा।९१,९२) अस्मात्? क्विप्()--कुक्(); "कुट कौटिल्ये" (धा।पा।१३६६) इत्यस्मादिगुपधलक्षणः कः, कुटः, कुकः, कुटः, कुक्कुटः। समासस्वरेणान्तोदात्तः। चिनोतेः क्विप्(), चित्(), कणतेः पचद्यचि कणः, चितः कणाश्च#इक्कणः, तकारस्य ककारो निपातनात्()। चित्करण इत्यपरे पठन्ति। चिहणादयश्चैते मुष्यनामधेयानि चेति स्मर्यते। अथादिग्रहणं किमर्थम्? यावतादिरनुवर्तत एव? इत्यत आह--"आदिरिति वर्तमाने" इत्यादि। पूर्वकं ह्रादिगरहणमुत्तरपदाभिसम्बद्धम्()। पूर्वपदानां चिहणादीनामाद्युदात्तत्वमिष्यते। तस्मात्? पूर्वपदभूतानां तेषामाद्युदात्तत्वं यथा स्यादित्येवमर्थं पुनरादिगरहणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

चेलखेटकटुककाण्डं गर्हायाम् ६।२।१२६

चेल खेट कतुक काण्ड इत्येतानि उत्तरपदानि तत्पुरुसे समासे गर्हायां गम्यमानायाम् आद्युदात्तानि भवन्ति। पुत्रचेलम्। भार्याचेलम्। उपानत्खेटम्। नगरखेटम्। दधिकटुकम्। उदश्वित्कटुकम्। भूतकाण्डम्। प्रजाकाण्डम्। चेलाऽदिसादृश्येन पुत्रादीनां गर्हा। तत्र पुत्रः चेलम् इव इति विगृह्य व्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिः इति समासः। गर्हायाम् इति किम्। परमचेलम्।

न्यासः

चेलखेटकटुककाण्डं गर्हायाम्?। , ६।२।१२५

"वेलृ चेलृ केलृ चलने" (धा।पा ५३५,५३६,५३७) अस्मात्? संज्ञायां घञ्(), चेलम्()=वस्त्रमुच्यते। "खिट उत्त्रासने" (धा।पा।३०२) [त्रासे-धा।पा।] अस्मादपि भावे घञ्()--खेटः, तृणनामैतत्()। ञित्स्वरेण चेलखेटशब्दावाद्युदात्तौ। कटुशब्दात्? संज्ञायां कन्? ४।३।१४५, गुणवचनमेतदाद्युदात्तम्()। काण्डमप्याद्युदात्तमेवेत्युक्तम्()। "चेलादीनां सादृश्येन पुत्रादीनां गर्हा" इति। यता चेलमकुलीनेन तन्तुवायेनोपजनितमेवं पुत्रोप्यकुलीनजो यः स "पुत्रचेलम्()" इत्युच्यते। यथा काण्डं सत्वपीडाकरमेवं भूतमपि। तत्र पुत्रशब्दः प्रत्ययस्वरेणान्तोदात्तः। स हि "अमिचिमिदिशसिभ्यः क्यः (द।उ।८।८६,पं।उ।४।१६३) इत्यनुवर्तमाने "पुरो ह्रस्वश्च (द।उ।८।८७,पं।उ।४।१६४) [पूञो ह्रस्वश्च--द।उ।,पुवो ह्रस्वश्च--पं।उ।] इति पुत्रशब्दः क्तप्रत्ययान्तो व्युत्पाद्यते। भार्याशब्दः "ऋहलोण्र्यत्()" ३।१।१२४ इति ण्यदन्तत्वादन्तस्वरितः। "णह बन्धने" (दा।पा।११६६) अस्मादुपपूर्वात्? क्विप्? "नहिवृति" ६।३।११५ इत्यादिना पूर्वपदस्य दीर्घत्वम्(), "नहो धः"

८।२।३४ इति नकारस्य धकारः, तस्य चर्त्वम्()--तकारः। उपानच्छब्दः कृत्स्वरेणान्तोदात्तः। नगा अस्मिन्? विद्यन्त इति "नगरात्? कुत्सनप्रावीण्ययोः" ४।२।१२७ इत्यस्मादेद निपातनाद्रप्रत्ययः, तेन नगरमन्तोदात्तम्()। दधीति "आदृगम" ३।२।१७१ इत्यादिन क्विन्प्रत्ययान्तो दधातेर्व्युत्पाद्यते, तेनाद्युदात्तः। उदकेन शूयत इत्युद()इआत्(), क्विप्()। "क्विब्वचिप्रच्छि" (द।उ।१०।२) इत्यादिना बहुलवचनाद्दीर्घोऽस्य न भवति। "उदकस्योदः संज्ञायाम्()" ६।३।५६ इत्युदभावः, कृत्स्वरेणान्तादात्तः। बूतशब्दोऽपि निष्ठान्तत्वादन्तोदात्तः। प्रजाशब्दः "उपसर्गे च संज्ञायाम्()" ३।२।९९ इति डप्रत्ययान्तः,--कतेन कृत्स्वरेणान्तोदात्तः। "परमचेलम्()" इति। अत्र पूजा गम्यते, न गर्हा॥

---

सूत्रम्

काशिका-वृत्तिः

चीरम् उपमानम् ६।२।१२७

चीरमुत्तरपदम् उपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति। वस्त्रं चीरम् इव वस्त्रचीरम्। पटचीरम्। अम्बलचीरम्। उपमानम् इति किम्? परमचीरम्।

न्यासः

चीरमुपमानम्?। , ६।२।१२६

"सुसूदागृधिभ्यः क्रन्()" (द।उ।८।४२,पं।उ।२।२५)[सुसूदाग्गृधिब्यः क्रन्()--द।उ।,पं।उ।] इति वर्तमाने--"शुसिचिमीनां दीर्घश्च" (द।उ।८।४३,पं।उ।२।२६) इति क्रन्प्रत्ययान्तश्चीरशब्दः, तेनाद्युदात्तः। "वस्त्रचीरम्()" इति। पूर्ववद्()व्याघ्रादित्वात्? समासः। वसेराच्छादनार्थात्? ष्ट्रन्? वस्त्रम्(), तेनाद्युदात्तम्()। "कम्बलचीरम्()" इति। "घृतादीनाञ्च" (फि।सू।१।२१) इति कम्बलशब्दोऽन्तोदात्तः॥

बाल-मनोरमा

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ९१, ६।२।१२६

इकोऽसवर्णे। "इक" इति षष्ठी। "एङः पदान्ता"दित्यतः "पदान्ता"दित्यनुवर्तते। तच्च षष्ठ()न्ततया विपरिणम्यते। "अची"ति चानुवर्तते। ततश्च "पदान्तस्येकोऽसवर्णेऽचि परे ह्रस्वः स्या"दित्येकं वाक्यम्। चकारात्प्रकृत्यान्तः पादमित्यतः प्रकृत्येत्यनुकृष्यते। ह्रस्व इति तत्रापि संबध्यते। ततश्च "उक्तो ह्रस्वः प्रकृत्या स्वभावेन अवतिष्ठत" इति वाक्यान्तरं सम्पद्यते। फलितमाह--पदान्ता इक इत्यादिना। यदि चकारो न क्रियेत, तर्हि पदान्तस्य इकोऽसवर्णेऽचि परे ह्रस्वः स्यादित्येव लभ्यते। तस्य ह्रस्वस्य प्रकृतिभावो न लभ्येत। ततश्च चक्री-अत्रेति स्थिते ईकारस्य ह्रस्वे सति तस्य यणादेशे चक्र्यत्रेत्येव स्यात्। वक्रि-अत्रेति ह्रस्वसमुच्चितप्रकृतिभावविशिष्टं रूपं न स्यात्। इष्यते तदपि। अतः प्रकृत्येत्यनुकर्षणार्थश्चकार आवश्यक इति सूत्रकारस्य ह्रदयम्।

---

सूत्रम्

काशिका-वृत्तिः

पललसूपशाकं मिश्रे ६।२।१२८

पलल सूप शाक इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तनि भवति। गुडपललम्। घृतपललम्। घृतसूपः। मूलकसूपः। घृतशाकम्। मुद्गशाकम्। गुडेन मिश्रं पललम् गुडपललम्। भक्षेण मिश्रीकरणम् २।१।३४ इति समासः। मिश्रे इति किम्? परमपललम्।

न्यासः

पललसूपशाकं मिश्रे।, ६।२।१२७

"पल रक्षणे" (धा।पा।८३९), [पल गतौ--धा।पा।] "कलस्तृपश्च" (द।उ।८।१०७) इति वर्तमाने "वृषादिभ्यश्चित्()" (द।उ।८।१०९) इति कलप्रत्ययस्य चित्वात्? पलशब्दोऽन्तोदात्तः। "रोदेर्णिलुक्? च" (द।उ।८।३९) इति विद्यमाने "बहुलमन्यत्रापि संज्ञाच्छन्दसोः (द।उ।८।४०) इति बहुलवचनाण्णिलुक्(), च। "पानी विषिभ्यः पः" (द।उ।७।२) इत्यधिकृत्य "स्तुवो दीर्घश्च" (द।उ।७।४) इति च "सुशृभ्यां निच्च" (द।उ।७।६) [मुशृम्यामूर्च--द।उ।] इति सूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते, तेनाद्युदात्तः। "इण्भीकापाशल्यतिमर्चिभ्यः कन्()" (द।उ।३।२१) इति बहुलवचनात्? "शो तनूकरणे" (धा।पा।१२७०) अस्मादिगुपधलक्षणः कः, तेन गुडशब्दोऽन्तोदात्तः। "धृ "क्षरणे" (धा।पा।१०९६) इत्यस्मात्? "अञ्चिघृसिभ्यः क्तः" (द।उ।६।९) ति क्तः, तेन घृतमन्तोदात्तम्()। "मुदिग्रोर्गग्गौ" (द।उ।३।६६) इति मुदेर्गक्? तेन मुद्गोऽन्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

कूलसूदस्थलकर्षाः संज्ञायाम् ६।२।१२९

कूल सूद स्थल कर्ष इत्येतानि उत्तरपदानि तत्पुरुषे समासे संज्ञायां विषये आद्युदात्तनि भवन्ति। दाक्षिकूलम्। माहकिकूलम्। देवसूदम्। भाजीसूदम्। दण्डायनस्थली। माहकिस्थली। दाक्षिकर्षः। ग्रामनामधेयानि एतानि। स्थालग्रहणे लिङ्गविशिष्टत्वात् स्थालीशब्दो ऽपि गृह्यते। जानपदकुण्ड इत्यनेन ङीष्। संज्ञायाम् इति किम्? परमकूलम्।

न्यासः

कूलसूदस्थलकर्षाः संज्ञायाम्?।, ६।२।१२८

कूलशब्द उक्तस्वरः, "षूद क्षरणे" (धा।पा।१७१७) इत्यस्मात्? "इगुपदात्? कः" [३।१।१३५](), तेन सूदोऽन्तोदात्तः। "स्थल स्थाने" (()) इत्यस्मात्? पचाद्यच्(), तेन स्थलमन्तोदात्तम्()। कर्षशब्दः "कर्षात्वतो धञोऽन्त उदात्तः" इत्यन्तोदात्तः। "दाक्षिकूलम्()" इत्यादि। दाक्षिमाहकिशब्दाविञन्तावाद्युदातौ। देवशब्दः पचाद्यजन्तत्वादाद्युदात्तः। भाजीशब्दो जानपदादिसूत्रेण [४।१।४२]() ङीषन्तत्वादन्तोदात्तः। दाण्डायनशब्दो नडादित्वात्? [४।१।९९]() फगन्तः, तेन "कितः" [६।१।१५९]() इत्यन्तोदात्तः। ननु च सूत्रे स्थलशब्द उपात्तः, तत्कथं स्थलीशब्द उत्तरपदमाद्युदात्तं चोदाह्रियते? इत्याह--"स्थलग्रहणम्()" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

अकमधारये राज्यम् ६।२।१३०

कर्मधारयवर्जिते तत्पुरुषे समासे राज्यम् इत्येतदुत्तरपदम् आद्युदात्तं भवति। ब्राह्मणराज्यम्। क्षत्रियराज्यम्। अकर्मधारये इति किम्? परमराज्यम्। चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन। कुचेलम्। कुराज्यम्।

न्यासः

अकर्मधारहये राज्यम्?।, ६।२।१२९

राज्ञो भावः, कर्म वा राज्यम्(), ष्यन्तत्वादाद्युदत्तम्()। ब्राआह्णक्षत्रियशब्दौ उक्तस्वरौ। "चेलराज्य" इत्यादि।

चेलराज्यस्वरस्यावकाशः--भार्याचेलम्(), ब्राआह्मणराज्यमिति, "तत्पुरुषे तुल्यार्थ" ६।१।२ इत्यादिना विहितस्य स्वरस्यावकाशः--निष्कौशाम्बिरिति; इहोभयं प्राप्नोति--कुचेलम्(), कुराजयमिति, अव्ययस्वरो भवति पूर्वप्रतिषेधेन। आदिशब्देन वग्र्यादिस्वरपरिग्रहः॥

---

सूत्रम्

काशिका-वृत्तिः

वर्ग्याऽदयश् च ६।२।१३१

वग्य इत्येवम् आदीनि उत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदत्तानि भवन्ति। वासुदेववर्ग्यः। वासुदेवपक्ष्यः। अर्जुनवर्ग्यः। अर्नपक्ष्यः। अकर्मधारये इत्येव, परमवर्ग्यः। वर्ग्यादयः प्रातिपदिकेसु न पठ्यन्ते। दिगादिषु तु वर्ग पूग गण पक्ष इत्येवम् आदयो ये पठिताः, ते एव यत्प्रत्ययान्ता वर्ग्यादयः इह प्रतिपत्तव्या।

न्यासः

वग्र्यादयश्च। , ६।२।१३०

वग्र्यादयो दिगादियदन्ताः। तेषु ये द्व्यचस्ते "यतोऽनावः" ६।१।२०७ इत्याद्युदात्ताः। परिशिष्टास्तु "तित्? स्वरितम्()" ६।१।१७९ इत्यन्तस्वरिताः। वसुदेवस्यापत्यम्? "ऋष्यन्धक" ४।१।११४ इत्यादिनाण्(), तेन वासुदेवशब्दोऽन्तोदात्तः। "अरज अर्जने" (धा।पा।२२४) इत्यस्माच्चुरादिणिजन्तात्? "अजेर्णिलुक्? च" (द।उ।५।५७) इत्युनण्प्रत्ययः। तेनार्जुनो मध्योदात्तः। "इत्येवमादयः" इति। आदिशब्देन पक्षशब्दात्? परे ये पठ()न्ते तेषां ग्रहणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

पुत्रः पुम्भ्यः ६।२।१३२

पुत्रशब्दः पुंशब्देभ्य उत्तरस् तत्पुरुषे आद्युदत्तो भवति। कौनटिपुत्रः। दामकपुत्रः। माहिषकपुत्रः। पुत्रः इति किम्? कौनटिमातुलः। पुम्भ्यः इति किम्? गार्गीपुत्रः। वात्सीपुत्रः।

न्यासः

पुत्रः पुम्भ्यः। , ६।२।१३१

"कौनटिपुत्रः" इति। पुत्रशब्द उक्तस्वरहः। कुनटस्यापत्यं कौनटिः, तेनायमाद्युदात्तः। दामकमाहिषकशब्दावपि कन्नन्तावाद्युदात्तौ। "गार्गीपुत्रः, वात्सीपुत्रः" इति। गार्गयवात्स्यशब्दाभ्याम्? "यञश्च" ४।१।१६ इति ङीप्()। तेन गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदातौ। सर्वत्रा()स्मस्तत्पुरुषाधिकारे प्रत्युदाहरणे "समासस्य" ६।१।२१७ इत्यन्तोदात्तत्वं वेदितव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

न आचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ६।२।१३३

आचर्यः उपाद्यायः। राजा ईश्वरः। ऋत्विजो याजकाः। संयुक्ताः स्त्रीसम्बन्धिनः श्यालादयः। ज्ञातयो मातृपितृसम्बन्धिनो बान्धवाः। आचार्याद्याख्येभ्यः परः पुत्रशब्दो नद्युदात्तो भवति आख्याग्रहणात् स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणं

भवति। आचार्यपुत्रः। उपाध्यायपुत्रः। शाकटायनपुत्रः। राजपुत्रः। ईश्वरपुत्रः। नन्दपुत्रः। ऋत्विक्पुत्रः। याजकपुत्रः। होतुःपुत्रः। संयुक्तपुत्रः। सम्बन्धिपुत्रः। श्यालपुत्रः। जञातिपुत्रः। भ्रातुष्पुत्रः। ऋतो विद्यायोनिसम्बधेभ्यः ६।३।२२। इति षष्ठ्या अलुक्। पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्तत्वम् एव भवति।

न्यासः

नाचार्यराज�त्वक्संयुक्तज्ञात्याख्येभ्यः। , ६।२।१३२

पूर्वेणाचार्यादिभ्योऽपि परस्य पुत्रशब्दस्याद्युदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते। तथा च समासान्तोदात्तत्वमेव भवति। "आख्याग्रहात्()" इत्यादि। आख्याग्रहणमाचार्यादिभिः प्रत्येकमभिसम्बध्यते। तथा चाख्याग्रहणेऽनिरस्ते तस्याचार्यादेः पर्यायाणं विशेषणाञ्च ग्रहणं भवति। "आचार्यपुत्रः" इति स्वरूपस्योदाहरणम्()। "उपाध्यायपुत्रः" इति पर्यायस्य। "शाकटायनपुत्रः" इति विशेषस्य। "राजपुत्रः" इति स्वरूपस्य। "ई()आरपुत्रः" इति पर्यायस्य। "नन्दपुत्रः" इति विशेषस्य। "ऋत्विक्पुत्रः" इति स्वरूपस्य। "याजकपुत्रः" इति पर्यायस्य। "होतुःपुत्रः" इति विशेषस्य। "संयुक्तपुत्रः" इति स्वरूपस्य। "सम्बन्धिपुत्रः" इति पर्यायस्य। "स्यालपुत्रः" इति। विशेषस्य। "ज्ञातिपुत्रः" इति स्वरूपस्य। "भ्रातुष्पुत्रः" इति विशेषस्य। "कस्यादिषु च" ८।३।४८ इति षत्वम्()। तत्राचार्यशब्दः कृत्स्वरेणान्तस्वरितः। स हि चरेराङ्पूर्वस्य ण्यति व्युत्पाद्यते। उपाध्यायशब्दोऽन्तोदात्तस्थाथादिस्वरेण ६।२।१४३, स "इङश्च" ३।३।२१ इति घञन्तो व्युत्पाद्यते। राजशब्द आद्युदत्तः, कनिन्प्रत्ययान्तत्वात्()। ई()आरशब्दोऽन्तोदात्तः; "स्थेशभास" ३।२।१७५ इत्यादिना वरच्प्रत्ययान्तत्वात्()। नन्दशब्दोऽप्यन्तोदात्तः; अजन्तत्वात्()। ऋत्विक्शब्दः "ऋत्विग्दधृक्()" (३।२।५९) इत्यादिना क्विन्? प्रत्ययान्तः। कृत्स्वरेणान्तोदात्तः। याजकशब्दो ण्वुलन्तः, तेन लित्स्वरेणाद्युदात्तः। होतृशब्दस्तृन्नन्तत्वादाद्युदात्तः। संयुक्तशब्दः "गतिरन्तरः" ६।२।४९ इत्याद्युदात्तः। "स्यल वितर्कगे" (()) अस्माच्चुरादिणिजन्तात्? पचाद्यचि स्यालशब्दोऽन्तोदात्तः। "ज्ञा" इत्यस्मात्? "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इति ज्ञातिशब्दोऽन्तोदात्तः। "तृन्स्तृचौ शंसिक्षदादिभ्यः" (द।उ।२।१) इति प्रकृत्य भातृशब्दस्तृन्न्नन्तो व्युत्पाद्यते, तेनाद्युदात्तः। संयुक्तशब्दोऽयमस्त्येव रूढिशब्दो यो विवाहकृतेन सम्बन्धेन स्याल()आशुरादिषु वर्तते, अस्ति क्रियाशब्दो यः सर्वत्र केनचित्? सम्बन्धेन वर्तते; तत्रेह रूढिशब्दस्य ग्रहणम्()। कुत एतत्()? आचार्यानीनां पृथग्ग्रहणात्()। यदि हि क्रियाशब्दस्य ग्रहणं स्यात्(), तदा संयुक्तग्रहणेनैव निषिद्धत्त्वादाचार्यादीनां पृथग्ग्रहणं न कुर्यात्()। तेऽपि हि विद्यादिकृतेन सम्बन्धेन संयुक्ता भवन्त्येव। तस्माद्रूढिशब्दस्य ग्रहणम्()। तेन क्रियाशब्दो यः संयुक्तशब्दस्तस्मात्? प्रतिषेदो न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

चूर्णाऽदीन्यप्राणिषष्ठ्याः ६।२।१३४

उत्तरपदादिः इति वर्तते, तत्पुरुषे इति च। चूर्णादीनि उत्तरपदानि अप्राणिवाचिनः षष्ठ्यन्तात् पराणि तत्पुरुषे समासे आद्युदात्तानि भवन्ति। मुद्गचूर्णम्। मसूरचूर्णम्। अप्राणिषष्ठ्याः इति किम्? मत्स्यचूर्णम्। षष्ठ्याः इति किम्? परमचूर्णं। चूर्ण। करिप। करिव। शाकिन। शाकट। द्राक्षा। तूस्त। कुन्दम। दलप। चमसी। चक्कन। चौल। चूर्णादिः। चूर्णादीन्य् प्राण्युपग्रहातिति सूत्रस्य पाठान्तरम्। तत्र उपग्रहः इति षष्ठ्यन्तम् एव पूर्वाचार्योपचारेण गृह्यते।

न्यासः

चूर्णादीन्यप्राणिषष्ठ्याः। , ६।२।१३३

"चूरी दाहे" (धा।पा।११५८), अस्मान्निष्ठा, ते चूर्णमन्तोदात्तम्()। करिणः पातीति "आतोऽनुपसर्गे कः" ३।२।३ पकारस्य

पक्षे वकारो निपात्यते--करिपः, करिवः। कृत्स्वरेण थाथादिस्वरेण वान्तोदात्तः। "महेरितण्? च" (द।उ।५।१९) बहुलवचनाच्छकेरपि भवति, शाकिनम्(), प्रत्ययस्वरेण मद्योदात्तम्()। "शकादिभ्योऽटच्()" (द।उ।५।२;पं।उ।४।८१) [शकादिभ्योऽटन्()--।दौ;पं।उ।] शकटम्()। तद्वहतीति शकटवण्? शाकटम्()। प्रत्ययस्वरेणान्तोदात्तः। द्राग्द्रूतं क्षीयत इति द्राक्षा, पृषोदरादित्वात्()। अन्तोदात्तोऽयं शब्दः। "तुस ह्यस ह्लस रसशब्दे" (धा।पा।७१०, ७११,७१२,७१३), ततो बहुलवचनात्? "हसिमृग्रिणवामिदमिलूपूधुर्वीभ्यस्तन्()" (द।उ।६।७,पं।उ।३।८६) [हसिमृग्रिण्वमिदमितमिलूपूधूर्विभ्यस्तन्()--द।उ; हसिमृगरण्वामिदमूलपूर्विभ्यस्तन्()--पं।उ।] इति तन्(), निपातनाद्दीर्घश्च। तूस्तमाद्युदात्तम्()। "कुत्सितं दुनोतीति "क्विबवचिप्रच्छि" इत्यादौ सूत्रे (वा।२८८) क्विबिति योगविभागः। "दुदु उपतापे" (दा।पा।१२५६) इत्यस्मादपि क्विप्(), "बहुलवचनात्? अनित्यत्वाद्वागमशासनस्य" (व्या।प।९९) तुगभावः, पूर्वपदस्य च बहुलवचनादेव मुम्()--कुन्दु, तन्मिमीत इति "माङ्माने" (दा।पा।१०८८) इत्यस्मात्? कः, कुन्दुमोऽन्तोदात्तः। "उषिकुटिदलिकचिखजिभ्यः कपन्()" (द।उ।७।९) तेन दलप आद्युदात्तः। "अत्यविचमितमिनमि" (द।उ।९।४४) इत्यादिनाऽसच्()--चमसः, ततो जातिलक्षणो ङीष्? ४।१।६३ चमसी। "चक तृप्तौ" (धा।पा।७८३) इत्यस्मात्? कविप्(), चक्()। "कनी दीप्तिकान्तिगतिषु" (धा।पा।४६०) [कन दीप्तिकान्तिगतिषु--धा।पा।] तस्मादच्(), कनः। चककनः। चोलस्यापत्यं चौलः, "द्व्यञ्मगध" ४।१।१६८ इत्यादिनाऽण्()। एते चूर्णादयः। "मुद्गचूर्णम्()" इति। "मुदि ग्रोर्गग्गौ" (द।उ।३।६६) इति मुद्गोऽन्तोदात्तः। "मसूरचूर्णम्()" इति। "मसेरूरन्()" (द।उ।८।९५) मसूर आद्युदात्तः। "मत्स्यचूर्णम्()" इति। मत्स्यः प्रातिपदिकस्वरेणान्तोदात्तः। "तत्रोयग्रह इति षष्ठ()न्तमेव" इति। अनेन तुल्यार्थतां सूत्रयोर्दर्शयति। कथं पुनरुपग्रहः षष्ठ()न्तमेव गृह्रते? इत्याह--"पूर्वाचार्योपचारेण" इति। पूर्वाचार्या हि षष्ठ()न्तमुपग्रह इत्येवमुपचरन्ति स्म। तेनेह पूर्वा चार्योपचारेण हेतुना षष्ठ()न्तमेवोपग्रह इति गृह्रते। समासस्वरापवादो योगः एवमुत्तरेऽपि त्रयः॥

---

सूत्रम्

काशिका-वृत्तिः

षट् च काण्डादीनि ६।२।१३५

षट् पुर्वोक्तानि काण्डादीनि उत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तनि भवन्ति। काण्डं गहार्याम् इत्युक्तम्, अगर्हायाम् अपि भवति। दर्भकाण्डम्। शरकाण्डम्। चीरम् उपमानम् ६।२।१२६ इत्युक्तम्, अनुपमानम् अपि भवति। दर्भचीरम्। कुशचीरम्। पललसूपशाकं मिश्रे ६।२।१२७ इत्युक्तम्, अनुपमानम् अपि भवति। दर्भचीरम्। कुशचीरम्। पललसूपशाकं मिश्रे ६।२।१२७ इत्युक्तम्, अमिश्रे ऽपि भवति। तिलपललम्। मुद्गसूपः। मूलकशाकम्। कूलं संज्ञायाम् ६।२।१२८ इत्युक्तम्, असंज्ञायाम् अपि भवति। नदीकूलम्। समुद्रकूलम्। षटिति किम्? राजसूदः।

न्यासः

षट्? च काण्डादीनि। , ६।२।१३४

"चेलखेटकटुककाण्डम्()" (६।२।१२६) इत्यादिषु चतुर्षु योगेषु सन्निविष्टानि काण्डादीनि षट्? गृह्रन्ते। यद्येवं तैरेव योगैरेषामाद्युदात्तत्वं सिद्धम्(), तत्किमर्थमिदम्()? यत्र तैर्विहित ततोऽन्यत्रापि यथा स्यात्? प्राणिषष्ठ()आश्च मा भूदित्येवमर्थञ्च। "दर्भकाण्डम्()" इति। "दृ()दलिभ्यां भः" (पं।उ।३।१५१) इति भप्रत्ययान्तो दर्भशब्दोऽन्तोदात्तः। "तृणधान्यानाञ्च द्व्यषाम्()" (फि।सू।२।२७) इति वा। "शरकाण्डम्()" इति। शरशब्दोऽप्यनन्तरेणैव "द्व्यषाम्()" इत्याद्युदात्तः। एवं कुशशब्दोऽपि। तथा तिलशब्दोऽपि। पललमूलकशब्दावुक्तस्वरौ। नदडति पचादिषु पठ()ते, तेन टित्त्वान्नदशब्दान्ङीप्? "यस्येति च" ६।४।१४८ इत्यकारलोपः, "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इति ङीप

उदात्तत्वम्()। तेन नदीशब्दोऽन्तोदात्तः। "पाटलापालङ्काम्बासागरार्थानाम्()" (फि।सू।१।२) इति फिषा समुद्रशब्दोऽन्तोदात्तः। "राजसूदः" इति। शूदशब्दः षङ्भ्यः परः पठ()ते। तेनात्र समासान्तोदात्तत्वमेव भवति। सर्वे च ते दर्भकाण्डादयः षष्ठीसमासाः॥

---

सूत्रम्

काशिका-वृत्तिः

कुण्डं वनम् ६।२।१३६

कुण्डशब्दो ऽत्र कुण्डसादृश्येन वने वर्तते। कुण्डम् इत्येततुत्तरपदं वनवाचि तत्पुरुषे समासे आद्युदात्तं भवति। दर्भकुण्डं। शरकुण्डम्। वनम् इति किम्? मृत्कुण्डम्।

न्यासः

कुण्डं वनम्?। , ६।२।१३५

"कुण्डशब्देऽत्रि कुण्डसादृश्येतन वने वत्र्तते" इति। यथा कुण्जं कस्यचिदुदकादेराश्रयस्तथा वनमपि। अतः कुण्जसादृश्येनात्र कुण्डशब्दो वने वर्तते। भवति हि सादृश्येन ताच्छब्द्यं यथा--अग्निमणिवक इति। "मृत्कुण्डम्()" इति। अत्र कुण्ड आकारविसेषो मृद्विकारे वर्तते, न वने। तेन समासान्तोदात्तत्वमेव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

प्रकृत्या भगालम् ६।२।१३७

भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति। कुम्भीभगालम्। कुम्भीकपालम्। कुम्भीनदालम्। भगालादयो मध्योदात्ताः। प्रकृत्या इत्येतदधिकृतम् अन्तः ६।२।१४२ इति यावद् वेदितव्यम्।

न्यासः

प्रकृत्या भगालम्?। , ६।२।१३६

भगालमित्यर्थग्रहणम्(); अर्थप्रधानत्वान्निर्देशस्य, अर्थप्रधाने हि निर्देश स्वरूपग्रहणं न भवतीत्युक्तम्()। अर्थग्रहणे च सति तद्वाचिनामेतत्? कार्यं विज्ञायते। अत एवाह--"भगालवाचि" इत्यादि। "कुम्भीभागालम्()" इति। कुम्भीशब्दः "जातेरस्त्रीविषयादयोषदात्()" ४।१।६३ इति ङीषन्तत्वादन्तोदात्तः। "भगालादयो मध्योदात्ताः" इति। "लगावन्ते द्वयोश्च बहवषो गुरुः" (फि।सू।२।४२) इति फिषैषामाकारस्योदात्तत्वविधानात्()॥

---

सूत्रम्

काशिका-वृत्तिः

शितेर् नित्याबह्वज्बहुव्रीहावभसत् ६।२।१३८

शितेः उत्तरपदं नित्यं यदबह्वज् भसच्छब्दवर्जितं बहुव्रीहौ समासे तत् प्रकृतिस्वरम् भवति। शितिपादः। शित्यंसः। शित्योष्ठः। पादशब्दो वृषादित्वादद्युदात्तः। अंसौष्ठशब्दौ च प्रत्ययस्य नित्त्वात्। शितेः इति किम्? दर्शनीयपादः। नित्यग्रहणम् किम्? शितिककुत् ककुदस्य वस्थायां लोपो विधीयते। तत्र अवस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपदं भवति इति तेन न नित्याबह्वच्। अबह्वचिति किम्? शितिललाटः। बहुव्रीहौ इति किम्? शितेः पादः

शितिपादः। अभसतिति किम्? शितिभसद्। शितिशब्द आद्युदात्तः। पूर्वपदप्रकृतिस्वरापवादो योगः।

न्यासः

शितेर्नित्याबह्वज् बहुव्रीहावभसत्?। , ६।२।१३७

"शितिपादः" इति। शितिशब्दः "वर्णानां तणतिनितान्तानाम्()" (फि।सू।२।३३) इति फिषाद्युदात्तः। "अंसौष्ठशब्दौ" इत्यादि। "अम रोगे" (धा।पा।१७२०) इत्यस्मात्? "अमः सन्()" (पं।उ।५।२१) इति सन्प्रत्ययान्तोऽसशब्दो व्यत्पाद्यते। ओष्ठशब्दोऽपि "उषिकुषिगर्त्तिब्यस्थन्()" (द।उ।६।२९) इति थन्प्रत्ययान्तः। तेनैतौ प्रत्ययस्य नित्वादाद्युदात्तौ। "दर्शनीयपादः" इति। दर्शनीयशब्दोऽनीयर्? प्रत्ययन्तः। तेन "उपोत्तमं रिति" ६।१।२११ इति मध्योदात्तः। ततोऽत्र पूर्वपदस्य प्रकृतिस्वर एव भवति। एवमुत्तरेष्वपि प्रत्युदाहरणेषु। कथं पुनः ककुदशब्दो नित्यं बह्वज्? न भवति? इत्याह--"ककुदस्यावस्थायां लोपः" इत्यादि। "शितिललाटः" इति। "लल ईप्सायाम्()" (धा।पा।१६८७), अस्मात्? "उणादयो बहुलम्()" ३।३।१ इत्याटप्रत्ययः, तेन ललाटशब्दो मद्योदात्तः। "शितिपादः" इति। शितेः पाद इत्यत्र समासस्वर एव भवति। "शितिभसत्()" इति "शृ()दृ()भसोदिः" (द।उ।६।४२) इति भसच्छब्दो व्युत्पाद्यते। ततोऽयमन्तोदात्त-॥

---

सूत्रम्

काशिका-वृत्तिः

गतिकारकौपपदात् कृत् ६।२।१३९

तत्पुरुषे इति वर्तते, न बहुव्रीहौ इति। गतेः कारकातुपपदात् च कृदन्तम् उत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति। प्रकारकः। प्रकरणम्। प्रहारकः। प्रहरणम्। कारकात् इध्मप्रव्रश्चनः। पलाशशातनः। श्मश्रुकल्पनः। उपपदात् ईषत्करः। दुष्करः। सुकरः। सर्वत्र एव अत्र लित्स्वरः। गतिकार कोपपदातिति किम्? देवदत्तस्य कारकः देवदत्तकारकः। देवदत्तस्य इति शेषलक्षण षष्ठी। कृद्ग्रहणं विस्पष्टार्थम्। प्रपचतितराम्, प्रपचतितमाम् इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादाम्। तत्र सति शिष्टत्वादाम एव स्वरो भवति इत्येके। प्रपचतिदेश्याद्यर्थं कृद्ग्रहणं दृश्यत एव।

न्यासः

गतिकारकोपपदात्कृत्?। , ६।२।१३८

"प्रकारकः, प्रहारकः" इति। ण्वुल्()। "प्रकरम्()" इत्यादिषु ल्युट्()। "ईषत्करः" इत्यादिषु "ईषद्()दुःसुषु" इति खल्()। यदत्राव्ययपूर्वपदं तत्र "तत्पुरुषे तुल्यार्थ" २।२।१७ इति समासः। "कारकात्()" इति। षष्ठी तु "कर्त्तुकर्मणोः कृति" २।३।६५ इति कर्मणि कारके वेदितव्या। इध्मादयो हि व्रश्चनक्रियाया व्याप्तुमिष्टतमत्वात्? कर्मबावमनुभवन्ति। "ईषत्करः" इत्यादौ तु "उपपदमतिङ्()" २।२।१९ इति समासः। तत्र प्रशब्दः "उपसर्गाश्चाभिवर्जम्()" (फि।सू।४।८१) इत्याद्युदात्तः। इध्मशब्दो हि "इषियुधीन्धि" (द।उ।७।३१) इत्यादिना मक्प्रत्ययान्तत्वादन्तोदात्तः। "शो तनूकरणे" (दा।पा।११४५), पलं श्यतोति [श्यतोति--मुद्रीतः पाठः] "आतोऽनुपसर्गे कः" ३।२।३। पलाशः कृत्स्वरेणथाथादिस्वरेण ६।२।१४३ वान्तोदात्तः। शदेर्णिजन्तस्य "शदेरगतौ तः ७।३।४२ इति तकारे कृते ल्युटि "शातनः" इति भवति। "श्मनि श्रयतेर्डन्()" (द।उ।१।१६१) इति लत्वे कृते "कल्पनः" इति भवति। ईषच्छब्दोऽन्तोदात्तः; स्वरादिषु तथाभूतेषु तथांभूतस्यैव पाठात्()। सुदुरावाद्युदात्तौ; प्रादिषु तथाभूतयोः पाठात्()। "सर्वत्रैवात्र लित्स्वरः" इति। स पुनः प्रत्ययात्? पूर्वस्योदात्तत्वम्()। "देवदत्तस्येति सेषलक्षणा षष्ठी" इति। कर्मणि षष्ठीत्वं निराकरोति। कर्मषष्ठ()आं ह्रस्यां कारकमेव देवदत्तः स्यात्(), तथा च प्रत्युदाहरणं नोपपद्यते। अथ कारकग्रहणं किमर्थम्(), निर्गतः कौशाम्ब्या निष्कौशाम्बिरित्यत्र मा भूदिति चेत्()?

नैतदस्ति; तथा हि--यात्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति (जै।प।वृ।९९), न हि कौशाम्बीशब्दः क्रियावाची, तत्? कुतस्तं प्रति निसोऽत्र गतिसंज्ञा? इत्यत आह--"कृद्ग्रहणं विस्पष्टार्थम्()" इति। यदि तर्हि कृद्ग्रहणं क्रियते, प्रपचतितरामित्यत्र परकृतिसवरो न प्राप्नोति। ततश्च समासस्वरं बाधित्वाव्ययस्वर एव स्यात्()? इत्यत आह--"प्रपचतितराम्()" इत्यादि। अत्र हि पचतिशब्दादतिशयविवक्षायां तरप्तपमौ। ततसतरबाद्यन्ते "कुगतिप्रादयः" २।२।१८ इति प्रशबदस्य समासः। समासे तु कृते पूर्वपदस्य "तत्पुरुषं तुल्यार्थ" ६।२।२ इत्यादिना प्रकृतिस्वरः। पश्चात्? "किमेत्तिङ्व्यय" ५।४।११ इत्यादिनामुः। आमन्तसय च "आद्युदात्तश्च" ३।१।३ इति प्रत्ययसवरः प्राप्रः, सोऽव्ययसवरे सति सतिशिष्टः, सतशिष्टस्य च बलीयस्त्वमुक्तम्()। तेन यद्यप्यनेनामन्तस्य कृद्ग्रहणे क्रियमाणे सति प्रकृतिस्वरो भवति, तथाप्याम्स्वरो भवत्येव; तस्य सतिशिष्टत्वात्()। अथ कथं तरवाद्यन्तेन समासः? कथं च न स्यात्()? "गतिकारकोपपदादीनां कृद्भिः सह समासवचनं प्राक्सुब#उत्पत्तेः" (है।प।पा।८८) इति वचनात्()? नैष दोषः; अत्र हि द्वे दर्शने गतिकारकोपपदात्? कृद्भिरेव समासो भवति, स च प्राक्? सुबुत्पत्तेरित्येकं दर्शनम्(); गतिकारकोपपदानामविशेषेण समासो भवति, कृद्भिस्तु प्राक्? सुबुत्पत्तेरिति द्वितीयम्()। तत्र द्वितये दर्शने युज्यत एव तरबाद्यन्तेन समासः। तत्र कृद्ग्रहणं विस्पष्टार्थमित्यनेन सम्बद्धम्()। एक आचार्याः कृद्ग्रहणं विस्पष्टार्थमित्येव व्याचक्षत इत्यर्थः। "प्रपचतिदेश्याद्यर्थ तु" इत्यादि। तुशब्दः पूर्वस्माद्? व्याख्यानाद्विशेषद्योतनाय। प्रपचतिदेश्य आदिर्यस्य स प्रपचतिदेश्यादिः। आदिशब्देन प्रपचतिदेशीय इत्यस्य ग्रहणम्()। प्रपचतिदेश्यादावर्थः प्रयोजनं यस्य तत्? प्रपचतिदेश्याद्यर्थम्()। "कृद्ग्रहणं दृश्यते" इति। एवं "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" ५।३।६७ इत्यत्र "तिङ्श्च" (५।३।५६) इत्यनुवृत्तेः प्रपचतिशब्दाद्? देश्यदेशीयरौ। तदन्तेन च प्रशब्दस्य गतिसमासे कृद्ग्रहणं न क्रियेत। तथा प्रपचतिदेश्यः, प्रपचतिवेशीय इत्यत्राप्युत्तरपदस्य प्रकृतिस्वरः स्यात्(), न चेष्यते। तस्मादिह मा भूदित्येवमर्थं कृद्ग्रहणं दृश्यत एव। तस्मादेतन्न विस्पष्टार्थम्()। तदपि तु प्रपचतिदेश्य इत्यादौ विषये मा भूदित्येवमर्थ मित्यभिप्रायः॥

---

सूत्रम्

काशिका-वृत्तिः

उभे वनस्पत्यादिषु युगपत् ६।२।१४०

प्रकृत्या इति वर्तते। वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः। वनस्पतिः। वनपतिशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात् सुट्। बृहस्पतिः। बृहतां पतिः। तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च इति सुट् तकारलोपश्च। बृहदित्येतदन्तोदात्तं निपातयन्ति। तस्य केचिदाद्युदात्तत्वं वर्णयन्ति। शचीपतिः। शचीशब्दः कृदिकारादक्तिनः इति ङीषन्तत्वादन्तोदात्तः। केचित् तु शार्ङ्गरवादिसु पठन्ति तेषाम् आद्युदात्तः। तनूनपात्। तनोतेरौणादिकः ऊप्रत्ययः, तेन तनूशब्दो ऽन्तोदात्तः। न पाति न पालयति वा नपात् क्विबन्तः। नभ्राण्नपाद् ६।३।७४ इत्यादिना आद्युदात्तो निपातितः। तन्वा नपात् तनूनपात्। नराशंसः। नरा अस्मिनासीनाः शंसन्ति, नरा एवं शंसन्ति इति वा नराशंसः। नॄ नये। अबन्तो नरशब्दः आद्युदात्तः। शंसशब्दो ऽपि घञन्तः। अन्येषाम् अपि दृश्यते इति दीर्घत्वम्। शुनःशेपः। शुन इत्व शेपः अस्य इति बहुव्रीहिः। तत्र शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम् ६।३।२० इति षष्ठ्या अलुक्। उभावाद्युदात्तौ। शण्डामर्कौ। शण्डमर्कशब्दौ घञन्तत्वादाद्युदात्तौ। तयोर् द्वन्द्वे अन्येषाम् अपि दृश्यते इति दीर्घत्वम्। तृष्णावरूत्री। तृष्णाशब्द आद्युदात्तः। वरूत्रीशब्दो ग्रसितादिसूत्रे निपातितो ऽन्तोदात्तः। तत्र द्वन्द्वे दीर्घत्वं पूर्ववत्। बम्बाविश्ववयसौ। बम्बशब्दो ऽन्तोदात्तः। विश्ववयःशब्दो ऽपि बहुव्रीहौ विश्वं संज्ञायाम् ६।२।१०६ इति विश्वशदो ऽन्तोदात्तः। तयोर् द्वन्द्वे दीर्घत्वं पूर्ववत्। मर्मृत्युः। मरिति मृञो विच्प्रत्ययः। मृत्युशब्दो ऽन्तोदात्तः। द्वन्द्वानामदेवताद्वन्द्वार्थो ऽनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः।

न्यासः

उभे वनस्पत्यादिषु यूगपत्?। , ६।२।१३९

वनशब्दः "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्याद्युदात्तः। पतिशब्दोऽपि प्रत्ययस्वरेण। स "पातेर्डतिः" (द।उ।१।२७) इति डतिप्रत्ययान्तः। "बृहदित्यन्तोदात्तम्? इत्यादि। बृहच्छब्दः "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" (द।उ।६५) इति केवलमन्तोदात्तो यदयपि निपात्यते, तथापि बृहस्पतिरित्यत्राद्युदात्तत्वं निपातयति। "तनोतेरौणादिक ऊप्रत्ययः" इति। "कषिचमितनिषनिसर्जिखर्जिभ्यौउः" (पं।उ।१।८२) इत्यनेन तनू शब्दोऽन्तोदात्तः। न पाति न पालयतीत्यनेन "पा रक्षणे" (धा।पा।१०५६) इत्यसमान्नपादित्येतन्निपात्यत इति दर्शयति। न पातयतीत्यनेनापि। "नलोपो नञः" ६।३।७२ ति नलोपः प्राप्नोति, "नभ्राान्नपात्()" ६।३।७४ इत्यादिना प्रकृतिभावान्न भवति। "नरा अस्मिन्नासीनाः शंसन्ति" इति। एतेनाधिकरणसाधनं शंसशब्दं दर्शयति। एवं शंसन्तीत्यनेनापि कर्मसाधनम्()। "शंस स्तुतौ" (धा।पा।७२८) इत्यस्मात्? "अंकत्र्तरि च कारके" ३।३।१९ इति घञ्()। "अबन्तः" इति। "ऋदोरप्()" ३।३।५७ इत्यनेन। "शुनःशेपः" इति। बहुव्रीहिरयम्()। तेनात्र पूर्वपदस्य प्रकृतिभावे प्राप्ते वचनम्()। "उभावाद्युदात्तौ" इति। तत्र ()आञ्शब्दः "()आन्नुक्षन्()" (द।उ।६।५५) इत्यादिना कनिन्प्रत्ययान्तो व्युत्पाद्यते। शेपशब्दो "वृङ्शीङभ्यां रूपस्वाङ्गयोः पुट्? च्()" (द।उ।९।६१) इत्यसुन्()प्रत्ययान्तो व्युत्पाद्यते, तेन द्वावपि तावाद्युदात्तौ। "शण्डपर्कशब्दौ" इति। "शडि रुजायाम्()" (धा।पा।२७९) इत्यस्य घञि शण्ड इति भवति। "पृची सम्पर्के" (धा।पा।१४६२) इत्यस्यापि तत्रैव परक इति भवति। "तृष्णाशब्द आद्युदात्तः" इति। स हि तृषेर्निष्ठायां व्युत्पद्यते। तेन "निष्ठा च द्व्यजनात्()" ६।१।१९९ इत्याद्युदात्तः। "वम्बशब्दः" इति। "लवि अवरुआंसने" (धा।पा।३७९) [लबि अवरुआंसने च--धा।पा।] अस्य पचाद्यचि व्युत्पादित्वादस्मादेव निपातनाद्वत्त्वम्()। "वि()आवयःशब्दः" इति। वि()आं वयो यस्येति बहुव्रीहिः। तत्र "बहुव्रीहौ वि()आं संज्ञायाम्()" ६।२।१०६ इति वि()आशब्दोऽन्तोदात्तः। "तयोः" इति। वम्बवि()आयःशब्दयोः। "मृङो विच्प्रत्ययः" [मृञः--काशिका। मृङः--पदमञ्जरी] इति। "विजुपे छन्दसि" ३।२।७३ इत्यतो विजित्यनुवर्तमाने "अन्येभ्योऽपि दृश्यते" ३।२।७५ [दृश्यन्ते--काशिका।] इति विच्()। "मृत्युशब्दोऽन्तोदात्तः" इति। "भुजीमृङ्भ्यां युक्त्युकौ" (द।उ।१।१३५) इति त्युक्प्रत्ययान्तत्वात्()। "द्वन्द्वानाम्()" इत्यादि। येऽत्र द्वन्द्वाः, तेषामदेवताद्वन्द्वार्थः पाठः। देवताद्वन्द्वे हि "देवताद्वन्द्वे च" ६।२।१४० इत्यनेनैव सिद्धम्()। "अनुदत्ताद्युत्तरपदार्थश्च" इति। द्वन्द्वानां पाठः। यदि हि तेषामिह पाठो न स्यात्(), तदा "नोत्तरपदेऽनुदात्तादौ" ६।२।१४१ इति प्रतिषेदादन्तोदात्तत्वं स्यात्()॥

---

सूत्रम्

काशिका-वृत्तिः

देवताद्वन्द्वे च ६।२।१४१

देवतावाचिनां यो द्वन्द्वस् तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। ऋज्रेन्द्राग्र इति इन्द्रशब्दः आद्युदात्तो निपातितः। सोम इति मन्प्रत्ययान्तः। वरुण उनन्प्रत्ययान्तः, तेन आद्युदात्तः बृहस्पतिशब्दे वनस्पत्यादित्वात् द्वावुदात्तौ, तेन इन्द्राबृहस्पती इत्यत्र त्रय उदात्ता भवन्ति। देवताग्रहणं किम्? प्लक्षन्यग्रोधौ। द्वन्द्वग्रहणं किम्? अग्निष्टोमः।

न्यासः

देवताद्वन्द्वे च। , ६।२।१४०

"इन्द्रासोमौ" इति। "देवताद्वन्द्वे च" इति पूर्वपदस्यानङ्()। "ऋज्रेन्द्र" इत्यादि। "वृधिवपिभ्यां रन्()" (द।उ।८।४५), इत्यतो रन्नित्यनुवर्तगाने "ऋज्रेन्द्रः" (द।उ।८।४६) इतीन्द्रशब्दो रन्प्रत्ययान्तो निपात्यते, तेनाद्युदात्तः। "सोम इति

मन्प्रत्ययान्तः" इति। तेन सोऽप्याद्युदात्त एवेत्यभिप्रायः। मन्प्रत्ययान्तत्वं च तस्य "षुञ्? अभिषवे" (धा।पा।१२४७) इत्यस्मात्? "अर्तिस्तुसुहुरुआउ" (द।उ।७।२६) इत्यादिना मन्प्रत्ययमुत्पाद्य व्युत्पादितत्वात्()। "वरुण उनन्प्रत्ययान्तः" इति। "कृवृदारिभ्य उनन्()" पं।उ।३।५३) इति। बृहस्पतिशब्दो हि वनस्पत्यादिषु पठ()ते, तत्र च पूर्वोत्तरपदयोर्युगपदाद्युदात्तत्वं विधीयते, तेन द्वावुदात्तौ। "तेनेन्द्राबृहस्पती इत्यत्र तत्र उदात्ताः" इति। इन्द्रशब्दादयः। "प्लक्षन्यग्रोधौ" इति। अत्र समासान्तोदात्तत्वमेव भवति। एवं "अग्निष्टोमः" इत्यत्रापि। षष्ठीसमासश्चायम्()। समासस्वरापवादो योगः॥

---

सूत्रम्

काशिका-वृत्तिः

न उत्तरपदे ऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ६।२।१४२

उत्तरपदे ऽनुदात्तादौ पृथिवी रुद्र पूषमन्थिवर्जिते देवताद्वन्द्वे न उभे युगपत् प्रकृतिस्वरे भवतः। इन्द्राग्नी। इन्द्रवायू। अग्निवायुशब्दौ अन्तोदात्तौ। उत्तरपदग्रहणम् अनुदात्तादौ इत्युत्तरपदविशेषणं यथा स्यात्, द्वन्द्वविशेषणं मा भूतिति। अनुदात्तादौ इति विधिप्रतिषेधयोः विषयविभागार्थम्। अपृथिव्यादिषु इति किम्? द्यावापृथिव्यौ। द्यावाशब्द आद्युदात्तो निपातितः। पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः। रुद्र सोमारुद्रौ। रोदेर्णिलुक् च इति रुद्रशब्दो रक्प्रत्ययान्तो ऽन्तोदात्तः। पूषन् इन्द्रापूषणौ। स्वन्नुक्षन्पूषनिति पूषान्तोदात्तो निपात्यते। मन्थिन् शुक्रामन्थिनौ मन्थो ऽस्य अस्ति इति मन्थी। इन्नतत्वादन्तोदात्तः। पृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव।

न्यासः

नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु। , ६।२।१४१

"अग्निवायुशब्दावन्तोदात्तौ" इति। अग्निशब्दः "वीज्याज्वरिभ्यो निः" (द।उ।१।१८) इति वर्तमाने "अङ्गेर्नलोपश्च" (द।उ।१।२०) इति निप्रत्ययान्तः। वायुशब्दोऽपि "कृवापाजि" (द।उ।१।८६) इत्यादिनोण्प्रत्ययान्तः, तेन प्रत्ययस्वरेण द्वावप्यन्तोदात्तौ। अथोत्तरपदग्रहणं किमर्थम्(), यावता "अनुदात्तादौ" इति सप्तम्येवात्रानुदात्तादेरपदत्त्वं बोधयिष्यति? इत्यत आह--"उत्तरपदग्रहणम्()" इत्यादि। इह हि प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, नोत्तरपदम्()। तत्रानुदात्तादाविति सप्तमी द्वग्द्वस्यैव विशेषणमापद्यते--अनुदात्तादौ द्वन्द्वः। उत्तरपदग्रहणे तु सति द्वन्द्वे सप्तम्यांविहितायामनुदात्ता(दा) वित्येतदुत्तरपदस्य विशेषणं सम्पद्यते। तस्मादुत्तरपदविशेषणमेतद्यथा स्तात्(), द्वन्द्वविशेषणं मा भूदित्येवमर्थमुत्तरपदग्रहणम्()। "अनुदात्तादौ" इति। असत्येतस्मिन्नविशेषणे विधिरपि देवताद्वन्द्व उच्यते, प्रतिषेधोऽपि, ततश्च तयोर्विषयविबागो न स्यात्(); एवञ्च समानविषयत्वाद्विकल्पः प्रसज्येत। अनुदत्तादावित्य()स्मस्तु सति यत्रानुदात्ताद्युत्तरपदो देवताद्वन्द्वस्तग्त्र प्रतिषेधः स्यात्(), ततोऽन्यस्तु विधिरिति विधिप्रतिषेधयोर्विषयविभागो भवति। अतो विषयविबागार्थमनुदात्तादावित्युच्यते। "पृथिवीशब्दो ङीष्प्रत्ययान्तः" इति। गौरादिषु पाठात्()। "रोदेर्णिलुक्? च" इति। "रुदिर्? अश्रुविमोचने" (धा।पा।१०६७) इत्यस्माण्ण्यन्तात्? "स्फायितञ्चि" (द।उ।८।३१) इत्यादि--सूत्रद्रगित्यनुवर्तमाने "रोदेर्णिलुक्? च" (द।उ।८।३९) इति रक्(), तेन रुद्रोऽन्तोदात्तः। "शुक्रामन्थिनौ" इति। शुक्रशब्दः "ऋजेन्द्रः" (द।उ।८।४६) इत्यादिना रन्()प्रत्ययान्तः, तेनाद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तः ६।२।१४३

अन्तः इत्यधिकारः। यदित ऊर्ध्वम् अनुक्रमिष्यामस् तत्र समासस्य उत्तरपदस्य अन्तः उदात्तः भवति इत्येवं तद् वेदितव्यम्। वक्ष्यति थाथघञ्क्ताजबित्रकाणाम् ६।२।१४३ इति। सुनीथः। अवभृथः।

न्यासः

अन्तः। , ६।२।१४२

---

सूत्रम्

काशिका-वृत्तिः

थाथघञ्क्ताजबित्रकाणाम् ६।२।१४४

थ अथ घञ् क्त अचपित्र क इत्येवम् अन्तानाम् उत्तरपदानां गतिकारकोपपदात् परेषाम् अन्तः उदात्तो भवति। सुनीथः। अवभृथः। हनिकुषिनीरमिकाशिभ्यः क्थनिति अवे भृञः इति च क्थन्प्रत्ययान्तावेतौ। तत्र कृदुत्तरपदप्रकृतिस्वरत्वेन आद्युदात्तम् उत्तरपदं स्यात्। अथ आवसथः उपवसथः। उपसर्गे वसेः इति अथन्प्रत्ययः घञ् प्रभेदः। काष्ठभेदः। रज्जुभेदः। क्त दूरादागतः। आतपशुष्कः। विशुष्कः। अच् प्रक्षयः। प्रजयः। क्षयो निवासे ६।१।१९५ जयः करणम् ६।१।१९६ इति च आद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः। अप् प्रलवः। प्रसवः। इत्र प्रलवित्रम्। प्रसवित्रम्। क गोवृषः। खरीवृषः। गां वर्षति, खरीं वर्षति इति मूलविभुजादित्वात् कप्रत्ययः। प्रवृषः। प्रहृषः। इगुपध इति कप्रत्ययः। वृषादीनां च ६।१।१९७ इति वृषशब्दः आद्युदात्तः। गतिकारकोपपदातित्येव, सुस्तुतं भवता। कर्मप्रवचनीये अव्ययस्वरः एव भवति।

न्यासः

थाथघञ्क्ताजबित्रकाणाम्? , ६।२।१४३

"अत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यात्()" इति। यदीदं नारभ्येतेति भावः। "उपसर्गे वसेः इत्यथप्रत्ययः" इति। तत्र "शीङ्शपिरुगमिवञ्चि" (द।उ।६।३८) इत्यादिनाऽथप्रत्यया नुवृत्तेः कृदुत्तरपदप्रकृतिसवरत्वेन मध्योदात्तमुत्तरपदं स्यात्()। "दूरादागतः" इति। गमेः क्तः, "अनुदात्तोपदेश" ६।४।३७ इत्यादिनाऽनुनासिकलोपः, आगतशब्देन "स्तोकान्तिकार्थ" २।१।३८ इत्यादिना समासः, "पञ्चम्याः स्तोकादिभ्यः" ६।३।२ इत्यलुक्()। "शुष्कः" [विशुष्कः--काशिका, पदमञ्जरी च] इति। "शुषः कः" ८।२।५१ इति कादेशः। उभयत्रात्र कर्मणि निष्ठा। तत्र "गतिरनन्तरः" ६।२।४९ इति प्राप्ते तदपवाद उत्तरपदान्तोदात्तत्वं विधीयते। यदा तु कर्तरि क्तः, तदा तु कृत्स्वरेणोत्तरपदस्य प्रकृतिभावे सत्यन्तोदात्तत्वं सिद्धमेव। ननु च शुषिरकर्मकः, तस्य कुतः कर्मणि निष्ठा? अन्तरभावितण्यर्थः सकर्मको भवतीत्यदोषः। "आतपशुष्कम्()" [आतपशुष्कः--काशिका, पदमञ्जरी च] इति। "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। अत्र "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना पूर्वपदं पूर्वपदप्रकृतिस्वरं स्यात्()। पूर्वपदं पुनरत्र पचाद्यजन्तत्वात्? कृत्स्वरेणान्तोदात्तः। "प्रक्षयः, प्रजयः" इति। "एरच्()" (३।३।५६) ननु च कृदुत्तरपदप्रकृतिस्वरत्वेनैवात्रोत्तरपदान्तोदात्तत्वं भविष्यति? इत्यत आह--"क्षयो निवासे" इत्यादि। यदा "क्षयो निवासे" ६।१।१९५ "जयः करणम्()" ६।१।१९६ इति चादयुदात्तौ क्षयजयशब्दौ भवतः, तदा कृत्स्वरेण मध्योदात्तत्वं स्यात्()। "प्रलवित्रम्(), प्रसवित्रम्()" इति। "अर्तिलूधूसूखन" ३।२।१८४ इत्यादिनेत्रः। अत्र कृत्स्वरे सति प्रत्ययस्वरं स्यात्()। तेनोत्तरपदं मध्योदात्तं स्यात्()। "गोवृषः" इति। "पृषु वृषु मृषु सेचने" (धा।पा।७०५,७०६,७०७), अत्र "उपपदमतिङ्()" (२।२।१९) इति समासः "गतिकारकोपपदात्? कृत्()" ६।२।१३८ इत्युत्तरपदाद्युदात्तत्वं स्यात्()। "सुस्तुतम्()" इति। "सुः पूजायाम्()" १।४।९३, "अतिरतिक्रमणे च" १।४।९४ इति स्वती कर्मप्रवचनीयसंज्ञौ। "अत्राव्ययस्वर एव भवति" इति। "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना॥

---

सूत्रम्

काशिका-वृत्तिः

सूपमानात् क्तः ६।२।१४५

सु इत्येतस्मादुपमानाच् च परं क्तान्तम् उत्तरपदम् अन्तोदात्तं भवति। सुकृतम्। सुभुक्तम्। सुपीतम्। उपमानात् वृकावलुप्तम्। शशप्लुतम्। सिंहविनर्दितम्। सुशब्दात् गतिरनन्तरः ६।२।४९ इति प्राप्ते उपमाना दपि तृतीया कर्मणि ६।२।४८ इत्ययम् अपवादः। गतिकारकोपपदातित्येव, सुस्तुतं भवता।

न्यासः

सूपमानात्? क्तः। , ६।२।१४४

"सुपीतम्()" इति। "घुमास्था" ६।४।६६ इत्यादिसूत्रेणेत्वम्()। "वृकावलुप्तम्()" इति। "लुप्लृच्छेदने" (धा।पा।१४३१)। "शशप्लुतम्()" इति। "च्युङ् जयुङ्? प्रुङ्? प्लुङ्? गतौ" (धा।पा।९५५,९५६,९५७,९५८)। "सिंहविनर्दितम्()" इति। "नर्द शब्दे" (धा।पा।५६) सर्वत्र "कर्तृकरणे कृता बहलम्()" २।१।३१ इति समासः। वृकैरिवावप्लुतमित्यादिर्विग्रहः॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् अनाचितादीनाम् ६।२।१४६

संज्ञायां विषये गतिकारकोपपदाद् क्तान्तम् उत्तरपदम् अन्तोदात्तं भवति आचितादीन् वर्जयित्वा। सम्भूतो रामायणः। उपहूतः शाकल्यः। परिजग्धः कौण्डिन्यः। सम्भूतः इति प्रत्यर्थात् भवतेः कर्मणि क्तः। गतिरनन्तरः ६।२।४९ इत्यत्र हि कर्मणि इत्यनुवर्तते, तद्बाधनार्थं चेदम्। धनुष्खाता नदी। कुद्दालखातं नगरम्। हस्तिमृदिता भूमिः। तृतीया कर्मणि ६।२।४८ इति प्राप्तिरिह बाध्यते। अनाचितादीनाम् इति किम्? आचितम्। अप्र्याचितम्। आस्वापितम्। परिगृहीतम्। नरुक्तम्। प्रतिपन्नम्। प्राश्लिष्टम्। उपहतम्। उपस्थितम्। संहिता ऽगवि। संहिताशब्दो यदा गोरन्यस्य संज्ञा तदा अन्तोदत्तो न भवति। यदा तु गोः संज्ञा तदा अन्तोदात्त एव।

न्यासः

संज्ञायामनाचितादीनाम्?। , ६।२।१४५

"उपहूतः" इति। ह्वेञो निष्ठा, "वचिस्वपि" ६।१।१५ इत्यादिना संप्रसारणम्(), "हलपः" ६।४।२ इति दीर्घः। "परिजग्धः" इति। "अदो जग्धिर्ल्यप्ति किति" २।४।३६ इत्यदेर्जग्धिरादेशः। "झषस्ततोर्धोऽधः" ८।२।४० इति घत्वम्()। "कर्मणि क्तः" इति। भवतेरकर्मकत्वात्? कर्मनिष्ठा नोपपद्यत इति सम्भूत इति कर्तरीयं निष्ठेति कस्यचिद्भ्रमः स्यात्(), अतस्तन्निराकरणायाह--"सम्भूतः" इति। अनेकार्थत्वाद्धातूनां भवतिरत्र प्राप्तौ वर्तते। ये च प्राप्त्यर्थास्ते नियोगतः प्राप्त्यैव कर्मणा सकर्मका सकर्मका भवन्ति। यथा--"णीञ्? प्रापणे" (धा।पा।९०१) इत्येवमादयः। तास्मात्? प्राप्त्यर्थाद्भवतेः सम्भूत इत्यत्र कर्मणि क्त-। किं पुनः कारणं कर्मणि क्त इष्यते? इत्याह--"गतिरनन्तर इत्यत्र कर्मणीत्यनुवर्तते" (इति। ततः किम्()? इत्याह--"तद्बाधनार्थं चेदम्()" इति। "गतिरनन्तरः" ६।२।४९ इत्यत्र हि कर्मणीत्यनुवर्तते। इदं च सूत्रं, तत्? "गतिरनन्तरः" ६।२।४९ इत्यस्यैव बाधनार्थम्()। एवं चैतद्गतिस्वरस्य बाधकं भवति, यदि कर्मणि क्तो विहितः। तदन्तस्योत्तरपदस्यानेनान्तोदात्तत्वं विधीयते, नान्यथा। तस्मात्? सम्भूत इत्यत्र कर्मणि क्तो द्रष्टव्य इत्यभिप्रायः। "धनुष्खाता" इति। "खन्? अवदारणे" (धा।पा।८७८) "जनसनखनाम्()" ६।४।४२ इत्यात्तवम्()। "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। एवं "कुद्दालखाता" इत्येवमादादपि। धनुःशब्दः "नब्विषयस्यानिसन्तस्य"

(फि।सू।२।२६) इत्याद्युदातद्तः। कुद्दालशब्दः "लघावन्ते" (फि।सू।२।४२) इत्यादिना मध्योदात्तः। "हस्तिमृदिता" इति। "मृद क्षोदे" (धा।पा।१५१५), हस्तिशब्द "हस्ताज्जातौ" ५।२।१३२ इतीनिपरतययान्ततवादन्तोदात्तः। "आस्थापितम्()" इति। तिष्ठतेर्णिटच्(), "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्()। "परिगृहीतम्()" (इति। "ग्रहोऽलिटि दीर्घः" ६।२।३७। "निरुक्तम्()" (इति)। "वच परिभाषणे" (धा।पा।१८४२), "वचिस्वपि" ६।१।१५ इत्यादिना सम्प्रसारणम्(), "चोः कुः" ८।२।३०। "प्रतिपन्नम्()" इति। "पद गतौ" (धा।पा।११६९), "रदाभ्याम्()" ८।२।४२, इति नत्वम्()। "प्रश्लिष्टम्()" इति। "ष्लिष आलिङ्गने" (धा।पा।११८६)। "उपद्रूतम्()" इति। "दु द्रु गतौ" (धा।पा।९४४),९४५) "स्थितम्()" इति। "द्यतिस्यति" ७।४।४० इत्यादिनेत्त्वम्()। "संहिता" इति। दधातेर्हिरादेशः॥

---

सूत्रम्

काशिका-वृत्तिः

प्रवृद्धादीनां च ६।२।१४७

प्रवृद्धादीनां च क्तान्तम् उत्तरपदम् अन्तोदात्तं भवति। प्रवृद्धं यानम्। प्रवृद्धो वृषलः। प्रयुक्ताः सक्तवः आकर्षे अवहितः। अवहितो भोगेसु। खट्वारूढः। कविशस्तः। यानदीनाम् अत्र गणे पाठः प्रायोवृत्तिप्रदर्शनार्थः, न विषयनियमार्थः। यानादिभ्यो ऽन्यत्र अपि तेषाम् अन्तोदात्तत्वम् भवत्येव। विषयनियमार्थ एव इत्येके। असंज्ञार्थो ऽयम् आरम्भः। आकृतिगणश्च प्रवृद्धादिर् द्रष्तव्यः। तेन पुनरुत्स्यूतं वासो देयम्, पुनर्निष्कृतो रथः इत्येवम् आदि सिद्धं भवति।

न्यासः

प्रवृद्धादीनां च। , ६।२।१४६

गतिस्वरे प्राप्त इदं वचनम्()। "प्रवृद्धम्()" इति "वृधु वृद्धौ" (धा।पा।७५९) "प्रयुता" [प्रयुंक्ताः--काशिका] इति। "युमिश्रणे" (धा।पा।१०३३)--"अवहितम्()" इति। पूर्ववद्धातेर्हिरादेशः। "खट्वारूढः" इति। "रुह बीजजन्मनि" (धा।पा।८५९), "झषस्ततोर्धोऽधः" ८।२।४०, "ढो ढे लोपः" ८।३।१३ "ढ्रलोपे पूर्वस्य दोर्घोऽणः" ६।३।११०, "खट्वा क्षेपे" २।१।२५ इति समासः। असय "अहीने द्वितीया" ६।२।४७ इति पूर्वपदप्रकृतिस्वरे प्राप्त इह पाठः। "कविशस्तः" इति। "शसु हिंसायाम्()" (धा।पा।७२७), "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। अस्यापि "तृतीया कर्मणि" ६।२।४८ इति पूर्वपदप्रकृतिस्वर एव। "यानादीनाम्()" इति। आदिशब्देन वृषादीनां ग्रहणम्()। यानादीनामर्थानां य इह पाठः, स प्रवृद्धादीनांयानादिष्वर्तेषु प्रायो बाहुल्येन या वृत्तिस्तस्याः प्रदर्शनार्थम्()। न तु प्रवृद्धस्य यानवृषलयोरवार्थयोरन्तोदात्तत्वं भवति। प्रयुक्तशब्दस्य सक्तुष्वेवतीत्येवमादिषु विषयियमार्थः। तेन किं भविष्यति? इत्याह--"यानादिभ्योऽन्यत्रापि" इत्यादि। "विषयनियमार्थ इत्येके" इति। तेषामनेन यानादिभ्योऽन्यत्र न भवितव्यम्()। "असंज्ञार्थोऽयमारम्भः" इति। संज्ञायां पूर्वेणैव सिद्धत्वात्()। "आकृतिगणश्च प्रवृद्धादिद्रष्टव्यः" इति। कुत एत्()? अकृतिगणतां तस्य सूचयितुमनुक्तसमुच्चयार्थस्य चकारस्येह करणात्(); आकृतिगणत्वे यत्? सिद्धं भवति, तद्दर्शयितुमाह--"पुनरुत्स्यूतं वासः" इत्यादि। "षिवु तन्तुसन्ताने" (धा।पा।११०८) "चछ्वोः शूडनुनासिके च" ६।४।१९ इत्यूठ्(), यणादेशः। "पुनर्निष्कृतः" इति। "इदुदुपधस्य चाप्रत्यस्य" ८।३।४१ इति विसर्जनीयस्य षत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

कारकाद् दत्तश्रुतयोरेव आशिषि ६।२।१४८

संज्ञायाम् इति वर्तते, क्तः इति च। संज्ञायां विषये आशिषि गम्यमानायां कारकादुत्तरयोः दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो

भवति। देवा एनं देयासुः देवदत्तः। विष्णुरेनं श्रूयात् विष्णुश्रुतः। कारकातिति किम्? कारकान् नियमो मा भूत्। सम्भूतो रामायणः। दत्तश्रुतयोः इति किम्? देवपालितः। एतस्मान् नियमादत्र संज्ञायाम् अनाचितादीनाम् ६।२।१४५ इत्यन्तोदात्तत्वं न भवति। तृतीया कर्मणि ६।२।४८ इत्येव अत्र भवति। एवकारकरणं किम्? कारकावधारणं यथा स्यत्, दत्तश्रुतावधारणं मा भूत्। अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति। संश्रुतः। विश्रुतः। आशिषि इति किम्? अनाऽशिषि नियमो मा भूत्। देवैः खाता देवखाता। कारकाद् दत्तश्रुतयोराशिस्येव इत्येवम् अत्र नियम इष्यते। तेन आहतो नदति देवदत्तः इत्यत्र न भवति। देवदत्त इति कस्यचिच्छङ्खस्य नाम। तत्र तृतीया कर्मणि ६।२।४८ इति पूर्वपदप्रकृतिस्वरत्वम् एव भवति।

न्यासः

वर्चस्केऽवस्करः।, ६।२।१४७

"कुत्सितं वर्चः वर्चस्कम्()" इति। "कुत्सिते" इति कना निर्देशो दीप्तौ मा भूदित्येवमर्थः। दीप्तादपि हि वर्चःशब्दो वत्र्तत इति तत्रापि स्यात्()। यदि वर्चस्केऽवस्करशब्दो निपात्यते तदा तत्सम्बन्धिदेशे न प्राप्नोति। तत्रापि च लोकेऽवस्करशब्दः प्रयुज्यत इत्यत आह--"तत्सम्बन्धात्()" इत्यादि। यथा यष्टीः प्रवेशयेति यष्टिसम्बन्धात्? पुरुषा अपि यष्टिशब्देनोच्यन्ते, तथा अवस्करसम्बन्धादवस्करशब्देन देशः॥

न्यासः

कारकाद्दत्तश्रुतयोरेवाशिषि।, ६।२।१४७

"देवदात्तः" इति। "आशिषि लिङ्लोटौ" ३।३।१६३ इति वरतमाने "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इति क्तः। "दो दद्? घोः" ७।४।४६ इति ददादेशः, पूर्ववत्? तृतीयासमासः। देवशब्दः पचादयजन्तत्वाच्चित्स्वरेणान्तोदात्त-। विष्णुशब्दोऽपि प्रातिपदिकस्वरेण। ब्राह्मशब्दो मनिन्प्रतययान्तत्वादाद्युदात्त इत्युक्तम्()। "सम्भूतो रामायणः" इति। कारकादित्यनुच्यमाने "गतिकारकोपपदात्? कृत्()" ६।२।१३८ इत्यधिकाराद्यतैव कारकान्नियमो भवत्येवं गतेरपि स्यात्(), कारकग्रहणे तु सति न भवति। तेन गतेः परस्य "संज्ञायामनाचितादीनाम्()" (६।२।१४६ इत्यनेन) अन्तोदात्तत्वं भवेदेव। अ()स्मस्तूच्यमाने सत्येष विषयो न भवति; नियमेन व्यावार्तितत्वात्()। "तृतिया कर्मणि" ६।२।४८ इति पूर्वपदप्रकृतिस्वर एव भवति। "एककारकरणं किम्()" इति। सिद्धे विधिरारब्यमाणोऽन्तरेणाप्येवकारकरणं नियमार्थो भविष्यतीत्यभिप्रायः। "कारकावधारहणम्()" इत्यादि। असति ह्येवकारे कारकादेवेत्येषोऽपि नियमः स्यात्()। तता चैवकारन्ततोऽन्यत्रावधारणमिति दत्तश्रूतावदारणं स्यात्()--कारकादेव दत्तश्रुतयोरिति। एवं च कारकाद्दत्तश्रुतयोरनन्तरं क्रियमाणे कारकावधारणमिष्टं भवति, न दत्तश्रुतावदारणमिष्टम्()। तेनैवकारः कृतः। किं पुनः कारणं कारकावधारणमिष्यते, न दत्तश्रुतावधारणम्()? इत्याह--"अकारकादपि हि" इत्यादि। "देवैः खाता देवखाता" इति। नात्राशीर्विद्यते, तेनाशिषीति वचनान्नियमो न भवति। ततश्च "संज्ञायाम्()" ६।२।१४५ इत्यादिनान्तोदात्तत्वं भवत्येव। "कारकाद्दत्तश्रुतयोराशिष्येवेत्ययमप्यत्र नियमः" इति। कथं पुनरेकेन योगेन हि नियमद्वयं लभ्यते, एकः पुनरत्र योग इति? यतैव हि ()ओतो धावतीति कश्चित्? तन्त्रेण वाक्यदवयमुच्चारयति तथेहाप्याचर्यस्तन्त्रेण वाक्यमुच्चारितवान्()। तत्रैकेन योगेन कारकाद्दत्तश्रुतयोरेवाशिषीत्येव नियमो भवति, अपरेण तु कारकाद्दत्तश्रुतयोराशिष्येवेत्येष-। तेनाहतो नदति देवदत्त इत्यत्रानाशिषि न भवति। "देवदत् इति कस्यचिच्छङ्खस्य नाम" इति यद्दच्छाशब्दतां देवदत्तस्य दर्शयन्नाशीरिह न दत्त इति प्रकाशयति॥

---

सूत्रम्

काशिका-वृत्तिः

इत्थंभूतेन कृतम् इति च ६।२।१४९

इमं प्रकारमापन्न इत्थम्भूतः। इत्थंभूतेन कृतम् इत्येतस्मिन्नर्थे यः समसो वर्तते तत्र क्तान्तम् उत्तरपदम् अन्तोदात्तं भवति। सुप्तप्रलपितम्। उन्मत्तप्रलपितम्। प्रमत्तगीतम्। विपन्नश्रुतम्। कृतम् इति क्रियासामान्ये करोतिर्वर्तते, नाभूतप्रादुर्भाव एव। तेन प्रलपिताद्यपि कृतं भवति। तृतीया कर्मणि ६।२।४८ इत्यस्य अयम् अपवादः। भावे तु यदा प्रलपितादयस् तदा थाथादिस्वरेण एव सिद्धम् अन्तोदात्तत्वं भवति।

न्यासः

इत्थम्भूतेन कृतमिति च।, ६।२।१४८

इतिकरणोऽर्थनिर्देशार्थः। "आपन्नः" इति। प्राप्त इत्यर्थः। "सुप्तप्रलपितम्()" इति। "रप लप व्यक्तायां वाचि" (धा।पा।४०१,४०२), अत्र सुप्तत्वं प्रकारमापन्नम्(), तेन प्रलपितं कृतम्(), तत्र समासो वर्तते। "उन्मत्तप्रलपितम्()" इति। अत्राप्युन्मत्तत्वं प्रकारमापन्नं तेन प्रलपितं कृतम्()। "प्रमत्तगीतम्()" इति। अत्रापि प्रमत्तत्वं प्रकारमापन्नं तेन गीतं कृतम्()। "कै गै शब्दे" (धा।पा।९१६,९१७), "घुमास्था" ६।४।६६ इत्यादिसूत्रेणेत्त्वम्()। "विपन्नश्रुतम्()" इति। अत्रापि विपन्नत्वं प्रकारमापन्नं तेन श्रुतं कृतम्()। सर्वत्र "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। तत्र सुप्तशब्दः प्रत्ययस्वरेणान्तोदात्तः। प्रलपितशब्दो यदि कर्मणि निष्ठा, ततः "गतिरन्तरः" ६।२।४९ इति गतिस्वरेणाद्युदात्तः; अथ भावे, ततस्थाथादि ६।२।१४३ स्वरेणान्तोदात्तः। एवमुत्पन्नप्रकारा आपन्नविपन्नादिशब्दा अपि थाथादिस्वरेणै६।२।१४३ वान्तोदात्ताः। "गतिरनन्तरः"६।२।४९ इत्येतत्त्विह न प्रवर्तते; तत्र कर्मणीत्यनुवृत्तेः। इहाकर्मकाद्धातोः कर्मणि क्तप्रत्यस्यानुपपत्तेः। गीतश्रुतशब्दौ सुप्तशब्दवदन्तोदात्तौ। अथ कथमेतान्युदाहरणाध्युपलभ्यन्ते, य#आवतेत्यम्भूतेन कृतमित्येतस्मिन्नर्थ एतत्? कार्यमुच्यते, न चायमत्रार्थः सम्भवति, प्रलपितादीनामकृतार्थत्वात्()? प्रकृते प्रलपनादौ करोतेरप्रवृत्तेः। अभूतप्रादुर्भाव एव हि करोतिर्वर्तते, न प्रलपनादौ। कस्मान्न प्रलपनादिकृतम्? इत्येतच्चोद्यमपाकर्तुमाह--"कृतमिति क्रियासामान्याम्()" इत्यादि। न हि करोतिरभूतप्रादुर्भाव एव वर्तते? किं तर्हि? क्रियासामान्येऽपि। तच्च क्रियासामान्यं प्रलपनादप्यस्ति। तेन तेन प्रलपनाद्यपि कृतं भवति। "तृतीया कर्मणीत्यस्य" इति। पूर्वपदप्रकृतिस्वरभाव इति। यदीत्यादिना यदा भावे निष्ठा, तदास्यानुपयोगं दर्शयति॥

---

सूत्रम्

काशिका-वृत्तिः

अनो भावकर्मवचनः ६।२।१५०

अनप्रत्ययान्तम् उत्तरपदं भाववचनं कर्मवचनं च कारकात् परमन्तोदात्तं भवति। ओदनभोजनं सुखम्। पयःपानम् सुखम्। चन्दनप्रियङ्गुकालेपनं सुखम्। कर्मवचनः राजभोजनाः शालयः। राजच्छादनानि वसांसि। कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ३।३।११६ इत्ययं योगः उभयथा वर्ण्यते। कर्मण्युपपदे भावे ल्युड् भवति, कर्मण्यभिधेये ल्युड् भवति इति। तत्र पूर्वस्मिन् सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि। अनः इति किं? हस्तहार्यमुदश्वित्। भावकर्मवचनः इति किम्? दन्तधावनम्। करणे ल्युट्। कारकातित्येव। निदर्शनम्। अवलेखनम्। सर्वेसु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति।

न्यासः

अनो भावकर्मवचनः।, ६।२।१४९

"कारकात्()" ६।२।१४७ इति वर्तते, "अनः" इति प्रत्ययग्रहणपरिभाषया (पु।प।वृ।४४) तदन्तस्य ग्रहणं विज्ञायते?

इत्याह--"अनप्रत्ययान्तम्()" इत्यादि। "ओदनभोजनम्()" इत्यादौ सर्वत्र षष्ठीसमासः। षष्ठी तु कृद्योगलक्षणा कर्मणि। "राजभोजनाः" इत्यादौ तु कर्तरि। ओदनशब्दः "लघावन्ते" (फि।सू।२।४२) इत्याद्युदात्तः। भोजनमित्यादिकं तूत्तरपदं लित्स्वरेणाद्युदात्तम्()। पयःशब्दः "नब्विषयस्य" (फि।सू।२।४२) इत्याद्युदात्तः। भोजनमित्यादिकं तूत्तरपदं लित्स्वरेणाद्युदात्तम्()। पयःशब्दः "नब्विषयस्य" (फि।सू।२।२६) इत्याद्युदात्त एव। चन्दनप्रियङ्गुकाशब्दो द्वन्द्वः, तेन समासस्वरेणान्तोदात्तः। "लेपनम्()" इति। "लिप उपदाहे" (धा।पा।१४३३) [लिप उपदेहे--धा।पा।] इत्यस्यैवं रूपम्()। राजशब्द उक्तस्वरः। आच्छादनशब्दः "छद अपवारणे" (धा।पा।१९३५) इत्यस्य रूपम्()। "कर्मणि च येन" इत्यादिनैकेनैव योगेन भाववचनः कर्मवचनश्च ल्युङ्भवतीति दर्शयति। "हस्तहार्यम्()" इति। हस्तशब्दः "हसिमृग्रिणवामिदमिपूधुर्वीभ्यस्तन्()" (द।उ।६।७।;पं।उ।३।८६) [हसिमृग्रिण्वमिदमितमिलूपूधूर्विभ्यस्तन्()--द।उ; हसिमृग्रिण्वामिदमलूपूधूर्विभ्यस्तन्()--पं।स।] इति स्तत्प्रत्ययान्तः, तेनाद्युदात्तः,। हार्यशब्दस्तु "ऋहलोण्यत्()" ३।१।१२४ इति ण्यदन्तस्तित्स्वरेणान्तस्वरितः। "दन्तधावनम्()" इति। "धावु गतिशुद्धोः" (धा।पा।६०१) इत्यस्मात्करणे ल्युट्। दन्तशब्दः "स्वाङ्गशिटाम्()" फि।सू।२।२९) इत्याद्युदात्तः। "निदर्शनम्()" इति। दृशेर्भावे ल्युट्()। "अवलेखनम्()" इति। अत्रापि लिखेः। "सर्वेषु प्रत्युदाहरणेषु" इत्यादि। एतेन "गतिकारकोपपदानां कृत्? ६।२।१३८ इत्यस्यायमपवाद इति दर्शयति॥

---

सूत्रम्

काशिका-वृत्तिः

मन्क्तिन्व्याख्यानशयनाऽसनस्थानयाजकाऽदिक्रीताः ६।२।१५१

मन्नन्तं क्तिन्नन्तं व्याख्यान शयन स्थान इत्येतानि याजकादयः क्रीतशब्दश्च उत्तरपदम् अनतोदात्तं भवति। मन् रथवर्त्म। शकटवर्त्म। क्तिन् पाणिनिकृतिः। आपिशलिकृतिः। व्याख्यान ऋगयनव्याख्यानम्। छन्दोव्याख्यानम्। शयन राजशयनम्। ब्राह्मणशयनम्। आसन राजासनम्। ब्राह्मणासनम्। स्थान गोस्थानम्। अश्वस्थानम्। याजकादिः ब्राह्मणयाजकः। क्षत्रिययाजकः। ब्राह्मणपूजकः। क्षत्रियपूजकः। याजकादयो ये याजकदिभिश्च २।२।९ इति षष्ठीसमासार्थाः पठ्यन्ते त एव इह गृह्यन्ते। क्रीत गोत्रीतः। अश्वक्रीतः। कृत्स्वरापवादो ऽयं योगः। क्रीतशब्दे तु तृतीया कर्मणि ६।२।४८ इत्यस्य अपवादः। व्याख्यानशयनासनस्थानानाम् अभावकर्मार्थं ग्रहणम्। कारकातित्येव, प्रकृतिः। प्रहृतिः।

न्यासः

मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः।, ६।२।१५०

मन्क्तिन्निति प्रत्ययग्रहणम्()। तत्र प्रत्ययग्रहणपरिभाषया (पु।प।वृ।४४) तदवतस्य ग्रहणं विज्ञायते, इत्याह--"मन्नन्तं क्तिन्नन्तञ्च" इति। रथवत्र्मेत्यादयः षष्ठीसमासाः। रथशब्दः क्थन्प्रत्ययान्त आद्युदात्त इत्युक्तम्()। "वृतु वर्तने" (धा।पा।७४८) इत्यस्मान्मनिन्()। तेन वत्र्मशब्द आद्युदात्तः। शकटशब्दः पयःशब्दश्च नित्त्वादाद्युदात्तः। पाणिन्यापिशलिशब्दाविञन्तत्वात्()। कृतिशब्दोऽपि क्तिन्नन्तत्वात्()। करणसाधनश्चायं व्याख्यानशब्दो ल्युडन्तः। कृत्स्वरेण मध्योदात्तः। छन्दःशब्दः "सर्वधातुब्योऽसुन्()" (पं।उ।४।१८८) ["असन्()" इत्येव सूत्रम्()--द।उ।] इति प्रत्ययग्रहणम्()। तत्र कृते "चन्देरादेश्च च्छः" (पं उ।४।२१८) इत्यसुन्प्रत्ययान्तत्वादाद्युदात्तः। अयन्त्यनेनेत्ययनम्(), ऋचामयनम्()। ऋचामिति कर्णि षष्ठी। ऋगयनशब्दः कृत्स्वरेण मद्योदात्तः। "राजशयनम्()" इत्यादि। सेरतेऽस्मिन्निति शयनम्(), आसतेऽस्मिन्नित्यासनम्? ताभ्यां राजब्राआह्रणशब्दयोः षष्ठीसमासः। राजब्राआह्रणशब्दाबुक्तस्वरौ। शयनासनशब्दौ लित्स्वरेणाद्युदात्तौ। अत्र कृद्योगलक्षणा पूर्ववदेव कत्र्तरि षष्ठी। एवं "गोस्थानम()आस्थानम्()" इत्यत्रापि। गवा()आशब्दावुक्तस्वरौ। तिष्ठत्यस्मिन्निति स्थानम्(), लित्स्वरेणाद्युदात्तम्()। "ब्राआह्रणयाज्यः" इत्यादौ कृद्योगलक्षणा

कर्मणि षष्ठी। याजकादिषु ये ण्वुलन्ताः पठ()न्ते, तेषु येऽनुपसर्गाः--याजकपूजकस्नापका इति, त आद्युदात्तः। ये तु सोपसर्गाः--परिवेषकाध्यापकोद्वत्र्तकोत्सादका इति, ते कृत्स्वरेण मध्योदात्ताः। होतभर्तृशब्दो तृन्नन्तौ प्रयोजयतः। यौ तु तृजन्तौ तयोः कृत्स्वरेणान्तोदात्त्वं सिद्धम्()। "गोक्रीतः, अ()आक्रीतः" इत्यादि। "कर्तृकरणे कृता २।१।३१ इति समासावेतौ। क्रीतशब्दः प्रत्ययस्वरेणान्तोदात्तः। "कृत्स्वरापवादो योगः" इति। क्रीतशब्दादन्येषु मन्क्तितन्व्याख्यानादिषु। क्रीतशब्दे तु "तृतीया कर्मण" ६।२।४८ इत्यस्येति पूर्वपदप्रकृतिस्वरस्य। "व्याख्यानशयनासनस्थानानामभावकर्मार्थ ग्रहणम्()" इति। भावकर्मवचनस्यानन्तस्य "अनो भावकर्मवचनः" ६।२।१४९ इत्यनेनैव सिद्धत्वात्()। "प्रकृतिः, प्रह्मतिः" इति। अत्र "तुल्यार्थ" ६।२।२ इत्यादिना पूरवपदस्य प्रकृतिस्वरत्वमेव भवति। गतिसमासावेतौ॥

---

सूत्रम्

काशिका-वृत्तिः

सप्तम्याः पुण्यम् ६।२।१५२

सप्तम्यन्तात् परं पुण्यम् इत्येतदुत्तरपदम् अन्तोदात्तं भवति। अध्ययने पुण्यम् अध्ययनपुण्य। वेदे पुण्य वेदपुण्यम्। सप्तमी इति योगविभागात् समासः। तत्पुरुषे तुल्यार्थ इति पूर्वपदकृतिस्वरत्वं प्राप्तम् इत्यन्तोदात्तत्वं विधीयते। उणादीनां तु व्युत्पत्तिपक्षे कृत्स्वरेण आद्युदात्तः पुण्यशब्दः स्यातिति। सप्तम्याः इति किम्? वेदेन पुण्यम् वेदपुन्यम्।

न्यासः

सप्तभ्याः पुण्यम्?। , ६।२।१५१

"अध्यनपुण्यम्()" इत्यादि। अध्ययनशब्दो ल्युडन्तः कृत्स्वरेण मध्योदात्तः। पुण्यम्? "नब्विषयस्य" (फि।सू।२।२६) इत्याद्युदात्तम्()। विद्यतेऽनेऽनेति वेदः, घञ्()। तेन वेदशब्दश्चाद्युदात्तः। "तत्पुरुषे तुल्यार्थ" इत्यादि। एतत्? "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" (है।प।पा।१०३) इत्येवं पक्षमाश्रित्योक्तम्()। इदानीं व्युत्पत्तिलक्षणमाश्रित्याह--"उणादीनां तु" इत्यादि। व्युत्पत्तिपक्षे हि पुण्यशब्दः "पुञो यण्णुग्? ह्रस्वश्च" (पं।उ।५।१५) इति यत्प्रत्ययान्तो व्युत्पाद्यते। तत्र यदीद नारभ्येत तदा "गतिकारक" ६।२।१३८ इति कृत्स्वरेणाद्युदात्तोऽध्ययनमित्यादौ पुण्यशब्दस्य स्यात्()। तस्मात्? तदपदादोऽयमन्तोदात्तविषिरित्यभिप्रायः। "वेदेन पुण्यं वेदपुण्यम्()" इति। व्युत्पत्तिपक्षे "तृतीया" (२।१।३०) इति योगविभागात्? समासः। पूर्वपदपरकृतिस्वरत्वञ्च। अव्युत्पत्तिपक्षे "कर्त्तृकरणे कृता" २।१।३१ इति समासः, कृत्स्वरेण पुण्यशब्दस्याद्युदात्तत्वं च॥

---

सूत्रम्

काशिका-वृत्तिः

ऊनार्थकलहं तृतीआयाः ६।२।१५३

ऊनार्थान्युत्तरपदानि कलहशब्दश्च तृतीयान्तात् पराण्यनतोदात्तानि भवन्ति। माषोनम्। कार्षापणोनम्। माषविकलम्। कार्षापणविकलम्। कलह असिकलहः। वाक्कलहः। तृतीयापूर्वपदप्रकृतिस्वरापवदो योगः। अत्र केचिदर्थे इति स्वरूपग्रहणम् इच्छन्ति। धान्येन अर्थो धान्यार्थः। ऊनशब्देन एव त्वर्थनिर्देशर्थेन तदर्थानां ग्रहणम् इति प्रतिपदोक्तत्वादेव तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम्।

न्यासः

ऊनार्थकलहं तृतीयायाः। , ६।२।१५२

"माषोनम्()" इति। "पूर्वसदृश" २।१।३० इत्यादिना तृतीया समासः। एवं "कार्षापणोनम्()" इत्यादावपि। "कष खष शिष जष झष शष वष मष" (धा।पा।६८५-६९२) इत्यस्माद्घञ्(), तेन माषशब्द आद्युदात्तः। "इण्सिञ्जिदीङुष्यविभ्यो नक्()" (द।उ।५।३६) इति, तेनोनशब्दोऽन्तोदात्तः। कार्षस्यापणः कार्षापणः। कार्षापणशब्दः समासस्वरेणान्तोदात्तः। विगतः कलोऽस्येति विकलः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन विकलशब्द आद्युदात्तः। "असिकलहः" इति। "अच इः" (द।उ।१।६७) इति वर्तमाने "खनिकष्यञ्ज्यसि" (द।उ।१।६८) इत्यादिना सिन्तोदात्तः "कल गतौ" (धा।पा।१८६५), अस्मात्? पचाद्यच्()। कलयतीति कलः, कलं हन्तीति "अन्येष्वपि दृस्यते" ३।२।१०१ इति डः। तेन कलहशब्दोऽन्तोदात्तः। "अत्र केचित्()" इत्यादि। तह्रर्थे इति स्वरूपग्रहणम्(), एवं सत्यूनशब्देऽपि स्वरूपग्रहणं प्रसज्येत्(), ततश्च तदर्थानामन्येषां ग्रहणं न स्यात्()? इत्यत आह--"उनशब्देनैव" इत्यादि। ऊनशब्दोऽन्यमतानां विशेषं दर्शयति। अन्ये हि--अर्थग्रहणे नानर्थकानां ग्रहणं भवतीति मन्यन्ते। केचित्तु-ऊनशब्देनैवार्थनिर्देशार्थेनार्थनिर्देशः प्रयोजनं यस्य स तथोक्तः। शब्दप्रधाने हि निर्देशे स्वरूपग्रहणं [स्वरूपं ग्रहणम्()--इति मुद्रितः पाठः] भवतीत्युक्तम्()। इह चोन इत्यर्थप्रधाननिर्देशः। तेनोनशब्दोऽर्थनिर्देशार्थः" इत्याहुः। तस्मात्? तत्रैव तदर्थानां ग्रहणम्()। इतिकरणो हेतौ। यस्मादूनशब्देनैवार्थनिर्देशार्थेन तदर्थानां ग्रहणम्(), तस्मादत्र केचिदर्थ इति स्वरूपग्रहणमिच्छन्ति। "धान्यार्थः" इति। "तृतीया तत्कृतार्थेन" २।१।२९ इति समासः। "धने धान्ये" (धा।पा।११०४), अस्माण्ण्यत्()। धान्यमन्तस्वरितम्()। अथ धाने साधु धान्यम्(), "प्राग्घिताद्यत्()" ४।४।७५ तेन "यतोऽनावः" ६।१।२०७ इति धान्यमाद्युदात्तम्()। अत्रार्थशब्दः "प्रामादीनाञ्च" (फि।सू।२।३८) इत्याद्युदात्तः। तृतीयाग्रहणं किमर्थम्()? अनूनम्(), अकलह इत्यत्र मा भूदिति चेत्()? नैतदस्ति;इह हि प्रतिपदोक्तपरिभाषयो(व्या।प।३)नार्थकलहादीनां प्रतिपदोक्तो यः समासः स एव परिगृह्यते। तत्? किमनूमकलह इत्येतन्निवृत्यर्थेन तृतीयाग्रहणेन? इत्यत आह--"प्रतिपदोक्तम्()" इत्यादि। गतार्थम्()।

---

सूत्रम्

काशिका-वृत्तिः

मिश्रं च अनुपसर्गम् असन्धौ ६।२।१५४

तृतीया इति वर्तते। मिश्र इत्येतदुत्तरपदम् अनुपसर्गं तृतीयान्तात् परम् अन्तोदात्तं भवति असन्धौ गम्यमाने। गुडमिश्राः। तिलमिश्राः। सर्पिर्मिश्राः। मिश्रम् इति किम्? गुडधानाः। अनुपसर्गम् इति किम्? गुडसंमिश्राः। इह अनुपसर्गग्रहणं ज्ञापकम् अन्यत्र मिश्रगहणे सोपसर्गग्रहणस्य। तेन मिश्रश्लक्ष्णैः इति सोपसर्गेण अपि मिश्रशब्देन तृतीयासमासो भवति। असन्धौ इति किम्? ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह संहितः ऐकार्थ्याम् आपन्नः। सन्धिः इति हि पणबन्धेन ऐकार्थ्यम् उच्यते। केचित् पुनराहुः गृह्यमाणविशेषा प्रत्यासत्तिः सन्धिः इति। अत्र राज्ञो ब्राह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्तिविभागो गृह्यते इति ब्राह्मणमिश्रो रजा इति प्रत्युदाह्रियते। उदाहरणेष्वविभागापत्तिरेव गुडमिश्राः इति।

न्यासः

मिश्रं चानुपसर्गमसन्धौ। , ६।२।१५३

"गुडमिश्राः" इति। पूर्ववत्? "पूर्वसदृश" २।१।३० इत्यादिना समासः। गुडशब्दः "इगुपध" ३।१।१३५ इति "गुड रक्षायाम्()" (दा।पा।१३७०) इत्यस्मात्? कः, तेनान्तोदात्तः। "स्फायितञ्चि" (द।उ।८।३१) इत्यादिना रग्विधीयमानो बहुलवचनान्? मिशेरपि रग्भवति, तेन मित्रशब्दोऽन्तोदात्तः। तिलशब्दः "तृणधान्यानाञ्च द्व्यषाम्()" (फि।सू।२।२७) इत्याद्युदात्तः। प्रमिश्रम्(), सन्मिश्रमित्यस्य प्राप्नोति, अतस्तन्निवृत्तयेऽनुपसर्गग्रहणं क्रियते? इत्याह--"इह" इत्यादि। अथ वा--मिश्रशब्देन तृतीयासमास उच्यमानः कथं सोपसर्गे लभ्यते? इत्याह--"इह" इत्यादि। यदि तदिहानुपसर्गग्रहणं

क्रियते, तद्द्रन्यत्र मिश्रशब्दग्रहणे सोपसर्गस्य ग्रहणं नास्तीतीहानुपसर्गग्रहणमनर्थकं स्यात्()। "तेन" इत्यादि। ज्ञापनस्य प्रयोजनं दर्शयति। "ब्राआह्णमिश्रो राजा" इति। "पूर्वसदृश"२।१।३० इत्यादिनैव समासः। "ब्राआह्णैः सह संहितः" इत्यनेन प्रत्युदाहरणे सन्धिं दर्शयति। "ऐकार्थमापन्नः" इति। अनन्तरोक्तमेवार्थं विस्पष्टीकरोति। एकः=अभिन्नोऽर्थो यस्य स एकार्थः, तद्भाव ऐकाश्र्यम्()। तदापन्नः प्राप्त इत्यर्थः। कथं पुनज्र्ञायते--सन्धिशब्दस्यायमर्थः? इत्याह--"सन्धिः" इत्यादि। पणबन्धः=परिभाषणम्()--यदि मे भवानिदं कुर्यात्? ततोऽहमपि भवत इदं करिष्यामीत्येवञ्जातीयकम्()। तेन पणबन्धेन यदैकाश्र्यं तत्? सन्धिरुच्यते। तस्मात्? प्रत्युदाहरणे सन्धौ सति ब्राआह्णैः सह संहित ऐकाश्र्यमापन्नः--इत्येषोऽर्थो विज्ञायते। "केचित्? पुनराहुः" इत्यादि। गृह्ममाणो विशेषो यस्यां प्रत्यासत्तौ सा गृह्ममणविशेषा सन्धिरिति केचिदेवमाहुः, तत्रैव स्यात्()। एवंविधः सन्धिः प्रत्युदाहरणे नास्तीत्यत आह--"अत्र राज्ञो ब्राआह्णौ सह" इत्यादि। यद्यपि राज्ञा ब्राआह्णैः सह प्रत्यासत्तिः=देशसामीप्यमस्ति, तथापि सत्यामपि तस्यां मूर्तिविभागो मूर्तिविशेषो राज्ञो ब्राआह्णानाञ्च गृह्णत इत्येव। इतिकरणो हेतौ। यत एवम्(), तेन ब्राआह्णैः सह मिश्रो राजेति प्रतयुदाह्रियते। "उदाहणेष्वविभागापत्तिरेव" इति। एतेन गृडमिश्रा इत्यादौ तु सन्धेरभावं दर्शयति। यथा हि विलीनेन मिश्रा धानादयो भवन्ति, तथास्य गुडाः, तेषां च मूर्तिविभागो न गृह्णते; न तत्र सन्धेरविभागापत्तिरिति। न विभागोऽविभागः, तस्यापत्तिः=प्राप्तिः। यदा पणबन्धेनैकाश्र्यं सन्धिस्तदोदहरणेषु तस्याभावो वेदितव्यः स हि परिभाषणविशेषणलक्षणः। न चासौ गुडमिश्रेषु धानास्वचेतनेषु विद्यते; तस्य प्राणिधर्मत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास् तद्धिताः ६।२।१५५

सम्पादि अर्ह हित अलम् इत्येवम् अर्था ये तद्धिताः तदन्तानि उत्तरपदानि नञो गुणप्रतिषेधे वर्तमानात् पराणि अन्तोदात्तानि भवन्ति। सम्पादिकर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकम् अकार्णवेष्टकिकम्। अर्हं छेदमर्हति छैदिकः, न छैदिकः अच्छैदिकः। हित वत्सेभ्यो हितः वत्सीयः, न वर्सीयः अवर्सीयः। अलमर्थ सन्तापाय प्रभवति सान्तापिकः, न सान्तापिकः असान्तापिकः। नञः इति किम्? गर्दभरथम् अर्हति, गार्दभरथिकः। विगार्दभरथिकः। गुणप्रतिषेधे इति किम्? गार्दभरथिकादन्यः अगार्दभरथिकः। गुण इति तद्धितार्थप्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते। तत्प्रतिषेधो यत्र उच्यते समासे तत्र अयं विधिः कर्नवेष्टकाभ्यां। सम्पादि मुखम् इति। सम्पाद्यर्हहितालमर्थाः इति किम्? पाणिनीयम् अधीते पाणिनीयः, न पाणिनीयः अपाणिनीयः। तद्धिताः इति किम्? अन्यां वोढुमर्हति कन्यावोढा, न वोढा अवोढा। अर्हे कृत्यतृचश्च ३।३।१६९ इति तृच्।

न्यासः

नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः। , ६।२।१५४

"सम्पाद्याद्यर्थास्तद्धिताः" इति। तद्धितप्रत्ययाः। तस्मात्? प्रत्ययग्रहणपरिभाषया (पु।प।वृ।४४) तदन्तविधिज्र्ञायते। "गुणप्रतषेधे" इति। यस्मिन्? वाक्यार्थे तद्धित उत्पद्यते स तद्धितस्य प्रवृत्तिनिमित्तं विधीयते--यथोक्तम्()--"उपकारि सिद्धमङ्गम्(), साध्योऽनुपकारकस्त्वङ्गी" इति। अङ्गी, गुण इति पर्यायावेतौ। गुणस्य प्रतिषेधो गुणप्रतिषेधः। एतचच नञो विशेषणम्(), गुणप्रतिषेधे चेन्नञ्वर्तत इत्यर्थः। "कार्णवेष्टकिकम्()" इति। कर्णवेष्टकभ्यां शोभत इत्यर्थः। "सम्पादिनि" ५।१।९८ इति "प्राग्वतेष्ठञ्()" ५।१।१८, न कर्णवेष्टकिकमकार्णवेष्टकिकमिति। अत्र कर्णवेष्टकाभ्यां सम्पद्यत इति वाक्यार्थे तद्धितान्तस्य प्रवृत्तिनिमित्तं यो गुणस्तस्य प्रतिषेन नञ्वर्तते। तत्? पुनः प्रवृत्तिनिमित्त्वम्()। "छैदिकः" इति। छेदमर्हतीति "आर्हादगोपुच्छ" ५।१।१९ इत्यादिनां ठक्()। "वत्सीयः" इति। "प्रक्क्रीताच्छः" ५।१।१।

"सान्तापिकः" इति। "तस्मै प्रभवति सन्तापादिभ्यः" ५।१।१०० इति "प्राग्वतेष्ठञ्()" ५।१।१८। "विगार्दभरथिकः" इति। "तदर्हति" ५।१।६२ इत्यार्हीयष्ठञ्()। विशब्देन प्रादिसमासः। विशब्दोऽयमिह गार्दभरथिक इत्यस्य गुणप्रतिषेधे वर्तते। अत्र "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना पूर्वपदस्य प्रकृतिस्वर एव भवति। एवमुत्तरत्रापि। नञ्यसति, अस्मिन्? प्रत्युदाहरणेऽपि यत्? पूर्वपदं प्रकृतिस्वरः प्रत्युदाहार्यः। "गार्दभरथिकदन्योऽगार्दभरथिकः" इति। अत्र गार्दभरथिकादन्यत्र नञ्वर्तते, न तु गार्दभरथिकत्वस्य प्रतिषेधे; पर्युदासत्वादस्य। "गुण इति तद्धितार्थप्रवृत्तिनिमित्तम्()" इत्यादि। तद्धितार्थः--कर्णवेष्टकाभ्यां सम्पादीत्येवमादिवाक्यार्थः, तत्र यत्? प्रवृत्तिनिमित्तं तद्धितान्तस्य शब्दस्य सम्पादित्वादि तत्? गुण इत्युच्यते। आदिशब्देन तदर्हत्वादेग्र्रहणम्()। तद्धितान्तमलमर्थञ्च परिग्रह्रते। "तत्प्रतिषेधः" इत्यादि। तस्य प्रतिषेधो यत्र समास उच्यते तत्रायं विधिः। कथं तसय गुणस्य प्रतिषेध उच्यते? इत्याह--"कर्णवेष्टकाभ्यां न सम्पादि मुखम्()" इति। एतेन सर्वेण प्रसज्यपरतिषेधेऽयं विधिः, न पर्युदास इति दर्शयन्नगार्दभरथिक इत्यतर प्रत्युदाहरणेऽस्य विधेरभावं दर्शयति। "पाणिनीयम्()" इति। "वृद्धाच्छः" (४।२।११४। "अपाणिनीयः" इति। अत्राध्येतर्यर्थे यस्तद्धितस्तदन्तमुत्तरपदम्()। न सम्पाद्यर्हहिताद्यमलमर्था ये तद्धितास्तदन्तम्()। "वोढा" इति। पूर्ववद्? धत्वढत्वष्टुत्वढलोपा विधेयाः, "सहिवहोरोदवर्णस्य" ६।३।१११ इत्योत्वम्()। "अवोढा" इति। अत्राहार्थो य कृदतः स उत्तरपदम्()। तेन तद्धितगरहणादन्तोदात्तत्वमुत्तरपदस्य न भवति। अव्ययपूर्वपदप्रकृतिस्वर एव भवति। पूर्वपदप्रकृतस्वरापवादो योगः। एवमुत्तरेऽपि योगा द्रष्टव्याः। "प्राग्बहुव्रीहाविदमेतत्()" ६।२।१६१ इत्यादियोगात्()॥

---

सूत्रम्

काशिका-वृत्तिः

ययतोश् च अतदर्थे ६।२।१५६

य यतित्येतौ यौ तद्धितावतदर्थे वर्तते तदन्तस्य उत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति। पाशानां समूहः पाश्या, न पाश्या अपाश्या। अतृण्या। यत् दन्तेषु भवं दन्त्यम्, न दन्त्यम् अदन्त्यम्। अकर्ण्यम्। अतदर्थे इति किम्? पादार्थमुदकं पाद्यम्, न पाद्यम् अपाद्यम्। तद्धिता इत्येव, अदेयम्। गुणप्रतिषेधे इत्येव, दन्त्यादन्यददन्त्यम्। निरनुबन्धकैकानुबन्धकयोर् ययतोर् ग्रहणादिह न भवति, वामदेवाड्ड्यड्ड्यौ ४।२।९ वामदेव्यम्, न वामदेव्यम् अवामदेव्यम् इति।

न्यासः

ययतोश्चातदर्थे। , ६।२।१५५

"पाश्या" इति। प्रत्ययस्वरेणान्तोदात्तत्वम्()। "अदन्त्यम्()" इति। "यतोऽनावः" ६।१।२०७ इत्याद्युदात्तत्वम्()। एवम्()--"अकण्र्यम्()" इत्येतदपि तद्वदेवाद्युदात्तम्()। "पाद्यम्()" इति। "पादार्धाभ्याञ्च" ५।४।२५ इति यत्()। "दन्त्यादन्यददनत्यम्()" इति। अत्र दन्त्यादन्यत्र नञ्? वर्तते, न तु तदन्तस्य प्रतिषेदे। "अदेयम्()" इति। "अर्हे कृत्यतृचश्च" ३।३।१६९ इत्यत्रार्हार्थे यत्(), "ईद्यति" ६।४।६५ इतीत्त्वम्()। अथेह कस्मान्न भवति--वामदेवेन दृष्टं साम वामदेव्यम्()? इत्यत आह--"निरनुबन्धक" इत्यादि। गतार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अच्कावशक्तौ ६।२।१५७

अच् क इत्येवम् अन्तम् अशक्तौ गम्यमानायाम् उत्तरपदं नञः परमन्तोदत्तं भवति। अपचः यः पक्तुं न शक्नोति। अजयः।

कः खल्वपि अविक्षिपः। अविलिखः। अशक्तौ इति किम्? अपचो दीक्षितः। अपचः परिव्राजकः।

न्यासः

अच्कावशक्तौ। , ६।२।१५६

"अपचः" इति। पचाद्यच्()। "अविक्षिपः" इति। "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५ "अपचोऽदीक्षितः" इत्यादि। दीक्षितपरिव्राजकौ शास्त्रे प्रतिषिद्धत्वान्न पचतः; न त्वशक्तत्वात्()। तेनात्र व्रतं गम्पते, न त्वशक्तिः॥

---

सूत्रम्

काशिका-वृत्तिः

आक्रोशे च ६।२।१५८

आक्रोशे च गम्यमाने नञः उत्तरमच्कान्तम् अन्तोदात्तं भवति। अपचो ऽयं जाल्नमः अपठो ऽयं जाल्मः। पक्तुं पठितुं शक्तो ऽप्येवम् आक्रुश्यते। अविक्षिपः। अविलिखः।

न्यासः

आक्रोशे च। , ६।२।१५७

अत्राक्रोशे दोषवचनमाक्रोशः। अगम्यमानायामप्यशक्तौ यथा स्यादिति वचनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् ६।२।१५९

अक्रोशे गम्यमाने नञः परम् उत्तरपदं संज्ञायां वर्तमानम् अन्तोदात्तं भवति। अदेवदत्तः। अयज्ञदत्तः। अविष्णुमित्रः।

न्यासः

संज्ञायाम्?। , ६।२।१५८

"अदेवदत्तोऽपज्ञदत्तः" इति। देवदत्तयज्ञदत्तशब्दावन्तोदात्तौ। प्रातिपदिकस्वरेण। यो देवदत्तः सन्? तत्? कार्य न करोति स एवमाक्रुश्यते। एवं "अविष्णुमित्त्रः" इत्यत्रापि वेदितव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

कृत्यौकैष्णुच्चार्वादयश् च ६।२।१६०

कृत्य उक इष्णुचित्येवम् अन्ताश्चार्वादयश्च नञः उत्तरे ऽन्तोदात्ताः भवन्ति। कृत्य अकर्तव्यम्। अकरणीयम्। उक अनागामुकम्। अनपलाषुकम्। इष्णुच् अनलङ्करिष्णुः। अनिराकरिष्णुः। इष्णुज् ग्रहणे कर्तरि भुवः खिष्णुच् ३।२।५७ इत्यस्य द्व्यनुबन्धकस्य अपि ग्रहणम् इकारादेर् विधानसामर्थ्याद् भवति। अनाढ्यम्भविष्णुः। असुभगम्भविष्णुः। चार्वादयः अचारुः। असाधुः। अयौधिकः। अवदान्यः। चारु। साधु। यौधिक। अनङ्गमेजय। अत्र द्वितीये नञ्समासे ऽन्तोदात्तत्वम्। अननङ्गमेजयः। वदान्य। अकस्मात्। अत्र अपि द्वितीये नञ्समासे ऽन्तोदात्तत्वम्। अनकस्मात्। अवर्तमानवर्धमानत्वरमाणध्रियमाण। रोचमानशोभमानाः संज्ञायाम्। एते वर्तमानादयः संज्ञायां द्रष्दव्याः। विकारसदृशे व्यस्तसमस्ते। अविकारः। असदृशः। अविकारसदृशः। गृहपति। गृहपतिक। राजाह्नोश् छन्दसि। अराजा। अनहः।

भाषायां नञ्स्वर एव भवति।

न्यासः

कृत्योकेष्णुच्चार्वादयश्च। , ६।२।१५९

कृत्य, उक, इष्णुजिति प्रत्ययग्रहणम्()। तत्र प्रत्ययग्रहणपरिभाषया (पु।प।वृ४४) तदन्तोपस्थापनं भवति। चार्वादीनि प्रातिपदिकान्येव। "अकत्र्तव्यम्()" इति। यदा तव्यदन्तस्तदा कर्तव्यशब्दोऽन्तस्वरितः। यदा तव्यान्तस्तदा मध्योदात्तः। "अकरणीयम्()" इति। अनीयर्()प्रत्ययान्तत्वात्? "उपोत्तमं रिति" [६।१।२११](#) इति रित्स्वरेण मध्योदात्तः करणीयशब्दः। "अनागामुकम्(), अनपलाषुकम्()" इति। "लषपतपद" [३।२।१५४](#) इत्यादिनोकञ्()। आगामुकापलाषुकशब्दौ कृत्स्वरेण मध्योदात्तौ। "अनलङ्करिष्णुः" इति। "अलंकृञ्()" [३।२।१३६](#) इत्यादिनेष्णुच्()। अलङ्करिष्णुशब्दश्चित्स्वरेणान्तोदात्तः। एवं "निराकरिष्णु" शब्दोऽपि। एकानुबन्धकग्रहणपरिभाषया(व्या।प।४२)इष्णुज्ग्रहणे द्ब्यनुबन्धकस्य खिष्णुचो ग्रहणेन न भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"इष्णुज्ग्रहणे कर्तरि भुवः" [३।२।५७](#) खिष्णुजित्यस्य द्व्यनुबन्धकस्यापि ग्रहणं भवति" इति वक्ष्यमाणेन सम्बन्धः। अत्रैव कारणमाह--"इकारादेर्विधानसामथ्र्यात्()" इति। खिष्णुच इकारादेर्विधानस्यैतदेव प्रयोजनम्()--इह सूत्रे सामान्येन ग्रहणं यथा स्यात्(), अन्यथा तदपार्थकं स्यात्(), उदात्तत्वाद्भवत#ए#ः ततः परस्य खिष्णुच इटैवेकारादित्वत्()। "अचारुः" इत्यादि। "दृसनिजनिचरिभ्यो ञुण्()" (द।उ।१।८८) [दृसनिजनिचरिचटिरहिभ्यो ञुण्()--द।उ; दृ।उ; दृ()सनिजनिचरिचटिभ्यो ञुण्()--पंउ।] तेनाद्युदात्तश्चारुशब्दः। साद्युशब्दोऽन्तोदात्त; "कृवापा" (द।उ।१।८६) इत्यादिनोण्प्रत्ययान्तत्वात्()। युधा चरति यौधिकः, "प्राग्वहतेष्ठक्()" [४।४।१](#) "कितः" [६।१।१५९](#) इत्यन्तोदात्तः। "अनङ्गमेजयः" इति। अव्ययस्वरेणाद्युदात्तः। अत्र द्वितोये नञ्समासे समासान्तोदात्तत्वमिति नञ्समासः स्यात्()। "अत्रापि" इत्यादि। कस्माच्छब्दस्य नञ उत्तरस्याद्युदात्तत्वविधानात्()। अत्रापि द्वितीयेन नञ्समासेनान्तोदात्तत्वमिति। वर्तमान, वर्धमान--इत्येदमादयः शानजन्तत्वादन्तोदात्ताः। विकारसदृशशब्दः समासस्वरेणान्तोदात्तः। गृहपतिकशब्दः "संज्ञायां कन्()" [५।३।८७](#) इति कन्नन्तत्वादाद्युदात्तः। "वदेरान्यः" (द।उ।८।९), वदान्यशब्दः प्रत्ययस्वरेण मध्योदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा तृन्नन्नतीक्ष्णशुचिषु ६।२।१६१

तृन्नन्त अन्न तीक्ष्ण शुचि इत्येतेषु नञ उत्तरेषु विभाषा अन्तः उदात्तो भवति। तृन् अकर्ता, अकर्ता। अन्न अनन्नम्, अनन्नम्। तीक्ष्ण अतीक्ष्णम्, अतीक्ष्णम्। शुचि अशुचिः, अशुचिः। पक्षे ऽव्ययस्वर एव भवति।

न्यासः

विभाषा तृन्नन्नतीक्ष्णशुचिषु। , ६।२।१६०

तृन्निति प्रत्ययग्रहणम्(), तेन पूर्ववत्? तदन्तस्योपस्थानम्()। अन्नादीनि प्रातिपदिकानि। "अकत्र्ता" इति। ताच्छीलिकस्तृन्()। तेन नित्स्वरेणाद्युदात्तः कर्त्तृशब्दः। अन्नशब्दोऽपि "नब्विषयस्य" (फि।सू।२।२६) इति। "कृत्यसूभ्यां क्स्नः" (द।उ।५।४९) इति "तिजेर्दीर्घश्च" (द।उ।५।५०) इति तीक्ष्णशब्दोऽन्तोदात्तः। "इन्()" (द।उ।१।४६) इति वत्र्तमाने "इगुपधातु कित्()" (द।उ।१।४८), तेन शुचिशब्द आद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरनयोः क्रियागणने ६।२।१६२

बहुव्रीहौ समासे इदम् एतद् तदित्येतेभ्यः उत्तरस्य प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणने वर्तमानस्य अनतः उदात्तः भवति। इदं प्रथमं गमनं भोजनं वा यस्य स इदंप्रथमः। इदंद्वितीयः। इदंतृतीयः। एतत्प्रथमः। एतद्द्वितीयः। एतत्तृतीयः। तत्प्रथमः। तद्द्वितीयः। तत्तृतीयः। बहुव्रीहौ इति किम्। अनेन प्रथमः इदंप्रथमः। तृतीया इति योगविभागात् समासः। इदमेतत्तद्भ्यः इति किम्? यत्प्रथमः। प्रथमपूरणयोः इति किम्? तानि बहून्यस्य तद्बहुः। क्रियागणने इति किम्? अयं प्रथम एषां ते इदंप्रथमाः। द्रव्यगणनम् एतत्। गणने इति किम्? अयं प्रथम एषाम् ते इदंप्रथमाः। इदम्प्रधाना इत्यर्थः। उत्तरपदस्य कार्यित्वात् कपि पूर्वम् अन्तोदात्तं भवति। इदम्प्रथमकाः। बहुव्रीहौ इत्येतत् वनं समासे [६।२।१७७](#) इति प्रागेतस्मादधिकृतम् वेदितव्यम्।

न्यासः

बहुवरीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने।, ६।२।१६१

"प्रथमपूरणयोः" इति। प्रथमे स्वरूपग्रहणम्()। पूरणग्रहणे पूरणेऽर्थे ये प्रत्यया विहितास्ते गृह्यन्ते, प्रथमसाहचर्यात्()। अथ वा--पूरणग्रहणं स्वर्यते, स्वरितेन चाधिकारगतिर्भवति। तेन "तस्य पूरणे डट्()"[५।२।४८](#) इत्यधिकृत्य ये प्रत्यया विहितास्तेषां ग्रहणं भवति। "इदम्प्रथमः" इति। प्रथमोऽन्तोदात्तः। "प्रथेरमत्()" (द।उ।७।४६) इत्यमच्परत्ययान्तत्वात्()। इदमादयस्त्यदादिष्वन्तोदात्ता निपात्यन्ते; "इदन्द्वितीयः इदन्तृतीयः" इति। द्वेस्तीयः" [५।२।५३](#) "त्रेः सम्प्रसारणं च" [५।२।५४](#) इति तीयप्रत्ययान्तत्वान्मध्योदात्तौ द्वितीय तृतीयशब्दौ। "अनेन प्रथम इदं प्रथमः" इति। अत्र "तत्पुरुषे तुल्यार्थ" [६।२।२](#) इत्यादिना पूर्वपदप्रकृतिस्वर एव भवति। "यत्प्रथमः" इति। यत्? प्रथममेषामिति बहुव्रीह्िः। अत्र "बहुव्रीहौ प्रकृत्या" [६।२।१](#) इति पूर्वपदप्रकृतिस्वर एव भवति। एवमुत्तरेष्वप्यस्मिन्? बहुव्रीह्यधिकारे प्रत्युदाहरणेषु वेदितव्यम्()। "इदं प्रधाना इत्यर्थः" इति। एतेनान्तरोक्ते प्रत्युदाहरणे प्रथमशब्दः प्रधानवचनः, न त्वेकसंख्यावचन इति दर्शयन्? गणानाभावं दर्शयति। "उत्तरपदस्य" इत्यादि। इह सूत्रे "प्रथमपूरणयोः" इति त्वन्यविभक्त्योरुत्तरपदनिर्देशः कृतः, न बहुव्रीहिनिर्देशः कृतः। तेनोत्तरपदस्यैव कार्यित्वम्(), न बहुव्रीहेः। ततश्च यदा कबुत्पद्यते तदा "कपि पूर्वम्()" [६।२।१७२](#) अन्तोदात्तं भवति। कप्प्रत्ययो हि ["कप्रत्ययो हि"--मुद्रितः पाठः] समासाधिकारे विहितत्वात्? समासस्यैवान्तौ भवति, नोत्तरपदस्य। न ह्युत्तरपदं समासः, तेन "कबुत्तरपदक्रमेण गृह्यते" इत्युत्तरपदस्यान्तोदात्तत्वं विधीयमानं कपो न भवति, किं तर्हि? पूर्वस्य। "इदम्प्रथमकाः" इति। "शेषाद्विभाषा" [५।४।१५४](#) इति कप्()। "बहुव्रीहौ परकृत्या" [६।२।१](#) इति पूर्वपदप्रकृतिस्वरापवादौ योगः। एवमुत्तरेऽपि बहुव्रीह्यधिकारेऽस्मिन्? योगा द्रष्टव्याः॥

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्यायाः स्तनः ६।२।१६३

सङ्ख्यायाः परः स्तनशब्दो बहुव्रीहौ समासे ऽन्तोदात्तो भवति। द्विस्तना। त्रिस्तना। चतुःस्तना। सङ्ख्यायाः इति किम्? दर्शनीयस्तना। स्तनः इति किम्? द्विशिराः।

न्यासः

संख्यायाः स्तनः।, ६।२।१६२

"द्विस्तना, त्रिसतना" इति। द्वित्रिशब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ। "स्तनगदी देवशब्दे" (धा।पा।१८५९,१८६०) चुरादिरदन्तः, तस्माद्घञ्(), तेन स्तनशब्द आद्युदात्तः। "चतुःस्तना" इति। "चरेरुरन्()" (द।उ।८।७८) इत्युरन्प्रतययान्तत्वाच्चतुःशब्द आद्युदात्तः। दर्शनीयशब्दोऽनीयर्()प्रत्ययान्तः "उपीत्तमं रिति" [६।१।२११](#) इति मध्योदात्तः। "द्विशिराः" इति। शिरःशब्दः "नब्विषयस्य" (फि।सू।२।२६) इत्याद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा ६।२।१६४

छन्दसि विषये बहुव्रीहौ समासे सङ्ख्यायाः परः स्तनशब्दो विभासा ऽन्तोदात्तो भवति। द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुःस्तनां करोति पशूनां दोहायाष्टस्तनां करोति छन्दसां दोहाय।

न्यासः

विभाषा छन्दसि। , ६।२।१६३

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायां मित्राजिनयोः ६।२।१६५

संज्ञायां विषये बहुव्रीहौ समासे मित्र अजिन इत्येतयोः उत्तरपदयोः अन्तः उदात्तो भवति। देवमित्रः। ब्रह्ममित्रः। वृकाजिनः। कूलाजिनः। कृष्णाजिनः। संज्ञायाम् इति किम्? प्रियमित्रः। महाजिनः। ऋषिप्रतिषेधो मित्रे। विश्वामित्र ऋषिः।

न्यासः

संज्ञायां मित्त्राजिनयोः। , ६।२।१६४

"देवमित्त्रो ब्राह्ममित्त्रः" इति। देवब्राह्मशब्दावुक्तस्वरौ। "अमिचिमिदिशसिभ्यः क्त्रः" (द।उ।८।८६) इति मित्त्रशब्दोऽन्तोदात्तः। "वृकजिनः" इति। प्रकृतिविकारयोर्भेदस्याविवक्षितत्वाद्वृकविकारे वृकशब्दोऽत्र वर्तते। वृकमजिनमस्य वृकाजिनः। वृकशब्दः "प्राणिनां कुपूर्वाणाम्? (फि।सू।२।३०) ["प्राणिनां कुपूर्वम्()"--फि।सू।] इत्याद्युदात्तः। "श्यास्त्याह्वेञविभ्य इनच्()" (द।उ।५।१२) इत्यधिकृत्य "अजेरज च" (द।उ।५।१४) इतीनजादेशश्च। तेनाजिनमन्तोदात्तम्()। "कूलाजिनः" इति। कु इति निपातः, तस्मिन्नुपपदे "ला आदाने" (धा।पा।१०५८) इत्येतस्मात्? "अन्येष्वपि दृश्यते" [३।२।१०१](#) इत डः, "अन्येषामपि दृश्यते" [६।३।१३६](#) इति पूर्वपदसय दीर्घत्वम्()। तेन कूल इत्यन्तोदात्तः। "कृष्णाजिनः" इति। "इण्सिञ्जिदीङुण्यविभ्यो नक्()"(द।उ।५।३५) इत्यधिकृत्य "कृषेर्वर्णे" (द।उ।५।३७) इति नक्()। तेन कृष्णोऽन्तोदात्त-। "प्रियमित्त्रः" इति। प्रीणातीति प्रियः, "इगुपध" [३।१।१३५](#) इत्यादिना कः। तेन प्रियोऽन्तोदात्तः। "महाजिनः" इति। "नत्र्तमाने पृषद्बृहन्महजजगच्छतृवच्च" (द।उ।६।५) इत महच्छब्दोऽन्तोदात्त॥

---

सूत्रम्

काशिका-वृत्तिः

व्यवायिनो ऽन्तरम् ६।२।१६६

व्यवायी व्यवधाता, तद्वाचिनः प्रमनतरं बहुव्रीहौ समासे अन्तोदात्तं भवति। वस्त्रान्तरः। पटान्तरः। कम्बलान्तरः। वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः। वस्त्रव्यवधायकः इत्यर्थः। व्यवायिनः इति किम्? आत्मान्तरः। आत्मा स्वभावो ऽन्तरो ऽन्यो यस्य असौ आत्मान्तरः।

---

सूत्रम्

काशिका-वृत्तिः

मुखं स्वाङ्गं ६।२।१६७

मुखम् उत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासे ऽन्तोदात्तं भवति। गौरमुखः। भद्रमुखः। स्वाङ्गम् इति किम्? दीर्घमुखा शाला। स्वाङ्गमद्रवादिलक्षणम् इह गृह्यते।

न्यासः

मुखं स्वाङ्गम्?। , ६।२।१६६

"गौरमुखः" इति। "गुरी उद्यमने" (धा।पा।१३९६) एतस्मादच्()। तदन्तदपि प्रज्ञादेरवृत्करणात्? "परज्ञादिभ्यश्च" ५।४।३८ इत्यण्(), तेन गौरोऽन्तोदात्तः। "उदि दृणातेरजलौ [दृणातेरजलौ--मुद्रितः पाठः] पूर्वपदान्त्यलोपश्च" (पं।उ।५।१९) इति प्रकृत्य "डित्? खनेर्मुट्? स चोदात्तः" (पं।उ।५।२०) इति खनेरजलावित्येतौ प्रत्ययौ भवतः, तौ च डितौ, मुट्? चोदात्तः। तेन मुखशब्द आद्युदात्तः। "भदरमुखः" इति। "ऋजेन्द्र" (द।उ।८।४६) इत्यादिसूत्रेण भद्रशब्दो व्युत्पाद्यते। तेन भद्र इत्यन्तोदात्तः। "दीर्घमुखा शला" इति। मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते। "स्वाङ्गमद्रवलक्षणमिह गृह्रते" इति "अद्रवं मूर्तिमत्? स्वाङ्गम्()" (का।वृ।४।१।५४) इत्यादि यत्परिभाषितं स्वाङ्गमद्रवादिलक्षणं तदिह गृह्रते। तेन दीर्घमुखा शालेत्यत्र न भवतीति भावः॥

---

सूत्रम्

काशिका-वृत्तिः

न अव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ६।२।१६८

अव्यय दिक्शब्द गो महत् स्थूल मुष्टि पृथु वत्स इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे न अन्तोदात्तं भवति। अव्यय उच्चैर्मुखः। नीचैर्मुखः। दिक्शब्द प्राङ्मुखः। प्रत्यङ्मुखः। गो गोमुखः। महत् महामुखः। स्थूल स्थूलमुखः। मुष्टि मुष्टिमुखः। पृथु पृथुमुखः। वत्स वत्समुखः। पूर्वपदप्रकृतिस्वरो यथायोगम् एषु भवति। गोमुष्टिवत्सपूर्वस्य उपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते।

न्यासः

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः। , ६।२।१६७

पूर्वेण प्राप्तस्यान्तोदात्तत्वादयं प्रतिषेध उच्यते। "उच्चैर्मुखः" इति। उच्चैरित्येते स्वरादौ पठ()न्ते, तेऽन्तोदात्ता इति निपात्यन्ते। "प्राङ्मुखः" इति। प्राङित्येतत्? क्विन्नन्तमाद्युदात्तम्(), तत्र "अनिगन्तोऽञ्चतौ वप्रत्यये" ६।२।५२ इति पूर्वपदसय प्रकृतिस्वरः। "प्रत्यङमुखः" इति। अत्र कृदुत्तरपदप्रकृतिस्वरः। "गोमुखः महामुखः" इति। गोमहच्छब्दावन्तोदात्तावित्युक्तम्()। "स्थूलमुखः" इति। "स्थूल परिबृंहणे" (धा।पा।१९०४), चुरार्दिः, तस्मात्? पचाद्यच्()। तेन स्थूलशब्दोऽन्तोदात्तः। "मुष्टिमुखः" इति। मुषेः क्तिच्()। तेन मुष्टिशब्दोऽन्तोदात्तः। "पृथुमुखः" इति। "कुभ्र्रश्च" (पं।३।१।२३) इत्यधिकृत्य प्रथिम्रदिभ्रस्जां सम्प्रसारणं "सलोपश्च" (पं।उ।१।२९) इति कुप्रत्ययः। तेन

पृथुरन्तोदात्तः। "वत्समुखः" इति। "वृ()तृ()वदिनि" (द।उ।९।२१) इत्यादिना सः। तेन वत्सोऽन्तोदात्तः। "गोमुष्टि" इत्यादि। उत्तरसूत्रेण निष्ठादिपूर्वपदस्योपमानलक्षणोऽपि यः प्राप्नोति सोऽप्यनेन बाध्यते। अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न; गौर्मुखमिव यस्य, मुष्टिर्मुखमिव यस्य, वत्सो मुखमिव यस्येति सर्वत्र गवाद्युपमेयम्(), नोपमानम्()। उत्तरसूत्रेण निष्ठादिपूर्वपदस्योपमानलक्षणस्य विकल्पस्यावकाशो यत्र गवादेरन्यदुपमानम्()--सिंहमुखः, व्याघ्रमुख इति। यत्र गवाद्युपमानं तद्? यत्र पूर्वपदं तत्रोभयप्राप्तावुपमानलक्षणं बाधित्वाऽयमेव स्रिषेधो पूर्वप्रतिषेधेन॥

---

सूत्रम्

काशिका-वृत्तिः

निष्ठाउपमानादन्यतरस्याम् ६।२।१६९

निष्ठान्तातुपमानवाचिनश्च मुखं स्वाङ्गम् उत्तरपदम् अन्यतरस्याम् बहुव्रीहौ समासे ऽन्तोदात्तं भवति। प्रक्षालितमुखः, प्रक्षालितमुखः, प्रक्षालितमुखः। यदा एतदुत्तरपदान्तोदात्तत्वं न भवति तदा निष्ठोपसर्गपूर्वम् अन्यतरस्याम् ६।२।१०९ इति पक्षे पूर्वपदान्तोदात्तत्वं, तदभावपक्षे ऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरः इति त्रीण्युदाहरणानि भवन्ति। उपमानात् सिंहमुखः, सिंहमुखः। व्याघ्रमुखः, व्याघ्रमुखः।

---

सूत्रम्

काशिका-वृत्तिः

जातिकालसुखाऽदिभ्यो ऽनाच्छादनात् क्तो ऽकृतमितप्रतिपन्नाः ६।२।१७०

जातिवाचिनः आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासे ऽन्तोदात्तं भवति। सारङ्गजग्धः। पलाण्डुभक्षितः। सुरापीतः। काल मासजातः। संवत्सरजातः। द्व्यहजातः। त्र्यहजातः। सुखादिभ्यः सुखजातः। दुःखजातः। तृप्रजातः। जात्यादिभ्यः इति किम्? पुत्रजातः। आहिताग्न्यादित्वात् परनिपातः। अनाच्छादनातिति किम्? वस्त्रच्छन्नः। वसनच्छन्नः। अकृतमितप्रतिपन्नाः इति किम्? कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। एतेसु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो न भवत्येव अस्मादेव ज्ञापकात्। प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयितव्यः। सुखादयस्तृतीये ऽध्याये पठ्यन्ते।

न्यासः

जातिकालसुखादिभ्योऽनाच्छादनात्? क्तोऽकृतमितप्रतिपन्नाः। , ६।२।१६९

"शाङ्गरजग्धः" इति। गुणातेरितेर्वा "शमि धातोः संज्ञायाम्()" (३।२।१४) इत्यच्? शङ्गरः, ततोऽपि प्रज्ञादेराकृतिगणत्वादण्()। तेन शाङ्गरशब्दोऽन्तोदात्तः। "पलाण्डुभक्षितः" इति। "पल गतौ" (धा।पा।८३९) "उणादयो बहुलम्()" ३।३।१ इत्याण्डुप्रत्ययः तेन पलाण्डुशब्दो मध्योदात्तः। "सुरपीतः" इति। "सुसूधागृधिभ्यः क्रन्()" (द।उ।यट।४२) इति सुराशब्द आद्युदात्तः। "मासजातः" इति। "मसी परिमाणे" (धा।पा।१२२१) ["परिणामे"धा।पा।] अस्माद्घञ्(), तेन मास आद्युदात्तः। "संवत्सरजातः" इति। "अशेः सरः" (द।उ।८।५०) ["सरन्()"--द।उ।प।उ। (३।७०)] इत्यधिकृत्य "वसेश्च" (द।उ।८।५१) "सम्पूर्वाच्चित्()" (द।उ।८।५२) इति। तेन संवत्सरोऽन्तोदात्तः। "द्व्यहजातः। त्र्यहजातः" इति। द्वित्रिशब्दावन्तोदाततावित्युकतम्()। "सुखजातः" इति। खनतेः सुपूर्वात्? "अन्येष्वपि दृश्यते" ३।२।१०१ इति डः। तेन सुखशब्दोऽन्तोदात्तः। एवं दृःखशब्दोऽपि वेदितव्यः। तेन तृप्रशब्दोऽन्तोदात्तः। "कृच्छ्रजातः" इति। "कृतेच्छः क्रू च" (द।उ।८।३८,पं।उ।२।२१) ["कृते च्छक्? च--द।उ। "कृतेश्छक्रू च"--पं।उ।] इति कृच्छ्रशब्दोऽन्तोदात्तः। "असु क्षेणपे" (धा।पा।१२०९) अस्माद्? "बहुलमन्यत्र#आऽपि" (द।उ।८।४०) इति रक्(),

तेनास्लमन्तोदात्तम्()। "वृ()तृ()वदहनिकमिकषिब्यः सः" (द।उ।९।२१) [कषियुमुचिभ्यः--द।उ।] इति बहुलवचनादमेरपि भवति। अंसो वृषादित्वादाद्युदात्तः। "अलकम्()" इति। अलतेः "पुंसि संज्ञायां घः प्रायेण" ३।३।११८, ततः कन्निति कन्नन्तोऽप्लकशब्दः। तेनाद्युदात्तः। "कृ()वृ()दारिभ्य उनन्()" (पं।उ।३।५३), तेन करुणशब्द आद्युदात्तः। "रञ्जेः क्वुन्()" (()) इति बहुलवचनात्? कृपेरपि भवति। तेन कृपणमाद्युदात्तम्()। "सोढः" इति क्तान्तम्()। तेनैतदन्तोदात्तम्()। पूर्ववद्धत्वढत्वादयः कत्र्तव्याः। "प्रतीयम्()" इति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। "ऋक्पूः" ५।४।७४ इत्यादिनाऽकारः समासान्तः, "द्व्यन्तरुपसर्गेभ्योऽपि ईत्()" ६।३।९६ इतीत्त्वम्()। "पुत्रजातः" इति। अत्र बहुव्रीहिस्वर एव भवति। "अमिचिमिदिशसिभ्यः क्त्रः" (द।उ।८।८६) "पुवो ह्रस्वश्च" (पं।३।४।१६४) तेन पुत्रशब्दोऽन्तोदात्तः। कथं पुनर्जातशब्दस्य परनिपातः, यावता "निष्ठा" (२।२।३६) इति पूर्वनिपातेनात्र भवितव्यम्()? इत्यत आह--"आहिताग्न्यादित्वात्()" इत्यादि। पुत्रजातशब्दोऽयमाहितागन्यादिषु षठ()ते, तेन "वाऽऽहितागन्यादिषु" २।२।३७ इति जातादिशब्दसय परनिपातः। "वस्त्रच्छन्नः" इति। वस्त्रम्()ाच्छादनम्(), आच्छाद्यतेऽनेनेति कृत्वा। वस्त्रशब्द उक्तस्वरः। छन्नशब्दः "छद अपवारणे" (धा।पा।१८३३) इत्यस्य ण्यन्तस्य निष्ठायां "वा दन्तशान्त" ७।२।२७ इत्यादिना निपातितः। "वसनच्छन्नः" इति। वसेराच्छादनार्थाल्ल्युट्()। तेन वसनमाद्युदात्तम्()। "कुण्डलकृतः" इति। कुण्डशब्दोऽयं "नब्विषयस्य" (फि।सू।२।२६) इत्याद्युदात्तः। "कुण्डमितः" इति। "माङ् माने" (धा।पा।११४२), "द्यतिस्यति" ७।४।४० इत्यादिनेत्त्वम्()। अथ कथमेतेषु बहुव्रीहिषु "निष्ठा" (२।२।३६) इत्यनेन निष्ठान्तस्य पर्वनिपातो न भवति? इत्याह--"एतेषु" इत्यादि। यस्मादेतत्? कृतम्(), तस्माज्जात्यादिभ्यः परस्यान्तोदात्तत्वबिधानाम्()। एतस्मादेव ज्ञापकान्निष्ठान्तस्य पूर्वनिपातो न भवति; अन्यथा ह्येतदन्तोदात्तत्वविदानं नोपपद्यते॥

---

सूत्रम्

काशिका-वृत्तिः

वा जाते ६।२।१७१

जातशब्दे उत्तरपदे वा अन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः। दन्तजातः, दन्तजातः। स्तनजातः, स्तनजातः। कालात् मासजातः, मासजातः। संवत्सरजातः, संवत्सरजातः। सुखादिभ्यः सुखजातः, सुखजातः। दुःखजातः, दुःखजातः।

न्यासः

वा जाते। , ६।२।१७०

जातशब्दोऽपि क्तान्त इति तस्यापि जात्यादिभ्यः परस्य पूर्वेण नित्यमन्तोदात्तत्वे विकल्पोऽयमुच्यते। "दन्तजातः" इति। "हसिमृग्रिण्वमिदमि"(द।उ।६।७) इत्यादिना तन्()--दन्तः। तेनायमाद्युदात्तः। "स्तनजातः" इति। स्तनशब्द उक्तस्वरः।

---

सूत्रम्

काशिका-वृत्तिः

नञ्सुभ्याम् ६।२।१७२

नञ्सुभ्यां परम् उत्तरपदं बहुव्रीहौ समासे ऽन्तोदात्तं भवति। अयवो देशः। अव्रीहिः। अमाषः। सुयवः। सुव्रीहिः। सुमाषः। समासस्य एतदन्तोदात्तत्वम् इष्यते। समासान्ताश्च अवयवा भवन्ति इति अनृचः, बह्वृचः इत्यत्र कृते समासान्ते ऽन्तोदात्तत्वं भवति।

न्यासः

नञ्सुभ्याम्?। , ६।२।१७१

"अयवो देशः" इत्यादि। यवव्रीहिमाषाः "तृणधान्यानाञ्च द्व्यषाम्()" (फि।सू।२।२७) इत्याद्युदात्तः। "समासस्य" इत्यादि। इह समासः प्रकृत उत्तरपदं च। तत्र यद्युत्तरपदस्यैतदन्तोदात्तत्वं स्यात्? अनृचो बह्()वृच इत्यत्र "ऋक्पूरब्धूः" [५।४।७४](#) इत्यादिनाकारे समासान्ते कृते ततः पूर्वस्य ऋक्शब्दस्योत्तरपदस्यान्तोदात्तत्वं प्रसज्येत। समासस्य त्वन्तोदात्तत्वं विधीयमानमकारस्यैव भवति; तस्य समासावयवत्वात्()। समासावयवत्वं तु "समासान्ताः" [५।४।६८](#) इत्याधिकृत्य विधानात्()। तस्मात्? समासावयवस्यैतदन्तोदात्तत्वमिष्यते। कथं पुनरिष्यमाणमुपि लभ्यते? "कपि पूर्वम्()" [६।२।१७२](#) इत्यत्र पूर्वग्रहणात्()। तद्धि पूर्वग्रहणमनेन समास्सयान्तोदात्तत्वं विधीयमानं समासावयवस्य कप एव मा भूदित्येवमर्थं क्रियते। यदि तूभयपदस्यैतदन्तोदात्तत्वं स्यात्(), तदान्तरेणापि कपिपूर्वग्रहणं कपिपूर्वस्योत्तरपदस्य सात्(), न कपः; न हि कबुत्तरपदस्यावयवः, ततश्च पूर्वग्रहणनर्थकम्()। इदं तावत्()--"समासान्ताःप्रत्ययाः समासस्यैवावयवाः, नोत्तरपदस्य" इत्येतद्दर्शनमङ्गीकृत्योक्तम्()। इदानीं "उत्तरपदस्यापि तेऽवयवाः, इत्येतद्दर्शनमाश्रित्याह--"समासान्ताश्च" इत्यादि। उत्तरपदं चेति शेषः। एतदन्तोदात्तत्वमिष्यत इति प्रकृतेन सम्बन्धः। इतिकरणो हेतौ। अथ वा--उत्तरपदस्यैवैतदन्तोदात्तत्वमिष्यते। कुतः? समासान्ता उत्तरपदावयवा भवन्तीत्यतो हेतोः। तेनानुचः बह्()वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति, तच्चोत्तरपदस्य भवेत्()। तस्यैव समासान्तस्य भवति, तस्योत्तरपदावयवत्वादिति भावः। सान्तेऽन्तोदात्तत्वं भवति, तच्चोततरपदसय भवेत्()। तस्यैव समासान्तस्य भवति, तस्योत्तरपदावयवत्वादिति भावः। यदि हि समासान्ता उत्तरपदावयवा न स्युः, तत उत्तरपदावयवस्यन्तोदात्तत्वं विधीयमानं समासान्तस्य न स्यात्()। उत्तरपदावयवत्वे हि समासान्तानां तस्यैव समासान्तस्य भवति। कथं पुनः समासान्तानामुत्तरपदावयवत्वम्()? समासार्थादुत्तरपदात्? पूर्वं समासान्तं विधाय पश्चात्? तदन्तेन समासविधानात्()। तथा हि "न कपि" [७।४।१४](#) इत्यत्र वक्ष्यति ""गोस्त्रियोरुपसर्जनस्य" [१।२।४८](#) इतययमपि ह्रसवः कपि न भवति। समासार्थे ह्युत्तरपदे कपि कृते पश्चात्? कबन्तेन सह समासेन भवितव्यममिति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति" इति। समासान्तप्रत्ययान्तेन च पदेन यदि समासः क्रियते, तदा "तन्मध्ये पतितास्तद्ग्रहणेन गृह्न्ते" (व्या।प।२१) इति समासान्तः प्रत्ययः उत्तरपदावयवा भवन्ति। यद्यवम्(), समासावयवत्वं तेषां नोपपद्यते? नैतदस्ति; अवयवावयवोऽपि हि समुदायावयवो भवति, तथा हि--"देवदत्तायाः सर्वेऽवयवा अलङ्क्रियन्ताम्()" इत्युक्ते देवदत्तावयकस्य येऽवयवा अङ्गुल्यादयस्येऽप्यलङ्क्तियन्ते॥

---

सूत्रम्

काशिका-वृत्तिः

कपि पूर्वम् ६।२।१७३

नञ्सुभ्या कपि परतः पूर्वम् अन्तोदात्तं भवति। अकुमारीको देशः। अवृषलीकः। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः। सुब्रह्मबन्धूकः।

न्यासः

कपि पूर्वम्?। , ६।२।१७२

पूर्वेण कप एवान्तोदात्तत्वे प्राप्ते कपि पूर्वस्योदात्तत्वमनेन विधीयते। "अकुमारीकः" इत्यादि। "शेषाद्विभाषा" [५।४।१५४](#) इति कप्()। कुमारीशब्द उदात्तनिवृत्तिस्वरेणान्तोदात्तः। वृषलीशब्दोऽपि जातिलक्षणेन ङीषा। ब्राह्बन्धूरप्यूङन्तत्वात्?

प्रत्ययस्वरेण॥

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वान्ते ऽन्त्यात् पूर्वम् ६।२।१७४

ह्रस्वो ऽन्तो यस्य तदिदं ह्रस्वान्तम् उत्तरपदं समासो वा, तत्र अन्त्यात् पूर्वम् उदात्तं भवति कपि परतो नञ्सुह्यां परं बहुव्रीहौ समासे। अयवको देशः। अव्रीहिकः। अमाषकः। सुयवकः। सुव्रीहिकः सुमाषकः। पूर्वम् इति वर्तमने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्, ह्रस्वान्ते ऽन्त्यात् पूर्वम् उदात्तं भवति, न कपि पूर्वम् इति। तेन अज्ञकः, सुज्ञकः इत्यत्र कबन्तस्य एव अन्तोदात्तत्वं भवति।

न्यासः

ह्रस्वान्तेऽन्त्यात्पूर्वम्?। , ६।२।१७३

"ह्यस्वोऽन्तोऽस्य" इत्यादि। अनेन ह्यस्वान्त इत्यस्यैव बहुव्रीहेरन्यपदार्थ उत्तरपदं समासो वेति दर्शयति। "अयवको देशः" इति। अत्र कपि परतो यव इत्येतत्? ह्यस्वान्तमुत्तरपदम्(), अयव इत्ययं वा समासः। तत्रान्त्याद्वकारात्(), पूर्वमक्षरं यकाराकार उदात्तो भवति। अनया दिशान्यत्रापरि वेदितव्यम्()। अथ पूर्वग्रहणं किम्(), यावता "कपि पूर्वम्()" (६।२।१७३) इत्यतः पूर्वमिति वर्तत एव? इत्यत आह--"पूर्वमिति वर्तमाने" इत्यादि। द्वितीये हि पूर्वग्रहणे क्रियमाणे वाक्यभेदेन प्रवृत्तिभेदो भवति; पूर्वग्रहणसामर्थ्यात्(), अन्यथा हि तदपार्थकं स्यात्()। तत्रैकय प्रवृत्त्या ह्यस्वन्तेऽन्त्यात्? पूर्वमन्तोदात्तं विथधीयते। अपरया तु ह्यस्वान्तेऽन्त्यात्? पूर्वमन्तोदात्तं न भवतीति नियमः। तेन कपि पूर्वमन्तोदात्तं न भवति। "तेन" इत्यादिना नियमो न स्यात्(), तदात्रान्त्यात्? पूर्वं उदात्तभावो नास्तीति कपि पूर्वमन्तोदात्तं स्यात्()। "कपि पूर्वम्()" ६।२।१७२ इत्यनेन नियमे तु सति न भवति। तेन "नञ्सुभ्याम्()" ६।२।१७१ इति कबन्तस्यैवान्तोदात्तत्वं भवति। यथा च स भवति तथात्रैवोपपादितम्()॥

---

सूत्रम्

काशिका-वृत्तिः

बहोर् नञ्वदुत्तरपदभूम्नि ६।२।१७५

उतरपदार्थबहुत्वे यो बहुशब्दो वर्तते तस्मात् नञ इव स्वरो भवति। नञ्सुभ्याम् ६।२।१७१ इत्युक्तम्, बहोरपि तथा भवति। बहुयवो देशः बहुव्रीहिः। बहुतिलः। कपि पूर्वम् ६।२।१७२ इत्युक्तम्, बहोरपि तथा भवति। बहुकुमारीको देशः। बहुवृषलीकः। बहुब्रह्मबन्धूकः। ह्रस्वान्ते ऽन्तो ऽन्त्यात् पूर्वम् ६।२।१७३ इत्युक्तम्, बहोरपि तथा भवति। बहुयवको देशः। बहुव्रीहिकः। बहुमाषकः। नञो जरमरमित्रमृताः ६।२।११६ इत्युक्तम्, बहोरपि तथा भवति। बहुजरः। बहुमरः। बहुमित्रः। बहुमृतः। उत्तरपदभूम्नि इति किम्? बहुषु मनः अस्य बहुमनाः अयम्।

न्यासः

बहोर्नञ्वदुत्तरपदभूम्नि। , ६।२।१७४

"नञ्सुभ्याम्()" (६।२।१७२) इत्यादिभिर्योगैर्नञ उत्तरस्य यत्? स्वरवनिधानं तद्बहोरपि यथा स्यादित्येवमर्थमिदम्()। नञ इव नञ्वत्()। बहोर्भावो भूमा, पृथ्वादित्वादिमनिच्(), "बहोर्लोपो भू च बहोः" ६।४।१५८ इति भूभावः। उत्तरपदस्य भूमेति षष्ठीसमासः। अथातिदेशः किमर्थः, न "नञ्सुबहुभ्य उत्तरपदभूम्नि" इत्येवोच्येत; न चैवं योगे क्रियमाणे

नञ्स्वोरप्युत्तरपदभूम्नीत्येतद्विशेषणमापाद्यते; सम्भवापेक्षत्वादस्य, यथैव हि" हल्ङ्याब्भ्यो दीर्घात्()" ६।१।६६ इत्यत्र दीर्घग्रहणं सम्भवापेक्षं विशेषणं ङ्यापोरेव भवति न हलः; तथैतदपि बहोरेव भविष्यति न नञ्स्वोः, न हि तयोरुत्तरपदार्थबहुत्वे बृत्तिः सम्भवतीति? एवं तर्हि यदपि विदेशस्थं नञोपलक्षितं बहुव्रीहेः स्वरविधानम्(), तदप्यस्मादतिदेशाद्यथा स्यादित्येवमर्थोऽयमतिदेशः क्रियते। तेन "नञो जरमरमित्त्रमृताः" ६।२।११५ इत्युत्तरपदाद्युदात्तत्वमपि बहोरतिदिश्यते। "बहुमनाः" इति। अत्रोत्तरपदबहुत्वे बहुशब्दो न वर्तते॥

---

सूत्रम्

काशिका-वृत्तिः

न गुणादयो ऽवयवाः ६।२।१७६

बुणादयो ऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ताः भवन्ति बहुगुणा रज्जुः। बह्वक्षरं पदम्। बहुच्छन्दो मानम्। बहुसूक्तः। बह्वध्यायः। गुणादिराकृतिगणो द्रष्टव्यः। अवयवाः इति किम्? बहुगुणो ब्राह्मणः। अध्ययनश्रुतसदाचारदयो ऽत्र गुणाः।

न्यासः

न गुणादयोऽवयवाः। , ६।२।१७५

पूर्वोणातिप्रसक्तोऽतिदेश इति गुणादिना प्रतिषिध्यते--"बहुगुणा रज्जुः" इति। बह्ववयवा इत्यर्थः। "गुण आमन्त्रणे" (धा।पा।१८९४) चुरादिः, तस्माद्घञ्()। तेन गुणशब्द आद्युदात्तः। "अशेः सरः" (द।उ।८।५०) ["सरन्()"--द।उ।(पं।उ।-३।७०)] इत्यनेनाक्षरशब्दोऽन्तोदात्तः। छन्दो मीयतेऽनेनेति च्छन्दोमानम्()। कृत्स्वरेण छन्दोमाने मानशब्द आद्युदात्तः; तस्य घञन्तत्वात्()। शोभनमुक्तं सूक्तम्()। प्रादिसमासः। थाथादिस्वरेण ६।२।१४३ सूक्तशब्दोऽन्तोदात्तः। अधीयतेऽस्मादित्यध्यायः। "इङश्च" ३।३।२१ इति घञ्()। सूक्तवदध्यायोऽन्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गात् स्वाङ्गं ध्रुवम् अपर्शु ६।२।१७७

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितम् अन्तोदात्तं भवति बहुव्रीहौ समासे। प्रपृष्ठः। प्रोदरः। प्रललाटः। ध्रुवम् इत्येकरूपम् उच्यते, ध्रुवम् अस्य शीतम् इति यथा। सततं यस्य प्रगतं पृष्ठं बह्वति स प्रपृष्ठः। उपसर्गातिति किम्? दर्शनीयललाटः। स्वाङ्गम् इति किम्? प्रशाखो वृक्षः। ध्रुवम् इति किम्? उद्बाहुः क्रोशति। अपर्शु इति किम्? उत्पर्शुः। विपर्शुः।

न्यासः

उपसर्गात्? स्वाङ्गं ध्रुवमपर्शु। , ६।२।१७६

उपसर्गात्? प्राद्युपलक्षणं वेदितव्यम्()। स्वङ्गं प्रति क्रियायोगाभावात्()। प्रादिग्रहणमेव तु न कृतं वैचित्र्यार्थम्()। ध्रुवशब्दोऽयमवयवेप्यस्ति, यथा "ध्रुवमपायेऽपादानम्()" १।४।२४ इति, एकस्वरूपेप्यस्ति, यथा ध्रुवमस्य शीलमिति; तदिहैकस्वरूपे वर्तमानो गृह्नत इति दर्शयितुमाह--"ध्रुवमित्येकरूपमुच्यते" इत्यादि। "सततम्()" इत्यादिना ध्रुवत्वं पृष्ठस्य दर्शयति। पृष्ठशब्दोऽन्तोदात्तः। "पृषु मृषु वृषु सेचने" (धा।पा।७०५।७०६,७०७) इत्यस्य थकि व्युत्पादितत्वात्()। "दर्शनीयललाटः" इति। दर्शनीयशब्दः "उपोत्तमं रिति" ६।१।२११ इति मध्योदात्तः। "लल ईप्सायाम्()" (धा।पा।१६८७) इत्यस्मात्? "उणादयो बहुलम्()" ३।३।१ इत्याटप्रत्ययः। तेन ललाटशब्दो मध्योदात्तः। "प्रशाखो वृक्षः" इति। "उणादयो

बहुलम्()" (३।३।१) इति वचनात्? "शो तनूकरणे" (धा।पा।११४५) इत्यस्मात्? खः, टाप्(), सवर्णदीर्घत्वम्(), "एकादेश उदात्तेनोदात्तः" ८।२।५। तेन शाखाशब्दोऽन्तोदात्तः। उद्बाहुः क्रीशति" इति। अत्र बाहोरेकरूपता नास्तीत्युध्र्ववत्वम्()। न ह्रसौ नित्यमूध्र्वबाहुरेव क्रीशति, अपि तु कदाचिदधो बाहुरपि। "उत्पर्शुः" इति। "स्वृशेः ()आण्शुनौ पृ च"(पं।उ।५।२७) [()आण्? शुनो पृ च--मु।पाठः] इति शुन्प्रत्ययान्तः पर्शुः। तेनायमाद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

वनं समासे ६।२।१७८

समासमात्रे वनम् इत्येतदुत्तरपदम् उपसर्गात् परमन्तोदात्तं भवति। प्रवणे यष्टव्यम्। निर्वणे प्रणिधीयते। प्रनिरन्तः इति णत्वम्। समासग्रहणं समासमात्रपरिग्रहार्थम्, बहुव्रीहावेव हि स्यात्।

न्यासः

वनं समासे। , ६।२।१७७

"समासमात्रे" इति। मात्रग्रहणेन बहुव्रीहेर्निवृत्ति सूचयति। "प्रवणे" इति। यदायं बहुव्रीहिस्तदा प्रकृष्टं प्रकृतं वा वनमस्येति विग्रहः। यदा तु तत्पुरुषः, तदा प्रकृष्टं वनं प्रगतं वा वनमिति विग्रहः। "निर्वणे" इति। अत्रापि यदा बहुव्रीहिः, तदा निर्गतं वनमस्येति विग्रहः। यदा तु तत्पुरुषस्तदा निरगतो वनादिति तत्पुरुषस्तु "कुगतिप्रादयः" २।२।२८ इति। किं पुनः स्याद्यदि समासमात्रपरिग्रहार्थं समासग्रहणं न क्रियेत? इत्यत आह--"बहुव्रीहावेव हि स्यात्()" इति। "रञ्जेः क्युन्()" (द।उ।५।२४-पं।उ।२।८०)। ["रजेः"--द।उ।] बहलवनात्? "वनु याचने" (धा।पा।१४७०) इत्यस्मादपि भवति। तेन वनमाद्युदात्तम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तः ६।२।१७९

अन्तःशब्दादुत्तरं वनम् अन्तोदात्तं भवति। अन्तर्वणो देशः। अनुपसर्गार्थं आरम्भः।

न्यासः

अन्तः। , ६।२।१७८

"अन्तः" इति स्वरादिष्वन्तोदात्तो निपात्यते। "अन्तर्वणो देशः" इति। अन्तर्वनं यस्मिन्निति बहुव्रीहिः, "वनेऽन्तः" इति शौण्डादिपाठात्? २।१।३९ सप्तमीसमासो वा। "प्रनिरन्तरः" ८।४।५ इत्यादनना णत्वम्()। "अनुपसर्गार्थ आरम्भः" इति। उपसर्गात्? पूर्वेणैव सिद्धत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

अन्तश् च ६।२।१८०

अन्तःशब्दश्च उत्तरपदम् उपसर्गादन्तोदात्तं भवति। प्रान्तः। पर्यन्तः। बहुव्रीहिरयम् प्रादिसमासो वा।

न्यासः

अन्तश्च। , ६।२।१७९

अन्तःशब्दः "हसिमृग्रिण्()वमिदमिलूपूधुर्विभ्यस्तन्()" (द।उ।६।७) इति तन्प्रत्ययान्तत्वादाद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

न निविभ्याम् ६।२।१८१

नि वि इत्येताभ्याम् उत्तरो ऽन्तःशब्दो न अनतोदात्तो भवति। न्यन्तः। व्यन्तः। पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः। तत्र उदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४ इति स्वरितो भवति।

न्यासः

न निविभ्याम्?। , ६।२।१८०

पूर्वेण निविभ्यामप्युततरसयान्तोदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते। "पूर्वपदप्रकृतिस्वरतवे कृते" इति। यदा बहुव्रीहिस्तदा "बहुव्रीहौ प्रकृत्या पूर्वपदम्()" ६।२।१ इति प्रकृतिस्वरत्वम्()। यदा तु तत्पुरुषस्तदा "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना॥

---

सूत्रम्

काशिका-वृत्तिः

परेरभितोभावि मण्डलम् ६।२।१८२

परेरुत्तरम् अभितोभविवचनं मण्डलं च अन्तोदात्तं भवति। परिकूलम्। परितीरम्। परिमण्डलम्। बहुव्रीहिरयं प्रादिसमासो ऽव्ययीभावो वा। अव्ययीभावपक्षे ऽपि हि परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ६।२।३३ इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तम् अनेन बाध्यते। अभितः इत्युभयतः। अभितो भावो ऽस्य अस्ति इति तदभितोभावि। यच् च एवं स्वभावं कूलादि तदभितोभाविग्रहणेन गृह्यते।

न्यासः

परेरभितोभावि मण्जलम्?। , ६।२।१८१

"परिकूलम्(), परितीरम्()" इति। कूलतीरशब्दावुक्तस्वरौ "कूलतीरतूलमूल" ६।२।१२० इत्यादौ सूत्रे। "परिमण्डलम्()" इति। परितः=सर्वतो मणाडलं परिमण्डलम्()। "मणि भूषायाम्()" (धा।पा।३२१)--अस्मात्? "कलस्तृपश्च" (द।उ।८।१०७) इति बाहुलकात्? कलप्रत्ययः, "वृषादिभ्यश्चित्()" (द।उ।८।१०९) इति च। तेन मण्डलमन्तोदात्तम्()। "बहुव्रीहिरयम्()" इत्यादि। यदा बहुव्रीहिस्तदा--परितः कूलमस्य, परितस्तीरमस्येति तेन मण्डलमन्तोदात्तम्()। "बहुव्रीहिरयम्()" इत्यादि। यदा बहुव्रीहिस्तदा--परितः कूलमस्य, परितस्तीरमस्येति विग्रहः। यदा तु प्रादिसमासस्तदा परिगतं कूलम्(), परिगतं तीरमिति। यदा पुनरव्ययीभावस्तदा--परि कूलात्(), परि तीरादिति। अव्ययीभावस्तु "अपपरिबहिरञ्चवः पञ्चम्या" २।१।११ इत्यनेन। परि कूलादिति पञ्चमी "पञ्चम्यपाङ्परिभिः" २।३।१० इति कर्मप्रवचनीययोगे। कर्मप्रवचनीयत्वं तु परेः "अपपरी वर्जने" १।४।८७ इति। युक्तं यद्बहुव्रीहौ तत्पुरुषे चेदमन्तोदात्तत्वं विधीयते; तत्र हि समासान्तोदात्तत्वस्यापवादः, पूर्वपदप्रकृतिस्वरः प्राप्नोति। अव्ययीभावे त्वयुक्तम्(); तत्र हि समासान्तोदात्तत्वेनैव सिद्धम्()। न हि तस्यापवादः पूर्वपदप्रकृतिस्वरः केनचित्? प्राप्त इत्यत आह--"अव्ययीभावपक्षेऽपि हि" इत्यादि। यदाप्यव्ययीभावपक्षः, तदापि "परिप्रत्युपपा" ६।२।३३ इत्यादिना पूर्वपदप्रकृतिस्वरः प्राप्तोनेनान्तोदात्तत्वविधानेन

बाध्यत इति किमत्रायुक्तम्()। "यच्चैवंस्वभावम्()" इत्यादि। अभितो भवनं यस्य स्वभावस्तदभितोभाविग्रहणेन गृह्यते, न तु तद्विपरीतस्वभावम्()॥

---

सूत्रम्

काशिका-वृत्तिः

प्रादस्वङ्गं संज्ञायाम् ६।२।१८३

प्रादुत्तरपदम् अस्वाङ्गवाचि संज्ञायां विषये ऽन्तोदात्तं भवति। प्रकोष्ठम्। प्रगृहम्। प्रद्वारम्। अस्वङ्गम् इति किम्? प्रहस्तम्। प्रपदम्। संज्ञायाम् इति किम्? प्रपीठम्।

न्यासः

प्रादस्वाङ्गं संज्ञायाम्?। , ६।२।१८२

"प्रकोष्ठम्()" इति। "उषिकुषिगार्तिभ्यस्थन्()" (द।उ।६।२९) इति कुषेस्थन्()। तेन क्रोष्ठशब्द आद्युदात्तः। "प्रगृहम्()" इति। "गेहि कः" ३।१।१४४ इति कप्रत्ययः। तेन गृहमन्तोदात्तम्()। "प्रद्वारम्? इति। "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इति द्वारमाद्युदात्तम्()। "प्रपदम्()" इति। पदं द्वारवदेवाद्यटुदात्तम्()। "प्रहस्तम्()" इति। "हसिमृग्रिण्वमिदमि" (द।उ।६।७) इत्यादिना हसेस्तन्()। तेन हस्तशब्द आद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

निरुदकादीनि च ६।२।१८४

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति। निरुदकम्। निरुलपम्। निरुपलम् इत्यन्ये पठन्ति। निर्मशकम्। निर्मक्षिकम्। एषां प्रादिसमासो बहुव्रीहिर् वा। अव्ययीभावे तु समासान्तोदात्तत्वेन एव सिद्धम्। निष्कालकः। निष्क्रान्तः कालकातिति कन्प्रत्ययान्तेन कालशब्देन प्रादिसमासः। निष्कालिकः इत्यन्ये पथन्ति। निष्पेषः। दुस्तरीपः। अवितृस्तृतन्त्रिभ्य ईः, तरीः। तां पाति इति तरीपः। कुत्सितः तरीपः दुस्तरीपः। निस्तरीपः इति केचित् पठन्ति। अपरे निस्तरीकः इति। ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति। निरजिनम्। उदजिनम्। उपाजिनम्। परेर्हस्तपादकेशकर्षाः। परिहस्तः। परिपादः। परिकेशः। परिकर्षः। निरुदकादिराकृतिगणः।

लघु-सिद्धान्त-कौमुदी

अर्तिलूधूसूखनसहचर इत्रः ८४९, ६।२।१८३

अरित्रम्। लवित्रम्। धुवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥

न्यासः

निरुदकादीनि च। , ६।२।१८३

"निरुदकम्()" इति। निष्क्रान्तमुदकमस्मादिति बहुव्रीहिः, निष्क्रान्तमुदकादिति वा प्रादिसमासः। उदकं कायतीति "आतोऽनुपसर्गे कः" ३।२।३, "उदकस्योदः संज्ञायाम्()" ६।३।५६ इत्युदभावः। तेनोदकमन्तोदात्तम्()। "निरुपलम्()" इति। "विटपविष्टपविशिपोलपाः" (द।उ।७।१२) इत्युपलशब्दोऽन्तोदात्तो निपात्यते। "निरुपलमित्यन्ये" इति। उपपूर्वाल्लातेः "आतश्चोपसर्गे" ३।१।१३६ इति कः। तेनोपलशब्दस्थाथादि ६।२।१४३ स्वरेणाद्युदात्तः। "निर्मक्षिकम्(), निर्मशकमित्यदीनाम्()" इति। मशकमक्षिकाशब्दा(वा)द्युदात्तान्तोदात्तौ। तत्र हि "अथादिः, प्राक्(), शकटेः"

(फि।सू।२।२४), "अथ द्वितीयः प्रादीषात्()" (फि।सू।३।५०) ["द्वितीयं"--फि।सू।] इति वर्तते। "एषाम्()" इत्यादि। यदि प्रादिसमासस्तदा निर्गतमुदकं निर्गतं वोदकादिति विग्रहः। यदा तु बहुव्रीहिस्तदा निर्गतमुदकमस्मादिति। अथाव्ययीभावोऽप्येषां कस्यान्न भवति? इत्याह--"अव्ययी भावे तु" इत्यादि। बहुव्रीहिप्रादिसमासयोस्तु समासान्तोदात्तत्वेन न सिध्यति। तथा हि--"बहुव्रीहौ प्रकृत्या पूर्वपदम्()" ६।२।१ इति समासस्वरापवादः पूर्वपदप्रकृतिस्वरो बहुव्रीहावुक्तः। प्रादिसमासेऽपि "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना। "निष्कालकः" इति। कालशब्दः कन्प्रत्ययान्तत्वादाद्युदात्तः। "निष्कालिकः" इति। निष्क्रान्तः कालिकाया इति प्रादिसमासः। कालीति जानपदादिसूत्रेण ४।१।४२ ["द्वितीयं"--फि।सू।] ङीषान्तत्वादन्तोदात्तः, ततः स्वार्थिके कनि कृतेऽप्याद्युदात्त एव भवति। "निष्पेषः" इति। "विष्लृ सञ्चूर्णने" (धा।पा।१४५२) अस्माद्घञ्()। तेन पेषशब्द आद्युदात्तः। "तरीं पाति" इति। "आतोऽनुपसर्गे कः" ३।२।३ इति तरीपशब्दोऽन्तोदात्तः। कुत्सितस्तरीप इति कुत्सितग्रहणेन दुस्तरीपशब्दे दुःशब्दः कुत्सायां वर्तत इति दर्शयति। "निस्तरीप इति केचित्()" इति। ते च निर्गतस्तरीप इति विगृह्य प्रादिसमासं कुर्वन्ति। "अपरे निस्तरीक इति" इति। पठन्तीति सम्बन्धः। "निरजिनम्()" इत्यादि। "अजिनमन्तोदात्तम्()" इत्युक्तम्()। "परेः" इत्यादि। हस्तपादकेशाः "स्वाङ्गशिटामदन्तानाम्()" (फि।सू।२।२९) इत्याद्युदात्ताः। शिटाम्()=सर्वनाम्नामित्यर्थः। कर्षशब्दः "कर्षात्वतो घञोऽन्त उदात्तः" ६।१।१५३ इत्यन्तोदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

अभेर् मुखम् ६।२।१८५

अभेरुत्तरं मुखम् अन्तोदात्तं भवति। अभिमुखः। बहुव्रीहिरयम् प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेन एव सिद्धम्। उपसर्गात् स्वाङ्गम् ६।२।१७६ इति सिद्धे वचनम् अबहुव्रीह्यर्थम् अध्रुवार्थम् अस्वाङ्गार्थं च। अभिमुखा शाला।

न्यासः

अभेर्मुखम्?। , ६।२।१८४

"अभिमुखः" इति। मुखशब्द उक्तस्वरः। अभिशब्दोऽन्तोदात्तः। "बहुव्रीहिरयम्()" इत्यादि। यदा बहुव्रीहिस्तदा--अभिगतं मुखमनेनेति विग्रहः। यदा तु प्रादिसमासस्तदा अभिगतो मुखम्(), अभिगतो वा मुखेनेति। कस्मादयमव्ययीभावो न भवति? इत्याह--"अव्ययीबावे तु" इत्यादि। "वचनमिदमबहुव्रीह्यर्थम्()" इति। यदा मुखं ध्रुवं भवति तदाऽध्रुवार्थम्(), अस्वाङ्गार्थं चेति। अध्रुवमस्वाङ्गञ्च मुखं बहुव्रीहावपि यदा भवति। "अभिमुखा शाला" इति। अभिगतं मुखं यस्या इति बहुव्रीहिः। अत्र "उपसर्गात्? स्वाङ्गम्()" ६।२।१७६ इति न सिध्यति; मुखशब्दस्यास्वाङ्गवाचित्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

अपाच् च ६।२।१८६

अपाच् च उत्तरं मुखम् अन्तोदात्तं भवति। अपमुखः। अपमुखम्। अव्ययीभावो ऽप्यत्र प्रयोजयति। तत्र अपि हि परिप्रत्युपापा वर्ज्यमान। अहोरात्राव्यवेषु ६।२।३३ इत्युक्तम्। योगविभागः उत्तरार्थः।

न्यासः

अपाच्च्। , ६।२।१८५

"अव्ययीभावोऽप्यत्र प्रयोजयति" इति। न केवलं बहुव्रीहितत्पुरुषावित्यपिशब्दार्थः। तत्र यदा बहुव्रीहिस्तदा--अपगतं मुखमस्मादिति विग्रहः। यदा तु प्रादिसमासस्तदा अपगतं मुखमिति। यदा पुनरव्ययीभावस्तदा--अपमुखादिति, मुखं वर्जयित्वेत्यर्थः। अव्ययीभावस्तु "अपपरिबहिरञ्चवः वञ्चम्या" २।१।११ इत्यनेन। कथं पुनरव्ययीभावः प्रयोजयति, यावता समासान्तोदात्तत्वेनैव सिद्धम्()? इत्याह--"तत्रापि हि" इत्यादि। प्रकृतिस्वरत्वमित्यत्राध्याहार्यम्()। तत्राप्यव्ययीभाव "परिप्रत्युपापा" ६।२।३३ इत्यादिना पूर्वपदस्य प्रकृतिस्वरत्वमुक्तं समासस्वरापवादः। तस्मादव्ययीभावोऽपि प्रयोजयति। "योगविबाग उत्तरार्थः" इति। "उत्तरसूत्रेऽपादित्यस्यैवानुवृत्तिर्यथा स्यात्(), अभेर्मा भूत्()। अव्ययपूर्वादपि प्रकृतिस्वरापवादो योगः। एवमुत्तरेऽपि योगाः "द्वित्रिभ्यां पद्दन्मूर्धसु बहुव्रीहौ" (६।२।१९७) इत्यतो योगात्? प्राग्वेदितव्याः॥

---

सूत्रम्

काशिका-वृत्तिः

स्फिगपूतवीणाऽञ्जो ऽध्वकुक्षिसीरनामनाम च ६।२।१८७

स्फिग पूत वीणा अञ्जसध्वन् कुक्षि इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्च अपादुत्तराण्यन्तोदात्तनि भवन्ति। अपस्फिगम्। अपपूतम्। अपवीणम्। अपञ्जः। अपाध्वा। उपसर्गादध्वनः ५।४।८५ इति यदा समासान्तो न अस्ति तदा अनेन अन्तोदात्तत्वं भवति। तस्मिन् हि सत्यच्प्रत्ययस्य चित्त्वादेव सिद्धम्। अनित्यश्च समासान्तः इत्येतदेव ज्ञापकम्। अपकुक्षिः। अपसीरः। अपहलम्। अपलाङ्गलम्। अपनाम। सर्वत्र प्रादिसमासो, बहुव्रीहिः, अव्ययीभावो वा। स्फिगपूतकुक्षीणां ग्रहणम् अबहुव्रीह्यर्थम् अध्रुवार्थम् अस्वाङ्गार्थं च।

न्यासः

स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च।, ६।२।१८६

स्फिगदीनां नामपर्यन्तानां समाहारे द्वन्द्वः। "सीरनामानि च" इति। हलादीनि। "अपस्फिगम्(), अपपूतम्()" इति। प्रादिसमासः, बहुव्रीहिर्वा। स्फिगपूतशब्दौ "स्वाङ्गशिटामदन्तानाम्()" (फि।सू।२।२९) इत्याद्युदात्तौ। केचित्तु स्फिगशब्दं धृतादित्वा(फि।सू।१।२१)दन्तोदात्तमिच्छन्ति। "रास्नासास्नास्थूणावीणाः" (द।उ।५।४७) इति वीणाशब्द आद्युदात्तो निपात्यते। "अञ्जू" इत्येतदस्मादसुन्()। तेनञ्ज आद्युदात्तः। "शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्()" [क्वन्()--इति मु। पाठः,] इत्यधिकृत्य "अदेर्धच" [अदेर्धश्च--द।उ।] इत्यध्वा। तेनायमाद्युदात्तः। "उपसर्गादध्वनः" इत्यादि। "अच्प्रत्यन्ववपूर्वात्? सामलोम्नः" ५।४।७५ इत्यतोऽझणेऽनुवर्तमाने "उपसर्गादध्वनः" (५।४।८५) इत्यनेनाच्? समासान्तो विधीयते। तेन तस्मिन्? समासान्तेऽच्प्रत्ययस्य चित्त्वादेव सिद्धमन्तोदात्तत्वम्()। ननु च नित्यः समासान्तः, तत्? किमुच्यते--यदा समासान्तो नास्तीति? अत आह--"अनित्यश्च" इत्यादि। यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कृतं स्यात्(); अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तस्य सिद्धत्वात्(); कृतं च, तस्मादेतदेव ज्ञापयति--"समासान्तविधिरनित्यः" इति। तेन "तत्रोपासितलोकभत्र्तरि" इत्येवमादयः प्रयोगा उपपन्ना भवन्ति। "प्लुषिकुषिशुषिभ्यः क्सिः" (द।उ।१।११) ["प्लुषिशुषिकुषिभ्यः क्सिः"--द।उ।]

---

सूत्रम्

काशिका-वृत्तिः

अधेरुपरिस्थम् ६।२।१८८

अधेरुत्तरम् उपरिस्थवाचि अन्तोदात्तं भवति। अधिदन्तः। अधिकर्णः। अधिकेशः। अध्यारूढो दन्तः इति प्रादिसमासः।

अध्यारूढो वा दन्तः इति समानाधिकरण उत्तरपदलोपी समस्सः। दन्तस्य उपरि यो ऽन्योः दन्तो जायते स उच्यते अधिदन्तः इति। उपरिस्थम् इति किम्? अधिकरणम्।

---

सूत्रम्

काशिका-वृत्तिः

अनोरप्रधानकनीयसी ६।२।१८९

अनोरुत्तरम् अप्रधानवाचि कनीयः च अन्तोदात्तं भवति। अनुगतो ज्येष्ठम् अनुज्येष्ठः। अनुमध्यमः। पूर्वपदप्रधानः प्रादिसमासो ऽयम्। अनुगतः कनीयाननुकनीयान्। उत्तरपदार्थप्रधानो ऽयम्। प्रधानार्थं च कनीयोग्रहणम्। अप्रधानकनीयसी इति किम्? अनुगतो ज्येष्ठः अनुज्येष्ठः।

न्यासः

अनोरप्रधानकनीयसी।, ६।२।१८८

"अनुज्येष्ठः" इति। "वृद्धस्य च" ५।३।६२ इतीष्ठनि परतो वृद्धस्य ज्ज्यादेशः। जेष्ठशब्दो नित्सवरेणाणाद्युदात्तः। "अनुमध्यमः" इति। "मध्यान्मः" ४।३।८ इति मध्यमः, प्रत्ययस्वरेणान्तोदात्तः। "पूर्वपदार्थप्रधानः प्रादिसमसोऽम्()" इति। अत्र हि योऽसौ ज्येष्ठमनुगतो मध्यमञ्च स प्राधान्येन प्रादिसमासेनोच्यते, ज्येष्ठमध्यमौ तु गुणभावेन। तस्मात्? पूर्वपदार्थप्रधानोऽयम्()। "अनुकनीयान्()" इति। ईयसुनि परतो युवशब्दस्य "युवाल्पयोः कनन्यतरस्याम्()" ५।३।६४ इति कनादेशः। कनीयशब्दो नित्स्वरेणाद्युदात्त-। "अनुगतो ज्येष्ठोऽनुज्येष्ठः" ति। उत्तरपदार्थप्रधानोऽयम्()। तेन प्रधानवाचित्वं ज्येष्ठशब्दस्यास्ति॥

---

सूत्रम्

काशिका-वृत्तिः

पुरुषश् च अन्वादिष्टः ६।२।१९०

पुरुषशब्दो ऽन्वादिष्टवाची च अनोरुत्तरो ऽन्तोदात्तो भवति। अन्वादिष्टः पुरुषः अनुपुरुषः। अन्वादिष्ट अन्वाचितः कथितानुकथितो वा। अन्वादिष्टः इति किम्? अनुगतः पुरुषः अनुपुरुषः।

न्यासः

पुरुषश्चान्वादिष्टः।, ६।२।१८९

"पृ? पालनपूरणयोः" (दा।पा।१४८९)--अस्मात्? "पुरः कुषन्()" (द।उ।९।१४) इति कुषन्प्रत्ययः। तेन पुरुषशब्द आद्युदात्तः। "अन्वादिष्टोऽन्वाचितः" इति। अप्रधानशिष्ट इत्यर्थः। यथा भिक्षामट गाञ्यानयेत्यत्र गोरानयनम्(), यथा वा--"कर्त्तुः क्यङ्? सलोपश्च" ३।१।११ इत्यत्र सलोपः। "कथितानुकथितो वा" इति। यः कथितात्? पश्चात्? कथितः स कथितानुकथितः। यो वा किञ्चित्? पाक्? कथयित्वा पश्चात् कथ्यते कथ्यते स कथितानुकथित इत्युच्यते। "अनुगतः पुरुषोऽनुपुरुषः" इति। यः पश्चाद्भवः पुरुष स एवमुच्यते॥

---

सूत्रम्

काशिका-वृत्तिः

अतेरकृत्पदे ६।२।१९१

अतेः परमकृदन्तं पदशब्दश्च अन्तोदात्तो भवति। अत्यङ्कुशो नागः। अतिकशो ऽश्वः। अपदशब्दः खल्वपि अतिपदा शक्वरी। अकृत्पदे इति किम्? अतिकारकः। अतेर् धातुलोप इति वक्तव्यम्। इह माभूत्, शोभनो गार्ग्यः अतिगार्ग्यः। इह च यथा स्यात्, अतिक्रान्तः कारकाततिकारकः इति।

न्यासः

अतेरकृत्पदे। , ६।२।१९०

"अकृत्पदे" इति। अकृच्च पदं चाकृत्पदे--प्रथमाद्विवचनान्तमेतत्()। "अत्यङ्कुशो नागः" इति। अङ्कुशशब्दः "सानसिपर्णसि" (द।उ।१०।१७) [सानसिधर्णसिपर्णसि--द।उ। सानासिवर्णसिपर्णसि--पं।उ।पं।उ।४।१०७) इत्यादिना "अकि लक्षणे" (धा।पा।१०२४) अस्मात्? पचाद्यच्(), टाप्(), "एकादेश उदात्तेनोदात्तः" ८।२।५। तेन कशान्तोदात्ता। "अतिपदा शक्वरी" इति। "खनो घ च" ३।३।१२५ इति पदेर्घः। घित्करणेन हि ज्ञापितम्()--तत्र घोऽन्यस्मादपि भवतीति। तेन पदमन्तोदात्तम्()। "अतिकारकः" इति। करोतेर्ण्वुल्()। अत्र "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना पूर्वपदस्याव्ययस्वरो भवति। "अतेर्धातुलोपः" इति। यत्र धातोर्लोपस्तत्रातेरुत्तरपदमन्तोदात्तं भवतीति वक्तव्यम्()। किमर्थम्()? इत्याह--"इह" इत्यादि। यद्यतेर्धातुलोप इति नोच्येत, तदिहापि स्यात्()--शोभनो गाग्र्योऽतिगाग्र्य इति। भवति ह्यत्रातेरुत्तरपदमकृदन्तम्()। इह च न स्यात्()--अतिक्रान्तः कारकादतिकारक इति। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वा।९४) इति प्रादिसमासः। अत्र हि कृदन्तः कारकशब्दः उत्तरपदम्()। तत्र यद्यतेर्धातुलोप ति नोच्यते तदिहापि न स्यात्()। एवं तूच्यमान इहापि भवति, अस्ति ह्यत्र क्रमेर्धातोर्लोपः। लोपः पुनस्तस्य समासे गम्यमानार्थत्वादप्रत्युज्यमानस्यादर्शनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

नेरनिधाने ६।२।१९२

नेः परमुत्तरपदम् अन्तोदात्तं भवति अनिधाने। निधानम् अप्रकाशता। अनिमूलम् न्यक्षम्। नितृणम्। बहुव्रीहिरयं प्रादिसमासो वा। अव्ययीभावे तु समासान्तोदात्तत्वेन एव सिद्धम्। अनिधाने इति किम्? निवाग्वृषलः। निदण्डः। निहितवाक्, निहितदण्डः इत्यर्थः। निशब्दो ऽत्र निधानार्थं ब्रवीति। प्रदयो हि वृत्तिविषये ससाधनां क्रियामाहुः।

न्यासः

नेरनिधाने। , ६।२।१९१

"निधानमप्रकाशता" इति। न निधानमनिधानम्()। "निर्मूलम्(), न्यक्षम्()" इति। "मूल प्रतिष्ठायाम्()" (धा।पा।५२९)-अस्मात्? पचाद्यच्()। तस्मान्मूलशब्दोऽन्तोदात्तः। "वृ()तृ()वदिहनि कमिकषिभ्यः सः" (द।उ।९।२१) [कमिकषियुमुचिभ्यः--द।उ।] इत्यधिकृत्य "अशेर्देवने" (द।उ।९।२४) इति सप्रत्ययान्तत्वादक्षशब्दोऽप्यन्तोदात्तः। "नितृ()णम्()" इति। "नब्विषयस्य" (फि।सू।२।२६) इति तृ()णमाद्युदात्तम्()। "बहुव्रीहिरयम्()" इत्यादि। यदा बहुव्रीहिस्तदा--निगतानि मूला न्यस्येति विग्रहः। यदा प्रादिसमासस्तदा निगतं मूलमिति। अव्ययीभावः कस्मादयं न भवति? इत्याह--"अव्ययीभावे तु" इत्यादि। बहुव्रीहौ तु समासान्तोदात्तत्वापवादः "बहुव्रीहौ प्रकृत्या" ६।२।१ इत्यादिना पूर्वपदस्य प्रकृतिस्वर उक्तः। तत्पुरुषेऽपि "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना; तेन तयोर्विनाऽनेन वचनेनान्तोदात्तत्वं न सिध्यति। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिदधम्(), न हि तत्र तस्यापवादः उक्तः। "निवाग्वृषलः; निदण्डः" इति। अत्र पूर्वपदस्य प्रकृतिस्वर एव भवति। वाक्शब्दः "क्विब्वचिप्रच्छि" (द।उ।१०।२) इत्यादिना क्विबन्तो व्युत्पादित

आद्युदात्तः। "दमु उपशमे" (धा।पा।१२०३)--अस्मात्? "ञमन्ताड्डः" (द।उ।५।७) इति। तेन दण्डशब्दोऽप्यन्तोदात्तः। "निशब्दोऽत्रि निधानार्थं ब्रावीति" इति। अप्रकाशतां ब्रातीतीत्यर्थः। कथं पुनरत्र निशब्दो निधानार्थं ब्रावीति? इत्याह--"प्रादयो हि" इत्यादि। वृत्तिशब्देनेह समासवृत्त्यादिर्गृह्यते। प्रादयो हि स्वभावेनैव वृत्तिविषये ससाधनां क्रियामाहुः। तस्मादिह समासवृत्तौ विषयेयासावप्रकाशनात्मिका क्रिया निधानशब्दवाच्या वाक्साधना, दण्डसाधना च तां निशब्दो ब्रावीति॥

---

सूत्रम्

काशिका-वृत्तिः

प्रतेरंश्वादयस् तत्पुरुषे ६।२।१९३

प्रतेरंश्वादयस् तत्पुरुषे समासे ऽन्तोदात्ताः भवन्ति। प्रतिगतः अंशुः प्रत्यंशुः। प्रतिजनः। प्रतिराजा। राजशब्दः समासान्तस्य अनित्यत्वाद् यदा टज् न अस्ति तदा प्रयोजयति। तस्मिन् हि सति चित्त्वादेव अन्तोदात्तत्वं सिद्धम्। तत्पुरुषे इति किम्? प्रतिगताः अंशवः अस्य प्रत्यंशुः अयम् उष्ट्रः। अंशु। जन। राजन्। उष्ट्र। खेटक। अजिर। आर्द्रा। श्रवण। कृत्तिका। अर्ध। पुर।

न्यासः

प्रतेरं�आआदयस्तत्पुरुषे। , ६।२।१९२

पूर्वपदप्रकृतिस्वरापवादो योगः। "प्रत्यंशुः" इति। प्रादिसमासः। "कुभ्रश्च" इत्यधिकृत्य "मृगय्वादयश्च" (द।उ।१।१२१) इत्यंशुशब्दो निपातितः। तेनान्तोदात्तः। जनेर्घञ्()। तेन जन आद्युदात्तः। राजञ्शब्दोऽपि कनिन्प्रत्ययान्तत्वात्()। "राजशब्दः" इत्यादि। "राजाहःसखिभ्यष्टच्()" (५।४।९१) इति यदाऽनित्यत्वाट्टज्? नास्ति, तदा राजशब्द इह पाठे प्रयोजयति। अथ तस्मिन्? समासान्ते सति कस्मान्न प्रयोजयति? इत्याह--"तस्मिन्? हि सति" इत्यादि। अनित्यत्वं तु समासान्तविधेः पूर्वमेव ज्ञापितम्()। राजशब्दस्य चेह पाठः समासान्तविधेरनित्यत्वं ज्ञापयति। "उष दाहे" (धा।पा।६९६)--इत्यस्मात्? ष्ट्रन्()। तेन उष्ट्रशबद आद्युदात्तः "शिट सन्तापे" ["खिट त्रासे"--धा।पा।] (धा।पा।३०२)--अस्माण्वुल्()। तेन खेटकशब्दोऽप्याद्युदात्तः। "अजिरशिशिर" (द।उ।८।२७) इत्यादिना किरच्प्रत्ययान्तोऽजिरशब्दो निपातितः। तेनान्तोदात्तः। "द्रो कुत्सायां गतौ" (धा।पा।१०५४)--अस्मादाङ्पूर्वात्? "आतश्चोपसर्गे" (३।३।१०६) इत्यङ्? निपातनात्? पूर्वपदस्य रेफान्तता। ततश्चाव्ययरूपहानादसत्यस्मात्? पूर्वपदप्रकृतिस्वरत्वे आर्देत्यन्तोदात्ता भवति। "श्रु श्रवणे" (धा।पा।९४२) इत्यस्माल्ल्युट्()। तेन श्रवणशब्दो लित्स्वरेणाद्युदात्तः। "वृतेस्तिकन्()" (द।उ।३।२८) इति प्रकृते "कृतिभिदिलतिभ्यः कित्()" (द।उ।३।२९) इति तिकन्(), टाप्()। तेन कृत्तिकाशब्द आद्युदात्तः। "ऋध"--इत्येतस्मादच्(), घञ्? वा। तेनार्धशब्दोऽन्तोदात्तः, आद्युदात्तो वा। "पुर अग्रगमने" (धा।पा।१३४६)--अस्मादिगुपधलक्षणः ३।१।१३५ कः। तेन पुरशब्दोऽन्तोदात्तः। "प्रतिगता अंशवोऽस्य" इत्यादि। अत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

उपाद् द्व्यजजिनम् अगौरादयः ६।२।१९४

उपादुत्तरं द्व्यचजिनं च अन्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा। उपगतो देवम् उपदेवः। उपसोमः। उपेन्द्रः। उपहोडः। अजिन उपाजिनम्। अगौरादयः इति किम्। उपगौरः। उपतैषः। तत्पुरुषे इत्येव, उपगतः सोमो ऽस्य

उपसोमः। गौर। तैष। नैष। तैट। लट। लोट। जिह्वा। कृष्णा। कन्या। गुड। कल्य। पाद। गौरादिः।

न्यासः

उपाद्द्व्यजजिनमगौरादयः। , ६।२।१९३

"उपदेवः" इति। प्रादिसमासोऽयम्()। देवशब्दः पचाद्यजन्तत्वादन्तोदात्तः। "उपसोमः" इति। अतिस्तुसुहुसृ" ६।४।१४९ इत्यादिना मन्()। तेन सोमशब्द आद्युदात्तः। "हुड़ हुड़ गतौ" (धा।प।३५२,३५३) अस्मात्? पचाद्यच्()। तेन होडशब्दोऽन्तोदात्तः। अजिनमन्तोदात्तमित्युक्तम्(), अद्व्यजर्थं चास्य ग्रहणम्()। गौरशब्दः प्रज्ञाद्यणन्तत्वादाद्युदात्तः। तिष्येण युक्तः कालस्तैषः, "प्राग्दीव्यतोऽण्()" ४।१।८३। "सूर्यतिष्य" ६।४।१४९ इति यलोपः। नैषतैटावणन्तौ। तेनान्तोदात्तो। "रट परिभाषणे" (धा।पा।२९७)--अस्मादच्()। रलयोरेकत्वाद्रेफस्य लकारः। लटः। "लुट विलोडने" (धा।पा।३१४)--अस्मात्? पचाद्यच्()। तेन लटलोटावप्यन्तोदात्तौ। "शवयहृजिह्वाग्रीवाप्वामीवाः" (द।उ।८।१२८) इति जिह्वान्तोदात्ता निपत्यते। "इण्सिञ्जि" (द।उ।५।३५) [इण्सिञ्()--द।उ।पं।उ। (३।२)] इत्यधिकृत्य "कृषेर्वर्णे (द।उ।५।३७) इति कृषेर्नक्(), टाप्? सवर्णदीर्घत्वम्(), "एकादेश उदात्तेनोदात्तः ८।२।५। तेन कृष्णाशब्दोऽन्तोदात्तः। "अघ्न्यादयश्च" (द।उ।८।१४) इति कन्याशब्दोऽन्तस्वरितो निपात्यते। "गुड घनत्वे" ["गुड रक्षायाम्()"--धा।पा।] (धा।पा।१३७०)--अस्मादिगपधलक्षणः३।१।१३५ कः। तेन गुडोऽन्तोदात्तः। कल्पवाहशब्दौ वृषादित्वादन्तोदात्तौ॥

---

सूत्रम्

काशिका-वृत्तिः

सोरवक्षेपणे ६।२।१९५

सुशब्दात् परमुत्तरपदं तत्पुरुषे समासे ऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने। अवक्षेपणं निन्दा। इह खलु इदानीं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः। सुशब्दो ऽत्र पूजायाम् एव। वाक्यार्थस् तु अवक्षेपणमसूयया, तथा अभिधानात्। सोः इति किम्? कुब्राह्मणः। अवक्षेपणे इति किम्? शोभनेषु तृणेषु सुतृणेषु।

न्यासः

सोरवक्षेपणे। , ६।२।१९४

"सुस्थण्डिलः" इति। स्थानं स्थिरमस्मिन्निति स्थण्डिलम्()। पृषोदरादित्वादाद्युदात्तः। "सुस्फिगाभ्याम्()" इति। स्फिगशब्दः आद्युदात्तः। "सुप्रत्यवसितः" इति। प्रत्यवसितशब्दस्थाथादि६।२।१४३स्वरेणान्तोदात्तः। ननु च सुशब्देनापि सह समासे कृते थाथादिस्वरेणैवान्तोदात्तत्वं भविष्यति, तत्? किमर्थमुदाह्रतम्()? एवं मन्यते--सत्यन्यार्थेऽस्यारम्भे परत्वादनेनैवात्राप्यन्तोदात्तत्वं युक्तमिति। यदि सुशब्दोऽत्र पूजायामेव वर्तते, अवक्षेपणं तर्हि कस्यार्थः? इत्याह--"वाक्यार्थस्त्ववक्षेपणम्()" इति। अत्रैव कारणमाह--"असूण्या तथाभिधानात्()" इति। इह खल्विदानीं "अस्स्व सुस्थण्डिलः" इत्येवम्प्रकारं वाक्यं यस्मादसूयया प्रयुज्यते, तस्माद्वाक्यार्थस्यैवावक्षेपणम्()। "सुतृणेषु" इति। अत्र गुणोद्भावनेच्छयाभिधानम्(), नासूयया। तेनावक्षेपणं नास्ति, पूजैव तु विद्यते॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा उत्पुच्छे ६।२।१९६

उत्पुच्छशब्दे तत्पुरुषे विभाषा अन्त उदात्तो भवति। उत्क्रान्तः पुच्छातुत्पुच्छः, उत्पुच्छः। यदा तु पुच्छमुदस्यति

उत्पुच्छयति, उत्पुच्चयतेरचुत्पुच्छः, तदा थाथादिसूत्रेण नित्यम् अन्तोदात्तत्वे प्राप्ते विकल्पो ऽयम् इति सेयम् उभयत्र विभाष भवति। तत्पुरुषे इत्येव उदस्तं पुच्छम् अस्य उत्पुच्छः।

न्यासः

विभाषोत्पुच्छे। , ६।२।१९५

"उत्पुच्छः" इति। पुच्छशब्दः "नब्विषयस्य" (फि।सू।२।२६) इत्याद्युदात्तः। "सेयमुभयत्र विभाषा भवति" इति। यदोत्पुच्छशब्दोऽच्प्रत्ययान्तो न भवति तदा समासान्तोदात्तत्वम्()। यदा समासान्तोदात्तत्वापवादः "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना पूर्वपदस्याव्ययस्य प्रकृतिस्वरः, तदा तेनाप्राप्तेस्मिन्नन्तोदात्तत्वे विभाषेयम्()। यदा तु पुच्छमुदस्यतीत्यस्यार्थस्य विवक्षायां "पुच्छभाण्डचीवराण्णिङ्()" ३।१।२० ति णिङं विदाय तदन्तादुत्पुच्छयतेः पचाद्यचि कृते उत्पुच्छ इत्येतच्छपब्दरूपं भवति, तदा थाथादिस्वरेण ६।२।१४३ नित्यमन्तोदात्तत्वे प्राप्तेऽयं विकल्पः। तेन प्राप्ते विभाषेयम्()। "उदस्तं पुच्छमस्योत्पच्छः" इति। बहुव्रीहिप्रकृतिस्वर एव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ६।२।१९७

द्वि त्रि इत्येताभ्याम् उत्तरेसु पाद् दत् मूर्धनित्येतेषु उत्तरपदेषु यो बहुव्रीहिः, तत्र विभाषा अन्तः उदात्तो भवति। द्वौ पादो अस्य द्विपात्, द्विपात्। त्रिपात्, त्रिपात्। द्विदन्, द्विदन्। त्रिदन्, त्रिदन्। द्विमूर्धा, द्विमूर्धा। त्रिमूर्धा, त्रिमूर्धा। पादिति कृताकरलोपः पादशब्दो गृह्यते। दतिति कृतददादेशो दन्तशब्दः। मूर्धनिति त्वकृतसमासन्तो नान्त एव मूर्धन्शब्दः। तस्य एतत् प्रयोजनम् असत्यपि समासान्ते ऽन्तोदात्तत्वं यथा स्यात्। एतदेव ज्ञापकम्, अनित्यः समासान्तो भवति इति। यदा ऽपि समासान्तः क्रियते तदा अपि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच् च समासान्तस्य अन्तोदात्तत्वं पक्षे भवत्येव। द्विमूर्धः। त्रिमूर्धः। द्वित्रिभ्याम् इति किम्? कल्याणमूर्धा। पादादिषु इति किम्? द्विहस्तम्। बहुव्रीहौ इति किम्? द्वयोर् मूर्धा द्विमूर्धा।

न्यासः

द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ। , ६।२।१९६

"द्वित्रिभ्याम्()" इति। दिग्योगलक्षणा२।३।२९पञ्चमी। "पाद्दन्मूर्धसु" इति। "यस्य च भावेन भावलक्षणम्()" २।३।३७ इति भावलक्षणा सप्तमी। बहुव्रीहीः कार्यी। अत आह--"द्वि त्रि इत्येताभ्याम्()" इत्यादि। "द्विपात्(), त्रिपात्()" इति। "पादस्य लोपोऽहस्त्यादिभ्यः" ५।४।१३८, "संख्यासुपूर्वस्य" ५।४।१४० इत्यकारलोपः। पादशब्दो घञन्तत्वादाद्युदात्त इति पाच्छब्दश्चाद्युदात्तः एव भवति। "द्विदन्()" इति। "वयसि दन्तस्य" ५।४।१४१ इति दत्रादेशः। दन्तशब्द आद्युदात्त इत्युक्तम्()। तेन दत्रादेशोऽपि स्थानिवद्भावेनाद्युदात्त एव भवति। "द्विमूर्धा" इति। मूर्धशब्दः "()आन्नुक्षन्पूषन्प्लीहन्()" (द।उ।६।५५) इत्यादिना रन्()प्रत्ययान्तो निपात्यते। तेनाद्युदात्तः। "मूर्धन्()" इत्यादि। "द्वित्रिभ्यां ष मूध्र्नः" ५।२।११४ ["षो" इति मु। पाठः] इति षः समासान्तः प्राप्नोति, स न कृतः। तेनात्र नान्त एव मूर्धशब्दः। किं पुनः कारणमकृतसमासान्त एव मूर्धञ्शब्द उपात्तः? इत्यात आह--"तस्य" इत्यादि। यदि कृतसमासान्त उपादीयेत तदा सत्येव समासान्तेऽन्तोवात्तत्वं स्यात्(), असति न स्यात्()। तस्मादसत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यादित्येतत्? प्रयोजनमकृतसमासान्तनिर्देशस्य। ननुच नित्यमेव समासन्तेन भवितव्यम्(), तत्? कुतस्तस्यासत्त्वम्()? इत्यत आह--"एतदेव" इत्यादि। यदिदमस्य प्रयोजनस्य सम्पादनारथमकृतसमासान्तस्य मूर्धन्()शब्दस्योपादनाम्(), एतदेव

ज्ञापकम्--अनित्यः समासान्तो भवतीति। तेन द्विमूर्धत्यादिप्रयोग उपपन्नो भवति। यदि तह्र्रकृतसमासान्त इह मूर्धन्()शब्द उपात्तः, एवं सति यदा समासान्तः क्रियते तदान्तोदात्तेन न भवितव्यम्()। कृतसमासान्तस्य शब्दान्तरत्वादित्यत आह--"यद्यपि" इत्यादि। इह हि बहुव्रीहिः कार्यी, तदेकदेशित्वं च समासान्तस्य। एकदेशोऽस्यासतीत्येकदेशी, स बहुव्रीहिरेकदेशी यसय समासान्तस्य स तदेकदेशी, तद्भावसतदेकदेशित्वम्()। एतेन बहुव्रीह्रवयवत्वं समासान्तस्य दर्शयन्? कृतसमासान्तस्य शब्दान्तरत्वं निरस्यति। तदेवं यस्मादिह बहुव्रीहिः कार्यी तदेकदेशित्वञ्च समासान्तस्य, तस्माद्यदापि समासान्तः क्रियते तदापि पक्षेऽन्तोदात्तत्वं भवत्येव। "कल्याणमूर्धा" इति। कल्याणशब्दः "नब्विषयस्य" (फि।सू।२।२६) इत्याद्युदात्तः। "द्वयोर्मूर्धा" इति। अत्र नित्यमेव समासान्तोदात्तत्वं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

सक्थं च अक्रान्तात् ६।२।१९८

सक्थम् इति कृतसमासान्तः सक्थिशब्दो ऽत्र गृह्यते। सः अक्रान्तात् परो विभाषा अन्तोदात्तो भवति। गौरसक्थः, गौरसक्थः। श्लक्ष्णसक्थः, श्लक्ष्णसक्थः। अक्रान्तातिति किम्? चक्रस्क्थः। षचश्चित्वान् नित्यम् अन्तोदात्तत्वं भवति।

न्यासः

सक्थं चाक्रान्तात्?।, ६।२।१९७

"सक्थमिति" इति। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्? षच्()" (५।४।११३) इत्यनेन षच्? समासान्तो यस्य स सक्यिशब्दोऽत्र गृह्रते। "अक्रान्तात्()" इति। क्रशब्दो अन्तो यस्य सः क्रान्तः। न क्रान्तोऽक्रान्तः। "गौरसक्यः" इति। गौरशब्दः प्रज्ञाद्यणन्तत्वादन्तोदात्तः। "श्लक्ष्णसक्थः" इति। "कृत्यशूभ्यां क्स्नः" (द।उ।५।४९) इति प्रकृते "श्लिषेरच्चोपधायाः" (द।उ।५।५१) क्स्नप्रत्ययान्तः श्लक्ष्मशब्दः। तेनान्तोदात्तः। "चक्रसक्थः" इति। "करोतेः किन्? द्वे च" (द।उ।८।१०३) ["करोतेद्र्वे च"--द।उ।] इति चक्रशब्द आद्युदात्तः॥

---

सूत्रम्

काशिका-वृत्तिः

परादिश् छन्दसि बहुलम् ६।२।१९९

छन्दसि विसये परादिः उदात्तो भवति बहुलम्। परशब्देन अत्र सक्थशब्द एव गृह्यते। अञ्जिसक्थम् आलभेत। त्वाष्ट्रौ लोमशसक्थौ। ऋजुबाहुः। वाक्पतिः। चित्पतिः। परादिश्च प्रान्तश्च पूर्वान्तश्च अपि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः। परादिरुदाहृतः। परान्तश्च अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसङ्ख्यानम्। त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण। पूर्वान्तः पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसङ्ख्यानम्। मरुद्वृद्धः। पूर्वादिः पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम्। दिवोदासाय समगाय ते इत्येवम् आदि सर्वं सङ्गृहीतं भवति। इति काशिकायां वृत्तौ षष्ठाध्यायस्य द्वितीयः पादः। षष्ठाध्यायस्य तृतीयः पादः।

न्यासः

परादिश्छन्दसि बहुलम्?।, ६।२।१९८

"परशब्देनात्र सक्थशब्द एव गह्रते" इति। प्रत्यसत्तेः, स हि पूर्वसूत्रे सन्निहितत्वात्? प्रत्यासन्नः। यद्येवुम्(),

परशब्दग्रहणमनर्थकम्(), सक्थशब्द एव ह्त्रानुवर्त्तिष्यते? नैतदस्ति; बहुव्रीहिग्रहणप्यत्रानुवर्तत इति तस्याप्याद्युदात्तत्वमाशङ्क्येत। "अञ्जिसक्थम्()" इति। अञ्जिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। अथाप्यञ्जशब्दाग्मत्वर्थ इनिः क्रियते, एवमप्यन्तोदात्त एव। "लोमशसक्थम्()" इति। "लोमादिपामादिपिच्छादिभ्यः शनेलचः" ५।२।९९ इति शप्रत्ययान्तत्त्वाल्लोमशशब्दोऽन्तोदात्तः। "ऋजुबाहुः" इति। "कुभ्र्रश्च" (द।उ।१।१०७) इत्यधिकृत्य "अर्जिदशिकम्यमिपशिबाधामृजिपसितुग्धुग्दीर्घहकाराश्च" (द।उ।१।११२) इति कुप्रत्ययान्तौ ऋजुबाहुशब्दौ। तेनान्तोदात्तौ। "वाक्पतिश्चित्पतिः" इति। षष्ठीसमासावेतौ। अत्रोत्तरपदमाद्युदात्तं भवति; बहुलग्रहणात्()। विभाषाग्रहणे हि प्रकृते बहुलग्रहणेन यत्? सिध्यति तद्दर्शनार्थमुपन्यस्तः। "व्यत्ययो बहुलं ततः" इति। यत एवं बहुलग्रहणेनानेन कार्यं सिध्यति, तेन व्यत्ययो बहुलं भवति। ननु च पूर्वमेव स्वराणां व्यत्ययो विहितः? सत्यमेतत्(); तस्यैव तु प्रपञ्चोऽयम्()। "परादिरुदात्तः" इति। वाक्पतिश्चित्पतिरिति। अत्र च परग्रहणेनोत्तरपदमुक्तम्()। "अन्तोदात्तप्रकरणे" इति। "अन्तः" "थाथघञ्क्ताजबित्रकाणाम्()" ६।२।४४ इत्यादौ। "पूर्वपदान्तोदात्तप्रकरणे" इति। "अन्तः" ६।२।९२, "सर्वं गुणकात्स्न्ये ६।२।९३ इत्यादौ। "पूर्वपदाद्युदात्तप्रकरणे" इति। आदिरुदात्तः--"सप्तमीहारिणौ धर्म्यऽहरणे" ६।२।६५ इत्यादौ। "एवमादि सर्वं संगृहीतं भवति" इति। बहुलग्रहणेन। यतस्तेन विभाषाग्रहणे प्रकृते बहुलग्रहणं कृतमित्यभिप्रायः। त्रिचक्रादीनां पूर्वमेव पूर्वोत्तरपदस्वर उक्त इति पुनरिह नोच्यते॥ इति बोधिसत्त्वदेशीयाचार्य श्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां षष्ठाध्यायस्य द्वितीयः पादः॥ - - - अथ षष्ठोऽध्यायः तृतीयः पादः

---

सूत्रम्

काशिका-वृत्तिः

अलुगुत्तरपदे ६।३।१

अलुकिति च, उत्तरपदे इति च एतदधिकृतम् वेदितव्यम्। यदिति ऊर्ध्वम् अनुक्रमिष्यामो ऽलुकुत्तरपदे इत्येवं तद् वेदितव्यम्। वक्ष्यति

न्यासः

अलुगुत्तरपदे।, ६।३।१

"स्तोकान्मुक्तः, अल्पान्मुक्तः" इति। "करणे स्तोकाल्पकृचछ्रकतिपयस्यासत्ववचनस्य" २।३।३३ ["करणे च"--पा।सू।] इति पञ्चमी, "स्तोकान्तिकदुरार्थकृच्छ्राणि क्तेन" २।१।३८ इति समासः। ननु च "वनं समासे" ६।२।१७७ इत्यतः समासगरहणमनुवर्तिष्यते, समासे च नियतं सन्निहितमुत्तरपदम्(), अतोऽन्तरेणाप्युत्तरपदग्रहणमुत्तरपदं लभ्यत इत्यभिप्रायेणाह--"उत्तरपदमिति किम्()" इति। "निःस्तोकः" इति। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वा।९४) इति प्रादिसमासः। एवं मन्यते--असत्युत्तरपदग्रहणे समासे ये स्तोकादय उत्तरपदभूताः पूर्वपदभूता वा, तेभ्य उत्तरस्याः पञ्चभ्या अलुग्भवतीत्येतावन्मात्रं लभ्यते, न तूत्तरपदे परतो ये स्तीकादय इत्येष विशेषः। ततश्च निःस्तोक इत्यत्राप्यलुक्? स्यात्()। भवति ह्त्रापि समासवर्तिनः स्तोकादेः शब्दादुत्तरा पञ्चमीति। नन्वेवमपि न कत्र्तव्येमेवोत्तरपदग्रहणम्(), लक्षणप्रतिपदोक्तपरिभाषया(व्या।प।३) प्रतिपदं "स्तोकादिभ्यः करणे च" २।३।३३ इत्यादिसूत्रेण या पञ्चमी विहिता, तस्या एव ग्रहणम्()। नतु "अपादाने पञ्चमी" २।३।२८ इत्यनेन सामान्यलक्षणेन या पञ्चमी विहिता, तस्या एव ग्रहणम्()। न तु "अपादाने पञ्चमी" २।३।२८ इत्यनेन सामान्यलक्षणेन या पञ्चमी विहिता त्सयाः। अवश्यञ्च सलक्षमप्रतिपदोक्तपरिभाषाऽश्रयितव्याः; अन्यथा हि स्तोकादपेतः स्तोकापेत इत्यत्राप्यलुक्(), स्यात्(), एवं सति निःस्तोक इत्यत्रालुक्प्राप्तिरेव नास्ति, न ह्त्र स्तोकशब्दात्? प्रतिपदिविहिता पञ्चमी, किं तर्हि?

सामान्यलक्षणविहिता। तत किं तन्निवृत्त्यर्थेनोत्तरपदगरहणेन? इत्याह--"अन्यार्थम्()" इत्यादि। आनङाद्यर्थमिदमुत्तरपदगरहणम्()। असति चैतस्मिन्? "आनङ् ऋतो द्वन्द्वे" ६।३।२४ इत्यानङ्, "होतापातृभ्याम्()" इत्यत्र यथा पूर्वपदस्य भवति, तथोत्तरपदस्यापि स्यात्()। तथा "इकोह्यस्बोऽङ्यो गालवसव" ६।३।६० इति ह्यस्वो यथेह भवति--"ग्रामणिपुत्रः" इति, तथेहापि स्यात्()--"ग्रामणीः" इति। ननु यद्यनुत्तरपदेऽपि ह्रस्वः स्यात्(), तदा "ह्यस्वो यथेह भवति--"ग्रामणिपुत्रः" इति, तथेहापि स्यात्()--"ग्रामणीः" इति। ननु यद्यनुत्तरपदेऽपि ह्यस्वः स्यात्(), तदा "ह्यस्वो यथेह भवति--"ग्रामणिपुत्रः" इति, तथेहापि स्यात्()--"ग्रामणीः" इति। ननु यद्यनुत्तरपदेऽपि ह्रस्वः स्यात्(), तदा "ह्यस्वो नपुंसके प्रातिपदिकस्य" इति, तथेहापि स्यात्(), "ग्रामणीः" इति। ननु यद्यनुत्तरपदेऽपि ह्यस्वः स्यात्(), तदा "ह्यस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति वचनमनर्थकं स्यात्(); अनेनैव सिद्धत्वात्()? नानर्थकम्(); अनिगन्तार्थत्वान्नित्यार्थत्वाच्च। किञ्च, असत्युत्तरपदग्रहणे कृतम्()। यद्येवम्(), यदर्थमिदं तद्विधावेव कत्र्तव्यम्(), इह किमर्थ क्रियते? इत्याह--"इहाप्यलुको निवृत्तिम्()" इत्यादि। इतिकरणो हेतौ। अन्यार्थं तावदवश्यमिदमुत्तरग्रहणम्()। इह तु क्रियमाणे सत्ययं विशेषः--निःस्तोक इत्यतराप्यलुग्? निवृत्तः क्रियते। तेन लक्षणप्रतिपदोक्तपरिभाषा(व्य।प।३) नाश्रयितव्या भवति। अथ कुतः प्रातिमावधिकारौ? इत्याह--"अलुगधिकारः" इत्यादि। विधेयान्तरं विधेयान्तरस्य निवर्तकं भवतीत्यानङ्? विधीयमान उततरपदेऽलुकं निवत्र्तयति, तस्मात्()--"अलगधिकारः प्रागानङः"। उत्तरपदाधिकारः "प्रागङ्गाधिकारात्()" इति। उत्तरपदे परतो यत्? कार्यं वीधीयते तस्य सम्बन्धिशब्दत्वात्? पूर्वपदं विधिभाक्()। अतोऽङ्गं विधिभाक्त्वेन विज्ञायमानमुत्तरपदाधिकारं निवर्तयति। अङ्गस्य हि यत्? कार्यं तत्? प्रत्यये परतो विधीयते, नोत्तरपदे। न ह्रुत्तरपदेऽङ्गसंज्ञा भवति। अथ वा--उत्तरपद इति सप्तमीनिर्देशादनन्तर एवोत्तरपदे भवितव्यमानङा। यदि चात्र विभक्तेरलुक्? स्यात्? तदा व्यवधानादानन्तर्यं न स्यात्()। न च व्यवधानेऽपि वचनसामथ्र्यादानङ्स्यादिति शक्यते परिकल्पयितुम्()। एवं हि "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति निर्दिष्टग्रहणमानन्तर्यार्थ बाध्येत, अनिष्टं च रूपमापद्येत। न चानिष्टार्था शास्त्रे प्रक्लृपतिर्युक्ता। तस्मादलुगधिकारः प्रागानङः। अङ्गस्य प्रत्यये परतोऽभावादुत्तरपदे परतस्तन्न भवत्येव, अत उत्तरपदाधिकारः प्रागङ्गाधिकारात्()॥

बाल-मनोरमा

अलुगुत्तरपदे ९४३, ६।३।१

अथाऽलुक्समासो निरूप्यते--अलुगुत्तरपदे। नाऽयं विधिः, "राजपुरुष" इत्यादावतिप्रसङ्गात्, "पञ्चम्याः स्तोकादिभ्यः" इत्याद्यारम्भाच्च। किंतु पदद्वयमधिक्रियते। अस्य कियत्पर्यन्तमनुवृत्तिरित्याह-अलुगधिकारः प्रागानङ इति। "आनङृतः" इत्यतः प्रागित्यर्थः। उत्तरपदेति। षष्ठस्य तृतीये पादे अद्यमिदं सूत्रम्। #इत उत्तरमेतत्पादपरिसमाप्तिपर्यन्तमुत्तरपदाधिकार इत्यर्थः। अत्रोतत्रपदादिकारनियमे भाष्येमेव प्रमाणम्।

तत्त्व-बोधिनी

अलुगुत्तरपदे ८१६, ६।३।१

अलुक्सयादिति। प्रसज्यप्रतिषेधोऽयम्। सुपो धात्वित्यादिना प्राप्तो लुङ्ग भवतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

पञ्चम्याः स्तोकादिभ्यः ६।३।२

स्तोकान्मुक्तः। अल्पान्मुक्तः। उत्तरपदे इति किम्? निष्क्रान्तः स्तोकात् निस्तोकः। अन्यार्थम् इदम् उत्तरपदग्रहणम् इह

अप्यलुको निवृतिं करोति इत्येवम् अर्थं लक्षणप्रतिपदोक्तपरिभाषा न अश्रयितव्या। अलुगधिकारः प्रागानङः। उत्तरपदाधिकारः प्रागङ्गाधिकारात्। पञ्चम्याः स्तोकाऽदिभ्यः ६।३।२। स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि, तेभ्यः परस्याः पञ्चम्याः उत्तरपदे अलुक् भवति। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादगतः अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः। समासे कृते प्रातिपदिकत्वात् सुपो लुकि प्राप्ते प्रतिषेधः क्रियते। द्विवचनबहुवचनान्तानां तु स्तोकादीनाम् अनभिधानात् समास एव न भवति स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः इति। तेन अत्र न कदाचिदैकपद्यम् ऐकस्वर्यं च भवति। ब्राह्मणाच्छंसिन उपसङ्ख्यानं कर्तव्यम्। ब्राह्मणदादाय शंसति इति ब्राह्मणाच्छंसी इति। ऋत्विग्विशेषस्य रूढिरियम्। तस्य व्युत्पत्तिरसता सता वा अवयवार्थेन क्रियते।

लघु-सिद्धान्त-कौमुदी

पञ्चम्याः स्तोकादिभ्यः ९३३, ६।३।२

अलुगुत्तरपदे। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। कृच्छ्रादागतः॥

न्यासः

पञ्चम्याः स्तोकादिभ्यः। , ६।३।२

स्तोकादय इति प्रातपदिकगणेषु न पठ()न्ते। तस्मात्? सूत्रपरिपठिता एवेह ग्रहीतव्या इति दर्शयन्नाह--"स्तोकान्तिकदुरार्थकृच्छ्राणि" इत्यादि। अथ "करणे" च" २।३।३३ इत्यादौ सूत्रे ये परिपठिताः स्ताकादयस्ते कस्मान्न गृह्नन्ते? एवं मन्यते--"ङसेः स्तोकादिभ्यः" इति वक्तव्ये "पञ्चम्याः" इति बहुतराक्षरनिर्देशेनैतत्? सूचितम्()--येषु स्ताकादिषु गृह्नमाणेषु बहुतरलक्ष्यसंग्रहो भवति ते ग्रहीतव्याः" इति। स्तोकान्तिकदूरार्थकृच्छ्राणीत्येतेष्वेव ["दूरार्थ" इति नास्ति मुद्रिते न्यासपाठे] गृह्नमाणेषु बहुतरलक्ष्यसंग्रहो भवति, तत्रार्थग्रहणात्(); न त्वितरेषु। तस्मादेषामेव ग्रहणं न्याव्यमिति। कथं पुनरत्र लुक्? प्राप्नोति, यस्मिन्? प्राप्ते प्रतिषेधोऽयं क्रियते? इत्याह--"समासे कृते" इत्यादि। समासे कृते सति तस्य "कृत्तद्धितसमासाश्च" १।२।४६ इति प्रातिपदिकत्वम्(), अतः "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति सुपो लुकि प्राप्ते प्रतिषेधोऽयमुच्यते। किं पुनः कारणमेकवचनान्तानां स्तोकादीनामलुगुदाह्रियते, न द्विवचनबहुवचनान्तानाम्()? इत्याह--"द्विवचनबहुवचनान्तानाम्()" इत्यादि। वृत्तौ हि विशेषणपदान्येकत्वादिकां संख्यां विहायाभेदैकत्वसंख्यां प्रतिपद्यन्ते। सा पुनः सख्यानमात्रमनुपात्तसंख्याविशेषं सामान्यभूतम्(); यत एवमतो विवक्षितार्थानभिधानादद्विवचनबहुवचनान्तनां समासो न भवत्येव। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति। "तेन" इत्यादि। यत एवं द्विवचनबहुवचनान्तानां स्तोकादीनां समासो न भवति, तेन स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्त इत्यत्र न कदाचिदैकपद्यमैकस्वर्य च भवति। स्तोकाभ्यामित्यस्माद्धि पदान्मुक्त इत्येतत्? पदमन्यदेवात्यन्तभिन्नम्(), तथा स्तेकेभ्य इत्यस्मान्? मुक्त इत्येतत्()। स्वरोऽप्यत्रानेक एव। तथा हि--"स्तोकाभ्याम्()" इत्येतत्? प्रातिपदिकस्वरेम मध्योदात्तम्(), "मुक्तः" इत्येतत्? प्रत्ययस्वरेणान्तोदात्तम्()। एवम्? "स्तोकेभ्यो मुक्तः" इत्यत्रापि नानास्वरता वेदितव्या। मूलोदाहरणे तु समासे सत्येकपद्यं भवति, स्वरोऽप्येक एव। तथा हि--थाथादि६।२।१४३सूत्रेणात्रान्तोदात्तत्वम्()। यदि द्विवचनबहुवचनान्तानां समासो न भवतीह तर्हि कथं भवति--गोषुचरः वर्षासुज इति? विवक्षितार्थाभिधानात्()। अनभिधानं ह्समासे हेतुरुक्तः, इह तु विवक्षितार्थस्यार्थस्य बहुवचनस्याभिधानमस्त्येव। यत्र ह्भेदैकत्वसंख्योपजायते, तत्र संख्याविशेषस्याभिधानं न भवति, न चात्राभेदैकत्वसंख्योपजायते। ततश्च विवक्षितार्थाभिदानादभेदैकत्वसंख्या नोपपद्यते। तथा हि--गोषुचर इत्यत्र गोशब्दोऽप्सु वर्तते, स चापोऽभिदधानो बहुत्वसंख्याविशिष्ट एवाभिदधाति, अप्शब्दवत्()। वर्षासुज इति--वर्षाशब्दोऽपि कालविशेषे बहुत्वसंख्याविशिष्ट एव वर्तते। अतः प्रापिपदिकेनैव बहुत्वसंख्याया आश्रितत्वान्नात्राभेदैकत्वसंख्योपजायते। यदि तु जायेत, तदा बहुत्वसंख्या निवर्तेत, ततश्च गोशब्दस्य वर्षाशब्दस्य च यः प्रातिपदिकार्तोऽभिप्रेतः स इह न

गम्येत। तस्मान्माभूद्गोशब्दवर्षाशब्दयोरभिप्रेतस्यार्थस्यानवगतिरिति नात्राभेदैकत्वसंख्योपजायते। ततश्च विवक्षितार्थाभिधानाद् गोषुचरः, वर्षासुज इत्यत्र भवत्येव समासः। "ब्राआह्मणाच्छंसिन उपसंख्यानं कर्तव्यम्()" इति। ब्राआह्मणाच्छंसीति योऽयं शब्दस्तस्योपसंख्यानं प्रतिपादनं कर्तव्यमित्यर्थः। किं पुनरत्र न सिध्यति? पञ्चमीति। ब्राआह्मणशब्देनात्राध्ययनविशेष उच्यते, तं शंसति=कथयति यः सः ब्राआह्मणाच्छंसीति ताच्छिलिको णिनिः। अत्र ब्राआह्मणशब्दात्? "कर्मणि द्वितीया" २।३।२ इति द्वितीयायां प्राप्तायां पञ्चम्युपसंख्येया। अलुक्पुनः "तत्पुरुषे कृति बहुलम्()" ६।३।१३ इत्येव सिद्धः। यदा तु ब्राआह्मणादाकृष्यावयवमर्थं वा शंसतीति विवक्ष्यते, तदा पञ्चम्यपि नोपसंख्येया। "अपादाने पञ्चमी" २।३।२८ इत्येवमेव तस्याः सिद्धत्वात्()। कथं पुनरत्रासता पञ्चम्यर्थेन व्युत्पत्तिः क्रियते? इत्याह--"क्रत्विग्विशेष" इत्यादि। रूढिः=प्रसिद्धिः, संज्ञेति यावत्()। तस्या इत्यनेन रूढिमात्रं प्रत्यवमृश्यते, न तु ब्राआह्मणाच्छंसीत्ययं रूढिशब्दः। रूढिशब्दः कस्याचिदेव ऋत्विग्विशेषस्य वाचकः, तत्रैव तस्य संज्ञात्वेन प्रणीतत्वात्()। तस्मात्? तस्याप्यसता सता वावयवार्थेन व्युत्पत्तिः क्रियते। तत्र यदि ब्राआह्मणं शंसतीत्ययमर्थो विवक्ष्यते, तदा पञ्चम्यर्थस्यापादानस्याभावादसतावयवार्थेन व्युत्पत्तिः क्रियते। यद#आ तु ब्राआह्मणादवयबार्थं वा गृहीत्वा शंसतीत्ययमर्थो विवक्ष्यते, तदा पञ्चम्यर्थस्य भावात्? सता॥

बाल-मनोरमा

पञ्चम्याः स्तोकादिभ्यः ९४४, ६।३।२

पञ्चम्याः स्तोकादिभ्यः। एभ्य इति। स्तोकादिभ्यः परा या पञ्चमी तस्या "सुपो धातु" इति लुङ् न स्यादित्यर्थः। उत्तरपदे इति। उत्तरशब्दः समासचरमावयवे रूढः, "पदे" इत्येव सिद्धे उत्तरग्रहणात्। स्तोकान्मुक्त इति। एवमल्पान्मुक्तः। "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेने"ति समासः। अत्र पञ्चम्या अलुक्। एवमिति। आदिपदेन समासविधौ गृहीतानामन्तिकादीनां ग्रहणादिति भावः। अन्तिकादागतः, अभ्याशादागतः, दूरादागतः, विप्रकृष्टादागतः, कृच्छ्रादागतः। निःस्तोक इति। "निरादयः क्रान्ताद्यर्थे पञ्चम्ये"ति समासः। अत्र स्तोकशब्दस्य उत्तरपदपरकत्वाऽभावात्पञ्चम्या अलुक् न। "स्तोकान्मुक्तः" इत्यादौ समासप्रयोजनं तु समासस्वरः, सर्वस्मात्स्तोकान्मुक्त इति विशेषणयोगाऽभावश्च। किंच स्तोकान्मुक्तस्यापत्यं स्तौकामुक्तिरित्यादौ समुदायात्तद्धितोत्पत्तिश्च। स्तोकान्मुक्तौ, स्तोकान्मुक्ता इति द्विबहवचनान्तैर्न समासः, अनभिधानादिति भाष्ये स्पष्टम्।

ब्राआह्मणाच्छंसिन उपसङ्ख्यानमिति। "पञ्चम्या अलु"गिति शेषः। ननु ब्राआह्मणानि शंसतीत्यर्थे कथं पञ्चमी?। विधायकवाक्यानि हि ब्राआह्मणशब्देनोच्यन्ते, "कर्मचोदना ब्राआह्मणानि" इति कल्पसूत्रात्, "शेषे ब्राआह्मणशब्दः" इति मन्त्रभिन्नवेदभागे ब्राआह्मशब्दस्य जैमिनिना सङ्केतितत्वाच्च। एतादृशब्राआह्मणभागस्य न क्लापि शंसनं विहितम् "ऋचः शंसति निविदः शंसती"ति श्रुतिष्वित्यत आह--ब्राआह्मणे इति। शस्त्राणीति। ऋचा निविदां च सङ्घः शस्त्रम्। उपचारादिति। लक्षणयेत्यर्थः। द्वितीयार्थे इति। पञ्चम्या अलुगुपसङ्ख्यानबलादेव द्वितीयार्थे पञ्चमीत्यर्थः।

तत्त्व-बोधिनी

पञ्चम्याः स्तोकादिभ्यः ८१७, ६।३।२

स्तोकान्मुक्त इति। समासप्रयोजनमैकपद्यमैकस्वर्यं, विशेषयोगाऽभावश्च। किंच स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिः स्तोकानमुक्तायाः स्तौकान्मुक्तेयः इति समुदायात्तद्धितोत्पत्तिरपि प्रयोजनम्। न च प्राथमिकसमासिकलुको निषेधेन चरितार्थत्वाद्वाह्यस्तद्धितनिमित्तो लुग्दुर्वार इति शङ्क्यं सुपो धातु इति शास्त्रस्यैकत्वादविशेषेण लुग्द्व्यस्यापि निषेधाभ्युपगमात्। इह स्तोकान्तिके ति समासशास्त्रपठिता एव स्तोकादयो गृह्न्ते न तु करणे च स्तोकाल्पकृच्छ्रे ति सूत्रपठिताः। समासे सुपो लुकि प्रसक्ते विधीयमानेनाऽलुक्शास्त्रेण

समासशास्त्रपठितानामविलम्बेनोपस्थितेर्प्यासिन्यायाच्च। स्तोकान्तिकेत्यत्र ह्र्थग्रहणादन्यान्यपि बहूनि गृह्न्ते। तदेतन्मनसि निधायाह-- एवमिति। दविवचनबहुवचनान्तानां तु समासो नेष्यते, अनभिधानात्। तेन स्तोकाभ्यां मुक्तः इत्यादौ वाक्यमेव।

ब्राआहृणाच्छंसिन उपसङ्ख्यानम्। शस्त्राणीति। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधां स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणनिष्ठगुणाभिधानं शस्त्रमितियाज्ञिकानां व्यवहारः।

तत्त्व-बोधिनी

हलः ३३७, ६।३।२

हलः। र"संप्रसारणस्ये"त्यनुवर्तते। "अङ्गस्ये"त्यवयवषष्ठी। "हल" इति पञ्चमी। तदेतदाह--अङ्गावयवादिति। अङ्गावयवात्किम्?। निरुतम्। दुरुतम्। तदन्ताङ्गस्य किम्?। विध्यति। क्षीष् हिंसायाम्। षित्वादङ्। "क्षिया"। "हेति क्षियायाम्"। "क्षियाशी"रित्यादौ "क्षिया धर्मव्यतिक्रम आचारभेद" इति वक्ष्यति। दीर्घनिर्देशसामथ्र्यादिति। ननु दीर्घग्रहणेनाऽङ्गवृत्तपरिभाषा ज्ञाप्यत इत्याकरे स्थितम्। अन्यथा ज्ञाजनोर्जं विदध्यात्, "अतो दीर्घो यञी"ति दीर्घसिद्धेः। तथा च दीर्घनिर्देशसामथ्र्यस्योपक्षयात्कथमिह ह्रस्वाऽभावसिद्धिरिति चेत्। अत्राहुः-- ह्रस्वाऽभावे सत्येव दीर्घनिर्देश उक्तपरभाषाया ज्ञापकः। सति तु ह्रस्वे पुनरङ्गकार्यं प्रवृत्तमेवेति न ज्ञापकः। तथा च ह्रस्वाऽभावसिद्धौ न किंचिद्बाधकमिति। किंच "अङ्गवृत्ते पुनरङ्गवृत्तावविधि"रित्येव परिभाषाशरीरम्। तञ्चोक्तज्ञापकात्सिद्धम्। यदि तु "भ्यसो भ्य"मिति सूत्रे भाष्ये परिनिष्ठितस्येत्येव पाठस्तर्हि स्वतन्त्रमेवेदं वचनं न तु ज्ञापकमिति पक्षोऽपि युष्मदस्मच्छब्दगतमनोरमाग्रन्तादवगम्यते। त()स्मस्तु पक्षे दीर्घग्रहणसामथ्र्यं नोपक्षीणमिति सम्यगेवायं ग्रन्थ इति। केच#इत्तु संज्ञापूर्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः। बध्नातीति। "अनिदिता"मिति नलोपः। अभान्त्सीदिति। "वदव्रजे"ति वृद्धिः। भष्भावः। अबान्द्()धामिति। "झषस्तथो"रिति तस्य धत्वम्। "झरो झरी"ति वा लोपः। वृङ् संभक्तौ। भक्तिर्भजनम्। श्रन्थ। कित्वपक्षे इति। "श्रन्थिग्रन्थदम्भिस्वञ्जीनां लिटः कित्वं वे"ति व्याकरणान्तरमित्युक्तत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

ओजःसहो ऽम्भस्तमसस् तृतीययाः ६।३।३

ओजस् सहसम्भस् तमसित्येतेभ्य उत्तरस्याः तृतीयायाः अलुक् भवति उत्तरपदे। ओजसाकृतम्। सहसाकृतम्। अम्भसाकृतम्। तमसाकृतम्। अञ्जस उपसङ्ख्यानम्। अञ्जसाकृतम्। पुंसानुजो जनुषान्ध इति वक्तव्यम्। पुंसानुजः। जनुषान्धः।

न्यासः

ओजःसहोम्भस्तमसस्तृतीयायाः।, ६।३।३

ओजसाकृतमित्यादौ "कर्तृकरणए कृता बहुलम्()" २।१।३१ इत्यनेन समासः। "अञ्जस उपसंख्यानम्()" इति। अञ्जस उत्तरस्यास्तृतीयाया अलुक्? उपसंख्यानम्()=प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--"आज्ञायिनि च" ६।३।५ इत्यत्र चकारोऽनुक्तसमुच्चयार्थः, तेनाञ्जःशब्दादुत्तरस्यास्तृतीयाया अलुग्भवतीति। अन्यदपि चात्र प्रत्पादनमुत्तरत्र करिष्यामः। "पुंसानुजः" इत्यादि। पुंसानुजो जनुषान्ध इत्यत्रापि तृतीयाया अलुक्प्रतिपादनं कत्र्तव्यमित्यर्थः। प्रतिपादनं

पूर्ववत्। पुंसा हेतुनानुजः पुंसानुजः। जनुषा हेतुना अन्धः जनुषान्धः। "तृतीया" (२।१।३०) इति योगविभागात्? समासः। जनुरिति जन्मनो नामधेयमेतत्()॥

बाल-मनोरमा

ओजःसहोऽम्भस्तमसस्तृतीयायाः ९४५, ६।३।३

ओजस्। "ओजस्", "सहस्", "अम्भस्", "तमस्"-एषां समाहारद्वन्द्वः। एभ्य परस्यास्तृतीयाया अलुक् स्यादुत्तरपदे इत्यर्थः। ओजसाकृतमिति। "कर्तृकरणे कृता बहुल"मिति समासः। "ओजो दीप्तौ बले" इत्यमरः। इत्यादीति। "सहसाकृतम्", "अम्भसाकृतम्" "तमसावृत्तम्"। तमोवृत्तमिति तु असाध्वेव। शेषषष्ठ()आ वा समासः। अञ्जस उपसङ्ख्यानमिति। अञ्जश्शब्दातृतीयाया अलुक उपसङ्ख्यानमित्यर्थः। अञ्जसाकृतमिति। अञ्जश्शब्द आर्जवे वर्तते, यथा क्षेत्रज्ञोऽञ्जसा नयतीत्यादौ तथा दर्शनात्। तदाह---आर्जवेनेति।

पुंसानुजः। "तृतीयाया अलुकि साधु"रिति शेषः। यस्येति। यस्य पुमान् पूर्वजः स पुंसा हेतुना अनुजः कनीयान् इत्यर्थः। जनुषेति। "जनुर्जननजन्मानी"त्यमरः जनुषा=जन्मना हेतुना अन्ध इत्यर्थः। फलितमाह--जात्यन्ध इति। ब्राआह्मण्यादिजातितुल्याऽन्ध्वानित्यर्थः। उत्पत्तिप्रभृत्यन्ध इति यावत्।

तत्त्व-बोधिनी

ओजः सहोऽम्भस्तमसस्तृतीयायाः ८१८, ६।३।३

ओजः सहो। ओजसाकृतमिति। कर्तृकरणे कृतेति समासः। कथं तर्हि सततनैशतमोवृतमन्यतः इति भारविः?। अत्राहुः -- वृतु वर्तने इत्यस्मात् घञर्थे कविधानमिति भावे कप्रत्यये तदन्तेन षष्ठीसमासाश्रयणान्न दोष इति। यत्तु केवलपदाधिकार एव तदन्तविधिर्न तूत्तरपदाधिकारे। तथा च नैतशतमसा इति तृतीयाया अलुङ्न भवतीति दुर्घटवृत्याद्युक्तम्। तन्न। पदाङ्गाधिकारे इत्यत्र इष्टकचितं, पक्वेष्टकचितमिति भाष्योदाहरमादुत्तरपदाधिकारेऽपि तदन्तविधिप्रवृत्तेः।

पुंसानुजो जनुषान्ध इति च। जनुषेति। जनुर्जननजन्मानीत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

मनसः संज्ञायाम् ६।३।४

मनसः उत्तरस्याः तृतीयायाः संज्ञायाम् अलुग् भवति। मनसादत्ता। मनसगुप्ता। मनसासङ्गता। संज्ञायाम् इति किम्? मनोदत्ता। मनोगुप्ता।

न्यासः

मनसः संज्ञायाम्?। , ६।३।४

बाल-मनोरमा

मनसः संज्ञायाम् ९४६, ६।३।४

मनसः संज्ञायां। मनसस्तृतीयाया अलुक् स्यादुत्तरपदे इत्यर्थः। मनसागुप्तेति। कस्याश्चित्संज्ञेयम्। असंज्ञायां तु-मनोगुप्ता।

---

सूत्रम्

काशिका-वृत्तिः

आज्ञायिनि च ६।३।५

आज्ञायिन्युत्तारपदे मनसः उत्तरस्य तृतीयायाः अलुग् भवति। मनसा अज्ञातुं शीलमस्य मनसाज्ञायी।

न्यासः

आज्ञायिनि च। , ६।३।५

"मनसाज्ञायी" इति। तच्छिलिको णिनिः, "आतो युक्? चिण्कृतोः" ७।३।३३ इति युगागमः, उपपदसमासः॥

बाल-मनोरमा

आज्ञायिनि च ९४७, ६।३।५

आज्ञायिनि च। मनस इत्येवेति। अनुवर्तत एवेत्यर्थः। मनसस्तृतीयाया अलुक् स्यादाज्ञायिनि परे इत्यर्थः। असंज्ञार्थमिदम्। ज्ञातुमिति। प्रेरयितुमित्यर्थः। मनसाज्ञायीति। "सुप्यजातौ" इति णिनिः। "आतो युक्चिण्कृतो"रिति युक्। अत्र सूत्रभाष्ये "आत्मनश्च पूरणे उपसङ्ख्यान"मिति वार्तिकं पठितम्।

---

सूत्रम्

काशिका-वृत्तिः

आत्मनश् च पूरणे ६।३।६

आत्मनश्च पूरणे ६।३।६। आत्मनः उत्तरस्याः तृतीयायाः पूरणप्रत्ययान्ते उतारपदे ऽलुग् भवति। आत्मनापञ्चमः। आत्मनाषष्ठः। तृतीयाविधाने प्रकृत्यादिभ्य उपसङ्ख्यानम् इति तृतीया। तृतीया इति योगविभागात् समासः। आत्मना वा कृतः पञ्चमः आत्मनापञ्चमः। कथं जनार्दनस्त्वात्मचतुर्थ एव इति? बहुव्रीहिरयम् आत्मा चतुर्थो ऽस्य असौ आत्मचतुर्थः।

न्यासः

आत्मनश्च पूरणे। , ६।३।६

पूरणगरहणिह स्वर्यते, स्वरितेन चाधिकारावगतिर्भवति। तेन पूरणग्रहणधिकृत्य पूरणग्रहणमधिकृत्य पूरणप्रत्यया विहितास्त एव पूरणग्रहणेन गृह्यन्ते, न तु स्वरूपम्()। "उत्तरपदे" ६।३।१ इत्यनुवत्र्तते च, ततः प्रत्ययग्रहणपरिभाषया (भो।प।सू।७) पूरणप्रत्ययान्त उत्तरपदे कार्यं विज्ञायत इत्यालोच्याह--"पूरणप्रत्ययान्त उत्तरपदे" इत्यादि। "पञ्चमः" इति। पञ्चानां पूरणः "तस्य पूरणे डट्()" ५।२।४८ इति डट्(), तस्य "नान्तादसंख्यादेर्मट्()" ५।२।४९। "षष्ठः" इति। षण्णां पूरण इति "षट्कतिकतिपयचतुरां थुक्()" ५।२।५१, ष्टुत्वम्()। "आत्मनापञ्चमः" इत्यादौ केन तृतीया, न ह्यत्र करणादिस्तृतीयार्थोऽस्ति, करणादि हि कारकम्(), क्रियायाश्च कारक्रं भवति, न चेह काचित्? क्रिया विद्यते? इत्याह--"तृतीयाविधाने" इत्यादि। भवत्वेवम्(), तृतीयासमासास्तु कथम्(), न ह्यत्र समासलक्षणमस्ति? इत्यत आह--"तृतीयाविधाने" इत्यादि। भवत्वेवम्(), तृतीयासमासस्तु कथम्(), न ह्यत्र समासलक्षणमस्ति? इत्यत आह--"तृतीयेति च" इत्यादि। अथ वा--"कर्तृकरणयोस्तृतीया" २।३।१८ इत्यनेनैवात्र तृतीया, "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समास इति दर्शयन्नाह--"आत्मना वा" इत्यादि। अत्र कर्तर करणे वैषा तृतीया--कृतः पञ्चम इति। कृते समासे कृतशब्दो न प्रयज्यते; तदर्थस्य वृत्तावन्तर्भावात्()। "कथम्()" इत्यादि। अत्राप्यात्मना चतुर्थ इति

भवितव्यमिति भावः। "बहुव्रीहिरयम्()" इत्यादि परिहारः। तत्पुरुषे ह्यात्मनाचतुर्थ इति स्यात्(), न चायं तत्पुरुषः। किं तर्हि? बहुव्रीहिः। स च प्रथमान्तयोरेव पदयोरिति न भवत्यनिष्टप्रसङ्गः। ननु चान्यपदार्थे बहुव्रीहिरुच्यते, अन्यपदार्थश्च व्यतिरिक्तो भवति। यथा चित्रा--गावो यस्य सः चित्रगुरिति, न चेह कश्चिद्व्यतिरिक्तोऽन्यपदार्थोऽस्ति? नैष दोषः; अव्यतिरक्तोऽप्यन्यपदार्थो भवति वयपदेशिवद्भावेन। यथा--शोभनशरीरः शिलापुत्रक इति॥

---

सूत्रम्

काशिका-वृत्तिः

वैयाकरणाख्यायां चतुर्थ्याः ६।३।७

वैयाकरनानामाख्या वैयाकरणाख्या। आख्या संज्ञा। यया संज्ञया वैयाकरणा एव व्यहरन्ति तस्याम् आत्मनः उत्तरस्याश्चतुर्थ्या अलुग् भवति। आत्मनेपदम्। आत्मनेभषा। तदर्थ्ये चतुर्थी। चतुर्थी इति योगविभागात् समासः।

काशिका-वृत्तिः

परस्य च ६।३।८

परस्य च या चतुर्थी तस्य वैयाकरणाख्यायाम् अलुग् भवति। परस्मैपदम्। परस्मैभाषा।

न्यासः

वैयाकरणाख्यायां चतुर्थ्याः। , ६।३।७

"वैयाकरणानाम्()" इति। व्याकरणमधीयते विदन्ति वा वैयाकरणा। का पुनर्वैयाकरणानामाख्येत्याह--"यया" इत्यादि। अथैवं कस्मान्न व्याख्यायते--व्याकरणे भवा वैयाकरणी, "अणृगयनादिभ्यः" ४।३।७३ इत्यण्(), वैयाकरणी चासावाख्या चेति वैयाकरणाख्या "पुंवत्? कर्मदारय" ६।३।४१ इत्यादिना पुंवद्भवः, तस्यां वैयाकरणाख्यायामिति? अशक्यमेवं व्याख्यातुम्(), इह हि न स्यात्()--आत्मनेभाषः, परस्मैभाष इति। व्याकरणे हि का भाषा? या व्याकरणे कृता। न चैते क्वचित्? व्याकरणे कृते। पूर्वत्र व्याख्याने सतीहापि भवति, एते अपि वैयाकरणानामाख्ये, तथा ह्याभ्यामपि वैयाकरणा व्यवहरन्त्येव। "आत्मनेपदम्()" इति। आत्मार्थं पदम्()। तादर्थ्ये "चतुर्थी" (२।१।३६) इति योगविभागात्? समासः। ननु "चतुर्थी तदर्थ" (२।१।३६) इत्येवं समासः सिद्धः? न सिध्यति; प्रकृतिविकारभावे हि स इष्यते॥

न्यासः

परस्य च। , ६।३।७

बाल-मनोरमा

वैयाकरणाख्याया चतुर्थ्याः ९४९, ६।३।७

वैयकरणाख्यायाम्। आत्मन इत्येवेति। अनुवर्तत एवेत्यर्थः। न च "आत्मनश्चे"त्यस्य वार्तिकत्वे कथमिह सूत्रे एतदनुवृत्तिरिति वाच्यं, "सोऽपदादौ" इति सूत्रे पठितस्य "काम्ये रोरेवेति वाच्य"मिति वार्तिकस्य "इणः षः" इति सूत्रेऽनुवृत्तिवदुपपत्तेः। व्याकरणे भवा वैयाकरणी, सा चासावाख्या च वैयाकरणाख्या, तस्यां या चतुर्थी तस्या अलुगित्यर्थः। आत्मनेभाषे इति। पूर्वाचार्यकृतमात्मनेपदस्य संज्ञान्तरमिदं धातुपाठे प्रसिद्धम्। तादर्थ्ये चतुर्थीति। तथा चात्मने इत्यस्याऽऽत्मार्थमित्यर्थः। आत्मगामिनि फले प्रायेण तद्विधानादिति भावः। ननु प्रकृतिविकाराऽभावात्कथमिह तादर्थ्ये चतुर्थ्याः समास इत्यत आह--चतुर्थीति योगविभागादिति। पस्पासाह्निकभाष्ये "धर्माय नियमो धर्मनियम" इति भाष्यमिह लिङ्गन्।

बाल-मनोरमा

परस्य च ९५०, ६।३।७

परस्य च। वैयकरणाख्यायां परशब्दस्यापि चतुथ्र्या अलुगित्यर्थः।

तत्त्व-बोधिनी

वैयाकरणाख्यायां चतुर्थ्याः ८२०, ६।३।७

वैयाकरणा। व्याकरणे भवा वैयाकरणी। अणृगयनादिभ्यः इत्यण्। सा चासावाख्या चेति कर्मधारयः। आत्मन इत्येवेति। इह आत्मनः इत्यननुवत्र्य वैयाकरणाख्यायां चतुथ्र्या अलुगिति व्याख्याने तु परसय् चेत्युत्तरसूत्रं त्युक्तं शक्यमित्याहुः। आत्मनेभाषा इति। यद्यपीयमाख्या अष्टाध्यायां नास्ति, तथापि धातुपाठेऽस्तीति भावः। प्रकृतिविकृतिभावविरहात् रन्धनाय स्थालीतिवत्समासाऽभावमाशङ्क्याह-- योगविभागादिति। इहाऽलुग्विधिसामथ्र्यादपि समासः सुवचः।

तत्त्व-बोधिनी

परस्य च ८२१, ६।३।७

परस्य च। परशब्दस्य च या चतुर्थी तस्या अलुक् स्याद्वैयाकरणाख्यायाम्।

---

सूत्रम्

काशिका-वृत्तिः

हलदन्तात् सप्तम्याः संज्ञायाम् ६।३।९

हलन्तादादन्ताच् च उत्तरस्याः सप्तम्याः संज्ञायाम् अलुग् भवति। युधिष्ठिरः। त्वचिसारः। गविष्ठिरः इत्यत्र तु गवियुधिभ्यां स्थिरः ८।३।९५ इत्यत एव वचनादलुक्। अदन्तात् अरण्येतिलकाः। अरण्येमाषकाः। वनेकिंशुकाः। वनेहरिद्रकाः। वनेबल्बजकाः। पुर्वाह्णेस्फोटकाः। कूपेपिशाचकाः। हलदन्तादिति किम्? नद्यां कुक्कुटिका नदीकुक्कुटिका। भूम्यां पाशाः भूमिपाशाः। संज्ञायाम् इति किम्? अक्षशौण्डः। हृद्द्युभां ङेः। हृद् दिवित्येतेभ्याम् उत्तरस्य ङेरलुग् भवति। हृदिस्पृक्। दिविस्पृक्।

लघु-सिद्धान्त-कौमुदी

हलन्तात्सप्तम्याः संज्ञायाम् ९७१, ६।३।८

हलन्तादन्ताच्च सप्तम्या अलुक्। कण्ठेकालः। प्राप्तमुदकं यं स प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः। (प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः)। प्रपतितपर्णः, प्रपर्णः। (नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः) अविद्यमानपुत्रः, अपुत्रः॥

न्यासः

हलदन्तात्सप्तम्याः संज्ञायाम्?। , ६।३।८

"युधिष्ठिरः" इति। "संज्ञायाम्()" २।१।४३ इति समासः, "गवियुधिभ्यां स्थिरः" ८।३।९५ इति षत्वम्()। अथ गविष्ठिर इत्यत्र कथमलुक्(), न हि गोशब्दो हलन्तः, नाप्यदन्तः? स्यादेतत्()--गो+इ+स्थिर इति स्थितेऽन्तरङ्गत्वादवादेशे कृते हलन्तत्वाद्भविष्यति, एतच्च नास्ति; यतः "अन्तरङ्गानपि विधीन्? वहिरङ्गो लुग्? बाधते" (व्या।प।१२८) इति, अवश्यं

चैतदभ्युपेयम्(); अन्यथा हि नद्यां कुक्कुटिका नदीकुक्कुटिक, भूम्यां पाशो भूमिपाश इत्यत्रापि यणादेशे कृतेऽलुक्? प्रसज्येत? इत्यत आह--"गविष्ठिर इत्यत्र तु" इत्यादि। "ह्रद्द्युभ्याम्()" इति। असंज्ञार्थमिदम्()। वक्तव्यमिति व्याख्येयमित्यर्थः। व्याख्यानं चोत्तरत्र करिष्यते। अथ वेहापि क्रियते--इहान्तग्रहणं न कत्र्तव्यम्(), विनापि तेन सपतम्या प्रातिपदिके सन्निधापिते हलदन्तता लभ्यत एव, तसमादधिकमिहान्तग्रहणं क्रियते, तदधिकं क्रियमाणमेतत्? सूचयति--अधिकेनायमलुग्भवतीति। तेन क्वचिदसंज्ञायामलुग्भवतीति। "ह्मदिस्पृग्दिविस्पृक्()" इति। "स्पृशोऽनुदके क्विन्()" ३।२।५८ "क्विन्प्रत्यस्य कुः" ८।२।६२ ति शकारस्य खकारः, तस्य "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वम्()--गकारः, तस्यापि "वाऽवसाने" ८।४।५५ इति चत्वम्()--ककारः। अत्र चायमर्थः--ह्मदयं स्पृशति, दिवं स्पृशतीति। तथा हि भाष्ये उक्तम्()--"द्वितीयार्थे सप्तमी चैषा द्रष्टवया, ह्मदयं स्पृशति, दिवं स्पृशतीति "ह्मविस्पृक्(), दिविस्पृक" इति। कथं पुनः द्वितीयार्थे सा भवति? अत एव भाष्यकारवचनात्()। अथ वा--ह्मदयं यः स्पृशति स ह्मदये स्पृशत्येव, दिवं यः स्पृशति स दिवि स्पृशत्येव अत्र "अधिकरणे" २।३।३६ इत्येवं भविष्यति सप्तमी। आख्याग्रहणे प्रकृते पुनः संज्ञाग्रहणं विस्पष्टार्थम्()॥

बाल-मनोरमा

हलदन्तात्सप्तम्याः संज्ञायाम् ९५१, ६।३।८

हलदन्तात्। त्वचिसार इति। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। "वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः" इत्यमरः। अथ हलन्तस्योदाहरणान्तरं वक्ष्यति--युधिष्ठिर इति। अत्र "अजिरशिशिसस्थिरे"त्युणादिसूत्रेण स्थाधातोः किरचि स्थिरशब्दो व्युत्पादितः।

---

सूत्रम्

काशिका-वृत्तिः

कारनाम्नि च प्राचां हलादौ ६।३।१०

प्राचां देशे यत्कारनाम तत्र हलादवुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्याः अलुग् भवति। सूपेशाणः। दृषदिमाषकः। हलेद्विपदिका। हलेत्रिपदिका। कारविशेषस्याः संज्ञा एताः, तत्र पूर्वेण एव सिद्धे नियमार्थम् इदम्। एते च त्रयो नियमविकल्पा अत्रेष्यन्ते, कारनाम्न्येव, प्राचाम् एव, हलादावेव इति। कारनाम्नि इति किम्? अभ्यर्हिते पशुः अभ्यर्हितपशुः। कारादन्यस्या एतद् देयस्य नाम। प्राचाम् इति किम्? यूथे पशुः यूथपशुः। हलादौ इति किम्? अविकटे उरणः अविकटोरणः। हलदन्तादित्येव, नद्यां दोहनी नदीदोहनी।

न्यासः

कारनाम्नि च प्राचां हलादौ। , ६।३।९

वणिग्भिः कर्षकैः पशुपालैश्च राज्ञे देयो भागो रक्षानिबन्धनः=कारः, तस्य नाम कारनाम। "कूपेशाणम्()" इत्यादौ "संज्ञायाम्()" २।१।४३ इति समासः। "हलेद्विपदिका" इति। द्वौ द्वौ पादौ देयौ द्विपादिका, "पादशतस्य" ५।४।१ इत्यादिना वुन्(), अलोन्त्यलोपश्च, "पादः पत्()" ६।४।१३० इति पदादेशः। "कारविशेषस्य" इत्यादिनास्य सूत्रस्य नियमार्थतां दर्शयति। नियमविकल्पाः--नियमविशेषा इत्यर्थः। "कारनाम्नि च" इत्यादिना तेषां नियमविकलपानां स्वरूपं दर्शयति। एते च नियमविकल्पाः कारनाम्नि, प्राचाम्, हलादावित्येषां पदानामिह नियमवाक्य उपादानाललभ्यन्ते। यद्याद्यो नियमो नाभिप्रेतः स्यात्? तदा "कारनाम्नि" इति न ब्राऊयात्()। एवं यदि द्वितीयो नियममो नाभिप्रेतः स्यात्? तदा "प्राचाम्()" इत्येवं नोक्तं स्यात्()। तथा यदि तृतीयो नियमो नाभीष्टः स्यात्? "हलादौ" इत्येवं नोक्तं स्यात्()। अथ किमर्थं

नामग्रहणम्(), न पूर्वयोगात्? संज्ञाग्रहणमनुवर्त्तते? पूर्वयोगे संज्ञाया उपाधेः प्रायिकत्वसूचनार्थं नामग्रहणम्()। तेन ह्मदिस्पृक्(), दिविस्पृगित्यत्रासंज्ञायामप्यलुक्सिद्धो भवति॥

बाल-मनोरमा

कारनाम्नि च प्राचां हलादौ ९५३, ६।३।९

कारनाम्नि। यत्रकारनामेति। राजग्राह्यो भागः करः, स एव कारः, तद्विशेषवाचक इत्यर्थः। नियमार्थमिति। "प्राचां देशे हलादौ यदि भवति कारनाम्न्येव," "कारनाम्नि हलादौ चेत्प्राचामेव," "प्राचां कारनाम्नि चेद्धलादावेवे"ति नियमत्रयार्थमित्यर्थः। अविकटोरण इति। अविशब्दासङ्घाते कटच्। उपणो मेषः। नद्यामिति। नद्युत्तारणे तात्कालिको दोहः-करः।

तत्त्व-बोधिनी

कारनाम्नि च प्राचां हलादौ ८२३, ६।३।९

अविकटोरण इति। सङ्घाते कट जिति कटच्प्रत्ययान्तः। उरणो-मेषः।

---

सूत्रम्

काशिका-वृत्तिः

मध्याद् गुरौ ६।३।११

मध्यादुत्तरस्याः सप्तम्याः गुरावुत्तरपदे ऽलुग् भवति। मध्येगुरुः। अन्ताचेति वक्तव्यम्। अन्तेगुरुः। सप्तमी इति योगविभागात् समासः।

न्यासः

मध्याद्र गुरौ। , ६।३।१०

"अन्ताच्चेति वक्तव्यम्()" इति। अन्तशब्दाच्चोत्तरस्याः सप्तम्या अलुग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--पूर्वयोगाच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चार्थः। तेनान्तशब्दादप्युत्तरस्याः सप्तम्या अलुग्भवतीति॥

बाल-मनोरमा

मध्याद्गुरौ ९५४, ६।३।१०

मध्याद्गुरौ। गुरुशब्दे परे मध्यशब्दात्सप्तम्या अलुक् स्यादित्यर्थः। असंज्ञार्थमिदम्।

अन्ताच्चेति। सप्तम्या अलुक्स्याद्गुरौ परे इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अमूर्धमस्तकात् स्वाङ्गादकामे ६।३।१२

मूर्धमस्तकवर्जितात् स्वाङ्गादुत्तरस्याः सप्तम्याः अकामे उत्तरपदे ऽलुग् भवति। कण्ठे कालो ऽस्य कण्ठेकालः। उरसिलोमा। उदरेमणिः। अमूर्धमस्तकातिति किम्? मूर्धशिखः। मस्तकशिखः। अकामे इति किम्? मुखे कामो ऽस्य मुखकामः। स्वाङ्गातिति किम्? अक्षशौण्डः। हलदन्तातित्येव, अङ्गुलित्राणः। जङ्घावलिः।

न्यासः

अमूद्र्धमस्तकात्? स्वाङ्गादकामे। , ६।३।११

स्वाङ्गमद्रवादिलक्षणं पारिभाषिकं यत्? तदिह गृह्रते। "कण्ठेकालः" इति बहुव्रीहिः। "व्यधिकरणानामपि "बहुव्रीहिर्भवत्येव" इति बहुव्रीहिः। "समानाधिकरण" (वा।९७) इत्येतत्? प्रायकम्()। "अक्षशौण्डः" इति। "सप्तमी शौण्डैः" २।१।३९ इति समासः। "अङ्गुलित्राणजङ्घावलो" सप्तमीतत्पुरुषौ॥

बाल-मनोरमा

अमूर्धस्तकात्स्वाङ्गादकामे ९५५, ६।३।११

अमूर्धमस्तकात्। मूर्धमस्तकशब्दवर्जितात्स्वाङ्गवाचकात्सप्तम्या अलुक्स्यात्, नतु कामशब्दे उत्तरपदे इत्यर्थः। अत्र संज्ञायामित्यनुवर्तते। अत एव "ह्मद्युभ्यां चे"त्यत्र ह्मद्ग्रहणमर्थवत्। कण्ठेकाल इति। शिवस्य नाम। उरसिलोमेति। कस्यचिन्नाम। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः।

---

सूत्रम्

काशिका-वृत्तिः

भन्धे च विभाषा ६।३।१३

बन्धः इति घञन्तो गृह्यते। तस्मिन्नुत्तरपदे हलदन्तदुत्तरस्याः सप्तम्याः विभाषा अलुग् भवति। हस्तेबन्धः, हस्तबन्धः। चक्रेबन्धः, चक्रबन्धः। उभयत्र विभाषेयम्। स्वङ्गाद् धि बहुव्रिहौ पूर्वेण नित्यम् अलुक् प्राप्नोति, तत्पुरुषे तु स्वङ्गादस्वाङ्गाच् च नैन्सिद्धबध्नातिसु च ६।३।१८ इति प्रतिषेधः प्राप्नोति। हलदन्तादित्येव, गुप्तिबन्धः।

न्यासः

बन्धे च विभाषा। , ६।३।१२

"स्वाङ्गात्()" ६।३।११ इति निवृत्तम्(), सामान्येन विधिः। "बन्धे" इति। बध्नातेरेतद्रूपम्()। "नेन्त्सिद्धबध्नातिषु च" ६।३।१८ इत्यनेन तत्पुरुषे बध्नातौ प्रतिषेधं वक्ष्यन्ति। तत्र विषयविभागो न ज्ञायते--तत्पुरुषे क्व च प्रतिषेधः? इत्यतस्तत्परिज्ञानार्थमाह--"बन्ध इति धञन्तो गृह्रते" इति। बन्धनं बनधः, भावे घञ्()। अनेन धञन्ते बध्नातौ विभाषा। प्रत्ययान्तरे तु प्रतिषेध इति दर्शितं भवति। कथं पुनज्र्ञायते--घञन्तोऽयमिति? आद्युदात्तत्वात्()। "हस्तेबन्धः" इति। तत्पुरुषः, बहुव्रीहिर्वा। "उभयत्र" इति। प्राप्ते चाप्राप्ते च कथं पुनरुभयत्र विभाषेयम्()? इत्याह--"स्वाङ्गाद्धि" इत्यादि॥

बाल-मनोरमा

बन्धे च विभाषा ९५६, ६।३।१२

बन्धे च विभाषा। शेषपूरणेन सूत्रं व्याचष्टे--हलदन्तादिति। बस्तेबन्ध इति। संज्ञायामिति सप्तमीत्तपुरुषोऽयम्। इह तत्पुरुष इति संबध्यते, "बन्ध" इति घञन्तम्, अन्यत्र तु "नेन्सिद्धे"ति निषेध इति स्पष्ट भाष्ये।

तत्त्व-बोधिनी

बन्धे च विभाषा ८२४, ६।३।१२

बन्धे च विभाषा। बन्ध इति घञन्तः। हस्तेबन्ध इति। बहुव्रीहिरयम्। तत्पुरुषे तु नेन्सिद्धबन्धातिषु चेति वक्ष्यमाणेन

निषेध एवेत्याहुः। अप्सव्य इति। दिगादित्वाद्यति ओर्गुणे वान्तादेशः। प्राचा तु यतः स्थाने जं पठित्वा अप्सुजः इत्युदाह्मतं, तदाकरविरुद्धम्।

अपो योनियन्मतुषु। अप्सुमन्ताविति। कारीर्याम् अप्स्वग्ने सधिष्ठव अप्सु मे सोमो अब्रावीदित्याज्यभागमन्त्रौ स्तः। तत्र ह्रप्सुशब्दोऽस्तीति तदद्वारा आज्यभागयोरप्यप्सुमत्त्वम्। प्राचा तु मतिषु इति पठित्वा अप्सुमतिः इत्युदाह्मतम्। अत्र केचित्--- अप्स्वित्येतदनुकरणशब्दः सप्तम्यन्तो न वा?। आद्ये सप्तम्यान्तात्प्रथमाया अभावेन मतुबेव दुर्लभः। अन्त्ये तु लुकः प्राप्तिरेव नास्ति, सप्तम्यभावात्। तथा च मतिषु इति प्राचोक्तः पाठ एव युक्तः। न च स पाठो भाष्यादौ न दृष्ट इति वाच्यं, मतिषु इति पाठस्य अप्सुमतिः इत्युदाहरणस्य च भाष्यवृत्त्यादिपुस्तकेषु दृश्यमानत्वेन मतुष्विति पाठस्यैव क्काप्यदर्शनात्, व्यर्थत्वाच्च। अस्यवामीयं कथाशुभीयम् इत्यादाविव लुकि कर्तव्ये प्रकृतिप्रकृतिवदनुकरणमित्यतिदेशाऽप्रवृत्त्यैवेष्टसिद्धेरित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

तत्पुरुषे कृति बहुलम् ६।३।१४

तत्पुरुषे समासे कृदन्ते उत्तरपदे सप्तम्याः बहुलम् अलुग् भवति। स्तम्बेरमः। कर्णेजपः। न च भवति। कुरुचरः। मद्रचरः।

लघु-सिद्धान्त-कौमुदी

तत्पुरुषे कृति बहुलम् ८१५, ६।३।१३

ङेरलुक्। सरसिजम्, सरोजम्॥

न्यासः

तत्पुरुषे कृतिबहुलम्?। , ६।३।१३

"स्तम्बेरमः, कर्णेजपः" इति। "स्तम्बकर्णयो रमिजपोः" ३।२।१३ इत्यच्(), "उपपदमितङ्" २।२।१९ इति तत्पुरुषः। "कुरुचरः, मद्रचरः" इति। "चरेष्टः" ३।२।१६ विभाषायां प्रकृतायां बहुलग्रहणं क्वचित्प्रवृत्त्यादीनामर्थानां संग्रहार्थम्()। तेनालुक्प्रवृत्तिः क्वचिदेव भवति--"स्तम्बेरमः" इत्यादौ। क्वचिदप्रवृत्तिरेव--"कुरुचरः" इत्यादौ। क्वचिदुभयम्()--"सरजिम्(), सरोजम्()" इत्यादौ। क्वचिदन्यदेव--"ब्राआह्नणाच्छंसी" इत्यादौ। सप्तम्या अलुगुक्तः पञ्चम्या अपि भवति। तथा कृदन्त उत्तरपदेऽलुगुक्तस्तद्धितेऽपि भवति--अप्सु भवोऽप्सव्य इति। दिगादित्वाद्यत्()--"ओर्गुणः" ६।४।१४६ इति गुणः, "वान्तो यि प्रत्य" ६।१।७६ इति वान्तादेशः। तदेवं सर्वत्र बहुलग्रहणेन सिद्धमिति "ब्राआह्नणाच्छंसिन उपसंख्यानम्()" (वा।७१६) इत्यादि। यदुक्तम्(), यच्च वक्ष्यते--"अपोयोनियन्मतुषु सप्तम्या अलुक्()" (वा।७२१) इत्यादि, तत्? सर्व न वक्तव्यं भवतीति। यद्येवम्? स्तोकान्मुक्त इत्यादपि सर्वमनेनैव सिद्धमिति "पञ्चम्याः स्ताकादिभ्यः" (६।३।२) इति न वक्तव्यं भवति? सत्यमेतत्(); अस्यैव प्रपञ्चार्थं तद्वेदितव्यम्()। एवञ्च सति सुसंगृहीतं लक्ष्यं भवति। तथा चाह--त एव विषयाः सुसंगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च॥

बाल-मनोरमा

तत्पुरुषे कृति बहुलम् ९५७, ६।३।१३

तत्पुरुषे कृति। तत्पुरुषे सप्तम्या बहुलमलुक्()स्यात्कृदन्ते उत्तरपदे संज्ञायामित्यर्थः। स्तम्बेरम इति। तृणसमूहः स्तम्बः, तस्मिन् रमत इति स्तम्बेरमो हस्ती। कर्णेजप इति। कर्णे जपति=परदोषमुपां()आआविष्करोतीति कर्णेजपः

पिशुनः। "स्तम्बकर्णयो रमिजपो"रित्यच्। उपपदसमासः। क्वचिन्नेति। बहुवग्रहणादिति भावः। कुरुचर इति। "चरेष्टः" इत्यधिकरण उपपदेः चरेष्टः। उपपदसमासः। यद्यपि हलदन्तादित्यनुवृत्त्यैव सिद्धमिदं, तथापि बहुलग्रहणादेव सिद्धे "हलदन्ता"दिति नानुवर्त्तनीयमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

प्रावृट्शरत्कालदिवां जे ६।३।१५

प्रावृट् शरत् काल दिवित्येतेषां जे उत्तरपदे सप्तम्याः अलुक् भवति। प्रावृषिजः। शरदिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्य एव अयं प्रपञ्चः।

न्यासः

प्रवृट्शरत्कालदिवां जे। , ६।३।१४

"प्रावृषिजः" इति। "सप्तम्यां जनेर्डः" ३।२।९७, "टेः" ६।४।१४३ इति टिलोपः, "अपपदमतिङ" २।२।१९ इति समासः॥

बाल-मनोरमा

प्रावृट्?शरत्कालदिवां जे ९५८, ६।३।१४

प्रावृट्शरत्। प्रावृट्, शरत्, काल, दिव्-एषां सम्या अलुक् स्याज्ज शब्दे परे संज्ञायामित्यर्थः। ननु "हलदन्ता"दित्येव सिद्धे किमर्थमिदमित्यत आह--पूर्वस्यैवायं प्रपञ्च इति। विस्तर इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा ६।३।१६

वर्ष क्षर शर वर इत्येतेभ्य उत्तरस्यः सप्तम्याः जे उत्तरपदे विभाषा अलुग् भवति। वर्षेजः, वर्षजः। क्षरेजः, क्षरजः। शरेजः, शरजः। वरेजः, वरजः।

न्यासः

विभाष वर्षक्षरशरवरात्?। , ६।३।१५

बाल-मनोरमा

विभाषा वर्षक्षरशरवरात् ९५९, ६।३।१५

विभाषा वर्ष। शेषपूरणेन सूत्रं व्याचष्टे--एभ्यस्सप्तम्या इति।

---

सूत्रम्

काशिका-वृत्तिः

घकालतनेसु कालनाम्नः ६।३।१७

घसंज्ञके प्रत्यये, कालशब्दे, तनप्रत्यये च परतः कालनाम्नः उत्तरस्याः सप्तम्या विभाषा अलुग् भवति। घ पूर्वह्णेतरे,

पूर्वाह्णतरे। पूर्वाह्णेतमे, पूर्वाह्णतमे। काल पूर्वाह्णेकाले, पूर्वह्णाकाले। तन पूर्वाह्णेतने, पूर्वाह्णतने। कालनाम्नः इति किम्? शुक्लतरे। शुक्लतमे। हलदन्तादित्येव, रात्रितरायाम्। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर् न इष्यते हृदयस्य हृल्लेख इति लेखग्रहणाल् लिङ्गात्। तेन घतनग्रहणे, तदन्तग्रहनं न भवति। काल इति न स्वरूपग्रहणम्।

न्यासः

घकालतनेषु कालनाम्नः। , ६।३।१६

"घ" इति तरपतमपोर्गहणम्(), "काल" इति कालवाचिनः शब्दस्य, "तन" इति ट()उट()उलोरनादेशस्य सतुट्कस्य। "पूर्वाह्णेतराम्()" इति। अह्नः पूर्वमिति विगृहय "पूर्वापर" २।२।१ इत्यादिनैकदेशिसमासः। "राजाहः--सखिभ्यष्टच्()" (५।४।९१) इति टच्? समासान्तः, "अह्नोऽहन एतेभ्यः" ५।४।८८ इत्यह्नादेशः। "अह्नोऽदन्तात्()" ८।४।७ इति णत्वम्()। अ()स्मश्च पूर्वाह्णे अ()स्मश्च पूर्वाह्णे, अस्मिस्त्वनयोरतिशयेन पूर्वाह्णे पूर्वाह्णेतर इति। "द्विवचन" ५।३।५७ इत्यादिना तरप्()। "पूर्वाङ्णेतमाम्()" इति। "अतिशायने" ५।३।५५ इत्यादिना तमप्(), "कृत्तद्धितसमासाश्च" (१।२।४६) इति प्रादिपदिकत्वे सति सुब्लुक्? प्राप्तः पक्षे प्रतिषिध्यते। "पूर्वाह्णेतने" इति। "पूर्वाह्णेतरे" इत्यत्रार्थे "विभाषा पूर्वाह्णापराह्णाभ्याम्()" ४।३।२४ इति ट()उट()उलौ तुडागमश्च, "युवोरनाकौ ७।१।१ इत्यटनादेशः। "रात्रितरायाम्()" इति। अस्याञ्च रात्रावस्याञ्च रात्रावनयोरतिशयेन रात्राविति विग्रहः। ननु च "प्रत्ययग्रहणे यस्मात्? स विहितस्तदादेस्तदन्तस्य" (पु।प।वृ।४४) इति तदन्तग्रहणं भवतीति घसंज्ञकप्रत्ययान्ते तनप्रत्ययान्ते चोत्तरपदे परतोऽलुगुदाहत्र्तवयः, तत्? कस्मात्? प्रत्ययमात्रे स उदाह्यतः? इत्याह--"उत्तरपदाधिकारे" इत्यादि। कुतः पुनरेतदित्याह--"लेखग्रहणात्()" इत्यादि। "ह्मदयस्य ह्मल्लेखयदण्लासेषु" ६।४।५० इत्यत्राणो लेखशब्दस्य चाणन्तस्य भेदनोपादनम्()। तत्र यद्युत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तरविधिरिष्यते तदा लेखग्रहणं न कुर्यात्(); अण्ग्रहणेनैव तद्ग्रहणस्य सिद्धत्वात्(), क्रियते च। तस्माल्लेखग्रहणाद्वि ज्ञायते--"उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते" (पु।प।२६) इति। "तेने" इति। तदन्तविधेरिहानिष्टत्वेन। "काल इति न स्वरूपग्रहम्()" इति। नामग्रहणात्()। तस्य ह्णेतदेव प्रयोजनम्()॥

बाल-मनोरमा

घकालतनेषु कालनाम्नः ९६०, ६।३।१६

घकालतनेषु। शेषपूरणेन सूत्रं व्याचष्टे--सप्तम्या इति। घेति घे परे उदाहरणसूचनमिदम्। "तरप्तमपौ घः"। पूर्वाह्णेतरे इति। अतिशायने सप्तम्यन्तात्तरप्तमपौ। अत एव तत्तद्विभक्त्यन्तात्तरप्तमपाविति विज्ञायते। कालेति। उदाहरणसूचनमिदम्। पूर्वाह्णेकाले इति। अत एव विशेषणादिसमासोऽपि तत्तद्विभक्त्यन्तानामेव। तनेति। उदाहरणसूचनमिदम्। पूर्वाह्णेतने इति। "विभाषा पूर्वाह्णापराह्णाभ्या"मिति ठ्युठ्युलौ, तुट् च।

---

सूत्रम्

काशिका-वृत्तिः

शयवासवासिष्वकलात् ६।३।१८

शय वास वासिनित्येतेषु उत्तरपदेष्वकालवाचिनः उत्तरस्याः सप्तम्या विभाषा अलुक् भवति। खेशयः, खशयः। ग्रामेवासः, ग्रामवासः। ग्रामेवासी, ग्रामवासी। अकालातिति किम्? पूर्वह्णशयः। हलदन्तातित्येव, भूमिशयः। अपो योनियन्मतुसु सप्तम्या अलुग् वक्तव्यः। अप्सुयोनिः। अप्सव्यः। अप्सुमन्तौ। अप्सु भवः इति दिगादित्वाद् यत् प्रत्ययः। सर्वत्र सप्तमी ती योगविभागात् समासः।

न्यासः

शयवासवासिष्वकालात्?। , ६।३।१७

"खेशयः" इति। "अधिकरणे शेतेः" ३।२।१५ इत्यच्()। "ग्रामेवासः" इति। वसनं वासः, भावे घञ्()। "ग्रामेवासी" इति। ताच्छीलिको णिनिः, व्रते वा। "पूर्वाह्णशयः" इति। ननु च स्वरूपग्रहणे सति कालशय इति प्रत्युदाहार्यम्(), नैवेदं स्वरूपग्रहणम्()। किं तर्हि? अर्थग्रहणम्()। अत एव वृत्तावुक्तम्()--"अकालवाचिनः" इति। कथं पुनरर्थग्रहणं लभ्यते? पूर्वसूत्रादिह नामग्रहणानुवृत्तेः। यद्येवम्(), तदा नार्थः कालग्रहणेन "कालनाम्नः" ६।३।१६ इत्येतदनुवर्तिष्यते, तस्य च नञा सह सम्बन्धं करिष्यामः--कालनाम्नो नेति, तत्रायमर्थः--"नेन्सिद्धबध्नातिषु च" (६।३।१९) ["नेन्सिद्ध" इति प्राचीनमुद्रितपाठः] इत्यत्र नेति वक्तव्यं न भवति, नेत्येतदेव ह्यनुवर्त्तिष्यते? नैवं शक्यम्(); "न शयवासवासिषि" इत्युच्यमाने ह्यलुक एवायं प्रतिषेधो विज्ञायेत, तस्यात्र विधेयतया प्रस्तुतत्वात्()। तस्मात्? कालस्यैव प्रतिषेधो यथा स्यादित्येवमर्थं कालग्रहणं कत्र्तव्यम्()। वक्तव्यमिति व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्वमेव कृतम्()॥

बाल-मनोरमा

शयवासवासिष्वकालात् ९६१, ६।३।१७

शयवास। शय, वास, वासिन्-एतेषु परेषु कालभिन्नात्सप्तम्या अलुक् स्यादित्यर्थः।

अपो योनि। योनिशब्दे यत्प्रत्यये मतुपि च परेऽप्शब्दात्सप्तम्या अलुक् स्यादित्यर्थः। अप्सव्य इति। दिगादित्वाद्यत्। "ओर्गुणः" "वान्तो यी"त्यवादेशः। अप्सुमन्ताविति। "अप्सु" इति पदं यदीयमन्त्रयोरस्ति तावप्सुमन्तौ, आज्यभागाविति कर्मविशेषौ।

---

सूत्रम्

काशिका-वृत्तिः

नैन्सिद्धबध्नातिषु च ६।३।१९

इन्नन्ते उत्तरपदे सिद्धशब्दे बध्नातौ च परतः सप्तम्याः अलुग् न भवति। स्थण्डिलवर्ती। सिद्ध साङ्काश्यसिद्धः। काम्पिल्यसिद्धः। बध्नाति चक्रबद्धः। चारबद्धः। सप्तमी इति योगविभागात् समासः। चक्रबन्धः इति केचिदुदाहरन्ति, तत् पचाद्यजन्तम् द्रष्टव्यम्। घञन्ते हि बन्धे च विभाषा ६।३।१२ इत्युक्तम्।

न्यासः

नोन्त्सिद्धबध्नातिषु च। , ६।३।१८

"तत्पुरुषे कृति बहुलम्()" ६।३।१३ इति प्राप्तस्यालुकोऽयं प्रतिषेधः। "इन्नन्त उत्तरपदे" इति। ननु च "उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते" (पु।प।२६) इति ज्ञापितमेतत्(), तत्कथमिह तदन्तमुत्तरपदं गृह्लते? सप्तम्याः परस्येन्प्रत्ययस्यासम्भवात्()। द्विविध एव हीन्प्रत्ययः--कृत्? तद्धितश्च। तत्र कृद्धातोरेवोत्पद्यते इति न सप्तम्याः परस्येन्प्रत्ययस्यासम्भवात्()। द्विविध एव हीन्प्रत्ययः--कृत्? तद्धितश्च। तत्र कृद्धातोरेवोत्पद्यते इति न सप्तम्याः परः सम्भवति। तद्धितोऽपि नैव कश्चित्? सप्तमीसमर्थादुत्पद्यत इत्यसावपि नैव सप्तम्याः परः सम्भवति। तस्मादिन्नन्तमेव गृह्लत युक्तमुक्तमेतत्()। "स्थण्डिलवत्र्ती" इति। "व्रते" ३।२।८० इति णिनिः; "उपपदमतिङ्" २।२।१९ इति समासः। "साङ्काश्यसिद्धः" इति। "सिद्धशुष्क" २।१।४० इत्यादिना समासः। "चक्रबद्धः" इति। बद्धशब्दो निष्ठान्तः, "सप्तमी" (२।१।४०) इति योगविभागात्? समासः। बन्धशब्देन "चक्रबन्धः" इति। "सिद्ध" २।१।४० इत्यादिना समासः। "तत्? पचाद्यचप्रत्ययान्तं द्रष्टव्यम्()" इति। अथ बन्ध इत्येतच्छब्दरूपं घञन्तं कस्मान्न गृह्लते? इत्याह "घञन्ते हि" इत्यादि॥

बाल-मनोरमा

नेन्सिद्धबध्नातिषु च ९६२, ६।३।१८

नेन्सिद्धबन्धानादिषु च। चक्रबद्ध इति। "साधनं कृते"ति क्तान्तेन सप्तम्यन्तस्य समासः।

तत्त्व-बोधिनी

नेन्सिद्धबन्धातिषु च ८८१, ६।३।१८

नेन्सिद्धब। चक्रबन्ध इति। तत्पुरुषे इत्यनुवृत्तेस्तत्पुरुष एवायं निषेधः। बहुव्रीहौ तु बन्धे च विभाषा इति विकल्प एव।

वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु। पश्यतोहर इति। पश्यन्तमनादृत्य हरतीत्यर्थः। षष्ठी चाऽनादरे इति षष्ठी।

देवानांप्रिय इति च मूर्खे। देवानामिति। मूर्खा हि देवानां प्रीतिं जनयन्ति देवपशुत्वादिति मनोरमा। अयं भावः-- ब्राह्आज्ञानरहितत्वात्संसारिणो मूर्खाः। ते तु यागादिकर्माण्युनुतिष्ठन्तः पुरोडाशादिप्रदानद्वारा देवानाम्तयन्तं प्रीतिं जनयन्ति। बह्ज्ञानिनस्तु न तथा, तेषां यागाद्यनुष्ठानाऽबावात्। अतो गवादिस्थानापन्नत्वान्मूर्खा एव देवपशव इति।

शेपपुच्छलाङ्गूलेषु शुनः। सेपपुच्छेति। शुन इव शेपमस्य शुनःशेपः। यद्यपि शेपस्शब्दः सकारान्तः, गौर्लिङ्गं चिह्नशेपसोः इत्यमरप्रोगात्, तथापि शीङ्गो निपातनादौणादिके पप्रत्यये अकारान्तोऽप्यस्त्येव। तथा च मन्त्र यस्याकमुशन्तः प्रहराम शेपमिति। चिह्नशेफसोः इति पाटे तु शेफशब्दस्य सकारान्तत्वशङ्कैव नास्तीति बोध्यम्। शुनः पुच्छ इत्यादावपि बहुव्रीहिः। त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः। मातुः पितुभ्र्यामिति सूत्रे समासेऽङ्गुलेः सङ्गः इत्यतः समास इत्यनुवर्तितम्, तत्फलं दर्शयति-- असमासे त्विति। वाक्ये वैकल्पिकमपि षत्वं नेत्यर्थः।

इत्यलुक्समासः तत्त्वबोधिन्याम्।

---

सूत्रम्

काशिका-वृत्तिः

स्थे च भाषायाम् ६।३।२०

स्थे च उत्तरपदे भाषायाम् सप्तम्या अलुक् न भवति। समस्थः। विषमस्थः। कूटस्थः। पर्वतस्थः। भाषायाम् इति किम्? कृणोम्यारेष्ठः। पूर्वपदात् ८।३।१०८ इति षत्वम्।

न्यासः

स्थे च भाषायाम्?। , ६।३।१९

अयमपि "तत्पुरुषे" ६।३।१३ इत्यादिना प्राप्तस्यालुकः प्रतिषेधः। "समस्थः" इति। समे तिष्ठतीति कः "आतो लोप इटि च" ६।४।६४ इत्यकारलोपः। "कृष्णोऽस्याखरेष्ठः" ["कृष्णोऽस्याखरेष्ठा" इति मुद्रितः पाठः "कृष्णोऽस्याखरेष्ठः" काशिका मुद्रितः पाठः--वाराणसी। "कृष्णोभ्यारेष्ठः"--काशिका--सं।प।पाठः] इति। "स्थः कः च" ३।२।७७ इति क्विप्प्रत्ययः॥

बाल-मनोरमा

स्थे च भाषायाम् ९६३, ६।३।१९

स्थे च भाषायाम्। "अनन्तरस्ये"ति न्यायात् "तत्पुरुषे कृती"त्यस्यैवायं निषेधः। अत एव "अनेकमन्यपदार्थे" इति

सूत्रभाष्ये "सप्तम्युपमानपूर्वपदस्ये"ति वार्तिकव्याख्यावसरे कण्ठेस्थः कालो यस्येति विग्रहे कण्ठेस्थशब्दस्य समासत्वमभ्युपगम्य उत्तरपदलोप उपन्यस्तः सङ्गच्छते। यदा तु "अमूर्धमस्तका"दित्यस्याप्ययं निषेधः स्यात्तर्हि तदसङ्गतिः स्यात्, लुक्प्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

षष्ठ्या आक्रोशे ६।३।२१

आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग् भवति। चौरस्यकुलम्। वृषलस्यकुलम्। आक्रोशे इति किम्? ब्राह्मनकुलम्। षष्थीप्रकरने वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासङ्ख्यम् अलुग् वक्तव्यः। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः। आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च अलुग् वक्तव्यः। अमुस्यापत्यम् आमुस्यायणः। नडादित्वात् फक्। अमुष्य पुत्रस्य भावः आमुस्यपुत्रिका। मनोज्ञादित्वद् वुञ्। तथा आमुस्यकुलिका इति। देवानाम्प्रिय इत्यत्र च षष्ठ्या अलुग् वक्तव्यः। देवानम् प्रियः। शेपपुच्छलङ्कूलेषु शुनः संज्ञायां अलुग् वक्तव्यः। शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः। दिवश्च दासे षष्ठ्या अलुग् वक्तव्यः। दिवोदासाय गायति।

न्यासः

षष्ठ�आ आक्रोशे। , ६।३।२०

"चौरस्यकुलम्()" इति। आक्रोशप्रतिपादनपरमेतत्(), न त्वनेन तस्य सम्बन्धो विवक्षितः। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। व्याख्यानं तु पूर्वमेव कृतम्()। "पश्यतोहरः" इति। पश्यत इति "षष्ठी चानादरे" २।३।३८ इति षष्ठी। हरतीति हरः पचाद्यच्()। "अमुष्य" इति। अदसस्त्यदाद्यत्वम्(), "अदसोऽसेर्दादु दो मः" ८।२।८० इत्युत्वमत्वे, उत्वस्यासिद्धवात्()" टाङसिङसामिनात्स्याः" ७।१।१२ इति ङसः स्यादेशः। तथा "अमुष्यकुलिकेति" (इति)। यथा अमुष्यपुत्रिकेत्यत्र भनोज्ञादित्वात्? ५।१।१३२ वुञ्(), तथात्रापीत्यर्थः। "देवानाम्प्रियः" इति। प्रीणातीति प्रियः, "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५ इति कप्रत्ययः इयङादेशः। "शुनःशेपः" इति। "()आयुवमघोनामतद्धिते" ६।४।१३३ इति सम्प्रसारणम्()॥

बाल-मनोरमा

षष्ठ�आ आक्रोशे ९६४, ६।३।२०

षष्ठ()आ आक्रोशे। "अलुगुत्तरपदे" इति शेषः। आक्रोशो-निन्दा।

वाग्दिक्। वाक्, दिक् , पश्यत्-एतेभ्यः परस्याः षष्ठ()आ अलुक् स्यात्-युक्ति, दण्ड, हर एतेषु क्रमादुत्तरपदेषु परेष्वित्यर्थः। वाचोयुक्तिरिति। शब्दप्रयोग इत्यर्थः। दिशोदण्ड इति। अधिकरणस्य शेषत्वविवक्षायां षष्ठी। पश्यतोहर इति। पस्यन्तमनादृत्य हरतीत्यर्थः। "षष्ठी चानादरे" इति षष्ठी।

आमुष्यायणेति। वार्तिकमिदम्। एते निपात्यन्ते। अमुष्येति। अमुष्याषत्यमित्यर्थे "नडादिभ्यः फगि"ति फकि आयन्नादेशे आदिवृद्धौ तद्धितान्तत्वात्प्रातिपदिकतया तदवयवत्वात्प्राप्तस्य सुब्लुको निषेधे नस्य णत्वे "आमुष्यायण" इति रूपमित्यर्थः। अमुष्य पुत्र इति विग्रहे षष्ठीसमासे षष्ठ()आ अलुकि "अमुष्यपुत्र" शब्दः। अमुष्यपुत्रस्य भाव इत्यर्थे "द्वन्द्वमनोज्ञादिभ्यश्चे"ति वुञि अकादेशे पुत्रशब्दात्सुपो लुकि आदिवृद्धौ स्त्रीत्वाट्टापि "प्रत्ययस्था"दितीत्वे आमुष्यपुत्रिकाशब्द इत्यर्थः। एवमिति। अमुष्य कुलमिति षष्ठीसमासे षष्ठ()आ अलुकि अमुष्यकुलशब्दाद्बुञादिः पूर्ववदित्यर्थः।

देवानामिति। वार्तिकमिदम्।मूर्खः-अज्ञः। "दिवु क्रीडायाम्"। देवाः-क्रीडासक्ता मूर्खाः, तेषां प्रियोष()प्रि मूर्ख एव, मूर्खप्रियस्यावश्यं मूर्खत्वादिति "अजेर्वी"त्यत्र कैयटः।

शेपपुच्छेति। वार्तिकमिदम्। षष्ठ()आ अलु"गिति सेषः। संज्ञायामिति। "भाष्यम् ष शुनश्शेप इति। शुनः शेप इव शेपो यस्येति विग्रहः। "मेढ्रो मेहनशेपसी"। शेफशब्दोऽप्यस्ति, "शेपाय स्वाहा" इति दर्शनात्। शुनःपुच्छ इति। शुनः पुच्छमिव पुच्छं यस्येति विग्रहः। एवं शुनोलाङ्गूल इत्यपि। ऋषिविशेषणां संज्ञा एताः।

दिवश्च दासे इति। वार्तिकम्। "षष्ठ()आ अलु"गिति शेषः। दिवोदास इति कश्चिद्राजर्षिरयम्।

---

सूत्रम्

काशिका-वृत्तिः

पुत्रे ऽन्यतरस्याम् ६।३।२२

पुत्रशब्दे उत्तरपदे आक्रोशे गम्यमाने ऽन्यतरस्यां षष्ठ्याः अलुग् भवति। दास्यःपुत्रः, दासीपुत्रः। वृषल्याःपुत्रः वृषलीपुत्रः। आक्रोशे इत्येव, ब्राह्मणीपुत्रः।

न्यासः

पुत्रेऽन्यतरस्याम्?। , ६।३।२१

बाल-मनोरमा

पुत्रेऽन्यतरस्याम् ९६५, ६।३।२१

पुत्रेऽन्यतरस्यां। निन्दायामिति। "आक्रोशे" इत्यनुवृत्तिलभ्यमिदम्। स्पष्टं चेदम् "आनङ्तः" इत्यत्र भाष्ये।

---

सूत्रम्

काशिका-वृत्तिः

ऋतो विद्यायोनिसम्बन्धेभ्यः ६।३।२३

ऋकारान्तेभ्यो विद्यसम्बन्धवचिभ्यो योनिसम्बन्धवाचिभ्यश्च उत्तरस्याः षष्ठ्या अलुग् भवति। होतुरन्तेवसी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः। ऋतः इति किम्? आचर्यपुत्रः। मातुलपुत्रः। विद्यायोनिसम्बन्धेभ्यस् तत्पूर्वोत्तरपदग्रहणम्। विद्यायोनिसम्बन्धवाचिनि एव उत्तरपदे यथा स्यात्, अन्यत्र मा भूत्। होतृधनम्। पितृधनम् होतृगृहम्। पितृगृहम्।

न्यासः

ऋतो विद्यायोनिसम्बन्धेभ्यः। , ६।३।२२

विद्या च योनिश्चेति विद्यायोनी, तत्कृतः सम्बन्दो येषां ते विद्यायोनिसम्बन्धाः। कृतशब्दस्य वृत्तावप्रयोगः; गम्यमानार्थत्वात्(), यथा--गुडधाना इत्यत्र मिश्रशब्दस्य। "ऋतो विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणं कर्तव्यम्()" इति। तदित्यनेन विद्यायोनिसम्बन्धा उभयेऽपि निर्दिश्यन्ते, तेषां पूर्वपदबूतानामुत्तरपदभूतानां च ग्रहणं कत्र्तव्यम्()। गृह्रते येन तत्? ग्रहणम्(), येन ते गृह्रन्ते तादृशं व्याख्यानं कत्र्तव्यमित्यर्थः। किं पुनस्तद्व्याख्यानम्? किमर्थं तत्कत्र्तव्यम्()? इत्याह--"विद्यायोनिवाचिन्येव" इत्यादि। तत्रेदं व्याख्यानम्()--इहोङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेनाचार्याणामभिप्राया लक्ष्यन्ते, "ऋतो विद्यायोनिसम्बन्धेभ्यः" इत्येष महान्? सूत्रप्रबन्धः, यदि

ह्विद्यायोनिसम्बन्धवाचिन्युत्तरपदेऽलुगभीष्टः स्यात्(), एवं सत्यविद्यायोनिसम्बन्धादित्येवं ब्राऊयात्()। अथ वा--सम्बन्धग्रहणमपि न कुर्यात्(), न हि किञ्चिदृकारान्तं विद्यावाचि योनिवाचि वाऽसम्बन्धमस्ति, तत्रान्तरेणापि सम्बन्धग्रहणं विद्यायोनिसम्बन्धवाचिन इति विज्ञास्यते, तत्? किं सम्बन्धग्रहणेन! तदेतस्मान्महतः सूत्रप्रबन्धाद्विद्यायोनिसम्बन्धवाचिन्युत्तरपद आचार्यस्यायमलुगभीष्ट इति लक्ष्यत इति। "होतुः" इति। "ऋत उत्()" ६।१।१०७ इत्युत्त्वम्(), रपरत्वम्(), "रात्सस्य" ८।२।२४ इति सकारलोपः॥

बाल-मनोरमा

ऋतो विद्यायोनिसंबन्धेभ्यः ९६६, ६।३।२२

ऋतो विद्यमा। एकत्वे बहुवचनम्।

तदाह-विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तादिति। अलुक् स्यादिति। "उत्तरपदे परत"इति शेषः।विद्यासंबन्धवाचिनमुदाहरति--होतुरन्तेवासीति। ऋग्वेदविहितकर्मविशेषकर्ता होता। अतो होतृशब्दो विद्यासंबन्धप्रवृत्तिनिमित्तक इति भावः। होतुः पुत्र इति। विद्यासंबन्धवाचिन उदाहरणान्तरमिदम्। अथ योनिसंबन्धवाचिनमुदाहरति--पितुरन्तेवासीति। पितुःपुत्र इति च। ननु "होतृधनं" पितृधन"मित्यत्राऽप्यलुक् स्यादित्यत आह--विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणमिति। "विद्यायोनिसंबन्धेभ्यः" इत्यत्र विद्यासंबन्धयोनिसंबन्धवाचिनोः पूर्वोत्तरपदयोग्ररहणमित्यर्थः। पूर्वोत्तरपदयोरुभयोरपि विद्यासम्बन्धयोनिसंबन्ध्यान्यतरवाचित्वं विवक्षितमिति भावः। "होतृधनं""पितृधन"मित्यत्र उत्तरपदस्य विद्यासंबन्धयोनिसंबन्धान्यतरवाचित्वाऽभावान्न षष्ठ()आ अलुगिति भावः। अन्यतरसंबन्धवाचित्वस्य विवक्षितत्वादेव "होतुःपुत्र" इत्यादि सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा स्वसृपत्योः ६।३।२४

स्वसृ पति इत्येतयोः उत्तरपदयोः ऋकारान्तेभ्यः विद्यायोनिसम्बन्धवाचिभ्यः विभाषा ऽलुग् भवति। मातुःष्वसा, मातुःस्वसा, मातृष्वसा। पितुःष्वसा, पितुःस्वसा, पितृष्वसा। यदा लुक् तदा मातृपितृभ्यां स्वसा ८।३।८४ इति नित्यं षत्वम्। यदा तु अलुक् तदा मातुः पितुर्भ्यम् अन्यतरस्याम् ८।३।८५ इति विकल्पेन षत्वम्। दुहितुःपतिः, दुहितृपतिः। ननान्दुःपितिः, ननान्दृपतिः।

न्यासः

विभाषा स्वसृपत्योः। , ६।३।२३

बाल-मनोरमा

विभाषा स्वसृपत्योः ९६७, ६।३।२३

विभाषा स्वसृपत्योः। ऋदन्तादिति। "विद्यासंबन्धयोनिसंबन्धान्यतरवाचिन" इति शेषः। ततश्च "भोक्तृस्वसे"त्यत्र नातिव्याप्तिः।

---

सूत्रम्

काशिका-वृत्तिः

अनङ्तो द्वन्द्वे ६।३।२५

ऋकारान्तानां विद्यायोनिसम्भन्धवाचिनां यो द्वन्द्वस् तत्र उत्तरपदे पूर्वपदस्य आनङादेशो भवति। होतापोतारौ। नेष्टोद्गातारौ। प्रशास्ताप्रतिहर्तारौ। योनिसम्बन्धेभ्यः मातापितरौ। यातानननान्दरौ। मकारोच्चारणं रपरत्वनिवृत्त्यर्थम्। ऋतः इति किम्? पितृपितामहौ। पुत्रे इत्यत्र अनुवर्तते, ऋतः इति च। तेन पुत्रशब्दे ऽप्युत्तरपदे ऋकारान्तस्य अनङादेशो भवति। पितापुत्रौ। मातापुत्रौ।

न्यासः

आनङ् ऋतो द्वन्द्वे। , ६।३।२४

"ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्वः" इत्यादि। अथ ऋकारान्तसय द्वन्द्व आनङ् भवतीत्येवं कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्(); इहापि प्रसज्येत--पितृपितामहाविति। ङकारोऽन्त्यादेशार्थः। इह हि वर्णानामुपदेशः--कार्यार्थः, श्रवणार्थो वेति, नकारश्चायं न क्वचित्? श्रूयते, सर्वत्रैव ह्रस्य "नलोपः प्रातपदिकान्तस्य" ८।२।७ इति लोपेन भवितव्यम्(), नापि किञ्चित्? कार्यमस्योपलभ्यते, तत्? किमर्थं नकारस्योच्चारणम्()? इत्याह--"नकारोच्चारणम्()" इत्यादि। असति नकार ऋकारस्या स्थानेऽणेव शिष्यते, ततश्च "उरण्? रपरः" १।१।५० इति रपरत्वं स्यात्()। नकारे तु सति नायमणेव शिष्यते, अपि तवण्? चानङ् चेति न भवति रपत्वप्रसङ्गः। न हि यत्राण्? अनण्? चेति शिष्यते तत्र रपरत्वं भवति। यथा "सुधातुरकङ्? च" ४।१।९७ इति सौधातकिरित्यत्र। तस्मादत्र रपरत्वनिवृत्त्यर्थ नकारोच्चारणम्()। अथ पितापुत्रौ, मातापुत्रौ इत्यतर कथमानङादेशः, न ह्त्र ऋकारान्तानां द्वन्द्वः? इत्याह--"पुत्र इत्यत्रानुवत्र्तते" इति। "पुतरेऽन्यतरस्याम्()" ६।३।२१ इत्यतः पुत्र इत्येतदत्रानुवत्र्तत इत्यभिप्रायः। यदि तु पुत्र इत्यनुवर्तते, तदा "विभाषा स्वसृपत्योः" (६।३।२४) इत्यत्र पुत्रेऽपि विभाषा प्राप्नोति? नैष दोषः; मण्डूकप्लुतिन्यायेन तदनुवत्र्तते। अत एवात्रेत्युक्तं तत्रैवानुवत्र्तते, न पर्वत्रेति प्रतिपादनार्थम्()। नन्वेवमपि पुत्रशब्द उत्तरपदे पूर्पदमात्रस्यानङ् प्राप्नति; कार्यिणेहानिर्देशादुत्तरपदशब्देन च पूर्वपदमात्रस्याक्षिप्तत्वात्(), न च शक्यते वक्तुम्()--ऋत इति वचनादृकारस्य भविष्यतीति, तस्मादेकमिह ऋत इति वचनं द्वन्द्वस्य विशेषणम्(), न कार्यिणः? इत्याह--"ऋत इति च" इति। अत्रानुवत्र्तत इति सम्बन्धः। "ऋतो विद्यायोनिसम्बन्धेभ्यः" ६।३।२२ इत्यत ऋत इत्यनुवत्र्तते, तत्? कार्यिणो विशेषणं भविष्यति। ननु तत्? पञ्चमीनिर्दिष्टम्(), षष्ठीनिर्दिष्टेन चेहार्थः? नैषदोषः; पुत्र इत्येषा सप्तमी ऋत इत्यस्याः पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति--"तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति। नन्वेवमपि विरोधः, तथा हि--यदि पुत्रशब्द उत्तरपदम्(), कथं तदा ऋकारान्तानां द्वन्द्वः, ऋकारान्तानां द्वन्द्वो न तर्हि पुत्रशब्द उत्तरपदमिति? नैतदस्ति; अन्य एव हि स द्वन्द्वो यस्य ऋत इत्येतद्विशेषणम्()। अन्यशाच स यस्य पुत्रशब्द उत्तरपदमिति कोऽत्र विरोधः॥

बाल-मनोरमा

आनङृतो द्वन्द्वे ९११, ६।३।२४

आनङृतो द्वन्द्वे। विद्यायोनिसंबन्धवाचिनामिति। विद्यासंबन्धवाचिनां, योनसंबन्धवाचिनां चेत्यर्थः। "ऋतो विद्यायोनिसम्बन्धेभ्यः" इत्यतस्तदनुवृत्तेरिति भावः। ऋदन्तानामिति। बहुत्वे व्यत्ययेन "ऋतः" इत्येकवचनम्। ऋदन्तसर्वावयवकानामित्यर्थः। "ऋत" इत्यनुवर्तमाने पुनरृत इत्युक्तिरेतदर्थेति भावः। उत्तरपदे परे इति। "ऋत" इत्यनुवर्तमाने पुनरृत इत्युक्तिरेतदर्थेति भावः। उत्तरपदे परे इति। "अलुगुत्तरपदे" इत्यधिकारादिति भावः। होतापोताराविति। होता च पोता चेति विग्रहः। विद्याद्वारकैकयज्ञ()त्वक्त्वकृतः सम्बन्धः। आनङि ङकार इत्, अकार उच्चारणार्थः, ङिच्चे"त्यन्तादेशः, नलोपः, नकारस्तु रपरत्वनिवृत्त्यर्थ इति भाष्ये स्पष्टम्। होतृपोत्रिति। अत्र होतृशब्दस्य पोतृशब्दस्य च नाऽऽनङ्, नेष्टृशब्देन व्यवधानादुत्तरपदपरकत्वाऽभावात्। तथाच नेष्टृशब्दस्यैवाऽऽनङ्। उत्तरपदेन तु न

पूर्वपदमाक्षिप्यते, समर्थसूत्रे नेष्टशब्दस्याऽऽनङदर्शनात्। अथ योनिसबन्धमुदाहरति--मातापितराविति। पितृपितामहावित्यादौ तु नाऽऽनङ्, ऋदन्तसर्वावयवकत्वाऽभावादिति भावः। तर्हि पितापुत्राविति कथमित्यत आह--पुत्रेऽन्यतरस्यामिति। "ऋतो विद्यायोनिसंबन्धेभ्यः" इत्यत्र "विभाषा स्वसृपत्योः" इत्यत्र च मध्येऽसम्बन्धादाह--मण्डूकेति। अनुवृत्तेरिति। नच तातपुत्रावित्यत्रापि स्यादिति वाच्यम्, ऋदन्तस्य पुत्रे परे आनङ् स्यादिति वाक्यभेदेन व्याख्यानात्।

तत्त्व-बोधिनी

आनङृतो द्वन्द्वे ७८७, ६।३।२४

आनङ्। "ऋत"इति षष्ठ()न्तं जातावेकवचनम्। "ऋतो विद्यायोनिसंबन्धेभ्यः" इति त्वनुवर्तते, तच्चात्र षष्ठ()आ विपरिणम्यते, तदाह--विद्यायोनिसंबन्धवाचिनामिति। ननु "ऋतः"इत्यनुवर्तनादेव सिद्धे किमनेन ऋतो ग्रहणेन()। अत्राहुः--"ऋतः"इति श्रूयमाणद्वन्द्वविशेषणम्। अनुवृत्तं तूत्तरपदे परतो यत्पूर्वं तस्य विशेषणं, पुत्रशब्दे पर आनङ् विधास्यते तत्र कार्यिनिर्देशार्थम्। अन्यथा तातपुत्रावित्यत्रापि स्यादिति। उत्तरपदे इति। एतच्च "अलुगुत्तरपदे"इत्यधिकारल्लभ्यते। उत्तरपदे परतः पूर्वं यद्दन्तं तस्याऽऽनङित्यर्थः। होतापोतारावेति। आनङो ङित्वात्पूर्वान्त्यस्य ऋकारस्याऽऽदेशे सति नलोपः। न चाऽऽकारमात्रमेव विधीयतामिति वाच्यम्, "उरण्रपरः"इति रपरप्रसङ्गात्, नन्विहोत्तरपदेन पूर्वपदं नाक्षिप्यते, अन्यथा "होतृपोतृनेष्टोद्गातार"इत्यत्र मध्यमस्याऽऽनङ् न स्यात्। ततश्च विशेष्याऽसन्निधानद्दत एव स्थाने आदेशेन भवितव्यं, न तु ऋदन्तपदस्य स्थाने इति किमनेनानङो ङित्करणेन()। सत्यम्। ङित्करणाऽभावे मित्रावरुणावित्यादौ "देवताद्वन्द्वे चे"त्युत्तरपदे परे विधीयमानोऽयमादेशः पूर्वस्याक्षरस्य पदस्य वा स्यात्, पूर्वस्याऽल एवेत्यत्र नियामकाऽभावत्। एतेन" ऋत इति कार्यिनिर्देशार्थ"मित्युक्तत्वान्निर्दिश्यमानस्य ऋकारस्यैवादेशः स्यादिति ङित्करणं व्यर्थमित्याशङ्कापि परास्त। नेष्टोद्गतार इति। न ह्त्र नेष्टा पूर्पदम्, आद्यवयवस्यैव पूर्वपदत्वात्। मातापितराविति। पुत्रोत्पादने अनयोर्योनिकृतः संबन्धः, पूर्वत्र तु हौत्रादिरूपविद्याकृतः सम्बन्ध एकस्मिन्यज्ञे आत्विज्यरूप इति विवेकः। मण्हूकप्लुत्येति। तेन "विभाषा स्वसृपत्यो"रित्यत्र न संबध्यत इति भावः। पितापुत्राविति। अनयोरपि योनिकृतः सम्बन्धास जन्यजनकभावलक्षणः।

---

सूत्रम्

काशिका-वृत्तिः

देवताद्वन्द्वे च ६।३।२६

देवतावाचिनां यो द्वन्द्वः तत्र उत्तरपदे पूर्वपदस्य आनङादेशो भवति। इन्द्रावरुणौ। इन्द्रासोमौ। इन्द्राबृहस्पती। द्वन्द्वे इति वर्तमाने पुनर् द्वन्द्वग्रहणं प्रसिद्धसहाचर्यार्थम्। अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वम् इत्येतत् निपात्यते। तत्र ये लोके प्रसिद्धसाहचर्या वेदे च ये सहवापनिर्दिष्टास् तेषाम् इह ग्रहणं भवति। तेन ब्रहमप्रजापती, शिववैश्रवणौ इत्येवम् आदौ न भवति। उभ्यत्र वायोः प्रतिषेधो वक्तव्यः। अग्निवायू। वाय्वग्नी।

न्यासः

देवताद्वन्द्वे च। , ६।३।२५

अनुकारार्थमविद्यायोनिसम्बन्धार्थं च वचनम्()। ननु च "आनङृतो द्वन्द्वे" ६।३।२४ इत्यतो द्वन्द्वगरहणमनुवत्र्तत एव, तत्? किमर्थमिह पुनद्र्वन्द्वग्रहणम्()? इत्याह--"द्वन्द्व इत्यनुवत्र्तमाने" इत्यादि। पूर्वकं हि द्वन्द्वग्रहणं समासविशेषप्रतिपत्त्यर्थम्(), इदं तु प्रसिद्धसाहचर्यार्थम्()--येषां लोके वेदे च प्रसिद्धं साहचर्यमेषां पुनः--परिग्रहो यता

स्यादित्येवमर्थम्()। अथ क्रियमाणेऽपि पुनद्र्वन्द्वग्रहणे कथमयमर्थो लभ्यते? इत्याह--"अत्यन्तसहचरिते" इत्यादि। "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमण" ८।१।१५ इत्यत्रेदमुच्यते। "अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्येतन्निपात्यते" इति। तेनायमर्थो लभ्यत इति दर्शयति। "वेदे च ये सहवापनिर्दिष्टाः" इति। सहवापः=सहदानम्(), तत्र निर्दिष्टाः सहवापनिर्दिष्टाः के पुनरेकहविसम्बन्धिनः? य एकं हूयमानं हविः प्रति सम्प्रदानत्वेन निर्दिष्टा एकत्र मन्त्रे--इन्द्रावरुणाभ्यां छागं हविर्निर्वपामीत्यादौ, ते वेदितव्याः। "उभयत्रि" इत्यादि। पूर्वपदत्व उत्तरपदत्वे च सति वायोरानङादेशस्य प्रतिषेधो वक्तव्यो व्याख्येयः। तत्रेदं व्याख्यानम्()--"विभाषा स्वसृपत्योः" ६।३।२३ इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेन वायोरुत्तरपदत्वे पूर्वपदत्वे च सति न भविष्यतीति॥

बाल-मनोरमा

देवताद्वन्द्वे च ९१२, ६।३।२५

देवताद्वन्द्वे च। मित्रावरुणाविति। इह ऋदन्तत्वाऽभावात्पूर्वेणाऽप्राप्ते विधिरयम्।

वायुशब्देति। वायुशब्दस्य पूर्वपदत्वेनोत्तरपदत्वेन वा प्रयोगे सत्यानङः प्रतिषेधो वक्तव्य इत्यर्थः। ननु पूर्वसूत्राद्द्वन्द्वग्रहणेऽनुवर्तमाने पुनद्र्वन्द्वग्रहणं व्यर्थमित्यत आह-पुनरिति। निर्वापादौ प्रसिद्धसाहित्यकदेवतावाचकशब्दग्रहणार्थः। तेनेति। प्रसिद्धसाहचर्यग्रहणेनेत्यर्थः। एतदिति। एतत्=ब्राह्मप्रजापतियुगलं हविर्भागित्वेन न वेदे प्रसिद्धमित्यर्थः। नापि लोके इति। प्रौढिवादमात्रमेवेदम्, "वेदे ये सहनिर्वापनिर्दिष्टाः" इत्येव भाष्ये दर्शनात्, लोकप्रसिद्धसाहचर्यग्रहणे पार्वतीपरमे()आराविवत्यादावतिप्रसङ्गाच्च।

तत्त्व-बोधिनी

देवताद्वन्द्वे च ७८८, ६।३।२५

देवता। अनृकारान्तार्थमविद्यायोनिसम्बन्धार्थं च वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

ईदग्नेः सोमवरुणयोः ६।३।२७

सोम वरुण इत्येतयोः देवताद्वन्द्वे अग्नेः ईकारादेशो भवति। अग्नीषोमौ। अग्नीवरुणौ। अग्नेः स्तुत्स्तोमसोमाः ८।३।८२ इति षत्वम्।

न्यासः

ईदग्नेः सोमवरुणयोः। , ६।३।२६

आनङादेशापवादोऽयमीकारो विधीयते। तकार उच्चारणार्थः॥

बाल-मनोरमा

ईदग्नेः सोमवरुणयोः ९१३, ६।३।२६

ईदग्नेः। इत्येवेति। "देवताद्वन्द्वे" इत्यनुवर्तत एवेत्यर्थः। सोमशब्दे वरुणशब्दे च उत्तरपदे परे अग्नेरीदादेशः स्याद्देवताद्वन्द्वे इत्यर्थः। आनङोऽपवादः।

तत्त्व-बोधिनी

ईदग्नेः सोमवरुणयोः ७८९, ६।३।२६

ईदग्नेः। आनङोऽपवादोऽयम्। देवताद्वन्द्व इत्येवेति। इदं च वृत्तिगन्थे स्थितम्। ज्यतिर्लतयोरदेवताद्वन्द्वेऽपि "अग्नीषोमौप्रणेष्यामि"इत्या()आलायनप्रयोगस्त्वार्षत्वात्साधुः। यद्वा मास्तु तदनुवृत्तिः, अद्रिसोमौ माणवकावित्यत्र "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः"इति न्यायेनाऽदोषत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

इद् वृद्धौ ६।३।२८

कृतवृद्धावुत्तरपदे देवताद्वन्द्वे अग्नेः इकारादेशो भवति। आग्निवारुणीमनड्वहीमालभेत। आग्निमारुतं कर्म क्रियते। अग्नीवरुणौ देवते अस्य, अग्नीअरुतौ देवते अस्य इति तद्धितः। तत्र देवताद्वन्द्वे च ७।३।२१ इत्युभयपदवृद्धौ कृतायाम् आनङ्, ईत्वं च बाधितुम् इकारः क्रियते। वृद्धौ इति किम्? आग्रेन्द्रः। नेन्द्रस्य परस्य ७।३।२४ इत्युत्तरपदवृद्धिः प्रतिषिध्यते। इद्वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः। आग्नावैष्णवं चरुं निर्वपेत्।

न्यासः

इद्रवृद्धौ। , ६।३।२७

"अग्नेः" ६।३।२६ इत्यनुवत्र्तते, "देवताद्वन्द्वे" ६।३।२५ इति च। "सोमवरुणयोः" ६।३।२६ इति निवृत्तम्()। वृद्धिशब्देन साहचर्यात्? कृतवृद्ध्युत्तरपदं गृह्रते। अत एवाह--"कृतवृद्धावुत्तरपदे" इति। "आग्निवारुणीम्()" इति। औत्सर्गिकेऽणि कृते "टिड्ढाणञ्()" ४।१।५ इति ङीप्()। अत्रापि तकार उच्चारणार्थः॥

बाल-मनोरमा

इद्वृद्धौ ९१५, ६।३।२७

आगेन्द्र इति। अग्निश्च इन्द्रश्च अग्नेन्द्रौ। "देवताद्वन्द्वे चे"त्यानङ्। आद्गुणः। अग्नेन्द्रौ देवते अस्येत्याग्नेन्द्रः। "साऽस्य देवते"त्यण्। आदिवृद्धिः। अत्रेन्द्रशब्दस्योत्तरपदस्य वृद्धिमत्त्वाऽभावात्। "इद्वृद्धौ" इति नेति भावः। "देवताद्वन्द्वे चे"त्युभयपदवृद्धिमाशङ्क्याह--नेन्द्रस्येति।

विष्णौ नेति। विष्णुशब्दे परे अग्नेरिकारो नेति वक्तव्यमित्यर्थः। आग्नावैष्णवमिति। अग्नि ष्च विष्णुश्च -अग्नाविष्णू। "देवताद्वन्द्वे चे"त्यानङ्। अगनाविष्णू देवते अस्येत्यर्थे "साऽस्य देवते"त्यण्। आग्नावैष्णवं हविः। "देवताद्वन्द्वे चे"त्युभयपदवृद्धिः। इत्त्वाऽभावादान व।

तत्त्व-बोधिनी

इद्वृद्धौ ७९१, ६।३।२७

इद्वृद्धौ। तकार उच्चारणार्थः। इकारस्येकारविधानं तु बाधकबाधनार्थम्। वृद्धिशब्देनाऽत्र वृद्धिमद्गृह्रते, वृद्धिमात्रस्योत्तरपदस्याऽसंभवात्। अतो व्याचष्टे---वृद्धिमत्युत्तरपद इति। आनङमीत्वं च बाधित्वेति। यद्यपि वृद्धेः प्रागेव आनङीत्वयोरन्तरङ्गत्वात्प्रवृत्तिरस्ति, तथापि "परिह्मत्यापवादविषयमत्सुर्गोऽभिनिविशते, इति न्यायादानङीत्वे न भवत इति भावः। आग्नावेष्णवमिति। इत्वाऽभावादानङेव भवति।

---

सूत्रम्

काशिका-वृत्तिः

देवो द्यावा ६।३।२९

दिवित्येतस्य द्यावा इत्ययम् आदेशो भवति देवताद्वन्द्वे उत्तरपदे। द्यावाक्षामा। द्यावाभूमी।

न्यासः

दिवो द्यावा।, ६।३।२८

"देवताद्वन्द्व उत्तरपदे" इति। देवताद्वन्द्वे यदुत्तरपदं तत्र परत इत्यर्थः॥

बाल-मनोरमा

दिवो द्यावा ९१६, ६।३।२८

दिवो द्यावा। शेषपूरणेन सूत्रं व्याचष्टे--देवताद्वन्द्वे इति। द्यावाभूमि इति। द्यौश्च भूमिश्चेति विग्रहः। द्यावाक्षामा रुक्मो अन्तर्विभाति" इति ऋचि पठितमिदम्। द्यावापृथिव्योरित्यर्थः। द्यौश्च क्षामा चेति विग्रहः। क्षामाशब्दो भुमिपर्यायो वेदे। तत्र द्वन्द्वे दिवो द्यावादेशः। षष्ठ()आस्तु "सुपां सुलुक्िति डादेशः, "देवताद्वन्द्वे चे"ति पूर्वोत्तरपदयोः प्रकृतिस्वर इति वेदभाष्ये स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

दिवसश् च पृथिव्याम् ६।३।३०

पृथिव्याम् उत्तरपदे देवताद्वन्द्वे दिवो दिवसित्ययम् आदेशो भवति, चकाराद् द्यावा च। दिवस्पृथिव्यौ। द्यावापृथिव्यौ। अकारोच्चारणम् सकारस्य विकाराभावप्रतिपत्त्यर्थम्। तेन रुत्वदीनि न भवन्ति। कथं द्यावा चिदस्मै पृथिवी नमेते इति? कर्तव्यो ऽत्र यत्नः।

न्यासः

दिवसश्च पृथिव्याम्?।, ६।३।२९

आनङोपवादः। अथाकारः किमर्थमुच्चार्यते, सकारस्येत्संज्ञापरित्राणार्थ इति चेत्()? न; प्रयोजनाभावादेवेत्संज्ञा न भविष्यतीत्याह--"अकारणोच्चारणम्()" इत्यादि। असति ह्रकारेऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां सत्यां सकारस्य "ससजुषो रुः" ८।२।६६ इति रुत्वं विकारः स्यात्(), तस्यापि "खरवसानयोर्विसर्जनीवः" ८।३।१५ तस्यापि "कुप्वोः क पौ च" ८।३।३७ इत्युपध्मानीयः स्यात्()। अकार स्योच्चारणे तु सति न भवति, कथम्()? अकारस्योच्चारणेन यद्विकृतस्य सकारस्योपादानं तस्यैतदेव प्रयोजम्()--अविकृतस्यास्य प्रयोगो यथा स्यादिति--द्यावा दिवसमित्यादिकम्()। वाक्मेतत्()। इह च सूत्रे द्वन्द्वग्रहणम्(), उत्तरपदग्रहणं चानुवत्र्तते। द्यावा इत्ययमादेशो वाक्ये न प्राप्नोतीत्याह--"कथम्()" इत्यादि। "कत्र्तव्योऽत्र यत्नः" इति। तत्रायं यत्नः--"तत्पुरुषे कृति बहुलम्()" ६।३।१३ इत्यतो बहुलग्रहणमनुवत्र्तते तेन द्यावा इत्ययमादेशश्छन्दसि वाक्येऽपि भविष्यतीति। अथ वा-चकारोत्र क्रियते, तस्यानुक्तसमुच्चयार्थत्वाद्भविष्यति। द्यावाशब्दस्तु स्वरितत्वादेवानुवर्त्तिष्यत इति नार्थस्तदनुकर्षणार्थेन चकारेण। अथ वा--दिक्शब्देन समानार्थो द्यावाशब्दः प्रकृत्यन्तरमस्ति, तस्यायं प्रयोगः। आदेशवचनं तु दिवः प्रयोगनिवृत्त्यर्थमिति॥

बाल-मनोरमा

दिवसश्च पृथिव्याम् , ६।३।२९

दिवसश्च पृथिव्यां। दिव इत्येवेति। दिव इत्यनुवर्तत एवेत्यर्थः, स्वरितत्वादिति भावः। तर्हि चकारो व्यर्थ इत्यत आह--चादिति। तथा च दिव्शब्दस्य दिवसादेशो, द्यावादेशश्च स्यात्पृथिवीशब्दे उत्तरपदे परे देवताद्वन्द्वे इत्यर्थः। "दिवस्पृथिव्याः" इत्यत्र सकारादकारस्याऽश्रवणाद्दिवसादेशस्य सकारान्तत्वावश्यंभावादादेश सकारादकारोच्चारणस्य किं प्रयोजनमित्यत आह--आदेशेऽकारोच्चारणमिति। सामर्थ्यात् "ससजुषो रु"रिति रुत्वं नेति भावः। ननु "द्यावा चिदस्मै पृथिवी सन्नमेते" इत्यत्र दिव्शब्दपृथिवीशब्दयोः कथं द्वन्द्वः?, कथं वा दिवो द्यावा देशः(), उत्तरपदस्य "चिदस्मै" इत्यनेन व्यवहितत्वादित्यत आह--छन्दसि दृष्टानुविधिरिति॥ भाष्यवाक्यमेतत्। वेदे दृष्टानुसरणमित्यर्थः। यतादृष्टं तथा प्रक्रिया कल्पनीयेति भावः। पदकारा इति। "दिवस्पृथिव्यो"रित्यवग्रहे विसर्गं पठन्तीत्यर्थः। "पदकारा" इत्यनेन पदपाठस्याधुनिकत्वं सूचितम्। तथाच विसर्गपाठः प्रामादिक इति सूचितम्, अकारोच्चारणेन रुत्वनिवृत्तेरुक्तत्वात्। उषासोषसः। उषासासूर्यमिति। उषाश्च सूर्यश्चेति समाहारद्वन्द्वः। मातरपितरावुदीचाम्। उदीचां मते मातरपितराविति भवतीत्यर्थः। अत्र मातृशब्दस्याऽरङादेशो निपात्यते। मातापितराविति। अरङभावे "आनङृतः" इत्यानङ्। द्वन्द्वाच्चुदष। समासान्ताधिकारस्थं तद्धिताधिकारस्थं चेदं सूत्रम्। टच्स्यादिति। "राजाहःसखिभ्यः" इत्यतस्तदनुवृत्तेरिति भावः। वाक्त्वचमिति। वाक्य त्वक्चेति समाहारद्वन्द्वः। कुत्वस्याऽसिद्धत्वाच्चवर्गान्तत्वाट्टच्।एवं त्वक्रुआजमित्यत्रापि। त्वक्च रुआक्चेति विग्रहः। शमीदृषदमिति। शमी च दृषच्चेति विग्रहः। दकारान्तत्वाट्टच्। वाक्त्विषमिति। वाक्च त्विट्। चेति विग्रहः। षान्तत्वाट्टच्, जश्त्वस्याऽसिद्धत्वादिति भावः। छत्रोपानहमिति। छत्रं च उपानच्चेति विग्रहः। हान्तत्वाट्टच्। प्रावृट्शरदाविति। प्रावृट् च शरच्चेति विग्रहः। इतरेतरयोगद्वन्द्वत्वान्न टजिति भावः।

*****इति बालमनोरमायांद्वन्द्वसमासः*****

अथ द्विरुक्तप्रक्रिया।

--------------

तत्त्व-बोधिनी

दिवसश्च पृथिव्याम् ७९२, ६।३।२९

रुत्वं मा भूदिति। अकारे सति सकारस्य श्रवणं भवति, तेन प्रयोगे विकाराऽभावोऽनुमीयत इति भावः।

छन्दसि दृष्टानुविधिः। विसर्गमिति। तथा च "क्वचिद्वकारो ने"त्येवानुमेयं, लक्ष्यामुरोधादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उषासाउषसः ६।३।३१

उषसः उषासा इत्ययम् आदेशो भवति देवताद्वन्द्वे उत्तरपदे। उषासासूर्यम्। उषासानक्ता।

न्यासः

उपासोषसः। , ६।३।३०

"आनङोऽपवादः" [नास्तीदं वाक्यं काशिकायाम्()] इति एवमुत्तरावपि योगौ। उषासानक्तम्()" इति। उषांश्च नक्तञ्चेति

विग्रहः॥

तत्त्व-बोधिनी

उषासोषसः ७९३, ६।३।३०

उषासासूर्यमिति। उषाश्च सूर्यश्च तयोः समाहारः। मातरपितरौ। मातृशब्दस्याऽरङादेशो निपात्यते।

---

सूत्रम्

काशिका-वृत्तिः

मातरपितरावुदीचम् ६।३।३२

मातरपितरौ इत्युदीचामाचार्याणां मतेनारङादेशः मातृशब्दस्य निपत्यते मातरपितरौ। उदीचाम् इति किम्? मातापितरौ।

न्यासः

मातरपितरावुदीचाम्?। , ६।३।३१

---

सूत्रम्

काशिका-वृत्तिः

पितरामातरा च च्छन्दसि ६।३।३३

पितरामातरा इति छन्दसि निपात्यते। आ मा गन्तां पितरामातरा च। पूर्वपदस्य अराङादेशो निपात्यते। उत्तरपदे तु सुपां सुलुक् पूर्वसवर्णाऽआच्छेयाडाड्यायाजालः ७।१।३९ इति आकारादेशः। तत्र ऋतो ङिसर्वनामस्थानयोः ७।३।११० इति गुणः। छन्दसि इति किम्? मातापितरौ।

न्यासः

पितरामातरा च च्छन्दसि। , ६।३।३२

---

सूत्रम्

काशिका-वृत्तिः

स्त्रियाः पुंवद्भाषीतपुंस्कादनूङ् समानाधिकरणे स्त्रियाम् अपूरणीप्रियादिषु ६।३।३४

भाषितः पुमान् येन समानायामाकृतावेकस्मिन् प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः। तदेतदेवं कथं भवति? भासितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमिते स भाषितपुंस्कशब्देन उच्यते, तस्य प्रतिपादको यः शब्दः सो ऽपि भासितपुंस्कः ऊङो ऽभावः अनूङ्, भाषितपुंस्कादनूङ् यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ् स्त्रीशब्दः। बहुव्रीहिरयम्, अलुग् निपातनात् पञ्चम्याः। तस्य भासितपुंस्काऽदनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते। दर्शनीयभार्यः। शलक्ष्णचूडः। दीर्घजङ्घः। स्त्रिया इति किम्? ग्रामणि ब्राह्मणकुलं दृष्टिरस्य ग्रामणिदृष्टिः। भाषितपुंस्कातिति किम्? खट्वाभार्यः। समानायामाकृतौ इति किम्? द्रोणीभार्यः। कथं गर्भिभार्यः, प्रसूतभार्यः, प्रजातभार्यः इति? कर्तव्यो ऽत्र यत्नः। अनूङ इति किम्? ब्रह्मबन्धूभार्यः। समानाधिकरणे इति किम्? कल्याणा माता कल्यणीमाता। स्त्रियाम् इति किम्? कल्याणी प्रधानम् एषा कल्याणीप्रधाना इमे। अपूरणी इति किम्? कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः। कल्याणीदशमाः। प्रधानपूरणीग्रहणं कर्तव्यम्। इह मा भूत्, कल्याणीपञ्चमीकः पक्षः इति। अप् पूरणीप्रमाण्योः ५।४।११६ इत्यत्र अपि प्रधानपूरणीग्रहणम् एव इत्यप्प्रत्ययो न

भवति। अप्रियादिषु इति किम्? कल्याणीप्रियः। प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्ति। सचिवा। अम्बा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। प्रियादिः। दृढभक्तिः इत्येवम् आदिषु स्त्रीपूर्वपदस्य अविवक्षितत्वात् सिद्धम् इति समाधेयम्।

लघु-सिद्धान्त-कौमुदी

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ९७२, ६।३।३३

उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः। निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः। गोस्त्रियोरिति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ् किम्? वामोरूभार्यः॥ पूरण्यां तु -।

न्यासः

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्? समानाधिकरणे स्त्रियामपूरणीप्रियादिषु। , ६।३।३३

अत्र त्रयः पक्षाः सम्भाव्यन्ते--"स्त्रियाः" इति स्त्रीशब्देन प्रत्ययग्रहणं वा, अर्थग्रहणं वा, शब्दग्रहणं वेति। तत्र यदि "स्त्रियाः" इति। स्त्रीप्रतययग्रहणं स्वर्यते, तदा स्वरितेनाधिकारावगतिः १।३।११ भवतीति स्त्र्यधिकारविहिताः प्रत्यया गृह्न्ते, यथा--"गोस्त्रियोरुपसर्जनस्य" १।२।४८ इत्यत्र। अथ तु "स्त्री" इत्यनेन स्त्रीत्वविशिष्टं द्रव्यमभिधीयते, तदार्थग्रहणम्()। यदि तु स्त्र्यर्थवाची शब्दः स्त्रीत्यनेनोच्यते, तदा शब्दग्रहणम्()। तत्राद्यपक्षेऽयं सूत्रार्थः--भाषितपुंस्कात्परः स्त्रीप्रत्ययोऽनूङुत्तरपदे पुंपद्भवति, निवत्र्तत इति यावत्(), तदा "स्त्रियाः" इति प्रथमार्थे षष्ठा। कथं पुनः पुंवदित्यनेन स्त्रीपरतययस्य निवृत्तिः शक्यते विज्ञातुम्()? भवतीति वाक्यशेषाध्याहारात्()। अत्र च पक्षे पट्वी भार्याऽस्येति पटुभार्य इत्यत्र स्त्रीप्रत्ययनिवृत्तेरुत्तरपदनिमित्तायाः पूर्वस्मिन्? यणादेशे विधातव्ये सति "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति स्थानिवद्भावे सति यणादेशः स्यात्()। इह च--गाग्र्यो वृन्दारिका गर्गवृन्दारिका इत्यत्र "तद्राजस्य बहुषु तेनैवास्त्रियाम्()" २।४।६२ इत्यनुवर्तमाने "यञञोश्च" २।४।६४ इति यञो लुग्न प्राप्नोति। पुंवद्भावेन हि स्त्रोप्रत्ययस्य निवृत्तिः क्रियते, न त्वर्थस्य स्त्रीत्वस्य; ततश्चार्थस्यानिवर्तितत्वात्? केन पुनर्यञ्न श्रूयेत--इत्येवमादयः प्रत्ययपक्षे दोषा भाष्ये विस्तरेणोक्ताः। इह चातिग्रन्थविस्तरभयान्नोच्यन्ते। अर्थपक्षे तूत्तरपदे परतो भाषितपुंस्कस्यानूङ्प्रत्ययान्तस्य स्त्रीशब्दस्य योर्थस्तस्य पुमर्थोतिदिश्यते। भाषितपुंस्कादिति पञ्चमी षष्ठ()र्थे--स्त्र्यर्थः पुंवद्भवतीति। पुमर्थे चातिदिष्टे तद्वचनः शब्दः प्रवर्तते। अत्र पक्षे "खित्यनव्ययस्य" ६।३।६५ इति ह्यस्वत्वस्यास्य च पुंवद्भावस्य विप्रतिषेधो न प्राप्नोति; भिन्नविषयत्वात्()। तथा हि--शब्दस्य ह्यस्वत्वम्(), अर्थस्य पुंवद्भावः; ततश्च कालिम्मन्येत्यत्र "विप्रतिषेधे परं कार्यम्()" १।४।२ इति ह्यस्वत्वं न प्राप्नोति, इष्यते च विप्रतिषेधः। तथा हि--पुंवद्भावस्य विप्रतिषेधो न प्राप्नोति; भिन्नविषयत्वात्()। तथा हि--शब्दस्य ह्यस्वत्वम्(), अर्थस्य पुंवद्भावः; ततश्च कालिम्मन्येत्यत्र "विप्रतिषेधे परं कार्यम्()" १।४।२ इति ह्यस्वत्वं न प्राप्नोति, इष्यते च विप्रतिषेधः। तथा हि--पुंवद्भावस्यावकाशो यत्र खिदन्तमुत्तरपदं नास्ति--दर्शनीयभार्य इति, ह्यस्वस्यावकाशो यत्र पुंवद्भावो नास्ति--कालिम्मन्यः पुमानिति; कालिम्मन्या स्त्रीत्यत्रोभयं प्राप्नोति, तत्र परत्वात्? ह्यस्वत्वं भवति। तदेवमाद्ययोः पक्षयोर्दोषवत्तां मन्यमानस्तृतीयपक्षमाश्रित्याह--"भाषितः पुमान्? येन" इत्यादि। यो ह्यविशेषेण क्वचिद्भाषितपुंस्कः शब्दः स इहाश्रीयेत, तदा द्रोणीभार्य इत्यत्रापि पुंवद्भावः स्यादिति मनसि कृत्वाऽऽह--"समानायमाकृतौ" इत्यादि। "एकस्मिन्? प्रवृत्तिनिमित्ते" इति। अनेन समानायामाकृतावित्यस्यार्थं विस्पष्टीकरोति। आक्रियते=गृह्यते, परिच्छिद्यते येनार्थस्तत्? शब्दस्य प्रवृत्तिनिमित्तं जात्यादिकमिहाकृतिशब्देनोच्यते। "भाषितपुंस्कात्()" इत्येतावत्युक्ते "समानायामाकृतौ" इत्येष विशेषो न शक्यो लब्धुमित्यभिप्रायेणाह--"तदेतदेवम्()" इत्यादि। तदिति वाक्योपन्यासे। एतस्य वचनस्यार्थरूपमेवम्प्रकारम्()। कथं

भवति? नैवं कथंचिदित्यर्थः। यदि भाषितपुस्कशब्दस्य बहुव्रिहेः शब्दोऽन्यपदार्थत्वेनाश्रीयेत--भाषितः पुमान्? येन शब्देन स भाषितपुंस्कः शब्द इति, तदा समानायामाकृतावित्येष विशेषो न लभ्यते, सर्व एव हि शब्दः क्वचदाकृतौ पुमांसं भाषित्वाऽऽकृत्यन्तरे स्त्रियं भाषत इति कृत्वा। अर्थे त्वन्यपदार्थत्वेनाश्रीयमाणे लभ्यत एव इत्येष विशेष इत्यालोच्याह--"भाषितः पुमान्? यस्मिन्नर्थे" इत्यादि। शब्दस्य यत्? प्रवृत्तिनिमित्तं जात्यादिकं तदन्यपदार्थः। केन पुनः शब्देन तत्र भाषितः पुमान्()? प्रत्यसत्तेर्यत्? तस्य प्रवृत्तनिमित्तं तेनैवेति विज्ञायते; अन्यथा हि भाषितपुंस्कग्रहमनर्थकं स्यात्(), व्यवच्छेद्याभावात्()। सर्वत्रैवाभिधेये।र्थे येन केनचित्? शब्देन पुमान्? भाष्यते। अन्ततोऽर्थशब्देनापि तस्यार्थस्य भाषितपुंस्कस्य यः प्रातपदिकः शब्द सोऽप्यभिध्यधर्मस्याभिधान उपचरद्भाषितपुंस्क इत्युच्यते। स पुनः प्रत्यासत्तेर्यस्य योऽर्थः प्रवृत्तिनिमित्तं ततर येन पुमान्? भाषत इति स एव वेदितव्यः। यश्च भाषितपुंस्कस्य प्रवृत्तिनिमित्तस्य वाचकः स नियोगत एकस्मिन्? प्रवृत्तिनिमित्ते पुमांसं भाषित्वा स्त्रियं भाषते। यथा मूलोदाहरणेषु--दर्शनीयादयः शब्दा इति, समाश्र्याद्येन शब्देन समानायामाकृतौ पुमान्? भाषित इत्येष विशेषो लभ्यते। "अनूङ्()" इति यद्ययं पर्युदासः स्यात्(), ऊङोऽन्योऽनूङिति--ततो नञिवयुक्तन्यायेन (व्या।प।६५) तत्सदृशानां टाबादीनां प्रत्ययानां ग्रहणे सति तदन्तस्यैव पुंवद्भावः स्यात्(), ऐडविडवृन्दारिका, दारदवृन्दारिकेत्यत्र न स्यात्()। इडविडोऽपत्यं स्त्रीति "जनपदशब्दात्? क्षत्रियादञ्()" ४।१।१६६ इत्यत्प्रत्ययः। दरदोऽपत्यमिति "द्व्यञ्मगध" (४।१।१७९) इत्यादिनाण्? तयोः "अतश्च" ४।१।१७५ इति लुक्(), तत इडविट्? चासौ वृन्दारिका चेति, दरच्चासौ वृन्दारिका चेति "वृन्दारकनागकुञ्जरैः" २।१।६१ इति समासः, तत्रेदानीं "पुंवत्कर्मधारय" ६।३।४१ इत्यादिना पुंवद्भावो न प्राप्नोति; ऊङ्सदृशप्रत्ययानतराभावात्(), ततश्चेडविट्()शब्दस्यैडविडशब्दो दरच्छब्दस्य दारदशब्दो न स्यात्()। प्रसज्यप्रतिषेधे सति तु भवति; अत्राऽप्यूङभावस्य भावादित्यालोच्य प्रसजयप्रतिषेधोऽयमिति दर्शयन्नाह--ऊङोऽभावोऽनूङिति। "भाषितपुंस्कादनूङ्()" इति। यद्ययमसमासः स्यान्न बहुव्रीहिः, तदायमर्थः स्यात्()--भाषितपुस्कादुत्तरस्याविद्यमानोङः स्त्र्यर्थवृत्तेः शब्दस्योत्तरपदे परतः पुंवद्भवतीति। एवञ्च सति यथाभूतार्थवाची स्त्रीशब्दस्तथाभूतार्थवाच्येव पुंशब्दस्यादेशो भवतीति सामथ्र्यादुक्तं भवति, ततश्चानिष्टप्रसङ्गः--अङ्गारका नाम शकुनयः तेषां कालिका नाम स्त्रियः, तत एताश्च कालिकावृन्दारिकाश्चेति समासे कृते सत्येतच्छब्दो भा,#इतपुंस्क इति तस्मादुत्तरस्य कालिकाशब्दस्यानूङोऽर्थतोऽन्तरतमोऽङ्गरकशब्दः पुंशब्दादेशः प्रसज्येत; अन्यस्यान्तरतमस्याभावात्()। ततश्चैतदङ्गारकवृन्दारिका इति हि स्यात्(), एतत्कालिकावृन्दारिका इतीष्यते। बहुव्रीहौ तु सत्यनिष्टप्रसङ्गो न भवति, तत्र हि भाषितपुंस्कस्य शब्दस्यानूङः पूंवद्भावेन भवितव्यम्(), न च कालिकाशब्दो भाषितपुंस्कः--इत्येतत्सर्वमालोच्य बहुव्रीहिरयमिति दर्शयन्नाह--"भाषितपुंस्कादनूङ्? यस्मिन्? स्त्रीशब्दे" इति। "यदि बहुव्रीहिरयम्()" ["यदि--नास्ति काशिकायाम्()] इति। एवं सति "सुपो धातुप्रातिपदिकयोः" (२।४।७१) इति पञ्चम्या लुक्? प्राप्नोति? अत आह--"अलुग्निपातनात्()" इत्यादि। ननु चालौकिकत्वादस्य वाक्यस्य निपातनादित्ययमपरीहारः, निपातनं हि लौकिकं भवति, तह्र्येवं लुकाप्यत्र न भाव्यम्()? अथ लुग्भविष्यतीत्येवावसीयतेऽलुगपि भवतीत्यवसीयताम्()। "दर्शनीयभार्यः" इति। दर्शनीया भार्याऽस्येति बहुव्रीहिः। "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्यस्वत्वमुत्तरपदस्य। दर्शनीयत्वं नामात्र सामान्ये विशेषो दर्शनीयशब्दस्य प्रवृत्तिनिमित्तम्()। तमेकमेवार्थमुपादायासी पुंसि स्त्रियां च वत्र्तते--दर्शनीयो देवदत्तः; दर्शनीया भार्येति। तस्मात्? समानायामाकृतौ दर्शनीयशब्दो भाषितपुंस्को भवति; स्त्रियाञ्च वत्र्तते, न चास्मादूङ्()। अतो भार्याशब्दे स्त्रीलिङ्ग उत्तरपदेऽस्य स्त्रीशब्दस्य "पुंशब्दस्येव रूपं भवति। ["पुंशब्दस्यैव"--मुद्रितः पाठः] एवं "श्लक्ष्णचूडः" इत्यादावपि योजनीयम्()। "ग्रामणिदृष्टिः" इति। अत्र सर्वमस्ति, न तु ग्रामणीशब्दः स्त्रियां वर्तते, किं तर्हि? नपुंसक इति न भवति पुंवद्भावः। "द्रोणीभार्यः" इति। द्रोणशब्देन भाषितः पुमान्(), न तु समाने प्रवृत्तिनिमित्त। यस्मात्? परिमाणविशेषं प्रवृत्तिनिमित्तमुपादाय पुंसि परिमाणिनि वर्तते। जातिविशेषं तूपादाय स्त्रियां गवादन्यां वर्तते। यत्र गावोऽदन्ति सा गवादनी द्रोणीशब्देनोच्यते। तस्मान्न द्रोणशब्दः समानायामाकृतौ भाषितपुंस्कः। "कथम्()" इत्यादि।

यदि समानायामाकृतौ यो भाषितपुंस्कस्तस्य पुंवद्भाव उच्यते, एवं च "गर्भिभार्यः" इत्यादौ पुंवद्भावो न प्राप्नोति। गर्भप्रभृतीनां शब्दानां भिन्नायामाकृतौ भाषितपुंस्कत्वादित्यभिप्रायः। अनवयवभूतान्तर्वर्तिवस्तुविशेषसम्बन्धे हि सति स्त्री गर्भिणीत्युच्यते। व्रीहिस्त्वन्तर्वर्त्यवयवस्तुविशेषसम्बन्धे सति गर्भीत्युच्यते। तस्मात्? पुंसि स्त्रियां च वर्तमानस्य गर्भिशब्दस्य प्रवृत्तिनिमित्तं भिद्यते। प्रसूतप्रजातशब्दयोरपि प्रवृत्तिनिमित्तं क्रियकृतिर्भिन्ना। स्त्रियां हि वर्तमानौ तौ गर्भविमोक्षणं प्रवृत्तिनिमित्तमुपादय वत्र्तते, पुंसि तु गर्भाधानम्()। "कत्र्तव्योऽत्र प्रयत्नः" इति। केचिद्व्याचक्षते--उपसंख्यानं कर्तव्यमिति। अपरे पुनराहुः--स्त्रिया पुंवदिति योगविभागः कर्तव्यः। अथ वा--"कर्तव्योऽत्र यत्नः" इत्यनेनेदं दर्शयति--यद्यपि स्त्रियां व्रीहौ च गर्भत्वभेदः, तथापि स नाश्रयितव्यः। यत्तु तत्रावयवानवयवभेदमुत्सृज्य सामान्येनान्तर्वर्त्तिवस्तुविशेषसम्बन्धमात्रम्(), तदेवाश्रयितव्यम्()। अतस्तदपेक्षया स्त्रियां व्रीहौ च वर्तमानस्य गर्भिशब्दसय तुल्यमेव प्रवृत्तिनिमित्तमिति। एवं प्रसूतप्रजातशब्दयोरप्यपत्याधानविमोक्षणभेदं त्यक्त्वाऽयमपत्यवानियमपत्यवतीत्यपत्यवत्सम्बन्धमात्रमाक्षितमित्येतद्व्याख्यानमि#ईति प्रत्यन्तः कत्र्तव्य इति। "ब्राह्बन्धूभार्यः" इति। ब्राह्बन्धूशब्दात्? "ऊङुतः" ४।१।६६ इत्यूङ्()। "कल्याणीपञ्चमाः" इति। "अप्? पूरणीप्रमाण्योः" ५।४।११६ इत्यप्समासान्तः, पञ्चानां पूरणीति डट्(), तस्य "नान्तादसंख्यादेर्मट्()" ५।२।४९, ततः "टिड्ढाणञ्()" ४।१।१५ इति ङीपि कृते पञ्चमी भवति। "प्रधानपूरणीग्रहणं कत्र्तव्यम्()" इति। प्रधानं पूरणी गृह्यते येन व्याख्यानेन तद्व्याख्यानं प्रधानपूरणीग्रहणम्(), तत्? कत्र्तव्यम्()--प्रधानं या पूरणी तस्यां प्रतिषेधो यथा स्यात्(), अप्रधानभूतायां तस्यां मा भूदिति। तत्रेदं व्याख्यानम्()--इह "द्वन्द्वे घि" २।२।३२ इति प्रियादिशब्दस्य पूर्वनिपाते प्राप्ते परनिपातलक्षणव्यभिचारचिह्नेन सूचितं व्यभिचार्ययं प्रतिषेधः क्वचिदेव वत्र्तते, न सर्वत्रेति। तेन यत्रैव प्रधानभूता पूरणी तत्रैव भवति, नान्यत्रेति। तेन यत्रासौ भवति तत्र तस्या एव प्रधानभूताया पूरण्या ग्रहणं युक्तम्()। क्व पूरण्याः प्राधान्यम्()? यत्र तस्याः समासेऽभिधेयत्वेनान्तर्भावः, यथानन्तरोक्तप्रत्युदाहरणे। तत्र ह्यवयवेन विग्रहः। समुदायस्त्ववयवभेदादभिन्नः, समासार्थ एव। "तत्र" इति। यथैवं प्रथमा, द्वितीया, तृतीया, चतुर्थी चाभिधीयते, तथा पञ्चम्यपि। "कल्याणपञ्चमीकः पक्षः" इति। अत्र तु तिरोहितावयवभेदः पक्ष एवान्यपाद्रथः प्रधानम्(), पञ्चमी तु रात्रिः। अस्मिन्? पक्षेऽन्यपदार्थोऽनुमेयैव, न त्वभिधेया। यथा वृक्षशब्दे मूलादयः, ततस्तद्वदर्थमप्यनभिधेयत्वादर्थोऽप्रधानम्()। अथाप्? समासान्तः कस्मान्न भवति? इत्याह--"अप्पूरणीप्रमाण्यो" इत्यादि। अथ दृढभक्तिः, शोभनभक्तिरित्यादौ कथं पुंवद्भावः यावता प्रियादित्वात्? प्रतिषेधेन भवितव्यम्()? इत्याह--"दृढभक्तिरित्येवमादिषु" इत्यादि। अस्त्रीवाचिनः पूर्वपदस्य विवक्षितत्वाद्दृढभक्तिरित्येवमादि लक्ष्यं सिद्धमित्येवं समाधेयम्()। द्वेष्यं परिहत्र्तव्यमित्यर्थः। दृढशब्दोऽत्रादाढर्()निवृत्तिपरः प्रयुक्तः। अत्रादाढर्()निवृत्तिपरायां चोदनायां लिङ्गविशेषोपादानमनुपकारकमेवेति। अतः स्त्रीत्वमिह न विवक्षितम्()। तस्मादस्त्रीलिङ्गस्य दृढशब्दस्यायं प्रयोग इत्यभिप्रायः॥

बाल-मनोरमा

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ८२१, ६।३।३३

स्त्रियाः पुंवत्। "भाषित पुंस्कादनू"ङिति समस्तमेकपदं "स्त्रिया" इति षष्ठ()न्तस्य विशेषणमित्यभिप्रेत्य व्याचष्टे--भाषितपुंस्कादिति। "अनू" ङित्यस्य व्याख्यानम्-ऊङोऽभाव इति। अर्थाभावेऽव्ययीभावः, नञ्तत्पुरुषो वा। "भाषितपुंस्का"दिति दिग्योगे पञ्चमी। "पर" इति प्रथमान्तमध्याहार्यम्। तथाच भाषितपुंस्कात् पराऽनूङ् यस्येति विग्रहे बहुव्रीहिरिति फलति। ननु समासे सति पञ्चम्या सुक्प्रसङ्ग इत्यत आह--निपातनादिति। इदमुपलक्षणम्। निपातनादप्रथमान्तस्यापि बहुव्रीहिः, परशब्दलोपश्चेत्यपि बोध्यम्। यद्वा अत एव निपातनादप्रयुज्यमानेऽपि परशब्दे तदर्थे गम्ये पञ्चमी। नन्वेवमपि "स्त्रिया" इति षष्ठ()न्तस्य "भाषितपुंस्कादनू"ङिति यदि विशेषणं स्यात्तर्हि

भाषितपुंस्कादनूङ्" इति षष्ठी श्रूयेतेत्यत आह--षष्ठ()आश्च लुगिति। "निपातना"दित्यनुषज्यते। भाषितः पुमान् येन तद्भाषितपुंस्कं, तदस्यास्तीति अर्शाअद्यच्। पुंस्त्वे स्त्रीत्वे च एकप्रवृत्तिनिमित्तकमिति यावत्। "तृतीयादिषु भाषितपुंस्क"मित्यत्र व्याख्यातमेतत्। तदाह--तुल्ये प्रवृत्तिनिमित्ते इति। स्त्रीवाचकस्य शब्दस्येति। स्त्रीलिङ्गस्येत्यर्थः। "स्त्रिया" इति षष्ठ()न्तं न स्त्रीप्रत्ययपरमिति भावः। "पुंव"दिति रूपातिदेशः। पुंस इव पुंवदिति षष्ठ()न्ताद्वतिः। तदाह--पुंवाचकस्येव रूपमिति। "स्त्रिया"मिति सप्तम्यन्तमपि न स्त्रीप्रत्ययपरं किन्तु स्त्रीलिङ्गपरम्। तच्च "अलुगुत्तरपदे" इत्यधिकृते उत्तरपदेऽन्वेति। तदाह--स्त्रीलिङ्गे उत्तरपदे इति। "अपूरणीप्रियादि()इआ"त्येतद्व्याचश्टे- न तु पूरण्यां प्रियादौ च परत इति। पूरणीति स्त्रीलिङ्गनिर्देशात्स्त्रीलिङ्गः पूरणप्रत्ययान्तो विवक्षित इति ज्ञेयम्। तुल्ये प्रवृत्तिनिमित्ते इति कम्?। कुटीभार्यः। अत्र पुंवत्त्वं न भवति, कुटीशब्दो घटे पुंलिङ्गः, गेहे तु स्त्रीलिङ्ग इति प्रवृत्तिनिमित्तभेदात्। "स्त्रीप्रत्ययः पुंवत्स्या"दित्युक्ते तु स्त्रीप्रत्ययस्य लोपः पर्यवस्येत्। ततश्च पट्वी भार्या यस्य स पटुभार्य इत्यत्र उत्तरपदं परनिमित्तमाश्रित्य ङीषो लोपे तस्य "अचः परस्मिन्" इति स्थानिवत्त्वादुकारस्य यण्स्यात्। ह्यस्व इति। चित्रा गावो यस्येति विग्रहे बहुव्रीहिसमासे सुब्लुकि सति अनेकमिति प्रथमान्तनिर्दिष्टतया, विग्रहे नियतविभक्तिकतया वा उपसर्जनत्वे सति, चित्रगोशब्दे ओकारस्य "गोस्त्रियो"रित्युकारो ह्रस्व इत्यर्थः। ननु चित्रा गाव इति लोकिकसमासाभ्युपगमे सुपो लुकः प्राक् चित्रा अस इत्यत्र पूर्वसवर्णदीर्घे, गो अस् इत्यत्र पूर्वरूपे च एकादेशे कृते तस्य परादिवत्त्वेन असो लुकि चित्रशब्दे अकारो न श्रूयेत, चित्रगुरित्यत्र उकारश्च न श्रूयेत, पूर्वान्तवत्त्वे तु परिशिष्टस्य सकारमात्रस्य सुस्वाऽभावाल्लुक् न स्यादित्यत आह--चित्रा अस् इति। गोशब्दस्य स्त्रीलिङ्गत्वात्तद्विशेषणत्वाच्चित्रेति स्त्रीलिङ्गनिर्देशः। "प्रत्ययोत्तरपदयोश्चे"ति सूत्रभाष्यरीत्या "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते" इति न्यायात्प्रागेव पूर्वसवर्णदीर्घात्सुब्लुगिति भावः। चित्रगुरिति। बहुव्रीहौ ह्यस्वत्वे चित्राशब्दस्य पुंवत्त्वमिति भावः। रूपवद्भार्य इति। रूपवती भार्या यस्येति विग्रहः। अत्र उपसर्जनह्यस्वः। "रूपवती" शब्दस्य पुंवत्त्वम्। ननु चित्रा जरती गौर्यस्येति विग्रहे कथं त्रिपदबहुव्रीहिः, "सुप्सुपे" त्येकत्वस्य विवक्षतत्वादित्यत आह--अनेकोक्तेरिति। शेषग्रहणात्प्रथमान्तमिति लब्धम्। एकस्य प्रथमान्तस्य समासो नोपपद्यते, समास इत्यन्वर्थसंज्ञाविज्ञानात्, ततश्चार्थादनेकं प्रथमान्तमिति सिद्धे पुनरनेकग्रहणाद्द्विबहूनां प्रथमान्तानां बहुव्रीहिरिति भाष्ये स्पष्टमिति भावः। अत्रेति। त्रिपदबहुव्रीहावित्यर्थः। चित्राजरतीगुः जरतीचित्रागुर्वेति। गां प्रतिचित्रात्वस्य जरतीत्वस्य च विशेषणत्वाऽविसेषादन्यतरस्य "सप्तमीविशेषणे बहुव्रीहौ" इति पूर्वनिपात इति भावः।

एवं दीर्घेति। दीर्घे तन्व्यौ जङ्घे यस्येति विग्रहः। उभयत्रापि पूर्वमध्यपदयोः पुंवत्त्वमाशङ्क्याह--त्रिपदे इति। उत्तरपदस्येति। समासचरमावयवपदस्य उत्तरपदत्वात्ततृतीयमेव पदमत्रोत्तरपदं वाच्यम्। तत्परकत्वं च मध्यमपदस्यैव, नतु प्रथमपदस्यापि, तस्य मध्यमेन पदेन व्यवधानादित्यर्थः। ननु तर्हि मद्यमपदस्य पुंवत्त्वं दुर्वारम्, उत्तरपदपरकत्वसत्त्वादित्यत आह--द्वितीयमपि न पुंवदिति। पूर्वपदत्वाभावादिति। उत्तरपदेन पूर्वपदमाक्षेपाल्लभ्यते। समासप्रथमावयवपदमेव पूर्वपदम्, नतु मध्यमावयवपदमपीति भावः। ननु मध्यमपदापेक्षया प्रथमपदस्य पूर्वपदत्वमस्ति। मध्यमपदस्य च प्रथमपदापेक्षया उत्तरपदत्वमस्तीत्यत आह--उत्तरपदशब्दो हीति। रूढ इति। वैयाकरणसमयसिद्ध इत्यर्थः। इति वदन्तीति। एवंप्रकारेण केचिद्वदन्तीत्यन्वयः। तत्र प्रथमपदस्य त्रिपदबहुव्रीहौ नास्ति पुंवत्त्वमिति युज्यते,उत्त्रपदपरकत्वाऽभावात्। मध्यमपदस्य तु पूर्वपदत्वाभावेऽप्यस्त्येव पुंवत्त्वम्, स्त्रिया पुंवदित्यत्र तु पूर्वपदस्याश्रवणात्, अनुवृत्त्यभावाच्च, किन्तु "उत्तरपदे" इत्यनेन पूर्वपदस्य पुंवत्त्वमित्यर्थाद्गम्यत इति वक्तव्यम्। तदपि न सम्भवतीत्यत आह-नेह पूर्वपदमाक्षिप्यत इति। इह="स्त्रियाः पुंव"दित्यत्र, "उत्तरपदे इत्यनुवृत्तेन पूर्वपदं नाक्षिप्यते, नाऽर्थाद्गम्यत इत्यर्थः। कुत इत्यत आह--आनङृत इत्यत्र यथेति। ऋदन्तानां द्वन्द्वे आनङ् स्यात् उत्तरपदे इति तदर्थः। तत्र चतुर्णा द्वन्द्वे "होतृपोतृनेष्टोद्गातारः" इत्युपान्त्यस्य नेष्टुरानङुदाह्मतः "समर्थः पदविधि"रित्यत्र भाष्ये। तत्रोत्तरपदेन

पूर्वपदाक्षेपनियमे नेष्टरूपान्त्यस्य पूर्वपदत्वाऽभावादानङ् नोपपद्येत। तस्मान्नावश्यमुत्तरपदे विहितं कार्यं पूर्वपदस्यैवेति नियम इत्यर्थः। तेनेति। पूर्वपदाऽनाक्षेपेणेत्यर्थः। उपान्त्यस्येति। अन्त्यस्य समीपमुपान्त्यम्। चरमावयवसमीपवर्तिनो मध्यमस्येत्यर्थः। पुंवदेवेति। "रूप"मिति शेषः।

तदेव दर्शयति-चित्राजरद्गुरिति। अत्र चित्राशब्दस्य न पुंवत्त्वम्, मध्यमेन व्यवधानात्, उत्तरपदपरकत्वाऽभावाच्चेति भावः। इत्यादीति। जकतीचित्रगुः। तन्वीदीर्घजङ्घः। ननु "आनङ्तः"इत्यत्र "होतृपोतृनेष्टोद्गातारः" इति भाष्योदाहरणान्मास्तु पूर्वपदाक्षेपः। "स्त्रियाः पुंव"दिति सूत्रे तदनाक्षेपे किं प्रमाणमित्यत आह--अत एवेति। "स्त्रियाः पुंव"दित्यत्रापि पूर्वपदाऽनाक्षेपादित्यर्थः। द्वन्द्वगर्भेऽपी"त्यनन्तरं "बहुव्रीहा"विति शेषः। भाष्यमिति। यद्यपि कृत्स्नभाष्यपरिशोधनायां चिंत्राजरद्गुरित्युदाहरणं भाष्ये क्वापि न दृश्यते, तथापि "चित्राजरद्गु"रितीत्यनन्तरं "प्रयाग"मिति शेषः। "भाष्य"मित्यस्य-"पट्वीमृदुभार्य" इति प्रकृतसूत्रस्थभाष्यमित्यर्थः। "सूचयती"ति शेषः। "स्त्रियाः पुंव"दिति प्रकृतसूत्रभाष्ये पट्व्यौ मृद्व्यौ भार्ये यस्येति द्वन्द्वगर्भबहुव्रीहौ पट्वीमृदुभार्यं इत्युदाहृतम्। तत्र पट्वीमृदुशब्दात्मको द्वन्द्वः पूर्वपदं, न तस्य भाषितपुंस्कत्वमस्तीति न पुंवत्त्वे, द्वन्द्वस्य परवल्लिङ्गतानियमात्। तत्र द्वन्द्वे पूर्वपदस्य पट्वीशब्दस्य तु न पुंवत्त्वं, मध्यमपदेन व्यवधानादुत्तरपदपरकत्वाऽभावात्। मद्यमपदस्यानुत्तरपदत्वादसमानाधिकरणत्वाच्च न तस्मिन्परे पुंवत्त्वसंभवः। मृद्वीशब्दस्य तु केवलस्य भाषुतपुंस्कत्वादुत्तरपदपरकत्वाच्च पुंवत्त्वमिति तदाशयः। "स्त्रियाः पुंव"दित्यत्र पूर्वपदाक्षेपे तु मृदुशब्दस्य पूर्वपदत्वाऽभावेन पुंवत्त्वाऽप्रवृत्तेः तदसङ्गतिः स्पष्टैव। ततश्च "पट्वीमृदुभार्य" इति भाष्यं "चित्राजरद्गु"रिति प्रयोगं गमयतीत्यर्थः। कर्मधारयेति। जरती चासौ चित्रा चेति कर्मधारयः। "पुंवत्कर्मधारये"ति जरतीशब्दस्य पुंवत्त्वान्ङीपो निवृत्तिः। ततस्च जरच्चित्रा गौर्यस्येति कर्मधारयपूर्वपदत्वे बहुव्रीहौ पूर्वपदस्य जरच्चित्राशब्दस्य "स्त्रियाः पुंव"दिति पुंवत्त्वाट्टापो निवृत्तिरिति भावः। कर्मधारयोत्तरेति। जरती चासौ गौश्चेति कर्मधारये "गोरतद्धितलुकी"ति टचि अवादेशे "पुंवत्कर्मधारये"ति जरतीशब्दस्य पुंवत्त्वे ङीपो निवृत्तौ टित्त्वान्ङीपि जरद्गवीशब्दः। ततश्चित्रा जरद्गवी यस्येति कर्मधारयोत्तरपदके बहुव्रीहौ "नद्यृतश्चे"ति कपि चित्राशब्दस्य "स्त्रियाः पुंव"दिति पुंवत्त्वे "चित्रजरद्गवीक" इति रूपमित्यर्थः। स्त्रियाः किमिति। षष्ठ()न्तस्य प्रश्नः। ग्रामणिदृष्टिरिति। ग्रामणीशब्दस्य नपुंसकत्वे "ह्रस्वो नपुंसके" इति ह्रस्वे ग्रामणिशब्द इदन्तः। कुलशब्दो नपुंसकत्वस्फोरणार्थः। दृष्टिशब्देन नेत्रस्थानापन्नं विवक्षितम्। ग्रामणि दृष्टिरस्येत्येव विग्रहः। "स्त्रियाः" इत्यस्याऽभावे ग्रामणीशब्दस्य पुंवत्त्वे नपुंसकह्रस्वनिवृत्तौ "ग्रामणीकुल"मिति स्यादिति भावः। गङ्गाभार्य इति। अत्र गह्गाशब्दस्य नित्यस्त्रीलिङ्गतया बाषितपुंसकत्वाऽभावान्न पुंवत्त्वमिति भावः। वामोरूभार्य इति। वामौ=सुन्दरौ ऊरू यस्या इति बहुव्रीहिः। "संहितशफलक्षणबामादेश्चेत्यूङ्। तदन्तस्य पुंवत्त्वे ऊङो निवृत्तौ "वामोरुभार्य" इति पूर्वपदमुदन्तमेव स्यादिति भावः। स्त्रियां किमिति। सप्तम्यन्तस्य प्रश्नः। कल्याणीप्रदान इति। अत्र प्रधानशब्दस्य नित्यनपुंसकत्वात् कल्याणीशब्देन सामानाधिकरण्येऽपि स्त्रीलिङ्गत्वात्तस्मिन्परे पुंवत्त्वं नेति भावः। पूरण्यां त्विति। "पुंवत्त्वानिषेधोदाहरणे विशेषो वक्ष्यते" इति शेषः।

तत्त्व-बोधिनी

स्त्रियाः पुंबद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ७२१, ६।३।३३

स्त्रियाः पुंवत्। निपातनादिति। एतच्च पूर्वत्रापि योज्यम्। अन्यथा व्यधिकरणानां बहुव्रीहिः स्वरसतो न सिध्येत्। लुगति। "अनु"ङिति प्रथमान्तम्। षष्ठ()र्थे प्रथमेति हरदत्तश्च। एवं च सूत्रे केषांचित् अनूङः समानाधिकरणे" इति षष्ठ()न्तपाठोऽसांप्रदायुक इति भावः। तुल्ये इत्यादि। "भाषितः पुमान् यस्मिन्" इत्यादिव्याख्यानादयमर्थो लभ्यते इति "तृतीयादिषु भाषितपुंस्क"मित्यत्रोपपदितम्। यद्यत्र "भाषितः पुमान्येन तद्भाषितपुंस्क"मित्युच्येत तर्हि कुटीभार्यः

द्रोणीभार्य इत्यादावतिप्रसङ्गः स्यात्। भवति हि कुटशब्दो घटे पुंलिङ्गो, गेहे तु स्त्रीलिङ्गः। द्रोणशब्दस्तु परिमाणविशेषे पुंलिङ्गो, गवादन्यां तु स्त्रीलिङ्ग इति। ऊङोऽभावा यत्रेति। यदि तु ऊङन्योऽनूङिति पर्युदासः स्यात्तर्हि टाबाद्यन्तमेव गृह्येत। ततः किमिति चेत्, दरदोऽपत्यं दारदः।"व्यञ्मगधे"त्यण्, तस्य स्त्रियाम् "अणश्चे"ति लुक्। दरद्। सा चासौ वृन्दरिका च दारदवृन्दारिकेत्यादि न सिध्येत्। न ह्यत्र दर्शनीया भार्या यस्य स दर्शनीयभार्य इत्यादाविव स्त्रीप्रत्ययः कश्चिदस्तीति भावः। ननु "न कोपधाया ऊङश्चे"त्येव सूत्र्यतामिते चेन्न, बाधकबाधनार्थेन "पुंवत्कर्मधारये"त्यनेन वामोरूभार्येति कर्मधारये पुंवद्भावपत्तेः। पृथक्प्रतिषेधसामर्थ्यात्सिद्धान्ते तु न दोषः। "स्तरिया"इत्यस्य स्त्रीप्रत्ययपरतां वारयति--स्त्रीवाचकस्येति। "स्त्रीप्रत्ययस्य पुंवद्भावः" इत्युक्ते तु स्त्रीप्रत्ययलोप इत्येवार्थः पर्यवस्यतीति दारदवृन्दारिकेति न सिध्येत्। किं च "पटुभार्य"इत्यत्र उत्तरपदनिमित्ताया ङीषो निवृत्तेः "अचः परस्मिन्नि"ति स्थनिवद्भावाद्यण् स्यात्। अपि च वतण्डस्यापत्यं स्त्री वतण्डी। "वतण्डाच्चे"ति यञ्, "लुक्()स्त्रिया"मिति तस्य लुक्। शाङ्गरवादित्बान्ङीन्। वतण्डी चासौ वृन्दारिका च वातण्ड()वृन्दारिका। अत्र पुंवद्भावेन ङीनो निवृत्तावपि अर्थगतस्य स्त्रीत्वस्यानिवृत्तत्वात् "लुक् स्त्रिया" मिति यञो लुक् प्रसज्येतेति भावः। ह्रस्व इति। "अनेक"मिति प्रथमानिर्दिष्टत्वात् "प्रथमानिर्दिष्ट"मिति, "एकविभक्ति चे"ति वा गोशब्दस्योपसर्जनत्वादिति भावः। चित्रा असिति। "अन्तरङ्गानपी"ति न्यायादिह पूर्वसवर्णदीर्घो न प्रवर्तते। अन्यथा एकादेशस्य परादित्वेन सुपो लुकि चुत्रगुरित्यत्र अकारो न लभ्येतेति भावः। नेहेति। अत्रैव सूत्रे पठ्वीमृव्द्यौ भार्ये अस्येति द्वन्द्वगर्भबहुव्रीहौ "पट्वीमृदुभार्य"इति भाष्योदाहरणादिति भावः। आनङिति। तथा च "समर्थ"सूत्रे भाष्ये "होतृपोतृनोष्टोद्गातार"इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्यानङ् उदाह्रतः। पूर्वपदाक्षेपे तु स न सिध्येत्। न ह्यत्र नेष्टा पूर्वपदं, होतुरेव पूर्वपदत्वादिति भावः। अतएवेति। पूर्वपदाऽनापक्षेपादेवेत्यर्थः। चित्राजरदिति। द्वन्द्वन्तर्गतजरच्छब्दस्योत्तरपदत्वेऽप्यसामानाधिकरण्यान्न टापो निवृत्तिः। न चैवमपि द्वन्द्वात्मकस्य पूर्वपदस्य समानाधिकरणोत्तपदपरत्वात्पुंवद्भावे टाब्निवृत्तिर्दुर्वारेति वाच्यं, द्वन्द्वान्तर्गतचित्रजरच्छब्दयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वेऽपि द्वन्द्वात्मकस्य पूर्वपदस्याऽतथात्वात्। द्वयोरपीति। पूर्वपदान्तर्गतमुत्तरपदमाश्रित्य प्रथमास्यपि पुंवद्भाव इति भावः। जरच्चित्रेति। " पूर्वकालैके"ति समासः। लिङ्गविशिष्टपरिभाषया जरद्ग्रहणेन जरती शब्दस्यापि ग्रहणात्। चित्रजरद्गवीक इति। जरती चासौ गौश्च जरद्गवी। "गोरतद्धिते"ति टचि टित्त्वान्ङीप्। चित्रा जरद्गवीस यस्येति बहुव्रीहौ "नद्यृतश्चे"ति वक्ष्यमाणः कप्। वामोरूभार्य इति। "संहितशफलक्षणवामादेश्चे"त्यूङ्। प्रधानमिति। भावल्युडन्तं नित्यनपुंसकम्। पञ्चमीति। "तस्य पूरणे"इति डट्। "नान्तादसङ्ख्यादेः" इति डटो मडागमः। "टिड्ढे"ति ङीप्।

---

सूत्रम्

काशिका-वृत्तिः

तसिलादिष्वा कृत्वसुचः ६।३।३५

पञ्चम्यास् तसिल् ५।३।७ इत्यतः प्रभृति सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ५।४।१७ इति प्रागेतस्माद् ये प्रत्ययाः तेसु भाषितपुंस्कादनूङ् स्त्रियाः पुंवद् भवति। तस्याः शालायाः ततः। तस्याम् तत्र। यस्याः यतः। यस्याम् यत्र। तसिलादिसु परिगणनं कर्तव्यम्। त्रतसौ। तरप्तमपौ। चरट्जातीयरौ। कल्पबदेश्यदेशीयरः। रूपप्पाशपौ। थंथालौ। दार्हिलौ। तिल्तातिलौ। शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः। बह्वीभ्यो देहि। अल्पाभ्यो देहि। बहुशो देहि। अल्पशो देहि। त्वतलोर् गुणवचनस्य पुंवद्भवो वक्तव्यः। पट्व्याः भावः पटुत्वम्, पटुता। गुणवचनस्य इति किम्? कठ्याः भावः कठित्वम् कठीता। भस्याढे तद्धिते पुंवद्भावो वक्तव्यः। हस्तिनीनां समूहो हास्तिकम्। अढे इति किम्? श्यैनेयः। रौहिणेयः। कथम् आग्नायी देवता अस्य आग्नेयः स्थालीपाकः इति? कर्तव्यो ऽत्र यत्नः। ठक्छसोश्च पुंवद्भावो वक्तव्यः। भवत्याः छात्राः भावत्काः। भवदीयाः।

न्यासः

तसिलादिष्वाकृत्वसुचः। , ६।३।३४

अनुत्तरपदार्थोऽयमारम्भः। "ततः" इति। "पञ्चम्यास्तसिल्()" ५।३।७। तस्य "प्राग्दिशो विभक्तिः" (५।३।१) इति विभक्तिसंज्ञकत्वात्? त्यदाद्यत्वम्? टाप्(), अनेन पुंवद्भावः। "तत्र" इति। "सप्तम्यास्त्रल्()" ५।३।१०। शेषं पूर्ववत्()। "तसिलादिषु" इत्यादि। "तसिलादिष्वाकृत्वसुचः" इत्युच्यमाने तसिलादिष्वनन्तर्भूतेष्वपि क्वचित्? पुंवद्भाव इष्यते, स न प्राप्नोति। तत्रान्तर्भूतेऽपि क्वचिन्नेष्यते, एवं सत्यनिष्टमपि प्राप्नोति। तस्मात्? परिगणनं कत्र्तव्यम्()। तत्र ततसोरुदाहरणमुक्तम्()। शेषाणां तूच्यते--इयं षट्वी, इयं पट्वी इयमनयोरतिशयेन पट्वी--"द्विवचन" ५।३।५७ इत्यादिना तरप्()--पटुतरा। इयमासमतिशयेन पट्वी--"अतिशायने" ५।३।५५ इत्याना तमप्()--पटुतमा। पट्वी भूतपूर्वा--"भूतपूर्वे चरट्()" ५।३।५३ ङीप्(), पटुचरी। पट्वीप्रकारा--प्रकारवचने जातीपर्? ५।३।६९--पटुजातीया। ईषदसमाप्ता पट्वी--"ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" ५।३।६७ पटुकल्पा पटुदेश्या, पटुदेशीया। प्रशस्ता पट्वी--"पशंसायां रूपप्()" ५।३।६६--पटुरूपा। याप्या पट्वी--"याप्ये पाशप्()" ५।३।४७--पटुपाशा। अजायै हिता--"अजाविम्यां थ्यन्()" ५।१।८ अजथ्या। थ्यंस्तसिलादिभ्यः पूर्वं पठ()ते। सर्वप्रकरैः सर्वथा, "प्रकारवचने थाल्()" ५।३।२३। तस्यां रात्रौ तदा--"सर्वैकान्यकिंयत्तदः काले दा" ५।३।१५। अस्यां रात्रौ एतर्हि--"इदमोर्हिल्()" ५।३।१६। तत्रेदमः "एतेतौ रथोः" ५।३।४ इत्येतादेशः, प्रशस्ता वृकी वृकतिः। प्रशस्ता ज्येष्ठा ज्येष्ठतातिः--"वृकज्येष्ठाभ्यांतिल्तातिलौ च च्छन्दसि" ५।४।४१ इति तिल्लातिलौ। एतौ च कृत्वासुचः परो पठ()एति। तसिलादिषु परिगणनं कत्र्तव्यमिति भाव्यकारस्य मतमेतत्(), न तु सूत्रकारस्य। न चासति परिगणने किञ्चिदनिष्टमापद्यते। येषु हि तसिलादिष्वनन्तर्भूतेषु पुंवद्भाव इष्यते, तेषूततरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्भविष्यति। येषु तसिलादिष्वन्तर्भूतेषु नेष्यते, तत्र "न कोपधायाः" ६।३।३६ इति नेति योगविभागन्न भविष्यतीति। दोषः खल्वपि परिगणने--दरच्छब्दात्? कप्रत्यये दारदिकेत्यत्र पुंवद्भावो न प्राप्नोति; कप्रत्ययस्यापरिगणितत्वात्()। "शसि बह्वल्पार्थस्य" इति। शसि प्रत्यये परतः बह्वर्थस्याल्पार्थस्य च पुंवद्भावो वक्तव्यः, व्यख्येय इत्यर्थः। व्याख्यानं तु तस्यैव चकारस्यानुक्तसमुच्चयार्थत्वामाश्रित्य कत्र्तव्यम्()। "भस्याढे तद्धिते" इत्यादि। "हास्तिकम्()" इति। "अचित्तहस्तिधेनोष्ठक्()" ४।२।४६ इति ठक्()। यद्यत्र पुंवद्भावो न स्यात्? तद यस्ये (६।४।१४८) तीकारलोपे कृते तस्य "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति स्थानिवद्भावात "नस्तद्धिते" (६।४।१४४) इति टिलोपो न स्यात्? पुंवद्भावे तु सति हस्तिशब्द एवायं भवति। ननु च ठक्छसो (वा।७३२) रित्यनेनैवात्र सिध्यति पुंवद्भावः? न सिध्यति; न सिध्यति; छसा साहचर्यात्? "भवतष्ठक्छसोः" ४।२।११४ ["भवतष्ठक्छसौ"--इति सूत्रम्()] इत्यनैव विहितस्य तत्र ठको ग्रहणात्(), न सर्वस्य। "कथम्()" इत्यादि। यदि च ढे परतः पुंवद्भावस्य प्रतिषेधः क्रियते, तदाग्नायी देवतास्येति "अग्नेर्ढक्()" ४।२।३२ इति ढकि कृत आग्नायेय इति भवितव्यम्(), तत्कथमाग्नेय इति भवतीत्यभिप्रायः। अग्नेः स्त्रीत्यस्यां विवक्षायां "वृषाकप्यग्निकुसितकुसीदानामुदात्तः" ४।१।३७ इत्यनेनाग्निशब्दान्ङीपि कृत ऐकारे चान्तादेशेऽग्नायीति भवति। "कत्र्तव्योऽत्र यत्नः" इति। यत्नः केन पुनः कत्र्तव्यः? यः "भस्याढे तद्धिते" (वा।७३१) इत्युपसंख्यानमिच्छति। न तु यश्चकारमनुक्तसमुच्चयार्थमुत्तरसूत्रे करोति। स ह्येवमाह--यत्रैवेष्यते तत्रैव चकारः पुवद्भावं समुचचिनोति, नान्यत्रेति। कः पुनरसौ यत्न इति? कश्चिदाह--"अपत्यग्रहणं ढस्य विशेषणं कत्र्तव्यम्()--योऽपत्येऽढे" इति। तेनायमर्थो भवति--ढस्य तद्धेते पुंवद्भावो भवत्यपत्यार्थप्रत्ययं वर्जयित्वा। न चाग्नेयः, स्थालोपाक इत्यपत्यार्थे ढप्रत्ययः, किन्तु सास्य देवतेत्यर्थे, अतोऽत्र भवत्येव पुंवद्भाव इति। अन्यस्त्वाह--"भस्याढे तद्धिते" (वा।७३१) इति व्यधिकरणे सप्तम्यौ। यश्चात्र नञ्? सोऽल्पार्थे वत्र्तते, यथा अल्पलवणा यवागूरलवणेत्युच्यते। तत्रायमर्थो भवति--भस्य तद्धिते पुंवद्भावो वक्तव्योऽल्ये ढप्रात्यय इति। तेनाग्नेयः, स्थालीपाक इत्यत्र पुंवद्भावो भवति। श्यैनेय, रोहिणेय इत्यत्र तु न भवतीति। "ठक्छसोश्च" इत्यादि। अथ ठग्ग्रहणं किमर्थम्(), यावता ठस्येकादेशे कृते

"भस्याढे तद्धिते" (वा।७३१) इत्यनेनैव सिद्धः। ठावस्थायामेव यथा स्यादित्येवमर्थम्()। किमेवं सति भवति? "इसुसुक्तान्तात्? कः ७।३।५१ इति कः सिद्धो भवति; अन्यथा हि यदीकादेशे कृते पुंवद्भावः स्यात्? ततो यथा माथितिक इत्यत्रेकादेशो न भवति, तथा भावत्का इत्यत्रापि न स्यात्()। "भावत्काः, भवदीयाः" इति। "भवतष्ठक्छसौ" ४।२।११४ इति ठक्()छसौ॥

बाल-मनोरमा

तसिलादिष्वाकृत्वसुचः ८२६, ६।३।३४

तसिलादिष्वाकृत्वसुचः। "स्त्रियाः पुंव"दित्यनुवर्तते। "आ कृत्वसुच" इत्याङ् अभिविध्यर्थकः, तमभिव्याप्येत्यर्थः। तदाह--तसिलादिषु कृत्वसुजन्तेष्विति। "पञ्चम्यास्तसि"लित्यारभ्य "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसु"जित्येतत्पर्यन्तसूत्रविहितेष्वित्यर्थः। उत्तरपदपरकत्वाऽभावात्स्त्रियाः पुंवदित्यप्राप्तौ वचनमिदम्। ननु तिल्थ्यन्शसां कृत्वसुचः परत्रैव पाठात्तसिलादिष्वनन्तर्भावात्तेषु परेषु "वकृतिः" "अजथ्या" "बहुशः" इत्यत्र पुंवत्त्वं न स्यादित्याव्याप्तिः। "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इति देश्यस्य, "षष्ठ()आ रूप्य चे"ति रूप्यस्य च तसिलादिष्वन्तर्भावात्तयोः परतः "पट्वीदेश्ये"त्यत्र च "शुभ्रारूप्ये"त्यत्र च पुवत्त्वं स्यादित्यतिव्याप्तिरित्यत आह--परिगणनमिति। अव्याप्त्यतिव्याप्तीति। इष्टस्थले अप्रवृत्तिः--अव्याप्तिः। अनिष्टस्थले प्रवृत्तिः--अतिव्याप्तिः। परिगणनप्रकारमाह--त्रतसावित्यादिना। बह्वीषु बहुत्रेति। बह्वीष्वित्यर्थे बह्वीशब्दात् "सप्तम्यास्त्र" लिति त्रलि पुंवत्त्वे ङीषो निवृत्तौ बहुत्रेति रूपमित्यर्थः। बहुत इति। "पञ्चम्यास्तसि"लिति बह्वीशब्दात्तसिल्, पुवत्वान्ङीष#ओ निवृत्तिरिति भावः। दर्शनीयतरेति। अनयोरियमतिशयेन दर्शनीयेत्यर्थे दर्शनीययाशब्दात् "द्विवचनविभज्योपपदे तर"विति तरप्। पुंवत्त्वे टापो निवृत्तिरिति भावः। दर्शनीयतमिति। आसामियमतिशयेन दर्शनीयेत्यर्थे दर्शनीयाशब्दात् "अतिळायने तमविष्ठनौ" इति तमप्। पुंवत्त्वे टापो निवृत्तिरिति भावः। ननु पट्वीशब्दात्तरपि तमपि च पट्वीतरा पट्वीतमेत्यत्रापि पुंवत्त्वे ङीषो निवृत्तौ पटुतरा पटुतमेति स्यादित्यत आह--घरूपेति। तथा च ह्रस्वेन पुंवत्त्वे बाधिते सति ङीषो निवृत्त्यभावे तस्य ह्रस्वे सति पट्वितरा पट्वितमेति रूपमित्यर्थः। पटुचरीति। पट्वीशब्दात् "भूतपूर्वे चर"डिति पुंवत्त्वे ङीषो निवृत्तिरिति भावः। पूर्वं पट्वीत्यर्थः। पटुजातीयेति। पट्वीशब्दात् "प्रकारवचने जातीय"रिति पुंवत्त्वे ङीषो निवृत्तिरिति भावः। पटुसदृशीत्यर्थः। दर्शनीयकल्पेति। "ईषदसमाप्तौ" इति दर्शनीयाशब्दात्कल्पप्। पुंवत्त्वे ङीषो निवृत्तिरिति भावः। प्रायेण दर्शनीयेत्यर्थः। दर्शनीयदेशीयेति। "ईषदसमाप्तौ" इति दर्शनीयशब्दाद्देशीयर्। पुंवत्त्वे टापो निवृत्तिरिति भावः। प्रशस्ततत्वेन द्रष्टुं योरयेत्यर्थः। दर्शनीयपासेति। दर्शनीयाशपब्दाद्याप्ये पाशप्। पुंवत्त्वे टापो निवृत्तिरिति भावः। कुत्सिततत्वेन द्रष्टुमयोग्येत्यर्थः। बहुथेति। बह्वीशब्दात्प्रकारवचने थाल्। पुंवत्त्वे ङीषो निवृत्तिरिति भावः। बहुप्रकारेत्यर्थः। वृकतिरिति। "प्रशंसाया"मित्यनुवृत्तौ "बृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसी"ति वृकीशब्दाज्जातिलक्षणङीषन्तात्तिल्। पुंवत्त्वे ङीषो निवृत्तिरिति भावः। अजथ्येति। "तस्मै हित"मित्यधिकारे "अजाविभ्यां थ्य"न्नित्यजाशब्दात्थ्यन्। पुंवत्त्वे टापो निवृत्तिरिति भावः। "वृकतिरजथ्या" इत्यत्र "जातेश्चे"ति पुंवत्त्वनिषेधो न, परिगणनसामथ्र्यात्।

शसीति। शसि परे बह्वर्थकस्य अल्पार्थकस्य पुंवत्त्वं वक्तव्यमित्यर्थः। "त्रतसा"वित्यादिपरिगणितेष्वनन्तर्भावाद्वचनमिदम्। बह्वीभ्य इति। "बह्वीभ्यो देहीत्यर्थे "बह्वल्पार्थाच्छस्कारकादन्यतरस्या"मिति बह्वीशब्दाच्छस्। पुंवत्त्वे ङीषो निवृत्तिरित भावः। संप्रदानकारकत्वस्फोरणाय "देही"ति शब्दः। अल्पश इति। अल्पाभ्यो देहीत्यर्थः। पुंवत्त्वे टापो निवृत्तिरिति भावः।

त्वतलोरिति। त्वप्रत्यये तल्प्रत्यये च परे गुणोपसर्जनद्रव्यवाचिनः पुंवत्त्वं वक्तव्यमित्यर्थः। कत्रीत्वमिति। कत्रीशब्दस्य क्रियानिमित्तत्वान्न गुणवचनत्वमिति भावः। "आ कडारा"दिति सूत्रभाष्ये

समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसङ्ख्यासंज्ञाशब्दभिन्नमर्थवच्छब्दरूपं गुणवचनसंज्ञकं भवतीति स्थितम्। प्रकृते च गुणवचनशब्देन एतदेव विवक्षितम्। "वोतो गुणवचना"दिति सूत्रभाष्यस्थं "सत्त्वे निविशतेऽपैती"त्यादि गुणलक्षणं तु नात्र प्रवर्तते। अत एव "एक तद्धिते चे"ति सूत्रभाष्ये एकस्या भाव एकत्वमित्यत्र एकशब्दस्य गुणवचनत्वाऽभावात् "त्वतलोर्गुणवचनस्ये"त्यप्राप्तं पुंवत्त्वमत्र विधीयत इत्युक्तं सङ्गच्छते। "सखीत्व"मित्यादि तु असाध्वेवेति शब्देन्दुशेखरे विस्तरः। ननु कृतोऽर्थः=कृत्यं यया सा कृतार्थ, तस्या भावः कृतार्थतेत्यत्र कथं पुंवत्त्वम्। कृतार्थशब्दस्य समासत्वेन उक्तगुणवचनत्वाऽभावादित्यत आह--शरद इति। "दृढभक्ति"रित्यत्रानुपदोक्तरीत्या कृतोऽर्थो येन तत्कृतार्थमिति सामान्याभिप्रायं कृतार्थशब्दं प्रथमतो व्युत्पाद्य तस्मादविवक्षितलिङ्गात्तल्प्रत्ययो व्युत्पाद्य इति भावः।

भस्याऽढे इति। ढभिन्ने तद्धिते परे स्त्रियाः पुंवत्त्वे वक्तव्यमित्यर्थः। परिगणितेष्वनन्तर्भावाद्वचनम्। हास्तिकमिति। "तस्य समूहः" इत्यधिकारे "अचित्तहस्तिधेन"रिति ठक्। "ठस्येकः"। पुंवत्त्वे सति नान्तलक्षणङीपो निवृत्तिः। "नस्तद्धिते" इति टिलोप इति भावः। नच पुंवत्त्वाऽभावेऽपि "यस्येति चे"ति ईकारलोपे टिलोपे च "हास्तिक"मिति सिद्धमिति वाच्यं, "यस्ये"ति लोपस्याभीयत्वेनासिद्धतया स्थानिवत्त्वेन च तद्धितपरकत्वाऽभावेन टिलोपाऽनापत्तेः। "ठक्छसोश्चे"ति पुंवत्त्वादेव सिद्धिस्त्वनाशङ्क्या ,-छसः साहचर्येण "भवतष्ठक्छसौ" इति ठक एव तत्र ग्रहणात्। रौहिणेय इति। "वर्णादनुदात्ता"दिति रोहितशब्दान्ङीप्, तकारस्य नकारश्च। रोहिण्या अपत्यमित्यर्थे "स्त्रीभ्यो ढक्"। एयादेशः। "भस्ये"ति पुंवत्त्वे ङीब्नकारयोः निवृत्तिः स्यादिति भावः। गृह्णत इति। व्याख्यानादिति भावः। अग्नायीति। अग्नेः स्त्री अग्नायी। "वृषाकप्यग्नी"ति ङीष्। अग्नेरिकारस्यैकारादेशः, अग्नायी देवताऽस्येत्यर्थेऽग्नेर्ढगिति ढक्, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्। ततो ढस्य एयादेशः। पुंवत्त्वे सति ङीबैत्वनिवृत्तौ अग्नि-एय इति स्थिते "यस्येति च" इति इकारलोपे आदिवृद्धौ आग्नेय इति रूपम्। पुंवत्त्वनिषेधे तु "आग्नायेय" इति स्यादिति भावः। वस्तुतस्तु अग्नित्वं पुंसि प्रवृत्तिनिमित्तं, स्त्रियां तु अग्निसंबन्ध इति प्रवृत्तिनिमित्तभेदादेवात्र न पुंवत्त्वमिति बोध्यम्। सपत्नीशब्दस्त्रिधेति "व्युत्पादनभेदा"दिति शेषः। शत्रुपर्यायादिति। "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इति कोशादिति भावः। अयं भाषितपुंस्कः। विवाहनिबन्धनमिति। विवाहजनितसंस्कारविशेषनिमित्तकमित्यर्थः। "पतित्वं सप्तमे पदे" इत्यादिस्मरणादिति भावः। "आश्रित्ये"त्यनन्तरं "प्रवृत्त" इति शेषः। समानः पतिर्यस्या इति बहुव्रीहिः। "नित्यं सपत्न्यादिषु" इति निपातनात्सभावः, ङीप् नत्वं च। नित्यस्त्रीलिङ्ग इति। अन्यपदार्थस्य स्त्रीत्वे सत्येव विवाहनिबन्धनपतिशब्दस्य सभावादिविधानादिति भावः। "पतिर्नाम घवः" इति कोशादिति भावः। आद्ययोरिति। शत्रुपर्यायं सपत्नशब्दं विवाहनिबन्धनं पतिशब्दं चाश्रित्य प्रवृत्तयोः सपत्नीशब्दयोरित्यर्थः। सापत्न इति। सपत्न्या अपत्यमित्यर्थे "तस्यापत्य"मित्यणं बाधित्वा "स्त्रीभ्यो ढ"गिति ढकि प्राप्ते "शिवादिभ्योऽ"णित्यपि आद्यस्य सप्तनीशब्दस्य भाषितपुंस्कतया पुंवत्त्वे ङीनो निवृत्तौ "सापत्न" इति रूपम्। न तु नकारस्यापि निवृत्तिः, शत्रुपर्यायसपत्नशब्दस्य अव्युत्पन्नप्रातिपदिकतया तत्र नकारस्य स्त्रीत्वनिमित्तकत्वाऽभावात्, द्वितीयस्य तु सपत्नशब्दस्य ङीब्नत्वाभ्यामुत्पन्नस्य शिवाद्यणि कृते भाषितपुंस्कत्वाऽभावान्न पुंवत्त्वं, किंतु ङीपो "यस्येति चे"ति लोपे "सापत्न" इति रूपम्। सति तु पुंवत्त्वे ङीब्नकारयोर्निवृत्तौ "सापत" इति स्यात्। तृतीयात्त्विति। स्वामिपर्यायं पतिशब्दमाश्रित्य प्रवृत्तात्सपत्नीशब्दात्पत्युत्तरपदलक्षणे ण्य एवेत्यन्वयः। सपत्न्या अपत्यमित्यर्थे "तस्यापत्य"मित्यणं बाधित्वा "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इति ण्य एवेत्यन्वयः। ननु सप्तनीशब्दो न पत्युत्तरपद इत्यत आह--लिङ्गविशिष्टपरिभाषयेति। एवशब्दस्य व्यावर्त्यमाह--न त्वणिति। ननु ण्यप्रत्ययस्यापि शिवाद्यण् अपवाद इत्यत आह--शिवादौ रूढयोरेवेति। सपत्नशब्दः शत्रौ केवलरूढः। विवाहनिबन्धनं पतिशब्दमाश्रित्य प्रवृत्तस्तु योगरूढः, विवाहकर्तरि पाति रक्षतीति योगस्यापि सत्त्वात्। स्वामिपर्यायं तु पतिशब्दमाश्रित्य प्रवृत्तः केवलयोगिकः। शिवादौ

रूढयोरेव ग्रहणं, न तु केवलयौगिकस्य , योगाद्रूढेर्बलवत्त्वादिति भावः। ततः किमित्यत आह--सापत्य इति। स्वामिपर्यायपतिशब्दघटितसप्तनीशब्दस्य भाषितपुंस्कत्वात्पुंवत्त्वे सति ङीब्नत्वयोर्निवृत्तौ "यस्येति चे"तीरकारलोपः। सापत्य इति रूपमित्यर्थः।

ठक्छसोश्चेति। वार्तिकमेतत्। एतयोः परतः पुंवत्त्वं वक्तव्य"मिति शेषः। अभत्वादप्राप्तौ वचनम्। भावत्काः भवदीया इति। "तस्येद"मित्यधिकारे "भवतष्ठक्छसौ" इति भवतीशब्दाट्ठक्छसौ, लिङ्गविशिष्टस्यापि ग्रहणात्। तत्र ठकि इकादेशात्प्राक् ठावस्थायामेव पुंवत्त्वे इकादेशं बाधित्वा "इसुसुक्तान्ता"दिति कादेशे "भावत्क" इति रूपसिद्धौ किं ठग्ग्रहणेनेति वाच्यम्, इकादेशे कृते हि मथधितं पण्यमस्य माथितिक इत्यत्रेव अल्विधितया स्थानिवत्त्वाऽभावेन संनिपातपरिभाषया वा कादेशाऽनापत्तेः। अतष्ठग्ग्रहणम्। भवतीशब्दाच्छसि तु "सिति चे"ति पदत्वेन भत्वस्य बाधात् "भस्याऽढे तद्धिते" इति पुंवत्त्वे कृते इकस्य स्थानित्त्वेन ठक्त्वात् "इसुसुक्तान्ता"दिति कादेशे "भावत्क" इति रूपसिद्धौ किं ठग्ग्रहणेनेति वाच्यम्, इकादेशे कृते हि मथितं पण्यमस्य माथितिक इत्यत्रेव अल्विधितया स्थानिवत्त्वाऽभावेन संनिपातपरिभाषया वा कादेशाऽनापत्तेः। अतष्ठग्ग्रहणम्। भवतीशब्दाच्छसि तु "सिति चे"ति पदत्वेन भत्वस्य बाधात् "भस्याऽढे" इत्यप्राप्ते पुंवत्त्वेऽनेन पुंवत्त्वम्। एतदिति। "ठक्छसोश्चे"ति वार्तिकमित्यर्थः। एक तद्धिते चेति। एकशब्दस्य तद्धिते उत्तरपदे च परे ह्रस्वः स्यादिति तदर्थः। एकस्या भावः एकत्वम्, एकता। एकस्याः शाटी एकशाटी। वृत्तिमात्र इति। कृत्तद्धितादयो वृत्तयः। मात्रशब्दः कात्स्न्र्ये। "स्त्रियाः पुंव"दित्यादिसूत्रगतनिमित्ताऽभावेऽपि भवति। बाष्यकारेष्ठ()एति। भाष्यकारवचनेनेति यावत्। इदंच "दक्षिणात्तराभ्या"मिति सूत्रे भाष्ये स्पष्टम्। गतार्थत्वादिति। निवृत्तप्रयोजनकत्वादिति भावः। एतत्प्रयोजनस्य "सर्वनाम्नः" इति वचनेनैव सिद्धत्वादिति यावत्। "सर्वनाम्नो वृत्तिमात्रे" इत्यस्य तद्दितवृत्तौ उदाहरति--सर्वमय इति। सर्वस्या आगत इत्यर्थः। "तत आगतः" इत्यधिकारे "मयट् चे"ति मयट्। "सर्वनाम्नः" इति पुंवत्त्वम्। चिन्मयमित्यादिवदत्यन्तस्वार्थिको वा मयट्। अथ सनाद्यन्तधातुवृत्तावुदाहरति--सर्वकाम्यतीति। सर्वामात्मन इच्छतीत्यर्थे "काम्यच्चे"ति सर्वाशब्दात्काम्यच्। "सर्वनाम्नः" इति पुंवत्त्वम्। "सनाद्यन्ताः" इति धातुत्वाल्लडादि। मयट्काम्यचोस्त्रतसावित्यादिपरिगणितेष्वनन्तर्भावात्तसिलादिष्विति पुंवत्त्वमत्र न स्यादिति भावः। तद्धितवृत्तौ उदाहरणान्तरमाह--सर्वकभार्य इति। समासवृत्तिरेवैषा। सर्वप्रिय इति। सर्वा प्रिया यस्येति विग्रहः। समासवृत्तिरियम्। प्रियादिपर्युदासो "रूपवतीप्रिय" इत्यादौ उपयुज्यत इति भावः। वस्तुतस्तु एकशब्दे अकच्प्रत्यये "प्रत्ययस्था"दितीत्त्वे एकिका, तस्या भावः--एकिकत्वम्। अत्र पुंवत्त्वे टाप इत्वस्य च निवृत्तौ एककत्वमिति स्यात्। इकारो न श्रूयेत। इत्वनिमित्तस्य टापो निवृत्तत्वात्, पाचिकाशब्दाज्जातीयरि पाचकजातीयेतिवत्। ह्रस्वे सति स्थानिवत्त्वेन टापः सत्त्वात्प्राप्तजीविकवदित्वश्रवममिति फलभेदसत्त्वात् "एक तद्धिते चे"ति गतार्थमित्याहुः। ननु तदितरा तदन्येत्यादावुत्तरपदस्य सर्वनामत्वात्पुंवत्त्वं स्यादित्यत आह--पूर्वस्यैवेदमिति। वृत्तिप्रविष्टाऽनेकभागानां मध्ये किञ्चिदपेक्षया पूर्वस्यैवेदं सर्वनाम्नः पुंवत्त्वविधानमित्यर्थः। भस्त्रैषाजाज्ञाद्वेति लिङ्गादिति। "भस्त्रैषे"ति सूत्रेण एषा द्वा इत्येतयोः साकच्कयोरपि कात्पूर्वस्य इत्त्वविधानमित्यर्थः। भस्त्रैषाजाज्ञाद्वेति लिङ्गादिति। "भस्त्रैषे"ति सूत्रेण एषा द्वा इत्येतयोः साकच्कयोरपि कात्पूर्वस्य इत्त्वविधानम्, अन्यथा निर्विषयं स्यात्। तद्धितवृत्तौ तयोः सर्वनामतया पुंवत्त्वनियमादिति भावः। अकचि तद्धितवृत्तावुद#आहरति--सर्विकेति। सर्वाशब्दात्साकच्काट्टापि "प्रत्ययस्थादि"तीत्त्वे पुंवत्त्वे टाबित्त्वयोर्निवृत्तिः स्यादिति भावः। एकशेषवृत्तावुदाहरति-सर्वा इति।

टाबन्तस्य प्रथमाबहुवचनमिदम्। पुंवत्त्वे टापो निवृत्तिः स्यादिति भावः। कुक्कुट()आदीनामण्डादिष्विति। "पुंवत्त्वं वक्तव्य"मिति शेषः। असमानाधिकरणार्थमिदमिति सूचयन् षष्ठीसमासमुदाहरति--कुक्कुटाण्डमिति। पुंवत्त्वेन जातिलक्षणङीषो निवृत्तिरिति भावः। एवमग्रेऽपि। मृगक्षीरमिति। मृग्याः क्षीरमिति विग्रहः। काकशाव इति। काक्याः शाव इति विग्रहः। "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः।

तत्त्व-बोधिनी

तसिलादिष्वाकृत्वसुचः ७२४, ६।३।३४

तसिलादिषु कृत्वसुजन्तेष्विति। "पञ्चम्यास्तसिलि"त्यारभ्य "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजि"त्येतत्पर्यन्तेष्वित्यर्थः। अव्याप्त्यतिव्याप्तिवारणायेति। वृकतिरजथ्या बहुश इत्यत्राऽव्याप्तिः, तसिलादिकृत्वसुच्पर्यन्तेषु तिल्थ्यनूशसां पाठाऽभावात्। पट्वीदेश्या शुभ्रारूप्य इत्यत्राऽतिव्याप्तिः, "ईषदसमाप्तौ"इति देश्यस्य, षष्ठ()आ रूप्य चे"ति रूप्यस्य च तत्र पाठात्, अतस्तन्निवारणाय परिगणनमित्यर्थः। परिगणितान् त्रतसादीन् क्रमेणोदाहरति--बह्वीष्विति। यद्यपि बह्वादिषु ङीषो वैकल्पिकत्वात्तदभावे बहुत्रेत्यादि सिध्यति, तथापि पक्षे बह्वीत्रेत्याद्यनिष्टवारणायेदम्। ततस्तत्रेति प्राचोक्तमुदाहरणमत्रोपेक्षितम्। "सर्वनाम्नो वृत्तिमात्रे"इत्यनेन गतार्थत्वादिति मनोरमायां स्थितम्। पठ्वितरेति। प्राचा तु पटुतरत्युदाह्मतं तत्प्रामादिकमिति भावः। पटुचरीति। "भूतपूर्वे चरट"। पटुजातीयेति। "प्रकारवचने जातीयर्"। दर्शनीयरूपेत्यादि। प्रशंसायां रूपप्। "याप्ये पाशप्"। बहुथेति। "प्राकारवचने थाल्"। तत्र हि "किसर्वनामबहुभ्यः"इत्यधिकृतम्। वृकतिरिति। "वृकज्येष्ठाभ्यां तिल्()तातिलौ च छन्दसी"ति तिल्। अजथ्येति। "अजाविभ्या#ं थ्यन्"।

शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः। शसीति। "बह्वल्पार्थादि"ति यः शस् स तसिलादिषु ज्ञातव्य इत्यर्थः। त्रतसादिषु परिगणनं कर्तव्यमिति यावत्।

त्वतलोर्गुणवचनस्य। त्वतलोर्गुणवचनस्येति। "गुणस्ये"ति वक्तव्ये वचनग्रहणं प्रसिद्धगुणपरिग्रहार्थम्। अतस्तथैवोदाहरति---शुक्लत्वं शूक्लतेति। नन्विह जातिसंज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति यत्प्राचीनैरुक्तं, तत्स्वीकर्तव्यम्। अन्यथा "निरीक्ष्य मेने शरदः कृतार्थता", "सा मुमोच रतिदुःखशीलता"मित्यादिषु पुंवद्भावाऽप्रवृत्त्या दीर्घश्रवणं स्यादित्यताअह--सामान्ये नपुंसकमिति। एवं च "नेष्टं पुरो द्वारवतीत्वमासीत्ित्यादिप्रयोगो निर्बाध इति भावः।

भस्याऽढे तद्धिते। हास्तिकमिति। "अचितथस्तिधेनो"रिति ठक्। न चात्र यस्येति लोपेन निर्वाहः, तस्य "असिद्धवदत्रे"त्यसिद्धत्वात्, "अचः परस्मि"न्निति स्थानिवद्भावाच्च "नस्तद्धिते"इति टिलोपाऽनापत्तेः। न च "ठक्छसोश्चे"त्यनेनैववात्र पंवद्भावसिद्धिः शङ्क्या, छसा साहचर्यात् "भवतष्ठक्छसौ"इत्यस्यैव ठकस्तत्र ग्रहणात्। नापि "जातेश्चे"ति पुंवद्भावनिषेधः शङ्क्यः, अस्मादेव भाष्योदाहरणात् "सौत्रस्यैव निषेधो, न त्वौपसङ्ख्यानिकस्ये"ति ज्ञापनात्। रौहिणेय इति। रोहितशब्दात् "वर्णादनुदात्तादि"ति ङीन्बकारौ। सति तु पुंवद्भावे तयोर्निवृत्तौ "रौहितेय"इति स्यादिति भावः। गृह्नत इति। व्याख्यानादितिशेषः। अग्नायीति। अग्नीशब्दात् "वृषाकप्यग्नी"ति स्त्रियां ङीबैकारादेशौ। आग्नेय इति। पुंवद्भावाऽभावे तु "आग्नायेय"इति स्यादिति भावः। शत्रुपर्यायादिति। अत्र च "व्यन् सपत्ने"इति निर्देशो लिङ्गम्। "रिपौ वैरिसपत्नाऽरिद्विषद्द्वेषणदुह्मदः"इत्यमरः। विवाहनिबन्धनमिति। तज्जन्यसंस्कारविशेषविशिष्टे रूढमित्यर्थः। सापत्न इति। अभाषितपुंस्कत्वाद्द्वितीयस्य पुंवद्भावौ न भवति। सति च पुंवद्भावे नकारादेशाऽभावात्सापत इति स्यात्। आद्यस्य तु पुंवद्भावेऽपि "सारत्न"इत्येव भवतीति भावः। रूढयोरेवेति। आद्यः शब्दो रूढः, द्वितीयस्तु योगरूढः, तेन "समानः पतिर्यस्याः"इति विग्रहो न विरुध्यत इति दिक्। ठक्छसोश्च। अभत्वार्थ आरम्भः।भावत्का इति। "भवतष्ठक्()छसौ"। ठावस्थायामेव पुंवद्भावे कृते "ठस्येकः" इति इकादेशं बाधित्वा तान्त लक्षणः कादेशः। नन्विकादेशे भत्वात् "भस्याऽढे"इति पुंवद्भावे सति कादेशप्रवृत्त्या रूपसिद्धौकिमत्र ठग्ग्रहणेन()। मैवम्। मथितं पण्यमस्य माथितिक इत्यत्रेवाऽल्विधित्वेन स्थानिवद्भाववाऽयोदात्सन्निपातपरिभाषया वा कादेशप्रवृत्तेर्दुर्लभत्वात्। अतः "ठक्छसो"रिति ठग्ग्रहणं कर्तव्यमेव। भवदीया इति। छसः सित्करणात् "सिति चे"ति पदसंज्ञा। तेनाऽत्र जशत्वं भवति। एवं च पदसंज्ञया

भसंज्ञाया बाधात् "भत्याऽढे" इत्यस्याऽप्रवृत्त्या वार्तिके छस्()ग्रहणं कृतम्। भाष्यकारेष्ट()एति। अनेन सूत्रवार्तिकयोरुक्तिसंभवो ध्वनितः। उत्तरं दृष्ट्वा पूर्वस्याऽप्रवृत्तत्वात्। निष्कर्षे तु व्यर्थमेवेत्याह---गतार्थत्वादिति। इष्टेरुदाहरणान्यह---सर्वमय इत्यादिना। "तत आगतः"इत्यर्थे "मयट्चे"इति मयट्। तसिलादिषु मयडादेरपरिगणितत्वात्तेनेदं न सिध्यतीति भावः। सर्वकभार्य इति। न च "स्त्रियाः पुंव"दिति सूत्रेण गतार्थता, "न कोपधायाः"इति निषेधात्। न चाऽस्यापि तेन निषेधः शङ्क्यः, "स्त्रियाः पुंवदि"त्यादिप्रकरणोक्तस्यैव तेन निषेधात्। अस्या इष्टेस्तु तस्मिन्()प्रकरणेऽसमाविष्टत्वात्। न च वृत्त्यन्तर्गतस्य सर्वनामत्वाऽभावात्पुंवद्भावो न भवेदिति वाच्यं, वचनारम्भसामथ्र्यान्मात्रग्रहणाद्वा क्वचित्सर्वनामत्वेन दृष्टानां संप्रति संज्ञाऽभावेऽपि पुंवद्भावाभ्युपगमात्। अतएवोत्तरपूर्वायै इत्यत्र संज्ञाऽभावेऽपि पुंवद्भावः। सर्वा नाम काचित्तस्याः पुत्रः सर्वापुत्र इत्यत्र तु नाऽतिप्रसङ्गः,संज्ञोपसर्जनयोः सर्वादिगणबहुर्भूतत्वेन वृत्तेः पूर्वमप्यसर्वनामत्वात्। सर्वप्रिय इति। "स्त्रियाः पुंव"दित्यत्र प्रियादिपर्युदासो "रूपवतीप्रिय" इत्यादाबुपयुज्यत इति भावः। तदितरा तदन्येत्यादावुत्तरपदेऽतिप्रसङ्गमाशङ्क्याह---पूर्वस्यैवेति। वृत्तिघटकाऽनेकभागमध्ये किंचिदपेक्षया पूर्वस्येत्यर्थः। लिङ्गादिति। अन्यथा एषा द्वा एतयोः कात्पूर्वस्य आपि विधीयतमानमित्वं निर्विषयं स्यादिति भावः। "दक्षिणपूर्वा दि"गिति भाष्योदाहरणमपीह लिङ्गमिति बोध्यम्। यत्तु प्राचा "सर्वनाम्नः समासे पूर्वं पुंव"दित्युक्तम्, यच्च व्याचख्युः--"वार्तिकार्थमनुवदति---सर्वनाम्न इत्यादिना"इति। तत्प्रामादिकम्। "वृत्तामात्रे"इति पाठस्यैव भाष्यारूढत्वात्। "सर्वमयः" "सर्वकाम्यती"त्युक्तोदाहरणाऽसिद्धिप्रसङ्गाच्च। "वार्तिकार्थ"मित्याद्यपि प्रामादिकमेव। वार्तिकग्रन्थे एतदभावात्। न च "सर्वनाम्नो वृत्तिमात्रे"इत्येतद्वार्तिकमेव, न तु भाष्यकारेष्टिरिति शङ्क्यं ---"ठक्()छसो "रिति वार्तिकस्य निरालम्बनत्वापत्तेः। भाष्यकारेष्टित्वे तु वार्तिकस्योक्तिसंभव उक्त एव प्राक्।

---

सूत्रम्

काशिका-वृत्तिः

क्यङ्मानिनोश् च ६।३।३६

क्यङि परतो मानिनि च स्त्िर्या भाषितपुंस्कादनूङ् पुंवत् भवति। एनी एतायते। श्येनीश्येतायते। मानिनि दर्शनीयमानी अयमस्याः। दर्शनीयमानिनी इयमस्याः। मानिनो ग्रहणम् अस्त्र्यर्थम् असमानाधिकरणार्थं च। इह तु दर्शनीयामात्मानं मन्यते दर्शनीयमानिनी इति पूर्वेण एव सिद्धम्।

न्यासः

क्यङ्मानिनोश्च। , ६।३।३५

"एतायते, श्येतायते" इति। एतश्येतशब्दाभ्यां "वर्णादनुदात्तात्? तोपधात्? तो नः" ४।१।३९ ["एत()ओतशब्दाभ्याम्()"--मुद्रितः पाठः] इत्यनेन ङीप्(), तकारस्य नकारः। एनीवाचरति, श्येनीवाचरति--"कर्त्तुः क्यङ्? सलोपश्च" ३।१।११ इति क्यङ्(), "अकृत्सार्वधातुकयोः७।४।२५ इति दीर्घत्वम्()। "अयमस्यां दर्शनीयमानी" ["दर्शनीयमानी अयमस्याः"--काशिका] इति। दर्शनीयामिमां मन्यतेऽयमिति। "मनः" ३।२।८२ इति णिनिः। "दर्शनीयमाननीयमस्याः" इति। दर्शनीयामिमां मन्यत इति पूर्ववण्णिनिः "ऋन्नेभ्यो ङीप्()। ४।१।५ इति ङीप्()। किं पुनः कारणं स्त्रियां समानाधिकरण इत्यनुवत्र्तमानेऽस्त्रियामसमानाधिकरणे च मानिन्युत्तरपदे पुंवद्भाव उदाह्रियत इत्याह--"मानिनो ग्रहणम्()" इत्यादि। कथमेतज्ज्ञायते? इत्याह--"इह तु" इत्यादि। यद्युत्तरपदं स्त्रियां वर्तते समानाधिकरणं च भवति--दर्शनीयामात्मानं मन्यते दर्शनीयमानिनीत्येवमादौ। तत्र यस्मात्? "स्त्रियां पुंवत्()" ६।३।३३ इत्यनेनैव सिद्धम्(), अतो मानिनो गरहणमस्त्र्यर्थम्()। असमानाधिकरणाच्चेत्येतदवसीयते; अन्यथा हि तदनर्थकं

स्यात्()॥

बाल-मनोरमा

क्यङ्मानिनोश्च ८२७, ६।३।३५

क्यङ्मानिनोश्च। एतयोरिति। क्यङि मानिनि च उत्तरपदे परत इत्यर्थः। एनोवेति। एता-चित्रवर्णा। "चित्रं किर्मीरकल्माषशबलैताश्च कर्बु"रे" इत्यमरः। एतशब्दः ()ओतपर्याय इति याज्ञिकाः। "वर्णादनुदात्ते"ति ङीब्नकारश्च। "उपमानादाचारे" इत्यनुवर्तमाने "कर्तुः क्यङ् सलोपश्चे"ति एनीशब्दात्क्यङि पुंवत्त्वे ङीब्नत्वयोर्निवृत्तौ, "अकृत्सार्वधातुकयो"रिति दीर्घे "एतायते" इति रूपमिति भावः। श्येनीवेति। श्येतशब्दः ()ओतपर्यायः। "शुक्लशुभ्रसुचि()ओतविशदश्येतपाण्डुराः" इत्यमरः। क्यङादि पूर्ववत्। ननु "स्त्रियाः पुंव"दित्येव मानिनीत्यनुत्तरपदे परतः पुंवत्त्वसिद्धेर्मानिन्ग्रहणं किमर्थमित्याशङ्क्य मानिन्ग्रहणमसमानाधिकरणार्थमस्त्रीलिङ्गार्थं चेत्यभिप्रेत्य असमानाधिकरणे परे तावदुदाहरति--स्वभिन्नामिति। दर्शनीयमानिनीति। "दर्शनीया"मिति द्वितीयान्ते उपपदे "सुप्यजातौ णिनि"रित्यनुवृत्तौ "मन" इति ण्निप्रत्ययः। उपपदसमासः, सुब्लुक्। असमानाधिकरणेऽपि मानिन्शब्दे उत्तरपदे परे अनेन पुंवत्त्वे टापो निवृत्तौ "ऋन्नेभ्यः" इति ङीपि दर्शनीयमानिनीति रूपम्। या त्वात्मानमेव दर्शनीयां मन्यते तस्या दर्शनीयायाः "स्त्रियाः पुंव"दित्येव पुंवत्त्वं सिद्धमिति ध्वनयितुं--"स्वभिन्ना"मित्युक्तम्। एकस्या एवं दर्शनीयाया मनधात्वर्थं प्रति कर्मत्वकर्तृत्वसंभवेऽपबि वास्तवाऽभेदेन मानिनीशब्दसमानाधिकरण्यसत्त्वादिति भावः। अथाऽस्त्रीलिङ्गे उत्तरपदे उदाहरति--दर्शनीयामिति। स्त्रियामित्यनन्तरमात्मानमिति शेषः आत्मानं यो दर्शनीयां स्त्रियं मन्यते स दर्शनीयमानी चैत्र इत्यन्वयः। अत्र उत्तरपदवाच्यस्य मानिनो वस्तुतो दर्शनीयस्त्रीभेदेऽपि आरोपिततदभेदमादाय सामानाधिकरण्यं यद्यप्यस्ति, तथापि मानिन्शब्दस्य उत्तरपदस्य पुंलिङ्गत्वात्तस्मिन् परे पुंवत्त्वं न प्राप्तमित्यनेन तद्विधिरिति भावः।

तत्त्व-बोधिनी

क्यङ्मानिनोश्च ७२५, ६।३।३५

क्यङ्मा। एतयते इत्यादि। "कर्तुः क्यङ् सलोपश्च"।क्यङि पुंवद्भावे कृते एतश्येतयोः "अकृत्सार्वे"ति दीर्घः। मानिन्()ग्रहणमसमानाधिकरणार्थमस्त्र्यर्थं चेत्याशयेन यथाक्रममुदाहरति--स्वाभिन्नामित्यादिना। दर्शनीयमानिनीति। "मनः"इति णिनिः। नान्तत्वान्ङीप्। या त्वात्मानमेव दर्शनीयां मन्यते तत्र "स्त्रियाः पुंव"दित्येव सिद्धम्। एकस्या अपि ईप्सिततमत्वव्यापाराश्रयत्वविवक्षाभेदेन कर्मकर्तृत्वयोः सत्त्वेऽपि वास्तवाऽभेदेन सामानाधिकरण्याऽविधातादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

न कोपधायाः ६।३।३७

कोपधायाः स्त्रियाः पुंवद्भावो न भवति। पाचिकाभार्यः। कारिकाभार्यः। मद्रिकाभार्यः। वृजिकाभार्यः। मद्रिकाकल्पा। वृजिकाकल्पा। मद्रिकायते। वृजिकायते। मद्रिकामानिनी। वृजिकामानिनी। वेलिपिकायाः धर्म्यं वैलेपिकम्। कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम्। इह मा भूत्, पाकभार्यः, भेकभार्यः इति।

न्यासः

न कोपधायाः। , ६।३।३६

पुर्वेण प्रकारेण प्राप्तस्य पुंवद्भावस्यायं प्रतिषेधः। "पाचिकाभार्यः, कारिकाभार्यः" इति। पाचककारक शब्दभ्यां ण्वुलन्ताभ्यां टाप्()। "प्रत्ययस्थात्? कात्पूर्वस्यात इदाप्यसुपः" ७।३।४४ इतीत्त्वम्()। अत्र "स्त्रियाः पुंवत्()" ६।३।३३ इत्यादिना प्राप्तिः। "मद्रिकाभार्यः वृजिकाभार्यः" इति। मद्रेषु भवा, वृजिषु भवेति "मद्रवृज्योः कन्? ४।२।१३० इति कन्()। अत्रापि "स्त्रियाः पुंवत्? ६।३।३३ इत्यादिना प्राप्तिः। "मद्रिकाकल्पा; वृजिकाकल्पा" इति। अत्र "तसिलादिष्वाकृत्वसुचः" ६।३।३४ इत्यनेन प्राप्()तिः। "मद्रिकायते" इत्यादौ "क्यङ्मानिनोश्च" ६।३।३५ इति प्राप्तिः। "विलेपिकाया धर्म्यम्()" इति। "लिप उपदेहे" (धा।पा।१४३३) इत्यस्माण्ण्वुल्()। "वैलेपिकम्()" इति। "अण्? महिष्यदिभ्यः" ४।४।४८ इत्यण्()। अत्र "भस्याढे तद्धिते" (वा।७३१) इति वा प्राप्तिः। "कोपधप्रतिषेधे" इत्यादि। अस्मिन्? कोपधप्रतिषेधे तद्धितवुग्रहणं कत्र्तव्यम्()। तद्धितसम्बन्धी वुसम्बन्धी ककार उपधा यस्य तत्रैव प्रतिषेधो यथा स्यात्()। इह मा भूत्()--"पाकभार्यः" इति। पाकशब्दोऽयं "अर्भकपृथुकपाका वयसि" (द।उ।३।५०) इत्यनेन कन्प्रत्ययान्तो निपातितः। अत्रासति वुग्रहण इहापि प्रतिषेधः स्यात्()। यदि तद्धितवुग्रहणं क्रियते, तर्हि "पूर्वत्रासिद्धम्()" ८।२।१ इत्यत्र यद्वक्ष्यति--"शुष्कजङ्घ" इत्यत्र--"शुषः कः" (८।२।५१) इत्यस्यासिद्धत्वात्? "न कोपधयाः" ६।३।३६ इति प्रतिषेधो न प्राप्नोतीत्यसिद्धाधिकारस्य प्रयोजनम्()" इति तन्नोपपद्यते, असत्यपि "शुषः कः" इत्यस्यासिद्धत्वेनैवात्र "न कोपधायाः" ६।३।३६ इति प्रतिषेधेन भवितव्यम्(), न ह्रत्र तद्धितसम्बन्धो ककारः नापि वुसम्बन्धी? दर्शनभेदमाश्रित्य तथाऽभिधानाददोषः। इदं हि वार्तिककारमतमाश्रित्योक्तम्()। तत्? पुनः श्लोकवार्तिककारस्य सूत्रकारमतानुसारिणो दर्शनमाश्रित्य वक्ष्यति॥

बाल-मनोरमा

न कोपधायाः ८२८, ६।३।३६

न कोपधायाः। पाचिकाभार्य इति। पाचिका भार्या यस्येति विग्रहः। पचो ण्वुल्। अकादेशटाबित्त्वानि। पुंवत्त्वे टाबित्त्वयोर्निवृत्तिः स्यात्। रसिकेति। रसोऽस्या अस्तीति रसिका। "अत इनिठनौ" इति ठन्। "ठस्येकः"। टाप्। पुंवत्त्वनिषेधः। पुंवत्त्वे तु टापो निवृत्तिः स्यात्। मद्रिकायते इति। मद्राख्ये देशविशेषे भवा मद्रिका। "मद्रवृज्योः कन्"। टाप्। इत्त्वम्। मद्रिकेवाटचरतीत्यर्थः। "क्यङ्मानिनोश्चे"ति पुंवत्त्वं प्राप्तमिह निषिध्यते। मद्रिकामानिनीति। मद्रिकां मन्यत इत्यर्थे "मनश्चे"ति णिनिः। उपपदसमासः। इहापि "क्यङ्भानिनोश्चे"ति पुंवत्त्वं प्राप्तं निषिध्यते। उभयत्रापि पुंवत्त्वे टाबित्वर्योर्निवृत्तिः स्यात्। तद्धितवुग्रहणमिति। "न तद्धितवुकोपधायाः" इति सूत्रं पठनीयमिति यावत्। तद्धितसंबन्धी वुसंबन्धी च यः ककारस्तदुपधायाः स्त्रिया न पुंवत्त्वमिति फलति। मद्रिकायते इति।

तद्धितकोपधोदाहरण्। पचिकाभार्य इति तु वुसबन्धिकोपधोदाहरणम्। तद्धितबुग्रहणस्य प्रयोजनमाह--नेहेति। पाकेति। "अर्भकपृथुकपाका वयसी"त्युणादिषु कप्रत्ययान्तो निपातितः। अयं तद्धितस्य वुप्रत्ययस्य वा न ककार इति नात्र पुंवत्त्वनिषेध इति भावः।

तत्त्व-बोधिनी

न कोपधायाः ७२६, ६।३।३६

पाचिकाभार्य इति। पचतीति पाचिका। ण्वुल्। "युवो"रित्यकादेशे टापि "प्रत्ययस्था"दितीत्त्वम्। रसिकाभार्य इति। रसोऽस्त्यास्या इति रसिका। "अत इनिठनौ"इति ठन्। मद्रिकायत इति। "क्यङ्भानिनोश्चे"ति पुंवत्त्वप्राप्तिः। मुद्रेषु भवा मद्रिका। "मद्रवृज्योः कन्"। सति तु पुंवद्भावे इत्वं न श्रूयेतेति भावः।

तद्धितवुग्रहणमिति। द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं सम्बध्यते, तद्धितग्रहणं वुग्रहणं चेत्यर्थः। पाका भार्येति। "अर्भकपृथुकपाका वयसी"ति कप्रत्ययान्तोऽयमुणादिषु निपातितः। न चायं तद्धितस्य ककारो, नापि वोः। "वयसि प्रथम"

इति ङीपं बाधित्वाऽजादित्वाट्टाप्।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञापूरण्योश् च ६।३।३८

संज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति। दत्तभार्यः। गुप्ताभार्यः। दत्तापाशा। गुप्तापाशा। दत्तायते। गुप्तायते। दत्तामानिनी। गुप्तामानिनी। पुरण्याः पञ्चमीभार्यः। दशमीभार्यः। पञ्चमीपाशा। दशमीपाशा। पञ्चमीयते। दशमीयते। पञ्चमीमानिनी। दशमीमानिनी।

न्यासः

संज्ञापूरण्योश्च। , ६।३।३७

कथं पुनः संज्ञाशब्दस्य पुंवद्भवस्य प्राप्तिः, यावता भाषितपुंस्कस्य पुंवद्भाव उक्तः, न च यः संज्ञाशब्दः स्त्रियां वर्तते स भाषितपुंस्को भवति, एकद्रव्यनिवेशित्वात्? संज्ञाशब्दानाम्()? नैतदस्ति; न ह्ययं नियोग एकद्रव्यनिवेशित्वात संज्ञाशब्दानाम्()? नैतदस्ति; न ह्नं नियोग एकद्रव्यनिवेशिभिरेव संज्ञाशब्दैर्भवितव्यमिति। तथा हि--देवदत्तादिशब्दोऽनेकद्रव्यदानक्रियादिसम्बन्दान्नैकवस्तुसंज्ञाभूत एव लरोके प्रयुज्यमान उपलभ्यते, शास्त्रेष्वपि स्वादिशब्दः। या त्वेकद्रव्यनिवेशिनी संज्ञा तां प्रति नैवायं प्रतिषेधः क्रियत इत्यसारं चोद्यम्()। ननु भवन्तु संज्ञाशब्दा अनेकार्थवृत्तयः भाषितपुंस्कास्त्वेकस्यामाकृतौ, कथं तर्हि तेषां किञ्चित्? प्रवृत्तिनिमित्तमस्ति, यदृच्छाशब्दत्वात्()? एतदप्यसारम्(); यतस्तेषामपि केषांचित्? किञ्चित्? प्रवृत्तिनिमित्तमस्त्येव, सप्तपर्णादिशब्दवत्()। यत्राप्येतन्नास्ति, तत्रापि स्वरूपमेव प्रवृत्तिनिमित्तमुपादायाभिधेये वत्र्तन्ते। तत्राभिन्ने प्रवृत्तिनिमित्ते यैर्भाषितः पुमान्? ते भाषितपुंस्का इति किमत्रानुपपन्नम्()? "दत्ताभ्र्यः" इति। अत्र यासौ दानक्रियाकृतिस्तस्यामेव दत्ताशब्दो भाषितप#उ#ंस्कः। "गुप्ताभार्यः" इति। अत्रापि गुप्ताशब्दो गोपनक्रियाकृतौ स्वरूपे वा प्रवृत्तिनिमित्ते। उभावपि भाषितपुंस्कशब्दौ "दत्तायते गुप्तायते" इति। कथमेते प्रतिषेधस्योदाहरणे उपन्यस्ते, यावता सत्यपि पुंवद्भावे "अकृत्सार्वधातुकयोदीर्घः" (७।४।२५) इति दीर्घत्वेनोभयमप्येतत्? सिद्धम्()? एवं मन्यते "संज्ञापूर्वो विधिरनित्यः" (व्य।प।६४) इति, तत्र यदि पुंवद्भावप्रतिषेधो न स्यात्(), तदा दीर्घत्वाभावोऽनुमीयते। तस्मिन्? पक्षे दत्तयते गुप्तयत इत्यपि स्यादिति। "न कोपधासंज्ञापूरणीनाम्()" इत्येकस्मिन्नेव योगे कत्तव्ये योगविभागः "न कोपधायाः" ६।३।३६ इत्यस्य प्रतिषेधस्यानित्यत्वज्ञापनार्थः कृतः। तेन यदुक्तम्()--"कोपधप्रतिषेधे तद्धितवुग्रहणं कत्र्तव्यम्? (वा।७३३) इति, तन्न कत्र्तव्यं भवति॥

बाल-मनोरमा

संज्ञापूरण्योश्च ८२९, ६।३।३७

ननु दत्ताशब्दस्य संज्ञात्वेन एकद्रव्यनिवेशितया भाषितपुंस्कत्वाऽभावात् "स्त्रियाः पुंव"दित्यस्य प्रसक्तेरेवाऽभावा()त्क तन्निषेधेनेत्यत आह--दानक्रियानिमित्त इति। दत्तशब्दोऽयं डित्थादिशब्दवन्न, किंतु दानक्रियां पुरस्कृत्यैव स्त्रियां पुंसि च संज्ञाभूतः प्रवृत्तः, अतस्तस्य भाषिपुंस्कत्वात्पुंवत्त्वे प्राप्ते निषेधोऽयमित्यर्थः। पूरण्याः पुंवत्त्वनिषेधमुदाहरति--पञ्चमीभार्य इति। पञ्चमी भार्या यस्येति विग्रहः। अत्र "स्त्रियाः पुंव"दिति प्राप्तं निषिध्यते। पञ्चमीपाशेति। निन्दिता पञ्चमीत्यर्थः। "याप्ये पाशप्"। अत्र तसिलादिषु" इति प्राप्तं पुंवत्वं निषिध्यते।

तत्त्व-बोधिनी

संज्ञापूरण्योश्च ७२७, ६।३।३७

संज्ञापूरण्योश्च। यत्तु "दत्तायते"इति क्यङन्तमपि वृत्यादिषूदाहृतं, तत्तु विशेषाऽभावादिहोपेक्षितम्। पञ्चमीपाशेति। "याप्ये पाशव्"। "तसिलादिषु"इति प्राप्तिः।

---

सूत्रम्

काशिका-वृत्तिः

वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ६।३।३९

न इति वर्तते। वृद्धेर् निमित्तं यस्मिन् स वृद्धिनिमित्तः तद्धितः, स यदि रक्ते ऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद् भवति। स्त्रौघ्नीभार्यः। माथुरीभार्यः। स्त्रौघनीपाशा। माथुरीपाशा। सौघनीयते। माथुरीयते। स्त्रौघ्नीमानिनी। माथुरीमानिनीइ। वृद्धिनिमित्तस्य इति किम्? मध्यमभार्यः। तद्धितस्य इति किम्? काण्डलावभार्यः। बहुव्रीहिपरिग्रहः कमर्थः? तावद्भार्यः। यावद्भार्यः। अरक्तविकारे इति किम्? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायवृहतिकः। लोहस्य विकारो लौहीम् लौही ईषा यस्य रथस्य स लौहेषः। खादिरेषः।

न्यासः

वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे। , ६।३।३८

वृद्धिनिमित्तं ञणकाः। "रुआऔध्नीभार्यः" इति। रुआउध्ने भवा, "तत्र भवः" ४।३।५३ इत्यण्()। "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()। एवं "माथुरीभार्यः" इत्यत्रापि। "मध्यमभार्यः" इति। मध्ये भवा, "मध्यान्मः" ४।३।८ इति मप्रत्ययः। "काण्डलावभार्यः" इति। काण्डं लुनातीति "कर्मण्यण्()" ३।२।१ पूर्ववन्ङीप्()। "तावद्भार्यः" इति। तावच्छब्दात्? तत्परिमाणमस्या इति "यत्तदेतेभ्यः परिमाणे वतुप्()" ५।२।३९ "आ सर्वनाम्नः" ६।३।९० इति दकारम्याकारः, "उगितश्च" ४।१।६ इति ङीप्()। तावती भार्याऽस्य तावद्भार्यः, यदि वृद्धिनिमित्तस्येति तत्पुरुषो गृह्येत तदात्रापि प्रतिषेधः स्यात्(), भवति हि वतुब्? वृद्धेराकारास्य निमित्तम्()। बहुव्रीहिपरिग्रहे तु न दोषः; न हि वतुपि ञकारादिकं वृद्धेर्निमित्तमस्ति। "काषायी" इति। "तेन रक्तम्()" ४।२।१ इत्यण्()। "लौही" इति। "प्राणिरजतादिभ्योऽञ्()" ४।३।१५२ इत्यञ्(), पूर्ववन्? ङीप्()। "खादिरेषः" इति। "पलाशादिभ्यो वा" ४।३।१३९ इत्यञणोरन्यतरः। खादिरी ईषा यस्य स खादिरेषः॥

बाल-मनोरमा

वृद्धिनिमित्तस्य च तद्धितस्याऽरक्तविकारे ८३०, ६।३।३८

वृद्धिनिमित्तस्य च। वृद्धेर्निमित्तं हेतुरिति विग्रहः। रक्तं च विकारश्चेति समाहारद्वन्द्वः। तता नञ्तत्पुरुषः। रक्तविकारभिन्नेऽर्थे विद्यमानस्येत्यर्थः। वृद्धिशब्देन विहितैव वृद्धिरिह विवक्षिता, व्याख्यानात्। तदाह--वृद्धिशब्देनेत्यादिना। तदन्तेति। प्रत्ययग्रहणपरिभाषालभ्यम्। रुआऔग्घ्नीति। रुआउग्घ्नो देशः। "तत्र भव" इत्यण्। "यस्येति च" इत्यकारलोपः। णित्त्वादादिवृद्धिः "टिड्ढाण"ञिति ङीप्। रुआऔघ्नी भार्या यस्येति विग्रहः। "स्त्रियाः पुंवत्" इति प्राप्तमिह निषिध्यते। माथुरीयते माथुरीमानिनीति। मथुरायां भवा माथुरी, "तत्र भवः" इत्यण्। "यस्येति च" इत्यकारलोपः, आदिवृद्धिः, "टिड्ढे"ति ङीप्। माथछुरीवाचरतीत्यर्थे "कर्तुः क्य"ङिति क्यङ्। "सनाद्यन्ताः" इति धातुत्वाल्लडादि। माथुरीयते। माथुरीं मन्यते माथुरीमानिनी। "मनः" इति णिनिः। उपधावृद्धिः। उपपदसमासः। सुब्लुक्। नान्तत्वान्ङीप्। इहोभयत्रापि "क्यङ्मानिनोश्चे"ति प्राप्तं पुंवत्त्वं निषिध्यते। मध्यमभार्य इति। मध्ये भवा मद्यमा। "मध्यान्मः" इति मः। म ध्यमा भार्या यस्येति विग्रहः। स्त्रियाः पुंव"दिति पुंत्वम्। अत्र मप्रत्ययस्य तद्धितस्य वृद्धिनिमित्तत्वाऽभावान्न पुंवत्त्वनिषेधः। काण्डलाभार्य इति। काण्डं लुनातीति काण्डलावी। "कर्मण्यण्" इत्यण्प्रत्ययः

कृत्। "अचो ञ्णिति" इति वृद्धिः, आवादेशः, उपपदसमासः, टिड्ढाण"ञिति ङीष्। काण्डलावी भार्या यस्येति विग्रहः। पुंवत्त्वान्ङीपो निवृत्तिः। अत्राऽणः कृत्त्वात्तद्धितत्वाऽभावान्न पुंवत्त्वनिषेधः। तावद्भार्य इति। तत् परिमाणमस्यास्तावती। "यत्तदेतेभ्यः परिमाणे वतुप्" इति तच्छब्दाद्वतुप् तद्धितः, "आ सर्वनाम्नः" इत्याकारः, उगित्त्वान्ङीप्। तावती भार्या यस्येति विग्रहः। पुंवत्त्वान्ङीपो निवृत्तिः, "आ सर्वनाम्नः" इत्याकारात्मिकां वृद्धि प्रति वतुपो निमित्तत्वेऽपि आकारस्य वृद्धिशब्देन विधानाऽभावात्तन्निमित्तवतुबन्तस्य न पुंवत्त्वनिषेधः। रक्ते त्विति। रक्तेऽर्थे विद्यमानस्य तद्धितस्य न पुंवत्त्वनिषेध इत्यर्थः। काषायीति। कषायो गौरिको धातुविशेषः। तेन रक्ता काषायी। "तेन रक्तं रागा"दित्यणि "यस्येति चे"ति लोपः, आदिवृद्धिः, "टिड्ढाण"ञिति काषायकन्थ इति। पुंवत्त्वे ङीपो निवृत्तिः। अत्राऽणस्तद्धितस्य रक्तार्थकत्वान्न पुंवत्त्वनिषेधः। विकारे त्विति। विकारार्थे विद्यमानस्य तद्धितस्य न पुंवत्त्वनिषेध इत्यर्थः। हैमीति। हेम्नो विकारभूतेत्यर्थः। "अनुदात्तादेश्चे"त्यञ्, टलोपः, आदिवृद्धि, "टिड्ढे"ति ङीप्। हैमीचि रूपम्। हैमी मुद्रिका यस्येति विग्रहः। पुंवत्त्वे ङीपो निवृत्तिः। अत्राऽञस्तद्धितस्य विकारार्थकत्वान्न पुंवत्त्वनिषेधः। स्यादेतत्। व्याकरणमदीते वेत्ति वा स्त्री वैयाकरणी, "तदधीते तद्वेदे"त्यण् तद्धितः। "यस्येति चे"त्यकारलोपः। अणो णित्त्वात्तन्निमित्तिकाया यकाराकारस्य पर्जन्यबल्लक्षणप्रवृत्त्या प्राप्ताया वृद्धेः "न य्वाभ्या"मिति निषेधः। यकारात्प्रागैकारागमश्च, "टिड्ढाण"ञिति ङीप्। वैयाकरणी भार्या यस्येति बहुव्रीहौ पुंवत्त्वे ङीपो निवृत्तौ "वैयाकरणभार्य" इति रूपम्। तथा स्वस्वस्यापत्यं स्त्री। "अत इञ्िति इञोऽपवादः शिबाद्यण्, "यस्येति चे"ति लोपः। प्रथमवकारात्परस्य अकारस्यादिवृद्धेर्न य्वाभ्यामिति निषेधः। प्रथमबकारात्प्रागौकारागमश्च, "टिड्ढे"ति ङीप्। सौव()आई भार्या यस्येति बहुव्रीहौ पुंवत्त्वे ङीपो निवृत्तौ "सौव()आभार्य" इति रूपमिति स्थितिः। अत्रोभयत्रापि आदिवृद्धेः "न य्वाभ्या"मिति निषेधेऽपि अणस्तस्य णित्त्वेन स्वरूपयोग्यवृद्धिनिमित्तत्वानपायात् पुंवत्वनिषेधो दुर्वार इत्यत आह--वृदिं()ध प्रति फलोपधानाऽभावादिति। प्रतीत्यनन्तरं "निमित्तस्य तद्धितस्ये"ति शेषः। अणो वृद्धिनिमित्तस्य यत् फलं=वृद्धिस्तेन उपधानं=तात्कालिकसाहित्यं, तदभावादित्यर्थः। "वृद्धेस्तद्धितस्ये"त्येतावत्युक्तेऽपि निमित्तत्वसंबन्धे वृद्धेरिति षष्ठीमाश्रित्य "वृद्धिनिमित्ततद्धितस्ये"त्यर्थलाभे सति निमित्तग्रहणात् फलोपहितनिमित्तत्वं विवक्षितमिति विज्ञायत इति बावः। यद्यप्यैजागमसिद्धवृदिं()ध प्रति अण्प्रत्ययः फलोपिहतमेव निमित्तन्तथापि वृद्धिशब्देन विहितां वृदिं()ध प्रति फलोपहितं निमित्तं न भवत्येवेति न दोषः। वृद्धिशब्देन विहितैव वृद्धिरिग गृह्गत इत्यत्रापि इदमेव निमित्तग्रहणं लिङ्गम्। अन्यथा एजागमादत्र फलोपहितनिमित्तत्वस्यापि सत्त्वात्तन्निमित्तग्रहणं निष्फलं स्यात्। विस्तरस्तु शब्देन्दुशेखरे द्रष्टव्यः।

तत्त्व-बोधिनी

वृद्धिनिमित्तस्य च तद्धितस्याऽरक्तविकारे ७२८, ६।३।३८

वृद्धिनिमित्तस्य। रुआऔग्घ्नीति। रुआउग्घ्ने भवा। "तत्र भवः"इत्यणि "टिड्ढे"ति ङीप्। माथुरीयत इति। मथुरायां भवा माथुरी। सेवाऽऽचरतीत्यर्थे "कर्तुः क्य"ङिति क्यङ्। मध्यमेति। मध्ये भवा मध्यमा। "मध्यान्मा"इति मः। काण्डलावेति। काण्डं लुनातीति काण्डलावी। "कर्मण्यण्"। कृदयम्। तावदिति। तत्परिमाणमस्यास्तावती। "यत्तदेतेभ्यः"इति वतुपि "आ सर्वनाम्नः" इत्याकारो न वृद्धिशब्देन विहित इति भावः। काषायीति। कषायेण रक्तेत्यर्थे "तेन रक्तं रागा"त्यणि ङीप्। हैमीति। हेम्नो विकार इत्यर्थे "अनुदात्तदेश्चे"त्यञ्। फलोपधानेति। मिमित्तशब्दः फलोपहितपरः। स्वरूपयोग्यपरत्वे तु "वैयाकरणभार्य"इत्यत्र पुंवद्भावो न सिध्येदिति भावः। व्याकरणमधीते वेत्ति वा वैयाकरणी। "तदधिते तद्वेदे"त्यण्। स्व()आस्यापत्यं स्त्री सौव()आई। "तस्यापत्यम्" इत्यण्। उभयत्र णित्त्वात्प्राप्ता आदिवृद्धिः "न य्वाभ्या"मित्यनेन प्रतिषिध्यत इति नायं वृदिं()ध प्रति फलोपहितः, किं तु स्वरूपयोग्यः। यद्यप्यैजागमनिमित्तत्वाद्वृदिं()ध प्रति फलोपहितोऽपि भवत्ययं तद्धितस्तथापि वृद्धिशब्देन विहितां वृदिं()ध प्रति न भवतीति भावः। अत्र व्याचक्षते---सूत्रे निमित्तशब्द#ः फलोपहितपरः, अन्यथा निमित्तग्रहणमनर्थकं स्यात्। वृद्धिस्तद्धितस्येत्युक्तेऽपि निमित्तत्वमेव सम्बन्ध

इति वृद्धिनिमित्तं यस्तद्धित इत्यर्थलाभात्। तेन वृद्धिरित्ययमर्थो लभ्यते। अन्यथा फलोपहितपरत्वलाभो निष्फलः स्यात्, उक्तदोषतादवस्थ्यादिति।

अमानिनीति वक्तव्यम्। सुकेशीति। "स्वाङ्गाच्चोपसर्जना"दिति ङीष्। अकेशेति। "सहनञ्विद्यमाने"ति निषेधान्ङीषभावः।

---

सूत्रम्

काशिका-वृत्तिः

स्वाङ्गाच् च इतो ऽमानिनि ६।३।४०

स्वाङ्गादुत्तरो य ईकारः तदन्तायाः स्त्रियाः न पुंवद् भवति अमानिनि परतः। दीर्घकेशीभार्यः। श्लक्ष्णकेशीभार्यः। दीर्घकेशीपाशा। श्लक्ष्णकेशीपाशा। दीर्घकेशीयते। श्लक्ष्णकेशीयते। स्वाङ्गातिति किम्? पटुभार्यः। ईतः इति किम्? अकेशभार्यः। अमानिनि इति किम्? दीर्घकेशमानिनी।

न्यासः

स्वङ्गाच्चेतोऽमानिनि। , ६।३।३९

"दीर्घकेशी" इति। "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्()" ४।१।५४ इति ङीष्()। "षट्वी" इति। पटुशब्दात्? "वोतो गुणवचनात्()" ४।१।४४ इति ङीष्()। "अकेशभार्यः" इति। अविद्यमानाः केशा अस्या अकेशा "सहनञ्विद्यमानपूर्वाच्च" ४।१।५७ इति ङीपि प्रतिषिद्धे टावेव भवति॥

बाल-मनोरमा

स्वाङ्गाच्चेतः ८३१, ६।३।३९

स्वाङ्गाच्चेतः। "ईत" इति च्छेदः। तदाह--"स्वाङ्गाद्य ईकार इति। सुकेशीभार्य इति। "सु=शोभनाः केशा यस्यः सा सुकेशी। "स्वाङ्गाच्चोपसर्जनात्" इति ङीष्। "स्त्रियाः पुंव"दिति प्राप्तस्य निषेधः। पटुभार्य इति। पट्वी भार्या यस्येति विग्रहः। पटुत्वस्य अस्वाङ्गत्वान्न पुंवत्त्वनिषेधः। "किंतु पुवत्त्वे "वोतो गुणवचना"दिति ङीषो निवृत्तिरिति भावः। अकेशभार्य इति। अविद्यमानाः केशा यस्याः सा अकेशा। "नञोऽस्त्यर्थाना"मिति बहुव्रीहिः, विद्यमानशब्दस्य लोपश्च। स्वाङ्गत्वेऽपि न ङीष्, "सहनञ्विद्यमाने"ति निषेधात्। अतष्टावेव। अकेशा भार्या यस्येति विग्रहः। स्वाङ्गत्वेऽपि ईकाराऽभावान्न पुंवत्त्वनिषेधः। किंतु पुंवत्त्वे टापो निवृत्तिरिति भावः।

अमानिनीति। "स्वाङ्गच्चे"ति निषेधो मानिन्शब्देपरतो न भवतीति वक्तव्यमित्यर्थः। सुकेशमानिनीति। सुकेशींमन्यत इत्यर्थे "मनश्चे"ति णिनि, उपधावृद्धिः, उपपदसमासः, सुब्लुक्, पुंवत्त्वे ङीषो निवृत्तिरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

जातेश् च ६।३।४१

जातेश्च स्त्रियाः न पुंवद् भवति अमानिनि परतः। कठीभार्यः। बहृचिभार्यः। कठीपाशा। बहृचीपाशा। कठीयते। बहृचीयते। अमानिनि इत्येव, कठमानिनी। बहृचमानिनीइ। अयं प्रतिषेध औपसङ्ख्यानिकस्य पुंवद्भावस्य न इष्यते। हस्तिनीनां समूहो हास्तिकम्।

न्यासः

जातेश्च। , ६।३।४०

"कठीभार्यः" इति। कठशब्दात्? "जातेरस्त्रीविषयादयोपधात्? ४।१।६३ इति ङीष्()। जातित्वं त्वस्य "गोत्रञ्च चरणैः सह" (४।१।६३; मा। भा।२।२२५) इति लक्षणेन। "अयम्()" इत्यादि। "भस्याढे तद्धिते" (वा।७३१) इत्यौपसंख्यानिको यः पुंवद्भावस्तस्यायं प्रतिषेधो नेष्यते। यस्मादस्य प्रतिषेधस्य बाधनार्थमुत्तरसूत्रे पुंवदिति योगविभागः कत्र्तव्य इत्यभिप्रायः॥

बाल-मनोरमा

जातेश्च ८३२, ६।३।४०

जातेश्च। "ईत" इति अस्वरितत्वान्नानुवर्तत इत्यभिप्रेत्याह--जातेः परोः यः स्त्रीप्रत्यय इति। शूद्राभार्य इति। "शूद्रा चामहत्पूर्वे"ति जातिलक्षणङीषोऽपवादष्टाप्। पुंवत्त्वनिषेधान्न टापो निवृत्तिः। ब्राआह्मणीभार्य इति। पुंवत्त्वनिषेदान्न शाङ्गरवादिङीनो निवृत्तिः। ननु हस्तिनीनां समूहो हास्तिकमित्यत्र "अचित्तहस्ती"ति ठकि हस्तिनीशब्दस्य "भस्याऽढे" इति कथं पुंवत्त्वं "जातेश्चे"ति निषेधादित्यत आह--सौत्रस्यैवायं निषेध इति। सूत्रविहितस्येत्यर्थः। "भस्याऽढे" इति तु वार्तिकमिति भावः। एतच्च "न कोपधायाः" इति सूत्रे भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

जातेश्च ७२९, ६।३।४०

जातेश्च। यद्यत्र "जातेरित्येव विहित" इति व्याख्यायेत तर्हि हास्तिकमित्युदाहरणे "औपसङ्ख्यामिकस्य नायं निषेद"इति भाष्योक्तिर्न सङ्गच्छेत। हस्तिन्()शब्दात् "जाते"रिति ङीष्न विहितः, अदन्तत्वाऽभावात्, किं तु "ऋन्नेभ्यः"इति ङीब्विहित इति पुंवद्भावनिषेधस्याऽप्रसक्तेरत आह--जातेः पर इति। एवं च "हस्तनीभार्यः", इत्यादावपि निषेधः सिध्यतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पुंवत् कर्मधारयजातीयदेशीयेषु ६।३।४२

कर्मधरये समासे जातीय देशीय इत्येतयोश्च प्रत्यययोः भाषितपुंस्कादनूङ् स्त्रियाः पुंवद् भवति। प्रतिषेधर्थो ऽयम् आरम्भः। न कोपधायाः ६।३।३६ इत्युक्तम्, तत्र अपि भवति। पाचकवृन्दारिका। पाचकजातीया। पाचकदेशीया। संज्ञापूरण्योश्च ६।३।३७ इत्युक्तम्, तत्र अपि भवति। दत्तवृन्दारिका। दत्तजातीया। दत्तदेशीया। पूरण्याः पञ्चमवृन्दारिका। पञ्चमजातीया। पञ्चमदेशीया। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकरे ६।३।३८ इत्युक्तम्, तत्र अपि भवति। स्रौघ्नजातीया। स्रौघ्नदेशीया। स्वाङ्गाच् च इतो ऽमानिनि ६।३।३९ इत्युक्तम्, तत्र अपि भवति। श्लक्ष्णमुखवृन्दारिका। श्लक्ष्णमुखजातीया। श्लक्ष्णमुखदेशीया। जातेश्च ६।३।४० इत्युक्तम्, तत्र अपि भवति। कठवृन्दारिका। कठजातीया। कठदेशीया। भाषितपुंस्क्कातित्येव, खट्वावृन्दारिका। अनूगित्येव, ब्रह्मबन्धूवृन्दारिका। कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः। कुक्कुट्याः अण्डम् कुक्कुटाण्डम्। मृग्याः पदम् मृगपदम्। मृग्याः क्षीरम् मृगक्षीरम्। काक्याः शावः काकशावः। न वा अस्त्रीपूर्वपदस्य विवक्षितत्वात्। स्त्रीत्वेन विना पूर्वपदार्थो ऽत्र जतिः सामान्येन विवक्षितः। पुंवद्भावात् ह्रस्वत्वम् खिद्घादिषु भवति विप्रतिषेधेन। खित् कालिम्मन्या। हरिणिम्मन्या। घादि पट्वितरा। पट्वितमा। पट्विरूपा।

पट्विकल्पा। क पट्विका। मृद्विका। इह इडबिड्, दरद्, पृथु, उशिजित्येते जनपदशब्दाः क्षत्रियवाचिनः, तत्र तद्राजप्रत्ययस्य स्त्रियमतश्च इति लुकि कृते इडबिड्वृन्दारिका इति विगृह्य समासः क्रियते। ततः पुंवद्भवेन ऐडबिडादयः पुंशब्दाः क्रियन्ते। ऐडबिडवृन्दारिका। औशिजवृन्दारिका।

न्यासः

पुंवत्कर्मधारयजातीयदेशीयेषु। , ६।३।४१

ननु च कर्मधारये "स्त्रियाः पुंवत्()" ६।३।३३ इत्यादिना पुंवद्भावः सिद्धः, जातीयदेशीयशब्दयोरपि "तसिलादिष्वाकृत्वसुचः" ६।३।३४ इत्यादिना, तत्? किमर्थोऽयमारंभः? इत्यत आह--"प्रतिषेधार्थोऽयमारमभः" इति। परतिषेधविषयः प्रतिषेधशब्देनोक्तः। साहचर्यात्? प्रतिषेधोऽर्थः प्रयोजनं यस्येति स तथोक्तः। यत्र विषये प्रतिषेध उक्तस्तत्र पुंवद्भावः प्रयोजनमित्यर्थः। अथ वा--अर्थशब्दो निवृत्ताविह--वत्र्तते, यथा--मशकार्थो धूम इति। तेनायमर्थो भवति--प्रतिषेधनिवृत्यर्थोऽयमारम्भ इति। "भाषितपुंस्कादित्येव" इति। यदि "भाषितपुंस्कादनूङ्()" ६।३।३३ इति च नानुवत्र्तते, तदाऽभाषितपुंस्कार्थमनूङर्थञ्चेदं वचनं स्यात्(), न प्रतिषेधार्थम्()। एवं च खट्वावृन्दारिका, ब्राहृबन्धूवृन्दारिकेत्यात्रापि पुंवद्भावः स्यात्()। तस्माद्भाषितपुंस्कादनूङित्यनुवत्र्तनीयम्()। "कुक्कुट()आदीनाम्()" इत्यादि। उत्तरपदस्यान्तादेरस्त्रीत्वादसामानाधिकरण्याच्च पुंवद्भावो न प्राप्नोतीत्युपसंख्यायते। "न वा" इत्यनेनोपसंख्यानं प्रत्याचष्टे-- न वा वक्तव्यः, कस्मात्()? अस्त्रीपूर्वपदस्य विवक्षितत्वात्()। अस्त्रीलिङ्गस्य पूर्वपदस्य विवक्षितत्वादित्यभिप्रायः। अस्यैवार्थं विस्पष्टीकर्त्तुमाह--"स्त्रीत्वेन विना" इत्यादि। अत्र हि मयूरादिजात्यन्तरस्या निवृत्तिर्विवक्षिता। जात्यन्तरनिवृत्तिपरायां देशनायां लिङ्गविशेषोपादानमनुपकारकमेव। विनापि तेन जात्यन्तरनिवृत्तिः शक्यत एव कत्र्तम्()। तथा हि--मृगमांसमित्युक्ते अन्तरेणापि लिङ्गविशेषोपादानं जात्यन्तरसय व्यवच्छेद उपपद्यते--मृगजातिसम्बन्धि मांसम्(), नान्यजातिसम्बन्धीति। तस्मात्? स्त्रीत्वमत्रानुपकारित्वान्न विवक्षितम्(), अतः स्त्रीत्वेन विना पूर्वपदस्यार्थोऽत्रि कुक्कुटाण्डादौ जातिसामान्येन स्त्रीत्वदविशेषविहितो विवक्षित इत्यर्थः। ततश्चास्त्रीलिङ्गा एवात्र कुक्कुटादयः शब्दा अण्डादिभिः शब्दं समस्यन्त इति भावः। कः पुनरसौ पूर्वपदार्थः? कुक्कुटादिजात्या व्यवछिन्नं द्रव्यमात्रम्()। "पुंवद्भावात्()" इत्यादि। अत्र खिति पुंवद्भावाद्घ्रस्वत्वं विप्रतिषेधेन भवतीति पूर्वमेव व्याख्यातम्()। घादिषु तु व्याख्यायते। घादिषु ङ्यो ह्रस्वो भवतीत्यस्यावकाशः--नत्र्तकितरा, नत्र्तकितमा, नत्र्तकिरूपा, नत्र्तकिकल्पेति; पुंवद्भावस्यावकाशः--दर्शनीयतरा, दर्शनीयतमां, दर्शनीयरूपा, दर्शनीयकल्पेति; इहोभयं प्राप्नोति---पट्वितरा, पट्वितमा; पट्()विरूपा, पट्विकल्पेति; विप्रतिषेधेन ह्रस्वत्वं भवति। "केऽणः" ७।४।१३ इति ह्रस्वस्यावकाशः--नर्तकिकेति; अज्ञातादावर्थे "प्रागिवात्? कः" ५।३।७० पूर्वद्भावस्यावकाशः--दारदिकेति। दरच्छब्दस्यात्र के परतः "तसलादिष्वाकृत्वासुचः" ६।३।३४ इति पुंवद्भावेन दारदशब्दो भवति। अतष्टापि कृते "प्रत्ययस्थात्? कात्()" ७।३।४४ इत्यादिनेत्त्वमिहोभयं प्राप्नोति। "पट्विका" इति। अत्र विप्रतिषेधेन ह्रस्वत्वं भविष्यति। केन पुनः पुंवद्भावः, यावता तसिलादिषु परिगणनं कृतम्(), न च ततर कप्रत्ययः परिगणितः? एतत्? भाष्यकारः प्रष्टव्यो यः परिगणनं करोति, न तु सूत्रकारः। पूर्व यस्य सिद्धयेऽनूङिति प्रसज्यप्रतिषेध आश्रितस्तद्दर्शनार्थमाह--"इह" इत्यादि। "तत्र तद्राजप्रत्ययस्य" इत्यादि। तत्रेडविट्, पृथु इत्येताभ्यां "जनपदशब्दात्? क्षत्रियादञ्()" ४।१।१६६ इति विहितस्याञस्तद्राजप्रत्ययस्य "अतश्च" ४।१।१७५ इति लुक्()। दरद्? उशिजित्येताभ्यां तु "द्व्यञ्मगध" ४।१।१६८ इत्यादिना विहितस्याणः। इडविट्? चासौ वृन्दारिका चेति विगृह्य समास इति। "विशेषण" इत्यादिना, "अत्रैडविडादयः" [नास्ति--काशिका] इति आदिशब्देन दारदः, पारथः, औशिज इत्येते गृह्यन्ते॥

बाल-मनोरमा

पुंवत्कर्मधारयजातीयदेशीयेषु ७३६, ६।३।४१

पुंवत्कर्मधारय। "स्त्रियाः पुंवद्भाषितपुंस्कादनू"ङिति वर्तते। एकापि सप्तमी विषयभेदाद्भिद्यते। कर्मधारयांशेऽधिकरणसप्तमी। जातीयदेशीयविषये परसप्तमी। तदाह--कर्मधारये इति। "तथाभूत"मित्यनन्तरं "स्त्रीवाचक"मिति शेषः। "भाषितपुंस्कादनू"ङित्येतत् "स्त्रियाः पुंवत्" इति सूत्रे स्फुटीकरिष्यते। ननु कर्मधारये "स्त्रियाः पुंव"दित्यनेन सिद्धं पुंवत्वं, जातीयदेशीययोस्तु "तसिलादिष्वाकृत्वसुचः" इत्यनेन सिद्धमित्यत आह--पूरणीप्रियादिष्वप्राप्त इति। अपूरणीप्रियादिष्विति पर्युदासादिति भावः। महानवमीति। महती चासौ नवमी चेति विग्रहः। "सन्महदि"त्यादिना समासः। नवानां पूरणी नवमी। "तस्य पूरणे डट्""नान्तादसंख्यादेर्मट्"। टित्त्वान्ङीप्। अत्र नवमीशब्दस्य पूरणप्रत्ययान्तत्वात्तस्मिन् परे "स्त्रियाः पुंवत्" इति पुंवत्त्वमप्राप्तमनेन विधीयते। कृते पुंवत्त्वे "आन्महतः" इत्यात्त्वमिति भावः। कृष्णचतुर्दशीति। चतुर्दशानां पूरणी-चतुर्दशी। डट। "नस्तद्धिते" इति टिलोपः। टित्त्वान्ङीप्। कृष्णा चासौ चतुर्दशी चेति विग्रहः। महाप्रियेति। महती चासौ प्रिया चेति कर्मधारयः। अत्रापि प्रियादिपर्युदासादप्राप्तमनेन विधीयत इति भावः।

"पुंवत्कर्मधारय" इत्यस्य प्रयोजनान्तरमाह--तथा कोपधादेरिति। "न कोरधायाः" "संज्ञीपूरण्योश्च" "वृद्धिनिमित्तस्य च तद्धितस्याऽरक्तविकारे" "स्वाङ्गाच्चेतः" "जातेश्चे"ति पञ्चसूत्र्या प्रतिषिद्ध इत्यर्थः। कर्मधारयादाविति। कर्मधारये जातीयदेशीययोश्च परयोरित्यर्थः। पाचकस्त्रीति। पाचिका चासौ स्त्री चेति कर्मधारयः। अत्र "न कोपधायाः" इति पुंवत्त्वस्य प्रतिषेधः प्राप्तः। दत्तभार्या पञ्चमभार्येति दत्ता चासौ भार्या चेति, पञ्चमी चासौ भार्या चेति च कर्मधारयः। अत्र "संज्ञापूरण्योश्चे"ति प्रतिषेधः प्राप्तः। रुआऔग्घ्नभार्येति। रुआऔग्घ्नी चासौ भार्या चेति कर्मधारयः। अत्र "वृद्धिनिमित्तस्य चे"ति प्रतिषेधः प्राप्तः। सुकेशभार्येति। सुकेसी चासौ भार्या चेति कर्मधारयः। अत्र "स्वाङ्गाच्चेत" इति निषेधः प्राप्तः। ब्राआहृणभार्येति। ब्राआहृणी चासौ भार्या चेति कर्मधारयः। अत्र "जातेश्चे"ति निषेधः प्राप्तः।

अथ जातीयदेशीययोः प्रतिप्रसवमुदाहरति--एवं पाचकजातीया पाचकदेशीयेति। "प्रकारवचने" इति जातीयर्। "ईषदसमाप्तौ" इति दैशीयर्। उभयत्रापि "तसिलादिषु" इति पुंवत्वस्य "न कोपधायाः" इति निषेधः। प्राप्तः। इत्यादीति। दत्तजातीया, दत्तदेशीया। पञ्चमजातीया, पञ्चमदेशीया। रुआऔघ्नजातीया, रुआऔघ्नदेशीया। सुकेशजातीया, सुकेषदेशीया। ब्राआहृणजातीया, ब्राआहृणदेशीया। तदेवं पुंवत्कर्मधारये"ति सूत्रं निरूप्य "पोटायुवती"ति सूत्रस्य क्रमेणोदाहरणान्याह--इभपोटेति। पोटा चासौ इभी चेति कर्मधारयः। इभीशब्दस्य पुंवत्त्वम्। जातेः पूर्वनिपातार्थमिदं सूत्रम्। पोटा स्त्रीपुंसलक्षणेति। कोशवाक्यमिदम्। स्त्रीपुंसयोर्लक्षणानि चिह्नानि यस्या इति बहुव्रीहिः। इभयुवतिरिति। युवतिश्चासौ इभी चेति विग्रहः। कर्मधारये पुंवत्त्वम्। अग्निस्तोक इति। स्तोकः= अल्पः, स चासौ अग्निश्चेति विग्रहः। उद()इआत्कतिपयमिति। "तक्रं ह्रुद()इआत्" इत्यमरः। कतिपयं च तदुद()इआच्चेति कर्मधारयः। गृष्टिः सकृत्प्रसूतेति। कोशवाक्यमिदम्। गोगृष्टिरिति। गृष्टिश्चासौ गौश्चेति कर्मधारयः। धेनुर्नवप्रसूतेति। कोशवाक्यमिदम्। गोवशेति। वशा चासौ गौश्चेति विग्रहः बेहद्गर्भघातिनीति। कोशवाक्यमिदम्। गोवेहदिति। वेहच्चासौ गौश्चेति विग्रहः। बष्कयण्यतरुणवत्सेति। "चिरसूता बष्कयणी" इत्यमरः। "तरुणवत्से"त्यपपाठः। गोबष्कयणीति। बष्कयणी चासौ गौश्चेति विग्रहः। कठप्रवक्तेति। प्रवक्ता=अध्यापकः, स चासौ कठश्चेति विग्रहः। कठाध्यापक इति। अध्यापकश्चासौ कठश्चेति विग्रहः। कठधूर्त इति। धूर्तश्चासौ कठश्चेति विग्रहः। "धूर्तोऽक्षदेव"त्यमरः विट इत्यन्ये। नच "कुत्सितानि कुत्सनैः" इत्यनेन सिद्धिः शङ्क्या, प्रवृत्तिनिमित्तकुत्सायामेव तत्प्रवृत्तेः। न हि कठत्वं कुत्सितदम्।

तत्त्व-बोधिनी

पुंवत्कर्मधारयजातीयदेशीवेषु ६५१, ६।३।४१

भाषुतपुंस्कादित्यादि। एतच्च "स्त्रियाः पुंव"दिति सूत्रे स्फुटीकरिष्यते। ननु तेनैव कर्मधारयेऽपि सिद्धं जातीयदेशीययोस्तु

"तसिलादिष्वि"ति सिद्धं, तत्किमनेन सूत्रेणेत्यत आह--पूरणीप्रियादिष्विति। तथेति च। महानवमीति। नवानां पूरणी। "तस्य पूरणे डट्""नान्तादसङ्ख्यादेर्मट"। टित्वान्ङीप्। महती चासौ नवमी चेत् विग्रहः। पुंवद्भावे कृते वक्ष्यमाणेन महत आकारः। कोपधादेरिति। "न कोपधायाः" "संज्ञापूरण्योश्च" "वृद्धिनिमित्तस्य च तद्धितस्याऽरक्तविकारे" "त्वाह्गाच्चेतः""जातेश्चे"ति पञ्चसूत्र्या प्रितषिद्ध इत्यर्थः। क्रमेणोदाहरति--पाचकस्त्रीति। जातीयदेशययोरपि प्रतिप्रसवमुदाहरति--एवमिति। पाचिकाप्रकारवती पाचकजातीया। " प्रकारवचने जातीयर्"। पाचकदेशीयेति। "ईषदसमाप्तौ"इति देशीयर्। उभयत्र "तसिलादिषु"इति पुंवद्भावस्य "न कोपधायाः" इति निषेधः प्राप्तः, पटुजातीया पटुदेशीयेत्यादौ तस्य चरितार्थत्वात्। इत्यादीति। आदिपदाद्दत्तजातीया, पञ्चमजातीया, रुआऔग्घ्नजातीया, सुकेशजातीयै, ब्राआह्मणजातीया। एवं दत्तदेशीयेत्याद्युदाहार्यम्। स्त्रीपुंसलक्षणेति। स्तनश्मश्र्वादियुक्ता स्त्रीत्यर्थः। उद()इआदिति। "तक्रं ह्रुद()इआन्मथितं प#आदाम्ब्वार्धोऽम्बु निर्जल"मित्यमरः। कठधूर्त इति। नात्र कठत्वं कुत्स्यते, अतः "कित्सितानि कुत्सनैः" इति गतार्थता शङ्क्या, प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेः। "जनयति कुमुदभ्रान्ति धूर्तबको बालमत्स्याना"मित्यत्र "धूर्तबक"इत्यसाधुरेव।

---

सूत्रम्

काशिका-वृत्तिः

घरूपकल्पचेलड्ब्रूवगोत्रमतहतेषु ङ्यो ऽनेकाचो ह्रस्वः ६।३।४३

घ रूप कोप चेलट् ब्रूव गोत्र मत हत इत्येतेषू परतो भाषितपुंस्कत् परो यो ङीप्रत्ययस् तदन्तस्य अनेकाचो ह्रस्वो भवति। घ ब्राह्मणितरा। ब्राह्मणितमा। रूप ब्राह्मन्णिरूपा। कल्प ब्राह्मणिकल्पा। चेलट् ब्राह्मणिचेली। ब्रुव ब्राह्मणिब्रुवा। गोत्र ब्राह्मणिगोत्रा। मत ब्राह्मणिमता। हत ब्राह्मणिहता। घरूपकल्पाः प्रत्ययाश्चेलडादीन्युत्तरपदानि। ब्रौव इति ब्रवीति इति ब्रुवः पचाद्यअचि, वच्यादेशो गुणश्च निपातनान्न भवति। ङ्यः इति किम्? दत्तातरा। गुप्तातरा। अनेकचः इति किम्? नद्याः शेषस्य अन्यतरस्याम् ६।३।४३ इति वक्ष्यति। भाषितपुंस्कादित्येव, आमलकीतरा। कुवलीतरा।

न्यासः

घरूपकल्पचेलङ्ब्राउवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः। , ६।३।४२

चेलडब्राउवगोत्रशब्दानां कुत्सार्थत्वात्? "कुत्सितानि कुत्सनैः २।१।५२ इति समासः। मतहतशब्दाभ्यां तु "विशेषणं बहुलम्()" २।१।५६ इत्यनेन। चेलडिति पचादौ पठ()ते, टकारो ङीबर्थः। यदि "ब्राउवः" इति पचाद्यजन्तमेतत्? एवं सति "ब्राउवो वचिः" २।४।५३ इति वच्यादेशो गुणश्च प्राप्नोति, स कस्मान्न भवतीति? यश्चोदयेतत्(), तं प्रत्याह--"वच्यादेशो गुणश्च निपातनान्न भवति" इति। "आमकलकीतरा, कुवलीतरा" इति। आमलककुवलशब्दौ वृक्षे नित्यं स्त्रीलिङ्गै। फले तु नपुंसकलिंगावित्युभावप्यभाषितपुंस्कौ, ताभ्यां गौरादित्वान्ङीष्()॥

बाल-मनोरमा

घरूपकल्पचेलड्ब्राउवगोत्रमतहतेषु ङ्योऽनेकाचो ह्यस्वः ९७०, ६।३।४२

अथ समासाश्रयविधिर्निरूप्यते--घरूप। "उत्तरपदे" इत्यधिकृतं चेलडादिष्वन्वेति, नतु घरूपकल्पेषु , घशब्दवाच्यतरप्तमपोः रूपप्कल्पपोश्च प्रत्ययत्वात्। नच तदन्तग्रहणे सति तेषूत्तरपदत्वं संभवतीति वाच्यं, "ह्मदयस्य ह()ल्लेखे"त्यत्र उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाऽभाव इति भाष्ये उक्तत्वात्। "स्त्रियाः पुंव"दित्यतो भाषित पुंस्कादित्यनुत्तम्। ङ्य इतितदन्तग्रहणं, केवस्यानेकाच्त्वाऽभावात्। तदाह---भाषितपुंस्काद्यो ङीति। एतदर्तमेव "स्त्रियाः पुंव"दित्यत्र बाशितपुंस्कादिति पञ्चम्यन्तमुपात्तं ष तत्र "भाषितपुंस्काद्यो ङीति। एतदर्थमेव "स्त्रियाः पुंव"दित्यत्र

भाषितपुंस्कादिति पञ्चम्यन्तमुपात्तं। तत्र "भाषितपुंस्काद्यो ङीति। एतदर्थमेव "स्त्रियाः पुंव"दित्यत्र भाषितपुंस्कादिति पञ्चम्यन्तमुपात्तं। तत्र "भाषितपुंस्काया" इति षष्ठ()न्तोपादाने तु इह तदनुव()त्तिर्न स्यात्, असंभवात्। नहि ङीप्प्रत्ययस्य तदन्तस्य भाषितपुंस्कत्वमस्ति। नच तत्रापि नार्थवत्स्यात्, अनूङिति पर्युदासात्स्त्रीप्रत्ययलाभेन तदन्तस्य भाषितपुंस्कत्वाऽभावादिति वाच्यम्, तत्र स्त्रिया"इत्यस्वरितत्वात्स्त्रीप्रत्ययग्रहणं नेत्य#उक्तत्वात्। ब्राआहृणितरा ब्राआहृणितमेति। अतिशायने तरप्तमपौ। नच "तसिलादिष्वि"ति पुंवत्त्वेन ङीफो निवृत्तिः सङ्ख्याः, "जातेश्चे"ति निषेधात्। ब्राआहृणिरूपेति "प्रशंसायां रूपप्"। ब्राआहृणिकल्पेति। "ईषदसमाप्तौ"इति कल्पप्। ब्राआहृणिचेलीति। "चिल वसने" तस्मादचि चेलडिति पचादौ पठितम्। टित्वान्ङीप्। इत्यादीति। ब्राआहृणिमता। ब्राआहृणिहता। ब्राऊत्र इति। ब्राऊञ्धातोरचि कृते "ब्राउवो वचि"रिति वच्यादेशस्य लघूपधगुणस्य च अभावो निपात्यत इत्यर्थः। चेलडादीनीति। समासवृत्तिविषये चेलङ् ब्राउवगोत्रहता इत्युत्तरपदानि कुत्सनवाचीनीति कृत्वा "कुत्सितानि कुत्सनै"रिति कर्मधारय इत्यर्थः। आमलकोतरेति। आमलकीशब्दस्य वृक्षवाचित्वे नित्यस्त्रीलिङ्गत्वाद्भाशितपुंस्कत्वाऽभावेन न ह्यस्व इति भावः। ननु "न पदान्ते"ति सूत्रे भाष्ये बिम्बबदर्यामलकशब्दानां भाषितपुंस्कत्वावगमात्कथमामलकीशब्दस्य वृक्षविशेषे नित्यस्त्रीलिङ्गत्वमित्यरुचेराह--कुवलीतरेति। बृक्षनिषेशे नित्यस्त्रीलिङ्गोऽयमिति भावः। अमरस्तु "कर्कन्धूर्बदरी कोली घोण्टा "कुबलफनिले" इति नपुंसकत्वमाह।

तत्त्व-बोधिनी

घरूपकल्पचेलड्ब्राउवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ८२६, ६।३।४२

घरूपकल्प। तरप्तमपौ घः। प्रशंसायां रूपप्। चिल वसने। चेलडिति पचादौ टित्पठ()ते ङीवर्थम्। प्रत्ययेष्विति। लेखग्रहणेन उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति ज्ञापयिष्य इति भावः। ब्राआहृणितरेति। जातेश्चेति निषेधात् तसिलादिषु इति न पुंवद्भावः। चेलीति। पचादौ चेलट् इति पाठात् टिड्ढेति ङीप्। आमलकीति। आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिङ्गौ।

---

सूत्रम्

काशिका-वृत्तिः

नद्याः शेषस्य अन्यतरस्याम् ६।३।४४

नद्याः शेषस्य घादिषु परतो हृस्वो भवति अन्यतरस्याम्। कश्च शेषः? अङी च या नदी ङ्यन्तं च यदेकच्। ब्रहमबन्धूतरा, ब्रहमबन्धुतरा। वीरबन्धूतरा। वीरबन्धुतरा। स्त्रितरा, स्त्रीतरा। स्त्रितमा, स्त्रीतमा। कृन्नद्याः प्रतिषेधो वक्तव्यः। लक्ष्मीतरा। तन्त्रीतरा।

न्यासः

नद्याः शेषस्यान्यतरस्याम्?। , ६।३।४३

"भाषितपुंस्कादनूङ्()" ६।३।३३ इति निवृत्तम्()। "कश्च शेषः" इति। यदि पूर्वसूत्रेण यस्य ह्यस्वो न विहितः स शेषः, ततो यद्भाषितपुंस्कं यच्च भिन्नायामाकृतौ भाषितपुंस्कं नैचाच्? तस्यापि शेषत्वं स्यात्(), ततश्चामलकीतरा, द्रोणीतरेत्यत्रापि विकल्पेन ह्यस्वत्वपं स्यात्()। न हत्()र ह्यस्वत्वं पूर्वसूत्रेण विहितमित्यभिप्रायेणाऽऽह--"अङी च या नदी ङ्यन्तश्च यदेकाच्()" इति। एतेन श्रुतापेश्रयाऽत्र शेषत्वामाश्रीयते, न तु यस्य ह्यस्वो न विहितः, तदपेक्षयेति दर्शयति। कथं पुनरेतल्लभ्यते? शेषग्रहणात्()। अन्तरेणापि शेषग्रहणं शेषस्यैव विकल्पेन ह्यस्वत्वं भविष्यति। तथा हि यदि ङ्योऽनेकाचो भाषितपुंस्कस्यापि विभाषा ह्यस्वः स्यात्, तदा पूर्वयोग एवेदमन्यतरस्यांग्रहणं कुर्यात्()। इह कारणाद्यस्य

पूर्वेण ह्रस्वो न विहितस्तस्यैव पाक्षिकं ह्रस्वत्वमन्तरेणापि शेषग्रहणं शेषस्यैव भविष्यतीत्यवसीयत इति किं शेषग्रहणेन? तत्? क्रियते "ङ्योऽनेकाचः" (६।३।४३) इति पूर्वसूत्रे योऽच्? श्रूयते तदपेक्षया शेषो विज्ञायत इत्येवमर्थम्()। न चमलकीतरा, द्रीणीतरेत्यत्र श्रुतापेक्षया शेषत्वमुपपद्यते; ङ्योऽनेकाच्त्वात्()। तस्मान्न भवत्यत्र ह्रस्वत्वप्रसङ्गः। "स्त्रीतरा" इति। स्त्यायतेर्ड्ट्? डित्वाट्टिलोपः, वलिलोपश्च ६।१।६४, टित्वान्? ङीप्()। वक्तवयः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--अन्यतरस्यांग्रहणस्य व्यवस्थितविभाषाविज्ञानात्? कृन्नद्या न भविष्यतीति। "लक्ष्मीतरा" इति। "अवितृ()स्तृ()तन्त्रिभ्य ईः" (द।उ।१।८२) "र्लक्षेर्मुट्? च", (द।उ।१।८४) इतीकारप्रतययान्तो लक्ष्मीशब्दो व्युत्पादितः। कृन्नद्ययं भवति॥

बाल-मनोरमा

नद्याः शेषस्यान्यतरस्याम् ९७१, ६।३।४३

नद्याः शेषस्या। उक्तादन्यः शेषः। "ङ्यन्तस्यानेकाच" इति पूर्वसूत्रे स्थितं, तदन्यत्वं च अनेकाचो ङ्यन्तत्वाऽभावे ङ्यन्तस्यानेकाच्त्वाभावेऽपि संभवति। तदाह--अङ्यन्तनद्या ङ्यन्तस्यैकाचश्चेति। "ऊङ्तः" इति ब्राह्बन्धुशब्द ऊङन्तः। भाषितपुंस्कस्येति तु नैहानुवर्तत इत्यबिप्रेत्योदाहरति--स्त्रितरेति।

कृन्नाद्या नेति। कृदन्ता या नदी तस्या ह्रस्वो नेतिवाच्यमित्यर्थः। लक्ष्मीतरेति। "लक्षेर्मुट् च" इति औणादिके ईप्रत्यये मुडागमे च लक्ष्मीशब्दः कृदन्त इति भावः।

तत्त्व-बोधिनी

नद्याः शेषस्यान्यतरस्याम् ८२७, ६।३।४३

उक्ताद्द्रयशेषः, स च द्विदेत्याह-- अङ्यन्तेति। उपलक्षणमेतत्। भाषित्पुंस्केत्यपि नेह संबध्यत इत्याशयेनाह-- स्त्रीतरेति।

---

सूत्रम्

काशिका-वृत्तिः

उगितश् च ६।३।४५

उगितश्च परस्याः नद्याः घादिषु अन्यतरस्याम् ह्रस्वो भवति। श्रेयसितरा, श्रेयसीतरा, श्रेयस्तरा। विदुषितरा, विदुषीतरा, विद्वत्तरा। पुंवद्भावो ऽप्यत्र पक्षे वक्तव्यः। प्रकर्षयोगात् प्राक् स्त्रीत्वस्या विवक्षितत्वाद् वा सिद्धम्।

न्यासः

उगितश्च। , ६।३।४४

"श्रेयसितरा" इति। ईयसुनि परतः "प्रशस्यस्य श्रः" ५।३।६० इति प्रशस्यशब्दस्य श्रादेशः, "उगितश्च" ४।१।६ इति ङीप्()। "विदुषीतरा" इति। विदेः परस्य लटः शत्रादेशः, तस्य "विदेः शतुर्वसुः" ७।१।३६ इति वस्वादेशः, "वसोः सम्प्रसारणम्()" ६।४।१३१ परपूर्वत्वम्(), पूर्ववन्ङीप्()। "पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः" इति। श्रेयस्तरा, विद्वत्तरेति पक्षे यथा स्यात्()। "विद्वत्तरा" इति। "वसुरुआंसु" ८।२।७२ इति सकारस्य दकारः "खरि च" ८।४।५४ इति तकारः। "प्रकर्षयोगात्()" इत्यादिनोपसंख्यानं प्रत्याचष्टे। शब्दानां व्युत्पत्तौ प्रवृत्तौ च न वस्तुसन्निधानं प्रधानं कारणम्(), अपि तु विवक्षैव। न चैवं पूर्वं प्रकर्षयोगात्? स्त्रीत्वं विवक्षितम्()। तस्मादस्त्रीप्रत्ययान्तादेवातिशायिकेन भवितव्यम्()। आतिशायिकप्रत्ययान्तात्तु स्त्रीप्रत्ययेनेति सिद्धं श्रेयस्तरेत्यादि रूपम्()। ननु च ङ्याब्ग्रहणं तदन्तात् तद्धितविधानार्थमित्युक्तम्(), तत्कथमस्त्रीप्रत्ययान्तात्? तद्धितप्रकर्षप्रत्ययो युज्यते? नैतत; अत्र विषये स्त्रोत्वतद्धितार्थयोर्युगपद्विवक्षामभिप्रेत्य

तदुक्तम्(), न तु यत्र विषये प्राक्? प्रकर्षार्थेन सम्बन्धात्? स्त्रीत्वस्य विवक्षा नास्ति तमभिप्रेत्येति किमत्र न युज्यते॥
बाल-मनोरमा
उगितश्च ९७२, ६।३।४४

उगितश्च। विदुषितरेति। "विदेः शतुर्वसुरिति वसुप्रत्ययः। उगिदन्तमिदम्। अनेकाच्त्वान्नद्याः शेषत्वस्याऽप्राप्तेरिदमिति भावः। विद्वत्तरेति। पुंवत्त्वे ङीपो निवृत्तौ विद्वत्तरेति रूपमित्यर्थः। तन्निर्मूलमिति। पुंवत्त्वस्य दुर्वारत्वादित्यर्थः। "विद्वच्छ्रेयसो पुंवत्त्वं न वक्तव्य"मिति वृत्तिः। परन्तु वचनमिदं भाष्याऽदृष्टत्वादुपेक्ष्यमिति भावः। अत्रोगितः परा या नदीति मूलं वर्णयोरेव नदीसंज्ञेति मताभिप्रायकम्।

तत्त्व-बोधिनी
उगितश्च ८२८, ६।३।४४

उगितः परा या नदीति। ईदूतोः केवलयोरपि नदीसंज्ञेत्याश्रित्येदमुक्तम्। विदुषितरेति। उगितश्चेति ङीपि वसोः संप्रसारणम्। वृत्यादिष्विति। प्रक्रियातद्व्यख्यानानि चादिशब्दग्राह्याणि।

---

सूत्रम्
काशिका-वृत्तिः
आन्महतः समानाधिकरनजातीययोः ६।३।४६

समानाधिकरणे उत्तरपदे जातीये च प्रत्यये परतो महतः आकारादेशो भवति। महादेवः। महाब्राह्मणः। महाबाहुः। महाबलः। जातीये महाजातीयः। समानाधिकरणजातीययोः इति किम्? महतः पुत्रः महत्पुत्रः। लक्षणोक्तत्वादेव अत्र न भविष्यति इति चेद् बहुव्रीहावपि न स्याद् महाबाहुः इति। तदर्थं समानाधिकरणग्रहणं वक्तव्यम्। अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमाः इत्यत्र गौणत्वान् महदर्थस्य न भवत्यात्वम्। महदात्वे घासकरविशिष्टेषु उपसङ्ख्यानं पुंवद्वचनं च असमानाधिकरणार्थम्। महत्याः घासः महाघासः। महत्याः करः महाकरः। महत्याः विशिष्टः महाविशिष्टः। अष्टनः कपाले हविष्युपसङ्ख्यानम्। अष्टकपालं चरुं निर्वपेत्। हविषि इति किम्? अष्टकपालं ब्राह्मणस्य। गवि च युक्ते ऽष्टन उपसङ्ख्यानं कर्तव्यम्। अष्टागवेन शकटेन। युक्ते इति किम्? अष्टगवं ब्राह्मणस्य तपरकरणं विस्पष्टार्थम्।
लघु-सिद्धान्त-कौमुदी
आन्महतः समानाधिकरणजातीययोः ९६२, ६।३।४५

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे। महाराजः। प्रकारवचने जातीयर्। महाप्रकारो महाजातीयः॥
न्यासः
आन्महतः समानाधिकरणजातीययोः। , ६।३।४५

"महादेवः, महाब्राआह्णः" इति। "सन्महत्()" २।१।६० इत्यादिना कर्मधारयः। "महाबाहुः" इति। बहुव्रीहिः। "लक्षणोक्तत्वात्()" इत्यादिना परमतमाविष्कृत्य निराकरोति। स्यादेतत्()--उत्तरपदेन समासः सन्निधापितः, समासे हि सत्युत्तरपदं भवति, स च समासो लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) महतो यः प्रतिपदोक्तः "सन्महत्()" २।१।६० इत्यादिना साक्षाद्विशेषविहित स एव गृह्रते, न तु यो लाक्षणिकः सामान्यलक्षणोक्तश्च समासः--महत्पुत्र इति? अत्र "षष्ठी" २।२।८ इति सामान्यलक्षणेन विहितत्वात्(), तस्मादत्र न भविष्यतीति। यद्येवम्(), बहुव्रीहावपि न स्यात्(); तस्यापि

लाक्षणिकत्वात्()। "तदर्थम्()" इत्यादि। बहुव्रीहावप्यात्त्वं यता स्यादित्येवमर्थं समानाधिकरणग्रहँ कत्र्तव्यम्()। तत्र सतद्येषा परिभाषा नोपतिष्ठते। यद्युपतिष्ठते समानाधिकरणमनर्थकं स्यात्(); महतो यः प्रतिपदोक्तः समासस्तस्य समानाधिकरणपदत्वात्()। तस्याश्चानुपस्थाने सति बहुव्रीहावप्यात्त्वं भवति। असति तु समानाधिकरणग्रहणे तया परिभाषयेहोपस्थातव्यम्()। ततश्च यता महत्पुत्र इत्यत्र न भवति, तथा बहुव्रीहावपि महाबाहुरित्यत्र न स्यात्()। "अमाहन्? महान्? सम्पन्नो महद्भूतश्चन्द्रमा इति यत्रार्थे च्व्यन्तो महच्छब्दो वत्र्तते तत्रैव भूतशब्दोऽपि, तस्मात्? सामानाधिकरण्ये सतद्यात्त्वेन भवितव्यम्()"--इति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकत्तुमाह--"अमहान्? महन्()" इत्यादि। "महद्भूतः" इति। महच्छब्दात् "अभूततद्भावे" ५।४।५० इत्यादिना च्विः, तस्य "ऊर्यादिच्विडाचश्च" १।४।६० इति गतिसंज्ञकत्वाद्भूतशब्देन "कुगतिप्रादयः" २।२।१८ इति समासः। "गौणत्वात्()" इत्यादि। लोके हि शब्दादुच्चरिताद्गौणमुख्यार्थसम्भवे सति मुख्यार्थएवं सम्प्रत्ययो भवति, न तु गौणेऽप्रदाने। तथा हि--"गौरानीयताम्()" इत्युक्ते सास्नादिमानेवानीयते, न तु बाहीक इति। तस्मादिहापि महच्छब्दादुच्चारितान्मुख्य एव महदर्थे सम्प्रत्ययो भवति, न गौणे। गौणश्चात्र महदर्थः। तदभिधानाच्च महच्छब्दोऽपि गौण इति न भवत्यात्त्वम्। ननु च महत्त्वेन युक्तश्चन्द्रमा महानेव, तदयुक्तं महदर्थस्य गौणत्वम्()? नैतदस्ति; सर्वत्रैव हि च्व्यन्तेनार्थ आश्रितपूर्वावस्थ उपचरितोत्तरावस्थ उच्यते, तस्मादिहापि चन्द्रमा अमहत्त्वपूर्वावस्थो महच्छब्देनोच्यमान उपचरितमहत्त्वानुगतोत्तरावस्थ एव उच्यत इति युक्तास्य गौणता। यदि गौणत्वान्महच्छब्दस्यात्त्वमिह न भवति, तदा पुंवद्भावोऽपि न स्यात्(), अमहती ब्राआह्मणी महती सम्पन्ना महद्भूतेति; वृद्ध्यात्त्वे च गौणस्य गोशब्दख्य न स्याताम्(), गौर्वाहीकस्तिष्ठतीति वृद्धिर्न स्यात्? "गौतो णित्()" (७।१।९९) इति गौणाद्? गौशब्दात्? परस्य सर्वनामस्थानस्य णित्त्वेऽसति गां वाहीकमानयेत्यत्र "औतोऽम्शसोः" (६।१।९३) इत्यात्त्वं न स्यात्()? नैष दोषः; पुंवद्भावस्तावत्? "स्त्रियाः पुंवत्()" ६।३।३३ इति योगविभागाद्भविष्यति। योगविबागश्चावश्यं कत्र्तव्यो गर्भिभार्य इत्याद्यर्थः, महत्या घासो महाघास इत्याद्यर्थश्च; सोऽन्यार्थः क्रियमाण एतदर्थोऽपि भविष्यति। ननु च क्रियमाणेऽपि योगविभागे नैवात्र पुंवद्भावः प्राप्नोति, महदर्थस्य गौणत्वात्(), योगविभागस्य चान्यत्र चरितार्थत्वात्()? एवं तर्हि "पुंवत्कर्मधारय" ६।३।४१ इति सूत्रे द्वितीयः पुंवदिति योगविभागः किष्यते, स गौणार्थो भविष्यति। वृद्ध्यात्त्वाभावदोषोऽपि न प्रसजति; यस्माद्()वाक्यात्? तत्र गौणत्वं प्रतीयते। पद्सय तु मुख्य एवार्थः, न च पदसंस्कारवेलायां वाक्यार्थोऽपेक्ष्यते। "महादात्त्वे" इत्यादि। समानाधिकरण आत्त्वपुंवद्भावौ विधीयमानौ व्यधिकरणे न प्राप्नुतः। तस्माद्वयधिकरणेऽप्युत्तरपदे घासादौ महदात्तवस्योपसंख्यानं कत्र्तव्यम्()। उपसंख्यानमित्यस्य प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम्()--"आन्महतः" ६।३।४५ इत्यत्रापि "आत्()" इति योगविभागं करिष्यति, तेन महत्या घासो महाघास इत्यादावात्त्वं भविष्यतीति। स चावश्यं योगविभागः कत्र्तव्यः--अष्टाकपालमित्याद्यर्थम्(), सोऽन्यार्थं क्रियमाण एतदर्थोऽपि भवति। "पुंवद्वचनं च" इत्यादि। घासकरविशिष्टेष्वित्यपेक्ष्यते। पुंवद्भावस्य वचनं व्याख्यानं कत्र्तव्यम्(), तच्च पूर्वमेव कृतम्()। "अष्टनः कपाले" इत्यादि। अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। तच्च प्रतिपादनं पूर्वमेव कृतम्()। "अष्टाकापालम्()" इति। अष्टसु कपालेषु संस्कृतमिति "तद्धितार्थ" २।१।५० इत्यादिना समासः, "संस्कृतं भक्षाः" ४।२।१५ इत्यण्(), तस्य "द्विगोर्लुगनपत्ये" ४।१।८८ इति लुक। "अष्टकपालं ब्राआह्मणस्य" इति। अष्टानां कपालानां समाहारोष्टकपालम्(), समाहारे द्विगुः। अत्र पात्रादित्वात् (वा।१५९) स्त्रियां न भाष्यते। तेन "द्विगोः" (४।१।२१) इति ङीब्? न भवति। "गवि च युक्ते" इत्यादि। गोशब्दे चोत्तरपेद युक्तार्थे गम्यमानेऽष्टन्शब्दस्यात्त्वस्य प्रतिपादनं कत्र्तव्यम्()। तच्च प्रतिपादनं पूर्वमेव कृतम्()। "अष्टागवेन शकटेन" इति। अष्टौ गावो युक्ता अस्मिन्निति त्रिपदोऽयं बहुव्रीहिः। युक्तशब्दस्तु गम्यमानत्वाद्वतौ न प्रयुज्यते, यथा दध्योदन इत्यत्रोपसिक्तशब्दः। यदि च बहुव्रीहिरयम्(), तदा "गोरतद्धितलुकि" (५।४।९२) इति टच्? समासान्तो न प्राप्नोति; तत्पुरुषाधिकारात्()? मा भूत्? टच्? "अच्? प्रत्यन्ववपूर्वात्()" (५।४।७५) इत्यत्र अजिति योगविभागात्? भविष्यति, यथा--कृष्णभूमः, पद्यनाम इत्यादौ। अथ वा--अष्टानां गवां समाहारोऽष्टगवम्(), अष्टगवेन

युक्तमष्टागवम्()। न चैवं युक्तशब्दस्य प्रयोगः प्रसजति; पदैकदेशस्य प्रयोगात्(), यथा--सत्यभामा भामा, भीमसेनो भीमः, बलभद्रो बल इति। "एकादश" इत्यत्रापि तत एव योगविभागादात्त्वं वेदितव्यम्()। योगविभागस्य च लिङ्गम्()--"प्रागेकादशभ्यः" ५।३।४९ इति निर्देशः। "तपकरँ विस्पष्टार्थम्()" इति। अथ भिन्नकालानां निवृत्त्यर्थं कस्मान्न भवति? भाव्यमानेनाणा सवर्णानामग्रहणात्()। गुणान्तरभिन्नानां तर्हि ग्रहणं कस्मान्न भवति? गुणानामभेदकत्वात्()॥

बाल-मनोरमा

आन्महतः समानाधिकरणजातीययोः ७९७, ६।३।४५

अथ महत्पूर्वस्य टज्विकल्पमुदाहरिष्यन्विशेषमाह--आन्महतः। "अलुगुत्तरपदे" इत्युत्तरपदाधिकारस्थमिदं सूत्रम्। "उत्तरपदे" इत्यनुवृत्तंसमानाधिकरणपदेऽन्वेति, न तु जातीये इति, तस्य प्रत्ययत्वात्। तदाह--महत आत्त्वमित्यादिना। महाब्राह्ह इति। महांश्चासौ ब्राह्हआ चेति विग्रहः। "सन्महदि"त्यादिना समासः। आत्त्वम्। सवर्णदीर्घः। "कुमहद्भ्या"मिति टच्। टिलोपः "परवल्लिङ्ग"मिति पुंस्त्वम्। महाब्राह्हएति। टजभावे आत्वे रूपम्। अथ प्रसङ्गादुक्तमात्त्वविधिं प्रपञ्चयिष्यन्समानाधिकरणे पुनरुदाहरति--महादेव इति। जातीये उदाहरति--महाजातीय इति। महत्सदृश इत्यर्थः। "प्रकारवचने जातीयर्"। आत्त्वं सवर्णदीर्घः। समानाधिकरणे किमिति। "आन्महतो जातीये चे"त्येवास्तु, चकारादुत्तरपदसमुच्चये सति महतद आत्त्वं स्यादुत्तरपदे जातीये च परत इत्यर्थलाभादेव महादेव इत्यादिसिद्धेः, किं समानाधिकरणेनेति प्रश्नः। महत्सेवेति। अत्र षष्ठीसमासे आत्त्वनिवृत्त्यर्थं समानाधिकरणग्रहणमिति भावः। ननु षष्ठीसमासो लाक्षणिकः, समस्यमानपदं विशिष्टानुच्चार्य सामान्यशास्त्रत एव निर्बर्तितत्वात्। "सन्महदि"त्ययं समासस्तु सन्महदादिशब्दं समस्यमान#ं विशिष्योच्चार्या विहितत्वात्प्रतिपदोक्तः। ततश्च लक्षणप्रतिपदोक्तपरिभाषया "आन्महतो जातीये चे"त्यत्र "सन्महदि"ति प्रतिपदोक्तसमासोत्तरपदग्रहणे सति तत एव षष्ठीसमासोत्तरपदनिराससंभवाद्व्यर्थमेव समानाधिकरणग्रहणमिति शङ्कते--लाक्षणिकमित्यादिना। परिहरति--महाबाहुर्न स्यादिति। महान्तौ बाहू यस्येति विग्रहः। अस्य समासस्य "अनेकमन्यपदार्थे" इति सामान्यविहितत्वात्प्रतिपदोक्त्वाऽभावात्तदुत्तरपदे परे आत्त्वं न स्यादतः समानाधिकरणग्रहणमित्यर्थः। ननु कृतेऽपि समानाधिकरणग्रहणे लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तेर्दुर्वारत्वान्महाबाहुरित्यत्रात्त्वं न स्यादेवेत्यत आह--तस्मादिति। तच्छब्दार्थमाह--समानाधिकरणग्रहणसामथ्र्यादिति। एवं च लक्षणप्रतिपदोक्तपरिभाषां बाधित्वा लाक्षणिकस्यापि ग्रहणार्थं समानाधिकरणग्रहणमिति भावः। नच सुमहान्तौ बाहू यस्य स सुमहाबाहुरित्यत्र कथमात्त्वम्?। आत्त्वविधेः पदाङ्गाधिकारस्थत्वाऽभावेन तदन्तविध्यभावादिति वाच्यम्, उत्तरपदाक्षिप्तपूर्वपदस्य महता विशेषणे सति तदन्तविधिलाभात्। "परममहत्वपिरमाणवा"नित्यत्र तु महतः परिमाणं महत्परिमाणं, परमं महत्परिमाणमिति षष्ठीसमासगर्भः कर्मधारय इति द#इक्। ननु "आन्महतः" इत्यत्र महत एव ग्रहणात् "द्व्यष्टनः" इत्युत्तरसूत्रे द्व्यष्टनोरेव ग्रहणादेकादशेत्यत्र कथमात्त्वमित्यत आह--योगविभागादात्त्वमिति। योगविभागस्य भाष्याऽदृष्टत्वादाह--निर्देशाद्वेति। एकादशेति। एकश्चदश चेति द्वन्द्वः। एकाधिका दशेति वा। "आन्महत" इत्यत्र लिङ्गविशिष्टपरिभाषया महतीशब्दस्यापि जातीयप्रत्यये परे महताजातीयेति स्यादित्यत आह--महतीशब्दस्येति। नच परत्वात्पुंवत्त्वं बाधित्वा आत्वं स्यादिति वाच्यम्, "आन्महतः" इत्यत्र लिङ्गविशिष्टपरिभाषा न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये उक्तत्वादिति भावः। महदात्त्वे इति। "घास" "कर" "विशिष्ट"-एषु परतो महत आत्त्वं पुंवत्त्वं च वक्तव्यमित्यर्थः। ननु "आन्महतः" इत्यात्वे "पुंवत्कर्मधारये"ति पुंवत्त्वे च सिद्धे किमर्थमिदमित्यत आह--असामानाधिकरण्यार्थमिति। महाकर इति। महतो महत्या वा कर इत्यर्थः। महाविशिष्ट इति। महतो महत्या वा विशिष्टः। अधिक इत्यर्थः।

अष्टन इति। कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्त्वं वक्तव्यमित्यर्थः। अष्टाकपाल इति। अष्टसु कपालेषु संस्कृतः

पुरोडाश इत्यर्थे तद्धितार्थे द्विगुः। "सस्कृतं भक्षाः" इत्यण्। "द्विगोर्लुगनपत्ये" इति लुक्। आत्वं। सवर्णदीर्घः।

गवि च युक्ते। वार्तिकमिदम्। तत्सूचयितुमाह--वक्तव्यमित्यर्थ इति। अष्टागवं शकटमिति। अष्टौ गावो यस्येति बहुव्रीहिः। आत्वं, सवर्णदीर्घः। अष्टभिर्गोभिर्युक्तमित्यर्थः। ननु "गोरतद्धितलुकी"ति टज्विधेस्तत्पुरुषमात्रविषयत्वादष्टागविमिति कथमित्यत आह--अच्प्रत्ययन्ववेत्यत्रेति। तत्पुरुषत्वेऽष्टगवशब्दष्टजन्त एवेत्याह--अष्टानामिति। तथा च समाहारद्विगोस्तत्पुरुषत्वा "गोरतद्धितलुकी"ति टच्सुलभ इत्यर्थः। नन्वष्टानां गवां समाहार इत्यर्थे शकटे कथमन्वयः, युक्तार्थवृत्तित्वाऽभावात्, कतं वा आत्वमित्य आह--तद्युक्तत्वादिति। समाहाद्लिगुरूपतत्पुरुषाट्टचि व्युत्पन्नस्य अष्टगवशब्दस्य लक्षणया अष्टभिर्गोभिर्युक्ते वर्तमानस्य आत्वमित्यर्थः।

तत्त्व-बोधिनी

अन्महतः समानाधिकरणजातीययोः ७०२, ६।३।४५

आन्महतः। तकार उच्चारणार्थो, न तु सर्वादेशार्त इत्याह---आकारोऽन्तादेशः स्यादिति। इहोत्तरपदाऽधिकारे पूर्वपदमाक्षिप्यते। तच्च महता विशेषितमिति तदन्तविधिर्लभ्यते। "ग्रहणवता"इति निषेधस्तु प्रत्ययविधिविषय इत्युक्तत्वात्। तेन महाबाहुवदतिमहाबाहुरिति प्रयोगो भवति। "परममहत्परिमाण"मित्यत्र तु परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषोऽभ्यु पगम्यत इति न तत्राऽऽत्वप्रसक्तिरिति वृद्धाः। यत्तु वद्र्धमानेनोक्तम्---"इष्टकेषीकामालानामित्यत्र तदन्तविध्युपसङ्ख्यानसमाश्र्यादुत्तरपदाधिकारे तदन्तविधिर्नास्ति, तेन परममहत आत्वं ने"ति, तद्भाष्यकैयटविरुद्धम्। तथाहि--"येन विधि"रिति सूत्रे पदाधिकारे प्रयोजनमिष्टकचितं पक्वेष्टकचितमिति भाष्ये उदाह्मतं, कैयटेन च पदशब्देन उत्तरपदं गृह्णत इति व्याख्यातम्। एतदेवाऽर्थतः काशिकायामुपनिबद्दं न तु " इष्टकेषीके"त्यत्र कात्यायनोक्तमुपसङ्ख्यानमस्ति। ननु प्रतिपदोक्तसमासे यदुत्तरपदं तस्मिन्नेव परे आत्वं स्यान्नन्यत्रेति किमनेन समानाधैकरणग्रहणेनेत्यत आह--महाबाहुरिति। बहुव्रीहिरयम्, स च सामान्यशास्त्रनिर्वृत्तत्वाल्लाक्षणिक इति भावः। अष्टनः कपाल इति। कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः।

अष्टाकपाल इति। "संस्कृतं भक्षाः" इत्यणः "द्विगोर्लुगनपत्ये"इति लुक्। "अध्यर्धपूर्वे"त्यणो लुगिति केषांचिद्व्याख्यानं तु प्रामादिकं, "संस्कृत"मित्यणोऽनाहीयत्वात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ द्व्यष्टनः ६।१ ४८ सङ्ख्यायाम् ७।१ ४८ अबहुव्रीह्यशीत्योः ६।२ ४८ आत् १।१ ४५ उत्तरपदे ७।१ १

समासः॥

द्वौ च अष्ट च द्व्यष्ट, तस्य, ०, समाहारद्वन्द्वः।
बहुव्रीहिश्च अशीतिश्च बहुव्रीह्यशीती। न बहुव्रीह्यशीती अबहुव्रीह्यशीती, तयोः ०, द्वन्द्वगर्भ-नञ्तत्पुरुषः।

अर्थः॥

द्वि, अष्टन्, इत्येतयोः आकारादेशः भवति, सङ्ख्यायाम् उत्तरपदे अबहुव्रीह्यशीत्योः।

उदाहरणम्॥

द्वादश, द्वाविंशतिः, द्वात्रिंशत्। अष्टादश, अष्टाविंशतिः, अष्टात्रिशत्।
काशिका-वृत्तिः
द्व्यष्टनः सङ्ख्यायाम् अबहुव्रीह्यशीत्योः ६।३।४७

द्वि अष्टनित्येतयोः आकारादेशो भवति सङ्ख्यायाम् उत्तरपदे अबहुव्रीह्यशीत्योः। द्वादश। द्वाविंशतिः। द्वात्रिंशत्। अष्टादश। अष्टाविंशतिः। अष्टात्रिंशत्। द्व्यष्टनः इति किम्? पञ्चदश। सङ्ख्यायाम् इति किम्? द्वैमातुरः। आष्टमातुरः। अबहुव्रीह्यशित्योः इति किम्? द्वित्राः। त्रिदशाः। द्व्यशीतिः। प्राक् शतादिति वक्तव्यम्। इह मा भूत्, द्विशतम्। द्विसहस्रम्। अश्टशतम्। अष्टसहस्रम्।
लघु-सिद्धान्त-कौमुदी
द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ९६३, ६।३।४६

आत्स्यात्। द्वौ च दश च द्वादश। अष्टाविंशतिः॥
न्यासः
द्व्यष्टनः संख्यायामबहुव्रीह्रशीत्योः। , ६।३।४६

संख्यातानुदेशोऽत्र न भवति। यदि हि स्यादष्टनोऽशीतौ प्रतिषेधः स्यात्(), तथा च तस्य वैयर्थ्यं स्यात्()। प्रतिषिद्धे ह्रात्वे सवर्णदीर्घत्वेन भवितव्यम्। अल्पाच्तरत्वाच्चाशीतिशब्दस्य पूर्वनिपातेकत्र्तव्ये परनिपातेन लक्षणव्यभिचारचिह्नेन सख्यातानुदेशाभावः सूचितः। "द्वादश" इति। द्वौ च दश चेति द्वन्द्वः। अथ वा द्वाभ्यामधिकादशेति समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च" (वा।८३) इत्युत्तरपदलोपी तत्पुरुष समासः। एवं "द्वाविंशतिः" इत्यादावपि वेदितव्यम्()। "द्वौमातुरः" इति। द्वयोर्मात्रोरपत्यमिति विगृह्र तद्धितार्थे समासः, ततः "मातुरुत्संख्यासम्भद्रपूर्वायाः" ४।१।११५ इत्यण्(); उकारश्चान्तादेशः। "द्वित्राः" इति। द्वौ वा त्रयो वेति विगृह्र "सङ्ख्ययाव्यय" २।२।२५ इत्यादिना बहुव्रीहिः, "बहुव्रीहौ संख्येये" (५।४।७३) इत्यादिना डच्? समासान्तः, टिलोपः। "द्विदशाः" इति। पूर्ववड्डच्(), बहुव्रीहिः। द्विर्दशेति विग्रहः। सुबर्थेऽयं समासः। अत्र हि दशसम्बन्धिन्यावृत्तिर्दशशब्देन लक्ष्यमाणा द्विशब्देन संख्यायते। तेन द्वौ दशकावित्ययमर्थो वेदितव्यः। समासः सुबर्थं गमयितुं समर्थ इति वृत्तौ सुज्? न प्रयुज्यते। "द्व्यशीतिः" इति। पूर्ववद्द्वन्द्वः; उत्तरपदलोपी वा तत्पुरुषः। "प्राक्? शतात्()" इत्यादि। शतात्? प्रागया संख्या तद्वाचिन्युत्तरपदे द्व्यष्टन आत्त्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"विभाषा चत्वरिंशत" ६।३।४८ इत्यत्र वक्ष्यमाणविभाषाग्रहणं सिंहावलोकिनतन्यायेनेहाप्युपतिष्टते, सा च व्यवस्थितविभाषा। तेन प्राक्? शताद्या संख्या तद्वाचिन्यत्तरपदे भविष्यति। शतादिवाचिनि तु न भविष्यति। एवमुत्तरयोरपि योगयोः प्राक्शतात्? कार्यं भवतीति वेदितव्यम्()।
बाल-मनोरमा
द्व्यष्टनः सङ्ख्यायामबहुव्रीह्रशीत्योः ७९८, ६।३।४६

द्व्यष्टनः। शेषपूरणेन सूत्रं व्याचष्टे--आत्स्यादिति। द्विशब्दस्य अष्टन्शब्दस्य च सङ्ख्यावाचके उत्तरपदे परे आत्स्यान्न तु बहुव्रीह्रशीत्योरित्यर्थः। द्विशब्दस्योदाहरति--द्वादशेति। द्वौ च एकश्च द्व्येकाः, द्व्यधिक एकः द्व्येक इत्यादौ तु नास्ति,

"एकादिनवान्तानां परस्परं द्वन्द्वतत्पुरुषौ न स्तः" इति "चार्थे इति सूत्रे भाष्ये ध्वनितत्वादिति शब्देन्दुशेखरे स्थितम्। द्वाविंशतिरिति। द्वौ च विंशतिश्चेति समाहारद्वन्द्वः। "स नपुंसक"मिति क्लीबत्वं तु न, किंतु लोकात् स्त्रीत्वम्। इतरेतरयोगस्तु न, अनभिधानात्। द्व्यधिका विंशतिरिति तत्पुरुषो वा। अथाऽष्टस्योदाहरति--अष्टादशेति। अष्टौ च दश चेति द्वन्द्वः। अष्टाधिका दशेति वा। अष्टाविंशतिरिति। अष्टौ च विशतिश्चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। अष्टाधिका विंशतिरिति वा। द्वित्रा इति। द्वौ वा त्रयो वेति विग्रहः। "सङ्ख्याव्यये"ति बहुव्रीहिः। "बहुव्रीहौ संख्येये ड"जिति डच्। बहुव्रीहित्वादत्र द्विशब्दस्य आत्त्वं न। द्व्यशीतिरिति। द्वौ चाओशीतिश्चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। द्व्यधिका अशीतिरिति वा। अत्राशीतिपरकत्वाद्द्विशब्दस्याऽऽत्त्वं न।

प्राक्शतादिति। "द्व्यष्टनः सङ्ख्याया"मित्येतच्छतप्रभृतिसङ्ख्याशब्दे परे न भवतीति वक्तव्यमित्यर्थः। द्विशतमिति। द्वौ च शतं चेति समाहारद्वन्द्वः। द्व्यधिकं शतिमिति वा। एवं द्विसहरुआमित्यत्रापि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ त्रेः ६।१ त्रयः १।१ ४८ सङ्ख्यायाम् ७।१ ? अबहुव्रीह्यशीत्योः ६।२ ? उत्तरपदे ७।१ १

अर्थः॥

त्रि इत्येतस्य शब्दस्य त्रयस्-आदेशः भवति, सङ्ख्यायाम् उत्तरपदे अबहुव्रीह्यशीत्योः।

उदाहरणम्॥

त्रयोदश, त्रयोविंशतिः, त्रयस्त्रिंशत्।

काशिका-वृत्तिः

त्रेस् त्रयः ६।३।४८

त्रि इत्येतस्य त्रयसित्ययम् आदेशो भवति सङ्ख्यायाम् अबहुव्रीह्यशीत्योः। त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत। सङ्ख्यायाम् इत्येव, त्रैमातुरः। अबहुव्रीह्यशीत्योः इत्येव, त्रिदशाः। त्र्यशीतिः। प्राक्शतातित्येव, त्रिशतम्। त्रिसहस्रम्।

लघु-सिद्धान्त-कौमुदी

त्रेस्त्रयः ९६४, ६।३।४७

त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्॥

न्यासः

त्रेस्त्रयः। , ६।३।४७

"त्रयः" इति। सकारान्तोऽयमादेशः। कुत एतत्()? सन्धिवेलादिषु त्रयोदशीशब्दपाठात्()। अकारान्ते हि सति त्रयदशीति पाठः स्यात्()। "त्रयोदश, त्रयोर्विशतिः" इति। "ससजुषो रुः" (८।२।६६) इति रुत्वम्? "हशि च" ६।१।११० इत्यत्त्वम्(), "आद्गुणः" (६।१।८७) त्रिर्दश इति पूर्ववत्? सुजर्थे बहुव्रीहिः, डच्? समासान्तः॥

न्यासः

पेषंवासवाहनधिषु च। , ६।३।४७

"उपदेषम्()" इति। "पिष्लृ सञ्चूर्णने" (दा।पा।१४५२) "उदधिः" इति। "कर्मण्यधिकरणे च" 3।3।९३ इति क्रिप्रत्ययः। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। असंज्ञार्थमिदं वचनम्(); तेनोदधिरिति घटादिरिह वेदितव्यः, न समुद्रः; तत्र पूर्वेणैव सिद्धत्वात्()--उदधिशब्दे समुद्रस्य संज्ञेति कृत्वा॥

बाल-मनोरमा

त्रेस्त्रयः ७९९, ६।३।४७

त्रेस्त्रयः। सन्धिवेलादिषु त्रयोदशीति पाठात्सकारान्तोऽयमादेश इत्याह--त्रयस्स्यादिति। पूर्व विषये इति। प्राक्()शतात्सङ्ख्याशब्दे उत्तरपदे परतो, न तु बहुव्रीह्यशीत्योरित्यर्थः। त्रयोदशेति। त्रयश्च दश चेति, त्र्यधिका दशेति वा विग्रहः। सुब्लुकि त्रिशब्दस्य त्रयस्, रुत्वम्, उत्वम्, आद्गुणः। एवं त्रयोविंशतिरित्यपि। त्रिदशा इति। त्रिरावृत्ता दशेत्यर्थः। "बहुव्रीहौ सङ्ख्येये डच्" इति डच्। नन्वत्र त्रिरित्यस्य "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" "द्वित्रिचतुर्भ्यः सुच्" इति सुजन्तत्वात्समासेऽपि सुचः श्रवणापत्तिरित्यत आह--सुजर्थे बहुव्रीहिरिति। सुजर्थे क्रियाभ्यावृत्तौ लक्षणया विद्यमानस्य त्रिशब्दस्यैवात्र "सङ्ख्ययाव्यये"ति बहुव्रीहिर्न तु सुजन्तस्येत्यर्थः। त्र्यशीतिरिति। त्रयश्चाऽशीतिश्चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। त्र्यधिकाऽशीतिरिति वा। त्रिशतमिति। त्र्यश्च शतं चेति समाहारद्वन्द्वः। स्त्रीत्वं लोकात्। त्र्यधिकाऽसीतिरिति वा। त्रिशतमिति। त्रयश्च शतं चेति समाहारद्वन्द्वः, त्र्यधिकं शतिमिति वा। एवं त्रिसहरुआमित्यपि।

तत्त्व-बोधिनी

त्रेस्त्रयः ७०४, ६।३।४७

त्रेस्त्रयः। सन्धिवेलादिषु त्रयोदशीति पाठात्सान्तोऽयमादेशः इति ध्वनयन्नाह---त्रयस्स्यादिति। सुजर्थे बहुव्रीहिरिति। "संङ्ख्यायाव्यये"त्यादिने ति शेषः।

षष उत्वं दतृदशधासूत्तरपदादे[#ः]ष्टुत्वं च, धासु वेति वाच्यम्। षोडन्निति। षड् दन्ता अस्य षोडन्। "वयसि दन्तस्ये"ति दत्रादेशः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ विभाषा १।१ चत्वारिंशत्-प्रभृतौ ७।१ सर्वेषाम् ६।३ सङ्ख्यायाम् ७।१ ४६ अबहुव्रीह्यशीत्योः ६।२ ४६ उत्तरपदे ७।१ १

समासः॥

चत्वारिंशत् प्रभृति यस्य तत् चत्वारिंशत्-प्रभृति, तस्मिन्, ॰, बहुव्रीहिः।

अर्थः॥

चत्वारिंशत्-प्रभृतौ सङ्ख्यायाम् उत्तरपदे अबहुव्रीह्यशीत्योः सर्वेषां द्व्यष्टन् त्रि इत्येतेषां यदुक्तं तद्विभाषा भवति।

उदाहरणम्॥

द्विचत्वारिंशत्, द्वाचत्वारिंशत्। त्रिपञ्चाशत्, त्रयःपञ्चाशत्। अष्टचत्वारिम्शत्, अष्टाचत्वारिंशत्। अष्टपञ्चाशत्, अष्टापञ्चाशत्।

काशिका-वृत्तिः

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ६।३।४९

चत्वारिंशत्प्रभृतौ संख्यायाम् उत्तरपदे ऽबहुव्रीह्यशीत्योः सर्वेषाम् द्वि अष्टन् त्रि इत्येतेषां यदुक्तं तद्विभाष भवति। द्विचत्वारिंशत्, द्वाचत्वारिंशत्। त्रिपञ्चाशत्, त्रयःपञ्चाशत्। अष्टपञ्चाशत्, अष्टापञ्चाशत्। प्राक्शतातित्येव, द्विशतम्। अष्टशतम्। त्रिशतम्।

न्यासः

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्?। , ६।३।४८

सर्वग्रहणं द्व्यष्टनोरपि यथा स्यादित्येवमर्थम्(); इतरथा हि "अनन्तरस्या विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति त्रेरेव स्यात्()। मण्डुकप्लुतिन्यायेन द्व्यष्टन इत्येतदपीहानुवर्तिष्यते, ततोऽयमदोष इति चेत्()? एवं तर्हि विस्पष्टार्थं सर्वग्रहणमिति॥

बाल-मनोरमा

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ८००, ६।३।४८

विभाषा चत्वारिंशत्। व्यवहितस्यापि "द्व्यष्टनो"रित्यस्य सम्बन्धाय--सर्वेषामिति। द्व्यष्टनोस्त्रेश्चेत्यर्थः। तदाह--द्व्यष्टनोस्त्रेश्चेति।

---

सूत्रम्

काशिका-वृत्तिः

हृदयस्य हृल् लेखयदण्लासेषु ६।३।५०

हृदयस्य हृतित्ययम् आदेशो भवति लेख यतण् लास इत्येतेषु परतः। हृदयं लिखति इति हृल्लेखः। यत् हृदयस्य प्रियम् हृद्यम्। अण् हृदयस्य इदं हार्दम्। लास हृदयस्य लासः हृल्लासः। लेख इति अणन्तस्य ग्रहणम् इष्यते। घञि तु हृदयस्य लेखो हृदयलेखः। एतदेव लेखग्रहणं ज्ञापकम्, उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणस्य।

न्यासः

ह्मदयस्य ह्मल्लेखयदण्लासेषु। , ६।३।४९

"ह्मल्लेशः"। "कर्मण्यण्()" ३।२।१ "ह्मद्यः" इति। "प्राग्धिताद्? यत्()" ४।४।७५। "हार्दम्()" इति। "तस्येदम्()" ४।३।१२० इति प्राग्दीव्यतोऽण्()। "ह्मल्लासः" इति। लसनं लासः, भावे घञ्()। "कृद्योगा च षष्ठी समस्यते" (वा।८६) इति षष्ठीसमासः। "लेख इत्यणन्तस्य ग्रहणम्()" इति। एतच्च कात्ययनप्रभृतीनां प्रमाणभूतानां वचनाद्वि ज्ञायते। कात्यायनेनोक्तं यत्()--"अण्ग्रहणे स्वरूपग्रहणं द्रष्टव्यम्(), कृतः? लेखग्रहणात्()" इति। भाष्यकृताप्युक्तम्()--"सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे स्वरपग्रहणं द्रष्टव्यम्(), कुतः? लेखगरहणात्()" इति। एतच्च वचनद्वयं कथमुपपद्यते? यदि लेख इत्यणन्तस्य ग्रहणं भवति, नान्यथा। अथ घञन्तस्यापि लेखशब्दस्य ग्रहणं कस्मान्न विज्ञायते? इत्याह--"घञि तु" इत्यादि। "एतदेव" इत्यादि। अण्ग्रहणादेव तदन्तस्य लेखशब्दस्य ग्रहणे सिद्धे

तस्य पृथग्ग्रहणं क्रियणाणमेतज्ज्ञापयति--उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तं न गृह्रत इति। तेनेह यदण्ग्रहणे घरूपादिसूत्रे च ६।३।४२ घादिप्रत्ययग्रहणे प्रत्ययमात्रं गृह्रते, न तदन्तविधिरिति भावः॥

बाल-मनोरमा

ह्मदयस्य ह्मल्लेखयदण्लासेषु ९७३, ६।३।४९

ह्मदयस्य। लेख, यत्, अम्, लास-एषु परेषु ह्मदयस्य ह्मदादेश इत्यर्थः। ह्मदयं लिखतीति ह्मल्लेखः। "कर्मण्यण्"। ह्मद्यमिति। "ह्मदयस्य प्रियः" इति यत्प्रत्ययः। हार्दमिति। "तस्येद"मित्यण्, ह्मदादेशः। हल्लास इति। घञन्तोऽयमिति भावः। लेखेत्यणन्तस्य ग्रहणमिति। अण्प्रत्ययसाहचर्यादिति प्राञ्चः। व्याक्यानादिति तत्त्वम्। तर्हि लेखग्रहणमेव व्यर्थम्, अमैवे सिद्धेरित्यत आह--ज्ञापकमिति।

ज्ञाप्यांशमाह--उत्तरपदाधिकारे तदन्तविधिर्नास्तीति। तत्फलं तु घरूपकल्पब्ग्रहणे तदन्तविध्यभावः।

तत्त्व-बोधिनी

ह्मदयस्य ह्मल्लेखयदण्लासेषु ८२९, ६।३।४९

अणन्तस्य ग्रहणमिति। अण्प्रत्ययसाहचर्याल्लेखशब्दोऽणन्त एव निर्दिष्ट इति भावः। नन्वेवं लेखग्रहणमेव व्यर्थं स्यादण्ग्रहणेनैव सिद्धेरत आह--- ज्ञापकमिति। अत एव घरूपकल्पेषु तदन्तग्रहणं नेति व्याख्यातम्।

---

सूत्रम्

काशिका-वृत्तिः

वा शोकष्यञ्रोगेषु ६।३।५१

शोक स्यञ् रोग इत्येतेषु परतः हृदयस्य वा हृदादेशो भवति। हृच्छोकः, हृदयशोकः। ष्यञ् सौहार्द्यम्, सौहृदयम्। ब्राह्मणादित्वात् ष्यञ्। हृदादेशपक्षे हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ७।३।१९ इत्युभयपदवृद्धिः। रोगे हृद्रोगः, हृदयरोगः। हृदयशब्देन समानार्थो हृच्छब्दः प्रकृत्यन्तरम् अस्ति, तेन एव सिद्धे विकल्पविधानं प्रपञ्चार्थम्।

न्यासः

वा शोकष्यञ्रोगेषु। , ६।३।५०

"सौहाद्र्यम्()" इति। शोभनं ह्मदयमस्येति बहुव्रीहिः। ततः ष्यञ्()। "ह्मदयशब्देन" इत्यादि। ह्मदयशब्देनेह समानर्थे ह्मच्छब्दे सति यदा ह्मच्छबदस्य प्रयोगः, तदा ह्मच्छोक इति भविष्यति, यदा ह्मदयशब्दसय तदा ह्मदयशोक इति, ततश्च तेनैव प्रकृत्यन्तरेण सिद्धे विकल्पविधानमिदं न कत्र्तव्यम्()। एतत्? क्रियते तु प्रपञ्चार्थम्। स एव सिद्धप्रयोगोऽनेन सूत्रेण कथ्यत इति॥

बाल-मनोरमा

वा शोकष्यञ्रोगेषु ९७४, ६।३।५०

वा शोक। सौहाद्र्यमिति। ब्राआह्मणादित्वाद्भावे ष्यञि "ह्मद्भगसिन्द्वन्ते" इत्युभयपदवृद्धिः। सौह्मदय्यमिति। भावे ष्यञि ह्मच्छब्दत्वाऽभावादादिवृद्धौ "यस्येति चे"ति लोपे रूपमिति भावः।

तत्त्व-बोधिनी

वा शोकष्यञ्रोगेषु ८३०, ६।३।५०

सौहार्यमिति। ब्राआहृणादित्वात्ष्यञ्, ह्मद्भगसिन्ध्वन्ते इत्युबयपदवृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

पादस्य पदाऽज्यातिगौपहतेसु ६।३।५२

पादस्य पद इत्ययम् आदेशो भवति आजि आति ग उपहत इत्येतेषु उत्तरपदेषु। पादाभ्यम् अजति इति पदाजिः। पादाभ्याम् अतति इति पदातिः। अज्यतिभ्यां, पादे च इत्यौणादिकः इण् प्रत्ययः। तत्र अजेर् वीभवो न भवति अत एव निपातनात्। पादाभ्यां गच्छति इति पदगः। पादेन उपहतः पदोपहतः। पादशब्दो वृषादित्वादाद्युदात्तः, तस्य स्थाने पदादेशः उपदेशे एव अन्तोदात्तो निपात्यते, तेन पदोपहतः इति तृतीया कर्मणि [६।२।४८] इति पूर्वपदप्रकृतिस्वरत्वेन अन्तोदात्तत्वं भवति। पदाजिः, पदातिः, पदग इत्येतेषु कृत्स्वरेण समासस्य एव अन्तोदात्तत्वम्।

न्यासः

पादस्य पदाज्यातिगोपहतेषु। , ६।३।५१

"पदाजिः" इति। "अज गतिक्षेपणयोः" (धा।पा।२३०)। "पदातिः" इति। "अत सातत्यगमने" (धा।पा।३८)। "अज्यतिभ्याञ्च पादे च" इत्यौणादिक इण्प्रत्ययः" इति। अत्र "जनिघसिभ्यामिण्()" (द।उ।१।५८) इत्यत इष्ग्रहणानुवृत्तेः। यदौणादिक इण्प्रत्ययः, एवं सति तत्र "अजेर्व्यघञपोः" (२।४।५६) इति वीभावः कस्मान्न भवति? इत्याह--"तत्र" इत्यादि। "पदगः" इति। "अन्तात्यन्ताध्वदूरपार" (३।२।४८) इत्यादौ सूत्रे "डप्रकरणऽन्यत्रापि दृश्यते इति वक्तव्यम्()" (वा।२५६) इत्युक्तम्()। तेन पादशब्देऽप्युपपदे गमेर्डप्रत्ययः। "पदोपहतः" इति। "कर्तृकरणे कृता बहुलम्()" [२।१।३१] इति समासः, पूर्वत्र तूपपदसमासः। अकारान्तोऽयमादेशः। प्रथमायाश्च लुकं कृत्वा निर्देश। "पादशब्दोऽयम्()" इत्यादि। "कर्षात्वतो घञोऽन्त उदात्तः" [६।१।१५३] इत्यन्तोदात्तत्वे प्राप्ते पादशब्दस्य वृषदित्वादाद्युदात्तत्वं विधीयते, ततश्च तस्य स्थाने पदादेशो विधीयमान आन्तरतम्यादाद्युदात्त एव स्यात्? अन्तोदात्तश्चेष्यते। तस्मादान्तोदात्तो निपात्यते उपदेशावस्थायामेव। "तेन" इत्यादिनान्तोदात्तनिपादनस्य फलं दर्शयति। "पदाजिः, पदातिः" इत्यादिनाप्युपदेशग्रहणस्य। यदि "गतिकारकोपपदात्? कृत्()" [६।२।१३८] इति प्रकृतस्वरे कृते पदशब्दस्यान्तोदात्ततवं निपात्यते, तदा तस्य सतिशिष्टत्वं स्यात्(), ततश्च पदाजिः पदातिः पदग इत्येषु कृत्स्वरो बाध्यते; सतिशिष्टस्वरस्य बलीयस्त्वात। उपदेशावस्थायांत्वन्तोदात्तत्वनिपातने कृत्स्वर एव सतिशिष्टो भवति। अतस्तेन समासस्यैवान्तोदात्तत्वं भवति न पदशब्दस्य॥

बाल-मनोरमा

पादस्य पदाज्यातिगोपहतेषु ९७५, ६।३।५१

पादस्य पद। "पदे"ति लुप्तप्रथमाकं पृथक्पदम्। एष्विति। आजि, आति, ग, उपहत-इत्येतेष्वित्यर्थः। अदन्त इति। उत्तरसूत्रे पदिति हलन्तस्य ग्रहणादितिभावः। अजतीति। "अज गतिक्षेपणयोः"। पदातिरिति। पादाभ्यामततीति विग्रहः। "अत गतौ" अज्यतिभ्यामिति। पादे उपपदे अजधातोरतधातोश्च इण्स्यादिति तदर्थः। "अजी"त्यस्य "अजेर्व्यघञपो"रिति वीभावमाशङ्क्याह--अजेर्व्यभावो निपातनादिति। आजीति निर्देशादित्यर्थः। पदग इति। पादाभ्यां गच्छतीत्यर्थः। "गमश्च", "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" इति सूत्रस्थेन "अन्येभ्योऽपि दृश्यते" इति वार्तिकेन गमधातोर्डः। तदन्ते गशब्दे परे पादस्यादन्तः पदादेशः। दकारान्तादेशे तु "पद्ग" इति स्यात्। पदोपहत इति। पादाभ्यामुपहत इति

विग्रहः। अत्रापि दकारान्तादेशे "पदुपहत" इति स्यात्।

तत्त्व-बोधिनी

पादस्य पदाज्यातिगोपहतेषु ८३१, ६।३।५१

पादस्य पद। उत्तरसूत्रे पद्ग्रहणात्पदेत्ययमदन्तः, सौत्रो विभक्तिलुक्। तदाह-- अदन्त आदेश इति। तेन पदगः इत्यादि सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

पद् यत्यतदर्थे ६।३।५३

यत्प्रत्यये परतः पादस्य पदित्ययम् आदेशो भवत्यतदर्थे। पादौ विध्यन्ति पद्याः शर्कराः। पद्याः कण्टकाः। अतदर्थे इति किम्? पादार्थम् उदकं पाद्यम्। पद्भाव इके चरतावुपसङ्ख्यानम्। पादभ्यां चरति पदिकः। पर्पादिभ्यः ष्ठन् ४।४।१० इति पादशब्दात् ष्ठन् प्रत्ययः। शरीरावयववचनस्य पादशब्दस्य ग्रहणम् इह इष्यत्, तेन पणपादमाषशतद् यत् ५।१।३४ इत्यत्र पदादेशो न भवति। द्विपाद्यम्। त्रिपाद्यम्।

न्यासः

पद्यत्यतदर्थे।, ६।३।५२

"पद्याः" इति। "विध्यत्यधनुषा" ४।४।८३ इति यत्()। "पाद्यम्()" इति। पादशब्दात्? "तादर्थ्ये यत्()" ५।४।२४ इत्यनुवर्तमाने "पादार्घाभ्याञ्च" ५।४।२५ इति यत्()। "पद्भावे" इत्यादि। पद्भावे कत्र्तव्येऽ()स्मश्चरत्यर्थे य इक्? तस्मिन्? कृते पद्भावस्योपसंख्यानम्()=प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--पदिति योगविबागात्? सिद्धमिति। पर्पादिष्वेव "पादः पच्च्" (४।४।१०) इति पाठात्? सिद्धमिति वा। "शरीरावयवस्य" ["शरीरावयववचनस्य--काशिका] इत्यादि। कुतः पुनरेतल्लभ्यते? केचिदाहुः--पूर्वसूत्रे सामथ्र्याच्छरीरावयवसय पादशब्दस्य ग्रहणम्()। तत्राज्यातिप्रभृतीनि त्रीण्युत्तरपदानि गमनार्थानि, चतुर्थं तु हननार्थम्()। तेषु गमनाधिषु प्राण्यङ्गस्यैव पादशब्दस्य करणभावः सम्भवति, नैतरस्य। तस्मात्? तत्र प्राण्यह्गवाचिनः पादशब्दस्य ग्रहणम्(), इहपि तदेवानुवत्र्तत इति युक्तम्()--शरीरावयवस्य ग्रहणमिति। यद्येवम्(), तदा "ऋचः शे" (६।३।५५) इत्यत्रापि शरीरावयवस्य ग्रहणं स्यात्()? नैष दोषः; ऋक्सम्बन्धिन शरारावयववचनस्यासम्भवात्()। चतुर्थभागवचनः पादशब्दोऽत्रि ग्रहिष्यते। "तेन" इत्यादि। यत एवं शरारावयववचनपादशब्दस्येह ग्रहणम्(), तेन "पणपादमाष" ५।१।३४ इत्यादो सूत्रे यः पादशब्दस्तस्य न पदादेशो भवति; न ह्रसौ शरीरावयववचनः, कि तर्हि? परिमाणवचनः। कुत एतत्()? पणादिभिः परिमाणवचनैः साहचर्यात्()। "द्विपाद्यम्(), त्रिपाद्यम्()" इति। "तेन क्रीतम्()" ५।१।३६ इत्यर्थे यत्प्रत्ययः॥

बाल-मनोरमा

पद्यत्यतदर्थे ९७६, ६।३।५२

पद्यत्य। पद--यति--अतदर्थे इति च्छेदः। पद्या इति। विध्यत्यधनुषेति यत्प्रत्ययः। पाद्यमिति। "पादार्घाभ्यां चे"ति तादर्थ्ये यत्प्रत्ययः।

इके चरताविति। चरत्यर्थे विहितस्य ष्ठनो य इकादेशः, तस्मिन्परे पादस्य पत्स्यादित्युपसङ्ख्यानमित्यर्थः।

तत्त्व-बोधिनी

पद्यत्यतदर्थे ८३२, ६।३।५२

पद्याइति। "विध्यत्यधनुषे"ति यत्। पाद्यमिति। "पादार्घाभ्यां चे"ति यत्। पूर्वसूत्रे आज्यात्यादिषु प्राण्यङ्गस्यैव करणत्वसंभवादिहापि तद्वचन एव पादशब्दो गृह्रते, न परिमाणवचनः। तेन "द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यं, त्रिपाद्य"मित्यत्र "पणपादमाषे"ति यति पदादेशो न भवति। एतच्च वृत्तिहरदत्तग्रन्थयोः स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

हिमकाषिहतिसु च ६।३।५४

हिम काषिन् हति इत्येतेषु पादशब्दस्य पदित्ययम् आदेशो भवति। हिम पद्धिमम्। काषिन् अथ पत्काषिणो यन्ति। हति पद्धतिः।

न्यासः

हिमकाषिहतिषु च। , ६।३।५३

"पद्धिमम्()" इति। षष्ठीसमासः। "पत्काषिणः" इति। "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति णिनिः, उपपदसमासः। "पद्धतिः" इति। पादाभ्यां हन्यत इति पद्धतिः। क्तिन्नन्तेन हतिशब्देन "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः॥

बाल-मनोरमा

हिमकाषिहतिषु च ९७७, ६।३।५३

हिमकाषि। एषु परेषु पादस्य पत्स्यादित्यर्थः। पद्धिममिति। पादस्य हिममिति विग्रहः। पत्काषीति। पादौ पादाभ्यां वा कषतीत्यर्थः। "सुप्यजातौ" इति णिनिः। पद्धतिरिति। हन्यते इति हतिः। कर्मणि क्तिन्। पादाभ्यां हतिरिति विग्रहः। "कर्तृकरणे कृते"ति समासः।

तत्त्व-बोधिनी

हिमकाषिहतिषु च ८३३, ६।३।५३

पत्काषीति। "सुप्यजाता"विति णिनिः। पद्धितिरिति। कर्मणि क्तिन्।

---

सूत्रम्

काशिका-वृत्तिः

ऋचः शे ६।३।५५

ऋक्षम्बन्धिनः पादशब्दस्य शे परतः पदित्ययम् आदेशो भवति। पच्छो गायत्रीं शंसति। पादं पादं शंसति इति सङ्ख्यैकवचनाच् च वीप्सायाम् ५।४।४३ इति शस् प्रत्ययः। ऋचः इति किम्? पादशः कार्षापणं ददाति इति।

न्यासः

ऋचः शे। , ६।३।५४

"शे" इति तद्धितस्य शस्प्रत्ययस्यावयवभूतो यः शशब्दस्तस्येह ग्रहणम्(); ऋक्पादात्? परसयासम्भवात्()। ननु च पादे शेते इति "अधिकारणे शेतेः" (३।२।१५) इत्यचि कृते पादश इतयत्र शीङ्सम्बन्धी शशब्दः सम्भवति? नैतदस्ति; न हि ऋक्पाद उपपदे शेतेर्धातोरचा भवितव्यम्(); तत्र तु शयनग्सम्भवत्(), अनभिधानाद्वा। योऽपि "लोमादिपामादिपिच्छादिब्यः सनेलचः" ५।२।९९ इति शो विधीयते, सोऽपि नैव ऋक्पादत्? परः सम्भवति; तत्रानभिधानात्()। लोमादिषु तस्यापाठाच्च॥

बाल-मनोरमा

ऋचः शे ९७८, ६।३।५४

ऋचः शे। शस्य शस्प्रत्ययैकदेशस्यानुकरणात्सप्तमीत्यभिप्रेत्योदारति--पच्छ इति। "सङ्ख्यैकवचनाच्च वीप्सायाम्"मिति पादशब्दाच्छस्। तद्धितश्चासर्वविभक्ति"रित्यव्ययत्वम्, नत्विह लोमादिशस्य ग्रहणं, लोमादौ पादशब्दस्य पाठाऽभावात्। पादशः कार्षापणं ददातीति। कार्षापणाख्यापरिमाणविशेषं सुवरह्नादिकं पादं पदां ददातीत्यर्थः।

तत्त्व-बोधिनी

ऋचः शे ८३४, ६।३।५४

ऋचः शे। "शे" इति शस्प्रत्ययस्येदमनुकरणम्, लोमादिषु पादशब्दस्। पाठाऽभावान्मत्वर्थे शो न संभवतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वा घोषमिश्रशब्देषु ६।३।५६

घोष मिश्र शब्द इत्येतेषु च उत्तरपदेषु पादस्य वा पदित्ययम् आदेशो भवति। पद्घोषः, पादघोषः। पन्मिश्रः, पादमिश्रः। पच्छब्दः, पादशब्दः। निष्के च इति वक्तव्यम्। पन्निष्कः, पादनिष्कः।

न्यासः

वा घोषमिश्रशब्देषु। , ६।३।५५

घोषशब्दशबदशब्दाब्यां ["घोषशब्दशब्दाभ्यां--मुद्रितः पाठः] षष्ठीसमासः, मिश्रशब्दे च "पूर्वसदृश" २।१।३० इत्यादिना तृतीयासमासः। "निष्के चेति वकतव्यम्()" इति। निष्कशब्दे चोत्तरपदे पादशब्दस्य पदित्ययमादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"हिमकाषिहतिषु च" ६।३।५३ इत्यतश्चकारोऽत्रानुवत्र्तते, स चानुक्तसमुच्चयार्थः। अथ वा--सूत्रे "वा" इति योग विभागः क्रियते तेन निष्के चोत्तरपदे भविष्यतीति॥

बाल-मनोरमा

वा घोषमिश्रशब्देषु ९७९, ६।३।५५

वा घोष। शेषपूरणेन सूत्रं व्याचष्टे-पादस्य पदिति।

निष्के चेति। "पादस्य प"दिति शेषः।

तत्त्व-बोधिनी

वा घोषमिश्रशब्देषु ८३५, ६।३।५५

पच्छब्द इति। "सङ्ख्यैकवचनाच्च वीप्साया"मिति शस्।

---

सूत्रम्

काशिका-वृत्तिः

उदकस्य उदः संज्ञायाम् ६।३।५७

उदकशब्दस्य संज्ञायां विषये उद इत्ययम् आदेशो भवति उत्तरपदे परतः। उदमेघो नाम यस्य औदमेधिः पुत्रः। उदवाहो नाम यस्य औदवहिः पुत्रः। संज्ञायाम् इति किम्? उदकगिरिः। सञ्जायाम् उत्तरपदस्य्९अ उ)दकशब्दस्य उदादेशो भवति इति वक्तव्यम्। लोहितोदः। नीलोदः। क्षीरोदः।

न्यासः

उदकस्योदः संज्ञायाम्?। , ६।३।५६

"उदमेघो नाम यस्योदमेघिः पुत्रः" इति। पितुरप्रसिद्धत्वादुदमेघस्य तदपत्येन समाख्यातुं यस्योदमेघिः पुत्र इत्युक्तम्()। एतेन यस्यौदमेघिरपत्यं स उदमेघो वेदितव्यमिति दर्शयति। एवम्()--"उदवाहो नाम यस्यौदवाहिः पुत्रः" इत्यत्रापि वेदितव्यम्()। उदमेघ इति षष्ठीसमासः, उदकपूर्णो वा मेघः--शाकपार्थिवादित्वा(वा।८३) न्मध्यमपदलोपी तत्पुरुषः, उदकं बहतति उदवाहः--"कर्मण्यण्()" ३।२।१। "वक्तवयः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--इहापि स एव चकारोऽनुवत्र्तते अनुक्तस मुच्चयार्थः, न चान्यत्? समुच्चेतव्यमस्तीति। उदभावमेवासावुदकशब्दस्य संज्ञायां समुच्चिनोति। तत्र कस्य समुच्चिनोति? यस्य न प्राप्नोति। कस्य न प्राप्नोति? उत्तरपदभूतस्य। तेन संज्ञायामुत्तरपदस्याप्युदकशब्दयोद इत्ययमादेशो भवति। "लोहितोदः, क्षीरोदः" इति बहुव्रीहि-॥

बाल-मनोरमा

उदकस्योदः संज्ञायाम् ९८०, ६।३।५६

उदकस्योदः। उदकशब्दस्य "उद" इत्यादेशः स्यादुत्तरपदे संज्ञायामित्यर्थः। उदमेघ इति। उदकपूर्णमेघसादृश्यात्कस्यचिदियं संज्ञा।

उत्तरपदस्य चेति। उत्तरपदस्य उदकशब्दस्य उदैत्यादेशः स्यात्संज्ञायामित्यर्थः। क्षीरोद इति। क्षीरम् उदकस्थानीयं यस्येति विग्रहः। "क्षीरोदं सरः" इति त्वसाध्वे, असंज्ञात्वात्।

तत्त्व-बोधिनी

उदकस्योदः संज्ञायाम् ८३६, ६।३।५६

उदमेघ इति। सादृश्यात्पुरुषस्येयं संज्ञा।

---

सूत्रम्

काशिका-वृत्तिः

पेषम्वासवाहनधिषु च ६।३।५८

पेषं वास वाहन धि इत्येतेषु च उत्तरपदेसु उदकस्य उद इत्ययम् आदेशो भवति। उदपेषं पिनष्टि। स्नेहने पिषः ३।४।३८ इति णमुल्। वास उदकस्य वासः उदवासः। वाहन उदकस्य वाहनः उदवाहनः। उदकं धीयते ऽस्मिनिति उदधिः।

बाल-मनोरमा

पेषंवासवाहनधिषु च ९८१, ६।३।५७

पेषंवास। "पेष"मिति णमुलन्तमव्ययम्। तस्मन्वासवाहनधिषु च परत उदकशब्दस्य उदः स्यादित्यर्थः। असंज्ञार्थं वचनम्। उदपेषं पिनष्टीति। उदकेन पिनष्टीत्यर्थः। "स्नेहने पिषः" इति णमुल्। कषादिषु यताविध्यनुप्रयोगः। उदवास इति। उदकस्य वास इति विग्रहः। उदवाहन इति। करणे ल्युट्। उदकस्य वाहक इत्यर्थः। उदधिर्घट इति उदकं "धीयतेऽस्मिन्निति विग्रहः। "कर्मण्यधिकरणे चे"ति किप्रत्ययः। असंज्ञात्वास्फोरणाय "घट" इति विशेष्यम्। समुद्रे त्विति। तत्र उदधिशब्दस्य संज्ञात्वेन "उदकस्योदः" इति पूर्वसूत्रेण सिद्धमित्यर्थः।

तत्त्व-बोधिनी

पेषावासवाहनधिषु च ८३७, ६।३।५७

उदपेषमिति। "स्नेहने पिषः"इति णमुल्। उदधिरिति। उदकं धीयतेऽस्मिन्निति विग्रहः। "कर्मण्यधिकरणे चे"ति किप्रत्ययः।

---

सूत्रम्

काशिका-वृत्तिः

एकहलादौ पूरयितव्ये ऽन्यतरस्याम् ६।३।५९

उदकस्योद इति वर्तते। एकः, असहायः तुल्यजातीयेन अनन्तरेण हलादिना, हलादिर् यस्य उत्तरपदस्य तदेकहलादिः, तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्याम् उदकस्य उद इत्ययम् आदेशो भवति। उदकुम्भः, उदककुम्भः। उदपात्रम्, उदकपात्रम्। एकहलादौ इति किम्? उदकस्थालम्। पूरयितव्ये इति किम्? उदकपर्वतः।

न्यासः

एकहलादौ पूरयितव्येऽन्यतरस्याम्?। , ६।३।५८

यद्येकशब्दः सुख्यावचन इह गृह्यते, तदानर्थकं तस्य ग्रहणं स्यात्()। न हि क्वचित्? द्वौ बहवो वा हल आदिभूताः सम्भवन्ति, यद्व्यवच्छेदार्थमेकग्रहणं क्रियते। तस्मादसहायवचनोऽयमेकशब्दः। एवमपि यः कश्चिदविशिष्ट एकोऽसहायो हल्? आदिर्यस्य तदेकहलाद्युत्तरपदं गृह्येत, तदोदकस्थानमित्यत्रापि स्यात्()। अत्रापि हि सकारोऽसहाय एव एकहल्()। यद्यनेके वर्णा युगपदुच्चार्येरन्(), उच्चरिता वा वर्णा न प्रध्वंसेरन्(), तदा ससहायस्यापि स्यादादित्वम्()। न चैवम्(); यतो वर्णा न युगपदुच्चार्यन्ते, ते चोच्चारितप्रध्वसिनः। तस्मान्नास्त्येव क्वचित्? किंचिदनेकहलादित्वं यद्व्यवच्छेदार्थमेकहलादावित्युच्यते। उक्तं चेदम्()। अतोऽस्मादेव वचनाद्विशिष्टमात्रैकहलादित्वं विवक्षितमित्येतत्? सर्वं चेतसि कृत्वा तदेव विशिष्टं दर्शयितुमाह--"एकोऽसहायः" इत्यादि। यश्चातुल्यजातीयेनाप्यचा विनैको हल्? स आदिर्यस्येति तदेकहलादि। तुल्यजातीयेन चव्यवहितेनापि यस्य तदेकहलादीहाश्रीयेत तदा न क्वचित्? स्यात्(); तथाविधस्योत्तरपदस्य पूरयितव्यवाचिनोऽभावात्(), उच्यते चेदम्()। तस्माद्वचनप्रामाण्यात्? तुल्यजातीयेन हलाऽनन्तरेणाव्यवहितेन विना यो वत्र्तते सोऽसहाय एव#एहैकशब्देनासहायवाचिना विवक्षित इति गम्यते। एवंदिधो हलादिर्यस्य तदेकहालादि। न चैवंविधः स्थानशब्दस्यादिर्हलस्तीत्येकहलादिगरहणेन स्थानशब्दो निवत्र्तते। "पूरियतव्यवाचिनि" इति। उदकादिना द्रव्येणान्तव्र्याप्तव्यः पूरयितव्य इत्युच्येत। तद्वक्तुं शीलमस्येति ताच्छीलिको णिनिः॥

बाल-मनोरमा

एकहलादौ पूरयितव्येऽन्यतरस्याम् ९८२, ६।३।५८

एकहलादौ। हस्त्वस्य एकैकवर्मधर्मत्वादेव सिद्धे एकग्रहणादसंयुक्तत्वं लभ्यते। पूरयितव्यं=पूरणार्हं कुम्भादि। असंयुक्तहलादौ पूरयितव्यवाचके उत्तरपदे परे उदकस्य उद इत्यादेशः स्यादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

मन्थओदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ६।३।६०

मन्थ ओदन सक्तु बिन्दु वज्र भार हार वीवध गाह इत्येतेषु उत्तरपदेसु उदकस्य उद इत्ययम् आदेशो भवति अन्यतरस्याम्। उदकेन मन्थः उदमन्थः, उदकमन्थः। ओदन उदकेन ओदनः उदौदनः, उदकौदनः। सक्तु उदकेन सक्तुः उदसक्तुः, उदकसक्तुः। बिन्दु उदकस्य बिन्दुः उदबिन्दुः, उदकबिन्दुः। वज्र उदकस्य वज्रः उदवज्रः, उदकवज्रः। भार उदकं विभर्ति इति उदभारः, उदकभारः। हार उदकं हरति इति उदहारः, उदकहारः। वीवध उदकस्य वीवधः उदवीवधः, उदकवीवधः। गाह उदकं गाहते इति उदगाहः, उदकगाहः।

न्यासः

मन्थैदनसक्तुबिन्दुजरभारहारवीवधगाहेषु च। , ६।३।५९

द्रवद्रव्यसंपृक्ताः सक्तवो मन्थ इत्युच्यते। तत्र मन्थशब्दोऽयं यद्यव्युत्पन्नं प्रातिपदिकम्(), तदोदकेन मन्थ इति "तृतीया" (२।१।३०) इति योगविभागात्? समासः। अथ व्युत्पाद्यते--मध्यत इति मन्थः, तदा "कर्त्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। सकत्वोदनाभ्यां "अन्नेन व्यञ्जनम्()" २।१।३३ इति समासः। बिन्दुवज्रवीवधैः "षष्ठी" २।२।८ इति भारहारगाहैरणन्तैः "उपपदमतिङ्" २।२।१९ इति॥

बाल-मनोरमा

मन्थौदनसक्तुविन्दुवज्रभारहारवीवधगाहेषु च ९८३, ६।३।५९

मन्थौदन। "उदकस्य उदादेशो वे"ति शेषः। अपूरयितव्यार्थं वचनम्। उदमन्थ उदकमन्थ इति। उदकमिश्रो मन्थ इति विग्रहः। द्रवद्रव्यसंपृक्ताः सक्तवो मन्थः। भर्जितयवपिष्टानि-सक्तवः। उदौदन उदकौदन इति। उदकमिश्र इत्यर्थः। इत्यादीति। उदसक्तवः, उदकसक्तवः। उदबिन्दवः, उदकबिन्दवः। उदवज्रः, उदकवज्रः। उदभारः, उदकभारः। उदहारः, उदकहारः। उदवीवधः, उदकवीवधः। उदगाहः, उदकगाहः। वीवधस्तु जलाद्याहरणयोग्य उभयतःशिक्यः स्कन्तबाह्यः काष्ठविशेषः।

तत्त्व-बोधिनी

मन्थौदनसक्तुविन्दुवज्राभारहारवीवधगाहेषु च ८३८, ६।३।५९

मन्थौद। उदमन्थ इति। द्रवद्रव्यसंस्कृताः सक्तवो--मन्थः। "उदकेन मन्थः"इति विग्रहे "तृतीये"ति योगविभागात्समास इति हरदत्तः।

इयङुवङ्भाविनामव्ययानां च नेति वाच्यम्। शुक्लीभाव इति। "ऊर्यादिच्विडाचश्चे"ति च्व्यन्तत्वान्निपातत्वेऽव्ययत्वम्।

अभ्रुकुंसादीनामिति वक्तब्यम्। भ्रूकुंस इत्यादि। "भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः"इत्यमरः। "तन्द्री प्रमीला भ्रकुटिर्भ्रूकुटिः स्त्रिया"मिति च।

---

सूत्रम्

काशिका-वृत्तिः

इको ह्रस्वो ऽङ्यो गालवस्य ६।३।६१

इगन्तस्य अङ्यन्तस्य उत्तरपदे ह्रस्वः भवति गालवस्य आचर्यस्य मतेन अन्यतरस्याम्। ग्रामणिपुत्रः ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः। इकः इति किम्? खट्वापादः। मालापादः। अङ्यः इति किम्? गार्गीपुत्रः। वात्सीपुत्रः। गालवग्रहणं पुजार्थम्। अन्यतरस्याम् इति हि वर्तते। व्य्वस्थितविभषा च इयम्। तेन इह न भवति, कारीषगन्धीपुत्रः इति। इयङुवङ्भाविनाम् अव्ययानां च न भवति। श्रीकुलम्। भ्रूकुलम्। काण्दीभूतम्। वृषलीभूतम्। भ्रूकुंसादीनां तु भवत्येव। भ्रुकुंसः। भ्रुकुटिः। अपर आह। भ्रुकुंसादीनाम् अकारो भवति इति वक्तव्यम्। भ्रकुंसः। भ्रकुटिः।

न्यासः

इको ह्रस्वोऽङ्?यो गालस्य।, ६।३।६०

"ग्रामणिपुत्रः" इति। ग्रामं नयतीती "सत्यूद्विष" ३।२।६१ इत्यादिना क्विप्()। "अग्रग्रामाभ्याञ्च नयतेः" (कात्या।वा।५०६४) इति णत्वम्()। "गार्गीपुत्रः" इति। "यञश्च" ४।१।१६ इति गार्ग्यशब्दान्ङीप्(), "यस्येति च" ६।४।१४८ इत्यकारस्य लोपः, "हलस्तद्धितस्य" ६।४।१५० इति यकारस्य च। अथ दिकल्पार्थमेव गालवग्रहणं कस्मान्न भवति? इत्याह--"अन्यतरस्याम्()" इत्यादि। "कारीषगन्धीपुत्रः" इति। करीषगन्ध्यायायः पुत्र इति षष्ठीसमासः "ष्यङः सम्प्रसारणम्()" ६।१।१३ इत्यादिना सम्प्रसारणम्(), "सम्प्रसारणाच्च" ६।१।१०४ इति परपूरवत्वम्(), "हलः" ६।४।२ (इति) सम्प्रसारणस्य दीर्घः। "इयङुवङ्भाविनाम्()" इत्यादि। इयङुवङौ भाविनौ येषां ते तथोच्यन्ते। "श्रीकुलम्()" इति। इयङ्भाविन उदाहरणम्()। "भ्रूकुलम्()" इति। उवङ्भाविनश्च। "कण्डीभूतम्(), वृषलीभूतम्()" इति। अवप्ययानाम्()। काण्डवृषलशब्दाभ्यां "अभूततद्भावे" ५।४।५० इत्यादिना च्विः, "अस्य च्वौ" ७।४।३२ इतीत्वम्()। "भ्रूकुंसः" इति। भ्रूश्चासौ कुंसश्चेति विशेषणसमासः। एवं "भ्रुकुटिः" इत्यत्रापि। "वक्तव्यम्()" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--पृषोदरादित्वाद्भ्रुकुंसादीनामकारो भविष्यतीति॥

बाल-मनोरमा

इकोह्रस्वोऽङ्यो गालवस्य ९८४, ६।३।६०

इको ह्यस्वो। अङ्य इति च्छेदः। ग्रामणीपत्र इति। कर्मधारयः, षष्ठीसमासो वा। नीधातोरीकारोऽयं, नतु ङीप्प्रत्यय इति भावः। ननु गालवग्रहणस्य विकल्पार्थकत्वं किं न स्यादित्यत आह--अन्यतरस्यामित्यनुवृत्तेरिति।

इयङुवङ्भाविनामिति। तदर्हाणामित्यर्थः। श्रीमदः भ्रूभङ्ग इति। श्रीभ्रूशब्दौ अजादिप्रत्यये परे इयङुवङ्()र्हाविति भावः। शुक्लीभाव इति। अभूततद्भावे च्विप्रत्यये "अस्य च्वौ" इति ईत्त्वम्। "च्वौ" इति दीर्घः। ऊर्यादिच्विडाचश्चे"ति निपातत्वादव्ययत्वमिति भावः।

अभ्रूकुंसादीनामिति। भ्रूशब्दस्य उवङ्भावितया ह्यस्वनिषेधो यः प्राप्तः स नेत्यर्थः। अकारोऽनेनेति। "अ भ्रूकुंसादीना"मिति वार्तिके "अ" इति लुप्तप्रथमाकं पृथक्पदम्। तथा च भ्रूकुंसादीनामवयवो यो भ्रूशब्दस्तस्य अकारोऽन्तादेशः स्यादिति व्याख्यानान्तरमित्यर्थः। भ्रुवा कुंसो भाषणमिति। तत्तदर्थज्ञापनमित्यर्थः। "भ्रुकुंसश्च

भ्रुकुंसश्च भ्रूकुसश्चेति नर्तकः" इत्यमरः, "भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियामि"ति च।

---

सूत्रम्

काशिका-वृत्तिः

एक तद्धिते च ६।३।६२

एकशब्दस्य तद्धिते उत्तरपदे ह्रस्वो भवति। एकस्या आगतम् एकरूप्यम्। एकमयम्। एकस्य भावः एकत्वम्। एकता। उत्तरपदे एकस्याः क्षीरम् एकक्षीरम्। एकदुग्धम्। लिङ्गविशिष्टस्य ग्रहणम् एकशब्दह्रस्वत्वं प्रयोजयति। अचा हि गृह्यमाणम् अत्र विशेष्यते, न पुनरच् गृह्यमाणेन इति।

न्यासः

एक तद्धिते च। , ६।३।६१

"एकरूप्यम्()" इति। "हेतुमनुष्यभ्योऽन्यतरस्यां रूप्यः" ४।३।८१ इति रूप्यः। "एकमयम्()" इति। "मयट्? च" ४।३।८२ इति, मयट्()। "एकत्वम्(), एकता" इति। " तस्य भावसत्वतलौ" ५।१।११८ इति त्वतलौ। यदैकशब्दः संख्यापरो भवति तदैतदुदाहरणम्()। यदा संख्येयपरो भवति। तदा "त्वलोर्गुणवचनस्य" (वा।७३०) इति पुंवद्भावेनैव सिद्धम्()। ननु च गुणमुक्तवान्? गुणवचनः, यश्च गुणमात्रमभिधाय तद्विशिष्टं द्रव्यमाह स गुणवचनो भवति। तद्यथा--कृष्णः पटः, शुक्लः पट इति; अयं पुनरेकशब्दो न क्वचिदपि द्रव्यव्यतिरिक्तं गुणमाह, सर्वदा संख्येये द्रव्ये वर्तत इति कृत्वा, तत्? कुतोऽसय पुंवद्भावः? अयुक्तमिदमभिधीयते; तथा हि--प्रसिद्धमामाश्रित्यैकादयः संख्येयवचना इत्युच्यन्ते, न त्वेषां संख्याने वृत्तिर्नाभ्युपेयेति। तथा हि--"द्व्येकयोर्द्विवचनैकवचने" १।४।२२ इत्यत्र त्वेकशब्दः संख्यायामेव प्रयुक्तो न संख्येये द्रव्ये। "लिङ्गविशिष्टस्य" इत्यादि। पुंल्लिङ्गो य एकशब्दः स स्वभावत एव ह्यस्वान्त इति न तद्ग्रहणं प्रयोजयति, अपि तु स्त्रीलिंगविशिष्टस्यैव। तस्यैव हि ह्यस्वत्वं विधीयमानमर्थवद्भवति। ननु नैतस्याप्येकशब्दस्य य एकारस्तस्य ह्यस्वत्वं विधीयमानमर्थवद्भवति, तत्? किमुच्यते लिङ्गविशिष्टस्यैकशब्दस्य ग्रहणं प्रयोजयति? इत्याह--"अचा गृह्रमाणम्()" इत्यादि। विशेषणविशेष्यभावं प्रति कामचारः। तथा ह्युक्तम्()--विशेषणविशेष्यभावयोर्यथेष्टत्वादिति। तत्र यदि गृह्रमाणेनैकशब्देनाज्विशिष्यते--एकशब्दस्य योऽजिति, तदैकसम्बन्धिन एकारस्य हरस्वत्वं विधीयमानमर्थवद्भवति। पुंल्लिङ्गस्याप्येकशब्दस्य ग्रहणं प्रयोजति। न चात्र गृह्रमाणेनाज्विशिष्यते; एकारस्य ह्यसवस्यानिष्टत्वात्()। न ह्रनिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता (भो।प।सू।१०७), तस्मादाचा गृह्रमाण एकशब्दोऽत्र विशिष्यते। तेन लिङ्गविशिष्टस्य ग्रहणम्()। एकशब्दस्य ह्यस्वो भवति, किं विशिष्टस्याचः? अजन्तस्येत्यर्थः। तत्रालोऽन्त्यस्यैव ह्यस्वत्वेन भवितव्यम्(), तच्च टाबन्तस्यैव सार्थकम्(), न पुंल्लिङ्गस्य; न हि ह्यस्वस्यैव ह्यस्वे विधीयमाने कश्चिदर्थः सिध्यति। इतिकरणो हेतौ। यत एव#आचा गृह्रमाण एकशब्दोऽत्र विशिष्यते, तेन लिङ्गविशिष्टस्य ग्रहणमेकशब्दस्य प्रयोजयति॥

बाल-मनोरमा

एकतद्धिते च ९८५, ६।३।६१

एक तद्धिते च। एकेति लुप्तषष्ठीकम्। तदाह--एकशब्दस्येति। "स्त्रीप्रत्ययान्तस्ये"ति शेषः, अन्यथा ह्रस्वविधिवैयथ्र्यात्। उत्तरपदे चेति। चकारात्तदनुकर्ष इति भावः। एकरूप्यमिति। "हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः"। एकक्षीरमिति। एकश्याः क्षीरमिति विग्रहः।

तत्त्व-बोधिनी

एकतद्धिते च ८३९, ६।३।६१

एक तद्धिते च। "एके"ति लुप्तषष्ठीकं, तदाह---एकशब्दस्योति। ह्रस्वविधानमस्य टाबन्ते एवोपयुज्यते न तु केवले, स्वभावत एव ह्रस्व त्वादतो व्याचष्टे---एकस्या आगतमित्यादि।

---

सूत्रम्

काशिका-वृत्तिः

ङ्यापोः संज्ञाछन्दसोर् बहुलम् ६।३।६३

ङ्यन्तस्य अबन्तस्य च संज्ञाछन्दसोः बहुलं ह्रस्वो भवति। ङ्यन्तस्य संज्ञायाम् रेवतिपुत्रः। रोहिणिपुत्रः। भरणिपुत्रः। न च भवति। नान्दीकरः। नान्दीघोषः। नान्दीविशालः। ग्यन्तस्य छन्दसि कुमारिदा प्रफर्विदा। न च भवति। फल्गुनीपौर्णमासी। जगतीछदः। आबन्तस्य संज्ञायाम् शिलवहम्। शिलप्रस्थम्। न च भवति। लोमकागृहम्। लोमकाषण्डम्। आबन्तस्य छन्दसि अजक्षीरेण जुहोति। ऊर्णम्रदाः पृथिवी दक्षिणावत। न च भवति। ऊर्णासूत्रेण कवयो वयन्ति।

न्यासः

ङ्यापोः संज्ञाछन्दसोर्बहुलम्?। , ६।३।६२

"रेवतिपुत्रः" इति षष्ठीसमासः। एवं "रोहिणिपुत्रः" इत्यादावपि। कुमारीं ददातीति "कुमारिदा"। उर्वीं ददातीति "उर्विदा"। "आतोऽनुपसर्गे कः" ३।२।३। "फाल्गुनी" इत्यादि। फाल्गुनी चासौ पौर्णमासौ चेति फाल्गुनी पौर्णमासौ, "विशेषणम्()" २।१।७६ इत्यादिना समासः। एवं "जगतीच्छन्दः" इत्यत्रापि। "शिलवहम्(), शिलप्रस्थम्()" इति। शिलाशब्दसय वहप्रस्थशब्दाभ्यां "षष्ठी" २।२।८ इत्यनेन समासः। "लोमकागृहम्(), लोमकाषण्डम्()" इति। अत्रापि लोमकाशब्दसय गृहषण्डशब्दाभ्याम्()। "अजक्षीरेण इति। अत्राप्यजाशब्दस्य क्षीरशब्देन। "ऊर्णमृत्()" ["ऊर्णमृदा"--काशिका। ऊर्णम्रवा--पदमञ्जरी] इति। ऊर्णासहिता मृद्? ऊर्णमृत्()। शाकपर्थिवादित्वादुत्तरपदलोपी समासः॥

बाल-मनोरमा

ङ्यापोः संज्ञाछन्दसोर्बहुलम् ९८६, ६।३।६२

ङ्यापोः। "उत्तरपदे ह्रस्वः स्या"दिति शेषः। रेवतिपुत्र इति। कस्यचित्संज्ञेयम्। अथ छन्दस्युदाहरति--अजक्षीरमिति। अजायाः क्षीरमिति विग्रहः। "परमं वा एतत्पयो यदजक्षीर"मिति तैत्तिरीये।

---

सूत्रम्

काशिका-वृत्तिः

त्वे च ६।३।६४

त्वप्रत्यये परतो ङ्यापोः बहुलं ह्रस्वो भवति। तदजाया भावः अजत्वम्, अजात्वम्। तद्रोहिण्या भावः रोहिणित्वम्, रोहिणीत्वम्। संज्ञायाम् असम्भवाच् छन्दस्येव उदाहरणानि भवन्ति।

न्यासः

त्वे च। , ६।३।६३

"संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति" इति। एवकारेण संज्ञाया व्यवच्छेदः क्रियते। न हि त्वप्रत्यये ङ्यापोह्र्यस्वत्वे कृते कस्यचित्? संज्ञा गम्यते। तेन संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति॥

बाल-मनोरमा

त्वे च ९८७, ६।३।६३

त्वे च। शेषपूरणेन सूत्रं व्याचष्टे--त्वप्रत्यये ङ्यापोर्वा ह्रस्व इति। अजत्वं रोहिणित्वमिति। संज्ञात्वाऽभावाच्छन्दस्येवाऽयमिति वृत्तिः। अनुत्तरपदार्थं वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

इष्टकाइषीकामालानां चिततूलभारिषु ६।३।६५

इष्टकेषीकामालानां चित तूल भारिनित्येतेषु उत्तरपदेषु यथासङ्ख्यं ह्रस्वो भवति। इष्टकचितम्। इषीकतूलम्। मालभारिणी कन्या। इष्तकादिभ्यस् तदन्तस्य अपि ग्रहणं भवति। पक्वेष्टकचितम्। मुञ्जेषीकतूलम्। उत्पलमालभारिणी कन्या।

न्यासः

इष्टकेषीकामलानां चिततूलभारिषु। , ६।३।६४

"इष्टकचितम्()" इति। "कर्तृकरणे" २।१।३१ इत्यादिना समासः। "इषीकतूलम्()" इति। षष्ठीसमासः। "मालभारिणी" इति। मालां भर्तुं शीलमस्या इति ताच्छील्ये णिनिः ३।२।७८, "उपपदमतिङ्()" २।२।१९ इति समासः। "इष्टकादिभिस्तदन्तस्यापि ग्रहणं भवति" इति। बहुलग्रहणानुवृत्तेरित्यभिप्रायः॥

बाल-मनोरमा

इष्टकेषीकामालानां चिततूलभारिषु ९९१, ६।३।६४

इष्टकेषीका। उत्तरपदे इत्यधिकृतम्। तल्लब्धं पूर्वपदमिष्टकादिभिर्विशेष्यते। तदन्तविधिः। व्यपदेशिवद्भावात्तेषामपि ग्रहणम्। उत्तरपदाधिकारस्यापि पदाधिकाराभ्युपगमात् "पदाङ्गधिकारे तस्य तदन्तस्य चे"ति वचनेन वा तेषां ग्रहणम्। "इको ह्रस्वः" इत्यतो ह्रस्व इत्यनुवर्तते। तदाह--इष्टकादीनां तदन्तानां चेति। इष्टकचितमिति। इष्टकादिभिश्चितमिति विग्रहः। "कर्तृकरणे कृते"ति समासः। तदन्तविधेः प्रयोजनमाह--पक्वेष्टकचितमिति। इषीकातूलमिति। इषीकायास्तूलमिति विग्रहः। तूलमग्रं। शष्पमित्यन्ये। मुञ्जेषीततूलमिति। मुञ्जेषीकायास्तूलमिति विग्रहः। मालभारीति। "सुप्यजातौ" इति णिनिः। [सूत्रे]हारिष्विति पाठान्तरम्।

तत्त्व-बोधिनी

इष्टकेषीकामालानां चिततूलभारिषु ८४२, ६।३।६४

इष्टकचितमिति। "कर्तृकरणे कृते"ति तृतीयासमासः। पक्वेष्टकचितमिति। पदाधिकारात्तदन्तविधिः प्रवर्तत इति भावः। मालभारीति। "मालां बिभर्ती"त्यर्थः। "सुप्यजातौ" इति णिनिः। "हारिषु"इति पाठान्तरम्।

---

सूत्रम्

काशिका-वृत्तिः

खित्यनव्ययस्य ६।३।६६

खिदन्ते उत्तरपदे ऽनव्ययस्य ह्रस्वो भवति। कालिंमन्या। हरिणिम्मन्या। मुमा ह्रस्वो न बाध्यते, अन्यथा हि

ह्रस्वशासनम् अनर्थकं स्यात्। अनव्ययस्य इति किम्? दोषामन्यमहः। दिवामन्या रात्रिः। अनव्ययस्य इत्येतदेव ज्ञापकम् इह खिदन्तग्रहणस्य।

लघु-सिद्धान्त-कौमुदी

खित्यनव्ययस्य ८०९, ६।३।६५

खिदन्ते परे पूर्वपदस्य ह्रस्वः। ततो मुम्। कालिम्मन्या॥

न्यासः

खित्यनव्ययस्य। , ६।३।६५

"कालिम्मन्या, हरिणिम्मन्या" इति। कालीमात्मानं मन्यते हरिणीमात्मानं मन्यत इति "आत्ममाने खश्च" ३।२।८३ इति खश्(), दिवादित्वाच्छयन्(), अनेन ह्यस्वत्वम्(), उत्तरसूत्रेण मुम्()। इहाजन्तस्य ह्यस्वत्वमभ्युपगम्यम्(); अन्यथा वाङ्मन्य इत्यत्रापि स्यात्()। अजन्तस्य ह्यस्वविधाने सति परत्वान्मुमि कृतेऽनजन्तत्वाध्यस्वो न प्राप्नोतीति यो मन्येत तं प्रत्याह--"मुमा ह्यस्वो न बाध्यते" इति। अत्रैव हेतुमाह--"अन्यथा हि" इत्यादि। ह्यस्वः शिष्यते=विधीयते येन तत्? ह्यस्वशासनं "खित्यनवययस्य " इत्येतद्ववचनम्()। यदि हि मुमा ह्यस्वो बाध्येत, ततो ह्यस्वशासनामिदमनवकाशं स्यात्(), ततस्तस्यानर्थक्यमेव स्यात्()। तस्मान्मा भूदेष दोष इति मुमा ह्यस्वो न बाध्यते। तेन विरोधाभावादुभयं भवति--ह्यसवः, मुम्? च। कथं पुनर्मुमा ह्यस्वसय बाधा शङ्किता? कथं वा ह्यस्वशासनस्यानवकाशत्वम्(), यावता खित्यजन्तस्याविशेषेण मुम्? विधीयते, ह्यस्वत्वं बाधा शङ्किता? कथं वा ह्यस्वशासनस्यानवकाशत्वम्(), यावता खित्यजन्तस्याविशेषेण मुम्? च। कथं पुनर्मुमा ह्यस्वस्य बाधा शङ्किता? कथं वा ह्यस्वशासनस्यानवकाशत्वम्(), यावता खित्यजन्तस्याविशेषेण मुम्? विधीयते, ह्यस्वतवं तु सामश्र्याद्दीर्घस्य, न हि ह्यसवस्य ह्यस्वविधानमर्थवद्भवति, एवं च स्तनन्धयादिषु कृतार्थत्वान्मुमेव ह्यस्वेनापवादेन कालिम्मन्यादिषु बाध्येत? एवं मन्यते--अपवादविषयेऽपि मुमा विधानार्थं मुम्शास्त्रस्यावश्यमावृत्तिः कर्ततव्या; अन्यथा कालिम्मन्येत्यतर मुम्? न स्यात्()। ततश्चापवादविषयेऽपि मुमा प्रवत्र्तमानेन ह्यसवस्य बाधा सम्भाव्येत। अनवकाशत्वं चातएवापवादविषयेऽपि मुम्प्रवृत्तेरिति। अथ कथमत्र खिदन्तस्य गरहणम्(), यावता ज्ञापितमेतदुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधीर्नास्ति? (पु।प।पा।२६) त्यत आह--"अनवययस्येत्येतदेव" इत्यादि। यद्यत्र खित्प्रतययमात्रं गृह्नेत न तदन्तम्(), ततोनव्ययस्येति प्रतिषेधोऽपार्थकः स्यात्()। न ह्रव्ययात् परः खित्? प्रतययः सम्भवति; धातोरेव तस्य विधानात्()। ततश्चानर्थकत्वादनव्ययस्येत्येतन्नोक्तं स्यात्()। उक्तञ्च--तस्मादेतदेवै तज्ज्ञापयति--खिदन्तस्यात्र ग्रहणमिति॥

बाल-मनोरमा

खित्यनव्ययस्य ७५६, ६।३।६५

खित्यनव्ययस्य। ह्यस्वः स्यादिति। "इको ह्यस्वोऽङ्यो गालवस्य" इत्यतस्तदनुवृत्तेरिति भावः। अत्र ह्यस्वश्रुत्या अच इत्युपस्थितं द्रष्टव्यम्। ततो मुमिति। पूर्वं ह्यस्वे कृते ततो मुमित्यर्थः। पूर्वं मुमि कृते तु अजन्तत्वाऽभावाद्ध्रस्वो न स्यादिति भावः। शर्धञ्जहा माषा इति। भाष्ये तु "मृगा" इति पाठः। शर्द्धः अपानद्वारे स्थितः शब्द इति माधवादयः। अन्तर्भावितेति। तथा च शद्र्ध हापयन्तीति विग्रहः फलितः। भाष्ये तु "वातशुनी"इति वार्तिके गर्ध"ष्विति पठितम्।

तत्त्व-बोधिनी

खित्यनव्ययस्य ६३१, ६।३।६५

शर्द्धंजहा इति। शर्धनं शर्धः। शृधु कुत्सायाम्। घञ्। तं जहाति इति। ननु माषाः शद्र्धमपानशब्दं त्याजयन्ति न तु स्वतो

जहतीत्याशङ्कायामाह-- अन्तर्भावितण्यर्थ इति। यथासङ्ख्यं वारयितुमाह-- अत्रेति।

---

सूत्रम्

काशिका-वृत्तिः

अरुर्द्विषदजन्तस्य मुम् ६।३।६७

अरुस् द्विषतित्येतयोरजनतानां च खिदन्त उत्तरपदे मुमागमो भवति अनव्ययस्य। अरुन्तुदः। द्विषन्तपः। अजन्तानाम् कालिम्मन्या। अरुर्द्विषदजन्तस्य इति किम्? विद्वन्मन्यः। अनव्ययस्य इत्येव, दोषामन्यमहः। दिवामन्या रात्रिः। अन्तग्रहणं किम्? कृताजन्तकार्यप्रतिपत्त्यर्थम्। अतो ह्रस्वे कृते मुम् भवति।

लघु-सिद्धान्त-कौमुदी

अरुर्द्विषदजन्तस्य मुम् ८००, ६।३।६६

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य। शित्त्वाच्छबादिः। जनमेजयतीति जनमेजयः॥

न्यासः

अरुर्द्विषदजन्तस्य मुम्?। , ६।३।६६

"अरुन्तुदः" इति। अरुस्तुदतीति "विष्वरुषोस्तुदः" (३।२।३५) इति खश्? संयोगान्तलोपः, तुदादीत्वाच्छः, अतो गुणे ६।१।९४ पररूपत्वम्()। "द्विषन्तपः" इति। द्विषन्तं तापयतीति "द्विषत्परयोस्तापेः" ३।२।३९ इति खच्(), "खचि ह्यसवः" ६।४।९४ इति ह्यस्वत्वम्()। "विद्वन्मन्यः" इति। विद्वांसमात्मानं मन्यत इति, "आत्ममाने खश्च" ३।२।८३ इति खश्(), "वसुरुआंसुध्वंस्वनडुहां दः" ८।२।७२ इति सकारस्य दकारः, "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति तस्य नकारः। अथान्तग्रहणं किमर्थम्(), यावता "येन विधस्तदन्तस्य" (१।१।७२) इत्यनेन तदन्तस्यैव भविष्यति? इत्याह--"अन्तग्रहणम्()" इत्यादि। कृतमजन्तकार्यं यस्य स कृताजन्तकार्य आगमी, तस्यैवविधस्य प्रतिपत्तिः प्रतीतिर्यथा स्यादित्येवमर्थमन्तग्रहणम्()। अन्तग्रहणेन हि कार्यान्तरस्यान्तेऽवसाने मुम्? कर्तवय इत्येषोऽर्थः सूच्यते। अतोऽजन्तकार्ये ह्यसवत्वे कृते पश्चान्मुम्? भवति। ननु च मुमा ह्यस्वो न बाध्यत इत्यनेनैव भविष्यतति सोपपतिकोऽयमर्थः प्रतिपादितः, तत्? किमर्थमेतदन्तग्रहणम्()? नैतदस्ति; तेन हि निरवकाशाद्? ह्यस्वशासनस्य मुमा ह्यस्वो न बाध्यत इत्येतावन्मात्रं प्रतपादितम्(), न तु कृताजन्तकार्यस्य मुम्? भवतीत्येषोऽर्थः, ततः परत्वान्मुमि कृत सत्यनजन्तस्यापि ह्यस्वत्वं प्रसज्येत। अत्र को दोषः? खित्यन्तहरसवभावी नास्तीति। यथा कालिम्मन्य इत्यत्र मुमि कृते सत्यनजन्तस्यापि ह्यस्वत्वं भवति, तथा वाङ्मन्य इत्यत्र स्यादिति। तस्मादन्तग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

अरुर्द्विषदजन्तस्य मुम् ७५५, ६।३।६६

अरुर्द्विषत्। अरुस्, द्वि,त्, अजन्त एषां समाहारद्वन्द्वात् षष्ठी। "अलुगुत्तरपदे" #इत्यधिकारादुत्तरपदे इति लभ्यते। "खित्यनध्ययस्य" इत्यतः खितीत्यनुवृत्तम्। कितः प्रत्ययत्वात्तदन्तविधिः। तदाह--खिदन्ते उत्तरपदे इति। जनमेजय इति। जनान् एजयतीति विग्रहः। खशः शित्त्वात्सार्वधातुकत्वं।शप्, गुणायादेशौ, पररूपम्,सुपो लुकि, मुम्। वातशुनीति। वार्तिकमिदम्। वात, शुनी, तिल, शर्ध एषां द्वन्द्वात्सप्तमी। अज, ध्टे, तुद्, दहाति एषां द्वन्द्वात्पञ्चमी। यथासङ्ख्यमन्वयः। वातमजा इति। वातमजन्तीति विग्रहः। सुपो लुकि मुम्। अथ शुनीं धयतीति विग्रहे शुनीशब्दे उपपदे धेटः खशि शपि अयादेशे पररूपे शुनी धय इति स्थिते आह--

तत्त्व-बोधिनी

अरुर्द्विषदजन्तस्य मुम् ६३०, ६।३।६६

अरुर्द्विषत्। वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं शुनिन्धय इत्यादौ ह्रस्वे कृते मुम्प्रवृत्त्यर्थम्। तथा हि अन्तः शब्दः समीपपरः, अञ्चाऽसावन्तश्चेति विग्रहः। निपातनाद्विशेषणस्य परनिपातः। समीपः "खित्यनव्ययस्ये"ति सूत्रेण विहितो योऽच् तदन्तस्य मुमिति व्याख्यायते। एवं च "जनमेजय" इत्यादौस्वतो ह्रस्वेऽपि मुम्सिद्धये प्रथमं खितीति ह्रस्वः प्रवर्तनीय इत्यवधेयम्।

---

सूत्रम्

काशिका-वृत्तिः

इच एकाचो ऽम्प्रत्ययवच् च ६।३।६८

इजन्तस्य एकाचः खिदन्ते उत्तरपदे अमागमो भवति, अम्प्रत्ययवच् च द्वितीयैकवचनवच् च स भवति। अम् इति हि द्विरावर्तते। गाम्मन्यः। स्त्रीम्मन्यः, स्त्रियम्मन्यः। श्रियम्मन्यः। भ्रुवम्मन्यः। अम्प्रत्ययवच् च इत्यतिदेशातात्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति। इचः इति किम्? त्वङमन्यः। एकाचः इति किम्? लेखाभ्रुम्मन्याः। अथेह कथं भवितव्यम्, श्रियम् आत्मानं ब्राह्मणकुलं मन्यते इत्युपक्रम्य श्रिमन्यम् इति भवितव्यम् इति भाष्ये व्यवस्थितम्? तत्र इदं भाष्यकारस्य दर्शनम्, अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते, यथा प्रष्ठादयः स्त्रियाम्। तत्र स्वमोर् नपुंसकात् ७।१।२३ इत्यमो लुग् भवति।

न्यासः

इच एकाचोऽम्प्रत्ययवच्च। , ६।३।६७

अत्र यदि "प्रत्ययवच्च" इत्येतावदुच्येत, तदा गाम्मन्य इत्यत्र "औतोऽम्शसोः" ६।१।९० इत्यात्त्वं न सात्(), इह च स्त्रीम्मन्य इति--अत्रापि "अमि पूर्वः" ६।१।१०३ इति पूर्वसवर्णः, इह च नरम्मन्य इति नृशब्दस्य "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणः। सामान्यातिदेशे विशेषस्यानतिदेशाद्वचनं त्वियङुवङर्थमेव केवलं स्यात्(), इयङुवङावजादौ प्रत्ययमात्रसामान्येन विधीयमानौ सामान्यातिदेशेऽपि भवत इति कृत्वा। "अम्प्रत्ययवच्च" इत्येवमुच्यमाने सत्यात्त्वादयो भवन्ति, तेषामप्यम्प्रत्यय इष्टत्वात्()। एतत्? सर्वं बुद्धौ कृत्वाह--"अम्प्रत्ययवच्च" इति। एतदेव विवृणोति--"द्वितीयैकवचनवच्च" इति। कथधं पुनरयमर्थो लभ्यते, यावतैकमम्ग्रहणम्(), तेन चाभागमो निरदिश्यते, प्रत्ययवच्चेत्येतदनिष्टं स्यात्()। अथ प्रत्ययस्तेन विशिष्यत आगमो न निर्दिष्टः स्यादित्यत आह---"अमिति हि" इत्यादि। एकमपयम्ग्रहणमारभ्यमाणं यस्मादुभयमेतत्? सम्पादयति तस्मादयमर्थो लभ्यत इत्यभिप्रायः। "श्रियम्मन्यः; भ्रूवम्मन्यः" इति। "अचिं श्नुधातु" ६।४।७७ इत्यादिने यङ्वङौ। "लेखाभ्रुम्मन्यः" इति। पूर्वसूत्रेण मुमागमः। "अथेह" इत्यादि। श्रियमात्मानं ब्राआह्ṛणकुलं मन्यत इत्युपक्रम्य=प्रस्तुत्य खश्प्रत्यये विहिते कथं भवितव्यम्()--किं श्रियम्मन्यमति भवितव्यम्(), उत श्रिमन्यमिति? कथं पुनरेततपक्षद्वयं सम्भाव्यते, यत एवं पृच्छति? शब्दानां द्विधा प्रवृत्तिदर्शनात्()। तथा हि--केषाञ्चित्? स्वलिङ्गापरित्यागेणाप्यर्थान्तरे प्रवृत्तिर्दृष्टा, यथा भूतशब्दस्य--भूतमिथं ब्राआह्ṛणीति; केषाञ्चित्? स्वलिङ्गपितयागेनाऽपि सा दृष्टा, यथा प्रष्ठशब्दस्य--प्रष्ठीति। तत्र श्रीशब्दो ब्राआह्ṛणकुले वत्र्तमानो यद स्वलिङ्गं न परत्यजति, तदा श्रियम्मन्यमिति भवितव्यम्(); अथ स्वलिङ्गं परित्यजय नपुंसकलिङ्गं गृह्णाति तदा "स्वमोर्नपुंसकात्()" ७।१।२३ इत्यमो लुकि कृते "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्रस्वत्वे च श्रिमन्यमिति भवितव्यमिति--एवमिमौ द्वावपि पक्षौ सम्भाव्येते। अत उभयपक्षसम्भवे न

ज्ञायते--कथं भवितव्यम्()? अतस्तत्परिज्ञानार्थं प्रश्नः। "श्रिमन्यमिति भवितव्यमिति भाष्ये व्यवस्थापितम्()" ["स्थितम्()"--काशिका] इति। ननु च श्रीशब्दोऽयं स्त्रीलिङ्गोऽर्थान्तरेऽपि वर्तमानः स्वलिङ्गमजहदेव वत्र्तते, तथा च प्रयोगोऽपि दृश्यते--शिरो म#ए श्रीः, यशो मे श्रीरिति; तत्? कथं श्रिमन्यमिति भाष्ये व्यवस्थापितम्()? इत्याह--"तत्र" इत्यादि। यथा प्रष्ठादयः शब्दाः पुंयोगात्? स्त्रियां वर्तमानाः परत्यकतस्वलिङ्गा एव वर्तन्ते--प्रष्ठी, प्रवरी, गणकीति; तथा श्रीशब्दोऽप्यत्र कुलविषये वर्तमान इति भाष्यकारस्य मतम्()। अतसतन्मतेन "स्वमोर्नपुंसकात्()" ७।१।२३ इत्यमो लुकि कृते--श्रिमन्यमिति। ननु च नाप्राप्ते लुक्ययमारभ्यते, यथैव "सुपो धातुप्रातिपदिकयोः" २।४।७१ इतीमं लुकं बाधते, तथा "स्वमोर्नपुंसकात्()" (७।१।२३) इतीममपि लुकं बाधेत? अपि च लुगेकपदाश्रयत्वादन्तरङ्गो विपर्ययाच्चामागमो बहिरङ्गः, ततः "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यन्तरङ्गे लुकि कत्र्तव्ये बहिरङ्गोऽमागमो नास्त्येव, तत् कुतोऽत्र लुक्()? नैष दोषः; "मध्येऽपवादाः पूर्वान्? विधीन्? बाधन्ते नोत्तरान्()" (व्या।प।१०) इति। एवमयममागमः "सुपो धातुप्रातिपदिकयोः" २।४।७१ इतीमं लुकं बाधिष्यते, न "खमोर्नपुंसकात्()" ७।१।२३ इतीमम्()। बहिरङ्गपरिभाषाप्यत्राशक्याऽऽश्रयितुम्(), इह हि दोषः स्यात्()--अरुन्तुद इति। तदाश्रयणे तु संयोगान्तलोपो न स्यात्()। संयोगान्तलोपे चान्तरङ्गे कत्र्तव्ये बहिरङ्गस्य मुमागमस्यासिद्धत्वेन संयोगान्ततानुपपत्तेः। तस्मात्? प्राप्तनिमित्ता सतीयमिह नाश्रीयते। दोषा एव हि तस्या एवमादयः॥

बाल-मनोरमा

इच एकाचोऽम्प्रत्ययवच्च ८०४, ६।३।६७

इच एकाचः। एकाच अमिति छेदः। अम् च अम् चेत्येकशेषः। एकं विदेयसमर्पकम्। "इच एकाचो"ऽमिति प्रथमं वाक्यम्। इच इत्येकाच इति च पञ्चमी। "अलुगुत्तरपदे" इत्युत्तरपदाधिकारादाक्षिप्तं पूर्वपदमिचा विशेष्यते। तदन्तविधिः। तदाह--इज्नतादेकाचोऽम्स्यादिति। मुमोऽपवादः। द्वितीयमम्पदं "प्रत्ययव"दित्येकदेशेन प्रत्ययेन समानाधिकरमं संबध्यते। असामत्र्येऽपि वतिप्रत्यय आर्षः। "अम्प्रत्ययव"दिति द्वितीयं वाक्यं संपद्यते। स्वादिप्रत्ययेषु यद्द्वितीयैकवचनं तदेवाऽत्र अमिति विवक्ष्यते, व्याख्यानात्। तदाह-- स च स्वाद्यम्वदिति। एतत्सर्वं भाष्ये स्पष्टम्। खिदन्ते पर इति। खिदन्ते उत्तरपदे परत इत्यर्थः। "खित्यनव्ययस्ये"त्यतः खितीत्यनुवर्तते इति भावः। "अम्प्रत्ययव"दित्यतिदेशसय् प्रयोजनमाह-- औतोम्शसोरिति। गाम्मन्य इति। गामात्मानं मन्यते इत्यर्थे मनेः खशि श्यन्, सुपो लुक्, गोशप्दादम्, "अम्प्रत्ययव"दित्यस्य प्रयोजनान्तरमाह-- वाऽम्शसोरिति। स्त्रियम्मन्य इति। स्त्रियमात्मानं मन्यते इत्यर्थे मनेः खशि श्यन्। सुपो लुक्। स्त्रीशब्दात् "वाऽम्शसोः" इति इयङ्()विकल्पः। अत्र यकारादकारस्य श्रवणार्थमम्विधिः। मुमि तु अकारो न श्रुयेत। स्()तरीम्मन्य इति। इयङभावपक्षे "अमि पूर्वः"। "अम्प्रत्ययव"दित्यस्य प्रयोजनान्तरमाह-- नृ - नरम्मन्य इति। "नृ"इत्यविभक्तिकम्, उदाहरणे नृशब्दस्य समावेशसूचनार्थम्। नरमात्मानं मन्यते इत्यर्थे मनेः खश्, श्यन्, सुपो लुक्, नृशब्दादम्। "अम्प्रत्ययव"दित्यतिदेशात् "ऋतोऽङी"ति गुणः। अत्राऽपि रेफादकारश्रवणार्थोऽम्विदिः। मुमि त्वकारो न श्रूयेत। "अम्प्रत्यव"दित्यस्य प्रोजनान्तरमाह-- भुवम्मन्य इति। भुवमात्मानं मन्यते इत्यर्थे मनेः खश्, श्यन्, सुपो लुक्। भूशब्दादम्, "अम्प्रत्ययव"दित्यतिदेशात् "अचि श्नुधातु" इत्युवङ्। अतिदेशाऽभावे तु उवङ् न स्यात्, तस्याऽजादिप्रत्यये विधानात्। श्रिमन्यमिति। मनेः खश्। श्यन्। अत्र मननक्रियां प्रति कुलत्वेन रूपेण कुलं कर्तृ, तस्यैव कुलस्य अध्यारोपतिश्रीत्वेन रूपेण कर्मत्वं चेति स्थितिः। एवं च श्रीशब्दस्य नित्यस्त्रीलिङ्गस्यापि कुले लक्षणया वृत्तेर्नपुंसकत्वम्। यत्र हि प्रातिपदिकस्यैव लक्षणा प्रसिद्धा तत्र पर्वलिङ्गत्यागः। यथा प्रकृते श्रीशब्दः। यत्र तु पदस्य लक्षणा, न तत्र पूर्वलिङ्गत्यागः, यथा "गङ्गायां घोष"इत्यादाविति "पुंयोगादाख्याया"मिति सूत्रे , प्रकृतसूत्रे च भाष्यैयटयोर्मर्यादा स्थिता। एवं च "कालिम्मन्यं कुल"मित्यत्र कालीशब्दस्य न स्त्रीलिङ्गपरित्यागः, प्रयोगानुसारेण तत्र पदलक्षणाया एवाभ्युपगमात्। "श्रिमन्यं कुल"मित्यत्र तु प्रयोगाऽनुसाराच्श्रीशब्दस्य प्रातिपदिकस्यैव लक्षणेति

पूर्वलिङ्गपरित्यागान्नपुंसकलिङ्गत्वमेवाश्रीयते। ततश्च श्रीशब्दस्याऽत्र नपुंसकत्वात् "खित्यनव्ययस्ये"ति बहिरङ्गं ह्रस्वं बाधित्वा "ह्रस्वो नपुंसके प्रातिपदिकस्ये"ति ह्रस्व एव न्याय्यः। मुमपवादे "इच एकाचः" इत्यमि कृते तस्य "स्वमोर्नपुंसका"दित लुक्। तथा च "श्रिमन्यं कुल"मिति सिद्धम्। नच गाम्मन्य इत्यादावपि "सुपो धातुप्रातिपदिकयो"रिति लुक् स्यादिति वाच्यम्, "इच एकाचः" इत्यमः "सुपो धातु" इति लुगपवादत्वात्। "स्वमोर्नपुंसका"दिति लुकस्तु नायमम्विधिर्बाधकः, मध्येऽपवादन्यायादिति प्रकृतसूत्रे भाष्यकैयटयोः स्पष्टम्। तदाह-- भाष्यकारेत्यादि। "ह्रस्वो नपुंसके" इत्यनेने"ति शेषः। मुममोरभावश्चेति। मुमपवादस्य अमः "स्वमोर्नपुंसका"दिति लुकि सति तयोः प्रयोगाऽभावः फलतीत्यर्थः।

तत्त्व-बोधिनी

इच एकाचोऽम्प्रत्ययवच्च ६६४, ६।३।६७

इच एकाचः। अम्()ग्रहणमिहाऽऽवर्तते, तत एकेन अम् विधीयते, परेण प्रत्ययो विशेष्यते। तदाह-- स्वाद्यम्वदिति। एवं च "न विभक्तौ तुस्माः" इति निषेधान्मकारस्य नत्संज्ञा, अतएव परश्च भवति। "औतोऽम्()शसो"रित्यत्र शशा साहचर्यात्सुबेवाऽम् गृह्णत इत्युक्तत्वादोत आकारश्च भवतीत्याशयेनोदाहरति-- गांमन्य इति। नरंमन्य इति। "ऋतोऽङीत्यादिना गुणः।भाष्यकरोति। अयं भावः-- यथा प्रष्ठादयः शब्दाः पुंयोगात्स्त्रीयां वर्तन्ते-- प्रष्ठी गणिकेति, तथेह श्रीशब्द परित्यक्तस्वलिङ्गः क्लीबः सन् कुले वर्तते, तत्र "ह्रस्वो नपुंसके" इति ह्रस्वः, मुम् तु न, अपवादेन अमा बाधात्। "स्वमोर्नपुंसका"दित्यमो लुक्। नचैं गामंन्य इत्यादावपि "सुपो धातुप्रातिपदिकयो"रिति लुक् स्यादिति वाच्यम्, "अम्विधिसामथ्र्यादेव तद्बाधादित्याहुः। अम्()प्रत्ययस्तु "मध्येऽपवादा" इति न्यायेन "सुपो धातुप्रातिपदिकयो"रिति लुकमेव बाधते न तु "स्वमोर्नपुंसका"दिति लुकमिति भाष्यादौ स्थितम्। स्यादेतत्--नपुंसकह्रस्वे कृते मुमः प्राप्तिरेव नास्ति, कथमत्रापवादेन अमा बाधादित्युक्तिः सङ्गच्छेत, "अरुर्द्विष"दिति सूत्रे हि अन्तग्रहणस्य समीपवाचित्वेन "खित्यनव्ययस्ये"ति पुनह्र्यस्वो मुमर्थः स्वीक्रियते तथात्रापि भवेदित्यस्त्येव मुमः प्राप्तिरिति।

---

सूत्रम्

काशिका-वृत्तिः

वाचंयमपुरन्दरौ च ६।३।६९

वाचंयम पुरन्दर इत्येतौ निपात्येते। वाचंयम आस्ते। पुरं दारयति इति पुरन्दरः।

न्यासः

वाचंयमपुरन्दरौ च। , ६।३।६८

"वाचंयमः" इति। वाचं यच्छतीति "वचि यमो व्रते" ३।२।४० इति खच्()। तत्र वाक्शब्दसयामन्तता निपात्यते। "पुरन्दरः" इति। "पूःसरवयोर्दारिसहोः" ३।२।४१ इति खच्(), "खचि ह्रस्वः" ६।४।९४ इति ह्रस्वत्वम्()। अत्रापि पूःशब्दस्यामन्तता निपात्यते। चाकारोऽनुक्तसमुच्चयार्थः। तेन "अस्तुसत्यागदसय कारे" (वा।७४४) इति सर्वं न वक्तव्यं भवति॥

बाल-मनोरमा

वाचं यमपुरुन्दरौ च ७७०, ६।३।६८

वाचं यमपुरन्दरौ च। वाक्पुरोरिति। वाच्यं यच्छतीति, पुरं दारयतीति च विग्रहे यमेर्दारेश्च खच्। सुपो लुकि वाच् यम, दार

इति स्थिते वाक्पुरोरमन्तत्वं निपात्यते इत्यर्थ-। "अरुर्द्विषजन्तस्य" इति मुमस्तु न प्रसक्तिः।

तत्त्व-बोधिनी

वाचंयमपुरन्दरौ च ६४०, ६।३।६८

निपात्यत इति। न चैवं खच् प्रत्यययोऽप्यत्रैव निपात्यतामिति वाच्यं, व्रतादन्यत्रापि प्रसङ्गात्। यदि तु निपातनबलादव व्रतविषयता आश्रीयते,तत्रैव वा व्रतग्रहणं क्रियते,-- "वाचंयमो व्रते पुरन्दरश्चे"ति तदा इह "वाचि यमो व्रते" इति सूत्रं, "पूः सर्वयो"रित्यत्र पुरि दारेरित्यंशश्च शक्यमकर्तुम्।

---

सूत्रम्

काशिका-वृत्तिः

कारे सत्यागदस्य ६।३।७०

कारशब्द उत्तरपदे सत्य अगद इत्येतयोर् मुमागमो भवति। सत्यं करोति, सत्यस्य व कारः सत्यङ्कारः। एवम् अगदङ्कारः। अस्तुसत्यागादस्य कार इति वक्तव्यम्। अस्तुङ्कारः। भक्षस्य छन्दसि कारे मुम् वक्तव्यः। भक्षं करोति, भक्षस्य वा करः भक्षङ्कारः। छन्दसि इति किम्? भक्षकारः। धेनोर् भव्यायां मुम् वक्तव्यः। धेनुम्भव्या। लोकस्य पृणे मुम् वक्तव्यः। लोकम्पृणः। इत्ये ऽनभ्याशस्य मुम् वक्तव्यः। अनभ्याशमित्यः। भ्राष्ट्राग्न्योरिन्धे मुम् वक्तव्यः। भृआष्ट्रमिन्धः। अग्निमिन्धः। गिले ऽगिलस्य मुम् वक्तव्यः। तिमिङ्गिलः। अगिलस्य इति किम्? गिलगिलः। गिलगिले चेति वक्तव्यम्। तिमिङ्गिलगिलः। उष्णभद्रयोः करणे मुम् वक्तव्यः। उष्णङ्करणम्। भद्रङ्करणम्। सूतोग्रराजभोजमेर्वित्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यः। सूतपुत्री, सूतदुहिता। उग्रपुत्री, उग्रदुहिता। राजपुत्री, राजदुहिता। भोजपुत्री, भोजदुहिता। मेरुपुत्री, मेरुदुहिता। केचित् तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति, तेषां पुत्री इति भवति। अन्यत्र अपि हि दृश्यते शैलपुत्री इति।

न्यासः

कारे सत्यागदस्य। , ६।३।६९

"सत्यं करोति" इत्यनेन कर्मण्यणं सूचयति। "सत्यस्य कारः" इत्यनेनापि घञम्()। एवं "अगदङ्कारः" इत्यत्राप्यणघञौ वेदितव्यौ। "अस्तुङ्कारः" इति। भावे घञ्()। अस्तुशब्दो विभक्तिप्रतिरूपको निपातोऽभ्युपगमे वर्तते। अस्त्वित्यभ्युपगमस्य करणस्तुङ्कारः। "भक्षङ्कारः" इति। भावे घञ्()। "धेनुम्भव्या" इति। "भव्यगेय" ३।४।६८ इत्यादिना कर्तरि कृत्यः। धेनुश्चासौ भव्या चेति धेनुम्भव्या। "लोकम्पृमः" इति। "पृण प्रीणने", (धा।पा।१३२९) लोकं पृणतीति मूलविभुजादित्वात्? कः। "अनभ्याशमित्यः" ["अनम्याशमित्यम्()"--मुद्रितः पाठः] इति। अनभ्याशं दूरमित्यं गन्तव्यमस्येत्यनभ्याशमित्यः। इन्धनमिन्धः, भावे घञ्()। भ्राष्ट्रस्येन्दो "भ्राष्ट्रमिन्धः"। अग्नेरिन्धोऽग्निमिन्धः। "तिमिङ्गिलः" इति। "गृ निगरणे" (धा।पा।१४१०)। तिमिं गिलतीति पर्ववत्? कः, "ॠत इद्धातोः" ७।१।१०० इतीत्त्वम्(), रपरत्वम्(), "अचि विभाषा" ८।२।२१ इति लत्वम्()। "गिलिगिलः" इति। गिलं गिलतीति पूर्ववत्? कः, इत्त्वादि च। "गिलगिले च" इति। गिलं गिलतीति गिलगिलः। "आतश्चोपसर्गे" (३।१।१३६) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात्? कः। पूर्वत्राप्येवं कविधाने न दोषः। तिमीनां गिलगिल इत्यस्मिन्नर्थे विवक्षित इदं वक्तव्यम्()। अथ तिमिं गिलतीति तिमिङ्गिलः, तिमिङ्गलं गिलतीत्येधोऽर्थो यदा विवक्ष्यते तदा पूर्वेणैव सिद्धमिति नार्थ एतेन। "उष्ट्रङ्करणम्(), भद्रङ्करणम्()" इति। षष्ठीसमासौ। "पुत्रट्()" इति। टकारो ङीबर्थः। केचित्तु शाङ्गरवादिषु पुत्रशब्दं पठन्ति" इति। तान्? प्रति नेदमुपसङ्ख्यानं कत्र्तव्यम्()। "अन्यत्रापि दृश्यते" इति। अनेन शाङ्गरवादिषु

पुत्रशब्दस्य पाठं द्रढयति॥

बाल-मनोरमा

कारे सत्यागदस्य ९९२, ६।३।६९

कारे सत्यागदस्य। शेषपूरणेन सूत्रंव्याचष्टे-मुम्स्यादिति। "अरुर्द्विष"दित्यतस्तदनुवृत्तेरिति भावः। सत्यस्य अगदस्य च कारे परे मुम्स्यादिति फलितम्। मुमि मकार इत्। उकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। सत्यङ्कार इति। भावे घञ्। सत्यस्य कार इति विग्रहः। शपथकरणमित्यर्थः। अगजङ्कार इति। गदो-रोगः, तस्याऽभावऋ-अगदः। अर्थाभावे अव्ययीभावेन सह तत्पुरुषस्य विकल्पोक्तेः। अगदस्य कार इत्यर्थः।

अस्तोश्चेति। "कारे मु"मिति शेषः। अस्तुङ्कार इति। अस्त्विति तिङन्तप्रतिरूपकमव्ययमभ्युपगमे वर्तते।

धेनोरिति। "मुम्वक्तव्य" इति शेषः। धेनुभव्येति। नवप्रसवात्प्रागियमुक्तिः। भविष्यन्ती धेनुरित्यर्थः। "भव्यदेये"ति कर्तरि निपातनात्कृत्यप्रत्ययः। धेनुश्चासौ भव्याचेति विग्रहः। मयूरव्यंसकादित्वाद्भव्याशब्दस्य परनिपातः।

लोकस्य पृणे इति। "मुम्वक्तव्य" इति शेषः। ननु लोकं पृणतीति विग्रहे कर्मण्यणि लधूपधगुणे रपरत्वे "पर्ण" इति स्यादित्यत आह--मूलाविभुजादित्वात्क इति।

इत्येऽनभ्याशस्येति। "मुम्वक्तव्य" इति शेषः। अनभ्याशमित्य इति। अभ्याशः--समीपम्, अनभ्याशं-दूरं। द्वितीयान्तमिदम्। इण्धातोः प्रापणार्थकात् "एतिस्तुशा"सित्यादिना क्यप्, "गम्यादीनामुपङ्ख्यान"मिति द्वितीयासमासः। सुब्लुकि मुम्। दूरं प्रापयितव्यः, नतु समीपमित्यर्थं मनसि निधायाह--दूरतः परिहर्तव्य इति।

भ्राष्ट्राग्न्योरिन्धे इति। "मुम्वक्तव्य" इति शेषः। भ्राष्ट्रमिन्ध इति। भ्राष्ट्रं-धानादिभर्जनार्गं पात्रम्, तत् इन्द्धे=तापयतीति भ्राष्ट्रमिन्धः। कर्मण्यणि उपपदसमासः। सुब्लुकि, मुम्। अग्निमिन्झ इति। अ()ग्न प्रज्वलयतीत्यर्थः।

गिलेऽगिलेस्येति। "अगिलस्ये"ति च्छेदः। गिले परे गिलभिन्नस्य मुम्वाच्य इत्यर्थः। तिमिङ्गिल इति। "गृ? निगरणे"। तिमिः--मत्स्यविशेषः। तं गिलतीति मूलविभुजादित्वात्कः। "ऋत इद्धातोः" इति रपरत्वे "अचि विभाषे"ति लत्वम्, उपपदसमासः। सुब्लुकि मुम्। गिलगिल इति। अयमपि मत्स्य विशेषः।

गिलगिले चेति। अगिलस्य मुम् वाच्य इत्यर्थः। तिमिङ्गिलगिल इति। गिलं गिलतीति। गिलगिलः, तिमीनां गिलगिल इति विग्रहः। संबन्धसामान्ये षष्ठी। तिमिषु गिलगिल इति निर्धारणसप्तमी वा। "संज्ञाया"मिति सप्तमीसमासः।

उष्णभद्रयोः करणे इति। मुम्वाच्य इत्यर्थः। उष्णङ्करणं, भद्रङ्करणमिति षष्ठीसमासः।

तत्त्व-बोधिनी

कारे सत्यगदस्य ८४३, ६।३।६९

कारे सत्या। "अरुर्द्विष"दित्यतोऽनुवर्तनादाह--मुम्स्यादिति। सत्यङ्कारः--शपथकरणम्। अशपथेऽपि "सत्यादशपते"इति डाचं बाधित्वा पत्वान्मुमेव। अगदङ्कारो वैद्यः।

अस्तोश्चेति वक्तव्यम्। अस्तुङ्कारेऽभ्युपगमः। अस्त्विति तिङन्तप्रतिरूपकमव्ययम्।

धेनोर्भव्यायाम्। धेनुम्भव्येति। भविष्यन्ती धेनुरित्यर्थः। "भव्येगेये"ति निपातनात्कर्तेति कृत्यः। धेनुश्चासौ भव्या चेकि

विग्रहः। गौतमस्मृतौ तु "अधेनुभव्या"इत्यत्र आर्षत्वान्मु म्नेति बोध्यम्। लोकम्पृण इति। पृणधातुः प्रीणनार्थः। "पृणतिः पूरणकर्मा"इति तु हरदत्तः।

इत्येऽनभ्याशस्य। अनभ्यशमित्य इति। अभ्यासं=समीपं, तद्भिन्नमनभ्याशम्। "एतिस्तुशास्वृदृजुषः"इति इणः क्यप्।

भ्राष्ट्राइयोरिन्धे। भ्राष्ट्रमिन्ध इति। कर्मण्यपि उपपदसमासः। एवमग्निमिन्धोऽपि।

गिलेऽगिलेस्य च।गिलेऽगिलस्येति। गिलशब्दे उत्तरपदे अगिलस्य मुमुत्यर्थः।तिमिङ्गिल इति। मत्स्यविशेषः। गिरतेर्मूलविभुजादित्वात्कः। "अचि विभाषे"ति लत्वम्।

गिलिगिले च। गिलगिले चेति। "गिलं गिलति इति गिलगिलः, तिमीनां गिलगिलः"इति विग्रहे इदमारब्धम्।

---

सूत्रम्
काशिका-वृत्तिः
श्येनतिलस्य पाते ञे ६।३।७१

श्येन तिल इत्येतयोः पातशब्दे उत्तरपदे ञप्रत्यये परे मुमागमो भवति। श्येनपातो ऽस्यां क्रीडायाम् श्यैनम्पाता। तैलम्पाता। ञे इति किम्? श्येनपातः।
न्यासः
श्येनतिलस्य पाते ञे। , ६।३।७०

"ञप्रत्यये परे" इति। ञः प्रत्ययो यस्मादुत्तरपदात्? तत्? तथोक्तम्()। "श्यैनम्पाता" इति। पतनं पातः, भावे घञ्(), श्येनस्य पातः श्येनपातः। "कृद्योगा च षष्ठी समस्यते" (वा।८६) इति समासः, "घञः सास्यां क्रियेति ञः" ४।२।५७॥
बाल-मनोरमा
श्येनतिलस्य पाते ञे १२४९, ६।३।७०

श्येनतिलस्य। मुमागम इति। "अरुर्द्विष" दित्यतस्तदनुवृत्तेरिति भावः। ञप्रत्यये इति। ञप्रत्यये परे यः पातशब्दस्तस्मिन्नित्यर्थः। उत्तरपदे इति। "अलुगुत्तरपदे" इत्यतस्तदधिकारादिति भावः। श्येनपात इति। पतनं पातः। भावे घञ्। श्यैनंपातेति। श्येनपातशब्दाद्घञन्ताञ्ञः। यद्यपि पातशब्द एव घञन्तस्तथापि कृद्ग्रहणपरिभाषया श्येनपातशब्दस्यापि ग्रहणं बोध्यम्। श्येनस्य पात इति कृद्योगषष्ठ()आ समासः। तथाच श्येनपातशब्दस्यादिवृद्धिः। तैलंपाता स्वधेति। स्वधाशब्दः स्त्रीलिङ्ग पित्र्यक्रियायां वर्तते, "नमः स्वधायै" इत्यादिदर्शनात्। "स्वधे"त्यनेन क्रीडायामिति नानुवर्तते इति सूचितम्। तदस्यामिति प्रकृते पुनरस्यामिति ग्रहणात्।

तत्त्व-बोधिनी
श्येनतिलस्य पाते ञे १०१५, ६।३।७०

दण्डापातोऽस्यां तिथाविति।

---

सूत्रम्
काशिका-वृत्तिः

रात्रेः कृति विभाषा ६।३।७२

रात्रेः कृदन्त उत्तरपदे विभाषा मुमागमो भवति। रात्रिञ्चरः, रात्रिचरः। रात्रिमटः, रात्र्यटः। अप्राप्तविभाषा इयम्। खिति हि नित्यं मुम् भवति। रत्रिम्मन्यः।

न्यासः

रात्रेः कृति विभाषा। श्र् , ६।३।७१

"कृदन्त उत्तरदे" इति। कथं पुनस्तदन्तविधिर्लभ्यते, यावता ज्ञापितमेतत्()--"उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तर्विधिर्नास्ति" (पु।प।पा।२६) इति। रात्रिशब्दादनन्तरस्य कृतयप्रत्ययस्यासम्भवात्? तदन्तविधिरविज्ञायत इति चेत्()? अयुक्तमेतत्(); सम्भवति हि रातरेरनन्तरः कृत्प्रत्ययः। रात्रिरिवाचरतीति "अचारे सर्वप्रातिपदिकेभ्यः क्विव्? वा" (वा।१८७) इति क्विप्(), "सनाद्यन्ता धातवः" ३।१।३२ इति धातुसंज्ञा, तृच्(), इट्(), गुणायादेशौ--रात्रयितेति। तदेवं सम्भवत्यनन्तरे कृत्प्रत्यये तत्रैव स्यात्? न तदन्ते? नैष दोषः; "अरुर्द्विषदजन्तस्य" ६।३।६६ इत्यतोऽन्तग्रहणमनुवर्तते, तेन तदन्त एव कार्यं विज्ञायत इति। एवं तह्र्रचारक्विबन्तस्यापि रात्रिशब्दस्य कृदन्त उत्तरपदे स्यात्()। भवतु। अथ तु नेष्यते? व्यवस्थितविभाषाऽङ्गीकत्त्रव्या। गौणत्वाद्वा रात्रिशब्दस्य न भविष्यति। गौणत्वं पुनः प्राथमकल्पिकादर्थदपेतत्वात्(), यथा--वाहीको गौरित्यत्र गोशब्दस्य। "रात्रिञ्चरः" इति। रात्रौ चरतीति "चरेष्टः" ३।२।१६ इति टः, उपपदसमासः। "रात्रिमटः" इति। अटतीत्यटः, पचाद्यच्(), "रात्र्यटः" ["रात्रावटः" इति मुद्रितः पाठः] इति। "सप्तमी" (२।१।४०) इति योगविभागात्? समासः। "अप्राप्तविभाधेयम्()" इति। ननु च खिदपि कृदस्ति--रात्रिम्मन्यमिति, अत्र हि "अरुर्द्विषदजन्तस्य" ६।३।७५ इति नित्यं प्राप्नोति, "रात्रिञ्चरः" इत्यादौ न केनचित्? प्राप्नोति; एवञ्च प्राप्ते चाप्राप्त इयं विभाषा युक्तेत्यत आह--"खिति हि नित्यं मुम्? भवति" इति। पूर्वविप्रतिषेधेनेत्यभिप्रायः। अत्र हि पूर्वविप्रतिषेध आश्रीयते, खिति पूर्वेण नित्यं मुम्भवति। एवञ्च खितोऽन्यदेव कृदन्तमस्य वचनस्यावकाशः। न च केनचित्? तत्र प्राप्नोतीति युक्तमस्याप्राप्तविभाषात्वम्()॥

बाल-मनोरमा

रात्रेः कृति विभाषा ९९३, ६।३।७१

रात्रेः कृति। अस्य उत्तरपदाधिकारस्थत्वेन "प्रत्ययग्रहणे तदन्तग्रहण"मिति तु इह न भवति। कृतः धातुप्रकृतिकत्वेन रात्रेः कृतोऽसंभवात्तदन्तविधिरित्यभिप्रेत्य आह--कृदन्ते परे इति। रात्रेर्मुम्वा स्यादित्यर्थः। रात्रिञ्चरः, रात्रिचर इति। सुप्युपपदे चरेष्टः, उपपदसमासः, सुब्लुकि पक्षे मुम्। रात्रिमटः रात्र्यट इति। सुप्युपपदे मूलविभुजादित्वात्कः। उपपदसमासः, सुब्लुकि पक्षे मुम्। रात्रिमटः रात्र्यट इति। सुप्युपपदे मूलविभुजादित्वात्कः। उपपदसमासः। सुब्लुक् पक्षे मुम्। ननु ननु "रात्रिम्मन्यः" इत्यत्रापि मुम्विकल्पः स्यादित्यत आह--अखिदर्थमिति। खिति त्विति। खिति तु इमं मुम्विकल्पं बाधित्वा पूर्वविप्रतिषेधेन "अरुर्द्विषदजन्तस्ये"ति नित्यमेव मुमो विधानं कृदधिकारे वक्ष्यत इत्यर्थः। रातिरम्मन्य इति। "आत्ममाने खश्चे"ति खश्। खशः शित्त्वेन सार्वधातुकत्वात्तस्मिन्परे "दिवादिभ्यः श्यन्" इति श्यनि खित्त्वान्नित्य "आत्ममाने खश्चे"ति खश्। "खशः शित्त्वेन सार्वधातुकत्वात्तस्मिन्परे "दिवादिभ्यः श्यन्" इति श्यनि खित्त्वान्नित्यं मुमिति भावः।

तत्त्व-बोधिनी

रात्रेः कृति विभाषा ८४४, ६।३।७१

रात्रेः कृति। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाऽभावेऽपि रात्रिशब्दात्परत्र कृतोऽसंभवात्कृदन्त उत्तरपदेऽयं

विधिरित्याशयेनोदाहरति---रातिं()रचर इथि। यद्यप्याचारक्विबन्ताण्ण्वुलादिः संभवति, तथापि विलम्बितोपस्थितिकत्वात्स न गृह्णत इति भावः। नित्यमेवेति। पूर्वविप्रतिषेधेनेति भावः। रात्रिम्मन्य इति। "आत्ममाने खश्चे"ति खश्। खशः सार्वधातुकत्वात्तस्मिन्परे श्यन्।

---

सूत्रम्

काशिका-वृत्तिः

नलोपो नञः ६।३।७३

नञो नकारस्य लोपो भवति उत्तरपदे। अब्राह्मणः। अवृषलः। असुरापः। असोमपः। नञो नलोपे ऽवक्षेपे तिङ्युपसङ्ख्यानं कर्तव्यम्। अपचसि त्वं जाल्म। अकरोषि त्वं जाल्म।

लघु-सिद्धान्त-कौमुदी

नलोपो नञः ९५०, ६।३।७२

नञो नस्य लोप उत्तरपदे। न ब्राह्मणः अब्राह्मणः॥

न्यासः

नलोपो नञः। , ६।३।७२

सानुबन्धकग्रहणमिह मा भूत्()--"पामनपुत्रः" इति। पामान्यस्य सन्तीति "लोमादिपामादि" ५।२।९९ इत्यादिना नप्रत्ययः। तदन्तस्य पुत्रशब्देन षष्ठीसमासः। अथ क्रियमाणे सानुबन्धकग्रहणे स्त्रिया अयमिति "स्त्रिपुंसाभ्याम्()" ४।१।८७ इत्यादिना नञ्()--स्त्रैणः, स्त्रैणश्चासावर्थश्चेति स्त्रैणार्थं इत्यत्र कस्मान्न भवति? पूर्वपदभूतस्य नञो ग्रहणात्()। कुत एतत्()? उत्तरपदस्य सम्बन्धिशब्दत्वात्()। पूर्वपदं ह्रपेक्ष्योत्तरपदं सम्भवति। अत उत्तरपदाधिकारात्? पूर्वपदभूतस्यात्र नञो ग्रहणम्()। अथ वा--विभाषाग्रहणमनुवत्र्तते, तस्य व्यवस्थितविभाषात्वविज्ञानान्न भविष्यति। यद्येवम्(), पामनपुत्र इत्यत्राप्यत एव न भविष्यतीति नार्थः सानुबन्धकग्रहणेन? एवं तर्हि विस्पष्टार्थं सानुबन्धकग्रहणम्()। न च "नस्य" इत्युच्यमाने कश्चिल्लाघवकृतो विशेषो भवति। "अवक्षेपे तिङ्युपसंख्यानं कत्र्तव्यम्()" इति। अवक्षेपः=निन्दा। उत्तरपदे नलोपो विधीयमानस्तिङन्ते न प्राप्नोति, तस्मात्? तस्योपसंख्यानां कत्र्तव्यम्()। ननु चास्त्येवाकारः परतिषेधवाची, "अ मा नो नाः प्रतिषेधवचनाः" इति वचनात्(), ततश्च तस्यैवाक्षेपे तिङि प्रयोगो भविष्यतीति किमुपसंख्यानेन? नञोऽपि तह्र्यवक्षेपे तिङि परतः प्रयोगः प्राप्नोति। तस्मादवक्षेपे नञोकृतनलोपस्य प्रयोगनिवृत्त्यर्थमुपसंख्यानं कत्र्तव्यमिति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()--"वाचंयमपुरन्दरौ च" ६।३।६८ इत्यतश्चकरोऽनुवत्र्तते, स चानुक्तसमुच्यार्थः। तेन तिङन्तेऽप्यवक्षेपे गम्यमाने नञो नलोपो भविष्यति॥

बाल-मनोरमा

नलोपो नञः ७४७, ६।३।७२

न लोपो नञः। नेति लुप्तषष्ठीकं पदं। तदाह--नञो नस्येति। उत्तरपदे इति। "अलुगुत्तरपदे" इत्यतस्तदनुवृत्तेरिति भावः। "नञोऽ"शिति सिद्धे लोपवचनम्-"अकब्राआह्णण" इति साकचम्कार्थमित्याहुः। अब्राआह्णण इति। अत्रारोपितत्वं नञर्थः। आरोपितत्वं च ब्राआह्णणत्वद्वारा ब्राआह्णणे अन्वेति। आरोपितब्राआह्णणत्ववानिति बोधः। अर्थाद्ब्राआह्णणभिन्न इति पर्यवस्यति। केचित्तु नञ् भिन्नवाची, ब्राआह्णणाद्भिन्न इत्यर्थ इत्याहुः। तदयुक्तं, ब्राआह्णणाद्भिन्न इत्यर्थे पूर्वपदार्थप्राधान्यापत्तेः। तथाच "उत्तरपदार्थप्रधानस्तत्पुरुष" इति भाष्योद्घोषो विरुध्येत। किंच-अते, अतस्मै,

अतस्मादित्यादौ सर्वनामकार्यं शीभावस्मायादिकं न स्यात्, तच्छब्दार्थस्य नञर्थं प्रति विशेषणत्वेऽप्रधानत्वात्, "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इत्युक्तेः। तथा "अस" इत्यादौ "तदोः सः सावनन्त्ययोः" इति सर्वाद्यन्तर्गतत्यदादिकार्यं सत्वं च न स्यात्। "अनेक"मित्यत्र एकवचनानुपपत्तिश्च। एकभिन्नस्य एकत्वाऽसंभवेन द्वित्वबहुत्वनियमेन च द्विबहुवचनापत्तेः तथा सति "अनेकमन्यपदार्थे" इति नोपपद्येत। "एतत्तदोः सुलोपः" इत्यत्र अनन्समासग्रहणं चात्र लिङ्गम्। तद्धि "असः शिवः", "अनेषः शिव" इत्यादौ सुलोपाऽभावार्थम्। तद्भिन्न एतद्भिन्न इत्यर्थे तु तच्छब्दाद्यर्थस्य उपसर्जनतया त्यदाद्यत्वानापत्तौ हल्ङ्यादिलोपस्य दुर्वारत्वात्तद्वैयर्थ्यं स्पष्टमेव। तस्मादुत्तरपदार्थप्राधान्यं भाष्योक्तमनुसृत्य आरोपितत्वमेव नञर्थ इति युक्तम्। विसत्रस्तु प्रौढमनोरयायां शब्दरत्ने मञ्जूषायां च ज्ञेयः। प्राचीनास्तु "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः।" इति पठित्वा-अब्राआहृणः, अपापम् , अन()आः, अनुदरा कन्या, अपशवो वा अन्ये गोअ()ओभ्यः, अधर्मं इत्युदाजहः। तत्र सादृश्यादिकं प्रकरणादिगम्यमित्याहुः।

तत्त्व-बोधिनी

नलोपो नञः ६६१, ६।३।७२

नलोपो नञः। "नञोऽशि"ति वक्तव्ये नलोपवचनं साकच्कार्थं, तेन नञोऽकचि "अकब्राआहृणः""अकनश्च"इत्यादि सिद्धमित्याहुः। उत्तरपदे इति। "अलुगुत्तरपदे"इत्यधिकारादिति भावः। उत्तरपदे किम्()। घटो नास्ति। पटो नास्ति। नन्वेवमपि "स्त्रैणाऽर्थः" इत्यत्र नलोपः स्यादिति चेदत्राहुः--उत्तरपदाक्षिप्तपूर्वपदेन नञं विशेष्य "पूर्वपदभूतस्य नञः"इति व्याख्यानान्न भवति। "स्त्रीपुंसाभ्या"मिति विहितस्य नञ्प्रत्ययस्याऽपूर्वपदत्वात्। अतएव चाऽत्र "प्रत्ययाऽप्रत्ययोः प्रत्ययस्यैव ग्रहण"मिति परुभाषा नोपतिष्ठते। न च प्रत्ययग्रहणे तदन्तग्रहणान्नञप्रत्ययान्तस्य पूर्वपदत्वं संभवत्येवेति "प्रत्ययाप्रत्यययो"रित्येतदुपतिष्ठत एवेति वाच्यं, "ह्मदयस्य ह्मल्लेके"ति सूत्रेऽण्ग्रहणात्पृथग्लेखग्रहणेन "उत्तरपदा धिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ती"ति ज्ञापनात्। यद्वा "अमूर्धमस्तकात्""विभक्तावप्रथमाया"मित्यादिज्ञापकात् "नलोपो नञः" इत्यत्राऽव्ययमेव नञ् गृह्यते, न तु प्रत्यय इति।

---

सूत्रम्

काशिका-वृत्तिः

तस्मान् नुडचि ६।३।७४

तस्माल् लुप्तनकारान् नञः नुडागमो भवति अजादवुत्तरपदे। अनजः। अनश्वः। तस्मातिति किम्? नञ एव हि स्यात्। पूर्वान्ते हि ङमो ह्रस्वादचि ङ्मुण् नित्यम् ८।३।३२ इति प्राप्नोति।

लघु-सिद्धान्त-कौमुदी

तस्मान्नुडचि ९५१, ६।३।७३

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात्। अनश्वः। नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः॥

न्यासः

तस्मान्नुडचि। , ६।३।७३

"नञ एव हि स्यात्()" इति। अचीति सप्तमीनिर्देशात्(), "तस्मिन्निति निर्दिष्टे पूर्वसय" १।१।६५ इति दतनात्()। नञो नुडागमे सत्यनिष्टं रपं स्यात्()। तस्माद्ग्रहणे तु सति "उभयनिर्देशे पञ्चमीनिर्देशी बलीयान्()" (शाक।प।९७)

इत्युत्तरपदस्यैव भवति, अतो न भवत्यनिष्टप्रसङ्गः। ननु च यदि नञो नुट्? स्यात्(), नलोपवचनमनर्थकं स्यात्()? नानर्थकम्(); अब्राआह्मणः, अवृषल इत्यनजादौ नकारश्रवणं माभूदित्येवमर्थत्वात्()। यदि नञो मा भूदित्येवमर्थं "तस्मात्()" इत्युच्यते, तर्हि न वाच्यम्(), पूर्वान्तो ह्ययं नुक्? करिष्यते? इत्याह--"पूर्वान्ते हि" इति। पूर्वान्ते नुटि क्रियमाणे ङमन्तस्य पदस्य विधीयमानः "ङमो ह्रस्वादचि ङमुण्? नित्यम्()" (८।३।३२) इति नुट्? प्राप्नोति, ततश्च स एवानिष्टप्रसङ्गः। तस्मान्नुडेव कत्र्तव्यः। अस्मिंस्तु क्रियमाणे नञ एव मा भूदित्येवमर्थं तस्माद्ग्रहणम्()॥

बाल-मनोरमा

तस्मान्नुडचि ७४८, ६।३।७३

तस्मान्नुडचि। तच्छब्देन पूर्वसूत्रावगतो लुप्तनकारो नञ् परामृश्यते। उत्तरपद इत्यनुवृत्तमचीत्यनेन विशेष्यते। तदादिविधिः। "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वा"दिति परिभाषया सप्तमी षष्ठी प्रकल्पयति। तदाह--लुप्तनकारादिति। अन()आ इति। समासे सति नञो नकारस्य लोपे तत्परिशिष्टाऽकारस्य नुट्। टकार इत्। उकार उच्चारणार्थः। टित्त्वादाद्यवयव इति भावः। नुक्तु न कृतः, ङमुट्प्रसङ्गात्। ननु "उत्तरे कर्मण्यविघ्नमस्तु" इत्यादौ विघ्नानामभाव इत्यर्थे नञ्तत्पुरुषे सति परवल्लिङ्गत्वेऽविघ्न इति स्यात्। नच अर्थाभावेऽव्ययीभावेन तत्सिद्धिरिति वाच्यम्, अव्ययीभावस्य निरमक्षिकमित्यादौ सावकाशतया परत्वात्तत्पुरुषस्यैव प्रसङ्गादित्यत आह--अर्थाऽभावे इति। रक्षेति। पस्पशाह्निकभाष्ये इदं वाक्यम्। रक्षा च ऊहश्च आगमश्चलघु च असन्देहश्चेति द्वन्द्वः। "परवल्लिङ्ग"मिति पुंस्त्वम्। अत्र सन्देहाऽभाव इत्यर्थेऽसन्देहशब्दस्य असन्देहा इति प्रयोगात्तत्पुरुषो विज्ञायते। अव्ययीभावे "रक्षोहागमलघ्वसन्देह"मिति स्यात्। अद्रुतायामसंहितमिति। "परः सन्निकर्षः संहिते"सूत्रे पठितमिदं वार्तिकम्। अद्रुतायां वृत्तौ स#ंहिताऽभाव इत्यर्थः। अत्र अव्ययीभावे सति असंहितमिति प्रयोगादव्ययीभावेऽपि अर्थाऽभावो नञा गम्यो भवतीति विज्ञायते। अन्यथा तत्पुरुषे सति परवल्लिङ्गत्वादसंहितेति स्यात्। ततश्च नञा गम्येऽभावे तत्पुरुषाऽव्ययीभावयोर्विकल्प इति स्थितम्। तेनेति। अनुपलब्धिरित्यत्र,अविवाद इत्यत्र च तत्पुरुषः, अविघ्नमित्यत्र अव्ययीभावश्च सिध्यतीत्यर्थः। शब्देन्दुशेखरे त्वन्यथा प्रपञ्चितम्।

नञो नलोपस्तिङि क्षेपे इति। "न लोपो नञः" इति सूत्रस्थवार्तिकमिदम्। नञो नकारस्य लोपः स्यात्तिङि परे निन्दायामिति वक्तव्यमित्यर्थः। अपचसि त्वं जाल्मेति। कुत्सितं पचसीत्यर्थः। अत्र अ इति भिन्नं पदं तिङन्तेन समासाऽभावात्। वार्तिकमिदं प्रसङ्गादुपन्यस्तम्। नञ्समानार्थकेन "अ" इत्यव्ययेनापि सिद्धमिदमिति वार्तिकं विफलमेव। केचित्तु अस्मादेव वार्तिकादव्ययेषु "अ" इत्यस्य पाठोऽप्रामाणिक इत्याहुः। ननु नैकधेत्यत्रापि नञ्समासे "न लोपो नञः" इति नकारस्य लोपे "तस्मान्नुडची"ति नुटि अनेकधेत्येव स्यादित्यत आह--नैकधेत्यादौ त्विति। एतदर्थमेव "न"ञिति सूत्रे, "न लोपो नञः" इति सूत्रे च ञकारानुबन्दग्रहणमिति भावः।

तत्त्व-बोधिनी

तस्मान्नुडचि ६६२, ६।३।७३

तस्मान्निडाच। "ङः सि धुडि"त्यत्रेवाऽचीति सप्तम्याः षष्ठी प्रकल्प्यत इत्याह--अजादेरिति। अचा उत्तरपदविशेषणात् "यस्मिन्विधि"रिति तदादिविधिर्लभ्यत इति भावः। अन()आ इति। नुटः परादित्वेनाऽपदान्तत्वान्ङमो ह्रस्वादिति ङमुण्न भवति। ननु विन्घानामबावोऽविघ्नामित्यत्रापि परत्वात्तत्पुरुषः स्यात्, अव्ययीभावस्य निर्मक्षिकादौ सावकाशत्वात्। अन्यथा "अनुपलब्धिः"अविवाद" इति न सिद्धयेदित्याशङ्क्याह---अर्थाभावेऽव्ययीभावेन सहेत्यादि। अविघ्नमिति। यद्यप्यविद्यमाना विग्नायस्मिन्निति बहुव्रीहिणा "अविघ्नं कर्मे"त्यादिप्रयोगः सिद्यति, तथापि "उत्तरे कर्मण्यविघ्नमस्तु"इत्यादिप्रयोगा अव्ययी भावं विना स्वरसतो न सिद्यन्तीति भावः।

नञो नलोपस्तिङि क्षेपे। नञो नलोप इति। तिङन्तेन समासाऽभावादप्राप्ते वचनम्। अपचसीति। कुत्सितं पचसीत्यर्थः। नशब्देनेति। नञा समासे त्वनेकधेत्येव स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ६।३।७५

नभ्राट् नपात् नवेदाः नासत्याः नमुचि नकुल नख नपुंसक नक्षत्र नक्र नाक इत्येतेषु नञ् प्रकृत्या भवति। न भ्राजते इति नभ्राट्। भ्राजतेः क्विबन्तस्य नञ्समासः। नपाति इति नपात्। पातिः शत्रन्तः। नवेत्ति इति नवेदाः। वित्तिरसुन्प्रत्ययान्तः। नासत्याः सत्सु साधवः सत्याः, न सत्याः असत्याः, न असत्याः नासत्याः। न मुञ्चति इति नमुचिः। मुचेरौणादिकः किप्रत्ययः। न अस्य कुलम् अस्ति नकुलः। नख न अस्य खम् अस्ति इति नखम्। नपुंसक न स्त्री न पुमान् नपुंसकम्। स्त्रीपुंसयोः पुंसकभावो निपात्यते। नक्षत्र न क्षरते क्षीयते इति वा नज्ञात्रम्। क्षियः क्षरतेर्वा क्षत्रम् इति निपात्यते। नक्र न क्रामति इति नक्रः। क्रमेर्डप्रत्ययो निपातनात्। नाक न अस्मिनकमस्ति नाकम्।

न्यासः

नभ्रण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या। , ६।३।७४

"नभ्राट्()" इति। "भ्राजृ दीप्तौ" (धा।पा।१८१) अस्मात्? "भ्राजभ्रास" ३।२।१७७ इत्यादिना क्विप्(), जकारस्य "व्रश्च" ८।२।३६ इत्यादिना षकारः, तस्य जशत्वम्()--डकारः, तस्यापि चर्त्वम्()--टकारः। "नपात्()" इति। नपुंसकत्वादसत्यां सर्वनामस्थानसंज्ञायामुगिल्लक्षणो नुम्? न भवति। "नवेदाः" इति। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "सत्सु साधवः सत्याः" इति। अनेन "तत्र साधुः" (४।४।९८) इति सच्छब्दात्? प्राग्घितीयं यतं दर्शयति। "औणादिकः किप्रत्ययः" इति। "इगुपधात्? कित्()" (द।उ।१।४८) इति किप्रत्ययः। "क्षियः" इति। "क्षिष्? हिंसायाम्()" (धा।पा।१५०६), ["क्षीष्()"--धा।पा।] "क्षि निवासगत्योः" (धा।पा।१४०७) इति। "क्षरतेर्वा" इति। "क्षर संञ्चलने" (धा।पा।८५१)। नक्षत्रमिति निपात्यते। किमत्र निपात्यते? यदि क्षियः, तदा त्रप्रत्यय इकारस्यात्त्वम्(); यद क्षरतेस्तदापि त्रप्रत्ययो रेफलोपश्च। "नास्मिन्नकमस्तीति नाकम्()" इति। कमिति सुखमुच्यते। न कम्()=दुःखम्()। नास्मिन्नकमस्ति इति नाकः=स्वर्गः। रूढिशब्दा ह्रते यथाकथञ्चित्? व्युत्पाद्यन्ते॥

बाल-मनोरमा

नभ्राण्नपान्नवेदा नासत्या नमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ७४९, ६।३।७४

नभ्राण्नपात्। सुगमम्। अनुवर्तमान इति। "समासविधयो वक्ष्यन्ते" इति शेषः।

तत्त्व-बोधिनी

नभ्राण्नपान्नवेदा नासत्या नमुचिनकुलवखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ६६३, ६।३।७४

नभ्राट्। सत्सु साधवः सत्याः। "तत्र साधुः"इति यत्। न सत्या असत्याः। न असत्या नासत्याः। इह बहुवचनमविवक्षितम्। तेन "नासत्याव()इआनौ दस्नौ"इति सिद्धम्। नमुचिरिति। "सर्वधातुब्य इन्"। "इगुपधात्किदि"ति कित्त्वान्न गुणः। क्षरतेः क्षीयतेर्वेति। "क्षर सञ्चलने"भ्वादिः। "क्षि निवासगत्योः"तुदादिः।

---

सूत्रम्

काशिका-वृत्तिः

एकादिश् च एकस्य च आदुक् ६।३।७६

एकादिश्च नञ् प्रकृत्या भवति, एकशब्दस्य च आदुकागमो भवति। एकेन न विंशतिः कान्नविंशतिः। एकान्नत्रिंशत्। तृतीया इति योगविभागात् समासः। पूर्वान्तो ऽयम् आदुक् क्रियते पदान्तलक्षणो ऽत्र अनुनासिको विकल्पेन यथा स्यातिति।

न्यासः

एकादिश्चैकस्य चादुक्?। , ६।३।७५

एकादिरिति बहुव्रीहिः। "एकान्नविंशतिः" इति। पूर्वं नञो विंशतिशब्देन समासं कृत्वा ततस्तृतीयसमासः कत्र्तव्यः। किमर्थं पुनरयं पूर्वान्त आदुक्? क्रियते, न परादिरेवादुट्? क्रियेत? तत्राण्यमर्थः--एकस्य चेत्येष आगमिनो दिर्देशो न कत्र्तव्यो भवति। परादौ हि क्रियमाणे नञेवागमो भवति, स च प्रकृतत्वादेव लक्ष्यते; तत्रायं वक्यार्थो भवति--"एकादिश्च नञ्? प्रकृत्या भवति, आदुट्? च तस्यागमो भवति" इति सिद्धमिष्टम्()? इत्याह--"पूर्वान्तोऽयम्()" इत्यादि। "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इत्यत्र हि "न पदान्ताट्टोरनाम्()" ८।४।४१ इत्यतः पदन्तादित्यनुवत्र्तते। तत्र यदि परदिः क्रियते पदान्तताऽस्य न स्यात्(), ततश्च पदान्तलक्षणोऽनुनासिकविकल्पो न स्यात्(), इष्यते च। तस्माद्विकल्पेन यथा स्यादित्येवमर्थं पूर्वान्त आदुक्? क्रियते। अथ किमर्थमादुक् क्रियते? आदुगेव नोच्येत, अदुक्यपि क्रियमाणेऽकः सवर्णो दीर्घत्वेन (६।१।१०१) सिध्यति? न सिध्यति; "अतो गुणे" ६।१।९४ पररूपत्वं प्राप्नोति, तदपयकारोच्चारणसामथ्र्यान्न भविष्यति, यदि ह्यत्र पररूपत्वं स्याद्दुकमेव विदध्यात्(), तर्हि सवर्णदीर्घत्वमप्यकारोच्चारणसामथ्र्यान्न स्यात्()? नैतदस्ति; तथा हि--यं विधिं प्रत्युपदेशोऽनर्थकः स्यात्? स विधिर्बाध्यते (व्या।प।५६) यस्य तु विधेस्तदेव निमित्तं नासौ विधिर्बाध्यते। पररूपत्वं च प्रत्यकारोच्चारणमनर्थकम्(), सवर्मदीर्घत्वं तु प्रति निमित्तमेव। एवं तह्र्रदुगेवायम्()। तुल्या हि संहिता॥

बाल-मनोरमा

एकादिश्चैकस्य चाऽदुक् ८०१, ६।३।७५

एकादिश्च। "नलोपो नञः" इत्यतो "नञ" इति षष्ठ()न्तमनुवर्तते। तच्चप्रथमया विपरिणम्यते। "नभ्राण्नपात्" इत्यतः प्रकृत्येत्यनुवर्तते। तदाह--एकादिर्नञ्प्रकृत्येति। एक आदिर्यस्येति विग्रहः। एकस्य चादुगागमश्चेति। आदु"गिति "अदु"गिति वा च्छेदः। नञो विंशत्येति। न विंशतिरिति विग्रहे नञ्समासे सति "नवंशति" शब्दस्यैकशब्देन तृतीयान्तेन सह एकेन नवंशितिरिति विग्रहे समास इत्यन्वयः। ननु तत्कृतत्वाद्यभावात्कथमिह तृतीयासमास इत्यत आह--योगविभागादिति। अनुनासिकविकल्प इति। तृतीयासमासे कृते सुब्लुकि एक नविंशतिरिति स्थिते "न लोपो नञः" इति प्राप्तस्य नकारलोपस्य प्रकृतिभान्निवृत्तौ एकशब्दस्याऽऽदुगागमः, तत्र ककार इत्, उकार उच्चारणार्थः। कित्त्वादन्तावयवः, सवर्णदीर्घः, एकाद्-नविंशतिरिति स्थिते "यरोऽनुनासिके" इति दकारस्य पक्षेऽनुनासिकनकार इत्यर्थः। अदुगागमपक्षेऽपि पररूपं तु अकारोच्चारमसामथ्र्यान्न भवति। एकेन न विंशतिरिति। विग्रहवाक्यम्। एकेन हेतुना विंशतिर्न भवतीत्यर्थः। एकान्नविंशतिः, एकाद्नविंशतिरिति। अनुनासिकत्वे तदभावे च रूपम्। एकोनविंशतिरित्यर्थ इति। "पर्यवस्यती"ति शेषः। एकेन ऊनेति विग्रहः। "पूर्वसदृशे"ति समासः। सा चासौ विंशतिश्च।

---

सूत्रम्

काशिका-वृत्तिः

नगो ऽप्राणिष्वन्यतरस्याम् ६।३।७७

नञ् प्रकृत्या भवति अन्यतरस्याम्। नगा वृक्षाः, अगा वृक्षाः। नगाः पर्वताः, अगाः पर्वताः। न गच्छन्ति इति नगाः। गमेर्डप्रत्ययः। अप्राणिषु इति किम्? अगो वृषलः शीतेन।

न्यासः

नगोऽप्रणिष्वन्यतरस्याम्?। , ६।३।७६

"गमेर्डप्रत्ययः" इति। "डप्रकरणे अन्यत्रापि दृश्यते" (वा।२५६) इति वचनात्()॥

---

सूत्रम्

काशिका-वृत्तिः

सहस्य सः संज्ञायाम् ६।३।७८

सहशब्दस्य स इत्ययम् आदेशो भवति संज्ञायां विषये। साश्वत्थम्। सपलाशम्। सशिंशपम्। संज्ञायाम् इति किम्? सहयुध्वा। सहकृत्वा। सादेश उदात्तो निपात्यते। उदात्तानुदात्तवतो हि सहशब्दस्य अन्तर्यतः स्वरितः स्यात्। सनिपातनस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र तत्र उपयुज्यते। अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव, सेष्टि, सपशुबन्धम् इति।

न्यासः

सहस्य सः संज्ञायाम्?। , ६।३।७७

"सा()आत्थम्()" इति। सहा()आत्थेनेति "तेन सहेति तुल्ययोगे" २।२।२८ इति बहुव्रीहिः। "सहयुध्वा, सहकृत्वा" इति। "दृशेः क्वनिप्()" ३।२।९४ इत्यनुवत्र्तमाने "राजनि युधि कृञः" ३।२।९५, "सहे च" ३।२।९६ इति क्वनिप्(), उपपदसमासः, "सर्वनामस्थाने; ६।४।८ इति दीर्घः। किं पुनः कारणं सादेश उदात्तो निपात्यते? इत्यत आह--"उदात्तानुदात्तवतो हि" इत्यादि। निपाता आद्युदाता भवन्ति" (फि।सू।४।८०) इति सहशब्द आद्युदात्त एव, शेषमनुदात्तम्()। तेनासावुदात्तानुदात्तवान्(), ततश्चान्तर्यतस्तस्य स्थाने सशब्दः स्वरितः। तस्मान्मा भूदेष दोष इत्युदात्तो निपात्यते। यद्येवम्(), अव्ययीभावेऽपि उदात्त एव स्वरः प्राप्नोति? इत्यत आह--"स च निपातस्वरः" इत्यादि। "यत्र" इत्यादि। बहुव्रीहौ तत्पुरुषे वा। "बहुव्रीहौ प्रकृत्या पूर्वपदम्()" ६।२।१ इति सहेत्येतस्य समासान्तोदात्तत्वापवादः प्रकृतिस्वरत्वं भवति। तत्पुरुषेऽपि "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना। तस्मात्? तत्रैव स निपातस्वरः प्रसज्यते। अव्ययीभावे तु समासान्तोदात्तत्वापवादः प्रकृतिस्वरो न केनचिद्विहित इति ततर समासान्तोदात्तत्वेनैव भवितव्यम्()। अतस्तेन बाध्यत एव। "सेष्टि, सपशृबन्धम्()" इति। इष्टिरन्तो यस्य पशुबन्धोऽन्तो यस्येति, "अव्ययं विभक्ति" २।१।६ इत्यादिना समासः, अन्तवचने। अत्र परत्वात्? प्रथमसतावन्नपतस्वरः, ततः समासान्तोदात्तत्वम्()। तच्च सति निपातस्वरे शिष्यत इति सतिशिष्टम्(), अतस्तेन निपातस्वरो बाध्यते; सतिशिष्टस्वरस्य वलयस्त्वात्()॥

बाल-मनोरमा

सहस्य सः संज्ञायाम् ९९४, ६।३।७७

सहस्य सः। उत्तरपदे इति। शेषपूरणेनोक्तमिदम्। सहेत्यस्य स इत्यादेशः स्यादुत्तरपदे इत्यर्थः। "वोपसर्जनस्ये"त्यस्यापवादः। सपलाशमिति। "तेन सहे"ति बहुव्रीहिः। वनविशेषस्य संज्ञेयम्। सहयुध्वेति। "सबे चे"ति क्वनिप्। असंज्ञात्वान्न सभावः।

तत्त्व-बोधिनी

सहस्य सः संज्ञायाम् ८४५, ६।३।७७

सहयुध्वेति। "सहे चे"ति क्वनिप्। स्त्रियामपि "वनो न हशः"इति निषेधान्ङीब्राऔ न। समुहूर्तमिति। अन्तवचनेऽव्ययीभावः। "अव्ययीभावे चाऽकाले"इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम्।

---

सूत्रम्

काशिका-वृत्तिः

ग्रन्थान्ताधिके च ६।३।७९

ग्रन्थान्ते अधिके च वर्तमानस्य सहशब्दस्य स इत्ययम् आदेशो भवति। सकलं ज्यौतिषमधीते। समुहूर्तम्। ससङ्ग्रहं व्याकरणम् अधीयते। कलान्तं, महूर्तान्तं, सङ्ग्रहान्तम् इति अन्तवचने इत्यव्ययीभावः समासः। तत्र अव्ययीभावे चाकाले इति कालवाचिन्युत्तरपदे समासो न प्राप्नोति इत्ययम् आरम्भः। अधिके सद्रोणा खारी। समाषः कार्षापणः। सकाकिणीको माषः।

न्यासः

ग्रन्थान्ताधिके च। , ६।३।७८

"सकलम्()" इति। कला=कालविशेषः, तत्सहचारितो ग्रन्थस्तथोच्यते। सह कलया वत्र्तत इति सकलम्()। एवं "समुहूत्र्तम्()" इत्येतदपि वेदितव्यम्()। "ससंग्रहम्()" इति। एतदुदाहरणं प्रमादादिदानीन्तनैः कुलेखकैर्लिखितम्(), तत्र हि "अव्ययीभावे चाकाले" (६।३।८१) इत्येवं सभावः सिद्धः? इत्याह--तत्र" इत्यादि। कथं पुननं प्राप्नोति, यावता कालमुहूर्तशब्दौ तावत्? साहचर्यादत्र ग्रन्थे वत्र्तते? एवं मन्यते--प्रकरणादिना वाक्येन ग्रन्थविषयता तयोर्गम्यते। मुख्यस्तु काल एवाभिधेय इति। "सद्रोणा खारी" इत्यादि। "तेन सह" २।२।२८ इत्यादिना बहुव्रीहिः॥

बाल-मनोरमा

ग्रन्थान्ताधिके च ९९५, ६।३।७८

ग्रन्थान्ताधिके च। ग्रन्थान्तश्च अधिकश्चेति समाहारद्वन्द्वः। अनयोरर्थयोरिति। "विद्यमानस्ये"ति शेषः। समुहूर्तमिति। मुहूर्तविधिपरग्रन्थपर्यन्तं ज्योतिःशास्त्रमधीत इत्यर्थः। अन्तवचनेऽव्ययीभावः। "अव्ययीभावे चाऽकाले" इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम्। सद्रोणा खारीति। द्रोणपरिमाणादधिकेत्यर्थः। मयूरव्यंसकादित्वात्सहशब्दस्याधिकवाचिनः समासः, सभावश्च।

---

सूत्रम्

काशिका-वृत्तिः

द्वितीये च अनुपाख्ये ६।३।८०

द्वयोः सहयुक्तयोरप्रधानो यः स द्वितीयः। उपाख्यायते प्रत्यक्षत उपलभ्यते यः स उपाख्यः। उपाख्यादन्यः अनुपाख्यः अनुमेयः। तस्मिन् द्वितीये ऽनुपाख्ये सहस्य स इत्ययम् आदेशो भवति। साग्निः कपोतः। सपिशाचा वात्या। सराक्षसीका शाला। अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमानाः अनुपाख्या भवन्ति।

न्यासः

द्वितीये चानुपारव्ये। , ६।३।७९

"द्वयो सहप्रयुक्तयोरप्रधानो यः स द्वितीयः" इति। प्रधानेतरसन्निपाते सत्यप्रधान एव द्वितीयशब्दस्य प्रयोगात्()। तथा हि--स्वामिभृत्ययोः सहयुक्तयोर्भृत्य एव स्वामिनं प्रति द्वितीय उच्यते, न तु भृत्यं प्रति स्वामी। "उपाख्यायते यः स उपाख्यः" इति। "आतश्चोपसर्गे" ३।१।१३६ इति कः, स च भवन्? "कृत्यल्युटो बहुलम्()" ३।३।११३ इति कर्मणि भवति। "साग्निः कपोतः" इति। पूर्ववद्बहुव्रीहिः। अत्रागनिसहयुक्तः कपोतः, तयोर्हि साहचर्यं लोके प्रसिद्धम्()। तत्राग्निरप्रधानः। तथा ह्यग्निः कपोतमनुविधत्ते--यत्र हि कपोतस्तत्राग्निनाऽवश्यं भवितव्यम्(), न तु यत्राग्निस्तत्र कपोतेनेति नासावग्निमनुविधत्ते, तेन कपोतस्य प्राधान्यम्()। अग्न्यादयः पुनरप्रधाना एव। "अग्न्यादयः" इति। अत्रादिशब्देन पिशाचदयो गृहयन्ते। तेन हि क्वचित्? प्रत्यक्षेण उपलभ्यन्ते, अपि तु कपोतादिभिरविनाभाविभिरनुमीयन्त इत्यनुपाख्या भवन्ति॥

बाल-मनोरमा

द्वितीये चानुपाख्ये ९९६, ६।३।७९

द्वितीये चानुपाख्ये। अप्रधानेऽसहाये द्वितीयशब्दो लाक्षणिकः। उपाख्यायते प्रतीयते उपलभ्यते इत्युपाख्यं=प्रत्यक्षम्। तदन्यदनुपाख्यम्। अनुमेयमिति यावत्। तदाह--अनुमेय इति। सहायवाचिन्युत्तरपदे परत इत्यर्थः। सराक्षसीकेति। "तेन सहे"ति बहुव्रीहिः। "नद्यृतश्चे"ति कप्। अनुमेयराक्षसीसहिता निशेत्यर्थः। तदाह--राक्षसी साक्षादिति।

तत्त्व-बोधिनी

द्वितीये चानुपाख्ये ८४६, ६।३।७९

द्वितीये। "अप्रधानो यः स द्वितीयः"इति लोकप्रसिद्धम्। उपाख्यं=प्रत्यक्षं, तद्भिन्नमनुमेयं। तदाह---अनुमेये इति। सराक्षसीकेति। "नद्यृतश्चे"ति कप्।

---

सूत्रम्

काशिका-वृत्तिः

अव्ययीभावे चाकाले ६।३।८१

अव्ययीभावे च समासे अकालवाचिनि उत्तरपदे सहस्य स इत्ययम् आदेशो भवति। सचक्रं धेहि। सधुरं प्राज। अकाले इति किम्? सहपूर्वाह्णम्।

लघु-सिद्धान्त-कौमुदी

अव्ययीभावे चाकाले ९१७, ६।३।८०

सहस्य सः स्यादव्ययीभावे न तु काले। हरेः सादृश्यं सहरि। ज्येष्ठस्यानु पूर्व्येणेत्यनुज्येष्ठम्। चक्रेण युगपत् सचक्रम्। सदृशः सख्या ससखि। क्षत्राणां संपत्तिः सक्षत्रम्। तृणमप्यपरित्यज्य सतृणमत्ति। अग्निग्रन्थपर्यन्तमधीते साग्नि॥

न्यासः

अव्ययीभावे चाकाले। , ६।३।८०

"अकालवाचिनि" इति। अनेन "काले" इति नेह सवरूपस्य ग्रहणम्(), अपि तु कालविशेषवाचिनां पूर्वाह्णादिशब्दानामिति दर्शयति। कुत एतत पुनरवसितम्()? "ग्रन्थान्ताधिके च" ६।३।७८ इत्यत्र ग्रन्थान्तग्रहणात्()। अनेन हि

कालवाचिन्युत्तरपदे प्रतिषेधः पर्राप्नोति, स मा भूदिति। तत्र ग्रन्थान्तग्रहणं क्रियते, यदि चात्र "काले" इति स्वरूपग्रहणं स्यात्()। ततस्तेनैव सकलम्(), समुहूर्त्तमित्यत्र सभावः सिद्ध इति तत्र ग्न्थान्तग्रहणमनर्थकं स्यात्()। "सचक्रम्()" इति। "अव्ययं विभक्ति" २।१।६ इत्यादना यौगपद्येऽव्ययीभावः। "सधुरम्()" इति। "ऋक्पूरब्धूः पथामानक्षे" ५।४।७४ इत्यकारः समासान्तः। "सहपूर्वाह्णम्()" इति। तेनैव सूत्रेव साकल्येऽव्ययीभावः॥

बाल-मनोरमा

अव्ययीभावे चाऽकाले ६५२, ६।३।८०

अव्ययीभावे। सहस्य सः स्यादिति। "सहस्य सः संज्ञाया"मित्यतस्तदनुवृत्तेरिति भावः। न तु काले इति। कालवाचके परे सहस्य सो नेत्यर्थः। सचक्रमिति। चक्रेण युगपत्प्रयुक्तमित्यर्थः। सहपूर्वाह्णमिति। समीपादौ अव्ययीभावः। सूत्रे सादृस्येति स्वार्थे ष्यञ्। तद्ध्वनयन्नाह--सदृशः सख्या ससखीति। "सहे"त्यव्ययं सदृशार्थकमिति भावः। गुणभूतेऽपीति। वचनग्रहणसामर्थ्येनाऽव्ययार्थप्राधान्य एव समासप्रवृत्तेः गुणीभूतसादृश्येऽप्राप्त्या तद्ग्रहणमिति भावः। क्षत्राणां संपत्तिः सक्षत्रमिति। क्षत्रियाणामनुरूपं कर्मेत्यर्थः। सहेत्यव्ययमत्र संपत्तौ वर्तत इति भावः। संपत्तिसमृद्धिशब्दयोः पौनरूक्त्यं परिहरति-ऋद्धेरिति। धनधान्यादेस्त्यिर्थः। अनुरूप इति। अनुरूपः=योग्यः, आत्मभावः=स्वभावः। स्वोचितं कर्मेति यावत्। तृणमपीति। "परऽवरयोगे चे"ति क्त्वा। पराऽवरत्वं बौद्धमेव। सहशब्दोऽत्राऽपरिवर्जने वर्तते, न तु तृणसहभावेऽपीति भावः। नन्वेवं सति साकल्ये कथमिदमुदाहरणं स्यादित्यत्र आह--साकल्येनेत्यर्थ इति। पात्रे परिविष्टं सकलं भक्षयतीति यावत्। न त्वत्रेति। तृणभक्षणस्याऽप्रसक्तेरिति भावः। अन्ते इति। "उदाहरणं वक्ष्यते" इति शेषः। सूत्रेऽन्तशब्देन अन्तावयवसाहित्यं विवक्षितमित्यभिप्रेत्योदाहरति-अग्निग्रन्थपर्यन्तमित्यादि। अग्निशब्देनाऽग्निचयनप्रतिपादको ग्रन्थो विवक्षितः। तेनाऽन्तावयवेन सहितं ग्रन्थमिति विग्रहः। अग्निग्रन्थपर्यन्तमिति बहुव्रीहिः। "ग्रन्थ"मित्यन्यपदार्थाध्याहारः। अधीत इति तु समासप्रविष्टम्। अन्तावयवेन अग्निग्रन्थेन सहितं वेदकल्पसूत्रादिभागमधीते इत्यर्थः। अत्र कृत्स्नस्यानध्येतव्यत्वादग्निग्रन्थपर्यन्ताध्ययने तत्कात्स्न्र्यानवगमात्साकल्यात्पृथगुक्तिः।

तत्त्व-बोधिनी

अव्ययीभावे चाऽकाले ५७७, ६।३।८०

चक्रेण युगपदिति। अत्र केचित्--युगपच्चक्रमिति समासेनैव भवितव्यं, युगपच्छब्दस्याप्यव्ययत्वात्, किं तु चक्रेणैककालमित्यादि विग्रहीतुमुचितमित्याहुः। सहपूर्वाह्णमिति। साकल्येऽव्ययीभावः। गुणभूतेऽपीति। यदि सादृश्य इति नोच्येत, तर्हि यत्र सादृश्यं प्रधानमवगम्यते तत्रैव स्यात्, अव्ययार्थप्राधान्यस्याऽव्ययीभावे औत्सिर्गिकत्वादिति भावः। अन्त इति। "इदानीमेतावान् प्रदेशोऽध्येतव्य"इति यावतो ग्रन्थप्रदेशस्य परिग्रहः कृतस्तदपेक्षा समाप्तिरिहाऽन्तशब्देन विवक्षिता। सा चाऽसकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते। साग्नीति। अग्निशब्दस्तत्प्रतिपादकग्रन्थे वर्तते। स टच तृतीयान्तो नित्यं समस्यते। न चैवमग्निना सहेति प्रयोगो दुर्लभ इति वाच्यम्। साहित्यमात्रविवक्षायां तत्प्रयोगस्योपपत्तेः। अन्तत्वविवक्षायां तु समासस्य नित्यत्वादग्निग्रन्थपर्यन्तमित्यस्वपदविग्रहो दशितः। यत्तु केचित्--अग्निरन्तोऽस्येति प्रथमान्तेनाऽग्नेरन्तत्वमिति षष्ठ()न्तेना वा विग्रहः, समासोऽपि प्रथमान्तेन षष्ठ()न्तेन वेत्याहुः। तन्न। सहशब्दस्यान्तवाचकत्वाऽभावात्। अन्तत्वस्य तु सुतरामलाभात्। सहयुक्ते तृतीयाया न्याय्यत्वाच्च। "सतृणमत्ती"त्यत्र साकल्यस्येव साग्नीत्यत्रान्तत्वस्यापि साहित्येद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्य इह तत्परित्यागस्य निष्प्रमाणत्वाच्च। अत्रेदं बोध्यम्---"तदधीते"इत्यध्वेतृप्रत्ययस्य वैकल्पिकत्वास्ताग्नीत्यत्राऽण्नोक्तः। कृतेऽप्यध्येत्रणि "सर्वादेः सादेश्च

लुग्वक्तव्यः"इति वक्ष्यमाणत्वात्साग्नीत्येव रूपमिति॥

---

सूत्रम्

काशिका-वृत्तिः

वा उपसर्जनस्य ६।३।८२

उपसर्जनसर्वावयवः समासः उपसर्जनम्। यस्य सर्वे ऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर् गृह्यते। तदवयवस्य सहशब्दस्य वा स इत्ययम् आदेशो भवति। सपुत्रः, सहपुत्रः। सच्छात्रः, सहच्छात्रः। उपसर्जनस्य इति किम्? सहयुध्वा। सहकृत्वा। सहकृत्वप्रियः, प्रियसहकृत्वा इति इह बहुव्रीहौ यदुत्तरपदं तत् परः सहशब्दो न भवति इति सभावो न भवति।

न्यासः

वोपसर्जनस्य। , ६।३।८१

यदि "उपसर्जनस्य" इत्येतत्? सहशब्दसय विशेषणं स्यात्? तदाऽतिप्रसङ्गः स्यात्()। विशेषानुपादानादिहापि स्यात्()--सहयुध्वा, सहकृत्वेति। अत्रापि सहशब्द उपसर्जनम्(); "उपपदमतिङ्()" २।२।१९ इति प्रथमा निर्देशात्(), अप्राधान्याच्च। अनर्थकञ्च विशेषणं स्यात्(); सर्वत्रैव हि समासे सहशब्दस्योपसर्जनत्वात्()। समासश्चेहोत्तरपदेन सन्निधापितः, यस्मात्? समासे ह्युत्तरपदं भवति, अतसतस्यैवेदं विशेषणमिति मन्यमान आह--"उपसरजनसर्वावयवः" इति। उपसर्जनं सर्वोऽवयवो यस्य स तथोक्तः; अवयवधर्मेण समुदायधर्मस्य तथा निर्देशात्(), यथा--आढ()मिदं नगरमिति। यदि कस्यचित्कश्चिदुपसरजनमवयवः कश्चिदनुपसर्जनं सोऽप्युपसर्जनमित्युच्यते, तदाऽतिप्रसङ्गदोषस्तदवस्थः स्यादिति सर्वग्रहणम्()। कः पुनरसौ सर्वोपसजेनावयवः समासः? बहुव्रीहिः। ननु द्वन्द्वोऽप्युपसर्जनसर्वावयव एव, तस्यापि ग्रहणं प्राप्नोति? नैष दोषः; न हि सहपदेन तु गुणभावस्तत्रैव प्रयुज्यते। अथ वा--उभयगतिरिह शास्त्रे सम्भवतति लौकिकमप्युपसर्जनमिह गृह्रते। तेन शास्त्रीयोपसर्जनेन लौकिकेन चोपसर्जनीभूताः सर्वोऽवयव यस्य स एवोपसर्जनशब्देन विवक्षित इति विज्ञायते। न चैवंविधो द्वन्द्वः। तस्य ह्यवयवानां शास्त्रीयेणैवोपसर्जनेनोपसर्जत्वम्(), न तु लौकिकेन। बहुव्रीहिस्तु लौकिकेनापि। तस्मात्? तस्यैवोपसर्जनग्रहणेन ग्रहणम्()। "तदवयवस्य" इति। अनेनोपसर्जनस्येत्येषाऽवयवषष्ठीति दरिशयति। "सपुत्रः" इति। पूर्ववद्बहुवरीहिः। "सहयुष्वा, सहकृत्वा" इति। तत्पुरुषोऽयमुत्तरपदार्थप्रधानः। अथेह कस्मान्न भवति--सहकृत्वप्रियः, प्रियसहकृत्वेऽति, भवति ह्यत्रापि सहशब्दो बहुव्रीह्यवयवः? इत्याह--"इह" इत्यादि। "वा प्रियस्य" (वा।११४) इति प्रियशब्दस्य विकल्पेन पूर्वनिपतः। उत्तरपदाधिकारादिह बहुव्रीह्याश्रयणाच्च बहुव्रीहौ यदुत्तरपदं तत्? परं यस्मात्? सहशब्दात्? तसय सभावेन भवितव्यम्()। न चेह बहुव्रीहौ यदुत्तरपदं तत्? सहशब्दात्? परम्(), शब्दान्तरेण व्यवधानादिति न भवति सभावः॥

बाल-मनोरमा

वोपसर्जस्य ८४०, ६।३।८१

वोपसर्जनस्य। "उत्तरपदे" इत्यधिकृतम्। "सहस्य सः संज्ञाया"मित्यतः "सहस्य स" इत्यनुवर्तते। उपसर्जनमस्यास्तीत्युपसर्जनः, मत्वर्थे अर्शाअद्यच्। उत्तरपदाक्षिप्तसमासो विशेष्यम्। उपसर्जवनतः समासस्येत्यर्थः। यद्यपि सर्वेषामपि समासानां कश्चिदवयव उपसर्जनमेव, तथापि सामथ्र्यादुपसर्जनसर्वावयवकस्येति लभ्यते। तथाच उपसर्जनस्येत्यनेन बहुव्रीहेरिति लब्धम्। अवयवषष्ठ()एषा। तदाह--बहुव्रीहेरवयवस्येत्यादिना। बहुव्रीहेरिति किम्?। सहयुध्वा। "राजनि युधि कृञः, "सहे चे"ति क्वनिप्। उपपदसमासः। अबहुव्रीह्यवयवस्य सहस्य सत्वं न। सुपुत्र इति।

सभावे रूपम्। पुत्रेण युगपदागत इत्यर्थः। प्रायिकमिति। इतिशब्दादिदं लभ्यते। "विभाषा सपूर्वस्ये"त्यादिनिर्देशाच्चेति भावः। सकर्मक इति। विद्यमानकर्मक इत्यर्थः। अत्र तुल्ययोगाऽभावेऽपि सहस्य सः।

तत्त्व-बोधिनी

वोपसर्जनस्य ७३७, ६।३।८१

वोपसर्जनस्य। उपसर्जनस्येति न सहस्य विशेषणम्, अव्यभिचारात्। किं तूत्तरपदेन संनिधापितस्य समासस्य। तच्चावयवद्वारकम्। उपसर्जनसर्वावयवकस्य समासस्येत्येर्थः। तदेतत्फलितमाह---बहुव्रीहीति। तेनेह न,--सहयुध्वा। सहकृत्वा। राजनि युधि कृञः "सहे चे"ति क्वनिपि उपपदसमासाविमौ। "सहस्य सः संज्ञाया"मित्यतोऽनुवर्तनादाह--सहस्य सः स्यादिति। प्रायिकमिति। "विभाषा सपूर्वस्ये"त्यादिनिर्दिशादिति भावः। सकर्मक इति। विद्यमानकर्मक इत्यर्थः।

प्रकृत्याशिषि। कथं तर्हि "यजमानस्य सपुत्रस्य सभ्रातृकस्य सपरिवारस्यायुरारोग्यै()आर्याभिवृद्धिरस्तु" इत्यादिप्रयोगाः सङ्गच्छन्त इति चेत्। उच्यते----"ऐ()आर्याभिवृद्धिरस्त्विवति भवन्तोऽनुगृह्णन्तु" इत्येतत्प्रार्थनावाक्यं, न त्वाशीर्वचनम्। यच्चाशीर्वचनं "तथास्तु"इति , तत्र हि सपुत्रकेत्यादि न प्रयुज्यत एवेति न काप्यनुपपत्तिः।

---

सूत्रम्

काशिका-वृत्तिः

प्रकृत्या आशिष्यगोवत्सहलेषु ६।३।८३

प्रकृत्या सहशब्दो भवति आशिषि विषये अगोवत्सहलेषु। स्वस्ति देवत्ताय सहपुत्राय सहच्छात्राय सहामात्याय। अगोवत्सहलेषु इति किम्? स्वस्ति भवते सहगवे, सगवे। सहवत्साय, सवत्साय। सहहलाय, सहलाय। वोपसर्जनस्य ६।३।८१ इति पक्षे भवत्येव सहबावः।

न्यासः

प्रकृत्याशिष्यगोवत्सहलेषु। , ६।३।८२

पूर्वेणातिप्रसक्तस्य सभावस्य प्रकृतिभावेन निवृत्तिः क्रियते। नेति वक्तव्ये प्रकृत्येति वचनं वैचित्र्यार्थम्()॥

बाल-मनोरमा

प्रकृत्याऽऽशिषि ८४१, ६।३।८२

प्रकृत्याशिषि। "सहस्य सः संज्ञाया"मित्यतः सहस्येत्यनुवृत्तं प्रथमया विपरिणम्यते। तदाह--सहशब्द इति। प्रकृत्येति। स्वभावेन स्थितः स्यादित्यर्थः। सभावो नेति यावत्। स्वस्तीति। "भूया"दिति शेषः। सहपुत्रायेति। "तेन सहे"ति समासे कृते, आसीर्योगान्न सभावः। एवं-सहामात्यायेति।

अगोवत्सेति। गोवत्सहलेषु परतः सहस्य प्रकृतिभावो नेत्यर्थः। सगवे इति। "राज्ञे स्वस्ती"ती शेषः।

---

सूत्रम्

काशिका-वृत्तिः

समानस्य छन्दस्यपूर्धप्रभृत्युदर्केषु ६।३।८४

स इति वर्तते। समानस्य स इत्ययम् आदेशो भवति छन्दसि विषये मूर्धन् प्रभृति उदकम् इत्येतानि उत्तरपदानि वर्जयित्वा। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्यः। समानो गर्भः सगर्भः, तत्र भवः सगर्थ्यः। सगर्भसयूथसनुताद् यत् ४।४।११३ इति यत्प्रत्ययः। अमूर्धप्रभृत्युदर्केषु इति किम्? समानमूर्धा। समानप्रभृतयः। समानोदर्काः। समानस्य इति योगविभाग इष्टप्रसिद्ध्यर्थः क्रियते। तेन सपक्षः, साधर्म्यम्, सजातीयः इत्येवम् आदयः सिद्धाः भवन्ति।

न्यासः

समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु। , ६।३।८३

"सगर्भः, सपूथ्यः" इति। समानो गर्भः, समानं यूथमिति विगृह्य "पूर्वापरप्रथम" २।१।५७ इत्यादिना कर्मधारयः। "साधम्र्यम्()" इति। बहुव्रीहेर्भावप्रत्ययः। "सजातीयः" इति। अत्रापि बहुव्रीहेरेव "जात्यन्ताच्छ बन्धुनि" ५।४।९ इति च्छः। "सस्थानीयः" इति। "स्थानान्ताद्विभाषा सस्थानेनेति चेत्()" ५।४।१० इति च्छप्रत्ययः॥

बाल-मनोरमा

समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ९९७, ६।३।८३

समानस्य। नतु मूर्धादिष्विति। मूर्धन्, प्रभृति, उदर्क--एषु परेषु नेत्यर्थः। सगभ्र्य इति। समाने गर्भे भव इत्यर्थः। सयूथ्य इति। समाने यूथे भव इत्यर्थः। सनुत्य इति। समाने नुते भव इत्यर्थः। सर्वत्र "तद्धितार्थ" इति समासे समानस्य सभावः। समानमूर्धेति। समानो मूर्धा यस्येति विग्रहः। समानप्रभऋतय इति। समानः प्रभृतिराद्यवयवो येषामिति विग्रहः। समानोदर्का इति। समान उदर्को येषामिति विग्रहः। तैत्तिरीये "सजूरृतुभिः, सजूर्विधाभिः, सजूर्वसुभिः, सजूरुदैः, सजूरादित्यैः, सजूर्वि()और्देवैः, सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वै()आआनराया()इआनाध्वर्यु सादयतामिह त्वा" इति मन्त्राः संसृष्टाः पञ्च पठिताः। पञ्चस्वपि मन्त्रेषु सजूरृतुभिः, सजूर्विधाभिरित्ययम् आद्यवयवः, सजूर्देवैर्वयोनाधैरित्यन्तावयवश्च समानः, सजूर्वसुभिरित्यादिपञ्चानामेकैकस्य क्रमेणैकैकस्मिन्मन्त्रे मध्ये निवेश इति याज्ञिकमर्यादा। ननु लोके सपक्षादिशब्देषु कथं समानस्य सभाव इत्यत आह-योगो विभज्यत इति। तथा च "समानस्य सः स्या"दिति वाक्यान्तरं संपद्यते। तत्र छन्दसीत्यभावाल्लोकेऽपि क्वचिद्भवतीति लभ्यत इति भावः।

सपक्ष इति। समानः पक्षो यस्येति विग्रहः। साधम्र्यमिति। समानो धर्मो यस्य स सधर्मा। समानस्य सभावः। तस्य भावः साधम्र्यम्। ब्राआह्मणादित्वात्ष्यत्र्। सजातीयमिति। समाना जातिर्यस्येति विग्रहः। समानस्य सभावः। "जात्यान्ताच्छ बन्धुनी"ति च्छः। इत्यादीति। "सग्राम" इत्यादिसङ्ग्रहः। योगविभागस्य भाष्याऽदृष्टत्वाद्युक्त्यन्तरमाह--अथवेति। तेनेति। तेन=सदृशब्देन बहुव्रीहिरित्यन्वयः। तथा च वोपसर्जनस्ये"ति सहस्य सभाव इति भावः। ननु तर्हि समानः पक्षो यस्येति कथं विग्रहः। सहशब्दस्यैव विग्रहे प्रवेशौचित्यादित्यत आह--अस्वपद इति। वृत्तावेव सहशब्दः सदृशवचन इति भावः।

तत्त्व-बोधिनी

समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ८४७, ६।३।८३

योगो विभज्यत इति। एतदर्थमेव च्छान्दसमपि "समानस्यच्छन्दसी"ति सूत्रमिहोपन्यस्तमिति भावः। बहुब्राईहिरिति। तेन "वोपसर्जनस्ये"ति सहस्य सभावः प्राप्नोतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवर्योवचनबन्धुषु ६।३।८५

ज्योतिस् जनपद रात्रि नाभि नामन् गोत्र रूप स्थान वर्ण वयस् वचन बन्धु इत्येतेषु उत्तरपदेषु समानस्य स इत्ययम् आदेशो भवति। सज्योतिः। सजनपदः। सरात्रिः। सनाभिः। सनामा। सगोत्रः। सरूपः। सस्थानः सवर्णः। सवयाः। सवचनः। सबन्धुः।

न्यासः

ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु। , ६।३।८४

"सज्योति" इति। समानं ज्योतिरस्येति बहुव्रीहिः। एवं सजनपदादयो वेदितव्याः। तत्पुरुषेऽपि भवितव्यमेव; विशेषानुपातानात्()। "सनामा" इति। "सर्वनामस्थाने च" ६।४।८ इत्यादिना दीर्घः। "सवयाः" इति। अत्रापि "अत्वसन्तस्य" ६।४।१४ इति दीर्घ॥

तत्त्व-बोधिनी

ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ८४८, ६।३।८४

सज्योतिरिति। समानं ज्योतिरस्येति बहुव्रीहिः। यस्मिन्ज्योतिषि आदित्ये नक्षत्रे वा संजातं तदस्तमयपर्यन्तमनुवर्तमानमाशौचं सज्योतिरित्युच्यते। इह "समानमध्यमध्यमवीराश्चे"ति प्रतिपदेक्त एव समासो न गृह्रते, "सरूपाणामेकशेषः"इति लिङ्गात्। किंतु बहुव्रीहिरपी"ति हरदत्तः।

---

सूत्रम्

काशिका-वृत्तिः

चरणे ब्रह्मचारिणि ६।३।८६

चरणे गम्यमाने ब्रह्मचारिणि उत्तरपदे समानस्य स इत्ययम् आदेशो भवति। समानो ब्रह्मचारी सब्रहमचारी। ब्रह्म वेदः, तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच् चरति इति ब्रहमचारी। समानः तस्य एव ब्रह्मणेः समानत्वदित्ययम् अर्थो भवति। समाने ब्रह्मणि व्रतचरी सब्रह्मचरी इति।

न्यासः

चरणे ब्राह्चारिणि। , ६।३।८५

चरणशब्दोऽयमध्ययननिमित्तमुपादाय पुरुषादिषु वत्र्तते। ब्राह्आ चरतीति ब्राहमचारी, "व्रते" ३।२।८० इति णिनिः। "सब्राह्चारी" इति। पूर्ववत्? कर्मधारयः। सब्राह्चारीत्यस्यायमर्थोऽभिमतः--समाने ब्राह्णि व्रतं चरतीति। एष चात्रार्थो यथोपपद्यते, तथा दर्शयितुमाह--"ब्राह् वेदः" इत्यादि। तदध्यनार्थ यद्व्रतं तदपि ब्राह्वेति। तादथ्र्यात्? ताच्छब्द्यम्(), यथा--इन्द्रार्था स्थूणा इन्द इति। तच्चरतीति तत्? सम्पादयति, परिपालयतीत्यर्थः। केन पुनरसौ समानः? इत्याह--"समानस्तस्यैव" इत्यादि। तस्यैवेति वेदाख्यस्य ब्राह्णः। इतिकरणो हेतौ। यत एव मुपचारेण लब्धब्राह्व्यपदेशं व्रतं यश्चरति ब्राह्णश्च समानत्वादयः समानः स सब्राह्चारी। तेन सबह्चारीत्यस्यायमर्थो भवति--समाने ब्राह्णि व्रतचारीति। यदि ह्रसमाने ब्राह्णि व्रतं चरेत्? तदा समानत्वं न स्यात्()। तथापि ब्राह्आख्यं व्रतं न चरेदेवमपि ब्राह्चारित्वं न स्यात्()। तस्माद्यः समाने ब्राह्णि ब्राह्चारी, सोऽवश्यं समाने ब्राह्णि व्रतचारीति भवति। सब्राह्चारीत्ययमस्यर्थः सम्पदयते--समाने ब्राह्णि व्रतचारीति। अथ वा--तस्यैवेत्युपचारेण लब्धब्राह्व्यपदेशस्य व्रतस्यात्र पक्षे परमर्शः। समाने

ब्राह्मणि इत्यत्र ब्राह्मशब्दो वेदे वत्र्तते, प्रतिवेदं हि भिद्यते, तदध्ययनार्थं यद्व्रतं तत्र यः समाने वेदेऽध्येतव्ये व्रतं चरति स एव सब्राह्मचारीत्युच्यते॥

बाल-मनोरमा

ज्योतिर्जनपदचरणे ब्राह्मचारिणि ९९८, ६।३।८५

ज्योतिर्जनपद। अच्छन्दोऽर्थं वचनमिदम्। सज्योतिरिरिति। समानं ज्योतिर्यस्येति विग्रहः। एवं सजनपद इत्यादीति। सरात्रिः, सनाभिः, सनामा, सगोत्रः, सरूपः, सस्थानः, सवर्णः सवयाः, सवचनः, सबन्धुः।

बाल-मनोरमा

चरणे ब्राह्मचारिणि ९९९, ६।३।८५

चरणे ब्राह्मचारिणि। समानस्येति स इति चानुवर्तते। "उत्तरपदे" इत्यधिकृतम्। तदाह--ब्राह्मचारिण्युत्तरपदे समानस्य सः स्यादिति। "चरणे" इति सप्तमी समानस्येत्यत्राऽन्वेति। चरणे विद्यमानस्येत्यर्थः। फलितमाह--चरणे समानत्वेन गम्यमाने इति। तत्र चरणपदं व्याचष्टे--चरणः शाखेति। वैदिकप्रसिद्धिरेवात्र मूलम्। ब्राह्मचारिपदं निर्वक्तुमाह--ब्राह्म वेद इति। "वेदस्तत्त्वं तपो ब्राह्मए"त्यमरः। तच्चरणार्थमिति। तस्य=वेदस्य, चरणम्ध्ययनं तच्चरणं, व्रतमपि ब्राह्मशब्देन विवक्षितमित्यर्थः। गौण्या वृत्त्ये"ति शेषः। तच्चरतीति। तद्व्रतं चरति=अनुतिष्ठतीत्यर्थे ब्राह्मचारिशब्द इत्यर्थः। "सुप्यजातौ" इति णिनिः। समानस्य स इति। "समानो ब्राह्मचारी"ति कर्मधारये सति प्रकृतसूत्रेण समानस्य सभावे सति "सब्राह्मचारी"ति रूपमित्यर्थः। समानत्वं च वेदद्वारा बोध्यम्। तथाच समानवेदाध्ययनार्थं व्रतचारीति फलितोऽर्थः। भाष्ये तु समाने ब्राह्मणि व्रतं चरतीत्यर्थे चरेर्णिनिव्र्रतशब्दस्य लोपश्चाऽत्र निपात्यत इत्युक्तम्।

तत्त्व-बोधिनी

चरणे ब्राह्मचारिणि ८४९, ६।३।८५

ब्राह्मचारीति। "व्रते"इति णिनिः। सब्राह्मचारीति। समानो ब्राह्मचारीत्यर्थः। ब्राह्मचारिणश्च समानत्वं--ब्राह्मणः समानत्वात्। ततश्च "समाने ब्राह्मणि व्रतचारी"ति फलितोऽर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तीर्थे ये ६।३।८७

तीर्थशब्द उत्तरपदे यत्प्रत्यये परतः समानस्य स इत्ययम् आदेशो भवति। सतीर्थ्यः। समानतीर्थे वासी ४।४।१०६ इति यत्प्रत्ययः।

न्यासः

तीर्थे ये।, ६।३।८६

"सतीर्थ्यः" इति। पूर्ववत्? कर्मधारयं कृत्वा तद्धितः कत्र्तव्यः। समाने तीर्थे वसतीति सतीर्थ्यः॥

बाल-मनोरमा

तीर्थे ये १०००, ६।३।८६

तीर्थे ये। यशब्दादकारान्तात्सप्तम्येकवचनम्, अकारो न विवक्षितः, प्रत्यय इति विशेष्यमद्याहार्यम्। "यस्मिन् विधि"रिति तदादिविधिः। तदाह--यादौ प्रत्यये इति। नाऽत्रयप्रत्ययान्ते तीर्थशब्दे परे इति व्याख्यातुं शक्यते, "समानतीत्थे वासी"ति समानतीर्थशब्दात्कृतसमासादेव वासीति तद्धितार्थे यप्रत्ययविधानात्। स च यप्रत्ययोऽन्तरङ्गे सभावे कृते एव भवति। "समर्थानां प्रथमाद्वे"ति सूत्रेण परिनिष्ठितादेव तद्धितोत्पत्तेर्वक्ष्यमाणत्वात्कृतेऽपि सभावे एकदेशविकृतन्यायेन भूतपूर्वगत्या वा समानतीर्थशब्दसत्त्वात्। अतो युप्रत्ययपरकत्वं समानशब्दस्य कथमित्यत आह--विवक्षिते इति। सतीथ्र्य इति। समाने तीर्थे वासीत्यर्थः। अत्र सामीप्ये सप्तमी। समानशब्दस्त्वेकपर्यायः। तीर्थशब्दो गुरौ, तदाह--एकगुरुक इति। तद्धितार्थे समासप्रवृत्तयो तद्धितं दर्शयति--समानेति। "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः।

तत्त्व-बोधिनी

तीर्थे ये ८५०, ६।३।८६

तीर्थे ये। अकारो न विवक्षितः। "प्रत्यये"इति विशेष्यं तु व्याख्यानाल्लभ्यते। तेन "यस्मिन्विधि"रिति तदादिविधिरित्याह---यादौ प्रत्यय इति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा उदरे ६।३।८८

उदरशब्दे उत्तरपदे यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययम् आदेशो भवति। सोदर्यः, समानोदर्यः। समानोदरे शयित ओ च उदात्तः ४।४।१०७ इति यत्।

न्यासः

विभाषोदरे। , ६।३।८७

बाल-मनोरमा

विभाषोदरे १००१, ६।३।८७

विभाषोदरे। उदरशब्दे परे समानस्य सभावो वा स्यादित्यर्थः। इत्येवेति। अनुवर्तत एवेत्यर्थः।

तत्त्व-बोधिनी

विभाषोदरे ८५१, ६।३।८७

विवक्षित इति। उत्तरपदमात्रनिमित्तः समासोऽन्तरङ्गः, समासप्रकृतिकसुबन्तात्तु यत्प्रत्ययः। अतस्तस्य परत्वं न संभवतीत्याशयेनेदमुक्तम्। सोदर्य इति। "समानोदरे शयितः"इत्यर्थे प्रत्ययात्प्राक्समानस्य सभावे कृते "सोदराद्यः"इति यः। सभावाऽभावपक्षे तु "समानोदरे शयित ओ चोदात्तः इथि यति "समानोदर्यः"।

---

सूत्रम्

काशिका-वृत्तिः

दृग्दृशवतुषु ६।३।८९

दृक् दृश वतु इत्येतेषु परतः समानस्य स इत्ययम् आदेशो भवति। सदृक्। सदृशः। त्यदादिषु दृशो ऽनालोचने कञ्च ३।२।६० इत्यत्र समानान्ययोश्चेति वक्तव्यम् इति कञ्क्विनौ प्रत्ययौ क्रियेते। दृक्षे चेति वक्तव्यम्। सदृक्षः। दृशेः क्षप्रत्ययो ऽपि तत्र एव वक्तव्यः। वतुग्रहणम् उत्तरार्थम्।

न्यासः

दृग्दृशवतुषु। , ६।३।८८

समानमात्मानं पश्यतीति सदृक्(), उपपदसमासः, "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्()। कथं पुनरिह कञ्क्विनौ, यावता त्यदादिषूपपदेषु तौ विहितौ, न च समानशब्दस्त्यदादिषु पठ()ते? इत्यत आह--"त्यदादिषु" इत्यादि। "वृक्षे चेति वक्तव्यम्()" इति। दृक्षशब्दे चोत्तरपदे समानस्य सभावो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()---पूर्वकाद्योगविभागाद्? दृक्षिऽपि भविष्यतीति। अत एव तत्र ६।३।८३ वृत्ति कृतोक्तम्()--एवमादयः सिद्धा भवन्तीति। केन पुनरतर दृशेः क्सप्रत्ययो विहितो येन दृक्षशब्द उत्तरपदं भवति? इत्यत आह--"दृशेः क्सप्रत्ययोऽपि" इत्यादि। "तत्रैव" इति। "त्यदादिषु" ३।२।६० इत्यादौ सूत्रे। अथ वतुग्रहणं किमर्थम्(), यावता समानशब्दादुत्तरो वतुप्? न सम्भवत्येव, स हि "यत्तदेतेभ्यः परिमाणे वतुप्()" (५।२।३९) इति यदादिभ्य एव विहतः?
इत्याह--"वतुब्ग्रहणमुत्तरार्थम्()" इति॥

बाल-मनोरमा

दृग्दृशवतुषु १००२, ६।३।८८

दृग्दृषवतुषु। "समानस्य स" इति शेषः। सदृक् सदृश इति। समानो दृश्यते इत्यर्थे "समानाऽन्ययोश्चे"ति दृशेः क्विन्, कञ् च।

दृक्षेचेति। "समानस्य सत्व"मिति शेषः। सदृक्ष इति। क्सोऽपि इति दृशेः क्सः। वतुरुत्तरार्थ इति। यत्तदेतेभ्यः परिमाणे वतुपः समानशब्दादसंभवादिति भावः।

तत्त्व-बोधिनी

दृग्दृशवतुषु ८५२, ६।३।८८

सदृक्सदृश इति। "समानान्ययोश्चेति वक्तव्य"मिति दृशेः क्विन्कञौ। दीर्घ इति। अदस आत्वे कृते सवर्णदीर्घ इत्यर्थः। एतच्च पूर्वोत्तरोदाहरणाऽन्वयि।

---

सूत्रम्

काशिका-वृत्तिः

इदं किमोरीश्की ६।३।९०

इदं किम् इत्येतयोरीश् की इत्येतौ यथासङ्ख्यम् आदेशौ भवतो दृग्दृशवतुषु। ईदृक्। ईदृशः। इयान्। कीदृक्। कीदृशः। कियान्। किमिदंभ्यां वो घः ५।२।४० इति वतुप्। दृक्षे चेति वक्तव्यम्। ईदृक्षः। कीदृक्षः।

लघु-सिद्धान्त-कौमुदी

इदंकिमोरीश्की ११७४, ६।३।८९

दृग्दृशवतुषु इदम ईश् किमः किः। कियान्। इयान्॥

न्यासः

इदंकिमोरीश्की।, ६।३।८९

शकारः सर्वादेशार्थः। इदमिव पश्यतीति "ईदृक्? इदृशः"। पूर्ववत्? कञ्किवनौ। किमिव यश्यतीति "कीदृक्? कीदृशः"। व्युत्पत्तिमात्रार्थो विग्रहः कृतः। नात्रावयवार्थो विग्रहवाक्योपदर्शितो विद्यते। तथा हीदृग्? ईदृश इत्यनेन तुल्य इत्येषोऽर्थः समुदायादेव प्रतीयते। कीदृक्(), कीदृश इत्यत्रापि केन तुल्य इति। किं परिमाणमस्येति "कयान"। इदं परिमाणमस्येति "इयान्()"। "किमिदंभ्यां वो घः" ५।२।४० इति वतुपो घत्वम्(), तस्येयादेशे कृते "यस्येति च" ६।४।१४८ इतीकारलोपः। ननु च वतुपो वकारस्येयादेशोऽनेन विधीयते, न तु वतुप्? किमिदंभ्यां विधीयते? एवं मन्यते--
वतुबस्मादादेशवचनाद्विज्ञायते, न ह्यन्यद्वतुपो लक्षणमस्ति। न चासतो वतुपो घादेशः शक्यो विज्ञातुमिति॥

बाल-मनोरमा

इदङ्किमोरीश्?की १००३, ६।३।८९

इदंकिमोरीश्की। "ईश्" "की"ति द्वे पदे। ईदृक् ईदृश इति। "इदमिव दृश्यते" इत्यर्थे त्यदादिषु दृशेः क्विन्कञौ। ईशः शित्त्वं सर्वादेशत्वाय। वक्ष्यत इति। तद्धितप्रकरणे इयानित्युदाहरणं वक्ष्यत इत्यर्थः।

दृक्षे चेति। इदंकिमोरीश्की वक्तव्यौ" इति शेषः।आ सर्वनाम्न इति। "आ" इति लुप्तप्रथमाकम्। तादृक् तादृश इति। तदिव दृश्यत इत्यर्थे "त्यदादिषु दृशः" इति क्विन्कञौ। तदो दकारस्य आत्वे सवर्णदीर्घः। तावानिति। तत्परिमाणमस्येति विग्रहे यत्तदेतेभ्य" इतिं वतुप्। तादृक्ष इति। तदिव दृश्यते इति विग्रहः। अमूदृगित्यत्र प्रक्रियां दर्शयति--दीर्घ इति। अदस आत्वे कृते सवर्णदीर्घः। तत ऊत्वमत्वे इत्यर्थः। "अः से"रिति व्याख्यानेऽपि अकारेम आकारस्यापि ग्रहणादूत्वमत्वे।

---

सूत्रम्

काशिका-वृत्तिः

आ सर्वनाम्नः ६।३।९१

सर्वनाम्नः आकारादेशो भवति दृग्दृशवतुषु। तादृक्। तादृशः। तावान्। यादृक्। यादृशः। यावान्। दृक्षे चेति वक्तव्यम्। तादृक्षः। यादृक्षः।

लघु-सिद्धान्त-कौमुदी

आ सर्वनाम्नः ३५०, ६।३।९०

सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु। तादृक्, तादृग्। तादृशौ। तादृशः। तादृग्भ्याम्॥ व्रश्चेति षः। जश्त्वचर्त्वे। विट्, विड्। विशौ। विशः। विड्भ्याम्॥ ,

न्यासः

आ सर्वनाम्नः।, ६।३।९०

"दृक्षे चेति वक्तव्यम्()" इति। दृक्षशब्दे परतः सर्वनाम्न आत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--उत्तरसूत्रादिह सिंहावलोकितन्यायेन चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः। तेन दृक्षशब्दे चोत्तरपदे भविष्यतीति। अथ किमर्थो दीर्घो विधीयते, न, ह्रस्व एव विधीयताम्(), ह्रस्वेऽप्यादेशे सवर्णदीर्घत्वेन सिध्यति? न; यस्मात्? "अतो गुणे" ६।१।९४ पररूपत्वं प्राप्नोति। न च शक्यते वक्तुम्()--अकारोच्चारणसामर्थान्न भविष्यततिः; अकारविधेर्दकारनिवत्र्तनार्थत्वात् लोपविधौ हि गौरवं स्यात्()। किञ्च--त्वादृक्(), त्वादृश इत्यत्र दीर्घश्रवणं न स्यात्()।

तस्माद्दीर्घ एव विधेयः॥

बाल-मनोरमा

आ सर्वनाम्नः , ६।३।९०

आ सर्वनाम्नः। "आ" इत्यविभक्तिकनिर्देशः। "दृग्दृशवतुषु" इति सूत्रमनुवर्तत। तदाह--सर्वनाम्न इति। अन्तादेश इति। अलोऽन्त्यपरिभाषालभ्यमिदम्। दकारस्य आत्वे सवर्णदीर्घः। तादृश् इति रूपम्। ततः सुबुत्पत्तिः। कुत्वस्येति। तादृश् स् इति स्थिते हल्ङ्यादिलोपे, "क्विन्प्रत्ययस्य कु"किति कुत्वस्याऽसिद्धत्वात्। "व्रश्चे"ति ष इत्यर्थः। तस्येति। "व्रश्चे"ति संपन्नस्य षकारस्येत्यर्थः। तस्य कुत्वेनेति। डकारस्य "क्विन्प्रत्ययस्य कु"रिति कुत्वेन गकार इत्यर्थः। तस्य चर्त्वेनेति। गकारस्य "वावसाने" इति चत्र्वविकल्प इत्यर्थः। तादृगिति। स इव दृश्यत इति न विग्रहः, "कर्तरि कृत्िति कर्तर्येव क्विन्विधानात्। किंतु कर्मकर्तरि क्विन्। स इवायं पश्यति। ज्ञानविषयो भतीत्यर्थः। "दृशेरत्र ज्ञानविषयत्वापत्तिमात्रवृत्तित्वादज्ञानार्थता" इति "त्यदादिषु दृशेः" इति सूत्रे भाष्ये स्पष्टम्। रूढशब्द एवायमित्यन्ये। अथात्र कैयटादिमतं दूषयति--षत्वापवादत्वादिति। यद्यपि दधृगञ्चुयुजिक्रुञ्चुषु अप्राप्ते।ऽपि व्रश्चादिषत्वे "क्वन्प्रत्ययस्य कुः" इति कुत्वमारभ्यते। तथापि क्विपैव सिद्धे "स्पृशोऽनुदके क्विन्", "त्यदादिषु दृशोऽनालोचने कञ् चे"ति क्विन्विधानं "क्विन्प्रत्ययस्य कु"रिति कुत्वार्थं क्रियमाणं घृतस्पृक्, तादृगित्यादिषु अप्रवृत्तौ निरवकाशमेव स्यात्। अतस्तद्विषये कुत्वस्य फलतः षत्वापवादत्वमिति भावः। क्विन्विधानं "क्विन्प्रत्ययस्य कुः" इति कुत्वार्थमेवेति "स्पृशोऽनुदके" इति सूत्रे भाष्ये स्पष्टम्। अनवकाशत्वादेव च षकारविषये कुत्वस्य नाऽसिद्धत्वमपि। अन्यथा "स्पृशोऽनुदके क्वि"नित्यादिना स्पृशादेः क्विन्विधिवैयथ्र्यात्। उक्तं च "पूर्वत्रासिद्ध"मित्यत्र भाष्ये--"अपवादो वचनप्रमाण्या"दिति। खकार इतीति। अघोषमहाप्राणसाम्यादिति भावः। ख एवेति। #आतदृक्, तादृगिति रूपद्वयमिष्टम्। शकारस्य कुत्वेन खकारे सति तस्य "वावसाने" इति चत्र्वपक्षे तादृगिति रूपसिद्धावपि चत्र्वाऽभावपक्षे तादृखित्येव स्यात्, ताद-गिता गकारो न श्रूयेतेत्यर्थः। नन्वस्तु शकारस्य खकारस्तथापि तस्य चत्र्वाभावपक्षे जश्त्वेन गकारो निर्बाध इत्यात आह--जश्त्वं प्रतीति। जश्त्वेन गकारे कर्तव्ये शकारस्थानकस्य कुत्वसम्पन्नखकारस्याऽसिद्धतया झलोऽभावेन जश्त्वाऽसंभवादित्यर्थः। अथ कैयटादिमते उक्तदोषं निरस्यति-दिगादिभ्यो यदितीति। "विश प्रवेशने" क्विप्, विशिति रूपम्। तस्य विशेषमाह--व्रश्चेति षत्वमिति। विश् सिति स्थिते हङ्यादिलोपे "व्रश्चे"ति शकारस्य षकार इत्यर्थः। जश्त्वचर्त्वे इति। षस्य जश्त्वेन डः। "वाऽवसाने" इति तस्य चर्त्वेन पक्षे ट इत्यर्थः। विड्भ्याम्। विट्त्सु विट्सु। "णश अदर्शने" क्विप्। नश् इति रूपम्। ततः सुबुत्पत्तिः। सोर्हल्ङ्यादिलोपे व्रश्चादिना नित्यं षत्वे प्राप्ते-।

तत्त्व-बोधिनी

आ सर्वनाम्नः ३८२, ६।३।९०

आकारोऽन्तादेश इति। अकारादेशे सति त्वतो गुणे इथि स्यात्। न चाऽकारोच्चारणसामथ्र्याद्दीर्घः स्यादेवेति वाच्यमि, अकारस्याऽविधौ हल एव श्रवणप्रसङ्गांत्। विडिति। "विश प्रवेशने"इत्यस्मात् क्विप्। नशेर्वा। केचिदिह "झली"त्यनुवत्र्य "झलि पदान्ते चे"ति व्याचक्षते, तन्न, "नष्ट"मित्यादावतिप्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

विष्वग्देवयोश् च टेरद्र्यञ्चतौ वप्रत्यये ६।३।९२

विष्वक् देव इत्येतयोः सर्वनाम्नश्च टेः अद्रि इत्ययम् आदेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे। दिष्वगञ्चति इति

विष्वद्र्यङ्। देवद्र्यङ्। सर्वनाम्नः तद्र्यङ्। यद्र्यङ्द्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम्। तत्र यणादेशे कृते उदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४ इत्येष स्वरो भवति। विष्वग्देवयोः इति किम्? अश्वाची। अञ्चतौ इति किम्? विष्वग्युक्। वप्रत्यये इति किम्? विष्वगञ्चनम्। वप्रत्ययग्रहणम् अन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम्। तेन अयस्कृतम्, अयस्कारः इत्यत्र अतः कृकमिकंसकुम्भपात्र इति सत्वं भवति। छन्दसि स्त्रियां बहुलम् इति वक्तव्यम्। विश्वाई च घृताची च इत्यत्र न भवति। कद्रीची इत्यत्र तु भवत्येव।

न्यासः

विष्पग्देवयोश्च टेरद्र�ञ्चतौ वप्रत्यये। , ६।३।९१

"विष्वद्र()ङ्()" इति। विष्वगञ्चतीति ऋत्विगादिसूत्रेण ३।२।५९ क्विन्(), "उगिदचाम्()" ७।१।७० इति नुम्(), हल्ङ्यादिसंयोगान्तलोपौ, "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्()। "अद्रिसध्र्योरन्तोदात्तनिपातम्()" इत्यादि। विष्वद्र()ङित्यत्रानेनाद्र()आदेशे कृते सध्र्यङित्यत्र सहस्य सध्र्यादे देशे च "गितकारकोपपदात्? कृत्()" ६।२।१३८ इति प्रकृतिस्वरेणोत्तरपदसर्यान्तोदात्तत्वं प्राप्नोति, स्वरितत्वं चेष्यते।
तस्मादुत्तरपदान्तोदात्ततवविधानार्थमिहाद्रिसध्र्यारेन्तोदात्तत्वं निपात्यते। तेन शेषं भवत्यनुदात्तम्()। तत्र यणादेशे कृते सति "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" ८।२।४ इति स्वरितत्वमुत्तरपदस्य सिद्धम्()। अथ वप्रतययगरहणं किमर्थम्(), यावता "अञ्चतौ" इत्युक्ते केवल एवाञ्चतावुत्तरपदे कार्येण भवितव्यम्()। वप्रत्ययान्त एवाञ्चतिः केवलमुत्तरपदं भवति। तत्रैतद्वक्तव्यमञ्चतावित्याह--"वप्रत्ययग्रहणम्()" इत्यादि। अन्यत्र धातुग्रहणे, धात्वादेः प्रकृतिपरतययसमुदायस्य प्रतिपत्तिः=प्रतीतिर्यथा स्यादित्येवमर्थं वप्रत्ययग्रहणम्()। अनेन ह्ययमर्थो विज्ञाप्यते--इतोऽन्यत्र धातुगरहणे सति न केवलं धातुरेव गृह्यते, अपि तु धात्वादिः शब्द इति। तेनायस्कृतम्(), अयस्कार इत्यत्र "अतः कृकमि" ८।३।४६ इत्यादिना विसरजनीयस्य सकारः सिद्धो भवति। यदि पुनरयमर्थो न विज्ञाप्येत, तदा करोतेरेव केवलस्य ग्रहणं स्यात्(); ततो यत्र करोतेः केवलस्य प्रत्ययरहितस्य प्रयोगस्तत्रैव स्यात्()--अयस्कृदिति। अत्र तुगागमः करोतेरेव भकतत्वात्? तद्ग्रहणेनैव गृह्यत इति करोतेरेव केवलस्य प्रयोगः। "अ()आआची" इति। अ()आमञ्चति इति क्विन्(), "अञ्चतेश्चोपसंख्यानम्()" (वा।३३६) इति ङीप्(), "अचः" ६।४।१३८ इत्यकारलोपः "चौ" ६।३।१३७ इति दीर्घः। "विष्वग्युक्()" इति। विष्वगयुनक्तीति "सत्सूद्विष" ३।२।६१ इत्यादिना क्विप्()। "विष्वगञ्चनम्()" इति। "ल्युट्? च" ३।३।११५ इति ल्युट्()। "छन्दसि" इत्यादि। छन्दसि विषये स्त्रियामभिधेयायां बहुलमद्र()आदेशे भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"विभाषोदरे" ६।३।८७ इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। इह वा चकारोऽनुक्तसमुच्चयार्थः, तेन च्छन्दसि विषये विष्वगावेरन्यत्रापि क्वचिदद्र()आदेशो भवतीति, क्वचिन्न भवत्येव। ननु च सर्वनाम्नोऽनुकर्षणार्थश्चकारः? नैतदस्ति; स्वरितत्वादेव हि सर्वनाम्नोऽनुवृत्तिर्भविष्यति। "वि()आआची" इत्यादि। वि()आघृतकिंशब्देषूपपदेष्वञ्चतेः पूर्ववत्? क्विन्(), ङीबादिकार्यञ्च॥

---

सूत्रम्

काशिका-वृत्तिः

समः समि ६।३।९३

सम् इत्येतस्य समि इत्ययम् आदेशो भवति अञ्चतौ वप्रत्ययन्ते उत्तरपदे। सम्यक्, सम्यञ्चौ, सम्यञ्चः।

लघु-सिद्धान्त-कौमुदी

समः समि ३४०, ६।३।९२

वप्रत्ययान्तेऽञ्चतौ। सम्यङ्। सम्यञ्चौ। समीचः। सम्यग्भ्याम्॥ ,

न्यासः

समः समि। , ६।३।९२

बाल-मनोरमा

समः समि , ६।३।९२

समः समि। "समी"ति लुप्तप्रथमाकम्। "अञ्चतावप्रत्यये" इत्यनुवर्तते। तदभिप्रेत्य शेषपूरणेन सूत्रे व्याचष्टे--अप्रत्ययेति। समीच इति। "अचः" इति लोपे "चौ" इति दीर्घः।

तत्त्व-बोधिनी

विष्वग्देवयोश्च टेरद्यञ्चतावप्रत्यये ३७०, ६।३।९२

विष्वग्देवायोश्च। चकारेण "आ सर्वनाम्नः"इत्यतः "सर्वनाम्ना"लभ्यते, इत्याह--अनयोः सर्वनाम्नश्चेति। अप्रत्ययान्तेऽञ्चताविति। अविद्यमानः प्रत्ययोऽप्रत्ययः---क्विन्क्विबादिः। "अञ्चतौ वप्रत्यये"इति पाठे तु "वप्रत्ययान्तेऽञ्चतौ"इति व्याख्येयम्। विष्वग्देवयोस्तूदाहरणं--विष्वगञ्चतीति विष्वद्यङ्। देवानञ्चतीति देवद्यङ्ङिति बोध्यम्।

तत्त्व-बोधिनी

समः समि ३७३, ६।३।९२

समः समि। "समी"त्यविभक्तितो निर्देशः। एवं "तिरसस्तिरी"त्यपि। सङ्गतमञ्चतीति--सम्यङ्। समीच इति। अल्लोपे "चौ" इथि दीर्घः। सह अञ्चतीति।

---

सूत्रम्

काशिका-वृत्तिः

तिरसस् तिर्यलोपे ६।३।९४

तिरसित्येतस्य तिरि इत्ययम् आदेशो भवति अञ्चाउ वप्रत्ययान्ते उत्तरपदे ऽलोपे, यदा अस्य लोपो न भवति। तिर्यक्, तिर्यञ्चौ, तिर्यञ्चः। अलोपे इति किम्? तिरश्चा। तिरश्चे। अचः इत्यकारलोपः।

लघु-सिद्धान्त-कौमुदी

तिरसस्तिर्यलोपे ३४२, ६।३।९३

अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः। तिर्यङ्। तिर्यञ्चौ। तिरश्चः। तिर्यग्भ्याम्॥ ,

न्यासः

तिरसस्तिर्यलोपे। , ६।३।९३

बाल-मनोरमा

तिरसस्तिर्यलोपे , ६।३।९३

तिरसस्तिर्यलोपे। "तिरि" इति लुप्तप्रथमाकम्। ""अञ्चतावप्रत्यये" इत्यनुवर्तते। न विद्यते "अचः" इत्यल्लोपो यस्य स "अलोपः", तस्मिन्निति विग्रहः। तदाह--अलुप्तेत्यादिना। तिर्यङिति। तिरः-अञ्चतीति विग्रहे क्विन्नादि। तिरसस्तिर्यादेशे यण्। तिरश्च इति। शसादावचि "अचः" इत्यल्लोपसत्त्वान्नतिर्यादेशः। सस्य श्चुत्वेन श इति भावः।

तत्त्व-बोधिनी

तिरसस्तिर्यलोपे ३७५, ६।३।९३

तिरसः। न विद्यते लोपो यस्य सः "अलोप"इति बहुव्रीहिः। अञ्चतावित्यनुवत्र्तमानमन्यपदार्थः। अवयवद्वारकश्च लोपः समुदाये उपचर्यत इत्यभिप्रेत्याह---अलुप्ताकार इत्यादि। "अकारलोपे सती"ति नोक्तं, व्याख्यानात्। अप्रत्ययान्ते किम्(), "तिरोऽञ्चन"मित्यादौ मा भूत्। तिरश्च इथि। लुप्ताऽकारत्वात्तिर्यादेशाऽभावे सस्य श्रुत्वेन शः। न चाऽल्लोपस्य स्थानिवत्त्वात्। श्चुत्वं न स्यादिति वाच्यम्, पूर्वत्रासिद्धे तदभावात्पदान्तविधित्वाच्च।

---

सूत्रम्

काशिका-वृत्तिः

सहस्य सध्रिः ६।३।९५

सह इत्येतस्य सघ्रिः इत्ययम् आदेशो भवति अञ्चतौ वप्रत्यान्ते उत्तरपदे। सध्र्यङ् सध्र्यञ्चौ, सध्र्यञ्चः। सध्रीचः। सध्रीचा।

लघु-सिद्धान्त-कौमुदी

सहस्य सध्रिः ३४१, ६।३।९४

तथा। सध्र्यङ्॥ ,

न्यासः

सहस्य सध्रिः। , ६।३।९४

"सध्रीचा" इति। पूर्ववदकारलोपः, दीर्घत्वं च॥

बाल-मनोरमा

सहस्य सध्रिः , ६।३।९४

सहस्य सध्रिः।सहस्य सध्रिः स्यादप्रत्ययान्तेऽञ्चतौ परे इति व्याख्यानं सुगमत्वादुपेक्षितम्। सध्र्यङिति। सह अञ्चतीति विग्रहे क्विन्नादि पूर्ववत्। सहस्य सध्र्यादेशे यण्।

तत्त्व-बोधिनी

सहस्य सध्रिः ३७४, ६।३।९४

सध्र्यङ्। भविषये अल्लोपदीर्घौ। सध्रीच इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

सध मादस्थयोश् छन्दसि ६।३।९६

छन्दसि विषये माद स्थ इत्येतयोरुत्तरपदयोः सहस्य सध इत्ययम् आदेशो भवति। सधमादो द्युम्निनीरापः। सधस्था।
न्यासः
सध मादस्थयोश्छन्दसि। , ६।३।९५

"सधमादः" इति। सह मादेन वत्र्तत इति "तेन सह" २।२।२८ इत्यादिना बहुव्रीहिः, मादशब्दो घञन्तः। ननु च "मदोऽनुपसर्गे" (३।३।६७) इत्यपा भवितव्यम्()? नैष दोषः; तत्र हि "स्वनहसोर्वा" ३।३।६२ इत्यतो वाग्रहणमनुवर्तते, सां च व्यवस्थितविभाषा। तेन छन्दसि घञेव भविष्यति। अथ एव निर्देशाद्वा। "सधस्थः" ["सधस्थाः"--काशिका मुद्रितः पाठः, "सधस्था"--(काशिका) सं।पं। मुद्रितपाठः] इति। सह तिष्ठीति "सुपि स्थः" ३।२।४ इति कः॥
बाल-मनोरमा
विष्वग्देवयोश्च टेरद्र�ञ्चतावप्रत्यये , ६।३।९५

विष्वग्देवयोश्च। "अद्रि" इति लुप्तप्रथमाकम्। अनयोरिति। विष्वग्देवशब्दयोरित्यर्थः। सर्वनाम्न इति। चकारेण "आ सर्वनाम्नः" इत्यतस्तदनुकर्षादिति भावः। अप्रत्ययान्ते इति। सूत्रे अप्रत्यय इत्यत्र नित्यम् अश्रूयमाणत्वादविद्यमानः प्रत्ययः क्विबादिर्यस्मादिति बहुव्रीह्याश्रयणादिति भावः। प्रकृते अदसष्टेरद्र()आदेशमुदाहृत्य दर्शयति--अदद्रि अञ्चिति स्थिते इति। अद्र()आदेशोऽयमनिदितामिति नलोपे कृते प्रवर्तते, नलोपस्य परत्वादिति बोध्यम्। यणिति। "रेफादिकारस्ये"ति शेषः। अदद्र()चित्यतः सुबुत्पत्तिः। अदसो। अदसः, असेः, दात्, उ, दः, म इति च्छेदः। "अदस" इत्यवयवषष्ठ()न्तम्। "असे"रिति तद्विशेषणम्। न विद्यते सिर्यस्य स असिः तस्येति विग्रहः। इकार उच्चारणार्थः। दादिति दिग्योगे पञ्चमी। परस्येत्यध्याहार्यम्।

---

सूत्रम्
काशिका-वृत्तिः
द्व्यन्तरुपसर्गेभ्यो ऽप ईत् ६।३।९७

द्वि अन्तरित्येताभ्यां उपसर्गाच् च उत्तरस्य अपित्येतस्य ईकारादेशो भवति। द्वीपम्। अन्तरीपम्। उपसर्गात् नीपम्। वीपम्। समीपम्। समाप ईत्वे प्रतिशेधो वक्तव्यः। समापं नाम देवयजनम्। अपर आह ईत्वमनवर्णादिति वक्तव्यम्। इह मा भूत्, प्रापम्, परापम्। अप्शब्दं प्रति क्रिययोगाभावातुपसर्गग्रहणं प्राद्युपलक्षणार्थम्।
न्यासः
द्व्यन्तरुपसर्गेभ्योऽप ईत्?। , ६।३।९६

"द्वीपम्()" इति। द्विर्गता आपोऽस्मिन्नित्यस्वपदविग्रहो बहुव्रीहिः। यथा--शोभनं मुखमस्याः सुमुखीति। "ऋक्पूरब्धूः" ५।४।७४ इत्यादिनाऽकारः समासान्तः। अन्तर्गता आपोऽस्मिन्नित्यन्तरीपम्()। सङ्गता विगता निर्गता आपोऽस्मिन्निति सपीपम्(), वीपम्(), नीपम्()। "वक्तव्यम्()" इति। व्याख्येयमित्यर्थः। उत्तरत्रापि वक्तवयशब्दस्यायमेवार्थः। व्याख्यानं त्विहापि पूर्ववत्? "विभाषोदरे" इत्यतो विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यते। अन्यदपि चत्र व्याख्यानं करिष्यामः। "अप्शब्दं प्रति" इत्यादि। इह यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति अप्शब्दसय तु क्रियात्वं न सम्भवति; द्रव्यवचित्वात्()। तस्मात्? तं प्रति नास्ति कस्यचिदुपसर्गसंज्ञेति। क्रियते चेदमुपसर्गग्रहणम्()। तत्सामथ्र्याद्यत्र प्रादेरन्यत्रोपसरगतवं दृष्टं तदुपलक्षणार्थमुपसर्गग्रहणं विज्ञायते। यद्येवम्(), अन्तशब्दस्य ग्रहणं न कत्र्तव्यम्(), यथैव हि प्रादय उपसर्गग्रहणेन लक्ष्यन्ते तथान्तःशब्दोऽपि, तस्याङ्कविधिणत्वेपूपसर्गत्वं दृष्टमेव? एवं तह्रन्तग्र्रहणेन ज्ञाप्यते--

उपसर्गग्रहणोपलक्षितमीत्त्वमनित्यमिति। तेन समापम्(), परापम्(), प्रापमिति सिद्धं भवति॥

बाल-मनोरमा

द्व्यन्तरुपसर्गेभ्योऽप ईत् ९२८, ६।३।९६

द्व्यन्तरुप। कृतसमासान्तस्येति। अकारप्रत्ययान्तस्येत्यर्थः। एभ्य इति। द्वि अन्तर् उपसर्ग-एतेभ्य इत्यर्थः। अपस्येति। अकारप्रत्ययान्तस्याऽप्शब्दस्येत्यर्थः। ईत्स्यादिति। "आदेः परस्ये"ति परिभाषया आदेरकारस्येत्यर्थः। द्वयोर्गता इति। द्वयोः पार्()सयोर्गता आपो यस्मिन्निति विग्रहः। व्यधिकरणपदो बहुव्रीहिः। अकारप्रत्ययः,ईत्त्वं, सवर्णदीर्घश्च। अन्तरीपमिति। अन्तर्गता आपो यस्मिन्निति विग्रहः। प्तीपमिति। प्रतिकूला आपो यस्मिन्निति विग्रहः। उपसर्गात्परत्वादीत्त्वम्। समीपमिति। सङ्गता आपो यस्मिन्निति विग्रहः। उपसर्गात्परस्योदाहरणान्तरमिदम्। समापो देवयजनमिति। श्रुतिरेषा। अत्र उपसर्गात्परत्वाऽभावादीत्त्वं नेति भावः। देवा इज्यन्ते यस्मिन्निति देवयजनं यज्ञभूमिः। "समाप" इति पुंस्त्वं छान्दसम्। भाष्ये तु "समाप ईत्त्वं ने"त्युक्त्वा समापं नाम देवयजनमित्युदाह्मतम्। तत्र समापशब्दो देवयजनविशेषवाच्येव विवक्षितः, "समीपसमृद्धी"ति निर्देशात्, "समीप"मिति भाष्ये उदाहरणाच्च। स्वविति। शोभना आपो यस्येति विग्रहः। "न पूजना"दिति समासान्तनिषेधः। अकृतसमासान्तत्वादीत्त्वं न। स्वपी इति। प्रथम#आद्विवचनमिदम्। अवर्णान्ताद्वेति। अवर्णान्तादुपसर्गात्परस्याऽपस्य ईत्त्वं वा वक्तव्यमित्यर्थः। प्रेपं प्रापमिति। प्रगता आपो यस्येति विग्रहः। परेपं परापमिति। परागता आपो यस्येति विग्रहः।

तत्त्व-बोधिनी

व्द्यन्तरूपसर्गेभ्योऽप ईत् ८०४, ६।३।९६

कृतसमासान्तस्येति। "येन विधि"रिति सूत्रे "आपस्तिष्टन्ति स्वापस्तिष्ठन्ती"ति भाष्यादिति भावः। अन्तरीपमित्यादि। अन्तर्गताः, प्रतिकूलाः, सङ्गताश्चपो अस्मिन्निति विग्रहः। उपसर्गग्रहणं प्रादेरुपलक्षणार्थम्। समाप इति। अनुपसर्गत्वान्नेत्वमिति भावः। भाष्ये तु "समाप ईत्वप्रतिषेधो वक्तव्यः"इत्युक्तम्। स च देवयजनरूपविशेषार्थपरः "समीपसमृद्धी"ति निर्देशात्, "समीपे"मिति भाष्योदाहरणाच्चेति ज्ञेयम्। देवयजनमिति। देवा इज्यन्ते अस्मिन्निति व्युत्पत्त्या यज्ञभूमिः। स्वबिति। "न पूजना"दिति समासान्ताऽभावः।

अवर्णान्ताद्वा। अवर्णान्ताद्वेति। "व्द्यन्त"रिति सूत्रे "ईत्वमनवर्णा"दिति वक्तव्यम्। इह माभूत् "प्रापं पराप"मिति भाष्योक्तेः, "गतिश्चे"ति सूत्रे "प्रेपं परेप"मिति भाष्योक्तेश्चेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ऊदनोर् देशे ६।३।९८

अनोरुत्तरस्य अपः ऊकारादेशो भवति देशाभिधाने। अनूपो देशः। देशे इति किम्? अन्वीपम्। दीर्घोच्चारणम् अवग्रहार्थम्, अनु ऊपः अनूपः इति।

न्यासः

ऊदनोर्देशे। , ६।३।९७

"अनूपः" इति। अनुगता आपोऽस्मिन्निति विग्रहः, पूर्ववत्? समासान्तः, सवर्णदीर्घः। अथ दीर्घोच्चारणं किमर्थम्(), यावता ह्मस्वोऽपि विहितेऽकः सवर्णे दीर्घत्वेनानूप इति सिध्यत्येव? अत आह--"दीर्घोच्चारणम्()" इत्यादि। असति

दीर्घोच्चारणे संहितायामेव दीर्घत्वं स्यात्(), नावग्रहे। तस्मादवग्रहेऽपि यथा स्यादित्येवमर्थं दीर्घोच्चारणम्()॥

बाल-मनोरमा

ऊदनोर्देशे ९२९, ६।३।९७

ऊदनोर्देशे। ईत्त्वस्याऽपवादः। ऊत्स्यादिति। "आदेः परस्ये"ति ज्ञेयम्। अनूपो देश इति। अनुकूला आपो यस्मिन्निति विग्रहः। अप्रत्ययः, ऊत्त्वं सवर्णदीर्घश्च। "अनूप" इत्यत्र ऊपोऽवग्रहणार्थं दीर्घोच्चारणमिति भाष्यम्। बह्वृचास्तु "अनूपो गोमान्"रित्यत्र नावगृह्णन्ति। तदेव "ऋक्पू:" इति सूत्रगतोऽप्शब्दः प्रपञ्चितः। अथ धूर्शब्दान्तस्योदाहरति--राजधुरेति। राज्ञो धूरिति विग्रहः। धूर्शब्दोऽत्र राज्ये लाक्षणिकः। अकारप्रत्ययः। "परवल्लिङ्ग"मिति स्त्रीत्वम्। टाप्। अक्षे त्विति। अक्षसंबन्धिनी या धूस्तदन्तादकारप्रत्ययो न। अक्षधूरिति। अक्षो नाम रथावयवदण्डविशेषः, यदग्रयोश्चक्रे आसज्येते तस्याक्षस्याग्रं धूः। अनेन "अक्षे समासार्थे धुरो नाऽकारप्रत्ययः" इति व्याख्यानेऽत्र निषेधो न स्यादिति सूचितम्। दृढधूरक्ष इति। दृढा धूर्यस्येति विग्रहः। एतेनाऽक्षे पूर्वपदे धुरो नाकारप्रत्यय इति व्याख्याने अत्र निषेधो न स्यादिति सूचितम्। तदेवं "ऋक्पू"रिति सूत्रं धूःशब्दः प्रपञ्चितः। अथ पथिन्शब्दस्योदाहरति--सखिपथाविति। सखा च पन्थाश्चेति द्वन्द्वः। अकारप्रत्ययः। "नस्तद्धिते" इति टिलोपः। "सखिपथ" इति पाठे तु सख्युः पन्था इति तत्पुरुषः। रम्यपथ इति। रम्यः पन्था यस्येति विग्रहः।

तत्त्व-बोधिनी

ऊदनोर्देशे ८०५, ६।३।९७

ऊदनोः। दीर्घोच्चारणं क्वचिच्छाखायामवग्रहार्थम्। बह्वृचास्तु "अनूपे गोमान् गोभिः"इत्यत्रा नूपशब्दं नावगृह्णन्ति। अनूप इति। अनुगता आपोऽस्मिन्नित्यनूपो देशः। "जलप्रायमनूपं स्य"दित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

अषष्ठ्यतृतीयास्थस्य अनयस्य दुगाशीराशाऽअस्थाऽअस्थितौत्सुकौऊतिकारकरागच्छेषु ६।३।९९

अषष्ठीस्थस्य अतृतीयास्थस्य च अन्यशब्दस्य दुगागमो भवति आशिसाशा आस्था आस्थित उत्सुक ऊति कारक राग छ इत्येतेषु परतः। अन्या आशीः अन्यदाशीः। अन्या आशा अन्यदाशा। अन्या आस्था अन्यदास्था। अन्य आस्थितः अन्यदास्थितः। अन्य उत्सुकः अन्यदुत्सुकः। अन्या ऊतिः अन्यदूतिः। अन्यः कारकः अन्यत्कारकः। अन्यः रागः अन्यद्रागः। अन्यस्मिन् भवः अन्यदीयः। गहादिष्वन्यशब्दो द्रष्टव्यः। अषष्ठ्यतृतीयास्थस्य इति किम्? अन्यस्य आशीः अन्याशीः। अन्येन आस्थितः अन्यास्थितः। दुगागमो ऽविशेषेण वक्तव्यः कारकच्छयोः। षष्ठीतृतीययोर् नेष्ट आशीरादिषु सप्तसु। अन्यस्य कारकम् अन्यत्कारकम्। अन्यस्य इदम् अन्यदीयम्। अस्य च द्विर्नञ्ग्रहणं लिङ्गम्।

न्यासः

अषष्ठ�तृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सकोतिकारकरागच्छेषु। , ६।३।९८

"अन्याशीरन्यदाशीः" इत्यादि। विग्रहविशेषेण सर्वत्र विशेषणसमासं दर्शयति "अन्येनास्थितोऽन्यदस्थितः" इति। "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति समासः। "दृगागमोऽविशेषेण" इत्यादि। कारकशब्दे छप्रत्यये परतोऽविशेषेण सामान्येन दुगागमः कत्र्तव्यः। अन्येष्वाशीरादिषु सप्तसूत्तरपदेषु षष्ठीतृतीयास्थयोर्नेष्टो नाभिमतः। किं पुनरस्यार्थस्य लिङ्गं यतोऽयमवसीयते? इत्यत आह--"अस्य च" इत्यादि। अषष्ठीतृतीयास्थस्येत्येवं सिद्धे द्विर्नञुपादानमस्य

प्रतिषेधस्यानित्यत्वे लिङ्गम्()। तेन क्वचित्? षष्ठीतृतीयास्थस्यापि समासे दुगागमो भवत्येव॥

बाल-मनोरमा

अषष्ठ�तृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु १०१०, ६।३।९८

अषठ()तृतीयास्थस्य। अषष्ठ()आमतृतीयायां च परतस्तिष्ठतीति अषष्ठ()तृतीयास्थः, तस्य। अषष्ठीतृतीयान्तस्येत्यर्थः। "अषष्ठीतृतीयास्थस्ये"त्येव सिद्धे नञ्द्वयोपादानं स्पष्टार्थम्। आशीरादिष्विति। आशीः, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ-इत्येतेषु इत्यर्थः। दुकि ककार इत्। उकार उच्चारणार्थः। कित्त्वादन्तावयवः। अन्यदाशीरित्यादयः कर्मधारयाः। नायं निषेध इति। "अषष्ठ()तृतीयास्थस्ये"ति निषेधः कारकच्छयोर्नास्तीत्यर्थः। भाष्योक्तमिदम्।

तत्त्व-बोधिनी

अषष्ट�तृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ८५७, ६।३।९८

अषष्ठ()। अन्यदाशीरित्यादयः कर्मधारयाः।

कारके छे च नायं निषेधः। नायं निषेध इति। एतच्च "अषष्ठी तृतीयास्थस्ये"त्येव सिद्धे निषेधाऽनित्यत्वज्ञापनार्थाद्द्विर्नञ उपादानाल्लभ्यत इत्याहुः।

त्रौ च। त्रौ चेति। अनजाद्यर्थमिदं वार्तिकं, "कत्त्र्यादिभ्यो ढकञि"ति निर्देशेनैव सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

अर्थे विभाषा ६।३।१००

अर्थशदे उत्तरपदे अन्यस्य विभाषा दुगागमो भवति। अन्यदर्थः, अन्यार्थः।

न्यासः

अर्थे विभाषा। , ६।३।९९

"अन्यार्थः" इति। अन्यस्मै इदमिति "चतुर्थी तदर्थार्थ" २।१।३५ इत्यादिना समासः॥

बाल-मनोरमा

अर्थे विभाषा १०११, ६।३।९९

अर्थे विभाषा। "अन्यस्य दु"गिति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

कोः कत् तत्पुरुषे ऽचि ६।३।१०१

कु इत्येतस्य क्त इत्ययम् आदेशो भवति तत्पुरुषे समासे अजादावुत्तरपदे। कदजः। कदश्वः। कदुष्ट्रः। कदन्नम्। तत्पुरुषे इति किम्? कूष्ट्रो राजा। अचि इति किम्? कुब्राह्मणः। कुपुरुषः। कद्भावे त्रावुपसङ्ख्यानम्। कुत्सितास्त्रयः कत्त्रयः।

न्यासः

कोः कत्तत्पुरुषेचि। , ६।३।१००

"कदजः" इति। कुत्सितोऽज इति "कुगतिप्रादयः" २।२।१८ इति समासः कूष्ट्रो राजेति बहुव्रीहिः। "कद्भावे" इत्यादि। अजादावत्तरपदे कद्भाव उच्यमानस्त्रिशब्द उत्तरपदे न प्राप्नोति। तस्मात् त्रिशब्दादुत्तरपदात्? पूर्वो यः कुशब्दः, तस्य कद्भावस्योपसंख्यानम्()=प्रतिपादनं कत्र्तव्यम्()। तत्रेदं प्रतिपादनम्()--उत्तरसूत्रे चकारः क्रियते, सचानुक्तसमुच्चयार्थः। तेन त्रिशपब्देऽप्युत्तरपदे परतः कद्भावो भविष्यतीति॥

बाल-मनोरमा

कोः कत्तत्पुरुषेऽचि १०१२, ६।३।१००

कोः कत्तत्पुरुषेऽचि। "क"दिति च्छेदः। शेषपूरणेन सूत्रं व्याचष्टे--अजादावुत्तरपदे इति। कद()आः कदन्नमिति। "कुगती"ति समासः। कूष्ट्रो राजेति। कुत्सित उष्ट्रो यस्येति बहुव्रीहित्वान्न कदादेशः।

त्रौ चेति। त्रिशब्दे परे कदादेशो वक्तव्य इत्यर्थः। उत्तरपदस्याऽजादित्वाऽभावाद्वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

रथवदयोश् च ६।३।१०२

रथ वद इत्येतयोश्च उत्तरपदयोः कोः कतित्ययम् आदेशो भवति। कद्रथः। कद्वदः।

न्यासः

रथवदयोश्च। , ६।३।१०१

अनजाद्यर्थोऽयं योगः। एवमुत्तरत्रापि॥

बाल-मनोरमा

रथवदयोश्च १०१३, ६।३।१०१

रथवदयोश्च। "कोः कत्तत्पुरुषे" इति शेषः। कद्रथः कद्वद इति। "कुगती"ति समासः। वदतीति वदः। कुत्सितो वदः कद्वदः।

---

सूत्रम्

काशिका-वृत्तिः

तृणे च जातौ ६।३।१०३

तृणशब्दे उत्तरपदे जातावभिधेयायां कोः कतित्यादेशो भवति। कत्तृणा नाम जातिः। जातौ इति किम्? कुत्सितानि तृणानि कुतृणानि।

न्यासः

तृणे च जातौ। , ६।३।१०२

बाल-मनोरमा

तृणे च जातौ १०१४, ६।३।१०२

तृणे च जातौ। तृणशब्दे कोः कत्स्याज्जातौ वाच्यायाम्। कत्तृणमिति। तृणजातिविशेषोऽयम्। "अस्त्री कुशं कुथो दर्भः पवित्रमथः कत्तृण"मित्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

का पथ्यक्षयोः ६।३।१०४

पथिनक्ष इत्येतयोरुत्तरपदयोः कोः का इत्ययम् आदेशो भवति। कापथः। काक्षः।

न्यासः

का पथ्यक्षयोः। , ६।३।१०३

अनीषदर्थ आरम्भः। "कापथः" इति। कुत्सितः पन्थाः कापथः, "ऋक्पूः" ५।४।७४ इत्यादिनाकारः समासान्तः। "काक्षः" इति। कुत्सितोऽक्ष इति तत्पुरुषः। अथ वा--कुत्सिते अक्षिणी अस्येति बहुव्रीहिः, "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्? षच्()" (५।४।११३) इति षच्? समासान्तः॥

बाल-मनोरमा

का पथ्यक्षयोः १०१५, ६।३।१०३

का पथ्यक्षयोः। पथिन्, अक्ष--अनयोः परतः कोः "का" इत्यादेशः स्यादित्यर्थः। कापथमिति। कुत्सितः पन्था इति विग्रहः। "कुगती"ति समासः। "ऋक्पू"रित्यप्रत्ययः। "पथः सङ्ख्याव्ययादे"रिति नपुंसकत्वम्। "कापथ" इति पाठे तु बहुव्रीहिः। काऽक्षशब्दे समासं दर्शयति--अक्षशब्देन तत्पुरुष इति। कुत्सितमक्षमिन्द्रियमिति विग्रहे "कुगती"ति समास इत्यर्थः। अक्षिशब्देनेति। कुत्सिते अक्षिणी यस्येति विग्रहे "बहुव्रीहौ सक्थ्यक्ष्णो"रिति षजित्यर्थः।

तत्त्व-बोधिनी

का पथ्यक्षयोः ८५८, ६।३।१०३

कापथमिति। कुत्सितः पन्थाः। "ऋक्पूरब्धू"रिति समासान्तः। "पथः सङ्ख्याव्ययादेः"इति नपुंसकत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

ईषदर्थे च ६।३।१०५

ईषदर्थे वर्तमानस्य कोः का इत्ययम् आदेशो भवति। कामधुरम्। कालवणम्। अजादावपि परत्वात् कादेश एव भवति। काम्लम्। कोष्णम्।

न्यासः

ईषदर्थे च। , ६।३।१०४

ईषन्मधुरं "कामधुरम्()" इति। "कुगतिप्रादयः" २।२।१८ इति समासः। "कुशब्दः पापार्थः" इत्येतत्तु प्रायिकमुपाधिवचनमित्युक्तम्()। तत्र प्रायिकत्वे चैतदेव कादेशवचनं ज्ञापकम्()। "काम्लम्()" इति। ननु चात्र "कोः कत्तत्पुषषे" (६।३।१०१) इति कदादेशेन भवितव्यम्()? इत्यत आह--"अजादावपि" इत्यादि॥

बाल-मनोरमा

ईषदर्थे १०१६, ६।३।१०४

ईषदर्थे। ईषदर्थे विद्यमानस्य कोः "का" इत्यादेशः स्यादित्यर्थः। काजलमिति। ईषत्--जलमिति विग्रहे "कुगतीति समासः। नित्यसमासत्वादस्वपदविग्रहप्रदर्शनम्। कुत्सित अम्लः काम्ल इत्यत्र "कोः कत्तत्पुरुषेऽची"ति कदादेशमाशङ्ख्याह--अजादावपीति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा पुरुषे ६।३।१०६

पुरुषशब्दे उत्तरपदे विभाषा कोः का इत्ययम् आदेशो भवति। कापुरुषः, कुपुरुषः। अप्राप्तविभाषेयम्। ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं का भवति। ईषत् पुरुषः कापुरुषः।

न्यासः

विभाषा पुरुषे। , ६।३।१०५

"अप्राप्ते विभाषेऽयम्()" इति। ईषदर्थस्य निवृत्तत्वात्()। ननु चानीषदर्थे केनचिदप्राप्ते, ईषदर्थे पूर्वेण प्राप्त इत्युभयत्र विभाषेऽयं युक्तेत्याह--"ईषदर्थे तु पूर्वविप्रतिषेधेन" इत्यादि। "ईषदर्थे च" ६।३।१०४ इत्यस्यावकाश ईषन्मधुरं कामधुम्(), "विभाषा पुरुषे" इत्यस्यावकाशः--कुत्सितः पुरुषः कापुरुष इति; इह चोभयं प्राप्नोति--ईषत्पुरुषः कापुरुष इति। अत्रेषदर्थ इत्यनेनैव भवति पूर्वविपरतिषेधेन॥

बाल-मनोरमा

विभाषा पुकुषे १०१७, ६।३।१०५

विभाषा पुरुषे। "कोः का इत्यादेश" इति शेषः। अप्राप्तविभाषेति ननु कोरीषदर्थकत्वे सति "ईषदर्थे" इति नित्ये कादेशे प्राप्ते विकल्पसंभव इत्यत आह--ईषदर्थे हीति। वृत्त्यनुसारेणेदमुक्तं, पूर्वविप्रतिषेधस्य भाष्यानुक्तत्वात्।

तत्त्व-बोधिनी

विभाषा पुरुषे ८५९, ६।३।१०५

अप्राप्तविभाषेति। "ईषदर्थे"इत्यस्याननुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कवञ्चोष्णे ६।३।१०७

उष्णशब्दे उत्तरपदे कोः कवम् इत्ययम् आदेशो भवति, का च विभाषा। कवोष्णम्, कोष्णम्, कदुष्णम्।

न्यासः

कवञ्चोष्णे। , ६।३।१०६

बाल-मनोरमा

कवं चोष्णे १०१८, ६।३।१०६

कवं चोष्णे। कवं का च वेति। विभाषेत्यनुवृत्तेरिति भावः। उभयाऽभावे कदादेशः। तथा च रूपत्रयम्। तदाह--कोष्णं कवोष्णं कदुष्णमिति।

---

सूत्रम्

काशिका-वृत्तिः

पथि च च्छन्दसि ६।३।१०८

पथिशब्दे उत्तरपदे छन्दसि विषये कोः कवम् का इत्येतावादेशौ भवतो विभाषा। कवपथः, कापथः, कुपथः।

न्यासः

पथि च च्छन्दसि। , ६।३।१०७

बाल-मनोरमा

चौ , ६।३।१०७

इत्यकारलोपे प्र च् अस् इति स्थिते--चौ। अन्चुधातोरुकारान्तस्य लुप्तनकाराऽकारस्य चाविति सप्तम्यन्तम्। "ढ्रलोपे" इत्यतः "पूर्वस्य दीर्घोऽणः" इत्यनुवर्तते। तदाह--लुप्तेति। प्राच इति। यद्यपि "अचः" इत्यल्लोपस्य "चौ" इति दीर्घस्य चाऽभावेऽपि सवर्णदीर्घेण "प्राच" इति सिध्यति, तथापि "प्रतीचः" इत्याद्यर्थं सूत्रम्। प्राग्भ्यामिति। प्राच्-भ्याम् इति स्थिते "चोः कुः" इति कुत्वं, "क्विन्प्रत्ययस्य कुः" इति कुत्वस्याऽसिद्धत्वात्। इत्यादीति। प्राग्भिः। प्राचे। प्राचः २। प्राचोः २। प्राक्षु। प्रत्यङ्ङिति। प्रतिपूर्वादञ्चेः क्विन्, यण्, "अनिदिताम्" इति नलोपः, सुबुत्पत्तिः। "उगिदचा"मिति नुम्, हल्ङ्यादिना सुलोपः, चकारस्य संयोगान्तलोपः, नुमो नकारस्य "क्विन्प्रत्ययस्ये"ति कुत्वेन ङकार इति भावः। प्रत्यञ्चाविति। प्रत्यच्-औ इति स्थिते "उगिदचा"मिति नुमि तन्नकारस्य अनुस्वारे तस्य परसवर्णो ञकार इति भावः। एवं प्रत्यञ्चः। प्रत्यञ्चम्, प्रत्यञ्चौ।

ननु प्रति-अन्च् इति स्थिते अन्तरङ्गत्वाद्यणि कृते "अनिदिता"मिति नलोपे प्रत्यच् इत्यस्माच्छसि असर्वनामस्थानत्वात् "उगिदचा"मिति नुमभावे "अचः" इत्यकारलोपे "चौ" इति दीर्घो न भवति, पूर्वस्याऽणोभावात्, ततश्च प्रत्य्()च इति स्यादित्यत आह--अच इति लोपस्येत्यादि। "अचः" इति लोपेन यण्निमित्तस्याऽकारस्य विनाशोन्मुखत्वादिह यण्न भवति। ततश्च प्रति अच् अस् इति स्थिते "अचः" इत्यकारलोपे सति "चौ" इति इकारस्य दीर्घे "प्रतीच" इति रूपां निर्बाधम्। एतदर्थमेव "अचः" इति "चौ" इति चारब्धम्। "प्राचः पश्ये"त्यत्र अल्लोपदीर्घयोरभावेऽपि सवर्णदीर्घेणैव रूपसिद्धेः। भाष्ये तु "चौ" इत्यारम्भसामर्थ्यादेवात्र यण् नेति समाहितम्। न च "प्राचः पश्ये"त्यादौ सावकाशत्वमिति वाच्यं, सवर्णदीर्घेणैव निर्वाहात्। "वार्णादाङ्गं बलीयः" इति परिभाषया "अचः" इत्यल्लोपे सति सवर्णदीर्घाऽसिद्धेरित्यन्यत्र विस्तरः। अद्स् अञ्च् इति स्थिते इति। क्विनि उपपदसमासे सुब्लुकि च सति अदस् अञ्च् इति स्थिते "अनिदिताम्" इति नलोपे कृते अदस् अच् इति स्थिते सतीत्यर्थः।

तत्त्व-बोधिनी

चौ ३६९, ६।३।१०७

चौ। "चजोः"इति निर्देशाच्चवर्गग्रहणं न भवतीत्याह---लुप्ताकारनकारेऽञ्चताविति। अत्राऽकारलोपेन

नकारलोपस्याक्षिप्तत्वात्तत्कथनं व्यर्थमेव, किंतु लुप्ताऽकारेऽञ्चातावित्येव सुवचमित्याहुः। "ढ्रलोपे"इति सूत्रादणो दीर्घ इत्यस्य चानुवर्तमादाह--अणो दीर्घः स्यादिति। प्राचः। प्राचेति। "प्रतीचः"इत्याद्यर्थमवश्यंस्वीकार्येऽतोलोपे कृतेऽनेन दीर्घो विधीयत इति भावः। प्राग्भ्यामिति। "चोः कुः"इति कुत्वं, न तु "क्विन्प्रत्ययस्ये"त्यनेन, तस्याऽसिद्धात्वात्।

---

सूत्रम्

काशिका-वृत्तिः

पृषोदराऽदीनि यथोपदिष्टम् ६।३।१०९

पृषोदरप्रकाराणि शब्दरूपाणि, येषु लोपागमवर्नविकाराः शास्त्रेण न विहिताः दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति। यानि यानि यथोपदिष्टानि, शष्टैरुच्चारितानि प्रयुक्तानि, तानि तथा एव अनुगन्तव्यानि। पृषदुदरं यस्य पृषोदरम्। पृषदुद्वानं यस्य पृषोद्वानम्। अत्र तकारलोपो भवति। वारिवाहकः बलाहकः। पूर्वशब्दस्य बशब्द आदेशः, उत्तरपदादेश्च लत्वम्। जीवनस्य मूतः जीमूतः। वनशब्दस्य लोपः। शवानां शयनम् श्मशानम्। शवशब्दस्य श्मादेशः, शयनशब्दस्य अपि शानशब्द आदेशः। ऊर्ध्वं खमस्य इति उलूखलम्। ऊर्ध्वखशब्दयोः उलू खल इत्येतावादेशौ भवतः। पिशिताशः पिशाचः। पिशिताशशब्दयोर् यथायोगं पिशाचशब्दौ आदेशौ। ब्रुवन्तो ऽस्यां सीदन्ति इति बृसी। सदेरधिकरणे डट् प्रत्ययः। ब्रुवच्छब्दस्य चोपपदस्य बृशब्द आदेशो भवति। मह्यां रौति इति मयूरः। रौतेरचि टिलोपः। महीशब्दस्य मयूभावः। एवमन्ये ऽपि अश्वत्थकपित्थप्रभृतयो यथायोगम् अनुगन्तव्याः। दिक्शब्देभ्य उत्तरस्य तीरस्य तारभावो वा भवति। दक्षिणतीरम्, दक्षिणतारम्। उत्तरतीरम्, उत्तरतारम्। वाचो वादे डत्वं च लभावश्च उत्तरपदस्य इञि प्रत्यये भवति। वाचं वदति इति वाग्वादः। तस्यापत्यं वड्वालिः। षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च भवति। षड् दन्ता अस्य षोडन्। षट् च दश च षोडश। धासु वा षष उत्वं भवत्युत्तरपदादेश्च ष्टुत्वम्। षोढा, षड्धा कुरु। बहुवचननिर्देशो नानाधिकरणवाचिनो धाशब्दस्य प्रतिपत्त्यर्थः। इह मा भूत्, षट् दधाति धयति वा षड्धा इति। दुरो दाशनाशदभध्येषूत्वं वक्तव्यम् उत्तरपदादेश्च ष्टुत्वम्। कुच्छ्रेण दाश्यते नाश्यते दभ्यते च यः स दूडाशः। दूणाशः। दूडभ्यः। दम्भेः खल्बनुनासिकलोपो निपातनात्। दुष्टं ध्यायति इति दूढ्यः। दुःशब्दोपपदस्य ध्यायतेः आतश्चोपसर्गे ६।१।१३१ इति कप्रत्ययः। स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम्। जाय एहि सुवो रोहाव। पीवोपवसनादीनां च लोपो वक्तव्यः। पीवोपवसनानाम्। पयोपवसनानाम्। वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।

न्यासः

पृषोदरादीनि यथोपदिष्टम्?। , ६।३।१०८

"आदिशब्दः प्रकारवचनः" इति। यद्यत्रादिशब्दो व्यवस्थावचन आश्रीयेत, ततो, यान्येव गणे पठ()न्ते तेषामेव साधुत्वं स्यात्(), नान्येषाम्()। प्रकारवचन आदिशब्द आश्रीयमाणे सत्यपरिपठितानामपिमपि साधुभावो भवतीत्येतत्? सर्व चेतसि कृत्वाऽऽविशब्दोऽयं प्रकारवचन इति दर्शयन्नाह--"पृषोदरप्रकाराणि" इत्यादि। प्रकारः=सादृश्यम्()। अतस्तद्दर्शयितुमाह--"येषु" इत्यादि। यथा पृषोदरशब्दे लोपकार्यं शास्त्रेणाविहितं दृश्यते, तथान्यत्रापि लोपादिकार्यं शास्त्रेणाविहितं दृश्यते। तानि च पृषोदरप्रकाराणि भवन्ति। "यथोपदिष्टम्()" इति। "यथाऽसादृश्यते" २।१।७ इति वीपसायामव्ययीभावः। अत एवास्य विवरणं करोति--"यानि यान्युपदिष्टानि" इत्यादि। दिशिस्त्रोच्चारणक्रियः। उपदिष्टान्युच्चारितानीत्तयर्थः। कैः पुनरुपदिष्टानि? शिष्टैः। शिष्टाः पुनराचारनिवासादिना वेदितव्याः। "तानि तथैवानुमन्तव्यानि" इति। यथा तैः प्रयुक्तानि तथैव तानि साधुत्वेनानुमन्तव्यानीत्यर्थः। यदि शिष्टाः शब्देषु प्रमाणं तद किमनयाऽष्टाध्याय्या, शिष्टवचनादेव हि शब्दानां साधुत्वं विज्ञास्यते? उच्यते; शिष्टपरिज्ञानार्थाऽष्टाध्यायी। अष्टाध्यायीमधीयानोऽनधीताष्टाध्यायीकमपि येऽस्यामष्टाध्याय्यां विहिताः शब्दास्तान्? प्रयञ्जानं

पश्यन्नेवमध्यवस्यति--शिष्टोऽयमिति, न चासावष्टाध्यायीमधीतवान्(), अथ च तस्यां ये व्युत्पादिताः शब्दास्तान्? प्रयुङ्क्ते, नूनमयमन्यानपि जानाति---इत्येषा शिष्टपरिज्ञानार्थाऽष्टाध्यायी। "एवमन्येऽपि" इत्यादि। कप्य()आमहीशब्देपूपपदेषु "सुपि स्थः" ३।२।४ इति तिष्ठतेः कप्रत्ययः। सकारस्य तकारः क्रियते। महीशब्दस्यापि ह्यस्वत्वम्()। "दक्षिणतारम्()" इति। षष्ठीसमासः। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः" (वा।१०४) इति पुंवद्भावः। अथ वा--दक्षिणशब्दस्यायं तीरशब्देन षष्ठीसमासः। "वाचोवादे" इति। वाक्यशब्दस्य वादशब्द उत्तरपदे परतो डकारादेशो भवति। उत्तरपदस्य च वादशब्दस्य वल इत्ययमादेशो भवतीञि प्रत्यये परत इति। वाचं वदतीति "कर्मण्यण्()" ३।२।१--वाग्वाद, तस्यापत्यम्? " अत इञ्()" ४।१।९५ वाड्वलिः। "षष उत्वम्()" इत्यादि। षष्शब्दस्योत्वं भवति दतृ, दश-इत्येतयोरुत्तरपदयोः, उत्तरपदादेः ष्टुत्वं च। षङ्? दन्ता यस्येति बहुव्रीहिः। "वयस दन्तस्य दतृ" ५।४।१४१ इति दत्रादेशः--षोडन्()। षट्? च दश चेति द्वन्द्वः--षोडश। "धासु वा" इति। उत्वत्यैवायं विकल्पः। ष्टुत्वं तु नित्यमेव भवति। "षोढा, षड्धा" इति। "अधिकरणविचाले च" ५।३।४३ इति धाप्रत्ययः। अथ किमर्थं धास्विति बहुवचननिर्देशः क्रियते? इत्याह--"बहुवचननिर्देशः" इत्यादि। "षड्धा" इति। धाञो धेटो वा स्त्रियां "आतोऽनुपसर्गे कः" ३।२।३ इति कप्रत्ययः। "दाश्यते" इतिष "दाश्रृ दाने" (धा।पा।८८२), नाश्यते" इति, "णश अदर्शने" (धा।पा।११९४), "दभ्यते" इति, "दम्भ ["दम्भु दम्भने" (१२७०) इति धातु पाठः] दम्भे--एतेभ्यः कर्मणि घञ्()। दुर्शशब्दस्य दाशशब्दादिभिः प्रादिसमासे--दूडाशः दूणाशः, दूडभः। "दम्भेरनुनासिकलोपः" इत्यादि। यदेतत्? "दाशनाशदभध्येषु" (काचवृ।६।३।१०९) इत्यत्र कृतानुनासिकलोपस्य दम्भेरुच्चारणं तन्निपातनम्(), तत एवात्र दम्भेरनुनासिलोपो भवति। पीद उपवसनं येषां ते "पीवोपवसनाः" एवं "पयोपवसनाः"। उभयत्र सकारलोपः। "वर्णागमः" इति। निरुक्तशास्त्रे ये शब्दा व्युत्पाद्यन्ते तेषां पूषोदरादित्वादेव साधुत्वमिष्यति इतीमं श्लोकमाह--"वर्णागमः" इत्यादि। अपूर्वस्य वर्णस्यागमो वर्णागमः--नकारादेरपूर्वस्य वर्णस्य प्राप्तिः, यथा--को जीर्यते कुञ्जर इति। अत्र कुशब्दसय नुगागमः क्रियते। वर्णविपर्ययः--वर्णस्थानव्यत्यासः, यथा "हिसि हिंसायाम्()" (धा।पा।१४५६), हिनस्तीति सिंह इत्यत्र पचाद्यचि कृते हकारसकारयोः स्थानव्यत्यासः। वर्णविकारः--वर्णस्य रूपान्तरापत्तिः, यथा--षोडन्निति। अत्र ,खारस्योत्वरूपापत्तिः। दकारस्य च डकाररूपापत्तिः। वर्णनाशः--वर्णस्य लोपः, यथा पृषोदर इति। अत्र तकारस्य लोपः। अर्थातिशयः=अर्थविशेषः, प्रसिद्धादर्थादर्थान्तरम्(), तेन धातोर्योगः=सम्बनधः, यथा मह्यां रोतीति मयूरः। अत्र रौते रमणेनार्थेनातिशयेन योगः। एतत्? पञ्चविधं पञ्चप्रकारं निरुक्तम्(), निश्चयेनोच्यतेऽर्थोऽनेनेति निरुक्तम्()॥

बाल-मनोरमा

पृषेदरादीनि यथोपदिष्टम् १०१९, ६।३।१०८

पृषोदरादीनि। आदिशब्दो न प्रभृतिवाची, गणपाठे पृषोदरादिपाठस्याऽदर्शनाद्यथोपदिष्टपदस्य वैयथ्र्याच्च। किंतु प्रकारवाची। तदाह--पृषोदरप्रकाराणीति। प्रकारः-सादृश्यं, तच्च शास्त्रोक्तलोपागमादेशादिरहितत्वेन बोध्यम्। व्याकरणशास्त्राऽगृहीतानीति यावत्। उपपूर्वको दिशिरुच्चारणार्थः। भावे क्तः। उपदिष्टमुपदेशः--उच्चारणं, तदनतिक्रम्य यथोपदिष्टम्। पदार्थानतिवृत्तावव्ययीभावः। शिष्टैरित्यध्याहार्यम्। तथा च फलितमाह--शिष्टैर्यथोच्चारितानीति। शिष्टास्तु शब्दतत्त्वसाक्षात्कारवन्तो योगिन इति। भाष्यकौयटयोः स्पष्टम्। तलोप इति। षष्ठीसमासे सुब्लुकि तलोपे "आद्गुणः" इति भावः। पूर्वपदस्येति। "वारिवाहक" शब्दे वारिशब्दस्य पूर्वपदस्य बकारः सर्वादेशः। वाहकशब्द उत्तरपदं, तदादेर्वकारस्य लकारादेश इत्यर्थः।

भवेद्वर्णागमाद्धंस इति। हसधातोः पचाद्यचि अनुस्वारागमे "हंस" इति रूपमित्यर्थः। हनधातोरचि सगागमे "नश्चाऽपदान्तस्ये"त्यनुस्वार इत्यन्ये। सिंहो वर्णविपर्ययादिति। "हिसि हिंसाया"मित्यतः पचाद्यचि इदित्त्वान्नुम्। "नश्चे"त्यनुस्वारः। हकारस्य सकारः, सकारस्य हकारश्च। सिंह इति रूपमित्यर्थः। यद्यपि हंससिंहयोरुणादौ व्युत्पत्तिरुक्ता

तथाप्युणादिसूत्राणां शाकटायनप्रणीतत्वेन शास्त्रान्तरत्वादिह व्युत्पादनं न दोष इत्याहुः। गूढोत्मा वर्णविकृतेरिति। गूढ आत्मा यस्येति बहुव्रीहावुत्तरपदादेराकारस्य उकारे आद्गुणे रूपमिति भावः। वर्णनाशात्पृषोदरमिति। पृषत्-उजरमित्यत्र तकारलोपे सति आद्गुणे पृषोदरमिति भवतीत्यर्थः।

दिक्छब्देभ्यस्तीरस्येति। वार्तिकमिदम्।

दुरो दाशेति। इदमपि वार्तिकम्। दुरित्यस्य दाश, नाश, दभ, ध्य--इत्येतेषु परेषु इत्वम्, उत्तरपदादेः ष्टुत्वं च वक्तव्यमित्यर्थः। दूडाश इति। दुर्--दाश इति स्थिते रेफस्य उत्वे सवर्णदीर्घः। दाशेर्दकारस्य ष्टुत्वेन डकारः। दूणाश इति। दुर्-नाश इति स्थिते रेफस्य उत्व सवर्णदीर्घः। नाशेर्नकारस्य ष्टुत्वेन णत्वम्। दूडभ इति। दुर्-दभ इति स्थिते रेफस्य उत्वं, सवर्णदीर्घः। दभेर्दकारस्य ष्टुत्वेन डकारः। खल्त्रिभ्य इति। "दाश्रृ दाने" "णश अदर्शने" ण्यन्तः, "दभ हिंसाया"मिति त्रिभ्यो धातुभ्यः "ईषद्दुस्सुषु" इति खल्प्रत्यय इत्यर्थः। ननु क्ङित्परकत्वाऽभावात्कथमिह "अनिदिता"मिति नलोप इत्यत आह--दम्भेर्नलोपो निपात्यत इति। दूढ() इति। दुर् ध्य इति स्थिते रेफस्य उत्वं सवर्णदीर्घः, धस्य ष्टुत्वेन ढत्वम्। आतश्चेति। "ध्यै चिन्तायाम्" "आतश्चोपसर्गे" इति कप्रत्यये आदेच उपदेशे" इति आत्वे "आतो लोप इटि चे"त्याल्लोपे ध्यशब्द इत्यर्थः। सदेरिति। सद्धातोरधिकरणेऽर्थे डटि ङित्त्वसामथ्र्यादस्यापि टेर्लोपे स इति रूपम्। ब्राउवत् स इति स्थिते उपपदसमासे सुब्लुकि ब्रावच्छब्दस्य "बृ" इत्यादेशे बृसशब्दात् "टिड्ढे"ति ङीपि बृसीति रूपमिति भावः। "दिक्छब्देभ्य" इत्यारभ्य एतदन्तः सन्दर्भः पृषोदरादीनीत्यस्यैव प्रपञ्चः। आकृतिगणो।त्रयमिति। पृषोदरादिरित्यर्थः। तेन कर्तुकामः, कर्तुमना इत्यादिसङ्ग्रहः।

तत्त्व-बोधिनी

पृषेदरादीनि यथोपदिष्टम् ८६०, ६।३।१०८

पृषोदर। प्रकाराणीति। आदिशब्दो हि न व्यवस्थावचनः, यथोपदिष्टपदानर्थक्यादिति भावः। शिष्टैरिति। अध्याहारलभ्यमिदम्। "यथोपदिष्ट"मित्यत्र यथार्थेऽव्ययीभावः। उपदिशिश्चोच्चारणक्रियः। "यानि यानि शिष्टैरुप दिष्टानि"इत्यर्थः। एवं स्थिते फलितमाह--यथोच्चारितानि तथैवेति। समासयदविषयकमिदम्, उत्तरपदाधिकारात्। निरुक्तादिशास्त्रसिद्धानामसमासपदानाम् "उणादयो बहुल"मित्येव सिद्धेश्च। यद्यपि समासविषयकमेवेति नियमो न युज्यते, हंससिंहशब्दयोरपि प्राचां कारिकायामुदाह्मतत्वात्, तथापि तत्करिकायां यथाशब्दाध्याहरेण दृष्टान्तप्रदर्शनार्थं तयोरुपन्यासः कृतो न तु प्रकृतसूत्रोदाहरणत्वेनेति नियमोक्तिः सम्यगेवेत्याहुः। वर्णागमादिति। हन्तेः पचाद्यचि सगागमः। विपर्ययादिति। हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्यत्ययः।

दिक्शब्देभ्यस्तीरस्य तारभावो वा। दिक्शब्देभ्य इति। वार्तिकमिदम्। "दुरो दाशनाशे"त्यप्येवम्।

दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च। खल्त्रिभ्य इति। दाशनाशदभेति त्रयोऽपि "ईषद्दुःसुषु"इति खल्प्रत्ययान्ता इत्यर्थः। बृसीति। "मुनीनामासनं बृसो" आकृतिगणोऽयमिति। तेन"लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि। समो वा हिततत‌योर्मासस्य पचि युड्घञोः।" इत्यपि सङ्गृहीतम्। कृत्यान्ते उत्तरपदे अवश्यमः अन्तं पुमान्लुम्पेत्। अवश्यगन्तव्यः। अवश्यसेव्यः। तथा तुमः काममनसोः परतोऽ

न्तं लम्पेत्। गन्तुकामः। गन्तुमनाः। समो हिततत‌योरन्तं वा लुम्पेत्। हितः संहितः। सततः संततः। युट् घञ्च, एतत्परो यः पच्धातुस्तस्मिन्परे मांसस्याऽन्तं लुम्पेत्। मांस्पचनम्। मांस्पाकः। इह संयोगान्तलोपोऽपि शिष्टोच्चारणान्नेतचि बोध्यम्।

सूत्रम्

काशिका-वृत्तिः

सङ्ख्याविसायपूर्वस्य अह्नस्य अहन्नन्यतरस्यां ङौ ६।३।११०

सङ्ख्या वि साय इत्येवंपूर्वस्य अह्नशब्दस्य स्थाने अहनित्ययम् आदेशो भवत्यन्यतरस्यां ङौ परतः। द्वयोरह्नोर् भवः द्व्यह्नः। त्र्यह्नः। द्व्यह्नि, द्व्यहनि। त्र्यह्नि, त्र्यहनि। द्व्यह्ने। त्र्यह्ने। व्यपगतमहः व्यह्नः। व्यह्नि, व्यहनि, व्यह्ने। सायमह्नः सायाह्नः। सायाह्नि, सायाहनि, सायाह्ने। एकदेशिसमासः पूर्वादिभ्यो ऽन्यस्य अपि भवति इत्येतदेव विसायपूर्वस्य अह्नस्य ग्रहणं ज्ञापकम्। तेन मध्यमह्नः मध्याह्नः इत्यपि भवति। सङ्ख्याविसायपूर्वस्य इति किम्? पूर्वाह्ने। अपराह्ने।

न्यासः

संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ। , ६।३।१०९

"द्व्योरह्नोर्भवः" इति। भवार्थविवक्षायां "तद्धितार्थ" २।१।५० इति समासः, ततः "कालाट्ठञ्()" ४।३।११ इति ठञ्(), तस्य "द्विगोर्लृगनपत्ये" ४।१।८८ इति लुक्(), "राजाहःसखिभ्यष्टच्()" (५।४।९१) इति टच्? समासान्तः, "अह्नोऽह्न एतेब्यः" ५।४।८८ इत्यह्नादेशः। "द्र()ह्नि" इति। विभाषा ङिश्योः" ६।४।१३६ इत्यकारलोपः पाक्षिकः। "द्व्यह्नः" इति। "आद्? गुणः" ६।१।८४। "व्यह्नः" इति प्रादिसमासः। शेषं पूर्ववत्()। "सायाह्नः" इति। एकदेशिसमासोऽयम्()। तत्रेदं चोद्यमाशङ्क्यते--ननु च "पूर्वापराधरोत्तरम्()" २।२।१ इत्यादिना समासो विहितः, न च सायंशब्दस्तत्र पठ()ते, तत्कथमिह सायंशब्दसायहःशब्देन समासः सम्भवतीति? एतन्निराकर्त्तुमाह--"एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि" इत्यादि। तत्पुरुषसमासे "अह्नोऽह्न एतेभ्यः" ५।४।८८ इत्यनेनाह्नादेशो विधीयते, "एतेभ्यः" इत्यनेन च "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः? ५।४।८६ इति, तथा "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" ५।४।८७ इति प्रक्रान्ताः संख्याव्ययादयः प्रत्यवमृश्यन्ते। तत्र यदि पूर्वादय एवैकदेशिना समस्येरन्(), तदा न सायंशब्दः "एतेभ्यः" इत्यनेन प्रत्यवमृश्येत; तस्य संख्यादिष्वपरिपठितत्वात्()। ततश्च सायंशब्दात्? परस्याह्नादेशो न स्यात्()। एवञ्च सायम्पूर्वस्याह्नशब्दस्याभावात्? तस्येह ग्रहणं न क्रियेत, कृतञ्च, तस्मादेतदेव सायम्पूर्वस्याह्नशब्दस्य ग्रहणं ज्ञापयति--पूर्वादिभ्योऽन्यस्याप्येकदेशिसमासो भवतीति। तेन "मध्यमह्नो मध्याह्नः" इति सिद्धं भवति। "पूर्वाह्ने" इति। "अह्नोऽदन्तात्()" ८।४।७ इति णत्वम्()। "संख्याविसायेभ्यः" इत्येव वक्तव्ये पूर्वशब्दस्याधिकस्य ग्रहणं तदधिककार्यवधानसूचनार्थम्()। तेन सायाह्न इत्यत्र मकारलोपः सिद्धो भवति॥

बाल-मनोरमा

सङ्ख्याविसायपूर्वस्याह्नस्याऽहनन्यतरस्यां ङो २३६, ६।३।१०९

ङौ विशेषमाह--सङ्ख्याविसाय। सङ्ख्या च विश्च सायश्च सङ्ख्याविसायाः। ते पूर्वे यस्मादिति विग्रह इत्यभिप्रेत्याह--सङ्ख्येत्यादिना। सङ्ख्यापूर्वमुदाहरति--द्व्यह्नि द्व्यहनीति। अल्लोपे तदभावे च रूपम्। व्यह्ने इति। अहन्नादेशाऽभावे रूपम्। एवं विपूर्वमुदाहरति-विगतमिति। "प्रादयो गताद्यर्थे प्रथमये"ति समासः। पूर्ववदह्नादेशः। सायपूर्वमुदाहरति-अहः साय इत्यादिना। अत एव ज्ञापकादेकदेशिसमासः। वि()आपा इति। आबन्तत्वाऽभावान्न सुलोपः। एतदर्थमेव हल्ङ्यादिसूत्रे सत्यपि दीर्घग्रहणे आब्ग्रहणमिति भावः। वि()आं पाति=रक्षतीत्यर्थे "आतोऽनुपसर्गे कः" इति प्राप्ते वाऽसरूपन्यायेन "आतो मनिन्क्वनिब्वनिपश्चे"ति चकाराद्विच्। यद्यपि तत्र "विदुपेश्छन्दसी"त्यतश्छन्दसीत्यनुवर्तते तथापि वेदेऽनेन क्विच्, लोके तु "अन्येभ्योऽपि दृश्यते" इति विच्। अन्ये तु "क्विप्चे"ति सूत्रेण क्विपमाहुः। "घुमास्थे"तीत्त्वं तु न, "वकारे ईत्त्वप्रतिषेधः" इति वार्तिकात्। क्वनिपि "पावान" इत्येतदर्थं तस्यावश्यकत्वात्। क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्विब्भ्योऽनभिधानमेवेति शब्देन्दुशेखरे स्पष्टम्। अत एव भाष्ये "पावान"इत्य्तर वनिपा

रूपसिद्धिमाश्रित्य "ईत्वमवकारादाविति वक्तव्य"मिति वार्तिकं प्रत्याख्यातम्। ततश्च "वि()आपाः" इत्यत्र विजेव। वि()आपा-औ इति स्थिते "प्रथमयोः पूर्वसवर्णः" इति प्राप्ते-।

तत्त्व-बोधिनी
सङ्ख्याविसायपूर्वस्याह्नस्याऽहनन्यतरस्यां ङी २००, ६।३।१०९

अह्नः साय इति। स्यतेर्घञि अवसानवचनः सायशब्दः, सङ्याविसाये"ति ज्ञापकादेकदेशिसमासः। इत्यदन्ताः। वि()आपा इति। वि()आं पाति रक्षतीति विग्रहे "पा रक्षणे" इत्यस्मात् "आतोऽनुपसर्गे" इति कं बाधित्वा "आतोमनिन्क्वनिब्वनिपश्चे"ति चकाराद्विजिति व्याख्यातारः। इह च्छन्दसि "आतो मनिन्--" इति विच्। लोके तु "अन्येभ्योऽपि दृश्यते" इत्यनेनेति विवेकः।

---

सूत्रम्
काशिका-वृत्तिः
ढ्रलोपे पूर्वस्य दीर्घो ऽणः ६।३।१११

ढकाररेफयोः लोपः यस्मिन् स ढ्रलोपः, तत्र पूर्वस्य अणः दीर्घो भवति। लीढम्। मीढम्। उपगूढम्। मूढः। रलोपे नीरक्तम्। अग्नीरथः। इन्दूरथः। पुना रक्तं वासः। प्राता राजक्रयः। पूर्वग्रहणम् अनुत्तरपदे ऽपि पूर्वमात्रस्य दीर्घार्थम्। अणः इति किम्? आतृढम्। आवृढम्।
लघु-सिद्धान्त-कौमुदी
ढ्रलोपे पूर्वस्य दीर्घोऽणः ११२, ६।३।११०

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः। पुना रमते। हरी रम्यः। शम्भू राजते। अणः किम्? तृढः। वृढः। मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते॥
न्यासः
ढ्रलोपे पूर्वस्य दीर्घोऽणः। , ६।३।११०

"ढ्रलोपे" इति तत्पुरुषोऽयं वा स्यात्(), बहुव्रीहिर्वा? तत्र यदि तत्पुरुषः स्यात्()--ढ्रयोर्लोपो ढ्रलोप इति, तदाणः पूर्वत्वं नोपपद्यते; लोपस्याभावरूपत्वात्(), अभावे च पौर्वापर्यासम्भवात्()। अथापि स्थानिद्वारकं पोर्वापर्यमाश्रित्य पूर्वत्वमुच्यते, करणीयः--इत्यत्रापयनीयरो रेफस्य लोपे कृते पूर्वस्य दीर्घत्वं स्यादितीमं दोषं दृष्ट्वा बहुव्रीहिरयमिति दर्शयन्नाह--"ढकाररेफयोर्लोपो यस्मिन्()" इत्यादि। गमकत्वाद्वैयधिकरण्येऽपि बहुव्रीहिर्भवत्येव, यथा--काण्ठेकाल इति। "लीढम्()" इति। "लिह आस्वादने", (धा।पा।१०६६) "निष्ठा, "हो ढः" ८।२।३१ "झषस्तथोर्धोऽधः" ८।२।४० ष्टुना ष्टुः" ८।४।४० "ढोढे लोपः" ८।३।१३--इत्येतो विधयः कत्र्तव्याः। "मीढम्()" इति। "मिह सेचने" (धा।पा।९९२)। "उपगूढम्()" इति। "गुहू संवरणे (धा।पा।८९६)। "मूढः" इति। "मुह वैचित्ये" (धा।पा।११९८)। "नीरक्तम्()" इति। "कुगतिप्रादयः" २।२।१८ इति समासः, "रो रि" ८।३।१४ इति रेफस्य लोपः। अथ पूर्वग्रहणं किमर्थम्(), यावता "ढ्रलोपे" इति। सप्तम्या निर्देशः, तत्रान्तरेणापि पूर्वग्रहं "तस्मिन्निति निर्दिष्टे पूर्वस्य" (१।१।६६) इति पूर्वस्यैव भविष्यति? इत्यत आह--"पूर्वग्रहणम्()" इत्यादि। असति पूर्वग्रहणे, उत्तरपदाधिकारादुत्तरपद एव स्यात्()--"नीरक्तम्()" इत्यादौ, अनुत्तरपदे न स्यात्()--"लीढम्()" इत्यादौ। यद्यपि ढलोपस्योत्तरपदेऽसम्भवादनुत्तरपदेऽपि वचनप्रामण्याद्दीर्घत्वं स्यात्(), रलोपे त्वनुत्तरपदे न प्राप्नोति; उत्तरपदे रलोपस्य सम्भवात्()। तस्मादनुत्तरपदेऽपि पूर्वमात्रस्याणो दीर्घो यथा स्यादिति

पूर्वग्रहणम्()। "आतृढम्()" इति। "तृहू तृन्हू हिंसार्थौ" (धा।पा।१३४८,१३५०)। "आदृढम्()" इति क्वचित् पाठः। "दृह दृहि दृहि वृद्धौ" (धा।पा।७३३-७३६) इत्यस्य निष्ठायां किलेदं रूपम्(), एतत्तु नोपपद्यते; दृहेः सेट्त्वात्? तस्येटा भवितव्यम्()। अथापि कथञ्चिन्न स्यात्(), एवमपि "दादेर्धातोर्घः" [८।२।३२] इति घत्वेन भवितव्यम्()। स्थूलबलवद्विवक्षायां "दृढः स्थूलबलयोः" (७।२।२०) इति निर्देशादुभयं न भविष्यतीति चेत्()? दीर्घत्वमप्यत एव तर्हि न स्यात्()। केचिदत्रानित्यत्वादागमशासनस्याभावमिटो वर्णयन्ति। "वा द्रुह" (८।२।३३) इत्यादौ सूत्रे "वा" इति योगविभागात्? पक्षे घत्वस्याभावः। "आवृढम्()" इति। वृहू उद्यमनस् (धा।पा।१३४७)॥

बाल-मनोरमा

ढ्रलोपे पूर्वस्य दीर्घोऽणः १७३, ६।३।११०

ढ्रलोपे। ढच् रेफश्च ढ्रौ, तौ लोपयतीति-ढ्रलोपः। ण्यन्तात्कर्मण्युपपदे अण्, उपपदसमासः। ढलोपनिमित्तं रेफलोपनिमित्तञ्च विवक्षितम्। तच्च ढकाररेफात्मकमेव, ढो ढे लोपः, रो रीति तयोरेव ढ्रलोपनिमित्तत्वात्। तथाच ढलोपनिमित्ते ढकारे, रेफलोपनिमित्ते रेफे च परतः पूर्वस्याणो दीर्घ इत्यर्थः फलति। तदाह--ढरेफाविति। "ढलोपे रेफलोपे च पूर्वस्याणो दीर्घ" इति तु न व्याख्यातं, तथा सति चयनीयमित्यनीयप्रत्ययान्ते "तस्य लोप" इति रेफलोपे यकारादकारस्य, चकार चचारेत्यादौ अभ्यासे अकारस्य च हलादिशेषेण रेफलोपे दीर्घापत्तेः। पुना रमत इति। "पुनर्-रमते" इति स्थिते "रो री" ति रेफलोपः। तन्निमित्ते रेफे परे नकारादकारस्य दीर्घः। हरी रम्य इति। हरिस्--रम्य इति स्थिते रुत्वे रेफलोपे चाऽनेन दीर्घः। शम्भू राजत इति। शम्बुस्-राजते इति स्थिते रुत्वे रेफलोपेऽनेन दीर्घः। त्रयाणामुदाहरणात्पूर्वेणैव णकारेणात्राण् गृह्यत इति सूचितम्।

तृढो वृढ इति। अत्र ऋकारस्य दीर्घनिवृत्त्यर्थमण्ग्रहणम्। ऋकारश्चात्र अण्ग्रहणे न गृह्यते। पूर्वेणैव णकारेण प्रत्याहाराश्रयणात्, अन्यथा दीर्घश्रुत्या "अच" इत्युपस्थितौ किमण्ग्रहणेनेति भावः। ननु तृढो वृढ इत्यत्र ढ्रलोपस्यैवाऽभावाद्दीर्घाऽप्रसक्तेरण्ग्रहणं व्यर्थमित्याशङ्क्य तत्र ढलोपं दर्शयितुमाह--तृहू हिंसायाम्। वृहू उद्यमन इति। आभ्यां क्तप्रत्यये "हो ढः" इति ढत्वे "झषस्तथोः" इति तकारस्य धत्वे, तस्य ष्टुत्वेन ढकारे, ढो ढे लोप इति पूर्वस्य ढकारस्य लोपे, तृढो वृढ इति रूपे। अत्र ढलोपनिमित्ते ढकारे परे ऋकारस्य दीर्घनिवृत्त्यर्थमण्ग्रहणमिति भावः। ननु "तस्मिन्निति निर्दिष्टे पूर्वस्य"त्येव सिद्धौ पूर्वस्येति किमर्थमित्यत आह--पूर्वग्रहणमिति। "ढ्रलोप" इति सूत्रस्य "अलुगुत्तरपदे" इत्युत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव ढ्रलोपनिभित्तभूतढरेफयोः परतः पूर्वपदस्थत्वाभावाच्च। इष्यते च लीढो गुढ इति। अतः पूर्वग्रहणम्। कृते तु पूर्वग्रहणे तत्सामथ्र्यादनुत्तरपदस्थयोरपि ढरेफयोः परतोऽपूर्वपदस्थस्यापि पूर्वस्या।ञणो दीर्घः सिध्यतीत्यर्थः। तथा उत्तरपद इत्यस्यानुवृत्तौ अजर्घा इत्यत्रापि दीर्घो न स्यात्। "गृधु अभिकाङ्क्षायाम्"। यङ्लुक्, द्वित्वम्, हलादिः शेषः, अब्यासस्य रुक्, कुहोश्चुः, जश्त्वम् , लङ् सिप्, शप्, लुक्, लघूपधगुणः, रपरत्वम्, इतश्चेति इकारलोपः, हल्ङ्यादिना सुलोपः, जर् गर् ध् इति स्थिते "एकाचो बश" इति गकारस्य भष्भावो घकारः, जश्त्वं दकारः, दश्चेति रुः, अडागमः, अजर्घर् र् इति स्थिते रो रीति रेफलोपः, ढ्रलोप इति दीर्घः, विसर्गः। अजर्घा इति रूपम्। अत्रापि रेफलोपनिमित्तरेफस्य उत्तरपदस्थत्वाभावात्तस्मिन् परतोऽकारस्य दीर्घो न स्यात्। अत उत्तरपदानुवृत्तिनिवृत्तये पूर्वग्रहणम्। यद्यपि ढ्रलोपे इत्यत्र ढलोपनिमित्तढकारविषये उत्तरपद इत्यस्यानुवृत्तिसंभवादेव न सम्भवति, तथापि "अजर्घा" इत्यत्र रेफलोपनिमित्तरेफविषये उत्तरपद इत्यस्यानुवृत्तिनिवृत्तये पूर्वग्रहणम्। तदनुवृत्तौ हि नीरक्तम्, दूरक्तमित्यादावेव स्यात्। "अजर्घा" इत्यत्र न स्यात्। पुना रमत इत्यादावसमासे।ञपि न स्यात्। उत्तरपदशब्दस्य समासचरमावयव एव रूढत्वादित्यलम्। ननु मनोरथ इत्यत्र मनस्-रथ इति स्थिते, सस्य रुत्वे, तस्य रेफस्य "हशि चे"त्युत्वं रो री"ति लोपश्चेत्युभयं प्रसक्तं, तत्र कतरद्बाध्यमित्यत्र निर्धारयति--मनस् रथ इत्यत्रेति। मनस्-रथैत्यत्र रुत्वे कृते, हशि चेत्युत्वे, रो रीति रेफलोपे च प्राप्ते उत्वमेवेत्यन्वयः।

तत्त्व-बोधिनी

ढ्रलोपे पूर्वस्य दीर्घोऽणः १४३, ६।३।११०

ढ्रलोपे। "रे"त्यकार उच्चारणार्थः। ढश्च रश्च द्रौ, तौ लोपयतीति ढ्रलोपः। णिजन्तात्कर्मण्यण्युपपदसमासः। तृढो वृढ इति। ऊदित्त्वेन वेट्()क्त्वाद्यस्य विभाषेति निष्ठायां नेट्। ढत्वधत्वष्टुत्वढलोपाः। प्राचा तु "दृढ" इति प्रत्युदाह्मतं, तदसत्, तत्र ढलोपस्यैवाऽभावात्। "दृढः स्थूलबलयो"रिति घत्वेन बाधात्। न चेडभावो ढत्वं नलोपश्च निपात्यतां, धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्, तथा सति "परिद्रढय्ये"त्यत्र "ल्यपि लघुपूर्वा"दिति णेरयादेशो न स्यात्। [तथा] "पारिवृढी कन्ये"त्यत्र "इतो मनुष्यजाते"रिति ङीषं बाधित्वा "अणित्रो"रिति ष्यङ् स्यात्, ढलोपस्याऽसिद्धत्वेन गुरूपोत्तमत्वादित्याकरे स्थितम्। ननु "परिद्रढय्ये"त्यत्र ल्यबादेशः कथं भवेद्यावता परिदृढमाचण्टे इति णिचि कृते क्त्वाप्रत्यये च क्त्वान्त एव परेरन्तर्भावात्समासाऽभाव इति चेदत्र कैयटः-सङ्ग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात्परिशब्दं पृथक्कृत्य दृढशब्दादेव णिच्क्रियते। णिजन्तस्य धातुत्वात्क्त्वाप्रत्यये कृते परेः क्त्वान्तेन कृदन्तेन समास इति सिद्धो ल्यबादेशः। णाविष्ठवद्भावाद्रभाव इति। ननु "पूर्वस्ये"ति व्यर्थं, सप्तमीनिर्देशादेव तल्लाभादत आह-पूर्वग्रहणमित्यादि। "ढ्रलोपे पूर्वस्ये"ति सूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव ढरेफयोः परतो दीर्घः स्यान्न तु "लीढः" "अजर्घाः" इत्यत्रेति भावः। यद्यप्यसंभवादेवानुत्तरपदस्थे ढकारे दीर्घो भनेत्तथाप्यजर्घा इत्यत्र दीर्घो न स्यादिति ज्ञेयम्। वस्तुतस्तूत्तरपदस्य समासचरमावयवे रूढत्वात्पुना रमत इत्यादावपि न स्यात्, किंतु "नीरक्तं" "दूरक्त"मित्यादावेव स्यादिति तत्त्वम्। लीढ इति। "लिह आस्वादने" क्तः। ढत्वधत्वष्टुत्वढलोपाः। इह ढलोपं प्रति ष्टुत्वं नासिद्धं, ढकारे परतो लोपविधिसामर्थ्यात्। अतएव "ढो ढे लोपः" इत्यस्य पदाधिकारस्थत्वेऽप्यपदान्तस्य ढस्य लोपो भवति। अजर्घा इति। "गृधु अभिकाङ्क्षायां" यङ्लुकि द्वित्वे अभ्यासस्य रुक्। लङः सिपि शब्लुकि सिप ईडभावपक्षे लघूपधगुणो रपरः। "इतश्चे"तीकारलोपे हल्ङ्यादिलोपः। भष्भावः। जश्त्वं। "दश्चे"ति रुत्वपक्षे "अजर्घर् र्" इति स्थिते "रोरी"ति रेफलोपेऽनेन दीर्घः। अत्रेयं सुगमा व्याख्या-ढ्रलोपे पूर्वस्य दीर्घोऽणः। लीढः। नीरक्तं। दूरक्तम्। अणः किम्?। तृढः वृढः। पूर्वग्रहणमनुत्तरपदेऽप#इपूर्वमात्रस्य दीर्घार्थम्। अजर्घाः। पुना रमते। हरी रम्यः। शम्भू राजते" इति।

---

सूत्रम्

काशिका-वृत्तिः

सहिवहोरोदवर्णस्य ६।३।११२

सहि वहि इत्येतयोः अवर्णस्य ओकार आदेशो भवति ढ्रलोपे। सोढा। सोढुम्। सोढव्यम्। वोढा। वोढुम्। वोढव्यम्। अवर्णस्य इति किम्? ऊढः। ऊढवान्। वर्णग्रहणं किम्? कृतायाम् अपि वृद्धौ यथा स्यात्। उदवोढाम्। उदवोढम्। तादपि परः तपरः, तपरत्वादाकारस्य ग्रहणं न स्यात्।

लघु-सिद्धान्त-कौमुदी

सहिवहोरोदवर्णस्य ५५३, ६।३।१११

अनयोरवर्णस्य ओत्स्याड्ढलोपे। उवोढ। ऊहे। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म। अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाथाम्। अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि॥

लघु-सिद्धान्त-कौमुदी

इति भ्वादयः १ ५५३, ६।३।१११

लघु-सिद्धान्त-कौमुदी
अथादादयः ५५३, ६।३।१११

लघु-सिद्धान्त-कौमुदी
अद भक्षणे १ ५५३, ६।३।१११

न्यासः
सहिवहोरोदवर्णस्य। , ६।३।१११

"ऊढः, ऊढवान्()" इति। यजादित्वात्? सम्प्रसारणम्()। "सम्प्रसारणाच्च" ६।१।१०४ इति परपर्वत्वम्(), दीर्घत्वं च। तत्रेदानीमसत्यवर्णग्रहणे ऊकारस्याप्योत्वं स्यात्()। ननु च सम्परसारणादिभ्यः परत्वादोत्त्वेन भवितव्यम्(), तथा च भाव्ये "उभयोर्नित्ययोः परत्वादोत्त्वेन भवितव्यम्(), आत्वे कृते सम्प्रसारणम्(), सम्प्रसारणे कृते सम्परसारणपरपूर्वत्वम्(), कृतकार्यत्वात्? पुनरोत्त्वं न भविष्यति" इति। तस्माद्भवितव्यमेवौत्त्वेन, तस्मिन्? सति पश्चा सम्प्रसारणादिभिः। न चैवं किञ्चिदनिष्टमापद्यत इति नार्थो वर्णग्रहणेन। एवं तह्र्रवर्णग्रहणं कुर्वन्नेतज्ज्ञापयति--क्वचित्? "सम्प्रसारणं तदाश्रयञ्च कार्यं बलीयो भवतीति। तेन यदुक्तम्()--"सम्प्रसारणं सम्प्रसारणाश्रयञ्च कार्यं बलीयो भवति" (पु।प।वृ।१०३) इति तदुपपन्नं भवति। "वर्णग्रहणं किम्()" इति। "ओदस्य" इतावत्यपि सति सोढा, सोढुमित्यादि सिध्यत्येवेत्यभिप्रायः। "कृतायामपि" इत्यादि। उत्पूर्वाद्वहेर्लृङि च्लिः, "च्लेः सिच्()" ३।१।४४तसस्ताम्(), थसस्तम्? अडागमः, ढत्वादेरसिद्धत्वात्? ततः पूर्वम्? "वदव्रज" ७।२।३ इत्यादिना वृद्धिः, ततो ढत्वादि। अथेदानीमसति वर्णग्रहणे मात्रिकस्याकारस्योच्यमानमोत्वं दीर्घस्य न स्यात्(), वर्णग्रहणाद्वर्णमात्रस्य भवतीति सिद्धम्()--उदवोढाम्(), उदवोढमिति? ननु च "अणुदित्? सवर्णस्य चाप्रत्ययः" १।१।६८ इत्यकारो गृह्रमाण आकारमपि ग्राहयिष्यति, तत्? किं वर्णग्रहणेन? इत्यत आह--"तादपि परः" इत्यादि। "तपरस्तत्कालस्य" १।१।६९ इत्यत्र तादपि परस्तपर इत्ययमपि समास आश्रितः खट्वैडका, खट्वैतिकायनः--इत्येवमादिषु त्रिमात्रिके चतुर्मात्रिके वत्र्तमानस्यैकारस्य वृद्धिसंज्ञा मा भूदित्येवमर्थम्()। तत्रासति वर्णग्रहणेऽकरस्य तपरत्वादाकारो न गृह्येत्? ततश्च तस्योत्वं न स्यात्()। तस्मादवर्णमात्रस्य यथा स्यादित्येवमर्थं वर्णग्रहणं कत्र्तवयम्()। तादपि परस्तपरः--इत्यस्य च समासस्यैतदेव वर्णग्रहणं ज्ञापकं वेदितव्यम्()॥

बाल-मनोरमा
सहिवहोरोदवर्णस्य १९४, ६।३।१११

सहिवहोः। ढलोपे इति। "ढ्रलोप" इत्यतस्तदनुवृत्तेरिति भावः। "रलोप" इति तु नानुवर्तते, असंभवात्। तथा चसकारादकारस्य ओत्वे सोढेति रूपम्। "परिसोढे"त्यत्र "परिनिविभ्य" इति षत्वे प्राप्ते--

तत्त्व-बोधिनी
सहिवहोरोदवर्णस्य १६७, ६।३।१११

इह रेफलोपस्याऽसंभवात् "ढ्रलोपे पूर्वस्ये"त्यतो "ढलोप" एवानुवर्तते। तदाह-- ढलोप इति। ढलोपे किम्?। सहते। वहते।

---

सूत्रम्

काशिका-वृत्तिः

साढ्यै साढ्वा साढ इति निगमे ६।३।११३

साध्यै साढ्वा साढा इति निगमे निपात्यनते। साढ्यै समन्तात् साढ्वा शत्रून्। सहेः क्त्वाप्रत्यये ओत्वाभावः। पक्षे क्त्वाप्रत्ययस्य ध्यैभावः। साढा इति तृचि रूपमेतत्। निगमे इति किम्? सोढ्वा, सोढा इति भाषायाम्।

न्यासः

साढ�ऐ सढ्वा साढेति निगमे। , ६।३।११२

साढ्वेत्यादौ ओत्त्वाभावो निपात्यते। दीर्घस्तु "ढ्रलोपे" ६।३।११० इत्यादिनैव सिद्धः॥

---

सूत्रम्

काशिका-वृत्तिः

संहितायाम् ६।३।११४

संहितायाम् इत्ययम् अधिकारः। यदिति ऊर्ध्वम् अनुक्रमिष्यामः संहितायाम् इत्येवं तद् वेदितव्यम्। वक्ष्यति द्व्यचोऽतस् तिङः ६।३।१३४ इति। विद्मा हि त्वा गोपतिं शूर गोनाम्। संहितायाम् इति किम्? विद्म, हि, त्वा, गोपतिं, शूर, गोनाम्।

न्यासः

संहितायाम्?। , ६।३।११३

"उत्तरपदे" ६।३।१ इति वत्र्तते उत्तरपदं च समासे भवति, तत्र चान्तरेणापि वचनं नित्यमेव संहितया भवितव्यम्(), तस्मादुत्तरपदे परतो वक्ष्यमाणानां यत्? कार्यं न तदर्थताधिकारस्योपपद्यत इति यदनुत्तरपदे कार्यं तदर्थमेवायमधिकारः। तेन यैर्योगैरुत्तरपदे कार्यं विधीयते तानुल्लङ्घ्य तेन योगेनानुत्तरपदे कार्यं विधीयते तत्रास्योपयोगं दर्शयन्नाह--"वक्ष्यति द्व्यचोऽतस्तिङः" इत्यादि। "विद्मा हि त्वा" इत्यादि। विदेर्लोटि मसः "स उत्तमस्य" ३।४।९८ इति सकारलोपः, अदादित्वाच्छापो लुक्()॥

बाल-मनोरमा

संहितायाम् १०२०, ६।३।११३

संहितायाम्। सुगमम्।

तत्त्व-बोधिनी

संहितायाम् ८६१, ६।३।११३

संहितायाम्। तेन "द्विगुणाकर्णः"इत्यादाववग्रहे दीर्घो न भवतीति सूत्राशयमुत्प्रेक्षयन्ति। अधिकारोऽयमिति। तेन "विद्मा हि त्वा"इत्यादौ पदकाले "व्यचोऽतस्तिङः"इति दीर्घो नेत्यादिप्रयोजनान्यीह्यानीति।

---

सूत्रम्

काशिका-वृत्तिः

कर्णे लक्षणस्य अविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ६।३।११५

कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्ट अष्टन् पञ्चन् मणि भिन्न छिन्न छिद्र स्रुव स्वस्तिक इत्येतान् वर्जयित्वा। दात्राकर्णः। द्विगुणाकर्णः। त्रिगुणाकर्णः। द्व्यङ्गुलाकर्णः। अङ्गुलाकर्णः। यत् पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं दात्राकारादि क्रियते तदिह लक्षणं गृह्यते। लक्षणस्य इति किम्? शोभनकर्णः। अविष्टादीनाम् इति किम्? विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः।

न्यासः

कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्ररुआवस्वस्तिकस्य। , ६।३।११४

लक्ष्यतेऽनेन स्वामिविशेषस्य सम्बन्ध इति लक्षणम्()=चिह्नम्()। "दात्राकर्णः" इति। दात्रमिव दात्रम्(), सादृश्यात्तदाकारं चिह्नमुच्यते। दात्रं कर्णे यस्य स दात्राकर्णः। एवमुत्तरत्रापि बहुव्रीहिरेव वेदितव्यः। द्वौ गुणौ यस्य स द्विगुणः। तदाकरमपि चिह्नं द्विगुणम्()। गुणशब्दोऽयं बन्धनवचनः। द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्(), "तत्पुरुषस्याङ्गुलेः" [५।४।८६](#) इत्यादिना च समासान्तः, द्व्यङ्गुलाकारमपि चिह्नं द्व्यङ्गुलम्()। "तदिह लक्षणं गृह्नते" इति। कुत एतत्()? लक्षणग्रहणाद्यदिह सामान्येन येन केनचिल्लक्ष्यते तललक्षणं गृह्नेत चिह्नस्येत्येवं ब्राऊयात्(), लघु ह्येवं सूत्रं भवति। तस्माच्चिह्नग्रहणे कत्र्तवये यल्लक्षणग्रहणं कृतं तेन लक्षणविशेषोऽत्र ग्राह्नः, न तु लक्षणमात्रमित्यस्यार्थस्य प्रतिपादनं कृतमिति लक्ष्यते। तथा चोक्तम्()--इङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेन वेहा चार्याणामभिप्राया लक्षन्त इति। ननु च लक्षणग्रहणेन लक्षणविशेषोऽत्राभिमतः, न तु लक्षणमात्रमित्येतावन्मात्रं गम्यते, स तु विशेषो न वृत्तिकारेणोपदर्शितः कुतोऽवसेयः? आचार्याणं स्वीकरणात्()। "शोभनकर्णः" इति। यद्यप्यनेनापि लक्ष्यते, न त्व#एवंविधस्य लक्षणस्येह ग्रहणम्()। नापि शोभनत्वं लोके लक्षणत्वेन प्रतीयत इति भवत्येतत्प्रत्युदाहरणम्()॥

बाल-मनोरमा

कर्णौ लक्षणस्याऽऽविष्टाऽष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्नुवस्वस्तिकस्य १०२१, ६।३।११४

कर्णौ लक्षणस्य। दीर्घविधिः, "ढ्रलोपे" इत्यतस्तदनुवृत्तेः। यत्पशूनां स्वामिविशेषसंबन्धज्ञानार्थं दात्रशूलचक्राद्याकारचिन्हं क्रियते तल्लक्षणशब्देन विवक्षितम्। तेन "लम्बकर्ण" इत्यादौ नातिप्रसङ्गः। द्विगुणाकर्ण इति। द्विगुणरेखौ कर्णौ यस्येति विग्रहः। "अष्टकर्ण" इत्यादेरष्टसङ्ख्यालिपिचिह्नकर्ण इति वा।

---

सूत्रम्

काशिका-वृत्तिः

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६

नहि वृति वृषि व्यधि रुचि सहि तनि इत्येतेषु क्विप्रत्ययान्तेषु उत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये। नहि उपानत्। परीणत्। वृति नीवृत्। उपावृत्। वृषि प्रावृट्। उपावृट्। व्याधि मर्मावित्। हृदयावित्। श्वावित्। रुचि नीरुक्। अभिरुक्। सहि ऋतीषट्। तनि तरीतत्। गमः क्वौ [६।४।४०](#) इति गमदीनम् इष्यते। ततः तनोतेरप्यनुनासिकलोपः। क्वौ इति किम्? परिणहनम्।

लघु-सिद्धान्त-कौमुदी

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ३६२, ६।३।११५

क्विबन्तेषु पूर्वपदस्य दीर्घः। उपानत्, उपानद्। उपानहौ। उपानत्सु॥ क्विन्नन्तत्वात् कुत्वेन घः। उष्णिक्, उष्णिग्। उष्णिहौ। उष्णिग्भ्याम्॥ द्यौः। दिवौ। दिवः। द्युभ्याम्॥ गीः। गिरौ। गिरः॥ एवं पूः॥ चतस्रः। चतसृणाम्॥ का। के। काः।

सर्वावत्॥

न्यासः

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ।, ६।३।११५

"णह बन्धने" (धा।पा।११६६)। उपनह्यत इति "उपानत्()" सम्पदादित्वात्? क्विप्? "नहो धः" ८।२।३४ इति धत्वम्(), ततो जश्त्वम्(), चर्त्वञ्च। परिणह्यतीति "परिणत्()"। "#उपसर्गादसमासे" ८।४।१४ इत्यादिना णत्वम्()। निवर्त्तत इति "नीवृत्()"। "अन्येभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्()। एवमुत्तरत्रापि क्विबेव वेदितव्यः। "वृषु सेचने" (धा।पा।७०६) प्रवर्षतीति "प्रावृट्()"। षकारस्य जश्त्वम्()--डकारः, तस्य चर्त्वेटकारः। "व्यध ताडने" (धा।पा।११८१), मर्माणि विध्यतीति "मर्मावित्()" ग्रह्यादिसूत्रेण ६।१।१६ सम्प्रसारणम्()। "रुच दीप्तौ" ["रुच दीप्तावभिप्रीतौ च"--धा।पा।] (धा।पा।७४५), निरोचणं "नीरुक्()"। "चोः कुः" ८।२।३० इति कुत्वम्()। ऋतिं सहत इति "ऋतीषट्()"। "सहेः पृतनर्त्ताभ्याञ्ज" ८।३।१०९ इत्यत्र "सहेः" इति योगविभागादनुक्तसमुच्चयार्थत्वाद्वा चकारस्य षत्वम्()। परितनोतीति "परीतत्()"। अनुनासिकलोपे कृते तुक्()। केन पुनरत्रानुनासिकलोपः? इत्याह--"गमः क्वौ" इत्यादि। गतिकारकयोरेवेष्यत इति। तदर्थम्? "विभाषा पुरुषे" ६।३।१०५ इत्यतो विभाषाग्रहणनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञेया॥

बाल-मनोरमा

नहिवृतिवृषिब्यधिरुचिसहितनिषु क्वौ १०२२, ६।३।११५

नहिवृति। उपानदिति। "णह बन्धने" "णो नः" सम्पदादित्वात्कर्मणि क्विप्। उपनह्यते इत्युपानत्। पूर्वपदस्य दीर्घः। "नहो धः"। निवर्तते इति नीवृत्। "वृतु वर्तने" कर्तरि क्विप्, दीर्घः। प्रवर्षतीति प्रावृट्। "वृषु सेचने"क्विप्। दीर्घः। "नहो धः"। निवर्तते इति नीवृत्। "वृतु वर्तने" कर्तरि क्विप्, दीर्घः। प्रवर्षतीति प्रावृट्। "वृषु सेचने" क्विप्। दीर्घः। मर्माणि विध्यतदीति मर्मावित्। क्विप्। "ग्रहिज्ये"ति संप्रसारणम्। उपपदसमासः, सुब्लुक्, नलोपः, दीर्घः। निरोचते इचि नीरुक्, "रुच दीप्तौ"क्विप्, दीर्घः। ऋति सहते इति ऋतीषट्। "षह मर्षणे"क्विप्। दीर्घः, "हो ढः", "सात्पदाद्योः" इति षत्वनिषेधे प्राप्ते "पूर्वपदा"दिति षत्वमिति हरदत्तः। सुषामादित्वादित्यपरे। परितनोतीति परीतत्। "तनु विस्तारे" क्विप्, "गमः क्वौ" इत्यत्र गमादीनामित्युपसङ्ख्यानादनुनासिकलोपः। तुक्, दीर्घः। अथ पटुरुक्, तिग्मरुगित्यादौ दीर्घमाशङ्क्याह विभाषेति। पटुरुगिति। पटु रोचत इति विग्रहः। उभयत्र कर्तरि क्विप्। पूर्वपदयोर्गतिकारकान्यतरत्वाऽभावान्न दीर्घः। व्यवस्थिविभाषाश्रयणे व्याख्यानमेव शरणम्।

तत्त्व-बोधिनी

नहिवृतिवृषिब्यधिरुचिसाहितनिषु क्वौ ८६२, ६।३।११५

नहिवृति। "णह बन्धने", "वृतु वर्तने","वृषु सेचने", "व्यध ताडने", "रुच दीप्तौ", "षह मर्षणे", "तनुविस्तारे"। क्विबन्तोष्विति। "उत्तरपदेषु"इति शेषः। तेन "दिवसेषु रुक्" इत्यादौ नातिप्रसङ्गः। उपानदिति। संपदादित्वात्कर्मणि क्विप्। निवर्तते इति निवृत्। प्रवर्षति इति प्रावृट्। मर्माणि विध्यति इति मर्मावित्। व्यधेः "ग्रहिज्ये"ति संप्रसारणम्। निरोचते इति नीरुक्। ऋतिं सहते ऋतीषट्। "पूर्वपदा"दिति षत्वमिति हरदत्तः। "सहेः पृतनर्तीभ्यां चे"त्यत्र "सहे"रिति योगविभागाच्चकारस्यानुक्तसमुच्चयाद्वेत्यन्ये। सुषामादेराकृतिगणत्वादित्यपरे। परितनोति इति परीतत्। "गमः क्वौ"इत्यत्र "गमादीनामिति वाच्य"मित्युक्तेर्नलोपः।

---

सूत्रम्

काशिका-वृत्तिः

वनगिर्योः सञ्ज्ञायां कोटरकिंशुलुकादीनाम् ६।३।११७

वन गिरि इत्येतयोरुत्तरपदयोर् यथासङ्ख्यं कोटरदीनाम् किंशुलुकादीनां च दीर्घो भवति सञ्ज्ञायां विषये। वने कोटरादीनाम् कोटरवणम्। मिश्रकावणम्। सिघ्रकावणम्। सारिकावणम्। गिरौ किंशुलुकादीनाम् किंशुलुकागिरिः। अञ्जनागिरिः। कोटरकिंशुलुकादीनाम् इति किम्? असिपत्रवनम्। कृष्णगिरिः। कोटर। मिश्रक। पुरक। सिघ्रक। सारिक। कोटरादिः। किंशुलुक। शाल्वक। अञ्जन। भञ्जन। लोहित। कुक्कुट्। किंशुलुकादिः।

न्यासः

वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्?। , ६।३।११६

"कोटरावणम्()" इति। षष्ठीसमासः। "वनं पुरुगा" ८।४।४ इत्यादिना णत्वम्()॥

बाल-मनोरमा

वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् १०२३, ६।३।११६

वनगिर्योः। वनगिर्योरिति सप्तमी। कोटरश्च किंशुलुकश्च कोटरकिशुलुकौ, तावादी येषामिति विग्रहः। कोटरादीनांकिंशुलुकादीनां चेति लभ्यते। यथासङ्ख्यमन्वयः। तदाह--कोटरादीनामित्यादिना। "पुरगावण"मित्युदाहरणानि वक्ष्यन्ते।

---

सूत्रम्

काशिका-वृत्तिः

वले ६।३।११८

वले परतः पूर्वस्य दीर्घः भवति। आसुतीवलः। कृषीवलः। दन्तावलः। रजःकृष्यासुतिपर्षदो वलच् ५।२।१११ इति वलच् प्रत्ययो गृह्यते, न प्रातिपदिकम्। अनुत्साहभ्रातृपितृणाम् इत्येव। उत्साहवलः। भ्रातृवलः। पितृवलः।

न्यासः

वले। , ६।३।११७

"वलच्प्रत्ययो गृह्यते, न प्रातिपदिकम्()" इति। एतच्च वक्ष्यमाणस्येह बहुलग्रहणस्य सिंहावलोकितव्यायेनोपस्थानाल्लभ्यत इत्येके। अनन्तरं वक्ष्यमाणेन मतुपा स्ययेन साहचर्याच्चेत्पपरे॥

बाल-मनोरमा

वले १०२५, ६।३।११७

वसे। कृषीवल इति। कृषिरस्यास्तीति विग्रहे "रजःकृष्यासुती"त्यादिना वलच्।

तत्त्व-बोधिनी

वले ८६४, ६।३।११७

कृषीवल इति। "रजः कृष्यासुती"त्यादिना मत्वर्थे वलच्।

---

सूत्रम्

काशिका-वृत्तिः

मतौ बह्वचो ऽनजिरादीनाम् ६।३।११९

मतौ परतो बह्वचो ऽजिरादिवर्जितस्य दीर्घो भवति संज्ञायाम् विषये। उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। अमरावती। नद्यां मतुप् ४।२।८४ इति मतुप्प्रत्ययः। संज्ञायाम् ८।२।११ इति मतोर्वत्वम्। बह्वचः इति किम्? व्रीहिमती। अनजिरादीनाम् इति किम्? अजिरवती। खदिरवती। पुलिनवती। हंसकारण्डववती। चक्रवाकवती। संज्ञायाम् इत्येव, वलयवती।

न्यासः

मतौ बह्वचोऽनजिरादीनाम्?। , ६।३।११८

"व्रीहिमती" इत्यादौ पूर्ववन्मतुप्। "वलयवती" इत्यत्र तु "तदस्यास्त्यस्मिन्निति मतुप्()" ५।२।९३॥

बाल-मनोरमा

मतौ बह्वचोऽनजिरादीनाम् १०२६, ६।३।११८

मतौ। मतुप्प्रत्यये परे बह्वचो दीर्घः स्यात्संज्ञायां, न त्वजिरादीनामित्यर्थः। अमरावतीति। इन्द्रनगर्याः संज्ञेयम्। अमरा अस्यां सन्तीति विग्रहः। "मादुपधायाश्चे"ति, "संज्ञाया"मिति वा मस्य वः। अजिरवतीति। नदीविशेषस्य संज्ञेयम्। वलयवतीति। अनजिरादित्वेऽप्यसंज्ञात्वान्न दीर्घ इति भावः।

तत्त्व-बोधिनी

मतौ बह्वचोऽनजिरादीनाम् ८६५, ६।३।११८

अमरावतीति। "मादुपधायाश्चे"ति, "संज्ञाया"मिति वा मतोर्मस्य वः। घञ्मात्रस्योत्तरपदत्वाऽसंभवादाह--

---

सूत्रम्

काशिका-वृत्तिः

शरादीनाम् च ६।३।१२०

शरादीनां च मतौ दीर्घो भवति संज्ञायां विषये। शरावती। वंशावती। शर। वंश। धूम। अहि। कपि। मणि। मुनि। शुचि। हनु। शरादिः। संज्ञायाम् ८।२।११ इति मतोर्वत्वम्। यवादित्वात् व्रीह्यादिभ्यो न भवति।

न्यासः

शरादीनां च। , ६।३।११९

अबह्वर्थोऽयमारम्भः। "शरावती" इति। "नद्यां मतुप्()" ४।२।८४ इति मतुप्()॥

बाल-मनोरमा

शरादीनां च १०२७, ६।३।११९

शरादीनां च। " मतौ दीर्घः संज्ञाया"मिति शेषः। अबह्वच्कत्वात्पूर्वेण न प्राप्तिः। शरावतीति। शरा अस्यां सन्तीति विग्रहः। नदीविशेषस्य नाम।

---

सूत्रम्

काशिका-वृत्तिः

इको वहे ऽपीलोः ६।३।१२१

इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वहे उत्तरपदे दीर्घो भवति। ऋषीवहम्। कपीवहम्। मुनीवहम्। इकः इति किम्? पिण्डवहम्। अपीलोः इति किम्? पीलुवहम्। अपील्वादीनाम् इति वक्तव्यम्। इह मा भूत्, चारुवहम्।

न्यासः

इको वहेऽपीलोः। , ६।३।१२०

"ऋषीवहः" ["ऋषीवहम्()"--काशिका] इति। षष्ठीसमासः। वहशब्दः पचाद्यजन्तः। "अपील्वादीनाम्()" इत्यादि। यदेतदिको दीर्घविधानं तत्? पील्वादीनां न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रैदं व्याख्यानम्()--इहापि तदेव बहुलग्रहणं पूर्ववदुपतिष्ठते, तेन पीलुशब्दादन्येषामपि केषाञ्चिद्दीर्घत्वं न भविष्यतीति॥

बाल-मनोरमा

इको वहेऽपीलोः १०२८, ६।३।१२०

इको वहेऽपीलोः। "अपीलो"रिति च्छेदः। इगन्तस्येति। "पूर्वपदस्ये"ति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गस्य घञ्यमनुष्ये बहुलम् ६।३।१२२

उपसर्गस्य घञन्ते उत्तरपदे अमनुष्ये ऽभिधेये बहुलं दीर्घो भवति। वीक्लेदः। वीमार्गः। अपामार्गः। न च भवति। प्रसेवः। प्रसारः। सादकारयोः कृत्रिमे दीर्घो भवति। प्रासादः। प्राकारः। कृत्रिमे इति किम्? प्रसादः। प्रकारः। वेशादिषु विभाषा दीर्घो भवति। प्रतिवेशः, प्रतीवेशः। प्रतिरोधः, प्रतीरोधः। अमनुष्ये इति किम्? निषादो मनुष्यः।

न्यासः

उपसर्गस्य घञ्यमनुष्ये बहुलम्?। , ६।३।१२१

उपसर्गात्? केवलं घञ्प्रत्ययो न सम्भवति, अतो घञन्त उत्तरपदे कार्यं वज्ञायत इत्याह--"घञन्त उत्तरपदे" इत्यादि। "वीक्लेदः" इति। "क्लिद आद्रीभावे" (धा।पा।१२४२), ["क्लिदू"--धा।पा।] "अकर्तरि च कारके" ३।३।१९ इत्यादिना घञ्()। "वीमार्गः" इति। "मृजू" शूद्धौ" (धा।पा।१०६६), "मृजेर्वृद्धिः" ७।२।११४, "चजोः कु घिण्यतोः" ७।३।५२ इति कुत्वम्()। "प्रसेवः" इति। "षिवु तन्तुसन्ताने" (धा।पा।११०८)। "कृत्रिमम्()" इति। करणेन निर्वृत्तं कृत्रिमम्()। पुरुषव्यापारादिभिर्निर्वृत्तमित्यर्थः। "निषादः" इति। "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।८५४), निषीदत्यस्मिन्? पापमिति निषादः। "हलश्च" ३।३।१२१ इति घञ्()॥

बाल-मनोरमा

उपसर्गस्य घञ्यमनुष्ये बहुलम् १०२९, ६।३।१२१

उपसर्गस्य। परीपाक इति। पचेर्भावे घञ्, उपधावृद्धिः। "चजोः कु घिण्ण्यतो"रिति कुत्वम्। निषाद इति। पुलिन्दो नाम मनुष्यजातिविशेषः। निषीदत्यस्मिन् पापमिति निषादः। "हलश्चे"त्यधिकरणे घञ्। दौवारिके प्रतीहारशब्दे दीर्घस्त्वप्रामाणिकः। यद्वा प्रतीहारो द्वारम्, तत्स्थत्वान्मनुष्ये गौणः।

तत्त्व-बोधिनी

उसर्गस्य घञ्यमनुष्ये बहुलम् ८६६, ६।३।१२१

घञन्त इति। निषाद इति। पुलिन्दो मनुष्यजातिः। "निषीदत्यस्मिन्पाप"मिति निषादः। "हलश्चे"त्याधिकरणे घञ्। कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेत्()। अत्राहुः--प्रतीहारो द्वारम्। तास्थ्यात्ताच्छब्द्यमिति।

---

सूत्रम्

काशिका-वृत्तिः

इकः काशे ६।३।१२३

इगन्तस्य उपसर्गस्य काशशब्दे उत्तरपदे दीर्घो भवति। नीकाशः। वीकाशः। अनूकाशः। पचाद्यच्प्रत्ययान्तो ऽयं काशशब्दः, न तु घञन्तः। इकः इति किम्? प्रकाशः।

न्यासः

इकः काशे। , ६।३।१२२

"नीकाशः" इति। "कासृ दीप्तौ" (धा।पा।६४७)। "पचाद्यजन्तोऽयं काशशब्दः न तु घञन्तः" इति। तत्र पूर्वेणैव सिद्धमित्यभिप्रायः। "पूर्वेणैव सिद्धे नियमार्थमेतत्()--इक एव काशे नान्यस्य" इति क्वचिद्? ग्रन्थः, एष तु नोपपद्यते; घञि पूर्वेण दीर्घविधानात्(), एतस्य च काशशब्दस्य पचाद्यजन्तत्वात्()। अथ बहुलग्रहणात्? पचाद्यजन्तेऽपि पूर्वेणैव सिद्धमित्युच्यते, तथा च तत एव बहुलग्रहणादिकोऽन्यस्यन भविष्यतीति न करत्तव्यमेवेदं सूत्रम्()। क्रियमाणञ्च पूर्वस्यैव प्रपञ्चार्थ द्रष्टव्यम्()॥

बाल-मनोरमा

इकः काशे १०३०, ६।३।१२२

इकः काशे। नीकाश इति। पचाद्यजन्तत्वात्पूर्वेण न प्राप्तिः।

---

सूत्रम्

काशिका-वृत्तिः

दस् ति ६।३।१२४

दा इत्येतस्य यः तकारादिरादेशः तस्मिन् परतः इगन्तस्य उपसर्गस्य दीर्घो भवति। नीत्तम्। वीत्तम्। परीत्तम्। अच उपसर्गात् तः ७।४।४७ इत्यन्तस्य यद्यपि तकारः क्रियते तथापि चर्त्वस्याश्रयात् सिद्धत्वम् इति तकारादिर् भवति। इकः इत्येव, प्रत्तम्। अवत्तम्। दः इति किम्? वितीर्णम्। नितीर्णम्। ति इति किम्? सुदत्तम्।

न्यासः

दस्ति। , ६।३।१२३

"दा" इत्येतस्य यस्तकारादिरादेशः" इति। एतेन स्थान्यादेशसम्बन्धे "दः" इत्येषा षष्ठीति विज्ञायते। "वीत्तम्()" इति। ददातेर्निष्ठायां रूपम्()। ननु चत्र तकारादिरादेशः परो न सम्भवत्येव, तथा हि--यस्तावत्? "अच उपसर्गात्तः" ७।४।४७ इति तकार सः "अलोन्त्यस्य" १।१।५१ इति वचनादन्त्यस्य क्रियते, स च वर्णान्तरो व्यवधानादनन्तरस्तकारः परो न सम्भवति; योऽपि "खरि च" ८।४।५४ इति दकारसय तकारो विधीयते, सोऽपिन सम्भवत्येव; दीर्घत्वे कत्र्तव्ये

चत्र्वस्यासिद्धत्वेनाविद्यमानत्वादित्यत आह--"अच उपसर्गात्तः" इत्यादि। आश्रयणमाश्रयः=अङ्गीकरणम्()। "दा" इत्यत्र यसतकारादिरादेशः, तस्मिन्? परत इगन्तस्योपसर्गस्य दीर्घो भवतीति ब्राउवता चत्र्वमाश्रितम्(), न ह्रन्यथा तकारादिरादेशः परः सम्भवति। तस्मात्? चत्र्वस्याश्रयणात्? सिद्धम्()। अतस्तकारादिरादेशो भवतीति। "नितीर्णम्()" इति। "तृ? प्लवनतरणयोः" (दा।पा।९६९) "ऋत इद्? धातोः" [७।१।१००] इतीत्वम्(), "हलि च" [८।२।७७] इति दीर्घः। "अट्कुप्वाङ्()" [८।४।२] इत्यादिना णत्वम्()। "सुदत्तम्()" इति। "दो दद्धोः" [७।४।४६] इत्यत्र-- "अवदत्तं विदत्तं च प्रादत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमिति चेष्यते"॥ त्यनयेष्ट()आ ददातेर्ददादेश-॥

बाल-मनोरमा

दस्ति ८८५, ६।३।१२३

दस्ति। "इकः काशे" इत्यत इक इति, "उपसर्गस्य घञ्यमनुष्ये" इत्यत उपसर्गस्येति , "ढ्रलोपे" इत्यतो दीर्घ इति चानुवर्तते। उत्तरपदे इत्यधिकृतं तीत्यनेन विशेष्यते। तदादिविधिः। द इति षष्ठी ति इत्यत्रान्वेति। तथा च दाधातोरादेशो यस्तकारस्तदादौ उत्तरपदे इति लभ्यते। तदाह-- इगन्तत्यादि। ननु नि दात त इति स्थिते "अच उपसर्गात्तः र" इति दकारादाकास्य तकारे दकारस्य "खरि चे"ति चर्त्वे प्रकृतसूत्रेण उपसर्गस्य दीर्घे नीत्त्मिति रूपं वक्ष्यति, तदयुक्तम्, दीर्घे कर्तव्ये चत्त्वस्याऽसिद्धत्वे दादेशे तकाराद्युत्तरपदत्वाऽभावादित्यत आह-- चत्त्वमाश्रयात्सिद्धमिति। दादेशतकारमाश्रित्य विधियमाने दीर्घे चर्त्वं नाऽसिद्धं, चत्र्वसिद्धं तकारमाश्रित्य विधिबलादित्यर्थ-। सूत्तमिति तु चिन्त्यम्, "गतिश्चे"ति सूत्रभाष्यवार्तिकयोः सुदत्तमित्यत्र "अच उपसर्गात्तः" इति तत्वे कर्तव्ये सोरुपसर्गत्वं नेति प्रपञ्चितम्। अथ धेङ्गापाधुतभ्यः क्ते आह-- घुमास्थेति। धीतमिति। "दधातेर्हिः" इत्यत्र श्लुविकरणग्रहणान्न हिभावः।

तत्त्व-बोधिनी

दस्ति ७२९, ६।३।१२३

दस्ति। "इकः काशे" इत्यत "इक" इति, "उपसर्गस्य घञी"त्यत उपसर्गस्येति, "ढ्रलोपे पूर्वस्ये"त्यतो दीर्घ इति चानुवर्तते। "अलुगुत्तरपदे" इत्यतोऽनुवृत्तस्योत्तरपदे इत्यस्य तीति विशेषणं। "यस्मिन्विधि"रिति तदादिविधिः, तदेतत्सकलमभिप्रेत्य व्याचष्टे-- इगन्तोपसर्गस्येत्यादिना। ननु चत्त्वस्याऽसिद्धत्वाद्दादेशतकारो नास्तीत्यत आह-- आश्रयात्सिद्धमिति। "अतो रो"रित्युत्वं प्रति रुत्ववदिति भावः। धीतमिति। "दधातेर्हि"रित्यत्र लुग्विकरणस्य निर्देशात् घेट् पान इति भ्वादेर्हिर्न भवति, नापि दत् "दो दद्धो"रिति द इत्युपादानादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अष्टनः संज्ञायाम् ६।३।१२५

अष्टनित्येतस्य उत्तरपदे संज्ञायां दीर्घो भवति। अष्टावक्रः। अष्टाबन्धुरः। अष्टापदम्। संज्ञायाम् इति किम्? अष्टपुत्रः। अष्टभार्यः।

न्यासः

अष्टनः संज्ञायाम्?। , ६।३।१२४

"अष्टावक्रः" इति। अष्टौ वक्राण्यस्येति बहुव्रीहिः॥ "अष्टाकपालम्()" इति। अष्टसु कपलेषु संस्कृतमिति "संस्कृतम्()" [४।४।३] इत्यण्(), तस्य "द्विगोर्लुगनपत्ये [४।१।८८] इति लुक्। "अष्टाहिरण्या" इति। बहुव्रीहिः। "पादस्य लोपे कृते" इति।

"पादस्य लोपोऽहस्त्यादिभ्यः" ५।४।१३८ इत्यनेन। "गविच युक्ते" इत्यादि। "वक्तव्यम्()" इति। अस्य व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--चकारोऽत्रक्रियते, सचानुक्तसमुच्चयार्थः। तेन गवि च युक्ते भाषायामप्यष्टनो दीर्घो भवति॥

बाल-मनोरमा

अष्टनः संज्ञायाम् १०३१, ६।३।१२४

अष्टनः संज्ञायाम्। शेषपूरणेन सूत्रं व्याचष्टे--उत्तरपदे दीर्घ इति। अष्टापदमिति। संज्ञात्वमन्वेषणीयम्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि च ६।३।१२६

छन्दसि विषये ऽष्टनः उत्तरपदे दीर्घो भवति। आग्नेयमष्टाकपालं निर्वपेत् चरुम्। अष्टाहिरण्या दक्षिणा। अष्टापदी देवता सुमती। अष्टौ पादौ अस्याः इति बहुव्रीहौ पादस्य लोपे कृते पादो ऽन्यतरस्याम् ४।१।८ इति ङीप्। गवि च युक्ते भाषायामाष्टनो दीर्घो भवति इति वक्तव्यम्। अष्टागवम् शकटम्।

---

सूत्रम्

काशिका-वृत्तिः

चितेः कपि ६।३।१२७

चितिशब्दस्य कपि परतः दीर्घो भवति। एकचितीकः। द्विचितीकः। त्रिचितीकः।

न्यासः

चितेः कपि। , ६।३।१२६

"एकचितीकः" इति। एका चितिरस्येति बहुव्रीहिः, ततः "स्त्रियाः पुंवत्()" ६।३।३३ इत्यादिना पुंवद्भावः, "शेषाद्विभाषा" ५।४।१५४ इति कप्()॥

बाल-मनोरमा

चितेः कपि १०३२, ६।३।१२६

चितेः कपि। "दीर्घ" इति शेषः। एकचितीक इति। "अग्न्याख्यस्थण्डिलविशेष" इति शेषः। एका चितिर्यस्येति विग्रहः। शैषिकः कप्। द्विचितीक इति। द्वे चिती यस्येति विग्रहः।

तत्त्व-बोधिनी

चितेः कपि ८६७, ६।३।१२६

एकचितीक इति। "शेषाद्विभाषे"ति कपे। "दंष्ट्रे"ति वार्तिके दीर्घान्तः पबठ()ते। केचित्तु ह्रस्वान्तं पठित्वा "()आआदंष्ट्रः"इति बहुव्रीहौ दीर्घमाहुः, न तु तत्पुरुषे। इह षादिति। "काश्र्य"इति तालव्यापाठस्त्वनार्ष इति भावः। वनस्पतिभ्यो वनस्य णत्वमुदाहरति।

---

सूत्रम्

काशिका-वृत्तिः

विश्वस्य वसुराटोः ६।३।१२८

विश्वशब्दस्य वसु राटित्येतयोः उत्तरपदयोः दिर्घ आदेशो भवति। विश्वावसुः। विश्वाराट्। राटिति विकारनिर्देशो यत्र अस्य एतद् रूपं तत्र एव यथा स्यात्। इह न भवति, विश्वराजौ। विश्वराजः।
लघु-सिद्धान्त-कौमुदी
विश्वस्य वसुराटोः ३१०, ६।३।१२७

विश्वशब्दस्य दीर्घोऽन्तादेशः स्यादसौ राट्शब्दे च परे। विश्वराट्, विश्वराड्। विश्वराजौ। विश्वराड्भ्याम्॥
न्यासः
वि�आस्य वसुराटोः। , ६।३।१२७

"वि()आआवसुः" इति। वि()आं वसु यस्येति बहुव्रीहिः। "वि()आआराट्()" इति। वि()आस्मिन्? राजत इति "सत्सूद्विष" ३।२।६१ इत्यादिना क्विप्(), व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), तस्य "झलां जशोन्ते" ८।२।३९ इति जश्त्वम्()--डकारः, डकारस्यापि चत्र्वम्()--टकारः। "यत्रास्यैतद्रूपम्()" इति। क्व पुनरस्यैतद्रूपम्()? यत्र पदसंज्ञा; पदाधिकारे षकारादीनां विधानात्()। "वि()आराजौ, वि()आराजः" इति। अत्र पदसंज्ञा नास्ति, "असर्वनामस्थाने" १।४।१७ इति प्रतिषेधात्॥
बाल-मनोरमा
वि�आस्य वसुराटोः , ६।३।१२७

तस्य विशेषमाह--वि()आस्य वसु। "ढ्रलोपे" इत्यतो "दीर्घ इत्यनुवर्तते। तदाह--वि()आशब्दस्येति। वि()आवस्विति। "वसुग्र्रहेऽग्नौ योक्()त्रेंऽशौ वसु तोये धने मणौ" इति कोशः। "वि()आआवसु"रित्युदाहरणं प्रासङ्गिकम्। "आदित्यावि()आवसवः" इत्यमरप्रयोगे तु न दीर्घः, "नरे संज्ञाया"मित्यतः संज्ञाग्राहणापकर्षात्। ननु राट्शब्दस्य कृतचत्र्वस्य निर्देशाज्जश्त्वे सति दीर्घो न स्यादित्यत आह--राडिति अविवक्षितमिति। व्याख्यानादिति भावः। वि()आआराट् वि()आआराडिति। "व्रश्चे"ति षत्वम्। जश्त्वचर्त्वे। चत्र्वनिर्देशस्य पदान्तोपलक्षणत्वाज्जश्त्वपक्षेऽपि दीर्घः द्यपि त्रैपादिकं "व्रश्चे"ति षत्वं "चोः कु"रिति कुत्वात्परम्, तथापि चवर्गान्तव्रश्चादिविषये षत्वमपवादत्वान्नासिद्धम्, "अपवादो वचनप्रामाण्यात्" इति वि()आराजाविति। अपदान्तत्वान्न दीर्घ इति भावः। "भ्रस्ज पाके"क्विप्। "ग्राहिज्या" इति संप्रसारणं रेफस्य ऋकारः। "संप्रसारणाच्चे"ति पूर्वरूपम्। भृस्ज्शब्दः। ततः सुबुत्पत्तिः।

तत्त्व-बोधिनी
वि�आस्य वसुराटोः ३३९, ६।३।१२७

वि()आस्य वसु। "ढ्()रलोपे"इत्यतोऽनुवर्तनादाह---वि()आशब्दस्य दार्घः स्यादिति।

---

सूत्रम्
काशिका-वृत्तिः
नरे संज्ञायाम् ६।३।१२९

नरशब्द उत्तरपदे संज्ञायाम् विषये विश्वस्य दीर्घो भवति। विश्वानरो नाम यस्य वैश्वानरिः पुत्रः। संज्ञायाम् इति किम्? विश्वे नरा यस्य स विश्वनरः।
न्यासः

नरे संज्ञायाम्?। , ६।३।१२८

बाल-मनोरमा

नरे संज्ञायाम् १०३३, ६।३।१२८

नरे संज्ञायाम्। "वि()आस्य दीर्घ" इति शेषः। "वि()आस्य वसुराटो"रिति पूर्वसूत्राद्वि()आस्येत्यनुवर्तते।

---

सूत्रम्

काशिका-वृत्तिः

मित्रे चर्षौ ६।३।१३०

मित्रे च उत्तरपदे ऋषावभिधेये विश्वस्य दीर्घो भवति। विश्वामित्रो नाम ऋषिः। ऋषौ इति किम्? विश्वमित्रो माणवकः।

न्यासः

मित्रे चार्षौ। , ६।३।१२९

बाल-मनोरमा

मित्रे चर्षौ १०३४, ६।३।१२९

मित्रे चर्षौ। मित्रशब्दे परे वि()आस्य दीर्घः स्यादृषौ वाच्ये इत्यर्थः।

शुनो दन्तेति। ()आन्()शब्दस्य दन्तादिषु परतो दीर्घ इत्यर्थः। ()आआदन्त इति। शुनो दन्त इति विग्रहः। ()आआदंष्ट्रा। षष्ठीसमासः।दीर्घान्त एव दंष्ट्रशब्दो वार्तिके पठ()त इति केचित्। ह्रस्वान्त इत्यन्ये। ()आआदंष्ट्रः। बहुव्रीहिरयम्। ()आआकर्णः, ()आआकुन्दः, ()आआवराहः, ()आआपुच्छं, ()आआपदः। "()आपुच्छमवनामित"मित्यसाध्वेव।

---

सूत्रम्

काशिका-वृत्तिः

मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ६।३।१३१

मन्त्रविषये सोम अश्व इन्द्रिय विश्वदेव्य इत्येतेषां मतुप्प्रत्यये परतः दीर्थो भवति। सोमावती। अश्ववती। इन्द्रियावती। विश्वदेव्यावती।

न्यासः

मन्त्रे सोमा�ओन्द्रियवि�आदेव्यस्य मतौ। , ६।३।१३०

---

सूत्रम्

काशिका-वृत्तिः

ओषधेश् च विभक्तावप्रथमायाम् ६।३।१३२

मन्त्रे इति वर्तते। ओषधिशब्दस्य विभक्तावप्रथमायां परतः दीर्घो भवति। ओषधीभिरपीतत्। नमः पृथिव्यै नम ओषधीभ्यः। विभक्तौ इति किम्? ओषधिपते। अप्रथमायाम् इति किम्? स्थिरेयमस्त्वोषधिः।

न्यासः

ओषधेश्च विभक्तावप्रथमायाम्?। , ६।३।१३१

---

सूत्रम्

काशिका-वृत्तिः

ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ६।३।१३३

ऋचि विषये तु नु घ मक्षु तङ् कु त्र उरुष्य इत्येषां दीर्घो भवति। आ तू न इन्द्र वृत्रहन्। नु नू करणे। घ उत वा घा स्यालात्। मक्षु मक्षू गोमन्तमीमहे। तङ् भरता जातवेदसम्। तङिति थादेशस्य ङीत्वपक्षे ग्रहणं, तेन इह न भवति, शृणोत ग्रावाणः। कु कूमनः। त्र अत्रा गौः। उरुष्य उरुष्या णो।

न्यासः

ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्?। , ६।३।१३२

तङिति प्रत्याहिराग्रहणम्()--लोष्मध्यमपुरुषबहुवचनादारभ्य महिङो ङकारेण। "आ तू न इन्द्र वृत्रहन्()" इति। आ तु न इति प्राप्ते। एवमुत्तरत्रापि ह्यस्वप्रयोगे प्राप्ते दीर्घो वेदितव्यः। "लस्यात्()" इति। "लस श्लेषणक्रीडनयोः" (दा।पा।७१४) इत्यस्याशिषि लिङि रूपमेतत्()। अथ घग्रहणेनात्र तरप्तमपोः प्रत्यययोग्र्रहणं कस्मान्न भवति? तदन्तस्य कृतदीर्घस्य ऋग्विषये प्रयोगासम्भवात्()। "भरता" इति। "भृ भरणे (धा।पा।८९८) ["भृञ्? भरणे" धा।पा; "भृ भत्रसने" (भरणेऽपीत्येके)--धा।पा।१४९२] इत्यस्माद्धातोर्लोण्मध्यमपुरुषस्य बहुवचने रूयमेतत्()। "श्रृणोत ग्रावाणः" इति। अत्र तु न भवति; "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (पु।प।वृ।५६) इति वचनात्()। "अत्रा" इति। त्रलन्तमेतत्()। "सप्तम्यास्त्रल्()" ५।३।१० इति त्रलि कृते "एतदोऽश्()" ५।३।५ इत्यनेनैतदोशादेशः। "उरुष्या णः" इति। आत्मन उरुमिच्छति "सुपाअत्मनः क्यच्()" ३।१।८ इति क्यच्? ततः सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः" (वा ८२४) इत्यौपसंख्यानिकोऽसुक्(), "सुषमादिषु च" (८।३।९८) इति षत्वम्(), लोण्मध्यमपुरुषस्यैकवचनम्(), "अतो हेः" ६।४।१०५ इति हेर्लुक्()। "न" इति। "बहुवचनस्य वस्नसौ" ८।१।२१ इत्यस्मदादेशोऽयम्()। णत्वं तु वर्णव्यत्ययेन। "उपसर्गाद्बहुलम्()" ८।४।२७ इति बहुलवचनाद्वा। अन्ये तु--"उरुष्य इति निपातः" इत्याचक्षते॥

---

सूत्रम्

काशिका-वृत्तिः

इकः सुञि ६।३।१३४

सुञ् निपातो गृह्यते। इगन्तरय सुञि परतो मन्त्रविषये दीर्घो भवति। अभी षु णः सखीनाम्। ऊर्ध्व ऊ षु ण ऊतये। सुञः ८।३।१०९ इति षत्वम्, नश्च धातुस्थोरुषुभ्यः ८।४।२६ इति णत्वम्।

न्यासः

इकः सुञि। , ६।३।१३३

सुञिति निपातस्य ग्रहणम्()। "अभि षु णः" इति। अभिशब्दस्य दीर्घत्वम्()। "सुञः ८।३।१०७ इति षत्वम्()। "नः" इत्ययमस्मदादेशः, तस्य "नश्च धातुस्थोरुषुभ्यः" ८।४।२६ इति णत्वम्()। "ऊर्ध्व ऊ षु णः" इति। उकारस्य दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

द्व्यचो ऽतस्तिङः ६।३।१३५

ऋचि इति वर्तते। द्व्यचस्तिङन्तस्य अतः ऋग्विषये दीर्घो भवति। विद्मा हि त्वा गोपतिं शूर गोनाम्। विद्मा शरस्य पितरम्। द्व्यचः इति किम्? अश्वा भवत वाजिनः। अतः इति किम्? आ देवान् वक्षि यक्षि च।

न्यासः

द्व्यचोऽतस्तिङः। , ६।३।१३४

"अ()आआ भरत वाजिनः" इति। "भृ" इत्येतस्य लोण्मध्यमपुरुषस्य बहुवचने रूपमेतत्()। "दक्षि पक्षि" इति। वचेर्यजेश्च परस्य लेटः सिप्(), "कत्तरि शप्()" ३।१।६८। वचेरदादित्वाच्छपो लुक्()। यजेरपि "बहुलं च्छन्दसि" २।४।७६ इति॥

---

सूत्रम्

काशिका-वृत्तिः

निपातस्य च ६।३।१३६

ऋचि इत्येव। निपातस्य च ऋग्विषये दीर्ग्H आदेशो भवति। एवा ते। अच्छा।

न्यासः

निपातस्य च। , ६।३।१३५

"एवा ते, अच्छा ते" इति। एवाच्छशब्दौ निपात्तौ; चादिषु पाठात्()॥

---

सूत्रम्

काशिका-वृत्तिः

अन्येषाम् अपि दृश्यते ६।३।१३७

अन्येषाम् अपि दीर्घो दृश्यते, स शिष्टप्रयोगादनुगन्तव्यः। यस्य दीर्घत्वं विहितं, दृश्यते च प्रयोगे, तदनेन कर्तव्यम्। केशाकेशि। कचाकचि। जलाषाट्। नारकः पूरुषः। शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु। श्वादन्तः। श्वादंष्ट्रः। श्वाकर्णः। श्वाकुन्दः। श्वावराहः। श्वापुच्छः। श्वापदः।

न्यासः

अन्येषामपि दृश्यते। , ६।३।१३६

ऋचीति निवृत्तम्()। "केशाकेशि" इति। केशेषु केशेषु गृहीत्वेदं युद्धं वृ()त्तमिति "तत्र तेन" (२।२।२७) इत्यादिना बहुव्रीहिः "इच्? कर्मव्यतिहारे" (५।४।१२७) इतीच्? समासान्तः। "जलाषाट्()" इति। जलं सहत इति "छन्दसि सहः" ३।२।६३ इति ष्विः, "सहेः षाडः षः" ८।३।५६ इति षत्वम्()। "()आआदन्तः" इति। शुनो दन्त इति षष्ठीसमासः। "()आआदंष्ट्रः" इति। शुन इव दंष्ट्रा अस्येति बहुव्रीहिः। "()आआकर्णः" इत्यादयः षष्ठीतत्पुरुषाः, बहुव्रीहयो वा॥

बाल-मनोरमा

अन्येषामपि दृश्यते ८३८, ६।३।१३६

अन्येषामपि दृश्यते। अनुवर्तते इति। ढ्रलोपे इत्यत" इति शेषः। "नहिवृतिवृषी"त्यादिपूर्वसूत्रोक्तादन्येषामपि दीर्घो दृश्यत इत्यर्थः। अतिप्रसङ्गमाशङ्क्याह--कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घ इति। "बहुव्रीहौ चेत् कर्मव्यतिहारे एव पूर्वपदान्तस्यैव दीर्घ" इत्यर्थः। तेन "तुराषा"डित्यादौ दीर्गो निर्बाधः। दृशिग्रहणादयमर्थो लभ्यते। वक्ष्यत इति।

"इच्कर्मव्यतिहारे इति सूत्रेणे"ति शेषः। तिष्ठद्गुप्रभृतिष्विति। वृत्तिग्रन्थ एवात्र प्रमाणम्। अव्ययीभावत्वमिति। तत्र "अव्ययीभावः" इत्यनुवृत्तेरिति भावः। अव्ययत्वमिति। "अव्ययीभावश्चे इत्यनेने"ति शेषः। "अव्ययादाप्सुपः" इति सुब्लुक् तत्फलमिति भावः। गृहीत्वेति। "परस्पर"मिति शेषः। न च केशग्रहणस्य पुरुषकर्तृकत्वात् प्रवृत्तेश्च युद्धकर्तृकत्वात्समानकर्तृकत्वाऽभावात्कथमिह क्त्वाप्रत्यय इति वाच्यं, गृहीत्वेत्यनन्तरं "स्थितयो"रित्यद्याहारात्। ततश्च अस्य केशेषु केशेष्वित्यनयोग्र्रहणाद्यन्तर्भावेन वृत्तिघटकयोः समासे सति सुब्लुक्। पूर्वपदस्य दीर्घः। इच्समासान्तः। "यस्येति चे"त्यकारलोपः। अव्ययत्वात्सुब्लुगिति भावः। अन्यपदार्थवृत्तित्वेऽपि एकसेषापवादोऽयं बहुव्रीहिसमासः, अप्रथमान्तार्थश्च, दण्डैश्चेति। अस्य डण्डैः सः, तस्य दण्डैरयमित्येव परस्परं प्रह्मत्य स्तितयोरिदं युद्धं प्रवृत्तमिति विग्रहार्थः। दण्डादण्डीति। दण्डैर्दण्डैरित्यनयोः प्रहरणाद्यन्तर्भावेन समासघटकयोः समासे सति सुब्लुक्, पूर्वपदस्य दीर्घः, इच्, "यस्येति च" इति अकारलोपः। अव्ययत्वात्सुब्लुक्। भुष्टीमुष्टीति। अस्य मुष्टिभिः सः, तस्य मुष्टिभिश्चायमित्येवं परस्परं प्रह्मत्य स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहः। मुष्ट()आ मुष्ट()आ इत्यनयोः समासे सति सुब्लुगादि पूर्ववत्। "मुष्टामुष्टी"ति पूर्वपदान्तस्य आत्वमपाणिनीयमेव।

ओर्गुणः। ओरित्युकारात्षष्ठ()एकवचनम्। तेन भस्येत्यधिकृतं विशेष्यते। तदन्तविधिः। "नस्तद्धिते" इत्यनुवर्तते। तदाह--उवर्णान्तस्येति। बाहूबाहवीति। बाहौ बाहौ च परस्परं गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहः। समासः, सुब्लुक्, पूर्वपदस्य दीर्घः , इच्। "यस्येति चे"ति बाधित्वा ओर्गुणः, अवादेशः। अव्ययत्वात्सुपो लुक्। ननु गुण उकारस्थाने भवन् स्थासाम्यादोकार एव भवति, ततश्च लाघवात् "ओरो"रित्येव सिद्धे "गुण" इति गुरुनिर्देशो व्यर्थं इत्यत आह--ओरोदिति। नचैवमपीह तद्धितसंज्ञापूर्वकत्वं दुर्वारमिति वाच्यं, विधेयसमर्पबकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वकविधिरित्यभ्युपगमात्। नच "ओ"दिति तपरस्तत्कालस्य संज्ञेति वाच्यं, विधायमानत्वादेव तत्कालत्वसिद्ध्या तकारस्य उच्चारणार्थत्वात्। स्वायम्भुवमिति। स्वयम्भुवोऽपत्यमित्यर्थे अण्, स्वायंभुवः। संज्ञापूर्वकत्वेनानित्यत्वादोर्गुणाऽभावे उवङ्, आदिवृद्धिरिति भावः। "स्वायम्भुव"मिति पाठे तस्येदमित्यण्। हलेन मुसलेनेति। अत्र असरूपत्वाद्धलामुसलीति न भवतीति भावः।

तत्त्व-बोधिनी

अन्येषामपि दृश्यते ७३३, ६।३।१३६

अन्येषामपि दृश्यते। अत्र प्राचा "दृशिग्रहणात्कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वम्, आत्वं वाऽनचि" इत्युक्तम्। तत्र "आत्वं वा"इत्यपाणिनीयम्। अतएव मुष्टामुष्टीत्युदाहरणमप्यप्रामाणिकमेव। एतच्च मनोरमायां स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

चौ ६।३।१३८

चौ परतः पूर्वपदस्य दीर्घो भवति। चौ इति अञ्चतिर्लुप्तनकाराकारो गृह्यते। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे। अन्तरङ्गो ऽपि यणादेशो दीर्घविधानसामर्थ्यान् न प्रवर्तते।

लघु-सिद्धान्त-कौमुदी

चौ ३३८, ६।३।१३७

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्गः। प्राचः। प्राचा। प्राग्भ्याम्॥ प्रत्यङ्। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्॥ उदङ्।

उदञ्चौ॥

न्यासः

चौ। , ६।३।१३७

"दधीचः" इति। दध्यञ्चतीति ऋत्विगादिना ३।२।५९ क्विन्(), ततः, शस्(), "अचः" ६।४।१३८ इत्यकारलोपः। ननु चान्तरङ्गत्वाद्यणावेशेनात्राकारलोपाद्दीर्घाच्च प्राग्? भवितव्यम्(), स हि वर्णाश्रयत्वादन्तरङ्गः, इतरौ तु बहिरङ्गौ, अकारलोपो हि तस्य विधीयते, भसंज्ञा च यकारादावजादौ च स्वादौ विधीयते, दीर्घत्वमप्युत्तरपदे परतः पूर्वपदस्य विधीयमानं द्विपदाश्रयत्वद्बहिरङ्गम्(), ततश्चान्तरङ्गे यणादेशे कृते पूर्वं चौ दीर्घत्वं न सिध्यति? इत्यत आह--"अन्तरङ्गोऽपि" इत्यादि। यदि यणादेश एव प्रवत्र्तते, तदा दीर्घवचनमनर्थकं स्यात्()। तस्माद्दीर्घवचनसामथ्र्याद्यणादेशो न प्रवत्र्तते। ननु च कृते यणादेशेऽनन्तरो दीर्घभावो नास्तीत कृत्वा व्यवहितस्यापि दीर्घत्वं भविष्यति, यथा--"शमामष्टानां दीर्घः श्यनि" ७।३।७४ इति शमादीनां श्यनि दीर्घत्वम्(), तस्माद्भवितव्यमेवात्र यणादेशेन, तथा च व्यवहितस्य दीर्घत्वे कृतेऽनिष्टं रूपं स्यात्()? नैतदस्ति; इदं च तावद्विचार्यताम्()। किं तत्()? "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इत्येषा परिभाषा बाध्येत, आहोस्विदन्तरङ्गपरिभाषेति? तत्रान्तङ्गपरिभाषाया लिङ्गादनुमानाद्वा सिद्धा, तस्या हि "वाह ऊठ्? ६।४।१३२ इत्यूङ्वचनं लिङ्गम्()। यथा चैतल्लिङ्गं तथा तत्रैव वृत्तिकारो दर्शयिष्यति। इतरा तु परिभाषा साक्षात्? श्रुता। तत्र युक्तं यदनुमितोऽर्थो बाध्यते, न तु साक्षाद्दृष्ट इत्यन्तरङ्गपरिभाषा बाध्यते, नेतरेति। तथा चानन्तरस्यैव दीर्घत्वेन भवितव्यमिति यणादेशो न प्रवत्र्तते॥

---

सूत्रम्

काशिका-वृत्तिः

सम्प्रसारणस्य ६।३।१३९

उत्तरप्दे इति वर्तते। सम्प्रसारणान्तस्य पूर्वपदस्य उत्तरपदे दीर्घो भवति। कारीषगन्धीपुत्रः। कारीषगन्धीपतिः। कौमुदगन्धीपुत्रः। कौमुदीगन्धीपतिः। करीषस्य इव गन्धो ऽस्य, कुमुदस्य इव गन्धो ऽस्य, अल्पाख्यायाम् ५।४।१३६, उपमानाच् च ५।४।१३७ इति इकारः समासान्तः। करीषगन्धेरपत्यम् कारीषगन्ध्या। कुमुदगन्धेरपत्यम् कौमुदगन्ध्या, तस्याः पुत्रः कौमुदगन्धीपुत्रः। कौमुदगधीपतिः। इको ह्रस्वो ऽङ्यो गालवस्य ६।३।६० इत्येतन् न भवति। व्यवस्थितविभाषा हि सा। अकृत एव दीर्घत्वे ह्रस्वभावपक्षे कृतार्थेन अपि दीर्घेण पक्षान्तरे परत्वाद् ह्रस्वो बाध्यते। पुनः प्रसङ्गविज्ञानं च न भवति, सकृद्गतौ विप्रतिषेधे यद् बाधितं तद्बाधितम् एव इति। इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य तृतीयः पादः। षष्ठाध्यायस्य चतुर्थः पादः।

न्यासः

सम्परसरणस्य। , ६।३।१३८

"कारीषागन्धीपुत्रः" इति। कारीषगन्धेरपत्यमिति "तस्यापत्यम्()" ४।१।९२ इत्यण्(), "अणिञोरनार्षयोः" ४।१।७८ इत्यादिना ष्यङादेशः, ततः "यङश्चाप्()" ४।१।७४ इति चाप्प्रत्ययः, ततः करीषगन्ध्यायाः पुत्र इति षष्ठीसमासः, ततः "ष्यङः सम्प्रसरणम्()" ६।१।१३ इत्यादिना सम्प्रसारणम्(), अनेन दीर्घत्वम्()। "व्यवस्थितविभाषा हि सा" इति। इको ह्यस्वादौ ६।३।६० सूत्रे "एक हलदौ" ६।३।५० इत्यतः सूत्रादन्यतरस्यांग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन कारीषगन्धीपुत्र इत्यत्र न भवति। "अकृत एव" इत्यादि। अथ वा--अकृत एव सम्प्रसारणदीर्घत्वे कारीषगन्धिपुत्र इति स्थिते ह्यस्वत्वं प्राप्नोति, सम्प्रसारणदीर्घत्वं च; उभयं चैतत्? सावकाशम्(), इको

ह्रस्वतवस्यावकाशः--ग्रामणिपुत्र इति, सम्प्रसारणस्यावकाशः--ह्रस्वाभावः; पक्षे तूभयं प्राप्नोति। तत्र यद्यपि ह्रस्वाभावपक्षे कृतार्थ दीर्घत्वम्(), तथापि तेन परत्वाद्? ह्रस्वो बाध्यते। अथ कृते दीर्घत्वे कस्मात् पुनःप्रसङ्गविज्ञानान्न भवति? अत आह--"पुनःप्रसङ्गविज्ञानञ्च" इत्यादि। गतार्थम्()॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां षष्ठाध्यायस्य तृतीयः पादः॥ - - - अथ षष्ठोऽध्यायः चतुर्थः पादः

तत्त्व-बोधिनी

संप्रसारणस्य ८४१, ६।३।१३८

संप्रसारणस्य। "उत्तरपदे"इत्यधिक्रियते। "ढ्रलोपे"इत्यतो "दीर्घ" इत्यनुवर्तते। तदाह---दीर्घः स्यादुत्तरपद इति। "हलः"इति दीर्घोऽत्र न प्रवर्तते, प्रत्ययस्य लुका लुप्तत्वेनाङ्गसंज्ञाया अप्रवृत्तेः। कौमुदगन्ध्याया इति। कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या। "तस्यापत्य"मित्यणि कृते "अणिञो"रिति ष्यङादेशः। "यङश्चाप्"। ननु "कौमुदगन्धीपुत्रः"इत्यादौ "इको ह्रस्वोऽङ्योगालवस्ये"ति ह्रस्वेन भाव्यं, दीर्घविधानं तु पक्षे सावकाशमित्यत आह--व्यवस्थितविभाषयेति। नेहेति संप्रसारणमिह नेत्यर्थः। अतिकारीषेति। कारीषगन्ध्यामतिक्रान्तोऽतिकारकीषगन्ध्यः, तस्य पुत्रः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अङ्गस्य ६।१ ७।४।९७

अर्थः॥

अधिकारः अयम् आसप्तमाध्यायपरिसमाप्तेः। यत् इतः ऊर्ध्वम् अनुक्रमिष्यामः अङ्गस्य इत्येवं तद्वेदितव्यम्

उदाहरणम्॥

वक्ष्यति हलः। हूतः, जीनः, संवीतः॥

काशिका-वृत्तिः

अङ्गस्य ६।४।१

अधिकारो ऽयम् आसप्तमाध्यायपरिसमाप्तेः। यदित ऊर्ध्वम् अनुक्रमिष्यामः अङ्गस्य इत्येवं तद् वेदितव्यम्। वक्ष्यति हलः ६।४।२ हूतः। जीनः। संवीतः। अङ्गस्य इति किम्? निरुतम्। दुरुतम्। नामि दीर्घः ६।४।६ अग्नीनाम्। वायूनाम्। अङ्गस्य इति किम्? क्रिमिणां पश्य। पामनां पश्य। अतो भिस ऐस् ७।१।९ वृक्षैः। प्लक्षैः। अङ्गस्य इति किम्? ब्राह्मणभिस्सा। ओदनभिस्सिटा। अङ्गाधिकारः कृतो ऽन्यार्थो नामि दीर्घत्वाद्यपि व्यवस्थापयति इति तदर्थम् अर्थवद्ग्रहणपरिभाषा नाश्रयितव्या भवति। अङ्गस्य इति सम्बन्धसामान्ये एषा षष्ठी यथायोगं विशेषेषु अवतिष्ठते। अथ वा प्रातिपदिकार्थमात्रम् अविवक्षितविभक्त्यर्थम् अधिक्रियते। ततुत्तरत्र यथायोगं विपरिणम्यते। ततो ऽकारान्तादङ्गात् भिस ऐसित्येवम् आद्यपि सम्यक् सम्पन्नं भवति।

न्यासः

अङ्गस्य। , ६।४।१

"अधिकारोऽयम्()" इति। स्वरितलिङ्गासङ्गात्()। इह केचित्? प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारो युक्त इति मन्यन्ते। एवं हि "गुणो यङ्लुकोः" (७।४।८२) इत्यस्मिन्? सत्रे लुग्ग्रहणं न कत्र्तव्यं भवति; यङ्लुक्यापि प्रत्ययलक्षणेन गुणस्य सिद्धत्वात्()। यदि पुनरा सप्तमाध्यायपरिसमाप्तेरयमङ्गाधिकारः स्यात्(), ततोऽवश्यं लुग्ग्रहणं कत्र्तव्यम्(), न ह्रन्यथा यङ्लुकि गुणः सिध्यति; "न लुमताङ्गस्य" १।१।६२ इति प्रतिषेधादित्येदं तेषामभिप्रायः। वृत्तिकारस्तु--यदि प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारः स्यात्(), ततो वव्रश्चेत्यत्र वृश्चतेर्लिटि द्विर्ववचने कृते हलादिशेषात्? प्राक्? सम्प्रसारणं पूर्वप्रतिषेधेन, "उभयेषाम्()" इति वचनसामथ्र्याद्वापरमपि हलादिशेषं बाधित्वा सम्प्रसारणं स्यात्(), ततश्च "सम्प्रसारणाच्च" ६।१।१०४ इति पूर्वरूपत्वे "उरत्()" ७।४।६६ इत्यत्वे रपरत्वे हलादिशेषे च कृते वकारस्यापि सम्प्रसारणं प्रसज्येत। आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सति "उरत्()" (७।४।६६) इत्यस्य परनिमित्तत्वात्? प्रत्ययो निमित्तत्वेनाश्रीयते। तेन परनिमित्तत्वादुरदत्तवस्य सम्परसारणम्()" ६।१।३६ इति वकारस्य सम्प्रसारणं प्रतिषिध्यते। प्रागभ्यासविकारेभ्यः पुनरङ्गाधिकारे सत्यपरनिमित्तत्वा दुरदत्त्वसय स्थानिवद्भावो न स्यात्(), ततश्च "न सम्प्रसारणे सम्प्रसारणम्()" ६।१।३६ इत्यस्य प्रतिषेधस्याभावाद्वकारसय समप्रसारणं स्यादेव। ततश्चोव्रश्चेत्यनिष्टं रूपं स्यात्()। तस्मादा सप्तमाध्यायपरसमाप्तेरङ्गाधिकारो युक्तः, न तु प्रागभ्यासविकारेभ्य इति मन्यमान आह--"आ सप्तमाध्यायपरिसमाप्तेः" इति। सप्तमाध्यायपरिसमाप्तेस्तु परेण "पदस्य" ८।१।१६ इत्यधिकृतय कार्यं विधीयते। तेन तत्राङ्गाधिकारो नानुवत्र्तते। "ह्वेञ्? स्पर्धायाम्()" [ह्वेञ्? स्पर्धायां शब्दे च--धा।पा।] (धा।पा।१००८) निष्ठा, यजादीत्वात्? सम्प्रसारणम्()। "जीनः" इति। " ज्या वयोहानौ" (धा।पा।१४९९) ग्रह्रादिसूत्रेण ६।१।१६ सम्प्रसारणम्(), "ल्वादिभ्यः" ८।२।४४ इति निष्ठानत्वम्()। "संवीतः" इति। "व्येञ्? संवरणे" (धा।पा।१००७) वच्यादिना ६।१।१५ सम्प्रसारणम्()। "निरुतम्(), दुरुतम्()" इति। "वेञ्? तन्तुसन्ताने" (धा।पा।१००६) पूर्ववत्? सम्प्रसारणम्()। असत्यङ्गाधिकारे निर्दुरोरवयवो यो हल्? ततोऽप्युत्तरस्य सम्प्रसारणस्य दीर्घः स्यात्()। अङ्गाधिकारे पुनरङ्गावयवो यो हल्? तदुत्तरं यत्? सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घत्वं विज्ञायत इति न भवति दीर्घत्वप्रसङ्गः। न ह्रत्राङ्गावयवाद्धल उत्तरं सम्प्रसारणम्()। "अग्नीनाम्()" इति। "ह्यस्वनद्यापो नुट्()" ७।१।५४। "क्रिमिणां पश्य पामनां पश्य" इति। क्रियमोऽस्यां सन्तीति, पामानोऽस्यां सन्तीति "लोमादि" ५।२।९९ इत्यादिना नप्रत्ययः, ततष्टाप्(), द्वितीयैकवचनम्()। "अमि पूर्वः" ६।१।१०३ इति पूर्वरूपत्वम्()। यद्यङ्गस्येति नाधिक्रियते, ततोऽत्रापि क्रिमिशब्दस्य पामशब्दसय च नामि परतो दीर्घत्वं स्यात्()। अङ्गाधिकारे तु न दोषः, न ह्रत्र क्रिमिपामशब्दयोर्नामि परतोऽङ्गत्वमस्ति, अपि तु नप्रत्यये "ब्राआह्रणभिस्सा, ओदनभिस्सिटा" इति। भिस्साभिस्सिटाशब्दौ टाबन्तौ। तत्रैक ओदनस्य वाचकः, अपरस्तु तद्दग्धिकायाः। ताभ्यां यथाक्रमं ब्राआह्रणौदनशब्दयोः षष्ठीसमासः। तत्रासत्यङ्गाधिकारे अनङ्गाब्यामपि ब्राआह्रणौदनशब्दाभ्यां परस्य भिस ऐस्भावः प्रसज्येत। ननु च "तर्थवद्ग्रहणे नानर्थकस्य" (व्या।प।१) इति वचनाद्यथा क्रिमिणां पश्य, पामनां पश्येत्यत्र दीर्घत्वं न भविष्यति, तथा ब्राआह्रणभिस्सौदनभिस्सिटेत्यत्राप्यैस्भावः, न ह्रत्र नामोऽर्थवत्त्वम्(), नापि भिसः, तत्? किं तन्निवृत्यर्थेनाङ्गाधिकारेण? इत्याह--"अङ्गाधिकारः" इत्यादि। "नामिदीर्घत्वाद्यपि" इत्यादि। आदशब्देन "अतो भिस ऐस्()" (७।१।९) इत्यैस्? गृह्रते। इतिकरणो हेतौ। यस्मादसत्यङ्गाधिकारे "हलः" ६।४।२ इति दीर्घत्वं यथा हूतः जीन इत्यत्र भवति, तथा निरुतम्(), दुरतमित्यत्रापि स्यात्()। "अज्झनगमां सनि" ६।४।१६ इति दीर्घत्वं यथा चिकीर्षतीत्यत्र भवति, तथा दधि सनोति, मधु सनोतीत्यत्रापि स्यात्()। "एर्लिङि" ६।४।६७ "वान्यसय संयोगादेः" ६।४।६८ इत्येत्वं यथा ग्लेयादित्यत्र भवति, तथा निर्यायात्? निर्वायादित्यत्रापि भवेत्()। तस्मादेवमाद्यर्थोऽवश्यकत्र्तव्योऽङ्गाधिकारः। सोऽन्यार्थः क्रियमाणो नामि दीर्घत्वाद्यपि व्यवस्थापयति=विषयान्तराद्व्यावर्त्याभिमते विषये नियमति। तेन तदर्थमेषा परिभाषा नाश्रयितव्या भवति। अगत्या हि खलु परिभाषाऽऽश्रीयत इति भावः। ननु "षष्ठी स्थानेयोगा" १।१।४८ इति वचनादङ्गस्येति स्थानषष्ठीयम्(), ततश्च "अतो भिसाइस" (७।१।९) इत्येतत्? पञ्चम्यन्तेनाङ्गस्येत्येतत्षष्ठ()न्तस्य समानाधिकरणत्वं न स्यात्();

भिन्नविभक्तिकत्वात्()। तथा च सत्यकारान्तात्? परस्य भिस्सेत्यत्रस्यैस्भावः प्रसज्येत "ऊदुपधाया गोहः" ६।४।८९ इत्यत्र "गोहः" इत्यस्याः स्थानषष्ठ()आ "अलोऽन्त्यस्य" १।२।७२ इत्यन्तेऽल्युपसंहारादुपधागरहणसामर्थ्याच्छ गोहश्चान्त्यस्य स्यादूत्त्वम्()। उपधामात्रस्य च "शास इदङ्हलोः" ६।४।३४ इत्यत्रापि शास इति स्थानषष्ठीत्वेन विज्ञातायाः षष्ठ()आ अन्तेऽल्युपसंहारादुपधाग्रहणानुवृत्तिसामर्थ्याच्च शासश्चान्त्यस्येत्त्वम्(), उपधामात्रस्य चेत्येतद्द्वेश्यमपाकर्त्तुमाह--"अङ्गस्येति सम्बन्धसामान्य एषा षष्ठी" इत्यादि।
सम्बन्धसामान्ये=अविशेषितसम्बन्धमात्रे। तत्रानेकसम्बन्धानुग्रहार्थमनाश्रितविशेषं सम्बन्धसामान्यमुपादाय प्रवृत्ता सत्युत्तरेषु भिन्नार्थेषु लक्षमवाक्येषु यथायोगं विशेषेष्ववतिष्ठते। सा क्वचित्? स्थाने योगा भवति, यथा "हन्तेर्जः" ६।४।३६ इत्येवमादौ। क्वचिन्निमित्तनिमित्तिसम्बन्धविषया, यथा--"युवोरनाकौ" ७।१।१ इत्यादौ। यथैव हि देवदत्तस्येत्येका षष्ठ()भेदेन प्रवृत्ता ज्ञात्यवयवादिषु सम्बन्धभेदैर्भिद्यमाना जन्यजनकभावाद्यैः सम्बन्धविशेषे यथायोगमुपतिष्ठते--देवदत्तस्य पुत्रः पाणिः कम्बल इति, तथाङ्गस्येत्येषापि। तत्र यस्मिन्? वाक्ये "शास इदङ्हलोः" ७।४।३४ इत्येवमादौ सम्बन्धिविशेषो विद्यते--अवयवोऽन्यो वा, तत्र यथायोगमवयवादिसम्बन्धे षष्ठी वेदतव्या। यत्र न विद्यते तत्र स्थाने षष्ठी, यथा--"हन्तेर्जः" ६।४।३६ इतयवमादौ। कथं पुनरेषा सम्बन्धसामान्ये षष्ठीति लभ्यते, यावता "षष्ठी स्थानेयोगा" (१।१।४९) इत्युक्तम्()? एवं मन्यते--न हि सर्वा षष्ठी स्थानेयोगा भवति, अपि तु यस्याः कलादिकं लिङ्गं प्रतिज्ञायते; अन्यथा हि "उदीचामातः साथाने" इति स्थानग्रहणमनर्थकं स्यात्()। तस्माद्विशिष्टैव या षष्ठी यस्याः कलादिकं लिङ्गं प्रतिज्ञायते सा स्थानेयोगेत्युक्तम्()। न चास्याः कलादिकं लिङ्गं प्रतिज्ञायते। ततो नेयं स्थानेयोगा भवितुमर्हति। "अथ वा" इत्यादि। अङ्गशब्दस्य प्रातिपदिकस्य योऽर्थस्तन्मात्रधिक्रियते, न त्वेङ्स्येत्येतच्छब्दरूपम्()। मात्रशब्दो विभक्त्यर्थव्यवच्छेदाय। अत एवाह--"अविवक्षितविभक्त्यर्थम्()" इति। न विवक्षितो विभक्त्यर्थो यस्मिन्नर्थमात्रे तत्? तथोक्तम्()। यतश्चेतदेवं तेन षष्ठी स्थानेयोगेति। नात्रेयं परिभाषोपतिष्ठते। अनेकसम्बन्धप्रसङ्गे हि सम्बन्धान्तरव्यवच्छेदार्थमेषा प्रणीता। ततो यत्र सम्बन्धो विवक्ष्यते तत्रैव नियमार्थमुपतिष्ठते, न चात्र कश्चित्? सम्बन्धः षष्ठ()आ विवक्षितः केवलं निर्देशार्थ एवास्याः प्रयोगः। अवश्यं हि यथा कयाचिद्विभक्त्या निर्देशः कत्र्तव्य इति षष्ठ()आं निर्देशः कृतः। ननु च स्वरितेनाधिकारः, स च शब्दधर्मः, नार्थधर्मः, तत्? कथं स्वरितरहितोऽर्थः शक्यतोऽधिकर्त्तुम्()? नैष दोषः; अङ्गशब्दप्रतिपादितो योऽर्थः स शब्दात्मक एव। तथा हि यस्मात्? प्रतययविविस्तदादेः शब्दस्याङ्गसंज्ञा विहिता। "तदुत्तरत्र यथायोगं विपरिणम्यते" इत्यादि। अर्थवशात्? क्वचित्? षष्ठ()न्तत्वेनैव क्वचिद्विभक्त्यन्तरत्वेन, यथा--आढ()ओ र्बधवेयो देवदेत्तः, उच्चान्यस्य गृहाणि, आमन्त्रयस्वैनं देवदत्तमिति। तेन "अतो भिस ऐस्? ७।१।९ इत्यत्र पञ्चम्यन्ततया विभक्तिविपरिणामे हि सत्यकारान्तादङ्गादुत्तरस्य भिस ऐसादेशो भवतीत्येवमाद्यर्थरूपं सम्पन्नं भवति। आदिशब्देन युष्मदस्मद्भ्यामुत्तरस्य ङसोऽश्? भवतीति परिगृह्यते। पिशब्दादवयवषष्ठ()आदयोऽपि परिसम्पन्ना भवन्ति। पूर्वत्र तु परिहारे "अतो भिस्? ऐस्()" (७।१।९) इत्यत्रात्? इत्येषा निमित्तनिमित्तिसम्बन्दे षष्ठी द्रष्टव्या। तत्रायं सूत्रार्थः--अकारान्तस्याङ्गस्य यी भिस्? तस्यैस्भवतीति। तेन ब्राआह्णभिस्सेत्येवमादौ न भवति। अङ्गस्य हि को भिम्()? यस्तस्य निमित्तम्()। कस्तस्य पुनर्निमित्तम्? भिस्()? परभूते यस्मिन्नङ्गमित्येषं भवति। क()स्मश्चैतद्भवति? प्रत्यये। न च ब्राआह्णभिस्सेत्येवमादौ भिस्प्रत्यय इति कुतस्तस्यैस्प्रसङ्गः॥

---

सूत्रम्

काशिका-वृत्तिः

हलः ६।४।२

अङ्गावयवाद् धलो यदुत्तरं सम्प्रसारणम् तदन्तस्य अङ्गस्य दीर्घो भवति। हूतः। जीनः। संवीतः। हलः इति किम्? उतः।

उतवान्। अङ्गावयवातिति किम्? निरुतम्। तदन्तस्य इति किम्? विद्धः। विचितः। अणः इत्येव, तृतीयः। तृतीया इति वा निपातनादत्र दीर्घाभावः। अङ्गग्रहणम् आवर्तयितव्यम् हल्विशेषणार्थम्, अङ्गकार्यप्रतिपत्यर्थं च।

लघु-सिद्धान्त-कौमुदी

हलः ८२२, ६।४।२

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः। जीनः॥

न्यासः

हलः , ६।४।२

अण्ग्रहणं सम्प्रसारणग्रहणं दीर्घग्रहणञ्चैतत्? तरयमनुवत्र्तते। कुतः पुनः प्रकृतमण्ग्रहणम्()? "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इत्यतः। ननु तत्? "इकः काशे" ६।३।१२२ इतीग्ग्रहणेन व्यवच्छिन्नम्(), तत्? कथमिहानुवत्र्तते? नैष दोषः, इग्ग्रहणेन ह्रणेव विशिष्यते--अण्णिगित। ततो विरोधाभावन्नेग्ग्रहणेनाण्ग्रहणं व्यवच्छिद्यते। ननु च यदीग्ग्रहणेनाण्ग्रहणं विशिष्यते, तदा--"अवाचा, स्वराचा" इत्यत्र दीर्घत्वं न स्यात्()। "चौ" ६।३।१३७ इत्त्राण्ग्रहणमेवात्रानुवर्त्तिष्यते, इग्ग्रहणं तु निवृत्तमित्येषोऽपयदोषः। अथ वा--यद्यपीग्ग्रहणेनाण्ग्रहणं व्यवच्छिन्नम्(), तथापीह मण्डूकप्लुतिन्यायेनानुवत्र्तते। ननु यथा "शेषे" ४।२।९१ इत्येतल्लक्षणं विधिरधिकारश्च, तथा "अङ्गस्य" ६।४।१ इत्येतदपि, ततश्चानेनैव हूतः, जीन इत्यादेः सिद्धत्वादपार्थकं "हलः" इत्येतद्वचनम्()। अतो न कत्र्तव्यमेवेति मन्यमान आह--"हल इति किम्()" इति। किमर्थं "हलः" इत्येतत्? सूत्रमारभ्यत इत्यर्थ। "उतः, उतवान्()" इति। असत्यस्मिन्? सूत्रे सन्प्रसारणान्तस्याङ्गस्य दीर्घो भवतीत्युच्यमान इहापि दीर्घत्वं स्यात्()। भवति ह्रेतदपि व्यपदेशिवद्भावेन सम्प्रसारणान्तमङ्गम्(), तस्मात् "हलः" इति सूत्रं कत्र्तव्यम्()। "विद्धः" विचितः" इति। "व्यध ताडने" (धा।पा।११८१) "व्यच व्याजीकरणे" (दा।पा।१२९३) निष्ठा, ग्रहादिसूत्रेण ६।१।१६ सम्प्रसारणम्()। सम्प्रसारणान्तस्याङ्गस्य ग्रहणादिह न भवति दीर्घः। यद्यपि "विध्यत्यधनुषा" ४।४।८३ "ग्रहिज्यावयिव्यधिवष्टिविचति" (६।१।१६) इति निर्देशात्? हलन्तस्य यत्? सम्प्रसारणं तस्य दीर्घो न भविष्यतीति विज्ञायते, तथापि ज्ञापकद्वारेणास्मिन्नर्थे प्रतिपाद्यमाने प्रतिपत्तिगौरवं स्यादित्येतत्परिहारार्थं सम्प्रसारणान्तस्येत्युक्तम्()। "तृतीयः" इति। "द्वेस्तीयः" ५।२।५३ इति "त्रेः सम्प्रसारणञ्च" ५।४।५५ इति तीयप्रत्ययः सम्प्रसारणञ्च। सर्वमात्रास्ति, न त्वण्()? कस्मान्नास्त्यण्()? यस्मात्? "ढ्रलोपे" पूरवस्य दीर्घोऽणः" ६।३।११० इत्यत इहाण्ग्रहणमनुवत्र्तते, तत्र च पूर्वेणैव णकारेण प्रत्याहारग्रहणम्(), न च तत्र ऋकारः सन्निविष्ट इति भवत्येव प्रत्युदाहरणम्()। "तृतीयेति वा" इत्यादि। अथ वा "अण" इत्येतन्निवृत्तमेव। तथाप्यत्र न भवत्येव दीर्घः; "कर्तुकरणयीस्तृतीया" २।३।१८ इति निपातनात्()। "हलः" इत्येतसय त्रयोऽर्थाः सम्भाव्यन्ते, हल उत्तरस्य सम्प्रसारणान्तस्याङ्गसय् दीर्घो भवति--अयमेकोऽर्थः, अङ्गवयवाद्धल उत्तरस्य सम्प्रसारणस्य दीर्घो भवति--इति द्वितीयः, तृतीयस्तु वृत्तिकारेणैव दर्शितः। तत्र यदि प्रथमः पक्ष आश्रीयते, तदा निरुतम्(), दुरुतमित्यत्रापि स्यात्()। भवति ह्रेतदपि हल उत्तरं समप्रसारणान्तमङ्गम्()। अथ द्वितीयस्तदा विद्धः, विचित इत्यत्रापि स्यात्()। अत्राप्याङ्गवयवाद्धल उत्तरं सम्प्रसारणमिति। अथ "विध्यत्यधनुषा" ४।४।८३, "ग्रहिज्यावयिव्यधिवष्टिविचति" (६।१।१६) इति निर्देशान्न भविष्यति? ततश्च ज्ञापकद्वारेणैवंविधे दीर्घत्वाभावे प्रतिपत्तिगौरवं स्यादेव। तस्मादेतस्यैव दोषस्य परिजिहीर्षया तृतीयोऽर्थो वृत्तिकारेण द्रशितः। अत्रापि देश्यमिदमाशङ्क्यते--ननु चायमर्थोऽस्य सूत्रस्य नोपपद्यत एव, यस्मादङ्गस्येत्येकमङ्गग्रहणं प्रकृतम्()। तच्च हलो विशेषणं वा स्यात्(), अङ्गस्य कार्यप्रतिपत्यर्थं वा। तत्र यदि पूर्वकः पक्ष आश्रीयते तदाङ्गविशिष्ट सम्प्रसारणान्तस्याङ्गस्येति यावद्दीर्घो न लभ्यते। अथ द्वितीयस्तदा हल्? विशेषितो न स्यात्()। तस्माद्()द्वितीयमङ्गग्रहणं कत्र्तव्यं स्यात्()। न ह्र#एकेन शक्यमेतदुभयं प्रतिपादयितुम्()। अतोऽस्य देश्यस्य

निरासायाऽऽवृत्तिन्यायमाश्रित्याह--"अङ्गग्रहणम्()" इत्यादि। एकमपि हि वस्त्वावर्त्यमानमनेकत्रोपयुज्यते। यथैकं भाजनमसहभुजामनेकेषां भुजिक्रियायाम्(), तथेदमङ्गग्रहणमावर्त्यते। तत्रानावृत्तेन हल्? विशिष्यते, आवृत्तेन त्वङ्गस्य दीर्घत्वं भवतीत्युभयथार्थप्रतिपत्तिर्भवति॥

बाल-मनोरमा

हलः ३८६, ६।४।२

दिग्योगे पञ्चम्येषा। हलः परस्येति लभ्यते। "संप्रसारणस्ये"ति सूत्रमनुवर्तते। अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्त्यते। एकमवयवषष्ठ()न्तं हल इत्यत्रान्वेति। अङ्गावयवाद्धल इति लभ्यते। द्वितीयं तु स्थानषष्ठ()न्तं संप्रसारणेन विशेष्यते। तदन्तविधिः। "ढ्रलोपे" इत्यतो दीर्घ इत्यनुवर्तते। तदाह -- अङ्गावयवादित्यादिना। उदाहरणं तु -- वीतः, शूनः, जीनः। हल इति किम्?। उतः उतवान्। अङ्गावयवात् किम्?। निरुतम्। तदन्ताङ्गस्येति किम्?। विध्यति। एषामिति। व्रीभ्रीक्षीषामित्यर्थः। ल्वादय एव वृत्ताः, न तु प्वादय इति मते इति भावः। ज्ञा अवबोधने। शिति जादेशं स्मारयति -- ज्ञाजनोर्जेति। दीर्घनिर्देशे"ति। प्वादित्वेऽपि आकारोच्चारणसामर्थ्यान्न ह्रस्व इति भावः। बन्ध बन्धने। अनिट्। नोपधः। बन्धातीति। "अनिदिता"मिति नलोप इति भावः। भारद्वाजनियमात्थलि वेडिति मत्वाऽऽह-- बबन्धिथ बबन्द्धेति। अकित्वान्नलोपो न। अनिट्पक्षे तु "झषस्तथो"रिति थस्य धः। बन्धेति। तासि।झषस्तथो"रिति तकारस्य धः। भन्त्स्यतीति। "एकाचः" इति बस्य भष्। धस्य चर्त्वेन तः। बधानेति। "हलः श्नः शानज्झौ" इति शानच्। अभान्त्सीदिति। हलन्तलक्षणावृद्धिः। भष्भावः। अबान्द्धामित्यत्र सकारपरकत्वाद्भष्भावमाशङ्क्याह-- पूर्वत्रत्यादि। ननु कृते सिज्लोपे प्रत्ययलक्षणमाश्रित्य सकारपरकत्वाद्भष् दुर्वार इत्यत आह-- प्रत्ययलक्षणेनेति। अबान्द्धामिति। "झषस्तथो"रिति तस्य धः। श्रन्थ विमोचने। श्रन्थिग्रन्थीत्यादिनेति। "श्रन्थिग्रन्थिदम्भिस्वञ्जीना लिटः कित्त्वं वे"ति व्याकरणान्तरेणेत्यर्थः। अस्मिन्नपि पक्षे इति। "पितामपीदं कित्त्व"मिति सुधाकरमतेऽपि प्रथमपुरुषणलि --शश्राथ। उत्तमपुरुषणलि तु शश्राय शश्रयेति माधव आहेत्यर्थः। तत्र मूलमिति। "कित्त्वपक्षे एत्त्वाभ्यालोपा"वित्यारभ्य "माधव" इत्यन्तसंदर्भे मूलं नास्तीत्यर्थः। संयुक्तहल्मध्यस्थत्वादेवंविधवार्तिकाऽदर्शनाच्चेति भावः। कुष निष्कर्षे।

---

सूत्रम्

काशिका-वृत्तिः

नामि ६।४।३

नाम् इति एतत् षष्ठीबहुवचनम् आगतनुट्कं गृह्यते। तस्मिन् परतो ऽङ्गस्य दीर्घो भवति। अग्नीनाम्। वायुनाम्। कर्तृणाम्। हर्तृणाम्। अणः इत्येतदत्र निवृत्तम्। आगतनुट्कग्रहणम् उत्तरार्थम्, कृते च नुटि दीर्घप्रतिपत्त्यर्थम्। अन्यथा हि नुडेव न स्यात्। नामि दीर्घ आमि चेत् स्यात् कृते दीर्घे न नुट् भवेत्। वचनाद् यत्र तन्नास्ति नोपधायाश्च चर्मणाम्।

लघु-सिद्धान्त-कौमुदी

नामि १४९, ६।४।३

अजन्ताङ्गस्य दीर्घः। रामाणाम्। रामे। रामयोः। सुपि - एत्त्वे कृते॥

न्यासः

नामि। , ६।४।३

अण्ग्रहणं सम्प्रसारणग्रहँ दीर्घग्रहणञ्चैतत्? त्रयमनुवत्र्तते। कुतः पुनः परकृतमण्ग्रहणम्()? "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इत्यतः। ननु तत्? "इकः काशे" ६।३।१२२ इतीग्ग्रहणेन व्यवच्छिन्नम्(), तत्? कथमिहानुवत्र्तते? नैष दोषः,

इग्ग्रहणेन ह्यणेव विशिष्यते--अण्णिगिति। ततो विरोधाभावान्नेग्ग्रहणेनाण्ग्रहणं व्यवच्छिद्यते। ननु च यदीग्ग्रहणेनाण्ग्रहणं विशिष्यते, तदा--"अवाचा, स्वराचा" इत्यत्र दीर्घत्वं न स्यात्()। "चौ" ६।३।१३७ इत्त्राण्ग्रहणमेवात्रानुवर्त्तिष्यते, इग्गरहणं तु निवृत्तमित्येषोऽप्यदोषः। अथ वा--यद्यपीग्ग्रहणेनाण्ग्रहणं व्यवच्छिन्नम्(), तथापीह मण्डूकप्लुतिन्यायेनानुवत्र्तते। ननु यथा "शेषे" ४।२।९१ इत्येतल्लक्षणं विधिरधिकारश्च, तथा "अङ्गस्य" ६।४।१ इत्येतदपि, ततश्चानेनैव हूतः, जीन इत्यादेः सिद्धत्वादपार्थकं "हलः" इत्येतद्वचनम्()। अतो न कत्र्तव्यमेवेति मन्यमान आह--"हल इति किम्()" इति। किमर्थं "हलः" इत्येतत्? सूत्रमारभ्यत इत्यर्थः। "उत्तः, उतवान्()" इति। असत्यस्मिन्? सूत्रे सन्प्रसारणान्तस्याङ्गस्य दीर्घो भवतीत्युच्यमान इहापि दीर्घत्वं स्यात्()। भवति ह्येतदपि व्यपदेशिवद्भावेन सम्परसारणान्तमङ्गम्(), तस्मात्? "हलः" इति सूत्रं कत्र्तव्यम्()। "विद्धः, विचितः" इति। "व्यध ताडने" (धा।पा।११८१) "व्यच व्याजीकरणे" (धा।पा।१२९३) निष्ठा, ग्रह्यादिसूत्रेण ६।१।१६ सम्प्रसारणम्()। सम्प्रसारणान्तस्याङ्गस्य ग्रहणादिह न भवति दीर्घः। यद्यपि "विध्यत्यधनुषा" ४।४।८३ "ग्रहिज्यावयिव्यधिवष्टिविचति" (६।१।१६) इति निर्देशात्? हलन्तस्य यत्? सम्प्रसारणं तस्य दीर्घो न भविष्यतीति विज्ञायते, तथापि ज्ञापकद्वारेणास्मिन्नर्थे प्रतिपाद्यमाने प्रतिपत्तिगौरवं स्यादित्येतत्परिहारार्थं सम्प्रसारणान्तस्येत्युक्तम्()। "तृतीयः" इति। "द्वेस्तीयः" ५।२।५३ इति "त्रेः सम्प्रसारणञ्च" ५।४।५५ इति तीयप्रत्ययः सम्प्रसारणञ्च। सर्वमात्रास्ति, न त्वण्()? कसमान्नास्त्यण्()? यस्मात्? "ढ्रलोपे" पूर्वस्य दीर्घोऽणः" ६।३।११० इत्यत इहाण्ग्रहणमनुवत्र्तते, तत्र च पुर्वेणैव णकारेण प्रत्याहारग्रहणम्(), न च ततर ऋकारः सन्निविष्ट इति भवत्येव प्रत्युदाहरणम्()। "तृतीयेति वा" इत्यादि। अथ वा "अण" इत्यतन्निवृत्तमेव। तथाप्यत्र न भवत्येव दीर्घः; "कर्त्तुकरणयोस्तृतीया" २।३।१८ इति निपातनात्()। "हलः" इत्येतस्य त्रयोऽर्थाः सम्भाव्यन्ते। हल उत्तरस्य सम्प्रसारणान्तस्याङ्गस्य दीर्घो भवति--अयमेकोऽर्थः, अङ्गावयवाद्धल उत्तरस्य सम्प्रसारणस्य दीर्घो भवति--इति द्वितीयः, तृतीयसतु वृत्तिकारेणैव दर्शितः। तत्र यदि प्रथमः पक्ष आश्रीयते, तदा निरुतम्(), दुरुतमित्यत्रापि स्यात्()। भवति ह्येतदपि हल उत्तरं सम्प्रसारणान्तमङ्गम्()। अथ द्वितीयस्तदा विद्धः, विचित इत्यत्रापि स्यात्()। अत्राप्याङ्गावयवाद्धल उत्तरं सम्प्रसारणमिति। अथ "विध्यत्यधनुषा" ४।४।८३, "ग्रहिज्यावयिव्यधिवष्टिविचति" (६।१।१६) इति निर्देशान्न भविष्यति? ततश्च ज्ञापकद्वारेणैवंविधे दीर्घत्वाभावे प्रतिपत्तिगौरवं स्यादेव। तस्मादेतस्यैव दोषस्य परिजिहीर्षया तृतीयोऽर्थो वृत्तिकारेण दर्शितः। अत्रापि देश्यमिदमाशङ्क्यते--ननु चायमर्थोऽस्य सूत्रस्य नोपपद्यत एव, यस्मादङ्गस्येत्येकमङ्गग्रहणं प्रकृतम्()। तच्च हलो विशेषणं वा स्यात्(), अङ्गस्य कार्यप्रतिपत्त्यर्थं वा। तत्र यदि पूर्वकः पक्ष आश्रीयते तदाङ्गविशिष्टस्य सम्प्रसारणान्तस्याङ्गस्येति यावद्दीर्घो न लभ्यते। अथ द्वितीयस्तदा हल्? विशेषितो न स्यात्()। तस्माद्()द्वितीयमङ्गगरहणं कत्र्तव्यं स्यात्()। न ह्येकेन शक्यमेतदुभयं प्रतिपादयितुम्()। अतोऽस्य देश्यस्य निरासायाऽऽवृत्तिन्यायमाश्रित्याह--"अङ्गग्रहणम्()" इत्यादि। एकमपि हि वस्त्वावर्त्त्यमानमनेकत्रोपयुज्यते। यथैकं भाजनमसहभुजामनेकेषां भुजिक्रियायाम्(), तथेदमङ्गग्रहणमावर्त्त्यते। तत्रानावृत्तेन हल्? विशिष्यते, आवृत्तेन त्वङ्गसय दीर्घत्वं भवतीत्युभयथार्थप्रतिपत्तिर्भवति॥

न्यासः

नामि।, ६।४।३

अङ्गाधिकारान्नामि परतोऽङ्गस्य दीर्घो विधीयते। अङ्गञ्च प्रत्यये परतो भवति। न चेह शास्त्रे क्वाचिन्नाम्प्रत्ययो विहितः, ततो न ज्ञायते--नामीति कस्येदं ग्रहणमिति? अतस्तत्परिज्ञानार्थमाह--"नामीति षष्ठीबहुवचनम्()" इत्यादि। आगतः प्राप्तो नुड्? येन तदागतनुट्कम्()। अथ वा आगतः= प्राप्तो नुड्? यतर तदागतनुट्कम्()। "कर्ततृ()णम्()" इति। कथं पुनरत्र दीर्घत्वम्(), यावताऽण्ग्रहणमत्रानुवत्र्तते? अत माह--"अण इत्येतन्निवृत्तम्()" इति। "न तिसृ()चतसृ" ६।४।४

इति तुसृचतरुआओर्दीर्घत्वप्रतिषेधादीत्यभिप्रायः। "उत्तरार्थम्()" इति। "नोपधायाः" ६।४।७ इति। अत्र नामि परतो नोपधाया दीर्घत्वं यथा स्यात्(), आमि मा भूदिति--एवमर्थमागतनुट्कग्रहणम्()। तेन वर्मणामित्यत्र दीर्घो न भवति। कृते च नुटु दीर्घत्वप्रतिपत्त्यर्थमित्यागतनुट्कस्य ग्रहणमिति परकृतेन सम्बन्धः। "अन्यथा हि" इत्यादि। अन्यथा यद्यागतनुट्कस्यामो ग्रहणं न क्रियते तदा नुट आम्भक्तत्वादाम्ग्रहणेन ग्रहणे कृते सति नुटि दीर्घत्वेन भवितव्यम्(), अकृतेऽपि। ततश्च कृताकृतप्रसङ्गो यो विधिःस नित्य इति नित्यत्वात्? परमपि नुटं बाधित्वा दीर्घत्वमेव स्यात्()। एवञ्च सति ह्रस्वान्तमङ्गं न भवतीति नुडेव न स्यात्()। ननु न नुड्ु ह्रस्वान्ताद्विधीयते, न च नित्यत्वाद्दीर्घत्वे कृते ह्रस्वान्तमङ्गमास्ति, तत्र वचनसामथ्र्याद्भूतपूर्वगतिर्भविष्यति, भूतपूर्वगत्या ह्रस्वान्तादङ्गादुत्तरस्यामो नुड्भवतीति, न च शक्यते वक्तुम्(); तिसृणाम्(), चतसृणामित्यत्र "न तिसृचतसृ" ६।४।४ इति प्रतिषेधात्()। ह्रस्ववचनं सावकाशमिति। यस्मात्? "ह्रस्वनद्यापो नुट्()" ७।१।५४ इत्यतर--"त्रेस्त्रयः" ६।३।४७ इत्यतस्त्रिग्रहणमनुवत्र्तते, तेन त्रिग्रहणानुवृत्तेरेव स्थानिवद्भवेन तिसृणामित्यत्र नुड्भविष्यत#इ। तथा चतसृणामित्यत्रापि "षट्? चतुभ्र्यश्च" ७।१।५५ इत्यनेन स्थानिवद्भावादिति। नापि शक्यते वक्तुम्()--नृणामित्यत्र "नृ च" (६।४।६) इति पक्षे दीर्घत्वाभावात्? ह्रस्ववचनस्य सावकाशत्वमिति। न ह्रेकमुदाहरणं प्रति ह्रस्ववचनं प्रयोजयति। यदि ह्रेतावत्? प्रयोजनं स्यात् "नृनद्यापो नुट्()" इत्येवं ब्राऊयात्()। तदेवं ह्रस्ववचनमनवकाशम्()। अतः कृतेऽपि दीर्घत्वे अग्नीनामित्यादौ भूतपूर्वगत्या नुड् भविष्यति; ह्रस्वग्रहणसामथ्र्यात्()। तस्मादयुक्तमिदमुक्तम्()--अन्यथा हि नुडेव न स्यादिति। एवं तह्र्यन्यथा व्याख्यायते वृत्तिग्रन्थे--"आगतनुट्कस्य ग्रहणमुत्तरार्थम्()" इत्युक्ते चोदक आह--"कृते च नुटि" इत्यादि। कस्मान्न भवतीति वाक्यशेषः। कृते च नुटि दीर्घस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थमागतनुट्कस्य ग्रहणं कस्मान्न भवतीति। युक्तं चैतत्(), तथधा हि यद्यागतनुट्कस्य ग्रहणं न स्यात्? ततो नित्यत्वाद्दीर्घत्वे कृते ह्रस्वाभावादग्नीनामित्यादौ नुड्? न स्यात्()। सनुट्कस्य ग्रहणे तु भवतीत्येवं चादकेनोक्ते सतीदमाह--"अन्यथा हि" इत्यादि। हिशब्दोऽयमपिशब्दार्थे वत्र्तते। नशब्दोऽपि नन्वित्यर्थे वत्र्तते। अनेकार्थत्वा न्नेपातानाम्()। एवकारो भिन्नक्रमः, स्यादित्यस्यानन्तरं द्रष्टव्यः। तदयमत्रार्थः--अन्यथापि ननु नुट् स्यादेव, न केवलं सनुट्कसय ग्रहणे सत्यग्नीनामित्यादौ नुड् भवति, अपि त्वन्यथाप्यनागतनुट्कस्यापि ग्रहणे नुट्? स्यादेवेति। अथ किमर्थमागतनुट्कसय ग्रहणम्(), "आमि दीर्घः" इत्येव नोच्येत? अस्मिन्? पर्यनुयोगे सति "नामि दीर्घः" इत्यादेः श्लोकस्योपन्यासः। योऽयं नामि दीर्घ उक्तः स यद्यामि भवेदामीत्येवं सूत्रप्रणयने सति कृताकृतप्रसङ्गित्वेन नित्यत्वात्? परमपि नुटं बाधित्वा दीर्घत्वमेव स्यात्(), ततश्च नुङ् न स्यादेव, अह्रस्वान्तत्वादङ्गस्य? नैष दोषः; "वचनात्()" इति। वचनान्नुडु भविष्यति। यदि दीर्घत्वे नुड्? न स्यात्(), तदा "ह्रस्वनद्यापो नुट्()" ७।१।५४ इत्यत्र ह्रस्ववचनमनर्थकं स्यात्(); अनवकाशत्वात्()। तस्माद्? ह्रस्ववचनसामथ्र्यादसति साम्प्रतिके ह्रस्वान्तेऽङ्गे भूतपूर्वगत्या कृतेऽपि दीर्घत्वेऽङ्गस्य नुङ भविष्यति। यत्र तन्नास्तीति तत्र वचनस्यावकाश इति वाक्यशेषः। यत्र दीर्घत्वं नास्ति--तिसृणाम्(), चतुसृणामिति तत्र ह्रस्ववचनस्यावकाशः। अतोऽग्नीनामित्यादौ दीर्घत्वे कृते भूतपूर्वगत्या नुडागमो न लक्ष्यते। साम्प्रतिकाभावे हि भूतपूर्वगतिर्भवति। ननु तिसृणामित्यादावपि नैव ह्रस्ववचनस्यावकाशः। अन्यथैवात्र नुटः सिद्धत्वादिति भावः। ह तावत्? तिसृणामिति विनापि ह्रसवग्रहणेनानेनैव सूत्रेण नुङ् भविष्यति, त्रिग्रहणानुवृत्तेः। चतसृणामित्यत्र "षट्चतुभ्र्यश्च ७।१।५५ इत्यनेनैव नृणामित्यत्र यद्यपि ह्रस्वान्तमङ्गं तथापि नैकमुदाहरणं प्रति ह्रस्ववचनं प्रयोजयति, अन्यथा हि नृग्रहणमेव कुर्यात्(), न ह्रस्वग्रहणम्()। तस्मन्नास्त्येव ह्रस्ववचनस्यावकाशः। तदेतदपार्थकं मा भूदिति ह्रसववचन सामथ्र्यात्? कृतेऽपि नुड्? भवतीतयविचलमेतत्()। एवमक्रियमाणेऽपि सनुट्कस्य ग्रहणे दीर्घत्वे कृतेऽपि नुङ भविष्यतीति परमतमाशङ्क्य प्रयोजनान्तरमाह--"नोपधायाश्च" इत्यादि। चशब्दस्तह्र्यर्थे। एवं तर्हि "नोपधायाः" ६।४।७ इति दीर्घत्वं नामि परभूते या नोपधा तस्या यथा स्यात्()--पञ्चानाम्(), सप्तानामित्यादौ। अत्र हि "षट्चतुभ्र्यश्च" ७।१।५५ इत्यनेन पञ्चनामित्येवमादेर्नान्तादङ्गादामो नुटि कृते नामि परतो नोपधा भवति। यदि पुनः "आमि"

इत्येवोच्येत, तदा वर्मणामित्यादावपि दीर्घत्वं प्रसज्येत। सनुट्कस्य ग्रहणे सति न भवति, नुटो लक्षणाभावात्()। अत्र हि केवल आमि नोपधा, न तु सनुट्के। तदेवं वर्मणामित्यत्र "नोपधायाः" ६।४।७ इति दीर्घत्वं मा भूदित्येवमर्थं नामीत्युक्तम्()॥

बाल-मनोरमा

नामि २०७, ६।४।३

"राम-नाम्" इति स्थिते-नामि। "ढ्रलोप" इत्यनुवर्तते। दीर्घश्रुत्या च "अच" इत्युपस्थितम्। तेन चाङ्गं विशेष्यते। अतस्तदन्तविधिः। तदाह--अजन्तस्येति। "नुटि" इति न सूत्रितम्। "भृञः किन्नुट् चे"त्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे ॠकारस्य दीर्घापत्तेः। "अङ्गानां पामना"मित्यादौ तु न दीर्घः, अर्थवद्ग्रहणपरिभाषया अर्थवत एव नामो ग्रहणात्पामादिलक्षणे नप्रत्यये टापि द्वितीयैकवचने अमि कृते त्रयाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेऽपि समुदायस्यानर्थकत्वात्। ननु नामीति सनकारग्रहणं मास्तु, "अमि" इत्येव सूत्रयताम्। नच राम-आमित्यस्यां दशायां दीर्घे सति ह्रस्वान्तत्वाभावात् "ह्रस्वनद्यापः" इति नुट् न स्यादिति वाच्यम्। "ह्रस्वान्तान्नुडि"ति वचनसामथ्र्यात्कृतेऽपि दीर्घे भूतपूर्वगत्याश्रयणेन नुडुपपत्तेरिति चेन्न, सनकारनिर्देशस्य "नोपधाया" इत्युत्तरार्थत्वात्। यदि हि आमीत्येवोच्येत तर्हि "नोपाधायाः" इत्युत्तरसूत्रेऽपि आमीत्येवानुवर्तेत। ततश्च नान्तस्योपधाया दीर्घः स्यादामीत्येव लभ्येत। एवं सति "चर्मणां" "वर्मणा"मित्यादावपि दीर्घः स्यात्। अतो "नामी"ति सनकारनिर्देश इति भाष्ये स्पष्टमित्यलम्। "अटकुप्वाङि"ति णत्वं सिद्धवत्कृत्याह--रामाणामिति। नन्वत्र परत्वात् "सुपि चे"ति दीर्घ एवोपन्यसनीयः, न तु "नामी"ति दीर्घः, फलविशेषाऽभावोऽपि न्यायानुरोधेनैव शास्त्रप्रवृत्तेः "इको झल्" इति सूत्रे भाष्ये प्रपञ्चितत्वादिति शङ्कते--सुपि चेति दीर्घो यद्यपि पर इति। परिहरति--तथापीति। सन्निपातेति। ह्रस्वान्तसन्निपातमुपजीव्य प्रवृत्तस्य नुटो ह्रस्वविघातकं "सुपि चे"ति दीर्घं प्रति निमित्तत्वाऽसम्भवादिति भावः। नन्विह "नामी"ति दीर्घप्रवृत्तावपि सन्निपातपरिभाषाविरोधस्तुल्य इत्यत आह-नामीत्यनेनत्विति। यद्यत्र "नामी"ति दीर्घो न स्यात्तर्हि तदारम्भो व्यर्थः स्यात्। ततश्च निरवकाशत्वाद्रामाणामित्यादौ नामीति दीर्घः सन्निपातपरिभाषां बाधित्वा प्रवर्तते। "सुपि चे"ति दीर्घस्तु रामाभ्यामित्यादौ सावकाशत्वाद्रामाणामित्यादौ नामि परे सन्निपातपरिभाषां न बाधितुमर्हति। तस्माद्रामाणामित्यादौ नामि परे दीर्घप्रवृत्तौ सन्निपातपरिभाषां बाधितुं नामीति दीर्घारम्भः। ननु "नामी"ति दीर्घो निरवकाशत्वात्सन्निपातपरिभाषां बाधत इत्ययुक्तम्, यत्र ह्रस्वान्तसन्निपातमनुपजीव्यैव नुटः प्रवृत्तिस्तत्र सन्निपातपरिभाषानुपमर्देनैव नामीति दीर्घप्रवृत्तेः सावकाशत्वात्। यथा-कतीनामीत्यत्र। तत्र हि "षट्चतुभ्र्यः" इति नुट्। षट्संज्ञकेभ्यश्चतुरश्च परस्याऽऽमो नुट् स्यादिति हि तदर्थ इति चेत्, एवं हि सति "कतेर्नामी"त्येव सूत्र्येत। अजन्तस्याङ्गस्य नामि दीर्घ इत्येवंपरं नामीति सामान्यसूत्रं नारम्भणीयमित्यर्थः। अन्यथा मुद्गादणित्यनुपपत्तेरिति कैयटः। न चैवं सति कतिशब्दस्याधिकस्य प्रवेशे गौरवमिति वाच्यं, "न तिसृचतसृ" इति नामि दीर्घनिषेधाऽकरणेन लाघवात्। एवं च कतेर्नामीत्यनुक्त्वा नामीति सामान्यसूत्रारम्भसामथ्र्याद्रामाणामित्यादावपि नामीति दीर्घः सन्निपातपरिभाषां बाधित्वा निविशत इति युक्तम्। एवं च आरम्भसामथ्र्यादिति मूलमपि कतेर्नामीत्यनुक्त्वा नामीति सामान्यसूत्रारम्भसामथ्र्यादत व्याख्येयमित्यलं विस्तरेण।

अत सप्तमीविभक्तिः। ङेर्ङकार इत्। "राम-इ" इति स्थिते "आद्गुण" इति मत्वाह--राम इति। रामयोरिति। षष्ठीद्विवचनवत्। सुप्येत्वे कृत इति। पकारस्येत्त्वे, लोपे, "बहुवचने झल्येत्" इत्येत्त्वे कृत इत्यर्थः।

तत्त्व-बोधिनी

नामि १७४, ६।४।३

नामि। "ढ्रलोपे"-इत्यतो "दीर्घ" इत्यनुवत्र्तते। दीर्घश्रुत्योपस्थितेनाऽच इत्यनेनाङ्गस्येति विशेष्यते। विशेषणेन न तदन्तविधिः। तदेतदाह-अजन्ताङ्गस्येत्यादि। अर्थवद्ग्रहणपरिभाषया "नामी"ति नुट् सहित एवाऽऽम् गृह्रते। तेन पामनाम्, अङ्गनामित्यादौ न भवति। तत्र हि पामादिलक्षणे नप्रत्यये टापि द्वितीयैकवचने च कृते त्रयाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेऽपि "ना"मिति समुदायस्यानर्थकत्वात्। यद्यपि नलोपस्याऽसिद्धत्वादनेन "पामना"मित्यत्र दीर्घः सुपरिहरः, तथापि "नोपधायाः" इत्यनेन तु स्यादेवेति बोध्यम्। "नुटि" इति तु न सूत्रितम्। "भृञः किन्नुट् च" इत्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे मा भूदिति। स्यादेतत्। नुडागमस्याऽऽम्भक्तत्वादाम्ग्रहणेन सनकारोऽप्याम् ग्रहीष्यत इति "आमि" इत्येव सूत्रमस्तु। न चाऽऽमीति दीर्घस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात्परमपि नुटं बाधित्वा अग्नीनामिन्दूनामित्यत्र दीर्घे कृते ह्रस्वाश्रयो नुट् न भवेदिति वाच्यम्, ह्रस्वान्तान्नुडिति वचनसामथ्र्यात्कृतेऽपि दीर्घे भूतपूर्वगत्याश्रयणेन तत्प्रवृत्तेः। नापि "न तिसृचतसृ" इति निषेधात्तिसृणां चतसृणामित्यत्र ह्रस्व#आन्तान्नुडिति वचनस्य प्रयोजनमस्तीति वाच्यम्। "चतसृणा"मित्यत्र "षट्चतुभ्र्यश्च" इत्यनेनैव नुट्सिद्धेः। "ह्रस्वनद्यापः"--इति सूत्रे "त्रेस्त्रयः" इत्यतः "त्रे"रित्यनुवत्र्य त्रिशब्दात्परस्यामो नुडिति व्याख्यानात्तिसृणामित्यत्रापि तत्सिद्धेः। यद्यपि नृणामित्यत्र प्रयोजनमस्ति, तथापि नैकमुदाहरणं प्रयोजयति। अन्यथा "नृनद्यापः" इत्येव वदेत्। तस्मादादमीत्युक्तौ न किंचिद्बाधकमस्तीत्यामः सनकारस्य ग्रहणं व्यर्थमिति चेत्, अत्रोच्यते, उत्तरार्थं सनकारग्रहणं कर्तव्यं, "नोपधायाः" इति दीर्घो न नुड्भवेत्। वचनाद्यत्र तन्नास्ति नोपधायाश्च वर्मणाम्" इति। अत्र वदन्ति-वचनाद्भूतपूर्वगत्याश्रयणेन तत्प्रवृत्तिरित्येतच्चिन्त्यम्। गौणत्वे "षट्चतुभ्र्यश्च" इति नुटोऽप्रवृत्त्या "प्रियचतसृणा"मित्यत्र नुडर्थं ह्रस्ववचनस्य चरितार्थत्वेन सामथ्र्यस्योपक्षयात्। तत्र हि "नुमचिर-" इति रादेशात्पूर्वविप्रतिषेधेन नुडिष्यत इति। तदयुक्तम्। "ऋन्नद्यापः" इति सूत्रितेऽपि ऋदन्तान्नुट् सिध्यत्येवेति ह्रस्वग्रहणसामथ्र्यस्यानुपक्षीणत्वादिति दिक्। परिभाषाविरोधादिति। "कृताकृतप्रसङ्गित्वेन "नामि" इति दीर्घस्याप्यनित्यत्वात्। आरम्भसामथ्र्यादिति। "सुपि च" इत्यस्य तु न सामथ्र्यं, रामाभ्यामित्यादौ सावकाशत्वादिति भावः। ननु "कतीना"मित्यत्र परत्वात् "षट्चतुभ्र्यश्च" इति नुटि "नामि" इति दीर्घः सन्निपातपरिभाषामबाधित्वैव प्रवर्तत इत्यारम्भसामथ्र्यस्योपक्षयात् "नामि" इति सूत्रमपि "रामाणा"मित्यत्र सन्निपातपरिभाषया न प्रवर्तते। तथा च "आचार्याणाम्" इति निर्देशेनोक्तपरिभाषाया अनित्यत्वमाश्रित्य "सुपि च" इति दीर्घ एव परत्वात्प्रवर्ततामिति चेत्। अत्र केचित्समाधयन्ति-चतुग्र्रहणसाहचर्याद्धलन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड्भवति न तु कतिशब्दात्परस्यामः, तथा च "कतीना"मित्यत्र ह्रस्वाश्रय एव नुडित्यारम्भसामथ्र्यं नोपक्षीणमिति। तदपरे न क्षमन्ते। रेफो यथा हल्संज्ञकस्तथा अम्संज्ञकोऽपि भवतीत्यमन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड्भवति न तु प्रियपञ्चां प्रियषषामित्यादाविति सिद्धान्ताद्बहिरङ्ग षट्संज्ञायो नुट्। तथा चान्तरङ्गत्वात्कतीनामित्यत्र ह्रस्वाश्रय एव नुडिति "नामि" इति दीर्घः सन्निपातपरिभाषां बाधित्वैव प्रवर्तते, ततश्चापम्भसामथ्र्यादिति मूलोक्तग्रन्थस्य न काप्यमुपपत्तिरिति समादधुः। इतरे तु "आरम्भसामथ्र्या"दित्यस्यायमर्थो "न तिसृचतसृ" इति निषेधारम्भसामथ्र्यादिति। "तिसृणा"मित्यत्र ह्रस्वान्तलक्षणे नुटि कृते "नामि" इति दीर्घप्रवृत्तौ हि "न तिसृ-" इति निषेध आरभ्यते। सन्निपातपरिभाषया दीर्घाऽप्रवृत्तौ तु किमनेन निषेधेन?। अतो ज्ञायते "नामि" इति दीर्घ संनिपातपरिभाषां बाधत इति। यैस्तु "ह्रस्वनद्यापः-" इत्यत्र ह्रस्वग्रहणं प्रत्याख्यायते, तैस्तु "नामि" इति दीर्घे आरम्भसामथ्र्यं नाश्रयणीयमेव।

---

सूत्रम्

काशिका-वृत्तिः

न तिसृचतसृ ६।४।४

तिसृ चतसृ इत्येतयोः नामि दीर्घो न भवति। तिसृणाम्। चतसृणाम्। इदम् एव नामि इति दीर्घप्रतिषेधवचनं ज्ञापकम् अचि र ऋतः ७।२।१०० इत्येतस्मात् पूर्वविप्रतिषेधेन नुडागमो भवति इति।

लघु-सिद्धान्त-कौमुदी

न तिसृचतसृ २२७, ६।४।४

एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु॥ द्वे। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः॥ गौरी। गौर्य्यौ। गौर्य्यः। हे गौरि। गौर्य्यै इत्यादि। एवं नद्यादयः॥ लक्ष्मीः। शेषं गौरीवत्॥ एवं तरीतन्त्र्यादयः॥ स्त्री। हे स्त्रि॥

न्यासः

न तिसृचतसृ। , ६।४।४

"तिसृ, चतसृ" इति "सुपां सुलुक्()" ७।१।३९ इति षष्ठीद्विवचनस्य लुकं कृत्वा निर्देशः कृतः। "तिसृणाम्(), चतसृणाम्()" इति। "त्रिचतुरोः स्त्रियां तिसृचतसृ" ७।२।९९ इति तिसृचतरुआआदेशौ भवतः। ननु चात्र दीर्घत्वस्य प्राप्तिरेव नास्ति। तत्? किं प्रतिषेधेनेति? तथा ह्यत्रादेशयोः कृतयोरुभयं प्राप्नोति--नुडागमः, "अचि र ऋतः" ७।२।१०० इति रेफादेशश्च, तत्र परत्वाद्रेफादेशे सत्यनजन्तमङ्गं भवति। अजन्तस्य दीर्घत्वेन भवितव्यम्(), दीर्घग्रहणेन "अचश्च" १।२।२८ इत्यस्या उपस्थापितत्वादित्यत आह--"इदमेव" इत्यादि। यद्यत्र रेफादेशः स्यादयं प्रतिषेधो न कृतः स्यात्(), कृतश्च, तस्()मादयं प्रतिषेधो ज्ञापयति--"अचि र ऋतः" (७।२।१००) इत्यस्मात्? पूर्वविप्रतिषेधेन नुडागमो भवतीति। तेन "नुमचिरऋत ज्वद्भावेभ्यो नुड्? भवति पूर्वविप्रतिषेधेन" इत्येतदुक्तं भवति॥

बाल-मनोरमा

न तिसृचतसृ २९८, ६।४।४

तिसृ-नामिति स्थिते "नामी"ति दीर्घे प्राप्ते-न तिसृचतसृ। "तिसृचतसृ" इति लुप्तषष्ठीकं पदम्। "ढ्रलोपे" इत्यतो "दीर्घ" इत्यनुवर्तते। "नामी"ति सूत्रं चानुवर्तते। तदाह--तिसृ इत्यादिना। तिसृणामिति। ऋवर्णान्नस्ये"ति णत्वम्। ननु "अचि र" इति रत्वम् "ऋत उदि"त्युत्वस्य कथमपवादः स्यात्, उत्वस्य ङसिङसोरेव प्राप्तेः, त्रिचतुर्शब्दयोश्च नित्यं बहुवचनान्तत्वेन ङसिङसोरभावादिति चेन्न, "प्रियतिरुआ" इत्यादिबहुव्रीहौ तत्सत्त्वात्। तच्चानुपदमेव वक्ष्यते। ननु प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिरिति बहुव्रीहावपि तिरुआआदेशः कुतो न स्यादित्यत आहस्त्रियामित्यादि। प्रियत्रिशब्दो हि स्त्रीलिङ्गो नतु त्रिशब्दः। स्त्रियामिति। त्रिचतुरोर्विशेषणं, नतु तदन्तयोः, प्रमाणाऽभावात्। न चाङ्गत्वात्तदन्तलाभः इति वाच्यम्, एवमपि त्रिचतुरोरेव प्रत्यक्षश्रुतत्वेन स्त्रियामित्यस्य तद्विशेषणताया एवोचितत्वादिति भावः। "ङिति ह्रस्वश्चे"ति नदीत्वविकल्पं मत्वाह--मतिशब्दवदिति। आमि त्विति। षष्ठीबहुवचने "त्रेस्त्रयः" इति त्रयादेशस्य आङ्गत्वेन तदन्तेऽपि प्रवृत्तेरिति भावः। एवं च स्त्रियामित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे प्रियत्रिशब्दे पुंनपुंसकलिङ्गत्रिशब्दगर्भबहुव्रीहावतिव्याप्तिः स्यादिति त्रिचतुरोरेव स्त्रियामिति विशेषणमिति स्थितम्। अथ स्त्रीलिङ्गत्रिशब्दगर्भबहुव्रीहावव्याप्तिनिरासार्थमपि स्त्रियामिति त्रिचतुरोरेव विशेषणं, न तु तदन्तयोरिति मत्वाह--प्रियस्तिरुआ इत्यादि। प्रियतिसेति। समासे सत्यन्तर्वर्तिविभक्तेर्लुका लुप्तत्बात्तिरुआआदेशनिवृत्तौ प्रियत्रिशब्दात्सुः। अत्र प्रियत्रिशब्दस्य पुंलिङ्गत्वेऽपि त्रिशब्दस्य स्त्रीलिङ्गत्वात्तिरुआआदेशः। "ऋदुशन"सित्यनङ्। "सर्वनामस्थाने चे"ति दीर्घः। नलोपः। स्त्रियामित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे त्वत्राऽव्याप्तिः स्यादिति भावः।

ननु त्रिचतुरन्ताङ्गविशेषणत्वेऽपि नात्राऽव्याप्तिः, प्रियास्तिरुआओ यस्येति विग्रहवाक्ये प्रवृत्तस्य तिरुआआदेशस्य समासेऽप्यनुवृत्तिसंभवादिति चैन्मैवं, लौकिकवाक्यं हि परिनिष्ठितत्वात्समासस्य न प्रकृतिः, किन्त्वलौकिकमेव प्रक्रियावाक्यम्। ततश्च प्रिया अस् त्रिअसित्यलौकिकप्रक्रियावाक्ये समासप्रवृत्तौ "अन्तरङ्गानपि विधीन्बहिरङ्गो

लुग्बाधते" इति परिभाषया तिरुआआदेशं बाधित्वं विभक्तिलुकि प्रियत्रिशब्दात्समासात्सुबुत्पत्तौ त्रिचतुरोरित्यस्यङ्गत्वात्तदन्तविधावपि "निर्दिश्यमानस्यादेशा भवन्ती"ति परिभाषया त्रिशब्दस्य तिरुआआदेशः। स च स्तिरायमित्यस्य त्रिचतुरन्ताङ्गविशेषणत्वे सति न स्यात्, प्रियत्रिशब्दस्याङ्गस्य पुंलिङ्गत्वात्। सति चात्र तिरुआआदेशे "नद्यृतश्चे"ति कप्तु न। स हि समासान्तत्वात्समासवदलौकिकविग्रहवाक्ये प्रवृत्तिमर्हति। तदानीं च उत्तरपदस्य त्रिशब्दस्य ऋदन्तत्वाऽभावान्न कप्। अन्तर्वर्तिविभक्तेर्लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावाच्च जस्निमित्तकतिरुआआदेशस्याऽभावात्। नचाऽकृते समासान्ते कपि प्रियात्रिशब्दात्सुबुत्पत्तौ तिरुआआदेशे सति कप् शङ्क्यः। अकृते कपि समासान्ते समासत्वस्यैव#आऽनिष्पत्त्या ततः सुबुत्पत्तेरसंभवादित्यास्तां तावत्। प्रियतिरुआआविति। गुणं बाधित्वा रत्वम्। प्रयतिरुआ इति। जसि पूर्वसवर्णदीर्घं बाधित्वा रत्वम्। प्रियतिरुआमिति। अमि पूर्वरूपं गुणं च बाधित्वा रत्वम्। "गुणदीर्घोत्त्वानामपवादः" इति पूर्वरूपास्याप्युपलक्षणम्। इत्यादीति। प्रियतिरुआऔ। प्रियतिरुआः। प्रियतिरुआआ। प्रियतिरुओ। ङसिङसोः-प्रियतिरुआ इत्येव, "ऋत उत्" इत्युत्त्वं बाधित्वा रत्वम्। प्रियतिस्रोः। आमि त्रयादेशं बाधित्वा परत्वात्तिरुआआदेशे सति रत्वं बाधित्वा "नुमचिरे"ति नुट्। प्रियतिसृणाम्। प्रियतिरुआः। "ऋतो ङी"ति गुणाऽपवादो रत्वम्। प्रियतिस्रोः। ननु प्रियास्तिरुआओ यस्य तत्कुलं प्रियत्रीति कथम्?। त्रिशब्दस्य स्त्रीलिङ्गत्वेन तिसृभावप्राप्तेरित्यत आह--स्वमोर्लुकेति। "स्वमोर्नपुंसका"दिति स्वमोर्लुका लुप्तत्वेन "न लुमते"ति प्रत्ययलक्षणाऽभावाद्विभक्तिपरकत्वाऽभावान्न तिसृभाव इत्यर्थः। अनित्यत्वादिति। "न लुमते"त्यस्याऽनित्यत्वम् "इकोऽचि विभक्तौ" इत्यज्ग्रहणादिति नपुंसकाधिकारे वक्ष्यते।

अजादिविभक्तौ "नपुंसकस्य झलचः" इति नुमपेक्षया परत्वा "दचि र ऋतः" इति रत्वमाशङ्क्याह--कत्वादिति ल्यब्लोपे पञ्चमी। पूर्वविप्रतिषेधेन रत्वं बाधित्वा नुमित्यर्थः। प्रियतिसृणी इति। रत्वं बाधित्वा नुमि णत्वम्। प्रियतिसृ()णीति। जश्शसोश्शिः। रत्वं बाधित्वा नुम्। शेः सर्वनामस्तानत्वान्नान्तलक्षणदीर्घः, णत्वम्। "प्रत्ययोत्तरपदयोश्चे"ति सूत्रे प्रियतिसृणी, प्रियतिसृ()णीति भाष्योदाहरणात्पूर्वविप्रतिषेधमाश्रित्य नुमा रत्वबाध इति बोध्यम्। प्रियतिसृणेति। टायां पुंवत्त्वाऽभावपक्षे नुमि रूपम्। प्रिततिरुओति। पुंवत्त्वे नुमभावाद्रत्वम्। इत्यादिति। आदिना प्रियतिरुओ, प्रियतिसृणे इत्यादि बोध्यम्। द्वेरत्वे इति। द्विशब्दाद्विभक्तौ सत्यां त्यदाद्यत्वे "अजाद्यतः" इति टाबित्यर्थः। द्वे इत्यादि। टापि सति सवर्णदीर्घे द्वाशब्दस्य रमावद्रूपाणीति भावः। इति इदन्ताः।

अथ ईदन्ताः। गौरीति गौरशब्दाद्गौरादिलक्षणङीषि "यस्येति च" इत्यकारलोपे गौरीशब्दः। तस्मात्सुः, हल्ङ्यादिलोप इति भावः। गौर्याविति। "दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घनिषेधे यणिति भावः। गौर्य इति। "दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घनिषेधे यणिति भावः। नदीकार्यमिति। "अम्बार्थनद्योर्ह्रस्वः" "आण्नद्याः"। "ह्रस्वनद्यापो नुट्" "ङेराम्नीभ्यः" इति विहितमित्यर्थः। "यू स्त्र्याख्यौ" इति नदीत्वम्। बहुश्रेयसीवत्। एवं वाणीनद्यादय इति। "वण शब्दे" वण्यते शब्द्यते इति वाणी। "इञ्वपादिभ्यः"ति इञ्। "कृदिकारादक्तिनः" इति ङीष्। "नदट्" इति पचादौ पठिताट्टित्त्वान्ङीप्। आदिना कत्री दण्डिनीत्यादिसङ्ग्रहः। "सख्यशि()आईति भाषाया" मिति सखिशब्दात्ङीषि "यस्येति चे"तीकारलोपे सखीशब्दः।

तस्य "अनङ् सौ" इत्यनङं "सख्युरसम्बुद्धौ" इति णिद्वत्त्वं चाशङ्कते--प्रातिपदिकेति। "विभक्तौ लिङ्गविशिष्टाग्रहणम्"। "युवोरनाकौ" इत्यत्र "ङ्याप्प्रातिपदिकात्" इत्यत्र च भाष्ये इयं परिभाषा पठिता। विभक्तिनिमित्तके कार्ये कर्तव्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं नास्तीत्यर्थः। तथा च अनङ् णिद्वत्त्वं च न भवतीति भावः।

सखीति। ङ्यन्तत्वात्सुलोपः। सख्यैत्यादीति। गौरीवदेव रूपाणित्यर्थः। "लक्षेर्मुट् चे"ति लक्षधातोरीप्रत्यये मुडागमे लक्ष्मीशब्दः। तस्य विशेषमाह-अङ्यन्तत्वादिति। "कृदिकारादक्तिनः" इति ङीषि तु सुलोपो भवत्येव। शेषं गौरीवत्।

स्त्रीति। "स्त्यै शब्दसंघातयोः"। स्त्यायतः सङ्गते भवतोऽयस्यां शुक्रशोणिते इति स्त्री। स्त्यायतेः ड्रट्। डटावितौ। डित्त्वसामथ्र्यादभस्यापि टेर्लोपः। लोपोव्यो"रिति यलोपः। टित्त्वान्ङीप्। हल्ङ्यादिलोप इति भावः। हे स्त्रि इति। अम्बार्थेति ह्यस्वः। स्त्री औ इति स्थितेऽधात्विकारत्वात् "अचि श्नुधातु" इति इयङ्यप्राप्ते-।

तत्त्व-बोधिनी

न तिसृचतसृ २६०, ६।४।४

त्रिचतुरोर्विशेषणादिति। श्रुतत्वाद्धि "त्रिचतुरो"रित्यस्यैव "स्त्रिया"मिति विशेषणं, नाङ्गस्येति भावः। प्रियास्तिस्त्र इति। "प्रिया जस् त्रि जस्िति स्थिते "अन्तरङ्गानपि विधान्वहिपङ्गो लुग्बाधते"इत्यकृत एव तिरुआआदेशे सुपो लुकि कृते समासाद्या विभक्तिस्तस्यां परतस्तिरुआआदेशः। "स्त्रियाः पुंव"दिति प्रियाशब्दस्य पुंवद्भावः। "ऋदुशेन"त्यनङ्। यद्यपि इह जहत्स्वार्थावृत्तिपक्षे त्रिशब्दस्य निर्थकत्वेन स्त्रीवाचित्वं दुर्लभं, तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या। "उत्तरपदार्थप्रधानस्तत्पुरुष"इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्रत्वात्। "अजहत्स्वार्था वृत्ति"रिति पक्षे तु "स्त्रीनिष्ठसङ्ख्यासमर्पकयोस्त्रिचतुरो"रिति विवक्षितोऽर्थः, तेन प्रियास्त्रयस्त्रीणि वा यस्याः सा "प्रियत्रि"रित्यत्र प्रियत्रिशब्दस्य स्त्रियां वृत्तित्वेऽपि न
तिस्त्रादेसप्रसङ्गः,"प्रत्ययोत्तरपदयोश्चे"त्येतत्सूत्रगतभाष्यग्रन्थसन्दर्भश्चोक्तव्याख्याने प्रमाणाम्। अनित्यत्वादिति। "इकोऽची"त्यज्ग्रहणमिह लिङ्गम्। तथाहि---भ्याम्भिसादिषु सत्यपि नुमि "नलोपः प्रातिपदिकान्तस्ये"ति तल्लोपसंभवाचीति व्यर्थम्। न च "न ङिसंबिद्द्यो"रिति निषेधात्सम्बुद्धौ लोपो न संभवतीति तत्रानिष्टवारणायाऽचीत्यावश्यकमिति वाच्यं, संबुद्धिश्च लुका लसुप्तेति नुमः प्राप्तेरेव तत्र दुर्लभत्वात्। "न लुमते"ति निषेधस्याऽनित्यतां विना तत्र प्रत्ययलक्षणाऽप्रवृत्तेः। नाप्युत्तरार्थं तदिति वाच्यम्, उत्तरत्रैव कर्तव्ये तत्राऽचीति करणस्य वैयथ्र्यात्। "न लुमते"ति निषेधस्याऽनित्यत्वे तु संबुद्धौ प्रतत्यलक्षणेन प्राप्तं नुमं वारयितुंम तदिति भवत्येवाऽज्ग्रहणं लिङ्गम्। न चेदमनित्यत्वं संबुद्धिगुणमात्रविषयकमित्यबिनिवेष्टव्यं, लक्ष्यानुरोधेनाऽन्यत्रापि क्वचित्तदब्युरगमे बाधकाऽभावात्। अतएव "प्रियतिसृ""प्रियत्री"ति रूपद्वयमपि कैयटेन स्वीकृतम्।

रादेशात्पूर्वविप्रतिषेधेन नुम्। रादेशादिति। तत्र "प्रियतिसृणी," "प्रियतिसृ()णी"ति भाष्यं मानम्। इत्यादीति। प्रियतिस्त्रे। प्रियातिसृणे। प्रियतिरुआः। प्रियतिसृणः। आमि रादेशं बाधित्वा पूर्वविप्रतिषेधेन नुम्, तं च बाधित्वा पूर्वविप्रतिषेधेन नुट्। प्रियतिसृणाम्। द्वेरत्वे सत्याबिति। विभक्तिसंनिपातकृतमपि त्यदाद्यत्वं टापो निमित्तं, "न यासयो"रिति निर्देशेन संनिपातपरिभाषायां अमित्यत्वादिति भावः।

विभक्तौ लिह्गविशिष्टाऽग्रहणम्। अङ्यन्तत्वादिति। केचिदिह "कृदिकारा"दिति पाक्षिक ङीषमिच्छन्ति तन्मते तु सुलोपः पक्षे स्यादेव। अतएव "वातप्रमी""श्री""लक्ष्मी"तिपक्षे ङ्यन्ताः सुसाधव इति रक्षितः। "लक्ष्मीर्लक्ष्मी हरिप्रिये"ति द्विरूपकोशश्च।

---

सूत्रम्

काशिका-वृत्तिः

छन्दस्युभयथा ६।४।५

छन्दसि वषये तिसृचतस्रोः नामि परतः उभयथा दृश्यते, दीर्घश्चादीर्घश्च। तिसृणां मध्यदिने, तिसृणां मध्यदिने। चतसृणां मध्यदिने, चतसृणां मध्यदिने।

न्यासः

छन्दस्युभयथा। , ६।४।५

वेति वक्तव्ये "उभयथा" इति वचनं वैचित्र्यार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

नृ च ६।४।६

नृ इत्येतस्य नामि परे उभयथा भवति। त्वं नृणां नृपते, त्वं नृणां नृपते केचिदत्र छन्दसि इति न अनुवर्तयन्ति, तेन भाषायाम् अपि विकल्पो भवति।

लघु-सिद्धान्त-कौमुदी

नृ च २१३, ६।४।६

अस्य नामि वा धीर्घः। नृणाम्। नृणाम्॥

न्यासः

नृ च। , ६।४।६

"केचिदेतचछन्दसीति नानुवत्र्तयन्ति" इति। त एवं मन्यन्ते--यद्ययं योगश्चन्दस्येव स्यात्? "छन्दसि नृ चोभयथा" इत्येकयोगमेव कुर्यात्()। चकारो हि तिसृचतरुआओरनुकर्षणार्थः। तत्रैकयोगेनैव सिद्धे पृथग्योगकरणान्निश्चीयते--भाषायामप्येष योग इति॥

बाल-मनोरमा

नृ च २८१, ६।४।६

नृच। "नृ" इति लुप्तषष्ठीकम्। "नामी"ति सूत्रमनुवर्तते। "ढ्रलोपे" इत्यतो "दीर्घ" इत्यनुवर्तते। "छन्दस्युभयथे"त्यत उभयथेत्यनुवर्तते। तदाह--नृ #इत्येतस्येत्यादिना। नृ()णां नृणामिति। "ऋवर्णान्नस्ये"ति णत्वम्। ङौ "ऋतो ङी"ति गुणो रपरत्वम्। नरि न्रोः नृषु। इत्यृदन्ताः। अथ ऋदन्ता निरूप्यन्ते--कृ? इत्यादिना। कृ? तृ? इत्यनयोकनुकरणे इत्त्वे रपरत्वे इत्यन्वयः। "कृ? विक्षेपे" "तृ? प्लवनतरणयोः"। कृ? तृ? इत्याभ्यां शब्दाभ्यामनुकरणे क्रियमाणेऽनुकरणभूताभ्यां ताभ्यां धातुपाठपठितौ कृ? तृ? इत्येतौ विवक्षितौ। अत एवानुकरणस्य अनुकार्यमर्थः। अनुकार्यं च अनुकरणाद्भिन्नमिति "मतौ छः" इति सूत्रभाष्ये स्थितम्। आनुपूर्वीव्यत्ययेऽपि वाचकसादृश्यादर्थोपस्थापकत्वमिति अत्र कैयटे, "प्राग्दीव्यतोऽ"णित्यत्र भाष्ये च स्पष्टमेतत्। ततश्चाऽनुकार्याभ्यां कृ? तृ? इत्याभ्यां अनुकरणभूतयोः कृ? तृ? इत्यनयोरर्थवत्त्वेन प्रातिपदिकत्वात्सुबुत्पत्तिः। नन्वनुकरणभूतयोरनुकार्यशब्दस्वरूपवाचकत्वात्क्रियावाचकत्वाऽभावेन धातुत्वाऽभावात् "ऋत इद्धातो"रिति कथमित्वम्। न च "प्रकृतिवदनुकरण"मिति वचनादनुकरणभूतयोर्धातुत्वमिति वाच्यम्, एवं सति अधातुरिति धातुप्रयुदासात्प्रातिपदिकत्वानुपपत्तेरित्यत आह--प्रकृतिवदनुकरणमितीति। "यत्तदेतेभ्यः परिमाणे धात्वनुकरणे विभक्तिनिर्देशाच्च "प्रकृतिवदनुकरण"मिति पाक्षिकम्। ततश्चात्रातिदेशभावमादाय धातुत्वात् "ऋत इद्धातोः" इतीत्त्वम्। अतिदेशाऽभावमादाय धातुत्वाऽभावात्प्रातिपदिकत्वात्सुबुत्पत्तिश्च न विरुध्यत इति भावः।

कीरिति। कृ()धातुरित्यर्थः। ॠकारस्य इत्त्वे रपरत्वे "र्वोरुपधायाः" इति दीर्घः। सोर्हल्ङ्यादिलोपः, विसर्गश्च। किराविति। अपदान्तत्वात् "र्वोः" इति न दीर्घः। तीरिति। तृ()धातुरित्यर्थः। गीर्वदिति। गीर्शब्दवद्रूपाणीत्यर्थः। किरम्। किरौ किरः।

किरा। कीर्भ्याम्। कीर्भिः। किरे। किरः। किरोः। कीर्षु। भ्यामादौ "स्वादिष्वसर्वनामस्थाने" इति पदत्वाद्दीर्घः। इत्वाऽभावेति। "प्रकृतिवदनुकरण"मित्यस्याऽनित्यत्वादनुकरणस्य धातुत्वाऽभावात् "ॠत इद्धातोः" इति इत्वाऽभावे सतीत्यर्थः। अनङ्गुणौ नेति। "ऋत उ" दित्युत्त्वमपि तपरकरणान्नेति द्रष्टव्यम्। अत एव "ग्रो यङी" त्यादिनिर्देशाः सङ्गच्छन्ते। कृ()रिति। रृ()धातुरित्यर्थः। क्रौः क्र इत्यादौ यण्। इत्यादिति। क्रः। क्रः क्रोः क्राम्। क्रि इत्यृ()दन्ताः।

अत लृदन्ताः। गम्लृ इति। गम्लृ गतौ" "शक्लृ शक्तौ" अजन्तौ धातू। अनङिति। "ऋदुशनसित्यनेने"ति शेषः। ऋलृवर्णयोः सावर्ण्यादिति भावः। गुणविषये त्विति। ङौ सर्वनामस्थाने च ऋतो ङीति गुणोऽकारः, लपर इत्यर्थः। "उरण्रपरः" इत्यत्र रप्रत्याहारग्रहणादिति भावः। गमृ()निति। ऋत लृवर्णस्य दीर्घाऽभावादृ्वर्ण एव। पूर्वसवर्णदीर्घे नत्वमिति भावः। ङसिङसोस्त्विवति। गम्लृ अस् इति स्थिते उत्, लपरः। गमुल् स् इति स्थिते "संयोगान्तस्य लोपः"। गमुल् इति रूपम्। इत्यादीति। गम्लृभ्याम्। गम्लृभिः। गम्लृभ्यः। गम्लृभ्यः। आमि तु गमृ()णाम्। गमलि गम्लोः गम्लृषु। वस्तुतस्तु "उरण्रपरः" इत्यत्राऽजिति वक्तव्ये अण्ग्रहणसामर्थ्दाण्पूर्वेणैवेत्युक्तं भाष्ये। यदि लृकारस्य यण् लकारः स्यात्तर्हि लपरत्वार्थं परेणाण्ग्रहणस्यावश्यकत्वात्तदसङ्गतिः स्पष्टैव। तस्मादेवंजातीयकानां प्रयोगो न भाष्यसंमत इत्याहुः। इति लृदन्ताः।

अथ एदन्ताः। इनेति। अः=विष्णुः तस्यापत्यम् इः=कामः। अत इञ्। "यस्येति च" इत्यकारलोपः। इनासहेत्यर्थे "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। "वोपसर्जनस्ये"ति सत्वम्। "आद्गुणः"। से इति रूपम्। ततः सुः, रुत्वविसर्गौ। सेः। एवं स्मृतेः। स्मृतः इः=कामो येनेति विग्रहे "अनेकमन्यपदार्थे"इति बहुव्रीहिः। नच एकादेशस्य पूर्वान्तत्वात्से इत्यस्याऽव्ययत्वात् "अव्ययादाप्सुपः" इति लुक् शङ्क्यः, अव्ययमिति महासंज्ञया लिङ्गाद्यनन्वितार्थकस्यैव अव्ययत्वात्। अजादावयादेशं मत्वाह--सयौ सय इति। "एङ्ह्रस्वात्" इति संबुद्धिलोपः। हे से। नन्वेवं सति हे हरे इत्यत्र संबुद्धिलोपो न स्यात्। संबुद्धि परनिमित्तमाश्रित्य प्रवृत्तस्य गुणस्य संबुद्धिविघातकं सुलोपं प्रति संनिपातपरिभाषया निमित्तत्वाऽयोगात्। नचैवं सत्येङ्ग्रहणवैयर्थ्यं शङ्क्यं, हे से इत्यत्र चरितार्थत्वादिति चेत्, श‍ृणु--हे हरे इत्यत्र संबुद्धिरूपस्य स्वोपजीव्यगुणविघात्यत्वमेव नास्ति। सत्यपि तल्लोपे प्रत्ययलक्षणमाश्रित्य संबुद्धिसत्त्वात्, तेन च गुणस्य निर्बाधत्वात्। केचित्तु "गुणात्संबुद्धे रित्यनुक्त्वा "एङ्ह्रस्वा"दित्युक्तेः संनिपातपरिभाषां बादित्वापि संबुद्धिलोपः प्रवर्तत इत्याहुः। नच जसि सय इति कथम्। अन्तर्वर्तिविभक्त्या "से" इत्यस्य पदत्वेनाऽयादेशं बाधित्वा "एङः पदान्ता"दिति पूर्वरूपापत्तेरिति वाच्यम्, "उत्तरपदत्वे चापदादिविधौ" इति प्रतिषेधात्। उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्तव्येऽन्तर्बर्तिविभक्तेः प्रत्ययलक्षणं नास्तीति हि तदर्थः। सेनासेवकादिशब्दगतस्य से इत्यस्य अनुकरणं वा अस्तु। तत्र जसि अयादेशस्य निर्बाधत्वात्। इत्येदन्ताः। अथ ओदन्ताः। गो स् इति स्थिते।

तत्त्व-बोधिनी

नृ च २४३, ६।४।६

नृ च। इह "छन्दस्युभयथे"ति सूत्रादुभयथेत्यनुवर्तत इत्याभिप्रेत्याह---वा दीर्घः स्यादिति। केचित्त्विह "छन्दसी"त्यप्यनुवर्तयन्ति, तेषां हि "चिन्ताजर्जरचेतसां बत नृणा कता नाम शान्तः कथा,""नृणामेको गम्यस्त्वमसी"त्यादिप्रयोगा न सङ्गच्छेरन्। किञ्च "छन्दस्युभयथे"ति पूर्वसूत्रेणैव "नृणा"मिति सिद्धे "नृ चे"ति सूत्रस्य वैयर्थ्यं स्यात्। यदपि पूर्वसूत्रे "तिसृचतसृ"इत्यनुवर्तयन्ति, तदप्ययुक्तम्। अविशेषेण विकल्पदर्शनात्। तथा च धाता धातृणां मिति मन्त्रे तैत्तिरीयैर्ह्रयस्वः पच्यते, बह्वृचैस्तु दीर्घ इति दिक्।

इति ऋदन्ताः। इत्यृदन्ताः। प्रकृतिवदनुकरणमित्यादि। "यत्तदेतेभ्यः परिमाणे"इति निर्देशोऽत्र लिङ्गम्। भवति हि तत्र

त्यदाद्यत्वकरणाजनिकरणस्य प्रकृतिवत्त्वमेकशेषाऽभावदर्शनाच्च वैकल्पिकत्वमिति। इत्वे रपरत्वमिति। "ऋत इद्धातोः"इतीत्वे "उरण्रपरः"इति रपरत्वम्। कीरिति। कृ()धातुरित्यर्थः। एवं--तीरिति। "तृ()"धातुः। इत्यादीति। "ऋत उ"दिति तपरकरणान्ङसिङ्सोरत उदादेशो न---क्रः।दीर्घान्तत्वादामो न नुट्--क्राम्। ङौ तु "क्री"त्यादि।

इत्यृ()दन्ताः। इत्यृदन्ताः। अनङितित। ऋलृवर्णयोः सावर्ण्यात् "ऋदुशन"सिति सूत्रपर्वृत्तेः। गुणविषय इथ। "ऋतो ङी"ति गुणविषये। गमृ()निति। लृवर्णस्यट दीर्घाऽभावात् "प्रथमयो"रिति यः पूर्वसवर्णदीर्घः स लृकाराऽकारयोः स्थाने ॠकार एव भवति। नन्वत्र लकारद्वयगर्भो लृ()कारो दीर्घोऽस्त्विवतिचेत्, अत्राहुः--"पर्तमयोः पूर्वसवर्णः"इत्यस्याऽकः प्रथमाद्वितीययोरचि पूर्वस्य सवर्णो यो दीर्घः स पूर्वपरयोः स्थाने भवतीत्यर्थाहलृवर्णयोर्वचनेन सावर्ण्यसद्भावाह्मकार एव लृकाराऽकारयोः स्थाने भवति न तु लकारद्वयगर्भो दीर्घः, तस्य ईषत्स्पृष्टपर्यत्नत्वात्प्रयत्नभेदेन लृकारसावर्ण्याऽभावादिति। एवं च "होतृ()"नित्यादौ रेफद्वयगर्भो दीर्घे ऋकाराऽकारयोः स्थाने न भवत्येवेति बोध्यम्।इत्यदीति। गम्लृभ्याम्। गम्लृभिः। गम्लृभ्यः। आमि तु "गमृ()णा"मिति केचित्। वस्तुतस्तु लृकारस्थाने लकारद्वयह्मगर्भेणैव दीर्घेण भवितव्यं, स्थानत आन्तर्यस्य बलीयलस्त्वात्। "होतृ()णा"मित्यत्र तु ॠकार एव भवति, स्थानपर्यत्नोबयसाम्यात्। स्यादेतत्--रेफद्वययुक्तस्य लकारद्वययुक्तस्य चेषत्स्पृष्टप्रयत्नत्वाप्रयत्न भेदेन ऋलृ वर्माभ्यां सावर्ण्याऽभावेनाऽच्त्वाबावात् "ऊकालोऽ"जित्यादिना दीर्घसंज्ञा नास्तीति कथमत्र लकारद्वयगर्भेण भवितव्यम्, "ऋति ॠवा""लृति लृवे"ति वार्तिकपत्र्याख्यानं वा कथं सङ्गच्छताम्(),कः सवर्णे"इत्यनेन इष्टरूपाणामसिद्धेः। अत्राहुः-उभयोरप्यच्त्वासिद्धये वर्णसमाम्नाय "ऋलृक्"सूत्रोत्तरं पाठः कर्तव्यः, तेन सर्वेष्टसिद्धिः। न च दीर्घत्वसिद्धावपि विवृतप्रयत्नसाम्यात् "होतृ--लृकार"इत्यत्र ॠकारो दीर्घ एव स्यात्, न तु रेफद्वययुक्तो दीर्घ ति शङ्क्यम्, ऋकारद्वयस्थाने रेपद्वयवतः साम्येन कदाचित्तस्यापि पर्वृत्तेः। "होतृलृकार"इत्यत्र लृकारेण आन्तर्यात्कदाचिल्लकारद्वययुक्तः कदाचिहकारेण आन्तर्याद्दकारश्च भवति। परं तु वार्तिकमते "होतृलृकार"इत्यत्ररेफद्वयगर्भो न भवति,प्रत्याख्यानपक्षे तु कदाचिद्भवतीति वैषम्यमस्ति, तत्रेष्टापत्तिर्वा, प्रत्याख्यानस्य प्रौढिवादमात्रता वा अभ्युपगन्तव्येति। अत्रेदं बोध्यम्--"अकः सवर्णे"इति सूत्रस्थाभाष्ये "ऋति ॠवा" "लृति लृवे"त्येतन्न प्रत्याख्यातम्, "तुल्यास्ये"ति सूत्रस्थाभाष्ये तु तस्य प्रत्याख्यानेऽपि फलभेदे तदयोगात्। स्वीकृते तु तस्मिन्नकोऽकीत्येव सुवचमिति ग्रन्थोऽनुपपन्न एव। यदि तु "ऋति ॠवे"ति वार्तिकम्, "उॠ"इति "ॠवे"ति पट()एत, तदा वार्तिकयोः सवर्ण इति पदानुवृत्त्यनपक्षेणात्मुवचमेवाऽकोकीति। प्रकृतमनुसरामः,--ङौ तु "ऋतो ङि---"इति गुणो लपरः। गमलि। गमल्ो#ः। गम्लृषु। एवं शक्लृशब्देऽप्यूह्रम्। इति लृदन्ताः।

इति लृदन्ताः। सेरिति। अस्यापत्यमिः कामः, अस्य स्त्री ई=लक्ष्मीः। तेन तया वा सह वर्ततैति विग्रहे "तेन सहेति तुल्ययोगे"इति बहुव्रीहौ "वोपसर्जनस्ये"ति सहस्य सभावे "आद्गुणः"। सय इति। ननु "से"इत्येकारस्य अन्तवद्भावेन पदान्तत्वादयादेशं बाधित्वा जसि परकतः "एहः पदान्ता"दिति पूर्वरूपमेकादेशः स्यात्, तथाच "से"पित्येव रूपं स्यान्न तु "सय"इति चेदत्र केचित्--एवं तर्हि "थासः से"ईशः से"इति विहितादेशस्यानुकरणशब्दोऽमस्तु, तत्र हि जसि परतोऽयादेशस्य निर्बाधत्वादिति। स्मृतेरिति। इः कामः स्मृतो येन सः, ई लक्ष्मीः स्मृता येनेति वा विग्रहः। "निष्ठे"ति स्मृतशब्दस्य पूर्वनिपातः। स्मृतय इति। नन्वत्र पूर्वोक्तरीत्या "एङः पदान्तादती"ति पूर्वरूपेण भाव्यं न त्वयादेशेन, न ह्त्रानुकरणशब्दत्वकल्पनमौचित्यं लभत इति चेदत्र नव्याः--"उत्तरपदत्वे चाऽपदादिविधौ प्रतिषेधः"इति प्रत्ययलक्षणप्रतिषेधा "देङः पदान्तादती"त्यस्याऽप्रवृत्तिः। किंच "स्वादिष्वसर्वनामस्थाने""यचि भ" मित्यत्र भाष्यकृतै "स्वादिषु पूर्वं पदसंज्ञं भवती"ति व्याख्यातम्। ततश्चानेन "सुसिङन्त"मिति "स्वादि"ष्विति च द्विविधापि संज्ञा निषिध्यत इति पूर्वन्तत्वप्रयुक्ता पदान्ततेह दुर्लभेति "स्मृतय"--इति रूपं निर्बाधमेव। तथा "सय"इत्यत्र"इना सहे"त्यादिव्युत्पत्तिपक्षेऽपि नानुपपत्तिः। न चैकारदेशस्य पूर्वनतत्वेनाव्ययत्वात्सुपो लुक् स्यादिति शङ्क्यम्,

अव्ययसंज्ञाया अन्वर्थत्वेनोपसर्जने तदभावात्। न चैवमपि "सहग इ"इति स्थितेऽन्तरङ्गत्वाद्गुणे कृते सहशब्दस्य सादेश एव न स्यात्, एकादेशस्य पराविद्भावे सहशब्दस्य सभावः, तथापि "स"इत्यदन्तमेव रूपं स्यान्न तु "से" इत्येदन्तमिति शङ्क्यम्, "नेन्द्रस्य परस्ये"त्युत्तरपदवृद्धिपर्तिषेधेन "पूर्वोत्तरपदयोः पर्थमं कार्यं भवति तत एकादेशः"इति सामान्यज्ञापनादित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

नौपधायाः ६।४।७

नान्तस्य अङ्गस्य उपधायाः नामि परतो दीर्घो भवति। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। नः इति किम्? चतुर्णाम्। नामि इत्येव, चर्माणाम्।

लघु-सिद्धान्त-कौमुदी

नोपधायाः ३००, ६।४।७

नान्तस्योपधाया दीर्घो नामि। पञ्चानाम्। पञ्चसु॥

न्यासः

नोपधायाः।, ६।४।७

अनजन्तार्थ आरम्भः। न इति षष्ठ()एकवचनान्तम्(), सौत्रत्वन्निर्देशस्य यकारलोपस्यासिद्धत्वमनाश्रित्य "आद्गुणः" ६।१।८४ कृतः। न इति वर्णग्रहणम्(), तत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयन्तीति नकारान्तस्याङ्गस्योपधायाः तस्या दीर्धत्वं विज्ञायत इत्याह--"नकारान्तस्याङ्गस्य" इति। "पञ्चानाम्()" इति। "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नकारलोपः॥

बाल-मनोरमा

नोपधायाः , ६।४।७

पञ्चन् आम् इति स्थिते "षट्()चतुर्भ्यश्चे"ति नुटि नलोपे तस्याऽसिद्धत्वात् "नामि" इति दीर्घेऽप्राप्ते आह--नोपधायाः। "ने"ति सुप्षष्ठीकम्, अङ्गस्येत्यधिकृतस्य विशेषणम्। तदन्तविधिः। "ढ्रलोपे" इत्यतो "दीर्घ" इत्यनुवर्तते, "नामि" इति सूत्रं च। तदाह--नान्तस्येत्यादिना। नलोप इति। नलोपस्याऽसिद्धत्वात्प्रथमं दीर्घे ततो नलोप इत्यर्थः। परमेति। परमाश्च ते पञ्च चेति विग्रहः। "षड्भ्यो लुक्" इत्यस्य "षट्चतुर्भ्यश्चे"त्यस्य चाङ्गत्वात्तदन्तेऽपि प्रवृत्तिरिति भावः। प्रियाः पञ्च यस्येति बहुव्रीहिः। प्रियपञ्चन्शब्दो विशेष्यनिघ्नः त्रिलिङ्गः। तस्य पुंस्त्वे विशेषमाह--गौणत्वे त्विति। "षड्भ्यो लु"गिति "षट्चतुर्भ्यश्चे"ति च बहुवचननिर्देशेन षट्चतुरर्थप्राधान्यावगमादिति भावः। प्रयिपञ्चेति। सुटि हलादौ च राजवत्। शसादावचि तु "अल्लोपोऽनः" इत्यकारलोप नस्य श्चुत्वेन ञकारः। चकारे तु परेऽनुस्वारस्य परसवर्णे ञकारः स्थित एव। तथाच ञकारद्वयमध्ये चकारः। अष्टन्शब्दो नित्यं बहुवचनान्तः।

तत्त्व-बोधिनी

नोपधायाः ३३१, ६।४।७

नोपधायाः। "ने"ति लुप्तषष्ठीकं पदमङ्गस्य विशेषेणम्। नलोपस्यऽसिद्धत्वात् "नामी"पि दीर्घो न प्रवर्तत इत्ययमारम्भः। गौणत्वे त्विति। बहुवचमनिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः। प्रियपञ्च्ञामिति। ञद्वयमध्ये चकारः।

सूत्रम्

काशिका-वृत्तिः

सर्वनामस्थाने च असम्बुद्धौ ६।४।८

सर्वनामस्थाने च परतो ऽसम्बुद्धौ नोपधायाः दीर्घो भवति। राजा, राजानौ, राजानः। राजानम्, राजानौ। सामानि तिष्ठन्ति। सामानि पश्य। सर्वनामस्थाने इति किम्? राजनि। सामनि। असम्बुद्धौ इति किम्? हे राजन्। हे तक्षन्।

लघु-सिद्धान्त-कौमुदी

सर्वनामस्थाने चासम्बुद्धौ १७७, ६।४।८

नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने॥

न्यासः

सर्वनामस्थाने चासम्बुद्धो।, ६।४।८

"सामानि" इति। "जस्शोः शिः" ७।१।२० इति शिभावः। "राजनि" इति। सपतम्येकवचनान्तम्()। चकारः "नोपधायाः" ६।४।७ इत्यनुकर्षणार्थः। यद्येवम्(), "चानुकृष्टं नोत्तरत्रामिसम्बध्यते" (व्या।प।७६) इत्येतदनुवृत्तिर्न प्राप्नोति? एवं तह्र्यतदसन्देहार्थश्चकार इति। असति हि चकारे सर्वनामस्थाने सम्बुद्धावित्युच्यमाने सन्देहः स्यात्()--किमयसम्बुद्धावथ सम्बुद्धाविति। यद्येतत्? प्रयोजनं स्यात्? "असम्बुद्धौ सर्वनामस्थाने" इत्येवं ब्राऊयात्()। एवं तर्हि वैचित्र्यार्थश्चकारः॥

बाल-मनोरमा

सर्वनामस्थाने चाऽसंबुद्धौ २४८, ६।४।८

सर्वनामस्थाने। "नोपधायाः" इति सूत्रमनुवर्तते। "न" इति लुप्तषष्ठीकं पदं। तेनाङ्गस्येत्यवयवषष्ठ()न्तं विशेष्यते। तदन्तविधिः। "ढ्रलोपे" इत्यतो दीर्घ इत्यनुवर्तते। तदाह--नान्तस्येत्यादिना।

बाल-मनोरमा

न भूसुधियोः २७१, ६।४।८

न भूसुधियोः। "इणो य" णित्यतो यणिति, "ओः सुपी"त्यतः सुपीति, "इको यणची"त्यतोऽचीति चानुवर्तते। तदाह--एतयोरित्यादिना। एतयोरिति-सूत्रोक्तभूसुधियोः परामर्शः। अचीति। अजादावित्यर्थः। यणि प्रतिषिध्दे इयङमभिप्रेत्य आह--सुधियाविति। आदिना अजादिसर्वसङ्ग्रहः। प्रधीवद्रूपाणि। इयङेव विशेषः। अचीति वस्तुस्थितिः। अनजादौ यणः प्रसक्त्यभावात्। सुपीति किम्?। सुधीभिरूपास्यः सुध्युपास्यः। वस्तुतस्तु सूपीति नानुवर्तनीयम्। "एरनेकाचः" इति यणो ह्रत्र न प्रसक्तिः, तस्य अजादिप्रत्यये विधानादुपास्यशब्दस्य च प्रत्ययत्वाऽभावात्। "इको यणची"ति तु भवत्येव, "अनन्तरस्य" इति न्यायेन "एरनेकाचः", "ओः सुपी"ति च विहतयण एव प्रतिषेधात्। सुधिया उपास्यः सुध्युपास्य इत्यत्र त्वन्तर्वर्तिनीं विभक्तिमाश्रित्य "एरनेकाचः" इति यणो "न भूसुधियोः" इति प्रतिषेधेऽपि "उपास्यः" इत्यचमाश्रित्य "इको यणची"ति यण् भवत्येव, "अनन्तरस्ये"ति न्यायेन तस्याऽत्र प्रतिषेधाऽभावादित्यलम्।

सखीयतीति। "सुप आत्मनः" इति सखिशब्दात्क्यचि कृते "अकृत्सार्वधातुकयो"रिति दीर्घे "सखीयती"ति रूपम्। ततः क्विबिति। तस्मात्=सखीयशब्दात् "सनाद्यन्ताः" इति दातुसंज्ञकात् "क्विप्चे"ति सूत्रेण क्विबित्यर्थः। अल्लोपयलोपाविति। "अतोः लोपः" इति यकारादकारस्य लोपः, "लोपो व्यो"रिति यलोप इत्यर्थः। यलोपे

कर्तव्येऽल्लोपस्तु न स्थानिवत्, "न पदान्ते"ति यलोपे स्थानिवत्त्वनिषेधात्। स्थानिवत्त्वादिति। "अचः परस्मिन्नित्यनेने"ति शेषः। यणि प्राप्ते इति। "खकारादीकारस्य "इको यणचीत्यनेने"ति शेषः। न चान्तर्वर्तिसुपा पदान्तत्वा"न्न पदान्ते"ति निषेधः शङ्क्यः, "नः क्ये" इति क्यचि नान्तस्यैव पदत्वात्।

क्वौ लुप्तमिति। "न पदान्त" सूत्रे "क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसङ्ख्यान"मिति वार्तिके "क्विलु"गित्यंशस्यायमनुवादः। तत्र "लु"गिति लोपो विवक्षित इति तत्रैव भाष्ये स्पष्टम्। लुप्तमिति भावे क्तः। क्विप्प्रत्ययपरको लोपो न स्थानिवदित्यर्थः। ततस्च खकारादीकारस्याऽच्परकत्वाऽभावान्न यणिति भावः। यद्यपि "न पदान्ते"ति सूत्रे "क्वौ लुप्तं न स्थानिव"दिति निराकृत्य, "क्वौ विधिं प्रति न स्थानिव"दित्येव स्वीकृतं तथापि गोमत्यतेः क्विपि गोमानिति भाष्यात्क्वौ लुप्तं न स्थानिवदित्यपि क्वचिदस्तीति शब्देन्दुशेखरे स्थितम्। ततस्च सखायमिच्छतीत्यर्थे सखीति ईदन्तं रूपं स्थितम्। ततः सुबुत्पत्तिः।

अनङ्णित्वे इति। "अनङ् सौ" "सख्युरसम्बुद्धौ" इत्युभाभ्या"मिति शेषः। इदन्तसखिशब्दस्य विधीयमाने अनङ्णित्त्वे कथं सखीशब्दस्य ईदन्तस्य भवेतामित्यत आह--एकदेशेति। हे सखीरिति। अङ्यन्तत्वान्न सुलोपः। स्त्रीत्वाऽभावान्नदीत्वाऽभावान्नदीकार्यं न भवति। यणि प्राप्ते इति। "एरनेकाचः इत्यनेने"ति शेषः। शसि यणिति। पूर्वसवर्णदीर्घापवादो यण्। कृतपूर्वसवर्णदीर्घत्वाऽभावान्नत्वं नेति भावः। सख्या। सख्ये। सख्युः। सख्योः। सख्यौ। सह खेनेति। खमाकाशं खकारो वा। "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। "वोपसर्जनस्ये"ति सभावः। तमिच्छतीति। सखमात्मन इच्छतीत्यर्थे "सुप आत्मनः" इति क्यच्। "क्यचि चे"तीत्वं, "सनाद्यन्ताः" इति धातुत्वात्क्विपि अल्लोपयलोपयोः सखीशब्दः। एवं सुखीशब्दः, सुतीशब्दश्च। सखीरिति। अङ्यन्तत्वान्न सुलोपः। सख्यावित्यादि। अजादौ "एरनेकाचः" इति यणिति भावः। सख्यम्। सख्यः सख्या। सख्ये।

दीर्घस्यापीति। एतदर्थमेव तत्र कृतयणा निर्देश इति भावः। सख्याम्। सख्यि। सुखीसुतीशब्दयोरप्येवम्। लूनीरिति। "लूञ् छेदने"क्तः। "त्वादिभ्यः" इति नत्वम्। क्यचि ईत्वम्। अङ्यन्त्रत्वान्न सुलोपः। "क्षै क्षये" क्तः। "आदेच उपदेशेऽशिती"त्यात्वम्। "क्षायोः मः" इति मत्वम्। क्यजादि पूर्ववत्। प्रस्तीमीरिति। "स्त्यै ष्ट()ए शब्दसङ्घातयोः। क्तः। "आदेचः" इत्यात्त्वम्। "प्रस्त्यो।ऽन्यतरस्या"मिति मः। "स्त्यः प्रपूर्वस्ये"ति सम्प्रसारणम्। "सम्प्रसारणाच्चे"ति पूर्वरूपम्। "हलः" इति दीर्घः। क्यजादि पूर्ववत् सखी सुतीत्यादिवद्रूपाणि। ङसिङसोर्यणिति। "एरनेकाचः" इत्यनेने"ति शेषः। "असिद्धत्वा"दित्यनन्तरं "त्यात्परत्वा"दिति शेषः। शुष्कीयतेरिति। "इक्शितपौ धातुनिर्देशे" इति श्तिपा निर्देशोऽयम्। शुषधातोः क्तः। शुष्कः। "शुषः कः" इति कत्वम्। शुष्कमात्मन इच्छतीत्यर्थे क्यजन्ताच्छुष्कीयधातोः क्विपि शुष्कीरिति रूपमित्यर्थः। अङ्यन्तत्वान्न सुलोपः। सखी सुतीत्यादिशब्दवच्छुष्कीशब्दः। शुष्कियावित्यादि। संयोगपूर्वत्वान्न यण्, किं तु इयङिति विशेष इति इति भावः। ङसिङसोः शुष्किय इति। न च कत्वस्याऽसिद्धत्वात्ख्यत्यात्परत्वादुत्त्वं शङ्क्यम्, #इयङादेशे सति कृतयणादेशत्वाऽभावादिति भावः। इति ईदन्ताः। शम्भुर्हरिवदिति। तत्र पूर्वसवर्णदीर्घ ऊकारः, गुणस्तु ओकारः, अवित्यादयो विशेषास्त्वान्तरतदम्यात्सङ्गता इति भावः। "क्रुश आह्वाने, रोदने चे"ति धातोः "सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्" इति तुन्प्रत्यये "व्रश्चे"ति शस्य षकारे, ष्टुत्वेन टकारे च क्रोष्टुशब्दः। क्रुशधातो कर्तरि तृचि तु क्रोष्टृशब्दः। द्वावपि सृगालवाचिनो।

तत्त्व-बोधिनी

सर्वनामस्थाने चाऽसंबुद्धौ २०९, ६।४।८

" सर्वनामस्थाने। "नोपधायाः"इति सूत्रं "ढ्रलोपे" इति सूत्राद्दीर्घग्रहणं चानुवर्तते इत्याशयेनाह--नान्तस्येत्यादि।

तत्त्व-बोधिनी

न भूसुधियोः २३४, ६।४।८

अचि सुपीति। सुपीति किम्? सुध्युपास्यः। वस्तुतस्तु सुपीत्यननुवृत्तावपि न क्षतिः, "अनन्तरस्ये"ति न्यायेन"एरनेकाचः"इति "ओः सुपी"ति च सूत्रद्वयेन प्रापितस्यैव यणो "न भूसुधियो"रिति निषेधाभ्युपगमात्। स्थानिवत्त्वाद्यणि प्राप्त इति। "एरनेकाचः---"इत्यनेन। न चान्तर्वर्तिनीं विभक्तिमाश्रित्य सखि शब्दस्य पदत्वात् "न पदान्ते"ति निषेधेन अल्लोपो न स्थानिनदिति वाच्यम्, " नः क्ये नियमेन क्यचि नान्तस्यैव पदत्वात्।"

क्वौ लुप्तं न स्थानिवत्। क्वौ लुप्तमिति। "नपुंसके भावे क्तः"। क्वौ लोप इत्यर्थः। इदं सर्वं कुमारीमिच्छन् किमारीत्यत्रापि बोध्यम्। "क्वौ लुप्त"मित्येतत्क्काचित्कं, "क्वौ विधिं प्रति न स्थानिव"दित्यब्युपगमात्। अन्यथा "बेभिदि ब्राआहृणकुलानी ति हलन्तनपुंसके वक्ष्यमाणं न सङ्गच्छेत। बेभिद्यतेः क्किपि अल्लोपे यलोपे च क्वौ लुप्तत्वेनाऽल्लोपस्य स्थानिवत्त्वाऽभावे झलन्तलक्षणनुम्प्रसङ्गात्। "क्वौ विधिं पर्ति न स्थानिव" दित्यस्योदाहरणं तु लवमाचक्षाणोः लौः। अत्र णिचि यष्टिलोपो, यश्च क्वौ णिलोपः, तदुभयं "छ्वोः शू"डिति वकारस्य क्विनिमित्ते ऊठि कर्तव्ये न स्थानिवत्। "एत्येदत्यूठ्सु"इति वृद्धिः। अत्रेदमवधेयम्, -"न पदान्ते"ति सूत्रे "क्विलुगुपधात्वचङ्परनिह्र्यासकुत्वेषूपसङ्ख्यान"मिति वार्तिकमस्ति तदेकदेशानुवादोऽयं "क्वौ लुप्त"मित्यादीति। "लुका लुप्ते न स्थानिव दित्यादीनामप्युदाहरणान्यत्रोच्यन्ते। पञ्चभिः पट्वीबिः क्रीतः पञ्चपटुः। "अर्हा"दिति ठक्, तस्य "अध्यर्धपूर्वे"ति लुक्, "लुक्तद्धितलुकी"ति ङीषो लुक्। तस्य लुका लुप्तत्वेन स्थानिवत्त्वाऽभावादत्र यणादेशो न भवति। न च ङीषो लुकः परनिमित्तकत्वाऽभावात्स्थानिवत्त्वं न भवेदिति शङ्कयं, ङीषो लुकं प्रति स्थानिद्वारा तद्धितलुकः परत्वस्वीकारात्। यद्वा बुद्धि परिक्लिपतं पौर्वापर्यमभावेऽप्यस्तीति नास्त्यत्राऽनुपपत्तिः। न च अढे तद्धिते विवक्षिते "भास्यैढे"इति पुंवद्भावादुक्तनिषेधं विनैवेष्टसिद्धिरित्यपि शङ्क्यं, "यत्र भाविभत्वं तत्रैव पुंवद्भावः, इह तु लुकि भत्वाऽभावात्कुतः पुंवद्भाव"इति कैयटेनोक्तत्वात्। तथा पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। "सास्य देवते"त्यण्। "द्विगोर्लुगनपत्ये इति लुक्। ततो ङीषो लुकि तस्य स्थानिवत्त्वाऽभावान्ङीषा संनियुक्त आनङ् श्रूयते। पुंवद्भावास्यात्राऽऽशङ्कापि नास्ति, इन्द्रे इन्द्रत्वमिन्द्राण्यामिन्द्रस्त्रीत्वमिति प्रवृत्तिनिमित्तभेदे भाषितपुंस्कत्वस्यानभ्युपगमात्। ये तु "न पदान्ते"ति सूत्रे "वर-ई"इति ईकारप्रश्लेषं कुर्वन्तितेषामिह लुग्ग्रहणं न कार्यम्। "उपधात्वे कर्तव्ये न स्थानिवत्"। तेन परिखाशब्दाच्चातुरर्थिके अणि कृते "वृद्धादकेकान्ते"त्यादिना पारिखशब्दत्खोपधलक्षणे छप्रत्यये "पारिखीयः"सिध्ति। अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तस्यां कर्तव्यायामालोपः स्थानिवत्स्यात्। नन्वेवं "पटयती"त्यादौ वृद्धिः स्यादिति चेन्न, यत्रोपधासंज्ञयामुपजीव्यप्रत्ययो विहिततस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात्। तत्र च चङ्परनिपह्र्यासग्रहणमेव ज्ञापकम्--"चङ्परनिर्ह्()रासस्तत्र न स्थानिवत्"। वादितवन्तं प्रयोजितवान् अवीवद्वीणां परिवांदकेन। अत्र पर्थमणिलोपस्य स्थानिवत्त्वादाकारोऽनुपधेति "णौ चङी"त्युपधाह्रस्वो न प्राप्तोति। णिसामान्यग्रहणादेतत्सिद्धमिति चेत्, तह्र्रन्यदुदाहर्तव्यं, वारि आख्यदवीवरत्। न च "अग्लोपी"ति निषेधः शङ्क्यः, परत्वाद्वृद्धौ सत्यां टिलोप इत्यभ्युपगमेनाऽग्लोपित्वाऽभावात्। अतएव "मुण्डमिश्रे"ति सूत्रे हलिकल्योर्हलकलेत्यदन्तनिपातनं सार्थकम्। "कृत्वे न स्थानिवत्"। अर्चयतेरर्कः। "कृदाधारार्चिकलिभ्यः"इति कः। पाचयतः पाक्तिः। इ ह"चोः" "कु"रिति कुत्वे णिलोपो न स्थानिवत्। वार्तिकेऽस्मिन् क्विचङ्परनिह्र्यासोपधानां ग्रहणमावश्यकं। कृत्वे न स्थानिवत्,लुक ईकारप्रश्लेषेण गतार्थत्वात्, कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्यवधेयम्। "चजो"रिति कुत्वे चोदाहरणमन्वेषणीयम्। सख इति। "तेन सहेती"ति बहुव्रीहौ "वोपसर्जनस्ये"ति सभावः। सखीरित्यादि। "सुपाअत्मनः क्यच्"। "क्यचि च" इतीत्त्वम्। दीर्घस्यापीति। एतदर्थं कृतयणदेश इति भावः। ननु अतिसखेर्भूपतेरिति गुणविषयं व्यापर्तयितुं यणा निर्देश इति चेदस्त्वेवं, तथापि दीर्घे प्रवृत्तिः केन वार्यताम्()। न हि ह्रस्वे

यणा भाव्यं न दीर्घेष्वित्यत्र प्रमाणमस्ति। सौत्रस्य विकृतिनिर्देशस्याऽव्यास्यतिव्यास्युभयवारकत्वे सारवत्त्वलाभेन तथैवौचित्याद्भाष्यारूढत्वाच्च। लूनमिति। "ल्वादिभ्यः"इति निष्ठातस्यः नः। क्षाममिति। "क्षयो मः"इति मः। "स्त्यःप्रपूर्वस्ये"ति संप्रासारणम्। शुष्कीरिति। "शुषः कः"इति निष्ठातस्य कः। पक्वीरिति। "पचोः वः"इति वः। इयङिति। संयोगपूर्वत्वादिवर्णस्य यण्नेति भावः। इतीदन्ताः। हरिवदिति। तद्वत्साध्य इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

वा षपूर्वस्य निगमे ६।४।९

षपूर्वस्य अचः नोपधायाः निगमविषये सर्वनामस्थाने परतः असम्बुद्धौ वा दीर्घो भवति। स तक्षाणं तिष्ठन्तमब्रवीत्। स तक्षणम् तिष्ठन्तमब्रवीत्। ऋभुक्षाणमिन्द्रम्। ऋभुक्षणमिन्द्रम्। निगमे इति किम्? तक्षा, तक्षाणौ, तक्षाणः।

न्यासः

वा षपूर्वस्य निगमे। , ६।४।९

अत्र दीर्घग्रहणेन "अचश्च" (१।२।२८) इत्यस्याः परिभाषाया उपस्थाने सत्यच्? सन्निधापितः। "नोपधायाः" ६।४।७ इत्यधिकारादुपधापि। "षपूर्वस्य" इति। षः पूर्वो यस्मादिति बहुव्रीहिः। तत्र यद्युपधाऽन्यपदार्थत्वेनाश्रीयेत, "षपूर्वस्य" इत्यस्त्रीलिङ्गेन निर्देशो नोपपद्यते, तस्मादजत्रान्यपदार्थत्वेनाश्रीयत इत्याह--"षपूर्वस्याचः" इत्यादि। "उपधायाः" इत्येतदचः समानाधिकरणं विशेषणम्()। ऋभुक्षाणाम्()" इति। ऋभृक्षोऽस्यास्तीति द्वितीयैकवचनम्(), "पथिमथ्यृभुक्षाणाम्()" ७।१।८५ इत्यनुवत्रतमाने "इतोऽत्सर्वनामस्थाने" ७।१।८६ इत्यत्त्वम्()। पूर्वग्रहणमुत्तरार्थम्()। इह तु "वा षो निगमे" इत्येतावत्युच्यमाने षकारात्? परस्याचः "नोपधायाः" ६।४।७ इति विकल्पेन दीर्घत्वं लक्ष्यत एव॥

तत्त्व-बोधिनी

ऊदुपधाया गोहः १७४, ६।४।९

ऊदुपधायाः। गुणहेताविति। एतच्च "गोह" इति विकृतनिर्देशाल्लब्धम्। "अचिश्नुधात्वि"त्यतोऽनुवृत्तेनाऽचीत्यनेनाहगाक्षिप्तप्रत्ययो विशेष्यते। विशेषणेन तदादिविधिः। तदाह-- अजादाविति।

---

सूत्रम्

काशिका-वृत्तिः

सान्तमहतः संयोगस्य ६।४।१०

सकारान्तस्य संयोगस्य यो नकारः महतश्च तस्य उपधायाः दीर्घो भवति सर्वनामस्थाने परतः असम्बुद्धौ। श्रेयान्, श्रेयांसौ, श्रेयांसः। श्रेयांसि। पयांसि। यशांसि। महतः स्वल्वपि महान्, महान्तौ, महान्तः। असम्बुद्धौ इति किम्? हे श्रेयन्। हे महन्।

लघु-सिद्धान्त-कौमुदी

सान्तमहतः संयोगस्य ३४४, ६।४।१०

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। महान्। महान्तौ। महान्तः। हे महन्। महद्भ्याम्॥ ,

न्यासः

सान्तमहतः संयोगस्य। , ६।४।१०

सकारेऽकार उच्चारणार्थः। सोन्तोऽस्य स तथोक्तः। "सान्त" इत्यविभक्तिकोऽयं निर्देशः, तत्रोत्पन्नायाः षष्ठ()आ लुप्तत्वात्()। "सकारान्तस्य संयोगो नकारो महतश्च" इति। तत्रापि नकार इत्यपेक्षते। सकारान्तस्य महतश्चेति द्वे अप्यवयवषष्ठ्यौ, सान्तसंयोगो यो नकारोऽवयवो महच्छब्दस्य च योऽवयव इत्यर्थः। एतेन सान्तसंयोगो महच्छब्दश्चोभयमप्येतन्नकारस्य विशेषणमिति दर्शयति। "तस्योपधायाः" इति। तस्येत्यनेन नकारः प्रत्यवमृश्यते। तस्य नकारस्य सम्बन्धिन्या उपधाया इत्यर्थः। एतैनापि नकार उपधाया विशेषणमित्याचष्टे। कः पुनर्नकारस्योपधायाश्च सम्बन्धः येनासौ तस्येति व्यपदिश्यते? निमित्तनिमित्तिभावः। अन्तयनकारापेक्षया हि पर्वत्वे सत्यन्तनकारात्? पूर्वो वर्ण उपधा भवति। तस्मान्नकारो निमित्तम्(), उपरधा निमित्तनौ। अथ वा--समीपसमीपिलक्षणः सम्बन्धः, एतेन नकारसमीपवर्त्तिन्या उपधाया इत्यर्थः। "श्रेयान्()" इति। प्रशस्योऽयम्(), प्रशस्योऽयम्(), अनयोरयम्प्रकर्षेण प्रशस्य इति "द्विवचनविभज्योपपदे तरबीयसुनौ" ५।३।५७ इतीयसुन्(), "प्रशस्यस्य श्रः" ५।३।६० इति श्रादेशः, "प्रकृत्यैकाच्()" ६।४।१६३ इति प्रकृतिवद्भावाट्टिलोपः, "यस्येति च" ६।४।१४८ इति लोपश्च न भवति। "उगिदचाम्()" ७।१।७० इत्यादिना नुम्(), हल्ङ्यादि ६।१।६६ संयोगान्त ८।२।२३ लोपौ। "श्रेयांसि, पयांसि" इति। पूर्ववज्जसः शिभावः "नपुंसकस्य झलचः" ७।१।७२ इति नुम्()। कथं पुनरत्र नकारात्? पूर्वस्योपधात्वम्(), यावता "अलोन्त्यात्पूर्व उपधा" (१।१।६५) इत्यलां सन्निविष्टानां योऽन्त्योऽल्? ततः पूर्वस्योपधासंज्ञा विहिता। न चात्र नकारोऽन्त्यः, किं तर्हि? सकारः? नैष दीषः; अपेक्षितं ह्रन्त्यत्वम्()। तत्? सकारात्? पूर्वे ये वर्णास्तेषां नकारोऽन्त्य इति। ततः पूर्वो वर्ण उपधा भवति। यद्येवम्(), तक्षको रक्षक इत्यत्रापि सकारात्? पूर्वे ये वर्णास्तेषां ककारोऽन्त्य इति, ततः पूर्वोऽवर्ण उपधा स्यात्(), ततश्च "अत उपधायाः, (७।२।११६) इति वृद्धिः स्यात्()? नैतदस्ति; अङ्गस्य योऽकार उपधा तस्या वृद्धिर्विधीयते। न चात्राकारोऽङ्गस्यीपधा, अतो न भविष्यतीति--एतचचाशक्यं वक्तुम्(), अकारस्याङ्गावयवत्वात्()। पाचक इत्यादावप्यङ्गावयवत्वादकारोऽङ्गस्योपधेत्युच्यते, तस्मात्? प्राप्नोत्येव वृद्धिः? नैष दोषः, "अत उपधायाः" ७।२।११६ इत्यत्र हि "ञ्णिति" ७।२।११५ इत्यनुवत्र्तते, तेनोपधा विशिष्यते--ञिति प्रत्यये परतो योपधेति, तत्र "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।प।४९) इत्येकेन वर्णेन व्यवधानमाश्रोयते, न पुनरनेकेन। तक्षकः, रक्षक इत्यत्रानेकेन वर्णेन व्यवधानम्? अतो न भवति वृद्धिप्रसङ्गः। इह तु सूत्रेन सर्वनामस्थानेनोपधा विशिष्यते, किं तर्हि? संयोगः--तेन सर्वनामस्थाने परतो यः संयोग इति। तेन यत्र संयोगादनन्तरं सर्वनामस्थानं तत्र यद्युपधायाः सर्वनामस्थानस्य चानेकवर्णकृतं व्यवधानम्(), तथापि दीर्घत्वं भवत्येव। अत एव सर्वनामस्थानं तत्र यद्युपधायाः सर्वनामस्थानस्य चानेकवर्णकृतं व्यवधानम्(), तथापि दीर्घत्वं भवत्येव। अत एव सर्वनामस्थानेन संयोगसय विशेषणात्? हंसौ, हंसा इत्यत्र दीर्घत्वं न भवति। न ह्यत्र संयोगादनन्तरं सर्वनामस्थानमस्ति, अकारेण व्यवधानात्()। अथेह कस्मान्न भवति--हंसमाचष्ट इति, "तदाचष्टे" (वा।२०१) इति णिच्? णाविष्ठवत्? कार्यं प्रातिपदिकस्य (वा।८१३) इति टिलोपः, हंसयतेः क्विप्()--हन्(), हंसौ हंस इति? "वा षपूर्वस्य निगमे" ६।४।९ इत्यतो वाग्रहणानुवृत्तेः। न चैवं सति सर्वत्र विकल्पप्रसङ्गः; व्यवस्थितविभाषात्वात्()। एतेन "हिसि हिंसायाम्()" (धा।पा।१८२९) इत्यस्य क्विबन्तस्य सुहिन्? सुहिंसौ सुहिंस इत्यत्र दीर्घत्वाभावो वेदितव्यः। यस्त्वाह--"इदितो नुम्? धातोः" ७।१।५८ इत्यनेन नित्यो नुम्(); नुम्विधावुपदेशिवद्वचनात्(), ततो नुमः पृथक्सिद्धत्वं नास्ति, अत्र तु सिद्धानां सम्बन्धः समवायो भवति, न तु संयोगः। तेन संयोगाभावादिह दीर्घत्वं न भवति तन्मतेन संयोगान्तलोपोऽपि सुहन्नित्यत्र न स्यात्()। नेह वैशेषिकशास्त्रप्रसिद्धोऽयं संयोगो गृह्यते अपि तु "हलोऽन्तराः संयोगः" १।१।७ इति हलान्नैरन्तर्यलक्षण इह शास्त्रे प्रसिद्धः संयोग एव। स चेहास्त्येवेत्यसारः परिहारः। "महान्()" इति। "वत्र्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" (द।उ।६।५) इति

निपातनसूत्रेण शतृवदित्यतिदेशादुगित्कार्यं नुम्()। सान्तमहत इति किम्()? बृहन्ति॥

बाल-मनोरमा

सान्त महतः संयोगस्य ३१५, ६।४।१०

सान्त महतः। "सर्वनामस्थाने चासंबुद्धौ इति, "नोपधाया" इति चानुवर्तते। "ने"ति लुप्तषष्ठीकं पदम्। "ढ्रलोपे पूर्वस्ये"त्यतो "दीर्घ" इत्यनुवर्तते। नकारस्य उपधाया दीर्घ इति लभ्यते। "संयोगस्ये"त्यवयवषष्ठ()न्तं नकारेऽन्वेति। "सान्ते"ति षष्ठ()न्तं पृथक्पदम्। आर्ष षष्ठ()आ लुक्। सान्तस्येति लभ्यते। तच्च संयोगेऽभेदेनान्वेति-सान्तो यः संयोग इति। अत एवाऽसामर्थ्यान्महच्छब्देन तस्य न समासः। "महत" इत्यप्यवयवषष्ठ()न्तम्। तच्च नकारेऽन्वेति। तदाह-सान्त-संयोगस्येत्यादिना। अजरांसीति। दीर्घे सति "नश्चपदान्तस्ये"त्यनुस्वारः। अत्र उपधाया इति पूर्वत्वमात्रोपलक्षणं, पारिभाषिकोपधात्वस्याऽसंभवात्। अथ द्वितीयैकवचने रूपं दर्शयितुमाह--अमि लुक इति। अजर अमिति स्थिते "स्वमोर्नपुंसका"दिति सुक् प्राप्तः, तं बाधित्वा तदपवादोऽतोमित्यम्भावः प्राप्तः, तं बाधित्वा "विप्रतिषेधे पर"मिति परत्वाज्जरस्। अजरसमिति। वस्तुस्थितिकथनमेतत्। ननु लुगपवादस्याऽम्भावस्य जरसादेशेन बाधितत्वात् "अपवादे निषिध्दे पुनरुत्सर्गस्य स्थिति"रिति न्यायेनाऽमो लुक्()कुतो न स्यादित्यत आह--तत इति। "ततो न लु"गित्यन्वयः। जरसादेशानन्तरममो लुङ्न भवतीत्यर्थः। कुत इत्यत आह--संनिपातेति। अम्संनिपातमाश्रित्य प्रवृत्तस्य जरसस्तल्लुकि निमित्तत्वाऽभावादिति भावः। शेषं पुंवत्। अजरसा-अजरेण। अजरसे-अजराय। अजरसः-अजरात्। अजरसः-अजरस्य। अजरसोःअजरयोः। अजरसि-अजरे। ह्मदयोदकास्यशब्दाः सुटि ज्ञानवत्। शसादौ विशेषमाह--पद्दन्निति। ह्मन्दीति। ह्मदयशब्दाच्छसः शिभावे ह्मदादेशे "नपुंसकस्य झलचः" इति ॠकारात् परतो नुमि "नश्चपदान्तस्ये"त्यनुस्वारे तस्य परसवर्णे नकारे रूपम्। इत्यादीति। ह्मदे। ह्मदः। ह्मदः। ह्मदोः। ह्मदाम्। ह्मदि। ह्मदोः। ह्मत्सु। ह्मदभावपक्षे ज्ञानवत्। उदकशब्दः सुटि ज्ञानवत्। शसादौ विशेषमाह--उदानीति। शसः शिभावे उदन्नादेशे "सर्वनामस्थाने चे"ति दीर्घः। "अल्लोपोऽन" इति तु न, शेः सर्वनामस्थानत्वात्। उद्नेति। उदक-आ इति स्थिते उदन्नादेशे अल्लोपः। उदभ्यामिति। उदन्नादेशे "न लोपः प्रातिपदिकान्तस्ये"ति नलोपः, "स्वादिष्वसर्वनामस्थाने" इति पदत्वात्। इत्यादीति। उद्ने। उद्नः। उद्नः। उद्नोः। उदनि--उद्नि। उद्नोः। उदन्नभावपक्षे ज्ञानवत्। आस्यशब्दः सुटि ज्ञानवत्। शसादौ विशेषमाह--आसानीत्यादि। उदन्नादेशवद्रूपाणि। इत्यादीति। आस्ने। आस्नः। आस्नः। आस्नोः। आस्नि-आसनि। आस्नोः। आससु। आसन्न-भावपक्षे ज्ञानवत्। मांसशब्दोऽपि सुटि ज्ञानवत्। "मांसपृतनासानूना"मिति शसादौ "मांस" आदेशः। अत्र नकारस्य "नश्चापदान्तस्ये"ति कृतानुस्वारस्य निर्देशः। अत एवाह--मान्भ्यामिति। मांस्(ादेशे सकारस्य संयोगान्तलोपे सति निमित्ताऽपायादनुस्वारनिवृत्तौ रूपम्। संयोगान्तलोपस्याऽसिद्धत्वान्न लोपो न। अथ सुठ()पि ह्मदाद्यादेशं साधयितुमाह--वस्तुतस्त्विति। इत्युक्तमिति। "ककुद्दोषणी" इति भाष्यप्रयोगात्प्रभृतिग्रहणस्य प्रकारार्थत्वमजन्तपुंलिङ्गाधिकारे स्वयमुक्तमित्यर्थः। ननु प्रभृतिग्रहणस्य प्रकारार्थत्वेऽपि प्रत्ययत्वेन सादृश्यविवक्षायां प्रथमैकवचने ह्मदिति प्रयोगोऽनुपपन्नः, सोर्लुका लुप्तत्वेन प्रत्ययलक्षणस्याप्यभावात्, तदनित्यत्वाश्रयणे च मानाऽभावादित्यत आह-एत एवेति। मांस्पचन्या इति। पच्यते अस्यामुखायामिति पचनी। अधिकरणे ल्युट्, अनादेशः। टित्त्वात् ङीप्। मांसस्य पचनीति षष्ठीसमासः। अत्र ङसो लुका लुप्तत्वात्प्रत्ययलक्षणाऽभावे प्रत्ययपरत्वाऽभावात् मांसादेशो न स्यात्। अतो ह्मदाद्यादेशविधौ "न लुमते"ति निषेधस्याऽनित्यत्वमाश्रीयत इत्यर्थः। ननु "मांस्पचन्या" इत्यत्र अन्तर्वर्तिनं ङसं लुप्तमाश्रित्य मांसित्यस्यास्ति पदत्वम्, "सुप्तिङ्न्त"मिति पदसंज्ञायाः प्रकृतिप्रत्ययधर्मत्वेन केवलाङ्गधर्मत्वाऽभावेनाऽत्र "न लुमते"ति निषेधस्याऽप्रवृत्तेः। अन्यथा "राजपुरुष" इत्यत्र कथं नलोपः?। ततश्चात्र संयोगान्तलोपो दुर्वार इत्यत्र आह--भत्वात्संयोगान्तलोपो नेति। ननु यजादिस्वादिप्रत्यये परे विधीयमानाया भसंज्ञायाः केवलाङ्गधर्मत्वात्तत्र लुका लुप्ते प्रत्ययलक्षणनिषेधात्कथमिह भसंज्ञेत्यत आह--अयस्मयादित्वेनेति।

मांसादेशस्याऽयस्मयादिगणपठितत्वात् "अयस्मयादीनि छन्दसी"नि भत्वमित्यर्थः। ततश्च वैदिकप्रक्रियायामेव तदुपन्यासो युज्यत इत्याक्षेपः। परिहरति--तथापीति। "पद्दन्नो" इति सूत्रे छन्दोग्रहणानुवृत्तावपि लोकेऽपि क्वचिदित्यन्वयः। कुतो लोकेऽपि प्रयोग इत्यत आह--अपो भीत्यादीति। "अपो भी"ति सूत्रम्। अपस्तकारः स्याद्भादौ प्रत्ययपरे इत्यर्थः। तत्रास्ति वार्तिकं--"मासश्छन्दसी"ति। मासित्यस्य तकारः स्याद्भादिप्रत्यये परे छन्दसीति तदर्थः। ऋग्वेदे "माद्भिः शरद्भिः" इत्यादिमन्त्रमुदाहरणम्। यदि "पद्दन्नि"ति छन्दोमात्रविषयं स्यात्तदा मासित्यादेशस्य छन्दोमात्रविषयत्वादलौकिकत्वान्मासश्छन्दसीति सस्य तकारविधौ छन्दौग्रहणं व्यर्थं स्यात्। अतो लोकेऽपि क्वचिदिति कैयटोक्तरीत्या "पद्दन्नि"त्यस्य लोकेऽपि प्रवृत्तिमनुमत्य पदाद्यादेशाः प्रयोक्तुं योग्या इत्यर्थः। इत्यदन्ताः।

तत्त्व-बोधिनी

सान्त महतः संयोगस्य २७७, ६।४।१०

सान्त महतः। अत्र "नोपाधायाः""सर्वनामस्थाने चासंबुद्धा"वित्यनुवर्तते। "सान्ते"ति लुप्तषष्ठी कं "संयोगान्तस्ये"त्यनेन समानाधिकरणमिति व्याचष्टे----सान्तसंयोगस्येत्यादि। तस्योपधाया इति। तत्पूर्वस्येत्यर्थः। अमि लुकोऽपवादमित्यादि। एतेन "स्वमोरमादेशे एव कृते वा जर"सिति प्राचो ग्रन्थः प्रत्युक्तः। मांस्पचन्या इत। पच्यतेऽस्यामिति पचनी। "करणाधिकरणयोश्चे"ति ल्युट्। टित्वान्ङीप्ष मांसस्य पचनी मांस्पचनी। अत्र ङसो लुका लुप्तत्वात्प्रत्ययलक्षणं नेति प्रभृतिग्रहणस्य प्रकारार्थत्वं विना मांसशब्दस्य "मा"सित्यादेशो न सिध्येदिति भावः। ननु पृषोदरादिसूत्रे "मांसस्य पचि युङ्घञो"रिति वक्ष्यमाणत्वादन्तलोपेनाप्येतद्रूपं सिद्धमिति चेत्, अत्राहुः--"पृष्टोदरादीनि यथोपदिष्ट"मित्यस्योत्तरपदाधिकारस्थत्वाल्ल्युडन्तं यदुत्तरपदं "मांस्पचन"मित्यादि तत्रैबान्तलोपः स्यात्। अत्र हि ङ्बन्तमुत्तरपदं न तु ल्युडन्तमिति नास्त्येबान्तलोप इति। मासश्छन्दसीति। "मास्शब्दस्य तकारः स्याद्भादौ प्रत्यये छन्दसी"ति वार्तिकार्थः। "माद्भिः शरद्भिः दुरोदरं तवे"त्युदाहरणम्।

---

सूत्रम्

काशिका-वृत्तिः

असृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् ६।४।११

अपित्येतस्य, तृनन्तस्य, तृजन्तस्य, स्वसृ नप्तृ नेष्टृ त्वष्तृ क्षत्तृ होतृ पोतृ पशास्तृ इत्येतेषां चाङ्गानाम् उपधाया दीर्घो भवति सर्वनामस्थाने परतो ऽसम्बुद्धौ। अप् आपः। बह्वाम्पि तडागानि इति केचिदिच्छन्ति, तत्र समासान्तो विधिरनित्यः इति समासान्तो न क्रियते। नित्यम् अपि च नुममकृत्व दीर्घत्वम् इष्यते। तृन् कर्तारौ कटान्। वदितारौ जनापवादान्। कर्तारः। तृच् कर्तारौ कटस्य। कर्तारः। हर्तारौ भारस्य। हर्तारः। स्वसृ स्वसा, स्वसारौ, स्वसारः। नप्तृ नप्ता, नप्तारौ, नप्तारः। नेष्टृ नेष्टा, नेष्टारौ, नेष्टारः। त्वष्टृ त्वष्टा, त्वष्टारौ, त्वष्टारः। क्षत्तृ क्षत्ता, क्षत्तारौ, क्षत्तारः। होतृ होता, होतारौ, होतारः। पोतृ पोता, पोतारौ, पोतारः। प्रशास्तृ प्रशास्ता, प्रशास्तारौ, प्रशास्तारः। नप्त्रादिनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थम्। व्युत्पत्तिपक्षे नियमार्थम्, एवम् भूतानाम् अन्येषां संज्ञाशब्दानां दीर्घो मा भूतिति। पितरौ, पितरः। मातरौ,मातरः। असम्बुद्धौ इति किम्? हे कर्तः। हे स्वसः।

लघु-सिद्धान्त-कौमुदी

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् २०७, ६।४।११

अबादीनाम् उपधाया दीर्घः असंबुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्॥

न्यासः

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृ?णाम्?। , ६।४।११

"आपः" इति। अप्शब्दस्य बहुत्वादेकवचनद्विवचने न सम्भवत इति बहुवचनमुपन्यस्तम्()। "बह्वाम्पि" इति। बहव आप एष्विति बहुव्रीहिः। तदन्तविधेरिष्टत्वात्? तदन्तस्यापि दीर्घत्वं भवति। तथा हि "येन विधिस्तदन्तस्य" १।१।७१ इत्यत्र सूत्रे "कानि पुनरत्र प्रयोजनानि" इति प्रश्ने इदमुक्तं प्रयोजनम्()--महदपस्वसृनप्तृनेष्टृत्वष्ट इति। कथं पुनरिष्यमाणोऽपि तदन्तविधिर्लभ्यते यावता "ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते" (व्या।पा।८९)? नैष दोषः; "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इत्यतश्चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः। तेन तदन्तस्यापि दीर्घत्वं भविष्यति। "केचित्" इति वचनात्? केचिन्नेच्छन्तीत्युक्तम्()। तन्मतेन बह्वम्पीत्येवं भवति। कस्मात्? पुनरत्र "ऋक्पूरब्धूःपथामानक्षे" (५।४।७४) इत्यनेनाकारः समासान्तो न क्रियते? इत्याह--"तत्र समासान्तो विधिरनित्यः" इत्यादि। इयञ्च परिभाषा "स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च" ६।२।१८६ इत्यत्राध्वग्रहणेन ज्ञापिता। यथाध्वग्रहणं ज्ञापकं तथा तत्रैवोक्तम्()। नन्वेवमपि बह्वाम्पीति नैव सम्भवति, तथा हि--बह्वप्()+शि इति स्थितेऽनेन दीर्घत्वं प्राप्नोति, "नपुसकस्य झलचः" (७।१।७२) इति नुम्? च, तत्र कृतकृतप्रङ्गित्वेन नित्यत्वात्? परत्वाच्च नुम्? कत्र्तव्यः, तस्मिन्? कृत उपधाया अदीर्घभाविनीत्वाद्दीर्घत्वं न प्राप्नोति? इत्यत आह--"नित्यमपि च" इत्यादि। नित्यमपीत्यपिशब्दात्? परमपि। कथं पुनरिष्यमाणं नुममकृत्वा दीर्घत्वं लक्ष्यते? "वा षपूर्वस्य निगमे" ६।४।९ इत्यतः पूर्वग्रहणानुवृत्तेः। तस्यैतदेव प्रयोजनम्()--यदन्यत्? कार्यं प्राप्नोति तदकृत्वा दीर्घत्वमेव पूर्वं कत्र्तव्यमिति। अन्यस्त्वाह--"नपुंसकस्य झलचः" (७।१।७२) इति नुम्? विधीयते, नपुंसकञ्चार्थधर्मः, अर्थे च शब्दानुशासनेऽस्मिन्? कार्याभावान्नपुंसकाभिधायी शब्दो नुम्विधावाश्रयणीयः। तञ्च शब्दं ग्रहीतुं प्रयोगोऽनुगमनीय इति नुमो बहिरङ्गत्वम्()। अयं तु दीर्घः साक्षादप्शब्दमुच्चार्य विधीयमानो यथोच्चारितस्यैव क्रियमाणोऽल्पाश्रयत्वादन्तरङ्ग इति पूर्वं दीर्घः प्रवत्र्तते, पश्चान्नुमिति। एतच्चायुक्तम्(), अनेन हि न्यायेन बह्वाम्पीति न सिध्येत्()। एवदपि कैश्चिदिष्यते--अस्य च न्यायस्य साधारणत्वादिहापि पर्वमेव दीर्घत्वेन भवितव्यम्(), पश्चान्नुमा। पूर्व()स्मस्तु परिहारे न दोषः। ये हि बह्वम्पीतीच्छन्ति ते पूर्वग्रहणमिह नानुवत्र्तयन्ति। "कत्र्तारः" इति। तच्छीलादावर्थे तृन्निति "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणः। "जनापवादान्()" इति। द्वितीयान्तस्यानुप्रयोगस्तृन्नन्ततां दर्शयितुम्()। तृनो हि प्रयोगे "न लोकाव्ययनिष्ठा" २।३।६९ इत्यादिना षष्ठ()आं प्रतिषिद्धायाम्(), द्वितीयैव भवति। एकवचनं नोदाह्रतम्()। तत्र "ऋदुशनस्पुरुदंशोऽनेहसाञ्च" ७।१।९४ इत्यनङादेशे कृते "नोपधायाः" ६।४।७ "सर्वनामस्थाने च" ६।४।८ इत्यादिना दीर्घस्य सिद्धत्वात्()। "कटस्य" इति षष्ठ()न्तस्यानुप्रयोगस्तृचोऽभिव्यक्तये। तस्य प्रयोगे कर्मणि षष्ठी भवति "कर्तृ कर्मणोः कृति" २।३।६५ इत्यनेन। अथ यथा "तुरिष्ठेमेयस्सु" (६।४।१५४) इत्यत्र तुरिति तृंस्तृचोर्यत्? समानं रूपं तस्यैव ग्रहणं कृतम्(), न तु तयोर्भेदेन, ततेहापि किमर्थं न कृताम्()? "अर्वणस्त्रसावनञः" ६।४।१२७ इत्यर्वादेशस्य तृशब्दस्य ग्रहणं मा भूदित्येवमर्थमिति चेत्(), नैतत्? प्रयोजनम्(); अर्थवद्ग्रहणपरिभाषयैव (व्या।प।१) हि तस्य ग्रहणं न भविष्यति। एवं तृंस्तृचोर्भेदेनोपादानमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्()। तेन "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च प्रयोजयन्ति" (व्या।प।१२९) इत्युपपन्नं भवति। अथ वा--"सामान्यनिर्देशे क्वचिद्विशेष एव गृह्यते" इति ज्ञापनार्थम्()। तेन "न कोपधायाः" ६।३।३६ इत्यत्र सामान्योक्तावपि तद्धितवुसम्बन्ध्येव ककारो गृह्यते, न ककारमात्रम्()। अथ नप्त्रादीनां ग्रहणं किमर्थम्(), यावता ते हि केचित्? तृजन्ता व्युत्पाद्यन्ते केचित्? तृन्नन्ताः। तत्र तृस्तृज्ग्रहणेनैव सिदधम्()? इत्याह--"नप्त्रादीनाम्()" इत्यादि। केचिदार्या नप्त्रादीन्यक्ष्युत्पन्नानि प्रातिपदिकानीच्छन्ति, केचिद्व्युत्पन्नानि। तत्रैषा व्युत्पत्तिः--नप्त्रिति नमेस्तृचि मकारस्य पकारो निपात्यते। नेष्ट्रिति--नयतेस्तृचि षुक्? च। त्वष्ट्रिति--त्विषेस्तत्रैवाकार उप(धाया अनिट्त्वञ्च। क्षित्त्रिति--क्षदेस्तृच्()। होतृपोत्रिति-जुहोतेः पुनातेश्च स एव। प्रशास्त्रिति--शासेः [तृन्()तृचौ शंसिक्षदादिब्यः संज्ञायां चानिटौ--पं।उ।२।९४] प्रपूर्वाच्छसिक्षदादिभ्यः संज्ञायां

चानिट्त्वञ्चेति तृन्ननिट्त्वञ्च। तत्राव्युत्पत्तिपक्ष एषां तृन्तृजन्तत्वाभावात्? तृंस्तृज्ग्रहणेन ग्रहणं न भवतीति विध्यर्थं पृथगुपादानम्()। व्युत्पत्तिपक्षे तु तृंस्तृजन्तादेव सिद्धे नियमार्थम्()--एषामेव संज्ञाशब्दानां यथा स्यात्(), अन्ये य एवम्भूताः संज्ञाशब्दास्तेषां मा भूदिति। तेन मातरौ मातरः इत्यादौ न भवति। अथ प्रशास्तृणामित्यत्र केन णत्वम्(), "रषाभ्याम्()" (८।४।१) इत्यादिनेति चेत्()? न; यस्मात्? "रषाभ्याम्()" इत्युच्यते, न च#आत्र रषौ स्तः। एवं तह्र्रेष निर्देशी ज्ञापयति--यतो विहितं णत्वं ततोऽन्यत्रापि भवतीति। तेन मातृ()णाम्? पितृ()णाम्(), ग्रामणीः अग्रणोरित्यादौ णत्वं सिद्धं भवति। ततश्च रषाभ्यां णत्वे "ऋवर्णाच्चचेति वक्तव्यम्()" (वा।९४६) न वक्तव्यं भवति॥

बाल-मनोरमा

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् २७५, ६।४।११

अप्तृन्। "नोपधायाः" इत्यत "उपधाया" इत्यनुवर्तते। "सर्वनामस्थाने चासंबुद्धौ" इति चकारवर्जमनुवर्तते। तदाह--अबादीनामिति। अत्र अष्टाध्यायां तावत् "तृन्" इति सूत्रेण, "ण्वुल्तृचौ" इति सूत्रेण च कर्तरि तृन्तृचौ विहितौ। तथा उणादिषु "तृन्तृचौ शंसिक्षादादिभ्यः संज्ञायां चाऽनिटौ" "बहुलमन्यत्रापि" इति सूत्राभ्यां तृन्तृचो विधाय, "नप्तृनेष्ट्टत्वष्ट्टहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ" इति सूत्रेण नप्त्रादयो निपातिताः। ततश्च संज्ञाशब्दास्तृन्तृजन्ता औणादिका इति स्थितिः। तत्र तृजन्तत्वादेव सिद्धे नप्तादिग्रहणं व्यर्थमित्यत आह--नप्त्रादिग्रहणमिति।

नियमशरीरमाह--उणादीति। तेनेति। औणादिकेषु नप्त्रादिसप्तानामेव तृन्तृजन्तानां दीर्घ इति नियमेव तदितरेषां पितृभ्रात्रादीनां न दीर्घ इति भावः। नच प्रशास्तृशब्द औणादिको न भवतीति भ्रमितव्यं, तस्यापि संज्ञाशब्दस्य शंसिक्षदादिगणप्रविष्टत्वेन ओणादिकत्वात्। अत्र मूले "व्युत्पत्तिपक्षे" इत्युक्त्या अव्युत्पत्तिपक्षे नप्त्रादिसप्तानां तृन्तृजन्तत्वाऽभावादप्राप्तौ नप्त्रादिग्रहणमर्थवत्। तदितरपितृमात्रादिशब्दानां तु औणादिकानामव्युत्पन्नतया तृन्तृजन्तत्वाऽभावादेव न दीर्घ इति सूचितम्। नन्वेवं सति उद्गातृशब्दस्यापि संज्ञाशब्दस्य शंसिक्षदादित्वेन औणादिकत्वात्तस्य च नुप्त्रादिसप्तस्वनन्तर्भावात्कथं दीर्घ इत्यत आह--उद्गातृशब्दस्येति। "ण्वुल्तृचौ" इति सूत्रस्थ भाष्ये तु "अप्तृ" इत्येवास्तु, तृन्तृचोग्ररहणं मास्त्विति प्रपञ्चितम्। "तृ"न्निति भाष्ये तु तृन्विधौ "ऋच्विक्षु चानुपसर्गस्ये"ति वक्तव्यम्। होता। पोता। अनुपसर्गस्य किम्?। प्रशास्ता। प्रतिहर्ता। औणादिकतृजन्त एवायम्। "नयतेस्तृन् वक्तव्यः षुक्च"। नेष्टा। "त्विषेर्देवतायां तृन् वक्तव्यः। अकारश्चोपधाया अनिट्त्वं च"। त्वष्टा। "क्षदेश्च युक्ते तृन् वक्तव्यः"। क्षत्ता। इत्येवं होतृपोतृनेष्टृत्वष्टृक्षत्तृशब्दास्तृन्नन्ता व्युत्पादिताः। तन्मते तु तेषां पञ्चानामिहग्रहणं प्रपञ्चार्थम्। नप्तृप्रशास्तृग्रहणमेवोक्तनियमार्थमित्यन्यत्र विस्तरः। क्रोष्टेति। क्रोष्टन् स् #इति स्थिते एकदेशाविकृतस्यानन्यतया तृजन्तत्वाद्दीर्घः। हल्ङ्यादिना सुलोपः। नलोपः। यद्यपि "सर्वनामस्थाने चे"त्येवात्र दीर्घः सिध्यति तथापि परत्वादप्तृन्नित्येव दीर्घो न्याय्यः। क्रोष्टाराविति। क्रोष्टु-औ इति स्थिते तृज्वद्भावः। क्रोष्टु-आ इति स्थिते।

---

सूत्रम्

काशिका-वृत्तिः

इन्हन्पूषार्यम्णां शौ ६।४।१२

इन् हन् पूषनर्यमनित्येवम् अन्तानाम् अङ्गानां शौ परत उपधाया दीर्घो भवति। बहुदण्डीनि। बहुच्छत्रीणि। बहुवृत्रहाणि। बहुभ्रूणहानि। बहुपूषाणि। बह्वर्यमाणि। सिद्धे सत्यारम्भो नियमार्थः, इन्हन्पूषार्यम्णाम् उपधायः शावेव दीर्घो भवति न अन्यत्र। दण्डिनौ। छत्रिणौ। वृत्रहणौ। पूषणौ। अर्यमणौ। दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान्। शौ नियमं पुनरेव विदध्यात् भ्रूणहनीति तथास्य न दुष्येत्। शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य।

दीर्घविधेरुपधानियमान्मे हन्त यि दीर्घविधौ च न दोषः। सुट्यपि वा प्रकृते ऽनवकाशः शौ नियमो ऽप्रकृतप्रतिषेधे। यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम्। हन्तेः अनुनासिकस्य क्विझलोः क्ङिति २।४।१५ इति दीर्घत्वं यत् तदपि नियमेन बाध्यते वृत्रहणि, भ्रूणहनि इति। कथम्? योगविभागः क्रियते। इन्हन्पूषार्यम्णाम् सर्वनामस्थाने एव दीर्घो भवति, न अन्यत्र इति। ततः शौ इति द्वितीयो नियमः। शौ एव सर्वनामस्थाने दीर्घो भवति न अन्यत्र इति। सर्वस्य उपधालक्षणस्य दीर्घस्य नियमेन निवृत्तिः क्रियते। यस् तु न उपधालक्षणः स भवत्येव। वृत्रहायते। भ्रूणहायते। अथ व अनुवर्तमाने ऽपि सर्वनामस्थानग्रहणे सामर्थ्यादयम् अविशेषेण नियमः। शिशब्दो हि सर्वनामस्थाऽं नपुंसकस्य, न च तस्य अन्यत् सर्वनामस्थानम् अस्ति इत्यविशेषेण नियमः। तत्र तु नपुंसकस्य इत्येतन् न अश्रीयते। तेन अनपुंसकस्य अपि दीर्घो न भवति। सर्वनामस्थानसंज्ञाविधाने तु नपुंसकस्य व्यापारो ऽस्ति इति तत्र नियमः क्रियमणो नपुंसकस्य स्यात्।

लघु-सिद्धान्त-कौमुदी

इन्हन्पूषार्यम्णां शौ २८६, ६।४।१२

एषां शावेवोपधाया दीर्घो नान्यत्र। इति निषेधे प्राप्ते -।

न्यासः

इन्हन्पूषार्यम्णां शौ। , ६।४।१२

"अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति" (व्या।प।१२९) इतीन्ग्रहणेन तदन्तं गृह्रते। इतरेभ्योऽपि केवलेभ्यः शिनं भवतीति। तथा हि--हन्निति हन्तेः क्यिबन्तस्येदं ग्रहणम्(), न च केवलस्य हन्तेः क्विब्दृश्यते। इतरौ तु पुंल्लिङ्गौ। नपुंसकादुत्तरयोः जस्शसोः शिर्विधीयते। तस्मात्? तैरपि सामर्थात्तदन्तविधिर्विज्ञायत इत्याह--"इन्(), हन्(), पूषन्(), अर्यमन्? इत्येवमन्तानामङ्गानाम्()" इति। "बहुदण्डीनि" इति। दण्ड एषामस्तीति मत्वर्थीय इनिः, बहवो दण्डिनः एषां सन्तीति बहुव्रीहिः, ततो जश्शसौ, तयोश्च पूर्ववच्छिभावः, अनेन दीर्घत्वम्()। ननु चेन्नितिप्रत्ययग्रहणम्(), तत्र "प्रत्ययग्रहणे यस्मात्? स विहितस्तदादेसतदन्तस्य च ग्रहणं भवति" (भो।प।सू।७) इति दण्डिनीत्यत्रैव दीर्घत्वेन भवितव्यम्(), न तु बहुदण्डीनीत्यत्र? नेतदस्ति; यत्र हि प्रत्यस्यैव ग्रहणं तत्रैवेयं परिभाषा, नेदं प्रत्ययस्यैव ग्रहणम्(), अपि तु प्रस्ययाप्रत्यययोः; अन्यथा वाच एषां सन्तीति "वाचो ग्मिनः" ५।२।१२३ वाग्()मीनि, रुआज एषां सन्तीति "अस्मायामेधारुआजो विनिः" ५।२।१२० "रुआग्विणीत्येवमादौ न स्यात्()। तस्मान्नात्रासौ परिभाषोपतिष्ठते। "बहुबृत्रहाणि" इति। बृत्रं हतवन्तः "ब्राहमभ्रुणवृत्रेषु क्विप्()" ३।२।८७ बहवो वृत्रहणो येषु तानि बहुवृत्रहाणि। "प्रातपदिकान्तनुम्विभाक्तिषु च ८।४।११ इति णत्वम्()। बहवः पूषणो येषु तानिबहुपूषाणि। बहवोऽर्यमणो येषु तानि बह्वर्यमाणि। ननु "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इत्यनेन दीर्घत्वं सिद्धम्(), तत्? किमर्थोऽयमारम्भः? इत्यत आह--"सिद्धे सत्यारम्भः" इत्यादि। युक्तोऽसय नियमार्थः आरम्भः, किन्त्वारभ्यमाणेऽप्येतस्मिन्? नियमर्थे भ्रूणहनीत्यत्र "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घत्वं प्राप्नोत्येव, तथा ह्रयं शौ सर्वनामस्थाने नियम आरभ्यते। अत्र यथा विशिष्टायाः प्रकृतेर्नियम आरभ्यमाणः प्रकृत्यन्तरस्य न भवति--प्रतामौ, प्रताम इति, तथा सर्वनामसंज्ञाविशिष्टे शित्प्रत्यय आरभ्यमाणः सर्वनामस्थान एव स्यात्(), अन्यत्र न स्यात्();
तुल्यजातीयापेक्षत्वान्नियमस्य। ततश्चासरवनामस्थाने नियमाभावाद्दीर्घत्वं स्यादेवेत्यत आह--"दीर्घविधिः" इत्यादि श्लोकम्()। य इह शास्त्र इन्नन्तादीनां दीर्घत्विवधानं तं विनियम्य तस्य नियमं कृत्वा। कव विनियम्य? सुटि। सर्वनामस्थानोपलक्षणमेतत्? सङ्ग्रहणम्()। सर्वनामस्थान इत्यर्थः। ततः किं कुर्यात्()? इत्यत आह--"शौ नियमम्()" इत्यादि। सर्वनामस्थाने नियमं कृत्वा पुनः शौ नियमं कुर्यात्()। एवकारोऽवधारणार्थः, स तु भिन्नक्रमः, विदध्यादित्यस्यानन्तरं द्रष्टव्यः सुविद्वान्()=सुपण्डितः। कथं पुनरेकेन योगेन द्वौ नियमौ शक्येते कर्त्तुम्? एवं

मन्यते--इमं योगं विभज्य द्वौ योगौ कत्र्तव्याविति। "इन्हन्पूषार्यम्णाम्()" इत्येको योगः, ततः "शौ" इति द्वितीयः। सर्वनामग्रहणं चात्रानुवत्र्तते। तत्र पूर्वयोगः--दर्घविधिर्य इहेन्प्रभृतीनां तं विधिं विनियम्य सुटीत्यनेन दर्शितः। द्वितीयस्तु "शौ नियमं पुनरेव विदध्यात्()" इत्यनेन। तत्र पूर्वेण योगेन दीर्घत्वं भवेत्()। "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इत्यनेन "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इत्यनेन वा दीर्घत्वं विनियम्यते--इन्प्रभृतीनां सर्वनामस्थान एव दीर्घत्वम्(), नान्यत्र। तेन सप्तम्यां दीर्घो न भवति--वृत्रहणि, भ्रूणहनीत्यत्र। द्वितीयेन तु शौ नियम्यते, तत्रापि सर्वनामस्थाने शावेव दीर्घो भवति, नान्यत्रेति। तेन बहुवृत्रहाणीत्यत्र भवति, वृत्रहण इत्यत्र न भवति। एवं योगद्वयेन नियमद्वये क्रियमाणे सति योऽर्थः सम्पद्यते तं दर्शयितुमाह--"भ्रूणहनि" इति। "तथास्य न दुष्येत्()" इति। तथैवं योगद्वये कृतेऽस्य पाणिनेः भ्रूणहनीत्येतच्छब्दरूपं नैव दुष्येन्नासिद्धत्वदोषवद्भववतीत्यर्थः। इतिकरणो हेतौ। यस्मादेवं योगद्वयेन नियमद्वये क्रियमाणे भ्रूणहनीत्येतन्न दुष्येत; तस्माद्दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटि शौ नियमं सुविद्वान्? पुनर्विदध्यात्()। द्वितीयस्त्वितिकरणो भ्रूणहनीत्येतस्य स्वरूपपदार्थकतां द्योतयति। एवं योगद्वयेन भ्रूणहनीत्यत्र दीर्घत्वं परिह्नत्यैकस्मिन्? योगे परिहर्त्तुमाह--"शास्मि" इत्यादि। शास्मि=उपदशामि तमपरमुपायम्(), येनैकस्मिन्? योगे सति भ्रूणहनौ, भ्रूणहन इति न दुष्यति। नापि भ्रूणहनीत्येतत्()। कः पुनरसावुपायः? इत्याह--"निवर्त्य" इत्यादि। सुटीत्येकयोगेन सर्वनामस्थानं लक्ष्यते। "सर्वनामस्थाने" इति यदेतत्प्रकृतं तं निवर्त्त्य। "अविशेषे" इति। नास्य विशेषो विद्यत इत्यविशेषः; तस्मिन्नविशेषे=अनाश्रितविशेषे प्रत्ययमात्रे शौ इत्येवं तं नियमं कुरु। एवं वा नियमं कुर्वित्यर्थः। वाशब्दः पक्षान्तरत्वमस्य परीहारस्य द्योतयति। अपिशब्दो भ्रूणहनीत्यत्रापि पक्षान्तर आश्रीयमाणे न दुष्यति? शावेव दीर्घत्वस्य नियतत्वात्()। इन्प्रभृतोनां यदि दीर्घत्वं भवति तदा शावेव प्रत्यये, नान्यत्रेति। निवर्त्त्य सुटीत्यनेन शास्त्रीयस्याधिकारस्य निवृत्तिर्दर्शिता। निवृत्ते तु तस्मिन्? यदि लौकिकोऽधिकारोऽपेक्षालक्षण आश्रीयते तदा पूर्ववत्? भ्रूणहनीत्यत्र स्यादेव दीर्घत्वम्()। अतो लौकिकाधारनिरासायाह--"असमीक्ष्य" इति। सुटीत्यनेनास्य सम्बन्ध-। सर्वनामस्थानमपेक्ष्येत्यरेथः। एवं सर्वनामस्थानग्रहणनिवृत्तेऽनपेक्षिते च प्रत्ययमात्रापेक्षया शावित्ययं नियमः प्रत्ययमात्रं नियमयति, न तु तुल्यजातीयं सर्वनामस्थानमेव। तेन न केवलमन्यत्र सर्वनामस्थाने दीर्घो न भवति, अपि तु भ्रूणहनीत्यत्रापि। यदि तर्हि प्रत्ययमाश्रित्य सर्वनामस्थानविषयमनपेक्ष्य शौ नियमः, एवं हि सति दीर्घत्वस्य शावेव नियतत्वाद्यथा भ्रूणहनीत्यत्र न भवतिष तथाचारे क्यङ्यपि "अकृत्सार्वधातुकयोर्दीर्घः" ७।४।२५ इति दीर्घत्वं न स्यात्, ततश्च भ्रूणहेवाचरतीति "कर्त्तुः क्यङ्? सलोपश्च" ३।१।११ इति क्यङि विहिते भ्रूणहयत इत्यनिष्टं रूपमापद्येतेत्यत आह--"दीर्घविधेः" इत्यादि। "नोपधायाः" ६।४।७ इत्यत उपधाग्रहणमनुवत्र्तते, तेन न सर्वस्य दीर्घविधेरयं नियमः, अपि तूपधादीर्घविधेः। न च "अकृत्सार्वधातुकयोः" ७।४।२५ इत्युपधादीर्घविधिः, किं तर्हि? अजन्तदीर्घविधिः। तस्मादयमत्र प्रवत्र्तत एव। हन्त! "यि दीर्घविधौ च न दोषः" इति। यकारादौ प्रत्यये क्पङि दोषो न भवतीत्यर्थः। हन्तेति निपातो वचनारम्भेऽभिमुखीकरणे वा वत्र्तते। अन्ये तु "हन्तयि दीर्घविधौ च न दोषः" इति पठन्ति। त एवं व्याचक्षते--हन्तर्यो हन्तियः, "पञ्चमी" २।१।३६ इति योगविभागात्समासः, तस्मिन्? हन्तियि। सप्तम्येकवचनमेतत्()। हन्तेर्धातोर्यकारादिर्यः प्रत्य इति। तत्र दीर्घविधौ न दोषः। चकारः पूर्वत्र परीहारे वक्ष्यमाणे च। अत एवोपधानियमाद्धन्तेर्यकारादौ प्रत्यये न दोष इत्यस्यार्थस्य द्योतनाय। सम्प्रति सर्वनामस्थानग्रहणेऽनुवत्र्तमाने, असति च योगविभागे भ्रूणहनीत्यत्र यथा दीर्घत्वं न भवति तथा तद्दर्शयितुमाह--"सुट()पि वा" इत्यादि। वाशब्दोऽत्र पक्षान्तरं द्योतयति। अपिशब्दो भिन्नक्रमः "अप्रकृतप्रतिषेधे" इत्यस्यानन्तरं द्रष्टव्यः। अत्रापि सुटीत्येतत्? सर्वनामस्थानोपलक्षणार्थं वेदितव्यम्()। नास्य विद्यतेऽवकाशः। व्यावृत्तिविषयो व्यवच्छेद्य इत्यनवकाशः। प्रकृतात्? सर्वनामस्थानदन्यदप्रकृतम्()। सर्वनासस्थानव्यतिरिक्तं प्रत्ययान्तरमप्रकृतम्(), तत्र दीर्घत्वस्य प्रतिषेधोऽप्रकृतप्रतिषेधः। अप्रकृते प्रतिषेधोऽप्रकृतप्रतिषेधः। "सप्तमी" २।१।३९ इति योगविभागात्समासः। "अप्रकृतप्रतिषेधे" इति। विषयसप्तमीयम्()। अयं तादत्? पूर्वार्धस्यावयवार्थः। समुदायार्थस्तूच्यते--अथ

वाऽनुवर्त्तमानेऽपि सर्वनामस्थानग्रहणे तत्र शावित्यस्य नियमस्य किञ्चिद्व्यावर्त्यमस्तीत्यनवकाशः सन्? सामर्थ्याद कृतप्रतिषेधेऽपि कत्र्तव्यता विषयभूते प्रवत्र्तते=व्याप्रियते। अपिशब्दादन्यत्रापि सर्वनामस्थाने। कथं पुनरवकाशः? इत्याह--"यस्य हि" इत्यादि। यस्येति शावित्यपेक्षया षष्ठी। हिशब्दो यस्मादर्थे। द्विविधं हि सर्वनामस्थानम्()--स#उट्(), शिश्च। तयोः पूर्वं स्त्रीपुंसयोः सम्बन्धि, न नपुंसकस्य; "सुडनपुंसकस्य" १।१।४२ इति वचनात्()। इतरत्? पुनर्नपुंसकस्य; तत एव तस्य विधानात्()। तत्र यत्सम्बन्धिनि शौ सर्वनामस्थाने शावित्ययं नियमः क्रियते, सुटि नैतत्()। सुटि सर्वनामस्थाने परतस्तन्नपुंसकं न भवतीत्यर्थः। अनेन सुटः सर्वनामस्थानस्यानपुंसकसम्बन्धित्वमाख्यातम्()। तेन न तत्र भवेद्विनियम्यम्()। यस्मादेव सुट्? सर्वनामस्थानं नपुंसकस्य सम्बन्धि न भवति, तेन कारणेन तत्रानपुंसकसम्बन्धिनि सर्वनामस्थाने शावित्यस्य नियमस्य विनियम्यं व्यावर्त्यं नास्तीति नपुंसकसम्बन्धिनि हि क्रियमाणो नियमो युक्तः। अनपुंसकसम्बन्धिन्येवास्मिन्? सर्वनामस्थाने तुल्यजातीये निवृत्तिं()त कुर्यात्()। न च शिव्यतिरिक्तं नपुंसकसम्बन्धि सर्वनामस्थानमस्ति, ततो नास्ति तुल्यजातीये व्यावर्त्यम्()। शौ नियमस्येति तस्यानवकाशत्वम्()। तस्मादप्रकृतप्रतिषेधेऽपि व्याप्रियते। "हन्तेरनुनासिकस्य" इत्यादिना कारिकात्रयस्यापि यथाप्रधानमर्थमाचष्टे। तत्र हन्तेरनुनासिकस्येत्यादिना "भ्रूणहनीति तथास्य न दुष्येत्()" इत्यस्यार्थ आख्यातः। "योगविभागः" इत्यादिना "दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटि" इत्यस्य। "ततः" इत्यादिना "शौ नियमं पुनरेव विदध्यात्()" इत्यस्य। "सर्वनामस्थान" इत्यादिना द्वितीयश्लोकपूर्वार्धस्य। "यस्तु" इत्यादिनोत्तरार्धस्य। "अथ वा" इत्यादिना "सुट()पि वा प्रकृतेरनवकाशः" इत्यस्य। "सामर्थ्यात्()" इति। सामर्थ्याम्()नवकाशत्वम्()। "अविशेषेण नियमः" इत्यनेन "शौ नियमोऽप्रकृतप्रतिषेधे" इत्यसय। अविशेषेणेति सामान्येन, न प्रकृत एव, अपि तु प्रत्ययमात्र इत्यर्थः। यस्त्वप्रकृतपरतिषेधारथतामेवास्य नियमस्य व्याचष्टे तस्यैव तद्वचनमविशेषेणेत्यनेन वृत्तिकारवचनेन विरुध्यते। एवं ह्यविशेषेण नियमो भवति यदि सर्वत्र प्रकृते चाप्रकृते च प्रत्ययमात्रे भवति। अथ तु प्रकृतं परितयज्याप्रकृत एव स्यात्? ततो विशेषेणैव स्यात्(), नाविशेषेण। अविशेषेण वास्मिन्नियमे सत्यनेनैव सर्वत्र दीर्घत्वस्य निवर्त्तितत्वात्? "सौ च" ६।४।१३ इत्ययं योगो विध्यर्थो वेदितव्यः। सामर्थ्यादविशेषेण नियम इत्युक्तम्()। अतस्तत्सामर्थ्यं दर्शयन्? "शिशब्दे हि" इत्यादिना "यस्य हि शौ नियमः" इत्यस्यार्थमाचष्टे। यत्र शिशब्दे नियमः क्रियते स यस्मान्नपुंसकस्य सर्वनामस्थानं न स्त्रीपुंसयोः; नपुंसकादुत्तरयोर्जश्शसोः व्यादेशस्य विधानात्()। "न च तस्यान्यत्? सर्वनामस्थानमस्ति" इति। अनेन सुटः सर्वनामस्थानस्य नपुंसकसम्बन्धित्वं दर्शयति। इतिकरणो हेतौ। यत एवं नियमो विधीयते नपुंसकसम्बन्ध#इनि शौ सर्वनामस्थाने तज्जातीयमन्यत्? सर्वनामस्थानं हि नास्ति। तस्मात्? तुल्यजातीयव्यवचछेद्यस्यासम्भवादविशेषेम नियमः। "तत्र तु" इत्यादि। तुशब्दोऽवधारणार्थो भिन्नक्रमश्च नेत्यस्यानन्तरं द्रष्टव्यः। तत्रैतस्मिन्नियमे क्रियमाण इन्नादीनां नपुंसकस्येत्येतद्विशेषणं नैवाश्रीयते। अनाश्रीयमाणे च तस्मिन्नेषोऽर्थः सम्पद्यते--इन्नादीनां शावेव दीर्घो भवति, नान्यत्रेति। तेनानपुंसकस्यापि भ्रूणहनीत्यत्र नियमेन व्यावर्त्तितत्वाद्दीर्घो न भवति। यदि नपुंसकस्येत्येतद्विशेषमं तेषामाश्रीयते, ततोऽयमर्थः स्यात्()--इन्प्रभृतीनां नपुंसकानां शावेव दीर्घो भवति, नान्यत्रेति। ततश्च नपुंसक एव नियमः स्यात्()। तत्र को दोषः? भ्रूणहनि ब्राआह्णकुले इत्यत्रैव दीर्घनिवृत्तिः स्यात्(), भ्रूणहनि ब्राआह्णे इत्यत्र न स्यात्()। तस्मात्? तद्दोषपरिजिहीर्षया नपुंसकस्येत्येतद्विशेषणं नाश्रीयते। यद्येवम्(), यदुक्तम्()--"अनवकाशः शौ नियमः" इति, तन्नोपपद्यते, अनाश्रिते ह्येतस्मिन्? विशेषणे तेषामनाश्रितविशेषणानां नपुंसकानामनपुंसकाताञ्च सम्बन्धिनि शौ सर्वनामस्थाने नियमः स्यात्(), तथाभूतानाञ्च तेषामन्यदपि सुट्सर्वनामस्थानमस्त्येव, ततश्च तुल्यजातीयवयवच्छेदविषये सति कुतो नियमस्यानवकाशत्वम्()? नैतदस्ति; नियमविधानवेलायां तेषां नपुंसकत्वं विशेषणं यद्यपि नाश्रीयत#ए, तथापि तेषां नपुंसकादेव शेर्विधानान्नपुंसकस्य निमित्तभावः, शेस्तु निमित्तिभाव इति निमित्तनिमित्तिभावलक्षणेन सम्बन्धेन शेः सर्वनामस्थानस्य नपुंसकसम्बन्धित्वं विद्यत एव। न चान्यन्नपुंसकसम्बन्धि सरवनामस्थानं विद्यत

इत्युपपन्नमेतत्()--अनवकाशः शौ नियम इति। ननु चात्र नपुंसकस्येति न प्रकृतम्(), नाप्युपात्तम्(), ततश्च तदाश्रयणशङ्का नास्त्येवेति तन्निवृत्तये न युक्तमिदम्(), तत्र तु "नपुंसकस्य" इत्येतन्नाश्रीयते? इत्यत आह--"सर्वनामस्थानसंज्ञाविधाने तु" इत्यादि। तुशब्दो हेतौ। यतो नपुंसकेनोत्पादितस्य विशब्दस्य "शि सर्वनामस्थानम्()" १।१।४१ इति सर्वनामस्थानसंज्ञा विधीयते, तस्मात्? सर्वनामस्थानसंज्ञाविधानं प्रति नपुंसकमिति निमित्तभावमापद्यते। तदेवं निमित्तभावोपयमनं नपुंसकस्य सर्वनामस्थानसंज्ञाविधाने व्यापारः। तस्माद्यत्र शिशब्दः सर्वनामस्थानसंज्ञकस्तत्रावश्यं नपुंसकेनोपस्थातव्यम्()। इह तु सर्वनामस्थानग्रहणानुवृत्तेः सर्वनामस्थानसंज्ञकस्य शिशब्दस्य ग्रहणम्()। ततो नपुंसकं सामर्थ्यात्? सन्निहितम्()। तेन सम्भाव्यते तदाश्रयणमित्यभिप्रायः॥

बाल-मनोरमा

इन्हन्पूषार्यम्णां शौ , ६।४।१२

सौ विशेषमाह--इन्हन्। "ढ्रलोपे" इत्यतो "दीर्घ" इत्यनुवर्तते। "नोपधायाः" इत्यत "उपधाया" इति। तदाह--एषामिति। इन् हन् पूषन् अर्यमन्नित्यन्तानामित्यर्थः। अङ्गविशेषणत्वेन तदन्तविधिः। "सर्वनामस्थाने चे"ति सिद्धे नियमार्थमित्याह--शावेवेति। नान्यत्रेति। शेरन्यत्रेत्यर्थः। इति निषेधे प्राप्त इति। वृत्रहन्शब्दे हन् इत्यस्यापि शावेव दीर्घ इति नियमात्सौ परतः "सर्वनामस्थाने" इति दीर्घेऽप्राप्ते सतीत्यर्थः।

तत्त्व-बोधिनी

इन्हन्पूषार्यम्णां शौ ३१६, ६।४।१२

इन्हन्। "सर्वनामस्थाने चासंबुद्धा"वित्यनेनैव सिद्धे नियमार्थमिदं, तदाह---शावेवोपधाया इति। उपधादीर्घमात्रस्यायं नियमः। तेन "वृत्रहायते"इत्यत्र "अकृत्सार्वधातुकयो"रिति दीर्घो भवत्येव। "वृत्रहणी"इत्यत्र "अनुनासिकस्य क्विझलो रिति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते। उपधादीर्घमात्रपेक्षया नियमविज्ञानादिति तु मनोरमायां स्थितम्। शावेवेति नियमाद्दीर्घस्याऽप्राप्तावाह-

---

सूत्रम्

काशिका-वृत्तिः

सौ च ६।४।१३

सावसम्बुद्धौ परतः इन्हन्पूषर्यम्णाम् उपधाया दीर्घो भवति। दण्डी। वृत्रहा। पूषा। अर्यमा। असम्बुद्धौ इति किम्? हे दण्डिन्। हे पूषन्। हे अर्यमन्।

लघु-सिद्धान्त-कौमुदी

सौ च २८७, ६।४।१३

इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ। वृत्रहा। हे वृत्रहन्॥

न्यासः

सौ च। , ६।४।१३

पूर्वेण नियमेन सौ दीर्घत्वं न प्राप्नोतीति विध्यर्थोऽयमारम्भः। चकार इन्प्रभृतीनामनुकर्षणार्थः॥

बाल-मनोरमा

सौ च , ६।४।१३

सौ च। पूर्वसूत्रमनुवर्तते। तत्र यदनुवृत्तं तच्च। तदाह--इन्नादीनामिति। असम्बुद्धाविति। "सर्वनामस्थाने चे"त्यतस्तदनुवृत्तेरिति भावः। "इन्हन्पूषे"त्यस्यायमपवादः। हे वृत्रहन्निति। "असम्बुदधा"वित्यनुवृत्तेर्न दीर्घः। भिन्नपदत्वादाह--एकाजिति। वृत्रहणावित्यादि। शावेवेति नियमान्न दीर्घः। शसादावचि अल्लोपे कृते-।

तत्त्व-बोधिनी

सो च ३१७, ६।४।१३

सौ चेति। "शिस्वो"रिति वक्तव्ये योगविभाग उत्तरार्थः। वृत्रहेति। वृत्रं हतवान्। "ब्राह्मभ्रूणे"ति क्विप्।

---

सूत्रम्

काशिका-वृत्तिः

अत्वसन्तस्य च अधातोः ६।४।१४

अतु असित्येवम् अन्तस्य अधातोरुपधायाः सावसम्बुद्धौ परतः दीर्घो भवति। डवतु भवान्। क्तवतु कृतवान्। मतुप् गोमान्। यवमान्। अत्र कृते दीर्घे नुमागमः कर्तव्यः। यदि हि परत्वान् नित्यत्वाच् च नुम् स्यत्, दीर्घस्य निमित्तमतूपधा विहन्येत। असन्तस्य सुपयाः। सुयशाः। सुश्रोताः। अधातोः इति किम्? पिण्डं ग्रसते इति पिण्डग्रः। चर्म वस्ते इति चर्मवः। अनर्थको ऽप्यस्शब्दो गृह्यते, अनिनस्मङ्ग्रहणान्यर्थवता च अनर्थकेन च तदन्तविधिं प्रयोजयन्ति इति। अन्तग्रहणम् उपदेशप्रयोगैकदेशस्य अप्यत्वन्तस्य परिग्रहार्थम्, अन्यथा मतुपो ग्रहणम् न स्याद्, उपदेशे रूपनिर्ग्रहहेतौ नायमत्वन्तः इति। असम्बुद्धौ इत्येव, हे गोमन्। सुपयः।

लघु-सिद्धान्त-कौमुदी

अत्वसन्तस्य चाधातोः ३४५, ६।४।१४

अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे। उगित्वान्नुम्। धीमान्। धीमन्तौ। धीमन्तः। हे धीमन् शसादौ महद्वत्॥ भातेर्डवतुः। डित्वसामर्थ्यादभस्यापि टेर्लोपः। भवान्। भवान्तौ। भवन्तः। शत्रन्तस्य भवन्॥ ,

न्यासः

अत्वसन्तस्य चाधातोः। , ६।४।१४

"अत्र कृते दीर्घत्वे नुमागमः" इति। कथं पुनरेतल्लभ्यते, यावता कृताकृतप्रसङ्गित्वात्? परत्वाच्च नुमैव भवितव्यं पूर्वमित्याह--"यदि हि" इत्यादि। इह दीर्घग्रहणेन "अचश्च" १।२।२८ इत्युपस्थापिते सत्यज्लक्षणाया उपधाया दीर्गो विधीयते। यदि च परत्वान्नित्यत्वान्नुम्? प्राग्विधीयते, अच उपधात्वं विहन्येत। तस्माद्वचनसामश्र्याद्दीर्घः प्राग्भवति, ततो नुमागमः। "सुपयाः, सुयक्षाः, "सुरुआओताः" ["सुश्रोताः--काशिका] इति। "असुन्()" (द।उ।९।४९) इति वत्र्तमाने "पिबतेरिच्च" (द।उ।९।५०) ["पिबतेरि च"--द।उ।] इति, "अशेर्देवने युट्? च" (द।उ।९।५१) ["अशेर्धने"--द।उ।] "रुआउरिभ्यां तुट्? च" (द।उ।९।६२) [रुआरीभ्यां--द।उ।] इति--एते यथाक्रममसुन्परत्ययान्ता पयोयशःरुआओतःशब्दा व्युत्पद्यन्ते। "पिण्डग्रः, चर्मवः" इति। "ग्रसु ग्लसु अदने" (धा।पा।६३०,६३१), "वस आच्छादने" (धा।पा।१०२३), "अन्येम्योऽपि दृश्यते" ३।२।१७८ इति क्विप्()। ननु चार्थवद्ग्रहणपरिभाषया(व्या।प।१)ऽर्थवानेवासित्ययं गृह्यते, यथा मूलोदाहरणेषु, पयःप्रभृतीनामसुन्प्रतययान्तत्वात्? प्रत्ययार्थेनार्थवानसौ, न तथा प्रत्युदाहरणयोः, धात्ववयवस्तत्र दोर्घत्वस्यापरसङ्गादपार्थकोऽदातोरिति प्रतिषेधः? इत्यत आह--"अनर्थकोऽपि" इत्यादि। कथमेतल्लभ्यते? इत्याह--"अनिनस्मन्ग्रहणानि" इत्यादि। अथेह कथं दीर्घत्वम्()--गोमन्तमिच्छति गोमत्यति, "सुपाअत्मनः क्यच्()"

३।१।८ गोमत्यतेरप्रत्ययो गोमानिति, कथञ्च न स्यात्()? अधातोरिति प्रतिषेधात्? अस्य "सनाद्यन्ता धातवः" (३।१।३२) इति धातुत्वात्()? नैतदस्ति; "अधातोः" इति प्रतिषेध आनन्तर्य्यादनन्तरस्यैव, नान्तरस्य। अथ वा चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेनेह धातोरपि भविष्यते। अथान्तग्रहणं किमर्थम्(), यावता "अङ्गस्य" ६।४।१ इत्यनुवत्र्तते, तत्र गृह्रमाणेनातुशब्देनासशब्देन च प्रकृतेऽङ्गे विशिष्यमाणे विशेषणेन च तदन्तविधिर्भवतीत्यन्तरे#आप्यन्तग्रहणं तदन्तस्यैव दीर्घत्वं भविष्यति? इत्यत आह--"अन्तग्रहणम्()" इत्यादि। उपेशः=लक्षमदाक्यानि, गणपाठः, प्रातिपदिकपाठ। प्रयुज्यत इति प्रयोगः, कर्मणि घञ्()। उपदेशे प्रयोग उपदेशप्रयोग इति। "सप्तमो" (२।१।४०) इति योगविभागात्? समासः। तदयमस्य वाक्यस्यार्थः--उपदेशे प्रयुज्यते यच्छब्दरूपं तदेकदेशस्याप्यत्वन्तस्य परिग्रहो यथास्या दित्येवमर्थमन्तग्रहणमिति। कस्य पुनरसत्यन्तग्रहण उपदेशे प्रयोगैकदेशस्य ग्रहणं न स्यात्(), यतस्तत्परिग्रहार्थमन्तग्रहणं क्रियते? इत्याह--"अन्यथा हि" इत्यादि। किं कारणं न स्यात्()? इत्याह--"उपदेशे रूपनिग्र्रहहेतौ" इत्यादि। निग्र्रहणं निग्रहः=निश्चय इत्यर्थः। रूपस्य स्वरूपस्य शब्दस्य निग्र्रहो निश्चयनो रूपनिग्र्रहः, तस्य हेतू रूपनिग्र्रहहेतुः। उपदेशग्रहणमुपलक्षममात्रम्()। लौकिकोऽपि हि प्रयोगो गृह्रते। उपदेशाद्धि शब्दरूपं निश्चीयते, लौकिकाद्वा प्रयोगात्()। मतुप्चायं लौकिके प्रयोगे नात्वन्तः श्रयते, नाप्युपदेशे, अतोऽत्वन्ततया नावधार्यते। ततश्चानवधार्यमाणत्वान्न गृह्रते। अन्तग्रहणे च सत्यन्तग्रहण सामथ्र्यादत्वन्तमात्रग्रहणे विज्ञायमाने यो ह्रुपदेशे प्रयोगैकदेशभूतस्तस्यापि ग्रहणं भवतीत्युपपद्यते मतुपो ग्रहणम्()॥

बाल-मनोरमा

अत्वसन्तस्य चाऽधातोः , ६।४।१४

धीमत् स् इति स्थिते--आत्वसन्तस्य। "अतु" इति लुप्तषष्ठीकं पृथक्पदम्। अङ्गविशेषणत्वात्तदन्तविधिः। अधातोरित्यसन्तविशेषणम्। "नोपधाया" इत्यत उपधाया इत्यनुवर्तते। अत्वन्तस्य धातुभिन्नाऽसन्तस्य च उपधाया इति लभ्यते। "सर्वनामस्थाने चासंबुद्धौ" इत्यतोऽसंबुद्धाविति "सौ चे"त्यतः साविति "ढ्रलोपे" इत्यतो "दीर्घ" इति चानुवर्तते। तदाह--अत्वन्तस्येत्यादिना। ननु कृते अकृते च दीर्घे प्रवृत्त्यर्हस्य नुमो नित्यत्वात्परत्वाच्च मकाराऽकारान्नुमि कृते अत्वन्तत्वाऽभावात्कथमिह दीर्घ इत्यत आह--परमिति। वचनसामथ्र्यादिति। अन्यथा निरवकाशत्वापत्तिरिति भावः। ततो नुमिति। दीर्घे कृते नुमित्यर्थः। "विप्रतिषेधे यद्बाधितं तद्बाधित"मिति त्वनित्यम्, "पुनः प्रसङ्गविज्ञानात्सिद्ध"मित्युक्तेरिति भावः।

धीमानिति। दीर्घे नुमि हल्ङ्यादिलोपे संयोगान्तलोपे रूपमिति भावः। हे धीमन्निति। "असंबुद्धौ"इत्युक्तेर्न दीर्घ इति भावः। महद्वदिति। असर्वनामस्थानतया शसादौ नुमभावादिति भावः। "अत्वसो"रिति वक्तव्येऽन्तग्रहणन्तु अत्वन्तमात्रग्रहणार्थम्। अन्यथोपदेशे ये अत्वन्तास्त एव गृह्लेरन्न तु मतुबादयः। नह्रेते उपदेशेऽत्वन्ता इत्याहुः। नन्वधातोरित्येतदसन्तस्येव अत्वन्तस्यापि विशेषणं कुतो नेत्यत आह--धातोरपीति। अत्वन्तस्य धातुत्वेऽपि दीर्घार्थम्। अधातोरित्येतस्य अत्वन्तविशेषणत्वं नाश्रितमित्यर्थः। ननु धातुपाठेऽत्वन्तधातुरप्रसिद्ध इत्यत आह--गोमन्तमिति। "आचरति वे"त्यनन्तरम् "इत्यर्थे" इति शेषः। गोमन्तमिच्छतीत्यर्थे "सुप आत्मनः क्य" मिति क्यचि "नः क्ये" इति नियमात्पदत्वाऽभावाज्जश्त्वाऽभावे गोमत्यशब्दात् "सनाद्यन्ताः" इति धातुत्वात्कर्तरि क्विपि "यस्य हलः" "अतो लोपः" इति यलोपाऽलोपयोर्गोमच्छब्दात्सुबुत्पत्तिः। गोमानिवाचरतीत्यर्थे तु "सर्वाप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विपि "सनाद्यन्ताः" इति धातुत्वात्कथमस्य "उगिदचा"मिति नुमागमः, अधातोरेव उगितो नुम्विधानादित्याशङ्क्य आह--उगिदचाम#इति सूत्रे इति। "उगितः सर्वनामस्थाने" इत्येतावदेव सूत्रमस्तु, अञ्चतेरुगित्त्वादेव सिद्धेः।?तोऽज्ग्रहणमतिरिच्यमानं नियमार्थमित्यर्थः। नियमशरीरमाह--धातोश्चेदिति। धातोश्चेदुगितः कार्यं स्यात्तर्हि अञ्चतेरेव नतु धात्वन्तरस्येति नियमार्थ"मिति पूर्वेणान्वयः। नियमस्य फलमाह--तेनेति।

"रुआन्सु ध्वन्सु गतौ" इत्युगितौ धातू। ताभ्यां क्विपि "अनिदितां हल उपधायाः" इति नलोपे सुबुत्पत्तौ सोर्हल्ङ्यादिलोपे "वसुरुआंसुध्वंस्वनडुहां दः" इति दत्वे रुआत् ध्वत् इति रूपमिष्टम्। "उगितः सर्वनामस्थाने" इत्युक्ते त्वत्रापि नुम् स्यात्। कृते त्वज्ग्रहणे उक्तनियमलाभादत्र नुम् न भवतीत्यर्थः। तह्र्रेतावतैव सिद्धेऽधातोरिति किमर्थमित्यत आह--अधातोरिति त्विति। अधातुः पूर्वं भूतः अधातुभूतपूर्वः। पूर्वमधातुभूतस्यापि नुमर्थमधातोरित्येतदित्यर्थः। ततस्च "उगिदचां सर्वनामस्थाने" इत्येकं वाक्यम्। तत्र अधातोरित्यभावेऽपि अज्ग्रहणादधातोरुगित इति लाभादधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यादित्यर्थः। "अधातो"रित्यपरं वाक्यम्। उक्तोनुमागमोऽधातुभूतपूर्वस्यापि भवतीत्यर्थः। प्रकृते च क्यजाचारक्विबुत्पत्त्यनन्तरं धातुत्वे सत्यपि क्यजाद्युत्पत्तेः पूर्वमदातुत्वसत्त्वान्नुम्निर्बाध इत्यर्थः। एतत्सर्वम् "उगिदचा"मिति सूत्रे भाष्ये स्पष्टम्। अत्र क्यच्पक्षे दीर्घे नुमि च कर्तव्येऽल्लोपो न स्थानिवत्, दीर्घविधौ तन्निषेधात्, "क्वौ लुप्तं न स्थानिव"दित्युक्तेश्च। अथ भवच्छब्दे विशेषमाह--भातेर्डवतुरिति। उणादिसूत्रमेतत्। भाधातोर्डवतुः स्यादित्यर्थः। डकार इत्। उकार उच्चारणार्थः। डित्त्वसामश्र्यादभस्यापि टेर्लोपः। "भवत्" इति रूपम्। भवानिति। भवच्छब्दात्सुः। "अत्वसन्तस्ये"त दीर्घः। "उगिदचा"मिति नुम्, हल्ङ्यादिलोपः, संयोगान्तलोपश्चेति भावः। शत्रन्तस्य त्विति। "लटः शतृशानचौ" इति भूधातोर्लटः शत्रादेशः। शकार इत्, ऋकार इत्, शप्, गुणः, अवादेशः , पररूपम्, भवत् इति रूपम्। तस्य तु अत्वन्तत्वाऽभावादत्वसन्तस्येति दीर्घो न भवति। तत्र उकारानुबन्धग्रहणादित्यर्थः। भवन्निति। सौ नुमि हल्ङ्यादिलोपे संयोगान्तलोपः। भवन्तावित्यादि तु पूर्ववदेवेति भावः। दाञ्धातोर्लटः शत्रादेशे शप्। "जुहोत्यादिभ्यः श्लुः" "श्लौ" इति द्वित्वम्, अभ्यासह्रस्वः, "श्नाभ्यस्तयोरातः" इत्याल्लोपः। ददिति रूपम्। ततः सुबुत्पत्तिः।

तत्त्व-बोधिनी

अत्वसन्तस्य चाऽधातोः ३७८, ६।४।१४

अत्वसन्तस्य चाऽधातोः। "ढ्रलोपे"सूत्राद्दीर्घस्य "नपोधायाः"इत्यपधाग्रहणस्य चानुवर्तनादाह--उपधाया दीर्घः स्यादिति। इह "अधातो"रिति योगो विभज्यते, तत्सामश्र्यादनन्तरस्याऽसन्तस्यैव प्रतिषेधः, न त्वत्वन्तस्येति कैयटादयः। तदेतद्दर्शयति---धातुभिन्नाऽसन्तस्य चेति। धात्ववयवभिन्नो योऽस् तदन्तस्येत्यर्थः। तेन "उखास्त्रत्"पर्णध्व"दित्यादि सिद्धम्। "धातुभिन्नो योऽसन्तस्तस्ये"ति व्याख्यायां "स्त्रत्""ध्व"दित्यत्र सिद्धान्ते दीर्घाऽभावेऽप्यत्र तु स्यादेवेति दिक्। अत्र "सर्वनाम स्थाने चे"ति सूत्रादसंबुद्धावित्यनुवर्तते। "सौ चे"त्यतः "सा"विति च। तदाह--असंबुद्धौ सौ पर इति। अत्वन्तत्वाभावादिति। "अतु"इत्यकारानुबन्धस्याऽनुकरणाच्छत्रन्तस्य न भवतीत्यर्थः। उभे। शब्दरूपाऽपेक्षया नपुंसकनिर्देशः। षाष्ठाद्वित्वेति। "अनन्तस्य विधिर्वा भवति प्रतिषेधो वे"ति न्यायादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अनुनासिकस्य क्विझलोः क्ङिति ६।४।१५

अनुनासिकान्तस्य अङ्गस्य उपधायाः दीर्घो भवति क्विप्रत्यये परतो झलादौ च क्ङिति। प्रशान्। प्रतान्। झलादौ किति शान्तः। शान्तवान्। शान्त्वा। शान्तिः। ङिति खल्वपि शंशान्तः। तन्तान्तः। यङ्लुगन्तादयं तस्। अनुनासिकस्य इति किम्? ओदनपक्। पक्वः। पक्ववान्। क्विझलोः इति किम्? गम्यते। रम्यते। क्ङिति इति किम्? गन्ता। रन्ता।

लघु-सिद्धान्त-कौमुदी

अनुनासिकस्य क्विझलोः क्ङिति ७३०, ६।४।१५

अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति। इदमिवाचरति इदामति। राजेव राजानति। पन्था इव पथीनति॥

न्यासः

अनुनासिकस्य क्विझलो क्ङिति। , ६।४।१५

"क्विप्प्रत्यये परतो झलादौ च क्ङिति" इति। अत्र "क्ङिति" इत्येतज्झलादावित्यनेनैव सम्बध्यते, न तु क्विप्प्रत्ययेन; यतः सम्भवव्यभिचारे हि विशेष्यविशेषणभावो भवति। कित्त्वङित्त्वयोस्तु सम्भव्यभिचारा वुभावपि झलादौ स्तः, न तु क्वौ। तथा हि कित्त्वस्य क्वावव्यभिचारः, ङित्त्वस्य तवसम्भवः। "प्रशान्? प्रतान्? प्रदान्()" इति। "शमु उपशमे" (धा।पा।१२०१), "तमु कांक्षायाम्()" (धा।पा।१२०२), "दमु उपशमे" (धा।पा।१२०३)--एतेभ्यः प्रपूर्वेभ्यः क्विपि "मो नो धातोः" ८।२।६४ इति नत्वम्()। "शंशान्तः" इति। शमेर्यङः, द्विवचनम्(), "नृगतोऽनुनासिकान्तस्य" ७।४।८५ इति नुक्(), "यङोऽचि च" २।४।७४ इति यङो लुक्(), लट्(), तस्(), तस्य "सार्वधातुकमपित्()" १।२।४ इति ङित्त्वम्(), "चर्करीतञ्च" (धा।पा।१०८१) इत्यदादौ पाठाददादित्वाच्छपो लुक्()॥

बाल-मनोरमा

अनुनासिकस्य क्विझलोः क्ङिति ४९१, ६।४।१५

अनुनासिकस्य। अङ्स्येत्यधिकृतमनुनासिकेन विशेष्यते। तदन्तविधिः। "नोपधायाःट इत्यत उपधाया इति, "ढ्रलोपे" इत्यतो दीर्घ इति चानुवर्तते। तदाह--अनुनासिकान्तस्येत्यादिना। इदामतीति। "हलन्तेभ्य आचारक्विप् नास्ती"ति "ह्यस्वनद्यापः" इति सूत्रभाष्ये स्पष्टमिति शब्देन्दुशेखरे स्थितम्। पथीनतीति। पथिन्शब्दात्क्विपि "अनुनासिकस्ये"ति इकारस्य दीर्घः। इदं तु माधवानुरोधेन। क्विबभ्युपगमेऽपि तिपि पथेनतीत्येव युक्तम्, "इन्ह"न्निति नियमेन दीर्घाऽप्राप्तेः। न च नियमस्य अन्तरङ्गत्वात्? "अनुनासिकस्येटत्युपधादीर्घापत्तेरित्याहुः। देवतीतीति। दिव्शब्दादाचारक्विबन्ताच्छपि लघूपधगुणः। "नः क्ये" इति नियमेन अपदान्तत्वात् "दिव उ"दित्युत्त्वं नेति भावः। अत्र ऊठीति। दिव्शब्दात् क्विपि "च्छ्वो"रिति वकारस्य ऊठि कृते लघूपधगुणं बाधित्व परत्वादिकारस्य यणि द्यूशब्दाच्छपि ऊकारस्य गुणे अवादेशे च द्यवतीति रूपमुचितमित्यर्थः। चकाविति। कशब्दात्क्विबन्ताल्लिटि णलि द्वित्वे चुत्वे चक अ इति स्थिते ककारादकारस्य अतो लोपात्परत्वाद्वृद्धौ आकारे "आत औ णलः" इत्यौत्त्वे वृद्धिरेकादेश इति भावः। माधवस्त्विविति। चक अ इति स्थिते पूर्वविप्रतिषेधाद्वृदिं()ध बादित्वा ककारादकारस्य अतो लोपे कृते णलोऽकारेण सह चक अ इति रूपमित्यर्थः। नचैवं सति अ इवाचरति अति, औ, अतुरित्यत्रापि लिटि "अत आदे"रिति दीर्घं बाधित्वा अतो लोपः स्यादिति वच्यं, "ण्यल्लोपा"विति पूर्वविप्रतिषेधलभ्योऽतो लोपः संनिहितमेव "अकृत्सार्वे"ति दीर्घं बाधते, ननु "अत आदे"रिति दीर्घमपि, "अनन्तरस्ये"ति न्यायादिति माधवाशय इत्याहुः। तदनाकरमेवेति। अनेकाच्त्वाऽभावादिति भावः। वस्तुतस्तु "प्रत्ययग्रहणमपनीये"त्यस्य भाष्ये अदर्शनात् प्रत्ययान्तत्वादाम्भवत्येवेति युक्तमेवेत्यनुपदमेवोक्तम्।

तत्त्व-बोधिनी

अनुनासिकस् क्विझलोः क्ङिति ४२१, ६।४।१५

अनुनासिकस्य। "अङ्गस्ये"ति विशेष्यसन्निधानात्तदन्तलाभः। "ढ्रलोपे" इत्यतो दीर्घग्रहणं, "नोपधायाः" इत्यत उपधाग्रहणं चानुवर्तते। तदाह-- अनुनासिकान्तस्येत्यादि। झलादाविति। एतच्च "यस्मिन्विधिस्तदादावल्ग्रहणे" इति परिभाषया लभ्यते। झलादौ किति शान्तो दान्त इत्युदाहरणं, ङिति तु यङ् लुकि-- तसि शंशान्तः दंदान्तः। पथीनतीति। अन्तरङ्गत्वाद्दीर्घस्ततो न गुण इत्याहुः। "इन्ह" न्नित्यनेन शावेवेति नियमाद्दीर्घाभावे गुणे सति "पथेनती"न्निति नियमो, न तु पथ्यादीनाम्। एतेषां तु शौ परतः सुपन्थानीत्यादावुपधादीर्घप्रवृत्तावपि "इतोऽत्सर्वनामस्थाने" इत्यत्वे कृते

"इन्ह" न्निति नियमाऽप्रवृत्तेः। अन्यथा पन्थानौ पन्थान इति न सिध्येत्। तथा च पथीनतीत्यात्याद्येव साध्वित्यपरे। देवतीति माधव इति। अपदान्तत्वाद्दिव उन्न। अत्रेति। लघूपधगुणं बाधित्वान्तरङ्गत्वादूठि यण्। तस्मिन्कर्तव्ये बहिरङ्गस्याप्यूठो नाऽसिद्धत्वं, "नाजानन्तर्ये" इति निषेधात्। न च वर्णादाङ्गस्य बलीयस्त्वाद्यणं बाधित्वा लघूपधगुणः स्यादिति वाच्यं, व्याश्रयत्वात्। अत एव सिवेरौणादिके नप्रत्यये स्योनशब्दः सिध्यतीति भावः। क इवेति। को-- ब्राह्आ। चक इतीति। नन्वेवमौ अतुरित्यत्रापि "अत आदेः" इति दीर्घं बाधित्वा "अतो लोप" एव स्यादिति चेत्। अत्राहुः-- "ण्यल्लोपौ" इति वचनेन जायमानो योऽतो लोपः स तु सन्निहितमेव "अकृत्सार्वे"ति दीर्घं बाधते, अनन्तरस्येति न्यायात्, न तु व्यवहितमपि "अत आदे"रिति दीर्घमिति माधवाशान्नानेन तद्ग्रन्थस्य विरोध इति। अनाकरमेवेति। अनेकाच्त्वाऽभावादित्यर्थः। अन्ये तु भाष्ये "प्रत्ययग्रहणमनीये" इत्यनुक्तत्वात्प्रत्ययान्ततया स्वामासेत्यादि रूपं शुद्धमेवेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अज्झनगमां सनि ६।४।१६

अजन्तानाम् अङ्गानं हनिगम्योश्च सनि झलादौ परे दीर्घो भवति। अजन्तानाम् विवीषति। तुष्टूषति। चिकीर्षति। जिहीर्षति। हन् जिघांसति। गम् अधिजिगांसते। गमेरिङादेशस्य इति वक्तव्यम्। इह मा भूत् सञ्जिगंसते वत्सो मात्र इति। स्वर्गं लोकं समजिगांसतिति छन्दसि यदनिङादेशस्य अपि दीर्घत्वं दृश्यते, तदन्येषाम् अपि दृश्यते ६।३।१३६ इत्यनेन भवति। अथ वा इह अज्ग्रहणं न कर्तव्यम्। सनि दीर्घो भवति इत्येतावदेव सूत्रं कर्तव्यम्। तत्राचा गृह्यमाणस्य विशेषणे सति सिद्धम् अजन्तस्य दीर्घत्वम्? तत् क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्, अजन्तस्य अङ्गस्य दीर्घो भवति, अजादेशस्य गमेः इति। ततो न वक्तव्यम् इदं गमेरिङादेशस्य इति।

लघु-सिद्धान्त-कौमुदी

अज्झनगमां सनि ७११, ६।४।१६

अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि॥

न्यासः

अज्झनगमां सनि। , ६।४।१६

"उपधायाः" ६।४।७ इति निवृत्तम्(), अत एव वृत्तौ "उपधायाः" इति नोक्तम्()। कः पुनस्तदनुवृत्तौ दोषः स्यात्()? व्यञ्जनस्यापि दीर्घत्वं प्रसज्येत। चिकीर्षति, तुष्टूषतीत्यत्र हि यथा "अचः" १।२।२८ इति वचनादचो भवति, तथा "उपधायाः" इति वचनादनचोऽपि स्यात्()। यद्येवम्(), हनिगम्योरच्युपधाया दीर्घत्वं न स्यात्(), कस्य तर्हि स्यात्()? "अलोऽन्त्यस्य" (१।१।५२) इत्यन्त्यस्य? नैतदस्ति; अत्र हि दीर्घग्रहणेन यत्? "अचः" १।२।२८ इत्युपस्थापितं तद्धनिगमिभ्यां विशेषयिष्यामः--अचो दीर्घो भवति स चेद्धनिगम्योरिति। यद्येवम्(), अभ्यासस्यापि स्यात्()? नैतत्(); कृतदीर्घस्यैव द्विर्वचनविधानात्()। कुत एतत्()? द्विर्वचनात्? दीर्घस्य परत्वात्()। "तुष्टूषति" इति। "शर्पूर्वाः खयः शेषः" ["शेषः" इति सूत्रे नास्ति--७।४।६१] ७।४।६१। "चिकीर्षति" इति। "ऋत इद्धातोः" ७।१।१०० इतीत्वम्(), रपरत्वम्(), "हलि च" ८।२।७७ इति दीर्घः, अभ्यासस्य "कुहोश्चुः" ७।४।६२ इति चुत्वम्()। "जिघांसति" इति। "अभ्यासाच्च" ७।३।५५ इति हन्तेः कुत्वम्()--घकारः, अभ्यासस्य पूर्ववच्चुत्वम्()--झकारः, तस्य "अभ्यासे चर्च" ८।४।५३ इति जकारः। "अधिजिघांसते" इति। "इङश्च" २।४।४८ इतीङो गमिरादेशः, "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। "सञ्जिगांसते"

इति। अत्रापि "पूर्ववत्सनः" १।३।६२ इति तङ। गमेह्लरसनन्तात्? "समो गम्युच्छि" १।३।२९ इत्यादिनात्मनेपदं विहितम्()। इङोऽपि "अनुदात्तङितः" १।३।१२ इत्यादिना। यदि गमेरिङादेशस्येति वचनं, तत्कथं छन्दस्यनिङादेशस्यापि स्वर्गं लोकं समजिगांसदित्यत्र दीर्घत्वं दृश्यते? इत्याह--छन्दसि यदनिङादेशस्यापि" इत्यादि। "समजिगांसत्()" इति। गमेः सनन्ताल्लुङ, "गमेरिट्? पस्मैपदेषु ७।२।५८ इतीडागमो न भवति; "न वृद्भ्यश्चतुर्भ्यः" ७।२।५९ इत्यत्र नेति योगविभागात्()। "इह" इत्यादिना यदुक्तं "गमेरिङादेशस्य" (वा।७७५) इति, तत्प्रत्याचष्टे। "सनि" इति प्रथमो योगः, हनिगम्योस्तु दीर्घविधानाय "हनिगम्योः" इति द्वितीयो योगः कत्तव्य इत्यभिप्रायः। कथं पुनरेतावति योगे क्रियमाणेऽजन्तस्यैव दीर्घत्वं सिध्यति? इत्यत आह--"तत्र" इत्यादि। "गृह्लमाणस्य" इति। कृद्योगे कर्मणि षष्ठी। "विशेषणे"इति। भावे ल्युट्()। विशेषणमनजनतव्यवच्छेदाय। यत्र ह्रस्वदीर्घप्लुताः शिष्यनेते तत्र "अचश्च" १।२।२८ इत्येतदुपतिष्टते, तत्राङ्गस्य दीर्घो भवति, किंविशिष्टस्याचः? एवमचा गृह्लमाणस्याङ्गस्य विशेषणे व्यवच्छेदे सति विनाऽप्यज्ग्रहणेनान्तस्यैव दीर्घत्वं सिद्धम्(), यथा--"अकृत्सार्वधातुकयोः" ७।४।२५ इत्यत्र। तस्मादपार्थकत्वान्न कत्र्तव्यमेव। किमर्थं तद्धि क्रियते? इत्याह--"तत्क्रियते" इति। प्रवत्र्तनं प्रवृत्तिः=व्यापारः, तस्य भेदो नानात्वम्()। प्रवृत्तिभेदश्चैकस्यां सत्यामावृत्तो न सम्भवतीत्यावृत्तिरभ्युपगन्तव्या। ननु च "अचश्च" (१।२।२८) इत्यस्योपश्ताने सति द्वे अज्ग्रहणे भवत इति किमित्यावृत्तिराश्रीयते? नैतदस्ति; असति ह्लजग्रहणे "अचश्च" १।२।२८ इत्यस्योपस्थानं भवति। अत्राजग्रहणे तु सति निर्दिष्टस्थानिकत्वात्? "अचश्च" १।२।२८ इत्येतन्नोपतिष्टते, यथा "अचो ञ्णिति" ७।२।११५ इत्यत्रेक्परिभाषा "अजन्तस्याङ्गस्य" इत्यादिना प्रवृत्तिभेदेनाङ्गमचा गमिञ्च विशेषयति। "ततो न वक्तव्यमिदम्()" इति। अज्गरहणेनैवैतत्प्रतिपाद्यसयार्थस्यासिद्धत्वात्()। न हीङादेशमुक्त्वाऽन्यो गमिरचः स्थाने सम्भवति॥

बाल-मनोरमा

अज्झनगमां सनि ४४१, ६।४।१६

अज्झनगमां सनि। अच्, हन्, गम्-- एषां द्वन्द्वः। "नोपधायाः" इत्यत उपधाया इत्यनुवृत्तं हनगमोरन्वेति, न त्वजन्ते, असंभवात्। अङ्गस्येत्यधिकृतम्। अचस्तद्विशेषणत्वात्तदन्तविधिः। गमधातुरिह अजादेश एव विवक्षित इति प्रकृतसूत्रभाष्ये स्पष्टम्। "ढ्रलोपे पूर्वस्ये"त्यतो दीर्घ इत्यनुवर्तते। तदाह-- अजन्तानामित्यादिना। झलादौ सनीति। "च्छ्वोः शू"डिति सूत्रभाष्ये "अज्झनगमा"मित्यत्र सनं झला विशेषयिष्याम् इत्युक्तेरिति भावः। अथ जिधातोरभ्यासात्परस्य कुत्वविधिं स्मारयति-- सन्लिटोर्जेरिति। जिगीषतीति। जिगीषतीति। जेर्दीर्घे अभ्यासात्परस्य कुत्वम्। अथ चिञ्धातोरभ्यासात्परस्य कुत्वविकल्पं स्मारयति-- विभाषा चेरिति। चिकीषति- चिचीषतीति। अजन्तत्वाद्दीर्घः। जिघांसतीति। हनेः सनि "अज्झने"त्यकारस्य दीर्घः, न त्वन्त्यस्य नकारस्य, दीर्घश्रुत्या "अचट इत्युपस्थितेः। द्वित्वम्। "अभ्यासाच्चे"ति कुत्वम्। "नश्चे"त्यनुस्वारः।

तत्त्व-बोधिनी

अज्झनगमां सनि ३८५, ६।४।१६

अज्झगमाम्। गमः सामान्येन ग्रहमे गम्लृ गतावित्यस्मात्संजिगंसते इत्यत्रातिप्रसङ्गः स्यादतः "सनि च", "इङश्चे"ति सूत्राभ्यां विहितस्येणिङोरादेशस्य, "इण्वदिकः"इति इक आदेशस्य च ग्रहणमित्याशयेनाह-- अजादेशगमेरिति। एतच्च सूत्रेऽज्ग्रहणाल्लभ्यते। तथाहि-- इह "सनी"त्येव सूत्रं कर्तव्यं, दीर्घश्रुत्योपस्थितेनाऽच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घः। चिचीषति। ततो "हनिगम्यो"रित्यपरं कर्तव्यम्। एवं चाऽज्ग्रहणमतिरित्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थम्। अजन्तस्य दीर्गो भवति, अजादेशगमेश्चेति। झलादाविति किम्?। जिगमिषति। "गमेरिट् परस्मैपदेषु" इति इट्।

सूत्रम्

काशिका-वृत्तिः

तनोतेर् विभाषा ६।४।१७

तनोतेरङ्गस्य सनि झलादौ विभाषा दीर्घो भवति। तितांसति, तितंसति। झलि इत्येव, तितनिषति। सनीवन्तर्ध इत्यत्र तनोतेरुपसङ्ख्यानादिडागमो भवति विकल्पेन।

न्यासः

तनोतेर्विभाषा। , ६।४।१७

"तनोतेरुपसंख्यानात्()" इति। "तनिपतिदरिद्राणाम्()" (कात्या।वा।५०५९-७।२।४९) इत्यस्मात्()। श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः। प्रकृतिगरहणपरिभाषाया (व्या।प।७७) तदन्तादपि विकल्पः सम्भवेत्()--तन्तंसति॥

बाल-मनोरमा

आ च हौ ३२९, ६।४।१७

"आ" इति लुप्तप्रथमाकम्। जहातेरिति। "जहातेश्चे"त्यतस्तदनुवृत्तेरिति भावः। चादिदीताविति। "इद्दरिद्रस्ये"त्यतः, "ई हल्यघो"रित्यतश्च तयोरिह चकारेणानुकर्षादिति भावः। जहितात्-- जहीतात् जहितम्--जहीतम् जहित--जहीत। जहानि जहाव जहाम। लङ्याह-- अजहादिति। अजहिताम्--अजहीताम् अजहुः। अजहा इति। अजहितम्--अजहीतम् अजहित-अजहीत। अजहाम् अजहिव-अजहीव अजहिम - अजहीम।

बाल-मनोरमा

तनोतेर्विभाषा ४५०, ६।४।१७

तनोतेर्विभाषा। उपधाया दीर्घ इति। "नोपधायायाः" इत्यतो "ढ्रलोपे" इत्यतश्च तदनुवृत्तेरिति भावः। झलादौ सनीति। "अज्झने"त्यतस्तदनुवर्तते। तत्र झलादाविति भाष्ये स्थितमिति भावः। आशङ्कायामिति। आशङ्काविषयक्रियावृत्तेर्धातोः स्वार्थे सन्नित्यर्थः। ()आआ मुमूर्षतीति। शङ्कितमरणो भवतीत्यर्थः। कूलं पिपतिषतीति। शङ्कितपतनं भवतीत्यर्थः। "तनिपती"ति इट्पक्षे रूपम्। पतेःसनि इडभावपक्षे त्वाह--

---

सूत्रम्

काशिका-वृत्तिः

क्रमश् च क्त्वि ६।४।१८

क्रम उपधाया विभाषा दिर्घो भवति क्त्वा प्रत्यये झलादौ परतः। क्रन्त्वा, क्रान्त्वा। झलि इत्येव, क्रमित्वा। प्रक्रम्य, उपक्रम्य इति बहिरङ्गो ऽपि ल्यबादेशो ऽन्तरङ्गानपि विधीन् बाधते इति पूर्वम् एव दीर्घत्वं न प्रवर्तते।

न्यासः

क्रमश्च क्त्वि। , ६।४।१८

"अनुनासिकस्य क्विझलोः" ६।४।१५ इत्यादिना नित्ये प्राप्ते विकल्पार्थ वचनम्()। "उपधायाः" इति। कुत एतत्()? "अचश्च" १।२।२८ इत्यस्योपस्थानादुपधाया एव क्रमोऽच्त्वात्()। "क्रमित्वा" इति। "उदितो वा" ७।२।५६ इति पक्ष इडागमः। "प्रक्रम्य" इति। "समासेऽनञ्पूर्वेक्त्वो ल्यप्()" ७।१।३७। ननु दीर्घत्वं कत्वाप्रत्ययमपेक्षत इत्यन्तरङ्गम्()।

ल्यबादेशस्त्वनेकपदाश्रयत्वात्? समासमपेक्षमाणो बहिरङ्गो भवति। तत्रान्तरङ्गत्वाल्लयबदेशात्? प्रागेव झलादौ दीर्घत्वं कस्मान्न भवति? इत्याह--"बहिरङ्गोऽपि" इत्यादि। "अदो जग्धिर्ल्यप्ति किति" (२।४।३६) इत्यत्र ज्ञापितमेतत्()--"बहिरङ्गो ल्यबादेशोऽन्तरङ्गान्? विधीन्? बाधते" इति॥

तत्त्व-बोधिनी

क्रमश्च क्त्वि १५९७, ६।४।१८

झलादावितीति। "जान्तनशा"मिति सूत्रे वक्तव्यमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

च्च्Hवोः शूधनुनासिके च ६।४।१९

छ इत्येतस्य सतुक्कस्य, वकारस्य च स्थाने यथासङ्ख्यम् शूथ् इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्ययै परतः क्वौ झलादौ च क्ङिति। प्रश्नः। विश्नः। अन्तरङ्गत्वात् छे च ६।१।७१ इति तुकि कृते सतुक्कस्य शादेशः। वकारस्य ऊथ् स्योनः। सिवेरौणादिके न प्रत्यये लघूपधगुणात् पूर्वमूथ् क्रियते। तत्र कृते ऽन्तरङ्गत्वाद् यणादेशो नानाश्रयत्वात् च न वार्णादाङ्गं बलीयः भवति। क्वौ छस्य शब्दप्राट्। क्वब्वचि इत्यादिनौणादिकः क्विप् दीर्घश्च। गोविट्। वकारस्य अक्षद्यूः। हिरण्यष्ठ्यूः। असिद्धं बहिरङ्गमन्तरङ्गे इति नाजानन्तर्ये इति प्रतिषिध्यते। झलादौ छस्य पृष्टः। पृष्टवान्। पृष्ट्वा। वकारस्य द्यूतः। द्यूतवान्। द्यूत्वा। क्ङिति इत्येव, द्युभ्यास्। द्युभिः। केचिदत्र क्ङिति इति न अनुवर्तयन्ति। कथं द्युभ्याम्, द्युभिः इति ऊठि कृते? दिव उत् ६।१।१२७ इति तपरत्वान् मात्राकालो भविष्यति। छशां षः इत्यत्र छग्रहणं न कर्तव्यम्। अनेन एव हि सर्वत्र शकारो विधीयते। ऊठष्टित्करणम् एत्यधत्यूठ्सु ६।१।१८३ इति विशेषणार्थम्। वाह ऊथ् ६।४।१३९ इत्ययम् अपि ठिदेव।

लघु-सिद्धान्त-कौमुदी

च्छ्वोः शूडनुनासिके च ८४६, ६।४।१९

सतुक्कस्य छस्य वस्य च क्रामात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। पृच्छतीति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते कटप्रूः। जूरुक्तः। श्रयति हरिं श्रीः॥

न्यासः

च्छ्वोः शूडनुनासिके च। , ६।४।१९

यदि केवलस्य च्छकारमात्रस्य ग्रहणं क्रियते, तदा "प्रच्छ ज्ञीप्सायाम्()" (धा।पा।१४१३) इत्यस्य क्तप्रत्यये कृतेऽन्तरङ्गत्वात्? "च्छे च" ६।१।७१ इति तुकि कृते छकारमात्रस्य शकारादेशे कृते पृट्ष्ट इत्यनिष्टं रूपं स्यात्()। सतुक्कसय ग्रहणे तु सति स्थान्यन्तर्भावात्? तुगप्यादेशेन निवर्त्यत इति न भवत्येव दोषप्रसङ्ग इत्येतदालोच्य सतुक्कस्य ग्रहणमिति दर्शयितुमा--""छ" इत्येतस्य सतुक्कस्य" इति। सतुक्कस्य ग्रहणं "यजयाचयतविच्छप्रच्छिरक्षो नङः" ३।३।९० इति ङित्करणादवगम्यते। तस्य हि ङित्करणस्यैतत्प्रयोजनम्()--विश्न इत्यत्र "पुगन्तलघूपधस्य" ७।३।८६ इति गणो मा भूदिति; यदि चात्र तुग्रहितः केवल एव च्छकारः स्थानित्वेन परिगृह्रते तदा तुकि कृते छकारमात्रस्य सकारे कृते गुरूपधत्वादेव गुणोन भविष्यतीति ङित्करणमनर्थकं स्यात्। सतुक्कस्य तु ग्रहणे कृते तुकि सतुककस्यैव शकारादेशः क्रियते, ततश्च लध्व्यामुपधायां समुपजातायां गुणः प्राप्नोतीति तत्प्रतिषेधार्यं ङित्करणं क्रियमाणमथवद्भवतीत्येके वर्णयन्ति, एतच्चायुक्तम्(); सतुपजातायां गुणः प्राप्नोतीति तत्प्रतिषधार्()थं ङित्करणं

क्रियमाणमथवद्भवतीत्येके वर्णयन्ति, एतच्चायुक्तम्(); सतुपजातायां गुणः प्रप्नोतीति तत्प्रतिषेधार्थं ङित्करणं क्रियमाणमथवद्भवतीत्येके वर्णयन्ति, एतच्चायुक्तम्(); सतुक्कस्याप्यादेशे कृते निष्ठितमङ्गं भवति, प्रयोगार्हत्वात्()। तत्र "अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य" (व्या।प।३८) इत्यनया परिभाषया गुणो न भविष्यतीति। तस्मात्? सतुक्कस्याप्यादेशे क्रियमाणे सति ङित्करणमनर्थकमेव, कथं तेन सतुक्कस्य ग्रहणमवसीयते? एवं तर्हि "ननौ पृष्टपरतिवचने (३।२।१२०) इति निर्देशात्? सतुक्कस्य ग्रहणमवसीयते। तुग्रहितस्य ग्रहणे पृट्ष्टेत्येवं यथोक्त प्राक्()। नङस्तु ङित्करणं "अनित्यमागमशासनम्()" (व्या।प।९९) इति ज्ञापनार्थम्()। अनित्यत्वे हि तस्य यदा तुगभावस्तदाऽसति ङित्करणे गुणः प्रसज्येत। ननु चासति प्रयोजने ज्ञापकं भवति, अस्ति च तस्य ङित्करणस्य प्रयोडजनम्(), किं तत्()? ग्रह्यादिसूत्रेण (६।१।१६) प्रच्छेः सम्प्रसारणं यथा स्यादिति? नैतदस्ति; न हि प्रच्छेर्नङि सम्प्रसारणमिष्यते। कथमेतज्ज्ञायते? "प्रश्ने चासन्नकाले" ३।२।११७ इति निर्देशात्()। तदेतत्? ङित्करणम्? "अनित्यमागमशासनम्" (व्या।प।९९) इत्यस्य ज्ञापकमेव। अथ तु सतुक्कस्यापि ग्रहणे कथं सतुक्कस्यादेशो भवति, य#आवता "अलोऽन्त्यस्य" (१।१।५२) इति वचनादन्त्यस्यैव स्यात्()? नैतदस्ति; सतुक्कस्य ग्रहणसामर्थ्यान्न भविष्यति। एवमपि तदन्तस्याङ्गस्य स्यात्()। "निर्दिश्यमानस्यादेशा भवन्ति" (व्या।प।१०६) इति तदन्तस्य न भविष्यति। "प्रश्नः" विश्नः" इति। "प्रच्छ ज्ञीप्सायाम्()" (धा।पा।१४१३) "विच्छ गतौ" (धा।पा।१४२३) "यजयाच" ३।३।९० इति नङ्()। "अन्तरङ्गत्वात्()" इत्यादि। "छे च" (६।१।७३) इति ह्रस्वस्य वर्णस्य तुग्विधीयत इति वर्णाश्रयत्वात्? तुगन्तरङ्गः, शकारस्त्वङ्गाश्रयः। तत्राङ्गस्यैव तावद्? प्रत्ययाश्रयत्वाद्बहिरङ्गत्वम्()। किं पुनस्तदाश्रयस्य शकारस्य। ननु च "वार्णादाङ्गं बलीयः" (व्या।प।३९) इति शकारस्यैव बलीयस्त्वम्()? नैतदस्ति; यत्र ह्याङ्गवार्णयोर्युगपदेकनिमित्तमाश्रित्य प्राप्तिस्तत्रास्या उपस्थानं भवति। यथा "इयाय" इत्यत्र यमेवाकारमाश्रित्य "इको यणचि" ६।१।७४ इत्यभ्यासेकारकस्य यणादेशः प्राप्नोति, तमेवाकारमाश्रित्य "अभ्यासस्यासवर्णे" ६।४।७८ इतीयङपि। तत्र युगपदेकत्रोभयप्राप्तौ "वार्णादाङ्गं बलीयः" (व्या।प।३९) इत्यस्या उपस्थाने सत्यङ्गकार्यमिङेव भवति। इह तु प्रागेव नङुत्पत्तेश्छकारमाश्रित्य तुक्प्राप्नोति, उत्तरकालं नङि विहिते तदाश्रः शकार इति भिन्नाश्रयत्वम्(), अतो नेयमुपतिष्ठते। "सिदेः" इति। "षिवु तन्तुसन्ताने" (धा।प।११०८) इत्यस्य। "औणादिके नप्रत्यये" इति। "धापृवस्यजतिभ्यो नः" (द।उ।५।३९) इति वादिभ्यो विधीयमानो नप्रत्ययो बहुलवनात्? सिवेरपि भवति। केनचित्()"सिवेष्टेर्यू च" (द।उ।४।५) ["सिवेष्टेरूच"--इत्युत्त्वम्()] इत्यनेन सूनशब्दस्य व्युत्पत्तये नकारो विधीयते, दीर्घोच्चारणसामर्थ्यात्? तत्र गुणो न भवति। ये तु स्योनशब्दव्युत्पत्तय एवेदं सूत्रं वर्णयन्ति, तेषां दीर्घोच्चारणमनर्थकं स्यात्()। त न हि ह्रस्वस्य दीर्घस्य वा गुणे कृते कश्चिद्विशेषोऽस्ति। "लघूपधगुणात्? पूर्वमूठ्? क्रियते" इति। "अन्तरङ्गत्वात्()" इति। वक्ष्यमाणो हेतुरिहापि द्रष्टव्यः। गुणो ह्याद्र्धधातुकमङ्गसम्बन्धिनीञ्चोपधां लध्वीमिग्लक्षणां विशिष्टामेवाश्रयति। ऊडादेशस्त्वनुनासिकादिं प्रत्ययमङ्गसम्बन्धिताविशिष्टं वकारमात्रम्()?। तस्माद्गुणो बहिरङ्गः। ऊडादेशस्त्वन्तरङ्गः। अतोऽन्तरङ्गत्वाल्लधूपधगुणात्? पूर्वमेवोठ्? क्रियते। ततर कृतेऽन्तरङ्गत्वाद्यणादेश इति लघूपधगूणात्? पूर्वं क्रियत इति प्रकृतेन सम्बन्धः। अन्तरङ्गत्वं तु वर्णाश्रयत्वाद्यणादेशस्य। ननु च "वर्णादाङ्गं बलीयः" (व्या।प।३९) इत्याङ्गस्य गुणस्यैव बलीयस्त्वम्(), ततः स एव यणादेशात्? पूर्वं कस्मान्न क्रियते? इत्याह--"नानाश्रयत्वात्()" इत्यादि। यत्र ह्युभावप्याङ्गवार्णौ विधी एकं निमित्तमाश्रित्य प्राप्नुतस्तत्रेयमुपतिष्ठत इत्युक्तम्()। इह तु यणादेश ऊडाश्रयः, गुणस्त्वाद्र्धधातुकाश्रय इति भिन्नाश्रयत्वम्()। अतो नैयं परिभाषोपतिष्ठते। "शब्दप्राट्()" इति। शब्दं पृच्छतीति "क्विब्वचि" (वा।२८८) इत्यादिना क्विप्(), दीर्घश्च, वश्चादिसूत्रेण ८।२।३६ शकारस्य षकारः, तस्यापि जश्तवं डकारः, तस्यापि चर्त्वं टकारः। "गोविट्()" इति। "विच्छ गतौ" (दा।पा।१४२३) गां विच्छतीति क्विप्()। "क्विप्च" ३।२।७६ इत्यनेन। तथा "अक्षुद्यः, हिरण्यष्ठ्यूः" इत्यत्रापि दिविष्ठिविभ्याम्()। ननु यणादेशोऽन्तरङ्गो वर्णाश्रयत्वात्()। ऊडादेशस्तु प्रत्ययाश्रयत्वाद्बहिरङ्गः, तत्र "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इति यणादेशनात्र न भवितव्यम्()? इत्यतद

आह--"असिद्धं बहिरङ्गमन्तरङ्गे" इत्यादि। यत्र द्वयोरचोरानन्तर्य्यं तत्रैषा प्रतिषिध्यते "नाजानन्तर्ये बहिष्ट्वपरक्लृप्तिः" (व्या।प।४४) इति। अस्या अयमर्थः--अचोरानन्तर्ये सति बहिरङ्गपरिभाषा न प्रकल्पते, न भवतीत्यर्थः। अत्रार्थे ज्ञापकम्--"षत्वतुकोरसिद्धः" ६।१।८३ इति तुकि कत्र्तव्येऽसिद्धवचनम्()। तस्य ह्येतदेव प्रयोजनम्()--अधीत्येत्यत्र सवर्णदीर्घस्यासिद्धत्वाद्ध्रस्वलक्षणस्तुग्यथा स्यादिति। यदि चाचोरानन्तर्ये बहिरङ्गपरिभाषा स्यात्? तदैकपदाश्रयत्वादन्तरङ्गे तुकि कत्र्तव्ये पदद्वयाश्रयत्वाद्बहिरङ्गस्यैकादेस्यासिद्धत्वं भविष्यतीति किमसिद्धवचनेन? तदैकपदाश्रयत्वादन्तरङ्गे तुकि कत्र्तव्ये पदद्वयाश्रयत्वाद्बहिरङ्गस्यैकादेस्यासिद्धत्वं भविष्यतीति किमसिद्धवचनेन? तत्क्रियतेजानन्तर्ये बहिरङ्गपरिभाषा नास्तीति ज्ञापनार्थम्()। "हिरण्यष्ठ्यूः" इत्यत्र "धात्वादेः षः सः" (६।१।६४) इति सत्वं न भवति; "सुब्धातुष्ठिवुष्वष्कतीनं प्रतिषेधो वक्तव्यः" (वा।६७१) इति वचनात्()। "पृष्टः" इति। ग्रह्यादिसूतद्रेण ६।१।१६ सम्प्रसारणम्(), पूर्ववत् षत्वं ष्टुत्वञ्च। "द्युभ्याम्()" इति। "दिव उत्()" ६।१।१२७ इत्युत्तवम्()। "येऽत्र क्ङितीति नानुवत्र्तयन्ति तेषामन्यत्राप्यनेन विधिना भवितव्यम्(), ततः द्युभ्याम्(), द्युभिरिति न सिध्यतीति मन्यमान आह--"कथं द्युभ्याम्(), द्युभिरिति ऊठि कृते" इति। ऊठि कृते न किञ्चित्? सिध्यतीत्यर्थः। "दिव उदिति तपरत्वान्मात्राकालो भविष्यति" इति। "दिव उत्()" ६।१।१२७ इत्यत्र तपरकरणं न कत्र्तव्यम्()। यद्यपि हि "भाव्यमान उकारः सवर्णान्? गृह्णाति" (चान्द्र प।४४), तथाप्यान्तरतम्यादर्धमात्राकालस्य व्यञ्जनस्य मात्राकाल एवोकारो भविष्यति। न दीर्घ इति किं तन्निवृत्त्यर्थेन तपरकरणेन? तत्क्रियते लक्षणान्तरेणापि यो दीर्घः प्राप्नोति स मा भूदित्येवमर्थम्()। तेनात्र "दिव उत्त" ६।१।१२७ इत्यनेनैव तपरत्वान्मात्राकालो भविष्यति, अन्यथा यदि "च्छ्वोः शूडनुनासिके च" (६।४।१९) इत्यनेन दीर्घः स्यात्? ततो निष्फलं "दिव उत्()" ६।१।१२७ इत्यत्र तपरकरणं स्यात्(); व्यावर्त्त्याभावात्()। अथ वा "ऊठि कृते" इत्युत्तरेण परिहारग्रन्थेन सम्बध्यते। तत्रायमर्थः--क्रियतां नाम सामान्येन क्ङिति चाखिति चोठ्()। कृतेऽपि तत्र "एकादेशविकृतमनन्यवद्भवति" (व्या।प।१६) इति तस्यैव स्थाने "दिव उत्()" ६।१।१२७ इत्यनेन तपरत्वाद्ध्रस्वो भविष्यति। एतदेव हि तस्य प्रयोजनम्()--ऊठ्स्थाने भवन्? मात्रिको यथा स्यात्(), आन्तरतम्याद्दीर्घो मा भूदिति। अ()स्मश्च व्याख्याने यदुकग्तम्()--"दिव उदिति तपकरणमूठो निवृत्त्यर्वम्(), द्युभ्याम्(), द्युभिरित्यत्र परत्वादूठ्? प्राप्नोति" इति तद्विरुध्यते। न हि तेनोत्त्वस्योठः स्थान्यादेशभाव उपपद्यते, किं तर्हि? बाध्यबाधकभावः। तथा हि तस्यायमथो वण्र्यते--ऊठो निवृत्त्यर्थं बाधनार्थं तपरकरणम्()। असति हि तस्मिन्? परत्वादूठ्? प्राप्नोति, तस्मात्? तद्बाधनार्थं तपरकरणम्()। परमप्यूठं बाधित्वाऽनेनैवमात्रिक उकारो यथा स्यादिति नास्ति विरोधः। ये हि स्थान्यादेशभावमिच्छन्ति त एवं ग्रन्थं व्याचक्षते। ऊठो निवृत्त्यर्थं स्थानिभूतस्योठो निवृत्त्यर्थमित्यर्थः। ऊडादेशे कृत ऊठ्()स्थितिमतो निवृत्तिर्यथा स्यादित्येवमर्थं तपरकरणमित्यर्थः। परत्वादूठ्? प्राप्नोतीत्यत्र विहितश्च। श्रुतिमानित्यध्याहार्य्यम्()। तदेतदुक्तं भवति--अत्र हि परत्वादूड्()विहितः सन्? श्रतिमानेव प्राप्नोति, निवृत्तिमांश्चेष्यते। तस्मात्? तस्य निवृत्तये तपरत्वमिति। अतपरेऽप्यादेशे विधीयमाने सत्यूठो निवृत्तिर्भवत्येव; निवृत्तिधर्मत्वात्? स्थानिनः। उच्यते चेदं तपरकरणसूठो निवृत्त्यर्थमिति। तत्र वचनसामथ्र्याद्यस्यां निवृत्तौ सत्यां विशेषो भवति तदर्थं तपरकरणमिति विज्ञायते। ततश्च सामथ्र्यादिदमुक्तम्()--भवत्यूठो ह्यस्वादेशार्थं तपरकरणमिति। यतस्तपर आदेशे सत्यूठो या निवृत्तिः क्रियते तस्यां सत्यां विशेषो भवति। नातपरे। अतपरे ह्यादेशे सत्यान्तरतम्याद्दीर्घस्य दीर्घ एव स्यादिति कुतो विशेषः। किं पुनः किद्ग्रहणे निवृत्ते सतीष्टं सिध्यति, यदर्तं केचिदत्र क्ङितीति नानुवत्र्तयन्तीत्याह--"छशां षः इत्यत्र" इत्यादि। क्ङिद्ग्रहणे निवृत्ते सत्यविशेषेण क्ङिति चाक्ङिति चानेने च्छकारस्य शकारो विधीयते, तेन व्रश्चादिसूत्रे ८।२।६६ छग्रहणं न कत्र्तव्यं भवेत्()। शकारस्य षत्वविधानेनैव सर्वस्य षत्वस्याभावाच्छकारस्य षत्वविधानार्थं व्रश्चादिसूत्रे ८।२।३६ छग्रहणं कत्र्तव्यमेव। अथ तेषां कथं प्रष्टेति सिध्यति, यावता तुकि कृते छकारमात्रस्य षत्वे प्रट्ष्टेत्यनिष्टं रूपं प्राप्नोति? नैष दोषः, ते हि व्रश्चादिसूत्रे ८।२।३६ सतुक्कस्य च्छकारस्य ग्रहणमिच्छन्ति। ऊडयं यदि टित्? स्यात्? "आद्यन्तौ टकितौ" १।१।४५ इत्यादौ स्यात्()। तत्र यद्यपि वकारस्य वलि लोपे

कृते सत्यक्षद्यूरित्यादि सिध्यति, जूरित्यादि तु न सिध्ये। टित्त्वे हि सति ज्वरत्वरादि (६।४।२०) सूत्रेणैको वकारात्? पूर्वमूडपरोऽकारादिति द्वावूठौ स्याताम्()। तस्मादूठष्ठित्वमङ्गीकत्र्तव्यम्? न टित्त्वम्()। तस्यापि ठित्वस्य यदि प्रयोजनं न स्याद्वैयथ्र्य स्यादित्येतच्चेतसि कृत्वोडादेशस्य यठ्ठित्त्वं तस्य प्रयोजनं दर्शयितुमाह--"ऊठष्ठित्करणम्()" इत्यादि। एवं ब्राऊवता "एत्येधत्यूठ्सु" ६।१।८६ इत्यत्रापि ठित एव ग्रहणं भवति। एवं ह्यूठष्ठित्करणस्य विशेषणार्थतोपपद्यते, यदि तत्रापि ठित एव ग्रहणं भवति, नान्यथा। यद्यत्र ठकारोऽनुबन्धो न क्रियते तदा "एत्येधत्यूठ्सु" ६।१।८६ इत्यत्रापि न कत्र्तव्यम्(); ठकारानुबन्धवत ऊकारस्य क्वचिदसम्भवात्()। एवञ्चोच्यमाने प्रौउहते, प्रोहत इत्यत्रापि वृद्धिः स्यात्()। तस्माद्विशेषणार्थं ठित्करणं क्रियते। ठकारस्य तु श्रवणं न भवति; कृतचत्र्वस्य निर्देशात्()। यदि तर्हि ठिदयम्(), "एत्येधत्यूठ्सु" ६।१।८६ इत्यत्रापि ठित एव ग्रहणम्(), एवं सति "वाह ऊठ्()" ६।४।१३२ इत्यस्य तत्र ग्रहण#ं न स्यात्(), ततश्च प्रष्ठौह इत्यत्र वृद्धिर्न स्यादित्यत आह--"वाह ऊठित्ययमपि" इत्यादि। ठकारस्यापि पूर्ववदेवाश्रवणम्()॥

बाल-मनोरमा

ध्वसोरेद्धावभ्यासलोपश्च ३०२, ६।४।११९

ध्वसोरेद्धौ। घुस अस् अनयोद्र्वन्द्वः। एत्--हौ इति च्छेदः। ननु अस् हि इति स्थिते "हुझल्भ्यो हेर्धि"रिति। धित्वं परत्वाद्बाधित्वा परत्वाद्बाधित्वा "ध्वसो"रिति सकारस्य एत्वे हुझल्भ्यः परत्वाऽभावात्कथं धिभाव इत्यत आह--आभीयत्वेनेति। तथा च अ ए धीति स्थिते आह-- श्नसोरिति। नन्वाशिषि अस् हि इति स्थिते तातङ बाधित्वा परत्वादेत्त्वं प्राप्नोतीत्यत आह-- तातङ्पक्षे एत्त्वं नेति। कुत इत्यत आह-- परेणेति। ननु कृते तातङि तस्य स्थानिवत्त्वेन हित्वात्तस्मिन्परे "ध्वसो"रित्येत्त्वं कुतो नेत्यत आह-- सकृद्गताविति। सकृत् = एकवारं, गतौ = प्रवृत्तौ, विप्रतिषेधे = विरोधे सति, यद्बाधितमेव भवति, नतु पुनः प्रवर्तत इति तदर्थः। लङस्तिपि विशेषमाह--अस्तिसिच इति। इकारलोपे आटि वृद्धौ "अस्तिसिचः" इति ईडागम इत्यर्थः। ननु तसादौ ङिति परत्वादाडागमात्प्राक् "श्नसो"रित्यल्लोपे सति अजादित्वाऽभावात्कथमाडित्यत आह-- श्नसोरल्लोपस्याभीयत्वेनेति। आस्तामिति। अत्र कृते आडागमे तस्य लोपनिवृत्त्यर्थं "श्नसोरल्लोपः" इति तपरकरणम्। वस्तुतस्तु आट आभीयत्वेनाऽसिद्धत्वादेव लोपे न भवतीति "श्नसोरल्लोपः" इत्यत्र तपरकरणं व्यर्थमिति भाष्ये स्पष्टम्। आसन्निति। आसीः आस्तम्। आस्त। आसम्। आस्व आस्म। विधिलिङ्याह-- स्यादिति। स्याताम् स्युरित्यादि। आशीर्लिङि आद्र्धधातुकत्वाद्भूभावं मत्वाह-- भूयादिति। लुङि तु सिचि भूभावे "गातिस्थे"ति सिचो लुकं मत्वाह--- अभूदिति। तत्र "अस्तिसिचोऽपृक्ते" इति ईडागममाशङ्क्य आह---सिचोऽस्तेश्चेति। इह भूभावे सति अस्तेरश्रूयमाणत्वादीण्नेति भावः।

बाल-मनोरमा

च्छ्वोः शूडनुनासिके च ३८८, ६।४।१९

च्छ्वोः शूडनुनासिके च। च्छ् व् अनयोद्र्वन्द्वात्षष्ठीद्विवचनम्। छकारात्प्राक्तुकः श्चुत्वेन चकारस्य निर्देशः। "शूठ" इति छेदः। श् ऊठ् अनयोः समाहारद्वन्द्वात्प्रथमा। चकारेण क्विझलोः क्ङितीत्यनुवर्तते। तदाह-- सतुक्कस्येत्यादि। यथा विश्नः प्रश्नः। विच्छधातोः प्रच्छधातोश्च औणादिके नङ्प्रत्यये अन्तरङ्गत्वात् "छे चे"ति तुकि कृते सति सतुक्कस्य छस्य शकार आदेशः। वकारस्य ऊठमुदाहरति-- खौनातीति। खव् ना तीति स्थिते वकारस्य ऊठ, ठकार इत् "एत्येधत्यूठ्सु" इति वृद्धिरिति भावः। खौनीतः खौनन्तीत्यादि। खव् ना हि इति स्थिते "हलः श्नश्शानज्झौ"इतिशानजादेशमाशङ्क्याअह-- शानचः परत्वादिति। हेठ चेति। हेठधातुरपि भूतप्रादुर्भावे वर्तते इत्यर्थः। ग्रह उपादाने इति। अदुपधः। स्वरितेत्त्वादुभयपदी। किति ङिति च संप्रसारणं स्मारयति-- ग्रहिज्येति। गृह्णाति गृह्णीते इति। श्नाप्रत्ययस्य ङित्त्वाद्रेफस्य संप्रसारणे पूर्वरूपमिति भावः। णलि द्वित्वे कृते "लिट()भ्यासस्ये"ति संप्रसारणे उरदत्त्वे

रपरत्वे हलादिशेषे अभ्यासचुत्वे उपधावृद्धिः। जग्राह।अतुसादौ क्ङति परत्वात् "ग्रहिज्ये"ति संप्रसारणे कृते द्वित्वादि। जगृहतुः जगृहुः। जग्रहिथ। जगृहुथुः जगृह। जग्राह-जग्रह जगृहिव जगृहिम। जगृहे जगृहाते जगृहिरे। जगृहिषे जगृहाथे जगृहिढ्वे-जगृहिध्वे। जगृहे जगृहिवहे जगृहिमहे।

तत्त्व-बोधिनी

च्छ्वोः शूड्नुनासिके च ३३९, ६।४।१९

च्छ्वोः शूड्नु। "च्छ्वो"रिति सतुक्कस्यानुकरणम्। चुत्वेन तकारस्थाने चकार इत्याह-- सतुक्कस्येति। एवं च सूत्रे छकारात्पूर्वं चकारो ज्ञेयः। सतुक्कस्य किम्?। विच्छप्रच्छायां नङ्प्रत्यये छकारस्य शकारे कृते तुकोऽश्रवणं यथा स्यात्। अकृतव्यूहपरिभाषा त्वनित्या, अस्मादेव सतुक्कग्रहणात्। तेनातिक्रान्तो भवकन्तमतिभवकानित्यादि सिद्धमित्याहुः। सूत्रस्थेन चशब्देन क्विझलोः क्ङितीत्यनुकृष्यत इत्याह--- क्वावित्यादि। ग्रहो लिटि दीर्घः। एकाचः किम्?। जाग्रहिता। जाग्रहिष्यति-- इत्यादौ यङ्लुकि माभूत्। विहितस्येति किं?। ग्राहितम्। न चाऽत्र णिलोपस्य स्थानिवद्भावाद्ग्रहेः परत्वं कनेति वाच्यं, दीर्घविधौ स्तानिवत्त्वनिषेधात्। "त्रैपादिकदीर्घविधावेव, स्थानिवत्त्वनिषेध" इत्यभ्युपगमे तु विहितविशषमं व्यर्थमेवेत्याहुः। प्रकृतस्येटो ग्रहणाद्ग्राहिता ग्राहिष्यत इत्यादौ चिण्वदिटो न दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

ज्वरत्वरस्रिव्यविमवाम् उपधायाश् च ६।४।२०

ज्वर त्वर स्रिवि अव मव इत्येतेषाम् अङ्गानां वकारस्य उपधायाश्च स्थाने ऊठ् इत्ययम् आदेशो भवति क्वौ परतो ऽनुनासिके झलादौ च क्ङिति। जूः, जूरौ, जूरः। जूर्तिः। त्वर तूः, तूरौ, तूरः। तूर्तिः। स्रिविस्रूः, स्रुवौ, स्रुवः। स्रूतः। स्रूतवान्। स्रूतिः। अव ऊः, उवौ, उवः। ऊतिः। मव मूः, मुवौ, मुवः। मूतः। मूतवान्। मूतिः। ज्वरत्वरोपधा वकारात् परा, स्रिव्यवमवां पूर्वा।

लघु-सिद्धान्त-कौमुदी

ज्वरत्वरस्रिव्यविमवामुपधायाश्च ८६८, ६।४।२०

एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति॥ अतः क्विप्। जूः। तूः। स्रूः। ऊः। मूः॥

न्यासः

ज्वरत्वररिउआव्यविमवामुपधायाश्च। , ६।४।२०

रिउआव्यविमवां वकारसय पूर्णेणैव सिद्धम्()। उपधायास्तु न सिध्यतीति तदर्थमेषां ग्रहणम्()। ज्वरत्वरयोस्तु वकारस्यापि पूर्वेण न सिध्यति; अनयोरकाररेफाभ्यां झलादेः क्विपश्च व्यवधानात्()। तस्मात्? तयोर्वकारार्थमुपधार्थञ्च ग्रहणम्()। "जूः, जुरौ, जुरः" इति। "ज्वर रोगे" (धा।पा।७७६) वकारस्योपधायाश्चोठि कृते "सम्प्रसारणाच्च" ६।१।१०४ इति पूर्वरूपत्वम्()। "जर्त्तिः" इति। क्तिन्()। "तूः" इति। "ञि त्वरा सम्भ्रमे" (धा।पा।७७५) "तूर्णः"["तूर्त्तिः-- काशिका-"तूर्णः" इति नास्ति] इति। "रदाब्यां निष्ठातो नः" ८।२।४२ इति नत्वम्()। "स्रूः इति। "रिउआवुगतिशोषणयोः" (धा।पा।११०९)। सवरणदीर्घः। "रुआउवौ, रुआउवः" इति। "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङ। "ऊः" इति। "अव रक्षणे" [रक्षण कान्तिप्रीतितृपत्यवगमप्रवेशश्रवणस्वणस्वम्यर्थयाचनक्रियेच्छादीप्त्यवापत्यालिङ्गनहिंसादानभागवृद्धिषु--धा।पा]

(धा।पा।६००)। "मूः" इति। "मव बन्धने" (धा।पा।५९९)। इह ज्वरादिसम्बन्धिन्या उपदाया ऊङ्()विधीयते, उपधा चालोऽन्त्यात्पूर्वो वर्णः, अन्त्यत्वञ्चापेक्षितम्(); तत्र यथा--श्रेयान्, श्रेयांसावित्यत्र सकारात्? पूर्वे ये वर्णास्तेषामन्त्यो यो नकारस्तस्मात्? पूर्वो वर्ण उपदा, तथा ज्वरादीनामपि यो पूर्वौ वर्णौ तयोर्योऽन्त्यो वर्णस्तस्मात्? पूर्वं उपधा, सा च ज्वरादीनां सम्बन्धिनी; तदवयवत्वात्(), ततश्च तस्या अप्युपदाया ऊठा भवितव्यमिति कस्याचित्? भ्रान्तिः स्यात्()। अतस्तां निराकर्तुं यस्या उपदाया ऊठा भवितव्यं तां दर्शयितुमाह--"ज्वरत्वरयोरुपधा वकारात्परा" इत्यादि। यस्या उपधाया ऊठा भवितव्यम्(), सोहोपधाशब्देन विवक्षिता। किं पुनः कारणस्या वृत्तिकारोपदर्शिताया उपधाया ऊङ्भवति, नान्यस्याः? क्वझल्भ्यां क्ङिता चोपधाविसेषणात्()। अत्र क्विप्प्रत्ययेन झलादिना क्ङिता चोपधा विशिष्यते--ज्वरादीनां योपधा क्वौ झलादौ च परतस्तस्या उपधाया ऊङ्भवतीति। अत्र "येन नाव्यवधानं तेन व्यवहितेऽपि" (व्या।प।४६) इत्यादिना यत्रैकेन वर्णेन व्यवधानं वृत्तिकारेणोक्ताया उपदायाः सम्भवति, तस्या एवोङ्भवति,

तत्त्व-बोधिनी

ज्वरत्वररिउआव्यविमवामुपधायाश्च ४१३, ६।४।२०

ज्वर रोगे। ञित्वरा संभ्रमे। अत्र वृत्तौ "झलादौ क्ङिती"त्युक्तं तत्र क्ङितीत्येतद्रभयसकृतमेवेत्याह-- क्ङितीति नानुवर्तत इति। अवतेस्तुनीति। "ज्वरत्वरे"त्युपधावकारयोरूठि गुणे च कृते मन्प्रत्ययस्य टिलोपे चोमिति सिध्यतीत्यर्थः। ज्वरादेरुदाहरणं क्विपि जूः। जुरौ। जुरः। झलादौ तु-- जूर्तिः। जूर्णः। जूर्णवान्। त्वर-- तूः। तुरौ। तुरः। तूर्तिः। तूर्णः। तूर्णवान्। रिउआवि- स्रूः। रुआउवौ। रुआउवः। रुआऊतिः। अवि-- ऊः। उवौ। उवः।ऊतिः। मव-- मूः। मुवौ। मूतः। मूतिः। मामोषीत्यादि। ईट्पक्षे मामवीषि। मामवीमि। मामवीतु। अमामवीत्। अमामवीरिति बोध्यम्। राल्लोपः। "च्छ्वोः शू"ङित्तश्च्छ्वोरित्यनुवर्तते। क्वावुदाहरणं--तूः। तुरौ तुरः। धुर्वी-- धूः। धुरौ। धुरः। मुच्र्छा--मूः। मुरौ। मुरः।

---

सूत्रम्

काशिका-वृत्तिः

राल् लोपः ६।४।२१

रेफादुत्तरयोः छ्वोर्लोपो भवति क्वौ परतो झलादौ क्ङिति च परतः। मुर्च्छा मूः, मुरौ, मुरः। मूर्तः। मूर्तवान्। मूर्तिः। न ध्याख्यापृमूर्छिमदाम् ८।२।५७ इति निष्ठानत्वाभावः। हुर्च्छा हूः, हुरौ, हुरः। हूर्णः। हूर्णवान्। हूर्तिः। राल्लोपे सुतुक्कस्य छस्य अभावात् केवलो गृह्यते। वकारस्य तुर्वी तूः, तुरौ, तुरः। तूर्णः। तूर्णवान्। तूर्तिः। धुर्वी धूः, धुरौ, धुरः। धूर्णः। धूर्णवान्। धूर्तिः।

लघु-सिद्धान्त-कौमुदी

राल्लोपः ८४५, ६।४।२१

रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति। धूः। विद्युत्। ऊर्क। पूः। दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः। जूः। ग्रावस्तुत्। (क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च)। वक्तीति वाक्॥

न्यासः

राल्लोपः। , ६।४।२१

"मूर्छा" इति। "मुर्छा मोहसमुच्छ्राययोः" (धा।पा।२१२)। "हूर्छा" इति। "हुर्छा कौटिल्ये" (धा।पा।२११) कथं पुनरत्र च्छकारलोपो भवति, यावता नात्र सूत्रे छकार उपात्तः; योऽपि प्रकृतः सोऽपि सतुक्कः, नात्र तुगस्ति, न हि रेफस्य च्छे क्वचित्? तुग्विहितः? इत्याह--"राल्लोपे सतुक्कस्य" इत्यादि। उत्तरत्रानुवृत्तिर्यथा स्यादिति पूर्वसूत्रे च्छकारस्य स्वरितत्वं

प्रतिज्ञातम्(), न च रः परः सतुक्कः सम्भवति। तत्र समाश्र्यात्? तुग्रहित एवानुवत्र्तते। अथ वा--पूर्वसूत्रे द्विच्छकानिर्देशः; तत्रैकः सतुक्कः, परस्तुग्रहितः। सम्भवति चागमशासनस्यानित्यत्वाद्वा तुग्रहितश्छकारः। एवञ्च कृत्वा यदुक्तम्()--नङो ङित्वं गुणप्रतिषेधार्थमिति, तदुपपन्नं भवति। तदेवं यद्यपि पूर्वसूत्रे छकारौ प्रकृतौ, तथापि रेपात्? परः सतुक्को न सम्भवति। केवलो यस्तुग्रहितः स एवानुवत्र्तते। "तूः, धूः" इति। "तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः" (धा।पा।५७०-५७३)॥

---

सूत्रम्

काशिका-वृत्तिः

असिद्धवत्राऽ भात् ६।४।२२

असिद्धवतित्ययम् अधिकारः। यदित ऊर्ध्वम् अनुक्रमिष्यामः आ अध्यायपरिसमाप्तेः तदसिद्धवत् भवति इत्येवं वेदितव्यम्। आ भातिति विषयनिर्देशः। आभसंशब्दनाद् यदुच्यते तत्र कर्तव्ये। अत्र इत् समानाश्रयत्वप्रतिपत्त्यर्थं। तच् चेदत्र यत्र भवति तदा भात् शास्त्रीयं विधीयते तदाश्रयम् एव भवति। व्याश्रयं तु नासिद्धवद् भवति इत्यर्थः। असिद्धवचनम् उत्सर्गलक्षणभावार्थम्, आदेशलकषणप्रतिषेधार्थं च। एधि, शाधि इत्यत्र एत्वशाभावयोः कृतयोः झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद् भवति। आगहि, जहि इत्यत्र अनुनासिक लोपे जभावे च अतो हेः ६।४।१०५ इति लुक् प्राप्नोति, असिद्धत्वान् न भवति। आ भातिति किम्? अभाजि। रागः। अत उपधायाः ७।२।११६ इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति। अत्रग्रहणं किम्? पपुषः पश्य। चिच्युषः पश्य। लुलुवुषः पश्य। वसुसंप्रसारणम् आल्लोपे यणादेशे उवङादेशे च कर्तव्ये नासिद्धं भवति। आल्लोपादीनि वसौ, वसन्तस्य विभक्तौ संप्रसारणम् इति समानाश्रयत्वं न अस्ति। असिद्धं बहिरङ्गमन्तरङ्गे इति? एतदप्यत्र न भवति। किं कारणम्? एषा हि परिभाषा आभाच्छास्त्रीया। तस्यां प्रवर्तमानायां वसुसंप्रसारणादीनामाभाच्छास्त्रीयाणाम् एव असिद्धत्वादन्तरङ्गबहिरङ्गयोः युगपत् समुपस्थापनं न अस्ति इति परिभाष न प्रवर्तते। वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यम्। वुगुवङादेशे बभूव, बहूवतुः, बव्हूवुः। युट् यणादेशे उपदिदीये, उपदिदीयाते, उपदेदीयिरे। आभातित्ययम् अभिविधावाङ्। तेन भाधिकारे ऽप्यसिद्धवद् भवति।

लघु-सिद्धान्त-कौमुदी

असिद्धवदत्राभात् ५६४, ६।४।२२

इत उर्ध्वमापादसमाप्तेराभीयम्, समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम्। इति जस्यासिद्धत्वान्न हेर्लुक्। जहि, हतात्। हतम्। हत। हनानि। हनाव। हनाम। अहन्। अहताम्। अघ्नन्। अहन्। अहतम्। अहत। अहनम्। अहन्व। अहन्म। हन्यात्। हन्याताम्। हन्युः॥

न्यासः

असिद्धवदत्रा भात्?। , ६।४।२२

"असिद्धवद्भवतीत्येवं वेदितव्यम्()" इति। सिद्धशब्दोऽयं परिनिष्पन्नवचनः। यथा--"सिद्ध ओदनः" इति। न सिद्धमसिद्धम्(), सिद्धकार्याकरणसाधम्र्येणासिद्धेन तुल्यं वत्र्तत इत्यसिद्धवत्()। किं पुनस्तत्()? प्राधान्यात्? कार्यमित्येके; शास्त्रं हि कार्यार्थम्(), अतः शास्त्रापेक्षया कार्यस्य प्राधान्यम्(); व्याप्तेन्र्यायात्()। शास्त्रस्यावधित्वेनोपादानाच्च शास्त्रस्यासिद्धवदभावो युक्तः, अन्यथा हि कार्यमेव किञ्चिदवधित्वेनोपादीयेत। अथाभाट्ग्रहणं किमर्थम्(), यावता स्वरितलिङ्गासङ्गादन्तरेणाप्याभाद्ग्रहणमा पादपरिसमाप्तेरसिद्धवदित्यनुवर्त्तिष्यते? इत्याह--"आ भादिति विषयनिर्देशः" इति। असति ह्रा भाद्ग्रहणे न ज्ञायते--कस्मिन्? कत्र्तव्य इदं प्रकरणमसिद्धवद्भवति; तस्मादा भादिति विषयनिर्देशः क्रियते--आ भसंशब्दनाद्यद्वक्ष्यते तस्मिन्?

कत्र्तव्यतया विषयभूतेऽसिद्धवद्भवतीत्यस्यार्थस्य परिज्ञानाय। यद्येवम्, अत्रेत्येतपदार्थकलमेतद्विषयनिर्देशार्थं क्रियते, स च विषय आ भादित्यनेनैव निर्दिष्टः? इत्यत आह--"अत्र" इत्यादि। समान एव आश्रयो निमित्तं यस्य तत्? समानाश्रयम्(), तस्य भावः समानाश्रयत्वम्। तस्य प्रसिद्धये परिज्ञानायात्रग्रहणम्, तच्चेदत्रेति भवतीति वाक्शेषः। तदित्यनेन यस्यासिद्धवद्भावो विधीयते तन्निर्दिश्यते। अत्रेत्यनेनापि यत्र ततोऽन्यदाभाच्छास्त्रीयं तत्? तदाश्रयमेव भवतीति। असिद्धवदिति वक्ष्यमाणेनाभिसम्बध्यते। तदित्यनेन यत्रा भाच्छास्त्रीयं विधीयते तस्य परामर्शः। स आश्रयो निमित्तं यस्य तत्? तदाश्रयम्()। एवकारोऽवधारणार्थः। तदेवासिद्धवद्भवतीति यावत्()। "व्याश्रयस्तु नासिद्धवद्भवति" इति। एवकारेण यद्व्यवच्छिन्नं तद्दर्शयति। यत्र तदाभाच्छास्त्रोयं कार्यं विधीयते ततो भिन्नोऽर्थान्तरभूत आश्रयो यस्य तत्? तथोच्यत इत्यर्थ इति। इतिकरणेनानन्तरं व्याख्यातोऽर्थः प्रत्यवमृश्यते। अत्रग्रहणे समानाश्रयत्वप्रसिद्ध्यर्थे सतद्येषोऽस्य सूत्रस्यार्थः सम्पद्यत इति यावत्()। किमर्थं पुनरसिद्धवद्भवतीत्यत आह--"असिद्धवचनम्()" इत्यादि। उत्सर्गशब्देन स्थान्यत्रोपदिश्यते, उत्सृजयत आदेशेन निवर्त्त्यत इति कृत्वा। उत्सर्गसाधर्म्याद्वोत्सर्गः। यथा ह्युत्सर्गस्य सामान्येन प्रवृत्तस्य सतः कुतश्चिद्विसेषान्निवृत्तिर्भवति, एवं स्थानिनोऽप्यादेशात्()। उत्सर्गौ लक्षणम्()=निमित्तं यस्य तदुत्सर्गलक्षणम्? आदेशो लक्षणं निमित्तं यस्य तदादेशलक्षणम्(), तयोर्यथाक्रमं भावप्रतिषेधौ यथा स्यातम्()--इत्येवमर्थमसिद्धवचनम्()। "एधि, शाधि" इति। उत्सर्गलक्षणभावस्योदाहरणम्()। "अस भूवि" (धा।पा।१०६५), "शास अनुशिष्टौ" (धा।पा।१०७५), ["शासु" धा।पा।] लोट्(), सिप्(), "सेह्यरपिच्च" ३।४।८७ इति हरादेशः, अदादित्वाच्छपो लुक्(), श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः। परत्वान्नित्यत्वाच्च घिभावात्? पूर्वं "ध्वसोरेद्धावभ्यासलोपश्च" ६।४।११९ इत्येत्त्वम्()। शासेरपि नित्यत्वात्? "शा हौ" (६।४।३५) इति शादेशः पूर्वं घिभावात्? तयोरेत्त्वशाभावयोः "हुझल्भ्यो हेर्धिः" ६।४।१०१ इति झलन्तलक्षणं धित्वं न प्राप्नोति, निमित्ताभावात्()। असिद्धत्वाद्भवति। "आगहि, जहि" इति। आदेशलक्षणप्रतिषेधस्योदाहरणम्()। अगाहीति--गमेराङ्पूर्वाल्लोट्(), सिप्(), तस्य हिरादेशः, "बहुलं छन्दसि" २।४।७६ इति शपो लुक्(), "अनुदात्तोपदेश" ६।४।३६ इत्यादिनानुनासिकलोपः। जहीति--हन्तेरलोडादि पूर्ववत्(), अदादित्वाच्छपो लुक्(), "हन्तेर्जः" ६।४।३६ इति जभावः। अत्रेदानीमनुनासिकलोपजादेशयोरुत्तरकालं "अतो हेः" ६।४।१०५ इति हेर्लोपः प्राप्नोति; असिद्धत्वान्न भवति। "अभाजि" इति। "भन्जो आमर्दने" (धा।पा।१४५३) लुङः, कर्मण्यात्मनेपदम्(), "चिण्बावकर्मणोः" ३।१।६६ इति च्लेश्चिण्(), "चिणो लुक्()" ६।४।१०४ इति तकारलोपः, "भञ्जेश्च चिणि" ६।४।३३ इत्युनुनासिकलोपः। तस्य समानाश्रयस्यापि वृद्धावनाबाच्छास्त्रीयायां कत्र्तव्यायामा भादिति वचनादसिद्धत्वं न भवति। "रागः" इति। रञ्जेर्घञ्(), "घञि च भावकरणयोः" ६।४।२७ इत्यनुनासिकलोपः। तस्यापि समानाश्रयायमपि साप्तमिक्यां वृद्धौ कत्र्तव्यायामा भादति वचनादसिद्धत्वं न भवति। "पपुषः चिच्युषः लुलुवुषः" इति। पातेश्चिनोतेर्लुनातेश्च लिटः क्वसुः, द्विर्वचनम्(), "वसोः सम्प्रसारणम्()" (६।४।१३१) तस्य व्याश्रयत्वात्? इति। पातेश्चिनोतेर्लुनातेश्च लिटः क्वसुः, द्विर्वचनम्(), "वसोः सम्प्रसारणम्()" (६।४।१३१) तस्य व्याश्रयत्वात्? "आतो लोप इटि च" ६।४।६४ इत्यकारलोपः, "एरनेकाचोऽसंयोगपूर्वसय" (६।४।८२) इति यणादेशे "अचि इन्? धातु" ६।४।७७ इत्यादिनोवङादेशे च कत्र्तव्येऽसिद्धवत्त्वं न भवति। ननु च "उस्यपदान्तात्()" (६।१।९६) इत्यनेनैव पररुपेण सरवं सिद्धम्()? नैतदस्ति; प्रतिपदोक्तस्य ह्रुस्शब्दस्य तत्र ग्रहणम्(), लाक्षणिकोश्चात्रोस्()। कथं पुनरत्र व्याश्रयत्वमित्याह--"आल्लोपादीनि हि" ["हि"--नास्ति काशिकायाम्()] इत्यादि। हिशब्दो यस्मादर्थे। इतिकरणस्तस्मादर्थे। नन्वेवमपि "असिद्धं बहरङ्गमन्तरङ्ग" (व्या।प।४२) इति अन्तरङ्गेष्वाल्लोपादिषु बहिरङ्गस्य समप्रसारणस्यासिद्धत्वादाल्लोपादयो न प्राप्नुवन्त्येव। तत्र हि विभक्तेः, पूर्वो वसवन्तो भागः, तदाश्रया लोपादय इति, सम्प्रसारणं तु विभक्त्याश्रयम्(), प्रकृत्याश्रयञ्चान्तरङ्गम्(), प्रत्ययाश्रयं च बहिरङ्गमित्याह--"असिद्धं बहिरङ्गम्()" इत्यादि। "एतदपि" इति। एतदपीति वचनापेक्षया नपुंसकेन निर्वेशः। "एषा हि" इत्यादिना परिभाषाया अप्रवृत्तौ कारणमाह। यत्रान्तरङ्गबहिरङ्गयोर्युगपदुपस्थानं तत्रैषा परिभाषा प्रवत्र्तते, अन्तरङ्गे

कत्र्तव्ये बहिरङ्गस्यासिद्धतामापादयितुम्()। इयञ्च परिभाषा "वाह ऊठ्()" ६।१।१२८ इत्यत्राभाच्छास्त्रे ज्ञापितत्वादाभाच्छास्त्रीया। अतोऽस्यां कत्र्तव्यायां "असिद्धवदत्रा भात्()" ६।४।२२ इति "वसोः सम्प्रसारण" ६।४।१३१ स्याल्लोपादीनाञ्चासिद्धत्वादन्तरङ्गबहिरङ्गयोयुर्गपदुपस्थानं नास्तीति न प्रवत्र्तते। तदप्रवृत्तौ नास्ति बहिरङ्गसम्प्रसारणस्यासिद्धत्वम्()। तेन भवन्त्येवाल्लोपदयः। "वुग्युटौ" इत्यादि। वुग्युडित्येतौ यथा क्रममुवङि यणि च कत्र्तव्ये सिद्धौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--इह वतिग्रहणं न कत्र्तव्यम्(), विनापि तेनातिदेशः सिद्ध एव, यथा--"षत्वतुकोरसिद्धः" ६।१।८३, "पूर्वत्रासिद्धम्()" ८।२।१ इति च। तत्? क्रियते क्वचित्? स्वाश्रयमपि सिद्धं यथा स्यादित्येवमर्थम्()। तेन वुग्यृटावुवङ्यणोः सिद्धौ भविष्यतः। "बभूव" इति। "भवतेरः" ७।४।७३ इत्यभ्यासस्यात्वम्(), "भुवो वुग्लुङलिटोः" ६।४।८८ इति वुक्()। तत्र यद्यसिद्धं स्यात्? "अचिश्नुधातु" ६।४।७७ इत्यादिना उवङ स्यात्(), तस्य सिद्धत्वान्न भवति। "उपदिदीये" इति। "दीङः क्षये" (धा।पा।११३४) लिट्? तस्य "लिटस्तझयोः" ३।४।८१ इत्यादिनेशु, "दीङो युडचि क्ङिचि" ६।४।६३ इति युट्()। तस्यापि यद्यसिद्धत्वं स्यात्? "एरनेकोचोऽसंयोगपूर्वस्य" ६।४।८२ इति यणादेशः स्यात्()। सिद्धत्वान्न भवति। आ भादित्याङ मर्यादायां वा स्यात्()? अभिविधौ वा? तत्र यद्याद्य पक्ष आश्रीयत भाधिकारीयस्यासिद्धत्वं न स्यात्()। ततश्च "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यस्याः परिभाषाया अनाभाच्छास्त्रीयत्वादस्थां प्रवत्र्तमानायां वसोः सम्प्रसारणस्याल्लोपादीनां चासिद्धत्वं न स्यात्()। एवमपि वसोः सम्प्रसारणस्य बहिरङ्गस्यान्तरङ्गाणाञ्चालोपादीनां युगपदुपस्थाने सति तया परिभाषया प्रवत्र्तमानया वसोः सम्प्रसारणस्य बहिरङ्गस्यान्तरङ्गाणाञ्चालोपादीनां युगपदुपस्थाने सति तया परिभाषया प्रवत्र्तमानया वसोः सम्प्रसारणस्यासिद्धत्वे उत्पादितेऽन्तरङ्गत्वादल्लोपादयः पपुषः, चिच्युषः, लुलुवष इत्यत्र न स्युः? इतोमं मर्यादापक्षे दोषं वृष्ट्वा द्वितीयं पक्षमाश्रित्याह--"आ भादित्ययमभिविधावाङ्()" इति। गतार्थश्च॥

बाल-मनोरमा

असिद्धमदत्रा भात्। ३२, ६।४।२२

तथा च प्रकृतेऽभ्यासस्य बकारे सति बभूव् अ इति स्थिते "अचि श्नुधात्वि"त्युवङादेशमाशङ्कितुमाह-- असिद्धवदत्रा। षष्ठस्य चतुर्थपादे इदं सूत्रं "श्नान्नलोप" इति सूत्रात्पूर्वं पठितम्। आ भादित्यभिविधावाङ्। भस्येत्यधिकारमभिव्याप्येत्यर्थः। भाधिकारश्च आ पादपरिसमाप्तेरिति सिद्धान्तः। तथा च आ पादपरिसमाप्तेरिति लभ्यते। "विहितं कार्य"मिति शेषः। किमारभ्येत्याकाङ्क्षायामुपस्थित्वादस्मादेव सूत्रादूध्र्वमिति लभ्यते। ततश्चा "श्नान्नलोप" इत्यारभ्या पादसमाप्तेर्विहितं यदाभीयं कार्यं तदसिद्धवद्भवति। प्रवृत्तमप्यप्रवृत्तवद्भवतीत्यर्थः। अधिकारसूत्रमिदमुत्तरत्र "श्नान्नलोप" इत्यादौ प्रतिसूत्रमुपतिष्ठते। तथा च यद्यत्सूत्रे इदमनुवर्तते तत्तदाभीयकार्ये कर्तव्येऽसिद्धमिति लभ्यते। एवं च "श्नान्नलोप" इत्यादि तत्तदाभीयं कार्यं "श्नान्नलोप" इत्याद्याभीये कार्ये कर्तव्येऽसिद्धवदित्यर्थः पर्यवस्यति। अत्रेत्यनेन निमित्तसप्तम्यन्तेन त्वसिद्धीभवतः कार्यस्य यन्निमित्तं तन्निमित्तके कार्ये कर्तव्ये सतीत्यर्थलाभात् "समानाश्रये कार्ये कर्तव्ये सती"ति लभ्यते। एतत्सर्वं भाष्ये स्थितम्। तदाह-- इत ऊध्र्वमित्यादिना। तस्मिन्निति। आभीये कर्तव्ये सतीत्यर्थः। एधि शाधीत्युदाहरणम्। अत्र "ध्वसोरेद्धावभ्यासलोपश्चे"त्यस्तेरेत्वस्य "शाहा"विति शास्तेः शाभावस्य चाभीयत्वेनाऽसिद्धत्वात् "हुझल्भ्यो हेर्धि"रिति हेर्धित्वमाभीयं प्रवर्तते। तथा "जङ्घही"त्याद्यप्युदाहरणम्। हन धातोर्यङ्()लुगन्ताल्लोण्मध्यमपुरुषैकवचने सिपो हिभावे "अनुदात्तोपदेशे"ति नलोपस्याभीयस्यासिद्धत्वादतो हेरित्याभीयोलुङ् न भवति। समानाश्रय इति किम्?। "पपुष" इत्यत्र पाधातोर्लिटः क्वसौ "लिटि धातो"रिति द्वित्वेऽभ्यासह्रस्वे क्वस्वन्ताद्द्वितीयाबहुवचने सि वसोः संप्रसारणमाभीयम्। "आतो लोप इटि चे"त्याल्लोपे आभीये कर्तव्ये असिद्धं न भञ्जेश्चिणि, रञ्जेर्घञि च कृते, "भञ्जेश्च चिणि", "घञि च भावकरणयो"रिति नलोपस्याभीयस्याऽनाभीयायामुपधावृद्धौ कर्तव्यायां नाऽसिद्धत्वात्। आभादित्यभिविधिः किम्?।

भाधिकारात् प्रागित्युक्ते भूयानित्यत्र "बहोर्लोपो भूच बहो"रिति बहोर्भूभावस्य ओर्गुणे कर्तव्ये असिद्धत्वं न स्यात्, भस्येति सूत्रादूर्ध्वभावित्यादित्यलम्। इति वुकोऽसिद्धत्वादिति। वुक आभीयस्य अचि श्नुधात्वित्युवङि आभीये कर्तव्येऽसिद्धतया ऊकारस्योवङि लघूपधगुणे बभोवेति प्राप्ते सतीत्यर्थः। वुग्विधिस्तु गुणवृद्धिबाधकत्वेन चरितार्थ इति भावः। वुग्युटावुवङ()णोरिति। यथासङ्ख्यमन्वयः। बभूवेति। णलो णित्त्वं तु जगादेत्यादौ वृद्ध्यर्थम्। बभूवतुरिति। तसोऽतुसादेशे वुगादि पूर्ववत्। सकारस्य रुत्वविसर्गौ। बभूवुरिति। जेरुसादेशे वुगादि पूर्ववत्।

तत्त्व-बोधिनी

असिद्धवदवा भात् २६, ६।४।२२

वत्करणं प्रतिपत्तिलाघवाय, अन्यथा सिद्धे असिद्ध इति प्रयुज्यमानमनुपपन्नं सत्सामर्थ्यादसिद्धवदिति कल्पनीयं स्यात्। यथा राजभिन्ने पुरोहिते "राजाऽय"मिति प्रयोगो "राजव" दिति कथंचित्कल्पयति, "राजवदयं पुरोहित" इत्युक्ते तु लघुप्रतिपत्तिर्भवति। तथा चाऽगत्या "षत्वतुकोरसिद्धः" इत्यत्राऽसिद्धवदिति कल्प्यते। "असंयोगल्लिक्ट"दित्यत्रापि किद्वदित्यगत्यैव कल्प्यत इति ज्ञेयम्। आ भादिति। अभिविधावाङ्। भाधिकारमभिव्याप्येत्यर्थः। अधिकारश्चायम्। "अत्र" ग्रहणं समानाश्रयप्रतिपत्त्यर्थम्। आबाद्ग्रहणं विषयनिर्देशार्थम्। भाधिकारस्याऽवधिलाभस्तु "अङ्गस्य", "प्रत्ययः", "परश्चे"त्यादाविव व्याख्यानेनैव सिध्यति। एवं "अनुदात्तोपदेशे"त्यत्रास्योपस्थाने सत्ययमर्थो भवति, "एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे, स चासिद्धो? भवति, अत्र झलादिक्ङिदाश्रित्यैव यदाभीयं प्राप्नोति तस्मिन्कर्तव्ये सति " इति। जङ्गहि जङ्घहि। "अतो हेः" इति लुग्न भवति, अनुनासिकलोपस्य हिशब्दाश्रितत्वेनाऽसिद्धत्वात्। नन्वस्याधिकारत्वे यत्र यत्रोपस्थानं तत एवारभ्य यदाभीयं तस्मिन्नेव कर्तव्येऽसिद्धत्वं स्यान्न तु ततः पूर्वस्मिन्नपि। ततश्च "ध्वसो"रित्येत्वं पूर्वस्मिन्नपि धित्वे कर्तव्ये नाऽसिद्धं स्यादिति चेत्। भवेदयं दोषः शब्दाधिकारे, अर्थाधिकारस्त्वयम्। ततश्चेह "श्नान्न लोपः" इत्यवधिर्निर्णीतः, स एव प्रतिसूत्रमुपतिष्ठते। तदेतत्सकलमभिप्रेत्याह-- इति ऊध्र्वमिति। अत्रापि शात्राऽसिद्धत्वमेवाऽकरे स्थितम्। तेन एधि शाधीत्यत्र स्थानिनो झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्निबन्धनं "हुलझल्भ्यो हेर्धि"रिति धित्वं सिध्यति। प्राचोक्तकार्याऽसिद्धत्वपक्षे तु न सिध्यति, "देवदत्तस्य हन्तरि हते देवदत्तस्योज्जीवनं ने"ति न्यायेन एत्वविधिना झल्बुद्धौ निवर्तितायां पश्चादेत्वबुद्धिनिवर्तनेऽपि धित्वकार्यस्याऽप्रवृत्तेरित्याहुः। समानाश्रये इति किम्()। पपुषः। चिच्युषः। लुलुवुषः। इह पाधातोश्चिञो लूञश्च परस्य वसोर्यत्संप्रसारणं तत् "आतो लोप इटि च" इत्याल्लोपे "एरनेकाचः" इति यण्युवङि च कर्तव्ये नाऽसिद्धम्। आल्लोपादीनि हि क्वसौ, संप्रसारणं तु विभक्ताविति व्याश्रयत्वात्। न च बहिरङ्गत्वेनाऽसिद्धताऽस्त्विति शङ्क्यं, "नाऽजानन्तर्ये" इति निषेधात्। "वाह ऊठ्" सूत्रस्थबहिरङ्गपरिभाषाया अप्याभीयत्वेनाऽऽल्लोपादिषु कर्तव्येष्वसिद्धत्वाच्च। न चोक्तपरिभाषाया आल्लोपादीनां च समानाश्रयत्वं नेति शङ्क्यम्, वसोः संप्रसारणे कृते हृजाद्याश्रयेणाल्लोपादीनि प्रवर्तन्ते, तेषु कर्तव्येषु संप्रसारणस्याऽसिद्धत्वात्तद्विषये बहिरङ्गपरिभाषाऽपि प्रवर्तत इति तेषां तत्सत्त्वादिति दिक्। विषयलाभार्थमाभाद्ग्रहणं किम्?। आभीयं प्रत्येवाऽभीयमसिद्धं नान्यं प्रतीति यथा स्यादित्येवमर्थम्। तेन "अभाजि", "राग" इत्यत्र "भञ्जेच चिणि", "रञ्जेश्च", "घञि च भावकरणयोः" इति नलोपे कृते तस्याऽसिद्धत्वाऽभावात् "अथ उपधायाः" इति वृद्धिर्भवतीत्याहुः। स्यादेतत्--- देभतुः देभुरित्यत्र "श्रन्थिग्रन्थिदम्भी"ति वक्ष्यमाणवचनेन लिटः कित्त्वान्नलोपेप्येत्वाभ्यासलोपौ न स्यातां, नलोपस्याऽसिद्धत्वात्। अत्राहुः--- "श्नसोरल्लोपः" इति तपरकरणाल्लिङ्गादाभीयाऽसिद्धत्वमनित्यमिति नास्त्यत्र दोषः। तपरकरणं हि आस्तामित्यत्राऽऽडागमस्य लोपो माभूदित्येतदर्थम्। यद्याडागमः श्नसोरलोपं प्रत्याभीयत्वेनाऽसिद्धः स्यात्तर्हि किं तेन तपरकरणेन?। एवं च "दम्भेश्चे"ति वक्ष्यमाणं नाऽपूर्वं वार्तिकं, किं त्वनित्यत्वबललभ्यमेवेति॥

बुग्युटावुवड()णोः सिद्धौ वक्तव्यौ। "वुक्" शास्त्रस्य। एवमग्रेऽपि। युट उदाहरणं "दितीये"। बभूवेति। अत्र प्राचा-- "इन्धिभवतिभ्यां च"ति सूत्रं पितोऽ#एपि लिटः कित्त्वार्थमिति व्याख्याय "अचोऽञ्णिती"ति वृद्धिप्राप्तौ "क्ङिति चे"ति निषेध" इत्युक्तं, तदुपेक्षितम्। "इग्लक्षणयोरेव गुणवृद्ध्योर्निषेध" इति सिद्धान्तात्। अन्यथा इक्स्थानिकयोर्निषेधे "लैगवायन" इत्यत्रापि वृद्धिर्न स्यात्। न चाऽत्र कित्त्वसामश्र्यादनिग्लक्षणाया अपि वार्तिकम्--"इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्य"मिति। यद्यपीह शब्दान्तरकप्राप्त्या वुको नित्यत्वं नास्ति, तथापि कृताऽकृतप्रसङ्गित्वमात्रेणापि क्वचचिन्नित्यता स्वीक्रियत इति पक्षोऽप्यस्मादेव वार्तिकादवगम्यते, तेन रधेर्णिचि परामप्यपधावृदिं()ध बाधित्वा नित्यत्वात् "रधिजभोरची"ति नुमि कृते रन्धयतीति सिद्धम्। नन्वेवमपि संयोगात्परस्य लिटः कित्त्वार्थमिन्धेश्चेत्यंशोऽपेक्षित एव। अन्यथा "समीधे दस्यु हन्तम"मित्यत्रेन्धेर्नलोपो न स्यात्। मैवम्। "छन्दस्युभयथे"ति सूत्रेण हि सार्वधातुकसंज्ञा आद्र्धधातुकसंज्ञा च विधीयते, तेन "सार्वधातुकमपि"दिति ल#इटो ङित्त्वे स्यादेव नलोप इति वार्तिकाशयात्। अतर् नव्याः-- "बभूवे"त्यत्र "द्विर्वचनेऽची"त्यजादेशस्य निषेधाद्गुणवृद्धिभ्यां प्रगेव वुकः प्रवृत्त्या "भुवो वुको नित्यत्वा"दिति वार्तिके "नित्यत्वा"दिति हेतूपन्यासो निष्प्रयोजनः, शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ती"त्याशङ्क्य कृताऽकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यत्वं स्वीक्रियत इत्यादिसमाधानमपि व्यर्थमेवेत्याक्षिप्य स्वयमेव समादधुः-- षाष्ठद्वित्वप्रकरणान्ते हि वार्तिककृता पूर्वविप्रतिषेधः पठ()ते "द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपकिकिनोरुत्वेभ्यः" इति। तथा च "द्विर्वचनेऽची"ति सूत्रं नारम्भणीयमित्याशयेन नित्यत्वादिति हेतुरुपन्यस्त" इति। "द्विर्वचनेऽचीति सूत्रेणाऽरजादेशस्य स्थानिवद्भावो विधीयतर" इति पक्षे तु द्वित्वात्प्रागेव वृद्ध्याद्यादेशस्य स्वीकृतत्वादादेशानन्तरमपि वुकः प्रवृत्तिरस्तीति भुवो वुको नित्यत्वादित्यादिग्रन्थः सम्यगेव। न चैवमपि नामधातुषु त्वापयति मापयतीत्यत्र "मपर्यन्तस्य त्वमौ, पररूपात्पूर्वं नित्यत्वाट्टिलोप" इति ग्रन्थः कथं सङ्गच्छेतेति वाच्यं,"प्रकृत्यैका"जिति सूत्रं भाष्ये प्रत्याक्यातमित्याशयेन तत्प्रवृत्तेः। अत एव त्वादयति मादयतीत्येव न्याय्यमिति तत्रोक्तमिति दिक्॥

---

सूत्रम्

काशिका-वृत्तिः

श्नान् नलोपः ६।४।२३

श्नातिति श्नमयमुत्सृष्टमकारो गृह्यते। तत उत्तरस्य नकारस्य लोपो भवति। अनक्ति। भनक्ति। हिनस्ति। शकारवतो ग्रहणम् किम्? यज्ञानाम्। यत्नानाम्। सुपि च ७।३।१०२ इति परत्वात् कृते ऽपि दीर्घत्वे स्थानिवद्भवात् नलोपः स्यादेव। विश्नानाम्, प्रश्नानाम् इत्यत्र लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य एव इत्येवं न भवति।

लघु-सिद्धान्त-कौमुदी

श्नान्नलोपः ६७१, ६।४।२३

श्नमः परस्य नस्य लोपः स्यात्। हिनस्ति। जिहिंस। हिंसिता॥

न्यासः

श्नान्नलोपः।, ६।४।२३

अन्यस्य श्नशब्दस्यासम्भवादसत्यपि श्नमो मकारस्य श्रवणे सामश्र्यात्? श्नम एव ग्रहणं विज्ञायते, इत्यत आह--"श्नमयमुत्सृष्टमुकारः" इति। उत्सृष्टः=परित्यक्तो मकारो यस्य स तथोक्तः। "अनक्ति" इत्यादि। "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" (धा।पा।१४५८) "भन्जो आमर्दने" (धा।पा।१४५३) "हिसि हिंसायाम्()", (धा।पा।१४५६)

अस्योदित्वान्नुम्(), रुधादित्वात्? श्नम्()। शकारवतोग्रहणमेतदर्थं क्रियते--"नन्दिता, नन्दकः" इत्यत्र मा भूदिति, एतच्चाप्रयोजनम्(); "प्रत्ययाप्रतययययोः प्रत्ययस्यैव ग्रहणम्()" (व्या।प।७२) इत्यनया परिभाषयाऽत्र न भविष्यति। ज्ञापकाच्च, यदयं नन्दिनन्दनशब्दौ क्षुभ्नादिषु पठति, तज्ज्ञापयति--नन्देर्नकारलोपो न भवतीति। सामान्यापेक्षञ्च ज्ञापकम्(), तेन "नन्दिता, नन्दकः" इत्यत्रापि न भविष्यति। तस्मात्? "नान्न लोपः" इत्येवं वक्तव्यमित्यभिप्रायेणाह--"शकारवतो ग्रहणं किम्()" इति। "यज्ञानाम्(), यत्नानाम्()" इति। "यजयाच" ३।३।९० इति नङ्(), तदन्तात्? षष्ठीबहुवचनम्(), नुट्()। यदि शकारवतो ग्रहणं न क्रियेत तदा तत्र नलोपः स्यादेव। स्यादेतत्()--दीर्घे कृते "नात्()" इति व्यपदेशाभावान्न भविष्यतीति? अत आह--"सुपि च" इत्यादि। "सुपि च" ७।३।१०२ इत्यर्थ दीर्घोऽजादेशः, तस्य नकारलोपपूर्वविधौ कर्त्तव्ये "अचः परस्मिन्? पर्वविधौ" १।१।५६ इति स्थानिवद्भावेन तद्रूपतामापन्ने परात्वाद्दीर्घत्वे यदि कृतेऽपि शकारविशिष्टस्य ग्रहणं न क्रियते तदा स्यादेवात्र नलोपः। कृताकृतप्रसङ्गित्वाच्च। दीर्घत्वं तु नकारलोपे कृते निमित्तविहितत्वान्न प्राप्नोतीति तदनित्यम्()। ननु च पूर्वविधौ स्थानिवद्भाव उक्तः, न चायं पूर्वविधिः? नैष दोषः; अयमपि पूर्ववधिरेव। "पूर्वस्माद्? विधिः पूर्वविधिः" इत्यस्यापि समामस्य तत्राश्रयणात्()। अथ क्रियमाणेऽपि शकारवतो ग्रहणे कस्मादिह न भवति--"वि()आआनाम्(), प्रश्नानाम्()" इति, भवति ह्यत्रापि शकारवान्नकारः? इत्याह--"विश्नानां प्रश्नानामित्यत्र" इत्यादि। इह हि लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३।) प्रतपदोक्तो यः साक्षान्निर्दिष्टः श्नशब्दस्तस्य ग्रहणम्(), न तु लाक्षणिकस्य। "विश्नानाम्(), परश्नानाम्()" इत्यत्र हि "च्छ्वोः शूड्नुनासिके च" ६।४।१९ इति शकारे कृते श्नशब्दः सम्पद्यते, स च लाक्षमिकः। तस्मात्? ततः परस्य लोपो न भवति। "राल्लोपः" (६।४।२१) इत्यतो मण्डूकप्लुतिन्यायेन लोपग्रहणानुवृत्तौ सत्यां सिद्धायां यत्? पुनर्लोपग्रहणं क्रियते तद्? योग वेभागार्थम्()। "श्नान्न" इत्येको योगः, अत्र च नेत्यविभक्तिकोऽयं निर्देशः, लोपग्रहणञ्चानुवर्तते, तेनायमर्थो भवति--श्नादुत्तरस्य नकारस्य लोपो भवतीति; ततः "लोपः" इति द्वितीयो योगः, ततः "श्नान्न" इत्यतो नेत्यनुवर्तते--इष्टे विषये नकारलोपो यथा स्यादिति। तेन लङ्गिकम्पिप्रभृतीनामुपतापशरीरविकारादिषु नलोपः सिद्धो भवति॥

बाल-मनोरमा

श्नान्नलोपः ३७४, ६।४।२३

श्नान्नलोपः। श्नसोरल्लोप इति। तताच इन्()ध् ते इति स्थिते "झषस्तथो"रिति तकारस्य धत्वे पूर्वधस्य जश्त्वे परिनिष्ठितमाह - इन्द्धे इति। यद्यपि "अनिदिता"मित्येवात्र नलोपः सिध्यति, तथापि अनक्तीत्याद्यर्थं सूत्रमिहापि न्याय्त्वादुपन्यस्तमिति बोध्यम्। इन्धते। इन्द्ध्वे। इन्द्धाम्। इन्तस्व।इन्द्ध्वम्। इनधै इति। श्नमि उत्तमस्य इट एत्वे आटि वृद्धौ इन न् ध् ऐ इति स्थिते श्नान्नलोपे आटः पित्वेन ङित्वाऽबावात् "श्नसोरल्लोपः" इत्यभावे रुपमिति भावः। अत्र नलोपार्थमपि श्नान् लोप इत्यावश्यकम्, आटः पित्वेन ङित्वाऽभावात् "अनिदिता"मित्यस्याऽप्रवृत्तेः। इनधावहै। लङ्गह - ऐन्द्धेति। ऐन्द्धा इति। "झषस्तथो"रिति थस्य धः। इन्धीत। लुहि - ऐन्धिष्ट। शिष्लृ।अनिट्। शिशेषिथेति। अजन्ताऽकारवत्त्वाऽभावात्क्रादिनियमान्नित्यमिट्। शिनष् हीति स्थिते अल्लोपे शिन्ष् हि इति स्थिते आह -- हेर्धिरित। शिन् ष् धीति स्थिते आह -- जश्त्वमिति। "झलां जश् झशी"ति षस्यड इति भावः। ष्टुत्वमिति प्रक्रियाप्रदर्शनमात्रपरं, क्रमस्तु न विवक्षितः। झर इति। जश्त्वसंपन्नस्य डस्य लोपविकल्प इत्यर्थः। अनुस्वारपरसवर्णाविति। नकारस्य "नश्चे"त्यनुस्वारे सति तस्य परसवर्णो णकार इत्यर्थः। "न पदान्ते"ति निषेधान्नाऽल्लोपः स्थानिवत्। ढस्य लोपपक्षे उदाहरति-- शिण्ढीति। ढस्य लोपाऽभावे उदाहरति - शिण्ड्ढीति। वस्तुतस्तु सानुस्वार एव पाठ उचितः, "दीर्घादाचार्याणा"मित्युत्तरम् "अनुस्वारस्य ययि परसवर्णः" "वा पदान्तस्य" "तोर्लि" "उदः स्थास्तम्भोः पूर्वस्य" "झयो होऽन्यतरस्यां" "शश्छोऽरटी"ति षट्सूत्रपाठोत्तरं "झलां जश् झशि" "अभ्यासे चर्च" "खरि च" "वाऽवसाने"

"अणोऽप्रगृह्यस्यानुनासिकः" इति पञ्चसूत्रीपाठ इति भाष्यसंमताऽष्टाध्यायीपाठे परसवर्णदृष्ट()आ "झलां जश् झशी"त्यस्य "झरो झरी"त्यस्य चाऽसिद्धत्वेन यय्परत्वाऽभावे परसवर्णाऽप्राप्तेरिति शब्देन्दुशेखरे स्थितम्।शिंष्टात्। शिंष्टम् शिंष्ट। शिनषाणीति। आटः पित्वेन ङित्तवाऽभावात् "श्नसो"रित्यल्लोप नेति भावः। अशिनडिति। लङस्तिपो हल्ङ्यादिलोपे षस्य जश्त्वमिति बावः। अशिंष्टाम्। अशिंषन्। अशिनट्। अशिष्टम्। अशिंष्ट। अशिनषम् अशिंष्व अशिंष्म। भञ्जो। भनक्तीति। श्नमि भ न न् ज् तीति स्थिते "श्नान्न लोपः" इति नलोप इति भावः। भङ्क्तः भञ्जन्तीत्याद्यूह्यम्। भारद्वाजनियमात्थलि वेडिति मत्वाह -- वबञ्जिथ बङङ्क्थेति। भङ्क्तेति। अनिडिति भावः। भुज पालनेति। "भुजोऽनवने" इति तङ् वक्ष्यते। भुङ्क्ते भुञ्जाते इत्यादि।तृह हिसि।आद्य ऋदुपधः। सेट्। श्नमि कृते तृणह् ति इति स्थिते --

तत्त्व-बोधिनी

श्नान्नलोपः ३२८, ६।४।२३

श्नान्नलोपः। अस्य मुख्योदाहरणम्--अनक्ति। भनक्ति। श्नादित्युत्सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्याह-- श्नमः परस्येति। एवं च "यजयाचे"ति विश्नशब्दसयाऽऽमि नुटि विश्नानामित्यत्र लक्षणप्रतिपदोक्त-- प्रत्ययग्रहमपरिभाषयोः प्रवृत्त्या नलोपशङ्कैव नास्तीत्याहुः। इन्धे इन्त्से। श्नमो नकारस्यानुस्वारपरसवर्णौ। "अनिदिता"मिति नलोपस्तु न भवति, अल्लोपस्य "असिद्धवदत्रे"त्यसिद्धित्वात्सथानिवत्त्वाद्वा। भञ्जो। आदित्करणं निष्ठानत्वार्थम्। भग्नः। भुज पालनादौ। "भुजोऽनवने" इत्यात्मनेपदं वक्ष्यते। भुङ्क्ते। भुञ्जाते। भुञ्जते।

---

सूत्रम्

काशिका-वृत्तिः

अनिदितां हल उपधायाः क्ङिति ६।४।२४

अनिदिताम् अङ्गानां हलन्तानाम् उपधायाः नकारस्य लोपो भवति क्ङिति प्रत्यये परतः। स्रस्तः। ध्वस्तः। स्रस्यते। ध्वस्यते। सनीस्रस्यते। दनीध्वस्यते। अनिदिताम् इति किम्? नन्द्यते। नानन्द्यते। हलः इति किम्? नीयते। नेनीयते। उपधायाः इति किम्? नह्यते। नानह्यते। क्ङिति इति किम्? स्रंसिता। ध्वंसिता। अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसङ्ख्यानं कर्तव्यम्। विलगितः। विकपितः। उपतापशरीरविकारयोः इति किम्? विलङ्गितः। विकम्पितः। रञ्जेर्णौ मृगरमण उपसङ्ख्यानं कर्तव्यम्। रजयति मृगान्। जनीजृष्क्नसुरञ्जो ऽमन्ताश्च इति मित्त्वादुपधाह्रस्वत्वम्। मृगरमण इति किम्? रञ्जयति वस्त्राणि। घिनुणि च रञ्जेरुपसङ्ख्यानं कर्तव्यम्। रागी। त्यजरजभज इति निपातनाद् वा सिद्धम्। रजकरजनरजःसूपसङ्ख्यानं कर्तव्यम्। रजकः। रजनम्। रजः।

लघु-सिद्धान्त-कौमुदी

अनिदितां हल उपधायाः क्ङिति ३३६, ६।४।२४

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति। नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। प्राङ्। प्राञ्चौ। प्राञ्चः॥

न्यासः

अनिदितां हल उपधायाः क्ङिति। , ६।४।२४

इद्? इद्? येषां त इदितः, न इदितोऽनिदित इति षष्ठीबहुवचनस्य स्थाने सुब्व्यत्येनैकवचनम्(), तच्चानिदितां

विशेषणम्(), विशेषणेन च तदन्तविधिर्भवतीत्यत आह--"हलान्तानाम्()" इत्यादि। "उपधाया नकारस्य" इति। उपधाया इत्येतन्नकारस्य विशेषणम्()। "रुआस्तः, ध्वलस्तः" इति। "रुआन्सु ध्वन्सु अधः ["अवन्नंसने"--धा।पा] पतने (धा।प।७५४,७५५) निष्ठा। "रुआस्यते, ध्वस्यते" इति। भावे कर्मणि वा लकार। "सनीरुआस्यते दनीध्वस्यते" इति। यङन्ते एते। "नीग्वञ्चु" ७।४।८४ इत्यादिनाभ्यासस्य नीगागमः। "नन्यते" इति। "टु णदि समृद्धौ" (धा।पा।६७) ["टु नदि"--धा।पा।] "नानन्यते" इति। यङन्तम्()। "दीर्घोऽकितः" ७।४।८३ इत्यभ्यासस्य दीर्घः। "नेनीयते" इति। नयतेः "गणो यङ्लुकोः" ७।४।८२ इति गुणोऽभ्यासस्य। "नह्रते" इति। "णह बन्धने" (धा।पा।११६६)। "लङ्गिकम्प्योः" इत्यादि। लङ्गिकम्प्योरिदित्वान्नलोपो न प्राप्नोति, अतस्तयोरुपतापशरीरविकारयोरुपसंख्यानं कर्तव्यम्()। उपसंख्यानाम्()=प्रतिपादनम्()। उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनन्तु कृतमेव। उपतापः=व्याधिः। शरीरविकारः=शरीरस्यान्यथात्वम्()। स पुनरिहोपतापादनयो गृह्रते, अन्यथा "उपताप" इत्येवं सिद्धे शरीरविकारग्रहणमनर्थकं स्यात्()। "विलगितः" इति। "अगि वगि लगि" गत्यार्थाः। (धा।पा।१४६,१४७,१४५)। "उपतापे विलङ्गितः" इत्येव प्रयोगो मा भूदित्येवमर्थं लङ्गल्लोपो विधीयते, न तु रूपसिद्ध्यर्थम्(); "लगे सङ्गे" (धा।पा।७८६) इत्यस्य प्रकृत्यन्तरस्य तस्य सिद्धत्वात्()। "रञ्जेर्णौ" इत्यादि। अक्ङिदर्थं वचनम्()। मृगरमणम्()=मृगक्रीडा। "रजयतिः मृगान्()" इति। रममाणान्? मृगान्? प्रयुङ्क्ते इत्यर्थः। "रजनरजकरजःसूपसंख्यानम्()" इति। अत्र भूयः प्रतिपादनं क्रियते। "घञि च भावकरणयोः" ६।४।२७ इत्यत्र चकारोऽनुक्तसमुच्चयार्थः, तेन रजकादिषु प्रतिपाद्येषु रञ्जेः ष्वुन्नादिप्रत्यये परतो नलोपो भवति। "रजकः" इति। "शिल्पिनि ष्वुन्()" ३।१।१४५। "रजनम्()" इति। ल्युट्। "रजः" इति। "सार्वधातुभ्योऽसुन्()" (द।उ।९।४९)["असुन्()"--द।#उ।] इत्यसुन्()। "घिनुणि च" इत्यादि। "रागी" इति। सम्पृचान्वादिसूत्रेण३।२।१४२ घिनुण्(), "चजो कु घिण्ण्यतोः" ७।३।५२ इति कुत्वम्()। "त्यज रज भज" इति निपातनात्? सिद्धम्()" इति। यतोऽयमक्ङिति निमित्ते सम्पृचादिसूत्रे ३।२।१४२ रञ्जेरनुनासिकलोपं कृत्वा निर्देशं करोति, तज्ज्ञापयति--घिनुण्यति नलोपो भवतीति। ननु च "रञ्जेश्च" (६।४।२६) इति लक्षणेनैव शपि नलोपोऽभिनिर्वृत्तः? न तदस्ति; यथैव "इन्धिभवतिभ्याञ्च" १।२।६ इत्यागन्तुकेनेकारेणेन्धेर्निर्देशः, तथेहाप्यागन्तुकेनाकारेण, न तु शपा। न हि "इन्धिभवतिभ्याञ्च" १।२।६ इत्यत्रेका निर्देशः, अन्यथा हि "अनिदिताम्()" ६।४।२४ इत्यनुनासिकलोपः स्यात्()॥

बाल-मनोरमा

अनिदितां हल उपधायाः क्ङिति , ६।४।२४

प्र-अन्च् इति स्थिते--अनिदिताम्। "अङ्गस्ये"त्यधिकृतं बहुवचनेन विपरिणम्यते। हल इति तद्विशेषणम्। तदन्तविधिः। "अनिदिता"मित्यपि तद्विशेषणम्। इत्=ह्यस्व इकारः, इत्ित्संक्षको येषां तानि इदिन्ति, न इदिन्ति, अनिदिन्ति, तेषामिति विग्रहः। अवयवषष्ठ()न्तमेततदुपधाया इत्यत्रान्वेति। "उपधाया" इत्यप्यवयवषष्ठ()न्तम्। तश्च "श्नान्न लोपः" इत्यतो नेत्यनुवृत्ते लुप्तषष्ठीके अन्वेति। क् च ङ् च क्ङौ, तौ इतौ यस्येति विग्रहः। तदाह--हलन्तानामित्यादिना। इति चकारात्पूर्वस्य नकारस्य लोपः। प्र अच् प्राच् इति स्थितम्। तस्मात्सुबुत्पत्तिः। सुटि विशेषमाह--उगिदचामिति नुमिति। सौ विशेषमाह--संयोगान्तस्य लोप इति। "हल्ङ्यादिना सुलोपे सती"ति शेषः। कुत्वेन ङकार इति। नासिकास्थानसाम्यादिति भावः। अनुस्वारपरसवर्णाविति। प्राच् औ इति स्थिते-अचः। अच इत्यन्चुधातोः "अनिदिता"मिति लुप्तनकारस्यानुस्वार। "अनुस्वारस्य यी"ति तस्य परसवर्णो ञकारः। नस्य श्चुत्वं तु न भवति, अनुस्वारं प्रति तस्याऽसिद्धत्वादित्यर्थः।

तत्त्व-बोधिनी

अनिदितां हल उपधायाः क्ङिति ३६७, ६।४।२४

अनिदितिम्। इत् ह्रस्वेकार इत्संज्ञको येषां तानि इदिन्ति, न इदिन्ति अनिदिन्ति, तेषाम्--अनिदितम्। एतच्च अङ्गस्य विशेषणं, हल इत्यपि। तदाह---हलन्तामामनिदितामिति। उपधाया नस्येति। "श्नान्न लोपः"इति सूत्रान्नेति लुप्तषष्ठीकं पदमनुवर्तते, तच्चोपधाग्रहणेन विशेष्यत इथि भावः। अनिदितामिति किम्()। नन्द्यते। हलः किम्(), नीयत। उपधायाः किम्()। हन्यते।

---

सूत्रम्

काशिका-वृत्तिः

दंशसञ्जस्वञ्जाम् शपि ६।४।२५

दंश सञ्ज ष्वञ्ज इत्येतेषाम् अङ्गानां शपि परत उपधाया नकारस्य लोपो भवति। दशति। सजति। परिष्वजते।

न्यासः

दंशसञ्जस्वञ्जां शपि। , ६।४।२५

"दंश दंशने" (धा।प।९८९), "ष्वन्ज परिष्वङ्गे (धा।पा।९७६)। "परिष्वजते" इति। "उपसर्गात्? सुनोति" ८।३।६५ इत्यादिना षत्वम्()॥

बाल-मनोरमा

दंशसञ्जस्वञ्जां शपि २३२, ६।४।२५

दंशसञ्ज। रञ्जेश्च। व्याख्यासौकर्याय सूत्रद्वयमुपात्तम्। नलोप इति। नकारस्य लोप इत्यर्थः, "श्नान्नलोपः" इत्यतस्तदनुवृत्तेरिति। परिष्वजते इति। "परिनिविभ्यः" इति षत्वमिति भावः। संयोगात्परत्वाल्लिटः कित्त्वेऽप्राप्ते आह--श्रन्थीति। व्याकरणान्तरमिदं पाणिनीयैरपि ग्राह्यमित्याह-- दभतुरिति। "अत एकहल्मध्ये" इति सूत्रभाष्ये "देभतु"रित्युदाह्रतम्। "सदेः परस्य लिटी"ति सूत्रभाष्ये "सस्वजे"इत्युदाह्रतम्। ततश्च एकदेशानुमत्या "श्रन्थिग्रन्थी"त्यादिवाक्यं कृत्स्नं व्याकरणान्तरस्थं भाष्यानुमतमिति विज्ञायत इत्यर्थः। सदेरिति। "सदेः परस्य लिटी"ति षत्वनिषेधसूत्रे स्वञ्जेरपि ग्रहणमित्यर्थः। ततश्च स्वदिस्वञ्ज्योरुत्तरखण्डस्य सस्य षत्वं न स्यादिति लब्धम्। तदाह--अतोऽभ्यासात्परस्येति। परिषस्वजे परिषस्वञ्जे इति। "परस्ये"त्युक्तेरुत्तरखण्डस्यैव षत्वनिषेधो न त्वभ्यासस्य। कित्त्वपक्षे नलोपः। सस्वञ्जाते। सस्वजाते। सस्वजिरे। क्रादिनियमादिडित्याह-- सस्वजिषे सस्वञ्जिषे इति। सस्वञ्जाथे-- सस्वजाथे। सस्वञ्जिध्वे--सस्वजिध्वे। सस्वञ्जे-- सस्वजे।सस्वञ्जिवहे--सस्वजिवहे। सस्वञ्जिमहे--सस्वजिमहे। स्वङ्क्तेति। स्वञ्ज्--ता इति स्थिते जकारस्य कुत्वेन गकारे सति श्चुत्वसंपन्नञकारस्य निवृत्तौ नकारस्याऽनुस्वारे तस्य परसवर्णेन ङकारे गकारस्य चर्त्वे रूपम्। एवमग्रेऽपि। स्वजेतेति। "दंशसञ्जे"ति शपि नलोप इति भावः। ननु "प्रत्यष्वहक्त"त्यत्र अटा व्यवधानादुपसर्गस्थादिणः परत्वाऽभावात् कथम् "उपसर्गात्सुनोती"ति षत्वमित्यत आह-- प्राक् सितादिति।परिनिविभ्यस्त्विति। "परस्य स्वञ्जे"रिति शेषः। ननु परिनिविभ्यः परस्यापि स्वञ्जेः "परिनिविभ्यः सेवसितसयसिवुसहसुट्()स्तुस्वञ्जा"मिति नित्यमेव षत्वमुचितं, "प्राक्सिता"दिति सूत्रविषयत्वादित्यत आह-- तदर्थमेवेत्यादि। परिनिवीति। नित्यषत्वविधौ स्वञ्जिरप्युपात्तः। ततः "उपसर्गात्सुनोती"त्येव तस्य षत्वे सिद्धे पुनरुपादानं "सिवादीनां वाऽड्व्यवायेऽपी"त्युत्तरसूत्रे षत्वविधौ अनुवृत्त्यर्थमेव संपद्यते। परिनिविभ्यः परस्य स्वञ्जेः "सिवादीनां वे"ति षत्वविकल्पार्थं पूर्वसूत्रे "परिनिविभ्यः सेवे"त्यत्र स्वञ्जिग्रहणमिति पर्यवस्यतीत्यर्थः। हद। अनिडयम्। क्रादिनियमादिट्--जहदिषे। जहदिध्वे। जहदिवहे जहदिमहे। हत्तेति। लुटि तासि दस्य चत्र्वम्। अहत्तेति। "झलो झली"ति सिज्लोपः। गुपादयोऽष्टानुदात्तेतो गताः। अथ परस्मैपदिन

इति। "कित निवासे" इत्यन्ता" इति शेषः। ञि ष्विदेति। ञिराकारश्च इत्। सेट्।स्वेदति। सिष्वेद स्विष्विदतुः। स्वेदेत्। स्विद्यात्। अस्वेदीत्। अस्वेदिष्यत्। स्कन्दिरिरित्। अनिट्। भारद्वाजनियमात्थलि वेडित्याह-- चस्कन्दिथ चस्कन्त्थेति। अनिट्पक्षे चस्कन्द् थ इति स्थिते "खरि चे"ति दकारस्य तकारः। चस्कन्दिव चस्कन्दिम। स्कन्त्तेति। लुटि तासि चर्त्वेन दस्य तः। स्कन्त्स्यतीति। स्ये दस्य चत्र्वम्। स्कदन्तु। अस्कन्दत्। स्कन्देत्। आशीर्लिङि विशेषमाह-- नलोप इति। इरः समुदायस्य इत्त्वेन धातोरनिदित्त्वादाशीर्लिङि नकारस्य लोप इत्यर्थः। अस्कददिति। लुङि अङि सति ङित्त्वान्नलोप इति भावः। अङभावे आह-- अस्कान्त्सीदिति। अनेकहल्व्यवधानेऽपि हलन्तलक्षणा वृद्धिः प्रवर्तत इति निरूपितमक्षूधातौ। अतोऽत्र वृद्धौ दस्य चर्त्वेन त। अस्कान्त्तामिति। हलन्तलक्षणवृद्धौ "झलो झली"ति सिज्लोपे दस्य चत्र्वम्। अस्कान्त्सुरिति। उसि सिचि वृद्धौ दस्य चत्र्वम्। अस्कान्त्सीः अस्कान्त्तम् अस्कान्त्त। अस्कान्त्सम् अस्कान्त्स्व। अस्कान्त्स्म।

---

सूत्रम्

काशिका-वृत्तिः

रञ्जेश् च ६।४।२६

रञ्जेश्च शपि परतः उपधायाः नकारस्य लोपो भवति। रजति, रजतः, रजन्ति। पृथग्योगकरनम् उत्तरार्थम्।

न्यासः

रञ्जेश्च।, ६।४।२६

अथ पृथग्योगकरणं किमर्थम्(), न पूर्वयोग एव रञ्जेग्र्रहणं क्रियते? इत्याह--"पृथग्योगकरणम्()" इत्यादि। उत्तरसूत्रे रञ्जेरेवानुवृत्तिर्यथा स्यात्? दंशप्रभृतीनां मा भूदिति॥

---

सूत्रम्

काशिका-वृत्तिः

घञि च भावकरनयोः ६।४।२७

भावकरनवाचिनि घञि परतो रञ्जेः उपधाया नकारस्य लोपो भवति। भावे आश्चर्यो रागः। विचित्रो रागः। करणे रज्यते अनेन इति रागः। भावकरणयोः इति किम्? रजन्ति तस्मिन्निति रङ्गः।

लघु-सिद्धान्त-कौमुदी

घञि च भावकरणयोः ८५६, ६।४।२७

रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः॥

न्यासः

घञि च भावकरणयोः।, ६।४।२७

"रज्यतेऽनेनेति रागः" इति। "हलश्च" ३।३।१२१ इति घञ्()। एवं "रङ्गः" इत्यत्रापि॥

तत्त्व-बोधिनी

घञि च भावकरणयोः १५१८, ६।४।२७

प्रायिकमिति। सर्वात्मना संज्ञाग्रहमत्यागे "कृतः कटर" इत्यत्र "कारः कट" इति स्यादिति भावः। भाष्ये

त्वनभिधानमाश्रित्य प्रत्याख्यातम्।

---

सूत्रम्

काशिका-वृत्तिः

स्यदो जवे ६।४।२८

जवे ऽभिधेये स्यदः इति घञि निपात्यते। स्यन्देर् नलोपो वृद्ध्यभावश्च। इक्प्रकरणात् न धातुलोपः इति प्रतिषेधो न अस्ति। गोस्यदः। अश्वस्यदः। जव इति किम्? तैलस्यन्दः। घृतस्यन्दः।

न्यासः

स्यदो जवे। , ६।४।२८

जवः=वेगः, गतिविशेषः। "वृद्ध्यभावश्च" इति। "अत उपधायाः" इति। नलोपे कृते "अत उपधायाः" इति वृद्धिः प्राप्नोति, अतस्तदभावो निपात्यते। ननु च "न धातुलोप आर्धधातुके" १।१।४ इत्यनेनैव वृद्धिप्रतिषेधः सिद्धः, तत्? किमर्थं वृद्ध्यभावो निपात्यते? इत्याह--"इक्प्रकरणात्()" इत्यादि। तत्र "इको गुणवृद्धी" १।१।३ इत्यत "इक्()" इति परकृतमनुवर्तते, तेनेग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चेयमिन्लक्षणा वृद्धिः, किन्तूपधालक्षणा। न चेयमुपधालक्षणा वृद्धिरिग्लाक्षणा भवति, निर्दिष्टस्थानिकत्वात्()। तेन नास्त्यत्र तस्याः प्रतिषेधः। "गोस्यदः" इति। भावे धञ्()। गवां स्यद इति गोस्यदः, "कृद्योगा षष्ठी समस्यते" (धा।८६) इति समासः। "तैलस्यन्दः" इति। तैलस्य रुआवणमित्यर्थः। "स्यन्दू रुआवणे"["प्ररुआवणे" धा।पा।] (धा।पा।७६१)॥

---

सूत्रम्

काशिका-वृत्तिः

अवोदएद्ोद्मप्रश्रथहिमश्रथाः ६।४।२९

अवोद एध ओद्म प्रश्रथ हिमश्रथ इत्येते निपात्यन्ते। अवोद इति उन्देरवपूर्वस्य घञि नलोपो निपात्यते। एध इति इन्धेर् घञि नलोपो गुणश्च निपात्यते। न धातुलोप आर्धधातुके १।१।४ इति हि प्रतिषेधः स्यात्। ओद्म इति उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते। प्रश्रथ इति प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभवश्च निपात्यते। हिमश्रथ इति हिमपूर्वस्य श्रन्थेः घञ्येव निपातनम्।

न्यासः

अवोदैधोद्मपरश्रथहिमश्रथाः। , ६।४।२९

"अवोदः" इति। उपसर्गेण सह "आद्गुणः" ६।१।८४। "न धातुलोपः" १।१।४ इत्यादिना प्रतिषेधो न भवति; अनिग्लक्षणत्वाद्गुणस्य। "गुणश्च निपात्यते" इति। ननु च "पुगन्तलधूपधस्य" ७।३।८६ इत्येवं गुणः सिद्धः। तत्? किमर्थं निपात्यते? इत्याह--"न धातुलोपः" इत्यादि। "औणादिके मन्प्रत्ययः" इति। "अर्त्तिसतुसुहुसृधृक्षिक्षुभायावापदयक्षिनौभ्यो मन्()" (द।उ।७।२६) [अर्त्तिस्तुसुहुसृधृक्षिक्षुभायापदियक्षिनीभ्यो मन्()--द।उ।] इत्यर्त्यादिभ्यो विधीयमानो बहुलवचनादुन्देरपि भवति। "श्रन्तेः" इति। "श्रन्थ मोचनप्रतिहर्षणयोः" (धा।प।१५१०) इत्यस्य॥

तत्त्व-बोधिनी

अवोदैधौद्मप्रश्रथहिमश्रथाः १५१७, ६।४।२९

अवोदै। अवोद इति। उन्दी क्लेदनेऽवपूर्वः। घञि नलोपो निपात्यते। एध इति। इन्धेर्घञि नलोपो गुणश्च निपात्यते। "न धातुलोपे" इति निषेधादप्राप्ते गुणस्य निपातनमिति ज्ञेयम्। ओद्म इति। उन्देरौणादिके मन्प्रत्ययो नलोपो गुणश्चाऽत्रापि निपात्यते। श्रन्थेरिति। प्रपूर्वस्य हिमपूर्वस्य च घञि निपात्यते इति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

न अञ्चेः पूजायाम् ६।४।३०

अञ्चेः पूजायाम् अर्थे नकारस्य लोपो न भवति। अञ्चिता अस्य गुराः। अञ्चितम् एव शिरो वहति। अञ्चेः पूजयाम् ७।२।५३ इति इडागमः। पूजायाम् इति किम्? उदक्तमुदकं कूपात्। उद्धृतम् इत्यर्थः। यस्य विभाषा ७।२।१५ इति इट्प्रतिषेधः।

लघु-सिद्धान्त-कौमुदी

नाञ्चेः पूजायाम् ३४३, ६।४।३०

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न। प्राङ्। प्राञ्चौ। नलोपाभावादलोपो न। प्राञ्चः। प्राङ्भ्याम्। प्राङ्क्षु॥ एवं पूजार्थे प्रत्यङ्ङादयः॥ क्रुङ्। क्रुञ्चौ। क्रुङ्भ्याम्॥ पयोमुक्, पयोमुग्। पयोमुचौ। पयोमुग्भ्याम्॥ उगित्वान्नुमि - ,

न्यासः

नाञ्चेः पूजायाम्?। , ६।४।३०

"अनिदिताम्()" ६।४।२४ इत्यनेन प्राप्तस्य नलोपस्यायं प्रतिषेधः। एतस्मादेव प्रतिषेधान्नकारोऽयं इतचुत्वो निर्दिश्यत इति गम्यते। अथ "नाञ्चेरिटि" इत्येव कस्मान्नोक्तम्? एवमपि ह्रुच्यमाने पूजायमेव प्रतषेधो लभ्येत, तथा हि--पूजायामेवाञ्चतेरिङ् विहितः? अशक्यमेवं वक्तुम्(), "अञ्चेः पूजायाम्()" ७।२।५३ इत्यनेन क्त्वानिष्ठयोर्नित्यमिङ विहितः। यस्तु क्त्वाप्रत्ययः "उदितो वा" ७।२।५६ इति पाक्षिक इडागमः, स पूजायामपि भवति, तत्रैवमुच्यमाने यदा क्त्वाप्रत्ययस्य पूजायामिण्न स्यात्(), तदा प्रतिषेधो न स्यात्()। "गुरुमङ्क्त्वा" इति। "न" इत्येतत्प्रतिषेधवचनमुत्तरार्थम्()। इह "अञ्चेरपूजायाम्()" इत्युच्यमाने सतीष्टं सिद्ध्यत्येव। "अञ्चिता अस्य गुरवः" इति। "मतिबुद्धि" ३।२।१८८ इत्यादना क्तः। "क्तस्य च वर्तमाने" २।३।६७ इति षष्ठी। "यस्य विभाषेतीट्()प्रतिषेधः" इति। अञ्चितेः "उदितो वा" ७।२।५६ इति विकप्लेनेङविधानात्()॥

बाल-मनोरमा

नाञ्चेः पूजायाम् , ६।४।३०

पूजार्थादञ्चुधातोः क्विनि "अनिदिता"मिति नलोपे प्राप्ते--नाऽञ्चेः। "अनिदिता"मिति सूत्रात् "उपधायाः" "क्ङिती"त्यनुवर्तते। "श्नान्न लोपः" इत्यतो "नलोप" इत्यनुवर्तते। "ने"ति लुप्तषष्ठीकम्। तदाह--पूजार्थस्येत्यादिना। पूजाया गम्यत्वे सतीत्यर्थः, न त्वत्राञ्चुधातोः पूजार्थत्वमेवेह विवक्षितम्। अत एव "अञ्चितं गच्छती"त्यत्र नलोपो न। अञ्चतेरत्र समाधानमर्थः। समाहितो भूत्वा गच्छतीति गम्यते। समाधानं च अव्याकुलत्वम्, अव्याकुलं गच्छतीत्यर्थः। अव्याकुलगमने च पूजा गम्यते, नत्वञ्चतेरेव सोऽर्थ इति "अञ्चोनपादाने" इति सूत्रे भाष्यकैयटयोः स्पष्टम्। प्राङिति। प्रपूर्वादञ्चतेः क्विन्। प्रकर्षेण पूजनमञ्चेरर्थः। नलोपाऽभावे प्राञ्च इत्यतः सुबुत्पत्तिः। हल्ङ्यादिलोपः, संयोगान्तलोपः, ततोऽनुस्वारपरसवर्णनिवृत्तौ नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन ङकार इति भावः। प्राञ्चाविति। स्वाभाविकनकारस्य अनुस्वारपरसवर्णाविति भावः। अलुप्तेति। "उगिदचा"मित्यत्र नलोपिनोऽञ्चेतेरेव ग्रहणान्नुम्न।

ततश्च नकारद्वयश्रवणं न शङ्क्यमिति भावः। नलोपाऽभावादिति। शसादावचि "अचः" इति लोपो न भवति। सुप्तनकारस्यैवाऽञ्चतेस्तत्र ग्रहणादिति भावः। प्राञ्च इति। प्र अञ्च् अस् इति स्थिते सवर्णदीर्घे रूपमिति भावः। "नाञ्चेः पूजाया"मित्यनारम्भे सुटि नुमैव रूपसिद्धावपि शसादावचि नकारश्रवणं न स्यात्, "अनिदिता"मिति लोपप्रसङ्गात्। असर्वनामस्थानतया "उगिदचा"मिति नुमश्चाऽप्रसक्तेरिति बोध्यम्। प्राङ्भ्यामिति। "स्वादिषु" इति पदत्वाच्चकारस्य संयोगान्तलोपेऽनुस्वारपरसवर्णनिवृत्तौ नकारस्य "क्विन्प्रत्ययस्ये"ति कुत्वेन ङकार इति भावः। इत्यादीति। प्राङ्भिः। प्राञ्चे, प्राङ्भ्याम्, प्राङ्भ्यः। प्राञ्चः, प्राञ्चोः, प्राञ्चाम्। प्राञ्चि, प्राञ्चोः। प्राङ्ख्ष्विति। "ङ्णोः कुक्टुक्" इति वा कुक्। "चयो द्वितीयाः" इति पक्षे खश्च बोध्यः। एवमिति। सुटि पूर्ववदेव रूपाणि। शसादावचि-प्रत्यचः। प्रत्यञ्चा। प्रत्यङ्भ्याम्। अमुमुयञ्चः। अमुमुयङ्भ्याम्। उदञ्चः। उदङ्भ्यामित्यादि ज्ञेयम्। क्रुञ्च कौटिल्येति। नलोपाभावोऽपीति। "अनिदिता"मिति नलोपाऽभावः, निरुपपदात्क्विन्नपि निपात्यत इत्यर्थः। सति तु नलोपे नकारो न श्रूयेत। "उगिदचा"मिति नुमः सर्वनामस्थानेऽप्यप्रवृत्तेः। वस्तुतस्तु स्वाभाविकञोपधस्यैव धातुपाठे निर्द#एशान्नलोपस्याऽत्र प्रसक्तिरेव नास्ति। अत एव "परेश्च घाङ्कयोः" इति सूत्रे भाष्ये "क्रुञ्चे"त्यत्र चकारे परे "चो कुः" इति कुत्वमाशङ्क्य ऋत्विगित्यादि सूत्रे क्रुञ्चेति निपातनात्कुत्वं नेत्युक्तं सङ्गच्छते। यदि तु नस्यानुस्वारपरसवर्णाभ्यां ञकारो निर्दिश्येत, तर्हि तस्य "चो कुः" इति कुत्वप्रसक्तिरेव नास्तीति तदसङ्गतिः स्यात्, कुत्वे कर्तव्ये परसवर्णस्याऽसिद्धत्वादित्यास्तां तावत्। नोपधत्वमभ्युपेत्य आह--क्रुङिति। हल्ङ्यादिलोपे संयोगान्तलोपे नकारस्य "क्विन्प्रत्ययस्ये"ति कुत्वम्। क्रुङ्भ्यामिति। संयोगान्तलोपे नकारस्य कुत्वं ङकारः। अत्र प्रथमैकवचने भ्यामादावपि कुत्वं निपातनादेव न भवति, चवर्गपञ्चमञकार एव सर्वत्रेति "परेश्च घाङ्कयोः" इति सूत्रभाष्यकैयटस्वरसः। पयोमुगिति। "मुच्लृ मोक्षणे"क्विप्। सुपूर्वात् "ओ व्रस्चू छेदने" इति धातोः क्विपि "ग्राहिज्ये"ति सम्प्रसारणे सुवृश्चशब्दः। तस्य विशेषमाह-षत्वमिति। हल्ङ्यादिना सुलोपे कृते चकारस्य षत्वमित्यर्थः। सलोप इति। धातुपाठे व्रस्चू इति सस्य श्चुत्वे कृते "व्रश्चू" इति निर्देशः। तत्र श्चुत्वस्याऽसिद्धत्वात् "स्कोः" इति सकारस्य लोप इत्यर्थः। "वावसाने" इति चर्त्वे षस्य टः। तदभावे जश्त्वेन ड इत्यर्थः। सुवृट्()त्स्विति। चत्र्वस्याऽसिद्धत्वात्पूर्वं "डः सी"ति वा धुट्। ततस्चत्र्वमिति भावः। इति चान्ताः। अथ तान्ताः। अछ महच्छब्दे विशेषं वक्तुमाह--वर्तमाने। उणादिसूत्रमेतत्। निपात्यन्ते इति। तत्र "पृषु सेचने" "बृह वृद्धौ" अनयोर्गुणाऽभावः, महेः कर्मणि अतिप्रत्ययः, "गमेर्जगादेशश्चेति विशेषः। शतृवदिति। शतृप्रत्ययान्तवदित्यर्थः। उगित्त्वादिति। शतृवद्भावेन सुटि उगित्त्वान्नुमित्यर्थः। सान्तेति। सुटि महन्त स् औ इत्यादिस्थितौ नकारात्पूर्वस्य अकारस्य दीर्घ इत्यर्थः। मह्रते इति। कर्तरि कृत्" इति कत्र्रर्थं बाधित्वा निपातनात् "मह पूजायाम्" इति धातोः कर्मणि अतिप्रत्यय इति भावः। महानिति। नुमि दीर्घे सुलोपे संयोगान्तलोप इति भावः। महान्ताविति। नुमि दीर्घे अनुस्वारपरसवर्णाविति भावः। हे महन्निति। असंबुद्धावित्यनुवृत्तेः "सान्तमहतः" इति दीर्घो नेति भावः। महत इति। असर्वनामस्थानत्वाच्छसादौ न दीर्घः। धीरस्यास्तीत्यर्थे धीशब्दान्मतुप्, पकार इत्, उकार उच्चारणार्थः। तद्धितान्तत्वेन प्रातिपदिकत्वात्सुबुत्पत्तिः।

तत्त्व-बोधिनी

नाञ्चेः पूजायाम् ३७६, ६।४।३०

नाञ्चेऋ। नुमैव सिद्धे "प्राञ्चः "प्राञ्चे"त्यादौ नुमोऽभावेऽपि नकारश्रवणार्थः। प्राङिति। प्रकर्षेणाऽञ्चति पूजयतीति पूजार्थादञ्चेः क्विन्। प्रङ्क्षिति। "ङ्णोः कुक्टु"गिति वा कुक्। "चयो द्वितीया"इति क्षे खकारोऽपि बोध्यः। एवमिति। शसादिषु--प्रत्यञ्चः। प्रत्यङ्भ्याम्। अमुमुयञ्चः अमुमुयङ्भ्याम्। उदञ्चः। उदङ्भ्यामित्यादि ज्ञेयम्। क्रुञ्चतीति क्रुङ्। सलोप इति। श्चुत्वस्याऽसिद्धत्वात्पूर्वं "डः सी"ति वा धुट्। ततश्चत्र्वम्। इति चान्ताः। निपात्यन्तः इति। "पृषु सेचने"। "बृह वृद्धौ"। अत्र गुणाऽभावः। महेः कर्मणि प्रत्ययः। अतएव मह्रते पूज्यते महानिति व्याचष्टे। गमेस्तु जगादेशः।

चत्वारोऽप्यतिप्रत्ययान्ताः। एतच्चोणादिषु स्फुटीकरिष्यते।

---

सूत्रम्

काशिका-वृत्तिः

क्त्वि स्कन्दिस्यन्दोः ६।४।३१

क्त्वाप्रयये परतः स्कन्द स्यन्द इत्येतयोर् नकारलोपो न भवति। स्कन्त्वा। स्यन्त्वा। स्यन्देरूदित्वात् पक्षे इडागमः। स्यन्दित्वा। तत्र यदा इडागमः तदा न क्त्वा सेट् १।२।१८ इति कित्त्वप्रतिषेधादेव नलोपाभावः।

न्यासः

क्त्वि स्कन्दिस्यन्दोः। , ६।४।३१

"स्कन्त्वा" इति। "स्कन्दिर गतिशोषणयोः" (धा।प।९७९) "पक्षे इडागमः" इति। "स्वरति" ७।२।४४ इत्यादिना। "कित्त्वप्रतिषेधान्नलोपभावः" इति। "अनिदिताम्()" ६।४।२४ इत्यादिना हि क्ङिति नलोपो विधीयते। सेट्क्त्वाप्रत्ययस्य "न क्त्वा सेट्()" १।२।१८ इति कित्त्वप्रतिषेधः कृतः, ततश्चेडागमपक्षे कित्त्वाभावादेव नलोपाभाव इति नासाविमं योगं प्रयोजयति। तेन न सेट्क्त्वापरत्ययस्योदाहरणं प्रदर्शितमित्यभिप्रायः॥

तत्त्व-बोधिनी

क्त्वि स्कन्दिस्यन्दोः १५९०, ६।४।३१

क्त्वि स्कन्दि। स्कन्दिर्गतिशोषणयोः। "इर इत्संज्ञेट ति वार्तिककादिकारमात्रस्येत्संज्ञा नेति "अनिदिता"मिति पर्युदासोऽत्र न प्रवर्तत इति स्कन्दिग्रहणम्। स्कन्त्वेति। "एकाच" इति नेट्।

---

सूत्रम्

काशिका-वृत्तिः

जान्तनशां विभाषा ६।४।३२

जान्तानाम् अङ्गानां नशेश्च क्त्वाप्रत्यये परतः विभाषा नकारलोपो न भवति। रङ्क्त्वा, रक्त्वा। भङ्क्त्वा, भक्त्वा। नश नंष्ट्वा, नष्ट्वा। इट्पक्षे नशित्वा।

न्यासः

जान्तनशां विभाषा। , ६।४।३२

"नष्ट्वा, नंष्ट्वा" इति। नशेः व्रश्चादि ८।२।३६ सूत्रेण षत्वम्(), ष्टुत्वम्()। "मस्जिनशोर्झलि" ७।१।६० इति मुमागमः। "ज" इति वर्णग्रहणम्(), तत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयतत्यन्तरेणाप्यन्तग्रहणेन तदन्तविधौ सिद्धे, यदिहान्तग्रहणं क्रियते तद्विस्पष्टार्थम्(), यत्वाह--अनुपधाया अपि पक्षे लोपस्य प्रतिषेधार्थमन्तग्रहणम्(), तद्यथा--"भक्त्वा, भङ्क्त्वा" इति, तन्न; केन पुनरनुपधाभूतस्य नकारस्या लोपः प्राप्नोति, यतोऽसौ पक्षे प्रतिषिध्यते। उपधानकारस्य लोप उक्तः, न चायमुपधानकारः। एवं तर्हि विधि विषयादन्यत्रापि क्वचिल्लोपो नकारस्य भवतीति ज्ञापयति। तेनैतत्? सिद्धं भवित--"मग्नः, मग्नदान्()" इति। ततश्चैतद्रथं "मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गलोपार्थम्()" इत्येतन्न वक्तव्यं भवति। तत्र यदीदं नोच्येत, तदा यस्मिन्? पक्षे क्त्वाप्रत्ययेन लोपो न भवति, तस्मिन्? पक्षे "स्कोः संयोगाद्योरन्ते च" ८।२।२९ इति सलोपोऽपि न स्यात्(); असंयोगादित्वात्()।

तस्माद्वक्तव्यमेवेदम्()--"मस्जेरन्त्यात्पूर्वं नुममिच्छन्ति" इति। ततश्चानुपधाभूतस्य नकारस्य लोपभाविनोऽसम्भवादनुपधाभूतस्य नकारस्य लोपप्रतिषेधो यथा स्यादेवमर्थमन्तग्रहणं न युज्यते॥

---

सूत्रम्

काशिका-वृत्तिः

भञ्जेश् च चिणि ६।४।३३

भञ्जेश्च चिणि परतो विभाषा नकारलोपो भवति। अभाजि, अभञ्जि। अप्राप्तो ऽयं नलोपः पक्षे विधीयते, ततो न इति न अनुवर्तते।

लघु-सिद्धान्त-कौमुदी

भञ्जेश्च चिणि ७६१, ६।४।३३

नलोपो वा स्यात्। अभाजि, अभञ्जि॥ लभ्यते॥

न्यासः

भञ्जेश्च चिणि। , ६।४।३३

चकारः "विभाषा" ६।४।३२ इत्यनुकर्षणार्थः। "अभाजि" इति। पूर्वमेव व्युत्पादितम्()। "अप्राप्तोऽयं नकारलोपः" इति। क्ङिति नलोपविधानात्(), चिणश्चाक्ङित्वात्()। अतः प्रतिषेध्याभाबान्नति नानुवर्तते। तेन विधिरेवायमित्यभिप्रायः॥

बाल-मनोरमा

भञ्जेश्च चिणि ५८९, ६।४।३३

भञ्जेश्च चिणि। "श्नान्नलोपः" इत्यतो नेति अभाजीति। नलोपपक्षे उपधावृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

शास इदङ्हलोः ६।४।३४

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। हलादौ कितिशिष्टः। शिष्टवान्। ङिति आवां शिष्वः। वयं शिष्मः। इत्त्वे कृते शासिवसिघसीनां च ८।३।६० इति षत्वम्। अङ्हलोः इति किम्? शासति। शशासतुः। शशासुः। क्वौ च शास इत्त्वं भवति इति वक्तव्यम्। आर्यान् शास्ति इति आर्यशीः। मित्रशीः। यस्मात् शासेः अङ् विहितः शासु अनुशिष्टौ इति, तस्य एव इदं ग्रहणम् इष्यते। आङः शासु इच्छायाम् इति अस्य न भवति। आशास्ते। आशास्यमानः। क्विप्प्रत्यये तु तस्य अपि भवति इति वक्तव्यम्। आशीः, आशिषौ, आशिषः। क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ८।२।१०४ इति निपातनाद् वा सिद्धम्।

लघु-सिद्धान्त-कौमुदी

शास इदङ्हलोः ७८१, ६।४।३४

शास उपधाया इत्स्यादङि हलादौ क्ङिति। शिष्यः। वृत्यः। आदृत्यः। जुष्यः॥

न्यासः

शास इदङ्हलोः। , ६।४।३४

"अन्वशिषत्()" इति। "सर्त्तिशास्त्यर्तिभ्यश्च" ३।१।५६ इति च्लेरङादेशः "शिष्वः, शिष्मः" इति। वस्मसोरुदाहरणे, अदादित्वाच्छपो लुक्()। "शासति" इति। "जक्षित्यादयः षट्()" ६।१।६ इत्यभ्यस्तसंज्ञा, "अदभ्यस्तात्()" ७।१।४ इति झेरदादेशः। "शशासतुः, शशासुः" इति। लिट()तुस्युसि रूपे। "क्वौ च शासः" इति। क्वौ परतः शासेरित्त्वं भवतीत्येतदर्थरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्()--यद्यपि कृताकृतप्रसङ्गित्वेन नित्यत्वादत्र पूर्वमित्त्वात्? क्विब्लोपस्य विधानम्, तथापि लुप्तेऽपि तस्मिन्? प्रत्ययलक्षणेनात्रेत्त्वं भविष्यति। "वर्णाश्रये प्रत्ययलक्षणं नास्ति" (व्या।प।९६) इत्येतत्तु प्रायिकम्()। तथा हि--वर्णश्रयेऽपि क्वचिद्भवति। तद्यथा--"अतृणेट्()" इति। अत्र "तृ ह इम्()" ७।३।९२ इतीमागमः। अथ वा वर्णाश्रयमेवेदमित्त्वं न भवति। कथम्()? अङ्गग्रहणेनात्र प्रत्ययः सन्निधापितः। स हल्ग्रहणेन विशिष्यते। अत एव वृत्तावुक्तम्()--"हलादौ क्ङिति" इति। तेन यद्यपि क्विब्? वर्णात्मकः प्रत्ययः, तथापि नासौ वर्णरूपत्वेनाश्रीयते, किं तर्हि? प्रत्ययरूपत्वेन। "आर्यशीः" इति। सकारस्य रुत्वे कृते "र्वोरुपधाया दीर्घः" ८।२।७६ इति दीर्घः। अथ "आशास्ते, आशास्यमानः" इत्यत्र कथमित्त्वं न भवति? इत्याह--"यस्माच्छासेः" इत्यादि द्वाविमौ शासी--एकः परस्मैपदी, अपरस्त्वात्मनेपदी, तत्र यस्मात्? शासेरङ् विहितं तस्यैवं ग्रहणम्()। स च "शासु अनुशिष्टौ" (धा।पा।१०७५) इत्यस्य "सत्तिशास्त्यर्त्तिभ्यश्च" ३।१।५६ इति विधीयते, तत्र "परस्मैपदेषु" ३।१।५५ इत्यनुवर्तते, अस्यैव परस्मैपदे सम्भवात्()। कथं पुनः सामान्येनोपादाने परस्मैपदिन एव विज्ञायते? अङः संसर्गात्()। संसर्गे हि सति विशेषपरिच्छेदो भवति, तथा हि--"सकिशोरा धेनुरानीयताम्()" इत्युक्ते किशोरेण संसर्गाद्? वडवायामेव सम्प्रत्ययो भवति। इह शासेरित्त्वं प्रत्यङ निमित्तत्वेनोपात्तः, अतस्तेन संसर्गाद्? विशिष्ठ एव परस्मैपदी शासिः प्रतीयते। ननु चाङेवात्र केवलो निमित्तत्वेन नोपात्तः, किं तर्हि? हलपि, स चात्मनेपदिनोऽपि सम्भवति, तत्? कुतोऽङ्संसर्गाद्? विशिष्टस्य शासेः प्रतीति? नैतदस्ति; साधारणासाधारणसम्बन्धिसन्निपाते यस्यासाधारणः सन्निहितः सम्बन्धी तत्रैव प्रत्ययो जायते। तथा हि "वृद्धानां किशोरणाञ्च मध्ये धेनवोऽनुबध्यन्ताम्()" इत्युक्ते बडवा एव प्रतीयन्ते। तस्मादङ्हलोरुपदानेऽपि यस्मादङ विहितस्तस्यैव ग्रहणं युक्तम्()। यदि तर्हि यतोऽङ विहितस्तस्येदं ग्रहणम्(), एवं सति यथाशास्ते, आशास्यमान इत्यत्र न भवति, तथा क्विप्प्रत्ययेऽपि न स्यात्()? इत्यत आह--"क्विप्प्रत्यये ति" इत्यादि। "क्षियासीः" इत्यादि। अथ वा नैव तस्या ह्रपि क्विष्प्रत्यय इत्येवं वक्तव्यमिति। विक्लपर्थो वाशब्दः। अथ तशब्दः किमर्थः, आन्तरतम्याद्दीर्घो मा भूदिति चेत्()? नैतदस्ति; "भाव्यमानोऽण्? सवर्णान्न गृह्णाति" (व्या।प।३५) इति न भविष्यति? एवं तर्हि विस्पष्टार्थः। अथासन्देहार्थः कस्मान्न भवति? "शास यङङलोः" इत्युच्यमाने सन्देहः स्यात्()--किमयमिकारः कृतयणादेशो निर्दिष्टः? आहोस्विदीकारः? अथ वा यकार इति? नास्ति सन्देहः, यदयम्? "तदशिष्यं संज्ञाप्रमाणत्वात्()" १।२।५३ इति निर्देशं करोति, ततो निश्चीयते--इकारोयम्(), न हीकारः, नापि यकार इति॥

बाल-मनोरमा

शास इदङ्हलोः ३१६, ६।४।३४

शास इदङ्हलोः। "अनिदितां हलः" इत्यत उपधायाः क्ङिति इत्यनुवर्तते। तदा--शास उपधाया इति। शासतीति। जक्षादित्वेन अभ्यस्तत्वाददादेश इति भावः। शास्सि शिष्ठः शिष्ठ। शास्मि शिष्वः शिष्मः। "आशास्ते" इत्यत्र तु नेत्त्वम्, अड()ओग्यस्य परस्मैपदिन एव ग्रहणादिति भाष्ये स्पष्टम्। शशासेति। शशासिथ। शासिता। शासिष्यति। शास् हि इति स्थिते आह---

तत्त्व-बोधिनी

शास इदङ्हलोः २७४, ६।४।३४

शास इदङ्हलोः। अङि अशिषत्। क्ङिति-- शिष्टः। शिष्टवान्। शिष्यात्। शिष्यास्ताम्। अङ्साहचर्यात्परस्मैपद एवेत्वम्।

नेह--- आशास्ते। अन्ये तु यस्माच्छासेरङ् संभवति तस्यैवेत्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिढ्वे इत्यात्मनेपदेऽपि इत्वं स्वीकुर्वन्ति।

---

सूत्रम्

काशिका-वृत्तिः

शा हौ ६।४।३५

शासो हौ परतः शा इत्ययम् आदेशो भवति। अनुशाधि। प्रशाधि। उपधायाः इति निवृत्तम्, ततः शासः इति स्थानेयोगा षष्ठी भवति। क्ङति एतदपि निवृत्तम्। तेन यदा वा छन्दसि ३।४।८८ इति पित्त्वं हिशब्दस्य तदा अप्यादेशो भवत्येव। शाधि इत्याद्युदात्तम् अपि छन्दसि दृश्यते।

न्यासः

शा हौ। , ६।४।३५

यद्यत्र "उपधायाः" ६।४।२४ इति वत्र्तते, ततो यथा पूर्वसूत्रे "शासः" ६।४।३४ इत्यवयवभूता षष्ठी, तथेहापि स्यात्? एवञ्चोपधाया एवायमादेशः, प्रसज्येत, सर्वादेशश्चेष्यत इति मनसि कृत्वाह--"उपधाया इति निवृत्तम्()" इति। तद्धि उपधागरहणं क्ङिद्ग्रहणेन सम्बद्धम्(), इह च क्ङिद्ग्रहणं निवृत्तम्()। तस्मात्? "उपधायाः" ६।४।२४ इत्यस्यापि निवृत्तिर्भवति। "क्ङिति" इत्येतदपि निवृत्तम्()" इति। "अनुदात्तोपदेश" ६।४।३७ इत्यादौ सूत्रे पुनः क्ङिद्ग्रहणात्()। "तेन" इत्यादिना क्ङिद्ग्रहणे निवृत्ते यदिष्टं सम्पद्यते तद्दर्शयति--यद्यत्र "क्ङिति" ६।४।२४ इत्येतदनुवत्र्तेततततो "वा च्छन्दसि" (३।४।८८) इति यसमिन्पक्षे हेरपित्त्वं न भवति तस्मिन्? पक्षे "सार्वधातुकमपित्()" (१।२।४) इति वचनात्? ङित्त्वं नास्तीति शाभावो न स्यात्()। क्ङिद्ग्रहणे तु निवृत्तेऽपित्त्वपक्षेऽपि भवत्येव।
स्यादेतत्()--व्यवस्थितविभाषाविज्ञानाच्छास उत्तरस्य हेः पित्त्वं न भविष्यति, ततो नार्थः क्ङिद्ग्रहणेन निवर्त्तितेन? इत्यत आह--"शाधीत्येतत्()" इत्यादि। यदि शास उत्तरस्य हेः पक्षे पित्त्वं न स्यात्(), तदा शाधीत्येतत्? सतिशिष्टत्वेन प्रत्ययस्वरेणान्तोदात्तमेव स्यात्()। आद्युदात्तमपि च्छन्दसीष्यते। तच्च हेः पित्त्वे सति धातुस्वरेण सम्पद्यते, नान्यथा। तस्मादवश्यं च्छन्दसि यक्षे पित्त्वं विधेयम्()। अथ "आ हौ" इत्येवं कस्मान्नोक्तम्(), अकोरेऽपि हि "अलोऽन्त्यस्य" (१।१।५२) इति सकारस्य विहिते सवर्णदीर्घत्वेन शाधीत्येतत्? सिद्धं भवति? न सिद्ध्यति; पूर्वसूत्रेणोपधाया इत्वं स्यात्()। न चायं तस्य बाधको युज्यते; असति च सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात्(), अत्रास्ति सम्भवः। तस्मादकारेऽन्त्यसय विहित उपधाया इत्वं स्यादेव॥ "हन्तेः" इति। स्पिपा निर्देशो यङ्लुग्निवृत्त्यर्थः--"जङ्घहि"॥

बाल-मनोरमा

शा हौ ३१७, ६।४।३५

शा हौ। "शा" इति लुप्तप्रथमाकम्। "शास इदङ्ित्यतः शास इत्यनुवर्तते। तदाह-- शास्तेरिरिति। इत्त्वापवारदः। ननु शासेः शाभावे सति झल्परत्वाऽभावात्कतं हेर्धिरित्यत आह-- तस्याभीयत्वेनेति। यद्यपि "धि चे"ति सलोपे शाधीति सिद्धम्, तथापि सलोपस्याऽसिद्धत्वात् "शास इ"दिति इत्त्वं स्यात्। तन्निवृत्तये शाविधानमित्याहुः। लङ्याह--अशादिति। "तिप्यनस्ते" रिति दत्वे चत्र्वविकल्प इति भावः। अशासुरिति। अभ्यस्तत्वाज्जुसिति भावः। अशाः अशादिति। "सिपि धातो"रिति रुत्वदत्वविकल्प इति भावः। अशिष्टम् अशिष्ट। अशासम् अशिष्व अशिष्म। शिष्यादिति। "शास इत् इति इत्त्वे "शासिवसी"ति ष इति भावः। अशिषदिति। अङि इत्त्वमिति भावः। दीधीङ्धातुरीकारान्तः। ङित्त्वादात्मनेपदी।

एतदादयः पञ्चेति। इदं च माधवानुरोधेन। तत्त्वं त्वग्रे वक्ष्यते। जक्षित्यादित्वादभ्यस्तत्वाज्झस्य अदादेशः। दीध्यते। दीधीषे दीध्याथे दीधीध्वे। लट इडादेशे आह--

तत्त्व-बोधिनी

शा हौ २७५, ६।४।३५

शा हौ। शादेश इति। "धि चे"ति सलोपेन शाधीति रूपे सिद्धेऽपि सलोपस्याऽसिद्धत्वात् "शासे"दिति इत्वं स्यात्; तद्वारणाय शाविधानमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

हन्तेर्जः ६।४।३६

हन्तेर्धातोः जः इत्ययम् आदेशो भवति हौ परत। जहि शत्रून्।

लघु-सिद्धान्त-कौमुदी

हन्तेर्जः ५६३, ६।४।३६

हौ परे॥

बाल-मनोरमा

हन्तेर्जः २६२, ६।४।३६

हन्तेर्जः। "शा हौ इत्यतो हौ इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- हौ परे इति। कृते जादेशे "अतो हे"रिति हेर्लुकमाशङ्क्य आह--आभीयतयेति। जहीति। हतात् हतम्। हत। हनानीति। आटः पित्त्वेन हित्त्वाऽभावान्नोपधालोप इति भावः। अहन्निति। लङस्तिपि "इतश्चे"ति इकारलोपे "संयोगान्तस्ये"ति तकारलोपः। न्याय्यत्वाद्धल्ङ्यादिलोपो वा। अहनमिति। अहन्व। अहन्म। झलादिपरकत्वाऽभावान्नोपधादीर्घः। विधिलिङि हन्यात् हन्यताम् इत्यादि। आशीर्लिङि वधादेशं वक्ष्यन्नाह-

तत्त्व-बोधिनी

हन्तेर्जः २३०, ६।४।३६

आभीयतयेति। सन्निपातपरिभाषयाऽपि हेर्लुङ् नेति वक्तुं शक्यमिति केचित्। तन्मन्दम्। "अतो हे" रित्यारम्भसामर्थ्यात्तस्या अप्रवृत्तेरिति नव्याः।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तौपदेशवनतितनोत्यादीनाम् अनुनासिकलोपो झलि क्ङिति ६।४।३७

अनुदात्तोपदेशानाम् अङ्गानां वनतेः तनोत्यादीनां च अनुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः। यमु यत्वा। यतः। यतवान्। यतिः। रमु रत्वा। रतः। रतवान्। रतिः। अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः। वनति वतिः। क्तिनो रूपम् एतत्। क्तिचि तु न क्तिचि दीर्घश्च ६।४।३९ इति भवति।

अन्यत्र झलादाविटा भवितव्यम्। तनोत्यादयः ततः। ततवान्। सनोतेरात्वं वक्ष्यति। क्षणु क्षतः। क्षतवान्। ऋणु ऋतः। ऋतवान्। तृणु तृतः। तृतवान्। घृणु घृतः। घृतवान्। वनु वतः। वतवान्। मनु मतः। मतवान्। ङिति अतत। अतथाः। अनुदात्तोपदेशवनतितनोत्यादीनाम् इति किम्? शान्तः। शान्तवान्। तान्तः। तान्तवान्। दान्तः। दान्तवान्। अनुनासिकस्य इति किम्? पक्वः। पक्ववान्। झलि इति किम्? गम्यते। रम्यते। क्ङिति इति किम्? यन्ता। यन्तव्यम्। उपदेशग्रहणं किम्? इह वयथा स्यात्, गतिः। इह च मा भूत्, शान्तः, शान्तवानिति।

लघु-सिद्धान्त-कौमुदी

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ५६१, ६।४।३७

अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः। तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः। हतः। घ्नन्ति। हंसि। हथः। हथ। हन्मि। हन्वः। हन्मः। जघान। जघ्नतुः। जघ्नुः॥

न्यासः

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। , ६।४।३७

"अनुनासिक" इति षष्ठ()आ बहुवचनस्य लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः। अत एवाह--"अनुनासिकान्तानाम्()" इति। "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घत्वे प्राप्ते लोपोऽयं विधीयते। अत्र लोपे कृते दीर्घत्वं न प्राप्नोति; विहितनिमित्तत्वात्()। "यमि रमि गमि नमि हनि मन्यतयः" इति--"यम उपरमे" (धा।पा।९८४) "रमु क्रीडायाम्()" (धा।पा।८५३) "गन्लृ सृप्लृ गतौ" (धा।पा।९८२,९८३) "णम पह्वत्वे" (धा।पा।९८१) [प्रह्वत्वे शब्दे च--धा।पा] "हन हिंसागत्योः" (धा।पा।१०१२) "मन ज्ञाने" (धा।पा।११७६)। "वतिः" इति। "वन षण सम्भक्तौ" (धा।पा।४६३,४६४)। "तितुत्रतथ" ७।२।९ इत्यादिनेट्प्रतिषेधः। "क्तिनि" इत्यनेन क्तिन्येव वनतेरुदाहरणं सम्भवति, नान्यत्रेति दर्शयति। किं कारमम्()? इत्याह--"क्तिचि तु" इत्यादि। क्तिचि तु "न क्तिचि दीर्घश्च" ६।४।३९ इति प्रतिषेधं वक्ष्यति। ये त्वन्ये झलादयः प्रत्ययास्तेष्वपीटा भवितव्यम्(), ततो झलादित्वाभावाद्वनतेरनुनासिकलोपं प्रति ते निमित्तभावं नोपयान्तीति पारिशेष्यात्? क्तिन्येव वनतेरनुनासिकलोपेन भवितव्यम्()। "सनोतेरात्वं वक्ष्यति" इति। तेन तस्यानुनासिकलोपोदाहरणं न भवतीति भावः। आत्वं पुनः "जनसनखनाम्()" ६।४।४२ इत्यादिना वक्ष्यति। "क्षतः" इति। "क्षणु हिंसायाम्()" (धा।पा।१४६५)। "ऋतः" इति--"ऋणु गतौ" (धा।पा।१४६७)। "तृतः" इति। "तृणु दाने" ["अदने" धा।पा।] (धा।पा।१४६८)। "घृतः" इति। "घृणु दीप्तौ" (धा।पा।१४६९) "वतः" इति। "वनु याचने" (धा।पा।१४७०) "मतः" इति। "मनु अवबोधने" (धा।पा।१४७१) "अतत, अतथा" इति। तनोतेर्लुङ। आत्मनेपदप्रथममध्यमैकपुरुषवचने। "तनादिभ्यस्तथासोः" २।४।७९ इति सिचो लुक्()। "शान्तः, तान्तः, दान्तः" ति। शमितमिदमीनां रूपाणि। एते नानुदात्तोपदेशाः। "इह च" इत्यादि। गमिरमिभ्यां क्तिनि कृते तयोर्नित्स्वरेणाद्युदात्तत्वेऽनुदात्तत्वाभावादसत्युपदेशग्रहणे लोपो न स्यात्(), अ()स्मस्तु सति भवति। किञ्च--असत्युपदेशग्रहणे शान्तः, दान्त इत्यत्रापि स्यात्()। भवति हि शमिः सतिशिष्टप्रत्ययस्वरे कृते "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इति शेषस्यानुदात्तत्वेऽनुदात्तः। उपदेशग्रहणात्तु न भवति, न ह्मुपदेशेऽनुदात्तः॥

बाल-मनोरमा

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति २५९, ६।४।३७

अनुदात्तोपदेश। "ऊद्दन्तै"रित्यादिभिः सङ्गृहीता अनुदात्तोपदेशाः, वनतिभौवादिकः, तनोत्यादयस्तु "तनु विस्तारे" इत्यादिना पठिष्यन्ते। एतेषामनुनासिकस्य लोपः स्याज्झलादौ क्ङितीति प्रतीयमानार्थः। एवं सति "मुक्त"मित्यादौ

मुचादीनामपि मकारादिलोपः स्यात्। तत्राह-- अनुनासिक इति लुप्तषष्ठीकं पदमिति। एवमप्युक्ताऽतिप्रसङ्गतादवस्थ्यादाह--वनतीतरेषां विशेषणमिति। अनुदात्तोपदेशानां तनोत्यादीनां चेत्यर्थः। तथा च विशेषणत्वात्तदन्तविधावनुनासिकान्तानामनुदात्तोपदेशानां तनोत्यादीनां वनतेश्चेत्येषामन्तस्य लोपः स्यादित्यर्थलाभान्मुक्तमित्यादौ नातिप्रसङ्गः। तदाह--अनुनासिकान्तानामित्यादिना। वनधातोस्तु अनुनासिकान्तत्वान्न विशेषणम्, अव्यभिचारादिति भावः। अत्रानुदात्तोपदेशाननुनासिकान्तान्दर्शयति---यमिरमीति। अनुदात्तोपदेशेषु एतेषामेव षण्णामनुनासिकान्तत्वादिति भावः। अथ तनोतीत्यादीननुनासिकान्तान्दर्शयति-- तनुक्,णुक्षिण्विति। "मनु" इत्यन्तं समाहारद्वन्द्वात्प्रथमैकवचनम्। एतेऽष्टौ तनोत्यादयोऽनुनासिकान्ता इत्यर्थः। "तनु विस्तारे" इत्यारभ्य "डु कृञ् करणे" इत्यन्ता दश धातवस्तनोत्यादयः। तत्रकरोतिरनुनासिकान्तात्वाऽभावादिह न गृह्यते, "जनसनखनां सन्झलो"रिति सनोतेरात्त्वस्य वक्ष्यमाणत्वात्सोऽप्यत्र न गृहीतः। "वनु याचने" इति तनादौ पठितम्। तस्य उविकरणतया, उदित्त्वेन वनतिग्रहणेनाऽग्रहणात्तनादौ पठितस्यापि पृथग्ग्रहणम्। तत्र तानादिकस्य वनेरुदित्त्वात् "उदितो वे"ति क्त्वायामिड्विकल्पात् "यस्य विभाषे"ति निष्ठायामिडभावे वतः वतवानित्युदाहरणम्। वनतेस्तु भौवादिकस्य उदित्त्वाऽभावान्निष्ठायां सेट्कतवेऽपि क्तिनि वतिरित्युदाहरणम्, तत्र "तितुत्रतथसिसुसरकसेषु चे"ति इण्निषेधादित्यलम्। हत इति। तसि अनुदात्तोपदेशानुनासिकान्तत्वान्नकारलोपः, "सार्वधातुकमपि" दिति तसो ङित्त्वात्। घ्नन्तीति। अजादिङित्परकत्वात् "गमहने"त्युपधालोपे "हो हन्ते" रिति कुत्वेन हस्य घः। हसि हथः हथ।

तत्त्व-बोधिनी

अनुदात्तोपदेशवनतितनोत्यादीनमनुनासिक लोपो झलि क्ङिति २२८, ६।४।३७

अनुदात्तोपदेश। यद्यत्र "एतेषामनुनासिकस्य लोप" इति व्याख्यायेत, तदा मन्यतेर्नमूनह्()मिह्()मुच्()मस्जादीनां चानन्त्यस्यापि लोपः स्यात्, तथा च मतः नतः नद्धः। मीढः मुक्तः मग्न इत्यादि न सिध्येत्। अत आह-- लुप्तषष्ठीकमिति। वनतीतरेषामिति। वनतेरव्यभिचाराद्विशेषणं व्यर्थमिति भावः। वतिः। इहि क्तिनि "नेड्वशि कृती"तीण्निषेधाज्झलि क्ङिति न लोपः। लोपः स्यादिति। "अलोऽन्त्यस्ये"त्यन्त्यस्येति भावः। अनुनासिकान्ताऽनुदात्तोपदेशान्दर्शयति--यमिरमीति। तनोत्यादीनप्यनुनासिकान्तान्दर्शयति--- तनुक्षणुक्षिण्विति। करोतिवर्जितास्तनोत्यादयो नव, तन्मध्ये सनोते। "जनसनखना"मित्यात्वं वक्ष्यतीति न स परिगणितः। ततः क्षतः क्षित इत्यादीन्युदाहरणानि। तनोत्यादीनामुदित्वात् क्त्वायामिड्विकल्पनान्निष्ठायां नेट्। अनुनासिकान्तानामिति किम्()। शक्तः। रुद्धः। झलीति किम्?। गम्यते। नम्यते। क्ङितीति किम्?। गन्ता। मन्ता।

तत्त्व-बोधिनी

न संयोगाद्वमन्तात् ३१५, ६।४।३७

यज्वेति। इष्टवान्यज्वा। "सुयजोर्ङ्वनिप्"। ब्राह्मणा इति। "सर्वधातुभ्यो मनि" न्निति प्रकम्य "बृंहर्नोऽच्चेत"ति नस्याऽत्वाविधानाद्ब्रह्मञ्शब्दोऽयं"निष्पन्नः।

---

सूत्रम्

काशिका-वृत्तिः

वा ल्यपि ६।४।३८

ल्यपि परतः अनुदात्तोपदेशवनतितनोत्यादीनाम् अनुनासिकलोपः वा भवति। व्यवस्थितविभाषा च इयम्, तेन

मकारान्तानां विकल्पो भवति, अन्यत्र नित्यम् एव लोपः। प्रयत्य, प्रयम्य। प्ररत्य, प्ररम्य। प्रणत्य, प्रणम्य। आगत्य, आगम्य। आहत्य। प्रमत्य। प्रवत्य। प्रक्षत्य।

न्यासः

वा ल्यपि। , ६।४।३८

अझलाद्यर्थ आरम्भः। "प्रयत्य" इति। प्रादसमासे कृते "समासेऽनञ्पूर्वे क्त्वो ल्यप्? ७।१।३७ "ह्रस्वसय पिति कृति तुक्()" ६।१।६९॥

तत्त्व-बोधिनी

वा ल्यपि १६०२, ६।४।३८

प्रदायेति। "दोदद्घोः"रिति न। प्रखन्येति। "जनसनखना"मित्यात्वं न। प्रस्थायेति। "द्यतिस्यतीतीत्वं न। प्रक्रम्येति। "क्रमश्च क्त्वी"ति दीर्घो न। आपृच्छ्य। प्रदीव्येति। छकारवकारयोश्छ्वोरिति शूठौ च। इडभावस्योदाहरणं तु प्रखन्य प्रदीव्येत्यादावेव बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

न क्तिचि दीर्घश् च ६।४।३९

क्तिचि परतो ऽनुदात्तोपदेशादीनाम् अनुनासिकलोपः दीर्घश्च न भवति। यन्तिः। वन्तिः। तन्तिः। अनुनासिकलोपे प्रतिषिद्धे अनुनासिकस्य क्विझलोः क्ङिति ६।४।१५ इति दीर्घः प्राप्नोति, सो ऽपि प्रतिषिध्यते।

न्यासः

न क्तिचि दीर्घश्च। , ६।४।३९

"यन्तिः" इत्यादि। "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इति क्तिच्()। अत्र चानुदात्तोपदेशादिप्रहणमनुवर्तते, तेन "कान्तिः शान्तिः" इत्यत्र धीर्घप्रतिषेधो न भवति। अनुनासकलोपस्य त्वत्र प्राप्तिरेव नास्ति; उदात्तोपदेशत्वात्()। "अनुनासिकलोपे प्रतिषिद्धे" इत्यादिना दीर्घग्रहणस्य प्रयोजनमाचष्टे। ननु च प्रकरणापेक्षया यदस्मिनप्रकरणे विहितं तन्न भवतीति विज्ञायमानेऽन्तरेणापि दीर्घग्रहणं दीर्घस्यापि प्रतिषेधो भविष्यति, तत्? किं दीर्घग्रहणेन? एवं तह्र्तज्ज्ञापयति--अस्तीयं परिभाषा "अनन्तरसय विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति॥

तत्त्व-बोधिनी

न क्तिचि दीर्घश्च १५८४, ६।४।३९

दीर्घानुनासिकेति। "अनुनासिकस्य क्विझलो"रिति दीर्घस्य र"अनुदात्तोपदेशे"त्यादिनानुनासिकलोपस्य च प्राप्तरिति बोध्यम्। यन्तिरित्यादि। यम उपरमेष रम क्रीडायाम्, वनु याचने, तनु विस्तारे।

---

सूत्रम्

काशिका-वृत्तिः

गमः क्वौ ६।४।४०

गमः क्वौ परतः अनुनासिकलोपो भवति। अङ्गगत्। कलिङ्गगत्। अध्वगतो हरयः। गमादीनाम् इति वक्तव्यम्। इह

अपि यथा स्यात्, संयत्। परीतत्। ऊ च गमादीनाम् इति वक्तव्यम्। अग्रेगूः। अग्रेभ्रूः।

न्यासः

गमः क्वौ। , ६।४।४०

अयमप्यझलाद्यर्थ आरम्भः। "अध्वगतो हरयः" इति। अध्वानं गच्छन्तीति क्विप्(), तदन्तज्जस्()। "गमादीनाम्()" इत्यादि। गमादीनामनुनासिकलोपः क्वौ भवतीत्येतदर्थरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्()--पूर्वसूत्राच्चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेन गमादीनां भविष्यति, न तु गमेरेव केवलस्येति। "संयत्()" इति। संपूर्वाद्? यमेः क्विप्()। "परितत्()" इति। परिपूर्वात्? तनोतेः, "नहिवृति" ६।३।११५ इत्यादिना दीर्घः। "ऊ च" इत्यादि। चकारादनुनासिकलोपः। क्वचिद्? "ऊङ च" इति पठ()ते, तत्र ङकारस्य प्रयोजनं चिन्त्यम्()। अलोऽन्त्यपरिभाषयैवात्र भविष्यति। "अग्रेगूः" इति। गमेः, भ्रमेश्चानुनासिकलोपे कृतेऽकारस्योकारः॥

बाल-मनोरमा

गमः क्वौ ७९६, ६।४।४०

अनुनासिकलोपः स्यादिति शेषपूरणमिदम्। "अनुदात्तोपदेशेटत्यतस्तदनुवृत्तेरिति भावः। झलादिप्रत्ययपरकत्वाऽभावादनुदात्तोपदेशेत्यप्राप्तौ वचनम्। अङ्गगमदिति। अङ्गाख्यं देशं गच्छतीति विग्रहः। क्विपि मकारलोपे तुक्। एवं वङ्गगत्। कलिङ्गगदित्यादि। गमादीनामिति। "क्वावनुनासिकलोप" इति शेषः। पुरीतदिति। पुरिः = ह्मदयाख्यो मांसखण्डविशेषः,तं तनोत = आच्छादयतीति विग्रहः। ह्मदयकमलाच्छादको मेदोविशेषः। "पुरीतता हि ह्मदयमाच्छाद्यते" इति श्रुति"रिति कर्किभाष्यम्। तनेः क्विपि नकालोपे तुक्। "नहि वृत्तिवृषी"ति पूर्वपदस्य दीर्घः। संयदिति। यमेः क्विप्। मलोपे तुक्। सुनदिति। नमेः क्विपि मलोपे तुक्। ऊ चेति। गमादीनामुपधाया ऊभावश्चेति वक्तव्यमित्यर्थः। लोपश्चेति।चकारादनुनासिकलोपः समुच्चीयते इति भावः। अग्रेगूरिति। अग्रे गच्छतीति विग्रहः। गमेरकास्य ऊभावः, मलोपश्च। "तत्पुरुषे कृति बहुल"मित्यलुक्। अग्रेभ्रूरिति। भ्रमेरकारस्य ऊभावः, मलोपश्च।

---

सूत्रम्

काशिका-वृत्तिः

विड्वनोरनुनासिकस्य आत् ६।४।४१

विटि वनि च प्रत्यये परतः अनुनासिकान्तस्य अङ्गस्य आकार आदेशो भवति। अब्जा गोजा ऋतजा अद्रिजा। गोषा इन्दो नृषा असि। कूपखाः। शतखाः। सहस्रखाः। दधिक्राः। अग्रेगा उन्नेतृणाम्। जनसनखनक्रमगमो विट् ३।२।६७ इति विट् प्रत्ययः। सनोतेरनः ८।३।११० इति षत्वम् गोषा इन्दो नृषा असि इत्यत्र। वन विजावा। अग्रेजावा। अन्येभ्यो ऽपि दृश्यन्ते ४।३।७५ इति वनिप् प्रत्ययः। अनुनासिकस्य इति वर्तमाने पुनरनुनासिकग्रहणम् अनुनासिकामात्रपरिग्रहार्थम्, अन्यथा हि अनुदात्तोपदेशवनतितनोत्यादीनाम् एव स्यात्।

लघु-सिद्धान्त-कौमुदी

विड्वनोरनुनासिकस्याऽत् ८०४, ६।४।४१

अनुनासिकस्याऽत्स्यात्। विजायत इति विजावा॥ ओणृ अपनयने॥ अवावा। विच्॥ रुष रिष हिंसायाम्॥ रोट्। रेट्। सुगण्॥

न्यासः

विड्वनोरनुनासिकस्यात्?। , ६।४।४१

"अब्जाः" इति। अप्सु जायत इत्युपपदसमासः, पकारस्य जश्त्वम्()--बकारः। "गोषा" इति। "षणु दाने" (धा।पा।१४६४) "विजवा" इति। "जन जनने" (धा।पा।११०५), "जनी प्रादुर्भावे" (धा।पा।११४९) इति वा। "अग्रेगाव" ["अग्रेजावा" इति काशिका पाठः] इति। "तत्पुरुषे कृति बहुलम्()" ६।३।१३ इति सप्तम्या अलुक्()। अथानुनासिकग्रहणं किमर्थम्(), यावतानुदात्तोपदेशेत्यादेः (६।४।३७) सूत्रादनुनासिकगरहणमनुवर्तत एव? इत्याह--"अनुनासकस्येति वर्तमाने"--इत्यादि। तद्धि प्रकृतमनुनासिकग्रहणमनुदात्तोपदेशग्रहणेन सम्बद्धम्(), अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्()। तस्माददमन्यदनुनासिकग्रहणं क्रियते--अनुनासिकमात्रस्य यथा स्यात्()। अथेह दीर्घोच्चारणं किमर्थम्()? ह्रस्व एवोच्येत, ह्रस्वेऽपि कृते सत्यकः सवर्णे दीर्घत्वेन सिद्ध्यत्येव; "अतो गुणे" ६।१।९४ पररूपत्त्वं प्राप्नोति, अतो न सिद्ध्यतीत्येतन्नाशङ्कनीयम्(), अकारविधानसामथ्र्यात्(); यदि हि "अतो गुणे" पररूपत्वं स्यात्(), तदा प्रकृतं लोपग्रहणमेव विदध्यात्? ततो ह्रस्व एव कर्तव्र्यः। नैतदस्ति; ह्रत्वे हि सति "घुण धूर्णने" (धा।पा।४३७) ["भ्रमणे"--धा।पा।] इत्यस्माद्वनिपि विहिते "ध्वावा" इति न सिद्ध्येत्()? ततो दीर्घस्यैव विधानं युक्तम्()॥

बाल-मनोरमा

विड्वनोरनुनासिकस्याऽऽत् ७९२, ६।४।४१

विड्वनोरनुनासिकस्याऽऽत्। विड्वनोरिरिति सप्तमी। अनुनासिकस्य-- आदिति छेदः। विजावेति। जनेर्वनिप्। जनेर्नकारस्य आकारः। सवर्णदीर्घः। अवावेति। ओणेर्वनिप्। णकारस्य आकारः। अवादेशः। विजिति। "उदाह्रियते" इति शेषः। रोट् रेडिति। "रुष, रिष हिंसायाम्" विच्। "वेरपृक्तस्ये"ति वलोपः। सुगण्णिति। गमएर्विच्।

तत्त्व-बोधिनी

विड्वनोरनुनासिक्सयाऽऽत् ६५७, ६।४।४१

अवावेति। अनुनासिकस्य आत्वे अवादेशः। सौ दीर्घनलोपौ। रोट् रेडिति। रुष रिष हिंसायाम्। उपधागुणः। जश्त्वचर्त्वे।

---

सूत्रम्

काशिका-वृत्तिः

जनसनखनां सञ्झलोः ६।४।४२

झलि क्ङिति इति च अनुवर्तते। जन सन खन इत्येतेषाम् अङ्गानां सनि झलादौ क्ङिति झलादौ प्रत्यये परतः आकार आदेशो भवति। जन् जातः। जातवान्। जातिः। सन् सनि सिषासति। सातः। सातवान्। सातिः। खन् खातः। खातवान्। खातिः। झल्ग्रहणं सन्विशेषणार्थं किमर्थम् अनुवर्त्यते? इह मा भूत्, जिजनिषति। सिसनिषति। चिखनिषति। सनोतेः सनीवन्तर्ध इति पक्षे इडागमः। तदिह सनोत्यर्थम् एव सङ्ग्रहणम्। अत्र झलादौ क्ङिति सनोतेर् विप्रतिषेधादात्वम् अनुनासिकलोपं बाधते। घुमस्थागापाजहातिसां हलि ६।४।६६ इति हल्ग्रहणम् ज्ञापकम् अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवति इति।

लघु-सिद्धान्त-कौमुदी

जनसनखनां सञ्झलोः ६७९, ६।४।४२

एषामाकारेऽन्तादेशः स्यात् सनि झलादौ क्ङिति। असात, असनिष्ट॥ क्षणु हिंसायाम्॥ ३॥ क्षणोति, क्षणुते॥ ह्म्यन्तेति न वृद्धिः। अक्षणीत्, अक्षत, अक्षणिष्ट। अक्षथाः, अक्षणिष्ठाः॥ क्षिणु च॥ ४॥ अप्रत्यये लघूपधस्य गुणो वा। क्षेणोति, क्षिणोति। क्षेणिता। अक्षेणीत्, अक्षित, अक्षेणिष्ट॥ तृणु अदने॥ ५॥ तृणोति, तर्णोति; तृणुते, तर्णुते॥ डुकृञ् करणे॥ ६॥

करोति॥

न्यासः

जनसनखनां सञ्झलोः। , ६।४।४२

"झलि क्ङिति चानुवर्तते" इति। यथाक्रमं सनो झलश्च विशेषणम्? सूत्रोपात्तेन तु झल्ग्रहणेन न शक्यते सन्? विशेषयितुम्(), विशेषणं ह्रप्राधानं भवति, विशेष्यन्तु प्रधानम्()। "सञ्झलोः" इति चार्य द्वन्द्वः। तत्र सर्वेषां द्वन्द्वपदानां प्राधान्यादन्योऽन्यं प्रधानगुणभावो नोपपद्यते। सन्ग्रहणञ्चाक्ङिदर्थम्()। "तदिह" इत्यादि। यस्मात्? सनोतेः पक्ष इडागमस्तस्मात्? तत एव परो झलादिः सन्? सम्भवतीति तदर्थमेव सन्ग्रहणम्(), न तु जनखनार्थम्()। न हि ताभ्यां परो झलादिः सन्? सम्भवति, तयोर्नित्यं सेट्त्वात्()। यद्येवं, सनोतेः सनि कृतार्थत्वादात्वं न स्यात्(), अन्यत्र निष्ठादौ झलादौ क्ङितिप्रत्यये "अनुदात्तोपदेशः" (६।४।३७) इत्यादिना नलोपः स्यात्()? इत्यत आह--"अन्यत्र" इत्यादि। सनोतेस्तनोत्यादिषु पाठस्यावकाशोऽन्यत्? तनादिकं कार्यम्()--"तनादिभ्यस्तथासोः" २।४।७९ इत्यादि, आत्वविधौ च सन्ग्रहणस्यावकाशः--सन्(), सिषासतीति; इहोभयं प्राप्नोति--सातः, सातवानिति। अत्रानुनासिकलोपं बाधित्वाऽऽत्वं भवति विप्रतिषेधेन। ननु चोभयः सिद्धयोर्विप्रतिषेधो भवति, इह च "असिद्धवदत्रा भात्()" ६।४।२२ इत्युभयमप्यसिद्धम्(), तत्? कुतो विप्रतिषेधः? इत्यत आह--"घुमास्थागा" इत्यादि। कथं कृत्वा ज्ञापकम्()? हल्ग्रहणस्यैतदेव प्रयोजनम्()--हलादावीत्वं यथा स्यात्(), इह मा भूत्()--"आतोऽनुपसर्गे कः" ३।२।३ गोदाः, कम्बलद इति यदि चात्र विप्रतिषेधः? इत्यत आह--"घुमास्थागा" इत्यादि। कथं कृत्वा ज्ञापकम्()? हल्ग्रहणस्यैतदेव प्रयोजनम्()--हलादावीत्वं यथ#आ स्यात्(), इह मा भूत्()--"आतोऽनुपसर्गे कः" ३।२।३ गोदः, कम्बलद इति। यदि चात्र विप्रतिषेधो न स्याद्? हल्ग्रहणमनर्थकं स्यात्()। अस्त्वत्रेत्वम्(), तस्यासिद्धत्वाल्लोपो भविष्यत। पश्यति त्वाचार्यः--भवतीह प्रकरणे विप्रतिषेध इति; यतो हल्ग्रहणं करोति। ननु चासति हल्ग्रहणेऽजादावपीत्वं स्यात्(), ततश्चेपङः प्रसज्येतेत्यनिष्टं रूपमापद्येत। तस्मादनिष्टनिवृत्त्यर्थत्वाद्धल्ग्रहणस्य न युज्यते ज्ञापकत्वम्()? नैष दोषः; असिद्धत्वादेवेत्वस्येयङादेशो न भविष्यति। व्यवस्थार्थं तर्हि हल्ग्रहणं स्यात्(), असति हि तस्मिन्नीत्वस्यासिद्धत्वा दाल्लोपः, आकारलोपस्यासिद्धत्वादीत्वमीति चक्रवद्व्यवस्था स्यात्()? एतदप्यप्रयोजनम्(), यदि व्यवस्थार्थं हल्ग्रहणं स्यात्(), नैवायं हल्ग्रहँ कुर्वीत। अविशेषेणेकारमुक्त्वा तस्याजादौ लोपमपवादं विदध्यात्()। तत्? कथमिदमस्तु "आतो लोप इटि च" (६।४।६४) इति? ततः "धुमास्थागापाजहातिसाम्()" ६।४।६६ आकारलोपो भवतीटयजादौ च क्ङिति। किमर्थमिदम्()? प्रत्ययमात्रे ध्वादीनां यदीत्वं वक्ष्यते, तस्यायमिट()जादौ च क्ङित्यपदादः, ततः "ईत्()" ६।४।६८ इतीत्वं भवति घादीनामनचि क्ङिति, ततः "एर्लिङि" ६।४।३७ "दान्यस्य संयोगादेः" ६।४।६८ "न ल्यपि" ६।४।६९, "मयतेरिदन्यतरस्याम्()" ६।४।७०; ततो यतीत्वं भवति--सोऽयमेव लगीयसा न्यासेन सिद्धे यद्धल्ग्रहणं करोति, तज्ज्ञापयत्याचार्यः--"भवतीह विप्रतिषेधः" इति॥

बाल-मनोरमा

जनसनखनां सन्झलोः ५०२, ६।४।४२

जनसन।"विडवनो"रितय्त आदित्यनुव्रतते। तदाह--एषामाकारोऽन्तादेश इति। सन् झल् इत्यनयोद्र्वन्द्वात्सप्तमीद्विवचनम्। सनि झलि चेति लभ्यते। "अनुदात्तोपदेशे"त्यतो झलिक्ङितीत्यनुवर्तते। तत्र झलीत्यनुवृत्तेन सन् विशेष्यते। तदादिविधिः। झलादौ सनीति लभ्यते। क्ङितीत्यनुवृत्तं त्वेत्सूत्रस्थेन झला विशेष्यते। तदादिविधिः। झलादौ क्ङितीति लभ्यते। तथाच झलादौ सनीति, झलादौ क्ङितीति च परनिमित्तद्वयं लब्धम्। तदाह--झलादौ सनि झलादौ क्ङिति चेति। सन्विशेषणं झलादाविति किम्?। जिजनिषति। सिसनिषति। चिखनिषति। अथ क्ङितोर्झल्विशेषमस्य प्रयोजनमाह-- जज्ञतीति। जनन् अतीति स्थिते अतेर्ङित्त्वेऽपि झलादित्वाऽभावादात्वाऽभावे

"गमहने"त्युपधालोपे नकारस्य श्चुत्वेन ञकार इति भावः "जनसनखनां स"नित्याश्रित्य योगविभागेन उक्तार्थसिदिं()ध चाश्रित्य झलग्रहणं त्वत्र सूत्रे प्रत्याख्यातं भाष्ये। जजंसीति। "नश्चे"त्यनुस्वारः। जजाथः जजाथ। जजन्मि जजन्वः जजन्मः। जजानेति। जज्ञतुः। सेडयम्। जजनिथ जज्ञथुः।जज्ञिव। जनिता। जनिष्यति। जजन्तु--जजातात्। जजाहि। जजनानि। अजजम् अजजाताम्। अजज्ञुः। अजजनम् अजजन्व। विधिलिङि "ये विभाषे"ति मत्वाह--जजायात् जंजन्यादिति। अजनीत्--अजानीत्।अजनिष्यत्। गा स्तुतौ। देवान् जिगातीति। "भृञामि"दित्यत्र "बहुलं छन्दसी"ति वचनादभ्यासस्येत्वमिति भावः। जिगीत इति। "ई हल्यघो"रिति ईत्वम्। जिगतीति। अभ्यस्तत्वाददादेशे "श्नाभ्यस्तयो"रित्याल्लोपः। जिगासि जिगीथः जिगीथ। जिगामि जिगीवः। जगौ जगतुः। जगिव। गाता। गास्यति। जिगातु-- जिगीतात् जिगीताम् जिगतु। जिगीहि। जिगानि। अजिगात् अजिगीताम् अजिगुः। अजिगाः। अजिगाम् अजिगीव जिगीयात्। आशिषि--गेयात्। अगासीत्। अगास्यत्। इति जुहोत्यादयः।

॥ इति बालमनोरमायाम् जुहोत्यादयः॥

अथ तिङन्ते कण्ड्वादयः।

तत्त्व-बोधिनी

जनसनखनां सन्झलोः ४३०, ६।४।४२

जनसनखनाम्()। जन जनने, जनी प्रादुर्भावे इत्युभयोरपि ग्रहणम्। झलादौ सनि सिषासति। जज्ञतीति। "गमहने"त्युपधालोपः। जजायादिति। "ये विभाषे"ति वा आत्वम्। एवं जायादित्यत्रापि। जिगातीति। "रबहुलं छन्दसी"ति इत्वम्।

इति तत्त्वबोधिन्याम् जुहोत्यादयः।

अथ कण्ड्वादयः

---

सूत्रम्

काशिका-वृत्तिः

ये विभाषा ६।४।४३

यकारादौ क्ङिति प्रत्यये परतो जनसनखनाम् आकार आदेशो भवति विभाषा। जायते, जन्यते। जाजायते, जञ्जन्यते। सायते, सन्यते। सासायते, संसन्यते। खायते, खन्यते। चाखायते, चङ्खन्यते। जनेः श्यनि ज्ञाजनोर् जा ७।३।७९ इति नित्यं जादेशो भवति।

लघु-सिद्धान्त-कौमुदी

ये विभाषा ६७८, ६।४।४३

जनसनखनामात्वं वा यादौ क्ङिति। सायात्, सन्यात्॥

न्यासः

ये विभाषा। , ६।४।४३

असज्झलाद्यर्थ आरम्भः। "जायते, जन्यते" इति। भावे लकारः। "जाजायते" इति। यङ्(), "दीर्घोऽकितः" ७।४।८३

इत्यभ्यासस्य दीर्घत्वम्()। "जञ्जन्यते" इति। "नुगतोऽनुनासिकान्तस्य" ७।४।८५ नुगागमः "सायते, सन्यते" इति। भावे कर्मणि वा लकारः। जनेः श्यन्यपि विभाषाऽऽत्त्वेन भवितव्यमिति कस्यचिद्? भ्रान्ति स्यात्(), अतस्तां निराकर्तुमाह--"जनेः श्यनि" इत्यादि। जनेर्दिवादित्वात्? श्यनि विहिते सत्युमयं प्राप्नोति, अनेन विभाषाऽऽत्त्वम्(), "ज्ञाजनोर्जा" ७।३।७९ इति जाभावश्च, तत्र जादेशस्यानवकाशत्वात्? स एव नित्यं भवति। तेन श्यनि "जायते" इत्येवं नित्यं भवति, न तु कदाचित्? "जन्यते" इति॥

बाल-मनोरमा

ये विभाषा १५९, ६।४।४३

आशीर्लिङि विशेषमाह-- ये विभाषा। "जनसनखनां सञ्झलो"रित्यतो जनसनखनाभित्यनुवर्तते। अनुदात्तोपदेशेत्यतः क्ङितीति। "ये" इति तद्विशेषणम्। अकार उच्चारणार्थः। तदादिविदिः। "विड्वनोरनुनासिकस्या"दित्यत आदित्यनुवर्तते। तदाह--जनसनखनामित्यादिना। सायादिति। नकारस्य आत्वे सवर्णदीर्घः। द्रम हम्म। आद्योऽदुपधः। न वृद्धिरिति। "अद्रमी"दित्यत्र हलन्तलक्षणायां वृद्धौ "नेटी"ति निषिद्धायां , "हम्यन्ते"त्यतोऽतो हलादेरिति वृद्धिर्नेत्यर्थः। जहम्मेति। अभ्यासचुत्वेन हस्य झः। तस्य "अभ्यासे चर्चे"त्यनेन जः। मिमीमेति। मीमृधातोर्णलि द्वित्वे अभ्यासह्यस्वः। अयं शब्दे चेति। मीमृधातुरित्यर्थः।

तत्त्व-बोधिनी

टेः २७६, ६।४।४३

टेः। "ति विशते"रित्यतो--"ङिती"त्यनुवर्कतते, "भस्ये"ति चाधिकृतं। तदाह---डिति परे भस्येति। भस्य किम्(), पञ्चमः। अत्र डटो मडागमे भत्वाऽभावाट्टिलोपो न भवति। किंतु पदत्वान्नलोप एव। अद्डो डित्करणस्य प्रयोजनमाह---टेर्लुप्तत्वादित्यादि। ननु पूर्वसवर्णदीर्घाऽभावाय दादेश एव क्रियतां किमद्जादेसेनेत्याशङ्क्याह----एङ्ह्यस्वादित्यादि। दादेशे तु "हे कतरे"ति स्यादिति भावः। अन्यतमशब्दस्य त्विति। एवञ्च "सामान्यादिष्वन्यतमतमः"इत्यादिप्रयोगाः प्रामादिका एवेति भावः।

एकतरात्प्रतिषेधो वक्तव्यः। अजरमिति। अविद्यमाना जरा यस्य तत्। "गोस्त्रियो"रित्युपसर्जनह्यस्वे "अतोऽम्"। परत्वादिति। "अजर शि"इति स्थिते यद्यपि जरसादेशात्प्रागेव "नपुंसकस्य झलचः"इत्यजन्तलक्षणो नुमागमः स्यात्स चाङ्गभक्तोऽङ्गमेव न व्यवदध्यात्, अवयवस्य तु जराशब्दस्य व्यवधायक एवेति निर्दिश्यमानस्यादेशो विधीयमानो न प्राप्नोति, तथापि "यस्मादन्त्यादचः परस्तस्यैवान्तावयवोमित्स्या"दिति स्वमते त्ववयवावयवः समुदायस्याप्यवयव इत्यभ्युपगमेन कथञ्चिज्जरसादेशे जातेऽपि सान्तत्वाऽभावात् "सान्तमहतः"इति दीर्घो न स्यादिति भावः।

तत्त्व-बोधिनी

ये विभाषा १३३, ६।४।४३

गत्यादिष्विति। गतिशब्दसंभवक्तिष्वित्यर्थः। मीमृ। ऋदित्फलं तु "नाग्लोपी"ति निषेधः। अमिमीमत्।

---

सूत्रम्

काशिका-वृत्तिः

तनोतेर्यकि ६।४।४४

तनोतेः यकि परतो विभाषा आकार आदेशो भवति। तायते, तन्यते। यकि इति किम्? तन्तन्यते।

लघु-सिद्धान्त-कौमुदी

तनोतेर्यकि ७५८, ६।४।४४

आकारोऽन्तादेशो वा स्यात्। तायते, तन्यते॥

न्यासः

तनोतेर्यकि। , ६।४।४४

बाल-मनोरमा

तनोतेर्यकि ५८५, ६।४।४४

तनोतेर्यकि। "विड्वनोरित्यत आदिति, "ये विभाषे"त्यतो विभाषेति चानुवर्तते। तदाह-- आकारोऽन्तादेशो वा स्यादिति। शेषपूरणमिदम्। तायते तन्यते इति। कर्मणि लकारः।

तत्त्व-बोधिनी

तनोतेर्यकि ४८०, ६।४।४४

तनोतेर्यकि। "विड्वनो"रिति सुत्रादादिति, "ये विभाषे"त्यतो विभाषेति चानुर्तते। यकि किम्?। तंतन्यते।

---

सूत्रम्

काशिका-वृत्तिः

सनः क्तिचि लोपश् च अस्य अन्यतरस्याम् ६।४।४५

सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति, लोपश्च अस्य अन्यतरस्याम्। सातिः, सन्तिः, सतिः। अन्यतरस्यांग्रहणम् विस्पष्टार्थम्, येसम्बद्धं हि विभाषाग्रहणम् इति निवृत्तम् इत्याशङ्क्येत।

न्यासः

सनः क्तिचि लोपश्चास्यान्यतरस्याम्?। , ६।४।४५

अस्यग्रहणमनन्तरस्य क्तिचो लोपो मा भूत; व्यवहितस्यापि नलोपो यथा स्यादित्येवमर्थम्()। अथ क्रियमाणेऽप्यस्यग्रहणे कस्मादेव क्तिचो लोपो न भवति? अस्यग्रहणसामथ्र्यात्()। अथान्यतरस्यांग्रहणं किमर्थम्(), यावता "विभाषा" (६।४।४६) इत्यनुवर्तते? इत्याह--"अन्यतरस्यांग्रहणम्()" इत्यादि। कथं पुनर्विभाषाग्रहणस्य निवृत्तिराशङ्क्यते, यतो विस्पष्टार्थमन्यतरस्यांग्रहँ कृतम्? इत्याह--"यकारसम्भन्धं हि" [ये सम्बबद्धं हि--काशिका] इत्यादि। तद्विभाषाग्रहणं यकारादिप्रत्ययस्य सम्बन्धेन। इह च "ये" इत्येतस्मिन्? निवृत्ते क्तिचो निमित्तान्तरस्योपादानातदतस्तान्निवृत्तौ विभाषाग्रहणमपि निवृत्तमिति कस्यचिदाशङ्का स्यात्(), अतो विस्पष्टार्थमन्यतस्यांग्रहणं क्रियते॥

---

सूत्रम्

काशिका-वृत्तिः

आर्धधातुके ६।४।४६

आर्धधातुके इत्यधिकारः। न ल्यपि ६।४।६९ इति प्रागेतस्माद् यदित ऊर्ध्वम् अनुक्रमिष्यामः आर्धह्दातुके इत्येवं तद् वेदितव्यम्। वक्ष्यति अतो लोपः ६।४।४८। चिकिर्षता। जिहीर्षिता। आर्धधातुके इति किम्? भवति। भवतः। अदिप्रभृतिभ्यः शपो लुग्वचनं २।४।७२ प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यातित्येतन् न ज्ञापकं शपो लोपाभावस्य। यस्य हलः ६।४।४९। बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। आर्धधातुके इति किम्? बेभिद्यते। णेरनिटि ६।४।५१। कारणा। हारणा। आर्धधातुके इति किम्? कारयति। हारयति। आतो लोप इटि च ६।४।६४। ययतुः। ययुः। ववतुः। ववुः। आर्धधातुके इति किम्? यान्ति। वान्ति। घुमास्थागापाजहातिसां हलि ६।४।६६। दीयते। धीयते। आर्धधातुके इति किम्? अदाताम्। अधाताम्। वा ऽन्यस्य संयोगादेः ६।४।६८। स्नेयात्, स्नायात्। आर्धधातुके इति किम्? स्नायात्। आशीर्लिङो ऽन्यत्र न भवति। स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशे ऽज्झनग्रहदृशां वा चिण्वदिट् च ६।४।६२। कारिषीष्ट। हारिषीष्ट। आर्धधातुके इति किम्? क्रियेत। ह्रियेत यगन्तस्य अजन्तत्वाच् चिण्वद्भावे सति वृद्धिः स्यात्, ततश्च युक् प्रसज्येत। अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम्। आल्लोप ईत्वम् एत्वम् च चिण्वद्भवश्च सीयुटि।

न्यासः

आर्धधातुके।, ६।४।४६

"चिकीर्षिता" इति। सन्नन्तात्? तुच्()। "भवति, भवतः" इति। "आर्धधातुके" इत्यधिकारात्? सार्वधातुकेऽत्र शपो लोपो न भवति। यद्यत्र शपो लोपो मा भूदित्येवमर्थ आर्धधातुकाधिकारः क्रियते, तर्हि न कर्तव्यः, ज्ञापकादेव शपो लोपो न भविष्यति, आचार्यप्रवृत्तिज्र्ञापयति--"नानेन शपो लोपो भवति" इति यदयम्? "अदिप्रभृतिभ्यः शपः" (२।४।७२) इति शपो लुकं शस्ति? इत्यत आह--"अदिप्रभृतिभ्यः" इत्यादि। इतिकरणो हेतौ। असति हि प्रयोजने ज्ञापकं भवति। अस्ति चादिप्रभृतिभ्यः शपो लुग्वचनस्य प्रयोजनम्()। किं तत्()? "वित्तः" इत्यत्र गुणो मा भूत्()। यदि "वित्तः" इत्यत्र लोपः स्यात्(), प्रत्ययलक्षणेन "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः स्यात्()। "मृष्टः" इत्यत्र "मृजेर्वृद्धिः" ७।२।११४ लुकि तु सति न भवति, "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणप्रतिषेधात्()। तस्माददिप्रभृतिभ्यः शपो लुग्वचनं प्रत्ययलक्षमप्रतिषेधार्थं स्यादिति न ज्ञापकं शपो लोपाभावस्य। "बेभिदिता" इति। यङो लोपः। "बेभिद्यते" इत्यत्र शपि सार्वधातुके न भवति। "कारणा" इति। "ण्यासश्रन्थो युच्()" ३।३।१०७। "कारयति" इति शपि सार्वधातुके न भवति। "पपतुः, पपुः"। "ववतुः" ववुः" इति। अतुसुसौ। पातेर्वातेश्च "आतो लोप इटि च" ६।४।६४ इत्यकारलोपः। "दीयते धीयते" इति। आर्धधातुके यकीत्त्वम्()। "अदाताम्? अधाताम्()" इति। लुङ, "तस्थस्थ" ३।४।१०१ इति तसस्ताम्(); "गातिस्था" २।४।७७ इत्यादिना सिचो लुक्()। "स्नायात्(), स्नेयात्()" इति। स्नातेराशिषि लिङ, तस्य "लिङाशिषि" ३।४।११६ इत्यार्धधातुकसंज्ञा, यासुट्(), "स्कोः संयोगाद्योः" ८।२।२९ इत्यादिना सकारलोपः। "आशीर्लिङोऽक्यत्र न भवति" इति। आशीर्लिङोऽन्यद्? विष्यादिलिङः, तत्र न भवति; तस्य सार्वधातुकसंज्ञकत्वात्()। तेन तत्र नित्यं "स्नायात्()" इत्येवं भवति। अत्र "लिङः सलोपोऽनन्त्यस्य" ७।२।७९ इति सकारलोपः। "कारिषीष्ट" इति। आशिषि लिङः, सीयुट्(), "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्(), "सुट्? तिथोः" (३।४।१०७) इति सुट्? चिण्वद्भावाद्वृद्धिः। "क्रियेत" इति। विष्यादिलिङः। पूर्ववदात्मनेपदम्(), सार्वधातुके यक्(), सीयुडीकरेण सह "आद्गुणः" ६।१।८४ "लोपो व्योर्वलि" ६।१।६४ इति यकारलोपः, "रिङशयग्लिङक्षु" ७।४।२८ इति रिङादेशः। अत्र चिण्वद्भादेन यो दोषः स्यात्? तं "यगन्तस्य" इत्यादिना दर्शयति। यद्यत्र चिण्वद्भावात्? वृद्धिः स्यात्(), ततश्च "आतो युक्? चिण्कृतोः" (७।३।३३) इति युक्? प्रसज्येत। "अतो लोपो यलोपश्च" इत्यादि। आर्धधातुकाधिकारप्रयोजनसंग्रहश्लोकः। गतार्थः। नन्वत्र "भ्रस्जो रोपधयो रमन्यतरस्याम्()" ६।४।४७ इति रम्(), "दीङो युडचि क्ङिति" ६।४।६३ इति युडार्धधातुकाधिकार एव विधास्यते, तत्? कस्मात्? तौ तत्र प्रयोजनत्वेन नोपात्तौ? एवं मन्यते--भ्रस्जो रम्भाव आर्धधातुकाधिकारं न प्रयोजयति, स, तु तुदादौ पठ()ते, ततः सार्वधातुके परतः शेन भवितव्यम्()। शे च सति पूर्वविप्रतिषेधाद्? ग्रहिजयादि ६।१।१६ सूत्रेण सम्प्रसारणेन

भवितव्यम्()। युडपि नैव प्रयोजयति, दीङो हि दिवादित्वात्? सार्वधातुके श्यना भवितव्यम्()। ततोऽजादित्वाभावादेव युडागमस्याभाव एव। "आर्धधातुके" इति यदार्धधातुकसामान्यं विवक्ष्यते, तदा सामान्ये पौर्वापर्यासम्भवात्? विषयसप्तमीयम्()। यदार्धधातुकव्यक्तिस्तदा परसप्तमी। प्रतिपादितञ्चास्मभिः "न धातुलोपः" १।१।४ इत्यत्र ज्ञापकद्वारेण परसप्तमीत्वं विषयसप्तमीत्वञ्चास्येति॥

---

सूत्रम्

काशिका-वृत्तिः

भ्रस्जो रौपधयो रम् अन्यतरस्याम् ६।४।४७

भ्रस्जो रेफस्य उपधायाश्च रम् अन्यतरस्यां भवति। रोपधयोः इति स्थानषष्ठीनिर्देशातुपधा रेफश्च निवर्तेते। मित्त्वाच् च अयम् अचो ऽन्त्यात्परो भवति। भ्रष्टा, भर्ष्टा। भ्रष्टुम्, भर्ष्टुम्। भ्रष्टव्यम्, भर्ष्टव्यम्। भ्रजजनम्, भ्र्जनम्। भृष्टः, भृष्टवानित्यत्र पूर्वविप्रतिषेधेन सम्प्रसारणं भवति। उपदेशे इत्येव, बरीभृज्यते।

लघु-सिद्धान्त-कौमुदी

भ्रस्जो रोपधयो रमन्यतरस्याम् ६५५, ६।४।४७

भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके। मित्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज। बभर्जतुः। बभर्जिथ, बभर्ष्ठ। बभ्रज्ज। बभ्रज्जतुः। बभ्रज्जिथ। स्कोरिति सलोपः। व्रश्चेति षः। बभ्रष्ठ। बभर्जे, बभ्रज्जे। भर्ष्टा, भ्रष्टा। भर्क्ष्यति, भ्रक्ष्यति। क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन। भृज्ज्यात्। भृज्ज्यास्ताम्। भृज्ज्यासुः। भर्क्षीष्ट, भ्रक्षीष्ट। अभार्क्षीत्, अभ्राक्षीत्। अभर्ष्ट, अभ्रष्ट॥ कृष विलेखने॥ ४॥ कृषति कृषते। चकर्ष, चकृषे॥

न्यासः

भ्रस्जो रोपधयो रमन्यतरस्याम्?। , ६।४।४७

रमयं यदि रेफोपधयोः स्थाने स्यात्? मित्त्वमनर्थकं स्यात्? अथायं रमागमोऽचोऽन्यात्? परो भवति रेफोपधयोः अवणमापद्येत? इत्येतच्चोद्यमाशङ्क्याह--"रोपधयोः" इत्यादि। मित्त्वाद्रमनेनावश्यमचोऽन्त्यात्? परेण भवितव्यम्(), अन्यथा तदनर्थकं स्यात्()। तत्र यदि रेफोपधयोः श्रवणं स्यात्? "रोपधयोः" इति षष्ठीनिर्देशोऽनर्थकः स्यात्()। तस्मात्? षष्ठीनिर्देश एव तयोर्निवृत्तिमाचष्टे। तस्या ह्येतदेव प्रयोजनम्()--षष्ठ()आ निर्दिरुयमानस्य यो धर्मो निवृत्तिः, सा यथा स्यात्()। न ह्यन्यत्? षष्ठीनिर्देशस्य प्रयोजनमस्ति। तस्मान्मित्त्वादचोऽन्त्यापरो भवति रम। षष्ठीनिर्देशसामश्र्याद्? रेफोपधे स्थानिधर्मनिवृत्तिं()त प्रतिपद्येते। "भ्रष्टा" इति। "भ्रस्ज पाके" (धा।पा।१२८४) व्रश्चादिसूत्रेण ८।२।३६ षत्वम्()। "भ्रज्जनम्()" इति। सकारस्य जश्त्वम्()--दकारः, तस्यापि श्चुत्वम्()--जकारः। अथेह कस्मान्न भवति--भृष्टः, भृष्टवान्()? इत्याह--"भृष्टः, भृष्टवान्()" इत्यादि। रमोऽवकाशः--भर्ष्टा, भ्रष्टाः सुम्प्रसारणस्यावकाशः--"भृज्जति" इति, इहोभयं प्राप्नोति--भृष्टा, भृष्टवानिति, ग्रह्यादिसूत्रेण ६।१।१६ सम्प्रसारणमेव भवति पूर्वविप्रतिषेधेन। पूर्वविप्रतिषेधश्चेष्टवाचित्वात्? परशब्दस्य लभ्यते। "बरीभृज्यते" इति। यङ्। "रीगृदुपधस्य" ७।४।९० इति रोगागमः। "अत्र उपदेश" ६।४।४५ इत्यतो हि यदन्तरस्यांग्रहणं प्रकृतं, तत्? सनादिसम्बद्धम्(), इह च सनादेर्निवृत्तिः। अतस्तन्निवृत्तौ तस्यापि निवृत्तिराशङ्क्येत। अनन्तरयोगस्य चान्यार्थत्वात्(), तत्रान्यतरस्यांग्रहणस्य प्रयोजनाभावात्()। अथ भ्रस्जो भर्जेत्येवं कस्मान्नोक्ततम्()? अशक्यमेवं वक्तुम्()। एवं ह्युच्यमाने "प्रकृतिग्रहणे यङलुगन्तस्यापि ग्रहणं भवति" (व्या।प।७७) इति यङ्लुगन्तादार्थधातुक उत्पन्ने सत्यभ्यासस्य भ्रस्जो भर्ज्जादेशः

स्यात्()? नैष दोषः; उपदेशग्रहणेन भ्रज्जिं विशेषयिष्यामः--"उपदेश यो भ्रज्जिः" इति। श्तिपा निर्देशोऽत्र वा करिष्यते-- भृज्जतेर्भजं इति; तेन यङःलुगन्तस्य ग्रहणं न भविष्यति। एतमपि "भुज्जयते" इत्यत्र प्राप्नोति, भवति ह्यत्रोपदेशे भ्रस्जिरिति? नैतदस्ति; अत्र हि पूर्वविप्रतिषेधात्? सम्प्रसारणेन भवितव्यम्(), यथा--भृष्ट इत्यत्र। एवं तर्हि वैचित्र्यार्थ तथा नोक्तम्()॥

बाल-मनोरमा

भ्रस्जो रोपधयो रमन्यतरस्याम् ३६५, ६।४।४७

भ्रस्जो रोपधयोः। "भ्रस्ज" इत्यवयवषष्ठी। "रोपधयो"रिति स्थानषष्ठी। रश्च उपधा च तयोरिति विग्रहः। रेफादकार उच्चारणार्थः। रेफस्य उपधायाश्च स्थाने इति लभ्यते। "आद्र्धधातुके" इत्यधिकृतम्। तदाह -- भ्रस्जो रेफस्येत्यादिना। रमि मकार इति। अकार उच्चारणार्थःतदाह -- मित्त्वादन्त्यादचः पर इति। तथा च रेफाऽकारादुपरि सकारात् प्राक् रेफ आगम इति फलितत्। भ्र र् स् ज् अ इति स्थितम्। ननु रम आगमत्वे "रोपधयो"रिति कथं स्थानषष्ठीनिर्देश इत्यत आह-- स्थानेति। स्थानं -- प्रसङ्गः। रेफस्य उपधायाश्च उच्चारणप्रसङ्गे सति अकारादुपरि रेफः प्रयोज्यः। भकारादुपरि रेफो जकारात्प्राक्सकारश्च न प्रयोज्याविति लब्धम्। तथा च तयोर्निवृत्तिः फलितेति भावः। एवं च भर्ज् अ इति स्थिते द्वित्वादौ रूपमाह - बभर्जेति।अतुसादावपि संयोगात्परत्वात्कित्त्वाऽभावात् "ग्रहिज्ये"ति संप्रसारणं न भवति। भारद्वाजनियमात्थलि वेडितिमत्वाऽऽह - बभर्जिथ बभर्ष्ठेति। इडभावपक्षे बर्भज् थ इति स्थिते "व्रश्च" इति जस्य षः। ष्टुत्वेन थस्य ठ इति भावः। बभर्जिव। लिटस्तङ्याह - बभर्जे इति। बभर्जाते इत्यादि सुगमम्। रमभावे आह -- बभ्रज्जेति। णलि भ्रस्ज् अ इति स्थिते द्वित्वे हलादिशेषे अभ्यासजश्त्वे बभ्रस्ज् अ इति स्थिते सस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारैति भावः। "लिट()भ्यासस्ये"ति संप्रासरणस्य न प्रसक्तिः, अभ्यासे हलादिशेषेण रेफाऽभावात्। बभ्रज्जतुरिति। संयोगात्परत्वादकित्वात् "ग्रहिज्ये"ति न संप्रसारणमिति भावः। बभ्रज्जिथेति। थलिभारद्वाजनियमादिट्पक्षे रमभावपक्षे लिटस्तह्राह-- बभ्रज्जेति। बभ्रज्जाते। बभ्रज्जिषे। इत्यादि सुगमम्। भ्रष्टेति। रमभावपक्षे रूपम्। भर्ष्टेति। रमागमे भर्ज् ता इति स्थिते जस्य "व्रश्च" इति षः, ष्टुत्वेन तकारस्यट इति भावः। एवं -- भ्रक्ष्यति भक्ष्र्यतीति। "षढो"रिति कत्वे सस्य षत्वमिति विशेषः। भृज्जतु।अभृज्जत्। भृज्जेत्। ननु आशीर्लिङि भ्रस्ज् यादिति स्थिते यासुटः कित्त्वात् "ग्रहिज्ये"ति संप्रसारणे पूर्वरूपे सकारस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारे भृज्ज्यादिति रूपं वक्ष्यति। तदयुक्तम्। संप्रसारणं बाधित्वा परत्वाद्रमागमे कृते भर्ज्यादिति प्रसङ्गादित्यत आह-- क्ङिति रमागममिति। आशीर्लिङस्तङि सीयुटि रमागमपक्षे आह-- भर्क्षीष्टेति। रमभावे तु अकित्वात्संप्रसारणाऽभवादाह - भ्रक्षीष्टेति। लुङि परस्मैपदे रमागमविकल्पं मत्वाह - अभार्क्षीत् अभ्राक्षीदिति। आत्मनेपदे सिचि रमागमविकल्पं मत्वाह - अभर्ष्ट - अभ्रष्टेति। "झलो झली"ति सिज्लोपः। क्षिप प्रेरणे इति। अनिट्। अजन्ताऽकारवत्त्वाऽभावात्क्रादिनियमात्थलि नित्यमिट्।चिक्षेपिथ। एवं कृषधातुरपि।चकर्षिथ। लुटि तासि "अनुदात्तस्य चर्दुपधस्ये"त्यमागमविकल्पः। अमागमाऽभावे गुणे रपरत्वम्। तदाह - क्रष्टा कर्ष्टेति। आशीर्लिङि परस्मैपदे आह -- कृष्यादिति। कित्त्वाज्झलादित्वाऽभावाच्च अमागमो गुणश्च नेति भावः। आशीर्लिङस्तङ्याह - कृक्षीष्टेति। "लिङ्सिचौ" इति कित्वादमागमो गुणश्च नेतिभावः। लुङि परस्मैपदे आह - स्पृशमृशेति सिज्वेति। पक्षे इति। सिजभावपक्षे "शलः" इति क्स इत्यर्थः। सिचि अम्वेति। सिच्पक्षे "अनुदात्तस्य चे" त्यमागमविकल्प इत्यर्थः। क्से तु कित्वादमागमो नेति भावः। अक्राक्षीदिति।सिचि अमागमे रूपम्। अकार्क्षीदिति। सिचि अमभावपक्षे हलन्तलक्षणा वृद्धिरिति भावः। क्सादेशपक्षे आह-- अकृक्षदिति। कित्त्वादभागमो गुणश्च ज्ञेयम्। अकृष्टेति। "झलो झली" ति सिज्लोप इति भावः। अकृक्षदिति। कित्त्वादभागमो गुणश्चे नेति भावः। तङीति। तङि सिच्पक्षे अकृष् स् त इतिस्थिते "लिङ्सिचौ" इतिकित्त्वादम्नेत्यर्थः। गुणोऽपि नेति ज्ञेयम्। अकृष्टेति। "झलो झलीटति सिज्लोप इति भावः। अकृक्षतेति। सिज्पक्षे अनतः परत्वाददादेश इति भावः। क्सादेशपक्षे आह-- अकृक्षतेति। कित्वादम्नेति

भावः। अकृक्षन्तेति। क्सादेशपक्षे अ कृक्ष झ इति स्थिते अच्परकत्वाऽभावात् "क्सस्याची"त्यकारलोपाऽभावादतः परत्वाददादेशाऽभावे अन्तादेश इति भावः। ऋषी गताविति। सेट्। आनर्षिथ आनर्षिव। अर्षिता। आर्षीत्। ओ विजी भयेति। सेट्। उद्विजितेत्यादौ लघूपधगुणे प्राप्ते -

तत्त्व-बोधिनी

भ्रस्जो रोपधयो रमन्यतरस्याम् ३१९, ६।४।४७

भ्रस्जो रोपधयोः। रम्यकार उच्चारणार्थः। "र"मित्यस्याऽन्त्यादचः परत्वे "रोपधयो"रिति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्क्याह-- निवृत्तिरिति। अयं भावः-- स्थानिविशेषलाभाय मित्त्वस्य करणान्न रोपधयोः स्थाने रम् भवति। यत्र ह्निर्धारितः स्थानषष्ठ()आ निर्दिश्य विधीयते स तत्स्थाने भवति। यथा "इको यणची"त्यादौ यणादिः। प्रकृते तु रमो निर्दिष्टस्तानिकत्वादोपधयोः स्थाने न भवति। एं चास्य आदेशागमत्वे भवति, यथा श्नमः प्रत्ययागमत्वे" इति। अन्ये त्वेतादृग् व्याख्यानमयुक्तमिति मत्वा "सनः क्तिची"त्यतो लोपमनुवत्र्य भ्रस्जो रोपधयोर्लोपः,रम् तु आगम एवेत्याहुः। परे तु-- "भ्रस्जो रसरन्यतरस्या"मित्येव सूत्रमस्तु। "रसः-- ऋ"इति च्छेदः। "रस" इति रेफाऽकारसकाराणां यः सङ्घातस्तस्य "ऋ" इत्यादेशः स्यादित्यर्थः। ततश्च अक्ङिति भर्जको भर्जनं बभर्जेत्यादि सिध्यति। ऋकाराऽभावपक्षे तु भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि। क्ङिति तु ऋकारपक्षे भृष्टिः भृज्यादित्यादि। तदभावे संप्रसारणे सति तदेव रूपम्। एवंच बरीभृज्यत इत्यादौ रीको रेफस्य निवृतिं()त वारयितुम् "अनुदात्तोपदेशे" त्यत उपदेशग्रहणमनुवर्त्यम्, इदानीं तु नानुवर्त्यं, "क्ङिति रमागमं बाधित्वा संप्रसारण"मति पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः। इदं च "रसोर्वचनात्सिद्ध"मिति वार्तिकाशयवर्णनमेव न त्वपूर्वम्। "र्वचना"दित्यस् वा ऋवचनादिति छेदः। भाष्यकारैस्तु "सूत्रं भिद्यते यतान्यासमेवास्तु" इति वदद्भिरस्यां कल्पनायां दुष्टत्वं सूचितं। तच्च मनोरयामां स्पष्टमेव। तथा हि रेफाऽकारसकारसमुदायस्य ऋभावे पञ्च दोषाः। अपिल्लिटि बभर्जुतः बभर्जुरित्यादीष्यते, बभृजतुः बभृजुरित्यादि स्यात्। न चाऽत्र गुणेन निर्वाहः, ऋभावे सति "असंयोगाल्लिट् कि"दिति कित्वप्रवृत्त्या तन्निषेधात्। "सनीवन्ते"ति इड्विकल्पाद्विभर्क्षतीत्यादि इष्यते, बिभृक्षतीत्यादि स्यात्। ऋभावे "हलन्ताच्चे"ति सनः कित्त्वप्रवृत्तेः। लिङसिचोस्तङिभर्क्षीष्ट अभर्ष्टेत्यादीष्यते, भृक्षीष्ट अभृष्टेत्यादि स्यात्। "लिङ् सिचावात्मनेपदेषु" इति कित्त्वात्। णिजन्ताच्चङि अबभर्जदितीष्यते। अबीभृजदित्यपि स्यात्। इररारामपवादत्वेन "उरृदिति ऋत्वप्रवृत्तौ "सन्वल्लघुनी"ति सन्वद्भावात् "सन्यतः इतीत्वे "दीर्घो लघो"रिति प्रवृत्तेः। यद्यपि "उरृ"दित्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव तथापि पक्षे अबीभृजदित्यनिष्टं स्य#आदिति बोध्यम्। "ऋजिभृजी भर्जने" इति भ्वादेस्तादृशं रूपमिष्टमिति चेत्। मैवम्। भर्जनार्थे हि तादृग्रूपमिष्टं न तु पाकसामान्ये। उभयोरेकार्थत्वाभ्युपगमेऽपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव। हि तेऽपि धात्वन्तरेण सुपरिहराः। अपिल्लिटि भृजेरपि धातोर्गुणाऽभावादनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाऽप्यसिद्धेः। तथा भृजेरुदात्तत्वेन ततः परेषां सन्लिङ्सिचामिडागमध्रौव्यात्-- बिभर्क्षति भर्क्षीष्ट अभर्ष्टेत्यादिरपि तेन न सिध्यति। एतेन "भ्रस्जेर्भृजिरादेश" इति पक्षोऽपि निरस्तः, पूर्वोक्तदूषणगणप्रसङ्गात्। किं च अस्मिन्पक्षे यङ्लुकि अधिको दोषः। वधादेशवत्साभ्यासस्य भृज्ज्यादेशे पुनर्द्विर्वचनस्य दुर्लभत्वात्, स्थानिवत्त्वेनाऽनभ्यासस्येति निषेधात्। स्वीकृतेऽपि द्विर्वचने रुग्रिग्रीकोऽभ्यासस्य स्युरेवेति रुगादिरहितं बाभर्जिता बाभर्जिष्यतीत्यादि रूपं नैव सिध्येत्। यदितु लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्ष्यते तर्हि "भ्रस्जेरसो"रिति पठित्वा रसिति समुदायस्य अरेव विधीयतां, तथा च न कोऽपि दोष इति। अयमत्र सङ्ग्रहः--- "रस ऋञ्चेदपिल्लिट्सन्लिङ्सिच्चङ्परणिक्षु ते। दोषो भ्रस्जेर्भृजौ चैवं, दोषो यङ्लुकि चाधिकः। साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्वधिर्यथा। द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्वधेरिव। तस्मादस्तु यथान्यासं, स्वातन्त्र्येऽस्तु रसोरिति"।

*क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन। पूर्वविप्रतिषेधेनेति। नित्यत्वादित्यपि सुवचम्। न च संप्रसारणात्पूर्वं धातो रेफस्य, पश्चात्तु रमागमरेफस्येति शब्दान्तरप्राप्त्या संप्रसारणस्य नित्यत्वं नेति शङ्क्यं, लक्ष्यानुरोधेन कृताऽकृतप्रसङ्गित्वेनापि क्वचिन्नित्यत्वस्वीकारात्।

---

सूत्रम्

काशिका-वृत्तिः

अतो लोपः ६।४।४८

अकारान्तस्य आर्धधातुके लोपो भवति। चिकीर्षिता। चिकीर्षितुम्। चिकीर्षितव्यम्। धिनुतः। कृणुतः। अतः इति किम्? चेता। स्तोता। तपरकरणं किम्? याता। वाता। आर्धाधातुके इति किम्? वृक्षत्वम्। वृक्षता। वृद्धिदीर्घाभ्याम् अतो लोपः पूर्वविप्रतिषेधेन। चिकीर्षकः। जिहीर्षकः। चिकीर्ष्यते। जिहीर्ष्यते।

लघु-सिद्धान्त-कौमुदी

अतो लोपः ४७२, ६।४।४८

आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके॥

न्यासः

अतो लोपः। , ६।४।४८

"धिनुतः, कृणुतः" इति। "हिवि दिवि धिवि प्राणनार्थाः" (धा।पा।५९१,५९२,५९३), "कृवि हिंसाकरणयोः" (धा।पा।५९८) इदित्वान्नुम्(), लट्(), तस्(), "धिन्विकृण्व्योर च" ३।१।८० इत्युप्रत्ययः, अकारश्चान्तादेशः, तस्यानेन लोपः। अथ तपकरणं किमर्थम्(), यावता धातेत्यत्र मा भूत्()? ननु च "आतो लोप इटि च" (६।४।६४) इति नियमार्थं भविष्यति--आकारस्येट()एवाजादौ क्ङिति लोपो भवति? नैतद्सित; विपरीतनियमोऽपि सम्भाव्येत--आत एवेटि क्ङिति नान्यस्येति। तथा च चिकीर्षितेत्यत्र न स्यात्()। तस्माद्? विपरीतनियमसम्भावनानिवृत्त्यर्थं तपरकरणम्()। विस्पष्टार्थं वा। "वृद्धिदीर्धाभ्याम्()" इत्यादि। "अचो ञ्णिति" ७।२।११५ इत्यस्यावकाश--कारयति, हारयति, अतो लोपस्यावकाशः--चिकीर्षिता, जिहीर्षितेति; इहोमयं प्राप्नोति--चिकीर्षकः, जिहीर्षक इति, अतो लोप एव भवति पूर्वविप्रतिषेधेन। "अकृत्सार्वधातुकयोर्दीर्घः" ७।४।२५ इत्यस्यावकाशः---चीयते, लूयत इति, अतो लोपस्यावकाशः स एव; इहोभयं प्राप्नोति--चिकीष्र्यते, जिहीष्र्यत इति, लोप एव भवति पूर्वविप्रतिषेधेन॥

बाल-मनोरमा

अतो लोपः १५०, ६।४।४८

अतो लोपः। "अनुदात्तोपदेशवनती"त्यत उपदेशग्रहणमनुवर्तते। आद्र्धधातुक इत्यधिकृतम्। तदिह आवर्तते। एकमुपदेशे अन्वेति। द्वितीयं तु लोपे परनिमित्तम्। तदाह--आद्र्धधातुकोपदेश इतत्यादिना। आद्र्धधातुकोपदेश इति किम्?। अय पय गतौ, आभ्यां क्विपि, "लोपो व्यो"रिति लोपे, "ह्रस्वस्य पिती"ति तुकि, अपृक्तलोपे अत् पत् इतीष्ते। अत्र यलोपे सति अतो लोपो न भवति, आद्र्धधातुकोपदेशकाले धातोर्यकारान्तत्वात्। "आद्र्धधातुकोपदेश" इत्यत्र आद्र्धधातुकग्रहणाऽभावे "चिकीर्षित"मित्यत्र अल्लोपो न स्यात्, सन उपदेशकाले नकारान्तत्वात्। आद्र्धधातुकग्रहणे तु न दोषः, अनुबन्धविनिर्मुक्तात्सन्प्रत्ययादेव क्तप्रत्ययस्य आद्र्धधातुकस्योत्पत्तेः। आद्र्धधातुके पर इति किम्?। कथयति। चुरादावदन्तोऽयम्। अत्र उपधावृद्धिर्न भवति, "अचः परस्मि"न्नित्यल्लोपस्य स्थानिवत्त्वात्। आद्र्धधातुके पर इत्यनुक्तौ तु अल्लोपस्य परनिमित्तकत्वाऽभावात्स्थानिवत्त्वं न स्यात्। तथा च प्रकृते गोपाय-- आमिति स्थिते अतो

लोपे गोपायामिति सिध्यति। यद्यपि सवर्णदीर्घेणाप्येतत्सिद्धं, तथापि न्याय्यत्वादतो लोप उपन्यस्तः। आयप्रत्ययाऽभावपक्षे आह--जुगोपेति। पित्त्वेन कित्वाऽभावाल्लघूपधगुणः। जुगुपतुरिति। कित्त्वान्न गुणः। ऊदित्त्वाद्वेडिति। "थलादा"विति शेषः। जुगुपिव--जुगुप्व। जुगुप्म। क्रादिनियमस्तु नञ्प्राप्तस्यैवाऽभावस्य, नतु विभाषादिलभ्यस्येति षिधू शास्त्र इत्यत्रोक्तम्। गोपायितेति। लुटि आयप्रत्ययपक्षे नित्यमिट्। आयप्रत्ययाऽभावपक्षे इड्विकल्पः। ऊदित्त्वस्य केवले चरितार्थत्वात्। तदाह--गोपिता गोप्तेति। गोपायिष्यति गोपिष्यति गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्। आशीर्लिङ आयप्रत्ययपक्षे आह--अगोपायीदिति। आयप्रत्ययाऽभावपक्षे इटि रूपमाह--- अगोपीदिति। "इट ईटी"ति सिज्लोपः। "नेटी"ति हलन्तलक्षवृद्धेर्निषेधः। इडभावे तु इटः परत्वाऽभावान्न सिल्जोल इत्याह-- अगौप्सीदिति। "वदव्रजे"ति वृद्धिः। अगोपायिष्यत् अगोपिष्यत् अगोप्स्यत्। धूप संताप इति। "गूपूधूपे"त्यायः। आद्र्धधातुके तद्विकल्पः। षप समवाय इति। षोपदेशोऽयम्। चुप मन्दायामिति। चवर्गप्रथमादिरयम्। चवर्गद्वितीयादिस्त्वनिट्कः। तुप तुम्पेति। अष्टावप्युदुपधाः, तृतीयचतुर्थौ सप्तमाष्टमौ च रेफवन्त इति मूले स्पष्टीभविष्यति। "तुतुम्पतु"रित्यत्र नलोपमाशङ्क्याह-- संयोगादिति। आशीर्लिङि विशेषमाह-- किदाशिषीति। प्रात्तुम्पताविति। श्तिपा निर्देशोऽयम्। प्रात्--प्रेत्युपसर्गात्--तुम्पधातौ परे सुट् स्याद्गवि कर्तरि सतीत्यर्थः। तुपधातोः सुट् आद्यवयवः। सुड्विधावस्मिन् तुम्पताविति श्तिपा निर्देशस्य प्रयोजनमाह-- यङ्लुकि नेति। "शपाऽनुबन्धेने"त्युक्तेरिति भावः। षृभु षृम्भु इति। ऋदुपधौ षोपदेशौ। सृभ्यादिति। आशीर्लिङि अनिदित्त्वान्नलोपः। षिभु षिम्भु इत्येक इति। आद्य इदुपधो, द्वितीयो मोपधः। शुभ शुम्भेति। द्वितीयस्य आशीर्लिङि अनिदित्त्वान्नलोपः। इति "गुपू"इत्यादयः पवर्गीयान्ताः परस्मैपदिनो गताः। कम्यन्ता इति। "कमु कान्तौ" इत्येतत्पर्यन्ता इत्यर्थः। घुण घूर्णेति। द्वितीयस्य दीर्घपाटः स्पष्टार्थः, "उपधायां चे"त्येव दीर्घसिद्धेः। केचित्तु घुर्णेति ह्रस्वमेव पठन्ति। स्तुतावित्येवेति। न तु व्यवहार इत्येवकारार्थः। पृथङ्निर्देशादिति। अन्यथा "पण पन व्यवहारे स्तुतौ चे"त्येव निर्दिशेदिति भावः। यद्यपि पृथङ्निर्देशो यथासङ्ख्यनिवृत्त्यर्थ इत्यपि वक्तुं शक्यं, तथापि संप्रदायानुरोधादेवमुक्तम्। पनिसाहचर्यादिति। पनधातुः स्तुतावेव वर्तते, तत्साहचर्याद्गुपूधूपविच्छेत्यत्र पणधातुरपिस्तुत्यर्थक एव गृह्रते, न तु व्यवहारार्थकः। अतः स्तुतार्वव पणधातोरायप्रत्ययो न तु व्यवहारे इत्यर्थः। क्रेतव्यद्रव्यस्य मूल्यनिर्धारणाय प्रश्नप्रतिवचनात्मको व्यवहारः। ननु स्तुतौ पणायतीति रूपं वक्ष्यमाणमनुपपन्नं, पणधातोरनुदात्तेत्त्वेनात्मनेपदापत्तेः। न च आयप्रत्ययान्तस्यानुदात्तेत्वं नेति शङ्क्यं, पणधातौ श्रुतस्यानुदात्तेत्त्वस्य "आनर्थक्यात्तदङ्ग" न्यायेन आयप्रत्ययान्तेऽन्वयोपपत्तेरित्यत आह---स्तुताविति। अनुबन्धस्य अनुदात्तात्मकस्य इतः, -- याअद्र्धधातुकविषये कदाचिदायप्रत्ययविनिर्मुक्ते चरितार्थत्वादायप्रत्ययान्तादात्मनेपदं नेत्यर्थः। एवं च तुल्यन्यायत्वादेकाच उपदेश इति निषेधोऽपि नेति सूचितम्। क्षमष् सहन इति। "षद्भदादिभ्योऽ"ङित्यर्थं षित्त्वम्। ऊदित्त्वादिड्विकल्पं मत्वाह-- चक्षमिषे चक्षंस इति। इडभावपक्षे "अनुनासिकस्य क्विझलो"रिति दीर्घस्तु न भवति, क्विसाहचर्येण तिङ्()भिन्नस्यैव झलादेस्तत्र ग्रहणात्। वहिमह्योरिडभावपक्षे विशेषमाह--म्वोश्च। "मो नो धातो"रित्यनुवर्तते। तदाह--मान्तस्येति। णत्वमिति। षात्परत्वादट्कुप्वाङिति नकारस्य णत्वमित्यर्थः। कमु कान्ताविति। "उदितो वे"ति क्त्वायामिड्विकल्पार्थमुदित्त्वम्। कान्तिशब्दस्य प्रभापरत्वभ्रमं व#आरयति-- कान्तिरच्छेति। "स्वर्गकाम"इत्यादौ कमेरिच्छायां प्रयोगबाहुल्यदर्शनादिति भावः। "कामोऽभिलाषस्तर्षश्चे" त्यमरः।

तत्त्व-बोधिनी

अतो लोपः १२३, ६।४।४८

"अनुदात्तोपदेशे"ति सूत्रादुपदेश इत्यनुवत्र्ते। तदाह-- आद्र्धधातुकोपदेशेत्यादि। उपदेशे इति किम्?। अय पय गतौ। आभ्यां क्विपि "वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेने"ति वार्तिकात् "लोपो व्यो"रिति यलोपो "अतो लोपः" इति लोपो मा भूत्। अत्। पत्। इह "ह्रस्वस्य पिती"ति तुक्। आद्र्धधातुके पर इति किम्?। कथयते। वृद्धौ कर्तव्यायां "अचः

परस्मि"न्निति स्थानिवत्त्वं यथा स्यात्। गोपायामिति। नन्विह आयप्रत्ययस्याऽदन्ततामाश्रित्य लोपकरणे लोपकरणे फलाऽभावादुच्चारणार्थ एव तत्राकारोऽस्त्विति चेत्। अत्राहु-- गोपायतं नः" इत्यत्र गोपायशब्दस्य धातुत्वाद्धातोरन्त उदात्तो भवति।ततः शबकारेणैकाशेऽपि "एकादेश उदात्तने"त्युदात्त एव,तकाराऽकारस्तु "तास्यनुदात्तेन्ङिददुपदेशात्" इत्यनुदात्तः। ततश्च "उदात्तादनुदात्तस्ये"ति स्वरितो भवति। "स्वरितात्संहितायामनुदात्ताना"मिति "न" इत्यस्य एकश्रुतिः। आयप्रत्ययस्य अनदन्तत्वेतु नेदमिष्टं सिध्यतीति। स्तुतावेवेति। भट्टिस्तु व्यवहारेऽपि आयं प्रयुङ्क्तं--"न चोपलेभे वणिजां पणाया"मिति। वणिजां व्यवहारमित्यर्थः। "अ प्रत्यया" दित्यायप्रत्ययान्तादकारप्रत्यये टाप्। चक्षंस इति। इह "अनुनासिकस्य क्विझलो"रित्युपधादीर्घो न कृतः, संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयन्ति।

---

सूत्रम्

काशिका-वृत्तिः

यस्य हलः ६।४।४९

हल उत्तरस्य यशब्दस्य आर्धधातुके लोपो भवति। बेभिदिता। बेभिदितुम्। बेभिदितव्यम्। यस्य इति सङ्घातग्रहणम् एतत्। तत्र अलो ऽन्त्यस्य १।१।५१ इत्येतन् न भवति, अतो लोपः ६।४।४८ इति यकारो ऽनेन लुप्यते। सङ्घातग्रहणम् किम्? ईर्ष्यिता। मव्यिता। हलः इति किम्? लोलूयिता। पोपूयिता।

लघु-सिद्धान्त-कौमुदी

यस्य हलः ७१८, ६।४।४९

यस्येति संघातग्रहणम्। हलः परस्य यशब्दस्य लोप आर्धधातुके। आदेः परस्य। अतो लोपः। वाव्रजाञ्चक्रे। वाव्रजिता॥

न्यासः

यस्य हलः। , ६।४।४९

"बेभिदिता" इति। यङन्तादार्धधातुकं तृच्(), तस्मिन्? परतो यशब्दस्य लोपः। "यस्य" इतीदं वर्णनिर्देशो वा स्यात्? यकाराकारग्रहणं वा? तत्र यद्याद्यः पक्ष आश्रीयेत तदोर्ष्यिता, मव्यितेत्यत्रापि स्यादिति द्वितीयं पक्षमाश्रीत्याह--"यस्येति सङ्घातग्रहणम्()" इति। कुत एतत्()? निर्देशात्()। यदि वर्णग्रहणं स्यात्(), तदा "यो हलः" इत्येवं ब्राऊयात्()। यदि तर्हि सङ्घातग्रहणम्()? एवं तर्हि "अलोऽन्त्यस्य" १।१।५१ इत्यन्त्यस्य स्यादित्यत आह--"तत्रालोऽन्त्यस्य" इत्यादि। कस्मान्न प्रवर्तते? इत्याह--"अतो लोपः" इत्यादि। पूर्वेणाप्यलोऽन्त्यस्य लोपः सिद्धः, तत्रारम्भसामर्थ्यात्? सर्वस्य भवति। "हल इति वा" इत्यादिना परीहारान्तरमाह। "हलः" इति पञ्चमीनिर्देशः, तत्र "हल उत्तरो यो यशब्दस्तस्य लोपः" इत्युच्यमाने "आदेः परस्य" (१।१।५४) इति वचनाद्? यकारस्यैवनेन लोपो भवति। अकारस्य तु "अतो लोपः" ६।४।४८ इत्यनेन। "ईर्ष्यिता, मव्यित"["भव्यिता" इति न्यासमद्रितपाठः] इति। "सूक्ष्यं इक्ष्यं ईर्ष्य ईर्ष्यार्थाः" (धा।पा।५०९,५१०,५११), "मव्य बन्धने" (धा।पा।५०८)। अत्र सङ्घातात्मको यशब्दो न भवतीति न प्रवर्तते लोपः। "लोलुयिता" इति। यङः, "गुणो यङलुकोः" ७।४।८२ इति गणः॥

तत्त्व-बोधिनी

यस्य हलः ३९८, ६।४।४९

यस्य हलः। सङ्घातग्रहणमिति। तेन ईर्ष्यिता अहर्यीदित्यादौ यलोपो न। सङ्घातग्रहणेन चाऽर्थवद्ग्रहमपरिभाषोपस्थित्या पुत्रकाम्येत्यादौ नातिप्रसङ्गः। वर्णग्रहणे तु उक्तपरिभाषाया अनुपस्थित्या स्यादेवाऽत्र

यलोप इति भावः। हलः किम्?। लोलूयिता। पोपूयिता।

---

सूत्रम्

काशिका-वृत्तिः

क्यस्य विभाषा ६।४।५०

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके। समिध्यिता, समिधिता। दृषयिता, दृषदिता। समिधमात्मनः इच्छति, समिधम् इव आत्मानम् आचरति इति वा क्यच्क्यङौ यथायोगम् कर्तव्यौ।

लघु-सिद्धान्त-कौमुदी

क्यस्य विभाषा ७२७, ६।४।५०

हलः परयोः क्यच्क्यङारेलोपो वार्धधातुके। आदेः परस्य। अतो लोपः। तस्य स्थानिवत्त्वाल्लघूपधगुणो न। समिधिता, समिध्यिता॥

न्यासः

क्यस्य विभाषा। , ६।४।५०

"क्य" इति क्यच्क्यङोरुत्सृष्टानुबन्धयोः सामान्येन ग्रहणम्(); विशेषानुपादानात्()। "समिधमिवात्मानमाचरति" इति। वेति वाशब्दः समुच्चये वत्र्तमानः समिदिवाचरतीत्यमुमर्थं ग्राहयति। "यथायोगम्()" इति। यदात्मनः समिधमिच्छतीत्यर्थो विवक्ष्यते, तदा "सुप आत्मनः क्यच्()" (३।१।८) इति क्यच्? कत्र्तव्यः, यदा समिधमिवात्मानामाचरतीति तदा "उपमानादाचारे" ३।१।१० इति क्यजेव, यदा समिदिवाचरतीति तदा "कर्तुः क्यङ्? सलोपश्च" ३।१।११ इति क्यङ्--इत्येष यथायोगशब्दार्थः॥

बाल-मनोरमा

क्यस्य विभाषा ४८५, ६।४।५०

क्यस्य विभाषा। "यस्य हलः" इत्यतो हल इति पञ्चम्य्नतमनुवर्तते। "आद्र्धधातुके" इत्यधिकृतम्। तदाह-- हलः परयोः क्यच्क्यङोरिति। क्यष् तु नात्र गृह्रते, "लोहितडाज्भ्यः क्यष्वचन"मिति वक्ष्यमाणतया हलन्तात्तदभावात्। अन्तलोपमाशङ्क्याह-- आदेः परस्येति। तथा च मिध् अ इता इति स्थिते आह-- अतो लोप इति। तथा च समिध् इता इति स्थिते लघूपधगुणमाशङ्क्याह-- तस्य स्थानिवत्त्वादिति। क्यच्सूत्रे "मान्ताव्ययेभ्यः प्रतिषेधः" इति वार्तिकम्। मान्तेभ्योऽव्ययेभ्यश्च प्रतिषेध इत्यर्थे पुत्रमात्मन इच्छति पुत्रीयतीत्यत्र न स्यात्, पुत्राविच्छतीत्यादेव स्यात्। मान्तानि अव्ययानि मान्ताव्ययानि तेभ्य इत्यर्थे स्वरिच्छतीत्यत्र क्यचः प्रतिषेधो न स्यात्। अतस्तद्वार्तिकं विवृण्वन्नाह-- मान्तप्रकृतिकेति।

---

सूत्रम्

काशिका-वृत्तिः

णेरनिटि ६।४।५१

अनिडादावार्धधातुके णेर्लोपो भवति। इयङ्यण्गुणवृद्धिदीर्घाणाम् अपवादः। अततक्षत्। अररक्षत्। आशिशत्। आटिटत्। कारणा। हारणा। कारकः। हारकः। कार्यते। हार्यते। ज्ञीप्सति। अनिटि इति किम्? कारयिता। हारयिता।

लघु-सिद्धान्त-कौमुदी

णेरनिटि ५३१, ६।४।५१

अनिडादावार्धधातुके परे णेर्लोपः स्यात्।

न्यासः

णेरनिटि। , ६।४।५१

"णेः" इति। णिङणिचोर्विशेषकरावनुबन्धावुबन्धावुत्सृ()ज्य यत्? समान्यं णिमात्रं तस्य ग्रहणम्()। इयङादिभिः सर्वस्य विषयस्यावष्टब्धत्वादनवकाशीऽयं णिलोपस्तेषामपवादोऽयं विज्ञायत इत्यत आह--"इयङ्यण्()" इत्यादि। "अततक्षत्(), अररक्षत्()" इति। तक्षिरक्षिभ्यां हेतुमण्णिच्(), तदन्तालुङ्? "णिश्रिद्रुस्रुभ्यः ३।१।४८ इत्यादिना च्लेश्चङ्(), ङित्त्वाद्? गुणस्य प्रसङ्ग एव नास्तीतीयङादेशः स्यात्()। अतस्तस्यापवादो णिलोपः। "आटिटत्(), आशिशत्()"। अट()शिभ्यां पूर्वं णिजादिषु कृतेषु "अजादेर्द्वितीयस्य" ६।१।२ इति टिशब्दशिशब्दौ द्विरुच्येते। अत्र "एरनेकाचः" ६।४।८२ इत्यादिना प्राप्तस्य यणादेशस्यायमपवादः। "कारणा, हारणा" इति। अत्र "सार्वधातुकार्धधातुकयोः" ७।३।८४ इति प्राप्तस्य गुणस्य। "कारकः, हारकः" इति। अत्र "अचो ञ्णिति" ७।२।११५ इति वृद्धेः। "कार्यते, हार्यते" इति। अत्र "अकृत्सार्वधातुकयोः" ७।४।२५ इति प्राप्तस्य दीर्घस्य। "ज्ञीप्सति" इति। "अज्झनगमां सनि" ६।४।१६ इति प्राप्तस्य दीर्घस्यैव। जानातेर्णिचि "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्(), "मारणतोषणनिशामनेषु ज्ञा" (धा।पा।८११) इति घटादिपाठात्? "घटादयो मितः" (ग।सू।धा।पा।८१७) इति मित्संज्ञा, "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वत्वम्(), "अत्र लोपोऽभ्यासस्य" ७।४।५८ इत्यभ्यासलोपः। "कारयिता, हारयिता" इति। "अनिटि" इति वचनादिह न भवति। "अनिटि" इति शक्यमकर्तुम्()। कथम्()? "निष्ठायां सेटि" ६।४।५२ इति नियमार्थं भविष्यति--निष्ठायामेव सेटि, नान्यत्रेति? अयुक्तमेतत्(), विपरीतनियमोऽप्याशङ्क्येत--"सेट()एव निष्ठायाम्()" इति। तथा च सति "कारयिता" इत्यत्र स्यादेव णिलोपः। तस्माद्विपरीतनियमाशङ्कानिरासार्थं "अनिटि" इत्युक्तम्()॥

बाल-मनोरमा

णेरनिटि १५४, ६।४।५१

णेरनिटि। आद्र्धदातुक इत्यधिकृतम्। "अतो लोप" इत्यस्माल्लोप इत्यनुवर्तते। "अनिटी"त्यस्य आद्र्धधातुकविशेषणत्वात्तदादिविधिः।तदाह--अनिडादाविति। तथा च णिलोपे काम् अ त इति स्थिते--परत्वादिति। "एरनेकाच" इत्यस्य "णेरनिटी"त्यपेक्षया परत्वाण्णिलोपं बाधित्वा यणि प्राप्ते सतीत्यर्थः। कृते तु यणि लोपे दुर्लभः, णेरभावात्। स्थानिवत्त्वेऽपि यणा बाधितस्य पुनरुन्मेषो दुर्लभः। वस्तुतस्तु स्थानिवत्त्वमेवेह दुर्लभम्, यण्स्थानिनमिकारम् अलं णित्वरूपेणाश्रित्य प्रवर्तमानस्य णिलोपस्याऽल्विधित्वेन तत्र स्तानिवत्त्वाऽसंभवात्। स्पष्टा चेयं रीतिर्भोभगो इति सूत्रभाष्ये इति शब्देन्दुशेखरे विस्तरः। ण्यल्लोपाविति। णिलोप इयङ्यण्गुणवृद्धिदीर्घेभ्यः, अल्लोपस्तु वृद्धिदीर्घाभ्यां पूर्वविप्रतिषेधेनेति विवेकः। तथाच पूर्वविप्रतिषेधादिह यणं बाधित्वा णिलोपो भवतीति स्थितम्। ननु अततक्षत्, आटिटत्, कारणा, कारकः,कार्यते इति वक्ष्यमाणेषु वार्तिकोदाहरणेषु क्रमेण इयङ()ण्गुणवृद्धिदीर्घाणामवस्यं प्राप्ेतर्णिलोपस्य निरवकाशत्वादेव इयङादिबाधकत्वसंभवादिदं वार्तिकं व्यर्थम्, सुधियौ, प्रध्यौ, कर्ता, चिकाय, सूयादित्यादौ इयङ्यण्गुणवृद्धिदीर्घाणां सावकासत्वादित्यत आह--णिलोपस्य त्विति। पच्()धातोर्णिचि उपधावृद्धौ पाचीति ण्यन्तात्? "स्त्रियां क्ति"न्निति क्तिनि, "तितुत्रतथसिसुसकरसकेषु चे"तीण्निषेधे, "णेरनिटी"ति णिलोपे, कुत्वे पाक्तिरिति स्थितिः। "क्तिजन्त"मिति पाठे तु "क्तिच्()क्तौ च संज्ञाया" मिति क्तिज्बोध्यः। "पाक्ति"रिति कस्यचित्संज्ञा। अत्र इयङादीनामप्रसक्तेर्णिलोपस्यापि सावकाशत्वं तुल्यम्। तत्र अततक्षदित्यादौ

परत्वादियङादिप्राप्तौ तन्निवृत्त्यर्थं वार्तिकमिदमारम्भणीयमिति भावः। वार्तिकं व्यर्थमेवेत्याह-- वस्तुस्त्विति। आद्र्धधातुकमात्रमिति। कृत्स्नमनिडाद्याद्र्धधातुकमस्य णिलोपस्य विषय इत्यर्थः। तथा च अततक्षदित्यादौ परानपि इयङादीन् णिलोपोऽपवादत्वाद्बाधते। परापेक्षयाऽपवादस्य प्रबलत्वात्। परत्वादियङादीनां णिलोपबाधकत्वाभ्युपगमे हि णेरनिटीत्यत्र अनिटीति व्यर्थम्। कारयितेत्यादाविडाद्याद्र्धधातुके गुणेनैव णिलोपस्य बाधसिद्धेः। ततस्च अनिटीति वचनसामर्थ्यादिनिडादावाद्र्धधातुके सर्वस्मिन्परे णिलोप इति विज्ञायते। एवं च अततक्षदित्यादावियङादिप्रवृत्तियोग्येऽप्याद्र्धधातुके सर्वत्र णिलोपैति,-- अस्य निरवकाशत्वादपवादत्वादेव णिलोपेन इयङादिबाधसिद्धेर्वार्तिकमिदं व्यर्थमित भावः। अपवाद एवायमिति। णिलोप इत्यर्थः। अतो लोपस्तु "चिकीर्षक" इत्यत्र वृदिं()ध, "चिकीर्ष्या"दित्यत्र "अकृत्सार्वधातुकयो"रिति दीर्घं च बाधित्वा पूर्वविप्रतिषेधाद्भवति। नह्रतो लोपोवृद्धिदीर्घयोरपवादः, गोपायितेत्यादौ वृद्दिदीर्घयोरप्राप्तयोरप्यतो लोपस्यारम्भादित्यलम्। इयङिति। उदाहरणसूचनमिदम्। अततक्षिदिति। तक्षदातोण्र्यन्ताल्लुङस्तिपि इकारलोपे चङि द्वित्वे संयोगपूर्वक्तवादेरनेकाच इति यणभावे इयङि प्राप्ते पूर्वविप्रतिषेधाण्णिलोपे हलादिशेषेऽडागमेऽततक्षदिति रूपम्। यणिति। उदाहरणसूचनम्। आटिटदिति। अटधातोण्र्यन्तादाटीत्यस्माल्लुङि तिपि इकारलोपे चङि "टी" त्यस्य द्वित्वे "एरनेकाच" इति यणं बाधितवा पूर्वविप्रतिषेधाण्णिलोपे आटि वृद्धौ रूपम्। गुण इति। उदाहरणसूचनम्। कारणेति। "स्त्रिया"मत्यधिकारे कृञ्धातोण्र्यन्तात्कारीत्यस्माण्ण्वुलि अकादेशे वृदिं()ध बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे रूपम्। दीर्घ इति। उदाहरणसूचनम्। कार्यत इति। कृञ्धातोण्र्न्तात्कारीत्यस्मात्कर्मण लटि यकि "अकृत्सार्वधातुकयो"रिति दीर्घं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपः। तथा च प्रकृते काम् इ अ त इत्यत्र "एरनेकाच" ति यणं बाधित्वा णिलोपे काम् अ त इति स्थितम्।

तत्त्व-बोधिनी
णेरनिटि १२८, ६।४।५१

णेरिति णिङ्()णिचोग्र्रहणम्। एवमन्यत्रापि बोध्यम्। "अनिटी"त्यनेनाधिकृतमाद्र्धधातुक इत्येतद्विशेष्यते। "यस्मिन्विदि"रिति तदादिविधिः। "अतो लोपः" इत्यस्माल्लोप इति चानुवर्तते, तदाह--अनिडादावित्यादि। यणि प्राप्त इति। ननु परत्वादियङ्यणादिविधयो यथासंभवमत्र सन्तु नाम, तेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेत्, नैवं शङ्क्यम्, इयङादेशे ह्रन्त्यलोपः प्रसज्येतेति दोषः स्यात्। एतच्च "अतो लोपः"इति सूत्रे भाष्ये स्थितम्। न चाऽत्र "कारणा" "कारक" इत्यादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयायादेशयोः कृतयोरन्त्यस्य लोपः प्राप्नोतीति कथमियङादेशे एव दोषौक्त इति शङ्क्यं,"वार्णादाङ्गं बलीयः र" इत्ययादौ बाधित्वा णिलोपो भविष्यतीति भाष्याशयात्।

ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति। ण्यल्लोपाविति। णिलोपः इयङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन। अल्लोपस्तु- वृद्धिदीर्घाभ्यामिति विवेकः। णिलोपस्य निरवकाशत्वेन वार्तिकस्योक्तसंभव एव नास्तीत्यत आह-- पाक्तिरित्यादि क्तिजन्तमिति। तत्र "तितुत्रे"तीण्निषेधादिति भावः। वचनसामर्थ्यादिति। अयं भावः-- "णे"रित्येतावति सूत्रे कृतेऽप्याद्र्धधातुक इत्यनुवृत्त्या आद्र्धधातुके परतः प्रवर्तमानो णिलोप इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यादित्यनिटीत्यस्य वैयथ्र्यं प्रसज्येत, तथा चाऽनिडाद्याद्र्धधातुकं सर्वमप्यस्य विषयो, न तु क्तिजन्तमेवेति। अयमिति। णिलोप इत्यर्थः। अल्लोपांशे तु वचनमपेक्षितमेव। तेन "चिकीर्षक" इत्यत्र वृद्धि, चिकीर्ष्यादित्यत्र "अकृत्सार्वे"ति दीर्घं च बाधित्वा पूर्वप्रतिषेधेन "अतो लोपः" इति लोपो भवतीत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

निष्ठायां सेटि ६।४।५२

निष्ठायां सेटि परतो णेर्लोपो भवति। कारितम्। हारितम्। गणितम्। लक्षितम्। सेटि इति किम्? संज्ञपितः पशुः। सेड्ग्रहणसामर्थ्यादिह पूर्वेण अपि न भवति। सनीवन्तर्ध ७।२।४९ इति ज्ञपेरिटि विकल्पिते यस्य विभाषा ७।२।१५ इति निष्ठायां प्रतिषेधः। अथ पुनः एकाचः इति तत्र अनुवर्तते, तदा नित्यम् अत्र भवितव्यम् एव इडागमेन इति सेड्ग्रहणम् अनर्थकम्? तत् क्रियते कालावधारणार्थम्, इडागमे कृते णिलोपो यथा स्यात्। अकृते हि तत्र णिलोपे सति कारितम् इत्यत्र एकाच उपदेशे ऽनुदात्तात् ७।२।१० इति इटः प्रतिषेधः प्रसज्येत।

लघु-सिद्धान्त-कौमुदी

निष्ठायां सेटि ८२७, ६।४।५२

णेर्लोपः। भावितः। भावितवान्। दृह हिंसायाम्॥

न्यासः

निष्ठायां सेटि। , ६।४।५२

"गणितम्(), लक्षितम्()" इति। "गण संख्याने" (धा।पा।१८५३) "लक्ष दर्शनाङ्कनयोः" (धा।पा।१५३८)। "संज्ञपितः पशुः" इति। ननु चात्र यदि "सेटि" इति वचनादनेन न भवितव्यम्(), तदा पूर्वसूत्रेण कस्मान्न भवति? इत्याह--"सेड्ग्रहणसामश्र्यात्()" इत्यादि। यदि ह्रनिटि पूर्वेण णिलोपः स्यात्? सेड्ग्रहणमनर्थकं स्यात्(), "निष्ठायाम्()" इत्येवं ब्राऊयात्(), आरम्भसामश्र्यादेव हि सेडर्थो भविष्यति। तस्मात्? सेड्ग्रहणसामश्र्यात्? पूर्वेणापि "संज्ञापितः पशुः" इत्यत्र णिलोपो न भवति। कथं पुनरत्र सेड्? निष्ठा न भवति? इत्याह--"सनीवन्तर्ध" इत्यादि। "अथ" इत्यादि। अथ "यस्य विभाषा" ७।२।१५ इत्यत्र "एकाच उपदेशेऽनुदात्तात्()" ७।२।१० इत्यत्र एकाज्ग्रहणमनुवर्तते, ततोऽनेकाच्त्वाज्ज्ञपेः प्रतिषेधाभावाद्? भवितव्यमिडागमेन निष्ठायाम्()। तस्मात्? सेड्ग्रहणमनर्थकं स्यात्(); व्यावर्त्त्याभावात्()। ननु च "ज्ञप्तः" इत्यत्र मा भूदित्येवमर्थं सेड्ग्रहणं भविष्यति? नैतदस्ति; क्रियमाणेऽपि सेड्ग्रहणे "वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" ७।२।२७ इति निपातानादत्र भवितव्यमेव णिलोपेन। यदि तह्र्रनर्थकं सेड्ग्रहणम्(), तत्? किमर्थं क्रियते? इत्याह--"तत्? क्रियते" इत्यादि। पूर्वमिडागमे कृते सेटि निष्ठायां जातायां पश्चाण्णिलोपो यथा स्यादित्येवमर्थं सेड्ग्रहणं कृतम्()। कः पुनरकृत इटि णिलोपे सति दोषः स्यात्(), यन्निवृत्त्यर्थं पूर्वमिडागम इष्यते? इत्याह--"अकृते हि" इत्यादि। असति सेड्ग्रहणे कारित इति स्थिते णिलोपः प्राप्नोति, इट्? च्(), तत्र कृताकृतप्रसङ्गित्वेन णिलोपेनैव भवितव्यम्(); णिलोपे च सत्येकदेशविकृतसयानन्यत्वात्? स एवायं करोतिरिति "एकाच उपदेशेऽनुदात्तात्()" ७।२।१० इतीट्()प्रतिषेधः प्रसज्येत, ततश्च "कारितम्()" इत्येतन्न सिद्ध्येत्()। तस्मात्? सेड्ग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

निष्ठायां सेटि ८६४, ६।४।५२

निष्ठायां सेटि। णेर्लोपः स्यादिति। सेषपूरणमिदम्। "णेरनिटी"त्यतो णेरिति, "आतो लोपः" इत्स्माल्लोप इति चानुवर्तते इति भावः। "अनिटी" ति निषेधादप्राप्ते आरम्भः। "टु ओ ()इआ गतिवृद्ध्योः" अस्मात् क्ते आह ()आईदित इति नेडिति। संप्रसारणमिति। यजादित्वादिति भावः। संप्रासरणे सति पूर्वरूपे "हलः" इति दीर्घे "ओदितश्चे"ति निष्ठानत्वे रूपमाह--शून इति। यद्यपि मूले "ओदितश्चे"त्यत्र उच्छून इत्युदाह्मतमेव, तथापि विशेषविवक्षया पुनरिहोपन्यासः। अत्र अलविधित्वेऽपि "हल" इत्यारम्भसामाश्र्यादेव पूर्वरूपस्य संप्रसारणत्वम्। न च नित्यत्वात्संप्रसारणपूर्वरूपयोः "श्र्युकः कितीत"त्येव

निषेधसिद्धेः ()इआग्रहमं व्यर्थमिति वाच्यम्, "श्र्युकः किती"त्यत्र "एकाच उपदेशे" इत्यत उपदेशे इत्यनुवृत्तेः। तथा च उपेदशे उगन्तत्वाऽभावान्निषेधाऽप्राप्तौ ()इआग्रहणम्। अत एव "स्तीत्र्वे"त्यादौ उपदेशे उगन्तत्वमादाय इण्निषेधसिद्धिरित्यलम्। ईदित उदाहरति-- दीप्तैति। "दीपी दीप्तौ" दिवादिः। ईदित्त्वान्नेट्। गूढ इति। ऊदित्त्वेन वेट्कत्वात् "यस्य विभाषे"ति नेट्। ढत्वधत्वष्टुत्वढलोपदीर्घाः। वनु वतः। तनु तत इति। "उदितो वे"ति क्त्वायां वेट्कत्वात् "यस्य विभाषे"ति नेट्। "अनुदात्तोपदेशे"ति नकालोपः। पतेः सनीति। "पत्लृ गतौ" अस्य "तनिपतिदरिद्राणानुपसङ्ख्यान"मिति सनि वेटक्त्वात् "यस्य विभाषे"ति निष्ठायामिण्निषेधे प्राप्ते इत्यर्तः। "पतित" शब्दे इटं साधयितुं युक्त्यन्तरमिति वक्तव्यम्, तत्तु न संभवति। एषां "सेऽसिचि कृतचृतछृदतृदनृतः" इति सकारादौ वेट्कतया "यस्य विभाषे"त्येव निष्ठायां नित्यमिण्निषेधासिद्धेः। ततश्च एषामीदित्करणात् "यस्य विभाषे"ति इण्निषेधस्य अनित्यत्वं विज्ञायते। एवं च कृतादीनां "यस्य विभाषे"ति इण्निषेधस्याऽभावसंभावनायां "()आईदितः" इण्निषेधार्थमीदित्त्वमर्थवत्।तथा च पतितशब्दे "यस्य विभाषे"त्यनित्यत्वान्न भवतीत्यर्थः। तेनेति। "यस्य विभाषे"त्यस्याऽनित्यत्वज्ञापनेनेत्यर्थः। धावितमिति। "स्वरतिसूती" धूञो वेट्कत्वेऽपि "यस्य विभाषे"ति निष्ठायामिण्निषेधः स्यादित्यत आह-- यस्य विभाषेत्यत्रेति।

तत्त्व-बोधिनी
निष्ठायां सेटि ७०९, ६।४।५२

संप्रसारणमिति। "वचिस्वपी"त्यनेन। शून इति। टुओ()इआ गतिवृद्ध्योः। "हलः" इति दीर्घः। "ओदितश्च" इति निष्ठातस्य नः। गूढ इति। "यस्य विभाषे"ति नेट्। ढत्वधत्वष्टुत्वढलोपदीर्घाः। वतः तत इति। "अनुदात्तोपदेशे"ति नलोपः। सनि केट्कत्वादिति। "तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः" इति वचनात्। कृन्तत्यादीनामिति। "()आईदित" इति निष्ठायामनिट्त्वार्थं कृती छेदने, चृती हिंसाग्रन्थनयोः, नृती गात्रविक्षेपे इत्यतेषामीदित्त्वकरणेन "यस्य विभाषे"त्यस्याऽनित्यत्वज्ञापनाद्वा पतित इति सिद्धमित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
जनिता मन्त्रे ६।४।५३

जनिता इति मन्त्रविषये इडादौ णिलोपो निपात्यते। यो नः पिता जनिता। मन्त्रे इति किम्? जनयिता।
न्यासः
जनिता मन्त्रे। , ६।४।५३

"इडादौ णिलोपो निपात्यते" इति। "जनिता" इति तृजन्तम्(), तत्र "अनिटि" इति प्रतिषेधादिडादौ न न प्राप्नौति, अतो निपात्यते। ह्रसवत्वन्तु "जनीजृ()ष्क्नसुरञ्जोऽमन्ताश्च" (ग।सू।धा।पा।८१७) इति मित्संज्ञकत्वात्? "मितां ह्रस्वः" ६।४।९२ इत्यनेनैव सिद्धम्()॥

---

सूत्रम्
काशिका-वृत्तिः
शमिता यज्ञे ६।४।५४

यज्ञकर्मणि शमिता इति इडादौ तृचि णिलोपो निपात्यते। शृतं हविः शमितः। तृचि सम्बुद्ध्यन्तम् एतत्। यज्ञे इति किम्? शृतं हविः शमयितः।

न्यासः

शमिता यज्ञे। , ६।४।५४

"शमितः" इत्यत्र पूर्धवद्? ह्रस्वत्वम्()। "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणः, हल्ङ्यादिना ६।१।६६ सुलोपः, रेफस्य विसर्गः। "तृचि सम्बुद्ध्यन्तमेतत्()" इति। निष्ठान्तमेतदिति कस्यचिदाशङ्का स्यात्(), अतस्तां निराकर्तुमिदमुक्तम्()। "शमयितः" इत्येतदपि तृचि सम्बुद्ध्यन्तम्()॥

बाल-मनोरमा

तुरिष्ठेमेयःसु , ६।४।५४

तथाच अगुणवचनादपि कर्तृशब्दादिष्ठन्प्रत्यये "कर्तृ-इष्ठ" इति स्थिते "इष्ठेमेयस्सु" इति विहिते टिलोपे प्राप्ते--तुरिष्ठेयमेयःसु। "तृ" इत्यस्य "तु"रिति षष्ठ()एकवचनम्। एष्विति। इष्ठन्, इमन्, इयस् इत्येतिष्वित्यर्थः। अयं लोपः सामर्थ्यात्सर्वादेशः, अन्त्यस्य ऋकारस्य "टे"रित्येव सिद्धेः। करिष्ठ इति। अयमनयोरति शयेन कर्तेत्यर्थः। दोहीयसी धेनुरिति। इयमनयोरतिशयेन दोग्ध्रीत्यर्थः। इष्ठनि "भस्याढे" इति पुंवत्त्वे ङीपो निवृत्तौ तृप्रत्ययस्य लोपे परनिमित्ताऽभावात् "दादे"रिति घत्वस्य निवृत्तौ उगित्त्वात् ङीपि "दोहियसी"ति रूपम्। "पुगन्ते"ति गुणस्तु न निवर्तते, लुप्तेऽपि तृचि प्रत्ययलक्षणेन तत्सत्त्वात्।

---

सूत्रम्

काशिका-वृत्तिः

अयामन्ताऽल्वाय्यैत्न्विष्णुषु ६।४।५५

आम् अन्त आलु आय्य इत्नु इष्णु इत्येतेषु परतः णेः अयादेशो भवति। कारयञ्चकार। हारयाञ्चकार। अन्त गण्डयन्तः। मण्डयन्तः। आलु स्पृहयालुः। गृहयालुः। आय्य स्पृहयाय्यः। गृहयाय्यः। इत्नु स्तनयित्नुः। इष्णु पोषयिष्णुः। पारयिष्णवः। न इति वक्तव्ये अयादेशवचनम् उत्तरार्थम्।

लघु-सिद्धान्त-कौमुदी

अयामन्ताल्वाय्येत्न्विष्णुषु ५२८, ६।४।५५

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्। कामायाञ्चक्रे। आयादय इति णिङ् वा। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिध्वे। चकमे। चकमिवहे। चकमिमहे। कामयिता। कामयितासे। कमिता। कामयिष्यते, कमिष्यते। कामयताम्। अकामयत। कामयेत। कामयिषीष्ट॥

न्यासः

अयामन्ताल्वाय्येन्त्विष्णुषु। , ६।४।५५

"कारयाञ्चकार" इति। "कास्प्रत्ययात्()" ३।१।३५ इत्यादिनाम्(), "आमः" २।४।८१ इति लेर्लुक्(), "कृञ्च" ३।१।४० इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः द्विर्वचनमब्यासकार्यम्()। "गण्डयन्तः, मण्डयन्तः" इति। "गडि सेचने" (धा।पा।७७७) ["गड" धा।पा।(गडि वदनैकदेशे--धा।६५,३६१)] "मडि भूषायाम्()" (धा।पा।३२१), हेतुमण्णिच्(), गडेर्घटादित्वाम्मित्त्वे सति पूर्ववद्? ह्रस्वत्वम्()। "जृवृषिब्यां झच्()" (द।उ।६।१७)["जृविशिभ्यां--द।उ।] इत्यनुवर्त्तमाने

"तृ()भूवहिवसभासिसाधिगमिमण्डिजिनन्दिभ्यश्च" (द।उ।६।१९)

[तृ()भूवहिवसिभासिसाधिगडिमण्डिजिवन्दिभ्यश्च--द।उ।] इति झच्(), अन्तादेशः। "स्पृहयालुः, गृहयालुः" इति। "स्पृह ईप्सायाम्()" (धा।पा।१८७१) "गृह ग्रहणे" (धा।पा।१८९९) चौरादिकावदन्तौ, "अतो लोपः" ६।४।४८ इत्यकरलोपः, तस्य स्थानिवत्त्वाल्लधूपधगुणाभावः, "स्पृहि गृहि" ३।२।१५८ इत्यादिनाऽऽलुच्()। "स्पृहयाय्यः" इति। "तनुदक्षिस्पृहिगृहिभ्य [श्रुदक्षिस्पृहिगृहिभ्य आय्यः--पं।उ।] आय्यः" (पंउ।३।९६) इति आय्यप्रत्ययः। "स्तनयित्नुः" इति। "स्तत गदी देवशब्दे" (धा।पा।१८५९,१८६०) चुरादावदन्तः, "अतो लोपः" ६।४।४८। तत्रकारलोपस्य स्थानिवद्भावात्? "अत उपधायाः" ७।२।११६ इति वृद्धिर्न भवति। "स्तनिह्मषिपुषिगदिमदिभ्यो णेरित्नुच्()" [स्तनिह्मषिपुषिगदिमदिधुषिगन्धिमडिजनिनदिभ्यो णेरित्नुच्()--द।उ।] (द।उ।१।१४०) इतीलुष्प्रत्ययः। "पोषयिष्णवः, पारयिष्णवः" इति। "पुष पुष्टौ" (धा।प।७००) हेतुमाण्णिच्(), "पार तीर कर्मसमाप्तौ" (धा।पा।१९११,१९१२), चुरादिणिच्(), "णेश्छन्दसि" ३।२।१३७ इतीष्णुच्()। अथ "न" इत्येवं कस्मान्नोक्तम्(), णिलोपे हि प्रतिषिद्धे गुण एव स्यात्(), तत्र "एचोऽयवायावः" (६।१।७८) इत्ययादेशो भविष्यति; लधु चैवं सूत्रं भवति, "अय" इत्युच्यमाने मात्राधिक्येन सूत्रं गुरु भवतीति मत्वाऽऽह--"न इतिवक्तव्ये" इत्यादि। "ल्यपि लघुपूर्वात्()" ६।४।५६ इत्यत्र गुणाभावादयादेशो न स्याद्यदि नेत्युच्यते।
तस्मादुत्तरार्थमयादेशवचनम्()॥

बाल-मनोरमा

अयामन्ताल्वाय्येत्न्विष्णुषु १५२, ६।४।५५

अयामन्ता। अयति छेदः। "णेरनिटी"त्यतो णेरित्यनुवर्तते। तदाह--णेरयादेशः स्यादिति। तथा च कामयामित्यमन्तं स्थितम्। ततः "कृञ्चानुप्रयुज्यते" इत्यनुप्रयोगाल्लिडिति मत्वाह-- कामयांचक्र इति। णिङ आयादिष्वन्तर्भावाल्लिडादावाद्()धधातुके तद्विकल्पमुक्तं स्मारयति--- आयादय इति। चकम इति। सेट्कोऽयम्। चकमिषे। चकमिध्वे।चकमिवहे। चकमिमहे। कामयियेति। लुटि णिङपक्षे तासि इटि वृद्धौ गुणेऽयादेशे रूपम्। कामयताम्। अकामय।कामयेत। कामयिषीष्ट--कमिषीष्ट।

तत्त्व-बोधिनी

अयामन्ताल्वाय्येत्न्विष्णुषु १२५, ६।४।५५

"नामन्ते"ति सूत्रितेऽपि "णेरनिटी"ति वक्ष्यमाणलोपस्य निषेधे गुणाऽयादेशयोः सतोः "कामयांचक्रे" इत्यादिरूपाणि सिद्यन्त्येव, तथापि "ल्यपि लघुपूर्वा"दित्येवमर्थमयादेशवचन्। प्रस्तनय्य। सङ्गमय्य। नह्यत्र गुणाऽयादेशौ लभ्येते।

---

सूत्रम्

काशिका-वृत्तिः

ल्यपि लघुपूर्वात् ६।४।५६

ल्यपि परतो लघुपूर्वाद् वर्णादुत्तरस्य णेः अयादेशो भवति। प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, सन्दम्य्य गतः। प्रबेभिदय्य गतः। प्रगणय्य गतः। ह्रस्वयलोपाल् लोपानाम् असिद्धत्वं न भवति असमानाश्रयत्वात्, ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति। लघुपूर्वातिति किम्? प्रपात्य गतः।

न्यासः

ल्यपि लघुपूर्वात्?। , ६।४।५६

"लधूपूर्वात्()" इति। लघुः पूर्वो यस्मादिति बहुव्रीहिः। वर्णोऽन्यपदार्थः। "प्रणमप्य, प्रतमय्य, प्रदमय्य, प्रशमय्य" इति। अत्र नमादीनां मित्त्वात्? पूर्ववद्? ह्यस्वत्वे कृते मकारो लघूपूर्वः। "प्रवेभिदय्य गतः" इति। भिदेर्यङन्ताण्णिच्()। "यस्य हलः" [६।४।४९](#) इति यकालोपः। अत्रापि दकारो लघूपूर्वः। "प्रगणय्य" इति। "गण संख्याने" (धा।पा।१८५३), चुरादावन्तः पूर्धवदल्लोपः। अत्रापि णकारो लघूपूर्वः। ननु ह्यस्वादय एवा भाच्छास्त्रीयाः, अयादेशोऽपि; तत्र "असिद्धवदत्रा भात्()" (६।४।२२) इति ह्रस्वादीनामसिद्धत्वाल्लधुपूर्वत्वं मकारादेर्वर्णस्य नोपपद्यते? इत्यत आह--"ह्यस्वयलोपाल्लोपानाम्()" इत्यादि। कथमसमानाश्रयत्वम्()? इत्याह--"ह्यस्वादयो हि" इत्यादि। अथ पूर्वग्रहणं किमर्थम्(), न लघोरित्येवोच्येत? अशक्यमेवं वक्तुम्(); एवमुच्यमाने लघोरुत्तरस्य णेर्ल्यप्ययादेशो भवतीत्येष वाक्यार्थः। तथा च "प्रतमय्य" इत्यादौ न स्यात्(), हला व्यवधानात्()। क्व तरहि स्यात्()? "प्रगणय्य" इत्यादौ। ननु चात्राप्यतो लोपे कृते लघोरुत्तरो णिनं सम्भवत्येव, तत्र वचनसामथ्र्याद्ध्यवधानमाश्रयिष्यते? नैतदेवम्(); वचनसामथ्र्याद्भूतपूर्वगतिराश्रायिष्यते। कृत एतल्लभ्यते--वचनसामथ्र्याद्ध्यवधानमाश्रयितव्यम्(), न तु भूतपूर्वगतिरिरिति? भूतपूर्वगतावाश्रीयमाणायां "प्रगणय्य" इत्यादादेव स्यात्(), "प्रणमय्य गतः" इत्यादौ तु न स्यात्()। तस्मात्? पूर्वग्रहणं कत्र्तव्यम्()॥

तत्त्व-बोधिनी

ल्यपि लघुपूर्वात् १६०४, ६।४।५६

लघुपूर्वादिति। लघुः पूर्वो यस्माद्वर्मात्। लघुपूर्ववर्णात्परस्येत्यर्थः। विगणय्येति। नन्विह णौ कुतस्याऽल्लोपस्य पूर्वस्माद्विधौ स्थानिवद्भावाल्लघुपूर्वकवर्णात्परत्वं नास्ति। न चारम्भसामथ्र्यात्, अनुगमय्येत्यादौ मित्सु चरितार्थत्वात्। अत्रोच्यते-- पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यं, "निष्ठायां सेटी"ति लिङ्गात्। तथा चात्र स्थानिवत्त्वाऽभावाण्णेरयादेशो भवत्येव। "निष्ठायां सेटी"त्यस्याऽनित्यत्वज्ञापकत्वं तु "अचः परस्मि"न्निति सूत्र एवास्माभिरुपपादितमिति नात्रो()पपाद्यते। प्रणमय्येति। अमन्तत्वान्मित्त्वे, मितां ह्यस्वः। प्रबेभिदय्येति। भिदेर्यङन्ताद्बेभिद्येत्यस्माण्णिच्यल्लोपे "यस्य हलः" इति यलोपः। ननु ह्यस्वलोपाऽल्लोपानामाभीयत्वेनाऽसिद्धत्वाल्लघुपूर्वकवर्णात्परो णिर्नास्तीति कथमिह णेरयादेशः स्ादिति [गणयतीत्यादौ वा कथं स्यादिति] चेन्मैवम्, "असिद्धवदत्राभा"दित्यत्र "समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्या"दिति हि व्याख्यातम्। तेनात्राशङ्कैव नास्ति, ह्यस्वादयो हिणौ, णेरयादेशस्तु ल्यपि परत इति व्याश्रयत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा आपः ६।४।५७

आप उत्तरस्य णेर्ल्यपि परतो विभाषा अयादेशो भवति। प्रापय्य गतः, प्राप्य गतः। इङादेशस्य लाक्षणिकत्वान् न भवति, अध्याप्य गतः।

न्यासः

विभाषाऽऽपः।, ६।४।५७

"प्रापय्य" इति। "आप्लृ लम्भने" (धा।प।१८३९), "आप्लृ व्याप्तौ" (धा।पा।१२६०) द्वयोरपि ग्रहणम्()। पूर्धकश्चुरादिः, अपरः स्वादिः। अथ "अध्याप्य गतः" इत्यतर कस्मान्न भवति, अत्रापि "क्रीङजीनां णौ" [६।१।४७](#) इतीङ आत्त्वे कृते "अर्त्तिह्री" (७।३।३६) इत्यादिना पुक्याप उत्तरो णिर्भवति? इत्यत आह--"इङादेशस्य" इत्यादि। यद्येवम्(), "अप आचष्टे" इत्यप्शब्दाण्णिचि कृते "प्रापय्य" इत्यादि न स्यात्(), लाक्षणिकत्वादेव मा भूदनेन, पूर्वेण सूत्रेण भविष्यति, ननु

चैकादेशे कृते सत्यलघुपूर्वत्वान्न प्राप्नोति? एकादेशस्यासिद्धत्वान्न दोषः। कथम्()? "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।पा।४२) इति बहिरङ्गत्वन्त्वेकादेशस्य द्विपदाश्रयत्वात्()। अयादेशस्य पुनर्णिमात्राश्रयत्वादन्तरङ्गत्वम्()॥

तत्त्व-बोधिनी

विभाषाऽऽपः १६०५, ६।४।५७

आप्नोतेरिति॥ यद्यपीङो णिचि परतः "क्रीङ्जीनां णौ" इत्यात्वे "अर्तिह्री"त्यादिना पुकि आबिति शब्दोऽस्ति, तथापि तस्य नेह ग्रहणं, लाक्षणिकत्वादिति भावः। प्राप्येति। एतेन "अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते" इति श्रीहर्षप्रयोगा व्याख्यातः। "अवाप्ये"त्यस्याऽवपय्येत्र्थसंभवात्। एतेन तत्राऽन्तर्भावितण्यर्थतेति क्लेशमनुभवन्तः परास्ताः। ल्यप्स्थानिनां कित्वात् "वचिस्वपी"ति प्राप्तं संप्रसारणं निषेधयितुमाह-- ल्यपि चेति।

---

सूत्रम्

काशिका-वृत्तिः

युप्लुवोर् दीर्घश् छन्दसि ६।४।५८

यु प्लु इत्येतयोर् ल्यपि परतः छन्दसि विषये दीर्घो भवति। दान्त्यनुपूर्वं वियूय। यत्रा यो दक्षिणा परिप्लूय। छन्दसि इति किम्? संयुत्य। आप्लुत्य।

न्यासः

युप्लुवोर्दीर्घश्छन्दसि। , ६।४।५८

"यु मिश्रणे" (धा।पा।१०३३) [मिश्रणेऽमिश्रणे च--धा।पा।] "प्लुङः गतौ" (धा।पा।९५८) अनयोर्धात्वोस्तुकि प्राप्ते दीर्घाथं वचनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

क्षियः ६।४।५९

क्षियश्च दीर्घो भवति ल्यपि परतः। प्रक्षीय।

न्यासः

क्षियः। , ६।४।५९

"छन्दसि" इति निवृत्तम्()। "क्षियः" इति "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति "क्षि क्षये" (धा।पा।२३६) "क्षि निवासगत्योः" (धा।पा।१४०७) इत्यनयोग्र्रहणम्(), न "क्षिष्? हिंसायाम्()" (धा।पा।१५०६) ["क्षीष्()"--धा।पा।] इत्यसय॥

---

सूत्रम्

काशिका-वृत्तिः

नष्ठायाम् अण्यदर्थे ६।४।६०

ण्यतः कृत्यस्य अर्थो भावकर्मणी, ताभ्याम् अन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति। आक्षीणः। प्रक्षीणः। परिक्षीणः।

अकर्मकत्वात् क्षियः कर्तरि क्तः। प्रक्षीणम् इदम् देवदत्तस्य इति क्तो ऽधिकरणे च ध्रौव्यगति। प्रत्यवसानार्थेभ्यः ३।४।७६ इत्यधिकरणे क्तः। अण्यदर्थे इति किम्? अक्षितमसि मा मेक्षेष्ठाः। क्षितम् इति भावे दीर्घाभावात् क्षियो दीर्घात् ८।२।४६ इति निष्ठानत्वम् अपि न भवति।

न्यासः

निष्ठायामण्यदर्थे।, ६।४।६०

"ष्यतः कृत्यस्यार्थो भावकर्मणी" इति। तयोरेव कृत्यक्तखलर्थाः" ३।४।७० इति वचनात्()। "ताभ्यामन्यत्र" इति। कत्र्तर्यधिकरणे च। "आक्षीणः" इति। "क्षियो दीर्घात्()" ८।२।४६ इति निष्ठानत्वम्()। "अकरमकात्? क्षियः कर्तरि क्तप्रत्ययोऽयम्()" इति। "गत्यर्थ"३।४।७२ इत्यादिना। "प्रक्षीणमिदं देवदत्तस्य" इति। "अधिकरणवाचिनश्च" २।३।६८ इति कत्र्तरि षष्ठी। "अधिकरणे" इति। क्तप्रत्ययोऽयमिति प्रकृतेन सम्बन्धः। प्रक्षीयतेस्मिन्निति प्रक्षीणम्()--अधिकरणभूतं द्रव्यमुच्यते। "क्षितमिति भावे" इति। अस्यापि पूर्ववत्सम्बन्धः। कर्मणि न प्रत्युदाहरति; क्षियोऽकर्मकत्वात्()॥

बाल-मनोरमा

निष्ठायामण्यदर्थे ८२४, ६।४।६०

निष्ठायामण्यदर्थे। ण्यदर्तो भावकर्मणी इति। "ऋहलो"रिति ण्यतः कृत्यसंज्ञकस्य "तयोरेवे"ति भावकर्मणोरेव प्रवृत्तेरिति भावः। ततोऽन्यत्रेति। कर्तरीत्यर्थः। क्तवताविति फलितम्। क्षियो दीर्घः स्यादिति। क्षिय इति पूर्वसूत्रमनुवर्तते, "युप्लुवोर्दीर्()घश्छन्दसी"त्यतो दीर्घ इति चेति भावः।

तत्त्व-बोधिनी

निष्ठायामण्यदर्थे ६७७, ६।४।६०

ण्यदर्थो भावकर्मणी इति। यद्यपि धाय्या ऋगित्यादौ कणादावपि बहुलकाण्ण्यद्भवति, तथापि "तयोरेवे"ति वचनाद्भावकर्मणी एव साक्षादुपात्तोऽर्थ इति स एवेह विवक्षित इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वा आक्रोशदैन्ययोः ६।४।६१

आक्रोशे गम्यमाने दैन्ये च क्षियो निष्ठायाम् अण्यदर्थे वा दीर्घो भवति। क्षितायुरेधि, क्षीणायुरेधि। दैन्ये क्षितकः, क्षीणकः। क्षितो ऽयं तपस्वी, क्षीणो ऽयं तपस्वी।

न्यासः

वाऽऽक्रोशदैन्ययोः।, ६।४।६१

"क्षितायुः" इति। पूर्ववत्? कर्तरि क्तः। एवमुतरत्रापि। "क्षितकः" इति। अनुकम्पायां कन्()। आकोशदैन्याभ्यामन्यत्र पूर्वेण नित्यं भवति। अण्यदर्थ इति किम्()? क्षितं जाल्मस्य, क्षितकमस्य तपस्विनः॥

बाल-मनोरमा

वाऽऽक्रोशदैन्ययोः ८८७, ६।४।६१

वाऽऽक्रोशदैन्ययो-। अण्यदर्थ इत्यनुवर्तते। "ण्यदर्थो भावकर्मणी"इत्युक्तम्। आक्रोशे उदाहरति-- क्षीणायुर्भवेति। "गत्यर्थाकर्मके"ति कर्तरि क्तः। दैन्ये उदाहरति-- क्षीणोऽयं तपस्वीति। कृश इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशे ऽज्झनग्रहदृशां वा चिण्वदिट् च ६।४।६२

स्य सिच् सीयुट् तासि इत्येतेषु भावकर्मविषयेषु परत उपदेशे अजन्तानाम् अङ्गानां हन् ग्रः दृशित्येतेषां च चिण्वत् कार्यं भवति वा। यदा चिण्वत् तदा इडागमो भवति। कस्य? स्यसिच्सीयुट्तासीनाम् एव इति वेदितव्यम्। ते हि प्रकृताः। अङ्गस्य तु लक्ष्यविरोधात् न क्रियते। कानि पुनरस्य योगस्य प्रयोजनानि? चिण्वद्वृद्धिर् युक् च हन्तेश्च घत्वं दीर्घश्च उक्तो यो मितां वा चिणीति। इट् च असिद्धस् तेन मे लुप्यते णिर्नित्यश्च अयं वल्निमित्तो विघाती। अजन्तानां तावत् चायिष्यते, चेष्यते। अचायिष्यत, अचेष्यत। दायिष्यते, दास्यते। अदायिष्यत, अदास्यत। शामिष्यते, शमिश्यते, शमयिस्यते। अशामिष्यत, अशमिष्यत अशमयिष्यत। हन् घानिष्यते, हनिष्यते। अघानिष्यत, अहनिष्यत। ग्रः ग्राहिष्यते, ग्रहीष्यते। अग्राहिष्यत, अग्रहीष्यत। ग्रहो ऽलिटि दीर्घः ७।२।३७ इति प्रकृतस्य इटो दीर्घत्वम्। दृश् दर्शिष्यते, द्रक्ष्यते। अदर्शिष्यत, अद्रक्ष्यत। सिचि अजन्तानाम् अचायिषाताम्, अचेषाताम्। अदायिषाताम्, अदिषाताम्। अशामिषातम्, अशमिषातम्, अशमयिषाताम्। हन् अघानिषाताम्, अवधिषाताम्, अहसाताम्। ग्रः अग्राहिषाताम्, अग्रहीषाताम्। दृश् अदर्शिषाताम्, अदृक्षाताम्। सीयुटि अजन्तानाम् चायिषीष्त, चेषीष्ट। दायिषीष्ट, दासीष्ट। शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट। हन् घानिषीष्ट, वधिषीष्ट। ग्रः ग्राहिषीष्ट, ग्रहीषीष्ट। दृश् दर्शिषीष्ट, दृक्षीष्ट। तासावजन्तानाम् चायिता, चेता। दायिता, दाता। शामिता, शमिता, शमयित। हन् घानिता, हन्ता। ग्रः ग्राहिता, ग्रहीता। दृश् दर्शिता, द्रष्टा। स्यसिच्सीयुट्तासिषु इति किम्? चेतव्यम्। दातव्यम्। भावकर्मणोः इति किम्? चेष्यति। दास्यति। उपदेशे इति किम्? कारिष्यते इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति। अज्झनग्रहदृशाम् इति किम्? पठिष्यते। अङ्गाधिकारविहितं कार्यम् इह अतिदिश्यते, तेन हनिणिङामादेशा न भवन्ति। हनिष्यते, घानिष्यते। एष्यते, आयिष्यते। अध्येष्यते, अध्यायिष्यते। हनो वध लिङि २।४।४२, लुङि च २।४।४३, इणो गा लुङि २।४।४५, विभाषा लुङ्लृङोः २।४।५० इत्येते विधयो न भवन्ति।

लघु-सिद्धान्त-कौमुदी

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ७५६, ६।४।६२

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च। चिण्वद्भावपक्षेऽयमिट्। चिण्वद्भावाद् वृद्धिः। भाविता, भविता। भाविष्यते, भविष्यते। भूयताम्। अभूयत। भाविषीष्ट, भविषीष्ट॥

न्यासः

स्यसिच्सीयुदतासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट्? च। , ६।४।६२

"स्यसिच्सीयुट्तासिषु" इति सप्तम्या प्रतियोगिनो निर्देशाच्चिणीव चिण्वदिति सप्तमीसमर्थाद्वतिर्विज्ञायते, यथा--मथुरावत्? पाटलिपुत्रे प्रकार इति। "भावकर्मविषयेषु" इति। अनेन "भावकर्मणोः इत्यस्य विषयसप्तमीत्वं दर्शयति। भावकर्मणी विषयौ येषान्ते तथोक्ताः के पुनः स्यादयो भावकर्मविषयाः? ये स्यादयो लादेशेन भावकर्मणोर्विवक्षितयोर्भवतन्ति। चकारोऽत्र सन्नियोगार्थः क्रियते। तेन यदा चिण्वद्भावो इत्यादि। "कस्य" इति।

षष्ठीनिर्दिष्टस्य ह्यागमा भवन्ति, स्यादयश्चेह सप्तम्या निर्दिष्टाः; न चान्य आगमीश्रूयत इति प्रश्नः। यद्यपि ते सप्तम्या निर्दिष्टाः, न चान्य आगमी श्रूयत इति प्रश्नः। यद्यपि ते सप्तम्या निर्दिष्टाः, तथापि यथा "हनश्च वधः" (३।३।७६) इति पञ्चमी निर्दिष्टोऽपि हन्तिः प्रत्ययमुत्पाद्यदेशेन सम्बन्धमनुभवन्? षष्ठ()न्ततां प्रतिपद्यते तथा स्यादयोऽपि यदागमेन सम्बन्धमनुभवन्ति तदा षष्ठ()न्ततां प्रतिपद्यन्त इत्यभिप्रायेणाह--"स्यसिच्()" इत्यादि। अत्रैव हेतमाह--"ते हि प्रकृताः" इत्यादि। इडयमागमलिङ्गः, तस्यावश्यमागमिना भवितव्यम्(), तत्? किमश्रुतानामागमित्वं परिकल्प्य, तस्यैव विधीयतामुत प्रकृतानामेव स्यादीनाम#इति? युक्तं यत्? प्रकृतानामेव विधीयते; अश्रुतप्रकल्पनाया गरीयस्त्वात्()। ननु चाङ्गमपि प्रकृतम्(), तस्य कस्मान्न क्रियते? इत्यत आह--"अङ्गस्य" इत्यादि। अङ्गस्य न क्रियते, लक्ष्यविरोधात्()। यद्यङ्गस्य स्यात्(), तदेटि कृते लक्ष्यावरधादनिष्टं स्यात्()। न ह्यनण्टार्था शास्त्रे प्रक्लृप्तिरयुक्ता। तस्मान्मा भूल्लक्ष्यविरोध इति यद्यप्यङ्गमपि प्रकृतम्(), तथापि स्यादीनामेव क्रियते, नाङ्गस्य। इह द्वौ पक्षौ सम्भवतः--चिण्निमित्तं यत्कार्यं, यदाहत्य चिणि विधीयते तद्वातिदिश्यते। यद्वा चिणियद्दृष्टं चिण्णिमत्तमचिण्णिमित्त्ञ्च तत्? सामान्येन। तत्र यदि पर्वकः पक्ष आश्रीयेत, तदा "आतो युक्? चिण्कृतोः" ७।३।३३ इति युगागमः। "विण्णमुलोर्दोर्घोऽन्यतरस्याम्()" ६।४।९३ इति दीर्घत्वञ्च--एते द्वे एवाङ्गकार्येऽतिविश्ये स्याताम्()। नान्यात्? वृद्ध्यादिकम्(), न हि तदाहत्य चिणि विधीयते। आहत्य=उच्चार्येत्यर्थः। यद्धि साक्षाच्चिणं निमित्तमुपादाय विधीयते तच्चिण्याहत्य विधीयते, न चैवं वृद्ध्यादिकं विधीयते। अथ द्वितीयस्ततो न भवत्येष दोषप्रसङ्गः; वृद्ध्यादीनामपि चिणि दृष्टत्वात्()। यदि चिणि यद्दृष्टं तदतिदिश्यते, तर्हि हनिणिङामादेशा अपि प्राप्नुवन्ति, तेषामपि तत्र दृष्टत्वादिति? अनेनाभिप्रायेणाह--"कानि पुनः" इत्यादि। द्वितीये पक्षे यो दोषस्तमुत्तरत्र परिहरिष्यामीति चेतसि कृत्वा चिणि यद्दृष्टं कार्यं तन्निमित्तमितरद्वा तदिह सामान्येन निर्दिश्यत इति दर्शयन्नस्य योगस्य यानि प्रयोजनानि तेषां संग्रहश्लोकसमाह--"वृद्धिश्चिण्वत्()" इत्यादि। "चायिष्यते" इत्यत्र वृद्धिः प्रयोजनम्()। चिनोतेर्लुट्(), स्यप्रगतययः। "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्(), अत्रेदानीं चिण्वद्भावाद्? वृद्धिर्भवति यथा--चिणि "अचो ञ्णिति" ७।२।११५ इति वृद्धिर्भवत्य चायीति, एवमुत्तरत्रापि चिण्वदित्येतस्य प्रत्येकमभिसम्बन्धं कृत्वा यथायोगमतिदेशो योजनीयः। "अचायिष्यते" इति। लुङः, शेषं पूर्ववत्()। युक्? च प्रयोजनम्()--"दायिष्यते" इत्यत्र। दीर्घश्चोक्तो यो मितां वा चिणोति स च। प्रयोजनं शमिष्यते, शामिष्यत इत्यत्र। शमेः "जनिजृष्क्नसुरञ्जोऽमन्ताश्च" (धा।पा।८१७) इति मित्संज्ञा, स च ण्यन्तः "सनाद्यन्ता धातवः" ३।१।३२ इत्यत्रोपदिष्ट इत्युपदेशेऽजन्तो भवति। यत्तु हन्तेः "हो हन्तेञ्चिन्नेषु" ७।३।५४ इति कुत्वं विधास्यते, तच्च प्रयोजनं "घानिष्यते" इत्यत्र। हनिष्यत इत्यत्र तु "ऋद्धनोः स्ये" ७।१।७० इतीट्()। सन्त्येतानि प्रयोजनानि, किन्त्वनेनेटि कृते शमिष्यते, शमिष्यत इत्यत्र "णेरनिटि" ६।४।५१ इति णिलोपो न सिद्ध्यतिः सेट्त्वात्()। अत आह--"इट्? चासिद्धः" इत्यादि। "असिद्धवदत्रा भात्()" ६।४।२२ इत्यसिद्धेऽयं चिण्वदिट्(), तेन णिलोपो भविष्यति। स्यादेतत्()--येऽनुदात्तोपदेशाश्चिनोत्यादयस्तेभ्यः परेषां स्यादीनामनेनेड्विधीयत इति युक्तमसिद्धत्वम्(), ये तूदात्तोपदेशाः शमिप्रभृतयस्तेम्यः परत्वात्? "आर्धधातुकस्येड्वलादेः" ७।२।३५ इति वल्निमित्तेनेटा भवितव्यम्(), स च सिद्ध एव; त()स्मस्तु तदवस्थ एव दोषः? इत्यत आह--"नित्यश्चायम्()" इत्यादि। कृताकृतप्रसङ्गी यो विधिः स नित्यः--इत्येतदाश्रित्यायं चिण्वदिण्नित्यः। कृतेऽपि हि वलादित्वस्य विहितत्वात्()। "वल्निमित्तो विधाती" इति। वल्? निमित्तं कारणं यस्य स तथोक्तः। विघातोऽस्यास्तीति विघाती। विघातः=निमित्ताभावादप्रवृत्तिः। तदेवं नित्यत्वादुदात्तेभ्योऽप्यनेनैव चिण्वदिटा भवितव्यम्(), अयञ्चासिद्ध इति न भवति णिलोपाभावप्रसङ्गः। "ग्राहिष्यते" इति। "अत उपधायाः" ७।२।११६ इति वृद्धिः प्रयोजनम्()। अथेह "ग्रहोऽलिटि दीर्घः" (७।२।३७) इति दीर्घः कस्मान्न भवति? इत्याह--"ग्रहोऽलिटि" इत्यादि। वलादिलक्षणस्तत्रेट्? प्रकृत इति तस्यैव दीर्घो विज्ञायते, नान्यस्य। "द्रक्ष्यते" इति। "सृजिदृशोर्झल्यमकिति ६।१।५७ इत्यमागमः, व्रश्चादिना (८।२।३६) षत्वम्? "षढोः कः सि" (८।२।४१) इति कत्वम्? "इण्कोः ८।३।५७ इति षत्वम्()। "दर्शिष्यते" इति। "पुगन्तलघूपधस्य" ७।३।८६

इत्यनेनात्र गुणः सिद्ध्यत्येव। इडर्थस्तु चिण्वद्भावो विधीयते। "अचेषाताम्()" इति। आताम्(), सिचि रूपम्()। "अदिषाताम्()" इति। "स्थाध्वोरिच्च" १।२।१७ इतीत्त्वम्(), सिचश्च कित्वम्()। "अवधिषाताम्()" इति। "आत्मनेपदेष्वन्यतरस्याम्()" २।४।४४ इति वधादेशः। "अदृक्षाताम्()" इति। "लिङसिचावात्मनेपदेषु" १।२।११ इति कित्त्वम्()। तेनामागमगुणौ न भवतः, षत्वादि पूर्ववत्()। "चेता" इति। लुट्(), तासिः, "लुटः प्रथमस्य डारौरसः" २।४।८५ इति डादेशः, टिलोपः। "द्रष्टा" इति। पूर्ववदमादिः। "चेतव्यम्()" इति। कर्मणि तव्यः। "चेष्यति" इति। अत्र कर्तुर्लादेशेन विवक्षित्वात्? कर्तृविषयः स्यप्रत्ययः। "गुणे कृते रपरत्वे च न प्राप्नोति" इति। कृ ष्यत इति स्थिते गुणः प्राप्नोति, चिण्वद्भावश्च; तत्र परत्वाद्गुणः, तत्र कृते रपरत्वम्()। यद्युपदेशग्रहणं न क्रियेत ततोऽनजन्तत्वादिह न स्यात्()। उपदेशग्रहणाद्भवति। यद्यपि करोतिरुत्तरकालमनजन्तः, उपदेशे त्वजन्त एव। यदि चिणि यद्दृष्टं कार्यं तदतिदिष्टं हनिणिङादेशा अपि प्राप्नुवन्ति। तेषामपि तन्न दृष्टत्वात्()? इत्यत आह--"अङ्गाधिकारविहितम्()" इत्यादि। "अङ्गस्य" इत्यधिकारे सति प्रत्यसत्तेरङ्गाधिकारे विहितं कार्यं यच्चिणि दृश्यते सामान्येन तदतिदिश्यते, न तु यद्विप्रकृष्टं प्रकरणान्तरविहितम्()। न च हनिणिङामादेशा अङ्गाधिकारे विहिताः, अपि तु प्रकरणान्तरे। तस्मान् तेऽतिदिश्यन्त इति न भवन्ति तत्र। "धानिष्यते" इत्यत्र "लुङि च" २।४।४३ इत्यनेन विहितो वधादेशो न भवति। "आयिष्यते" इति। "इणो गा लुङि" २।४।४५ इत्यनेन विहितो गादेशः। "अध्यायिष्यते" इति। अत्र "विभाषा लुङ्लृङोः" २।४।५० इत्यनेन विहितौ गाङादेशः। एवमपि स्यादिभ्यः परस्य प्रत्ययसय लुक्? प्राप्नोति; अङ्गाधिकारे चिण उत्तरसय प्रत्ययस्य "चिणोलुक्()" (६।४।१०४) इति लुग्विधानात्()? नैष दोषः; इह हि सप्तमीसमर्थाद्विहितस्य वतेराश्रयणम्()। तेन चिणि यद्दृष्टं कार्यं पूर्वस्य सम्भवति तदतिदिश्यते, न तूत्तरस्य यत्? कार्यं तदपि॥

बाल-मनोरमा

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ५८२, ६।४।६२

स्यसिच्। अच् हन ग्रह दृश् एषां द्वन्द्वात्षष्ठी। उपदेश इत्च एव विशेषणम्, नेतरेषाम्, अव्यभिचारात्। तदाह--- उपदेशे योऽजिति। "अ" जित्यस्यं उपदेशान्वयित्वेऽपि सौत्रः समासः। "अ"जिति लुप्तषष्ठीकं वा। "चिण्व"दिति सप्तम्यन्ताद्वनतिः, "स्यसिच्सीयुट्तासिष्वि"त्युपमेयतः सप्तमीदर्शनात्। तदाह-- चिणीवेति। अङ्गकार्यमिति। अङ्गस्येत्यधिकृतत्वादिति भावः। "भावकर्मवाचिषु स्यादिष्वि" ति नार्थः,सीयुटो लिङागमतया भावकर्मवाचित्वेऽपि स्यसिच्तासीनां भावकर्मवाचित्वाऽभावात्। नापि "भावकर्मवाचिनि प्रत्यये परे ये स्यादयस्तेष्वि"त्यर्थः, स्यसिच्तासीनां भावकर्मवाचिप्रत्ययपरत्वसंभवेऽपि सीयुटस्तदसंभवात्। सीयुडागमविशिष्टस्यैव लिङो भावकर्मवाचितया केवलसीयुटो न भावकर्मवाचिप्रत्ययपरकत्वमस्ति। अतो विषयसप्तमीति मत्वाऽऽह-- स्यादीनामिडागमश्चेति। अत्र अज्झनग्रहदृशां, स्यादीनां च न यथासङ्ख्यं, व्याख्यानात्। "स्यादिषु परेषु अङ्गस्य इ" डिति नार्थः, "आद्र्धधातुकस्येड्वलादे" रित्यत्र "आद्र्धधातुके" इति योगं विभज्य "यावानिट् स आद्र्धधातुकस्यैवे"ति भाष्ये उक्तत्वात्। चिणि यदङ्गाधिकारविहितं कार्यं तस्यैवात्रातिदेशो, न तु चिणि दृष्टमात्रस्य। तेन "घानिष्यते" इत्यत्र "हनो वध लिङि, लुङि चे"ति चिणि दृष्टो वधादेशश्चिण्वदिति नातिदिश्यते, तस्य द्वैतीयीकत्वेन अङ्गाधिकारविहितत्वाऽभावात्। तथा आयिष्यते इत्यत्र इणो गादेशो न। "अध्यायिष्यते" इत्यत्र इङो गाङादेशो न , द्वैतीयीकत्वात्। चिण्वत्त्वाऽभावे अयमिण्नेत्याह-- अयमिडिति। सेट्कस्य वलादित्वलक्षण इट् तु स्यादेवेति भावः। ननु भूयेतेति विधिलिङि चिम्वत्वम् इट् च स्यातामित्यत आह-- इहाद्र्धधातुके इति। नेतरेषामिति। स्यसिच्तासीनां न विशेषणमित्यर्थः। अव्यभिचारादिति। स्यसिच्तासीनां सर्वत्राऽऽद्र्धधातुकत्वनियमादिति भावः। अत्र वार्तिकम्-- "चिण्वद्वृद्धिर्युक्च हन्तेश्च घ्तवं दीर्घश्चोक्तो यो मितां वा चिणीति। इट्वाऽसिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती॥" इति। स्यसिच्सीयुडिति सूत्रस्य वृद्ध्यादि प्रयोजनमित्यर्थः। तत्र वृदिं()ध दर्शयति-- चिण्वद्भावाद्वृद्धिरिति। लुटि भू ता इति स्थिते चिण्वत्त्वात् "अचोऽञ्णिती"ति

वृद्धिरित्यर्थः। इडागमश्चेत्यपि बोध्यम्। तत्फलं तु वक्ष्यते। तथा दाधातोर्लुटि "आतो युक् चिण्कृतो" रिति युक्। तथा लृटि "घानिष्यते" इत्यत्र "होहन्तेर्ञ्णिन्नेषु" इति घत्वम्। शमेर्हेतुमण्ण्यन्ताल्लुटि--शामिता शमितेत्यत्र "चिण्णमुलो"रिति वा दीर्घः। तथा अनेनैवाऽत्र इटि कृते तस्य आभीयत्वेनाऽसिद्धत्वादनिटीति निषेधाऽभावाण्णिलोपः। तथा "भाविष्यते" इत्यत्र भू-स्य इति स्थिते परमपि वलादिलक्षणं इटं बाधित्वा नित्यत्वादनेन इट्, वल्निमित्ते इटि कृतेऽकृते च चिण्वदिटः प्रवृत्त्या कृताऽकृतप्रसङ्गित्वात्। वलादिलक्षणस्त्विवण्न नित्यः, चिण्वदिटि कृते वलादित्वस्य विहतत्वेन वलादिलक्षमस्य इटोऽप्रवृत्तेः। नित्यश्चायमित्यस्य "चिण्वदि"डिति शेषः। "वल्निमित्त इत्यनन्तरम् "इडनित्य इत शेषः। अनित्यत्वे हेतुः-- "विघातीति। चिण्वदिटो वलादिनिमित्तविघातकत्वादित्यर्थः। एवं च सेट्कत्वेऽप्यनेनैव इट्। एतदभावपक्षे तु सेट्कत्वे वलादिलक्षण इडिति बोध्यम्। तदाह-- भवितेति। चिण्वदिडभावपक्षे वलादिलक्षण इडिति भावः।

तत्त्व-बोधिनी

स्यसिच्?सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनगर्हदृशां वा चिण्वदिट् च ४७८, ६।४।६२

स्यसिच्()सीयुट्()तासिषु। यद्यप्यजादयो द्वन्द्वेन निर्दिष्टास्तथाप्युपदेश इत्यच एव विशेषणं न हनादीनाम्, अव्यभिचारात्तदाह--उपदेशेयोऽजिति। "उपदेशे अजन्ताना"मिति न व्याख्यातम्। तथाहि सति णिजन्तस्य न स्यात्, तस्योपदेशाऽभावात्। उपदेशो हि साक्षादुच्चारण्। न च ण्यन्तस्य तदस्ति। चिण्वदिति सप्तम्यन्ताद्वतिः,

"स्यसिच् सीयुट् तासिषु"इति प्रतियोगिनिसप्तमीनिर्देशादतो व्याचष्टे---चिणीवेति। ननु च चिणि दृष्टमात्रस्य वृद्ध्यादिकार्यस्याऽतिदेशे घानिष्यते आयिष्यते अध्यायिष्यते इत्यत्र हनोवधादेशः,इणो गादेशः,इङो गाङादेशोऽपिस्यादिति चेत्। मैवम्। अङ्गाधिकारबलेन आङ्गस्यैव कार्यस्यातिदेशात्। न चैते हनिणिङादेशा आङ्गाः, तदेतदाह--अङ्गकार्यं वा स्यादिति। सीयुट इति। तथा च सीयुट् शब्देन तद्विशिष्टं लक्ष्यत इति भावः। आद्र्धातुकं इत्यनेन व्यावर्त्यस्तु विधिलिङ्। तेन भूयेतेत्यत्र न भवति। न चाऽत्र "लिङः सलोपः" इति सलोपाद्वलादित्वं नास्तीति वाच्यं, तस्येहानपेक्षणात्। यदाहुः-- "चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति। इट् चाऽसिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती।" इति। अस्यार्थः-- "चिण्व" दित्यतिदेशस्य वृद्ध्यादिकं प्रयोजनम्। तथा हि "भाविता" "भाविष्यते" इत्यादौ वृद्धिः। "दायिता" "दायिषीष्टे" इत्यादौ युक्, "घानिता" घानिष्यते" इत्यादौ घत्वम्। हेतुमण्ण्यन्तात्कर्मणिल लकारे "शामिता" "शमिता" "शामिष्यते" "शमिष्यते" इत्यादौ चिण्णमुलोरिति, मितामुपधाया वा दीर्घः। अत्रैव श#आमितेत्यादौ "स्यसिच्()सीयु"डित्यनेन कृत इट् आभीयत्वेनाऽसिद्धः, तेनाऽनिटीति निषेधो न प्रवर्तत इति णेर्लोपो भवति। "भाविष्यते" इत्यादौ भू--स्य इति स्थिते परमपि वलादिलक्षणमिटं बाधित्वा चिण्वदिडेव भवति। यतोऽयं नित्यः। विल्नमितो विघाती त्वनित्यः। साप्तमिके तस्मिन्कृतेऽयं चिण्वदिड्भवति। अस्मिन्कृते तु स न भवति। वलादिनिमित्तस्य विहितत्वात्। एवं च नित्यत्वात्सेड्भयोऽप्यपयमेवेड्भवति। एतदभावपक्षे तु सेड्भयो वलादिलक्षण इड्भवतीति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

दीङो युडचि क्ङिति ६।४।६३

दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः। उपदिदीये, उपदिदीयाते, उपदिदीयिरे। दीङः इति पञ्चमीनिर्देशादजादेर् युडागमो भवति। विधानसामर्थ्याच् च एरनेकाचो ऽसंयोगपूर्वस्य ६।४।८२ इति यणादेशे कर्तव्ये

तस्य सिद्धत्वं न भवति। अचि इति किम्? उपदेदीयते। क्ङिति इति किम्? उपदानम्।

लघु-सिद्धान्त-कौमुदी

दीङो युडचि क्ङिति ६४०, ६।४।६३

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट्। (वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ)। दिदीये॥

न्यासः

दीङो युडचि क्ङिति। , ६।४।६३

"उपदिदीये" इति। "दीङ क्षये" (धा।पा।११३४), "असंयोगाल्लिट्? कित्()" १।२।५ इति कित्त्वम्(), लिटस्तझयोरेशिरेचौ। "दीङः" इति षष्ठीयं वा स्यात्(), पञ्चमी वेति द्वौ पक्षौ। तत्र यद्याद्यः पक्ष आश्रीयेत, तदा "आद्यन्तौ टिकितौ" १।१।४५ इत्यादौ युटि कृते धातोरनिष्टं रूपमापद्यते; अत इदं षष्ठीपक्षे दूषणमालक्ष्य पञ्चमीपक्षं पुरस्कृत्याह--"दीङ इति पञ्चमीनिर्देशात्()" इत्यादि। पञ्चमीनिर्देशे हि सति "उभयनिर्देश पञ्चमनिर्देशो बलीयान्()" (शाक।प।९७) इति "दीङः" इति पञ्चम्याः "अचि" इति सम्पम्याः षष्ठीत्वे प्रकल्पते "तस्मादित्युत्तरस्य" १।१।६६ इत्यजादेरादिर्युडागमो भवति। "अचि" इति सप्तमीनिर्देशस्तूत्तरार्थः। ननु चात्र "एरनेकाचः" ६।४।८२ इति यणादेशे कर्तव्ये युडसिद्ध इति यणादेशेन भवितव्यम्(), ततश्चोपदिदीय इति न सिद्ध्येत्(), "उपदिये" इत्यनिष्टं रूपं प्राप्नोति, अत आह--"विधानसामर्थ्यात्()" इत्यादि। यदि यणादेशे कत्र्तव्ये युटोऽसिद्धत्वं स्यात्(), तदा युटो विधानमनर्थकं स्यात्(); विशेषाभावात्()। कथं पुनर्विशेषाभावः, यावताऽसति हि युट()एकस्य यकारस्य श्रवणं भवति, सति तु द्वयोः? नैषोऽस्ति विशेषः; न हि व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रवणं प्रति विशेषोऽस्ति। ये तु विशेषमिच्छन्ति, तन्मतेनास्माभिः पूर्वमेव यणादेशे युटः सिद्धत्वमन्यथा प्रतिपादितम्()। "उपदेदीयते" इति। "दीङ क्षये" (धा।पा।११३४), "असंयोगाल्लिट्? कित्()" १।२।५ इति कित्त्वम्(), लिटस्तझयोरेशिरेचो। "दीङः" इति षष्ठीयं वा स्यात्(), पञ्चमी वेति द्वौ पक्षौ। तत्र यद्याद्यः पक्ष आश्रीयेत, तदा "आद्यन्तौ टकितौ" १।१।४५ इत्यादौ युटि कृते धातोरनिष्टं रूपमापद्येत; अत इदं षष्ठीपक्षे दूषणमालक्ष्य पञ्चमीपक्षं पुरस्कृत्याह--"दीङ इति पञ्चमीनिर्देशात्()" इत्यादि। पञ्चमीनिर्देशे हि सति "उभयनिर्देश पञ्चमीनिर्देशो बलीयान्()" (शाक।प।९७) इति "दीङः" इति पञ्चम्याः "अचि" इति सप्तम्याः षष्ठीत्वे प्रकल्पिते "तस्मादित्युत्तरस्य" १।१।६६ इत्यजादेरादिर्युडागमो भवति। "अचि" इति। सप्तमीनिर्देशस्तूत्तरार्थः। ननु चात्र "एरनेकाचः" ६।४।८२ इति यणादेशे कत्र्तव्ये युडसिद्ध इति यणादेशेन भवितव्यम्(), ततश्चोपदिदीय इति न सिद्ध्येत्(), "उपदिये" इत्यनिष्टं रूपं प्राप्नोति। अत आह--"विधानसामर्थ्यात्()" इत्यादि। यदि यणादेशे कत्र्तव्ये पुटोऽसिद्धत्वं स्यात्(), तदा युटो विधानमनर्थकं स्यात्(); विशेषाभावात्()। कथं पुनर्विशेषाभावः, यावताऽसति हि युट()एकस्य यकारस्य श्रवणं भवति, सति तु द्वयोः? नैषोऽस्ति विशेषः; न हि व्यञ्जनपरस्यैकस्यानेकस्य का हला श्रवणं प्रति विशेषोऽस्ति। ये तु विशेषमिच्छन्ति, तन्मतेनास्माभिः पूर्वमेव यणादेशे युटः सिद्धत्वमन्यथा प्रतिपादितम्()। "उपदेदीयते" इति। यङः। "उपदानम्()" इति। ल्युट्(), "मीनातिमिनोतिदीङीं ल्यपि च" ६।१।४९ इत्यात्वम्()। "दीङ" इत्यनुबन्धनिर्देशो यङलुकि मा भूदित्येवमर्थः--देद्यतु, देद्युरिति। ननु चात्र "कास्प्रत्ययादाममन्त्रे" ३।१।३५ इत्यामा भवितव्यम्(), तेनाक्ङित्वादेव न भविष्यति? सत्यमेतत्(); अमन्त्रे न भविष्यति, मन्त्रे तु स्यादेव; तत्रामोऽभावात्()। अथ यङ्लुगन्तस्य मन्त्रे प्रयोगो न दृश्यते, तदा विस्पष्टार्थम्()॥

बाल-मनोरमा

दीङो युडचि क्ङिति ३३६, ६।४।६३

दीङो युडचि। "आद्र्धधातुके" इत्यधिकृतमचा विशेष्यते। तदादिविधिः। "दीङ" इति पञ्चमी। सप्तमी

षष्ठ()र्थे।तदाह--दीङः परस्येत्यादिना। दिदी ए इति स्थिते परत्वात् "एरनेकाचः" इति यणि प्राप्ते नित्यत्वाद्युट्। टकार इत्। उकार उच्चारणार्थः। टित्त्वादाद्यवयवः। दिदीये इति रूपमिति भावः। ननु युटि कृतेऽपि तस्याऽसिद्धत्वाद्यण्दुर्वारः। तथाच दिद्()य्ये इति स्यात्। इकारो न श्रूयेत, यकारद्वयं श्रूयेतेत्यत आह---वुग्युटाविति।

तत्त्व-बोधिनी

दीङो युडचि क्ङिति २९२, ६।४।६३

दीङो। पञ्चमीत्यभिप्रायेण व्याचष्टे-- परस्येति। अजादेरिति। "ङऋ सी"त्यत्रेव "उभयनिर्देशे पञ्चमीनिर्देशो बलीया"निति सप्तम्याः षष्ठीकल्पनम्। अचि किम्?। देदीयते। क्ङितीति किम्?। उपादानम्। आभीयत्वेनाऽसिद्धत्वमाशङ्क्याह--वुग्युटाविति।

*वुग्युटावुवङ()णोः सिद्धौ वक्तव्यौ। दिदीये इति। परमपि यणं बाधित्वा नित्यत्वादादौ युट्। सति तु यणि ईकारस्य श्रवणं न स्यादिति युटः सिद्धत्वमुक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

आतो लोप इटि च ६।४।६४

इट्यजादावार्धधातुके क्ङिति च आकारान्तस्य अङ्गस्य लोपो भवति। इटि पपिथ। तस्थिथ। किति पपतुः। पपुः। तस्थतुः। तस्थुः। गोदः। कम्बलदः। ङिति प्रदा। प्रधा। आर्धधातुके इत्येव, यान्ति। वान्ति। व्यत्यरे। व्यत्यले। रातेर् लातेश्च लङि इटि रूपम्। अचि इत्येव, ग्लायते। दासीय।

लघु-सिद्धान्त-कौमुदी

आतो लोप इटि च ४९१, ६।४।६४

अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः। पपतुः। पपुः। पपिथ, पपाथ। पपथुः। पप। पपौ। पपिव। पपिम। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्॥

न्यासः

अतो लोप इटि च। , ६।४।६४

"इट()जादावार्धधातुके क्ङिति च" इति। "अजादावार्धधातुके" इति प्रत्येकमभिसम्बध्यते--इट()जादावार्धधातुके, क्ङिति चाजादावार्धधातुक इति। इङ्ग्रहणमक्ङिदर्थम्()। "पपिथ" इति। पातेः विबतेर्वा लिट्(), सिप्(), "परस्मैपदानाम्()" (३।४।८२) इत्यादिना तस्य थल्? "ऋतो भारद्वाजस्य" ७।२।६३ इति नियमादिट्()। "गोदः" इति। "आतोऽनुपसर्गे कः" ३।२।३। "व्यत्यरे, व्यत्यले" ति। "कत्र्तरि कर्मव्यतीहारे" (१।३।१४) इत्यात्मनेपदम्? उत्तमपुरुषैकवचनम्()--इट्(), तस्य "सार्वधातुकमपित्()" १।२।४ इति ङित्त्वम्()। तत्रार्धधातुकत्वं नास्तीति न भवति लोपः। "ग्लायते" इति। भावे लकारः। "दासीय" इति। आशिषि लिङः, आत्मनेपदोत्तमैकवचनम्(), तस्य "इटोऽत्()" ३।४।१०६ इत्यदादेशः। अत्र सीयुटस्तद्भक्तत्वादिटोजादित्वं नास्तीति सत्यपयार्धधातुकाजादीत्वे लोपाभावः॥

बाल-मनोरमा

आतो लोप इटि च २०९, ६।४।६४

दधा--अतुसिति स्थिते-- आतो लोपः। "आद्र्धदातुके" इत्यधिकृतम्। "दीङो यु"डित्यतोऽचि क्ङितीति चानुवर्तते। अचीत्याद्र्धधातुकविशेषणत्वात्तदादिविधिः। क्ङिति अजाद्याद्र्धधातुके इटि च आतो लोप इति लभ्यते। फलितमाह-- अजाद्योरिति। इट आद्र्धधातुकत्वं तु तदवयवत्वाद्बोद्ध्यम्। क्ङितीति च इटो न विशेषणम्, इड्()ग्रहणसामथ्र्यात्। इडित्यनेन उत्तमपुरुषैकवचनम्, इडागमश्च गृह्रते। अजाद्योः किम्?। ग्लैधातोः कर्मणि लटि यकि-- ग्लायते। आद्र्धधातुकयोः किम्?। यान्ति वान्ति। दधौ इत्यत्र तु क्ङित्त्वाऽभावान्नाल्लोपः। सति तस्मिन् औत्वं न स्यात्। ननु धा--अतुसिति स्थिते द्वित्वात्पर्तवादाल्लोपे सति एकाच्त्वाऽभावाद्द्वित्वं न स्यादित्याशङ्क्य परहरति-- द्वित्वादित्यादिना। धेट्धातुरनिट्। भारद्वाजनियमात्थलि वेडित्याह-- दधिथ दधाथेति। इट्पक्षे आल्लोपः। दधथुः। दध। दधौ इति सिद्धवत्कृत्याह--दधिवेति। वसि आत्त्वे क्रादिनियमादिटि आल्लोप इति भावः। एवं दधिमेत्यपि ज्ञेयम्। धातेति। लुटि आत्त्वे तासादीति भावः। धास्यति। धयतु। अधयत्। धयेत्।

तत्त्व-बोधिनी

आतो लोप इटि च १८१, ६।४।६४

आद्र्धधातुक इत्यनुवर्तते। "दीङो युडचि क्ङिती"त्यतोऽचि क्ङितीति च। तदेतत्फलितमाह--- अजाद्योराद्र्धधातुकयोरिति। अजाद्योः किम्?। ग्लायते। यक्-- जाग्लायते। यङ्--दासीय। डुदाञो लिङुत्तमैकवचनमिट्। आद्र्धधातुकयोः किम्?। यान्ति। वान्ति। व्यतिरे। कर्मव्यतिहारे रा दाने धातोर्लडुत्तमैकवचनमिट्। [व्यतिरै। लट इट्] दधिश्चेति। एवं च अजाद्याद्र्धधातुकस्य कित्त्वेन दधिव दधिमेत्यादिष्वातो लोपसिद्धावपि दधिथ पपिथेत्यादि रूपसिद्धये सूत्रेऽस्मिन्निटीति ग्रहणमावश्यकमिति ज्ञेयम्। यदि तु इडागम एवात्र गृह्रते व्याख्यानात्तदाऽचि क्ङितीत्येतदाद्र्धधातुकस्यैव विशेषणं , न तूभयोः।

---

सूत्रम्

काशिका-वृत्तिः

ईद्यति ६।४।६५

ईकारः आदेशो भवति आकारन्तस्य अङ्गस्य यति परतः। देयम्। धेयम्। हेयम्। स्तेयम्।

लघु-सिद्धान्त-कौमुदी

ईद्यति ७७७, ६।४।६५

यति परे आत ईत्स्यात्। देयम्। ग्लेयम्॥

न्यासः

ईद्यति। , ६।४।६५

"क्ङिति" इत्युत्तरार्थमनुवर्तमानमपीह नाभिसम्बध्यते; यत क्ङित्त्वासम्भवात्()। तकार उच्चारणार्थः; अनण्त्वादेव हि सवर्णग्रहणं न भविष्यति। असत्यपि वा जातिपक्षे सवर्णग्रहण आन्तरम्यादीर्घ एव भविष्यति; न ह्रस्वः। दीर्घोच्चारणमुत्तरार्थम्()। इह तु गुणेन भवितव्यम्()। न चात्र दीर्घस्य ह्रस्वस्य वा गुणे कृते कश्चिद्विशेषोऽस्ति। "देयम्()" इति। "अचो यत्()" ३।१।९७॥

बाल-मनोरमा

इद्यति ६६४, ६।४।६५

इद्यति। आत इति। "आतो लोप इटि चे"त्यतस्तदनुवृत्तेरिति भावः। गुण इति। दाधातोः "अचोय"दिति यति अत ईत्त्वे "सार्वधातुकाद्र्धधातुकयो"रिति गुण इति भावः। ग्लेयमिति। "ग्लै हर्षक्षये" इति धातोर्यति "आदेचः" इत्यात्त्वे ईत्त्वे गुण इति भावः। तकिशसीति। तकि,शसि , चति , यति, जनी प्रादुर्भावे" इति धातवः। अत्र सर्वत्र अकर्मकेभ्यो भावे प्रत्ययः। सकर्मकेभ्यस्तु कर्मण्यपीति विवेकः। ननु "अर्हे कृत्यतृचश्चे"त्यर्हेऽपि जनेण्यताऽपि जन्यमिति रूपसिद्धेर्जनिग्रहणं व्यर्थमित्यत आह--स्वरार्थ इति। "यतोऽनावः" इत्याद्युदात्तार्थ इत्यर्थः। ननु ण्यति उपधावृद्धिः स्यादतस्तदभावार्थमिह जनेर्यद्विधिस्त्वित्याशङ्क्य निराकरोति-- न च वृद्धिप्रसङ्ग इति। कुत इत्यत आह-- जनिवध्योरिति। हनो वेति। हनधातोर्यद्वा स्यात्, "प्रकृतेर्वधादेशश्चेत्यर्थः। पक्षे इति। यदभावपक्षे इत्यर्थः। घात्य इति। ण्यति "हनस्तोऽचिण्णलो"रिति नस्य तः। कुत्वम्। उपधावृद्धिः। वधादेशस्तु यत्संनियोगशिष्टत्वान्नेति भावः।

तत्त्व-बोधिनी

ईद्यति ५५३, ६।४।६५

* हनो वा यद्वधश्च वक्तव्यः। हनो वा यदिति। हन्तेर्वा यत्स्यात्। यत्संनियोगेन वधादेशस्तु नित्य एव। यद्यपि वधमर्हतीति वध्य इति "शीर्षच्छेदाद्यच्चे"त्यतो यदित्यनुवर्तमाने "दण्डादिभ्यः" इति तद्धितेन यताऽपि सिध्यति तथाप्यसिवध्यो मुसलवध्य इति समासो न सिध्येत्। कृति पुनः "कर्तृकरणे कृता" इति सिध्यति। न चासिवधमर्हतीति विग्रहे कृतसमासादेव तद्धितोऽस्त्विति वाच्यम्। दण्डादिषु केवलस्य वधशब्दस्य पाठात्प्रत्ययविधौ तदन्तविदेश्च प्रतिषेधात्, स्वरे भेदाच्च। असिवधशब्दाद्यति हि सति "तित्स्वरित"मिति स्वरितः प्रसज्येत। कृदन्तेन समासे तु कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्द आद्युदात्तः। अतएव वध्यशब्देन तद्धितान्तेन सह सुप्सुपेति समास इत्यपि न वाच्यम्, अन्तोदात्तत्वप्रसङ्गादिति दिक्। घात्य इति। "हनस्तोऽचिण्णलोः" इति तत्वम्। "हो हन्तेः" इति कुत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

घुमास्थागापाजहातिसा हलि ६।४।६६

घुसंज्ञाकानाम् अङ्गानां, मा स्था गा पा जहाति सा इत्येतेषां हलादौ क्ङिति प्रत्यये परतः ईकारादेशो भवति। दीयते। धीयते। देदीयते। देधीयते। मीयते। मेमीयते। स्थीयते। तेष्थीयते। गीयते। जेगीयते। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। पीयते। पेपीयते। पातेरिह ग्रहणं न अस्ति, लुग्विकरणत्वात्। पायते इत्येव तस्य भवति। हीयते। जेहीयते। जहातेरिह निर्देशात् जिहातेर् ग्रहणं न भवति। हायते। षो ऽन्तकर्मणि। अवसीयते। अवसेसीयते। हलि इति किम्? ददतुः। ददुः। आतो लोपाद्धि परत्वादीत्वम् स्यात्। एतदेव हल्ग्रहणं ज्ञापकम् अस्मिन् प्रकरणे विप्रतिषेधेन असिद्धत्वं भवति। क्ङिति इत्येव, दाता। धाता।

लघु-सिद्धान्त-कौमुदी

धुमास्थागापाजहातिसां हलि ५९१, ६।४।६६

एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके। अध्यगीष्ट, अध्यैष्ट। अध्यगीष्यत, अध्यैष्यत॥ दुह प्रपूरणे॥ २१॥ दोग्धि। दुग्धः। दुहन्ति। धोक्षि। दुग्धे। दुहाते। दुहते। धुक्षे। दुहाथे। धुग्ध्वे। दुहे। दुह्वहे। दुह्महे। दुदोह, दुदुहे। दोग्धासि, दोग्धासे। धोक्ष्यति, धोक्ष्यते। दोग्धु, दुग्धात्। दुग्धाम्। दुहन्तु। दुग्धि, दुग्धात्। दुग्धम्। दुग्ध। दोहानि। दोहाव। दोहाम। दुग्धाम्। दुहाताम्। दुहताम्। धुक्ष्व। दुहाथाम्। धुग्ध्वम्। दोहै। दोहावहै। दोहामहै। अधोक्। अदुग्धाम्। अदुहन्। अदोहम्। अदुग्ध। अदुहाताम्। अदुहत। अधुग्ध्वम्। दुह्यात्, दुहीत॥

न्यासः

घुमास्थागापाजहातिसां हलि। , ६।४।६६

"दीयते" इति। कर्मणि लकारः। "देदीयते" इति। यङः। अथ मेति कस्येदं ग्रहणम्(), किम्? "मेङ्? प्रणिदाने" (धा।पा।९६१) इत्यस्य भौवादिकस्य? उत्त "माङ्? माने" (धा।पा।१०८८) ["माने शब्दे च"--धा।पा।] इत्यस्य जौहोत्यादिकस्य? आहोस्वित्? "मा माने" (धा।पा।१०६२) इत्यस्यादादिकस्य? तत्र केचिदाहुः--"निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इत्यादादिकस्य ग्रहणम्()। अन्ये त्वाहुः--"लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्()" (व्या।प।५०) इत्यलुग्विकरणयोर्माङमेङोरिति। अपरे ब्राउवते--"गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति त्रयाणामपीति; एतदेव वृत्तिकारस्याभिमतमिति लक्ष्यते। तथा हि--"पातेरिह ग्रहणं नास्ति, लुग्विकरणत्वात्()" इति। ब्राउवता "पा रक्षणे (धा।पा।१०५६) इत्यस्य ग्रहणाभावः स्वयमेवोक्तः। यदि चात्रालुग्विकरणयोर्लुग्विकरणस्य वा ग्रहणमभिमतं स्यात्(), तदपि प्रतिपादयेत्(), न च प्रतिपादितम्(), अतोऽवगम्यते--त्रयाणामापि ग्रहणमभिमतमिति। "गा" इति। "गाङ गतौ" (धा।पा।९५०) "के गै शब्दे" (धा।पा।९१६,९१७) एतौ भौवादिकौ; "गा स्तुतौ छन्दसि" (धा।पा।११०६) ["छन्दसि" नास्ति--धापा।] इति जौहोत्यादिकः, "इणो गा लुङि" (२।४।४५) इतीण#ओ गादेशः, "इण्वादिक इति वक्तव्यम्()" (वा।१६७) इतीको गादेशः "गाङ्? लिटि" २।४।४९, "विभाषा लुङ्लृङो (२।४।५०) इति चेङो गाङादेशः--एषां पूर्ववत्? सर्वेषामविशेषेण ग्रहणम्()। सत्यपि सर्वेषां ग्रहणे यस्य क्ङिदार्धधातुकपरं सम्भवति तस्यैवेत्त्वं भवति, नेतरस्य; निमित्ताभावात्()। "गीयते, जेगीयते" इति। भौवादिकयोरुदाहरणे। "अध्यगीष्ट" इत्यादि। इङो गाङ्(), गाङ्कुटादि१।२।१ सूत्रेण सिचो ङित्त्वम्(), "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः। अथ किमर्थं "जहाति" इति श्तिपा सिर्देशः क्रियते, न हेत्येवोच्येत? इत्यत आह--"जहातेः" इत्यादि। यदि हेति निर्देशः क्रियते, तदा जिहातेः "ओ हाङ गतौ" (धा।पा।१०८९) इत्यस्यापि स्यात्(), जहातीति निर्देशे तु न भवति। अत्र हिनिर्देशे सात यस्यैतद्रूपं भवति तस्यैव ग्रहणेन भवितव्यम्()। कस्य चैतद्रूपम्()? "ओ हाक्? त्यागे" (धा।पा।१०९०) इत्यस्य, इतरसय "भृञामित्()" ७।४।७६ इत्यभ्यालस्येत्त्वे कृते जिहातीति रूपं भवतीति। कामं हागित्यपि निर्देशे न भवति जिहीतेः प्रसङ्गः, वैचित्र्यार्थस्तु न तथा निर्देशः कृतः। "अवसीयते" इति। "षोऽन्तकर्मणि" (धा।पा।११४७)। "ददतुः" इत्यादि। ननु चात्र "आतो लोपः" ६।४।६४ इत्यादिनाकारलोपो भविष्यति, तत्? किमेतन्निवृत्त्यर्थेन हलीत्यनेन? इत्यत आह--"आतो लोपाद्धि" इत्यादि। आतो लोपस्यावकाशः--ययतुः, ययुरिति, ईत्वस्यावकाशः---दीयते, धीयत इति; इहोभय प्राप्नोति--ददतुः ददुरिति। तत्र यदि हल्ग्रहणं न क्रियेत, तदा परत्वादीत्त्वं स्यात्()। ननु सिद्धयोद्र्वयोर्विप्रतिषेध उपपद्यते, इह तु "असिद्धवदत्रा भात्()" ६।४।२२ इति द्वयोरप्यसिद्धत्वम्(), तत्? कुतो विप्रतिषेधः, अ()स्मश्च सति परत्वादीत्त्वं स्यादिति न युक्तं वक्तुम्(), तथा हि--"विप्रतिषेधे परं कार्यम्()" (१।४।२) इत्युक्तम्()? अत आह--"एतदेव" इत्यादि। यद्यत्र विप्रतिषेधे कत्र्तव्येऽसिद्धत्वं स्यात्(), हल्ग्रहणमनर्थकं स्यात्()। भवत्वत्रेत्त्वम्(), तस्यासिद्धत्वात "आतो लोपः" ६।४।६४ भविष्यति, तत्? किं हल्ग्रहणेन? तदेतत्कथमर्थवद्भवति? यदि विप्रतिषेधे कत्र्तव्ये सिद्धत्वं स्यात्? नान्यथा॥

बाल-मनोरमा

घुमास्थागापाजहातिसां हलि २९३, ६।४।६६

घुमसाथा। "षो अन्तकर्मणि" इत्यस्य कृतात्वस्य निर्देशः। घु मा स्था गा पा जहाति साएषां द्वन्द्वात्षष्ठी। "आद्र्धधातुके" इत्यधिकृतम्। "आतो लोप इटि चे" त्यत आत इति "ईद्यती"त्यत ईदिति, "अनुदात्तोपदेश"त्यतः क्ङिति--इति चानुवर्तते। तदाह--एषामित्यादिना। अध्यगीष्टेति। अधि अ गा स् त इत्यत्र आकारस्य ईकारे यणि सिचः षत्वे तकारस्य ष्टुत्वेन ट इति भावः। "गातिस्थे" तिन सिज्लोपः, परस्मैपदाऽभावात्। अध्यगीषाताम् अध्यगीषत। अध्यगीष्टाः अध्यगीढ्वम्। अध्यगीषि अध्यगीष्वहि अध्यगीष्महि। गाङभावपक्षे आह-- अध्यैष्टेति। अधि आ इ स् त इति स्थिते

इकारस्य गुणे आटो वृद्धौ यणि षत्वष्टुत्वे इति भावः। अध्यैषाताम् अध्यैषत। अध्यैष्ठाः अध्यैषाथाम् अध्यैढ्वम्। "धि चे"ति सलोपः। अध्यैषि अध्यैष्वहि अध्यैष्महि। लृङ()आह-- अध्यगीष्यतेति। "विभाषा लुङ्लृङो"रिति गाङादेशे स्ये तस्य "गाङ्कुटादिभ्यः" इति ङित्वे "घुमास्थे"ति ईत्वे अटि यणि षत्वमिति भावः। अध्यगीष्येतामित्यादि। गाङभावपक्षे आह--अध्यैष्यतेति। अध्यैष्येतामित्यादि। इक्स्मरणे। अयमपीति। इङ्धातुवदयमपि धातुर्नित्यमधिपूर्वक इत्यर्थः। ननु धातुपाठे इङमधिकृत्य "नित्यमधिपूर्व" इति वचनात्, भूवादिसूत्रभाष्याच्च इङो नित्यमधिपूर्वकत्वं युक्तम्, अस्य तु तथात्वे किं प्रमाणमित्यत आह-- अधीगर्थेति। तत्र हि अधीगर्थेत्यनेन स्मरणार्थदातुर्विवक्षितः। इग्धातोरधिपूर्वकत्वाऽभावेऽपि स्मरणार्थकत्वे इगर्थेत्येतावतैव स्मरणार्थकधातुलाभात्तत्र अधीति व्यर्थं स्यात्। अत इग्धातुरयं नित्यमधिपूर्वक एव स्मरणार्थक इति विज्ञायत इत्यर्थः। इण्वदिक इति। षष्ठ()न्ताद्वतिः। इणो यत् कार्यम् "इणो यणि" त्यादि, तदिको भवतीत्यर्थः। अध्येति, अधीत इति सिद्धवत्कृत्य आह--अधियन्तीति। अन्तादेशे इयङपवादः। "इणो य"णिति यणिति भावः। अध्येषि अधीथः अधीथ। अध्येमि अधीवः अधीमः। अधीयाय। अतुसि तु द्वित्वे कृते अधि इ इ अतुसिति स्थिते "इणो य"णिति द्वितीयस्य इकारस्य यणि प्रथमस्य इकारस्य "दीर्घ इणः किती"ति दीर्घे सवर्णदीर्घे--अधीयतुः अधीयुः। अधीययिथ--अथीयेथ अधीयथुः अधीय। अधीयाय--अधीयय अधीयिव अधीयिम। अध्येता। अध्येष्यति। अध्येतु- अधीतात् अधीताम् अधियन्तु। अधीहि-- अधीतात् अधीतम् अधीत। अध्ययानि अध्ययाव अध्ययाम। अध्यैत् अध्यैताम् अध्यायन्। अध्यैः अध्यैतम् अध्यैत। अध्यायम् अध्यैव अध्यैम। इति सिद्धवत्कृत्य लुङ्याह-- अध्यगादिति। इण्वत्त्वात् "इणो गा लुङी"ति गादेशे "गातिस्थे" तिसिचो लुका लुप्तत्वात् "घुमास्थे"ति ईत्त्वं न। अध्यगाताम्। अध्यगाम् अध्यगाव। अध्यैष्यत्। केचित्त्विति। "आद्र्धधातुके" इत्यधिकारे "इणो गा लुङी"ति सूत्रे एतद्वार्तिकपाठस्य भाष्ये दर्शनात्तदधिकारोक्तानामेव कार्याणमुपस्थितत्वादिति भावः। तन्मते यण् नेति। "इणो य"णित्यस् आद्र्धधातुकाधिकारस्थत्वाऽभावान्नातिदेश इत्यर्थः। तेन झोऽन्तादेशे इयङि सवर्णदीर्घे अधीयन्तीत्याद्यूह्मम्। राघवयोरधीयन्निति। "अधीगर्थे"ति षष्ठी। राघवौ स्मरन्नित्यर्थः। अधिपूर्वादिग्धातोर्लटः शतरि शपो लुकि इकारस्य इयङि सवर्णदीर्घे अधीयदिति शत्रन्तात्सुबुत्पत्तौ सौ रूपम्। वी गतीति। "अजेर्व्यघञपो"रिति सूत्रभाष्यरीत्या अस्य आद्र्धधातुके नास्ति प्रयोग इति शब्देन्दुशेखरे स्थितम्। वियन्तीति। एकाच्त्वाद्यणभावादियङिति भावः। लोटि वेतु-- वीतात् वीताम् वियन्तु। इति सिद्धवत्कृत्याह--वीहीति। हेरपित्त्वेन ङित्वान्न गुण इति भावः। वीतात् वीतम् वीत। वयानि वयाव वयाम। लङ()आह-- अवेदिति। अवियन्निति। वी--अन्निति स्थिते परत्वादडागमात् प्रागियङि कृते अडागम इति भावः। मतान्तरमाह--अडागमे सतीति। "लावस्थायाम"डिति पक्षे इयङं बाधित्वा अनेकाच्त्वाद्यणि अव्यन्निति केचिदाहुरित्यर्थः। केचिदित्यस्वरसं सूचयति। तद्बीजं तुकृतेऽप्यटि यणि कर्तव्ये आभीयतया अटोऽसिद्धत्वादनेकाच्त्वाऽभावाद्यणभावादियङेवोचित इति शब्देन्दुशेखरे विस्तरः। अत्रेति। वी-ई इति सवर्णदीर्घे" वी गती"ति निर्देश इति भावः। ईयादिति। विधिलिङि आशीर्लिङि च रूपमिदं समानम्। "स्को" रिति सलोपः। तत्र विधिलिङि ईयातामित्यादि, आशिषितु ईयास्तामित्यादी"ति विशेषः। ऐषीदिति। सिचि वृद्धिः। या प्रापणे इति। ननु गच्छतीत्यर्थे यातीति कथमित्यत आह--प्रापणमिह गतिरिति। णिजर्थस्त्वविवक्षित इति भावः। प्राणियातीति। "नेर्गदे"ति णत्वम्। ययौ। याता। यास्यति। यातु। अयात् अयाताम्।

तत्त्व-बोधिनी

घुमास्थागापाजहातिसां हलि २५३, ६।४।६६

घुमास्था। "दीङो युडची"त्यतः क्ङितीत्यनुवर्तते। आद्र्धधातुक इति चाधिक्रियत एव। क्ङिति किं?। दाता धाता। हलादौ किं?। ददतुः। ददुः। अन्यथा आतो लोपात्परत्वादीत्वं स्यात्। आद्र्धधातुके किं?। मातः। माथः। अध्यगीष्टेति। सिचो ङित्वादीत्त्वम्। इक् स्मरणे। ककार इह "इण्वदिकः" इति विशेषणार्थः। "ए"रित्युक्ते तु "इट किट कटी"त्यत्र प्रश्लिष्टस्य

ईधातोरपि ग्रहणं स्यादित्याहुः।

* इण्वदिक इति वक्तव्यम्। केचित्त्विति। आद्र्धधातुकाधकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादतिदेश इति भावः। अधीयन्निति। स्मरन्नित्यर्थः। "राघवयो"रिति। अत्र "अधीयगर्थदयेशां कर्मणी"ति षष्ठी। वी गति। अवियन्निति। अडागमात्परत्वादियङ्। अडागमे सतीति। कृताऽकृतप्रसङ्गित्वमात्रेण अटो नित्यत्वादिति भावः। अत एवाऽपरितोषात्, "असिद्धवदत्राभा"दिति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङेवोचित इत्याशयेन वा केचिदित्युक्तम्। "लावस्थायामेवाऽडागम" इति पक्षे तु यणेवेति बोध्यम्। ईकारोऽपीति। प्रयुञ्चते च-- "न हि तरणिरुदीते दिक्पराधीनवृत्ति"रिति। व्याख्यातं च मनोरमायाम्-- "कर्मव्यतिहारे तङ्। न च "न गतिहिंसार्थेभ्यः" इति निषेधः शङ्क्यः। उत्पूर्वस्याविर्भावार्थत्वा"दिति। अत्र वदन्ति-- व्यतिशब्दं विना कर्मव्यतिहारकल्पनं क्लेशावहम्। परकीयकर्म च कर्मव्यतिहारेऽपेक्ष्यते, तञ्चात्र। परस्परकरणं तु न संभवत्येव। ततश्चोदिते इति भावे निष्ठा ज्ञेया। तथा चोदये दिक्पराधीनवृत्तिस्तरणिर्नेत्यर्थः सुगम इति।

---

सूत्रम्

काशिका-वृत्तिः

एर् लिङि ६।४।६७

घुमास्थागापाजहातिसामङ्गानां लिङि परतः एकारादेशो भवति। देयात्। धेया। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसेयात्। क्ङिति इत्येव, दासीष्ट। धासीष्ट।

लघु-सिद्धान्त-कौमुदी

एर्लिङि ४९२, ६।४।६७

घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि। पेयात्। गातिस्थेति सिचो लुक्। अपात्। अपाताम्॥

न्यासः

एर्लिङि। , ६।४।६७

"पूर्वेणेत्त्वे प्राप्त एत्वं विधीयते। "मेयात्()" इति। "मा माने" (धा।पा।१०६२) इत्यस्येदम्()दाहरणम्(), न तु माङ् मेङोः, तयोह्यरात्मनेपदित्वात्परस्मैपदं न सम्भवति। "गेयात्()" इति। "कै गै" (धा।पा।९१६,९१७) इत्यस्योदाहरणम्(), न तु गाङः; तस्य परस्मैपदासम्भवात्()। नापीणिगिङादेशानाम्(); तेषामपि लिङ्यसम्भवात्()। इङादेशस्य तु पूर्वस्माच्च हेतोः॥

बाल-मनोरमा

एर्लिङि २११, ६।४।६७

एर्लिङि। "ए"रिति प्रथमान्तम्। "आद्र्धधातुके"इत्यधिकृतम्। "घुमास्थागापाजहातिसा"मित्यनुवर्तते। घु मा स्था गा पा जहाति सा एषां द्वन्द्वात् षष्ठीबहवनचम्। तदाह-- घुसंज्ञानां मास्थादीनामिति। किति लिङिति। "दीङो यु"डित्यतः कितीत्यनुवृत्तेरिति भावः। ङितीति नानुवर्तते, लिङाद्र्धधातुकस्य ङित्त्वाऽसंभावात्।

तत्त्व-बोधिनी

एर्लिङि १८३, ६।४।६७

एर्लिङि। मास्थादीनमिति। मास्थागापाजहातिसामित्यर्थः। मा माने। गामादाग्रहणेष्वविशेषेऽपि माङ्मेङौ नेह गृह्येते, लिङि कित्त्वाऽसंभवात्। ष्ठा गतिनिवृत्तौ। गै शब्दे। गाङ् गतौ इति तु न गृह्यते, लिङि कित्त्वाऽसंभवादेव। पा पाने। ओहाक् त्यागे। षोऽन्तकर्मणि। देयात्। धेयात्। मेयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसंयात्। आद्र्धधातुके किम्?। मायात्। मायाताम्। मायुः। कितीति किम्?। दासीष्ट। इह "दीङो युडची"त्यतः क्ङितीत्यनुवर्तमानेऽपि प्रकृतोपयोगितया कितीत्यस्यैवानुवृत्तिः कृता।

---

सूत्रम्

काशिका-वृत्तिः

वा ऽन्यस्य संयोगाऽदेः ६।४।६८

घ्वादिभ्यः अन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः। ग्लेयात्, ग्लायात्। म्लेयात्, म्लायात्। अन्यस्य इति किम्? स्थेयात्। संयोगादेः इति किम्? यायात्। क्ङिति इत्येव, ग्लासिष्ट। अङ्गस्य इत्येव, निर्वायात्।

लघु-सिद्धान्त-कौमुदी

वान्यस्य संयोगादेः ४९६, ६।४।६८

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिङि। ग्लेयात्, ग्लायात्॥

न्यासः

वाऽन्यस्य संयोगादेः। , ६।४।६८

"अन्यस्येति किं? "स्थेयात्()" इति। यद्यन्यस्येति न क्रियेत, तदा पूर्वयागोऽन्येषु ध्वादिषु सावकाशः, अयमपि ग्लायादित्यादिषु; स्थेयादित्यत्रोभयप्राप्तौ परत्वादनेन विकल्पः स्यादित्यन्यग्रहणम्()। यदि पूर्वयोगस्तिष्ठ()त्यर्थोऽप्यारभ्येत तदा तदर्थस्य तस्यारम्भसामथ्र्यात्? पूर्वेण नित्यमेत्त्वं भविष्यति, अन्यथां तदर्थस्य तस्यारम्भो निष्फलः स्यादिति शक्यमन्यग्रहणमकर्तुम्()। तत्? क्रियते विस्पष्टार्थम्()॥

बाल-मनोरमा

वाऽन्यस्य संयोगादेः २१५, ६।४।६८

आशीर्लिङि आत्त्वे कृते ग्ला-यात्-इति स्थिते--वाऽन्यस्य। आद्र्धधातुक इत्यधिकृतम्। "एर्लिङी"त्यनुवर्तते। "ए"रिति प्रथमान्तम्। "आतो लोप इटि चे"त्यत "आत" इत्यनुवर्तते। कस्मादन्यस्येत्यपेक्षायां घुमास्थागापाजहातिसां हली"ति प्रकृतत्वात्तेभ्योऽन्यस्येति लभ्यते। तदाह--घुमास्थादेरित्यादिना। कतीति। "दीङो युडचि क्ङिती"त्यतस्तदनुवृत्तेरिति भावः। ङितीति तु नानुवर्तते, लिङाद्र्धधातुकस्य ङित्त्वाऽसंभवात्। अग्लासीदिति। "यमरमे"त्यादन्तत्वात्सगिटौ। अग्लासिष्टाम् अग्लासिषुरित्यादि। अग्लास्यत्। म्लायतीति। ग्लैधातोरिव रूपाणीति भावः। द्यै न्यक्करणे।यकारमध्योऽयम्। इत आरभ्य ऐकारान्तानां संयोगादीनां ग्लैवदेव रूपाणि प्रत्येतव्यानि। "रै शब्दे" इत्यादीनां त्वसंयोगादीनामाशीर्लिङि "वाऽन्यस्य संयोगादे"रित्येत्त्वं न भवति, [तेन] रायादित्यादि रूपमिति विशेषः। स्त्यै ष्ट()ऐ इति। षोपदेशेषु स्त्यादातोः पर्युदासाद्यो न षोपदेशः। द्वितीयस्तु षोपदेशः। तकारस्य ष्टुत्वसंपन्नटकारनिर्देशः। सत्वे कृते इति। "धात्वादे"रिति षस्य सकारे सति निमित्ताऽपायात् ष्टुत्वनिवृत्तिरिति भावः। तिष्ट()आसतीति। ष्ट()ऐधातोः कृतसत्वात्सनि आत्त्वे स्त्या स इति सन्नन्ताल्लटि तिपि सपि "सन्यङो"रिति द्वित्वे "शर्पूर्वाः खयः" इति सकारयकारनिवृत्तौ "तास्त्यासति" इति स्थिते अभ्यासह्रस्वे "सन्यतः" इति इत्वे सकारस्य इणः परत्वादादेशसकारत्वाच्च षत्वे "तिष्ट()आसती"ति रूपम्। स्वाभाविकसकारादित्वे त्वादेशसकारादित्वाऽभावात्षत्वं न

स्यादिति भावः। अतिष्ट()पदिति। ष्ट()ऐधातोः कृतसत्वाण्णौ आत्वे"अतिह्री" ति पुकि स्त्यापि इति ण्यन्ताल्लुङि अडागमे तिपि "इतश्च" इति इकारलोपे "णिश्रिद्रुरुआउभ्यः" इति च्लेश्चङि "णेरनिटी"ति णिलोपे "णौ चङ्युपधायाः" इति ह्रस्वे "चङि" इति स्त्यबित्यस्य द्वित्वे "शपूर्वा इति सकारयकारपकाराणां निवृत्तौ सत्यां "सन्यतः" इति इत्वे, इणः परत्वादादेशसकारत्वाच्च सस्य षत्वे, तस्य ष्टुत्वे अतिष्ठ()पदितिरूपम्।

स्वाभाविकसकारत्वेत्वादेशसकारत्वाऽभावात्षत्वं न स्यादिति भावः। जजौ ससाविति। जैधातोः षैधातोश्च णलि आत्वे द्वित्वादौ वृद्धिरिति भावः। ननु "एर्लिङी"त्यत्र "घुमास्थागापाजहातिसा"मित्यनुवृत्त्या सैधातोराशीर्लिङि "साया"दित्यत्र एत्वं स्यत्। तथा लुङि सगिटोः--असासात् असासिष्टामित्येव इष्यते। तत्र "विभाषा घ्राधेट्()शाच्छासः" इति स#इचः पाक्षिके लुकि असात् असातामित्यपि प्रसज्येतेत्यत आह-- घुमास्थेत्यत्रेत्यादि। स्यतेरिति। "षो अन्तकर्मणि" इति श्यन्विकरणस्येत्यर्थः। अत्र व्याख्यानमेव शरणम्। "विभाषा घ्राधेडि"त्यत्र श्यन्विकरणाभ्यां साहचर्याच्च। पै ओ वै। पायति। वायति। "ओदितश्चे"ति निष्ठानत्वार्थमोदित्त्वम्। ननु पैधातोः कर्मणि लटि यकि आत्वे पायते इत्यत्र "घुमास्थागापाजहातिसां हली"ति ईत्वं स्यात्। तथा आशीर्लिङि पायादित्यत्र "एर्लिङी"त्येत्वं स्यात्, तत्रापि "घुमास्थागापाजहातिसा"मित्यनुवृत्तेः, तथा लुङि "अपासी"दित्यत्र "गातिस्थे"ति सिचो लुकि "यमरमे"ति इटोऽभावात्तत्संनियोगशिष्टः सगपि न स्यादित्यत आह---- घुमास्थेतीत्त्वमित्यादिना। पारूपस्येति। उदाह्मतसूत्रत्रये लक्षणप्रतिपदोक्तपरिभाषया आदन्तत्वेन उपदिष्टस्यैव पाधातोग्र्रहणं, नतु पैधातोः कृतात्वस्येति भावः। एवं च प्रकृते पैधातोराशीर्लिङि पायादित्येव रूपम्। लुङि सगिटोः अपासीत्, अपासिष्टामित्येव रूपम्। ष्ट इति। षोपदेशोऽयम्। कृतष्टुत्वनिर्देशः। सत्वे कृते ष्टुत्वनिवृत्तिः। तदाह--स्तायतीति। ष्णैधातुरपि षोपदेशः कृतष्टुत्वनिर्देशः। सत्वे कृते ष्टुत्वनिवृत्तिः। तदाह--स्नायतीति। दैप्। अघुत्वादिति। घुसंज्ञाविधौ दाब्दैपौ विनेत्युक्तेरिति भावः। पा पाने। पिबादेश इति। "शिद्विषय" इति शेषः। तस्येति। पिबादेशस्य अदन्तत्वान्न लघूपधगुण इति भाष्ये स्पष्टम्। अनिडयम्। पपौ पपतुः पपुः। भारद्वाजनियमात्थलि वेट्--पपिथ-पपाथ पपथुः पप। पपौ पपिव पपिम। क्रादिनियमादिट्। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्। आशीर्लिङि "एर्लिङ" इत्येत्वमभिप्रेत्याह--पेयादिति। "गातिस्थे"ति सिचो लुगित्यभिप्रेत्याह-- आपादिति। अपाताम् अपुः। अपाः अपातम् अपात। अपाम् अपाव अपाम। अपास्यत्। घ्रा। "पाघ्राध्मे"ति शिद्विषये जिघ्रादेशः। तदाह--जिघ्रतीति। अनिडयम्। जघ्रौ जघ्रतुः जघ्रुः। भारद्वाजनियमात्थलि वेट्--जघ्रिथ जघ्राथ जघ्रथुः जघ्र। जघ्रौ जघ्रिव जघ्रिम। क्रादिनियमादिट्। घ्राता घ्रास्यति। जिघ्रतु। अजिघ्रत्। जिघ्रेत्। आशीर्लङि "वाऽन्यस्य संयोगादे" रित्येत्वविकल्पं मत्वा आह--- घ्रायात् घ्रेयादिति। "विभाषा घ्राधे"डिति सिचो वा लुक्। लुगभावपक्षे आदन्तत्वात्सगिटौ। तदाह-- अघ्रात् अघ्रासीदिति। ध्माधातुरनिट्। "पाघ्राध्मे"ति शिद्विषये धमादेशः। तदाह--धमतीति। दध्मौ दध्मतुः दध्मुः। दध्मिथ--दध्माथ, दध्मथुः दध्म। दध्मौ दध्मिव दध्मिम। ध्माता।ध्मास्यति। धमतु। अधमत्। धमेत्। ध्मायात्--ध्मेयात्। अध्मासीत्। अध्मास्यत्। ष्ठाधातुः षोपदेशः कृतष्टुत्वनिर्देशः। शिद्विषये "पाग्रे"ति तिष्ठादेशः। तदाह--तिष्ठतीति। तस्थौ। अधितष्ठावित्यत्र इण्कवर्गाभ्यां परत्वाऽभावेऽपि षत्वमाह-- स्थादिष्विति। तस्थतुः तस्थुः। तस्थिथ--तस्थाथ, तस्थथुः तस्थ। तस्थौ तस्थिव तस्थिम। स्थाता। अधिष्ठातेत्यत्र "सात्पदाद्यो"रिति षत्वनिषेधमाशङ्क्याह--उपसर्गादिति षत्वमिति। स्थास्यति। तिष्ठतु। अतिष्ठत्। तिष्ठेत्। आशीर्लिङि संयोगादित्वेऽपि

घुमास्थादेरन्यत्वाऽभावादेत्त्वविकल्पो न, किंतु "एर्लिङी"ति नित्यमेव एत्वम्। तदाह--स्थेयादिति। "गातिस्थे"ति सिचो लुक्। अस्थात्। अस्थास्यत्। म्ना इति। अयमप्यनिट्। "पाध्रे"ति शिद्विषये मनादेशः। तदाह--मनतीति। मम्नौ मम्नतुः मम्नुः। मम्निथ--मम्नाथ मम्नथुः मम्न।मम्नौ मम्निव मम्निम। म्नाता। म्नास्यति। मनतु। अमनत्। मनेत्। म्नायात्--म्नेयात्। अम्नासीत्। अम्नास्यत्। दाण् दाने। अयमप्यनिट्। "पाघ्रे" ति शिद्विषयेय यच्छादेशः। प्रणियच्छतीति। "नेर्गदे"ति णत्वम्। ददौ ददतुः ददुः। ददिथ-ददाथ ददथुः दद। ददौ ददिव ददिम। दाता। दास्यति। यच्छतु। अयच्छत्। यच्छेत्। आशीर्लिङि "एर्लिङी"त्येत्वं मत्वा आह-- देयादिति। "गातिस्थे"ति सिचो लुकं मत्वा आह--

अदादिति। ह्वट कौटिल्ये। अयमप्यनिट्। ह्वरतीति। शपि गुणे रपरत्वम्।

तत्त्व-बोधिनी

वाऽन्यस्य संयोगादेः १८७, ६।४।६८

वान्यस्य। अन्यस्य किम्?। स्थेयात्। यै न्यक्करणे। द्यायति। दद्यौ। अद्यासीत्। घुमास्थेत्यत्रेति। व्याख्यानात्तन्त्रान्तरे जहातिस्यतीनामिति श्यना निर्देशाच्चेति भावः। विभाषा घ्रेति। कश्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः। एवं शाच्चासेति युग्विधावपि स्येतेरेव ग्रहणमिति बोध्यम्। तेनाऽस्य धातोः "अर्तिह्री"ति पुगेव। सापयति। पै ओवै। पायति। वायति। शुष्यतीत्यर्थः। "ओदितश्चे"ति निष्ठानत्वम्। वानम्। "शुष्के वानमुबे त्रिषु" इत्यमरः। अदन्तत्वादिति। केचित्तु अङ्गवृत्तपरिभाषयापि गुणाऽभावं समर्थयन्ति। घ्रा गन्धोपादाने। गन्धोपादानं-- गन्धग्रहणम्। नन्वेवं कर्मणो धात्वर्थेनोपसङ्गहाकर्मकत्वेन "जिघ्रति कुसुम"मित्यादि प्रयोगो न सिद्ध्येदिति चेदत्राहुः-- यद्धात्वर्थेन कर्तृनिष्ठकर्मण उपसङ्ग्रहस्तस्यैव धातरकर्मकत्वं नान्यस्य। भवति हि जीवति नृत्यतीत्यादेरकर्मकत्वम्। तदर्थोपसंगृहीतकर्मणः कर्तृनिष्ठत्वात्। घ्राधातोः कर्मणस्त्वतथात्वान्नाऽकर्मकतेति। ध्मा शब्दाग्निसंयोगयोः। शब्दशब्देन तदनुकूलो वायुरिह गृह्यते। तेन शङ्खं धमतीतिवन्मृदङ्गं धमतीति प्रयोगो नेत्याहुः। अग्निसंयोगे--सुवर्णं धमति। अग्निना संयुक्तीत्यर्थः। स्थेयादिति। "एर्लङी"ति नित्यमेत्वम्। लुङि-- अस्थात्। म्ना अभ्यासे। मनति विद्याम्। अभ्यस्यतीत्यर्थः। मम्नौ। अम्नासीत्। अदादिति। "गातिस्थे"ति सिचो लुक्।

---

सूत्रम्

काशिका-वृत्तिः

न ल्यपि ६।४।६९

ल्यपि प्रत्यये परतः घुमास्थागापाजहातिसां यदुक्तं तन्न। प्रदाय। प्रधाय। प्रमाय। प्रस्थाय। प्रगाय। प्रपाय। प्रहाय। अवसाय।

न्यासः

न ल्यपि। , ६।४।६९

वेति निवृत्तम्(); उत्तरसूत्रे पुनरन्यतरस्यांग्रहणात्()। "यदुक्तम्()" इति। ईत्त्वम्(), न पुनरनन्तरमेत्त्वम्(); तस्य ल्यपि प्राप्त्यभावात्()। प्रतिषेधस्य च प्राप्तिपूर्वकत्वात्()॥

तत्त्व-बोधिनी

न ल्यपि १६०३, ६।४।६९

न ल्यपि। कथं तर्हि "निपीय यस्ये"ति श्रीहर्षप्रयोग इति चेदत्राहुः- पीङ् पाने इति दिवादिगणस्थात् ल्यपि न दोष इति। इह प्रशाय प्रच्छायेत्यत्र "शाच्छोरन्यतरस्या"मिति प्राप्तस्येत्वस्याप्यभावो बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

मयतेरिदन्यतरस्याम् ६।४।७०

मयतेरिकारादेशो वा भवति ल्यपि परतः। अपमित्य, अपमाय।

लघु-सिद्धान्त-कौमुदी
अत आदेः ४४५, ६।४।७०

अभ्यासस्यादेरतो दीर्घः स्यात्। आत। आततुः। आतुः। आतिथ। आतथुः। आत। आत। आतिव। आतिम। अतिता। अतिष्यति। अततु॥
न्यासः
मयतेरिदन्यतरस्याम्?। , ६।४।७०

"न ल्यपि" ६।४।६९ इति प्रतिषेधादाकारस्य श्रवणे प्राप्ते सतीत्त्वमारभ्यते। "अपमित्य" इति। "मेङ्? प्रणिदाने" (धा।पा।९६१)। "उदीचां माङो व्यतीहारे" ३।४।१९ इति क्त्वा, इत्त्वे कृते तुक्()। ननु च "अपमित्ययाचिताभ्यां कक्कनौ" (४।४।२१) इति निपातनात्? सिद्धमेतत्? तदपार्थकोऽयमारम्भः? नैतदस्ति; "चाधकान्यपि निपातनानि भवन्ति" (नी।प।वृ।१०९) इति पक्षे अपमायेति न स्यात्()। "माङ्? माने" (धा।पा।१०८८) ["माने शब्दे च"--धा।पा।] इत्यस्य भविष्यतीति चेत्()? न; अर्थभेदात्()। अथापि "अबाधकान्यपि निपातनानि" (नौ।प।वृ।११०) स्युः? एवमप्यारब्धव्यमेवेदमसन्देहार्थम्()? असति ह्यस्मिन्? सन्देहः स्यात्()--किं मयतेरिदं निपातनम्(), अथ धात्वन्तरस्येति। उपसर्गनियमश्च विज्ञायेत--अपपूर्वस्यैवेति। अ()स्मस्तु सत्यन्योपसर्गस्यापि भवतीत्येतदर्थो युक्त आरम्भः॥
तत्त्व-बोधिनी
मयतेरिदन्यतरस्याम् १५८७, ६।४।७०

अपमित्येति। "समासेऽनञ्पूर्वे"ति वक्ष्यमाणेन क्त्वो ल्यपि तुक्। याचित्वा प्रणिददातीत्यर्थः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लुङ्लङ्लृङ्क्षु ७।३ ७५ अट् १।१ ७५ उदात्तः १।१ ७५ अङ्गस्य ?

समासः॥

लुङ्० इत्यत्र इतरेतरद्वन्द्वः

अर्थः॥

लुङ्, लङ्, लृङ्, इत्येतेषु प्रतः अङ्गस्य अट्-आगमः भवति, उदात्तश्च सः भवति।

उदाहरणम्॥

लुङ् - अकार्षीत्, अहार्षीत्। लङ् - अकरोत्, अहरत्। लृङ् - अकरिष्यत्, अहरिष्यत्
काशिका-वृत्तिः
लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१

लुङ् लङ् लृङित्येतेषु परतो ऽङ्गस्य अडागमो भवति, उदात्तश्च स भवति। लुङ् अकार्षीत्। अहार्षीत्। लङ् अकरोत्। अहरत्। लृङ् अकरिष्यत्। अहरिष्यत्।

लघु-सिद्धान्त-कौमुदी

लुङ्लङ्लृङ्क्ष्वडुदात्तः ४२५, ६।४।७१

एष्वङ्गस्याट्॥

न्यासः

लुङ्लङ्लृङ्क्ष्वडुदात्तः। , ६।४।७१

"उदात्तश्च स भवति" इति। आगमानुदात्तत्वे प्राप्त उदात्तत्वं विधीयते। एतच्चोदात्तवचनम्? अभेदका इह शास्त्रे गुणाः" (पु।प।वृ।५७) इत्यस्यार्थस्य ज्ञापकम्()। कथं कृत्वा? यदि च भेदका गुणाः स्युः, तदोदात्तयुक्तेनैवाटं समुच्चारयेत्()। पश्यत्वाचार्यः--"अभेदका इह शास्त्रे गुणाः" इति, यतः स्वरान्तरनिवृत्त्यर्थमुदात्तवचनं कृतवान्()। किमेतस्य ज्ञापनेन प्रयोजनम्()? "वृद्धिरादैच्()" १।१।१ इत्यत्रोदात्तादिभेदभिन्नानामपि वृद्धिसंज्ञा सिध्यतीति॥

बाल-मनोरमा

लुङ्?लङ्?लृङ्?क्ष्वडुदात्तः ५५, ६।४।७१

लुङ्लङ्लृङ्क्ष्वु। अङ्गस्येत्यधिकृतम्। तादह--एषु परेषु अङ्गस्येति। अन्तरङ्गत्वान्नित्यत्वात्परत्वाच्च यथायथं तिपि शपि विकरणे गुणेऽवादेशे विकरणविशिष्टस्याङ्गस्य अडागमः। "लावस्थायामेवाऽडागम" इति तु पक्षान्तरं भाष्ये स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

आडजादीनाम् ६।४।७२

आडागमो भवति अजादीनां लुङ्लङ्लृङ्क्षु परतः, उदात्तश्च स भवति। ऐक्षिष्ट। ऐहिष्ट। औब्जीत्। औम्भीत्। लङ् ऐक्षत। ऐहत। औब्जत्। औम्भत्। लृङ् ऐक्षिष्यत। ऐहिष्यत। औब्जिष्यत्। औम्भिष्यत्। इह ऐज्यत, औप्यत, औह्यत इति लङि कृते लावस्थायाम् अडागमादन्तरङ्गत्वाल् लादेशः क्रियते, तत्र कृते विकरणो नित्यत्वादडागमं बाधते। शब्दान्तरप्राप्तेरडागमस्य अनित्यत्वम्, कृते हि विकरणान्तस्य अङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। ननु शब्दान्तरादिति विकरणो ऽनित्यः? विकरणे कृते सम्प्रसारणम् अडागमान् नित्यत्वादेव भवति, सम्प्रसारणे च कृते ऽजाद्यङ्गं जातम् इति आडजादीनाम् इत्याडागमः।

लघु-सिद्धान्त-कौमुदी

आडजादीनाम् ४४६, ६।४।७२

अजादेरङ्गस्याट् लुङ्लङ्लृङ्क्षु। आतत्। अतेत्। अत्यात्। अत्यास्ताम्। लुङि सिचि इडागमे कृते ---।

न्यासः

आडजादीनाम्?। , ६।४।७२

"ऐक्षिष्ट, ऐहिष्ट" इति। "ईक्ष दर्शने" (धा।पा।६१०) "ईह चेष्टायाम्()" (धा।पा।६३२)--अनुदात्तेतौ, "आटश्च" ६।१।८७ इति वृद्धिः। "औब्जीत्? "औम्भीत्()" इति। "उब्ज आर्जने" (धा।पा।१३०३), "उभ उन्भपूरणे" (धा।पा।१३१९,१३२०),

"आर्धधातुकस्येट्()" ७।२।३५, "अस्ति सिचोऽपृक्ते" (७।३।९६) इतीट्? "इट ईटि" ८।२।२८ इति सिचो लोपः। अथैज्यत, औप्यत, औह्यतेत्यत्र कथमाट्(); यतो यजिवपिवहिभ्यो लङः विहितः कर्मणि, ते च हलादयः, नाजादयः। न च शक्यते वक्तुम्()--सम्प्रसारणे कृतेऽजादित्वं भविष्यतीति। यस्मात्? प्रागेव लादेशात्? परत्वादडागमेन भवितव्यम्(), ततो लादेशेन, ततो यका, ततः सम्प्रसारणेन? इत्यत आह--"इह" इत्यादि। यद्यप्यडागमः परः, तथाप्यन्तरङ्गत्वादादेशस्य पूर्वं स एव क्रियते। लादेशो हि धातोर्विहितं लकारमात्रमपेक्ष्य भवतीत्यन्तरङ्गः। अडागमस्तु लकारविशेषम्(); अङ्गस्य विधीयमानत्वात्()। अङ्गञ्च प्रत्ययमपेक्षत इति बरिरङ्गः। पूर्वोत्पत्तिनिमित्तोपलक्षणमात्रं चेहान्तरङ्गत्वम्(), तेन नित्यत्वमप्युक्तं भवति। लादेशो हि नित्यः, कृतेऽप्यटि प्राप्नोति, अकृतेऽपि; अडागमस्त्वनित्यः, शब्दान्तरप्राप्तेः। कृते हि लादेशे नित्यत्वाद्विकरणेन भवितव्यम्()। विकरणे च कृते विकरणान्तरस्याङ्गस्य तेन भवितव्यम्(), अकृते तु धातुमात्रस्य। तस्मादन्तरङ्गत्वान्नित्यत्वाच्चाडागमात्पूर्वं लादेशः क्रियते। "तत्र कृते" इति। लादेशे कृते। "विकरणः" इति। यक्()। "नित्यत्वात्()" इति। कृताकृतप्रसङ्गित्वेन विकरणस्य नित्यत्वम्()। स हि कृतेऽप्यटि प्राप्नोति, अकृतेऽपि। स्यादेतत्()--अडागमोऽपि कृते विकरणे प्राप्नोति अकृतेऽपि, अतस्तस्यापि नित्यत्वम्(), तत्रोभयोर्नित्यत्वे परत्वादडागम एव पूर्वं भविष्यति? इत्यत आह--"शब्दान्तरप्राप्तिः" इत्यादि। कथं पुनः शब्दान्तरप्राप्तिः? इत्याह--"कृते हि" इत्यादि। अङ्गस्याडागमो विधीयते; कृते च विकरणे तदादिग्रहणस्य स्यादिति नुमर्थत्वाद्विकरणान्तमङ्गे भवति, अकृते तु धातुमात्रम्()। अन्यच्च विकरणान्तादङ्गाद्धातुमात्रमङ्गम्(), अतोऽन्यसय कृते प्राप्नोति, अकृते त्वन्यस्य इति स्फुटैव शब्दान्तरप्राप्तिः, तत्रैतत्स्यात्()। विकरणस्यापि शब्दान्तरप्राप्तेरेवानित्यत्वम्(), तथा हि--तेनापि कृते सत्यडागमे तदादेर्धातोर्भवितव्यम्(); अकृते धातुमात्रादित्यत आह--"शब्दान्तरस्य च" इत्यीदि। यद्यप्यटः कृताकृतयोरेवावस्थयोर्विकरमः शब्दान्तरात्? प्राप्नोति, तथापि न तस्यानित्यत्वमुपपद्यते, यस्मात्? "शब्दान्तरस्य प्राप्नुवन्? विधिरनित्यो भवति" (व्या।प।१००) इत्येषा हि शास्त्रव्यवस्था; न तु "शब्दान्तरात्? प्राप्नुवन्? विधिरनित्यः" इत्येषा। न च विकरणः कस्यचिच्छब्दस्यागम आदेशो वा विधीयते; यतः "शब्दान्तरस्य प्राप्नुवन्? विधिरनित्यः" स्यात्()। तथा हि--सार्वधातुके परे धातोः परः प्रत्ययो विधीयते, न तु तस्यागमः, आदेशो वेति कुतो विकरणस्यानित्यत्वम्()। विकरणे तर्हि कृते सम्प्रसारणात्पूर्वमाडागमो भविष्यति? इत्यत आह--"विकरणे कृते सम्प्रसारणम्()" इत्यादि। नित्यत्वन्तु सम्प्रसारणस्य पूर्ववत्(); कृताकृतप्रसङ्गित्वात्()। आडागमस्तु कृते सम्प्रसारणे प्राप्नोति, कृते हि सम्प्रसारणेऽजादित्वादाटा भवितव्यमित्यनित्योऽयमाडागमः॥

बाल-मनोरमा

आडजादीनाम् १००, ६।४।७२

अथ एधधातोर्लङि लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमे वृदिं()ध बाधित्वा परत्वादतो गुण इति पररूपे प्राप्ते--आडजादीनां। लुङादिष्विति। "लुङ्लङ्लृङ्क्ष्वि" त्यनुवृत्तेरिति भावः। अटोऽपवाद इति। अटि सति पररूपं स्यादिति भावः। "आटश्चेत्यनन्तरं "वृद्धि"रिति शेषः। यद्यपि वृद्धिरेचीति वा वृद्धौ इदं सिध्यति तथापि ऐक्षतेत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। ऐधतेति। लङस्तादेशे शपि आडागमे आटश्चेति वृद्धिः। लङादेशानां टिदादेशत्वाऽभावादेत्वं न भवति। "आडजादीना"मिति सूत्रं भाष्ये प्रत्याख्यातम्। ऐधेतामिति। आतामि शपि आटि वृद्धिः। "आतो ङित" इत्याकारस्य #इय्। आद्गुणः। आटो वृद्धिः। ऐधावहि ऐधमहीति। वहिमह्योः शप्, आट्, वृद्धिः। इति लङ्प्रक्रिया।

तत्त्व-बोधिनी

आडजादीनाम् ७४, ६।४।७२

एतच्चाऽजादीनमटा सिद्धमिति वार्तिककृता प्रत्याख्यातम्। ननु अटिसति "वृद्धिरेची"त्यनेन ऐधतेत्यादिसिद्धावपि

ऐन्ददित्यादि न सिध्येत्। किं च "अतो गुणे" इति पररूपप्रवृत्त्या ऐधतेत्याद्यपि न सिध्येत्। यदि तु "आटश्चे"ति सूत्रम् "अटश्चे"ति क्रियेत तर्हि अस्वपोऽहसदित्यत्र वृद्धिः स्यात्।"रुदश्च पञ्चभ्यः", "अङ्गार्ग्यगालवयो"रित्यडागमस्य सत्त्वात्, "अतो रोरप्लुता"दिति रोरुत्वे सति अच्परत्वाच्चेति चेन्न, "उपसर्गादृति धातौ" इत्यतो धातावित्यपकृष्याऽजादौ धाताविति व्याख्यानात्। न च अस्वपोऽस्तीत्यादावोकारस्यान्तवद्भावेनाऽट्()त्वात्परत्राजादिधातुसत्त्वाच्चोक्तदोषस्तदवस्थ इति वाच्यम्, आदित्यनुवत्र्य अकाररूपादटोऽचि परे वृद्धिरिति व्याख्यानात्। एतेन अटश्चेत्युक्तौ "अट गतौ" इत्यस्माल्ल्युटि अटनमित्यत्रातिप्रसङ्गः स्यादित्येतदपि निरस्तमम्। न चैवमपि आतत् आतीदित्यादि न सिध्यति। "अटश्चे"त्यसयैन्ददित्यादौ सावकाशतया परत्वादिह "अतो गुणे" इत्यस्यैव प्रवृत्तेरिति वाच्यं, चकारोऽत्र पुनर्वृद्धिविधानार्थ इत्यभ्युपगमादन्तरङ्गत्वाद्वा "अटश्चे"त्यस्यैव प्रवृत्तेः। स्यादेतत्-- "आडजादीना"मिति सूत्राऽभावे आस्ताम् आसन् इति कथमटा सिध्यति। "श्नसो"रित्याल्लोपेन "अटश्च" इतितत्र वृद्ध्यप्रवृत्तेः। मैवम्। अन्तरङ्गत्वात्प्रागेवाऽऽडागमे कृते वृद्धौ च कृतायां पश्चात् श्नसोरल्लोपस्याऽप्रसक्तेः। न च "वार्णादाङ्गं बलीयः" इति वृद्धेःप्रागल्लोप एव स्यादिति शङ्क्यं, व्याश्रयत्वात्, "वार्णादाङ्ग"मिति परिभाषाया अनित्यत्वाद्वा। तत्र हि "श्नसोरल्लोपः" इति तपरकरणमेव लिङ्गं ,यदि वृद्धेः प्रागेवाल्लोपः स्यात्तर्हि किंतेन तपरकरणेनेति। यद्यपि वैदिकप्रक्रियायामानट् आव इत्यादौ "छन्दस्यापि दृश्यते" इत्याडागमस्य वक्ष्यमाणत्वात्तदर्थमाट्()सूत्रं कर्तव्यं तथाप्याटं विनैवाड्()व्यत्ययेन, आङ्पूर्वकत्वेन वा तत्र कथंचिद्व्याख्येयमिति स्थितस्य गतिमाहुः।

---

सूत्रम्

काशिका-वृत्तिः

छन्दस्यपि दृश्यते ६।४।७३

छन्दसि विषये आडागमो दृश्यते। यत्र हि विहितः ततो ऽन्यत्र अपि दृश्यते। आड्जादीनाम् ६।४।७२ इत्युक्तम्, अनजादीनाम् अपि दृश्यते। सुरुचो वेन आवः। आनक्। आयुनक्। आवः इति वृञो लुङि मन्त्रे घसह्वर इति लेर्लुकि कृते च भवति। तथा आनकिति नशेः। आयुनकिति युजेर् लङि।

न्यासः

छन्दस्यपि दृश्यते। , ६।४।७३

"यतो विहितस्ततोऽन्यत्रापि भवति" इति। अपिशब्दात्? तत्रापि। "आवः" इति। गुणे रपरत्वपे च कृते तिपो हलङ्यादिना ६।१।६६ लोपः, रेफस्य विसर्जनीयः। "तथा" इत्यादि। यथा "आवः" इति "मन्त्रे घसह्वर" २।४।८० इत्यादिना लेर्लुकि कृते भवति, तथानगिति लेर्लुकि कृते नशेर्भवतीत्यर्थः। तत्र "नर्शर्वा" ८।२।६३ इति कुत्वम्()। "आयुनक्()" इति। "युजिर्? योगे" (धा।पा।१४४४) रुधादित्वात्? श्नम्(), "चोः कुः" ८।२।३० इति कुत्वम्()--गकारः, तस्य चत्र्वम्()--ककारः। "बहुलं छन्दस्यामाङ्योगेऽपि" ६।४।७५ इति वक्ष्यति, तस्यैवायं प्रपञ्चः॥

---

सूत्रम्

काशिका-वृत्तिः

न माङ्योगे ६।४।७४

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन् न भवति। मा भवान् कार्षीत्। मा भवान् हार्षीत्। मा स्म करोत्। मा स्म हरत्। मा भवानीहिष्ट। मा भवानीक्षिष्ट। मा स्म भवानीहत। मा स्म भवानीक्षत।

लघु-सिद्धान्त-कौमुदी

न माङ्योगे ४४३, ६।४।७४

अडाटौ न स्तः। मा भवान् भूत्। मा स्म भवत्। मा स्म भूत्॥

न्यासः

न माङ्योगे। , ६।४।७४

"अनन्तरस्य वा विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इत्याट एवायं प्रतिषेध इति कस्यचिद्()भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"माङ्योगे लुङलङलृङक्षु परतो यदुक्तं तन्न भवति" इति। एतोनोभयोरप्यडाटोः प्रतिषेध इति दर्शयति। उभावपि तौ लृङ्लङ्()लृङ्क्षूक्तौ। कथं पुनद्र्वयोरपि प्रतिषेधो लभ्यते? आटाप्यत्रानुवृत्तेः। न च तस्मिन्ननुवर्तमाने सत्यजादीनामष्यट्? प्राप्नोतीत्येष दोषः प्रसज्यते; मण्डूकपलुतिन्यायेनात्राटोऽनुवृत्तेः। योगविभागाद्वा, अयमटोऽपि प्रतिषेध इत्यवसीयते; यदि ह्याट एव प्रतिषेधोऽभिमतः स्यात्? तदा "आडजादीनां न माङ्योगे" इत्येकमेव योगं कुर्यात। अथ वा--"लुङ्लङ्लृङ्क्षु" ६।४।७१ इत्येतावन्मात्रमनुवर्तते, तेन लुङादिषु यदुक्तं तस्य सर्वस्य प्रतिषेधो न विज्ञायते। न चैवमतिप्रसङ्ग; यतः प्रत्यागन्तेरस्मिन्नेव लुङलङ्लृङ्प्रकरणे यत्? कार्यं विहितं तस्यैव प्रतिषेधो लभ्यते, न सर्वस्य प्रकरणान्तरविहितस्य। अत्र तु प्रकरणेऽडाटावेव विहितौ, अतस्तयोरेव प्रतिषेधः। "मा भवान्? कार्षीत्()" इति। "माङि लुङ", ३।३।१७५ इति लुङः। "मा स्म करोत्()" इति। "स्मोत्तरे लङः च" ३।३।१७६ इति लङः। "माङ्()" इति ङ्कारानुबन्धवत उपादानम्()--अस्मादादेशी यो माशब्दस्तस्य ग्रहणं मा भूदित्येवमर्थम्(); अन्यथा "भवान्? सुखिनं मात्राकार्षीत्()" इत्यत्रापि प्रतिषेधः स्यादिति केचित्()। लाक्षणिकत्वादेवास्मदादेशस्याग्रहणमित्ययुक्तमेतत्()। निपात एव त्वनयोऽङिन्माशब्दोऽस्ति--"मा बालिपथमन्वगाः"। "मा भवतु तस्य पापम्()" इति तु यस्य प्रयोगस्तद्योगे प्रतिषेधो मा भूदित्येवमर्थं ङिद्विशिष्टस्य ग्रहणम्()। योगग्रहणन्तु--योगमात्रे प्रतिषेधो यथा स्यादिति, तेन व्यवहितेऽपि भवति॥ "अमाङ्योगेऽपि न भवतः" इत्यादिना माङ्योगेऽपीत्यस्यार्थमाचष्टे। अत्र च वाक्यद्वयेऽपि "बहुलं छन्दसि" इत्येतत्सम्बध्यते। "बहुलं छन्दसि" इत्येतावतैव सिद्धेऽमाङ्योगेऽपीति वचनं विस्पष्टार्थम्()। अनुच्यमाने ह्येस्मिन्? माङ्योगसय प्रकृतत्वात्? तत्रैव छन्दसि बहुलमडाटौ न भवत इत्याशंक्येत। "जनिष्ठाः" इति। जनेर्लुङ्, थास, इट्(), षत्वम्? ष्टुत्वञ्च। "ऊनयीत्(), अर्दयीत्()" इति। "ऊन परिहाणे" (धा।पा।१८८८) "अद्र्द हिंसायाम्()" (धा।पा।१८२८) चुरादी। "ह्रन्तक्षण" ७।२।५ इत्यादिना वृद्धिप्रतिषेधः। "इट ईटि" ८।२।२८ इति सिचो लोपः, गुणायादेशौ। "अवाप्सुः" इति। "आप्लु व्याप्तौ" (धा।पा।१२६०) अवपूर्वः। "सिजभ्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुसादेशः। "मा अभित्थाः" इति। भिदेस्थास्(), "झलो झलि" ८।२।२६ इति सिचो लोपः। "माऽऽवः" इति। पूर्वमेव व्युत्पादितम्()॥

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दस्यमाङ्योगे ऽपि ६।४।७५

छन्दसि विषये माङ्योगे ऽपि बहुलम् अडाटौ भवतः, अमाङ्योगे ऽपि न भवतः। अमाङ्योगे तावत् जनिष्ठा उग्रः। काममूनयीः। काममर्दयीत्। माङ्योगे ऽपि भवतः मा वः क्षेत्रे परबीजान्यवाप्सुः। मा अभित्थाः। मा आवः।

---

सूत्रम्

काशिका-वृत्तिः

इरयो रे ६।४।७६

इरे इत्येतस्य छदसि विषये बहुलं रे इत्ययम् आदेशो भवति। गर्भं प्रथमं दध्र आपः। या ऽस्य परिदध्रे। धात्रो रेभावस्य असिद्धत्वादातो लोपो भवति। न च भवति। परमाया धियो ऽग्निकर्माणि चक्रिरे। अत्र रेशब्दस्य सेटों धातूनामिटि कृते पुना रेभावः क्रियते, तदर्थम् इरयोः इत्ययं द्विवचननिर्देशः।
न्यासः
इरयो रे। , ६।४।७६

"दध्रे" इति। दधातेर्लिट्(), "लिटस्थझयोरेशिरेच्()" ३।४।८१ इतोरेच्()। तस्यानेन रयादेशः "आतो लोपः" ६।४।६४ इत्याकारलोपः। "परिदद्दश्रे" इति। द्दशः परिपूर्याल्लिडादिरातोलोपदर्ज विधेयः। अथ "दध्रे इत्यत्र कथमातो लोपः? यावता "दवा+हरे" इति स्थित आकारलोपः प्राप्नोति? रेभावश्च, तत्र परत्वाद्रेभावः; तस्मिन्? कृतेऽनजादित्वादाकारलोपो न प्राप्नोति? अत आह--"धात्रो रेभावस्यासिद्धत्वात्()" इत्यादि असिद्धत्वन्तु "()सिद्धवदत्रा भात्()" ६।४।२२ इत्यनेन। "चक्रिरे" इति। कृत्रो रूपम्()। ननु च रेभावे कृते द्दशिप्रभृतयो ये लिटि सेटो धातवः, क्रादिमियमात्? तेभ्यो र इत्यस्येटि कृते दद्दश्रे इति रूपं न सिद्धयेत्? दद्दशिर इत्यादिना रूपेण भवितव्यम्(), न च शक्यते वक्तुम्()--रेभावविधानसामथ्र्यादिङ् न भविष्यति; रेभावस्थ क्रादिषु चारितार्थत्वात्? तेब्यो हि परस्य लिटः "कृसृ" (७।२।१३) इत्यादिनेट्प्रतिषेधः? इत्यत आह--"अत्र" इत्यादि। कथं पुना रेभावो लभ्यते? इत्याह--"तदर्थञ्च" इत्यादि। इटि कृते पुना रेभावो यता स्यादित्येवमर्थमिरेश्च इरेश्चेत्येकशेषं कृत्वेरयोरिति द्विवचनेन निर्देशः। तेन यश्च झस्थान इरेच्? शब्दः क्रियते, यश्चेरे इत्यस्येटि कृते सत्युत्तरकालमिरेशब्दः सम्पद्यते, तयोरपि रेभावः सिद्धो भवति॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अचि ७।१ १०० श्नुधातुभ्रुवाम् ६।३ य्वोः ६।२ ७८ इयङुवङौ १।२ ८० अङ्गस्य ६।१ १

समासः॥

श्नुश्च धातुश्च भ्रूश्च श्नुधातुभ्रुवः, तेषां ॰॥
इश्च उश्च यू, तयोः ॰॥
इयङ् च उवङ् च इयङुवङौ, सर्वत्रेतरद्वन्द्वः॥

अर्थः॥

श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोः भ्रू इत्येतस्य चाङ्गस्य इयङ्-उवङ्-इत्येतावादेशौ भवतोऽचि परतः॥

उदाहरणम्॥

श्नुप्रत्ययान्तस्य -- आप्नुवन्ति, राध्नुवन्ति, शक्नुवन्ति। इवर्णोवर्णान्तस्य धातोः -- चिक्षियतुः, चिक्षियुः, लुलुवतुः, लुलुवुः, नियौ, नियः, लुवौ, लुवः। भ्रू -- भ्रुवौ, भ्रुवः॥
काशिका-वृत्तिः
अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७

श्नुप्रत्ययान्तस्य अङ्गस्य धातोः इवर्णोवर्णान्तस्य भ्रु इत्येतस्य इयङुवङित्येतावादेशौ भवतो ऽजादौ प्रत्यये परतः। आप्नुवन्ति। राध्नुवन्ति। शक्नुवन्ति। धातोः चिक्षियतुः। चिक्षियुः। लुलुवतुः। लुलुवुः। नियौ। नियः। लुवौ। लुवः। भ्रुवौ। भ्रुवः। अचि इति किम्? आप्नुयात्। शक्नुयात्। साध्नुयात्। श्नुधातुभ्रुवाम् इति किम्? लक्ष्म्यौ। वध्वै। य्वोः इति किम्? चक्रतुः। चक्रुः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन। चयनम्। चायकः। लवनम्। लावकः। इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलम् उपसङ्ख्यानं कर्तव्यम्। तन्वं पुषेम। तनुवं पुषेम। विष्वं पुषेम। विषुवं पुषेम। स्वर्गो लोकः। सुवर्गो लोकः। त्र्यम्बकं यजामहे। त्रियम्बकं यजामहे।

लघु-सिद्धान्त-कौमुदी

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ २००, ६।४।७७

श्नु प्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्य चेयङुवङौ स्तोऽजादौ प्रत्यये परे। इति प्राप्ते॥

न्यासः

अचि श्नुधातुभ्रुवां व्योरियङुवङौ। , ६।४।७७

"आर्धधातुके" इति निवृत्तम्()। कुतः? "समः क्ष्णुवः" १।३।६५, "क्षियः ६।४।५९ इति निर्देशात्()। ह्यस्वयोरिवर्णोयोरिदं ग्रहणम्()। कु एतत्()? तत एव निर्देशात्()। अत्राण्? गृह्नमाणः सवर्णान्? ग्राहयतीति ह्यस्वौ गृहयमाणौ दीर्घावपि ग्राहयतः, तेन तदन्तस्यापि भवतः। "अचि" इति वर्णग्रहणम्? तत्र "यस्मिन्विधिस्तदादावलगरहणे" (व्या।प।१२७) इत्यजादौ विज्ञायत इत्याह--"अजादौ प्रत्यये" इति। प्रत्यय इत्येतत्? कृतो लभ्यते, अङ्गधिकारात्()। अङ्गाधिकारो ह्रस्ति, प्रत्यसन्निधापितत्वात्()। प्रत्यये हि परतोऽङ्गसंज्ञा विधीयते। यद्यजदौ प्रत्यय इयङुवङौ भवतः, नियौ, लुवौ--इत्यतर न प्राप्नुतः। अत्र ह्रजेव प्रत्ययः, न त्वजादिः? अत्रापि व्यपदेशिवद्भावे, नाजादित्वमस्तीत्यदोषः। "इवर्णोवर्णान्तस्य" इति। धातोरेवेदं विशेषणम्(), नेतरयोः; व्यभिचाराभावात्(), असम्भवाच्च। इवर्णोवर्णान्तता चाङ्गस्य ताभ्यां विशेषणाल्लभ्यते। इयङुवङोङकारोऽन्तादेशार्()थः। असति त्वस्मिन्ननेकाल्वात्? सर्वस्याङ्गस्य स्याताम्()। ननु च "निर्दिश्यमानस्यादेशा भवन्ति" (व्या।प।१०६) इत्यन्तरेणापि ङ्कारमन्तवस्यैव भवतः? एवं तर्हि विस्पष्टार्थम्()। "आप्नुवन्ति, राध्नुवन्ति" इति। "आप्लु व्याप्तौ" (धा।पा।१२६०), "राध साध संसिदौ" (धा।पा।१२६२,१२६३) स्वादित्वाच्श्नुः। शकारवतो ग्रहणं किमर्थम्()? "दभाभ्यां नुः" (द।उ।य१।१४३) दानुः, भानुरित्यत्र मा भूत्()। "चिक्षियतुः, चिक्षियुः" इति। त्रयाणामपि क्षिधातूनामन्यतमस्य रूपम्()। "नियौ, नियः, "लुवौ, लुवः" इति। अत्र "क्विदन्ता धातूत्वं न जहति" (व्या।प।१३२) इति धातुत्वं वेदितव्यम्()। तत्र नयतेः "सत्यूद्विष" ३।२।६१ इत्यादिना क्विप्()। लुनातेस्तु "अन्येभ्योऽपि दृश्यते" ३।२।१७८ इत्यनेन। "इयङुवङ्भ्याम्()" इत्यादि। गुणस्यावकाशः--चेतव्यम्(), स्तोतव्यमित्यादि, इयङ्वङोः--चिक्षियतुः, चिक्षियुः, लुलुवतुः, लुलुवुरिति; इहोभयं प्राप्नोति--चयनम्(), लवनमिति। विप्रतिषेधेन गुण एव भवति। वृद्धेरवकाशः--सखायौ, सखायः, गावौ, गाव इति; इयङुवङोः स एव; इहोभयं प्राप्नोति--चायकः, लावक इति। वृद्धिरेव भवति विप्रतिषेधेन। "इयङुवङ्प्रकरणे" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()--"बहुलं छन्दसि" ६।४।७५ इत्यादेः सूत्राद्बहुलग्रहणमनुवर्तते। तेन तन्वदीनां छन्दसि विकल्पेनेयङुवङौ भविष्यतः। "तन्वम्()" इति। यत्रोवङ् नास्ति, तत्रामि परपूर्वत्वमपि नास्ति; बहुलवचनादेव। "विध्वम्(), विषुवम्()" इति। सूधातोः क्विप्(); "उपसर्गा सुनोति" ८।३।६५ इत्यादिना षत्वम्()। "स्वर्गः, सुवर्गः" इति। "सु" इत्येतस्मादर्गशब्दे परत उवङादेशः। योगश्चायं यणादेशापवादः॥

बाल-मनोरमा

अचिश्नुधातुभ्रुवांय्वोरियङुवङौ २६९, ६।४।७७

कुमारी-औ इति स्थिते "इको यणची"ति यणपवादमियङमाशङ्कितुमाह--अचि श्नु। इस्च उश्च यू, तयोः--य्वोः=इवर्णोवर्णयोरित्यर्थः। श्नुश्च धातुस्च भ्रूश्चेति द्वन्द्वः। प्रत्ययग्रहणपरिभाषया श्नुप्रत्ययान्तं विवक्षितं। "य्वो"रिति धातोरेव विशेषणं, ततस्तदन्तविधिः। श्नुभ्रुवोस्तु नित्यमुवर्णान्तत्वान्न तद्विशेषणम्। इवर्णान्तत्वं तु असंभवान्न तद्विशेषणम्। "संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थव"दिति न्यायात्। "अङ्गस्ये"त्यधिकृतं ततश्च प्रत्यये परत इति लभ्यते। अचीति तद्विशेषणं। तदादिविधिः। तदाह--श्नुप्रत्ययान्तस्येत्यादिना। य्वोः किम्? चक्रतुः। अचीति किम्?। आप्नुयात्। इयङ् उवङित्यनयोरनेकाल्त्वात्सर्वादेशत्वमाशङ्क्य आह--ङिच्चेत्यन्तादेश इति। नच "श्नुधातुभ्रुवामिवर्णोवर्णयोः" इत्येवं व्याख्यायतां ङित्त्वं च न क्रियतामिति वाच्यम्, एवं सति "क्षिपती"त्यादावतिव्याप्तेः। नचाऽजादिप्रत्यये परत इत्यनेन तन्निरासः शङ्क्यः, अङ्गाक्षिप्तप्रत्ययपरकत्वस्याङ्गविशेषणताया एवोचितत्वादित्यलम्। आन्तरतम्यादिति। तालुस्थानकस्य इवर्णस्य तादृश एव इयङ्। ओष्ठस्थानकस्य उवर्णस्य तादृश एवोवङित्यर्थः। इतीयङि प्राप्ते इति। "कुमारी औ इत्यादा"विति शेषः।

तत्त्व-बोधिनी

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ २३१, ६।४।७७

अचि श्नु। "भ्रमेश्च डूः"इति डूप्रत्ययान्तत्वाद्भ्रूशब्दस्य धातोः पृथग्ग्रहणम्। अन्ये त्वाहुः--"गमः क्वौ"इत्यत्र "ऊङ् च गमादीनामितिवक्तव्य"मिति वार्तिकादनुनासिकलोपे ऊङादेशे च कृते निष्पन्नोऽयं भ्रूशब्दः। तथा च धातुग्रहणेनैव सिद्धे भ्रूग्रहणं निरर्थकमिति। "इण"इति वक्तव्ये "य्वो"रिति गुरुनिर्देश"इण्प्रत्याहारः परेणैव णकारेण गृह्लते"इति ज्ञापनार्थः। इह "य्वो"रिति धातोरेव विशेषणं, न तु श्नुभ्रुरव्यभिचारादित्याशयेनाह--इवर्णान्तधातेरिति। "श्नुधातुभ्रुवामिवर्णोवर्णयो"रिति व्याख्याने तु इयङुवोर्ङित्त्वं व्यर्थं स्याद्वैधिकरण्यं च सर्वादेशत्वनिवृत्तिसंभवादि चेन्न; श्नभ्रुवोरपि निर्दि श्यमानत्वेन सर्वादेशत्वप्रसङ्गात्। "इ उ इत्यष्टादशानां संज्ञे त्युक्तत्वाद्यथासङ्ख्यमिहन न प्रवर्तते, इत्याह--आन्तरतम्यादिति। स्थानत इति भावः। य्वेः किम्()। चक्रतुः। चक्रुः। अचीति किम्()। आप्नुयात्। जुहुयात्।

---

सूत्रम्

काशिका-वृत्तिः

अभ्यासस्य असवर्णे ६।४।७८

अभ्यासस्य इवर्णोवर्णान्तस्य अवसर्णे ऽचि परतः इयङुवङित्येतावादेशौ भवतः। इयेष। उवोष। इयर्ति। असवर्णे इति किम्? ईषतुः। ईषुः। ऊषतुः। ऊषुः। अचि इत्येव, इयाज। उवाप।

लघु-सिद्धान्त-कौमुदी

अभ्यासस्यासवर्णे ५८२, ६।४।७८

अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि। इयाय॥

न्यासः

अभ्यासस्यासवर्णे। , ६।४।७८

"इयेष, उवोष" इति। "इषु इच्छायाम्()" (धा।पा।१३५१) ["इष"--धा।पा।] "उष दाहे" (धा।पा।६९६)--आभ्यां लिट्? णल्()। अत्र च द्विर्वचनं प्राप्नोति, "पुगन्तलघूपधस्य च" ७।३।८६ इति गुणश्च, तत्र परत्वाद्गुणः--एष, ओष इति स्थिते "द्विर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावादिषुषित्येतयोर्द्विर्वचनम्(), तत इयङ्वङौ। ननु च तयोः कर्तव्ययोः "अचः

परस्मिन्? पूर्वविधौ" (१।१।५७) इति स्थानिवद्भावात्सवर्णता नास्ति? नैतदस्ति; यो ह्ननादिष्ठादचः पूर्वस्तस्य विधी कर्तव्ये स्थानिवद्भावेन भवितव्यम्(), आदिष्टाच्चात्राचः पूर्व एषोऽभ्यासः, तत्? कुतेऽत्र स्थानिवद्भावः। "इयर्ति" इति। "ऋ गतो" (धा।पा।१०९८) जुहोत्यादित्वाच्छपः श्लुः, अभ्यासस्य "उरत्()" ७।४।६६ इत्यत्त्वम्(), "अर्तिपिपर्त्योश्च" ७।४।७७ इतीत्त्वम्(), तत इयङादेशः। "ईयतुः, ईयुः" इति। "ऊवतुः उवुः" इति। "असंयोगाल्लिट्? कित्()" १।२।५ इति। कित्त्वाद्गुणाभावः, तेन सवर्णोऽज्न भवति। "इयाज" इति। "उवाप" इति। यजिवप्योः "लिट()भ्यासस्योभयेषाम्()" ६।१।१७ इति सम्प्रसारणम्()॥

बाल-मनोरमा

अभ्यासस्याऽसवर्णे १३४, ६।४।७८

लिटि णलः पित्त्वेन कित्तवाऽभावात्प्राप्तस्यापि लघूपधगुणस्य "द्विर्वचनेऽचीति" निषिद्धतया गुरुमत्त्वाऽभावादामभावे सति पूर्वं द्वित्वे कृते हलादिशेषे पश्चात् "वार्णादाङ्गं बलीय" इति परिभाषाया अन्तरङ्गमपि सवर्णदीर्गं बाधित्वा लघूपधगुणे कृते उ ओख अ इति स्थिते, उवर्णस्य यणि प्राप्ते-- अभ्यासस्य। "अचि श्नुधात्वि" त्यतोऽचीति, य्वोरियङुवङाविति चानुवर्तते। इश्च उश्च यू, तयोरिति विग्रहः। अभ्यासविशेषणमिदं ! तदन्तविधिः। तदाह-- इवर्णोवर्णान्तरस्येति। ङित्त्वादन्तादेशौ। उवोखेति। "अचि श्नुधात्वि"त्यस्य तु नात्र प्राप्तिः, अजादौ प्रत्यये परत एव तत्प्रवृत्तेः, अभ्यासस्य अङ्गत्वाऽभावाच्च। ननु द्वित्वे कृते लघूपधगुणे सति इजादिगुरुमत्त्वादाम् स्यादित्यत आह--संनिपातेति। णलि परे विहितगुणसंपन्नामिजदिगुरुमत्त्वमाश्रित्य आमं गुणो न प्रवर्तयति, आमि सति धातोर्णल्परकत्वव्याघातादिति भावः। ऊखतुरिति। अपित्त्वेन कित्त्वाल्लघूपधगुणाऽभावे द्वित्वे हलादिशेषे सवर्णपरकत्वादभ्यासस्याऽसवर्ण इति इयङभावे सवर्णदीर्घे रूपमिति भावः। ननु "ऊखतु"रित्यत्र ऊकारस्य सवर्णदीर्घसंपन्नस्य एकादेशतया पूर्वान्तत्वेनाऽभ्याससंबन्धित्वात् "ह्रस्व" इत्यभ्यासस्याऽचो विधीयमानो ह्रस्वः प्राप्नोतीत्याशङ्कते-- इहेति। अथ परहरति-- न भवतीति। कुत इत्यत आह-- सकृत्प्रवृत्तत्वादिति। तदेवोपपादयति-- आङ्गत्वादिति।उ-उखतुरिति स्थिते पर्जन्यवल्लक्षणप्रवृत्त्या अभ्यासह्रस्वे सवर्णदीर्घे "ऊखतु"रिति स्थितिः। तत्र ऊकारस्य पुनरभ्यासह्रस्वो न भवति। "लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति"रिति न्यायादित्यर्थः। ननु वर्णमात्रापेक्षत्वेनाऽन्तरङ्गतया प्रथमं सवर्णदीर्घ एव स्यादिति ह्रस्वस्य प्रथमं प्रवृत्तिर्दुरुपपादेत्यत आह--वार्णादिति। तथा चानया परिभाषया बहिरङ्गोऽपि ह्रस्व एव प्रथमं प्रवर्तत इति भावः। परत्वाच्चेति। नन्विदमनुपपन्नम्, उक्तरीत्या अन्तरङ्गं सवर्णदीर्घं प्रति ह्रस्वस्य परत्वकथनाऽनौचित्यादिति चेन्न, परत्वादित्यस्य परकालप्राप्तकत्वादित्यर्थात्। अभ्यासविकारेषु परस्परं बाध्यबाधकभावाऽभावेन युगपदेव हलादिशेषे ह्रस्वे च कृते पश्चात्प्रवर्तमानस्य सवर्णदीर्घस्य पूर्व पूर्वमन्तरङ्गं, परं परं बहिरङ्ग"मिति न्यायेन बहिरङ्गत्वादित्यलम्। उङ्खतीति। इदित्त्वान्नुम्। ववाखेति। वखधातोर्णलि उपधावृद्धिः। ववखतुरिति। वादित्वादेत्त्वाभ्यासलोपौ न। वङ्खतीति। वखिधातोरिदित्त्वान्नुम्। ववङ्ख। मेखतुरिति। एत्त्वाभ्यासलोपौ। [मङ्खतीति। मखिधातोरिदित्त्वाभ्यासलोपौ न। ममङ्खेति। संयुक्तहल्मद्यस्थत्वादेत्वाभ्यासलोपौ न। नखति नङ्खतीति। "णो नः" इति नत्वम्। रखतीति। णलि तु उपधावृद्धिः। रराख। अतुसादावेत्वाभ्यासलोपौ--रेखतुरित्यादि। रङ्खतीति। इदित्त्वान्नुम्। ररङ्ख। एखतीति। इखधातोः शपि लघूपधगुणः। इयेख। ईखतुः। इङ्खतीति। इदित्त्वान्नुम्। इङ्खांचकार। ईङ्खतीति। अलधूपधत्वान्न गुणः। ईङ्खाचकार। वल्गतीति। लिटि ववल्ग ववल्गतुः। रङ्गतीति लङ्गतीति। ररङ्गतुः। अङ्गतीति। लिटि--आनङ्ग। वङ्गतीति। लिटि-- ववङ्ग ववङ्गतुः। मङ्गतीति। लिटि--ममङ्ग ममङ्गतुः। तङ्गतीति। लिटि--ततङ्ग ततङ्गतुः। त्वङ्गतीति। लिटि तत्वङ्ग तत्वङ्गतुः। श्रङ्गतीति। लिटि--शश्रङ्ग शश्रङ्गतुः। श्लङ्गतीति। लिटि--शश्लङ्ग शश्लङ्गतुः। इङ्गतीति। लिटि इङ्गांचकार। रिङ्गतीति। लिटि--रिरिङ्ग रिरङ्गतुः। लिङ्गतीति। अथखान्तेषु

रिखादिचतुर्णां मतान्तरसिद्धानामुदाहरणमाह-- रेखतीति। शपि लघूपधगुणः। रिरेख रिरिखतुः। त्रखतीति। लिटि-- तत्राख तत्रखतुः। त्रिङ्खतीति। लिटि-- तित्रिङ्ख त्रित्रङ्खतुः। शिङ्खतीति। लिटि शिशिङ्ख शिशिङ्खतुः। त्वगि कम्पने चेति। चाद्गतौ। त्वङ्गति तत्वङ्ग। युगीति। त्रयोऽपि इदितः। युङ्गति बुङ्गति जुङ्गति। घघ हसने इति। घघति। णलि उपधावृद्धिः। जघाघ जघघतुः। लिण्निमित्तादेशादित्वादेत्त्वाभ्यासलोपौ न। मघि मण्डन इति। इदित्त्वान्नुमित्याह-- मङ्घतीति। ममङ्घ ममङ्घतुः। शिघि आघ्राण इति। शिङ्घति शिशिङ्घ। फक्कादयः पञ्चाशद्गताः। वर्च दीप्ताविति। दीप्तिः- प्रकाशः। षच सेचन इति। अच्परकसादित्वात् षोपदेशोऽयम्। स्वरितेत्सु "षच समवाये" इति वक्ष्यते। सेच इति। सत्वस्य लिण्निमित्तत्वाऽभावादादेशादित्वेऽपि एत्वाभ्यासलोपौ। दम्भः शाठ()ं चेति। परविरुआम्भार्थ धर्माद्याचरणं दम्भः-- कापट()आऽपरपर्यायः। "कपटोऽस्त्री व्याजदम्भोपधयःर" इत्यमरः। शाठ()ं कुटिलीभावः। "निकृतस्त्वनृजुः शठः" इत्यमरः। पचि व्यक्तीकरम इति। "पचि विस्तारे" इति चुरादौ वक्ष्यते। "पचे"त्येके। ष्टुच प्रसाद इति। ष्टुत्वसंपन्नष्टकारः। ततश्च दन्त्यपरकसादित्वात् षोपदेशोऽयम्। स्तोचत इति। षस्य सत्वे सति ष्टुत्वं निवर्तत इति भावः। तुष्टुचे इति। "सर्पूर्वाः खयः" इति तकारशेषः। आदेशसकारत्वात् षत्वम्। ऋज गतीति। अर्जनं---संपादनम्। उपार्जनं-- सेवनम्। "ऊर्जनेष्वि"त्यन्ये। अर्जत इति। शपि लघूपधगुणः। रपरत्वम्। नुड्विधाविति। वार्तिकमिदम्। आनृज इति। लिटोऽसंयोगादिति कित्त्वाद्गुणाऽभावे द्वित्वे उदरत्वे रपरत्वे हलादिः शेषे अत आदेरिति दीर्घे नुडिति भावः। ऋजी भृजी इति।ऋदुपधौ द्वौ। आद्य इदित्। द्वितीयस्य ईदित्त्वात् "()आईदितो निष्ठाया"मिति नेट्। इदित्त्वान्नुम्। अनुस्वारपरसवर्णौ। ऋञ्जांचक्र इति। नुमि सति "संयोगे गुर्वि"ति ऋकारस्य गुरुत्वादिजादेश्चेत्याम्। ऋञ्जिता। ऋञ्जिष्यते। ऋञ्जताम्। आर्ञ्जत। ऋञ्जेत। ऋञ्जिषीष्ट। अथ लुङि रूपं दर्शयति-- आर्ञ्जिष्यत। भर्जत इति। शपिलघूपधगुणः। रपत्वम्। बभृजे। भर्जिता। भर्जिष्यते। भर्जताम्। अभर्जत। भर्जेत। भर्जिषीष्ट। लुङि रूपमाह-- अभर्जिष्टेति। लुङस्तादेशः। च्लिः सिच्। इट्। गुणः। रपरत्वम्। अडागमः। षत्वं। ष्टुत्वम्। लृङि--अभर्जिष्यत। एजृ भ्रेजृ भ्राजृ इति। आद्ययोरृदित्वं "नाग्लोपी"त्यर्थम्। तृतीयस्य तु अकारेत्कत्वेऽप्यात्मनेपदं सिध्यति। ऋदित्त्वस्य न किञ्चित्फलमस्ति। न च "नाग्लोपी"ति चङ्परे णौ उपधाह्रस्वः फलं भवितुमर्हति, "भ्राजभासे"त्यादिना तत्र उपधाह्रस्वविकल्पस्य वक्ष्यमाणत्वात्। ईज गतीति। अलघूपधत्वान्न गुणः। ईजते। ईजांचक्र इति। इजादेश्चेत्याम्। वर्चादय एकविंशतिर्वृत्ताः। द्विसप्ततिरिति। "चवर्गीयान्ता" इति शेषः। शुच शोक इति। स्मृत्वा क्लेशः-- शोकः। शोचतीति। वियुक्तं पित्रादिकं स्मृत्वा क्लिश्नातीत्यर्थः। कुच शब्द इति। शब्दनं शब्दः। चुकोच चुकुचतुः। अकोचीत्। कुञ्च क्रुञ्चेति। उभावपि चवर्गपञ्चमोपधौ। कुञ्चतौ अनुस्वारपरसवर्णसंपन्नस्य नकार्थानिकञकारस्य धातुपाठे निर्देशः। धातुपाठे"नकारजावनुस्वारपञ्चमौ" इत्यभियुक्तवादात्। तदाह--अनिदितामिति। अनुस्वारपरसवर्णयोरसिद्धतया नकारस्य सत्त्वेन आशीर्लिङि "अनिदिता"मिति नलोपे कुच्यादिति रूपमतित्यर्थः। लिटि तु चुकुञ्च चुकुञ्चतुरित्यादौ पित्त्वेन संयोगात्परत्वेन च कित्त्वाऽभावान्नलोपो न भवति। क्रुञ्चधातुस्तु स्वाभाविकञकारोपध एव, न त्वनुसारपरसवर्णसंपन्नञकारोपध इति "परेश्च घाङ्कयो"रिति सूत्रे भाष्यकैयटयोः स्थितम्। अतस्तस्याशीर्लिङि "अनिदिता"मिति नलोपः। तदाह--लुच्यादिति। एवमञ्चुधातोरपि द्रष्टव्यम्। पूजायां त्विति। "नाञ्चेः पूजाया"मिति निषेधादिति भावः। वञ्चु चञ्चु तञ्चु इति। आद्याः षट् नोपधाः। अनुस्वारपरसवर्णाभ्यां ञकारनिर्देशः। तथा च तेषामाशीर्लिङि "अनिदिता"मिति नलोपः। तदाह-- वच्याद#इति। लुङि अम्रुञ्चीत्। अम्लुञ्चीदिति नोपधयो रूपम्। सिज्लोपः।

तत्त्व-बोधिनी

अभ्यासस्याऽसवर्णे १०८, ६।४।७८

असवर्णे किम्?। ऊखतुः। अचि किम्()। इयाज, उवाय। उवोखेति। "द्विर्वचनेऽची"ति निषेधात्पूर्वं द्वित्वं, पश्चादुकारस्य लघूपधगुणेकृते अभ्यासस्योवङ्। एवमियेषेत्यत्रेयङ्। असवर्णग्रहणसामर्थ्यादियङादौ कर्तव्ये गुणोऽत्र न स्थानिवदिति

बोध्यम्। संनिपातपरिभाषयेति। आमि सति लिट्परत्वं धातोर्न सिध्येदिति भावः। अन्ये तु -- "इजादे"रिति सूत्रे गुरुमानिति नित्ययोगे मतुप्। ततश्च नित्यं यो गुरुमान् "एध वृद्धौ" इत्यादिस्तत्रैव स्यादिति नात्र आमः प्रसक्तिरित्याहुः। ऊखतुरिति। अत्र कित्त्वाद्गुणाऽभावे "अब्यासस्यासवर्णे" इति उवङ् न भवति। ननु इयेष उवोखेत्यत्राप्यन्तरङ्गत्वात्सवर्णदीर्घे कृतेऽच्परत्वाभावादियङुवङौ न स्त इतीष्टरूपाऽसिद्धेः किं तन्नाऽसवर्णग्रहणेनेति चेत्। अत्राहुः-- "वार्णादाङ्गं बलीयः" इति परिभाषाज्ञापनार्थमेवाऽसवर्णग्रहणं कृतम्। तेन भवतीत्यत्रान्तरङ्गमपि यणं बाधित्वा गुणो भवति। तथा करोतेर्घञि "कार" इत्यत्र यणं बाधित्वा वृद्धिर्भवति। नचैवं सिवेरौणादिके नप्रत्ययेयस्त्वात्। इह तु निमित्तभेदेन व्याश्रयत्वमिति। अभ्यासग्रहणेनेति। पूर्वस्यान्तवत्त्वेनेत्यर्थः। पर्जन्यवल्लक्षणेति। उपयोगाऽनुपयोगाऽव#इचारेण प्रवर्तमानं शास्त्रं ह्रस्वस्थानेऽपि ह्रस्वं प्रवर्तयीत्यथः। तथा चैक()स्मल्लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न तस्य पुनः प्रवृत्तिरिति भावः। आङ्गं बलीय इति। नन्वत्र ह्रस्वसवर्णदीर्घयोर्निमित्तभेदात्समानाश्रयत्वाऽभावे कथमाङ्गस्य बलीयस्त्वमितिचेत्। सत्यम्। इष्टानुरोधेन स्थानिनमादाय क्वचित्समानाश्रयत्वाभ्युपगमात्। अत एव उङ्शब्दे इत्यस्माल्लिटि ऊवे ऊवाते इत्यादीष्टं सिध्यति। उवङः प्राक् सवर्णदीर्घप्रवृत्तौ तन्न सिध्येदिति दिक्। परत्वाच्चेति। आपाततोऽयं हेतुः, ह्रस्वस्याऽऽङ्गत्वेन बहिरङ्गत्वादन्तरङ्गं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात्। उङ्खतीति। इदित्त्वान्नुम्। लिटि उङ्खाञ्चकार। आशिषि-उङ्ख्यात्। ववखतुरिति। वादित्वादेत्वाभ्यासलोपौ न। एखति। इङ्खति। इङ्खांचकार। ईखति। ईखाञ्चकार। इङ्गति। इङ्गांचकार। त्वगि कम्पने इति। अयम् उख उखि इति दण्डके गतौ पठितस्य गतिविशेषे वृतिं()त बोधयितुं पठ()ते। अतएवानतिप्रयोजनत्वाद्बहुषु पुस्तकेषु न पठितः। सेवने चेति। "यं पूरवो वृत्रहणं सचन्ते" इत्यादौ सेवन्ते इत्यभियुक्तैर्व्याख्यातत्वात्। स्वरितेत्सु "षच समवाये" इति वक्ष्यते। लोचृ। ऋदित्त्वात् "नाग्लोपी"ति ह्रस्वनिषेधः। अलुलोचत्। "पचि व्यक्तीकरणे"। "पचि विस्तारवचने" इति चुरादौ। ऋज गति। अर्जनं-- प्राधान्येन, उपार्जनं तु--प्रासङ्गिकम्। नुड्विधावित्यादि। "नुज्विधिलादेशविनामेषु तु प्रतिविदेय"मिति वचनान्नुडादिविधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणादिति भावः। यद्वा द्विहल्ग्रहणं भाष्यादौ प्रत्याख्यायते। न च आट आटतुरित्यत्रातिप्रसङ्गः, "अश्नोतेश्चे"त्यनेन "अवर्णोपधस्य यदि भवति तहृरस्नोतेरेवे"ति नियमात्सिद्धमिष्टमित्यन्यत्र विस्तरः। ऋजिभृजी। भर्जनं--जलं विना तण्डुलादेः संतापविशेषः। ईदित्त्वात् "()आईदितोनिष्ठाया"मिति नेट्। भृक्तः। भृक्तवान्। एजृ भेजृ भ्राजृ। भ्राजेरृदित्करणमनुदात्तेत्वमात्रफलम्। "भ्राजभासे"त्यादिना चङ्परे णौ उपधाह्रस्वस्य विकल्पितत्वात्। अबिभ्राजत्। अबभ्राजत्। परस्मैपदिन इति।चवर्गीयान्ताः परस्मैपदिनः। पूजायां त्विति। "नाञ्चेः पूजाया"मिति निषेधादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

स्त्रियाः ६।४।७९

स्त्री इत्येतस्य अजादौ प्रत्यये परतः इयङादेशो भवति। स्त्री, स्त्रियौ, स्त्रियः। स्त्रीणाम् इत्यत्र परत्वानुडागमः। पृथग्योगकरणम् उत्तरार्थम्।

लघु-सिद्धान्त-कौमुदी

स्त्रियाः २२८, ६।४।७९

अस्येयङ् स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः॥

न्यासः

स्त्रियाः। , ६।४।७९

"स्त्रियाः" इति। "आण्नद्याः" ७।३।११२, "जातेरस्त्रीविषयादयोपधात्()" ४।१।६३ इति निर्देशान्नेदं स्त्रीप्रत्ययानां ग्रहणम्(), नापि स्त्र्यर्थवृत्तेः शब्दस्येति निश्चित्य स्त्रीशब्दस्यैव स्वरूपेण ग्रहणमिति दर्शयितुमाह--"स्त्री इत्येतस्य" इत्यादि। इतिकरणः स्त्रीशब्दस्य स्वरूपपदार्थता दर्शयति। अथ षष्ठीबहुवचने कस्मान्न भवतीत्याह--"स्त्रीणाम्()" इत्यादि। परत्वात्? षष्ठीबहुवचने नुटा भवितव्यम्(), त()स्मश्च सत्यजादिः परः प्रत्ययो न भवतीतीयङ न प्रवर्तते। अथ किमर्थं पृथग्योगः क्रियते? न, "अचि श्नुधातुस्त्रीभ्रुवाम्()" इत्येक एव योगः क्रियेतेति? अत आह--"प्रथग्योगकरणम्()" इत्यादि। "वाऽम्शसोः" ६।४।८० इत्यत्र स्त्रीशब्दस्यैव विकल्पो यथा स्यात्(), धातुभ्रुवोर्माभूदित्येवमर्थं पृथग्योगकरणम्()॥

बाल-मनोरमा

स्त्रियाः २९९, ६।४।७९

स्त्रियाः। अचि श्नुधात्वित्यतोऽचीति इयङिति चानुवर्तते। तदाह--स्त्रीशब्दस्येत्यादिना। स्त्रियौ स्त्रिय इति। औजसोः रूपम्। अमि शसि च स्त्रियां स्त्रिय इति नित्यमियङि प्राप्ते।

तत्त्व-बोधिनी

स्त्रियाः २६१, ६।४।७९

स्त्रीति। स्यायतोऽस्यां शुक्रशोणिते इति "स्त्री"। "स्यायतेर्ड्रट्"। "लोपे व्यो"रिति यलोपः। टित्त्वान्ङीप्। ङ्यन्तत्वात्सुलोपः।

---

सूत्रम्

काशिका-वृत्तिः

वा ऽꣳशसोः ६।४।८०

अमि शसि परतः स्त्रियां वा इयङादेशो भवति। स्त्रीं पश्य, स्त्रियं पश्य। स्त्रीः पश्य, स्त्रियः पश्य।

लघु-सिद्धान्त-कौमुदी

वाम्शसोः २२९, ६।४।८०

अमि शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्, स्त्रीम्। स्त्रियः, स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः। परत्वान्नुट्। स्त्रीणाम्। स्त्रीषु॥ श्रीः। श्रियौ। श्रियाः॥

न्यासः

वाऽम्शसोः। , ६।४।८०

बाल-मनोरमा

वाऽम्शसोः ३००, ६।४।८०

वाऽम्शसोः। वा-अम्शसोः इति च्छेदः। स्त्रिया इति इयङिति चानुवर्तते। तदाह--अमिशसि चेत्यादिना। स्त्रियमिति। इयङि रूपम्। स्त्रीमिति। इयङभावे-अमि पूर्वः। स्त्रियाविति। औटि रूपम्। स्त्रियः स्त्रीरिति। शसि "वाम्शसोः" इति इयङि तदभावे च रूपम्। स्त्रियेति। इयङ्। स्त्रियै इति। "आण्नद्या" इत्याट्, वृद्धिः, इयङ्। स्त्रिया इति। ङसिङसोराट्, वृद्धिः, इयङ्। स्त्रिया इति। ओसि इयङ्। परत्वान्नुडिति। आमि "स्त्रियाः" इति इयङं बाधित्वा परत्वान्नुट्। स्त्रीणामिति। कृते नुटि अजादिविभक्त्यभावान्नेयङ्। स्त्रियामिति। ङेराम् इयङ्। अथ प्रसङ्गात्पुंसि नपुंसके च स्त्रीशब्दस्य विशेषं दर्शयति--

स्त्रियमतिक्रान्तोऽतिस्त्रिरिति। "अत्यादयः क्रान्ताद्यर्थे" इति समासः। "गोस्त्रियो"रिति ह्रस्वत्वम्। दीर्घङ्यन्तत्वाऽभावादीकाररूपङ्यन्तत्वाऽभावाद्वा हल्ङ्यादिलोपो न भवति। अतिस्त्रियाविति। "स्त्रियाः" इत्यस्याङ्गत्वात्तदन्तेऽपि एकदेशविकृतन्यायेन प्रवृत्तेरियङिति भावः।

अथ जस्, टा, ङे, ङसि, ङस्, आम्, ङीत्येषु अति स्त्रीशब्दस्य इयङ् नेत्येतत् श्लोकेन सङ्गृह्णाति--गुणनाभावेत्यादिना। पुंसि गुणनाभावौत्त्वनुड्भिः, क्लीबे नुमा च परत्वात् स्त्रीशब्दस्य इयङ् बाध्यते-इत्यवधार्यतामित्यन्वयः। जसि चेति घेर्ङितीति च गुणः, "आङो नाऽस्त्रिया"मिति नात्वम्, "अच्च घेः" इत्यौत्त्वम्, "ह्रस्वनद्यापः" इति नुट्, "इकोऽचि विभक्तौ" इति नुम् , एतेषामियङपेक्षया परत्वादित्यर्थः। "जसि चे"त्यनन्तरम् "इति गुण" इति शेषः। अतिस्त्रय इति। इयङं बाधित्वा गुणेऽयादेशे रूपम्। हे अतिस्त्रे इति। "ह्रस्वस्य गुणः" इति गुणे "एङ्ह्रस्वा"दिति सम्बुद्धिलोपः। "वाम्शसोः" इति इयङ्। अतिस्त्रीनिति। इयङ्भावे पूर्वसवर्णदीर्घे "तस्माच्छसः" इति नत्वम्। टा-अतिस्त्रिणा। इयङं बाधित्वा परत्वात् "आङो नाऽस्त्रिया"मिति नात्वम्। भ्यामादिष्वविकृतम्। ङे अतिस्त्रये। इयङं बाधित्वा परत्वात् "घेर्ङिती"ति गुणेऽयादेशः। ङसिङसोः-अतिस्त्रेः। परत्वात् "घेर्ङिती"ति गुणे "ङसिङसोश्चे"ति पूर्वरूपम्। अतिस्त्रियोः। इयङ्। आमि इयङं। बाधित्वा परत्वान्नुटि नामीति दीर्घे णत्वम्--अति-स्त्रीणाम्। इयङं बाधित्वा परत्वात् "अच्च घेः"। अतिस्त्रौ अतिस्त्रियोः अतिस्त्रिषु।

अथ पुंसि पूर्वश्लोकसिद्धमेवार्थं बालबोधाय लघुतरोपायेन संगृह्णाति--ओस्यौकारे चेत्यादिना। उपसर्जनत्वदशायां पुंसि विद्यमानस्य स्त्रीशब्दस्य अचि य इयादेशः "स्त्रियाः" इति सूत्रविहितः स ओसि षष्ठीसप्तमीद्विवचने, औकारे च प्रथमाद्वितीयाद्विवचने च नित्यं स्यात्। अम्शसोस्तु विभाषया=विकल्पेन स्यात्। उक्तचतुर्भ्योऽन्यत्र तु अचि सर्वत्र इयादेशः स्यादिति योजना। क्लीवे तु नुमिति। "इयङं बाधते" इति शेषः। अतिस्त्रि इति। स्त्रियमतिक्रान्तं कुलम्- अतिस्त्रि। "स्वमोर्नपुंसकात्" इति सुलुक्। अतिस्त्रिणी इति। अतिस्त्रि-औ इति स्थिते "नपुंसकाच्चे"त्यौङः शीभावः। इयङं बाधित्वा परत्वात् "इकोऽचि विभक्तौ" इति नुम्। असर्वनामस्थानत्वान्न दीर्घः। णत्वम्। अतिस्त्रीणीति। "जश्शसोः शिः"। स्त्रिया" इति इयङं जसि च इति गुणं च बाधित्वा नुम्। "शि सर्वनामस्थान"मिति सर्वनामस्थानत्वाद्दीर्घः। णत्वम्। टा-अतिस्त्रिणा। इयङं नुम् च बाधित्वा नाभावः। ङेप्रभृतावजादाविति। ङे, ङसि,ङस्, आम्, ङि, ओस्-इत्येतेषु "तृतीयादिषु भाषिते"ति पुंवद्भावस्य वक्ष्यमाणत्वात्पुंवद्भावपक्षे पुंलिङ्गातिस्त्रिशब्दवद्रूपम्। पुंवत्त्वा।()भावपक्षे नुमि वारिवद्रूपमित्यर्थः। टायां तु पुंवत्त्वे तदभावे च नात्वे रूपे विशेषाऽभावान्ङेप्रभृतावित्युक्तम्।?तिस्त्रये इति। पुंवत्त्वे "घेर्ङिती"ति गुणोऽयादेशः। अतिस्त्रिणे इति। पुंवत्त्वाऽभावे नुमि रूपम्। इहोभयत्रापि गुणेन नुमा च इयङ् बाध्यते। अतिस्त्रेरिति। ङसिङसोः पुंवत्त्वपक्षे "घेर्ङिती"ति गुणे "ङसिङसोश्चे"ति पूर्वरूपम्। अतिस्त्रिण इति। ङसिङसोः पुंवत्त्वाऽभावपक्षे नुमि रूपम्। इहाप्युभयत्र गुणनुम्भ्यामियङ् बाध्यते। अतिस्त्रियोः अतिस्त्रिणोरिति। पुंवत्त्वाऽभावे नुम्। पुंवत्त्वे इयङ्। इत्यादीति। आमि पुंवत्त्वे तदभावे च इयङं बाधित्वा नुडेव, नतु नुम्, "नुमचिरे"ति वचनात्। "नामी"ति दीर्घः। अतिस्त्रीणाम्। अतिस्त्रौ-अतिस्त्रिणि। अतिस्त्रियोः -अतिस्त्रिणोः। तदेवमुपसर्जनस्त्रीशब्दस्य पुंनपुंसकविषये रूपाणि प्रदश्र्य प्रकृतमनुसरतिस्त्रियां त्विति। स्त्रियमतिक्रान्तेति विग्रहे "अत्यादयः" इति समासे "गोस्त्रियोः" इति ह्रस्वत्वे सति अतिस्त्रिशब्दः। तस्य प्रायेण उदाहृतपुंलिङ्गाऽतिस्त्रिशब्दपद्रूपाणीत्यर्थः। शसि अतिस्त्रीरिति। "वाम्शसोः" इति इयङभावे पूर्वसवर्णदीर्घे सत्यपि स्त्रीलिङ्गत्वात् "तस्माच्छसः" इति नत्वं नेति। भावः। अतिस्त्रियेति। स्त्रीलिङ्गत्वान्नात्वाऽभावे इयङ्। ह्रस्वान्तत्वेति। "ङिति ह्रस्वश्चे"त्यत्र "इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वास्तः" इति प्रथमं वाक्यं। "ह्रस्वाविवर्णोवर्णौ स्त्रिया नदीसंज्ञौ वा स्तः" इति द्वितीयं वाक्यम्। तत्र द्वितीयवाक्यादतिस्त्रिशब्दस्य ङित्सु नदीत्वविकल्प इत्यर्थः। ननु "नेयङुवङ्स्थानावस्त्री"त्यतोऽस्त्रीत्यस्यानुवृत्तेः कथमिह नदीत्वविकल्पैत्यत आह--अस्त्री इति त्विति। "इयङुवङ्स्थाना"वित्यादिप्रथमवाक्यविहितनदीत्वस्यैवास्त्रीति पर्युदासो नतु

"ह्रस्वा"वित्यादिद्वितीयवाक्यविहितनदीत्वस्यापीत्यर्थः। कुत इत्यत आह--तत्संबद्धस्यैवानुवृत्तेरिति।

तत्त्व-बोधिनी

वाऽम्शसोः २६२, ६।४।८०

परत्वादिति। "स्त्रियाः"इतीयङपेक्षया। इयादेशोऽचि नान्यत्रेति। अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य ओसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः। इयङुवङ्स्थानावित्यस्यैवेति। "यू स्त्र्याख्या" वित्यनुवर्तनादियङ्वङ्स्थानाविति ईदुतोर्विशेषणम्। तेन इयङुवङ्स्थानावीदूतावेवाऽस्त्रीति पर्युदस्तौ न तु ह्रस्वाविति भावः। श्रीरिति। "क्विब्वचिप्रच्छी"त्यादीना क्विब्दीर्घौ। ङ्यन्तत्वाभावान्न सुलोपः।

---

सूत्रम्

काशिका-वृत्तिः

इणो यण् ६।४।८१

इणो ऽङ्गस्य यणादेशो भवति अचि परतः। यन्ति। यन्तु। आयन्। इयङादेशापवदो ऽयम्। मध्ये ऽपवदाः पूर्वान् विधीन् बाधन्ते इति गुणवृद्धिभ्यां परत्वादयं बाध्यते। अयनम्। आयकः।

लघु-सिद्धान्त-कौमुदी

इणो यण् ५८१, ६।४।८१

अजादौ प्रत्यये परे। यन्ति॥

न्यासः

इणो यण्?। , ६।४।८१

अत्र पक्षद्वयं सम्भाव्यते--"इणः" इति प्रत्याहारग्रहणं स्यात्(), धातुग्रहणं वा? तत्र "एरच्()" ३।३।५६ इति, "ओरावश्यके" ३।१।१२५ इति, "उरत्()" ७।४।६६ इत्यवमादिभ्यो निर्देशेभ्य एव नेदं प्रत्याहारग्रहणम्()। अतः परिशेष्याद्()धातुग्रहणमेवेदं विज्ञायते। णकारोच्चारणमिगिङोर्निवृत्त्यर्थम्()। ये तु "इण्वदिकः" (वा।१६७) इति सामान्येनातिदेशमिच्छन्ति, तेषामिङ एव निवृत्त्यर्थम्()। इकस्त्वधियन्तीति भवितव्यमेव यणा। अथ "नेणः" इत्येव कस्मान्नोक्तम्(), इयङादेशेऽचि प्रतिषिद्धे सति "इको यणचि" (६।१।७७) इति यण्? भविष्यति? सत्यमेतत्(); उत्तरार्थन्तु यण्ग्रहणम्()। "यन्ति" इत्यद्युदाहरणेष्वदादित्वाच्छपो लुक्()। "आयन्()" इति। लङ्? झोऽन्तादेशे संयोगान्तलोपः, असिद्धत्वादजादित्वादाट्()। अथेह कस्मान्न भवति--अयनम्? आयक इति? अत आह--"इयङादेशापवादोऽयम्()" इति। ननु यथेयङि प्राप्तोऽयमारभ्यते, तथा गुणवृद्ध्योरपि, तत्? कुत एतल्लभ्यते--अयमियङोऽपवादः, न गुणवृद्ध्योरित्याह--"मध्येऽपवादाः" इत्यादि। इतिकरणो हेतौ। यस्मात्? "मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्()" (व्या।प।१०), तस्मादियङ एव पूर्वस्य विधेरयमपवादः, न तु परयोर्गुणवृद्ध्योः यतश्चैतदेवं तेन गुणवृद्धिभ्यां तु परत्वाद्बाध्यते। अस्यावकाशः--यन्ति, यन्त्विति। "गुणवृद्ध्योः--चयनम्(), चायक इति; अयनम्(), आयक इत्यत्रोभयं प्राप्नोति। परत्वाद्यणं बाधित्वा गुणवृद्धी भवतः॥

बाल-मनोरमा

इणो यण् २८६, ६।४।८१

इणो यण्। "अचि श्नुधातु"इत्यतोऽचीत्यनुवृत्तस्य अङ्गाधिकारलब्धाऽङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिरित्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- अजादौ प्रत्यये परे इति। इयङोऽपवाद इति। इयङि प्राप्ते एव तदारम्भादिति भावः। गुणवृद्धी तु परत्वादस्य बाधिके। यथा--अयनम्। आयकः। यन्तीति। एषि इथः इथ। एमि इवः इमः। इयायेति। द्वित्वे सति उत्तरखण्डवृद्धावायादेशे "अभ्यासस्याऽसवर्णे" इतीयङ्। अतुसि तु द्वित्वे कित्त्वाद्गुणाऽभावे इ इ अतुस् इति स्थिते "इणो य"णित्युत्तरखण्डस्य यणि इ-यतुरिति स्थिते ---

तत्त्व-बोधिनी

इणो यण् २४८, ६।४।८१

येन नाप्राप्तिन्यायेनेति भावः। गुणवृद्धी तु परत्वादस्य बाधिके। अयनम्। आयकः।

---

सूत्रम्

काशिका-वृत्तिः

एरनेकाचो ऽसम्योगपूर्वस्य ६।४।८२

धातोः इति वर्तते, तेन संयोगो विशेष्यते। धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान भवति असावसंयोगपूर्वः, तदन्तस्य अङ्गस्य अनेकाचो ऽचि परतो यणादेशो भवति। निन्यतुः। निन्युः। उन्न्यौ। उन्न्यः। ग्रामण्यौ। ग्रामण्यः। एः इति किम्? असंयोगपूर्वग्रहणम् इवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूतिति। लुलुवतुः, लुलुवुः इत्येतत् तु ओः सुपि ६।४।८३ इति नियमादपि सिध्यति। अनेकाचः इति किम्? नियौ। नियः। असंयोगपूर्वस्य इति किम्? यवक्रियौ। यवक्रियः। धातुना संयोगविशेषणम् किम्? इह अपि स्यादुन्न्यौ, उन्न्यः इति। गतिकारकाभ्याम् अन्यपूर्वस्य नेष्यते, परमनियौ, परमनियः इति।

लघु-सिद्धान्त-कौमुदी

एरनेकाचोऽसंयोगपूर्वस्य २०१, ६।४।८२

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः। ङौ तु ग्रामण्याम्॥ अनेकाचः किम्? नीः। नियौ। नियः। अमि शसि च परत्वादियङ्, नियम्। ङेराम्; नियाम्॥ असंयोगपूर्वस्य किम्? सुश्रियौ। यवक्रियौ॥

न्यासः

एरनेकाचोऽसंयोगपूर्वस्य। , ६।४।८२

"तेन संयोगो विशेष्यते" इति। ननु चान्यपदार्थे गूणीभूतत्वादुपसर्जनमत्र संयोगः। नचोपसर्जनं विशेषणेन सम्बन्धमनुभवति। तथा हि शोभनो राजपुरुष इत्युक्ते पुरुषस्येव प्रधानस्य शोभनत्वेन योगो गम्यते, नोपसर्जनस्य राज्ञः; नैतदस्ति; धातोरित्यनुवृत्तिसामर्थ्यादुपसर्जनमपि संयोगविशेषणेन सम्बन्धमनुभविष्यति, अन्यथा धात्वानुवृत्तिरपार्थिका स्यात्()। न त्विवर्णविशेषणार्थं धातुग्रहणमिहानुवृत्तं स्यात्()? नैतदस्ति; यदधातोरिवर्णान्तं तस्य हि भवितव्यमेव यणादेशेन "इको यणचि" ६।१।७४ इत्यनेनेन। "निन्यतु; निन्युः" इति। नयतोर्लिट्()। इयङादेशे प्राप्ते यणादेशः। "उन्न्यौ उन्न्यः" इति। उन्नयतीति "सत्सूद्विष" ३।१।६१ इत्यादिना क्विप्()। एवं "ग्रामण्यौ, ग्रामण्यः" इत्यत्रापि। "अग्रग्रामाभ्यान्च" (वा()) इति णत्वम्()। "असंयोगपूर्वग्रहणम्()" इत्यादि। यद्येरिति। नोच्येत, ततोऽसंयोगपूर्वङ्गस्य विशेषणं स्यात्(), एवञ्च यवक्रियौ, यवक्रिय इत्यत्रापि स्यात्()। भवति ह्येतदंसयोगपूर्वमङ्गम्(),

तस्मात्? "एः" इत्युच्यते। असंयोगपूर्वग्रहणमिकारस्य विशेषणं यथा स्यादङ्गस्य मा भूदित्येवमर्थम्()। ननु च "य्वोः" इति प्रकृतम्(), तत्र यद्येरिति नोच्येत, तदोवर्णान्तस्यापि स्यात्(); ततश्च लुलुवतुः, लुलुवुरिति न सिद्ध्येत्()। तस्मादुवर्णान्तस्य मा भूदित्येवमर्थमेरिति स्यादित्यत आह--"लुलुवतुः, लुलुवुः" इत्यादि। इहैरोरित्युच्यमाने, अनेनैवोवर्णस्यापि सिद्धे सति "ओः सुपि" [६।४।८३] इति नियमर्थं स्यात्()--उवर्णान्तस्य यदि भवति तदा सुप्येव, नान्यत्रेति। ततश्चास्मादेव नियमात्? ल्लुलुवतुः, लुलुवुरिति सिद्ध्यतीति एरित्येतदुवर्णान्तनिवृत्त्यर्थं नोपपद्यते। तस्मात्? पूर्वोक्तमेवास्य प्रयोजनं युक्तम्()। "यवक्रियौ यवक्रियः" इति। यवान्? क्रीणातीति "अनेयभ्योऽपि दृश्यते" [३।२।१८७] इति क्विप्()। अत्रेकारस्य धात्ववयवसंयोगपूर्वत्वान्न भवति। "इहापि न स्यात्()" इति। यदि धातुना संयोगो न विशिष्येतेति शेषः। क्वचिदिहापि यथा स्यादिति पाठः। तत्र प्रकृतत्वाद्यणादेश इति विज्ञायते। यदि धातुनासंयोगो न विशिष्येत, तदा धात्ववयवोऽधात्ववयवो वा संयोगः पूर्वो यस्माद्भवति तदन्तस्य न भवतीति विज्ञायते। ततश्चोन्न्यौ, उन्न्य इत्यत्रापि न स्यात्(); संयोगपूर्वत्वादिवर्णस्य। धातुना संयोगे विशेषिते तु भवति। न ह्यत्रेवर्णो धात्ववयवसंयोगपूर्वः। तस्मादिहापि यथा स्यादिदि धातुना संयोगो विशिष्यतदे। "गतिकारकाभ्याम्()" इत्यादि। अथ कथमिदं पुनरिष्यमाणमपि न भवति? पूर्वग्रहणात्()। इह पूर्वग्रहणं न कर्त्र्यम्(), "एरनेकाचोऽसंयोगात्()" इत्येवोच्येत। तत्र, धात्ववयवसंयोगाद्य इवर्णः परो न भवति तदन्तस्याङ्गस्य यण्भवति--इत्येवं विज्ञायमाने सिद्ध्यत्येवेष्टमिति किं पूर्वग्रहणेन? तत्? क्रियते पूर्वाचार्यैः--यस्य विहितोऽयं यण्? तस्यैव कर्तव्यो नान्यस्येत्यस्यार्थस्य सूचनार्थम्()। पूर्वाचार्याश्च क्विबन्तस्य गतिकारकपूर्वस्यैव कृतवन्तः, नान्यस्येति। तस्मादिहापि गतिकारकाभ्यामन्यपूर्वस्य न क्रियते। अथ वा "वाम्शसोः" [६।४।८०] इत्यतो मण्डूकप्लुतिन्यायेन "वा इत्यनुवत्र्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन गतिकारकाभ्यामन्यपूर्वस्य न भविष्यतीति। अ()स्मश्च व्याख्याने पूर्वग्रहणं विस्पष्टार्थं वेदितव्यम्()। "परमनियौ" इति। "सन्महत्()" [२।१।६०] इत्यादिना समासः। अत्र परमशब्दो न गतिः, न च कारकमिति तत्? पूर्वस्य न भवति॥

बाल-मनोरमा

एरनेकाचोऽसंयोगपूर्वस्य २७०, ६।४।८२

एरनेकाचः। "इणो य"णित्यतो यणित्यनुवर्तते। एरिति षष्ठ()न्तम्। इवरस्येत्यर्थः। पूर्वसूत्रे श्नुधातुभ्रुवामिति द्वन्द्वनिर्देशेऽपि धातोरिति पृथक्कृत्य षष्ठ()न्तमनुवर्तते नतु श्नुभ्रुवावपि। तत्र इवर्णाऽभावात्। धातोरित्यनुवृत्तं चावर्तते। एकमवयवषष्ठ()न्तम्, अन्यत्स्थानषष्ठ()न्तम्। एरिति च धातोरिति षष्ठ()न्तस्य विशेषणं, ततः-तदन्तविधिः। इवर्णान्तधातोरित्यर्थः। अवयवषष्ठ()न्तं धातोरित्येतत्-"असंयोगपूर्वस्ये"त्यत्र संयोगांशेऽन्वेति। धात्ववयवसंयोगः पूर्वो यस्मात्स धात्ववयवसंयोगपूर्वः, तद्भिन्नः=असंयोगपूर्वः , तस्येति इवर्णविशेषणम्। "अङ्गस्ये"त्यधिकृतं स्थानषष्ठयन्तधातुना विशेष्यते, तदन्तविधिः। अनेकोऽच् यस्य तस्य अनेकाच इत्यङ्गान्वयि। "अचि श्नुधातुभ्रावा"मित्यतोऽचीत्यनुवर्तते। तच्चाङ्गाक्षिप्तस्य प्रत्ययस्य विशेषणं तदादिविधिः। तदाह-धात्ववयवेत्यादिना। हरिं हरीनित्यादौ यण्निवृत्त्यर्थं "धातो"रित्यङ्गविशेषणम्। अन्यथा प्रध्यमित्यादाविव पूर्वरूपादीन्बाधित्वा यण् स्यात्। धात्ववयवेति संयोगाविशेषणस्य तु प्रयोजनम्। उन्नीशब्दनिरूपणावसरे मूल एव स्फुटीभविष्यति। "अनेकाचोऽसंयोगा"दित्येव सुवचम्। य्वोरित्यनुवर्तते। "धात्ववयवसंयोगात्परौ न भवतो यौ इवर्णोवर्णौ तदन्तस्ये"त्यर्थलाभः। "ओः सुपी"ति तु नियमार्थः-"उवर्णस्य सुप्येव य"णिति। ततश्च लुलुवतुरित्यादौ त्वतिप्रसङ्गाऽभाव इत्यलम्। इति यणिति। कुमार्यौ, कुमार्य इत्यत्र "एरनेकाचः" इति इयङपवादो यणित्यर्थः। नन्वन्तर्वर्तिसुपा अमाक्यजन्तस्य कुमारीशब्दस्य पदत्वात् "इकोऽसवर्णे" इति प्रकृतिभावः स्यात्। अल्लोपस्य स्थानिवद्भावेऽपि तमाश्रित्यैव स दुर्वार #इति चेन्मैवम्--"नः क्ये" इति क्यचि नान्तस्यैव पदत्वनियमात्। अमि शसि चेति। अमि पूर्वरूपं शसि पूर्वसवर्णदीर्घं च बाधित्वा इयङि प्राप्ते तदपवादे "एरनेकाचः" इति यणि, अमि कुमार्यं, शसि

कुमार्य इति रूपम्। "तस्माच्छसः" इति नत्वं तु न, कृतपूर्वसवर्णदीर्घात्परत्वाऽभावात्। तथाच बहुश्रेयसीशब्दापेक्षया अम्शसोरेव रूपे विशेष इति भावः। प्रधीरिति। प्रध्यायतीति प्रधीः। "ध्यायतेः संप्रसारणं चे"ति क्विप्। यकारस्य संप्रसारणमिकारः। "संप्रसारणाच्चे"ति पूर्वरूपम्। "हलः" इति दीर्घः। कृदन्तत्वेन प्रातिपदिकत्वात्सुबुत्पत्तिः। अङ्यन्तत्वान्न सुलोपः। अजादौ सर्वत्र "एरनेकाचः" इति यणेव। अस्त्रीत्वान्नदीकार्यं न। हे प्रधीः प्रध्यौ प्रध्यः। प्रध्यं प्रध्यः। प्रध्या। प्रध्ये। प्रध्योः। प्रध्यि। प्रकृष्टा दीर्यस्य स इति विग्रहे तु दीशब्दस्य नित्यस्त्रीत्वात् "प्रथमलिङ्गग्रहणं चे"ति नदीत्वान्नदीकार्यम्। अङ्यन्तत्वान्न सुलोपः। प्रधीः। शेषमुदाह्रतक्विबन्तकुमारी शब्दवत्। हे प्रधि। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्या। प्रध्यै। प्रध्या २। प्रधीनाम्। प्रध्याम्।

उन्नीरिति। "सत्सूद्विषे"त्यादिना उत्पूर्वान्नीधातोः क्विप्। सुबुत्पत्तिः। अङ्यन्तत्वान्न सुलोपः। अजादौ तु प्रत्यये परे "एरनेकाचः" इति यण्। नन्वत्र इवर्णस्य संयोगपूर्वकत्वात्कथमत्र यणित्यत आह--धातुनेति। धात्ववयवसंयोगपूर्वस्यैव यण् पर्युदस्यते। नचाऽत्र संयोगो धात्ववयव इति भावः। हे उन्नीरिति। अस्त्रीत्वादनदीत्वादम्बार्थेत्यादिना नदीकार्यं नेति भावः। उन्न्यमिति। पूर्वरूपापवादो यणितिभावः। हे उन्नीरिति। अस्त्रीत्वादनदीत्वादम्बार्थेत्यादिना नदीकार्यं नेति भावः। उन्न्यमिति। पूर्वरूपापवादो यणिति भावः। शसादौ-उन्न्यः। उन्न्या। उन्न्ये। उन्न्यः। उन्न्योः। ङेरामिति। नदीत्वाऽभावेऽपि "ङेराम्" इति सूत्रे नीशब्दस्य पृथग्ग्रहणादाम्। आङ्गत्वेन नीशपब्दान्तादपि भवतीति भावः। एवं ग्रामणीरिति। ग्रामं नयति=नियच्छतीति ग्रामणीः। "अग्रग्रमाभ्यां नयतेर्णो वाच्यः" इति णत्वम्। अनेकाचः किमिति।"एरनेकाचः इत्यत्रे"ति शेषः। नीरिति। नीधातोः केवलात्पूर्ववत्क्विप्। अनेकाच्त्वाऽभावान्न यण्। किंतु "अचि श्नुधात्वि"ति इयङ्। एतावदेव उन्नीशब्दादस्य वैलक्षण्यमिति भावः।

सुश्रियाविति। "श्रिञ् सेवायाम्।" "क्विब्वची" इत्यादिना क्विप्। प्रकृतेदीर्घश्च। सु श्रयतीति, शोभना श्रीरस्येति वा सुश्रीः। ततोऽजादिप्रत्यये यण् न भवति। इवर्णस्य धात्वयवसंयोगपूर्वकत्वादिति भावः। यवक्रियाविति। यवान् क्रीणातीति यवक्रीः। क्रीञ्धातोः क्विपि रूपम्। अत्रापि धात्ववयवसंयोगपूर्वकत्वान्न यणिति भावः।

"एरनेकाचः" इति सूत्रे "गतिकारकपूर्वस्यैवेष्यते" इति वार्तिकं पठितं, तत्तात्परय्तः सङ्गृह्णाति--गतिकारकेतरेति। यथाश्रुते तूदाह्नतक्विबन्तकुमारीशब्दे यण् न स्यात्। शुद्धधियाविति। शुद्धा धीर्यस्येति विग्रहः। अत्र शुद्धशब्दस्य गतिकारकेतरत्वात्तत्पूर्वकस्य न यणिति भावः। शुद्धं ब्राह्व ध्यायतीति विग्रहे तु स्यादेव यण्--शुद्धध्यौ इत्यादि।

कथं तर्हीति। यदि गतिकारकेतरपूर्वस्यैव यण् पर्युदस्यते, गतिकारकपूर्वस्य त्ववश्यं यण्, तदा दुर्धियः वृश्चिकमिय इत्यादि कथमित्यन्वयः। आदिना दुर्धियौ वृश्चिकभियौ इत्यादिसङ्ग्रहः। दुःस्थिता धीर्येषामिति विग्रहः। "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहिः। पूर्वपदे उत्तरखण्डस्य लोपश्च। वृश्चिकाद्भोरिति विग्रहः। अत्र दुरो गतित्वाद्वृश्चिकस्या।त्रपादनत्वाच्च गतिकारकपूर्वत्वात्पर्युदासाऽभावे सतीयङपवादोऽत्र यण् दुर्वार इत्याक्षेपः। उच्यते। इति। "परिहार" इति शेषः। गतित्वमेव नास्तीति। "उपसर्गाः क्रियायोगे" "गतिश्चे"ति प्रादीनां क्रियान्वये गत्युपसर्गसंज्ञे विहिते। धीशब्दश्च बुद्धिगुणवाची, न तु क्रियावाची। अतो न तं प्रति दुरो गतित्वमिति गतिपूर्वकत्वाऽभावान्नात्र यण्, किंतु इयङेवेत्यर्थः। ननु लुप्तस्य स्थिताशब्दस् क्रियाप्रवृत्तिनिमित्तकत्वात्तं प्रति दुरो गतित्वमस्त्येवेत्यत आह--यत्क्रियेति। यया क्रियया युक्ताः प्रादयस्तं प्रत्येव=तद्वाचकशब्दे प्रत्येव गत्युपसर्गसंज्ञका इत्यर्थः। नचैवमप्यत्र स्थिताशब्दं लुप्तं प्रति प्रवृत्तं दुरो गतित्वमादाय दुर्धीशब्दस्य गतिपूर्वकत्वम्स्त्येवेति वाच्यं, यत्क्रियायुक्ताः प्रादयस्तत्क्रियावाचकं प्रत्येव गत्युपसर्गत्वम्। तथाविधिक्रियावाचकस्यैव च गत्युपसर्गकार्यमित्यर्थस्य विवक्षितत्वात्। "यत्क्रियायुक्ताः" इति प्रत्यासत्तिन्यायलभ्यम्। वृश्चिकेति। वृश्चिकशब्दस्याऽपादानत्वं नेह विवक्षितत्वात्। "यत्क्रियायुक्ताः" इति च प्रत्यासत्तिन्यायलभ्यम्। वृश्चिकेति। वृश्चिकशब्दस्याऽपादानत्वं नेह विवक्षितमित्यन्वयः। कुत

#इत्यत आह--बुद्धिकृतमिति। आरोपितमित्यर्थः। अपादानत्वं हि विश्लेषावधित्वम्। नह्त्र वृक्षात्पर्णं पततीत्यत्र पर्णविश्लेषे वृक्षस्यैव भयविश्लेषे वृश्चिकस्याऽवधित्वमस्ति, वृक्षे पर्णवद्भयस्य वृश्चिके संश्लेषाऽभावात्, विश्लेषस्य संश्लेषपूर्वकत्वात्। उक्तं च भाष्ये--"विवक्षितः कारकाणि भवन्ती"ति। प्रकृते च वृश्चिकेऽपादानत्वारोपस्य वक्रधीनत्वादिह च तदनारोपात्सम्बन्धमात्रविक्षया षष्ठीमाश्रित्य "वृश्चिकस्य भी"रिति षष्ठीसमासे वृश्चिकभीशब्दस्य व्युत्पत्तिराश्रीयते। ततश्च कारकेतरपूर्वकत्वान्नात्र यणिति भावः। नच वृश्चिकाद्भीरित्यादौ बुद्धिकृतमेवापादानत्वमादाय पञ्चम्युपपत्तेः "भीत्रार्थाना"मिति व्यर्थमिति वाच्यं, तस्य सूत्रस्य भाष्ये प्रत्याख्याततत्वेन इष्टापत्तेरित्यलम्। परिहारान्तरमाह- वृश्चिकसम्बन्धिनीति। उत्तरपदेति। वृश्चिकसम्बन्थिनीति पूर्वपदे उत्तरखण्डस्य सम्बन्धिनीशब्दस्य लोपः शाकपार्थिवादित्वादित्यर्थः। सुष्ठु ध्यायतीति सु=शोभना धीर्यस्येति वा विग्रहे सुधीशब्दः। अत्र अजादौ परे "एरनेकाचः" इति यणि प्राप्ते-।

तत्त्व-बोधिनी

एरनेकाचोऽसंयोगपूर्वस्य २३३, ६।४।८२

एरनेकाचः। "इणो यण्ित्यतो यणिति वर्तते। "अचि श्नुधातु--"इति सूत्रादिह धातुरेवानुवर्तते, न तु श्नुभ्रुवौ, तयोरिवर्णाऽसंभवात्। धातुग्रहणं चावृत्त्योभयोर्विशेषणं, संयोगस्याङ्गस्य चेति ब्याचष्टे--धात्ववयवसंयोगेत्यादि। तत्र धातुना संयोगस्य विशेषणादिह यण्--, उन्न्यौः। उन्न्यः। "हरी""हरी"नित्यादि सिह्यर्थं धातुना अङ्गं विशेष्यते। अन्यथा "प्रध्यं""प्रध्य"इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण्स्यात्, धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तत्वादङ्गस्य। प्रधीरिति। प्रध्यायतीति प्रधीः। "ध्यायतेः संपर्सारणं चे"ति क्विपि संप्रसारणे पूर्वरूपे च कृते "हलः"इति दीर्घः। यदा तु "प्रकृष्टा धीर्बुद्धिर्यस्ये"ति विगृह्।यते तदा धीशब्दस्य नित्यस्त्रीत्वात् "प्रथमलिङ्गग्रहणं चे"ति नित्यस्त्रीलिङ्गातिदेशे यथासंभवं नदीकार्यं बोध्यम्। "प्रथमलिङ्गग्रहणं चे"ति वार्तिकस्य प्रथमलिङ्गं "यू स्त्र्याख्यौ"इत्यनेन नदीत्वं वक्तव्यमित्यर्थात्। एरनेकाच इति यण्विषयटत्वेन "नेयडुवङ्---"इति निषेधस्याऽप्रवृत्तेश्चेत्येके। अन्ये त्वाहुः---एवं तर्हि यथोद्देशप्रवृत्तौ न्यायसिद्धमिदमिति मनोरमादिग्रन्थो विरुध्येत। यथोद्देशपक्षेऽपि प्रधीशब्दार्थतया वचनस्यावश्यकत्वात्। मूले हि "उपसर्जनत्वेऽपि नदीत्वं वक्तव्य"मित्युक्तं, न तु नित्यस्त्रीत्वमिति। तस्मा "त्प्रथमलिङ्गग्रहण"मित्यनेन लिङ्गप्रयुक्तं यन्नदीत्वं वृत्तेः प्राक् स्थितं तदिहाऽतिदिश्यते। धीशब्दे तु "नेयङुवङ्--"इति निषेधेन मदीत्वाऽभावान्नास्त्येव प्रधीशब्दे नदीत्वातिदेश इति। "ङिति ह्रस्वश्चे"ति वैकल्पिकनदीत्वमपीह नातिदिश्यते। "प्रथमलिङ्गे"ति वचनं यथोद्देशे न्यायसिद्धमिति ग्रन्थानुरोधेनः वृत्तेः प्रागवस्थायामवयवत्वेनाभिमतेऽपि विद्यमानाया एव नदीसंज्ञायाः समुदाये अभ्युपेयत्वात्। न च प्रकृष्टा धीर्यस्य तस्मै प्रध्ये प्रध्य इत्यादौ प्रथमान्तधीशब्दस्य ङिति परे प्रवर्तमाना नदीसंज्ञाऽस्तीति दिक्। उन्नीरिति। "सत्सूद्विषे"त्यादिना क्विप्। ङेरामिति। अङ्गत्वान्नीशब्दान्तादपि ङेराम्भवतीति भावः। ग्रामणीरिति। ग्रामं नयतीति ग्रामणीः। "अग्रग्रामाभ्यां नयते" रितिणत्वम्। नीरिति। नयतीति नीःष क्विप्।

गतिकारकेतरेति। "गतिकारकपूर्वस्यैव यणिष्यते"इति तु नोक्तम्, कुमारीमिच्छन् ब्राआह्णः कुमारी, कुमार्यौ कुमार्य इत्यत्र यणभावप्रसङ्गात्। शुद्धधियाविति। यदा तु शुद्धं ब्राह्म ध्यायतीति विगृह्नते तदा भवत्येव यण्। शुद्धध्यौ। शुद्धध्यः। एवमग्रेऽपि। कथं तर्हीति। गतिकारकेतरपूर्वपदत्वमिह नास्तीतियणैव भाव्यमिति प्रश्नः। "दुर्धिय"इत्यत्र "प्रादिभ्यो धातुजस्ये"ति वार्तिकेन उत्तरपदलोपो बोध्य इत्याशयेनाह--दुःस्थिता धीर्येषामिति। वृश्चिकशब्दस्येति। भाष्यकृता हि बुद्धिपरिकल्पितपायमाश्रित्य "भीत्रार्थाना"मिति सूत्रं प्रत्याख्यातं। ततश्च सम्बन्धमात्रविवक्षायां षष्ठ()एवेति नास्त्यत्र कारकपूर्वत्वमिति भावः। "ओः सुपी"त्यतः "सुपी"त्यनुवर्तनादाह--

सूत्रम्

काशिका-वृत्तिः

ओः सुपि ६।४।८३

धात्ववयवः संयोगः पूर्वो यस्मादुवर्णान् न भवति, तदन्तस्य अङ्गस्य अनेकाचः अजादौ सुपि परतो यणादेशो भवति। खलप्वौ। खलप्वः। शतस्वौ। शतस्वः। सकृल्ल्वौ। सकृल्ल्वः। सुपि इति किम्? लुलुवतुः। लुलुवुः। अनेकाचः इत्येव, लुवौ। लुवः। असंयोगपूर्वस्य इत्येव, कटप्रुवौ। कटप्रुवः। गतिकारकाभ्याम् अन्यपूर्वस्य न इष्यते, परमलुवौ। परमलुवः।

लघु-सिद्धान्त-कौमुदी

ओः सुपि २११, ६।४।८३

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः॥ स्वभूः। स्वभुवौ। स्वभुवः॥ वर्षाभूः॥

न्यासः

ओः सुपि। , ६।४।८३

"खलप्वौ" इति। खलं पुनातीति "अन्येभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्()। "शतस्वौ" इति। अत्रापि शतं सूत्र इति "सत्सूद्विष" ३।१।६१ इत्यादिना क्विप्()। "सकृल्ल्वौ" इति। "तोर्लि" ८।४।५९ इति परसवर्णः। "कटप्रुवौ" इति। "प्रूङ्? गतौ" (धा।पा।९५७), ["प्रुङ्()"--धा।पा।] "क्विब्? वचप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" इति क्विप्(), दीर्घत्वञ्च। "ओः" इति स्पष्टार्थम्()। अनुकारान्तनिवृत्यर्थन्तु न युज्यते; "य्वोः इत्यनुवृत्तेः। इकारस्य च पूर्वेणैव सिद्धो यण्()--उन्न्यौ; ग्रामण्याविति॥

बाल-मनोरमा

ओः सुपि २७९, ६।४।८३

ओः सुपि। "एरनेकाचः" इति सूत्रं, एरितिवर्जमनुवर्तते। "अचि श्नुधातु" इत्यतोऽचीत्यनुवृत्तं। तेन सुपीति विशेष्यते। तदादिविधिः। "इणो य" णित्यतो यणित्यनुवर्तते। तदाह--धात्ववयवेत्यादिना।

गतिकारकेति। इदमपि वार्तिकमत्रानुवर्तते इति भावः। खलप्वौ खलप्व इति। कारकपूर्वकत्वादिह यणिति भावः। हे खलपूः। खलप्वम् खलप्वौ खलप्वः। खलप्वा। खलप्वे। खलप्वः। खलप्वः खलप्वोः। खलप्वि। इह अजादौ "एरनेकाचः" इति "ओः सुपी"ति यण् च सर्वत्र पूर्वरूपसवर्णदीर्घापवादाः। एवं सुल्वादय इति। सुष्ठु लुनातीति सुलूः। गतिपूर्वकत्वादिहापि यण्। आदिना केदारलूरित्यादिसङ्ग्रहः। कटप्ररिति। "प्रुगतौ"। "क्विब्वची"त्यादिना क्विप्, उकारस्य दीर्घश्च। परमलुवाविति। परमश्चासौ लूश्चेति विग्रहः। गतिकारकेतरपूर्वकत्वान्न यण्। लुलुवतुरिति। अतुसि लुलू इत्यस्याऽनेकाच्त्वेऽपि सुप्परकत्वाऽभावान्न यणिति भावः। स्वभूरिति। स्वस्माद्भवतीति क्विप्। कारकपूर्वकत्वाद्यणि प्राप्ते आह-न भूसुधियोरिति। वर्षासु भवति वर्षाभूः। वर्षर्तावुत्पन्न इत्यर्थः। वर्षशब्दो नित्यस्त्रीलिङ्गबहुवचनान्तः। "अप्सुमनःसमासिकतावर्षाणां बहुत्वं चे"ति लिङ्गानुशासने स्त्र्यधिकारे सूत्रकृतोक्तेः। "वर्षाभूर्ददुरे पुमान्" इति यादवः। "न भूसुधियो"रिति निषेधे प्राप्ते-।

तत्त्व-बोधिनी

ओः सुपि २४१, ६।४।८३

ओः सुपि। "इणो यण्ित्यतो यण्, "एरनेकाचः "इति सूत्रं च सर्वमनुवर्तते इवर्णवर्जम्, "ओ"रित्युकारस्य कार्यिणो निर्देशात्। "अचि श्नुधात्वि"ति सूत्राद्धातुः "एरनेकाचः"इत्यत्रैव संवध्यत इत्याशयेन व्याचष्टे---धात्ववयवसंयोगेत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

वर्षाभ्वश् च ६।४।८४

वर्षाभू इत्येतस्य अजादौ सुपि परतो यणादेशो भवति। वर्षाभ्वौ। वर्षाभ्वः। पुनर्भ्वश्चेति वक्तव्यम्। पुनर्भ्वौ। पुनर्भवः। कारापूर्वस्यापीष्यते। काराभ्वौ। काराभ्वः।

लघु-सिद्धान्त-कौमुदी

वर्षाभ्वश्च २१२, ६।४।८४

अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि॥ दृन्भूः। (दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः)। दृन्भ्वौ। एवं करभूः॥ धाता। हे धातः। धातारौ। धातारः। (ऋवर्णान्नस्य णत्वं वाच्यम्)। धातॄणाम्। एवं नप्त्रादयः॥ नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेनेह न। पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्। एवं जामात्रादयः॥ ना। नरौ॥

न्यासः

वर्षाभ्वश्च। , ६।४।८४

"न भूसुधियोः" ६।४।८५ इति प्रतिषेधे प्राप्ते तदपवादोऽयमारभ्यते। "वर्षाभ्यौ" इति। वर्षाशब्दाद्भवतेः क्विप्()। "पुनर्भ्वश्चेति वक्तव्यम्()" इति। "नपुनर्भ्वित्येतस्याचि सुपि यणादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--चकारोऽत्रि क्रियते, स चानुक्तसमुच्चयार्थः। तेन पुनर्भ्वित्यस्यापि भविष्यतीति। "कारापूर्वस्यापीष्यते" इति। सोऽपि तत एव चकाराद्भवतीति वेदितव्यम्()॥

बाल-मनोरमा

वर्षाभ्वश्च २८०, ६।४।८४

वर्षाभ्वश्च। "ओः सुपी"त्यनुवर्तते। "अचि श्नुधात्वि"त्यतोऽचीति च, "इणो य" णित्यतो यणिति चानुवर्तते। तदाह--अस्येति। वर्षाभूशब्दस्येत्यर्थः। दृभतीति। "दृभी ग्रन्थे"। तुदादिः। शविकरणस्य "सार्वधातुकमपि"दिति ङित्वान्न गुणः। निपातित इति। कूप्रत्ययो नुम्चेह निपात्यते इत्यर्थः। "नश्चापदान्तस्ये"त्यनुस्वारः, "अनुस्वारस्य ययी"ति तस्य परसवर्णो मकारः। अत्र च ऊकारो न धात्ववयवः। अत उवङ्, "ओः सुपी"ति यण्च न। किंतु "इको यणची"त्येव यण्। स च "अमि पूर्वः" इत्यनेन बाध्यत इत्याशयेनाह--दृम्भूमिति। शसि "दीर्घाज्जसि चे"ति निषेधाऽप्रवृत्त्या पूर्वसवर्णदीर्घेण "इको यणची"ति यण् बाध्यत इत्यभिप्रेत्याह--दृम्भूनिति। दृम्भ्वा। दृम्भवे। दृम्भ्वः। दृम्भ्वः दृम्भ्वोः। दृम्भ्वाम्। इह तु "दृन्कारे"ति यण्न भवति, भूशब्दस्यार्थवत एव तत्र ग्रहणात्। इह च भूशब्दस्याऽनर्थकत्वात्। "दृ न्निति नान्तमव्ययं हिंसायां वर्तते। तस्मिन्नुपपदे भूधातोः क्विबित्यर्थः। दृन्-हिंसां, भवते=प्राप्नोतीति विग्रहः। दृन्भूरिति। तरुविशेषः। सर्पविशेष इत्यन्ये। स्वाभाविक एवात्र नकारः। तस्य पदान्तत्वा"न्नश्चापदान्तस्ये"ति नानुस्वारः। अत एव न परसवर्णः।

"न भूसुधियो"रिति निषेधे प्राप्ते--दृन्करपुनः। दृन्भ्वमिति। यणा पूर्वरूपं बाध्यत इति भावः। दृन्भ्व इति। शसि यणा पूर्वसवर्णदीर्घो बाध्यत इति भावः। करात् करे वा भवतीति करभूः, दृन्भूवदित्यभिप्रेत्याह--करभ्वं करभ्व इति। "दृन्करे"त्युदाहृतवार्तिके दीर्घमध्यकारशब्दपाठ इति मतान्तरं। तत्राह--दीर्घेति। स्वार्थिक इति। स्वस्याः प्रकृतेरर्थः

स्वार्थः, तत्र भवः स्वार्थिकः। अध्यात्मादित्वाट्ठञ्। प्रज्ञाद्यणिति। "प्रज्ञादिभ्योऽणि"ति प्रज्ञादिभ्यः स्वार्थेऽण्विधानादिति भावः। दीर्घपाठे करपूर्वस्य उवडेव। ह्रस्वपाठे करपूर्वस्य यणेवेति विवेकः। पुनर्भवतीति पुनर्भूः। ननु "पुनर्भूर्दिधिषूरूढा" इति कोशात्पुनर्भूशब्दस्य स्त्रीलिङ्गत्वात्स्त्रीलिङ्गाधिकार एव तन्निरूपणं युक्तमित्यत आह--पुनर्भूर्योगिकः पुंसीति। पुनर्भवतीति क्रियानिमित्तस्य पुनर्भूशब्दस्य पुँल्लिङ्गत्वमप्यस्तीत्यर्थः। दृग्भू इति। दृशो भवतीति दृग्भूः। कारायां भवतीति काराभूः। कारा=बन्धनालयः। स्वयंभूवदिति। तत्र "न भूसुधियो"रिति यणः प्रतिषेधात्, प्रतिप्रसवाऽभावाच्चेति भावः। इत्यूदन्ताः। अथ ऋदन्ताः। धातेति। "डुधाञ् धारणपोषणयोः" तत्र तृन् तज्वा स्यात्। क्रोष्टुशब्दवदनङ्दीर्घ सुलोपनलोपाः। हे धातरिति। "ऋदुशनसि"त्यत्रासंबुद्धावित्यनुवृत्तेर्नानङ्। "ऋतो ङी"ति गुणोऽकारः, रपरत्वं, हल्ङ्यादिलोपः, विसर्गः। "अप्तृन्" इति दीर्घस्तु न, असंबुद्धावित्यनुवृत्तेः। धाताराविति। ङिसर्वनामस्थानयोः "ऋतो ङी"ति गुणोऽकारः। रपरत्वम्, "अप्तृन्" इति दीर्घश्च। धातारः। धातारम्। धातारौ। शसि पूर्वसवर्णदीर्घ ॠकारः, नत्वम्। धातॄ()न्। टा-यण्। धात्रा। ङे-यण्। धात्रे। ङसिङसोः-ऋत उत्, रपरत्वम्, सलोपः, विसर्गः-धातुः। धातुः। धात्रोः धात्रोः। आमि "ह्रस्वनद्यापः" इति नुट्। "नामी"ति दीर्घः। नकारस्य रेफषकाराभ्यां परत्वाऽभावादप्राप्ते णत्वे।

ऋवर्णान्नस्य। ऋवर्णात्परस्येत्यर्थः। इदं तु वार्तिकं णत्वविधायकसूत्राणां सर्वेषां शेषभूतम्। ङौ "ऋतो ङी"ति गुणोऽकारः, रपरत्वम्। धातरि। धातृषु। नच दातृशब्दस्य हिरण्यगर्भसंज्ञाशब्दादौणादिकशंसिक्षदादितृन्तृजन्तत्वादिह कथमप्तृन्निति दीर्घः,औणादिकतृन्तृजन्तेषु नप्त्रादिसप्तानामेव दीर्घ इति नियमादिति वाच्य, धाञ्धातोः शंसिक्षदादित्वकल्पनायां प्रमाणाऽभावेन धातृशब्दस्यौणादिकत्वाऽभावादिति भावः। एवं नप्त्रादय इति। नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृशब्दा धातृशब्दवदित्यर्थः। उद्गातृशब्दस्य औणादिकतृन्तृजन्तस्य नप्त्रादिष्वनन्तर्भावेऽपि समर्थसूत्रे उद्गातार इति भाष्यप्रयोगादेव दीर्घ इत्युक्तंप्राक्। तदेतत्समारयति-उद्गाताराविति। पितेति। धातृवदनङादि। सर्वनामस्थाने तु "ऋतो ङी"ति गुणोऽकारः, रपरत्वम्। "अप्तृन्" इति दीर्घस्तु नेत्याह--व्युत्पत्तीति। पातीति पिता। तृच्प्रत्ययः, इट् आकारलोपश्चेति व्युत्पत्तिर्बोध्या। अव्युत्पत्तिपक्षे तु अप्तृन्तृजादिष्वनन्तर्भावाद्दीर्घशङ्कैव नास्तीति भावः। पितरौ पितरः। पितरम् पितरौ पितॄ()नित्यादि धातृवत्। एवं जामातृभ्रात्रादय इति। उणादिषु "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ" इति सूत्रे पितृजामातृभ्रातृशब्दाः व्युत्पादिताः। तत्र पितृशब्दस्य व्युत्पत्तिरुक्ता। भ्राजेस्तृनि तृचि वा जलोपः। भ्राता। जायां मातीति जामाता। तृन्प्रत्ययः। तृज्वा यालोपश्च। अनयोरप्यौणादिकयोर्नप्त्रादिष्वनन्तर्भावान्न दीर्घ इत्यर्थः। आदिना मन्तृ हन्तृ इत्यनयोग्र्रहणं, तयोरुणादिषु "तृन्तृचौ शंसिक्षदादिभ्यः" इति प्रकरणे बहुलमन्यत्रापि इत्यत्र उदाहृतत्वात्। नेति। नृशब्दो मनुष्यवाची। तस्मात्सुः। "ऋदुशन"सित्यनङ्। "अप्तृ"न्निति सूत्रेऽनन्तर्भावा"त्सर्वनामस्थाने चे"ति नान्तत्वप्रयुक्तो दीर्घः। हल्ङ्यादिलोपः। नलोपः ना इति रूपम्। नरा नर इति। "ऋतो ङी"ति गुणो रपरः। अप्तृन्नाद्यनन्तर्भावान्नान्तत्वाऽभावाच्च न दीर्घः। हे न इति। "ऋतो ङी"ति गुणो रपरः। हल्ङ्यादिलोपो विसर्गश्च। नरम्। नरौ। शसि पूर्वसवर्णदीर्घो ॠकारः, नत्वम्, नॄ()न्। टादावचि यणि रेफः। न्रा। न्रे। ङसिङसोः ऋत् उत्, रपरः, सलोपः, विसर्गश्च। नुः। नुः। न्रोः। आमि नुट्, "नामी"ति नित्यं दीर्घे प्राप्ते-।

तत्त्व-बोधिनी

वर्षाभ्वश्च २४२, ६।४।८४

वर्षाभ्वौ वर्षाभ्व इति। अत्र "इको यणची"ति यणं बाधित्वा "प्रथमयो"रिति पूर्वसवर्णगीर्घः प्राप्तः, तस्य "दीर्घज्जसि चे"ति निषेधे पुनरपि यणादेश प्रसक्तौ "अचि श्नुधातु भ्रुवाम्ित्यवङ्, तं च बाधित्वा "औः सुपी"ति यण्, तस्य "न भूसुधियो"रिति निषेधे पुनरवङादेशस्य प्रसक्तौ "वर्षाभ्वश्चे"ति यणिति बोध्यम्। एवमन्यत्राप्युत्सर्गापवादादविधय ऊह्याः।

"भेके मण्डूकवर्षाभूशालूररल्पवदेर्दूराः"इत्यमरः। "भोक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दूरे पुमान्िति यादवः। हम्भतीति। "हम्भी ग्रन्थे"तुदादिः। हन्भूग्र्रन्थकर्ता। कथक इत्यन्ये। व्यचुत्पादिति इति। ऊप्रत्ययो नुमागमश्चात्र निपात्यत इत्यर्थः। दशपादीवृत्तौ तु "दर्भणं हम्भूः। नुमागमोऽनुस्वारश्च निपात्यते"इत्युक्तम्। अयमुकारो न धातोरिति उवङोऽप्रसङ्गात् "इको यणची"ति यण्, स च "अमि पूर्वः"इत्यनेन बाध्यत इत्याशयेनाह--हम्भूमिति। इदं च श्रीपतिमतम्। माधवेन तु "अन्दूहम्भू--"इत्यादिसूत्रेण हढशब्दे उपपदे भुवः कूप्रत्ययः, उपपदस्य हन्नदेशश्च निपात्यते इत्युक्तम्।

हन्करपुनःपूर्वस्य भुवो यण्वक्तव्यः। हम्भूरिति। तरुः। सर्पजातिभेद इत्येके। कपिरित्यन्ये। वक्तव्य इति। "वर्षाभ्वश्चे"ति चकारस्याऽनुक्तसमुच्चयार्थत्वादिति भावः। एवञ्च "ओः सुपि"इति प्राप्तस्य यणो "न भूसुधियो"रिति निषेधे "वर्षाहन्करपुनः पूर्वस्य भुवः"इत्येतद्विध्यर्थमिति स्थितम्। अत्र नव्याः--"वर्षाहन्करे"त्यस्य नियमार्थतां स्वीकृत्य "न भूसुधियो रित्यत्र भूग्रहणं त्युक्तं शक्यमिति, तन्न, "हन्करपुनः पूर्वस्य चेद्भवे"दिति विपरितनियमापत्तेः। तथाच "पुनर्भ्वौ"इत्यादि न सिद्धयेदिति। दीर्घपाठ इति। "हन्कारे"--ति पाठे इत्यर्थः। एवंच ह्यस्वपाठे कारपूर्वस्योवहेव , दीर्घपाठे तु करपूर्वस्योवङिति विवेकः। "पुनर्भूर्दिधिषूरूढा द्वि"रित्यमरोक्तेः पुनर्भूशब्दो नित्यस्त्रीलिङ्गः। तथा च स्त्रीलिङ्गप्रकतरण एव वक्तुमुचितो न त्वत्रेत्याशङ्कायामाह----यौगिकः पुंसीति। "पुनर्भवतीति पुनर्भू"रिति क्रियाशब्दः पुंलिङ्गेऽप्यस्तीत्यर्थः। स्वयंभूवदिति। प्राचा तु "हम्भू""काराम्भू"शब्दौ वर्षाभूवदाम्नतौ, तदुपेक्ष्यमिति भावः। इत्यूदन्ताः। धातेति। दधातीति धाता अब्जयोनिः। डुधाञस्तृच् तृन् वा। अनङ्दीर्घसुलोपनलोपः।

ऋवर्णान्नस्य णत्वं वाच्यम्। व्युत्पत्तिपक्ष इति। अव्युत्पत्तिपक्षे दीर्घशङ्कैव नास्ति, अबादिष्वपठनादिति भावःष नेति। "नयतेर्डिच्चे"ति ऋपत्र्ययान्तो "नृ"शब्दः। अनङादि प्राग्वत्।

---

सूत्रम्

काशिका-वृत्तिः

न भूसुधियोः ६।४।८५

भू सुधी इत्येतयोर् यणादेशो न भवति। प्रतिभुवौ। प्रतिभुवः। सुधियौ। सुधियः।

लघु-सिद्धान्त-कौमुदी

न भूसुधियोः २०३, ६।४।८५

एतयोरचि सुपि यण्न। सुधियौ। सुधिय इत्यादि॥ सुखमिच्छतीति सुखीः। सुतीः। सुख्यौ। सुत्यौ। सुख्युः। सुत्युः। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः॥

न्यासः

न भूसुधियोः। , ६।४।८५

भूग्रहणेन तदन्तस्य ग्रहणम्(), न केवलस्य। केवलस्य ह्येकाचो यणादेशप्रापत्यसम्भवादनर्थकं वचनं स्यात्()। उवङादेशप्रतिषेधार्थत्वान्नानर्थकमिति चत्()? न; एवं हि "वर्षाभ्वश्च" ६।४।८४ इति यणादेशविधानमनर्थकं स्यात्(), यदि ह्ययं यणादेशस्य प्रतिषेधः स्यात्()--एवं हि तत्? सर्थकं भवति, नान्यथा? नैतदस्ति; उवङपरतिषेधार्थेऽपि ह्()स्मस्तन्नियमार्थं स्यात्()। एवं तर्हि यणो यत्रानुवृत्तिस्तस्यैवायं प्रतिषेधो युज्यते। स चानेकाचो विहित इति केवलस्य ग्रहणं न प्राप्नोतीति युक्तमुक्तम्()--भूग्रहणेन तदन्तस्य ग्रहणमिति। "प्रतिभुवौ, प्रतिभुवः" इति। "भुवः संज्ञान्तरयोः"

३।२।१७९ इति क्विप्()। "सुधियौ" इति। शोभनं ध्यायतीति "अन्येभ्योऽपि दृश्यते" ३।२।१७८ इति क्विप्(), "ध्यायतेः सम्प्रसारणञ्च" (वा।२९२) इत्युपसंख्यानात्? सम्प्रसारणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

छन्दस्युभयथा ६।४।८६

छन्दसि विषये भू सुधि इत्येतयोः उभयथा दृश्यते। वनेषु चित्र विभ्वम् विशे। विभुवं विशे। सुध्यो हव्यमग्ने। सुधियो हव्यमग्ने।

न्यासः

छन्दस्युभयथा। , ६।४।८६

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हुश्नुवोः ६।२ सार्वधातुके ७।१ ओः ६।१ ८३ अनेकाचः ६।१ ८२ असंयोगपूर्वस्य ६।१ ८२ यण् १।१ ८१ अचि ७।१ ७७ अङ्गस्य ६।१ १

अर्थः॥

{ओः सुपि (६।४।८३)} इत्यतः {ओः} इत्यनुवर्तते मण्डूकप्लुतगत्या॥ हु इत्येतस्य श्नुप्रत्ययान्तस्य चानेकाचोऽङ्गस्य योऽसंयोगपूर्व उकारस्तस्य स्थाने यणादेशो भवति, अजादौ सार्वधातुके परतः॥

उदाहरणम्॥

जुह्वति, जुह्वतु। श्नुप्रत्ययान्तस्य -- सुन्वन्ति, सुन्वन्तु॥

काशिका-वृत्तिः

हुश्नुवोः सार्वधातुके ६।४।८७

हु इत्येतस्य अङ्गस्य श्नुप्रत्ययान्तस्य अनेकाचः असंयोगपूर्वस्य अजादौ सार्वधातुके परतो यणादेशो भवति। जुह्वति। जुह्वतु। जुह्वत्। सुन्वन्ति। सुन्वन्तु। असुन्वन्। हुश्नुवोः इति किम्? योयुवति। रोरुवति। इदम् एव हुश्नुग्रहणं ज्ञापकं भाषायाम् अपि यङ्लुगस्ति इति। छन्दसि छन्दस्युभयथा ६।४।८६ इत्यार्धधातुकत्वादेव यणादेशस्य अप्रसङ्गः। नच यङ्लुगन्तादयत् प्रत्युदाहरणम् उवर्णान्तम् अनेकाचसंयोगपूर्वं सार्वधातुके विद्यते। सार्वधातुके इति किम्? जुहुवतुः। जुहुवुः। असंयोगपूर्वस्य इत्येव, आप्नुवन्ति। राध्नुवन्ति।

लघु-सिद्धान्त-कौमुदी

हुश्नुवोः सार्वधातुके ५०३, ६।४।८७

हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः। शृणुथ। शृणोमि॥

न्यासः

हुश्नुवोः सार्वधातुके। , ६।४।८७

"यण्()" ६।४।८१ इति, "अनेकाचोऽसंयोगपूर्वस्य" ६।४।८२, "ओः" ६।४।८३ इति चानुवर्त्तेते। ननु च "हुरित्येतत्? श्नुप्रतययान्तञ्चाङ्गमुकारान्ततां न व्यभिचरत्येव, तत्? किमर्थम्? "ओः" इतीहानुवर्तते? असंयोगपूर्वग्रहणमुकारस्य विशेषणं यथा स्यादित्येवमर्थम्(); अन्यथा "हुश्नुवोरेवैतद्विशेषणं विज्ञायेत। ततश्च "तक्ष्णुवन्ति" इत्यादावेव प्रतिषेधो विज्ञायेत। "राध्नुवन्ति" इत्यादौ तु यणादेशः स्यादेव। जुहोतेरपि--"जुह्वति" इत्यत्र संयोगपूर्वत्वाद्यणादेशो न स्यात्()। ननु च धातुग्रहणमनुवर्त्तते, तत्रैवं विज्ञास्यते--धात्ववयवः संयोगः पूर्वः "क्विबन्ता धातुत्वं न जहति" (व्या।प।१३२) इति कृत्वा। अन्यथाप्यवयववचनं पूर्वशब्दमाश्रित्यैवं विज्ञायते--धात्ववयवः संयोगो यस्य पूर्वो न भवतीति? एवमपि राध्नुवन्तीत्यत्र यणादेशः स्यात्(), न ह्यत्र श्नुप्रत्ययस्य धात्ववयवः संयोगपूर्वः। तस्मात्? "ओ" इत्येतदनुवर्तनीयम्(), तद्विशेषणे हुश्नुवौ। तत्रासंयोगपूर्वग्रहणं श्नुप्रत्ययस्यावयवस्योकारस्य विशेषणं वेदितव्यम्(), जुहोत्यवयवस्य; तस्याव्यभिचारात्()। "श्नुप्रत्ययान्तस्यासंयोगपूर्वस्य" इति। व्यधिकरणे षष्ठ्यौ। श्नुप्रत्ययान्तस्याङ्गस्य योऽवयवोऽसंयोगपूर्व उकारः, तस्येत्यर्थः। "अनेकाचः" इत्येतज्जुहोतेः श्नुप्रत्ययान्तस्य समान्धिकरणं विशेषणं वेदितव्यम्()। "सार्वधातुके" इति जुहोत्यर्थम्(), न श्नुप्रत्ययान्तार्थम्(); अव्यभिचारात्()। "जुह्वति" इति। "अदभ्यस्तात्()" ७।१।४ इत्यदादेशः। "योयुवति, रोरुवति" इति। "यु" "रु" इत्येताभ्यां यङ, तस्य "यङोऽचि च" २।४।७४ इति लुक्(), "गुणो यङ्लुकोः" ७।४।८२ इत्यभ्यासस्य गुणः, पूर्ववज्झेरवादेशः। "इदमेव" इत्यादि। कथं पुनरिदं ज्ञापकम्? इत्याह--छन्दसि" इत्यादि। यदि च्छन्दस्येव यङ्लुक्? स्यात्(), तदा "चन्दस्युभयथा" ६।४।८६ इत्यार्धधातुकत्वादेव योयुवति, रोरुवतीत्यत्र न भविष्यतीत्यनर्थकमेव हुश्नुग्रहणं स्यात्()। यदा तु भाषायामपि यङ्लुगस्ति, तदार्धधातुकत्वाभावादसति हुश्नुग्रहणे योयुवतीत्यदौ प्राप्नोतीति तन्निवृत्त्यर्थमुपपद्यते हुश्नुग्रहणम्()। तस्मादेतदेव ज्ञापयति--भाषायमपि यङ्लुङस्तीति। तेन बेभिदीति, चेच्छिदीतीत्यादि भाषायामप्युपपन्नं भवति। स्यादेतत्()--यङ्लुगान्तादन्यत्? यदुवर्णान्तमनेकाच्? संयोगपूर्वं तन्निवृत्त्यर्थमेतद्भविष्यतीति? नेदं ज्ञापकमित्यत आह--"न च" इत्यादि। ननु चेदं विद्यते--युवन्? अरुवन्निति? नैतदस्ति; यद्यप्येतदसंयोगपूर्वम्(), अनेकाज्न भवति; अटोऽसिद्धत्वात्()॥

बाल-मनोरमा

हुश्नुवोः सार्वधातुके २२४, ६।४।८७

शृणु-अन्तीति स्थिते अन्तेर्ङित्त्वात् श्नोर्गुणनिषेधे सति उवङि प्राप्ते-- हुश्नुवोः। श्नोः प्रत्ययत्वात्तदन्तग्रहणम्। "इणो यणि"त्यतो यणित्यनुवर्तते, "अचि श्नु" इत्यतोऽचीति। तस्य सार्वधातुकविशेषणत्वात्तदादिविधिः। "एरनेकाचः" इतिसूत्रमेरितिवर्जमनुवर्तते। "ओः सुपी"त्यत ओरिति च षष्ठ()न्तम्। तदाह-- जुहोतेरित्यादिना। असंयोगपूर्वस्येति तु उकारस्य विशेषणं न तु श्नुविशेषणम्, तेन आप्नुवन्तीत्यत्र यण् न। हुश्नुश्धोः किम्?। योयुवति। अत्र युधातोर्यङ्()लुकि "अदभ्यस्ता" दिति झेरदादेशे योयु-अति इति स्थिते अनेकाजङ्गावयवस्य असंयोगपूर्वस्य उकारस्य यण् न भवति। अत्र भाष्ये "बहुलं छन्दसी" इत्यनुवृत्तौ यङोऽचि चे"ति विहितस्य यङ्लुकश्छान्दसत्वात् "छन्दस्युभयथे"त्याद्र्धधातुकत्वाश्रयणादेव योयुवतीत्यत्र यणभावसिद्धेर्हुश्नुग्रहणं भाषायमपि क्वचिद्यङ्()लुकं ज्ञापयतीत्युक्तम्। तथा च भाषायामपि अनेकाचोऽसंयोगपूर्वकोकारान्ताद्योयुवतीत्यादौ यङ्लुक्सिद्धेस्तत्र यङाभाअवार्थं हुश्नुग्रहणमिति फलति। ज्ञापकस्य सामान्यपेक्षत्वादुदाह्रतोवर्णान्तादन्यत्रापि यङ्लुक् सिध्यति। एतदेवाभिप्रेत्य भाष्ये-- हुशनुग्रहणं ज्ञापयति--"भाषायामपि यङ्()लुक् भवती" , "किमेतस्य ज्ञापने प्रयोजनं, बेभिदीति चेच्छिदीतीत्येतत्सिद्धं भवती"त्युक्तम्। अत्र भिदिच्छिद्योरेव ग्रहणादुदाह्रतोकारान्तादन्यत्र भवन् यङ्लुक् आभ्यामेव भवति, न त्वन्यत्रेत्याहुः। भिदिच्छिद्योग्र्रहणं प्रदर्शनमात्रमित्यन्ये। शृण्वन्तीति। शृणुथः। शृणुतेत्यपि ज्ञेयम्।

"लोपश्चाऽस्यान्यतरस्यां म्वो"रित्यभिप्रेत्याह--शृण्व इत्यादि।शुश्राव शुश्रुवतुः शुश्रुवुः। थलि वमयोश्च क्रादित्वान्नित्यमिण्निषेधः। तदाह--शुश्रोथ। शुश्रुवेति। शुश्रुवेति। शुश्रुमेत्यपि ज्ञेयम्। श्रोता। श्रोष्यति। शृणोतु--शृणुतात् शृणुताम्। शृण्वन्तु। "उतश्च प्रत्ययादसंयोगपूर्वा"दिति हेर्लुकं मत्वा आह-- शृण्विति। शृणुतात् शृणुतम् शृणुत। शृणवानीति। आटः पित्त्वेन ङित्त्वाऽभावाद्गुण इति भावः। ध्रु स्थैर्ये इति। अनिट्। ध्रवति। दुध्राव दुध्रुवतुः दुध्रुवुः। भारद्वाजनियमात्थल वेट्। दुध्रविथ--दुध्रोथ दुध्रुवथुः धुध्रुव। दुध्राव-दुध्रव दुध्रुविव दुध्रुविम। क्रादिनियमादिट्। ध्रोता। ध्रोष्यति। ध्रवतु। अध्रवत्। ध्रवेत्। ध्रूयात्। अध्रौषीत्। अध्रोष्यत्। दु द्रु गताविति। अनिटौ। दवति। द्रवति। दुदाव दुदुवतुः दुदुवुः। द#उद्राव दुद्रुवतुः दुद्रुवुः। अस्य भारद्वाजनियमात्थलि वेडित्याह-- दुदोध दुदविथेति। दुदुवथुः दुदुव। दुदाव--दुदव। वमयोः क्रादिनियमादिडित्याह-- दुदुविवेति। द्वितीयस्य क्रादित्वात्थलि नित्यं नेट्। तदाह-- दुद्रोथेति। दुद्रुवथुः दुद्रुव। दुद्राव- दुद्रव। वमयोः क्रादित्वानेट्। तदाह--दुद्रुवेति। दोता। द्रोता। दोष्यति। द्रोष्यति। दवतु। द्रवतु। अदवत्। अद्रवत्। दवेत्। द्रवेत्। दूयात्। द्रूयात्। अदौषीत्। चङिति। द्रुधातोरिति भावः। न्यूनीकरणमिति। नीचीकरणमित्यर्थः। न्यूनीभवनमिति। क्षीणबलीभवनमित्यर्थः। शत्रूञ्जयतीति। नीचीकरोतीत्यर्थः। ननु जिधातोः परस्मैपदित्वात्पराजयत इतिकथमात्मनेपदमित्यत आह--विपराभ्यामिति। ननु पराजयस्य अध्ययनेन संश्लेषविश्लेषयोरभावात्कथं पराजयं प्रत्ध्ययनस्याऽपादानत्वमित्यत आह--पराजेरिति। जयति। लिटि "सँल्लिटोर्जे"रिति कुत्वम्। जिगाय जिग्यतुः। जिग्युः। भारद्वाजनियमात्थलि वेट्। जिगयिथ-जिगेथ जिग्यथुः। जिग्य। जिगाय-जिगय। वमयोः क्रादिनियमादिट्। जिग्यिव जिग्यिम। जेता। जेष्यति। जयतु। अजयत्। जयेत्। जीयात्। अजैषीत्। अजैष्टाम् अजैषुः। अजैषीः अजैष्टम् अजैष्ट। अजैषम् अजैष्व अजैष्म। अजेष्यत्। इति धेडादयोऽजन्ताः परस्मैपदिनः। अथ डीङन्ता ङित इति। "डीङ् विहायसा गतौ" इत्येतत्पर्यन्ता ङित्त्वादात्मनेपदिन इत्यर्थः। "ष्मिङ् ईषद्धसने"। षोपदेशोऽयम्। स्मयते इति। "धात्वादे"रिति षश्य सः। सिष्मिये इति। कित्त्वाद्गुणाऽभावे इयङ्। आदेशसकारत्वादुत्तरखण्डे सस्य षः। सिष्मियातेसिष्मियिरे। क्रादिनियमादिट्। सिष्मियिषे। सिष्मियाथे। "विभाषेटः" इति मत्वा आह--सिष्मियिढ्वे सिष्मियिध्वे इति। स्मेता। स्मेष्यते। स्मयताम्। अस्मयत। स्मयेत। स्मेषीष्ट। अस्मेष्ट। अस्मेष्यत। गुङ्धातुरनिट्। गुण ओकारः, अवादेश इति विशेषः। गाङ्धातुरनिट्। गाते इति। लटस्तादेशे शपि सवर्णदीर्घे टेरेत्त्वमिति भावः। आतामि तथैव रूपमाह--गाते इति। गा-अ-आतामिति स्थिते परत्वात्सवर्णदीर्घे अतः परस्य दीर्घाऽकारस्याऽभावात् "आतो ङितः" इति इय् न भवति। झावपि तथैव रूपमाह--गाते इति। शपा सह आकारस्य सवर्णदीर्घे "आत्मनेपदेष्वनतः" इतिझेरदादेशे टेरेत्वमिति भावः। गासे गाथे गाध्वे। लट उत्तमपुरुषैकवचने विशेषमाह-- इट इति। गा अ इ इति स्थिते सवर्णदीर्घे सति इट एत्वे कृते "वृद्धिरेची"ति वृद्धौ "गै" इति रूपमित्यर्थः। गावहे गामहे। लिटि अजादौ आल्लोपः। जगे जगाते जगिरे। क्रादिनियमादिट्। जगिषे जगाथे जगिध्वे। जगे जगिवहे जगिमहे। गाता। गास्यते। गाताम् गाताम्। गाताम्। गास्व गाथाम् गाध्वम्। गै गावहै गामहै। अगात अगाताम् अगात। अगाथाः आगाथाम् अगाध्वम्। लङ इटीति। अ गा अ इ इति स्थिते टिदादेशत्वाऽभावादेत्त्वाऽभावे सवर्णदीर्घे आद्गुणे "अगे" इति रूपमित्यर्थः। अगावहि अगामहि। गेतेति। लिङस्तादेशे शपि गा अ त इति स्थिते सवर्णदीर्घे सीयुटि सलोपे यलोपे आद्गुण इति भावः। गेयातामिति। गा अ आतामिति स्थिते सवर्णदीर्घे सीयुटि सलोपे आद्गुण इतिभावः। गेरन्निति। झस्य रन्भावे गा अ रन्निति स्थिते सवर्णदीर्घे सीयुटि सलोपे आद्गुण इतिभावः। गेथाः गेयाथाम् गेध्वम्, गेय गेवहि गेमहि। आशीर्लिङि आह--गासिष्टेति। गासीयास्तात् गासीरन्। गासीष्ठाः गासीयास्थाम् गासीध्वम्। गासीय गासीवहि गासीमहि। ननु गासीष्टेत्यादौ "गाङ्कुटादिभ्योऽञ्णिन्ङिद"ति ञ्णिद्भिन्नप्रत्ययस्य ङित्त्वविधानेन सीयुडागमविशिष्टप्रत्ययस्य ङित्त्वात् "घुमास्थागापाजहातिसां हली"ति हलादौ क्ङिति विहितमीत्त्वं स्यादित्यत आह--गाङ्कुटादिभ्य इति सूत्रे इति। "इङ" इत्यनुवृत्तौ "गाङ्लिटी"ति विहितस्य गाङादेशस्यैव गाङ्कुटादिसूत्रे ग्रहणं, न तवस्य गाधातोरित्यर्थः। एतच्च अगासाताम् अगासत्। अगास्थाः अगासाथाम् अगाध्वम्। अगासि अगास्वहि। अगास्महि। अगास्यत।

आदादिकोऽयमिति। ततश्च "अदिप्रभृतिभ्यः शपः" इति शपो लुगिति भावः। फले तु न भेद इति। शपो लुकि सति गाते इत्याद्येव रूपम्, तस्मिन्ननसत्यपि गा अते इत्यादौ सवर्णदीर्घे सति तदेव रूपमिति न रूपभेद इत्यर्थः। कुङ् घुङ् उङ् ङुङ् शब्दे इति। चत्वारोऽपि ङितः। आद्यद्वितीचतुर्थाः कवर्गप्रथमचतुर्थपञ्चमाद्याः। तृतीयस्तु केवल उवर्णः। अन्ये त्विति। आद्यः केवलोवर्णो ङित्। इतरे तु पञ्च क्रमेण कवर्गाद्याः। तत्र कुङ्धातोरुदाहरति--कवते इति। लिटि अजादौ कित्त्वाद्गुणाऽभावे उवङ्। तदाह--चुकुवे इति। चुकुवाते चुकुविरे क्रादिनियमादिट्। चुकुविषे चुकुवाथे चुकुविध्वे। चुकुवे चुकुविवहे चुकुविमहे। कोता। कोष्यते। कवताम्। अकवत। कवेत। कोषीष्ट। अकोष्ट। अकोष्यत। एवं खवते इत्यादि। उङ्धातोराह--अवते इति। ऊवे इति। उ उ ए इति स्थिते द्वितीयस्य उवर्णसुवङि कृते सवर्णदीर्घे इति भावः। ननु उवङो बहिर्भूतप्रत्ययाऽपेक्षतया बहिरङ्गत्वादन्तरङ्गे सवर्णदीर्घे कृते ऊ ए इति स्थिते उवङि उवे इत्येवोचितमित्यत आह--वार्णादिति। ऊबाते ऊविरे।क्रादनियमादिट्- ऊविषे ऊवाथे ऊविध्वे। ऊवे ऊविवहे ऊविमहे। रूपमुक्तम्। संप्रति लिटि रूपमाह-- ञुङुवे इति। "कुहोश्चु"रिति ङकारस्य स्थानिनश्चर्भवन् स्थानसाम्यस्य पञ्चस्वभावादाभ्यान्तरप्रत्यत्नसाम्यस्य पञ्चस्वप्यविशिष्टत्वादल्पप्राणामनुनासिक्यसाम्याञ्ञकारः। प्रथमतृतीयौ तु न भवतः, आनुनासिक्याऽभावात्। च्युङादयोऽप्युवर्णान्ता अनिटः कुङ्धातुवज्ज्ञेयाः। रुङ् गतीति। सेट्कोऽयम्। "ऊद्दृदन्तैर्यौतिरुक्ष्णु" इत्यनिट्सु पर्युदासात्। तदाह--रवितासे इति। धृङ्()धातुरनिट्। दध्रे इति। कित्त्वाद्गुणनिषेधे ऋकारस्य यण्। दध्राते दध्रिरे। क्रादिनियमादिट्। दध्रिषे दध्राथे दध्रिध्वे। दध्रे दध्रिवहे दध्रिमहे। धर्ता। लृटि स्ये "ऋद्दनो"रिति इटि --धरिष्यते। धर()ताम्।अधरत। धरेत। आशीर्लिङि सीयुटि "उश्चे"ति कित्त्वान्न गुणः। धृषीष्ट। "ह्रस्वादङ्गा"दिति सिचो लुक्। अधृत अधृषाताम् अधृषत। अधरिष्यत। मेङ् प्रणिदाने णत्वमिति। प्रणिदानशब्दे, "प्रणिमयते" इत्यत्र च "नेर्गदे"ति णत्वमित्यर्थः। ननु "प्रणिमयते" इत्यत्र णत्वमिदं न संभवति, शिद्विषये आत्वाऽभावेन मारूपाऽभावात्। तथा प्रणिमानशब्देऽपि णत्वं न संभवति, ततर् मेङः कृतात्वस्य लाक्षणिकमारूपत्वात्। "गामादाग्रहणेष्वविशेषः" इत्याश्रित्य मेङोऽपि कृतात्वस्य णत्वविधौ ग्रहणे तु मीनातिमनोत्योरात्वे प्रनिमाता प्रनिमास्ति इत्यत्रापि नेर्णत्वापत्तिरित्यत आह--तत्रेति। तत्र = "नेर्गदे"ति णत्वविधौ। "घुमे"त्यस्य स्थाने "घुप्रकृतिमा"ङिति पठित्वा तत्र प्रकृतशब्दस्य घुमाङप्रकृतिपरत्वमाश्रित्य घौ, माङ्धातौ, घुमाप्रकृतौ च परत इति पर्यवसानमाश्रित्य माप्रकृतेर्ङितो मेङ्धातोः कृतात्वस्यापि ग्रहणस्य भाष्यकृताऽभ्युपगतत्वादित्यर्थः। एवं च "प्रणिमयते" इत्यत्र नाऽव्याप्तिः, मेङः कृतात्वमाप्रकृतित्वे सति ङित्वात्। नापि मीनातमिनोत्योरात्वे प्रनिमाता प्रनिमास्यतीत्यत्र अतिव्याप्तिः, मारूपस्य ङित्वाऽभावादिति भावः। एतच्च घुसंज्ञासूत्रे भाष्ये स्थितम्। ममे ममाते ममिरे। क्रादिनियमादिट्। ममिषे ममाथे ममिध्वे। ममे ममिवहे ममिमहे। माता। मास्यते। मयताम्। अमयत। मयेत। मासीष्ट। अमास्त। अमास्यत। देङ्धातुमेङ्वत्।

तत्त्व-बोधिनी

हुश्नुवोः सार्वधातुके १९६, ६।४।८७

हुश्नुवोः। जुह्वति। सुन्वति। हुश्नुवोः किम्?। योयुवति। नोनुवति। सार्वधातुके किम?। जुहुवतुः। जुहुवुः। असंयोगपूर्वेति किम्?। अक्ष्णुवन्ति। असंयोगपूर्वघणमोर्विशेषणं न श्नुप्रत्ययस्य। तेन आप्नुवन्तीत्यत्रापि यण्निषेधः सिध्यति। प्रत्ययविशेषणत्वे तु अक्ष्णुवन्तीत्यत्रैव निषेधः स्यादिति भावः। स्यादेतत्-- यङ्लुकश्छान्दसत्वाद्योयुवतीत्यादौ प्रत्ययस्य "छन्दस्युभयथे"त्यनेनाद्र्धकत्वाश्रयणे यणादेशो न भवेदिति किमनेन हुश्नुग्रहणेन?। न च युवन्ति नुवन्तीत्यत्रातिप्रसङ्गवारणार्थं तद्ग्रहणमिति वाच्यम्, अनेकाच" इत्यस्यानुवर्तनेनोक्तदोषाऽभावादिति चेत्। अत्राहुः-- "दाधर्तिदर्धर्तिदर्धर्षिबोभूतु" इति च्छन्दसि निपातनाद्भाषायां यङ्लुकि बोभवी#ईत्यादौ "भूसुवो"रिति गुणनिषेधो न प्रवर्तते, अत एव भाषायामपि यङ्लुक् सिद्ध इति वक्ष्यमाणत्वात्-- योयुवतीत्यादावतिप्रसङ्गवारणाय हुश्नुग्रहणं

कर्तव्यमेवेति। हुश्नुग्रहणाज्ज्ञापकाद्भाषायामपि क्वचिद्यङ्लुग्भवतीति भाष्यकाराः। एवं च सार्वधातुकपरयोर्हुश्नुवोरनेकाच्त्वाऽवयभिचारादनेकाच इत्यस्यानुवृत्तिरिह किमर्थेत्याशङ्काया निरवकाश एव। तदनुवृत्त्यभावे हुश्नुग्रहणस्य ज्ञापकत्वाऽसंभवादिति दिक्। दुदविथेति। भारद्वाजनियमादिट्। दुद्रोथ। दुद्रुवेति। क्रादित्वा ल्लिटि नेट्। गाङ् गतौ। गाते गाते गाते इति। पूर्वं शपा सह सवर्णदीर्घे कृते "आतो ङितः" इति न प्रवर्तते, "आत्मनेपदेष्वनतः" इति तु प्रवर्तते इति ताऽऽतांझेषु तुल्यं रूपमिति भावः। गै। गावहे। गामहे। जगे। जगाते। गाताम् गाताम् गाताम्। गास्व। उत्तमे तु-- गै। गावहै। गामहै। अगात्। अगाताम्। न त्वस्येति। "गाते" इत्यादौ तङं प्रवर्त्त्य ङकारस्य चरितार्थत्वात्। आदेशङकारस्तु न चरितार्थः, स्थानिवद्भावेन ङित्त्वादेव तङः सिद्धत्वादिति भावः। आदादिकोऽयमिति। एवंच गाते गाथे इत्यादावातामाथामोः परतः "आतो ङितः" इत्यस्य प्रवृत्तिशङ्कैव नास्तीति भावः। फलेतु न भेद इति। न च गाते गाथे इत्यादौ शपा सह सवर्णदीर्घे कृतेऽपि पूर्वस्मात्परस्य विधौ कर्तव्ये स्थानिवत्त्वादतः परत्वेन ङितामाकारस्य इय् स्यादिति शङ्क्यम्, पञ्चमीसमासपक्षस्याऽनित्यत्वाभ्युपगमादिति भावः। ञुङ्वे इति। "कुङोश्चु"रिति ङस्य ञः। च्युङिति। अस्मात्पचाद्यचि विक्लवः। वबयोरभेदाद्विक्लब इत्यन्ये। मेङ्। प्रणिमयत इति। ननु "नेर्गदे"ति कथमिह णत्वं स्यात्, शिद्विषये आत्वाऽभाव#एन मारूपाऽभावात्, अशिद्विषये कृतात्वेऽप्यस्मिन् णत्वं दुर्लभमेव, प्रतिपदोक्तस्यैव माधातोग्र्रहणौचित्यान्न त्वस्य लाक्षणिकस्य। "गामादाग्रहणेष्वविशेषः" इत्यभ्युपगमे तु मीनातिमिनोत्योरात्वे कृते प्रनिमाता प्रनिमास्यतीत्यादावतिप्रसङ्गः स्यादित्यत आह-- तत्रेति। इष्टत्वादिति। अयं भावः-- घुसंज्ञासूत्रे प्रणिदयते प्रणिधयतीत्यादौ णत्वसिद्धये भाष्यकारैरित्थं सिद्धान्तितम्, "नेर्गदनदे"ति णत्वविधौ "घुमे"त्यस्य स्थाने "घुप्रकृतिमाङि"ति पठनीयम्। घुश्च प्रकृतिश्च माङ् चेति द्वन्द्वः। प्रकृतिश्च कस्येत्याकाङ्क्षायां संनिधानात्पूर्वोत्तरयोरेव। तेन न क्वाप्यव्याप्तिः। नापि "मा माने" इत्यत्र, मीनातिमिनोत्योश्चाऽतिव्याप्तिः, माङिति ङकारानुबन्धकस्यैव पठितत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

भुवो वुग् लुङ्लिटोः ६।४।८८

भुवो वुगागमो भवति लुङि लिटि च अजादौ परतः। अभूवन्। अभूवम् लिट् बभूव, बभूवतुः, बभवुः।

लघु-सिद्धान्त-कौमुदी

भुवो वुग्लुङ्लिटोः ३९५, ६।४।८८

भुवो वुगागमः स्यात् लुङ्लिटोरचि॥

न्यासः

भुवो वुग्लुङ्लिटोः। , ६।४।८८

"अभूवन्()" इति। "गातिस्था" २।४।७७ इत्यादिना सिचो लुक्()। झेरन्तादेशे कृते संयोगान्तलोपः। "अभूवम्()" इति। "तस्थस्थ" ३।४।१०१ इत्यादिना मिपोऽम्भावः। "बभूव" इत्यादि। "भवतेरः" ७।४।७३ इत्यभ्यासस्यात्त्वम्()। "इन्धिभवतिभ्याञ्च" १।२।६ इति लिटः कित्त्वम्(), तेन गुणबुद्धी न भवतः। किमर्थं पुनर्भवेतेः परस्य लिटः कित्त्वमारभ्यते, यावता "एकदेशविकृतमनन्यवद्भवति" (व्या।प।१६) इति कृतयोरपि गुणवृद्ध्योर्वुक्? प्राप्नोत्यकृतयोरपि, वुकि कृतेऽनिगन्तत्वादलघूपधत्वादनजन्तत्वाच्च नास्ति गुणवृद्ध्योः प्राप्तिः, ततः कृताकृतप्रसङ्गित्वेन नित्यत्वाद्()वुकि कृते गुणवृद्ध्योः प्राप्तिरेव नास्तीत्यनर्थकं कित्त्वम्()? नैतदस्ति; वुगप्यनित्य

एव, न ह्यसौ कृतयोर्गुणवृद्ध्योः प्राप्नोति, ओरित्यनुवृत्तेरुवर्णान्तस्य वुका भवितव्यमिति कृत्वा। अत्रोभयोरनित्ययोः परत्वात्? गुणवृद्धी स्याताम्()। तस्मात्? कित्त्वमारब्धव्यम्()। किमर्थं पुनः ओरित्यनुवर्तते? बोभाव, बोभवेति गुणवृद्ध्योः कृतयोर्वुङ मा भूदित्येवमर्थम्()। ननु च कित्त्वे सत्यत्रापि गुणवृद्धिभ्यां न भवितव्यम्()? नैतदस्ति; न हि यङलुगन्ताद्? भवतेः परस्य लिटः कित्वं भवति, "इन्धिभवतिभ्याञ्च" १।२।६ इत्यत्र भवतीति श्तिपा निर्देशात्()॥

बाल-मनोरमा

भुवो वुग्लुङ्?लिटोः २४, ६।४।८८

भुवो वुक्। अचीति। "अचि श्नुधात्वि"त्यतस्तदनुवृत्तेरिति भावः। अचीति किम्?। अभूत्। ननु णलि परत्वाद्वुकं बाधित्वा "अचो ञ्णिती"ति वृद्धिः स्यात्, बभूविथेत्यत्र तु "सार्वधातुकार्द्धधातुकयो"रिति गुणः स्यादित्यत आह--नित्यत्वादिति। कृतयोरपि गुणवृद्ध्योरेकदेशविकृतन्यायद्वुक् प्रवर्तते, अकृतयोरपि प्रवर्तते। ततश्च "कृताऽकृतप्रसङ्गी यो विधिः स नित्य" इति न्यायेन वुङ् नित्यः सन् गुणवृद्धी बाधत इत्यर्थः। वुकि ककार इत्, उकार उच्चारणार्थः। कित्त्वादन्तावयवः।

तत्त्व-बोधिनी

भुवो वुग्लुङ्लिटोः २०, ६।४।८८

"अचि श्नुधात्वि"ति सूत्रादचीत्यनुवर्तते। तदाह-- लुङ्लिटोरचीति। अचीति किम्। अभूत् अभूः। वुकि सति "लोपो व्यो"रिति लोपं बाधित्वा परत्वाद्धल्ङ्यादिलोपः स्यात्। ननु हल्ङ्यादिलोपादन्तरङ्गत्वात् "लोपो व्यो"रिति लोप एव भविष्यति। तथा च मव्यतेर्लङ्लुगन्ताल्लङि तिप्सिपोः अमामत् अमाम इत्यत्र व्योर्लोप एव माधवादिभिः स्वीकृतः। एवं चाऽज्ग्रहणम् "ऊदुपधाया" इत्युत्तरार्थमनुवर्तमानमिहाप्युपरञ्जकतया वृत्तिकारादिभिर्योजितं न त्वावस्यकतयेत्येव निष्कर्ष उचित इति चेत्। अत्राहुः-- "भुवो वुगि त्यस्याङ्गत्वाह्यपेक्षत्वेन हल्ङ्यादिलोपस्येव वुकोऽपि बहिरङ्गतयाऽसिद्धत्वे सति वलिलोपस्य प्राप्तेरेवाऽभवादज्ग्रहणमिहार्थमपीत्येव युक्तमिति। अयं च शङ्काग्रन्थः, समाधानग्रन्थश्च मनोरमायां स्थितः। अत्र नव्याः-- मव्यतिर्यङ्()लुगन्त एव नास्ति, णमामदित्यादि रूपं तु दूरादपास्तमेव, "यकारवकारान्तानामूठ्भाविनां यङ्लुग्नास्ती"ति "छ्वोः शू"डिति सूत्रे भाष्ये ध्वनितम्, कैयटेन च स्पष्टीकृतम्। इदं च छ्वोरिति यत्रोठ् तद्विषयकं, "ज्वरत्वरे" त्यूठ्भाविनोः रिउआविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यं, माधवादिसंमतं च। "मव्य बन्धने" अयं य#आन्त ऊठ्भावी" ति मूले वक्ष्यमाणत्वात्। तथा च तद्ग्रन्थेन सहात्रत्यमनोरमाग्रन्थो विरुध्यत इत्याहुः। यदि तु मवतेर्यङ्लुगन्तादिति मनोरमायां पठ()ते तदा तत्र पूर्वाऽपरग्रन्थविरोधो नास्तीति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

ऊदुपधाया गोहः ६।४।८९

गोहो ऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः। निगूहति। निगूहकः। साधुनिगूही। निगूहंनिगूहम्। निगूहन्ति। गूहो वर्तते। उपधायाः इति किम्? अलः अन्त्यस्य मा भूत्। गोहः इति विकृतग्रहणं विषयार्थम्। यत्र अस्य एतद् रूपं तत्र एव यथा स्यात्। इह मा भूत्, निजुगुहतुः। निजुगुहुः। अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति। निगूह्य गतः इत्यूत्वस्य असिद्धत्वाद् ल्यपि लघुपूर्वादिति णेरयादेशः स्यात्। व्याश्रयत्वादेव असिद्धत्वम् अत्र न अस्ति, णावूत्वं, ण्यन्तस्य च ल्यप्ययादेश इति। अचि इत्येव, निगोढा। निगोढुम्।

न्यासः

ऊदुपधाया गोहः। , ६।४।८९

"निगूहयति" इति। "गुहू संवरणे" (धा।पा।८९६), हेतुमाण्णिच्()। "निगूहकः" इति। ण्वुल्()। "साधुनिगूहि" इति। "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति णिनिः। "निगूहं निगूहम्()" इति। "आभीक्ष्ण्ये णमुल्? च" ३।४।२२ इति णमुल्(), "आभीक्ष्ण्ये द्वे भवतः" (वा।८८७) इति द्विर्वचनम्()। "निगूहः" इति। भावे घञ्()। "अलोऽन्यस्य मा भूत्()" इति। उत्तरत्र इत्यभिप्रायः। इह त्वोरित्यनुवर्त्य विनाप्युपधाग्रहणेन शक्यत एवायमर्थः प्रतिपादयितुमित्येतदेव मनसि कृत्वा परं पृष्टवान्()--"उपधाग्रहणं किं? इति; इत्तरार्थञ्चोपधाग्रहणं क्रियमाणमत्राप्यलोऽन्त्यस्य विधिं निवत्र्तयति। तेन प्रयोजनाभावात्? ओरित्येतन्नानुवर्तते। अथ किमर्थम्? "गोहः" इति विकृतनिर्देशः क्रियते, न "गुहः" इत्येवोच्येत, लघु ह्येवं सूत्रं भवति? इत्याह--"गोह इति विकृतग्रहणम्()" इत्यादि। ऊत्वस्य विशिष्टविषयो यथा स्यादित्येवमर्थम्()। "गोह" इति विकृतस्य कृतोकारस्थ ग्रहणमित्यर्थः। एतदेव व्यक्तीकर्त्तुमाह--"यत्र" इत्यादि। अस्य कश्चिदमुमर्थमाचष्टे। एतदुक्तं भवति--गुणे कृते ऊत्वेन भवितव्यमिति लक्ष्यते; एतच्चायुक्तम्(); एवं हि व्याख्यायमाने "अयादेशप्रतिषेधार्थं "निगूह्य गतः" इति "केचिदिच्छन्ति" इत्युक्त्वा यद्वक्ष्यति--"उत्वस्यासिद्धत्वात्? "ल्यपि लघूपूर्वात्()" ६।४।५६ इति णेरयादेशः स्यात्()" इति, तन्नोपपद्यते। यदि गूणं कृत्वोकारस्योत्वं विधीयते, ततश्च सत्यूकारस्यासिद्धत्वेनैव लघुपूर्वत्वमुपपद्यते, ओकारपूर्वत्वात्(); तत्? कुत ऊकारस्यासिद्धत्वेऽयादेशप्रसङ्गः? तस्मादयमत्रार्थः--यस्मिन्? विषये गुहेर्गोह इत्येतद्रूपं सम्भाव्यते तत्र यथा स्यात्()। यत्र प्रत्यये गुणः सम्भवति तस्मिन्? कृतेऽकृत एव गुणे यथा स्यात्(), अन्यत्र मा भूदिति। तस्माद्विकृतनिर्देशस्य विशिष्टविषयोपलक्षणार्थत्वात्? गुणविषये सम्मुखीभूत एवाकृत एव गुण ऊत्वेन भवितव्यम्()। एवञ्च सति "ऊत्तवस्यासिद्धत्वात्()" इत्यादिकः प्रसङ्गग्रन्थो युज्यते, नान्यथा। ननु च गुणनिमित्ते प्रत्यय उत्पन्ने परत्वाद्? गुणेनैव भवितव्यम्(), तत्कथमकृत एव गुण ऊत्वं भवेत्()? कृताकृतप्रसङ्गित्वात्()। तद्धि कृते गुणे प्राप्नोत्यकृतेऽपि, विकृतनिर्देशस्य विशिष्टविषयोपलक्षणार्थत्वात्()। न तूत्वे कृते गुणः प्राप्नोति, अलघूपधत्वात्()। तस्माद्? गुणात्? पूर्वमूत्वेन नित्यत्वाद्भवितव्यम्()। अत एव दीर्घोच्चारणमर्थवद्भवति, नान्यथा। यदि गुणे कृते सत्ययमादेशः स्यात्(), दीर्घोच्चारणमनर्थकं स्यात्()। आन्तरतम्यादेव दीर्घस्य दीर्घो भविष्यति। ज्ञापितं हि "दिव उत्()" (६।१।१३१) इति तपकरमेन--"भाव्यमानोऽप्युकारः सवर्णान्? गृह्णति" (चान्द्र।प।४४) इति। यदन्यत्? प्राप्नोति तन्निवृत्यर्थं दीर्घोच्चारणमिति चेत्()? स्यादेतत्()--"अजुगूहत्()" इत्यत्र "णौ चङ्यपधायाः" ७।४।१ इति ह्रस्वो मा भूदित्येवमर्थं दीर्घोच्चारणमिति। कुतः पुनरेष नियमोऽत्र ह्रस्वत्वेन न भवितव्यमिति? न हीह कात्यायनस्य भाव्यकारस्य वा वचनमस्ति, नापि शिष्टप्रयोगः, यत एष निश्चयः स्यात्()। "यथालक्षणमप्रयुक्तेषु" इति चोच्यत। तस्मात्? "अजूगुहत्()" इत्येवं भवितव्यम्()। यदि गुणे कृतेऽयमादेशः क्रियेत, ततः किमनिष्टं स्यात्()? दीर्घोच्चारणमनर्थकं स्यात्()। अत्रापि दीर्घोच्चारणं वैचित्त्र्यार्थं प्रकल्प्येत? एवमपि प्रक्रियागौरवं स्यात्()। तस्माद्दीर्घोच्चारणसामथ्र्यादकृत एव गुण ऊत्वेन भवितव्यम्()। "निगूह्य गतः" इति। ण्यन्तात्? क्त्वा, प्रादिसमासः। "समासोऽनञ्पूर्व" ७।१।३७ इत्यादिना क्त्वो ल्यप्()। "तत्र व्याश्रयत्वात्()" इत्यादि। एतेनायादेशप्रतिषेधार्थतां विकृतिनिर्देशस्य प्रत्याचष्टे। कथं पुनव्र्याश्रयत्वम्()? इत्याह--"णावूत्वम्()" इत्यादि। "निगोढा" इति। तृच्()। "हो ढः" ८।२।३१, "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वम्(), "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्(), "ढो ढे लोपः" ८।३।१३॥

बाल-मनोरमा

ऊदुपधाया गोहः २०१, ६।४।८९

ऊदुपधायाः। "गोह"इति कृतलघूपधगुणस्य गुहेर्निर्देशः। ततश्च गुणविषय एवेदं भवति। अचिश्नुधात्वित्यतोऽनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषमत्वात्तदादिविधिः। तदाह-- गुह उपधाया इत्यादिना। गुणहेताविति। गुणं प्रति परनिमित्तभूत इत्यर्थः। गुणापवादः। जुगूह। गुणहेताविति किम्?। जुगुहतुः जुगुहुः। जुगुहे जुगुहाते जुगुहिरे। जुगूहिथ।

जुगोढ। ढत्वधत्वष्टुत्वढलोपाः। जुगुहथुः जुगुह। जुगुहिषे--जुघुक्षे। ढत्वभष्भावकत्वषत्वानि। जुगुहाथे जुगुहिध्वे--जुगुढ्वे। जुगूह। जुगुहिव-जुगुह्व जुगुहिम--जुगुह्म। जुगुहे। जुगुवहिहे--जुगुह्वहे। जुगुहिमहे-जुगुह्महे। इति लिटि रूपाणि सिद्धवत्कृत्य लुटि इट्पक्षे ऊत्वे रूपमाह-- गूहितेति। इडभावे अजादप्रत्ययाऽभावादूत्वाऽभावे गुणे ढत्वधत्वष्टुत्वलोपेषु रूपमाह-- गोढेति। लृटि स्ये इट्पक्षे ऊत्वे रूपमाह-- गूहिष्यतीति। इडभावे तु गुणढत्वभष्भावकत्वषत्वेषु रूपमाह-- घोक्ष्यतीति। गूहिष्यते, घोक्ष्यते इत्यप्युदाहार्यम्। गूहतु। गूहताम्। अगूहत्। अगूह। गूहेदिति। "गूहेते"त्यपि ज्ञेयम्। गुह्यादिति। आशीर्लिङि अजादिप्रत्ययाऽभावादूत्वं न। कित्वान्न गुणः। लुङि इट्पक्षे सिज्लोपे ऊत्वे रूपमाह-- अगूहीदिति। अगूहिष्टाम् अगूहिषुरित्यादि। इडभावे क्स इति। इगुपधशलन्तत्वादिति भावः। अघुक्षदिति। ढत्वभष्भावकत्वषत्वानि। अधुक्षताम् अघुक्षन्नित्यादि।

---

सूत्रम्

काशिका-वृत्तिः

दोषो णौ ६।४।९०

दोषः उपधाया ऊकारः आदेशो भवति णौ परतः। दूषयति, दुषयतः, दूषयन्ति। विकृतग्रहणम् प्रक्रमाभेदार्थम्। पूर्वत्र हि गोहः इत्युक्तम्। णौ इति किम्? दोषो वर्तते।

न्यासः

दोषो णौ। , ६।४।९०

"दीषयति" इति। "दुष वैकृत्ये" (धा।पा।११८५)। अथ किमर्थम्? "दोषः" इति विकृतस्य ग्रहणम्(), न "दुषः" इत्येवोच्येत, विषयावधारणार्थमिति चेत्()? न; णाविति साक्षाद्विषयस्य निर्देशादित्यत आह--"विकृतग्रहणम्" इत्यादि पूर्वसूत्रे हि "गोङः" इत्युक्तम्(), अत्र यदि "दूषः" इत्येवोच्येत, प्रक्रमस्यारम्भस्य भेदः स्यात्(), अभेदश्चेष्यते। अतदस्तदर्थं विकृतस्य ग्रहणम्()। किमर्थं पुनः प्रक्रमस्याभेद इत्यते? अत्यल्पमिदं पृच्छ्यते, वैचित्त्र्यस्यापि नाम प्रयोजनं प्रष्टव्यम्()। वैचित्त्र्यस्य ह्ययं प्रकारः--प्रक्रमाभेद इति, किं तदर्थेन प्रश्नपरिश्रमेण!॥

बाल-मनोरमा

दोषो णौ ४३१, ६।४।९०

दोषो णौ। "ऊदुपधाया" इत्यनुवर्तते। "दुष वैकृत्ये" इति श्यन्विकरणः। तस्य कृतलघूपधगुणस्य निर्देशः। ततश्च गुणविषयकमेवेदम्। दुष्यतेरुपधाया ऊत्स्यादिति। "णा"विति शेषः। दूषयतीति। लघूपधगुणापवाद ऊत्। "दुषो णा"वित्येव सुवचम्।

तत्त्व-बोधिनी

दोषो णौ ३७५, ६।४।९०

दोषो णौ। दुष वैकृत्ये। दिवादिः। णौ किम्?। दोषः।

---

सूत्रम्

काशिका-वृत्तिः

वा चित्तविरागे ६।४।९१

चित्तविकरार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः। चित्तं दूषयति, चित्तं दोषयति। प्रज्ञां दूषयति, प्रज्ञां दोषयति।

न्यासः

ना चित्तविरागे।, ६।४।९१

पूर्वेण नित्ये प्राप्ते विकल्पोऽयमारभ्यते। "चित्तविरागे" इति। चित्त्स्याप्रीतता। "चित्तं दोषयति" इति। चित्तदमप्रीतं विमुखं करोतीत्यर्थः। "चित्तविराग इति किम्()? साधनं दूषयत--अत्र पूर्वेण नित्यं भवति। णावित्येव--चित्तस्य दोषः। भावे घञ्()॥

बाल-मनोरमा

वा चित्तविरागे ४३२, ६।४।९१

वा चित्तविरागे। ऊदुपधाया इति, दोषो णाविति चानुवर्तते। चित्तविरागे दुष उपधाया ऊद्वा स्याण्णाविति फलितम्। विरागपदस्य विवरणम् - अप्रीततेति। इच्छाविरह इत्यर्थः। चित्तमिति। चित्तं दुष्यति। स्नानसन्ध्यावन्दनादिनित्यकर्मसु विरक्तं भवति। तत्प्रयोजयति काम इत्यर्थः। मितां ह्रस्व इति। णौ मितामुपधाया ह्रस्व इति प्राग्व्याख्यातमपि स्मारयति। जनीजषिति। इदमपि व्याख्यातं स्मार्यते। जृणातेस्त्विति। श्नाविकरणस्य अषित्त्वान्न मित्त्वमिति भावः। रञ्जेर्णाविति। णेः कित्त्वाऽभावानिदितामित्यप्राप्तौ वचनम्। "मृगरमणटपदस्य विवरणम्-- आखेटकमिति। मृगयेत्यर्थः। रजयति मृगानिति। "रञ्ज रागेट शब्विकरणः। "रञ्जेश्चे"ति शपि नलोपः। "रजन्ति मृगाः" ग्राह्या भवन्ति। तान् मृगान् तादृग्व्यापारविषयान् करोति मृगवधासक्तो राजादिरित्यर्थः। अत्र नकारलोपः। रञ्जयति मृगांस्तृमदानेनेति। घातको मृगान् रक्षणाय तृणसमर्पणेन बन्धनस्थानगान् करोतीत्यर्थः। चुरादिष्विति। चुरादिषु ज्ञपादिपञ्चकान्तर्गतश्चिञ्धातुरस्ति।तस्मात्स्वार्थणिचि कृते "चिस्फुरो"रित्यात्वपक्षे पुकि मित्()तवादुपधाह्रस्वे चपयतीति रूपम्। आत्वाऽभावे तु वृद्धावायादेशे मित्त्वाद्ध्रस्वे चययतीति रूपमुक्तं चुरादावित्यर्थः। चिनोतेस्त्विति। श्नुविकरणस्य चिञ्धातोर्हेतुमण्णौ "चिस्फुरो" रित्यात्वे पुकि मित्त्वाऽभावाद्ध्रस्वाऽभावे चाययतीति रूपमित्यर्थः। स्फारयति-- स्फोरयतीति। "चिस्फुरोरित्यात्वविकल्पः। अपुस्फरत् -- अपुस्फुरदिति। स्फुर् इ अ त् इति द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया "स्फु"रित्युकारवतो द्वित्वे ततश्चिस्फुरोर्णावित्युत्तरखण्डे आत्वविकल्पः। आत्वपक्षे उपधाह्रस्व इति भावः।

तत्त्व-बोधिनी

वा चित्तविरागे ३७६, ६।४।९१

चित्तमिति। "चिती संज्ञाने" इत्यस्मात् क्तः। दूषयति दोषयति वेति। चित्तं दुषयति। स्नानसन्ध्यादौ विरक्तं भवति। तत्प्रयुङ्क्त इत्यर्थः। जृणातेस्त्विति। अपित्त्वादस्य मित्वं नेति भावः। आखेटकमिति।

*रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः। रजयतीति। रजन्ति मृगाः, ग्रहणमरणाद्यनुकूलव्यापारविषया भवन्ति, तान्मृगांस्तादृग्व्यापारविषयान्करोतीत्यर्थः। ज्ञपादिश्चिञिति। तेन मित्त्वाद्ध्रस्व इति भावः। स्वादिगणस्थस्य तु मित्त्वं नेत्युदाहरति--- चापयतीत्यादि। अपुस्फुरदिति। द्वित्वे कर्तव्ये अजादेशस्य स्थानिवत्त्वान्निषेधाद्वा "स्फु" रित्युकारवतो द्वित्वं, ततः "चिस्फुरोर्णौ" इति वा आत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

मितां ह्रस्वः ६।४।९२

मितो धातवः घटादयो मितः इत्येवम् आदयो ये प्रतिपादिताः, तेषाम् उपधाया ह्रस्वो भवति णौ परतः। घटयति। व्यथयति। जनयति। रजयति। शमयति। ज्ञपयति। केचिदत्र वा इत्यनुवर्तयन्ति। सा च व्यवस्थितविभाषा। तेन उत्क्रामयति, सङ्क्रामयति इत्येवम् आदि सिद्धं भवति।
लघु-सिद्धान्त-कौमुदी
मितां ह्रस्वः ७०७, ६।४।९२

घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्याण्णौ। घटयति॥ ज्ञप ज्ञाने ज्ञापने च॥ ज्ञपयति। अजिज्ञपत्॥
लघु-सिद्धान्त-कौमुदी
इति ण्यन्तप्रक्रिया ७०७, ६।४।९२

लघु-सिद्धान्त-कौमुदी
अथ सन्नन्तप्रक्रिया ७०७, ६।४।९२

न्यासः
मितां ह्रस्वः। , ६।४।९२

"एवमादिना" इति। आदिशब्देन "जनीजॄ()ष्क्नसुरञ्जोऽमन्ताश्च" (धा।पा।८१७) इत्येवमादिग्रहणम्()। "घटयति" व्यथयति" जनयति" इति। "घट चेष्टायाम्()" (धा।पा।७६३) "व्यथ भयचलनयोः (धा।पा।७६४) "जनौ प्रादुर्भावे" (धा।पा।११४९)। ननु च जनेः "जनिवध्योश्च" ७।३।३५ इति वृद्धिः प्रतिषिध्यते, तदयुक्तमिदमुदाहरणम्(), मित्सज्ञाप्यापार्थिका? नैतदस्ति; चिण्कृतोर्हि स वृद्धिप्रतिषेधः, तत्र हि "आतो युक्? चिण्कृतोः" ७।३।३३ #इत्यनुवत्र्तते। "रजयित" इति। "रञ्जेर्णौ मृगरमण उपसंख्यानम्()" (वा।७७८)। इत्यनुनासिकलोपे कृते "अत उपधायाः" ७।२।११६ इति वृद्धिः। तस्यानेन ह्यस्वः। "शमयति" इति। शमेरमन्तत्वान्मित्त्वम्()। अस्यापि "नोदात्तोपदेश" ७।३।३४ इत्यादिना वृद्धिप्रतिषेधश्चिण्कृतोरेव। "ज्ञापयति" इति। "ज्ञा अवबोधने" (धा।पा।१५०७) इत्यस्य क्र्यादिपरिपठितस्य "मारणतोषणनिशामनेषु (धा।पा।८११) ज्ञा, मिच्च" इति मित्संज्ञा, "अर्तिह्री" ७।३।३६ इत्यादिना पुकि कृते ह्यस्वः। "केचिदत्र" इत्यादि। "क्रमु पादविक्षेपे" (धा।पा।४३७)इत्यस्यामन्तत्वान्मित्संज्ञा, तस्य च ह्यस्वत्वे संक्रामयति, उत्क्रामयतीति न सिद्ध्येत्()। तस्मादेतत्सिद्धये "वा चित्तविरागे" ६।४।९१ इत्यतो वाग्रहणमनुवर्तयन्()ति। त()स्मश्चानुवत्र्तमाने सर्वत्र विकल्पः प्रसज्येतेत्यतिप्रसङ्गपरिहारार्थं "सा च व्यवस्थितविभाषा" इति। व्याचक्षते। अथ "मितामत्()" इत्येवं कस्मान्नोक्तम्(), लघु ह्येवं सूत्रं भवति? अशक्यमेवं वक्तुम्(), "वेष्ट वेष्टने" (धा।पा।२५५) इति घटादौ पठ()ते, तत्रैवमुच्यमाने तस्याप्कारः प्रसज्येत्(), "ह्यस्वः" इत्युच्यमाने "एच इग्? ह्यस्वादेशे" १।१।४७ इतीकारः सिद्धो भवति॥
बाल-मनोरमा
मितां ह्यस्वः ३९५, ६।४।९२

मितां ह्यस्वः। "ऊदुपधाया गोहः" इत्यत उपधाया इति, "दोषो णौ" इत्यतो णाविति चानुवर्तते। तदाह -- मितामुपधाया इत्यादिना। ज्ञपयतीति। णिचि उपधावृद्धौ ह्यस्व इति भावः। यम च परिवेषणे। चान्मिदिति। "इति अनुकृष्यते" इति शेषः। यमधातुः परिवेषणे णिचं लभते, मित्कार्यभाक्चेत्यर्थः। मित्संज्ञक इति वा। परिवेषणामिह वेष्टनमिति।

"पिरवेषस्तु परिधि"रिति कोशादिति भावः। न तु भोजनमिति। भुजेर्हेतुमण्ण्यन्तात्स्त्रियामित्यधिकारे "ण्यासश्रन्थो युच्"। क्लीबत्वं लोकात्। "भोजने"त्येव क्वचित्पाठः। भोक्तुः पात्रे भोज्यद्रव्योपकल्पनमिह न परिवेषणमित्यर्थः। भोजनायां यमेर्हेतमण्ण्यन्तस्य अमन्तत्वादेव मित्त्वसिद्धेरिति भावः। परिवेष्टत इत्यर्थ इति। अनेन इह परिविषेरण्यन्ताल्ल्युटि परिवेषणशब्द इति सूचितम्। नच वेष्टनेऽप्यर्थे यमेरमन्तत्वादेव सिद्धे मित्त्विधिव्र्यर्थ इति वाच्यं, "न कम्यमिचमा"मिति मित्()तवप्रतिषेधप्रकरणस्थे "यमोऽपरिवेषणे" इति घटाद्यन्तर्गणसूत्रेऽपरिवेषणे इति पर्युदासेन भोजनेतोऽन्यत्र वेष्टनेऽर्थे मित्तवनिषेधस्य प्राप्तौ मित्त्वप्रापणार्थत्वात्। "यमोऽपरिवेषणे" इत्यत्र परिवेषण शब्देन भोजनाया एव विवक्षितत्वेन वेष्टने यमेर्मित्त्वनिषेधस्य प्रसङ्गात्। अत एव "यमिर्भोजनातोऽन्यत्र न मि"दिति व्याख्यातं मूलकृता। भोजनायां तु "यमोऽपरिवेषणे" इति मित्त्वनिषेधविधौ भोजनायाः पर्युदासादेव तत्र मित्त्वनिषेधाऽभावादम्नतत्वादेव मित्त्वप्राप्तेरिह चुरादौ पिरवेषणशब्देन वेष्टनमेव विवक्षितं नतु भोजनेत्यास्तां तावत्। चह परिकल्पने इति। इत आरभ्य "चित्र् चयने" इत्येतत्पर्यन्तं चेत्यनुवर्तते। अतस्तेषां मित्त्वण्णिचि ह्मस्वः। तदाह - चहयतीति। नन्वनेनैव सिद्धे अग्रे चुराद्यन्तर्गणे कथादावस्य पाठो व्यर्थ इत्यत आह-- कथादाविति। "कथादयोऽदन्ता"इति वक्ष्यते। तस्माण्णिचि अल्लोपे चहयतीत्यादौ अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यबावे मित्त्वाद्ध्रस्वे च न विशेषः। तथापि अदन्ताच्चङि णौ अल्लोपे सति अग्लोपितया सन्वत्त्वदीर्घयोरभावे "अचचह"दिति रूपमस्ति फलमित्यर्थः। चप इत्येके इति। "चह परिकल्पने" इत्यस्य स्थाने "चपे"त्येके पठन्तीत्यर्थः। "रह त्यागे इत्येके" इत्यपि तथैव व्याख्येयम्। एवं च ज्ञपादिषु पञ्चसु चहधातुश्चपधातुः रहधातुर्वा अन्यतमस्तृतीयः, बलधातुश्चतुर्थः, चिञ्धातुः पञ्चम इति कृत्वा ज्ञपादिपञ्चानां मतत्रयेऽपि पञ्चत्वाज्ज्ञपादिपञ्चकत्वस्य न विरोधः। "रह त्यागे"इत्यस्यापि कथादिपाठफलमाह-- कथादेस्तु अररहदिति। अदन्तत्वेन अग्लोपित्वान्न दीर्घसन्वत्त्वे इति भावः। बल प्राणने। "चे"त्यनुवृत्त्या मित्त्वस्यानुकर्षणाद्ध्रस्वं मत्वाह --बलयतीति।

तत्त्व-बोधिनी

मितां ह्मस्वः ३४५, ६।४।९२

वेष्टनमिति। "परिवेषस्तु परिधि"रित्यमरः। न त्वित्यादि। अयं भावः-- घटादौ "यमोऽपरिवेषणे" इति पठितं, तत्र हि परिवेषणमिति हेतुमण्ण्यन्तस्य रूपम्। हेतुमण्ण्यन्तस्य हि भोजना वेष्टना चाऽर्थः। तथा च अपरिवेषण इत्यनेन भोजनातो वेष्टनातश्चान्यत्र मित्त्वनिषेधेऽपि तयोरर्थयोस्त्वमन्तत्वादेव मित्त्वसिद्धेरिति। यद्यपि घटादौ "यच्छतिर्भोजनातोऽन्यत्र मिन्ने"ति व्याख्यातं तथाप्यत्रत्यग्रन्थानुगुण्येनोपपलक्षणतया तद्व्याख्येयमित्याहुः। अत्रेदं बोध्यं-- घटादौ "यमोऽपरिवेषणे" इत्यत्र परिपूर्वकस्य विषेर्णिजन्तस्य ल्युटि रूपम्, "यम च परिवेषणे" इत्यत्र तु केवलस्यैव ल्युटि रूपं न तु णिजन्तस्य। तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्त्वं सिध्यति। वेष्टने तु अपरिवेषण इत्यनेन अमन्तत्वप्रयुक्तमित्त्वस्य निषेधेऽपि "यम च परिवेषणे" इत्यनेन मित्त्वं सिध्यतीति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

चिण्णमुलोर् दीर्घो ऽन्यतरस्याम् ६।४।९३

चिण्परे णमुल्परे च णौ परतः मिताम् अङ्गानाम् उपधायाः दीर्घो भवति अन्यतरस्यां। अशमि, अशामि। अतमि, अतामि। शमंशमम्, शामंशामम्। तमन्तमम्, तामन्तामम्। दीर्घग्रहणं किं, न ह्रस्वविकल्प एव विधीयते? न एवं

शक्यम्, शमयन्तं प्रयुङ्क्ते इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात्। णिलोपस्य स्थानिवद्भावाद् दीर्घविधौ त्वजादेशो न स्थानिवत्। शयमन्तं प्रयुक्तवान्। अशमि, अशामि। शमंशमम्, शामंशामम्। शंशमयतेः अशंशमि, अशंशामि। शंशमंशंशमम्, शंशामंशंशामम्। यो ऽसौ णौ णिर्लुप्यते, यश्च यङ्कारः, तयोर् दिर्घविधौ आदेशो न स्थानिवद् भवति इति अस्थानिवद्भावात् दीर्घः सिद्धो भवति। ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्यात्। णिण्यन्ते यङ्ण्यन्ते त्वसिद्धिरेव। व्याश्रयत्वादसिद्धत्वम् अपि न अस्ति। णौ हि णियङोर् लोपः, चिण्णमुल्परे णावङ्गस्य दीर्घत्वम्।
न्यासः
चिण्णमुलोर्दीर्घोऽन्यतरस्याम्?। , ६।४।९३

"णौ" इति वत्र्तते, चिण्णमुलौ च तद्विशेषणे। "अशमि" इति। शमेण्र्यन्ताल्लुङ, "चिण्? भावकर्मणोः" ३।१।६६ इति च्लेश्चिण्(), "चिणो लुक्()" (६।४।१०४) इति तशब्दस्य लुक्? णेरनिटि" ६।४।५१ इति णिलोपः। "शर्मशममम्(), शामंशामम्()" इति। पूर्ववण्णमुल्दिविर्वचने। "दीर्घग्रहणं किम्()" इति। एवं मन्यते--ह्यस्वस्यैवानन्तरसय प्रकृतस्य विकल्पमात्रं विषेयम्(), एवमप्यभीष्टं सिद्ध्यत्येव। तथा हि--यस्मिन्? पक्षे ह्यस्वो विधीयते, तस्मिन्नशमीत्यादि सिद्ध्यति। य()स्मस्तु ह्यस्वो न विधीयते, तत्र "अत उपधायाः" (७।२।११६) इति दीर्घे वृद्धिसंज्ञके विहिते तेनैव रूपेणावस्थानात्? "अशामि" इत्यादि सिद्ध्यतीत्यभिप्रायः। इतरस्तु दीर्घग्रहणमन्तरेण यन्न सिद्ध्यति, तद्दर्शयति--"शमयन्तं प्रयुङ्क्ते" इत्यादिना। शमेण्र्यन्तात्? पुनः प्रयोजकविवक्षायां द्वितीयो णिच्(), तत्र पूर्वस्य णेर्लोपः, लुङ, चिण्()। पक्षे दीर्घत्वम्()। "अशमि, अशामि, शमंशमम्(), शामंशामम्()" इति। द्वितीयणिजन्तण्णमुलि कृते पक्षे दीर्घत्वम्()। "शंशमयतेः" इत्यादि। अत्यर्थं शाम्यतीति यङ्(), द्विर्वचनम्(), "नुगतोऽनुनासिकान्तस्य" ७।४।८५ इति नुक्()--"शंशम्य" इति। स्थिते हेतुमण्णिच्(), "अतो लोपः" ६।४।४८ इत्यकारस्य लोपः, "यस्य हलः" ६।४।४९ इति यकारस्य, शंशमीति स्थिते यदा ततः परश्चिण्भवति, तदा पक्षे दीर्घत्वे कृतेऽशंशम्यशंशामीति भवति। यद तु णमुल्? तदा शंशमंशंमम्? शंशामंशंशाममिति, तत्र योऽसो णौ णिर्लुप्यते, यश्च यङोऽकारस्तयोर्दीर्धग्रहणे सति "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति स्थानिवद्भावो न भवति; "न पदान्त" १।१।५७ इत्यादिना प्रतिषेधात्()। तेनासति व्यवधाने दीर्घः सिद्धो भवति। स्यादेतत्()--ह्यस्वविकल्पे विधीयमाने यस्मिन्? पक्षे ह्यस्वो नास्ति तस्मिन्पक्षे स्वरूपेणैवावस्थितो दीर्घः स्यात्()? इत्यत आह--"ह्यस्वविकल्पे तु" इत्यादि। न हि ह्यस्वे विधातव्ये केनचित्? स्थानिवद्भावः प्रतिषिध्यते। तत्र ह्यस्वविकल्पे विधीयमाने णेर्लोपस्य यङ्कारस्य च स्थानिवद्भावः स्यादेव। ततश्च स्थानिवद्भावाद्विकल्पेन ह्यस्वत्वं न स्यात्()। चिण्णमृल्परे हि णौ परतो मितामङ्गानां ह्यस्वत्वं विधेयम्()। यश्चात्र णिश्चिण्णमुल्परो न तत्र मिदङ्गम्; पूर्वेम णिचा व्यवधानात्()। य()स्मश्च णौ मिदङ्गं नासौ चिण्णमुल्परः; परेण चिणा व्यवधानात्()। तस्मान्नायमस्य योगस्य विषय इति पाक्षिकं ह्यस्वत्वमनेन न स्यात्()। पूर्वेणैव योगेन नित्यं स्यात्(), ततश्च दीर्घो न स्यात्()। "णिण्यन्ते" इत्यादि। णेणिरन्तः समीपो यस्मिन्? स णिण्यन्तः। अथ वा णेणिः णिणिः सोऽन्तो यस्य स णिण्यन्तः। अस्मिन्? पक्षेऽन्तशब्दोऽवयववचनः। "यङण्यन्ते त्वसिद्धिरेव" इति। यङ्ण्यन्तशब्दस्यापि पूर्ववद्? द्विधा व्युत्पत्तिः। कस्यासिद्धिः? प्रकृतत्वाद्दीर्घस्येति वेदितव्यम्()। एवकारेणैतद्दर्शयति--णिण्यन्ते स्यादपि केनचित्? प्रकारेण दीर्घस्य सिद्धिः, यङ्ण्यन्ते त्ववसिद्धिरेव। न केनचित्? प्रकारेण सिद्धिरित्यर्थः। कथ पुनर्णिण्यन्ते सिद्धिर्भवति? णिजातेराश्रयणात्()। णिजातिविवक्षायां हि यद्यपि णिलोपस्य स्थानिवद्भावः, तथापि नास्तिव्यवधानम्(); जातेरेकत्वात्()। न हि तत्रैव तस्या व्यवधानमुपपद्यते। तेन व्यवधानाभावाण्णिण्यन्ते दीर्घस्य सिद्धिः। अथ वैतदेवकारेण दर्शयति--णिण्यन्ते पूर्वं णिचमाश्रित्य "अत उपधायाः" ७।२।११६ इति वृद्धि विधानादस्ति दीर्घस्य सिद्धिः, तस्यास्तु ह्यस्वत्वेन निवृत्तिः क्रियते, न तु सर्वथा नास्त्येव। यङ्ण्यन्ते तु सर्वथैव दीर्घसिद्धेरभावः, तत्र वृद्धेरसम्भवादिति। स्यादेतत्()--विक्लपे दीर्घत्वे विधीयमानेऽपि नैवाऽत्र दीर्घः सिध्यति। "असिद्धवदत्रा भात्()" ६।४।२२ इति

णियङोर्लोपस्यासिद्धत्वादित्यत आह--"व्याश्रयत्वात्()" इत्यादि। कथं पुनर्ध्याश्रयत्वम्()? इत्याह--"णौ हि" इत्यादि। अन्यतरस्यांग्रहणं विस्पष्टार्थम्(); शक्यते हि "वा चित्तविरागे" ६।४।९ इत्यतो मण्डूकप्लुतिन्याथेन वाग्रहणमनुवर्त्तयितुम्()॥

बाल-मनोरमा

चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ५८७, ६।४।९३

चिण्णमुलोः। "दोषो णौ" इत्यतो णाविति, "ऊदुपधाया गोहः" इत्यस्मादुपधाया इति, "मितां ह्रस्वः" इत्यतो मितामिति चानुवर्तते। तदाह-- चिण्परे इत्यादिना। नन्विह दीर्घ ग्रहणं व्यर्थं, "चिण्णमुलोरन्यतरस्या"मित्येतावतैव "मितां ह्रस्वः" इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्यविकल्पे दीर्घविकल्पस्य सिद्धेरित्यत आह--प्रकृत इत्यादि। कुत इत्यत आह--ण्यन्ताण्णाविति। शमदातोर्ण्यन्ताण्णौ पूर्वणेर्लोपे लुटि तासि ण्यन्तस्याऽजन्तत्वाच्चिण्वदिटि तस्याऽऽभीयत्वेनाऽसिद्धतया "अनिटी" ति निषेधाऽभावाण्णिलोपे दीर्घविकल्पे सति शमिता शामितेति रूपद्वयमिष्यते। ह्रस्वविकल्पस्य विधौ तु ह्रस्वविकल्पो न स्यात्, प्रथमणिलोपस्य "अचः परस्मि"न्निति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाऽभावादित्यर्थः। दीर्घविकल्पविधौ तु न दोष इत्याह-- दीर्घविधाविति। दीर्घविकल्पविधौ हि प्रथमस्य णिचो लोपो न स्थानिवत्, दीर्घविधौ स्थानिवत्त्वनिषेधात्, अतोऽत्र दीर्घविकल्पः सिध्यति। ह्रस्वविधौ तु प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारं, तत्र स्थानिवत्त्वनिषेधाऽभावादित्यर्थः। भाष्ये त्विति। न पदान्तसूत्रभाष्ये तु "पूर्वत्रासिद्धे न स्थानिवदि"त्येव सिद्धत्वान्न पदान्तसूत्रे द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः। "सुद्ध्युपास्य" इत्यत्र "अनचि चे"ति द्विर्वचनस्य, शिण्ढीत्यत्र "नश्चे"त्यनुस्वारस्य, "अनुस्वारस्य ययी"ति परसवर्णस्य च, प्रतिदीब्न इत्यत्र "हलि चे"ति दीर्घस्य, सग्धिरित्यत्र "झलां जश् झशी"ति जश्त्वस्य, जक्षतुरित्यत्र "खरि चे"ति चत्र्वस्य च पूर्वत्राऽसिद्धीयत्वादित्यर्थः। ननु ण्यन्ताण्णौ "चिण्णमुलो"रिति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, "चिण्णमुलोः" इति दीर्घस्य पूर्वत्रासिद्धीयत्वाऽभावात्। ततश्च प्रथमणिचा व्यवहितत्वाद्दीर्घाऽनापत्तिः। एवं च तत्र दीर्गे कर्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात्कथं दीर्घग्रहणप्रत्याख्यातमित्यताअह-- णावितीति। "चिण्णमुलो"रिति दीर्घविधौ चिण्परे णमुल्परे च "णौ" इत्यत्र णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमुल्परकणित्वजातौ परत इति लभ्यते। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्त्वेऽपि दीर्घो निर्बाध इति "न पदान्त"सूत्रे दीर्गग्रहणप्रत्याख्यानभाष्यस्याशय इत्यर्थः। शामिता शमितेति। शमधातोर्ण्यन्ताल्लुटि तासि चिण्वदिटि दीर्गविकल्पः। शमियितेति। चिण्वत्त्वाऽभावे वलादिलक्षणे इटि रूपम्। यङन्तादिति। शमधातोर्यङि शंशम्येत्येतस्माद्धेतुमण्णौ "यस्य हलः" इति यकारलोपे अतो लोपे शंशमीत्यस्मात्कर्मलकारे णिलोपे "शंशम्यते" इति रूपमित्यर्थः। शंशामिता शंशमितेति। "चिण्मुलो"रिति दीर्घविकल्पः। शंशमयितेति। चिण्वत्त्वाऽबावे वलादिलक्,णे इटि रूपम्। भाष्यमते त्विति। "न पदान्त"सूत्रे दीर्गग्रहणप्रत्याख्यानपरभाष्यमते त्वित्यर्थः। यङन्तादिति। "ण्यन्ता"दिति शेषः। यङन्ताण्णिचि यलोपे अल्लोपे च कृते "शंशमी"त्यस्माल्लुटि तासि चिण्वदिटि कृते तस्याऽसिद्धत्वाण्णिलोपे "शंशमिते"त्यत्र अल्लोपस्य स्थानिवत्त्वेन णिच्परकत्वाऽबावात् "चिण्णमुलो"रिति दीर्घो नास्ति, भाष्यमते "न पदान्त"सूत्रे दीर्घग्रहणाऽभावेन स्थानिवत्त्वनिषेधाऽभावादित्यर्थः। शम्यते मुनिनेति। अकर्मकत्वाद्भावे ल इति भावः।

तत्त्व-बोधिनी

चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ४८३, ६।४।९३

चिण्णमुलोः। शामितेत्यादौ "जनीजृ()"षित्यादिना मित्त्वेन मितामुपधाया नित्यं ह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते। ण्यन्ताण्णाविति। णिलोपस्य स्थानिवत्त्वेन व्यवधानादिति भावः। दीर्घः सिध्यतीति। "न पदान्ते" ति निषेधादित्यर्थः।

ननु त्रिपादीस्थेदीर्घे कर्तव्ये स्थानिवत्त्वाऽभावः "पूर्वत्रासिद्ध" मित्यनेनैव सिद्ध इति दीर्घग्रहणस्योपयोगाऽभावेऽपि ण्यन्ताण्णौ "चिण्णमुलो"रिति दीर्घे कर्तव्ये स्थानिवद्भावनिवारणाय दीर्घग्रहणमावश्यकमित्यत आह-- जातिपरो निर्देश इति। इदं मास्त्विति। ह्यस्वविकल्पेनाऽपीष्टं सिध्यतीति भावः। वस्तुतस्तु "चिण्णमुलो"रिति सूत्रे दीर्घग्रहणं कर्तव्यमेव। तथाहि--- "हेडृ अनादरे" घटादिः। मितां ह्यस्वे कर्तव्य एच इक्। हिडयति। अत्र चिण्णमुलोः कृतयोह्र्यस्वे विकल्प्यमाने अहिडि अहेडि इति स्यात्। दीर्घे तु--अहिडि अहीडीति भवति। एतच्चात्रैव सूत्रे कैयटे स्पष्टम्। शंशामितेत्यादि। चिणिअशंमि। अशंशामि। णमुलि, शंशमं--शंशमं। शंशामं-शंशाममित्यादि द्रष्टव्यम्। दीर्घोनास्तीति। यङोऽल्लोपस्य स्थानिवत्त्वेन णिच्परत्वाऽभावादुपधादीर्घस्योपधावृद्धेश्चाऽप्रवृत्तेः। तथा च फलभेदाद्दीर्घग्रहणप्रत्याख्यानं न युज्यत इति भावः। शम्यते मुनिनेति। अकर्मकत्वाद्भावे लः।

---

सूत्रम्

काशिका-वृत्तिः

खचि ह्रस्वः ६।४।९४

खच्परे णौ परतो ह्रस्वो भवति अङ्गस्य उपधायाः। द्विषन्तपः। परन्तपः। पुरंदरः।

न्यासः

खचि ह्रस्वः। , ६।४।९४

"द्विषन्तपः, परन्तपः" इति। "द्विषत्परयोस्तापे" ३।२।३९ इति खच्(), "अरुर्द्विषदजन्तस्य" ६।३।६६ इति मुम्()। "पुरन्दरः" इति। "पूःसर्वयोर्दारिसहोः" ३।२।४१ इति खच्(), "वाचंमपुरन्दरौ च" ६।३।६८ इति निपातनान्मुमागमः। ह्यस्वग्रहणं विस्पष्टार्थम्(), शक्यते "मितां ह्यस्वः" ६।४।९२ इत्यतो मण्डूकप्लुतिन्यायेन ह्यस्वग्रहणमनुवत्र्तयितुम्()॥

बाल-मनोरमा

खचि ह्यस्वः ७६७, ६।४।९४

खचि ह्यस्वः। "दोषो णौ" इत्यतो णाविति, "उदुपधायाः" इत्यत "उपधाया" इति चानुवर्तते। तदाह-- खच्परे णाविति। खशि प्रकृते खचो विधिरिह ह्यस्वार्थोऽणिलोपार्थश्च। खशि तु तदुभयं न स्यात्, खशः शित्त्वेन सार्वधातुकतया णिलोपाऽसंभवात्। न च इहैव सूत्रे खज्विधीयतां, पूर्वसूत्रे खशेवाऽनुवर्ततामिति वाच्यम्, अन्यतोऽपि विधानार्थत्वात्। एवं च "गमेः सुपी"ति वार्तिकमेतल्लब्धार्थकथनपरमेवेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

ह्लादो निष्ठायाम् ६।४।९५

ह्लादो ऽङ्गस्य उपधायाः ह्रस्वो भवति निष्ठायां परतः। प्रह्लन्नः। प्रह्लन्नवान्। निष्ठायाम् इति किम्? प्रह्लादयति। ह्लादः इति योगविभागः क्रियते, क्तिन्यपि यथा स्तात्, प्रह्लत्तिः इति।

न्यासः

ह्लादो निष्ठायाम्?। , ६।४।९५

"प्रह्लन्नः" इति। "ह्लादी सुखे च" (धा।पा।२७) "रदाभ्याम्()" ८।२।४२ इत्यादिना नत्त्वम्()। "प्रह्लादयति" इति

हेतुमण्णिच्()॥

बाल-मनोरमा

ह्लादो निष्ठायाम् ८८०, ६।४।९५

ह्लादो निष्ठायाम्। ह्यस्वः स्यादिति। सेषपूरणमिदम्। "खचि ह्यस्वः" इत्यतस्तदनुवृत्तेरिति भावः। प्रह्लन्न इति। "ह्लादी सुखे"। क्तः। "()आईदितः" इति नेट्। "रदाभ्यांट मिति नत्वम्।

तत्त्व-बोधिनी

निष्ठायाम् ७२४, ६।४।९५

प्रह्लन्न इति। ह्लादी सुखे। ईदित्त्वादिडभावे "रदाभ्या"मिति नत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

छादेर् घे ऽद्व्युपसर्गस्य ६।४।९६

छादेरङ्गस्य अद्व्युपसर्गस्य घप्रत्यये परतः उपधायाः ह्रस्वो भवति। उरश्छदः प्रच्छदः। दन्तच्छदः। णिलोपस्य असिद्धत्वं स्थानिवद्भावो वावचनसामर्थ्यादत्र न भवति इति ह्रस्वभाविनी उपधा भवति। अद्व्युपसर्गस्य इति किम्? समुपच्छादः। अद्विप्रभृत्युपसर्गस्य इति वक्तव्यम्। समुपातिच्छादः। उत्तरा हि सङ्ख्या पूर्वसङ्ख्याकृतं व्यपदेशम् निवर्तयति, नहि त्रिपुत्रो द्विपुत्रः इति व्यपदिश्यते।

लघु-सिद्धान्त-कौमुदी

छादेर्घेऽद्व्युपसर्गस्य ८७६, ६।४।९६

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे। दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः। आकुर्वन्त्यस्मिन्नित्याकरः॥

न्यासः

छादेर्घेऽद्व्युपसर्गस्य। , ६।४।९६

"उरश्छदः" इति। "छद अपवारणे" (धा।पा।१९३५), चुरादिणिच्(), "पुंसि संज्ञायां घः प्रायेण" ३।३।११८ इति घः। "उरसश्छदः" इति विगृह्य "कृद्योगा च षष्ठी समस्यते" (वा।८६) इति समासः। ननु च णिलोपस्य "असिद्धवदत्रा भात्()" (६।४।२२) इत्यसिद्धत्वात्? "अचः परस्मिन्पूर्वविधौ" १।२।५७ इति स्थानिवद्भावाद्वा ह्यस्वभाविन्यज्लक्षणोपधा न सम्भवति, तत्? कथं ह्यस्वत्वं प्रवत्र्तते? इत्याह--"णिलोपस्य" इत्यादि। यद्यत्र णिलोपस्यासिद्धत्वं स्थानिवद्भावो वा स्यात्(), तदा वचनमनर्थकं स्यात्()। तस्माद्वचनसमथ्र्यादुभयमपि न भवति, तेन ह्यस्वभाविन्युपधा भवति। "अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्()" इति। ननु च त्रिप्रभृतयो यत्र सन्ति तत्र द्वावपि स्तः, ततश्चाद्व्युपसर्गस्येत्येवं सिद्धम्()? इत्यत आह--"उत्तरा हि" इत्यादि। यद्यपि त्रिप्रभृतिषु द्वावपि स्तः, तथापि न ताविह द्विशब्देनोपात्तौ; यत उत्तरा हि संख्या पूर्वसंख्याया यः कृतो व्यपदेशस्तदभिधानं निवत्र्तयति। कथं ज्ञायते? इत्याह--"न हि" इत्यादि। यद्युत्तरा संख्या पूर्वसंख्याकृतव्यपदेशं न निवत्र्तयेत्(), तदा त्रिपुत्रोऽपि लोके द्विपुत्र इत्यभिधीयेत, न चाभिधीयते। तथा हि "द्विपुत्रः आनीयताम्()" इत्युक्ते नैव त्रिपुत्र आनीयते, अपि तु यस्यं द्वादेव पुत्रौ स एव। अद्विप्रभृतीत्यादेश्च वाक्यस्यायमर्थः--अद्विप्रभृत्युपसर्गस्य छादेह्र्यस्वत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--द्विशब्दोऽत्रानेकोपलक्षणार्थम्(), द्व्युपसर्गस्यानेकोपसर्गस्येति यावत्()। अद्व्युपसर्गस्येते च

प्रसज्यप्रतिषेधोऽयम्()। तेनायमर्थो भवति--छादेरङ्गस्यानेकोपसर्गस्य घप्रत्यये परत उपधाह्रस्वो न भवतीति। केन पुनः प्राप्तस्य ह्रस्वस्यानेन प्रतिषेधः क्रियते? एतस्मादेव प्रतिषेधाद्विधायकं वाक्यमनुमीयते। योगविभागाद्व#आ--"छादेर्घे" इति। यदि च द्विशब्दोऽत्रानेकोपलक्षणार्थः, योगविभागश्चाभ्युपेयेतैवं तदा पर्युदासेऽप्यदोषः। कथम्()? द्व्युपसर्गादनेकोपसर्गादन्योऽद्व्युपसर्गः=एकोपसर्गः, तस्य ह्रस्वत्त्वं भवति। किमर्थमिदम्(), न "छादेर्घे" इत्यनेनैव सिद्धम्()? सिद्धे सत्यारम्भो नियमार्थः--एकोपसर्गस्यैव भवति, नान्यस्येति। यद्येदम्? "उरश्छदः" इत्यत्र न प्राप्नोति? नैष दोषः, एवं हि योगविभागोऽनर्थकः स्यात्()। तुल्यजातीयापेक्षत्वान्नियमस्य, सोपसर्गस्य नियमः क्रियमामः सोपसर्गस्येव ह्रस्वत्वं निवत्र्तयति, नानुपसर्गस्य। तेन "उत्तरश्छदः" इत्यत्र प्रवर्तत एव॥

तत्त्व-बोधिनी

छादेर्घेऽद्व्युपसर्गस्य १५७३, ६।४।९६

आकुर्वन्तीति। एत्य कुर्वन्त्यस्मिन्व्यवहारमित्याकर उत्पत्तिस्थानम्।

---

सूत्रम्

काशिका-वृत्तिः

इस्मन्त्रन्क्विषु च ६।४।९७

इस् मन् त्रन् क्वि इत्येतेषु परतः छादेः उपधायाः ह्रस्वो भवति। छदिः। छद्म। छन्त्त्रम्। धामच्छत्। उपच्छत्।

न्यासः

इस्मन्त्रन्क्विषु च। , ६।४।९७

चकारश्चादेरनुकर्षणार्थः। "छदिः" इति। "अचिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः" (द।उ।९।३०) इतीसिप्रत्ययः। "छद्म" इति। "सर्वधातुभ्यो मनिन्()" (पं।उ।४।१५६) इति मिन्()। "छत्त्रम्()" इति। "सर्वधातुभ्यः ष्ट्रन्()" (द।उ।८।७९) इति ष्ट्रन्()। योगविभागोऽनेकोपसर्गस्यापि यथा स्यात्()--समुपातिच्छदिरिति॥

बाल-मनोरमा

इस्मन्त्रन्क्विषु च ७९५, ६।४।९७

इस्मन्त्रन्। इस्, मन्, त्रन्, क्वि एषां चतुर्णां द्वन्द्वः। "छादेर्घेद्व्युपसर्गेस्य"त्यतश्छादेरिति, "खचि ह्रस्वः" इत्यतो ह्रस्व इति चानुवर्तते। तदाह-- एषु छादेरिति। अर्थादाकारस्येति गम्यते, अलोन्त्यपरिभाषामाश्रित्य इकारस्य ह्रस्वविदौ प्रयोजनाऽभावात्। एवं च "ऊदुपधायाः" इत्यत उपधाया इति नानुवर्तनीयम्, ण्यन्तस्य छादेर्दकारोपधत्वात्।इस्- छदिः। मन्- छद्म। त्रन् - छत्रम्। क्वौ उदाहरति-- तनुच्छदिति। तनुं छादयतीति विग्रहः। अथ तनेः शमेश्च क्विपि विशेषमाह-- अनुनासिकस्येति। "अक्षद्यू"रित्यत्र आह-- च्छ्वोरिति। योरेकस्मिन् ऊठिजूरिति रूपम्। एवं त्वरेः तूरिति रूपम्। रिउआवेः क्विपि इकारवकारयोरूठि रुआऊरिति रूपम्। अवधातोः क्विपि अकारवकारयोरूठि ऊरिति रूपम्। वृद्धिरिति। जनानवतीति विग्रहे, अवेः क्विपि, अकारवकारयोरूठि , जन ऊ इति स्थिते आद्गुणं बाधित्वा "एत्येध्त्यूठ्सु" इति वृद्धिरौकारादेश इत्यर्थः। मूरिति। मवेः क्विपि, अकारवकारयोरूठ्। सुम्बो सुम्व इति। अनेकाच्त्वाद्गतिपूर्वत्वाच्च यणिति भावः। रादिति। मुर्छाधातोः क्विपि "राल्लोपः" इति चकारस्य लोपे सुलोपे "र्वो"रिति दीर्घे सुलोपे "र्वो"रिति दीर्घे धूरिति रूपमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८

गम हन जन खा घस इत्येतेषाम् अङ्गानाम् उपधाया लोपो भवत्यजादौ प्रत्यये क्ङिति अनङि परतः। जग्मतुः। जग्मुः। जघ्नतुः। जघ्नुः। जज्ञे, जज्ञाते, जज्ञिरे। चख्नतुः। चख्नुः। जक्षतुः। जक्षुः। अक्षन् पितरो ऽमोमदन्त पितरः। क्ङिति इति किम्? गमनम्। हननम्। अनङि इति किम्? अगमत्। अघसत्। अचि इत्येव, गम्यते। हन्यते।

लघु-सिद्धान्त-कौमुदी

गमहनजनखनघसां लोपः क्ङित्यनङि ५०७, ६।४।९८

एषामुपधाया लोपोऽजादौ क्ङिति न त्वङि। जग्मतुः। जग्मुः। जगमिथ, जगन्थ। जग्मथुः। जग्म। जगाम, जगम। जग्मिव। जग्मिम। गन्ता॥

न्यासः

गमहनजनखनघसां लोपः क्ङित्यनङि। , ६।४।९८

"अनङि" इति अजादावयं प्रतिषेधः, तेन तत्तुल्येऽजादावेव प्रत्यये कार्यं विज्ञायते, इत्याह--"अजादौ प्रत्यये" इति। "जघ्नतुः, जघ्नुः" इति। "अभ्यासाच्च" ७।३।५५ इति कुत्वम्। "जज्ञतुः, जज्ञुः" इति। "जन जनने" (धा।पा।११०५), परस्मैपदी जौहोत्यादिकः, "स्तोः श्चुना श्चः" ८।४।३९ इति श्चुत्वम्()। "जज्ञे" इति। "जनि प्रादुर्भावे" (धा।पा।११४९) आत्मनेपदी दिवादिः, "लिटस्तझयोरेशिरेच्()" ३।४।८१ इत्येश्()। "जक्षतुः" इति। अदेः "लिट()न्यतरस्याम्()" २।४।४० इति घस्लादेशः, "खरि च" ८।४।५४ इति घकारस्य ककारः, "शासिवसिघसीनाञ्च" ८।३।६० इति षत्वम्()। अथ वा--"घरलृ अदने" (धा।पा।७१५) इत्यस्यैतद्रूपम्()। "अक्षन्()" इति। लुङ्(), "लुङ्सनोर्घस्लृ" २।४।३७ इति घस्लादेशः, "मन्त्रे घसह्वर" २।४।८० इत्यादिना लेर्लुक्(), झेरन्तादेशः, संयोगान्तलोपः। शेषं पूर्ववत्()। "अधसत्(), अगमत्()" इति। पुषादिसूत्रेण ३।१।५५ अङ॥

बाल-मनोरमा

गमहनजनखनघसां लोपः क्ङित्यनङि २००, ६।४।९८

गमहन। उपधाया इति। "ऊदुपधायाः" इत्यतस्तदनुवृत्तेरिति भावः। अजादाविति। "अचि श्नुधात्वि"त्यतोऽनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिलाभ त भावः। क्ङितीत्युक्तेश्चखानेत्यत्र नोपधालोपः। अनङीति किम्?। अगमत्। चख्ने चख्नाते इत्यादि। व्यय। अयं वित्तत्यागेऽपि, अर्थनिर्देशस्योपलक्षणत्वात्। अव्ययीदिति। "ह्म्यन्ते"ति न वृद्धिः। चष भक्षण इति। चचाष चेषतुः। छष हिंसायामिति। वैरूप्यसंपादकादेशादित्वादेत्त्वाभ्यासलोपो न। तदाह--चच्छषतुरिति। गुहू। उदुपधोऽयम्। ऊदित्।

तत्त्व-बोधिनी

गमहनजनखनघसां लोपः क्ङित्यनङि १७३, ६।४।९८

गमहन "अचि श्नुधातुभ्रुवा"मित्यतोऽचीत्यनुवर्तते। "ऊदुपधाया गोहः" इत्यत उपधाग्रहणं च। तदाह-- एषामुपधाया इत्यादि। जग्मतुः। जग्मुः। जघ्नतुः। जग्घुः। जज्ञे। जज्ञाते। जक्षतुः। जक्षुः। अनङीति अनङीति किम्?। अगमत्। चीवृ। चीवरं-- वरुआं। "चीवरपीवरमीवरे"त्युणादिषु निपातितऽयम्। व्यय गतौ। वित्तत्यागे तु नित्यमात्मनेपदीगत इति मनोरमा। न कुत्रापि गत इति चिन्त्यैव सा। अव्ययीदिति। यान्ततवान्न वृद्धिः। स्पश बाधनस्पर्शनयोः। "णिश्री"ति

च्लेश्चङि--अपस्पशत्। -- "अत्स्मृदृत्वरप्रथे"त्यादिना अभ्यासस्याऽत्वं सन्वदित्त्वापवादः। पस्पशा। यङन्तादचि "यङोऽचि च" इति लुक्। "अजाद्यतः" इति टाप्। "दीर्घोऽकितः" इत्यभ्यासस्य दीर्घस्तु न भवति, संज्ञापूर्वकविधेरनित्यत्वादित्याहुः। "जपजभदहदशभञ्जपसां चे"त्यत्र पसेति सौत्रो धातुः। पसतीत्यादि। यङ्लुकोस्तु "जपजभे"त्यनेनैवाभ्यासस्य नुक्। यङि-- पंपस्यते।लुकि --पंपसीति। पंपसिति कण्ड्वादिः। पंपस्यति।

---

सूत्रम्

काशिका-वृत्तिः

तनिपत्योश् छन्दसि ६।४।९९

तनि पति इत्येतयोः छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः। वितत्निरे कवयः। शकुना इव पप्तिम। छन्दसि इति किम्? वितेनिरे। पेतिम।

न्यासः

तनिपत्योश्चन्दसि। , ६।४।९९

"वितत्निरे" इति। अत्र यद्युपधालोपस्यासिद्धत्वम्? तथापि लोपविधानसामर्थ्यात्? "अत एकहल्मध्ये" ६।४।१२० इत्यादिनैत्वाभ्यासलोपौ न भवतः। "पप्तिमा" इति। लिट्? क्रादिनियमादिट्()॥

---

सूत्रम्

काशिका-वृत्तिः

घसिभसोर् हलि च ६।४।१००

घसि भस इत्येतयोः छन्दसि उपधाया लोपो भवति लहादौ अजादौ च क्गिति प्रत्यये परतः। सग्धिश्च मे सपीतिश्च मे। बब्धाम् ते हरी धानाः। सग्धिः इति अदेः क्तिनि बहुलं छन्दसि इति घस्लादेशे उपधायाः लोपे च कृते झलो झलि ८।२।२६ इति सकारलोपः। धत्वं तकारस्य, जश्त्वं घकारस्य। ततः समाना ग्धिः सग्धिः इति समासे कृते समानस्य सभावः। बब्धाम् इति भसेर् लोटि तामि श्लौ द्विर्वचने कृते उपधालोपसलोपधत्वजश्त्वानि कर्तव्यानि। द्विर्वचनात् परत्वान् नित्यत्वाच् च उपधालोपः प्राप्नोति, छान्दसत्वात् स तथा न क्रियते। अजादौ बप्सति। क्ङिति इत्येव, अंशून् बभस्ति।

न्यासः

घसिभसोर्हलि च। , ६।४।१००

"धत्वं तकारस्य" इति। "झषस्तथोर्धोऽधः" ८।२।४० इति। "जश्त्वं धकारस्य" इति। "झलां जश्? झशि" ८।४।५२ इति। "समासे कृते" इति। "पूर्वापरप्रथम" २।१।५७ इत्यादिना। "समानस्य सभावः" इति। "समानस्य च्छन्दसि" ६।३।८३ इत्यादिना। यदि द्विर्वचनात्पूर्वमुपधालोपः क्रियते, तदैकाच्त्वाभावाद्द्विर्वचनं न प्राप्नोति? इत्यत् आह--"छान्दसत्वात्()" इत्यादि। "बन्धाम्()" इति। छान्दसमेतत्()। तत्र "बहुलं छन्दसि" २।४।३९ इति वचनाद्बहुलं विषयो भवन्ति। तेन यद्यपि परत्वान्नित्यन्तावच्च द्विर्वचनात्? पूर्वमुपधालोपः प्रप्नोति, तथापि स तथा न क्रियते। द्विर्वचनात्? पूर्वं न क्रियत इति भावः। "बप्सति" इति। भसेः परस्य झेरदादेशः, शपः श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्(), अभ्यासकार्यम्(), उपधालोपे कृते भकारस्य चत्र्वम्()--पकारः। "बस्ति" इति। तिपि रूपम्()॥

---

सूत्रम्

काशिका-वृत्तिः

हुझल्भ्यो हेर् धिः ६।४।१०१

हु इत्येतस्माद् झलन्तेभ्यस् च उत्तरस्य हलादेः हेः स्थाने धिरादेशो भवति। जुहुधि। झलन्तेभ्यः भिन्धि। छिन्धि। हुझल्भ्यः इति किम्? क्रीणीहि। प्रीणीहि। हेः इति किम्? जुहुताम्। हलि इत्येव, रुदिहि। स्वपिहि। इह जुहुतात्, भिन्तात् त्वम् इति परत्वात् तातङि कृते सकृद्गतौ विप्रतिषेधेन यद् बधितं तद् बाधितम् एव इति पुनः धिभावो न भवति। भिन्धकि, छिन्धकि इत्यत्र परत्वाद् धिभावे कृते पुनः प्रसङ्गविज्ञानादकच् क्रियते।

लघु-सिद्धान्त-कौमुदी

हुझल्भ्यो हेर्धिः ५५८, ६।४।१०१

होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि। अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम॥

न्यासः

हुझल्भ्यो हेर्धिः। , ६।४।१०१

"हलादेः" इति। कुतः पुनर्हल्ग्रहणं प्रकृतं येन हिशब्दो विशिष्यते? अनन्तरसूत्रादिति चेत्()? न; तद्धि सप्तमीनिर्दिष्टम्(), षष्ठीनिर्दिष्टेन चेहार्थः। "हुझल्भ्यः" इत्येषा पञ्चमी "हलि" ६।४।१०० इत्येतस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति। "तस्मादित्युत्तरस्य" १।१।६६ इति वचनादित्यदोषः। "भिन्धि" इति। "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः। "क्रीणीहि" इति। "सेह्र्यपिच्च" ३।४।८७ इति हिरादेशः "ई हल्यघोः" ६।४।११३ इतीत्त्वम्()। "जुहुताम्()" इति। लोट्(), तसस्ताम्()। "रुदिहि, स्वपिहि" इति। अदादित्वाच्छपो लुक्(), "रुदादिभ्यः सार्वधातुके" ७।२।७६ इतीट्()। अथेह कस्मान्न भवति--"जुहुतात्? त्वम्()" इति? आह--"इह" इत्यादि। धिभावस्यावकाशोऽनाशिषि--झुहुधीति। तातङोऽवकाशः--जीवतात्? त्वमिति; आशिषि लोटि उभयप्राप्तौ परत्वात्तातङेव भवति। अथ कृतेऽपि त()स्मस्तस्य स्थानिवद्भावात्? पुनः प्रसङ्गविज्ञानाद्()धिभावः कस्मान्न भवति? इत्याह--"तत्र" इत्यादि। यद्येवम्(), भिन्धकि, छिन्धकीत्यत्र परत्वाद्()धिभावे सत्यनन्तरोक्तादेव हेतोरकज्न स्यात्()? इत्यत आह--"भिन्धकि, छिन्दकि" इत्यादि। व्यक्तौ हि पदार्थे "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (व्या।प।४०) इत्येतत्? प्रवत्र्तते। जातौ च "पुनःप्रसङ्गविज्ञानात्? सिद्धम्()" (व्या।प।४१) इति "विप्रतिषेधे परं कार्यम्()" १।४।२ इत्यत्र प्रतिपादितम्()। पाणिनेस्तूभयं मतम्(), लक्ष्यानुरोधात्क्वचित्? किञ्चिदाश्रीयते। तत्र तातङविधौ व्यक्तिपदार्थस्याश्रयणात्? "सकृद्गतौ विप्रतिषेधे यद्? बाधितं तद्बाधितमेव" इत्यस्या उपस्थानम्(); अकज्विधौ तु जातेः पदार्थस्याश्रयणात्? "पुनःप्रसङ्गविज्ञानात्सिद्धम्()" इत्यस्याः। "भिन्धकि" इति। "अव्ययसर्वनाम्नाम्()" ५।३।७१ इत्यादिनाकच्()। तत्र "तिङश्च" ५।३।५६ इत्यनुवत्र्तते॥

बाल-मनोरमा

हुझल्भ्यो हेर्धिः २५६, ६।४।१०१

हुझल्भ्यो हेर्धिः। झलन्तेभ्य इति। अङ्गविशेषणत्वात्तदन्तविधिरिति भावः। अनेकाल्त्वात्सर्वादेशः। "रुदिही"त्यत्र तु न , निर्दिश्यमानहेरिडा व्यवहितत्वात्, इट्सहितस्य त्वनिर्दिश्यमानत्वादिति भाष्ये स्पष्टम्। अत्तादिति। धित्वात्परत्वात्तातङ्। तस्य स्थानिवत्त्वेन हित्वेऽपि न पुनर्धित्वं, "विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न्यायात्। अत्तम् अत्त। अदानीति। "आडुत्तमस्ये"त्याडागमः। एतदर्थमेव आडागमे दीर्घोच्चारणमिति भावः। अदाव अदाम। लहि आद् त् इति स्थिते--

तत्त्व-बोधिनी

हुझल्भ्यो हेर्धिः २२५, ६।४।१०१

जुहुधि। "घसिभसोर्हली"त्यतो हलीत्यनुवर्त्य हलादेरिति व्याख्यानात् रुदिहि स्वपिहीत्यादाविडादेर्हेर्धिर्न भवति, "अत्ता"दित्यत्र तु धित्वात्परत्वात्तातङि कृते स्थानिवद्भावेन पुनर्धित्वं तु "सकृद्गतौ" इति न्यायान्नेत्याहुः। अन्ये तु---हेर्धिरित्यत्र स्थान्यादेशयोद्र्वयोरपीकार उच्चारणार्थं इति हकारस्य धकार आदेशः, तेन हलीत्यनुवृत्तिर्न कर्तव्या, नापि तातङो धित्वप्रसङ्ग इति सकृद्गतिन्यायाश्रयणमपि मास्त्वित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

श्रुशृणुपृकृवृभ्यश् छन्दसि ६।४।१०२

श्रु शृणु पृ कृ वृ इत्येतेभ्य उत्तरस्य हेः धिरादेशो हवति छन्दसि विषये। श्रुधी हवमिन्द्र। शृणुधी गिरः। पूर्धि। उरु णस्कृधि। अपा वृधि। शृणुधि इत्यत्र धिभावविधानसामार्थ्यादुतश्च प्रत्ययातिति हेर्लुक् न भवति। अन्येषाम् अपि दृश्यते इति दीर्घत्वम्। अतो ऽन्यत्र व्यत्ययो बहुलम् इति शप्, तस्य बहुलं छन्दसि इति लुक्।

न्यासः

श्रुशृणुपृ?कृवृभ्यश्छन्दसि। , ६।४।१०२

"श्रुणुधी" इति। "श्रुवः शृ च" ३।१।७४ इति श्नुप्रत्ययः, श्रृभावश्च। "पूर्द्धि" इति। "पृ? पालनपूरणयोः" (धा।पा।१०८६), "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्त्वम्(), "हलि च" ८।२।७७ इति दीर्घः। "उपरुणस्कृधि" इति। उरु अस्माकं कृधीति स्थिते "बहुवचनस्य वस्नसौ" ८।१।२१ इत्यस्मदो नसादेशः, "नश्च धातुस्थोरुषुभ्यः" ८।४।२६ इति णत्वम्(), सकारस्य रुत्वम्(), विसर्जनीयः। तस्य "अतः कृकमि" ८।३।४६ इत्यादिना सत्वम्()। "अपावृधि" इति। वृङो वृञो वा रूपम्()। वृङोऽपि हि "व्यत्ययो बहुलम्()" ३।१।८५ इति च्छन्दसि परस्मैपदं भवत्येव। अथ श्रृणुधीत्यत्र "उतश्च प्रत्ययादसंयोगपूर्वात्()" (६।४।१०६) इत्यनेन लुक्? कस्मान्न भवति? इत्याह--"श्रृणुधीत्यत्र" इत्यादि। यद्यत्र लुक्? स्यात्? धिमावस्यानर्थस्यं स्यादिति भावः। "अन्येषामपि दृश्यते" ६।३।१३६ इति दीर्घत्वमपावृधीत्यत्र। ननु च श्रुधत्यत्र "श्रुवः श्रृ च" ३।१।७४ इति शृभावेन इनुप्रत्ययेन च भवितव्यम्(), पूर्धीत्यत्र क्र्यादित्वात्? श्नाप्रत्ययेन, उरुणस्कृधीत्यत्र "तनादिकृञ्भ्यः उः" ३।१।७९ इत्युप्रत्ययेन; अपावृधीत्यतत्र यदि वृङ तदा क्र्यादित्वात्? श्नाप्रत्ययेन, अथ वृञ्? तदा स्वादित्वात्? श्नुप्रत्ययेन; एवञ्चैतानि रूपाणि न सिध्यन्ति? इत्यत आह--"अतोऽन्यतर" इत्यादि। श्रृणुधीत्येतस्मादुदाहरणादन्येषूदाहरणेषु "व्यत्ययो बहुलम्()" ३।१।८५ इति शप्(), तस्यापि "बहुलं छन्दसि" २।४।७३ इति लुक्()॥

---

सूत्रम्

काशिका-वृत्तिः

अङितश् च ६।४।१०३

अङितश्च हेर्धिरादेशो भवति। वा छन्दसि इति पित्वेनास्य अङित्त्वम्। सोमं रारन्दH। असमभ्यं तद्धर्यश्च प्रयन्धि। युयोध्यस्मज्जुहुराणमेनः। अङितः इति किम्? ह्वयं प्रीणीहि। रारन्धि इति रमेर्व्यत्ययेन परस्मैपदम् , शपः श्लु, अभ्यासदीर्घत्वं छान्दसत्वात्। मलोपाभावस् तु अङित्त्वादेव। प्रयन्धि इति यमेः शपो लुक्। युयोधि इति यौतेः शपः श्लुः।

न्यासः

अङितश्च। , ६।४।१०३

"वा छन्दसि" इत्यादि। "सार्वधातुकमपित्()" १।२।४ इत्यपितः सार्वधातुकस्य ङित्त्वं विधीयते, छन्दसि विषये "वा छन्दसि" ३।४।८८ इत्यनेन हेर्यदपित्त्वं तद्विकल्प्यते। तेन पक्षे तस्य ङित्त्वं न भवति। अथ रारन्धीति कथं परस्मैपदम्(), यावता रमिरयमात्मत्मनेपदी? कथं वात्र शपः श्रवणं न भवति? कथञ्चाब्यासस्य दीर्घत्वम्(), कथञ्च "अनुदात्तोपदेश" (६।४।३७) इत्यादिना मकारलोपो न भवति? इत्याह--"रारन्धि" इत्यादि। "शपः श्लुः" इति ब्राउवामेन "श्लौ" ६।१।१० इति द्विर्वचनमित्युक्तं भवति। मकारलोपाभावस्त्वङित्त्वादे सिद्ध इति नासौ यत्नसाध्य इत्यभिप्रायः। "यमेः शपः" इति। "बहुलं छन्दसि २।४।७३ इत्यनेन। "योतेः शपः श्लुः" इति। "बहुलं छन्दसि" २।४।७६ इत्यनेन॥

बाल-मनोरमा

पादः पत् , ६।४।१०३

शसि विशेषमाह--पादः पत्। भस्य अङ्गस्येति चाधिकृतं प

शसि विशेषमाह--पादः पत्। भस्य अङ्गस्येति चाधिकृतं पाद इत्यनेन विशेष्यते। तदन्तविधिः। तदाह--पाच्छब्दान्तमिति। पाच्छब्दस्येति। पाच्छब्दान्तस्य विधीयमानोऽपि पदादेशः "निर्दिश्यमानस्यादेशा भवन्ती"ति पाच्छब्दस्यैव सर्वादेशो भवति, न तु तदन्तस्येति भावः। इत्यादीति। सुपदे। सुपदः। सुपदः। सुपदोः २। सुपदि। इति दान्ताः। अथथान्ताः। अग्निमदिति। "मन्थ विलोडने" इति भ्वादौ। "मन्थ विलोडने" इति क्यादौ। उभाभ्यामपि क्विपि "अनिदिता"मिनि नलोपे अग्निमथिति रूपम्। ततः सुबुत्पत्तिः। सौ जश्त्वचर्त्वे इति भावः। भ्यामादौ जश्त्वेन थस्य दः। अग्निमद्भ्यामित्यादि। सुपि "खरि चे"ति चत्र्वम्, अग्निमत्सु। "मथे विलोडने" इत्यस्याप्येतदेव रूपम्। "मथिहिंसासंक्लेशनयोः" इति इदितस्तु नलोपाऽभावात् अग्निमन् अग्निमन्थावित्यादि। इति थान्ताः। अथ चान्ताः। ऋत्विगित्यादिसूत्रेणेति। प्र-अञ्चतीत्यर्थे "अञ्चु गतिपूजनयोः" इति गत्यर्थकाद्धातोर्नोपधात्क्विन्नित्यर्थः। पूजार्थस्य त्वग्रे वक्ष्यते। क्विनि "हलन्त्य"मिति नकार इत्। इकार उच्चारणार्थः। "लशक्वतद्धिते" इति ककार इत्। "वेरपृक्तस्ये"ति वकारलोपः।

तत्त्व-बोधिनी

पादः पत् ३६६, ६।४।१०३

पादऋ पत्। तदवयवस्येति। एतच्च "निर्दिस्यमानस्यादेशा भवन्ती"ति परिभाषया लभ्यते। इयं च परिभाषा "षष्ठीस्थानेयोगे"त्यनेन ज्ञापिता। तथाहि "अस्तेर्भूः""इको यणची"-त्यादौ सामीप्यादिसम्बन्धप्रसङ्गे[।पि]लक्ष्यानुरोधेन व्याख्यानादन्करङ्गत्वात् "स्थानिवदादेशः"इति ज्ञापकाच्च स्थानेयोगत्वे सिद्धेऽप्यारभ्यमाणेन "षष्ठीस्थानेयोगे"त्यनेन षष्ठ()न्कतमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयमानमित्यर्थो लभ्यते। तथाच "निर्दिश्यमानस्यादेशा भवन्ती"ति सिद्धम्। "अलोऽन्त्यस्य""आदेः परस्ये"ति योगौ त्वारम्भसामश्र्यान्निर्दिश्यमानपरिभाषाया बाधकौ, तेन "पुमः खय्यम्परे""उदः स्थास्तम्भो"रित्यादौ न दोष इति दिक्॥ इति दान्ताः। अग्निमदिति। मथ्नातेर्मन्थतेश्च क्विपि एतदेव रूपम्। इदितस्तु न नलोपाभावादिग्निमन्थौ। अग्निमन्थः॥ इति थान्ताः।

---

सूत्रम्

काशिका-वृत्तिः

चिणो लुक् ६।४।१०४

चिण उत्तरस्य प्रत्ययस्य लुग् भवति। अकारि। अहारि। अलावि। अपाचि। अकारितराम्, अहारितमाम् इत्यत्र तलोपस्य असिद्धत्वात् तरप्तमपोर् न लुग् भवति। चिणो लुकित्येतद् विषयभेदाद् भिद्यते।
लघु-सिद्धान्त-कौमुदी
चिणो लुक् ६४४, ६।४।१०४

चिणः परस्य लुक् स्यात्॥
न्यासः
चिणो लुक्?। , ६।४।१०४

"चिण उत्तरस्य प्रत्ययस्य" इति। अथ प्रत्ययस्यैतत्कुतो लभ्यते? "अङ्गस्य"८।४।१ इत्यनेन प्रत्ययस्य सन्निधापितत्त्वात्()। यदि चिण उत्तरसय प्रत्ययस्य लुग्भवति, अकारितराम्(), अकारितमामित्यत्र तरप्तममोर्लुक्? कस्मान्न भवति? इत्याह--"अकारितराम्()" इत्यादि। योऽसौ तशब्दस्य लुक्(), तस्य तरप्तमपोर्लुकि कत्र्तव्ये "असिद्धवदत्राभात्()" ६।४।२२ इत्यसिद्धत्वम्()। अतस्तशब्देन व्यवदानाच्चिणोऽनन्तरौ तरप्तमपौ न भवत इति तयोर्लुग्न भवति। ननु चान्यस्यान्यास्मेन्नसिद्धवचनादेकस्य तत्रैवासिद्धत्वं नोपपद्यते? इत्यत आह--"चिणो लुगित्येतत्()" इत्यादि। "चिणो लुक्()" इत्यभेदेनापि श्रुतमिदं लक्षणं विषयस्य लक्ष्यस्य भेदाद्भिद्यते, व्यक्तौ पदर्थे प्रतिव्यक्ति लक्षणं भिद्यत इति कृत्वा, तेन भेदे सत्युपपद्यत एवासिद्धत्वम्()। अकारि, अहारीति स्थिते अतिशयविवक्षायां तरप्तमपौ "तिङश्च" ५।३।५६ इत्यनेन, तदन्तात् "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" ५।४।११ इत्यामौ कृते, अकारितमाम्(), अकारितमामिति भवति॥
बाल-मनोरमा
चिणो लुक् १६९, ६।४।१०४

चिणो लुक्। "चिण" इति पञ्चमी। तदाह--चिणः परस्येति। चिणः परश्च अर्थात्तशब्द एव भवति। चिणभावे च्लेः सिचि रूपमाह-- अप्यायिष्टेति रूपम्। शल चलने इत्यारभ्य तेवृ इत्यतः प्राग्लान्ताः। तेवृ इत्यारभ्य रेवत्यान्ता वकारान्ताः। षेवृदातोः षोपदेशत्वात्सत्वे सेवत इत्यादि रूपम्। परिषेवत इत्यत्र "सात्पदाद्यो"रिति निषेधे प्राप्ते आह-- परिनिविभ्य इति। सिषेवे इति। आदेशसकारत्वात्षत्वमिति भावः। अयं सोपदेशोऽपीति। षेवृधातुरित्यर्थः। तद्भाष्यविरुद्धमिति। सेक्सृप्सृस्तृसृजस्तृ()स्त्यानामेव भाष्ये षोपदेशपर्युदासादिति भावः। रेवृ प्लवगताविति। प्लवेति न धात्वन्तरमिति सूचयन्नाह --प्लवगतिः- प्लुतगतिरिरिति। अयपयेत्यादिरेवत्यन्ता गताः। अवत्यन्ता इति। "अव रक्षणे" इत्येतत्पर्यन्ता इत्यर्थः। मव्येत्यारभ्य अलभूषणेत्यतः प्राग्यकारान्ताः। अल भूषणेत्यारभ्य खोरृ प्रतीघाते इत्यतः प्राग्लकारान्ताः।

तत्त्व-बोधिनी
चिणो लुक् १४२, ६।४।१०४

चिणो लुक्। परस्य लुक् स्यादिति। "तदशब्दस्ये"ति कैश्चित्पठ()ते, तदार्थिकार्थकथनम्, तशब्दे परतश्चिणि विहिते चिणः परस्य जायमानो लुक्-- "प्रत्ययस्य लुकश्लुलुपः" इति वचनात्तशब्दस्यैवेति स्पष्टत्वात्। अयमिति। षेवृ धातुः। भाष्यविरुद्धमिति। यदि सोपदेशः स्यात्तदा स्त्यायतिरिवाऽयमपि षोपदेश लक्षणे पर्युदस्येत, तदकरणान्नास्ति सोपदेश इति भावः। प्लवगताविति। केचित् प्लवेति धात्वन्तरमित्याहुस्तद्धि मनोरमायां दूषितम्। "प्लवे"ति धात्वन्तरत्वे

"विभाषऽऽङि रुप्लुवो"रित्यत्र प्लुवः पक्षे घञ्()विधानं व्यर्थं स्यात्, ल्पेवेत्येतस्माद्धञि आप्लावशब्दस्य सिद्धत्वात्। तथा "रुआवतिश्रणोती"ति सूत्रेण प्लवेतरभ्यासोकारस्येत्वविधानमपि व्यर्थं स्यात्, तद्धि पक्षे अपिप्लवदिति रूपसिद्ध्यर्थं क्रियते, तच्च रूपं प्लवधातोः "सन्यतः" इत्यनेन सिद्धमिति किं तदुपादानेनेति। ममव्येति। "यस्य हलः" इति लोपस्तु न भवति, "यस्येति सङ्घातग्रहण"मिति सिद्धान्तितत्वात्। वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अप्रवृत्त्या पुत्रकाम्येत्यादावपि लोपः स्यादिति दिक्। लुटि-- मव्यिता। आशिषि-- मव्यात्। "हलो यमा"मिति धातुयकारस्य वा लोपः। सूक्ष्य ईर्क्ष्य। णलि-- सुषूक्ष्य। ईक्ष्याचकार। ईष्र्याचकार। एभ्यः क्विपि "लोपो व्योटरिति यलोपे, "स्कोः" इति कलोपे जश्त्वचत्र्वयोः-- सूर्ट् इत्येव रूपम्। हय गतौ। जहाय। हय्यात्। शिथिलीकरणमिति। "सोममभिषुणोती"त्यादौ दर्शनात्। सुराया इति। तत्प्रकरणे "संधानं स्यादभिषवः" इत्यमरोक्तेः।

---

सूत्रम्

काशिका-वृत्तिः

अतो हेः ६।४।१०५

अकारान्तादङ्गादुत्तरस्य हेः लुग् भवति। पच। पठ। गच्छ। धाव। अतः इति किम्? युहि। रुहि। तपरकरणं किम्? लुनीहि। पुनीहि। ईत्वस्य असिद्धत्वादकार एव भवति।

लघु-सिद्धान्त-कौमुदी

अतो हेः ४१८, ६।४।१०५

अतः परस्य हेर्लुक्। भव। भवतात्। भवतम्। भवत।

न्यासः

अतो हेः। , ६।४।१०५

"गच्छ" इति। गमेर्लोट्(), "इषुगमियमां छः" ७।३।७७ इति छत्वम्()। "धाव" इति। "धावु गतिशुद्ध्योः" (धा।पा।६०१) अथ वा सर्त्तेः "पाघ्रा" ७।३।७८ इत्यादिना धावादेशः। "युहि, रुहि" इति। अदादित्वाच्छपो लुक्()। "लुनोहि, पुनीह" इति। "प्वादीनां ह्रस्वः" ७।३।८० इति ह्रस्वत्वम्(), "ई हल्यधोः" ६।४।११३ इतीत्त्वम्()। ननु चेत्त्वे कृते सत्यनकारान्तत्वान्न भविष्यति, ततः किमेतन्निवृत्त्यर्थेन तपरकरणेन? इत्यत आह--"ईत्वसय" इत्यादि। असिद्धत्वान्तु पूर्ववत्()॥

बाल-मनोरमा

अतो हेः ५१, ६।४।१०५

अतो हेः। "अत" इति पञ्चमी। हेरिति षष्ठी। "चिणो लु"गित्यतो लुगित्यनुवर्तते। तदाह--अतः परस्येति। भवेति। हिविधानं तु स्तुहीत्याद्यर्थमिति भावः। भवतादिति। आशिषि लोटः सिपि तस्य "सेह्र्यपिच्चे"ति हिभावे शपि गुणावादेशयोः "अतो हे" रिति लुकं परत्वाद्बाधित्वा "तुह्रो"रिति पक्षे तातङिति भावः। भवतमिति। थसि शपि गुणेऽवादेशे चभव थस् इति स्थिते"लोटो लङ्व"दिति लङ्वत्त्वात्तस्थस्थमिपामितिथसस्तमादेशे रूपम्। एवं भवतेति। थस्य तादेश इति विशेषः।

तत्त्व-बोधिनी

अतो हेः ४०, ६।४।१०५

भवतादिति। लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गमेव लुग्बाधते न तु परमिति भावः॥

सूत्रम्

काशिका-वृत्तिः

उतश् च प्रत्ययादसंयोगपूर्वात् ६।४।१०६

उकारो यो ऽसंयोगपूर्वः तदन्तात् प्रत्ययादुत्तरस्य हेर्लुक् भवति। चिनु। सुनु। कुरु। उतः इति किम्? लुनीहि। पुनीहि। प्रत्ययातिति किम्? युहि। रुहि। असंयोगपूर्वातिति किम्? प्राप्नुहि। राध्नुहि। तक्ष्णुहि। उतश्च प्रत्ययाच् छन्दोवावचनम्। उतश्च प्रत्ययादित्यत्र छन्दसि वा इति वक्तव्यम्। आतनुहि यातुधानान्। धिनुहि यज्ञपतिम्। तेन मा भगिनं कृणु।

लघु-सिद्धान्त-कौमुदी

उतश्च प्रत्ययादसंयोगपूर्वात् ५०५, ६।४।१०६

असंयोगपूर्वात्प्रत्ययोतो हेर्लुक्। शृणु, शृणुतात्। शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व, अशृणुव। अशृण्म, अशृणुम। शृणुयात्। शृणुयाताम्। शृणुयुः। शृणुयाः। शृणुयातम्। शृणुयात। शृणुयाम्। शृणुयाव। शृणुयाम। श्रूयात्। अश्रौषीत्। अश्रोष्यत्॥ गमॢ गतौ॥ २०॥

न्यासः

उतश्च प्रत्ययादसंयोगपूर्वात्?। , ६।४।१०६

"उकारो योऽसंयोगपूर्वः" इति। अविद्यमानः संयोगः पूर्वो यस्मास्त तथोक्तः। एतेनासंयोगपूर्वग्रहणमकारविशेषणमिति दर्शयति। स एवं विध उकारः प्रत्ययस्य विसेषणम्(), विशेषणेन च तदन्तविधिर्भवतीत्याह--"तदन्तात्()" इत्यादि। किमर्थं पुनस्तदन्तदिधिरब्युपगम्यते? "सुन्? चिन्वित्यत्र यथा स्यात् अस्त्वेतत्? प्रयोजनम्(), अयं तु दोषः--तनु, कुर्वित्यत्र न प्राप्नोति, अत्र ह्रुकार एव प्रत्ययः न तदन्तः? अत्रापि व्यपदेशिवद्भावेन तदन्तत्त्वं प्रत्ययस्यास्तीत्यदोषः। "कुरु" इति। धातोर्गुणे रपरत्वे च कृते "अत उत्सार्वधातुके" ६।४।११० इत्युत्त्वम्()। "तरुणुहि" इति। "तूनूकरणे तक्षः" ३।१।७६ इति श्नुः। "च्छन्दोवावचनम्()" इति। अभिधानेऽभिधेयोपचाराद्वार्थो विकल्पो वाशब्देन विवक्षितः। उच्यते व्याख्यायतेऽनेनेति वचनम्(), वार्थस्य वचनं वावचनम्(), छन्दसि वावचनं छन्दोवावचनमिति "सप्तमी" (२।१।४०) इति योगविभागात्? समासः। "छन्दसि वेति वक्तव्यम्()" इति। छन्दसि विषये विकल्पेनायं विधिर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--उत्तरसूत्रेऽन्यतरस्यांग्रहणमुभयोर्योगयोः शेषः, सा च व्यवस्थितविभाषा। तेन छन्दसि विषये विकल्पेनायं विधिर्भवतीति। "धिनुहि, कृणुहि" इति। "हिवि दिवि, धिवि, प्रीणनार्थाः" (धा।पा।५९१-५९३), "कृवि हिंसाकरणयोः" (धा।पा।५९८) इदित्वान्नुम्(), "धिन्विकृण्व्योर च" ३।१।८० इत्युप्रत्ययः, अकारश्चान्तादेशः, तस्य "अतो लोपः ६।४।४८ इति लोपः॥

बाल-मनोरमा

उतश्च प्रत्ययादसंयोगपूर्वात् १७३, ६।४।१०६

उतश्च।हेर्लुक्स्यादिति। "चिणो लु"गित्यतो"ऽतो हे"तित्यतश्च तदनुवृत्तेरिति भावः। लोटो मिपि उप्रत्यये वकारस्य अकारे अतो लोपे धिनु मि इति स्थिते मेर्निभावमाडुत्तमस्येत्याडागमं च बाधित्वा परत्वादुकारस्य "लोपश्चास्यान्यतस्या"मिति लोपमाशङ्क्याह-- नित्यत्वादित्यादि। निभावस्याप्युपलक्षणम्। उकारलोपे कृते अकृते च निभावस्य आडागमस्य च प्रवृत्त्या नित्यत्वादुकारलोपात्पूर्वमेव निभावाडागमयोः कृतयोरुकारलोपस्याऽप्रसक्तौ आटः पित्त्वेन ङित्त्वाऽभावादुकारस्य गुणेऽवादेशे च धिनवानीति रूपमिति भावः। अधिनोत्। धिनुयात्। धिन्व्यात्। अधिन्वीत्। अधिन्विष्यत्।

कृणोतीत्यादीति। धिविव्दरूपाणीति भावः। अयं स्वादौ चेति। कृविरित्यर्थः। अव रक्षणेति। स्वाम्यर्थः- ऐ()आर्यम्। मा भवानवीदिति। "नेटी"ति न वृद्धिः। मव्यादयोऽवत्यन्ताः पर्समैपदिनो गताः। धावु गतीति। उदिदयम्। स्वरितेदिति। ततश्च कर्तृगामिनि फले आत्मनेपदम्, अन्यथा परस्मैपदमित भावः। अथोष्मान्ता इति। तत्र "धुक्षे" त्यारभ्य कासृधातोः प्राक् षकारान्ताः। तत्र क्लेशधातुरेकः शकारान्तः। दीक्षमौण्ड()एति। णेषृधातुर्णोपदेशः। कासृधातुमारभ्य ईहधातोः सकारान्ताः। कासांचक्र इति। कास्प्रत्ययादित्याम्। णासृधातुर्णसधातुश्च णोपदेशः। आङ शसीति। आङः परः शसिधातुरिच्छायामित्यर्थः। ईहेत्यारभ्य काशृधातुवर्जं घुषि कान्तीत्यतः प्राक्--हकारान्ताः। काशृधातुस्तु शकारान्तः। प्लिहहधातुरदुपधः। ऊह वितर्के इति। युक्त्या अर्थनिर्णयो वितर्कः। "अनुक्तमप्यूहति पण्डितो जनः" इत्यत्र तु अनुदात्तेत्त्वलक्षणात्मनेपदमनित्यमिति बोध्यम्। गाह्()धातुरूदित्त्वाद्वेट्। तदाह--जगाहिषे जघाक्षे इति। इडभावे जगाह् से इति स्थिते "हो ढः", "एकाच" इति भष्भावेन गस्य घः, "ष()ढो"रिति ढस्य कः, सस्य षः। जगाहिढ्वे जगाहिध्वे इति। इट्पक्षे "विभाषेटः" इति ढत्वविकल्पः। इडभावे त्वाह-- जघाढ्व इति। जगाह्()ध्वे इति स्थिते हस्य ढः, धस्य ष्टुत्वेन ढः, गस्य भष् घकारः। पूर्वस्य ढस्य "ढो ढे लोपः" इति वक्ष्यमाणो लोपः। ढलोपसूत्रं त्विहैव पठितुं युक्तम्। गाहितेति। इट्पक्षे रूपम्।

तत्त्व-बोधिनी

उतश्च प्रत्ययादसंयोगपूर्वात् १४७, ६।४।१०६

कृवि। अयमिति। कृणोतीत्यादिरित्यर्थः। स्वादौ हि कृवीत्ययंधातुर्न पठ()ते, किंतु कृञ् हिंसायामिति। तस्य च परस्मैपदेषु सार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितोऽर्थः। अव रक्षणे। एकोनविंशतिरर्थाः। कान्तिः-- शोभा। दीप्तिस्तेज इत्याहुः। तृप्तिः-- इच्छानाशः। स्वाम्यर्थः-- स्वामित्वम्। हिंसा-- हननम्। आदानं-- ग्रहणम्()। न चात्र दानमेवार्थोऽस्त्विति वाच्यम्। "भागे वृद्धौ ग्रहे वधे" इत्येवमर्थानां विशिष्य बोपदेवेन गणितत्वनात्। भिक्ष। याच्ञालाभाऽलाभास्त्रयोऽर्थाः। स्वामी तु "क्लेश अव्यक्तायां वाचि चे"ति पठित्वा इमावपि भिक्षधातोरर्थाविति मन्यते। "क्लिश उपतापे" इति दिवादौ। "क्लिशू विबाधने" इति क्र्यादौ। दीक्ष। पञ्चार्थाः। ईष गति। "गुरोश्च हलः" इत्यप्रत्यये टाप्। ईषा। मनस ईषा--मनीषा। शकन्ध्वादिः। मनीषामभिनिविष्टं मनीषितम्। "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे"ति णिचि तदन्तात् क्तः। "ईष उञ्छे" इतितु परस्मैपदेषु। ह्यस्वादयरुआयः। "इष गतौ" दिवादिः। "इष इच्छायां" तुदादिः। "इष आभीक्ष्ण्ये" क्र्यादिः।

कासांचक्रे इति। "कास्प्रत्यये"त्याम्। भासृ दीप्तौ। अस्य ऋदित्त्वं भ्राजतेरिव तञ्मात्रफलकम्। "भ्राजभासे"त्यादिनोपधाह्रस्वस्य विकल्पितत्वात्। णस कौटिल्ये। लिण्निमित्तादेशादित्वाऽभावादेत्वम्। नेसे। आङः शसि। "शंसु स्तुता"विति तु पसस्मैपदिषु वक्ष्यते। ग्रसु ग्लसु। "उदितो वे"ति क्त्वायां वेट्। ग्रसित्वा। ग्रस्त्वा। "यस्य विभाषे"ति नेट्। ग्रस्तः। वेह्य जेह्य वाह्य। आद्य इति। वेहतेरति प्रत्यये वेहच्छब्दो निपातितः "पोटायुवती"ति सूत्रे इति भावः। "वेहद्गर्भोपघातिनी"। अन्त्य इति। बाहुशब्दस्य भुजपर्यायस्य, "क्षुब्धस्वान्तध्वान्ते"ति निपातितस्य बाढशब्दस्य च निर्विवादत्वादिति भावः। दन्त्योष्ठ()आदी इति। "उभावपी"त्यनुषज्यते। अनुदात्तेत्वकृतमात्मनेपदमनित्यम्। तेन "ववाह रक्तं पुरुषास्ततो जाताः सहरुआशः" इति सिद्धम्। न चात्राऽर्थासङ्गतिः, धातूनामनेकार्थत्वात्प्ररुआवणार्थकत्वे बाधकाऽभावादित्याहुः। ऊह। कथं तर्हि "अनुक्तमप्यूहति पण्डितो जनः इति?। अत्राहुः--- अनुदात्तेत्त्वलक्षणस्य तङोऽनित्यत्वान्न दोष इति। गाहू। ऊदित्त्वादिड्वा। इहभावे ढत्वम्। "एकाचः" इति भष्भावः। "षढो कः सी"ति कः। कात्परस्य षत्वम्-- जघाक्षे। "विभाषेटः" इति वा मूर्धन्यः। जगाहिढ्वे। जगाहिध्वे। इडभावे तु भष्भाव। "ढो ढे लोपः" -- जघाढ्वे। ढे किम्?। ऊढः। इह पूर्वं ढलोपो माभूत्। कृते तु ढेग्रहणे "ष्टुना ष्टु"रित्यस्य आश्रयात् सिद्ध्तवं भवतीति

सिद्धमिष्टमित्याहुः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ लोपः १।१ १०९ च ० अस्य ६।१ अन्यतरस्याम् ७।१ म्वोः ७।२ १०८ उतः ५।१ १०६ प्रत्ययात् ५।१ १०६ असंयोगपूर्वात् ५।१ १०६ अङ्गस्य ६।१ १

समासः॥

मश्च वश्च म्वौ, तयोः, ॰ इतरेतरद्वन्द्वः॥

अर्थः॥

असंयोगपूर्वो योऽयमुकारस्तदन्तस्य प्रत्ययस्य लोपो भवति विकल्पेन, मकारादौ वकारादौ च प्रत्यये परतः॥

उदाहरणम्॥

सुन्वः, सुनुवः, तन्वः, तनुवः। सुन्मः, सुनुमः, तन्मः, तनुमः॥
काशिका-वृत्तिः
लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७

यो ऽयम् उकारो ऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्य अन्यतरस्यां लोपो भवति वकारम् अकारादौ प्रत्यये परतः। सुन्वः, सुनुवः। सुन्मः, सुनुमः। तन्वः, तनुवः। तन्मः, अनुमः। प्रत्ययस्य इत्येव, युवः। युमः। असंयोगपूर्वस्य इत्येव, शक्नुवः। शक्नुमः। लुकिति वर्तमाने लोपग्रहणम् अन्त्यलोपार्थम्।
लघु-सिद्धान्त-कौमुदी
लोपश्चास्यान्यतरस्यां म्वोः ५०४, ६।४।१०७

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः। शृण्वः, शृणुवः। शृण्मः, शृणुमः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव, शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु, शृणुतात्। शृणुताम्। शृण्वन्तु॥
न्यासः
लोपश्चास्यान्यतरस्यां म्वोः। , ६।४।१०७

"योऽयमुकारोऽसंयोगपूर्वः" इति। एतेनास्येत्यनेन प्रकृत उकारः प्रत्यवमृश्यत इति दर्शयति। ननु च "अतः" ६।४।१०६ इत्यनुवृत्तेरुकारस्यैव लोपो विज्ञास्यते, तत्किम्? "अस्य" इत्यनेन? षष्ठीप्रक्लृप्त्यर्थमस्येत्येतदिति चेत्()? न; "म्वोः" इत्येषैव हि सप्तम्यकृतार्था "उतः" इत्यस्याः पञ्चम्याः पूर्वयोगे कृतार्थायाः षष्ठीत्वं प्रकल्पयिष्यति, "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति वचनात्()। स्यादेतत्()। यदि "म्वोः" इत्येषा सप्तमी विज्ञायते, एतदेव तु न विज्ञायते-- किमियं षष्ठी उत सप्तमीति? तस्मात्? षष्ठीप्रक्लृप्त्यर्थमस्येत्युक्तम्()। "लुगित्त्यनुवत्र्तमाने" इत्यादि। यदि प्रकृत एव लुक्? क्रियते तदा सर्वस्यैव प्रत्ययस्य लुक्? स्यात्(), नान्त्यस्य; यतः प्रत्ययादर्शनस्य लुगित्येषा संज्ञा विहिता, न तु प्रत्ययावयवस्यादर्शनस्य। सर्वस्य तु लुकि कृते "सुन्वः सुन्मः" इति न सिध्यति? लोपग्रहणाददोषः। तत्र ह्युकारमात्रस्य

लोपः "अलोऽन्त्यस्य" १।१।५१ इति वचनात्()। तस्मादन्त्यस्य लोपार्थं लोपग्रहणम्()। किञ्च कुर्वः कुमं इत्यत्र गुणो लुकि सति न स्यात्(); "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणाप्रतिषेधात्()। लोप#ए तु सति भवति। ततो गुणार्थमपि लोपग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

लोपश्चास्यान्यतरस्यां म्वोः १७२, ६।४।१०७

लोपश्च। "उतश्च प्रत्ययादसंयोगपूर्वा"दिति पूर्वसूत्रोक्त उकारोऽस्येत्यनेन परामृश्यते। प्रत्ययशब्दः प्रत्ययसंबन्धिनि वर्तते। असंयोगपूर्वात् प्रत्ययादिति च उकारे अन्वेति। स च अङ्गस्य विशेषणं। तदन्तविधिः। तदाह-- असंयोगेति। प्रत्ययोकारैति। प्रत्ययसंबन्धी उकार इत्यर्थः। "प्रत्यय--उकार" इति व्याख्याने तु सनुनुवः सुनुम इत्यत्र न स्यात्, तत्र श्नोरेव प्रत्ययत्वात्। प्रत्ययेति किम्?। युवः। युमः। असंयोगपूर्वादिति किम्?। शक्नुवः शक्नुमः। धिन्वः धिनुव इति। अत्र उप्रत्ययस्य उकारान्तत्वं व्यपदेशिवत्त्वेन बोध्यम्। नन्वेवं धिनोमीत्यत्र मिपि धिनु मि इति स्थिते उकारस्य लोपः स्यादित्यत आह-- मिपि त्विति। दिदिन्व। धिन्विता। धिन्विष्यति। धिनोतु।

तत्त्व-बोधिनी

लोपश्चान्यतरस्यां म्वोः १४६, ६।४।१०७

लोपश्चा। यः प्रत्ययोकार इति। असंयोगपूर्वो यः प्रत्यय इति प्रत्ययविशेषणं तु न कृतम्, अक्ष्णुवः अक्ष्णुम इत्यादावनिष्टाऽभावेऽपि अश्नुवहे इत्यादावतिप्रसङ्गात्। एवम् "उतश्चे"ति सूत्रेऽपि "अक्ष्णुही"त्यत्र दोषाऽभावेऽपि अश्नुहीत्यत्रातिप्रसङ्गः स्यादित्यसंयोगपूर्वेति प्रत्ययविशेषणं तु कृतमत्याहुः। "अश्नुही"ति परस्मपैदं यद्यपि लोके दुर्लभं, तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यम्। "आप्नुहीटति पाठस्तूतिः।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं करोतेः ६।४।१०८

करोतेः उत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतः नित्यं लोपो भवति। कुर्वः। कुर्मः। उकारलोपस्य दीर्घविधौ अस्थानिवद्भावाद् हलि च ८।२।७७ इति दीर्घत्वं प्राप्तम्, न भकुर्छुराम् ८।२।७१ इति प्रतिषिध्यते।

लघु-सिद्धान्त-कौमुदी

नित्यं करोतेः ६८२, ६।४।१०८

करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः। कुर्वः। कुर्मः। कुरुते। चकार, चक्रे। कर्तासि, कर्तासे। करिष्यति, करिष्यते। करोतु। कुरुताम्। अकरोत्। अकुरुत॥

न्यासः

नित्यं करोतेः। , ६।४।१०८

"करोतेरुकारप्रत्ययस्य" इति। ननु चकारेण पूर्वसूत्र उकारोऽनुकृष्टः, "चानुकृष्टञ्चोत्तरत्र नानुवत्र्तते" (व्या।प।७६) तत्? कथमुकारस्य लोपो लभ्यते? नैवम्(); पूर्वसूत्रे ह्युकारस्य सन्निधानमस्येत्यनेनैव लभ्यत इति तत्र तस्य चकारेण याऽनुकृष्टिः सैतदर्थैव वेदितव्या। "उकारलोपस्य" इत्यादिना कुर्वः कुमं इत्यत्र सोपपत्तिकां दीर्घप्रा()प्त दर्शयति, "न भकुर्छुराम्()" ८।२।७९ इत्यनेन च तत्प्रतिषेधम्()। नित्यग्रहणं विस्पष्टार्थम्()। आरम्भसामथ्र्यादेव हि नित्यो

विधिर्भविष्यति॥

---

सूत्रम्

काशिका-वृत्तिः

ये च ६।४।१०९

यकारादौच प्रत्यये परतः करोतेः उत्तरस्य उकारप्रत्ययस्य नित्यं लोपो भवति। कुर्यात्, कुर्याताम्, कुर्युः।

लघु-सिद्धान्त-कौमुदी

ये च ६८३, ६।४।१०९

कृञ उलोपो यादौ प्रत्यये परे। कुर्यात्, कुर्वीत। क्रियात्, कृषीष्ट। अकार्षीत्, अकृत। अकरिष्यत्, अकरिष्यत॥

न्यासः

ये च। , ६।४।१०९

"चकारो लोपस्यानुकर्षणार्थः॥

तत्त्व-बोधिनी

ये च ५९७, ६।४।१०९

सिचो लोप इति। नचाऽस्मिन्पक्षे प्रत्ययलक्षणप्रवृत्त्या अकृतेत्यत्र गुणः स्यादिति वाच्यम्, "उश्चे"ति सिचः कित्त्वेन तन्निषेधात्। "संपर्युपेभ्यः" इतिवृत्तिस्थपाठं विहाय भाष्यवार्तिकानुसारेणाह-- संपरिभ्यामिति। इति तनादयः। इट् कुतो नेत्यत आह--ऋतश्चेत्यादि।

इति तत्त्वबोधिन्याम् तनादयः।

---

सूत्रम्

काशिका-वृत्तिः

अत उत् सार्वधातुके ६।४।११०

उकारप्रत्ययान्तस्य करोतेः अकारस्य स्थाने उकारः आदेशो भवति सार्वधातुके क्ङिति परतः। कुरुतः। कुर्वन्ति। सार्वधातुकग्रहणं किम्? भूतपूर्वे ऽपि सार्वधातुके यथा स्यात्, कुरु। तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम्। क्ङिति इत्येव, करोति। करोषि। करोमि।

लघु-सिद्धान्त-कौमुदी

अत उत्सार्वधातुके ५७५, ६।४।११०

उत्प्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति। विदाङ्कुरुतात्। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु। विदाङ्कुरु। विदाङ्करवाणि। अवेत्। अवित्ताम्। अविदुः॥

लघु-सिद्धान्त-कौमुदी

अत उत्सार्वधातुके ६८०, ६।४।११०

उप्रत्ययान्तस्य कृञोऽकारस्य उः स्यात् सार्वधातुके क्ङिति। कुरुतः॥

न्यासः

अत उत्सार्वधातुके। , ६।४।११०

"उकारप्रत्ययान्तस्य" इत्यादि। उकारः प्रत्ययोऽन्तो यस्य स तथोक्तः। उकारप्रत्ययान्तश्च करोतिः सार्वधातुकत्वं न व्यभिचरति, अनेनाभिप्रायेणाह--"सार्वधातुकग्रहणं किम्()" इति? "भूतपूर्वेऽपि" इत्यादि। असति सार्वधातुकग्रहणे करोतेरुकारप्रत्ययान्तस्य क्ङिति प्रत्यये परत उत्त्वमुच्यमानं यत्र क्ङित्? सार्वधातुकं परभूतं तत्रैव स्यात्()--कुरुतः, कुर्वन्तीत्यादिषु; कुर्वित्र हेर्लुकि कृते क्ङित्प्रत्ययस्याभावात्? "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणप्रतिषेधात्तु न स्यात्()। तस्माद्भूतपूर्वेऽपि सार्वधातुके यथा स्यादित्येवमर्थं सार्वधातुक्ग्रहण्()। अथ तपरकरणं किमर्थम्(), यावता यद्यपि भाव्यमान उकारः सवर्णानां ग्राहको भवति, तथाप्यान्तरतम्यान्मात्रिकस्थ स्थाने मात्रिक एव भविष्यति? इत्यत आह--तपरकरणम्()" इत्यादि। असति हि तपरकरण उकारप्रत्ययमाश्रित्य "सार्वधातुकार्धधातुकयोः" ७।३।८४ इति गुणे कृते रपरत्वे च यदुत्त्वं तस्योकारस्य "पुगन्तलघूपधस्य च" ७।३।८६ इति गुणः स्यात्()। तस्मात्? तपरकरणं क्रियते--ह्रस्वस्यैव श्रवुणं यथा स्यात्(), लक्षमान्तरेण यो दीर्घः। प्राप्नोति स मा भूदिति॥

बाल-मनोरमा

अत उत्सार्वधातुके २९८, ६।४।११०

अत उत्। उप्रत्ययान्तस्येति। "उतश्च प्रत्यया"दित्यतस्तदनुवृत्तेरिति भावः। अकारस्य उत्त्वे कृते तस्य लघूपधगुणमाशङ्क्य आह---तपरेति। इदं स्थानिवत्सूत्रे भाष्ये स्पष्टम्। विदाङ्कुरुतामिति। विदाङ्कुर्वन्त्वित्यपि ज्ञेयम्। "न भकुर्छुरा"मिति निषेधात् "हलि चे"ति दीर्घो न। हेर्लुगिति। तर्हि सार्वधातुकाऽभावात्कथमुत्त्वमित्यत आह--आभीयत्वेनेति। विदांकुर्विति। विदांकुरुतात् विदांकुरुतम् विदांकुरुत। विदांकरवाणीति। आटः पित्त्वेन ङित्त्वाऽभावादुकारस्य गुण इति भावः। विदांकरवाव विदांकरवाम। लङ()आह---अवेदिति। हल्ङ्यादिना सिपो लोपे विशेषमाह---

तत्त्व-बोधिनी

अत उत्सार्वधातुके २५८, ६।४।११०

क्ङिति किम्?। करोति। करोषि। लुकोऽसिद्धत्वादिति। सार्वधातुकग्रहणमुत्तरार्थमेव नात्राऽऽवश्यकम्। "इह भूतपूर्वगत्या सार्वधातुकपरत्वामाश्रीयते" इति वृत्तिमते त्वसिद्धत्ववर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयम्।

---

सूत्रम्

काशिका-वृत्तिः

श्नसोरल्लोपः ६।४।१११

श्नस्य अस्तेश्च अकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। रुन्धः। रुन्धन्ति। भिन्तः। भिन्दन्ति। अस्तेः स्तः। सन्ति। क्ङिति इत्येव भिनत्ति। अस्ति। श्नसोः इति आकारस्य पररूपत्वं शकन्ध्वादिसु द्रष्टव्यम्।

लघु-सिद्धान्त-कौमुदी

श्नसोरल्लोपः ५७७, ६।४।१११

श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति। स्तः। सन्ति। असि। स्थः। स्थ। अस्मि। स्वः। स्मः।

न्यासः

श्नसोरल्लोपः। , ६।४।१११

"रुन्धः" इति। "झषस्तथोर्धोऽधः" ८।२।४० इति तकारस्य धकारः। "स्तः" इति। अदादित्वाच्छपो लुक्()। अथ श्नसोरिति कोऽयं निर्देशः, यावता "अकः सवर्णे दीर्घः" (६।१।१०१) इति दीर्घत्वे कृते "श्नसोः" इति निर्देशेन भवितव्यम्()? इत्याह--"श्नसोरित्याकारस्य पररूपत्वम्()" इत्यादि। अत्र तपरकरणं किमर्थम्(), आस्ताम्(), आसन्नित्यत्राडागमस्य मा भूदिति चेत्()? नैतदस्ति; इह हि लङि कृते लावस्थायामाडागमात्पूर्वमन्तरङ्गत्वाल्लादेशः क्रियते। तत्र कृते विकरणः कृताकृतप्रसाङ्गित्वादाडागमं बाधते। आडागमस्य त्वशब्दान्तरप्राप्तेरनित्यत्वम्()। तथा हि कृते विकरणे विकरणान्तस्याङ्गस्य तेन भवितव्यम्(), अकृते धातुमात्रस्य। कृते विकरणे यद्यप्याडागमाकारलोपयोद्र्वयोरपि कृताकृतप्रसङ्गित्वेन नित्यत्वम्(), तथापि परत्वादकारलोपः क्रियते, तस्मिन्? कृते तस्यासिद्धत्वादाट्(), तस्यासिद्धत्वादेव च लोपो न भविष्यतीति किं तपरकरणेन? एवं तह्र्येतज्ज्ञापयति--"आबाच्छास्त्रीयमसिद्धत्वमनित्यम्()" इति। तेन "वुग्युटावुवङ्यणोः सिद्धौ भवतः" इत्येतद्वक्तव्यं न वक्तव्यं भवति॥

बाल-मनोरमा

श्नसोरल्लोपः ३००, ६।४।१११

श्नसोरल्लोपः। "अ"दिति लुप्तषष्ठीकं पदम्। श्न अस् अनयोद्र्वन्द्वात्षष्ठीद्विवचनम्। शकन्ध्वादित्वात् पररूपम्। श्नेति श्नम्प्रत्ययैकदेशनिर्देशः। "अत उत्सार्वधातुके" इत्यतः सार्वधातुके इत्यनुवर्तते, "गगमहने"त्यतः क्ङितीति। तदाह--श्नस्येत्यादिना।

तत्त्व-बोधिनी

श्नसोरल्लोपः २६०, ६।४।१११

श्नसोरल्लोपः। "अत उ" दिति सूत्रादत इत्यनुवत्र्याऽद्ग्रहणं त्यक्तुं शक्यमित्याहुः। श्नसोरिति। शकन्ध्वादित्वात्पररूपमित्याह-- श्नस्याऽस्तेश्चेति। श्नस्योदाहरणं [रुन्धः]। रुन्धन्तीत्यादि। क्ङिति किम्?। रुणद्धि। अस्ति। तपरकरणमास्तामासन्नित्यत्र ह्राडागमे कृते तस्य लोपो माभूदित्येतदर्थम्। निष्कर्षस्तु अनुपदं स्फुटीभविष्यति।

---

सूत्रम्

काशिका-वृत्तिः

श्नाऽभ्यस् तयोरातः ६।४।११२

श्ना इत्येतस्य अभ्यस्तानां च अङ्गानाम् आकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। लुनते। लुनताम्। अलुनत। अभ्यस्तानाम् मिमते। मिमताम्। अमिमत। संजिहते। संजिहताम्। समजिहत। श्नाभ्यस् तयोः इति किम्? यान्ति। वान्ति। आतः इति किम्? बिभ्रति। क्ङिति इत्येव, अलुनात्। अजहात्। आद्ग्रहणं स्पष्टार्थम्।

लघु-सिद्धान्त-कौमुदी

श्नाभ्यस्तयोरातः ६२२, ६।४।११२

अनयोरातो लोपः क्ङिति सार्वधातुके। जहति। जहौ। हाता। हास्यति। जहातु, जहितात्, जहीतात्॥

न्यासः

श्नाभ्यास्तयोरातः। , ६।४।११२

"लुनते" इति। "आत्मनेपदेष्वनतः" ७।१।५ इत्यादेशः। "लुनताम्()" इति। लोट्? "आमेतः" ३।४।९०। "अलुनत" इति। लङ। मिमते" इति। "माङ माने" (धा।पा।१०८८) ["माने शेब्दे च"--धा।पा।] अभ्यासस्य "भृञामित्()" ७।४।७६ इतीत्वम्()। एवं "सञ्जिहते" इत्यत्रापि "ओहाङ गतौ" (धा।पा।१०८९) इत्यस्य। "बिभ्रति" इति। पूर्वादित्वम्()। "अलुनात्()" इति। ननु चासति क्ङितीत्यस्मिन्नीत्वेनात्र भवितव्यम्(), तत्? कुतो लोपस्य प्रसङ्ग? नैतदस्ति; ईत्वमपि हि क्ङितीत्यनुवत्र्यम्(), तत्र यदि "क्ङिति" इति नानुवत्र्तते तदा स्यादेव लोपः। नन्वाद्ग्रहणं किमर्थम्(), "श्नाभ्यस्तयोरतः" इत्येवोच्येत, एवं ह्येकमात्रया लघु भवति? इत्यत आह--"आद्ग्रहणं स्पष्टार्थम्()। जगर्तेः "जक्षित्यादयः षट्()" ६।१।६ इत्यभ्यस्तसंज्ञायामपि ऋकारलोपो न भवति--जाग्रतीति। एतच्च श्नेत्यकारान्तेन साहचर्यादभ्यस्तस्याकारान्तस्यैव ग्रहणाल्लभ्यते॥

बाल-मनोरमा

श्नाभ्यस्तयोरातः ३१३, ६।४।११२

श्नभ्यस्तयोरातः। "गमहने"त्यतो लोपः क्ङितीत्यनुवर्तते। "अत उ"दित्यतः सार्वधातुके इति। तदाह--अनयोरिति। स्नाप्रत्ययस्य, अभ्यस्तस्य चेत्यर्थः। दरिद्रतीति। जक्षित्यादित्वादभ्यस्तत्वात् "अदभ्यास्ता"दिति झस्य अदादेशे आकारलोपः। दरिद्रासि दरिद्रिथः। दरिद्रिथ। दरिद्रामि दरिद्रिवः दरिद्रिमः। लिट()आह-- अनेकाच्त्वादामिति। इदं च "कास्प्रत्यया"दिति सूत्रभाष्ये स्पष्टम्। दरिद्रांचकारेति। आमि सवर्णदीर्घः। कैयटमतमाह-- आत इति। "आत औ णलः" इत्त्र प्रथमातिक्रमे कारणाऽभावादोकार एव विधातुमुचितः। वृद्धौ स्तयां तावतैव ययौ इत्यादिसिद्धेः। तस्मादौकराविधानं दरिद्राधातोर्णलि "दरिद्रातेराद्र्धधातुके लोपो वक्तव्यः" इत्याल्लोपे "ददरिद्रौ" इत्यौकारश्रवणार्थं संपद्यते। ओकारविधाने तु आल्लोपे सति वृद्धेसंभवाद्दरिद्रातेर्लिटि आम्नेति विज्ञायते। आमि सति णल एवाऽप्रसक्तेरित्यर्थः। इदं च "वस्वेकाजाद्धसा"मिति सूत्रभाष्ये द्वनितं, कैयटेन स्पष्टीकृतम्। तन्निर्मूलमेवेति। ददरिद्र। ददरिद्रौ ददरिद्रिव ददरिद्रिम। आद्र्धधातुके विवक्षिते इति। "आतो लोप इटि"चे त्याल्लोपो दरिद्रातेर्भवन् क्ङिति अक्ङिति च अजादावाद्र्धधातुके भवति। स च आद्र्धधातुके विवक्षिते ततः प्रागेव भवतीति वक्तव्यमित्यर्थः। तेन दरिद्रातीति दरिद्रः। आल्लोपे कृते पचाद्यच् सिध्यति। आद्र्धधातुके परे आल्लोपप्रवृत्तौ तु "श्याद्व्यधे"त्यादन्तलक्षमो णप्रत्ययः स्यात्। ततश्च कृते णप्रत्यये आल्लोपं बाधित्वा "आतो युक् चिण्कृतोरिति युकि "दरिद्राय" इति स्यात्। आद्र्धधातुके विवक्षिते ततः प्रागेव आल्लोपे तु कृते आदन्तत्वाऽभावाण्णप्रत्ययाऽभावे पचाद्यच्प्रत्ययो निर्बाधः। तदिदं भाष्ये स्पष्टम्। लुङि वेति। लुङि आल्लोपो वा वक्तव्य इत्यर्थः। "अद्यतन्यां वेति वक्तव्य"मिति वार्तिकार्थसङ्ग्रहोऽयम्। अद्यतन्यामित्यनेन अद्यतनभूतार्थकविहितलुङ्()विभक्तिर्विवक्षिता, भाष्ये तस्या एवोदाहरमात्। सनि ण्वुलि ल्युटि च नेति। एतेषु दरिद्रातेराल्लोपो नेति वक्तव्यमित्यर्थः। ण्वुलि यथा-- दरिद्रायकः। आतो युक्। ल्युटि यथा-- दरिद्राणः। अनादेशे कृते आल्लोपाऽभावात्सवर्णदीर्घः। सनि यथा-- दिदरिद्रासति। अनन्तरस्येति न्यायादस्य वार्तिकप्राप्तस्यैव लोपस्याऽयं निषेधः। तेन "तनिपतिदरिद्राणानुपसङ्ख्यान"मिति दरिद्रातेः सन इट्पक्षे "आतो लोप इटि चे"त्याल्लोपो भवत्येव--- दिदरिद्रिषति। तासि इटि उदाह्मतव#आर्तिकेन आल्लोपः। "आतो लोप इटिचे" त्यस्य संभवेऽपि न्यायत्वादत्र वार्तिकोपन्यासः। दरिद्रिष्यति। दरिद्रातु--दरिद्रितात् दरिद्रिताम् दरिद्रतु। दरिद्रितम् दरिद्रित। दरिद्राणि दरिद्राव दरिद्राम। लङ()आह--- अदरिद्रादिति। इत्त्वं मत्वा आह-- अदरिद्रितामिति। अदरिद्रुरिति। जक्षित्यादित्वेन अभ्यस्तत्वाज्जुसिति भावः। अदरिद्राः अदरिद्रितम् अदरिद्रित।अदरिद्राम् अदरिद्रव अदरिद्रिम। दरिद्रियादिति। विधिलिङि सार्वधातुकत्वादित्त्वमिति भावः। आशीर्लङ्याह-- दरिद्र()आदिति। आतो लोप इति भावः। लुङि आतो लोपपक्षे आह-- अदरिद्रीदिति। अदरिद्रिष्टामित्यादि। आल्लोपाऽभावपक्षे त्वाह-- इट्सकाविति। अदरिद्रिष्यत्। चकासृ दीप्ताविति।

ऋदित्। सेट्। चकास्ति चकास्त इतिसिद्धवत्कृत्याह-- झस्य अदिति। जक्षित्यादित्वेन अभ्यस्तत्वादिति भावः। चकासतीति। चकास्सि चकास्थः चकास्थ। चकास्मि चकास्वः चकास्मः। चकासांचकारेति। अनेकाच्त्वादामिति भावः। चकासिता।चकासिष्यति। चकास्तु [चकास्तात्] चिकास्ताम् चकासतु। हेर्धिभावे चकास् धि इति स्थिते "धिचे"ति सलोप इति सिद्धन्तः। तत्र मतान्तरमाह---सिच एवेत्येके इति। "धिचे"ति लोपः सिच एवेत्येके मन्यन्ते इत्यर्थः। "धिसकारे सिचो लोपश्चकाद्धीति प्रयोजन"मिति वार्तिकादिति तदाशयः। अस्मिन्पक्षे सकारस्य जश्त्वेन दकारः। तदाह-- चकाद्धीति। "एके" इत्यस्वरसोद्भावनम्।तद्बीजं तु "धिसकारे सिचो लोपः इति वार्तिकं प्रत्याख्याय सकारमात्रस्य "धि चे" ति लोपस्याभ्युपगमः।तदाह-- चकाधीत्येव भाष्यमिति। चकास्तात् चटकास्तम् चकास्त। चकासानि चकासाव चकासाम। लङि अ चकास् त् इति स्थिते--

तत्त्व-बोधिनी

श्नाभ्यस्तयोरातः २७३, ६।४।११२

श्नभ्यस्त।क्रीणन्ति।क्रीणते। पुनन्ति। पुनते। दधति दधते। क्ङिति किम्?। क्रीणाति। पुनाति। दधाति। आतः किम्?। बिभ्रति। ओ इत्येव सिद्धे इति। प्रथमत्यागे मानाऽभावादिति भावः। निर्मूलमेवेति। यत्तु व्याख्यातृभिः समर्थ्यते-- "आमोऽभावे आतो लोपे कृते आदन्तत्वाऽभावादौत्वं नेति। तन्न। "आत औ णलः" इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेराल्लोपेऽपि श्रवणार्थं सदामभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः, स्वग्रन्थेन च विरोधात्। तत्कथमौत्वस्याऽप्रवृत्तिर्भवेत्यदप्युक्तम्-- ओकारौकारयोर्द्विमात्रत्वाऽविशएषादौकारविधानमिति तदपि स्थवीयः। तस्मिन्पक्षे आमो दुर्वारत्वप्रसङ्गात्।

* दरिद्रातेराद्र्धधातुके विवक्षिते आतोलोपो वाच्यः। विवक्षित इति। तेन दरिद्रातीति दरिद्र इति पचाद्यजेव भवति। परसप्तम्यां तु "श्याद्व्यधे"त्यादन्तलक्षणो णः स्यात्। सति तु तस्मिन् "आतो युक् चिण्कृतो"रिति युकि दरिद्राय इति स्यादिति भावः। सनि ण्वुलीति। एतेष्वालोपो नेत्यर्थः। दिदरिद्रासति। दरिद्रायकः। दरिद्राणम्। अदरिद्रुरिति। "सिजभ्यस्ते"ति झेर्जुस्। "लङः शाकटायनस्यैवे"त्यादन्तलक्षणो विकल्पस्तु न भवति, परत्वात् "स्नाभ्यस्तयो"त्याल्लोपे आकारान्तस्यैवाऽभावात्। "ई हल्यघो"रित्यात ईत्त्वमिह न शङ्क्यमेव। झेर्जुसि हलादिपरत्वाऽभावादिति भावः। ननु दरिद्रा झि इति स्थिते जुसः प्रागेव आल्लोपात्परत्वादपवादत्वाच्च ईत्वं स्यात्। मैवम्। अकृतव्यूहपरिभाषाया जागरूकत्वात्। ईत्त्वनिमित्तं हि हलादित्वं, तच्च विनासोन्मुखं, जुसो भावित्वात्। झस्य अदिति। "अदभ्यस्ता" दित्यनेन। तिप्यनस्तेः। पदान्तस्य किम्?। चकास्ति। सस्येति किम्??। वशेर्लङि तिपि अवट्। तिपि किम्?। क्विपि चकाः। अनस्तेः किम्?। सर्वम्। इदम्। "आ" इति लङि तिपि अस्ते रूपम्। "बहुलं छन्दसी"ति ईट् न।

---

सूत्रम्

काशिका-वृत्तिः

ई हल्यधोः ६।४।११३

श्नान्तानाम् अङ्गानाम् अभ्यस्तानां च घुवर्जितानाम् आतः ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः। लुनीतः। पुनीतः। लुनीथः। पुनीथः। लुनीते। पुनीते। अभ्यस्तानाम् मिमीते। मिमीषे। मिमीध्वे। संजिहीते। संजिहीषे। संजिहीध्वे। हलि इति किम्? लुनन्ति। मिमते। अघोः इति किम्? दत्तः। धत्तः। क्ङिति इत्येव, लुनाति। जहाति।

लघु-सिद्धान्त-कौमुदी

ई हल्यघोः ६२१, ६।४।११३

श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ न तु घोः। जहीतः॥

न्यासः

ई हल्यघोः। , ६।४।११३

"लुनीतः, पुनीतः; "लुनीथ, पुनीथ" इति। तस्थसौ। "मिमीते" इति। आत्मनेपदैकवचनम्()। "मिमीषे" इति। "थासः स" ३।४।८०। "मिमीध्वम्()" इति। ध्वम्()। "लुनन्ति, पुनन्ति" इति। झिप्रत्ययः। ननु च यद्यप्यजादावपीत्वं स्यात्(), लोपोऽनवकाशः स्यात्? अतोऽनवकाशत्वाल्लोप ईत्वं बाधिध्यते, तत्? किं "हलि" इत्यनेन? नैतदस्ति; असति हल्ग्रहणे वचनादुभयं स्यात्()। घुसंज्ञकेष्वाल्लोपः प्रसज्येत। तस्मात्? "हलि" इति वक्तव्यम्()। "दत्त#H" इति। "खरि च" ८।४।५४ इति चत्र्वम्()। "धत्तः" इति। धाञो द्विर्वचने कृते "अभ्यासे चर्च्च" ८।४।५३ इत्यभ्यासस्य जशत्वे च "दधस्तथोश्च" ८।२।३८ इति भष्भावेन दकारस्य धकारः, धातोस्त्वाकारलोपे कृते जश्त्वचर्त्वे॥

बाल-मनोरमा

ई हल्यघोः ३२७, ६।४।११३

ई हल्यघोः। "ई" इति लुप्तप्रथमाकम्। "श्नाब्यस्तयोरातः" इत्यनुवर्तते। "गमहने"त्यतः क्ङितीति, "अत उत्सार्वधातुके" इत्तः सार्वधातुके इत्यतः सार्वधातुके इति चानुवर्तते। तदाह-- श्नाभ्यस्तयोरित्यादिना। आल्लोप इति। "अजादौ क्ङिति सार्वधातुके" इति शेषः। मिमते इति। अभ्यस्तत्वाददादेशः। मिमीषे मिमाथे मिमीध्वे। मिमे मिमीवहे मिमीमहे। ममे ममाते ममिरे। ममिषे ममाथे ममिद्वे। ममे ममिवहे ममिमहे। माता। मास्यते। मिमीताम् मिमाताम् मिमताम्। मिमीष्व मिमाथाम् मिमीध्वम्। मिमै मिमावहै मिमामहै। अमिमीत अमिमाताम् अमिमत। अमिमीथाः अमिमाताम् अमिमीध्वम्। अमिमि अमिमीवहि अमिमीमहि। मिमीत मिमीयाताम् मिमीरन्। मिमीथाः। मिमीयाथाम् मिमीध्वम्। मिमीय मिमीवहि मिमीमहि। मासीष्ट। अमास्त अमासाताम् अमासत। अमास्थाः अमासाथाम् अमाध्वम्। अमासि अमास्वहि अमास्महि। अमास्यत। ओ हाङ्गताविति। अनिट्। ओकारः ककारश्च इत्। जहातीति। श्लौ द्वित्वे अभ्यासचुत्वमिति भावः। तसादौ "श्नाभ्यस्तयोरातः" इति नित्यमीत्वे प्राप्ते--

तत्त्व-बोधिनी

ई हल्यघोः २८३, ६।४।११३

ई हल्यघोः। श्नाभ्यस्तयोरिति। लुनीते। पुनीते। क्ङितीति किम्?। लुनति। अघोः किम?। धत्तः। दत्तः। मिमीते इति। "घुमास्थे"तीत्त्वमिह न प्रवर्तते, तत्रार्द्धधातुक इत्यनुववृत्तेः। अन्यथा मातः माथः, गाते गासे इत्यादावतिप्रसङ्गात्। अत एव काशिकायामुक्तमार्द्धधातुक इत्यधिकारो न ल्यपीति योगं यावदिति।

---

सूत्रम्

काशिका-वृत्तिः

इद् दरिद्रस्य ६।४।११४

दरिद्रातेः हलादौ सार्वधातुके क्ङिति परतः इकरादेशो भवति। दरिद्रितः दरिद्रिथः। दरिद्रिवः। दरिद्रिमः। हलि इत्येव, दरिद्रति। क्ङिति इत्येव, दरिद्राति। दरिद्रातेरार्धधातुके लोपो वक्तव्यः। सिद्धश्च प्रत्ययविधौ भवति इति वक्तव्यम्। दरिद्राति इति दरिद्रः। आकारान्तलक्षणो णप्रत्ययो न भवति, पचादित्वादजेव भवति। न दरिद्रायके लोपो दरिद्राणे च

नेष्यते। दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा। अद्यतन्यां वेति वक्तव्यम्। अदरिद्रीत्, अदरिद्रासीत्। दरिद्रस्य इति निर्देशे छान्दसं ह्रस्वत्वम् द्रष्टव्यम्।

न्यासः

इद्दरिद्रस्य। , ६।४।११४

"दरिद्रति" इति। "जक्षित्यादयः षट्()" ६।१।६ इत्यभ्यस्तसंज्ञा, तेनाभ्यस्तलक्षण आकारलोपो भवति। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--"श्नसोरल्लोपः" ६।४।१११ इत्यतो मण्डूकप्लुतिन्यायेन लोपग्रहणमनुवर्त्त्य सार्वधातुके, हलि, क्ङितत्येतान्? विशेषान्? निवर्त्त्य दरिद्रातेः सामान्येनेत्त्वलोपौ विधातव्यौ। न चैवं सति तौ सङ्करेम प्रसजतः, यस्माद्वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोर्योगयोः शेषभूतम्()। सा च व्यवस्थितविभाषा। तेन यत्रैवेष्यते यत्? तत्? तत्रैव भविष्यति, नान्यत्रेति। "सिद्धश्च प्रत्ययविधौ" इति। तथासौ कत्र्तव्यौ यथा प्रत्ययविधौ=प्रत्ययविधानकाले, सिद्धः=निष्पन्नो भवति। एतदुक्तं भवति--आर्धधातुके प्रत्यये विषयभूतेऽनुत्पन्ने एव लोपः कत्र्तव्य इति। एवं ह्रसौ प्रत्ययविधौ सिद्धो भवति, नान्यथा। "सिद्धश्च प्रत्ययविधौ" इत्यस्योपादाने यत्? फलं तद्? "आकारान्तलक्षणः" इत्यादिना दर्शयति। यद्यार्धधातुक उत्पन्ने सति लोपः क्रियते, तदा "श्याद्व्यधारुआउ" ३।१।१४१ इति सूत्रेण णप्रत्ययः स्यात्(); दरिद्रातेराकारान्तत्वात्()। ततश्च "आतो युक्? चिण्कृतोः" ७।३।३३ इति युकि कृते, "दरिद्राय" इत्यनिष्टं रूपं स्यात्()। "सिद्धश्च प्रत्ययविधौ" इत्युच्यमाने तु प्रागेव प्रत्ययोत्पत्तेर्लोपः, तस्मिन्? स्यनाकारान्तत्वात्? पचाद्यजेव भवति। तेन "दरिद्रः" इतीष्टं सिद्धं भवति। "न दरिद्रायके लोपः" इत्यादिना श्लोकेन यत्राद्र्धधातुके लोपो नेष्यते यत्र विकल्पेन चेष्यते कैश्चित्(), तद्दर्शयति। "दरिद्रायके" इत्यत्र ण्वुलन्ते शब्दे सिसाधयिषिते लोपो नेष्यते। दरिद्रातीति दरिद्रायाक इति। पूर्ववद्युक्()। "दरिद्राणे" इति। अत्रापि ल्युङते लोपो नेष्यते। "दिदरिद्रासतीत्येके" इति। सनि कृते द्विर्वचनम्(), अभ्यासकार्यम्()। "दिदरिद्रिषतीति वा" इति। "सनीवन्तर्ध" ७।२।४९ इत्यत्र "तनिपतिदरिद्राणाम्()" इत्युपसंख्यानाद्विकल्पेनेट्()। "अद्यतन्याम्()" इति। लुङीत्यर्थः "लुङोऽद्यतनि" इति पूर्वाचार्यसंज्ञा। "अदरिद्रासौत्()" इति। "यमरमनमातां सक्? च" ७।२।७३ इति सगिटौ, "अस्ति सिचोऽपृक्ते" ७।३।९६ इतीट्(), "इट ईटि" ८।२।२८ इति सिचो लोपः। ननु च "आतो धातोः" ६।४।१४० इत्याकारालोपे कृते दरिद्र इति निर्देशेन भवितव्यम्(), तत्? कथं दरिद्रस्येति निर्देश इत्याह--"दरिद्रस्येति निर्देशः" इत्यादि। "छन्दोवत्सूत्राणि भवन्ति" इत्यतः "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्()" ६।३।६२ इति बहुलवचनाच्छान्दसमिह ह्रस्वत्वम्()। तपकरणं विस्पष्टार्थम्()। भाव्यमानतया सवर्णाग्रहणादेव दीर्घो न भविष्यति॥

बाल-मनोरमा

इद्दरिद्रस्य ३१२, ६।४।११४

इद्दरिद्रस्य। सौत्रो ह्रस्वः। "गमहने"त्यतः क्ङितीत्यनुवर्तते। "ई हल्यघो"रित्ते हलीति, "अत उदि"त्यतः सार्वधातुके इति। तदाह-- दरिद्रातेरिति। "श्नाभ्यस्तयो"रित्याल्लोपाऽपवादः। अलोऽन्त्यस्ये"त्यन्त्यस्य इकारः। दरिद्रित इति। "सार्वधातकमपि"दितितसो ङित्त्वादाकारस्य इकारः।

तत्त्व-बोधिनी

इद्दरिद्रस्य २७२, ६।४।११४

इद्दरिद्रस्य। "इद्दरिद्र" इतिवक्तुमुचितम्।

---

सूत्रम्

काशिका-वृत्तिः

भियो ऽन्यतरस्याम् ६।४।११५

भी इत्येतस्य अङ्गस्य अन्यतरस्याम् इकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः। बिभितः, बिभीतः। बिभिथः, बिभीथः। बिभिवः, बिभीवः। बिभिमः, बिभीमः। हलादौ इत्येव, विभ्यति। क्ङिति इत्येव, बिभेति। सार्वधातुके इत्येव, भीयते।

लघु-सिद्धान्त-कौमुदी

भियोऽन्यतरस्याम् ६१२, ६।४।११५

इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके। बिभितः, बिभीतः। बिभ्यति। बिभयाञ्चकार, बिभाय। भेता। भेष्यति। बिभेतु, बिभितात्, बिभीतात्। अबिभेत्। बिभीयात्। भीयात्। अभैषीत्। अभेष्यत्॥ ह्री लज्जायाम्॥ ३॥ जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार, जिह्राय। ह्रेता। ह्रेष्यति। जिह्रेतु। अजिह्रेत्। जिह्रियात्। ह्रीयात्। अह्रैषीत्। अह्रेष्यत्॥ पॄ पालन पूरणयोः॥ ४॥

न्यासः

भियोऽन्यतरस्याम्?। , ६।४।११५

"हलादौ सार्वधातुके क्ङिति परतः" इति। यद्यप्येते विशेषाः पूर्वस्मिन्निवर्तिताः, तथापीह मण्डूकप्लुतिन्यायेनानुवर्त्तन्त इत्यभिप्रायः। "बिभीतः" इति। "ञि भी भये" (दा।पा।१०८४) जुहोत्यादित्वाच्छपः श्लुः। हलादावित्येव--बिभ्यतीति। इत्त्वविधानसामर्थ्यादेव "एरनेकाचः" ६।४।८२ इति यणादेशो न स्यात्()। सार्वधातुक इत्येव--भीतः, भीतवान्()। क्ङितीति किम्()? बिभेति॥

बाल-मनोरमा

भियोऽन्यतरस्याम् ३२२, ६।४।११५

भियोऽन्यतरस्याम्। "इद्दरिद्रस्ये"त्यत इदिति, "गमहने"त्यतः क्ङितीति, "ई हल्यघो"रित्यतो हलीति, "अत उ"दित्यतः सार्वधातुके इति चानवर्तते इत्यभिप्रेत्य शेषं पूरयति-- इकारः स्यादित्यादिना। बिभ्यतीति। "अदभ्यस्ता"दित्यत्। बिभयामिति। "भीह्रीभृहुवां स्लुवच्चे"ति श्लुवत्त्वाद्द्वित्वादीति भावः। बिभायेति। बिभ्यतुः। बिभयिथ--बिभेथ। बिभ्यिव बिभ्यिम। बेतति। भेष्यति। बिभेतु-- बिभितात्--बिभीतात् बिभिताम् बिभीताम्--बिभ्यतु। बिभिहि--बिभीहि--बिभितात्-- बिभीतात्, बिभीतम्--बिभीतम्, बिभित--बिभीत। बिभयानि बिभयाव बिभयाम। अबिभेत्, अबिभिताम्--अबिभीताम्, अबिभयुः। अबिभेः, अबिभितम्--अबिभीतम्, अबिभित-अबिभीत। अबिभयम् अबिभिव--अबिभीव अबिभम--अबिभीम। बिभियात्-- बिभीयादित्यादि। आशीर्लिङ [भीयात्] भीयास्ताम्। अभैषीत्। अभेष्यत्। ह्यी लज्जायामिति। अनिट्। जिहियतीति। "अदभ्यस्ता"दित्यत्। इयङ्। जिह्ययामिति। जिह्ययामिति। ह्येता। ह्येष्यति। जिह्येतु--जिह्यीतात्। जिह्यीहि। जिह्ययाणि। अजिह्येत्। जिह्यीयात्। ह्यीयात्। अह्रैषीत्। अह्येष्यत्। पृ()धातुः सेट्। लटस्तिपि शपः स्लौ द्वित्वे पृ? पृ? इति स्थिते --

तत्त्व-बोधिनी

भियोऽन्यतरस्याम् २७८, ६।४।११५

भियोऽन्यतरस्याम्। सार्वधातुके किम्?। भीयते। बिभीये। हलादौ किम्?। बिभ्यति। क्ङिति किम्?। बिभेति। केचिदत्र

हलादौ क्ङितीत्येतन्नाऽतीवोपयुज्यते, इत्वविधानस्य बिभित इत्यादौ चरितार्थत्वात्, बिभ्यति बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

जहातेश् च ६।४।११६

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति सार्वधातुके परतः। जहितः, जहीतः। जहिथः, जहीथः। हलादौ इत्येव, जहति। क्ङिति इत्येव, जहाति। सार्वधातुके इत्येव, हीयते। जेहीयते। पृथ्ग्योगकरणम् उत्तरर्थम्।

लघु-सिद्धान्त-कौमुदी

जहातेश्च ६२०, ६।४।११६

इद्वा स्याद्धलादौ क्ङिति सार्वधातुके। जहितः॥

न्यासः

जहातेश्च। , ६।४।११६

ईत्वापवाद इत्त्वमारभ्यते; अन्यतरस्यांग्रहणानुवृत्तेः। पक्षे तदपि भवत्येव। सार्वधातुक इत्येव--हीनः, हीनवान्()। इह केचित्? "सार्वधातुके" ६।४।११० इत्यस्यानुवृत्तिं()त प्रत्याचक्षते। कथम्()? "हलि परत ईत्त्वेत्त्वे प्राप्नुतः, द्विर्वचनं च; तत्र यदि परत्वादीत्त्वेत्त्वे स्यातां ततश्चेवर्णन्तताभ्यासस्य स्यात्(); तस्मादभ्यस्त ग्रहणमनुवत्र्तनीयम्(), त()स्मश्चानुवत्र्तमाने सार्वधातुकानुवृत्तिरपार्थिका" इति। एतच्चायुक्तम्(); अन्तरङ्गत्वात्()। "द्विर्वचनेनैव प्रागीत्त्वेत्त्वाभ्यां भवितव्यम्(), तत्? कुतोऽभ्यासस्येवर्णान्ततताप्रसङ्गः! अन्तरङ्गत्वन्तु द्विर्वचनस्याल्पापेक्षत्वात्()। तद्धि श्लुमात्रमपेक्षते। इत्त्वेत्त्वयोश्च बह्वपेक्षत्वाद्बहिरङ्गता, बहवपेक्षा च; तयोः पुनरङ्गस्य हलादौ क्ङिति सार्वधातुके विधानात्()। जहातेरिति निर्देशात्? जिहीत इत्यतद्र जिहातेर्न भवति। "पृथग्योगकरणमुत्तरार्थम्()" इति। "आच हौ" ६।४।११७ इत्येष विधिर्जहातेरेव यता स्यात्(), बिभेतेर्मा भूदिति॥

बाल-मनोरमा

जहातेश्च ३२८, ६।४।११६

जहातेश्च। "इद्दरिद्रस्ये"त्यत इदिति, "भियोऽन्यतरस्या"मित्यतो हलीति चत्यभिप्रेत्य शेषं पूरयति--इत्स्याद्वेति। जहतीति। अब्यस्तत्वाददादेशे "श्नाब्यस्तयो"रित्याल्लोपः। जहाविति। जहतुः जहुः। जहिथ--जहाथ जहथुः दजह। जहौ जहिव जहिम। हाता। हास्यति। जहितादिति। जहिताम्--जहीताम् जहतु।

तत्त्व-बोधिनी

जहातेश्च २८४, ६।४।११६

जहातेश्च। क्ङितीति किम्?। जहाति। सार्वधातुके किम्?। हीयते।

---

सूत्रम्

काशिका-वृत्तिः

आ च हौ ६।४।११७

जहातेराकारश्च अन्तादेशो भवति इकारश्च अन्यतरस्यां हौ परतः। जहाहि, जहिहि, जहीहि।

लघु-सिद्धान्त-कौमुदी

आ च हौ ६२३, ६।४।११७

जहातेर्हौ परे आ स्याच्चादिदीतौ। जहाहि, जहिहि, जहीहि। अजहात्। अजहुः॥

न्यासः

आ च हौ। , ६।४।११७

चकार इत्त्वान्यतरस्यांग्रहणयोरनुकर्षणार्थः॥

तत्त्व-बोधिनी

आच हौ २८५, ६।४।११७

चादिदीताविति। अत एव भट्टिः प्रायुङ्क्त-- "जहिहि जहीहि जहाहि रामभार्या"मिति।

---

सूत्रम्

काशिका-वृत्तिः

लोपो यि ६।४।११८

लोपो भवति जहातेः यकारादौ क्ङिति सार्वधातुके परतः। जह्यात्, जह्याताम्, जह्युः।

लघु-सिद्धान्त-कौमुदी

लोपो यि ६२४, ६।४।११८

जहातेरालोपो यादौ सार्वधातुके। जह्यात्। एर्लिङि। हेयात्। अहासीत्। अहास्यत्॥ माङ् माने शब्दे च॥ ६॥

न्यासः

लोपो यि। , ६।४।११८

बाल-मनोरमा

लोपो यि ३३०, ६।४।११८

लोपो यि। "जहातेश्चे"त्यतो जहातेरिति, "श्नभ्यस्तयोरातः र" इत्यत आत इति, "अत उत्सार्वधातुके" इत्यतः सार्वधातुके इति चानुवर्तते। "यी"ति सप्तम्यन्तं सार्वधातुकविशेषणम्। तदादिविधिः। तदाह--जहातेरित्यादिना। "जहातेश्चे"त्यस्यापवादः। आशीर्लिङ्याह-- एर्लिङीति। अहासीदिति। "यमरमे"ति सगिटौ। अहास्यत्। डु दाञ्। उभयपदी। अनिट्। प्रणिददातीति। "नेर्गदे"ति णत्वम्। दत्त इति। ददा तस् इति स्थिते "अघो"रिति पर्युदासादीत्त्वाऽभावे "श्नाभ्यस्तयो"रित्याल्लोपः। ददतीति। अभ्यस्तत्वाददादेशे "श्नाभ्यस्तयो"रित्याल्लोप इति भावः। ददासि दत्थः दत्थ। ददामि दद्वः दद्मः। दत्ते इति। ददाते ददते। दत्से ददाथे दद्ध्वे। ददे दद्वहे दद्महे। ददौ इति। ददतुः दधुः। ददिथ--दधाथ ददथुः दद। ददौ ददिव ददिम। ददे ददाते ददिरे। ददिषे ददाथे ददिध्वे। ददे ददिवहे ददिमहे। दाता। दास्यति दास्यते। ददातु-- दत्तात् दत्ताम् ददतु। इति सिद्ध्वत्कृत्य देहि इत्यत्र आह--- घ्वसोरिति। दत्तात् दत्तम् दत्त। ददानि ददाव ददाम। दत्ताम् ददाताम् ददताम्। दत्स्व ददाथाम् दद्ध्वम्। ददै ददावहै ददामहै। लङ्याह--- अददादिति। अददुरिति। अददुरिति। अभ्यस्तत्वाज्जुस्। अददाः अदत्तम्। अदत्त। अददाम् अदद्व अदद्म। विधिलिङ्याह--दद्यादिति।

स्नाभ्यस्तयो"रित्याल्लोपः। आशीर्लिङि तु "एर्लिङी"त्येत्वमभिप्रेत्य आह--देयादिति। दासीष्ट। लुङ्याह--- अदादिति। "गातिस्थे"ति सिचो लुगिति भावः। अदाः अदातम् अदात। अदाम् अदाव अदाम। लुङ्यात्मनेपदे आह-- अदितेति। अदा स् त इति स्थिते "स्थाध्वोरिच्चे"ति दाधातोरन्त्यस्य इकारः। सिचः कित्त्वं च। कित्त्वान्न गुणः। "ह्रस्वादङ्गा"दिति सिचो लोप इति भावः। अदिषाताम् अदिषत। अदिथाः अदिषाथाम् अदिढ्वम्। अदिषि अदिष्विहि अदिष्महि। अदास्यत् अदास्यत्। डु धाञ्। ञित्त्वादुभयपदी। अनिट्। प्रणिदधातीति। "नेर्गदे"ति णत्वम्। तसि श्लौ द्वित्वे अभ्यासजश्त्वे " श्नाभ्यस्तयो"रित्याल्लोपे दध् तस् इति स्थिते--

तत्त्व-बोधिनी

लोपो यि २८६, ६।४।११८

लोपो यि। सार्वेति किम्??। हेयात्। प्रणिददातीति। "नेर्गदे"ति णत्वम्। दत्त इति। "श्नाभ्यस्तयो"रित्यालोपः। "अघो"रित्युक्तत्वादीत्त्वं तु न। अदादिति। "गातिस्थे"ति सिचो लुक्।

---

सूत्रम्

काशिका-वृत्तिः

घ्वसोरेद्धावभ्यासलोपश् च ६।४।११९

घुसंज्ञाकानाम् अङ्गानाम् अस्तेश्च एकारादेशो भवति हौ परतः अभ्यासलोपश्च। देहि। धेहि। अस्तेः श्नसोरल्लोपः ६।४।१११। इत्यकारलोपः, एधि। शिदयम् लोपः, तेन सर्वस्याभ्यासस्य भवति।

लघु-सिद्धान्त-कौमुदी

घ्वसोरेद्धावभ्यासलोपश्च ५८०, ६।४।११९

घोरस्तेश्च एत्त्वं स्याद्धौ परे अभ्यासलोपश्च। एत्वस्यासिद्धत्वाद्धेर्धिः। श्नसोरित्यल्लोपः। तातङ्पक्षे एत्वं न, परेण तातङा बाधात्। एधि, स्तात्। स्तम्। स्त। असानि। असाव। असाम। आसीत्। आस्ताम्। आसन्। स्यात्। स्याताम्। स्युः। भूयात्। अभूत्। अभविष्यत्॥ इण् गतौ॥ १८॥ एति। इतः॥

न्यासः

ध्वसोरेद्धावभ्यासलोपश्च। , ६।४।११९

"अभ्यासलोपश्च" इति धुसंज्ञकार्थमभ्यासलोपग्रहणम्(); न त्वस्त्यर्थम्(); अस्तेरभ्यासम्भवात्()। "देहि चेहि" इति। दाञ्()धाञोरेते रूपे। अन्येषान्तु घुसंज्ञकानामुदाहरणं न सम्भवति; विकरणेन हेव्र्यवधानात्()। असम्भवाच्च यथायोगम्()। तत्र "दो" इत्येतस्य श्यना हिशब्दो व्यवधीयते, दणो धेटस्तु शापा, देङः पुनरात्मनेपदित्वाद हेरसम्भवः। "एधि" इति। सकारस्यैत्वे कृते तस्यासिद्धत्वात्? "हुझलभ्यो हेर्धिः ६।४।१०१ इति धिभावः। ननु च "अलोऽन्त्यस्य" १।१।५१ इत्यलामन्त्यस्य लोपेन भवितव्यम्(), तत्? कथं सर्वस्याभ्यासस्य लोपो भवति? इत्यत आह--"शिदयम्()" इत्यादि। "लोपश्च" इत्यत्र द्वौ शकारौ निर्दिष्टौ। तत्रैको लोपस्य समबन्धी, द्वितीयस्तु विभक्तेः। यश्च लोपस्य सम्बन्धी तस्येत्संज्ञा प्रतिज्ञायत इति शिदयं लोपो भवति। तेन सर्वस्याभ्यासस्थ लोपो भवति। "आ च हौ" ६।४।११७ इत्यतो होग्रहणं मण्डूकप्लुतिन्यायेन शक्यतेऽनुवत्र्तयुतुम्()। तत्रान्यतरस्यांग्रहणेन सम्बद्धमिति तदनुवृत्तौ "अन्यतरस्याम्()" इत्येतस्याप्यनुवृत्तिरित्याशङ्का स्यात्(), अतस्तन्निवृत्त्यर्थं "हौ" इत्युक्तम्()। चकारस्य सन्नियोगर्थत्वाल्लोपो भवत्येत्त्वञ्च॥

तत्त्व-बोधिनी

ध्वसोरेद्धावभ्यासलोपश्च २६१, ६।४।११९

ध्वसोरेद्धा। एत्वमलोन्त्यस्य, लोपस्तु शित्त्वात्सर्वस्येति भाष्यादौ स्पष्टम्। देहि। धेहि। असिद्धत्वादाडिति। नन्वेवमाटोऽसिद्धत्वात् "श्नसो"रित्यल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेत्, अत्राहुः-- आभाच्छास्त्रस्याऽनित्यताज्ञापनाय तपरकरणम्। तेन "देभतु"रित्यादि सिद्धमिति। स्यादेतत्-- अत्र केचित्-- अद्ग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञापनार्थत्वं न सिध्येत्। न च "अत उ"दिति सूत्रस्थतपरकररणमेव ज्ञापनार्थमस्त्विति वाच्यम्, अस्येत्युक्तौ गौरवादर्द्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात्। तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अत एकहल्मध्ये ऽनादेशादेर् लिटि ६।४।१२०

लिटि परत आदेशः आदिर् यस्य अङ्गस्य न अस्ति तस्य एकहल्मध्ये असहाययोर् हलोर् मध्ये यो ऽकारस् तस्य एकारादेशो भवति, अभ्यासलोपः च लिटि क्ङिति परतः। रेणतुः। रेणुः। येमतुः। येमुः। पेचतुः। पेचुः। देमतुः। देमुः। अतः इति किम्? दिदिवतुः। दिदिवुः। तपरकरणं किम्? ररासे, ररासाते, ररासिरे। एकहल्मध्ये इति किम्? शश्रमतुः। शश्रमुः। तत्सरतुः। तत्सरुः। अनादेशादेः इति किम्? चकणतुः। चकणुः। जगणतुः। जगणुः। बभणतुः। बभणुः। लिटः आदेशविशेषणं किम्? इह अपि यथा स्यात्, नेमतुः। नेमुः। सेहे, सेहाते, सेहिरे। अनैमित्तिके नत्वसत्वे, तदादिर् लिटि आदेशादिर्न भवति। इह अभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति, तेन तदादिरप्यादेशादिर् भवति। तथा च फलिभजोरेत्वं विधीयते। रूपाभेदे चादेशादिर् न अश्रीयते इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्। अन्यथा हि पेचतुः, पेचुः, देमतुः, देमुः इत्येवम् आदीनाम् अपि प्रकृतिजश्चरादीनाम् एत्वं न स्यात्। क्ङिति इत्येव, अहं पपच। अहं पपठ। दम्भेरेत्वं वक्तव्यम्। देभतुः। देभुः। नलोपस्य असिद्धत्वान् न प्राप्नोति। नशिमन्योरलिट्येत्वं वक्तव्यम्। अनेशम्। मेनका। अनेशम् इति नशेः लुङि पुषादित्वादङ्। मेनका इति मनेः आशिषि च [३।१।१५०] इति वुन्। क्षिपकादिषु प्रक्षेपादित्वं न क्रियते। छन्दस्यमिपचोरप्यलिट्येत्वं वक्तव्यम्। व्येमानम्। अमेर्विपूर्वस्य चानशि मुक् न क्रियते। लिङिपेचिरन्। पचेरनित्येतस्य छान्दसं ह्रस्वत्वम्। यजिवप्योश्च। आयेजे। आवेपे। लङि इटि छन्दस्यपि दृश्यते [६।४।७३] इति अनजादेरपि इडागमः।

लघु-सिद्धान्त-कौमुदी

अत एकहल्मध्येऽनादेशादेर्लिटि ४६२, ६।४।१२०

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि। नेदतुः। नेदुः॥

न्यासः

अत एकहल्?मये‌ऽनादेशादेर्लिटि। , ६।४।१२०

"एकहल्मध्ये" इति। एकशब्दोऽयमसहायवाची। एकश्च एकश्च एकौ, एकौ च तौ हलौ चेत्येकहलौ, एकहलोर्मध्य इति द्विवचनान्तस्य षष्ठीसमासः। द्व्योरेव हि हलोर्मध्यं सम्भवति, नैकस्य। अत्र यदि लिट()आदशो न विशिष्यते ततो नेमतुः, नेमु; सेहे सेहाते, सेहिर इत्यत्र न स्यात्()। अस्तिह्नत्राप्यङ्गस्यादेश आदिरित्येतच्चेतसि कृत्वा लिट()आदेशं

विशेषयितुमाह--"लिटि परतः" इत्यादि। लिटि परभूते य आदेशो विधीयते स आदियंस्याङ्गस्य नास्तीत्यर्थः। "तस्य" इति। तस्यैवंविधस्याङ्गस्येत्यर्थः। तस्येति चाङ्गस्य योऽकार इत्यनेन सम्बन्धः। अवयवषष्ठी चेयम्(), तस्यैवंविधस्याङ्गस्य योऽकारोऽवयवस्तस्येत्यर्थः। "एक हल्मध्ये" इत्यस्येदं विवरणम्()--"असहाययो र्हलोर्मध्ये" इति। तत्येत्यनन्तरोक्तोऽकारः सम्बध्यते। तस्याङ्गस्यावयवस्याकारस्येत्यर्थः। स्थानषष्ठी चेम्()--तस्य स्थान एकार आदेशो भवति। "रेणतुः, रेणुः" इति। "अण रण" (धा।पा।४४४,४४५) इति "रणिः शब्दार्थः" पठ()ते। "येमतुः, येमुः" इति। "यम उपरमे" (धा।पा।९८४)। "देमतुः, देमुः" इति। "दमु उपशमे" (धा।पा।१२०३)। "रराशे"[ररासे--काशिका।] इति। "राशृ शब्दे" [राशृ शब्दे--धा।पा।] (धा।पा।६२६) आत्मनेपदी। "शश्रमतुः शश्रमुः" इति। "श्रमु तपसि खेदे च" (धा।पा।१२०४)। केचित्तु ततक्षतुः, ततक्षुरित्येतदेकहल्यध्यस्य प्रत्युदाहरणं पठन्ति; एतच्चायुक्तम्(); क्ङितीत्यनुवत्र्तते, न च पक्षेः परस्य लिटः कित्वमस्ति। "असंयोगात्()" इति प्रतिषेधात्?। "तत्सरतुः, तत्सरुः" इति। "त्सर छद्मगतौ" (धा।पा।५५४)। "चकणतुः, चकणुः" इति। "अण रण वण भण क्वण कण शब्दार्थाः" (धा।पा।४४४,४४५,४४६,४४७,४५०४४९)। तत्र कणतिर्भ्वादौ पठ()ते। "जगणतुः, जगणुः" इति। "गण संख्याने" (धा।प।१८५३) चुरादौ पठ()ते। ननु च चौरादिकत्वाण्णिचि कृते "कास्प्रत्ययादाममन्त्रे लिटि" (३।१।३५) इत्यामा भवितव्यम्()? "अनित्यण्यन्ताश्चुरादयः" (है।प।पा।९७) इत्यदोषः। अनित्यण्यन्तत्वन्तु तेषां सप्तमे ज्ञापयिष्यते। "बभणतुः" इति। भणतिर्भ्वादौ पठ()ते शब्दार्थ एव। "नेमतुः" इति। "णम प्रह्वत्वे शब्दे" (धा।पा।९८१)। "णो नः" [६।१।६३](#) इति नत्वम्()। "सेहे" इति। "षह मर्षणे" (धा।पा।८५२) "धात्वादेः षः सः" [६।१।६२](#) इति सत्वम्()। कथं पुनर्नत्वे सत्वे च लिटयादेशादी न भवतः? इत्यत आह--"अनैमित्तिके नत्वसत्वे" इत्यादि। नत्वसत्वविधाने हि न किञ्चिन्निमित्तमाश्रीयत इत्यनैमित्तिके एते भवतः, ततश्च प्रागेव लिङुत्पत्तेस्ताभ्यां भवितव्यम्()। तेन तदादि यदङ्गं तल्लिट()आदेशादि न भवति। यदि तर्हि लिटाऽदेशो विशिष्यत एवं सत्यङ्गमविशेषितं स्यात्(), ततश्च पक्वः पक्ववानित्यत्रापि प्रसज्येत, पचेरपि ह्यङ्गस्य लिटि परभूते य आदेशः क्रियते स इहाप्यादिर्नास्ति? नैतदस्ति; अभ्यासलोपसन्नियोगेन ह्येत्वमुच्यते। तेन यत्रैवाभ्यासलोपः तत्रैवैत्वेन भवितव्यम्()। न चात्राभ्यासलोपः; असम्भवात्()। इह तर्हि स्यात्()--पापच्यत इति? अयमप्यदोषः; इह परत्वात्? "दीर्घोऽकितः" [७।४।८३](#) इति दीर्घो भविष्यति। ह्रस्वहलादिशेषावुत्सर्गौ, तयोर्दीर्घत्वमेत्वञ्चापवादः। तत्र दीर्घस्यावकाशः--बाभास्यते, एत्वस्यावकाशः---पेचतुः, पेचुरिति; इहोभ्यं प्राप्नोति--पापच्यत इति, अपवादविप्रतिषेधे सति परत्वाद्दीर्घत्वं भविष्यति। अथ बभणतुः, बभणुरित्यत्रेत्वं कस्मान्न भवति, "अभ्यासे चर्च" (८।४।५४) इति जश्त्वे कृत आदेशादित्वादिति चेत्()? न; एत्वे कत्र्तव्ये जश्त्वस्यासिद्धत्वात्()। तस्माद्भवितव्यमेवैत्वेन। विप्रतिषेधस्य तु यत्र "कुहोश्चुः [७।४।६२](#) इति श्चुत्वं क्रियते--चकणतुः, चकणुः, जहसतुः, जहसुरित्यादाववकशः स्यादित्यत आह--"इह" इत्यादि। कथमेतज्ज्ञायते--नास्त्यसिद्धत्वम्()? इत्याह--"तथा च" इत्यादि। तदैव "तृफलभजत्रपश्च" [६।४।१२२](#) इति फलिभज्योरेत्वमुपपद्यते यदि जश्त्वचत्वंयोरसिद्धत्वं न भवति, नान्यथा। अनादेशादित्वादनेनैवैत्वस्य सिद्धत्वात्? तन्नोपपद्यते। तस्मात्? फलिभज्योरेत्वविधानाददसीयते--जश्त्वचत्त्वयोरसिद्धत्वमिह नास्तीति। "रूपाभेदे च" इत्यादि। "शब्दरूपस्य स्थानिनोऽबेदे सति य आदेशः स इह नाश्रीयते" इत्यस्यार्थस्य "न शसददवादिगुणानाम्()" [६।४।१२६](#) इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्()। "अभ्यासे चर्च" [८।४।५३](#) इत्यनेन प्रकृतिजशां प्रकृतिजशः, प्रकृतिचरां प्रकृतिचरो भवन्तीति शसः शकारस्य शकारो भवति, ददेर्दकारस्यापि दकार; तेनोभावपि तावादेशादी भवतः। तत्र यदि स्थान्यभेदे सति य आदेशः सोऽपीहाश्रीयेत, तत आदेशाद#इत्वादेव न भविष्यतीति शसिद्योरेत्वप्रतिषेधो न विधीयेत; विहितश्च, तस्मादेतदेव प्रतिषेधवचनं ज्ञापयति--रूपाभेदे सति य आदेशः स इह नाश्रीयत इति। यदि तह्र्याश्रीयत किं स्यात्()? इत्यत आह--"अन्यथा हि" इत्यादि। अन्यथा योऽपि रूपाभेदादादेशः स्थानिनाभिन्नरूपः सोऽपीहाश्रयेत, ततो यथा चकणतुरित्येवमादीनामेत्वं न भवति, तथा पेचतुः, पेचुरित्येवमादीनामपि प्रकृतिजश्चरादीनां न स्यात्()। प्रकृतिजशः प्रकृतिचरश्चादयो येषान्ते तथोक्ताः। "अहं पपठ, अहं पपच" इति। अत्र स्थानिवद्भावेन पित्वात्?

कित्त्वं नास्ति, तेनैत्वाभ्यासलोपौ न भवतः। वृद्धिरपि न भवति; "णलुत्तमो वा" ७।१।९१ इति पक्षे णित्त्वाभावात्()। णित्त्वपक्षे तु परत्वाद्()वृद्ध्या बाधितवादेत्त्वादेत्वाभायासलोपाभ्यां न भवितव्यम्(), इत्यणित्त्वपक्ष एवोदाह्नतम्()। "दम्भेः" इति। किं पुनः कारणं दम्भेरेत्त्वं न भवति, यावता "लिट()नादेशाध्रेतदङ्गम्()। "अनिदिताम्()" (६।४।२४) इत्यादिना न लोपे कृत एकहल्मध्य एवाकारः? इत्यत आह--"नलोपस्य" इत्यादि। "ग्रन्थिश्रन्थिदम्भिस्वञ्जीनाम्()" (वा।१७) इति सूत्रे [()] दम्भेः परस्य लिटः कित्त्वमुक्तम्(), तस्मिन्? सति य उपधाया लोपस्तस्य "असिद्धवदत्रा भात्()" ६।४।२२ इत्यसिद्धत्वान्न प्राप्नोति। तस्माद्दम्भेरेत्वं वक्तव्यम्()। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"श्नसोरल्लोपः ६।४।१११ इत्यत्रा भाच्छास्त्रीयस्यासिद्धत्वस्यानित्यत्वं ज्ञापितम्(), तेन दम्भेरेत्त्वे कत्र्तव्ये लोपस्यासिद्ध्त्वं न भवति, ततश्च दम्भेर्लिट()त्वं भविष्यतीति। अथ वा "अत एकहल्मध्ये" ६।४।१२० इत्यत्र "अतः" इति योगविभागः कत्र्तव्यः, तेन यत्र यत्रेत्त्वमिष्यते तत्र तत्र भविष्यतीति। एवञ्च कृत्वा "नशिमन्योरलिट()एत्त्वम्()" (वा।७९३) इत्याद्यपि नोपसंख्येयम्(); योगविभागेनैव सिद्धत्वात्()। वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थ इति सर्वत्र वेदितव्यम्()। "अनेशम्()" इति। "तस्थस्थ" ३।४।१०१ इत्यादिना मिपोऽम्भावः। अथ "मेनका" इत्यत्र "प्रत्ययस्थात्()" (७।३।४४) इत्यादिनेत्त्वं कस्मान्न भवति? इत्याह--"क्षिपकादिषु" इत्यादि। क्षिपकादिष्वित्त्वस्य प्रतिषेधो वक्ष्यते। अस्य च क्षिपकादिषु प्रक्षेपः, तेनेत्त्वं न क्रियते। "चानशि" इति। "तच्छील्यवयोवचनशक्तिषु चानश" (३।२।१२९) "मुक्? न क्रियते" इति। "आने मुक्()" (७।२।८२) इति मुक्? प्राप्नोति, स न भवति "अनित्यमागमशासनम्()" (व्या।पा।९५) इति कृत्वा। छान्दसत्वाद्वा--"सर्वे विधयश्छन्दसि विकल्प्यन्ते" (भो।प।९९) इति। "छान्दसं ह्मस्वत्वम्()" इति। "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्()" (६।३।६३) इति ङ्यापोर्विधीयमानं ह्मस्वत्वं बहुलवचात्? "पेरिरन्निनित्यत्रापि वति। पचेर्लिङ्, सीयुट्(), झस्य रन्(), शप्(), "आद्गुणः" ६।१।८४। पचेरन्निनिति प्राप्त एत्त्वे ह्मस्वत्त्वे च कृते पेचिरन्निनिति भवति॥

बाल-मनोरमा

अथ एकहल्मध्येऽनादेशादेर्लिटि १०५, ६।४।१२०

तस्य लटि एधिवद्रूपाणि सिद्धवत्कृत्य लिटस्तादेशे तस्यैशि द्वित्वे दध् दध् ए इति स्थिते। अत एकहलमध्ये। आदेश आदिर्यस्येति बहुव्रीहिः। अङ्गस्येत्यधिकृतमन्यपदार्थः। लिटीति निमित्तसप्तमी अनादेशादेरित्यस्यैकदेशे आदेशेऽन्वेति। लिटि परे निमित्ते य आदेशः स आदिर्यस्य न भवति तथाविधस्याङ्गस्येति लभ्यते। अङ्गस्येत्यवयवषष्ठी। तथा च तथाविधाङ्गावयवस्याऽत इति लभ्यते। एकशब्दोऽसहायवाची। "एके मुख्यान्यकेवलाः" इत्यमरः। एकौ असंयुक्तौ हलौ एकहलौ, तयोर्मध्यः,तत्रेति विग्रहः। "अत" इत्स्यैव विशेषणमिदम्। "द्वसोरेद्धा"वित्यत एदिति, अभ्यासलोप इति चानुवर्तते। "गमहने"त्यतः कितीत्यनुवर्तते, न तु ङितीति, लिङादेशानां ङित्त्वाऽसंभवात्। लिटीत्येत्वविधौ परनिमित्तं च। आवृत्त्या उभयार्थलाभः। तदाह--- लिण्निमित्तेत्यादिना।

तत्त्व-बोधिनी

अत एकहल्मध्येऽनादेशादेर्लिटि ७९, ६।४।१२०

लिण्निमित्तेति। किति लिटीति च। यद्यपि "गहमने"ति सूत्रे क्ङितीति वर्तते, तथापि प्रयोजनाऽभावान्ङितीत्येतन्नानुवर्तत इति भावः। किति कित्?। ननाद। लिटि किम्()। पापच्यात्।

---

सूत्रम्

काशिका-वृत्तिः

थलि च सेति ६।४।१२१

थलि च सेटि परतो ऽनादेशादेः अङ्गस्य एकहल्मध्यगतस्य अतः स्थाने एकार आदेशो भवति, अभ्यासलोपश्च। पेचिथ। शेकिथ। सेटि इति किम्? पपक्थ। थल्ग्रहणं विस्पष्टार्थम्। अक्ङिदर्थम् एतद् वचनम् इति अन्यस्येटो ऽसम्भवात्। अतः इत्येव, दिदेविथ। एकहल्मध्यगतस्य इत्येव, ततक्षिथ। ररक्षिथ। अनादेशादेरित्येव, चकणिथ। बभणिथ।

लघु-सिद्धान्त-कौमुदी

थलि च सेटि ४६३, ६।४।१२१

प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद, ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्, अनदीत्। अनदिष्यत्॥ टु नदि समृद्धौ॥ ८॥

न्यासः

थलि च सेटि। , ६।४।१२१

"पेचिथ, शेकिथ" इति। "उपदेशेऽत्वतः" ७।२।६२ इतीट्प्रतिषेधप्राप्तः "ऋतो भारध्वाजस्य" ७।२।६३ इति नियमादिहेड्भवति। तदयमत्रार्थः--ऋत एव भारध्वाजस्ये#एति, नान्येषां धातूनामिति। "पपक्थ" इति। अन्येषामाचार्याणां मतेनेट्प्रतिषेधो भवत्येव। अथ थल्ग्रहणं कमर्थम्(), "न सोटि इत्येवोच्येत; यत्र हि पूर्वेण न सिद्ध्यते तदर्थं वचनम्(), अन्यत्रेडादौ कित्त्वात्? पूर्वेणैव सिद्धम्(), तत्रान्तरेणापि थल्ग्रहणं थल्येव भविष्यति? इत्यत आह--"थल्ग्रहणम्()" इत्यादि असति थल्ग्रहणे, आरम्भसाश्र्यादेतावान्? निश्चयः स्यात्()--यत्र पूर्वेण न सिद्ध्यति तदर्थमेतदिति। अक्ङिदर्थमित्येतत्? तु दुरवसानम्(); बहवो विशेषाः प्रकान्ताः, तत्र सन्देहः स्यात्()--किमक्ङिदर्थमेतत्? स्यात्(), उतादेशार्थम्()? आहोस्विदनेकहल्मध्यार्थम्()? किमु अनेकाकारार्थमिति? तत्रासन्देहार्थम्? "अत एकहल्मध्येऽनादेशादेर्लिटि" ६।४।१२० इत्येते विशेषाः सर्व एवेहानुवत्र्तन्ते। क्ङिद्ग्रहणन्तु निवृत्तम्()। तस्मात्? क्ङिदर्थोऽयमारम्भः। न च थलोऽन्यदिहाक्ङिदस्ति सेट्()। ततः सामर्थात्? थल्येवायं विधिव्र्याख्येयः। व्याख्यानद्वारेण प्रतिपत्तौ मन्दधियां प्रतिपत्तिगौरवं स्यात्()। तस्माद्विस्पष्टार्थं थल्ग्रहणं क्रियते। थलो ह्रक्ङित उपादाने सुखमेव प्रतीयते--अक्ङिदर्थोऽयमारम्भ इति॥

न्यासः

राधो हिंसायाम्?। , ६।४।१२१

"राधो हिंसायामर्थे" इत्यादि। यद्यपि "राध साध संसिद्धौ" (धा।पा।१२६२,२३६३) इति राधिः संसिद्धौ पठ()ते, इह तथाप्यनेकार्थत्वाद्धातूनां हिंसार्थता वेदितव्या। राधेर्हिसायमर्थेऽवर्णस्यैकारादेशो भवतीत्युच्यते। ननु च नात्र सूत्रेऽवर्णग्रहणमस्ति, योऽप्यत्रत्योऽवर्णः प्रकृतः सोऽपि मात्राकालः, न च राधेर्मात्राकलोप्रऽवर्णोऽस्ति, तत्? कथमवर्णस्य स्थान एत्त्वं लभ्यते? इति यश्चोदयेत्? तं प्रत्याह--"अत इत्येतदिहोपस्थितम्()" इत्यादि। "अतः" इति स्वरितत्वादिहोपस्थितम्(), यदिहोपस्थितं तत्? तपरत्वकृतस्य कालविशेषस्याभावात्? तदपास्य=परित्यज्यावर्णमात्रं स्थानित्वेन प्रत्याययति=दोधयति; अन्यथा तस्योपस्थानमनर्थकं स्यात्()। "अथ वा" इत्यादि। "श्नाभ्यास्तयोः" (६।४।११२) इत्यनेन यतः सूत्रात्? स्थान्यनुवत्र्तते तदुपलक्षयति। "आतः" इत्यनेनापि यः स्थान्यनुवत्र्तते तं दर्शयति--"श्नाभ्यरत्तयोरात्? इत्यत आत इत्यनुवत्र्तत इति व्याख्येयम्()" इति। एवञ्च व्याख्यायमाने राधेरवर्णस्येत्त्वं विज्ञायते यदि तह्रत इत्यनुवत्र्तते, एवञ्च सति "अत एकहल्मध्ये" (६।४।१२०) इत्यत्रापि तस्यातः सन्निधानादिहापि प्राप्नोति--शशासिव शशसिमेति? नैष दोषः; मण्डूकपलुतिन्यायेन तस्येहानुवृत्तिः। "एकहल्मध्ये वा" इत्यादि। अथ वा--एकहल्मध्य इत्यनुवत्र्तते, तत्राप्यनुवत्र्तमानेऽसम्भवादत इतीह न व्याप्रियते। तेन राधेर्यः एकहल्मध्येऽवयवः स स्थानी भवति, स पुनराकार एव भवति, तस्यैवैत्त्वं भविष्यति॥

बाल-मनोरमा

थलि च सेटि १०५, ६।४।१२१

थलि च। प्रागुक्तमिति। एकहल्मध्य इति यत्प्रागुक्तम्-- एत्वादि, तत्सेटिथलि च स्यादित्यर्थः। थलः कित्त्वाऽभावात्पूर्वसूत्रेणाऽप्राप्तौ वचनम्। ननु देधे पेततुरित्यादौ "अभ्यासे चर्चे"ति जशां चरां च जशि चरि च लिण्निमित्तादेशादित्वात्कथमेत्वाभ्यासलोपावित्यत आह----आदेशश्चहेति। इह = "अत एकहल्मध्ये" इति सूत्रे, आदेशशब्देन स्थान्यपेक्षया विरूप एवादेशो विवक्षितः। तथा च तथाविधादेशादेरेव एत्वाभ्यासलोपौ न भवतः, स्थानिसरूपादेशास्तु न पर्युदास इत्यर्थः। शसिदद्योरिति। "न शसददवादिगुणाना"मिति शसिदद्योरेत्वाभ्यासलोपयोः प्रतिषेध उच्यते। यदीह यथाकतंचिदादेशादेः पर्युदासः स्यात्तर्हि शसिदद्योरभ्यासे शकारदकारयोश्चर्()जशोः शकारदकारादेशे सति आदेशादित्वादेव एत्वाभ्यासलोपयोरभावसिद्धौ "न शसददवे"ति तत्प्रतिषेधोऽनर्थकः स्यात्। अतो वैरूप्यसंपादकादेशादेरेव पर्युदासो विज्ञायत इत्यर्थः। तेनेति। स्थानिसरूपादेशादेः पर्युदासाऽभावादित्यनेनेत्यर्थः। सत्स्वपीति। देधे पेततुरित्यादौ दकाराद्यादेशेषु सत्स्वपीत्यर्थः। देधे इति। दध् दध् ए इति स्थिते दकारादकारस्य एत्वेऽभ्यासलोपे च रूपम्। "असंयोगाल्लिट्क"दिति कित्त्वमिह बोध्यम्। देधिर इति। देधिषे देधाथे देधिध्वे। देधे देधिवहे देधिमहे इति रूपाणि संभवन्तीति भावः। दिदिवतुरिति। दिव्धातोरतुसि द्वित्वे हलोर्मध्येऽतोभावादेत्वाभ्यासलोपौ नेति भावः। तत्परः किमिति। "अत" इति तपरकरणं किमर्थमित्यर्थ-। ररासे इति। "रासृ शब्दे" भ्वादिरात्मनेपदी। अत्र हल्मध्यस्थस्येति किमर्थमित्यर्थः। तत्सरतुरिति। "त्सर च्छद्मगतौ"। लिटोऽतुसि द्वित्वे अभ्यासाऽकारस्य नाऽसंयुक्तहल्मध्यस्थत्वमिति भावः। चकणतुरिति। "कण शब्दे" लिटोऽतुसि द्वित्वे कुहोश्चुरिति ककारस्य चुत्वेन चकारः। तथा च वैरूप्यसंपादकादेशादित्वादेत्वाभ्यासलोपौ नेति भावः। अथ "लिण्निमित्तादेशादिक"मित्यत्र लिण्निमित्तेत्यस्य प्रयोजनमाह--लिटेति। नेमिथेति। "णमु प्रह्वत्वे शब्दे च"। "णो नः" इति नत्वम्। थलि इटि द्वित्वे नत्वसंपन्ननकारादेशादित्वेऽपि नत्वस्य लिण्निमित्तकत्वाऽभावाल्लिण्निमित्तकादेशादित्वाऽभावादेत्वाभ्यासलोपौ निर्बाधाविति भावः। सेहे इति। "षह मर्षणे"। "धात्वादेः षः सः" इति सत्वे लिटि द्वित्वे सत्वसंपन्नसकारादेशादित्वेऽपि सत्वस्य लिण्निमित्तकत्वाऽभावाल्लिण्निमित्तकादेशादित्वविरहादेत्वाभ्यासलोपा निर्बाधाविति भावः। दधिता। दधिष्यते। दधताम्। अदधत। दधेत। दधिषीष्ट। अदधिष्ट। अदधिष्यत। स्कुदीति। उत्प्लवनमुत्प्लुत्य गमनम्।

तत्त्व-बोधिनी

थलि च सिटि ८०, ६।४।१२१

चकणतुरिति। न चैवमपि बभणतुरित्यत्र "अभ्यासे चर्चे"त्यस्याऽलसिद्धत्वादेत्वाभ्यासलोपौ स्त एवेति वाच्यं, फलभजग्रहणेन एत्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात्। एवं चादेशश्चेह वैरूप्यसंपादक एव गृह्रते इति व्याख्यानमवश्यं कर्तव्यमवेति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

तृफलभजत्रपश् च ६।४।१२२

तृ फल भज त्रप इत्येतेषाम् अङ्गानाम् अत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि। तेरतुः। तेरुः। तेरिथ। फेलतुः। फेलुः। फेलिथ। भेजतुः। भेजुः। भेजिथ। त्रेपे, त्रेपाते, त्रेपिरे। तरतेर् गुणार्थं वचनम्। फलिभजोरादेशाद्यर्थम्। त्रपेरनेकहल्मध्यार्थम्। श्रन्थेश्च इति वक्तव्यम्। श्रेथतुः। श्रेथुः।

लघु-सिद्धान्त-कौमुदी

तृफलभजत्रपश्च ५४४, ६।४।१२२

एषामत एत्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च। त्रेपे। त्रपिता, त्रप्ता। त्रपिष्यते, त्रप्स्यते। त्रपताम्। अत्रपत। त्रपेत। त्रपिषीष्ट, त्रप्सीष्ट। अत्रपिष्ट, अत्रप्त। अत्रपिष्यत, अत्रप्स्यत॥इत्यात्मनेपदिनः॥श्रिञ् सेवायाम्॥ १॥ श्रयति, श्रयते। शिश्राय, शिश्रिये। श्रयितासि, श्रयितासे। श्रयिष्यति, श्रयिष्यते। श्रयतु, श्रयताम्। अश्रयत्, अश्रयत। श्रयेत्, श्रयेत। श्रीयात्, श्रयिषीष्ट। चङ्। अशिश्रियत्, अशिश्रियत। अश्रयिष्यत्, अश्रयिष्यत॥ भृञ् भरणे॥ २॥ भरति, भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभृव। बभृम। बभ्रे। बभृषे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। भरतु, भरताम्। अभरत्, अभरत। भरेत्, भरेत॥

न्यासः

तृ?फलभजत्रपश्च। , ६।४।१२२

"तेरतुः तेरुः" इति। "ऋच्छत्यृ()ताम्()"७।४।११ इति गुणः। "फेलतुः, फेलुः" इति। "फल निष्पत्तौ" (धा।पा।५३०), "त्रिफला विशरणे" (धा।पा।५१६) इति च। "तरतेर्गुणार्थम्()" इति। "न शसददवादिगुणानाम्()" ६।४।१२३ इति प्रतिषेधं वक्ष्यति। अतस्त्रतेरिदं वचनं गुण इत्येवमभिनिवृत्तस्यापि यथा स्यादित्येवमर्थम्()। "श्रन्थेश्चेति वक्तव्यम्()" इति। "ग्रन्थ श्रन्थ सन्दर्थे" (धा।पा।१५११,१५१२) इत्यस्याप्येत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--चकारोऽतत्र क्रियये, स चानुक्तसमुच्चयार्थः, तेन श्रन्थेरपि भविष्यतीति। "श्रेथतुः, श्रेथुः" इति पूर्ववदुपसंख्यानेन लिटः कित्त्वे नकारलोपः॥

बाल-मनोरमा

तृ?फलभजत्रपश्च १४४, ६।४।१२२

संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपयोरप्राप्तावाह--तृ()फल। "अत एकहल्मध्ये" इत्यतोऽत इति लिटीति चानवर्तते। "ध्वसो"रित्यत एदिति, अभ्यासलोपश्चेति च, "गमहने"त्यस्मात्कितीति, "थलि च सेटी"ति सूत्रं च। तदाह--एषामिति। गुणशब्देन भाविताऽकारवत्त्वाद्वरूपादेशादित्वादेकहल्मध्यस्थत्वाऽभावाच्चाऽप्राप्ते विधिरियम्। आन्ब इति। द्विहल्त्वान्नुट्। ष्टभि स्कभीति। आद्यः षोपदेशः,ष्टुत्वेन तकारस्य टकारनिर्देशेन दन्त्यपरकसादित्वात्। ततः षस्य सत्वे ष्टुत्वस्य निवृत्तिः। तदाह---स्तम्भत् इति। नुम्यनुस्वार इति। इदित्त्वान्नुमि "नश्चापदान्तस्ये"ति तस्यानुस्वारः। "()नुस्वारस्य ययी"ति तस्य परसवर्()णौ मकारः। "ष्टम्भे"त्येव पाठे तु प्रतिपदोक्तत्वात् "उदः स्थे"त्यत्राऽस्यैव ग्रहणं स्यादिति भावः। पूर्वसवर्ण इति। सकारस्य थकारः। तस्य "खरि चे"ति चर्त्वे तकार इत्यर्थः। अत्र यद्वक्तव्यं तदुदः स्थास्तम्भोरित्यत्र हल्सन्धौ प्रपञ्चितम्। विस्तम्भत इति। "सात्पदाद्यो"रिति षत्वनिषेध इति भावः। नन्वेवमपि "स्तम्भे"रिति षत्वं कुतो न स्यादित्यत आह--- स्तम्भेरिति षत्वं तु नेति। कुत इत्यत आह-- श्नविधाविति। "स्तन्भुस्तुन्बुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्चे"ति सूत्रे निर्दिष्टस्यैव प्रतिपदोक्तस्य षत्वविधौ ग्रहणादित्यर्थः। नन्वेवं सति "उदः स्थास्तम्भो"रिति पूर्वसवर्णविधावपि सौत्रस्यैव ग्रहणं स्यादित्यत आह--तद्बीजं त्विति। षत्वविधौ सौत्रस्यैव ग्रहणं, पूर्वसवर्णविधौ तु तदन्यस्यापीत्यत्र प्रमाणमित्यर्थः। ननु पूर्वसवर्णविधौ मोपधस्य, षत्वविधौ तु नोपधस्य पाठ इत्यत्र किं प्रमाणमित्यत आह--इति माधव इति। पाणिनिशिष्यपरम्परैव तत्र प्रमाणमिति भावः। लिटि "शपूर्वाः खयः" इति षकारस्य निवृत्तौ ष्टुत्वनिवृत्या तकारः शिष्यते। तस्तम्भे। टकार औपदेशिक इति। स्वाभाविक एव टकारो नतु ष्टुत्वसंपन्न इत्यर्थः। तन्मते इति। तथा च षकारस्यापि स्वाभाविकत्वात्? षत्वविधौ स्तन्भेरेव ग्रहणेऽपि षकारो निर्बाध इति भावः। टष्टम्भ इति। "शर्पूर्वा" इतिटकार एव शिष्यत इति भावः। जभी जृभि गात्रविनाम इति। गात्रस्य विनामः =

वक्रभावः। आद्य इदित्। द्वितीय इदित्। आद्यस्य इदित्त्वं "()आईदितो निष्ठाया"मिति इण्निषेधार्थम्।

---

सूत्रम्

काशिका-वृत्तिः

रधो हिंसायाम् ६।४।१२३

राधः हिंसायामर्थे ऽवर्णस्य एकारः आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि। अपरेधतुः। अपरेधुः। अपरेधिथ। हिंसायाम् इति किम्? रराधतुः। रराधुः। रराधिथ। अतः इत्येतदिह उपस्थितं तपरत्वकृतमपास्य कालविशेषम् असम्भवादवर्णमात्रं प्रतिपादयति। अथ वा श्नाभ्यस् तयोरातः ६।४।११२ इत्यनुवर्तते इति व्याख्येयम्। एकहल्मध्ये वा यः स स्थानी भविष्यति।

बाल-मनोरमा

राधो हिंसायाम् ३६२, ६।४।१२३

राधो हिंसायां। "ध्वसो"रित्यत एदिति, अभ्यासलोप इति चानुवर्तते। "गमहने"त्यतः कितीति, "अत एकहल्मध्ये" इत्यतो लिटीति, "थलि च सेटी"ति सूत्रं चानुवर्तते। तदाह-- एत्त्वेत्यादिना। अपरेधतुरिति। उपसर्गवशादिह हिंसायां वृत्तिः। अन्यत्र रराधतुः। थल्यपि क्रादिनियमान्निट्। "उपदेशेऽत्वतः" इत्यत्र तपरकरणादिह नेण्निषेधः। तदाह---रेधिथेति। राद्धेति। "झषस्तथोः" इति धः।अशू व्याप्ताविति। ऊदित्()तवाद्वेट्। अश्नुते इति। अश्नुवते।संयोगपूर्वकत्वात् "हुश्नुवो"रिति न यण्।

तत्त्व-बोधिनी

राधो हिंसायाम् ३१६, ६।४।१२३

राधो हिंसायाम्। "अत" इत्यनुवर्तमानेऽपि सामर्थ्यादकारमात्रं स्थानित्वेनाश्रीयते।

---

सूत्रम्

काशिका-वृत्तिः

वा जृभ्रमुत्रसाम् ६।४।१२४

जृ भ्रमु त्रस इत्येतेषाम् अङ्गानाम् अतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि। जेरतुः। जेरुः। जेरिथ। जजरतुः। जजरुः। जजरिथ। भ्रेमतुः। भ्रेमुः। भ्रेमिथ। बभ्रमतुः। बभ्रमुः। बभ्रमिथ। त्रेसतुः। त्रेसुः। त्रेसिथ। तत्रसतुः। तत्रसुः। तत्रसिथ।

लघु-सिद्धान्त-कौमुदी

वा जृभ्रमुत्रसाम् ६३४, ६।४।१२४

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा। त्रेसतुः, तत्रसतुः। त्रेसिथ, तत्रसिथ। त्रसिता॥ शो तनूकरणे॥ ५॥

न्यासः

वा जृ?भ्रमुत्रसाम्?। , ६।४।१२४

"जृ? वयोहानौ" (धा।पा।१४९४) ["जृ--मु।पाठः] इत्यस्य गुणार्थं वचनम्()। भ्रमेरादेशार्थम्(), अनेकहल्मध्यार्थञ्च

त्रसेश्चानेकहल्मध्यर्थम्()। "जजरतुः" इति। पूर्ववद्गुणः॥

बाल-मनोरमा

वा जृ?भ्रमुत्रसाम् १९३, ६।४।१२४

वा जृ()भ्रसु। "अत एकहल्मध्ये" इत्यतो लिटीति, "थलि च सेटी"ति चानुवर्तते। "ध्वसोरेद्धौ" इत्यत एदिति, "गमहने"त्यतः कितीति च। तदाह--एषामिति। अभ्रमीदिति। "ह्म्यन्ते"ति न वृद्धिः। अक्षारीदिति। "अतो ल्रान्तस्ये"ति वृद्धिः। षह। अपराधे सत्यपि कोपाऽनाविष्करणं मर्षमम्। इडभावे इति। सह्--ता इति स्थिते "हो ढः" इति ढत्वं, "झषस्तथो"रिति तकारस्य धत्वम्। धस्य ष्टुत्वेन ढः। "ढो ढे लोपः" इति पूर्वस्य ढस्य लोप इत्यर्थः। स ढा इति स्थितम्।

तत्त्व-बोधिनी

वा जृ?भ्रमुत्रसाम् १६६, ६।४।१२४

वाजृ()भ्रमुत्रसाम्। अप्राप्तविभाषेयम्। अंभ्रमीदिति। मान्तत्वान्न वृद्धिः। अक्षारीदिति। हलन्तलक्षणाया वृद्धेः "नेटी"ति निषेधेऽपि "अतो ल्रान्तस्ये"ति वृद्धिः। षह। अपराधे सत्यपि कोपाऽनाविष्करणं मर्षणम्।

---

सूत्रम्

काशिका-वृत्तिः

फणां च सप्तानाम् ६।४।१२५

फणादीनां सप्तानां धातूनाम् अवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः थलि च सेटि। फेणतुः। फेणुः। फेणिथ। पफणतुः। पफणुः। पफणिथ। रेजतुः। रेजुः। रेजिथ। रराजतुः। रराजुः। रराजिथ। भ्रेजे, भ्रेजाते, भ्रेजिरे। बभ्राजे, बभ्राजाते, बभ्राजिरे। भ्रेशे, भ्रेशाते, भ्रेशिरे। बभ्राशे, बभ्राशाते, बभ्राशिरे। भ्लेशे, भ्लेशाते, भ्लेशिरे। बभ्लाशे, बभ्लाशाते, बभ्लाशिरे। स्येमतुः। स्येमुः। स्येमिथ। सस्यमतुः। सस्यमुः। सस्यमिथ। स्वेनतुः। स्वेनुः। स्वेनिथ। सस्वनतुः। सस्वनुः। सस्वनिथ। सप्तानाम् इति किम्? दध्वनतुः। दध्वनुः। दध्वनिथ।

न्यासः

फणाञ्च सप्तानाम्?। , ६।४।१२५

बहुवचननिर्देशादाद्यर्थो गम्यते। अत आह--"फणादीनाम्()" इत्यादि। "फण गतौ" (धा।पा।८२१) "राजृ दीप्तौ" (धा।पा।८२२) "टु भ्राजृ टु भ्राशृ टु भ्लाशृ दीप्तौ" (धा।पा।८२३-८२५)। "स्यमु स्वन ध्वन शब्दे" (धा।पा।८२६-८२८) इत्येते ध्वनवर्जिताः फणादयः सप्त। तत्राद्यस्य नित्ये प्राप्ते विकल्पार्थं वचनम्(), इतरेषामप्राप्ते। तत्र राजृप्रभृतीनां चतुर्णामवर्णस्यैत्त्वस्य प्रतिप्रत्तये "राधो हिंसायाम्()" ६।४।१२३ इत्यत्र "अत इत्येतदिहोपस्थितम्()" इत्यादिना यदुक्तं तद्यथासम्भवं वेदितव्यम्()॥

तत्त्व-बोधिनी

फणां च सप्तानाम् १६४, ६।४।१२५

फण गतौ। फणति। लुङि। अफाणीत्। अफणीत्। णौ तु "चिण्णमुलो"रिति वा दीर्घः। अफणि। अफाणि। फणंफणम्। फाणंफाणम्। असंभवादिति। मित्त्वप्रा()प्त विना निषेधाऽसंभवादिह "ने"त्येतन्न संबध्यते किंतु मित्संज्ञैव। तदेतदाह--फणयति। (ग) वृत्। वृत्। सामर्थ्यादिति। फणादिषु पाठसामर्थ्यादित्यर्थः। तत्र हीति। षत्वविधौ हीत्यर्थः। तथा च विभ्राट्। विभ्राड्भ्याम्। पूर्वं पठितस्य तु विभ्राक् विभ्राग्भ्यामित्यादि सिध्यतीति भावः। अस्यमीदिति। मान्तत्वान्न

वृद्धिः। अथ ज्वलादिः। अज्वालीदिति। "अतो ल्रान्तस्ये"ति वृद्धिः। वैक्लव्य इति। वैक्लव्यं -- भयादिजनितोद्विग्नता। तद्व्यापार इति। बन्धुतानुकूलो व्यापारः।

---

सूत्रम्

काशिका-वृत्तिः

न शसददवादिगुणानाम् ६।४।१२६

शस दद इत्येतयोः वकारादीनां च धातूनां गुण इत्येवम् अभिनिर्वृत्तस्य च यो ऽकारः तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च। विशशसतुः। विशशसुः। विशशसिथ। दददे, दददाते, ददरिरे। वादीनाम् ववमतुः। ववमुः। ववमिथ। गुणस्य विशशरतुः। विशशरुः। विशशरिथ। लुलविथ। पुपविथ। गुणशब्दाभिनिर्वृत्तस्य अर्शब्दस्य ओकारस्य च अयम् अकारः इति एत्वं प्रतिषिध्यते।

लघु-सिद्धान्त-कौमुदी

न शसददवादिगुणानाम् ५४३, ६।४।१२६

शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न। ददृदे। दददाते। ददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत॥ त्रपूष् लज्जायाम्॥ २०॥ त्रपते॥

न्यासः

न शसददवादिगुणानाम्?। , ६।४।१२६

अत्र यदि गुण इत्येनेन यस्यैत्त्वं विहितं स एत्राकार उच्यते, ततोऽयमर्थः--अकारस्य गुणस्य न भवतीति। तथा चैत्त्वविधिरनवकाश एव स्यादित्येतद्बुद्धौ कृत्वा नात्र गुणेनाकार एवोच्यते, अपि तु गुणशब्दभिनिर्वृत्त इति दर्शयन्नाह--"गुण इत्येवमभिनिर्वृत्तस्य च" इत्यादि। गुणशब्दमुच्चार्य योऽभिनिर्वृत्तः शब्दस्तस्य सम्बन्धी योऽकारस्तस्य स्थान एत्त्वं न भवतीत्यर्थः। तत्सम्बन्धित्वं पुनस्तस्य तत्स्थानिकत्वात्? तदवयवत्वाच्च यद्यायोगं वेदितव्यम्()। तदेवं गुणशब्दाभिनिर्वृत्तस्य सम्बन्ध्यकारः प्रतिषेधस्य निमित्तम्(), इतरस्तु विधेरित्येव विधिप्रतिषेधयोर्विषयविभागः। "विशशसतुः" इति। "शसु हिंसायाम्()" (धा।पा।७२७)। "ददृदे" इति। "दद दाने" धा।पा।१७)। "ववमतुः" इति। "टु वम उद्()गिरणे" (धा।पा।८४९) "विशशरतुः" इति। "शृ हिंसायाम्()" (धा।पा।१४८८)। "गुणशब्दभिनिर्वृत्तस्य" इत्यादिना यदुक्तं तस्यार्थमुदाहरणे दर्शयति। "विशशरतुः" इत्यत्रारित्ययं शब्दो गुणशब्दाभिनिर्वृत्तः। तत्सम्बन्ध्यकारस्य तदेकदेशात्वात्()। "लुलविथ" इति। अत्राप्योकारो गुणशब्दाभिनिर्वृत्तः तत्सम्बन्ध्यकारस्य तत्स्थानिकत्वात्()। ननु "विशशरतुः" इत्यत्राकारमात्रं ग#उणशब्देनाभिनिर्वृत्तम्(), नाऽर्()शब्दः! नैतदस्ति; रेफस्य गुणभक्तत्वात्()। तथा च भाष्यम्()--"अर्भवति गुणो भवति, आर्भवति वृद्धिर्भवति--रेफसहितो गुणवृद्धिसंज्ञो भवति" इति॥

बाल-मनोरमा

न शसददवादिगुणानाम् १०७, ६।४।१२६

न शसदद। शस दद वादि गुण--एषां द्वन्द्वः। अवयवषष्ठी। गुणशब्देन विहित एव गुणोऽत्र गुणशब्देन विहितत्वाऽभावान्नायं निषेधः। पृ()धातोः पपरतुरिति तु गुणस्योदाहरणम्, गुणशब्देन विहितो योऽर् तदवयवत्वादकारस्येति बोध्यम्। ददद इति। ददेर्लिटस्तादेशस्य एशि द्वित्वे "अत एकहल्मध्ये" इति प्राप्तावेत्तवाभ्यासलोपौ न भवतः। ष्वद स्वर्देति। आस्वादनम्--अनुभवः। प्रीतिविषयीभावात्मिका रुचिर्वा। तदाह--

अयमिति। प्रत्येकाभिप्रायमेकवचनम्।

तत्त्व-बोधिनी

न शसददवादिगुणानाम् ८२, ६।४।१२६

न शसदद। "शसु हिंसायां" दन्त्यान्तः। सूत्रेऽवयवावयवभावः षष्ठ()र्थः। तथा च शसददवादीनां योऽकार इत्यन्वयसंभवेऽपि अकारस्य गुणरूपत्वाद्भेदनिबन्धना षष्ठी न संभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे-- गुणशब्देन भावितस्येति। भावितत्वं च साक्षात्पेरम्परासाधारणम्। तथा च शशरतुः पपरतुरित्यादौ गुणशब्देन क्रियमाणो योऽर् तदवयवोऽकारः। लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्याऽवादेशस्यावयवोऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः। ददद इति। शशसतुः। शशसुः। ववमतुः। ववमुरित्यादावपि निषेधो बोध्यः। ष्वद स्वर्द। अयमिति। प्रत्येकाभिप्रायेणोक्तमित्याहु। सकर्मक इति। स्वदस्व हव्यानि। अनुभवेत्यर्थः। अकर्मक इति। "अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा"- इति श्रीहर्षः। न स्वदते। न रोचत इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अर्वणस् त्रसावनञः ६।४।१२७

अर्वनित्येतस्य अङ्गस्य तृ इत्ययम् आदेशो भवति, सुश्चेत् ततः परो न भवति, स च नञ उत्तरो न भवति। अर्वन्तौ। अर्वन्तः। अर्वन्तम्, अर्वतौ, अर्वतः। अर्वता, अर्वद्भ्याम्, अर्वद्भिः। अर्वती। आर्वतम्। असौ इति किम्? अर्वा। अनञः इति किम्? अनर्वाणौ। अनर्वाणः। अनर्वाणं वृषभं मन्द्रजिह्वम्।

लघु-सिद्धान्त-कौमुदी

अर्वणस्त्रसावनञः २९४, ६।४।१२७

नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशो न तु सौ। अर्वन्तौ। अर्वन्तः। अर्वद्भ्यामित्यादि॥

न्यासः

अर्वणस्त्रसावनञः। , ६।४।१२७

"त्()" इत्ययमादेशो भवति" इति। "नानुबन्धकृतमनेकाल्त्वम्()" (व्या।प।१४) इत्यन्तस्य भवति; एकाल्त्वात्(), कारस्यानुबन्धत्वात्()। उकारस्यानुबन्धत्वात्? प्रथमैकवचनं सुशब्दो गृह्यते, तेन सप्तमीबहुवचने भवत्येव--अर्वत्स्वित। स च नञ उत्तरो न भवतीति चेदिति यत्? प्रकृतं तदिहापि सम्बध्यते। "अर्वन्तौ" इति। ऋकारस्योगित्कार्यार्थत्वात्? "उगिदचाम्()" ७।१।७० इति नुम्()। "अर्वति" इति। "उगितश्च" ४।१।६ इति ङीप्()। "आर्वतम्()" इति। अपत्यार्थविवक्षायामण्()। ननु च नञिवयुक्तन्यायेन (व्या।प।६५) सादृश्यात्? सोरन्यत्र विभक्तादेव भवितव्यम्()? नैतत्(); असाविति प्रसज्यप्रतिषेधोऽयम्()। अत एव वृत्तिकृतोक्तम्()--"सुश्चेत्? ततः परो न भवति" इति। अन्यथा सोरन्यो यः सुप्? स चेत्? ततः परो भवतीति ब्राऊयात्()। अथापि पर्युदासः? एवमप्यदोषः; अनित्यत्वान्नञिवयुक्तपरिभाषायाः। अनित्यत्वन्तु तस्याः "ओषधेश्च विभक्तावप्रथमायाम्()" ६।३।१३१ इत्यत्र विभक्तिग्रहणाद्विज्ञायते। यदि हि सा नित्या स्यात्(), प्रथमापर्युदासेन विभरक्तावेव भविष्यतीति विक्तक्तिग्रहणं न कुर्यात्()। कुर्वन्नपि तज्ज्ञापयति--अनित्येयं परिभाषेति॥

बाल-मनोरमा

अर्वणस्त्रसावनञः , ६।४।१२७

तस्य सौ राजवद्रूपं मत्वाह--अर्वा। हे अर्वन्निति। अर्वणस्त्रासावनञः। तृ-असौ इति छेदः। न विद्यते नञ् यस्येति बहुव्रीहिः। अङ्गस्येत्यधिकृतम् अर्वणा विशेष्यते। तदाह--नञा रहितस्येत्यादिना। ऋकार इत्। "अलोऽन्त्यस्ये"ति नस्य तः। उगित्त्वान्नुमिति। "उगिदचा"मित्यनेनेति भावः। अर्वन्ताविति। नुमो नस्य "नश्चापदान्तस्ये"ति अनुस्वारः, परसवर्ण इति भावः। शसादावचि असर्वनामस्थानत्वान्नुम् नेति मत्वाह-अर्वत इति। अर्वद्भ्यामिति। "स्वादिषु" इति पदत्वाज्जश्त्वमिति भावः। इत्यादीति। अर्वद्भिः। अर्वते। अर्वद्भ्यः। अर्वतः अर्वतोः अर्वताम्। अर्वति। अर्वत्सु। अनञः किमिति। "अनञः" इत्यस्य किं प्रयोजनमित्यर्थः। अनर्वा यज्ववदिति। अनर्वन्शब्दो यज्ववदित्यर्थः। शसादावचि "न संयोगाद्वमन्ता"दित्यल्लोपो नेति बावः। पथिन्, मथिन्, ऋभुक्षिन्, एते नकारान्ताः।

तत्त्व-बोधिनी

अर्वणस्त्रसावनञः ३२५, ६।४।१२७

अर्वणस्तृ।"अङ्गस्ये"ति वर्तते, तच्चाऽर्वणा विशेष्यते, "अनञ"इत्यनेनापि, तदाह--नञा रहितस्येत्यादि। "असा"विति परयुदासे विभक्तौ परत एव स्यात्, ततश्चाऽर्वतीत्यादौ न स्यादित्याशयेनाह--न तु साविति। नचैवमर्वप्रिय इत्यादावतिप्रसङ्गः, अङ्गेन स्वनिमित्तस्य प्रत्ययस्याऽऽक्षेपाल्लुका लुप्तत्वेनाऽत्र प्रत्ययलक्षणाऽभावात्। एतेन "वाहैरलुप्यत सहस्त्रगर्वगर्वः"इति श्रीहर्षप्रयोगो व्याख्यातः। नन्वेवं, "स्थानिवदादेशः"इति सूत्रे "धात्वङ्गकृत्तद्धिताब्ययसुप्तिङ्पदादेशाः स्थानिवत्स्यु"रिति प्राचो ग्रन्थमनूद्य---"त()त्क परिगणनुदाहरणमात्रं वे ति विकल्प्य,"नान्त्यः, अब्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्या"दिति मनोरमायां यदुक्तं तत्कथं सङ्गच्छेत(), अव्ययस्योक्तिरीत्याऽनङ्गत्वात्। न च "न लुमते"त्यनेनाऽङ्गकार्यनिषेधेऽप्यङ्गसंज्ञाया अनिषेधान्नोक्तदोष इति वाच्यम्, प्रत्यये परतः पूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तत्सर्वं "न लुमते"त्यनेन निषिध्यते इथि "यङोऽचु चे"ति सूत्रस्थमनोरमाग्रन्थपर्यालोचनया लुमताशब्देन लुप्तेऽङ्गसंज्ञाया अप्यस्वीकार्यत्वात्। तस्या अपि प्रत्यये परतः पूर्वस्य कार्यत्वात्। यदि तु लुका लुप्तेऽप्यङ्गत्वं स्वीक्रियते, तदाऽयं ग्रन्थो "यचि भं""वृषण्वस्व()आयो"रित्यत्र "वृष वर्षुकं"वसु धनं यस्य वृषण्वसु, वृषा अ()आओ यस्य वृषण()आ"इत्युदाह्यत्म भत्वादिह नलोपो न भवति, अल्लोपस्तु अनङ्गत्वान्नेट"ति मूले वैदिकप्रक्रियायां वक्ष्यमाण ग्रन्थेन सह विरुध्यते। नच "अल्लोपोऽनः"इत्यत्रा"ऽङ्गावयवोऽसर्वमानस्थानयजादिस्वादिपरो योऽ"निति व्याख्यानादल्लोपस्य तत्र प्राप्त्यभावादनाङ्गत्वादिति समाधानं व्यर्थमिति भ्रमितव्यम्, भसंज्ञयैव "यजादिस्वादिपरोयोऽ"निति व्याख्यानावद्वस्व()आयोः परतो योऽनिति व्याख्यानस्यापि लभात्। तस्मात्पदात्पृथगित्येव वक्तव्ये अङ्गपदाभ्यामित्यङ्गग्रहणं रभसकृतमेवेति चेदत्राहुः--"न लुमते"ति सूत्रे लुमतालुप्ते तन्निमित्ताङ्गसंज्ञकस्य कार्यं नस्यादिति यदा व्याख्यायते, तदा "अर्वणस्तृ"इत्यद्यङ्गकार्याऽवृत्तावप्यङ्गसंज्ञाया निर्बाधत्वादङ्गग्रहणं तत्रत्यं सम्यगेव। यदात्वाङ्गमनाङ्गं वेत्यादिमनोरमाग्रन्थस्यानङ्गत्वादिति मूलग्रन्थस्य च स्वारस्यपर्यालोचनया लाघवादव्ययस्याङ्गत्वे फलाभावाच्च प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते, तदा त्वविशेषेणाऽङ्गसंज्ञाया अपि निषेधादङ्गग्रहं तत्र रभसकृतमेव। न च "न लुमते"त्यनेनाङ्गसंज्ञानिषेधे "युवोरनाका"विति सूत्रस्थभाष्यकैयटाभ्यां विरोधः स्यादिति वाच्यं, तयोस्तत्र प्रौढवादेन प्रवृत्तत्वात्। तथाच "न लुमत तस्मि"न्निति सिद्धान्तः, प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते"इति मनोरमाग्रन्थश्च स्वरसतः सङ्गच्छत इति। ननु ऋधातोर्विचि गुणे च "अ"रिति रूपं, तस्मान्मतुपि अर्वन्तावित्यादि सेत्स्यति, "छन्दसीवनिपा"विति वनपि वेदे "अर्वे"ति सेत्स्यति। ऋधोरोरेव "स्त्रामदिपद्यत्री"त्यादिना वनिपि तु लोकेऽप्यर्वेति सेत्स्यति। रूढिशब्दश्चायं,

"वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः"इत्यमरकोशात्। ततश्चार्थोऽपि न भिद्यत इति किमनेन सूत्रेणेति चेदत्राहुः--नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञ्पूर्वपदे च नान्तस्य प्रयोगो भवत्यन्त्र तचु नान्तस्य प्रयोगो न भवतीति व्यवस्थार्थमिदं, "तृज्वत्क्रोष्टु"रिति त्रिसूत्रीवदिति। यत्तु केश्चिदुक्तम्---"अर्वन्मघवन्शब्दयोरपि भाषायामसाधुत्वमेव। "अर्वणस्तृ मघोनश्च न शिप्यं धान्दसं हि तत्। मतुब्वन्योर्विधानाच्च धन्दस्युभयदर्शमात्िति वार्तिकादिति। तदापाततः, वार्तिकस्य वनिबन्तमध्योदात्तपरत्वात्। छन्दस्येव वनिब्व#इधानात्। तथाच श्रीहर्षः---"वाहैरलुप्यत सहस्त्रद्दगर्वगर्वः"इति प्रायुङ्क्तः। अर्वन्तौ अर्वन्त इति। व्यपदेशिवद्भावेनाऽर्वन्नन्तत्वान्नादेशः। न च व्यवदेशिवद्भावोऽप्रातिपदिकेनेति वाच्यं, तस्य प्रत्ययविधिविषयत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

मघवा बहुलम् ६।४।१२८

मघवनित्येतस्य अङ्गस्य बहुलं तृ इत्ययम् आदेशो भवति। मघवान्, मघवन्तौ, मघवन्तः। मघवन्तम्, मघवन्तौ, मघवतः। मघवता। मघवती। माघवतम्। न च भवति। मघवा, मघवानौ, मघवानः। मघवानम्, मघवानौ, मघोनः। मघोना, मघवभ्याम्, मघवभिः। मघोनी। माघवनम्।

लघु-सिद्धान्त-कौमुदी

मघवा बहुलम् २९०, ६।४।१२८

मघवन्शब्दस्य वा तृ इत्यन्तादेशः। ॠ इत्॥

न्यासः

मघवा बहुलम्?। , ६।४।१२८

मधवेति सुव्व्यत्ययेन षष्ठ्याः स्थाने प्रथमा। "मधोनः" इति। "()आयुवमधोनाम्()" ६।४।१३३ इति समप्रसारणम्(), परपूर्वत्वम्(), "आद्गुणः" ६।१।८४। ननु च मघोऽस्यास्तीति मत्वर्थविवक्षायां "छन्दसीवनिपो वकतव्यौ" (वा।५८२) इति वनिप्()रत्ययान्तोऽयं मघवन्शब्दः। तत्र वनिपः सम्प्रसारणे भसंज्ञायां सत्याम्(), "यस्येति च" ६।४।१४८ इति लोपेन भवितव्यम्(), ततश्च "मधुनः" इत्यनिष्टं रूपं स्यात्()? नैतत्(); अन्येव हीदमव्युत्पन्नं प्रातिपदिकम्(), तथा हि भावायामपि तस्य प्रयोगो दृश्यते। अथापि वनिप्प्रत्ययान्तः स्यात्()? एवमपि बहुलवचनात्? "यस्येति" ६।४।१४८ इति लोपो न भविष्यतीत्यदोषः। "मघोनी" इति। "ॠन्नेभ्यो ङीप्()" ४।१।५। "माघवनम्()" इति। पूर्ववदण्()। "अन्()" ६।४।६७ इति प्रकृतिवद्भावः॥

बाल-मनोरमा

मघवा बहुलम् , ६।४।१२८

"()आन्नुक्षन्पूषन्प्लीहनक्लेदन्()स्नेहन्मूर्धन्मज्जन्नर्यमन्वि()आप्सन्परिज्मन्मातरि()आन्मघव"न्नित्युणादिसूत्रेण निष्पन्ने तस्मिन्मघवन्शब्दे विशेषमाह--मघवा बहुलम्। "अर्वणस्त्रासौ" इत्यतः "तृ" इत्यनुवर्तते। तच्च लुप्तप्रथमाकम्। "मघवे"ति तु षष्ठ()र्थे प्रथमा। तदाह--मघवन्शब्देस्येत्यादिना। ॠ इदिति। "उपदेशेऽजनुनासिक इत्" इति ॠकार इत्संज्ञक इत्यर्थः। "ॠ" इत्यविभक्तिको निर्देशः प्रक्रियासमये न दुष्यति। अलोऽन्त्यस्येति नकारस्य तकारः। सर्वादेशस्तु न, "नानुबन्धकृतमनेकाल्त्वमि"ति वचनात्। मघवत् स् इति स्थिते-।

तत्त्व-बोधिनी

मघवा बहुलम् ३२१, ६।४।१२८

माधवेनोक्तमिति। इत्थं हि तदियो ग्रन्थः--"भसंज्ञायामल्लोपे उत्तरपदमनच्कं स्थानिवद्भावश्चाऽल्विधित्वान्ने" त्येकाजुत्तरपदत्वाऽभात् "प्रातिपदिकान्तनुम्विभक्तिषु चे"ति विकल्पो भवति--वृत्रघ्नो""वृत्रघ्ण"इति। तद्भाष्येतिष किंच "अल्विधित्वान्ने"त्यसङ्गतम्। अल्बिध्यर्थमेब "अचः परस्मि"न्नित्यस्यारम्भात्। तस्याऽप्रवृत्तौ युक्तयन्तरस्यैव वाच्यत्वात्। "एकाजुत्तरे"त्यस्याऽप्रवृत्तावपि "कुमति चे"ति सूत्रस्य दुर्वारत्वाद्वैकल्पिकत्वं णत्वस्याऽसङ्गतमेव। न च त्रिपद्यामपि पूर्वं प्रत्युत्तरशास्त्रस्याऽसिद्धत्वात् "एकाजुत्तरपदेः णः" "कुमति चे"त्यस्याऽप्रवृत्त्या "प्रातिपदिकान्ते"ति वैकल्पिकमेव णत्वं भवतीति वाच्यं, "न हि योगोऽसिद्धः किंतुपर्करणे प्रकरण"मिति भाष्यादौ स्पष्टत्वादिति दिक्। अनिनस्मन्ग्रहणानीति। अन्--"राज्ञे"त्यर्थवता, "साम्ना"इत्यनर्थकेन। इन्--"दण्डी"त्यर्थवता, "वाग्ग्मी"त्यनर्थकेन। अस्---"सुपया"इत्यर्थकेन। इह "स्त्रुरूभ्यां नुट् चे"त्यसुनस्तुट्। मन्--"सुशर्मे"त्यर्थवता, "सुप्रथिमा"इत्यमर्थकेन। एतच्च "इणः षीध्व"मिति सूत्रेऽङ्गग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम्। "वेविषीध्व"मित्यत्र षीध्वंशब्दस्य ग्रहणं माभूदिति हि तत्राऽङ्गग्रहणं कृतम्। तच्चाऽपार्थकम्, अनर्थकत्वादेव तद्ग्रहणाऽसिद्धेः। अतो ज्ञायते "अर्थवद्ग्रहणपरिभाषा अनित्ये"ति। मघवा बहुलम्। "अर्वणस्त्रसा"वित्यतस्तृ इत्यनुवर्तते, तदपक्षा च "मघवे"तिषष्ठ()र्थे प्रथमा, तदाह--

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ भस्य ६।१ १७५ १।१ १।२।३

अर्थः॥

अधिकारोऽयम् आ अध्याय-परिसमाप्तेः। यत् इतः ऊर्ध्वम् अनुक्रमिष्यामः भस्य इत्येवं तत् वेदितव्यम्।

उदाहरणम्॥

वक्ष्यति पादः पत् - द्विपदः पश्य, द्विपदा कृतम्॥

काशिका-वृत्तिः

भस्य ६।४।१२९

भस्य इत्ययम् अधिकारः आ अध्यायपरिसमाऽप्तेः। यदित ऊर्ध्वम् अनुकमिष्यामः भस्य इत्येवं तद्वेदिव्यम्।

न्यासः

भस्य। , ६।४।१२९

बाल-मनोरमा

भस्य २३१, ६।४।१२९

भस्य। इत्यधिकृतं स्पष्टमेव। यूषशब्दो मण्डवाची। "मुद्गामलकयूषस्तु भेदी दीपनपाचनः" इत्यादि वैद्यशास्त्रे प्रसिद्धम्।

तस्य शसि "पद्दनः" इति यूषन्नादेशे यूषन्-असिति स्थिते।

---

सूत्रम्

काशिका-वृत्तिः

वक्ष्यति पादः पत् ६।४।१३०

द्विपदः पश्य। द्विपदा कृतम्। भस्य इति किम्? द्विपादौ। द्विपादः। पादः पत् ६।४।१३०। पादः इति पादशब्दो लुप्ताकारो गृह्यते। तदन्तस्य अङ्गस्य भस्य पतित्ययम् आदेशो भवति। स च निर्दिश्यमानस्यादेशा भवन्ति इति पाच्छब्दस्य एव भवति, न तदन्तस्य सर्वस्य। द्विपदः पश्य। द्विपदा। द्विपदे। द्विपदिकां ददाति। त्रिपदिकां ददाति। वैयाघ्रपद्यः।

लघु-सिद्धान्त-कौमुदी

पादः पत् ३३५, ६।४।१३०

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः॥ सुपदः। सुपदा। सुपाद्भ्याम्॥ अग्निमत्, अग्निमद्। अग्निमथौ। अग्निमथः॥

न्यासः

पादः पत्?। , ६।४।१३०

"पादः" इति। "पादशब्दो लुप्ताकारो गृह्लते" इति। अथ पादयतेः क्विबन्तस्य यः पाच्छब्दः सम्पद्यते स कस्मान्न गृह्लते? तस्यासम्भवात्()। पादयतेर्हि क्विप्? "अन्येभ्योऽपि दृश्यते" (३।२।१७८) इत्यनेन स्यात्()? स च "दृश्यते" इति वचनान्न भवति। यत्र लोके क्विबन्तप्रोयगो दृश्यते तत्र यथा स्यादित्येवमर्थं हि तत्र "दुश्यते" इत्तयुक्तम्(), न च पादयतेः क्विबन्तस्य प्रयोगो दृश्यते? पादशब्दस्य समास एवाकारो लुप्यते, तेन सामथ्र्यात्? तदन्तस्याङ्गस्य कार्यं विज्ञायत इत्याह--"तदन्तस्याङ्गस्य" इत्यादि। यदि तर्हि पाच्छब्दन्तस्याङ्गस्य पदित्ययमादेशो विज्ञायेत, एवं तर्हि "ये न विधिस्तदन्तस्य" १।१।७१ इति सर्वस्य तदन्तस्य प्राप्नोतीत्याह--"स च" इत्यादि। "द्विपदः" इति। द्वौ पादवस्येति बहुव्रीहिः। "संख्यासुपूर्वस्य" ५।४।१४० इत्यकारलोपः। "द्विपदिकाम्()" इति। द्वौ द्वौ पादौ ददातीति "पादशतस्य" ५।४।१ इत्यादिना वुन्()। "वैयाघ्रपद्यः" इति। व्याघ्रस्येव पादावस्येति बहुव्रीहिः, "पादस्य लोपोऽहस्त्यादिभ्यः" ५।४।१३८ इत्यकारलोपः, व्याघ्रपदोऽपत्यमिति गर्गादित्वाद्यञ्()॥

---

सूत्रम्

काशिका-वृत्तिः

वसोः सम्प्रसारणं ६।४।१३१

वस्वन्तस्य भस्य सम्प्रसारणं भवति। विदुषः पश्य। विदुषा। विदुषे। पेचुषः। पश्य। पेचुषा। पेचुषे। पपुषः पश्य। आकारलोपे कर्तव्ये वसुसंप्रसारणस्य व्याश्रयत्वादसिद्धत्वम् न भवति। वसुग्रहणे क्वसोरपि ग्रहणम् इष्यते।

लघु-सिद्धान्त-कौमुदी

वसोः सम्प्रसारणम् ३५५, ६।४।१३१

वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः। वसुस्रंस्विति दः। विद्वद्भ्याम्॥

न्यासः

वसोः सम्प्रसारणम्?। , ६।४।१३१

प्रत्ययग्रहणपरिभाषया (भो।प।सू।७) तदन्तस्य कार्यं विज्ञायत इत्याह--"वस्वन्तस्य, इत्यादि। "विदुषः" इति। "विदेः शतुर्वसुः" ७।१।३६। "पेचषः" इति। "क्वसुश्च" ३।२।१०७ इति लिटः क्वमुः, "अत एकहल्मध्ये" ६।४।१२० इत्यादिनैत्तवाभ्यासलोपौ। "पपुषः" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। ननु चाकारलोपे कत्र्तव्ये सम्प्रसारणमसिद्धम्(), तत्? कुतोऽत्राकारलोपः? इत्याह--"आकारलोपे कत्र्तव्ये" इत्यादि। आकारलोपः सम्प्रसारणे, तत्तु विभक्ताविति वयाश्रयत्वम्(), अतो नास्त्यसिद्धत्वम्()। ननु च एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" (व्या।प।५२) इति, "तदनुबन्धकग्रहणे नातदनुबन्धकस्य" (व्या।प।५४) इति वा न क्वसोरिह ग्रहणेन भवितव्यम्(), तत्? कथं पपुषः, पेचुष इत्यत्र सम्प्रसारणं भवति? इत्याह--"वसुग्रहणे" इत्यादि। एतत्तु शत्रादेशस्य वसोरुकारानुबन्धकरणाद्वेदितव्यम्()। उकारानुबन्धस्य ह्येतदेव फलम्()--इह सामान्येन ग्रहणं यथा स्यात्()। ननु चोगत्त्वार्थं तत्? स्यात्()? नैतत्(); उगित्कार्यस्य स्थानिवद्भावेनैव सिद्धत्वात्()॥

बाल-मनोरमा

वसोः संप्रसारणम् , ६।४।१३१

शसादावचि विशेषमाह--वसोः संप्रसारणं। प्रत्ययग्रहणपरिभाषया वसोरिरिति तदन्तग्रहणं भस्येत्यधिकृतं। तदाह--वस्वन्तस्येति। पूर्वेति। शसि वकारस्य उत्वे विदु अस् इति स्थिते, "संप्रसारणाच्चे"ति पूर्वरूपे, विदुस् इति स्थिते, प्रत्ययावयवत्वात्सस्य षत्वमित्यर्थः। "षत्वतुकोरसिद्ध" इति पूर्वरूपस्याऽसिद्धत्वं न शङ्क्यं, पदान्तपदाद्योरेकादेश एव तत्प्रवृत्तेः। सुपि दत्वे चत्र्वम्। विद्वत्सु। सेदिवानिति। "षद्लृ विशर()णगत्यवसादनेषु" "धात्वादेः षः सः", "भाषायां सदवसश्रुवः" इति लिटः क्वसुः, उकावितौ, "लिटि धातोः" इति द्वित्वं, हलादिशेषः, "अत एकहल्मध्ये" #इत्येत्वाभ्यासलोपौ, "वस्वेकाजाद्धसा"मिति इट्। सेदिवस्शब्दः। ततः सुः, उगित्त्वान्नुम्, "सान्तमहतः" इति दीर्घः, सुलोपः, सस्य संयोगान्तलोपः, तस्याऽसिद्धत्वान्नलोपो न। सान्तवस्वन्तत्वाऽभावान्न दत्वमिति भावः। सेदिवांसाविति। नुमि "सान्तमहतः" इति दीर्घः। ननु उक्तरीत्या निषपन्नात्सेदिवस्शब्दाच्छसि "वसोः संप्रसारण"मिति वकारस्य उत्वे पूर्वरूपे इकारस्य यणि "सेद्युषः" इति स्यात्। ततश्च "सेदुषः" इति वक्ष्यमाणं रूपमयुक्तम्। नच शसि भविष्यति भविष्यत्संप्रसारणरूपकार्यं पर्यालोच्य पूर्वमेव इट् न प्रवर्तते, पदावधिकान्वाख्यानाभ्युपगमादिति वाच्यम्, एवमपि बहिर्भूतयजाद्यसर्वनामस्थानस्वादिप्रत्ययनिमित्तकभसंज्ञापेक्षतया संप्रसारणस्याङ्गस्य बहिरङ्गत्वेन इडागमस्यैवान्तरङ्गत्वात्प्रथमं प्रवृत्तेः, परादन्तरङ्गस्य बलवत्त्वादित्यत आह--अन्तरङ्गोऽपीति। अकृतेति। भविष्यता संप्रसारणेन बलादित्वस्य विनाशोन्मुखत्वादिति भावः। वस्तुतस्तु प्रथममपि सेदिवस्शब्दादेव सुबुत्पत्तिरस्तु, तथापि वकारस्य संप्रसारणे उत्वे कृते, यणि सत्यपि संप्रसारणस्य बहिरङ्गत्वेनाऽसिद्धत्वात् "लोपो व्योः" इति लोपे "सेदुष" इति रूपं सिद्धम्। नच "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्ति"रिति निषेधः शङ्क्यः, उत्तरकालप्रवृत्तिकेऽजानन्तर्य एव तत्प्रवृत्तेरभ्युपगमात्। इह च उत्तरकालप्रवृत्तिके वलि लोपे तदभावात्। किंच कृते इटि संप्रसारणप्रवृत्तावपि वलादित्वरूपनिमित्तनिवृत्त्या इटो निवृत्तौ "सेदुष" इति निर्बाधं। "निमित्ताऽपाये नैमित्तिकस्याप्यपायः" इति न्यायात्। किंच पदावधिकान्वाख्यानेऽपि सेद्वस् अस् इति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीर्घोपस्थितिकत्वात्प्रथमं संप्रसारणे वलादित्वाऽभावादिटः प्राप्तिरेव नास्तीति "सेदुषः" इति निर्बाधमित्याहुः। इत्यादीति। सुपि--सेदिबत्सु। "हिसिं हिंसायाम्" इदित्त्वान्नुम्, सुपूर्वात्क्विप्, इदित्त्वान्नलोपो न, "नश्चे"त्यनुस्वारः, सुहुंस्शब्दात्सोर्लोपः, सकारस्य संयोगान्तलोपः, तस्याऽसिद्धत्वान्नलोपो न। नापि "सर्वनामस्थाने चे"ति दीर्घः। निमित्तापायादनुस्वारनिवृत्तिः। सुहिन् इति सौ रूपं वक्ष्यति। तत्र "सान्तमहतः" इति दीर्घमाशङ्क्य आह--सान्तेति। सुहिन्भ्यामिति। "स्वादिषु" इति पदान्तत्वात्सस्य संयोगान्तलोपे निमित्ताऽपायादनुस्वारनिवृत्तिरिति भावः।

सुबिन्स्विति। संयोगान्लोपेऽनुस्वारनिवृत्तिः। सुपः सकारमाश्रित्य पुनरनुस्वारस्तु न, पदान्तत्वात्। ध्वदिति। ध्वंसु अवरुआंसने कृतानुस्वारनिर्देशः। क्विप्, अनुस्वारस्याऽसिद्धत्वात् " अनिदिताम्" इति नलोपः। सोर्लोपः। "वसुरुआंसु" इति दत्वम्। "वाऽसाने" इति चत्र्वविकल्प इति भावः। एवमिति। "रुआंसु अवरुआंसने" क्विबादि पूर्ववदिति भावः। "पूञ्पवने" अस्मात् "पूञो डुम्सुन्" इति उणादिसूत्रेण डुम्सुन्प्रत्ययः। डकारो नकार उकारश्च इत्। डित्वसामथ्र्यादभस्यापि टेर्लोपः। पुंस्शब्दात्सुबुत्पत्तिः।

तत्त्व-बोधिनी

वसोः सप्रसारणम् ३८७, ६।४।१३१

वसोः। प्रत्ययग्रहणे तदन्तग्रहणमित्याह--वस्वन्तस्येति। सेदिवानिति। "भाषायां सदवसश्रुवः"इति लिटः क्वसुः। "लिटि धातो"रितिद्वित्वम्, "हलादिः शेषः""अत एकहल्मध्ये"इत्येत्वाभ्यासलोपौ। "वस्वेकाजाद्धसा"मितीट्। नुम्। "सान्ते"ति दीर्घः। सेदुष इति। ननु "तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये"ति परिभाषया "विदेः शतुर्वसु"रित्यस्यैव वसोः संप्रसारणं युक्तं, न तु क्वसोः। सत्यम्। वसोरुकारानुबन्धकरणं क्वसोः सामान्यग्रहणार्थम्। उगित्त्वस्य स्थामिवद्भावेनाऽपि सिद्धेः। इह गमिप्रभृतिभ्यः क्वसुर्नोदाह्रतः, छान्दसत्वात्। अतएव वैदिकप्रक्रियायां"तस्थिवान्""जग्निवान्ित्याद्युदाहर्तव्यं नाऽत्रेत्याहुः। कवयस्तु प्रयुञ्जते--"श्रेयांसि सर्वाण्यधिजग्मुषस्ते"। "तं तस्थिवांसं नगरोपकण्ठे"इत्यादि। अत्र वदन्ति--छान्दसा अप्।येके पद्दादय इव क्वचिद्भाषायां भवन्ति, "मासश्छन्दसी"त्यस्य सामान्यापेक्षज्ञापकत्वाश्रयणा[दिति]कथंचित्सामाधेयमिति। सुहिनिति। संयोगान्तलोपस्याऽसिद्धत्वान्नोपधादीर्घः। सुहिन्त्स्विति। "नश्चे"ति सस्य वा धुट्। ध्वसत इति ध्वत्। रुआंसत इति रुआत्।"रुआसु ध्वंसु अवरुआंसने" "ध्वंसु गतौ याचने चे"त्याभ्यां क्विप्। "अनिदिता"मिति नलोपः। "वसुरुआसु"इति दत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

वाह ऊथ् ६।४।१३२

वाहः इत्येवम् अन्तस्य भस्य ऊथ् इत्येतत् सम्प्रसारणं भवति। प्रष्ठौहः। प्रष्ठौहा। प्रष्ठौहे। दित्यौहः। दित्यौहा। दित्यौहे। एत्येधत्यूठ्सु ६।१।८६ इति वृद्धिः। अथ किमर्थमूथ् क्रियते, सम्प्रसारणे एव कृते गुणे च वृद्धिरेचि ६।१।८५ इति वृद्धौ सत्याम् सिद्धं रूपं भवति प्रष्ठौहः इति, अनकारान्ते चोपपदे वहेर्ण्विर्न दृश्यते? ज्ञापनार्थम्। एतज् ज्ञापयति, भवत्येषा परिभाषा असिद्धं बहिरङ्गम् अन्तरङ्गे इति। तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्य असिद्धत्वातन्तरङ्गो गुणो न स्यात्।

लघु-सिद्धान्त-कौमुदी

वाह ऊठ् २५८, ६।४।१३२

भस्य वाहः संप्रसारणमूठ्॥

न्यासः

वाह ऊठ्?। , ६।४।१३२

"वाहः" इति। वहिरयं ण्विप्रत्ययान्तः, स चास्मात्सोपपदादेव ण्विर्विहितः। तेन सामथ्र्यात्? तदन्तविधिर्विज्ञायत

इत्याह--"वाह इत्येवमन्तस्य" इत्यादि। "ऊडित्येतत्()" इति। ठिदयमूकारः। "एत्येधत्यूठ्सु" ६।१।८६ इति विशेषणार्थः। "सम्प्रसारणं भवति" इति। सम्प्रसारणमित्येष विशेषः कुतो लभ्यते। पूर्वसूत्रात्? सम्प्रसारणमित्यस्यानुवृत्तेः। किमर्थं पुनः सम्प्रसारणमनुवार्यते? स्थानिनियमार्थम्()। यद्येतन्नानुवर्त्यते, यण एव स्थाने "इग्यणः सम्प्रसारणम्()" १।१।४४ इति भवितव्यम्()। "प्रष्ठौहः" इति। प्रष्ठं वहतीति "भजो ण्विः" ३।२।६२ इत्यनुवर्त्तमाने "वहश्च" ३।२।६४ इति ण्विः। अथ किमर्थमूठ्? क्रियते, न "वाह" इत्येतावदेव सूत्रं कर्त्तव्यमित्यभिप्रायः। "सम्प्रसरण एव कृते" इति। पूर्वसत्रात्? समप्रसारणग्रहणानुवृत्तेः। "गुणे च" इति। कृत इति सम्बन्धः। गुणस्तु "पुगन्तलघूपधस्य च" ७।३।८६ इति लुप्तेऽपि ण्वौ प्रत्यलक्षणेन। ननु च "अङ्गवृत्ते पुनरङ्गवृत्तावविधि निष्ठितस्य" (व्या।प।३८) इति सम्प्रसारणे कृते गुणेन न भवितव्यम्()? "निष्ठितस्य" इति। "वचनाददोषः। निष्ठा हि शब्दस्य परिसमाप्तिः, सा च तदा भवति यदा शब्दसय प्रयोगार्हता भवति। न च यावद्गुणादिसंस्कारो न क्रियते तावदस्य प्रयोगार्हता भवति। तस्मात्? कृतेऽपि सम्प्रसारणे भवत्येव गुणः, तत्रेतत्? स्यात्()। यद्यूड् न क्रियते, तदा शार्लि वहति, दितिं वहति, शाल्युहः, दित्यूह इत्येवमाद्यनकारन्ते शालिदितिशब्द उपपदे वहेर्ण्वि प्रत्यये विहिते सति न सिद्ध्यतीत्यत आह--"अनकारान्ते चोपपदे" इत्यादि। "वहश्च" ३।२।६४ इत्यनेन "छन्दसि सहः" ३।२।६३ इत्यतोऽत्र छन्दोग्रहणानुवृत्तेश्छन्दस्येव ण्विर्विधीयते, दृष्टार्थविधिश्छन्दसि, अकारान्त एव चोपपदे प्रष्ठादौ वहेश्छन्दसि ण्विर्दृश्यते न त्वकारान्ते शाल्यादौ। कथं पुनरनेन बहिरङ्गपरिभाषा ज्ञाप्यते? इत्याह--"तस्यां हि" इत्यादि। बहिरङ्गत्त्वं पुनः सम्प्रसारणस्य बाह्याजादिप्रत्ययनिमित्तां भसंज्ञामाश्रित्य प्रवृत्तात्वात्()। गुणस्य त्वन्तरङ्गत्त्वम्(); अबाह्यप्रत्यये प्रवृत्तत्वात्()। किं पुनरस्याः परिभाषायाः ज्ञापनेनप्रयोजनम्()? पचावेदम्(), यजावेदमित्यत्रः सिद्धत्वं बहिरङ्गलक्षणस्य। अतोऽन्तरङ्गलक्षणमेत ऐत्वं न भवति; बहिरङ्गलक्षणत्वाद्गुणस्य। बहिरङ्गत्वन्तु पदद्वयाश्रिततत्वात्()। ऐत्वस्य त्वन्तरङ्गत्वं विपर्ययात्()॥

बाल-मनोरमा

वाह ऊठ् , ६।४।१३२

वाह ऊठ्। "भस्ये"त्यधिकृतम्। "वसोः संप्रसारण" मित्यतः "संप्रसारण"मित्यनुवर्तते। तच्च ऊडित्यनेनान्वेति। तदाह-भस्येत्यादिना।

---

सूत्रम्

काशिका-वृत्तिः

श्वयुवमघोनाम् अतद्धिते ६।४।१३३

श्वन् युवन् मघवनित्येतेषाम् अङ्गानाम् अतद्धिते प्रत्यये परतः सम्प्रसारणं भवति। शुनः। शुना। शुने। यूनः। यूना। यूने। मघोनः। मघोना। मघोने। अतद्धिते इति किम्? शौवं मांसम्। यौवनं वर्तते। माघवनः स्थालीपाकः। शुनो विकारे प्राणिरजतादिभ्यो ऽञ् ४।३।१५२, द्वारादित्वादैजागमः। श्वादीनाम् एतत् सम्प्रसारणं नकारान्तानाम् इष्यते। इह न भवति, युवतीः पश्य। मघवतः। मघवता। मघवते। तदर्थम् उत्तरत्र योगविभागम् कुर्वन्ति। अल्लोपः। अनः। अनः इत्युभयोः शेषः इति।

लघु-सिद्धान्त-कौमुदी

श्वयुवमघोनामतद्धिते २९२, ६।४।१३३

अन्नन्तानां भानामेषामतद्धिते संप्रसारणम्। मघोनः। मघवभ्याम्। एवं श्वन्, युवन्॥

न्यासः

�आयुवमघोनामतद्धिते। , ६।४।१३३

"यूनः" इति। सम्प्रसारणे कृते परपूर्वत्वे च सवर्णदीर्घत्वम्()। "शौवम्()" इति। "नस्तद्धिते" ६।४।१४४ इति टिलोपः। "यौवनम्()" इति। यूनो भाव इति "हायनान्तयुवादिभ्योऽण्()" ५।१।१२९ इत्यण्(), "अन्()" (६।४।१६७) इति प्रकृतिभावात्? "टेः" ६।४।१४३ इति टिलोपाल्लोपौ न भवतः। "माघवनम्()" इति--मघवा देवताऽस्येति "सास्य देवता" ४।२।२३ इत्यण्(), पूर्ववत्प्रकृतिभावः। "शौवम्()" इत्येतद्व्युत्पादयितुमाह--"शुनो विकारः" इत्यादि। युवशब्दस्य तिप्रत्ययान्तस्यापि "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्()" (व्या।प।२९) इति सम्प्रसारणं प्राप्नोति। मधवन्नित्यस्यापि त्रित्यादेशे कृते "एकदेशविकृतमनन्यवद्भवति" (व्या।प।१६) इति तकारान्तस्यापि प्राप्नोति। तत्? कथं न भवति? इत्याह--"()आआदीनाम्()" इत्यादि। "तदर्थम्()" इति। नकारान्तानामेव यथा स्यात्(), अनकारान्तानां मा भूदित्येवमर्थम्()। "अन इत्युभयोः शेषः" इति। अन इत्यस्योभयोर्योगयोः शेषत्वेऽवयवत्वे सत्यन इत्यनेन सम्प्रसारणशेषस्यातिदेश इति न भवति॥

बाल-मनोरमा

�आयुवमघोनामतद्धिते , ६।४।१३३

शसादावचि मघवन् अस् इत्यादि स्थिते "अल्लोपोऽनः" इति प्राप्ते-()आयुवमघोनाम्। ()आआ च, युवा च, मघवा च इति द्वन्द्वः। "वसोः संप्रसारण"मित्यतः संप्रसारणमित्यनुवर्तते। "भस्ये"त्यधिकृतम्। "अल्लोपोऽनः" इत्यतोऽन इत्यपकृष्यते। तच्च ()आयुवमघोनां प्रत्येकं विशेषणं, तदन्तविधिः। फलितमाह--अन्नन्तानामित्यादि। "इग्यणः संप्रसारणम्" इति वकारस्य संप्रसारणमुकारः। मथ उ अन् इति स्थिते पूर्वरूपमुक्तं स्मारयति--संप्रसारणाच्चेति। णघ उ न् इति स्थिते गुणं स्मारयति--आद्गुण इति। अन्नन्तानां किमिति। ()आयुवमघोनामन्नन्तत्वाऽव्यभिचारात्किमर्थमन्नन्तत्वविशेषणम्। मघवन्शब्दे नकारस्य त्रादेशपक्षेऽपि एकदेशविकृतस्यानन्यतयाऽन्नन्तत्वसत्त्वादिति प्रश्नः। मघवत इति। त्रादेशपक्षे मघवन्शब्दे संप्रसारणनिवृत्त्यर्थमन्नन्तत्वविशेषणम्। यद्यप्येकदेशविकृतस्यानन्यतया अन्नन्तत्वमस्त्येव, तथापि विशेषणसामथ्र्यात् श्रूयमाणनकारान्तस्यैव संप्रसारणमित्याहुः। स्त्रियां मघवतीति। मघवतः स्त्री मघवती, पुंयोगेन स्त्रियां वृत्तौ "उगितश्चे"ति ङीप्। अत्राप्यन्नन्तत्वविशेषणान्न संप्रसारणमिति भावः। अत्र "उगिदचा"मिति नुम् तु न, ङ#ईपा व्यवधानेन तान्तस्य उगितः सर्वनामस्थानपरकत्वाऽभावात्। लिङ्गविशिष्टपरिभाषा तु नेह प्रवर्तते, विभक्तौ लिङ्गविशिष्टाऽग्रहणमित्युक्तेरिति भावः। माघवनमिति। "साऽस्य देवता" इति मघवन्शब्दादणि आदिवृद्धिः। अत्राऽणस्तद्धितत्वात्तस्मिन् परे न संप्रसारणमिति भावः। मघवभ्यामिति। भ्यामादौ हलि नलोप इति भावः। इत्यादीति। मघोने। मघोनः २। मघोनोः। मघोनाम्। मघोनि। ()आन्शब्दः प्रायेण राजवत्। शसादावचि "()आउयुवे"ति संप्रसारणं वकारस्य उकारः। शु अन् इति स्थिते "संप्रसारणाच्चे"ति पूर्वरूपमिति मत्वाह-शुनः शुनेति। इत्यादीति। शुने। शुनः २। शुनोः। शुनाम्। शुनि। युवन्शब्दोऽपि प्रायेण राजवत्। शसादावचि विशेषमाह-युवन्शब्द इति। युवन् अस् इत्यादिस्थिते "()आयुवे"ति वकारस्य संप्रसारणे उकारे यु उ अन् इति स्थिते "संप्रसारणांच्चे"ति पूर्वरूपे यु उ न् इति स्थिते सवर्णदीर्घे यून इत्यादिरूपेषु सिद्धेषु यकारस्यापि संप्रसारणे प्राप्त इत्यर्थः। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यस्य तु नायं विषयः, कार्याश्रयवर्णभेदेन लक्ष्यभेदात्। अन्यथा संस्कर्तेत्यादौ "अनचि चे"त्यादेरसकृत्प्रवृत्त्यनुपपत्तेरितिभावः।

तत्त्व-बोधिनी

�आयुवमघोनामतद्धिते ३२३, ६।४।१३३

()आयुव। "अल्लोपोऽनः"इत्यतो--ऽन" इत्यपकृष्य व्याचष्ट

#ए--अन्नन्तनामिति। अन्नन्तानां किं। मघवत इति। यद्यपि नस्य तादेशेऽप्येकदेशविकृतस्याऽनन्यत्वादन्नन्तताऽत्रास्त्येव, तथापि विशेषणसामर्थ्यच्छ्रूयमाणनकारान्तस्यैव संप्रसारणं न त्वत्रेत्याहुः। वार्तिककृता तु "()आआदीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थ"मित्यक्तम्। नन्वेवमपि "अल्लोपोऽनः"इत्यल्लोपो दुर्वार इति चान्मैवम्, भाष्यकृता पुर्वोक्तवार्तिकमत्रानुवत्र्य "अल्लोपोऽनः, नकाकान्तस्यैवे"तिव्याख्यातत्वात्। एतच्च "ऋलृ"गिति सूत्रे भाष्ये स्पष्टम्। एतेन"बहुधीवरी""राजकीय"मित्यत्राऽप्यल्लोपाऽभावः सिद्धः। "वनो र च""राज्ञः क चे"त्यादेशे कृते चकारान्तत्वाऽभावात्। स्त्रिया मघवतीति। मधवती मघवत्यौ। मघवत्य इत्यत्र लिङ्गविशिष्टपरिभाषाया "उगिदचा"मिति नुम्न शङ्क्यः, "विभक्तौ लिङ्गविशिष्टाऽग्रहणा"दित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अल्लोपो ऽनः ६।४।१३४

अनित्येवम् अन्तस्य भस्य अकारलोपो भवति। राज्ञः पश्य। राज्ञा। राज्ञे। तक्ष्णः पश्य। तक्ष्णा। तक्ष्णे। अनो नकारान्तस्याय लोप इष्यते। इह न भवति, राजकीयम् इति।

लघु-सिद्धान्त-कौमुदी

अल्लोपोऽनः २४८, ६।४।१३४

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः। दध्ना। दध्ने। दध्नः। दध्नः। दध्नोः। दध्नोः॥

न्यासः

अल्लोपोऽनः। , ६।४।१३४

तपरकरणं नञ्समासोऽयमित्याशङ्कानिरासार्थम्()। "राजकीयः" ["राजकीयम्()"--काशिका] इति। "गत्रोत्तरपदाच्छः" ४।२।१३६ इति छे प्रकृते "राज्ञः क च" ४।२।१३९ इति छः, ककारश्चान्तादेशः। अत्रापि "एकदेशविकृतमनन्यवद्भवति" (व्या।प।१६) इति॥

बाल-मनोरमा

अल्लोपोऽनः २३२, ६।४।१३४

अल्लोपोऽनः। "अत्िति लुप्तषष्ठीकं भिन्नं पदम्। "अन" इत्यवयवषष्ठ()न्तम्। अतो विशेषणम्--अनोऽवयवो योऽकारस्तस्य लोपैति। अङ्गस्येत्यधिकृतमिहावयवषष्ठ()न्तमाश्रीयते। तच्चाऽन इत्यत्रान्वेति-"अङ्गावयवो योऽन् तदवयवस्य अकारस्य लोप" इति। अङ्गस्येत्यधिकृतमिहावयवषष्ठ()न्तमाश्रीयते। तच्चाऽन इत्यत्रान्वेति--"अङ्गावयवो योऽन् तदवयवस्य अकारस्य लोप" इति भस्येत्यधिकृतमन इत्यनेनान्वेति। ततश्चाऽनोसर्वनाभस्थानयजादिस्वादिपरत्वं लभ्यते। तदाह--अङ्गावयव इत्यादिना। "अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्या"दिति प्राचां व्याख्याने तु तक्ष्णेत्यत्र तकारादकारस्यापि लोपप्रसङ्गः। "भस्याङ्गस्याकारस्य लोपः स्या"दिति प्राचां व्याख्याने तु तक्ष्णेत्यत्र तकारादकारस्यापि लोपप्रसङ्गः। "भस्याङ्गस्यानोऽकारस्य लोप" इति व्याख्याने तु अनसा मनसेत्यत्रातिव्याप्तिः। "अन"इत्यावर्त्य "अन्नन्तस्य भस्याङ्गस्यानोऽकारस्य लोप"इति व्याख्याने तु "अनस्तक्ष्णे"त्यत्राति व्याप्तिरेव। तस्मादुक्तैव व्याख्येत्यन्यत्र विस्तरः। यूषन्-अस् इत्यत्र षकारादकारस्य लोपे यूष् न् अस् इति स्थिते।

बाल-मनोरमा

अचः , ६।४।१३४

शसादावचि नुमभावात्प्र-अच् अस् इति स्थिते-अचः। अच इत्यन्चुधातोः "अनिदिता"मिति लुप्तनकारस्य षष्ठ()न्तम्। भस्येत्यधिकृतम्। "अल्लोपो नः" इत्यतोऽल्लोप इत्यनुवर्तते। तदाह--लुप्तेति।

तत्त्व-बोधिनी

अल्लोपोऽनः १९६, ६।४।१३४

अल्लोपोऽनः। "भस्ये"त्यनेनैक्षिप्तः प्रत्ययविशेषः, अङ्गं चेति द्वयमनो विशेषणम्, अन् तु अकारस्येत्यभिप्रेत्य व्याचष्टे--अङ्गावयव इकत्यादि। अन्नन्तस्य भस्याऽङ्गस्याऽकारस्य लोपः स्या"दिति प्राचां व्याख्याने "तक्ष्णे"त्यादौ तकाराऽकारस्यापि लोपः स्यात्। "भस्याङ्गस्यानोऽकारस्ये"ति व्याख्याने तु "अनसा" "मनसे"त्यादौ स्यात्। तत्रावृत्त्यादिनाऽन्नन्तस्य भस्याङ्गस्यानो।डकारस्येति व्याख्यानेऽपि "अनस्तक्ष्णे"त्यादावतिव्याप्तिरेवेति बावः। सूत्रे तपरकणं नञ्समासभ्रमनिवारणाय कृतमित्येके। ननु पाणितीति प्राण्, ततः शसादिप्रत्यये "प्राणः" इत्यादौ "अनितेः" इति णत्वस्याऽसिद्धतयाऽतिप्रसङ्गः स्यादिति तद्वारणायैव तपरकरणमस्त्विति चेन्मैवम्। सवर्णदीर्घ कृते अन एव तत्राऽसत्त्वात्। न च "वर्णादाङ्गं बलीयः" इति सवर्णदीर्घात्प्रागेव लोपः प्रवर्तत इति अस्त्येवाऽन्रूपमिति वाच्यम्,तथाहि सति व्यावर्त्याऽलाभेन तपरकरणवैयथ्र्यस्य तदवस्थत्वात्। वस्तुतो वार्णपरिभाषेह न प्रवर्तते, युगपत्प्रवृत्तावेव वार्णादाङ्गस्य बलीयस्त्वात्। क्विपि "अनुनासिकस्ये"ति दीर्घे सवर्णदीर्घात्प्रागपि अनोऽभावाच्च। तस्माद्भ्रमनिरासार्थमेव तपरकरणं, न तु "प्राण" इत्यादावनोऽकारलोपवारणार्थमिति तेषामाशयः। वस्तुतस्तु एकदेशविकृतन्यायेन भवत्येव तत्राऽतिप्रसङ्ग इति तपरकरणमत्रावश्यकमेवेति नव्याः।

तत्त्व-बोधिनी

अचः ३६८, ६।४।१३४

अचः। "अल्लोपोऽनः"इत्यतोऽल्लोप इत्यनुवर्तते, "भस्ये"ति च। तदाह---भस्याकारस्य लोपः स्यादिति। अत्र नव्याः--यद्यत्राञ्चतेर्भस्येति सामानाधिकरण्येनान्वयः स्वीक्रियते तर्हि "प्रतीचः""प्रतीचे"त्यादि न सिध्येत्। उपसर्गसहितस्यैव भत्वेन केवलस्याऽञ्चतेर्भत्वाऽभावात्। "भस्यावयवस्याञ्चते"रिति वैयधिकरण्येनान्वये तु प्रत्यगात्मनेत्यादावञ्चतेकारस्य लोपः स्यात्। "अञ्चत्यन्तस्य भस्याकारस्य लोप"इति व्याख्यानेतु "प्राचः" "प्रातीचे"प्रशब्दाकारस्यापि लोपः स्यात्। तन्त्रावृत्त्यादिनाऽञ्चत्यन्तस्य भस्याञ्चतेरकारस्येति व्याख्यानेऽपि--प्रत्यञ्चमञ्चति प्रत्यङ्। ततः शसादिषु "प्रत्यक्वः""प्रत्यक्चे"त्यादावतिप्रसङ्ग एव। तस्मात् "अल्लोपोऽनः"इत्यत्रेवात्रापि "अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽञ्चतिस्तस्याऽकारस्य लोपः स्या"दिति व्यख्येयम्। "द्युप्रागपागुदक्प्रतीचः"इति निर्देशश्चेह व्याख्याने लिङ्गमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

षपूर्वहन्धृतराज्ञाम् अणि ६।४।१३५

षकारपूर्वो यः अन् हनः धृतराज्ञश्च तस्य अकारलोपो भवति अणि परतः। औक्ष्णः। ताक्ष्णः। भ्रौणघ्नः। धार्तराज्ञः। षपूर्वहन्धृतराज्ञाम् इति किम्? सामनः। वैमनः। अनिति प्रकृतिभावेन अल्लोपटिलोपौ उभावपि न भवतः। अणि इति

किम्? ताक्षण्यः।

न्यासः

षपूर्वहन्धृतराज्ञामणि। , ६।४।१३५

"अन्()" ६।४।१६७ इति प्रकृतिभावेनाल्लोपस्य निवृत्तिर्मा भूदित्येवमर्थं वचनम्()। "औक्ष्णः, ताक्ष्णः" इति। उक्षन्(), तक्षन्(), इत्येताभ्यामपत्यार्थेऽण्()। "भ्रौणाघ्नः" इति। भ्रूणं हतवानिति "ब्राह्मभ्रूणवृत्रेषु हनः" ३।२।८७ ["ब्राह्मभ्रूणवृत्रेषु क्विप्()" इति सूत्रम्()] इति क्विप्(), तदन्तादण्(), "हो हन्तेञ्णिन्नेषु" ७।३।५४ इति कुत्वम्()। "धात्र्तराज्ञः" इति। घृतराजशब्दाद्बहुव्रीहेरण्()। "सामनः, वैमनः" इति। "तस्येदम्()" ४।३।१२० इत्यण्(), "उभावपि न भवतिः" इति। अल्लोपटिलोपावुभावपि चापेक्ष्य प्रकृतिभावस्य विधानात्()। "ताक्षण्यः" इति। "कुर्वादिब्यो ण्यः" ४।१।१५१ इति ण्ये प्रकृते सेनान्तलक्षणकारित्वाण्ण्यप्रत्ययः" ४।१।१५२, "ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिभावः॥

बाल-मनोरमा

षपूर्वहन्धृतराज्ञामणि ११४४, ६।४।१३५

ननु प्रकृतिभावादल्लोपो न स्यादत आह--षपूर्वहन्। "अल्लोपोऽनः" इत्यनुवर्तते। "भस्ये"त्यधिकृतं, तदाह--षपूर्व इति। ताक्ष्ण इति। "तक्ष्णोऽण उपसङ्ख्यान"मिति कारिलक्षणण्यस्यापवादोऽण्। ताक्षण्य इति। "सेनान्तलक्षणकारिभ्यश्च" इति ण्यः।

तत्त्व-बोधिनी

षपूर्वहन्धृतराज्ञामणि ९५१, ६।४।१३५

ताक्ष्ण इति। शिवादित्वात्, "तस्येदम्िति वाऽण्। ताक्ष्ण्य इति। कारिलक्षणोण्यः। कुलात्खः। केवलात्कुलशब्दात् "अपूर्वपदा"दित्यादिना विशेषविहिताभ्यामपि यड्ड्कञ्भ्यां खो न बाध्यते, तद्विधावन्यतरस्याङ्ग्रहणादित्याशयेनाह--।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा ङिश्योः ६।४।१३६

ङौ परतः शीशब्दे च अनो विभाषा अकारलोपो भवति। राज्ञि, राजनि। साम्नि, सामनि। साम्नी, सामनी।

लघु-सिद्धान्त-कौमुदी

विभाषा ङिश्योः २४९, ६।४।१३६

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्याङत् ङिश्योः परयोः। दध्नि, दधनि। शेषं वारिवत्॥ एवमस्थिसक्थ्यक्षि॥ सुधि। सुधिनी। सुधीनि। हे सुधे, हे सुधि॥

न्यासः

विभाषा ङिश्योः। , ६।४।१३६

"शीशब्दे च" इति। एतेन "नपुंसकाच्च" ७।१।१९ इति यो विहितः शोशब्दस्तस्येदं ग्रहणम्(), न तु "जश्शसोः शिः" ७।१।२० इति यो विहितः शिशब्दस्तस्येदं ग्रहणमिति दर्शयति। कुतः पुनरेतज्ज्ञायते? शिशब्दे भसंज्ञाया अभावात्()॥

बाल-मनोरमा

विभाषा ङिश्योः २३५, ६।४।१३६

विभाषा ङिश्योः। "अल्लोपोऽन" इत्यनुवर्तते। "अङ्गस्ये"ति "भस्ये"ति चाधिकृतं। "भस्ये"त्यनेन च असर्वनामस्थानयजादिस्वादिपरत्वे पूर्ववदनो लभ्यते। तदाह--अङ्गावयव इति। ङिश्योरिति। ङिश्च शी चेति विग्रहः। "नपुंसकाच्चे"ति विहित एवाऽत्र शी गृह्यते, नतु जश्शसोश्शिः, तस्मिन् परे भत्वाऽसम्भवात्। पक्षे इति। यूषन्नादेशाऽभावपक्षे इत्यर्थः। अथ क्वचिच्छसादिभ्योऽन्यत्रापि पदाद्यादेशं साधायितुमाह--पद्दन्न इतीति। प्रकारेति। प्रकारः सादृश्यम्। तच्च प्रत्ययत्वेन बोध्यम्। प्रभृतिग्रहणस्य प्रकारार्थत्वे प्रमाणं दर्शयति--अत एवेति। प्रभृतिग्रहणस्य प्रकारार्थकत्वादेवेत्यर्थः। "ककुद्दोषणी याचते महादेवः" इत्येवं भाष्ये औङादेशभूतशीभावे परत उदाह्मतो दोषन्नादेशोऽत एव सङ्गच्छते इत्यन्वयः। तेनेति। प्रकारार्थकप्रभृतिग्रहणेनेत्यर्थः। "पदङ्घ्रि"रित्यत्र "प"दिति प्रथमैकवचनम्, "स्वान्तं ह्म"दित्यत्र ह्मदिति च सङ्गच्छत इत्यर्थः। आदिना निशादिसङ्ग्रहः। आसन्यं प्राणमिति। आसन्यं प्राणमूचुरिति चाऽत एव सङ्गच्छते इत्यन्वयः। आसनशब्दस्य आसन्नादेश इति भ्रमं वारयति--आस्ये भव इति। प्राणशब्दसमभिव्याहारादियमेव व्युत्पत्तिरिति भावः। "शरीरावयवाच्चे"त्यास्यशब्दाद्भवार्थे यत्प्रत्यये आसन्नादेशः। "ये चाऽभावाकर्मणोः" इति प्रकृतिभावा"न्नस्तद्धिते" इति टिलोपो न। प्रभृतिग्रहणस्य प्रकारार्थत्वाऽभावे त्विहाऽऽसन्नादेशो न स्यात्, यत्प्रत्ययस्य। शसादिषु सुप्स्वनन्तर्भावादिति भावः। ननु "दोषणी" इति भाष्ये नपुंसकप्रयोगोऽनुपपन्नः, "दोषं तस्य तथाविधस्ये"त्यादौ पुंस्त्वस्यैव प्रयोगदर्शनादित्यत आह--दोष्शब्दस्य द्वितीयैकवचनं दोरिति। पुंस्त्वे दोषमिति स्यादिति भावः।

ननु भाष्यानुसाराद्दोष्शब्दस्य नपुंसकत्वमेव स्यादित्यत आह--भुजेति। "भुजबाहू प्रवेष्टो दो"रिति कोशात्पुंस्त्वमपीत्यर्थः। नन्वयं कोशो दोष्शब्दस्य नपुंसकत्वेऽप्युपपन्न इत्यत आह-साहचर्यादिति। पुंलिङ्गभुजादिशब्दसाहचर्यादित्यर्थः। "साहचर्याच्च कुत्रचि"दिति कोशे परिभाषितत्वादिति भावः। दोष्शब्दस्य पुंस्त्वसाधने फलं दर्शयति--दोषं तस्येति। "दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुण"मिति श्रीहर्षः। दोषं हस्तं दूषणं च भजतश्चापस्य गुणं मौर्वीम्, अतिशयं च गृह्णन्नित्यन्वयः। अत्र दोषमिति दोष्शब्दस्य पुंलिङ्गद्वितीयैकवचनम्। अत्र "सु प्रभृतिष्वि"ति वाच्ये "शस्प्रबृतिष्वि"ति वचनात्सुपि क्वचिदेव पदाद्यादेशा इति गम्यते। द्वयोरह्नोरिति। "तद्धितार्थ" इति समासः। "कालाट्ठ"ञिति ठञ्। "द्विगोर्लुगनपत्ये" इति लुक्। "राजाहः सखिभ्यष्ट"जिति टच्। "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशः। रामशब्दवद्रूपाणि।

तत्त्व-बोधिनी

विभाषा ङिश्योः १९९, ६।४।१३६

विभाषा ङिश्योः। "शी"ति-"नपुंसकाच्चे"ति विहितो गृह्यते, न तु "जश्शसोः शिः"। तस्मिन्नमत्वात्। "भस्ये"त्यनेनाऽसर्वनामस्थानस्यैव यजादेराक्षेपात्। तदेतदाह--अरुआवनामस्थानेत्यादि। ककुद्दोषणी इति। ककुत्--दोषणी इति च्छेदः। एकपदत्वे त्वनुपपत्तिरनुपदमेव वक्ष्यते। आसन्यमिति। "ये चाभावकर्मणो"रिति प्रकृतिभावात् "नस्तद्धिते" इति टिलोपो न। अत एवेति। "ककुद्दोषणी" इति प्रयोगादेवेत्यर्थः। यंद्यपि ककुच्चदोश्च तयोः समाहारः ककुद्दोः। ककुद्दोश्च ककुदोश्च ककुद्दोषणी कृते भाष्यं सुयोजमिति दोःशब्दस्य नपुंसकत्वे नेदं प्रमाणं, तथापि "ककु"दित्यस्य पृथक्पदत्वमेव न्याय्यम्। अन्यथा बाह्वोर्द्वित्वे लब्धेऽपि ककुद एकत्वं न लभ्येतेति भावः। "तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः" इति रघुः। तत्र दक्षिणं दोरुद्यम्य तमुपाद्रवदित्यन्वयः। दोषं तस्येति। अयं च श्रीहर्षप्रयोगः। दोषं हस्तु दूषणं च भजतः चापस्येति संबन्धः। द्वयोरह्नोर्भव इति। तद्धितार्थ इति समासः। "राजाहःसखिभ्य" इति टच्, "अह्नोऽह्न एतेभ्यः" इति अह्नादेशः, कालाट्ठञो "द्विगोर्लुगनपत्ये" इति लुक्।

सूत्रम्

काशिका-वृत्तिः

न संयोगाद् वमन्तात् ६।४।१३७

वकारमकारान्तात् संयोगादुत्तरस्य अनः अकारस्य लोपो न भवति। पर्वणा। पर्वणे। अथर्वणा। अथर्वणे। संयोगातिति किम्? प्रतिदीव्ना। प्रतिदीव्ने। साम्ना। साम्ने। वमन्तातिति किम्? तक्ष्णा। तक्ष्णे।

लघु-सिद्धान्त-कौमुदी

न संयोगाद्वमन्तात् २८५, ६।४।१३७

वमन्तसंयोगादनोऽकारस्य लोपो न। यज्वनः। यज्वा। यज्वभ्याम्॥ ब्रह्मणः। ब्रह्मणा॥

न्यासः

न संयोगाद्वमन्तात्?। , ६।४।१३७

"प्रति दीव्ना" इति। "हलि च" ८।२।७७ इति दीर्घः। अथान्तग्रहणं किमर्थम्(), न "दमः" इत्येवोच्येत, वकारमकाराभ्यां संयोगेन विशिष्यमाणेन च तदन्तविधिर्भवतीत्यन्तरेणाप्यन्तग्रहणं तदन्तविधिर्लभ्यत एव? सत्ययेतत्(), विस्पष्टार्थमन्तग्रहणम्()॥

बाल-मनोरमा

न संयोगाद्वमन्तात् , ६।४।१३७

शसि अल्लोपे प्राप्ते--न संयोगाद्वमन्तात्। वश्च मूच वमौ, तावन्तौ यस्येति विग्रहः। "अल्लोपोऽन" इत्यनुवर्तते। तदाह--वकारेत्यादिना। अन्तग्रहणं स्पष्टार्थं, वमयोः संयोगविशेषणत्वादेव तदन्तलाभात्। इत्यादीति। यज्वने। यज्वनः २। यज्वनोः २। भ्यामादौ हलि राजवदित्यर्थः। मान्तसंयोगस्योदाहरणमाह--ब्राह्ण इति। शसादावचि नाऽल्लोपः। शेषं राजवदिति भावः। "वेदस्तत्त्वं तपो ब्राह्, ब्राह्आ विप्रः प्रजापतिः" इत्यमरः। वृत्रो नाम असुरः, तं हतवानित्यर्थे ब्राह्भ्रूणवृत्रेषु क्विप्। कपावितौ। अपृक्तलोपः। उपपदसमासः। "सुपो धातु" इत्यमो लुक्, वृत्रहन्शब्दः। तस्मात्सुबुत्पत्तिः।

---

सूत्रम्

काशिका-वृत्तिः

अचः ६।४।१३८

अचः इत्ययम् अञ्चतिर्लुप्तनकारो गृह्यते। तदन्तस्य भस्य अकारस्य लोपो भवति। दधीचः पश्य। दधीचा। दधीचे। मधूचः पश्य। मधूचा। मधूचे।

लघु-सिद्धान्त-कौमुदी

अचः ३३७, ६।४।१३८

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः॥

न्यासः

अचः। , ६।४।१३८

"अच इत्ययमञ्चतिर्लुप्तनकारो गृह्ते" इति। कुत एतत्(), प्रत्याहारः कस्मान्न गृह्ते? "अल्लोपः" ६।४।१३४ इत्यानुवृत्तेर्न

शक्यते प्रत्याहारो ग्रहीतुम्()। प्रत्याहारग्रहणे सति तेनाकारो विशिध्येत, तथा चानर्थकं प्रत्याहारग्रहणं स्यात्()। न ह्नकारोऽचत्वं व्यभिचरति। ननु चाङ्गं प्रकृतम्(), तत्? प्रत्याहारेण विशिष्यते--अजन्तस्याङ्गस्येति? न; एवं सत्यजन्तस्याङ्गस्याल्लोपो भवतीत्येष सूत्रार्थः स्यात्()। तथा च "यस्येति च" ६।४।१४८ इति लोपोऽनर्थकः स्यात्(); अनेनैव सिद्धत्वात्()। अपि च "द्युप्रागपागुदक्प्रतीचो यत्()" ४।२।१०० इत्येत्रमादिनिर्देशो लिङ्गं ह्नत्राप्रत्याहारग्रहणस्य। यदि हि प्रत्याहारग्रहण स्यात्(), अत्राञ्चतेग्र्रहणं न स्यात्(), न ह्नेतदजन्तमङ्गम्()। अत एव निर्देशात्? पचाद्यजपि न गृह्नते। न ह्नेतत्? पचाद्यजन्तमङ्गम्()। "दधीचः" इति। दध्यञ्चतीति ऋत्विगादिना ३।२।५९ क्विन्(), "आनिदिताम्()" ६।४।२४ इत्यादिनानुनासिकलोपः; "चौ" ६।३।१३७ इति दीर्घः॥

---

सूत्रम्

काशिका-वृत्तिः

उद ईत् ६।४।१३९

उदः उत्तरस्य अचः ईकारादेशो भवति। उदीचः। उदीचा। उदीचे।

लघु-सिद्धान्त-कौमुदी

उद ईत् ३३९, ६।४।१३९

उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्। उदीचः। उदीचा। उदग्भ्याम्। ,

न्यासः

उद ईत्?। , ६।४।१३९

बाल-मनोरमा

उद ईत् , ६।४।१३९

शसादौ "अचः" इति लोपे प्राप्ते--उद ईत्। "अचः" इति सूत्रमनुवर्तते, "अल्लोप" इत्यतः "अत्" इति च। "भस्ये"त्यधिकृतं, तदाह--उच्छब्दादित्यादिना। सम् अञ्चतीति विग्रहे क्विन्नादि।

तत्त्व-बोधिनी

उद ईत् ३७२, ६।४।१३९

उद ईत्। "अचः"इत्यस्यापवादः। इह "अच"इत्यनुवर्तते, "भस्ये"ति च। तदाह--उच्छब्दात्परस्य लुप्तनकारस्येत्यादि। भस्येति किम्()। उदञ्चौ। उदञ्चः। उदग्भ्याम्। लुप्तमकारस्येति किम्(), पूजायाम्--"उदञ्चः""उदञ्चे"ति यथा स्यादिति।

---

सूत्रम्

काशिका-वृत्तिः

आतो धातोः ६।४।१४०

आकारान्तस्य धातोः भस्य लोपो भवति। कीलालपः पश्य। कीलालपा। कीललपे। शुभंयः पश्य। शुभंया। शुभंये। आतः इति किम्? निया। निये। धातोः इति किम्? खट्वाः पश्य। मालाः पश्य। आतः इति योगविभागः, तेन क्त्वो ल्यप्, हलः

श्नः शानचित्येवम् आदि सिद्धं भवति।

लघु-सिद्धान्त-कौमुदी

आतो धातोः १६७, ६।४।१४०

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः। अलोऽन्त्यस्य। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम्? हाहान्॥ हरिः। हरी॥

न्यासः

आतो धातोः। , ६।४।१४०

"कीलालपः" इति। "विजुपे छन्दसि" ३।२।७३ इति विचि प्रकृते "आतो मनिन्क्वनिब्वनिपश्च" ३।२।७४ इति विच्()। "नियेः" इति। क्विप्? इयङ॥

बाल-मनोरमा

आतो धातोः २३८, ६।४।१४०

औटि-वि()आपौ। शसि वि()आपा असिति स्थिते पूर्वसवर्णदीर्घे प्राप्ते-आतो धातोः। "अङ्गस्ये"ति "भस्ये"ति चाधिकृतं। "धातो"रिति-आत इति षष्ठयन्तेन विशेष्यते। तेन तदन्तविधिः। "अल्लोपोऽनः" इत्यतो "लोप" इत्यनुवर्तते। तदाह--आकारान्तो य इति। अलोऽन्त्यस्येति। "अन्त्यस्याऽकारस्य लोप" इति शेषः। वि()आपाभ्यामिति। अभत्वादाल्लोपो नेति भावः। इत्यादीति। वि()आपाभि। वि()आपे। वि()आपः। वि()आपोः। वि()आपाम्। वि()आपि। वि()आपोः वि()आपासु। एवं शङ्खध्मादय इति। शङ्खेन शङ्खं वा धमतीति शङ्खध्माः। "ध्मा शब्दाग्निसंयोगयोः"। पूर्ववत् विच् क्विब्वा। आदिना सोमपादिसङ्ग्रहः। सोमं पिबतीति सोमपाः। कीलालं पिबतीति कीलालपाः। वारिपर्यायेषु "पयः कीलालममृत"मित्यमरः। मधु पिबतीति मधुपा इत्यादि। धातोः किमिति। "अतोऽनापः" इत्येव सूत्र्यतां, तावतैव रमा इत्याद्याबन्तेषु लोपव्यावृत्तेरिति प्रश्नः। हाहानिति। पूर्वसवर्णदीर्घे "तस्माच्छसः" इति नत्वम्। "हाहा" इति गन्धर्वविशेषवाचकमव्युत्पन्न प्रातिपदिकमेतत्। "हाहाहूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसः" इत्यमरः। सुटि वि()आपावत्। शसि-हाहा-असित्यत्रापि "आतोऽनाप#ः" इत्याल्लोपः स्यात्, अतो धातुग्रहणमित्यर्थः। टासवर्णदीर्घ इति। "टा" इत्यविभक्तिनिर्देशः प्रक्रियादशायां न दुष्यति। तृतीयैकवचने सवर्णदीर्घ इत्यर्थः। एवमग्रेऽपि योज्यम्। ङे वृद्धिरिति। हाहा-ए इति स्थिते "वृद्धिरेचि" इति वृद्धिरित्यर्थः। ङसिङसोरिति। हाहा-असित्यत्र सवर्णदीर्घ इत्यर्थः। ओसि वृद्धिरिति। हाहा ओस् इत्यत्र "वृद्धिरेची"ति वृद्धिरित्यर्थः। ङौ आद्गुण इति। "हाहा इ" इत्यत्र आद्गुण इति गुण एकार इत्यर्थः। क्त्वा, श्ना इति प्रत्ययौ आकारान्तौ वि()आपावत्। नन्वधातुत्वात्कथमिह आल्लोप इत्यत आह--आत इति योगेति। "आतो धातोः" इत्यत्र "आत" इति विभज्यते। आकारान्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। तेन "क्त्वः" "श्न" इति शसि रूपं सिध्यति। "धातो"रिति योगान्तरम्। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। आबन्तव्यावृत्त्यर्थंस हाहादिव्यावृत्त्यर्थं चेदम्। "आत" इति योगविभागस्तु क्त्वः श्न इत्यादौ क्वचिदाल्लोपार्थः। ननु मालेवाचरिति मालाः। आचारक्विबन्तात्कर्तरि क्विप्। सुबुत्पत्तिः। अत्र कृतेऽपि धातुग्रहणे शसादावाल्लोपो दुर्वारः,"सनाद्यन्ताः" इति धातुत्वादादन्तत्वाच्च। नच "अनाप इति वक्तव्य"मिति वार्तिकादाबन्तेषु नाल्लोप इति शङ्क्यम्, उक्तरीत्या योगविभागमभ्युपगम्य "अनाप" इति वार्तिकस्य भाष्ये प्रत्याख्यातत्वादिति चेन्मैवम्, एतद्वार्तिकभाष्यप्रमाण्यादेव आबन्तेभ्य आचारक्विबभावबोधनादिति शब्देन्दुशेखरे प्रपञ्चितम्। हरिरिति। हरिशब्दात्सुः। रुत्वविसर्गौ। नच विसर्जनीयस्य अकारादुपरि उपसङ्ख्यानेनाच्त्वात्तस्मिन् परतो रेफादिकारस्य यणादेशः शङ्क्यः, यणादेशे कर्तव्ये विसर्जनीयस्याऽसिद्धत्वात्। प्रथमयोरिति। हरि-औ इति स्थितेऽनेन पूर्वसवर्णदीर्घे

सति हरी इति रूपमित्यर्थः। जसि हरि अस् इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते--।

तत्त्व-बोधिनी

आतो धातोः २०२, ६।४।१४०

हाहानिति। गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम्। "हाहा हूहूश्चैवमाद्या गन्धर्वाः" इत्यमरः। केचित्तु अकारो वासुदेवस्तेन सह वर्तन्ते इति साः। तान् सानिति प्रत्युदाहरन्ति। क्त्व श्न इति। यद्यपि "क्त्वो ल्यप्" श्नः शानज्झौ", "क्रमश्च क्त्वि" इति निर्देशादेतत्सूत्रेष्वातो लोपः सिध्यति, तथापि क्त्वो ल्यब्भवति" "श्नः शानज्भवती"ति व्याख्यानवाक्येष्वसाधुत्वशङ्कावारणायेदमुक्तम्। इत्यादन्ताः।

---

सूत्रम्

काशिका-वृत्तिः

मन्त्रेष्वाङ्यादेरात्मनः ६।४।१४१

मन्त्रेषु आङि परतः आत्मनः आदेर्लोपो भवति। त्मना देवेभ्यः। त्मना सोमेषु। मन्त्रेषु इति किम्? आत्मना कृतम्। आङि इति किम्? यदात्मनस्तन्नो वरिष्ठा। आगो ऽन्यत्र अपि दृश्यते। त्मन्या समञ्जन्।

न्यासः

मन्त्रेष्वाङ्यादेरात्मनः। , ६।४।१४१

"आङ" इति तृतीयैकवचनस्यैषा संज्ञा पूर्वाचार्यैर्विहिता। "आङोऽन्यत्रापि दृश्यते" इति। "मन्त्रेषु" इति बहुवचननिर्देशादेतल्लभ्यते। बहुवचननिर्देशेन ह्ययमर्थः सूचितः--बहुविषयोऽयं निर्देश इति। एवञ्च बहुविषयो भवति यद्याङोऽन्यत्रापि क्वचिद्भवति, नान्यथा। "त्मान्यासमञ्जत" इति। सप्तम्येकवचने। अत्रादिलोपः। आदिग्रहणमुत्तरार्थम्()। इह तु पूर्वसूत्रात्? "आतः" ६।४।१४० इत्यनुवृत्तेरन्तरेणाप्यादिग्रहणमादेरेवलोपो भवतीति शक्यते विज्ञातुम्()॥

---

सूत्रम्

काशिका-वृत्तिः

ति विंशतेर् डिति ६।४।१४२

भस्य विंशतेः तिशब्दस्यडिति प्रत्यये लोपो भवति। विंशत्या क्रीतः विंशकः। विंशं शतम्। विंशतेः पूर्णो विंशः। एकविंशः। डिति इति किम्? विंशत्या।

लघु-सिद्धान्त-कौमुदी

ति विंशतेर्डिति ११८०, ६।४।१४२

विंशतेर्भस्य तिशब्दस्य लोपो डिति परे। विंशः। असंख्यादेः किम्? एकादशः॥

न्यासः

ति विंशतेर्डिति। , ६।४।१४२

"विंशकः" इति। "विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्()" ५।१।२४ इति ड्वुन्(), तिशब्दस्य लोपे कृते अतो गुणे" ६।१।९४

पररूपत्वम्()। "विंशं शतम्()" इति। विंशतिरधिकाऽस्मिन्निति "शदन्तविंशतेश्च" ५।२।४६ इति डप्रत्ययः। "विंशः, एकविंशः" इति। तस्य पूरणे डट्? ५।१।४७। तिग्रहणमनत्यस्य मा भूदित्येवमर्थम्()॥

बाल-मनोरमा

ति विंशतेर्डिति ८३४, ६।४।१४२

आसन्नशब्दस्य विंशतिशब्देन षष्ठ()न्तेन समासे डचि कृते "टे"रितीकारमात्रस्य लोपे प्राप्ते आह--ति विंशतेर्डिति। तीति लुप्तषष्ठीकम्। "भस्ये"त्यधिकृतम्। "अल्लोपोऽनः" इत्यनुवर्तते। तदाह--विंशतेर्भस्येति। अलोऽन्त्यस्ये"ति न भवति, "नानर्थकेऽलोऽन्त्यविधि"रित्युक्तेः। आसन्नविंशा इति। विंशतिसङ्क्याऽऽसन्नसङ्क्यावन्त इत्यर्थः। डचि कृते आसन्नविंशति-अ-इति स्थिते, तिलोपे सवर्णदीर्घ बाधित्वा "अतो गुणे" इति पररूपे, आसन्नविंशशब्दोऽदन्तः। "उत्तरपदत्वे चापदादिविधौ प्रतिषेधः" इति प्रत्ययलक्षणाऽभावेनाऽपदत्वात्। अथाऽदूरशब्दस्योदाहरति--अदूरतिं()रशा इति। तिं()रशतोऽदूरा इति विग्रहः। तिं()रशत्सङ्ख्याया अदूरसङ्ख्यावन्त इत्यर्थः। डचि टिलोपः। अधिकस्योदाहरति--अदिकचत्वारिंशा इति। चत्वारिंशतोऽधिका इति विग्रहः। चत्वारिंशत्सङ्ख्याया अधिकसङ्ख्यावन्त #इत्यर्थः। डचि टिलोपः। सङ्ख्यावाचकशब्दस्य सङ्ख्यावाचकशब्देन समासमुदाहरति--द्वित्रा इति। "वाऽर्थे बहुव्रीहिः। द्वित्यन्यतरा इत्यर्थः। डचि टिलोपः। ननु "द्वित्रा आनीयन्ता"मित्युक्ते कदाचिदद्वावानयति, तदा कथं बहुवचनमिति चेत्, अत्र भाष्ये "अनिश्चये बहुवचनं प्रयोक्तव्य"मिति वचनात् समाहितम्। तथा "कार्यान्वये विकल्पः शब्दात्तु नियमेन कोटिद्वयोपस्थिति। तदुपस्थित्यनन्तरमन्यतरानयनमिच्छया। अतः शब्दान्नियमेन पञ्चानामुपस्थिति"रित्यपि समाहितम्। नच वाऽर्थप्राधान्यात् "अनेकमन्यपदार्थे" इत्येवाऽत्र सिद्धमिति वाच्यं, "शेषाद्विभाषे"ति कबभावार्थकत्वात्। स हि कप् "अनेकमन्यपदार्थे" इति विहितबहुव्रीहावेव प्रवर्तत इति भाष्ये स्पष्टम्। अथ सङ्ख्यायाः सङ्ख्यया समासे उदाहरणान्तरमाह--द्विदशा इति। शब्दशक्तिस्वाभाव्यात्सुजर्थान्तर्भावेण पूर्वपदस्य वृत्याश्रयणात् समासे सुचो न श्रवणमिति भाष्ये स्पष्टम्। द्वित्वसङ्ख्याकदशत्ववन्त इत्यर्थः। फलितमाह--विंशतिरित्यर्थ इति।

तत्त्व-बोधिनी

ति विंशतेर्डिति ७३१, ६।४।१४२

तिशब्दस्येति। आसन्नविंशा इति। इह तिलोपोत्तरम् "अतो गुणे"इति पररूपमेव, न तु टिलोपः, टिलोपस्याऽऽभीयत्वेनाऽसिद्धत्वात्। न चात्र पररूपमपि न स्याट्टिलोपस्य स्थानिवत्त्वादिति शङ्क्यम्, अज्झलादेशोऽजादेशो न भवतीति "अचः परस्मि"न्नित्यस्याऽप्रवृत्तेः। "स्थानिवदादेशः" इति तु न प्रवर्तत एव, शास्त्रिये कार्ये हि क्रतव्ये तत्प्रवृत्तिर्न तु विधातार्थमिति सिद्धान्तात्। विंशतेरिति। इहापि आसन्ना विंशतिर्येषामिति न विगृहीतम्, उक्तयुक्तेः। अदूरेत्यादि। अदूरा()स्त्रशतः, अधिकाश्चात्वारिंशत इति विग्रहौ बोध्यौ। द्वित्रा इति। वाऽर्थेऽयं बहुव्रीहिः। स च वार्थो न विकल्पः, पक्षे द्विवचमस्याप्यापत्तेः, किं तु संशयः। स चाऽनियतसकङ्ख्यावमर्शी, तत्र त्रयोऽपि सर्वदा भासन्त इति तदपेक्षं बहुवचनमेव। आनयनादिक्रियान्वयस्तु द्वयोस्त्रयाणां वेत्यनियत एवेत्याहुः। द्विरावृत्ता इति। सुजर्थे बहुव्राहिरित्यर्थः। वृत्तौ तु सुजार्थान्तर्भावेणैवैकार्थीभावाश्रयणात्सुचोऽप्रयोगः। सङ्ख्येति किम्()। चत्वारो ब्राआह्मणाः। अव्ययेत्यादि किम्()। ब्राआह्मआणाः पञ्च। सङ्ख्येये इति किम्। अधिका विंशतिर्गवाम्। सङ्ख्यार्थेयं सङ्ख्येति न सम#आसः। आ दशतः सङ्ख्याः सङ्ख्येते वर्तन्ते न तु सङ्ख्यायाम्। विंशत्याद्याः सङ्ख्यास्तु सङ्ख्येय सङ्ख्ययोर्वर्तन्ते। यदा तु सङ्ख्येये विंशतिशब्दस्तदा भवत्येव समासः--अधिकाविंशा इति।

---

सूत्रम्

काशिका-वृत्तिः

टेः ६।४।१४३

टिसंज्ञकस्य डिति प्रत्यये परतः लोपो भवति। कुमुद्वान्। नड्वान्। वेतस्वान्। उपसरजः। मन्दुरजः। त्रिंशता क्रीतः त्रिंशकः। डिति अभस्य अपि अनुबन्धकरणसामर्थ्यत् टिलोपो भवति।

लघु-सिद्धान्त-कौमुदी

टेः २४३, ६।४।१४३

डिति भस्य टेर्लोपः। कतरत्, कतरद्। कतरे। कतराणि। हे कतरत्। शेषं पुंवत्॥ एवं कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमस्य त्वन्यतममित्येव। (एकतरात्प्रतिषेधो वक्तव्यः)। एकतरम्॥

न्यासः

टेः। , ६।४।१४३

"कुमुद्वान्()" इत्यादि। कमुदनडवेतसेभ्यश्चातुरर्थिको ड्मतुप्? ४।२।८६। "उपसरजः" इति। "सप्तम्यां जनेर्डः" ३।२।९७ एवं "मन्दुरजः" इत्यत्रापि। अत्र हि "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्()" ६।३।६२ इति पूर्वपदस्य ह्रस्वत्वम्()। "तिं()रशकः" इति। पूर्ववत्? ड्वुन्()। ननु च "भस्य" ६।४।१२९ इत्यनुवत्र्तते, न च ड्मतुपि डप्रत्यये च धातोर्विहिते पूर्वस्य भसंज्ञा प्राप्नोति, उभयोरनजादित्वात्? अस्वादित्वाच्च यथायोगम्(), तत्? कथमत्र लोपो भवति? इत्याह--"डित्यभस्यापि" इत्यादि। यदि टिलोपो न स्यात्(), तदा डित्त्वमनर्थकं स्यात्()। अथैवं कस्मान्न विज्ञातुम्()। एवं तर्हि "प्रावृट्शरत्कालदिवां जे" (६।३।१५) इति कृतटिलोपस्य जनेर्निर्देशो नोपपद्येत? तस्मादत एव निर्देशादवसीयते--भवति धातुप्रत्ययडकारस्येत्संज्ञेति। तस्याञ्चासत्यां यदि टिलोपो न स्यात्(), तस्यास्तदा वैयथ्र्यं स्यात्()। ड्मतुपोऽपि यदि डकारस्य लोपो न स्यात्(), तदन्तेन तन्नामादेशो न गम्येत, तत्र च "देशे तन्नाम्नि" ४।२।६६ इति वत्र्तते। तस्मादवश्यं तत्रापि डकारस्येत्संज्ञया भवितव्यम्(), तस्याञ्च तत्सामथ्र्याट्टिलोपेन॥

बाल-मनोरमा

टेः ३१४, ६।४।१४३

डकार इत्। कतर अदिति स्थिते--टेः। "अल्लोपोऽन" इत्यस्माल्लोप इति "ति विंशतेर्डिती"त्यतो डितीति चानुवर्तते। भस्येत्यधिकृतं। तदाह-डितीत्यादिना। कतर अदित्यत्र रेफादकारस्य लोपः। चत्र्वविकल्पं स्मारयति-वावसाने इति। ननु पररूपेण "कतर"दिति सिद्धेरद्डो डित्करणस्य किं प्रयोजनमित्यत आह--टेर्लुप्तत्वादिति। टेर्लुप्तत्वात्पूर्वसवर्णदीर्घो न भवतीत्यन्वयः। डित्त्वाऽभावे "टे"रिति लोपस्याऽप्राप्त्या पररूपं बाधित्वा पूर्वसवर्णदीर्घः प्रसज्येतेति भावः।

ननु पूर्वसवर्णदीर्घाऽभावाय दकार एवादेशः क्रियतामित्यत आह-एङ्ह्रस्वादित्यादि। सोर्दकारादेशे सति तस्य स्थानिवत्त्वेन संबुद्धित्वाद्ध्रस्वान्तादङ्गात्परत्वाच्च लोपः प्रसज्येत। अद्डादेशे तु टिलोपे सति कतरित्यङ्गं,न तदध्रस्वान्तम्। यत्तु ह्रस्वान्तं "कतर" इति न तदङ्गं, रेफादकारस्य प्रत्ययावयवत्वेन तदन्तस्य प्रत्ययपरकत्वाऽभावेन अङ्गत्वाऽभावात्। अतष्टिलोपप्रवृत्तयेऽद्डादेशविधिरिति भावः। पुनस्तद्वदिति। प्रथमावद्द्वितीयेत्यर्थः। शेषं पुंवदिति। सर्ववदित्यर्थः। अन्यतमशब्दस्य त्विति। तस्याऽव्युत्पन्नप्रातिपतिकत्वेन डतमप्रत्ययान्तत्वाऽभावेन तत्राद्डादेशो नेत्यर्थः।

एकाच्च प्राचा"मिति डतरजन्तादेकतरशब्दात्स्वमोरद्डादेशे प्राप्ते आह-एकतरादिति। एकतरशब्दात्परयोः

स्वमोरद्डादेशप्रतिषेधो वक्तव्य इत्यर्थः। अविद्यमाना जरा यस्य कुलस्येति विग्रहे "नञोऽस्त्यर्थना"मिति बहुव्रीहौ विद्यमानपदलोपे "गोस्त्रियो"रिति ह्रस्वत्वेऽजरशब्दः। तस्य प्रक्रियां दर्शयति--सोरिति। सोरमादेशे कृतेऽजरमित्यन्वयः। जरसादेशमाशङ्क्याह--संनिपातेति। अदन्तसंनिपाताश्रयस्य अमोऽदन्तत्वविघातकजरसादेशं प्रति निमित्तत्वाऽयोगादिति भावः। अजरसी इति। "नपुंसकाच्चे"ति शीभावे जरसादेशे रूपम्। अजरे इति। जरसादेशाऽभावे रूपम्। जसि रूपं दर्शयितुमाह--परत्वादिति। अजर-सिति स्थिते "जश्शसोः शिः" इति शिभावात् परत्वाज्जरसि कृते ततः शिभावे झलन्तत्वान्नुमित्यर्थ इति केचित्। तदेतत् "जराया जरसि"ति सूत्रे अजरांसीत्यत्र "नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरसि"ति भाष्यविरुद्धत्वादुपेक्ष्यम्। शिभावात्पूर्वमेव परत्वाज्जरसः प्रवृत्तौ हि तदा जसः सर्वनामस्थानत्वाऽभावेन नुम एवाऽप्रसक्तेस्तदसङ्गतिः स्पष्टैव। पूर्वविप्रतिषेधमाश्रित्य जरसः पूर्वमेव शिभावे तु तद्भाष्यं सङ्गच्छते। एवञ्च जरसः पूर्वमेव शिभावे कृते तस्य सर्वनामस्थानत्वात्तस्मिन् परे नुम्जरसोः प्राप्तयोः नुमपेक्षया परत्वाज्जरस्। ततो झलन्तलक्षणो नुमित्येव व्याख्येयम्। यदि हि जरसादेशात्प्रागेव अजन्तलक्षणो नुम् स्यात्, तदा "अजरन् इ" इति स्थिते "निर्दिश्यमानस्यादेशा भवन्ती"ति न्यायेन "जर" इत्यस्य जरसि कृते अजरस् न इति स्थिते सान्यसंयोगाऽभावात् "सान्त महतः" इति वक्ष्यमाणदीर्घो न स्यादित्यादि शब्देन्दुशेखरे निर्जरशब्दनिरूपणे, अत्र च प्रपञ्चितम्। उभयथापि अजरन् स् इ इति स्थिते नान्तत्वाऽभावात् "सर्वनामस्थाने चे"ति दीर्घे अप्राप्ते।

---

सूत्रम्

काशिका-वृत्तिः

नस् तद्धिते ६।४।१४४

नकारान्तस्य भस्य टेः लोपो भवति तद्धिते परतः। आग्निशर्मिः। औडुलोमिः। बाह्वादित्वादिञ् प्रत्ययः। नः इति किम्? सात्वतः। तद्धिते इति किम्? शर्मणा। शर्मने। नानतस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमि। तैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणाम् उपसङ्ख्यानं कर्तव्यम्। अत्र ये इन्नन्ताः तेषाम् इनण्यनपत्ये ६।४।१६४ इति प्रकृतिभावः प्राप्तः, ये तु अनन्ताः तेषाम् अन् ६।४।१६७ इति। सब्रह्मचारिणः इमे साब्रह्मचाराः, पीठसर्पिणः पैठसर्पाः। कलापिना प्रोक्तमधीयते कालापाः, कुथुमिनः कौथुमाः। तैतिलिजाजलिनौ आचार्यौ, तत्कृतो ग्रन्थः उपचारात् तैतिलिजाजलिशब्दाभ्याम् अभिधीयते, तं ग्रन्थमधीयते तैतिलाः, जाजलाः। शैशिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति। एवं लाङ्गलाः। शैलालाः। शिखण्डिनः शैखण्डाः। सूकरसद्मनः सौकरसद्माः। सुपर्वणः सौपर्णाः। अश्मनो विकार उपसङ्ख्यानम्। अश्मनो विकारः आश्मः। अश्मनो ऽन्यः। चर्मणः कोश उपसङ्ख्यानम्। चार्मः कोशः। चार्मणो ऽन्यः। शुनः सङ्कोच उपसङ्ख्यानम्। शौवः सङ्कोचः। शौवनो ऽन्यः। अव्ययानां च सायंप्रतिकाद्यर्थम् उपसङ्ख्यानम्। के पुनः सायंप्रातिकादयः? येषाम् अव्ययानाम् अविहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायंप्रातिकप्रकाराः ग्रहीतव्याः। सायंप्रातर्भवः सायंप्रातिकः। पौनःपुनिकः। बाह्यः। कौतस्कुतः। कालाट् ठञ् ४।३।११ इति ठञ्प्रत्ययः। ट्युट्युलौ तु नेष्येते। आरातीयः, शाश्वतिकः, शाश्वतः इत्येवम् आदिषु न दृश्यते टिलोपः।

लघु-सिद्धान्त-कौमुदी

नस्तद्धिते ९२२, ६।४।१४४

नान्तस्य भस्य टेर्लोपस्तद्धिते। उपराजम्। अध्यात्मम्॥

न्यासः

नस्तद्धिते। , ६।४।१४४

"सात्वतः" इति। सत्वतोऽपत्यमित्यण्()। "नान्तस्य टिलोपः" इत्यादि। किं पुनः कारणं न सिद्ध्यति यत उपसंख्यानं कत्र्तव्यम्()? इत्याह--"अत्र य इन्नन्ताः" इत्यादि। ये त्वन्नन्तास्तेषाम् अन्()" ६।४।१६७ इति प्रकृतिभावः प्राप्त इति प्रकृतेन सम्बन्धः। "साब्राह्मचारः" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। "पीठसर्पिणः" इति। इम इति प्रकृतेन सम्बन्धः। "पैठसर्पाः" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। "पीठसर्पिणः" इति। इम इति प्रकृतेन सम्बन्धः। "पैठसर्पाः" इति। पूर्ववदण्()। "कालापाः" इति। पूर्ववत्प्रोक्तार्थे "कलापिवैशम्यायनान्तेवासिभ्यश्च" ४।३।१०४ इति वैशम्पायनान्तेवासित्वाण्णिनिप्रत्यये प्राप्ते तदपवादः "कलापिनोऽण्()" ४।३।१०८, ततः "तदधीते तद्वेव" ४।२।५८ इत्यण्(), तस्य "प्रोक्ताल्लुक्()" ४।२।६३ इति लुक्(), "छन्दोब्राआह्मणानि च तद्विषयाणि" ४।२।६५ इत्यध्येतृवेदितृविषयता। "कोथुमाः" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। "तत्कृतो ग्रन्थ उपचारात्()" इत्यादि। उपचारस्य तु तत्कृतत्वात्र निबन्धनम्()। भवति हि तत्कृतत्वे तदुपचारः, यथा सर्वमिदं पुराणं कर्म शुभाशुभं भुज्यत इति। अथ कस्मादुपचार आश्रीयते, न "अधिकृत्य कृते ग्रन्थे" (४।३।८७) इत्येवमादिशैषिकार्थविवक्षायां तद्धित एव क्रियेत? इत्यत आह--"शैषिकेष्वर्थेषु" इत्यादि। तैतिलिजाजलिशब्दौ वृद्धसंज्ञकौ, तयोर्वृद्धत्वात्? शैषिकेष्वथषु विधीयमानोऽसौ तद्धितः "वृद्धाच्छः" ४।२।११३ इति छः प्रसज्येत। त()स्मश्च सति "तैतिलाः, जाजलाः" इति न सिद्ध्येत्(), तस्मान्मा भूदेष दोष इत्युपचार आश्रितः। "एवम्()" इत्यनेनान्तरोक्तां व्युत्पतिं()त दर्शयति छप्रत्ययनिवृत्तये। लाङ्गलिशब्दस्याप्येवं व्युत्पत्तिः कत्र्तव्या। लाङ्गलिः आचार्यः, तत्कृती ग्रन्थ उपचारात्? लाङ्गलशब्देनाभिधीयते। "लाङ्गलाः" इति। "शिखण्डाः" इत्याद्युदाहरणत्रयेऽपि "तस्येदम्()" ४।३।१२० इत्यण्()। "आश्मः" इति। अत्रापि "तस्य विकारः" ४।३।१३२ इत्यण्()। "आश्मनोऽन्यत्र" इति। अत्रापि "तस्येदम्()" ४।३।१२० इत्यत्रार्थाभिधाने। "चार्मः" इत्यत्रापि "तस्येदम्()" ४।३।१२० इत्यणेव। "चर्मणोऽन्यः" इति। चर्मणो विकार इति। "शौवः" इति। "द्वारादीनाञ्च" ७।३।४ इत्यैजागमः। सायम्प्रातिकायः प्रातिपदिकेषु न पठ()न्त इत्यतः पृच्छति--"के पुनः सामम्प्रातिकादयः इति। सायम्प्रातिकप्रकारा इत्यनेन प्रकारवचनतामादिशब्दस्य दर्शयति। ननु च "सायञ्चिरम्()" ४।३।२३ इत्यादिनाऽव्ययेभ्यष्ट()उल्भ्यां भवितव्यम्, तत्? कथं ठञ्? भवति? इत्याह--"ट()उट()उलौ तु नेष्येते" इति। अनभिधानात्()। अत्र च सर्वत्रोपसंक्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()--मन्त्रेष्वित्यादेः ६।४।१४१ सूत्रादादिग्रहणमनुवत्र्तते, तद्धितग्रहणञ्चेदमर्थमेव कृतम्()। तदनुवृत्तौ चायमर्थो भवति--नान्तादीनां तद्धिते परतष्टिलोपो भवतीति। आदिशब्देन सायम्प्रातिकादयो गृह्णन्ते। तेन सर्वत्र टिलोपः सिद्धो भवति। "इत्येवमादिषु न दृश्यते टिलोपः" इति। एतेनारातीयः इत्येवमादीनामसायम्प्प्रातिकत्वं दर्शयति। अथ "शा()आतः" इत्यत्र कथमण्(), यावता "कालट्ठञ" (४।३।११) इति ठञा भवितव्यम्()? नैतदस्ति; "कालट्ठञ्()" ४।३।११ इत्यत्र "कालात्()" इति योगविभागः कत्र्तव्यः, तेन श()आच्छब्दाद्यथादिहितमण्? भवति। न च योगविभागेन ठञ्? बाध्यते; "येषाञ्च विरोधः शा()आतिकः" २।४।९ इति निपातनात्()। तेन पक्षे ठञपि भवत्येव। ट()उट()उलौ तु शा()आतशब्दान्नेष्येते, अनभिधानादेव। अथ "शा()आतिकः" इत्यत्र "इसुसुक्तान्तात्कः" (७।३।५१) इति ठञः कादेशः कस्मान्न भवति? अत एव निर्देशात्()॥

बाल-मनोरमा

नस्तद्धिते ६७१, ६।४।१४४

नस्तद्धिते। "न" इति षष्ठ()न्तम्। तेन भस्येत्यधिकृतं विशेष्यते, तदन्तविधिः। टेरिति सूत्रमनुवर्तते। "अल्लोपोऽनः" इत्यस्माल्लोप इति च। तदाह-नान्तस्येत्यादि। उपराजमिति। राज्ञः समीपमित्यर्थः। समीप्ये उपेत्यस्याव्ययीभावः। "अनश्च" इति टच्, सुब्लुक्, टिलोपः। उपराजशब्दाद्यथायथं सुप्, अम्भावः। टजन्तस्यैवाव्ययीभावसमासत्वाट्टचि परे अव्ययानां भमात्रे टिलोपाऽप्रवृत्तेः "नस्तद्धिते" इत्यारम्भः। अध्यात्ममिति। आत्मनीत्यर्थः। विभक्त्यर्थेऽव्ययीभावः। शेषं पूर्ववत्।

तत्त्व-बोधिनी

नास्तद्धिते ५९४, ६।४।१४४

नास्तद्धिते। "न"इत्यनेन भस्येत्यधिकृतं विशेष्यते, विशेषणेन तदन्तविधिरत आह--नान्तस्य भस्येति। ननूपराजिमित्यत्र "नस्तद्धिते"इति व्यर्थम्, "अव्ययानां भमात्रे---" इति टिलोपेनैव सिद्धेः। न चाव्ययत्वं टज्विशिष्टे पर्याप्तमिति वाच्यम्, अव्ययीभावसंज्ञाया उपजीव्यत्वेन टचः पूर्वभागस्याप्यव्ययत्वानपायात्। अत्राहुः--भाष्ये लुङ्मुखस्वरोपचारेषु त्रिष्वेव कार्येषु अव्ययीभावस्याव्ययसंज्ञाविधानान्न दोष इति। युक्त चैतत्। अन्यथा उपशरदमित्यादौ टिलोपः प्रसज्येत। यद्यप्यङुत्तमस्य पिच्चेत्यत्र दीर्घोच्चारणेन स्वावयवेन पौर्वपर्यं नास्तीतिज्ञापितम्, "अ" डित्युक्तेऽपि तदादिग्रहणेन तद्विशिष्टस्याऽङ्गत्वादतो दीर्घो यञीति दीर्घसिद्धेः, तथाप्यह्नष्टखोरेवेति लिङ्गत्समासान्तेषु तन्नाश्रीयत इति बोध्यम्। आध्यायत्ममिति आत्मनि अध्यात्मम्। विभक्त्यर्थेऽव्ययीभावः।

---

सूत्रम्

काशिका-वृत्तिः

अह्नष् टखेरेव ६।४।१४५

अहनित्येतस्य टखोरेव परतः टिलोपो भवति। द्वे अहनी समाहृते द्व्यहः त्र्यहः। द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः। त्र्यहीनः। अह्नां समूहः क्रतुः अहीनः। अह्नः समूहे खो वक्तव्यः। सिद्धे सति आरम्भो नियमार्थः। इह मा भूत्, अह्ना निर्वृत्तम् आह्निकम्। एवकारकरणम् विस्पष्टार्थम्। अह्नः एव टखोः इत्येवं नियमो न भविस्यति, आत्माध्वानौ खे ६।१।१६३ इति प्रकृतिभावविधानात्।

न्यासः

अह्नष्टखोरेव। , ६।४।१४५

"द्व्यहः" इति। "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति समासः, "राजहःसखिभ्यष्टच्()" (५।४।९१) इति टच्? समासान्तः। अत्र "अह्नोह्न एतेभ्यः" ५।४।८८ इत्यह्नादेशः प्राप्तः स च "न संख्यादेः समाहारे" ५।४।८९ इति प्रतिषेधान्न भवति। "द्व्यहीनः" इति। तद्धितार्थे "समायाः" ५।१।८४ इति वत्र्तमाने "रात्र्यहःसंवत्सराच्च" ५।१।८६ इति खः। केन पुनरहीन इत्यत्र खप्रत्ययः? इत्याह--"अह्नः समूहे खो वक्तव्वः" इति। ननु च अह्नो नकारान्तत्वात्? पूर्वेणैव सिद्धष्टिलोपः, तत्? किमर्थोऽयमारम्भः? इत्याह--"सिद्धे सति" इत्यादि। "आह्निकम्()" इति। आर्हीयष्ठक्()। यदि सिद्धे सति नियमर्थोऽयमारम्भः, एवं सत्येवग्रहणमनर्थकं स्यात्(), विनापि तेन सिद्धे सत्यारम्बो नियमार्थो विज्ञास्यते? इत्याह--"एवकारकरणं विस्पष्टार्थम्()" इति। अथ विपरीतनियमाशङ्कानिरासार्थं कस्मान्न भवति? इत्याह--"अह्न एव" इत्यादि। यद्यह्न एव टखोः--इत्येव विपरीतनियमः स्यात्(), एवं सत्यन्यस्य खे टिलोपप्रसङ्ग एव नास्ति। "आत्माध्वानो खे" ६।४।१६९ इति प्रकृतिवद्भावविधानमनर्थकं स्यादित्यभिप्रायः॥

बाल-मनोरमा

अह्नष्टखोरेव ७७९, ६।४।१४५

अह्नष्टखोः। शेषपूरणेन सूत्रे व्याचष्टे--टिलोपः स्यादिति। टेरित्यनुवर्तते, "अल्लोपोऽनः" इत्यस्यमाल्लोप इति चेति भावः। "नस्तद्धिते" इत्येव सिद्धे नियमार्थमिदमित्या--नान्यत्रेति। एवकारस्तु "अह्न एव टखो"रिति विपरीतनियमव्यावृत्त्यर्थः। टखोरेवेति किम्?। अह्ना निवृत्तम् आह्निकम्। "कालाट्ठञ" इत्यधिकारे "तेन निवृत्त"मिति ठञ्। टिलोपाऽभावादल्लोपः। टप्रत्यये उदाहरति--उत्तमाह इति। उत्तमं च तदहश्चेति विशेषणसमासः। "राजाहःसखिभ्यष्ट"जिति टच्। "अह्नष्टखोरेवे"ति

टच्। अह्नष्टखोरेवे"ति प्रकृतसूत्रेण टिलोपः, "रात्राह्नाहाः पुंसी"ति पुंस्त्वम्। खे उदाहरति--द्वे अहनी भृत इति। अत्यन्तसंयोगे द्वितीया। भृतः=परिक्रीत इत्यर्थः। "द्व्यहीन" इत्यत्र प्रक्रियां दर्शयति--तद्धितार्थे द्विगुरिति। कोऽत्र तद्धित इत्यत आह--तमधीष्ट इत्यादि। तथाच द्व्यहन्शब्दात्खस्य ईनादेशे "अह्नष्टखोरेवे"ति टिलोपे "द्व्यहीन" इति रूपमित्यर्थः। नन्वत्र "अह्नोऽह्न एतेभ्यः" इत्याह्नादेशः कुतो न स्यात्। नच खे टिलोपविधिसामथ्र्यान्नाह्नादेश इति वाच्यम्, "अहीन" इत्यत्र खे टिलोपविधेश्चरितार्थत्वादिति चेन्न, समासान्ते पर एव#आह्नादेशविधानात्, प्रकृते तु समासान्तविधेरनित्यत्वात् "राजाहःसखिभ्यः" इति न टच्। यद्यपि "उत्तमाहः" इत्यत्र, "द्व्यहीन" इत्यत्र च "नस्तद्धिते" इत्येव टिलोपः सिद्धस्तथापि आह्निकमित्यादावावश्यकस्य नियमविधेर्विधिमुखेनापि प्रवृत्त्यभ्युपगमादिह तदुपन्यासः।

ननुमद्राणां राज्ञी मद्रराज्ञीत्यत्रापि लिङ्गविशिष्टपरिभाषया "राजाहःसखिभ्यः" इति टच् स्यादित्याशङ्ख्याह-लिङ्गेति। अनित्यत्वादिति। समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषा नेति "ङ्याप्प्रातिपदिकात्" इत्यत्र भाष्ये उक्तत्वादिति भावः। मद्रराज्ञीति। नच टचि सत्यपि "यस्येति चे"तीकारलोपे मद्रराज्ञशब्दात् टित्त्वान्ङीपि मद्रराज्ञीति निर्बाधमिति वाच्यं, टचि हि सति "भस्याऽढे तद्धिते" इति पुंवत्त्वे टिलोपे "मद्रराज्ञी"ति स्यादिति भावः।

तत्त्व-बोधिनी

अह्नखोरेव ६८६, ६।४।१४५

उत्तमाह इति। "सर्वैकदेशसङ्ख्याते"त्यत्र उत्तमशब्दस्याऽपाटदह्नोदेशो न। व्यहीन इति। समासान्तविधेरनित्यत्वान्न टच्। सति तु तस्मिन्नह्नादेशः प्रसज्येत। न च नान्तस्य खे परे टिलोपविधिसामथ्र्यान्न टजिति वाच्यम्, "अहीन"इत्यत्र तस्य सावकाशत्वात्। अनित्यत्वादिति। अत्र च लिङ्गं "शक्तिलाङ्गलाङ्कुशे"त्यत्र घटीग्रहणम्। मद्रराज्ञीति। यद्यत्र टच् स्यात्तदा "भस्याऽढे---" इति पुंवद्भावे टिलोपे च मद्रराजीत्यनिष्टरूपं स्यादिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ ओः ६।१ गुणः १।१ तद्धिते ? भस्य ? अङ्गस्य ?

अर्थः॥

उवर्णान्तस्य अङ्गस्य भस्य गुणः भवति तद्धिते परतः।

उदाहरणम्॥

बाभ्रव्यः, माण्डव्यः, शङ्कव्यं दारु, पिचव्यः कार्प्पासः, कमण्डलव्या मृत्तिका, परशव्यः, औपगवः, कापटवः॥

काशिका-वृत्तिः

ओर्गुणः ६।४।१४६

उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः। बाभ्रव्यः। माण्डव्यः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका। परशव्यमयः। औपगवः। कापटवः। ओरोतिति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यात्, तेन स्वायम्भुवः इति सिद्धं भवति।

लघु-सिद्धान्त-कौमुदी

ओर्गुणः १००८, ६।४।१४६

उवर्णान्तस्य भस्य गुणस्तद्धिते। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पैंस्नः॥

लघु-सिद्धान्त-कौमुदी

भिक्षादिभ्योऽण् १०५१, ६।४।१४६

भिक्षाणां समूहो भैक्षम्। गर्भिणीनां समूहो गार्भिणम्। इह (भस्याढे तद्धिते)। इति पुंवद्भावे कृते -।

न्यासः

ओर्गुणः। , ६।४।१४६

"बाभ्रव्यः" इति। "मधुबभ्व्रोर्ब्राआह्मणकौशिकयोः" ४।१।१०६ इति बभ्रुशब्दादपत्यार्थे यञ्()। "माण्डव्यः" इति। अत्रापि गर्गादित्वात्()। "वान्तो यि प्रत्यये" ६।१।७६ इत्यवादेशः। "शङ्कव्यम्()" इत्यदौ "तस्मै हितम्()" ५।१।५ इत्यस्मिन्नर्थे "उगवादिभ्यो यत्()" ५।१।२। "औपगवः, कापटवः" इति। अत्राप्यपत्यार्थेऽण्()। तद्धित इत्येव--"वोतो गुणवचनात्()" ४।१।४४ इति ङीष्(), पट्वी। "ओरोत्()" इति वक्तव्ये" इत्यादि। एवमुच्यमाने लघु सूत्रं भवतीति भावः। "स्वायम्भुवः" इति। स्वयं भवतीति क्विप्()--स्वयम्भूः, स्वयम्भुव इतमित्यण्()। संज्ञापूर्वकस्य विधेरनित्यत्वादत्र गुमो न भवति, तस्मिश्चा सत्युवङेव क्रियते॥

तत्त्व-बोधिनी

ओर्गुणः ७३४, ६।४।१४६

ओर्गुणः। तद्धिते किम्()। पठ्वी। वाय्वोः। गुणोक्तिरिति। यद्यपि "ओरो"दिति सूत्रितेऽपि "भस्य""तद्धिते"इत्येवंरूपसंज्ञापूर्वकत्वामस्त्येव, तथापि विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरिति। भावः। यद्यपि "ओ"दिति तपरस्तत्कालस्य संज्ञैव, तथापि इह तकार उच्चारणार्थः, तपरत्वे फलाऽभावात्। स"ओरो"इत्येव वाऽस्तु। "स्वं रूपं शब्दस्ये ति तु प्रत्याख्यातमिति भावः। स्यादेतत्--तपरस्तत्कालस्य संज्ञा भवतीति "गुरोरनृतः"इति प्लुतनिषेधस्यापि संज्ञापूर्वकत्वेनाऽनित्यत्वात्क्लृ३प्तशिखेत्यत्र प्लुतसिद्धये "ऋलृक् सूत्रे ऋकारात्पृथक् लृकारोपदेशो व्यर्थः। सावर्ण्ये सत्यप्युक्तरीत्या लृकारस्य प्लुतसिद्धेरनित्यत्वज्ञापनस्य निष्फलत्वात्। न चैवमपि ऋदिताम्लृदित्कार्यम्लृदितामृदित्कार्यं च वारयितुमनित्य्त्वज्ञापनमावश्यकमिति वाच्यं, राजृभ्राजृग्म्लृशक्लृ इति पृथगनुबन्धकरणसाम्थ्र्यात्, "नाग्लोपिशास्वृदिताम्" "लृदितः परस्मापदेषु" इति पृथगनुवादसामथ्र्याच्च तत्कार्याणामसाङ्क्यसिद्धेरिति चेदत्राहुः---"गुरोरनृतः"इत्यनेन ऋद्भिन्नस्य गुरोः प्लुतविधानात् "अनृतः"इत्यतदनूद्यमानगुरुविशेषणत्वेनानुवादरूपमेव, न तु विधेयसमर्पकसंज्ञारूपं पदमिति ऋस्थानिकप्लुतनिषेधस्याऽनित्यत्वाऽसिद्ध्यक्लृ३प्तशिखेत्यत्र प्लुतो न सिध्यति, ततश्च तत्सि तत्सिद्ध्यथमुक्तज्ञापनायोभयोपदेश आवश्यक इति। अन्ये तु---ऋकारात्पृथग्लृकार उपदेष्टव्य एव, ऋकारोपदेशेन लृकारस्याऽलाभात्। न च "ऋलृवर्णयोर्भिथः सावप्र्य"मिति वचनात्तल्लाभः शङ्क्यः। वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेरित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

ढे लोपो ऽकद्र्वाः ६।४।१४७

ढे परतः उवर्णान्तस्य भस्य अकर्वाः लोपो भवति। कामण्डलेयः। शैतवाहेयः। जांवेयः। माद्रबाहेयः। अकद्र्वाः इति किम्? काद्रवेयो मन्त्रम् अपश्यत्।

न्यासः

ढे लोपोऽकद्रूवाः। , ६।४।१४७

"कामण्डलेयः, शैतबाहेयः" इति। "चतुष्पाद्भ्यो ढञ्()" ४।१।१३५ इति ढञ्()। एवं "जाम्बेयः" इत्यत्रापि। "माद्रबाहेयः" इति। मद्रबाहुशब्दात्? "बाह्वन्तात्? संज्ञायाम्()" ४।१।६७ इत्यूङ, तदन्तात्? "स्त्रीभ्यो ढक्()" ४।१।१२०। "काद्रवेयः" इति। "कद्रूकमण्डल्वोश्छन्दसि संज्ञायाम्()" (४।१।७१,७२) इत्यूङ तदन्तात्? पूर्ववङ्ढक्()॥

बाल-मनोरमा

ढे लोपोऽकद्र्वाः ११२६, ६।४।१४७

ढे लोपोऽकद्र्वाः। भस्येत्यधिकृतम् "ओर्गुणः" इत्यत ओरिति षष्ठ()न्तेनानुवृत्तेनविशेष्यते। तदन्तविधिः। तदाह--कद्रूभिन्नस्येति। "अलोऽन्त्यस्ये"त्यन्त्यलोपः। ओर्गुणापवादः। कामण्डलेय इति। कमण्डलोरपत्यमिति विग्रहः। ढकि #एयादेशे आदिवृद्धावुकारलोपः। ननु कमण्डलुशब्दवाच्यस्य जलपात्रस्याऽचेतनस्य कथमपत्ययोगः, तत्राह--कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे इति। अत एव "कमण्डलुपदे आदधीते"ति बह्वृचब्राआह्मणं सङ्गच्छत इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ यस्य ६।१ ईति ७।१ च ० लोपः ? तद्धिते ? भस्य ? अङ्गस्य ?

समासः॥

इश्च अश्च यम्, (यणादेशे कृते) तस्य ॰ समाहारद्वन्द्वः

अर्थः॥

इ-वर्णान्तस्य अ-वर्णान्तस्य च अङ्गस्य भस्य ईकारे तद्धिते च परः लोपः भवति।

उदाहरणम्॥

इ-वर्णान्तस्य ई-कारे - दाक्षी, प्लाक्षी, सखी। इ-वर्णान्तस्य तद्धिते - दुलि=दौलेयः। बलि=बालेयः, अत्रि=आत्रेयः। अ-वर्णान्तस्य ईकारे - कुमारी, गौरी, शार्ङ्गरवी। अवर्णान्तस्य तद्धिते - दाक्षिः, प्लाक्षिः, चौडिः, बालाकिः, सौमित्रिः॥

काशिका-वृत्तिः

यस्य इति च ६।४।१४८

इवर्णान्तस्य अवर्णातस्य च भस्य इकारे परे तद्धिते च लोपो भवति। इवर्णान्तस्य ईकारे दाक्षी। प्लाक्षी। सखी। सवर्नदीर्घत्वे हि सति अतिसखेरागच्छति इत्यत्र एकादेशस्य अन्तवत्त्वादस्खि इति घिसंज्ञायाः प्रतिषेधः स्यात्। इवर्णान्तस्य तद्धिते दुलि दौलेयः। वलि वालेयः। अत्रि आत्रेयः। अवर्णान्तस्य ईकारे कुमारी। गौरी। शार्ङ्गरवी। अवर्णान्तस्य तद्धिते दाक्षिः। प्लाक्षिः। चौडिः। बालाकिः। सौमित्रिः। यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः। काण्डे। कुड्ये।

सौर्ये हिमवतः शृङ्गे। औङः शीभावे कृते यस्य इति च इति, सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ६।४।१४९ इति च लोपः प्राप्नोति। इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन। वत्सान् प्रीणाति वत्सप्रीः, तस्य अपत्यम् वात्सप्रेयः। चतुष्पाद्भ्यो ढञ् ४।१।१३५ इति ढञ्प्रत्ययः। लोखाभ्रूः शुभ्रादिः, तस्याः अपत्यम् लैखाभ्रेयः।

लघु-सिद्धान्त-कौमुदी

यस्येति च २३७, ६।४।१४८

कडारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः। इत्यल्लोपे प्राप्ते (औङः श्यां प्रतिषेधो वाच्यः)। ज्ञाने॥

न्यासः

यस्येति च। , ६।४।१४८

अत्र यस्येति यकारस्येदं ग्रहणं वा स्यात्(), इवर्णावर्णयोर्वा? अत्र यदि यकारस्येदं ग्रहणं स्यात्(), उत्तरसूत्रे पुनर्यग्रहणं न कुर्यात्(), एतदेव हि तत्रानुवर्त्तिष्यते। तस्मादिवर्णावर्णयोरिदं ग्रहणम्। तत्र वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिर्विज्ञायते--इत्यतच्चेतसि कृत्वाऽऽह--"इवर्णावर्णान्तस्य" इत्यादि। "दाक्षी, प्लाक्षी" इति। दाक्षिप्लाक्षिशब्दाभ्यां "इतो मनुष्यजातेः" ४।१।६५ इति ङीष्()। "सखी" इत्यत्रापि "सख्यशि()आईति भाषायाम्()" ४।१।६२ इति निपातनात्()। ननु चात्र सवर्णदीर्घत्वेनाप्येतत्? सिद्धम्(), तत्? किमर्थमत्र लोप विधीयते? इत्यत आह--"सवर्णदीर्घत्वे हि" इत्यादि। "अतिक्रान्ता सखी एनम्()" इति "प्रादिभ्यो धातुजस्य" (वा।१०१) इति बहुव्रीहिरुत्तरपदलोपश्च, उपसर्जनह्रस्वत्वम्()। तत्र यदि सवर्णदीर्घत्वं क्रियेत, न तु लोपस्तदा सखीकारेकारयोरेकादेशः सखिशब्दस्यान्तवद्भवतीति "शेषो ध्यसखि" १।४।७ इतचि घिसंज्ञायाः प्रतिषेधः स्यात्()। ततश्चातिसखेरागनच्छतीति "घेङिति" ७।३।१११ इति गुणो न स्यात्()। लोपे सत्युपसर्जनह्रस्वत्वे सति यद्यपि प्रविशिष्टं रूपम्(), तथापि लाक्षणिकम्()। अतो लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) तन्न गृह्रत इति न भवति प्रतिषेधः। तस्माल्लोप एव कत्र्तव्यः। "दौलेयः" इत्युदाहरणत्रये "इतश्टचानिञः" ४।१।१२२ इत्यपत्यार्थे ढक्()। "कुमारी इति। "वयसि प्रथमे" ४।१।२० इति ङीप्()। "गौरी" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्()। "शाङ्गरवी" इति। "शाङ्गरवाद्यञो ङीन्()" ४।१।७३। "बालाकिः सौमित्रिः" इति। बालकसुमित्राभ्यां बह्वादित्वादिञ्()। "यस्येत्यादौ" इति। आदिशब्देनोत्तरो विधिः परिगृह्रते। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--"विभाषा ङिश्योः" ६।४।१३६ इत्येतत्सूत्राद्विभाषाग्रहणं मण्डूकप्लुतिन्यायेनानुवत्र्तते, सा च व्यवस्थितविभाषा। तेन चानेन सूत्रेण लोपो विधीयते, यश्चोत्तरसूत्रेण, तावुभावपि न भवत इति। "काण्डे, कुडये" इति। "औङ आपः" ७।१।१८ इति, "नपुंसकाच्च" ७।१।१९ इति शोभाव इति, तत्र यस्येत्यकारलोपः प्राप्नोति। "सौर्ये" इति। "तेनैकदिक्()" ४।३।११२ इति सूर्यशब्दादण्(), तदन्तादौङः शीभावः, तत्रानेनाकारलोपः प्राप्नोति, उत्तरसूत्रेम यकारलोपश्च। "इयङ्वङभ्याम्()" इत्यादि। इयङुवङोरवकाशः--श्रियौ, श्रियः, भ्रुवौ भ्रुवः, लोपस्यावकाशः--कामण्डलेयः, माद्रबाहेय इति; वात्सप्रेयः, लैखाभ्रेय इत्यत्रोभयं प्राप्नोति, लोपो भवति विप्रतिषेधेन। "वत्सप्रीः" इति। क्विबन्तमेतत्()॥

बाल-मनोरमा

यस्येति च ३०९, ६।४।१४८

यस्येति च। यस्य-ईतीति छेदः। इश्च अश्वतयोः समाहारो यं, तस्य [यस्य]=इवर्णस्य अवर्णस्य चेत्यर्थः। "भस्ये"त्यधिकृतम्। "नस्तद्धिते" इत्यतस्तद्धिते इत्यनुवर्तते। तदाह--भस्येत्यादिना। इत्यकारलोपे प्राप्ते इति। "सुडनपुंसकस्ये"ति पर्युदासेन शीभावस्याऽसर्वनामस्थानतया तस्मिन्परतो भत्वादिति भावः।

औङ श्यामिति। औङो यः श्यादेशस्तस्मिन् परतो "यस्येति चे"ति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः। श्यामिति

निर्देशादेव नित्यस्त्रीत्वं बोध्यम्। "औङ्" इति तु व्यर्थमेव। "सर्वे" इत्यादौ "जसः शी"त्यस्य भादिकारेणैव व्यावृत्तिसिद्धेः। ज्ञाने इति। ज्ञान ई इति स्थिते आद्गुण इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ६।४।१४९

सूर्य तिस्य अगस्त्य मत्स्य इत्येतेषां यकारस्य उपधायाः भस्य लोपो भवति ईति परतस्तद्धिते च। सूर्येणैकदिक् सौरी बलाका। अणि यो यस्य इति लोपः तस्य असिद्धत्वं न अस्ति, व्याश्रयत्वात्। ईकारे तु यस्तस्या सिद्धत्वादुपधायकारो भस्याणन्तस्य सूर्यस्य सम्बन्धी इति लुप्यते। तिष्य तैष्महः। तैषी रात्रिः। अगस्त्य अगस्त्यस्य अपत्यं स्त्री, ऋषित्वादणि कृते आगस्ती। आगस्तीयः। मत्स्य गौरादित्वात् ङीष्, मत्सी। उपधायाः इति किम्? मत्स्यचरी। यग्रहणम् उत्तरार्थम्। विषयपरिगणनम् अत्र कर्तव्यम्। मत्स्यस्य ङ्याम् इति वक्तव्यम्। इह मा भूत्, मत्स्यस्य इदं मांसं मात्स्यम्। सूर्यागस्त्ययोश्छे च ग्यां च। सौरीयः। सौरी। आगस्तीयः। आगस्ती। इह मा भूत्, सौर्यम् चरुं निर्वपेत्। आगस्त्यः। तिष्यपुष्ययोर् नक्षत्राणि। तिष्येण नक्षत्रेण युक्तः कालः तैषः। पौषः। अन्तिकस्य तसि कादिलोप आद्युदात्तं च। अन्तिकशब्दस्य तसिप्रत्यये परतः ककारदेः शब्दस्य लोपः, आद्युदात्तत्वम् च। अन्तितो न दूरात्। तमे तादेश्च। तमप्रत्यये अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः। तत्र तादिलोपे अन्तमः। कादिलोपे अन्तितमः। कादिलोपे बहुलम् इति वक्तव्यम्। अन्यत्र अपि हि वृश्यते, अन्तिके सीदति इति अन्तिषत्। पूर्वपदात् ८।३।१०८ इति षत्वम्। ये च। अन्तियः।

न्यासः

सूर्यतिष्यागस्त्यमतस्यानां य उपधायाः। , ६।४।१४९

यद्यत्र भसंज्ञया सूर्यादयो विशिष्येरन्()--"सूर्यादीनां भसंज्ञकानामिति, तदा सौरी, बलाकेत्यत्र लोपो न स्यात्()। न हि सूर्यशब्द इह भसंज्ञक इति, किं तर्हि? अन्येदवाणन्तं शब्दान्तरमिति बुद्धौ निधायानाश्रितरूपभेदस्य लोपेन सम्बन्धः सूर्यादिभिः सम्बन्धिभिर्यकारो विशिष्यत इति दर्शयन्नाह--"सूर्यतिव्यागस्त्यमत्स्य--"इत्येतेवाम्()" इत्यादि। "भस्य" इति। भसंज्ञकस्य। यो यकार उपधा, तस्य लोपो भवति स चेद्यकारः सूर्यादीनां सम्बन्धी भवति--अयमतरार्थो विवक्षितः। ते तु सूर्यादयो भत्वेन न विशिष्यतन्ते। तेन यदापि तेषां भसंज्ञा न भवति, तदापि तस्योपधायकारस्य लोपो भवत्येव यद्यसौ यकारः सूर्यादीनां सम्बन्धी भवति। "सौरी, बलाका" इति। ननु चात्राकारलोपस्य व्याश्रयत्वेनासिद्धत्वं नास्तीत्युपधायकारो न भवतीत्येतदुक्तम्()? इत्याह--"अणि यो यस्येति लोपः" इत्यादि। अत्र हि द्वौ यस्येतिलापौ--एकोऽणिपरतः, अपर ईकारे। तत्र प्रथमो व्याश्रयः, तथा हि--लोपोऽणमाश्रित्य भवति, यलोपस्त्वीकारम्? अतो व्याश्रयत्वादसिद्धत्वाभावस्तस्य युक्तः। इतरस्त्वीकारमाश्रित्य भवति समानाश्रय एव, ततश्च तस्यासिद्धत्त्वादुपधायकारो भवति। "भस्याणन्तस्य" इत्तयादिना सूत्रार्थमुदाहरणे दर्शयति। "तैषम्(), तैषी" इति। "नक्षत्रेण युक्तः कालः" ४।२।३ इत्यण्(), "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()। "ऋषित्वादणि कृते" इति। "ऋष्यन्धक" ४।१।११४ इत्यादिना "मत्स्यचरी" इति। मत्स्यो भूतपूर्वः--"भूतपूर्वे चरट्()" ५।३।५३ पूर्ववन्ङीप्()। भवत्यत्र मत्स्यचर इति भसंज्ञकमत्स्यसम्बन्धी यकारः, नत्वसौ भसंज्ञकस्योपदेति लोपो न प्रवत्र्तते। अथ किमर्थं यग्रहणम्(), यावता सूर्यादिभिरूपधायां विशिष्यमाणायामन्तरेणापि यग्रहणं यकारस्योपधाभूतस्य लोपो विज्ञास्यते, यकार एव हि तेषामुपधा, न तु वर्णान्तरम्()? इत्यत आह--"यग्रहणमुत्तरार्थम्()" इति। "वक्तव्यम्()" इति व्याख्येयमित्यर्थः। व्याख्यानन्त्विहापि पूर्ववद्विभाषामाश्रित्य कत्र्तव्यम्()। "मात्स्यम्()" इति। "तस्येदम्()" ४।२।११९ इत्यण्()।

"सौरीयम्()" इति। अणन्तात्? "वृद्धाच्छः" ४|२|११३। एवं "आगस्तीयम्()" इति। "सौर्यम्()" इति। सूर्यो देवतऽस्येति "सा।ऽस्य देवता ४|२|२३ इत्यण्। "आगस्त्यः" इति। अपत्यार्थे ऋष्यण्()। "नक्षत्राणि" इति। नक्षत्रसम्बन्धो योऽण्? तस्मिन्निन्त्यर्थः। "ककारादेः शब्दस्य" इति। ककारस्याकारस्येत्यर्थः। "आद्युदात्तत्वञ्च" इति। प्रत्ययस्वरेणान्तोदात्तत्वे प्राप्ते सत्याद्युदात्तार्थं वचनम्()। "अन्तितः" इति। "अपादाने चाहीयरुहोः" ५|४|४५ इति तसिः। "तादेश्च" इति। तिकशब्दस्येत्यर्थ। चकारात्? कादेश्च। "अन्तमः" इति। अतिशायने तमप्()" ५|३|५५। "अन्तिषत्()" इति। "सत्सूद्विष" ३|२|६१ इत्यादिना क्विप्()। "ये च" इति। दृश्यत इति प्रकृतेन सम्बन्धः। "अन्तिमः" इति। "भवे छन्दसि" ४|४|१०९ इति यः, "तत्र साधुः" ४|४|९८ इति वा। केचित्? सर्वमेव लोपविधानं छन्दस्येवेच्छन्ति॥

बाल-मनोरमा

सूर्यतिष्टागस्त्यमत्स्थानां य उपधायाः ४९२, ६|४|१४९

मत्स्यशब्दाद्गौरादित्वान्ङीषि विशेष दर्शयितुमाह--सूर्यतिष्टागस्त्य। "ढे लोपोऽकद्र्वाः" इत्यतो "लोप" इत्यनुवर्तते। "य" इति षष्ठी, "अङ्गस्येत्यधिकृतमवयवषष्ठ()न्तं, तच्च उपदायामन्वेति। अङ्गस्य उपधाभूतो यो यकारस्तस्य लोपः स्यादिति लभ्यते। "सूर्यतिष्यागस्त्यमत्स्याना"मित्यप्यवयवषष्ठ()न्तं यकारेऽन्वेति, न त्वह्गविशेषणं तदाह-अङ्गस्येत्यादिना।

मत्स्यस्य ङ्यामिति। तेनेह न, मत्स्यस्येदं मात्स्यम्।

सूर्यागस्त्ययोश्छे चेति। सूरीयः। सूरी। अगस्तीयः। अगस्ती नेह--सौर्यम्। आगस्त्यम्।

तिष्येति। "नक्षत्रेण युक्तः कालः", "सन्धिवेलाद्यृतुनक्षत्रेऽभ्योणि"ति च विहिते नक्षत्रसबन्धिनि अणि परतस्तिष्यपुष्ययोर्यलोप इत्यर्थः। तत्र तिष्यस्य यलोपो नियम्यते। पुष्यस्य त्वप्राप्तो विधीयते। तिष्येण युक्तः पूर्णमासः, तिष्ये भवो वा तैषः। एवं पौषः। नेह--तिष्यस्य पुष्यस्य वाऽयं तैष्यः, पौष्यः। मत्सीति। मत्स्यशब्दाद्गौरादिङीषि यलोपः, "यस्येति चे"त्यकारलोपः। ननु "पितृव्यमातुलमातामहपितामहाः" इति सूत्रे मातुः पिता पितुः पितेति विग्रहे मातृपितृभ्यां डामहचि टिलोपे मातामहपितामहशब्दौ निपातितौ। तत्र मातुर्माता पितुर्मातेति विग्रहे डामहचः षित्वं विहितं-"मातरि षिच्चे"ति ततश्चाषित्त्वविधानादेव ङीष्सिद्धेर्गौरादिषु मातामहीशब्दपाठौ न कर्तव्यः। नच "मातरि षिच्चे"ति न क्रियतामिति वाच्यं, पितामहीत्यत्र ङीषर्थं तस्यावश्यकत्वादित्यत आह--मातरीति। दंष्ट्रेति। दंशेः "दाभ्यनीशसे"ति करणे ष्ट्रन्। अत्र षित्त्वे सत्यपि न ङीषिति भावः। "सूर्यादीनामङ्गानामुपधाभूतस्य यकारस्य लोप" इति तु न व्याख्यातं, तथा सति "सौरी बलाके"ति न सिध्येत्। सूर्येणैकदिक् इत्यर्थे "तेनैदि"गित्यणि तदन्तान्ङीप्यणन्तमङ्गं, नतु सूर्यशब्द इति तदसिद्धिः। वचनं तु सूरी कुन्तीत्यत्र चरितार्थमित्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

सूर्यतिष्यगस्त्यमत्स्याना य उपधायाः ४४३, ६|४|१४९

सूर्यतिष्य। अत्र "भस्ये"त्यनुवर्तमानमपि न सम्बध्यते, विषयपरिगणनेनैवातिपर्सङ्गनिवारणात्।

मत्स्यस्व ङ्याम्। मत्स्यस्य ङ्यामिति। नेह--मत्स्यस्येदं मात्स्यम्।

सूर्यागस्त्ययोश्छे च ङ्याचं॥छे च ङ्यां चेति। सूरीयः। सूरी। अगस्तीयः। अगस्ती। नेह--सौर्यं चरुम्। आगस्त्यम्।

तिष्यपुष्ययोर्नक्षत्राऽणि यलोप इति वाच्यम्। नक्षत्राऽणीति। नक्षत्रसम्बन्धी योऽण् "नक्षत्रेण युक्तः कावलः"इति,

"सन्धिवेलाद्यृतुनक्षत्रेभ्योऽ"णिति च विहितस्तस्मिन्नित्यर्थः। तत्र तिष्यस्य यलोपो निपात्यते। पुष्यस्यत्वप्राप्तो विधीयते। तिष्येण युक्तः कालस्तैषः। पुष्येण युक्तः पौषः। तथा--तिष्ये भवस्तैषः। पुष्ये भवः पौषः। नेह--तिष्यस्यायं तैष्यः। मत्सीति। योपधत्वात् "जातेरस्त्रीविषया"दित्यप्राप्ते गौरादिपाठान्ङीष्। मातरि षिच्चेति। "पितृव्यमातुलमातामहे"ति सूत्रस्थमिदं वचनम्। तच्च "पितामही"ति रूपसिद्ध्यर्थमवश्यं वक्तव्यमिति न वार्तिक्स्य वैयर्थ्यम्। ये तु पितामहशब्दमपि गौरादिषु पठन्ति, तन्मते वचनमिदं स्वरसतो न सङ्गच्छते। यदि त्वनित्यत्वज्ञापनमेव वचनस्य फलमिति ब्राऊषे, तर्हि "षिद्गौरे"ति सूत्र एव "अनित्यं षितः"इति वक्तव्यं किमनेन वक्रमार्गेणेति दिक्। दश्यतेऽनयेति दंष्ट्रा। "दाम्नीशसे"त्यादिना करणे ष्ट्रन्।

---

सूत्रम्

काशिका-वृत्तिः

हलस् तद्धितस्य ६।४।१५०

तद्धिते इति निवृत्तम्। हल उत्तरस्य तद्धितयकारस्य उपधायाः ईति परतो लोपो भवति। गार्गी। वात्सी। हलः इति किम्? कारिकेयी। तद्धितस्य इति किम्? वैद्यस्य भार्या वैध्यी।

न्यासः

हलस्तद्धितस्य। , ६।४।१५०

"तद्धित इति निवृत्तम्()" इति। उत्तरसूत्रे तद्धितग्रहणात्()। तेनायमीत्येव विधिः। "गार्गी" इत्यादि। गर्गादिशब्देभ्यो यञन्तेभ्यः "यञश्च" ४।१।१६ इति ङीप्()। "कारिकेयी" इति। "स्त्रीभ्यो ढक्()" ४।१।१२०, तदन्तात्? "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()। "वैधी" इति। "पुंयोगादाख्यायाम्()" ४।१।४८ इति ङीष्()॥

बाल-मनोरमा

हलस्तद्धितस्य ४६५, ६।४।१५०

हलस्तद्धितस्य। "हल" इति दिग्योगे पञ्चमी। "परस्ये"त्यध्याहार्यम्। "यस्येति चे"ति सूत्रादीतीत्यनुवर्तते, "सूर्यतिष्यागस्त्ये"त्यतः "उपधाया" इति षष्ठ()न्तं च, "ढे लोपोऽकद्र्वाः" इत्यतो "लोप" इति च। तदाह--हलः परस्येत्यादिना। अकारलोपात्प्रागेव यकारलोपो न संभवति, अकारे सति यकारस्य ईकारपरकत्वाऽभावात्। ननु कृतेऽकारलोपे खतं यकारस्य उपधात्वम्?। नच अल्लोपस्य स्थानिवत्त्वं शङ्क्यं, यलोपविधौ तन्निषेधादिति चेन्न, यलोपे कर्तव्येऽल्लोपस्याभीयत्वेनाऽसिद्धतया यकारस्य उपधात्वसंभवात्। उपधाग्रहणाननुवृत्तौ त्वल्लोपस्याऽसिद्धत्वाद्यकारस्य ईकारपरकत्वाऽभावाल्लोपो न स्यात्। यदा तु सूत्रारम्भसामथ्र्यादेवाकारव्यवधाने।ञपि यकारस्य लोपः सम्भवतीत्युच्यते, तदोपधाग्रहणानुवृत्तिर्मास्तु। गार्गीति। इह "गोत्रं च चरणैः सहे"ति जातित्वेऽपि "जातेरस्त्रीविषया"दिति न ङीष्, योपधत्वात्। अनपत्याधिकारेति।
"तस्यापत्य"मित्यपत्याधिकारविहितभिन्नयञन्तान्न ङीबिति वक्तव्यमित्यर्थः। द्वैप्येति। द्वीपे भवेति विग्रहे "द्वीपादनुसमुद्र यञि"ति यञ्। आदिवृद्धिः। "यस्येति च"। टापि सवर्णदीर्घः। अस्य यञोऽपत्याधिकारविहितत्वाऽबावान्न ङीबिति भावः। नन्वपत्यान्न ङीबित्येतावतैव द्वैप्येत्यत्रातिप्रसङ्गनिरासादधिकारग्रहणं किमर्थमित्यत आह-अधिकारग्रहणादिति। "इह ने"ति शेषः। देवस्यापत्यमिति विग्रहे "देवाद्यञञौ" इति यञ्, आदिवृद्धिः, "यस्येति च"। दैव्यशब्दाट्टाप्, सवर्णदीर्घः, दैव्येति रूपम्। "अनपत्यान्न ङी]बित्युक्ते त्वस्य यञ आपत्यत्वान्ङीब्निषेधो न स्यात्। अधिकारग्रहणे तु अत्रापि निषेधः स्यादेव, अस्य यञ आपत्यत्वे।ञपि "तस्यापत्य"मित्यधिकारबहिर्भूतत्वात्।

तदेतदुपपादयति--देवादिदिति। "देवाद्यञञौ" इति तु "तस्यापत्य"मित्यदिकारात्प्रागेव "प्राग्दीव्यतो"णित्यधिकारपठितः। स चाऽपत्यादिविकारान्तार्थेषु साधारणत्वादपत्यार्थकोऽपि भवति, न त्वपत्याधिकारपठित इत्यर्थः। यद्यपि "यञश्चे"ति सूत्रे "आपत्यग्रहणं कर्तव्य"मित्येव भाष्ये दृश्यते, तथापि तत्र आपत्यपदमपत्याधिकारविहितपरमिति मनोरमायां शब्दरत्ने च प्रपञ्चितम्।

तत्त्व-बोधिनी

हलस्तद्धितस्य ४१९, ६।४।१५०

हलस्तद्धितस्य। "हल"इति पञ्चमी। "यस्येति चे"त् सूत्रात्--ईतीत्यनुवर्तते। "नस्ताद्धिते"इत्यतस्तद्धित नानुवर्तते, "आपत्यस्य चे"त्यत्तरसूत्रे पुनस्तद्धितग्रहणात्तदाह---हल उत्तरस्येत्यादि। "तद्धिते"इत्यनुवृत्तौ त्विहापि स्यात्,---साङ्काश्यकः। काम्पिल्यकः। "सङ्काशादिभ्यो णयः"। ततो "धन्वयोपधा"दिति वुञ्। उपधाभूतस्येति। "सूर्यतिष्ये"त्यत "उपधाया"इत्यनुवर्तत इति भावः। ननु "यस्येति चे"ति यञोऽकारलोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या()। न चाऽल्लपोस्य स्थानिवद्भावो, यलोपे तन्निषेधात्। अत्राहुः--यलोपे कर्तव्येऽल्लोपस्याभीयत्वनाऽसिद्धत्वादुपधाग्रहणानुवृत्तिरभ्युपगन्तव्येति। अन्ये त्वाहुः--सूत्रारम्भसामथ्र्यादल्लोपस्याऽसिद्धकत्वं न भवति। तथा चोपधाग्रहणं विनापि नात्र क्षतिः। एवं च "सूर्यतिष्ये"ति सूत्रेऽप्युपधाग्रहणं त्यक्तुं शक्यमुक्तयुक्तेरिति। गार्गीति। गोत्रप्रत्ययान्तस्य जातित्वेऽपि योपधत्बादत्र "जाते"रिति ङीषिन भवति। तथाच आद्युदात्तमेवेदं पदम्। अनपत्याधिकारेति। यद्यपि "आपत्यग्रहणं कर्तव्य वार्तिकम्, तथाप्यपत्याधिकारविहितपरं तत्। तादृशश्च गर्गादियञेव न तु देवाद्यञ्। तस्याऽपत्याधिकाररात्प्रागेवन पाठात्। अतएव भाष्यकृता "यञश्चे"त्यत्र "कञ्क्वरपोऽयञश्चे"ति, "गर्गादिभ्यो य"ञित्यत्र "अय"ञिति अकारः प्राश्लिष्टः। एवं च "यञञोश्चे"ति सूत्रेऽपि "यस्कारदिभ्यो गोत्रे---अयञञोश्चे"त्यकारः प्रश्लिष्टः। एतच्च मनोरमाग्रन्थानुरोधोनोक्तम्। नव्यास्तु---अधिकारग्रहणमिहऽपार्थकं, यथाश्रुतवार्तिकेनैव द्वीपे भवा द्वेप्येति रूपसिद्धेः। न च देवस्यापत्यं स्त्री दैव्येति रुपाऽसिद्धि शङ्क्या, "अयञश्चे"ति भाष्यकारीयमिष्कर्षात्तत्सिद्धेः। नहि "देवाद्यञञौ"इत्यत्राऽयञित्यकारः प्रश्लेष्टं शक्यते। किंचाधिकारग्रहणे अभिजितोऽपत्यं स्त्रीत्यणन्तात्स्वार्थे "अभिजिद्विदभृ"दित्यादिना यञि "आभिजिती"ति रूपं न सिध्येत्।"श्रुमदणोऽयञ"इत्यकारप्रश्लेषेण भाष्यकाररीतियाऽपीह ङीपः संभवादित्याहुः। स्यादेतत्---अकारं प्रश्लिष्य गर्गादिभ्योऽयञि कृते गार्ग्य इति रूपं न सिध्येत्। मैवम्। वार्तिकप्रत्याख्यानाय भाष्यविरुद्ध इति स्पष्टमेव।

---

सूत्रम्

काशिका-वृत्तिः

आपत्यस्य च तद्धिते ऽनाति ६।४।१५१

आपत्ययकारस्य हलः उत्तरस्य तद्धिते अनाकारादौ लोपो भवति। गार्ग्याणां समूहो गार्गकम्। वात्सकम्। आपत्यस्य इति किम्? साङ्काश्यकः। काम्पिल्यकः। तद्धितग्रहणं ईत्यनापत्यस्य अपि लोपार्थम्। सौमी इष्टिः। अनाति इति किम्? गार्ग्यायणः। वात्स्यायनः। हलः इत्येव, कारिकेयस्य अपत्यं कारिकेयिः।

न्यासः

आपत्यस्य च तद्धितेऽनाति। , ६।४।१५१

"गार्गकम्()" इति। "गोत्रोक्षोष्ट्रोरभ्र" ४।२।३८ इत्यादिना गार्ग्यशब्दाद्वुञ्(), तत्र यञो लोपः। "साङ्काख्यकः" इति। "काम्पिल्यकः" इति। पूर्ववत्? सङ्काशकम्पिलशब्दाभ्याञ्चातुरार्थिकः "दुञ्छण्()" ४।२।७९ इत्यादिना ण्यः,

तदन्ताज्जातादौ शैषिकेऽर्थे "धन्वयोपधाद्()वुञ्()" ४।२।१२० इति वुञ्()। अथ तद्धितग्रहणं किमर्थम्(), "नस्तद्धिते" (६।४।१४४) इति तद्धितग्रहणमनुवर्()त्तिष्यते? इत्यत आह--"तद्धितग्रहणम्()" इत्यादि। सोमी देवतस्येति "सोमाट्ट()ण्()" ४।२।२९, "टिड्ढाणञ" ४।१।१५ इति ङीप्()। तत्र परतोऽनपत्ययकारस्यापि "हलस्तद्धितस्य" ६।४।१५० इत्यनेन लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम्(); अन्यथा यदि तदेव प्रकृतं तद्धितग्रहणमिहानुर्तेत, तदा तत्सम्बन्द्धमीद्ग्रहणमनुवत्र्तेत। तथा चोभयमिहानुवत्र्तमानं पूर्वयागेऽप्यनुवत्र्तत। तथा च पूर्वेणैव योगेन सिद्धे सत्युभयत्र तद्धित ई, ति च नियमार्थोऽयमारम्भः स्यात्()---आपत्यस्येवानाकारादौ तद्धिते लोपो भवति ईति च नानापत्ये च। एवञ्च यथानपत्यस्य साङ्कश्यक इत्यत्र लोपो न भविष्यति, तथा सौमी इष्टिरित्यत्रापि न स्यात्(); नियमेन व्यवर्त्तितत्वात्()। इह तु तद्धितग्रहणे क्रियमाणे पूर्वयोगे तद्धितग्रहणस्य निवृत्तिराख्यायते। तेन पर्वयोगेन तद्धितमात्रस्य यकारस्यानपत्यस्य चापत्यस्य चाविशेषेण लोपो विदीयते। सौमी इष्टिरित्यत्रापि लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम्()। ननु च यद्युभयत्र तद्धित इति चायं नियमः स्यात्? सूत्रद्वयस्यार्थोऽपार्थकः स्यात्()। "हल आपत्यस्यानाति" इत्येकमेव योगं कुर्यात्()। तस्मात्? सूत्रद्वयस्यारम्भसामथ्र्यादन्यतरस्यैवेहानुवृत्तिर्भवतिष्यति, न तूभयस्यापि। इह त्वेतावान्? सन्देहः स्यात्()--किं तद्धितग्रहणमिहानुवत्र्तते, उतेद्ग्रहणमिति? अत्रापि तद्धितग्रहणमनुवत्र्तते, नेद्ग्रहणमिति; व्याख्यानात्()। सरवसन्देहेष्विदमुपतिष्ठते "भवति व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्()" (पु।प।वृ १२०) इति। तद्धितग्रहणे च केवल इहानुवत्र्तमाने तद्धितविषय एवायं नियमो भविष्यति, न त्वीद्विषय इति। तथा चासत्यपि पुनरिह तद्धितग्रहण इति नियमाभावात्? पूर्वसूत्रेण सौमी इष्टिरित्यत्रापि लोपः सिद्ध्यत्येव। तत्? कथमिदमुक्तम्()--तद्धितग्रहणीत्यनपत्यस्यापि लोपार्थमिति? सुखेन लोपः प्रतीयत इत्येतदर्थमिदमित्यभिप्रायो द्रष्टव्यः। ततश्चायमत्रार्थः सम्पद्यते--प्रतिपत्तिगौरवपरीहारार्थं तद्धितग्रहणम्()। "गाग्र्यायणः" इति। "यञिञोश्च" ४।१।१०१ इति फक्()। "कारकेयिः" इति। कारिकाया अपत्यमिति "स्त्रीब्यो ढक्()" ४।१।१२०, ततस्तस्यापत्यम्(), "अत इञ्()" ४।१।९५ कारिकेयिः॥

बाल-मनोरमा

आपत्यस्य च तद्धितेऽनाति १०६५, ६।४।१५१

तथाच गाग्र्य-ईय इति स्थिते "यस्येति चे"ति यञोऽकारस्य लोपे गाग्र्य-ईय इति स्थिते परिशिष्टस्य यञो यकारस्य लोपमाह--आपत्यस्य च। "अनाती"ति च्छेदः। "ढे लोपोऽकद्व्राः" इत्यतो लोप इत्यनुवर्तते। "सूर्यतिष्ये"त्यतो "य" इति षष्ठ()न्तमनुवर्तते। "हलस्तद्धितस्ये"त्यतो हल इति पञ्चम्यन्तमनुवर्तते। तदाह--हलः परस्यापत्ययकारस्येति। अपत्यार्थकयकारस्येत्यर्थः। यञो लुकि तु आदिवृद्धिर्न स्यादिति भावः। अल्लोपस्याभीयत्वेऽपि नाऽसिद्धत्वम्, आरम्भसामथ्र्यात्। "हलस्तद्धितस्ये"ति यलोपस्यात्र प्रसक्तावपि न्याय्यत्वादिदमेव भवति। गर्गीयमिति। "तस्मै हित"मिति गाग्र्यशब्दाच्छः। तस्य प्राग्दीव्यतीयत्वाऽभावात् तस्मिन्परे "यञञोश्चे"ति यञो लुग्भवत्येवेति नादिवृद्विरिति भावः। गर्गरूप्यमिति। "हेतुमनुष्येभ्यः" इति रूप्यप्रत्ययः। तस्य प्राग्दीव्यतीयत्वेप्यजादित्वाऽभावात्तस्मिन्परे यञोऽलुङ्न। यदि तु "अजादौ प्राग्दीव्यतीये परे" इति व्याख्यायेत, तर्हि गाग्र्यशब्दाच्छे तस्य ईयादेशे कृतेऽलुग्विधिः प्रवर्तेत, नतु ततः प्राक्। एवंच छप्रवृत्तेः प्रागेव यञि अलुग्विधेः प्रवृत्तौ, यञन्तस्य वृद्धत्वाच्छो निर्बाधः। यलोपविधौ--आपत्यस्येति किम्?। गार्ग्ये। गाग्र्ययोः। अनातीति किम्? गाग्र्यायणः।

तत्त्व-बोधिनी

आपत्यस्य च तद्धितेऽनाति ८९२, ६।४।१५१

गर्गाणामिति। अपत्यबहुत्कविवक्षायां "यञञोश्चे"ति लुक्, स चाऽजादिप्रत्यये चिकर्षिते अनेन प्रतिषिद्ध इति

गाग्र्यशब्दाच्छे कृते तस्य ईयादेशः। "यस्येति चे"त्यकारलोपे यलोपार्थमाह---आपत्यस्य चेति। "ढे लोपोऽकद्र्वाः" इत्यतो "लोप" इत्यनुवर्तते, "सूर्यतिष्ये"त्यतो "य" इति, "हलस्तद्धितस्ये"त्यतो "हल"इति च। तदाह--हलः परस्येत्यादि। आभीयत्वेऽप्यल्लोपो नाऽसिद्धः, आरम्भसमाश्र्यात्। अत एवोपधाया इति नानुवर्तितमिति व्याचष्टे---यकारस्येति। आपत्यस्येति किम्()। सङ्काश्यकः। काम्पिल्यकः। "संकाशादिभ्यो ण्यः"। ततो "धन्वयोपधा"दिति वुञ्। तद्धिते इति किम्()। गर्ग्यै। गार्ग्यायोः। अनातीति किम्()। गग्र्यायणः। गर्गीयमिति। "तस्मै हित"मिति छः।

---

सूत्रम्

काशिका-वृत्तिः

क्यच्व्योश् च ६।४।१५२

क्य च्वि इत्येतयोश्च परतः आपत्ययकारस्य हल उत्तरस्य लोपो भवति। वात्सीयति। गार्गीयति। वात्सीयते। गार्गीयते। च्वौ गार्गीभूतः। वात्सीभूतः। आपत्यस्य इत्येव, साङ्काश्यायते। साङ्काश्यभूतः। हलः इत्येव, कारिकेयीयति। कारिकेयीभूतः।

न्यासः

क्यच्व्योश्च। , ६।४।१५२

अतद्धितार्थोऽयमारम्भः। "क्य" इति क्यच्क्यङोः सामान्येन ग्रहणम्()। "गार्गीयति इति। "सुप आत्मनः क्यच्()" ३।१।८, "क्यचि च" ७।४।३३ इतीत्वम्()। "गार्गीयः" इति। "कर्त्तुः क्यङ सलोपश्च" ३।१।११ इति क्यङ, "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। "गार्गीभूतः" इति। "अभूततद्भावे" ५।४।५० इति च्विः, "अस्य च्वौ" ७।४।३२ इतीत्वम्()॥

बाल-मनोरमा

क्यच्व्योश्च , ६।४।१५२

गार्गीभवतीति वक्ष्यन्नाह--क्यच्व्योश्च। "अल्लोपोऽनः" इत्यस्माल्लोप इति, "हलस्तद्धितस्ये"त्यस्माद्धल इति , "सूर्यतिष्ये" त्यतो य इति, "आपत्यस्य चे"त्यस्मादापत्यस्येति चानुवर्तते। तदाह--हलः परस्येति। गार्गीभवतीति। आगाग्र्यो गार्ग्यः संपद्यमानो भवतीत्यर्थः। यञन्ताच्च्वौ यकारस्य लोपः। वेर्लोपः। यकारस्य तु "आपत्यस्य चे"ति लोपो न सम्भवति, ईकारेण व्यवधानात्। "हलस्तद्धितस्ये"त्यपि न सम्भवति, तस्य ईति अर्थवत्येव विधानात्। अतो वचनमिति भावः।

तत्त्व-बोधिनी

क्यच्व्योश्च १५७७, ६।४।१५२

गार्गीभवतीति। इह यञन्तात्सुपि ततः च्विप्रत्यये कृते "आपत्यस्य च तद्धितेऽनाती"ति यलोपो न भवति, ईकारेण व्यवधानादिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

बिल्वकाऽदिभ्यश् छस्य लुक् ६।४।१५३

नडादिषु बल्वादयः पठ्यन्ते। नडादीनां कुक् च ४|२|९० इति कृतकुगागमा बिल्वकादयो भवन्ति। तेभ्यः उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति। बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवाः बैल्वकाः। वेणुकीया वैणुकाः। वेत्रकीया वैत्रकाः। वेतसकीया वैतसका। तृणकीया तार्णकाः। इक्षुकीया ऐक्षुकाः। काष्ठकीया काष्ठकाः। कपोतकीया कापोतकाः। क्रुञ्चायां ह्रस्वत्वं च। क्रुञ्चकीया क्रौञ्चकाः। छग्रहणम् किम्? छमात्रस्य लुग् यथा स्यात्, कुको निवृत्तिर् मा भूतिति। अन्यथा हि संनियोगशिष्टानाम् अन्यतरापाये उभयोरपि अभावः इति कुगपि निवर्तेत। लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत्।

न्यासः

बिल्वकादिभ्यश्छस्य लुक्?। , ६|४|१५३

"बिल्वकदिभ्यः" इति। आगन्तुकेनाकारेण निर्देशः। "बिल्वकीया" इति। "उत्करादिभ्यश्छः" ४|२|८९ "नडादीनां कुक्च" ४|२|९० इति चातुरर्थिकश्छः, कुगागमः। "बैल्वकाः" इति। "प्राग्दीष्यतेऽण्()" ४|१|८३। अथ छग्रहणं किमर्थम्(), यावता कृतकुगागमा बिल्वकीदयो गृहीताः, एभ्यश्छप्रत्ययः सम्भवतीत्यन्तरेणापि छग्रहणं छस्यैव लोपो भवितव्यतीति? अत आह--"छग्रहणम्()" इत्यादि। यदि छग्रहणं न क्रियेत, तदा सन्नियोगशिष्टपरिभाषया (ह|भा|१४) छकारे निवर्तमाने कुको निवृत्तिः स्यात्()। तस्याश्च परिभाषया एतेदेव छग्रहणं ज्ञापकम्()। अथ लुग्ग्रहणं किमर्थम्(), प्रकृत एव लोपो विधीयते? इत्यत आह--"लुग्ग्रहणम्()" इत्यादि। यकारग्रहणमेकदेशोपलक्षणार्थं द्रष्टव्यम्()। स हि लोप उपधाया इत्यनेन सम्बद्ध इति तस्मिन्ननुवर्तमाने "य उपधायाः" ६|४|१४९ इत्येतदप्युनुवत्र्तेत, छस्येयादेशे कृते यकारमात्रस्य स्यात्()। अथापि "उपधायाः" इत्येतन्नानुवत्र्तेत? एवमपि "आदेः परस्य" १|१|५३ इतीकारमात्रस्य स्यात्()। "लुग्ग्रहणम्()" इति। लुगिति प्रत्ययादर्शनस्यैषा संज्ञा, न तु प्रत्यस्यैकदेशस्यादर्शनस्येति। लुग्ग्रहणे सति सर्वस्यैव लुक्? सिद्ध्यति। तद्रथं हि लुग्ग्रहणम्()॥

बाल-मनोरमा

विल्वकादिभ्यश्छस्य लुक् ३८९, ६|४|१५३

बिल्वरादिभ्यः। षाष्ठमिदं सूत्रम्। बिल्वकादीति-नडाद्यन्तर्गबिल्वादीनां कृतकुगागमानां निर्देशः। ककारादकार उच्चारणार्थः। तद्धिते इति। "आपत्यस्य च तद्धिते" इत्यतस्तदनुवृत्तेरिति भावः। बिल्वकीयेति। "नडादीनां कुक्चे"ति छः। प्रकृते कुक्च। बैल्वका इति। बिल्वकीयशब्दाद्भवार्थे अण्। तस्मिन्परे छस्य लुगिति भावः। वेत्रकीया इति। वैत्राणि अस्यां सन्तीत्यर्थे नडादित्वाच्छः, प्रकृते कुक्चेति भावः। वैत्रका इति। वेत्रकीयायां भवा इत्यर्थः। वेत्रकीया शब्दादणि छस्य लुगिति भावः। छस्य किमिति। एभ्यः परस्य छस्यैव संभव इति प्रश्नः। संनियोगेति। "संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्ति"रिति न्यायेनेत्यर्थः। "ढे लोपोऽकद्र्वाः" इत्यतो लोप इत्यनुवृत्यैव सिद्धे लुग्ग्रहणं किमर्थमित्यत आह--लुग्ग्रहणं सर्वलोपार्थमिति। प्रत्ययाऽदर्शनस्यैव लुक्शब्दार्थत्वात्कृत्स्नस्य ईयस्य लोपो लभ्यते इति भावः। लोपविधौ तु नैवं लभ्यते इत्याह--लोपो हीति। लोपविधौ "सूर्यतिष्ये"त्यतो "य उपधायाः" इत्यनुवृत्तौ बिल्वादिभ्यः परस्य छादेशभूतस्य ईयस्य उपधाभूतो यो यकारस्तस्य लोप इत्यर्थलाभाद्यकारमात्रस्य लोपः स्यात्। "यः उपधायाः" इत्यननुवृत्तौ तु "आदेः परस्ये"ति ईकारस्यैव लोपः स्यादिति भावः। यकारमात्रस्य लोपः स्यात्। "य उपधायाः" इत्यनननुवृत्तौ तु "आदेः परस्ये"ति ईकारस्यैव लोपः स्यादिति भावः।

*****इति बालमनोरमायाम् चातुरर्थिकाः।*****

तिङन्ते चुरादयः

अथ स्वार्थिकणिजन्ताश्चुरादिधातवो निरूप्यन्ते। चुर स्तेये इति। रेफादकार उच्चारणार्थः, न त्वित्संज्ञकः, प्रयोजनाऽभावात्, "णिचश्च" ति पदव्यवस्थाया वक्ष्यमामत्वाच्च। एवमग्रेऽपि।

---

सूत्रम्

काशिका-वृत्तिः

तुरिष्ठेमेयस्सु ६।४।१५४

इष्ठनिमनिचीयसुनित्येतेषु परतः तृशब्दस्य लोपो भवति। आसुतिं करिष्ठः। विजयिष्ठः। वहिष्ठः। दोहीयसी धेनुः। सर्वस्य तृशब्दस्य लोपार्थं वचनम्। अन्त्यस्य हि टेः ६।४।१५५ इत्येव सिद्धः। लुगित्येतदत्र न अनुवर्तते, तथा हि सति न लुमताङ्गस्य १।१।६२ इति प्रतिषेधाद् गुणो न स्यात्। इमनिज्ग्रहणम् उत्तरार्थम्। इतरौ तु तुश्छन्दसि ५।३।५९ इति भवतः।

न्यासः

तुरिष्ठेमयस्सु। , ६।४।१५४

"तुः" इति। विसेषकराननुबन्धानुत्सृज्य तृंस्तृचोः सामान्येन ग्रहणम्()। "करिष्ठः" इति। करोतेस्तृन्()। तदन्तादतिशायन इष्ठन्(), तृशब्दस्य लोपः। "विजयिष्ठः" इति। विपूर्वाज्जयतेस्तृन्()। "वहिष्ठः" इति। अत्रापि वहेस्तृन्()। तदन्तादिष्ठन्(), "हो ढः" ८।२।३१ इति ढत्वम्()। तृशब्दस्य लोपे कत्र्तव्ये "पूर्वत्रासिद्धम्()" ८।२।१ इत्यसिद्धम्(), तेन पूर्वलोप एव क्रियते, तस्मिन्? कृते झलि यदान्ते च विधीयमानं ढत्वं निमित्ताभावान्न प्रवत्र्तेते। "दोहीयसी" इति। दुहेस्तृजन्तादीयसुन्(), "उगितश्च" ४।१।६ इति ङीप्()। अत्रापि लोपे कत्र्तव्ये "दादेर्धातोर्धः" ८।२।३२ इत्येतदप्यसिद्धमिति पूर्वं लोपः, तस्मिन्? सति पूर्ववद्धत्वं न प्रवत्र्तते। अथ "अलोऽन्त्यस्य" (१।१।५२) इत्यन्त्यस्यायं लोपः कस्मान्न भवति? इत्याह--"सर्वस्य" इत्यादि। तत्रैव कारणमाह--"अन्त्यस्य" इत्यादि। यद्यन्त्यस्य स्याद्वचनवैयथ्र्यमापद्येत; "अन्त्यस्य टेः" इत्येवं सिद्धत्वात्()। तस्मादन्त्यलोपवचने प्रयोजनं नास्तीति सर्वस्य तृशब्दस्य लोपो यता स्यादित्येवमर्थमिदं वचनं विज्ञायते। यदि तर्हि तृशब्दस्य लोपार्थं वचनमनन्तरो लुगेव कस्मान्न विधीयते, एवं तर्हि सर्वस्य सुखमेव लोपोऽवसीयते, प्रत्ययादर्शनस्य लुग्विधानात्()? इत्यत आह--"लुगित्येतत्" इत्यादि। कः पुनस्तत्र सति दोषः स्यात्()? इत्यत आब--"तथा हि" इत्यादि। यदि लुगित्येतदिहानुवत्र्तत, ततः "अन्तरङ्गानपि विधीन्? बहिरङ्गो लुग्? बाधते" (व्या।प।१२८) इति कृत्वा पूर्वं लुका भवितव्यम्(), ततश्च "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणनिषेधः स्यात्(); करिष्ठः, विजयिष्ठ इत्यत्रार्धदातुकलक्षणो गुणो न स्यात्()। तस्मान्मा भूदेष दोष इति लुगित्येतदिहानुवत्र्तते। अथेमनिज्ग्रहणं किमर्थम्(), यावता तृशब्दात्? पर इमानिज्न सम्भवति। तथापि "पृथ्वादिभ्य इमानिज्वा" ५।१।१२१ "वर्मदृढादिभ्यः व्यञ्च" ५।१।१२२ इत्यनेन योगद्वयेन स विहितः, न तृशब्दान्तं किञ्चित्? पृथ्वादिषु दृढादिषु वा मध्ये पठ()ते, नापि वर्णवाच्यस्तीत्यत आह--"इतरौ तु" इत्यादी॥

तत्त्व-बोधिनी

तुरिष्ठेमेयः सु १५०४, ६।४।१५४

तुरिष्। "टे"रित्यनेनान्त्यलोपे सिद्धेऽप्यारम्भसामथ्र्यात्सर्वस्य तृशब्दस्य लोपस्तदाह---करिष्ठ इति। दोहीयसीति इयमनयोरतिशयेन दोग्ध्री। "भस्याऽढे तद्धिते सिद्धश्च प्रत्ययविधौ"इति वचनात्तद्धिते कर्तव्ये प्रागेव पुंवद्भाव इति ङीपि निवृत्ते दोग्धृशब्दात्प्रत्ययः, ततस्तृचि निवृत्ते निमित्ताऽभावाद्धत्वजश्त्वयोरपि निवृत्तिः। अलौकिके विग्रहवाक्ये प्रागेव

तयोरप्रवृत्तिः "अकृतव्यूह"परिभाषयेति तु तत्त्वम्। गुणस्तु प्रवर्तते। लुप्तेऽपि तृचि प्रत्ययलक्षणध्रौव्यात्, छान्दसमपि "तु"रिति सूत्रम्, "तुरिष्ठेमेयः,सु"इति च "णाविष्ठव"दित्यति देशेन लोकेऽपि कर्तारमाचष्टे कारयतीत्यादावुपयोक्ष्यमाणत्वादिहोपन्यस्तम्।

---

सूत्रम्

काशिका-वृत्तिः

टेः ६।४।१५५

भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः। पटु पटिष्ठः। पटिमा। पटीयान्। लघु लघिष्ठः। लघिमा। लघीयान्। णाविष्ठवत् प्रातिपदिकस्य कार्यं भवति इति वक्तव्यम्। किं प्रयोजनम्? पुंवद्भावरभावटिलोपयणादि। परार्थम्। पुंवद्भावः एनीमाचष्टे एतयति। श्येतयति। तसिलादिष्वाकृत्वसुचः ६।३।३४ इति इष्ठे पुंवद्भावः उक्तः। रभावः पृथुमाचष्टे प्रथयति। म्रदयति। टिलोपः पटुनाचष्टे पटयति। लघयति। यणादिपरम् स्थूलमाचष्टे स्थवयति। भारद्वाजीयास्तु पठन्ति, णाविष्ठवत् प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थम् इति। स्रग्विणमाचष्टे स्रजयति। वसुमन्तमाचष्टे वसयति। युवानमाचष्टे यवयति। कन्यति। एतदुभयम् अपि उदाहरणमात्रम्, न परिगणनम्। प्रादयो ऽपि हीष्यन्ते, प्रियमाचष्टे प्रापयति।

लघु-सिद्धान्त-कौमुदी

टेः ११६०, ६।४।१५५

भस्य टेर्लोप इष्ठेमेयस्सु। पृथोर्भावः प्रथिमा -।

न्यासः

टेः।, ६।४।१५५

"णाविष्ठवत्()" इति। "तसिलादिष्वा कृत्वसुचः" ६।३।३४ इष्ठनि पुंवद्भाव उक्तः, "र ऋतो हलादेर्लघोः" ६।४।१६१ इति रभावः, "टेः" इति टिलोपः, "स्थूलदूरयुवह्रस्व" ६।४।१५६ इत्यादिना यणादिपरस्य लोपः, पूर्वस्य च गुणः, "विन्मतोर्लुक्()" ५।३।६५ इति लुक्(), "युवाल्पयोः कनन्यतरस्याम्()" ५।३।६४ इति कन्()। "प्रियस्थिर" ६।४।१५७ इत्यादिना प्रादय आदेशाः--एतानि कार्याणि यथेष्ठनि भवन्ति, तथा णावपि यथा स्युरिति णाविष्ठवत्? प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम्()। प्रातिपदिकग्रहणं शक्यमकर्त्तुम्(), अन्यस्यातिदेशस्यासम्भवात्()। वतिरिह सादृश्यार्थः, तेन यस्येष्ठनि यत्कार्यं विवक्षितं ततोऽन्यस्यातिदेशस्यासम्भवात्? तद्व्यवच्छेदार्थं प्रातिपदिकग्रहणं न कत्र्तव्यम्()। तत्? क्रियते विसपष्टार्थम्()। केचित्तु ब्राउवते प्रत्ययस्य कार्याणामतिदेशो मा भूदित्येवमर्थं प्रातिपदिकग्रहणं न कत्र्तव्यम्()। तत्? क्रियते विस्पष्टार्थम्()। केचित्तु ब्राउवते प्रत्ययस्य कार्याणामतिदेशो मा भूदित्येवमर्थं प्रातिपदिकग्रहण्(), तेन बहुमाचष्टे बहयतत्यत्र "इष्ठस्य यिट्? च" (६।४।१५८) इति यिण्ण भवति? एतच्चायुक्तम्(); इष्ठवदित्यत्र हि सप्तमी समर्थाद्वतिर्दिहितः, णादिति प्रतियोगिनि सपतमीश्रवणात्()। तेनेष्ठनि यत्कार्यं विहितं तदतिदिश्यते, न त्विष्ठस्य यत्कार्यं तदपि। न च यिङ्? इष्ठनि यत्? कार्यम्(), अपि त्विष्ठन एव। तस्यैह प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन प्रातिपदिकग्रहणेन! "एनीम्()" इति। एतच्छब्दात्? "वर्णादनुदात्तात्तोपधात्()" ४।१।३९ इत्यादिना ङीष्(), तकारस्य च नकारः। "एतयति" इति। णौ कृते पुंवद्भावेन ङीष्नकारावुभावपि निवत्र्तेते। ननु च ङीषा व्यवहितोऽत्र णिरिति णावतिदेशः क्रियमाणस्तद्व्यवधाने न प्राप्नोतीति? नैष दोषः; इष्ठन्यपि हि ङोपा व्यवधानएव प्रातिपदकस्य पुंवद्भावः। तस्मादिहापि व्यवधानेऽपि तद्वदेव भविष्यति। "रुआग्विणम्()" इति। "अस्मायामेधारुआजो विनिः" ५।२।१२० इति विनिः।

रुआजयतीत्यत्र "संज्ञापूर्वको विधिरनित्यः" (व्या।प।६४) इति "अत उपधायाः" ७।२।११६ इति वृद्धिर्न भवति। "अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य" (व्या।प।३८) इति वपा। प्रापयतीत्येवमादौ भवत्येवानिष्ठितत्वात्()। अत्र "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्()। ननु भारद्वाजीयपाठे प्रादयो न सिद्ध्यन्ति; अपि तु रुआजयति वसयतीति लुक्(), कनयतीत्यत्र च कन्नित्यत आह--"तदेतदुभयमप्युदाहरणमात्रम्()" इत्यादि। तदेतद्भावद्वाजीयपाठे अन्येषाञ्च प्रयोजनमुपदर्शितम्(), न त्वेतदुदाहरणमात्रपरिगणनम्()। एतावदेव प्रयोजनमिति यस्मात्? प्रादयोऽपीष्यन्ते। ननु "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (धा।पा।ग।सू।१८६) इति चुरादिगण एव पठ()ते, तत्? कस्मात्? पुनरिह णाविष्ठवद्भाव उच्यते? अस्यैव प्रपञ्चार्थमित्येके। गणे वा स वक्तव्यः। "असौ इतरः" इति विकल्पप्रदर्शनार्थमित्यन्ये॥

बाल-मनोरमा

टेः १७६३, ६।४।१५५

टेः। "इष्ठेमेयस्सु" इत्यनुवर्तते। "अल्लोपोऽनः" इत्यतो लोप इति च। तदाह--टेर्लोपः स्यादिष्ठेमेयस्स्विति। प्रथिमेति। पृथुशब्दादिमनिच्। चकार इत्। नकारादकार उच्चारणार्थः। ऋकारस्य रः, उकारस्य गुणं बाधित्वा टेर्लोपः। पार्थवमिति। इमनिजभावे "इगन्ताच्च लघुपूर्वा"दित्यण्। म्रदिमेति। मृदुशब्दादिमनिचि ऋकारस्य रः। "टेः" इति टिलोपश्च। मार्दवमिति। "इगन्ताच्चे"त्यण्।

---

सूत्रम्

काशिका-वृत्तिः

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ६।४।१५६

स्थूल दूर युव ह्रस्व क्षिप्र क्षुद्र इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति। स्थूल स्थविष्ठः। स्थवीयान्। दूर दविष्ठः। दवीयान्। युवन् यविष्ठः। यवीयान्। ह्रस्व ह्रसिष्ठः। ह्रसिमा। ह्रसीयान्। क्षिप्र क्षेपिष्ठः। क्षेपिमा। क्षेपीयान्। क्षुद्र क्षोदिष्ठः। क्षोदिमा। क्षोदीयान्। ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते। परग्रहणं किम्? यविष्ठः, यवीयान्, ह्रसिष्ठः, ह्रसीयानित्यत्र पूर्वस्य यणादेर्लोपो मा भूत्। पूर्वग्रहणं विस्पष्टार्थम्।

न्यासः

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः। , ६।४।१५६

यद्यपि पूर्वं भावसाधनो लोपशब्द उपात्तः, तथापीह कर्मसाधनो गृह्रते; यणादिपरिमिति निर्देशात्()। भावसाधने हि तस्मिन्? "कर्तृकर्मणओः कृति" २।३।६५ इति षष्ठी स्यात्()। कर्मसाधने तु कर्मणस्तेनैषाभिहितत्वात्? प्रथमैव युज्यत इति मन्यमानो लापशब्दस्य कर्मशब्दस्य कर्मसाधनतां दर्शयन्नाह--"यणादिपरं लुप्यते" इति। कथं पुनस्तस्यैव भावसाधनस्य सतः कर्मसाधनतोपपद्यते? कः पुनराह--"तस्यैव" इति! प्रतिसूत्रं ह्रनुवर्त्तमानो लोपशब्दो भिद्यते। ननु च यणादौ परस्मिन्? लुप्ते सामर्थ्यात्? तत्पूर्वस्यैव गुणो विज्ञास्यते, तत्? किमर्थं पूर्वग्रहणम्()? इत्याह--"पूर्वग्रहणं विस्पष्टार्थम्()" ति॥

बाल-मनोरमा

स्थूलदूरयुवह्यस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः , ६।४।१५६

स्थूलदूर। एषामिति। स्थूल, दूर, युवन् ह्यस्व, क्षिप्र, क्षुद्र इत्येतेषामित्यर्थः। यणादीति। यण्--आदिर्यस्येति विग्रहः। "पर"मिति "यणादी"त्यस्य विशेषणम्। परभूतंयणादीत्यर्थः। लुप्यत इति। "अल्लोपोऽनः" इत्यतोऽनुवृत्तं लोपपदमिह कर्मणि घञन्तमाश्रीयत इत्यर्थः। भावसाधनत्वे परमित्यनेन सामानाधिकरण्याऽसंभवात्। पूर्वस्येति। पूर्वत्वं यणपेक्षया

बोध्यम्। इष्ठादिष्विति। "तुरिष्ठेमेयस्सु" इत्यतस्तदनुवृत्तेरिति। भावः। स्थविष्ठ इति। स्थूलशब्दादिष्ठनि ल इत्यस्य लोपे ऊकारस्य गुण ओकारः। अवादेश इति भावः। ओर्गुणस्तु न प्रवर्तते, यणादिलोपस्याऽऽभीयत्वेनासिद्धत्वात्। एवमग्रेऽपि। दविष्ठ इति। दूरशब्दादिष्ठनि र इत्यस्य लोपे ऊकारस्य गुणे अवादेशः। यविष्ठ इति। युवन्शब्दादिष्ठनि "व"न्नित्यस्य लोपे गुणे अवादेशः। "पर"मित्यनुक्तौ "यु" इत्यस्यापि यणादेर्लोपः स्यात्। ह्रसिष्ठ इति। ह्रस्वशब्दादिष्ठनि "व" इत्यस्य लोपः। "पर"मित्यनुक्तावत्र रादेर्लोपः स्यात्। क्षेपिष्ठ इति। क्षिप्रशब्दादिष्ठनि र इत्यस्य लोपः, उकारस्य गुणः। एवमीयसिति। स्थवीयान्, दवीयान्, यवीयान्, ह्रसीयान्, क्षेपीयान्, क्षोदीयान्। इमनिजनुवृत्तेः प्रयोजनमाह--ह्रस्वक्षिप्रेति।

तत्त्व-बोधिनी

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः १५०८, ६।४।१५६

स्थूलदूर। परग्रहणं यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्वोपो माभूदिति। पूर्वग्रहणं तु स्पष्टार्थम्। परस्मिन् लुप्ते सामर्थ्यात्पूर्वस्यैव गुणवलाभात्। स्थविष्ठ इति। न चाऽत्र "ओर्गुम"इत्येव सिद्धे गुणग्रहणं व्यर्खमिति वाच्यं, परयणादिलोपस्याभीयत्वेनाऽसिद्धत्वात् क्षिप्रक्षुद्रयोरोर्गुणस्य प्राप्त्यभावात्। क्षेपिष्ठः क्षोदिष्ठ इत्यसिद्धिप्रसङ्गाच्च। एवमिति। प्रेयान्। स्थेयान्। स्फेयाम्। वरीयानित्यादि। इमेयसोर्लोप इति। स च "आदेः परस्ये"इत्यादेरेव भवति।

---

सूत्रम्

काशिका-वृत्तिः

प्रियस्थिरस्फिरौरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ६।४।१५७

प्रिय स्थिर स्फिर उरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेषां प्र स्थ स्फ वर् बंहि गर् वर्षि त्रप् द्राधि वृन्द इत्येते यथासङ्ख्यम् आदेशा भवन्ति इष्ठेमेयस्सु परतः। प्रिय प्रेष्ठः। प्रेमा। प्रेयान्। स्थिर स्थेष्ठः। स्थेयान्। स्फिर स्फेष्ठः। स्फेयान्। उरु वरिष्ठः। वरिमा। वरीयान्। बहुल बंहिष्ठः। बंहिमा। बंहीयान्। गुरु गरिष्थः। गरिमा। गरीयान्। वृद्ध यर्षिष्ठः। वर्षीयान्। तृप्र त्रपिष्ठः। त्रपीयान्। दीर्घ द्राधिष्ठः। द्राधिमा। द्राधीयान्। वृन्दारक वृन्दिष्ठः। वृन्दीयान्। प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेन अन्येषामिमनिज् न भवति इति नोदाह्रियते।

न्यासः

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवंर्बहिगर्वर्षित्रब्द्राघिवृन्दाः। , ६।४।१५७

किं पुनः कारणं प्रियोरुगुरुदीर्घाणामेवेमनिजुदाह्रियते, नान्येषाम्()? इत्याह--"प्रियोरुबहुलगुरुदीर्घाः" इत्यादि। "प्रियादिभ्य एवेमनिच्? सम्भवति, नान्येभ्यः" इत्येवम्परमेतद्वाक्यमित्यर्थः। अन्यथा यद्यपि प्रियादय एव पृथ्त्रादिषु पठ()न्ते, वर्णावाचिनो वा स्युः, तदोदाह्रियेतेमनिच्? तेषामित्यकारणमेदिमनिचोऽत्रोदाहरणं स्यात्()॥

बाल-मनोरमा

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धप्रदीर्घबृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रन्द्राघिवृन्दाः , ६।४।१५७

प्रियस्थिर। प्रियादीनामिचि। प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ,बृन्दारक एषां दशानामित्यर्थः। प्रादय इति। प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि, बृन्द एते दशेत्यर्थः। इष्ठादिष्विति। इष्ठेमेयस्स्वित्यर्थः। "तुरिष्ठेमेयः सु" इत्यतस्तदनुवृत्तेरिति भवः। प्रेष्ठ इति। प्रियशब्दादिष्ठनि प्रकृतेः प्रादेशः।
आभीयत्वेनाऽसिद्धत्वादकारोच्चारणसामर्थ्याच्च न टिलोपः। स्थेष्ठ इति। स्थिरशब्दादिष्ठनि प्रकृतेः स्थादेशः। प्रकृतिभावान्न टिलोपः। स्फेष्ठ इति। स्फिरशब्दस्य इष्ठनि स्फादेशः। वरिष्ठ इति। उरुशब्दादिष्ठनि "वर्" आदेशः। बंहिष्ठ

इति। बहुलशब्दस्य "बहिं" इत्यादेशः। इकार उच्चारणार्थः। अन्यथा आभीयत्वेनाऽसिद्धत्वादुच्चारणसामर्थ्याद्वा इकारस्य लोपो न स्यात्। गरिष्ठ इति। गुरुशब्दस्य इष्ठनि "गर्" आदेशः। वर्षिष्ठ इति। वृद्धशब्दस्य इष्ठनि वर्षिरादेशः। बंहिवदिकार उच्चारणार्थः। त्रपिष्ठ इति। तृप्रशब्दस्य इष्ठनि "त्रप्" आदेशोऽदुपधः। तृपधातोस्तृप्त्यर्थकादौकादौणादिके रकि तृप्रशब्दः। द्राघिष्ठ इति। दीर्घशब्दस्य इष्ठनि "त्रप्" आदेशोऽदुपधः। तृपधातोस्तृप्त्यर्थकादौणादिके रकि तृप्रशब्दः। द्राघिष्ठ इति। दीर्घशब्दस्य इष्ठनि द्राघिरादेशः। बंहिवदिकार उच्चारणार्थः। वृन्दिष्ठ इति। वृन्दारकशब्दस्य इष्ठनि बृन्द आदेशः। अकार उच्चारणार्थः। एवमीयसुन्निति। "प्रेयान्, स्थेयान्, स्फेयान्, वरीयान्, बंहीयान्, गरीयान्, वर्षीयान्, त्रपीयान्, द्राघीयान्, वृन्दीयान्। अत्र इमनिजनुवृत्तेः प्रयोजनमाह--प्रियोरुबहुलेति। इत्यादीति। वरिमा, बंहिमा, गरिमा, द्राघिमा।

---

सूत्रम्

काशिका-वृत्तिः

बहोर् लोपो भू च बहोः ६।४।१५८

बहोरुत्तरेषाम् इष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने भू इत्ययम् आदेशो भवति। भूमा। भूयान्। बहुशब्दः पृथ्वादिषु पठ्यते। बहोरिति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम्, अन्यथा हि प्रत्ययानाम् एव भूभावः स्यात्।

लघु-सिद्धान्त-कौमुदी

बहोर्लोपो भू च बहोः १२३०, ६।४।१५८

बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा। भूयान्॥

न्यासः

बहोर्लोपो भू च बहोः। , ६।४।१५८

"बहोरुत्तरेषाम्()" इति। एतेन प्रथमस्य बहोः पञ्चम्यन्ततां दर्शयति, तस्य च वहोरित्यनेनापि द्वितीयस्य षष्ठ()न्तताम्()। "भूयान्()" इति। "आदेः परस्य" १।१।५३ इतीकारस्यव लोपः। अथ किमर्थं बहोरिति पुनग्र्रहणम्()? इत्याह--"बहोरिति पनः" इत्यादि। असति हि बहोरिति ग्रहणे बहुशब्दस्य स्थानित्वं न प्रतीयेत; पञ्चम्यन्तेन निर्देशात्()। तस्मात्? स्थानित्वप्रतिपत्तये पुनर्बहोरित्यच्यते। "अन्यथा हि" इत्यादि। यदि बहोः इति नोच्येत, तदा प्रत्ययानामेव भूभावः स्यात्(); "तस्मादित्युत्तरस्य" १।१।६६ इति वचनात्()। ननु पृथग्निर्देशादेव प्रत्ययानां न भविष्यति, अन्यथा "भूलोपौ" इत्ययं ब्राऊयात्()? नैतदस्ति; अस्ति ह्रन्यत्? पृथग्निर्देशस्य प्रयोजनम्()। किम्()? पृथक्()स्थानिकौ यथा स्ताताम्(), आदेर्मा भूतामिति। यदि "भूलोपौ" इत्येवमुच्येत, तदा "आदेः परस्य" १।१।५३ इत्याद्यस्यैव वर्णस्य पर्यायेण भूलोपो स्यातामिति। अतो भिन्नस्थानिकौ यता स्यातामित्येवमर्थः पृथग्योगनिर्देशः स्यात्()। तस्माद्युक्तमुक्तम्()--"अन्यथा हि प्रत्ययानामेव भूभावः स्यात्()" इति। चकारोऽत्र सन्नियोगार्थः॥

बाल-मनोरमा

बहोर्लोपो भू च बहोः , ६।४।१५८

बहोर्लोपः। "भू" इति लुप्तप्रथमाकम्। इष्ठेयमेयस्स्वित्यनुवृत्तम्। तत्र इष्ठन उत्तरसूत्रे कार्यान्तरविधानादिह तस्य न संबन्धः। तदाह--बहोः परयोरिति। "आदेः परस्ये"ति प्रत्यययोरादिलोपः। भूमेति। बहुत्वमित्यर्थः। बहुशब्दात्पृथ्वादिमनिचि प्रकृतेर्भूभावः, प्रत्ययादैरिकारस्य लोपश्च भूयानिति। अयमनयोरतिशयेन बहुरित्यर्थः। वैपुल्यवाचकाद्बहुशब्दादीयसुनि प्रकृतेर्भभावः, प्रत्ययादेरिकारस्य लोपश्च। भूभावस्याभीयत्वेना।ऽसिद्धत्वादोर्गुणो न भवति।

सूत्रम्

काशिका-वृत्तिः

इष्ठस्य यिट् च ६।४।१५९

बहोरुत्तरस्य इष्ठस्य यिडागमो भवति, बहोश्च भूरादेशो भवति। भूयिष्ठः। लोपापवादो यिडागमः, तस्मिन्निकार उच्चारणार्थः।

लघु-सिद्धान्त-कौमुदी

इष्ठस्य यिट् च १२३१, ६।४।१५९

बहोः परस्य इष्ठस्य लोपः स्याद् यिडागमश्च। भूयिष्ठः॥

न्यासः

इष्ठस्य यिट् च। , ६।४।१५९

"लोपापवादो यिडागमः" इति। नाप्राप्ते तस्मिन्नस्यारम्भात्()। "तस्मिन्निकार उच्चारणार्थः" इति। प्रयोजनान्तराभावात्()। चकारः "बहोश्च भूः" इत्यनुकर्षणार्थः॥

बाल-मनोरमा

इष्ठस्य यिट् च , ६।४।१५९

इष्ठस्य यिट् च। लोपः स्यादिति। "आदेः परस्ये"ति बोध्यम्। यिटि टकार इत्। इष्ठस्यादिलोपे कृते यिडागमः। ट इत्। टित्त्वात्प्रत्ययस्याद्यवयवः। बहोर्भूभावस्तु पूर्वसूत्रेण सिद्ध एव। यदि तु लोप इति निवृत्तं तदा यकार आगम इति भाष्यम्।

तत्त्व-बोधिनी

इष्ठस्य यिट् च १५०९, ६।४।१५९

इष्ठस्य यिट् च। पूर्वसूत्रं संपूर्णमनुवर्तते। तदाह---बहोरित्यादि। "भूरादेशश्चे"त्यपि ज्ञातव्यम्। भूयिष्ठ इति। अत्र इष्ठस्याऽऽजिलोपे कृते यिशब्द आगमः। यद्वा लोपापवादो यकार आगमः। इकारस्तूच्चारणार्थः। पक्षद्वयमपीदं भाष्यारूढम्।

---

सूत्रम्

काशिका-वृत्तिः

ज्यादादीयसः ६।४।१६०

ज्यदुत्तरस्य ईयसः आकार आदेशो भवति। ज्यायान्। लोपस्य यिटा व्यवहितत्वातातित्युच्यते। लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायानिति सिध्यति।

लघु-सिद्धान्त-कौमुदी

ज्यादादीयसः १२२९, ६।४।१६०

आदेः परस्य। ज्यायान्॥

न्यासः

ज्यादादीयसः। , ६।४।१६०

"ज्यायान्()" इति। "प्रशस्यस्य श्रः" [५।३।६०](5.3.60) "ज्य च" [५।३।६१](5.3.61) इति ज्यादेशः। "लोपस्य यिट्? च" इयादि। यद्यत्र लोपो यिटा न व्यवधीयते तदा तेनैव ज्यायानित्येतत्? सिद्ध्यतीति कृत्वाऽऽदिति नोच्येतेत्यभिप्रायः। कथं पुनरादित्यनुच्यमाने लोपेन सिद्ध्यति? इत्यत आह--"लोपे हि सति" इत्यादि। अथ दीर्घोच्चारणं किमर्थम्(), यावतान्तरतम्यादेव दीर्घस्य दीर्घ एव भविष्यति? नैतदस्ति; न हि "भाव्यमानोऽण्? सवर्णान्? न गृह्णाति" (व्या।प।३५) इति॥

बाल-मनोरमा

ज्यादादीयसः , ६।४।१६०

ज्यादादीयसः। ज्यात्--आदितिच्छेदः। ज्यात् परस्य ईयस आकारः स्यादित्यर्थः। अन्तादेशत्वे प्राप्ते आह--आदेः परस्येति।

---

सूत्रम्

काशिका-वृत्तिः

र ऋतो हलादेर् लघोः ६।४।१६१

रशब्द आदेशो भवति ऋकारस्य हलादेर् लघोः इष्ठेमेयस्सु परतः। प्रथिष्ठः। प्रथिमा। प्रथीयान्। म्रदिष्ठः। म्रदिमा। म्रदीयान्। ऋतः इति किम्? पटिष्ठः स्। पटिमा। पटीयान्। हलादेः इति किम्? ऋजिष्ठः। ऋजिमा। ऋजीयान्। लघोः इति किम्? कृष्णा कृष्णिष्ठः। कृष्णिमा। कृष्णीयान्। परिगणनम् अत्र कर्तव्यम्। पृथुं मृदुं भृशं च एव कृशं च दृढम् एव च। परिपूर्वं वृढं च एव षडेतान् रविधौ स्मरेत्। ततः इह न भवति, कृतमाचष्टे कृतयति। मातरमाचष्टे मातयति। भ्रातयति।

लघु-सिद्धान्त-कौमुदी

र ऋतो हलादेर्लघोः ११५९, ६।४।१६१

हलादेर्लघोरृकारस्य रः स्यादिष्ठेयस्सु परतः। पृथुमृदुभृशकृशदृढपरिवृढा नामेव रत्वम्॥

न्यासः

र ऋतो हलादेर्लघोः। , ६।४।१६१

"कत्र्तव्यम्()" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--उत्तरसूत्रे यद्विभाषाग्रहणं तदिहापि सम्बध्यते, सा च व्यवस्थितविभाषा, तेन पृथ्वादीनामेव भविष्यति। यद्येवम्(), "हलादेर्लघोः" इत्येतन्न कत्र्तव्यम्(), व्यवस्थितविभाषया हलादेर्लघोश्च भविष्यति? सत्यमेतत्(); तद्विस्पटार्थं क्रियते। "तत इह न भवति" इत्यादि। अक्रियमाणे तु परिगणने कृतयतीत्यादावपीष्ठवद्भावेन स्यादेवेति भावः॥

बाल-मनोरमा

र ऋतो हलादेर्लघोः १७६२, ६।४।१६१

र ऋतो। र इति प्रथमान्तम्। इष्ठेमेयस्स्विति। शेषपूरणम्। "तुरिष्ठेमेयस्सु" इत्यस्तदनुवृत्तेरिति। भावः। अङ्गस्येत्यधिकृतं हलादेरङ्गस्य लघोरृकारस्य र इति। रेपाकारसङ्गात आदेशः स्यादिष्ठनि इमनिचि ईयसि च परे इत्यर्थः।

तत्त्व-बोधिनी

र ऋतो हलादेर्लघोः १३५९, ६।४।१६१

र ऋतो। हलादेः किम्()। ऋजिष्ठः। ऋजीयान्। लघोः किम्()। कृष्णिमा। "पृथुमृदुभृशे "ति परिगणने तु "हलादेर्लघो"रिति त्यक्तुं शक्यम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा र्जोश् छन्दसि ६।४।१६२

ऋजु इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतः छन्दसि विषये। रजिष्ठमनु नेषि पन्थाम्। त्वमृजिष्ठः।

न्यासः

विभाषर्जोश्छन्दसि। , ६।४।१६२

---

सूत्रम्

काशिका-वृत्तिः

प्रकृत्या एकाच् ६।४।१६३

एकाच् यद् भसंज्ञाकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति। स्रग्विन्नित्येतस्य विन्नन्तस्य स्रजिष्ठः, स्रजीयान्, स्रजयति। स्रुग्वदित्येतस्य मत्वन्तस्य स्रुचिष्थः, स्रुचीयान्, स्रुचयति। एकाचिति किम्? वसुमतित्येतस्य वसिष्ठः, वसीयान्। प्रकृत्या ऽके राजन्यमनुष्ययुवानः। अके प्रत्यये परतो राजन्य मनुष्य युवनित्येते प्रकृत्या भवन्ति। राजन्यानां समूहो राजन्यकम्। मनुष्याणां समूहो मानुष्यकम्। आपत्यस्य च तद्धिते ऽनाति ६।४।१५१ इति यलोपः प्रकृतिभावेन न भवति। यूनो भावः यौवनिका। मनोज्ञादित्वाद् वुञ्। तस्य नस् तद्धिते ६।४।१४४ इति टिलोपो न भवति।

लघु-सिद्धान्त-कौमुदी

प्रकृत्यैकाच् १२२७, ६।४।१६३

इष्ठादिष्वेकाच् प्रकृत्या स्यात्। श्रेष्ठः, श्रेयान्॥

न्यासः

प्रकृत्यैकाच्?। , ६।४।१६३

"रुआजिष्ठः" इति। अत्र प्रकृतिवद्भावेन टिलोपो न भवति। ननु च "विन्मतोर्लुक्()" ५।३।६५ टिलोपं बाधिष्यते, नाप्राप्ते त्व()स्मस्त्वस्यारम्भात्()? नैतदस्ति; द्वौ टिलोपौ--एको विन्मत्वन्तस्य, अन्यो लुकि कृते सत्यवशिष्टस्य; तत्र योऽसौ विन्मत्वन्तस्य टिलोपस्तस्मिन्नाप्राप्ते लुगारभ्यत इति युक्तं यदसौ तं बाधते। यस्त्ववशिष्टस्य टिलोपस्तस्य प्राग्लुक्प्राप्त्यसम्भवादप्राप्त एव तस्मिन्नारभ्यमाणः कथं पश्चादुपजातप्राप्तिकं लोपं बाधेत। तस्मादारब्धव्यमिदम्()। "प्रकृत्याके राजन्य" इत्यादि। किं वक्तव्यमेतत्()? न; कथं तर्हि "तुरिष्ठेमेयस्तु" (६।४।१५४) इत्येतन्निवृत्तम्()। सामान्येनयं प्रकृतिवद्भावो विधेयः, विभाषति चानुवत्र्तते, सा च व्यवस्थितविभाषा। तेन यत्र यत्रेष्यते तत्र सर्वत्र भविष्यति, यत्र तु नेष्यते तत्र न भविष्यत्येव। एवम्? "इनण्यनपत्ये" (६।४।१६४) इत्येवमादिकं

प्रकृतिभावविधानमनर्थकं स्यादिति चेत्()? न; प्रपञ्चार्थत्वात्()। "राजन्यकम्()" इति। "राज्ञोऽपत्यम्()" इति। "राज्ञोऽपत्यम्()" इति "राजरुषसुराद्यत्()" ४।१।१३७ तस्मात्समूहेर्थे "गोत्रोक्षोष्ट्रोरभ्र" ४।२।३८ इत्यादिनात्र वुञ्()। "मानुष्यकम्()" इति। मनोरपत्यमिति "मनोर्जातावञ्यतौ षुक्च" ४।१।१६७ इति येषां मतेऽपत्यार्थे यत्(), तेषां पूर्वसूत्रेण वुञि कृते लोपः प्राप्नोति, स प्रकृतिबावान्निवत्र्तते। येषान्तु मतेन जातिमात्रे यत्(), नापत्ये, तेषां नार्थः प्रकृतिभावेन; अनापत्ययकारत्वादेव हि लोपो न भविष्यति॥

बाल-मनोरमा

प्रकृत्यैकाच् , ६।४।१६३

प्रकृत्यैकाच्। एकोऽच् यस्येति बहुव्रीहिः। इष्ठादिष्विति। "तुरि,()ठेमेयःसु" इत्यत तदनुवृत्तेरिति भावः। "अल्लोपोऽनः," "नस्तद्धिते""यस्येति च," "टे"रित्यादेरेतत्प्रकरणस्थलसोपस्यायं प्रकृतिभाव इति भाष्ये स्पष्टम्। श्रेष्ठः। श्रेयानिति। अयमनयोरतिशयेन प्रशस्त इत्यर्थः।

तत्त्व-बोधिनी

प्रकृत्यैकाच् १५०६, ६।४।१६३

श्रेष्ठ इति। प्रकृतिभावादिह "टे"रिति लोपो "यस्ये"ति लोपश्च न भवति। ज्यादादी। ज्यादुत्तरस्य ईयसुन आकारादेशः श्यात्।

---

सूत्रम्

काशिका-वृत्तिः

इनण्यनपत्ये ६।४।१६४

इन्नन्तमनपत्यार्थे अणि परतः प्रकृत्या भवति। साङ्कूटिनम्। सांराविणम्। सांमार्जिनम्। अभिविधौ भाव इनुण् ३।३।४४, अणिनुणः ५।४।१५ इत्यण्। स्रग्विण इदम् स्राग्विणम्। अणि इति किम्? दण्डिनां समूहो दाण्डम्। अनुदात्तादेरञ् ४।२।४३ इति अञ्प्रत्ययः। अनपत्ये इति किम्? मेधाविनो ऽपत्यं मैधावः।

न्यासः

इनण्यनपत्ये। , ६।४।१६४

"साङ्कूटिनम्(), सांराविणम्(), साम्मार्जिनम्()" इति। "कूट दाहे" (धा।पा।१८९०), [परितापे (परिदाहे)--धा।पा।] "रु शब्दे" (धा।पा।१०३४), "मृजू शुद्धौ" (धा।पा।१०६६) "अभिविधौ भावे इनुण्()" ३।३।४४, "मृजेर्वृद्धिः" ७।२।११४ सांकूटिन्(), सांराविन्(), सांमार्जिन्()--इति स्थिते "अणिनुणः" ५।४।१५ इति स्वर्थेऽण्()। "मैधावः" इति। "अस्माया" ५।२।१२० इत्यादिना विनिः, तदन्तात्? प्राग्दीव्यतोऽणपत्यार्थे॥

बाल-मनोरमा

इनण्यनपत्ये १२२७, ६।४।१६४

इनण्यनपत्ये। इन्-अमीति छेदः प्रकृत्येति। "प्रकृत्यैका"जित्यतस्तदनुवृत्तेरिति भावः। टिलोपो नेति। अञि तु प्रकृतिभावाऽप्रवृत्तेष्टिलोपः स्यादिति भावः। यौवनमिति। "कनिन्युवृषितक्षी"त्यौणादिककनिन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। ततः स्त्रियां "यूनस्ति"रिति तिप्रत्ययस्य प्रत्ययस्वरेणोदात्तत्वे सतिशिष्टस्वरेण युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते भिक्षादित्वादणि कृते सति "भस्याऽढे" इति पुंवत्त्वे ति प्रत्ययस्य निवृत्तौ "अन्"

इति प्रकृतिभावाट्टिलोपाऽभावे "यौवन"मिति रूपम्। अञि तु प्रकृतिभावस्याऽप्रवृत्तेष्टिलोपः स्यादिति भावः। वस्तुतस्तु "भस्याऽढे तद्धिते" इत्यस्य अढे तद्धिते विवक्षिते सति ततः प्रागेव पुंवदित्यर्थः। ततश्च तद्धितोत्पत्तेः प्रागेव युवतिशब्दस्य पुंवत्त्वे तिप्रत्यस्य निवृत्तौ युवन्शब्दस्य कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वादनुदात्तादित्वाऽभावादञभावे "तस्य समूहः" इत्यणि प्रकृतिभावाट्टिलोपाऽभावे यौवनमिति सिद्धमेवेति युवतिशब्दो भिक्षादिगणे प्रत्याख्यातो भाष्यकैयटयोरित्यलम्। शत्रन्तादिति। प्रत्ययस्वरेण मध्योदात्तत्वादनुदात्तादिरयं युवच्छब्दः। तत उगिल्लक्षङीपः पुवत्त्वेन निवृत्तौ युवच्छब्दादनुदात्तादेरञि यौवतमिति रूपमिति भावः।

तत्त्व-बोधिनी

इनण्यनपत्ये १००३, ६।४।१६४

यौवनमिति। युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते अणर्थमिह पाठः। पुंवद्भावात्तिप्रत्ययनिवृत्तिः। "अन्िति प्रकृतिभावः। ननु "भस्याऽढे"इत्यत्र "अढे तद्धिते विवक्षिते पुंवद्भावः"इत्यभ्युपगमात्तद्धितोत्पत्तेः प्रागेव तिप्रत्ययनिवृत्तौ सत्यां "किन्युवृषी"ति कनिनन्ततया आद्युदात्तत्वादण् सिद्धएवेति चेत्। सत्यम्। अतएव भाष्ये मिक्षादिषु युवतिशब्दपाठः प्रत्याख्यातः। "इह युवतिशब्दपाठसामथ्र्यात्पुंवद्भावो ने"ति वृत्तिकारोक्तिरप्यत एव निरस्ता। नन्वेवं "गार्भिणं यौवतं गणे"इत्यादिप्रयोगा न सङ्गच्छेरन्नित्याशङ्क्याह---शत्रन्तादिति।

---

सूत्रम्

काशिका-वृत्तिः

गाथिविदथिकेशिगणिपणिनश् च ६।४।१६५

गाथिन् विदथिन् केशिन् गणिन् पणिनित्येते च अणि प्रकृत्या भवन्ति। गाथिनः अपत्यं गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः। अपत्यार्थो ऽयम् आरम्भः।

न्यासः

गाथिवदथिकेशिगणिपणिनश्च। , ६।४।१६५

अपत्यार्थोऽयमारम्भः; अनपत्ये पूर्वेणैव सिद्धत्वात्()। इन्नन्तत्वादेषाम्()॥

बाल-मनोरमा

गाथिविदथिकेशिगणिपणिनश्च १२५६, ६।४।१६५

गाथिविदथि। "इनण्यनपत्ये" इत्यतोऽणीत्यनुवर्तते। "प्रकृत्यैका"जित्यतः प्रकृत्येति च। तदाह--एतेऽणि प्रकृत्या स्युरिति। गाथिन्, विदथिन्, केशिन्, गणिन्, पणिन्-एते इत्यर्थः। अपत्येऽप्यणि प्रकृतिभावार्थमिदम्। ततो यून्यपत्ये इति। मूलप्रकृतिपणी। तदपेक्षया चतुर्थेऽपत्ये यूनि विवक्षिते पाणिनशब्दाद्गोत्राऽणन्तादत इञि पाणिनिरिति रूपमित्यर्थः। पाणिन शब्दस्य अनन्तरापत्यप्रत्ययान्तत्वे तु ततोऽनन्तरापत्ये मूलप्रकृतिपण्यपेक्षया तृतीये गोत्रापत्ये इञ्न संभवति, "एको गोत्रे" इति नियमात्। नापि मूलप्रकृत्यपेक्षया चतुर्थाऽपत्ये यूनि पाणिनशब्दादनन्तरापत्यप्रत्ययान्तादिञ्संभवति, "गोत्राद्यून्यस्त्रिया"मिति यून्यपत्ये गोत्रप्रत्ययान्तादेवाऽपत्यप्रत्ययनियमात्। अतो गोत्राऽण्प्रत्ययान्तात्पाणिनशब्दाद्यूनि इञ्प्रत्यय इत्युक्तमिति बोध्यम्।

तत्त्व-बोधिनी

गाथिविदथिकेशिगणपणिनश्च १०२०, ६।४।१६५

गाथिविदथि। "इनण्यनपत्ये"इति सिद्धे अपत्येऽप्यणि प्रकृतिभावार्थमयमारम्भः। गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः।

---

सूत्रम्

काशिका-वृत्तिः

संयोगाऽदिश् च ६।४।१६६

संयोगादिश्च इनणि प्रकृत्या भवति। शङ्खिनो ऽपत्यं शाङ्खिनः। माद्रिणः। वाज्रिणः।

न्यासः

संयोगादिश्च। , ६।४।१६६

अयमप्यपत्यार्थ आरम्भः। "शाङ्खिनः" इति। शङ्खमद्रवज्रशब्देभ्यो मत्वर्थे इतिः, तदन्तात्? पूर्ववदण्()॥

बाल-मनोरमा

संयोगादिश्च ११४०, ६।४।१६६

संयोगादिश्च। इन् प्रकृत्येति। "इनण्यनपत्ये" इत्यतः "प्रकृत्यैका"जित्यतश्च तदनुवृत्तेरिति भावः। चाक्रिण इति। "इण्यपत्ये" इत्यत्रानपत्ये इति पर्युदासादप्राप्तिः।

---

सूत्रम्

काशिका-वृत्तिः

अन् ६।४।१६७

अन्नन्तमणि प्रकृत्या भवति अपत्ये चानपत्ये च। सामनः। वैमनः। सौत्वनः। जैत्वनः।

लघु-सिद्धान्त-कौमुदी

अन् १०२७, ६।४।१६७

अन् प्रकृत्या स्यादणि परे। राजनः। श्वशुर्यः॥

लघु-सिद्धान्त-कौमुदी

अन् १२०५, ६।४।१६७

एतदः प्राग्दिशीये। अनेकाल्त्वात्सर्वादेशः। अतः। अमुतः। यतः। ततः। बहुतः। द्व्यादेस्तु द्वाभ्याम्॥

न्यासः

अन्?। , ६।४।१६७

"अनपत्ये" इति। निवृत्तम्()। सामान्येनाष्मत्रे विधिः। "सामनः, वैमनः" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। "सौत्वनः" इति। "षुञ्? अभिषवे" (धा।पा।१२४७) "सुमुजोर्ङ्वनिप्()" ३।१।१०६ इति ङ्वनिप, "ह्रस्वस्य पिति कृति तुक्()" ६।१।६९॥

बाल-मनोरमा

अन् ११३९, ६।४।१६७

अन्। "इनण्यनपत्ये" इत्यतोऽणीत्यनुवर्तते। "प्रकृत्यैका"जित्यतः प्रकृत्येति च। तदाह--अणीति। राज्यमिति। "गुणवचनब्राआह्मणादिभ्यः" इति ष्यञ्। टिलोपः।

तत्त्व-बोधिनी

अन् ९४९, ६।४।१६७

टिलोपो नेति। "नस्तद्धिते"इति प्राप्तष्टिलोपो नेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ये च अभावकर्मणोः ६।४।१६८

यकारादौ च तद्धिते अभावकर्मणोरर्थयोः अन् प्रकृत्या भवति। सामसु साधुः सामन्यः। वेमन्यः अभावकर्मणोः इति किम्? राज्ञो भावः कर्म वा राज्यम्। राजनिति पुरोहितादिषु पठ्यते, ततो ऽयं यक्प्रत्ययः।

लघु-सिद्धान्त-कौमुदी

ये चाभावकर्मणोः १०२६, ६।४।१६८

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः। जातावेवेति किम्? -।

न्यासः

ये चाभावकर्मणोः। , ६।४।१६८

"सामन्यः, वेमन्यः" इति। "तत्र साधुः" ४।४।९८ इति यत्()॥

बाल-मनोरमा

ये चाऽभावकर्मणोः ११३८, ६।४।१६८

ये चाभा। अनिति पूर्वसूतद्रमनुवर्तते। "प्रकृत्यैका"जित्यतः प्रकृत्येति। अङ्गाधिकारलब्धप्रत्ययो यकारेण विशिष्यते। तदादिविधिः। तदाह-यादाविति। राजन्य इति। "क्षत्रियात्क्षात्रयायां स्वभार्यायामुत्पन्नो राजन्य" इति धर्मशास्त्रेषु प्रसिद्धम्। यत्प्रत्यये प्रकृतिभावान्न टिलोपः। शूद्रादाविति क्षत्रियाच्छूद्रायां वा तदन्यस्यां वा अनूढायामुत्पन्न इत्यर्थः। राजन इति। अणि रूपम्। तत्र "नस्तद्धिते" इति टिलोपे प्राप्ते--।

---

सूत्रम्

काशिका-वृत्तिः

आत्माध्वानौ खे ६।४।१६९

आत्मनध्वनित्येतौ खे परतः प्रकृत्या भवतः। आत्मने हितः आत्मनीनः। अध्वानमलङ्गामी अध्वनीनः। खे इति किम्? प्रत्यात्मम्। प्राध्वम्। प्रत्यात्मम् इति अव्ययीभावे अनश्च ५।४।१०८ इति समासान्तः टच्प्रत्ययः। प्राध्वम् इति उपसर्गादध्वनः ५।४।८५ इति अच्प्रत्ययः।

लघु-सिद्धान्त-कौमुदी

आत्माध्वानौ खे ११४५, ६।४।१६९

एतौ खे प्रकृत्या स्तः। आत्मने हितम् आत्मनीनम्। विश्वजनीनम्। मातृभोगीणः॥

लघु-सिद्धान्त-कौमुदी

इति छयतोरवधिः। (प्राक्क्रीतीयाः) ९ ११४५, ६।४।१६९

लघु-सिद्धान्त-कौमुदी

अथ ठञधिकारः ११४५, ६।४।१६९

न्यासः

आत्माध्वानौ खे। , ६।४।१६९

"आत्मनीनम्()" इति। "आत्मन्वि()आजनभोगोत्तरपदात्? खः" ५।१।९। "अध्वनीनम्()" इति। अत्रापि "अद्वने यत्खौ" ५।२।१६ इति खप्रत्ययः। "प्रत्यात्मम्()" इति। आत्मानं प्रतीति "अव्ययं विभक्ति" २।१।६ इत्यादिना यथार्थेऽव्ययीभावः। ततः "अनश्च" ५।४।१०८ इति टच्()। "प्राध्वम्()" इति। प्रगतमध्वानमिति प्रादिसमासः, "उपसर्गादध्वनः" ५।४।८५ इत्यच्()॥

बाल-मनोरमा

आत्माऽध्वानौ खे १६४९, ६।४।१६९

तत्र टिलोपे प्राप्ते--आत्माध्वानौ खे। प्रकृत्या स्त इति। "प्रकृत्यैक"जित्यस्तदनुवृत्तेरिति बावः। कर्मधारयादेवेति। "वि()आजनशब्दा"दिति शेषः।?त्र व्याख्यानमेव शरणम्। वि()आजनीयमिति। वि()आस्य जनो वि()आजनः=साधारमो वैद्यादिः। वि()आओ जनो यस्येति बहुव्रीहिर्वा। तस्मै हितमिति विग्रहः।

पञ्चजनीनमिति। ब्राआह्णक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा रथकारजातिश्चेत्येते पञ्चजनां। तेभ्यो हितमिति विग्रहः।

सर्वजनाट्ठञ्खश्चेति। "वक्तव्य" इति शेषः। "समानाधिकरणादिति वक्तव्य"मिति वार्तिकं भाष्ये स्थितम्।

महाजनाट्ठञिति। "वक्तव्य" इति शेषः। वि()आजनप्रसङ्गादिदं वार्तिकद्वयमुपन्यस्तम्। अथ भोगोत्तरपदस्योदाहरति--मातृभोगीण इति। मातृभोगाय हित इत्यर्थः। आचार्यादिति। आचार्यशब्दात्परस्य भोगीनशब्दस्य नस्य णत्वाऽभावो वाच्य इत्यर्थः। नच असमानपदस्थत्वादेवात्र मत्वास्याऽप्रसक्तेस्तन्निषेधो व्यर्थ इति वाच्यं, मातृभोगीणादौ णत्वज्ञापनार्थत्वात्।

तत्त्व-बोधिनी

आत्माऽध्वानौ खे १२७३, ६।४।१६९

कर्मधारयादेवेति। व्याख्यानादिति भावः। वि()आजनीयमिति। वि()आस्य जनः= सर्वसाधारणो वेश्यादिः। वि()आओ जनोऽस्येति बहुव्रीहावपि स एवान्यपदार्थः। तस्मै हितमिति विग्रङः।

पञ्चजनादुपसङ्ख्यानम्। पञ्चजनीनमिति। रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनास्तेभ्यो हितम्। "दिक्सङ्ख्ये संज्ञाया"मिति समासः। "पञ्चजना"दित्येतत्प्रभृति वार्तिकत्रयमपि कर्मधारयविषयमेव। तेन षष्ठीसमासाद्बहुव्रीहेश्छ एव। पञ्चजनीयः। सर्वजनीन इति। सर्वो जनः सर्वजनः। "पूर्वकालैके"ति तत्पुरुषः। तस्मै हितमिति विग्रङः। साध्वर्थे तु "प्रतिजनादिभ्यः ख"ञिति खञि सार्वजनीनवै()आजनीनशब्दौव्युत्पादितौ।

महाजनाट्ठञ्। मातृभोगीण इति। इहाऽखण्डपदत्वाऽभावेऽपि "अट्कुप्वा"ङित्यनेन यथा णत्वं भवति तथा प्रागेवोपपादितम्। मातुर्भोगः=शरीरं, तस्मै हित इति विग्रहः। यद्यपि "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो"रित्यमरेण अहेरित्युक्तं, तथापि प्रयोगबाहुल्याभिप्रायं तत्। शक्तिस्तु शरीरमात्रे इत्याकरः। मातृपितृशब्दाभ्यामौत्सर्गिकश्छ एव। मात्रीयः। पित्रीयः। राजाचार्यादिभ्यां त्वौत्सर्गिकश्छोऽपि न भवति, अनभिधानात्। किं तु राज्ञे हितमाचार्याय हितमिति वाक्यमेवेत्याकरः।

---

सूत्रम्

काशिका-वृत्तिः

न मपूर्वो ऽपत्ये ऽवर्मणः ६।४।१७०

मपूर्वः अनवर्मणो ऽणि परतो ऽपत्ये ऽर्थे न प्रकृत्या भवति। सुषाम्णो ऽपत्यं सौषामः। चान्द्रसामः। मपूर्वः इति किम्? सौत्वनः। अपत्ये इति किम्? चर्मणा परिवृतो रथः चार्मणः। अवर्मनः इति किम्? चक्रवर्मणो ऽपत्यं चाक्रवर्मणः। मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम्। हितनाम्नो ऽपत्यं हैतनामः, हैतनामनः।

न्यासः

न मपूर्वोऽपत्येऽवर्मणः।, ६।४।१७०

"चार्मणः" इति। "परिवृत्तो रथः" ४।२।९ इत्यर्थे "प्राग्दीव्यतोऽण्()" ४।१।८३। "वा हितनाम्न इति वक्तव्यम्" इति। हितनामशब्दस्य व प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--इहापि तदेव विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेन हितनाम्नो वा प्रतिषेधो भविष्यति॥

बाल-मनोरमा

न मपूर्वोऽपत्येऽवर्मणः ११४१, ६।४।१७०

न मपूर्वो।ञपत्येऽवर्मणः। भाद्रसाम इति। भद्रसाम्नो।ञपत्यमिति विग्रहः। अणि टिलोपः। अनो मपूर्वत्वान्न प्रकृतिभावः। सौत्वन इति। सुत्वनोऽपत्यमिति विग्रहः। मपूर्वत्वाऽभावात्प्रकृतिभावः। चार्मण इति। "परिवृतो रथः" इत्यणि टिलोपः। अण आपत्यत्वाऽभावात्प्रकृतिभावः।

वा हितनाम्न इति। "न मपूर्वः" इति प्रतिषेध"इति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

ब्राह्मो ऽजातौ ६।४।१७१

योगविभागो ऽत्र क्रियते। ब्राह्मः इत्येतदपत्याधिकारे ऽपि सामर्थ्यादपत्यादन्यत्राणि टिलोपार्थं निपात्यते। ब्राह्मो गर्भः। ब्राह्ममस्त्रम्। ब्राह्मं हविः। ततः अजातौ। अपत्ये इत्येव। अपत्ये आतावणि ब्रह्मणष् टिलोपो न भवति। ब्रह्मणो ऽपत्यं ब्राह्मणः। अपत्ये इत्येव, ब्राह्मी ओषधिः।

न्यासः

ब्राआहओऽजातौ।, ६।४।१७१

यद्येतदेकमेव सूत्रं स्यात् ततो निममार्थं वा स्मात्()? विध्यर्थं वा? यद्यपत्य इति वत्र्तते, ततोऽनन्तर सूत्रेणैव प्रकृतिभावे

प्रतिषिद्धे "नस्तद्धिते" ६।४।१४४ इति टिलोपः सिद्ध्यत्येव, सिद्धे सत्येतन्नियमार्थं भविष्यति--"अजातावेवापत्यार्थे यथा स्यात्()" इति। तथा च "तस्येदम्()" ४।३।१२० इत्यणि विहिते ब्राआह्मओ गर्भः, ब्राआह्ममस्त्रम्(), ब्राआह्मं हविः, ब्राआह्मई ओषधिरिति न सिद्ध्यति; अपत्याणोऽभावात्()। अथापत्य इति निवृत्तम्(), ततो विध्यर्थमेव भविष्यति। अपत्ये हि पूर्वसूत्रेण प्रकृतिबावः प्रतिषिद्धः, ततश्च "अन्()" ६।४।१६७ इति इति प्रकृतिभावे प्राप्तेऽजातो ब्राआह्म इत्येतट्टिलोपार्थं निपात्यते। एवञ्च विध्यर्थेऽस्मिन्? सिद्धम्---ब्राआह्मओ गर्भः, ब्राआह्मणस्त्रम्(), ब्राआह्मं हविरिति; ब्राह्मण इयं ब्राआह्मई ओषदिरित्येतत्तु न सिद्ध्येत्; "अजातौ" इति प्रतिषेधात्()। अपत्ये जातौ च "न मपूर्वोऽपत्येऽवर्मणः" ६।४।१७) इति प्रकृतिभावे प्रतिषिद्धे सति "नस्तद्धिते"६।४।१४४ इति भवति टिलोपः--ब्राआह्मओ नारद इति, तथेहापि स्यात्()--ब्राह्मणोऽपत्यमिति ब्राआह्मण इति। एवमेकयोगे दोषप्रसङ्गमभिवीक्ष्य तत्? परिजिहीर्षुराह--"य#ओगविभाघोऽत्र क्रियते" इति। योगविभागे सति यदि "अपत्ये" इत्यनुवृत्तेरपत्य एव टिलोपो निपात्यते, पूर्ववत्? सिद्धे सति नियमार्थमेव निपातनं स्यात्(), ततश्च स दोषस्तदवस्थ एव स्यात्(), यः प्राङनियमपक्षे उक्तः। तथा च योगविभागकरणमनर्थकं स्यात्()। तस्मादपत्याधिकारोऽपि योगविभागकरणसामश्र्यादपत्यादन्यतर "ब्राआह्मः" इत्येतन्निपात्यते। एवमनपत्येऽपि "ब्राआह्मः" इति निपातनात्? "ब्राआह्मओ गर्भः, ब्राआह्मस्त्रम्(), ब्राआह्म हविरित्येतत्? सिद्ध्यति। ततः "अजातौ" इत्ययं द्वितीयो योगः। "न मपूर्वोऽपत्येऽवर्मणः" ६।४।१७० इति प्रकृतिभावे प्रतिषिद्धे यः "नस्तद्धिते" ६।४।१४४ इति टिलोपः, स मा भूदित्येवमर्थोऽपत्य इत्येवेति। एतेनास्मिन्द्वितीये योगे "अपत्ये" इत्यनुवर्तत इत्याचष्टे। "अजातौ" इति च प्रसज्यप्रतिषेधोऽयम्()। तत्र जातेरपत्यार्थेन सम्बन्धः, नञ्सतु भवतिना। तमेवार्थं वृत्तौ दर्शयन्नाह--"अपत्ये जातावणि ब्राआह्मण इति लोपो न भवति" इति। जातिविशिष्टे।पत्ये विवक्षितेऽणि परतो ब्राआह्मण इत्यत्र टिलोपो न भवतीत्यर्थः। अपत्य इत्येव--"ब्राह्मओ ओषधिः" इति। प्रत्युदाहणव्याजेन योगविभागे जातिमात्रविवक्ष्यां ब्राआह्मई ओषधिरित्येतदपि सिद्धं भवतीति दर्शयति॥

बाल-मनोरमा

ब्राआह्मओ[ऽ]जातौ ११४२, ६।४।१७१

ब्राआह्मओ जातौ। ब्राह्मन्शब्दादपत्ये अणि "न मपूर्वोऽपत्ये" इति प्रकृतिभावनिषेधो जातावेवेत्यर्थः फलति। तथा सति ब्राह्मणो।ञपत्यं ब्राआह्मणैति जातिविशेषे न सिध्येत्,"न मपूर्वः" इति प्रकृतिभावनिषेधे सति "नस्तद्धिते" इति टिलोपस्य दुर्वारत्वात्। किंच ब्राह्मआ देवता अस्य ब्राआह्मं हविरिति न सिध्येत्, "न मपूर्वं" इति प्रकृतिभावनिषेधस्य जातावेवेति नियमितत्वेन अनिति प्रकृतिभावाट्टिलोपाऽसंभवात्। अत आह--योगविभाग इति। "ब्राआह्म" इत्येकं सूत्रम्। तत्र "इनण्यनपत्ये" इत्यतोऽनपत्येऽणीत्यनुवर्तते। तदाह--ब्राआह्म इति निपात्यते अनपत्ये।ञणीति। तथाच ब्राह्मन्शब्दादनपत्येऽणि अनिति प्रकृतिबावनिवृत्तेष्टिलोपः फलित इति मत्वोदाहरति--ब्राआह्मं हविरिति। ब्राह्मआ देवता अस्येति विग्रहः। "सास्य देवते"त्यण्। ततो जाताविति। ततो="ब्राआह्म" इति सूत्रात्पृथगेव, जाताविति सूत्रं कर्तव्यमित्यर्थः। इह "न मपूर्वोऽपत्येऽवर्मणः" इति सूत्रादपत्ये इति, "प्रकृत्यैका"जित्यतः प्रकृत्येति चानुवर्तते। तदाह--अपत्ये जाताविति। ब्राआह्मण इति। ब्राह्मणः सकाशात्सजातीयायां भार्यायामुत्पन्न इत्यर्थः। योगविभागस्त्वयं भाष्ये स्पष्टः।

तत्त्व-बोधिनी

ब्राआह्मओ[ऽ]जातौ ९५०, ६।४।१७१

ब्राआह्मओ जातौ। योगविभागोऽत्रेति। एकयोगत्वे त्वारम्भसामश्र्यादनपत्ये जातौ "ब्राआह्मई"त्यात्राऽप्राप्तटिलोपसिद्धावपि "ब्राआह्मण"इति न सिद्ध्()येत्। "अन्ि‌ति प्रकृतिभावस्य "न मपूर्वोऽपत्ये"इति निषेधाट्टिलोपस्य दुर्वारत्वात्। किंच

अजातौ ब्राआह्रमित्यादि न सिद्ध्येत्, "अन्" इति प्रकृतिभावस्य दुर्वारत्वादिति भावः#ः। ब्राआह्र इति। इह "अपत्ये"इति न संबध्यते, अन्यथा निपातनमिदं व्यर्थं स्यात्, "न मपूर्वे"ति प्रकृतिभावनिषेधाट्टिलोपसिद्धेरित्याशयेनाह---अनपत्येऽणीति। ब्राआह्रमिति। "ब्राआह्रओ मुहूर्तः", "ब्राआह्रऋ स्थालीपाकः"इत्याद्यप्युदाहरणम्। नन्वेवमपि ब्राआह्रणो न सिध्यति, "न मपूर्वः"इति प्रकृतिबावनिषेधादपत्येऽणि "नस्तद्धिते"इति टिलोपप्रवृत्तरत आह---जाताविति। इह मण्डूकप्लुत्या "अपत्ये"इत्यनुवर्तते, "न" इति च। तदेतदाह---अपत्ये जातावित्यादिना। अयमत्रार्थः--"अपत्ये जातौ ब्राआह्रणशब्दे टिलोपो न भवती"ति। केचिदिह "अजातौ"इति छित्वा "जातौ न भवती"ति व्याचक्षते। तस्मिस्तु व्याख्याने "ने"ति नानुवर्तनीयम्। जातौ किम्()। ब्राआह्रओ नारदः।

---

सूत्रम्

काशिका-वृत्तिः

कार्मस् ताच्छील्ये ६।४।१७२

कार्मः इति ताच्छील्ये टिलोपो निपात्यते। कर्मशीलः कार्मः। शीलम्, छत्रादिभ्यो णः ४।४।६१ इति णप्रत्ययः। यद्येवं किम् अर्थम् इदम्, नस् तद्धिते ६।४।१४४ इत्येव टिलोपः सिद्धः? सत्यम् एतत्। ज्ञापकार्थम् तु। एतज् ज्ञापयति ताच्छीलिके णे ऽण्कृतानि भवन्ति इति। तेन चौरी, तापसी इति णान्तादपि ईकारः सिद्धो भवति। ताच्छील्ये इति किम्? कर्मणः इदं कार्मणम्।

न्यासः

कार्मस्ताच्छील्ये। , ६।४।१७२

"यद्येवम्()" इति। यदि णकारोऽत्र प्रत्ययः, एवं सति किमर्थमिदम्()? नैवास्य प्रयोजनं किञ्चिदित्यर्थः। किं कारणम्()? इत्याह--"नस्तद्धित इत्येवं हि" इत्यादि। यद्धि लक्षणेन न प्राप्नोति तदर्थं निपातनमारभ्यते, इह तु "नस्तद्धिने" ६।४।१४४ इत्येवं सिद्धः, न हि णे केनचित्? प्रकृतिभाव उक्तो यतस्तत्र टिलोपातनमारभ्यमाणमिदमर्थवत्स्यात्()। अणि हि प्रकृतिभावोऽणन्तस्योक्तः, न तु णे। अनन्तरोक्तमर्थमभ्युपगच्छति--यदि सत्यम्(), किमर्थमिदमित्याह--"ज्ञापकार्थम्()" इत्यादि। "अण्कृतानि" इत्यादि। अणि कृतानि कार्याणि अष्कृतानि, "सप्तमौ" २।१।३९ इति योगाविभागात्समासः। अथ वा अणा कृतानि "कर्तृकरणे कृता बहुलम्? २।१।३१ इति समासः। "किमेतस्य ज्ञापनेन प्रयोजनम्()? इत्याह--"तेन" इत्यादि। चुरा शीलमस्याः, तपः शीलमस्या इति "छत्रादिभ्यो णः" ४।४।६२ इति णः, तदन्तन्ङीप्()। "ताच्छीलिके णः" इत्यस्यार्थस्य ज्ञापितत्वात्? "तदस्यां प्रहरणमिति क्रीडायां णः" (४।२।५७) इति दण्डात्? णे दाण्डेति--अण्कृतं कार्यं न भवति। यदि तर्हि ताच्छीलकेष्वण्कृतमिष्येत, अणेव छत्रादिभ्यः कस्मान्नोच्येत, तत्राप्ययमर्थः--ज्ञापनार्थं निपातनं कत्र्तव्यं न भवति? युक्तमेतदुक्तवानसि; वैचित्र्यार्थ त्वण्कृतः। "कार्मणम्()" इति। "तद्युक्तात्? कर्मणोऽण्()" ५।४।३६ इत्यण्()। कर्मणा युक्तं कार्मणमिति॥

बाल-मनोरमा

कार्मस्ताच्छोल्ये १५९२, ६।४।१७२

कार्मस्ताच्छील्ये। तच्छीसं यस्य स तच्छीलः, तस्य भावस्ताच्छील्यम्। तस्मिन्वाच्ये "कार्म" इति भवतीत्यर्थः। णप्रत्यये परे टिलोपः स्यादिति यावत्। तदाह--टिलोपो निपात्यत इति। "णो।ञपो"त्यनन्तरम् "इति ज्ञापनार्थमिद"मिति शेषः। अत्र टिलोपविधिर्हि "अन्" इति प्रकृतिभावनिवृत्त्यर्थः। ततश्च अणि विहतस्य प्रकृतिभावस्य णप्रत्यये परतः प्रतिषेधादण्कार्यकारित्वं णप्रत्ययस्य ज्ञाप्यत इति भावः। तेनेति। चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे

चुरातपःशब्दाभ्यां छत्रादित्वाण्णप्रत्यये सति तदन्ताभ्यामणन्तकार्ये ङीपि चौरी तापसीति सिद्धमित्यर्थः। कार्मणा इति। "तस्येद"मित्यणि "कार्मस्ताच्छील्ये" इत्यस्याऽप्रवृत्त्या "अन्" इति प्रकतिभावान्न टिलोप इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

औक्षम् अनपत्ये ६।४।१७३

औक्षम् इति अनपत्ये ऽणि टिलोपो निपात्यते औक्षं पदम्। अनत्ये इति किम्? उक्ष्णो ऽपत्यम् औक्ष्णः। षपूर्वहन्धृतराज्ञाम् अणि ६।४।१६५ इत्यलोपः।

न्यासः

औक्षमनपत्ये। , ६।४।१७३

"औक्षं पदम्()" इति। "तस्येदम्()" ४।३।१२० इत्यण्()॥

बाल-मनोरमा

औक्षमनपत्ये ११४३, ६।४।१७३

औक्षम्। शेषपूरणेन सूत्रं व्याचष्टे-अणि टिलोपो निपात्य इति। "अन्" इति प्रकृतिभावापवाद इति भावः। औक्षमिति। टिलोपे रूपम्। औक्ष्ण इति। अपत्येऽणि टिलोपाऽभावेऽल्लोप इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दाण्डिनायनहास्तिनायनाऽथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवाइक्ष्वाकमैत्रेयहिरण्मयानि ६।४।१७४

दाण्दिनायन हास्तिनायन आथर्वणिक जैह्माशिनेय वासिनायनि भ्रौणहत्य धैवत्य सारव ऐक्ष्वाक मैत्रेय हिरण्मय इत्येतानि निपात्यन्ते। दण्डिन् हस्तिनित्येतौ नडादिषु पठयेते, तयोरायने परतः प्रकृतिभावो निपात्यते। केषांचित् तु हस्तिनिति नडादिषु न पठ्यते, तेषाम् अत एव निपातनात् फगपि भवति। दण्डिनो ऽपत्यं दाण्दिनायनः। हस्तिनो ऽपत्यं हास्तिनायनः। अथर्वनिति वसन्तादिषु पठ्यते। अथर्वणा प्रोक्तो ग्रन्थो ऽपि उपचारातथर्वनिति उच्यते, तमधीते यः स आथर्वणिकः। इके प्रकृतिभावो निपात्यते। जिह्माशिनिति शुभ्रादिषु पठ्यते, तस्य ण्ये परतः प्रकृतिभावो निपात्यते। जिह्माशिनो ऽपत्यं जैह्माशिनेयः। वासिनो ऽपत्यम्। ज्दीचां वृद्धादगोत्रात् ४।१।१५७ इति फिञ्। तत्र प्रकृतिभावो निपात्यते। वासिनायनिः। भ्रूणहन्, धीवनित्येतयोः ष्यञि परतः तकारादेशो निपात्यते। भ्रूणघ्नः भावः भ्रौणहत्यम्। धीव्नः भावः धैवत्यम्। हनस्तो ऽचिण्णलोः ७।३।३२ इति यत् तत्वं तद् धातुप्रत्यय एव इति भ्रौणघ्नः, वार्त्रघ्नः इत्यत्र न भवति, अतः भ्रौणहत्ये तत्वं निपात्यते। सारव इति सरयू इत्येतस्य अणि परतो यूशब्दस्य व इत्यादेशो निपात्यते। सरय्वां भवं सारवम् उदकम्। ऐक्ष्वाक इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते। ततो ऽयम् आद्युदात्तो ऽन्तोदात्तश्च निपात्यते। इक्ष्वाकोः उपत्यम्, जनपदशब्दात् क्षत्रियादञ् ४।१।१६६ इति अञ्, तत्र उकारलोपो निपात्यते। ऐक्ष्वाकः। इक्ष्वाकुषु जनपदेषु भवः, कोपधादण् ४।२।१३१ इत्यण्। ऐक्ष्वाकः। मैत्रेय इति। मित्रयुशब्दो गृष्ट्यादिषु पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते। मित्रयोरपत्यम् मैत्रेयः। अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव न पठ्यते, तत्राञि कृते यादेः इति इयादेशेनैव सिद्धम्, एवं च युलोपार्थं निपातनं कर्तव्यं न भवति, यस्कादिषु च बहुषु लुगर्थः पाठो न कर्तव्यो भवति, मित्रयवः इत्यञः यञञोश्च २।४।६४ इत्येव हि लुकः सिद्धत्वात्? न एतदस्ति। मित्रयूणां सङ्घः इत्यत्र

गोत्रचरणाद् वुञं बाधित्वा मैत्रेयकः सङ्घः इत्यत्र सङ्घाङ्कलक्षणेष्वञ्। यञिञाम् अण् ४।३।१२७ इति अण् प्राप्नोति। हिरण्मयम् इति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः हिरण्मयः।

न्यासः

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्मआशिनेयवासिनायनिभ्रौण्हत्येधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि। , ६।४।१७४

"उपचाराद्? ग्रन्थोऽप्यथर्वन्नित्युच्यते" इति। उपचारस्य तु तत्प्रोक्तत्वमेव निबन्धनम्()। "आथर्वणिकः" इति। "वसन्तादिभ्यष्ठक्()" ४।२।६५। "भ्रौणहत्यम्()" इति। भ्रणं हतवानिति "ब्राह्मभ्रूणवृत्रेषु क्विप्()" ३।२।८७, तदन्तात्? ष्यञ्()। "हरस्तोऽचिण्णलोः" ७।३।३२ इत्यनेनैव तकारः सिद्धः, त()त्क निपात्यते? इत्याह--"इनस्तोऽचिण्णलोः" इत्यादि। "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यसम्प्रत्यय एव" (जै।वृ।३१)। "धातोः" ६।१।१५६ इत्येवं यो विहितः प्रत्ययः, तत्र कार्यं विज्ञायत इत्यर्थः। न च ष्यञ्प्रत्ययो धातुप्रत्ययः, किं तर्हि? प्रातिपदिकप्रत्ययः तेन तत्र "हनस्तोऽचिण्णलोः" ७।३।३२ इति तकारो न प्राप्नोति, अतो निपात्यते। कथं पुनर्विज्ञापते--धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं भवतीति? नैतदस्ति; "न क्वादेः" ७।३।५९ इत्यत्र हि नेति योगदिभागादपि शक्यते कुत्वनिवृत्तिः कर्त्तुम्()। "भ्रौणघ्नः वत्र्रघ्नः" इति। अपत्यार्थेऽण्()। इक्ष्वाकुशब्दाद्यदा "जनपदशब्दात्()" (४।१।१३८) इत्यादिनाञ्? भवति, तदैक्ष्वाकशब्दो ञित्स्वरेणाद्युदात्तः। यदा तु "कोपधात्()" ४।२।१३१ इति शैषिकोऽण्(), तदान्तोदात्तः। ननु चैवंविधसूत्र एकस्योपादानेऽपरस्य ग्रहणं न सिद्ध्यति, तस्मादुभयोरपि स्वरभिन्नयोरुपादानं कत्र्तव्यम्()--"ए()आकः, ऐक्ष्वकः" इति। एतच्चोद्यमपाकर्त्तुमाह--"स्वरसर्वनाम्ना" इत्यादि। उदात्तादीनां स्वराणा मविभागेनोच्चारणम्(), एकश्रुतिः। सा च स्वराणां सर्वनामेव सर्वनाम यथैव हि "तस्यापत्यम्()" ४।१।९२ इत्यादौ निर्देश उपगुप्रभृतीन्विशेषान्विभागेन प्रतिपदयति, ततैकश्रुतिरप्युदात्तादीन्स्वरविशेषान्()। तथात्रायमैक्ष्वाकशब्दः पठ()ते--नाप्याद्युदात्तो नाप्यन्तोदात्तः, तस्य त्वेवं पठितस्य प्रत्ययविशेषात्स्वरविशेषो भवति--यदाञ्? तदान्तादोत्तः। "इत्यादेशापवादः" इति। केकयादि ७।३।२ सूत्रेणेयादेशः प्राप्नोति, तदपवादो लोपो निपात्यते। "अतो गुणे" ६।१।९४ पररूपत्वम्()। "अथ किमर्थम्()" इति। येनाभिप्रायेण पृष्टवांस्तं स्वयमेवाविष्कर्त्तुमाह--"ततोऽञि कृते] इत्यादि। "सिद्धम्()" इति। रूपस्वरूपयोरभेदात्()। "यलोपार्थश्च" इत्यादिना बिदादिषु पाठे यो गुणस्तं दर्शयति। "यस्कादिषु च" इत्यादि। तत्र हि तस्य बहुषु गोत्रप्रत्ययस्य लुग्यथा स्यादित्येवमर्थः पाठः। स च लुग्बिदादिषु पाठे सति "यञञोश्च" २।४।६४ इत्यनेनैव सिद्ध्यतीति नार्थो यस्कादिषु पाठेन। "मैत्रेयः सङ्घः" इत्यादि। एतेन बिदादिषु पाठे यो दोषस्तं दर्शयति। बिदादिषु पाठे सति सर्वमेतदुपपद्यते यदुक्तवानासि; किन्तु मैत्रेयशब्दादञन्तात्? "सङ्घाङ्कलक्षण" ४।३।१२७ इत्यादिनाण्प्रत्ययः स्यात्(), ततो मैत्रेय इत्यनिष्टं रूपं स्यात्(), न तु मैत्रेयक इत्यभीष्टम्()। ढञन्तात्? तु "गोत्रचरणाद्वुञ्()" ४।३।१२६ भवतीति मैत्रेयक इत्यभीष्टं सिद्ध्यति। "हिरण्मयः" इति। "मयङ्वैतयोर्भाषायाम्()" ४।३।१४१ इति मयट्()॥

बाल-मनोरमा

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्मआशिनेयवाशिनायनिभ्रौणहत्यधैबत्यसारवैक्ष्वाकमैत्रेयहिरण्यमयानि ११२९, ६।४।१७४

दाण्डिनायन। एतानि निपात्यन्ते इति। दण्डिनो हस्तिनश्चापत्यं दाण्डिनायनः, हास्तिनायनः। नडादित्वात्फक्। निपातनाट्टिलोपो न। अथर्वणा प्रोक्तो ग्रन्थ उपचारादथर्वा। तमधीते आथर्वणिकः। वसन्तादित्वाट्ठक्। निपातनान्न टिलोपः। जिह्मआसिनोऽपत्यं जैह्मआशिनेयः। शुभ्रादित्वाड्ढक्। निपातनान्न टिलोपः। वाशिनोऽपत्यं वाशिनायनिः। "उदीचां वृद्धा"दिति फिञ्। निपातनान्न टिलोपः। भ्रूणहन्, धीवन्-एतयोर्भावे ष्यञ्। नकारस्य तकारश्च निपात्यते। नच "हनस्तोऽचिण्णलो"रित्यनेनैव तकारः सिद्ध इति शङ्क्यं, "धातोः कार्यमुच्यमानं तत्प्रत्यये भवती"ति परिभाषया "हनस्तः" इति तत्वस्य दातुविहितप्रत्यये पर एव प्रवृत्तेः। इदमेव तकारनिपातनमस्यां परिभाषायां ज्ञापकमिति

"मृजेर्वृद्धि"रित्यत्र भाष्ये स्पष्टम्। तेन वात्रघ्नमित्यत्र तत्वं न। सरय्वां भवं सारवम्--उदकम्। अणि यू इत्यस्य व इत्यादेशो निपात्यते। इक्ष्वाकोरपत्यमैक्ष्वाकः। जनपदशब्दात्क्षत्रियादञ्। उकारलोपो निपात्यते। बहुत्वे तु तद्राजत्वाल्लुक्। इक्ष्वाकवः। इक्ष्वाकुषु जनपदेषु भवोऽप्यैक्ष्वाकः। कोपधादण्। उकारलोपश्च। सूत्रे ऐक्ष्वाकेत्यत्र अञणन्तयोर्ग्रहणम्। बहुत्वे तद्राजत्वादञो लुक्। अणस्तु नेति विशेषः। हिरण्यस्य विकारो हिरण्मयः। मयटि णकाराद्यकाराकारयोर्लोपः। इति युलोप इति। मित्रयु-एय इति स्थिते यु इत्यस्य लोपो निपातनादिति भावः। मैत्रेयीति "टिड्ढाण"ञिति ङीप्।

तत्त्व-बोधिनी

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्मआशिनेयवाशिनायनिभ्रौणहत्यधैबत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ९४०, ६।४।१७४

दाण्डिनायन। निपात्यन्त इति। दण्डिन्, हस्तिन्--आभ्यां नडादित्वात्फक्, निपातनाट्टिलोपाऽभावः। वसन्तादिषु "अथर्वन्िति पठ()ते। "अथर्वणा प्रोक्तो ग्रन्थ उपचारादथर्वा, तमधीते "आथर्वणिकः"। शुभ्रादिषु "जिह्मआशिन्िति पट()ते, तस्यापत्यं जैह्मआशिनेयः। वाशिनोऽपत्यं वाशिनायनिः। "उदीचां वृद्धा"दिति फिञ्। भ्रूणहन्, धीवन्,--अनयोः ष्यञि तकारोऽन्तादेशो निपात्यते। भ्रूणघ्नो भावो भ्रौणहत्यम्। धैवत्यम्। "हनस्तोऽचिण्णलोः"इत्यनेनैव हन्तेस्तत्त्वे सिद्धे तकारनिपातनं ज्ञापयति "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञान"मिति। तेन वात्रघ्नमित्यत्र तत्वं न। नन्वेवं "प्रसृङ्भ्या"मित्यादौ "अनुदात्तस्य चे"त्यम् दुर्वारः स्यात्, अम्विधौ धातोः स्वरूपग्रहणाऽभावात्। अत्राहुः---"मृजेर्वृद्धि"रिति सूत्रस्थभाष्यपर्यालोचनया "धातोः कार्यमुच्यमानं तत्प्रत्यये भवती"ति ज्ञापनार्थं तकारनिपातनमिति व्याख्येयम्। तेन न कोऽपि दोष इति। "सरयू"इत्यस्याऽणि परे य्वादेर्वो निपात्यते। सरय्वां भवं "सारव"मुदकम्। इक्ष्वाकोरपत्यं "ऐक्ष्वाकः"। "जनपदशब्दात्क्षन्त्रियादञ्। उवोपो निपातनात्। इक्ष्वाकुषु जनपदेषु भवः। "कोपधादण्"। ऐक्ष्वाकः। अत्राप्युलोपो निपातनादेव। अञणन्तयोद्र्वयोरप्येकश्रुत्या पाठात्। बहुत्वे तु "अञस्तद्राजत्वाल्लुक्, "अणस्तु ने"ति विशेषः। तथा च रघुः--- "इक्ष्वाकूणां दुरोपेऽर्थे"इति। मुरारिस्त्वाह "ऐक्ष्वाकेषु च मैथिलेषु च फलन्त्वस्माकमद्याशिषः"इति। हिरण्यस्य विकारो हिरण्मयः। मयटि यादेर्लोपोऽत्र निपात्यते।

---

सूत्रम्

काशिका-वृत्तिः

ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ६।४।१७५

ऋत्व्य वास्त्व्य वास्त्व माध्वी हिरण्यय इत्येतानि निपात्यन्ते छन्दसि विषये। ऋतु वास्तु इत्येतयोः यति यणदेशो निपात्यते। ऋतौ भवं ऋत्व्यम्। वास्तौ भवं वास्त्व्यम्। वस्तुशब्दस्य अणि यणादेशो निपात्यते। वस्तुनि भवः वास्त्वः। मधुशब्दस्य अणि स्त्रियां यणादेशो निपात्यते। माध्वीर्नः सन्त्वोषधीः। हिरण्यशब्दाद् विहितस्य मयटो मशब्दस्य लोपो निपात्यते। हिरण्ययम्। इति श्रीवामनविरचितायां काशिकायां वृत्तौ षष्ठाध्यायस्य चतुर्थः पादः। सप्तमाध्यायः प्रथमः पादः।

न्यासः

ऋत्व्यवास्त्वास्त्व्यमाध्वीहिरण्ययानि च्छन्दसि। , ६।४।१७५

"ऋत्व्यम्(), वास्त्व्यम्()" इति। "भवे छन्दसि" ४।४।१०९ इति यत्()। "वास्त्वम्()" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। एवं "माध्वी" इत्यत्रापि। "हिरण्ययः" इति। पूर्ववन्मयट्()॥ इति

बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरहणपञ्जिकायां षष्ठाध्यायस्य चतुर्थः पादः॥
श्रीबोधिसत्त्वदेशीयाचार्थजिनेन्द्रबुद्धिपादविरचिता न्यासापरपर्याया काशिकाविवरणपञ्जिकाख्या काशिकाव्याख्या - - -
सप्तमोऽध्यायः प्रथमः पादः

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ युवोः ६।१ अनाकौ १।२ अङ्गस्य ?

समासः॥

युश्च वुश्च युवु, तस्य ॰ समाहारद्वन्द्वः।
अनश्च अकश्च अनाकौ, इतरेतरद्वन्द्वः।

अर्थः॥

अङ्गसम्बन्धेनोः यु वु इतेतयोः स्थाने यथासङ्ख्यं अन अक इत्येतौ आदेशौ भवतः।

उदाहरणम्॥

नन्दनः, रमणः, सायन्तनः, चिरन्तनः। अक - कारकः, हारकः, वासुदेवकः, अर्जुनकः॥
काशिका-वृत्तिः
युवोरनाकौ ७।१।१

यु वु इत्येतयोः उत्सृष्टविशेषणयोः अनुनासिकयणोः प्रत्यययोर् ग्रहणम्, तयोः स्थाने यथासङ्ख्यम् अन अक इत्येतावादेशौ भवतः। योः अनः, वोः अकः। नन्द्यादिभ्यो ल्युः नन्दनः। रमणः। सायमादिभ्यष्ट्युट्युलौ तुट् च सायनतनः। चिरन्तनः। ण्वुल्तृचौ कारकः। हारकः। वासुदेवार्जुनाभ्यां वुन् ४।३।९८ वूसुदेवकः। अर्जुनकः। अनुनासिकयणोः इति किम्? ऊर्णाया युस् ५।२।१२२ ऊर्णायुः। भुजिमृङ्भ्यां युक्त्युकौ भुज्युः, मृत्युः इति। एवम् आदीनां हि यणो ऽनुनासिकत्वं न प्रतिज्ञायते, प्रतिज्ञानुनासिक्याः पाणिनीयाः। इह युवोरिति निर्देशाद् द्वन्द्वैकवद्भावपक्षे अनित्यम् आगमशासनम् इति नुम् न क्रियते। नपुंसकलिङ्गता वा लिङ्गमशिष्यं लोकाश्रयत्वाल् लिङ्गस्य इति न भवति। इतरेतरपक्षे तु छान्दसत्वात् वर्णलोपो द्रष्टव्यः। युवोश्चेद् द्वित्वनिर्देशो द्वित्वे यण् तु प्रसज्यते। अथ चेदेकवद्भावः कथं पुंवद् भवेदयम्। द्वित्वे वैगमिको लोप एकत्वे नुमनित्यता। अशिष्यत्वाद् धि लिङ्गस्य पुंस्त्वं वेह समाश्रितम्।
लघु-सिद्धान्त-कौमुदी
युवोरनाकौ ७८८, ७।१।१

यु वु एतयोरनाकौ स्तः। कारकः। कर्ता॥
न्यासः
युवोरनाकौ। , ७।१।१

शास्त्रस्य लाघवार्थमिह, युवू प्रत्ययावुपदिष्टौ, तयोः स्थानेऽनाकावादेशौ विधीयते। यदि हि यत्र यत्र युवोरुपदेशस्तत्र

तत्रानाकावादेशो विधियेयाताम्(), तदा शास्त्रस्य गौरवं स्यात्(); तयोः प्रभूतवर्णसमुदायात्मकत्वात्()। इह युवोरनुनासिकयणोः प्रत्यययोरिदं ग्रहणम्(), न च तथाविधावननुबन्धकौ युवू शास्त्रे सम्भवतः; तत्र सामर्थ्याद्विशेषकराननुबन्धानुत्सृज्य सामान्येन तयोग्र्रहणं विज्ञायते? इत्याह---"युवु--इत्येतयोरुत्सृष्टविशेषणयोः" इति। इदं ग्रहणमिति वक्ष्यमाणेन सम्बन्धः। विशेषणं यद्योयोगं लकारादि, तदुत्सृष्टं परित्यक्तं ययोस्तौ यथोक्तौ। एतेन "युवो" इति ल्युडादीनां सामान्येन निर्देश इति दर्शयति। यद्यत्र युवोरित्याविशेषेण ग्रहणं स्यात्? तदा "यु मिश्रणे" (धा।पा।१०३३) ["यु मिश्रणेऽमिश्रणें च"--धा।पा।] युतः, युतवान्(), युत्वा; "दिषु क्रीडादौ (धा।पा।११०७) द्यूतः, धूतवान्(), धूत्वा; "ऊर्णाया युस्()" ५।२।१२२ ऊर्णायुरित्येवमादावप्यनाकौ स्याताम्(), अतोऽस्यातिप्रसङ्गनिरासायाह--"अनुनासिकयणोः" इति। अनुनासिको यण्ययोरिति बहुव्रीहिः। सन्ति हि यणः सानुनासिकाः निरनुनासकाश्च, तत्र हि ययोरनुनासिको यण्? तयोरिदं ग्रहणम्()। अनुनासिकयणौ च यौ युवू तौ प्रत्ययावेव, नाप्रत्ययाविति दर्शयितुमाह--"प्रत्यययोः" इति। अन्ये ,त्वप्रत्ययनिवृत्त्यर्थं प्रत्यययोरित्युक्तमिति वर्णयन्ति, तदयुक्तम्(); अनुनासिकयणोरित्यनेनैवाप्रत्ययनिवृत्तेः सिद्धत्वात्()। तन ह्यप्रत्ययावनुनासिकयणौ युवू शास्त्रे स्तः। तस्मादनुनासिकयणौ यो यूवू तौ प्रत्ययावेव, नाप्रत्ययाविति सम्भवप्रदर्शनार्थं प्रत्यययोरित्युक्तमिति विज्ञायते। अनुनासिकयणोश्च प्रत्यययोग्र्रहणे सत्यङ्गस्येति सम्बन्धलक्षणेयं षष्ठी वित्रेया। ङ्गसम्बन्धिनोर्युवोरिति सम्बन्धः। स पुनर्निमित्तिनिमित्तभावलक्षणः। प्रत्ययनिमित्तो ह्यङ्गस्यात्मलाभ इत्यङ्गं निमित्ति, प्रत्ययो निमित्तम्()। "योरनो वोरकः" इति। अनेन यथाक्रमं स्थान्यादेशसम्बन्धमाचष्टे"। "नन्द्यादिभ्यो ल्युः" इति। "नन्दिग्रहि" ३।१।१३४ इत्यादिना। "नन्दनः, रमणः" इति। "टु नदि समृद्धौ" (धा।पा।६७), "रमु "क्रीडायाम्()" (धा।पा।८५३)। हेतुमति णिच्(), तदन्ताल्लयुः। "सायन्तनः" इति। सायमादिभ्यष्ट()उट()लादिति। "सायञ्चिरम्()" ४।३।२३ इत्यादिना। जातादौ शैषिकेऽर्थे तद्धितः। "वासुदेवकः, अर्जुनकः" इति। वसुदेवस्यापत्यं वासुदेवः, वासुदेवो भक्तिरसयेत#इ "वसुदेवार्जुनाभ्यां वुन्()" ४।३।९८ इति वुन्()--वासुदेवकः, अर्जुनकः। ऊर्णा अस्य सन्तीत्यूर्णायुः, तत्रानुनासिकयणत्वाभावान्न भवति। किं पुनः कारणमेवमादीनीं यणोऽनुनासिकत्वं नास्ति? इत्याह--"एवमादीनाम्()" इत्यादि। "प्रतिज्ञानुनासिक्याः पाणिनीयाः" इति। यत्र तैरनुनासिकत्वं प्रतज्ञायते तत्रैव भवति, नान्यत्र। न च युस्प्रभृतीनां तैस्तत्? प्रतिज्ञायते, लक्ष्यानुरोधात्()। तेन तेषां यणोऽनुनासिकत्वं न भवति। आदिशब्देन "अहं शुभमोर्युस्()" ५।२।१३९ इत्येवमादयो गृह्यन्ते। ननु च "अहंशुभमोर्युस्()" "कंशंभ्यां वभयुस्तितुतयसः" ५।२।१३७ इत्यतर, सित्करणादेव न भविष्यति, सित्करणं हि पदसंज्ञार्यम्(), पदसंज्ञा चानुस्वारार्था--तस्यां सत्यां "मोऽनुस्वारः" ८।३।२३ इत्यनुस्वारो यथा स्यात्()। यदि चात्रानादेशः स्यात्? तदा सित्करणमनर्थकं स्यात्(), न ह्यनादेशे कृतेऽनुस्वारो भवति, तद्विधौ "हलि सर्वेषाम्()" ८।३।२२ इत्यतो हलीत्यनुवृत्तेः। आदेशे कृते न भवति; हलादित्वाभावात्()? नैतदस्ति; वचनसामर्थ्यादजादावप्यनुस्वारः स्यात्()। सित्करणस्यान्यदपि प्रयोजनम्()--पदसंज्ञा। तत्प्रजनम्()--भसंज्ञाबाधः। भसंज्ञायामध्ययानां भमात्रे टिलोपः स्यात्()। अवग्रहार्थे वा सित्करणं स्यात्(), कुतस्यानर्थक्यम्()! इह युवोरिति निर्देशे समाहारे वा द्वन्द्व आश्रीयते, इतरेतरयोगे वा; तत्र पूर्वस्मिन्? पक्षे षष्ठ()एकवचने कृते "स नपुंसकम्()" (२।४।१७) इति नपुंसकत्वात्? "इकोऽचि विभक्तौ" ७।१।७३ इति नुमा भवितव्यम्(), ततश्च "युवुनः" इति निर्द्देशः स्यात्()। इतर()स्मस्तु पक्ष ओसि परतो यणादेशे कृते युष्वोरिति द्वितीयवकारश्रवणमापद्येत? इत्येतच्चोद्यनिरासायाह--"इह युवोरिति निर्देशः" इत्यादि। "अनित्यमागमशासनम्()" इति। आगमानां शासनम्()=विधानम्(), तदनित्यमिति; क्वचित्? तदभावात्()। अथ वा--आगमाः शिष्यन्ते विधीयन्ते येन शास्त्रेण तदागमशासनं शास्त्रम्(), तदनित्यम्(), अविद्यमानं नित्यं कार्यमस्येति कृत्वा। अनित्यता पुनरागमशासनस्य "घोर्लोपो लेटि वा" ७।३।७० इत्यत्र वाग्रहणाल्लिङ्गाद्विज्ञायते। तद्धि ददद्(), ददादित्यत्र नित्यं घोर्लोपो मा भूदित्येवमर्थं क्रियते। यदि च नित्यमागमशासनं स्याद्वाग्रहणमनर्थकं स्यात्()। भवतु नित्यो लोपः, सत्यपि तस्मिन्? "लेटोऽडाटौ" (३।४।९४) इत्यटि कृते ददद्? ददादिति सिद्ध्यत्येव। अनित्यत्वे त्वागमशासनस्याडागमाभावान्न सिध्यति। ततो

वावचनमर्थवद्भवति। "नपुंसकलिङ्गता वा" इत्यादि। अथ वा नपुंसकलिङ्गतैवात्र नास्ति। किं कारणम्(ित्याह--"लिङ्गमशिष्यम्()" इत्यादि। लिङ्गस्य हि लोकधर्मत्वाल्लोक एवाश्रयः। तस्माल्लोकत एव सिद्धत्वात्? तदश्रिष्यं न विधातव्यम्()। लिङ्गशास्त्रमेवात्र तादर्थ्याल्लिङ्गशब्देनोच्यते। लिङ्गार्थं शास्त्रमशिष्यं न कत्र्तव्यम्(), तत्साध्यस्य लिङ्गस्य लोकाश्रयत्वात्()। तदनेन "स नपुंसकम्()" [२।४।१७](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इत्यादेः प्रत्याख्यानं दर्शयति। त()स्मश्च प्रत्याख्याते सति तद्द्वारेण तस्य नपुंसकत्वं न भवतीति कुतो नुम्प्रसङ्गः! "इतरेतरपक्षे तु च्छान्दसत्वाद्वर्णलोपः" इति। "छन्दोवत्? सूत्राणि भवन्ति" इति। छान्दसत्वम्()। तेन यथेष्कत्र्तारमध्वर इत्यत्र निसो नकारलोपः तथेहापि वकारस्यापि लोपो द्रष्टव्यः॥

बाल-मनोरमा

युवोरनाकौ १२२९, ७।१।१

युवोरनाकौ। युश्च वुश्च युवुः। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। तदाह--यु वु एतयोरिति। "अनुनासिकयोरिष्यते" इति वार्तिकलब्धमेतत्। अनुनासिकयोः किम्?। ऊर्णायुः। ग्लुचुकायनीनामिति। "प्राचामवृद्धा"दिति ग्लुचुकशब्दादपत्ये फिन्, "इतो मनुष्यजातेः" इति ङीष्, समूहे वुञ्। अकादेशः। आदिवृद्धिः। "यस्येति चे"तीकारलोपः। औक्षकमिति। उक्ष्णां समूह इति विग्रहः। वुञ्। अकादेशः। टिलोपः। आदिवृद्धिः। उष्ट्राणां समूह इति विग्रहः। औष्ट्रकम्। उरभ्राः-मेषाः, तेषां समूहः, ओरभ्रकम्। राजकम्-राजन्यकम्। वात्सकम्। मानुष्यकम्। आजकम्। यलोपे प्राप्ते इति। राजन्यशब्दाद्वुञि अकादेशे "आपत्यस्य च" इति यकारस्य लोपे प्राप्ते सतीत्यर्थः।

प्रकृत्याऽके इति। अके परे राजन्य, मनुष्य, युवन्-#एते प्रकृत्या स्युरिति वक्तव्यमित्यर्थः। यूनो भावो यौवनकम्। मनोज्ञादित्वाद्वुञ्। प्रकृतिभावान्न टिलोपः।

वृद्धाच्चेति। वृद्धशब्दस्वरूपमेव गृह्यते, नतु "वृद्धिर्यस्याचामादि"रिति वृद्धसंज्ञकम्, भाष्ये वृद्धशब्दस्यैवोदाहरणात्। तदाह--वाद्र्धकमिति। वृद्धानां समूह इति विग्रहः।

तत्त्व-बोधिनी

युवोरनाकौ १००४, ७।१।१

युवोः। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। उकारस्तूच्चारणार्थो नेत्संज्ञकः। तेन नन्दनः, कारकः , नन्दना, कारिकेत्यत्रोगिल्लक्षणौ नुम्()ङीपौ न स्तः। अनुनासिकयोरिति किम्()। ऊर्णायुः।

प्रकृत्याऽके राजन्यमनुष्ययुवानः। प्रकृत्याऽकेइति। इह राजन्यमनुष्यग्रहणं व्यर्थं, रूढिशब्दत्वेन "अपत्यस्य चे"ति यलोपस्य प्राप्त्यभावात्। अतएव "गोत्रोक्षोष्ट्र"इत्यत्र तयोग्र्रहणं सार्थकम्। अन्यथा गोत्रग्रहणेनैव सिद्धे तयोग्र्रहणं न कुर्यादित्याहुः। यूनो भावो योवनिका। मनोज्ञादित्वाद्वञ्।

वृद्धाच्चेति वक्तव्यम्। वार्धकमिति। यदि वृद्धत्वेऽपि वार्धकमिति प्रयोगोऽस्ति, तर्हि मनोज्ञादित्वं यौवनिका। मनोज्ञादित्वाद्वञ्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आयनेयीनीयियः १।३ फढखच्छघां ६।३ प्रत्ययादीनाम् ६।३ ४ अङ्गस्य ?

समासः॥

आयन् च एय् च ईन् च ईय् च इय् च आयनेयीनीयियः, इतरेतरद्वन्द्वः।
फश्च ढश्च खश्च छश्च घ्ह च फढखछघ्हः तेषां ॰ इतरेतरद्वन्द्वः।
प्रत्ययस्य आदयः, प्रत्ययादयः, तेषाम् ॰ षष्ठीतत्पुरुषः।

अर्थः॥

प्रत्ययादीनां फ्, ढ्, ख्, छ्, घ्, इत्येतेषां स्थाने यथासङ्ख्यम् आयन्, एय्, ईन्, ईय्, इय् इत्येते आदेशाः भवन्ति।
फादिवर्णेषु उच्चारणार्थः अकारः अन्त्यवर्जम्।

उदाहरणम्॥

फ इत्येतस्य आयन् आदेशः भवति। {नडादिभ्यः फक्} नाडायनः, चारायणः। ढस्य एय् आदेशः भवति। {स्त्रीभ्यो ढक्} - सौपर्णेयः, वैनतेयः। खस्य ईन् आदेशः भवति। {कुलात्खः} - आढ्यकुलीनः, श्रोत्रियकुलीनः। छस्य ईय् आदेशः भवति। {वृद्धाच्छः} - गार्गीयः, वात्सीयः। घ इत्येतस्य इय् आदेशः भवति। {क्षत्राद् घः} - क्षत्रियः।
काशिका-वृत्तिः
आयनेयीनीयियः फढखछघां प्रत्ययाऽदीनाम् ७।१।२

आयनेयीनीयियित्येते आदेशाः भवन्ति यथासङ्ख्यं फ ढ ख छ घ इत्येतेषा प्रत्ययादीनाम्। फ इत्येतस्य आयनादेशो भवति। नडाऽदिभ्यः फक् ४।१।९९ नाडायनः। चारायणः। ढस्य एयादेशो भवति। स्त्रीभ्यो ढक् ४।१।१३० सौपर्णेयः। वैनतेयः। खस्य ईनादेशो भवति कुलात् खः ४।१।१३९ आढ्यकुलीनः। श्रोत्रियकुलीनः। छस्य ईयादेशो भवति। वृद्धाच् छः ४।२।११३ गार्गीयः। वात्सीयः। घ इत्येतस्य इयादेशो भवति। क्षत्राद् धः ४।१।१३८ क्षत्रियः। प्रत्ययग्रहणं किम्? फक्कति। ढौकते। खनति। छिनत्ति। घूर्णते। आदिग्रहणम् किम्? ऊरुदघ्नम्। जानुदघ्नम्। एते आयन्नादयः प्रत्ययोपदेशकाल एव भवन्ति। कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति, तथा च घच्छौ च ४।४।११६ इति घचश्चित्करनमर्थवद् भवति। शङ्खः, षण्ढः इत्येवम् आदीनां हि उणादयो बहुलम् इति बहुलवचनादादेशा न भवन्ति। ऋतेरीयङ् ३।१।२९ इति वावचनं ज्ञापकं धातुप्रत्ययानामादेशाभावस्य। एजेः खश् ३।२।२८, पदरुजविशस्पृशो घञ् ३।३।१६ इत्येवम् आदिषु तु इत्संज्ञया भवितव्यम्। तद्धितेषु हि खकारघकारयोरादेशवचनम् अवकाशवदिति इत्संज्ञां बाधितुं न उत्सहते। आयन्नीनोः नकारस्य इत्संज्ञायां प्राप्तायां प्रतिविधातव्यम्, नित्कार्यं हि सम्भवति।
लघु-सिद्धान्त-कौमुदी
आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् १०१६, ७।१।२

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् एते स्युः। गर्गस्य युवापत्यं गार्ग्यायणः। दाक्षायणः॥
न्यासः
आयन्नेयीनीयियः [ाआयनेयीनीयियः--इति काशिका पाठः] फढरवच्छघां प्रत्ययादीनाम्?। , ७।१।२

फादयोऽपीह शास्त्रे लाघवार्थमुपदिष्टाः, ततस्तेषामायन्नादय आदेश विधीयन्ते। तेन च विधीयमानाः फकारादेर्हल्मात्रस्य भवन्तीति वेदितव्यम्()। कुत एतत्()? अन्ते घामित्यनच्कनिर्द्देशात्(); इतरथा हि घानामित्येवं ब्राऊयात्()। अन्यत्र

त्वागन्तुकोऽकार उच्चारणार्थ एव। अत एव प्रत्ययादौ वत्र्तमानस्य फादेव्र्यञ्जनमात्रस्य स्थानित्वेनोपादानान्निरनुबन्धकपरिभाषात्र (व्या।प।५३) नोपतिष्ठते; सर्वत्र हि फादयो निरनुबन्धकाः। यत्र चोभयं सम्भवति तत्रैवास्या उपस्थानम्(), "नाडायनः" इति। "नडादिभ्यः फक्()" ४।१।९९ अपत्यार्थे फक्प्रत्ययः। उत्तरेष्वप्युदाहरणेष्वीयादेशोदाहरणादन्यत्रापत्यार्थे वेदितव्यः। "सौपर्येणः, वैनतेयः" इति। सुपर्णाविनताभ्यां ढक्()। "आठ()कुलीनः" इति। "अपूर्वपदादन्यतरस्यां यड्ढकञौ" (४।१।१४०) इत्यत्रापूर्वपदादिति वचनात्? "कुलात्खः" ४।१।१३९ इत्यनेन सपूर्वपदादपि खो भवति। "गार्गीयः, वात्सीयः" इति। गाग्र्यवात्स्यशब्दाभ्यां यञन्ताभ्यां "तस्येदम्()" इत्यर्थविवक्षायां छः, "यस्येति च" ६।४।१४८ इत्यकारालोपः, "आपत्यस्य च तद्धितेऽनाति" ६।४।१५१ इति यकारलाह्_> "फक्कति, ढौकते" इति। "फक्क नीचैर्गतौ" (धा।पा।११६), "ढोकृ गतौ" (धा।पा।९८), "खनु अवदारणे" (धा।पा।८७८), "छिदिर्? द्वैधीकरणे" (धा।पा।१४४०), "घूण घूर्ण भ्रमणे"["घुण"--धा।पा।] (धा।पा।४३७,४३८)-इत्येतेषां रूपाणि। ढौकतिधूर्णत्योरनुदात्तेत्त्वादात्मनेपदम्()। "ऊरुदध्नम्(), जानुदध्नम्()" इति। ऊरू प्रमाणमस्य "प्रमाणे द्वयसच्()" ५।२।३७ इत्यादिना दध्नच्()। इहैत आयन्नादयोऽह्गाधिकारे विधीयमानाः प्रकृतिप्रत्ययावपेक्ष्य भवतीति बहिरङ्गाः, प्रत्ययाद्युदात्तत्वं तु प्रकृत्यनपेक्षत्वात्? प्रत्ययमात्रमाश्रित्य भवतीत्यन्तरङ्गम्(); ततो बहिरङ्गा यावदायन्नादयो न भवन्ति तावदेव प्रत्ययाद्युदात्तत्वेन भवितव्यम्(), तस्मिन्? कृते सत्यादेशा भवन्तो यत्र स्वरार्थोऽनुबन्धो न विधीयते "शिलाया ढः" ५।३।१०२, "वृद्धाच्छः" ४।२।११३ इत्यादौ तत्रानियतस्वराः प्राप्नुदन्तीत्यस्य चोद्यस्य निरासायाह--"इहैत आयन्नादयः" इत्यादि। अयमभिप्रायः-आयन्नादयोऽप्यन्तरङ्गा एव। यदि हि "अङ्गस्य" (६।१।४) इत्यत्राभिसम्बध्यते तदा स्यात्? तेषां प्रकृतिप्रत्ययापेक्षया बहिरङ्गत्वम्()। न चात्र तदभिसम्बध्यते; प्रयोजना भावात्()। तथा हि--अङ्गस्य निमित्तं ये प्रत्ययास्तदादीनां फादीनामायन्नादयो यथा स्युः, अन्येषां मा भूवन्नित्येतत्? प्रयोजनम्()। एतच्च विनाप्यङ्गाधिकारं सामथ्र्यादेव लभ्यते। न हि फादीनां मद्ये सोऽस्ति प्रत्ययो योऽङ्गस्य निमित्त न भवति। तस्मात्? प्रयोजनाभावादङ्गस्येत्येतन्नाभिसम्बध्यते। तेन स्थानिमात्रमेवादेशा अपेक्षन्ते, न प्रकृतिमिति तेऽप्यन्तरङ्गा एव। ततश्च परत्वात्? प्रत्ययोपदेशकाले तैरेव तावद्भवितव्यम्(), ततश्च प्रत्ययाद्युदात्तत्वेनेति प्रत्ययोपदेशकाल एवायन्नदयो भवन्तीति तेषु कृतेषु प्रत्ययाद्युदात्तत्वं भवतीति। अत्र ज्ञापकमप्याह--"तथा च" इत्यादि। एवञ्चेत्यर्थः। घचश्चित्कारणस्यैतत्? प्रयोजनम्()--"चितः" ६।१।१५७ इत्यन्तोदात्तत्वं यथा स्यात्()। यदि च प्रत्ययोपदेशावस्थायामेवायन्नादयो भवन्ति, एवं सति घचश्चित्करणमर्थवद्भवति; नान्यथा। अन्यथा हि यद्युपदेशादस्थाया उत्तरकालमेते स्युस्ततो यत्रैवासति चित्करण उदात्तत्वं भवति, धकाराकारे सत्यपि चित्करणे तत्रैव तेन भवितव्यमिति चित्करणमनर्थकं स्यात्()। तस्माच्चित्करणादवसीयते--प्रत्ययोपदेशकाल एवैत आयन्नाद्यादेशास्तावद्भवन्ति, पश्चात्? प्रत्ययाद्युदात्तत्वमिति भावः। ननु च व्यञ्जनस्यैते विधीयन्ते, तच्च व्यञ्जनमस्वरम्(), एवाञ्चावश्यं येन केनचित्? स्वरेण भवितव्यम्(), उदात्तादिगुणरहितस्याचोऽसम्भवात्()। तत्र स्थानिनः स्वराभावादान्तरतम्यं नास्तीति स्थानेन्तरतमपरिभाषया १।१।४९ अनुपस्थाने सत्यनियतस्वरैरेभिर्भवितव्यम्(), ततश्च यदि चित्त्वं न स्यात्(), पश्चाद्विधीयमानानामेषां यदाद्युदात्तस्वरो भवति तदा स एव स्वरः प्रसज्येत; सतिशिष्टत्वात्()। तस्मात्? तमपि सतिशिष्टस्वरं बाधित्वाऽन्तोदात्तत्वं यथा स्यादित्येवमर्थं घचश्चित्करणम्()। ततः कुतो ज्ञापकत्वमेतच्चिन्त्यम्()। अथ "शमेः खः" (प्।उ।१।१०४) शङ्खः, "षणो ढः" (पं।उ।४।१०४) षण्ढः--इत्येवमादीनां कस्मादादेशा न भवन्ति? इत्याह--"शङ्खः, षण्ढः" इत्यादि। "लशक्वतद्धिते" १।३।८, "चूटू" १।३।७ इतीत्संज्ञापि बहुलवचनादेव न भवतीति वेदितव्यम्()। "ऋतेरीयङ" इत्यादि। यदयं "ऋतेरीयङ" ३।१।२९ इतीयङं शास्ति तज्ज्ञापयति--धातुप्रत्ययानामायन्नादयो न सन्तीति। यदि हि स्युः, "ऋतेश्छङ" इति। ब्राऊयात्()। ननु सिद्धे विधिरारभ्यमाणो ज्ञापकाय भवतीति? न च च्छङा सिध्यतीति, छङि हि सति वलादिलक्षण इट्? प्रसज्येत, ततश्चानादित्वादादेशो न स्यात्()? नैतदस्ति; यस्मादन्तरङ्गत्वादादेशेनैव भवितव्यम्()। अन्तरङ्गत्वन्तु

तस्योपदेशावस्थायामेव विधीयमानत्वात्()। आदेशे च कृते वलादित्वाभावादिट्प्रसङ्गो नास्ति। तदेतदीयङ्वचनं ज्ञपकमेव। "एजेः खश्()" इत्यादि। तु शब्दः शङ्खः, षण्ढ इत्येदमादिभ्यो विशेषप्रदर्शनार्थः। यत्रेत्संज्ञा नास्ति--शङ्खादौ, तत्रादेशप्रसङ्गे सति तन्निरासार्थं बहुलवचनमिति, "ऋतेरीयङ्()" ३।१।२९ इति वावचनमुपन्यस्तम्()। "एजेः खश्()" ३।२।२८ इत्येवमादौ तु "लशक्वतद्धिते" १।३।८ इतीत्संज्ञया भवितव्यमित्यादेशप्रसङ्गो नास्त्येव। ततो न तत्र तदभावार्थं बहुलवचनम्(), "ऋतेरीयङ" इति वावचनमुपन्यसनीयमिति भावः। आदिशब्देन "प्रियवसे वदः खच्()" ३।२।३८, "पुंसि संज्ञायां घः प्रायेण" ३।३।११८ इत्येवमादीनां ग्रहणम्()। स्यादेतत्()--अनवकाशं खकारघकारयोरादेशवचनम्(), अतस्तेन बाध्यमानेत्संज्ञा कथमत्र स्यात्()? इत्याह--"तद्धिते" इत्यादि। "खित्यनव्ययस्य" ६।३।६५ इति ह्यस्वविधानम्(), "चजोः कु घिण्ण्यतोः" ७।३।५२ इति कुत्वविधानं ज्ञापकम्()--न ह्यादेशविधानेनेत्संज्ञायां बाधितायां तदुपपद्यते; खितो घितश्चात्यन्तासम्भवात्()। "आयन्नीनोर्नकारस्य" इत्यादि। आयन्नीनोर्नकारोऽन्ते वत्र्तत इति तस्य "हलन्त्यम्()" १।३।३ इतीत्संज्ञा प्राप्नोति, तस्याञ्च स्त्यां "तस्य लोपः" १।३।९ इति कृते नाडायनः, आढ()कुलीन इत्यादि न सिध्यति। तस्मादायरुआईनोर्नकारस्येत्संज्ञायां प्राप्तायां तत्प्रतिविधानं कत्र्तव्यम्()। स्यादेतत्()। प्रयोजनाभावादेवेत्संज्ञा न भविष्यति? इत्यत आह--"नित्कार्थं हि" इत्यादि। तत्पुनः "ञ्नित्यादिर्नित्यम्()" ६।१।१९१ इत्याद्युदात्तत्वम्()। प्रतविधानं पुनरत्र "प्राचामवृद्धात्? फिन्? बहुलम्()" ४।१।१६० इत्यत्र फिनो नकारानुबन्धकरणम्()। तस्यांतत्? प्रयोजनम्()--नित्त्वादाद्युदात्तत्वं यथा स्यात्()। तत्र यद्यायन्नीनोर्नकारस्येत्संज्ञा स्यात्(), नित्त्वे सत्याद्युदात्तत्वस्य सिद्धत्वात्? फिनो नित्करणमनवर्थकं स्यात्()। ननु "फेश्छ च" ४।१।१४९ इत्यततर सामान्यग्रहणार्थं स्यात्(), तस्मिन्नसति निरनु बन्धकपरिभाषयास्यैव ग्रहणं स्यात्(), न फिञः? नैतदस्ति; तत्र हि "वृद्धाट्ठक्? सौवीरेषु बहुलम्()" ४।१।१४८ इति बहुलग्रहणानुवृत्तेः फिञ एव ग्रहणमिष्यते, न फिनः। तदेतत्? फिनो नित्करणमित्संज्ञाभावस्य ज्ञापकमेव। योगपक्षं चेदं ज्ञापकम्()--अनेन योगेन विहितस्यादेशस्य यो नकारस्तस्मेत्संज्ञा न भवतीति। तेनेनोऽपि नकारस्येत्संज्ञाऽभावो न भवति सिद्धः॥

बाल-मनोरमा

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ४६८, ७।१।२

आयनेयीनीयियः। आयन्, एय्, ईन्, ईय्, एषां द्वन्द्वात्प्रथमाबहुवचनम्। फ, ढ, ख, छ, घ्-एषां द्वन्द्वात्षष्ठीबहुवचनम्। फादिष्वकार उच्चारणार्थः। यथासङ्ख्यपरिभाषया क्रमेणान्वयः। तदाह--प्रत्ययादिभूतानामित्यादिना। आयनो नस्य इत्वेनित्वस्वरोपयोगेऽपि नेत्त्वं, फिनो नित्करणाज्ज्ञापकात्। तत्साहचर्यादीनोऽपि नस्य नेत्त्वम्। एयादिषु च यस्य नेत्त्वं, ङीषः प्राप्त्यभावात्कौरव्यशब्दाट्टाप्, माण्डूबात्तु ङीषिति भावः। यद्यपीह "टाम्ङीपो"रिति पाठः प्रायेण दृश्यते प्रयोजनाऽभावात्। ननु ष्फस्य तद्धितसंज्ञा किमर्थेत्यत आह--तद्धितान्तत्वादिति। ष्फान्तस्य प्रातिपदिकत्वे प्रयोजनमाह--वक्ष्यमाणो ङीषिति। "षिद्गौरादिभ्यश्चे"त्यत्र प्रातिपदिकादित्यनुवृत्तं, ततश्च ष्फान्तस्य प्रातिपदिकत्वाऽभावे ङीष् न स्यादिति भावः। ननु ष्फप्रत्ययेनैव स्त्रीत्वस्य द्योतितत्वादुक्तार्थानामप्रयोग इति न्यायादत्र कथं ङीषित्यत आह--षित्वसामथ्र्यादिति। ष्फेण द्योतितेऽपि स्त्रीत्वे षित्करणसामथ्र्यान्ङीषित्यर्थः। गाग्र्यायणीति। गर्गस्यापत्यं स्त्रीति विग्रहः। गर्गादियञन्ताद्गाग्र्यशब्दात्ष्फः, षकार इत्, फकारस्य आयन्नादेशः, "यस्येति चे"ति यकारादकारस्य लोपः, "हलस्तद्धितस्ये"ति तु न भवति, ईतीत्यनुवृत्तेः। "आपत्यस्य चे"त्यपि न, अनातीति निषेधात्। षित्वान्ङीष्। णत्वमिति भावः।

तत्त्व-बोधिनी

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ४२२, ७।१।२

आयने। आयनीनोर्नकारस्य नेत्त्वम्, फिनो नित्करणसामर्थ्यात्। फकारदिष्बकार उच्चारणार्थः। तेन ढ्क्फिञादीनामादेशः सिध्यति। आदिग्रहणं किम्()। ऊरुदन्घं मित्यादौ मा भूत्। प्रत्ययेति किम्()। धीतोरादीनां मा भूत्। फक्कति। ढौकते। छादयति। घूर्णते। घञादिषु तु "चजोः कुघिण्ण्यतो"रित्यादिनिदेर्शेनेत्संज्ञया भाव्यमित्यादेशाभावः। "शमेर्ढः--शण्ढ"इत्येवमादिनामेते आदेशा न भवन्ति, "उणादयो बहुल"मिति बहुलवचनादिति दिक्। क्रमादिति। फ[स्य]--आयन्। ढ[स्य]--एय्। ख[स्य]--ईन्। छ[स्य]--ईय्। घ[स्य]--इय्--इत्यर्थः। स्त्रियामेव ष्फप्रत्ययविधानादत्र ङीष्न स्यादित्याशङ्क्याह--षित्त्वसामर्थ्यादितिष। एकमेव स्त्रीत्वमुभाभ्यामुच्यत इति भावः। सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते बाधकबाधनार्थम्। तेन "आवट()आच्चे"ति वक्ष्यमाणं परमपि चापं बाधित्वा प्राचां मते आवट()शब्दादपि ष्फ एव भवति। चाब्विधेस्तूदीचां मते सावकाशत्वात्। आवट()आयनी। एवं षाद्यञश्चाब्विषयेऽपि प्राचां ष्फ एव, शार्कराक्ष्यायणीति यथा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ झः ६।१ ८ अन्तः १।१ प्रत्ययस्य ६।१ २ आदेः ६।१ २ अङ्गस्य ६।१ ६।४।१

अर्थः॥

प्रत्ययस्य आदेः अवयवस्य झस्य स्थाने अन्तः इति अयम् आदेशः भवति।

उदाहरणम्॥

कुर्वन्ति, सुन्वन्ति, चिन्वन्ति। पतिभिः सह शयान्तैः। जरन्तः, वेशन्तः।
काशिका-वृत्तिः
झो ऽन्तः ७।१।३

प्रत्ययग्रहणम् अनुवर्तते, आदिग्रहणं निवृत्तम्। प्रत्ययावयवस्य झस्य अन्त इत्ययम् आदेशो भवति। कुर्वन्ति। सुन्वन्ति। चिन्वन्ति। अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै। जृविशिभ्यां झच् जरनतः। वेशन्तः। प्रत्ययस्य इत्येव, उज्झिता। उज्झितुम्। उज्झितब्यम्। अस्मिन्नप्यन्तादेशे कृते प्रत्ययाद्युदात्त्वं भवति। तथा च झचः चित्करणम् अर्थवच् भवति।
लघु-सिद्धान्त-कौमुदी
झोऽन्तः ३९१, ७।१।३

प्रत्ययावयवस्य झस्यान्तादेशः। अतो गुणे। भवन्ति। भवसि। भवथः। भवथ॥
न्यासः
झोऽन्तः। , ७।१।३

"प्रत्ययग्रहणमनुवत्र्तते" इति। अनन्तरसूत्रात्()। यद्येवम्(), एकयोगनिर्दिष्टत्वादादिग्रहणमप्यनुवत्र्तेत, ततश्च शयान्तै--इत्यत्र न स्यात्(), चकारस्यादित्वाभावात्()? इत्यत आह--"आदिग्रहणं निवृत्तम्()" इति। एवं मन्यते--स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः, तच्च स्वरितत्वं प्रतिज्ञाधर्मः--"प्रतिज्ञास्वरिताः पाणिनीयाः" इति--यत्रैव तैः स्वरितत्वं प्रतिज्ञायते

तत्रैव भवति, नान्यत्रेति। तेनैकयोगनिर्दिष्टानामप्येकतरस्यानुवृत्तिर्न विरुध्यते। इह च प्रत्ययस्यैव स्वरितत्वं प्रतिज्ञायते, नादिग्रहणस्य। तेन सत्यप्येकयोगनिर्दिष्टत्वे प्रत्ययग्रहणमनुवत्र्तते। "आदिग्रहणं निवृत्तम्()" इति। "अन्त इत्ययमादेशो भवति" इति। अकारसहित एवादेशः करणीयः। अकारः--तकारेत्संज्ञा मा भूदित्येवमर्थः। स च जरन्तः, वेशन्त इत्यत्र। कुर्वन्तीत्यादौ "न विभक्तौ तुस्माः" १।३।४ इति प्रतिषेधादेवेत्संज्ञा न भवति। अथ तु "उणादयो बहुलम्()" ३।३।१ इति वचनाज्जरन्तः, वेशन्त इत्यादौ न भवति? तथा च सत्यकार उच्चारणार्थः। "न विभक्तौ तुस्माः" १।३।४ इत्यस्यानित्यत्वज्ञापकार्थं वाऽकारोच्चारणम्()। "तेन किमोऽत्()" ५।३।१२ इत्यादीनां तकारेत्संज्ञा भवति। "कुर्वन्ति" इति। "अत उत्सार्वधातुके" ६।४।११० इत्युत्वम्()। "शयान्तै" इति। शीङः "लिङर्थे लेट्()" ३।४।७, "लेटोऽडाटौ" ३।४।९४ इत्याट्(), टेरेत्वम्(), "एत ऐ" ३।४।९३ इत्यनुवत्र्तमाने "वैतोऽयन्त्र" ३।४।९६ इत्यैत्वम्()। "उज्झिता" इति। "उज्झ उत्सर्गे" (धा।पा।१३०४) तृच्()। "ऋदुशनस्()" ७।१।९४ इत्यादिनानङ्, "नोपधायाः" ६।४।७ "सर्वनामस्थाने च" ६।४।८ इति दीर्घः। "उज्झितुम्()" इति। तुमुन्()। "उज्झितव्यम्()" इति। तव्यः। "अस्मिन्नपि" इत्यादि। ननु चान्तरङ्गत्वात्? प्रत्ययाद्युदात्तत्वेन प्राग्भवितव्यम्(), पश्चादादेशेन? नैवम्(); अन्तादेशस्याप्यन्तरङ्गत्वात्()। अन्तरङ्गत्वं तु तस्यायन्नादिवद्वेदितव्यम्()। उभयोरन्तरङ्गत्वात्? पूर्वमन्तादेशः, पश्चात्? प्रत्ययाद्युदात्तत्वम्()। अत्रैव ज्ञापकमाह--"तथा च" इत्यादि। एतच्च ""घच्छौ च" ४।४।११६ इति घचश्चित्करणमनर्थवद्भवति"--इत्येतद्वाख्यानेन व्याख्यातमिति। प्रत्ययाद्युदात्तत्वात्? पूर्वमन्तादेशस्य भावे सति द्विषन्तीत्यत्र मध्योदात्तत्वम्(); अन्यथाऽन्तोदात्तता स्यात्()। सा चानिष्टेति पूर्वमन्तादेशः क्रियते॥

बाल-मनोरमा

झोऽन्तः १९, ७।१।३

झः अन्त इति च्छेदः। "झ" इति षष्ठ()न्तम्। आदेशे तकारादकार उच्चारणार्थः। "आयनेयी"ति सूत्रात्प्रत्ययग्रहणमनुवर्तते, न त्वादिग्रहणमपि, अस्वरितत्वात्। अनुवृत्तं च प्रत्ययग्रहणमवयवषष्ठ()न्तमाश्रीयते। तदाह -- प्रत्ययावयवस्येति। झस्य। झकारस्येत्यर्थः। अन्तादेशः स्यादिति। "अन्त्" इत्ययमादेशः स्यादित्यर्थः। प्रत्ययावयवस्येति किम्?। उज्झिता। अत्र धात्ववयवस्य झकारस्य न भवति। आदिग्रहणानुवृत्तौ तु "शयान्तै" इति न सिध्यति। अन्तादेशात्प्रागेवान्तरङ्गत्वाल्लेटोऽडाटावित्याटि कृते झकारस्य प्रत्ययादित्वाऽभावादिति भाष्ये स्पष्टम्। एवं च "भव-झी" त्यत्र झकारस्य अन्त् इत्यादेशे, भव-अन्ति इति स्थिते, "अतो गुण" इति द्वयोरकारयोः सवर्णदीर्गापवादे पररूपे कृते, भवन्तीति रूपमित्यर्थः। अन्तादेशे प्रथमाऽकारोच्चारणं तु लुगविकरणे द्विषन्तीत्यादौ अकारश्रवणार्थम्। भवसीति। मध्यमपुरुषैकवचने सिपि शपि गुणेऽवादेशे रूपम्। भवथ इति। मध्यमपुरुषद्विवचने थसि शपि गुणेऽवादेशे रुत्वविसर्गयोश्च रूपम्। "न विभक्तौ तुस्मा" इति सस्य नेत्त्वम्। भवथेति। मध्यमपुरुषबहुवचने थादेशे शपि गुणे अवादेशे रूपम्।

तत्त्व-बोधिनी

झोऽन्तः १५, ७।१।३

तकारादकार उच्चारणार्थः। "आयनेयीनी"ति सूत्रात्प्रत्ययग्रहणमनुवर्तते न त्वादिग्रहम्, एकदेशे स्वरितत्वप्रतिज्ञानात्। तस्याप्यनुवृत्तौ तु "शयान्तै" इति न सिध्येत्। शीङो "लेटोऽरडाटौ" इत्यन्तरङ्गत्वादन्तादेशात्प्रागाटि कृते झस्यादित्वाऽभावात्। तदेतदाह-- प्रत्ययावयवस्येति। प्राचा तु प्रत्ययादेर्झस्येत्युक्तं, तदनेन प्रत्युक्तम्। इह मनोरमायामादिग्रहणं निवृत्तमित्युक्तं, तदापाततः, अन्यत्राऽप्रवृत्तस्यादिग्रहणस्य निवृत्तत्वाऽयोगात्। "निवृत्त"मित्यस्याननुवृत्तमित्यर्थ इति वा कथंचिद्व्याख्येयम्। यत्तु प्रत्ययादेरिति ग्रन्थसमर्थनाय व्याचक्षते-- आडागमे

कृते तत्सहितोऽपि प्रत्ययोऽस्तु नाम, न तु तत्सहित एव प्रत्यय इति नियमोऽस्तीति। तन्न। अवयवविनिर्मुकत्स्यावयवित्वाऽयोगात्। अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः। नन्वहगात्परस्य प्रत्ययस्येट्, यासुडन्तं तु नाङ्गमिति चेत्। "आगमविनिर्मुक्तस्यापि प्रत्ययत्व"मिति वदतां मते भवामि भविष्यामीत्यादौ विकरणान्तस्येव तदादिग्रहणबलेन यासुडन्तस्याप्यङ्गताया दुर्वारत्वात्। किं च लविषीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङः स्थाने इट्, तस्यागमेनाऽऽदित्वविघातात्प्रत्ययाद्युदात्तत्वं न प्राप्वोतीत्याशङ्क्य प्रत्ययस्वरे कर्तव्ये आगमा अविद्यमानवदित्यतिदेशः "#आद्युदात्तश्चे"ति सूत्रे भाष्यादौ स्वीकृतः। न चैतत्कैवलस्यापि प्रत्ययत्वे युज्यते। न च तन्मते आगमसहितस्यापि प्रत्ययत्वादिकारस्याप्युदात्तः स्यात्,तद्वारणाय "प्रत्ययस्वरे कर्तव्ये" इत्यादिग्रन्थः स्वीकर्तव्य एवेति नास्त्येवाऽऽकरग्रन्थविरोध इति वाच्यम्, "आगमा अनुदात्ताः" इति विशेषवचनेनागमस्याप्यनुदात्तत्वे कृते आद्युदात्तत्वस्य तत्राऽप्रवृत्तेरिति दिक्। झस्येति। झकारादकार उच्चारणार्थः। अतो गुणे इति। "अतो दीर्घो यञी"ति तु न प्रवत्तते, स्थान्यलादेशविधौ स्थानिवत्त्वनिषेधादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अदभ्यस्तात् ७।१।४

अभ्यस्ता दङ्गादुत्तरस्य झकारस्य अतित्ययम् आदेशो भवति। ददति। ददतु। दधति। दधतु। जक्षति। जक्षतु। जाग्रति। जाग्रतु। अन्तादेशापवादो ऽयं जुसादेशेन तु बाध्यते। अदधुः। अजागरुः। अत्राप्यादेशो कृते प्रत्ययाद्युदातत्वं भवति।

लघु-सिद्धान्त-कौमुदी

अदभ्यस्तात् ६०९, ७।१।४

झस्यात्स्यात्। हुश्नुवोरिति यण्। जुह्वति॥

न्यासः

अदब्यस्तात्?। , ७।१।४

अनात्मनेपदार्थं आरम्भः; आत्मनेपदेषूत्तरसूत्रेणैव सिद्धत्वात्()। "ददति" इति। "श्नाब्यास्तयोरातः" ६।४।११२ इत्याकारलोपः। "ददतु" इति। लोट्(), "एरुः" ३।४।८६ इत्युत्वम्()। जक्षति, जाग्रतीत्यत्र "जक्षित्यादयः षट्()" ६।१।६ इत्यभ्यस्तसंज्ञः। युक्तं जक्षित्यादिकमुदाहरणम्(), ददतीत्याद्ययुक्तम्(); अत्र झकारस्यात्मलाभकालसमनन्तरमेव ताददन्तरङ्गत्वादन्तादेशेन भवितव्यम्(), ततः शपः श्लुः, "श्लौ ६।१।१० इति द्विर्वचनम्(), ततोऽभ्यस्तसंज्ञा तदा झकारस्य स्थानिनोऽभावादद्भादो न प्राप्नोति। न च शक्यते वक्तुम्()--स्थानिवद्भावाद्भविष्यति। न ह्यत्र स्थानिवद्भावोऽस्ति; अल्विधित्वात्()। नापि बहिरङ्गोऽनवकाशत्वादन्तादेशं बाधित्वाऽदादेशो भविष्यतीति युक्तं परिकल्पयितुम्()। जक्षित्यादिषूपदेशावस्थायामेव लब्धाभ्यस्तसंज्ञकेषु तस्य सावकाशत्वादिति चोद्यमपाकर्तुमाह--"अन्तादेशापवादोऽयम्()" इति। अन्तादेशस्य सामान्येन सर्वत्र प्रसक्तस्यायमद्भावोऽपवाद आरभ्यते। न चापवादविषयमुत्सर्गोऽवगाहते। तथा चोक्तम्()--"पूर्वमपवादाः प्रवत्र्तन्ते पश्चादुत्सर्गाः, परिह्मत्यापवादविषयमुत्सर्गः प्रवर्तते" (पु।प।५६) इति। अत एव तर्हि जुस्भावो न स्यात्()। यथैव ह्न्तादेशस्य सामान्येन प्रवृत्तस्य विशेषोऽद्भाव आरभ्यमाणोऽपवादः, तथा जुत्भावस्यापीत्याह--"जुसादेशेन तु बाध्यते" इति। "जुसादेशस्यानवकाशत्वादित्यदादेशो बाध्यते। "अददुः" इति। लङ्, "सिजभ्यस्तविधिभ्यश्च" ३।४।१०९ इति झेर्जुस्()। "अजागरुः" इति। जागत्र्तेर्या गुणप्राप्तिस्तस्याः "अविचिण्णल्ङित्सु" ७।३।८५ इति प्रतिषेधल्लक्षणान्तरेण, "जुसिच" ७।३।८३ इत्यनेन गुणः।

"अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्वं भवति" इति। तेन पुनत इत्यादिकं पदं मध्योदत्तं भवतीति भावः। यदि तु विपर्ययः स्यात्(), अन्तरङ्गत्वात्प्रत्ययाद्युदात्तत्वे कृते व्यञ्जनमात्रस्याद्भावो विधीयमानोऽनियतस्वरः प्रसज्येत। तत्र यदासावनुदात्तः स्यात्(), तदा पुनत इत्यादेः पदस्यान्तोदात्तता प्रसज्येत; यदा स्वरितस्तदा मध्यस्वरितता, मध्योदात्तता चेष्यते। ननु च प्रत्ययाद्युदात्तत्वं प्रत्ययमात्रापेक्षयाऽन्तरङ्गम्(), आदेशस्तुप्रकृतिप्रत्ययापेक्षत्वाद्बहिरङ्गः। "अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः" (व्या।प।९४) इति प्रत्ययाद्युदात्तत्वेनैव पूर्वं भवितुं युक्तम्(), पश्चादादेशेनेति, तत्कथमुच्यते--अदादेशे कृते प्रत्ययाद्युदात्तत्वं भवतीति? नैतदस्ति उक्तं हि "उपदेशिवद्वचनं कत्र्तव्यम्()" इति। किञ्च--आदेशो नित्यः, कृताकृतप्रसङ्गित्वात्()। स हि कृते प्रत्ययाद्युदात्तत्वं पुनरनित्यम्(), शब्दान्तरप्राप्त्या। तथा ह्रकृतेऽदादेशे झेरिकारस्य प्राप्नोति, कृते स्वदादेशाकारस्य "शब्दान्तरस्य प्राप्नुवन्? विधिरनित्यो भवति" (व्या।प।१०६)। "नित्यानित्ययोर्नित्यं बलीयः" (व्या।प।९३) इति बलीयस्त्वमस्य। तदेतन्नित्यत्वादनयोर्बलपीयसोः परत्वाददादेशेन पूर्वं भवितव्यम्(), ततः प्रत्यायाद्युदात्तत्वेन। तस्मात्? सुष्ठूक्तम्()--आदेसे कृते प्रत्ययाद्युदात्तत्वं भवतीति॥

बाल-मनोरमा

अदभ्यस्तात् ३०९, ७।१।४

अदभ्यस्तात्। झस्येति। "झोऽन्त" इत्यतस्तदनुवृत्तेरिति भावः। जक्षतीति। "जक्षित्यादयः ष" डित्यभ्यस्तसंज्ञेति भावः। लङस्तिपि ईडटोः-- अजक्षीत् अजक्षदिति सिद्धवत्कृत्य आह-- सिजभ्यस्तेति। अदादेशापवादो जुस्। अन्तः स्थादिरिति। तालव्याऽन्तः स्थादिरित्यर्थः। बभ्रामेति। "जक्षन्क्रीडन् रममाणः" इत्युपनिषदि चवर्गतृतीयादित्वस्य निर्विवादत्वादिति भावः। जागृ धातुरृकारान्तः। सेट्। जागर्तीति। तिपि शपो लुकि ऋकारस्य गुणे रपरत्वम्। जागृत इति। ङित्त्वान्न गुणः। जाग्रतीति। "जक्षित्यादयः ष"डित्यभ्यस्तसंज्ञायाम् "अदभ्यस्ता"दिति जेरदादेशः। ङित्त्वाद्गुणनिषेधे ऋकारस्य यणिति भावः। जागर्षि जागृथः जागृथ। जागर्मि जागृवः जागृमः। लिटि "कास्यनेका"जिति नित्यमामि प्राप्ते आह-- उषविदेत्याम् वेति। जागरामिति। आमि ऋकारस्य गुणो रपरत्वं चेति भावः। आमभावे आह--जगागारेति। अतुसादौ कित्त्वाद्गुणनिषेधे प्राप्ते---

तत्त्व-बोधिनी

अदभ्यस्तात् २६९, ७।१।४

अन्तापवाद इति। "झोऽन्तः" इत्यस्य अदादेशोऽपवादः। अस्य त्वपवादो जुसिति ज्ञेयम्। बभ्रामेति। "जक्षन् क्रीडन् रममाण" इत्युपनिषदि जशादित्वस्य निर्विवादत्वात्। "नाभ्यस्ताच्छतु"रिति निषेधेन "जक्ष"न्निति नुमश्छान्दसत्वेऽपि जशादित्वस्य तत्कल्पनाया अन्याय्यत्वात्। धातुवृत्यादौ जशादिपाठाच्च।

---

सूत्रम्

काशिका-वृत्तिः

आत्मनेपदेष्वनतः ७।१।५

आत्मनेपदेषु यो झकारः, तस्य अनकारान्तातङ्गातुत्तरस्य अतित्ययम् आदेशो भवति। चिन्वते। चिन्वताम्। अचिन्वत। पुनते। लुनते। लुनताम्। अलुनत। आत्मनेपदेषु इति किम्? चिन्वन्ति। लुनन्ति। अनतः इति किम्? च्यवन्ते। प्लवन्ते। नित्यत्वादत्र विकरणे कृते झो ऽन्तादेशेन भवितव्यम् इत्यदादेशो न भवति। अनकारान्तेन अङ्गेन झकारविशेषणं किम्? इह मा भूत्, अद्य श्वो विजनिष्यमाणाः पतिभिः शयान्तै।

लघु-सिद्धान्त-कौमुदी

आत्मनेपदेष्वनतः ५२६, ७।१।५

अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि॥ कमु कान्तौ॥ २॥

न्यासः

आत्मनेपदेष्वनतः। , ७।१।५

"चिन्चेते" इति। लट्(), स्वरितत्वादात्मनेपदम्()। "चिन्वताम्()" इति। लेट्(), झः टेरेत्त्वम्(), "आमेतः" ३।४।९०। "अचिन्वत" इति। लङ्(), अडागमः, "हुश्नुवोः सार्वधातुके" ६।४।८७ इति यणादेशः। "पुनते, लुनते" इति। पूर्ववदाकारलोपः। "च्यवन्ते, प्लवन्ते" इति। अत्र शपि कृतेऽनकारान्तादङ्गादुत्तरो झकारो न भवति। ननु परत्वाददादेशेन भवितव्यम्(), पश्चाद्विकरणेन? इत्यत आह--"नित्यत्वादतद्र" इत्यादि। नित्यत्वं तु कुताकृतप्रसङ्गित्वात्()। विकरणो हि कृतेऽप्यदादेशे प्राप्नोत्यकृतेऽपि, न तु तस्मिन्? कृतेऽद्भावस्य प्राप्तिरस्तीत्यनित्यत्वमस्य। "अनकारान्तेन" इत्यादि। प्रत्ययः कस्मादनकारान्तेनाङ्गेन न विशिष्यते? इति मन्यमान आह--"इह" इत्यादि। यदि प्रत्ययो विशिष्येत शयान्तं--इत्यत्रापि स्यात्(), भवति ह्यत्राप्यनकारान्तादङ्गादुत्तरो झप्रत्ययः। आटा व्यवहितत्वान्न भवतीति चेत्()? न; तस्य तद्भक्तत्वान्न हि तदेकदेशेन व्यवधानं युक्तम्()। झकारे तु विशिष्यमाणे न दोषः; आटा व्यवहितत्वात्()। समुदायभक्तो ह्याट्? समुदायमेव न व्यवदध्यात्()। अवयवं तु व्यवदधात्येव; न ह्यवयवोऽवयवान्तरस्याव्यवधायको दृष्टः। "तङ्यनतः", "झस्यानतः" इति वा वक्तव्ये "आत्मनेपदेष्वनतः" इति वैचित्र्यार्थम्()॥

बाल-मनोरमा

आत्मनेपदेष्वनतः १०३, ७।१।५

अथ झस्य आदेर्झकारस्य झोऽन्त इत्यन्तादेशे प्राप्ते-- आत्मनेपदेषु। "झोऽन्त" इत्यतो झ इति षष्ठ()न्तमनुवर्तते। "आत्मनेपदेष्वि"ति षष्ठ()र्थे सप्तमी। आत्मनेपदावयवस्य झकारस्येति लभ्यते। "अदभ्यस्ता" दित्यतोऽदित्यनुवर्तते। न अत् अनत्। तस्मादिति विग्रहः। तदाह--अनकारादित्यादना। ऐधिषतेति। झावयवझकारस्य अदित्यादेशः। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्। ऐधिष्ठा इति। थास् च्लिः। सिच् इट्। आट्। वृद्धिः। षत्वं। थकारस्य ष्टुत्वेन ठकारः। रुत्वविसर्गौ। ऐधिषाथामिति। आथाम्। च्लिः। सिच्। इट्। आट्। वृद्धिः। षत्वम्। अथ ध्वमो धस्य ठत्वं स्मारयति-- इणः षीध्वमिति। ऐधिढ्वमिति। ध्वम्। च्लिः। सिच्। इट् आट् वृद्धिः। धि चेति सस्य लोपः। "इणः षीध्व"मिति धकारस्य ढत्वम्। इटो लुप्तसिज्भक्ततया सिजन्ताङ्गान्तर्भूतत्वेन इडन्तस्य इण्णन्ताऽङ्गत्वदिति भावः। इड्()भिन्न एवेति। उत्तरसूत्रे "विभाषेट" इत्यत्र इड्ग्रहणात्पूर्वसूत्रे इणः षीध्वमित्यत्र इड्()भिन्न एव इण् गृह्यत इति केचिदाहुः। तन्मते तु प्रकृते इटः परत्वाद्धकारस्य ढत्वाऽभावे ऐधिध्वमित्येव रूपमित्यर्थः। इदं तु मतान्तरं भाष्याऽनारूढमिति सूचयितुं "तु"शब्दः। ढधयोरिति। मतभेदमाश्रित्येदम्। ढत्वाऽभावपक्षे धकारस्य अनचि चेति द्वित्वविकल्पाद्द्विधमेकधमिति रूपद्वयम्। एवं ढत्वे द्विढम्, एकढ"मिति रूपद्वयम्। रूपचतुष्टयेऽपि "यणो मयो द्वे वाच्ये" इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारि रूपाणि भवन्ति। तथा च अष्टौ रूपाणि संपन्नानि। मकारस् द्वितवविकल्पादेतान्यष्टौ रूपाणि एकमकाराणि द्विमकाराणि चेति षोडश (१६) रूपाणि संपन्नानीत्यर्थः। ऐधिषीति। लुङ इडादेशः। च्लिः। सिच्। इडागमः। आट्। वृद्धिः। वहिमह्योस्तु च्लेः सिचि इडागमेआटि

वृद्धौ ऐधिष्वहि ऐधिष्महीति रूपे। इति लुङ्प्रक्रिया। ऐधिष्यतेति। लृङस्तादेशः। स्यः। इट्।आट्। वृद्धिः। षत्वम्। ऐधिष्येतामिति। आतां स्यः। इट्। आकारस्य इय्। आद्गुणः यलोपः। आट् वृद्धिः। षत्वम्। ऐधिष्यन्तेति। झावयवझकारस्यान्तादेशः। स्यः। इट् आट् वृद्धिः। षत्वम्। ऐधिष्यता इति। थास्। स्यः। इट् आट्। वृद्धिः। रुतविसर्गौ। ऐधिष्येथामिति। आथाम्। स्यः। इट्। आकारस्य इय्। आद्गुणः। यलोपः। आट्। वृद्धिः। षत्वम्।ऐधिष्यध्वमिति। ध्वम्। स्यः। इट्। आट्। वृद्धिः। ऐधिष्य इति। इडादेशः। स्यः। इडागमः। षत्वम्। आद्गुणः। वहिमह्योस्तु स्यः। इट्। अतो दीर्घः। आट्। वृद्धिः। षत्वम्। ऐधिष्यावहि ऐधिष्यामहि इति रूपे। नन्वेधधातोरनुदात्तेत्कत्वादेकाच उपदेशेऽनुदात्तादितीण्निषेधः कुतो न स्यादित्यत आह-- उदात्तत्वादिति। एध धातुर्यद्यपि अनुदात्तेत्तथापि अनुदात्तस्याऽतो लोपे सति परिशिष्टो धातुर्नानुदात्त इति भावः। ननु कतिपये धातवः पाणिनिना अनुदात्ता उच्चरिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह-- प्रसङ्गादिति।स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः। पाणिनिपठितानामनुदात्तधातूनां तदानीन्तनशिष्यपरम्परया आनुनासिक्यवदिदानीं ज्ञनं संभवतीति भावः। ऊदृ()दन्तैरिति। अजन्तेषु धातुषु ऊदन्तैः ॠदन्तैस्च धातुभिर्विना, यु रु क्ष्णु शीङ् स्नु नु क्षु ()इआ डीङ् श्रि--एतैश्च धातुभिर्विना, वृङ् वृञ्--आभ्यां च विना, अन्ये एकाचोऽजन्तधातवो निहिताः = अनुदात्ताः स्मृताः। पाणिनिशिष्यपरम्परया ज्ञाता इत्यर्थः। अथ हलन्तेषु अनुदात्तान्धातून् परिगणयति--शक्लृ पच् मुचिति। शक्लृ पच् मुच् रिच् वच् विच् सिच् प्रच्छि त्यज् निजिर् भज्--एषां द्वन्द्वः। तत्र कान्तेषु शक्लृ इत्येकः। लृकार इत्। भाष्ये तु अनुबन्धरहितः पाठो दृश्यते। चान्तेषु पच् मुच् रिच् वच् विच् सिच् इति षट्। अत्र डुपचष् इत्यस्यैव ग्रहणं,प्रसिद्धत्वात्, न तु पचि व्यक्तीकरणे इत्यस्येत्याहुः। मुच्लृ मोक्षणे इत्यस्यैव ग्रहणं, न तु मुचि कल्कन इति भौवादिकस्य। अविशएषात्सर्वस्यत्यन्ये। छान्तेषु प्रच्छ् एकः। प्रच्छीतीकार उच्चारणार्थः। णिजिरित्यत्र इर इत्संज्ञा वक्ष्यते। भुञ्ज भुजित्यादि सृज इत्यन्तमेकं पदम्। जान्तेषु--त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज मस्ज् यज् युज् रुज् रञ्ज् सृज् इति पञ्जदश। अद् क्षुदित्यादि नुद इत्यन्तमेकं पदम्। तत्र तुदेरिकार उच्चारणार्थः। पद्यभिदित्येकं पदम्। समाहारद्वन्द्वः।पद्येति श्यना निर्देशः। विद्यतिरिति श्यना निर्देशः। विनदिति श्नमा निर्देशः। "शद्-सदीत्यादि बुध्यतीत्यन्तमेकं पदम्। समाहारद्वन्द्वः।सदि स्कन्दि हदि क्षुधि इति इका निर्देशः।स्विद्यति-- बुध्यतीति श्तिपा श्यन्विकरणयोर्निदेशः। ततश्च दान्तेषु-अद् क्षुद् खिद् छिद् तुद् नुद् पद् (श्यन्विकरणः), भिद् विद् (श्यन्विकरणः), विद् (श्नम्विकरणः),शद् सद् स्विद्(श्यन्विकरणः), स्कन्द् हद् इति पञ्चदश। बन्धिरिति इका निर्देशः। युधि-रुधी इत्येकं पदम्। इका निर्देशः। "राधिंव्यधशुधः" इत्येकं पदम्। राधीति इका निर्देशः। साधिसिध्यती इति द्वन्द्वः। साधीति इका निर्देशः। ततश्च धान्तेषु-- क्रुध् क्षुध् (श्यन्विकरणः),बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध् (श्यन्विक्रणः)--इत्येकादश। मन्येत्यादि तिप इत्यन्तमेकं पदम्। मन्येति श्यना निर्देशः। छुपीति इका निर्देशः। "तृप्यतिदृप्यती"इति द्वन्द्वः। श्यना निर्देशः। लिबित्यादि यम इत्यन्तमेकं पदम्। सृपीति इका निर्देशः। रमिरिति भिन्नं पदम्। इका निर्देशः। तथा च नान्तेषु मन् हन्निति द्वौ। मनिः श्यन्विकरणः।पान्तेषु--आप् क्षिप् छुप् तप् तिप् तृप् दृप् लिप् लुप् वप् शप् खप् सृप् इति त्रयोदश। भान्तेषु-- यभ् रभ् लभ् इति त्रयः। मान्तेषु-- गम् नम् यम् रम् इति चत्वारः। क्रुशिरित्यादि स्पृश इत्यन्तमेकं पमद्। दृशिरितिच इरित्। कृशि दिशि दंशीति इका निर्देशः। तथा च शान्तेषु क्रुश् दंश् दृश् दिश् मृश् रिश् रुश् लिश् विश् स्पृश् इत्येते दश। कृषिरितिपृथक्पदम्। इका निर्देशः। त्विषित्यादि श्लिष्यतय इत्यन्तमेकं पदम्। पुष्येति श्यना निर्देशः। श्लिष्यतीति श्यन्विकरणस्य श्तिपा निर्देशः। तथा च षान्तेषु कृष् त्विष् तुष् द्विष् दुष् (श्यन्विकरणः), पिष् विष् शिष् शुष् श्लिष् (श्यन्विकरणः)-इत्येकादश। घसिरिति पृथक्पदम्। इका निर्देशः। वसतिरिति पृथक्पदं। श्तिपा निर्देशः। सान्तेषु घस् वस् इति द्वौ। दह्दिहिदुह इति द्वन्द्वः। दिहीति इका निर्देशः। नह मिह रुह् लिह् इति समाहारद्वन्द्वः। वहिरिति पृथक्पदम्। इका निर्देशः। तथेति चकारपर्यायः। हान्तेषु-- दह् दिह् दुह् नह् मिह रुह् लिह् वह् इत्यष्टौ। द्व्यधिकं शतमिति। भाष्ये मृषेः षान्तेषु पाठस्तु लेखकप्रमादकृत इति भावः। अथ पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह-- तुदादाविति। यौ तृप्()दृपी तुदादौ चुरादौ च मतान्तरीयत्वेन धातुपाठे स्थितौ तौ अनुदात्तेभ्यो वारयितुं श्यना

निर्देशोऽभ्युपगत इत्यर्थः। अत एव "शे मुचादीना"मिति सूत्रभाष्ये तृपतो दृपित इत्युदाह्रतं सङ्गच्छत इति भावः। किं चेति। अन्यदपि वक्ष्यत इत्यर्थः। अन्यनिवृत्तय इति। विकरणान्तरनिवृत्तय इत्यर्थः। तच्चाग्रे तत्तदाद्र्धदातुकनिरूपणे स्पष्टीभविष्यति। अमी तथेति। उक्तानुबन्धरहितानां व्यावृत्तय इत्यर्थः। एतदपि तत्तदाद्र्धधातुकनिरूपणे स्पष्टीभविष्यति। अमी तथेति। उक्तानुबन्धरहितानां व्यावृत्तय इत्यर्थः। एतदपि तत्तदाद्र्धधातुकनिरूपणे स्पष्टीभविष्यति। विन्दितिरिति। "विद्लृ लाभे" इति तौदाद#इकः। चान्द्रदौर्गादिव्याकरणसम्मतः। भाष्येऽपि दृश्यत इति। विन्दतिविनत्तिविद्यतीति तत्र पाठादिति भावः। एनमिति। विन्दतिमित्यर्थः। नेह पेठुरिति। तथापि भाष्यप्रामाण्यादस्याऽनिट्कत्वमिति भावः। "रञ्जिमस्जी" इत्येकं पदम्। नुद् क्षुध् इति पृथक्कृते पदे। "शुषिपुषी" इत्येकं पदम्। शिषिरित्यनन्तरम् "इत्येते" इति शेषः। नवेहेति। नव धातवो भाष्यानुक्ता अपि इहानुदात्तेषु परिगणिता इत्यर्थः। कुत इत्यत आह-- व्याघ्रभूत्यादिसम्मतेरिति। भाष्ये त्वेभ्यो नवभ्योऽन्येषां परिगणनं नवानामप्येषामुपलक्षणमिति भावः। "तेन रक्तं रागात्", "तदस्मिन्नन्नं प्रायेण", "क्तोऽकृतमितप्रतिपन्नाः" "शुष्कधृष्टौ", त्तेन नञ्विशिष्टेने"त्यादिसौत्रप्रयोगाः, नुन्नः मग्नः पुष्टः मङ्क्ता मङ्क्तव्यमित्यादिभाष्यप्रयोगाश्चात्र लिङ्गम्। [इत्यनिट्कारिकाः]। स्पर्ध सङ्घर्षे इति। "वर्तते" इति शेषः। पराभिभवेति। परस्याभिभवः पराजयः। तद्विषयकेच्छेत्यर्थः। नन्वत्रेच्छायां पराभिभवस्य कर्मतया स्पर्धधातोः सकर्मकत्वद्देवदत्तो यज्ञदत्तं स्पर्धयतीत्यादौ "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणा"मित्यकर्मककार्यं कथमित्यत आह-- धात्वर्थेनोपसङ्ग्रहादिति। "धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्व"मिति "सुप आत्मनः क्य"जिति सूत्रभाष्ये प्रपञ्चितत्वादिति भावः। नचैवं सति पदव्यवस्थायां "स्पर्धायामाङ" इत्यत्र "कृष्णश्चाणूरमाह्वयते,स्पर्धत इत्यर्थ" इति मूलग्रन्थविरोध इति वाच्यं, तत्र स्पर्धेरभिवपूर्वकाह्वाने वृत्तेरित्यलम्। स्पर्धत इति। "कत्थन्ता ष()ट्त्रशदनुदात्ते" इत्युक्तेरात्मनेपदम्। एधदातुवल्लटि रूपाणीति भावः। धातोरिजादित्वाऽभावादिजादेश्चेति लिट()आम्न। अत एवा नानुप्रयोगोऽपि।

तत्त्व-बोधिनी

आत्मनेपदेष्वनतः ७७, ७।१।५

आत्मनेपदे। "झोऽन्तः" इत्यतो "झ" इति "अदभ्यस्ता"दित्यास्मादिति चानुवर्तते। तदाह-- झस्य अत्स्यादिति। आत्मनेपदेषु किम्?। अदन्ति। सुन्वन्ति। अनतः किम्?। एधन्ते। प्लवन्ते। इङ्भिन्न एवेणिति। "विभाषेटः" इति इटो विशिष्यग्रहणाद्गोबलीवर्दन्यायेन कैश्चिदिङ्भिन्न एवेणिह गृह्रते इति भावः। ऊदृ()दन्तैरित। ऊदृ()दन्तैर्विना, यौत्यादिभिर्विना, वृङ्वृरञ्भ्यां च विना अन्ये ये एकाचोऽजन्तास्ते निहताः। अनुदात्ता इत्यर्थः। तथा च दाता धाता चेता स्तोतेत्यादिषु इण्न भवति। ऊदन्ता भूलूप्रभृतयः। ॠदन्ताः कृ()तॄ()प्रभृतयः। "यु मिश्रणादौ"। "रु शब्दे", "रुङ् गतिरेषणयोः" इत्युभयोग्र्रहणम्, निरनुबन्धपरिभाषया, "लुग्विकरणाऽलुग्विकरणयोः" इति परिभाषया च। नच साहचर्याल्लुग्विकरणस्यैव ग्रहणमिति शङ्क्यम्, तस्याऽनितय्त्वात्। "क्ष्णु तेजने"। "शीङ् स्वप्ने" "ष्णुप्रस्नवणे"। "णुस्तुतौ"। "टुक्षु शब्दे"। "टुओ()इआ गतिवृद्ध्योः" "डीङ् विहायसा गतौ"। "श्रिञ् सेवायाम्। "वृङ् संभक्तौ"। "वृञ् वरणे"। नन्वेतद्भिनानामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येदिति चेत्। मैवम्। "ऊर्णोतेर्णुव्दभावो वाच्यः" इति वक्ष्यमाणवार्तिकेन#एष्टसिद्धः। तेन ऊर्णोनूयते इत्यत्र तु "धातोरेकाच" इति यङ्। ऊर्णुनावेत्यत्राऽनेकाच्त्वेन प्रवनृत्तस्याऽऽमोऽभावश्च सिध्यति। उक्तं च भाष्ये--- "वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहात्"॥ इति। "विभाषा गुणेऽस्त्रिया"मिति हेताविवयं पञ्चमी। हेतुरिह फलम्। एतच्च कैयटे स्पष्टम्। उपग्रहः-- प्रतिषेधः। इट्प्रतिषेधार्थमित्यर्थः। एवं च णुवद्भावेनैकाच्त्वात् "श्र्युकः किती"ति निषेधप्रवृत्तेरूर्णुत इत्यादि सिध्यति। "एकाच उपदेशे" इतीण्निषेधस्तु न प्रवर्तते, णुवद्भावनैकाच्त्वेऽप्यनुदात्तत्वाऽभावात्, ऊर्णुधातोर्णुदातोश्चोदात्तत्वात्, तता चोर्णविता और्णावीदित्याद्यपि सिद्धम्। "वसतिशक्लृघस्लृभ्यः" इतिप्राचो ग्रन्थस्तं

पाठमुपेक्ष्य हलन्तेषु कादिक्रमेणाह-- शक्लृ इति। कान्त एकः। चान्तेषु पच् मुच्()रिच्()वच्()सिचः षट्। "डुपचष् पाके"। "पचि व्यक्तीकरणे"। द्वावपि "प"चित्यनेन गृह्हेते। "मुच्लृ मोक्षणे"। "रि"चित्यनेन "रिचिर्? विरेके" "रिच वियोजनसंपर्चनयोः र" इतियौजादिकश्च गृह्हेते। "व"चित्यनेन तु "वच परिभाषणे" ब्राउवो वचिरपि। वचिर्यौजादिकोऽपि गृह्हते। "विचिर् पृथग्भावे"। "षिच क्षरणे"। छान्तेषु प्रच्छ्येकः। जान्तेषु त्यज्()निजिर्()भज्()भञ्ज्()भुज्()भ्रस्ज्()मस्ज्()यजयुज्()रुज्()रञ्ज्()विजिर्()स्वञ्ज्()सञ्ज्()सृजः पञ्चदश। भुजित्यनेन "भुज पालनाभ्यवहारयोः" "भुजो कौटिल्ये" इति च गृह्हते। युजित्यनेन "युजिर् योगे", "युज समाधौ" इति च गृह्हते। केचित्तु व्याघ्रभूतिश्लोके भाष्ये च युजित्येतत् "युजिर्? योगे" इत्यस्यैकदेशोच्चारणित्याहुस्तनमत "युज् समाधौ" सेट्। सृजित्यनेन तु "सृज विसर्गे" दिवादिस्तुदादिश्च गृह्हते। दान्तेषु अद्()क्षुद्()खिद्()छिद्()तुद्()नुद्()पद्यभिद्()विद्यतिर्विनद्()शद्()शद्()स्विद्यस्कन्दहदः पञ्चदश। खिदित्यनेन "खिद दैन्ये" खिद्यतिः खिन्दतिः खिनत्तिश्च गृह्हते। विद्यतीति। "विद सत्तायाम्" विनदिति। "विद विचारणे"। धान्तेषु क्रुध् क्षुध्बुध्यबन्धयुध्()रुध्()राध्()व्यध्()शुध्()साध्()सिध्यतय एकादश। रुधित्येन "रुधिर्? आवरणे" "अनो रुध कामे" इति दिवादिश्च गृह्हते। नान्तेषु मन्यहनौ द्वौ। "मन ज्ञाने" दिवादिः। पान्तेषु आप्क्षिप्छुप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश। क्षिपित्यनेन "क्षिप प्रेरणे" क्षिप्यतिः क्षिपतिश्च गृह्हते। "छुप स्पर्शे"। तपित्यनेन "तप संतापे", "तप ऐ()आर्ये" दिवादिः। "तप दाहे" इत्यपि णिजभावपक्षे गृह्हते। "तिपृ क्षरणे"। तृप्यतिदृप्यत्योर्वेट्()कत्वेऽपि "अनुदात्तस्य चर्दुपधस्येऽत्यमर्थोऽत्र पाठः। भान्तेषु यभ्()रभ्()लभस्त्रयः। मान्तेषु गम्()नम्()यम्()रमश्चत्वारः। शान्तेषु क्रुश्दंश्दिश्दृश्मृश्()रिश्()रुश्लिश्()विश्स्पृशो दश। "रिश् रुश् हिंसायाम्। "लि"शित्यनेन "लिश् अल्पीभावे" दिवादिः, "लिश गतौ"तुदादिश्च गृह्हते। षान्तेषु कृष्()त्विष्()तुष्()द्विष्()दुष्()पुष्य्()पिष्()विष्()शिष्()शुष्()श्लिष्य एकादश। कृषिति भौवादिकतौदादिकौ गृह्हेते। विषित्यनेन "विष्लृ व्याप्तौ" जिष्()विष्()मिषितिदण्डकस्थोऽपि गृह्हते। शिषित्यनेन तु "शिष्लृ विशेषणे""कष खष विषे"ति दण्डकस्थश्च गृह्हते। विषिति "विष्लृ व्याप्तौ" इति जौहोत्यादिक एव गृह्हते न तचु दण्डकस्थः। शिषित्यनेनापि "शिष्लृ विशेषणे" इति रौधादिक एव न तु दण्डकस्थ इति बोपदेवादयः। सान्तेषु घस्लृवसती द्वौ। "घस्लृ अदने"। "लुह् सनोर्घस्लृ" इत्यत्तेरादेशस्य तु स्थान्यनुदात्तत्वेनापि सिद्धम्। हान्तेषु दह्()दिह्()दुह्()मिह्()नह्()रुह्()लिह्()वहयोऽष्टौ। दुहिरिति भौवादिको न गृह्हते किं तु "दुह प्रपूरणे" इति आदादिक एवेति प्राञ्चः। इह मनोरमामां सङ्गहश्लोक उक्तः-- "कचच्छजा दधनपा भमशाः षसहाः क्रमात्। कचका णणटाः खण्डो गघञाष्टखजाः स्मृताः" इति। तत्र पूर्वार्धोपात्ता ये चतुर्दश वर्णास्तदन्ता धातव उत्तरार्धोपात्तकादिक्रमेण ये वर्णास्तत्संख्याका बोध्या इत्यर्थः। अत एवकान्त एकः, चान्ताः षट्, छान्त एकः, जान्ताः पञ्चदशेत्यादि व्याख्यातम्। क इत्येकस्य, च इति षण्णां, ण इति पञ्चदशानां संज्ञेत्याद्यभ्युपगमात्। पान्तेषु द्व्योः श्यना। निर्देशस्य फलमाह-- तुदादाविति। तृप्-दृपी मतभेदेन तुदादौ स्थितौ। चुरादौ तु तृपिः सर्वमतेन स्थितः। दृपिस्त्()वेकीयमतेनेति विवेकः। अत एव वक्ष्यति-- "तृप तृम्फ तृप्तौ"। द्वावपि द्वितीयान्तावित्यन्ये। "दृप दृम्फ उत्क्लेशे"। प्रथमः प्रथमान्तः, द्वितीयो- द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके इति च तुदादौ। चुरादौ तु- "तृप तृप्तौ" तृप दृप संदीपने" इत्येके इति च। अन्यनिवृत्तये इति। निवर्तनीयास्तु "ञिष्विदा स्नेहनमोचनयोः"। पद स्थैर्ये"। षिध गत्याम्"। षिधू शास्त्रे माङ्गल्येचट। बुधिर्? बोधने" इति भौवादिः। "मनु अवबोधने" तानादिकः। "पुष पुष्टौ" भौवादिकः क्रैयादिश्च। "श्लिष दाहे" भौवादिकः। "वस आच्छादने" आदादिकः। एते अनुदात्तत्वराहित्यात् सेटः। युञ् बन्धने" क्रैयादिकोऽयमनुदात्त इत्यनिट्। श्यना निर्देशेन सङ्ग्रह्यास्तु "ञिष्विदा गात्रप्रक्षरणे"। "पद गतौ"। षिधू संराद्धौ"। "बुध अवगमने"। मन ज्ञाने"। पुष पुष्टौ"। "श्लिष आलिङ्गने"। "वस निवासे"। एतेऽनिटः। "यु मिश्रणामिश्रणयोः" अयं सेट्। अमी तथेति। "णिजि शुद्धौ"। "ओविजी भयचलनयोः"। "शक मर्षणे" इत्येतेषां क्रमेण आदादिकतौदादिकदैवादिकानां व्यावृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः। विन्दतिरिरिति। "विद्लृ लाभे। इष्ट।

"अनिट्त्वेने"ति शेषः। भाष्यानुक्ता इति। भाष्याकृताऽनुक्ता, न तु प्रत्याख्याता इति नास्तीह तद्विरोधः। ततश्च व्याघ्रभूत्यादिग्रन्थानुरोधात्, "शुष्कधृष्टौ" "क्तेन नञ्विशिष्टेनाऽन"ञित्यादि सौत्रप्रयोगादत्तुं प्रतिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्च उपलक्षणतयैव भाष्यां नेयमिति भावः। अकर्मक इति।अत्र केचित्-- अभिभवेच्छा धात्वर्थः। तथा च स्पद्र्धार्थकस्य सकर्मकता दृश्यते, "आह्वास्त मेरावमरावतीं या"इति। उदाहरिष्यते च "स्पर्धायामाङः" इत्यत्र स्वयमेव "कृष्णश्चाणूरमाह्वयते। स्पर्धत इत्यर्थः" इति। श्रीहर्षोऽपि प्रायुङ्क्त-- "तन्नासत्ययुगान्तं वा त्रेता स्पर्द्धितुमर्हति" इति। अतोऽस्य सकर्मकत्वं न्याय्यमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

शीङो रुट् ७।१।६

शीङो ऽङ्गादुत्तरस्य झादेशस्य अतः रुडागमो भवति। शेरते। शेरताम्। अशेरत। रुडयं परादिः क्रियते। स यदि झकारस्य एव स्याददादेशो न स्यादित्यत एव अयम् आदेशस्य आगमो विधीयते। सानुबन्धग्रहणम् आङ्लुगर्थम्। तेन इह न भवति, व्यतिशेश्यते।

लघु-सिद्धान्त-कौमुदी

शीङो रुट् ५८७, ७।१।६

शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे। शयाथे। शेध्वे। शये। शेवहे। शेमहे। शिश्ये। शिश्याते। शिश्यिरे। शयिता। शयिष्यते। शेताम्। शयाताम्। अशेत। अशयाताम्। अशेरत। शयीत। शयीयाताम्। शयीरन्। शयिषीष्ट। अशयिष्ट। अशयिष्यत॥ इङ् अध्ययने॥ २०॥ इङिकावध्युपसर्गतो न व्यभिचारतः। अधीते। अधीयाते। अधीयते॥

लघु-सिद्धान्त-कौमुदी

ऊर्णोतेर्विभाषा ६०६, ७।१।६

इडादौ सिचि वा वृद्धिः परस्मैपदे परे। पक्षे गुणः। और्णावीत्, और्णुवीत्, और्णवीत्। और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम्। और्णुविष्ट, और्णविष्ट। और्णुविष्यत्, और्णविष्यत्। और्णुविष्यत, और्णविष्यत॥

लघु-सिद्धान्त-कौमुदी

इत्यदादयः २ ६०६, ७।१।६

लघु-सिद्धान्त-कौमुदी

अथ जुहोत्यादयः ६०६, ७।१।६

लघु-सिद्धान्त-कौमुदी

हु दानादनयोः १ ६०६, ७।१।६

न्यासः

शीङो रुट्?। , ७।१।६

"झादेशस्यातो रुडागमो भवति" इति। ननु न चेहाद्ग्रहणमस्ति, यदपि प्रकृतं तदपि प्रथमान्तम्(), षष्ठीनिर्देशेन चेहार्थः, तत्? कथं झादेशस्यातो रुडागमो भवतीति शक्यं विज्ञातुम्()? नैतदस्ति; "तस्मादित्युत्तरस्य" १।१।६६ इति शीङ इत्येषा

पञ्चमी अदित्यस्याः प्रथमायाः षष्ठीत्वं परिकलपयिष्यतीत्यदोषः। "शेरते" इति। "शूङः सार्वधातुके गुणः" ७।४।२१। ननु चात्र रुटा व्यवहितं सार्वधातुकम्(), तत्कुतो गुणः, न ह्ययं सार्वधातुकभक्तस्तत्? कथं व्यवधायको न स्यात्(), अचछब्दस्य सार्वधातुकावयवस्यायमवयव इति तद्ग्रहणेन गृह्रते, न सार्वधातुकग्रहणेन; अवयवावयवस्य समुदायानवयवत्वात्(); तथा हि--"छे च" (६।१।७३) इत्यत्रोक्तम्()--"नावयवावयवः समुदायावयवो भवति" इति? नैष दोषः; अवयवावयवोऽपि समुदायावयवो भवत्येव। तथा हि--देवदत्तोऽलंक्तियतामित्युक्ते देवदत्तस्य येऽवयवा हस्तपादायस्तवयवाश्चङ्गुल्यादयोऽलंक्रियन्ते। तस्मात्? सार्वधातुकावयवस्याच्छब्दस्य योऽवयवो रुडागयः, सोऽपि सार्वधातुकावयव इति तद्ग्रहणेन गृह्रते, अतो नास्ति व्यवधानम्()। यत्पुनः "छे च" ६।१।७१ इत्यत्रोक्तम्()--नावयवावयवः समुदायावयवो भवतीति, तत्? तत्सूत्रविहितमेव तुगागममभिप्रेत्योक्तम्(), स तुगवयवावयवोऽपि समुदायग्रहणेन न गृह्रत इति कृत्वा। कस्मात्? पुनर्न गृह्रते? ह्यस्वानुकर्षणसामथ्र्यात्()। तत्र हि चकारेण ह्यस्वोऽनुकृष्यते--ह्यस्वमात्रस्यागमित्वं यथा स्यात्(), ह्यस्वन्तस्य मा भूदिति। यदि ह्यस्वान्तस्यागमित्वं स्यात्, चिच्छिदतुः, चिच्छिदुरित्यत्र तुकोऽभ्यासग्रहणेन ग्रहणाद्धलादिशेषेण निवृत्तिः स्यात्()। यदि च तत्सूत्रविहितस्तुगवयवावयवः समुदायग्रहणेन न गृह्रते, तदा ह्यस्वमात्रस्यायमित्वे हलादिशेषेण निवृत्तिः स्यादेव; ह्यस्ववयवस्य तुकोऽभ्यासग्रहणेन ग्रहणात्()। ततश्च ह्यस्वानुकर्षणमनर्थकं स्यात्()। अथ किमर्थमदादेशस्य रुङ्? विधीयते, न झकारस्य विधीयताम्(), तत्रायमर्थः--अत #इति षष्ठी प्रकल्पयितव्या न भवति; झ इत्यस्य षष्ठ()न्तस्य प्रकृतत्वात्()? अत आह--"रुडयम्()" इत्यादि। यदि ककारमनुबन्धमासन्य पूर्वान्तः क्रियत, तदा शेरत इत्यत्र गुणो न स्यात्(); अनिगन्तत्वात्()। तस्मान्मा भूदेष दोष इति रुडयं परादिः क्रियते; परादिरपि क्रियमाणो यदि झकारस्यैव स्यात्? किमनिष्टं स्यात्()? इत्याह--"यदि" इत्यादि। झकारस्यैव रुट्? स्यात्? तदाऽदादेशो न स्यात्()। ततो यथा शयान्तै--इत्यत्राटा व्यवहितत्वाददादेशो न भवति; तथा शेरते इत्यत्रापि न स्यात्(); रुटा व्यवहितत्वात्()। तस्मादस्य दोषस्य परिहारार्थम्()--अत एव रुडागमो विधीयते, न झकारस्येति केचिद्व्याचक्षते, एतच्चासम्यक्(); झकारस्य क्रियमाणो रुट्? तस्यैव भक्तो भवति, तत्कथं तेन व्यवधानं भवेत्()! न हि स्वावयवेन व्यवदधात्येव। तस्मादसद्व्याख्यनमेतदित्यन्यथा व्याख्यायते--अदादेशो न स्यादित्यत्र झकारस्येत्येतदपेक्षते, तदयमर्थो भवति--यदि रुडागमो झकारस्यैव स्यात्? तदादादेशस्तस्यैव न स्यात्()। कस्य तर्हि स्यात्()? तस्यैव रुटः स्यात्(); "आदेः परस्य" १।१।५३ इति वचनात्()। अनेकाल्त्वेऽपि सर्वादेशो न भवति; रुट आनर्थक्यप्रसङ्गात्()। रुटो विधानसामथ्र्यान्न भविष्यतीति चेत्()? नैतदस्ति; उत्तरार्थ रुङविधानंस्यात्()। "बहुलं छन्दसि" ७।१।८ इत्यत्र रुजागमो यथा स्यात्()। न ह्दृश्रन्नित्यतटा सिध्यति। तस्माज्ताकश्रवणं रुङ्()विधेः प्रयोजनम्()। तदेतस्य दोषस्य निरासायादादेशस्य रुङ्विधीयते; न झकार्सय। "शीङः" इत्यनुबन्धेन निर्देशे यङ्लुग्निवृत्त्यर्थः--व्यतिशेस्यत इति॥

बाल-मनोरमा

शीङो रुट् २७३, ७।१।६

शीङो रुट्। "झोऽन्तः" इत्यतो झ इत्यनुवर्तते। "अदभ्यस्ता" दित्यतोऽदित्यनुवृत्तं षष्ठ()आ विपरिणम्यते। तदाह--शीङः परस्येति। रुटि उकार उच्चारणार्थः। टित्त्वादाद्यवयवः। शेध्वे इति। "षीध्वंलुङ्लिटा"मित्युक्तेर्न ढः। शिश्ये इति। शिश्यिषे। शिश्यिढ्वे--शिश्यिध्वे। शयितेति। शयिष्यते। शेताम् शयाताम् शेरताम्। सेष्व शयाथाम् शेध्वम्। शयै शयावहै शयामहै। अशेत अशयाताम् अशेरत। अशेथाः अशयाथाम्।अशेध्वम्। अशयि अशेवहि अशेमहि। शयीत। शयिषीष्ट। अशयिष्टेति। अशयिष्यतेत्यपि ज्ञेयम्। स्तौत्यन्ता इति। "ष्टुञ् स्तुता"वित्यतः प्राक्तना इत्यर्थः। ऊर्णुस्तूभयपदीति। ञित्त्वादिति भावः। यु मिश्रणेऽमिश्रणे चेति। अमिश्रणं पृथग्भावः। सेडयम्।

तत्त्व-बोधिनी

शीङो रुट् २३९, ७।१।६

शीङो रुट्। "झोऽन्तः" इत्यतो "झ" इत्यनुवर्तते। "अदभ्यस्ता"दित्यतोऽदिति च। तथा चेष्टानुरोधेनाऽदिति प्रथमान्तस्य षष्ठ()न्तत्वमाश्रित्य व्याचष्टे झादेशस्याऽत इति। झस्यैव रुडागमे तु अदादेशो दुर्लभ इत्यदित्यस्याप्यनुवृत्तिः कृता। शिश्ये इति। "एरनेकाचः" इति यण्। शेताम्। शयाताम्। शेरताम्। शेध्वम्।

---

सूत्रम्

काशिका-वृत्तिः

वेत्तेर् विभाषा ७।१।७

वेत्तेरङ्गादुत्तरस्य झादेशस्य अतो विभाषा रुढागमो भवति। संविदते, संविद्रते। संविदताम्, संविद्रताम्। समविदत, समविद्रत। वेत्तेः इति लुग्विकरणस्य ग्रहणं किम्? इह मा भूत्, विन्ते, विन्दाते, विन्दते इति।

न्यासः

वेत्तेर्विभाषा। , ७।१।७

"संविद्रते, संविदते" इति। "विद ज्ञाने" (धा।पा।१०६४)। "समोभ्यृच्छि" १।३।२९ इत्यादिनाऽत्मनेपदम्(), अदादित्वाच्छपो लुक्()। "संविद्रताम्(), संविदताम्()" इति। लोट्()। देरेत्वे कृते "आमेतः" ३।४।९० इत्याम्()। "वेत्तेरिति लुग्विकरणस्य ग्रहणं किम्()" इति। एवं मन्यते--विधेरिति सामान्यनिर्देशेन सर्वविदीनां ग्रहणमस्तु, लघु ह्येवं सूत्रं भवति, सत्यपि सर्वविधीनां ग्रहणे लुग्विकरणादेव भविष्यति, नान्यतः, विकरणेन व्यवधानात्()। यद्यविशेषेण विदीनां ग्रहण स्यात्? "विद विचारणे" (धा।पा।१४५०) इत्यस्मादपि रौधादिकात्? स्यात्(), न ह्यत्र विकरणो व्यवधायकः; धात्वन्तःपातित्वात्()? इत्यत आह--"इह" इत्यादि। "विन्ते, विन्दाते, विन्दते" इति। अनुदात्तेत्त्वादात्मनेपदम्(), "श्नसोरल्लोपः" ६।४।१११। अत्र तु "विन्दते" इति बहुवचनान्तं प्रत्युदाहरणम्()। एकवचनद्विवचनयोरुपन्यासो विदेर्विचारणार्थस्य रूपमिति प्रदर्शनार्थः; अन्यथा "विन्दते" इत्येताचत्युच्यमाने लाभार्थस्य विदेरेकवचनान्तमिदं रूपमिति कस्यचिद्भ्रान्तिः स्यात्()। श्तिपा निर्देशाद्यङ्लुकि न भवति--संवेविदते, व्यतिवेविदते॥ "अदुह्र" इति। स्वरिरेत्त्वादात्मनेपदम्()। ननु च विभाषाग्रहणानुवृत्तेरेवादुह्रतेत्यादि सिद्धम्(), किं बहुलवचनेनेति यश्चोदयेत्? तं प्रत्याह--"बहुलवचनात्()" इत्यादि। विभाषानुवृत्त्या हि विकल्पमात्रं लभ्यते, न त्वन्यत्रापि भवति। बहुलवचनादन्यत्रापि भवति। तेन विभाषायां प्रकृतायां बहुलवचनमिति भावः। "अदृश्रन्()" इति। दृशेर्लुङ्(), झेरन्तादेशः, "इरितो वाट ३।१।५७ इति च्लेरङ्, तस्य रुट्? "इतश्च" ३।४।१०० इतीकारलोपः, "संयोगन्तस्य" ८।२।२३ इति तकारस्य च, "अतो गुणे" ६।१।९४ पररूपत्वम्()। अथात्र "ऋवृशोरङि" (७।४।१६) इति गुण कस्मान्न भवति? "क्ङिति च" (१।१।५) इति प्रतिषेधादिति चेत्()? न; तसय ङित्येव विधानात्()। सार्वधतुकस्य ङितमाश्रित्य प्रतिषेधः प्राप्नोतीति चेत्()? न; एकादेशः पूर्वविधौ स्थानिवद्भवतीति यश्चोदयेत्(), तं प्रत्याह--"ऋदृशोऽङि गुणः" इति॥

बाल-मनोरमा

वेत्तेर्विभाषा ५२५, ७।१।७

वेत्तेर्विभाषा। "झोऽन्तः" इत्यतो झ इत्यनुवर्तते। "अदभ्यस्ता"दित्यत आदित्यनुवृत्तं षष्ठ()आ विपरिणम्यते। "शीङो रु"डित्यतो रुडिति च। तदाह-- वेत्तेः परस्येत्यादिना। अर्तिश्रुदृशिभ्य इति। "संपूर्वेभ्यस्त"ङिति शेषः। द्वयोरिति। भौवादिकस्य, इयर्तेश्चेत्यर्थः। अङ्विधौ त्विति। "सर्तिशास्त्यर्तिभ्यश्च" इत्यत्रेत्यर्थः। मा समृतेति। "उश्चे"ति सिचः कित्त्वान्न गुणः। "ह्रस्वादङ्गा"दिति सिचो लोपः। माङ्योगे मा समृतेत्यादि। माङ्योगाऽभावे तु समार्तेत्यादि इत्येवं

भौवादिकस्य ऋधातो रूपमित्यर्थः। माङ्योगादाडभावः। अथ माङ्योगाऽभावे आडागमे उदाहरति-- समार्तेति। सम् आ ऋ स् त इति स्थिते "उश्चे"ति कित्त्वाद्गुणनिषेधे "आटश्च" इति वृदिं()ध बाधित्वा परत्वात् "ह्रस्वादङ्गा"दिति सिचो लोपे "आटश्चे"ति ऋकारस्य वृद्धौ रपरत्वे रूपम्। न च सिज्लोपस्याऽसिद्धत्वात् आटश्चेति वृद्धौ कृतायां ह्रस्वादङ्गादिति सिज्लोपस्याऽप्रवृत्त्या समार्ष्टेत्येवोचितमिति वाच्यम्, "सिज्लोप एकादेशे सिद्धो वाच्यः" इति वचनेन पूर्वं सिज्लोपे पश्चादाटश्चेति वृद्धेः प्रवृत्तिसंभवादित्यलम्। इयर्तेस्त्विति। श्लुविकरणऋधातोरित्यर्थः। मा समरतेति। सर्तिश#आस्त्यर्ति" इत्यङ्, तत्र इयर्तेग्र्रहणादिति भावः। "ऋदृशोऽङि" इति गुणः। समारतेति। "आटश्च" इति वृद्धिः। इति चेति। इयर्ते रूपमत्यन्वयः। तदेवमर्तिश्रुदृशिभ्य इत्यत्र अर्तिप्रपञ्चमुक्त्वा श्रुदातोरुदाहरति -- संशृणुते इति। दृशेरुदाहरति--- संपश्यते इति। अकर्मकादित्येवेति। "समो गम्यृच्छिभ्या"मित्यत्र अक्रमकादित्यनुवृत्तेरभ्युपगतत्वेन तत्रोपसंख्यातवार्तिकेऽस्मंस्तदनुवृत्तेर्युक्तत्वादिति भावः। अत एवेति। "प्रमादिक इत्याहु"रित्यत्रान्वयः, सकर्मकत्वेनात्मनेपदाऽसंभवादिति भावः। अध्याहारो वेति। "इति कथयद्भ्यट इत्यध्याहारो वेत्यन्वयः। तथा च रक्षांसीति कथयद्भ्यः पुरा संशृणुमहे इत्यत्र कथन एव रक्षसामन्वितत्वात् श्रुवोऽकर्मकत्वादात्मनेपदं निर्बाधमिति भावः। धातोरिति। धातोरर्थान्तरे वृत्तेरिति, धात्वर्थेनोपसंग्रहादिति, प्रसिद्धेरिति, अविवक्षात इति चत्वारि वाक्यानि। अकर्मिका क्रियेति सर्वत्रान्वेति। "कर्मण" इति तु द्वितीयादिषु वाक्येष्वन्वेति। वहति भारमिति। प्रापयतीत्यर्थः। अत्र सकर्मकत्वमिति भावः। अस्याऽर्थान्तरे क्वचिदकर्मकत्वमुदाहरति-- नदी वहतीति। स्यन्दते इति। प्ररुआवतीत्यर्थः। धात्वर्थोपसङ्ग्रहे उदाहरति-- जीवतीति। नृत्यतीति। जीवेः प्राणधारणमर्थः। नृतेस्त्वङ्गविक्षेपः। उभयत्रापि कर्मणो धात्वर्थान्तर्भावान्न सकर्मकत्वमिति "सुप आत्मनः" इति सूत्रे भाष्ये स्पष्टम्। मेघो वर्षतीति। वर्षकर्मणो जलस्य प्रसिद्धत्वादकर्मकत्वम्। हितान्न य इति। हितात्पुरुषाद्यो न संशृणुते = स्वरहितं न मन्यते स किंप्रभुः, कुत्सित इत्यर्थः। अत्र स्वहितस्य वस्तुतः कर्मत्वेऽपि तदविवक्षया अकर्मकत्वमिति भावः। एवं चास्मिन्नकर्मकाधिकारे हनिगम्यादीनां सतोऽपि कर्मणोऽविवक्षया अकर्मकत्वं सिद्धमिति बोध्यम्। अकर्मकत्वनिर्णयोऽयं "लः कर्मणि" इत्यादौ उपयुज्यते। उपसर्गादस्यत्यूह्योर्वेति। "आत्()मनेपद"मिति शेषः। निवृत्तमिति। सोपसर्गयोरस्यत्यूह्योः सकर्मकत्वनियमादिति भावः।

तत्त्व-बोधिनी

वेत्तेर्विभाषा ४४८, ७।१।७

वेत्तेर्विभाषा। "शीङो रु"डित्यतो रुडनुवर्तते, "अदभ्यस्ता" दित्यतोऽदित्यनुवर्त्य षष्ठ()न्तत्वेन विपरिणम्यत इत्याह-- अतो रुडागम इति।

* अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्। अङ्विधौ त्विति। "सर्तिशास्त्यर्ती"ति लुप्तविकरणेन शासिना साहचर्यादिति भावः। मा समृतेति। "उश्चे" ति कित्त्वम्। माङ्()योगादडभावपः। समार्तेति। ननु सिज्लोपस्याऽसिद्धत्वात् "आटश्चे"ति वृद्धौ कृतायां "ह्रस्वादङ्गा"दिति सिज्लोपाऽप्रवृत्त्या समार्ष्टेति रूपं स्यात्। न च ह्रस्वाद्विहितस्येति व्याख्यानदिष्टसिद्धिरिति वाच्यं, विहितविशेषणे मानाऽभावात्। उदायत आहतेत्याद्यसिद्ध्यापत्तेश्च। अत्र केचित्-- "सिज्लोप एकादेशे सिद्धो वाच्यः" इत्यनेन पूर्वं सिज्लोपे पश्चाद्वृद्धिर्भवति, "एकादेशे" इति विषयसप्तम्याश्रयणात्। न चैवमध्यैष्टेति न सिध्येत्, तत्राप्युक्तरीत्या पूर्वं सिज्लोपे वृद्धौ सत्यामध्यैतेति रूपप्रसङ्गादिति वाच्यम्, "वार्णादाङ्गं बलीयः" इति पूर्वमेव गुणे कृते सिज्लोपो न प्रवर्तते इति "आटश्चे"ति वृद्धौ कृतायामध्यैष्टेति रूपस्य निर्बाधत्वात्। समार्तेत्यत्र तु "उश्चे" ति कित्त्वेन गुणाऽप्रवृत्त्या पूर्वमेव सिज्लोपे पश्चात् "आटश्चे"ति वृद्धिरिति वैषम्यमित्याहुः। अन्ये तु-- सिज्लोपानन्तरं यत्रैकदेशः प्रसज्यते तत्रैव सिज्लोपः सिद्धो, यथा अग्रहीदिति। न चात्र तादृशो विषयोऽस्ति। किं च "वार्णादाङ्गं बलीयः" इति पूर्वमेव गुणे कृते इत्यादि यदुक्तं, तदसत्। समानाश्रये हि वार्णादाङ्गं बलीयः। अन्यथा द्यौरिवाचरति द्यवतीत्यत्र यण्न स्यात्। किं

तु "पुगन्ते"ति गुण एव स्यात्। तथा च समार्ष्टेत्येव वक्तव्ये समार्तेति लेखकप्रमाद इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि ७।१।८

छन्दसि विषये बहुलं रुडागमो भवति। देवा अदुह्र। गन्धर्वा अप्सरसो अदुह्र। दुहेर्लङि झकारस्य अदादेशे कृते रुट्। लोपस्य आत्मनेपदेषु ७।२।४१ इति तकारलोपः। न च भवति, अदुहत। बहुलवचनादन्यत्र अपि भवति। अदृश्रमस्य केतवः। ऋदृशो ऽङि गुणः ७।४।१६ इत्येतदपि बहुलवचनादेव अत्र न भवति।

---

सूत्रम्

काशिका-वृत्तिः

अतो भिस ऐस् ७।१।९

अकारान्तादङ्गादुत्तरस्य भिसः ऐसित्ययम् आदेशो भवति। वृक्षैः। प्लक्षैः। अतिजरसैः। जरामतिक्रान्तैः इति विगृह्य समासे कृते ह्रस्वत्वे च भिस ऐसादेशो भवति। एकदेशविकृतमनन्यवद् भवति इति जरशब्दस्य जरसादेशः। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति परिभाषा इयम् अनित्या, कष्टाय क्रमणे ३।१।१४ इति निर्देशात्। अतः इति किम्? अग्निभिः। वायुभिः। तपरकरणं किम्? खट्वाभिः। मालाभिः। एत्वम् भिसि परत्वाच् चेदत ऐस् क्व भविष्यति। कृते ऽप्येत्वे भौतपूर्व्यादैस् तु नित्यस् तथा सति। अतः इत्यधिकारो जसः शी इति यावत्।

लघु-सिद्धान्त-कौमुदी

अतो भिस ऐस् १४२, ७।१।९

अनेकाल्शित्सर्वस्य। रामैर्H॥

न्यासः

अतो भिस ऐस्?। , ७।१।९

"समासे कृते" इत्यादि। "कुगतिप्रादयः" २।२।१८ इति क्रान्ताद्यर्थेऽतिशब्दस्य। "ह्यस्वत्वे च" इति। "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्यस्वः। ननु यदि ह्यस्वः क्रियते, तदा जराशब्दस्योच्यमानो जरसादेशो जरशब्दस्य न प्राप्नोतीति चोद्यमपाकर्तुमाह--"एकदेशविकृतम्()" इत्यादि। ननु चैकदेशविकृतस्यानन्यत्वेऽपि नैवात्र जरसादेशेन भवितव्यम्(), "सन्निपातलश्रणो विधिरनिमित्तं तद्विधातस्य" (व्या।प।१२) इति परिभाषया जरशब्दसन्निपातलक्षणो ह्रैस्? विधीयते, स कथं तस्य विधातस्य तद्विधातस्य" (व्या।प।१२) इति परिभाषया जरशब्दसन्निपातलक्षणो ह्रैस्? विधीयते, स कथं तस्य विघातस्य निमित्तं स्यात्? इत्याह--"सन्निपात" इत्यादि। अनित्यत्वं पुनरस्याः "कष्टाय क्रमणे" ३।१।१४ इत्यतः कष्टायेति निर्देशाद्वेवितव्यम्()। यदि ह्येषा नित्या स्यात्(), ततोऽकारान्तलक्षणो विधिरकारान्तताविधातस्य निमित्तं न स्यादिति "सुपि च" ७।३।१०२ इति दीर्धत्वं न स्यात्(), ततश्च "कष्टाय" ३।१।१४ इति निर्देशो नोपपद्यत इति। अथ किमर्थमैस्? विधीयते, न एसेव विधीयताम्(), तत्रापि "वृद्धिरेचि" ६।१।८५ इति वृद्धौ कृतायाम्()--वृक्षैः, प्लक्षैरित्यादि सिध्यति? कः पुनरेवं सतदि गुणो लभ्यते? न ह्रैस्येसि वा क्रियमाणो कश्चिल्लाधवकृतो विशेषः, प्रक्रियागौरवमेव तु स्यात्(); एवं विधाय लक्षणान्तरेण वृद्धेर्विधानात्()? अजितरसैरिति तु न सिद्ध्यति; वृद्ध्यभावात्()। वृद्ध्यभावसत्वकारान्तताभावदिति यत्किञ्चिदेतत्()। इह वृक्षैरित्यत्र भिसि परभूते "अतो भिस

ऐस्()" इत्यैस्भावः प्राप्नोति, "बहुवचने झल्येत्()" ७।३।१०३ इत्येस्वञ्च, उभयञ्चैतत्? सावकाशम्(), तत्रैस्भावस्य सावकाशत्वम्()--कृतेऽप्येत्त्वे भूतपूर्वमकारान्तत्वामाश्रित्य, एवत्वस्यावकाशः--भ्यसादिः" परत्वादेत्त्वेनात्र भवितव्यमिति यो मन्येत, तं प्रत्याह--"एत्त्वं भिसि परत्वात्()" इत्यादि। भिसि परत्वादेत्त्वञ्चेन्मन्यसे, अत ऐस्? क्व भविष्यति? अकारान्तात्? परस्य भिस ऐस्? विधीयते, तत्र यदि परत्वादेत्त्वं भवेत्? क्वेदानीमैस् भविष्यति? न क्वचित्(); अकारान्ततायाः सर्वत्रैत्त्वेन विहितत्वादिति भावः। ऐस्भावस्य विषयं दर्शयितुमाह--"कृतेऽप्येत्त्वे" इत्यदि। कथं पुनः कृत एत्त्व ऐस्? भवति, यावताऽकारान्तादङ्गादुत्तर्स्य भिस ऐसिकति, न च परत्वादेत्त्वे कृतेऽकारान्तादुत्त्रो भिस्? भवति, तत्र वचनप्रमाण्यात्? कृतेऽप्येत्त्वे भूतपूर्वमकारान्तत्वमाश्रित्यैस्मभविष्यति। "ऐस्तु नित्यस्तथा सति" इति। एवं कृतेऽप्येत्त्व ऐस्भावेन भवितव्यमकृतेऽपीति कृताकृतप्रसङ्गित्वात्(); ऐस्तु नित्यः, एत्त्वं त्वनित्यम्(); न हि तदैस्भावे कृते प्राप्नोति; झलो निमित्तस्याभावात्()। नित्यानित्ययोश्च तुल्यबलत्वाद्विप्रतिषेधो नोपपद्यते। ततश्च परमप्येत्त्वमपास्य बलवानैस्भविध्यतीति भावः॥

न्यासः

तितुत्रतथसिसुसरकसेषु च। , ७।१।९

अवशाद्यर्थोऽयमारम्भः। "तन्तिः" इति। "ननु विस्तारे" (धा।पा।१४६३) "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इति क्तिच्()। "अनुदात्तोपदेशवनतितनोति" ६।४।३७ इत्यादिनाऽनुनासिकलोपः प्राप्नोति, "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घश्च, तदुभयमपि "न क्तिचि दीर्घश्च" ६।४।३९ इति प्रतिषेधान्न भवति। "दोप्तिः" इति। "क्तिन्नाबदिभ्यश्च" (वा।३०७) इति क्तिन्()। रोदिति स्वपितीत्यत्र प्रतिषेधो न भवति; कृतीत्यनुवृत्तेः। "सक्तुः" इति। "सच समवाये" ["षच"--धा।पा।] (धा।पा।९९७)। "पत्रम्()" इति। "पत्लृ गतौ" (धा।पा।८४५)। "तनु विस्तारे" (धा।पा।१४८६)। "हस्तः" इति। "हस हसने" (धा।पा।७२१)["हसे"--धा।पा।] "लोतः" इति। "लूञ्? छदने" (धा।पा।१४८३)। "औणादिकस्य" इत्यादि। "ऊर्णेतेर्विभाषा" ७।२।६ इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेनौणादिक एव तशब्दे प्रतिषेधेन भवितव्यम्(), नान्यत्र। यत्र प्रतिषेधेन भवितव्यम्? तस्यैव ग्रहणं युक्तमित्यौणादिकतशब्दस्य ह्पबणमिष्यते, न तु क्तस्य। तेन हसितमित्यत्रेडागमो भवत्येव। "कुष्ठम्()" इति। "कुव निष्कषे" (धा।पा।१५१८)। "काष्ठम्()" इति। "काशृ दीप्तौ" (धा।पा।६४७)। शकारस्य व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्()। "कुक्षिः" इति। कुषेः "षढोः कः सि" ८।२।४१ इति कत्वम्(), "इण्कोः" ८।३।५७ इति षत्वम्()। "इक्षुः" इति। "इषु इच्छायाम्()" (धा।पा।१३५१) ["इष"--धा।पा।] पूर्ववत्कत्वषत्वे। "अक्षरम्()" इति। "अशू व्याप्तौ" (धा।पा।१२६४) [व्याप्तौ संघाते च--धा।पा।] व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), पूर्ववत्कत्वम्()। "शल्कम्()" इति "शल गतौ" (धा।पा।८४३)। "वत्सः" इति। "बद व्यक्तायां वाचि" (धा।पा।१००९), चत्र्वम्()--तकारः। "तितुत्रथेष्वग्रहादीनां वक्तव्यम्()" इति। "तितुत्रथ" ७।२।९ इत्यादिसूत्रमुपलक्षयति। तितुत्रतथेत्यैदौ ग्रहादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--इहापि "विभाषा" ७।२।६ इत्यनुवत्र्तते, स च व्यवसथितदिभाषा, तेन ग्रहादीनां प्रतिषेधो न भवति। "प्रहादयो ग्रहप्रकाराः" इति। अनेनादिशपब्दस्य प्रकारार्थतामाचष्टे। के पुनग्र्रहप्रकाराः? इत्याह--"येषाम्()" इत्यादि। "निगृहीतिः" इति। "स्त्रियां क्तिन्()" ३।३।९४, "ग्रहोऽलिटि दीर्घः" ७।२।३७ इति दीर्घः, ग्रहादीना सूत्रेण ६।१।१६ सम्प्रसरणम्()। "उपस्निहितिः" इति। "ष्णिह प्रीतौ" (धा।पा।१२००)। "निकुचितिः" इति। "कुच सङ्कोचे" ["सङ्कोचने"--धा।पा।] (धा।पा।१३६८)। अत्र त्वौणादिकानां ग्रहणं शक्यमकर्त्तुम्(); यथैव हि "उणादयो बहुलम्" (३।३।१) इति बहुलवचनात्? "ञमन्ताड्डः" (पं।उ।१।१०४) इत्येवमादाविण्व भवति, तथा तेष्वति न भवितव्यम्()? प्रपञ्चापर्थ तेषां ग्रहणं वेदितव्यम्()॥

बाल-मनोरमा

अतो भिस ऐस् २०१, ७।१।९

अतो भिस ऐस्। "अत" इति पञ्चमी। "अङ्गस्ये"त्यधिकृतंपञ्चम्या विपरिणम्यते। "अत" इति च तस्य विशेषणम्। विशेषणत्वाच्च तदन्तविधिः। तदाह--अकारान्तादिति। रुत्वविसर्गौ सिद्धवत्कृत्याह--रामैरिति। यद्यपि एसि विहितेऽपि वृद्धौ रामैरित्यादि सिद्धम्। नच अतो गुण इति पररूपं शङ्क्यम्, एकारोच्चारणसामर्थ्यादेवतदसम्भवात्। अन्यथा इसमेव विदध्यात्। तथापि एदैतोर्द्विमात्रत्वाऽविसेषात्प्रक्रियालाघवाच्च ऐसो विधिः। अलोऽन्त्यस्येत्यन्तादेशमाशङ्क्याह-अनेकाल्त्वादिति। अथ चतुर्थीविभक्तिः। तत्र ङे इति ङकारस्य लशक्केतीत्संज्ञायां लोपः। तदुच्चारणं तु घेर्ङितीत्याद्यर्थम्। राम-ए इति स्थिते।

तत्त्व-बोधिनी
अतो भिस ऐस् १६९, ७।१।९

अतो भिस ऐस्। ननु "ए"सित्येवास्तु। न च "अतो गुणे" इति पररूपापत्तिः। एकारोच्चारणवैयर्थ्यापत्तेः। अन्यता इसमेव विदध्यादिति चेत्सत्यम्। एदैतोर्द्विमात्रत्वाऽविशेषेण गौरवाऽभावात्। "बहुलं छन्दसि" इत्यत्र "अनतोऽपि भवति नद्यै"रिति काशिकोदाह्रतप्रयोगस्य ऐस्करणं विना अनिर्वाहाच्च। केचिदैस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति व्याचख्युः, तच्चिन्त्यम्। संनिपातपरिभाषया जरसादेशाऽप्रवृत्तेर्निर्जरैरित्येव भाष्ये सिद्धान्तिततत्वात्।

---

सूत्रम्
काशिका-वृत्तिः
बहुलं छन्दसि ७।१।१०

छन्दसि विषये बहुलमैसादेशो भवति। अतः इत्युक्तम्, अनतो ऽपि भवति नद्यैः इति। अतो न भवति , देवेभिः सर्वेभिः प्रोक्तम् इति।
न्यासः
बहुलं छन्दसि। , ७।१।१०

बहुलग्रहणं विस्पष्टार्थम्()। शक्यते हि मण्डूकप्लुतिन्यायेन बहुलग्रहणमनुवर्त्तयितुम्()॥

---

सूत्रम्
काशिका-वृत्तिः
न इदमदसोरकोः ७।१।११

इदम् अदसित्येतयोः अककारयोः भिस ऐस् न भवति। एभिः। अमीभिः। अकोः इति किम्? इमकैः। अमुकैः। अकोः इत्येतदेव प्रतिषेधवचनं ज्ञापकम् तन्मध्यपतितस्तद्ग्रहनेन गृह्यते इति। इदमदसोः कातिति नोक्तम्, विपरीतो ऽपि नियमः सम्भाव्येत इदमदसोरेव काततिति। ततश्च इह न स्यात्, सर्वकैः, विश्वकैः। इह च स्यादेव, एभिः, अमीभिः। प्रतिषेधकरणं विपरीतनियमनिवृत्त्यर्थम्।
लघु-सिद्धान्त-कौमुदी
नेदमदसोरकोः २८१, ७।१।११

अककारयोरिदमदसोर्भिस ऐस् न। एभिः। अस्मै। एभ्यः। अस्मात्। अस्य। अनयोः। एषाम्। अस्मिन्। अनयोः। एषु॥

न्यासः

नेदमदसोरकोः। , ७।१।११

अविद्यमानः ककारो ययोस्तवकौ। "एभिः" इति। इदमस्त्यदाद्यत्वम्(), "बहुवचने झल्येत्()" ७।३।१०३ इत्येत्त्वम्(), "हलि लोपः" ७।२।११३ इतीद्रूपस्य लोपः। "अमीभिः" इति। अदस एत्त्वे कृते "एत ईद्वहुवचने" ८।२।८१ इतीत्त्वम्(), दस्य च मत्वम्()। "इमकैः" इति। "अव्ययसर्वनाम्नामकच्प्रक्टोः" ५।३।७१ इत्यकच्(), "दश्च" ७।२।१०९ इति दकारस्य मत्वम्()। "अमुकैः इति। "अदसोऽसोर्दादु दो मः" ८।२।८० इति मत्वोत्वे। अथ "नेदमदसोः" इत्येवं कस्मान्नोक्तम्(), किमकोरत्यनेन, अकोरित्यनुच्यमाने सककारयोरपि अतिषेधः स्यादिति चेत्()? नैतदस्ति; इदमदसोर्हि प्रतिषेध उच्यमानः कः प्रसहगो या सककारयोः स्यात्()? नैव प्राप्नोति शब्दान्तरत्वादित्याह--"अकोरित्येत्()" इत्यादि। ज्ञापकस्य प्रयोजनम्()--अकज्वतां सर्वनामसंज्ञा सर्वादीनाम्(), स्वरादीनाञ्चाव्ययसंज्ञा। अथ "इदमदसोः कात्()" इति कस्मान्नोक्तम्(), तत्र पूवणैव सिद्धे नियमार्थं भविष्यति--इदमदसोः सम्बन्धो यो भिस्? तस्य कादेव परस्यैस्? भवति, इत्येवं विज्ञायमाने नियमे सर्वमभीष्टं नियमे सर्वमभीष्टं सिध्यत्येव, लघु च सूत्रं भविष्यति? सत्यमेतत्(); किन्त्वस्मिन्? सूत्रविन्यासे "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" (व्या।प।२१) इत्येषा न ज्ञापिता स्यात्()। विपरीतनियमोऽपि भन्दधीभिराशङ्क्येत--इदमदसोरेव कादिति। तत्रायं नियमार्थः स्यात्()--इदमदसोरेव यः ककारस्तस्मात्? परस्य भिस ऐस्भवतीति। ततो वि()आकैः, सर्वकैरित्यत्र न स्यात्(); नियमेन व्यावर्त्तितत्वात्()। इह च स्यादेव--एभिः, अमीभिरिति। नियमेनाव्यावर्त्तितत्वात्()। तस्माद्यथान्यासमेवास्तु॥

तत्त्व-बोधिनी

नेदमदसोरकोः ३०९, ७।१।११

नेदमदसोः। भाष्ये तु "इदमदसोः कात्"। नियमार्थमिदम्। "इदमदसोः कादेव भिस ऐस् नान्यतः"इति स्थितम्। नव्यास्तु--"इदमदसो का"दिति सूत्रिते तु "काद्भिस ऐस् इदमसोरेवे"ति विपरितनियमोऽपि संभाव्येत। तथाच "पाचकै"रित्यादि न सिध्येत्। किं तु "इदमदसोः काद्भिस ऐस्"तः"इत्येव सूत्रद्वयं सुवचमित्याहुः। स्मायादेशात्परत्वादनादेशः स्यादित्याशङ्कायामाह--नित्यत्वान्हेः स्मै इति।

---

सूत्रम्

काशिका-वृत्तिः

टाङसिङसाम् इनाऽत्स्याः ७।१।१२

अकारान्तादङ्गादुत्तरेषाम् टाङसिङसाम् इन आत् स्य इत्येते आदेशाः भवन्ति यथासङ्ख्यम्। टा इत्येतस्य इनादेशो भवति। वृक्षेण। प्लक्षेण। ङसि इत्येतस्य आत्। वृक्षात्। प्लक्षात्। ङसित्येतस्य स्यादेशो भवति। वृक्षस्य। प्लक्षस्य। अतः इति किम्? सख्या। पत्या। अतिजरसिन, अतिजरसातिति केचिदिच्छन्ति। यथा तु भाष्ये तथा न एतदिष्यते इति लक्ष्यते।

लघु-सिद्धान्त-कौमुदी

टाङसिङसामिनात्स्याः १४०, ७।१।१२

अदन्ताट्टादीनामिनादयः स्युः। णत्वम्। रामेण॥

न्यासः

टाङसिङसामिनात्स्याः। , ७।१।१२

"अतिजरसिना" इत्यादि। पूर्ववत्? समासे कृते ह्रस्वत्वे च जरसादेशः। "केचित्()" इति। सूत्रकारमतानुसारिणः। यदि ह्रतिजरसिनेत्येतत्? सूत्रकारस्य साधुत्वेनाभिमतं न स्यात्(), टेत्येतस्य नादेशमेव कुर्यात्()। तत्राप्येत्वे कृते वृक्षेणेत्यादि सिध्यति। कथमेतत्वमिति चेत्()? एवमेत्त्वविधौ योगविभागः करिष्यते। इदमस्ति--"बहुवचने झल्येत्()" ७।३।१०३, ततः "ओसि च" ७।३।१०४, ततः "आङि चापः" ७।३।१०५ इति; तत्राङीति योगविभागः कत्र्तव्यः--आङि परतोऽत एत्वं भवति--वृक्षेण, प्लक्षेण; ततः "आपः", "सम्बुद्धौ च" ७।३।१०६ इति। ननु च नादेशे सतीदम इद्रूपस्य हलि लोपः प्रसज्येत, ततश्चानेनेति न सिध्यति? नैष दोषः; "हलि लोपः" ७।२।११३ इत्यत्र "जराया जरसन्यतरस्याम्()" ७।२।१०१ इत्यतोऽन्यतरस्यांग्रहणमनुवत्र्तते, सा च व्यवस्तितविभाषा विज्ञायते तेन नादेशे कृते सतीद्रूपस्य लोपो न भवति। तदेवं नादेशेनैव वृक्षेणेत्यादि। सिध्यति। ततः स एव कत्र्तव्यः, नेनादेशः; कृतश्चासौ, अतोऽवगम्यते--नूनं सूतद्रकारस्याति जरसिनेत्येतत्साधुत्वेनाभिमतम्(), यस्य सिद्ध्यर्थमिनादेशं कृतवानितिति। तथा यद्यतिजरसादित्यस्य साधुत्वमभीष्टं न स्यात्? ङसेरद्भावं विदध्यात्()। तत्रापि अकः सवर्णे दीर्घत्वेन ६।१।९७ वृक्षादित्येवमादि सिद्ध्यत्येव। ननु चाकः सवर्णावपवादः "आतो गुणे" ६।१।९४ पररूपत्वं प्राप्नोति, तत्? कथं सिद्ध्यति? नैतदस्ति; अकारोच्चारणसामथ्र्यान्न भविष्यति पररूपम्(), अन्यथा तकारमेव विदध्यात्()। अत्र हि "आदेः परस्य" १।१।५३ इत्यकारस्य तकारे विहिते संयोगान्तलोपे वृक्षादित्येवमादि सिध्यत्येव। अत्र हि "आदेः परस्य" १।१।५३ इत्यकारस्य तकारे विहिते संयोगान्तलोपे वृक्षादित्येवमादि सिध्यत्येव। तस्मादकारोच्चरणसामथ्र्यात्? पररूपत्वं न भविष्यतीत्यद्भावो विधेयः, किमाद्भावेनेति? विहितश्चाद्भावः, ततोऽवसीयते--नूनमतिजरसादित्यस्य साधुत्वं सूत्रकारस्याभिमतं यत्सिद्ध्यर्थमाद्भावं विहितवानिति। एवं सूत्रकारस्य मतमनुसरन्तः केचिदतिजरसिना, अतिजरसादित्यस्य साधुत्वमिच्छन्ति। "यथा तु" इत्यादि। भाष्ये हि--"अथ किमर्थमिनादेश उच्यते, न नादेश एवोच्येत" इत्येवं ग्रन्थसन्दर्भेणेनादेशं प्रत्यख्याय नादेश एव व्यवस्थापितः। "अथ किमर्थमादिप्युच्यते, न अदेवोच्येत" इत्येवमादिना ग्रन्थसन्दर्भेण आदादेशं प्रत्याख्याय अदादेश एव व्यवस्थापितः। यदि चातिजरसिना, अतिजरसादित्यस्य साधुत्वमिष्टं स्यादिनादेशमाद्भावं च भाष्यकृन्न प्रत्याचक्षीत। न हि प्रयोजने सति प्रत्याख्यानं युक्तम्(), कृतञ्च तयोः प्रत्याख्यानम्(), ततोऽवगम्यते--"नैतदिव्यते" इति॥

बाल-मनोरमा

टाङसिङसामिनात्स्याः १९९, ७।१।१२

टाङसिङसाम्। "अङ्गस्ये"त्यधिकृतं पञ्चम्या, विपरिणम्यते। "अतो भिस" इत्यस्मात् "अत" इति पञ्चम्यन्तमनुवृत्तमङ्गस्य विशेषणम्। तदन्तविधिः। तदाह--अकारान्तादङ्गादिति। "परेषा"मिति शेषः। "क्रमा"दिति यथासङ्ख्यसूत्रलब्धम्। टादीनामिति। टा-ङसि-ङसामित्यर्थः। इनादय इति। "इन-आत्-स्य" एते इत्यर्थः। राम-इनेति स्थिते आद्गुणः। णत्वमिति। "अटकुप्वा"ङिति नकारस्य णकार इत्यर्थः। राम-भ्याम् इति स्थिते "न विभक्तौ"विति मस्य नेत्त्वम्।

तत्त्व-बोधिनी

टाङसिङसामिनात्स्याः १६७, ७।१।१२

टाङसि। "अतो भिस ऐ"सित्यस्मादनुवृत्तेन "अत" इत्यनेन सामानाधिकरण्येन विशेषणात् "अङ्गस्ये"त्याधिकृतं षष्ट()न्तमपि पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिस्तदाह--अकारान्तादङ्गादिति।

सूत्रम्

काशिका-वृत्तिः

ङेर् यः ७।१।१३

ङेः इति चतुर्थ्येकवचनस्य ग्रहणम्। अकारान्तादङ्गादुत्तरस्य ङे इत्येतस्य यः इत्ययम् आदेशो भवति। वृक्षाय। प्लक्षाय। अतः इति किम्? सख्ये। पत्ये। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति परिभाषेयम् अनित्या, तेन दीर्घो भवति।

लघु-सिद्धान्त-कौमुदी

ङेयः १४३, ७।१।१३

अतोऽङ्गात्परस्य ङेयदिशः॥

न्यासः

ङेर्यः।, ७।१।१३

"ङेः" इति। चतुर्थ्यकवचनस्येदं ग्रहणम्()। कस्मान्न भवति सप्तम्येकवचनस्य ग्रहणम्()? यदि हि तस्य ग्रहणं स्यात्(), तदा--अत्यन्तसंयोगे, भावे अपवर्गे, कारकमध्ये--इत्येवमादि न सिद्ध्यति। तस्मादेतेभ्यो निर्देशेभ्यो नेदमिह सप्तम्येकवचनस्य ग्रहणम्()। अतः परिशेष्याच्चतुर्थ्येकवचनस्य ग्रहणं न निश्चीयत इति। "तस्मै हितम्()" ५।१।५ इति निर्देशाच्च लिङ्गादत्तरत्राप्येतदेवानुवत्र्तते। "वृक्षाय" इति। "सुपि च" ७।३।१०२ इति दीर्घः। ननु "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।प।१२) इति परिभाषया उपस्थाने सति सन्निपातलक्षणो यविधिरकारविधातं प्रति निमित्तं नोपपद्यते, कुतो दीर्घत्वम्()? इत्याह--"सन्निपातलक्षणः" इत्यादि। अनित्यत्वं त्वस्याः प्रागेव प्रतिपादितम्()। अथ ङकारोच्चारणं किमर्थम्()? एकारमात्रस्य ग्रहणं मा भूदिति। यदि स्यात्(), पचे, यजे--इत्येवमादावपि स्यात्()। ननु च "अतो गुणे" (६।१।९७) इति पररूपत्वे कृते निमित्ताभावान्न भविष्यति? नैतदस्ति; नाप्राप्ते ह्रतो गुणे पररूपत्वेऽयमादेश उच्यते; स यथा वृक्षाय इत्यत्र "अतो गुणे" ६।१।९४ पररूपत्वं बाधते तथा पचे, यजे--इत्यत्रापि बाधेत प्रतिपदोक्तस्येकारस्य ग्रहणादिह न भविष्यतीति चेत्()? न; अस्याप्येकारस्य प्रतिपदोक्तत्वात्()। "टित आत्मनेपदानां टेरे" ३।४।७९ इति निर्द्दशादेकारः प्रतिपदोक्तो भवति। तस्माद्विशेषणार्थो ङकार कत्र्तव्यः॥

बाल-मनोरमा

ङेर्यः २०२, ७।१।१३

ङेर्यः। "हे"रित्येकारान्तात् षष्ठ()एकवचनम्, नतु ङि इति सप्तम्येकवचनं, व्याख्यानात्। "अतो भिस" इत्यतोऽत इति पञ्चम्यन्तमनुवर्तते। तेन च "अङ्गस्ये"त्यधिकृतं पञ्चम्या विपरिणतं विशेष्यते। तदाह--अतोऽङ्गादिति। अदन्तादङ्गादित्यर्थः। "सुपि चे"ति दीर्घं मत्वा आह--रामायेति। ननु यादेशस्य सुस्वाऽभावात्तस्मिन् परतः कथं सुपि चेति दीर्घ इत्यत आह--इहेति। नन्वत्र दीर्घो यञादित्वेन सुस्वेन च यादेशं परनिमित्तीकृत्य प्रवर्तते। सच यञंशेऽलाश्रयः। तस्मिन् कर्तव्ये यादेशस्य कथमिह स्थानिवद्भावः?, अनल्विधाविति तन्निषेधादिति चेत्, सत्यम्--इह दीर्घस्य यञादिसुबाश्रयतयाऽऽदेशगतयकाररूपालाश्रयत्वेऽपि तस्मिन् कर्तव्ये यादेशस्य स्थानिवद्भावे सुस्वं भवत्येव, दीर्घस्य आदेशगतयकाररूपालाश्रयत्वेऽपि स्थान्यलाश्रयत्वा।ञभावात्। "अकृत्सार्वधातुकयोदीर्घ" इति तु परमप्यत्र नोपन्यस्तम्, "अकृत्सार्वधातुकयोर्दीर्घ" इति तु परमप्यत्र नोपन्यस्तम्, "अकृत्सार्वधातुकयो"रिति पर्युदासबलेन तस्याऽसुप्येव प्रवृत्तेरित्याहुः। स्यादेतत्। "संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये"त्यस्ति परिभाषा।

संनिपातः=संश्लेषः, लक्षणं=निमित्तं यस्य सः संनिपातलक्षणः। विधि---कार्यम्। तद्विघातस्य। तं=संनिपातं विहन्तीति तद्विघातः। "कर्मण्यण्" इति कर्मण्युपपदे कर्तर्यण्। "हनस्तोऽचिण्णलो"रिति तकारः। "हो हन्ते"रिति कुत्वम्। संनिपातविघातकस्य न निमित्तमित्यर्थः। उपजीवकमुपजीव्यस्य विघातकं न भवतीति यावत्। प्रकृते चाऽदन्तसंबन्धमाश्रित्य प्रवृत्तो यादेशोऽदन्तसम्बन्धविघातकस्य दीर्घस्य कथं निमित्तं स्यादित्याशङ्क्य परिहरति--संनिपातलक्षण इत्यादिना। तृतीयाद्विवचनवद्दीर्घं सिद्धवत्कृत्याह-रामाभ्यामिति।

तत्त्व-बोधिनी

ङेर्यः १७०, ७।१।१३

ङेर्यः। "ङे"रिति चतुर्थ्येकवचनस्य ग्रहणं, न सप्तम्येकवचनस्य, व्याख्यानात्। अतएव "ङेरा"मित्यत्रास्याऽग्रहणम्, "समानाधिकरणे""स्त्रिया"मित्यादिनिर्देशाच्च। स्थानिवद्भवेनेति। आदेशालाश्रयविधौ स्थानिवत्त्वनिषेधाऽभावादिति भावः। सुपि चेति दीर्घ इति। न च परत्वात् "अकृत्सार्वधातुकयोः--" इति दीर्घोऽस्त्विति शङ्क्यम्, तत्र "अयङ्()यि क्ङिति" इत्यतः "क्ङिती"त्यनुवर्तनात्। अन्यथा "उरुये"त्यत्रापि दीर्घः स्यात्। उरुशब्दात्परस्य "टा" इत्यस्य "सुपां सुलुक्" इति यादेशः। एतच्च काशिकायां स्पष्टम्। यद्यपि ङेर्यादेशस्य ङित्त्वमस्ति "न ल्यपि" इति ज्ञापकेन अनुबन्धकार्येष्वनल्विधावपि स्थानिवत्त्वाभ्युपगमात्, तथापि शानचः शित्त्वेन लिङ्गेन क्वचिदनुबन्धकार्येषु स्थानिवत्त्वानभ्युपगमाद्यादेशे ङित्त्वं नेत्यभ्युपेत्येदं। विरोधाऽभावात्परत्वमत्राकिंचित्करभित्यनादरेण वा "अकृत्सार्वधातुकयोः-" इति दीर्घेण ज्यायानिति रूपसिद्धेरिति भाष्ये स्थितं, तदिदानीं विरुध्येत, "क्ङिती"त्यनुवृत्तौ तु "ज्याया"नित्यत्र "अकृत्सार्वे"ति दीर्घाऽप्रवृत्तेः। तथाच "अकृत्-" इति सूत्रे क्ङितीति नानुवर्तनीयम्, उरुया धृष्णुयेत्यत्र दीर्घाभावश्छान्दस इत्येवाभ्युपेयमिति चेत्, अत्राहुः, "ज्ञाजनोर्जा" इत्याकारग्रहणमुक्तपरिभाषालिङ्गम्। अन्यथा जमेव विदध्यात्। "अतो दीर्घो यञि" इति "जायते" "जानातीत्यादौ दीर्घसिद्धेरित्यपि भाष्ये स्थितं, तच्च ज्ञापकम् "अकृत्-" इत्यत्र क्ङितीत्यनुवृत्तावपि सङ्गच्छते। एवं च सति "ज्यादात्" इत्याकारग्रहणं लिङ्गमिति तु भाष्ये प्रौढवादमात्रमस्तु।

संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये"ति। संनिपातेति। संनिपातः संश्लेषः लक्षणं निमित्तं यस्य स संनिपातलक्षणः। तं संनिपातं विहन्तीति तद्विघातः। कर्मण्यण्, कुत्वतत्वे। उपजीवकविधिः स्वोपजीव्यविघातकविधेर्निमित्तं न भवतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सर्वनाम्नः स्मै ७।१।१४

अकारान्तात् सर्वनाम्नः उत्तरस्य ङेः स्मै इत्ययम् आदेशो भवति। सर्वस्मै। विश्वस्मै। यस्मै। तस्मै। कस्मै। अतः इत्येव, भवते। अथो ऽत्र अस्मै इत्यन्वादेशे ऽशादेशे एकादेशः प्राप्नोति? तत्र अन्तरङ्गत्वादेकादेशात् पूर्वं स्मैभावः क्रियते पश्चादेकादेशः इति।

लघु-सिद्धान्त-कौमुदी

सर्वनाम्नः स्मै १५३, ७।१।१४

अतः सर्वनाम्नो ङेः स्मै। सर्वस्मै॥

न्यासः

सर्वनाम्नः स्मै। , ७।१।१४

"भवते" इति। त्यदाद्यत्वं न भवति। "द्विपर्यन्तास्त्यदादयः" (वा।७।२।१०२) इति भवच्छब्दस्य त्यदादित्वाभावादकारान्तता न भवति। "अथो अत्र" इत्यादि चोद्यम्()। अत्र इदम्? ए इति स्थिते "इदमोऽन्वादेशे" २।४।३२ इत्यशादेशे कृते परमपि स्मैभावं बाधित्वा नित्यत्वादेकादेशोऽकः सवर्णे दीर्घत्वं ६।१।९७ प्राप्नोति। नित्यत्वं पुनरस्य कृताकृतप्रसङ्गित्वात्()। एकादेशे च कृतेऽनकारान्तत्वात्? स्मैबावो न प्राप्नोति। "तत्र" इत्यादि परीहारः। तत्रैकादेशे प्राप्तेऽन्तरङ्गत्वात्? पूर्वं स्मैभावो विधीयते, पश्चादेकादेशः। अन्तरङ्गत्वं तु स्मैभावस्यैकपदाश्रयत्वात्()। एकादेशस्य द्विपदाश्रयत्वात्? बहिरङ्गत्वम्()॥

बाल-मनोरमा

सर्वनाम्नः स्मै २१३, ७।१।१४

सर्वशब्दाच्चतुर्थ्येकवचने "ङेर्यः" इति प्राप्ते--सर्वनाम्नः स्मै। "अतो भिस" इत्यस्मादत इत्यनुवरते। "ङेर्य" इत्यतो "ङे"रिति च। तदाह--अतः सर्वेत्यादिना।

---

सूत्रम्

काशिका-वृत्तिः

ङसिङ्योः समात्स्मिनौ ७।१।१५

ङसि ङि इत्येतयोरकारान्तात् सर्वनाम्नः उत्तरयोः स्मात् स्मिनित्येतावादेशौ भवतः। ङसि इत्येतस्य स्मात्। सर्वस्मात्। विश्वस्मात्। यस्मात्। तस्मात्। कर्मात्। ङि इत्येतस्य स्मिन्। सर्वस्मिन्। विश्वस्मिन्। यस्मिन्। तस्मिन्। अन्यस्मिन्। अतः इत्येव, भवतः। भवति। सर्वनाम्नः इत्येव, वृक्षात्। वृक्षे।

लघु-सिद्धान्त-कौमुदी

ङसिङ्योः स्मात्स्मिनौ १५४, ७।१।१५

अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्॥

न्यासः

ङसिङ्योः स्मात्स्मिन्नौ। , ७।१।१५

ङेरल्पाच्तरस्य पूर्वनिपाते प्राप्ते परनिपातो वैचित्र्यार्थः॥

बाल-मनोरमा

ङसिङ्योः स्मात्स्मिनौ २१४, ७।१।१५

सर्वशब्दात्पञ्चम्येकवचने टाङसिङसामिति प्राप्ते-ङसिङ्योः। ङसिश्च ङिश्चेति द्वन्द्वः। "अतो भिस" इत्यस्मादत इति, "सर्वनाम्नः स्मै" इत्यतः "सर्वनाम्न" इति चानुवर्तते, तदाह--अतः सर्वेति। एतयोरिति। ङसिङ्योरित्यर्थः। एताविति। स्मात्स्मिनावित्यर्थः। स्मादादेशस्य स्थानिवद्भावेन विभक्तित्वान्न विभक्ताविति तकारस्य नेत्त्वमिति मत्वाह--सर्वस्मादिति।

---

सूत्रम्

काशिका-वृत्तिः

पूर्वाऽदिभ्यो नवभ्यो वा ७।१।१६

पूर्वादिभ्यो नवभ्यः सर्वनाम्नः उत्तरयोः ङसिङ्योः स्मात् स्मिनित्येतावादेशौ वा भवतः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। परस्मात्, परात्। परस्मिन्, परे। अवरस्मात्, अवरात्। अवरस्मिन्, अवरे। दक्षिणस्मात्, दक्षिणात्। दक्षिणस्मिन्, दक्षिणे। उत्तरस्मात्, उत्तरात्। उत्तरस्मिन्, उत्तरे। अपरस्मात्, अपरात्। अपरस्मिन्, अपरे। अधरस्मात्, अधरात्। अधरस्मिन्, अधरे। स्वस्मात्, स्वात्। स्वस्मिन्, स्वे। अन्तरस्मात्, अन्तरात्। अन्तरस्मिन्, अन्तरे। नवभ्यः इति किम्? त्यस्मात्। त्यस्मिन्।

लघु-सिद्धान्त-कौमुदी

पूर्वादिभ्यो नवभ्यो वा १५९, ७।१।१६

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। एवं परादीनाम्। शेषं सर्ववत्॥

न्यासः

पूर्वादिभ्यो नवभ्यो वा। , ७।१।१६

पूर्वेण नित्यं प्राप्तयोः स्मात्स्मिनोर्विकल्पार्थं वचनम्()। ननु च "पूर्वापरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्()" १।१।३३, "स्वमज्ञातिधनाख्यायाम्()" १।१।३४, "अन्तरं बहिर्योगोपसंव्यानयोः" १।१।३५ इति नवैव सूत्रे पूर्वादीनि पठ()न्ते, तदपार्थकं नवग्रहणम्(), नैतदस्ति; न हीह सूत्रपरिपठितानि पूर्वादीनि गृह्रन्ते, किं तर्हि? गणपठितानि। कुत एतत्? जसि हि सूत्रपरिपठितानां तेषां सर्वनामसंज्ञा, न ङसिङ्योः। "सर्वनाम्नः" ७।१।१४ चेतीहानुवत्र्तते, किं प्रयोजनम्()? विद्यमाने स्वे यजते, स्वाद्? बिभेतीत्यत्र मा भूत्()। तस्मात्? गणपरिपठितान्येव पूर्वादीनि गृह्रन्ते; तत्रासति नवग्रहणे त्यदादिभ्योऽपि स्यात्()। तस्मान्नवग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

पूर्वादिभ्यो नवभ्यो वा २१९, ७।१।१६

पूर्वादिभ्यो। "ङसिङ्योः स्मात्स्मिना"वित्यनुवर्तते इत्याह--एभ्य इति। पूर्वपरेत्यादित्रिसूत्रीनिर्दिष्टाः पूर्वादय इति विवक्षिताः। त्यदादयो हलन्ताधिकारे व्याख्यास्यन्ते। एकशब्दः सङ्ख्यायामिति। अर्थान्तरे तु द्विवचने बहुवचने अपि स्तः। "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे सङ्क्यायां च प्रयुज्यते। इति कोशः। स्यादेतत्--"त्वत्कपितृकः""मत्कपितृकः" इति बहुव्रीहिः। त्वकं पिता यस्य, अहकं पिता यस्येति लोकिकविग्रहवाक्यम्। लौकिकत्वं--प्रयोगार्हत्वम्। युष्मदस्मदोरज्ञाताद्यर्थे "अव्ययसर्वनाम्ना"मित्यकचि--युष्मकद् स् इति स्थिते, "ङे प्रथमयोः" इत्यमि,त्वाहौ सौ" इति त्वादेशेऽहादेशे च सति, "शेषे लोपः" इति लोपे, "अतो गुणे" अमि पूर्वे च त्वकम्, अहकमिति रूपम्। युष्मद् स्, पितृ स्, अस्मद्स्, पितृ स्--इत्यलौकिकं विग्रहवाक्यम्। प्रयोगानर्हत्वम्--अलौकिकत्वमिति स्थितिः। तत्र त्वत्कपितृको मत्कपितृक इति बहुव्रीहिदशायां कप्रत्ययो न संभवति, युष्मदस्मदोः सर्वनामत्वेनाऽकच्प्रसङ्गात्।

तत्त्व-बोधिनी

पूर्वादिभ्यो नवभ्यो वा १८४, ७।१।१६

एकशब्दस्याष्टावर्था उक्तास्तत्र विशेषमाह--सङ्ख्यायामिति। अन्येषु तु सप्तस्वर्थेषु वचनान्तरमपि स्यादेव, "एके" "एकोषा"मिति यथेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

जसः शी ७।१।१७

अकारान्तात् सर्वनाम्नः उत्तरस्य जसः शी इत्ययम् आदेशो भवति। सर्वे। विश्वे। ये। के। ते। दीर्घोच्चारणम् उत्तरार्हम्। त्रपुणी। जतुनी।

लघु-सिद्धान्त-कौमुदी

जसः शी १५२, ७।१।१७

अदन्तात्सर्वनाम्नो जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे॥

न्यासः

जसः शी। , ७।१।१७

शकरः सर्वादेशार्थः, असति तस्मिन्? "आदेः परस्य" १।१।५३ इति वचनादकारमात्रस्य स्यात्()। अथ दीर्घोच्चारणं किमर्थम्(), न ह्यस्व एव विधीयताम्(), अकारान्ताद्ध्ययं विधीयते। अत्राद्गुणेन" (६।१।८७) भवितव्यमिति नास्ति गुणे कृते ह्यस्वस्य दीर्घस्य वा विधाने विशेषः? इत्याह--"दीर्घोच्चारणम्()" इत्यादि। "नपुंसकाच्च" ७।१।१९ इति वक्ष्यति; तत्र त्रपुणी, जतुनी--इत्यत्र दीर्घस्य श्रवणं था स्यादित्येवमर्थं दीर्घोच्चारणम्()। सर्वनाम्न इत्येव--दक्षिणा इमे गाथकाः। अत इत्येव--भवन्तः॥

बाल-मनोरमा

जसः शी २१२, ७।१।१७

सर्वशब्दाज्जसि पूर्वसवर्णदीर्घे प्राप्ते--जसः शी। "अतो भिस" इत्स्मादत इत्यनुवर्तते। "सर्वनाम्नः स्मै" इत्यतः "सर्वनाम्न" इत्यनुवर्तते। तदाह--अदन्तादित्यादिना। "शी"ति दीर्घोच्चारणं "नपुंसकाच्चे"त्युत्तरार्थम्। तेन "वारिणी" इति सिध्यति। अनेकाल्वादिति। नतु शित्त्वप्रयुक्तं सर्वादेशत्वमत्रेति भावः। ननु "नानुबन्धकृतमनेकाल्त्वम्" इत्यस्ति परिभाषा। अनुबन्धः=इत्, तत्प्रयुक्तमनेकाल्त्वं सर्वादेशनिमित्तं न भवतीत्यर्थः। ततश्च "शी"त्यत्र शकारस्य लशक्वतद्धित इति इत्संज्ञकत्वात्कथं तत्प्रयुक्तमनेकाल्त्वम्। अत एव "अवर्णस्त्रसावनञः" इत्यत्र ऋकारमितमादाय "तृ" इत्यादेशस्य नानेकाल्()त्वम्। अन्यथा तस्यापि सर्वादेशत्वापत्तेः। अतः शित्त्वप्रयुक्तमेवात्र सर्वादेशत्वमाश्रयितुं युक्तमित्याशङ्क्य निराकरोति--नचेत्यादिना। "अर्वणस्तृ" इत्यादाविव नानुबन्धकृतमनेकाल्वमिति नेत्यन्वयः। शीति शकारस्य "लशक्वतद्धिते" इति इत्संज्ञा वक्तव्या। तेन च सूत्रेण प्रत्ययादिभूतानां लशकवर्गाणामित्संज्ञा विहिता। प्रकृते च "शी"त्यसय प्रत्ययाधिकारस्थत्वाऽभावान्न स्वतः प्रत्ययत्वं, किंतु जसादेशत्वेन स्थानिवद्भावात्प्रत्ययत्वं वक्तव्यम्। स्थानिवद्भावश्च आदेशभावमापन्नस्य "शी"त्यस्य भवति। एवंचादेशत्वसिद्धेः प्रागादेशविधिदशायां "शी"ति शकारस्य इत्संज्ञाया असिद्धेरनेकाल्त्वमुप्रतिहतम्। अत एव "शित्वात्सर्वादेश" इत्यपि निरस्तम्। "तृ" इत्यत्र त्वादेशभावात्प्रागेव ऋकारस्य इत्संज्ञकत्वान्न तत्प्रयुक्तमनेकाल्त्वमिति वैषम्यमित्यभिप्रेत्य परिहरति--सर्वादेशत्वात्प्रागिति। शीभावे सति सर्व ई इति स्थिते आद्गुणं सिद्धवत्कृत्याह--सर्वे इति।

बाल-मनोरमा

युष्मद्समदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वानावौ , ७।१।१७

युष्मदस्मदोः षष्ठी। षष्ठ()आदिविशिष्योरिति। षष्ठीचतुर्थीद्वितीयाभिः सह तिष्ठत इति षष्ठीचतुर्थीद्वितीयास्थौ, तयोरिति विग्रहः। षष्ठ()आदिविशिष्टयोरिति यावत्। षष्ठीचतुर्थीद्वितीयासु परतस्तिष्ठत इति विग्रहस्तु न भवति, "पदस्ये"त्यधिकारविरोधात्। पदस्येत्यनुवृत्तं हि द्विवचनेन विपरिणतं षष्ठीचतुर्थीद्वितीयास्थयोरित्यस्य विशेषणम्। न हि षष्ठ()आदिविभक्तिषु परतः पत्वमस्ति। भ्यामादौ तत्सत्त्वेऽपि तदितरत्र द्वितीयादौ तदभावात्। स्थग्रहणस्य तु प्रयोजनं मूल एव वक्ष्यते।

तत्त्व-बोधिनी

जसः शी १७९, ७।१।१७

जसः शी। दीर्घोच्चारणमुत्तरार्थं-वारिणी मधुनी। अनेकाल्त्वादिति। न तु शित्वादिति भावः। इत्संज्ञाया एवाभावादिति। "तृ"इत्यत्रोपदेशकाल एव ऋकारस्येत्संज्ञा, शीभावस्य तु सर्वादेशत्वानन्तरं स्थानिवत्त्वेन प्रत्ययत्वे लब्धे "लशक्वतद्धिते" इति प्रत्ययादेःशस्येत्संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

औङ आपः ७।१।१८

आबन्तादङ्गादुत्तरस्य औङः शी इत्ययम् आदेशो भवति। खट्वे तिष्ठतः। खट्वे पश्य। बहुराजे। करीषगन्ध्ये। ङकारः सामान्यग्रहणार्थः, औटो ऽपि ग्रहणं यथा स्यात्। औकारो ऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं न अस्ति को ऽयं प्रकारः। सामान्यार्थस् तस्य च असञ्जने ऽस्मिन् ङित्कार्यं ते श्यां प्रसक्तम् स दोषः। ङित्त्वे विद्याद् वर्णनिर्देशमात्रं वर्णे यत् स्यात् तच् च विद्यात् तदादौ। वर्णश्चायम् तेन ङित्त्वे ऽप्यदोषो निर्देशो ऽयं पूर्वसूत्रेण वा स्यात्।

लघु-सिद्धान्त-कौमुदी

औङ आपः २१७, ७।१।१८

आबन्तादङ्गात्परस्ययौङः शी स्यात्। औङित्यौकारविभक्तेः संज्ञा। रमे। रमाः॥

न्यासः

औङ आपः। , ७।१।१८

"वृद्धिरेचि" ६।१।८५ इति वृद्धौ प्राप्तायामयमारम्()भः। "औङः" इति प्रथमाद्वितीयाद्विवचनयोः सामान्येन ग्रहणम्()। "आपः" इति टाड्डाप्चापाम्()। "खट्वे" इति। "अजाद्यतष्टाप्()" ४।१।४ तिष्ठतः, पश्येति यथाक्रममनुप्रयोगयोरुपन्यासः प्रथमान्ततां द्वितीयान्तताञ्च प्रतिपादयितुम्()च अन्यथा खट्वे इत्युभयत्र रूपस्य तुल्यत्वात्? प्रथमान्ततादौ विशेषे सन्देहः स्यात्()। "बहुराजे" इति। करीषस्येव गन्धोऽस्येति बहुव्रीहिः, "उपमानाच्च" ५।४।१३७ इतीच्()। करीषगन्धेरपत्यमित्यण्(), तस्य "अणिञोः" ४।१।७८ इत्यादिना ष्यङादेशः। "यङश्चाप्()" ४।१।७४ इति चाप्()। "औकारोऽयम्()" इत्यादि। शीविधौ=शीविधाने। औकारोऽयं स्थानी ङिद्गृहीतो ङकारानुवन्ध उपात्त इत्यर्थः। ङकार इद्यस्य स ङित्()। ङिच्चास्माकं वैयाकरणानां मतेन शास्त्र औकारो नास्ति। ततः कोऽयं प्रकारः, किंशब्द कुत्सायां वत्र्तते। कुत्सितोऽयं सूत्रप्रणयनप्रकार इत्यर्थः। कुत्सितत्वं त्वसत एवोपादनात्()। ङकारासञ्जनप्रयोजनप्रदर्शनद्वारेण कुत्सितत्वं सूत्रप्रणयनस्य निरकर्त्तुमाह--"सामान्यार्थः" इति। यदि ह्यौकारोऽनुबन्धरहितः स्थानित्वेनोपादीयेत, ततः "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति द्वितीयाद्विवचनं न गृह्येत। अथ त्सय टकारोऽनुबन्ध उपादीयेत,

एवमपि प्रथमाद्विवचनं न गृह्येत। तस्मात्? सामान्येन द्वयोरपि ग्रहणं यथा स्यादित्येवमर्थं ङकार आसज्यते। ननु च द्वितीयाद्विवचने यष्टकारो नासौतस्यानुबन्धः, कस्य तर्हि? समुदायस्य। प्रत्याहरार्था हि येऽनुबन्धास्ते समुदायानुबन्धा एव विज्ञायन्ते, यथा--महिङो ङकारः, सुपश्च पकारः। तस्मान्निरनुबन्धकग्रहणे द्वयोरप्नुबन्धकत्वात्? सामान्येन ग्रहणं भविष्यति, तत्? कि ङकारेण? नैतदस्ति; समुदायानुबन्धकत्वेषऽवयवानुबन्धकत्वमपि ह्येषां प्रतिज्ञायते। न हि समुदायानुबन्धकत्वे प्रत्ययानुबन्धकत्वं विरुध्यते। हत्संज्ञको ह्यनुबन्ध उच्यते, हलश्चान्त्यस्येत्संज्ञा निधीयते। औटश्च टकारो यथा समुदायं प्रतयन्तस्तथा प्रत्ययं प्रत्यपि। तस्मात्? तस्य "हलन्त्यम्()" १।३।३ इतीत्संज्ञायां विहितायां यथासौ समुदायं प्रत्यनुबन्धस्तथा प्रत्ययमपि। प्रयोजनाभावात्? प्रत्ययानुबन्धकत्वमनुपपन्नमिति चेत्()? न; इहास्ति प्रयोजनम्()--द्वितीयाद्विवचनस्य सानुबन्धकत्वं यथा स्यात्()। यदि तर्हि प्रत्ययानुबन्धस्तदा सत्यपि ङकारासञ्जने "तदनुबन्धकग्रहणे नातदनुबन्धकस्य" (व्या।प।५४) इति "एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" (व्या।प।५२) इति च प्रथमाद्विवचनस्यैव ग्रहणं स्यात्(), तस्य हि ङकार एवैकोऽनुबन्धः; द्वितीयाद्विवचनसय तु स चान्योऽपि टकारः? नैष दोषः, ङकारोच्चारणसामर्थ्याद्()द्वितीयाद्विवचनमपि ग्रहीष्यते। अन्तरेणैव ङकारं प्रथमाद्विवचनस्यैव ग्रहणे सिद्धे ङकार उपदिश्यते सामान्यार्थः। यदि च सत्यपि ङकारे प्रथमाद्विवचनमेव गृह्यते ङकारोऽनर्थकः स्यात्()। कथं पुनरस्य ङ्कारस्येत्संज्ञा, यावतोपदेशे योऽन्त्यो हल्? तस्येत्संज्ञा विहिता, न चायमुपदेशेऽन्त्यः? भवतु वा तस्येत्संज्ञा, टकारस्य औटस्तर्हि न स्यात्(); कथं ह्येकस्मिन्नुपदेशे द्वावन्त्यौ स्याताम्()? नैष दोषः, औङिति वचनात्()।

द्वयोरप्यौकारयोरौङित्ययमादेशो विज्ञायते, तस्य चोपदेशोऽस्ति यथा "चक्षिङः ख्याञ्()" २।४।५४ इति ञकार उपदेशेऽन्त्य इति, यथा तस्येत्संज्ञा तथा ङकारस्यापि। टकारस्य तु पूर्वमेव क्रमेणेत्संज्ञा लोपश्च क्रियत इति नास्ति द#ओषः। यश्चासावादेश औकारः स एव शोभाषस्य स्थानित्वेननोपात्त इति वेदितव्यम्()। "तस्य च" इत्यादिना--ङकारासञ्जने यो दोषः प्राप्नोति तं दर्शयति। अनुबन्धभूतसय ङकारस्योपादानमासञ्जनम्()। ङिति यत्? कार्यं तत्? "ङित्कार्यम्()"--"सप्तमी" २।१।३९ इति योगविभागात्समासः। तत्पनः कार्यं "याडापः" ७।३।११३ इति आट्()। यदि सामान्यार्थोऽयं ङकार आसज्यते, एवं सति ङकारस्यासञ्जने ङिति यत्कार्यं तत्? ते=तव सूत्रकारस्य मतेन "श्यां प्रसक्तं" प्राप्तम्(), "स दोषः"। "याडापः" ७।३।११३ इति याडागमे सति खट्वे--इति रूपं न सिध्येत्()। अत श्यामिति कथमामाटौ स्याताम्()? कथञ्च न स्याताम्()? अनदीत्वात्(); अनदीत्वं च तस्यास्त्र्याख्यत्वात्()? नैतदस्ति; यथैव हि खट्वादयः स्त्रियां वत्र्तन्ते तथा शीशब्दोऽपि। तथा चाह लिङ्गकारिकाकारः--"ईदूदन्तं यच्चैकाच्? शरद्वरदृषत्प्रावृषश्च" इति। तस्मात्? स्त्र्याख्यत्यादयमपि नदीसंज्ञक एव; श्रुतितामानाधिकरण्यात्()। श्रुतौ वत्र्तमानः शीशब्दो नदोसंज्ञां प्रतिपद्यते। श्रुतिः स्वरूपमेव। "ङित्त्वे" इत्यादि। "याडापः" ७।३।११३ इत्यत्र "धेर्ङिति" ७।३।१११ इत्यतो ङिद्ग्रहणमनुवत्र्तते। तत्र ङिदिति नायं बहुव्रीहिः--ङकार इद्? यस्य स ङिदिति, किं तर्हि? तत्पुरुषः--ङकार एव इद्? ङित्()। तस्मादौकारो यो ङित्? तस्मिन्नभ्युपेते सति ङितीत्यस्मिन्निर्देशे ङकारस्येत्संज्ञकस्य वर्णमात्रसक्य निर्देशं विद्यादवगच्छेत्? प्राज्ञः। मात्रशब्दस्ततोऽन्यव्यवच्छेदाय। यदि ङितीत्यत्र ङकारस्य वर्णमात्रस्य निर्द्देशो न ङकारानुबन्धस्य प्रत्ययस्य तत्? किमिति श्यां ङित्कार्यं न भवति? इत्याह--"वर्णे" इत्यादि। वर्णे परभूते यत्? कार्यं विधीयते तत्? "यस्मिन्? विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) इति परिभाषया तदादौ वर्णादौ विद्यात्()। ततश्च यत्र ङकार आदावित्संज्ञकस्तत्रैव भवितव्यं याटा, न श्याम्()। न ह्यत्रादौ ङकारः, क्व तर्हि? अन्ते। एवमयं ङित्त्वमभ्युपेत्य परीहार उक्तः। इदानीं ङित्त्वमनभ्युपेत्य परोहारान्तरमाह--"वर्णश्चायम्()" इत्यादि। वार्थे चशब्दः। वर्णो वायमिति यावत्()।

औङित्यौवर्णौऽयमुपत्तः प्रत्यविशेषणार्थः, न तु प्रत्ययः। अङ्गाधिकारादादन्तात्? परो यः सामर्थ्यप्राप्तः प्रतययः स औकारेण विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीति। तेनायमर्थो जायते--औकारान्तेऽस्य प्रत्ययस्येति। औकारान्तत्वं व्यपदेशिवद्भावात्()। ङकारश्चायं नानुबन्धः, मुखसुखार्थस्त्वयम्(), यथा--"ऋदोरप्()" ३।३।५७ इत्यत्र दकारः। वर्णरूपतया च तथौकारस्य ग्रहणे सति द्वयोरप्यौकारयोः शीभावः सिद्धौ भवति। प्रत्ययग्रहणे हि निरनुबन्धक

(व्या।प।५३) परिभाषोपतिष्ठते, न चेह प्रत्ययग्रहणम्()। किं तर्हि? वर्णमात्रस्य। ननु च द्वावप्येतौ प्रत्ययौ, तत्किमिति नोपतिष्टते? सत्यम्(); यद्यपि तौ प्रत्यौ, तथधापि नात्र शास्त्रे प्रत्यरूपेणौकार उपात्तः? किं तर्हि? वर्णरूपेणेति, अतस्तस्या नेहोपस्थानम्()। ङित्त्वमनभ्युपेत्य परीहारान्तरमाह--"निर्द्देशोऽयम्()" इत्यादि। नेह व्याकरण औकारसय ङकारोऽनुवग्ध उपादीयते। पूर्वाचार्याणां तु सूत्रे द्वे अप्येते द्विवचने ङिती पठ()एते। तथा हि "आबौटावौङ्()" इति तत्र सूत्रपाठः। अतस्तत्सत्रानुरोधेनायं निर्द्देशः, तस्येह ग्रहणं यथा स्यात्()। तस्मान्ङित्त्वाभावान्नास्ति ङित्कार्यस्य प्रसङ्गः। न हि पूर्वाचार्यसूत्रानुरोधेनेहानुबन्धकार्याणि क्रियन्ते। "तेन ङित्त्वेऽप्यदोषः" इति। किं पुनर्यत्र नास्त्येव ङित्त्वमित्यपि शब्दस्यार्थः। तदेतदुक्तं भवति--ङित्त्वेऽब्युपेते सति ङित्त्वे विद्याद्वर्णनिर्देशमात्रम्()। "वर्णे यत्स्यात्? तच्च विद्यात्तदादौ" इत्येवं ङित्कारयप्रसङ्गनिरासाय यस्मातद्? परीहार उक्तः। यस्माद्वर्णश्चायमित्यनेन, "निर्देशोऽयं पूर्वसूत्रेण वा स्यात्()" इत्यनेन चौकारयोङित्त्वभावः प्रतिपादितः। तेन हेतुना सत्यपि ङित्त्वेऽप्यदोषः। किं पुनर्नास्त्येव यत्र ङित्त्वमिति॥

बाल-मनोरमा

औङ आपः २८५, ७।१।१८

अथ रमा औ इति स्थिते--ओङ आपः। "आप इति पञ्चमी। प्रत्ययग्रहणपरिभाषया आबन्तं विवक्षितम्। "अङ्गस्ये"त्यदिकृतं पञ्चम्या विपरिणम्यते। "औङः" इति षष्ठी। "जसः शी"त्यतः "शीत्यनुवर्तते। तदाह-- आबन्तादिति। औङ्शब्दस्याऽप्रसिद्धार्थत्वादाह--औङितीति। संज्ञेति। "प्राचां शास्त्रे स्थिते"ति शेषः। रमे इति। "रमा औ" इति स्थिते शीभावे तस्य स्थानिवत्त्वेन प्रत्ययत्वा"ल्लशक्वतद्धिते" इति शस्येत्संज्ञायां लोपे "आद्गुणः" इति एकारः। "यस्येति चे"ति लोपस्तु न, अभत्वात्। जसि (अकः सवर्णे) इति सवर्णदीर्घं मत्वाह--रमा इति। पूर्वसवर्णदीर्घस्तु न, न भवति, "दीर्घाज्जसि चे"ति निषेधात्। हे रमा स् इति स्थिते।

तत्त्व-बोधिनी

औङ् आपः २४७, ७।१।१८

अथाऽडजन्ताःस स्त्रीलिङ्गाः। रमेति। रमते इति रमा। "रमु क्रीदायाम्ित्यस्मात्पचाद्यति टाप्। लिङ्गविशिष्टपरभाषया सावदयः। हल्ङ्()यादिलोपःष न चात्राबन्ततत्वादेव स्वाद्युत्पत्तिरेस्तु, प्रत्ययान्तस्याऽप्रातिपदिकत्वेऽपि ङ्योपोः पृथग्ग्रहणादिति वाच्यं, ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात्प्रत्याख्याततत्वाच्च तद्ग्रहणस्यष शी स्यादिति। "जसः शी"त्यतः "शी"त्यनुवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

नपुंसकाच् च ७।१।१९

नपुंसकादङ्गादुत्तरस्य औङः शी इत्ययम् आदेशो भवति। कुण्डे तिष्ठतः कुण्डे पश्य। यस्य इति लोपः प्राप्तः। श्यां प्रतिषेधो वक्तव्यः। इति न भवति। दधिनी। मधुनी। त्रपुणी। जतुनी।

लघु-सिद्धान्त-कौमुदी

नपुंसकाच्च २३६, ७।१।१९

क्लीबादौङः शी स्यात्। भसंज्ञायाम्॥

न्यासः

नपुंसकाच्च। , ७।१।१९

"दधिनी" इति। "इकोऽचि विभक्तौ" ७।१।७३ इति नुम्()॥

बाल-मनोरमा

नपुंसकाच्च ३०८, ७।१।१९

नपुंसकाच्च। "जसः सी" त्यत्रः "शी"ति "औङ आपः" इत्यतः "औङि"ति चानुवर्तते, तदाह--क्लीबादिति। ओङित्यौकारविभक्तेः संज्ञेत्युक्तम्। ज्ञानं ई इति स्थिते।

तत्त्व-बोधिनी

नपुंसकाच्च २७१, ७।१।१९

नपुसंकाच्च। "जसः शी" "औङ् आपः" इत्यतः "शी""औङ"इति चानुवर्तत इत्यभिप्रत्याहक्लीबात्परस्येत्यादि।

यस्येति। इश्च अश्च यं, तस्य--[यस्य]। तदाह---इवर्णावर्णयोरिति। "ईति चे"ति चकारेण "नास्त द्धिते"इत्यतस्तद्धितोऽनुकृष्यते, तदाह---ईकार तद्धिते चेति। औङः श्यामिति। विभक्त्य पेक्षया स्त्रीलिङ्गनिर्द्देशः। नेदं वचनं कर्तव्यम्। "विभाषा ङिश्यो"रित्यतः "श्यां"मिति प्रकृतं, "न संयोगात्" इत्यतो "ने"ति च, तत्रापि सबन्धमात्रं कर्तव्यं, यस्य ईकारे तद्धिते च लोपो भवति, श्यां नेत्याकरः।

---

सूत्रम्

काशिका-वृत्तिः

जश्शसोः शिः ७।१।२०

नपुंसकादङ्गादुत्तरयोः जश्शसोः शि इत्ययम् आदेशो भवन्ति। कुण्डानि तिष्थन्ति। कुण्डानि पश्य। दधीनि। मधूनि। त्रपूणि। जतूनि। जसा सहचरितस्य शसो ग्रहणादिह न भवति, कुण्डशो ददाति, वन्शः प्रविशन्ति इति।

लघु-सिद्धान्त-कौमुदी

जश्शसोः शिः २३८, ७।१।२०

क्लीबादनयोः शिः स्यात्॥

न्यासः

जसिशसोः शिः। , ७।१।२०

जसीत्यत्रेकार उच्चारणार्थः। "कुण्डानि" इति। "नपुंसकस्य झलचः" ७।१।७२ इति नुम्(), "सर्वनामस्थाने च" ६।४।८ इति दीर्घ-। अथेह कस्मान्न भवति--कुण्डं कुण्डं ददाति, "संख्यैकवचनाच्च वीप्सायाम्()" ५।४।४३ इति शस्(), कुणाडशो ददाति? इत्याह--"जसा साहचर्यात्()" इत्यादि। एतच्चोद्यपरिहारवचनं यदार्थप्रकरणादेर्वृत्तो कुण्डादिशब्द एकवचनो भवति तदा वेदितव्यम्(), न त्वन्यदा। शस्विधौ हि वृत्तिस्थैकार्थताऽऽश्रीयते, न वाक्यस्था। अर्थप्रकरणादिरहितः कुण्डादिशब्दो वृत्तौ निवृत्तायां विभक्तावेकार्थो न भवतीति शसा न भवितव्यम्()। कस्मात्? पुनः कुण्डादिशब्दो वृत्तौ निवृत्तायं विभक्तावेकार्थो न भवतीति शसा न भवितव्यम्()। कस्मात्? पुनः कुण्डादिशब्दो वृत्तावेकार्थो न भवति? जातिशब्दत्वात्()। जातिशब्दा हि नैकसयामेव जात्याधारभूतायां व्यक्तौ वत्र्तन्ते। किं तर्हि? अनेकस्यामपि। एवञ्च

यत्तत्र शस्विधौ प्रत्युदाहरणमुपन्यस्तम्()--"संख्यैकवचनादिति किम्()? घटं घटं ददाति", तदुपपद्यते। यद्यर्थप्रकरणादिरहितो जातिशब्दो वृत्तावेकार्थो न भवति, तदा न भवितव्यमेव शसा॥

बाल-मनोरमा

जश्शसोः शिः ३१०, ७।१।२०

जश्शसोः शिः। "स्वमोर्नपुंसका"दित्यतो नपुंसकादित्यनुवर्तते। तदाह--क्लीबादिति। ज्ञान शि इति स्थिते स्थानिवत्त्वेन प्रत्ययत्वाल्लशक्वतद्धिते इति शकार इत्।

बाल-मनोरमा

बहुवचनस्य वस्नसौ , ७।१।२०

बहुवचनस्य वस्नसौ। उक्तविधयोरिति। षष्ठ()आदिविशिष्टयोर्युष्मदस्मदोरित्यर्थः।

तत्त्व-बोधिनी

जश्शसोः शिः २७२, ७।१।२०

जश्शसोः। जसा साहचर्यादिह सुबेव शस् गृह्रते। तेनेह न---कुण्डशो ददाति।

---

सूत्रम्

काशिका-वृत्तिः

अष्टाभ्य औश् ७।१।२१

अश्टाभ्यः इति कृताकारो ऽष्टन्शब्दो गृह्यते। तस्मादुत्तरयोः जश्शसोः औशित्यादेशो भवति। अष्टौ तिष्ठन्ति। अष्टौ पश्य। कृताकारस्य ग्रहणं किम्? अष्ट तिष्ठन्ति। अष्ट पश्य। एतदेव कृतात्वस्य ग्रहणं ज्ञापकम् अष्टन आ विभक्तौ ७।२।८४ इत्यात्वविकल्पस्य। षड्भ्यो लुक् ७।१।२२ इत्यस्य अयम् अपवादः, नाप्राप्ते तस्मिन्निदम् आरभ्यते। यस् तु सुपो धातुप्रातिपदिकयोः २।४।७१ इति, तस्मिन् प्राप्ते च अप्राप्ते च इति स न बाध्यते, अष्टपुत्रः, अष्टभार्यः इति। तदन्तग्रहणम् अत्र इष्यते। परमाष्टौ। उत्तरमाष्टौ। प्रियाष्टनः इत्यत्रात्वस्य अभावादौश्त्वं न भवति।

लघु-सिद्धान्त-कौमुदी

अष्टाभ्य औश् ३०२, ७।१।२१

कृताकारादष्टनो जश्शसोरौश्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। अष्टौ। अष्टौ। अष्टाभिः। अष्टाभ्यः। अष्टाभ्यः। अष्टानाम्। अष्टासु। आत्वाभावे अष्ट, पञ्चवत्॥

न्यासः

अष्टभ्य औश्?। , ७।१।२१

"कृताकारोऽष्टन्()शब्दो गृह्रते" इति। यत्रात्वं तत्रौश्त्वं यथा स्यादित्यभिप्रायः। "अष्टौ तिष्ठन्ति" इति। आत्वे कृत औश्त्वम्()। "अष्ट तिष्ठन्ति" इति। अत्रात्वाभावादौश्त्वं न भवति। कथं पुनरत्रात्वाभावः, यावता न तत्रात्वविधौ विकल्पस्य प्रतिपादकं किञ्चिदन्यतरस्यांग्रहणादिकमसति? इत्याह--"एतदेव" इत्यादि। कृतात्वनिर्देशस्यैतदेव प्रयोजनम्()--यत्रात्वं तत्रैवौशत्वं यथा स्यात्(), अन्यत्र मा भूदिति। यदि च नित्यमात्वं स्यात्? तदा कृतात्वस्य

निर्देशोऽनर्थकः स्यात्(); व्यवर्त्याभावात्? "अष्टनः" इत्येवं ब्राऊयात्()। तदेवं लघुनिर्देशे सम्भवति सति यत्? कृतात्वस्य निर्देशो गरीयान्? क्रियते, तज्ज्ञापयति--विकल्पेनात्वं भवतीति। यद्यपि चायमर्थः "अष्टनो दीर्घात्()" ६।१।१६६ इत्यत्रापि ज्ञापितः, तथापि विस्मरणशीलानामनुग्रहाय पुनरिह ज्ञाप्यते। अथाष्टपुत्रः, अष्टभार्य इत्यत्र कस्मान्न भवति, "सुपो धातुप्रातिपदिकयोः" (२।४।७१) इति लुका बाधितत्वादिति चेत्()? न; इहापि तर्हि न स्यात्()--अष्टौ तिष्टन्ति, अष्टौ पश्येति। "षड्भ्यो लुक्? ७।१।२२ इति लुका बाधितत्वात्()। अथौश्भावस्य लुगपवादत्वादत्र लुक्रं बाधित्वा स एव भवति। पूर्वत्रापि तर्हि स एव स्तात्(), अत एव हेतोः? इत्याह--"षड्भ्यो लुगित्यस्यापवादोऽयम्()" इति।
अत्रैवोपपत्तिमाह--"नाप्राप्ते" इत्यादि। "षड्भ्यो लुक्()" ७।१।२२ इत्यसमासे प्राप्नोति--अष्टौ तिष्ठन्तीत्यादौ, समासे च--अष्टपुत्र इत्यादौ। तस्मान्नाप्राप्ते अष्टभार्यः--इत्यत्र सुब्लुकैव भवितव्यमित्यौशत्वं न भवति। "तदन्तग्रहणम्()" इत्यादि। किं पुनरिष्यमाणमपि लभ्यते? "अङ्गाधिकारे तस्य तदुत्तरपदस्य च" (पु।प।वृ।८५) इति वचनात्()। अथ वा--अष्टाभ्य इत्यर्थप्रधाननिर्देशोऽ यं बहुवचननिर्देशादवसीयते। शब्दप्रधाने हि निर्देशे "अष्टनः" ब्राऊयात्()। अर्थाच्च शब्दद्वारेणैव जश्शसोः परत्वं विज्ञायत इति केवलाच्चाष्टनो भवति। तदन्ताच्चातदन्तेऽपि हि शब्दद्वेरेणार्थात्? परौ जश्शसौ भवत इति। यदि तदन्तग्रहणमत्रेष्यते, प्रियाष्टन इत्यत्रापि प्राप्नोति? अत आह--"प्रियाष्टनः" इत्यादि। प्रिया अष्टौ येषामिति बहुव्रीहिः। ननु च विकल्पेनात्वम्()। तत्र यदात्वं न भवति तदा मा भूदौश्त्वम्(); यदात्वं तदा स्यादेव; व्यवस्थितविभाषयात्रात्वं न भविष्यतीत्यदोषः॥

बाल-मनोरमा

अष्टाभ्य औश् , ७।१।२१

अष्टाभ्य औश्। "जश्शसोः शिः" इत्यतो जश्शसोरित्यनुवर्तते। अष्टाभ्य इति पञ्चमी। "तस्मादित्युत्तरस्ये"त्युपतिष्ठते। "अष्टा" इत्याकारान्तशब्दो विवक्षितः। तदाह--कृताकारादित्यादिना। नकारस्याऽऽत्वे कृते सति योऽष्टाशब्दास्तस्मादित्यर्थः। शित्त्वात्सर्वादेशः। "आदेः परस्ये"ति तु नात्र प्रवर्तते, "अनेकाल्शि"दिति परेण तस्या बाधात्। औशादेशोऽयं "षड्भ्यो लु"गित्यस्यापिबादः। ननु जश्शसोः परतोऽष्टन्शब्दस्यात्वं नास्त्येव, "अष्टन आ विभक्तौ" इति आत्वविधौ हलीत्यपकर्षस्य उक्तत्वात्। ततश्च जश्शसोरौ()इआधौ "कृताकारादष्टन" इत्यनुपपन्नम्। तत्राह-अष्टभ्य इति वक्तव्य इत्यादि। भ्यसि अष्टभ्यः, अष्टाभ्य इति रूपद्वये सत्यपि औ()इआधौ लाघवादष्टभ्य इत्येव निर्देश उचितः, आकारनिर्देशात्तु जश्शसोरचि परतोऽप्यात्वं विज्ञायत इत्यर्थः। ननु "अष्टन आ विभक्तौ" इति हलादिविभक्तौ अष्टनो नित्यमात्वविधानादष्टाभ्य इत्येव निर्देष्टव्यं, प्रामाणिकगौरवस्याऽदोषत्वात्। ततश्च औ()इआधौ "अष्टाभ्य" इति निर्देशो जश्शसोरष्टनः कथमात्वं ज्ञापयेदित्यत आह--वैकल्पिकं चेदमिति। ज्ञापकादिति। "अष्टनो दीर्घा"दिति सूत्रे दीर्घान्तादष्टन्शब्दात्पराऽसर्वनामस्थानविभक्तिरुदात्ता स्यादिति तदर्थः। अष्टाभिर्विकर्षयतीत्यत्र भकारादिकार उदात्तः। "अनुदात्तं पदमेकवर्ज"मिति शिष्टमनुदात्तम्। दीर्घादिति विशेषणादष्टभिरित्यत्र आत्वाऽभावस्थले भिस उदात्तत्वं न भवति, किंतु मध्योदात्तत्वमेव, "झल्युपोत्तम"मित्यस्य प्रवृत्तेः। षट्()चतुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे विद्यमानमुपोत्तममुदात्तं स्यादिति तदर्थः। यदि तु अष्टन आत्वं नित्यं स्यात्तर्हि अष्टभिरिति ह्रस्वान्तव्यावृत्तये क्रियमाणं दीर्घग्रहणमनर्थकं स्यात्, व्यावर्त्याऽभावात्। आत्वस्य विकल्पितत्वे तु तदभावपक्षे अष्टभिरिति व्यावर्त्यस्य सत्त्वाद्दीर्घग्रहणमर्थवत्। अतो दीर्घग्रहणमष्टन आत्वस्य वैकल्पिकत्वे ज्ञापकमित्यर्थः। अष्टाविति। अष्टन्शब्दाज्जश्शसोरौश्। शित्त्वात्सर्वादेशः। "अष्टाभ्य" इति निर्देशान्नकारस्यात्वं, सवर्णदीर्घः, वृद्धिरिति भावः। परमाष्टाविति। "अष्टाभ्य औ"शित्यस्य आङ्गत्वात्तदन्तेऽपि प्रवृत्तिरित्यर्थः। अष्टाभिरिति। हलादौ आत्वे सवर्णदीर्घः। अष्टानामिति। आदौ नुटि कृते सति हलादित्वादात्वम्। नच नान्तत्वप्रयुक्तषट्()संज्ञकशब्दसन्निपातमुपजीव्य प्रव#ऋत्तस्य नुटस्तद्विघातकमात्वं प्रति कथं निमित्तत्वमिति वाच्यं, नहि षट्सन्निपातेन जातस्य नुट आत्वेऽपि

तद्विघातकत्वं, कृतात्वेऽपि स्थानिवत्त्वेन षट्त्वसत्त्वात् "शमामष्टानां दीर्घः श्यनी"त्यादिनिर्देशेनाऽत्र सन्निपातपरिभाषाया अनित्यत्वाश्रयणाच्चेति भावः। आत्वाऽभावे इति। "अष्टनो दीर्घा"दिति दीर्घग्रहणेनात्वविकल्पस्य ज्ञापितत्वादिति भावः। यद्यपि "अष्टनो दीर्घा"दिति सूत्रे शसादिविभक्तिषु परतः स्वरविधायके दीर्घग्रहणं शसादिष्वेवात्वविकल्पं ज्ञापयितुं शक्नोति नतु जसि, तथापि ज्ञापकस्य सामान्यापेक्षत्वाज्जास्यप्यात्वविकल्प इति भावः।

प्रिया अष्टौ यस्येति बहुव्रीहौ प्रियाष्टन्शब्दो विशेष्टनिघ्न एकद्विबहुवचनान्तः। तत्र विशेषमाह--गौणत्वे त्विति। अष्टन्शब्दार्थस्याप्राधान्ये सतीत्यर्थः। आत्वाऽभावे इति। "अष्टनो दीर्घा"दिति दीर्घग्रहणेनात्वस्य वैकल्पिकत्वज्ञापनादिति भावः। राजवदिति। "प्रायेणे"ति शेषः। प्रियाष्टा प्रियाष्टानौ प्रियाष्टानः। प्रियाष्टानम्, प्रियाष्टानौ। शशि प्रियाष्ट इति। "अल्लोपोऽनः" इत्यकारलोपः। ननु कृतेऽल्लोपे नकारस्य ष्टुत्वेन णत्वं कुतो न स्यादित्यत आह--इहेति। इहाऽल्लोपस्य स्थानिवद्भावान्न ष्टुत्वमित्यन्वयः। अल्लोपस्य स्थानिवत्त्वे सति अकारव्यवहितत्वान्न ष्टुत्वमिति बावः। ननु स्थानिनि सति यत्कार्यं तदेवादेशेऽतिदेश्यते। स्थानिनि सति यत्कार्यं न भवति तदादेशे न भवति इत्येवं कार्याऽभावस्तु नातिदिश्यते। अन्यता "नायक" इत्यादौ आयाद्यभावप्रसङ्गादिति स्थानिवत्सूत्रे स्थितम्। तस्मादल्लोपस्य स्थानिवत्त्वान्न ष्टुत्वमित्यनुपपन्नम्। "अचः परस्मिन्" इति सूत्रं तु यद्यपि स्थानिनि सति यत्कार्यं न भवति तदादेशेऽपि न भवतीत्येवं कार्याऽभावस्यातिदेशकं तथापि न तस्यात्र प्रवृत्तिरस्ति। स्थानिभूतादच#ः पूर्वस्यैव विधौ तत्प्रवृत्तेः। इह च स्थानिभूतादचः परस्यैव ष्टुत्वप्रवृत्तेरित्यत आह--पूर्वस्मादपि विधाविति। स्थानिभूतादचः पूर्वस्मात्परस्यापि विधौ स्थानिवत्त्वाभ्युपगमादित्यर्थः। नच "पूर्वत्रासिद्धीये न स्थानिव"दिति निषेधः शङ्क्यः, "तस्य दोषः" इत्यत्र णत्वग्रहणं मास्त्वि"त्युक्तं। तद्रीत्याप्याह--बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वेति। अल्लोपोऽङ्गसंज्ञासंज्ञापेक्षत्वाद्बहिरङ्गः। ष्टुत्वं तु तदपेक्षयाल्पापेक्षत्वादन्तरङ्गम्। तस्मिन् कर्तव्ये बहिरङ्गस्याऽल्लोपस्यासिद्धत्वादकारव्यवहितत्वान्न ष्टुत्वमित्यर्थः। ननु यथोद्देशपक्षे "असिद्धं बहिरङ्ग"मिति षाष्ठीं परिभाषां प्रति ष्टुत्वस्याऽसिद्धतयाऽन्तरङ्गाऽभावेन परिभाषा अप्रवृत्तेः कथमिहाऽल्लोपस्याऽसिद्धत्वमित्यत आह--कार्यकालपक्षे इति। लक्ष्यानुरोधादिह यथोद्देशपक्षो नाश्रीयते इत्यन्यत्र विस्तरः। अथ प्रियाष्टन्शब्दस्यात्वपक्षे विशेषमाह-जश्शसोरिति। "अष्टाभ्य औ"शिति जश्शसोरौशादेशविधौ कृतात्वनिर्देशाज्ज्ञाप्यमानमात्वमष्टन्शब्दस्य प्राधान्ये सत्येव भवति, न तूपसर्जनत्वेऽपि, "अष्टाभ्य" इति बहुवचननिर्देशात्। अन्यथा "हाह" इति पञ्चम्यन्तवत् "अष्ट औश्" इति निर्दिशेदिति "ष्णान्ता षट्" इति सूत्रे भाष्ये स्पष्टम्। ततः किमित्यत आह--तेनेति। अष्टन्शब्दस्य गौणताया जश्शसोर्विषये आत्वाऽभावेनेत्यर्थः। हलादावेवेति। "अष्टन आ विभक्तौ" इत्यत्र "अष्टन" इत्येकवचननिर्देशेन अष्टन्शब्दार्थस्य प्राधान्याश्रयणे मानाऽभावादिति भावः। "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" इत्यपि नात्र प्रवर्तते, तथा सति "अष्टाभ्य औ"रित्यत्र बहुवचनवैयर्थ्यादिति बोध्यम्। हलादावेवेत्येवकारेण जश्शसोरप्यात्वस्य पक्षेऽपि व्यावृत्तिरूर्तैवानूद्यते। औङादौ तु हलादित्वाऽभावादेव आत्वस्य न प्रसक्तिः। प्रियाष्टा इति। सौ हलि "अष्टन आ विभक्तौ" इत्यात्वे रुत्वविसर्गाविति भावः। षड्भ्यो लुक्" इति "षट्चतुर्भ्य" इति च गौणतायां न प्रवर्तत इति च प्रागुक्तं न विस्मर्तव्यम्। तथा च अजादौ सर्वत्र राजवदेव रूपाणि, हलादिषु पक्षे सर्वं रूपम्। हलादिषु विभक्तिषु तु हाहाशब्दवदन्यच्च रूपम्। चकाराद्राजवदपि। तदित्थमत्र रूपाणि-प्रियाष्टाः-प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टानः। प्रियाष्टानम्। प्रियाष्टानौ। प्रियाष्टनः। प्रियाष्टनः प्रियाष्टाभ्याम्--प्रियाष्टभ्याम्, प्र#इयाष्टाभ्यः--प्रियाष्टभ्यः। प्रियाष्टनः प्रियाष्टनोः प्रियाष्टनाम्। प्रियाष्टनि प्रियाष्टनि, प्रियाष्टनोः प्रियाष्टासु--प्रियाष्टसु। वस्तुतस्तु "ष्णान्त षट्" इति सूत्रे भाष्ये "अष्टन आ विभक्तौ" इत्यत्र "हली"त्यपकर्षमुक्त्वा "प्रियाष्टौ प्रियाष्टा इति न सिध्यति, प्रियष्टानौ प्रियष्टान इत्येव प्राप्नोती"ति शङ्किते "यथालक्षणमप्रयुक्ते" इति समाहितम्। "नैव वा लक्षणमप्रयुक्ते प्रवर्तते, प्रयुक्तानामेवान्वाख्यानात्" इति कैयटः। एवं च

एषामनभिधानमेवोचितम्। अत एव "अष्टाभ्य औ"शिति सूत्रे भाष्ये "अष्टन आत्वमिह वैकल्पिकं यदयमात्वभूतस्य ग्रहणं करोति-अष्टाभ्य इति। अन्यथा अष्टन इत्येव ब्राऊयात्" इत्युक्तम्। प्रियाष्टन्शब्दस्य लोके प्रयोगसत्त्वे तु तत्र गौणे औशादेशप्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकत्वात्तदसङ्गतिः स्पष्टैव। तस्मात्प्रियाष्टन्शब्दप्रयोगविचारः सर्वोऽप्यभित्तिचित्रायित इति शब्देन्दुशेखरे प्रपञ्चितम्। इति नान्ताः। अथ धान्ताः। "बुध अवगमने"कर्तरि क्विप्। बुध् इति धकारान्तः शब्दः। ततः सुबुत्पत्तिः। सौ विशेषमाह--भष्भाव इति। हल्ङ्यादिना सुलोपे सति प्रत्ययलक्षणमाश्रित्य सकारपरकत्वाद्वा, पदान्तत्वाद्वा "एकाचो बशः" इति बकारस्य भष=भकार इत्यर्थः। झश्त्व चर्त्वे इति। "वाऽवसाने" इति चत्र्वविकल्प इति भावः। भ्यामादौ "स्वादिषु" इति पदत्वाद्भष्, जश्त्वम्। भुद्भ्याम्। भुद्भिः। भुद्भ्यः। भुत्सु इति धान्ताः।

तत्त्व-बोधिनी

अष्टाभ्य औश् ३३३, ७।१।२१

अष्टाभ्य औश्। शित्वात्सर्वादेशः। ननु "अनेकाल्शित्सर्वस्ये"ति सूत्रे शिद्ग्रहणं प्रत्याख्यायानेकाल्त्वादेव सर्वादेश इति सुवचम्। न च शस्येत्संज्ञायामन्काल्त्वं नास्तीति वाच्यं, शकरोच्चारणसामथ्र्यादत्र भूतपूर्वगत्याश्रयणात्। न चैवम् "अर्वश्रस्त्रसा"विति त्रादेसस्यापि सर्वादेशता स्यादिति वाच्यम्, ऋकारस्योगित्कार्यार्थत्वेन तत्र सामथ्र्योपक्षयात्। न चैवमशित्यादौ शकारः श्रवणार्थ एव स्यादिति शङ्क्यम्, अनुशतिकादिषु "ऐहलौकिक"मिति निर्देशेन शकारस्येत्संज्ञाभ्युपगमाजितिदिक्। कृताकारादिति। ननु "हली"त्यपकृष्यत इत्युक्तं तत्कथं कृताकारतेत्यत आह--अष्टभ्य इतीति। "अष्टाभ्य"इति कृतात्वस्येदमनुकारणम्, न तु लक्षणवशसंपन्नमात्वं, तथाहि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थम् "अष्टभ्य औ"शित्येव ब्राऊशित्येव ब्राऊयादिति भावः। इदमिति। श्रुतमनुमितं चेत्यर्थः। अष्टनो दीर्घादिति। दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात्। अष्टभिः। दार्घात्किम्(ष्टभिः। मध्योदात्तमिदम्। "षटत्रिचतुभ्र्यो हलादिः"इति बाधित्वा "झल्युपोत्तम"मित्यस्य प्रवृत्तेः। "षट्त्रिचतुभ्र्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्या"दिति तदर्थः। ननु "प्रियाष्ट्ने"त्यादौ विभक्तेरुदात्तत्वनिवारणायट दीर्घग्रहणमिहावश्यकमिति कथमस्यात्वविकल्पज्ञापकतेति चेदत्राहुः--"अष्टनो दीर्घा"दित्य त्रान्तोदात्तदित्युवत्र्यान्तोदात्तदष्टनः परेत्यादिव्याख्यानादष्टभिरित्यादौ विभ्केतदात्तत्वं सिद्यति। घृतादित्वेनाऽष्टनोऽन्तोदात्तत्वात्। "प्रियष्ट्न"इत्यादिबहुव्रीहौ तु पूर्वपदप्रकृतिस्वराभ्युपगमेनाष्टनोऽन्तोदात्तत्वाऽभावाद्विभक्त्युदात्तत्वं न प्रवर्तते इति दीर्धग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमेवेति। अष्टानामिति। "नुटः पश्चादेव संनिपातपरिभाषाया अनित्यत्वादात्वं, नतु ततः प्रा"गिति तु मनोरमायां स्थितम्। अत्र नव्याः--संनिपातपरिभाषयाऽऽत्वाभावेऽप्यत्र न क्षतिः ,"नोफ्धाया"इति दीर्घे नलोपे "पञ्चनां""सप्ताना"मितिवद्रूपसिद्धेः। न च"अष्टनो दीर्घा"दिति विभक्त्युदात्तत्वमात्वविधेः प्रयोजनमिति वाच्यं, "षट्त्रिचतुभ्र्यो हलादि"रित्यनेनैव तत्सिद्धेरिति। पूर्वस्मादपीति। न चात्र "पूर्वत्रासिद्धीये न स्थानिवत्िति निषेधः शङ्क्यः, "तस्य दोषः संयोगादिलोपलत्वणत्वेषु", इत्युक्तत्वादिति दिक्। प्राधान्य एवेति। औशत्वं हि लुङ्नुटाविब प्राधान्य एव भवति न तु गौणात्वे, "अष्टाभ्य"इति बहुवचननिर्देशात्। अन्यथा हि कृताऽऽत्वानुकरणेऽपि एकवचनेनैव निर्दिशेत्---"अष्टा औ"शिति "अष्ट"इति वा। एतच्च "ष्णान्ता ष"डिति सूत्रे भाष्यकैयटयोः स्पष्टम्। तथा चौश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वं प्राधान्य एवोचितमिति भावः। "प्रियष्टा"---इति प्रथमैकवचनम्। उक्तार्थं सङ्गृह्णाति------प्रियाष्ट्नो राजवदिति। इति नान्ताः। भुदिति। बुध्यतेः क्विप्। इति धान्ताः।

---

सूत्रम्

काशिका-वृत्तिः

षड्भ्यो लुक् ७।१।२२

षट्संज्ञकेभ्य उत्तरयोः जश्शसोर् लुक् भवति। षट् तिष्ठन्ति। षट् पश्य। पञ्च। सप्त। नव। दश। षट्प्रधानात् तदन्तादपि भवति। उत्तमषत्। यत्र तु उपसर्जनं षट् ततो न भवति, प्रियषषः, प्रियपञ्चानः इति।

लघु-सिद्धान्त-कौमुदी

षड्भ्यो लुक् १८८, ७।१।२२

जश्शसोः॥

न्यासः

षड्भ्यो लुक्?। , ७।१।२२

"पञ्च, सप्त" इति। "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नलोपः। "षट्परधानात्? तदन्तादपि भवति" इति। अत्र पूर्वको हेतुर्वकतव्यः। "यत्र तु" इत्यादि। अर्थस्येदं ग्रहणं बहुलवचनादवसितम्()। स चार्थो द्विविधः--प्रधानोऽप्रधानश्च। तत्र "प्रदाने कार्यसम्प्रत्ययः" (व्या।प।१२०) इति यत्रार्थस्य प्राधान्यं तत्रैव भवति, न तु यत्रार्थस्याप्राधान्यं तत्र। एष च हेतुः प्रियाष्टान इत्यत्रौश्त्वाभावेऽपि वेदितव्यः। "प्रियषषः" इति। प्रियाषडेषामिति बहुव्रीहिः। अत्रान्यपदार्थस्य प्राधान्यम्(), षडर्थस्तु तत्र गुणभावादप्रधानः॥

बाल-मनोरमा

षड्भ्यो लुक् २५९, ७।१।२२

षड्भ्यो लुक्। जस्शसोरित्यनुवर्तते। तदाह--षड्भ्यः परयोरित्यादिना।

तत्त्व-बोधिनी

पड्भ्यो लुक् २२०, ७।१।२२

पड्भ्यो लुक्। "सर्वनाम्नः स्मै" इतिवत् "षषोलु"गिति वक्तव्ये बहुवचननिर्दिशोऽत्रार्थप्राधान्यसूचनार्थः, कृत्रिमाकृत्रिमन्यायेन स्वरूपनिरासिसिद्धेः। तेन "षडर्थगतसङ्ख्याभिधायिनोरेव जश्शसोर्लु"गित्यर्थपर्यवसानात्प्रियपञ्चन इत्यादौ नातिप्रसङ्गः। "जश्शसोः शि "रित्यातोऽनुवर्तनादाह- जश्शसोर्लुक्स्यादिति।

---

सूत्रम्

काशिका-वृत्तिः

स्वमोर् नपुंसकात् ७।१।२३

सु अम् इत्येतयोः नपुंसकादुत्तरयोः लुग् भवति। दधि तिष्ठति। दधि पश्य। मधु तिष्ठति। मधु पश्य। त्रपु। जतु। तद्ब्राह्मणकुलम् इत्यत्र लुका त्यदाद्यत्वं बाध्यते, पूर्वविप्रतिषेधेन नित्यत्वाद् वा। लुको हि निमित्तम् अतो ऽम् ७।१।२४ इति लक्षणान्तरेण विहन्यते, न पुनस्त्यदाद्यत्वेन एव। यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति।

लघु-सिद्धान्त-कौमुदी

स्वमोर्नपुंसकात् २४५, ७।१।२३

लुक् स्यात्। वारि॥

न्यासः

स्वमोर्नपुंसकात्?। , ७।१।२३

"सु" इति यद्यपि सप्तमीबहुवचनमस्ति, तथाप्यमा द्वितीयैकवचनेन सहचर्यात्प्रथमैकवचनमेव गृह्रते। तदब्राआह्मणकुलमित्यत्र परत्वात्? त्यदादयत्वेनैव भवितव्यम्(), त्यदाद्यत्वे कृते लुग्न प्राप्नोति; "अतोऽम्(), ७।१।२४ इत्यम्भावप्रसङ्गात्(), तस्मात्यदाद्यत्वात्प्राग्? लुग्वक्तव्यः? इत्याह--"तद्ब्राआह्मणकुलमित्यत्र" इत्यादि। लुकोऽवकाशः--दधि, मध्वित्यत्र, त्यदाद्यत्वस्यावकाशः--ब्राआह्मण इति; इहोभयं प्राप्नोति--तदब्राआह्मणकुलमिति, लुग्भवति पूर्वविप्रतिषेधेन। न च पूर्वविप्रतिषेधो वक्तव्यः; इष्टवाचित्वात्परशब्दस्य। "नित्यत्वाद्वा" इति। वाशब्दः समुच्चये। यद्यपि लुक्(), त्यदाद्यत्वञ्चोभयं प्राप्नोति, तथापि लुक एव नित्यत्वं विज्ञायते। कुतः? सामर्थ्यात्()। "लुका त्यदाद्यत्वे बाध्यते" इत्यत्र हीदं हेत्वन्तरमुक्तम्()। एवञ्चेदमत्रार्थे हेत्वन्तरं सम्भवति यदि लुको नित्यत्वं भवति, नान्यथा, नित्यत्वं पुनः कृताकृतप्रसङ्गित्वात्()। त्यदाद्यत्वं हि विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न प्राप्नोति। प्रत्ययलक्षणेन चास्य प्राप्तिर्न युक्ता; "न लुमताङ्गस्य" १।१।६२ इति प्रतिषेधात्()। लुक्पुनः कृते त्यदाद्यत्वे प्राप्नोत्यकृतेऽपि। ननु च कृते त्यदाद्यत्वे लुकः प्राप्तिरेव नास्ति; "अतोऽम्()" ७।१।२४ इत्यपवादविधानात्()। तस्मात्सोऽप्यनित्य एव? इत्याह--"लुको हि" इत्यादि। असति "अतोऽम्()" ७।१।२४ इति लक्षणेऽकारान्तमप्यङ्गं लुको निमित्तमासीत्(), तदनेन लक्षणेनोपजायमानेनापवादविधानाल्लुकं प्रत्यनिमित्तभावमापद्यते। लुग्निमित्ताभावापादनमेव विघातः। "न पुनस्त्यदाद्यत्वेन" इति। लुको निमित्तभावो विहन्यत इति सम्बन्धनीयम्()। यदि "अतोऽम्()" ७।१।२४ इत्यपवादविधायि लक्षणान्तरं न स्यात्(), कृते त्यदाद्यत्वे स्यादेवाकारान्तमङ्गं लुको निमित्तम्()। तच्च "अतोऽम्()" ७।१।२४ इत्यपवादेनैव लुको निमित्तं व्याहन्यते, न पुनस्त्यदाद्यत्वेन। यद्येवम्? तत्किमित्यनित्यो लुग्न भवति? इत्याह--"यस्य च" इत्यादि। लक्षणान्तरत्वं लक्षणान्तरत्वं पुनरम्भावशास्त्रस्य त्यदाद्यत्वशास्त्रापेक्षया वेदितव्यम्()॥

बाल-मनोरमा

स्वमोर्नपुंसकात् ३१७, ७।१।२३

अथ वारिशब्दप्रक्रियां दर्शयितुमाह--स्वमोर्नपुंसकात्। "षड्भ्यो लुक्" इत्यतो लुगित्यनुवर्तते। इत्याह--क्लीवादित्यादिना। वारीति। सोरमश्च लुकि रूपम्। नच "आदेः परस्ये"त्यमोऽकारस्यैव लुक् स्यान्न तु मकारस्यापीति शङ्क्यं, प्रत्ययस्य लोप एव हि लुगित्युच्यते। अम् इति समुदाय एवेह प्रत्ययो नतु तदेकदेशभूतमकारमात्रम्। अतो लुगमः सर्वादेश एव भवति।

तत्त्व-बोधिनी

स्वमोर्नपुंसकात् २७९, ७।१।२३

स्वमोर्नपुंसकात्।अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य, किमः कादेशस्य च बाधकः। परत्वाद्धि त्यदाद्यत्वे "तदोः--"इति सोरम्भावे च "सं कुल"मिति स्यात्। इष्यते तु "तत्कुल"मिति।

---

सूत्रम्

काशिका-वृत्तिः

अतो ऽम् ७।१।२४

अकारान्तान् नपुंसकादुत्तरयोः स्वमोः अम् इत्ययम् आदेशो भवति। कुण्डं तिष्ठति। कुण्डं पश्य। पीठम्। मकारः कस्मान् न क्रियते? धीर्घत्वं प्राप्नोति।

लघु-सिद्धान्त-कौमुदी

अतोऽम् २३५, ७।१।२४

अतोऽङ्गात् क्लीबात्स्वमोरम्। अमि पूर्वः। ज्ञानम्। एङ्ह्रस्वादिति हल्लोपः। हे ज्ञान॥

न्यासः

अतोऽम्?। , ७।१।२४

पूर्वेण प्रापतसय लुकोऽयमपवादः। तपरकरणं मुखसुखार्थम्(); न तु दीर्घनिवृत्त्यर्थम्()। दीर्घस्याभावात्()। अभावस्तु "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्रस्वविधानात्()। अथ किमर्थमम्भाव उच्यते, न मकारादेश एवोच्येत? न चैवम्(); "आदेः परस्य" १।१।५३ इति द्वितीयैकवचनाकारस्य मकारे कृते द्वयोर्मकारयोः श्रलणं प्राप्नोति; एकस्य संयोगान्तलोपेनापह्रतत्वात्()। नापि "सुपि च" ७।३।१०२ इति यञादौ सुपि विधीयमानं दीर्घत्वं प्राप्नोति; "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।प।१२) इति वचनात्()। अकारान्तसन्निपाते हि मकारविधिः, स कथमकारविघातस्य निमित्तं स्यात्()? एवं तर्हि मकारादेशे विघातव्येऽमा देशं कुर्वन्नेतज्ज्ञापयति--नित्यैषा परिभाषेति। तेनातिजरसात्(), अतिजरसैरिति जरसादेशः सिद्धो भवति॥

बाल-मनोरमा

अतोऽम् ३०७, ७।१।२४

ज्ञानशब्दात्सुः "स्वमोर्नपुंसका"दिति तस्य लुकि प्राप्ते--अतोऽम्। "अत" इति पञ्चमी। "अङ्गस्ये"त्यधिकृतं पञ्चम्या विपरिणम्यते, "अत" इत्यनेन विशेष्यते। तेन तदन्तविधिः। "स्वमोर्नपुंसका"दित्यनुवर्तते। तदाह--अतोऽङ्गादिति। अदन्तादङ्गादित्यर्थः। ज्ञानमिति। सोरमि कृते अमि पूर्वरूपमिति भावः। अमोऽम्विधानं तु "स्वमोर्नपुंसका"दिति लुङ्निवृत्त्यर्थम्। ननु "अतो-म्" इत्येवच्छेदोऽस्तु। सोर्मकारादेशे ज्ञानमिति सिद्धेः। अमि च "आदेः परस्ये"त्यकारस्य मकारेऽन्त्यस्य मकारस्य संयोगान्तलोपेनैव ज्ञानमिति सिद्धेरिति चेत्, मैवम्-एवं सति ज्ञानमित्यत्र "सुपि चे"ति दीर्घापत्तेः। न च अदन्तसंनिपातमाश्रित्य प्रवृत्तस्य मादेशस्य तद्विघातकदीर्घनिमित्तत्वं न संभवति, संनिपातपरिभाषाविरोधादिति वाच्यं, "सुपि चे"ति दीर्घे कर्तव्ये संनिपातपरिभाषाया अप्रवृत्तेरित्युक्तत्वादित्यलम्।

हे ज्ञानेति। हे ज्ञानस् इति स्थिते सोरमि कृते पूर्वरूपे "एङ्ह्रस्वा"दिति मकारलोपे हे ज्ञानेति रूपम्। नन्वेङ्ह्रस्वादित्यत्र संबुद्ध्याक्षिप्तस्य संबुद्धयैवान्वय उचितः, ततश्च एङन्ताध्यस्वान्ताच्चाङ्गात् परा या संबुद्धिस्तदवयवस्य हलो लोप इति लभ्यते। ततश्च प्रकृते पूर्वरूपे कृते तस्य पूर्वान्तत्वाश्रयणे ज्ञानेत्यदन्तमङ्गम्। ततः परा संबुद्धिर्नास्ति, मकारमात्रस्याऽसंबुद्धित्वात्, सुस्थानिकस्याम एव संबुद्धित्वात्, अद्र्धविकारेण एकदेशविकृतन्यायानवताराच्च। न च पूर्वरूपात्प्राक् "एङ्ह्रस्वा"दित्यस्य प्रवृत्तिः किं न स्यादिति वाच्यं, परत्वात्पूर्वरूपस्यैव पूर्वं प्रवृत्तेः। न च पूर्वान्तत्वात्पूर्वरूपस्याऽङ्गन्तर्भावाज्ज्ञानेत्यदन्तमङ्गम्, परादित्वाच्च अम् इत्यस्य संबुद्धित्वं चेत्याश्रित्य तदवयवहलो मकारमात्रस्य "एङ्ह्रस्वा"दिति लोपो निर्बाध इति वाच्यम्, "उभयत आश्रयणे नान्तादिव"दिति निषेधादित्यत आह--एङ्ह्रस्वादिति हल्मात्रलोप इति। पूर्वरूपे कृते संबुद्धेर्मकारमात्रं यत् परिशिष्टं तस्य "एङ्ह्रस्वा"दिति लोप इत्यर्थः। लक्ष्यानुरोधात्संबुद्ध्याक्षिप्तमङ्गं संबुद्धौ नान्वेति, किंतु संब#उद्ध्यवयवहल्येवान्वेति। ततश्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परो यः संबुद्ध्यवयवहल् तस्य लोप इति लभ्यते। प्रकृते च पूर्वरूपे कृतेऽपि ह्रस्वान्तादङ्गात्परत्वं संबुद्ध्यवयवस्य मकारमात्रस्य अस्त्येवेति तस्य "एहह्रस्वा"दिति लोपो निर्बाध इत्यन्यत्र

विस्तरः।

तत्त्व-बोधिनी

अतोऽम् २६९, ७।१।२४

अथाजन्ता नपुंसकलिङ्गाः। अतोऽम्। "अत"इत्येतदधिकृतस्याऽङ्गस्य विशेषणं, "स्वमोर्नपुंसका"--दिति चानुवर्तत इत्याशयेनाह---अतोऽङ्गादित्यादि। अदन्तादङ्गदित्यर्थः। स्वमोरिति। अमोऽम्विधानं "स्वमोर्नपुंसका"दिति प्राप्तस्य लुको बाधानार्थम्। अम्स्यादिति। यद्यपि "म्" इत्येवच्छित्त्वा सोर्मे कृते संनिपातपरिभाषया "सुपि चे"ति दीर्घत्वाऽप्रसक्त्या "ज्ञान"मिति रूपं सिध्यिति। द्वितीयैकवचने तु "आदेः परस्ये"त्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम्, तथापि "संयोगान्तलोपो झलः"इत्यभिप्रायेणेदं व्याख्यातम्।

यत्त्वाहुः--"अ"मिति पदच्छेदाऽकरणे "अतिजिरस"मिति न सिध्यदिति, तद्रभसात्। सोरमि कृते संनिपातपरिभाषया जरसादेशस्याऽप्रवृत्त्या "अतिजर"मिति रूपस्यैवेष्यमाणत्वात्। द्वितीयैकवचने तु "अतोऽ"मिति बाधित्वा परत्वाज्जरसि कृते संनिपातपरिभाषया लिकोऽप्रवृत्तावतिजरसमिति रूपसिद्धेश्चेति दिक्। ज्ञानमिति। ज्ञप्तिज्र्ञानम्। ल्युट्। "युवोरनाकौ"।"कृत्ताद्धिते"ति प्रातपदिकत्वात्स्वाद्युत्पत्तिः। हल्मात्रेति। "हे ज्ञान सु"इति स्थिते संबुद्धिलोपात्परत्वादमादेशे कृते अमि पूर्वत्वे च तस्याऽन्तवद्भावाद्धस्वान्तमङ्गं भवतीति ततः संबुद्धिसंबन्धिनो मकारस्य लोप इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अद्ड् डतराऽदिभ्यः पञ्चभ्यः ७।१।२५

डतरादिभ्यः परयोः स्वमोः अद्डित्ययम् आदेशो भवति। कतरत् तिष्ठति। कतरत् पश्य। कतमत् तिष्ठति। कतमत् पश्य। इतरत्। अन्यतरत्। अन्यत्। पञ्चभ्यः इति किम्? नेमं तिष्ठति। नेमं पश्य। डित्करणं किम्? कतरत् तिष्ठति इत्यत्र पूर्वसवर्नदीर्घो मा भूत्। इह तु कतरत् पश्य इति स्थनिवद्भावादमि पूर्वत्वेन अपि सिध्यति। एवं तर्हि तकारादेश एव कस्मान् न विधीयते? हे कतरतिति सम्बुद्धेर् लोपो मा भूत्। अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु। अड्डित्वाड् डतरादीनां न लोपो न अपि दीर्घता।

लघु-सिद्धान्त-कौमुदी

अद्ड्डतरादिभ्यः पञ्चभ्यः २४२, ७।१।२५

एभ्यः क्लीबेभ्यः स्वमोः अद्डादेशः स्यात्॥

न्यासः

अद्ड्डतरादिभ्यः पञ्चभ्यः। , ७।१।२५

द्विडाकारोऽयं निद्र्दशः--तत्रैको डतरसम्बन्धी द्वितीयस्त्वादेशम्बन्धी। डतरादयश्चैते सर्वाद्यन्तःपातिनो गृह्न्ते; न तु "द्वयोरेकस्य डतरच्()" ५।३।९२ इत्येवमादयः प्रत्ययाः। कुत एतत्()? नेतराच्छन्दसि" ७।१।२६ इति प्रतिषेधात्()। प्रत्ययग्रहणे हीतरशब्दात्? प्राप्तेरेव नास्तीति प्रतिषेधोऽनर्थकः स्यात्()। तेषां डतरादीनां मध्येऽन्त्यानि त्रीणि प्रातिपदिकानि; डतरडतमौ च प्रत्ययौ; तत्र प्रत्यग्रहणपरिभाषया (भो।प।सू।७) तदन्तयोग्र्रहणं भवति। "कतरत्()" इति। "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्()" ५।३।९२। "कतमत्()" इति। "वा बहुनां जातिपरिप्रश्ने डतमच्()" ५।३।९३।

"कतरत्? तिष्ठतीत्यत्र" इत्यादि। असति हि ङित्करणे कतरत्? तिष्ठतीत्यत्र "अकः सवर्णे दीर्घः" ६।१।९७ इत्यनुवर्त्तमाने "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घः स्यात्(), अतः स मा भूदित्येवमर्थं ङित्करणं क्रियते। अत्र हि कृते दीर्घत्वप्रसङ्गो न भवति; टिलोपेनाऽकोऽपह्मतत्वात्()। किं पुनः कारणम्()--प्रथमैकवचनस्यैव ङित्करणस्य दीर्घाभावः प्रयोजनमुच्यते, न तु द्वितीयैकवचनस्य? इत्यत आह--"इह तु" इत्यादि। अमो हि स्थाने य आदेशस्तस्य "स्थानिवदादेशोऽनल्विधो" १।१।५५ इति स्थानिवद्भावादमि पूर्वत्वेनापि सिध्यति--कतरदित्येतत्(), तस्मात्? तत्र ङित्करणस्य दीर्घत्वाभावः प्रयोजनमिति नोच्यते। "तकारादेश एव कस्मान्न क्रियते" इति। यद्यत्र दीर्घत्वं नेष्यते तदा तकारादेश एव कत्र्तव्यः। तत्राप्ययमर्थः--दीर्घनिवृत्त्यर्थं ङित्करणं न कत्र्तव्यमिति। "हे कतरत्()" इत्यादि। यदि तकारादेश एव क्रियते तदा तस्य स्थानिवद्भावेन सम्बुद्धिभावोऽस्तीति "एङ् ह्मस्वात्? सम्बुद्धेः" ६।१।६७ इति लोपः प्राप्नोति, अतः स मा भूदित्येवमर्थं तकारादेशो न क्रियते। "अपृक्तश्च" इत्यादि। "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तम्()" ६।१।६७ इत्यतश्चेदपृक्तग्रहणं सम्बुद्धिलोपेऽनुवत्र्तते तदामो दोषः--हे कुण्डेत्यत्र। निवृत्तेऽपृक्ताधिकारे डतरादिषु दोषः--हे कतरदिति। तस्माड्डित्करणादेवाकारलोपे कृते ह्मसवाभावान्न लोपः, न च दीर्घतेति॥

बाल-मनोरमा

अद्ड्डतरादिभ्यः पञ्चम्यः ३१३, ७।१।२५

अद्ड्डतरादिभ्यः। "अद्ड्-डतरादिभ्य" इति छेदः। दस्य ष्टुत्वेन डकारः, डस्य संयोगान्तलोपश्च आदेशस्वरूपावगतये न कृत इति कैयटः। डतर, डतम, अन्य, अन्यतर, इतर इति डतरादयः सर्वादिगणपठिताः। अत्र डक्त्रडतमौ प्रत्ययौ। अतस्तदन्तग्रहणं। "स्वमोर्नपुंसका"दिति सूत्रमनुवर्तते तदाह--एभ्य इत्यादिना।

तत्त्व-बोधिनी

अद्ड्डतरादिभ्यः पञ्चभ्यः २७५, ७।१।२५

अद्ड्डतरादिभ्यः। पञ्चभ्य इति किम्(), नेमं तिष्ठति। नेमं पश्य। डतरादयो "डतरडतमेतरान्यतरे"ति सर्वादिषु पठिताः। अद्डादेशः स्यादिति। जिघृक्षितादेशस्वरूपप्रतिपादमाय ष्टुत्वं न कृतम्।

---

सूत्रम्

काशिका-वृत्तिः

न इतराच् छन्दसि ७।१।२६

इतरशब्दादुत्तरयोः स्वमोः छन्दसि विषये अद्डादेशो न भवति। मृतमितरमाण्डमवापद्यत। वार्त्रघ्नम् इतरम्। छन्दसि इति किम्? इतरत् काष्ठम्। इतरत् कुड्यम्। अतो ऽम् ७।१।२४ इत्यस्मादनन्तरम् इतराच् छन्दसि इति वक्तव्यम्? नेतराच्छन्दसि इति वचनं योगविभगर्थम् एकतराद् धि सर्वत्र छन्दसि भाषायां प्रतिषेध इष्यते। एकतरम् तिष्ठति, एकतरं पश्य इति।

न्यासः

नेतराच्छन्दसि। , ७।१।२६

पूर्वेणाद्डादेशस्य प्रसकतस्यायं प्रतिषेधः। अथ "अतोऽम्()" ७।१।२४ इत्यस्यानन्तरं " इतराच्छन्दसि" इति कस्मान्नोक्तम्(), एवं हि नेति प्रतिषेधः कत्र्तव्यो न भवति, अमादेशोऽद्डादेशस्यापवादो भविष्यति? इत्याह--"अतोऽमित्यस्मादनन्तरम्()" इत्यादि। "योगविभागार्थम्()" इति। नेत्येकयोगविभागो यथा स्यादिति। किमर्थं

पुनर्योगविभाग इष्यते? इत्याह--"एकतराद्धि" इत्यादि। एकशब्दाद्धि सर्वत्र प्रतिषेध इष्यते, स च नेति योगविभागाल्लभ्यते। तस्माद्योगविभाग इष्यते। स च यथान्यासे सिध्यति; नान्यथेति "नेतराच्छन्दसि" इत्युच्यते॥

---

सूत्रम्

काशिका-वृत्तिः

युष्मदस्मद्भ्यां ङसो ऽश् ७।१।२७

युष्मदस्मदित्येताभ्याम् उत्तरस्य ङसः अशित्ययम् आदेशो भवति। तव स्वम्। मम स्वम्। शित्करणं सर्वादेशार्थम्। अन्यथा हि आदेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात्, ततश्च यो ऽचि ७।२।८९ इतेतन् न स्यात्।

लघु-सिद्धान्त-कौमुदी

युष्मदस्मद्भ्यां ङसोऽश् ३२९, ७।१।२७

तव। मम। युवयोः। आवयोः॥

न्यासः

युष्मदस्मद्रभ्यां ङ्सोऽश्?। , ७।१।२७

यदि "शेषे लोपः" ७।२।९० इत्यन्तलोपः, तदास्य भावे प्राप्त इदं वचनम्()। अथ टिलोपः, तदा विभक्तेः श्रवणप्राप्त आदेशार्थं वचनम्()। "तद स्वम्(), मम स्वम्()" इति। "तदममौ ङसि" ७।२।९६ इति मपर्यन्तयोर्युष्मदस्मदोस्तवममादेशौ भवतः। "शेषे लोपः" ७।२।९० इति दकरलोपे कृते "अतो गुणे" ६।१।९४ पररूपत्वम्()। "शित्करणं सर्वादेशार्थम्()" इति। असति शित्करणे "आदेः परस्य" १।१।५३ इत्याकारस्यादेशोऽकारः स्यात्()। ननु चाकारस्याकारवचने प्रयोजनं नास्तीत्यन्तरेणापि शित्करणं सर्वादेशो भविष्यति, अन्तस्य वा। तत्र द्वयोरकारयोरतो गुणे पररूपत्वेनेष्टं सिध्यति? अत आह--"अन्यथा हि" इत्यादि। अन्यथा यदि शित्करणं न स्यात्? तदाऽऽदेश इति योऽयं व्यपदेशस्तस्य या प्रक्लृप्तिः=निष्पत्तिस्तदर्थमादेरेव स्यात्(); "आदेः परस्य" १।१।५३ इति वचनात्()। स्यादेतत्()--यद्यादेशव्यपदेशप्रक्लृप्तितः कश्चिदर्थः सम्पद्यते तदा स्यात्? तदर्थमादेरेव वचनम्(), न च ततः कश्चिदर्थः सम्पद्यते तस्मादयुक्तमेवेति? इत्यत आह--"ततश्च" इत्यादि। चशब्दो हेतौ। लिङ्? सम्भावनायाम्()। तत आदेशव्यपदेशप्रक्लृप्तेः "योऽचि" ७।२।८२ इति कार्यं न स्यात्()। एतद्धि यत्र विभक्तावादेशो नास्ति तत्र विधीयते; "अनादेशे" ७।२।८६ इत्यधिकारात्()। तस्मात्? प्रयोजनवत्यादेशवयपदेशप्रक्लृप्तिरिति तदर्थमादेरेव स्यात्(), ततश्चेटं रूपं न सिध्येत्()। तस्मात्? सर्वादिशार्थः शकारः कत्र्तव्यः॥

बाल-मनोरमा

युष्मदस्मद्भ्यां ङसोऽश् , ७।१।२७

युष्मदस्माद्भ्यां ङसोऽश्। स्पष्टमिति। युष्मदस्मद्भ्यां परस्य ङसोऽश् स्यादिति सुगममित्यर्थः। सित्त्वात्सर्वादेशः। तव ममेति। युष्मद् अस्, अस्मद् असितिस्थिते मपर्यन्तस्य तवममादेशयोः कृतयोरशादेशे दकारात्पूर्वयोरकारयोः पररूपेऽदो लोपः। अन्त्यलोपपक्षे दकारलोपः, त्रयाणामकाराणां पररूपमिति भावः। युवयोः आवयोरिति। युष्मद् ओस्, अस्मद् ओस् इति स्थिते मपर्यन्तस्य युवावादेशयोः "योऽची"ति दस्य यत्वे पररूपमिति भावः।

तत्त्व-बोधिनी

युष्मदस्यद्भ्यांङ्सोऽश् ३५२, ७।१।२७

युष्मादस्मद्()यां ङसोऽश्। शित्त्वं सर्वादेशार्थम्। अन्यथा हि "आदेः परस्ये"तिस्यात्। न चाऽकारस्याऽकारविधाने वैयर्थ्यम्, आदेशव्यपदेशेन यत्वनिवृत्त्यर्थत्वात्। न चावयवस्यादेशे सत्यपि विभक्तेरनादेशताऽस्त्येवेति वाच्यं, "सर्वे सर्वपदादेशा"इति सिद्धान्तात्। इदमेव शित्त्वं ज्ञापयति "सर्वे सर्वपदादेशाः"इति। अर्थवत्येव स्थान्यादेशभावविश्रान्तिरित्यर्थः। सिच्चङादयस्तु वचनसामर्थ्यादनर्थकस्यापि भवन्तीति मनोरमायां स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

ङे प्रथमयोरम् ७।१।२८

ङे इत्यविभक्तिको निर्देशः। ङे इत्येतस्य प्रथमयोश्च विभक्त्योः प्रथाद्वितीययोः युष्मदस्मद्भ्याम् उत्तरयोः अम् इत्ययम् आदेशो भवति। तुभ्यं दीयते। मह्यं दियते। प्रथमयोः त्वम्। अहम्। युवाम्। आवाम्। यूयम्। वयम्। त्वाम्। माम्। युवाम्। आवाम्।

लघु-सिद्धान्त-कौमुदी

ङेप्रथमयोरम् ३१३, ७।१।२८

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः॥

न्यासः

ङे प्रथमयोरम्?। , ७।१।२८

"ङे इत्यविभक्तिकोऽयं निर्देशः" (इति)। "सुपां सुलुक्()" ७।१।३९ इति षष्ठ()आ लुप्तत्वात्()। प्रथमयोरिति षष्ठीद्विवचनान्तम्()--प्रथमा च प्रथमा च ते प्रथमे, तयोः प्रथमयोः। षष्ठीनिर्देशस्योभयत्र तुल्यत्वात्? प्रथमयोः प्रत्यययोः स्वौकारयोग्र्रहणमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"विभक्त्योः" इति। एतदेव स्पष्टीकर्तुमाह--"प्रथमाद्वितीययोः" इति। कथं पुनर्द्वितीया प्रथमाशब्देनोच्यते? उपदेशे प्रथमासामीप्यात्()। भवति हि सामीप्यात्? ताच्छब्द्यम्(), यथा--गङ्गायां घोष इति। अथ विभक्त्योरिदं ग्रहणं न प्रत्यययोः--इति कुतोऽयं निश्चयः? लिङ्गात्()। तत्पुनर्लिङ्गं "द्वितायायाञ्च" ७।२।८७ इत्यत्त्वविधानम्()। तद्ध्यादेशार्थमुच्यते; अनादेशे हि "युष्मदस्मदोरनादेशे" नान्यथा। ननु च "योऽचि" (७।२।८९) इति यत्वबाधनार्थम्? "द्वितीयायाञ्च" (७।२।८७) इत्याद्वचनं स्यात्()? नैतदस्ति; तदर्थे द्विवचने यकारमेव विशेषणं विदध्यात्()--"योऽच्यद्वितीयायाम्()" इति, "योऽच्यनचि" इति वा द्रूयात। अतो द्वितीयायामात्त्वविधानं ज्ञापकमेवैतद्विभक्तिग्रहणस्य। "तभ्यम्(), मह्रम्()" इति। मपर्यन्तयोर्युष्मदस्मदोस्तभ्यमह्यावादेशौ। "शेषे लोपः" ७।२।९०, "अमि पूर्वः" ६।१।१०३। "त्वम्(), अहम्()" इति। "त्वाहौ सौ" ७।२।९४। "युवाम्(), आवाम्? इति। "युववौ द्विवचने" ७।२।९२ इति युवावौ, "प्रथायश्च" ७।२।८८ इत्यादिनाऽत्त्वम्()। "यूयम्, वयम्()" इति। "यूयवयौ जसि" ७।२।९३। "त्वाम्(), माम्()" इति। त्वमावेकवचने" ७।२।९७, "द्वितीयायाञ्च" ७।२।८७ इत्यात्त्वम्()। अथ किमर्थममादेश उच्यते, न मकार एवोच्यते? स चैकाल्त्वादादेर्भविष्यति, तत्र परस्य संयोगान्तलोपेन सिद्धम्(), "शेषे लोपः" (७।२।९०) इति टिलोपान्न सिध्यतीति चेत्()? नैष दोषः; सेषे लोपो यद्यपि टिलोपः स्यात्(), तथापि "त्वाहौ सौ" (७।२।९४) इत्येवमादीनामकारान्तत्वात्? सिद्ध्यत्येव; ते चावश्यकमकारान्ता विधेयाः, अन्तोदात्तत्वं यथा स्यात्()। न च मकारादेशे "सुचि च" ७।३।१०२ इति दीर्घत्वं प्राप्नोति; "अङ्गवृत्ते पुनरङ्गवृत्ताविधिर्निष्ठितस्य" (व्या।प।३८) इति वचनात्()। एवं तर्हि वैचित्र्यार्थममादेशविधानम्()। अथ वा--मकार एवादेशः, अकारस्तूच्चारणार्थः; न ह्रन्यथास्मिन्निर्देश आदावन्ते वाऽकारमकृत्वा मकार उचचारयितुं शक्यते।

"ङेत्सुटोः" इति। वक्तव्ये "ङे प्रथमयोः" इति वचनं वैचित्र्यार्थम्()॥

बाल-मनोरमा

ङे प्रथमयोरम् , ७।१।२८

अथ युष्मदस्मच्छब्दयो प्रक्रियां दर्शयति--ङे प्रथमयोरम्। "युष्मदस्मद्भ्यां ङसोऽश्" इत्यतो "युष्मदस्मद्भ्या"मित्यनुवर्तते। परशब्दोऽध्याहर्तव्यः। "ङे" इति लुप्तषष्ठीकं पृथक्पदम्। प्रथमयो"रिति प्रतमाद्वितीयाविभक्त्योर्लाक्षणिकमिति भाष्यं। तदाह युष्मदस्मद्भ्यामित्यादिना। सोरमादेशे कृते "न विभक्तौ" इति मस्य नेत्त्वम्। युष्मद् अम्, अस्मद् अम् इति स्थितम्। अधिकृत्येति। "कार्याणि वक्ष्यन्ते" इति शेषः।

तत्त्व-बोधिनी

ङे प्रथमयोरम् ३४२, ७।१।२८

ङे प्रथमयोरम्। "युष्मदस्मभ्द्यां ङसोऽ"सित्यतो "युष्मदस्मभ्द्या"मित्यनुवर्तते। "ङे"इति पृथक्पदं लुप्तषष्ठीकम्। "प्रथमयो"रिति द्विवचनबलेन प्रतमाशब्दः प्रथमाद्वितीयभयार्थके इत्याशयेन व्याचष्टे---युष्मदस्मद्भ्यां परस्य ङे इत्येतस्येत्यादिना। "ङेसुटो"रिति सुवचम्।

---

सूत्रम्

काशिका-वृत्तिः

शसो न ७।१।२९

युष्मदस्मद्भ्यासुत्तरस्यशसो नकारादेशो भवति। युष्मन् ब्राह्मणान्। अस्मान् ब्राह्मणान्। युष्मन् ब्राह्मणीः। अस्मान् ब्राह्मणीः। युष्मान् कुलानि। अस्मान् कुलानि।

लघु-सिद्धान्त-कौमुदी

शसो न ३२१, ७।१।२९

आभ्यां शसो नः स्यात्। अमोऽपवादः। आदेः परस्य। संयोगान्तलोपः। युष्मान्। अस्मान्॥

न्यासः

शसो न। , ७।१।२९

पूर्वेणामादेशे प्राप्ते शसो न विधीयते। "युष्मान्? ब्राआहृणान्()। अस्मान्? ब्राआहृणान्()" इति। "आदेः परस्य" १।१।५३ इत्यकारस्य नकारः, संयोगान्तलोपः, पूरववदात्वम्()। ननु चैतदुदाहरणद्वयममादेशे कृत आत्वे च "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घत्वे च "तस्माच्छसो नः पुंसि" (६।१।१०३) इति नत्वेमैव सिध्यति? नैतदस्ति; न ह्त्र पूर्वसवरणदीर्घत्वं प्राप्नोति, अमिपूर्वत्वेन बाधितत्वात्()॥

बाल-मनोरमा

शसो न , ७।१।२९

अथ शसि विशेषमाह--शसो न। "ङे प्रथमयोः" इत्यतोऽमित्यनुवर्तते। युष्मदस्मद्भ्यामिति च। युष्मदस्मद्भ्यां परस्य शसोऽम् न स्यादिति लभ्यते। तथाच अमभावे "द्वितीयायां चे"त्यात्वे पूर्वसवर्णदीर्घे "तस्माच्छस नः पुंसी"ति नत्वे युष्मानिति यद्यपि पुंसि रूपं सिध्यति तथापि युष्मान् ब्राआहृणैङः पश्य, अस्मान्ब्राआहृणीः पश्य, युष्मान्

ब्राआह्वणकुलानि पस्य, असमान् ब्राआह्वणकुलानि पस्येति स्त्रीनपुंसकयोर्न सिध्येत। अतो नेदं सूत्रं शसोऽम्निषेधपरं, किंतु शसो नकारोऽत्र विदीयते इत्यभिप्रेत्य -- "तर्हि "शसो न" इति प्रथमा कुतो न श्रूयते इत्याशङ्क्यच आह--नेत्यविभक्तिकमिति। लुप्तप्रथमाविभक्तिकमित्यर्थः। ततस्च फलितमाह--युष्मदस्मद्भ्यामित्यादिना। अमोऽपवाद इति। "ङे प्रथमयोः" इति प्राप्ते एव नत्वविधेस्तदपवादता। युष्मद् अस्, अस्मद् अस् इति स्थिते "द्वितीयायां चे"त्यात्वेऽनेन शसो नकारः। स च "अलोऽन्त्यस्ये"ति नान्त्यस्येत्याह--आदेः परस्येति। संयोगान्तस्येति। अकारस्य नकारे कृते सकारस्य लोप इति भावः। यद्यपि शसोऽमि कृतेऽपि अकारस्य नकारे मकारस्य संयोगान्तलोपे युष्मान् अस्मानिति सिध्यति, तथापि "सत्यपि सम्भवे बाधनं भवती"ति न्यायान्नत्वस्य अमपवादत्वमाश्रितम्। किंच अमि कृते "ङे प्रथमयोः" इत्यत्र मकारान्तरप्रश्लेषपक्षे अकारस्य नकारे मकारस्य संयोगान्तलोपो न स्यादित्यलम्। अथ तृतीया। युष्मद् आ अस्मद् आ इति स्थिते-।

---

सूत्रम्

काशिका-वृत्तिः

भ्यसो भ्यम् ७।१।३०

युष्मदस्मद्भ्याम् उत्तरस्य भ्यसः भ्यम् इत्ययम् आदेशो भवति। युष्मभ्यं दीयते। अस्मभ्यं दीयते। भ्यमादेशे कृते शेषेलोपे च बहुवचने झल्येत् ७।३।१०३ इति एत्वं प्राप्नोति, ततङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य इति न भवति। केचित् पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं कुर्वन्ति। येषां तु शेषेलोपः टिलोपः, तेषाम् अभ्यमादेश एव। उदात्तनिवृत्तिस्वरश्चादेरेव भवति।

लघु-सिद्धान्त-कौमुदी

भ्यसोऽभ्यम् ३२५, ७।१।३०

आभ्यां परस्य। युष्मभ्यम्। अस्मभ्यम्॥

न्यासः

भ्यसो भ्यम्?। , ७।१।३०

"युष्मभ्यम्(), अस्मभ्यम्()" इति। "शेषे लोपः" ७।२।९० इत्यन्तलोपः। यदि भ्यमादेशोऽयम्(), एवं सति तत्र विहिते शेषेलोपे च "बहुवचने झल्येत्()" ७।३।१०३ इत्येत्वं प्राप्नोति, ततश्चानिष्टरूपमापद्येत? इत्यत आह--"भ्यमादेशे कृते" इत्यादि। वत्र्तनं वृत्तम्(), अङ्गे वृत्तं यस्य तदङ्गवृत्तं कार्यम्(), तस्मिन्नङ्गवृत्ते कार्ये पुनरत्तरकालमङ्गवृत्तावपरस्य कार्यस्य प्राप्तौ तस्य कार्यस्यादिधिः;=अविधानम्()। निष्ठितस्येत्यनेन यत्सममबन्धिनः कार्यस्याविधिर्भवति तदङ्गं विशिष्यते। निष्ठितम्()=परिसमाप्तम्(), प्रयोगार्हमङ्गम्। तत्सम्बन्धिनः कार्यस्याविधिर्भवति, नान्यसम्बन्धिन इत्यर्थः। "केचित्()" इत्यादि। तेषामन्त्यलोपे कृते "अतो गुणे" ६।१।९४ पररूपत्वं भवति। "येषां तु" इत्यादि। यैः "शेषे लोपः" ७।२।९० इत्यन्तलोपः क्रियते, तेषां मतभेदः--ते हि केचिद्भ्यमादेशमिच्छन्ति, केचिदभ्यमादेशम्()। येषां तु शेषेलोपष्टिलोपः तेषां मतेनायमभ्यमादेश एव, न भ्यमादेशः; अन्यथा युष्मब्यमिति न सिध्येवितयभिप्रायः। यदि तर्हि शेषेलोपष्टिलोपः, एवं सति "अनुदात्तस्य यत्रोदात्तलोपः" (६।१।१०१) इत्यनेनाभ्यम्()शब्दस्यान्()तोदात्तत्वं स्यात्()? इत्यत आह--"उदात्तनिवृत्तिस्वरश्च" इत्यादि। पूर्वपक्षवादिनोदात्तनिवृत्तिस्वरविधौ "कर्षात्वतो घञोऽन्त उदात्तः" ६।१।१५३ इत्यतोऽन्तग्रहणमनुवत्र्तत इति मन्यमानेन चोदितन्()। उत्तरपक्षवादिना तु "अन्तग्रहणं तत्र निवृत्तमुच्चारणक्रमप्रतयासत्त्या चादेरेवोदात्तत्वेन भवितुं युक्तम्()" इति। मन्यमानेन परिहृतम्()॥

बाल-मनोरमा

भ्यसोऽभ्यम् , ७।१।३०

भ्यसोभ्यम्। भ्यम् अभ्यमिति वा छेदः। तदाद-भ्यस इति। "युष्मदस्मद्भ्यां परस्ये"ति शेषः, "युष्मदस्मद्भ्यां ङसोऽश्" इत्यतस्तदनुवृत्तेः। ननु ब्यमादेशपक्षे "शेषे लोपः" इत्यदो लोपे युष्मभ्यमस्मभ्यमिति मकारादकारो न श्रूयेतेत्यत आह--आद्य इति। लक्ष्यानुरोधादिहाऽन्त्यलोपपक्ष एवाश्रयणीयः। नन्वन्त्यलोपपक्षे दकारस्य लोपे सति "बहुवचने झल्येत्" इत्येत्वं स्यादित्यत आह--तत्राङ्गवृत्तेति। "अङ्गवृत्तेः पुनर्वृत्तावविधि"रिति परिभाषयेत्यर्थः। अङ्गेवृत्तं वर्तनं यस्य तत्-अङ्गवृत्तं, तस्मिन् कार्ये प्रवृत्ते सति अन्यस्य अङ्गकार्यस्य वृत्तौ प्रवृत्तिविषये अविधिः=विदिर्नास्तीत्यर्थः। प्रकृते च शेषलोपे अङ्गकार्ये प्रवृत्ते सति, अन्यत् अङ्गकार्यमेत्त्वं न भवतीति भावः। अभ्यम् त्विति। अब्यमादेशस्तु टिलोपपक्षे अन्त्यलोपपक्षे च अनुकूल इत्यर्थः। तत्र अन्त्यलोपपक्षे अभ्यमो झलादित्वाऽभावात्तस्मिन् परे एत्वं न। किन्तु पररूपे सति युष्मभ्यम् अस्मभ्यम् इति सिध्यति। टिलोपपक्षे तु अङ्गस्य अदन्तत्वाऽभावादपि एत्वं न।

तत्त्व-बोधिनी

भ्यसोऽभ्यम् ३५१, ७।१।३०

पक्षद्वयेऽपि साधुरिति। नन्वन्त्यलोपपक्षे पररूपं बाधित्वा सवर्णगदीर्घः स्यादकारोच्चारणसामर्थ्याजिति चेदत्राहुः, बहुवचने झल्ये"दित्येत्वनिवृत्याऽकारोतच्चारणस्य चरितार्थत्वादिति। यद्यप्यङ्गवृत्तपरिभाषया एत्वं सुपरुहरं, तथापि तस्या अनित्यत्वे इदमप्यकारोच्चारणं ज्ञापकमिति तत्त्वम्।

---

सूत्रम्

काशिका-वृत्तिः

पञ्चम्या अत् ७।१।३१

पञ्चम्याः भ्यसः युष्मदस्मद्भ्याम् उत्तरस्य अतित्ययम् आदेशो भवति युष्मद् गच्छन्ति। अस्मद् गच्छन्ति।

लघु-सिद्धान्त-कौमुदी

पञ्चम्या अत् ३२७, ७।१।३१

आभ्यां पञ्चम्यां भ्यसोऽत्स्यात्। युष्मत्। अस्मत्॥

न्यासः

पञ्चम्या अत्?। , ७।१।३१

पूर्वेण प्राप्तस्य भ्यमोऽयमपवादः॥

बाल-मनोरमा

पञ्चम्या अत् , ७।१।३१

पञ्चम्या अत्। "युष्मदस्मद्भ्यां ङसोऽ"शित्यतो" युष्मदस्मद्भ्यामित्यनुवर्तते। "भ्यसोऽभ्य"मित्यतो "भ्यस" इति। तदाह-आभ्यामिति। युष्मदस्मद्भ्यामित्यर्थः। युष्मत् अस्मदिति। युष्मद् भ्यस्, अस्मद् भ्यसिति स्थिते भ्यसोऽदादेशः। शेषलोपश्च।

---

सूत्रम्

काशिका-वृत्तिः

एकवचनस्य च ७।१।३२

पञ्चम्या एकवचनस्य युष्मदस्मद्भ्याम् उत्तरस्य अतित्ययम् आदेशो भवति। त्वद् गच्छन्ति। मद् गच्छन्ति।

लघु-सिद्धान्त-कौमुदी

एकवचनस्य च ३२६, ७।१।३२

आभ्यां ङसेरत्। त्वत्। मत्॥

न्यासः

एकवचनस्य च। , ७।१।३२

चकारोदादेशानुकर्षणार्थः, भ्यसपेक्षया समुच्चयार्थो वा। "ङसेश्च" इति। वक्तव्ये, एकवचनक्तेति वचनं वैचित्र्यार्थम्()॥

बाल-मनोरमा

एकवचनस्य च , ७।१।३२

अथ पञ्चमी। एकवचनस्य च। "युष्मदस्यद्भ्यां ङसोऽश्" इत्यतो "युष्मदस्मद्भ्या"मित्यनुवर्तते, "पञ्चम्या अत्" इति च, तदाह-आभ्यामिति। युष्मस्मद्भ्यामित्यर्थः। अनेकाल्त्वात्सर्वादेशः। "न विभक्तौ" इति तस्य नेत्त्वम्। त्वत् मदिति। युष्मद् अस्, अस्मद् अस् इति स्थिते त्वमादेशयोः कृतयोः ङसेरदादेशे सति पररूपे "शेषे लोपः" इति टिलोपः। अन्त्यलोपपक्षे दकारलोपे सति त्रायाणामकाराणां पररूपमिति भावः। सुवचमिति। लाघवादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

साम आकम् ७।१।३३

साम इति षष्ठीबहुवचनम् आगतसुट्कं गृह्यते। तस्य युष्मदस्मद्भ्याम् उत्तरस्य आकम् इत्ययम् आदेशो भवति। युष्माकम्। अस्माकम्। अथ किमर्थम् आगतसुट्को गृह्यते, न घादेशविधानकाले सुड् विद्यते? तस्य एव तु भाविनः सुटो निवृत्त्यर्थम्। आदेशे कृते हि शेषेलोपे युष्मदस्मदोरकारान्तत्वात् सुट् प्राप्नोति, स स्थान्यन्तर्भूतत्वात् निवर्तते। दीर्घोच्चारणं सवर्णदिर्घार्थम्। अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्वं न प्राप्नोति? तत्सामर्थ्यम् एत्वं प्रति भविष्यति इति अकारकरणमेत्वनिवृत्त्यर्थम् इति। अतो गुणे पररूपत्वं स्यात्।

न्यासः

साम आकम्?। , ७।१।३३

"सम इति षष्ठीबहुवचनमागतसुट्कं परिगृह्रते" इति। युष्मदस्मद्भ्यामुत्तरस्यान्यस्य सामशब्दस्यासम्भवात्()। आगतः सम्प्राप्तः सुट्? यत्र येन वा तत्तथोक्तम्()। "अथ" इत्यादौ वाक्य "आगतसुट्कः" इत्याम्प्रत्ययापेक्षया पुंल्लिङ्गत्वं वेदितव्यम्()! "अथ किमर्थमागतसुट्कः परिगृह्रते" इति पृष्टस्य ससुट्कस्यादेशो यथा स्यादिति प्रतिवचनमाशह्क्याह--"न हि" इत्यादि। "आमि सर्वनाम्नः सुट्()" ७।१।५२ इत्यत्र "आज्जसेरसुक्()" ७।१।५० इत्यत आदिति वत्र्तते, तेनाकारान्तात्? सर्वनाम्नः सुङ्? विधीयते। अकारान्तता च युष्मदस्मदोः "शेषे लोपः" ७।२।९०

इत्यन्तलोपे सति भवति। शेषेलोपेनाप्याकमादेशे कृते भवितव्यम्()। तस्मादादेशविधानकाले सुण्न विद्यते। ततश्च ससुट्कस्यादेशो यथा स्यादित्येतत्प्रयोजनं नोपपद्यत इत्यन्यद्वक्तवयमित्यभिप्रायेणाह--"तस्यैव" इत्यादि। यद्यसुट्को गृह्यते "निर्दिश्यमानस्यादेशा भवन्ति" (व्या।प।१०६) इत्यसुट्कस्यैवादेशः स्यात्()। एवञ्चाभिनिवृत्ते स्थान्यादेशभावे पश्चाद्भवतः सुटः केन निवृत्तिः स्यात्()? इष्यते च तस्यापि निवृत्तिः। अतस्तस्य भाविनोऽपि निवृत्तिर्यथा स्यादित्येवमर्थं समुट्को गृह्यते। ननु च युष्मदस्मद्भ्यामुत्तरस्यामः सुडेव न प्राप्नोति, अकाराद्धि सर्वनाम्नः सुङ्? विधीयते, युष्मदस्मादोश्च त्यदाद्यत्वं नास्ति, "द्विपर्यन्तास्त्यदादयः" इति त्यदाद्यत्वस्याभावाच्छेषेलोपस्य च टिलोपादकारान्तता न सम्भवति; अतो भाविनोऽपि सुटो निवृत्तिर्नैव प्रयोजनमुपपद्यते? एतच्चोद्यमपाकर्त्तुम्? ""शेषे लोपः" इत्यन्तलोपः" इति ह्यदि कृत्वाऽऽह--"कृते हि" इत्यादि। अथ क्रियमाणे समुट्कस्य ग्रहणे कथमसौ निवत्र्तते, शास्त्रान्तराद्धि प्रसक्तस्य शास्त्रेण निवृत्तिः क्रियते, न चादेशविधानकले सुट्प्रसङ्गोऽस्ति? इत्याह--"स च स्थान्यन्तर्भूतत्वात्()" इत्यादि। यद्यादेशविधानकाले सुटः प्रसङ्गः सम्भवेत्? ततो भावी न निवत्र्तते, न चासावादेशकाले सम्भवति। तस्माद्भाविनः सुटः ससुट्कग्रहणेन स्थान्यन्तर्भूतत्वाद्यस्यामवस्थायां तस्य प्राप्तिस्तस्यां प्रसक्तः स निवत्र्तते; मन्यथा हि तस्य स्थान्यन्तर्भावोऽनर्थकः स्यात्()। स्यादेतत्()--यदि "शेषे लोपः" ७।२।९० इत्यन्तलोपस्ततः समुटकस्योपादानमर्थवद्भवति, यदा तु सेषेलोपष्टिलोपस्तदा नार्थः कस्मान्नाश्रीयते, तस्यानुपपत्तेः। अनुपपत्तिस्तु लक्षणाभावात्()। अन्त्यलोपस्यास्यैतदेवास्ति लक्षणमिति स एवाश्रितः। यद्येवम्(), युष्मद्ब्राआह्णीभ्योगच्छतीत्यन्त्यलोपे सति "अजाद्यतष्टाप्()" (४।१।४) इति टाप्प्रसज्येत? "अलिङ्गे युष्मदस्मदी" इति नैषोऽस्तप्रसङ्गः। "दीर्घोच्चारणम्()" इत्यादि। ननु चाकम्यपि अकः सवर्णदीर्घत्वे (६।१।१०१) न सिध्यत्येव? न; सिध्यति। "अतो गणे" (६।१।९७) इति पररूपत्वमपवादः प्राप्नोतीति चेत्()? न; अकारोच्चारणसामथ्र्यात्()। यदि अतो गुणे" (६।१।९७) पररूपत्वं स्यात्? तदाकारोच्चारणमनर्थकं स्यात्(), कमित्येव ब्रूयादित्यत आह--"अकमि तु" इत्यादि। तुशब्दो दीर्घोच्चारणापेक्षया समुच्चयार्थः। इतिकरणो हेतौ। यदि ह्यकारोच्चारणस्य प्रयोजनं न स्यात्(), शक्यते वक्तुम्()--अकारोचचारणसामथ्र्यान्न भविष्यतीति; अस्ति च तसय प्रयोजनम्(), किं तत्()? "ब्राहुवचने झल्येत्()" ७।३।१०३ इत्येत्त्वं मा भूत्()। तस्मात्? सत्यप्यकारोच्चारण एतत्त्वनिवृत्त्यर्थे "अतो गुणे" ६।१।९४ पररूपत्वं स्यात्(), न सवर्णदीर्घत्वम्()। अतस्तदर्थं दीर्घोच्चारणं क्रियते॥

बाल-मनोरमा

साम आकम् , ७।१।३३

साम आकम्। आभ्यामिति। "युष्मदस्मद्भ्यां ङसो"शित्यतस्तदनुवृत्तेरिति भावः। साम इति। सकारेण सहित आम्-साम्, तस्येत्यर्थः, ससुट्कस्य आम इति यावत्। ननु युष्मद् आम्, अस्मद् आमिति स्थिते अवर्णात्परत्वाऽभावात्सुटो न प्रसक्तिः। नच "शेषे लोपः" इति तस्य लोपे कृते।ऽवर्णात्परत्वमस्तीति वाच्यम्, आकमादेशात्प्रागनादेशतया शेषेलोपस्यैवात्राऽप्रसक्तेः ससुट्कनिर्देशोऽनुपपन्नो व्यर्थश्चेत्यत आह--भाविन इति। भविष्यत इत्यर्थः। यदि तु "आम आकम्" इत्येवोच्येत, तर्हि आम आकमादेशे कृते दकारस्य शेषेलोपे सति स्थानिवत्त्वेन आकमादेशस्य आम्त्वात्तस्य चाऽवर्णात्परत्वात्सुडागमः स्यात्। तत एत्वषत्वयोर्युष्मेषाकम्, अस्मेषाकमिति स्यादतः ससुट्कनिर्देशः। यद्यपि आकमादेशप्रवृत्तकाले सुटो न प्रसक्तिस्तथापि आकमादेशोत्तरं दकारलोपे कृते स्थानिवत्त्वेन यः सुट भविष्यति, तस्यापि स्थानषष्ठ()आ स्वीकरणान्निवृत्तिर्भवति। अन्यता ससुट्कनिर्देशवैयथ्र्यादिति भावः। यदि तु शेषस्य लोप एवाश्रीयते, तदा कृतेऽप्याकमादेशेऽदो लोपेऽवर्णात्परत्वाऽभावादेव सुटः प्रसक्त्यभावलात्ससुट् कनिर्देशो मास्तु। युष्माकम् अस्माकमिति। आकमादेशे कृतेऽदो लोपे रूपम्। दकारलोपे तु सवर्णदीर्घः। एतदर्थमेव दीर्घोच्चारणम्। अन्यता पररूपापत्तेः। न चाऽकारोच्चारणसामथ्र्यादेव पररूपनिरास इति वाच्यं, "क"मादेशे प्राप्तबहुवचने

झल्ये"दित्येत्वनिवृत्त्या चरितार्थत्वादित्यलम्। त्वयि मयीति। युष्मद् इ, अस्मद् इ इति स्थिते मपर्यन्तस्य त्वमादेशयो "र्योऽची"ति दस्य यत्वे पररूपे रूपमिति भावः। युवयोः #आवयोरिति। प्राग्वत्। युष्मासु अस्मास्विति। युष्मदस्मदोरनादेशे" इति दकारस्य आत्वे सवर्णदीर्घ इति भावः। "त्वमावेकवचने" इत्यत्र "युवावौ द्विवचने" इत्यत्र च एकवचनद्विवचनशब्दौ यौगिकौ, नतु प्रत्ययपराविति स्थितम्।

तत्फलं श्लोकचतुष्टयेन सङ्गृह्णाति--समस्यमाने इति। तत्र प्रथमश्लोके "चे"दित्यनन्तरम् "अपी"त्यध्याहार्यम्। यदि समस्यमाने युष्मदस्मदी द्व्येकत्ववाचिनी तदा समासार्थोऽन्यसङ्ख्यश्चेदपि युवावौ त्वमावपि स्त इत्यन्वयः। त्वां मां वा अतिक्रान्तः; अतिक्रान्तौ, अतिक्रान्ता इति, युवामावां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति च विग्रहे-"अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासं लभमाने युष्मदस्मदी द्वित्वैकत्वान्यतरविशिष्टार्थवाचिनी यदा तदा समासार्थः मुख्यविशेष्यभूतोऽन्यसङ्ख्यश्चेदपि युष्मदस्मदर्थगतसङ्ख्यापेक्षया अन्यसङ्ख्याकश्चेदपि युष्मदस्मर्थगतद्वित्वे युवावौ, तदर्थगतैकत्वे त्वमौ च द्विवचनैकवचनप्रत्ययपरत्वाऽभावेऽपि युष्मदस्मदर्थगतसङ्ख्यापेक्षया अन्यसङ्ख्याकश्चेदपि युष्मदस्मर्थगतद्वित्वे युवावौ, तदर्थगतैकत्वे त्वमौ च द्विवचनैकवचनप्रत्ययपरत्वाऽभावेऽपि भवतः, युवावादेशविधौ द्विवचनशब्दस्य, त्वमादेशविधौ एकवचनशब्दस्य च यौगिकत्वाश्रयणात्। एकवचने प्रत्यये परतस्त्वमादेशौ, द्विवचने प्रत्यये परतो युवावादेशौ इत्यर्थाश्रयणे तु त्वां मां वा अतिक्रान्तौ, अतिक्रान्ता इति विग्रहे अतियुष्मद्()शब्दे अत्यस्मच्छब्दे च युष्मदस्मदोर्द्विवचने बहुवचने च प्रत्यये परे त्वमै न स्याताम्। तथा युवामावां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति विग्रहे युष्मदस्मदोरेकवचने बहुवचने च प्रत्यये परे युवावौ न स्यातामित्यव्याप्तिः स्यादित्यर्थः। ननु युष्मद्समदोद्व्र्यर्थकत्वे युवावौ, एकार्थकत्वे तु त्वमौ इति किं सार्वत्रिकम्?।

नेत्याह--सुजस्ङेङस्सु इति। द्वितीयश्लोकेऽस्मिन् उत्तरार्धे त्वाहावित्यादि तत्तत्सूत्रप्रतीकग्रहणम्। "इती"त्यनन्तरं "ये" इत्यध्याहार्यम्। "त्वाहौ सौ", "यूयवयौ जसि", "तुभ्यमह्यौ ङयि", "तवममौ ङसी"ति सुजस्ङेङस्सु ये आदेशा विहितास्ते अतियुष्मदत्यस्मच्छब्दाभ्यामेकद्विबह्वर्थवृत्तित्वेऽपि स्युरित्यर्थः। ननु तत्रापि द्व्यर्थकत्वे युवावौ एकार्थकत्वे त्वमौ कुतो नेत्यत आह-एति इति। तृतीयश्लोके पूर्वाद्र्धमेकं वाक्यम्।

एते=त्वाहादयः, स्वके=स्वीये विषये सुजसादौ, युवाबौ बाधन्ते। कुतः?। परत्वात्। युवावापेक्षया एतेषां परत्वादित्यर्थः। नन्वस्त्वेवं त्वाहादिभिर्युवाबयोर्बाधः, त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह--त्वमावपीति। पूर्वेति। विप्रतिषेधे सति पूर्वं पूर्वविप्रतिषेधः। "सुप्सुपा" इति समासः। तृतीयान्तात्तसिः। विप्रतिषेधसूत्रे परशब्दस्य इष्टवाचितया क्वचिद्विप्रतिषेधे पूर्वकार्यस्य प्रवृत्त्याश्रयणादिति भावः। "प्रत्ययोत्तरण्दयोश्च" इति सूत्रभाष्ये तु "त्वमावेकवचने" इति सूत्रे "शेष" इत्यनुवत्र्य "सुजस्ङेङस्()भिन्नविभक्तिषु" इति व्याख्यातम्।

तदेवं "त्वमावेकवचने", "युवावौ द्विवचने" इत्यत्र
एकद्विवचन्शब्दयोर्यौगिकत्वाश्रयणस्याऽव्याप्तिपरिहारार्रथत्वमुक्त्वाऽतिव्याप्तिपरिहारार्थत्वमाह-द्व्यकसङ्ख्य इति। चतुर्थश्लोकेऽस्मिन् "यदा" "तदे"त्यध्याहार्यम्। यदा युष्मान् अस्मान्वा अतिक्रान्तौ अतिक्रान्ता इति विग्रहे समासे सति द्वित्वैकत्वविशिष्टः समासार्थः=समासस्य मुख्यविशेष्यभूतः, युष्मदस्मदी तु बह्वर्थके, तदा युवावौ त्वमौ च न स्तः, तयोः युष्मदस्मदोर्द्वित्वैकत्वविशेष्टार्थकत्वाऽभावात्। युवावविधौ त्वमविधौ च युष्मदस्मदोर्द्वित्वैकत्वविशिष्टवाचित्वे सत्येव प्रवृत्तेराश्रयणात्। द्विवचने एकवचने च प्रत्यये परत इत्यर्थाश्रयणे तत्राऽतिव्याप्तिः स्यादित्यर्थः। अत्र "प्रत्ययोत्तरपदयोश्चे"ति सूत्रे भाष्ये "त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहण"मिति वार्तिकव्याख्यावसरे "युवावौ द्विवचने" "त्वमावेकवचने" इत्यत्र द्विवचनैकवचनशब्दयोर्यौगिकत्वाश्रयणमुपक्षिप्य युवाम् आवां वा अतिक्रान्तः, अतिक्रान्तौ,

अतिक्रान्ता इति विग्रहान् प्रदश्र्य, त्वा मां वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति च विग्रहान् प्रदश्र्य, अतियुष्मदत्यस्मच्छब्दयो सुजस्()ङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु सर्वत्र युवावादेशौ त्वमादेशौ च उदाह्मत्य प्रदर्शितौ। सुजसङेङस्सु तु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येत एवादेशा उदाह्मताः। तदिदं श्लोकचतुष्टयेन संगृहीतम्। तदिदानीं तत्प्रपञ्चनपरभाष्यानुसारेणोदाह्मत्य प्रदर्शयति-त्वा मां वा अतिक्रान्त इत्यादिना। अतिक्रान्तौ अतिक्रान्ता इति च विग्रहयोरुपलक्षणमिदम्। "विग्रहे" इत्यनन्तरं "रूपाणि वक्ष्यन्ते" इति शेषः। सुजस्()ङेङस्()भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य त्वमावे भवतः। अवशिष्टप्रक्रियास्तु केवलयुष्मदस्मद्वज्ज्ञेयाः। सुजस्()ङेङस्सु तु त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममौ इत्येते एवादेशाः पूर्वप्रतिषेधात्त्वमौ बाधित्वा भवन्ति। ततश्च सुजस्()ङेङस्सु केवलयुष्मदस्मद्वदेनव रूपाणीति निष्कर्षः। अतित्वाकम् अतिमाकमिति। ननु "सामः आक"मिति ससुट्()कनिर्देशाद्यत्र आमः सुट्संभवस्तत्रैवाकम्, नचात्र सुट् संभाव्यते, इह युष्मदस्मदोरुपसर्जनत्वे सर्वनामत्वाऽभावात्। सुटः सर्वनाम्नः परस्यामो विहितत्वादिति चेत्, मैवम्-ससुट्कत्वस्य संभावनामात्रविषयत्वात्। एवंच सुट् यत्र संभविष्यति तत्र सुटो निवृत्त्यर्थं ससुट्कनिर्देशः। यत्र तु सुट् न संभवति, तत्र केवलस्य आमः सुट्। अत्र च "प्रत्ययोत्तरपदयोश्चे"ति सूत्रेऽतित्वाकमतिमाकमिति भाष्ये तदुदाहरणं प्रमाणमित्यास्तां तावत्। तदेवमुपसर्जनयोः युष्मद्समदोरेकार्थवाचित्वं उदाहरणान्युक्त्वा द्व्यर्थवाचित्वे उदाहरति--युवाम् आवां वा अतिक्रान्त इति। अतिक्रान्तौ अतिक्रान्ता इति विग्रहयोरुपलक्षणम्। अत्र युष्मदस्मदोद्वर्थ्यृत्तित्वात्सुजस्()ङेङस्भ्योऽन्यत्र सर्वासु विभक्तिषु एकद्विबहुवचनेषु मपर्यन्तस्य युवावावेव भवतः। अवसिष्टास्तु प्रक्रियाः केवलयुष्मदस्मद्वज्ज्ञेयाः। सुजस्()ङेङस्सु केवलयुष्मदस्मद्वदेव रूपाणिति निष्कर्षः। अथ युष्मदस्मदोरुपसर्जनयोर्बह्वर्थवाचित्वे उदाहरणान्याह--युष्मान् अस्मान्वेति। युष्मानस्मान्वा अतिक्रान्तः, अतिक्रान्तौ, अतिक्रान्ता इति विग्रहेष्वित्यर्थः। "द्वयेकसङ्ख्यः समासार्थः" इति चतुर्थश्लोकस्योदाहरणान्येतानि। अत्र युष्मस्स्मदोरेकद्व्यर्थवाचित्वाऽभावात्सुजस्()ङेङस्भ्योऽन्यत्र मपर्यन्तस्य क्वापि न त्वमौ, नापि युवावौ। "ङे प्रथमयोः" इत्याद्यास्तु भवन्त्येव। सुजस्()ङेङस्सु तु त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ इत्येते भवन्त्येव। तेषामेकद्व्यर्थविशेषनिबन्धनत्वाऽभावात्। प्राग्वदिति। केवलयुष्मस्मद्वदित्यर्थः। इत्यधिकृत्येति। "विधयो वक्ष्यते" इति शेषः। अष्टमस्य प्रथमे पादे इमानि सूत्राणि पठितानि। तत्र "पदस्ये"टत्येतत् "अपदान्तस्य मूर्धन्यः" इत्यतः प्रागधिक्रियते। "पदात्" इत्येतत्तु "कृत्सने च सुप्यगोत्रादौ" इत्यतः प्रागदिक्रियते। "अनुदात्तं सर्वमपादादौ" इति पदत्रयं तु आ पादसमाप्तेरधिक्रियते इति भाष्यादिषु स्पष्टम्।

तत्त्व-बोधिनी

साम आकम् ३५३, ७।१।३३

तव ममेति। नन्वत्रान्त्यलोपपक्षेऽशः स्यादेशः स्यात्, यत्वमिवृत्त्यर्थतया अ()आचनस्य चरितार्थत्वात्। नच स्यादेशस्यापवादोऽशिति वाच्यम्, अशादेशप्रवृत्तिकाले शेषे लोपाऽभावेन स्यादेशस्यऽप्रसक्तेः। अत्राहुः-- अङ्गवृत्तपरिभाषया स्यादेशे वारणीयः। यदि तु अङ्गस्य तत्कार्यं तद्विषयियिण्येव सा परिभाषा, न त्वङ्गाधिकारपरेति दुराग्रहस्तह्र्रशित्यत्र "अतो गुणे"इति पररूपेणाऽकारान्तरं प्रश्लिष्याऽकाररूप एवाऽश् भवति न तु विक्रियत इति व्याख्येयमिति। नन्वाकमादेशात्पूर्वमनादेशत्वाद्योचीति यत्वेन भाष्यं, ततश्च शेषे लोपाऽभावादवर्णान्तादिति विधायमानस्य सुडागमस्या।ञप्रसक्त्या साम इति ससुट्कनिर्देशो व्यर्थ इत्यत आह--भाविन इति। कृते हि शेषेलोप अकारान्तत्वात्प्राप्तः सुट् ससुट्कस्य स्थानित्त्वेन निर्देशसामथ्र्यान्निवर्तत इति भावः। "शेषे लोपष्टिलोपः"इति पक्षे तु सुङ्ग्रहणं व्यर्थमेन। आकमि दीर्घोच्चारणं सवर्णदीर्घार्थम्। अन्यथा पररूपं स्यात्। न चाऽकारोच्चारणसामथ्र्यम्, एत्वनिवृत्त्या अभ्यमैव चरितार्थत्वात्। इह "युवावौ द्विवचने""त्वमावेकवचने"इति सूत्रद्वयेऽपि द्विवचनैकवनशब्दार्थपरौ, नतु प्रत्ययपराविति व्याख्यातं, तत्फलं दर्शयति--समस्यमान इत्यादिना। द्व्येकत्ववाचिनी इति। "पञ्चकं

प्रातिपदिकार्थं"इति पक्षाभिप्रायेणेदमुक्तम्। अस्मिंस्तु पक्षे सङ्ख्याया अपि प्रातिपदिकार्थत्वात्। त्रिकपक्षे चु "द्व्येकार्थवाचिनी"इति पाट()म्। सङ्ख्याया विभक्त्यर्थत्वेऽपि सङ्खयेयस्य प्रातिपदिकार्यत्वानपायात्। अन्यसङ्ख्यश्चेदिति। युष्मदस्मदर्थगतसङ्ख्येतरसङ्ख्यायुक्तश्चेदित्यर्थः। स्त इति। अर्थपरत्वाश्रयणसामर्थ्यादेव भूतपूर्वगतेरपि स्वीकाराद्युवावौ त्वमावपि स्तः। प्रत्ययपरत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः। एवं चतुर्थश्लोकेऽपि "न युवावौ त्वौ न चे"त्युक्त्या प्रत्ययपरत्वेऽतिव्याप्तिध्र्वनिता। एवं चाऽव्याप्त्यतिव्याप्तिपरिहारायार्थपरत्वमाश्रितमिति फलितम्। नन्वेवं सुजस्()ङेङस्स्वपि युष्मदस्मदोद्वर्थत्वे युवावौ स्यातामेकार्थत्वे तु त्वमावित्याशङ्कायामाह--सुजस्()ङेङस्सु परत इति। के ते आदेशा इत्यत त्याह---त्वाहौ यूयवयावित्यादि। अस्त्वेवं त्वाहागिभिर्युवावयोर्बाधस्त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह---त्वमावपीति। "विप्रतिषेधे पर"मित्यत्र परशब्दस्येष्टवाचित्वादिति भावः। अतित्वामतिमामिति। त्वां मा#ं वा अतिक्रान्ताविति विग्रहः। अतियूयम्। अतिवयमिति। त्वां मां वा अतिक्रान्ता इति विग्रहः। एवमग्रेऽप्यूह्रम्। अतित्वाकम्। अतिमाकमिति। अत्रान्त्यलोपपक्षे त्वङ्गवृत्तपरिभाषया नुडागमो निवार्यः, "ह्यस्वनद्यापः"इत्यत्र "ह्यस्वान्ताद्विहितस्यामो नु"डिति व्याख्यानाद्वा। नन्वेवं भिन्नविषयतया सुटो नुडपवादत्वाऽभावेनाऽवर्णान्तसर्वनामाभ्यो विहितस्यामो नुडेव परत्वात्स्यात्, नतु सुडागमः, तस्य "येषां""ताषा"मित्यादौ सावकाशत्वादिति चेदत्राहुः--"त्यदादेरमि सु"डिति वक्तव्ये"आमि सर्वनाम्नः"इति सर्वानामग्रहणसामर्थ्याद्धलि सर्वेषैमित्यादिनिर्देशाच्च अवर्णान्तसर्वनामभ्योऽप्यामः सुडेव भवति, नतु नुट्। "शस्प्रभृतिषु"इति च विषयसप्तसी, तेन पद्दन्नादिष्वप्यामि न नुडिति। एवं च "साम"इतिससुट्कनुर्देशेन युष्माकमस्माकमित्यत्र सुडादमाऽभावेऽपि नुडागमो दुर्वाप इत्याशङ्काया अपि निरवकाश एवेति बोध्यम्। यत्ु वदन्ति--"साम आक"मित्यत्र यद्यपि सुड्ग्रहणं न स्थानिविशेषणं, बाधात्, तथापि उपलक्षणं तु भवति। यस्यामः सुडग्रे भावी तस्यैवाम आकमा भवितव्यं, न चैतद्रौत्वे संभवतीत्यकम्न?प्रवर्तते। तथाच "अतित्वयाम्"तिमया"मित्येव रूपं, न त्वतित्वाकमतिमाकमिति। तदसत्। आकमाऽपह्मतस्यामः सुडन्वयाऽभावात्। "आकमः सुड्भावी"ति चेत्तर्हि तमेवोपलक्षयेत्। आदेशद्वारकेण परम्परासंबन्धेन स्थानिनमुपलक्षयति चेदेवं तर्हि "युष्माक"--मित्यादौ सुट् श्रूयते। "साम"इति निर्देशसामर्थ्यान्न श्रूयतेति चेन्न, निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन सामथ्र्याऽभावादित्यन्यत्र विस्तरः। गुणभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युत्क्वा सम्प्रति द्य्वर्थवाचित्वे उदाहरति--युवामावां वा अतिक्रान्त इत्यादिना। बह्वर्थयोस्तूदाहरति---युष्मानस्मान्वेति।""""

---

सूत्रम्

काशिका-वृत्तिः

आत औ णलः ७।१।३४

आकारान्तादङ्गादुत्तरस्य णलः औकारादेशो भवति। पपौ। तस्थौ। जग्लौ। मम्लौ। अत्र औत्वम्, एकादेशः , स्थानिवद्भावः, द्विर्वचनम् इत्यनेन क्रमेण कार्याणि क्रियन्ते। एकादेशादनवकाशत्वादौत्वं द्विर्वचनादपि परत्वादेकादेशः इति।

लघु-सिद्धान्त-कौमुदी

आत औ णलः ४९०, ७।१।३४

आदन्ताद्धातोर्णल औकारादेशः स्यात्। पपौ॥

न्यासः

आत औ णलः। , ७।१।३४

"तस्यौ" इति। "शर्पूर्वाः खयः" ७।४।६१ इति खयः शेषः। "जग्लौ" इति। "कहोश्चुः" ७।४।६२ इति चुत्वम्()। इह "पा" इत्यादिभ्यो णलि परत्रवस्थिते युगपत्? त्रीणि कार्याणि प्राप्नुवन्ति--द्विवचनम्(), एकादेशः, औत्वञ्च। तेषाञ्च तथा प्राप्तानां युगपत्प्रवृत्तिः सम्भवतीति सामथ्र्यात्? प्राप्तः क्रम आश्रीयते। तत्र येन क्रमेण तानि कत्र्तव्यानि, तं दर्शयितुमाह--"अत्र" इत्यादि। अत्रेत्यनेन पपवित्यादीन्युदहरणानि प्रत्ययमुश्यन्ते। यदि द्विर्वचनादेकादेशः पूर्वं क्रियते तदा "वृद्धिरेचि" ६।१।८५ इति वृद्धावेकादेशे कृते निमित्तनिमित्तिनोविंशेषाभावाल्लिटि परतः पूर्वस्योचयमानं द्विवचनं न प्राप्नोतीति तस्य निरासायेदमुक्तम्()--स्थानिवद्भावो द्विर्वचनमिति। केन पुनरत्र स्थानिवद्भावः? "द्विर्वचनेऽचि" (१।१।५९) इत्यनेन? नैवम्(); द्विर्वचननिमित्तेऽपि परतः पूर्वस्योच्यमानं द्विवचनं न प्राप्नोतीति तस्य निरासायेदमुक्तम्()--स्थानिवद्भावो द्विर्वचनमिति। केन पुनरतर स्थानिवद्भावः? "द्विर्वचनेऽचि" (१।१।५९) इत्यनेन? नैवम्(); द्विर्वचननिमित्तेऽचि परतः पूर्वसय स्थानिवद्भाव उच्यते, न चात्र द्विर्वचननिमित्तं परमचं पश्यामः। अत्र क्चिदाहुः--अचीत्युपलक्षणम्(), अचि य आदेशो दृष्टः स द्विर्वचने कत्र्तव्ये स्थानिवद्भवतीतीमं सूत्रार्थमाश्रित्यैतदुक्तम्()। इह सम्प्रत्यनच्परत्वेऽप्येकादेशकरणकालेऽचः परस्य निमित्तभावेनश्रयणादच्ययमादेशः कृतः। तस्माद्भवितव्यं स्थानिवद्भावेन। अन्ये त्वाहु--"एकादेशः पूर्वविधौ स्थानिवद्भवतीति वक्तव्यम्()" इत्यनयेष्ट()आ स्थानिवद्भावः। "द्विर्वचनेऽचि" १।१।५८ इति योगाविभागाद्वा स्थानिवद्भावः इत्यपरे। कथं पुनरयमेषां कार्याणां क्रम उपलभ्यते? इत्यत आह--"एकादेशात्()" इत्यादि। पा+अ इति स्थितेऽकः सवर्णे दीर्घत्वं ६।१।९७ प्राप्नोति, औत्वञ्च। तत्रैकादेशः--दण्डाग्रमित्यादौ सावकाशः, औत्वं तु न क्वचित्? सावकाशम्(); अतस्तावदनवकाशत्वात्? प्रागौत्वं क्रियते, ततर कृते वृद्धिः प्रापनोति, द्ववचनञ्च, तत्र परत्वाद्()वृद्धिर्भवति। द्विवचनं हि--पपाचेत्यादौ सावकाशम्(), वृद्धेस्त्ववकाशः--खट्वैडकेत्यादौ। अतो वृद्धौ कृतायां पश्चाद्भवति द्विर्वचनं स्थानिवद्भावेन! "णलः" इति। णकारोच्चारणं प्रत्ययग्रहणं यथा स्यात्()। णलो णकारोच्चारणे हि णल्प्रत्ययोऽस्तीति तस्य ग्रहणं भवति। त()स्मश्वासत्यल इत्युच्यमाने सत्यल्प्रत्ययस्याभावात्? प्रत्याहारग्रहणं विज्ञायेत। लकारोच्चारणं "श्याद्व्यध" ३।१।१४१ इत्यादिना विहितस्य णप्रत्ययस्य ग्रहणं मा भूदित्येवमर्थम्()। अथ "एकवचनस्य" (७।१।३२) इत्यनुवत्र्तते? तथा सति मुखसुखार्थम्()॥

बाल-मनोरमा

आत औ णलः २०८, ७।१।३४

तथा च प्रकृते लिटि द्वित्वादौ दधा अ इति स्थिते--आत औ। "औ" इति लुप्तप्रथमाकम्। अङ्गस्येत्यधिकृतं पञ्चम्या विपरीणम्यते। "आत" इति तद्विशेषणम्। तदन्तविधिः। तदाह--आदन्ताद्धातोरिति। णल्()प्रकृतिश्च धातुरेवेति धातुग्रहणम्। तथा च णल औत्वे वृद्धौ रूपमाह-- दधाविति।

तत्त्व-बोधिनी

आत औ णलः १८०, ७।१।३४

आत औ णलः। इह अङ्गस्येत्यनुवर्तते। धातोरिति तु फलितार्थकथनम्। आदन्तादङ्गादित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तुह्योस् तातङाशिष्यन्यतरस्याम् ७।१।३५

तु हि इत्येतयोः आशिषि विषये तातङादेशो भवत्यन्यतरस्याम्। जीवताद् भवान्। जीवतात् त्वम्। जीवतु भवान्। जीव त्वम्। ङित्करणम् गुणवृद्धिप्रतिषेधार्थम् इति सर्वादेशस्तातङ् भवति। ङित्त्वाच् चास्य स्थानिवद्भावात् यत् पित्त्वं प्राप्नोति

तन्निवर्तते। ङिच्च पित् न भवति। तेन ब्रुव ईट् ७।३।९३ इति ब्रूताद् भवानिति ईट् न भवति। आशिषि इति किम्? ग्रामं गच्छतु भवान्। गच्छ त्वम्। तातङि ङित्वं सङ्क्रमकृत् स्यादन्त्यविधिश्चेत् तच्च तथा न। हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकम् आह। तातङो ङित्त्वसामर्थ्यान् न अयम् अन्त्यविधिः स्मृतः। न तद्वदनङादीनां तेन ते ऽन्त्यविकारजाः।

लघु-सिद्धान्त-कौमुदी

तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ४१४, ७।१।३५

आशिषि तुह्योस्तातङ् वा। परत्वात्सर्वादेशः। भवतात्॥

न्यासः

तुह्योस्तातङाशिष्यन्यतरस्याम्?। , ७।१।३५

"जोवताद्भवान्()" इति। "आशिषि लिङ्लोटौ" (३।३।१७३) इति लोट्? तिप्(), शप्? "एरुः" ३।४।८६ इत्युत्वम्(), तस्य तुशब्दस्य तातङ्()। जीवतात्त्वम्()" इति। सिप्(), "सेह्र्यपिच्च" ३।४।८७ इति हिरादेशः; तस्य तातङ्। "जीव त्वम्()" इति। "अतो हेः" ६।४।१०५ इति हेर्लुक्()। अथ जीवतात्? त्वमित्यत्र स्थानिवद्भावेन तातङो हिग्रहणेन ग्रहणाल्लुक्कस्मान्न भवति? "हुझल्भ्यो हेर्धिः ६।४।१०१ इत्यतो हेरित्यनुवत्रमाने पुनः "अतो हेः" ६।४।१०५ इति ग्रहणात्()। तस्य ह्रेतत्? प्रयोजनम्()--हिरूपावस्थितस्यैव हेर्लुग्यथा स्यात्()। स्थानिवद्भावेन यच्छब्दान्तरं हिग्रहणेन गृह्रते तस्य मा भूत्()। अथ "ङिच्च" (१।१।५३) इति वचनात्? तातङ्यमन्त्यस्य कस्मान्न भवति? इत्याह--"ङित्करणम्()" इत्यादि। गणप्रतिषेधार्थम्()--ब्राऊयात्? भवानित्यत्र। वृद्धिप्रतिषेधार्थम्()--मृष्टादित्यत्र। इतिकरणो हेतौ। यस्माद्गुणवृद्धिप्रतिषेधार्थं ङित्करणं तस्मात्सर्वादेशस्तातङ् भवति। यदि हि तस्यान्यत्? प्रयोजनं न स्यात्(), स्यादेवान्त्यस्य तातङ्()। अस्ति च तस्यान्यत्? प्रयोजनं गुणवृद्धिप्रतषेधः। तस्मिन्? सति किं "ङिच्च" १।१।५२ इत्यन्त्यस्य भवतु, अथ "अनेकाल्शित्सर्वस्य" (१।१।५५) इति सर्वस्य वा? तत्र परत्वात्? सर्वादेशेनैव युक्तं भवितुम्()। तस्मात्? "अनेकाल्शित्सर्वस्य" (१।१।५५) इति सर्वस्य वा? तत्र परत्वात्? सर्दादेशेनैव युक्तं भवितुम्()। तस्मात्? "अनेकाल्शित्सर्वस्य" १।१।५४ इति सर्वस्यैव स्यादिति सर्वादेशो भवति। ननु च तुस्थानिकस्य तातङः स्थानिवदभावेन पित्त्वं प्राप्नोति; ततश्च हलि पिति सार्वधातुके यता ब्रावीत्वित्यत्रेङ् भवति, तथा ब्राऊताद्भवानित्यत्राणीटा भवितव्यम्()?--एतच्चोद्यमपाकत्र्तमाह--"ङित्वाच्च" इत्यादि। अस्येति तातङः। किं कारणं निवर्तते? इत्याह--"ङिच्च" इत्यादि। चकारो हेतौ। तुस्थानिकस्य तातङो नाप्राप्ते पित्त्वे ङित्त्वमारभ्यत इति ङित्त्वेन हि पित्त्वं बाध्यते। तथासौ ङिद्भवत यदि स्थानिवद्भावेन प्राप्तं पित्त्वं निवत्र्तते। "तेन" इत्यादि। यत एवं पित्त्वं निवत्र्तते तेन पित्त्वाश्रय ईण्न भवति। ग्रामं गच्छतु भवान्()। त्वं गच्छेति। "लोट्? च" ३।३।६२ इति बिध्यादौ लोट्()॥

बाल-मनोरमा

तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ४६, ७।१।३५

अथाऽऽशिषि लोटो विशेषमाह---तुह्योस्तातङ्। तुश्च हिश्च तुही, तयोरिति विग्रहः। तातङि ङकार इत्। अकार उच्चारणार्थः। तादित्यादेशः शिष्यते। ननु किमस्य अनेकाल्त्वात्सर्वादेशता,उत ङित्त्वादन्तादेशतेत्यत आह--अनेकाल्त्वात्सर्वादेश इति। ननु "ङिच्चे"त्यस्य सर्वादेशापवादतयाऽनङादेरिव तातङोऽप्यन्त्यादेशत्वमेवोचतमित्याशङ्कते--यद्यपीति। परिहरति--तथापीति। परेण बाध्यत इति। तातङादेशे "ङिच्चे"त्ययं विधिः "अनेकाल्शित्सर्वस्ये"ति परेण बाध्यत इत्यर्थः। ननु "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय" इति परापेक्षया अपवादस्य प्रबलत्वान्ङिच्चेत्यन्तादेशत्वमेव तातङि युक्तमित्यत आह--मन्थरं प्रवृत्त इति। "ङिच्चेति विधि"रिति शेषः। तातङ्विषये ङिच्चेति विधिर्मन्थरं प्रवृत्त इति

हेतोः परेण सर्वादेशविधिना बाध्यत इत्यर्थः। कुतो मन्दप्रवृत्तिकत्वमित्यत आह-- अनन्यार्थेत्यादिना। अन्तादेशत्वादन्योऽर्थो यस्य ङित्त्वस्य न विद्यते तदनन्यार्थम्। तथाविधं ङित्त्वं येषां तेषु अनङादिषु ङिच्चेति विधिश्चरितार्थः-- लब्धप्रयोजनक-इति कृत्वा मन्दं प्रवृत्त इत्यर्थः। तातङो ङित्त्वं तु अन्तादेशत्वापेक्षयाऽनन्यार्थं नेत्याह-- सम्भवत्प्रयोजनङकारे इति। सम्भवन्ति प्रयोजनानि अन्तानि यस्य स सम्भवत्प्रयोजनः, तथाविधो ङकारो यस्य तथाविधे तातङीत्यर्थ-। कथं सम्भवत्प्रयोजनकत्वमित्यत आह--गुणवृद्धिप्रतिषेध-सम्प्रसारणाद्यर्थतयेति। द्विष्टादित्यादौ लघूपधादिगुणनिषेधः। स्तुतात्,युतादित्यादा"वुतो वृद्धिर्लुक हली"ति विहिताया वृद्धेर्निषेधः। "वश कान्तौ" उष्टादित्यत्र "ग्रहिज्यावयी"ति सम्प्रसारणम्। आदिना ब्राऊतादित्यत्र "ब्राउव ई"ङितीटोऽभावस्य सङ्ग्रहः। ननु तातङ्विषये ङिच्चेति विधिर्मन्दं प्रवर्तताम्, अथापि "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय" इति न्यायेन परस्यापि सर्वादेशविधेरपवादभूतेन ङिच्चेत्यनेन बाध एवोचित इत्यत आह-- इहेति। इह = तातङ्विषये अनेकाल्शित्सर्वस्येति सामान्यशास्त्रस्य, ङिच्चेति विशेषशास्त्रस्य च समबलत्वात्सामान्यशास्त्रं विशेषशास्त्रेम न बाध्यत इत्यर्थः। अयं भावः-- अपवादशास्त्रस्य परनित्यान्तरङ्गापेक्षया प्राबल्ये निरवकाशत्वमेव बीजम्। प्रकृते च ङिच्चेति विधिरनङादिङित्तवमन्तादेशत्वैकप्रयोजनकं प्रयोजनान्तरविरहेण निरवकाशत्वाज्झटिति परिगृह्णन्तकृतार्थतामनुभवन्, तातङो ङित्त्वं प्रयोजनान्तरसत्त्वेन सावकाशत्वादुपेक्षत इति। तदुक्तं भाष्ये-- "ङित्वस्य सावकाशत्वाद्विप्रतिषेधात्तातङ्सर्वादेश" इति। अधिकास्तु विस्तरभिया विरम्यते। भवतादिति। आशिषि लोटस्तिपि शपि गुणे अवादेशे उकारे तोस्तातङ्सर्वादेशः। ङकार इत्। द्वितीयतकारादकार उच्चारणार्थः।

तत्त्व-बोधिनी

तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ३६, ७।१।३५

यद्यपि "तिह्योस्तात"ङिति वक्तुं शक्यं, तथापि लाघवाऽभावादतिप्रसङ्गवारणाय हिशब्दसाहर्याश्रयणे लोट् इत्यनुवर्तमाने वा गौरवाच्च तुह्योरित्युक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

विदेः शतुर् वसुः ७।१।३६

विद ज्ञाने इत्येतस्माद् धातोरुत्तरस्य शतुः वसुरादेशः भवति। विद्वान्, विद्वांसौ, विद्वांसः। स्थानिवद्भावादुगित्कार्ये सिद्धे वसोः उकारकरणं वसोः सम्प्रसारणम् ६।४।१३१ इत्यत्र क्वसोरपि सामान्यग्रहणार्थम्। एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य इत्येतदपि न भवति। तथा सति उकारकरणम् अनर्थकं स्यात्। अन्यतरस्यांग्रहणं केचिदनुवर्तयन्ति। विदन्, विदन्तौ, विदन्तः।

लघु-सिद्धान्त-कौमुदी

विदेः शतुर्वसुः ८३६, ७।१।३६

वेत्तेः परस्य शतुर्वसुरादेशो वा। विदन्। विद्वान्॥

न्यासः

विदेः शतुर्वसुः। , ७।१।३६

यद्यपि विदेरिति सामान्यनिर्देशोऽयम्(), तथधापि ज्ञानार्थस्य ग्रहणं विज्ञायते। तस्यैव हि शतानन्तरः सम्भवति,

नान्येषां विदीनाम्()। तत्र सत्ताविचारणार्थयोः शतुरसम्भव एव; आत्मनेपदित्वम्()। लाभार्थस्य तूभययदित्वात्? सम्भवत्यसौ, न त्वनन्तरः; शप्रत्ययेन व्यवधानात्()। ज्ञानार्थस्य तु लुग्विकरणत्वाच्छतुर्विकरणकृतं व्यवधानं नास्ति, अतस्तस्यैव ग्रहणमित्याह--"विद ज्ञाने" इति। "विद्वान्()" इति। उगित्त्वान्नुम्(), "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः। अन्यतरस्यांग्रहणमनुवत्र्तते। तेन पक्षे विदन्(), विदन्तौ, विदन्त इत्याद्यपि भवति। एचच गम्यमानत्वाद्वृत्तौ नोक्तम्()। अथ किमर्थमुकारोऽनुबन्धः क्रियते, नुमाद्युगित्कार्यं यथा स्यादिति चेत्()? न; तस्य स्थानिवद्भावेनैव सिद्धत्वादित्यत आह--"स्थानिवद्भावात्()" इत्यादि। "क्वसोऽपि" इति। अपिशब्दादस्यापि। असत्युकारे सामान्यार्थे क्वसोरेव ग्रहणं स्यात्(), नान्यस्य। अथ "वसोः सम्प्रसारणम्()" ६।४।१३१ इति सूत्रं क्रियत एवास्यैव ग्रहणार्थम्(), न क्वसोः; ननु च सत्यप्युकारकरणे सामान्यग्रहणं नोपपद्यते, एकानुबन्धकपरि(व्या।प।५२) भा,यास्यैव ग्रहणं स्यात्(), न क्वसोः? इत्याह--"एकानुबन्धकग्रहणे" इत्यादि। एतत्? परिभाषासूत्रम्()। न भवति। नोपतिष्ठत इत्यर्थः। किं कारणं न भवति? इत्याह--"तथा च सति" इत्यादि। एवञ्च सतीत्यर्थः। यदि क्रियमाणेऽप्युकार एकानुबन्धपरिभाषोपतिष्ठते, एवं सत्युकारकरणमनर्थकं स्यात्()। विनाऽपि तेन "वसः सम्प्रसारणम्()" इत्युच्यमाने केवलस्यास्य ग्रहणं लभ्यत एव। तस्मादुकारकरणसामथ्र्यादियं परिभाषा नोपतिष्ठते॥

बाल-मनोरमा

विदेः शतुर्वसुः ९०७, ७।१।३६

विदेः शतुर्वसुः। वेत्तेरिति। "विद ज्ञाने" इति लुग्विकरणस्यैव ग्रहणम्, शतुः परस्मैपदत्वात्, विद्यतेर्विन्त्तेश्चात्मनेपदित्वात्। यद्यपि विन्दतिरुभयपदी, तथापि तस्य ग्रहणं, "निरनुबन्धकग्रहणे न सानुबन्धकस्ये"त्युक्तेरिति भावः। वा स्यादिति। "तुह्योस्तात"ङ्ङित्यतस्तदनुवृत्तेरिति भावः। विदुषीति। उगित्त्वान्ङीप्, वनसोः संप्रसारणं, पूर्वरूपम्, षत्वम्।

तत्त्व-बोधिनी

विदेः शतुर्वसुः ७४६, ७।१।३६

विदेः। स्थानिवत्त्वादेव सिद्धे वसोरुगित्करणं "वसोः संप्रसारण"मित्यत्र क्वसोरपि सामान्यग्रहणार्थम्। तत्सामथ्र्याच्च "एकानुबन्धग्रहणे न द्वयनुबन्धकस्ये"त्येतदपि न प्रवर्तते।

---

सूत्रम्

काशिका-वृत्तिः

समासे ऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७

समासे ऽनञ्पूर्वे क्त्वा इत्येतस्य ल्यपित्ययम् आदेशो भवति। प्रकृत्य। प्रहृत्य। पार्श्वतःकृत्य। नानाकृत्य। द्विधाकृत्य। समासे इति किम्? कृत्वा। हृत्वा। अनञ्पूर्वे इति किम्? अकृत्वा। अहृत्वा। परमकृत्वा। उत्तमकृत्वा। अनञिति नञा अन्यदनञ् नञ्सदृशम् अव्ययं परिगृह्यते। तेन नञनव्ययं चनञ् न भवति। स्नात्वाकालकादिषु मयूरव्यंसकादिषु निपातनाल् ल्यबादेशो न भवति। अथवा समासे इति निर्धारणे सप्तमी। तेन क्त्वान्तः समास एव परिगृह्यते। स च येन विधिस् तदन्तस्य इत्यनेन तदन्तविधिना, न तु कृद्ग्रहणे गतिकारकपूर्वस्य अपि इति। तथा च अनञ्पूर्वे इत्युच्यते। गतिकारकपूर्वस्येव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव न अस्ति, नञ् न गतिर् न कारकम् इति। प्रधाय, प्रस्थाय इत्यादिषु हिप्रभृतीनन्तरङ्गनपि विधीन् बहिरङ्गो ल्यब् बाधते एव इति ज्ञापितम् एतत्।

लघु-सिद्धान्त-कौमुदी

समासेऽनञ्पूर्वे क्त्वो ल्यप् ८८७, ७।१।३७

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात्। तुक्। प्रकृत्य। अनञ् किम्? अकृत्वा॥

न्यासः

समासेऽनञ्पूर्वे क्त्वो ल्युप्?। , ७।१।३७

"अनञ्पूर्वे" इति। न नञ्? अनञ्? अनञ्? पूर्वो यसय सोऽनञ्पूर्वः। "प्रकृत्य" इत्यादि। "समानकर्त्तृकयोः पूर्वकाले" ३।४।२१ क्त्वा, "कुगतिप्रादयः" २।२।१८ इति समासः, "ह्रस्वस्य पिति कृति तुक्()" ६।१।६९ इति तुक्()। "पार्(ातःकृत्य" इति। "स्वाङ्गे तस्प्रत्यये कृभ्वोः ३।४।६१ इति क्त्वा, "तृतीयाप्रभृतीन्यन्यतरस्याम्()" (२।२।२१० इति समासः। "नानाकृत्य" इति। "नाधार्थप्रत्यये च्व्यर्थे" ३।४।६२ इति क्त्वा, पूर्ववत्समासः। "कृत्वा, ह्नत्वा" इति। एतत् प्रत्युदाहरणम्()। अत्र कृत्वाशब्दोऽनञ्पूर्वोऽस्ति; किन्तु समासो न भवतीति ल्यबभावः। "परमकृत्वा, उत्तमकृत्वा" इति। "सन्प्रहत्()" २।१।६० इत्यादिना समासः। कथं पुनरनेन समासः? कथञ्चं न स्यात्()? सामानाधिकरण्याभावात्()? वात्र्तमेतत्(); कत्र्तरि क्त्वा विहितः, स एव च परमोत्तमशब्दाभ्यां विशिष्यते, तत्? कथं सामानाधिकरण्याभावः! अथ क्रियाविशेषणत्वं तयोराश्रित्य सामानाधिकरण्यभाव उच्यते, एवमपि "विशेषणं विशेष्येण बहुलम्()" २।१।५६ इत्यतो बहुलग्रहणानुवृत्तेरसामानाधिकरण्येऽपि समासो भवति। ननु चानञ्पूर्वावेतौ समासौ, तत्? कथमेतत्प्रत्युदाहरणमुपपद्यते? इत्याह--"अनञ्()" इत्यादि। अनञिति नायं प्रसज्येपरतिषेधः, किं तर्हि? पर्युदासः--नञोऽन्यदनञ्()। तत्र नञिवयुक्तन्यायेन (व्या।प।६५) नञो यदन्यन्नञ्सदृशमव्ययं तदनञिति परिगृह्रते। तेन कारणेन नञव्ययमनव्ययञ्च परमशब्दादिकमुभयमप्येतदनञ्? न भवति, न तत्राव्ययेन नञा सादृश्यमस्ति। अत्यन्ताभेदादनव्ययत्वाच्च यथाक्रमम्()। तस्माद्? यथा अकृत्वा, अहत्वेत्येतत्? प्रत्युदाहरणमुपपन्नरूपम्(), एवं परमकृत्वा, उत्तमकृत्वेयपि। यदि तर्हि अनञिति नञ्सदृशमध्ययं परिगृह्रते--स्नात्वाकालकः, पीत्वास्थिरक इत्यादावपि स्यात्(), अस्ति ह्रत्रापि नञ्सदृशमध्ययं पूर्वपदम्(); क्त्वाप्रत्ययस्याव्ययत्वादित्याह--"स्नात्वाकालकः" इत्यादि। मयूरव्यंसकादिषु समाससंज्ञार्थमेते समुदायाः पठ()न्ते, तस्मान्निपातनाल्ल्यबादेशो न भवति। "अथ वा" इत्यादि। "समासे" इत्यधिकरणसप्तम्यां सत्यां स्नात्वाकालकादिषु ल्यबादेशप्रसङ्गो भवतीति। तथा ह्रधिकरणसप्तम्यामयमर्थो भवति--समासेऽनञ्पूर्वे यः क्त्वा वत्र्तते तस्य ल्यब्भवति। एवञ्च सति देशविशेषपरिग्रहाभावाद्यथा समासस्यान्ते वत्र्तमानस्य क्त्वो ल्यब्भवति, तथा मध्येऽपि स्यात्()। तस्मान्न चेयमधिकरणसप्तमी, किं तर्हि? निर्घारणसप्तमी। त()स्मश्च पक्षे "समासे" इति जातावेकवचनम्(), यथा--"कारके" १।४।२३ इति। अथ वा "व्यत्ययो बहुलम्()" ३।१।८५ इति सुब्व्यत्ययेन बहुवचनस्य स्थान एकवचनं वेदितव्यम्()। "तेन" इत्यादि। यतो निर्धारण इयं सप्तमी, तेन क्त्वान्तः समास एव गृह्रते, न समासावयवः--स्नात्वेति। निर्घारणं हि समानजातीयस्यैव भवति, यथा--कृष्णा गवां सम्पन्नक्षीरतमेत्युक्ते गौरेव निर्धार्यमाणा प्रतीयते, तथाऽत्रापि "समासोऽनञ्पूर्वे" इत्युक्ते समासेष्वनञ्पूर्वेषु मद्ये यः क्त्वान्तः समासः स एव निर्धायमाणः प्रतीयते। तेन समासस्यैव क्त्वान्तस्य ग्रहणमिति तस्यैव ल्यबादेशेन भवितव्यम्(), न च स्नात्वाकालकादिषु क्त्वान्तः समासः। स्नात्वाकालकादयो यद्यपि समासाः, न तु क्त्वान्ता इति ल्यबादेशो न भवति। स च समासः "येन विधिसतदन्तस्य" १।१।७१ इति तदन्तविधिना क्त्वान्तो गृह्रते। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणेन (व्या।प।१२६) वा प्रत्ययग्रहणपरिभाषया (भो।प।सू।७) तदन्तग्रहणं न शक्यते वक्तुम्()। न हि क्त्वाप्रत्ययः समासादुत्पद्यते। तत्र यदि कृद्ग्रहणपरिभाषया (व्या।प।१२६) तदन्तो गृह्रते, नानाकृत्येत्यत्र न स्यात्(); न ह्रयं गतिकारकपूर्वः। इहैव तु स्यात्()--प्रकृत्य, पार्(ातःकृत्येति। असिति ह्रत्रापि गतिः कारकश्च पूर्वोऽवयवः, "येन विधिस्तदन्तस्य" १।१।७१ इत्यनेन तदन्तविधौ गम्यमाने सर्वत्र भवतीति मन्यमान आह--"स च" इत्यादि। अत्रैवोपपत्तिमाह--"तथा च" इत्यादि। यस्मात्? "येन विधिस्तदन्तस्य" १।१।७१ इत्यनेन क्त्वान्तः समासो गृह्रते,

एवञ्च कृत्वा "अनञ्पूर्वे" इत्युच्यते। "येन विधिस्तदन्तस्य" १।१।७१ इत्यनेन क्त्वान्तः समासो गृह्यते, एवञ्च कृत्वा "अनञ्पूर्वे, इत्युच्यते। "येन विधिस्तदन्तस्य" १।१।७१ इत्यनेन हि सामान्येन तदन्तविधौ सति नञ्पूर्वस्यापि प्रसज्येत। तस्मात्? तन्निवृत्यर्थम्? "अनञ्पूर्वे" इति युक्तमुक्तम्()। यदि कृद्ग्रहणपरिभा,या (व्या।प।१२६) क्त्वान्तः समासो गृह्यते, तदा गतिकारकपूर्वस्यैव ग्रहणं स्यात्()। एवञ्च गतिकारकपूर्वस्य ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति। "नञ्? न गतिर्न च कारकम्()" इति। अतो हेतोर्यथैव परमकृत्वेत्यत्र प्रसङ्गो नास्ति, परमशब्दस्यागतित्वादकारकत्वाच्च्; तथाऽकृत्वेत्यत्रापि, नञोऽगतित्वादकारकत्वाच्च। ततश्च प्रसङ्गाभावात्? "अनञ्पूर्वे" इति न वक्तव्यं स्यात्(), उक्तञ्च। तदेतस्मादनञ्पूर्व इति वचनात्? "येन विधिस्तदन्तस्य १।१।७१ इत्यनेन क्त्वान्तः समासो गृह्यते, न तु कृद्ग्रहणपरिभाषयेति स्थितमेतत्()। "प्रधाय" इति। अत्रान्तरङ्गत्वात्? "दधातेर्हिः" ७।४।४२ इति हिः प्राप्नोति। "प्रस्थाय" इति--अत्रापि "द्यतिस्यतिमास्थामित्ति किति" ७।४।४० इतीत्वम्()। "प्रखन्य" इति। "जनसनखनाम्()" ६।४।४२ इत्यात्वम्()। "प्रणभ्य" इति। "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घः। "आपृच्छ्य" इति "च्छ्वोः शूडनुनासिके च" ६।४।१९ इति शत्वम्()। "प्रतिदीव्य" इति। तेनैवोट्()। "प्रपठ()" इति। "आर्थधातुकस्येड् वलादेः" ७।२।३५ इतीट्()। अन्तरङ्गत्वं पनरेषामेकपदाश्रयत्वात्()। ल्यबादेशस्य तु बहिरह्गत्वम्(), समर्थानेकपदाश्रयसमासापेक्षत्वात्()। हिप्रभृतिषु कृतेषु प्रधायेत्यादीनि रूपाणि न सिध्यन्ति? इति यश्चोदयेत्(), तं प्रत्याह--"प्रधाय" इत्यादि। "ज्ञापितमेतत्()" इति। "अदो जग्धिर्ल्यप्ति किति" २।४।३६ इत्यत्र। अथ पूर्वग्रहणं किमर्थम्()। नानञोत्येवमुच्येत? नैवं शक्यम्(); अनञोत्युच्यमाने बहुव्रीहिरयं स्यात्()--अविद्यमानो नञ्? यत्रासावनञिति। ततश्चेहापि न स्यात्()--स्त्रैणीकृत्येति। स्त्रिया इदं स्त्रैणम्(), "स्त्रीपुंसाभ्यां,नञ्स्नञौ भवनात्()" ४।१।८७ इति नञ्()। तदन्तात्? "अभूततद्भावे" ५।४।५० इत्यादिना च्विः, "अस्य च्वौ" ७।४।३२ इतीत्वम्()। "कुगतिप्रादयः" २।२।१८ इति समासः। पूर्वग्रहणे तु सति पूर्वशब्द आदिभूतावयवमाचष्टे। तेन यत्र समासादिभूतो नञ्? तत्र न ल्यपा भवितव्यम्(), तत्र स्त्रैणीकृत्येत्यत्र भवत्येव। न ह्यत्र समासादिभूतो नञवयवः, किं त्रिह? मध्यभूतः। लित्करणम्()--प्रतिकीष्र्येत्यत्र लित्प्रत्ययात्? पूर्वस्योदात्तत्वं यथा स्यात्()। प्रकृत्येत्येवमादावृदात्तार्थं लित्करणं नोपपद्यते, धातुस्वरेणैव पूर्वस्योदात्तत्वं सिध्यति। तस्मादनेकाझवयव एव धार्लित्त्वं प्रयोजयति॥

तत्त्व-बोधिनी

समासेऽनञ्पूर्वे क्त्वो ल्यप् १६००, ७।१।३७

समासेऽनञ्। नञ्()भिन्नं नञ्सदृशम्। अव्ययमिति यावत्। तत्पूर्वं पूर्वपदं यस्य समासस्येति व्याचष्टे-- अव्ययेति। प्रकृत्येति। प्रशब्दः क्त्वाप्रत्ययार्थगतप्रकर्षस्य द्योकः, स तु "कुगतिप्रादयः" इति क्त्वान्तेन नित्यं समस्यते। पर्युदासेति।प्रसज्यप्रतिषेधाश्रयणे तु स्यादेवात्र ल्यबिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

क्त्वा अपि छन्दसि ७।१।३८

समासे अनञ्पूर्वे क्त्वा इत्येतस्य क्त्वा इत्ययम् आदेशो भवति, अपिशब्दाल् ल्यबपि भवति छन्दसि विषये। कृष्णं वासो यजमानं परिधापयित्वा। प्रत्यञ्चमर्कं प्रत्यर्पयित्वा। ल्यबपि भवति। उद्धृत्य जुहोति। वा च्छन्दसि इति नोक्त, सर्वोपाधिव्यभिचारार्थम्। तेन असमासे ल्यब् भवति। अर्च्य तान् देवान् गतः। छन्दो ऽधिकारः आज्जसेरसुक् ७।१।५० इति यावत्।

न्यासः

क्त्वापि छन्दसि। , ७।१।३८

"परिधापयित्वा, प्रत्यर्पयित्वा" इति। दधातेः, अत्र्तेश्च हेतुमण्णिच्(), "अर्त्तिह्री" (७।३।३६) इत्यादिना पुक्? "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः, क्त्वा, इट्? अयादेशः। "उद्धृत्य" इति। "ह्मञ्? हरणे" (धा।पा।८९९), "झयो होऽन्यतरस्याम्()" ८।४।६१ इति हकारस्य धकारः। "वा छन्दसि" इति। वक्तव्ये "क्त्वापि छन्दसि" इति। वचनमसमासेऽपि यथा स्यात्()--अच्र्य तान्? देवान्? गत इति॥

---

सूत्रम्

काशिका-वृत्तिः

सुपां सुलुक्पूर्वसवर्णाऽआच्छेयाडाड्यायाजालः ७।१।३९

छन्दसि विषये सुपां स्थाने सु लुक् पूर्वसवर्ण आ आत् शे या डा ड्या याचालित्येते आदेशाः भवन्ति। सु अनृक्षरा ऋजवः सन्तु पन्थाः। पन्थानः इति प्राप्ते। सुपां सुपो भवन्ति इति वक्तव्यम्। धुरि दक्षिणायाः। दक्षिणायाम् इति प्राप्ते। तिङां तिङो भवन्दि इति वक्तव्यम्। चषालं ये अश्वयूपाय तक्षति। तक्षन्ति इति प्राप्ते। लुक् आर्द्रे चर्मन्। रोहिते चर्मन्। चर्मणि इति प्राप्ते। हविर्धाने यत् सन्वन्ति तत्सामिधेनीरन्वाह। यस्मिन् सुन्वन्ति तस्मिन् सामिधेनीः इति प्राप्ते। पूर्वसवर्णः धीती। मती। सुष्टुती। धीत्या, मत्या, सुष्टुत्या इति प्राप्ते। आ द्वा यन्तारा। द्वौ यन्तारौ इति प्राप्ते। आत् न ताद् ब्राह्मणाद् निन्दामि। तान् ब्राह्मणानिति प्राप्ते। शे न युष्मे वाजबन्धवः। अस्मे इन्द्राबृहस्पती। यूयं वयम् इति प्राप्ते। युयादेशो वयादेशश्च छन्दसत्वान् न भवति। या उरुया। धृष्णुया। उरुणा, धृष्णुना इति प्राप्ते। डा नाभा पृथिव्याम्। नाभौ पृथिव्याम् इति प्राप्ते। ड्या अनुष्टयोच्च्यावयतात्। अनुष्टुभा इति प्राप्ते। याच् साधुया। साधु इति सोर्लुकि प्राप्ते। आल् वसन्ता यजेत। वसन्ते इति प्राप्ते। इयाडियाजीकाराणाम् उपसङ्ख्यानम्। इया उर्विया परि ख्यन्। दार्विया परिज्मन्। उरुणा, दारुणा इति प्राप्ते। डियाच् सुक्षेत्रिया सुगातुया। सुक्षेत्रिणा, सुगात्रिणा इति प्राप्ते। ईकारः दृतिं न शुष्कं सरसी शयानम्। सरसि शयानम् इति प्राप्ते। आङ्याजयारां च उपसङ्ख्यानम्। आङ् प्र बाहवा। प्रवहुना इति प्राप्ते। अयाच् स्वप्नया सचसे जनम्। स्वप्नेन इति प्राप्ते। अयार् स नः सिन्धुमिव नावया। नावा इति प्राप्ते।

न्यासः

सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड�आयाजालः। , ७।१।३९

"पन्थाः" इति। पथिन्नित्येतस्माज्जस्(), तस्य सुः, "पथिमथ्यृभुक्षामात्()" ७।१।८५ इत्यात्वम्(), "इतोऽत्सर्वनामस्थाने" ७।१।८६ इतीकारस्यात्वम्(), "थो न्थः" ७।१।८७ इति न्थादेशः। "सुपाम्()" इत्यादिना सुपां स्थाने सुप आदेशा भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--पूर्वसूत्रादपिशब्दोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेन सुपामन्येऽपि सुपो भवन्ति। "धुरि दक्षिणायाः" इति। सप्तम्येकवचनस्य स्थान पञ्चम्येकवचनम्(), षष्ठ()एकवचनं वा। "तिङाम्()" इत्यादि। तिङाञ्च तिङो भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्वपदेव वक्तव्यम्()। "आद्र्रे चर्मन्()" इति। सप्तम्येकवचनस्य चर्मन्()शब्दाल्लुक्()। "यत्()" इति। अत्रापि यच्छब्दात्(), तच्छब्दाच्च। "धीती" इत्यादि। "धीति-मति-सुष्टुतिशब्देभ्यः परसय तृतीयैकवचनस्य पूर्वसवर्ण इकारः, उभयोरकः सवर्णे ६।१।९७ दीर्घत्वम्()। "उभा" इति। उभशब्दात्प्रथमाद्विवचनस्याकारः। "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इत्येकादेशः। "न ताद्? ब्राआह्नणाद्? निन्दामि" इति। तच्छब्दाद्? ब्राआह्नणशब्दाच्च द्वितीयैकवचनस्यात्()। निशब्दे परतः "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति तकारस्य नकारादेशः। "युष्मे, अस्मे" इति। युष्मदस्मच्छब्दाभ्यां परस्य च जसः "शे" १।१।१३ इत्ययमादेशः। शकारः सर्वादेशार्थः। अथेह "यूयषयौ जसि" (७।२।९३) इति यूयवयादेशौ

कस्मान्न भवतः? इत्याह-"यूयादेशः" इत्यादि। "उरुया, धृष्णुया" इति। उरुधृष्णुशब्दाभ्यां परस्य तृतीयैकवचनस्य यादेशः। "नाभा" इति। नाभिशब्दात्? सप्तम्ये कवचन्सय डादेशः डकारष्टिलोपार्थः। "अनुष्ट()आ" इति। अनुष्टुप्()शब्दात्? तृतीयैकवचनस्य ड()आदेशः। "साधुया" इति। साधुशब्दात्? परस्य प्रथमैकवचनस्य याजादेशः। चकारोऽन्तोदात्तार्थः। "सोर्लुकि प्राप्ते इति। याजित्ययमादेशो विधीयत इति शेषः। लुक्प्राप्तिस्तु "स्वमोर्नपुंसकात्()" ७।१।२३ इत्यनेन। "वसन्ता" इति। वकन्तशब्दात्? परस्य सप्तम्येकवचनस्यालित्ययमादेशः। लित्करणं लित्प्रत्ययात्? पूर्वस्योदात्तत्वं यथा स्यात्()। "उपसंख्यानम्()" इति। प्रतिपादनमस्यार्थः। उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं त्वपिशब्दमाश्रित्य कत्र्तव्यम्()। उर्विया, दार्विया" इति। उरुदारुशब्दाभ्यां परस्य तृतीयैकवचनस्येयादेशः। "सुक्षेत्रिया" इति। सुक्षेत्रिन्नित्यादेर्मत्वर्थीयेनिप्रत्ययान्तात्? परस्य तृतीयैकवचनस्य ङियाजादेशः। डकारष्टिलोपार्थः। चकारोऽन्तोदात्तार्थः। "सरसी" इति। सरःशब्दात्? सप्तम्येकवचनस्य ईकारः। "प्रबाहवा" इति। प्रबाहुशब्दात्? तृतीयैकवचनस्याङादेशः, "घेङिति" ७।३।१११ इति गुणः, अवादेशः। ननु च "ङित्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ॥" (म।भा।३।२४७) इत्युक्तम्(), न चेहादौ ङकारः, तत्? कथं गुणः? ङित्करणसामथ्र्याद्भविष्यतीत्यदोषः। "स्वप्नया" इति। स्वप्नशब्दात्? परस्य तृतीयैकवचनस्यायाच्(), "अतो गुणे" ६।१।९४ पररूपत्वम्()। चकारः स्वरार्थः। "नावया" इति। मौशब्दात्? परस्य तृतीयैकवचनस्यायारादेशः। रेफः "उपोत्तमं रिति" ६।१।२११ इत्युपोत्तमाकारस्योदात्तत्वार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

अमो मश् ७।१।४०

अमः प्रति मिबादेशो गृह्यते। तस्य छन्दसि विषये मशादेशो भवति। वधीं वृत्रम्। त्रमीं वृक्षस्य शाखाम्। लुङि बहुलं छन्दस्यमाङ्योगे ऽपि ६।४।७५ इत्यडागमाभावः। शित्करणम् सर्वादेशार्थम्। मकारस्य अपि हि मकारवचनम् अनुस्वारनिवृत्यर्थं स्यात्।

न्यासः

अमो मश्?। , ७।१।४०

"अमिति मिबादेशो गृह्रते" इति द्वितीयैकवचनाशङ्कां निराकारोति। द्वितीयैकवचनस्याग्रहणम्(); छन्दसि यथादृष्टानुविधानात्()। अपिशब्दानुवृत्तेर्वा, तदनुवृत्तौ ह्रेषं सम्बन्धः क्रियते--अमो मश्च भवति, अपिशब्दात्? क्वचिच्छ्रवणमपीति। "वधीम्()" इति। हन्तेर्लुङ, "चलेः सिच्()" ३।१।४४ सिप्(), तस्य "तस्थस्थ" ३।४।१०१ इत्यादिनाऽम्(), तस्य मशादेशः--अकार उच्चारणार्थः, "लुङि च" २।४।४३ इति हन्तेर्वधादेशा, "आर्धधातुकस्य" (७।२।३५) इत्यादिनेट्? "अस्तिसिचोऽपृक्ते" (७।३।९६) इतीट्? "इट ईटि ८।२।२८ इति सिचो लोपः, सवर्णदीर्घतद्वलम्। "क्रमीम्()" इति। "क्रमु पादविक्षेपे" (धा।पा।४७३) सर्वं पूर्ववत्()। अयमत्र विशेषः--"स्नुक्रमोरनात्मनेपदनिमित्ते" ७।२।३६ इतीट्()। अवधिवम्(), अक्रमिषमिति प्राप्ते। "शित्ककरणं सर्वादेशार्थम्()" इति। असति तस्मिन्? "अलोऽन्त्यस्य" १।१।५१ स्यादिति भावः। ननु च मकारस्य मकारवचने प्रयोजनं नास्तीत्यन्तरेणापि शकारं सर्वादेशो भविष्यति? इत्याह--"मकारस्य" इत्यादि। अस्ति हि मकारविधाने प्रयोजनम्()। किं तत्()? "मोऽनुस्वारः" ८।३।२३ प्राप्नोति; स मा भूदिति। सत्येतस्मिन्? प्रयोजने यदि शकारो न क्रियेत, तदाऽन्त्यस्यैव स्यात्(), न स्यात्(), न सर्वस्य। तस्मात्? सर्वादेशार्थः शकारः कत्र्तव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

लोपस् त आत्मनेपदेषु ७।१।४१

आत्मनेपदेषु यस्तकारः तस्य छन्दसि विषये लोपो भवति। देवा अदुह्र। गन्धर्वाप्सरसो अदुह्र। अदुहत इति प्राप्ते। दुहामश्विभ्यां पयो अघ्न्येयम्। दुग्धाम् इति प्राप्ते। दक्षिणत उपशये। शेते इति प्राप्ते। अपि इत्यधिकारान् न भवति, तत्र आत्मानमनृतं कुरुते। आत्मनेपदेषु इति किम्? वत्सं दुहन्ति कलशं चतुर्बिलम्।

न्यासः

लोपस्त आत्मनेपदेषु। , ७।१।४१

"अदुह्र" इति। दुहेर्लङ्, अदादित्वाच्छपो लुक्(), "आत्मनेपदेष्वनतः" ७।१।५ इत्यादेशः, "बहुलं छन्दसि" ७।१।८ इति रुट्(), तकारलोपे कृते द्वयोरकारयोः "अतो गुणे" ६।१।९४ पररूपत्वम्()। दुह्राम्()" इति। लोट्(), बहुवचनं झः, टेरेत्वम्(), आमादेशः, झादेशस्याते रुडागमः, पूर्वच्छपो लुक्(), तकारलोपे कृते "अकः सवर्णे दीर्घः, ६।१।१०। "शये" इति। लट्(), एकवचनान्तः, "शीङः सार्वधातुके गुणः" ७।४।२१, शपो लुक्()। "दुहाम्()" इति। लोट्? एकवचनान्तः, टेरेत्वम्(), "आमेतः" ३।४।९० इत्याम्()। "दुग्धाम्()" इति। "दादेर्धातोर्धः ८।२।३२, "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वम्(), "झलां जश्? शशि" ८।४।५५ इति धकारस्या गकारः। "अपीत्यधिकरात्()" इत्यादि। "क्त्वादि छन्दसि" ७।१।३८ इत्यतोऽपीत्यनुवत्र्तते, तत्रैवमभिसम्बन्धः क्रियते--लोपो भवति श्रवणमपीति; तेन कुरुत इत्यत्र न भवति। करोतेर्गुणे कृते "अत उत्सार्वधातुके" ६।४।११० इत्युत्त्वम्()। यदि अपिशब्दानुवृत्तेः क्वचिच्छ्रवणमिप भवति, अत एव हेतोः परस्मैपदेषु न भवतीति किमात्मनेपदग्रहणेन? एवं तर्हि विस्पष्टार्थमात्मनेपदग्रहणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

ध्वमो ध्वात् ७।१।४२

छन्दसि विषये ध्वमो ध्वातित्ययम् आदेशो भवति। अन्तरेवोष्माणं वारयध्वात्। वारयध्वम् इति प्राप्ते।

न्यासः

ध्वमो ध्वात्?। , ७।१।४२

"वारयध्वात्()" इति। वृञो वृङो वा हेतुमण्णिजन्तात्? "वृञ्? आवरणे" (धा।पा।१८१३) इत्यस्माद्वा चुरादिणायन्ताल्लोट्(), तस्य ध्वम्(), तस्य ध्वात्()। "वारयध्वम्()" इति। टेरेत्वे कृते "सवाभ्यां वामौ" ३।४।९१ इत्यमादेशः॥

---

सूत्रम्

काशिका-वृत्तिः

यजध्वैनम् इति च ७।१।४३

यजध्वम् इत्येतस्य एनम् इत्येतस्मिन् परतो मकारलोपो निपात्यते वकारस्य च यकारः छन्दसि विषये। यजध्वैनं प्रियम् एधाः। यजध्वमेनम् इति प्राप्ते।

न्यासः

यजध्वैनमिति च। , ७।१।४३

---

सूत्रम्

काशिका-वृत्तिः

तस्य तात् ७।१।४४

तशब्दस्य लोण्मध्यमपुरुषबहुवचनस्य स्थाने तातित्ययम् आदेशो भवति। गात्रं गात्रमस्यानूनं कृणुतात्। कृणुत इति प्राप्ते। ऊवध्यगोहं पार्थिवं खनतात्। खनत इति प्राप्ते। अस्ना रक्षः संसृजतात्। संसृजत इति प्राप्ते। सूर्यं चक्षुर्गमयतात्। गमयत इति प्राप्ते।

न्यासः

तस्य तात्?। , ७।१।४४

"लोण्मध्यमपुरुषबहुवचनस्य" इति। अथ प्रथमपुरुषस्पैकवचनं कस्मान्न भवति? छन्दसि यथादृष्टानु विधानात्(), अपिशब्दानुवृत्तेर्वा। "कृणुतात्()" इति। "कृवि हिंसाकरणयोः" (धा।पा।५९८) इत्यस्यैदित्त्वान्नुम्(), "धिन्विकृण्व्योर च" ३।१।८० इत्युप्रत्ययः, अकारश्चान्तादेशः, अतो लोपः ६।४।४८। "संसृजतात्()" इति। सृजेस्तुदादित्वाच्छः। "गमयतात्()" इति। णिच्(), "मितां ह्रस्वः" ६।४।९२॥

---

सूत्रम्

काशिका-वृत्तिः

तप्तनप्तनथनाश् च ७।१।४५

तस्य इति वर्तते। छन्दसि विषये तस्य स्थाने तप् तनप् तन थन इत्येते आदेशा भवन्ति। तप् शृणोत ग्रावाणः। शृणुत इति प्राप्ते। सुनोत। सुनुत इति प्राप्ते। तनप् सं वरत्रा दधातन। धत्त इति प्राप्ते। तन जुजुष्टन। जुषत इति प्राप्ते। छान्दसत्वात् श्लुः। थन यदिष्ठन्। यदिच्छत इति प्राप्ते। पित्करनमङित्त्वार्थम्।

न्यासः

तप्तनप्तनथनाश्च। , ७।१।४५

"श्रृणोतेः" इति। "श्रुवः शृ च" ३।१।७४ इति श्नुप्रत्ययः, शृभावश्च। पित्त्वे ङित्त्वाभावाद्गुणः। "सुनोत" इति। "स्वदिभ्यः श्नुः" ३।१।७३। "दधातन" इति। दधातेः "श्लौ" ६।१।१० इति द्विर्वचनम्()। अत्रापि पूर्वलत्? ङित्त्वाभावात्? "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपो न भवति। "धत्त" इति। "दधस्तथोश्च" ८।२।३८ इत्यभ्यासादकारस्य धकारः। धातोरकारलोपे कृते "झलां जश्? झशि" ८।४।५२ इति जश्त्वम्()--डकारः, तस्य "खरि च" ८।४।५४ इति चर्त्वम्()--तकारः। "जुजुष्टन" इति। इषेरिच्छार्थात्? पूर्ववच्छः, "बहुलं छन्दसि" २।४।७३ इति तस्य लुक्()। "यदिच्छत" इति। "इषुगमियमां छः" ७।३।७७। चकार स्तस्येत्यस्येहानुकर्षणार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

इदन्तो मसि ७।१।४६

छन्दसि विषये मसित्ययं शब्दः इकारान्तो भवति। मसः सकारान्तस्य इकारागमो भवति, स च तस्यान्तो भवति।

तद्ग्रहणेन गृह्यते इत्यर्थः। पुनस्त्वोद्दीपयामसि। उद्दीपयामः इति प्राप्ते। शलभं भञ्जयामसि। भञ्जयामः इति प्राप्ते। त्वयि रात्रिं वसामसि। वसामः इति प्राप्ते।

न्यासः

इदन्तो मसि। , ७।१।४६

"इदन्तः" इति। तकारोऽसन्देहार्थः। असति हि तकारे यणादेशे कृते "यन्तः" इति भवितव्यम्(), तत्र सन्देहः स्यात्()--किमयं यकारान्तः, उतेकारान्त इति। इद्? अन्तो यस्य इदन्तः। मसित्ययं शब्दोऽन्यपदार्थः। सकारान्तमसीत्यविभक्तिकोऽयं निर्द्देशः; "सुपां सुलुक्()" ७।१।३९ इति प्रथमैकवचनस्य लुप्तत्वात्()। इकार उच्चारणार्थः। भसीत्ययं शब्द इकारान्तो भवतीत्यस्यार्थं "मसः सकारान्तस्य" इत्यादिना व्यक्तीकरोति। "सकारान्तस्य" इत्यनेन मन्त्रं वोचेमेत्यत्राकारान्तस्य न भवतीति दर्शयति। कथं पुनः सकारान्तस्योपादानेऽसकारान्तस्य प्राप्नोति? एकदेशविकृतस्यानन्यत्वात्()। यद्येवम्(), कस्मान्न भवति? छन्दसि यथादृष्टानुविधानात्()। अपौत्यधिकाराद्वा। "वोचेम" इति। वचेः परस्याशिषि लिङो मस्(), यासुट्(), "लिङ्याशिषि" ३।१।८६ इत्यङ्(), "अतो येयः" ७।२।८० इतीयादेशः, वचेः परस्याशिषि लिङो मस्(), यासुट्? "लिङ्याशिषि" ३।१।८६ इत्यङ्(),तो येयः" ७।२।८० इतीयादेशः, "वच उम्()" ७।४।२० इत्युमागमः। "छन्दस्युभयथा" (३।४।११७) इति सार्वधातुकत्वात्? "लिङः सलोपोऽनन्त्यस्य" ७।२।७९ इति सलोपः, "नित्यं ङितः" ३।४।९९ इत्युत्तमस्य सलोपः, "लोपो व्योर्वलि" ६।१।६४ इति यकारसय च, "आदगुणः" ६।१।८४। "आगम इकारो भवति" इति। कथम्पुनरयमागमः? कथञ्च न स्यात्()? आगमलिङ्गाभावात्()। टित्त्व--कित्त्व-मित्त्वान्यागमलिङ्गानि, अत्र चैषामेकमपि नास्ति, ततो नासावागमः, यथा--"अस्तेर्भूः" २।४।५२ इति भूभावः। यद्येवम्(), "न य्वाभ्यां पदान्ताभ्यां पूर्वौ च ताभ्यामैच्()" ७।३।३ इत्यैजागमो न स्यात्()। अथ पूर्वग्रहणात्? तस्यागमत्वमवसीयते? अस्याप्यन्तग्रहणादवसीयताम्()। यथैव हि पूर्वशब्दोऽवयववचनो नियतदेशमदयवमाचष्टे, तथान्तशब्दोऽपीति समानमेतत्()। "स च तस्यान्तो भवति" इति। अन्त एकदेशोऽवयव इति यावत्()। अत एवासौ तद्गरहणेन गृह्रत इत्याह--"तद्ग्रहणेन च प्रयोजनम्()--पृथक्? स्वरनिवृत्तिरिति; "तिङ्ङतिङः" ८।१।२८ इति निघातश्च। "मस इक्()" इति नोक्तम्(); असन्देहार्थम्()। एवं ह्रुच्यमाने सन्देहः स्यात्()--किमिगागमः, उत प्रत्याहार इति। "दीपयामसि, जम्भयमसि" इति। "दीपी दृप्तौ" (धा।पा।११५०),जभि जृभी गात्रविनामे"["जभी, जृभि--धा।पा] (धा।पा।३८८,३८९)--आभ्यां णायन्ताभ्यां लट्(), "रधिजभोरचि" ७।१।६१ इति लुम्()। क्वचित्? भञ्जयामसीति पाठः। स च "भञ्जो आमर्दने" (धा।पा।१४५३) इत्यस्य ण्यन्तस्य वेदितव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

क्त्वो यक् ७।१।४७

क्त्वा इत्येतस्य यगागमो भवति छन्दसि विषये। दत्त्वाय सविता धियः। दत्त्वा इति प्राप्ते। क्त्वापि छन्दसि ७।१।३८ इत्यस्य अन्तन्तरम् इदं कस्मान् न उच्यते? समासे इति तत्र अनुवर्तते।

न्यासः

क्त्वो यक्?। , ७।१।४७

"दत्त्वाय" इति। "दो दद्? घोः" ७।४।४६ इति ददादेशः। "क्त्वापि छन्दसि" इत्यादि। एवमुच्यमाने द्विः क्त्वाग्रहणं न कत्र्तव्यमिति भावः। "समास इत्यत्रानुवत्र्तते" इति। "समासेऽनञ्पूर्वे" ७।१।३७ इत्यतः। यदि तस्यानन्तरमिदमुच्यते,

तत्रापि समासग्रहणमनुवर्त्तत इत्याशङ्का स्यात्(), ततस्तस्यानुवृत्तिनिवृत्त्यर्थं तस्यानन्तरमिदं नोक्तमित्यभिप्रायः॥

---

सूत्रम्

काशिका-वृत्तिः

इष्ट्वीनम् इति च ७।१।४८

इष्ट्वीनम् इत्ययं शब्दो निपात्यते छन्दसि विषये। यजेः क्त्वाप्रत्ययान्तस्य ईनम् आदेशो ऽन्त्यस्य निपात्यते। इष्ट्वीनं देवान्। इष्ट्वा देवानिति प्राप्ते। पीत्वीनम् इत्यपि इष्यते। चकारस्य अनुक्तसमुचयार्थत्वात् सिद्धम्।

न्यासः

इष्ट्वीनमिति च।, ७।१।४८

"इष्ट्वीनम्()" इति। वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्()। "पीत्वीनम्()" इति। "धुमास्था" ६।४।६६ इत्यादिनेत्त्वम्()। एतच्चेतिकरणादाद्यर्थाच्चकरास्यानुक्तसमुच्चयार्थत्वाद्वा लभ्यते। अनयोरन्यतरोपादानेनैव सिद्ध उभयोरुपादानं वैचित्र्यार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

स्नात्व्यादयश् च ७।१।४९

स्नात्वी इत्येवम् आदयः शब्दा निपात्यन्ते छन्दसि विसये। स्नात्वी मलदिव। स्नात्व इति प्राप्ते। पीत्वी सोमस्य वावृधे। पीत्वा इति प्राप्ते। प्रकारार्थो ऽयम् आदिशब्दः।

न्यासः

स्नात्व्यादयश्च।, ७।१।४९

"स्नात्वी, पीत्वी" इति। आकारस्य स्थान ईत्त्वन्निपात्यते। ननु च स्नात्व्यादयः शब्दाः प्रातिपदिकगणे न पठ()न्ते, तत्कथं ते वेदितव्याः? कथं चादिशब्देन ते शक्या लक्षयितुम्()? इत्याह "प्रकारार्थोऽयमादिशब्दः" इति। एवम्प्रकारा य एतत्सदृशाः शब्दास्ते स्नात्व्यादयो वेदितव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

आज् जसेरसुक् ७।१।५०

अवर्णान्तातङ्गादुत्तरस्य जसेः असुकागमो भवति छन्दसि विषये। ब्राह्मणासः पितरः सोम्यासः। ब्राह्मणाः सोम्याः इति प्राप्ते। ये पूर्वासो य उपरासः इत्यत्र परत्वादसुकि पुनः प्रसङ्गविज्ञानात् शिभावः प्राप्तः, सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितम् एव इति न भवति।

न्यासः

आजजसेरसुक्?।, ७।१।५०

जसेरिति पूर्वाचार्यनिर्द्देशः। पूर्वाचार्या हि जसिरित्येवं विहतवन्तः। "ये पूर्वासो ये परास इत्यत्र" इत्यादि चोद्यम्()। एतच्च जातौ पदार्थे। तत्रान्यत्र चरितार्थत्वाच्छास्त्रयोस्तुल्यबलयोर्विरोधे सति परस्पर प्रतिबन्धादप्रवृत्तौ प्राप्तायां "विप्रतिषेधे परं

कार्यम्()" १।४।२ इति क्रियते--विप्रतिषेधे परं भवति, तत्र कृते यदि पूर्वमपि प्राप्नोति तदपि भवतीति जातिपदार्थः पुन प्रसङ्गविज्ञानस्य विषयः। "सकृत्()" इत्यादिना परीहारः। एव च ष्यक्तो पदार्थेऽन्यत्राकृतार्थत्वाद्द्वयोरपि शास्त्रयोरीदृशे विषये पर्यायेण प्रवृत्तौ प्राप्तायामयं नियम आरभ्यते--विप्रतिषेधे परमेव भवति, न पूर्वमिति। तेन पुनः प्रसङ्गविज्ञानाभावाद्बाधितः शोभावो न भवति। न ह्रसति पुनःप्रसङ्गे यद्बाधितं तदुत्सहते पुनर्भवितुम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अश्वक्षीरवृषलवणानाम् आत्मप्रीतौ क्यचि ७।१।५१

छन्दसि इत्यतःप्रभृति निवृत्तम्। अश्व क्षीर वृष लवण इत्येतेषाम् अङ्गानाम् आत्मप्रीतिविषये क्यचि परतो ऽसुगागमो भवति। अश्वस्यति वडवा। क्षीरस्यति माणवकः। वृषस्यति गौः लवणस्यत्युष्ट्रः। आत्मप्रीतौ इति किम्? अश्वीयति। क्षीरियति। वृषीयति। लवणीयति। अश्ववृषयोर्मैथुनेच्छायाम् इति वक्तव्यम्। क्षीरलवणयोर् लालसायाम् इति वक्तव्यम्। तृष्णातिरेको लालसा। अन्यत्रात्मप्रीतावपि न भवति। अपर आह सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः। दध्यस्यति, मध्वस्यति इत्येवम् आद्यर्थम्। अपर आह सुग्वक्तव्यः। दधिस्यति, मधुस्यति इत्येवम् आद्यर्थम्।

न्यासः

अ�आक्षीरवृषलवणानामात्मप्रीतौ क्यचि। , ७।१।५१

"आत्मप्रीतौ" इति। विषयसप्तमीयम्()। अत एवाह--"आत्मप्रीतिविषये क्यचि" इति। आत्मप्रीतिर्विषयो यस्य क्यचः स तथोक्तः। "अ()आस्यति" इति। आत्मनोऽ()आमिच्छतीति "सुपः आत्मनः क्यच्()" ३।१।८ अनेनासुक्(), अतो गुणे" ६।१।९४ पररूपत्वम्()। एवं "क्षीरस्यति" इत्यादावपि वेदितव्यम्()। सर्वत्रात्मप्रीतिविषये क्यच्()। यो ह्यात्मनोऽ()आआदिकमिच्छति स नियोगत आत्मनः प्रोत्यर्थमिच्छति। यद्येवम्(), इच्छायां क्यच्विधीयमानः सर्वत्रात्मप्रीतिविषये भविष्यतीतीच्छायां वक्तव्यम्()? प्रसिद्ध्युपसंग्रहार्थमात्मप्रीताविति लौकिकस्यार्थस्योपादानम्(), तेन यत्रात्मप्रीतावसुग्लोके प्रयुज्यते तत्रैव भवति, नान्यत्र। तेना()आवृषयोर्मैथुनेच्छायां क्षीरलवणयोर्लालसायामित्युपपन्नं भवति। "अ()आईयति" इति। अ()आमिवाचरतीति "उपमानादाचारे" ३।१।१० इति क्यच्(), "क्यचि च" ७।४।३३ इतीत्वम्()। "अ()आवृषयोः" इत्यादि। " अ()आवृष्योर्मैथुनेच्छायामसुग्भवति" इत्येतदर्थरूपं व्याख्येयमित्यर्थः। "क्षीरलवणयोः" इत्यादि। वक्तव्यमित्येतदपेक्षते। "क्षोरलवणयोर्लालसायामसुग्भवति" इत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु कृतमेव। "अन्यत्रात्मप्रीतावपि न भवति" इति। आत्मनोऽ()आआदिकमिच्छत्य()आईयतीति। लवणीयति। "तृष्णातरेकः" इति। तृष्णाया अतिरेकः=अतिशयः, प्रकर्षः, अधिक्यमित्यर्थ-॥

बाल-मनोरमा

अ�आक्षीरवृषलवणानामात्मप्रीतौ क्यचि ४८७, ७।१।५१

अ()आक्षीर क्यचि। "परे असु"गिति शेषपूरणम्, "आज्जसेरसु"गित्यतस्तदनुवृत्तेरिति भावः। असुकि ककार इत्ुकार उच्चारणार्थः। कित्त्वादन्त्यावयवः। अ()आवृषयोरिति - वार्तिकम्। अ()आस्यति वडवेति। मैथुनार्थम()आमिच्छतीत्यर्थः। वृषस्यति गौरिति। मैथुनार्थं वृषमिच्छतीत्यर्थः। "वृषस्यन्ती तु कामुकी"ति कोशस्तु अ()आवृषरूपप्रकृत्यर्थपरित्यागेव मैथुनेच्छामात्रे लाक्षणिकः। क्षीरलवणयोरिति - वार्तिकम्। "असु " गिति शेषः। लालसा - उत्कटेच्छा। सर्वप्रातिपदिकानामिति। इदमपि वार्तिकम्। लालसायां सर्वेषां प्रातिपदिकानां क्यच् वक्तव्यः।

तस्मिन् परे प्रकृतीनां सुगसुकौ च वक्तव्यौ इत्यर्थः। नचानेनैव वार्तिकेन सिद्धे "क्षीरलवणयोर्लालसाया"मिति वार्तिकं व्यर्थमिति शङ्क्यं, "क्षीरलवणयोर्लालसाया"मिति वार्तिकं व्यर्थमिति शङ्क्यं, "क्षीरलवणयो"रिति वार्तिकं कात्यायनीयं, "सर्वप्रातिपदिकाना"मिति तु मतान्तरमित्यदोषात्। एतच्च भाष्ये "अपर आहे"त्यनेन ध्वनितम्।

तत्त्व-बोधिनी

अ�आक्षीरवृषलवणानामात्मप्रीतौ क्यचि ४१८, ७।१।५१

अ()आक्षीर। "आज्जसे"रित्यतोऽसुगिति वर्तते।

* अ()आवृषयोर्मैथुनेच्छायाम्। अ()आस्यतीति। मैथुनार्थम()आमिच्छतीत्यर्थः एवं मैथुनार्थं वृषमिच्छति वृषस्यति गौः। ननु "इति रामो वृषस्यन्ती"मिति प्रयोगो मनुष्यविषये कथं सङ्गच्छत इति चेत्। अत्राहुः--
अ()आवृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छैवार्थः, अतएव "वृषस्यन्ती तु कामुकी"ति कोशोऽपि स्वरसतः सङ्गच्छते इति।

*लवणयोर्लालसायाम्। लालसायामिति। उत्कटेच्छायामित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

आमि सर्वनाम्नः सुट् ७।१।५२

आतिति वर्तते। अवर्णात् सर्वनाम्न उत्तरस्य आमः सुडागमो भवति। सर्वेषाम्। विश्वेषाम्। येषाम्। तेषाम्। सर्वासाम्। यासाम्। तासाम्। आतित्येव। भवताम्। आमि इति षष्ठीबहुवचनं गृह्यते, न ङेराम् नद्याम्नीभ्यः ८।३।११८ इति , तस्य हि परत्वाताड्याट्स्याटो भवन्ति। यश्च घातामुः , आमश्च लिटि, न तौ सर्वनान्मः स्तः। सानुबन्धकौ इति वा तौ न गृह्येते। आमि इति सप्तमीनिर्देशः उत्तरार्थः। इह तु सर्वनाम्नः इति पञ्चमीनिर्देशात् तस्मादित्युत्तरस्य १।१।६६ इति , षष्ठीप्रक्लृप्तिर् भविष्यति।

लघु-सिद्धान्त-कौमुदी

आमि सर्वनाम्नः सुट् १५५, ७।१।५२

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः॥ उभशब्दो नित्यं द्विवचनान्तः। उभौ २। उभाभ्याम् ३। उभयोः २। तस्येह पाठोऽकजर्थः। उभयशब्दस्य द्विवचनं नास्ति। उभयः। उभये। उभयम्। उभयान्। उभयेन। उभयैः। उभयस्मै। उभयेभ्यः। उभयस्मात्। उभयेभ्यः। उभयस्य। उभयेषाम्। उभयस्मिन्। उभयेषु॥ डतरडतमौ प्रत्ययौ, प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः॥ नेम इत्यर्धे॥ समः सर्वपर्याय स्तुल्यपर्यायस्तु न, यथासंख्यमनुदेशः समानामिति ज्ञापकात्॥

न्यासः

आमि सर्वनाम्नः सुट्?। , ७।१।५२

"ह्रस्वनद्यापो नुट्()" ७।१।५४ इति प्राप्ते वचनम्()। "आमीति षष्ठीबहुवचनं परिगृह्रते" इति। इह बहव आमः सम्भवन्ति--षष्ठीबहुवचनम्(), "ङेराम्नद्याम्नीभ्यः" ७।३।११६ इति, "किमेत्तिङव्ययधादाम्वद्रव्यप्रकर्षे" ५।४।११ इति, "कास्प्रत्ययादाममन्त्रे लिटि" ३।१।३५ इत्याम्(); एतेषां यदि सर्वेषां ग्रहणं स्यात्? तदा सर्वेषाम्? "ह्रस्वनद्यापो नुट्()"

(७।१।५४) इति नुट्? प्रसज्येत, तत्राप्येतदेवाम्ग्रहणमनुवत्र्तते, षष्ठीबहुवचनस्यैवेष्यते अतस्तदेव गृह्रत इत्याह--"तस्य हि परत्वात्()" इत्यादि। सुटो नुटश्च षष्ठीबहुवचनमवकाशः, आट्प्रभृतीनां तु चतुथ्र्येकवचनादिः ङेराम्नद्याम्नीभ्यः" ७।३।११६ इति परत्वादाडादयो भवन्ति। तत्र "आण्नद्याः" ७।३।११२ इत्याट्()--कुमार्यामिति। "याडापः" ७।३।११३ इति याट्()--खट्वायामिति। "तर्वनाम्नः स्याड्ढ्रस्वश्च" ७।३।११४ इति स्याट्()--सर्वस्यामिति। यस्तर्हि घान्तादाम्? विधीयते यश्च लिट()आम्? तौ कस्मान्न गृह्रेते? इत्याह--"यश्च किम्()" इत्यादि। तयोह्र्रको घान्ताद्विधीयतेऽपरो घातोः। न च घान्तस्य सर्वनामसंज्ञा, नापि घातोरिति। न तौ सर्वनाम्नः परौ सम्भवत इति न गृह्रेते। अथ तु सर्वनाम्नः परौ न सम्भवत इति कृत्वैतदर्थं तयोग्र्रहणमनुपपन्नम्(), तथाऽप्युत्तरार्थं तूपपद्यते, विद्येते तौ हि हरस्वान्तात्? परौ--पचतितराम्(), पचतितमाम्(), चिकीर्षाञ्चकार, कारायाञ्चकार? इत्यत आह--"सानुबन्धकादिति वा तौ न गृह्रेते" इति। निरनुबन्धकपरिभाषयेति भावः। तत्र घादामोरुकारोऽनुबन्धः, इतरस्य त्वकारः। तथा चोक्तदम्()--आमोऽमित्त्वमदन्तत्वादिति। "उत्तरार्थः" इत्यादि। "त्रेस्त्रयः" ७।१।५३ इत्यामि परतो यथा स्यात्()। एतदर्तोऽप्यामीति सप्तमीनिर्द्देशः कस्मान्न भवति, अस्ति ह्रत्रापि प्रयोजनम्()--आमि परतः सर्वनाम्नः सुङ्? यथा स्यात्()? इत्यत आह--"इह तु" इत्यादि। "उभयनिर्देशे पञ्चमीनिर्द्देशो बलीयान्()" (शाक।प।९७) इति "तस्मादित्युत्तरस्य" १।१।६६ इति "सर्वनाम्नः" इत्यनया पञ्चम्या आमीत्यस्याः सप्तम्याः षष्ठ()आं परिकल्पितामाम एव सुटा भवितव्यमिति नास्तीह निर्द्देशस्य प्रयोजनम्()॥

बाल-मनोरमा

आमि सर्वनाम्नः सुट् २१५, ७।१।५२

सर्व-आम् इति स्थिते "ह्यस्वनद्यापः" इति नुटि प्राप्ते-। आमि सर्वनाम्नः। "अज्जसेरसुक्" इत्यतोऽनुवृत्तेन आदिति पञ्चम्यन्तेन "अङ्गस्ये"त्यधिकृतं पञ्चम्या विपरिणतं विशेष्यते, तदन्तविधिः, "परस्ये"त्यध्याहार्यम्। "उभयनिर्देशे पञ्चमीनिर्देशो बलीया"निति न्यायेन "तस्मादित्युत्तरस्ये"ति परिभाषया "आमी"ति सप्तम्यन्तं षष्ट()न्तमापद्यते। "सर्वनाम्न" इति तु विहितविशेषणम्। ततश्च अवर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यादित्यर्थः। सम्पद्यते। तदाह--अवर्णान्तादित्यादिना। "अवर्णान्ता"दित्यनन्तरम् "अङ्गा"दिति शेषः। "अवर्णान्तात्सर्वनाम्नो विहितस्याम" इति व्याख्याने तु येषां तेषामित्यादौ सुडागमो न स्यात्। तत्र आमो दकारान्ताद्विहितत्वात्। "सर्वनाम्नः परस्ये"ति तु न व्याख्यातम्। तथा सति वर्णाश्रमेतराणामित्यसिद्धेरित्यग्रे मूल एव स्पष्टीभविष्यति। एत्वषत्वे इति। "बहुवचनेझल्ये"दित्येत्वम्। संनिपातपरिभाषा त्वत्र न प्रवर्तते इति बहुवचने झल्येदित्यत्रेक्तम्। "आदेशप्रत्यययोः" इति षत्वं सुटो।ञपि, तदागमास्तद्ग्रहणेन गृह्णन्ते" इति प्रत्ययावयवत्वादिति भावः। सर्वेषामिति। नन्वामीति सप्तमीनिर्देशसामथ्र्यात्तस्मादित्युत्तरस्येति न प्रवर्तते। ततश्च आमि परे प्रकृतेरेव सुडागमो युक्त इति चेन्न, सप्तमीनिर्देशस्य "त्रेस्त्रयः" इत्युत्तरार्थमावश्यकत्वादिति भावः। सप्तकेम्यवचनस्य ङसिङ्योरिति स्मिन्नादेशं सिद्धवत्कृत्याह--सर्वस्मिन्निति। शेषमिति। शिष्यते इति शेषं। कर्मणि घञ्। "घञजबन्ताः पुंसी"-ति तु प्रायिकमिति भावः। एवमिति। सर्वशब्दवदित्यर्थः। नच सर्वशब्दस्य बहुत्वव्यापकसर्वत्वात्मकधर्मविशेषप्रवृत्तिनिमित्तकत्वाद्बहुवचनमेव न्याय्यमिति वाच्यं, सर्वशब्दो हि बह्ववयवारब्धसमुदाये वर्तते। तत्र यदाऽनुद्भूतावयवः समुदायो विवक्षितस्तदा भवत्येकवचनम्। यथा-सर्वो लोक इति। अनुद्भूतत्वम्विवक्षितसंख्याकत्वम्। यदात्वनुद्भूतावयवकौ समुदायौ तदा द्विवचनम्। यथा सर्वौ व्यूहाविति। यदा तूद्भूतावयवसमुदायस्तदा बहुवचनम्। यथा सर्वे जना इतचि। अथ के ते सर्वादयः शब्दाः? कति च ते? इत्यत्राह--सर्वादयश्च पञ्चतिं()रशदिति। पञ्च च तिं()रशच्चेति द्वन्द्वः, पञ्चाधिका तिं()रशदिति शाकपार्थिवादित्वात्तत्पुरुषो वा। "सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानां"मिति डच्तु समासान्तो न भवति। "अन्यत्राधिकलोपा"द#इत्युक्तेः।

पूर्वपरावरेति--गणान्तर्गतं सूत्रम्। "व्यवस्थायामसंज्ञायां च पूर्वादीनि सप्त सर्वादिगणप्रविष्टानि वेदितव्यानी"त्यर्थः। सर्वनामसंज्ञा तु "सर्वादीनि सर्वनामानी"त्येव सिध्यति।

"स्वमज्ञाती"ति "अन्तरं बहि"रिति च गणसूत्रद्वयमेवमेव योज्यम्। व्यवस्थादिशब्दा अग्ने मूल एव व्याख्यास्यन्ते। इतिशब्दः--सर्वादिगणसमाप्ति-द्योतनार्थः। तत्र वि()आशब्दोऽपि सर्वशब्दवदेव। उभशब्दे तु विशेषमाह--तत्रेति। सर्वादिषु मध्य इत्यर्थः। अत एवेति। द्वित्विशिष्टवाचकत्वादेवेत्यर्थः। नित्यमिति। सर्वदा द्विवचनान्त एव नत्वेकवचनबहुवचने इति यावत्। तेन टाबादि न निवार्यते। नन्वेवं सति "जसः शीः" "सर्वनाम्नः स्मै" "ङसिङ्योः स्मात्स्मिनौ" "आमिसर्वनाम्नः सुट्" इत्युक्तानां सर्वनामकार्याणां द्विवचनेऽभावादुभशब्दस्य सर्वादिगणे पाठो व्यर्थ इत्यत आह--तस्येहेति। तस्य=उभशब्दस्य, इह=सर्वादिगणे, पाठस्तु उभकावित्यत्र "अव्ययसर्वनाम्नामकच्प्राक्टेः" इत्यकच्प्रत्ययार्थ इत्यर्थः। ननु मास्तूभशब्दस्य सर्वादिगणे पाठो, मास्तु च सर्वनामता, मास्तु च तत्प्रयुक्तोऽकच्। उभशब्दात्स्वार्थिके कप्रत्यये सत्यपि उभकाविति रूपसिद्धेः। न च काकचोः स्वरभेदः शङ्क्यः। "तद्धितस्य" इति प्रत्ययस्वरेण वा, "चितः सप्रकृतेः" इति चित्स्वरेण वाऽन्तोदात्तत्वे विशेषाऽभावात्। उक्तं च भाष्ये--"काकचोः" को विशेषः?" इति। तत्राह--नचेति। कप्रत्ययेन उभकावितीष्टरूपसिद्धिर्नचेत्यन्वयः। कुत इत्यत आह--द्विवचनेति। द्विवचनपरत्वाऽभावे उभशब्दादयच् विहितः। अकचि तु सति "तन्मध्यपतितस्तद्ग्रहणेन गृह्रते" इति न्यायेन उभशब्देनोभकशब्दोऽपि गृह्रते। तस्य च"उभक-औ इत्यस्यां दशायां द्विवचनपरत्वादयच्प्रत्ययो न भवति। कप्रत्यये तु सति तस्य उभशब्दात्परतो विहितत्वेन तन्मध्यपतितन्याया।ञप्रवृत्त्या उभकशब्दस्योभशब्देन ग्रहणाऽभावादुभशब्दस्य कप्रत्ययव्यवधानेन द्विवचनपरकत्वाऽभावादयचि उभयकौ इति स्यात्। यथा "उभयत" "उभयत्रे"त्यत्र द्विवचनपरकत्वाऽभावादयच्प्रत्ययो।ञस्ति तद्व दित्यर्थः। द्विवचने सति अयच्प्रत्ययो नेति यदभिहितं तत् "उभयोऽन्यत्रे"ति वदता वार्तिककृता उक्तमित्यर्थः। अन्यत्रेत्येततद्व्याचष्टे-अन्यत्र द्विवचनपरत्वाभावे इति। उदाह्मतवार्तिके अन्यत्रेत्यनेन द्विवचनादन्यस्मिन् परे इत्यर्थो विवक्षितः, "अन्याभावो द्विवचनटाब्विषयत्वा"दिति पूर्ववार्तिके द्विवचनस्यैव प्रस्तुतत्वादिति भावः। टाब्ग्रहणं तु तत्राविवक्षितमिति कैयटादिषु स्पष्टम्। ततश्च सर्वनामतानिमित्तकाऽकजर्थ उभशब्दस्य सर्वादिषु पाठ इति स्थितम्। अत्र यद्वक्तव्यं तत्तद्धितप्रक्रियायाम् "उभादुदात्तो नित्य"मित्यत्र वक्ष्यते। अथोभयशब्दे विशेषमाह--उभयशब्दस्येति। उभौ अवयवौ यस्यावयविनः स उभयो मणैः। "उभादुदात्तः" इत्ययच्। अवयववृत्तेः सङ्ख्यावाचिन उभशब्दादवयविन्यर्थेऽयच्प्रत्ययः स्या"दिति तदर्थः। द्व्यवयवारब्धो मणिरित्यर्थः। मणेरवयविन एकत्वादुभय इत्येकवचनं उभयश्च उभयश्च उभयश्चेत्येवं द्व्यवयवारब्धद्विमणिविवक्षायामुभयौ मणी इति द्विवचनं तु न भवति, "उभयोऽन्यत्रे"त्युदाह्मतवार्तिके उभयशब्दस्य द्विवचनान्तादन्यत्रैव प्रयोगविध्यवगमात्। नच तत्र वार्तिके स्वार्थिकायजन्तस्यैवोभयशब्दस्य ग्रहणं, स्वार्थिकायजन्तोभशब्दोपक्रमेणैव तद्वार्तिकप्रवृत्तेरिति वाच्यम्, एतद्वार्तिकव्याख्यावसरे "उभयो मणिः", "उभये देवमनुष्याः" इति भाष्ये उदाह्मतत्वेन तयप्समानार्थकायजन्तस्यापि तत्र ग्रहणावगमात्। एतदेवाभिप्रेत्य "तद्धितश्चासर्वविभक्ति"रित्यव्ययत्वमुभयशब्दस्य द्विवचनाभावेनाऽसर्वविभक्तित्वेऽपि न भवति, "तसिलादयः प्राक्पाशपः", "शस्प्रभृतयः प्राक् समासान्तेभ्य," "अम्", "आम्" "कृत्वोऽर्थाः", "तसिवती," नानाञा"विति परिगणितत्वादिति कैयटेनोक्तम्। तदाह--कैयट इति। एवंच--उभयः उभये। उभयम्, उभयान्। उभयेन, उभयैः। उभयस्मै, उभयेभ्यः। उभयस्मात्, उभयेभ्यः। उभयस्य, उभयेषाम्। उभयस्मिन्ुभयेषु इत्येव रूपाणि। नतूभयावित्यादिद्विवचनान्तप्रयोग इति सिद्धं भवति। हरदत्त इत्यस्वरसोद्भावनम्। तद्बीजं तूभयोऽन्यत्रेति प्रागुक्तवार्तिकभाष्यविरोध एवेत्यन्यत्र विस्तरः। उभयशब्दाज्जसि सर्वादीनीति नित्यां सर्वनामसंज्ञां बाधित्वा परत्वात् "प्रथमचरमतयाल्पार्धकतिपयनेमाश्च" इति सर्वनामसंज्ञाविकल्पप्राप्तिमाशङ्क्य परिहरति--तस्मादित्यादिना।

तस्मात्ुभेयशब्दात्, जसि सति प्रथमचरमेति विकल्पे प्राप्ते नित्यैव संज्ञा भवतीत्यर्थः। "सर्वादीनीत्यनेने"ति शेषः। ननु प्रथमचरमादिष्वनन्तर्भावात्कथमुभयशब्दस्य तयप्प्रत्ययान्तत्वमित्यत आह--अयजादेशस्य स्थानिवद्भावेनेति। "उभादुदात्त" इति सूत्रे सङ्ख्याया अवयवे तयप्" इति उभशब्दाद्विहितस्य तयपोऽयजादेशः, तयब्ग्रहणमननुवर्त्त्य अयच् स्वतन्त्रः प्रत्ययो वे"ति पक्षद्वयं भाष्ये स्थितम्। तत्र प्रथमपक्षाभिप्रायेणात्र सर्वनामसंज्ञाविकल्पशङ्का बोध्या। ननु प्रथमचरमेति वकल्पस्य परत्वात्कथमिह "सर्वादीनी"तिनित्यैव संज्ञेत्यत आह-अन्तरङ्गत्वादिति। तदेवोपपादयत#इ-- विभक्तिनिरपेक्षत्वेनेति। "प्रथमचरमे"ति जसि विकल्पविधिर्जसपेक्षत्वेन विभक्त्यपेक्षत्वाद्बहिरङ्गः। "सर्वादीनी"ति नित्यसंज्ञाविधिस्तु तदनपेक्षत्वादन्तरङ्गः, "अल्पापेक्षमन्तरङ्ग"मिति न्यायात्। अतोऽत्र परमपि "प्रथमचरमे"ति विकल्पं बाधित्वा "सर्वादीनी"ति नित्यैव संज्ञा भवति, परादन्तरङ्गस्य बलीयस्त्वादिति भावः। तथा च शीभावो नित्य इत्याह-उभये इति। ननु डतरडतमशब्दयोः क्वापि प्रयोगादर्शनात्किमर्थस्तयोः पाठ इत्यत आह-डतरडतमौ प्रत्ययाविति। "किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्"। "वा बहूनां जातिपरिप्रश्ने डतमच्"। "एकाच्च प्राचा"मिति तद्धिताधिकारविहितौ डतरडतमौ प्रत्ययौ, "प्रत्ययः" इत्यधिकृत्य तद्विधेः। अतः प्रत्ययग्रहणपरिभाषया डतरग्रहणेन कतरादिशब्दानां, च ग्रहणमिति भावः।

शङ्कते--यद्यपीति। सुप्तिङन्तमिति। यदि संज्ञाविधावपि प्रत्ययग्रहणपरिभाषा प्रवर्तेत, तर्हि "सुप्तिङ् पद"मित्येव सूत्र्येत, प्रत्ययग्रहणपरिभाषयैव सुप्तिङन्तमित्यर्थलाभात्। अतः संज्ञाविधौ प्रत्ययग्रहणपरिभाषा न प्रवर्तत इति विज्ञायते। एवंच प्रकृते सर्वनामसंज्ञाविधौ डतरडतमग्रहणे प्रत्ययग्रहणपरिभाषानुपस्थानात्कथं तदन्तग्रहणमित्याक्षेपः। परिहरति-- तथापीति। अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपीह सर्वनामसंज्ञाविधौ डतरडतमग्रहणे तदन्तग्रहणस्त्येवेत्यर्थः। कुत इत्यत आह--केवलयोरिति। "न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः" इति न्यायेन केवलप्रत्यययोर्डतरडतमयोः प्रयोगानर्हत्वेन तयोः सर्वनामसंज्ञायां फलाऽभावादित्यर्थः। तस्माड्डतरडतमग्रहणेनात्र कतरकतमादिशब्दानां ग्रहणमिति स्थितम्। ननु डतरग्रहणेनैव सिद्धे सर्वादिगणे।ऽन्यतरशब्दपाठो व्यर्थः। अन्यतमशब्दस्यापि डतमप्रत्ययान्तत्वात्सर्वनामत्वापत्तिश्चेत्यत आह--अन्यतरान्यतमशब्दावव्युत्पन्नाविति। डित्थादिशब्दवत्प्रकृतिप्रत्ययविभागविहीनावित्यर्थः। किंयत्तदेकेभ्य एव डतरडतमविधानादिति भावः। नन्वेवं सत्यन्यतरान्यतमशब्दाभ्यां द्वबहुनिर्धारणावगमः कथमित्यत आह--स्वभावादिति। एवंचान्यतमशब्दस्य न सर्वनामत्वमित्याह--तत्रेति। एतयोर्मध्ये इत्यर्थः। अन्यतरशब्दस्य तु डतरडतमविधानादिति भावः। नन्वेवं सत्यन्यतरान्यतमशब्दाभ्यां द्विबहुनिर्धारणावगमः कथमित्यत आह--स्वभावादिति। एवंचान्यतमशब्दस्य न सर्वनामत्वमित्याह--तत्रेति। एतयोर्मध्ये इत्यर्थः। अन्यतरशब्दस्य तु डतरप्रत्ययान्तत्वाऽभावेऽपि सर्वादिगणे पाठादेव सर्वनामत्वमित्युक्तप्रायम्। अत "त्व" "त्वे"त्येकप्रातिपदिकभ्रमं वारयन् अप्रसिद्धार्थत्वाद्व्याचष्टे--त्व त्व इति द्वावप्यदन्तावन्यपर्यायाविति। अन्यशब्दसमानार्थकावित्यर्थः। द्वयोरप्यदन्तत्वे।ऽन्यतरपाठवैयर्थ्यं परिहरति-एक इति। इत्येके इति। इति कतिपये वृत्तिकृदादयो मन्यन्त इत्यर्थः। "एतं त्वं मन्ये" इत्युदात्तत्वस्य "उत त्वः पश्यन्" इत्यादावनुदात्तत्वस्य च ऋग्वेदे दर्शनादिति भावः। एकस्तान्त इति। संहितापाठे "त्व"दिति च्छेदमाश्रित्य प्रथमस्तकारान्तः, द्वितीयोऽदन्त इत्यपरे मन्यन्त इत्यर्थः। अन्यथा एकश्रुत्या वा स्वरविनिर्मुक्त वा सकृदेव पठेत्, तावतैव द्वयोरपि लाभात्, "त्वत्त्वसमसिमेत्यनुच्चानी"ति फिटसूत्राच्च। "स्तरीरु त्वद्भवति, सूत उ त्वत्" इति ऋग्व्याख्यावसरे वेदभाष्ये "त्व"दिति सर्वादिपठितोऽनुदात्तोऽयमन्यपर्यायः" इत्युक्तत्वाच्च। "त्वदधरमधुरमधूनि पिबन्त"मिति जयदेवप्रयोगाच्च। तत्र हि त्वच्छब्दो।ऽन्यपर्यायः। त्वतोऽधर इति विग्लरहः। अन्यस्या अधर इत्यर्थः। नतु तवाधर इति विवक्षितं, "पश्यति दिशि दिशि रहसि भवन्तम्" इति पूर्ववाक्येनाऽन्वयानुपपत्तेः। नेम इत्यर्धे इति। "वर्तते" इति शेषः। "प्र नेमस्मिन् ददृशे सोमो अन्तः" इत्यृचि तथा

दर्शनादिति भावः। सम इति। सर्व शब्दसमानार्थक एव समशब्दः सर्वादिगणे पठित इत्यर्थः। तुल्यपर्यायस्त्विति। तुल्यशब्दसमानार्थक इत्यर्थः। ज्ञापकादिति। अन्यथा तत्र समेषामिति निर्दिशेदिति भावः। ननु अष्टाध्यायीपठिते "अन्तरं बहिर्योगोपसंव्यानयोः" इति जसि सर्वनामसंज्ञाविकल्पविधायके सूत्रे "अपुरीत वक्तव्य"मिति वार्तिकपाठो भाष्ये दृश्यते। एवंचान्तराः पुर्य इत्यत्र जसि सर्वनामसंज्ञानिषेधेऽपि, "अन्तरायां पुरी"त्यत्र तन्निषेधा।त्रबावादन्यतरस्यामिति स्यादित्यत आह--गणसूत्र इति। यद्यपीदं वार्तिकं जसि विकल्पविधिप्रकरणे पठितं तथाप्यन्तरं बहिरितिगणसूत्रस्यैवायं शेषो, नत्वष्टाध्यायीपठितस्या।त्रन्तरं बहिरित्यस्य जसि विधायकस्य शेषः, "जसश्शी"त्यत्र अत इत्यनुवृत्त्या टाबन्तात्तत्प्राप्तिविरहात्। ततश्च पुर्यां विशेष्यभूतायामन्तरशब्दः सर्वादिगणे पाठं न लभते इत्येतद्वार्तिकार्थः पर्यवस्यति। एवञ्चजसोऽन्यत्रापि अन्तरशब्दस्य पुर्यां विशेष्यभूतायां सर्वनामत्वं नेति लभ्यते। अतोऽन्तरायां पुरीत्यादौ सर्वनामकार्यं स्याडादि न भवतीत्यभिप्रेत्योदाहरति--अन्तरायां पुरीति। यद्यप्यन्तरशब्द एव सर्वादिगणे पठितो, नतु टाबन्तः। तथापि लिङ्गविशिष्ट परिभाषया वा, एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनामत्वप्राप्तिर्बोध्या। "सिम" शब्दस्तु "सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः" इति कोशे प्रसिद्धः।

तत्त्व-बोधिनी
आमि सर्वनाम्नः सुट् १८०, ७।१।५२

अवर्णान्तादिति। अवर्णान्चतादङ्गत्पर्सयेत्यर्थः। तेन "येषां" "तेषा"मित्यादौ नाऽव्याप्तिः। सर्वनाम्नो विहितस्येति। "सर्वनाम्नः परस्ये"ति नोक्तं, "वर्णाश्रमेतराणा"मित्यत्र सुट्प्रसङ्गात्, "द्वन्द्वेचे"त्यनेन समुदायस्य सर्वनामसंज्ञानिषेधेऽप्यवयवस्याऽनिषेधात्। विहितविशेषणत्वाश्रयणे प्रमाणं तु "दक्षिणोत्तरपूर्वाणा"मिति भाष्यकारप्रयोग एव। आम इति। "सर्वनाम्न" इति पञ्चम्या निरवकाशतया "आमी"ति सप्तम्याः "त्रेस्त्रयः"इत्युत्तरसूत्रे कृतार्थायाः षष्ठी प्रकल्प्यत इति भावः। पञ्चतिं()रशदिति। पञ्च च तिं()रशच्चेति द्वन्द्वः। पञ्चाधिका()स्त्रशदिति तत्पुरुषो वा। न च "संङ्ख्यायास्तत्पुरुषस्ये"ति वक्ष्यमाणवार्तिकेन समासान्तो डच्स्यादिति वाच्यम्, तत्रैव वार्तिके "अन्यत्राधिकलोपा" दित्युक्तत्वात्। ननु सर्वेषां नाम सर्वनामेत्यन्वर्थत्वात्संज्ञायाः सर्ववि()आआदय एव संज्ञिनो भविष्यन्ति नान्ये इति किमनेन पञ्चतिं()रशदिति परिगनेन, "सर्वादीनी"ति सूत्रेण वा?। मैवम्। परिगणनाऽभावे कृत्स्नसकलसमस्तादिष्वतिप्रसङ्गात्। एवं च "पञ्चतिं()रशत्सङ्ख्याकानि सर्वादीन्येव सर्वनामसंज्ञकानि नान्यानी"ति नियमाय "सर्वाद#ईनी"ति सूत्रमावश्यकं न त्वनुनासिकसंज्ञासूत्रमिव मन्दप्रयोजनमिति बोध्यम्।

पूर्वपरावर। व्यवस्थायामसंज्ञायां यानि पूर्वपरावरदक्षिणोत्तरापराधराणि तानि सर्वादिगणसंनिविष्टानि नान्यानीत्यर्थः। सर्वनामसंज्ञा तु "सर्वादीनि सर्वनामानि" इत्यनेनैव सिध्यति। एवमुत्तरसूत्रद्वयेऽपि बोध्यम्। "त्यद्" "तद्" एतौ उक्तपरामर्शकौ। "तत्राद्यश्छान्दस" इति गणरत्नकारोक्तिर्नादर्तव्या। स्यश्छन्दसि बहुल"मिति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः। एक इति। "एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते"। अत एवेति। द्वयोर्द्विवचनस्यैव युक्तत्वादिति भावः। नित्यं द्विवचनान्त इति। सर्वदा। द्विवचनान्त इत्यर्थः। न चैव "मुभादुदात्तो नित्यम्", "उभय सर्वनामत्वे कोऽर्थः"-इति सूत्रकारभाष्यकारप्रयोगो विरुध्यत इति शङ्क्यम्, अर्थपरस्यैव नित्यं द्विवचनान्तता न तु स्वरूपानुकरणपरस्येत्यभ्युपगमात्। अथ सर्वादिषूभशब्दपाठो व्यर्थः, सर्वनामकार्याणां स्मायादीनां द्विवचनेऽभावात्। न च "सर्वनाम्नस्तृतीया चे"ति सूत्रेणोभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरिति षष्ठीतृतीयासिद्धिसतत्फलमिति वाच्यम्। "निमित्तकारणहेतुषु सर्वासां प्रायदर्शन"मिति वार्तिकेनैव गतार्थत्वात्। न च वृत्तिकृता "सर्वनाम्नस्तृतीया चे"ति सूत्रे पठितत्वादिदमपि वार्तिकं सर्वनाम्न एव सर्वविभक्तिप्रापकं नान्यस्येति वाच्यम्, भाष्ये "हेतौ" इति सूत्रे तद्वार्तिकस्य पठितत्वादिदमपि वार्तिकं सर्वनाम्न एव सर्वविभक्तिप्राप्कं नान्यस्येति वाच्यम्,

भाष्ये "हेतौ" इति सूत्रो तद्वार्तिकस्य पठितत्वात्। अत एव "अन्नेन कारणेन वसति" "अन्नस्य कारणस्ये"त्युदाहृतं हरदत्तेनेत्याशङ्ख्याह-तस्येह पाठस्त्विति।

ननु कप्रत्ययेनापीष्टसिद्धेः किमनेनाऽकजर्थपाठेना?। न च काऽकचोः स्वरे विशेषोऽस्तीति वाच्यम्, प्रत्ययस्वरेण चित्स्वरेण वाऽन्तोदात्तत्वे विशेषाऽभावादित्याशङ्क्याह- न चेति। उभशब्दस्य द्विवचनपरत्वमकच्प्रत्ययो न विहन्ति, टेः प्राग्जायमानत्वात्, तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्। कप्रत्ययस्तु विहन्त्येव, प्रातिपदिकात्परत्र जायमानत्वादित्याशङ्ख्यामाह-द्विवचनपरत्वाभावेनेति। अयच्प्रसङ्गादिति। उभयशब्दात्त्रतसोः परतः स्वार्थे यथा अयज्यभवति तथा कप्रत्यये सति स्यादिति भावः। यद्यपि स्वार्थे अयज्दृष्टान्तेऽपि दुर्लभस्तथापि "उभादुदात्त" इति सूत्रे "नित्य"मिति योगविभागात्सुलभ एव। तथाहि-"उभादुदात्तः"। "द्वित्रिभ्या"मिति सूत्राद्वेति नानुवर्तते, अस्वरितत्वात्। अवयववृत्तेः सङ्ख्यावाचिन उभशब्दादवयविन्यर्थे अयच् स्यात्। उभयो मणिः। उभयः पाशः। ततो "नित्यम्"। उभशब्दाद्वृत्तिविषये नित्यमयच्स्यात्स्वार्थे। तेन "उभयतः", "उभयत्र," "उभयपक्षविनीतानिद्राः" इत्यादि सिद्धम्। नन्वेवमकचि कृतेऽप्ययज्दुर्वारः, "वृत्तिविषये स्वार्थे नित्यमय"जिति त्वयैवोक्तत्वादिति चेत्, एवं तर्हि योगविभागस्येष्टध्यर्थतया "उभौ साभ्यासस्ये"ति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यायते, न तु वृत्तिविषय इति न दोषः। तदुक्तमिति। "वार्तिककृते"ति शेषः।

उभयोऽन्यत्रेति। उभयेति यः स्वार्थिकोऽयजन्तः सोऽन्यत्र प्रयुज्यते, न तु द्विवचने परत इत्यर्थः। न च "उभा"वित्यादौ द्विवचनपरत्वं दुरुपपादम्, उभयत आश्रयणोऽन्तादिवद्भावविरहादिति वाच्यम्; "उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र ततोऽन्यत्रायजिति विवक्षितोर्थ" इति मनोरमायामुक्तत्वात्। एवं च सर्वादिषूभशब्दपाठोऽकजर्थ इति स्थितम्। भाष्ये तु--कप्रत्ययस्य स्वार्थिकत्वेन स्वार्थाभिधानसमर्थत्वादुभशब्दात्परस्य द्विवचनपरत्वमस्तीत्याश्रित्योभशब्दपाठः सर्वादिगणे प्रत्याख्यातः। मनोरमायां तु-भाष्ये प्रत्याख्यानं प्रौढिवादमात्रं, कृत्तिमस्यैव द्विवचनस्येह ग्रहीतुमुचितात्वदन्यथात्रतसिलादावतिप्रसक्तत्वादित्यादि स्थितम्।

उभयशब्दस्येति। उभावयवौ यस्य उभयः। "उबादुदात्तो नित्य"मिति तयपोऽयच्। नास्तीति। अनभिधानादिति भावः। तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तत्वेनाऽव्ययत्वे प्राप्ते "तद्धितश्चासर्वविभक्ति"रिति सूत्रे "कृत्ताद्धितानां ग्रहणं च पाठे" इति भाष्यं कैयटेनावतारितम्। अस्तीति। "पचतिरूप"मित्यादिवारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति भावः। तस्मादिति। उभयशब्दादित्यर्थः। तयप्प्रत्ययान्ततयेति। "उभयशब्दस्ये"ति शेषः। यदि तूभयशब्दादयच् स्वतन्त्रः, नतु तयप आदेश इति निष्कर्षः स्वीक्रियते, तदाऽपि "प्रथमचरमतये"ति वैकल्पिकप्राप्तिर्नास्त्येवेति बोध्यम्। नित्यैवेति। "उभया अमित्रा" इति तु छान्दसत्वाद्बोध्यम्। डतरडतमाविति। "किंयत्तदोर्निधारणे द्वयोरेकस्य डतरच्", "वा बहूनां जातिपरिप्रश्ने डतमच्", एकाच्च प्राचा"मिति विहितौ। अव्युत्पन्नाविति। एतच्च पस्पशायां कैयटे स्पष्टम्। एके इति। काशिकाकाराः। "एतं त्वं मन्ये"इत्युनुदात्तस्य, "उत त्वः पश्यन्" इत्यनुदात्तस्य च दर्शनादिति भावः। एक इति। प्रथम इत्यर्थः। संहितया पाठे तान्तत्वस्याऽस्फुटत्वेऽपि "त्व"दिति तान्तश्छेत्तव्यः। अन्यथा एकश्रुत्या सकृदेव पठेत्। न च तान्ते विप्रतिपत्तव्य। "त्वत्त्वसमसिमेत्यनुच्चानी"ति फिट्सूत्रात्। तथाच ऋङ्भन्त्रः-"स्तरीरु त्वद्भवति सूत उ त्वत्" इति। जयदेवोपि प्रायुङ्क्त"त्वदधरममधुरमधूनि पिबन्त"मिति। त्वत्तोऽन्यस्या अधर इति विग्रहो न तु तवाधर इति, "पश्यति दिशि दिशि रहसि भवन्त"मिति पूर्ववाक्येन सहाऽनन्वयापत्तेः। सम इति। तथाच श्रूयते-"मा नो वृकाय वृक्ये समस्मै"। "उतो समस्मिन्" इत्यादि। "सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः"। गणसूत्र इति। यद्यपि भाष्येऽष्टाध्यायीस्थसूत्रे "अपुरीति वक्तव्य"मिति वार्तिकं पठितं, तथापि तद्गणसूत्रस्यैव शेषो न तु जसि विभाषाविधायकस्य। "अत" इत्यधिकृत्य जसः

शीविधानादाबन्तात्प्राप्त्यभावात्। अन्तरायामिति। प्राकाराद्वाह्यायां, तदन्तर्विर्तिन्यां वेत्यर्थः। लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनासतायाः प्राप्तिर्बोध्या। इत्थं सर्वादिगणं व्याख्यायेदानीं तदन्तर्गतत्रिसूत्रीसमानाकाराष्टाध्यायीस्थां त्रिसूत्रीं व्याचष्टे।

---

सूत्रम्

काशिका-वृत्तिः

त्रेस् त्रयः ७।१।५३

त्रि इत्येतस्य आमि परे त्रय इत्ययम् आदेशो भवति। त्रयाणाम्। त्रीणाम् इत्यपि छन्दसि इष्यते। त्रीणाम् अपि समुद्राणाम् इति।

लघु-सिद्धान्त-कौमुदी

त्रेस्त्रयः १९२, ७।१।५३

त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। त्रिषु। गौणत्वेऽपि प्रियत्रयाणाम्॥

न्यासः

त्रेस्त्रयः।, ७।१।५३

"ह्रस्वनद्यापो नुट्()" ७।१।४४ इति प्राप्ते वचनम्()। "त्रयाणाम्()" इति। "सुपि च" ७।३।१०२ इति दीर्घः। ननु च "णिजां त्रयाणां गुणः श्लौ" ७।४।७५ इति निपातनादेव सिद्धम्(), तत्किमर्थमिदमारभ्यते? एवं सिद्धे सतीदमारभ्यमाणमेतज्ज्ञापयति--"अबाधकान्यपि निपातनानि भवन्ति (पु।प।वृ।९९) इति, तेन पुरातनमिति सिद्धं भवति; अन्यथा "पुराणप्रोक्तेषु" ४।३।१०५ इति निपातनेन बाधित्त्वान्न सिध्यति। "त्रीणामपीष्यते छन्दसि" इति। एतच्चापीत्यधिकाराद्वा, "सर्वे विघयश्छन्दसि विकल्प्यन्ते (पु।प।वृ।५६) इति वा लभ्यते॥

बाल-मनोरमा

त्रेस्त्रयः २६२, ७।१।५३

त्रेस्त्रयः। "आमि सर्वनाम्नः" इत्यत "आमी"त्यनुवर्तते। तदाह--त्रिशब्दस्येति। अनेकाल्त्वात्सर्वादेशः। नुट् दीर्घश्च। तदाह--त्रयाणामिति। "त्रेरयङ्" इति तु नोक्तम्, अयङ् अनङित्यादिवन्ङकारात्पूर्वस्याऽकारस्योच्चारणार्थत्वाशङ्काप्रसङ्गात्। अङ्गाधिकारस्थत्वात्। "पदाङ्गाधिकारे" इति परिभाषया "त्रे"रिति तदन्तग्रहणमित्यभिप्रेत्योदाहरति--परमत्रयाणामिति। परमाश्च ते त्रयश्चेति विग्रहः। प्रियास्त्रयो यस्येति प्रियत्रिशब्दो बहुव्रीहिः। तस्यान्यपदार्थप्रधानत्वादेकद्वि बहुवचनानि सन्ति। अतो हरिवत्तस्य रूपाणि।

तत्र त्रयादेशमाशह्क्याह--गौणत्वे त्विति। त्रिशब्दस्योपसर्जनत्वे "त्रेस्त्रयः" इति न भवतीति केचिदाहुरित्यर्थः। "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति न्यायादिति भावः। वस्तुतस्त्विति। "प्रियत्रयाणा"मित्येव रूपं वस्तुत्वेन ज्ञेयमित्यर्थः। प्रामाणिकमिति यावत्। गौणमुख्यन्यायस्त्वत्र न प्रवर्तते, तस्य पदकार्य एव प्रवृत्तेः। अत एवोपसर्जनानां सर्वनामत्वप्रतिषेध आरब्धो वार्तिककृता। अत एव च "प्रियतिसे"त्यादौ त्रिरुआआदयो भाष्ये उदाह्मताः सङगच्छन्त इत्यन्यत्र विस्तरः।

अथ द्विशब्दे विशेषमाह--द्विशब्द इति। तस्य द्वित्वनियतत्वादिति भावः।

तत्त्व-बोधिनी

त्रेस्त्रयः २२२, ७।१।५३

त्रेस्त्रयः। "त्रे"रिति षष्ठी न तु पञ्मी। "त्रय"इत्यदन्तं न तु सान्तं, "निजां त्रायाणां"मिति निर्देशादित्यमिप्रेत्याह--त्रिशब्दस्य त्रयादेश इति। "ननु निजां त्रयाणा"मिति निपातनादेवत्रयादेशे सिद्र्ध किमनेन सूत्रेणेति चैन्मैवम्। "अबाधकान्यपि निपातनानि भवन्ती"त्यनेन ज्ञापनात्। तेन "पुरातन"मिति सिध्यति। अन्यथा "पुराणप्रोक्तेषु--"इति निपातनादेतद्बाध्येत। "त्रेरय"ङित्येव न सूत्रितम्। तत्करोति आचष्टे वेत्यर्थं "तत्करोति"इत्यादिना णिचि ततः क्विपि "प्रकृत्यैकाजि"ति प्रकृतिभावाट्टिलोपाऽभावे "ह्रस्वस्य पिती"तु तुकि "त्रित्"। ततो बहुत्वविवक्षायामामि कृते त्रेरयङि "त्रयाणा"मिति रूपाऽसिद्धेः। न च "वार्णादाङ्गं बलीयः"इति तुकः प्रागेवायं स्यादिति शङ्क्यम्, युगपत्प्रवृत्तावेवाऽऽङ्गस्य बलीयस्त्वात्। केचिदिति। "त्रेः संबंन्धिन्यामी"ति विज्ञानाद्गौणत्वेऽपि त्रयादेशो न भवतीति तेषामाशयः। वस्तुतस्त्विति। अर्थप्राधान्यबोधकस्य बहुवचनस्याऽभावाद्गणत्वेऽपि त्रयादेशो न्याय्यः, प्रियास्थ्नेत्यादावस्थ्याद्यनङ्वदिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वनद्यापो नुट् ७।१।५४

ह्रस्वान्तात् नद्यन्ताताबन्ताच् च उत्तरस्य आमः नुडागमो भवति। ह्रस्वान्तात् तावत् वृक्षाणाम्। प्लक्षाणाम्। अग्नीनाम्। वायूनाम्। कर्तृणाम्। नद्यन्तात् कुमारीणाम्। किशोरीणाम्। गौरीणाम्। शार्ङ्गरवीणाम्। लक्ष्ंईणाम्। ब्रह्मबन्धूनाम्। वीरबन्धूनाम्। आबन्तात् खट्वानाम्। मालनाम्। बहुराजानाम्। कारीषगन्ध्यानाम्।

लघु-सिद्धान्त-कौमुदी

ह्रस्वनद्यापो नुट् १४८, ७।१।५४

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः॥

न्यासः

ह्यस्वनद्यापो नुट्?। , ७।१।५४

"कुमारीणाम्()" इति। "वयसि प्रथमे" ४।१।२० इति ङीष्()। "गौरीणाम्()" इति। "षिद्गौरादिभ्यश्च" ४।१।४१ इति ङीष्()। "शाङ्गरवीणाम्()" इति। "शाङ्गरवाद्यञो ङीन्()" ४।१।७३ इति ङीन्()। "लक्ष्मीणाम्()" इति। "अवितृ()स्तृ()तन्त्रिभ्य ईः" (पं।उ। ३-१५८) इत्यनुवृत्तौ "लक्षेर्मुट्? च" (पं।उ।३।१६०) इतीर्मुट्? च। "ब्राह्बन्धूनम्()" इति। ब्राह्आ बन्धुरासामिति बहुव्रीहिः। "ऊङ्तः ४।१।६६ इत्यूङ्()। "खट्वानाम्()" इति। "अजाद्यतष्टाप्()" ४।१।४। "बहुराजानाम्()" इति। "डाबुभाभ्यामन्यतरस्याम्()" ४।१।१३ इति डाप्()। "कारीषगन्ध्यानाम्()" इति। कारीषगन्धेरपत्यमित्यण। तस्य "अणिञोरनार्षयोः" ४।१।७८ इत्यादिना ष्यङादेशः, "यङ्श्चाप्()" ४।१।७४ इति चाप्()॥

बाल-मनोरमा

ह्यस्वनद्यापो नुट् २०६, ७।१।५४

तदाह--ह्यस्वान्तादित्यादिना "आम्" अत्र षष्ठीबहुवचनमेव, नतु "ङेरा"मित्यादिविहितमिति भाष्ये स्पष्टम्। नुटि टकार इत्। उकार उच्चारणार्थः। टित्त्वादाद्यवयवः।

तत्त्व-बोधिनी

ह्रस्वनद्यापो नुट् १७३, ७।१।५४

ह्रस्वनद्यापो। "अङ्गस्ये"त्यनुवर्तते। तच्च पञ्चन्यन्तेन सामानाधिकरण्यादङ्गादिति विपरिणमय्य ह्रस्वादिभिर्विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेनाह-ह्रस्वान्तादिति। एतेन "ह्रस्वनद्यापः-" इति पञ्चमी न तु षष्ठीति स्फोरितम्। ज्ञापकं त्वत्र "नामी"ति। नहि प्रकृत्यागमत्वे अङ्गसंज्ञानिमित्तं नाम् सम्भवति। एवं चानया पञ्चम्याऽनन्यार्थया "तस्मादित्युत्तरस्ये"ति परिभाषोपस्थित्या "आमि सर्वनाम्नः सुट्" इत्यतोऽनुवृत्तमामीति सप्तम्यन्तं "ङः सि धु"डित्यत्रेव षष्ठ()आ विपरिणम्यते, "अमी"ति सप्तम्याः "त्रेस्त्रयः" इत्यत्र चरितार्थत्वादित्यभिप्रेत्याह-आमो नुडागमः स्यादिति। अत्र नव्याः-"नुट्" इति योगं विभज्य "अङ्गात्परस्यामो नुट्" इत्युत्सर्गविधि कृत्वा "नद्यापः" इत्यंशेन "दीर्घात्परस्यामो नुट् चेद्भवति तर्हि नद्याप एव" इति नियमविधिं व्याख्याय ह्रस्वग्रहणं प्रत्याख्येयम्। न चैवं "लिहां" "दुहा"मित्यादावतिप्रसङ्गैति वाच्यम्। "हलन्ताच्चेद्भवति तर्हि षट्चतुर्भ्य एवे"ति नियमाभ्युपगमात्। "ध्वस्वनडुहां" "कतिपयचतुरां" "यजिक्रुञ्चा" "झलाम्" इत्यादिनिर्देशाच्च। तस्माद्ध्रस्वग्रहणप्रत्याख्याने न कोऽपि द#ओष इत्याहुः। अत्र वदन्ति--"नु"डिति पृथग्योगे कृते सति ङेरामि कृते परमप्याटं बाधित्वाऽन्तरङ्गत्वादामो नुट् स्यात्। तथा च-"परत्वादाटा नुड्बाध्यते"-इति वक्ष्यमाणग्रन्थेन, "आटि कृते सकृद्गतिन्यायान्नुड् ने"ति भाष्यग्रन्थेन च विरोधः स्यात्। यद्यपि "नियमसूत्राणां विधिमुखेन प्रवृत्ति"रिति पक्षे ङेरामि कृते तस्य "नद्यापः" इत्यनेनैव नुडागमे प्रसज्यमाने "आण्नद्याः" इत्यनेन स बाध्यत इति "परत्वादाटा नुड् बाध्यत" इत्यादिग्रन्थः सङ्गच्छते, तथापि "नियमसूत्राणां निषेधमुखेन प्रवृत्ति"रिति पक्षे परमपि आटं बाधित्वा अन्तरङ्गत्वान्नुट् स्यादेव। किंच "नद्यापः" इत्यत्र "नद्यापः परस्यामो नुडेव स्यान्नान्यत्" इत्यर्थः स्यात्। तथा च गौर्यां रमायां सर्वासां सर्वस्यामिति न सिध्येत्। सुडामस्य पुंसि, आट्-याट्-स्याडागमानां तु ङिदन्तरे चरितार्थत्वात्। अपि च गौर्यामित्यादौ ङेरामि कृते नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणम्। एवं रमायां सर्वासां सर्वस्यामित्यादौ प्राप्तं याटं सुटं स्याटं च बाधितुमाब्ग्रहणमिति "नद्यापः" एतद्विध्यर्थमेव स्यान्न नियमार्थम्। ततश्च वि()आपां वातप्रम्यामित्यादौ नुड् दुर्वार एव। "नद्यां मतुप्" "भाषायां सदवसश्रुवः" "सर्वसां प्रायदर्शनम्" "तदस्यां प्रहरणम्" इत्यादिनिर्देशाञ्शरणीकृत्य विध्यर्थत्वापादनस्य, नुडेवेति प्रागुक्तनियमस्य [च] निवारणे तु प्रतिपत्तिगौरवम्। अपि च-"आकारान्तादीकारान्तादूकारान्ताच्चेद्भवति तर्हि नद्याप एव" इति नियमस्यापि संभवाद्वि()आपां वातप्रम्यां खलप्वामित्यादौ नुडागमाऽभावेऽपि गवामित्यादौ नुट् स्यात्। न च छन्दसि "गोः पादान्ते" इत्यारम्भाल्लोके गोशह्दात्परस्यामो नुड् न भवेदिति वाच्यम्, "पादान्ते गोशब्दात्परस्यामो नुट् चेच्छन्दस्येवे"ति नियमेन लोके पादान्ते "गोना"मिति प्रयोगस्याभावेऽप्यपादान्ते तस्याऽनिवर्त्यत्वापत्तेः। रायां ग्लावां नावामित्यादौ दुर्निवारत्वाच्च। यदि तु "दीर्घात्परस्य आमो नुट्चे"दित्यादिनियमे "गोः पादान्ते" इति सूत्रं विध्यर्थं भवेत्। "आकारान्तादिभ्यः परस्यामो नुट् चे"दित्यादिनियमे तु नियमार्थं स्यात्। तत्र विधिनियमयोर्विधिरेव ज्यायानिति न्यायाननुसन्धानेन "दीर्घान्तात्परस्यामो नुट् चे"दित्यादिनियम एव स्वीक्रियत इत्युच्यते तदापि पुनः प्रतिपत्तिगौरवमस्त्येव "दीर्घान्तात्परस्यामो नुट् चे"दित्यादिनियम एव स्वीक्रियत इत्युच्यते तदापि पुनः प्रतिपत्तिगौरवमस्त्येव, तस्माद्ध्रस्वग्रहणप्रत्याख्यानस्यातिक्लेशसाध्यत्वाद्यथाश्रुतमेव रमणीयमिति।

---

सूत्रम्

काशिका-वृत्तिः

षट्चतुर्भ्यश् च ७।१।५५

षट्संज्ञकेभ्यः चतुःशब्दाच् च उत्तरस्यामो नुडागमः भवति। षण्णाम्। पञ्चानाम्। सप्तानाम्। नवानाम्। दशानाम्। चतुर्णाम्। रेफान्तायाः सङ्ख्यायाः षट्संज्ञा न विहिता, षड्भ्यो लुक् ७।१।२२ इति लुग् मा भूत्। बहुवचननिर्देशादत्र सङ्ख्याप्रधानस्य ग्रहणं भवति। परमषण्णाम्। परमपञ्चानाम्। परमसप्तानाम्। परमचतुर्णाम्। उपसर्जनीभूतायास् तु सङ्ख्यायाः न भवति, प्रियषषाम्, प्रियपञ्चाम्, प्रियचतुराम् इति।

लघु-सिद्धान्त-कौमुदी

षट्चतुर्भ्यश्च २६७, ७।१।५५

एभ्य आमो नुडागमः॥

न्यासः

षट्चतुर्भ्यश्च। , ७।१।५५

"पञ्चानाम्()" इति। "नोपधायाः" ६।४।७ इति दीर्घः, "नलोपः प्रातिपदकान्तस्य" ८।२।७ इति नलोपः। "षष्णाम्()" इति। "झलां जशोऽन्ते" ८।२।३९ इति षकारस्य डकारः, "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति डकारस्य णकारः, "ष्टुना ष्टुः" ८।४।४० इति नकारस्य णकारः। "ष्णान्ता षट्()" १।१।२३ इति रेफान्ताया अपि संख्यायाः कस्मान्न विहिता षट्संज्ञेति, एवं सतीह चुतुग्ररहणं न कत्र्तव्यं भवति? इत्याह--"रेफान्तायाः" इत्यादि। गतार्थम्()। "बहुवचननिर्देशात्()" इत्यादि। यदि हि शब्दस्य प्रधानस्य ग्रहणं स्यात्(), तदेतरेतवयोगपक्षे "षट्चतुभ्र्याम्()" इति द्विवचने निर्देशं कुर्यात्? समाहारपक्षे त्वे कवचनेन "षट्चतुरः" इति बहुवचनेन तु निर्देशः कृतः। तस्माद्बहुवचननिर्देशात्? संख्याप्रधानस्यैव षठ्संज्ञकस्य चतुःशब्दस्य च ग्रहणम्()। तस्य चेदं प्रयोजनम्()--यत्र संखक्यायाः प्राधान्यम्(), तेन तदन्तादपि भवति। अर्थप्रधाने हि निर्देशेऽर्थग्रहणेतद्भवति, अर्थाच्च शब्दद्वारेणैवामः परत्वं विज्ञायते। अतः केवलेभ्यः षद्चतुभ्र्यो भवति, तदन्ताच्च। तदन्तादपि शब्दद्वारेणैवामः परत्वं भवत्येव। "उपसर्जनोभूतायास्तु" इत्यादि। बहुवचननिर्देशाद्वि संख्यार्थस्येदं ग्रहणम्()। स चार्थो द्विविधः--प्रधानः अप्रधानश्च। तत्र प्रधाने कार्यसम्प्रत्ययाद्यत्र संख्यायाः प्राधान्यं तत्र तदन्तादपि भवति। यत्र तूपसर्जनीभूता संख्या तत्र न भवति--प्रियषषामित्यादौ। अन्यपदार्थस्य ह्रत्र प्राधान्यम्(), संख्यायास्त्वप्राधान्यम्()। "प्रियपञ्च्ञाम" इति। अल्लोपे ६।४।१३४ कृते "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वम्()॥

बाल-मनोरमा

षट्चतुभ्र्यश्च , ७।१।५५

षट्चतुभ्र्यश्च। षट्चतुभ्र्य इति पञ्चमी। "आमि सर्वनाम्नः" इत्यत आमीत्यनुवृत्तं षष्ठ()आं विपरिणम्यते। षडिति षट्संज्ञकं गृह्रते। नतु षट्शब्दः, "कृत्रिमाकृत्रिमयो"रिति न्यायात्। तदाह षट्संज्ञकेभ्य इत्यादिना। नुटि टकार इत्, उकार उच्चारणार्थः। टित्त्वादाद्यवयवः। णत्वमिति। "रषाभ्या"मित्यनेने"ति शेषः। द्वित्वमिति। "अचो रहाभ्या"मिति णकारस्ये"ति शेषः। द्वित्वस्याऽसिद्धत्वात्पूर्वं णत्वे कृते ततो णस्य द्वित्वम्। नच "पूर्वत्रासिद्धमद्विर्वचने" इनि निषेधः शङ्क्यः, द्वित्वे कर्तव्ये अन्यदसिद्धं नेति हि तदर्थः। न तु द्वित्वस्याऽप्यसिद्धत्वं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भावः। चतुर् सु इति स्थिते रेफस्य विसर्गे प्राप्ते-।

तत्त्व-बोधिनी

षट्चतुभ्र्यश्च २९८, ७।१।५५

षट्चतुभ्र्यश्च। बहुवचननिर्देशादर्थस्य प्राधान्यं विवक्षितम्। अर्थाच्चाऽऽमः परत्वं शब्दद्वारकं, तेन तदन्तविधौ सत्यपि "परमचतुर्णा"मित्यादावेब भवति, न तु बहुव्रीहौ। तदेतद्वक्ष्यति--"गौणत्वे तु नुण्नेष्यते"इत्यादिना। द्वित्वमिति।

"अचोरहाभ्या"मित्यनेन।

---

सूत्रम्

काशिका-वृत्तिः

श्रीग्रामण्योश् छन्दसि ७।१।५६

श्री ग्रामणी इत्येतयोः छन्दसि विषये आमो नुडागमो भवति। श्रीणामुदारो धरुणो रयीणाम्। अपि तत्र सूतग्रामणीनाम्। श्रीशब्दस्य वामि १।४।५ इति विकल्पेन नदीसंज्ञा, तत्र नित्यार्थं वचनम्। सूतग्रामणीनाम् इति यदा सूताश्च ते ग्रामण्यश्च सूतग्रामण्यो भवन्ति तदर्थम् इदं वचनम्। यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि, सूतग्रामणि च सूतग्रामणि च सूतग्रामणि च इति सूतग्रामणीनाम् इति, तदा ह्रस्वातित्येव सिद्धम्।

न्यासः

श्रीग्रामण्योश्छन्दसि। , ७।१।५६

श्रीग्रामण्योरिति सम्बन्धलक्षणा षष्ठी। "नित्यार्थं "वचनम्()" इति। श्रीशब्दस्य, न तु ग्रामणीशब्दस्य। तस्तु तु प्राप्त्यर्थमेव। यथैव हि भाषायां नदीसंज्ञापक्षे "ह्यस्वनद्यापो नुट्()" ७।१।५४ इति सिध्यति तथा छन्दस्यपि। तस्मान्नित्य यथा स्यादित्येवमर्थम्()। असति ह्रस्मिन्? यदा नदीसंज्ञा, तदैव स्यात्(), नान्यदा। "यदा सूताश्च" इत्यादि। एतेनैतद्दर्शयति--यदा सूतशब्दस्य ग्रामणीशब्देन सह कर्मधारयः क्रियते तदा सूतग्रामणीशब्दो न ह्यस्वान्तः न नद्यन्तः, नाप्याबन्त इति न प्राप्नोति, इष्यते च, ततो यथा स्यादित्यवमर्थं वचनम्()। यदा सूतग्रामणीशब्दयोः "सर्वो द्वन्द्वो विभाषयैकवद्भवति" (पु।प।वृ।५०) इत्येकवद्भावी द्वन्द्वः, तदा "स नपुंसकम्()" २।४।४७ इति नपुंसकत्वात्(), "ह्यस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्यस्वत्वं कृत्वा बहूनां सूतग्रामणीशब्दानामेकशेषञ्च, ततः षष्ठीबहुवचनं विधीयते। तदा ह्यस्वान्तत्वादेव सिद्धमिति नार्थस्तवर्थेन वचनेन॥

---

सूत्रम्

काशिका-वृत्तिः

गोः पादान्ते ७।१।५७

गो इत्येतस्मातृक्पादान्ते वर्तमानादुत्तरस्य आमः नुडागमो भवति। विद्मा हि त्वा गोपतिं शूर गोनाम्। पादान्ते इति किम्? गवां गोत्रमुदसृजो यदङ्गिरः। सर्वे विधयश्छन्दसि विकल्प्यन्ते इति पादान्ते ऽपि क्वचिन् न भवति। हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम्।

न्यासः

गोः पदान्ते। , ७।१।५७

"ऋक्पादान्ते वर्त्तमानात्()" इति। छन्दसि ऋक्पाद एव सम्भवति, न श्लोकपाद इति ऋक्पादग्रहणम्()॥ "कुण्डिता, हुण्डता" इति। "कुडि दाहे" (धा।पा।२७०), "हुडि सङ्घाते" (धा।पा।२६९)--आभ्यां तृच्(), इट्(), "ऋदुशनस्()" ७।१।९४ इत्यादिनानङ्()। "किमयं धातूपदेशावस्थायामेव नुमु विधीयते? इत्याह--"कुण्डा, हुणडा" इत्यादि। यदि प्रत्यय उत्पन्ने नुम्? स्यात्(), तद प्रत्ययविघधानवेलायं कुडिडुड()ओरगुरुत्वात्? क्तिन्नेव स्यात्(), न त्वकारप्रत्ययः, स चेध्यते। तस्मात्? तदर्थं धातूपदेशावस्थायामेव नुम्? भवतीत्यवसीयते। कथं पुनर्धातूपदेशावस्थायां नुम्? भवतीत्यवसीयते, यावतात्रोपदेशग्रहणं नास्ति? इत्याह--"तथा हि" इत्यादि। "धिन्विकृण्व्योर च" ३।१।८० इत्युप्रत्ययविधानकाले

नुमनुषक्तयोग्रहणं सनुम्कयोरेव प्रकृततवं यथा स्यात्()। एवं सनुम्कयोः परकृतत्वं भवति यद्युपदेशावस्थायामेव नुम्? भवति, नान्यथा। तस्मान्नुमनुषक्तयोग्रहणाज्ज्ञापकादवसीयते--धातूपदेशावस्थायामेव नुम्? भवतात्। तस्य ह्येतत्? प्रयोजनम्()--उपदेशावस्थायामेव नुम्? यथा विज्ञायेतेति। न हि तन्नुमर्थं प्रयुज्यते; नुम्? भवतीति। तस्य ह्येतत्? प्रयोजनम्()--उपदेशावस्थायामेव नुम्? यथा विज्ञायेतेति। न हि तन्नुमर्थं प्रयुज्यते; नुम भवितव्यम्(), तत्र लक्षणवशादेव "धिन्विकृच्च्योर च" ३।१।८० इति नुमनुषक्तयोग्रहणम्(), तत्कथमस्यार्थस्य ग्रहणं ज्ञापकम्()? नैतदस्ति; न हि "धिन्विकृण्व्योर च" ३।१।८० इत्ययमिका निर्देशः, स हि "रोगाख्यायां ष्वुल्? बहुलम्()" (३।३।१०८) इति बहुलवचनेन सन्निधानात्? क्वचिदेव भवति न सर्वत्र। एवञ्च "गुप्तिज्किद्भ्यः सन्()" ३।१।५ इत्येवमादयो निर्देशा उपपद्यन्ते। तस्मात्? "धिन्विकृण्व्योः" ३।१।८० इति नायमिका निर्द्देशः, किं तर्हि? उच्चारणार्थेनेकारेण, यथा--"इन्धिभवतिभ्याम्()" १।२।६ इत्यत्रेकारेण निर्द्देशः; अन्यथा "अनिदिताम्()" ६।४।२४ इत्यादिनानुनासिकलोपः स्यात्()। अथापि हि "धिन्विकृण्व्योः" ३।१।८० इतीका निर्देशः स्यात्(), एवमपि यदि धातूपदेशावस्थायामेव नुम्भवतीत्ययमर्थो ज्ञापयितुं नाभीष्टः स्यात्(), ततो लाघवार्थमनितयत्वादागमशासनस्य नुममकृत्वैव निर्द्देशं कुर्यात्(), यथा--"युवोरनाकौ" ७।१।१ इत्यत्र द्वन्द्वैकवद्भावपक्ष उक्तम्()। तस्मान्नुमनुषक्तयोग्रहणं ज्ञापकमेव धातुग्रहणादप्यवसीयते। नुमुपदेशावस्थायामेव भवतीति दर्शयितुमाह--"धातुग्रहणं च" इत्यादि। धातुसंज्ञाप्रवृत्तिकालो धातूपदेशकालः, तत्रैव नुम्? भवतीत्येवमर्थमिह धातुग्रहणं क्रियते। तस्मादतोऽपि धातुग्रहणादुपदेशवस्थाया मेव नुम्? भवतीति ज्ञायते, न ह्यन्यद्धातुग्रहणस्य प्रयोजनमस्तीत्यभिप्रायः। ननु च भेत्ता, अभैत्सोदित्यत्राघात्वोस्तासिस्चोरिदितीर्नुम्? मा भूदित्येवमर्थं धातुग्रहणं स्यात्()? इत्याह--"तासिसिचोः" इत्यादि। यदि तासिसिचोरिदित्कार्यं स्यात्(), तदेकारस्येत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायेत, न चास्ति प्रयोजनमिति न प्रतिज्ञायते; ततश्च निरनुनासिकोऽप्रतिलब्धेत्संज्ञक उच्चारणार्थं एवानयोरिकारः पठ()त इति नुमः प्रसङ्ग एव नास्ति, तत्? किं तन्निवृत्त्यर्थेन धातुग्रहणेन! ननु चारंस्त, अमंस्त, मन्त#आ, संगन्तेत्यत्र "अनिदिताम्()" ६।४।२४ इत्यनुनासिकलोपो मा भूदित्येवमर्थं तासिसिचोरिदित्कार्यम्(), तत्? किमुच्यते इदित्कार्यं तासिसिचोर्नास्ति? इत्यत आह--"अरंस्त, अमंस्त" इत्यादि। "हनः सिच्()" १।२।१४ इति कित्त्वविधावस्यैतत्प्रयोजनम्()--आहतेत्यत्रानुनासिकलोपो यथा स्यात्()। यदि सिज्न्तस्यानुनासिकलोपः सार्वधातुकङित्त्वमाश्रित्य स्यात्? "हनः सिच्()" १।२।१४ इति कित्त्वमनर्थकं स्यात्(), प्रयोजनाभावात्()? नैतदस्ति; अस्ति ह्यन्यत्? कित्त्वविधानस्य प्रयोजनम्()--"अनुदात्तोपदेश" ६।४।३७ इत्यादिना सिच्यनुनासिकलोपो यथा स्यादिति; "अनिदताम्()" ६।४।२४ इत्यादिना सिजन्तस्य सार्वधातुके मा भूदिति। कः पुनरत्र विशेषः--सार्वधातुके ङिति वा? सिचि किति वा? अयमस्ति विशेषः--समानाश्रये सिच्यनुनासिकलोपस्यासिद्धत्वादतो लोपो ६।४।४८ न भवति; सार्वधातुके तूपधालोपे तस्य व्याश्रयत्वेनासिद्धत्वाभावादतो लोपः स्यादेव। नैषोऽस्ति विशेषः; अतो लोपविधौ "अनुदात्तोपदेश" ६।४।३७ इत्यादेः सूत्रादुपदेशग्रहणमनुवत्र्तते, तेनार्थधातुकोपदेशे यदकारान्तमङ्गं तस्य लोपो विज्ञायते; न चाहतेत्यत्रोपदेशेन्कारान्तमेतत्()। तस्मात्? "हनः सिच्()" १।२।१४ इति कित्त्वविधानसामश्र्यादरंस्तेत्यादौ नकारलोपो न भवति। तदेवं सिच इदित्कार्यं न भवतीति प्रतिपादितम्()। इदानीं तासेरप्यनुनासिकलोपाभाव इदित्कार्यं न भवतीति प्रतिपादयितुमाह--"मन्ता" इत्यादि। नकारलोपो न भवतीति प्रकृतेन सम्बन्धः। उपधानकारस्य "अनिदिताम्()" ६।४।२४ इत्यादिना लोप उच्यते। न च मक्तेत्यत्र नकार उपधा भवति; टिलोपस्यासिद्धत्वात्()। तस्मात्? तासेरपीदित्कार्यं न विद्यते। ततश्च युक्तमुक्तम्()--"तासिसिचोरिदित्कार्यं नास्ति" इति। अथ नुमागम इदित्कार्यं कस्मान्न भवति? अनिष्टत्वात्()। न ह्यनिष्टं कार्यं शास्त्रे परिकल्पयितुं युक्तम्()। यदि तर्हि तासेर्निरनुनासिक इकारः उच्चारणार्थः, एवं तर्हि "स्यतासी लृलुटोः" ३।१।३३ इत्यत्र यदुक्तम्()--"इदित्करणमनुनासिकलोपप्रतिबन्धर्थम्()", तत्कथं न विरुध्यते? यथा न विरुध्यते तदा तत्रैवोक्तम्()। अथ भिदिरित्येवमादीनां नुम्? कस्मान्न भवति, स्ति ह्येषामपीकार इत्संज्ञकः?

इत्याह--"हरिताम्()" इत्यादि। भिदिर्()प्रभृतयो हीरितः, न त्विदितः; यस्मात्? "इर उपसंख्यानम्()" (१।३।७।वा) इति रेफेकारस्य समुदायस्य तेषामित्संज्ञा, न प्रत्येकमवयवस्य। तत्रेदितामुच्यमानो नुम्? कः प्रसङ्गो यदिरितां स्यात्()! स्यादेतत्()--"उपदेशेऽजनुनासिक इत्()" १।३।२ इतीत्संज्ञेकारस्य, "हलन्त्यम्()" १।३।३ इति रेफस्य, तस्मादस्त्येव तेषामिदित्त्वम्()? इत्याह--"अवयवस्यापि" इति। गतार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

इदतो नुम् धातोः ७।१।५८

इदितो धातोर् नुमागमो भवति। कुडि कुण्डिता। कुण्डितुम्। कुण्डितव्यम्। कुण्डा। हुडि हुण्डिता। हुण्डितुम्। हुण्दितव्यम्। हुण्डा। इदितः इति किम्? पचति। पठति। अयं धातूपदेशावस्थायाम् एव नुगाममो भवति कुण्डा, गुण्डा इति, गुरोश्च हलः ३।३।१०३ इत्यकारप्रत्ययो यथा स्यात्। तथा हि धिन्विकृण्व्योर च ३।१।८० इति प्रत्ययविधावेव नुमनुषक्तयोर् ग्रहणम्। धातुग्रहणम् च इह क्रियते धातूपदेशकाल एव नुमागमो यथा स्यातित्येवम् अर्थम्। तासिसिचोरिदित्कार्यं न अस्ति इत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते। अमंस्त इत्येवम् आदौ हि हनः सिच् १।२।२४ इति कित्वविधानसामर्थ्यात् नकारलोपो न भवति। मन्ता इत्यत्र अपि असिद्धवदत्राऽ भात् ६।४।२२ इति टिलोपस्य असिद्धत्वान् नलोपो न भवति। इह कस्मान् न भवति, भेत्ता, धेत्ता इति? इरितां समुदायस्येत्संज्ञा इति इदित्वं न अस्ति। अवयवशो ऽपि इत्संज्ञायां सत्यां गोः पादान्ते ७।१।५७ इतो ऽन्तग्रहणम् अनुवर्तयितव्यम्, तेनान्तेदितो धातवो गृह्यन्ते।

लघु-सिद्धान्त-कौमुदी

इदितो नुम् धातोः ४६५, ७।१।५८

नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्दतु। अनन्दत्। नन्देत्। नन्द्यात्। अनन्दीत्। अनन्दिष्यत्। अर्च पूजायाम्॥ ९॥ अर्चति॥

बाल-मनोरमा

इदितो नुम धातोः १०६, ७।१।५८

इदितः। इत् = ह्रस्व इकारः, इत् = इत्संज्ञको यस्य स इदित्, तस्येति विग्रहः। इत्संकेदनतधातोरित्यर्थः। तेन चक्षिङादौ न दोषः। नुमि मकार इत्। उकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। स्कुन्दत इति। "नश्चापदान्तस्ये"त्यनुस्वारः परसवर्णः। चुस्कुन्द इति। लिटि द्वित्वे "शर्पूर्वाः खयः" इत्यभ्यासे ककारः शिष्यते। "कुहोश्चु"रिति तस्य कुत्वेन चकारः। ()इआदीति। ()औत्यं--()औत्यकरणम्। अकर्मक इति। ()औत्यस्य धात्वर्थेनोपसङ्ग्रहादिति भावः। ततश्च "()आन्दयति देवदत्तं यज्ञदत्त" इत्यादौ "गतिबुद्धिप्रत्यवसाने"त्यादिनाऽकर्मककार्यं द्वितीया भवति। ()ओतीभवनं वा ()औत्यम्। ()इआन्दत इति। ()ओतीभवतीत्यर्थः। इदित्वान्नुम्। अनुस्वारपरसवर्णौ। तत्कारणभूतो व्यापारः--प्रणामादिरभिवादनम्। वन्दत इति। इदित्त्वान्नुम्। भदीति। कल्याणं--शुभक्रिया। सुखं--सुखीभावः। भन्दत इति। इदित्त्वान्नुम् बभन्द इति। अभ्यासे भकारस्य जश्भावेन बकारः। मदीति। मोदः-- सन्तोषः। मदः--गर्वः। मन्दत इति। इदित्त्वान्नुम्। ममन्द इति। नुमि सति संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपौ नेति भावः। स्पदीति। अकर्मकः। स्पन्दत इति। इदित्त्वान्नुम्। पस्पन्द इति। "शर्पूर्वाः खयः" इत्यभ्यासे पकारः शिष्यते। क्लिदीति। परिदेवनशब्दं व्याचष्टे-- शोक इति। स्मृत्वा क्लेशः-- शोकः। तदाह-- सकर्मक इति। क्लिन्दते चैत्रमिति। अतीतं चैत्रं स्मृत्वा क्लिश्नातीत्यर्थः।

इदित्वान्नुम्। चिक्लिन्द इति। अभ्यासे ककारस्य चुत्वेन चकार इति भावः। मुदेति। हर्षः-- तुष्टिः। मोदत इति। शपि लघूपधगुणः। मुमुद इति। "असंयोगल्लिट्कि"दिति कित्वान्न गुणः। ददेति। न ममेति त्यागो दानं, न तु द्रव्यत्यागः। तथा सति धात्वर्थोपसङ्ग्रहादकर्मकत्वापत्तेः।

तत्त्व-बोधिनी

इदितो नुम् धातोः ८१, ७।१।५८

मदि स्तुति। मोदः - संतोषः।मदो- गर्वः। स्वप्नः- आलस्यम्।

---

सूत्रम्

काशिका-वृत्तिः

शे मुचादीनाम् ७।१।५९

शे प्रत्यये परतो मुचादीनम् नुमागमो भवति। मुच्लृ मुञ्चति। लुप्लृ लुम्पति। विद्लृ विन्दति। लिपि लिम्पति। सिच् सिञ्चति। कृती कृन्तति। खिद खिन्दति। पिश पिंशति। शे इति किम्? मोक्ता। मोक्तुम्। मोक्तव्यम्। मुचादीनाम् इति किम्? तुदति। नुदति। शे तृम्फादीनाम् उपसङ्ख्यानं कर्तव्यम्। के पुनः तृम्फादयः? तृफ तृम्फ तृप्तौ दृफ ड्रम्फ उत्क्लेशे, गुफ गुम्फ ग्रन्थे, उभ उम्भ पूरणे, शुभ शुम्भ शोभार्थे इत्यत्र ये सानुषङ्गाः तृम्फादयः तेषाम् अनिदितां हल उपधायाः क्ङिति ६।४।२४ इति अनुनासिकलोपे कृते नुम् विधीयते, स च विधानसामर्थ्यात् न लुप्यते। तृम्फति। दृम्फति। गुम्फति। उम्भति। शुम्भति। ये तु निरनुषङ्गाः तेषां तृफति, दृफति, गुफति, उभति, शुभति इत्येवं भवति।

लघु-सिद्धान्त-कौमुदी

शे मुचादीनाम् ६५७, ७।१।५९

मुच् लिप् विद् लुप् सिच् कृत् खिद् पिशां नुम् स्यात् शे परे। मुञ्चति, मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्, अमुक्त। अमुक्षाताम्। लुप्लृ छेदने॥ ७॥ लुम्पति, लुम्पते। लोप्ता। अलुपत्। अलुप्त। विद्लृ लाभे॥ ८॥ विन्दति, विन्दते। विवेद, विवेदे। व्याघ्रभूतिमते सेट्। वेदिता। भाष्यमतेऽनिट्। परिवेत्ता॥ षिच क्षरणे॥ ९॥ सिञ्चति, सिञ्चते॥

न्यासः

शे मुचादीनाम्?। , ७।१।५९

मुचादयस्तुदादौ पठ()न्ते "मुच्लृ मोक्षणे" (धा।पा।१४३०) इत्यतः प्रभृत्या गणपरिसमाप्तेः। "मोक्ता" इति। तृच्(), "एकाचः" ७।२।१० इतीट्प्रतषेधः, "चो कुः" ८।२।३० इति कुत्वम्()। "के पुनस्तृम्फादयः" इति। एवं मन्यते--तृम्फादिषु तृफादयो निरनुषङ्गा अपि गणे पठ()न्ते--"तृफतृन्फ तृप्तौ" (धा।पा।१३०७,१३०८) इत्येवमादयः। तत्र यदि तेऽपि तृफादिग्रहणेन गृह्रेरन्(), तृफतीत्यादि रूपं नोपपद्यत इत्यत आह--"ये तत्र सानुषङ्गाः पठ()न्ते, ते तृम्फादयः" इति। आदिशब्दोऽयं प्रकारार्थः, प्रकारस्तु सादृश्यम्(), तस्मात्? तृम्फतिना सानुषङ्गेण ये सदृशाः, त एवादिग्रहणेनोपलक्ष्यन्त इत्यभिप्रायः। "सानुषङ्गाः" इति। नकारोऽनुषङ्गः, तेन सह वत्र्तन्त इति सदृशाः, त एवादिग्रहणेनोपलक्ष्यन्त इत्यभिप्रायः। "सानुषङ्गाः" इति नकारोऽनुषङ्गः, तेन सह वत्र्तन्त इति सानु,ङ्गाः। यदि तर्हि ये सानुवङ्गाः पठ()न्ते ते तृम्फादयः, तेषां नुमि कृते परस्यानुस्वारे कृते तस्य परसवर्णे द्वयोर्नकारयोः श्रवणं प्राप्नोति? इत्यत आह्म--"तेषाम्()" इत्यादि। कृते हि नकारलोपे नुम्? विधीयते। अतो न भवत्येव दोष इति भावः। अथ सोऽपि नुम्? कस्मान्न लुप्यते? इत्याह--"स च" इत्यादि। यदि सोऽपि लुप्येत, नुमो विधानमनर्थकमेव स्यादिति मन्यते। उपसंख्यानशब्दस्य

प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()--"धातोः" ७।१।५८ इत्यनुवत्र्तते, "शे" इति योगविभ#आगः क्रियते, तेन तृ-म्फादीनाञ्च नुम्? भविष्यति। मुचादीनामित्येवमनर्थकं स्यात्(), "शे" इत्यनेन सिद्धत्वात्()? नानर्थकम्(), "शे" इत्यस्यासर्वविषयत्वज्ञापनार्थत्वात्()। एवपं ह्मतिप्रसङ्गो न भवति। कथं मुचादिष्वेव तृम्फादयो न पठिताः? येऽत्र निरनुषङ्गाः पठ()न्ते तेषां नुमागमो मा भूदित्येवमर्थम्()॥

बाल-मनोरमा

शे मुचादीनाम् १३९, ७।१।५९

अचि विभाषा। "ग्रो यङी"त्यतो ग्र इत्यनुवर्तते। "कृपो रो लः" इत्यतो रो ल इति। तदाह -- गिरतेरिति। अजादाविति। "धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति परिभाषालब्धस्य प्रत्ययस्य अचा विशेषणात्तदादिविधिः। तेन गिरावित्यादौ नेति "मृजेर्वृद्धि"रिति सूत्रभाष्ये स्पष्टम्। दृङ् आदरे इति। ह्यस्वान्तोऽयम्। "उश्चे"ति कित्वान्न गुणः। आदृतेति। "ह्यस्वादङ्गा"दिति सलोपः। प्रच्छ ज्ञीप्सायामिति। ज्ञातुमिच्छा - ज्ञीप्सा। अनिडयम्। पृच्छतीति। शस्य ङित्वात् "ग्रहिज्ये"ति रेफस्य संप्रसारणमृकारः, पूर्वरूपं चेति भावः। पप्रच्छतुरिति। संयोगात्परत्वेन कित्त्वाऽभावान्न संप्रसारणमिति भावः। भारद्वाजनियमात्थलि वेडिति म्तवाह -- पप्रच्छिथ पप्रष्ठेति। इडभावपक्षे व्रश्चादिना छस्य षः, थस्य ष्टुत्वेन ठ इति भावः। पप्रच्छिव। प्रष्टेति। छस्य व्रश्चेति। सूत्रे सतुक्कस्य छस्य ग्रहणात्। किरादयो वृत्ता इति। नचैवं सति "किरश्च पञ्चभ्यः" इत्यत्र पञ्चग्रहणं व्यर्थं, किरादीनां पञ्चत्वादिति वाच्यं, स्य "रुदादिभ्यः सार्वधातुके" इत्युत्तरार्थत्वात्। सृज विसर्गे। अनिट्। सृजति।ससर्ज। ससृजतुः। अजन्ताऽकारवत्त्वाऽभावेऽपि "विभाषा सृजिदृशो"रिति थलि वेडिति मत्वाह -- ससर्जिथ सरुआष्ठेति। इडभावे "व्रश्चे"तिजस्यषः, थस्य ष्टुत्वेन ठः, पित्त्वेनाऽकित्वात् "सृजिदृशो"रित्यमागम इति भावः। ससृजिव। टु मस्जो। मज्जतीति। सस्य श्चुत्वेन शः, तस्य जश्त्वेन ज इति भावः। ममङ्क्थेति। मस्जेर्द्वित्वे हलादिशेषे ममस्ज् थेति स्तिते "स्को"रिति सकारलोपे ममज् थ इतिस्थिते जस्य कुत्वेन गकारे, "मस्जिनशो"रिति नुमि, तस्यानुस्वारे, तस्य परसवर्णो ङकारः, गस्य चर्त्वेन क इति बोध्यम्। यद्यपि अकारात्परत्र नुमि सत्यपि इदं सिध्यति, तथापि "अन्त्यात्पूर्वो नु"मित्यस्य" "मग्न" इत्यादौ नलोपः फलम्। अन्यथा उपधात्वाऽभावान्नस्य लोपो न स्यादिति भावः। एवं - मङ्क्तेति। मङक्ष्यतीत्यत्र तु सस्य षत्वं विशेषः। "रुजो भङ्गे" इत्यारभ्य "विच्छ गतौ" इत्यतः प्रागनिटः। "अनुदात्तस्य चर्दुपधस्ये"त्यम्विकल्पं मत्वाह - स्प्रष्टा स्पर्ष्टेति। णुद प्रेरणे। णोपदेशोऽयम्। "विश प्रवेशने" इत्यारभ्य "सद्लृ शातने" इत्यन्ता अनिटः। तत्र अदुपधस्य थलि वेट्। अन्यस्य तु नित्यमेवेट्। मृशेः "अनुदात्तस्य चे" त्यम्विकल्पः। तदाह - अम्राक्षीत् - अमर्क्षीदिति। "स्पृशमृशे"ति सिज्वेति भावः। सिजभावे "शल इगुपधा"दिति क्सं मत्वाह --अमृक्षदिति। णुदधातुर्णोपदेशः। ननु तनादिगण एवाऽस्मिन्स्वरितेत्सु पठितस्य किमर्थमिह पाठ इत्यत आह - कत्र्रभिप्रायेऽपीति। षद्लृधातोभ्र्वादौ पठितादेव सीदतीत्यादिसिद्धेरिह पाठो व्यर्थ इत्यत आह - इह पाठ इति। सीदन्तीति। शविकरणाच्छत्रन्तान्ङीपि "आच्छीनद्यो"रिति नुम्विकल्पार्थ इह पाठ इत्यर्थ-। भ्वादावेव पाठे तु "शप्श्यनोर्नित्य"मिति नित्यो नुम् स्यादिति भावः।तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह - ज्वलादाविति। "ज्वलितिकसन्तेभ्यः" इति कर्तरि णप्रत्ययार्थ इति भावः। तदुदाह्मत्य दर्शयति - साद इति। उभयत्र पाठस्य फलान्तरमाह - स्वरार्थश्चेति। तदेव विशदयति - शबनुदात्तैति। "अनुदात्तौ सुप्पितौ" इति पित्स्वरेणेति भावः। शस्तूदात्त इति। "प्रत्ययः" "आद्युदात्तश्चे"त्यनेनेति भावः। ननु "शद्लृ शातने" इत्स्य भ्वादौ पाटादेव सिद्धे इह पाठो व्यर्थ इत्यत आह - स्वार्थ एवेति। प्रागुक्तपित्त्वाऽपित्त्वकृतस्वरभेदार्थ एवेत्यर्थः। मुच्लृ मोक्षणे।

तत्त्व-बोधिनी

शे मुचादीनाम् ९५७, ७।१।५९

षिच क्षरणे। "षिचि"रिति केचिदिरतं पठन्ति। तत्तु फलाऽभावादुपेक्ष्यम्। इह "लिपिसिचिश्चे"ति च्लेरङ् विधीयते, सचाऽप्राप्तविधिः। इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्थो विधिरिति फलाऽभावः। पिंशत्विति। दीपयत्वित्यर्थः।

इति तत्त्वबोधिन्याम् तुदादयः।

अथ प्रथमपादः।

अथोणादयः। कृवापा। डुकृञ् करणे, वा गतिगन्धनयोः, पा पाने, पा रक्षणे, जि अभिभवे, डुमिञ् प्रक्षेपणे, स्वद आस्वादने, साध संसिद्धौ,अशू व्याप्तौ। "वि()आकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः" इति मेदिनीकोशः। "कारुः शिल्पिनि कारके" इति धरणिकोशस्तदेतदभिप्रेत्याह-- कारुरित्यादि। आद्ये योगरूढिद्वितीये तु योगमात्रमिति विवेकः। अतएव द्वितीये धात्वर्थं प्रति कारकान्वयो भवत्येव। तथा च भट्टिः-- " राघवस्य ततः कार्यं कारुर्वानरपुङ्गवः। सर्ववानरसेनानामा()आआगमनमादिश"दिति। पिबत्यनेन तैलादिकमिति पायुर्गुदस्थानम्। "गुदं त्वपानं पायुर्ना" इत्यमरः। पाति रक्षतीति विग्रहे रक्षकोऽपि। तथा च मन्त्रः "भुवस्तस्य स्वतवाँ#ः पायुरग्ने" इति। "स्वतवान् पायौ" इति नस्य रुत्वम्। "अगदोजायुरित्यपि" इत्यमरः। पुंलिङ्गसाहचर्याज्जायुः पुंसि। "मायुः पित्तं कफः श्लेष्मा" इत्यमरः। गोपूर्वाद्गां वाचं विकृतामिनोति प्रक्षिपतीति गोमायुः शृगाल इत्युज्जलदत्तः। वस्तुतस्तु मायुः शब्दः, "यत्पशुर्मायुमकृत" "गोमायुरेकोऽजमायुरेकः" इत्यादौ वेदभाष्याकारदिभिस्तथैव व्याख्यातत्वात्। स्वदते रोचते इति स्वादुः। विशेष्यनघ्नोऽयम्। एवं साधुरपि। आशु शीघ्रमिति। विलम्बाऽभावमात्()रे क्लीबं ,तद्विशिष्टद्रव्यपरत्वे तु त्रिलिङ्गम्। "अथ शीघ्रं त्वरित"मित्युपक्रम्य "क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां भेद्यगामि य दित्यमरः। व्रीहौ पुंस्येव। "उणादयो बहुल"मिति बहुलवचनादन्यस्मादप्युण्भवति। रह त्यागे। गृहीत्वा चन्द्रं रहति त्यजतीति राहुः। वस निवासे। वसत्यस्मिन्सर्वमिति, सर्वत्रासौ वसतीति वा वासुः। वासुश्चासौ देवश्च वासुदेव-। वसुदेवस्यापत्यमित्यस्मिन्नर्थे "ऋष्यन्धकवृष्णिकुरुभ्यश्चे"त्यणि कृते वासुदेव इति व्युत्पत्त्यन्तरमिति दिक्।

छन्दसीणः। उणनुवर्तते। एति गच्छतीत्यायुः। मा न आयौ इति। आयुशब्दो मनुष्यपर्यायेषु वैदिकनिघण्टौ पठितः। अत एव "त्वामग्ने प्रथममायुमायवे" "मा नस्तोके तनये मा न आयौ" इत्यादिमन्त्रेषु वेदभाष्ये तथैव व्याख्यातम्। अर्वाचीनास्तु "छन्दसीणः" इति सूत्रं बहुलवचनाद्भाषायामपि प्रवर्तत इति स्वीकृत्य "आयुर्जीवितकालो ना" इत्यमरग्रन्थे आयुशब्दमुकारान्तं व्याचख्युः। ननु "एतेर्णिच्चे" त्युस्प्रत्यये सकारान्तो वक्ष्यमाण आयुःशब्दस्तु लोकवेदयोर्निर्विवाद एव, अत एव जटा आयुरस्येति विग्रहे "गृध्नं हत्वा जटायुष"मिति रामायणप्रयोगः, "यहि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यादिति श्रीहर्षप्रयोगश्च सङ्गच्छते। तथा च "आयुर्जीवितकालो ना " इत्यत्रायुः शब्दः सकारान्त इत्येव व्याख्यायतां किमुकारान्ताभ्युपगमेनेति चेत्। अत्राहुः-- सकारान्त आयुःशब्दो नपुसंक इति तस्य पुँल्लिङ्गता नेत्याशयेन तथोक्तमिति। अन्ये तु "छन्दसीणः" इति सूत्रस्य भाषायां प्रवृत्त्यभावे "मा वधीष्ट जटायुं मा " मिति भट्टिप्रयोगः, "तटीं विन्ध्यस्याऽद्रेरभजत जटायोः प्रथमजः" इति विन्ध्यवर्णने अभिनन्दोक्तप्रयोगश्च न सङ्गच्छेतेत्याहुः। वस्तुतस्तु जटां याति प्राप्नोतीति जटायुः। मृगय्वादित्वात्कुः। आयातीत्यायुः। एवं च "जटायुषा जटायुं च विद्यादायुं तथायुषा"इति द्विरूपकोशः, "वायुना जगदायुना" इति वर्णविवेकश्च सुसाध इति दिक्।

दसनि। दृ? विदारणे, षणु दाने,जन जनने, चर गतौ, चट भेदने। दार्विति। "काष्ठं दार्विन्धनं त्वेधः" इत्यमरः। चाट्विति। "चटु चाटु प्रियं वाक्य"मिति हट्टचन्द्रः। "चाटुर्नरि प्रियोक्तिः स्यात्" इति रत्नमालाकोशः। नरि = पुंसि। "चकर च बहु चाटून् प्रौढयोषिद्वदस्य"इति माघः। माघे तु नपुंसकमपि दर्शितम्। "चाटु चाऽकृतकसंभ्रममासा"मिति।

किंजरयोः। शृ? हिंसायाम्, इण् गतौ, आभ्यामुण् स्यात्। सस्येति। "किंशारुर्ना सस्यशूके विशिखे कङ्कपक्षिणि" इति मेदिनीकोशः।

त्रो रश्च लः। तृ? प्लवनतरणयोः। त्रः रश्चेति च्छेदः। केचित्तु "तृ()" "ॠ " इति प्रश्लिष्य द्वयोरपि सवर्णदीर्घे त्रौ, तयोरुआओरित्युक्त्वा ॠ गतावित्यस्मादपि ञुण् रस्य ल इति व्याख्याय इयर्ति अर्यते वा आलुः साकविशेषो, घटी चेत्याहुः। "कर्कर्यालुर्गलन्तिका"।

भृमृशी। भृञ् भरणे, मृङ्प्राणत्यागे, शीङ् स्वप्ने,तृ? प्लवनतरणयोः,चर गतौ, अयं भक्षणेऽपि, त्सर छद्मगतौ, तनु विस्तारे , धन धान्ये , डुमिञ् प्रक्षेपणे, टुमस्जो शुद्धौ। भरुरिति। "भरुः स्वर्णे हरे पुंसि" इति मेदिनी। "भरुर्भर्तृकनकयोः" इसि हेमचन्द्रः। शयुरिति। "अजगरे शयुर्वाहस इत्युभौ" इत्यमरः। तरुरिति। तरन्ति नरकमनेन रोपकाः। चरुरिति। अनवस्त्राविताऽन्तरूष्मपक्व ओदन इति याज्ञिका। तृवृञ्चर्वधिकरणेऽप्येवमुक्तम्। "उगवादिभ्यो य"दिति सूत्रे कैयटस्त्वाह-- स्थालीवाची चरुशब्दस्तात्स्थ्यादोदने भाक्त इति। "तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे" इति मेदिनी। "धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने" इति नान्ते मेदिनी। वि()आप्रकाशमुदाहरति-- धनुषा चेत्यादि। धनुषा सार्धं धनुं विदुरित्यर्थः। "स्यात्तनुस्तनुषा सार्धमित्यतः सार्धमित्यनुषज्यते। "शुद्धवंशजनितोऽपि निर्गुणः किं करिष्यती"ति धन्वन्तरिः। इह पूर्वत्र च धनुरिति उकारान्तः सकारान्तो वा बोध्यः। न च सकारान्तधनुः शब्दो नपुंसक एवेति शङ्क्यम्। "अथाऽस्त्रियाम्", "धनुश्चापौ" इत्यमरोक्त्या तस्यापि पुंस्त्वात्। किंनर इति। "तुरंगवदनो मयुः" इत्यमरः। "मीनातिमिनोती"त्यात्वं तु नेह, बाहुलकात्। "मयुस्तुरंगवदनो मृगेऽपि मयुरिष्यते" इति वि()आः। मज्जति पानीये इति मद्गुः।

अणश्च। अण शब्दे अस्मादुप्रत्ययः स्यात्। चादिति। कटे वर्षादौ, वट वेष्टने। कटति रसनामिति कटुः। "कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि। नपुंसकमकार्ये स्यात्पुंलिङ्गो रसमात्रके। त्रिषु तद्वत्सुगन्ध्योश्च मत्सरेऽपि स्वरेऽपि च" इति मेदिनी। वटुरिति। वटतीति वटुः। "वटुर्द्विजसुतः स्मृतः" इति संसारावर्तः। नटवटुरिति तूपचारात्।

अभिव्याप्तेति। यद्यपि "फलिपाटी"ति सूत्रं यावदनुवर्तत इति न्यासग्रन्थेन मर्यादीकृत्येत्यपि प्रतीयते तथाप्यभिव्याप्येत्येवोचितम्। "पिबतं सौम्यं मधु" इत्यादौ मधुशब्दस्यादात्ततादर्शनात्। "वोतो गुणवचना"दिति सूत्रे हरदत्तेनाप्यभिव्याप्येति स्पष्टमभिधानाच्चेति भावः।

शृ()स्वृस्निहि। शृ? हिंसायाम्, स्वृ शब्दोपतापयोः, स्निह उपतापे, त्रपूष् लज्जायाम्, असु क्षेपणे, वस निवासे , हन हिंसागत्योःष क्लिदू आद्रीभावे, बन्ध बन्धने, मन ज्ञाने। शरुरिति। "शरुः कोपे शरे वज्रे" इति हेमचन्द्रः। स्वरुर्वज्रमिति। "शतकोटिः स्वरुः शम्बः" इत्यमरः। त्रपु सीसमिति। तद्धि अ()ग्न दृष्ट्वा त्रपते = लज्जत इव। "रङ्गसीसकयोरुआपु" इति मेदिनी। अस्यन्ति क्षिपन्ति शरीरमित्यसवः प्राणाः। हनुरिति। "हनुः पुमान्परो गण्डा"दिति वररुचिकोशः। स्त्रिलिङ्गोऽप्ययम्। "हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम्। द्वयोः कपोलावयवे" इति मेदिनीकोशः। अतिशायने मतुप्। हनुमान्। "अन्येषामपि दृश्यते" इति दृशिग्रहणात्पाक्षिको दीर्घः। हनूमान्। स्नेहेन बध्नातीति बन्धुः। प्रज्ञादित्वाद्बान्धवः। "बन्धुर्बन्धूकपुष्पे स्याद्बन्धुभ्रातरि बान्धवे" इति वि()आः। मनुरादिराजो, मन्त्रश्च।

स्यन्दू प्ररुआवणे।

उन्देः। उन्दी क्लेदने।

ईषेः। ईष गतिहिंसादानेषु।

स्कन्देः। स्कन्दिर् गतिशोषणयोः। कन्दुरिति। स्कन्दत्यस्मिञ्जनताप इति व्युत्पत्त्या भोगस्थानमिति केचित्। अन्ये तु स्कन्दति शोषयति कन्दुर्लोहादिपात्रमित्याहुः। अत एव "क्लीबेऽम्बरीषं ब्राआष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रिया"मित्यमरः। "कन्दुर्वा ना" इति पूर्वेणान्वयाद्वा पुमानित्यर्थः।

सृजेः। सृज विसर्गे। सृजतीति रज्जुः स्त्रियाम्। आगमसकारस्य श्चुत्वेन शः। जश्त्वेन जः। "सृजेरजुम् चे" ति सुवचमिति नव्याः। "रज्जुर्वेण्यां गुणेऽपि" च इति मेदिनी।

कृतेराद्यन्त। कृती छेदने। तर्कुरिति। कृन्त्यतेऽनेनेति तर्कुः सूत्रवेष्टनयन्त्रविशएषः। तर्कुटी सूत्रला तर्कुः" इति हारावली।

नावञ्चेः। अञ्चु गतौ। "न्यङ्कुर्मुनौ मृगे पुंसि" इति मेदिनी।

फलिपाटि। फल निष्पत्तौ, पटगतौ, ण्यन्तः। णम प्रह्वत्वे शब्दे, मन ज्ञाने, जनी प्रादुर्भावे, एभ्य उः स्यादेषां च यथाक्रमं गुगागमः पटि नाकि ध त इत्यादेशाश्च भवन्ति। इह एकापि षष्ठी विषभेदाद्भिद्यते। गुगागमे हि फलेरवयवषष्ठी, पठ()आद्यादेशचतुष्टयविधौ तु पाठ()आदिभ्यः स्थानषष्ठी। सापि धतयोर्विधौ अन्तेऽप्युपसंह्रियत इति विवेकः। अनागमकानां सागमका आदेशा इति पक्षे तु स्थानषष्ठ()एवेति बोध्यम्। "फल्गवसारेऽभिधेयवत्। नदीभेदे मलय्वां स्त्री" इति मेदिनी। नाकुर्वल्मीकमिति। "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्" इत्यमरः। मध्विति। "मधुश्चैत्रे च दैत्ये च मद्ये पुष्परसे मधु" इति हट्टचन्द्रः। "मकरदन्दस्य मद्यस् माक्षिस्यापि वाचकः। अर्धर्चादिगणे पाठात्पुंनसकयोर्मधुःर" इति शा()आतः। बल संवरण इति दन्त्योष्ठ()आदिः। "वल्गुः स्याच्छगले पुंसि सुन्दरे चाभिदेयव"दिति मेदिनी। यत्तु उज्ज्वलदत्तेन "बलेर्गुक् चे"ति ओष्ठ()आदिं पाठित्वा बल प्राणने इत्युपन्यस्तं तल्लक्ष्यविरोदादुपेक्ष्यम्। "()यं नाभावदति वल्गु वो गृहे" इत्यादौ दन्त्योष्ठ()पाठस्य निर्विवादत्वात्।

शः कित्। शो तनूकरणे अस्मादुप्रत्ययः "आदेच उपदेशे" इत्यात्वं द्वित्वं "सन्यतः" इत्यभ्यासस्येत्वम्। "आतो लोप इटि चे" त्याकारलोपः। शिशुः।

यो द्वे च। या प्रापणे।

कुभ्रश्च। भृञ् भरणे अस्मात्कुप्रत्ययो दातोद्र्वत्वं च। भरतीति बभ्रुः। धरणिकोशस्थमाह--बभ्रुरित्यादि। "बभ्रुर्वै()आआनरे शूलपाणौ च गरुडध्वेजे। विशाले नकुले पुंसि पिङ्गले त्वभिधेयवत्" इति मेदिनीकोशः। चादन्यतोऽपीति। "भ्रः कुश्चे"ति वक्तव्ये प्राक् प्रत्ययनिर्देशादित्येके। "भ्रश्चे" ति प्रकतिसंसृष्टेन चकारेण प्रकृत्यन्तरसमुच्चयादित्यन्ये।

पृ()भिदि। पृ? पालनपूरणयोः, भिदिर् विदारणे, व्यध ताडने, गृधु अभिकङ्क्षायाम्, ञिधृषा प्रागल्भे। पुरुरिति। कुप्रतत्यये परतः "उदोष्ठ()पूर्वस्ये"त्युत्वे रपरत्वम्। "पुरुः प्राज्येऽभधेयवत्। पुंसि स्याद्देवलोके च नृपभेदपरागयोः" राहवोऽपि ह्मषवः" इति केचित्।

डुकृञ् करणे,गृ? शब्दे, आभ्यां कुः स्यादुकारोऽन्तादेशश्च। "उरण् रपरः"। "कुरुर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति" इति मेदिनी।

अपदुःसु। ष्ठा गतिनिवृत्तौ। सुषामेत्यादि। एतच्च न्यासाद्यनुरोधेनोक्तम्। वार्तिककृता तु

स्थास्थिन्स्थृ()णामित्युपसंख्यातम्। "अपष्ठुः पुंसि बाले च वामे स्यादन्यलिङ्गकः" इति मेदिनी। वामे = प्रतिकूले। एषां त्रयाणां मृगय्वादिपाठेन सिद्धत्वात्सूत्रमिदं न्यासकारस्य न संमतमिति रक्षितः।

अर्जिदृशि। अर्ज अर्जने अस्य ऋजिरादेशः, दृशेः पशिरादेशः, कमेस्तुगागमः। अम रोगे गत्यादौ वा। अस्य धुगागमः। पशि नासने सौत्रो धातुः। अस्य दीर्घः। बाधृ लोजने अस्य हादेश-। षड्भ्योऽपि कुप्रत्ययः स्यादित्यर्थः। अविशेषेणेति। चादिगणे प()इआति पठितम्। "पशु दृश्यर्थमव्ययम्" इति धरणिः। कन्तुः कन्दर्पः। "इः कन्तुर्मकराङ्गः" इति त्रिकाण्डशेषः। पांसुरिति। पडि पसि नाशने चुरादिर्दन्त्यान्तः। स्त्रीपुंसयोरिति। उक्तं ह्मरेण "द्वौ परौ द्वयोः। भुजवाहु" इति। परौ द्वौ = भुजबाहुशब्दौ, द्वयोः = स्त्रीपंसयोरिति तदर्थः। आकारान्तोऽप्ययम्। अत एव "बाहोऽ()आभुजयोः पुमान्" इति दामोदरः। "बाहा भुजे पुमान्मानभेदाऽस्ववृषवायुषु" इति मेदिन्यां टाबन्तोऽप्ययम्।

प्रथिम्रदि। प्रथ प्रख्याने, म्रद मर्दने, भ्रस्ज पाके। प्रथते इति पृथुः। "पृथुः स्यान्महति त्रिषु। त्वक्पत्र्यां कृष्णजीरेऽथ पुमानग्नौ नृपान्तरे" इति मेदिनी। म्रदितुं शक्यतेऽकठनत्वादिति मृदुः कोमलः। "भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि" इति वि()आः।

लघुरिति। "पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णाऽगुरुण्यपि" इति त्रिकाण्डशेषः। "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्क्लीबम्। शीघ्रे कृष्णागुरुणि च पृक्कानामौषधौ स्त्रियाम्" इति मेदिनी।

* वालमूललघ्वलमङ्गुलीनां वा लोरत्वमापद्यते। नृपभेद इति। एतेन "अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभव"मिति कालिदासवचनं व्याख्यातम्। बहुरिति। "बहुः स्यात्र्यादिसङ्ख्यासु विपुले त्वभिधेयव"दिति मेदिनी।

ऊरिरिति। "सक्थि क्लीबे पुमानूरुः" इत्यमरः। ऊर्णूयते आच्छाद्यते इत्यूरिः। कर्मणि प्रत्ययः।

उरु महदिति। कर्तरि प्रत्ययः।

श्लिषेः। श्लिष आलिङ्गने अस्मात्कुप्रत्ययः, कश्चान्तादेशः। उद्यत इति। स हि यावत्कार्यं श्लिष्यति = लगति। व्याप्रियत इति यावत्।

आङ्परयोः। खनु अवदारणे, शृ? हिंसायाम्। पर्शुरपीति। पर्शुः परशुना सहे"ति वि()आः।

हरिमितेति। द्रु गतौ, अस्माद्धरिमितयोरुपपदयोः कुः स्यात्स च डित्। हरिद्रुर्वृक्ष इति। दारुहरिद्रा इत्येके। शतद्रुर्नदीभेदः। "शतद्रुस्तु शुतुद्रिः स्यात्" इत्यमरः।

तद्वानिति। "द्युद्रुभ्यां मः" इति मः।

खरुशङ्कु। खनु अवदारणे, शकि शङ्क्याम्। काम इत्यादि। खरुः पतिंवरा कन्येत्यपि बोध्यम्। "खरुर्दर्पे हरे दन्ते हये ()ओते तु वाच्यवत्" इति वि()आत्रिकाण्डशेषौ। शङ्कते अस्मादिति शङ्कुः। "शङ्कुः कीले गरे शस्त्रे संख्यापादपभेदयोः। यादोभेदे च पापे च स्थाणावपि च दृश्यते" इति वि()आः। पीयुरिति। "पीयुः कालेरवौ घोरे" इति मेदिनी। क्रिमिविशेष इति। "नीलङ्गुः क्रिमिजातौ स्याद्भ्रमभ्रालीप्रसूनयोः" इति वि()आः। "नीलङ्गुः स्यात्कृमौ पुंसि भम्भराल्यां तु योषिति" इति मेदिनीकारः। पाठान्तरमिति। "नीलङ्गुरपि नीलाङ्गुः" इति वि()आः। धातोरपीति। केचित्तु नीलशब्दे उपपदे गमेष्टिलोपः, उपपदस्य मुम्, दीर्घश्च पाक्षिको निपात्यते इत्याहुः। "लिगु चित्ते नपुसंकम्" इति वररुचिः।

मृगय्वादयश्च। "मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनि" इति मेदिनी। "मृगयुर्ब्राह्मणि ख्यातो गोमायुव्याधयोरपि" इति वि()आः। "देवयुर्वाच्यलिङ्गः स्याद्धार्मिके लोकयात्रिके" इति मेदिनी। आकृतिगण इति। तेन पील प्रतिष्टम्भे अस्मात्कुः। "पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः" ति वि()आः। भाट्टास्तु-- पीलुशब्दसय् वृक्षे आर्यप्रसिद्धिर्गजे तु म्लेच्छप्रसिद्धिरित्याश्रित्य व्यवजह्युः। पडि गतौ अस्मात्कुः धातोर्वृद्धिश्च। पाण्डुः। कडि मदे। कण्डुरित्यादि बोध्यम्।

मन्दिवाशि। मदि स्तुत्यादौ,वाशृ शब्दे, मथे विलोवाशुरो गर्दभ इत्यन्ये। "वाशुरा वाशितारात्र्योः" इति मेदिनीहेमचन्द्रौ। चङ्कुर इति। "चङ्कुरः स्यन्दने वृक्षे" इति मेदिनी। "अङ्कुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि इति च। खर्जूरादित्वादिति। ऊरप्रत्ययोऽपीति भावः। "अङ्कुरोऽङ्कूर एव च" इति वि()आप्रकाशः।

व्यथेः। व्यथ भयसंचलनयोरस्मादुरच् कित्स्याद्धातोः संप्रसारणं च। दशपाद्यां तु "व्यथेः संप्रासरणं धः किच्चे"ति सूत्रं पठित्वा धकारमन्तादेशं विधाय "विधुरोऽनग्निक" इत्युदाह्रतम्। माधवप्रसादकारादिभिरपि तदेवाऽनुसृतं। नत्वेतद्युक्तम्। "त्वमेषां विथुरा शवांसि" अथ विद्धा विथुरेणाऽचिदरुआआ" इत्यादि मन्त्रेषु थकारपाठस्य निर्विवादत्वात्। यद्यपि माधवेनोक्तं-- "विदिभिदिच्छिदी"त्यत्र "व्यथेः संप्रसारण"मिति वचनात्कुरचि दान्तरूपमिति, तदपि स्थवीयः। कुरज्विधायके सूत्रे व्यथेरुपसङ्ख्यानस्याऽप्रसिद्धत्वात्। तस्मादिह "धः किच्चे"ति दशपादीपाठ उपेक्ष्य एव। कथं तर्हि विधुर इतीष्टप्रयोगस्य निर्वाह इति चेत्, धुरो विगत इति प्रादिसमासेनेत्यवधेहि। "समासान्ताः" इति सूत्रे वृत्तिपदमञ्जर्योस्तथैवोक्तत्वात्।इह "व्यथेः किच्चे"त्येवास्तु, "ग्रहिज्ये"त्यनेन संप्रसारणं स्यादेवेति न भ्रमितव्यम्। ग्रहिज्यादिषु व्यधिर्वर्गचतुर्थो न त्वयमिति निष्कर्षात्।

मकुर इति। मकि मण्डने अस्मादुरच्, लोपश्च। बहुलकादिति। धातोरुपधायाः पक्षे उकार इति भावः। "मकुरो मुकुरोऽपि च" इति वि()आः। "मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे। कुलालदण्डे" इति मेदिनी। धातोर्द्विर्वचनमिति। केचित्तु गुणो दुगागमश्च निपात्यत इत्याहुः। ग्रामजाले चेति। "यामजाले चे"ति पाठान्तरम्।

मद्गुरादयश्च। मदी हर्षे। कर्बुर इति। "कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः। कर्बुरा कृष्णवृन्तायां शबले पुनरन्यव" दिति मेदिनी। बन्धूरबन्धुराविति। बन्ध बन्धने। कुक्कुर इति। कुक आदाने। "कुक्कुरः कुकुरो मतः" इति हट्टचन्द्रः। "कुक्कुरः सारमेये ना ग्रन्थिपर्णे नपुंसक "मिति मेदिनी। अत सातत्यगमने। आदिदीर्घः। आतुरः। वा गतिगन्धनयोः। गुगागमः। "वागुरा मृगबन्धिनी"त्यादिरपि ज्ञेयम्।

असेः। असु क्षेपणे।

मसेश्च। मसी परिणामे।"मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः। मसूरी पापरोगे स्यादुपधाने पुनः पुमानिति मेदिनी।

शावशेः। "शु"इतिकृताऽऽकारलोप आशुशब्दस्तस्मिन्नुपपदे आप्तौ गम्यमानायाम् अशू व्याप्तावित्यस्माद्धातोरुरन्स्यात्। आशुशब्दस्तस्मिन्नुपपदे आप्तौ गम्यमानायाम् अशू व्याप्तावित्यस्माद्धातोरुरन्स्यात्। ()आशुरो दम्पत्योः पिता। "पतिपत्न्योः प्रसूः ()आश्रूः ()आशुरस्तु पिता तयोः" इत्यमरः।

अवि। अव रक्षणादौ। मह पूजायाम्। अविष इति। राजा समुद्रश्च। महिषो महान्। "तुरीयं धाम महिषो विवक्ति"। "उत माता महिषमन्ववेनत्"। टित्वान्ङीप्। महिषी राजपत्नी।

रुहेः। रुह बीजजन्मनि। "रौहिषो मृगभेदः स्याद्रौहिषं च तृणं मत"मिति संसारावर्तः।

वेदभाष्यमिति। "इन्द्रो वृत्रस्य तविषीम्"। "इन्द्रस्याऽत्र तविषीभ्यो विरप्शिन्" इत्यादिमन्त्रेष्विति भावः। वैदिकनिघण्टौ "ओजः पाजः" इत्यादिषु बलनामसु तविषीशब्दस्य पाटश्चेह मूलमिति बोध्यम्। "तविषः शोभनाकारे बलेऽब्धिव्यवसाययोः। तविषी देवकन्यायां पुंसि स्वर्गे महोदधौ। ताविषी चेन्द्रकन्यायां ना स्वर्गाम्बुधिकाञ्चने" इति मेदिनी।

नञि व्यथेः। व्यथ भयसंचलनयोः।

किलेः। किल ()औत्यक्रीडनयोः। अस्माट्टिषच्धातोर्वुगागमश्च। "किल्बिषं पापरोगयोः। अपराधेऽपि" इति मेदिनी।

इषिमदि। इष इच्छायाम्, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे, भिदिर् विदारणे, मदि स्तुत्यादौ, चदि आह्लादने, तिम आद्रीभावे, मिह सेचने,मुह वैचित्ये, मुच्लृ मोक्षणे, रुच दीप्तौ, रुधिर् आवरणे, बन्ध बन्धने, शुष शोषणे। इषिरोऽग्निरिति। आहार इत्यन्ये। "छिदिरः पावके रज्जौ करवाले पर()आधे" इति मेदिनी। "मन्दिरं नगरेऽगारे क्लीबं ना मकरालये" इति मेदिनी। "चन्दिरोऽनेकपे चन्द्रे" इति च। "तिमिरं ध्वान्ते नेत्रामयान्तरे इति च। "मिहिरः सूर्यबुद्धयोः" इति च मेदिनी। "मिहिरः कामिमूर्खयोः" इति च। "सुन्दरं रुचिरं चारु" इत्यमरः।

अशेः। अश भोजने।

अजिरमिति। दशपादीवृत्तौ तु नञ्पूर्वस्य जीयतेरृवर्णलोपो निपात्यते इत्युक्तं तदपि ग्राह्मम्। "आशु द्रुतमजिरं प्रत्नमीड()म्" इत्यादौ न जीर्यतीत्यजिर इत्यस्याऽनुगुणत्वात्। अङ्गणमिति। अङ्गेर्ल्युटि अनादेशः। नकारस्य बाहुलकाण्णत्वमित्येके। अन्ये तु दन्त्यमेवेच्छन्ति। "अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले" इति मेदिनी। "शिशिरो ना हिमे, न स्त्री ऋतुभेदे, जडे त्रिषु" इति च। वि()आकोशस्थमाह--शिशिरं स्यादिति। खदिरो वृक्षभेदः। "खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने" इति मेदिनी। शिबिरमिति। शेरतेऽस्मिन् राजबलानि। "निवेशः शिबिरं शण्ढे" इत्यमरः।

सलिकलि। षल गतौ, कल सङ्ख्याने, अन प्राणने, मह पूजायाम्, भडि परिभाषणे, भडि कल्याणे, शडि रुजायाम्,पिडि सङ्घाते, तुडि तोडने, कुक आदाने, भू सत्तायाम्, कुट कौटिल्ये। कलिल इति। मिश्रो गहनश्च। "कलिलं गहनं समे" इत्यमरः। महिलेति। "महिला फनलिनीस्त्रियोः" इति मेदिनी। "प्रियङ्गुः फलिनी फली"त्यमरः। पृषोदरेति। तथा च दमयन्तीकाव्ये प्रयोगः-- "परमहेलारतोऽप्यपारदारिकः" इति। परस्य महेला = स्त्री, अथ च परमा उत्कृष्टा हेला = क्रीडा तत्र रत इत्यर्थः।

कमेः। कमु कान्तौ। अस्मादिलच् पश्चान्तादेशः। "कपिला रेणुकायां च शिंशपागोविशेषयोः। पुण्डरीके करिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्। नाऽनले वासुदेवे च मुनिभेदे च कुक्कुरे" इति मेदिनी। रेणुकेह लताविशेषः "हरेणु रेणुका कुन्ती कपिला भस्मगन्धिनी" इत्यमरात्।

गुपादिभ्यः। गुपू रक्षणे, तिज निशाने, गुहू संवरणे।

मिथिलादश्च। मथे विलोडने। अकारस्येत्वं निपातनात्। पथे गतौ।

पतिकठि। पत्लृ गतौ, कठ कच्छ्रजीवने, कुठि च, गड सेचने, गुड रक्षायाम्, दंश दशने। कुठि धातोरिदित्त्वान्नुमि प्राप्ते आह-- बाहुलकादिति।

कुम्बेः। कुबि आच्छादने। अन्येषामै()आर्यं कुम्बतीति कुबेरः। "कुबेरस्त्र्यम्बकसखः"।

शदेः। शद्लृ शातने।

मूलेरा। मूल प्रतिष्ठायाम्, गुध परिवेष्टने, गुहू संवरणे, मुह वैचित्ये।

कबेः। कबृ वर्णे। "कपोतः स्याच्चित्रकण्ठे पारावतविहङ्गयोः" इति मेदिनी। "कपोतः पक्षिमात्रेऽपी"ति त्रिकाण्डशेषः। अत्रओतचश्चित्त्वं प्रामादिकम्। "यत्कपोतः पदमग्नौ कृणोति, "देवाः कपोत इषितो यदिच्छन्" इत्यादौ सर्वत्र प्रत्ययस्वरेण मध्योदात्तस्यैव पठ()मानत्वादित्याहुः।

भातेः। भा दीप्तौ। भवानिति। सर्वनामशब्दोऽयम्।

कठि। कठ कृच्छ्रजीवने, चक तृप्तौ। कठोरः कठिनः पूर्णश्च। "कठोरताराधिपलाञ्छनच्छविः" इति माघः। चकोरः पक्षिभेदः।

किशोरा। शृ? हिंसायाम्। षह मर्षणे। "किशोरोऽ()आस्य शावके। तैलपर्ण्योषधौ च स्यात्तरुणावस्थसूर्ययोः" इति मेदिनी।

कपिगडि। कपि चलने, गड सेचने, गडि वदनैकदेशे,कटे वर्षावरणयोः, पट गतौ। कपोल इति। केचित्तु सूत्रे कडिं पठन्ति।कडि मदे। कण्डोलश्चाण्डालः। "चण्डालिका तु कण्डोलवीणा चण्डालवल्लकी इत्यमरः। पटोल इति। "पटोलं वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति" इति मेदिनी।

स्यन्दे। स्यन्दू प्ररुआवणे। "सिन्दूरस्तरुभेदे स्यात्सिन्दूरं रक्तवर्णके" इतिमेदिनीवि()आप्रकाशौ।

सितनि। षिञ् बन्धने, तनु विस्तारे, ग्मलृ गतौ, मसी परिणामे, षट सेचने, अव रक्षणादौ,डुधाञ् धारणपोषणयोः, क्रुश आक्रोशे। "सेतुर्नाऽऽलौ कुमारके" इति मेदिनी। "सेतुरालौ स्त्रियां पुमान्" इत्यमरः। "सूत्राणि नरि तन्तवः" इत्यमरः। "मण्डं दधिभवं मस्तु" इति च। "धातुर्ना नेन्द्रिये त्रिषु। शब्दयोनिमहाभूततदगुणेषु रसादिष। मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्थ्निच" इदि मेदिनी। "श्लेष्मादिरसरक्तादिमहाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः" इत्यमरः।

पः किच्च। पा पाने अस्मात्तुन्, स च कित्। कित्त्वात् "घुमास्थे" तीत्त्वम्।

अर्तेश्च तुः। ऋ गतौ। तुनि प्रकृते अन्तोदात्तार्थं तुः क्रियते। "ऋतुना यज्ञं य ऋतुर्जनीनामि"त्यादि। "ऋतुर्वर्षादिषट्सु च। आर्तवे मासि च पुमान्" इति मेदिनी। "ऋतुः स्त्रीकुसुमेऽपि च" इत्यमरः।

कमिमनि। कमु कान्तौ, मन ज्ञाने, जनी प्रादुर्भावे, गै शब्दे, भा दीप्तौ, या प्रापणे, हि गतौ वृद्धौ च। कमिग्रहणं प्रपञ्चार्थम्। "अर्जिदृशि" इत्यादिना कुप्रत्यये तुकि सिद्धत्वात्। मन्तुरिति। "मन्तुः पुंस्यपराधेऽपि मनुष्येऽपि प्रजापतौ" इति मेदिनी। "गातुर्ना कोकिले भृङ्गे गन्धर्वे त्रिषु रोषणे" इति च मेदिनी। "भातुर्ना किरणे सूर्ये" इति च।

चायः किः। चायृ पूजनिशामनयोः। अस्मात्तुर्धातोः किरादेश्च। "केतुर्ना रुक्पताकाविग्रहोत्पातेषु लक्ष्मणि" इति मेदिनी।

आप्नोतेः। आप्लृ व्याप्तौ। अप्नुः शरीरमिति। अभिलषितार्थश्च, आप्तव्यत्वात्। अत एव यागविशेषवाचकस्याऽऽप्तोर्यामशब्दस्याभिलषितार्थप्रापक #इत्यवयवार्थमाहुः।

वसेः। वस निवासे।

डुकृञ् करणे।कतोः कित्त्वाद्गुणाऽभावे यणादेशः। "क्रतुर्यज्ञे मुनौ पुंसि" इति मेदिनी।

एधिवह्योश्चतुः। एध वृद्धौ,वह प्रापणे। चित्त्वाद्रतोदात्तः। "स्योनं पत्ये वहतुं कृणुष्व"। "वहतुः पथिके वृषभे पुमान्" इति मेदिनी।

जीवेः। जीव प्राणधारणे।

आतृकन्। "जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिषु" इति मेदिनी।

कृषिचमि। कृष विलेखने, चमु अदने, तनु विस्तारे, धन धान्ये। रभसकोशस्थमाह--कर्षूः पुंसीत्यादि। "कर्षूः पुमान् करीषाऽग्नौ स्त्रियां कुल्याऽल्पखातयोः" इति मेदिनी। "चमूः सेनाविशेषे च सेनामात्रे च योषिति" इति मेदिनी। "स्त्रियां मूर्तिस्तनुस्तनूः" इत्यमरः। "सर्जूर्वणिजि विद्युति। स्त्रियां स्वर्गे विधौ रुद्रे" इति मेदिनी। "खर्जूः कोटान्तरे नृ (वृ?) तौ", "खर्जूरीपादपे कण्ड्वा"मिति च।

मृजेः। मृजू शुद्धो। अस्मादूः स्याद्वृद्ध्यपवादो गुणश्च। "मर्जूः स्त्री शुद्धौ धावकेऽपि च"इति मेदिनी।

वहो धश्च। वह प्रापणे। "वधूः स्नुषा नवोढा स्त्री भार्यापृक्काङ्गनासु च" इति वि()आः। "पृक्का महिला च वधूः" इति त्रिकाण्डशेषः।

कषेश्छश्च। कषशिषेथि दण्डके हिंसार्थः। अस्मादूः स्याच्छश्चान्तादेशः। "कच्छवां तु,पाम पामा विचर्चिका"इत्यमरः।

णित्कसि। कसगतौ, पद गतौ, ऋ गतौ। "कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रीयाम्" इति मेदिनी। "कासूः शक्त्यायुधे रुजि। बुद्धौ विकलवाचि स्यात्" इति हेमचन्द्रः।

अणो डश्च। अण दण्डके शब्दार्थः। अस्मादूः स्यात्स च णित्। डश्चान्तादेशः।

नञि लम्बेः। लबि अवरुआसने। न लम्बते जले इत्यलाबूः।

के श्रः। शृ? हिंसायाम्।

त्रो दुट् च। तप्लवनतरणयोः। तर्दूरिति। "नेड्वशी"ति नेट्। "वरमनादा"विति परिगणनं तु बाहुलकान्नाश्रीयते इत्याहुः। केचित्तु इडभावे "त्रो दुक् चे"ति पठित्वा धातोर्दुगागममाहुस्तेषां तु धातोर्गुणो दुर्लभः। दुगागमात्पूर्वं यत्प्राप्तं तदपि भवतीत्येवं चकारबलेन व्याख्याय वा गुणः साधनीयः।

दरिद्रातेः। दरिद्रा दुर्गतौ। इश्च आश्चेति। भोजदेवस्तु "र्यालोप" इति रेफाघटितं पदं छित्त्वा द्वेधा व्याख्यत्। इश्च आश्चेति व्याख्याने--दर्द्रूः। रश्च इश्च आश्चेति व्याख्याने तु "अन्त्यबाधेऽन्त्यसदेशस्ये"ति द्वितीयस्यैव रेफस्य लोपाद्दर्दूरिति। मृगय्वादित्वात्कुप्रत्यये दद्रुरित्यन्ये। "दद्रुणो दद्रुरोगी स्यात्" इत्यमरः। इत्थं चत्वारि रूपाणि।

नृति। नृती गात्रविक्षेपे, शृधु शब्दकुत्सायाम्।

अन्दूदृम्भू। अदि बन्धने। "नृतिशृध्योः कूः" इत्यत्रादिग्रहणं नकृतं वैचित्र्यार्थमित्याहुः। ला आदाने कफपूर्वः। डुधाञ् धारणपोषणयोः कर्कपूर्वः। षोऽन्तचकर्मणि--दिधिपूर्वः षत्वं च। अन्दूर्बन्धनमिति। "अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च" इति मेदिनी। "अन्दुको हस्तिनि गदे"इत्यमरः। संज्ञायां कन्। "केऽणः" इति ह्रस्वः। केचित्तु अम गतौ

अस्य दुक्। अन्दूर्बुद्धिरिति व्याचख्युः। दृभी ग्रन्थ इति। तुदादिरयम्। दृभतीति दृम्भूः संदर्भकर्तेत्यर्थः। कथक इत्यन्ये। कैयटमतानुरोधेनास्य रूपाणि हूहूवदित्युक्तम्। माधवादयस्तु दृढशब्दे उपपदे भुवः कूप्रत्ययः, उपपदस्य दृन्नादेशो निपात्यते। यद्वा दृढार्थकं दृन्निति नान्तमन्ययमुपपदम्। दृम्भूस्तु सर्पः कपिर्वेति व्याख्याय "दृन्करे"ति यणि वर्षाभूवद्रूपमस्येत्याहुः। ह्रस्वोऽपीति। अतएव विक्रमादित्येनोक्तं-- तस्या जम्बोः फलरसोनदीभूय प्रवर्तते" इति।केचित्तु "परिणतजम्बुफलोपभगह्रष्टाः" इति भारविप्रयोगं ह्रस्वान्तत्वे साधकत्वेनोदाजह्रुस्तन्न। "इको ह्रस्वोऽङ्य" इत्युत्तरपदाधिकारस्थह्रस्वविदायकसूत्रेण गतार्थत्वात्। दिधिमिति। केचित्तु दधातोरित्वं द्वित्वं षुक् च निपात्यते। दधात्यसौ दिधित्यसौदिधिषूरित्याहुः। पुनर्भूरिति। "पुनर्बूदिधिषूरूढा द्विः" इत्यमरः। द्विरूढा = द्विवारं विवाहितेत्यर्थः। उज्ज्वलदत्तोक्तपाठमाह--केचित्त्विति। एतच्च कैयटमाधवादिग्रन्थविरुद्धम्। अतएव "दृम्भूः स्त्रीसर्पचक्रयोः इति भान्ते मेदिनी।

मृग्रोः। मृङ् प्राणत्यागे,गृ? निगरणे, आभ्यामुतिः। इकारस्तकारस्येत्संज्ञापरित्राणार्थः। मरुदिति। प्रज्ञादित्वादणि मारुतोऽपि। मरुतशब्दोऽप्यव्युत्पन्नोऽस्ति।तथा च विक्रमादित्यकोशः "मरुतः स्पर्शः प्राणः समीरो मारुतो मरुत्" इति। "कोऽयं वाति स दक्षिणात्यमरुतः" इति कविराजश्लोकेऽनुपपत्तिं()त मत्वा "दक्षिणात्यपवन" इति पाठं केचित्कल्पयन्त्यल्पदृ()आआन इति वर्णविवेकः। गरुदिति। यवादिरयम्। तेनाऽस्मात्परस्य मतुपो मस्य "झयः" इत्यनेन वत्वं न। गरुत्मान्।

गर्मुदिति। "गर्मुत्स्त्री स्वर्णलतयोःट इति मेदिनी।

ह्रषेः। ह्रष तुष्टौ। चटतेरिति। चटे वर्षावरमयोः।

ह्रसृ। ह्रञ् हरणे, गतौ, रुह बीजजन्मनि। वि()आकोशस्थमाह-- हरिदिति। "हरिद्दिशि स्त्रियां पुंसि हर्षवर्णविशेषयोः। अस्त्रियां स्यात्तृणे च" मेदिनी। ऋश्यस्येति। एतेन "गतं रोहिद्भूतां रिरमयिषुमृस्यस्य वपुषा--" इति पुष्पदन्तप्रयोगो व्याख्यातः। "रोहिन्मृग्यां लताभेदे स्त्री नाऽर्के" इति मेदिनी।

ताडेः। "तड आघाते" ण्यन्तः। "तडित्सौदामनी विद्युत्" इत्यमरः।

शमेः। शम उपशमे। बाहुलकादिति। यद्यपि "नेड्वशि कृती"त्यनेनैव इडभावस्य सिद्धत्वादिट् च नेत्येतदयुक्तं तथापि "नेड्वरमनादा"विति परिगणनाद्बहुललग्रहणमाश्रित्यैव इडभावोऽपि साधितः। "शण्ढः स्यात्पुंसि गोपतौ। आकृष्टाऽण्()डे वर्षवरे तृतीयप्रकृतावपि" इति मेदिनी।

कमेः। कमु कान्तौ। "कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्" इति मेदिनी। जरठ इति। जृ? वयोहानौ। "जरठः कठिने पाण्डौ कर्कशेऽप्यभिधेयवत्" इति वि()आमेदिन्यौ। "जरठः कठिने जीर्णे" इति वैजयन्ती।

रमेः। रम क्रीडायाम्।

शमेः। शम उपशमे। "शङ्खो निधौ ललाटाऽस्थ्नि कम्बौ न स्त्री" इत्यमरः। "शङ्खः कम्बौ न योषिन्ना भालास्थिनिधिभिन्नखे" इति मेदिनी।

कणेः। "कण्ठो गले सन्निधाने ध्वनौ मदनपादपे" इति वि()आमेदिन्यौ।

कल।तृप प्रीणने। फलत्रिके इति। "त्रिफला तृफला च सा" इति वि()आः। त्रिफलाशब्दसमानार्थस्तृफलाशब्द इति द्विगोः"

इति सूत्रे रक्षितः।

शपेः। शप आक्रोशे।

वृषादिभ्यः। वृषु सेचने,पलगतौ, सृ गतौ,तृ? प्लवनतरणयोः। "शूद्राश्चाऽवरवर्णाश्चवृषालश्च जघन्यजाःट इत्यमरः। "वृषलस्तुरगे शूद्रे" इति हेमचन्द्रः। "पलं तिलचूर्णे च पिकेमांसे नपुंसकम्। ना राक्षसे"इति मेदिनी। "सरला विरलायन्ते घनायन्ते किल द्रुमाः। न शमी न च पुन्नागा अस्मिन्संसारकानने"इत्यभियुक्तप्रयोगः। कमेः। कमु कान्तौ। अस्माद्ववृषादित्वेन कलप्रत्यये बाहुलकादित्यनुषज्यत इति बुक्। "कम्बलोनागराजे स्यात्सास्नाप्रावारयोरपि। कृमावप्युत्तरासङ्गे सलिले तु नपुंसकम्" इति मेदिनी। "मुसलं स्यादयोऽग्रे च पुंनपुंसकयोः रिउआयाम्। तालमूल्यामाखुपर्णीगृहगोधिकयोरपि"इति मेदिनी। मूर्धन्यमध्योऽप्यमिति वर्णदेशना। मुस खण्डन इति धातोर्दन्त्यान्तेषु मूर्धन्यान्तेषु च बोपदेवादिभिः पठितत्वात्। उज्ज्वलदत्तदयस्तु तालव्यमध्यमप्याहुः। अतएव "मुसलो मुषलोऽपि च"इति वि()आकोशे। "मुशलोऽपि चे"ति पाठान्तरम्। लङ्गे। लगि गतौ। अस्मात्कलप्रत्यये बाहुलकादित्यनुषङ्गाद्वृद्धिरिति भावः। एवमग्नेऽपि। मुडागमो बाहुलकादेव। कुटिकशि। कुट कौटिल्ये, कशगतिशासनयोः, कु शब्दे, अस्मात्कलप्रत्यये गुणो नेत्याशङ्क्याह--बाहुलकादिति। "कोमलं मृदुलं मृद#उ"। बाहुलकादन्यत्रापि बोध्य-। तद्यथा-- कुस श्लेषणे। द्त्यान्तोऽयम्। बोपदेवमते तु तालव्यान्तोऽपि।गुणः। गोशलः कोसलो वा देशविशेषः। "वृद्धेत्कोसले"ति सूत्रे तु दन्त्यान्त एव सांप्रदायिकः। संबसंबन्धे, शंब च। संबलं शंबलम्। "शंबलोऽस्त्री संबलवत् कुलपाथेयमत्सरे" इति मेदिनी। कदि आह्वाने। नलोपः। गौरादित्वान्ङीषि-- कदली। "मन्दान्दोलितकर्पूरकदलीदलसंज्ञया। विश्रमाय श्रमापन्नानानाह्वयन्तीमिवाध्वगा"निति काशीखण्डम्। अजादेराकृतिगणत्वाट्टाबपि। "कदलाकदलौ पृश्न्यां कदलीकदलौ पुनः। रम्भावृक्षेऽथ कदली पताकामृगभेदयोः। कदली बिम्बिकायां च " इति मेदिनी। कमु कान्तौ। "कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे। मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः" इति वि()आमेदिन्यौ। मडि भूषायाम्। "मण्डलं परिधौ कोठे देशे द्वादशराजके" इति मेदिनी। "कोठो मण्डलकं क्लीबे" इत्यमरः। "बिम्बोऽस्त्री मण्डलं त्रिषु" इति च।

मृजेः। मृजू शुद्धौ। "मलोऽस्त्री पापविट्किट्टे कृपणे त्वभिधेयवत्िति मेदिनी।

चुपेः। चुप मन्दायां गतौ। "चपलः पारदे मीने चोरकेप्रस्तरान्तरे। चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च। नपुंसके तु शीघ्रे स्याद्वाच्यवत्तरले चले" इति मेदिनी।

शकिशम्योः। शक्लृ शक्तौ, शम उपशमे। शकलं खण्डे रोहितादीनां त्वचि च। तद्योगात् शकली मत्स्यः। "मत्स्यान् शकला"निति भाष्यम्। "शकलं त्वचि खण्डे स्याद्रागवस्तुनि वल्कले" इति मेदिनी।

छो गुक्। छो छेदने। "छगलं नीलवस्त्रे ना छागे स्त्री वृद्धदारके" इति मेदिनी।

ञमन्ताड्डः। "ञ"मिति प्रत्याहारः। दमु उपशमे, रमु क्रीडायाम्, खनु अवदारणे, मन ज्ञाने, वन संभक्तौ, अम गत्यादिषु षणु दाने, गम्लृ गतौ,चण दाने, पण व्यवहारे स्तुतौ च। काशिकायां तु "त्रिभ्य एव कणमाः स्यु"रित्युक्तम्। ञम् प्रत्याहारस्तु न स्वीकृतः। अष्टाध्यायां तस्य विषयाऽभावात्। दण्ड इति। बाहुलकात् "चुटू" इति नेत्संज्ञा। "दण्डोऽस्त्री लगुडेऽपि स्यात्" इत्यमरः। "रण्डा मूषकपर्ण्यां च विधवायां च योषिति। खण्डोऽस्त्री शकले नेक्षुविकारमणिभेदयोः। "मण्डः पञ्चाङ्गु शाकभेदे क्लीबं तु मस्तुनि। "वण्डा तु पांसुलायां स्त्री त्रिषु हस्तादिवर्जिते"। अमन्ति संप्रयोगं यान्ति अनेनेति अण्डः प्राण्यवयवः। "षण्डः पद्मादिसङ्घाते न स्त्री स्याद्गोपतौ पुमान्"। शडि रुजायाम्, अस्माद्धत्रि

शण्डखङ्गिनि। चिह्नवीरकपोलेषु हयभूषणबुद्बुदे। चण्डो ना तिन्तिणीवृक्षे यमकिङ्कदैत्ययोः। चण्डी कात्यायनीदेव्यां हिंसाराकोपनयोषितो-। "पण्डः षण्डे धियि स्त्री स्या"दिति मेदिनी। फमगतौ फण्डः। प्रज्ञादित्वादण्। फाण्डमुदरम्।

क्वादिभ्यः कित्।कुण शब्दोपकरणयोः। कुण्डमिति। इह कुण्डमित्यत्र प्रायेणानुस्वारमेव लिखन्ति, तत्तु प्रमादकृतम्। एवमन्यत्रापि बोध्यम्। डस्य कित्त्वान्न गुण-। "अनुनासिकस्य क्विझलो"रिति दीर्घस्तु न भवति, बाहुलकात्संज्ञापूर्वकविधेरनित्यत्वाद्वेत्याहुः। "कुण्डमग्न्यालये मानभेदे देवजलाशये। कुण्डी कमण्डलौ काण्डमिति। कमु कान्तौ। "अनुनासकिस्ये"ति दीर्घः। "काण्डोऽस्त्री दण्डबाणाऽर्ववर्गावसरवारिषु" इत्यमरः। अर्वाङ्कुत्सितः। अतएव "काण्डं स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाडीवृन्दे रहसि न "स्त्रिया"मिति मेदिनी। गुह् अव्यक्ते शब्दे। "गुडो गोलेक्षुपाकयोः" इत्यमरः। गुडा स्नुही,तद्वत्केशा यस्य स "गुडाकेशः = शिवः, जटाधारित्वात्। "गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः। गुडा स्नुह्यां च कथिता गुडिकायां च योषिति" इति मेदिनी। गुडाका = निद्रा, तस्याईश इति वा, जितेन्द्रियत्वादिति भावः।

स्थाचति। ष्ठा गतिनिवृत्तौ, चते याचने, मृजू शुद्धौ। लचा सिद्धे आलच आकारश्चिन्त्यप्रयोजनः। चित्स्वरं बाधित्वा पक्षे आद्युदात्तार्थमित्येके। "स्थालं स्मृतः शूद्रेबिजालेकायशोधने" इति मेदिनी।

पतिचण्डि। पत्लृ गतौ, चडि कोपे।पतन्त्यस्मिन्नधर्मेणेति पातालम्। उपधावृद्धिः। "अधोभुवनपातालं बलिसद्म रसातल"मित्यमरः। "पातालं नागलोके स्याद्विवरे वडवाऽनले" इति मेदिनी। चण्डाल इति। इदित्त्वान्नुमि अदुपधत्वाऽभावान्न वृद्धिः। माधवेन तु "पतिचण्डिब्यामालन्" इति नितं पठित्वा पातालशब्दे बाहुलकाद्वृद्धिमुक्त्वा "वृद्ध्यर्थमालञिति केषांचित्पाठे तु चण्डालशब्देऽपि वृद्धिः स्यादित्युक्तं तदतिरभसात्। एके इति। उज्ज्वलदत्तादयः। एतच्च "कुलालवरुडकर्मारनिषादचण्डालमित्राऽमित्रेभ्यश्छन्दसी"ति चण्डालात्स्वार्थेऽणं विदधता तद्भाष्येण च सह विरुद्धमिति बोध्यम्।

तमिविशि। तमु काङ्क्षायाम्, विश प्रवेशने, बिड आक्रोशे, भृण हिंसायाम्, कुल संस्त्याने, कपि चलने, निर्देशान्नलोपः। पलगतौ, पचि विस्तारे। "तमालस्तिलके खङ्गे तापिच्छे वरुणद्रुमे" इति मेदिनी। "विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तुयोषिति। नृपवृक्षभिदोः पुंसि पृथुलेऽप्यभिधेयवत्" इति मेदिनी। "बिडालो नेत्रपिण्डे स्याद्वृषदंशकके पुमान्" इति च मेदिनी। "ओतुर्बिडालोमार्जारो वृषदंशक आखुभुक्" इत्यमरः। "मृगालंनलदे क्लीबे पुंनपुंसकयोर्बिसे"इति मेदिनी। "कुलालः ककुभे कुम्भकारे स्त्रीत्वञ्जनान्तरे" इति च मेदिनी। "कुलालो घूकपक्षिणि। ककुभे कुम्भकारे च" इति हेमचन्द्रः। "कपालोऽस्त्रीशिरोऽस्थ्नि स्याद्घटादेः शकले व्रजे" इति मेदिनीवि()आप्रकाशौ। "पाञ्चाली पुत्रिकागीत्योः स्त्रियां पुंभूम्नि नीवृति" इति मेदिनी। बाहुलकात् श्यतेरपि कालन्। "आदेच उपेदेशे" इत्यात्वम्। शाला शल चलने। अस्मात् घञि शाला। "सेनासुराच्चायाशालनिशाना"मिति निपातनात्स्त्रीत्वमिति न्यासः। "शालाद्रुस्कन्धशाखायां गृहगेहैकदेशयोः। ना झषे इति मेदिनी।

पतेरङ्गच्। पत्लृ गतौ। पक्षिणीत्युपलक्षणम्। "पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः। क्लीबंसूते" इति मेदिनी। सूते पारद इत्यर्थः।

तरत्या।तृ? प्लवनतरणयोः। लूञ् छेदने। तरङ्ग ऊर्मिः। "तरङ्गस्तुरगादीनामुत्फाले वरुआभङ्गयोः" इति वि()आः। "लवङ्गं देवकुसुमे"। आकृतिगणोऽयम्।

विडादिभ्यः। बिड आक्रोशे, मृद क्षोदे, कृ? विक्षेपे, एभ्योऽङ्गच् कित्स्यात्। विडङ्ग ओषधिविशेष इति उज्ज्वलदत्तः।

"विडङ्गः कृमिसङ्घघ्ने विडङ्गो नागरेऽन्यवत्" इति वि()आः। "विडङ्गस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुंनपुंसक" मिति मेदिनी। "मृदङ्गः पटहे घोषे" इति च। कुरङ्गो मृगविशेषः। बाहुलकादुत्वं चेति।कुर शब्दे इत्यस्मादङ्गच्।तस्य कित्वेन गुणाऽभाव इत्यन्ये।

सृवृञोः। सृ गतौ, वृञ् वरणे। "सारङ्ग पुंसि हरिणे चातके च मतङ्गजे।शबले त्रिषु"इति मेदिनी। बाहुलकात् नृ? नये। "अथ नारङ्गः पिप्लीरसे। यमजप्राणिनि विटे नागरङ्गद्रुमेऽपि चे"ति मेदिनी।

गन् गम्य। गम्लृ गतौ, अद भक्षणे,बाहुलकादम गत्यादिषु। अस्मादपि गन्। "अङ्गं गात्रे उपाये च प्रतीके चाऽप्रधानके। अह्गोदेशविशेषे स्यादङ्ग संबोधनेऽव्यय"मिति वि()आः। "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति। क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके" इति मेदिनी।

छापू। छो छेदने, पूङ् पवने, खड भेदने। छायते छिद्यते यज्ञार्थमिति छागः। पूयतेमुखमनेनेति पूगः। "पूगस्तु क्रमुके वृन्दे" इति मेदिनी। "खड्गो गण्डकशृङ्गे स्यान्नि()स्त्रशे गण्डकेऽपि चे"ति शब्दतरङ्गिणी। "खड्गो गण्डक शृङ्गाऽसिबुद्धभेदेषु गण्डके" इति मेदिनी।

भृञः। डुभृञ् धारमपोषणयोः। किदित्यनुवर्तनात्किद्()ग्रहममिह स्पष्टार्थम्। "भृङ्गो धूम्याटषिङ्गयोः।मधुव्रते वभृङ्गराजे पुंसि भृङ्गं गुडत्वचि" इति मेदिनी।

शृणातेः। शृ? हिंसायामस्माद्गन्,धातोर्ह्रयस्वत्वं प्रत्ययस्य तु कित्त्वं नुट् च। "शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाऽम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके। स्त्री विषायां स्वर्णमीनभेदयोरृषभौषधौ" इति मेदिनी। "शृङ्गं विषाणमाख्यातं शैलाग्ने जलयन्त्रके। मीनौषधिसुवर्णानां बेदे शृङ्गी प्रयुज्यते इत्युत्पलिनीकोशः।

गण् शकुनौ। शृणातेः शकुनौ वाच्ये गण् स्यात्तस्य नुट्। "अचोऽञ्णिती"ति धातोर्वृद्धिः। शार्ङ्गः पक्षी। शार्ङ्गं धनुरिति तु शृङ्गस्य विकार इति बोध्यम्।

मुदिग्रोः। मुद हर्षे,गृ? निगरणे,आभ्यां यथासंख्यं गक् ग इत्येतौ स्तः। मुद्गः सस्यभेदः। गर्गो मुनिविशेषः।

अण्डन्। डुकृञ् करणे,सृ गतौ,भृञ् भरणे, वृञ् वरणे। "करण्डो मधुकोशाऽसिकारण्डेषु दलाढके" इति मेदिनी। "वरण्डोऽप्यन्तरावेदौ समूहमुखरोगयोः" इति वि()आमेदिन्यौ। बाहुलकात्-- तृ? प्लवनतरणयोरपि। "तरण्डो वडिशीसूत्रबद्धकाण्ठादिके प्लवे" इति मेदिनी।

शृ? दृ()।शृ? हिंसायाम्, दृ? विदारणे, भस भत्र्सनदीप्त्योः। शरत् स्त्री वत्सरेऽप्यृतौ। "दरत्स्त्रियां प्रपाते च भयपर्वतयोरपि। "भसत् स्त्री भास्करे योनौ इति मेदिनी। "उबे अम्बसुलाभिक" इति व्याख्यातारः।

दृणातेः। दृ? विदारणे। "दृष्निष्पेषणशिलापट्टप्रस्तरयोः स्त्रियाम्" इति मेदिनी।

त्यजि।त्यज हानौ, तनु विस्तारे, यज देवपूजादौ। त्यदितयादि।अदेर्डित्वाट्टिलोपः।

एतेः। इण् गतौ अस्माददिः। तस्य तुटि गुणः। एतद्।

सर्तेः। सृ गतौ।

लङ्घेः। लघि शोषणे।

पारयतेः। पीर तीर कर्मसमाप्तौ चुरादिः। पारगिति। णिलोपः कुत्वम्।

प्रथेः। प्रथ प्रख्याने।

भियः। ञिभी भये।

युष्यसि। असु क्षेपणे।

अर्तिस्तु। ऋ गतौ, ष्टुञ् स्तुतौ, षुञ् अभिषवे, हु दनादनयोः,सृ गतौ, धृञ् धारणे, क्षि क्षये, टुक्षु शब्दे,भा दीप्तौ, या प्रापणे, वा गतिगन्धनयोः,पद गतौ, णीञ् प्रापणे। "सोमस्तु हिमदीधितौ। वानरे च कुबेरे च पितृदेवे समीरणे। वसुप्रभेदे कपूरे नीरे सोमलतौषधौ" इति मेदिनी। होम इति। देवतोद्देशेन हविः प्रक्षेपः। "धर्मोऽस्त्री पुण्य आचारे स्वभावौपमयोः क्रतौ। अहिंसोपनिषन्नयाये ना धनुर्यमसोमपे" इति च। "धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ" इति वि()आः। "क्षौमं पट्टे दुकूलेऽस्त्री क्षौमं वल्कलजांऽशुके। शणजेऽतसिजे" इति मेदिनी। "भामः क्रोधे रवौ दीप्तौ" इति च। "यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः" इति च। "वामं धने पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीतपसव्येषु त्रिषु नार्यां स्त्रियामथ।वामी शृगालीवडवारासभीकरभीषु चे"ति। "पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यान्तरेऽम्बुजे। ना नागे"इति च" इत्यमरः। "राजयक्ष्मेव रोगाणा"मिति माघः। "यक्ष्मणाऽपि परिहाणिरराययौ" इति रघुः। अत्र जकारयकारयोर्भेदाऽग्रहेण जक्ष भक्षहसनयोरित्युज्ज्वलदत्तेनोपन्यस्तम्। तन्न। तस्यचवर्गतृतीयादित्वात्। अतएव "अक्षीभ्यां ते नास#इकाभ्यां कर्णाभ्यां चुबुकादधि। यक्ष्मं सर्वस्मात्" इति मन्त्रे यक्ष्मशब्दस्यान्तः स्थादित्वम्। "जक्षन् क्रीडन् रममाण" इत्यादिमन्त्रे तु जक्षच्छब्दस्य चवर्गतृतीयादित्वं वेदभाष्यकृतो व्याचख्युः। "नेमः कीलेऽवधौ गर्ते प्राकारे कैतवेऽपि च" इति मेदिनी। "नेमस्त्वर्धे प्राकारगर्तयोः। अवधौ कैतवे च" इति हेमचन्द्रः।

जहातेः। ओहाक् त्यागे। जह्म इति। मन्प्रत्ययस्य सन्वत्त्वाद्वित्वे "सन्यतः" इतीत्वम्। "जिह्मस्तु कुटिले मन्दे क्लीबं तगरपादपे" इति मेदिनी।

अवेतिः। अव रक्षणादौ। "ॐ प्रश्ने स्वीकृतौ रोषे" इति वि()आः।

ग्रसेरा च। ग्रसु अदने। अतो मन्, धातोराकारश्च। "ग्रामः स्वरे संवसतेवृन्दे शब्दादिपूरवकः" इति वि()आः। शब्दादिपूर्वको ग्रामशब्दो वृन्दे। शब्दग्रामोगुणग्राम इति यथा। "शब्दादिपूर्वो वृन्दे शब्दादिपूर्वकः" इति वि()आः। शब्दादिपूर्वको ग्रामशब्दो वृन्दे। शब्दादिपूर्वो वृन्देऽपि ग्रामः" इत्यमरः। संपूर्वोऽयं युद्धे। तदुक्तं "संपूर्वः संयुगे स्मृतः" इति।

अविसिवि। अव रक्षणादौ, षिवु तन्तुसन्ताने,षिञ् बन्धने, शुष शोषणे , एभ्यो मन्स्यात्स च कित्। ऊठादितं पूर्ववत्। ऊमं नगरमिति। "त्वे क्रतुम्" इति मन्त्रे ऊमास्तर्पका यजमाना इति वेदभाष्यम्। टापिबाहुलकाद्ध्रत्वत्वे "उमाऽतसीहैमवतीहरिद्राकान्तिकीर्तिषु" इति मेदिनी। स्यूमो रश्मिरिति। सूत्रतन्तुरित्यन्ये। सिमः सर्वनाम गणे पठितः। "शुष्मं तेजसि सूर्ये ना" इति मेदिनी। शुष्मं बलमिति वेदभाष्यम्।

इषियुधि। इष गतिहिंसादानेषु। ईष गताविति केचित्। इष्मः। युध संप्रहारे,ञीन्धी दीप्तौ, दसु उपक्षये, श्यैङ् गतौ, धूञ् कम्पने, षूञ् प्राणिगर्भविमोचने। युध्म इति। "युध्मो धनुषि संयुगे", इति मेदिनी। "दस्मस्तु यजमाने स्यादपि चौरे हुताशने" इति च। "त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा" इत्यमरः। "श्यामो वटे प्रयागस्य वारिदे

वृद्धदारके। पिके च कृष्णहरितोः पुंसि स्यात्तद्वति त्रिषु। मरीचे सिन्धुलवणे क्लीबं स्त्री शारिवौषधौ।अप्रसूताऽङ्गनायां च प्रियङ्गावपि गुग्गुलौ। यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधे। नीलिकाया"मिति मेदिनी। ईर्ममिति। ईर गतौ। "व्रणोऽस्त्रियामीर्ममरुः क्लीबे" इत्यमरः। बाहुलकाज्जन जनने स्तु अकारान्तनकारान्तोभयसाधारणः।

युजि। युजिर् योगे, रुच दीप्तौ, तिज निशाने, एभ्यो मक्, कवर्गश्चान्तादेशः। "रुक्मं तु काञ्चने लोहे" इति वि()आमेदिन्यौ। तिग्मं तीक्ष्णम्।

हन्तेः। हन हिंसागत्योरस्मान्मक्, धातोर्हिरादेशश्च। "हिमं तुषारमलयोद्भवयोः स्यान्नपुसंकम्। शीतले वाच्यलिङ्गः" इति मेदिनी।

भियः। ञिभी भये। बिभेत्यस्मादिति विग्रहः। "भीष्मो गाङ्गेयघोरयोः। "भीमोऽम्लवेतसे धोरे शम्भौ मध्यमपाण्डवे" इति मेदिनी।

घर्मः। घृ क्षरणदीप्त्योः।

ग्रीष्मः। ग्रसु अदने। "घर्मः स्यादातपे ग्रीष्मेऽपर्युष्णस्वेदाम्भसोरपि"। "ग्रीष्म ऊष्मर्तुभेदयोः" इति च मेदिनी।

प्रथेः। प्रथ प्रख्याने। षित्त्वान्ङीष्। "पृथवी पृथिवी पृथ्वी धरा सर्वसहा रसा" इति शब्दार्णवः।

अशुप्रुषि।अशू व्याप्तौ, लट बाल्ये,कण निमीलने,खटि काङ्क्षायाम्,विश प्रवेशने। "अ()आः पुंजातिभेदे च तुरङ्गे च पुमानय"मिति मेदिनी। "अ()आः पुंभेदवाजि#ईनोः" इति वि()आः। "लट्वा करञ्जभेदे स्यात्फले वाद्ये खगान्तरे" इति वि()आमेदिन्यौ। "कण्वं पापे मुनौ पुंसि" इति मेदिनी। "किण्वं बीजाऽघसीधुषु" इति च पठ()ते। शयनार्थिभिः काङ्क्ष्यते इति खट्वा। "वि()आआ हृतिविषायां स्त्री जगति स्यान्नपुंसकम्। न ना शुण्ट()आं पुंसि देवप्रभेदेष्वखिले त्रिषु" इति मेदिनी।

इण्। इण गतौ। शीङ् स्वप्ने। शेवं सुखमिति वेदभाष्यम्। शेवं मेढ्रमित्युज्जज्वलदत्तः।

सर्वनिघृष्व। सर्वनिघृष्व। सृ गतौ,घृषु संघर्षे, रिष हिंसायाम्, लष कान्तौ, शीङ् स्वप्ने, पट गतौ, ह्वेञ् स्पर्धायां शब्दे च, ओहाक् त्यागे इति वा, ईष गत्यादिषु। तन्त्रशब्दोऽत्र कर्तृवाचीत्याह-- अकर्तरीति। निपात्यन्त इति। "वन् प्रत्ययान्ततये" ति शेषः।ह्रस्व इति। ह्रस शब्दे। "ह्रस्वो न्यक्खर्वयोरिउआषु" इति मेदिनी।

शेयवह्व। एते वन्()प्रत्ययान्ता निपात्यन्ते। अन्तोदात्तार्थमिति। "इण्शीभ्या"मित्यनेन आद्युदात्तत्वसिद्धेरिति भावः। शीङ् स्वप्ने। शेवा लिङ्गाकृतिः। दशपादीवृत्तिरीत्याह--यान्त्यनेनेति। उज्ज्वलदत्तस्तु यज देवपूजादौ जकारस्य हकारो, यह्वो यजमान इत्याह। वैदिकनिघण्टौ महन्नामसु यह्वशब्दः पठितः। "प्रवो यह्वं पुरुणां। यह्वं महान्तमिति वेदभाष्यम्। लिह आस्वादने। लिह लिहनत्यनयेति जिह्वा। जि जये हुगागमः। जिह्वा रसनेत्युज्ज्वलदत्तः। ग्रीवेति। गृ? निगरणे, आप्लृ व्याप्तौ, मीह् हिंसायाम्। मीवेति।वेदे तु अमीवेति छित्त्वा अम रोग इत्यस्माद्वः, इट् चेत्युक्तम्। "अमीवहा वास्पोष्पते" इत्यादिमन्त्रास्तत्रानुकूलाः।

कृ? गृ? कृ? विक्षेपे, गृ? निगरणे, शृ? हिंसायाम्, दृ? विदारणे। गर्वोऽहंकारः। शर्वो रुद्रः।

कनिन्यु। "यु मिश्रणे, वृषु सेचने, तक्षू तनूकरणे, राजृ दीप्तौ, धन्वि (वि) गत्यर्थः, द्यु अभिगमने, दिवु क्रीडादौ। "युवा

स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनी" ति। "वृषा कर्णे महेन्द्रे ना"इति च मेदिनी। "तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट्" इत्यमरः। "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः" इति च। "समानौ मरुधन्वानौ" इति च। "अथाऽस्त्रियाम्। धनुश्चापौ धन्वशरासनकोदण्डकार्मकुम्" इति चाऽमरः। "धन्वा तु मरूदेशेना क्लीबे चापे स्थलेऽपि च" इति मेदिनी।

सप्यशूभ्याम्। षप समवाये, अशू व्याप्तौ।

नञि। ओहाक् त्यागे, कनिनि आतो लोपः।

()आन्नुक्षन्। टुओ()आगतिवृद्ध्योः, उक्ष सेचने, पूष वृद्धौ। ष्णिह प्रीतौ, मुह वैचित्ये, मुर्वी बन्धने। उकारस्य दीर्घत्वे वकारस्य धकार इत्युज्जवलदत्तः। टुमस्जो शुद्धौ। मस्जेः सकारस्य शकारस्तस्य जश्त्वेन जः। माङ् माने शब्दे च, प्सा भक्षणे, जनी प्रादुर्भावे, टुओ()इआ गतिवृद्ध्योः। कनिप्रत्ययान्ता इति। नायं निदिति भावः। केचित्तु नित्त्वं स्वीकृत्य उक्षन्नादीनां सूत्रेऽन्तोदात्तनिपातनमाहुस्तच्च गौरवग्रस्तमित्युपेक्ष्यम्। ()ओति। इकारलोपो निपात्यते। पूषेति। "सौ चे"त्युपधादीर्घः। "इन्हन्" इति नियमात्पूषणौ पूषण इत्यादौ न दीर्घः। "क्लिदौषदिशशाङ्कयोः" इति यादवः। मूर्धेति। "मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः। मज्जेति। नकारान्तोऽयं। टाबतोऽप्यभ्युपगम्यते। "ऊष्मया सार्धमूष्मापि मज्जोक्तो मज्जया सह" इति द्विरुपकोशात्। "अर्यमा तु पुमान्सूर्ये पितृदेवन्तरेऽपि"चेति मेदिनी। परिजायत इत्यादि। एतच्च दशपादीवृत्यनुरोदेनोक्तम्। "परिज्मानं सुखं रथ"मिति मन्त्रस्य वेदभाष्येतु परिज्मा परितो गन्ता। अञ्जेः परिपूर्वस्य "()आन्नुक्षन्" इत्यादिना मन्प्रत्ययः, अकारलोपः, आद्युदात्तत्वं च निपात्यत इत्युक्तम्। उज्जवलदत्तस्तु परिज्वेति पठित्वा जु इति सौत्रो धातुः परिपूर्वः, यणादेशः परिज्वा चन्द्र इत्याह, तल्लक्ष्यविरोधादुपेक्ष्यम्। मातरि()ओति। सप्तम्या अलुक्। इह भत्वविषये संप्रसारणं न भवति, "()आयु वे"ति सूत्रे अभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव ()आशब्दस्य,तदन्तस्य च ग्रहणात्। तेन मातरि()आनः, मातरिनेत्येव। इह सूत्रे इतिशब्द आद्यर्थस्तेनाऽन्येभ्योऽपि यथादर्शनं कनिः प्रयोक्तव्यः। दशपाद्यां तु इतिशब्दोऽत्र न पठ()ते। इत्युणादिषु प्रथमः पादः।

अथ द्वितीयः पादः।

कृह्मभ्याम्। डुकृञ् करणे, ह्मञ् हरणे। "करेणुरिभ्यां स्त्री नेभे" इत्यमरः। "करेणुर्गजयोषायां स्त्रियां पुंसिमतङ्गजे" इति मेदिनी। गन्धद्रव्यमिति। कलायश्चेति बोध्यम्। "कलायस्तु सतीनकः" इत्यमरः। हरेणुखण्डिके चास्मिन्" इत्यमरः। "हेरणुर्ना सतीने स्त्री रेणुकाकुलयोषितोः" इति मेदिनीवि()आप्रकाशौ।

हनिकुषि। हन हिंसागत्योः,कुष निष्कर्षे, णीञ्प्रापणे, रमु क्रीडायाम्, काशृ दीप्तौ। "कुष्ठं रोगे पुष्करे स्त्री" इति मेदिनी। "कुष्ठं रोगे सुगन्धे च" इति वि()आः। "नीथे नीथे मघवानं सुतासः" इति मन्त्रे नीथशब्दस्याऽन्तोदात्तत्वं बाहुलकात्। नीथे नीथे = स्तोत्रे स्तोत्रे इति वेदभाष्यम्। "रथः पुमानवयवे स्यन्दने वेतसेऽपि च" इति मेदिनी। "रथः स्यात्स्यन्दने काये चरणे वेतसेऽपि च" इति वि()आः। "काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः। स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकम्" इति मेदिनी।

अवे। डुभृञ् धारणपोषणयोः। अवभृथो यज्ञावसानम्।

उषिकुषि। उष दाहे, कुष निष्कर्षे, गै शब्दे, ऋ गतौ, एभ्यस्थन्। "कोष्ठं कुक्षिकुसूलयोः र"। "गाथा शोके संस्कृतान्यभाषायां शेषवृत्तयोः" इति मेदिनी। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। शोथः ()आयथुः। शु गतौ।

सर्तेः। सृ गतौ। "सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके" इतिमेदिनीवि()आप्रकाशौ।

जृ()वृञ्। ज्या वयोहनौ क्यादिः, जृ()ष् दिवादौ। वृञ् वरणे। जरूथोऽसुरविशेष इति वेदभाष्यम्। "वरूथः स्यात्तनुत्राणे रथगोपनवेश्मनोः" इति हेमचन्द्रः।

पातृ()। पा पाने, तृ? प्लवनतरणयोः, तुद व्यथने, वच परिभाषणे, रिचिर् विरेचने, षिच क्षरणे, ऋच स्तुतौ। "तुत्थोऽग्नावञ्जने तुत्था नीलीसूक्ष्मैलयोरपि" इति वि()आः। "तुत्थमञ्जनभेदे स्यान्नीलीसूक्ष्मैलयोः स्त्रियाम्"। "सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुसंकम्" इति मेदिनी।

अर्तेः। ऋ गतौ। "द्रोघवाचस्ते निरृथं सचन्ताम्" इति मन्त्रे निरृथो हिंसेति वेदभाष्यम्।

निशीथ। शीङ् स्वप्ने निपूर्वः, पा पाने गोपूर्वः। "घुमास्थे" तीत्वम्। गाङ् गतौ। अवपूर्वस्य धातोर्ह्रस्वत्वम्। "निशीथस्तु पुमानद्र्धरात्रे स्याद्रात्रिमात्रके" इति मेदिनी। "प्रति त्यं चारुमध्वर" मिति मन्त्रे "गोपीथः सोमपान"मिति वेदभाष्यम्। तीर्थमिति तु वृत्तिकारः।

गश्चोदि। उदि उपपदे गै शब्दे इत्यस्मात्थक्।

समीणः। इणा गतावस्मात्समि उपपदे थक्। समिथशब्दः सङ्ग्रामपर्यायेषु वैदिकनिघण्टौ पठितः। "श्रिये जातः" इति मन्त्रे "समिथाः युद्धानी"ति वेदभाष्यम्। तच्च युक्तमेव। सम्यगेति जयार्थमत्रेति व्युत्पत्तेः। संपूर्वस्येणः क्तिन्नाद्यन्तस्य लोकेऽपि युद्धार्थत्वदर्शनाच्च। उक्तं ह्यमरेण "समित्याजिसमिद्युधः" इति।

तिथपृष्ठ। तिज निशाने, पृषु सेचने, गु पुरीषोत्सर्गे,यु मिश्रणे, प्रुङ् गतौ। एते थक्प्रत्ययान्ता निपात्यन्ते। "पृष्ठं तु चरमं तनोः" इत्यमरः। "पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे" इति मेदिनी। स्तोत्रविशेषोऽपि "पृष्ठैः स्तुवते" इत्यादौ तथा निर्णयात्। गूथमिति। निपातनाद्दीर्घः। एवं यूथोऽपि ["यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदेऽपि योषिती"ति मेदिनी। यूथी पुष्पप्रेभेदे स्यान्मागध्यां चकुरण्टके] "यूथं तिर्यक्समूहेऽपि वृन्दमात्रेऽपि भाषित"मिति वि()आः। "यूथं तदग्रसरगर्वितकृष्णसार"मिति रघुः। प्रोथमिति। निपातनाद्गुणः। "प्रोथोऽस्त्री हयघोणायां ना कट()आ मघ्वगे त्रिषु" इति मेदिनी।

स्फायतिञ्चि। स्फायी वृद्धौ, तञ्चु संकोचने, वञ्चु प्रलम्भने, शक्लृ शक्तौ , क्षिप प्रेरणे, क्षुदिर् संपेषणे, सृप्लृ गतौ, तृप प्रीणने,दृप हर्षमोचनयोः, वदि अभिवादनस्तुत्योः, उन्दी क्लेदने,()इआता वर्णे, वृतु वर्तने, अजगतिक्षेपणयोः, णीञ् प्रापणे, पद गतौ, मदी हर्षे, मुद हर्षे, खिद दैन्ये, छिदिर् द्वैधीकरणे भिदिर् विदारणे, मदि स्तुतौ, चदि आह्लादने, दह भस्मीकरणे, दसु उपक्षेपे, दम्भु दम्भने, वस निवासे, वाशृ शब्दे, शीङ् स्वप्ने, हसे हसने, षिध गत्याम्, शुभ दीप्तौ। द्वाशिंशत इति। दशपाद्यां तु त्रय()स्त्रशदुक्ताः। "दम्भिवहिवसी"ति पठित्वा वह प्रापणे ऊह्नोऽनड्वानित्युदाहरणात्। माधवोऽप्येवम्। [तक्रमिति]। "तक्रं ह्रुद()इआन्मथितं पादाम्ब्वर्धाम्बु निर्जल"मित्यमरः। "वक्रः स्याज्जटिले क्रुरे पुटभेदे शनैश्चरे" इति वि()आः। "शक्रः पुमान् देवराजे कुटजाऽर्जुन भूरुहोः" इति मेदिनी। "क्षुद्रः स्यादधमक्रूरकृपणाऽल्पेषु वाच्यवत्" इति मेदिनी। तृप्र पुरोडाश इति। "न तृप्रा उरुव्यचस"मिति मन्त्रे वेदभाष्यकारैरित्थं व्याख्यातं, प्रकृतसूत्रे उज्ज्वलदत्तादिभश्च। दशपादीवृत्तौ तु तृप्रमाज्यं काष्ठं चेत्युक्तम्। तृप्रं दु#ःखमिति सुबन्धातु वृत्तौ माधवः। हिमांशुरित्यादि। हिमद्युतिरित्यन्तं शब्दार्वणः। दस्यति रोगान् क्षिपतीति दरुआः। "दरुआः खरेऽ()आनीसुते" इति मेदिनी। "दरुआः खरे चाऽ()इआनयोः" इति वि()आः।

---

सूत्रम्

काशिका-वृत्तिः

मस्जिनशोर् झलि ७।१।६०

मस्जि नशि इत्येतयोरङ्गयोः झलादौ प्रत्यये नुमागमो भवति। मङ्क्ता। मङ्क्तुम्। मङ्क्तव्यम्। नंष्टा। नंष्टुम्। नंष्टव्यम्। झलि इति किम्? मज्जनम्। नशनम्। मस्जेरन्त्यात् पूर्वं नुमम् इच्छन्ति अनुषङ्गादिलोपार्थम्। मग्नः। मग्नवन्।

लघु-सिद्धान्त-कौमुदी

मस्जिनशोर्झलि ६३९, ७।१।६०

नुम् स्यात्। ननंष्ठ। नेशिव, नेश्व। नेशिम, नेश्म। नशिता, नंष्टा। नशिष्यति, नङ्क्ष्यति। नश्यतु। अनश्यत्। नश्येत्। नश्यात्। अनशत्॥ षूङ् प्राणिप्रसवे॥ १३॥ सूयते। सुषुवे। क्रादिनियमादिट्। सुषुविषे। सुषुविवहे। सुषुविमहे। सविता सोता॥ दूङ् परितापे॥ १४॥ दूयते॥ दीङ् क्षये॥ १५॥ दीयते॥

न्यासः

मस्जिनशोर्झलि। , ७।१।६०

"मङ्क्ता" इति। "टुमस्जो शुद्धौ" (धा।पा।१४१५), तृच्(), पूर्ववदिडभावः, कुत्वञ्च, अन्त्याज्जकारात्? पूर्वो नुम्(), "स्कोः" ८।२।२९ इत्यादिना सकारलोपः, अनुस्वत्रपरसवर्णो। "नेष्टा" इति। "रधादिभ्यश्च" ७।२।४५ इति यदेण्नास्ति तदायं नुम्(), व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), ष्टुत्वम्()। इट्पक्षे झलादित्वाभावान्नुम्? नास्ति--नशितेति। "मज्जनम्(), नशनम्()" इति। ल्युट्(), "झलां जश्? झशि" ८।४।५२ इति जश्त्वम्()--सकारस्य दकारः, तस्य चत्वं जकार-। "मस्जेः" इत्यादि। यदि मस्जेरन्त्यादचः परो नुम्? स्यात्(), असंयोगदित्वात्? मलोपो न प्राप्नोति, अनुपधत्वान्न नलोपः, स चेष्यते; अन्यथा मग्नो मानवानिति न सिध्यत्()। तस्मादन्त्यात्पूर्वमाचार्या मस्जेर्नुममिच्छन्ति। कथं पुनरिष्यमाणोऽप्ययमर्थो लभ्यते? नशेरल्पाच्तरस्य पूर्वनिपातलक्षमव्यभिचारचिह्नात्()। स हि लक्षणनिरपेक्षतां सूचयन्? "मिदयोऽन्त्यात्परः" १।१।४६ इत्येतदपीह लक्षणं नापेश्रत इति सचयति। त()स्मश्चानपेक्षिते लक्ष्यानुरोधाद्यत्र मस्जेर्नुमि कृते सतीष्टं सिध्यति तत्रैव विधीयते। तेन मस्जेरन्त्यास्पर्वं नुम्? सिद्धो भवति। "मग्नः" इति। "ओदितश्च" ८।२।४५ इति निष्ठानत्वम्()॥

बाल-मनोरमा

मस्जिनशोर्झलि ३४७, ७।१।६०

नुम् स्यादिति। "इदितो नु"मित्यतस्तदनुवृत्तेरिति बावः। ननंष्ठेति। व्रश्चादिषत्वम्। ष्टुत्वम्। प्रणश्यतीति। "उपसर्गादसमासे"इति णत्वम्।

तत्त्व-बोधिनी

मस्जिनशोर्झलि ३०४, ७।१।६०

नष्टेति। "नशेर्वा" इति कुत्वमिहन शङ्क्यं, पदान्त एव तद्विधानात्। अन्यथा नष्टं नष्टिरित्यादि न सिध्येत्। प्रणश्यतीति। "उपसर्गादसमासेऽपी"ति णत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

रधिजभोरचि ७।१।६१

रधि जभि इत्येतयोः अजादौ प्रत्यये नुमागमो भवति। रन्धयति? रन्धकः। साधुरन्धी। रन्धंरन्धम्। रन्धो वर्तते। जम्भयति। जम्भकः। साधुजम्भी। जम्भंजम्भम्। जम्भो वर्तते। परापि सती वृद्धिर्नुमा बाध्यते, नित्यत्वातचि इति किम्? रद्धा। जभ्यम्।

न्यासः

रधिजभोरचि। , ७।१।६१

"रन्धयति" इति। "रध हिंसासंराद्ध्याः" (धा।पा।११९३) हेतुमण्णिच्()। "रब्धकः" इति ण्वुल। "साधुरन्धी" इति। "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति णिनिः। "रन्धंरन्धम्()" इति। "आभीक्षण्ये। णमुल्()" ३।४।२२, "आभीक्षण्ये द्वे भवतः" (वा।८८७) इति द्विर्वचनम्()। "रन्धो वत्र्तते" इति। भावे घञ्()। अथ रन्धयतीत्यादिषु परत्वात्? "अत उपधायाः" ७।२।११६ इति वृद्धिः प्राप्नोति, सा कस्मान्न भवति? इत्यत आह--"परापि सती" इत्यादि। नित्यत्वं पनः कृताकृतप्रसङ्गित्वान्नुमः। स हि कृतायां वृद्धौ प्राप्नोत्यकृतायामपीति नित्यः; वृदधिस्तु नुमि कृते न प्राप्नोत्यकारस्यानुपधत्वादित्यनित्या। "रद्धा" इति। "झषस्तथोर्धोऽधः" ८।२।४० इति तकारस्य धकारः, धातुधकारस्य जश्त्वम्()--दकारः॥

बाल-मनोरमा

रधिजभोरचि १४५, ७।१।६१

रधिजभोः। "रध हिंसाया"मिति श्यन्विकरणस्य चतुर्थान्तस्य इका निर्देशः। "इदितो नुम् धातो"रित्यतो नुमित्यनुवर्तते। तदाह--एतयोरिति। अनिदित्त्वान्नुम्विधिः। जम्भत इति। शपि नुम्। "जम्भिते"त्यादाविटि अच्परकत्वान्नुम्। अचि किम्?। रद्धा। जब्धम्। श्रम्भु इति। अकारमध्यः। ष्टुभु स्तम्भ इति। ष्टुत्वेन तकारस्य टः। षोपदेशोऽयम्। विष्टोभत इति। "उपसर्गात्सुनोती"ति षत्वम्। व्यष्टोभिष्टेति। "प्राक्सितादड्व्यवायेऽपी"ति षत्वम्। तिपृ इत्यादयः स्तोभत्यन्ता अनुदात्तेतो गताः। गुपू रक्,ण इति। ऊदिदयम्।

तत्त्व-बोधिनी

रधिजभोरचि ११९, ७।१।६१

रन्धयति। परापि वृद्धिर्नित्येन नुमा बाध्यते। अचीति किम्?। रद्दा। जब्धा।

---

सूत्रम्

काशिका-वृत्तिः

नेट्यलिटि रधेः ७।१।६२

इडादौ अलिटि प्रत्यये परे रधेर् नुमागमो न भवति। रधिता। रधितुम्। रधितव्यम्। इटि इति किम्? रन्धनम्। रन्धकः। अलिटि इति किम्? ररन्धिव। ररन्धिम। नुमि कृते संयोगान्तत्वातसंयोगल्लिट् कित् १।२।५ इति कित्त्वं न अस्ति इति नलोपो न भवति। अथ क्वसौ कथं भवितव्यम्? रेधिवानिति। कथम्? एत्वभ्यासलोपयोः कृतयोः इडागमः क्रियते, ततो नुमागमः, तस्य औपदेशिककित्त्वश्रयो लोपः। अथ इटि लिटि इत्येवं नियमः कस्मान् न क्रियते, लिट्येव इटि न अन्यत्र इति? विपरीतम् अप्यवधारणं सम्भाव्येत, इट्येव लिटि न अन्यत्र इति। तथा हि सति ररन्ध इत्यत्र न स्यात्, रधिता इत्यत्र च स्यादेव।

न्यासः

नेट�लिटि रधेः। , ७।१।६२

पूर्वेण प्राप्तस्य नुमः प्रतिषेध उच्यते। "रधिता" इत्यादि। "रधादिभ्यश्च" ७।२।४५ इतीट्()। "ररन्धिव, ररन्धिम" इति। क्रादिनियमादिट्? ७।२।१३ "परस्मैपदानाम्()" ३।४।८२ इत्यादिना वस्मसोर्वमादेशौ। ननु रधिरयमसंयोगान्तः पठ()ते, तत्र "असंयोगाल्लिट्? कित्()" १।२।५ इति कित्त्वे "अनिदिताम्()" ६।४।२४ इति नलोपः प्राप्नोति, स कस्मान्न भवति? इत्याह--"नुमि कृते" इत्यादि। "उपदेशावस्थायामेव नुम्? भवति" इत्युक्तमेतत्(), तेनोपदेशावस्थायामेव नुमि कृते संयोगान्तत्वं जातमिति कित्त्वं नास्तीति न भवति नलोपः। "अथ क्वसौ कथं भवितव्यम्()" इति। किं रराध्वानिति भवितव्यम्(), उत रेधिवानिति पृच्छति। अपर आह--"रेधिवात्()" इति। लिटः "क्वसुश्च" ३।२।१०७ इति क्वसुः, द्विर्वचनम्(), "अत एकहल्मध्ये"६।४।१२० इत्यादिनैत्वांभ्यासलोपौ, "वस्वेकाजाद्घसाम्()" (७।२।६७) इतीट्? नुम्(), "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः। "कथम्()" इत्यादि। एवं मन्यते--यदेङ्? भवति त()स्मश्च नुमा भवितव्यम्(), नुमि च सत्येकहल्मध्यता नास्तीत्येत्त्वेऽब्यासलोपयोः पुनः प्रत्यापत्त्या भवितव्यम्(), ततश्च कृतद्विर्वचन एकाण्न भवतीतीटा न भवितव्यम्(); तस्माद्ररध्वानिति युक्तं भवितुमिति। इतरस्तु कृतसयापि नुमोऽत्रि लोपेन भवितव्यम्(), ततश्चैकहल्मध्यताभावो नोपपद्यते, कुतः पुनरेत्त्वाभ्यासलोपयोः प्रत्यापत्तिः? इत्याह--"एत्त्वाभ्यासलोपयोः कृतयोः" इत्यादि। कृतद्विर्वचनानामेकाचां क्वसोरिङ् विधीयते। "ततो नुमागमः" इति। अचि तद्विधानात्? तस्यौपदेशिकत्त्वाश्रयो लोप इत्यौपदेशिकग्रहणान्नुमि कृते संयोगान्तत्वादातिदेशिकस्य कित्वस्यासम्भवात्()। "अथ" इत्यादि। इटि "नेटि" ७।२।४ इत्युच्यमाने पुर्वेण सिद्धे सति नियमर्थमेतद्भविष्यति--लिट()एवेडादौ, नान्यस्मिन्निडादाविति। तेन ररन्धिव, ररन्धिमेत्यादौ भविष्यति, न रधितेत्येवमादौ। तस्मादिटिलिटीति कस्मान्नोक्तम्(), एवं सतीष्टं सिध्यति, लघु च सूत्रं भवतीति भावः। "लिट()एव" इति। नियमस्वरूपं दर्शयति। "नान्यत्र" इत्यनेनापि तस्य व्यवच्छेद्यम्()। यतो हेतोर्नियमो न क्रियते, तं दर्शयितुमाह--"विपरीतम्()" इत्यादि। "इट()एव लिटि" इति। विपरीतनियमसय स्वरूपकथनम्()। "नान्यत्र" इत्यनेनापि तद्ध्यवच्छेद्यं दर्शयति। कस्माद्विपरीतमवधारणं नेष्यते? इत्याह--"तथा हि" इत्यादि। इट()एव लिटीत्यस्य नियमस्यानिडादिर्ल्लिङ्()व्यावर्त्त्य इतीडादावेव लिटि भवति, नानिडादाविति। ततश्चानिडादित्वाद्ररन्धेत्यत्र नुम्? न स्यात्()। रधितेत्यत्र पूर्वेम स्यादेव; नियमेनाव्यावर्त्तितत्वात्()। तस्मात्तद्दोषपरिजिहीर्षया नियमो न क्रियते॥

बाल-मनोरमा

नेट�लिटि रधेः ३४६, ७।१।६२

नेट()लिटि रधेः। "इदितो नुम् धातो"रित्यतो नुमित्यनुवर्तते। तदाह--लिड्वर्जे इटीति। अङित्विति। पुषाद्यङि कृते सतीत्यर्थः। अरधदिति। "मो अहं द्विषतेऽरधम्।" णश अदर्शने इति। णोपदेशोऽयं सेट्। "रधादिभ्यश्चे"ति वट्। तत्र इट्पक्षे आह--नेशिथेति। "थलि च सेटी"त्येत्वाभ्यासलोपाविति भावः। इडभावपक्षे ननश्- थ इति स्थिते--

तत्त्व-बोधिनी

नेट�लिटि रधेः ३०३, ७।१।६२

नेट()लिटि। इटीति किम्?। रन्धकः। अलिटीति किम्?। ररन्धिव। नुमि कृते संयोगात्परत्वेनाऽकित्त्वान्नलोपो न।

---

सूत्रम्

काशिका-वृत्तिः

रभेरशब्लिटोः ७।१।६३

रभेरङ्गस्य शब्लिङ्वर्जिते ऽजादौ प्रत्यये परतो नुमागमो भवति। आरम्भयति। आरम्भकः। साध्वारम्भी। आरम्भमारम्भम्। आरम्भो वर्तते। अशब्लिटोः इति किम्? आरभते। आरेभे। अचि इत्येव, आरब्धा।

न्यासः

रभेशब्लिटोः। , ७।१।६३

"आरेभे" इति। "रभ राभस्ये" (धा।पा।९७४) लिट्(), अनुदात्तेत्त्वादत्मनेपदम्()। "लिटस्तझयोरेशिरेच्()" ३।४।८१ इत्येशू, पूर्ववदेत्वाभ्यासलोपौ॥

बाल-मनोरमा

रभेरशब्लिटोः ४०९, ७।१।६३

रभेरशब्लिटोः। "इदितो नुम्धातोरित्यतो नुमिति। "रधिजभोरची"त्यतोऽचीति चानुवर्तते। तदाह -- रभेर्नुमित्यादि।

तत्त्व-बोधिनी

रभेरशब्लिटोः ३५८, ७।१।६३

रभेरशब्लिटोः। "रधिजभो"रित्यतोऽचीति, "इदितः" इत्यतो नुमितिचानुवर्तते। अचि किम?। आरब्धम्। अशब्लिटोः किम्?। रभते। रेभे।

---

सूत्रम्

काशिका-वृत्तिः

लभेश् च ७।१।६४

लभेश्च अजादौ प्रत्यये शब्लिङ्वर्जिते नुमागमो भवति। लम्भयति। लम्भकः। साधुलम्भी। लम्भंलम्भम्। लम्भो वर्तते। अशब्लिटोः इत्येव, लभते। लेभे। अचि इत्येव, लब्धा। लभेश्च पृथग्योगकरनम् उत्तरार्थम्।

न्यासः

लभेश्च। , ७।१।६४

"पृथग्योगकरणमुत्तरार्थम्()" इति। उत्तरत्र्त्रेण लभेरेव कार्यं यथा स्यात्। रभेर्मा भूदिति। यदि "रभिलभ्योरशव्लिटोः" इत्येको योगः क्रियते, ततो रभिरित्यनुवृत्तिरुत्तरत्र स्यात्()। अतश्च तस्याप्युत्तरत्र कार्यं प्रसज्येत॥

बाल-मनोरमा

लभेश्च ४१०, ७।१।६४

लभेश्च। लभेरपि नुम् स्यादचि, नतु शब्लिटोरित्यर्थस्य स्पष्टत्वादनुक्तिः। अररम्भदिति। नुमि कृते संयोगपरत्वेन अकारस्य लघुत्वाऽभावान्न सन्वत्त्वमिति भावः। "हि गतौ वृद्धौ चे"त्यस्माच्चङि "अजीहय"दित्यत्र "हेरचङी"ति हकारस्य कुत्वं नेत्याह-- हेरचङीति। "अत्स्मृदृ()त्वरे"ति सूत्रं चुरादौ "प्रथ प्रख्याने" इति धातौ व्याख्यातम्। असस्मरदिति। अत्र "सन्यतः" इतीत्वे प्राप्ते अत्त्वम्। अत एव ज्ञापकादनेकहल्व्यवधानेऽपि लघुपरत्वमित्युक्तं प्राक्। संयोगपरत्वेन लघुत्वाऽभावान्नाऽभ्यासदीर्घः। अददरदिति। "दृ? विदारणे" इत्यस्य रूपम्। अत्रापि "सन्यतः" इत्यस्यापवादोऽयम्। दीर्घमाशङ्क्याह-- तपरत्वसामर्थ्यादिति। अतत्वरत्। अपप्रथत्। अमम्रदत्। अतस्तरत्। अपस्पशत्।

तत्त्व-बोधिनी

लभेश्च ३५९, ७।१।६४

योगविभागः "आङो यी"त्यत्र लभेरेवानुवृत्तर्यथा स्यादिति।

* काण्यादीनांवेति वक्तव्यं। काण्यादीनामिति। "कण निमीलने"। रण शब्दे"। "श्रम छेदने"। "हेठ बिबाधायाम्। षट्। "ह्वेञ् स्पर्धायां शब्दे च"। "वण शब्दे"। "लुट (ठ) प्रतिघाते" लुप्लृ छेदने"। लोपीति णिजन्तनिर्देशः। लापयतीति। पाठान्तरम्। लप व्यक्तायां वाचि। केचित्तु लप हेठ इति पठन्ति। न्यासे चत्वारः। "चण दाने"। "लुठ स्तेये" भ्वादिः। चुरादौ दण्डकपाठे भाषार्थकोऽपि। अजिहेठत्।

---

सूत्रम्

काशिका-वृत्तिः

आङो यि ७।१।६५

आङः उत्तरस्य लभेः यकारादिप्रययविषये नुमागमो भवति। आलम्भ्या गौः। आलम्भ्या वडवा। प्राक् प्रत्ययोत्पत्तेः नुमि कृते विहितमदुपधत्वम् इति ऋहलोर् ण्यत् 3।1।124 इति ण्यत्प्रत्ययः, तत्र कृदुत्तरपदप्रकृतिस्वरत्वेन अन्तस्वरितत्वं भवति। यति तु पुनरुत्तरपदाद्युदात्तत्वं स्यात्। आङः इति किम्? लभ्यम्। कथम् अग्निष्टोम आलभ्यः इति? सर्वे विधयश् छन्दसि विकल्प्यन्ते। अथ वा आलभ्यः इत्यत्र नुमि कृते ऽनुषङ्गलोपः क्रियते।

न्यासः

आङो यि। , ७।१।६५

"यकारादौ प्रत्यय" इति। अनेन "यि" इत्यस्याः सप्तम्या विषयसप्तमीत्वं दर्शयन्? यकारादौ प्रत्यये ववयभूतेऽनुत्पन्न एव नुम्? भवतीति दर्शयति। "प्राक्()" इत्यादिना विषयसप्तम्यां सत्यां यदिष्टं सम्पद्यते तदाचष्टे। परसप्तम्यां हि पूर्वं प्रत्ययेन भवितव्यम्(), पश्चान्नुमा, ततश्च "अदुपधात्()" (३।१।९८) इति यत्? प्रसज्येत। विषयसप्तम्यां तु प्रागुत्पन्नेन नुमाऽदुपधत्वस्य विहतत्वात्? "ऋहलोण्र्यत्()" 3।1।124 इत ण्यदेव भवति। कः पुनण्र्यति यत वा विशेषः; यावतोभयत्रापि तदेव रूपमिति, व्यत्प्रत्ययेऽपि वृद्ध्या न भवितव्यम्(), तथा च प्रागुक्तम्()--"परापि सती वृद्धिर्नित्यत्वाभुमा बाध्यते" इति? अत आह--"तत्र" इत्यादि। तत्र ण्यति सति तित्स्वरितत्वात्? "गतिकारकोपपदात्? कृत्()" 6।2।138 इति प्रकृतिस्वरः; तेनालम्भ्य इत्युदाहरणमन्त्यस्वरितं भवति। यति तु "यतोऽनावः" 6।1।207 इत्याद्युदात्तत्वे सति प्रकृतिवद्भावेनाप्युदात्तत्वमित्यस्ति विशेषः। "लभ्यम्()" इति। यदन्तमेतत्()। "एवमालभ्य" इत्येतदपि। आलभ्यत इति भावे कर्मणि वा लकारः। "अनुषङ्गलोपः क्रियते" इति। "अनिदताम्()" 6।4।24 इत्यादिना॥

बाल-मनोरमा

आङो यि ६६६, ७।१।६५

आङो यि। "इदितो नुम् धातो"रित्यतो नुमिति, "लभेश्चे"त्यतो लभेरिति चाऽनुवर्तते। तदाह-- आङः परस्येति। विवक्षिते इति। "यी" इति विषयसप्तमीति भाष्ये स्पष्टम्। "विवक्षिते" इत्यस्य प्रयोजनमाह--नुमि कृते इति। यत्प्रत्यये विवक्षिते तत्प्रवृत्तेः प्रागेव नुमि कृते अदुपधत्वाऽभावाद्यत्प्रत्ययस्याऽप्रवृत्तेण्र्यदेवेत्यर्थः। "यति परे नु"मित्यर्थे तु अदुपधत्वाद्यदेव स्यान्नतु ण्यदिति भावः। आलम्भ्यो गौरिति। यद्यपि यण्ण्यतोर्न रूपभेदस्तथापि ण्यति कृते "तित्स्वरित"मिति स्वरितत्वम्, यति तु "यतोऽनावः" इत्याद्युदात्तत्वमिति स्वरभेदः फलम्।

---

सूत्रम्

काशिका-वृत्तिः

उपात् प्रशंसायाम् ७।१।६६

उपादुत्तरस्य लभेः प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति। उपलम्भ्या भवता विद्या। उपलम्भ्यानि धनानि। ण्यत्प्रत्ययान्तत्वातन्तस्वरितत्वम् एव। प्रशंसायाम् इति किम्? उपलभ्यम् अस्माद् वृषलात् किञ्चित्। पोरदुपधत्वाद् यत्प्रत्ययान्तम् इदम्।

न्यासः

उपत्प्रशंसायाम्?। , ७।१।६६

"प्रशंसायाम्()" इति। उपलभ्य इति स्तुतौ। अतिप्रशंस्य इत्यर्थः। "उपलभ्यम्()" इति। प्रप्तव्यमित्यर्थः॥

बाल-मनोरमा

उपात्प्रशंसायाम् ६६७, ७।१।६६

उपात्प्रशंसायाम्। उपात्परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते प्रशंसायां गम्यमानायामित्यर्थः। उपलम्भ्यः साधुरिति। समीपे प्राप्य इत्यर्थः। साधुशब्दात् प्रशंसा गम्यते। इहापि नुमि कृते अदुपधत्वाऽभावाण्ण्यदेव। स्वरे विशेषः पूर्ववत्।

तत्त्व-बोधिनी

उपात्प्रशंसायाम् ५५५, ७।१।६६

उपात्प्रशंसायाम्। यादौ प्रत्यये विवक्षिते उपपूर्वाल्लभेर्नुम् स्यात्प्रशंसायाम्। सा चेह गम्यमानतया विशेषणम्। धात्वर्थस्तु प्राप्तिरेव,तेन यस्य प्राप्तिर्यस्माद्वा प्राप्तिः प्रशंसाहेतुर्भवति तदिहोदाहरणम्। विपरीतं तु प्रत्युदाहरणम्। इहापि "यादौ प्रत्यये विवक्षिते" इत्यर्थान्नुमि कृते ण्यति सत्यन्तस्वरितत्वं भवति। यति तु सत्युत्तरपदाद्युदात्तत्वं स्यात्। प्राचा तु स्वरे विशेषमनालोच्य "पोरदुपधा"दिति यतमेव स्वीकृत्य यति परे नुमिति व्याख्यातं, तदाकरिरोधादुपेक्ष्यमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गात् खल्घञोः ७।१।६७

उपसर्गादुत्तरस्य लभेः खल्घञोः परतः नुमागमो भवति। ईषत्प्रलम्भः। सुप्रलम्भः। दुष्प्रलम्भः। घञि प्रलम्भः। विप्रलम्भः। सिद्धे सत्यारम्भो नियमार्थः, उपसर्गादेव लभेः खल्घञोः परतो नुमागमो भवति, न अन्यत्र। ईषल्लभः। लाभो वर्तते।

न्यासः

उपसर्गात्खल्घञोः। , ७।१।६७

"ईषत्प्रलम्भः" इति "ईषद्()दुःसुषु" ३।३।१२६ इत्यादिना खल्()। "दुष्प्रलम्भः" इति। "इदुदुपधस्य" ८।३।४१ इत्यादिना षत्वम्()। "विप्रलम्भः" इति। भावे घञ्()। ननु च "लभेश्च" (७।१।६४) इत्यनेन नुम्? सिद्धः, तत्किमर्थोऽयमारम्भः? इत्याह--"सिद्धे" इत्यादि। "अन्यत्र न भवति" इति तद्व्यवच्छेद्यम्()। "उपसर्गात्? खल्घञोरेव" इत्येष तु

विपरीतनियमोऽत्र न सम्भावनियः; "गृधिवञ्च्योः प्रलम्भने" १।३।६९ इति निर्देशात्()॥

---

सूत्रम्

काशिका-वृत्तिः

न सुदुर्भ्यां केवलाभ्याम् ७।१।६८

सु दुरित्येताभ्यां केवलाभ्याम् अन्योपसर्गरहिताभ्याम् उपसृष्टस्य लभेः खल्घञोः परतः नुमागमो न भवति। सुलभम्। दुर्लभम्। घञि सुलाभः। दुर्लाभः। केवलाभ्याम् इति किम्? सुप्रलम्भः। दुष्प्रलम्भः। सुदुर्भ्याम् इति तृतीयां मत्वा केवलग्रहणं क्रियते। पञ्चम्यां हि व्यवहितत्वादेव अप्रसङ्गः। अतिसुलभम् इत्यत्र कर्मप्रवचनीयत्वादेतेः केवल एव सुशब्द उपसर्गः इति भवति प्रतिषेधः। यदा तु अतिशब्दो न कर्मप्रवचनीयः, तदा नुम् भवति एव अतिसुलम्भः इति। पञ्चमीनिर्देशपक्षे ऽप्येवम् अर्थं केवलग्रहणम् कर्तव्यम्।

न्यासः

न सुटुर्भ्यां केवलाभ्याम्?। , ७।१।६८

"उपसृष्टस्य" इति। उपसर्गेण सम्बद्धस्येत्यर्थः, "सुलाभः" इति। सुशब्दोऽयमाधिक्यार्थः, नाकृच्छ्रार्थः, यथा--सुषिक्तं नाम किं तवात्रेत। "दुर्लाभः" इति। "दुशब्दो निन्दार्थः, न कृच्छ्रार्थः, यथा--दुर्ब्राह्मण इति। तेन घञेव भवति, न खल्()। "सुदुर्म्यामिति तृतीयां मत्वा केवलग्रहणं क्रियते" इति। "सुदिर्भ्याम्()" इति। तृतीयायामभ्युपेतायां सुदुर्भ्यामुपसृष्टस्य लभेर्नुम्? न भवतीत्येषोऽर्थः सम्पद्यते। व्यवहितेनाऽप्युपसृष्टो भवत्येव। तत्रासति केवलग्रहणे सुप्रलम्भः, दुष्प्रलम्भ इत्यत्रापि प्रतिषेधः स्यात्()। तस्मात्? तृतयायामभ्युपेतायां केवलग्रहणं क्रियते। अथ पञ्चत्र्यां केवलग्रहणं कस्मान्न क्रियेतेति प्रश्नावसरत आह--"पच्चम्यां हि" इत्यादि। पञ्चम्यां ह्यस्यां निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादनन्तरस्यैव प्रतिषेधेन भवितव्यम्(), इह च प्रशब्देन व्यवधानम्(), अतः प्रसङ्ग एव नास्ति, तत्? किं केवलग्रहणेन? यद्येवम्? न कत्र्तव्यमेव केवलग्रहणम्(), पञ्चमीमेनां प्रतिज्ञास्याम इति? नैतदस्ति; सुप्रलम्भः दुष्प्रलम्भ इति--प्रत्युदाहणद्वयमभिप्रेत्यैतदुक्तम्()। "पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्गः" इति। अतिसुलम्भ इत्यत्र यदाभिशब्दोऽप्युपसर्गस्तदा ह्यसति केवलग्रहणे प्रतिषेधः प्रसज्येत; अव्यवधानात्()। तस्मात्? सर्वथा केवलग्रहणस्य कत्र्तव्यत्वात्(), कमव्यतिक्रमे च प्रयोजनाभावात्? तृतीयैवेषा युक्ता प्रतिज्ञातुम्()। अतिसुलभमित्यत्रातिनोपर्गेन सुशब्देन लभिरुपसृष्टः, तस्मात्? प्रतिषेधेन भवितव्यमिति कस्याचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"अतिसुलभमित्यत्र" इत्यादि। कर्मप्रवचनीयत्वं पुनरतिशब्दस्य "अतिरतिक्रमणे च" १।४।९४ इति कर्मप्रवचनीसंज्ञाविधानात्()। यस्य कर्मप्रवचनीयसंज्ञा तस्योपसर्गसंज्ञा नास्ति; एकसंज्ञाधिकारात्(), कर्मप्रववनायसंज्ञयोपसर्गसंज्ञाया बाधतत्वात्()। कथं पुनः कर्मप्रचवनीयस्य हि तस्यापि केवलत्वमुपपद्यते? एवं मन्यते--केवग्रहणात्? स्वशब्दोपात्तादन्यत्? तुल्यजातीयमेव व्यवच्छेद्यम्(), न तु विजातीयम्()। तथा हि--"केवलभ्यां विझातीयेन कर्कटादिना सहितौ प्रविशत एव। अत एवान्योपसर्गरहिताभ्यामित्यनेन तुल्यजातीयनिवृत्तयर्थता केवलग्रहणस्य दर्शिता। यदि तु सर्वस्य तुल्यजातीयस्य विजातीयस्यापि केवलग्रहणेन निवृत्तिः कर्त्तु शक्यते, तदोपसर्गगरहणमनर्थकं स्यात्(), अन्यरहिताभ्यामित्येवं ब्राऊयात्()। तस्माद्विजातीयेन केवलग्रहणेन निवृत्तिः कर्त्तु शक्यते, तदोपसर्गग्रहणमनर्थकं स्यात्(), अन्यरहिताभ्यामित्येवं ब्राऊयात्()। तस्माद्विजातीयेन सहितावपि तौ केवलावेवेत्यतिसुलभमित्यत्र कर्मप्रवचनीयसहितेनापि सुशब्देनोपसृष्टस्य भवत्येव प्रतिषेधः। यत्र तर्हि पूजातिक्रमणाभ्यामन्यत्र वृत्तिः, अतिशब्दसय तत्र कर्मप्रवचनीयसंज्ञा न भवति, तदा कथम्()? इत्याह--"यदा तु" इत्यादि। पञ्चमीनिर्देशेऽप्येवमर्थं केवलग्रहणं कत्र्तव्यमिति; अन्यथा ह्यत्र व्यवधानाभावात्? प्रतिषेधः

प्रसज्येतेत्यभिप्रायः। ननु च प्रसुलम्भः--इत्येवमर्थं केवलग्रहणं कत्र्तव्यम्()? नैतदस्ति; उक्तं हि भाषेय--"नैषोऽस्ति प्रयोगः" इति॥

तत्त्व-बोधिनी

न सुदुभ्र्यां केवलाभ्याम् १५८०, ७।१।६८

यदा स्वती इति। "सुः पूजायाम्", "अतिरतिक्रमणे चे"ति तयोः कर्मप्रवचनीयत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा चिण्णमुलोः ७।१।६९

चिण् णमुलित्येतयोः विभाषा लभेर् नुम् भवति। अलाभि, अलम्भि। लाभंलाभम्, लम्भंलम्भम्। व्यवस्थितविभाषा चेयम्, तेन अनुपसृष्टस्य विकल्पः, उपसृष्टस्य नित्यं नुम् भवति। प्रालम्भि। प्रलम्भम्।

लघु-सिद्धान्त-कौमुदी

विभाषा चिण्णमुलोः ७६२, ७।१।६९

लभेर्नुमागमो वा स्यात्। अलम्भि, अलाभि॥

लघु-सिद्धान्त-कौमुदी

इति भावप्रक्रिया ७६२, ७।१।६९

लघु-सिद्धान्त-कौमुदी

अथ कर्मकर्तृप्रक्रिया ७६२, ७।१।६९

लघु-सिद्धान्त-कौमुदी

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ७६२, ७।१।६९

न्यासः

विभाषा चिण्णमुलोः। , ७।१।६९

"अलाभि" इति। लुङ्(), "चिण्भावकर्मणोः" ३।१।६६ इति चिण्(), "चिणो लुक्()" ६।४।१०४ इति तकारसय लुक्()। "अनुपसृष्टस्य" इति। उपसर्गेणासम्बदधस्येत्यर्थः॥

बाल-मनोरमा

विभाषा चिण्णमुलोः १७५४, ७।१।६९

विभाषा चिण्णमुलोः। "लभेश्चे"त्यतो लभेरिति, "इदतो नु"मित्यतो नुमिति चानुवर्तते इति मत्वा शेषं पूरयति-- लभेर्नुमागमो वेति। ननु प्रालम्भि उपालम्भीत्यादौ उपसर्गपूर्वस्यापि लभेर्नुम्विकल्पः स्यादित्यत आह-- व्यवस्थितेति। प्रादेरुपसर्गात्परस्य लभेर्नित्यं नुम्, अनुपसर्गात्परस्ये"ति वार्तिकात्, भाष्ये "उपसर्गात् खल्घञो" रित्यतौपसर्गादिति "न सुदुभ्र्या"मित्यतो नेति चानुवर्त्य उपसर्गात्परस्य लभेः "विभाषा चिण्णमुलो"रिति नेति व्याख्यातम्। एतेन प्रपूर्वस्य लभेर्नित्यं नुमिति व्याख्यानं परास्तम्। "लः कर्मणी"ति लकाराविहिताः, तथा "तयोरेवे कृत्यक्तखलर्थाः" इति कर्मणि

कृत्यादिप्रत्यया वक्ष्यन्ते। ते तावदद्विकर्मकधातुषु कतरस्मिन् कर्मणि भवन्तीत्यत्र व्यवस्थामाह-- द्विकर्मकाणां त्विति। "कर्मप्रत्ययव्यवस्था वक्ष्यतेट इति शेषः। तां व्यवस्थां साद्र्धश्लोकेन दर्शयति-- गौणे कर्मणीत्यादिना। दुह्याच्पच्दण्ड्()रुधिप्रच्छिचिब्राऊशासुजिमथ्मुषां गौणे कर्मणि लादयो मता इत्यन्वयः। "अकथितं चे"ति सूत्रेण यस्य कर्मसंज्ञा तद्गौणं कर्मेति बोध्यम्। प्रधाने इति। नीह्मकृष्वहां प्रधाने कर्मणि लादयो मता इत्यन्वयः। "अकथितं चे"ति सूत्रादन्येन यस्य कर्मसंज्ञा तत्प्रधां कर्मेति बोध्यम्। अथ "गतिबुद्धी"ति सूत्रेण ये द्विकर्मकास्तेषु व्यवस्तामाह-- बुद्धीति। बुद्ध्यर्थकस्य भक्षार्थकस्य शब्दकर्मकाणां च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो मता इत्यन्वयः। इह "गतिबुद्धी"त्यनेन यस्य कर्मसंज्ञा तद्गौणं कर्म। तदितरत्तु प्रधानं कर्म। प्रयोज्येति। अन्येषां = गत्यर्थानामकर्मकाणां "ह्मक्रो"रिति सूत्रोपात्तह्मकृञोश्च प्रयोज्यकर्मणि लादयो मता इत्यन्वयः। अयं साद्र्धश्लोकः "अकथितं चे"ति सूत्रस्थवार्तिकभाष्यसङ्ग्रह इति बोध्यम्। गौर्दुह्मते पय इति। "गोपेने"ति शेषः। अत्र गोरप्रधानकर्मत्वात्तस्मिन् कर्मणि लकारः। तिङाऽभिहितत्वाद्गोः प्रथमा। प्रधानकर्मत्वात्पय इति द्वितीयान्तं, तस्य तिङाऽनभिहितत्वात्। बलिर्याच्यते वसुधाम्। अविनीतो विनयं याच्यते। तण्डुला ओदनं पच्यन्ते। गर्गाः शतं दण्ड()न्ते। व्रजो रुध्यते गाम्। माणवकः पन्थानं पृच्छ्यते। वृक्षोऽवचीयते फलानि। माणवको धर्ममुच्यते, शिष्यते वा। शंत जीयते देवदत्तः। सुधां क्षीरोदधिर्मथ्यते। देवदत्तः शतं मुष्यते। एतेषु गौणकर्मण लकारः। अथ "प्रधाने नीह्मकृष्वहा"मित्यत्रोदाहरति-- अजा ग्रामं नीयते इत्यादि। प्रतिक्रियमजा ग्राममित्यन्वेति। उह्मत इत्यत्र वहतेर्यजादित्वात्संप्रसारणम्। अत्र अजायां प्रधानकर्मणि लकारः, ग्रामस्याऽनभिहितत्वाद्द्वितीया। बुद्ध्यर्थस्योदाहरति --बोध्यते माणवकं धर्मः, माणवको धर्ममिति वेति। "गुरुणे"ति शेषः। अत्र माणवके गौणकर्मणि, धर्मे वा प्रधानकर्मणि ण्यन्ताल्लकारः। भक्षार्थस्य तु अश्यन्ते देवा अमृतं हरिणा, अश्यतेऽमृतं देवानिति वा उदाहार्यम्। शब्दकर्मस्य तु वेदोऽध्याप्यते विधैं हरिणा, वेदमध्याप्यते विधिरिति वेत्युदाहार्यम्। यदुक्तं "गत्यर्थानामकर्मकाणां ह्मकृञोश्चेत्येतेषां प्रयोज्यकर्मणि लकार" इति। तत्र गत्यर्थस्योदाहरति-- देवदत्तो ग्रामं गम्यते इति। "यज्ञदत्तेने"ति शेषः। अत्र प्रयोज्यकर्मणि देवदत्ते गमेण्र्यन्ताल्लः। ननु अकर्मकाणां ण्यन्तानां प्रयोज्यकर्मण्येव लादय इति वयवस्था व्यर्था। तत्र प्रयोज्यं विना अन्यस्य कर्मण्योऽभावादित्याशङ्क्य "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्य"मिति वार्तिकेन अकर्मकधातू#आनमपि देशकालादिकर्मत्वेन ण्यन्तानां तेषां द्विकर्मकतया प्रयोज्यकर्मण्येव तत्र लादय इति व्यवस्था प्रयोजनवतीत्यभिप्रेत्य "मासमास्यते माणवक" इति ण्यन्ते प्रयोज्यकर्मणि माणवके एव लो, न तु मासे कर्मणीत्युदाहरिष्यते। एवं तर्हि अण्यन्तेष्कर्मकेषु "मासमास्यते देवदत्तेने"ति भावे लकारो न स्यात्, "सकर्मकेभ्यः कर्मणि कर्तरि च ल" इति नियमात्। "मास आस्यते देवदत्तेने"त्येव कर्मणि लकारः स्यादित्याशङ्क्य आह-- अकर्मकाणामित्यादि।ये अकर्मकाः "कर्तुरीप्सिततमं कर्म", "तथायुक्तं चानीप्सित"मिति सूत्रसिद्धकर्मरहिताः "आस उपवेशने", "वृतु वर्तने" इत्यादयः, तेषाम् "अकर्मकधातुभिर्योगे" इति वार्तिकसिद्धकर्मणां कर्मणि भावे च लकार इष्यते इत्र्थः। न चेदं वार्तिकमिति भ्रमितव्यं, भाष्ये अदर्शनात्। किंतु न्यायमूलकमेव, अकर्मधातुभिर्योगे देशकालादीनां कर्मसंज्ञाविकल्पस्य भाष्याद्यभिमतत्वात्। यथा चैतत्तथा कारकाधिकारे "अकर्मकधातुभिर्योगे" इति वचनव्याख्यावसरे अवोचाम। तदाह-- मासो मासं वा आस्यते देवदत्तेनेति। अत्र मासस्य कर्मत्वपक्षे कर्मणि लकारः, मासस्याऽभिहितत्वात्प्रथमा। मासस्य कर्मत्वाऽभावपक्षे तु भावे लकारः। मास इति सप्तमी। मासमिति त्वपपाठः। अथ प्रकृतनुमसरति-- णिजन्तात्त्विति। आसधातो प्रकृतिसिद्धकर्मरहितत्वेन अकर्मकाण्णौ मासस्य कर्मत्वपक्षेऽपि प्रयोज्यकर्मण्येव लकार इत्यर्थः। मासमास्यते माणवक इति। ण्यन्तात्प्रयोज्यकर्मणि माणवके लः। मासस्याऽनभिहितत्वाद्द्वितीया। ह्मकोस्तु हार्यते वा भृत्यः कटं देवदत्तेन। इति भावकर्मप्रक्रिया।

अथ भावकर्मार्थाः।

-------------

तत्त्व-बोधिनी

विभाषा चिण्णमुलोः १३५१, ७।१।६९

विभाषा। "लभेश्चे"त्यतो लभेरिति वर्तते। णमुलि--लभंलभम्। लाभंलाभम्। प्रादेस्तु--प्रलम्भंप्रलम्भमित्येव। अथ ये द्विकर्मकास्तेषु लकृत्यक्तखलर्थाः किं मुख्ये कर्मणि, उत गौणे, किं वोभयोरिति संदेहे व्यवस्थामाह----द्विकर्मकाणां त्विति।दुह्यादेरिति। दुह्याच्पचिति श्लोके पूर्वार्धोपात्ता द्वादश दुह्यादयस्तेभ्यो गौणे कर्मणि लादयो मता इत्यन्वयः। "अकथितं चे"ति सूत्रेण यस्य कर्मसंज्ञा तद्गौणम्। "गतिबुद्धी"ति सूत्रेण ये द्विकर्मकास्तत्र व्यवस्थामाह-- तद्गौणम्। प्रयोज्येति। अणौ कर्तुणौ कर्मसंज्ञा यस्य तत्प्रयोज्यकर्म। अन्येषामिति। गत्यर्थाऽकर्मकह्मकरोतीनाम्। लादय इति। कृत्यक्तखलर्था आदिशब्देन ग्राह्याः। गौर्दुह्यते इति। "देवदत्तेने"ति शेषः।कृत्यादिषु गौर्दोग्धव्या। दोहनीया पयः। गौः सुदोहा दुर्दोहा पयः। अजा ग्रामं नेतव्या। नयनीया। हरत्वया। हरणीया। अजा ग्रामं नेया इत्याद्युहर्तव्यम्। ग्रामं गम्यत इति। "यज्ञदत्तेने"त्यध्याहारः। माणवक इति। अयं प्रयोज्यः कर्ता। देवदत्तेनेति प्रयोजकस्त्वध्याहर्तव्यः।

इति तत्त्वबोधिन्याम् भावकर्मप्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

उगिदचां सर्वनामस्थाने ऽधातोः ७।१।७०

उगितामङ्गानां धातुवर्जितानाम् अञ्चतेश्च सर्वनामस्थाने परतो नुमागमो भवति। भवतु भवान्, भवन्तौ, भवन्तः। ईयसुन् श्रेयान्, श्रेयांसौ, श्रेयांसः। शतृ पचन्, पचन्तौ, पचन्तः। अञ्चतेः प्राङ्, प्राञ्चौ, प्राञ्चः। उगिदचाम् इति किम्? दृषद्, दृषदौ, दृषदः। सर्वनामस्थाने इति किम्? भवतः पश्य। श्रेयसः पश्य। अञ्चतिग्रहणं नियमार्थम्, अञ्चतेरेव धातोरन्यस्य मा भूत्। उखास्रत्। पर्णध्वत्। अधातोः इति किम्? अधातुभूतपूर्वस्य यथा स्यात्। गोमन्तम् इच्छति गोमत्यति, गोमत्यतेरप्रत्ययः गोमान्। अत्र हि धातुत्वादञ्चतिग्रहणान् न स्यात्।

लघु-सिद्धान्त-कौमुदी

उगिदचां सर्वनामस्थानेऽधातोः २९१, ७।१।७०

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे। मघवान्। मघवन्तौ। मघवन्तः। हे मघवन्। मघवद्भ्याम्। तृत्वाभावे मघवा। सुटि राजवत्॥

न्यासः

उगिदचां सर्वनामस्थानेऽघातोः। , ७।१।७०

उगिति प्रत्याहारग्रहणम्()--उक्? इद्? येषां तान्युगिन्ति, अङ्गविशेषणञ्चैतत्(), अत आह--"उगितामङ्गानाम्()" इति। अजिति प्रत्याहारस्य ग्रहणमेवेदं वा स्यात्(), अञ्चतेर्वा लुप्तनकारस्य? तत्र यदि प्रत्याहारग्रहणं स्यात्(), "नपुंसकस्य झलचः" ७।१।७२ इत्यत्र सूत्रे पुनरज्ग्रहणं न कुर्यात्(), तद्धि प्रत्याहाग्रहणम्(), नाञ्चेः; झला साहचर्यात्()। तस्मादञ्चतेरिदं ग्रहणमित्यालोच्याह--"अञ्चतेश्च" इत्यादि। "भवान्()" इति। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "श्रेयान्()" इति। प्रशस्यशब्दात्? "द्विवचनविभज्योपपदे तरबीयसुनौ" ५।३।५७ इतीयसुन्(), "प्रशस्यस्य श्रः" ५।३।६० इति श्रादेशः, "प्रकृत्यैकाच्()" ६।४।१६३ इति प्रकृतिवद्भावाट्टिलोपाभावः, "आद्गुणः" ६।१।८४, "सान्तमहतः

संयोगस्य" ६।४।१० इति दीर्घः। ननु चात्र नाङ्गमुगित्(), किं तर्हि? प्रत्ययः? नैतदस्ति; अङ्गमप्युगिदेव। कथम्()? अवयवावयवेनापि समुदायस्य सम्बन्धो भवत्येव, यथा--देवैदत्तस्याङ्गुलिरित्यत्र देवदत्तस्यावयवस्य हस्तस्य योऽवयवोऽङ्गुलिस्तेन देवदत्तस्य सम्बन्धः। तस्मादिहापि प्रत्ययस्यावयवो य उक्? इत्संज्ञकस्तेनाङ्गस्यापि सम्बन्धोऽस्त्येवेत्यङ्गमप्युगिदेव। "प्राङ्()" इति। प्राञ्चतति ऋत्विगादिसूत्रण ३।२।५९ क्विन्(), नुम्हल्ङ्यादि६।१।६६ संयोगान्तलोपौ ८।२।२३, "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्()--नकारस्य ङकारः। "प्राञ्चौ, प्राञ्चः" इति। चुत्वम्()--नकारस्य ञकारः। अथाञ्चतिग्रहणं किमर्थम्(), यावतोगित्त्वादेव तस्य नुम्? सिद्धः? इत्यत आह--"अञ्चतिग्रहणम्()" इत्यादि। उखारुआत्(), पर्णध्वत्()" इति। "रुआऊन्सु ध्वन्सु "अधः पतने" (धा।पा।७५४,७५५), ["अवरुआंसने"--धा।पा।] उखायां रुआंसते, पर्णानि ध्वंसते। "क्विप्च" ३।२।७६ इति क्विप्(), नलोपः, "वसुरुआंसुध्वंस्वनडुहां दः" ८।२।७२ इति सकारस्य दकारः, तस्य "वाऽवसाने" ८।४।५५ चत्र्वम्()--तकारः। "अधातोरिति किम्()" इति। अञ्चतिग्रहणादेव नियमार्थाद्धातेर्न भवतीत्यभिप्रायः। अधातोरिति नायं प्रसज्यप्रतिषेधः, किं तर्हि? पर्युदास इति मन्यमान आह--"अधातुभूतपूर्वस्यापि यथा स्यात्()" इति। पूर्वपक्षवादिनाऽधातोरिति प्रसज्यप्रतषेधोऽयमिति मन्यमानेन चोदितम्()। सिद्धान्तवादिना पर्युदासेन परिह्मतम्()। "गोमत्यति" इति। गोमच्छब्दात् "सुप आत्मनः क्यच्()ट ३।१।८। "गोमत्यतेरप्रत्ययः" इति। अश्रावी प्रत्ययोऽप्रत्ययः, स पुनः क्विप्(), "अतो लोपः" ६।४।४८ इति दीर्घः--गोमान्()। कस्मात्? पुनरसत्यधातुग्रहणेऽत्र न सिध्यतीत्यत आह--"अत्र हि" इत्यादि। असत्यधातुग्रहणेऽञ्चतिग्रहणान्नियमाद्यथोखरुआदित्यादौ न भवति, तथात्रापि न स्यात्()। भवति ह्रयमपि धातुः--सतद्यपि धातुत्वे क्विबन्तत्वे "क्विबन्ता धातुत्वं न जहति" (व्य।प।१३२) इति कृत्वा। तस्मादधातुग्रहणं क्रियते--योऽप्यवस्थान्तरेऽधातुरासीत्? तस्य गरहणं यथा स्यात्()। अथ गोमानिति कथमत्र दीर्घत्वम्()? कथं च न स्यात्()? अधातोरिति प्रतिषेधः, नात्वन्तस्य। अत्र ह्रधातोरिति किम्()? पिण्डं प्रसत इति पिण्डग्रः, चर्म वस्त इति चर्मवः--इत्यसन्तस्यैव प्रत्युदाहरणमुपनयस्तम्(), नात्वन्तस्य। अथ वा--चकारन्तत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन क्वचिद्धातोरयीति भविष्यति॥

बाल-मनोरमा

उगिदचां सर्वनामस्थानेऽधातोः , ७।१।७०

उगिदचाम्। "अधातो"रितिच्छेदः। उक् इत् येषां ते उगितः। "अच्" इति च लुप्तनकारस्य "अञ्चु गतिपूजनयोः" इति धातोग्र्रहणम्। अधातोरित्युगिद्विशेषणम्। न त्वञ्चतेः, असंभवात्। "इदितो नुम् धातो"रित्यतो नुमित्यनुवर्तते। तदाह--अधातोरुगित इत्यादिना। नुमि मकार इत्। उकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। अजिति अच्प्रत्याहारो न गृह्रते, व्याख्यानात्, "नपुंसकस्य झलचः" इत्यज्ग्रहणाच्च। अन्यथा "उगिदचा"मित्येव सिद्धे तद्वैयथ्र्यात्। वृद्धिर्गुण इत्यादिनिर्देशाच्च। अधातोरित्येतत्तु अग्रे गोमच्छब्दनिरूपणावसरे मूल एव व्याख्यास्यते। तत्प्रयोजनं च तत्रैव वक्ष्यते। उपधादीर्घ इति। मघवन् त् स् इति स्थिते हल्ङ्यादिना सुलोपे संयोगान्तलोपे च सति "सर्वनामस्थाने चे"ति दीर्घ इत्यर्थः। नन्विह दीर्घे कर्तव्ये संयोगान्तलोपपस्याऽसिद्धत्वान्नान्तत्वाऽभावात् पचन्नित्यादाविव दीर्घो न संभवतीत्यत आह-दीर्घे कर्तव्य इति। बहुलग्रहणादिति। "क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। शिष्टप्रयोगाननुसृत्यलोके विज्ञेयमेतद्बहुलग्रहेतु॥" इति स्थितिः। अत्र दीर्घे कर्तव्ये संयोगान्तलोपस्य न#आसिद्धत्वम्। पचन्नित्यादौ त्वसिद्धत्वमेवेति बहुलग्रहणाल्लभ्यत इत्यर्थः। ननु त्रादेशपक्षे मघवन्नित्येवास्तु, बहुलग्रहणाल्लभ्यत इत्यर्थः। ननु त्रादेशपक्षे मघवन्नित्येवास्तु, बहुलग्रहणेन संयोगान्तलोपस्यासिद्धत्वाऽभावकल्पनायां प्रमाणाऽभावात्। वेदे तु यज्ञेन मघवानित्यादौ दीर्घश्छान्दसो भविष्यतीत्यत आह-तथा चेति। त्रादेशपक्षे संयोगान्तलोपस्याऽसिद्धत्वाभावमब्युपगम्यैवेत्यर्थः। निपातनादिति। कनि प्रत्ययस्य,अवुगागमस्य, घत्वस्य इति

त्रयाणां निपातनादित्यर्थः। तथा च नान्तो मघवन्शब्दः सिध्यतीति भावः। मघशब्दादिति। धनपर्यायादित्यर्थः। मघो धनमस्यास्तीत्यर्थे मतुपि"मादुपधायाश्चे"ति वत्वे तान्तो मघवच्छब्दः सिद्ध इति भावः। भाषायामपीति। लोके छन्दसि च इत्यर्थः। शब्दद्वयेति। मघवन्शब्दो मघवच्छब्दश्चेति शब्दद्वयं "मघवा बहुल"मित्यस्य फलम्। तस्य सिद्धिमाश्रित्येत्यर्थः। आकर इति। "केशाद्वः" इति सूत्रे कैयटग्रन्थ इत्यर्थः। तत्र ह्वेवमुक्तं"-"मघवा बहुल"मित्येतन्न कर्तव्यम्। "()आन्नुक्ष"न्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वस्य सिद्धत्वा"दिति। त्रादेशपक्षे संयोगान्तलोपस्याऽसिद्धत्वाद्दीर्घाऽभावाश्रयणे मघवन्निति रूपम्। मतुपि तु "अत्वसन्तस्ये"ति दीर्घे मघवानिति रूपमिति रूपभेदापत्त्या तदसङ्गतिः स्पष्टैवेति भावः। वस्तुतस्तु कन्यन्तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्, मतुपि तु "ह्यस्वनुड्भ्यां मतु"विति मतुबुदात्तत्वस्य " न गो()आ"न्निति प्रतिषेधे सति पित्त्वादनुदात्तत्वे घकारादकारस्य फिट्स्वरेण उदात्तत्वमिति फलभेदात् कैयटग्रन्थश्चिन्त्य एव। मघवानिति दीर्घः शिष्टसंमतश्चेत्याह--हविरिति। मखेषु यज्ञेषु निश्शङ्कः असौ मघवान् हविर्जक्षिति=भक्षयतीत्यर्थः। मघवन्तावित्यादि। सुटि त्रादेशो नुम्चेति भावः। शसादौ त्रादेशो, नतु नुम्, अरुआवनामस्थानत्वादित्यभिप्रेत्याह--मघवत इति। मघवद्भ्यामित्यादि। त्रादेशे "स्वादिषु" इति पदत्वाज्जश्त्वम्। सुपि त्रादेशे जश्त्वे चर्त्वे मघवत्सु। तृत्वाऽभावे मघवेति। नान्तात्सौ राजवद्रूपमिति भावः। ननु "मघवा बहुल"मिति सूत्रे "अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्" इति वार्तिकभाष्यकैयटेषु मघवन्शब्दस्य छन्दोमात्र विषयत्वावगमात्कथं तस्य लोके प्रयोग इत्यत आह--छन्दसीवनिपावित्यादि। "तदस्यास्त्यस्मिन्निति मतु वित्यधिकारे "केशाद्वोऽन्यतरस्या"मिति सूत्रे"छन्दसीवनिपौ चे"ति वार्तिकम्। छन्दसि ईवनिपौ च वक्तव्यौ, वश्च मतुप्च। "रथीरभून्मुद्गलानी गविष्टौ, सुमङ्गलीरियं वधूः, ऋतवानं मघवानमीमहे" इति तत्र भाष्यम्। तत्र वनिप्प्रत्ययान्ते मघवन्शब्दे प्रत्ययस्वरेण वकारादकार उदात्तः। मघशब्दः फिट्स्वरेणान्तोदात्तः। "अनुदात्तं पदमेकवर्ज"मिति शिष्टस्वरेण मकारादकारो, वकारादकारश्चानुदात्तः। "उदात्तादनुदात्तस्य स्वरितः" इति वकारादकारः स्वरितः। तथाच मघवन्निति रूपं मध्योक्षतं संपद्यते। एतादृशमघवन्शब्दविषयकं छान्दसत्वाभिधानम्। कन्यन्ते तु मघवन्शब्दे वकारादकारः प्रत्ययस्वरेणोदात्तः। शिष्टस्वरेण मकारादकारो घकारादकारश्चाऽनुदात्तौ। तथा च मघवन्निति रूपमन्तोदात्तमिति स्थितिः। एतादृशमघवन्शब्दस्तु लोकवेदसाधारणः, तस्य छन्दोमात्रविषयत्वे प्रमाणाऽभावात्। किं च "वनो र चे"ति सूत्रे भाष्यं-"मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिक"मिति। अयमपि मघवन्शब्दः फिट्स्वरेणान्तोदात्तो लोकवेदसाधारण एव, छन्दोमात्रविषयत्वे प्रमाणाऽभावादिति भावः। शब्दरत्ने तु "न शिष्टं छान्दसं हि तत्" इत्युदाह्मतभाष्यवार्तिकयोः सामान्यप्रवृत्तयोर्मध्योदात्तमात्रविषयसङ्कोचे प्रमाण#ं न किञ्चिदस्ति। कविप्रयोगाणां तु "त तस्थिवांसंनगरोपकण्ठे" इत्यादिविषये बहुशः प्रमाददर्शनात्तेषामपि नार्षवचनसङ्कोचकता। अतो मघवन्शब्दस्य सर्वस्यापि लोकेऽसाधुत्वमेवेति प्रपञ्चितम्। सुटि राजवदिति। तृत्वाऽभावपक्षे नान्तत्वाद्दीर्घ इति भावः।

तत्त्व-बोधिनी
उगिदचां सर्वनामस्थानेऽधातोः ३२२, ७।१।७०

मघववन्शब्दस्येति। अधातोरिति। अधातुभूतपूर्वस्यापूत्यर्थः। अञ्चतिग्रहणं हि नियमार्थम्,--"उगितो धातोश्चेद्भवति तर्ह्यञ्चतेरेवे"तचि। एवञ्च गोमानिवाचरति"गोमा"नित्यदौ संप्रति धातुत्वेऽपि विध्यर्थमधातुग्रहम्। एतच्च मूल एव स्फूटूभविष्यति। नन्वञ्चतिग्रहणमौपदेशिकधातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति व्याख्याय अधातुग्रहणं त्यज्यतामिति चेत्। अत्र नव्याः--नुन्मात्रविषयको नायं नियमो,----"धातोस्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यत। तेनेह न,---उखारुआत्"--इति उगितश्चे ति सूत्रे वक्ष्यमाणत्वात्। ततश्च यद्यौपदेशिकधातोश्चेदुगित्कार्यमिति व्याख्यायेत तर्हि पूर्वोक्ते"गोमा"नित्यादौ स्त्रियम् "उगिश्चे"ति ङीप्प्रसज्येत। आचारक्विबन्तस्यौपदेशिकधातुत्वाऽभावात्। न चेष्टापत्तिः,--अधातोग्र्रहणादेव सूत्रकृता तत्र ङीब्नेष्यत इत्यनुमानादिति दिक्। ननु नलोपिनोऽञ्चतेरेव नुमागमः स्यान्न

तु पूजार्थस्य नकारवतोऽञ्चेतेरित्येवमर्थम् "अचा"मिति ग्रहणस्य सार्थकत्वात्कथमेतस्य सामान्यनियमार्थतेति चेदुच्यते--"अचा"मित्यत्र नलोपोऽविवक्षितः। तथाच पूर्वोक्तनियमार्थता भाष्यकैयटटाद्युक्ता सङ्गच्छत एव। पूजार्थस्याऽञ्चेतेर्नुम#इ सत्यपि "नश्चापदान्तस्ये"ति सूत्रे जातिपक्षमाश्रित्य नत्वजातेरनुस्वारविधानेन समीहितरूपसिद्धेः। व्यक्तिपक्षे त्वनुस्वारस्य शर्षु पठितत्वादनुस्वारे परे नुमोऽनुस्वारे सति अनुस्वारद्वयवद्रूपमिष्यते। "अनचि चे"ति द्वित्बेन तद्रूपस्य तवापि मते दुर्वारत्वात्। न च भवन्मते द्वित्वेनाऽनुस्वारत्रयं स्यादिति शङ्क्यम्, "झरो झरी"ति लोपेन निवारयितुं शक्यत्वात्।लोपऽभावापक्षे त्रयाणां श्रवणं स्यादिति चेद्भष्यकैयटाद्युक्तनियमानुरोधेन तत्स्वीकारे बाधकाभावात्। इष्टानुरोधेन जातिपक्ष एवात्राश्रयणीयः। नुमागमः स्यादिति। "इदितो नुम् धातो"रित्यतो नुमनुवर्तत इति भावः। ननु "कुर्व"न्नित्यादाविव संयोगान्तलोपस्याऽसिद्धत्वेन नान्तत्वाऽभावाद्दीर्घत्वं न स्यादित्याशङ्क्याह--इह दीर्घे कर्तव्य इति। बहुलग्रहणादिति। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। बहूनार्थान् लातीति बहुलम्। "आतोऽनुपसर्गे"इति कर्मण्युपपदे कः। ()आन्नुक्षन्निति। "()आन्नुक्षन्पषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमान्वि()आप्सन्परिज्मन्मातरि()आन्मघव"न्नित्युणादिसूत्रेणेत्यर्थ निपातनादिति। महेर्हेकारस्य घकारोऽवुगागमः कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः। प्रत्याख्यातमाकर इति। एवं च फलभेदे त्रादेशस्य प्रत्यख्यानाष()संभवादादेशपक्षेऽपि दीर्घो भाष्यादिसंमत एवेति बहुलग्रहणात्संयोगान्तलोपस्य नाऽसिद्धत्वमित्युक्तम्। यत्वाहुः--मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येव भाष्याशय इति, तन्न,मतुबन्तस्य छान्दसत्वे मानाऽभावादुदाह्नतभट्टिप्रयोगविरोधाच्चेति दिक्। छन्दसीवनिपाविति। "मन्वर्थे ईवनिपौ स्तः छन्दसी"ति वार्तिकार्थः। "सुमङ्गलीरियं वधूः""मघवानमीमहे"इत्युदाहरिष्यति वैदिकप्रक्रियायाम्। अन्तोदात्तंत्विति। यद्यपि "श्रन्नुक्ष"न्नित्यत्र कनिन्नन्ता एते" इत्युज्ज्वलदत्तादिग्रन्थपर्यालोचनयाऽऽद्युदात्तत्वं लभ्यते, तथापि "उक्षा समुद्रो अरुणः सुपर्णः""पूषा त्वेतो नयतु,""अग्निर्मूर्धादिवः"इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामन्तोदात्तत्वस्यनिर्विवादतया कनिप्रत्यय एवोचित इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

युजेरसमासे ७।१।७१

युजेरसमासे सर्वनामस्थाने परतो नुमागमो भवति। युङ्, युञ्जौ, युञ्जः। असमासे इति किम्? अश्वयुक्, अश्वयुजौ, अश्वयुजः। युजेः इति इकारनिर्देशात् युज समाधौ इत्यस्य ग्रहणं न भवति। युजमापन्ना ऋषयः।

न्यासः

युजेरसमासे। , ७।१।७१

"युङ, युञ्जौ, युञ्जः" इति। पूर्ववत्? क्विन्नादि। "अ()आयुक्()" इति। अ()आं युनक्तीति "सत्सूद्विष" ३।२।६१ इत्यादिना क्विप्()। कथं युजेर्नुब्युच्यमाने समासेऽपि स्यात्()? तदन्तविधिना। कथमत्र तदन्तविधिः? एतेदेव ज्ञापकम्()--अस्तीह तदन्तविधिरिति। उक्तञ्च--"अङ्गाधिकारे तस्य तदुत्तरपदस्य" (पु।प।वृ।८५) इति वचनात्()। "युजेः" इत्यादि। इकारेण निर्देशो ह्येवमर्थः क्रियते--यस्य युजेरिकारोऽनुबन्धस्तस्य ग्रहणं यथा स्यात्(), अन्यस्य मा भूदिति। तेन "युज समाधौ" (धा।पा।११७७) इत्यस्य ग्रहमं न भवति, न हि तस्येकारोऽनुबन्धोऽस्ति। "युजम्()" इति। सम्पदादित्वात्क्विप्()। "आपन्नाः" इति। प्राप्ता इत्यर्थः॥

न्यासः

तिङि चोदात्तवति। , ७।१।७१

"यत्प्रपचति यत्प्रकरोति" [यत्? करोति--मुद्रितकाशिकापाठः] इति। "यद्()वृत्तान्नित्यम्()" (८।१।६६) इति निघातप्रतिषेधे कृते उभयमप्येतत्? तिङन्तमुदात्तवद्भवति--एकं धातुस्वरेण, अपरं प्रत्ययस्वरेण। इहेदं तिङ्ग्रहणमेवमर्थं क्रियते--तिङ्युदात्तवति यथा स्यात्(), "आमन्द्रैरिन्द्र हरिभिर्याहि" इत्यत्र मन्द्रशब्दे मा भूदित्येवमर्थम्(); एतच्चाप्रयोजनम्(), यदि स तत्र स्यात्? पूर्वसूत्रे गतावित्येतदपार्थकं स्यात्()। अस्य हि तत्र मन्द्रशब्दे मा भूदित्येवमर्थम्(); एतच्चाप्रयोजनम्(), यदि स ततर स्यात्? पूर्वसूत्रे गतावित्येतदपार्थकं स्यात्()। अस्य हि तत्र मन्द्रशब्दे परतो मा भूदित्येतदेव अयोजनं व्यवस्थितम्()। न चान्यत्? तिङ्ग्रहणस्येह व्यवच्छेद्यमस्ति। तस्माद्व्यवच्छेद्याभावान्न कत्र्तव्यमेव तिङ्ग्रहणम्()? इत्येतच्चोद्यमपाकर्तुमाह--"तिङ्ग्रहणम्()" इत्यादि। परिमाणम्()=परिच्छेदः। तदुदात्तवतो यथा स्यादित्येवमर्थं तिङ्ग्रहणम्()। किं पनः स्यात्(), यदि परिमाणार्थं तिङ्ग्रहणं न क्रियेत? इत्यत आह--"अन्यथा हि" इत्यादि। यदि हि तिङीति नोप्येत तदोदात्तवतीत्येतावत्युच्यमाने यद्युदात्तवतीति सामान्येनोच्येत, तथापि प्रत्यासत्तेर्यं प्रति गतिस्तस्यव निघातो विज्ञायेत। ततश्च धातावेवोदात्तवति स्यात्()--यत्? प्रवचतीत्यादौ, प्रत्यये तु यत्? प्रकरोतीत्यत्र न स्यात्()। विकरणो ह्त्रोदात्तवान्? न धातुः। ननु चोदात्तोऽत्र प्रत्यय#ः, नोदात्तवान्(), न हि प्रत्ययादन्यः स उदात्तोऽस्ति येन प्रत्यय उदात्तवान्? स्यात्()? नैतत्? सारम्(); यथा स्यात्? ["नास्ति--कांउ।पुस्तके] यत्राद्युदात्तत्वमस्य व्यपदेशिवद्भावेन भवति तथोदात्तत्वमपि स्यादेव। स्यादेतत्()। प्रत्ययमपि प्रति प्रादेर्गतिसंज्ञा, ततो नायं दोषः? इत्यत आह--"यत्क्रियायुक्ताः" इत्यादि। इतिकरणो हेतौ। यस्मात्? यत्क्रियायुक्ताः प्रादयस्तं प्रति तेषां गत्युपसर्गसंज्ञा, तस्माद्धातुमेव प्रति गतिसंज्ञा, न प्रत्ययम्()। यदि हि प्रत्ययोऽपि धातुवत्? क्रियावचन स्यात्(), तमपि प्रति प्रादयो गतिसंज्ञां प्रपद्येरन्()। न चासौ क्रियावचनः, तस्मान्न प्रत्ययं प्रति प्रादीनां गतिसंज्ञाः। "आमन्ते तर्हि" इत्यादि। प्रपचतितरामिति "तिङश्च" ५।३।५६ इति तरप्(), तदन्तात्? "किमेत्तिङ्()" ५।४।११ इत्यादिनामि कृते सत्यामन्तमेतद्भवति। न तिङन्तम्()। ततो यदि तिङि चेति तिङग्रहणं न क्रियेत, तस्मिन्नामन्ते परतो गतिनिघातो न प्राप्नोति। अत्र" इत्यादि उत्तरम्()। अत्र केचित्? "कुगतिप्रादयः" २।२।१८ इत्यामन्तेन गतेः समासं कुर्वन्ति, केचिन्न कुर्वन्त्येवेति। तत्र त्रयः पक्षाः। तत्र य आमन्तेन समासं कुर्वन्ति, तेषां "तत्पुरुष तुल्यार्थतृतीया" ६।२।२ इत्यादिना पूर्वपदस्याव्ययस्य प्रकृतिस्वरे सति शेषस्य "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इत्यनुदात्तत्वेन भवितव्यम्()। अतोऽक्रियमाणेऽपि तिङ्ग्रहणे परमामन्तमुदात्तं न भवतीति गतिनिघातो नैव सिध्यति। ततो नायं दोषस्तिङ्ग्रहणे सत्येव, किं तर्हि? असत्यपि। तेन तिङ्ग्रहणे क्रियमाण एव चोदयितुं युक्तमित्यभिप्रायः। "अथ" इत्यादि। अथ तरबन्तेन गतिसमासः क्रियते? एवमप्युक्तमेव चोद्यम्()। तथा हि--"तरबन्तस्य गतिसमासः" इत्यस्मिन्? पक्षे प्राग्गतिसमासे कृते पूर्वपदस्य च प्रकृतिस्वरत्वे पश्चादामा भवितव्यम्(), तथा च सतिशिष्टत्वादाम एवोदात्तत्वे सति गतेः "अनुदात्तं पदेमेकवर्जम्()" ६।१।१५२ इत्यनेनैवानुदात्तत्वं सिद्धम्(), अतो नार्थं एतत्सूत्रविहितेन गतिनिघातेनेति। वाभावे वाह चोदकः--"येषां तु" इत्यादि। "गतिकारकीपपदानां कृद्भिः सह समासवचनं प्राक्? सुबुत्पत्तेः" (व्या।प।१३८) इत्यत्र दर्शनद्वयम्()--"गत्यादयोऽविशेषेण समस्यन्ते कृद्भिः सह सह प्राक्सुबुत्पत्तेः" इत्येकं दर्शनम्(); "गत्यादयः कृद्भिरेव समस्यन्ते, नान्यप्रत्ययान्तैः, तैश्च प्राक्सुबुत्पत्तेः" इति द्वितीयम्()। तत्र येषां पूर्वं दर्शनं तान्प्रत्यामन्ते तर्हि न प्राप्नोतीति सत्यमयुक्तमेतच्चोद्यम्()। येषां तु द्वितीयं दर्शनं तान्? प्रत्युरक्तमेव। तथा हि--तेषामेवंविधविषये प्रपचतितरामित्येवंप्रकारे यत्र कृत्प्रयोगो नास्ति तत्र समासेन नैव भवितव्यम्()। अथ पृथक्स्वरः प्राप्नोति--प्रशब्दस्य "उपसर्गाश्चाभिवर्जम्()" (फि।सू।४।८१) इत्याद्युदात्तत्वं प्राप्नोति, पचतितरामित्यत्रापि प्रत्ययस्वरेणाम उदात्तत्वम्()? तत्र पृथक्स्वरप्राप्तौ सत्यामनेन निघातेन प्रयोजनम्()। एष च गतिनिघातस्तिङग्रहणे क्रियमाणे सत्यामन्तेन प्राप्नोतीति भावः। इतर आह--"तदर्थं यत्नः कत्र्तव्यः" इति। स पुनरत्र व्याख्यानविशेषः। इह चकारः क्रियते, स चानुक्तसमुच्चयार्थः, तेनामन्तेऽपि निघातो भविष्यतीति। "प्रपचति, प्रकरोति" इति। "तिङङतिङ" ८।१।२८ इति निघातादुभयमप्येतदुदात्तवन्न भवति॥

बाल-मनोरमा

युजेरसमासे , ७।१।७१

युजेरसमासे। "उगिदचा"मित्यतः सर्वनामस्थान इत्यनुवर्तते। "इदितो नुम् धातोः" इत्यतो नुमिति च। तदाह--नुम्स्यादित्यादिना। युन् ज् इति स्थिते प्रक्रियां दर्शयति--सुलोप इति। परत्वात्पूर्वं नुमि ततो हल्ङ्यादिलोप इति भावः। संयोगान्तलोप इति। "जकारस्ये"ति शेषः।

बाल-मनोरमा

शप्श्योनोर्नित्यम् १११, ७।१।७१

औङः श्याम् "आच्छीनद्योः" इति विकल्पे प्राप्त--शप्श्यनोर्नित्यम्। "आच्छीनद्योर्नुम्" इत्यनुवर्तते। "नाभ्यस्ताच्छतुः" इत्यतः शतुरित्यनुवर्तते। अवयव इति चाध्याह्रियते। तदाह--शप्श्यनोरादित्यादिना। पचन्ती इति। औङः श्यां नुमि रूपम्। पचन्तीति। जश्शसोः शौ सर्वनामस्थानत्वान्नुमि रूपम्। दीव्यदिति। दिवुधातोर्लटः शतरि श्यन्। "हलि चे"ति दीर्घः दीव्यच्छब्दात्स्वमोर्लुगिति भावः। दीव्यन्ती इति। औङः श्यां नुमि रूपम्। "शप्श्यनोः" इति नित्यं नुमिति भावः। दीव्यन्तीति। जश्शसोः शौ सर्वनामस्थानत्वान्नुमिति भावः। इति तान्ताः। अथ पान्ताः। स्वबिति। सु=शोभनाः आपो यस्मिन् सरसीति बहुव्रीहिः। "ऋक्पूरब्धूः" इति समासान्तस्तु न भवति, " न पूजनात्" इति निषेधात्। "द्व्यन्तरुपसर्गेभ्योऽप ई"दिति न भवति, तत्र "अप" इति कृतसमासान्तग्रहणात्। स्वप्शब्दात्स्वमोर्लुगिति भावः। स्वपी इति। औङः श्यां रूपम्। असर्वनामस्थानत्वान्न नुमिति भावः। दीव्यन्तीति। जश्शसोः शौ सर्वनामस्थानत्वान्नुमिति भावः। इति तान्ताः। अथ पान्ताः। स्वबिति। सु=शोभनाः आपो यस्मिन् सरसीति बहुव्रीहिः। "ऋक्पूरब्धूः" इति समासान्तस्त#उ न भवति, "न पूजनात्" इति निषेधात्। "द्व्यन्तरूपसर्गेभ्योऽप ई"दिति न भवति, तत्र "अप" इति कृतसमासान्तग्रहणात्। स्वप्शब्दात्स्वमोर्लुगिति भावः। स्वपी इति। औङः श्यां रूपम्। असर्वनामस्थानत्वान्न नुमिति भावः। दीव्यन्तीति। जश्शसोः शौ स्वप् इ इति स्थिते, अप्तृन्" इति दीर्घे, झलन्तलक्षङणनुमि, अनुस्वारे, परसवर्णे, स्वाम्पीति वक्ष्यते। तत्र "अप्तृन्" इति दीर्घं बाधित्वा परत्वान्नित्यत्वाच्च नुमि कृते।ञकारस्य उपधात्वाऽभावात्कथं दीर्घ इत्यत आह--नित्यादित्यादि। प्रतिपदोक्तत्वादिति। "अपतृन्" इति दीर्घस्य अप्शब्दमुच्चार्य विहितत्वादित्यर्थः। ननु निरवकाशत्वं प्रतिपदोक्तत्वमिति "छदिरुपधिबलेर्ढ"ञिति सूत्रे "शेषाद्विभाषे"ति सूत्रे च भाष्ये स्थितम्। "अप्तृन्" इति दीर्घस्तु न निरवकाशः, "आप" इत्यत्र सावकाशत्वात्। अतोऽत्र नित्यत्वात्परत्वाच्चा पूर्वं नुमागमे कथं दीर्घ इत्याशङ्क्य इष्टापत्त्या परिहरति--निरवकाशत्वमित्यादि। स्वम्पीति। दीर्घं बाधित्वा नुमि अनुस्वारपरसवर्णाविति भावः। "केचित्तु "अपतृन्" इति दीर्घस्य निरवकाशत्वरूपप्रतिपदोक्तत्वाऽभावेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया प्रथमं प्रवृत्तौ "स्वाम्पो"त्येव युक्तमित्याहुः। इति पान्ताः। अथ षान्ताः। धनुश्शब्दं व्युत्पादयति--धनेरिति। "जनेरुसिः" इत्यत उसिरित्यनुवर्तमाने "अर्तिपृ()वपियजितनिधनितपिभ्यो नित्" इत्यौणादिकसूत्रेण "धन धान्ये" इत्यस्माद्धातोरुस्प्रत्यय इत्यर्थः। प्रत्ययावयत्वात्सस्य षत्वे धनुष्शब्दः। तस्मात्स्वमोर्लुक्। तत्र षकारस्य कथं रुत्वमित्यत आह-षत्वस्येति। धनुरिति। "र्वोरुपधायाः" इति दीर्घस्तु न, रेफान्तस्याधातुत्वात्। धनूंषीति। "नस्चे"त्यनुस्वारः। एवं चक्षुर्हविरादय इति। "चक्षेश्शिच्च" इत्युसिः। शित्त्वेन सार्वधातुकत्वात् ख्शाञादेशो न "अर्चिशुचिहुसृपि" इत्यादिना हुधातोरिस्, "सार्वधातुकार्धधातुकयोः" इति गुणः, अवादेशः। आदिना सर्पिरादयो ग्राह्याः। पिपठिषतेः क्विबिति। "पठ व्यक्तायां वाचि" सन्, इट् द्वित्वं, हलादि शेषः , अभ्यासाऽकारस्य इत्त्वं, प्रत्यययावयवत्वात् षत्वं, "सनाद्यन्ताः" इति धातुत्वम्। पिपठिष इत्यस्मात् क्विप् अतो लोपः, पिपठिष् इत्यस्मात् स्वमोर्लुक्, षत्वस्याऽसिद्धत्वाद्रुत्वम्। एतावत्सिद्धवत्कृत्य आह--र्वोरिति दीर्घे इति। पिपठिषी इति।

औङः श्यां रूपम्। सौ विशेषमाह-अल्ल#ओपस्येति। बेभिच्छब्दनिरूपणे व्याख्यातमेतदनुपदमेव प्राक्। इति षान्तां। अथ सान्ताः। पय इति। "पयः क्षीरं पयोऽम्बु चे"त्यमरः। पयांसीति। शौ नुम्। "सान्ते"ति दीर्घः, अनुस्वार इति भावः। पयोभ्यामिति। रुत्वे, "हशि चे"त्युत्वे, गुण इति भावः।

सुपुमिति। सु=शोभनः पुमान् यस्य गृहस्येति बहुव्रीहौ, सुपुंस्()शब्दात्स्वमोर्लुक्, संयोगान्तलोपः। संपुंसी इति। औङः श्यां रूपम्। सुपुमांसीति। शेःसर्वनामस्थानत्वात् "पुसोऽसुङ्" इत्यसुङ्। सुपुम्()स् इ इति स्थिते, झलन्तलक्षणनुमि, "सान्तमहतः" इति दीर्घः , "नश्चे"त्यनुस्वारश्चेति भावः। अद इति। अदस्()शब्दात् स्वमोर्लुक्, रुत्वविसर्गौ, सान्तत्वान्न मुत्वम्, लुका लुप्तत्वात्त्यदाद्यत्वं नेति भावः। औङादावाह--विभक्तिकार्यमिति। त्यदाद्यत्वादिकमित्यर्थः। उत्वमत्वे इति। "पूर्वत्रासिद्धिमि"ति विभक्तिकार्योत्तरमुत्वमत्वे इत्यर्थः। अमू इति। औङः शी, त्यदाद्यत्वं, पररूपं, गुणः, ऊत्वमत्वे इति भावः। अमूनीति। ञ्जश्शसोश्शिः, त्यदाद्यत्वं, पररूपम्। अजन्तत्वात् नुम्, उपधादीर्घः, ऊत्वमत्वे इति भावः। इति सान्ताः।

इति बालमनोरमायां हलन्ता नपुंसकलिङ्गाः।

------------------------------

अथ हल्सन्धिप्रकरणम्।

तत्त्व-बोधिनी
युजेरसमासे ३३६, ७।१।७१

युजेरसमासे। "उगिदचा"मित्यतः "सर्वनामस्थाने"इत्यनुवर्तते। "इदितो नुम् धातो"रित्यतो "नुम्"चेत्याशयेनाह--सर्वमास्थाने नुम्स्यादिति।

---

सूत्रम्
काशिका-वृत्तिः
नपुंसकस्य झलचः ७।१।७२

नपुंसकस्य झलन्तस्य च सर्वनामस्थाने परतो नुमागमो भवति। उदश्विन्ति। शकृन्ति। यशांसि। पयांसि। अजन्तस्य कुण्डानि। वनानि। त्रपूणि। जतूनि। नपुंसकस्य इति किम्? अग्निचिद् ब्राह्मणः। झलचः इति किम्? बहुपुरि। बहुधुरि। विमलदिवि। चत्वारि। अहानि। उगितो झलन्तस्य नपुंसकस्य परत्वादनेन एव नुम् भवति। श्रेयांसि। भूयांसि। कुर्वन्ति। कृषन्ति ब्राह्मणकुलानि। बहूर्जि प्रतिषेधो वक्तव्यः। बहूर्जि ब्राह्मणकुलानि। अन्त्यात् पूर्वं नुमम् एके इच्छन्ति। बहूर्न्जि ब्राह्मणकुलानि।
लघु-सिद्धान्त-कौमुदी
नपुंसकस्य झलचः २४०, ७।१।७२

झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने॥
न्यासः
नपुंसकस्य झलचः। , ७।१।७२

"पर्यासि, श्रोयांसि" इति। "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः। "बहुपुरि, बहुधुरि" इति। बह्व्यः पुरः, बह्व्यो धुरो येषामिति बहुव्रीहिः। "ऋक्पुरब्धूः पथामानक्षे" ५।४।७४ इत्यकारः समासान्तो न भवति--"समासान्तविधिरनित्यः" (व्या।प।९४) इति कृत्वा। "विमलदिवि" इति। विमला द्यौर्येषामिति तानि। विमलदिवि वकारो दन्त्यौष्ठ()ओ झल्? न भवति, झलः पूर्वेण पठितत्वात्()। "चत्वारि" इति। "चतुरनडुहोरामुदात्तः" ७।१।९८ इत्याम्()। इह यदुगिन्नपुंसकं झलन्तं नुमि कृते "उगिदचाम्()" (७।१।७०) इत्यादिना द्वितीयो नुम्? प्राप्नोति; सम्भवति हि विधानकालेनेकस्य परत्वम्(), यथा--पचतीत्यत्र लकारविकरणयोरेकस्माद्धातोरिति। अत्र तुदन्ति, नदन्तीत्यत्र परसय नुमोऽनुस्वारे कृते तसय परसवर्णे च द्वयोर्नकारयोः श्रवणमापद्येत? भवतु नाम, हल्परस्य व्यञ्जनस्यैकस्यानेकस्य श्रुतिं प्रति नास्ति विशेषः शक्यते वक्तुम्()। इह त्वस्ति विशेषः--कुर्वन्ति, कृषन्तीत्यत्र परस्य नुमोऽनुस्वारसवर्णयोः कृतयोः पूर्वस्याझल्परत्वादनुस्वारपरसवर्णौ न स्त इति अट्कुप्वादिना ८।४।२ णत्वं प्राप्नोति। एक()स्मस्तु नुमि तस्यानुस्वारे परसवर्णे कृते न भवति णत्वप्रसङ्गः; परसवर्णस्यासिद्धत्वात्()। तस्मादुगिल्लक्षणस्य नुमः प्रतिषेधो वक्तव्य इत्याह--"उगितो झलन्तस्य" इत्यादि। झलन्तलक्षणस्य नुमोऽवकाशो यदनुगिन्नपुंसकम्()--सर्पीषीति, उगिल्लक्षणस्यावकाशो यदुगिदनपुंसकम्()--गोमान्? यवमानिति; यदुगिज्झलन्तं नपुंसकं तस्योभयप्रसङ्गे सति परत्वादनेनैव नुमा भवितव्यम्(), तस्मिन्? सति पुनरुगिल्लक्षणो नुम्? न भवति--"सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (व्य।प।४०) इति कृत्वा। "भूयांसि" इत#इ। बहुशब्दादीयसुन्(), "बहोर्लोपो भू च बहोः" ६।४।१५८ इतीकारस्य लोपः, बहोश्च भूभावः। "कुर्वन्ति, कृषन्ति" इति। शत्रन्तात्? "जश्शसोः शिः" ७।१।२० इति शिभावः। "बहुर्जि" इत्यादि। बहूर्जीत्यस्मिन्? नुभः प्रतिषेधो वक्तव्यः, व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--"विभाषा चिण्णमुलोः" ७।१।६९ इति विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा, तेन बहूर्जीत्यत्र न भवति। "उर्ज बलप्राणधारणयोः (धा।पा।१५४९) ["बलप्राणनयोः" धा।पा।] इत्येतस्मात्? "भ्राजभ्रास" ३।२।१७७ इत्यादिना क्विप्(), बहव ऊर्जो बलानि येषां तानि बहूर्जि ब्राआहृणकुलानि। "अन्त्यात्पूर्वम्()" इति। अन्त्यो जकारः, तस्मात्पूर्वं नुममिच्छन्ति केचित्()--बहूर्न्जीति॥

बाल-मनोरमा

नपुंसकस्य झलचः ३१२, ७।१।७२

नपुंसकस्य। झल्व अच्चेति समाहारद्वन्द्वः। तेन च अङ्गस्येत्यधिकृतं विशेष्यते। तदन्तविधिः। "इदितो नु"मित्यतो नुमित्यनुवर्तते। तदाह--झलन्तस्येत्यादिना। मित्त्वादन्त्यादचः परः। उपधादीर्घ इति। ज्ञानन् इ इति स्थिते "सर्वनामस्थाने चे"ति दीर्घ इत्यर्थः। पुनस्तद्वदिति। अमौट्शस्सु ज्ञानं ज्ञाने ज्ञानानि इति क्रमेण रूपाणीत्यर्थः। शेषं रामवदिति। शिष्यत इति शेषम्। कर्मणि घञ्। "घञजबन्ताः पुंसी"ति तु प्रायिकमिति भावः।

तत्त्व-बोधिनी

नपुंसकस्य झलचः २७४, ७।१।७२

नपुंसकस्य झलचः। "इदितो नुम् धातो"रित्यतो नुमनुवर्तते। "उगिदचा"मित्यतः "सर्वनामस्थाने"इति च। "अङ्गस्ये"ति चाधधिकृतम्। तथाच झलज्भ्यां नपुंसतमङ्गं विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह---झलन्तस्येत्याद।

---

सूत्रम्

काशिका-वृत्तिः

इको ऽचि विभक्तौ ७।१।७३

इगन्तस्य नपुंसकस्य अङ्गस्य अजादौ विभक्तौ नुमागमो भवति। त्रपुणी। जतुनी। तुम्बुरुणी। त्रपुणे। जतुने। तुम्बुरुणे। इकः इति किम्? कुण्डे। पीठे। अचि इति किम्? उत्तरार्थम्। यद्येवम्, तत्र एव कर्तव्यम्? इह तु करणस्य एतत् प्रयोजनम्, हे त्रपो इत्यत्र नुम् मा भूत्, इति, न ङिसम्बुद्ध्योः ८।२।८ इति नलोपप्रतिषेधः स्यात्। ननु च न लुमताङ्गस्य १।१।६२ इति प्रत्ययलक्षणे प्रतिषिद्धे विभक्तिरेव न अस्ति? एतदेव अज्ग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधो ऽत्र न भवति इति। तथा च सम्बुद्धिगुणः क्रियते। विभक्तौ इति किं? तौम्बुरवं चूर्णम्। इको ऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्। स्वरो वै श्रूयमाणे ऽपि लुप्ते किं न भविष्यति। रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि। नुड् वाच्य उत्तरार्थं तु इह किञ्चित् त्रपो इति।

लघु-सिद्धान्त-कौमुदी

इकोऽचि विभक्तौ २४६, ७।१।७३

इगन्तस्य क्लीबस्य नुमचि विभक्तौ। वारिणी। वारीणि। न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः। हे वारे, हे वारि। घेर्ङितीति गुणे प्राप्ते (वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन)। वारिणे। वारिणः। वारिणोः। नुमचिरेति नुट्। वारीणाम्। वारिणि। हलादौ हरिवत्॥

न्यासः

इकोऽचि विभक्तौ। , ७।१।७३

"विभक्तौ" इति वचनात्? "सर्वनामस्थाने" ७।१।७० इति निवृत्तम्()। "अचीति किम्()" इति। एवं मन्यते--त्रपुभ्याम्(), त्रपुभिरित्यत्र व्यञ्जनादौ मा भूदित्येवमर्थमज्ग्रहणं क्रियते, एतच्चाप्रयोजनम्(); अस्त्वन्न नुम्(), "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति लोपो भविष्यति। इतरो विदिताभिप्राय आह--"उत्तरार्थम्()" इति। "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" ७।१।७५ इत्यजादौ यथा स्यात्(), इह मा भूत्()--अस्थिभ्याम्(), अस्थिभिरिति, एवमर्थमज्ग्रहणम्()। इहासय करणस्य यत्प्रयोजनं तन्मया पृष्टम्(), अतस्तदेव कथ्यताम्()? इत्यभिप्रायेणाह--"यद्येवम्()" इत्यादि। इतरो विदिताभिप्राय आह--"इह तु करणस्य" इत्यादि। त्रपुशब्दात्? सम्बोधने प्रथमैकवचने कृते यद्यचीति नोच्येत, तदात्रापि नुम्? स्यात्(), तदत्र नुम्? मा भूदित्येवमर्थमचीत्युच्यते। स्यादेतत्()--भवतु नाम नुम्(), तस्य "स्वमोर्नपुंसकात्()" ७।१।२३ इति सोर्लुकि कृते "नलोपः प्रातिपदिकान्तस्य" (८।२।७) इति नलोपो भविष्यति? इत्याह--"न ङिसम्बुद्ध्योः इत्यादि। "ननु च" इत्यादि। एवकारोऽत्र भिन्नक्रमः प्रतिषेधानन्तरं द्रष्टव्यः। स चौपचारिकमपि दिभक्तेरस्तित्वम्? "न लुमताङ्गस्य" १।१।६२ इति प्रतिषेधान्नास्तीति प्रतिपादयति। द्विविधं हि विभक्तोरस्तित्वम्()--मुख्यम्(), औपचारिकञ्च। तत्र मुख्यं श्रूयमाणाया विभक्तेर्भवति, इतरत्? तु लुप्ताया अपि। कार्यस्यास्तित्वाद्विभक्तेरप्युपचारेणास्तित्वमुच्यते, यथा--अस्त्यतीतं कर्मेति तत्रातीतेन कर्मणा यदाहितं फलदानसामर्थ्यं तस्यस्तित्वात्? तत्? कर्मान्तीत्युच्यते। तदिह "स्वमोर्नपुंसकात्()" ७।१।२६ इति विभक्तेर्लप्तत्वान्मुख्यं तावदस्तित्वं नास्ति। "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणप्रतिषेधादौपचारिकमपि नास्त्वेव। तत्र विभक्तावुच्यमानो नुम्? कः प्रसङ्गो यः सर्वथैवासत्यां विभक्तौ हे त्रपो इत्यत्र स्यात्()! नैव प्राप्नोति; तस्मान्नैतदज्ग्रहणस्य प्रयोजनम्()। "एतदेव" इत्यादि। यदि ह्यत्र प्रत्ययलोपलक्षमप्रतिषेधः स्यात्(), अज्ग्रहणमनर्थकं स्यात्(), कुतश्च, तस्मादेतदेवाज्ग्रहणं ज्ञापयति--प्रत्ययलोपलक्षणप्रतिषेधोऽत्रेगन्ते नपुंसके सम्बुद्धिविषये नास्तीति। "तथा च" इत्यादिना ज्ञापकस्य प्रयोजनमाह। सम्बुद्धिविषयो गणः "सम्बुद्धौ च" ७।३।१०६ इति वत्र्तमाने यः "ह्यस्वस्य गुणः" ७।३।१०८ इत्यनेन गुणः स वेदितव्यः। "तौम्बुरवं चूर्णम्()" इति। तुम्()बुरुणो विकारः "औरञ्? ४।२।७०,

"ओर्गुणः" ६।४।१४६। क्वचित्()--"इकोऽचि व्यञ्जने मा भूवस्तु लोपः स्वरः कथम्()" इत्यादिकं श्लोकद्वयं पठ()ते। "इकोऽचि विभक्तौ" ७।१।७३ इत्यत्राचीति किमर्थमुच्यते, न "इको विभक्तौ" इत्येवोच्येत? प्रयोजनमाह--"व्यञ्जने मा भूत्()" इति। प्रकरणान्नुमिति विज्ञायते। त्रपुभ्याम्, त्रपुभिरित्यत्र व्यञ्जनादौ मा भूदित्येवर्थमज्ग्रहणं क्रियते। यद्येवम्(), नार्थस्तेन, व्यञ्जनादौ नुमस्तु, न च तस्य श्रवणं प्रसज्यते; यस्मात्? "नलोपः प्रातपदिकान्तस्य" ८।२।७ इति नलोपो भविष्यति। पञ्चत्रपुभ्याम्(), पञ्चत्रपुभिरित्यत्र कथं स्वरः? पञ्चभिस्त्रपुभिः क्रीताभ्यां क्रीतैर्वेति "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति तद्धितार्थे समास; "संख्यापूर्वो द्विगुः"२।१।५१ इति द्विगुसंज्ञा, "आर्हादगोपुच्छ" ५।१।१९ इत्यादिना ठक्(), तस्य "अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्()" ५।१।२८ इति लुक्(), ततो विभक्तो नुम्(), नकारलोपः, तस्य "नलोपः सुप्सवरसंज्ञातुग्विधिषु कृति" (८।२।२।) इत्यसिद्धत्वात्? "इगन्तकालकपालभगालशरावेषु द्विगौ" ६।२।२९ इत्यनेन पूर्वपदप्रकृतिस्वरो न प्राप्नोति; अनिगन्तत्वात्? "भ्रः संख्यायाः" (फि।सू।२।२८) इत्याद्युदात्तत्वं स्यात्()। "भ्रः" इति नकाररेफान्तयोग्रहणमिति। "खरो षै" इत्यादि। वैशब्दोऽक्षमायाम्()। पञ्चत्रपुण इत्यत्र श्रूयमाणे नुमि स्वरो भवति। "लुप्ते किं न भविष्यति"? (इति)। भविष्यत्येवेत्यर्थः। किं पुनः कारणं श्रूयमाणे नुमि स्वरो भवति? स्वरविधौ व्यञ्जनस्याविद्यमानत्वात्()। अथ वा--समुदायभक्तो ह्रसौ नुम्? नोत्सतेऽवयवस्य त्रपुशब्दस्येगन्ततां विहिन्तुम्()। इह तर्हि रायमतिक्रान्ताभ्यां ब्राआह्मणकुलाभ्याम्()--अतिराभ्यामिति "कुगतिप्रादयः" २।२।१८ इति समासे कृते "ह्यस्वो नपुंसके प्रातिपदिकस्य" (१।२।४७) इति ह्यस्वत्वे च कृते यदि व्यञ्जनादौ नुम्? स्यात्(), तदा तस्य लोपे कृते नलोपस्यासिद्धत्वात्? "रायो हलि" ७।२।८५ इति हलादावुच्यमानमात्वं न प्राप्नोति, नुमा व्यवदानात्(), समुदायभक्तोऽसौ समुदायमेव न व्यवदव्यात्(), अवयवं तु व्यवदधात्येव। तथा प्रियास्तिरुआओऽनयोब्राआह्मणकुलयोरिति बहुव्रीहौ कृते प्रियतिसृभ्यामिति--यदि व्यञ्जनादौ नुम्? स्यात्(), तदा "त्रिचतुरोः स्त्रियां तिसृचतसृ" ७।२।९९ इत्यनेन तिरुआआदेशो न प्राप्नोति, समुदायभक्तेन नुमा त्रिशब्दस्य व्यवधानात्()? नैतदस्ति; "रायात्वं तिसृबावं ["तिसृभावश्च"--मूलपाठः] च व्यवधानान्नुमापि हि" (इति)। भवतीति शेषः। व्यवधानादिति ल्यब्लोपे पञ्चमी, यथा--प्रासादात्? प्रेक्षत इति। प्रासादमारुह्येत्यर्थः। तदयमर्थः--नुमा व्यवधानमपि प्राप्य राय आत्त्वं तिसृभावञ्च भवतीति। कस्मात्? पुनर्व्यवधाने तौ भवतः"? "रायो हलि" ७।२।८५ इत्यत्र रायो या विहिता विभक्तिः, त्रिशब्दाच्च या विहिता विभक्तिस्तस्यामिति विहितविशेषणपक्षस्य तत्रश्रयणात्()। अथ वा--किं व्यवधानचिन्तया, परत्वादेव हि तौ भविष्यतः, तयोस्तु कृतयोः "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (व्या।प।४०) इति पुनर्नुम्? न भवति। नुम्परत्वमनङ्गीकृत्य "व्यवधानान्नुमापि हि" इत्युक्तम्()। अत एवापिशब्दः पक्षान्तरद्योतनाय प्रयुक्तः। व्यवधाने च यथा भवति, तथोक्तमेव। एवं तर्हि नुम्नुटोर्विप्रतिषेधार्थमज्ग्रहणमिति नुटि कृते नुम्न क्रियते। "ह्यस्वनद्यायो नुट्()" ७।१।५४ इति अस्यावकाशः--अग्नीनाम्(), वायूनमिति, इगन्तनुमोऽव काशः--त्रपुणे, जतुन इति; इहोभयं प्राप्नोति--त्रपूणाम्(), जतूनामिति, पूर्वविप्रतिषेधे नुडागमो भवति, नुटि च सति "नामि" ६।४।३ इति दीर्घत्वं प्राप्नोति, अ()स्मस्तु सत#इ न स्यात्(); अनजन्तत्वात्(), यथा--वर्मणामित्यत्र। स चायं विप्रतिषेधोऽज्ग्रहणे सत्युपपद्यते। नुटि कृते नुम्? न प्राप्नोति; अनजादित्वात्()। नुम्यपि कृते नुण्न प्राप्नोति, ह्यस्वान्ताभावादित्येवमभयोस्तुल्ययोर्विप्रतिषेध उपपद्यते। अक्रियमाणेऽज्ग्रहणे नुटि कृतेप्यकृतेऽपि हलादावजादौ च नुमा भवितव्यमिति तस्य नित्यत्वम्()। नुमि कृते ह्यस्वान्तत्वाभावान्नुटा न भवितव्यमिति तस्यानित्यत्वम्()। नित्यानित्ययोश्चातुल्यबलत्वादयुक्तो विप्रतिषेध इति नित्यत्वान्नुमैव भवितव्यमिति। तस्मादज्ग्रहणं विप्रतिषेधार्थमिति। अत्र परीहारान्तरमाह--"नुड् वाच्यः" इति। लाघवार्थम्()। नुडर्थः पूर्वविप्रतिषेधः। तादर्ध्यन्नुदित्युक्तः। क्रियमाणेऽप्यज्ग्रहणे विप्रतिषेदेन नुमेव प्राप्नोति, ततोऽवश्यं पूर्वविप्रतिषेधेन नुङ्? वाच्यः--"नुमचिरतृज्वद्भावेभ्यो नुङ्? भवति पूर्वविप्रतिषेधेन" (वा।११;७।१।९६) इति। क्रियमाणेऽप्यज्ग्रहणे पूर्ववप्रतिषेधो वक्तव्यः। अक्रियमाणे त()स्मस्तेनैव यत्नेन नुड्? भविष्यतीति किं यत्नद्वयेन,

तस्मादज्ग्रहणमनर्थकम्()? ननु चेष्टवाची परशब्दः, इष्टवाचित्वाद्भविष्यति, अलं यत्नेन/ असदेतत्(), अवश्यं पूर्वविप्रतिषेधः परिगणयतव्यः, अन्यथेदमिष्टमिदमनिष्टमित्येतदेव न ज्ञायते। ननु च त्रपूणामित्यत्र पूर्वविप्रतषेधेन नुटि कृते नुम्? मा भूदित्येवमर्थमज्ग्रहणं कत्र्तव्यम्()? नैतदस्ति; अस्त्वत्र नुम्? तस्य लोपो भविष्यति। नलोपस्य दीर्घविधावसिद्धत्वात्? "नामि" (६।४।३) इति दीर्घत्वमनजन्तत्वान्न स्यादिति चेत्()? मा भूदनेन, "नोपधायाः" [६।४।७] इत्यनेन भविष्यति। इह तर्हि शुचीनामित्यतर "इन्हन्पूषार्यम्णां शौ" (६।४।१२) इति नियमाद्दीर्घत्वं न स्यात्()? नैतदस्ति; लक्षणप्रतिपदोक्तपरिभाषया (व्य।प।३) प्रतिपदोक्तस्येन्नन्तस्य स न#इयमः। अयञ्च नुमि कृते सतोन्नन्त इति लाक्षणिकत्वादेवास्य नियमेन प्रत्याख्यानं करिष्यते। एवं प्रत्याख्यातेऽज्ग्रहणे अत उत्तरतोऽज्ग्रहणस्य प्रयोजनं दर्शयितु माह--"उत्तरार्थं तु" इति। तुशब्दस्तद्धरर्ते। तर्हिशब्दः पक्षान्तरोपन्यासे। यद्येतत्? प्रयोजनं नोपपद्यते, उत्तरार्थं तद्धरज्ग्रहणं कत्र्तव्यम्()। "इह तु करणस्य यत्प्रयोजनं तदुच्यताम्()? इत्याह--"इह" इत्यादि। अपिशब्दोऽत्र गम्यमानार्थत्वान्न प्रयुक्तः। इहापि प्रयोजनमस्ति, किं पुनस्तत्()? इत्याह--"त्रपो" इति। हे त्रपो इत्यस्योदाहरणस्य साधुत्वार्थमज्ग्रहणम्()। अक्रियमाणे त्वज्ग्रहणे प्रत्ययलोपलक्षणमिहास्तीति न ज्ञाप्येत; यतश्च हे त्रपो इत्यत्र लुपतायां सम्बुद्धावुच्यमानो गुणो न स्यात्(), अज्ग्रहणे सत्यत्रापि प्रत्ययलोपलक्षणो भवति। तस्मादेतदर्थमज्ग्रहणं कत्र्तव्यम्(), उत्तरार्थञ्च॥

बाल-मनोरमा

इकोऽचि विभक्तौ ३१८, ७।१।७३

इकोऽचि। "इदितो नुम् धातोः" इत्यतो नुमित्यनुवर्तते। "नपुंसकस्य झलचः" इत्यतो "नपुंसकस्ये"त्यनुवर्तते, "अङ्गस्ये"त्यदिकृतमिका विशेष्यते, ततस्तदन्तविधिः, तदाह--इगन्तस्येत्यादिना। अचि विभक्ताविति। अजादौ विभक्तावित्यर्थः। "इकोऽचि सुपी"त्येव सुवचम्। विभक्तौ किम्? मधु=मद्यं, तस्येदं माधवम्। अणि परे नुमि टिलोपे "माध"मिति स्यात्। वारिणी इति। वारि-औ इति स्थिते शीभावे नुमि "अट्कुप्वाङिति णत्वे रूपम्। वारीणीति। जश्शसोः शिभावे नुमि "सर्वनामस्थाने चे"ति दीर्घे णत्वे रूपम्। हे वारि सु इत्यत्र सोर्लुकि प्रक्रियां दर्शयति--पक्ष इति। "ह्यस्वस्य गुण" इति सम्बुद्धिनिमित्तको गुणः कदाचिद्भवतीत्यर्थः। नन्विह सम्बुद्धेर्लुका लुप्तवान्न लुमतेति प्रत्ययलक्षणनिषेधात्कथं गुण इत्यत आह-न लुमतेतिनिषेधस्यानित्य्त्वादिति। अत्र च "इकोऽचि विभाक्तौ" इत्यत्राज्ग्रहणं ज्ञापकम्। हलादिषु भ्यामादिषु सत्यपि नुमि "न लोपः प्रातिपदिकान्तस्ये"ति तस्य लोपसम्भवादचीति व्यर्थम्। न च सम्बुद्धिव्यावृत्त्यर्थमज्ग्रहणं, तुत्र नुमि सति "न ङिसम्बुद्धयो"रिति निषेधे सति नकारश्रवणप्रसङ्गादिति वाच्यं, सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः। प्राप्तेरेवाऽभावात्। "न लुमते"ति निषेधस्याऽनित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुमज्ग्रहणमर्थवदिति भवत्यज्ग्रहणं "न लुमते"त्यस्यानित्यत्वे लिङ्गमित्याहुः। अत एव "इकोऽची"ति सूत्रे हे त्रपो इति, एङ्()ह्यस्वादिति सूत्रे हे त्रपु इति च भाष्यं सङ्गच्छते। आङो नेति। रूपे विशेषाऽभावेऽपि नुमपेक्षया परत्वेन नाभावस्यैव न्याय्यत्वादिति भावः। ङसिङसोर्विशेषमाह-घेरिति। नुमं बाधित्वा परत्वाद्गुणे प्राप्त इत्यर्थः।

वृद्ध्यौत्वेति। वार्तिकम्। वृद्ध्यादीनां क्रमेण-गावौ हरौ क्रोष्ट्रा हरये इत्यवकाशः। नुमोऽवकाशो वारीणि इति। अतिसखीनीत्यत्र जश्शसोः "सख्युरसम्बुद्धौ" इति णित्वाद्वृद्धिः परत्वान्नुमं बाधित्वा प्राप्ता। वारिणीत्यत्र ङौ तु "अच्च घेः" इत्यौत्त्वं प्राप्तम्। प्रियक्रोष्टूनीत्यत्र जश्शसोस्तृज्वत्त्वं प्राप्तम्। वारिशब्दान्ङ्यादौ गुणः प्राप्तः। अत्र पूर्वविप्रतिषेधान्नुमेवेत्यर्थः। वारिणे इति। ङयि गुणं बाधित्वा नुमि णत्वे रूपम्। वारिण इति। ङसिङसोर्गुणं बाधित्वा नुमि णत्वे रूपम्। वारिणोरिति। ओसि यणं बाधित्वा नुमि णत्वे रूपम्। वारिण इति। ङसिङसोर्गुणं बाधित्वा नुमि णत्वे रूपम्। वारिणोरिति। ओसि यणं बाधित्वा नुमि णत्वे रूपम्। वारि-आमित्यत्र परत्वान्नुटं बाधित्वा नुमि प्राप्त

आह--नुमचिरेति। नुडिति। नुम्नुटोः को विशेष इत्यत आह-नामीति दीर्घ इति। नुमि तु सति तस्याङ्गभक्तत्वा"न्नामी"ति दीर्घो न स्यादिति भावः। वारिणीति। ङौ "अच्च घेः" इत्यौत्त्वं परमपि बाधित्वा "वृद्ध्यौत्त्वे"ति पूर्वविप्रतिषेधान्नुम्। न विद्यते आदिः= उत्पत्तिः यस्य सः अनादिः=ई()आरः। अनादिः अविद्या। अनाद#इ ब्राह्ह। त्रिलिङ्गोऽयं विशेष्यनिघ्नः। तस्य नपुंसकत्वे प्रथमाद्वितीययोर्वारिवद्रूपाणि।

तत्त्व-बोधिनी

इकोऽचि विभक्तौ २८०, ७।१।७३

इकोऽचि। विभक्तौ किं? मधु मद्यं तस्येद माधवम्। अत्र नुमि सति टिलोपः स्यात्।

वृद्धौत्त्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन। वृद्ध्यौत्वेति। "अति सखिनी"त्यत्र "सख्युरसंबुद्धा"विति णिद्वद्भावाद्वृद्धिः प्राप्ता, "वारिणी"त्यत्र तु "अच्च घे"रित्यौत्त्वम्, "प्रियक्रोष्टूनी त्यादौ तृज्वद्भावः प्राप्तः ननु नुम्नुटोः को विशेषस्तन्नाह---- नामीति दीर्घत्वमिति। नुमस्त्वङ्गभक्तत्वात्तस्मिन्सति दीर्घो न स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ७।१।७४

तृतीयादिषु विभक्तिष्वजादिषु भाषितपुंस्कम् इगन्तं नपुंसकं गालवस्याचार्यस्य मतेन पुंवद् भवति। यथा पुंसि ह्रस्वनुमौ न भवतः, तद्वदत्र अपि न भवतः इत्यर्थः। ग्रामणीः ब्राह्मणः। ग्रामणि ब्राह्मणकुलम्। ग्रामण्या। ब्राह्मणकुलेन, ग्रामणिना ब्राह्मणकुलेन। ग्रामण्ये ब्राह्मणकुलाय, ग्रामणिने ब्राह्मणकुलाय। ग्रामण्यो ब्राह्मणकुलात्, ग्रामणिनो ब्राह्मणकुलात्। ग्रामण्यो ब्राह्मणकुलस्य, ग्रामणिनो ब्राह्मणकुलस्य। ग्रामण्योर् ब्राह्मणकुलयोः, ग्रामणिनोर् ब्राह्मणकुलयोः। ग्रामण्यां ब्राह्मणकुलानाम्, नुमचिर इति पूर्वविप्रतिषेधेन नुट्, ग्रामणीनां ब्राह्मणकुलानाम्। ग्रामण्यां ब्राह्मणकुले, ग्रामणिनि ब्राह्मणकुले। शुचिर्ब्राह्मणः। शुचि ब्राह्मणकुलम्। शुचये ब्राह्मणकुलाय, शुचिने ब्राह्मणकुलाय। शुचेर् ब्राह्मणकुलात्, शुचिनो ब्राह्मणकुलात्। शुचेर् ब्राह्मणकुलस्य, शुचिनो ब्राह्मणकुलस्य। शुच्योर् ब्राह्मणकुलयोः, शुचिनोर् ब्राह्मणकुलयोः। शुचौ ब्राह्मणकुले, शुचिनि ब्राह्मणकुले। तृतीयादिषु इति किम्? ग्रामणिनी ब्राह्मणकुले। शुचिनी ब्राह्मणकुले। भाषितपुंस्कम् इति किम्? त्रपुणे। जतुने। इह कस्मान् न भवति, पीलुर्वृक्षः, पीलु फलम्, पीलुने फलाय इति? समानायामाकृतौ यद् भाषीत्पुंस्कं तुल्ये प्रवृत्तिनिमत्ते तस्य पुंवद्भावः। इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य, फलाकृतिर्नपुंसके। तदेतदेवं कथं भवति भासितपुंस्कम् इति? भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भासितपुंस्कशब्देन उच्यते, उअद्योगादभिधेयम् अपि यद् नपुंसकं तदपि भाषितपुंसकम्। तस्य प्रतिपादकं यच् छब्दरूपं तदपि भाषितपुंस्कम् इति? इकः इत्येव, कीलालपा ब्राह्मणः। कीलालपं बाह्मणकुलम्। कीलालपेन ब्राह्मणकुलेन। अचि इत्येव, ग्रामणिभ्यां ब्राह्मणकुलाभ्याम्।

लघु-सिद्धान्त-कौमुदी

तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य २५०, ७।१।७४

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि। सुधिया, सुधिनेत्यादि॥ मधु। मधुनी। मधूनि। हे मधो, हे मधु॥ सुलु। सुलुनी। सुलूनि। सुलुनेत्यादि॥ धातृ। धातृणी। धातॄणि। हे धातः, हे धातृ। धातॄणाम्॥ एवं ज्ञात्रादयः॥

न्यासः

तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य। , ७।१।७४

"इगन्तं नपुंसकम्()" इति। नपुंसकस्येक इत्यनुवत्र्तते। तच्च यद्यपि षष्ठ()न्तं प्रकृतम्(), तथाप्येतदर्थाद्विभक्तिविपरिणामो भवतीति प्रथमान्तं सम्पद्यते। "पुंवद्भवति" इति। अस्यार्थं स्पष्टीकर्त्तुमाह--"यथा" इत्यादि। कथं पुनः "पुंवद्भवति" इत्यनेन प्रतिषेधातिदेशः शक्यते वक्तुम्()। एवं मन्यते--पुंसि तृतीयादिष्वजादिषु न किञ्चित्? कार्यं विधीयते यन्नपुंसकेऽतिदश्येत। तस्मान्नपुंसकाश्रयस्य कार्यस्य पुंस्यभावात्? प्रतिषेधातिदेश एवायं विज्ञायते। एवमपि नुम्? एव प्रकृतस्याभावातिदेशः पक्षे स्यात्(), ह्यस्वस्य; तस्याप्रकृतत्वात्(), ततश्च ह्यस्वाश्रयाणि गुण नाभाव नुडौत्वात्त्वानि प्रसज्येरन्()--"घेर्ङिति" (७।३।१११) इत्यौत्वात्त्वम्()--ग्रामण्यां ब्राआह्मणकुल इति? नैतदस्ति; नुमभावमात्रातिदेशे ह्रतिदेश एवानरथकः स्यात्()। नुम एव गालवस्य मतेन प्रतिषेधं कुर्यात्()। तस्मादतिदेशासामथ्र्याद्? ह्यस्वाभावोऽप्यतिदिश्यते। "ग्रामणीब्र्राआह्मणः, ग्रामाणि ब्राआह्मणकुलम्()" इति। भाषितपुंस्कत्वदर्शनार्थमिदमुक्तम्(), न तूदाहरणम्()। इदमत्रोदाहरणम्()--"ग्रामण्या ब्राआह्मणकुलेन" इति। अत्र पुंवद्भावेन ह्यस्वो न भवति, नुमपि। "एरनेकाचः" ६।४।८२ इति ह्यस्वत्वम्(), "आङो नाऽस्त्रियाम्()" ७।३।११९ इति नाभावः। "ग्रामणीनाम्()" इति। पूर्वविप्रतिषेधेन नुटि कृते "नामि" ६।४।३ इति दीर्घत्वम्()। न्नुचिशब्दस्य तृतीयैकवचनं नोदाह्मतम्; विशेषाभावात्()। सत्यसति वा पुंवद्भावे "आङो नाऽस्त्रियाम्()" ७।३।११९ इति नाभावेन भवितव्यम्()। "शुचये" इति। पुंवद्भावपक्षे न नुम्(), "घेर्ङिति" ७।३।१११ इति गुणः। "शुचिने" इति। पुंवद्भावाभावपक्षे नुम्()। "ग्रामणिनी ब्राआह्मणकुले" इति। पुंवद्भावाभावादिह ह्यस्वनुमौ भवतः। "त्रपुणे, जतुने" इति। सर्वकालं नपुंसकत्वमेवानयोरिति भाषितपुंस्कत्वाभावः। तेनात्र पुंवदेभावाभावान्नुम्भवत्येव। "इह कस्मान्न भवति" इति। भाषितपुंस्कशब्दस्य बहुव्रीहेः शब्दोऽन्यपदार्थः। पोलुशब्दश्चायं पुंसि वृक्षे वर्त्तित्वा पीलोर्विकारः फलमिति विवक्षिते सति "ओरञ्()" ४।२।७० इत्यागतस्याञः "फले लुक्()" (४।३।१६३) इति लुक्? क्रियते, तदा नपुंसके फले वत्र्तत इति भाषितपुंस्को भवति, न चेह कश्चिद्विशेष उपात्तः, तस्माद्भवितव्यमेदात्र पुंवद्भावेनेति मन्यमानस्य प्रश्नः। "समानायामाकृतौ" इत्यत्तरम्()। अस्यैवार्थं स्पष्टीकर्त्तुमाह "तुल्य प्रवृत्तिनिमित्ते" इति। अत्र "तस्य पुंवद्भावो विधीयते" इत्यध्याहार्यम्()। आक्रियेते व्युत्पाद्येते परिच्छिद्येते अनया वृद्धिशब्दादिति "आकृतिः"। शब्दस्य प्रवृत्तिकारणमिहाकृतिरभिप्रेता, न सन्निदेशः, नापि जातिमात्रम्()। त()स्मस्तु तुल्ये प्रवृत्तिनिमित्ते यद्भाषितपुंस्कं तस्य पुंवद्भावो विधीयते। तथा च--ग्रामणीशब्दस्य, शचिशब्दस्य च समासे प्रवृत्तिनिमत्ते पुंवद्भाव उदाह्मतः, यथा--ग्रामणीशब्दस्य पुंसि नपुंसके च वत्र्तमानस्य ग्रामनयनं प्रति कर्त्तृत्वं समानाकृतिः प्रवृत्तिनिमित्तम्()। शुचिशब्दस्यापि शुचित्वं गुणः तत्रैवैतत्? स्यात्()। इहापि समानैवाकृतिः? इत्याह--"इह तु" इत्यादि। तु शब्द#ओ ग्रामणीशब्दादेर्विशेषं दर्शयति। अनेन पीलुशब्दस्य भिन्नायामाकृतौ भाषितपुंस्कत्वं दर्शयति। वृक्षाकृतिः=वृक्षजातिः। फलाकृतिः=फलजातिः। तदेवं समानायामाकृतौ यद्भाषितपुंस्कं तस्य पुंदद्भावो विधीयते। न तु पीलुशब्दः समानायमाकृतौ भाषितपुंस्क इति न भवति तस्य पुंवद्भावः। "तदेतदेवम्()" इत्यादि। यदेतदुक्तम्()--"समानायमाकृतौ" इत्यादि, तदेतदेवम्प्रकारमर्थरूपं कथम्भवति? न कथञ्चिदित्यर्थः। "समानायामाकृतौ" इत्यस्य विशेषस्यानुपादानादित्यभिप्रायः। "भाषितपुंस्कग्रहणात्()" इत्यादिना यथैतदेव भवति तथा दर्शयति। शब्दे ह्रन्यपदार्थे समाश्रीयमाणे सत्येतन्नोपपद्यते। न चात्र शब्दोऽन्यपदार्थत्वेनाश्रितः, किं तर्हि? अर्थः। सोऽपि न सर्वः, अपि तु प्रत्यासत्तेर्यस्य शब्दस्य यत्? प्रवृत्तिनिमित्तं स एव विज्ञायत इति स एव भाषितपुंस्कशब्दोनोच्यते; अन्यथा सर्व एव ह्रर्थो भाषितपुंस्को भवति, अन्ततोऽर्थशब्देनापि भाषितपुंस्कत्वसम्भवात्()। तत्र यदि येन केनचिच्छब्देन यो भाषितपुंस्कः स इहाश्रीयते, तदा भाषितपुंस्कग्रहणमनर्थकं स्यात्(); व्यावर्त्त्याभावात्()। तस्माद्यस्य नपुंसकाभिधायिनः शब्दस्य पुंवद्भाव इह विधातुमिष्टस्तेनैव स्वमिन्? प्रवृत्तिनिमित्ते पुमान्? भाषितः, स एव भाषितपुंत्कोऽत्राक्षीयते। "तेद्योगात्()" इत्यादि। तेन प्रवृत्तिनिमित्तलक्षणेनार्थेन योगात्? सम्बन्धादभिधेयं यन्नपुंसकं

तदपि भाषितपुंस्कमितयुच्यते। भवति हि तद्योगात्? ताच्छब्द्यम्(), यथा--यष्टीः प्रवेशयेति। योगः पुनरत्र समवायसमवायिलक्षणः; शब्दप्रवृत्तिनिमित्तस्यार्थस्य नपुंसकेन समवायात्()। "यत्? तस्य" इत्यादि। तस्य नपुंसकस्य यत्? प्रतिपादकं शब्दरूपं तदापि भाषितपुंत्केन नपुंसकेन योगाद्भाषितपुंस्कमित्युच्यते। योगः पुनरनयोर्वाच्यवाचकभावः। तत्र यद्यपि सूत्रेऽर्थो भाषितपुंस्कशब्देनोपात्तः, तथाऽप्यर्थे कार्यासम्भवात्? यथोक्तन प्रकारेण यो भाषितपुंस्कः शब्दस्तस्यैवायं पुंवद्भावो विधीयते, एवञ्च स विधीयमानः समानायामाकृतौ यो भवितपुंस्कः शब्दः सामथ्र्यात्? तस्य भवतीति विज्ञायते। यो ह्वेवं भाषितपुंस्केन शब्दप्रवृत्तिनिमित्तेन सम्बद्धं नपुंसकमाह स नियोगतः समानायामाकृतौ भाषितपुंस्को भवति। यथा स एव ग्रामणीशब्दः, शुचिशब्दश्च। पीलुशब्देन यत्र भाषितः पुमान्? प्रवृत्तिनिमित्ते वृक्षाकृतौ न तत्सम्बद्धमसौ नपुंसकमाह। किं तर्हि? फलाकृतिसम्बन्धम्()। तस्मात्? पीलुशब्दो न समानायामाकृतौ भाषितपुंस्क इति न भवति तस्य पुंवद्भावः। "कीलालपा" इति। "अतो मनिन्क्वनिब्वनिपश्च" ३।२।७४ इति विच्()। कोलालपाशब्दोऽयं समानायामाकृतौ भाषितपुंस्कः--उभयत्रापि वत्र्तमानः कीलालपात्वं प्रवृत्तिनिमित्तमादाय प्रवत्र्तत इति कृत्वा। इगन्तस्तु न भवतीति न भवति पुंवद्भाव; तेन ह्यस्वत्वं भवत्येव। तस्मिन्? सतदि "टाङसिङसामिनात्स्याः" ७।१।१२ इतीनादेशे कृते कीलालपेनेति भवति। यदि पुनरत्र पुंवद्भावः स्यात्? तदा ह्यस्वत्वं न स्यात्(), ततश्च "आतो धातोः" ६।४।१४० इत्यकारलोपे कृते कोलालापेति स्यात्()॥

बाल-मनोरमा

तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ३१९, ७।१।७४

टादिषु अचिविशेषमाह--तृतीयादिषु। भाषितः पुमान् येन प्रवृत्तिनिमित्तेन तत्-भाषितपुंस्कं, तदस्यास्तीति अर्शाअद्यच्। शब्दस्वरूपं विशेष्यम्। पुंस्त्वे नपुंसकत्वे च एकप्रवृत्तिनिमित्तकमिति यावत्। "इकोऽचि विभक्तौ इत्यत "इकोऽची"ति "नपुंसकस्य झलचः" इत्यतो "नपुंसकस्ये"ति चानुवर्तते। षष्ठी च प्रथमया विपरिणम्यते। तदाह-प्रवृत्तिनिमित्तैक्य इत्यादिना। पुंवद्वेति। गालवग्रहणादिति भावः। अचीति। अजादावित्यर्थः। पुंवत्त्वे ह्रस्वनुमोरभावः फलति। घटपटादिशब्दास्तावद्घटत्वपटत्वादिरूपेणैव तत्तद्व्यकिं()त प्रत्याययन्ति, ननु द्रव्यत्वपृथिबीत्वादिरूपेणेति निर्विवादम्। ततश्च यद्विशेषणं पुरस्कृत्य घटादिशब्दास्तत्तद्व्यक्तिषु प्रयुज्यन्ते तद्विशेषणं प्रवृत्तिनिमित्तमित्युच्यते। वाच्यतावच्छेदकमिति यावत्। एवंच नपुंसकत्वे लिङ्गान्तरे च यस्य एकमेव वाच्यतावच्छेदकं तच्छब्दस्वरूपं भाषितपुंस्कशब्देन विवक्षितम्। अनादिशब्दश्च उत्पत्त्यभावात्मकमनादित्वं पुरस्कृत्य स्त्रीपुंनपुंसकतत्तद्व्यक्तिप्रत्यायक इति भवति तस्य प्रवृत्तिनिमित्तैक्ये भाषुतपुंस्कता। अतस्तस्य टादावचि पुंवत्त्वविकल्प इत्यभिप्रेत्योदाहरति--अनादये अदादिने इति। पुंवत्त्वे नुमोऽप्रवृत्ते "धेर्ङिती"ति गुणः। पुंवत्त्वाऽभावे तु नुमिति भावः। इत्यादीति। अनादेः-अनादिनः। अनाद्योः-अनादिनोः। आमि तु अनादीनामित्येव। शेषं वारिवदिति। प्रथमाद्वितीययोर्भ्यामादौ हलि च वारिवदित्यर्थः। "प्रवृत्तिनिमित्तैक्य" इत्यस्य प्रयोजनं दर्शयितुमाह--पीलुर्वृक्ष इति। यदा वृक्षविशेषः पीलुशब्दवाच्यस्तदा पुंलिङ्गः पीलुशब्दः, यदा पीलुजन्यफलं पीलुशब्दवाच्यं तदा नपुंसकलिङ्गोऽयम्। "फले लुक्" इत्यणो लुक्। अत्र फले वाच्ये पुंवत्त्वं नेत्यर्थः। कुत इत्यत आह-प्रवृत्तिनिमित्तभेदादिति। वृक्षत्वव्याप्यजातिविशेषात्मकं पीलुत्वं वृक्षविशेषे वाच्ये प्रवृत्तिनिमित्तम्। फलविशेषे तु वाच्ये फलत्वव्याप्यजातिविशेषात्मकं पीलुत्वं प्रवृत्तिनिमित्तमिति प्रवृत्तिनिमित्तभेदादित्यर्थः। तदुक्तम्--"पीलुर्वृक्षः फलं पीलु पीलुने ननु पीलवे। वृक्षे निमित्तं पीलुत्वं, तज्जत्वं तत्फले पुनः।" इति।

तत्त्व-बोधिनी

तृतीयादिषु भाषितपुंस्क पुंवद्गालवस्य २८१, ७।१।७४

तृतीयादिषु। यद्यत्र भाषितः पुमान् येन शब्देन स भाषित पुंस्कः शब्द इति विज्ञायेत तदा "पीलुने"इत्यादावतिप्रसङ्गः स्यात्, अतो व्याचष्टे--प्रावृत्तनिमित्तैक्ये इति। अयं भावः--भाषितः पुमान् यस्मिन् अर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तं, तदस्यास्तीति अर्श आदित्वादच्। तेनैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपं तल्लयत इति। "इकोऽचिविभक्ता"वित्यतो "ऽची"त्यनुवर्तनादाह--टादावचीति। इगन्तं किम्(), सोमपेन कुलेन। अचि किम्(), ग्रामणिभ्याङ्कुलाभ्याम्। टादौ किम्(), अनादिनी। अनादीनि। तत्फलमिति। पीलोः फलं पीलु। "फले लु"गिति ओरञो लुक्। प्रवृत्तिनिमित्तभेदादिति। पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तं, फले तु फलत्वाव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा। उभयथापि पुंनपुंसकयोनैकं प्रवृत्तिनिमित्तमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अस्थिदधिसक्थ्यक्ष्णाम् अनङ्दात्तः ७।१।७५

अस्थि दधि सक्थि अक्षि इत्येतेषा नपुंसकानां तृतीयादिषु अजादिषु विभक्तिषु परतो ऽनङित्ययम् आदेशो भवति, स च उदात्तो भवति। अस्थ्ना। अस्थ्ने। दध्ना। दध्ने। सक्थ्ना। सक्थ्ने। अक्ष्णा। अक्ष्णे। अस्थ्यादय आद्युदात्ताः, तेषाम् अनङादेशः स्थानिवद्भावादनुदात्तः स्यातिति उदात्तवचनम्। तत्र भसंज्ञायाम् अल्लोपे कृते उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता भवति। एतैरस्थ्यादिभिर् नपुंसकैरनपुंसकस्य अपि अङ्गस्य तदन्तग्रहणम् इष्यते। प्रियास्थ्ना ब्राह्मणेन। प्रियदध्ना। तृतीयादिषु इति किम्? अस्थिनी। दधिनी। अचि इत्येव, अस्थिभ्याम्। दधिभ्याम्।

लघु-सिद्धान्त-कौमुदी

अस्थिदधिसक्थ्यक्ष्णामनङ्दात्तः २४७, ७।१।७५

एषामनङ् स्याट्टादावचि॥

न्यासः

अस्थिदधिसक्थ्यक्ष्णामनङ्दात्तः। , ७।१।७५

"इकोऽचि विभक्तौ" ७।१।७३ इति नुमि प्राप्तेऽस्थ्यादीनामनङ विधीयते। ङकारोऽन्त्यादेशार्थः। अकार उच्चारणार्थः। अस्थ्यादयश्चैते "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्याद्युदात्ताः, शेषमनुदात्तम्()। तत्रानङ्? विधीयमानः स्थानिवद्भावादनुदात्तत्वं प्राप्नोतीत्युदात्तत्वामुच्यते--नब्विषयस्येति। नपुंसकविषयस्येत्यर्थः। "अस्थ्ना" इति। अनङि कृते "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः। "एतैः" इत्यादि। कथं पुनरोतल्लभ्यते, यावता प्रकृतस्यास्थ्यादिभिर्विशेषणाद्विशेषणेन तदन्तविधिरिति विज्ञानात्? "अङ्गाधिकारे तस्य सदुत्तरपदस्य" (पु।प।वृ।८५) इति वचनाद्वा यद्यपि तदन्तविधिर्भवति, तथापि सत्यपि तस्मिन्नस्थ्याद्यन्तत्यानपुंसकस्य ग्रहणं नोपपद्यते, नपुसकस्येत्यनुवृत्तेः? नैष दोषः; न ह्यत्र नपुंसकेनाङ्गं विशिष्यते, अपि तु श्रुतत्वादस्थ्यादय एव। एवञ्च तदन्तस्याङ्गस्य लिङ्गान्तरेपि वत्र्तमानस्यास्थ्यादीनां नपुंसकत्वं विद्यत एव। तेन नपुंसके ये वत्र्तन्तेऽस्थ्यादयस्तदन्तस्यानपुंसकेऽपि वत्र्तमानस्य ग्रहणमुपपन्नं भवति। यदि तर्हि तदन्तस्य ग्रहणम्(), केवलानां न सिध्यति? अयमप्यदोषः; व्यदेशिवद्भावात्? केवलानां न भविष्यति। "व्यपदेशिवद्भावोऽयतिपदिकेन" (शाक।प।६५) इत्येषा परिभाषा प्रत्ययविधिविषयेतीह नोपतिष्ठत एव। नपुंसकेनास्थ्यादिविशेषणं किम्()? यदा ते पदुच्छाशब्दाः सन्तोऽपि लिङ्गान्तरे वत्र्तन्ते तदा मा भूत्()--दधिर्नाम कश्चित्? तेन दधिनेति॥

बाल-मनोरमा

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ३२०, ७।१।७५

अस्थि, दधि, सक्थि, आक्षि एतेषां प्रथमाद्वितीययोर्वारिवद्रूपाणि। टादावचि विशेषमाह--अस्थिदधि। तृतीयादिष्विति, अचीति चानुवर्तते। तदाह--एषामित्यादिना। नुमोऽपवादः। अनङि हकार इत्, अकार उच्चारणार्थः। ङित्त्वादन्तादेशः। दधनि दध्नि इति। "विभाषा ङिश्योः" इत्याल्लोपविकल्प इति भावः। तदन्तस्यापीति। आङ्गत्वादिति भावः। अतिदध्नेति। दधि अतिक्रान्तं कुलमतिदधि। अत्रापि नपुंसकस्येति संबध्यते। ततश्च धाञः "आदृगमहन" इति किप्रत्यये दधिशब्दस्य पुंस्त्वे दधिनेत्येव। नपुंसकस्येति श्रूयमाणमस्थ्यादिभिरेवान्वेति। तेनातिदध्ना ब्राआह्मणेनेत्यादि सिद्धम्। इति इदन्ताः।

अथ ईदन्ताः। सु ध्यायतीति, सु=शोभना धीर्यस्येति"वा विग्रहे सुधीशब्दस्य "ह्रस्वो नपुंसके" इति ह्रस्वत्वे वारिवद्रूपाणीत्याह--सुधि सुधिनी इत्यादि। परत्वान्नुमा इयङ् बाध्यत इति भावः। सुधिया सुधिनेति। सुध्यातृत्वस्य शोभनज्ञानवत्त्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च एकत्वात्पुंवत्त्वविकल्पः। एवं प्रधीशब्दः। तत्र "नभूसुधियो"रिति निषेधाऽभावादेरनेकाच इति यण्। इति ईदन्ताः। अथ उदन्ताः। मध्विति। " मधु मद्ये पुष्परसे" "मधुर्वसन्ते चैत्रे च" इति कोशान्मधुशब्दस्य पुंनपुंसकयोः मद्यत्ववसन्तत्वादिरूपप्रवृत्तिनिमित्तभेदान्न पुंवत्त्वविकल्पः। भृद्वीकाविकारवाचिनो मधुशब्दस्य तु नित्यनपुंसकत्वान्न पुंवत्त्वमिति विवेकः। सानुशब्दस्य स्नुर्वेति। "पद्दन्" इति सूत्रे "मांसपृतनासानूनां मांस्पृत्स्नबो वाच्याः" इति वार्तिका"दिति शेषः। स्नूनि सानूनीति--शसि रूपं, शसादावेव स्नुविधेः। प्रभृतिग्रहणस्य प्रकारार्थत्वे सुठ()पि स्नुर्भवति। अस्य च "स्नुः प्रस्थः सानुरस्त्रिया"मिति पुंनपुंसकत्वाद्भाषितपुंस्कत्वादस्त्येव पुंवत्त्वविकल्पः। प्रियक्रोष्टु प्रियक्रोष्टुनी इति। प्रियक्रोष्टा यस्येति विग्रहः। असर्वनामस्थानत्वान्न तृज्वत्वम्। अथ जश्शसोः शिभावे सति सर्वनामस्थानत्वान्नुमं बाधित्वा परत्बात्तृज्वत्त्वे प्राप्ते आह--तृज्वद्भावादिति। "वृद्ध्यौत्वे"ति वार्तिकादिति भावः। प्रियक्रोष्टूनीति। जश्शसोः शिभावे नुमि "सर्वनामस्थाने चे"ति दीर्घे रूपम्। नच नित्यत्वादेव नुम् सिद्धेः किं पूर्वविप्रतिषेधेनेति वाच्यं, नित्यत्वान्नुमि कृतेऽपि "यदागमाः" इति न्यायेन "तृज्वत्क्रोष्टुः" इत्यस्य नुम्विशिष्टस्य ग्रहणापत्तौ पुनस्तृज्वत्त्वापत्तेः। पूर्वविप्रतिषेधमाश्रित्य तृज्वत्त्वं बाधित्वा नुमि कृते तु न पुनस्तृज्वत्त्वम्, "विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न्यायादित्यलम्। पुंवत्पक्षे इति। तत्रापि तृज्वत्त्वपक्ष इत्यर्थः। प्रियक्रोष्ट्रेति। पुंवत्त्वे तृज्वत्त्वे च सति रूपम्। अनपुंसकत्वान्न नुम्। प्रयिक्रोष्टुनेति। पुंवत्त्वे, तदभावे च तृज्वत्त्वाऽभावे रूपम्। पुंवत्वाऽभावपक्षेऽपि नुमं बाधित्वा परत्वान्नात्वमेव। प्रियक्रोष्ट्रे इति। पुंवत्त्वे तृज्वत्त्वे यण्। अनपुंसकत्वान्न नुम्। प्रियक्रोष्टवे इति। पुंवत्त्वे तृज्वत्त्वाऽभावे रूपम्। अन्यत्रेति। पुंवत्त्वाऽभावपक्ष इत्यर्थः। प्रियक्रोष्टुनेति। पुंवत्त्वतृज्वत्त्वयोरभावे रूपम्। तथा ङयि त्रीणि रूपाणि। एवं ङसिङसोः। प्रियक्रोष्टुः प्रियक्रोष्टोः प्रियक्रोष्टुनः। प्रियक्रोष्ट्रोः-प्रियक्रोष्ट्वोः-प्रियक्रोष्टुनि। भ्यामादौ हलि मधुवत्। इत्युदन्ताः। अथ ऊदन्ताः। सुल्विति। सुष्ठु लुनातीति क्विप्। "ह्रस्वो नपुंसके" इति ह्रस्वः। सुलुनी इति। "ओः सुपी"ति यणं बाधित्वा परत्वान्नुम्। सुल्वेति। शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तमेकमिति पुंवत्त्वविकल्पः। पुंवत्त्वे ह्रस्वाऽभावेनाऽघित्वान्नाभावो न। नुमभावश्च। "ओः सुपी"ति यण्। पुंवत्त्वाऽभावपक्षे तु यणं बाधित्वा नुम्। ङेप्रभृतिषु तु पुंवत्त्वाऽभावे "वृद्ध्यौत्वे"ति पूर्वविप्रतिषेधेन नुमि सुलुने इति , पुंवत्त्वे तु "सुल्वे" इत्यादि रूपद्वयम्। इत्यूदन्ताः। अथ ऋदन्ताः। धातृ इति। दधातीति धातृ। "न लुमता" इति निषेधादनङ् न। धातृणी इति। "इकोऽची"ति नुमि "ऋवर्णान्नस्ये"ति णत्वम्। धातृ()णीति। जश्शसोः शिभावे नुमि "सर्वनामस्थाने चे"ति दीर्घे णत्वम्। "न लुमते"ति निषेधस्याऽनित्यत्वात्संबुद्धिनिमित्तको ह्रस्वस्य पक्षे गुण इत्याह-हे धातः हे धातृ इति। धारणकर्तृत्वरूपप्रवृत्तिनिमित्तैक्याट्टादावचि पुंवत्त्वविकल्प इत्याह--धात्रा-धातृणेति। धात्रे-धातृणे। धातुः-धातृणः। धात्रोः-धातृणोः। "नुमचिते"ति नुट्। धातृ()णाम्। धातरि-दातृणि। इत्यृन्ताः।

तत्त्व-बोधिनी

अस्थिदधिस्क्थ्यक्ष्णामनङ्दात्तः २८२, ७।१।७५

अस्थिदधि। "इकोऽची"ति नुमि प्राप्ते विधिरयम्, नकारादकार उच्चारणार्थः। ङकारस्त्वन्तादेशार्थः। "नब्विषयस्याऽनिसन्तस्ये"ति फिट्सूत्रेणाऽस्थ्यादय एते आद्युदात्ताः। तत्राऽन्तस्यानुदत्तेकारस्य विधीयमानोऽनङ् "स्थानेऽनन्तरतमः"इत्यनुदात्तः स्यादित्युदात्त उच्यते। तच्चोदात्तत्व"मस्थनि""दधनि"इत्यादावल्लोपाभावपक्षे स्फुटम्, "दध्ना""दध्ने"इत्यादावनङोऽकारलोपे "अनुदात्तस्य च यत्रोदात्त लोपः"इत्युदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं प्रयोजनमिति बोध्यम्। तृतीयाष्वित्यनुवत्र्तते, अचीति च, तदाह--टादावचीति। टादौ किम्()। दधिनी, दधीनि। अचि किं? दधिभ्याम्। तदन्तस्यापीति। आङ्गत्वादिति भावः। अतिदध्नेति। दधि अतिक्रान्तेनेत्यर्थः। स्त्रकियामप्यतिदध्नेत्येव। संनिपातपरिभाषया बहिरङ्गपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः। प्राचा तु "प्रियदध्ना ब्राआह्णणेने"त्युक्तम्। स्त्रियां "प्रियदध्न्या""प्रियदध्न्यै"इत्यद्यपि कैश्चिदुक्तम्। तदसत्। उरःप्रभृतिषु दधिशब्दस्य पाठाद्बहुव्रीहौ नित्यं कप्यनङः प्रसक्त्यभावात्। उक्तपरिभाषाभ्यां ङीपः प्रवृत्तेर्दूरापास्तत्वाच्चेति दिक्। सुधिनी इति। परत्वान्नुमा इयङ्()बाध्यते। सुधियेति। शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् "तृतीयादिष्वि"ति पुंवत्पक्षे#ऐ नुमभावात् "न भूसुधियो"रिति यण्निषेधाच्चेयङ्। प्रध्येति। अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्तृतीयादिष्विति पुंवत्पक्षे यण्। नपुंसकपक्षे तु नुमिति बोध्यम्। "बह्वयः श्रेयोस्यो यस्य तद्बहुश्रेयसी कुल मित्यत्र नपुंसकह्रस्ततिवमं न, "ईयसो बहुव्रीहेर्ने"ति ह्रस्वामात्रस्य प्रतिषेधादित्येके। अन्ये तूपसर्जनह्रस्व एव निषिध्यते, नपुंसकह्रस्वत्वं तु स्यादेव। "बहुश्रेयसि" बहुश्रेयसिनी"इतयाहुः। मध्विति। "मधु मद्ये पुष्परसे""मधुर्वसन्ते चैत्रे च"। इह पुंनपुंसकयोरेकं प्रवृत्तिनिमित्तं नास्ति, किंतु मद्यत्ववसन्तत्वादिरूपं भिन्नं भिन्नमेव। तथा च भाषितपुंस्कत्वाऽभावा "न्मधुने""मधुनः""मधुनो"रित्येव भवति, न तु "मधवे""मधो"रित्यादीति दिक्। स्नुर्वेति। "मांसपृतनासानूना"मिति वार्तिककीरेक्त्येति भावः। "स्त्रुः प्रस्थः सानुरस्त्रिया"मित्युभयलिङ्गः सानुशब्दः, तस्य नपुंसकत्वे रूपमाह---स्नूनि सानूनीति। पुंसि तु स्नून्। सानून्---इत्यादि। सुल्वेति।शोभनलवनकर्तृत्वं पुंनपु#ंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे नुमभावात् "ओः सुपी"ति यण्। सुलुनेति। यणं बाधित्वा परत्वान्नुम्। धात्रेति। धारणपोषणकर्तृत्वं पुंनपुंसकयोरेकमेवेति पुंवत्पक्षे यण्।

---

सूत्रम्

काशिका-वृत्तिः

छन्दस्यपि दृश्यते ७।१।७६

अस्थिदधिसक्थ्यक्ष्णाम् अनङ् छन्दस्यपि दृश्यते। यत्र विहितस् ततो ऽन्यत्र अपि दृश्यते। अचि इत्युक्तम्, अनजादौ ऐ दृश्यते। इन्द्रो दधीचो अस्थभिः। भद्रं पश्येमाक्षभिः। तृतीयादिषु इत्युक्तम्, अतृतीयादिषु अपि दृश्यते। अस्थान्युत्कृत्य जुहोति। विभक्तौ इत्युक्त, अविभक्तावपि दृश्यते। अक्षण्वता लाङ्गलेन। अस्थन्वन्तं यदनस्था बिभर्ति।

न्यासः

छन्दस्यपि दृश्यते। , ७।१।७६

"यतो विहितः" इत्यादिनाऽपिशब्दस्य सर्वोपाषिण्यभिचारार्थतां दर्शयति। "अस्थभिः" इति। अनङि कृते नलोपः। "अस्थान्युत्कृत्य" इति। शस्यनङ्। "अक्षण्वता" इति। अत्रापि मतुपि "अनो नुट्()" ८।२।१६ इति नुल्यम्()। द्वितीयान्तमेतत्()। "यदनस्थः" इति। अस्थि यसय नास्तीति सावनङ, "सर्वनामस्थाने च" ६।४।८ इति दीर्घः॥

---

सूत्रम्

काशिका-वृत्तिः

ई च द्विवचने ७।१।७७

द्विवचने परतः छन्दसि विषये अस्थ्यादीनाम् ईकारादेशो भवति, स च उदात्तः। अक्षी ते इन्द्र पिङ्गले कपेरिव। अक्षीभ्यां ते नासिकाभ्याम्। अक्षी इत्यत्र नुम् परत्वादीकारेण बध्यते। तेन कृते सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितम् एव इति पुनर् नुम् न क्रियते।

न्यासः

ई च द्विवचने। , ७।१।७७

चकारश्छन्दसीत्यनुकर्षणार्थः। "अक्षी ते" इति अक्षि औ इति स्थिते "नपुंसकाच्च" ७।१।१९ इति शीभावः, ईकारे कृते "प्रथमयो पूर्वसवणः" ६।१।९८ इती दीर्घः, "दीर्घाज्जसि च" ६।१।१०१ इति प्रतिषिद्धोऽपि छान्दसत्वाद्भवति। ननु सवर्णे दीर्घत्वेनाऽप्येतत्? सिद्ध्यति? यद्यपि रूपं सिद्ध्यति, उदात्तत्वं तु न सिध्यति। एतेनोदत्त ईकारो विधीयते। अथ वा--रूपमपि न सिध्यति। पूर्वसवर्णाद्धि परत्वात्? पूर्वं नुमि कृते नैव सवर्णदीर्घः स्यात्()। अथाक्षी इत्यत्र "इकोऽचि विभक्तौ" (७।१।७३) इति नुम्? कस्मान्न भवति? इत्याह--"अक्षी इत्यत्र" इत्यादि। नुमोऽवकाशः--त्रपुणे, जतुन इति इकरस्यावकाशः--अक्षीभ्यमिति; प्रथमाद्विवचन उभयप्रसङ्गे परत्वादीकार एव भवति। अथेदानोमीकारे कृते पुनःप्रसङ्गविज्ञानान्नुम्? कस्मान्न भवति? इत्याह--"सकृद्गतो इति॥

---

सूत्रम्

काशिका-वृत्तिः

न अभ्यस्ताच् छतुः ७।१।७८

अभ्यस्तादङ्गादुत्तरस्य शतुः नुम् न भवति। ददत्, ददतौ, ददतः। दधत्, दधौ, दधतः। जक्षत्, जक्षतौ, जक्षतः। जाग्रत्, जाग्रतौ, जाग्रतः। शतुरनन्तर ईकारो न विहितः इति व्यवहितस्य अपि नुमः प्रतिषेधो विज्ञायते।

लघु-सिद्धान्त-कौमुदी

नाभ्यस्ताच्छतुः ३४७, ७।१।७८

अभ्यस्तात्परस्य शतुर्नुम् न। ददत्, ददद्। ददतौ। ददतः॥ ,

न्यासः

नाभ्यस्तच्छतुः। , ७।१।७८

"उदत्त, ददत्तौ" इति। "श्नभ्यस्तयोरात्तः" ६।४।११२ इत्याकारलोपः। अक्षितिजागर्त्याः "जक्षित्यादयः षट्()" ६।१।६ इत्यभ्यस्तसंज्ञा। कथं पुनरयं नुमः प्रतिषेधो विज्ञायते, यावता "अनन्तस्य विधिर्वा भवति प्रतिषेधो षा" (व्या।प।१९) इतीकारस्य प्रतिषेधो युक्तः? इत्याह--"शतुरनन्तरः" इत्यादि। लक्षणान्तरेण विहितस्य प्रतषेधो भवति, न तु शतुरनन्तर ईकारः केनचिद्विहितः। अङ्गस्येति वत्र्तते, न च नुमोऽन्यत्? कार्यं शतुः सम्भवति। अतः सामथ्र्याद्व्य वहितस्यापि "उगिवचाम्()" ७।१।७० इति नुमः प्रतिषेधो विज्ञायत इति॥

बाल-मनोरमा

नाभ्यस्ताच्छतुः , ७।१।७८

नाभ्यस्ताच्छतुः। "इदितो नुम् धातो"रित्यतो नुमित्यनुवर्तते। तदाह--अभ्यस्तादित्यादिना। ददिदिति। ददत्शब्दात्सुः। हल्ङ्यादिलोपः। "नाभ्यस्ता"दिति निषेधात् "उगिदचाम्" इति नुम् न। अत्वन्तत्वाऽभावाच्च न दीर्घ इति भावः। "जक्ष भक्षहसरनयोः", "जागृ निद्राक्षये", "दरिद्रा दुर्गतौ", "चकासृ दीप्तौ", "शासु अनुशिष्टौ" "दीधीङ् दीप्तिदेवनयोः", "वेवीङ् वेतिना तुल्ये" इति सप्त धातवोऽदादौ पठिता सुग्विकरणाः। तेभ्यो लटः शत्रादेशे शब्लुकिं सुबुत्पत्तौ "नाभ्यस्ताच्छतुः" इति निषेध इष्यते।

तत्त्व-बोधिनी

नाभ्यस्ताच्छतुः ३८०, ७।१।७८

नाभ्यस्ताच्छतुः। व्यवहितोऽपि नुमेवाऽत्र निषिध्यते, अन्येषामप्रसक्तेरित्यभिप्रेत्याह---नुम्न स्यादिति। ददिदिति। ददातीति ददत्। दाञो लटः शत्रादेशः। शपः श्लुः। "श्लौ"इति द्वित्वम्। अभ्यासस्य ह्रस्वः। "श्नाभ्यस्तयोरातः"इत्यलोपः। जक्षित्यदयः षट्। "ज"क्षिति पृथक् पदम्। "इति"शब्देन जक्षिरेव परामश्यते। इति आदिर्येषामित्यतद्गुणसंविज्ञानबहुव्रीहिस्तदेतदाह--षड्धातवोऽन्ये इति। इति तान्ताः। गोपायतीति गुप्। क्विपि विवक्षिते "आयादय आर्धधातुके वे"ति वैकल्पिकत्वादिहाऽऽयप्रत्ययाऽभावः। आयप्रत्ययपक्षे त्वतो लोपे यलोपे च "गोपा"इति रूपं बोध्यम्। इति पान्ताः।

---

सूत्रम्

काशिका-वृत्तिः

वा नपुंसकस्य ७।१।७९

अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस् तदन्तस्य नपुंसकस्य वा नुमागमो भवति। ददति, ददन्ति कुलानि। दधति, दधन्ति कुलानि। जक्षति, जक्षन्ति कुलानि। जाग्रति, जाग्रन्ति कुलानि।

लघु-सिद्धान्त-कौमुदी

वा नपुंसकस्य ३६६, ७।१।७९

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने। ददन्ति, ददति॥ तुदत्॥

न्यासः

वा नपुंसकस्य। , ७।१।७९

शतुप्रत्ययमात्रं नपुंसके न वत्र्तत इत्यभ्यस्तादह्गादुसरो यः शता तदन्तस्य नपुंसकस्य विकल्पो विज्ञायत इत्याह--"अभ्यास्तादङ्गात्()" इत्यादि॥

बाल-मनोरमा

धा नपुंसकस्य ४३९, ७।१।७९

शौ "नाभ्यस्तच्छतुः" इति नित्यं नुम्निषेधे प्राप्ते--वा नपुंसकस्य। "नाभ्यस्ताच्छतुः" इति सूत्रं नञ्वर्जमनुवर्तते। नपुंसकस्येति व्यत्ययेन पञ्चम्यर्थे षष्ठी। "इदितो नुम्धातोः" इत्यतो नुमिति "उगिदचा"मित्यतः "सर्वनामस्थाने" इति च अनुवर्तते। तदाह--अभ्यस्तादित्यादिना। ददन्तीति। नुमि अनुस्वारपरसवर्णौ। तुददिति। "तद व्यथने" अस्माच्छतृप्रत्यये "तुदादिभ्यश्शः" इति शः शपोऽपवादः, "अतो गुणे" इति शतुरकारेण पररूपे तुदच्छब्दः, तस्मात्स्वमोर्लुक्, प्रत्ययलक्षणविरहादसर्वनामस्थानत्वाच्च न नुम्, जश्त्वचर्त्वे इति भावः।

तत्त्व-बोधिनी

वा नपुंसकस्य ३९६, ७।१।७९

ददिति। पुंलिङ्गेऽ[प्य]यं व्युत्पादितः। शतेति। "ऋदुशने"त्यनङ्। शतृप्रत्यय इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

आच् छीनद्योर् नुम् ७।१।८०

अवर्णान्तादङ्गादुत्तरस्य शतुः वा नुमागमो भवति शीनद्योः परतः। तुदती कुले, तुअदन्ती कुले। तुदती ब्राह्मणी, तुदन्ती ब्राह्मणी। याती कुले, यान्ती कुले। याती ब्राह्मणी, यान्ती ब्राह्मणी। करिष्यती कुले, करिष्यन्ती कुले। करिष्यती ब्राह्मणी, करिष्यन्ती ब्राह्मणी। अत्र अन्तरङ्गत्वादेकादेशे कृते व्यपवर्गाभावातवर्णान्ता दङ्गादुत्तरस्य शतुः इति न युज्यते वक्तुम्, उभयत आश्रये नान्तदिवतित्यन्तादिवद्भावो ऽपि नास्ति, भूतपूर्वगत्याश्रयणे वा अदती, घ्नती इत्येवम् आदिषु अतिप्रसङ्गः इति? अत्र समाधिं केचिदाहुः। शतुरवयवे शतृशब्दो वर्तते अवर्णान्तादङ्गादुत्तरो यः शत्रवयवः इति। अपरे पुनराहुः। आतित्यनेन शीनद्यावेव विशेष्येते। अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः परतः शत्रन्तस्य नुम् भवति इति। तत्र येन नाव्यवधानं तेन व्यवहिते ऽपि वचनप्रामाण्यातिति तकारेण एव व्यवधानम् आश्रयिष्यते। आतिति किम्? कुर्वती। सुन्वती। शीनद्योः इति किम्? तुदताम्। नुदताम्।

लघु-सिद्धान्त-कौमुदी

आच्छीनद्ययोर्नुम् ३६७, ७।१।८०

अवर्णान्तादङ्गात्परो यः शतुरवयस्तदन्तस्य नुम् वा शीनद्योः। तुदन्ती, तुदती। तुदन्ति॥

न्यासः

आच्छीनद्योर्नुम्?। , ७।१।८०

"तदुन्ती कुले" इति। "नपुंसकाच्च" ७।१।१९ इति शीभावः। "तुदती ब्राआह्णणी" इति। "उगितश्च" ४।१।६ इति ङीप्(), "याती ब्राआह्णणी" इति। अवादित्वाच्छपो लुक्(), "उगितश्च" ४।१।६ इति ङीप्()। "करिष्यन्ती कुले" इति। "लृटः सद्वा" ३।३।१४ इति शत्रादेशः, "ऋद्धनोः स्ये" ७।२।७० इतीट्()। "अत्रान्तरङ्गत्वात्()" इत्यादि चोद्यम्()। अकारान्तादङ्गात्? परे शतरि व्यवस्थिते ईकारे च किं नुम्? क्रियताम्()? उतैकादेशः? अत्रान्तरङ्गत्वात्? "अतो गुणे" ६।१।९४ पररूपमेकादेशः। अन्तरङ्गत्वं पुनस्तस्य वर्णाश्रयत्वाकत्? नुमस्तु बह्वपेक्षत्वाद्बहिरङ्गत्वम्()। स ह्णकरान्तमङ्गं शतृप्रत्ययान्तं ततश्च परतः शीनद्योर्भावमपेक्षते। "वार्णादाङ्गम्()" (व्य।प।३९) इत्यादीह नास्ति; भिन्नकालत्वात्()--शीनद्योर्हि परभावे सति नुम्? प्राप्नोति, एकादेशस्तु ततः प्रागेव। "यत्र च वार्णाङ्गयोर्युगपत्? प्राप्तिः, तत्रेयमुपतिष्ठते" इत्युक्तं प्राक्। व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति शक्यते वक्तुम्()। भेदे हि सत्यवध्यवश्रिमतोरिदमस्मादुत्तरमिदञ्च पूर्वमित्येव व्यवहारो भवति, नान्यथा। स्यादेतत्()--"अन्तादिवच्च" (६।१।८५) इत्यन्तादिवदभावेनैकादेशः पूर्वं प्रत्यन्तवद्भवति परञ्च प्रत्यादिवदित्येकादेशस्य पूर्वं प्रत्यन्तत्त्वात्? परञ्च प्रत्यादिवत्त्वाद्युज्यत एवावर्णादङ्गादुत्तरस्य शतुः? इत्याह--"उभयत आश्रये" इत्यादि। अत्र ह्णकारान्तमङ्गं शता चोभयमाश्रितम्()। "उभयत आश्रये" इत्यादि। अत्र ह्णकारन्तमङ्गं शता चोभयमाश्र#इतम्। "उभयत आश्रये नान्तादिवत्()" (व्या।प।५१) इति नास्त्यन्तादिवद्भावः। न ह्णेकस्यैकदा पूर्वं प्रत्यन्तवद्भावः परञ्च प्रत्यादिवद्भाव उपपद्यते। तथा हि--यदि पूर्वं प्रत्यन्तवद्भवति, तदा शतृरूपं न सम्पद्यते; अथ परं प्रत्यादिवद्भवति,

तदाऽकारान्तताऽङ्गस्य न परिकल्प्यते; उच्यते चेदमाच्छीनद्योर्नुमिति, न चवर्णान्तादङ्गादुत्तरः शता क्वचित् सम्भवति; तत्र वचनप्रामाण्याद्भूतपूर्वगतदिराश्रीयते--अवर्णान्तादुत्तरो यः शत पूर्वमासीदिति। अत आह--"भूतपूर्वगत्या" इत्यादि। यदि हि भूतपूर्वगतिराश्रीयते, अवती, ध्नतीत्यादावतिप्रसङ्गः स्यात्(); अत्राप्यवर्णान्तादङ्गादुत्तरः शता पूर्वमासीत्()? इत्याह--"अत्र केचित्समाधिमाहुः" इति। समाधिः=परीहारः। परीहारश्च--शतुरवयव इति। शतुरवयवस्तकारः। तत्रेह शतृशब्दो वत्र्तते, यथा--पटो दन्ध इत्यत्र पटावयवे पटशब्दः, समुदायेषु प्रवृत्ताः शब्दाः क्वचिदवयेष्वपि वत्र्तन्त इति। स च शत्रवयव एकादेशे हि कृतेऽवर्णान्तादङ्गादुत्तरो भवतीति "अन्तरङ्गत्वादेकादेशे कृते" इत्यादिना यत्? कृतञ्चोद्यं तत्? परिह्मतं भवति। किं पुनरनच्कसय तकारस्य नुम्()? रुथञ्च नुम्? स्यात्()? कथञ्च न स्यात्()? "मिदचोऽन्त्यात्? परः" [१।१।४६](https://) इति वचनात्()। मा भूत्? तकारस्य, तदन्तस्य भविष्यति। एवञ्च सूत्रार्थं वर्णयिष्यामः--अवर्णान्तादङ्गादुत्तरो यः शत्रवयवस्तदन्तस्याङ्गस्य नुम्? भवतीति। अङ्गग्रहणञ्च द्विरावत्र्तयिष्यामः-- अवर्णान्तादङ्गदुत्तरो यः शत्रवयवस्तदन्तस्याङ्गस्य नुम्? भवतीति। अङ्गग्रहणञ्च द्विरावत्र्तयिण्यामः--शत्रवयवविशेषणार्थम्(), अङ्गकार्यप्रतिपत्त्यर्थञ्च। कथं पुनस्तुदतीत्यादी तकारात्? पूर्वस्याङ्गत्वम्(), यावता यतः प्रत्ययो विहितस्तदादेः प्रत्यये परतोऽङ्गसंज्ञा, न च तकारः प्रत्ययः असत्याञ्चाङ्गसंज्ञायां यदुक्तमवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति तन्नोपपद्यते? नैष दोषः; यथैव हि शत्रवयवे शतृशबदो वत्र्तते, तथाङ्गवयवे तकारात्? पूर्वस्मिन्नङ्गशब्दः। किं पुनस्तदङ्गम्()? यस्यावयवः शत्रन्तम्। तस्य हि शौनद्योः परतोऽङ्गत्संज्ञा विधीयते। इहापि तर्हि कस्मान्न भवति--अदती, ध्नतीति, अत्रापि ह्रवर्णान्तादङ्गादुत्तरः शत्रवयदो भवति? यद्यत्रापि स्यात्(), आदिति विशेषणमनर्()थकं स्यात्(), शीनद्योरित्येवं ब्राऊयात्()। यत्र च शीनद्योः परतः शत्रन्तमङ्गं भवति, तत्र नियोगत एवाकारान्तादङ्गादुसरो शत्रवयवो भवति। तस्मात्? "आतः" इति विशेषणोपादानसामथ्र्यात्? विशेषपरिग्रहो विज्ञायते--शत्रवयवदकारात्? पूर्षो योऽकारस्तदन्तादुत्तरो यः शत्रवयव इति नेह नुमः प्रसङ्गः। "अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ" इति। अत्रापि पूर्ववदङ्गावयवेऽङ्गशब्दो वत्र्तते। ननु च तुदन्तीत्यादाववर्णान्तादङ्गादुत्तरे शीनद्यौ न सम्भवत एव; तकारेण व्यवधानात्()? इत्याह--"तत्र येन" इत्यादि। गतार्थम्()। अथ नुम्यनुवत्र्तमाने किमर्थ पुनर्नुम्ग्रहणम्()? नेति, वेति च प्रकृतम्()। तत्र नुम्ग्रहणमन्तरेणानिष्टमपि विज्ञायते--शीनद्योर्विभाषा नुमवर्णान्तान्न भवतीति। किञ्च स्यात्()? कुर्वती, तन्वतीत्यत्र विभाषा स्यात्(), करिष्यन्तीत्यत्र न स्यात्()। केन पुनः प्राप्तस्य नुमः शोनद्योः प्रतिषेधः क्रियते? एतदेव ज्ञापयति--अस्तिशीनद्योर्दिभाषा नुमिति। नुम्ग्रहणे तु क्रियमाणे विधिरेवायं विज्ञायत इत्यदोषः॥

बाल-मनोरमा

आच्छीनद्योर्नुम् ४४०, ७।१।८०

तुदच्छब्दादौङः श्याम्, असर्वनामस्थात्वान्नुमि अप्राप्ते--आच्छीनद्योर्नुम्। "नाभ्यस्तात्" इत्यतः शतुरिति, "वा नपुंसकस्य" इत्यतो वेति चानुवर्तते। आदिति पञ्चमी। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते, तच्च आदित्यनेन विशेष्यते , तदन्तविधिः। "परस्ये" त्यध्याह्रियते। "सथु"रित्यनन्तरमवयवस्येत्यध्याह्रियते, तेन च अहगस्येति षष्ठ()न्तं विशेष्यते, तदन्तविधिः। अङ्गस्येत्यस्य आवृत्तिर्बोध्या। तदाह--अवर्णान्तादित्यादिना। "इदितो नुमि"त्यतोऽनुवृत्त्यैव सिद्धे नुम्ग्रहणं स्पष्टार्थम्। तुदन्तीतुदती इति। औङः श्यां, नुमि, तदभावे च रूपम्। शविकरणे कृते शतुरकारेण पररूपे एकादेशे सति तुद इत्यवर्णान्तमङ्गम्, तदादिग्रहणेन विकरणविशिष्टस्याप्यङ्गत्वात्। ततश्च तुददित्यन्त्यस्तकारः शतुरवयवः, तुदेत्यवर्णान्तादङ्गात्परश्चेति नुमिति भावः। "अवर्णान्तादङ्गत्वात्। ततश्च तददित्यन्त्यस्तकारः शतुरवयवः, तुदेत्यवर्णान्तादङ्गात्परश्चेति नुमिति भावः। "अवर्णान्तादङ्गात्परो यः शतृप्रत्ययः" इत्याश्रयणे त्वत्र नुम् न स्यात्। शविकरणाऽकारस्य शतुरकारस्य च एकादेशे कृते तस्य पूर्वान्तत्वे

शतुरवर्णान्तादङ्गात्परत्वा।()भावात्, परादित्वे अवर्णान्ताङ्गाऽभावात्, उभयत आश्रयणे च अन्तादिवत्त्वनिषेधादित्यलम्। तुदन्तीति। जश्शसोश्शिः, सर्वनामस्थानत्वान्नुमिति भावः। भादिति। "भादीप्तौ" लुग्विकरणः। लटः शतरि कृते सवर्णदीर्घे भादिति रूपम्। तस्मात् स्वमोर्लुक्, जश्त्वचर्त्वे इति भावः। भान्तीभाती इति। "औङः शी" "आच्छीनद्यो"रिति वानुमिति भावः। भान्तीति। जश्शसोः शिः, सर्वनामस्थानत्वान्नुमिति भावः। पचदिति। पच्धातोर्लटः शतरि शप्, अतो गुणे" इति पररूपम्। पचदित्यस्मात्स्वमोर्लुगिति भावः।

तत्त्व-बोधिनी

आच्छीनद्योर्नुम् ३९७, ७।१।८०

आच्छीनद्योः। नुम्ग्रहणमिह चिन्त्यप्रयोजनं, "नाभ्यस्ताच्छतुः""वा नपुंसकस्ये"त्यत्र "इदितो नुम्धातो"रित्यतोऽनुवृत्तेरावश्यकतया तदुत्तरत्रापि तत एवानुवर्तने बाधकाऽभावात्। शतुपवयव इति। तुदादेः शस्याऽन्तरङ्गत्वाच्छत्रेदेशाऽकारेण सहैकादेशे कृतेऽवर्णान्तत्परस्य शतुरिति न सम्भवति। "उभयत आश्रयणे नान्तादिव"दिति वक्ष्यमाणत्वादिति भावः। भादिति। "भा दीप्तौ"। लटः शतर्यदादित्वाच्छपो लुक्। शप्श्यनोर्नित्यम्। आरम्भसामथ्र्यान्नित्यत्वे सिद्धेऽपि नित्यग्रहणमिह "वे"त्यधिकारनिवृत्त्यर्थम्। अन्यथा ह्यारम्भसारथ्र्यादिह नित्यमुत्तरत्र विकल्प इत्याशङ्क्येत।

---

सूत्रम्

काशिका-वृत्तिः

शप्श्यनोर् नित्यम् ७।१।८१

शप् श्यनित्येतयोः शतुः शीनद्योः परतो नित्यं नुमागमो भवति। पचन्ती कुले। पचन्ती ब्राह्मणी। दीव्यन्ती कुले। दीव्यन्ती ब्राह्मणी। सीव्यन्ती कुले। सिव्यन्ती ब्राह्मणी। नित्यग्रहणम् वा इत्यस्य अधिकारस्य निवृत्त्यर्थम्। इहारम्भसामर्थ्यान् नित्यम् उत्तरत्र विकल्प एव अशङ्क्येत।

लघु-सिद्धान्त-कौमुदी

शप्श्यनोर्नित्यम् ३६८, ७।१।८१

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः। पचन्ती। पचन्ति। दीव्यत्। दीव्यन्ती। दीव्यन्ति॥ धनुः। धनुषी। सान्तेति दीर्घः। नुम्विसर्जनीयेति षः। धनुषि। धनुषा। धनुर्भ्याम्। एवं चक्षुर्हविरादयः॥ पयः। पयसी। पयांसि। पयसा। पयाभ्याम्॥ सुपुम्। सुपुंसी। सुपुमांसि॥ अदः। विभक्तिकार्यम्। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्॥ ,

लघु-सिद्धान्त-कौमुदी

इति हलन्तनपुंसकलिङ्गाः। ३६८, ७।१।८१

लघु-सिद्धान्त-कौमुदी

इति षड्लिङ्गप्रकरणम्। ३६८, ७।१।८१

लघु-सिद्धान्त-कौमुदी

अथाव्ययानि ३६८, ७।१।८१

न्यासः

शप्श्यनोर्नित्यम्?। , ७।१।८१

तत्त्व-बोधिनी
शप्श्यनोर्नित्यम् ९१, ७।१।८१

पचन्ती इति। कर्तरि शपि नित्यं नुम्। दीव्यन्ती इति। दिवादिभ्यः श्यनि नित्यं नुम्। पचन्ति दीव्यन्तीति बहुवचने तु "नपुंसकस्य झलचः"इति नुम्बोध्यः। स्वबिति। शोभना आपो यस्मिन्सरसीति बहुव्रीहिः। "ऋक्पूर"बिति समासान्ते प्राप्ते "न पूजना"दिति निषेधः। "द्व्यन्तरुपसर्गेभ्य"इति ईन्ब भवति, तत्र "अप इति कृतसमासान्तस्यानुकरण"मिति वक्ष्यमाणत्वात्। निरवकाशत्वं प्रतिपदोक्तत्वमिति। अयमेव पक्षः प्रबल इति "छदिरुपधिबलेर्ढ"ञिति सूत्रे मनोरमायां स्थितम्। धनेरुसिति।"जनरेसिः"इत्यत "उसि"रित्यनुवर्तमाने "अर्तिपृ()वपियजितनिधनितपिभ्यो नि"दित्यौणादिकेनेत्यर्थः। धनुर्भ्यामिति।इह "र्वोरिपधाया"इत्यादिना दीर्घो न शङ्क्यः, रेफान्तस्याऽधातचुत्वात्। एवमिति। "चक्षेः शिच्च"चादुसि। चक्षुः। "अर्चिशुचिहुसृपि"इत्यादिना जुहोतेरिसिः। "आदि"शब्देन सर्पिरर्चिरादयो ग्राह्याः। सुपुमांसीति। "पुंसोऽसुङ्ि ति सूत्रे "सुटी"ति व्याचक्षाणस्य प्राचो मते जसीष्टिसिद्धावपि शसि नैतत्सिध्येत्। औङिचाऽतिप्रसङ्गः। "इतोऽत्सर्वनामस्थाने"इत्यतोऽनुवृतिं()त पर्यालोच्य सर्वनामस्थान इति यथाश्रुतं ब्राउवतां तु सर्वेष्टसिद्धिः। इति तत्त्वबोधिन्यां हलन्तनप#उ#ंसकलिङ्गप्रकरणम्।

अथ हल्सन्धिप्रकरणम्।

-----------------

---

सूत्रम्
काशिका-वृत्तिः
सावनडुह ७।१।८२

सौ परतः अनडुहो ऽङ्गस्य नुमागमो भवति। अनड्वान्। हे अनड्वन्। अत्र केचितातित्यधिकारादाममोः कृतयोः नुमं कुर्वन्ति। तेन नुमा आममौ न बाध्येते, आऽमम्भ्यां च नुम् इति। अपरे तु सत्यपि सामान्यविशेषत्वे आममोः नुमश्च समावेशम् इच्छन्ति, न बाध्यबाधकभावम्, यथा चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोः इति।
लघु-सिद्धान्त-कौमुदी
सावनडुहः २६१, ७।१।८२

अस्य नुम् स्यात् सौ परे। अनड्वान्॥
न्यासः
सावनडुहः। , ७।१।८२

बाल-मनोरमा
सावनडुहः , ७।१।८२

सावनडुहः। अस्येति। अनुडुहशब्दस्येत्यर्थः। नुम् स्यादिति। "आच्छीनद्योर्नु"मित्यतो नुमित्यनुवृत्तेरिति भावः। नुमि मकार इत्। उकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। अनड्वान् ह् स् इति स्थितम्। ननु आम्नुमौ एतौ मित्त्वादन्त्यादच उकारात्परौ प्राप्तौ। तत्र "चतुरनडुहोः" इत्याम् सर्वनामस्थाननिमित्तकः सामान्यविहितः। "सावनडुहः"

इति नुम् तु सर्वनामस्थानविशेषे सौ विहितत्वाद्विशेषविहितः। स च निरवकाशत्वात्सामान्यविहितमामं बाधेत, सोरन्यत्राऽऽम्बिधेश्चरितार्थत्वात्। तथा च "अनड्वान्" इति स्यात्। "अनड्वान्" इति न स्यात्। किंच सम्बुद्धौ हे अनडुह् सिति स्थिते "अम् सम्बुद्धौ" इत्यमागम आमपवादोऽनुपदमेव वक्ष्यते। तत्र "सावनडुहः" इति नुमपि प्राप्तः, सच सम्बुद्धावसम्बुद्धौ च विहितत्वात्सामान्यविहितः। "अम्सम्बुद्धौ" इत्यम् तु सम्बुद्धावेव विहितत्वाद्विशेषविहितः। सच निरवकाशत्वात्सामान्यं नुमं बाधेत, असम्बुद्धौ सौ नुम्विधेश्चरितार्थत्वात्। ततश्च हे अनड्वन्निति न स्यात्। "हो ढः" इति ढत्वे हे अनड्वट् इति स्यादित्याशङ्क्याह--आदित्यधिकारादित्यादि, नुम्न बाध्यत इत्यन्तम्। "सावनडुहः" इति नुम्विधौ तावत् "आच्छीनद्योः" इत्यत आदिति पञ्चम्यन्तमनुवर्तते। अतोऽनडुहोऽवर्णात् परो नुमिति लाभाद्विशेषविहितेनापि "सावनडुह" इति नुमा "चतुरनडुहो"रिति सामान्यविहित आम्न बाध्यते, अवर्णात्परत्वेन विधीयमानं नुमं प्रति आम उपजीव्यत्वात्, उपजीव्योपजीवकयोर्विरोधाऽभावेन बाध्यबाधकभावविरहात्, प्रत्युत आमभावे नुमः प्रवृत्त्यसम्भवात्। तथा "अम्संबुद्धौ" इत्यमा च विशेषविहिभावेन बाध्यबाधकभावविरहात्, प्रत्युत आमभावे नुमः प्रवृत्त्यसंभवादित्यर्थः। ननु "सावनहुडः" इति नुम्विधौ आदित्यनु वर्ततां नाम, तथापि आमुपजीवकत्वं नुमो न लभ्यते, अनडुहि नुमो नकाराऽकारात्परत्वेऽपि आदित्यनुवृत्तेरविरोधादिति चेत्, मैवं-"सावनडुहः" इति नुम्विधौ मित्त्वादन्त्यादच इत्युपस्थितम्। तत्र च आदित्यनुवृत्तमन्वेति। ततस्चानडुहि योऽन्त्यरूपोऽवर्णः तस्मात्परो नुमिति लभ्यते। नकाराकारस्तु नैवंविध इत्यामुपजीवकत्वं नुमो निर्बाधमेव। एवं संबुद्धौ अमुपजीवकत्वमपि ज्ञेयम्। क्वचित्पुस्तके "आमा च नुम् न बाध्यते" इति पठ()ते। तत्रेयं योजना--ननु "बह्वनड्वांहि कुलानी"त्यत्र "नपुंसकस्य झलचः" इति नुमपेक्षया परत्वादाम् स्यात्। कृते त्वामि पुनर्नुम्न भवति, "विप्रतिषेषेन यद्बाधितं तद्बाधितमेवे"ति न्यायादित्यत आह--"आमा च नुम्न बाध्यत" इति। "पुनः प्रसङ्गविज्ञानात्सिद्धम्" इति क्वचिद्विप्रतिषेधेन बाधितस्य पुनरुन्मेषादामि कृतेऽपि "नपुंसकस्य झलचः" इति नुम्निर्बाध इति भावः। सोर्लोप इति। "अनड्ववान् ह् स् इत्यत्र हल्ङ्यादिने"ति शेषः। ननु कृते सुलोपे हकारस्य संयोगान्तलोपे नुमो नकारस्य पदान्तत्वात् "वसुरुआंसुध्वंस्वनडुहां दः" इति दत्वं कुतो न स्यादित्यत आह--नुम्विधीति। यदि ह्यत्र नुमो नस्य दत्वं स्यात्तर्हि अनड्वाहित्यत्र नुमभावेऽपि हस्य दत्वेनैव अनड्वादिति सिद्धेर्नुम्विधिरनर्थकः स्यात्। अतो नुमो नस्य दत्वं नेति विज्ञायत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दृक्स्ववस्स्वतवसां छन्दसि ७।१।८३

दृक् स्ववस् स्वतवसित्येतेषां सौ परतो नुमागमो भवति छन्दसि विषये। ईदृङ्। तादृग्। यादृग्। सदृङ्। स्ववान्। स्वतवान् पायुरग्ने।

न्यासः

दृक्स्ववस्स्वतवसां छन्दसि। , ७।१।८३

"ईदृङ्(), कीदृङ्" [नास्ति--काशिकायाम्()] इति। "त्यदादिधु" ३।२।६० इत्यादिना क्विन्(), "इदंकिमोरीश्की" ६।३।८९ इतीश्की--आदेशो, हल्ङ्यादिसंयोगान्तलोपौ (६।१।६८,८।२।२३), "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वाम्()। "यावृङ्, तादृङ्()" इति। "आ सर्वनाम्नः" ६।३।९० इत्यात्वम्()। "सदृङ्()" इति। "दृग्दृशवतुषु" ६।३।८८ इति समानस्य सभावः॥

---

सूत्रम्

काशिका-वृत्तिः

दिव औत् ७।१।८४

दिवित्येतस्य सौ परतः औतित्ययम् आदेशो भवति। द्यौः। दिविति प्रातिपदिकम् अस्ति निरनुबन्धकम्। धातुस् तु सानुबन्धकः, स इह न गृह्यते, अक्षद्यूः।

लघु-सिद्धान्त-कौमुदी

दिव औत् २६५, ७।१।८४

दिविति प्रातिपदिकस्यौत्स्यात्सौ। सुद्यौः। सुदिवौ॥

न्यासः

दिव औत्?। , ७।१।८४

"द्यौः" इति। औत्त्वे कृते यणादेशः। इहाक्षद्यूरित्यक्षैर्दीष्यतीति क्विपि कृते तदाश्रये चान्तरङ्गत्वात्? "च्छ्वोः शूठ्नुनासिके च" ६।४।१९ इत्युठ्()। एकदेशविकृतसयानन्यत्वाद्दिवशब्दं एवायमित्यूकगारस्योत्त्वं प्राप्नोति, तत्? कस्मान्न भवति? इत्याह--"दिविति प्रातिपदिकम्()" इत्यादि। अस्त्येवायं दिव्शब्दो धातुः, अस्ति चाव्युत्पन्नं प्रातिपदिकम्()। तत्र धातुः सानुबन्धकः, अस्य "उदितो वा" ७।२।५६ इत्युदित्कार्यम्। प्रातिपदिकं तु निरनुबन्धकम्(), न हि तस्य किञ्चिदनुबन्धकार्यमस्ति। तत्र निरनुबन्धकपरिभाषया (व्या।प।५६) धातुरिह गृह्रते। तेनान्नद्युरित्यत्र न भवत्योत्त्वप्रसङ्गः। तकारो मुखसुखार्थः॥

बाल-मनोरमा

दिव औत् , ७।१।८४

दिव औत्। "सावनडुहः" इत्यतः "सौ" इत्यनुवर्तते। "दिव" इति षष्ठ()न्तम्। "दिवेर्डिविः" इत्यौणादिकमव्युत्पन्नं वा प्रातिपदिकं गृह्रते, नतु "दिवुक्रीडादौ" इति धातुः, "निरनुबन्धग्रहणे न सानुबन्धकस्ये"ति न्यायात्। तदाह--दिविति प्रातिपदिकस्येति। औदिति तकार उच्चारणार्थो नत्वादेशे तकारः श्रूयते। एवं चानेकाल्त्वप्रयुक्तं सर्वादेशत्वं न। तकारस्य इत्संज्ञा तु न, फलाऽभावात्। तित्स्वरितस्य तु नात्र सम्भवः, "तितिप्रत्ययग्रहण"मिति वार्तिकात्। ननु सुदिव् सित्यत्र वकारस्यौत्त्वे इकारस्य यणि औकारस्य स्थानिवत्त्वेन हल्त्वाद्धल्ङ्यादिना सुलोपः स्यादित्यत आह्य--अल्विधित्वेनेति। औकारादेशस्थानिभूताद्वकारात्मकहलः परत्वमाश्रित्य प्रवर्तमानस्य सुलोपस्याऽल्विधित्वादिति भावः। सुद्यौरिति। आङ्गत्वात्तदन्तस्याप्यौत्त्वे यण्। रुत्वविसर्गौ। सुदिवाविति। अजादिषु सुदिव्()शब्दोऽविकृत एवेति भावः।

तत्त्व-बोधिनी

दिव औत् २९६, ७।१।८४

दिव औत्। तकार उच्चारणार्थः। प्रतिपदिकस्येति। अव्युत्पन्नस्य, "दिवेर्डिवि"रिति न्यासोहितसूत्रेण व्युत्पन्नस्य वा ग्रहणं, नतु "दिवु क्रीडादौ"इति धातोः, "निरनुबन्धकग्रहणे न सानुबन्धकस्ये"ति परिभाषया। तेनाक्षद्यूरित्यादौ न भवति। न च तत्रान्तरङ्गत्वादूठेव स्यान्न तु औत्वप्रसक्तिरिति वाच्यम्, ऊठि कृतेऽप्येकदेशविकृतन्यायेन "दिव औ"दित्यास्यापि प्रसक्तिसंभवादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

पथिमथ्यृभुक्षाम् आत् ७।१।८५

पथिन् मथिनृभुक्षिनित्येतेषाम् अङ्गानां सौ परतः आकारः आदेशो भवति। पन्थाः। अन्थाः। ऋभुक्षाः। स्थानिन्यनुनासिके ऽपि आकारो ऽनुनासिको न भवति। भाव्यम् अनेन सवर्णानां ग्रहणं न भवति इति शुद्धो ह्ययम् उच्चार्यते।

लघु-सिद्धान्त-कौमुदी

पथिमथ्यृभुक्षामात् २९५, ७।१।८५

एषामाकारोऽन्तादेशः स्यात् सौ परे॥

न्यासः

पथिमथ्यृभुक्षामात्?। , ७।१।८५

हल्ङ्यादिलोपे प्राप्ते नलोपे चात्त्वं विधीयते। "पन्थाः" इति। "थो न्थः" ७।१।८० इति न्यादेशः, "इतिऽसर्वनामस्थाने" ७।१।८६ इत्यत्त्वम्()। ननु चास्य स्थान्यनुनासिको नकारः, तत्र "तपरसतत्कालस्य" १।१।६९ इति सवर्णानां ग्रहणे सत्यान्तरतम्यादनुनासिकेनैवाकारेण भवितव्यम्()। किमिह शुद्धोऽयमुदाह्रियते? इत्याह--"स्थानिन्यनुनासिकेऽपि" इत्यादि। अत्रैव कारणमाह--"भाव्यमानः" इत्यादि। यदि च तपरेणापि भाव्यमानेनाणा सवर्णानां ग्रहणं न भवति, एवं सति "विङ्वनोरनुनासिकस्यात्()" ६।४।४१ इत्यत्रापि न स्यात्(), तथा "जनसनखनां सञ्झलोः" ६।४।४२ इत्यत्रानुनासिकाकारो न स्यात्()। एवं तर्हि नैवायमाकारस्तपरः, किं तर्हि? दकारः। दकारस्तु मुखसुखार्थः, स चत्र्वभूतत्वान्न श्रूयते। स्यादेतत्()--यद्यपि भाव्यमानोऽण्? सवर्णान्न गृह्णातीति (व्या।प।३५) सवर्णानां ग्रहणं न भविष्यति, तथाप्यनुनासिकविशिष्टस्योच्चारणादनुनासिकेनैव युक्तं भवितुम्()? इत्याह--"शुद्धो हि" इत्यादि। अयं ह्यकारः शुद्धो निरनुनासिक उच्यते तस्माच्छुद्ध एवेति नानुनासिकविशिष्टः। अथायं किमर्थं दीर्घ उच्यते, न ह्रस्व एव क्रियताम्(), अत्रापि "अकः सवर्णे" (६।१।१०१) इति दीर्घत्वेन सिध्यत्येव? न सिध्यति; "अतो गुणे" ६।१।९४ इति पररूपत्वं स्यात्()। अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत्()? न; अस्ति ह्यन्यदकारोच्चारणस्य प्रयोजनम्()। किं तत्()? नकारस्य श्रवणं न स्यादिति। लोपो हि क्रियमाणे गौरवं स्यात्(), तस्माद्दीर्घो विधीयते॥

बाल-मनोरमा

पथिमथ्यृभुक्षामात् , ७।१।८५

तेषु विशेषमाह--पथिमथ्यृभुक्षामात्। पन्थाश्च, मन्थाश्च ऋभुक्षाश्च, पथिमथ्यृभुक्षाणः, तेषामिति विग्रहः। "सावनडुहः" इत्यतः "सा"वित्यनुवर्तते। आदिति तपरकरणम्। आकार एव विधेयः। तदाह--एषामित्यादिना। "अलोऽन्त्यस्ये"ति नकारस्य आकारः। ननु नकारस्य आन्तरतम्यादनुनासिक एव आकारः प्राप्नोति। नच निरनुनासिकस्यैवाकारस्योच्चारणाच्छुद्ध एव आकार इति वाच्यं, गुणानामभेदकत्वाद्भेदकत्वेऽपि तपरकरणेन अनुनासिकस्याप्याकारस्य ग्रहणात्, व्यक्तिपक्षे तपरसूत्रस्य अनण्सु दीर्घप्लुतेषु विध्यर्थत्वात्। नच ग्रहणकसूत्रे वार्णसमाम्नायिकत्वेन निश्चितस्याऽण्ग्रहणस्य अप्रत्यय इत्यस्य च तपरसूत्रे अनुवृत्तेराकास्स्येहानण्त्वाद्विधीयमानत्वाच्च न तत्काल इति वाच्यं, तपरसूत्रे अण्ग्रहणस्य अप्रत्ययग्रहणस्य चानुवृत्तौ मानाऽभावादित्यत आह--आ आदिति सवर्णदीर्घेणाकारान्तरं प्रश्लिष्यते। ततश्चाननुनासिकरूप आकारो भवतीति लभ्यते। नच सर्वादेशत्वं शङ्क्यम्। नह्यत्र वर्णद्वयं विधीयते, विशेषणविशेष्यबावेनान्वयाभ्युपगमेन अननुनासिकाकारस्यैकस्यैव विधानादिति भावः। भाष्ये तु अनुनासिकविधेः संमतत्वे प्रतिपत्तिलाघवाय अनुनासिकस्यैव "उञः, ऊ#ँ" इत्यत्रेव उच्चार्य विधानसंभवात्तदनुच्चारणाच्छुद एव आकार इह विधेय इत्युक्तम्। तपरकरणं तु उच्चारणार्थमेव। वस्तुतस्तु "भाव्यमानेन सवर्णानां ग्रहणं ने"ति परिभाषयैव

अनुनासिकाकारनिरासस्संभवादाकारप्रश्लेषक्लेशो व्यर्थः। "भाव्यमानोऽण् सवर्णान्न गृह्णाती"ति पाठस्तु प्रामादिकः, "ज्यादादीयसः" इति सूत्रे आदिदिति तपरनिर्देशेनेयं परिभाषा ज्ञाप्यते-"भाव्यमानेन सवर्णानां ग्रहणं ने"त्यवे भाष्ये पाठात्, अणुदित्सूत्रभाष्येऽप्यण्ग्रहणरहिताया एवास्याः परिभाषायाः पाठदर्शनाच्चेत्यास्तां तावत्। नकारस्य आत्त्वे पथि आ स् इति स्थिते।

तत्त्व-बोधिनी

पथिमथ्यृभुक्षामात् ३२६, ७।१।८५

पथिमथि। "गमेरिनि"रित्यत "इनि"रिति "परमे कि" दित्यतः "कि"दित्यनुवर्तमाने "मन्थः"इत्यनेन निष्पन्नो मथिन्शब्दः। "पतस्थ च"चादिनिः। पथिन्। "ऋभुक्षः स्वर्गवज्रयोः"। ततो मत्वर्थीयेनिना ऋभुक्षिन्निति बोध्यम्। ननु "अस्थिदधी"ति सूत्रे उदात्ततया पठितेऽप्यनङीष्टसिद्धौ "अनुङुदात्तः"इत्युदात्तग्रहणं "गुणा अभेदकाः"इति पक्षं ज्ञापयतीति निर्विवादम्। तथाच तस्मिन्पक्षे सूत्रेननुनासिकोच्चारणेऽप्यान्तरतम्यादनुनासिकाऽऽकारः स्यादत आह---आ-आदिति।

---

सूत्रम्

काशिका-वृत्तिः

इतो ऽत् सर्वनामस्थाने ७।१।८६

पथ्यादीनाम् इकारस्य स्थाने अकारादेशो भवति सर्वनामस्थाने परतः। पन्थाः, पथानौ, पन्थानः। पन्थानम्, पन्थानौ। मन्थाः, मन्थानौ, मन्थानः। मन्थानम्, मन्थानौ। ऋभुक्षाः, ऋक्भुक्षाणौ, ऋभुक्षाणः। ऋभुक्षाणम्, ऋभुक्षाणौ। आतिति वर्तामाने पुनरद्वचनं षपूर्वार्थम्। ऋभुक्षणम् इत्यत्र वा षपूर्वस्य निगमे ६।४।९ इति दीर्घविकल्पः।

लघु-सिद्धान्त-कौमुदी

इतोऽत्सर्वनामस्थाने २९६, ७।१।८६

पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे॥

न्यासः

इतोऽत्सर्वनामस्थाने। , ७।१।८६

अथ "आत्()" ७।१।८५ इत्यनुवत्र्तमाने किमर्थमद्वचनम्(), ह्यस्वस्य श्रवणं यथा स्यादिति चेत्()? नैतत्(); कृते हि ह्यस्वत्वे सौ परतौऽकः सवर्णे दीर्घत्वेन ६।१।९७ भवितव्यमन्यत्र "नोपधायाः" ६।४।७ इत्यनेन, तत्कुतो ह्यस्वस्य श्रवणम्()? इत्याह--"आदिति वत्र्तमाने" इत्यादि। षपूर्वोऽर्थः प्रयोजनं यस्य तत्? तथोक्तम्()। कथं पुनरिवं षपूर्वार्थं भवति? इत्याह--"ऋभुक्षणम्()" इत्यादि। यदि प्रकृतो दीर्घ एव विधीयते, तदा ऋभुक्षमिन्द्रमित्यत्र ह्यस्वस्य श्रवणं न स्यात्()। ह्यस्वविधाने तु "वा षपूर्वस्य निगमे" (६।४।९) इति दीर्घविधानात्? पक्षे भवति। स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमित्येके। पथीरित्यत्र दीर्घनिवृत्त्यर्थमितयन्ये। पन्थानमिच्छति "सुप आत्मनः क्यच्()" ३।१।८, "अकृत्सार्वधातुकयोः" ७।४।२५ दीर्घः--पथीयति; पथीयतेः क्विप्(), "अतो लोपः" ६।४।४८ इत्यल्लोपः, "क्यस्य विभाषा" ६।४।५० इति यकारसय लोपः--पथीः॥

बाल-मनोरमा

इतोऽत्सर्वनामस्थाने , ७।१।८६

इतोऽत्। पथिमथ्यृभुक्षाम् इत्यनुवर्तते। "इत" इति तपरकरणं स्पाष्टार्थं , पथ्यादिषु त्रिषु दीर्घप्लुतयोरसंभवात्।

भाव्यमानत्वादेव सवर्णाऽग्रहकत्वे सिद्धे अदिति तपरकरणमपि स्पाष्टार्थमेव। तदाह--पथ्यादेरित्यादिना। पथ आ स् इति स्थिते।

तत्त्व-बोधिनी
इतोऽत्सर्वनामस्थाने ३२७, ७।१।८६

इतोऽत्सर्वनाम। "आ"दिति वर्तमाने पुनरद्वचनं किमर्थं, कृतेऽप्यद्वचने "पन्था"इत्यत्र सवर्णदीर्घेण भाब्यमन्यत्र तूपधाया दीर्घेणेति चेन्मैवम्, "ऋभुक्षण"मित्यत्र "वा षपूर्वस्य निगमे" इति दीर्घविकल्पे सति पक्षे ह्मस्वाश्रवणार्थमद्वचनस्यावश्यकत्वात्।

---

सूत्रम्
काशिका-वृत्तिः
थो न्थः ७।१।८७

पथिमथोः थकारस्य स्थाने न्थः इत्ययम् आदेशो भवति सर्वनामस्थाने परतः। पन्थाः, पन्थानौ, पन्थानः। मन्थाः, मन्थानौ, मन्थानः।
लघु-सिद्धान्त-कौमुदी
थो न्थः २९७, ७।१।८७

पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने। पन्थाः। पन्थानौ। पन्थानः॥
न्यासः
थो न्थः। , ७।१।८७

थः, न्थः--इति द्वावपि स्थान्यादेशावनच्कौ। यत्त्वन्थ इत्यत्राकारः श्रूयते स उच्चारणार्थः। सत्यप्यादेशस्यानेकाल्त्वे "निर्दिश्यमानस्यादेशा भवन्ति" (व्या।प।१०६) इति थकारमात्रस्यादेशो विज्ञायते, न सर्वस्य॥
बाल-मनोरमा
थो न्थः , ७।१।८७

थो न्थः। थः न्थ इति च्छेदः। थ इति षष्ठी। आदेशेऽकार उच्चारणार्थः। पथिमथिग्रहणमनुवर्तते। ऋभुक्षिग्रहणं निवृत्तं, तत्र थकाराऽभावात्। "इतोऽत्सर्वनामस्थाने" इत्यतः सर्वनामस्थानग्रहणमनुवर्तते। तदाह--पथिमथोरित्यादिना। पन्था इति। नकारस्य आत्त्वे इकारस्य अत्त्वे थकारस्य न्थादेशे पन्थ आ स् इति स्थिते सवर्णदीर्घे रुत्वविसर्गाविति भावः। पन्थानाविति। पथिन् औ इति स्थिते सावित्युक्तेर्नात्त्वम् "इतोऽत्" इति इकारस्याऽत्त्वे थकारस्य न्थादेशे "सर्वनामस्थाने चे"ति दीर्घे रूपमिति भावः।

तत्त्व-बोधिनी
थो न्थः ३२८, ७।१।८७

थो न्थः। स्थान्यदेशौ द्वावप्यनच्कौ। "थेन्र्थः"इत्येव सिद्धे "इतोऽत्सर्वनामस्थाने"इत्येतद्दभुक्षिन्नर्थं। त्रयाणाननुवृत्तापि ऋभुक्षस्थो न संभवतीत्याशयेनाह---

---

सूत्रम्

काशिका-वृत्तिः

भस्य टेर् लोपः ७।१।८८

पथ्यादीनां भसंज्ञकानां टेः लोपो भवति। पथः। पथा। पथे। मथः। मथा। मथे। ऋभुक्षः। ऋभुक्षा। ऋभुक्षे। सर्वनामस्थाने इत्यनुवर्तमानम् अपि विरोधादिह न सम्बध्यते।

लघु-सिद्धान्त-कौमुदी

भस्य टेर्लोपः २९८, ७।१।८८

भस्य पथ्यादेष्टेर्लोपः। पथः। पथा। पथिभ्याम्॥ एवं मथिन्, ऋभुक्षिन्॥

न्यासः

भस्य टेर्लोपः। , ७।१।८८

"सर्वनामस्थाने" इत्यादि। "यचि भम्()" [१।४।१८](#) प्रत्यत्र "स्वादिष्वसर्वनामस्थाने" [१।४।१७](#) इत्यतः "असर्वनामस्थाने" इत्यनुवत्र्तमाने भसंज्ञा विहिता, तत्र यदि सर्वनामस्थाने परतः पथ्यादीनां टिलोपः स्यात्(), तदा भसंज्ञकास्ते न स्युः, अथ भसंज्ञकास्ते स्युस्तदा सर्वनामसथानं परं तेब्यो न स्यादिति भसंज्ञकानां सर्वनामस्थानस्य च सहानवस्थानलक्षणो विरोधः। तस्माद्यद्यप्युत्तरार्थं सर्वनामस्थानग्रहणमनुवत्र्तते, तथापीह नाभिसम्बध्यते॥

बाल-मनोरमा

भस्य टेर्लोपः , ७।१।८८

एवं पन्थानः। पन्थानम् पन्थानौ। शसादावचि विशेषमाह--भस्य टेर्लोपः। पथ्यादेरिति। पथिमत्यृभुक्षामित्यनुवर्तत इति भावः। पथः पथेति। पथिन् अस् पथिन् आ इति स्थिते इनो लोपे रूपद्वयमिति भावः। पथिभ्यामिति। नलोपे रूपम्। इत्यादीति। पथिभिः। पथे। पथिभ्यः। पथः पथोः पथाम्। पथि, पथोः पथिषु। एवं मन्था ऋभुक्षा इति। मन्थदण्डवाची मथिन्शब्दः। तस्य आत्त्वम्, अत्त्वं , न्थादेशः, टिलोपश्च। मन्थाः मन्थानौ मन्थानः। मन्थानम् मन्थानौ मथः। मथा मथिभ्याम्। मथे। मथः मथोः मेथाम्। मथि। मथिषु। ऋभुक्षिन्शब्दस्तु इन्द्रवाची। तत्र "थो न्थः" इतिवर्जमात्त्वादि भवति। षात्परत्वाण्णत्वं च। ऋभुक्षाः ऋभुक्षाणौ इत्यादि। यत्तु अत्र पन्थानमात्मन इच्छति पथीयति। "सुप आत्मनः क्यच्", "नः क्ये" इति पदत्वान्नलोपः "आकृत्सार्वधातुकयोः" इति दीर्घः। "सनाद्यन्ताः" इति धातुत्वम्। ततः क्विप्। अल्लोपयलोपौ। एकदेशविकृतस्यानन्यत्वात् "पथिमथी"त्यात्त्वं, "थो न्थः"। ततः संयोगपूर्वत्वान्न यण्। किन्त्वियङेव। पन्थियौ। "भस्य टेक्लोपः" पथ इत्यादि प्रौढमनोरमातत्त्वबोधिन्यादावुक्तम्। तदेतदनुनासिकविधौ सति प्रतिपत्तिलाघवायाऽनुनासिकस्यैव उच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानमिति भाष्यविरोधादुपेक्ष्यम्। पथीयते क्विपि हि ईकारस्य शुद्धाकारार्थं अनुनासिकानुच्चारणस्यावश्यकत्वे तदसङ्गति स्पष्टैव। तस्मात्पथीयतेः क्वपोऽनभिधानमेवोचितमिति शब्देन्दुशेखरे स्पष्टम्।प्रसङ्गादाह--स्त्रियामिति। सु=शोभनः पन्था अस्या इति बहुव्रीहिः। "ऋन्नेभ्यः" इति ङीप्। "भस्य टेर्लोपः" इति इनो लोपः। सुपथीति रूपम्। ऋक्पू:"इत्यसु न, "न पूजनादिति निषेधात्। न चैवमपि "न पूजनात्" इति निषेधस्य षचः प्रागेव प्रवृत्तेर्वक्ष्यमाणत्वात् "इनः स्त्रिया"मिति कब्दुर्वार एवेति वाच्यम्, "युवोरनाकौ" इत्यत्र सुपथीति भाष्यप्रयोगेण तस्या अनित्यत्वज्ञापनात्। नच लिङ्गविशिष्टपरिभाषया "पथिमथी"त्यात्त्वं थो न्थश्च कुतो नेति वाच्यं, विभक्तौ लिङ्गविशिष्टाऽग्रहणात्। सुमथी इति। सु=शोभनो मन्था यस्या इति विग्रहः। ङीबादि पूर्ववत्। अनृभुक्षी सेनेति। अविद्यमानः ऋभुक्षा यस्या इति विग्रहः। "नञोऽस्त्यर्थाना"मिति समासः। ऋभुक्षाः=स्वामी। अथ सु=शोभनः पन्था अस्य वनस्येति बहुव्रीहौ सुपथिन्शब्दान्नपुंसकात् "स्वमोर्नपुंसकात्" इति सोर्लुकि

प्रत्ययलक्षणमाश्रित्य सुप्परत्वसत्त्वात् "पथिमथी"त्यात्त्वमाशङ्क्याह--आत्त्वं नपुंसके इति। सम्बुद्धाविति। यद्यपि भाष्ये नपुंसकानामित्येव पठितं तथापि हे चर्मन् हे चर्मेति भाष्ये सम्बुद्धावेव उदाह्मतत्वात्तन्मात्रविषयत्वमस्येति भावः। सम्बुद्धेर्लुका लुप्त्वात्संबुद्धिपरत्वाऽभावात् "न ङिसम्बुद्ध्योः" इति निषेधाऽप्रवृत्तेर्नित्यं नलोपप्राप्तौ विकल्पार्थोऽयमारम्भः। ननु नलोपपक्षे "ह्यस्वस्य गुणः" इति सम्बुद्धौ परतो गुणे कर्तव्ये न "न लुमते"ति निषेधस्याऽनित्यत्वाद्धे वारे हे वारि इतिवद्गुणविकल्पः स्यादित्यत आह--नलोपः सुबिति। द्विवचने इति। सुपथिन्शब्दादौङः शीभावे सति असर्वनामस्थानत्वेन भत्वात् "भस्य टेर्लोपः" इति इनो लोपे सुपथीति रूपमित्यर्थः। शाविति। सुपथिन्शब्दाज्जश्शसोः शिभावे सति तस्य सर्वनामस्थानत्वात् "इतोऽत्" इत्यत्त्वे, "थो न्थः" इति थस्य न्थादेशे नान्तत्वाद्दीर्घे सुपन्थानि इति रूपमित्यर्थः।

तत्त्व-बोधिनी

भस्य टेर्लोपः ३२९, ७।१।८८

पथिमथोरिति। प्रसङ्गादाह--स्त्रियामिति। नान्तलक्षण इति। "न पूजना"दिति निषेधात् "ऋक्पूरब्धू"रित्यप्रत्ययो नेति भावः। सुपथीति। "इनः स्त्रिया"--मिति कप्स न कृतः, समासान्तविधेरमनित्यत्वात्। "युवोरनाका"विति सूत्रे "सुपथी"ति भाष्याच्च। "न पूजनां"दिति निषेधस्य तु नायं विषयः""षचः प्राचीनेष्वेव सः"इति वक्ष्यमाणत्वात्। "पथिमथी त्यात्वं थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाऽग्रहणान्न भवति। अत्रेदं बोध्यम्--पन्थानमात्मन इच्छति पथीयति। ततः क्विप्। अल्लोपयलोपौ। एकदेशविकृतस्यानन्यत्वात् "पथिमथी"त्यात्वम्। "थोः न्थः"। पन्थाः। "इतोऽत्सर्वनामस्थाने"इत्यत्वं न भवति। "इत"इति तपरकरणात्। "एरनेकाचः"इति यणं बाधित्वा परत्वान्नित्यत्वाच्च--"थो न्थः"। संयोगपूर्वकत्वान्न यण्। पन्थियौ। पन्थियः। पन्थियम्। पन्थियौ। "भस्य टेक्लोपः"। पथः। पथा। पथीभ्यम्। पथीभिरित्यादि। एवं मथीयतेः क्विपि तु--मन्थाःष मन्थियौ। मन्थियः। ऋभुक्षाः। ऋभुक्षियौ। ऋभुक्षियः। इत्यादि। एतेन "इतोऽत्सर्वनामस्थाने"इत्यत्रस्थानिन्यदेशे च तपरकरणं मुखसुखार्थमिति हरदत्तग्रन्थः प्रयुक्तः। आदेशे तपरकरणस्यानावश्यकत्वेऽपि स्थान#इनि तु "पन्थियौ"इत्यादिसिद्धये तस्यावश्यकत्वात्। ननु नलोपस्याऽसिद्धात्वात्। "पथिमथ्यृभुक्षाम्---"इति नस्यात्वे पन्थ्याः, मन्थ्याः, ऋभुक्ष्या इथ्येव भवितव्यम्, न तु "पन्था"इत्यादिति चेत्। अत्राहुः--नलोपस्यान्तर्वर्ती सुब्विमित्तम्। आत्वस्य तु बहिर्वर्त्ती सुप्। प्रत्यासत्त्या हि अत्र एक एव सुब्निमित्तभूतस्तत्रैव "नलोपः सुप्स्वरे"ति नलोपस्यासिद्धत्वं नान्यचत्रेति नात्र नकारस्यात्वं, किं त्वीकारस्येति।

---

सूत्रम्

काशिका-वृत्तिः

पुंसो ऽसुङ् ७।१।८९

पुंस इत्येतस्य सर्वनामस्थाने परतो ऽसुङित्ययम् आदेशो भवति। पुमान्, पुमांसौ, पुमांसः। इह परमपुमानिति प्रागेव विभक्त्युत्पत्तेः समासान्तोदात्तत्वम्, उत्पन्नायां विभक्तौ असुञित्यनिष्टः स्वरः प्राप्नोति? तदर्थम् असुङि उपदेशिवद्वचनं कर्तव्यम्। तेन परमपुमानित्यन्तोदात्तो भवति। पुमानित्ययं पुनराद्युदात्त एव।

लघु-सिद्धान्त-कौमुदी

पुंसोऽसुङ् ३५६, ७।१।८९

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। पुमान्। हे पुमन्। पुमांसौ। पुंसः। पुम्भ्याम्। पुंसु॥ ऋदुशनेत्यनङ्। उशना। उशनसौ। (अस्य संबुद्धौ वानङ्, नलोपश्च वा वाच्यः)। हे उशन, हेउशनन्, हेउशनः। हे उशनसौ। उशनोभ्याम्। उशनस्सु॥

अनेहा। अनेहसौ। हे अनेहः॥ वेधाः। वेधसौ। हे वेधः। वेधोभ्याम्॥

न्यासः

पुंसोऽसुङ्?। , ७।१।८९

असुङो ङकारोऽन्त्यादेशार्थः। उकार उगित्कार्यार्थः। "पुमान्()" इति। "उगिदचाम्()" ७।१।७० इत्यादिना नुम्(), "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। "इह परमपुमान्()" इत्यादि। परमश्चासौ पुमांश्चेति "सन्महत्()" २।१।६० इत्यादिना समासे कृते यावद्विभक्तिर्नोत्पद्यते तावदसुङादेशेन न भवितव्यम्(); तस्य तदाश्रयत्वात्()। समासान्तोदात्तत्वं तु न किञ्चिदपेक्षत इति अन्तरङ्गत्वात्? प्रागेव विभक्तेरन्तोदात्तत्वं भवति। पश्चादुत्पन्नायां विभक्तावसुङ् अस्वरस्य व्यञ्जनस्य स्याने भवन्न नियतस्वरः स्यात्? ततश्चानिष्टोऽपि स्वरः प्राप्नोति, अन्तोदात्तमेव चोत्तरपदमिष्यते, आद्युदात्तत्वं प्राप्नोति। "तदर्थम्()" इत्यादि। अर्थशब्दो निवृत्तिवाची, यथा--मशकार्थो धूम इति। तदर्थं तस्यानिष्टस्य स्वरसय निवृत्त्यर्थमुपदेशिवद्ववचनं कत्र्तव्यम्(), अकृते समासान्तोदात्तत्वं उपदेशावस्थायामेव विभक्त्युत्पत्तेः प्रागसुङ्? यथा स्यात्()। तेनासुङि पूर्वं कृते पश्चात्? समासान्तोदात्तत्वेन परमपुमानित्ययं शब्दोऽन्तोदात्तो भवति। यद्येवम्(), पुमानित्ययं शब्दोऽप्यन्तोदात्तः स्यात्(), उपदेशावस्थायामेवासुङि कृते पश्चात्? प्रातिपदिकस्वरेण भवितव्यम्()? इत्याह--"पुमानित्ययं पुनः" इत्यादि। पुम्स्शब्दोऽयं पुनातेः "मुक्सुनो ह्रस्वश्च" (द।उ।९।४८) [पातेः डुम्सुन्()-द।उ। पातेड्रुस्सुन्? पं।उ।४।१७७] इति मुक्सुन्प्रत्ययान्तो व्युतपादितः। तेन नित्स्वरेणायमाद्युदात्तो भवति, नान्तोदात्तः॥

बाल-मनोरमा

पुंसोऽसुङ् , ७।१।८९

तत्र सुटि विशेषमाह--पुंसोऽसुङ्। "इतोऽत्सर्वनामस्थाने" इत्यतः "सर्वनामस्थाने" इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे--सर्वनामस्थाने इति। "पुंसोऽसुङ् स्यात्सर्वनामस्थाने" इति फलितम्। ननु तत्पुरुषात्परमपुंस्शब्दात्सुटि असुङादेशात्प्रागेव "समासस्ये"त्यन्तोदात्तत्वं पकारादुकारस्य स्यात्। सर्वनामस्थानोत्पत्तेः प्रागेव समासस्वरस्याऽन्तरङ्गत्वात्प्राप्तेः। इष्यते तु असुङि कृते परमपुमस् इत्यत्र मकारादकारस्य। अत आह--विवक्षिते इति। "पुंसोऽसुङ्" इत्यत्र सर्वनामस्थान इति न परसप्तमी, किंतु "विवक्षिते" इत्यध्याहृत्य सर्वनामस्थाने प्रयोक्तुमिष्टे सति ततः प्रागेव असुङित्यर्थ आश्रीयते। एवं च सर्वनामस्थानोत्पत्तेः प्रागेव असुङि कृते "समासस्ये"त्यन्तोदात्तत्वं, परमपुमस् इत्यत्र मकारादकारस्य भवतीति न दोष इति भावः। नच परसप्तमीपक्षेऽपि सर्वनामस्थानोत्पत्तेः प्रागन्तरङ्गेऽपि समासस्वरः पकारादुकारस्य अकृतवव्यूहपरिभाषया न भवति, असुङि कृते पकारादुकारस्य समासान्ततायाः प्रनङ्क्ष्यत्त्वादिति वाच्यम्, विविक्षित इत्यर्थाश्रयणेनैव सिद्धे अकृतव्यूहपरिभाषाया अस्वीकार्यत्वादिति भावः। अत्र "असुङि उकार इत् उदित्कार्यार्थ" इति प्राचीनमतं दूषयितुमाह--उच्चारणार्थ इति। न त्वित्संज्ञकः। प्रयोजनाऽभावादिति भावः। ननूदित्कार्यमस्ति प्रयोजनमित्यत आह--उगित्त्वेनैवेति। ननु विनिगमनाविरह इत्यत आह-ङीबर्थमिति। बहवः पुमांसो यस्यामिति बहुव्रीहौ सुब्लुकि निमित्ताऽपायादसुङो निवृत्तौ बहुपुंस्शब्दादुगित्त्वान्ङीपि बहुपुंसीशब्दः। अत्र ङीपोऽसर्वनामस्थानत्वात्तस्मिन्विवक्षिते असुङः प्राप्तिरेव नास्ति। डुम्सुन उगित्त्वादेव ङीप् वक्तव्यः। तदर्थं डुम्सुन उगित्त्वमावश्यकं। तेनैव नुमोऽपि सिद्धत्वादसुङ उकार उच्चारणार्थ इति भावः। यद्यप्युणादिषु "पातेर्डुम्सुन्" इति वक्ष्यते, तथापि पाठान्तरमिदं द्रष्टव्यम्। "स्त्रियाम्" इति सूत्रभाष्यकैयटयोस्तु सूत्रेः सस्य पः, ऊकारस्य ह्रस्वः, म्सुन्प्रत्यय इत्युक्तम्। पुमानिति। डुंसुन् इति कृतानुस्वानिर्देशः। ततश्च पुंस्शब्दात्सौ विवक्षिते असुङ्। ङकार इत्, उकार उच्चारणार्थः। "ङिचेचे"त्यन्तादेशः। निमित्ताऽपायादनुस्वारनिवृत्तौ पुम्स्()शब्दात् सुः, उगित्त्वान्नुम्, "सान्तमहतः" इति दीर्घः, सोर्लोपः सस्य संयोगान्तलोपः, तस्याऽसिद्धत्वान्नलोपो नेति भाव#ः। पुमांसाविति। असुङि पुमस् औ इति

स्थिते नुमि "सान्ते"ति दीर्घः। "नश्चे"ति नुमोऽनुस्वार इति भावः। पुंसः पुंसेति। शसादावसर्वनामस्थानत्वादसुङभावे रूपम्। यय्परत्वाऽभावान्न परसवर्ण इति भावः। पुम्भ्यामिति। सस्य संयोगान्तलोपे निमित्ताऽपायादनुस्वारनिवृत्तौ भकारमाश्रित्य पुनरनुस्वारे परसवर्णे रूपमिति भावः। इत्यादीति। पुंसे। पुंसः, पुंसोः। पुंसीति। अत्र यय्परत्वाऽभावान्न परसवर्णः। नुम्स्थानिकानुस्वारस्यैवोपलक्षणात् "नुम्विसर्जनीये"ति षत्वं नेति भावः। "वश क्रान्तौ" अस्मात् "वशेः कनसिः" इति कनसि प्रत्ययः। ककार इत्। इकार उच्चारणार्थः , ङित्त्वादन्तादेशः। उशनन्()स् इति स्थिते उपधादीर्घः, हल्ङ्यादिना सुलोपः, नलोपः। उशना इति रूपमिति भवः। यद्यपि वशधातुश्चान्दस इति लुग्विकरणे वक्ष्यते, तथापि तत्प्रायिकम्, "वष्टि वागुरिः" इत्यादिनिर्देशात्, "उशना भार्गवः कविः" इति कोशाच्च।

अस्य संबुद्धाविति। एतच्च वृत्तौ पठितम्। वशधातौ माधवस्तु "संबोधने तूशनसरिउआरूपं सान्तं तथा नान्तमथाप्यदन्त"मिति श्लोपवार्तिकमित्याह। भाष्याऽदृष्टत्वादिदमप्रामाणिकमेवेति प्रामाणिकाः। हे उशनन्निति। अनङि नलोपाऽभावे रूपम्। हे उशनेति। अनङि नलोपे रूपम्। हे उशन इति। अनङभावे रूपम्। उशनोभ्यामिति। सस्य रुत्वे "हशि चे"त्युत्त्वे "आद्गुणः"। उशनःसु-उशनस्सु। अनेहेति। "नञि हन एह चे"ति नञि उपपदे हनधातोरसुन्, प्रकृतेरेहादेशश्च, उपपदसमासः, "नलोपो नञः," "तस्मान्नुडचि" अनेहस्शब्दः। ततः सुः, अनङ्, सुलोपः, उपधादीर्घः, नलोप इति भावः। हे अनेहः। अनेहोभ्यामित्यादि। वेधा इति। "विधञौ वेध च"। विपूर्वाद्धाञ्धातोरसुन्प्रकृतेर्धादेशश्च। असुनि उकार उच्चारणार्थः। उगित्वाऽभावन्न नुम्, ततः सुः, असन्तत्वाद्दीर्घः, सुलोपः, रुत्वविसर्गाविति भावः। "वस आच्छादने"लुग्विकरणः। सुपूर्वादस्मात्क्विप्, सुवस्शब्दः। ततः सुः, हल्ङ्यादिलोपः, रुत्वविसर्गौ, "सुव" इति रूपं वक्ष्यति। अत्र "अत्वसन्तस्ये"ति दीर्घमाशङ्क्य आह--दीर्घ इति। नच सुवस्शब्दस्य असन्तत्वादधातुत्वाच्च दीर्घो दुर्वार इति वाच्यम्, धात्ववयवभिन्नोयोऽस्तदन्तस्य दीर्घ इत्याश्रयणात्। सुवोभ्यामित्यादि। "वस निवासे" इति भौवादिकस्य तु नेदं रूपं, तस्य यजादित्वेन संप्रसारणप्रसङ्गात्। पिण्डग्रस्()शब्दः सुवस्शब्दवत्।

तत्त्व-बोधिनी

पुंसोऽसुङ् ३८८, ७।१।८९

पुंसोऽसुङ्। "इतोऽत्सर्वनामस्थाने"इत्यतः सर्वनामस्थाने इत्यनुवर्तनादाह--सर्वनाम स्थान इति। विवक्षित इति। तेन"परमपुमा"नित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भवदसुङ एवाऽकारस्य भवति। परसप्तम्यां तु नैतत्सिध्यते। सर्वनामस्थानोत्पतेः प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते रुआंसनधर्मणो हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवादेशस्य पर्सङ्गात्। न चोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्तयिष्यते, असुङश्चान्त्यत्वात्करिष्य इति वाच्यम्, अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्याऽसुङोऽसिद्धत्वादिति भावः। वस्तुतस्तु अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषापवादत्वात्परसप्तमोपक्षोऽपि सूपपादः। एतच्च मनोरमायां स्पष्टम्। पूञ इति। यद्यप्युणादिषु "पातेर्डुम्सु"न्निति वक्ष्यति, तथापि पाठान्तरमनुसृत्याऽत्रोक्तमिति बोध्यम्। हे पुमन्निति। "असंबुद्धा"वित्युक्तेः "सान्ते"ति न दीर्घः। पुंस्विति। संयोगान्तलोपे "मोऽनुस्वारः"।
नुम्स्थानिकस्यैवाऽनुस्वारस्योपलक्षणान्नुम्बिसर्जनीयेति न षत्वम्। उशनेति। "वशेः कनसिः"। "ग्रहिज्ये"ति संप्रसारणम्। अस्य संबुद्धाविति। एतच्च वार्तिकम्। हरदत्तादयस्त्वाहुः--"सोर्डेति वाच्ये "अनङ् सा"विति वचनेन क्वचिदनङ्श्रवणस्य ज्ञापितत्वादेतत्सिद्धमिति। यद्यपिसोर्डे कृते डित्वसामर्थ्याट्टिलोपे "सर्वनामस्थाने चाऽसंबुद्धौ"इति दीर्घे"उशाने"त्यनुष्टरूपं प्रसज्यते, तथाप्यङ्गवृ()त्तपरिभाषाया दीर्घो नेति कृत्वा ज्ञापकत्वं सङ्गच्छत इति तेषामाशयः। अनेहा। वेधा इति। असुन्प्रकरणए "नञि हनएहच""विधात्रो वेध चे चि व्युत्पादनादसन्तत्वेन दीर्घः। अनेहा-कालः। वेधाः--वि()आसृट्

सूत्रम्

काशिका-वृत्तिः

गोतो णित् ७।१।९०

गोशदात् परं सर्वनामस्थानं णित् भवति। णित्कार्यं तत्र भवति इत्यर्थः। गौः, गावौ, गावः। तपरकरणं किम्? चित्रगुः। शबलगुः। कथं हे चित्रगो, हे शबलगव इति? अङ्गवृत्ते पुनर्वृतावविधिर्निष्ठितस्य इति सम्बुद्धिजसोर्गुने कृते णित्त्वं न भवति। अथ वा गोतः इति सम्बधलक्षणा षष्ठी, गोतः सम्बन्धि यत् सर्वनामस्थानम् इति। यच् च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद् गोः सर्वनामस्थानम् इत्युच्यते। चित्रगुशब्दात् तु सर्वनामस्थानं तदन्यपदार्थसैकत्वादिनाह। तपरकरणं तु निर्देशर्थम् एव। केचितोतो णितिति पठन्ति, द्योशब्दादपि यत् सर्वनामस्थानं विद्यते तदर्थम्। द्यौः, द्यावौ, द्यावः। गोतः इत्येतदेव तपरकरणनिर्देशातोकारान्तोपलक्षणं द्रष्टव्यम्। वर्णनिर्देशेषु हि तपरकरणं प्रसिद्धम्।

लघु-सिद्धान्त-कौमुदी

गोतो णित् २१४, ७।१।९०

ओकाराद्विहितं सर्वनामस्थानं णिद्वत्। गौः। गावौ। गावः॥

न्यासः

गोतो णित्?। , ७।१।९०

णिदिति संज्ञा वाऽनेन क्रियते--गोतः परं सर्वनामस्थानं णिद्भवति, णित्संज्ञं भवतीत्यर्थः; अथ वा--गोतः परस्य सर्वनामस्थधानस्य णकार इत्संज्ञको भाव्यते, तेन गोतः परसक्य सर्वनामस्थानस्य णकार इत्संज्ञको भवतीति; आदेशो वा विधीयते--गोतः परस्य सर्वनामस्थानस्य णिणकारानुबन्धवानादेशो भवति; अतिदेशो क्रियते--गोतः णिद्भवति, णिद्वद्भवतीत्यर्थः, विनापि वतिना वत्यर्थो गम्यते, यथा--गाङ्कुटादिसूत्रे १।२।१। तत्राद्ये पशे संज्ञोच्चारिता संज्ञिनं प्रत्याययतीति णित्प्रदेशेषु कृत्रिमत्वादस्यैव सर्वनामस्थानस्य ग्रहणं प्राप्नोति, न ण्वुलादीनाम्()। द्वितीये तु णकार इत्संज्ञकः सर्वनामस्थानस्य प्रसज्येत। तृतीये तु पुनर्णित्? सर्वनामस्थानं न क्वचिद्दृष्टमिति। य एवैते ष्वुलादयस्य एवादेशाः प्रसज्येरन्नित्येते दोषा आद्येषु त्रिषु पक्षेषु यथाक्रमं प्रतिविधेयाः। तत्प्रतिविधाने प्रतिपत्तिगौरवं स्यात्(), अतिदेशपक्षे तु न किञ्चित्? प्रतिविधेयम्(), अतः स एव साधुरिति। तमेवाश्रित्याह--"गोशब्दात्()" इत्यादि। "णित्कार्यम्()" इत्यादिना णिद्भवतीत्यस्यार्थं व्याचक्षणः कार्यातिदेशोऽयमित्याचष्टे। गौरिति वृद्धिर्णित्कार्यम्()। "चित्रगुः" इति। यत्र बहुव्रीहौ कृते "गोस्त्रियोरुपसर्जनस्य " १।२।४८ इति ह्रस्वः। तत्रासति तपरकरणे "अङ्गाधिकारे तस्य तदुत्तरपदस्य" (पु।प।वृ।८५) इति वचनात्तदन्तविधिमभ्युपगम्य स्थानिवद्भावेन गोशब्दान्तमेतदङ्गं भवतीति णिद्भावः प्राप्नोति। तपकरणे तु ततकालनियमे सति न भवति; भिन्नकालत्वात्()। "तपरस्तत्कालस्य" १।१।६९ इत्यत्राण्ग्रहणस्य निवृत्तत्वादनणोऽपि तत्कालनियमो भवत्येव। "कथम्()" इत्यादि। सत्यपि तपरकरणं "ह्रस्वस्य गुणः" ७।३।१०८, "जसि च" ७।३।१०९ इति सम्बुद्धिजसोर्गुणे कृते हे चित्रगो, हे चित्रगव इत्यत्र प्राप्नोति। तत्कालत्वादित्यभिप्रायः। ननु च लक्षमप्रतिपदोक्तपरिभाषया (व्या।प।३) न भविष्यति? नैतदस्ति; यत्र हि स्थानिवद्भावस्तत्रैवा नोपतिष्ठते; अध्यया हि स्थानिवद्भावोऽनर्थकः स्यात्()। "अङ्गवृत्ते पुन" इत्यादि परीहारः। एष तु हे चित्रगवित्यत्र परीहारः, न तु चित्रगव इत्यत्र; अनिष्ठितत्वात्()। अवादेशे हि कृते निष्ठितत्वमत्र भविष्यति, न च गुणमात्रे; अप्रयोगार्हत्वात्()। अत एवाव्यापकत्वादस्य परीहारस्यापरितुष्यन्? परिहारान्तरमाह--"अथ वा" इत्यादि। स्यादेतत्()--अत्रापि गोः सम्बन्धि सर्वनामस्थानमानन्तर्यलक्षणेन भवति सम्बन्धेनेति/ अत आह--"यच्च" इत्यादि। यद्यानन्तर्यलक्षणेन गोः सम्बन्धि सर्वनामस्थानं गृह्यते तदा षष्ठ()आश्रयणामनर्थकं स्यात्(), पञ्चम्येवाश्रयितव्येति;

क्रमव्यतिक्रमे प्रयोजनाभावात्()। तस्मात्? षष्ठ()आश्रयणसामथ्र्याद्गोशब्दस्यार्थस्य य एकात्वादयस्तेषु यत्सर्वनामस्थानं तद्गोः सर्वनामस्थानमित्युच्यते। तत्? पुनर्गोशब्दस्यैकत्वादीनां वेदितव्यम्()। आदिशब्देन द्वित्वादिपरि ग्राहः। तत्रैतत्? स्यात्()--चित्रगुशब्दादपि यत्? सर्वनामस्थानं तद्गोशब्दस्यार्थस्यैकत्वादिषु वत्र्तते? इत्याह--"चित्रगुशब्दात्()" इत्यादि। यदि यद्गोः सम्बन्धि सर्वनामस्थानं तस्य णिद्भावो विधीयते, तदा तपरकरणमनर्थकं स्यात्(), तद्धि चित्रगुरित्यादौ मा भूदित्येवमर्थं क्रियते। न चात्र प्राप्तिः, न ह्रत्र गोः सम्बन्धि सर्वनामस्थानम्(), किं तर्हि? अन्यपदार्थस्येत्याह--"तपरकरणं" तु इत्यादि। "केचित्()" इत्यादि। किमर्थं पुनस्त एवं पठन्ति? इत्याह--"द्योशब्दोऽपि" इत्यादि। य त्वेदं न पठन्ति "गोतः" इति, तेषां द्योशब्दात्? परस्य सर्वनामस्थानस्य णिद्भावो न सिध्यतीत्याह--"गोत इत्येतदेव" इत्यादि। कथं पुनरेतदोकारान्तोपलक्षणार्थं शक्यं विज्ञातुम्()? इत्याह--"वर्णनिर्देशेषु" इत्यादि। यथा "वृद्धिरादैच्()" १।१।१, "अदेङ्गुणः" १।१।२ इत्यवमादिषु योगेषु वर्णस्तपरो निर्दिश्यत इति तपरकरणं वर्णनिर्देशेषु हि प्रसिद्धम्()। तस्मादिहापि तपरनिर्देशात्? "गोतः" इत्येतदोकारान्तोपलक्षणं द्रष्टव्यमिति। अतो वचनात्? तपरकरणं वर्णनिर्देशार्थ मेवेत्यस्यैवौकारान्तोपलक्षणार्थं विज्ञायते॥

बाल-मनोरमा

गोतो णित् २८२, ७।१।९०

गोतो णित्। "गोत" इति तपरकरणम्। "इतोऽत्सर्वनामस्थाने" इत्यतः "सर्वनामस्थाने" इत्यतः "सर्वनामस्थाने" इत्यनुवृत्तं प्रथमया विपरिणम्यते। तदाह--घोशब्दादित्यादिना। णिद्वत्स्यादिति। णिति परे यत्कार्यं तत्कार्यकारीत्यर्थः। गौरिति। णिद्वत्त्वे "अचो ञ्णिती"ति वृद्धिरौकारः। रुत्वविसर्गाविति भावः। गावौ गाव इति। णिद्वत्त्वे वृद्धिरावादेशश्चेति भावः। हे गौः। वृद्धौ एङः परत्वाऽभावान्नसंबुद्धिलोपः। अमि गो अम् इति स्थिते णिद्वत्त्वाद्वृद्धो प्राप्तायाम्-।

तत्त्व-बोधिनी

ओतो णित् २४४, ७।१।९०

गोतो णित्। "इतोऽत्सर्वमाभस्थाने"इत्यतोऽनुवृत्तं सप्तम्यन्तं सर्वनामस्थानग्रहणं प्रथमया विपरिणम्यते, "णि"दित्यनेन समानाधिकरण्यात्तदाह---सर्वनामस्थानमिति। णित्कार्यकृत्स्यादिति। णिति परे पूर्वस्य यत्कार्यं तत्कारोतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

णलुत्तमो वा ७।१।९१

उत्तमो णल् वा णित् भवति। णित्कार्यं तत्र वा भवति इत्यर्थः। अहं चकर, अहं चकार। अहं पपच, अहं पपाच।

लघु-सिद्धान्त-कौमुदी

णलुत्तमो वा ४५८, ७।१।९१

उत्तमो णल् वा णित्स्यात्। जगाद, जगद। जगदिव। जगदिम। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्॥

न्यासः

णलुत्तमो वा। , ७।१।९१

"णित्कार्यं वा भवतोत्यर्थः" इति। अनेन णित्कार्यस्य पक्षेऽबावाण्णिद्वा भवतीत्युच्यते, न तु णित्त्वस्यैव प्रतिषेध इति दर्शयति। न तु णल उपदेशावस्थायां सिद्धं णित्त्वं तद्वचनशतेनापि शक्यं तिषेद्धुमिति भावः। "चकार, चकर" इति। यदा

णित्त्वं तदा "अचो ञ्णिति" ७।२।११५ इति वृद्धिः, अन्यदार्धधातुकलक्षणो गुणः। "पपाच, पपच" इति। यदा णित्त्वं तदा "अकत उपधायाः" ७।२।११६ इति वृद्धिः, अन्यदा तदभावः॥

बाल-मनोरमा

णलुत्तमो वा १२७, ७।१।९१

णलुत्तमः। णित्स्यादिति। "गोतो णि"त्यतस्तदनुवृत्तेरिति भावः। चखाद चखदेति। णित्त्वे उपधावृद्धिः। तदभावे न।

---

सूत्रम्

काशिका-वृत्तिः

सख्युरसम्बुद्धौ ७।१।९२

असम्बुद्धौ यः सखिशब्दः तस्मात् परं सर्वनामस्थानं णित् भवति। सखायौ। सखायः। असम्बुद्धौ इति किम्? हे सखे।

लघु-सिद्धान्त-कौमुदी

सख्युरसंबुद्धौ १८१, ७।१।९२

सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात्॥

न्यासः

सख्युरसम्बुद्धौ। , ७।१।९२

"असम्बुद्धौ" इति पर्युदासः--सम्बुद्धेरन्याऽसम्बुद्धिः। "हे सखे" इति। "ह्रस्वस्य गणः" ७।३।१०८ इति गुणः॥

बाल-मनोरमा

सख्युरसंबुद्धौ २५१, ७।१।९२

सखि-औ इति स्थिते णित्कार्यं वृदिं()ध वक्ष्यन् णिद्वद्भावं दर्शयति-सख्युरसम्बुद्धो। "सख्यु"रिति दिग्योगे पञ्चमी। "अङ्स्ये"त्यधिकृतं पञ्चम्या विपरिणम्यते। "पर" मित्यध्याहार्यम्। "इतोऽत्सर्वनामस्थाने" इत्यतः "सर्वनामस्थाने" इत्यनुवर्तते। "असम्बुद्धा"वित्यभेदेनान्वेति। "गोतो णि"दित्यतो "णि"दिति प्रथमान्तमनुवृत्तम्। तत्सामानाधिकारण्या "दसम्बुद्धा"विति सर्वनामस्थाने"इति च सप्तमी प्रथमा कल्प्यते। तदाह-सख्युरङ्गादित्यादिना। णिद्वदिति। णित्कार्यकृत्स्यादित्यर्थः। णिच्छब्दस्तत्कार्यातिदेशार्थ इति भावः।

तत्त्व-बोधिनी

सख्युरसंबुद्धौ २१२, ७।१।९२

सख्युरसंबुद्धौ। इह "इतोऽत्सर्वनामस्थाने"इत्यतः"सर्वनामस्थाने"इत्यनुवर्तते, तदसंबुद्धावित्यनेन विशेष्यते। "गोतो णि"दिति सूत्राण्णिदित्यनुवृत्तं तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यत इत्याह--संबुद्धिवर्ज्जं सर्वनामस्थानमिति। "सख्युरसंबुद्धि"रित्येव सूत्रयितुं युक्तमिति मनोरमायां स्थितम्। ननु"सखे"त्यत्रोपधादीर्घे बाधित्वना परत्वाद"त उपधाया"इति वृद्ध्या भाव्यं, सोर्णित्त्वादिति चेदत्राहुः-कृताऽकृतप्रसङ्गित्वमात्रेणापि नित्यत्वस्वीकारात्, अन्तरङ्गत्वाच्च "सखे"त्यत्र वृदिं()ध बाधित्वा "सर्वानामस्थाने चासंबुद्धौ" इत्युपधादीर्घेणैव भवतव्यम्, "सख्युरसंबुद्धा"विति णिद्वद्भावमुपजीव्याऽत्र पर्वर्तमानस्य "अत उपाधायाः"इत्यस्य बहिरङ्गत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

अनङ् सौ ७।१।९३

सखिशब्दस्य सौ परतः अनङित्ययम् आदेशो भवति, स चेत् सुशब्दः सम्बुद्धिः न भवति। सखा। असम्बुद्धौ इति किम्? हे सखे।

लघु-सिद्धान्त-कौमुदी

अनङ् सौ १७५, ७।१।९३

सख्युरङ्गस्यानङादेशोऽसम्बुद्धौ सौ॥

न्यासः

अनङ् सौ। , ७।१।९३

पूर्वेण णित्त्वे प्राप्तेऽनङ्? विधीयते। तस्य ङकारोऽन्त्यादेशार्थः। अकार उच्चारणार्थः। "सखा" इति। "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इति दीर्घः, हल्ङ्यादिसुलोपः, ६।१।६६, "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नकारस्य। आकारे विदातव्येऽनङ्वचनं सोर्लोपो यथा स्यात्()। अकारविधाने तस्य लोपो न स्यात्(), यथा--पन्था इति॥

बाल-मनोरमा

अनङ् सौ २४६, ७।१।९३

अनङ् सौ। "सख्युरसम्बुद्धौ" इत्यनुवर्तते। "अङ्गस्ये"त्यधिकृतं। तदाह--सख्युरङ्गस्येत्यादिना। "सौ" इति प्रथमैकवचनम्, नतु सप्तमीबहुवचनम्, "असम्बुद्धा"विति पर्युदासात्। अनङि ङकार इत्। नकारादकार उच्चारणार्थः। अनेकाल्त्वात्सर्वादेशत्वमाशङ्क्याह--ङिच्चेति।

तत्त्व-बोधिनी

अनङ् सौ २०७, ७।१।९३

अनङ् सौ। नकारादकार उच्चारणार्थः। "असंबुद्धौ" इति पर्युदासात्साविति प्रथमैकवचनं गृह्रते, न तु सप्तमीबहुवचनम्। "सौर्डा" इत्येव सिद्धे अनङिधामन्यातोऽपि स्यादिति ज्ञापनार्थम्, तेन उशनसः संबुद्धावनङ् सिह्रतीति प्राञ्चः। यद्यपि "सोर्डे" त्युक्ते "ऋदुशन---" इत्युत्तरसूत्रेणापि ङा स्यात्। ततश्च "उशने"त्यत्र "सर्वनामस्थाने चाऽसंबुद्धौ"इति दीर्घः स्यात्।"पुरुदंसे"त्यत्र तु "सान्तमहतः"इति दीर्घः स्यात्, तथापि संज्ञापूर्वकविधेरनित्यत्वादङ्गवृत्तपरिभाषया वा कतत्समाधेयमिति तेषामाशयः।

---

सूत्रम्

काशिका-वृत्तिः

ऋदुशनस्पुरुदंसो ऽनेहसां च ७।१।९४

ऋकारान्तानाम् अङ्गानाम् उशनस् पुरुदंससनेहसित्येतेषाम् च असम्बुद्धौ सौ परतः अनङादेशो भवति। कर्ता। हर्ता। माता। पिता। भ्राता। उशना। उरुदंसा। अनेहा। असम्बुद्धौ इत्येव, हे कर्तः। हे मातः। हे पितः। हे पुरुदंसः। हे अनेहः। हे उशनः। उशनसः सम्बुद्धौ अपि पक्षे अनङिष्यते। हे उशनन्। न ङिसम्बुद्ध्योः ८।२।८ इति नलोपप्रतिषेधो ऽपि पक्षे

इष्यते। हे उशन। तथा चोक्तम् सम्बोधने तूशनस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्। माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदाम् वरिष्ठः। इति। तपरकरणमसन्देहार्थम्।

लघु-सिद्धान्त-कौमुदी

ऋदुशनस्पुरुदंसोऽनेहसां च २०६, ७।१।९४

ऋदन्तानाम् उशनसादीनाम् च अनङ् स्यात् असंबुद्धौ सौ॥

न्यासः

ऋदुशनस्पुरुदंसोऽनेहसां च। , ७।१।९४

ऋकारान्तस्य "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणे प्राप्ते। इतरेषामपि हल्ङ्यादिलोपे ६।१।६६ कृते रुत्वविसर्जनीयसान्तदीर्घेषु प्राप्तेषु। "उशनसः सम्बुद्धावपि पक्ष इष्यते" इति। तत्कथम्()? चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः। तेन तम्बुद्धावप्युशनसोऽनङ्? भविष्यति। यद्येवम्(), नित्यं स्यात्()? नैतत्(); "णलुत्तमो वा" (७।१।९१) इत्यधिकारात्? पक्षे भविष्यति। व्यवस्थित विभाषाविज्ञानाच्चान्येषां नित्यम्()। "नलोपप्रतिषेधोऽपि पक्ष इष्यते" इति। कथमेतल्लभ्यते? तत्र हि स्वरितो वाऽनुदात्ते पदादौ" ८।२।६ इत्यतौ वेत्यनुवत्र्तते, तेनैवं विज्ञायत--न ङिसम्बुद्ध्योर्नलोपप्रतिषेधो वा भवतीति। व्यवस्थितविभाषादिज्ञानाच्चोशनसः सम्बुद्धिनकारस्य लोपो वा भविष्यति। अन्येषां तु नित्यमेव लोपो न भविष्यतीति। "तथा चोक्तम्()" इत्यादिनाऽनन्तरोक्तमर्थमागमवचनन द्रढयति। "सान्तम्()" इति। यदाऽनङ न क्रियते। "नान्तम्()" इति। न तु नलोपः। "अदन्तम्()" इति। यदा नलोपः क्रियते। "तपरकरणमसन्देहार्थम्()" इति। असति हि तस्मिन्नुशनसि परतो यणादेशे कृते सन्देहः स्यात्()--किमृकारन्तस्य ग्रहणम्()? उत्त रेफान्तस्येति()॥

बाल-मनोरमा

ऋदुशनस्पुरुदंसोऽनेहसां च २७४, ७।१।९४

ऋदुशनस्। "सख्युरसंबुद्धौ" इत्यतोऽसंबुद्धाविति "अनङ सौ" इत्यतोऽनङिति चानुवर्तते, "अङ्गस्ये"त्यधिकृतमृदादिभिर्विशेष्यते। तदाह--ऋदन्तानामिति। उशनसादिष्वपि तदन्तविधिर्बोध्यः। अनङि ङकार इत्। नकारादकार उच्चारणार्थः। "ङिच्चे"त्यन्तादेशः। क्रोष्टन् स् इति स्थिते।

---

सूत्रम्

काशिका-वृत्तिः

तृज्वत् क्रोष्टुः ७।१।९५

क्रोष्टुशब्दः तुन्प्रत्ययान्तः संज्ञाशब्दः सर्वनामस्थाने ऽसम्बुद्धौ परतः तृज्वद् भवति। तृजन्तस्य यद् रूपं तदस्य भवति इत्यर्थः। रूपातिदेशो ऽयम्। प्रयासत्तेश्च क्रुशेरेव ऋजन्तस्य य रूपं तदतिदिश्यते। तच् च क्रोष्तृ इत्येतदन्तोदात्तम्। क्रोष्टा, क्रोष्टारौ, क्रोष्टारः। क्रोष्टारम्, क्रोष्टरौ। सर्वनामस्थाने इत्येव, क्रोष्टून्। असम्बुद्धौ इत्येव, हे क्रोष्टो।

न्यासः

तृज्वत्क्रोष्टुः। , ७।१।९५

"क्रोष्टुशपब्दस्तुन्प्रत्ययान्तः संज्ञाशब्दः" इति। "क्रुश आह्वाने" (धा।८५६)["अह्वाने रोदने च"--धा।पा।] इत्येतस्मात्? "सितनिगमिमसिसच्यविधाञ्कृशिभ्यस्तुन्()" (द।उ।१।१२२)["पसि"--द।उ] इति तुन्प्रत्ययान्तस्य संज्ञायां

व्युत्पादितत्वात्()। संज्ञा पुनरियं जम्बुकस्य। "तृज्वद्भवति" इति। तृचा तुल्यं वत्र्तत इति तृज्वत्()। "रूपातिदेशोऽयम्()" इति वक्षयति। तत्र "तृज्वद्भवति" इत्युक्ते तृच्छब्दसय यद्रूपं तदतिदिश्यत इति कस्यचिद्भ्रान्तिः स्यात्? अतस्तां निराकर्त्तुमाह--"तृजन्तसय यद्रूपम्()" इत्यादि। एतच्च "प्रत्ययग्रहणे यस्मात्म विहितस्तदादेस्तदन्तस्य ग्रहणं भवति" (पु।प।वृ।४४) इत्यतो लभ्यते। यद्यपि शास्त्रातिदेशेऽप्यदोषो बहुधा भाव्ये प्रदर्शिताः--तस्यादुष्टत्वेन प्रातिपादनात्(), कार्यातिदेशोऽपयदीषवानेव व्याख्यातः--तस्य शास्त्रातिदेशेनाभिन्नत्वात्(); तथापि शास्त्रातिदेशकार्यातिदेशयोररूपार्थत्वाद्रूपे गुणाभावः। रूपस्य तु प्राधान्यम्(); ताभ्यां तस्य संस्कार्यत्वात्()। अतो रूपातिदेशोऽयं युक्त इत्याह--"रूपातिदेशोऽयम्()" इत्यादि। यदि तर्हि तृजन्तस्य यद्रूपं तत्? क्रोष्टुशब्दस्यातिदिश्यते तदा यत्किञ्चिदेव तृजन्तस्य रूपम्()--वक्तृ, पक्तृ--इत्येवमाद्यपि प्राप्नोति? अत आह--"प्रत्यासत्तेश्च" इत्यादि। इह धात्वन्तरस्य पचतिप्रभृते स्तृजन्तस्य रूपमस्ति, क्रुशेरपि, तत्? किमश्रुतसय धातोस्तृजन्तस्य यद्रूपं तदतिदिश्यते, उत्त श्रुतस्य क्रुशेरिति? तत्र श्रुतस्यैव यद्रूपं तदेवातिदेष्टुं इति। चकारोच्चारणसामथ्र्यात्? स्वरोऽप्यतिविश्यते। अन्यथा "तृवत्()" इत्येव ब्राऊयादिति भावः। "क्रोष्टा" इति। तृज्वद्भावे कृते पूर्वसूत्रेणानङ्()। "क्रोष्टारौ" क्रोष्टारः" इति। "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणः, रपरत्वम्(), अप्त्रादिसूत्रेण ६।४।११ दीर्घः। "क्रोष्टन्()" इति। "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घः। "तस्माच्छसो नः पुंसि" ६।१।९९ इति नत्वम्()॥

बाल-मनोरमा

तृज्वत्क्रोष्टुः २७२, ७।१।९५

तयोरविशेषेण सर्वत्र प्रयोगे प्राप्ते विशेषं दर्शयितुमाह--तृज्वत्क्रोष्टुः। प्रत्ययग्रहणपरिभाषया "तृच्" इति तृजन्तं गृह्रते। "तेन तुल्य"मिति तृतीयान्ताद्वतिः। "इतोऽत्सर्वनामस्थाने" इत्यतः "सर्वनामस्थाने" इति "सख्युरसंबुद्धौ" इत्यतो"ऽसंबुद्धाविति" चानुवर्तते। तदाह--क्रोष्टुस्तृजन्तेनेत्यादिना। "कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः। व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते"। इति व्यतिदेशाः सप्त, तत्र प्राधान्यादिह तृजन्तरूपमेव अतिदिश्यते, तच्च न "कर्तृ" "भर्तृ" इत्यादि तृजन्तं रूपं, किंतु "क्रोष्टृ" इत्येव तृजन्तरूपमतिदिश्यते। क्रुशधातोरुपस्थितत्वात्, अर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह--क्रोष्टुशब्दस्य स्थाने इति। निमित्तादीनामुदाहरणानि तु तत्र तत्र प्रधर्शयिष्यामः। क्रोष्टृ स् इति स्थिते।

तत्त्व-बोधिनी

तृज्वत्क्रोष्टुः २३५, ७।१।९५

तृज्वत्क्रोष्टुः। "क्रुश आह्वाने रोदने च"। अस्मा"त्सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्ि"ति तुन्प्रत्यये क्रोष्टुशब्दः। तृचि तु क्रोष्टृशब्दः। द्वावपि श्रृगालवचनौ। तत्राऽविशेषेण द्वयोः प्रयोगे प्राप्ते "सर्वष्टु" रिति तुन्नन्तात्प्रथमा। "तृज्व"दिति तृतीयान्ताद्वतिः। निमित्तेव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयकत्वेनातिदेशस्यानेकविधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते [इत्याह--तृजन्तवद्रूपमिति।]तच्च न पचादेर्यस्य कस्यचि()त्कतु क्रुशेरेव, उपस्थितत्वादर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह--क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्द इति। निमित्तोतिदेशो यथा--चिकीर्षति। चिकीर्षते। अत्र सन्नन्तस्य "पूर्ववत्सनः"इत्यनेन ञित्त्वातिदेशे कर्तृगामिनि क्रियाफले आत्मनेपदं सिध्यति। ननु कार्यातिदेशोनाप्येतद्गतार्थमिति चेदत्राहुः---निमित्तप्रतिसन्धानपूर्वकत्वात्तस्येति निमित्तातिदेशः पृथगुक्तं इति। व्यपदेशातिदेशे यथा---"आद्यन्तवदेकस्मि"न्नित्यनेन "कर्तव्य"मित्यादौ सावकाशः प्रत्ययाद्युदात्तत्वफलक आदित्वव्यपदेश औपगवादावतिदिश्यते। तादात्म्यातिदेशो यथा----"सुबामन्त्रिते पराङ्गवत्स्वरे"इत्यनेन "द्रवत्पाणी शुभस्पती"इत्यत्र शुभशब्दस्य पराङ्गवत्त्वे सति षाष्ठिकेन "आमन्त्रितस्ये"त्यनेन शकारादुकारस्याद्युदात्तत्वं सिध्यति।

शास्त्रातिदेशो यथा---"कालेभियो भवव"दित्यनेन कालवाचिभ्यः "तत्र भवः"इत्यधिकारे यच्छस्त्रं तत् "सास्य देवकते"त्यर्थोऽतिदिश्यते। तेन "मासिकं""प्रावृषेण्य"मित्यत्रा यथाविहितं "कालाट्ठञ्" "प्रावृष् एण्यः"इति सिध्यति। कार्यातिदेशे तु----इह प्रकृतिपत्र्ययादीनां साङ्कर्यं स्यात्। कायातिदेशे "गोतो णित्"। गौः गावौ गावः। अत्र णित्कार्यं वृद्धि रतिदिश्यते, प्राधान्यात्। केचित्तु निमित्तातिदेशे "गोतो णि"दित्युदाहरन्ति, तन्मते कार्यातिदेशस्य "कर्मवत्कर्मणा", "स्थानिदादेशः--"इत्याद्युदाहर्तव्यम्। रूपातिदेशो यथा-वतण्डी चासौ वृन्दीरिका च वातण्ड()वृन्दरिका। अत्र वतण्डीशब्दे "पुंवत्कर्मधारये"त्यनेन पुंवाचकवातण्ड()शब्दरूपमितिदिश्यते। इह मनोरमायामतिदेशस्य षड्विधत्वमुक्तम्। अन्ये त--"कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः। व्यपदेशश्च सप्तैताननतिदेशान्प्रचक्षते।"----इति वप्तविधत्वमाहुः। अर्थातिदेशस्योदाहरणं तु--गर्गी च गग्र्यायणौ च गर्गाः। अत्र "स्त्री पुंवच्चे"--त्यनेन गोत्रप्रत्ययान्तस्त्रीव#आचकस्य "वृद्धोयूने" त्येकशेषे सति रूयर्थस्य पुमर्थोऽतिदिश्यते। तेन स्त्रियामपत्यकृतबहुत्वे "यञत्रोश्चे"ति लुक् सिध्यति।

---

सूत्रम्

काशिका-वृत्तिः

स्त्रियां च ७।१।९६

असर्वनामस्थानार्थम् आरम्भः। स्त्रियां च क्रोष्टुशब्दस्य तृज्वद् भवति। क्रोष्ट्री। क्रोष्ट्रीभ्याम्। क्रोष्ट्रीभिः। क्रोष्टुशब्दं केचिद् गौरादिषु पठन्ति, ते ङीषि प्रत्यये तृज्वद्भावं कुर्वन्ति। तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतैः पञ्चक्रोष्टृभी रथैः इति स्त्रीशब्दस्य लुकि कृते न सिध्यति, तत्र प्रतिविधेयम्। ये तु गौरादिषु न पठन्ति, तेषां स्त्रियाम् इत्यर्थनिर्देशः, स्त्रियां वर्तमानः क्रोष्टुशब्दः तृज्वद् भवति। कृते ऽतिदेशे ऋन्नेभ्यो ङीप् ४।१।५ इति ङीप्प्रत्ययः। तत्र उदात्तयणो हल्पूर्वात् ६।१।१६८ इत्यन्तोदात्त एव क्रोष्ट्रीशब्दो भवति।

लघु-सिद्धान्त-कौमुदी

स्त्रियां च २३२, ७।१।९६

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते॥

न्यासः

स्त्रियाञ्च। , ७।१।९६

"क्रीष्ट्रीभिः" इति। तृज्वद्भावे कृते यणादेशः। केन पुनः क्रोष्टुशब्दादीकारः, तृज्वद्भावे कृते "ऋन्नेभ्यो ङीप्()" (४।१।५) इत्यनेनेति चेत्()? न; अनुदात्तत्वप्रसङ्गादित्यत आह--"क्रोष्टुशब्दं केचित्()" इत्यादि। "पञ्चभिः क्रोष्ट्रीभिः क्रीतैः" इति। "तद्धितार्थोत्तरपदसमाहारे च" २।१।५० इति समासः। "आर्हादगोपुच्छ" ५।१।१९ इत्यादिना ठक्(), तस्य "अध्यद्र्धपूर्व" ५।१।२८ इत्यादिना लक्(), "लुक्तद्धितलुकि" १।२।४९ इति स्त्रीप्रत्ययस्य लुक्(), त()स्मल्लुप्ते ये ङीष्प्रत्यये कृते तृज्वद्भावं कुर्वन्ति तेषां तृजवद्भावो न भवति, तस्मात्? "प्रतिविषेयम्()" इति। प्रतिविधानं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिविधानम्()--चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन लुप्तेऽपि स्त्रीप्रत्यये भविष्यति। ये तर्हि गौरादिषु न पठन्ति तेषामीकारः कथम्()? इत्याह--"गौरादिषु" इत्यादि। तेषां पञ्चक्रोष्टुभिरित्यत्र न किञ्चित्? प्रतिविधेयम्(); परस्य स्त्रीप्रत्ययस्य निमित्तत्वेनानाश्रितत्वात्()। ननु च तेषामपि स्त्रीप्रत्ययस्य लुप्तत्वादसस्यामङ्गसंज्ञायामङ्गस्योच्यमानस्तृण्वद्भावो न प्राप्नोतीति प्रतिविधेयमेव? नैतदस्ति; लुप्ते हि स्त्रीप्रत्यये प्रत्ययलक्षणेनाङ्गसंज्ञा भवत्येव। "न लुमताङ्गस्य" १।१।६२ इति यः प्रतिषेधः सोऽङ्गाधिकार विहितस्यैव कार्यस्य। न चाङ्गसंज्ञाऽङ्गाधिकारे विहिता। "कृतेऽतिदेशे" इत्यादि। "इकोऽचि विभक्तौ ७।१।७३ इत्यनुवृत्तेर्विभक्तावुत्पन्नायां

तदाश्रयायाञ्चाङ्गसंज्ञायां स्त्रियां वर्त्तमानस्य क्रोष्टुशब्दस्यातिदेशः क्रियते। तस्मिन्? कृते ऋकारान्तत्वात्? "ऋन्नेभ्यो ङीप्()" ४।१।५ इति ङीब्भवति। ननु च ङीप्प्रत्यये कृतेऽन्तोदात्तः क्रोष्ट्रीशब्दो न सिध्यति? इत्याह--"तत्र" इत्यादि। क्रोष्ट्रीशब्दोऽन्तोदात्तोऽतिदिश्यत इति तृसम्बन्धिन ऋकारस्य स्थाने यणादेशो भवन्नुदात्तयण्? भवति, ततश्च "शतुरनुमो नद्यजादी" ६।१।१६७ इत्यनुवर्त्तमाने "उदात्तयणो हल्पूर्वात्()" ६।१।१६८ इत्यन्तोदात्तो भवति क्रोष्ट्रीशब्दः॥
बाल-मनोरमा
स्त्रियां च ३०३, ७।१।९६

अथ क्रोष्टुशब्दस्य स्त्रियां विशेषमाह--स्त्रियां च। "तृज्वत्क्रोष्टुः" इत्यनुवर्तते। रूपातिदेशोऽयमित्युक्तम्। तदाह--स्त्रीवाचीत्यादिना। तथाच स्त्रियामुदन्तः क्रोष्टुशब्दो नास्त्येव। किन्तु क्रोष्टृ इति ऋदन्त एवेति फलितम्।

---

सूत्रम्
काशिका-वृत्तिः
विभाषा तृतीयादिष्वचि ७।१।९७

तृतीयादिषु विभक्तिषु अजादिषु क्रोष्टुर्विभाषा तृज्वद् भवति। क्रोष्ट्री, क्रोष्टुना। क्रोष्ट्रे क्रोष्टवे। क्रोष्टुः, क्रोष्टोः। क्रोष्टरि, क्रोष्टौ। क्रोष्ट्रोः, क्रोष्ट्वोः। तृतीयादिषु इति किम्? क्रोष्टून्। अचि इति किम्? क्रोष्टुभ्याम्। क्रोष्टुभिः। तृज्वद्भावात् पूर्वविप्रतिषेधेन नुम्नुटौ भवतः। प्रियक्रोष्टुने अरण्याय। हतक्रोष्टु वृषलकुलाय। नुट् क्रोष्टूनाम्।
लघु-सिद्धान्त-कौमुदी
विभाषा तृतीयादिष्वचि २०८, ७।१।९७

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे॥
न्यासः
विभाषा तृतीयादिष्वचि। , ७।१।९७

"स्त्रियाम्()" ७।१।९६ इति नानुवर्त्तते, तेनेयमप्राप्तविभाषा। "क्रोष्टुना" इति। "आङो नास्त्रियाम्()" ७।३।११९ इति नाभावः। "क्रोष्टवे" इति। "घेर्ङिति" ७।३।१११ इति गुणः। "क्रोष्टुः" इति। "ऋत उत्()" ६।१।१०७ इत्युत्त्वम्(), रपरत्वम्(), "रात्? सस्य" ८।२।२४ इति सलोपः। "क्रोष्टोः" इति। पूर्ववद्गुणः, "ङसिङसोश्च" (६।१।११०) इति पूर्वरूपत्वम्? "क्रोष्टरि इति। "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० इति गुणः। "क्रीष्टौ" इति। "अच्च घेः" ७।३।११८ इत्यत्त्वम्(), औत्त्वञ्च। "तृज्वद्भावात्()" इत्यादि। तृज्वद्भावस्यावकाशः--पुंसि क्रोष्ट्रो इति, नुमोऽवकाशः--त्रपुणे, जतुन इति; प्रियक्रोष्टुने वनायेत्यत्रोभयप्रसङ्गे सति नुम्भवति पूर्वविप्रतिषेधेनेति। नुटोऽवकाशः--अग्नीनाम्(), वायूनामिति, तृज्वद्भावस्यावकाशः स एव; क्रोष्टूनामित्यत्रोभयप्रसङ्गे सति नुङ्? भवति पूर्वविप्रतिषेधेनेति। पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वा ल्लभ्यते॥
बाल-मनोरमा
विभाषा तृतीयादिष्वचि २७६, ७।१।९७

विभाषा तृतीया। "तृज्वत्क्रोष्टु"रित्यनुवर्तते। "अची"ति तृतीयादिविभक्तिविशेषणं, तदादिविधिस्तदाह--अजादिष्विति। क्रोष्ट्रेति। तृज्वद्भावे क्रोष्टृ-आ इति स्थिते ऋकारस्य यण् रेफः। एवं क्रोष्ट्रे इति। तृज्वद्भावाऽभावपक्षे-क्रोष्टुना क्रोष्टवे-शम्भुवत्।

तत्त्व-बोधिनी

विभाषा तृतीयादिष्वचि २३८, ७।१।९७

विभाषा तृ। "यस्मिन्विधिस्तदादौ"इति तदादिविधिरित्याह--अजादिष्विति।

---

सूत्रम्

काशिका-वृत्तिः

चतुरनडुहोरामुदात्तः ७।१।९८

चतुरनडुः इयेतयोः सर्वनामस्थाने परतः आम् आगमो भवति, स चोदात्तः। चत्वारः। अनड्वान्, अनड्वाहौ, अनड्वाहः। अनड्वाहम्। तदन्तविधिरत्र इष्यते। प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः। प्रियानड्वान्, प्रियान्ड्वाहौ, प्रियानड्वाहः। अनडुहः स्त्रियाम् वेति वक्तव्यम्। अनडुही, अनड्वाही। गौरादिपाठात् सिद्धम्।

लघु-सिद्धान्त-कौमुदी

चतुरनडुहोरामुदात्तः २६०, ७।१।९८

अनयोराम् स्यात्सर्वनामस्थाने परे॥

न्यासः

चतुरनडुहोरामुदात्तः। , ७।१।९८

"सर्वनामस्थाने" ७।१।८६ इति स्वर्यते, न "तृतीयादिषु" ७।१।९७ इति। "आगमा अनुदात्ता भवन्ति" (व्या।प।१०५) इत्यनुदात्तत्वे प्राप्ते, उदात्तत्वार्थं वचनम्()। "तदन्तविधिरत्रेष्यते" इति। "अङ्गाधिकारे तस्य तदुत्तरपदस्य" (पु।प।वृ।८५) इति वचनात्()। "प्रियचत्वाः" इति। बहुव्रीहिः। "सर्वनामसंख्ययोरुपसंख्यानम्()" (वा।११३) इति संख्यायाः पूर्वनिपाते प्राप्ते "वा प्रियस्य" (वा।११४) इति प्रियशब्दस्य पूर्वनिपातः॥

बाल-मनोरमा

चतुरनडुहोरामुदात्तः , ७।१।९८

अनडुह् स् इति स्थिते। चतुरनडुहोः। अनयोरिति। चतुरनडुहोरित्यर्थः। सर्वनामस्थान इति। "इतोऽत्सर्वनामस्थाने" इत्यतः स् इति स्थिते-।

तत्त्व-बोधिनी

चतुरनडुहोरामुदात्तः २९२, ७।१।९८

चतुरडुहोः। "इतोत्सर्वनामस्थाने"इत्यतोऽनुवर्तनादाह--सर्वनामस्थान इति।

सावनडुहः। "आच्छीनद्यो"रित्यतो नुममनुवर्त्याह---नुम्स्यादिति। विशेषविहितेन यासुटा सामान्यविहितः सीयुडिव नुमा आम्बाध्यतामित्याशङ्कां निराकरोति---अवर्णात्परोऽयमित्यादिना। उपजीव्योपजीकयोर्विरोधाऽभावेन बाध्यबाधकभावो नेति भाव।

---

सूत्रम्

काशिका-वृत्तिः

अम् सम्बुद्धौ ७।१।९९

सम्बुद्धौ परतश्चतुरनडुहोः अम् आगमो भवति। पूर्वस्य अयम् अपवादः। हे प्रियचत्वः। हे प्रियानड्वन्।
लघु-सिद्धान्त-कौमुदी
अम् संबुद्धौ २६२, ७।१।९९

हे अनड्वन्। हे अनड्वाहौ। हे अनड्वाहः। अनडुहः। अनडुहा॥
न्यासः
अम्सम्बुद्धौ। , ७।१।९९

पूर्वेणामि प्राप्ते वचनम्()। "हे प्रियचत्वः। हे प्रियानढवन्()" इति। अत्र चतुःशब्दस्य केवलस्य सम्बुद्धिर्न भवतीति दतन्तस्योदाहरणम्()। अनजुहस्तु यदयपि केवलस्य सम्भवति, तथापि तदन्तविधिरत्रेष्यत इति तदन्तस्योदाहरणम्()॥
बाल-मनोरमा
अम्संबुद्धौ , ७।१।९९

ननु अनड्वान् ह् सित्यत्र सुलोपे संयोगान्तलोपे च कृते नकारस्य प्रातिपदिकान्तत्वात्पदान्तत्वाच्च "न लोपः प्रातिपदिकान्तस्ये"ति नलोपः किं न स्यात्। नच नुम्विधिसामश्र्यान्नात्र नलोप इति वाच्यं, नलोपाऽभावस्थले संबुद्धौ "हे अनड्व"नित्यत्र नुग्विधेश्चारितार्थत्वात्। तत्र " न ङसंबुद्ध्यो"रिति नलोपप्रतिषेधादित्यत आह-समयोगान्तेति। हकारलोपस्याऽसिद्धत्वे सति नकारस्य प्रातिपदिकान्तत्वाऽभावात्पदान्तत्वाऽभावाच्च नलोपो नेत्यर्थः। अनड्वानिति। अनुडुह् सिति स्थिते, आम् यण्, नुम्, सुलोपः, संयोगान्तलोपश्च। अथ संबुद्धौ हे अनडुह् सिति स्थिते चतुरनडुहोरित्यामागमे प्राप्ते--अम्संबुद्धौ। "चतुरनडुहोः" इत्यनुवर्तते। तदाह--चतुरनडुहोरिति। अमो मकार इत्। मित्त्वादन्त्यादचः परः। हे अनड्विन्निति। अम्, यण्, नुम्, सुलोपः, संयोगान्तलोपश्च। अनड्वाहाविति। सर्वनामस्थानत्वादाम्। नुम् तु न, तस्य सावेव विधानात्। अनडुह इति। शसादावचि अविकृत एवानडुहशब्द इति भावः।

तत्त्व-बोधिनी
अम्संबुद्धौ २९३, ७।१।९९

अमा चेति। "विशेषबिहितेनाऽपी"त्यनुषज्यते। "आमा च नुम्न बाध्यते"इति केचित्पठन्ति। तस्यcraft ययर्थः--"बह्वनड्वांही"त्यत्र परत्वादामि कृते पुनःप्रसङ्गविज्ञानात् "नपुंसकस्य झलचः"इति नुम्भवत्येव, न तु बाध्यत इथ। नुमो दत्वमाशङ्क्याह--नुम्विधिसामश्र्यादित्यादि। विधानसामश्र्यात्सर्वत्राऽविकृतेन नुमा भवितव्यमिति भावः। नन्वेवमनड्वास्तत्रेत्यत्र "नश्छव्"ति रुत्वमपि न स्यादिति चेदत्राहुर्भाश्यकाराः---"यं विधिं प्रतुयपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव, नासौ बाध्यते"इति। भवति हि दत्वं प्रति नुमो विधिरनर्थकः, रुत्वं प्रति तु निमित्तमेवेति। अनड्वानिति। अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप्। अनसो डश्च। यजादित्वात्संप्रसारणम्। अनडुह्---स् इति स्थिते आमुम्सुलोपेषु कृतेषु संयोगान्तलोपेन हकारलोपः।

---

सूत्रम्
काशिका-वृत्तिः
ॠत इद्धतोः ७।१।१००

ॠकारान्तस्य धातोः अङ्गस्य इकारादेशो भवति। किरति। गिरति। आस्तीर्णम्। विशीर्णम्। धातोः इति किम्? पितृणाम्। मातृणाम्। लाक्षणिकस्य अप्यत्र ग्रहणम् इष्यते। चिकीर्षति इत्यत्र अपि यथा स्यातिति धातुग्रहणं क्रियते।

लघु-सिद्धान्त-कौमुदी

ॠत इद्धातोः ६६३, ७।१।१००

ॠदन्तस्य धातोरङ्गस्य इत्स्यात्। किरति। चकार। चकरतुः। चकरुः। करीता, करिता। कीर्यात्॥

न्यासः

ॠत इद्धातोः। , ७।१।१००

"किरिति, गिरति" इति। "कॄ? विक्षेपे" (धा।पा।१४०९), "गु निगरणे" (धा।पा।१४१०)। "तुदादिभ्यः शः" ३।१।७७। "आस्तीर्णम्()" इति। "स्तॄ? आच्छादने" (धा।पा।१४८४),[स्तॄ()ञ्()--धा।पा।] "रदाभ्याम्()" ८।२।४२ इति नत्वम्(), "रषाभ्याम्()" ८।४।१ इति णत्वम्(), "हलि च" ८।२।७७ इति दीर्घः। "विशीर्णम्()" इति। "शॄ? हिंसायाम्()" (धा।पा।१४८८)। "मातृ()णाम्(), पितृ()णाम्()" इति। "नामि" ६।४।३ इति दीर्घः। सत्यपि ॠकारान्तत्वेऽधातुत्वादिह न भवति। ननु च लक्षणप्रतिपदोक्तपरिभाषयै (व्या।प।३) वत्र न भविष्यति, तत्किमेतन्निवृत्त्यर्थेन धातुग्रहणेन? इत्याह--"लाक्षणिकस्यापि" इत्यादि। किमर्थं पनर्लाक्षणिकस्य ग्रहणम्()? इत्याह--"चिक्रीर्वति" इत्यादि। कथं पुनरिष्यमाणमपि लाक्षणिकस्यात्र ग्रहणं लभ्यते? अत एव धातुग्रहणाज्ज्ञापकात्()। तस्य ह्वेतत्? प्रयोजनम्()--मातृ()णाम्(), पितृणामित्यत्र मा भूदिति। यदीह लाक्षणिकस्य ग्रहणं न स्यात्? तदा मातृ()णाम्(), पितृ()णामित्यादौ लाक्षणिकत्वादेव न भविष्यतीति धातुग्रहणमनर्थकम्()। तस्माल्लाक्षिकस्याप्यत्र ग्रहणम्()। तेन चिकीर्षतीत्येव मादिषु "अज्झनगमां सनि" ६।४।१६ इति दीर्घत्वे सत्यपि भवत्येव। तपरकरणमसन्देहार्थम्()। "र" इत्युच्यमाने सन्देहः स्यात्()--किमयं रेफस्य निर्देशः? उत्त यणादेश ॠकारस्येति?

बाल-मनोरमा

ॠत इद्धातोः २२७, ७।१।१००

ॠत इद्धातोः। "ॠत" इतिधातोर्विशेषणम्। तदन्तविधिः। अङ्गस्येत्यधिकृतम्। तदाह--ॠदन्तस्येति। धातोः किम्?। मातृ()णाम्। तथा च तरति, पिपर्ति, ततार पपारेत्यादौ ॠकारस्य शपि तिपि णलि च परे गुणवृद्धी बाधित्वा अन्तरङ्गत्वादित्त्वमुत्त्वं च स्यादिति शङ्का प्राप्ता। तां परिहर्तुमाह--- इत्वोत्वाभ्यामिति। ल्यब्लोपे पञ्चमीद्विवचनम्। "ॠत इद्धातो"रिति इत्त्वम्, "उदोष्ठ()पूर्वस्य" इति उत्त्वमन्तरङ्गमपि बाधित्वा गुणवृद्धी विप्रतिषेधसूत्रेण परत्वात्स्यातामिति भावः। तरतीति। णलि ततार। अतुसादौ ददवादिगुणाना"मिति निषेधमाशङ्क्याह-- तॄ()फलेति। तेरतुः तेरुरिति। तेरिथ तेरथुः तेर। ततार--ततर तेरिव तेरिम।

तत्त्व-बोधिनी

ॠत इद्धातोः १९९, ७।१।१००

ॠत इद्धातोः। किरति। गिरति। कीर्णः। गीर्णः। स्तीर्णः। धातोः किम्?। मातृ()णाम्।

इत्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन। इत्वोत्त्वाभ्यामिति। "परत्वाद्गुणवृद्धी भवत" इति वक्तव्ये। किमिदं वार्तिकमिति चेत्। अत्राहुः--- परादप्यन्तरङ्गं प्रबलमितीत्त्वे प्राप्ते वार्तिकमिदमारब्धमिति।

---

सूत्रम्

काशिका-वृत्तिः

उपधायाश् च ७।१।१०१

उपधायाश्च ऋकारस्य इकारादेशो भवति। कीर्तयति, कीर्तयतः, कीर्तयन्ति।

न्यासः

उपधायाश्च।, ७।१।१०१

ऋकारान्तस्य धातोरित्त्वमुक्तम्()। उपधाभूतस्य धातोऋकारस्य न प्राप्नोति, इष्यते; तदर्थमेतत्()। "कीत्र्तयति" इति। "कृ()त संशब्दने" (धा।पा।१६५६) चुरादौ ण्यन्तः। ननु च "ऊतियूतिजूतिसातिहेतिकीत्र्त यश्च" (३।३।९७) इति निपातनादेवेत्त्वं भविष्यतीति कथं तदर्थो योगरम्भः? नैतदस्ति; क्तिन्विषय एव निपातनं स्यात्()। एवं तर्हि पूर्वयोगे धातुना ऋकारं विशेषयिष्यामः, अत्र तत्स्थस्येति? एतदपि नास्ति; एवं सति ऋकारमिच्छति ऋकारीयतीत्यत्रापि स्यात्()। तस्माद्वक्तव्यमिदम्()। "कृ()तश्च" इति वक्तव्ये "उपधायाश्च" इति वचनं वैचित्र्यार्थम्()। "कृतश्च" इत्युच्यमाने तकारस्य स्यात्()? नैतदन्ति; "ऋतः" इति पूर्वसूत्रे विशेषणत्वेन प्रककृतम्(); न शक्यते तद्धि विशेष्यत्वेन विवक्षितुमिति। तस्य "उपधाया ऋकारस्येकारादेशो भवति" इत्येष वृत्तिग्रन्थो विरुध्यते। अत्र हि ऋकारस्य विशेष्यता दर्शिता। तस्माद्यथाङ्गस्यैतत्? क्वचिद्विशेषणम्(); तथा "ऋतः" इत्येतदपि पूर्वसूत्रे विशेषणम्(), इह तु विशेष्यम्()॥

बाल-मनोरमा

उपधायाश्च ३९९, ७।१।१०१

उपधायाश्च। "ऋत इद्धातो"रित्यनुवर्तते। तदाह -- धातोरित्यादिना। चङि "उरृ"दित्युपधाया ऋत्त्वपक्षे आह -- अचीकृतदिति। उपधाया ऋत्त्वे कृदित्यस्य द्वित्वे उरदत्त्वे लघुपरतया सन्वत्त्वादित्त्वे "दीर्घो लघो"रिति दीर्घं इति भावः। ऋत्त्वाऽभावपक्षे आह-- अचिकीर्तदिति। ऋत इत्त्वे रपरत्वे "उपधायां च" इति दीर्घे कीर्दित्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे चुत्वमिति भावः। लघुपरकत्वाऽभावेन सन्वद्भावविषयत्वाऽभावान्नाऽभ्यासदीर्घः। "आकुस्मा"दित्यत्र आङभिविधाविति मत्वाह -- तमभिव्याप्येति। ननु "णिचश्चे"ति सिद्धे आत्मनेपदविधानं व्यर्थमित्यत आह - अकर्तृगामीति। ननु "दशि दंशने" णिजभावे "दंशती"ति कथम्। आकुस्मीयत्वेन णिजभावेऽपि तङो दुर्वारत्वादित्यत आह -- आकुस्मीयमिति। "दंशसञ्जस्वञ्जां शपी"ति नलोपमाशङ्क्य आह-- नलोपे सञ्जीति। स्पश ग्रहणेति। अपस्पशत। "अत्स्मृदृ()त्वरे"ति अभ्यासस्य अत्त्वम्-- इत्त्वापवादः। गूर उद्यमने। अयं दीर्घोपधः। गूरयते। तदादौ तु "गुरी उद्यमने" इति ह्रस्वोपधः। दिवदौ तु "धूरी, गूरी हिंसागत्यो"रिति दीर्घोपध एवेति केचित्। ह्रस्वोपध इत्यन्ये। विदधातोरर्थभेदे विकरणभेदं सङ्गृह्णाति-- सत्ताया#ं विद्यतेइत्यादिश्लोकेन। कुस्म नाम्नो वा। गणसूत्रम्। "कुस्मे"ति पृथक्पदमविभक्तिकम्।तदाह -- कुस्म इति धातुरिति। "कुत्सितस्मयने वर्तते" इति शेषपूरणं, व्याख्यानादिति भावः। णादिति भावः। अचुकुस्मतेति। उकारस्य गुरुतया अभ्यासस्य लघुपरकत्वाऽभावान्न सन्वत्त्वमिति भावः। "नाम्नो गृह्यते, प्रत्यासत्त्या। तथा चकुस्मेति धातोः, कुस्मेतिप्रातिपदिकाद्वा णिजिति फलितम्। तत्रधातोर्णिचः स्वार्थिकत्वमभिप्रेत्य प्रातिपदिकाण्णिचि विशेषमाह-- ततिति। तस्मात् = प्रातिपदिकादित्यर्थः। धात्वर्थे इति। करोतीत्यर्थे, आचष्टे इत्यर्थे वेत्यर्थः। नच "तत्करोति तदाचष्टे" इत्येव प्रातिपदिकाण्णिच् सिद्ध इति वाच्यम्, "आकुस्मादात्मनेपदिनः" इत्यात्मनेपदनियमार्थत्वात्। इत्याकुस्मीयाः। शब्द उपसर्गादिति। उपसर्गात्परः शब्दधातुराविष्कारे वर्तते इत्यर्थः। अनुपसर्गाच्चेति। अनुपसर्गात्परोऽपि शब्दधातुर्णिचं लभते इत्यर्थः। "आविष्कारे"इत्यस्यैवानुवृत्त्यर्थं पृथगुक्तिः। "शब्द आविष्कारे चे"त्येतावत्येवोक्ते अनुपसर्गाद्भाषणेऽपि स्यात्। तदाह-- आविष्कारे इत्येवेति। काण्यादीनामिति। इदं वार्तिकं भ्राजभासभाषे"ति सूत्रे भाष्ये पठितम्।

"काणिराणिश्रणिभणिहेठिलोपयः षट्काण्यादयः" इत भाष्यम्। अचीकणदिति। ह्रस्वत्वपक्षे लघुपरकत्वादभ्यासस्य सन्वत्त्वमिति भावः। शशपोरिति। शविकरणे, शब्विकरणे चेत्यर्थः। हन्त्यर्थाश्चेति। गणसूत्रमिदम्। हन हिंसागत्योरिति हनधातोर्हिंसा गमनं चार्थः। एतदर्थका ये धातवो भ्वादिषु नवसु गणेषु पठितास्ते सर्वेऽपि चुरादौ पठिताः प्रत्येतव्या इत्यर्थः। ततश्च तेभ्यः स्वार्थे णिजपि पक्षे भवतीति फलितम्। तदाह -- नवगण्यामित्यादि। दिवु मर्दने। उदित्तवादिति। उदित्करणम्। "उदितो वे"ति क्त्वायामिड्विकल्पार्थम्। द्यूत्वा देवित्वा। इडभावे ऊठ्। इटि तु -- "न क्त्वा से"डिति कित्तवनिषेधाद्गुण इति स्थितिः। अस्य नित्यण्यन्तत्वे सति णिचा व्यवहितत्वेन क्त्वयामिड्विकल्पस्य अप्रसक्तेरुदित्करमं व्यर्थं सज्ज्ञापयति अस्य दिवुधातोर्णिज्विकल्प इतीति भावः। घुषिर् विशब्दने। विशब्दनं = शब्देन स्वाभिप्रायाविष्करणं, प्रतिज्ञानं च। भ्वादौ त्वयं धातुरविशब्दनार्थकः पठितः। घोषयतीति। शब्देन स्वाभिप्रायमाविष्करोतीत्यर्थः, प्रतिजानीते इति वा। लिङ्गादिति। इण्निषेधप्रकरणे "घुषिर् अविशब्दने" इति सूत्रम्। अविशब्दनार्थकाद्घुषधातोर्निष्ठ()आमिण्न स्यादित्यर्थः। यथा --"घुष्टा रज्जुः"। प्रसारितेत्यर्थः। अविशब्दने इति किम्?। अवघुषितं वाक्यम्। प्रतिज्ञातमित्यर्थः। अत्र विशब्दनार्थकत्वान्नेण्निषेध इति स्थितिः। तत्र विशब्दनार्थकस्य घुषदातोश्चौरादिकत्वेन ण्यन्तत्वनियमाण्णिचा व्यवधानात्ततः परा निष्ठा नास्त्येवेतीण्निषेधे विशब्दनपर्युदासो व्यर्थः सन् चौरादिकस्याऽस्य विशब्दनार्थकस्य घुषेर्णिचो विकल्पं गमयति। एवं च "अवघुषितं वाक्य"मित्यत्र चौरदिकघुषेर्विशब्दनार्थकस्य निष्ठायामिण्निषेधो नेति भाष्ये स्पष्टम्। इरित्त्वादङ् वेति। "णिजभावपक्षे"इति शेषः। ननु इरित्त्वादेव णिजविकल्पे सिद्धे "घुषिरविशब्दने" इति इण्निषेधसूत्रे "अविशब्दने" इति पर्युदासास्य णिज्विकल्पज्ञापकत्वाश्रयणक्लेशो भाष्ये व्यर्थ इति चेन्न, अत एव भाष्यादिरित्त्वाऽभावविज्ञानात्। एवं च "घुषिर् विशब्दने" इत्यत्र "घुषी"रित्यस्य इका निर्देशमाश्रित्य प्रथमान्तत्वमेवाश्रयणीयम्। "इरित्त्वादङ्वे"ति मूलं तु भाष्यविरोधादुपेक्ष्यमेवेत्यास्तां तावत्। आङः क्रन्द सातत्ये इति। आङः परः क्रन्ददातुराह्वानसातत्येऽर्थे णिचं लभते इत्यर्थः। यद्वा "आह"इत्यनन्तरं "घुषि" रित्यनुवर्तते। "क्रन्दसातत्ये" इत्यर्थन#इर्देशः। तदाह -- अन्ये त्विति। लस शिल्पयोगे इति। कौशले इत्यर्थः। तसि भूषेति। अत्र तसिः प्रायेण अवपूर्वः। तदाह -- अवतंसयतीति। ज्ञा नियोगे इति। आङ्पूर्वः। तदाह -- आज्ञापयतीति। आदन्तत्वात्पुक्। अजिज्ञपत्। यत निकारेति। तालव्याऽन्तः स्थादिः। यत्नो वा प्रैषो वा - निकारः। यातयति। अयीयतत्। अञ्च विशेषण इति। व्यावर्तने इत्यर्थः। उदित्त्वमिति। "उदितो वेटत्यण्यन्तात् क्त्वायामिड्विकल्पार्थमित्यर्थः। ण्यन्तात्तु णिचा व्यवधानादिड्विकल्पस्य न प्रसक्तिरिति भावः। नन्वस्यनित्यण्यन्तत्वादण्यन्तत्वमसिद्धमित्यत आह-- अत एवेति। च्यु सहने इति। च्यावयति। अचुच्यवत्। भुवोऽवकल्कने इति। अवकल्कनवृत्तेर्भूधातोर्णिच् स्यादित्यर्थः। कृपेश्चेति। अवकल्कनवृत्तेः कृपेर्णिच् स्यादित्यर्थः। कल्पयतीति। "कृपो रो लः" इति लत्वम्। आ स्वदः सकर्मकादिति। आङभिविधौ। तदाह -- स्वदिमभिव्याप्येति। तत्र "ष्वद आस्वादने" इत्यस्य अकर्मकत्वादाह -- संभवत्कर्मभ्य इति। इत आरभ्य आस्वदीयाः सकर्मकाः। स्वदिस्त्वकर्मकः। पट पुटेति। एकतिं()रशद्धातवः। आद्यास्त्रयष्टान्ताः। आद्यद्वितीयौ पवर्ग प्रथमादी। चतुर्थाद्या एकादशैदितः। त्रिसिपिसी इदुपधौ इत्येके। अदुपधावित्यन्ये। षोडशसप्तदशाविदितौ। अलुलोकत् अलुलोचदित्यत्र उपधाह्रस्वे प्राप्ते --

तत्त्व-बोधिनी

उपधायाश्च ३४८, ७।१।१०१

उपधायाश्च। "ॠत इद्धातो"रिति वर्तते। तदाह-- धातोरुपधाया इति। ननु "ॠत इद्धातो"रिति सूत्रे धातोॠत इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति किमनेन सूत्रेणेति चेन्मैवम्। तथा हि सति ॠकारीयतीत्यत्रापि इत्वप्रसङ्गात्। अर्दन इत्येके इति। अत्र वदन्ति--- अर्दने लुबितुबि भ्वादौ पठितौ, तयोस्तत्र पाठो वृथा स्यात्। इदित्त्वादेव लुम्बति

तुम्बतीत्यादिरूपमिद्धेः। अदर्शने त्वर्थेऽर्थभेदाद्भ्वादिपाठः सार्थक इत्यर्दनार्थत्वं चौरादिकयोरयुक्तमित्यस्वरसादेक इत्युक्तमिति। म्रक्ष म्लेच्छने। म्रक्षणेऽप्ययम्। तच्च तैलादिनाऽभ्यञ्जनम्। म्रक्षयति। अमम्रक्षत्। गुर्द पूर्व निकेतने। गुर्दयति। पूर्वयति। केचित्तु "पूर्वनिकेतने" इति पठित्वा गुर्दधातुः पूर्वनिवासे वर्तते इति व्याचक्षते। जसु हिसांयाम्। क्त्वायामिड्वकल्पार्थमुदित्करणमिति तत्सामर्थ्यादस्य णिजनित्यः। जासयति। जसति। जसित्वा। जस्त्वा। जस्तम्। चिति संचेतने। संचेतनं-- मूर्च्छाद्यवस्थानिवृत्त्युत्तरकालिकं ज्ञानम्। दंशतीति। इह "दंशसञ्जे"ति नलोपमाशङ्क्याह-- सञ्जिसाहचर्यादिति। स्पश। स्पाशयते। "अत्स्मृदृ()त्वरे"त्यादिनाऽभ्यासस्य अत्वम्--- इत्वापवादः। अपस्पशत्। तर्ज भत्र्स तर्जने। तर्जयते। भत्र्सयते। "तर्जयन्निव केतुभिटरिति प्रयोगस्तु णिजन्तादस्माद्भौवादिकात्तर्जतेर्वा हेतुमण्णिचि बोध्यः। भ्रूण। भ्रूणयते। "भ्रूणोऽर्भके रुऔणगर्भे" इत्यमरः। गूर उद्यमने। दीर्घोपधोऽयम्। गूरयते। ह्यस्वोपधस्तु दिवादौ चेति मनोरमायां स्थितम्। यद्यपि तुदादौ "गुरी उद्यमने" इति पाठाद्ध्रस्वोपध एव तथापि दिवादौ धूरी गूरी हिंसागत्योरिति पाठान्नास्ति ह्यस्वोपध इति नव्याः। शम लक्ष। ननु "निशामय तदुत्पत्ति"मित्यत्र शामय इत्येतत् शमु उपशम इत्यस्म ण्णिचि रूपं चेदमन्तत्वन्मित्त्वे सति ह्यस्वेन भाव्यमित्याशङ्क्य कथमनेन सिद्धमिति वदन्ति, आकुस्मीयत्वात्तङि निशामयस्वेति रूपस्य सर्वसंमतत्वादिति चेत्। अत्राहुः-- स्वार्थण्यन्तादस्माद्धेतुमण्णिचि निशामयेति रूपम्। न चार्थाऽसङ्गतिः, "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इति सिद्()धान्तादिति। कुत्स अवक्षेपणे। "यूनश्च कुत्साया"मिति निर्देशादङ्।कुत्सा। "ण्यासश्रन्थे"ति युच्। कुत्सना। भल आभण्डनं निरूपणमित्याहुः। वञ्चु प्रलम्भने। ल्युटि वञ्चनम्। उदित्करणस्य क्त्वायामिड्विकल्पार्थत्वाण्णिजनित्यः। वञ्चयति। वञ्चति। वचित्वा। वञ्चित्वा। वक्त्वा। "वञ्चिलुञ्च्यृतश्चे"ति सेटः क्त्वः कित्त्वविकल्पनात्पाक्षिको नलोपः। इडभावे तु नित्यम्। निष्ठायां तु-- वक्तम्। "यस्य विभाषे"तीण्निषेधः। "नाम्नो वे"ति वाशब्दं व्याचष्टे-- अथ वेति। प्रातिपदिकमिति। "अन्येष्वपि दृश्यते" इति सूत्रे "अन्येभ्योऽपी"ति वक्ष्यमाणत्वात्कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे "कुगती"ति समासे च निष्पन्नमित्यर्थः। यद्यपि कुपूर्वस्य स्मिढो लङादिषु कुस्मयते इत्यादि सिद्धं तथापि प्रकुस्मयते इत्यादि न सियेदुपसर्गस्य धातुना व्यवधानाऽयोगात्। "कुस्मयां चक्रे" इत्याद्यर्थमपि कुस्मेति पाठोऽर्थवान्। इत्याकुस्मीयाः। चर्च। सर्वोऽपि चुरादिर्णिच् पाक्षिक इति पक्षे "गुरोश्च हलः" इत्यप्रत्ययः। चर्चा। कण निमीलने। एकनेत्रनिमीलन एवायं शब्दः, स्वभावात्। काणः। काण्यादीनामिति। एते हेतुमण्ण्यनतेषु वक्ष्यन्ते। हन्त्यर्थाश्च। तेन घातयति हन्तीत्येततौ समानार्थौ। अर्ज। प्रतियत्नो गुणाधानम्। अर्जयतीति। सङ्गृह्णातीत्यर्थः। घुषिर्। अविशब्दनं-- प्रतिज्ञानम्। निषेधाल्लिङ्गादिति। घुषिरविशब्दन इति सूत्रेण अविशब्दने निष्ठाया इण्निषिध्यते, विशब्दनार्थादेतस्मादनन्तरा निष्ठा नास्त्येव, णिचा व्यवधानात्। अतो घुषिरविशब्दन इति भौवादिकादेव निष्ठाया इण्निषेधो भवेदितिकिं विशब्दनप्रतिषेधेन?। ततश्चानेननैव विशब्दनप्रतिषेधेनाऽनित्योऽस्य णिजिति ज्ञाप्यते इति भावः। इरित्करणादपि णिज्विकल्पः सिध्यतीति केचित्। शिल्पयोग इति। क्रियाकौओशलं शिल्पम्। यत निकारोपस्कारयोः। यत्नो वा प्रैषो वा निकारः। "निराकारोपस्कारयो"रिति पाठान्तरम्। क्रियानिघणटौ "यत्ने प्रैषे निराकारे पादपे चाप्युपस्कृतौ। निसोऽयं धान्यधनयोः प्रतिदाने" इत्युक्तम्। अस्यार्थः---- यत्नाद्यर्थेषु चतुर्षु यतधातुं प्रयुञ्जीत। निसः चेत्प्रुयज्यते तदाऽयं धान्यधनयोः प्रतिदाने च वर्तते इति। ऋणं निर्यातयति। प्रतिददातीत्यर्थः। अञ्च विशेषणे। विशेषणं- व्यावर्तनम्। "भुवोऽवकल्कने"। भूधातोर्णिच् स्यात्। भावयतीति। मिश्रीकरोति चिन्तयति वेत्यर्थः। कृपेश्च। कृपेर्णिच् स्यादवकल्कने। आ स्वदः। अभिव्याप्येति। "आकुस्मा"दिति पूर्वत्र, आधृषादावर्गादिति परत्र च आङोऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपतितेऽत्रापि तथैव व्कयाख्यानमुचितमिति भावः। अन्ये त्वाङ्पूर्वकात्स्वदः सकर्मकाण्णिजिति व्याचख्युः। आस्वदीयेषु धातवः सर्वे सकर्मकाः। घटयतीति। अय#ं चुरादावेव सङ्घाते गतः, पुनः पाठस्तु अर्थभेदात्।

---

सूत्रम्

काशिका-वृत्तिः

उदोष्ठ्यपूर्वस्य ७।१।१०२

ओष्थ्यः पूर्वो यस्मादृकारातसौ ओष्ठ्यपूर्वः, तदन्तस्य धातोरङ्गस्य उकारादेशो भवति। पूर्ताः पिण्डाः। पुपूर्षति। मुमूर्षति। सुस्वूर्षति। दन्त्योष्ठ्यपूर्वो ऽप्योष्ठ्यपूर्वो भवति इत्यत्र अपि भवति, वुवूर्षति ऋत्विजम्, प्रावुवूर्षति कम्बलम्। ओष्ठ्यो ह्यत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन ॠ गतौ इत्यस्य सम्पूर्वस्य समीर्णम् इति भवति। इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन। आस्तरणम्। आस्तारकः। निपरणम्। निपारकः। निगरणम्। निगारकः।

लघु-सिद्धान्त-कौमुदी

उदोष्ठ्यपूर्वस्य ६१४, ७।१।१०२

अङ्गावयवौष्ठ्यपूर्वो य ॠत् तदन्तस्याङ्गस्य उत् स्यात्॥

न्यासः

उदोष्ठ�पूर्वस्य। , ७।१।१०२

"ॠत इद्धातोः] ७।१।१०० इतीत्वे प्राप्त उत्त्वं विधीयते। "पूर्तः" ["पूर्ताः"--काशिका, पदमञ्जरी च] इति। "पृ? पालनपूरणयोः" (धा।पा।१०८६), क्तः। "न ध्याख्या" ८।२।५७ इत्यादिना प्रतिविषद्धत्वान्न निष्ठानत्वं भवति। "वुवूर्षति" इति। "वृ? वरणे" (धा।पा।१४९०)। "मुमूर्षति" इति। "मृ? हिंसायाम्()" (धा।पा।१४९२)। "सूस्वूर्षति" इति। "स्थॄ? शब्दोपतापयोः" (धा।पा।९३२), "अज्झनगमां सनि" ६।४।१६ इति दीर्घत्वं ॠकारान्तत्वमस्य। अथेह कथमुत्त्वम्()--"वृङ्? सम्भक्तौ" (धा।पा।१५०९), "वृञ्? वरणे" (धा।पा।१२५४)--प्रावुवूर्षते, प्रावुवूर्षतीति, न ह्त्र ॠकार ओष्ठ()पूर्वः किं तर्हि? दन्त्योष्ठ()पूर्वं इति? तदेतदाह--"दन्त्यौष्ठ()पुर्वोऽप्योष्ठ()पूर्वो भवति" इत्यादि। यो ह्रुभयस्थाने निष्पद्यते लभतेऽसावन्यतरव्यपदेशम्()। तेन दन्त्यौष्ठ()ओ यो भवति सोऽप्योष्ठ()ओ भवत्येव। दन्त्यौष्ठ()पूर्वोऽपयोष्ठ()पूर्व एव। अथ समीर्णमित्यत्र कस्मान्नि भवति, अस्ति ह्त्राप्योष्ठग्रपूर्वता? इत्याह--"ओष्ठ()ओ ह्त्र" इत्यादि। ओष्ठ()ओ ह्त्राङ्गावयवोऽपि। तत्रेह प्रत्यासत्तेरङ्गावयवो गृह्रते, नोपसर्गवयवः। प्रत्यासन्नत्वं पुनाप्रसङ्गस्य प्रकृतत्वात्? उपसर्गस्य तु नास्ति प्रत्यासन्नत्वम्(); विपर्ययात्()। "इत्त्वोत्त्वाभ्याम्()" इत्यादि। इत्त्वोत्त्वयोरवकाशः--आस्तीर्णम्(), पूत्र्त इति; गुणवृद्ध्योरवकाशः--चयनम्(), चायक इति; इहोमयं प्राप्नोति--आस्तरणम्(), आस्तारकः, निपरणम्(), निपारक इति, अत्र गुणवृद्धी भवतो विप्रतिषेधेन॥

बाल-मनोरमा

उदोष्ठ�पूर्वस्य ३२४, ७।१।१०२

उदोष्ठ()। "ॠत इद्धातो"रित्त ॠत इत्यनुवर्तते। अङ्गस्येत्यधिकृतमिहानुवृत्तमावर्तते। एकमवयवषष्ठ()न्तमोष्टयस्य विशेषणम्। अपरं तु ॠता विशेष्यते। तदन्तविधिः। तदाह--अङ्गावयववौष्ठ()एत्यादिना। अङ्गावयवेति किम्?। समीर्णः। "ॠ गतौ" क्र्यादिः। तस्मात्संपूर्वात् क्तप्रत्यये " श्र्युकः किती"तीण्निषेधे "ॠत इद्धातो"रिति इत्त्वे रपरत्वे "हलि चे"ति दीर्घे "रदाभ्या"मिति निष्टानत्वे तस्य णत्वे समीर्ण ति रूपम्। तत्र मकारात्मकौष्ट()पूर्वत्वादित्त्वं बाधित्वा उत्त्वं स्यात्। "अङ्गावयवे"त्युक्तौ तु मकारस्य ओष्ठ()स्य अङ्गावयवत्वाऽभावादुत्त्वं न भवति। तथा च प्रकृतेऽपि पृ()तीत्यत्र इदमुत्त्वं स्यादिति शङ्का प्राप्ता। तां परिहरति-- गुणवृद्धी इति। इममिति। उत्त्वविधिमित्यर्थः। पिपर्तीति। उत्त्वात्परकत्वाद्गुण इति भावः। पिपॄ? तस् इति स्थिते आह---उत्त्वमिति। ङित्त्वेन गुणाऽभावादुदोष्ठ()एत्युत्त्वमिति भावः। पिपुरतीति। अभ्यस्तत्वाददादेशे ङित्त्वाद्गुणाऽऽभावादुत्त्वमिति भावः। पिपर्षि पिपूर्थ। पिपर्मि पिपूर्वः। पिपूर्मः। लिटि णल्याह-- पपारेति। उत्त्वात्परत्वाद्वृद्धिरिति भावः। "अर्तिपिपत्र्योश्चे"त्यभ्यासस्य नेत्त्वम्, तत्र श्नावित्यनुवृत्तेः। प्राप्ते इति।

गुणे नित्यं प्राप्ते इत्यर्थः।

तत्त्व-बोधिनी

उदोष्ठ�पूर्वस्य २८०, ७।१।१०२

उदोष्ठ()। अहगावयवेति किम्?। "ॠ गतौ" क्र्यादिस्तस्मात् क्तप्रत्यये "श्र्युकः किती"ति इण्निषेधात्समीर्ण इति भवति। अन्यथा तु "समूर्ण" इति स्यात्।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि ७।१।१०३

छन्दसि विषये ॠकारान्तस्य धातोरङ्गस्य बहुलम् उकारादेशो भवति। ओष्ठ्यपूर्वस्य इत्युक्तम्, अनोष्थ्यपूर्वस्य अपि भवति। मित्रावरुणौ ततुरिः। दूरे ह्यध्वा जगुरिः। ओष्ठ्यपूर्वस्य अपि न भवति। पप्रितमम्। वव्रितमम्। क्वचिद् भवति। पुपुरिः। इति काशिकायां वृत्तौ सप्तमाध्यायस्य प्रथम्H पादः। । सप्तमाध्यायस्य द्वितीयः पादः।

न्यासः

बहुलं छन्दसि। , ७।१।१०३

"ततुरिः, जगुरिः" इति। तरतेर्गिरतेश्च "आदृगमहनजनः किकिनौ लिट्? च" ३।२।१७१ इति किकिनोरन्यतरः, ततश्चोत्त्वे "द्विर्वचनेऽचि" (१।१।५९) इति स्थानिवद्भावात् "तृ? गृ()", इति द्विरच्यते, "उरत्()" ७।४।६६ इत्यत्त्वम्()। "पप्रितमम्(), वव्रितमम्()" इति। "पृ(), वृ()" इत्येतयोः किकिनोरन्यतरः, यथदेशः। किप्रत्ययान्तात्? "अतिशायने तमप्()" ५।३।५५ इत्यादिना तमप्()॥ इति बोधिसत्त्वदेशीयाचार्य श्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां सप्तमाध्यायस्य प्रथमः पादः॥ - - - अथ सप्तमाध्यायः द्वितीयः पादः

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सिचि ७।१ ७ वृद्धिः १।१ ७ परस्मैपदेषु ७।३ ७ अङ्गस्य ?

अर्थः॥

परस्मैपदेषु परेषु सिचि परतः इगन्तस्य अङ्गस्य वृद्धिः भवति

उदाहरणम्॥

अचैषीत्, अनैषीत्, अलावीत्, अपावीत्, अकार्षीत्, अहार्षीत्

काशिका-वृत्तिः

सिचि वृद्धिः परस्मैपदेषु ७।२।१

परस्मैपदपरे सिचि परतः इगन्तस्य अङ्गस्य वृद्धिर् भवति। अचैषीत्। अनैषीत्। अलावीत्। अपावीत्। अकार्षीत्।

अहार्षीत्। अन्तरङ्गम् अपि गुणम् एषां वृद्धिर्वचनाद् बाधते। न्यनुवीत्, न्यधुवीतित्यत्र कुटादित्वात् ङित्त्वे सति प्रतिषिद्धायां वृद्धौ उवङादेशः क्रियते। परस्मैपदेषु इति किम्? अच्योष्ट। अप्लोष्ट।

लघु-सिद्धान्त-कौमुदी

सिचि वृद्धिः परस्मैपदेषु ४८६, ७।२।१

इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि। अक्षैषीत्। अक्षेष्यत्॥ तप सन्तापे॥ १४॥ तपति। तताप। तेपतुः। तेपुः। तेपिथ, ततप्थ। तेपिव। तेपिम। तप्ता। तप्स्यति। तपतु। अतपत्। तपेत्। तप्यात्। अताप्सीत्। अताप्ताम्। अतप्स्यत्॥ क्रमु पादविक्षेपे॥ १५॥

न्यासः

सिचि वृद्धिः परस्मैपदेषु। , ७।२।१

"सार्वधातुकार्धधातुकयोः" ७।३।८४ इति गुणे प्राप्ते वचनमिदमारभ्यते। सिचीति, परस्मैपदेष्विति च द्वे अप्येति परसप्तम्यौ; तत्र सिचोऽङ्गापेक्षं परत्वं, परस्मैपदानां तु सिजपेक्षम्()। "परस्मैपदपरे" इति। परस्मैपदं परं यस्मात्? स तथोक्तः। "इगन्तस्य" इति। "इको गुणबृद्धी" १।१।३ इत्यस्योपस्थाने सतीकाऽङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह--"इगन्तस्याङ्गस्य वृद्धिर्भवति" इति। "अचैषीत्(), अनैषीत्()" इति। "चिञ्? चयने" (धा।पा।१२५१), "णोञ्? प्रापणे" (धा।पा।९१), भूते लुङ्, "च्लेः सिच्()" ३।१।४४, "एकाचः" ७।२।१० इत्यादिनेट्प्रतिषेधः, अडागमः, "नित्यं ङितः" ३।४।९९ इत्यनुवर्त्तमाने "इतश्च" ३।४।१०० इतीकारलोपः, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्(), "इष्कोः" ८।३।५७ इत्यनुवर्त्तमाने "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्()। "अलावीत्? अपावीत्()" इति। "पूर्ववल्लुङ, "आर्धधातुकस्येड्वलादेः" (७।२।३५) इतीट्? पूर्ववदीट्(), "इट ईटि" ८।२।२८ इति सिचो लोपः। "अकार्षात्()" इति। उदाहरणं सुबोधम्()। ननु चात्रान्तरङ्गत्वाद्गुणेन भवितव्यम्(), अन्तरङ्गत्वं पुनस्तस्यार्धधातुकापेक्षात्वात्(); वृद्धेस्त्वाद्गुणविशेषं परस्मैपदपरं सिचमपेक्ष्य बहिरङ्गत्वम्()? अत आह--"अन्तरङ्गमपि" इत्यादि। यद्यन्तरङ्गत्वाद्णः स्यात्(), तदैतद्वचनमनर्थकं स्यात्()। तस्माद्वचनसामथ्र्याद्वहिरङ्गापि वृद्धिर्गुणं बाधते। यद्येवम्(), तर्हि यथा वचन सामथ्र्याद्वृद्धिरन्तरङ्गमपि गुणं बाधते, तथोवङादेशमपि बाधेत ततश्च न्यनुवीत्(), न्यधुवीदिति न सिध्येत्()? इत्यत आह--"व्यनुवीन्न्यधुवीत्()" इत्यादि। यत्र हि वृद्धेः प्रतिषेधो नास्ति, तत्र वचनसामथ्र्याद्विध्यन्तरं बाधित्वाऽसौ प्रवत्र्तते। इह तु ङित्त्वे सति "क्ङिति च" १।१।५ इति वृद्धिः प्रतिषिध्यते, प्रतिषिद्धा च सतो नोत्सहत उपङादेशं बाधितुम्()। तेन तस्यां प्रतिषिद्धायां "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङादेशः क्रियते। ङित्त्वं पुनरत्र "णू स्तवने" (धा।पा।१३९७), "धू विधूनने" (धा।पा।१३९८) इत्येतयोः कुटादिषु पाठाद्गाङ्कुटादिसूत्रेण १।२।१ यथा सामथ्र्याद्वृद्ध्या गुणो बाध्यते, तथा प्रतिषेधोऽपि बाध्येत एव? नैतदस्ति; गुणे हि नाप्राप्ते वृद्धिरारभ्यते, प्रतिषेधे तु प्राप्ते चाप्राप्ते च। तत्र येन नाप्राप्ति नान्येन (व्या।प।४९) गुणस्यैव बाधा युक्ता, न प्रतिषेधस्य। "अच्योष्ट, अप्लोष्ट" इति। "च्युङ्? छ्युङ्? ज्युङ्? (न स्तः--धातुपाठे) इयुङ्? प्रुङ्? प्लुङ्? गतौ" (धा।पा।९५५,९५६,९५७)

बाल-मनोरमा

सिचि वृद्धिः परस्मपैपदेषु १४०, ७।२।१

अथ लुङि सिचि वीभावे "सार्वधातुकाद्र्धधातुकयो"रिति गुणे प्राप्ते-- सिचि वृद्धिः। इगन्तस्येति। वृद्धिश्रुत्या इक इत्युपस्थितमङ्गस्येत्यधिकृतस्य विशेषणं, तदन्तविधिरिति भावः। एवं च अकोषीत्यादौ व्यञ्जनस्य न वृद्धिः। अवैषीदिति। लुङिस्तिप्। इकारलोपः। सिचि वीभावः। "एकाच" इति इण्निषेधः। वृद्धिः। अडागमः। षत्वम्। आजीदिति। सिज्लोपः। "वदव्रजे"ति हलन्तलक्षणायां वृद्धौ "नेटी"ति निषिद्धायामाडागमे "आटश्चे"ति वृद्धिः। लृङि अवेष्यत्

आजिष्यत्। तेज पालन इत्यादि। स्पष्टम्। एजृ कम्पन इति। दीप्तौ त्वात्मनेपदी गतः। टु ओ स्फूर्जेति। "आदिर्ञिटुडव" इति टुरित्, उपदेशेऽनुनासिकत्वादोकार आकारश्च इत्। "ट्वितोऽथु"जित्थथुच्, "आदितश्चे"ति निष्ठानत्वम्, "ओदितश्चे"ति निष्ठायामिण्निषेधश्च। तत्फलानि। "उपधायां चे"ति दीर्घस्याऽनित्यत्वज्ञापनार्थमिह दीर्घ ऊकारः पठितः। तेन हुर्छतीत्यादौ न दीर्घ इत्याहुः। स्फूर्जतीति। लिटि--पुस्फूर्ज, अस्फूर्जीत्। क्षि क्षय इति। क्षयो--नाशः। अन्तर्भावितण्यर्थ इति। नाशनार्थक इत्यर्थः। अजन्तेष्वेवास्य पाठो युक्तः। क्षयतीति। नश्यतीत्यर्थः,नाशयतीति वा। शपि गुणेऽयादेशः। चिक्षायेति। णलि वृद्धिः। आयादेशः। चिक्षियतुरिति। "असंयोगा"दिति कित्त्वान् गुणः। इयङ्। चिक्षयिथ--चिक्षेथेति। पित्त्वेन कित्त्वाऽभावाद्गुणः। अजन्तत्वात्तासौ नित्याऽनिट्त्वाच्च भारद्वाजनियमात्थलि वेट्। इट्पक्षेऽयादेशः। चिक्षियथुः। चिक्षिय। चिक्षाय चिक्षय। वस्मसोस्तु क्रादिनियमान्नित्मिट्। तदाह---चिक्षियिव चिक्षियिमेति। क्षेता। क्षेष्यति। क्षयतु। अक्षयत्। क्षयेत्।

तत्त्व-बोधिनी

सिचि वृद्धिः परस्मैपदेषु ११५, ७।२।१

"इको गुणवृद्धी" इति परिभाषोपस्थानादाह-- इगन्तेति। परस्मैपदेष्विति किम्?। अधविष्ट। अधोष्ट। सिचि किम्?। एति। बिभर्ति। गुणं बाधित्वा वृद्धिः स्यात्। खज मन्थे। कजेति केचित्पठन्ति। एजृ कम्पने। दीप्तौ त्वात्मनेपदी गतः। टुओस्फूर्जा। "ट्वनितोऽथुच्ट। स्फूर्जथुः। "ओदितश्चे"ति निष्ठानत्वार्थमोकारः। स्फूर्ग्णः। स्फूर्ग्णवान्। आकारस्तु "ओदितश्च" इति निष्ठायामिटो निषेधार्थः, "विभाषा भावादिकर्मणो"रिति विकल्पार्थश्चास्फूर्ग्ण, स्फूर्जितमनेनेत्यादि। "उपधायां चे"ति दीर्घस्याऽनित्यत्वज्ञापनार्थमिह दीर्घोपदेशः। तेन हुच्र्छति मुच्र्छति इत्यपि भवतीति केचित्। क्षि क्षये। अजन्तेष्वस्य पाठो युक्तः। "क्षि निवासगत्यो"रिति तुदादौ।

---

सूत्रम्

काशिका-वृत्तिः

अतो ल्रान्तस्य ७।२।२

रेफलकारौ यावतः अन्तौ समीपौ तदन्तस्य अङ्गस्य अत एव स्थाने वृद्धिः भवति। क्षर अक्षारीत्। त्सर अत्सारीत्। ज्वल अज्वालीत्। ह्मल अह्मालीत्। अतो हलादेर् लघोः ७।२।७ इति विकल्पस्य अयम् अपवादः। अतः इति किम्? न्यखोरीत्। न्यमीलीत्। ल्रान्तस्य इति किम्? मा भवानटीत्। मा भवानशीत्। अन्तग्रहणं किम्? अवभ्रीत्। अश्वल्लीत्। अत्र यौ रेफलकारौ अङ्गस्य अन्तौ न तावतः समीपौ।

न्यासः

अतो ल्रान्तस्य। , ७।२।२

अन्तशब्दोऽयमस्त्यवयववचनः, यथा वस्त्रान्तः, वसनान्त इति। अस्ति च समीपवाची, यथा--उदकान्तं प्रियं प्रोथमनुव्रजेदिति। उदकसमोपमित्यर्थः। अत्रावयववाचिनोऽन्तशब्दस्य ग्रहणे इहान्तग्रहणमनर्थकं स्यात्()? तस्य ह्रुपादनस्यैतत्? प्रयोजनम्()--रेफलकारान्तस्य यथा स्यादिति। एतच्च "येन विधिस्तदन्तस्य" १।१।७१ इत्यनेनैव सिध्यति। तस्मात्? समीपवाचिन एव ग्रहणमिति मत्वाऽऽह--"रेफलकारो यावतोऽन्तौ= समीपी" इति। यदि तर्हि ल्रावन्तौ यसय समीपावत इत्यनेन निर्दिश्यते वृद्धिभाग्? न निर्दिष्टः स्यात्()। एवञ्च "अलोऽन्त्यस्य" १।१।५१ इत्यन्त्यस्य स्यात्(); अकारसमीपभूतस्य ल्रान्तस्यान्त्यस्य वृद्धिभाज इकोऽभावादित्यत आह--"अत एव स्थाने" इति। एवं मन्यते--अकारस्य श्रुतत्वादकारस्यैव स्थाने वृद्धिर्विज्ञायत इति। "अक्षारीत्()" इत्यादि। "क्षर सञ्चलने"

(धा।पा।८५१), "त्सर छद्मगतौ" (धा।पा।५५४), "ज्वल दीप्तौ" (धा।पा।८०४), "ह्मल ह्मल चलने" (धा।पा।८०५,८०६) इत्येतेषां रूपाणि। "अतो हलादेर्लघोरित्यस्य विकल्पस्यायमपवादः" इति। एतेन नियमार्थतामस्य योगस्य दर्शयति। "न्यखोरीत्(), न्यमीलीत्()" इत्यादि। "खुर छेदने" (वा।यां।१३४२), "मील श्मील स्मील क्ष्मील निमेषणे" (धा।पा।५१७-५२०)। "मा भवानटीत्(), मा भवानशीत्()" इति। "अट पट गतौ" (धा।पा।२९५,२९६), "अशभोजने" (धा।पा।१५२३) "न माङ्योगे" ६।४।७४ इत्याट्प्रतिषेधार्थो माङ्योगः। "भवान्()" इति। अयं सन्देहनिरासार्थः; अतोऽन्यत्र विशेषाभावात्()। "अवभ्रीत्()" इति। "अभ्र वभ्र मभ्र चर गत्यर्थाः" (धा।पा।५५६-५५९)। "अ()आल्लीत्()" इति। "()आल()आल्ल आशुगमने" (धा।पा।५४९,५५०)। "न तावतः समीपौ" इति। भकारलकाराभ्यां व्यवधानादिति॥

बाल-मनोरमा

अतो ल्रान्तस्य १७०, ७।२।२

अतो ल्रान्तस्य। "सिचि वृद्धिः परस्मैपदेषु" इत्यनुवृत्तम्। अङ्गस्येत्यधिकृतम्। तद्विशेषणत्वात्तदन्तविधिनैव सिद्धेऽन्तग्रहणं व्यर्थम्। तत्राह--- ल्रेति लुप्तषष्ठीकमिति। ल्र अन्तस्य इति छेदः। ल् च रश्चेति समाहारद्वन्द्वात्षष्ठ()एकवचनं लुप्तम्। ल्रस्यान्तस्येति सामानाधिकरण्येनान्वयः। "अत" इति व्यधिकरणषष्ठ()न्तम्--अन्तस्येत्यत्रान्वेति। अन्तशब्दः समीपवर्तिवाची। तथा च अतः समीपवर्तिनो ल्रस्येति लभ्यते। ल्रस्येत्यङ्गविशेषणत्वात्तदन्तविधिः। ततश्च अत्समीपवर्तिरेफलकारान्तस्य अङ्गस्य सिचि वृद्धिरिति लभ्यते। "अत" इत्यावृत्तं वृद्धौ स्थानित्वेनान्वेति तदाह--अतः समीपावित्यादिना। अतः समीप इति किम्?। अखोरीत्। अमीलीत्। ल्रान्तस्येति किम्?। मा भवनातीति। अतो वृद्धिरुत्युक्ता अतः समीपावित्यनुक्तौ तु अवभ्रीत् अ()आल्लीदित्यत्रातिपव्याप्तिः। अत्र अङ्गस्यान्तौ रेफलकारौ नातः समीपाविति न वृद्धिः। न चात्र अतो भकारेण लकारेण च व्यवहितत्वादेव न वृद्धिः, आलीदित्यादौ एकव्यवधाने चरितार्थत्वादिति वाच्यं, सिचि परे यदङ्गं तदकारस्य वृद्धिरित्यर्थाश्रयणेऽतिव्याप्तवारणार्थत्वात्। ञि फलेति। विशरणं--शिथिलीभावः। "आदिर्ञिटुडवः" इति ञिरित्। "ञीतः क्तः" इति प्रयोजनम्। "आदितश्चे"ति तीण्निषेधार्थमादित्त्वम्। लिण्निमित्तादेशादित्वादप्राप्ते आह---तृफलेति। मील श्मीलेति। निमेषणं-- नेत्रसंकोचः। संकोच इति पाठेऽप्ययमेवार्थः। णील वर्ण इति। वर्णक्रियायामित्यर्थः। फल निष्पत्ताविति। ञि फलेति पूर्वं पठितम्। अनुबन्धभेदात्पुनः पाठः। खोलृ खोरृ इति। द्वितीयो रेफान्त ऋदित्। इत आरभ्यष्ठिवेः प्राग्रेफान्ताः। धोरृगतिचातुर्य इति। अ()आगतिविशेष इत्यर्थः। रेपान्तोऽयम्(), ऋदित्। त्सर छद्मगताविति। कपटगतावित्यर्थः। क्मर हूर्छन इति। कुटिलीभवन इत्यर्थः। ष्ठिवु निरसन इति। इदुपधः, उदित्। इत आरभ्य ऊष्मान्तेभ्यः प्राग्वकारान्ताः। तिपि शपि लघूपधगुणे प्राप्ते आह---ष्ठिवुक्लम्वितीति। ल्युटि तु शित्परकत्वाऽभावाद्धीर्घऽभावे लघूपधगुणः। "ष्ठीवन" मिति तु पृषोदरादित्वात्समाधेयम्। अस्येति। ष्ठिनुधातोर्द्वितीयो वर्णस्थकार इत्यर्थः। कृतष्टुत्वस्य निर्देश इति भावः। षोपदेशोऽयं, केवलदन्त्यथकारपरकसादित्वात्। षोपदेशत्वेऽपि न सत्वम्, "सुब्धातुष्ठिवु" ति निषेधात्। लिटि तु "शर्पूर्वाः खयः" इति षकारवकारयोर्निवृत्त्या ष्टुत्वनिवृत्तौ?रूपमाह--तिष्ठेवेति। ठकारस्य स्वाभाविकत्वे तु टिष्ठेवेति रूपम्। जि जय इति। जिधातुरनिट्कः। सँल्लिटोर्जेः। "अभ्यासाच्चे"ति सूत्रादभ्यासादित्यनुवर्तते। "चजोः कुघिण्यतो"रित्यस्मात्कु इति च। "संल्लिटो"रिति निमित्तसप्तमी अभ्यासे अन्वेति। तदाह--- संल्लिण्निमित्तो योऽभ्यास इत्यादि। "सनि लिटि च अभ्यासात् परस्य कुत्व"मिति व्याख्याने तु यङ्लुगन्तात्सनि जेजयिषतीत्यत्र कुत्वं स्यात्। अतः "संल्लिण्निमित्तो योऽभ्यास" इति व्याख्येयमिति माधवः। जिगायेति। णलि द्वित्वे वृद्धौ उत्तरखण्डे जस्य कुत्वेन गः। जिग्यतुरिति। कित्वाद्गुणाऽभावः। लिटि "एकाच" इति इण्निषेधं बाधित्वा क्रादिनियमादिटि प्राप्ते,थलि "अचस्तास्व"दिति तन्निषेधस्य भारद्वाजनियमाद्विकल्पः। तदाह--जिगयिथ जिगेथेति। जिग्यथुः। जिग्य। "णलुत्तमो वे"ति मत्वा आह-- जिगाय जिगयेति। क्रादिनियमादिटं मत्वा

आह--जिग्यिव जिग्यिमेति। जेतेति। जेष्यति। जयतु।अजयत्। आशीर्लिङि "अकृत्सार्वधातुकयो"रिति दीर्घं मत्वा आह--जीयादिति। अजैषीदिति। "सिचि वृद्धि"रिति वृद्धिरिति भावः। अजेष्यते। षर्वधातुः षोपदेशः। इविधातोरिदित्त्वान्नुम्। तदाह-- इन्वतीति। इन्वांचकारेति। नुमि इजादिगुरुमत्त्वादमिति भाव-। पिवि मिवीत्यादय इदितः।

तत्त्व-बोधिनी

अतो ल्रान्तस्य १४३, ७।२।२

अतो ल्रान्तस्य। यद्यवयववचनेनाऽन्तशब्देन बहुव्रीहिरङ्गं चान्यपदार्थस्तत्पक्षे विशेषणेन तदन्तविधेः विशेषणेन तदन्तविधेः सिद्धत्वादन्तग्रहणमनर्थकम्। अ()आल्लीदित्यत्रातिव्याप्तिश्च। समीपवाचिना अन्तशब्देन षष्ठीसमासपक्षे विशेषणेन तदन्तविधेः सिद्धत्वादन्तग्रहणमनर्थकम्। अ()आल्लीदित्यत्रातिव्याप्तिश्च। समीपवाचिना अन्तशब्देन षष्ठीसमासपक्षे रपिरणि()आल्लप्रभृतिष्वतिव्याप्तिः, अङ्गस्याऽतो ल्रोः समीपत्वात्()। "ल्र" च तदन्तश्चेति समीपवाचिनाऽन्तशब्देन कर्मधारयपक्षे त्वन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यादत आह--लुप्तषष्ठीकमिति। अन्तशब्दः समीपवाचीत्यभिप्रेत्याह-- अतः समीपाविति। अतो वृद्धि स्यादिति। इह "अत" इत्यस्य तन्त्रावृत्यादिकं स्वीकर्तव्यम्। अन्यथा प्रयोजनाऽभावादिक्परिभाषानुपस्थानऽप्यलोन्त्यपरिभाषयाऽन्त्यस्य स्यादिति भावः। यद्यपि "अतो ल्रस्येट त्युक्तेऽपि ल्रान्तस्याङ्गस्य अतः सिचि परे वृद्धिरित्यर्थोऽपि प्रतीयेत। ततश्चाऽ()आल्लीदित्यत्रातिप्रसङ्गः स्यात्। तद्वारणाय सूत्रेऽन्तग्रहणं कृतमिति। तदनुरोधेनाऽन्तशब्दस्य समीपवनाचित्वमत इत्यस्य चाऽऽवृत्तिः स्वीकृतेति बोध्यम्। अतः समीपाविति क#इम्()। अखोरीत् अमीलीत्। ल्रान्तस्याङ्गस्य किम्?। ()आल्ल आशुगमने। अ()आल्लीत्। अकारसमीपे यो लकारः स नाङ्गस्यान्तः, यस्त्वङ्गस्यान्तः, रा तु नाकारस्य समीपः। ननु ल्रेत्यस्य लुप्तषष्ठीकत्वनाभ्युपगमेऽप्यन्तशब्दस्यावयववाचित्वंस्वीकृत्य अङ्गस्यान्तं यत् ल्रं तस्याऽतो = तत्समीपस्याऽतो वृद्धिरिति व्याख्याने त्वत इत्यस्यावृत्तिर्नापेक्षितेति चेत्। अत्राहुः-- "हलन्त्यटमिति सूत्रे मनोरमायां "सामीप्यं षष्ठ()र्थः" इति पक्षस्य निराकरणात्तदनुरोधनात्राऽत इत्यस्याऽऽवृत्तिराश्रितेति। अत्र केचित्-- "अतो ल्रान्तस्ये"त्यत्र ल्रेति लुप्तसप्तमीकम्। अथवा "अतो ल्रान्ते" इति व्यस्तमेव सूत्रयितुं शक्यम्। तथा च "अङ्गस्यान्तं यत् ल्रं तस्मिन्परेऽव्यवहितस्याऽतो वृद्धिरिति व्याख्यानसंभवान्न तन्त्रा[वृत्त्या] द्याश्रयणक्लेशः। न चाङ्गस्य विशेख्यत्वेनैवान्वयो युज्यते न तु विशेषणत्वेन "पदाङ्गाधिकारे तस्य च तदन्तस्य चे"ति परिभाषायाः पदमङ्गं च विशेष्यं भवतीत्यभिप्रायवर्णनादिति वाच्यम्, "अल्लोपोऽनः" इतिसूत्रेऽङ्गावयवोऽसर्वनाम स्थानेत्येवं भाष्याकारादिभिर्विशेषणतया व्याख्यानात्क्वचिद्विशेषणत्वेऽप्यङ्गस्य न क्षतिर#इत्याहुः। नेटीत्यादि। यद्यपि पुरस्तादपवादन्यायेन "नेटी"त्यस्यापवादो न तु विकल्पस्यापि, तथापि बाध्यसामान्यचिन्तायां स्वविषये प्राप्तं सर्वं बाध्यत इति पुरस्तादपवादन्यायोऽत्र न प्रवर्तत इति भावः। मील संकोचे इति। नेत्रसंकोचे तु प्रचुरप्रयोगः। तिल गतौ। तिल स्नेहने इति चुरादौ। दल विशरणे। विशरणमवयवानां विभागः। धोरृ। धोरितकम()आआनां गतिविशेषः। निष्ठान्तात्संज्ञायां कन्। त्सरः। छद्मना कपटेन गतिः-- छद्मगतिः। क्मर हूर्छने। हूर्छनं-- कौटिल्यम्। ष्ठिवु निरसने। अस्य ल्युटि--ष्ठेवनम्। "ष्ठीवनाऽसृक्शकृन् मूत्ररेतांस्यप्सु न निक्षिपे"दित्यत्र पृषोदरादित्वापक्षे दीर्घ ईकार इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

वदव्रजहलन्तस्य अचः ७।२।३

वदव्रजोः हलन्तानां च अङ्गानाम् अचः स्थाने वृद्धिर् भवति सिचि परस्मैपदे परतः। अवादीत्। अव्राजीत्। विकल्पबाधनार्थं वदिव्रजिग्रहणम्। हलन्तानाम् अपाक्षीत्। अभैत्सीत्। अच्छैत्सीत्। अरौत्सीत्। अत्र योगविभागे सति हलन्तग्रहणम् अन्तरेण अपि सिध्यति। कथम्? वदिव्रज्योः इत्यत्र प्रथमयोगे अतः इति स्थानी अनुवर्तते, ततो यतचः इति सूत्रं तत्र अङ्गेन अज्विशेष्यते, अङ्गस्य अचः सिचि परतः वृद्धिर् भवति। तदेतद् धल्ग्रहणम् हल्समुदायपरिग्रहार्थम्। इह अपि स्यात्, अराङ्क्षीत्, असाङ्क्षीत्। अन्यथा हि येन न अव्यवधानं तेन व्यवहिते ऽपि वचनप्रामाण्यातित्येकेन वर्णेन व्यवधाने स्यात्, अनेकेन हला न स्यात्। उदवोढाम्, उदवोढम् इत्यत्र वहेः सिचि ढत्वसलोपादीनाम् पूर्वत्र असिद्धम् ८।२।१ इत्यसिद्धत्वात् पूर्वं हलन्तलक्षणा वृद्धिः क्रियते, पश्चाद् ढलोपनिमित्तमोत्वम्। तत्र कृते पुनर् वृद्धिर् न भवति, कृतत्वात्। यत्र त्वकृता वृद्धिः, ओकारस्य एव तत्र भवति, सोढामित्रस्य अपत्यम् सौढामित्रिः इति।

लघु-सिद्धान्त-कौमुदी

वदव्रजहलन्तस्याचः ४६७, ७।२।३

एषामचो वृद्धिः सिचि परस्मैपदेषु। अव्राजीत्। अव्रजिष्यत्॥ कटे वर्षावरणयोः॥ ११॥ कटति। चकाट। चकटतुः। कटिता। कटिष्यति। कटतु। अकटत्। कटेत्। कट्यात्॥

न्यासः

वदव्रजहलन्तस्याचः। , ७।२।३

अनिगन्तार्थोऽयमारम्भः। अथ वदिव्रज्योग्र्रहणं किमर्थम्(), यावता हलन्तत्वादेव वृद्धिः सिध्यति? इत्यत आह--"विकलपबाधनार्थम्()" इत्यादि। "अतो हलादेः" ७।२।७ विकल्पं वक्ष्यति, तस्य बाधो यथा स्यात्()। "अपाक्षीत्()" इति। "डुपचष्? पाके" (धा।पा।९९६), "चोः कुः" ८।२।३० इति कुत्वम्()। "अभैस्तीत्()" इति। "भिदिर्? विदारणे (धा।पा।१४३९), "खरि च" ८।४।५४ इति चत्र्वम्()--दकारस्य तकारः। "अरौत्सीत्()" इति। "रुधिर आवरणे" (धा।पा।१४३८)। "अत्र" इत्यादि। "वदिव्रज्योः इत्येको योगः, "अचः" इति द्वितीयः; एवं योगविभागे सति हलन्तग्रहणमन्तरेणापीष्टं सिध्यत्येव। "कथम्()" इति। असम्भावयतः प्रश्नः। "वदिव्रव्योः" इत्यादिना यथा योगविभागे सति सिध्यति तथा दर्शयति। तत्र प्रथमयोगे पूर्वसूत्रात्? "अतः" इति स्थान्यनुवत्र्तते। तेनावादीत्(), अव्राजीदित्येतावत्सिध्यति। ततो यदच इति द्वितीयं सूत्रम्(), तत्र विशेषणविशेष्यभावयोर्यथेष्टत्वात्? प्रकृतेनाङ्गेनाजिविशिध्यते--अङ्गस्य योऽजिति। तेनाङ्गस्याचो यत्र तत्रावस्थितस्य सिचि परतो वृद्धिर्भवति। अपाक्षीदित्याद्यपि सिध्यति। यद्येवम्(), योगविभाग एव कत्र्तव्यः, किं हल्ग्रहणेन? इत्यत आह--"तदेतत्()" इत्यादि। हल्समुदयपरिग्रहः किमर्थो यतसतदर्थोऽयं यत्नः क्रियते? इत्याह--"इहापि" इत्यादि। "अराङ्क्षीत्()" इति। "रञ्ज रागे" (धा।पा।११६७)। "असाङ्क्षीत्()" इति। "षन्ज सङ्गे" (धा।पा।९८७)। ननु चाङ्गस्य योऽच्? तस्य सिचि परतो वृद्धिरुच्यते, न चात्राङ्गसम्बन्धिनोऽचोनन्तरः परः सिच्? सम्भवति यस्यानेन वृद्धिर्विधीयते। तथा ह्रकारान्तस्याङ्गस्य तावत्? "अतो लोपः" ६।४।४८ इति लोपेन भवितव्यम्()। न च वचनादतो लोपं वृद्धिर्बाधिष्यत इति शक्यते वक्तुम्(); यदि ह्रकारान्तस्यैव वृद्धिः स्यात्? प्रत्याहारग्रहणमनर्थकं स्यात्(), "अतः" इत्येवं ब्राऊयात्()। अथ वा--तदपि सम्भवति। अकारान्तस्य तु कामं संभवति यावाप्रभृतेः। न तु तस्यास्ति विशेषः सत्यां वा वृद्धावसत्यां वा। इगन्तस्य पुनः "सिचि वृद्धिः" ७।२।१ इत्यादिनैव वृद्धिर्विहिता। सन्ध्यक्षराणां च नास्त्येव; "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्वविधानात्()। उदवोढाम्(), उदवोढमित्यत्रास्तीति चेत्()? न; ढलोपस्यासिद्धत्वात्()। तदयं न क्यचिदचोऽनन्तरः परस्मैपदपरः सिच्? सम्भवति। उच्यते चेदं वचनम्(); ततो "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।प।४६) यथाऽपाक्षीदित्यादौ वृद्धिर्भवति, तथाऽराङ्क्षीदित्यादावपि वृद्धिर्भविष्यति, ततो नार्थो हल्ग्रहणेन? इत्यत आह--"अन्यथा

हि" इत्यादि। एकेन वर्णेन सर्वत्र व्यवधानमस्ति। हल्समुदायेन क्यचिदेवाराङ्क्षीदित्यादौ। अपाक्षीदित्यदौ नास्ति, तत्रसति हलग्रहणेऽनन्तरोक्तया नीत्या यत्रैकेन वर्णेन व्यवधानमस्ति--अपाक्षीदित्यादौ, तत्रैव स्यात्(), यत्र त्वर्नेकवर्णेन व्यवधानमस्ति--अराङ्क्षीदित्यादौ, तत्र न स्यात्(), यथाऽपिपठिषीदित्यादौ आदययोरचोर्व्यवधानान्न भवति। हल्ग्रहणे तु सति हल्समुदायेन व्यवधानेऽपि भवति; हल्ग्रहणसामर्थ्यात्()। उदवोढाम्(), उदवोढमित्यत्र वहेर्वृद्धिः कस्मान्न भवति, ढलोपे कृतेऽहलन्तादिति चेत्()? न; ढलोपस्यासिद्धत्वादिति यश्चोदयेत्(), तं प्रत्याह--क्रियते एवात्र वृद्धिः। तस्यास्त्वोत्त्वं विधीयत इति दर्शयितुमाह--"उदवोढाम्()" इत्यादि। आदिशब्देन धात्वादयो गृह्णन्ते। वहेरुत्पूर्वाल्लुङ्(), तस्थसौ, तयोः "तस्थस्थमिपाम्()" ३।४।१०१ इत्यादिना तान्तमादेशौ यथाक्रमम्(), हलन्तलक्षणा वृद्धिः, "हो ढः" ८।२।३१ इति ढत्वम्(), "झलो झलि" ८।२।२६ इति सिचो लोपः, "झषस्तथोर्धोऽधः" ८।२।४० इति षत्वम्(), "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्()। "सहिवहेरोदवर्णस्य" ६।३।१११ इत्योत्त्वम्()। तत्र ह्योत्त्वे पुनर्वृद्धिः कस्मान्न भवति? इत्याह--"तत्र कृते पुनः" इत्यादि। एकं ह्यत्र वृद्धिशास्त्रम्(), तेन च प्रागेव कृता वृद्धिरिति कृतकार्यत्वाद्()वृद्धिशास्त्रस्य, पुनस्तन्न व्याप्रियत इति न भवति पुनर्वृद्धिः। सौढामित्रिरित्यत्र तर्हि कथमोत्त्वे कृते वृद्धिर्भवति? इत्याह--"यत्र तु" इत्यादि। यत्र प्राग्वृद्धिः कृता तत्र कृतार्थत्वाद्()वृद्धिशास्त्रस्य पुनर्न व्याप्रियत इति न भवति वृद्धिः, सोढामित्रिरित्यत्र तु न कृता वृद्धिः। तस्मादकृतार्थत्वाद्()वृद्धिशास्त्रं व्याप्रियत इति भवत्येव वृद्धिः। सा च भवत्योकारस्य भवति, नाकरस्य वृद्धिरिति; वृद्धिविधानकाल ओकारस्यैव वृद्धिभाजः सन्निहितत्वात्()। सहेर्निष्ठा, तत्र ढत्वादिषु कृतेषु सोढ इति भवति, सोढोऽमित्रोऽनेनेति सोढामित्रः, तस्यापत्यमिति "अत इञ्()" ४।१।९५, "तद्धितेष्वचामाने" ७।२।११७ वृद्धिः। "येन विधिस्तदन्तस्य" १।१।७१ इत्येव सिद्धे तदन्तत्वेऽन्तग्रहणमसन्देहार्थम्()। "हलोऽचः" इत्युच्यमाने सन्देहः स्यात्()--किमजन्तस्याङ्गस्य हलो वृद्धिर्भवति? उत हलन्तस्याच इति()॥

बाल-मनोरमा

वदव्रजहलन्तस्याचः १११, ७।२।३

अत्र वृद्धिमाशङ्कितुमाह-- वदव्रज। वद वर्ज हलन्त एषां समाहाद्वन्द्वात् षष्ठ()एकवचनम्। अङ्गस्येत्यधिकृतम्। "सिचि वृद्धिः परस्मैपदेष्वि"त्यनुवर्तते। तदाह-- वदेरित्यादिना। हलन्तत्वादेव सिद्धे वदवर्जग्रहणं तु अवादीदव्राजीदित्यत्र "अतो हलादेर्लघो"रिति वृद्धिविकल्पबाधनार्थम्।

तत्त्व-बोधिनी

वदव्रजहलन्तस्याचः ८६, ७।२।३

वदव्रज। अवादीत्। अव्राजीत् "अतो हलादे"रितिविकल्पं बाधित्वा अनेन नित्यं वृद्धिः। हलन्तस्योदाहरणम्-- अपाक्षीत् अधाक्षीत्। तदन्तविधिनैव सिद्धेऽन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। "हलोऽ"जित्युक्ते त्वजन्ताहगस्य हलः स्थाने वृद्धिरिति कदाचिदाशङ्क्येत। "अच" इति तु इक्परिभाषाया अनुपस्थानार्थम्, अन्यथा अभैत्सीदित्यत्र स्यान्नत्वपाक्षीदित्यादौ।

---

सूत्रम्

काशिका-वृत्तिः

नेटि ७।२।४

इढादौ सिचि हलनतस्य अङ्गस्य वृद्धिर् न भवति। अदेवीत्। असेवीत्। अकोषीत्। अमोषीत्। हलन्तस्य इत्येव, अलावीत्। ननु च एतदप्यन्तरङ्गत्वात् गुणावादेशयोः कृतयोः हलन्तं भवति? न एतदेवम्। अन्तरङ्गम् अपि गुणम् वचनारम्भसामर्थ्यात् सिचि वृद्धिर् बाधते इत्युक्तम्।

लघु-सिद्धान्त-कौमुदी

नेटि ४७९, ७।२।४

इडादौ सिचि हलन्तस्य वृद्धिर्न। अगोपीत्, अगौप्सीत्॥

न्यासः

नेटि। , ७।२।४

हलन्तस्याच इति या वृद्धिः प्राप्ता सा हलन्तलक्षणा वृद्धिरनेन प्रतिषिध्यते "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति कृत्वा। "अदेवीत्(), असेवीत्()" इति। "दिवु क्रीडादो" (धा।पा।११०७), "सिवु तन्तुसन्तानेट ["षिवु"--दा।पा।] (धा।पा।११०८)। वृद्धौ प्रतिषिद्धायां "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः। "अकोषीदमोषीत्()" इति। "कुष निष्कर्णे" (धा।पा।१५१८), "मुष स्तेये" (धा।पा।१५३०)। "नन्वत्रैतदन्तरङ्गत्वात्()" [नन्वत्रैतदप्यन्तरङ्गत्वात्()--कीशिका] इति चोद्यम्()। "नैतदेवम्()" इति परिहारः। उभयञ्चैतद्गतार्थम्()॥

बाल-मनोरमा

नेटि ११२, ७।२।४

नेटि। प्रागुक्तं नेति। "वदव्रजहलन्तस्याच" इत्युक्तं नेत्यर्थः। ततर् वदव्रजयोर्विशिष्य विधानाद्धलन्तलक्षणाया एव वृद्धेर्निषेधोऽयम्। हलन्तलक्षणा वृद्धिस्तुअधाक्षीदित्यादावनिडादौ सिचि चरितार्था। नन्वातीदित्यातौ अकारस्य वृद्धौ सत्यामसत्यां च आटा एकादेशे सति रूपे विशेषाऽभावा()त्क तन्निषेधेनेत्याशङ्क्याह--मा भवानतीदिति। माङ्योगे आडभावे सति वृद्धिनिषेधः सफल इति भाव-। चितीति। ईदित्त्वम् "()आईदितो निष्ठाया"मिति इण्निषेधार्थम्। चेततीति। शपि लघूपधगुणः। चिचेतेति। तिबादेशणलः पिच्वेन असंयोगादिति कित्त्वस्याऽप्रवृत्तेर्न गुणनिषेधः। चिचिततुरित्यादौ तु कित्त्वान्न गुणः। अचेतीदिति। "इट ईटी"ति सलोपः। अचेतिष्टामिति। अपृक्तत्वाऽभावादीडभावान्न सिज्लोपः। नेटीति निषेधान्न हलन्तलक्षणा वृद्धिः। च्युतिरिति। च्युतिरिति। अत्र इकारस्य रेफस्य च प्रत्येकमित्संज्ञायामिदित्त्वानुमि प्राप्ते आह-- इर इत्संज्ञति। तथा च इरिति समुदायस्य इत्संज्ञकत्वादिदित्वाऽभावान्न नुमिति भावः। च्योततीति। लघूपधगुणः। चुच्योतेति। णलः पित्()वेन कित्त्वाऽभावान्न गुणनिषेध इति भावः। चुच्युततुरित्यादौ तु कित्त्वान्न गुणः। लुङि च्लेः स#इचि प्राप्ते।

तत्त्व-बोधिनी

नेटि ८७, ७।२।४

नेटि। प्रागुक्तं नेति। हलन्तत्वादेव सिद्धे वदव्रजोर्विशिष्य विधानान्न निषेधः, किंतु हलन्तलक्षणा या एव वृद्धेर्निषेधः तस्या अनिडादौ सिचि चारितार्थतत्वात्। अमुमेवार्थ मनसि निधाय क्वचित्पुस्तकेषु "हलन्तलक्षणा वृद्धिर्न"इत्येव पठ()ते। इर इत्संज्ञेति। इकारस्य "उपदेशेऽजनुनासिकः" इति, रेफस्य तु "हलन्त्य"मिति प्रत्येकमित्संज्ञायाम् "इदित" इति नुम् स्यादिति भावः। एतस्य वैयथ्र्यं "चक्षिङ् व्यक्तावयां वाची"त्यत्र स्फुटीभविष्यति।

---

सूत्रम्

काशिका-वृत्तिः

हम्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५

हकारान्तानां मकारान्तानां यकारान्तानाम् अङ्गानाम्, क्षण श्वस जागृ णि श्वि इत्येतेषाम्, एदितां च इडादौ सिचि

परस्मैपदे परतो वृद्धिर् न भवति। ग्रह अग्रहीत्। स्यम अस्यमीत्। व्यय अव्ययीत्। टुवम अवमीत्। क्षण अक्षणीत्। श्वस अश्वसीत्। जागृ अजागरीत्। णि औनयीत्। ऐलयीत्। श्वि अश्वयीत्। एदिताम् रगे अरगीत्। कखे अकखीत्। हम्यन्तक्षणश्वसाम् एदिताम् च अतो हलादेर् लघोः ७।२।७ इति विकल्पे प्राप्ते प्रतिषेधः। जागृणिश्वीनां तु सिचि वृद्धिः प्राप्ता, सा च नेटि ७।२।४ इति न प्रतिषिध्यते। न च अन्तरङ्गत्वादत्र पूर्वं गुणो भवति, सिचि वृद्धेरनवकाशत्वात्। यदि पूर्वं गुणः स्यादिह णिश्विग्रहणम् अनर्थकं स्यात्, गुणायादेशयोः कृतयोः यकारन्तत्वादेव प्रतिषेधस्य सिद्धत्वात्। तस्मादिदम् एव श्विग्रहणं ज्ञापकम् न सिचन्तरङ्गम् अस्ति इति। अथ जागृग्रहणम् किमर्थम्, जाग्रो ऽविचिण्णल्ङित्सु ७।३।८५ इति जागर्तेर् गुणो वृद्धेरपवादो विधीयते, स यथा अचो ञ्णिति ६।२।११४ इति वृद्धिं बाधते तथा सिचि वृद्धिम् अपि बाधिष्यते? न एतदस्ति। कृते गुणे अतो ल्रान्तस्य ७।२।२ इति य वृद्धिः प्राप्नोति सा प्रतिषिध्यते। अथ गुणविधानसमर्थ्यादुत्तरकालभाविन्यपि वृद्धिर् बाध्यते, यथा जागरयति इत्यत्र अत उपधायाः इत्यपि वृद्धिर् न भवति, तथा चिण्णलोः प्रतिषेधो ऽर्थवान् भवति इति शक्यम् इह जागृग्रहणम् अकर्तुम्? तत् तु क्रियते विस्पष्टार्थम्।

लघु-सिद्धान्त-कौमुदी

हम्यन्तक्षणश्वसजागृणिश्व्येदिताम् ४६८, ७।२।५

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि। अकटीत्। अकटिष्यत्॥ गुपू रक्षणे॥ १२॥

न्यासः

हय्यन्तक्षण�आसजागृणिश्व्येदिताम्?। , ७।२।५

"अग्रहीत्()" इति। ग्रह उपादाने" (धा।पा। १५३३)। "अस्यमीत्()" इति। "स्थमु स्वन ध्वन शब्दे"(धा।पा।८२६)-८२८) "अवमीत्()" इति। "टु वम उद्गिरणे" (धा।पा।८४९)। "अय्यतीत्()" इति। "व्ययवित्तसमुत्सर्गे" (धा।पा।१९३२) "अक्षणीत्()" इति। "क्षणु हिंसायाम्()" (धा।पा।१४६५) अ()आसीदिति। "()आसप्राणने" (दा।पा।१०६९)। "अजागरीत्()" इति। "जागृ निद्राक्षये" (धा।पा।१०७२)। "औनयीत्? ऐलयीत्()" "ऊन परिहाणे" (धा।पा।१८८८), [परिहरणे--धा।पा।] "ईल प्रेरणे" (धा।पा।१६६०), ["इल"--धा।पा।] चुरादिणिच्()। "नोनयति" ३।१।५१ इत्यादिना चङि प्रतिषिद्धे सिजेव भवति, "आडजादीनाम्()" ६।४।७२ इत्याट्(), "आटश्च" ६।१।८७ इति वृद्धिः। "अ()आयीत्()" इति। "टु ओश्वि गतिवृद्य्योः" (धा।पा।१०१०)। "अरगीत्(), अलगीत्? इति। "रगे लगे सङ्गे [रगे शंकायाम्()--धा।पा।] (धा।पा।७८५,७८६)। "अस्थागीत्()" इति। "स्थगे संवरणे" (धा।पा।७९०) ["ष्टगे"--धा।पा।] "अकखीत्()" इति। "कखे हसने" (धा।पा।७८४)। "सा च नेटीति न प्रतिषिध्यते" इति। अनन्तराया हलन्तक्षणाया वृद्धेः प्रतिषेधः, न पूर्वस्याः। अथ किमर्थं णि()इआग्रहणम्(), यावतान्तरङ्गत्वादेवात्र गुणेन भवितव्यम्(), कृते गुणेऽयादेशेन, ततश्च यकारान्तत्वादेव तथोः प्रतिषेधो भविष्यति? इत्याह--"न च" इत्यादि। इदमन्तरङ्गत्वं सिच्यभ्युपेत्योक्तम्()। इदानीमन्तरङ्गत्वमेव सिचि नास्तीति दर्शयितमाह--"यदि" इत्यादि। किं कारणं णि()इआग्रहणमनर्थकं स्यात्()? इत्यात आह--"गुणायादेशयोः" इति। यदि तर्हि सिच्यन्तरङ्गत्वं नास्ति, यदुक्तं "अन्तरङ्गमपि गुणमेषा वृद्धिर्वचनाद्बाधते" इति तद्विरुध्यते? नास्ति विरोधः, अध्यारोप्यो तथाभिधानात्()। "अथ" इत्यादि। अत्र वक्ष्यमाणोऽभिप्रायः। अथ जागृग्रहणं किमर्थमिति पृष्टस्य किं कारणं जागृग्रहणं न कत्र्तव्यमिति प्रश्नावसरे येनाभिप्रायेण पृष्टवांस्तमाविष्कर्तुमाह--"जाग्रोऽविचिण्()" इत्यादि। यथा जागरयतीत्यादौ "अचो ञ्णिति" ७।२।११५ इति प्राप्तां वृदिं()ध जागत्र्तर्गुणो बाधते तथा सिचिवृद्धिमपि बाधिध्यते, वृद्ध्यपवादत्वाद्गुणशास्त्रसय। "गृणे कत" इत्यादि। अकृते हि गणे या सिचि वृद्धिः प्राप्नोति सापवादत्वाद्गुणेन बाध्यते; अकृतार्थत्वाद्गुणशास्त्रस्य। न च साऽनेन वचनेन बाधिष्यते; किं तर्हि? गुणे कृते रपरत्वे च "अतो ल्रान्तस्य" ७।२।२ इत्युत्तरकालं या वृद्धि प्राप्नोति तस्याः प्रतिषेधो विधीयते, न च शक्या गुणेन बाधितुं सा। न हि "जाग्रोऽविचिण्णल्ङित्सु" ७।३।८५ इति शास्त्रं पुनः प्रवर्तितुमुत्सहते; कृतार्थत्वात्()। न चान्यद्()गुणलक्षणमस्त्युत्तरकालवृद्धेर्बाधकम्()। तत्र यदि

जागग्रहणं न क्रियते, "अतो ल्रान्तस्य" ७।२।२ इति वृद्धि स्यात्()। "अथ" इत्यादि चोदकः। यदि गुणेऽपि कृते पुनर्वृद्धिः स्यात्(), वृद्धिविषये गुणविधानमनर्थकं स्यात्()। तस्मात्? गुणविधानसामथ्र्याद्यापि गुणे कृते रपरत्वे च पश्चात्? "अतो ल्रान्तस्य" ७।२।२ इति वृद्धिः प्राप्नोति सा प्रतिषिध्यते, यथा--जागरयतीत्यत्र। गुणे कृते रपरत्वे च या प्राप्नोति "अत उपधायाः" ७।२।११६ इत्युत्तरकालभादिनी वृद्धिः, साऽपि न भवति; गुणेन बाधितत्वात्()। "तथा च" इत्यादि। गुणाविधानसामथ्र्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते; अन्यथा हि गूणे कृते रपरत्वे च "अत उपधायाः" इत्युत्तरकालभाविनी वृद्धिः, साऽपि न भवति; गणेन बाधितत्वात्()। "तथा च" इत्यादि।
गुणविधानसामथ्र्यादुतरकालभाविन्यपि वृद्धिर्गुणेन बाध्यत इति, तदेव द्रढयति। एवञ्च चिण्णलोः प्रतिषेधोऽर्थवान्? भवति यद्युत्तरकालभाविन्यपि वृद्धिर्बाध्यते; अन्यथा हि गुणे कृते रपरत्वे च "अत उपधायाः" ७।२।११६ इति वृद्ध्या भवितव्यम्()। चिण्णलोर्यः प्रतिषेधः क्रियते सोऽनर्थकः स्यात्()। तस्मादुत्तरकालभाविन्यपि वृद्धिर्गुणेन बाध्यत इति स्थिमेतत्()। ततश्च शक्यमेव जागृग्रहणमकत्र्तम्()। एवं प्रत्याख्याते जागृग्रहणे, इतर आह--"तत्? क्रियते" इत्यादि। य एवं प्रतिपत्तुं न शक्तः, तं प्रति विस्पष्टार्थं जागृग्रहणं क्रियते॥

बाल-मनोरमा

ह्रन्तक्षम�आसजागृणिश्व्येदिताम् १४२, ७।२।५

ह्रन्त। ह्रन्त क्षम ()आस जागृ ()इआ एदित्--एषां द्वन्द्वात्षष्ठी। ह् म् य् इत्येते वर्णा येषामन्तेते ह्रन्ताः। तदाह--हमयान्तस्येति। क्षणादेरिति। आदिना ()आस जागृ इत्यनयोग्र्रहणम्। ण्यन्तस्येति। प्रत्ययग्रहणपरिभाषया णिग्रहणेन तदन्तग्रहणमिति भावः। ()आयतेरिति। ()इआधातोरित्यर्थः। एदित इति। एत् इद्यस्येति विग्रहः। वृद्धिर्न स्यादिति। "सिचि वृद्धि"रित्यतो, "नेटी"त्यतश्च तदनुवृत्तेरिति भावः। इडादौ सिचीति। "सिचि वृद्धि"रित्यतः सिचीति, "नेटी"त्यत इटीति चानुवर्तत इति भावः। अकटीदिति। एदित्वान्न वृद्धिः। अट पटेति। "अत आदे"रिति दीर्घं मत्वाह--- आटेति। पेटतुरिति। एत्वाभ्यासलोपौ। वटवेष्टने। ववटतुरिति। "न शसददवादिगुणाना"मिति निषेधः। ववटिथेति। अत्र "थलि च सेटी"ति प्राप्तस्य "न शसददे"ति निषेधः। किट खिट त्रास इति। यद्यपि "इट किट कटी गता" विति अग्रे किटधातुः पठ()ते, तथाप्यर्थ भेदात्पुनरिह पाठः। खिट त्रासे,किट गतौ चेति पठितुं युक्तम्। शिट षिटेति। आद्यस्तालव्यादिः। द्वितीयस्तु षोपदेशः। जट झटेति। आद्यस्य अवैरूप्यापादकादेशादित्वादेत्वाऽभ्यासलोपौ। द्वितीयस्य तु न। जेटतुः जझटतुः। णट नृत्ताविति। णोपदेशेः। चुरादारेव नाटेः पर्युदासादयं णोपदेश एव। प्रणटति। इट किट कटी गताविति। "कटे वर्षाऽवरणयो"रिति कटिः पूर्वमेदित्पठितः। इह ईदित्पठ()ते। एदित्त्वाऽभावात् ह्रन्तेति वृद्धिनिषेधो न भवति। अकटीत् अकाटीत्। ननु तर्हि कटेत्येव कुतो न पठ()त इत्यत आह-- ईकार इति। केचित्त्विति। कटि इति ह्यस्वान्तपाठं मत्वा इदित्वान्नुमि कृते अनुस्वारे परसवर्णे च कण्टतीति वदन्तीत्यर्थः। अन्ये त्विति। उदाहरन्तीत्यन्वयः। प्रश्लिष्येति। कटीत्यनन्तरम् इ ई इति धातुद्वयं सवर्णदीर्घेण प्रश्लिष्य निर्दिष्टमिति भावः। अयतीति। इधातोर्लटि शपि गुणेऽयादेशः। इयायेति। णलि द्वित्वे वृद्धौ आयादेशे "अभ्यासस्याऽसवर्णे" इति इयङ्। इयुतिरिति। इकारोऽत्र ह्यस्वः। तथाहि--इ-अतुसिति स्थिते कित्त्वाऽद्गुणाऽभावे "द्विर्वचनेऽची"ति निषेधाद्यणभावे "इ" इत्यस्य द्वित्वे इ इ अ--तुसिति स्थिते सवर्णपरकत्वादभ्यासस्य इयङभावे सति "वार्णादाङ्गं बलीय" इति सवर्णदीर्घं बाधित्वा "एरनेकाच" इत्युत्तरखण्डस्य यणि "इयतु"रिति रूपम्। इधातोर्भारद्वाजनियमात्थलि वेट्। तत्र इट्पक्षे रूपमाह-- इययिथेति। थलि द्वित्वे इटि पित्वेन कित्त्वाऽभावाद्गुणेऽयादेशेऽभ्यासस्य इयङ्। न चाऽचः परस्मिन्निति गुणस्य स्थानिवत्त्वेनाऽसवर्णपरत्वाऽभावात्कथमभ्यासस्य इयङिति वाच्यम्, असवर्णग्रहणसामथ्र्यादेव स्थानिवत्त्वाऽप्रसक्तेः। एवं णलि इयायेत्यत्रापि वृद्धेर्न स्थानिवत्त्वम्। थलि इडभावपक्षे रूपमाह-- इयेथेति। थलि द्वित्वे गुणेऽभ्यासस्येयङ्। अथुसि इयथुः। इयेति। थस्य अकारादेशे द्वित्वे उत्तरखण्डस्य "एरनेकाच" इति यणि रूपम्। "णलुत्तमो वे"ति णित्वपक्षे

आह-इयायेति। द्वित्वे पित्त्वेन कित्त्वाऽभावाद्वृद्धावायादेशेऽभ्यासस्य इयङ्। णित्त्वाभावे आह-- इययेति। द्वित्त्वे पित्त्वेन कित्त्वाऽभावाद्गुणेऽयादेशेऽभ्यासस्येयङ्। वसि मसि च क्रादिनियमान्नित्यमिटि द्वित्वे उत्तरखण्डस्य "एरनेकाच" इति यणि इयिव इयिमेति रूपम्। एता एष्यति अयतु आयत् अयेत्। आशीर्लिङि तु "अकृत्सार्वधातुकयो"रिति दीर्घः। ईयात्। सिचि वृद्धिः। ऐषीत्। ऐष्यत्। दीर्घस्य त्विति। दीर्घस्य ईधातोरित्यर्थः। तस्य लिटं वर्जयित्वा लडादिषु पूर्ववत्। लिटि विशेषमाह-- अयाञ्चकारेति। ईधातोरामि गुणे अयादेशः, अनुप्रयोगश्च। कुडि वैकल्य इति। वैकल्यम् अविवेक इत्याहुः। अपूर्णभावो वा। मुड प्रुड मर्दन इत्यादि। स्पष्टम्। पठधातोर्लिटि अतुसादौ किति एत्वाभ्यासलोपौ। तदाह--- पेठतुरिति। पेठिथेति। पित्त्वेन अकित्त्वेऽपि "थलि च सेटी"त्येत्त्वाभ्यासलौपौ। अपठीत् अपाठीदिति। "अतो हलादेर्लघो"रिति वृद्धिविकल्पः। वठ स्थौल्य इति। स्थौल्यं--स्थूलीभवनम्। "न शसददवादिगुणाना"मित्येत्वाभ्यासलोपनिषेध इति मत्वाह-- ववठतुः। ववठिथेति। दोपधा इति। ष्टुत्वेन डोपधनिर्देश इति भावः। चुदिति। चुड्डधातोः क्विपि हल्ङ्यादिना सुलोपे द्वितीयस्य डस्य संयोगान्तलोपे ष्टुत्वनिवृत्तौ "वावसाने" इति चर्त्वे चुदिति रूपम्। अदिति। अड्डधातोः क्विपि पूर्ववद्रूपम्। कदिति। कड्डधातोः क्विपि रूपम्। इत्यादीति। आदिना जश्त्वेन चुदित्यादिसङ्ग्रहः। एकत्वस्मरणादिति। "शिक्षादा"विति शेषः। गडडि वदनेति। तवर्गान्तेषु गडीति गतम्। परस्मैपदिनः शौटृ गर्व इत्यादयो गताः। तिपृ इति। प्रथमतृतीयाविदुपधौ। द्वितीयचतुर्थौ एदुपधौ। तृतीयचतुर्थौ षोपदेशौ च,तकारस्य ष्टुत्वेन टकारस्य निर्दिष्टतया दन्त्यपरकसादित्वात्। आद्य इति। तिपृधातुरित्यर्थः। भाष्यादावनुदात्तोपदेशेष्वस्य पाठादिति भावः। बभ्रामेति। भाष्यविरुद्धत्वादिति भावः। आद्यस्योदाहरति-- तेपत इति। शपि लघूपधगुणः। तितिप इति। "असंयोगा"दिति कित्त्वान्न गुणः। अथ तितिपिष इत्यत्र "एकाच उपदेश" इति निषेधमाशङ्क्याह--- क्रादिनियमादिति। तेप्स्यत इति। लोडादौ तु तेपतामा, अतेपत, तेपेत। अथाशीर्लिङि सीयुटि सुटि तिप्सीष्टेति रूपं वक्ष्यति। तत्र लघूपधगुणे प्राप्ते--।

तत्त्व-बोधिनी

ह्रन्तलक्षण�आसजागृणिश्व्येदिताम् ११७, ७।२।५

ह्रयन्तलक्षणां अग्रहीत्। टुवम्। अवमीत्। हय गतौ। अहयीत्। क्षणु हिंसायाम्। अक्षणीत्। ()आस प्राणने। अ()आसीत्। जागृ निद्राक्षये। अजागरीत् ण्यन्ते छन्दसि "नोनयतिध्वनयती" त्यादिना चङि निषिद्धे औनयीदिति उदाहरणम्। टुओ()इआ। अ()आयीत्। इडादौ सिचीति। इडादौ किम्?। दह भस्मीकरणे। अधक्षीत्। किट खिट। इट किटेति किटिर्गतौ पठिष्यते। इह पाठस्त्वर्थभेदात्। जट झट। जेटतुः। जझटतुः। इह त्वादेशादित्वादेत्वाभ्यासलोपौ न। खट। "अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन्"। खट्वा। णट नृतौ। प्रणटति। णोपदेशपर्युदासे नाटीति सवृद्धिकनिर्देशेन "नट अवस्यन्दने" इति चौरादिकस्यैव ग्रहणादयं णोपदेश एव। हट दीप्तौ। हाटकं -- सुर्वणम्। "संज्ञायां चे"ति ण्वुल् बाहुलकादस्त्रियामपि। षट। पटाद्यजन्ताट्टाप्।"सटा जटाकेसरयोः"। चिट। "सर्वधातुभ्यः" इतिऔणादिक इन्। चेटिः। "कृदिकारात्--" इति ङीष्। चेटी। विट। इगुपधलक्षणः कः। विटः। इयायेति। द्वित्वे कृते णलि वृद्धौ सत्यामायादेशः। "अभ्यासस्याऽसवर्णे" इति इयङ्। ईयतुरिति। द्वित्वे ककृते "एरनेकाच" इति यणं बाधित्वा अन्तरङ्गत्वात्सवर्णदीर्घः। ततः "अचि श्नुधातु-" इतीयङ्। एकादेशस्य पूर्वान्तवत्त्वेन अभ्यासग्रहणेन ग्रहणात् "अभ्यासस्याऽसवर्णे" इत्यनेनेत्येके। केचित्तु-- "वार्णादाङ्गं बलीयः" इति दीर्घं बाधित्वा यण्। न चेह समानाश्रयत्वं नेति वाच्यम्, अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणौ प्रति स्थानित्वेन तयो समानाश्रयत्वात्। अत एव ईयतुरित्यत्र "इणो यण्" इति यणै ततो "दीर्घ इणः किति" इत्यब्यासस्य दीर्घो विधीयते। अन्यथा सूत्रमिदं निर्विषयं स्यात्, अभ्यासाऽभावादित्याहुः। स्यादेतत्-- णल्थलोस्त्वभ्यासस्येयङ् दुर्लभः, तस्मिन्कर्तव्ये "अचः परस्मिन्-" इति वृद्धिगुणयोः स्थानिवद्भावेन असवण इति प्रतिषेधादिति चेत्। अत्राहुः-- न ह्रेकमुदाहरणं योगारम्भं प्रयोजयति। अन्यथा ह्रभ्यासस्यार्ताविति ब्राऊयात्। एवं चान्तरङ्गत्वात्सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोर्णलि आय, थलि--एथ। इट्पक्षे तु अयिथेति स्यादित्याशङ्कापि न

कार्या, "अब्यासस्याऽसवर्णे" इत्यस्य वैयथ्र्यापत्तेरिति। एता। एष्यति। "अकृत्सार्वेति दीर्घः। ईयात्। ऐषीत्। कुडि। वैकल्यविवेकः। तुड्ट। तोडनं दारणं हिंसनं च। रोड्ट लोड्ट। उन्मादश्चित्तविभ्रमः। गडि वदनैकदेशे। टवर्गीयप्रकरणादिह पाठस्तु उचितः। अन्तत्यादिषु तु "पञ्चैते न तिङ्विषया" इति मतान्तरं बोधयितुं प्रसङ्गादुपन्यस्तः। तिपृ तेपृ।

---

सूत्रम्

काशिका-वृत्तिः

ऊर्णोतेर् विभाषा ७।२।६

ऊर्णोतेरिडादौ सिचि परस्मैपदपरे परतो यिभाषा वृद्धिर् न भवति। प्रौर्णवीत्, प्रौर्णावीत्। विभाषोर् णोः १।२।३ इति अङित्त्वपक्षे वृद्धिविकल्पो ऽयम्। ङित्त्वपक्षे तु गुणवृद्ध्योरभावे उवङ् भवति। प्रौर्णुवीत्।

न्यासः

ऊर्णोतेर्विभाषा। , ७।२।६

नित्यं वृद्धिप्रसङ्गे प्राप्ते विकल्पार्थं वचनम्()॥ "नेटि" ७।२।४ इति प्रतिषेधे प्राप्ते विकल्पार्थमिदमारभ्यते। "अकणीत्(), अकाणीत्()" इति। "अण रण वण कण भण क्वण" (धा।पा।४४४-४४६,४४९,४४७,४५०) इति भ्वादौ पठ()ते। "अरणीत्? अराणीत्()" इति। रणिरपि तत्रैव। "न्यकुटीत्()" इति। "कुट कौटिल्ये (धा।पा।१३६६)। "न्यपुटीत्()" इति। "पुट संश्लेषणे" (धा।पा।१३६७) ननु चात्र कुटादित्वान्ङित्त्वे सति "क्ङिति च" १।१।५ इति प्रतिषेधो भविष्यति, ततो नैतन्नियुयर्थम्? "अतः इत्येतत्? कत्र्तव्यम्()? इत्यत आह--"अत इत्येतस्मिन्नसति" इत्यादि। यदि "अतः" इति नोच्येत, ततोऽवश्यम्? "वदव्रजहलन्तस्याचः" ७।२।३ इत्यनुवत्र्तयितव्यम्(); अन्यथा ह्रनिर्दिष्टस्थानिकत्वादिक एव लघोर्विकल्पेन वृद्धिः स्यात्()--अदेवीदित्यादौ, अकाणीदित्यादौ त्वकारस्य न स्यात्()। अज्ग्रहणानुवृत्तौ तु सत्यामज्लक्षमेयं वृद्धिः स्यात्(), नेग्लक्षणा; निर्द्दिष्टस्थानिकत्वात्()। यत्र हि स्थानी न निर्द्दिश्यते स इग्लक्षणाया वृद्धेर्विषयः, न तु यत्र स्थानो निर्दिश्यते सोऽपि, ततश्च "क्ङिति च" १।१।५ इति प्रतिषेधो न स्यात्(); तत्र "इकः" इत्यधिकारात्()। तस्मान्न्यकुटीत्(), न्यपुटीदित्यत्र विकल्पेन वृद्धिर्मा भूदित्येवमर्थमत इति वक्तव्यम्()। "अतक्षीत्(), अरक्षीत्()" इति। "तक्षू त्वक्षू तनूकरणे" (धा।पा।६५५,६५६), "रक्ष पालने" (धा।पा।६५८)। इह सिच आनन्तर्येऽकारस्य वृद्धिरुच्यते, न क्वचिदनन्तरः सिच्? सम्भवति। तत्र "येन नाव्यवचानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।प।४६) इति व्यवधानेऽपि वृद्ध्या भवितव्यम्()। एवं यथा अकाणीदित्यत्र लघोरकारस्य भवति, तथा अचकासीदित्यत्रापि लघोरकारस्य वृद्ध्या भदितव्यमेव? इत्यनेनाभिप्रायेणाह--"अथेह कस्मान्न भवत्यचकासीत्()" इति। "चकासृ दीप्तौ" (धा।पा।१०७४)। "येन" इत्यादि परीहारः। "हला व्यवधानमाश्रितम्()" इति। हलन्तस्येत्यनुवृत्तेरित्यभिप्रायः। लघोरिति किमिति येनैवं पृष्टम्(), स एवं लघुग्रहणं प्रत्याचिख्यासुराह--"अथ पुनः" इत्यादि। यद्येवं परिकल्प्यते, वचनप्रामाण्यद्धला व्यवधानमाश्रीयते, न त्वचा, "अतो लघोः" इति वक्तव्यम्(), अन्यथा ह्रतक्षीदित्यादावपि स्यात्()? अत्र हि हला व्यवधानम्(), नाचा। अथ पुनरिवं परिकल्प्यते--"येन नाव्यवधानं तेन व्यवहतेऽपि वचनप्रामाण्यात" (व्या।प।४६) इत्येकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेनेति नार्थो लघोरित्यनेनेति, न ह्रेवं परिकल्प्यमानेऽतक्षीदित्यादौ प्राप्नोति यद्यनेकेन वर्णेन व्यवधानम्()? इत्यत आह--"तत्? क्रियते" इत्यादि॥

बाल-मनोरमा

ऊर्णोतेर्विभाषा २८०, ७।२।६

ऊर्णोतेर्विभाषा। "सिचि वृद्धिः परस्मैपदेषु" इत्यनुवर्तते, "नेटी"त्यत इटीति च। तदाह--इडादाविति। आत्मनेपदे तु लुङि

और्णविष्ट और्णुविष्ट। और्णविष्यत्--और्णुविष्यत्। और्णविष्यत--और्णुविष्यत। द्यु इति। अनिट्। द्यौतीति। उतो वृद्धिः। सार्वधातुके लिटि च युधातुवत्। द्योतेति। द्योष्यति। अद्यौषीत्। षु प्रसव इति। षोपेशोऽयम्। अनिट्। सौतीत्यादि द्युदातुवत्। एवं कु शब्दे इतय्पि। ष्टुञ् स्तुताविति। उभयपदी अनिट्। "तुरुस्तुशम्ययः" इति ईड्विकल्पम्, ईडभावपक्षे तु उतो वृदिं()ध च मत्वा आह-- स्तौति स्तवीतीति। स्तुवन्ति। स्तौषि--स्तवीषि, स्तुथः-- स्तुवीथः, स्तुथ-स्तुवीथ। स्तौमि-स्तवीमि, स्तुवःस्तुवीमः। स्तुमः। स्तुवीमः। आत्मनेपदे लटि ईड्विकल्पं मत्वा आह-- स्तुते। स्तुवीते इति। स्तुवाते स्तुवते। स्तुषे--स्तुवीषे स्तुवाथे स्तुध्वे-स्तुवीद्वे।स्तुवे स्तुवहे--स्तुवीवहे स्तुमहे--स्तुवीमहे। लिटि--तुष्टाव तुष्टुवतुः तुष्टुवुः। क्रादित्वात्थल्यपि नेड्भवति। तुष्टोथ तुष्टुवथुः तुष्टुव। तुष्टाव--तुष्टव। तुष्टुव तुष्टुम। तुष्टुवे इत्यादि। स्तोता। स्तोष्यति स्तोष्यते। स्तौतु-- स्तुवीतु, स्तुतात्-- स्तुवीतात्, स्तुताम्--स्तुवीताम्, स्तुवन्तु। स्तुहि--स्तुवीहि, स्तुतात्--स्तुवीतात्, स्तुतम्-स्तुवीतम्, स्तुत-स्तुवीत। स्तवानि स्तवाव स्तवाम। स्तुताम्--स्तुवीताम्, स्तुवाताम्, स्तुवताम्। स्तुष्व--स्तुवीष्व स्तुवाथाम् स्तुध्वम्--स्तुवीध्वम्। स्तवै स्तवावहै स्तवावहै। लङि--अस्तौत्-अस्तवीत् अस्तुताम्-- अस्तुवीताम् अस्तुवन्। अस्तौः-- अस्तवीः, अस्तुतम्-- अस्तुवीतम्, अस्तुत--अस्तुवीत। अस्तवम्, अस्तुव-अस्तुवीव, अस्तुम-अस्तुवीम। अस्तुत-- अस्तुवीत अस्तुवातामित्यादि। विधिलिङि स्तुयात्--स्तुवीयादित्यादि। आत्मनेपदे स्तोषीष्टेत्यदि। लुङि सिचि इडभावे प्राप्ते आह-- स्तुसुधूञ्भ्य इति। तथा च "इट ईटी"ति सिज्लोपे सिचि वृद्धौ अस्तावीदिति फलति। अस्ताविष्टामित्यादि। "स्तुसुधूञ्भ्यः" इत्यत्र परस्मैपदेष्वित्यनुवृत्तेरात्मनेपदे इण्न। अस्तोष्ट अस्तोषातामित्यादि।

तत्त्व-बोधिनी

ऊर्णोतेर्विभाषा २४५, ७।२।६

"सिचि वृद्धि"रिति सूत्रं, "नेटी"त्यत्र इटीति चानुवर्तत इत्याशयेनाह--- इडादावित्यादि। स्तवीतीति। "तुरुस्तुशम्यमःइति ईड्वा। "स्तुसुधूञ्()भ्यः" इत्यत्र परस्मैपदेष्वित्युक्तेरात्मनेपदे तु नेट्। अस्तोष्ट। अस्तोषाताम्।

---

सूत्रम्

काशिका-वृत्तिः

अतो हलादेर् लघोः ७।२।७

हलादेरङ्गस्य लघोरकारस्य इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर् न भवति। अकणीत्, अकाणीत्। अरणीत्, अराणीत्। अतः इति किम्? अदेवीत्। असेवीत्। न्यकुटीत्, न्यपुटीत्, इत्यत्र अतः इत्यस्मिन्नसति स्थानिनिर्देशार्थमचः इत्येतदनुवर्तयितव्यम्। तत्र अज्लक्षणा वृद्धिरिग्लक्षणा न भवति इति क्ङिति च ७।२।११८ इति प्रतिषेधो न स्यात्। हलादेरिति किम्? म भवानशीत्। मा भवानटीत्। लघोः इति किम्? अतक्षीत्। अरक्षीत्। अथ इह कस्मान् न भवति अचकासीतिति? येन नाव्यवधानम् तेन व्यवहिते ऽपि वचनप्रामाण्यातिति हला व्यवधानम् आश्रितम्, न पुनरचापि व्यवधानम् इति वृद्धिर् न भवति। अथ पुनरेकेन वर्णेन व्यवधानम् अश्रीयते न पुनरनेकेन इति कल्पने शक्यमकर्तुं लघोः इति, अतक्षीतित्यत्र अनेकेन व्यवधानम् इति न भविस्यति? तत् क्रियते विस्पष्टार्थम्। इटि इत्येव, अपाक्षीत्।

लघु-सिद्धान्त-कौमुदी

अतो हलादेर्लघोः ४५९, ७।२।७

हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि। अगादीत्, अगदीत्। अगदिष्यत्॥ णद अव्यक्ते शब्दे॥ ७॥

बाल-मनोरमा

अतो हलादेर्लघोः १२८, ७।२।७

अतो हलादेः। "सिचि वृद्धिः परस्मैपदेष्वि"त्यनुवर्तते। "नेटी"त्यस्मादिटीति, "ऊर्णोतेर्विभाषे"त्यतो विभाषेति च। तदाह-- हलादेरिति। हलाद्यङ्गावयवस्येत्यर्थः। आदिग्रहणं स्पष्टार्थं, हलः परस्येत्येव सिद्धेः। अखादीत् अखदीदिति। वृद्धौ तदभावे च इट ईटीति सिज्लोपः। अखादिष्टाम्, अखदिष्टामित्यादि। बदेति। स्थैर्यं--स्थिरीभवनम्। पवर्गीयादिरिति। पवर्गतृतीयादिरित्यर्थः। नतु दन्त्योष्ठ()आदिरिति भाव-। बबादेति। "अत उपाधायाः" इति वृद्धिः। बेदतुरिति। अभ्यासजश्त्वेन आदेशादित्वेऽपि जश्त्वस्य वैरूप्यापादकत्वाऽभावादेत्त्वाभ्यासलोपाविति भावः। बबादेत्यत्र तु पित्त्वेन कित्त्वाऽभावादेत्त्वाभ्यासलोपौ न। बेदिथेति। अकित्त्वेपि "थलि च सेटी"त्येत्वाभ्यासलोपौ। बेदथुः बेद। अथ उत्तमपुरुषणलि "णलुत्तमो वे"ति णित्त्वविकल्पादुपधावृद्धिविकल्प इत्याह-- बबाद बबदेति। बेदिव बेदिम। अबादीत् अबदीदिति। "अतो हलादे"रिति वृद्धिविकल्पः। गदेति। व्यक्तवाक्-- मनुष्यकृतशब्दप्रयोगः। जगादेति। चुत्वजश्त्वे। उपधावृद्धिः। वैरूप्यापादकादेशादित्वादेत्त्वाभ्यासलोपौ न। जगदतुः चगदुरित्यादि।

तत्त्व-बोधिनी

अतो हलादेर्लघोः १०२, ७।२।७

अतो हलादेः। इह "सिचि वृद्धि"रिति सूत्रमनुवर्तते। "नेटी"ति सूत्रादिटीति, "ऊर्णोतेर्विभाषे"त्यतो विभाषाग्रहणं च। तदाह-- इडादावित्यादि। वृद्धिर्वा स्यादिदिति। अतः किम्। अदेवीत्। हलादेः किम्?। मा भवानतीत्। अटीत्। लघोः किम्?। अगर्दीत्। अरक्षीत्। इडादौ किम्?। अपाक्षीत्। परस्मैपदे किम्?। अयतिष्ट। अयतिषाताम्। अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय "येन नावयवधान"मिति न्यायेन यद्येकवर्णव्यवधानमेवाश्रीयते तदा त्वरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति शक्यमकर्तुमित्याहुः। तपरकरणं स्पष्टार्थम्। पवर्गीयादिरिति। दन्त्योष्ठ()आदित्वे तु "शसददे"त्येत्वाभ्यासलोपनिषेधाद्बेदतुः बेदिथेत्यादि न सिध्येदिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

नैड् वशि कृति ७।२।८

वशादौ कृति प्रत्यये परतः इडागमो न भवति। वरमनादौ प्रयोजनम्। ईशिता। ईशितुम्। ईश्वरः। दीपिता। दीपितुम्। दीप्रः। भसिता। भसितुम्। भस्म। याचिता। आचितुम्। याच्ञा। वरमनादौ इत्युदाहरणप्रदर्शनार्थम्, न परिगणनम्। तेन ञमन्ताड्डः इत्येवम् आदावपि हि प्रतिषेधो भवति। अथ तत्र उणादयो बहुलम् ३।३।१ इति समाधीयते? सम्भवोदाहरनप्रदर्शनम् एतत्। कृति इति किम्? रुदिवः। रुदिमः।

लघु-सिद्धान्त-कौमुदी

नेड्वशि कृति ८०३, ७।२।८

वशादेः कृत इण् न स्यात्॥ शॄ हिंसायाम्॥ सुशर्मा प्रातरित्वा॥

न्यासः

नेड्वशि कृति। , ७।२।८

"आर्धधातुकस्येड्वलादेः ७।२।३५ इतीटं वक्ष्यति, तस्य यत्र प्रकृतिलक्षणः परतिषेधो नास्ति तत्रानेन प्रतिषेधः क्रियते। पुरस्तात्? प्रतिषेधकाण्डस्य प्रयोजनं क्रादिनियमसूत्रे ७।२।१३ वक्ष्यति। "ईशिता" इत्यादि प्रत्ययान्तरे त्विटो भावेन "एकाच उपदेशेऽनुदात्तात्()" ७।२।१० इति यः प्रकृतिनिमित्तकः प्रतिषेधस्तदभावमेवाचष्टे। "ई()आरः" इति। "ईश

ऐ()आर्ये" (धा।पा।१०२०), "स्थेशभास" ३।२।१७५ इत्यादिना वरच्()। "दीप्रः" इति। "दीपी दीप्तौ" (धा।पा।११५०), "नमिकम्पि" ३।२।१६७ इत्यादिना रः। "भस्म" इति। "भस भर्सनदीप्त्योः" (धा।पा।११००)। "आतो मनिन्क्वनिब्वनिपश्च" ३।२।७४ इत्यादौ "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति मनिन्()। "याच्ञा" इति। "टु याचृ याच्ञायाम्()" (धा।पा।८६३)। "यजयाच" ७।३।६६ इत्यादिना नङ्()। "वरमनादौ प्रयोजनम्()" इति यदुक्तं तत्र प्ररिगणनत्वमवधार्य य एवं चोदयेत्()--यदि वरमनादाविति परिगणनं क्रियते तदा "षणु दाने" (धा।पा।१४६४), "ञमन्ताड्डः" (पं।उ।१।१०४)--षण्डः, "शमः खः" (पं।उ।१।११३)--शङ्ख इत्यादौ प्रतिषेधो न प्राप्नोतीति--तं प्रति नेदं परिगणनमिति दर्शयितुमाह--"वरमनादावित्युदाहरणम्()" इति। "अथ तत्र" इत्यादि। तत्रौणादिके डप्रत्यये समाधीयेतेति परिगणनपक्षभादि चोद्यं परिह्रियत इत्यर्थः। "सम्बवोदाहरणप्रदर्शनार्थमेतत्()" इति। अत्रापि न परिगणनमेतदिति सम्बध्यते। प्रतिषेधस्य सम्भव उदाह्रियते। यत्र कृति प्रतिषेधः सम्भवति तस्य प्रदर्शनार्थमेतदुक्तं भवति। यत्र वसादौ कृतीद्प्रतिषेधः सम्भवति, तस्य प्रदर्शनार्थं वरमनादावित्युक्तम्(), न पुनरेतत्? परिगणनमिति। "रुरुदिव, रुरुदिम" इति। अत्र कृद्ग्रहणादार्धधातुकस्येटो न भवति प्रतिषेधः॥

बाल-मनोरमा

नेड्वशि कृति ७९१, ७।२।८

नेड्वशि कृति। षष्ठ()र्थे सप्तम्यौ। वशा कृद्विशेष्यते। तदादिविधिः। तदा-- वशादेरिति। सुशर्मेति। शृ()धातोर्मनिन्। प्रातरित्वेति। इण्धातोः क्वनिप्।

तत्त्व-बोधिनी

नेड्वशि कृति ६५६, ७।२।८

सुशर्मेति। सुष्टु शृणातीति वग्रहः। प्रातः एतीति प्रातरित्वा। इणः क्वनिपि "ह्रस्वस्य पिती"ति तुक्।

---

सूत्रम्

काशिका-वृत्तिः

तितुत्रतथसिसुसरकसेषु च ७।२।९

ति तु त्र त थ सि सु सर क स इत्येतेषु कृत्सु इडागमो न भवति। ति इति क्तिङ्क्तिचोः सामन्यग्रहणम्। क्तिच् तनिता। तनितुम्। तन्तिः। क्तिन् दीपिता। दीपितुम्। दीप्तिः। तु सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्। सचिता। सचितुम्। सक्तुः। त्र दाम्नीशसयुयुज इति ष्ट्रन्। पतिता। पतितुम्। पत्रम् वाहनम्। उणादिष्वपि सर्वधातुभ्यः ष्ट्रन्। तनिता। तनितुम्। तन्त्रम्। त हसिमृग्रिण्वा अमिदमिलूपूधुर्विभ्यस्तन्। हसिता। हसितुम्। हस्तः। लविता। लवितुम्। लोतः। पविता। पवितुम्। पोतः। धूर्विता। धूर्वितुम्। धूर्तः। औणादिकस्य एव तशब्दस्य ग्रहणम् इष्यते, न पुनः क्तस्य, हसितम् इत्येव हि तत्र भवति। थ हनिकुषिनीरमिकाशिभ्यः क्थन्। कोषिता। कोषितुम्। कुष्ठम्। काशिता। काशितुम्। काष्ठम्। सि प्लुषिशुषिकुषिभ्यः क्सिः। कोषिता। कोषितुम्। कुक्षिः। सुक् च इषेः। एषिता। एषितुम्। इक्षुः। अशेः क्षरन्। अशिता। अशितुम्। अक्षरम्। क इण्भीकापाशल्यतिमर्चिभ्यः कन्। शलिता। शलितुम्। शल्कः। स वृतृवदिहनिकमिकषिभ्यः सः। वदिता। वदितुम्। वत्सः। तितुत्रतथेष्वग्रहादीनाम् इति वक्तव्यम्। ग्रहादयो ग्रहप्रकाराः, येषाम् इट् क्तिनि दृश्यते। निगृहीतिः। उपस्निहितिः। निकुचितिः। निपठितिः। कृति इत्येव, रोदिति। स्वपिति।

लघु-सिद्धान्त-कौमुदी

तितुत्रतथसिसुसरकसेषु च ८४८, ७।२।९

एषां दशानां कृत्प्रत्ययानामिण् न। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। दंष्ट्रा। नद्ध्री॥

बाल-मनोरमा

तितुत्रतथसिसुरकसेषु च ९६५, ७।२।९

तितुत्रत। ति, तु, त्र, त,थ, सि, सु, सर, क , स एषां दशानां द्वन्द्वः। अत्र "सरे"त्येकम्। ति, -- तन्तिः। "स्त्रिया"मिति क्तिन्। तु- सक्तुः। "तनिगमी"त्यादिना "तु"प्रत्ययः। त्र, -- शस्त्रम्, पत्रम्। "दाम्नी"ति त्रप्रत्ययः। त, --हस्तः। औणादिकस्तप्रत्ययः। क्तप्रत्यये तु हसितमित्येव। थ-- कुष्टम्। औणादिकः क्थप्रत्ययः। सि--कुक्षिः। कुषेरौणादिकः क्सिप्रत्ययः। सु-- इक्षुः। इषेरौणादिकः क्सुप्रत्ययः। सर-- अक्षरम्। अशेः सरन्। कृ शल्कः। शलेः कः। स -- वत्सः। "वदेः सः"। मेढ्रमिति। "मिह सेचने" त्रः। ढत्वध्तवष्टुत्वलोपाः। दंष्ट्रेति। दंशधातोस्त्रः। क्ङित्प्रत्ययाऽभावान्नलोपो न। सूत्रे दशेति शपा नर्देशात् "दंशसञ्जे"ति नलोपः। केचित्तु देशेत्यकार उच्चारणार्थः। नलोपनिर्देशात्क्वचिदन्यस्मिन्नपि प्रत्यये अक्ङित्यपि नलोप इति "दशन दन्ताः" इत्याहुः। नद्ध्रीति। नह्यते अनयेति विग्रहः। चर्मरज्जुः। "नह बन्धने" त्रः। "नहो धः" "झषस्तथो"रिति तस्य धः। षित्त्वाङीष्।

तत्त्व-बोधिनी

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ७८९, ७।२।९

दाम्नी।

तत्त्व-बोधिनी

तितुत्रतथसिसुरकसेषु च ७९०, ७।२।९

मेढ्रमिति। "हो ढः"। धत्वष्टुत्वढलोपाः। दंष्ट्रेति। षित्वेऽपि ङीषिह न भवति, "अनित्यः षितां ङी"षित्युक्तत्वात्। अन्ये त्वजादिपाठाट्टापमाहुः। नद्ध्रीति। "नहो धः" इति धत्वम्। "झषस्तथोर्धोऽधःट इति जश्त्वम्। सूत्रे "दशे"ति नलोपिनो निर्देशो ज्ञापकः-- "क्वचिदकित्यपि दंशेर्नलोपो भवती"ति। तेन दंश दशने इत्यस्माल्ल्युटि "दशना दन्ता" इति सिद्धम्। न च सन्निधानात् ष्ट्रन्येव नलोपः स्यादिति वाच्यम्, "सुनो दन्तदंष्ट्रे"ति निर्देशात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ एकाच ५।१ उपदेशे ७।१ अनुदात्तात् ५।१ नेट् ?

समासः॥

न विद्यते उदात्तः यस्मिन्, ??? अनुदात्तः तस्मात् ॰ बहुव्रीहिः>

अर्थः॥

उपदेशे यः ??? तुरेकात् अनुदात्तश्च तस्मात् इडागमः न भवति

उदाहरणम्॥

दाता, ??? चेता, स्तोता, कर्त्ता, हर्त्ता

काशिका-वृत्तिः

एकाच उपदेशे ऽनुदात्तात् ७।२।१०

उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न भवति। प्रकृत्याश्रयो ऽयं प्रतिषेधः। के पुनरुपदेशे ऽनुदात्ताः? ये तथा गणे पठ्यन्ते, त एव विस्पष्टार्थम् अनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते। अनिट्स्वरान्तो भवति इति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः। अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि। गुणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः। इति स्वरान्ता निपुणं समुच्चितास्ततो हलन्तानपि सन्निबोधत। द्वये एव धातवः, स्वरान्ताः व्यञ्जनान्ताश्च। तत्र सर्वे स्वरान्ताः एकाचः अनुदात्ताः। अवधिष्ट। ॠदन्तम् तरिता, तरीता। ॠतां च वृङ्वृञौ निर्वरिता, निर्वरीता। प्रवरिता, प्रवरीता। श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि श्वयिता। उड्डयिता। शयिता। श्रयिता। गणस्थमूदन्तम् लविता। पविता। उतां च उस्र्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः रविता। प्रस्नविता। क्षविता। प्रोर्णविता। वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् इत्यतिदेशादेकाच्त्वम् ऊर्णोतेरस्ति इति उदात्त उपदिश्यते। यविता। नविता। क्ष्णविता। इति स्वरान्ता निपुणं समुच्चितास् ततो हलन्तानपि सन्निबोधत। शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेसु वसिः प्रसारणी। घसिः प्रकृत्यन्तरम् अस्ति घस्ता। वसिः प्रसारणी वस्ता। प्रसारणी इति किम्? वसिता वस्त्राणाम्। वस निवासे इत्यस्य यजादित्वात् संप्रसारणं विहितम्, न तु वस आच्छादने इत्यस्य। सभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे। आरब्धा। यब्धा। लब्धा। यमिर्यमन्तेष्वनिडेक इष्यते रमिस्च यश्च श्यनि पठ्यते मनिः। नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम्। यन्ता। रन्ता। मन्ता। श्यनि इति किम्? मनुतेः मनिता इत्येव भवति। नन्ता। हन्ता। गन्ता। दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्थो दहतिस्तथा लिहिः। इमे ऽनिटो ऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः। देग्धा। दोग्धा। मेढा। रोढा। वोढा। नद्धा। दग्धा। लेढा। मुक्तसंशयाः इति किम्? तन्त्रान्तरे चत्वारो ऽपरे पठ्यन्ते। सहिमुहिरिहिलुहयः। तत्र सहेर्विकल्पस्तकारादौ, मुहिरपि रधादौ पठ्यते, तेन तौ ससंशयौ सविकल्पौ। इतरौ तु धातुषु न पठ्येते, कैश्चिदभ्युपगम्येते इति स्वरूपेण एव ससंशयौ। दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम्। लिशं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान्। देश्टा। द्रष्ता। दंष्टा। आम्रष्टा, आमर्ष्टा। स्प्रष्टा, स्पर्ष्टा। ॠदुपधानाम् उदात्तोपदेशानां मृजिदृशी वर्जयित्वा अनुदात्तस्य चर्दुपधस्य अन्यतरस्याम् ६।१।५८ इति रमागमविकल्पः। रेष्टा। रोष्टा। क्रोष्टा। प्रवेष्टा। लेष्टा। रुधिः सराधिर्युधिबन्धिसाधयः क्रुधक्षुधी शुध्यतिबुध्यती व्यधिः। इमे तु धान्ता दश ये ऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे। रोद्धा। राद्धा। योद्धा। बन्द्धा। साद्धा। क्रोद्धा। क्षोद्धा। शोद्धा। बोद्धा। व्यद्धा। सेद्धा। बुध्यतिसिध्यत्योः श्यना निर्देशात् न्याय्यविकरणयोर् बुद्धिसिध्योरिड् भवत्येव। बोधिता। सिधिता। निष्ठायामापि प्रतिषेधाभावात् बुधितम्, सिधितम् इत्येव भवति। शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम्। इमान्। दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा। शेष्टा। पेष्टा। शोष्ट। पोष्टा। त्वेष्टा। वेष्टा। श्लेष्ट। तोष्टा। दोष्टा। द्वेष्टा। क्रष्ट। कर्ष्टा। कृषेस्तौदादिकस्य भौवादिकस्य च कृषिकर्षती इति निर्देशः। तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम्। स्वरेण वीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश। तप्ता। तेप्ता। आप्ता। वप्ता। स्वप्ता। लेप्ता। लोप्ता। तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थमेव। इट् त्वनयोः रधादिपाठाद् विकल्पेन भवति। त्रप्ता, तर्प्ता, तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। तुदादिषु तु यौ तृपिदृपी तावुदत्तावेव। स्रप्ता, सर्प्ता। शप्ता। छोप्ता। क्षेप्ता। अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद् यती खिदिम्। तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः। अत्ता। हत्ता। स्कन्ता। भेत्ता। छेत्ता। क्षोत्ता। शत्ता। सत्ता। स्वेत्ता। स्विद्यति इति श्यना निर्देशो ञिष्विदा इत्यस्य ग्रहणं मा भूतिति। उदात्त

एव अयम्। पत्ता। खेत्ता। तोत्ता। नोत्ता। वेत्ता। विद्यति विन्त इत्यपि श्यना श्नमा च निर्देशो ऽन्यविकरणनिवृत्त्यर्थः। वेत्तिविन्दती उदात्तौ एव। वेदिता विद्यानाम्। वेदिता धनानाम्। पचिं वचिं विचिरिचिरञ्जिपृच्छतीन् निजिं सिचिं मुचिभजिभञ्जिभृज्जातीन्। त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान्। पक्ता। वक्ता। विवेक्ता। रेक्ता। रङ्क्ता। प्रष्टा। निर्णेक्ता। सेक्ता। मोक्ता। भक्ता। भङ्क्ता। भ्रष्टा, भर्ष्टा। त्यक्ता। यष्टा। योक्ता। रोक्ता। सङ्क्ता। मङ्क्ता। भोक्ता। परिष्वक्ता। स्रष्टा। मार्ष्टा। मृजिरयमूदित् पठ्यते, ततो ऽस्य विकल्पेन इटा भवितव्यम्। मार्ष्टा, मर्जिता इति, अमागमो ऽप्यस्य न दृश्यते? तदिह पाठस्य प्रयोजनं चिन्त्यम्। केचिदस्य स्थाने विजिं पठन्ति, सृजिं विजिं विद्ध्यनिट्स्वरानिति। निजादिषु यो विजिरसौ अनिडिष्यते। तथा च तन्त्रान्तरे निजिविजिष्वञ्जिवर्जम् इत्युक्तम्। एकाच इति किम्? अवधीत्। वृद्धिनिवृत्त्यर्थमदन्तो विधिरुपदिश्यते। उपदेशग्रहणं किम्? इह च यथा स्यात्, लविष्यति, पचिष्यति। इह च मा भूत्, कर्ता कटान्, कर्तुम् इति।

लघु-सिद्धान्त-कौमुदी

एकाच उपदेशेऽनुदात्तात् ४७७, ७।२।१०

उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न। ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः। वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः॥कान्तेषु शक्लेकः। चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट्। छान्तेषु प्रच्छेकः। जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज् रञ्ज्विजिर्स्वञ्ज्सञ्ज्सृजः पञ्चदश॥ दान्तेषु अद्क्षुद्खिद्छिद्तुद् नुद्पद्यभिद्विद्यतिविनद्विन्द्शद्सद्स्विद्यस्कन्धदः षोडश। धान्तेषु क्रुध्क्षुध्बुध्यबन्ध्युध्रुधाध्व्यध्साध्शुध्सिध्या एकादश। नान्तेषु मन्यहनी द्वौ। पान्तेषु आप्छुप्क्षिप्तप्तिसृप्यदृप्यलिपलुप्वप्शप्स्वप् सृपस्त्रयोदश। भान्तेषु यभ्रभ्लभस्त्रयः। मान्तेषु गम्यम्नम्रमश्चत्वारः। शान्तेषु क्रश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश। षान्तेषु कृष् त्विष्तुष्द्विष्पुष्यपिष्विष्शिष्शुष्श्लिष्या एकादश॥ सान्तेषु घस्वसती द्वौ। हान्तेषु दह्दिह्दुह्नह्मिह्रुह्लिह्वहोऽष्टौ। अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम्।गोपायाञ्चकर्थ। गोपायाञ्चक्रथुः। गोपायाञ्चक्र। गोपायाञ्चकार। गोपायाञ्चकर। गोपायाञ्चकृव। गोपायाञ्चकृम। गोपायाम्बभूव, गोपायामास। जुगोप। जुगुपतुः। जुगुपुः॥

लघु-सिद्धान्त-कौमुदी

ऋद्धनोः स्ये ४९९, ७।२।१०

ऋतो हन्तेश्च स्यस्येट्। हरिष्यति। हरतु। अहरत्। हरेत्॥

न्यासः

एकाच उपदेशेऽनुदात्तात्?। , ७।२।१०

"अनुदात्तात्()" इति। बहुव्रीहिरयम्()--नास्योदात्तोऽस्तीत्यनुदात्तः। अन्वर्थशब्दोऽयमनुदात्तशब्दः। शास्त्रीये ह्यनुदात्ते गृह्यमाण एकवर्णा एव धातवो गृह्येरन्()। तथा चान्येवां धातूनामनुदात्तप्रतिज्ञानमनर्थकं स्यात्()। इह चेकाज्ग्रहममुपदेशविशेषणम्()। "उपदेशे" इति। प्रकृतिपाठ इत्यर्थः। "अनुदात्तश्च" इति। उपदेश इत्यपेक्षते; तेनोपदेशग्रहणमुभयविशेषणमिति दर्शयति। तस्य प्रयोजनं प्रत्युदाहरणेष्वाविष्करिष्यति। "ये तथा गणे पठ()न्ते" इति। एतेन गणपाठादेव ते वेदितव्या इति दर्शयति। "त एव" इत्यादिना द्वितीयं परिज्ञानहेतुमाह। काः पुनस्ता अनिट्()कारिकाः? इत्याह--"अनिट्स्वरान्तः" इत्यादि। यावातन् कश्चित्? स्वरान्तोऽजन्तो धातुः स सर्वोऽनिङ्भवतोत्येतदद्दृश्यताम्(), अवगम्यताम्()। अनिडिति बहुव्रीहिः--नास्मादिडस्तीति। "अनिट्? स्वरान्तः" इत्यस्योत्सर्गस्यापवादमाह--"इमांस्तु" इत्यादि। इमांस्त्वदन्तादीन्? वक्ष्यमाणान्? सेटः प्रवदन्ति। इटा सह वत्र्तन्त इति सेटः। के वदन्ति? तद्विदः सेडनिड्विद इत्यर्थः। "अदन्तम्()" इति बहुव्रीहिः--अकारस्तपरोऽन्तो यसय स तथोक्तः।

तपरकरणं दीर्घनिवृत्त्यर्थम्()। "ॠदन्तम्()" इति। अयमपि बहुव्रीहिः। तपरकरणमसन्देहार्थम्()। रन्तमित्युच्यमाने, किमयं रेफस्य निर्देशः? उत ॠकारस्य? इति सन्देह--स्यात्()। "ॠतां च" इति। ॠतामिति निर्धारणे षष्ठी। ॠकारान्तानां मध्ये वृङ्वृञो सेटौ प्रवदन्ति। तपरकरणं पादपरणार्थम्()। पूर्वमृकारान्तग्रहणागेन हि ह्रस्वस्य ग्रहणमिहावसीयते। "()इआडीङिवर्णेषु" इति। निर्धारणे सप्तमी। इवर्णान्तेषु, मध्ये ()इआडीङौ सेटौ प्रवदन्त। "टु ओ()इआ गतिवृद्ध्योः" (धा।पा।१०१०), "डीङ्? विहायसागतौ" (धा।पा।९६८)। "अथ शीङ्श्रिञावपि" इति। "अथेत्यानन्तर्ये। अनयोः पूर्वक्तयोरनन्तरं शीङ्श्रिञावपि सेटौ प्रवदन्ति। "घीङ्? स्वप्ने" (धा।पा।१०३२), "श्रिञ्? सेवायाम्()" (धा।पा।८९७)। "गणस्थम्()" इति। स्वरूपख्यानमेतत्(), न तु विशेषणम्()--गणनिवृत्त्यर्थमिति; तस्यासम्भवात्()। "ऊन्तम्()" इति। "लूञ्? छेदने" (दा।पा।१४८३), "पूञ्? पवने" (धा।पा।१४८२) इत्येवमादयः। "उत्ताञ्च" इति। निर्धारणषष्ठी। "रु शब्दे" (धा।पा।१०३४), "स्नु प्ररुआवणे"[ष्णु--धा।पा।] (धा।पा।१०३८)। "क्षुवं तथोर्णोतिम्()" इत्यादि। "टु क्षु शब्दे" (धा।पा।१०३६), "ऊर्णुञ्? आच्छादने" (धा।पा।१०३९), "यु मिश्रण" (धा।पा।१०३३), [मिश्रणेऽमिश्रणे च--धा।पा।] "णु स्तुतौ" (धा।पा।१०३५), "क्ष्णु तेजने" (धा।पा।१०३७)। "आवधिष्ट" इति। आङ्पूर्वाद्धन्तेर्लुङ्, "आङोयमहनः" १।३।२८ इत्यात्मनेपदम्(); "आत्मनेपदेष्वन्यतरस्याम्()" २।४।४४ इति वधादेशः। स चावधीदित्यत्र वृद्धिर्मा भूदित्येवमर्थमदन्तः पठ()ते। इट्(), "अतो लोपः" ६।४।४८ इत्यकारलोपः। अथ किमर्थमूर्णोतिरुदात्त उपदिश्यते? इट्प्रतिषेधो मा भूदिति चेत्()? नैतदस्ति; एकाचो हीट्()प्रतिषेध उच्यते, न चास्यैकाचत्वमस्ति? इत्यत आह--"वाच्य ऊर्णोर्णुवद्भावः" इति। "एकाच्त्वम्()" इति। पदान्तस्यापि कुत्वाभावः, कुत्वस्यानित्यत्वात्()। अनित्यत्वं तु "बह्वच्पूर्वपदात्()" ४।४।६४, "अल्पाच्तरम्()" २।२।३४ इति निर्देशाद्वेदितव्यम्()। "इति" इत्येवमर्थः। "निपुणम्()" इति। सम्यगविपरीतमित्यर्थः। क्रियाविशेषणञ्चैतत्()। "समुच्चिताः" इति। उदात्तानुदात्तसङ्कीर्णाद्धातुराशेः पृथग्व्यवस्थिता इत्यर्थः। "ततः" इति। स्वरान्तधातुसमुच्चयनादुत्तरकालम्()। "हलन्तानपि निबोधत", अवगच्छतेत्यर्थः। "शकिस्तु" इत्यादि। "शक्लृ शक्तौ" (धा।पा।१२६१)। "घसिश्च" इत्यादि। ननु चादिं हदिमित्यादेः स्वरूपग्रहणे सति तस्य स्थाने "लुङ्सनोर्थस्लृ" २।४।३७ इति विहितस्य घस्लादेशस्यापि स्यानिवद्भावेनानिट्त्वं सिध्यत्येव, तत्किमर्थं घसिः पृथगुपादीयते? इत्याह--"घसिः प्रकृत्यन्तरमस्ति" इति। अन्यदेव हीदं धात्वन्तरं "घस्लु अदने" (धा।पा।७१५) इत्यदादौ पठ()ते, तस्येदं ग्रहणम्(), न त्वादेशस्य। "प्रसारणी" इति। प्रसारणम्()=सम्प्रसारणम्(), तदस्यास्तीति प्रसारणी। "वसिता" इति। "वस आच्छादने" (धा।पा।१०२३)। "वस निवासे" इत्यस्य सम्प्रसारणं विहितम्()" इति। वाच्यादिसूत्रेण ६।१।१५। एतेन निवासार्थो वसिः प्रसारणी, न त्वाच्छादनार्थं इति दर्शयति। "रभिश्च" इत्यादि। "रभ राभस्ये" (धा।पा।९७४) "यभ मैथुने (धा।पा।९८०) "डु लभष्? प्राप्तो" (धा।पा।९७५)। "यमित्रंमन्तेषु" इत्यादि। "ञम्()" इति ञकारादारभ्य अमो मकारेण प्रत्याहरग्रहणम्()। "यम उपरमे" (धा।पा।९८४), "रमु क्रीडायाम्()" (धा।पा।८५३), "मन ज्ञाने" (धा।पा।११७६), "णम प्रह्वत्वे शब्दे च" (धा।पा।९८१), "हन हिंसागत्योः" (धा।पा।१०१२), "गम्लृ सृप्लृ गतौ" (धा।पा।९८२,९८३)। "श्यनिपठ()ते" इति। श्यन्ग्रहणेन साहचर्यात्? दिवादिर्लक्ष्यते। दिवादौ पठ()त इत्यर्थः। "प्रतिषेधदाचिनाम्()" इति। प्रतिषेधं वक्तुं शीलं येषां ते तथोक्ताः धातव एव ह्नुदात्तलिङ्गानुषक्ताः प्रतिषेधं प्रतिपादयन्तति प्रतिषेधवाचिन उच्यन्ते। अथ वा--इट्प्रतिषेधमात्मविषयमाचार्येण वाचयन्त्यभिधापयन्तीति प्रतिषेधवाचिन इत्युच्यन्ते। एवञ्चात्र सम्बन्धः कत्र्तव्यः--ञमन्तेषु मध्ये ये परतिषेधवाचिनो धातवस्तेषां मध्ये यमिरनिडिष्यते। "रमिश्च" इत्यादि। अथ वा--प्रतिषेधवाचिनामित्यत्र मतेनेत्यध्याहार्यम्()। तत्रैवं सम्बन्ध कत्र्तव्यः--इट्प्रतिषेधवाचिनामाचार्याणां मतेन यमिर्ञमन्तेष्वनिडेक इष्यत इति। "मनुतेः" इति। "मनु अवबोधने" (धा।पा।१४७१) इत्येतस्य तानादिकस्य। "दिहिः" इत्यादि। "दिह उपचये" (धा।पा।१०१५), "दुह प्रपूरणे" (धा।पा।१०१४), "मिह सेचने" (धा।पा।९९२) "रुह जन्मनि प्रादुर्भावे" (दा।पा।८५९), "वह प्रापणे" (धा।पा।१००४), "णह बन्धने" (धा।पा।११६६), "दह भस्मीकरणे" (धा।पा।९९१), "लिह आस्वादने" (धा।पा।१०१६)। "मुक्तसंशयाः" इति। मुक्तः= त्यक्तः संशयो येषु यैर्वा ते

तथोक्ताः। "प्रविभज्य कीर्त्तिताः" इति। सेडनिङ्()विभागेन व्यवस्थाप्य कीर्त्तिता इत्यर्थः। "देग्धा, दोग्धा" इति। "दादेर्धातोर्धः" ८।२।३२ इति धत्वम्(), "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वम्(), "झलां जश्? झशि" ८।४।५२ इति जश्त्वमित्येते विधयः कत्र्तव्याः। "मेढा, "आरोढा" इति। "हो ढः" ८।२।३१ इति ढत्वम्(), पूर्ववद्धत्वम्(), "ष्टुना ष्टुः" ८।४।४० ष्टुत्वम्(), "ढो ढे लोपः" ८।३।१३ इति डलोपः। "वोढा" इति। पूर्ववड्ढत्वादि; "सहिवबोरोदवर्णस्य" ६।३।१११ इत्योत्त्वम्()। "नद्धा" इति। "नहो धः" ८।२।३४ इति धत्वम्(), पूर्ववज्जश्तवम्()। "तन्नान्तरे" इति। आपिशले व्याकरणे। "सहेर्विकल्पस्तकरादौ" इति। "तीषसह" ७।२।४८ इत्यादिना तकारादौ सहेर्विकल्प उक्तः। "मुहिरपि रधादौ पठ()ते" इति। एतेन मुहेरपि "रधादिभ्यश्च" ७।२।४५ इति विकल्पं दर्शयति। "तेन तौ ससंशयौ सविकल्पौ" इति। एतेन विकल्पात्मकेन संशयेन तौ ससंशयौ न तु सन्देहात्मकेनेति दर्शयति। "इतरौ" इति। रिहिलुही। "कैश्चिदभ्युपगम्येते" इति। आपिशलिप्रभृतिभिः। "स्वरूपेणैव ससंशयौ" इति। स्वरूपेणेति स्वभावेन। ससंशयौ=ससन्देहौ। संशयो ह्तर सन्देहे वत्र्तते। सन्देहस्तु--धातुष्वपाठात्()। अथ च कैश्चिदभ्युपगमाच्च। तयोश्चैको हिंसायां वत्र्तमानोऽब्युपगम्यते, अपरस्तु गाध्र्ये। "दिशिं दृशिम्()" इत्यादि। "दिश अतिसर्जने" (धा।पा।१२८३) "दृशिर्? प्रेक्षणे" (धा।पा।९८८), "दन्श दशने" (धा।पा।९८१) "अथो शब्दः पादपूरणे। मृश आमद्र्दने" (धा।पा।१४२५),["आमर्शने"--धा।पा।] "स्पृश संस्पर्शे" ["संस्पर्शने"--धा।पा।] (धा।पा।१४२२) "रुश रिश हिंसायाम्" (धा।पा।१४१९,१४२०), "क्रूश आह्वानेग रोदने च" (धा।पा।८५६), "विश प्रवेशने" (धा।पा।१४२४), "लिश अल्पीभावे" (धा।पा।११७९)। "पुराणगाः" इति। पुराणम्()=व्याकरणम्(), चिरन्तनत्वात्()ष तदगायन्त्यधीयते येते पुराणगाः। "पाठेषु" इति अनिट्कारिकापाठेषु, धातुपाठेषु वा। "नेतरान्()" इति। "स्पश बाधनस्पर्शनयोः" (धा।पा।८८७) इत्येमादीनिति। "देष्टा" इति। व्रश्चादिसूत्रे ८।२।३६ षत्वम्()। "अनुदात्तस्य" ६।१।५८ इत्यादिना मृशिप्रभृतीनामनुदात्तेट्प्रतिषेधादधिकं कथं दर्शयति। "रुधिः सराधिः" इत्यादि। सह राधिना वत्र्तत इति सराधिः। "रुधिर्? आवरणे" (धा।पा।१४३८), "राध साध संसिद्धौ" (धा।पा।११६२,११६३)। "राधोऽकर्मकाद्()वृद्धौ" इति। द्वयोरपि ग्रहणमिष्यते, विशेषाभावात्()। "युध सम्प्रहारे" (धा।पा।११९०), "शुध शौचे" (दा।पा।११९१), "बुध अवगमने" (धा।पा।११७२), "व्यध ताडने" (धा।पा।११८१), "सिधु संराद्धौ"["षिधु"--धा।पा।] (धा।पा।११९२)। "नेतरे" इति। इन्धिप्रभृतयः। "न्याय्यविकरणयोः" इति शब्विकरणयोरित्यर्थः। "बुध बोधने" (धा।पा।८७५), ["बुधिर्()"--धा।पा।] "षिधु गत्याम्()" (धा।पा।४७)["विध"--धा।पा।] इत्येतयोः। "निष्ठायामपि" इत्यादि। अथ कतं बुधेर्भौवादिकस्य प्रति,#एध आशङ्कितः? सिधेरुदित्त्वेन प्रतिषिद्धत्वात्()। "उदितो वा" (७।२।५६) इति कत्वाप्रत्यये विकल्पविधानात्? "यस्य विभाषा" ७।२।१५ इति निष्ठायां प्रतिषेधेन भवितव्यमिति युक्ता प्रतिषेधाशङ्का। बुधेस्तु न किञ्चिन्निष्ठायां प्रतिषेधाशङ्काकारणमस्ति। तस्याप्यस्ति--इह भौवादिकदैवादिकयोर्बुध्योरर्थरूपे समाने, अतश्चार्थरूपसाम्यादुपजातभ्रान्तिः प्रतिपत्ता; एक एवायं धातुः, विकरणद्वयार्थमुभयोर्गणयोः पाठः, तस्य चाद्र्धधातुक इडप्युक्तः, अनेन सूत्रेणेट्प्रतिषेधोऽपीत्येकविषयत्वाद्विधिप्रतिषेधयोः पर्यायप्रतिपत्तो विभाषेट्त्वम्(), अतः "यस्य विभाषा" ७।२।१५ इति निष्ठायां प्रतिषेधे न भवितव्यमिति कैश्चिन्मन्यते। तस्मात्? तन्मतमाशङ्क्येदमुक्तम्()--निष्ठायामपीत्यादि। एवं मन्यते--अन्य एव भौदादिको बुधिर्यस्येङविधिः, अन्यश्च वैवादिको यस्येट्प्रतिषेधः; तस्मात्? भिन्नविषयत्वाद्विधिप्रतिषेधयोर्विभाषेट्त्वं नोपपद्यत इति। अथ सिषेर्निष्ठाया प्रतिषेधाभावः कथमुक्तः, यावतीदिस्वात्? तस्य "उदितो वा" (७।२।५६) इति विभाषेट्त्वात्? "यस्य विभाषा" (७।२।१५) इति निष्ठायां भवितव्यमेव प्रतिषेधेन? एवं मन्यते--सिधेरुदित्त्वमनार्षमेव, यद तस्योदित्त्वं स्यात्(), भ्वादौ पाठोऽनर्थकः स्यात्(); यदनेन साध्यं रूपं तस्य "षिधू शात्रे" (धा।पा।४८) ["शास्त्रे माङ्गल्ये च"--धा।पा] इत्यनेनैव सिद्धत्वात्()। अनुदित्त्वे तु तस्य सिधितमित्येतत्सिद्धयेऽर्थवान्? पाठो भवति। न ह्येतत्? "षिधू शास्त्रे" इत्यतेन सिध्यतीति। ऊदित्त्वेनास्य "स्वरितसूति" ७।२।४४ इत्यादिना विभाषितेटः "यस्य विभाषा" ७।२।१५ इति निष्ठायामिट्प्रतिषेधात्()। तस्माद्? भ्वादिपाठादेव सिद्धे

सिधेरुदित्त्वमनार्षमेव। "शिर्षि पिषिम्()" इत्यादि। "शिष्लृ विशरणे" (धा।पा।१४५१), ["विशेषणे"--धा।पा।] "पिष्लृ सञ्चूर्णने" (धा।पा।१४५२), "शुष शोषणे" (धा।पा।११८३), "पुष पुष्टौ" (धा।पा।११८२), "त्विष दीप्तौ" (धा।पा।१००१)। "जिषु विषु मिषु सेचने" (धा।पा।६९७,६९८,६९९), "श्रिषु श्लिषु प्रषु प्लुषु दाहे" (धा।पा।७०१-७०४)--द्वयोरपि ग्रहणम्()। "तुष तुष्टौ" (धा।पा।११८४), ["प्रीतौ"--धा।पा।(तूष तुष्टो--धा।पा।६७४)] "दुष वैकृत्ये" (धा।पा।११८५), "द्विष अप्रीतौ" (धा।पा।१०१३), "कृष विलेखने" (धा।पा।१२८६)--भौवादिकतौदादिकौ। "पुष्यति" इति। श्यना निर्देशो भौवादिककैयादिकयोर्निवृत्त्यर्थः। शुष्यतिप्रभृतीनां तु वृत्तभङ्गपरिहारार्थः। "क्रष्टा, कर्ष्टा" इति। पूर्ववद्विकल्पेनामागमः। "तपिं तिपिम्()" इत्यादि। "तप सन्तापे" (धा।पा।९८५), "तप ऐश्वर्ये" [दाहे ऐ()आर्ये वा---धा।पा।] (धा।पा।९८४)--द्वयोरपि ग्रहणम्()। "तिपृ तेपृ ष्टेपृ क्षरणार्थाः, (धा।पा।३६२,३६३,३६५), "आप्लृ व्याप्तौ" (धा।पा।१२६०), "टु वपबीजतन्तुसन्ताने" (धापा।१००३),[डु वप बीजतन्तुसन्ताने, छेदनेऽपि--धा।पा।] "ञि ष्वप्? शये" ["ष्वप"--धा।पा।] (धा।पा।१०६८), "लिप उपदाहे" (धा।पा।१४३३), "लुप्लृ छेदने" (धा।पा।१४३१), "तृप पीणने" (धा।पा।११९५), "हप हर्णणमोचनयोः" (धा।पा।११९६), ["हर्षमोहनयो-धा।पा।] "गम्लृ सृप्लृ गतौ" (धा।पा।९८२,९८३)। "स्वरेण नीचेन" इति। अनुदात्तेनेत्यर्थः। "शप आक्रोशे" (धा।पा।१०००), "शप उपालम्भे" ["आक्रोशे"--धा।पा।] (धा।पा।११६८)--उभयोरपि ग्रहणम्()। "छुप स्पर्शे" (धा।पा।१४१८), "क्षिप प्रेरणे" (धा।पा।१२८५)। तृप्यति दृप्यत्योरनुदात्तेत्त्वममागमार्थम्(), "अनुदात्तस्य" ६।१।५८ इत्यादिना पक्षेऽमागमो यथा स्यात्()। इद्प्रतिषेधार्थं कस्मान्न भवति? इत्याह--"इट्? त्वनयोः" इत्यादि। "तुदादिषु यौ तृपिदृपी" इति। "तृप तृम्प तृप्तौ"["तृन्फ"--धा।पा।] (धा।पा।१३०७,१३०८), दृप उपक्लेशे" ["उल्लकेशे--धा।पा।] (धा।पा।१३१३) इत्येतौ। "अदिं हदिम्()" इत्यादि। "अद भक्षणे" (धा।पा।१०११),"हद पुरोषोत्सर्गे" (धा।पा।९७७), "स्कन्दिर्गतिशोषणयोः" (धा।पा।९५९), "भिदिर्? विदारणे" (धा।पा।१४३९), "छिदिर्? द्वैधीकरणे" (धा।श।१४४०), "क्षुदिर्? सम्पेषणे" (धा।पा।१४४३), "शद्लु शातने" (धा।पा।८५५), "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।८५४), "ञि ष्विदा गात्रप्रक्षरणे" (धा।पा।११८८), "पद गतौ" (धा।पा।११६९)। "खिद दैन्ये" (धा।पा।११७०), "खिद परिघाते" (धा।पा।१२८२), "विद सत्तायाम्()" (धा।पा।११८८), "पद गतौ" (धा।पा।११६९), "विद विचारणे" (धा।पा।१४५०)। "ञिष्विदेत्यस्य ग्रहणं मा भूत्()" इति। "ञिष्विदा स्नेहमोचनयोः (धा।पा।७४४) ["स्नेहनमोचनयोः--धा।पा।] इत्यस्य। "अन्यविकरणनिवृत्त्यर्थः" इति। "विद ज्ञाने" (धा।पा।१०६४) इति लग्विकरणस्य, "विद्लृ लाभे" (धा।पा।१४३२) इत्यस्य शविकरणस्य च निवृत्त्यर्थः। "विद वेदनाख्यानविवासेषु" (धा।पा।१७०८) ["चेतनाख्यानविवासेषु"--धा।पा।] इत्यस्य चौरादिकस्यानेकाच्त्वा देवाप्रसङ्गः। "पचिं वचिम्()" इत्यादि। "डु पचष्? पाके" (धा।पा।९९६)। "वच परिभाषणे" (धा।पा।१०६३), "व्रुवो वचिः" २।४।५३ इति च द्वयोरपि ग्रहणम्()। सौत्रोऽप्युपदेशो भवत्येव। "विचिर्? पृथग्भावे" (धा।पा।१४४२), "विचिर्? विवेचने" (धा।१०९४), ["विजिर्? पृथग्भावे"--धा।पा।] "रन्ज रागे" (धा।पा।९९९), "प्रच्छ ज्ञीप्सायाम्()" (धा।पा।१४१३), "णिजिर्? शौचपोषणयोः" (धा।पा।१०९३), "षिचिर्? क्षरणे" (धा।पा।१४३४),["षिच"--धा।पा।] "मुच्लृमोक्षणे" (धा।पा।१४३०), "भज सेवायाम्()" (धा।पा।९९८), "भन्जो आमर्दने" (धा।पा।१४५३), "भ्रस्ज पाके" (धा।पा।१४४४), "युज समाधौ" (धा।पा।११७७)--द्वयोरपि ग्रहणम्()। "रुजो भङ्गे" (धा।पा।१४१६), "षन्ज सङ्गे" (धा।पा।९८७), "टु मस्जो शुद्धौ" (धा।पा।१४१५)। "भुज पालनाभ्यवहारयोः" (धा।पा।१४५४), "भुजो कौटिल्य" (धा।पा।१४१७)--द्वरोरपि ग्रहणम्()। "ष्वञ्ज परिष्वङ्गे" (धा।पा।९७६)। कृतानुनासिकलोपस्य निर्देशो वृत्तभङ्गपरीहारार्थः। "सृज विसर्गे" (धा।पा।१४१४)। "मृजू शुद्धौ" (धा।पा।१०६६) आदादिकः। "मृज शौचालङ्कारयोः" (धा।पा।१८४८) ["मृजू"--धा।पा।] इति चौरादिकोप्यस्ति, सोऽपि यदा "आ धुषाद्वा" (धा।पा।१८०५) अनन्तरम्()) इति णिजनास्त#इ, तदा शक्य एव ग्रहीतुम्()। यदा त्वस्ति, तदाऽनेकाच्त्वादेवेट्प्रतिषेधाप्रसङ्गः। "मृजिरयम्()" इत्यादिनप्रतिषेधार्थतां मृजेरिह निरस्यति। "अमागमोऽप्यस्य" इत्यादि। अनेनामागमार्थताम्()। "तदिह" इत्यादि। यत एव हि प्रयोजनद्वयं न सम्भवति, तत्समादिहास्य पाठे प्रयोजनं

चिन्त्यम्()। तत्र केचिदाहुः--यद्यप्यमागमो न दृश्यते, तथाप्यसौ कत्र्तव्य एव अन्यथा ह्रस्य पाठोऽनर्थकः स्यात्()। न हि यन्न दृश्यते तेन न भवितव्यमेव, अन्यता हि "यथालक्षणमप्रयुक्तेषु" इत्येतद्वचनमप्रयुज्यमानं स्यात्()। अन्ये तु वर्णयन्ति--मृजेनिरुपपदात्(), क्विबन्ताद्विकारावयवविवक्षायां माजं इति "अनुदात्तादेरञ्()" (४।२।४४) इत्यञ्? यथा स्यात्()--इत्येतत्? प्रयोजनमिति; एतच्चायुक्तम्(); एकाच्त्वाद्धि नित्यं मयटा भवितव्यम्()। तथा हि--"नित्यं वृद्धञरादिभ्यः" ४।३।१४२ इत्यत्र नित्यग्रहणं किमर्थम्(), यावताऽऽरम्भसामथ्र्यादेव नित्यं भविष्यति? इति चोदेते, इदमुक्तम्()--"एकाचो नित्यं मयटमिच्छन्तीति तदर्थमेतत्? क्रियते--त्वङ्मयं वाङ्मयम्()" इति। "केचित्()" इत्यादि। केचित्? प्रयोजनमपश्यन्तो मृजेः स्थाने विजिं पठन्ति। किं करणमित्याह--"निजादिषु हि" इत्यादि। "विजिर्? प्रथग्भावे" (धा।पा।१०९४) इति निजादिषु विजिः पठ()ते, स यस्मादनिडिष्यते तस्मान्भृजिमपनीय तस्य स्थाने विजिं पठन्ति। कथं ज्ञायतेऽसावनिडिष्यते? इत्याह--"तथा च" इत्यादि। "तन्त्रान्तरे"["ग्रन्थान्तरे--इति पाठान्तरम्()] इति। आपिशलिष्याकरणे। अथ "सुजिविजी" इत्यस्मिन्? पाठे "ओविजी भयचलनयोः" (धा।पा।१२८९) इत्यस्य ग्रहणं कस्मान्न भवति? ईदित्त्वात्()। तद्ध्येवमर्थं क्रियते--"()आओदितो निष्ठायाम्()" ७।२।१४ इतीट्प्रतिषेधो यथा स्यात्()। यदि च तस्यापीह ग्रहणं स्यादनेनैव सिद्धत्वादीदित्त्वमनर्थकं स्यात्()। "अवधीत्()" इति। "लुङि च" २।४।४३ इति वाधादेशोऽदन्तः। स चानुदत्तस्यादेशः स्थानिवद्भावेनैव भवति। उपदेशेऽनुदात्त एकाच उपदेशो न भवतीति न भवति प्रतिषेधः। कथं पुनरयमेकाज्भवति? इत्याह--"वृद्धिनिवृत्त्यर्थम्()" इत्यादि। यदि हृदन्तो वधिर्नोपदिश्येत, "अतो हलादेर्लघोः" ७।२।७ इति विकल्पेन वृद्धिः स्यात्()। अदन्ते तु सति न भवति, तत्र "येन च्यवधानमाश्रियम्। अदन्तत्वे तु सति वधेरकारलोपस्य पुर्वविधौ स्थानिवद्भावेनापि व्यवधानं भवति, न केवलं हलैव। याऽपि हलन्तलक्षणा वृद्धिः, साऽप्यदन्तत्वे सति न भवत्येव;अकारलोपस्य स्थानिवद्भावादहलन्तत्वात्()। तस्माद्()वृत्त्यर्थमदन्तो वधिरुपदिश्यते। ननु यद्यप्यदन्त उपदिश्यते, तथापि स्थानिवद्भावेनैकाजिति व्यपदेशे सति भवितव्यमेव प्रतिषेधेन? "नतदस्ति; एवं ह्रेकाज्ग्रहणमनर्थकं स्यात्()। तथा हि--जागृदरद्राचकात्प्रभृतीनामुदात्तत्वात्? नैकाज्ग्रहणं ते प्रयोजयन्ति। सनाद्यन्तानां धातूनामुपदेशत्वं नास्ति; लाक्षणिकत्वात्समुदायसय। न चान्योऽनेकाज्? धातुरूपदेशेऽनुदात्तोऽस्ति य एकाज्ग्रहणं प्रयोजयति। न चास्मिन्? व्यपदेशे कत्र्तव्ये स्थानिवद्भावेऽस्ति; अल्विधित्वात्()। "इह च यता स्यात्()" इति। असत्युपदेशग्रहणे" एकाचो धातोरनुदात्तादिडागमो न भवतीत्येव सूत्रार्थः; एवञ्च लविष्यति, पविष्यतीत्यत्रेडागमो न स्यात्()। भवत्यत्र प्रत्ययस्वरे कृते शेषानुदात्तत्वे धातुरनुदात्तः। तथा च--कत्र्ता कटान्(), कर्त्तुमिच्छतीत्यत्र त्विडागमः स्यादेव; तृनि तुमुनि च कृते नित्स्वरेण धातोरुदात्तत्वात्()। उपदोशग्रहणे तु सति तेनाद्यावस्था विशेष्यत इति न भवत्येव दोषप्रसङ्गः। यद्यप्युत्तरकालं लुनातिपुनाती अनुदात्तौ, तथाप्युपदेशावस्थायामुदात्तावेव। तथा यद्यप्यत्तरकालं करोतिरुदात्तः, तथाप्युपदेशवस्थायामनुदात्त एव। अथ बिभिच्छब्दस्य प्रकृतेपाठो नास्ति, नाप्येकाच्त्वम्(); तथापि भिदेस्तूभयमिदमस्ति। "द्विष्प्रयोगो द्विर्वचनम्()" इत्ययमपि तत्र पक्ष आश्रितः, तेन भिदिरेव तत्र द्विरुच्यते, तस्य चोभयविशेषणविशिष्टत्वात्? सिध्यत्येव प्रतिषेधः॥

बाल-मनोरमा

एकाच उपदेशेऽनुदात्तात् ९२, ७।२।१०

अथ लिटि थासः सेभावे "कृ" इत्यस्य द्वित्वादौ एधां च कृ से इति स्थिते "आद्र्धधातुकस्येड्वलादे"रितीडागमे प्राप्ते---एकाच उपदेशे। "ऋत इद्धातो" रित्यतो धातुरित्यनुवर्तते। "नेड्वशि कृती"त्यतो नेति च। तदाह-- उपदेशे यो धातुरेकाजिति। #एकोऽच् यस्येति बहुव्रीहिः। आर्धधातुकस्येति। यद्यपीदं न श्रुतं, नाप्यनुवृत्तलभ्यं, तथाप्यार्थिकमिदम्, आद्र्धधातुकस्यैवेटः प्राप्तेः। वृत्तिग्रन्थे तु आद्र्धधातुकस्येति नोपात्तम्। नन्वेकाच उपदेशेऽनुदात्तादित्यत्र यदि उपदेशे इत्येतदेकाच इत्यत्रान्वेति तदा कर्तु मित्यत्र इण्निषेधो न स्यात्, कृञ्धातोरूद्द()दन्तैरित्यादिनाऽनुदात्तत्वस्य

वक्ष्यमामत्वेऽपि तुमुन्प्रत्यये कृते "ञ्नत्यादिर्नित्य"मित्याद्युदात्तत्वात्। यदि तूपदेशे इत्येतदनुदात्तादित्यनेनान्वेति तदा यद्यपि नायं दोषः, कृते तुमुन्प्रत्यये उदात्तत्वेऽपि दातूपदेशकालेऽनुदात्तत्वेन तत्र इण्निषेधस्य निर्बाधत्वात्तथापि एधांचकृषे इत्यादाविण्निषेधो न स्यात्, द्वित्वे कृतेऽकाच्त्वादित्यत आह--उपदेश इत्युभयान्वयीति। "उपदेश" इत्येतत् "एका"जित्यत्र, "अनुदात्ता" दित्यत्र चान्वेति, मध्यममिन्यायादिति भावः। ननूदृ()दन्तैरित्यादिना परिगणितानामनुदात्तोपदेशधातूनामेकाच्त्वाऽव्यभिचारादेकाज्ग्रहणं मास्तु, उपदेशेऽनुदात्तादित्येवास्तु, #एतावतैव कर्तुं चकृष इत्यादाविण्निषेधसिद्धेरिति पृच्छति--एकाचः किमिति। यङ्लुग्व्यावृत्तिरिति। यङ्लुकि चर्करितेत्यादौ इण्निषेधव्यावृत्तये एकाज्ग्रहममित्यर्थः। ननु कृतेऽप्येकाज्ग्रहणे कथं यङ्लुग्व्यावृत्तिः, श्तिपा शपेत्यादेरुदाहरणानि यङ्लुङ्निरूपणे स्पष्टीभविष्यन्ति। नन्विह एकाज्ग्रहणाद्यङ्लुकीण्निषेधस्य व्यावृत्तावपि श्तिबादिनिर्दिष्टानां यङ्लुकि व्यावृत्तिः प्राचीनाचार्यसंमताऽपि पाणिनेरसंमतैवेत्यत आह-- एतच्चेति। एतत् = श्तपा शपेति श्लोकसिद्धं सर्वमपि, इह = सूत्रे ,एकाज्ग्रहणेनैव एकदेशानुमत्या ज्ञाप्यत इत्यर्थः। ननु "हनो वध लिङि" "लुङि चे"ति आह--अच इत्येकत्वेत्यादि व्यावर्त्यत इत्यन्तम्। "एकाच उपदेशेऽनुदात्ता"दित्यत्र हि एकग्रहणमपनीयाऽच इत्युक्तेऽपि एकाऽच्कादिति लभ्यते, एकवचनोपात्तस्यैकत्वस्य त्यागे प्रमाणाऽभावात्। न चैवं सति एकत्वविशिष्टादचः परस्येत्येव लभ्येत,नत्वेकाच्कादिति बहुव्रीह्रर्थ इति वाच्यम्, अनुदात्तोपदेशेपरिगणने शक्लृपचिमुच्यादीनां परिगणनसामर्थ्येन "अच" इत्यस्य मत्वर्थलक्षणामाश्रित्य एकाज्वतो ग्रहणसंभवात्। तदेवमच इत्यनेनैव एकाच्कादिति सिद्धे यदेकग्रहणं करोति तत्सामथ्र्यादुपदेशे सर्वत्र एकाजेव न तु क()स्मश्चिदप्युपदेशे अनेकाजित्यर्थकल्पनया कदाचिदनेकाच्कोपदेशधातुव्र्यावत्र्यत इत्यर्थ-। तेनेति। उपदेशे सर्वत्र एकाजेवेत्यर्थलाभेन, हन्त्युपदेशे--हनिति स्थान्युपदेशे-- एकाचोऽपि सतो हनिति धातोरादेशस्य वधेः परस्य इण्निषेधो नेत्यर्थ-। कुत इत्यत आह-- आदेशोपदेश इति। "अवधी"दित्यत्र "अतो हलादेर्लघो" रिति वृद्धिनिवृत्तये हनो वधादेशस्य अदन्तताया भाष्ये उक्तत्वादिति भावः। ननु के तेऽनुदात्ता धातव इत्यत आह-- अनुदात्तास्त्वनुपदमेवेति। पदस्य पश्चादनुपदम्। पदमात्रे अतीते सतीत्यर्थः। अनन्तरमेवेति यावत्। एधांचकृषे इति। इडभावे प्रत्ययावयवत्वात्षत्वम्। एधांचक्राथे इति। लिट आथामादेशः। टेरेत्वंद्वित्वादि पूर्ववत्। लिटो धवमष्टेरेत्वे द्वित्वादौ एधाचकृ--ध्वे इति स्थिते।

तत्त्व-बोधिनी

एकाच उपदेशेऽनुदात्तात् ७१, ७।२।१०

उभयान्वयीति। मध्ये पाठाद्देहलीदीपन्यायेन पूर्वोत्तराभ्यां संबध्यत इत्यर्थः। तत्रोत्तरान्वयस्य कर्तुं गन्तुमित्यादाविण्निषेधः फलम्।नित्स्वरेण संप्रत्युदात्तत्वात्। पिपक्षतिबिभत्सतीत्यादाविण्निषेधस्तु पूर्वान्वयस्य फलम्। द्वित्वे कृतेऽनेकाच्त्वात्। नन्वेकाच इत्युक्ते ह्रुपदेशपदेनाऽप्यन्वयः स्वीकर्तव्यस्तदेव मास्तु, उपदेशेऽनुदात्तादित्यनेनैवेष्टसिद्धेरिति शङ्कते- एकाचः किमिति। पिपक्षतीत्यादाविव यङ्लुक्यपीण्निषेधः स्यादेवेत्याशङ्कायायमाह णत्वं न। शपा यथा-- भरेति। तेन बिभर्तेः सनि बिभरिषतीत्यत्र "सनीवन्तर्द"तीड्विकल्पो न, किंतु नित्यमेवेट्। "एकाच" इति निषेधाऽप्रवृत्तेः। अनुबन्धेन निर्देशो द्विधा, स्वरूपेणेत्संज्ञकत्वेन च। स्वरूपेण यथा-- "शीङः सार्वधातुके गुणः", "दीङो युडचि"इति। शेशितः। देयितः। तसि क्तप्रत्यये चेमे क्रमेणोदाहरणे। इत्संज्ञकत्वेन यथा-- "अनुदात्तहितः" इति। तेन स्पर्धशीङादिभ्यः "अनुदात्तङितः" इत्यात्मनेपदं न। पास्पर्धीति। शेशयीति। गणेन यथा-- बेभिदीति। "रुधादिभ्यः" इति श्नम्न। एकाज्ग्रहणं प्रकृतसूत्रे। तेन बेभेदिता चेच्छेदितेत्यादाविण् निषेधो न। एतच्चेति। न च श्तिपा शप#आद्यंशे कथमिदं ज्ञापकमिति शङ्क्यम्, एकादेशानुमतिद्वारा सर्वत्र ज्ञापनस्य "उपपदमति"ङित्यादौ दृष्टत्वात्। अत एव तत्र "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते"रिति सिद्धमित्युक्तम्। अनन्यार्थैः स्यतिहन्तिभरेत्यादिभिः श्तिप्शबादिभिरेव ज्ञापनसंभवाच्च। "अपरस्पराः" इति सूत्रे

सातत्यग्रहणेन एकदेशानुमत्या "लुम्पेदवश्यमः कृत्ये" इत्यादिपूर्वाचार्यश्लोको ज्ञापित इति तु तत्रैवाऽवोचाम। मनोरमायां त्वेकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषाया ज्ञापनस्य "गतिकारकोपपदाना"मित्यादौ दृष्टत्वादित्युक्तं, तदयुक्तमिति नव्याः। "गतिकारकोपपदाना"मित्याद्येव हि पूर्वाचार्याणां परिभाषा। न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति। तद्वत इति। न च मत्वर्थलक्षणायां मानाऽभावः, वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात्। न चेदानीमनुदात्तपाठ परिभ्रष्टः, आधुनिकानां वसतिशल्कित्यादिपाठस्त्वनार्षत्वान्न मानमिति शङ्क्यं, पाणिनिना पठितानामेवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरम्परया सङ्गृहीतत्वात्। अन्यथा एकोऽच् यस्येति बहुव्रीहिलाभार्थमेकग्रहणे कृतेऽप्यनुदात्तपाठस्य परिभ्रष्टत्वाद्वसतिशक्लादयोऽनुदात्ताः, न तु भ्वेधादय इति निर्धारणं न स्यात्। एकग्रहणेति। नन्वेकाज्()ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामथ्र्यादित्यक्तौ परस्परव्याघातः स्यादिति चेत्। अत्राहुः--- एकाच्()शब्देनैकाज्()ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः, किं तु वस्तुगत्यैवैकाज्ग्रहणं, तच्चैकग्रहणं विनैव लभ्यत इत्यदोष इति। वधेरिति। यस्तु तद्व्यावृत्तयेऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना, स एव प्राचाऽनुसृतः। "अदूद्()दन्तरुरुआउक्ष्णुशीयुनुक्षु()इआडीङ्()श्रिभिः। वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः" इति। स चादन्तपर्युदास इहोपेक्षितः। सूत्राननुगुणत्वात्। तथाहि -- "सर्वे सर्वपदादेशाः" इति न्यायेन "कृ"इत्यादेः करित्यादिरादेशस्तस्य यथा स्थान्युपदेशं गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते तथैव वधादेशेऽपि प्रवर्तमानः केन वार्यताम्?। अदन्तपर्युदाससामथ्र्यादिति चेन्न, सूत्रकारेणाऽपर्युदस्तत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

श्र्युकः किति ७।२।११

श्रि इत्येतस्य उगन्तानां च किति प्रत्यये परतः इडागमो न भवति। श्रि श्रित्वा। श्रितः। श्रितवान्। उगन्तानां चयुत्वा। युतः। युतवान्। लूत्वा। लूनः। लूनवान्। वृत्वा। वृतः। वृतवान्। तीर्त्वा। वीर्णः। तीर्णवान्। श्र्युकः इति किम्? विदितः। किति इति किम्? श्रयिता। श्रयितुम्। श्रयितव्यम्। केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्नयन्ति, भूष्णुः इत्येवं यथा स्यात्। सौत्रत्वाच् च निर्देशस्य श्र्युकः किति इत्यत्र चर्त्वस्य असिद्धत्वमनाश्रित्य रोरुत्वं न कृतम् विसर्जनीयश्च कृतः इति। ग्लाजिस्थश्च क्स्नुः ३।२।१३९ इत्यत्र स्था आ इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वान् न किंचिदेतत्। उपदेशे इत्येव, तीर्ण इत्यत्र अपि यथा स्यात्। इत्वे हि कृते रपरत्वे चन स्यात्। मा भूदेवम्। इट् सनि वा ७।२।४१ इति विकल्पे विहिते यस्य विभाषा ७।२।१५ इति निष्ठायां प्रतिषेधो भविष्यति? कस्य पुनः सा विभाषा? ऋतः। यद्येवम् इत्वे हि कृते न अयम् ऋकरान्तो भविष्यति? स्थानिवद्भावाद् भविष्यति। अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम्? तस्मादनुवर्तयितव्यम् उपदेशे इति। तथा च सति जागरितः, जागरितवानित्यत्र अपि प्राप्नोति, तदर्थम् एकाचः इत्यनुवर्तयितव्यम्। ऊर्णोतेस्तु वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थम् एकाचश्चेडुपग्रहात्। प्रोर्णुतः। प्रोर्णुतवान्।

लघु-सिद्धान्त-कौमुदी

श्र्युकः किति ६५३, ७।२।११

श्रित्र एकाच उगन्ताच्च गित्कितोरिण् न। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेध काण्डारम्भ सामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। दुधुविव। दुधुवे। अधावीत्, अधविष्ट, अधोष्ट। अधविष्यत्, अधोष्यत्। अधविष्यताम्, अधोष्यताम्। अधविष्यत, अधोष्यत॥

लघु-सिद्धान्त-कौमुदी

इति स्वादयः ५ ६५३, ७।२।११

लघु-सिद्धान्त-कौमुदी

अथ तुदादयः ६५३, ७।२।११

तुद व्यथने॥ १॥

न्यासः

श्र्युकः किति। , ७।२।११

उदात्तार्थं आरम्भः। "लूनः" इति। "ल्वादिभ्यश्च" ८।२।४४ इति नत्वम्()। "तीर्णः" इति। अत्रापि "रदाभ्याम्()" ८।२।४२ इति। "केचित्()" इत्यादि "ग्लाजिस्थस्च क्स्नुः" (३।२।१३९) इति "भुवश्चेति वक्तव्यम्()" (३।२।१३८) ["भुवश्च"--इति सूत्रम्()] इत्यत्र भवतेः क्स्नुप्रत्यये गिति कृते सति विधीयमानस्वाद्? गितीट्प्रतिषेधो न प्राप्नोति, ततश्च भूष्णुरिति न सिध्येत्()। तस्माद्? भूष्णुरित्यत्रेट्प्रतिषेधार्थं केचित्? ()आभूति--व्याडिप्रभृतयः "श्र्युकः किति" इत्यत्र द्विककारनिर्देशेव हेतुना चत्र्वभूतो गकारः प्रश्लिष्ट इत्येवमाचक्षते। यदि चत्र्वभूतो गकारः प्रश्लिष्टः, एवं सति "ससजुषो रुः" (८।२।६६) इति रुत्वे कृते चत्र्वस्यासिद्धत्वात्? "हशि च" (६।१।११४) इति रोरुत्वेन भवितव्यम्? न तु विसर्जनीयेन, ततश्च "श्र्युकः किति" इति निर्देशो न युज्यते? इत्येतच्चोद्यं निराकर्तुमाह--"सौत्रत्वान्निर्देशस्य" इत्यादि। चत्र्वभूतस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्(), विसर्जनीयश्च कृत इति वर्णयन्ति। किमर्थं पुनस्ते क्स्नुप्रत्येय गित्त्वं प्रतिजानते, यस्मिन्? सतीदं व्याख्यानं कत्र्तव्यं जायते? स्थास्नुशब्दस्य सिद्ध्यर्थम्। एवं हि ते मन्यन्ते--क्स्नोः कित्त्वे सति "धुमास्थागादि" ६।४।६६ सूत्रेण तिष्ठतेरीत्त्वं स्यात्(), ततश्च स्थास्नुरिति न स#इद्ध्येदिति। "ग्लाजिस्थश्च क्स्नु इत्यत्र" इत्यादि। गित्त्वे हि सति क्स्नोरट्प्रतिषेधार्थमेवं व्याख्यायते, न च तस्य गित्त्वम्()। किं तर्हि? कित्त्वमेव। न च कित्त्वे सतीत्त्वं प्रसज्यते, यस्मात्? "ग्लाजिस्थश्च क्स्नुः" ३।२।१३९ इत्यत्र स्था+आ इत्यकारप्रश्लेषः कृतः। तिष्ठतेः क्स्नुप्रत्ययान्तस्याकारान्तस्याकारान्ततैव यथा स्यातद्(), ईकारान्तता मा भूदित्येवमर्थः। आकाराप्रश्लेषे हि सतीत्त्वापवादस्तिष्ठतेराकारादेशो भवति, अतस्तेन बाधित्वादीत्त्वं न प्रवत्र्तते। तदेवं कित्त्वे सत्यकरप्रश्लेषात्? स्थास्नुशब्दस्य सिद्धत्वात्? न किञ्चिदेतत्()। एतद्व्यास्यानमसारमित्यर्थः। "तीर्णम्()" इत्यत्रापि किं पुनः कारणमसत्युपदेशग्रहणेऽत्रि न स्यात्(), यावता तरतिरयमुगन्तः पठ()ते? इत्याह--"इत्त्वे हि" इत्यादि। "ऋत्? इद्धातोः" ७।१।१०० इतीत्त्वे च कृत उगन्तता विहतेत्यसत्युपदेशग्रहणे न स्यात्(), त()स्मस्तु सति भवति। यद्यप्युत्तरकालं तरतिरुगन्तो न भवति, तथाप्युपदेश एव। "मा भूदेवम्()" इत्यादि। चोदकः। "कस्य पुनः" इत्यादोतरः। "ऋतः"["कृतः" इति मुद्रितः पाठः] इति चोदकः। "यद्येवम्()" इत्यादीतरः। "स्थानिवद्भावात्()" इति। अल्विधित्वं पुनरुगिति प्रत्याहारग्रहणात्()। "तस्मात्()" इति। आह--यस्मादेदमसत्युपदेशग्रहणे तीर्ण इत्यत्र प्रतिषेधो न प्राप्नोति, तस्मादुपदेश इत्यनुवत्र्तनीयम्()। "तथा च सति" इत्यादि। उपदेशेऽनुवत्र्तमाने सतीत्यर्थः। "जागरित इत्यत्रापि प्राप्नोति" इति। जागत्र्तेरुपदेशावस्थायामुगन्तत्वात्()। "तदर्थम्()" इति। जागरित इत्यादाविट्प्रतिषेधप्राप्तिनिवृत्त्यर्थम्(); अर्थशब्दस्य निवृत्तिवाचित्वात्()। यदि तर्हि "एकाचः" ७।२।१० इत्यनुवत्र्तते, प्रोर्णुतः, प्रोर्णुतवनित्यत्रेट्प्रतिषेधो न प्राप्नोति; ऊरणोतेरनेकाण्त्वात्()? इत्यत आह--"वाच्य ऊर्णोर्णुवत्()" इत्यादि। अस्याः कारिकायाः पूर्वमेवार्थो व्याख्यात इति न पुनव्र्याख्यायते॥

बाल-मनोरमा

श्र्युकः क्किति २१८, ७।२।११

अत्र इण्निषेधं शङ्कितुमाह-- श्र्युकः क्किति। श्रिश्च उक् चेति समाहारद्वन्द्वात् षष्ठी। उक् प्रत्याहारः। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणतम् उका विशेष्यते। तदन्तविधिः। "एकाच उपदेशे"इत्यत इत्यनुवृत्तमिगन्तेऽन्वेति। "नेड्वशि

कृती"त्यतो नेडिति। क्ङितीति सप्तमी षष्ठ()र्थे। गच् कच् क्कौ, तौ इतौ यस्येति विग्रहः। गकारस्य चर्त्वेन निर्देशः। तदाह-- श्रिञ एकाच इत्यादिना। गकारप्रश्लेषः किम्?। भूष्णुः। "ग्लाजिस्थश्चग्स्नु"रिति चकाराद्भूधातोग्र्स्नुः। तस्य गित्त्वादिण्न। कित्त्वे तु स्थास्नुरित्यत्र "घुमास्थे"ति ईत् स्यात्। इण्न स्यादित्यनन्तरम्-- अनेन निषेधे प्राप्ते इत्यन्वयः। नन्विवयं शङ्का न युज्यते, "श्र्युकः क्किती"ति निषेधं बाधित्वा परत्वात् "स्वरतिसूती"ति विकल्पस्य प्राप्तेरित्यत आह--परमपीत्यादि, सामथ्र्यादित्यन्तम्। पुरस्तात्प्रतिषेधकाण्डारम्भसामथ्र्यात्परमपि स्वरत्यादिविकल्पं बाधित्वा अनेन निषेधे प्राप्ते इत्यन्वयः। "आद्र्धधातुकस्ये"डित्यादिविधिकाण्डात्प्रागेव "नेड्वशि कृती"त्यादि प्रतिषेधकाण्डारम्भसामथ्र्याद"त्स्वरती"ति विकल्पोऽप्यनेन बाध्यते इत्यर्थः। परमपीत्यादिः, प्राप्ते इत्यन्तः शङ्काग्रन्थः। परिहरति-- क्रादिनियमान्नित्यमिडिति। प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एवेत्युक्तत्वादिति भावः। लुटि--स्वरिता स्वर्ता। लृटि स्ये "स्वरती"तिविकल्पं निरस्यति-- परत्वादिति। स्वरतु। अस्वरत्। स्वरेत्। स्वर्यादिति। आशीर्लिङि "गुणोऽर्तिसंयोगाद्यो"रिति गुणः। अस्वारीदिति। "स्वरती"तीट्पक्षे वृद्धिरिति भावः। अस्वार्षीदिति। इडभावे "सिचि वृद्धि"रिति वृद्धिरिति भावः। स्मृचिन्तायामिति। अयमप्यनिट्। स्मरति। लिटि "ऋतश्चे"ति कित्यपि गुणः। णलि तु गुणे उपधावृद्धिः। सस्मार सस्मरतुः सस्मरुः। ऋदन्तत्वाद्भारद्वाजमतेऽपि क्रादिनियमप्राप्तस्य इटस्थलि नित्यनिषेधः। सस्मर्थ सस्मरथुः सस्मर। सस्मार--सस्मर सस्मरिव सस्मरिम। स्मर्ता। लृटि स्ये "ऋद्धनो"रितीट्--स्मरिष्यति। स्मरतु। अस्मरत्। स्मरेत्। आशीर्लिङ "गुणोऽर्ती"ति गुणः--स्मर्यात्। लुङि सिचि वृद्धौ रपरत्वम्--अस्मार्षीत्। अस्मरष्यत्। द्वृ संवरणे इति।अयमपि स्मृधातुवत्। [अस्यैव द्वारमित्यादि]। सृ गताविति। ऋदन्तोऽयमनिट्। सरति। लिटि संयोगादित्वाऽभावादृतश्चेति गुणो न। ससार सरुआतुः। क्रादत्वान्नेडिति। सृधातोः क्राद#इस्थत्वादिति भावः। ससर्थेति। क्रादित्वात्थल्यपि नित्यं निषेध इति भावः। सरुआथुः सरुआ।ससार ससार ससृव ससृम। इत्यपि ज्ञेयम्। सर्ता। लृटि "ऋद्धनो"रितीट्--सरिष्यति। सरतु। असरत्। सरेत्। आशीर्लिङि संयोगादित्वाऽभावात् "गुणोऽर्ती"ति न गुणः। किंतु "रिङ् शयग्लिङ्क्षु" इति रिङित्याह-- रिङिति। रिउआयादिति। रीङि प्रकृतेरिङ्()विधिसामथ्र्यान्न दीर्घ इति भावः। असार्षीदिति। सिचि वृद्धौ रपरत्वम्।

तत्त्व-बोधिनी

श्र्युकः क्किति १९०, ७।२।११

श्र्युकः किति। "एकाच उपदेशे" इत्यत एकाच इत्यनुवर्तते। तच्च उको विशेषणमित्याह-- एकाच उगन्तादिति। श्रितः। श्रितवान्()। श्रित्वा। भूतः। भूत्वा। भूतिः। गित्युदाहरणं-- भूष्णुः। "ग्लाजिस्थश्चे"ति ग्स्नुः। स च गिद्भवति न कित्। स्थास्नुरित्यत्र "घुमास्थे"तीत्त्वप्रसङ्गात्। एकाच इति किम्?। जागरितः। जागरितवान्। ऊर्णोतेस्तु नुवद्भावे--ऊर्णुतः। ऊर्णुतवानिति सिध्यति। उगन्तात्किम्?। शयितः। शयितवान्। पुरस्तादित्यादि। "आद्र्धधातुकस्येड्वलादे"रित्यादि विधिकाण्डात्प्रागेव "नेज्वशि कृती"त्यादिप्रतिषेधकाण्डारम्भसामथ्र्यादित्यर्थः। निषेधे प्राप्ते इति। स्वृतः। सूतः। धूत इत्यादौ यथेति भावः। सृ गतौ। सरति। सरिष्यति।

---

सूत्रम्

काशिका-वृत्तिः

सनि ग्रहगुहोश् च ७।२।१२

ग्रह गुह इत्येतयोः उगन्तानां च सनि प्रत्यये परतः इडागमो न भवति। जिघृक्षति। जुघुक्षति। उगन्तानां च रुरूषति। लुलूषति। सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूउर्णुभरज्ञपि सनाम् ७।२।४९ इति विकल्पविधानात् श्रयतिरत्र न अनुकृस्यते।

ग्रहेर् नित्यं प्राप्तः। गुहेः ऊदित्वाद् विकल्पः।

लघु-सिद्धान्त-कौमुदी

सनि ग्रहगुहोश्च ७१३, ७।२।१२

ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात्। बुभूषति॥

लघु-सिद्धान्त-कौमुदी

इति सन्नन्तप्रक्रिया ७१३, ७।२।१२

लघु-सिद्धान्त-कौमुदी

अथ यङन्तप्रक्रिया ७१३, ७।२।१२

न्यासः

सनि ग्रहगुहोश्च। , ७।२।१२

ग्रहेः सनि चित्यमिटि प्राप्ते गुहेरप्यूदित्वात्? "स्वरति" ७।२।४४ इत्यादिसूत्रेण विकल्पे प्राप्तेऽस्यारम्भः। चकारः "उकः" ७।२।११ इत्यनुकर्षणार्थः। ननु च "इको झल्()" (१।२।९) इत्युगन्तानां किदेव सन्? तत्र पूर्वेणैव प्रतिषेधः सिद्धः किमुक इत्यनुकर्षणार्थेन चकारेण? नैतदस्ति; न हीट्प्रतिषेधमन्तरेण सनो झलादित्वमुपपद्यते, कुतः कित्त्वम्()! अनेन त्विटि प्रतिषिद्धे झलादित्वं सनो जायते, पश्चाद्गुणप्रतिषेधार्थं कित्त्वमिति क्रमः। "जिघृश्रति" इति। "रुदविद" १।२।८ इत्यादिना सनः कित्त्वे सति ग्रह्यादि ६।१।१६ सूत्रेण सम्प्रसारणम्(), "हो ढः" ८।२।३१ इति ढत्वम्(), "षढोः कः सि" ८।२।४१ इति कत्वम्(), "इण्कोः" ८।२।५७ इति षत्वम्(), "एकाचो वशो भष्()" ८।२।३७ इत्यादिना भष्भावेन गकारस्य घकारः, द्विर्वचनम्(), अभ्यासकार्यम्()। "जुधुक्षति" इति। "रुदविद" १।२।८ इत्यादिना सनः कित्त्वे सति ग्रह्यादि ६।१।१६ सूत्रेण सम्प्रसरणम्(), "हो ढः" ८।२।३१ इति ढत्वम्(), "षढोः कः सि" ८।२।४१ इति कत्वम्(), द्विर्वचनम्(), अभ्यासकार्यम्()। "जुघुक्षते" ["जुधुक्षति"--काशिका, पदमञ्जरी च] इति। "गुहू संवरणे" (धा।पा।८९६), "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। "रुरूषति" इति। "अज्झनगमां सनि" ६।४।१६ इति दीर्घः। अथ चकारेण यथेगन्तमनुकृष्यते, तथा चैकयोगनिर्दिष्टः श्रयतिरप्यनुकृष्येत? इत्यत आह--"श्रिस्वृयूर्णुरभज्ञपि" इत्यादि। श्रयतेः "सनीदन्तर्ध" ७।२।४९ इतीटो विकल्पं विधास्यतीत्यतस्तस्येहानुवत्तिरपार्थिकेति नानुकृष्यते।

बाल-मनोरमा

सनि ग्रहगुहोश्च ४३७, ७।२।१२

सनि ग्रहगुहोश्च। चकारात् "श्र्युकः किती"त्यत उक इत्यनुकृष्यते, न तु श्रयतिः, तस्य "सनीवन्तर्धे"ति विकल्पस्य वक्ष्यमाणत्वात्। "नेड्वशि कृती"त्यतो नेडिति स इति स्थिते सनः कित्वात् "ग्रहीज्ये"ति रेफस्य संप्रसारणमृकार इत्यर्थः। ननु गृह् स इति स्थिते हस्य ढत्वे भष्भावापेक्षया परत्वात्कत्वे सस्य षत्वे च कृते झषन्तत्वाऽभावे कथं भष्भाव इत्यत आह-- सनः षत्वस्येति। कत्वस्याऽसिद्धत्वादित्येव सुचवचम्। जिघृक्षतीति। गृह् स इति स्थिते हकारादिणः परस्य षत्वं परत्वात् प्राप्तं, तस्याऽसिद्धत्वात् हस्य ढत्वे भष्भावः, ततः कत्वे कात्परस्य षत्वमिति क्रम इतिभावः। गुहेः जुघुक्षतीत्युदाहार्यम्। उगन्तात् - - बुभूषति। अत्र "श्र्युकः किती"त्यनेन तु न सिध्यति, तत्र कित एव निषेधात्। परत्वादिडागमे "इको झ"लित्यस्याऽप्राप्तेः। स्पष्टं चेदं शब्देन्दुशेखरे। सुषुप्सतीति। सनः कित्वात् "वचिस्वपी"ति संप्रसारणं, लघूपधगुणाऽभावश्च।

तत्त्व-बोधिनी

सनि ग्रहगुहोश्च ३८१, ७।२।१२

सनि ग्रहगुहोश्च। ग्रहेर्नित्यं, गुहेर्विकल्पेन प्राप्ते निषेधोऽयम्। सनः षत्वस्यासिद्धत्वाद्भष्भाव इति। रकुत्वस्याऽसिद्धत्वाद्भष्भाव इत्येव सुवचम्। केचित्तु ढत्वे सति भष्भाव इत्यध्यहारेण योजयन्ति। तथा च जगृह्? स इति स्थिते इणः परत्वेन सस्य षत्वं प्राप्तं,तस्याऽसिद्धत्वाड्ढत्वे भष्भावः। ततश्च कत्वे कवर्गात्परस्य षत्वमिति विधिक्रमः। अन्ये तु षत्वे ढत्वे च कृते पश्चाद्भष्भावे कर्तव्ये सकारपरत्वाऽभावाद्भष्भावो न स्यादित्याशङ्कायां सनः षत्वस्याऽसिद्धत्वादिति ग्रन्थः प्रवृत्त इति कार्याऽसिद्धपक्षावलम्बनेन व्याचक्षते। जिघृक्षतीति। गुहेर्जुघुक्षति। सूत्रे चकारात् "श्र्युकः किती" त्यत उक इत्यनुकृष्यते। उगन्तात्- बुभूषति। लुलूषति। श्रयतिस्तु नाऽनुकृष्यते, तस्य "सनीवन्तर्धे"ति विकल्पविधानात्।

---

सूत्रम्

काशिका-वृत्तिः

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७।२।१३

कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्येतेषां लिटि प्रत्यये इडागमो न भवति। कृ चकृव, चकृम। सृ ससृव, ससृम। भृ बभृव, बभृम। वृञ् ववृव, ववृम। वृङ् ववृवहे, ववृमहे। स्तु तुष्टुव, तुष्टुम। द्रु दुद्रुव, दुद्रुम। स्रु सुस्रुव, सुस्रुम। श्रु शुश्रुव, शुश्रुम। सिद्धे सत्यारम्भो नियमर्थः , क्रादय एव लिटि अनिटः, ततो ऽन्ये सेटः इति। बिभिदिव, बिभिदिम। लुलुविव, लुलुविम। अनुदात्तोपदेशानाम् अत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ्वृङोस्तु प्रत्ययाश्रयः, तदुभयस्य अप्ययं नियमः। वृञो हि थलि ववर्थ इति निपातनाद् व्यवस्था। स्तुद्रुस्रुश्रुवां तु ऋतो भारद्वाजस्य ७।२।६३ इत्यस्मादपि नियमात् य इट् प्राप्नोति सो ऽपि नेष्यते। तुष्टोथ। दुद्रोथ सुस्रोथ। शुश्रोथ। कृञो ऽसुट्कस्य इति वक्तव्यम्। ससुट्कस्य इडगमो यथा स्यात्। सञ्चस्करिव, सञ्चस्करिम। ऋतो भारद्वाजस्य ७।२।६३ इत्येतदप्यसुट्कस्य एव इष्यते, सञ्चस्करिथ।

लघु-सिद्धान्त-कौमुदी

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ४८१, ७।२।१३

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात्॥

न्यासः

कृसृभृवृस्तुद्रुरुआउश्रुवपो लिटि। , ७।२।१३

"सकृव, चकृम" इति। "परस्मैपदानाम्()" ३।४।८२ इत्यादिना वस्मसोर्वमादेशौ। "क्रादय एव" इति। नियमस्य स्वरूपं दर्शयति। "लिट()एव क्रादयोऽनिटः" इत्येष तु विपरीतनियमो नाशङ्कनीयः; "कृतलब्धक्रीतकुशलाः" ४।३।३८ इति "तमधिष्टो भृतो भूतो भावी वा" ५।१।७९ इत्यादिनिर्देशात्()। केन पुनस्तेषामिट्प्रतिषेधः सिद्धः, यतः सिद्धे सत्यारम्भो नियमार्थ उच्यते? इत्यत आह--"अनुदात्तोपदेशानाम्()" इत्यादि। अनुदात्तोपदेशा वृङ्वृञ्भ्यामन्ये करोत्यादयः, तेषामेव "अचः" ७।२।१० इत्यादिना प्रकृत्याश्रयः प्रतिषेधः सिद्धः। वृङ्वृञोस्तु "श्रयुकः किति" ७।२।११ इति प्रत्ययाश्रयः, न तु प्रकृत्याश्रयः; तयोरुदात्तत्वात्()। "तत्()" इत्यादि। यत एव तेषां यथायोगं प्रकृत्याश्रयः प्रत्ययाश्रयश्च प्रतिषेधः सिद्धः, तस्मादुभयस्यापि प्रतिषेधस्य प्रयुक्तस्यायं नियम इत्यर्थः। धात्वन्तरेभ्यो व्यवच्छिद्य करोत्यादीनां प्रतिषेधस्थेह नियमो वेदितव्यः। "कथं पुनरेतद्वृञं प्रति थलि नियमार्थमुपपद्यते? सति हि प्रतिषेधे नियमो भवति। वृञस्थलीट्()प्रतिषधः। तस्य हि नात्र प्रकृत्याश्रयः प्रतिषेधः सिद्धः; उदात्तत्वात्()। नापि प्रत्ययाश्रयः; थलः कित्त्वाभावात्()। तस्मात्? वृञं प्रति

थलीट्प्रतिषेधार्थतैव युक्ता, न नियमार्थता? इत्यत आह--"वृञो हि" इत्यादि। व्यवस्था=नियमः। "बभूथाततन्थजगृम्भववर्थेति निगमे" ७।२।६४ इति निपातनाट्वृञो निगम एव थलीट्प्रतिषेधेन भवितव्यम्(), न भाषायाम्()। यत एवं व्यवस्था तस्मान्नायं वृञस्थलीट्प्रतिषेधः; अन्यथा ववर्थेति निपातनस्य वैयथ्र्यं स्यात्()। तस्मात्? प्रतिषेधाभावात्? वृञोऽप्येतत्? सूत्रं नियमार्थमेव विज्ञायत इत्येकान्त एषः। "स्तुद्रुरुआउश्रुवां तु" इत्यादि। अपिशब्दः आर्धधातुकलक्षणोऽपि य इट्? प्राप्नोति सोऽपि नेष्यत इति दर्शनार्थः। कथं पुनरिष्यमाणोऽपि लभ्यते, पुरस्तात्(), प्रतिषेधकाण्डस्य बलीयस्त्वात्()। इह च "न वृद्भ्याश्चतुभ्र्यः" ७।२।५९ इत्यस्यानन्तरमिदं प्रतिषेधकाण्डं कर्तुं युक्तम्()। एवं द्विष्प्रतिषेधाश्रयणं न कत्र्तव्यं स्यात्()। यदयं पुरस्तात्? प्रतिषेधं करोति, तस्यैतत्? प्रयोजनम्()--इष्मात्रस्यानाश्रितविशेषविधानस्य प्रतिषेधो विज्ञायते, पुरस्तात्? प्रतिषेधे क्रियमाणे सति विशेषमनाश्रित्येण्मात्रस्यायमपवादो भवति। तेन यावानिट्? प्राप्तस्तस्य सर्वस्य प्रतिषेधो भवति सिद्धः। अन्यस्त्वाह--"नेटि" ७।२।४ इत्यनुवत्र्तमाने पुनरिङ्ग्रहणसामथ्र्यात्(), पुनः प्रतिषेधसामथ्र्याच्च इण्मान्नस्य प्रतिषेधो विज्ञायते। "कुञोऽसुट्कस्येति वक्तव्यम्()" इति। करोतेरविद्यमानसुटः षतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्()? ससुट्कस्येडागमो यथा स्यात्()। तत्रेदं व्याख्यानम्()--"द्वन्द्वे घि" (२।२।३२) इत्यनेन स्तुप्रभृतीनामन्यतमस्य घिसंज्ञकस्य पूर्वनिपातमकृत्वैतत्? सूचितम्()--यतेह पूर्वनिपातलक्षणं व्यभिचरति स्वविषये न प्रवत्र्तते, तथेदमपीति। तेन यदा करोतिः ससुट्कः, तत्र न प्रवत्र्तत इति। "सञ्चस्करिव, सञ्चस्करिम" इति। "सम्पर्युपेभ्यः करोतौ भूषणे" ६।१।१३२ इति सुडित्यनुवत्र्तमाने "अडब्यासव्यवायेऽपि" ६।१।१३१ इति सुट् क्रियते। "ऋतो भारद्वाजस्य ७।२।६३ इत्येतदप्यसुयट्कस्यैवेष्यते" इति। "कृञः" इति सम्बध्यते। कथं पुनरसुट्कस्यैव भवतीति लभ्यते? यथा लभ्यते तच्च श्रूयताम्()--तत्र हि "उदितो वा" ७।२।५६ इत्यतो वेत्यनुवत्र्तते मण्डूकल्पुतिन्यायेन, सा च व्यवस्थितविभाषा, तेनासुट्कस्यैव भवतीति॥

बाल-मनोरमा

कृसृभृवृस्तुद्रुरुआउश्रुवो लिटि १३६, ७।२।१३

कृसृ। कृ सृ भृ वृ स्तु द्रु रुआउ श्रु इत्यष्टानां समाहारद्वन्द्वात्पञ्चमी। लिटीति षष्ठ()र्थे सप्तमी। "नेड्वशि कृती" त्यतो नेति इडिति चानुवर्तते। तदाह--एभ्य इति। ननु "एकाच उपेदशेऽनुदात्ता"दिति, "श्र्युकः किति" इति च सिद्धे किमर्थमिदं सूत्रमित्यत आह---क्रादीनामिति। कृ सृ भृ वृ इत्येतेषामित्यर्थः। नियमस्वरूपमाह--- प्रकृत्याश्रय इत्यादि। कृ सृ भृ इत्येषां त्रयाणामनुदात्तोपदेशान्तर्भूतानामेकाच उपदेश इति यः प्रकृत्याश्रयो निषेधः, यश्च वृधातोः "श्र्युकः किती"ति पत्र्ययाश्रयो निषेधः, तदुभयमपि यदि लिटि स्यात्तर्हि कृसृभृवृ इत्येभ्य एव परस्य लिटो भवति, नतु तदन्येभ्यः परस्येत्यर्थः। तेन बिभिदिव बिभिदिमेत्यादौ "एकाच उपदेशे" इति निषेधः, बभूविव बभूविमेत्यादौ "श्र्युकः किती"ति निषेधश्च न भवति। अथ स्तुद्रुरुआउश्रुवां ग्रहणस्य प्रयोजनमाह---- तत इति। "अन्येषा"मिति शेषः। चतुर्णामिति। "ग्रहम"मिति शेषः। ततः = तेभ्यः कृसृभृवृ इत्येभ्यः-- अन्येषां स्तुद्रुरुआउश्रुवां ग्रहणं थलि तुष्टोथ दुद्रोथ सुरुआओथ शुश्रोथ इत्यत्र "ऋतो भारद्वाजस्ये"ति वक्ष्यमामेन "ऋदन्तस्यैव थलि नेट् अन्यस्य तु स्यादेवे"ति नियमेन प्र#आप्तस्य इटो निषेधार्थम्, तथा तुष्टुव तुष्टुमेत्यादौ "कृसृभृवृ" इत्युक्तेन "क्रादिभ्य एव परस्य लिट इण्निषेधः, अन्येभ्यस्तु परस्य इट् स्यादेवे"ति नियमेन प्राप्तस्य इटो निषेदार्थं चेत्यर्थः। तदेवमजेस्थलि वीभावे "एकाचः" इति निषेधाऽभावादिडागमो निर्बाध इति स्थितम्।

तत्त्व-बोधिनी

कृसृभृवृस्तुद्रुरुआउश्रुवो लिटि १११, ७।२।१३

कृसृभृ। "डुकृञ् करणे"। "कृञ् हिंसायाम्"। इह निरनुबन्धग्रहणादेकानुबन्धद्वयनुबन्धयोरुभयोग्र्रहणम्। एवमग्रेऽपि "भृञ् भरणे" "डुभृञ् धारणपोषणयो"रित्युभयोग्र्रहमम्। "सृ गतौ"। "वृङ् संभक्तौट। "वृञ् वरणे"। इह निरनुबन्धकग्रहणाद्भिन्नानुबन्धयोरप्युभयोग्र्रहणम्। कृ सृ भृ एषामनुदात्तत्वात् "एकाच उपदेश" इति प्रकृत्याश्रये निषेधे प्राप्ते, वृङ्वृञोस्तूदात्तत्वात् "श्र्युकः किती"ति प्रत्ययाश्रये निषेधे प्राप्ते नियमोऽयमित्याह-- क्रादीनां चतुर्णामिति। इह स्तुद्र्वादीनां चतुर्णां ग्रहणस्य भारद्वाजनियमप्रापितेण्णिषेधोऽपि प्रयोजनमिति बोधयितुमष्टानां ग्रहणमिति नोक्तम्। इण्णिषेध इति। "नेड्वशी"ति प्रक्रमान्नञा प्रापितस्यैवाऽभावस्य नियमो न तु विभाषाबलभ्यस्यापि। "अनन्तरस्ये"ति न्यायादपि संनिहितस्यैव नियम उचितः। तेन-- सिषेधिथ। सिषेद्ध। सिषिधिव। सिषिध्व इत्याद्युभयं भवति। नान्येभ्य इति।तेन पेचिव, बभूविवेत्यादि सिद्धम्। नचैवं क्रादिनियमेनैव "नेड्वशि कृती"ति निषेधस्याप्यप्रवृत्तौ सेदिवान् जक्षिवानित्यादि सिध्यत्येवेति "वस्वेकाजाद्धसा"मितीड्विधानं किमर्थमिति शङ्क्यं, तस्य नियमार्थत्वेन व्याख्यास्यमानत्वात्। अन्यथा बभूवानित्यत्रापीडागमः स्यादिति। नन्विह "क्रादिभ्यश्चेदिण्न स्यात्तर्हि लिट()एवे"ति विपरीतनियमः किं न स्यात्। तथा च कर्ता अकार्षीदित्यादाविडागमः स्यादिति चेत्। मैवम्। "कृते ग्रन्थे", "तमधीष्टो भृतः", परिवृतो रथः" इत्यादिनिर्देशविरोधापत्तेः। वमादिष्विति। आदिशब्ेदन सेध्वेवहिमहीनां ग्रहणम्। तुष्टुध्वे। तुष्टुवहे। तुष्टुमहे इत्यादि। स्यादेतत्-- अस्तु प्रकृत्याश्रयनिषेधस्य नियमः, प्रत्ययाश्रयस्य तु न संभवति, वृग्रहमस्य ववर्थेत्यत्राऽप्राप्तनिषेधप्रापकत्वात्। न ह्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति, थलोऽकित्त्वात्। नापि प्रकृत्याश्रयः , वृञ उदात्तत्वात्। न चैवम्पि वृङो नियमार्थत्वमस्त्विवति वाच्यं, तस्य विशिष्याऽग्रहणात्। यद्यपि विशिष्य ग्रहणे वृञोऽपि नास्ति, तथाप्यप्राप्तनिषेधप्राप्तिफलकत्वाद्वृ इति वृञ एव ग्रहणं भवेत्। विदिनियमयोर्विधिरेव ज्यायानिति न्यायात्। एवं च बभूविवेत्यादौ "श्र्युकः किती"ण्णिषेधो दुर्वार इति चेत्। अत्राहुः-- "बभूथाततन्थजगृजगृम्भववर्थेति निगमे" इति सूत्रेण छन्दसि ववर्थेति निपातनाद्भाषायां वृञस्थल इटः स्वीकर्तव्यतया वृग्रहणस्य थल्विषयत्वाऽयोगात्, वमादीनां च कित्त्वन नियमस्य सुस्थत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

श्वीदितो निष्थायाम् ७।२।१४

श्वयतेः ईदितशनिष्थायाम् इडागमो न भवति। शूनः। शूनवान्। ईदितः ओलजी लग्नः। लग्नवान्। ओविजी उद्विग्नः। उद्विग्नवान्। ओदितश्च ८।२।४५ इति निष्थातकारस्य नकारः। दीपी दीप्तः। दीप्तवान्। डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य। स हि नत्वार्थः, नत्वं च निष्थातो ऽनन्तरस्य विधीयते। उड्डीनः। उड्डीनवान्। निष्ठायाम् इत्यधिकारः आर्धधातुकस्य इड्वलादेः ७।२।३५ इति यावत्।

न्यासः

�आईदितो निष्ठायाम्?। , ७।२।१४

"शूनः" इति। वच्यादि ६।१।१५ सूत्रेण सम्प्रसारणम्(), "हलः" ६।४।२ इति दीर्घः। "लग्नः" इति। नत्वस्यासिद्धत्वात्? "चोः कुः" ८।२।३० इति कुत्वम्()। "उड्डीनः" इति। "ङिङ्? विहायसा गतौ" (धा।पा।११३५)। "ननु डीङ उदात्तत्वान्निष्ठायामिट् प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः; हि उड्डयित इत्यनिष्टं रूपं स्यादिति यो मन्येत, तं प्रत्याह--"डीङः" इत्यादि। "ओदिताम्()" इति। स्वादीनामित्यर्थः। "स्वादय ओदितः" इति वचनात। स्वादयः "षूङ्? प्राणिगर्भविमोचने" (धा।पा।१०३१) इत्यादयः। कथं कृत्वा ज्ञापकः? इत्याह--"स हि" इत्यादि। स्वदीनां ह्योदितां मध्ये तस्यैवमर्थः पाठः--निष्ठातकारस्यौदित उत्तरस्य नत्वं यथा स्यात्()। स्यादेतत्()--इट()पि कृते नत्वं भविष्यति?

इत्याह--"नतवं च" इत्यादि। "तस्मादित्युत्तरस्य" १।१।६६ इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थस्यानुवृत्तेरोदितो धातोरनन्तरस्य निष्ठातकारस्य नत्वं विधीयते। तत्र यदि डीङ परस्या निष्ठाया इट्? स्यात्(), तदा सत्यप्योदित्त्वे इटा व्यवहितत्वान्नत्वेन न भवितव्यम्()। नित्योदितां मध्ये तस्य पाठोऽनर्थकत्वान्न कृतः स्यात्(), स चास्ति; तस्मात्? स एव पाठो ज्ञापकः? नैतदस्ति; एवं ह्यानन्तर्यपरिभाषा बाधिता भवति, शास्त्रं चानिष्टं स्यात्(), एतच्चायुक्तम्(); न ह्यनिष्टार्था शास्त्रे प्रक्लृप्ति(भो प।सू।१०७) रस्ति। तस्माद्यथानन्तर्यपरिभाषा न बाध्यते शास्त्रञ्च नानिष्टं भवति, ओद#इतां मध्ये डीङ पाठश्च सफलो भवति--स प्रकरोऽभ्युपगन्तव्यः। ततश्चौदितां मध्ये डीङः पाटो ज्ञापक एव। अपरः प्रकारः--"ओदितश्च" ८।२।४५ इत्यत्रौदित इत्येतद्()द्विरावत्र्तयिष्यते "तस्मादित्युत्तरस्य" १।१।६६ इत्यस्याः परिभाषाया द्विरुपस्थानार्थम्(), तत्रास्या यद्()द्वितौयमुपस्थानं तस्यैतत्? प्रयोजनम्()--डीङोऽप्यनन्तरस्यैव निष्ठातकारस्य नत्वं यथा स्यादिति। यदि च डीङो निष्ठायामिट्? स्यात्? इटा व्यवहितत्वान्नत्वं न स्यात्()। न च शक्यते वक्तुम्()--व्यवधानेऽपि पाठसामथ्र्याद्भविष्यतीति। एवं हि परिभाषाया द्विरुपस्थानमनर्थकं स्यात्? एतच्चायुक्तम्(); तस्मादोदितां मध्ये डीङः पाठो ज्ञापक एव। ()इआग्रहणं शक्यमकर्तुम्(), ओदित्करणादेव निष्ठायामिण्न भविष्यति, ओदित्त्वं हि नत्वार्थं क्रियते, नत्वं च निष्ठातोऽनन्तरस्य विधीयते; यदि च ततः परस्या निष्ठाया इट्? स्यात्? ओदित्त्वमनर्थकं स्यात्()? वैचित्र्यार्थं ()इआग्रहणं वेदितव्यम्()॥

बाल-मनोरमा

�आईदितो निष्ठायाम् ८४५, ७।२।१४

()आईदितो निष्ठायाम्। ()इआ, ईदित् अनयोः समाहारद्वन्द्वात्पञ्चमी। "नेड्वशी"त्यतो नेडित्यनिवर्तते। तदाह---()आयतेरिति।

---

सूत्रम्

काशिका-वृत्तिः

यस्य विभाषा ७।२।१५

यस्य धातोः विभाषा क्वचिदिड्डक्तः तस्य निष्ठायां परतः इडागमो न भवति। वक्ष्यति स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४। विधूतः। विधूतवान्। गुहू गूढः। गूढवान्। उदितो वा वृधु वृद्धः। वृद्धवान्। तनिपतिदरिद्राणाम् उपसङ्ख्यानम् इति पतेर् विभाषितेट्कस्य अपि द्वितीयाश्रितातीतपतित २।१।२३ ति निपातनातिडागमः।

न्यासः

यस्य विभाषा। , ७।२।१५

"विधूतः" इति। "धूञ्? कम्पने" (धा।पा।१८३६) "गूढः" इति। "गूहू संवरणे" (धा।पा।९८६)। ढत्वादिषु कृतेषु "ढ्रलोपे" ६।३।११० इत्यादिना दीर्घः। अतेह कस्मात्? प्रतिषेधो न भवति--पतित--पतित इति, भवति हि पतिर्विभाषितेट्? "सनीवन्तर्ध" (७।२।४९) इत्यत्र "तनिपतिदरद्राणामुपसंख्यानम्()" इति विकप्लेनोपसंख्यानात्()? इत्यत आह--"द्वितीयाश्रित" इत्यादि॥

बाल-मनोरमा

यस्य विभाषा ८३४, ७।२।१५

यस्य विभाषा। यस्येति। यस्मादित्यर्थः। निष्ठाया इण्न स्यादिति। "()आईदितः" इत्यतो निष्ठायामिति, "नेड्वशी"त्यतो नेडिति चानुवर्तत इति भावः। नन्वञ्चेर्नित्यं सेट्कत्वात् कथं तस्य क्वचिद्वेट्कत्वमित्यत आह-- उदितो वेति। समन्क

इति। सङ्गत इत्यर्थः। संपूर्वादञ्चुधातोः क्तः। "आद्र्धधातुकस्ये"डिति प्राप्तस्य इटो निषेधः। "अनिदिता"मिति नलोप-। चस्य कुत्वम्। उदक्तमुदकं कूपादिति। उद्धृतमित्यर्थः। अत्राऽपादानसमभिव्याहारसत्त्वान्नत्वं नेति भावः। "ओ व्रश्चू छेदने" सस्य श्चुत्वेन निर्देशः, अस्मात्क्तः, "ग्रहिज्ये"ति संप्रसारणम्, ऊदित्त्वेन वेट्कत्वादिह "यस्य विभाषे"ति नेट्, चस्य कुत्वेन कः, "ओदिश्चे"ति निष्ठानत्वं, तस्याऽसिद्धत्वेन झल्परत्वात् "स्को"रिति सलोपः णत्वम्। वृक्ण इति रूपमिति स्थितिः। तत्र नत्वस्याऽसिद्धत्वेन झल्परत्वात् "व्रश्चे"ति षत्वं स्यादित्यत आह-- निष्ठादेशः षत्वेति। तथा च "व्रश्चभ्रस्जे" ति षत्वे कर्तव्ये नत्वस्याऽसिद्धत्वाऽभावेन झल्परकत्वाऽभावान्न षत्वमित्यर्थः। स्वरप्रत्ययेड्विधिषूदाहरणानि भाष्ये स्पष्टानि।

तत्त्व-बोधिनी

यस्य विभाषा ६८३, ७।२।१५

यस्य विभाषा। यस्येत्याद्र्धधातुकापेक्षया षष्ठी। यदीयस्याद्र्धधातुकस्येत्यर्थः। समक्न इति। अञ्चु व्यक्ती"त्यस्य,न त्वञ्चेः। तेनात्र न्तवाऽबावः। वृक्ण इति। ओव्रश्चू छेदने। "ग्रहिज्ये" ति संप्रसारणम्। नत्वस्याऽसिद्धत्वात् "स्को"रिति सलोपः, "चोः कुः" इति कुत्वं च। ऊदित्वेन वेट्कत्वात् "यस्य विभाषे"ति निषठाया इडभावः। नुड्विधिलादेशविनामेषु वर्णैकदेशस्यापि वर्णत्वेन ग्रहणादृकारैकदेशो रेफो निमित्तमिति "अट्कुप्वा"ङिति नस्य णत्वम्। णत्वस्य "विनाम" इति प्राचां संज्ञा। "ऋवर्णान्नस्य णत्व"मिति यथाश्रुतपक्षेऽपि णत्वनिषेधार्थं क्षुभ्नादिषु नृमनशब्दपाठादृकारं निमित्तीकृत्याऽपि "अट्()कुप्वा" ङिति णत्वं भवत्येवेति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

आदितश् च ७।२।१६

आदितश्च धतोर् निष्थायम् इडागमो न भवति। ञिमिदा मिन्नः। मिन्नवान्। ञिक्ष्विदा क्ष्विण्णः। क्ष्विण्णवान्। ञिष्विदा स्विन्नः। स्वन्नवान्। कारो ऽनुक्तसमुच्चयार्थः। आश्वस्तः। वान्तः। योगविभागकरणं किमर्थम्, आदितश्च विभाषा भावादिकर्मणोः इत्येवं पठितव्यम्, अन्यत्र हि भावादिकर्मभ्याम् यस्य विभाषा ७।२।१५ इति प्रतिषेधो भविष्यति? ज्ञापनार्थम् एतत्। ज्ञापयति यदुपाधेर् विभाषा तदुपाधेः प्रतिषेधः इति। तेन विभाषा गमहनविदविशाम् ७।२।६८ इत्यत्र विदेर्लाभार्थस्य विभाषा इति ज्ञानार्थस्य प्रतिषेधो न भवति। विदितः। विदितवान्।

न्यासः

आदितश्च। , ७।२।१६

भावादिकर्मणोरनन्तरं विभाषां वक्ष्यति, ततोऽन्यत्र कत्तरि कर्मणि चायं प्रतिषेधो विज्ञायते। "आ()आस्तः" इत। "()आआस प्राणने" (धा।पा।१०६९)। "वान्तः" इति। "टु वम अद्गिरणे" (धा।पा।८४९)। "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घः। "योगविभागकरणं किमर्थम्()" इति। पृष्टस्य "आदितश्च विभाषा भावादिकर्मणोः" इति। यद्येकयोगः क्रियते, ततो भावादिकर्मभ्यामन्यत्र प्रतिषेधो न स्यादिति प्रतिवचनमात्रङ्क्याह--"आदितश्च" इत्यादि। "आदितश्च विभाषा भावादिकर्मणोः" इत्येकयोगे भावादकर्मणोर्विभाषायां विहितायां ततोऽन्यत्र कत्रादौ "यस्य विभाषा" ७।२।१५ इति प्रतिषेधो भविष्यति, तस्मादपार्थक योगविभागकरणम्()। "ज्ञापनार्थम्()" इत्यादिनाऽपार्थकत्वं परिहरति। "यदुपाधेर्विभाषा तदुपाधेः" इति। उभयत्रापि बहुव्रीहिः। उपाधिः=विशेषणम्()। स चैतदर्थं उपाधिर्विज्ञ्नेयः। यदि यदुपाधार्विभाषा तदस्योपाधेरपि प्रतिषेधः स्यात्(), तदा योगविभागां न कुर्यात्()। एकयोगेनापि भावादिकर्मणोर्विहिते

विकल्पे ततोऽन्यत्र "यस्य विभाषा" ७।२।१५ इति प्रतिषेधो लभ्यत एव, कृतश्च योगविभागः, तस्मादेतेन योगविभागकरणेन सूचितम्()--यदुपाधेर्विभाषा तदुपाधेर्निषेध इति। "तेन" इत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। अत्र विदेर्लाभार्थस्य विभाषेति विशिना तौदादिकेन साहचर्याल्लाभार्थस्य तौदादीकस्य ग्रहणम्()। "यस्य विभाषा" ७।२।१५ इति च तस्यैव प्रतिषेधो भवति, नान्यस्य। यदि यदुपाधेर्विभाषा तदुपाधेर्निषेध इति ज्ञाप्यते, "जृव्रश्चोः क्त्वः" ७।२।५५, "उदितो वा" ७।२।५६ इति क्त्वाप्रत्यये भावविषये विभाषिते "यस्य विभाषा" ७।२।१५ इति भावविषय एव निष्ठायामिट्प्रतिषेधः स्यात्(), न कर्तृकर्मणोः? नैष दोषः; आश्रीयमाणो हि धर्मो भेदको भवति। न च क्त्वाप्रत्यये निष्ठायां वा भिन्नमभिधेयं निमित्तत्वेनाश्रितम्()। तस्माद्भवत्येवात्र प्रतिषेधः। अत्र लिङ्गम्()--"तेन निर्वृत्तम्()" ४।२।६७ इति निद्र्दशः॥

बाल-मनोरमा

आदितश्च ८४३, ७।२।१६

आदितश्च। निष्ठाया इण्न स्यादिति। "()आईदितः" इत्यतो निष्ठायामिति, "नेड्वशी"त्यतो नेडिति चानुवर्तते इति भावः। ति च। "चरफलोश्चे" ति सूत्रानुवृत्तिं()त मत्वाह-- चरलोरिति। अत उत्स्यादिति। "उत्परस्याऽतः" इत्यतस्तदनुवृत्तेरिति भावः। कितीति। "दीर्घ इणः किती"त्यतो मण्डूकप्लुत्या तदनुवर्तते इति भावः। वस्तुतस्तु कितीत्यनुवृत्तिर्निर्मूला, निष्पला च, तयोः सेट्कत्वेन निष्ठां विना तकारादिप्रत्ययाऽभावात्। कथं तर्हीति। प्रफुल्लमित्यस्य सोपसर्गत्वेन निष्ठातस्य लत्वाऽसंभवादिति भावः। समाधत्ते-- फुल्लेति। ननु फुल्लेः पचाद्यचैव फुल्ल इत्यस्य सिद्धेः फुल्ल इत्यस्य निपातनं व्यर्थमित्यताअह-- सूत्रं त्विति। उत्फुल्लसंफुल्ल्योरिति। "निष्ठातस्य लत्वनिपातन"मिति शेषः। सोपसर्गार्थं वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा भावाऽदिकर्मणोः ७।२।१७

भवे आदिकर्मणि च आदितो धातोः विभाषा निष्ठायाम् इडागमो न भवति। मिन्नमनेन, मेदितमनेन प्रमिन्नः, प्रमेदितः। सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन। शकितो घटः कर्तुम्, शक्तो घटः कर्तुम्। भावे न भवत्येव, शक्तमनेन। अस्यतेर्भावे, असितमनेन। आदिकर्मणि च न भवत्येव, अस्तः काण्डः।

न्यासः

विभाषा भावादिकर्मणोः। , ७।२।१७

"मिन्नमनेन" इति। "नपुंसके भावे क्तः" ३।३।११४। "मेदितम्()" इति। "निष्ठा शीङ" १।२।१९ इत्यादिना कित्वप्रतिषेधे गुणः। "प्रमिन्नः" इति। प्रशब्द आदिकर्म द्योतयति। "आदिकर्म" इति। आदिभूतक्रियाक्षण इति। तस्मिन्? भूतत्वेन विवक्षिते यः क्तः स पुनः "आदिकर्मणि क्तः कत्र्तरि च" ३।४।७१ इत्यनेन कत्र्तरि कारके भवति। शक्तो घटः कर्त्तुम्(), शकिको घटः कर्त्तुमित्यस्य सिद्धये विभावेति योगविभागोऽत्र कत्र्तव्यः। तत्र "आदितः" ७।२।१६ इति नानुवरत्तनीयम्()। "भावादिकर्मणोः" इत्यत्र द्वितीये योगेऽनुवत्र्तमीयमेव॥

बाल-मनोरमा

विभाषा भावादिकर्मणोः ८६१, ७।२।१७

विभाषा भावादिकर्मणोः। आदितो निष्ठाया इड्वेति। "आदितश्चे"त्यत आदित इति, "()आईदितः" इत्यतो निष्ठाग्रहणं ,

"नेड्वशी"त्यतो नेति चानुवर्तते इति भावः। निषेधस्य वैकल्पिकत्वात्पक्षे इडभ्यनुज्ञायते। प्रस्वेदितश्चैत्र इति। चैत्रकर्तृका आरभ्यमाणप्रस्वेदनक्रियेत्यर्थः। ञीद्भिरिति। ञिरिद्येषां ते ञीतः, तैर्मिदिप्रभृतिभिरिति तदर्थः। स विषयः कित्त्वप्रतिषेधस्येति बोध्यम्। स्विद्यतेस्त्विति। "ञि ष्विदा गात्रप्रक्षरणे" इति दैवादिकस्यैव कित्त्वनिषेधविधौ ग्रहणमित्यर्थः। स्विदित इति। "विभाषा भावे"ति पक्षे इट्। कित्त्वनिषेधविधौ स्विद्यतेग्र्रहणाऽभावात्कित्त्वान्न गुण-। अत्र स्विदादीनाम् "आदितश्चेति इट् प्रतिषिध्यते। भावादिकर्मणोस्तु पक्षे इट्।

तत्त्व-बोधिनी

विभाषा भावादिकर्मणोः ७०६, ७।२।१७

प्रस्वेदित इति। प्रशब्द आदिकर्मद्योतनार्थः। स्वेदितमित्यादि भावे। भ्वादिरत्रेति। "ञिष्विदा स्नेहनमोचनयोः" इति पठितः। स्विद्यतेस्त्विति। "ष्विदा गात्र प्रक्षरणे" इति दिवादिषु पठितस्य स्विदित इत्येवेति, कित्त्वनिषेधाऽभावादिति भावः। न च ष्विदेति दैवादिकोऽपि ञीदिति वाच्यम्, हरदत्तग्रन्थविरोधादिति भावः। अत्र हरदत्तः-- ञिक्ष्विदा स्नेहनमोचनयोरिति दिवादिर्गृह्रते न तु ञिक्ष्विदा अव्यक्ते शब्दे इति भ्वादिरपि, मिदिना साहचर्यादित्याह। तच्चिन्त्यम्। भ्वादिष्वपि मिदेः पठ()मानत्वात्। तस्मादविशेषादुभयोग्र्रहणं न्याय्यं। तदेतदाह-- दिवादी भ्वादी चेति।

---

सूत्रम्

काशिका-वृत्तिः

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ७।२।१८

क्षुब्ध स्वान्त ध्वान्त लगन् म्लिष्ट विरिब्ध फाण्ट बाढ इत्येते निपात्यन्ते यथासङ्ख्यं मन्थ मनः तमः सक्त अविस्पष्ट स्वरः अनायास भृश इत्येतेष्वर्थेषु। क्षुब्ध इति भवति मन्थाभिधानं चेत्। क्षुब्धो मन्थः। क्षुभितम् अन्यत्। क्षुभितं मन्थेन। क्षुब्धा गिरिनदी इत्येवम् आद्युपमानात् भविष्यति। स्वान्तम् इति मनो ऽभिधानं चेत्। स्वनितम् अन्यत। स्वनितो मृदङ्गः। स्वनितं मनसा। ध्वान्तम् इति भवति तमो ऽभिधानं चेत्। ध्वनितम् अन्यत्। ध्वनितो मृदङ्गः। ध्वनितं तमसा। लग्नम् इति भवति सक्तं चेत्। लगितमन्यत्। म्लिष्टम् इति भवति अविस्पष्टं चेत्। म्लेच्छितम् अन्यत्। इत्वम् अप्येकारस्य निपातनादेव विरिब्धम् इति स्वरश्चेत्। विरेभितम् अन्यत्। रेभृ शब्दे इत्यस्य एतन् निपातनम्। अन्ये तु विरिभितम् अन्यतिति पठन्ति। रभिं सौत्रं धातुं पठन्ति, ते विरिभितम् इति प्रत्युदाहरन्ति। फाण्टम् इति भवति अनायासश्चेत्। फाणितम् अन्यत्। यदशृतमपिष्टं च कषायमुदकसम्पर्कमात्रात् विभक्तरसमीषदुष्णं तत् फाण्टम्। तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते। बाढम् इति भवति भृशं चेत्। बाहितम् अन्यत्। बाह्ृ प्रयत्ने इत्यस्य धातोरेतन् निपातनम्। अतिशयश्च भृशम् इह उच्यते।

न्यासः

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु। , ७।२।१८

"क्षुब्धः" इति। "क्षुभ सञ्चलने" (धा।पा।१२३९) इत्यस्येडभावो निपात्यते। "मन्थाभिधानं चेत्()" इति। समुदायेन चेन्मन्थोऽभिधीयते। मन्थ इति द्रवद्रव्यसम्पृक्ताः सक्तव उच्यन्ते। "क्षुग्धो मन्थः" इति। चलितो मन्थ इत्यर्थः। "क्षुभितं मन्तेन" इति। नात्र मन्थोऽभीधीयते, किं तर्हि? तत्साधनं चलनम्()। अथ मन्थाभिधाने क्षुब्धशब्दो निपात्यते, क्षुब्धा गिरिनटी, क्षुब्धा सेना, क्षुब्धः समुद्रः--इत्यादि। नोपपद्यते? इत्यत आह--"क्षुब्धा गिरिनदी" इत्तयादि। चलितमन्थसाधम्र्याद्()गिरिनद्यादिषु तथा व्यवपेश इति दर्शयति। यथा क्षुब्धत्वं मन्थस्य चलनं प्रति साधनभावः, तथा गिरिनद्यादेरर्थस्य चलनं प्रति साधनभावः क्षुब्धमन्थसाधम्र्यात्? क्षुब्धशब्देन व्यपदिश्यते, यथा गोसाधम्र्याद्वोशब्देन

वाहीक उच्यते। "स्वान्तम्(), ध्वान्तम्" इति। "स्वन ध्वन शब्दे" (धा।पा।८२७,८२८)। इडभावो निपात्यते। एवमुत्तरेष्वप्युदाहरणेषु वेदितव्यम्()। बाह्येषु विषयेष्वविक्षिप्तमनाकुलं मनः=स्वःन्तमुच्यते। "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घः। "स्वनितं मनसा" इति। मनः कर्तृकं स्वननमुच्यते, न तु मनः। "ध्वनितं तमसा" इति। अत्रापि तमःकर्तृकं ध्वननमुच्यते, न तमः। "लग्नः" इति। "रगे लगे सङ्गे" (धा।पा।७८५,७८६)["रगे शङ्कायाम्()"--धा।पा।] निष्ठानत्वं निपात्यते। "स्वरश्चेत्()" इति। स्वरशपब्दोऽत्र ध्वनौ वत्र्तते। "फाष्टम्()" इति। "फण गतौ" (धा।पा।८२१)। पूर्ववद्दीर्घः ष्टुत्वञ्च। कः पुनरयमनायासो नाम? इत्याह--"यदश्रृतम्()" इत्यादि। अश्रृतमित्यपक्वम्()। अपिष्टमित्यचूर्णितम्()। उदकसम्पर्कः उदकसंयोगः। मात्रशब्देन निष्पीडनादेव्र्यवच्छेदः। "विभक्तरसम्()" इति। पृथग्भूतरसमित्यर्थः। ईषदुष्णं कोष्णम्()। "तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते" इति। आयासः प्रयत्नाधिक्यम्(), तद्यस्मिन्न विद्यते सोऽल्पप्रयत्नासाध्योऽनायासः। तेनेह यदशृतत्वादिविशिष्टं वस्तु तदल्पप्रयत्नासाध्यत्वादनायासेन लक्ष्यते। तदनेनानायासोपलक्षतो यो वस्तुविशेषस्तत्र फाष्टमिति निपात्यते, न त्वनायास एव। नान्यत्रापि सर्वत्रानायसोपलक्षित इति दर्शयति। अयं चार्थो निपातनसामथ्र्याल्लभ्यते। यथैव ह्रन्यत्? किञ्चिदिडभावादिकं निपतनसामथ्र्याल्लभ्यते तथाऽर्थविशेषेऽपि। "बाढम्()" इति। अत्र पूर्वदद्? ढत्वादिकार्यम्()॥

बाल-मनोरमा

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमनस्तमःसक्ताऽविस्पष्टस्वराऽनायासभृशेषु ८६५, ७।२।१८

क्षुब्धस्वान्त। क्षुब्ध, स्वान्त, ध्वान्त, लग्न, म्लिष्ट, विरिब्ध, फाण्ट, बाढ एषामष्टानां द्वन्द्वात्प्रथमाबहुवचनम्। मन्थ, मनः, तमः, सक्त, अविस्पष्ट, स्वर, अनायास, भृश एषामष्टानां द्वन्द्वात्सप्तमी। यथासङ्ख्यमन्वयः। समुदायेनेति। मन्थादिष्वेते रूढाः। अवयवार्थाऽभिनिवेशो न कर्तव्य इत्याह- द्रव्यद्रव्येति। अत्र याज्ञिकप्रसिद्धिरेव शरणीकर्तव्या। मन्थनदण्डश्चेति। "वैशाखमन्थमन्थानमन्थानोमन्थदण्डके" इत्यमरः। क्षुब्ध इति। "क्षुभ संचलने" अस्मात् क्तः, इडभावो निपात्यते। "झषस्तथो"रिति धः , जश्त्वम्। स्वान्तमिति। स्वनधातोः क्तः, "अनुनासिकस्य क्वी"ति दीर्घः। निपातनान्नेट्। "स्वान्तं ह्यन्मानसं मनः" इत्यमरः। ध्वान्तं तम इति ध्वनेः क्तः। "अनुनासिकस्य क्वी"ति दीर्घः। "अन्धकारोऽस्त्रियां ध्वान्तं तमिरुआं तिमिरं तमः" इत्यमरः। लग्नं सक्तमिति। संबद्धमित्यर्थः। लगेः क्तः, इडभावः। ततर् रदाभ्यां परतवाऽभावात्कतं निष्ठानत्वमित्यत आह-- निपातनादिति। म्लिष्टमविस्पष्टमिति। इडभावे "व्रश्चे"त षः। तकारस्य ष्टुत्वेन टः। "अथ म्लिष्टमविस्पष्ट"मित्यमरः। विरब्धः स्वर इति। स्वरविशेष इत्यर्थः। "रेभृ शब्दे" अस्मात् क्तः, इडभावे "झषस्तथोर्धोऽध" इति धः। उभयत्र धातुस्वरूपं प्रदर्शयन्नाह-- म्लेछ रेभृ अनयोरिति। इत्त्वमपीति। इडभावश्चेत्यर्थः। फाण्टमिति। फणेः क्तः, इडभावः, निष्ठातस्य टत्वं च निपात्यते। तस्याऽसिद्धत्वात् "अनुनासिकस्ये"ति दीर्घः। "अनायासकृतं फाण्ट"मित्यमरः। वृत्तिकृन्मतमाह--कषायविशेष इति।"यदशृतमपिष्टं च कषायमुदकसंसर्गमात्राद्विभक्तरसमीपषदुष्णं तत्फाम्टमित्युच्यते" इति वृत्तौ स्थितम्। वेदभाष्ये आहेति। "तद्वै नवनीतं भवति। घृतं वै देवानां फाण्टं मननुष्याणा"मिति शतपथब्राआह्मणव्याख्यावसरे आहेत्यर्थः। बाढं भृशमिति। "बाह्म प्रयत्ने" अस्मात् क्तः, इडभावः, ढत्वधत्वष्टुत्वढलोपाः। अन्यत्र त्विति। मन्थादेर्वाच्यत्वाऽभाव इत्यर्थः।

तत्त्व-बोधिनी

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताऽविस्पष्टस्वराऽनायासभृशेषु ७१०, ७।२।१८

क्षुब्ध। क्षुभ संचलने "झषस्तथो"रिति धत्वम्। स्वन ध्वन शब्दे। इडभावे "अनुनासिकस्य क्विझलो" रिति दीर्घः। लगे सङ्गे, म्लेच्छ अव्यक्ते शब्दे, "व्रश्चे" ति षत्वे ष्टुत्वम्()। रेभृ शब्दे, फण गतौ। दीर्घः, ष्टुत्वम्। बाह्म प्रयत्ने। इडभावे ठत्वधत्वष्टुत्वढलोपाः। अनयासशब्देन तत्साध्यो लक्ष्यत इत्याह----अनायाससाध्य इति। "क्षुण्णमौषधजातमुष्णोदके

प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते तत्फाण्टमित्याहुः। वेदभाष्ये इति। "तद्वै नवनीतं भवति। घृतं देवानां फाण्टं मनुष्याणा"मिति शतपथश्रुतेर्वयाख्यायामित्यर्थः। अन्यत्र त्विति। मन्थादेरवाच्यत्वे त्वित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

धृषी शसी वैयात्ये ७।२।१९

वियातस्य भावो वैयात्यम् प्रागल्भ्यम्, अविनीतता। तत्र धृष शस इत्येतयोः निष्ठायाम् इडागमो न भवति। धृष्टो ऽयम्। विशस्तो ऽयम्। धृषेः आदितश्च ७।२।१६ इति प्रतिषेधः सिद्ध एव, शसेरपि उदितो वा ७।२।५६, यस्य विभाषा ७।२।१५ इति? नियमार्थं वचनम्, धृषिशस्योः वैयात्ये एव इड् न भवति। भावादिकर्मणोरपि वैयात्ये धृषिर्नास्ति। धृष्टः। विशस्तः। वैयात्ये इति किम्? धर्षितः। विशसितः।

न्यासः

घृषिशसी वेयात्ये। , ७।२।१९

"वियातस्य भावो वैयात्यम्()" इति। यातम्()=यातिः, प्राप्तिः विरूपं यातं यस्यासन्मार्गविषयत्वात्? स वियातः=अविनीत इत्युच्यते; तद्भावो वैयात्यम्()। ब्राआहृणादित्वात्? ५।१।१२३ ष्यञ्()। "षुष्टः" इति। "ञि धृषा प्रगल्भ्ये" (धा।पा।१२६९)। "विश्तः" इति। "शसु हिंसायाम्()" (धा।पा।७२७), शसेरपि "उदतो वा" (७।२।५६) इति विकल्पविधानात्? "यस्य विभाषा" ७।२।१५ इतीट्प्रतिषेधः सिद्ध एवेति सम्बध्यते। यदि तर्हि सिद्ध एव प्रतिषेधः तत्? किमर्थं वचनम्()? इत्याह--"नियमार्थम्()" इत्यादि। वैयात्य एव वत्र्तमानोर्यथा स्यात्(), अन्यत्र मा भूत्()। अथ धृषेः "विभाषा भादिवादिकर्मणोः" (७।२।१७) इति विकल्पे प्राप्ते नित्यार्थं वचनमिति कस्मान्न भवति? इत्याह--"भावादिकर्णणोरप , इत्यादि। अत्र चाभित्रानशक्तिस्वाभाव्यं हेतः। "धार्षितः" इति। "धर्षितः इति। पूर्ववत्? कित्त्वे प्रतिषिद्वे गूणः॥

बाल-मनोरमा

धृषिशसी वैयात्ये ८६६, ७।२।१९

धृषिशसी। वियातः = अविनीतः, तस्य भावो वैयात्यम्। तत्र "ञि धृषा प्रागल्भ्ये" इत्यस्य आदित्तवादेवेण्निषेधः सिद्धः, "शसु हिंसाया"मित्यस्य तु "उदितो वे"ति क्त्वायां वेट्कत्वात् "यस्य विभाषे"तीण्निषेधः सिद्धः, अतो नियमार्थमित्याह-- अविनय एवेति। धृष्टो विशस्त इति। अविनीत इत्यर्थः। अन्यत्रेति। वैयात्याऽभावे इत्यर्थः। धर्षित इति। बालात्कृत इत्यर्थः। विससित इति। हिंसित इत्यर्थः। अत्र वैयात्याऽभावादिण्निषेधो नेति भावः। ननु धृषेरादित्त्वात् "विभाषा भावादिकर्मणो"रिति भावे आदिकर्मणि च इड्विकल्पे प्राप्ते तदंशे नित्यार्थोऽत्र विधिरस्तु, ततश्च भावादिकर्मभ्यामन्यत्र वैयात्याऽभावेऽपि "आदितश्चे"तीण्निषेद एव स्यादित्यत आह-- भावादिकर्मणोस्त्विति। नास्तीति। अनभिधानादिति भावः। तत्र वृद्धसंमतिमाह-- अत एवेति। भावकर्मणोर्धृषेरनभिधानादेवेत्यर्थः। अन्यथा धृषेरादित्त्वात् "विभाषा भावादिकर्मणो"रिति भावे आदिकर्मणि च इड्विकल्पे प्राप्ते तदंशे नित्यार्थतया विधानार्थत्वापत्तेरिति भावः। चिन्त्यमिति। धृषेरादित्त्वं हि नवैयात्ये आदित्त्वलक्षणेण्निषेधार्थं , "धृषिशसी वैयात्ये" इत्येव सिद्धेः, नापि वैयात्यादन्यत्र आदित्त्वलक्षणेण्निषेधार्थम्, धृषेर्वैयात्य एव इष्निषेधनियमेन ततोऽन्यत्र आदित्त्वलक्षणनिषेधाऽभावात्। नापि धृषेर्वैयात्ये भावादिकर्मणोर्विषये "विभाषा भावादिकर्मणो"रिति इड्विकल्पार्थं, भावादिकर्णोर्वैयात्ये धृषेरनभिधानात्। तस्माद्धृषेरादित्त्वं व्यर्थमिति हरदत्त आहेत्यर्थः। माध्वस्त्विति। अवैयात्ये भावादिकर्मणोरनभिधाने प्रमाणाऽभावादिति भावः। तत्र अवैयात्ये भावे उदाहरति-- धृष्टं धर्षितमिति। आदिकर्मण्युदाहरति-- प्रधृष्टओः प्रधर्षित इति।

तत्त्व-बोधिनी

धृषिशसी वैयात्ये ७११, ७।२।१९

धृषिशसी। ञिधृषा प्रागल्भे। शसु हिंसायाम्। अनयोः "आदितश्च" "यस्य विभाषे"ति सूत्राभ्यामिट्प्रतिषेधे सिद्धेऽप्यनयोर्वैयात्य एवाऽनिट्त्वं नान्यत्रेति नियमार्थमित्याह--- अविनये एवेति। विरुद्धं यातो वियातः = अविनीतः, तस्य भावो वैयात्यम्। ननु धृषेः "विभाषा भावादिकर्मणो"रिति विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवतीत्याशङ्कायामाह-- नास्तीति। अनभिधानादिति भावः। अत्र प्रमाणमाह-- अत एवेति। माधवस्त्विति। एवं च आदित्वस्य फलवत्तवाद्धरदत्तोक्तं यच्चिन्त्यं तदेव चिन्त्यमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दृढः स्थूलबलयोः ७।२।२०

दृढ इति निपात्यते स्थूले बलवति चार्थे। दृढः स्थूलः। दृढो बलवान्। किम् अत्र निपात्यते? दृंहेः क्तप्रत्यये इडभावः, हकारनकारयोः लोपः, परस्य ढत्वम्। अथ दृहिः प्रकृत्यनतरम् अस्ति? तत्र अप्येतदेव सर्वं नलोपवर्जम्, नकारस्य अभावात्। हलोपनिपातनं पूर्वत्र असिद्धत्वनिवृत्त्यर्थम्। ढलोपे हि सति तस्य पूर्वत्र असिद्धत्वात् द्रढिमा, द्रढीयान्, द्रढयति इत्यत्र र ऋतो हलादेर्लघोः ६।२।१६० इति रेफो न स्यात्, इह च परिद्रढ्य्य गत इति ल्यपि लघुपूर्वात् ६।४।५६ इति णेरयादेशो न स्यात्, इह च परिदृढस्यापत्यं पारिदृढी कन्या इति गुरूपोत्तमलक्षणः ष्यङ् च प्रसज्येत। स्थूलबलयोः इति किम्? दृंहितम्। दृहितम्।

लघु-सिद्धान्त-कौमुदी

दृढः स्थूलबलयोः ८२८, ७।२।२०

स्थूले बलवति च निपात्यते॥

न्यासः

दृढः स्थूलबलयोः। , ७।२।२०

"बलवति" इति मतुबन्तनिद्र्दशेनार्शाअदित्वात्? सूत्रे मत्वर्थीयाकारान्तो बलशब्दो निर्द्दिष्ट इति दर्शयति। "दृंहेः" इति। "दृहि वृद्धौ" (धा।पा।८३४) इत्यस्य। "अथ वा-- दृहिः प्रकृत्यन्तरमस्ति" इति। "दृह दृहि दृद्धौ" (धा।पा।७३३,७३४), इति कैश्चित्? पाठात्()। "नकारस्याभावात्()" इति। नकारस्योपदेशाभावादनिदित्त्वाच्च नकारस्योपदेशाभावादनिदित्त्वाच्च नकारस्याभावादिति। अथ हकारलोपः किमर्थं निपात्यते? नाढकार एव निपात्यताम्(), परस्य च धत्वे ष्टुत्वे कृते, ढो ढे लोपे च कृते सिद्धं दृढ इति। अत्राप्ययमर्थः--परस्य ढत्वं निपातयितव्यं न भवति, ष्टुनैव सिद्धत्वात्()? इत्यत आह--"हलोपनिपातनम्()" इत्यादि। यदि हकारस्य ढकारो निपात्यते तदा "ढो ढे लोपः" ८।३।१३, तस्य "पूर्वत्रासिद्धम्()" ८।२।१ इत्यसिद्धत्वं स्यात्(), सिद्धश्चासाविष्यते। तस्मात्? पूर्वत्रासिद्धत्वनिवृत्तये हलोपो निपात्यते, न ढकार इति। कः पुनरसिद्धत्वे दोषो यत्परिहाराय पूर्वत्रासिद्धत्वनिवृत्त्यर्थं हकारलोपो निपात्यते, न ढकारः? इत्यत आह--"ढलोपे" इत्यादि। यदि हि ढकारो निपात्यते, तदा "ढो ढे लोपः" ८।३।१३ कत्र्तव्यः, त()स्मस्तु सति लोपे द्रढिमेत्यादौ "र ऋतो हलादेर्लघोः" ६।४।१६१ इति रोफो न स्यात्(); ढलोपस्यासिद्धत्वे "संयोगे गुरु" १।४।११ इति गुरुसंज्ञायामुपजातायां लघुसंज्ञाया बाधितत्वात्()। "द्रढिमा" इति। "वर्णद्ढादिभ्यः ष्यञ्च" ५।१।१२२ इतीमनिच्(), "तुरिष्ठेयाःसु" ६।४।१५४ इति टिलोपः। "द्रढीयान्()" इति। "द्विवचनविभज्योपपरदे तरबीयसुनौ" ५।३।५७ इतीयसुन्प्रत्ययः। "द्रढयति" इति। द्रढमाचष्ट इति

"तत्करोति तद#आचष्टे" (धा।पा।ग।सू।१८७) इति णिच्(), "णाविष्ठवत्? कार्यं प्रातिपदिकस्य" (दा।८१३) इतीष्ठवद्भावेन रेफटिलोपौ। "परिद्रढय्य गतः" इति। दृढमाचष्टे इति णिच्()। रभावे कृते ण्यन्तस्य परिणा योगः, ततः क्त्वा, प्रादिसमासः, "समासेऽनञ्पूर्वे क्त्वो ल्यप्()" ७।१।३७ इति ल्यप्()। "पारिद्रढी कन्या" इति। परिद्रढशब्दादिञ्(), "इतो मनुष्यजातेः" ४।१।६५ इति ङीष्()। "ष्यङ्? प्रसज्येत" इति। "अणिञोरनार्षयोर्गुरूपोत्तमयोः" ४।१।७८ इत्यादिना। "दृंहितम्()" इति। दृंहेः प्रत्युदाहरणम्()। "दृहितम्()" इति दृहेः॥

बाल-मनोरमा

दृढः स्थूलबलयोः ८६७, ७।२।२०

दृढः स्थूलबलयोः। बलशब्द अर्शाअद्यजन्तो बलवत्परः। तदाह -- बलवति चेति। तस्येति। निष्ठातकारस्य ढत्वं निपात्यते इत्यर्थः। हस्य लोप इति। "निपात्यते" इति शेषः। इदित इति। अनिदितस्तु नलोपः सिद्ध एवेति भावः। ननु हस्य ढत्वे कृते "झषस्तथोर्धोऽधः" इति तकारस्य ध्तवे तस्य ष्टुत्वेन "ढो ढे" इति ढलोपे दृढ इति सिद्धम्, ततश्च इडभाव एव नपात्यतां , न तु हकारलोपो ढत्वं चेति चेत्। मैवम्। तथाहि सति द्रढीयानित्यादौ ढलोपस्याऽसिद्धत्वेन ऋकारस्य संयोगपरकत्वम्, अस्य हलोपस्य साप्तमिकत्वेन असिद्धत्वाऽभावादिति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

दृढः स्थूलबलयोः ७१२, ७।२।२०

दृढः स्थूल। बलमस्यास्तीति बलः। "अर्श आदिभ्योऽच्। तदाह-- बलवतीति। स्थूलो = मांसलः, स च निर्बलोऽपि बलवांस्तु कृशोऽपि दृढ इति फलितोऽर्थः। तस्येति। तकारस्येत्यर्थः। हस्येति। ननु "हो ढः" इति ढत्वे ढो ढे लोपेनैव सिद्धमिति तस्य ढत्वं, हस्य लोपश्च न निपात्यतामिति चेन्मैवम्। तथाहि सति ढलोपस्याऽसिद्धत्वेन द्रढिमेत्यत्र "र ऋतो हलादेर्लघो"रिति रभावो न स्यात्, "परिद्रढय्य गत" इत्यत्र "ल्यपि लघुपूर्वा"दित्ययादेशो न स्यात्, परिदृढस्यापत्यं पारिदृढञी कन्येत्यत्र गुरूपोत्तमलक्षणः ष्यङ् स्यात्। अतोऽसिद्धत्वनिवृत्तये हलोपो निपात्यत इति भाष्यादौ स्थितम्। अत एव "ढ्रलोपे" इति सूत्रे "अणः किं दृढ" इति प्राचो ग्रन्थस्य प्रामादिकतामभिप्रेत्य तृढो वृढ इति प्रत्युदाह्रतम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रभौ परिवृढः ७।२।२१

परिवृढ इति निपात्यते प्रभुश्चेद् भवति। परिवृढः कुटुम्बी। पूर्वेण तुल्यम् एतत्। वृंहेर् निपातनम्। वृहिश्च यदि प्रकृतियन्तरम् अस्ति तस्य अपि तदेव सर्वम्। हलोपनिपातनस्य च तदेव प्रयोजनम्। परिव्रढयति। परिव्रढ्य्य गतः। पारिवृढी कन्या। परिवृढमाचष्टे इति विगृह्य वृढशब्दादेव णिजुत्पद्यते। संग्रामयतेरेव सोपसर्गाण् णिजुत्पत्तिरिष्यते न अन्यस्मातिति। तथा सति परिव्रढयति इति तिङ्ङतिङः ८।२।२८ इति निघातः। परिव्रढय्य इत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति। प्रभौ इति किम्? परिवृंहितम्। परिवृहितम्।

न्यासः

प्रभौ परिवृढः। , ७।२।२१

"पूर्वेण समानम्()" इति। निपातनस्येडभावादेस्तुल्यत्वात्()। यथैव हि पूर्वस्मिन्? सूत्रे क्तप्रत्यये कृते हकारनकारस्योर्लोप इडभावश्च परस्य ढत्वं निपातितम्(), तथेहापि तत्सर्वं निपात्यते। "वृंहेर्निपातनम्()" इति। "वृहि वृद्धौ" ["बृहि"--धा।पा।]

(धा।पा।७३६) इत्यस्य। "वृहिश्च यदि प्रकृत्यन्तरमस्ति ततस्तस्यापि" इति। निपातनमेतदिति कृतेन सम्बन्धः। प्रकृत्यन्तरास्तित्वं तु "वृह वृद्धौ"["बृह"--धा।पा।] (धा।पा।७३५) इति कैश्चिदुक्तम्()। "तदेव प्रयोजनम्()" इति। पूर्वत्रासिद्धत्वनिवृत्तिः। "परिव्रझयति" इति। अत्र ढलोपे सति पूर्ववद्रेफो न स्यात्()। "परिव्रढय्य गतः" इति। हलोपनिपातने तु भवन्त्येते दोषाः। "परिव्रढमाचष्टे" इत्यादि। कथं पुनः परिवृढशब्देन विग्रहे कृते णिचो वृ शब्दादेवोत्पततिर्लभ्यते? इत्याह--"संग्रामयतेः" इत्यादि। "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (धा।पा।ग।सू।१८६) इत्यनेनैव णिचि सिद्धे "संग्रामे" इत्यस्य सोपसर्गस्य गणे यः पाठः स नियमार्थः--संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिर्यथा स्यात्(), अन्यत्र मा भूदिति। तदेवं संग्रामयतेरेव यस्मात्? सोपसर्गाण्णिजुत्पत्तिरिष्यते, नान्यस्मात्()। तस्माद्? यद्यपि "परिवृढमाचष्टे" इति विग्रहः क्रियते, तथापि वृढशब्दाण्णिजुत्पत्तौ सत्यां लकारो भवन्नयं णिज्? यतो विहितस्तदादेरेव भवति प्रत्ययग्रहणपरिभाषया; "सनाद्यन्ता धातवः" ३।१।३२ इति तदादेरेव धातुसंज्ञाविधानात्()। तेन परेस्तिङन्तग्रहणेनाग्रहणात्? ततोऽतङन्तात्? पदात्? परस्य तिङन्तस्य पदस्य परिव्रढयतीत्यत्र "तिङ्ङतिङः" ८।१।२८ इति निघातस्वरः सिद्धो भवति। यदि पुनः परिवृढशब्दाण्णिजत्पद्यते तदा लकारोऽपि निघातो न स्यात्()। किञ्च--यदा वृढशब्दाण्णिजुत्पद्यते न परिवृढशब्दात्(), तदा क्त्वाप्रत्ययोऽपि वृढशब्दाण्णिजन्ताद्भवति। तेन परिशब्दस्य क्तान्तेन सम्रथेन शब्दान्तरेण "कुगतिप्रादयः" २।२।१८ इति समासे कृते परिव्रढय्येत्यत्र ल्यबादेशः सिद्धो भवति। परिवृढशब्दाण्णिजुत्पत्तौ क्त्वाप्रत्ययोऽपि परिवृढशब्दादेव णिजन्तादुत्पद्यते, ततः समासो न स्यात्(); कुगतिप्रादयः समर्थेन शब्दान्तरेण समस्यन्ते, न चात्र परेः परं क्तान्तं शब्दान्तरमस्ति। एकमेव हीदं क्तान्तं परिणा सह शब्दरूपम्(); तत्रैव परिशब्दस्यान्तर्भावात्()। असति च समासे "समासेऽनञ्पूर्वे" ७।३।१७ इत्यादिना ल्यबादेशो न स्यात्()। "परिवृंहितम्()" इति। वृंहेः प्रत्युदाहरणम्()। "परिवृहितम्()" इति। वृहेः॥

बाल-मनोरमा

प्रभौ परिबृढः ८६८, ७।२।२१

प्रभौ परिबृढः। प्राग्वदिति। तकारढत्वसय् हलोपस्य चेत्यर्थः।

तत्त्व-बोधिनी

प्रभौ परिबृढः ७१३, ७।२।२१

प्रभौ। निपातनमिति। हलोपे प्रयोजनमपि व्रढिमा परिव्रढय्येत्यादिसिदिधरिति प्राग्वदेव बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

कृच्छ्रगहनयोः कषः ७।२।२२

कृच्छ्र गहन इत्येतयोरर्थयोः कषेर् धातोः निष्ठायाम् इडागमो न भवति। कष्टो ऽग्निः। कष्टं व्याकरणम्। ततो ऽपि कष्टतराणि सामानि। कृच्छ्रं दुःखम्, तत्कारणम् अप्यग्न्यादिकं कृच्छ्रम् इत्युच्यते। गहने कष्टानि वनानि। कष्टाः पर्वताः। कृच्छ्रगहनयोः इति किम्? कषितं सुवर्णम्।

न्यासः

कृच्छ्रगहनयोः कषः। , ७।२।२२

"कष्टः" इति। कषिशिषीत्यादिहिंसार्थधातुवर्गे कषिः पठ()ते। किं पुनः कृच्छ्रं नाम? इत्याह--"कृच्छ्रं दुःखम्()" इति।

यद्येवम्(), दुःखे प्राणिधर्मे प्रतिषेध उच्यमानोऽग्न्यादौ न सिध्यते? इत्याह--"तत्कारणमप्यग्न्यादिकं कृच्छ्रमुच्यते" इति। कारणे कार्योपचारात्(), यथा--नड्वलोदकं पादरोग इति। चिन्त्यं पुनरेतत्? किं मुख्ये सति गौणस्य ग्रहणं युक्तम्()? उत नेति? यदि तु कृच्छ्रशब्दाण्णिजन्तात्? पचाद्यचमुत्वाद्य कृच्छ्रयतीति कृच्छ्र इत्येवं व्युत्पाद्यते, तदा कृच्छ्रशब्दोऽपि मुख्येऽगन्यादावपीति न किञ्चिच्चिन्त्यम्(); न चास्यां व्युत्पत्तौ तत्कारणमप्यगन्यादिकं कृच्छ्रमित्युच्यत इत्येतद्विरुध्यते। यद्धि कृच्छ्रयति तन्नियोगत एव दुःखस्य कारणं भवति॥

बाल-मनोरमा

कृच्छ्रगहनयोः कषः ८६९, ७।२।२२

कृच्छ्रगहनयोः। कृच्छ्रशब्दो दुःखे, तत्कारणे च वर्तते। कष्टं दुःखं, तत्कारणं चेति। "स्यात्कष्टं कृच्छ्रमाभील"मित्यमरकोशवाक्यम्। दुःखकारणे उदाहरति-- कष्टो मोह इति। गहने उदाहरति-- कष्टं शास्त्रमिति। गहनशब्दं विवृणोति-- दुरवगाहमिति।

तत्त्व-बोधिनी

कृच्छ्रगहनयोः कषः ७१४, ७।२।२२

कृच्छ्रगहनयोः। कृच्छ्रं दुःखं, तत्कारणं च लक्षणया गृह्रते। कषतिहिंसार्थः। कष्टो मोह इति। दुःखहेतुरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

घुषिरविशब्दने ७।२।२३

घुषेर् धातोरविशब्दने ऽर्थे निष्ठायाम् इडागमो न भवति। घुष्टा रज्जुः। घुष्टौ पादौ। अविशब्दने इति किम्? अवघुषितं वाक्यमाह। विशब्दनं प्रतिज्ञानम्। घुषिरशब्दार्थे इति भूवादिषु पठ्यते। घुषिर् विशब्दने इति चुरादिषु। तयोरिह सामान्येन ग्रहणम्। विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिज् विशब्दनार्थस्य अनित्यः इति। तेन अयम् अपि प्रयोगः उपपन्नो भवति, महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः। स्वाभिप्रायं शब्देन अविष्कृतवन्तः इत्यर्थः।

न्यासः

घुषिरविशब्दने। , ७।२।२३

"विशब्दनं प्रतिज्ञानम्()" इति। स्वाभिप्रायस्य शब्देनाविष्करणमित्यर्थः। "सामान्येन ग्रहणम्()" इति। विशेषानुपादानात्()। यदि "घुषिरविशब्देने" (धा।पा।१७२६) ["घुषिर्? विशब्देने--धा।पा।]इति चुरादौ पठ()ते एवं सति णिचा भवितव्यम्(), न च णिजन्तस्येटि सत्यसति वा कश्चिद्विशेषोऽस्ति। तथा हि--इटि सति "निष्ठायां सेटि" (६।४।५२) इति णिलोपे कृते घोषितमिति यद्रूपं भवत्यसत्यपीटि णिलोपाभावात्? तदेव। न च तदन्ताविट्प्रतिषेधस्य प्रसिरस्ति; "एकाचः" ७।२।१० इत्यधिकारात्()। भौवादिकस्य (धा।पा।६५३) ["घुषिर्? अविशबदेन"--धा।पा।] घुषेर्विशब्दने वृत्तिरेव नास्ति; शब्दशक्तिस्वाभाव्यात्(); त()त्क विशब्दनप्रतिषेधेन? इत्यत आह--"विशब्दनप्रतिषेधः" इत्यादि। यदि च नित्यो णिच्? स्यात्(), तदा यथोक्तया रीत्या प्रतिषेधोऽनर्थकः स्यात्(), ततश्च न कत्र्तव्य एव स्यात्(), कृतश्च, तस्मादयमेव प्रतिषेधो ज्ञापयित--चुरादिणिज्विशब्दनार्थस्यानित्य इति। "जुघुषुः" इति। अनित्यप्रतिज्ञाप्रयोजनम्()। असति ह्यनित्यत्वे घोषयाञ्चक्रुरिति स्यात्()॥

बाल-मनोरमा

घुषिरविशब्दने ८७०, ७।२।२३

घुषिरविशब्दने। घुष्टा रज्जुरिति। उत्पादितेत्यर्थः। आयामितेति वा। शब्देन अभिप्रायप्रकाशनं विशब्दनम्। तदाह-- शब्देनेति।

तत्त्व-बोधिनी

घुषिरविशब्दने ७१५, ७।२।२३

घुषिरवि। घुषिरविशब्दार्थ इति भ्वादिः , घुषिरविशब्दन इति चुरादिः, द्वयोरपि सामान्येन ग्रहणम्। ननु विशब्दनार्थाद्धुषेश्चुरादिणिचा भाव्यं, ततश्च णिचा व्यवधानाद्धुषेः परा निष्ठा नास्तीति कथमिण्निषेधप्रसङ्गः, किं च विशब्दने त्विण्निषेधाऽभावाण्णिच्युपधागुणे "निष्ठायां सेटी"ति णिलोपे च "घोषितं वाक्य"मित्यपि स्यादिति चेत्। अत्राहुः-- एवं तर्हि विशब्दनप्रतिषेध एव ज्ञापकः--- विशब्दनार्थस्य चुरादिणिजनित्य इति [इति] नास्त्युक्तदोष इति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

अर्देः संनिविभ्यः ७।२।२४

सम् नि वि इत्येतेभ्य उत्तरस्य अर्देः निष्ठायाम् इडागमो न भवति। समर्णः। न्यर्णः। व्यर्णः। अर्देः इति किम्? समेधितः। संनिविभ्यः इति किम्? अर्दितः।

न्यासः

अर्देः सन्निविभ्यः। , ७।२।२४

"अर्देः" इति। "अर्द गतौ याचने च" (धा।पा।५५)॥

---

सूत्रम्

काशिका-वृत्तिः

अभेश् च आविदूर्ये ७।२।२५

अभिशबादुत्तरस्य अर्देः आविदूर्ये ऽर्थे निष्ठायाम् इडागमो न भवति। अभ्यर्णा सेना। अभ्यार्णा शरत्। आविदूर्ये इति किम्? अभ्यर्दितो वृषलः। शीतेन पीडितः इत्यर्थः। विदूरम् विप्रकृष्टम्, ततो ऽन्यदविदूरम्, तस्य भावः आविदूर्यम्। एतस्मादेव निपातनात् न नञ्पूर्वात् तत्पुरुषात् ५।१।१२० इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति।

न्यासः

अभेश्चाविदूर्ये। , ७।२।२५

"विदूरं विप्रकृष्टम्()" इति। विशेषेणातिशयेन दूरं विदूरमिति कृत्वा, ततोऽन्यदविदूरम्()। तत्? पुनर्यदासन्नं यच्चादूरं न त्वतिविप्रकृष्टं तदिति वेदितव्यम्()। "तस्य भाव आदिदूर्यम्()" इति। ब्राआह्मणादित्वात्? ५।१।१२३ ष्यञ्()। ननु च "न नञ्पूर्वात्? तत्पुरुषात्()" (५।१।१२१) इत्युत्तरस्य भावप्रत्ययस्य प्रतिषिद्धत्वात्? ष्यञा न भवितव्यम्()? इत्यत आह--"एतस्मादेव" इत्यादि। उत्तरत्वं तु भावप्रत्ययस्य त्वतलापेक्षया वेदितव्यम्()॥

बाल-मनोरमा

अभेश्चाऽऽविदूर्ये ८७२, ७।२।२५

अभेश्चाविदूर्ये। अविदूरस्य भाव आविदूर्यम्। तस्मिन् गम्ये अभेः परोऽर्दिरनिट्क इत्यर्थः। सामीप्य इत्येव तु नोक्तम्, अनतिदूरस्य असङ्ग्रहापत्तेः। तत्सूचयन्नाह-- नातिदूरमिति।

तत्त्व-बोधिनी

अभेश्चाऽऽविदूर्ये ७१६, ७।२।२५

अभेः। विशेषेण दूरं विदूरं, ततोऽन्यविदूरं, तस्य भाव आविदूर्यम्। ब्राआह्मणादित्वात्ष्यञ्। अस्मादेव निर्देशात् न नञ्पूर्वात्तत्पुरुषा"दिति निषेधो न भवति। सामीप्य इत्येव तु नोक्तं, नातिदूरस्याऽसङ्ग्रहापत्तेः, तदेतद्ध्वनयन्व्याचष्टे-- नातिदूरमासन्नं वेति। एवं च सामीप्य इति प्राचीनव्याख्यानमुपलक्षणतया नेयमितयाहुः।

---

सूत्रम्

काशिका-वृत्तिः

णेरध्ययने वृत्तम् ७।२।२६

ण्यन्तस्य वृत्तेर् निष्ठायाम् अध्ययनार्थे वृत्तम् इति इडभावः णिलुक् च निपात्यते। वृत्तो गुणे देवदत्तेन। वृत्तं पारायणं देवदत्तेन। अध्ययने इति किम्? वर्तितम् अन्यत्र। वृतिरयम् अकर्मकः, स ण्यर्थे वर्तमानः सकर्मको भवति। तेन निर्वृत्तम् इति हि प्रकृटेरेव कर्मणि क्तप्रत्ययो दृश्यते। तद्वदिह अपि ण्यर्थवृत्तेरेव च वृतेः वृत्तो गुणो देवदत्तेन इति भविष्यति इति निपातनम् अनर्थकम्? तत् क्रियते यदापि णिचैव ण्यर्थो ऽभिधीयते तदावर्तितम् इत्यध्ययने मा भूतिति केचित्। अपरे तु वर्तितो गुणो देवदत्तेन इत्यपि इच्छन्ति।

न्यासः

णेरध्यायने वृत्तम्?। , ७।२।२६

"अध्ययनम्()" इति। "कृत्यल्युटो बहूलम्()" ३।३।११३ इति ल्युट्()। अधीयत इत्यध्ययनम्()--कर्मसाधनोऽध्ययनशब्दः। भावसाधने हि वृत्तो गुणो देवदत्तेनेति न स्यात्(), वृत्तं गुणस्य देवदत्तेनेति स्यात्()। निष्ठाविशेषणञ्चैतत्()। अध्येतव्याभिधायिन्यां निष्ठायामित्यर्थः। "णिलुक्? च" इति। णिलुग्निपातनं प्रत्ययलक्षण प्रतिषेधार्थम्()। लोपे हि प्रतययलक्षणेन गुणः स्यात्()। लुकि सति "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणप्रतिषेधाद्गुणो न स्यात्()। "वृत्तो गुणः" इति। गुणः कश्चिदेवाध्ययनविशेष इहोच्यते। "वृत्तिरयमकर्मकः" इति। दृतं गुणस्य, वृत्तं पारायणस्येति भावे निष्ठादर्शनात्()। अकर्मकाणां हि भावे निष्ठा भवति, न सकर्मकाणाम्()। "स ण्यर्थे" इत्यादि। सोऽन्तर्भावितण्यर्थो यदा भवति तदा प्रकृत्यन्तो ण्यर्थे वत्र्तमानः सकर्मको भवति, यथा--वद्र्धन्तु त्वां सुष्टुतय इत्यत्र वृधिः। कथमेतद्विज्ञायते? इत्याह--"तेन निर्वृत्तम्()" इत्यादि। न चैतद्वक्तव्यम्()--अकर्मका इति। "धातवः सोपसर्गाः सकर्मका भवन्ति" इति सोपसर्गत्वादिह वृत्तेः सकर्मकत्वम्()। न तु ण्यर्थवृत्तित्वादिति कृतो ण्यर्थावगतिः? यदि सोपसर्गात्वादिह वृत्तेः सकर्मकत्वं स्यान्न ण्यर्थवृत्तित्वात्(), ततो यथानुभूतः क्मबलो देवदत्तदेनेत्यत्र ण्यर्थो न गम्यते, तथा तेन निर्वृत्तः इत्यत्रापि न गम्येत; गम्यते च, तस्माण्णयर्थवृत्तित्वादेव वृत्तेः सकर्मकत्वम्()। यदा च ण्यर्थवृत्तर्भवति तदा प्रयोजकव्यापारापेक्षयाऽस्य कत्र्ता कर्मभावभापद्यत इति। तेन प्रयोज्येन कर्मणा सकर्मको भवति। "तद्वदिहापि" इत्यादि। यस्मादेवाकर्मकोऽपि स न प्रकृत्यन्त एव ण्यर्थे वत्र्तमानः सकर्मको भवति तस्माद्()वृत्तो गुणो

देवदत्तेनेत्यत्रापि ण्यर्थवृत्तेरेव कर्मणि क्तप्रत्ययो भविष्यति। ततश्च निपातनमनर्थकं स्यात्()। विनाऽपि तेन सिद्धत्वात्()। कथमिति चेत्()? वृत्तेः क्वाप्रत्यये "उदितो वा" ७।२।५६ इतीङ्()विकल्पे कृते निष्ठायाम्(), "यस्य विभाषा" ७।२।१५ इति प्रतिषेधात्()। यद्येवम्(), किमर्थं तदित्याह--"तत्? क्रियते" इत्यादि। कदाचिण्ण्यर्थोऽन्तर्भावितण्यर्थतया प्रकृत्यैवाभिधीयते, तत्र यदि निपातनं न क्रियेत, तदाध्ययनेऽपि वर्त्तितमिति स्यात्। तस्मादेतन्निवृत्त्यर्थं तदित्येके प्रतिपन्नः। "अपरे तु" इत्यादि। अन्ये तु वत्तितो गुण इत्यपीच्छन्ति। ण्यन्तस्याण्यन्तस्य च--वृत्तो गुण इति। तन्मतेन निपातनं न कत्र्तव्यमेव। क्रियमाणं वैचित्र्यार्थं वेदितव्यम्()॥

बाल-मनोरमा

णेरध्ययने वृत्तम् ८७३, ७।२।२६

णेरध्ययने। णिलुक् चेति। णिलोपे तु लघूपधगुणः स्यादिति भावः। अधीयमान इति। सूत्रे अध्ययनशब्दः कर्मणि ल्युडन्त इति भावः।

तत्त्व-बोधिनी

णेरध्ययने वृत्तम् ७१७, ७।२।२६

णेः। अधीयत इति अध्ययनम्। "कृत्यल्युटः" इति बहुलवचनात्कर्मणि ल्युट्। णिलुक् चेति। "निपात्यते" इति शेषः। लोपे हि प्रत्ययलक्षणेन गुणः स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ७।२।२७

णेः इत्यनुवर्तते। दम् शम् पूरी दस् स्पश् छद् ज्ञपित्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते। दान्तः, दमितः। शान्तः, शमितः। पूर्णः, पूरितः। दस्तः, दासितः। स्पष्टः, स्पाशितः। छन्नः, छादितः। ज्ञप्तः, ज्ञपितः। इट्प्रतिषेधो णिलुक् च निपात्यते। ज्ञप्तेस् तु भरज्ञपिसनाम् इति विकल्पविधानात् यस्य विभाषा ७।२।१५ इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम्।

न्यासः

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः। , ७।२।२७

"दान्तः, शान्तः" इति। "शमु दमु उपशमे" (धा।पा।१२०१,१२०३)। हेतुमण्णिच्(), णिलुगिट्प्रतिषेधयोः कृतयोः "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घः। ननु च णिलोपस्य स्थानिवद्भावाद्()व्यवधाने सति न प्राप्नोति? नैतदस्ति; न हि निपातनेन लोपे सति तस्य परनिमित्तत्वव्यपदेशो विद्यते, तत्? कुतः स्थानिवद्भावः! "न पदान्त" १।१।५७ इत्यादिना दीर्घविधौ स्थानिवद्भावप्रतिषेधाच्च। "दमितः, शमितः" इति। "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वत्वम्()। "पूर्णः" इति। "पूरी आप्यायने" (धा।पा।१८०३)। दिवादिश्चुरादिश्च। "दस्तः" इति। "तसु उत्क्षेपे" (धा।पा।१२१२) ["उपक्षये"--धा।पा।] "दसु च" (धा।पा।१२१३)। अत्रोपधा ह्रस्वत्वमपि निपात्यते। "स्पष्टश्छन्नः" इति। "स्पश बाधनस्पर्शनयोः (धा।पा।८८७), "छद अपवारणे" (धा।पा। १९३५)। अत्रापयुपधाह्रस्वत्वमपि निपात्यते। ज्ञप्त इति। "ज्ञप मारणतोषणनिशामनेषु" (धा।पा।१६२४)["ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु--धा।पा।] इति चुरादिः, "मारणतोषणनिशामनेषु ज्ञा मिच्च" (धा।पा।८११) इति घटादिश्च, ततो णिच्()। "इट्प्रतिषेधो णिलुक्च" इति। चकारात्?

क्वचिदुपधाह्रस्वत्वमपि निपात्यते॥

बाल-मनोरमा

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ८७५, ७।२।२७

वा दान्त। "णेरध्ययने वृत्त"मित्यतो णेरित्यनुवर्तते। "दमु शमु उपशमे" ण्यन्ताभ्यामिडभावो निपात्यते। "अनुनासिकस्ये"ति दीर्घः। णिलोपस्तु न स्थानिवत्, निपातनाद्दीर्घविधौ तन्निषेधाच्च। दान्तः। शान्तः। "पूरी आप्यायने" ण्यन्तात्क्तः, इडभावो निपात्यते, णिलोपः। रात्परत्वान्नत्वं, णत्वं। पूर्णः। एतेन "न ध्याख्यापृ()मूर्च्छी"त्येव सिद्धे पूर्णग्रहणं व्यर्थमित्यपास्तम्, पूरीधातोण्र्यन्तात्पूर्णरूपार्थत्वात्। "दसु उपक्षये" ण्यन्तात् इडभावो निपात्यते, उपधावृद्ध्यभावश्च। णिलोपः। "स्पश बाधने" ण्यन्तात् क्तः, इडभावो निपात्यते, उपधावृद्ध्यभावश्च। णिलोपः। स्पष्टम्। "छद अपवारणे"। ण्यन्तात्क्तः। इडभावो वृद्ध्यभावश्च निपात्यते। णिलोपः। "रदाभ्या"मिति नत्वं, -- छन्नः। "ज्ञप मिच्चे"ति चुरादिण्यन्तात् क्तः। इडभावो णिलोप इति कैयटः। ज्ञप्तः। पक्ष इति। निपातनाऽभावपक्ष इत्यर्थः। दमितः शमित इति। अमन्तत्वेन मित्त्वाद्ध्रस्वः। ज्ञापत इति। अचौरादिकस्य रूपम्। चौरादिकस्य तु ज्ञपित इत्येव।

तत्त्व-बोधिनी

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ७१९, ७।२।२७

वा दान्त। शमु दमु उपशमे, पूरी आप्यायने, दिवादिश्चुरादिश्च। दसु उपक्षये, स्पश बाधने, छद अपवारणे। ज्ञपिर्मित्संज्ञायां "मारणतोषणनिशामनेष्वि"त्युक्तः।

---

सूत्रम्

काशिका-वृत्तिः

रुष्यमत्वरसङ्घुषाऽस्वनाम् ७।२।२८

वा इति वर्तते। रुषि अम त्वर सङ्घुष आस्वन इत्येतेषां निष्ठायां वा इडागमो न भवति। रुष्टः रुषितः। तीषसहलुभरुष। रिषः [४।२।४७](#) इति विकल्पविधानात् यस्य विभाषा [७।२।१५](#) इति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। अम अभ्यान्तः, अभ्यमितः। त्वर तूर्णः, त्वरितः। आदितश्च [७।२।१६](#) इति प्रतिषेधे प्राप्ते वचनम्। सङ्घुष सङ्घुष्टौ पादौ, सङ्घुषितौ पादौ। सङ्घुष्टं वाक्यमाह, सङ्घुषितं वाक्यमाह। सङ्घुष्टौ दम्यौ, सङ्घुषितौ दम्यौ। सम्पूर्वस्य घुषेरविशद्बने ऽपि परत्वादयम् एव विकल्पो भवति। आस्वन आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः। आस्वान्तं मनः, आस्वनितं मनः। आङ्पूर्वस्य स्वनेर् मनो ऽभिधाने ऽपि परत्वादयं विकल्पः क्षुब्धस्वान्त इति निपातनं बाधते।

न्यासः

रुष्यमत्वरसंघुषास्वनाम्?। , ७।२।२८

"रुष रोषे" (धा।पा।१६७०), "अम गत्यादिषु" (धा।पा।४६५)। "अम रोगे" (धा।पा।१७२०) इत्येतस्य चौरादिकस्य ग्रहणं न भविष्यति; एकाच [७।२।१०](#) इत्यधिकारात्()। "ञि त्वरा सम्भ्रमे" (धा।पा।७७५) सम्पूर्वः। पूर्वोक्तो घुषिः। आङ्पूर्वः पूर्वोक्त एव स्वनिः। "आस्वान्तः" इति। पूर्ववद्दीर्घः। "तूर्णः" इति। "ज्वरत्वररुआव्यविमवामुपधायाः" [६।४।२०](#) इत्यूठ्()। "सम्पूर्व" इत्यादि। "घुषिर्? अविशब्देने" (धा।पा।६५३) इत्यस्यावकाशोऽसम्पूर्वत्वे सत्यविशब्देन--घुष्टा रज्जुः, घुष्टौ पादाविति। अस्य च वचनस्यावकाशः सम्पूर्वत्वे सति विशब्दने--संघुषितं वाक्यमाह, संघुष्टं वाक्यमाहेति; सम्पूर्वत्वे सत्यविशब्दन उभयप्राप्तौ परत्वादनेन विक्लपो भवति--संघुष्टौ दन्तौ, संघुषितौ दन्ताविति। "आङ्पूर्वस्य" इत्यादि।

"क्षुब्धस्वान्त" [७।२।१८] इति स्वनरिट्प्रतिषेधस्यावकाशः। अनाङ्पूर्वत्वे सति मनोऽभिधाने स्वान्तं मन इत्यस्यावकाशः, आङ्पूर्वत्वे सतयमनोऽभिधानम्()। "आस्वन्तो देवदत्तः, आस्वनितो देवदत्तः" इति। आङ्पूर्वत्वे सति मनोऽभिधाने स्वान्तं मन इत्यस्यावकाशः, आङ्पूर्वत्वे सत्यमनोऽभिधानम्()। "आस्वन्तो देवदत्तः, आस्वनितो देवदत्तः" इति। आङ्पूर्वत्वे सति मोनऽभिधाने परत्वादयमेव विकलपो भवति--आस्वान्तं मनः, आस्वनितं मनः॥

बाल-मनोरमा

रुष्यमत्वरसङ्घषाऽऽस्वनाम् ८७६, ७।२।२८

रुष्यमत्वर। रुषि, अम,त्वर, संघुष् , आस्वन्--एषां द्वन्द्वः। णेरिति निवृत्तम्। पञ्चम्यर्थे षष्ठी। तदाह-- एभ्य इति। वा स्यादिति। "वा दान्ते" त्यतस्तदनुवृत्तेरिति भावः। रुष्टः रुषित इति। "तीषसहे"ति रुषो वेट्कत्वात् "यस्य विभाषे"ति निषेधे प्राप्ते विकल्पोऽयम्। आन्तः अमित इति। "अम गत्यादिषु" क्तः। इडभावपक्षे "अनुनासिकस्ये"ति दीर्घः। तूर्णः त्वरित इति। "ञि त्वरा संभ्रमे" क्तः, इडभावपक्षे "ज्वरत्वरे"त्यूठ्। "रदाभ्या"मिति नत्वम्। णत्वम्। "आदितश्चे"ति नित्यमिण्णिषेधे प्राप्ते विकल्पोऽयम्। आदित्त्वस्य तु फलमात्मनेपदमात्रं। तदाह-- अस्य आदित्वे फलं मन्दमिति। तथा च "एध वृद्धौ" इत्यादिवद्ध्रस्वानुबन्धत्वमेव न्याय्यमिति भावः। संघुष्टः संघुषित इति। "घुषिरविशब्दने" इति घुषेः संपूर्वस्य नित्यमिण्णिषेधे प्राप्ते विकल्पोऽयम्। आस्वान्तः आस्वनित इति। आङ्()पूर्वात् स्वनेः क्तः। इडभावपक्षे "अनुनासिकस्ये"ति दीर्घः। "क्षुब्धस्वान्ते"ति निपातनं तु आङ्()पूर्वस्य स्वनेर्न भवति, परत्वादस्यैव विकल्पस्य प्राप्तेरित्याहुः। "न वे"ति सूत्रभाष्ये तु "सङ्घुषाऽऽस्वनोर्विषये उभयत्र विभाषे"त्युक्तम्।

तत्त्व-बोधिनी

रुष्यमत्वरसङ्घषाऽऽस्वनाम् ७२०, ७।२।२८

रुष्य। रुष रोषे "तीषसहे"ति विकल्पितेट्कत्वात् "यस्य विभाषे"त नित्ये निषेधे प्राप्ते विकल्पो विधीयते। अम गत्यादिषु। अम रोगे इति चौरादिकस्तु न गृह्नते, "एकाचः" इत्यधिकारादित्ययाहुः। आन्त इति। "अनुनासकिस्ये"ति दीर्घः। तूर्ण इति। ञित्वरा संभ्रमे, "ज्वरत्वरे"त्यूठ्। निष्ठानत्वम्। "आदितश्चे"ति निषेधे प्राप्ते विकल्पः। एवं च आदित्त्वस्य फलमात्मनेपदमात्रं, तच्च एधत्यादिवद्ध्रस्वानुबन्धत्वेऽपि सिध्यत्येवेत्याशयेनाह-- फलं मन्दमिति। संघुष्ट इति। संपूर्वाद्घुषेर्विशब्दने इटि प्राप्ते विकल्पोऽयम्। अविशब्दनेऽपि संपूर्वस्य परत्वादयं विकल्प एव। आस्वान्त इति। आङ्पूर्वस्य स्वनेर्मनोभिधानेऽप्ययमेव विकल्पः, परत्वात्। आस्वान्तं मनः। आस्वनितं मन इति।

---

सूत्रम्

काशिका-वृत्तिः

हृषेर् लोमसु ७।२।२९

लोमसु वर्तमानस्य हृषेर् निष्ठायां वा इडागमो न भवति। हृष्टानि लोमानि, हृषितानि लोमानि। हृष्टं लोमभिः, हृषितं लोमभिः। हृष्टाः केशाः, हृषिताः केशाः। हृष्टं केशैः हृषितं केशैः। हृषु अलीके इत्युदित्त्वान् निष्ठायामनिट्, हृष तुष्टौ इत्ययं सेट्, तयोरुभयोरिह ग्रहणम् इत्युभयत्र विभाषा इयम्। लोमानि मूर्धजानि अङ्गजानि च सामान्येन गृह्यन्ते, यथा लोमनखं स्पृष्ट्वा शौचं कर्तव्यम् इति। तद्विषये च हर्षे वर्तमानो लोमसु वर्तते इत्युच्यते। लोमसु इति किम्? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्तः इति तुष्ट्यर्थस्य। विस्मितप्रतिघातयोश्च इति वक्तव्यम्। हृष्टो देवदत्तः, हृसितो देवदत्तः। विस्मितः इत्यर्थः। हृष्टाः दन्ताः, हृषिताः दन्ताः। प्रतिहताः इत्यर्थः।

न्यासः

ह्र्षेर्लोमसु। , ७।२।२९

"ह्र्ष्टानि लोमानि" इति। गत्यर्थामकर्मकादिना (३।४।७२) अकर्मकत्वात्? कत्र्तरि क्तः। "ह्र्ष्टं लोमभिः" इति। "नपुंसके भावे क्तः" ३।३।११४ इति क्तः। निष्ठायामनिट्()" इति। "उदितो वा" ७।२।५६ इति क्त्वाप्रत्यय इटि विकल्पिते निष्ठायां "यस्य विभाषा" ७।२।१५ इति प्रतिषेधात्()। "अयं सेट्()" इति। उदात्तत्वादिट्प्रतिषेधाभावात्()। "उभयत्रविभाषेयम्()" इति। प्राप्ते चाप्राप्ते च। आलीक्यार्थस्य प्रतिषेधे प्राप्ते विकल्पः, तुष्ट()र्थस्य चाप्राप्ते; लोमशब्दस्याङ्गजतेष्वेव रूढत्वात्()। लोमस्वित्युच्यमानेङ्गजेष्वेव न केशेषु भवितव्यमिति कस्याचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"लोमानि" इत्यादि। कथम्()? इत्याह--"यथा लोमनखम्()" इत्यादि। अत्र हि सामान्येन ग्रहणं तेषाम्()। तथा हि--केशानपि स्पृष्ट्वा शौचं क्रियत इति। कथं पुनः क्रियावचनसय धातोद्र्रव्येषु लोमसु वृत्तिरुपपद्यते? इत्याह--"तद्विषये" इत्यादि। तानि लोमानि विषयो यस्य स तथोक्तः। ह्र्षेर्योऽर्थः स लोमत्साध्यत्वाल्लोमविषयः। तत्र वत्र्तमानो ह्र्षिरप्यर्थद्वारेण लोमसु वत्र्तते इत्युच्यते। तदेवमर्थद्वारेण लोम्नां ह्र्षिं प्रति विशेषणत्वं दर्शितं भवति। "विस्मितप्रतिधातयोश्च" इति। निपातनमिति। विस्मिप्रतिधातयोर्निष्ठायामिण्? न भनत्येवमर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--ह्र्षेरिति योगविभागः क्रियते, ततो विस्मितप्रतिधातयोरपि भविष्यतीति। अथ वा--बहुवचननिर्देशोऽत्र क्रियते, आद्यर्थोऽयं विज्ञायते लोमादिषु लोमस्विति तेन विस्मतप्रतिधातयोरपि भविष्यति॥

बाल-मनोरमा

तत्प्रत्ययस्य च १११४, ७।२।२९

तत्प्रत्ययस्य च। पूर्वसूत्रे यदनुवृतं तत्सर्वमिहाप्यनुवर्तते तच्छब्देन ढप्रत्ययः परामृश्यते। तदाह--ढप्रत्ययान्तस्येति। प्रावाहणेयिः प्रवाहणेयिरिति। शुभ्रादिढगन्तादिञ्। ननु पूर्वसूत्रेणैव सिद्धत्वादिदं व्यर्थमित्यत आह--बाह्रेति। ढक्प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्ता "तद्धितेष्वचामादे"रिति नित्या आदिवृद्धिः। डाश्रयेणेति। ढप्रत्यये परे विहितेनेति यावत्। तथाविधेन वृद्धिविकल्पेन पूर्वसूत्रविहितेन बाधितुं न शक्यते, भिन्ननिमित्तकत्वादित्यर्थः। पूर्वसूत्रं हि केवलढ प्रत्ययान्ते ढप्रत्ययं परनिमित्तत्वेनाश्रित्य प्रवृत्तं ढङ्निमित्तामादिवृदिं()ध बाधत इति युक्तं, न त्विञ्प्रत्ययनिमित्तामपि नित्यामादिवृद्धिम्।?तस्तस्या अपि बाधनार्थमिदं सूत्रमित्यर्थः। इदं वृद्धिविधिद्वयमपि "शुभ्रादिभ्यश्चे"त्यत्रैव वक्तुं युक्तम्। कल्याण्या। इनङि ङकार इत्।

बाल-मनोरमा

ह्र्षेर्लोमसु ८७७, ७।२।२९

ह्र्षेर्लोमसु। लोमसु कर्तृष्विति बोध्यम्। इदं च "अजर्य"मिति सूत्रे भाष्ये स्पष्टम्। ह्र्ष्टं ह्र्षितं लोमेति। "गत्यर्थाऽकर्मके"ति कर्तरि क्तः। रोमाञ्चितभूतमित्यर्थः। विस्मितप्रतिघातयोश्चेति। वार्तिकमिदम्। "ह्र्षेर्निष्ठाया इड्वे"ति शेषः। उदित्त्वादिति। "उदितो वे"ति क्त्वायां वेट्कत्वात् "यस्य विभाषे"ति निष्ठायां नेडित्यर्थः। तथा अलीकेऽर्थे ह्र्ष्ट इत्येव। मृषोक्तवानित्यर्थः। इडिति। "ह्र्ष तुष्टौ" इति धातोः क्ते इडेव भवतीत्यर्थः। ह्र्षितः। तुष्ट इत्यर्थः। विस्मितप्रतिघातयोस्तु धातूनामनेकार्थत्वाद्वृत्तिः। तत्र लोमसु, विस्मितप्रतिघातयोश्च "ह्र्षु अलीके" इत्यस्मात्। "यस्य विभाषेटति नित्यमिण्निषेधे प्राप्ते विभाषेयम्। "ह्र्ष तुष्टौ" इत्यस्मात्तु नित्यमिट्प्राप्तौ विभाषेति विवेकः।

तत्त्व-बोधिनी

तत्प्रत्ययस्य च ९३१, ७।२।२९

तत्प्रत्ययस्य च। "प्रवाहणस्य"इति वर्तते। तच्छब्देन ढप्रत्ययः परामृश्यते। तदाह---ढान्तस्येत्यादि। बाह्वतद्धितनिमित्तेति। ढक्()प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्तेत्यर्थः।

तत्त्व-बोधिनी

ह्मषेर्लोमसु ७२१, ७।२।२९

ह्मषेः। ह्मषु अलीके। उदित्तवन्निष्ठायामनिट्, ह्मष तुष्टौ सेट्, उभयोरपि ग्रहणमित्युभयत्र विभाषेयम्।

---

सूत्रम्

काशिका-वृत्तिः

अपचितश् च ७।२।३०

अपचितः इति वा निपात्यते। अपपूर्वस्य चाय्तेः निष्ठायाम् अनिट्त्वं चिभावश्च निपात्यते। अपचितो ऽनेन गुरुः, अपचायितो ऽनेन गुरुः। क्तिनि नित्यम् इति वक्तव्यम्। क्तिनि नित्यं चिभावो निपात्यते। अपचितिः।

न्यासः

अपचितश्च। , ७।२।३०

"चायतेः" इति। चायृ पूजानिशामनयोः" (धा।पा।८८०) इति। अयं योगो यश्चिनोतेरपूर्वसय पूजायां वृतिं()त न प्रतिपद्यते तं प्रत्यारभ्यते। यस्तु प्रतिपद्यते तं प्रति नारब्धब्ध एव। तथा हि--चिनोतेरपचित इति भविष्यतीति, चायतेस्त्ववचायित इति। "वक्तव्यम्()" इति। व्याख्येयमित्यर्थः। तेत्रेदं व्याख्यानम्()--चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेनापचितिरित्येतदपि निपात्यत इति। एतच्च निपातयता चायतेः क्तिनि नित्यं चिभावो वक्तव्यः॥

बाल-मनोरमा

अपचितश्च ८७८, ७।२।३०

अपचितश्च। "अपपूर्वस्य चिञो ण्यन्तस्य निष्ठायां चिभावो निपात्यते" इति भाष्यं। तदाह-- चायेर्निपातोऽयमिति।

---

सूत्रम्

काशिका-वृत्तिः

ह्रु ह्वरेश् छन्दसि ७।२।३१

ह्वरतेः धातोर् निष्ठायं छन्दसि ह्रु इत्ययम् आदेशो भवति। ह्रु तस्य चाह्रु तस्य च। अह्रु तमसि हविर्धानम्। छन्दसि इति किम्? ह्वृतम्।

न्यासः

ह्रू ह्वरेश्छन्दसि। , ७।२।३१

"ह्वृ कौटिल्ये" (धा।पा।९३१) इत्येतस्यानुदात्तत्वादिट्प्रतिषेधोऽस्त्येवेत्यादेशार्थं वचनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अपरिह्वृताश् च ७।२।३२

अपरिहृताः इति निपात्यते छन्दसि विषये। ह्रु इत्येतस्य आदेशस्य अभावो निपात्यते। अपरिहृताः सनुयाम वाजम्।

न्यासः

अपरिहूवृताश्च। , ७।२।३२

"ह्यु" इत्येतस्यादेशस्याभावो निपात्यते" इति। पूर्वसूत्रेण प्राप्तस्य। बहुवचननिर्देशो बहवचन एव निपातनं यथा स्यात्()। तेन क्चनान्तरे हि अपरिह्युतः, अपरिह्यु, अपरिह्युतावित्येव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

सोमे ह्वरितः ७।२।३३

ह्वरितः इति ह्वरतेर् निष्ठायाम् इडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद् भवति। मा नः सोमो ह्वरितः। विह्वरितस्त्वम्।

न्यासः

सोमे ह्वरित। , ७।२।३३

"इडागमो गुणश्च निपात्यते" इति। चकारात्? "ह्यु" इत्येतस्यादेशाभावश्च॥

बाल-मनोरमा

वा द्रुहमुहष्णुहष्णिहाम् , ७।२।३३

वा द्रुहः। "दादे"रित्यतो घ इत्यनुवर्तते। झलीति पदस्येति अन्ते #इति पूर्ववदनुवर्तते। तदाह--एषामिति। द्रुहादीनां चतुर्णामित्यर्थः। ध्रुक्--ध्रुगिति। घत्वपक्षे भष्भावे चत्र्वविकल्प इति भावः। ध्रुट् ध्रुडिति। घत्वाऽभावपक्षे "हो ढः" इति ढत्वे भष्भावे चत्र्वविकल्पः। अत्र भष्भावार्थमेव "हो ढः" इति सूत्रे ढ एव विहित, नतु डः। तथा सति झषन्तत्वाऽभावाद्भष्भावो न स्यात्। अचि सुपि दुर्हमित्यादि। ध्रुग्भ्यामिति। घत्वपक्षे भष्भावः। ध्रुड्भ्यामिति। घत्वाऽभावपक्षे ढत्वे जश्त्वे रूपम्। एवं भिसि भ्यसि च रूपद्वयम्। द्रुहः। द्रुहः। द्रुहोः द्रुहाम्। ध्रुक्ष्विति। घत्वे भष्भावे "आदेशप्रत्यययोः" इति षत्वे "खरि चे"ति चत्र्वम्। ध्रुट्त्स्विति। घत्वाऽभावपक्षे ढत्वे भष्भावे ढस्य जश्तेव धुटि चर्त्वे डस्य चत्र्वम्। चत्र्वस्याऽसिद्धत्वा"च्चयो द्वितीयाः" इति तकारस्य थो न भवति। " न पदान्ता"दिति ष्टुत्वं न। ध्रुट्स्विति। धुडभावे रूपम्। हस्य ढः, भष्भावः, ढस्य जश्त्वेन डः, तस्य चर्त्वेन टः। एवमिति। "भष्भाववर्ज"मिति शेषः। वि()आं वहतीत्यर्थ "भजोण्वि"रित्यतो ण्विरित्यनुवृत्तौ "वहश्चे"ति ण्विः। णकार इत्। वेर्लोपः। "अत उपधायाः" इति वृद्धिः। उपपदसमासः। वि()आवाहितिं रूपम्। ततस्सोर्हल्ङ्याबिति लोपे हो ढः" इति ढत्वे "वाऽसाने" इति चत्र्वविकल्पे- वि()आवाट् वि()आआड्, वि()आआहौ, वि()आवाहः।

---

सूत्रम्

काशिका-वृत्तिः

ग्रसितस्कभितस्तभितौत्तभितचत्तविकस्ता

विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमिति इति च ७।२।३४

ग्रसित स्कभित स्तभित उत्तभित चत्त विकस्त विशस्तृ शंस्तृ शास्तृ तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः उज्ज्वलिति क्षरिति

क्षमिति वमिति अमिति इत्येतानि छन्दसि विषये निपात्यन्ते। तत्र ग्रसित स्कभित स्तभित उत्तभित इति ग्रसु स्कम्भु स्तम्भु इत्येतेषाम् उदित्वान् निष्ठायाम् इट्प्रतिषेधे प्राप्ते इडागमो निपात्यते। ग्रसितं वा एतत् सोमस्य। ग्रस्तम् इति भाषायाम्। स्कभित विष्कभिते अजरे। विष्कब्ध इति भाषायाम्। स्तभित येन स्वः स्तभितम्। स्तब्धम् इति भाषायाम्। उत्तभित सत्येनोत्तभिता भूमिः। उत्तब्धा इति भाषायाम्। उत्तभित इति उत्पूर्वस्य निपातसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति। चत्त, विकस्त इति चतेः कसेश्च विपूर्वस्य निष्ठायाम् इडभावो निपात्यते। चत्ता वर्षेण विद्युत् चतिता इति भाषायाम्। विकस्त उत्तानाया हृदयं यद् विकस्तम्। विकसितम् इति भाषायाम्। निपातनं बहुत्वापेक्षम्, विकस्ताः इति बहुवचनं कृतम्। अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः। विशस्तृ शंस्तृ शास्तृ इति शसेर् विपूर्वस्य शंसेः शासेश्च तृचि इडभावो निपात्यते। विशस्तृ एकस्त्वष्टुरश्वस्याविशस्ता। विशसिता इति भाषायाम्। शंस्तृ उत शंस्ता सुविप्रः। शंसिता इति भाषायाम्। शास्तृ प्रशास्ता। प्रशासितम् इति भाषायाम्। तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीः इति तरतेः वृङ्वृञोश्च तृचि उटूटित्येतावागमौ निपात्येते। तरुतारं रथानाम्, तरूतारम्। तरितारम्, तरीतारम् इति भाषायाम्। वरुतारं रथानाम्, वरूतारं रथानाम्। वरितारम्, वरीतारम् इति भाषायाम्। वरुत्री त्वा देवी विश्वदेव्यवती। जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम्। अतन्त्रं चैतत्। इदम् अपि हि भवति अहोरात्राणि वै वरूत्रयः इति। छान्दसिकमत्र ह्रस्वत्वम्। प्रपञ्चार्थम् एव च ङीबन्तस्य निपातनम्। वरूतृशब्दो हि निपातितः, तत एव ङीपि सति सिद्धो वरूत्रीशब्दः। उज्ज्वलिति क्षरिति क्षमिति वमिति अमिति इति च ज्वलतेरुत्पूर्वस्य क्षर क्षम वम इत्येतेषां च तिपि शपः इकारादेशो निपात्यते, शपो लुग्वा, इडागमः। अग्निरुज्ज्वलिति। उज्ज्वलति इति भाषायाम्। क्षरिति स्तोकं क्षरिति। क्षरति इति भाषायाम्। क्षमिति स्तोमं क्षमिति। क्षमति इति भाषायाम्। वमिति यः सोमं वमिति। वमति इति भाषायाम्। अमिति अभ्यमिति वरुणः। अभ्यमति इति भाषायाम्। इतिकरणं प्रदर्शनार्थम् तेन क्वचितीकारो भावति, रविमभ्यमीति वरुणः इत्यपि हि वेदे पठ्यते।

न्यासः

ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्वलितिक्षरितिक्षमितिवमित्य च। , ७।२।३४

"ग्रसु स्कन्भु स्तन्भु इत्येतेषाम्()" इत्यादि। "ग्रसु ग्लसु अदने" (धा।पा।६३०,६३१), "स्कन्भु", "स्तन्भु" ३।१।८२ इत्येतौ सौत्रौ धातू; "स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च" ३।१।८२ इति सूत्रे पाठात्()। "स्कभितम्, स्तभितम्()" इति। "अनिदिताम्()" ६।४।२४ इत्यनुनासिकसलोपः। "स्कब्धभ्(), स्तब्धम्()" इति। "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वम्(), "झलां जश्? झशि" ८।४।५५ इति जश्त्वम्()। "उत्तभितम्()" इति। "उदः स्थास्तम्भोःत पूर्वस्य" ८।४।६० इति पूर्वसवर्णः। "अन्योपसर्गपूर्वः स्तभितशब्दो न भवतीति इति। यदि स्यात्(), उत्पूर्वस्य निपातनमनर्थकं स्यात्()। "चतेः, कसेश्च" इति। "चते चदे याचने" (धा।पा।८६५,८६६), "कस गतौ" (धा।पा।८६०)। ननु सूत्रे विकस्तशब्दाद्बहुवचनं श्रूयते, ततश्च कथमसौ वृत्तादेकवचनान्त उदह्रतः? इत्यत आह--"निपातनं बहुत्वापेक्षम्()। विकस्ता इति बहुवचनम्()" इति। सूत्रे ग्रसितादीनि निपातनानि कृतद्वन्द्वानि, अतस्तदपेक्षया बहुवचनं कृतम्()। वृत्तौ त्वसमस्त एक एवायं विकस्तशब्दः। न चैतदर्थस्य बहुवचनं विवक्षिम्(), अत एकवचनान्त एवोदाह्रतः। "अपरेषु" इति। विशस्तृप्रभृतिषु। "प्रत्येकं विभक्तिनिर्देशः" इति। बहुत्वाभावाद्बहुवचनम्(), तेन तत्र न कृतमित्यभिप्रायः। शसेर्विपूर्वस्य शंसेः शासेश्चेति। "शसु हिसायाम्()" (धा।पा।७२७), "शन्सु स्तुतौ" (धा।पा।७२८) "शासु अनुशिष्टौ" (धा।पा।१०७५)। "तरीतारम्? वरीतारम्()" इति। "वृतो वा" ७।२।३८ इति दीर्घः। "वरूत्रीः" इति। "ऋन्नेभ्यो ङीप्()" ४।२।५ इति ङीप्(), तदन्ताज्जस्(), "वा छन्दसि" ६।१।१०२ इति पूर्वसवर्णदीर्घः। जसि पूर्वसवर्णोच्चारणम्()" इत्यादि। ननु यणादेशे कृते वरूत्र्य इति भवितव्यम्(), कथं "वरूत्रयः" इति भवति? इत्याह--"छान्दसम्()" इत्यादि। छान्दसत्वेन हि ह्यस्वत्वे कृते "जसि च"

७।३।१०९ इति यणादेशापवदो गुणो विधीयते। "प्रपञ्चार्थम्()" इति। विस्तरेणान्वाख्यानमित्यर्थः। तथा हि "पचिर्विस्तारवचने" (धा।पा।१६५१) इति तस्यैवाजन्तस्य प्रपञ्च इति भवति। प्रपञ्चस्तु विस्पष्टार्थः। विस्तरेण ह्रन्वाख्यानं स्पष्टं भवति। अथ वरूत्रीशब्दस्य सिध्यर्थ निपातनं कस्मान्न भवति? इत्याह--"वख्तृशब्दो हि" इत्यादि। ज्वलतेरिति "ज्वल दीप्तौ" (धा।पा।८३१), "क्षर सञ्चलने" (धा।पा।८५१), "टु वम उद्()गिरणे" (धा।पा।८४९) "अम गत्यादिषु (धा।पा।४६५)। "इतिकरणं प्रदर्शनार्थम्()" इति एवम्प्रकारस्याम्यस्यापि प्रदर्शनार्थमितिकरणम्()। तेन किं सिद्धं भवति? इत्याह--"तेन क्वचित्()" इत्यादि। चकारस्श्छन्दसीत्यनुकर्षणार्थः। तेन चानुकृष्टत्वान्नोत्तरत्राभिसम्बध्यते। तेनोत्तरत्र विधानमविशेषेण भवति॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आर्धधातुकस्य ६।१ ७५ इट् १।१ वलादेः ६।१

समासः॥

वल् आदिः यस्य सः वलादिः, तस्य ॰ बहुव्रीहिः

अर्थः॥

वलादेः आर्धधातुकस्य इडागमः भवति

उदाहरणम्॥

लविता, लवितुम्, लवितव्यम्। पविता, पवितुम्, पवितव्यम्।
काशिका-वृत्तिः
आर्धधातुकस्य इड् वलादेः ७।२।३५

छन्दसि इति निवृत्तम्। आर्धधातुकस्य वलादेरिडागमो भवति। लविता। लवितुम्। लवितव्यम्। पविता। पवितुम्। पवितव्यम्। आर्धधातुकस्य इति किम्? आस्ते। शेते। वस्ते। रुदादिभ्यः सार्वधातुके ७।२।७६ इत्येतस्मिन् नियमार्थे वज्ञायमाने प्रतिपत्तिगौरवम् भवति इति आर्धधातुकग्रहणं क्रियते। वलादेः इति किम्? लव्यम्। पव्यम्। लवनीयम्। पवनीयम्। इटिति वर्तमाने पुनः इड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम्।
लघु-सिद्धान्त-कौमुदी
आर्धधातुकस्येड्वलादेः ४०३, ७।२।३५

वलादेरार्धधातुरस्येडागमः स्यात्। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।
न्यासः
आर्धधातुकस्येड्वलादेः। , ७।२।३५

"आस्ते, शेते, वस्ते" इति। "आस उपवेशने" (धा।पा।१०२१), "शीङ्? स्वप्ने" (धा।पा।१०३२), "दस आच्छादने" (धा।पा।१०२३)। अदादित्वाच्छपो लुक्(), "शीङः सार्वधातुके गुणः" ७।४।२१। आर्धधातुकग्रहणादिह--सार्वधातुकस्येण्न

भवतीति। ननु च "रुदादिभ्यः सार्वधातुके" ७।२।७६ इत्येतन्नियमार्थं विज्ञायते--"रुदादिभ्य एव सार्वधातुकस्य नान्येभ्य" इति। "रुदादिभ्यः सार्वधातुकस्यैव" इत्येषा तु विपरीतनियमाशङ्का न कत्र्तव्या। यदि ह्रेवंविधो नियमः स्यात्(), तदा रुदादेः परस्य सन इडागमो न स्यात्(); नियमेन व्यावर्त्तितत्वात्()। ततश्च "रुदविद" १।२।८ इत्यत्र रुदिग्रहणमनर्थकं स्यात्(); "हलन्ताच्च" १।२।१० इति कित्वस्य सिद्धत्वात्()। तस्मान्नात्र विपरीतनियमाशङ्का। "रुदादिभ्य एव सार्वधातुकस्य, नान्येभ्यः" इत्येष नियमो भविष्यति, ततो नार्थः सार्वधातुकनिवृत्त्यर्थेनाद्र्धधातुकग्रहणेन? इत्यत आह--"रुदादिभ्यः" इत्यादि। "रुदादिभ्यः सार्वधातुके" ७।२।७६ इत्येतस्मिन्नियमार्थे विज्ञायमाने कश्चिन्मन्दबुद्धिः प्रतिपत्ता विपरीतनियमं सम्भावयेत्(), तत्रानन्तरोक्तया नीत्याऽभिमतनियमे प्रतिपद्यमाने "प्रतिपत्तिगौरवं भवति" इति। इतिकरणो हेतौ। यत एव "रुदादिभ्यः सार्वधातुके" ७।२।७६ इत्येतस्मिन्नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवति, अतो हेतोरार्धधातुकग्रहणं कस्मान्न भवति? नार्हतीत्येवमर्थं भवितुम्()। यदि ह्रङ्गस्य स्यात्(), "एकाच उपदेशेऽनुदात्तात्()" ७।२।१० इति प्रत्ययस्येट्प्रतिषेधोऽनर्थकः स्यात्(); प्राप्त्यभावा। "न क्त्वा सेट्()" १।२।१८, "निष्ठा शीङ्()" १।२।१९ इति वचनाच्च। न ह्रस्येडागमे सति क्त्वानिष्ठयोः सेट्त्वमुपपद्यते। इह तर्हि वृक्षात्वम्(), वृक्षतेति प्रातिपदिकप्रत्ययस्य मा भूदित्येवमर्थं कस्मान्न भवति? एवमर्थमपि नार्हति भवितुम्(), "ऋत इद्धातोः" ७।१।१०० इत्यतः "धातोः" इत्यनुवत्र्तते। नन्वेवमपि लूभ्याम्(), लूभिरित्यत्र प्राप्नोतीत्येव, न ह्रत्र प्रकृतेः प्रतिपदिकत्वेन धातुत्वं विहन्यते "क्विबन्ता धातुत्वं न जहति" (व्या।प।१३२) इति कृत्वा, तस्मादिह मा भूदित्येवमर्थमार्धधातुकग्रहणं युक्तम्()? नैतदस्ति; "ऋत इद्धातोः" ७।१।१०० इत्यत्र हि स्वरूपपदात्मकस्य धातुशब्दस्य ग्रहणम्()। अत इहापि "धातो" रित्यनुवत्र्तमानं तथाभूतमेवानुवत्र्तते। तेन "धातोः" इत्येवंविहितस्येङ्()विधानात्? लूभ्याम्(), लूभिरित्यत्रासत्यार्धधातुकग्रहण इटः प्रसङ्गो न भवति। तथा जुगुप्सत इत्येवमादावपि; न ह्रत्र धातोरित्येवं सन्? विहितः, किं तर्हि? गुपादीन्? धातून्? स्वरूपेणोपादाय। तस्मादेतन्निवृत्त्यर्थमप्यार्धधातुकग्रहणं न भवतीति वेदितव्यम्()। "ऋत इद्धातोः" ७।१।१०० इत्यत्र स्वरूपपदात्मकस्य धातुशब्दस्य ग्रहणं स्यात्()। तदा तस्यापि "ऋतः" इति विशेषणं न परिकल्प्येत। तस्य धातुशब्देऽसम्भवात्? तदर्थस्य विशेषणं विज्ञायत इत्यदोवः। अथ वा--तत्र तन्त्रेण द्वे धादुग्रहण उपात्ते; तत्रैकमर्थपदात्मकम्(), अपरं स्वरूपपदात्मकम्()। तत्र यदर्थपदात्मकं तत्र तस्योपयोगः, अपरस्य त्वत्रेति न कश्चिद्दोषः। तस्मात्? प्रतिपत्तिगौरवपरीहारार्थमेवार्धधातुकग्रहणम्()। अथेङ्ग्रहणं किमर्थम्(), यावता "नेड्वशि कृति" (७।२।२८) इत्यत इड्ग्रहणमनुवरत्तते? इत्याह--"इडिति वत्र्तमाने" इत्यादि। तद्धिड्ग्रहणं प्रतिषेधेन सम्बद्धम्(), अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्()। तन्निवृत्यर्थं पुनरिड्ग्रहणं क्रियते। ननु च प्राप्तौ सत्यां प्रतिषेधः स्यात्(), न च वलादेरार्धधातुकस्य केनचिदिट्प्राप्नोति, अतः प्राप्त्यभावादेव विधिरयं विज्ञास्यते, न प्रतिषेधः? नैतदस्ति; एतस्मादेव प्रतिषेधवचनाद्विधिरप्यनुमीयते। नूनमार्धधातुकस्येङ्()विधिरस्तीति येन वलादेः प्रतिषेधं शास्ति। पुनरिड्ग्रहणात्? तु विधिरेष विज्ञास्यते॥

बाल-मनोरमा

आद्र्धधातुकस्येड्?वलादेः ३३, ७।२।३५

सिपस्थलि बभू थ इति स्थिते --आद्र्धधातुस्येट्। "नेड्वशि कृती"त्यस्मादनुवृत्त्यैव सिद्धेरिहेड्ग्रहणं न कार्यमिति "नेड्वशी"ति सूत्रभाष्ये प्रत्याख्यातम्। आद्र्धधातुकस्येति किम्?। जुगुप्सति। अत्र "गुप्तिज्()किद्भ्य" इति सनो धातोरित्यधिकृत्य विहितत्वाऽभावान्नाद्र्धधातुकत्वम्। बभूविथेति। सिपस्थलि तस्य इडागमे वुगादि पूर्ववत्। बभूवथुरिति। थसोऽथुसादेशे वुगादि पूर्ववत्। सकारस्य रुत्वविसर्गौ। बभूवेति। मध्यमपुरुषबहुवचनस्य अकारः सर्वादेश इति "परस्मैपदानां णलतु"सित्यत्रोक्तम्। वुगादि पूर्ववत्। बभूवेति। मिपो णलि वुगादि पूर्ववत्। बभूविवेति। वसो वादेशे

वलादित्वादिडागमे वुगादि पूर्ववत्। नचात्र "श्र्युकः किती"तीडागमनिषेधः शङ्क्यः, "कृसृभृवृस्तुद्रुरुआउश्रुवो लिटी"ति क्रादिनियमादिटसिद्धेः। बभूविमेति। मसो मादेशे इडागमे वुगादि पूर्ववत्। इति लिट्प्रक्रिया।

तत्त्व-बोधिनी

आद्र्धधातुकस्येड्वलादेः २७, ७।२।३५

"नेड्वशि कृती"त्यत इडित्यनुवर्तमाने पुनरिड्ग्रहणं निषेधसंबद्धस्येटो निवृत्त्यर्थम्। वस्तुतस्तु "समर्थानां प्रथमाद्वे"त्यनुवृत्तस्य पदत्रयसय् मध्ये "प्राग्दिश्" इत्यनन्तरं "समर्थानां प्रथमा"दिति निवृत्तं, "वे"तित्वनुवर्तत इति व्याख्यानमिव "नेति निवृत्तम्, इडित्यनुवत्र्तते" इति व्याख्यातुं शक्यत्वादिड्ग्रहणं त्युक्तं शक्यम्, तथापि स्पष्टप्रतिपत्त्यर्थं तत्स्वीकृतमिति बोध्यम्। आद्र्धधातुकस्येति किम्?। आस्ते, शेते। वलादेः किम्?। एधनीयम्। ननु "रुदादिभ्यः सार्वधातुके" इत्यनेन सार्वधातुकस्य यदीड्भवति तर्हि रुदादिभ्य एवे"ति नियमादास्ते शेत इत्यत्र इड्न भवेदित्याद्र्धधातुकस्येति ग्रहणं व्यर्थम्। न च रुदादिभ्यः सार्वधातुक एवेति विपरीतनियमाद्रोदितेत्यत्र न स्यात्, आस्ते शेत इत्यत्र तु स्यादिति शङ्क्यम्। "रुदविदमुषग्रहिस्वपिप्रच्छः संश्चे"ति क्त्वाप्रत्यये औपदेशिककित्त्वस्य सुस्थत्वात्। "हलन्तञ्चे"ति झलादिसनः कित्वाच्च। तस्माद्विपरीतनियमाऽसंभवेनाद्र्धदातुकग्रहणं व्यर्थमेव। ननु तद्ग्रहणाऽभावे वलादेरित्यस्य-- अङ्गस्येति यदधिकृतं तद्विशेष्यं स्यात्, ततश्च अडाटाविवेडागमोऽतादवस्थ्यात्, अकृते।()पि तद्ग्रहणेऽङ्गस्य यो वलादिरङ्गनिमित्तं तस्येडिति व्याख्यानादिष्टसिद्धेश्च। तस्मादुभयथापि व्याख्यानेशरणीकर्तव्ये "आद्र्धधातुकस्ये"त्यस्य त्याग एव श्रेयान्। नन्वेवं "केशवः", "अङ्गना" "वृक्षत्व"मित्यत्रेट् स्यात्। "ॠत इद्धातो"रित्यतो धातोरित्यनुवर्तनादधातोः परस्य न भवतीति परिहारसंभवेऽपि लूभ्यां पूभ्यामित्यत्र दुर्वार एवेडागमः। विहितविशेषणेनाप्ययं वारयितुमशक्यः, क्विबन्ता धातुत्वं न जहतीति लूभ्यां लूभिरित्यत्र ब्यामादेर्धातोर्विहितत्वाऽनपायात्। किंच "जुगुप्सते" इत्यादौ "गुप्तिज्किद्भ्यः" इति धातोर्विहितस्य सन इड् दुर्वारः स्यात्। न चेह धातोः परत्र विहितस्य वलादेरिति व्याख्यानलाभाय धातोरिति पञ्चम्यन्तमपेक्षितं, तच्च दुर्लभम्, "ॠत इद्धातो"रित्यत्र धातोरित्यस्य षष्ठ()न्तत्वात्, तथा च वृक्षत्वमित्यादावपीडागमप्रसङ्ग इति वाच्यं, शब्दाधिकारपक्षे स्वरितत्वेन तत्सदृशशब्दोऽनुमीयत इति पञ्चम्यन्तलाभात्। अस्तु वा षष्ठ()न्तत्वं, विहितत्वं षष्ठ()र्थ इति व्याख्यायामिष्टसिद्धः। तस्माज्जुगुप्सत इत्यादावतिप्रसङ्गवारणार्थमाद्र्धधातुकस्यति ग्रहणम्। केचित्तु--- धातोरित्युच्चार्य विहितो यः प्रत्ययस्तस्य#एडिति यदि व्याख्यायेत तदा लूभ्यां जुगुप्सत इत्यत्रातिप्रसङ्गाऽभावादाद्र्धधातुकस्येति व्यर्थमित्याहुः। बभूविवेति। न चाऽत्र "श्र्युकः किती"तीण्निषेधे वुगागमोऽपि न स्यादिति शङ्क्यं, क्रादिनियमादिटः प्रवृत्तेः॥

---

सूत्रम्

काशिका-वृत्तिः

स्नुक्रमोरनात्मनेपदनिमित्ते ७।२।३६

नियमार्थम् इदम्। स्नुक्रमोः आर्धधातुकस्य वलादेः इडागमो भवति, न चेत् स्नुक्रमी आत्मनेपदस्य निमित्तं भवतः। क्व च तावात्मनेपदस्य निमित्तम्? यत्र आत्मनेपदं तदाश्रयं भवति, भावकर्मकर्मकर्तृकर्मव्यतिहाराः क्रमेर् वृत्त्यादयश्च। तेन अयम् सत्यात्मनेपदे प्रतिषेधो भवति न असति इति। प्रतिषेधफलं च इदं सूत्रम्। स्नुक्रमोरुदित्वातिट् सिद्ध एव। प्रस्नविता। प्रस्नवितुम्। प्रस्नवितव्यम्। प्रक्रमिता। प्रक्रमितुम्। प्रक्रमितव्यम्। अनात्मनेपदनिमित्ते इति किम्? प्रस्नोषीष्ट। प्रक्रंसीष्ट। प्रस्नोष्यते। प्रक्रंस्यते। प्रसुस्नूषिष्यते। प्रचिक्रंसिष्यते। सर्वत्र एव अत्र स्नैतिः क्रमिश्च

आत्मनेपदस्य निमित्तम्। सनन्तादपि पूर्ववत्सनः १।३।६२ इति आत्मनेपदं विधीयते। निमित्तग्रहणं किम्? सीयुडादेस् तत्परपरस्य च प्रतिषेधार्थम्। इह तु प्रस्नवितेवाचरति इति प्रस्नवित्रीयते इति क्यङतम् आत्मनेपदस्य निमित्तम्, न स्नौतिः। क्रमेस् तु कर्तर्यात्मनेपदविषयादसत्यात्मनेपदे कृति प्रतिषेधो वक्तव्यः। प्रक्रन्ता। उपक्रन्ता। कर्तरि इति किम्? प्रक्रमितव्यम्। उपक्रमितव्यम्। आत्मनेपदविषयातिति किम्? निष्ट्रमितिआ। स्नौतेः सनि किति च प्रत्यये श्र्युकः किति ७।२।११, सनि ग्रहगुहोश्च ७।२।१२ इत्येव प्रतिषेधो भवति। प्रसुस्नूषति। प्रस्नुतः। प्रस्नुतवान्।

न्यासः

स्नुकरमोरनात्मनेपदनिमित्ते। , ७।२।३६

"स्नु प्ररुआवणे" ["ष्णु"--धा।पा।] (धा।पा।१०३८), "क्रमु पादविक्षेपे" (धा।पा।४७३)--अनयोरुदात्तत्वादिटि सिद्धे नियमार्थं वचनम्()--अनात्मनेपदविषय एवानयोर्यथा स्यात्(), अन्यत्रा मा भूदिति। ननु च स्नोतेरुगन्तत्वात्? किति सनि च प्रतिषेधविधानात्? तस्य वचनं विद्यर्थमपि सम्भवति? नैतदस्ति; "आर्धधातुकस्येड्वलादेः" ७।२।३५ इत्यनुवत्र्तते। तेनास्याः प्राप्तेर्विषये योगोऽयमिति विज्ञायते। न चास्याः प्राप्तेः सन्किती विषयौ; तयोरपवादविषयत्वात्()। आत्मनेपदनिमित्ते इति प्रथमाद्विवचनान्तम्()। स्नुक्रमोरेतद्विशेषणमिति दर्शयितुमाह--"न चेत्()" इत्यादि। "क्व च तावात्मनेपदनिमित्ते" इति। किं यत्रात्मनेपदं प्रति योग्यतामात्रमपि तयोरस्ति तत्रापि तावात्मनेपदनिमित्ते? उत यत्र तदाश्रयमात्मनेपदं भवति तत्र? एवमर्थं पृच्छति--"यत्र" इत्यादि। अत्रैवं व्याख्यानम्()--यत्र तदाश्रयमात्()मनेपदं सम्भवति तत्र तावात्मनेपदनिमित्ते। किं पुनस्तद्? यत्र तदाश्रयमात्मनेपदं भवति?
इत्याह--"भावकर्मकर्तृकर्मकर्मव्यतीहारः, क्रमेश्च" इति। एषु हि स्तुक्रम्याश्रयमात्मनेपदं भवति। आदिशब्देन सर्गादिपरिग्रहः। निमित्तम्()=कारणम्()। न चाकुर्वत्? कार्य#ं कारणं भवति। यत्र त्वकुर्वत्यपि कार्यं कुसूलस्य बीजादौ कारणमपि व्यपदेशः, तत्रासौ योग्यतयौपचारिकः। तस्माद्यत्र स्नुक्रमावाश्रित्यात्मनेपदं भवति, तत्रैव भावकर्मादौ तयोरात्मनेपदनिमित्तं मुख्यं विज्ञायते। "तेन" इत्यादि। यस्मादेवं यत्र तावाश्रित्यात्मनेपदं भवति तत्र तयोरात्मनेपदनिमित्तत्वम्()। तेन सत्यात्मनेपदे प्रतिषेधोऽयं भवति, नासति। न ह्रसत्यात्मनेपदे तयोर्मुख्यमात्मनेपदनिमित्तत्वमुपपद्यते। ततश्च प्रस्नविता, प्रस्नवितुम्(), प्रस्नवितव्यम्(), प्रक्रमिता, प्रक्रमितुम्(), प्रक्रमितव्यमित्यत्र यद्यप्यात्मनेपदयोग्यत्वात्? स्नुक्रमावात्मनेपदस्य निमित्तव्यपदेशमासादयतः, तथापि प्रतिषेधो न भवति। न ह्रत्र मुख्यमात्मनेपदनिमित्तत्वम्(); आत्मनेपदाभावात्()। "प्राप्नोषीष्टेति। आशिषि लिङ्? सीयुट्(), "भावकर्मणोः" १।३।१३ इत्यात्मनपदम्(), "सुट्()तिथोः" ३।४।१०७ इति सुट्(), षत्वम्(), ष्टुत्वम्()। "प्रक्रंसीष्ट" इति। अत्र "प्रोपाभ्यां समर्थाभ्याम" १।३।४२ इति कत्र्तर्थात्मनेपदम्()। "प्रस्नोष्यते" इति। "लृट्? शेषे च" ३।३।१३ इति लृट्()। "प्रचिक्रंसते" [नास्तीदमुदाहरणं काशिकायाम्()। "प्रचिक्रंसिष्यते" इत्येवास्ति] इति। सन्(), "पूर्ववत्सनः" १।३।६२ इत्यात्मानेपदम्()। "सर्वत्रैव" इत्यादि। युक्तं प्रक्रंसीष्ट, प्रस्नीषीष्टेत्यादौ स्नुक्रमोरात्मनेपदस्य निमित्तत्वम्(), तस्मादात्मनेपदस्य विधानात्(); प्रचिक्रंसत इत्यत्र तु कथं क्रमिरात्मनेपदस्य निमित्तम्(), न ह्रत्र क्रमिमाश्रित्यात्मनेपदं भवति, किं तर्हि? सनन्तं धात्वन्तरम्()? इत्याह--"सनन्तादपि" इत्यादि। सनन्तादपि हि यदात्मनेपदं विधीयते "पूर्ववत्सनः" १।३।६२ इत्यनेन। तेन तत्रापि पूर्ववदिति वचनात्? पूर्व धातुस्वरूपमात्मनेपदस्य निमित्तमाश्रीयत इति। यद्यपि सनन्तादात्मनेपदं विधीयते तथापि क्रमेस्तत्र निमित्ताभावोऽस्त्येवेत्यभिप्रायः। अथ निमित्तग्रहणं किमर्थमुपादीयते, न "आत्मनेपदे" इत्येवोच्यते? इत्यत आह--"निमित्तग्रहणम्()" इत्यादि। सीयुट्? आदिर्यस्य स सीयुडादिः, तदात्मनेपदे परं यस्मात्? स तत्परः स्यप्रत्ययः, स परो यस्मात्? स तत्परपरः सन्प्रत्ययः; तयोः प्रतिषेदो यथा स्यादित्यवमर्थं निमित्तग्रहणम्()। तत्र सीयुडादेः प्रतिषेधार्थम्()--प्रस्नोषीष्ट, प्रक्रंसीष्टेति; तत्परपरस्य च प्रतिषेधार्थम्()--प्रचिक्रंसिष्यत इति; अत्र हि निमित्तग्रहणं न क्रियते, तदा "आत्मनेपदे" इत्येषा परसप्तमी विज्ञायेत। न

च प्रस्नीषीष्ट, प्रक्रंसीष्टेत्यात्मनेपदे परत आर्धधातुकमस्ति तथा ह्यात्मनेपदस्यागमः सीयुट्(), तदेकदेशात्वदात्मनेपदे परत उच्चार्थमाणः प्रतिषेधो न स्यात्()। प्रचिक्रंसिष्यत इत्यत्र "आत्मनेपदे" इत्येतस्यां परसप्तम्यां विज्ञायमानायां "तस्मिन्निति निर्दिष्टे पूर्वस्य" (१।१।६६) इति निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात्? स्येन व्यवधाने सति सन इट्प्रतिषेधो न स्यात्? निमित्तग्रहणे तु सति भवति। अस्ति ह्यत्र सर्वत्र स्नुक्रमोर्यथायोगमात्मनेपदं प्रति निमित्तभावः। तस्मान्निमित्तग्रहणं कत्र्तव्यम्()। प्रस्नवित्रीयत इत्यत स्नौतेरात्मनेपदं परं चोपलब्धम्(); अतः स्नौतिरात्मनेपदसय निमित्तमिति प्रतिषेधेन भवितश्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--इह प्रस्नवितेवाचरति" इत्यादि। क्वचित्? "प्रस्नवितारमिवाचरति" इति पाठः, स तु नोपपद्यते। न हि कर्मणः क्यङ्? विधीयते, किं तर्हि? सुबन्तात्? कर्त्तुः। तस्मात्? प्रमादकृतोऽयं पाठः। प्रस्नवितेवाचरतीति तृ()जन्तात्(), "कर्तुः क्यङ सलोपश्च" ३।१।११ इति क्यङ्(), "रीङृतः" ७।४।२७ इति रीङ्()। क्यङन्तादातमनेपदं विधीयमानं ङित इत्येवं विधीयते। स च स्नौतिर्ङित्? किं तर्हि? क्यङन्तः। तस्मात्? क्यङन्तमेवात्मनेपदनिमित्तं न स्नौतिरिति न भवति प्रतिषेधः। "क्रमेस्तु" इत्यादि। निमित्तग्रहणात्? सत्येवात्मनेपदे प्रतिषेधेन भवितव्यम्(), नासतीति। कत्र्तरि कृति प्रतिषेधो न प्राप्नोतीत्युपसंख्यायते। "प्रक्रान्ता, उपक्रान्ता" इति। "प्रोपाभ्यां समर्थाभ्याम्()" (१।३।४२) इति प्रोपाम्यामुपसुष्टात्? क्रमेरात्मनेपदवषानादिह क्रमेरात्मनेपदस्य विषयः। "आत्मनेपदविषयः" [आत्मनेपदविषयात्()--मूलम्()] इति। आत्मनेपदं विषयो यस्य स आत्मनेपदविषयः। "प्रक्रमितव्यम्(), उपक्रमितव्यम्()" इति। "तयोरेव कृत्यक्तखलर्थाः" ३।४।७० इति भावे कर्मणि कृत्यः। "निष्क्रमिता" इति। "इदुदुपषस्य" ८।३।४१ इति विसर्जनीयस्य षत्वम्()। निष्पूर्वात्? क्रमेरात्मनेपदस्याभावादिहात्मनेपदस्य वषयो न भवति। अथ प्रसुस्नूषति, प्रस्नुतः, प्रस्नुतवानित्यत्र कस्मान्न भवति, न ह्यत्र स्नौतिरात्मनेपदविषयः? इत्यात आह--"स्नौतेः" इत्यादि। ननु "श्रयुकः किति" ७।२।११, "सनि ग्रहगुहोश्च" ७।२।१२ इतीट्प्रतिषेधस्य धात्वन्तरमुगन्तमवकाश इति परत्वादिदैवात्र भवितव्यम्(), न प्रतिषेधेन? नैतदस्ति; उक्तं हि पुरस्तात्? प्रतिषेधकाण्जस्य बलीयस्त्वात्? प्रयोजनमिण्मात्रस्थानाश्रितविशेषविधानस्य प्रतिषेधो यथा स्यादिति॥

बाल-मनोरमा

स्नुक्रमोरनात्मनेपदनिमित्ते १६३, ७।२।३६

स्नुक्रमोः। पञ्चम्यर्थे षष्ठी। आत्मनेपदनिमित्तस्याऽभावः--अनात्मनेपदनिमित्तम्। अर्थाभावेऽव्ययीभावेन सह नञ्तत्पुरुषो विकल्प्यत इत्युक्तेः समासः। आत्मनेपदनिमित्ताऽभावे सति स्नुक्रम्भ्यां परस्य वलाद्याद्र्धधातुकस्य इट् स्यादित्यर्थः। स्नुक्रमोरनुदात्तोपदेशानन्तर्भावदिटि सिद्धे वचनमिदं नियमार्थमित्याह--अत्रैवेडिति। एवं च भावकर्मलकारेषु इण्न भवति। उपस्नोष्यते जलेन। बावलकारोऽयम्। उपक्रस्यते। कर्मणि लुट्। स्यः। "प्रस्नुत"मित्यत्र तु श्र्युकः कितीति निषेधान्नेट्, "आद्र्धधातुकस्येड्वलादे"रितीड्विधेः पुरस्तात्प्रतिषेधकाण्डारम्भसामथ्र्यात्। "स्नुक्रमोरनात्मनेपदे" इति तु न सूत्रितम्, आत्मनेपदभिन्ने परस्मैपदे परे इत्यर्थे चिक्रमिषिष्यतीत्यसिद्धेः, स्येन व्यवधानात्। आत्मनेपदे परे नेडित्र्थे तु प्रचिक्रंसिष्यत इत्यसिद्धिः, अतो निमित्तग्रहणमित्यलम्। अक्रमीदिति। "ह्म्यन्ते"ति न वृद्धिः। इति क्रम्यन्ताः परस्मैपदिनो गातः। रेवत्यन्ता इति। "रेवृ प्लवगता"वित्येतत्पर्यन्ता इत्यर्थः। अयपयेत्यारभ्य शल चलने इत्यतः प्राग यकारान्ताः।

तत्त्व-बोधिनी

स्नुक्रमोरनात्मनेपदनिमित्ते १३७, ७।२।३६

स्नुक्रमो। अनात्मनेपदनिमित्ते इति। आत्मनेपदनिमित्ताऽभावे इत्यर्थः। अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनम्, अनात्मनेपदनिमित्तयोरित्यर्थ इत्याहुः। उभयोरपि भावकर्मकर्मव्यतिहारास्तङो निमित्तं, क्रमेस्तु वृत्तिसर्गादयोऽपीति

बोध्यम्। स्नुकर्मोरुदात्तत्वदिटि सिद्धे नियमार्थोऽमित्याह-- अत्रैवेडिति। अनात्मनेपदेति किम्?। "उपस्नोष्यते जलेन"। "उपक्रंस्यते"। "आक्रंस्यते"। निमित्त इति किम्? स्नौतीति स्नविता, स इवाचरति स्नवित्रीयते। इह क्यङ् आत्मनेपदनिमित्तं न तु स्नौतिरित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

ग्रहो ऽलिटि दीर्घः ७।२।३७

ग्रहः उत्तरस्य इटः अलिटि दीर्घो भवति। ग्रहीता। ग्रहीतुम्। ग्रहीतव्यम्। अलिटि इति किम्? जगृहिव। जगृहिम्। प्रकृतस्येटो दीर्घत्वमिदम्, चिण्वदिटो न भवति। ग्राहिता। ह्राहिष्यते।

लघु-सिद्धान्त-कौमुदी

ग्रहोऽलिटि दीर्घः ६९६, ७।२।३७

एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि। ग्रहीता। गृह्णातु। हलः श्नः शानज्झाविति श्नः शानजादेशः। गृहाण। गृह्यात्, ग्रहीषीष्ट। ह्म्यन्तेति न वृद्धिः। अग्रहीत्। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्॥ कुष निष्कर्षे॥ १८॥ कुष्णाति। कोषिता॥ अश भोजने॥ १९॥ अश्नाति। आश। अशिता। अशिष्यति। अश्नातु। अशान॥ मुष स्तेये॥ २०॥ मोषिता। मुषाण॥ ज्ञा अवबोधने॥ २१॥ जज्ञौ॥ वृङ् संभक्तौ॥ २२॥ वृणीते। ववृषे॥ ववृढ्वे। वरिता, वरीता। अवरीष्ट, अवरिष्ट, अवृत॥

लघु-सिद्धान्त-कौमुदी

इति क्र्यादयः ९ ६९६, ७।२।३७

लघु-सिद्धान्त-कौमुदी

अथ चुरादयः ६९६, ७।२।३७

लघु-सिद्धान्त-कौमुदी

चुर स्तेये १ ६९६, ७।२।३७

न्यासः

ग्रहोऽलिटि दीर्घः। , ७।२।३७

"ग्रह उत्तरस्य" "ग्रह" इति पञ्चमीं दर्शयति। यद्येवम्(), तदेङ्ग्रहणं कत्र्तव्यम्()? न कत्र्तव्यम्; प्रकृतमेव तदनुवत्र्तते। तद्धि प्रथमान्तनिर्दिष्टम्(), षीष्ठीनिर्देशेन चेहार्थः? नैष दोषखः; "ग्रहः" इत्येषा पञ्चमीति प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति; "तस्मादित्युत्तरस्य" १।१।६६ इति वचनात्()। "जगृहिव, जगृहिम्()" इति। ग्रह्यादिसूत्रेण ६।१।१६ सम्प्रसारणम्()। तथा ग्राहिता, ग्राहिष्यत इत्यत्र कथं चिण्वदिटो न भवति? इत्याह--"प्रकृतस्यैव" इत्यादि। आर्धधातुकस्येति यः प्रकृत इट्? तस्येदं दौर्घत्वं भवति, न चिण्वदिटः; तस्याप्रकृतत्वात्()। चिण्वदित्यनेन चिण्वद्भाव उपलक्ष्यते। तत्सहचरित इट्? चिण्वदित्युच्यते। "ग्राहित" इति। "अनद्यतने लुट्()" ३।३।३५, "स्यतासी लृलुटोः" ३।१।३३ इति तासिः, भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्(), "लुट प्रथमस्य" २।४।८५ इत्यादिना डादेशः, टिलोपः, "स्यसिच्सीयुट्तासिषु" (६।४।६२) इत्यादिनेट्? चिण्वद्भावाद्()वृद्धिः। अथ जरीगृहिता, जरीगृहीतुमित्यत्र यङन्तात्? तृनि तुमुनि च यलोपाल्लोपयोः कृतयोर्दीर्धः कस्मान्न भवति? उत्तरसूत्रे वाग्रहणस्योभयोरपि योगयोः शेषभूतत्वाद्व्यवस्थिविभाषाविज्ञानात्()। अथ वा--विहितविशेषणपक्षोऽत्र व्याख्यायते। ग्रहेर्थो विहित इट्? तस्य दीर्घो

भवति। न चात्र ग्रहेर्विहित इट्? कुतस्तर्हि? यङ्न्तात्()। तस्मान्नेह दीर्घस्य प्रसङ्गः। अथ "ग्रह ईडलिटि" इत्येवं कस्मान्नोक्तम्(), किं दीर्घग्रहणेन? नैवं शक्याम्(); एवं सतीट्कार्यमीटो न स्यात्(), ततश्चाग्रहीदित्यत्र "इट ईटि" ८।२।२८ इति सिचो लोपो न स्यात्(), "नेटि" ७।२।४ इति प्रतिषेधश्च; इह चाग्रहीढ्वम्(), अग्रहीध्वमित्यत्रेटः "विभाषेटः" ८।३।७९ इति मूर्धन्यश्च; दीर्घ इट आदेशे सति तस्य स्थानिवद्भावदिट्कार्यमुपपद्यत इति दीर्घ एव विधीयते॥

बाल-मनोरमा

ग्रहोऽलिटि दीर्घः ५९६, ७।२।३७

ग्रहोऽलिटि दीर्घः। "ग्रहट इति दिग्योगे पञ्चमी। "आद्र्धधातुकस्येट्" इत्यत इडित्यनुवृत्तं षष्ठ()न्तं विपरिणम्यते, "एकाच उपदेशेऽनुदात्ता" दित्यत एकाच इति च। तदाह --एकाच इत्यादि। एकाचः किम?। यङ्लुकि माभूत्। जाग्रहिता। विहितस्येति किम्?। ग्रहितम्। णिलोपे कृते ग्रहधातोः परत्वेऽपि विहतत्वाऽभावादिटो न दीर्घः। न च णिलोपस्य स्थानिवत्त्वान्न ग्रहधातोः पर इडिति वाच्यं, दीर्घकित्त्वात्संप्रसारणमिति भावः। लिङस्तङ्याह-- ग्रहीषीष्टेति। "ग्रहोऽलिटी" ति दीर्घः। "न लिङी"ति इटो दीर्घनिषेधस्तु न, तत्र "वृतट इत्यनुवृत्तेः। अग्रहीष्टामिति। "ग्रहोऽलिटी"ति दीर्घः। अग्रहीषुः। अग्रहीरित्यादि। लुङस्तङ्याह-- अग्रहीष्टेति। "ग्रहोऽलिटी"ति दीर्घः। अग्रहीषतेति। अग्रहीष्ठा इत्यादि सुगमम्। इति क्र्यादयः।

॥ इति बालमनोरमायाम् क्र्यादयः॥

अथ तिङन्ते लकारार्थप्रक्रिया।

अथ लकारार्थप्रक्रिया निरूप्यते।

तत्त्व-बोधिनी

ग्रहोऽलिटि दीर्घः ४९०, ७।२।३७

ग्रहिषीष्टेति। "वृ()त" इत्यनुवृत्ते "र्न लिङी"ति दीर्घनिषेधो न प्रवर्तते। अग्रहीषातामिति। लुङ्। आत्मनेपदद्विवचनम्।

इति तत्त्वबोधिन्याम् क्र्यादयः।

अथ तिङन्ते लकारार्थप्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

वृतो वा ७।२।३८

वृ इति वृङ्वृञोः सामान्येन ग्रहणम्। तस्मादुत्तरस्य ॠकारान्तेभ्यश्च इटो वा दीर्घो भवति। वरिता, वरीता। प्रावरिता, प्रावरीता। ॠकारान्तेभ्यः तरिता, तरीता। आस्तरिता, आस्तरीता। वृतः इति किम्? कर्ष्यति। हरिष्यति। अलिटि इत्येव, ववरिथ। तेरिथ।

लघु-सिद्धान्त-कौमुदी

वृतो वा ६१८, ७।२।३८

वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परिता, परीता। परीष्यति, परिष्यति। पिपर्तु। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्॥

न्यासः

वृ?तो वा। , ७।२।३८

बाल-मनोरमा

वृ?तो वा २२८, ७।२।३८

वृ()तो वा। वृ ॠत् इत्यनयोः समाहारद्वन्द्वात्पञ्चम्येकवचनम्। वृ इति वृङ्()वृञोर्ग्रहणम्। "आर्द्धधातुकस्ये"डित्यत इडित्यनुवृत्तं षष्ठ()आ विपरिणम्यते। "ग्रहोऽलिटि दीर्घ इत्यनुवर्तते। तदाह-- वृङ्वृञ्()भ्यामित्यादि। तरिता तरीतेति। इटो दीर्घविकल्पः।गुणे रपरत्वम्। तरिष्यति। तरतु। अतरत्। तरेत्। हलि चेति। आशीर्लिङि कित्त्वाद्()कारस्य गुणनिषेधे, इत्त्वे, रपरत्वे "हलि चे" ति दीर्घे, तीर्यादिति रूपमित्यर्थः। अतारीत् अतारिष्टामित्यादौ "वृ()तो वा" इति दीर्घे प्राप्ते--सिचि च। अत्रेति। परस्मैपदपरके सिचि वृङ्वृञ्()भ्यामृ()द्रताच्च परस्य इटो दीर्घो नेत्यर्थः। "न लिङी"त्यतो नेत्यनुवर्तते। अतारिष्टामिति। अतारिषुः। अतारिषम् अतारिष्व अतारिष्म।अतरिष्यत्। गुप गोपने इति। गोपनं--रक्षणम्। तिज निशाने इति। निशानं--तीक्ष्णीकरणम्। मान पूजायाम्। बध बन्धने इति। एते चत्वारोऽनुदात्तेत इति स्थितिः।

तत्त्व-बोधिनी

वृ?तो वा २००, ७।२।३८

वृ()तो वा। इह "आर्द्धधातुकस्ये"डित्यत इडित्यनुवर्तते, "ग्रहो लिटी"त्यतो लिटि दीर्घ इति च। तदाह---- इटो दीर्घो वेत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

न लिङि ७।२।३९

वृतः उत्तरस्य इटो लिङि दीर्घो न भवति। विवरिषीष्ट। प्रावरिषीष्ट। आस्तरिषीष्ट। विस्तरिषीष्ट।

लघु-सिद्धान्त-कौमुदी

न लिङि ६९५, ७।२।३९

वृत इटो लिङि न दीर्घः। स्तरिषीष्ट। उश्चेति कित्त्वम्। स्तीर्षीष्ट। सिचि च परस्मैपदेषु। अस्तारीत्। अस्तारिष्टाम्। अस्तारिषुः। अस्तरीष्ट, अस्तरिष्ट, अस्तीर्ष्ट॥ कृञ् हिंसायाम्॥ १४॥ कृणाति, कृणीते। चकार, चकरे॥ वृञ् वरणे॥ १५॥ वृणाति, वृणीते। ववार, ववरे। वरिता, वरीता। उदोष्ठ्येत्युत्त्वम्। वूर्यात्। वरिषीष्ट, वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट, अवरीष्ट, अवूर्ष्ट॥ धूञ् कम्पने॥ १६॥ धुनाति, धुनीते। धविता, धोता। अधावीत्। अधविष्ट, अधोष्ट॥ ग्रह उपादाने॥ १७॥ गृह्णाति, गृह्णीते। जग्राह, जगृहे॥

न्यासः

न लिङि। , ७।२।३९

"वरिषौष्टेत्यादौ ["विवरिषीष्ट"--इति काशिकायामुदाहरणम्()]"लिङ्()सिचोरात्मनेपदेषु" ७।२।४२ इतीट्()। "विस्तरिषीष्ट" इति। कर्मण्यात्मनेपदम्()॥

बाल-मनोरमा

न लिङि ३५९, ७।२।३९

न लिङि। "वृ()तो वेत्यतो "वृ()त" इत्यनुवर्तते। लिङीति षष्ठ()र्थे सप्तमी। "आद्र्धधातुकस्ये"डित्यत इडित्यनुवृतं षष्ठ()आ विपरिणम्यते। "ग्रहोऽलिटी"त्यतो दीर्घ इत्यनुवर्तते। तदाह--- वृ()त इति। वृङ्वृञ्()भ्यामृ()कारान्ताच्चेत्यर्थः। विरषीष्टेति। इट्पक्षे "वृ()तो वे"ति प्राप्तो दीर्घो न भवति। वृषीष्टेति। इडभावपक्षे "उश्चे"ति कित्वान्न गुणः। अवारीदिति। लुङि परस्मैपदे सिचि वृद्धिः। अवारिष्टाम् अवारिषुः। "सिचि च परस्मैपदेषु" इति निषेधादिह "वृ()तो वे"ति न दीर्घः। लुङस्तङि सिचि "लिङ्सिचो"रिति इट्पक्षे "वृ()तो वे"ति दीर्घविकल्पं मत्वा आह--- अवरिष्ट अवरीष्टेति। अवृतेति। इडभावपक्षे "ह्रस्वादङ्गा"दिति सिचो लोपः। धुञ् कम्पन इति। ह्रस्वान्तोऽयमनिट्। षुञ इव रूपाणि। दीर्गान्तोऽप्ययमित्यादि। व्यक्तम्। अथ परस्मपैदिन इति। "राध साध संसिद्धा"वित्येतत्पर्यन्ता इत्यर्थ। "टु दु उपतापे" इत्यारभ्य "स्मृ इत्येके" इत्येतत्पर्यन्ता धातवो ह्रस्वान्ताः। हि गताविति। "प्रहिणोती"त्यत्र भिन्नपदत्वाण्णतवेऽप्राप्ते आह--

---

सूत्रम्

काशिका-वृत्तिः

सिचि च परस्मैपदेषु ७।२।४०

परस्मैपदपरे सिचि वृत उत्तरस्य इटो दीर्घः न भवति। प्रावारिष्टाम्। प्रावारिषुः। अतारिष्टाम्। अतारिषुः। आस्तारिष्टाम्। आस्तारिषुः। परस्मैपदेषु इति किम्? प्रावरिष्ट, प्रावरीष्ट।

लघु-सिद्धान्त-कौमुदी

सिचि च परस्मैपदेषु ६१९, ७।२।४०

अत्र इटो न दीर्घः। अपारिष्टाम्। अपरिष्यत्, अपरीष्यत्॥ ओहाक् त्यागे॥ ५॥ जहाति॥

न्यासः

सिचि च परस्मैपदेषु। , ७।२।४०

"प्रावारिष्टाम्()" इति। "तस्थस्थमिपां तान्तन्तामः" ३।४।१०१ इति तसस्ताम्(), सामान्यविहित इट्? सिचि वृद्धिः। "प्रावारिषुः" इति। "सिजभ्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुस्()। वृङ उदाहरणं नोपन्यस्तम; तस्य परस्मैपदासम्भवात्()। "प्रावरिष्ट, प्रावरीष्ट" इति। "लिङ्सिचोरात्मनेपदेषु" ७।२।४२ इतीट्()॥

तत्त्व-बोधिनी

सिचि च परस्मैपदेषु २०१, ७।२।४०

सिचि च। "न लिङी"त्यतो नेत्यनुवर्तनादाह--इटो दीर्घो नेति।

---

सूत्रम्

काशिका-वृत्तिः

इट् सनि वा ७।२।४१

वृतः सनि वा इडागमो भवति। वुवूर्षते, विवरिषते, विवरीषते। प्रावुवूर्षति, प्राविवरिषति, प्राविवरीषति। ॠकारान्तेभ्यः तितीर्षति, तितरिषति, तितरीषति। आतिस्तीर्षते, आतिस्तरिषते, आतिस्तरीषते। सनि ग्रहगुहोश्च ७।२।१२ इति इट्प्रतिषेधे प्राप्ते पक्षे इडागमो विधीयते। इटश्च वृतो वा ७।२।३८ इति पक्षे दीर्घः। चिकीर्षति, जिहीर्षति इत्यत्र उपदेशाधिकारात् लाक्षणिकत्वाच् च इडागमो न भवति।

न्यासः

इट्? सनि वा। , ७।२।४१

"वुवूर्षते" इति। "इको झल्()" १।२।९ इति सनः कित्त्वम्(), "अज्झनगमां सनि" ६।४।१६ इति दीर्घः, "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्वम्(), रपरत्वम्()। अतेह कस्मान्न भवति--चिकीर्षति, जिहीर्षतीति, अस्ति दीर्घत्वे कृते प्राप्तिः? इत्यत आह--"चिकीर्षति, जिहिर्षति" इति। गतार्थम्()॥

बाल-मनोरमा

इट् सनि वा ४५३, ७।२।४१

इट् सनि वा। "वतो वे"त्यतो "वृ()त" इत्यनुवर्तते इति मत्वाह-- वृङ्वृञ्भ्यामित्यादि। "सनि ग्रहगुहोश्चे"त्यस्यापवादः। चिकीर्षतीत्यादौ "अज्झने"ति दीर्घ कृते सनि नेदं प्रवर्तते, "एकाच उपदेशे" इत्यत उपदेशे इत्यनुवर्त्य उपदेशे ऋकारान्तादिति व्याख्यानात्। तितरिषति-- तितरीषतीति। तॄ()धातोः सनि लटि "वृ()तो वे"ति दीर्घः। इडभावे त्वाह- तितीर्षतीति। "इको झ"लिति कित्त्वाद्गुणाऽभावे "तॄ? इत्यस्य ऋकारस्य इत्त्वे रपरत्वे "हलि चे"ति दीर्घ इति भावः। विवरिषतीति। वृञ्धातोः सनि इटि "वृ()तो वे"ति दीर्गविकल्पः। इडभावे त्वाह-- वुवूर्पतीति। उदोष्ठ()ए"त्युत्वे रपरत्वे "हलि चे"ति दीर्घः। वुवूर्षते इति। ङित्वादात्मनेपदेम्। दुध्वूर्षतीति। "ध्वृ कौटिल्ये""अज्झने"ति दीर्घः। "उदोष्ठ()ए त्युत्वे, "हलि चे"ति दीर्घ इति भावः।

तत्त्व-बोधिनी

इट् सनि वा ३९३, ७।२।४१

इट्सनि वा। चिकीर्षतीत्यादौ "अज्झनगमा"मिति दीर्घे कृते नेदं प्रवर्तते, "एकाच उपदेशे" इत्यत उपदेश इत्यनुवर्त्य , उपदेशे ऋकारान्तादिति व्याख्यानात्। अत एवेटं विनैवोदाहरति-- दुध्वूर्षतीति। "ध्वृ कौटिल्यै"। "अज्झने"ति दीर्घः। "#उदोष्ठ()पूर्वस्ये"त्युत्वं। रपरत्वं। "हलि चे"ति दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

लिङ्सिचोरात्मनेपदेषु ७।२।४२

वृतो लिङि सिचि च आत्मनेपदपरे वा इडागमो भवति। वृषीष्ट, वरिषीष्ट। प्रवृषीष्ट, प्रावरिषीष्ट। आस्तरिषीष्ट, आस्तीर्षीष्ट। सिचि खल्वपि अवृत, अवरिष्ट, अवरीष्ट। प्रावृत, प्रावरिष्ट, प्रावरीष्ट। आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट। आत्मनेपदेषु इति किम्? प्रावारिष्टाम्। प्रावारिषुः। लिङः प्रत्युदाहरणं न दर्शितम्, असम्भवात् यासुटो ऽवलादित्वातिति।

लघु-सिद्धान्त-कौमुदी

लिङ्सिचोरात्मनेपदेषु ६९४, ७।२।४२

वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि॥

न्यासः

लिङ्?सिचोरात्मनेपदेषु। , ७।२।४२

वृ()त उदात्तत्वादिटि प्राप्ते विकल्पार्थ आरम्भः। "आत्मनेपदेषु" इति परसपतमीयम्()। सिचश्चैतद्वि शेषणम्()। यद्येवम्(), लिङ्? विशेषितो न स्यात्(), ततश्च लिङ्? परस्मैपदेष्वपि प्रसज्येत? नैतदस्ति; "वलादेः" ७।२।३५ इत्यधिकारात्(), लिङ्श्च परस्मैपदेषु यासुडादित्वाभावात्()। "आत्मनेपदपरे" इति। आत्मनेपदं परं यस्मात्? स तथोक्तः। एतच्च सिजित्यनेनैव सम्बध्यते, न लिङित्यनेम; सिचमेव प्रत्यात्मनेपदग्रहणस्य विशेषणभावात्()। "वृ()षीष्ट" इति। "उश्च" १।२।१२ इति कित्त्वाद्गुणाभावः। "आस्तीर्षीष्ट"इति। पूर्ववत्? कित्त्वदीर्घत्वादिः। "अवृत" इति। "ह्रस्वादङ्गात्()" ८।२।२७ इति सिचो लोपः॥

बाल-मनोरमा

लिङ्सिचोरात्मनेदेषु ३५८, ७।२।४२

"इट् सनि वा" इत्यत इड्वेत्यनुवर्तते। "वृ()तो वे"त्यतो "वृत" इति। तदाह--वृङ्वृञ्भ्यामित्यादिना।

तत्त्व-बोधिनी

लिङ्सिचोरात्मनेपदेषु ३१३, ७।२।४२

लिङ्सिचोः। "वृ()त इत्यनुवर्तते। आत्मनेपदेषु किम्?। अवारीत्। अवारिष्टाम्। अवारिषुः। "सिचि च परस्मैपदेषु" इति निषेधादिह "वृ()तो वे"ति न दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

ऋतश् च संयोगादेः ७।२।४३

ऋदन्ताद् धातोः संयोगादेः उत्तरयोः लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति। ध्वृषीष्ट, ध्वरिषीष्ट। स्मृषीष्ट, समरिषीष्ट। अध्वृषाताम्, अध्वरिषाताम्। अस्मृषाताम्, अस्मरिषाताम्। ऋत इति किम्? च्योषीष्ट। प्लोषीष्ट। अच्योष्ट। अप्लोष्ट। संयोगादेः इति किम्? कृषीष्ट। हृषीष्ट। अकृत। अहृत आत्मनेपदेषु इत्येव, अध्वार्षीत्। अस्मार्षीत्। संस्कृषीष्ट, समस्कृत इत्यत्र उपदेशाधिकारात्, अभाक्तत्वाच् च सुट इडागमो न भवति।

लघु-सिद्धान्त-कौमुदी

ऋतश्च संयोगादेः ६५२, ७।२।४३

ऋदन्तात्संयोगादेः परयोः लिङ्सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट, स्तृषीष्ट। अस्तरिष्ट, अस्तृत॥ धूञ् कम्पने॥ ४॥ धूनोति, धूनुते। दुधाव। स्वरतीति वेट्। दुधविथ, दुधोथ॥

न्यासः

ऋतश्च संयोगादेः। , ७।२।४३

ऋकारान्तानामनुदात्तत्वात्? प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्()। "ध्वृषीष्ट" इति। "ध्वृ हूच्छने" (धा।पा।१३९)। "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्()। एवमन्यत्राप्यात्मनेपदं वेदितव्यम्()। पूर्ववत्? कित्त्वाद्गुणाभावः। "स्मृषीष्ट"

इति। "स्मृ चिन्तायाम्? (धा।पा।९३३)। "च्योषीष्ट" इति। "च्युङ् छ्यङ् [नास्ति--धा।पा।] ज्युङित्यादि। (धा।पा।९५५,९५६)। अत्र ङित्त्वात्? कत्रर्यात्मनेपदम्()। "अकृषत" इति। "आत्मनेपदेष्वनतः" ७।१।५ इत्यदादेशः। अथ संस्कृषीष्ट समस्कृतेत्यत्र कस्मान्न भवति, भवति हि करोतिरत्र "संपर्युपेभ्यः करोतौ भूषणे" (६।१।१३७) इति सुटि कृते संयोगादिः? इत्याह--"संस्कृषोष्ट" इत्यादि। "एकाच उपदेशेऽनुदात्तात्" ७।२।१० इत्यत उपदेशग्रहणमनुवत्र्तते, तेनोपदेशावस्थायां यः संयोगादिस्तत एवैतेन भवितव्यम्(), न च करोतिरुपदेशावस्थायां संयोगादिः, किं तर्हि? तत उत्तरम्(), अतो न भवति। "अभक्तत्वाच्च" इत्यादि। संस्कृषीष्टेत्यत्रायं परीहारः, न समस्कृतेत्यत्र। अम्र ह्डागमः "तद्भक्तस्तद्ग्रहणेन गृह्तते" (व्या।प।२०) इति अटोऽप्यङ्गग्रहणेन ग्रहणादिति "तन्मध्यपतितस्तद्ग्रहणेन गृह्तते" (व्या।प।२१) इति सुटोऽप्यङ्गग्रहणेन ग्रहणात्? करोतिरपि संयोगादिर्भवत्येव। अङ्गाधिकाराच्चाङ्गावयवोऽत्रि संयोगोऽपि गृह्तते; प्रत्यासत्तेः। न च संस्कृषीष्टेत्यत्राङ्गावयवः संयोगादिः, यश्चाङ्गावयवो नासौ संयोगे भवति, तदिह न भवतीट्प्रसङ्गः। अत्र "सम्पुकानां सत्वम्()" (वा ९३६) इति वचनात् समो मकारस्य सकारः, पूर्वस्यानुनासिकः। समस्कृतेत्यत्र पूर्ववत्? सिचो लोपः। चकार आत्मनेपदानुकर्षणार्थः, तेनोत्तरत्र विधिरविशेषेम भवति; चानुकृष्टस्योत्तरत्राननुवृत्तेः॥

बाल-मनोरमा

ऋतश्च संयोगादः ३५६, ७।२।४३

ऋतश्च संयोगादेः। "लिङ्सिचोरात्मनेपदेषु" इत्यनुवर्तते। "इट् सनि वे"त्त इड्वेति। तदाह-- ऋदन्तादित्यादिना। लुङि परस्मैपदे-- अस्तार्षीत् लुङस्तङि त्वाह--- अस्तरिष्ट अस्तृतेति। "ऋतश्च संयोगादे"रिति इट्पक्षे गुणः। इडभावपक्षे तु "ह्रस्वादङ्गा"दिति सिचो लोपः। कृञ् हिंसायाम्। चकर्थेति। "कृसृभृवृ" इति थल्यपि नित्यमिण्निषेधः। चकृव। क्रियादिति।आशीर्लिङि "रिङ् शयग्लिङ्क्षु" इति रिङ्। कृषीष्टेति। "उश्चे"ति कित्त्वान्न गुणः। अकार्षीदिति।सिचि वृद्धि। रपरत्वम्। अकृतेति। "ह्रस्वादङ्गा"दिति सिचो लोपः। वृञ् वरणे।सेट्। ववार। वव्रतुः। वव्रुः।

तत्त्व-बोधिनी

ऋतश्च संयोगादेः ३११, ७।२।४३

"इट् सनि वे"त्यत इट् वेत्यनुवर्तते। "लिङ्सिचो"रिति सूत्रादात्नेपदेष्विति च। तदाह-- इड्? वा स्यात्तङीति। तङि किम्?। स्तर्यात्। अस्तार्षीत्।

---

सूत्रम्

काशिका-वृत्तिः

स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४

स्वरति सूति सूयति धूञित्येतेभ्यः, ऊदिद्भ्यश्च उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। स्वर्ता, स्वरिता। सूति प्रसोता, प्रसविता। सूयति सोता, सविता। धूञ् धोता, धविता। ऊधिद्भ्यः खल्वपि गाहू विगाढा, विगाहिता। गुपू गोप्ता, गोपिता। वा इति वर्तमने पुनर् वाग्रहणं लिङ्सिचोर् निवृत्त्यर्थम्। सूतिसूयत्योर् विकरणनिर्देशः षू प्रेरणे इत्यस्य निवृत्त्यर्थः। धूञिति सानुबन्धकस्य निर्देसो धू विधूनने इत्यसय् निवृत्त्यर्थः। सविता, धुविता इत्येव नित्यम् एतयोर् भवति। स्वरतेरेतस्माद् विकल्पातृद्धनोः स्ये ७।२।७० इत्येतद् भवति विप्रतिषेधेन। स्वरिष्यति। किति तु प्रत्यये श्र्युकः किति ७।२।११ इति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन। स्वृत्वा। सूत्वा। धूत्वा।

लघु-सिद्धान्त-कौमुदी

स्वरतिसूतिसूयतिधूञूदितो वा ४७८, ७।२।४४

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात्। जुगोपिथ, जुगोप्थ। गोपायिता, गोपिता, गोप्ता। गोपायिष्यति, गोपिष्यति, गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्। गोपाय्यात्, गुप्यात्। अगोपायीत्॥
न्यासः
स्वरतिसूतिसूयति घूञूदितो वा। , ७।२।४४

"स्वृ शब्दोपतापयोः" (धा।पा।९३२), "षूङ् प्राणिगर्भविमोचने" (धा।पा।१०३१) इत्यादादिकः, "षूङ् प्राणिप्रसवे" (धा।पा।११३२) इति दैवादिकः। "घूञ्? कम्पने" (धा।पा।१२५५,१४८७,१३८५) इति स्वादिः, क्र्यादिः, चुरादिश्च। तत्र "एकाचः" ७।२।१० इत्यधिकारादाद्ययोग्ग्रहणम्(), नेतरस्य। ऊदितः--"गाहू विलोडने (धा।पा।६४९), "गुपू रक्षणे" (धा।पा।३९५) इत्यादयः। एतेषां स्वरतेश्चानुदात्तत्वात्? प्रतिषेधे प्राप्ते, इतरेषामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम्()। "विगाढा" इति। पूर्ववङ्ढत्वादि विधेयम्()। अथ वावचनं किमर्थम्()? यावता "इट्? सनि वा" (७।२।४१) इत्यतो वाग्रहणमनुवत्र्तते? इत्याह--"वेत्यनुवत्र्तमाने" इत्यादि। तद्धि वाग्रहणं लिङ्()सिज्भ्यां सम्बद्धमिति तदनुवृत्तौ तयोरप्यनुवृत्तिः स्यात्()। तस्मात्? पूर्ववाग्रहणसम्बद्धयोर्लिङ्सिचोर्निवृत्त्यर्थमन्यदिदं वाग्रहणमिति। ननु च लिङ्()सिचोरनुवृत्तिः स्यात्()। तस्मात्? पूर्ववग्रहणसम्बद्धयोरलिङ्()सिचोर्निवृत्त्यर्थमन्दिदं वाग्रहणमिति। ननु च लिङ्()सिचोरनुवृत्तौ स्वरतिग्रहण मनर्थकमापद्यते, पूर्वेणैव विकल्पस्य सिद्धत्वात्()? नैतदस्ति; वचनप्रामाण्यात्? स्वरतिग्रहणं नित्यार्थं विज्ञायते। अथ वा--स्वरितग्रहणात्? "वा" इत्येतन्निवत्र्तते। अथ सूतिसूयत्योर्विकरण निर्देशः किमर्थः, न "सू" इत्येबोध्येत? इत्यत आह--"सूतिसूयत्योः" इत्यादि। "सू" इत्युच्यमाने "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति "सू प्रेरणे" (धा।पा।१४०८) ["षू प्रेरणे"--धा।पा।] इत्यस्यैव ग्रहणं स्यात्()। अतस्तन्निवृत्त्यर्थो विकरण निर्देशः करणीयः। यद्येतत्? प्रयोजनम्(), सूङिति निर्देशः कत्र्तव्यः? नैवं शक्यम्(); एवं हि सति निर्देशे क्रियमाणे "लुग्वकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्()" (व्या।प।५०) इति सूयतेरेव ग्रहणं स्यात्(), न सूतेः। अतस्तन्निवृत्तये विकरणनिर्देशः। अस्याः परिभाषाया अस्तित्वेऽयमेव निर्देशो ज्ञापकः। अस्यां ह्रसत्यां "सूङ्()" इति निर्देशं कुर्यात्()। अथ "धूञ्()" इति सानुबन्धकस्य ग्रहणं न क्रियेत, ततो निरनुबन्धकपरिभाषया (व्या।पा।५३) "षू विधूनने" (धा।पा।१३९८) इत्यस्यैव ग्रहणं स्यात्(), एतच्चानिष्टम्()। अतो विधूननार्थस्य निवृत्त्यर्थः सानुबन्धकनिर्देशः। "स्वरतेः" इत्यादि। अस्य विकल्पस्यावकाशः--स्वरिता, स्वत्र्तेति; ऋद्धनीः स्ये" ७।२।७० इत्यस्यावकाशः--करिष्यति, हरिष्यतीति; स्वरतेरस्योभयप्रसङ्गे "ऋद्धनोः स्ये" ७।२।७० इत्येतद्भवति विप्रतिषेधेन--स्वरिष्यति इति। "किति तु प्रत्यये" इत्यादि। "श्रयुकः किति" ७।२।११ इत्यस्यावकाशः--सूतः, सूतदानि, अस्य विकल्पस्यावकाशः--स्वत्र्ता, स्वरितेति; सोता सविता; धोता, धवितेति; इहोमयप्रसङ्गे "श्रयुकः किति" ७।२।११ इति नित्यं [नित्यः--काशिका] प्रतिषेधो भवति पूर्वविप्रतिषेधेन--स्वृत्वा, सूत्वा, धूत्वा"। एतच्च पुरस्तात्? प्रतिषेधकाण्डविधानादेव सिद्धम्()। उक्तं हि प्राक्? पुरस्तात्? प्रतिषेधविधानस्य प्रयोजनम्()--इण्मात्रस्यानाधितदिधानविशेषस्य प्रतिषेधो यथा स्यादिति। तदेतत्? पुरस्तात्? प्रतिषेधविधानं पूर्वदिप्रतिषेधेन समानफलकत्वादिह पूर्वविप्रतिषेधशब्देनोक्तम्()॥
बाल-मनोरमा
स्वरतिसूरतिसूयतिधूञूदितो वा १२३, ७।२।४४

तत्र वलादावाद्र्धधातुके नित्यमिटि प्राप्ते--स्वरति। "आद्र्धधातुकस्येड्वलादे"रित्यनुवर्तते। स्वरति सूति सूयति धूञ् ऊदित्--एषां समाहारद्वन्द्वात्पञ्चम्येकवचनं। फलितमाह-- स्वरत्यादेरिति। स्वरतीति स्वृधातोः शपा निर्देशः। सूतीति

सूयतीति च लुग्विकरणस्य श्यन्विकरणस्य च सूधातोर्निर्देशः। एवंच षू प्रेरण इति तौदादिकस्य न ग्रहणम्। "धूञ् कम्पने" स्वादिः क्र्यादिश्च। ञकारानुबन्धनिर्देशात् धू विधूनन इत्यस्य न ग्रहणम्। "इट्सनि वे"त्यतो वेत्यनुव्रतमाने वाग्रहणं "लिङ्सिचोरात्मनेपदेष्वि"ति सूत्रयोर्विकल्पनिवृत्त्यर्थमिति भाष्यम्। एवं च थलि इडाभावपक्षे द्वित्वादौ सिसेध्--थ इति स्थिते।

तत्त्व-बोधिनी

स्वरतिसूरतिसूयतिधूञूदितो वा ९८, ७।२।४४

स्वरतिसूति। "स्वृ शब्दोपतापयोः र" भ्वादिः। ननु "स्वरतिसूधूञूदितो वे"ति सूत्र्यतां,किमनेन सूतिसूयत्योः पृथग्ग्रहणेन?। मैवम्। तथाहि सति निरनुबन्धकपरिभाषया "षू प्रेरणे" इति तौदादिकस्यैव ग्रहणं स्यान्नत्वादादिकदैवादिकयोरेतयोः। न चैवं षूङिति पठ()तामिति वाच्यं, "लुग्विकरणाऽलुग्विकरणयो"रिति परिभाषया अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात्। अस्याश्च परिभाषायाः सूतिसूयत्योः पृथग्ग्रहणेव ज्ञापकमित्याहुः। "धूञ् कम्पने"स्वादिः क्र्यादिश्च। सानुबन्धनिर्देशो [अन्यथा लिङ्गिज्विशिष्टं वापदमत्रापि सिङ्सचोरेव विकल्पं कुर्यात्। पुनर्वाग्रहणे तु आद्र्धधातुकमात्रे विकल्पः सिद्ध इति भावः]।

---

सूत्रम्

काशिका-वृत्तिः

रधादिभ्यश् च ७।२।४५

रध हिंसासंसिद्ध्योः इत्येवम् आदिभ्यो ऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। रद्धा, रधिता। नंष्टा, नशिता। त्रप्ता, तर्प्ता, तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। द्रोग्धा, द्रोढा, द्रोहिता। मोग्धा, मोढा, मोहिता, स्नोग्धा, स्नोढा, स्नोहिता। स्नेग्धा, स्नेढा, स्नेहिता। क्रादिनियमाल् लिटि रधादिभ्यः परत्वाद् विकल्पं केचिदिच्छन्ति। अपरे पुनराहुः, पूर्वविधेरिण्निषेधविधानसामर्थ्यात् बलीयस्त्वं प्रतिषेधनियमस्य इति नित्यमिटा भवितव्यम्। ररन्धिव, ररन्धिम इति भवति।

लघु-सिद्धान्त-कौमुदी

रधादिभ्यश्च ६३८, ७।२।४५

रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्। नेशिथ॥

न्यासः

रधादिभ्यश्च। , ७।२।४५

"रथ हिंसासंराद्ध्योः" (धा।पा।११९३), "णश अदर्शने" (धा।पा।११९४,) "तृप प्रीणने" (धा।पा।११९५), "दृप हर्षणमोहनयोः" (धा।११९६),["हर्षमोहनयो"--धा।पा।] "द्रुह जिघांसायाम्()" (धा।पा।११९७), "मुह वैचित्त्ये" (धा।पा।११९८), "ण्णुह द्बद्गिरणे" (धा।पा।११९९) ष्णिह प्रीतौ" (धा।पा।१२००)--इत्येते रधादयः। एषु तृप्यतिदृप्यत्योरनुदात्तत्वादिट्प्रतिषेधे प्राप्ते शेषाणामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम्()। "नंष्टा" इति। "मस्जिनशोझंलि" ७।१।६० इति नुम्()। व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), ष्टुत्वम्()। "त्रप्तः" इति। "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्()" ६।१।५८ इत्यम्(), यणादेशः। "तर्पिता" इति। लघूपधगुणः। द्रोग्क्षा, मेग्धा, स्नोध्या, स्नेग्धेतीडभावपक्षे "वा द्रुहमुहण्णुहण्णिहाम्()" ८।२।३३ इति घत्वम्(), "झषस्तथोर्षोऽधः" ८।२।४० इति धत्वम्(),

"झलां जश् झशि" ८।४।५२ इति जश्त्वं गकारः। "द्()रोढा, ञोढा, स्नोढा स्नेढा" इति। पूर्ववड्ढत्वादि विधेयम्()। "क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्ति" इति। पक्षे ररध्व, ररध्मेत्याद्यपि यथा स्यात्()। "अपरे पुनः" इत्यादि। एतदेव हि पूर्वविधेरिट्()प्रतिषेधविधानस्य प्रयोजनम्()--प्रतिषेधस्य बलीयस्त्वं यथा स्यादिति। तस्मात्? प्रतिषेधनिययमस्या बलीयस्त्वान्नित्यमिटा भवितव्यम्()। तत्र पूर्वेषामयमभिप्रायः--पूर्वविधेरिट्प्रतिषेधविधानसामाश्र्यात्? प्रतिषेधस्य बलीयस्त्वं भवति, न तु प्रतिषेधनियमस्येति। इतरेषामयमभिप्रायः--प्रतिषेधस्य बलीयस्त्वात्? तद्धर्मस्य नियमस्यापि बलीयस्त्वं भवति, न तु प्रतिषेधस्यैवेति तस्य बलीयस्त्वे सति तत्प्राप्तिः, तेन नित्()यमिटा भवितुं युक्तमिति। प्रतिषेधनियमस्तु स एव क्रादिनियमः। "ररन्धिव, ररन्धिम" इति। "रधिजभोरचि" ७।१।६१ इति नुम्()॥

बाल-मनोरमा

रधादिभ्यश्च ३४५, ७।२।४५

रधादिभ्यश्च। "आद्र्धधातुकस्येड्वलादे"रित्यनुवर्तते, "स्वरतिसूती"त्यतो वेति चेत्यभिप्रेत्य शेषं पूरयति--वलाद्याद्र्धधातुकस्य वेडिति। "आद्र्धधातुकस्ये"ति नित्ये प्राप्ते विकल्पोऽयम्। लुटि तासि इटि "रधिजभोरची"ति नुमि प्राप्ते--

तत्त्व-बोधिनी

रधादिभ्यश्च ३०२, ७।२।४५

रधादिभ्यश्च। "स्वरतिसूति" इत्यतो वेत्यनुवर्तते। योगविभागो वैचित्र्यार्थः। गणनिर्दशाद्यङ्लुकि रारधितेत्येव न तु रारद्धेति।

---

सूत्रम्

काशिका-वृत्तिः

निरः कुषः ७।२।४६

निरित्येवं पूर्वात् कुष उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति। निष्कोष्टा, निष्कोषिता। निष्कोष्टुम्, निष्कोषितुम्। निष्कोष्टव्यम्, निष्कोषितव्यम्। निरः इति किम्? कोषिता। कोषितुम्। कोषितव्यम्। निसः इति वक्तव्ये निरः इति निर्देशेन रेफान्तम् उपसर्गान्तरम् अस्ति इति ज्ञाप्यते। तस्य हि निलयनम् इति उपसर्गस्य अयतौ ८।२।१९ इति लत्वं भवति। निसो हि रुत्वस्य असिद्धत्वाल् लत्वं न स्यात्।

बाल-मनोरमा

निरः कुषः ३८७, ७।२।४६

निरः कुषः। "आद्र्धातुकस्येड्वलादे"रित्यनुवर्तते। "स्वरतिसूती"त्यतो वेति च। तदाह-- निरः परादिति। निरकुक्षदिति। इडभावपक्षे "शल" इति क्स इति भावः। अश भोजने। आशेति। द्विहल्त्वाऽभावान्न नुडिति भावः। इष आभीक्ष्ण्ये। तासि "तीषसहे"तीड्विकल्पमाशङ्क्याह-- तीषसहेत्यत्रेति। सहेति शपा निर्देशबलेन भौवादिक एव सहधातुरत्र निर्दिष्टः। तत्साहचर्यात्तौदादिकस्यैव इषेग्र्रहणम्, अकारविकरणसामान्यादिति भावः। इषेस्तकारे श्यन्प्रत्ययादिति। श्यन् प्रत्ययो यस्मादिति बहुव्रीहिः। श्यन्विकरणपठितादिषेस्तकारे परे "तीषसहे"ति विधिर्नेत्यर्थः। इष्णातेस्तकारे इड्विकल्पः फलित इति भावः। प्रूष प्लुषेति। आद्यो दीर्घोपधः। पुष्ट पुष्टौ। पोषितेति। अनिट्सु श्यन्विकरणस्यैव पुषेग्र्रहणादयं सेडिति

भावः। "पुषादिद्युतादी"त्यत्र श्यन्विकरमपुषादेरेव ग्रहणादङ् न। खच भूताप्रादुर्भावे। अतिक्रान्तोत्पत्तिरिति। दशममासादौ उत्पत्तियोग्यस्य एकादशादिमासादिषूत्पत्तिरित्यर्थः। खच्ञातीति। नस्य श्चुत्वेन ञ इति भावः। वान्तोऽयमिति। "खव भूतप्रादुर्भावे" इत्येवं दन्त्योष्ठ()आन्तमेके पठन्तीत्यर्थः।

तत्त्व-बोधिनी

निर कुषः ३३८, ७।२।४६

निरः कुषः। "स्वरती"ति सूत्राद्वेत्यनुवर्तते। "आद्र्धधातुकस्ये"डित्यधिक्रियत एव। तदाह---- वलादेरित्यादि। निरः किम्?। कोषिता। कोषितुम्। निरकुक्षदिति। इडभावे क्सः। सहिना साहचर्यादिति। यद्यपि षह षुह चक्यर्थ इति दिवादिरपि सहिरस्ति तथापि सहेति शपा निर्देशाद्भौवादिकेनैव सहिना साहचर्यमित्याहुः।

*इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध। श्यन्प्रत्ययादिति। बहुव्रीहिरयम्। श्यन्प्रत्ययवत इषेस्तकारे परत इड्विकल्पप्रतिषेध इति वार्तिकार्थः। तथा च दैवादिकाद्विकल्पो नेति फलितम्। एवं च "तीषसहे"त्यत्र इष्णातेरपि ग्रहणमिति बोध्यम्। पोषितेति। अनिट्केषु पुष्येति श्यना निर्देशादयं सेडिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

इण् निष्ठायाम् ७।२।४७

निरः कुषो निष्ठायाम् इडागमो भवति। निष्कुषितः। निष्कुषितवान्। इङ्ग्रहणं नित्यार्थम्। आरम्भो हि यस्य निभाषा ७।२।१५ इत्यस्य बाधकः, अन्यथा हि निकल्पार्थ एव स्यात्। अत्र एव नित्यम् इडागमः, उत्तरत्र विकल्प एव इति।

न्यासः

इण्निष्ठायाम्?। , ७।२।४७

किमर्थमिडिति वत्र्तमाने पुनरिङ्ग्रहणं क्रियते? इत्याह--"इङ्ग्रहणं नित्यार्थम्()" इति। असतीङ्ग्रहणे हि विकल्पस्य प्रकृतत्वात्? पाक्षिक इडविधिः स्यात्()। तस्मान्नित्यर्थमिङ्ग्रहणं कत्र्तव्यम्()। ननु च सिद्धा विभावा पूर्वसूत्रेण, आरंभसामथ्र्यादेव नित्योऽयं विधिर्भवतिष्यति? इत्याह--"आरम्भो हि" इत्यादि। पूर्वसूत्रेणेटो विकल्पितत्वान्निष्ठायां, "यस्य विभाषा" ७।२।१५ इति प्रतिषेधे प्राप्ते नित्योऽयमारम्भः। तत्र यदीङ्ग्रहणं न क्रियेत, तदा तस्यैव प्रतिषेधस्यायमारम्बो बाधकः स्यात्(), ततश्च विकल्प एव स्यात्(), न नित्यो विधिः। तस्मान्नित्यार्थमिङ्ग्रहणं कत्र्तव्यम्()। यदि हि नित्यार्थमिङ्ग्रहणं क्रियेत तदा तेन विकल्पस्य निवर्त्तितत्वादुत्तरत्रापि नित्य एव विधिः स्यादित्यत आह--"तत्रेव" इत्यादि। न चानेनेङ्ग्रहणेन विकल्पः शक्यते निवत्र्तयितुम्(); तस्य स्वरितत्वादिङ्ग्रहणसामथ्र्यात्()। अनुवत्र्तमानेऽपि वाग्रहणे नित्योऽयं विधिर्भवति। या तु तस्यैव विकल्पस्यानुवृत्तिः, सोत्तरार्था। तेनोत्तरत्र विकल्प एव॥

बाल-मनोरमा

इण्निष्ठायाम् ८५२, ७।२।४७

इण्निष्ठायाम्। "निरः कुषः" इति सूत्रमनुवर्तते। तदाह-- निर इति। ननु "आद्र्धधातुकस्ये"डित्येव सिद्धे किमर्थमिदं सूत्रमित्यत आह-- यस्येति। कुषधातोस्तृजादौ "निरः कुषः" इति पूर्वसूत्रेण वेट्कत्वात् "यस्य विभाषे"ति प्राप्तस्येण्निषेधस्य बाधनार्थं पुनरिह विधानमित्यर्थः। इडित्यनुवत्र्तमाने पुनरिड्ग्रहणं तु "स्वरतिसूती"त्यतो

वाग्रहणानुवृत्तिनिवृत्तये।

तत्त्व-बोधिनी

इण्निष्ठायाम् ६९८, ७।२।४७

यस्येति। "निरः कुषः" इति विकल्पितेट्()त्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तीषसहलुभरुषरिषः ७।२।४८

तकारादावार्धधातुके इषु सह लुभ रुष इत्येतेभ्यो वा इडागमो भवति। इषु एष्टा, एषिता। इषु इच्छायाम् इत्यस्य अयं विकल्प इष्यते। यस् तु इष गतौ इति दैवादिकः, तस्य प्रेषिता, प्रेषितुम्, प्रेषितव्यम् इति नित्यं भवति। यो ऽपि इष आभीक्ष्ण्ये इति कृयादौ पठ्यते, तस्य अप्येवम् एव। तदर्थम् एव तीषसह इति सूत्रे केचितुदितमिषं पठन्ति। सह सोढा, सहिता। लुभ लोब्धा, लोभिता। रुष रोष्टा, रोषिता। रिष रेष्टा, रेषिता। तीति किम्? एषिष्यति।

लघु-सिद्धान्त-कौमुदी

तीषसहलुभरुषरिषः ६६०, ७।२।४८

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात्। लोभिता, लोब्धा। लोभिष्यति॥ तृप तृम्फ तृप्तौ॥ २०-२१॥ तृपति। ततर्प। तर्पिता। अतर्पीत्। तृम्फति। (शे तृम्फादीनां नुम् वाच्यः)। आदिशब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। ततृम्फ। तृफ्यात्॥ मृड पृड सुखने॥ २२-२३॥ मृडति। पृडति। शुन गतौ॥ २४॥ शुनति॥ इषु इच्छायाम्॥ २५॥ इच्छति। एषिता, एष्टा। एषिष्यति। इष्यात्। ऐषीत्॥ कुट कौटिल्ये॥ २६॥ गाङ्कुटादीति ङित्त्वम्॥ चुकुटिथ। चुकोट, चुकुट। कुटिता॥ पुट संश्लेषणे॥ २७॥ पुटति। पुटिता। स्फुट विकसने॥ २८॥ स्पुटति। स्पुटिता॥ स्फुर स्फुल संचलने॥ २९-३०॥ स्फुरति। स्फुलति॥

न्यासः

तीषसहलुभरुषरिषः। , ७।२।४८

"इषु इच्छायाम्()" (धा।पा।१३५१),["इष"--धा।पा।] "षह मर्षणे" (धा।पा।८५२); "लुभ गार्द्ध्ये (धा।पा।१२३८), "लुभ विमोहने" (धा।पा।१३०५)--द्वयोरपि ग्रहणम्(); विशेषानुपादनात्()। "रुष रोषे" (धा।पा।१६७०), "रुष रिष हिंसायाम्()" धा।पा।१२३०,१२३१)। सर्व एषैत उदात्ता इति नित्यामिटि प्राप्ते विकल्पार्थोऽयमारम्भः। "तदर्थम्()" इति। इच्छार्थस्यैव विकल्पो यथा स्यादितरयोर्म भूदित्येवमर्थम्()। ये तूदितं न पठन्ति, ते "वा" इति प्रकृतस्य व्यवस्थितविभाषाविज्ञानात्? सहिना भौवादिकेन साहचर्याद्वा इच्छार्थस्यैव विकल्पेन भविष्यति, नेतरयोरिति वर्णयन्ति। "सोढा" इति। ढत्वष्टुत्वढलोपेषु कृतेषु "सहिवहोरोदवर्णस्य" ६।३।१११

बाल-मनोरमा

तीषसहलुभरुषरिषः १७९, ७।२।४८

सह लुभ रुष रिष एषां द्वन्द्वात्पञ्चम्येकवचनम्। तदाह---इच्छत्यादेरिति। इच्छतीति इषेः श्तिपा निर्देशः। इषधातुर्विवक्षितः। "इषु इच्छायां" तुदादिः शविकरणः। "इष गतौ" दिवादिः श्यन्विकरणः। "इष आमीक्ष्ण्ये" क्र्यादिः श्नाविकरणः। तत्र "इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः" इति वार्तिकात् श्यन्विकरणस्य न ग्रहणम्। रोषिता रोष्टेति।

इडभावे ष्टत्वेन तकारस्य टकारः। रिषेस्तादाविड्विकल्पं मत्वा आह-- रेषिता रेष्टेति। उष दाह इति। सेट्कोऽयम्। उखधातुवत् रूपाणि।

तत्त्व-बोधिनी

तीषसहलुभरुषरिषः १५२, ७।२।४८

तीषसह। इष इच्छायाम्। षह मर्षणे। लुभ गाघ्र्ये। रुष रिष हिंसायाम्। एषिता। एष्टा। सहिता। सोढा। लोभिता। लोब्धा।

---

सूत्रम्

काशिका-वृत्तिः

सनि इवन्तर्धभ्रस्जदम्भुश्रिस्वृयूउर्णुभरज्ञपिसनाम् ७।२।४९

इवन्तानां धातूनाम्, ऋधु भ्रस्ज दम्भु श्रि स्वृ यु ऊर्णु भर ज्ञपि सनित्येतेषां च सनि वा इडागमो भवति। इवन्तानाम् दिदेविषति, दुद्यूषति। सिसेविषति, सुस्यूषति। ऋधु अर्दिधिषति, ईर्त्सति। भ्रस्ज बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति। दम्भु दिदम्भिषति, धिप्सति, धीप्सति। श्रि उच्छिश्रयिषति, उच्छिश्रीषति। स्वृ सिस्वरिषति, सुस्वूर्षति। यु यियविषति, युयूषति। ऊर्णु प्रोर्णुनविषति, प्रोर्णुनविषति, प्रोर्णुनूषति। भर इति भृञित्येतस्य भौवादिकस्य ग्रहणम्, शपा निर्देशात्। विभरिषति, बुभूर्षति। ज्ञपि जिज्ञपयिषति, ज्ञीप्सटि। सन् सिसनिषति, सिषासति। केचिदत्र भरज्ञपिसनितनिपतिदरिद्राणाम् इति पठन्ति। तनि तितनिषति, तितंसति, तितांसति। पति पिपतिषति, पित्सति। दरिद्रा दिदरिद्रिषति, दिदरिद्रासति। सनि इति किम्? देविता। भ्रष्टा।

न्यासः

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्?। , ७।२।४९

इवन्तानामिति। "दिवु" (धा।पा।११०७), "सिवु" (धा।पा।११०८) इत्येवमादीनाम्()। "ऋधु वृद्धौ" (धा।पा।१२४५ "भ्रस्ज पाके" (धा।पा।१२८४), "दम्भे" ["दम्भने"--धा।पा।] (धा।पा।१२७०), "श्रिञ्()सेवायाम्()" (धा।पा।८९७), "स्वृ शब्दोपतापयोः" (धा।पा।९३२), "यू मिश्रणे" ["मिश्रणेऽमिश्रणे च"--धा।पा।] (धा।पा।१०३३), "ऊर्णु आच्छादने" (धा।पा।१०३९), "श्रिञ्? भरणे" (()), मारणतीषणनिशामनेषु ज्ञपिण्यन्तः। "षणु दाने" (धा।पा।१४६४), "वन षण सम्भक्तौ" (धा।पा।४६३,४४४)--द्वयोरपि ग्रहणम्(); विशेषानुपादानात्()। अत्र भ्रस्जेरनुदात्तत्वात्(), ल्वयुर्णुभृञां चोगन्तत्वात्? "सनि ग्रहगुहीश्च" ७।२।१२ इति प्रतिषेधे प्राप्ते, शेषाणामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पोऽयमारभ्यते। "दुद्यूषति" इति। दिवेः सन्(), "हलान्तच्च" १।२।१० इति सनः कित्त्वम्(), "च्छ्वो शूड्नुनासिके" ६।४।१९ इत्यूठि यणादेशः, द्विर्वचनम्()--"द्यूष" इत्येतस्य, "हलादिः शेषः" ७।४।६० इति चत्र्वम्()--धकारस्य दकारः। "विभ्रज्जिषति" इति। "झलां जश्? झशि" ८।४।५२ इति सकारस्य दकारः, "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वम्()--दकारस्य जकारः। "बिभक्र्षति" इति। भ्रस्जो रोपधाया रमन्यतरस्याम्()" (६।४।४७) इत्यकारात्? परो रमागमः "रोपधयोः" इति षष्ठीनिर्देशाद्रेफस्योपधायाश्च सकारस्य निवत्र्तकः, "चोः कुः" ८।२।३० इति कुत्वम्(), "इण्कोः" ८।३।५७ इति"आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्()। "घिप्सति, घीप्सति" इति। "दम्भ इच्च" ७।४।५६ इतीत्त्वमीत्त्वञ्च, "खरि च" ८।४।५४ इति चत्र्वम्(), भकारस्य पकारः, पूर्ववदभ्यासलोपः, "हलान्ताच्च" १।२।१० इति कित्त्वादनुनासिकलोपः। "उच्छिश्रीषति" इति। "इको झल्()" १।२।९ इति कित्त्वम्(), "अज्झनगमां सनि" ६।४।१६ इति दीर्घत्वम्(), द्विर्वचनमभ्यासकार्यम्()। "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्(), दकारस्य चुत्वम्()--चकारः। "शश्छोऽटि" ८।४।६२ इति शकारस्य च्छकारः। "सिस्वरिषति" इति। द्विर्वचनम्? "स्वृ" इत्येतस्य, "उरत्()" ७।४।६६

इत्यत्त्वम्(), रपरत्वञ्च। "सुस्वूर्षति" इति। पर्ववद्दीर्घः, "उदोष्ठ()पूर्वस्य ७।१।१०२ इत्युत्त्वम्(), रपरत्वम्(), "हलि च" ८।२।७० इति दीर्घः, द्विर्वचनम्()--"स्वूर्ष" इत्येतस्य, अभ्यासकार्यम्(), "आदेशपरत्ययोः" ८।३।५९ इति षत्वम्()। "यियिविषति" इति। "ओः पुयण्ज्यपरे" ७।४।८० इत्यभ्यासस्येत्वम्()। "प्रोर्णुनूषति" इति। "अजादेद्वितीयस्य" ६।१।२ इति वचनाद्()द्वितीयस्यैकाचः "नुस" इत्येतस्य द्विरुक्तिः, रेफस्य पूर्वन्न द्विर्वचनम्()। "प्रोर्णुनविषति" इति। इट, पक्षे "विभाषोर्णोः" १।२।३ इति यदा ङित्त्वं तदोवङ्(), अन्यदा तु गुणः। "भुञित्येतस्य भौवादिकस्य ग्रहणम्()" इति। अथ डुभृञित्यस्य जौहोत्यादिकस्य ग्रहणं कस्मान्न भवति? इत्याह--"शपा निर्देशात्()" इत्यादि। यदि जौहोत्यादिकस्य भृञो धारणपोषणार्थस्य ग्रहणमभिमतं स्यात्(), तदा "भृ" इत्येवं निर्देशं कुर्यात्(), न तु "भर" इति शपानिर्देशम्(), कृतश्च शपा निर्देशः, तस्माद्भौवादिकस्य ग्रहणमिति गम्यते। "बुभूर्षति" इति। पूर्वदुत्त्वदीर्घत्वे। "ज्ञीप्सति" इति। "ज्ञा" इत्येतस्माण्णिच्(), "अर्त्तिह्री" इत्यादिना पुक्(), पूर्वदीत्त्वाभ्यासलोपौ। "सिषासति" इति। "जनसनखनां सञ्झलोः" इत्यात्वम्()। "केचिदत्र" इत्यादि। केचिदिति वचनात्? केचिन्न पठन्तीत्युक्तं भवति। ये तु न पठन्तितेऽत्र तनिपतिदरिद्राणामुपसंख्यानं कुर्वन्ति। "तितंसति, तितांसति" इति। "तेनोतेर्विभावा" ६।४।१७ इति पक्षे दीर्घः। "पित्सति" इति। "सनिमीमा" ७।४।५४ इत्यादिनेसादेशः, अभ्यासलोपः, "स्कोः" ८।२।२९ इत्यादिना सलोपः। "दिदरिद्रिषति, दिदरिद्रासति" इति। "दरिद्रातेरार्धधातुके" (वा।७८९) इत्यादिना विकल्पेनाकारलोपः॥

बाल-मनोरमा

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ४४६, ७।२।४९

सनीवन्तर्ध। सनि इवन्तेति च्छेतः। इवन्त, ऋध, भ्रस्ज, दन्भु, श्रि, स्वृ, यु, ऊर्णु, भर , ज्ञपि , सन्, -- एषां द्वन्द्वः। इव् अन्ते येषां ते इवन्ताः। "स्वरती"त्यतो वेति, "इण्निष्ठाया"मित्यत इडिति चानुवर्तते। तदाह -- इवन्तेब्य इत्यादि। वन्तस्य दिव्()धातोरुदाहरिष्यन्नाह-- इडभावे इति। वस्येति। वकारस्येत्यर्थः। यणिति। "कारादिकारस्ये"ति शेषः। द्वित्वमिति। "द्यु इत्यस्ये"ति शेषः। दुद्यूषतीति। "अज्झने"ति दीर्घः। इट्पक्षे आह--दिदेविषतीति। अझलादित्वान्न सनः कित्त्वम्, अतो नोठ्, किन्तु लघूपधगुण इति भावः। इवन्तस्योदाहरणान्तरं सिवुधातोः सुस्यूषतीति वक्ष्यते। तत्र द्वितीयस्य षत्वमाशङ्क्य आह-- स्तौतिण्योरिति। सुस्युषतीति। सिवुधातोः सनि इडभावे दुद्यूषतीतिवद्रूपम्। इट्पक्षे आह -- सिसेविषतीति। ऋध्()धातोः सनि ईत्र्सतीति रूपं वक्ष्यन्नाह--

---

सूत्रम्

काशिका-वृत्तिः

क्लिशः क्त्वानिष्ठयोः ७।२।५०

क्लिशः क्त्वानिष्ठ्योः वा इडागमो भवति। क्लिष्ट्वा, क्लिशित्वा। क्लिष्टः, क्लिशितः। क्लिष्टवान्, क्लिशितवान्। क्लिशू विबाधने इत्यस्य क्त्वायां विकल्पः सिद्ध एव निष्ठायां तु यस्य विभाषा ७।२।१५ इति प्रतिषेधः प्राप्नोति। क्लिश उपतापे इत्येतस्य तु क्त्वायां निष्ठायां च नित्यम् इडागमः प्राप्नोति, तदर्थं क्त्वाग्रहणं क्रियते।

न्यासः

क्लिशः क्त्वानिष्ठयोः। , ७।२।५०

"क्लिष्ट्वा" इति। व्रश्चादिसूत्रेण ८।२।३६ षत्वम्()। "क्लिशित्वा" इति। "रलो व्युपधाद्धलादेः संश्च" १।२।२६ इति कित्त्वम्()। "क्त्वाप्रत्यये विकल्पः सिद्ध एव" इति। ऊदित्वात्? "स्वरति" ७।२।४४ इत्यादिना यदि कत्वाप्रत्यये विकल्पः सिद्ध एव, तत्किमर्थं क्त्वाग्रहणम्()? इत्याह--"क्लिश उपताप इत्यस्य तु" इत्यादि। "नित्यमिडागमः प्राप्नोति" इति।

उपतापार्थस्य क्लिशेरुदात्तत्वात्()। "तदर्थम्()" इति। उपतापार्थो यः क्लिशिस्तदर्थम्()। सोऽर्थः प्रयोजनं यस्य तत्? तथोक्तम्()। अथ वा--उपतापर्थस्य क्लिशेर्यो नित्यमिडागमः प्राप्नोति तदर्थम्(), तन्निवृत्यर्थ मित्यर्थः; अर्थशब्दस्य निवृत्तिवचनत्वात्()॥

बाल-मनोरमा

क्लिशः क्त्वानिष्ठयोः ८५६, ७।२।५०

क्लिशः क्त्वानिष्ठयोः। "इड्वा स्या"दिति शेषः। "स्वरति सूती"त्यतो वेत्यनुवृत्तेरिति भावः। नित्यं प्राप्त इति। "आद्र्धधातुकस्येड्वलादे"रित्यनेनेति भावः। विकल्पे सिद्ध इति। ऊदित्त्वादिति भावः। निष्ठायां निषेधे प्राप्ते इति। "यस्य विभाषे"त्यनेनेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पूङश् च ७।२।५१

पूङश्च क्त्वानिष्ठयोर् वा इडागमो भवति। पूर्वा, पवित्वा। सोमो ऽतिपूतः, सोमो ऽतिपवितः। पूतवान्, पवितवान्। श्र्युकः किति ७।२।११ इति प्रतिषेधे प्राप्ते विकल्पो विधीयते।

न्यासः

पूङश्च। , ७।२।५१

उगन्तत्वात्? "श्रयुकः किति" ७।२।११ इतीट्प्रतीषेधे प्राप्ते कत्वानिष्ठयोः पक्षे प्राप्त्यर्थं वचनम्()। "पवित्वा, पक्तिः, पवितवान्()" इति। "पूङः क्त्वा च" १।२।२२ इति कित्त्वप्रतिषेधाद्गुणो भवत्येव। "पूङः" इति सानुबन्धकस्य ग्रहणं पूञो निवृत्त्यर्थम्()॥।

बाल-मनोरमा

पूङश्च ८५७, ७।२।५१

पूङश्च। क्त्वानिष्ठयोरिति। "क्लिशः क्त्वनिष्ठयो"रित्यतस्तदनुवृत्तेरिति भावः। इड्वेति। "स्वरतिसूती"त्यतो वाग्रहणस्य , "इण्निष्ठाया"मित्यत इडित्यस्य चाऽनुवृत्तेरिति भावः। "श्र्युकः" इति निषेधे प्राप्ते विकल्पोऽयम्।

तत्त्व-बोधिनी

पूङश्च ७०२, ७।२।५१

पूङश्च। "श्र्युकः किती"ति निषेधे प्राप्ते वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

वसतिक्षुधोरिट् ७।२।५२

वसतेः क्षुधेश्च क्त्वानिष्ठयोः इडागमः भवति। उषित्वा। उषितः। उषितवान्। क्षुधित्वा। क्षुधितः। क्षुधितवान्। वसति इति विकरणो निर्देशार्थ एव। वस्तेस् तु उदात्तत्वादेव भवितव्यम् इटा। पुनरिड्ग्रहणं नित्यार्थम्।

न्यासः

वसतिक्षुधेरिद। , ७।२।५२

"वस निवासे" (धा।पा।१००५), "क्षुध बुभुक्षायाम्()" (धा।पा।११९०)--अनयोरनुदत्तत्वादिट्()प्रतिषेधे प्राप्ते क्त्वानिष्ठयोरिङ्()विधनार्थ वचनम्()। "उषित्वा" इति। क्त्वा, इट्(), "न क्त्वा सेट्()" १।२।१८ इति कित्त्वप्रतिषेधे प्राप्ते "मुडमृव" १।२।७ इत्यादिना कित्त्वम्(), वच्यादिसूत्रेण (६।१।१५) यजादित्वात्? सम्प्रसारणम्(), "शासिवसिचसीनां च" ८।३।६० इति षत्वम्()। "क्षुधित्वा" इति। अत्रापि "रलो व्युपधाद्धलादेः संश्च" १।२।२६ इति पक्षे कित्त्वम्()। "वसतीति विकरणनिर्देशः" इत्यादि। "विकरणनिर्देशो धातुनिर्देशार्थे एव" इत्युक्तम्()। अथ "वस आच्छादने" (धा।पा।१०२३) इत्यस्य निवृत्()यर्थः कस्मान्न विज्ञायते? इति यश्चीदयेत्(), तं प्रत्याह--"वस्तेः" इत्यादि। अथ वावस्तः, वावस्तवानित्यत्र यङ्लुङ्()निवृत्त्यर्थः कस्मान्न विज्ञायते? इति यश्चोदयेत्(), तं प्रत्याह--"वस्तेः" इत्यादि। अथ वावस्तः, वावस्तवानित्यत्र यङ्लुङ्()निवृत्त्यर्थः कस्मान्न विज्ञायते? विहितविशेषणपक्षविज्ञानादपि यङ्लुङ्()निवृत्तिः शक्यते कर्त्तुमित्यभिप्रायः। अथेडित्यनुवत्र्तमाने पुनरिङ्ग्रहणं किमर्थम्()? इत्याह--"पुनरिङ्ग्रहणं नित्यार्थम्" इति। पूर्वकमिङ्ग्रहणं विकल्पेन सम्बद्धम्(), अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्()। तस्मात्तन्निवृत्त्यर्थं पुनरिङ्ग्रहणं कृतम्()॥

बाल-मनोरमा

वसतिक्षुधोरिट् ८५३, ७।२।५२

वसतिक्षुधोरिट्। पञ्चम्यर्थे षष्टी। क्त्वानिष्ठयोरिति। "क्लिशः क्त्वानिष्ठयो"रित्यतस्तदनुवृत्तेरिति भावः। नित्यमिति। इडित्यनुवर्तमाने पुनरिड्ग्रहणस्य "स्वरतिसूती"त्यतो वाग्रहणानुवृत्तिनिवृत्त्यर्थत्वादिति भावः। "एकाच उपदेश" इति इण्निषेधबाधनार्थमिदं सूत्रम्। उषित इति। यजादित्वात्संप्रसारणम्, "शासिवसिघसीनां चे"ति षः।

तत्त्व-बोधिनी

वसतिक्षुघोरिट् ६९९, ७।२।५२

उषित इति। यजादित्वात्संप्रसारणम्। "शासिवसी" ति षः। "वसती"ति शपा निर्देशः स्पष्टार्थः। वस्तेः सेट्कत्वाद्भवितव्यमेवेटा। क्षुधित इति। एवं च "तस्याऽलमेषा क्षुधितस्ये"ति प्रयोगो निर्बाध एवेति क्षुधेर्धातोर्भावे क्विपि "तारकादित" जिति धातुवृत्तिषु यदुक्तं, तन्नादर्तव्यम्। समानन्यायतया क्रुधितादावुयोक्ष्यत इति वा कथंचिन्नेयम्।

---

सूत्रम्

काशिका-वृत्तिः

अञ्चेः पूजायाम् ७।२।५३

अञ्चेः पूजायाम् अर्थे क्त्वानिष्ठयोः इडागमो भवति। अञ्चित्वा जानु जुहोति। अञ्चिता अस्य गुरवः। उदितो वा ७।२।५६ इति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायाम् यस्य विभाषा ७।२।१५ इति प्रतिषेधः प्राप्तः, तदर्थम् इदं प्रारब्धम्। पूजायाम् इति किम्? उदक्तमुदकं कूपात्। उद्धृतम् इत्यर्थः।

न्यासः

अञ्चेः पूजायाम्?। , ७।२।५३

"अञ्चिताः" इति। पूजिता इत्यर्थः। "मतिबुद्धिपूजार्थेभ्यश्च" ३।२।१७७ इति क्तप्रत्ययः। "अनिदिताम्()" ६।४।२४

इत्यनुनासिकलोपो न भवति; "नाञ्चेः पूजायाम्()" ६।४।३० इति प्रतिषेधात्()। "अस्य" इति। "क्तस्य च वर्त्तमाने" २।३।६७ इति षष्ठी॥

बाल-मनोरमा

अञ्चेः पूजायाम् ८५४, ७।२।५३

अञ्चेः पूजायाम्। "उदितो वे"ति क्त्वायां विकल्पे प्राप्ते, निष्ठायां तु "यस्य विभाषे"ति निषेधे प्राप्ते वचनम्। अञ्चित इति। "नाऽञ्चेः पूजाया"मिति नलोपनिषेधः।

तत्त्व-बोधिनी

अञ्चेः पुजायाम् ७००, ७।२।५३

अञ्चेः। उदित्वात् क्त्वायां विकल्पे प्राप्ते, निष्ठायां "यस्य विभाषे"ति निषेधे प्राप्ते वचनम्। अञ्चित इति। "नाञ्चेः पूजाया"मिति नलोपनिषेधः। अक्त इति। "अनिदिता" मिति नलोपः।

---

सूत्रम्

काशिका-वृत्तिः

लुभो विमोहने ७।२।५४

लुभो विमोहने ऽर्थे वर्तमानात् क्त्वानिष्ठयोः इडागमो भवति। लुभित्वा, लोभित्वा। विलुभिताः केशाः। विलुभितः सीमन्तः। विलुभितानि पदानि। विमोहनम् आकुलीकरणम्, तत्र क्त्वायां तीषसहलुभरुषरिषः ७।२।४८ इति विकल्पः, निष्ठायाम् यस्य विभाषा ७।२।१५ इति प्रतिषेधः प्राप्तः। विमोहने इति किम्? लुब्धो वृषलः। शीतेन पीडितः इत्यर्थः। लुब्ध्वा, लुभित्वा, लोभित्वा। गार्ध्ये यथाप्राप्तम् एव भवति।

न्यासः

लुभो विमोहने। , ७।२।५४

"लुभित्वा, लोभित्वा" इति। "रलो व्युपधात्()" १।२।२६ इत्यादिना पक्षे कित्ताद्गुणाभावो भवत्येव। "गार्धेये यथाप्राप्तमेव" इति। क्वाप्रत्यये विकल्पः। निष्ठायां "यस्य विभाषा" ७।२।१५ इति नित्यः प्रतिषेध इति॥

बाल-मनोरमा

लुभो विमोहने ८५५, ७।२।५४

लुभो विमोहने। "लुभ" इति पञ्चमी। "लुभ विमोहने" तुदादिः। "विमोहनं व्याकुलीकरण"मिति वृत्तिः। "लुभ गाध्र्ये" दिवादिः। अत्र तौदादिकस्यैव ग्रहणं, तस्यैव विमोहनार्थकत्वात्। नतु दैवादिकस्य, तस्य गाध्र्यार्थकत्वात्। तदाह-- न तु गाध्र्ये इति। "तीषसहे"ति क्त्वायां विकल्पे प्राप्ते, निष्ठायां तु "यस्य विभाषे"ति निषेधे प्राप्ते वचनम्। लुभित इति। विमोहित इत्यर्थः। गाध्र्ये तु लुब्ध इति। अभिकाङ्क्षवानित्यर्थः। "मतिबुद्धिपूजार्थेभ्यश्चे"ति कर्तरि क्तः।

तत्त्व-बोधिनी

लुभो विमोहने ७०१, ७।२।५४

लुभो। "तीषसहे"ति क्त्वायां विकल्पे, निष्ठायां निषेधे च प्राप्ते वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

जॄव्रश्च्योः क्त्वि ७।२।५५

जॄ व्रश्चि इत्येतयोः क्त्वाप्रत्यये इडागमो भवति। जरित्वा, जरीत्वा। व्रश्चित्वा। जॄ इत्येतस्य श्र्युकः किति ७।२।११ इति प्रतिषेधः प्राप्तः, व्रश्चेरुदित्वाद् विकल्पः। क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम्।

न्यासः

जॄ?व्रश्च्योः क्त्वि। , ७।२।५५

"जरीत्वा, जरित्वा" इति। "जॄ? वयोहानौ" (धा।पा।१४९४) क्रैयादिकः। "वृतो वा" ७।२।३८ इति पक्षे दीर्घः। यस्तु "जॄ()ष वयोहानौ" (धा।पा।११३०) इति दिवादौ पठ()ते, तस्य सानुबन्धकत्वादिह ग्रहणं नास्तीति तस्य जौर्त्वेत्येवं भवति। "व्रश्चित्वा" इति। "ओ व्रश्चू छेदने" (धा।पा।१२९२)। "न क्त्वा सेट्()" (१।२।२८) इति प्रतिषेधाद्? ग्रहिज्येत्यादिसूत्रेण ६।१।१६ सम्प्रसारणं न भवति; किति तसय विधानात्()। अथ क्त्वाग्रहणं किमर्थम्(), यावता "क्लिशः क्त्वानिष्ठयोः" (७।२।५०) इत्यत एव कत्वाग्रहणमनुवत्र्तत एव? इत्याह--"क्त्वाग्रहणम्()" इत्यादि। तद्धि क्त्वाग्रहणं निष्ठ()आ सह सम्बद्धम्(), अतस्तदनुवृत्तौ तस्या अध्यनुवृत्तिः स्यात्()। एवं च सति निष्ठायामपि स्यात्()। तस्मात्? निष्ठानिवृत्त्यर्थमन्यदिह क्त्वाग्रहणं क्रियते॥

तत्त्व-बोधिनी

जॄ?व्रश्च्योः क्त्वि १५९५, ७।२।५५

जॄ()व्रश्च्योः। जॄ? इत्यस्मात् "श्र्युकः किती"ति ति निषेधे प्राप्ते व्रश्चेरूदित्वाद्विकल्पे प्राप्ते वचनमिदम्। जरीत्वेति। "वॄ()तो वा"इति इटो वा दीर्घः। व्रश्चित्वेति। इह "न क्त्वा से"डिति कित्त्वनिषेधात् "ग्रहिज्ये"ति संप्रसारणं न।

---

सूत्रम्

काशिका-वृत्तिः

उदितो वा ७।२।५६

उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति। शमु शमित्वा, शान्त्वा। तमु तमित्वा, तान्त्वा। दमु दमित्वा, दान्त्वा।

लघु-सिद्धान्त-कौमुदी

उदितो वा ८८५, ७।२।५६

उदितः परस्य क्तव इड्वा। शमित्वा, शान्त्वा। देवित्वा, द्यूत्वा। दधातेर्हिः। हित्वा॥

न्यासः

निरः कुषः। , ७।२।५६

"कुष निष्कर्षे" (धा।पा।१५१८)। अस्योदात्तत्वान्नित्यामिटि प्राप्ते विकल्पार्थं वचनम्()। "निष्कोष्टा" इति। "शर्परे विसर्जनीयः" ८।३।३५ इत्यस्यानुवृत्तेः "इदुदुपधस्य चाप्रत्ययस्य" ८।३।४१ इति विसर्जनीयस्य षत्वम्()। ननु च सकारान्तोऽयमुपसर्गः, तथा प्रादिषु निसिति पठ()ते, न तु निरिति, तस्मात्? "निसः" इति वक्तुं युक्तम्(), न निर इति; यथा--निसस्तपतावनासेवने" ८।३।१०४ इति, तत्? किमर्थं तिर इति निर्देशः? इत्याह--"निसः" इति। "वक्तव्ये"

इत्यादिना रेफान्तस्यास्तित्वज्ञापने प्रयोजनमाह। "तेन" इत्यादि। स्यादेतत्()। निस इति रुत्वे कृते लत्वं भविष्यतीत्याह--"निसो हि" इत्यादि। "निलयनम्()" इति। अयतेर्ल्युटि रूपम्()॥

न्यासः

उदितो वा। , ७।२।५६

"शान्त्वा" इति। "शमु उपशमे" (धा।पा।१२०१), "तमु काङ्क्षायाम्()" (धा।पा।१२०२), "दमु उपशमे" (धा।पा।१२०३), "भ्रमु चलमे" (धा।पा।८५०), "क्रमु पादविक्षेपे" (धा।पा।४७३)। अनिट्पक्षे "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इति दीर्घः। वाग्रहणं विस्पटार्थम्()। उदितां ह्रुदात्तत्वादिट्? सिद्ध एव, तत्रारम्भसामथ्र्यादेव विकल्पेन विधिर्विज्ञास्यते। उत्तरार्थं चावश्यं वाग्रहणं कत्र्तव्यम्(), तद्विस्पष्टार्थमिहैव क्रियते॥

तत्त्व-बोधिनी

उदितो वा १५९६, ७।२।५६

घूत्वेति। इडभावपक्षे "च्छ्वो"रित्यूठ्।

---

सूत्रम्

काशिका-वृत्तिः

से ऽसिचि कृतचृतच्छृदतृदनृतः ७।२।५७

सकारादावसिचि आर्धधातुके कृत चृत छृद तृद नृत इत्येतेभ्यो धातुभ्यो वा इडागमो भवति। कृत कत्स्र्यति। अकत्स्र्यत्। चिकृत्सति। कर्तिष्यति। अकर्तिष्यत्। चिकर्तिषति। चृत चएत्स्यति। अचत्स्र्यत्। चिचृत्सति। चर्तिष्यति। अचर्तिष्यत्। चिचर्तिषति। छृद छत्स्र्यति। अच्छत्स्र्यत्। चिच्छृत्सति। छर्दिष्यति। अच्छर्दिष्यत्। चिछर्दिषति। तृद तत्स्र्यति। अतत्स्र्यत्। तितृत्ससि। तर्दिष्यति। अतर्दिष्यत्। तितर्दिषति। नृत नत्स्र्यति। अनत्स्र्यत्। निनृत्सति। नर्तिष्यति। अनर्तिष्यत्। निनर्तिषति। से इति किम्? कर्तिता। असिचि इति किम्? अकर्तीत्।

लघु-सिद्धान्त-कौमुदी

सेऽसिचि कृतचृतच्छृदतृदनृतः ६३३, ७।२।५७

एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा। नर्तिष्यति, नत्स्र्यति। नृत्यतु। अनृत्यत्। नृत्येत्। नृत्यात्। अनर्तीत्। अनर्तिष्यत्, अनत्स्र्यत्॥ त्रसी उद्वेगे॥ ४॥ वा भ्राशेति श्यन्वा। त्रस्यति, त्रसति। तत्रास॥

न्यासः

सकेऽसिचि कृतचृतच्छृदतृदनृतः। , ७।२।५७

"कृती छेदने" (धा।पा।१४३५) इति तौदादिकः, "कृती वेष्टने" (धा।पा।१४४७) इति रौधादिकः--विशेषानुपादनाद्द्वयोरपि ग्रहणम्()। "चृती हिंसासंग्रन्थयोः" ["हिंसाश्रन्थनयोः"--धा।पा।] (धा।पा।१३२४), उ छृदिर्? दीप्तिदेवनयोः" (धा।पा।१४४५), "उ तृदिर्? हिंसादानयोः" ["हिंसाऽनादरयोः"--धा।पा।] (धा।पा।१४४६)। उकारौ "उदितो वा" ७।२।५६ इति विशेषणार्थो। इकाररेफावपि "इरितो वा" ३।१।५७ इति विशेषणार्थादेव। "नृती गात्रविक्षेपे" (धा।पा।१११६)। सर्वेवामेषानुदात्तत्वान्नित्यमिटि प्राप्ते सिचोऽन्यत्र सकारादौ विकल्पार्थं वचनम्()। "से" इत्येतस्याकारोच्चारणमतन्त्रम्(); अविवक्षितत्वात्()। तेन स्येऽपरि विकल्पो भवति। अतन्त्रत्वं तु पुनरस्य "असिचि" इति सिचः प्रतिषेधाद्विज्ञेयम्()। यदि ह्रतन्त्रमकारोच्चारणम्(), एवं सति "स्वसिचि" इत्येवं कस्मान्नोक्तम्()?

सन्देहभयात्()। एवं ह्रुच्यमाने "स्ये सिचि च" इत्येषोऽप्यर्थ आशङ्क्येत। "सेऽसिचि" इत्युच्यमाने तु सप्तमीद्वयोरुपादानात्? सिज्विर्जिते सकारादावित्यभिमतोऽर्थो विज्ञायते। नन्वत्रापि सन्देहः स्यात्()--एवमुच्यमाने किमर्थं सिचि न वेति? यदि हि सिच्यपि स्यात्? तदुपादानमनर्थकं स्यात्(), सीत्येवं ब्राऊयात्()। "कत्स्यैति" इति लृट्()। "अकत्स्र्यत्()" इति। लुङ्()। "चिकृत्सति" इति। सन्(), "हलन्ताच्च" १।२।१० इति कित्वाद्गुणाभावः॥

बाल-मनोरमा

सेऽसिचि कृतचृतछृदतृदनृतः ३३५, ७।२।५७

सेऽसिचि। से- असिचीति छेदः। सप्तमी षष्ठ()र्थे। कृत चृत छृत तृद नृत् एषां समाहारद्वन्द्वात्पञ्चमी। "उदितो वे"त्यतो वेति, आद्र्धधातुकस्येडिति चानुवर्तते। तदाह--एभ्य इत्यादिना। नित्यमिटि प्राप्ते विकल्पार्थमिदं वचनम्। अनर्तीदिति। "सेऽसिची"त्युक्तेर्नित्यमिडिति भावः। त्रसी उद्वेगे। "वा जृ()भ्रमुत्रसा"मित्येत्त्वाभ्यासविकल्पौ मत्वाह-- त्रेसतुः तत्रसतुरिति। कुथ पूतीभावे इति। पवित्रीभवने इत्यर्थः, दुर्गन्धकरणे इति वा। "पूतिगन्धस्तु दुर्गन्धः" इत्यमरः। तिम ष्टिम ष्टीमेति। द्वितीयतृतीयौ षोपदेशौ। द्वितीय इदुपधः। तृतीयस्तु ईदुपधः। षह षुहेति। षोपदेशौ। चकार्थस्तृप्तिरिति। यद्पि "चक तृप्तौ प्रतिघाते चे"त्युक्तं तथापि तृप्तिरेवेह विवक्षिता, व्याख्यानात्। षुहेः "नपुंसके भावे क्तः" इति क्तप्रत्यये सुहितशब्दः। सुहितस्तृप्तिरिति "पूरणगुणे"ति सूत्रे कैयटः। जृ()ष् झृ()ष्।सेट्कौ। जीर्यतीति। "ऋत इद्धातो"रिति इत्त्वे "हलि चे"ति दीर्घ इति भावः। अतुसादौ "ऋच्छत्यृ()ता"मिति गुणे रपरत्वे "वा जृ()भ्रमुत्रसा"मित्येत्त्वाभ्यासलोपविकल्प इति भावः। जजरिथ। ""वृ()तो वे"ति मत्वाह-- जरिता जरीतेति। षूङ्। प्रसवः-- उत्पादनम्। षोपदेशोऽयम्। विकल्पमिति। "परमपी"ति शेषः। निषेधे प्राप्ते इति। पुरस्तात्प्रतिषेधकाण्डारम्भसामथ्र्यादिति भावः। दूङ् परितापे इति। पीडने, पीडितीभवने वेत्यर्थः। आद्ये सकर्मकः। द्वितीये अकर्मकः। दीङ् क्षये इति। क्षयो--ह्यस्वो, नाशो वा।

तत्त्व-बोधिनी

सेऽसिचि कृतचृतछृदतृदनृतः २९१, ७।२।५७

सेऽसिचि। नातष्र्यति। नत्स्र्यतीति। निनर्तिषति। निनृत्सति। कर्तिष्यति। कत्स्र्यति।चिकर्तिषति। चिकृत्सति। इत्यादि ज्ञेयम्। अनर्तीदिति। "असिची"त्युक्तत्वादिह नित्यमिट्। त्रेसतुरिति। वा जृ()भ्रमुत्रसा"मीत्येत्त्वाभ्यासलोपौ। कुथ। पूतीभावः-- पवित्रीभवनम्। कुथ्यति भूमिः। पवित्रीभवतीत्यर्थः। पुष्प विकसने। "कालात्साधुपुष्यत्पच्यमानेष्वि"त्यत्र पुष्यतिः श्नन्तः। पचाद्यचि पुष्पम्। संज्ञायां कन्। "पुष्पकम्। व्रीड। "गुरोश्च हलः" इत्यप्रत्यये टाप्। व्रीडा। घञि तु व्रीडः। "अत एव व्रीडमावहति मे स संप्रती"ति कालिदासः। "व्रीडादिवाभ्यासगतैर्विलिल्ये" इति माघश्च। षह षुह। "परिनिविभ्यः" इत्यत्र सहेत्यकार उच्चारणार्थ इति षत्वमिह भवति। परिषह्रति। "तीषसहे"तीड्विकल्पस्तु नाऽस्य भवति, "सहे"ति शबन्तनिर्देशात्, किं तु "षह मर्षणे" इत्यस्यैव स इत्यात्रेयादयः। सहेति निर्देशस्योभयत्र तुल्यत्वे "तीषसहे"त्यत्र शपा निर्देशः, "परिनिविभ्यः" इत्यत्र तु नेत्यद्र्धजरतीयमिदं हेयमेव। तत्त्वं तु प्रयोगमनुसृत्य महद्भिरेव निर्धार्यम्। नपुंसके भावे क्तः। सुहतंतृप्तिः। अत एव "पूरणगुणे"ति सूत्रे सुहितार्थास्तृप्त्यर्था इति व्याख्य#आतम्। जेरतुरिति। "ऋच्छत्यृ()ता"मिति गुणे कृते "न शसददे"ति गुणशब्देन भावितस्य निषेधात् "अत एकहल्मध्ये" इत्यपर्वृत्तौ "वा जृ()भ्रमुत्रसा"मित्येत्वाभ्यासलोपविकल्पः। षूङ्। प्रसव उत्पत्तिः। "मृत्पिण्डो घटं सूयते" इत्यादिप्रयोगाऽभावात्प्राणीत्युक्तम्। "स्वादय ओदितः" इति वक्ष्यमाणत्वात् "ओदितश्चे"ति निष्ठातस्य नत्वम्। प्रसूनम्। विकल्पमिति। "परमपी"ति शेषः। निषेधे प्राप्ते इति। पुरस्तात्प्रतिषेधकाण्डारम्भसामथ्र्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

गमेरिट् परस्मैपदेषु ७।२।५८

गमेर् धातोः सकारादेरार्धधातुकस्य परस्मैपदेसु इडागमो भवति। गमिष्यति। अगमिष्यत्। जिगमिषति। गमेः इति किम्? चेष्यति। इड्ग्रहणं नित्यार्थम्। परस्मैपदेषु इति किम्? संगंसीष्ट। संगंस्यते। संजिगंसते। संजिगंसिष्यते। अधिजिगांसते। अधिजिगांसिष्यते। गमेरिङादेशस्य अज्झनगमां सनि ६।४।१६ इति दीर्धत्वम्। से इत्येव, गन्तास्मि, गन्तास्वः, गन्तास्मः। आत्मनेपदेन समानपदस्थस्य गमेः अयम् इडागमो नेष्यते। अन्यत्र सर्वत्रैवेष्यते। कृत्यपि हि भवति, परस्मैपदलुकि च, संजिगमिषिता, अधिजिगमिषिता व्याकरणस्य, जिगमिष त्वम् इति। पदशेषकारस्य पुनरिदं दर्शनम् गम्युपलक्षणार्थं परस्मैपदग्रहणम्, परस्मैपदेषु यो गमिरुपलक्षितस् तस्मात् सकारादेरार्धधातुकस्य इड् भवति। तन्मतेन संजिगंसिता, अधिजिगंसिता व्याकरणस्य इत्येव भवितव्यम्।

लघु-सिद्धान्त-कौमुदी

गमेरिट् परस्मैपदेषु ५०८, ७।२।५८

गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु। गमिष्यति। गच्छतु। अगच्छत्। गच्छेत्। गम्यात्॥

न्यासः

गमेरिट्? परस्मैपदेषु। , ७।२।५८

"गम्लृ गतौ" (धा।पा।९८२)। गमिरयमनुदात्तत्वादनिट्()। योऽपि "सनि च" (२।४।४७) इति "इण्? गतौ" (धा।पा।१०४५) इत्यस्य गमिरादेशः, यश्च "इण्वदिक इति उक्तव्यम्()" (वा।१६७) इति "इक्? स्मरणे" (धा।पा।१०४७) इत्येतस्य, यश्च "इङश्च" (२।४।४८) इति "इङ्? अध्ययने" (धा।पा।१०४६) इत्येतस्य सोऽपि स्थानिवद्भावादनिडेव स्यात्()। तेभ्यः परस्य सकारादेरार्धधातुकस्य सिज्वर्जितस्येडागमो यथा स्यादित्येवमर्थं वचनम्()। "गमिष्यति, अगमिष्यत्()" इति। अनादेशस्य गमेरुदाहरणम्()। "जिगमिषति" इति। एतत्? तस्येणादेशस्य, इगादेशस्य वा। अथेडिते वत्र्तमाने पुनरिड्ग्रहणं किमर्थम्()? इत्याह--"इड्ग्रहणं नित्यार्थम्" इति। तद्धि ["तद्धि पूर्वकमिड्ग्रहण्()। "उदितो वा" इति वाग्रहणेन प्रकृतमिड्ग्रहणं सम्बद्धम्(), अतस्तदनुवृत्तौ" इत्यादिः मुद्रितः पाठः] पूर्वकमिड्ग्रहणं "उदितो वा" ७।२।५६ इति वाग्रहणेन सम्बद्धम्(), अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्(), तथा च विकल्पेनेट्? प्रसज्येत। तस्मात् तन्निवृत्त्यर्थं पुनरिड्ग्रहणं क्रियेत। "संगंसीष्ट" इति। सम्पूर्वाद्गमेराशिषि लिङ् सीयुट्(), "समो गम्पृच्छि" १।३।२९ इत्यादिनाऽऽत्मनेपदम्(), "सुट् तिथोः" ३।४।१०७ इति सुट्(), धत्वम्(), ष्टुत्वम्()। "सञ्जिगंसते" इति। "पूर्ववत्सनः" १।३।६२ इत्यात्मनेषदम्()। "अधिजिगांसते" इति। गमेरिङादेशस्य प्रत्युदाहरणम्()। अथ सञ्चिगंसत इत्यत्र "अज्झनगमां सनि" (६।४।१६) इति दीर्धत्वं कस्मान्न भवति? इत्याह--"गमेरिङादेशस्य" इत्यादि। तद्धि दीर्घत्वमिङादेशस्य गमेरिष्यते, नान्यस्य। तथा हि तत्रोक्तम्()--गमेरिङादेशस्येति वक्तव्यमिति। यदि परस्मैपदेष्वित्युच्यते, तदा कृति परस्मैपदलुकि च न प्राप्नोति? इत्याह--"आत्मनेपदेन" इत्यादि। "समानपदस्थस्य" इति। एकपदस्थस्येत्यर्थः। "अन्यत्र सर्वत्रैवेष्यते" इति। एतच्च "कृत्यपि हि" इत्यादिना विसपष्टीकरोति। "सञ्जिगमिषिता, अधिजिगमिषिता" इति। कृत्युदाहरणे द्वे। "जिगमिव त्वमिति" इति। एतत्? परस्मैपदलुकि। सन्नन्तत्वाद्गमेर्लोट्(), सिप्(), "सेह्यपिच्च" ३।४।८७ इति सेहिंरादेशर()#ः, "अतो हेः" ६।४।१०५ इति लुक्()। कथं पुनः परस्मैपदेष्वित्युच्यमाने कृति परस्मैपदलुकि च लभ्यते? एवं मन्यते--योगविभागः कत्र्तव्यः; "गमेरिट" इत्येको भागः, तत्र "से" इत्यनुवत्र्तते--सकारादावार्थधातुके गमेरिडागमो भवति। ततः "परस्मैपदेषु" इति द्वितीयो योगो नियमार्थः। स चायं नियमो यद्यविशेषेण स्यात्? तदा पूर्वयोगोऽनर्थकः स्यात्()। तस्मात्? तुल्यजातीयापेक्षया नियमः, तुल्यजातीयश्च

तिङ्()---सिङ्()विषये यदि भयति तदा परस्मैपदेष्वेव, नात्मनेपदेष्विति। ते कृति परस्मैपदलुकि च पूर्वयोगे न भवत्येव; नियमेनाव्यावर्त्तितत्वदिति। "पदशेषकारस्य पनः" इत्यादि। पदशेषकारः पुनरेवं मन्यते---परस्मैपदेष्विति नेयं परसप्तमी, किं तर्हि? विषयसप्तमी, परस्मैपदविषये यो गमिरुपलक्षितः=उपलब्धस्तस्य सकारादावार्धधातुक इड्? भवतीति। एवं च सति योगविभागमन्तरेणापि तन्मतेन परस्मैपदेषु यो गमिरुपलक्षितः, तस्मादसत्यपि परस्मैपदे सर्वत्र कृति परस्मैपदलुकि चेड्? भवत्येव; परस्मैपदपरत्वेन सकारादेरार्धधातुकस्याविशेतत्वात्()। तन्मतेन सञ्चिर्गसिता, अधिजिर्गसिता व्याकरणस्येति भवितव्यमिति; सम्पूर्वस्य, अधिपूर्वस्य च गमेः परस्मैपदेष्वनुपलक्षितत्वात्()। तथा हि--सम्पूर्वाद्गमेः "समो गम्युच्छि" १।३।२९ इत्यादिनाऽऽत्मनेपदं विहितम्()। अधिपूर्वादपि स्थानिवद्भावात्? "अनुदात्तङितः" १।३।१२ इत्यनेनात्मनेपदमिति॥

बाल-मनोरमा

गमेरिट् परस्मैपदेषु २३६, ७।२।५८

गमेरिट्। "गमे"रिति पञ्चमी। "सेऽसिची"त्यतः से इत्यनुवृत्तेन आद्र्धधातुकस्येत्यनुवृत्तं विशेष्यते। तदादिविधिः। तदाह--गमेः परस्येत्यादिना। "परस्मैपदेष्वि"त्यस्य आत्मनेपदाऽभावे इत्यर्थः। एवं च "संजिगमिषिते"ति तृचि इट् सिध्यति। गमिष्यतीति। गच्छतु अगच्छत्। गच्छेत्। गम्यात्। लुङि विशेषमाह--लृदित्त्वादङिति। "गमहने"ति उपधालोपो नेत्याह-- अनङीति पर्युदासादिति। अगमदिति। लृङि--अगमिष्यत्। सर्पतीति। शपि ऋकारस्य लघूपधगुणः। रपरत्वम्। ससर्पेति। ससृपतुः। ससृपुः। थलि क्रादिनियमान्नित्यमिट्। अजन्तत्वाऽभावादकारवत्त्वाऽभावावच्च नेड्विकल्पः। ससर्पिथ ससृपथुः। ससृप।ससर्प ससृपिव ससृपिम। लुटि तासि लघूपधगुणे रपरे प्राप्ते-- अनुदात्तस्य च। "सृजिदृशो"रित्यतो झल्यमकितीति, "आदेच" इत्यत उपदेशे इति चानुवर्तते। तदाह--उपदेशेऽनुदात्त इत्यादिना। मित्त्वादन्त्यादचः परः। उपदेशे किम्?। क्तप्रत्यये--सृप्तः। रुआप्तेति। सृप्()धातोर्लुटि तासि अमागमे ऋकारस्य यणिति भावः। सर्प्तेति। अमभावेलघूपधगुणे रपरत्वमिति भावः। एवं रुआप्स्यति सर्प्स्यतीति। सर्पतु। असर्पत्। सर्पेत्। सृप्यात्। असृपदिति। लृदित्त्वाच्च्लेरङि सति ङित्त्वान्न ग#उण इति भावः। अरुआप्स्यत्। असर्प्स्यत्। यम उपरमे इति। उपरमो विरमणम्। अनिडयम्। यच्छतीति। "इषुगमियमा"मिति शपि छः। ययाम येमतुः येमुः। थलि भारद्वाजनियमादिट्पक्षे "थलि च सेटी"त्येत्त्वाभ्यासलोपौ। तदाह- येमिथ। ययन्थेति। इडभावे रूपम्। येमथुः येम। ययाम। ययम। येमिव। येमिम। क्रादिनियमादिट्। यन्तेति। यंस्यति। यच्छतु। अयच्छत्। यच्छेत्। यम्यात्। अयंसीदिति। "यमरमे"ति इट्()सकौ। "इट ईटी"ति सिज्लोपः। "नेटी"ति निषेधान्न हलन्तलक्षणा वृद्धिरिति भावः। अयंस्यत्। तप संतापे इति। अनिडयम्। तपति। तताप तेपतुः तेपुः। तेपिथ ततप्थ तेपथुः तेप। तताप ततप तेपिव तेपिम। तप्तेति। तप्स्यति। तपतु। अतपत्। तपेत्। तप्यात्। अताप्सीदिति। हलन्तलक्षणा वृद्धिरिति भावः। अतप्स्यत्। निसस्तपतौ। शेषपूरणेन सूत्रं व्याचष्टे-- षः स्यादिति। "अपदान्तस्य मूर्धन्य" इत्यधिकारादिति भावः। निसः सकारस्य षः स्यात्तपधातौ परत इति यावत्। "अनासेवने" इत्येतद्व्याख्यास्यन्नासेवनशब्दं व्याचष्टे--- पौनः पुन्यमिति। "आसेवन"शब्देन सह नञ्समास इत्यभिप्रेत्याह--ततोऽन्यस्मिन्विषये इति। आदेशत्वाऽभावात्पदान्तत्वाच्च अप्राप्ते वचनम्। निष्टपतीति। निष्कृष्य तपतीत्यर्थः। निसः सस्य षत्वे तकास्य ष्टुत्वेन टः। आसेवने तु न षत्वम्। त्यज हानाविति। हानिरुत्सर्गः। अयमनिट्। त्यजति। तत्याज तत्यजतुः तत्यजुः। संयुक्तहल्मध्यस्थतवादेत्त्वाऽभ्यासलोपौ न। थलि तु भारद्वाजनियमाद्वेट्। तदाह--तत्यजिथ तत्यक्थेति। इडभावे "चोः कु"रिति भावः। त्यक्तेति। त्यक्ष्यति। त्यजतु। अत्यजत्। त्यजेत्। त्यज्यात्। अत्याक्षीदिति। हलन्तलक्षणा वृद्धिरिति भावः। अत्यक्ष्यत्। षञ्ज सङ्गे इति। षोपदेशोऽयमनिट्, नोपधश्च। कृतानुस्वारपरसवर्णस्य निर्देशः। शपः पित्त्वेन कित्त्वाऽभावात्तस्मिन्परे "अनिदिता"मिति नलोपाऽप्रवृत्तेरराह--दंशसञ्जेति नलोप इति। अनुस्वारपरसवर्णयोरसिद्धत्वादिति भावः। सजतीति। लिटि तु ससञ्ज। अतुसादौ तु

अकित्वान्न नलोपः। ससञ्जतुः ससञ्जुः। थलि भारद्वाजनियमाद्वेट्। ससञ्जिथ--ससङ्क्थ। इडभावे जस्य कुत्वेन गकारे तस्य चर्त्वे सति अनुस्वारपरसवर्णसंपन्नस्य चवर्गपञ्चमस्य निवृत्तौ ककारे परेऽनुस्वारस्य परसवर्णौ ङ्कारः। ससञ्जथुः ससञ्ज। ससञ्ज। ससञ्जिव ससञ्जिम।क्रादिनियमादिट्। सङ्क्तेति। तासि जस्य कुत्वेन गकारे तस्य चर्त्वे सति ञस्य निवृत्तौ नस्य ङकार इति भावः। सङ्क्ष्यति। सजत्। असजत्। सजेत्। सज्यात्। असाङ्क्षीत्। हलन्तत्वाद्वृद्धिः। असङ्क्ष्यत्। दृशिर् प्रेक्षणे इति। इरित्। अनिट् च। पश्यतीति। शिति "प्राघ्राध्मे"ति पश्यादेश इति भावः। ददर्श ददृशतुः ददृशुः। थलि तु क्रादिनियमान्नित्यमिट् प्राप्तः। अजन्ताऽकारवत्त्वाऽभावात् "अचस्तास्वदिति, "उपदेशेऽत्वतः" इति निषेधस्य चाऽप्राप्तेः। ऋदन्तत्वाऽभावेन भारद्वाजनियमाऽप्रसक्तेः।

---

सूत्रम्

काशिका-वृत्तिः

न वृद्भ्यश् चतुर्भ्यः ७।२।५९

वृतादिभ्यश्चतुर्भ्यः उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इडगमो न भवति। वृत् वर्त्स्यति। अवर्त्स्यत्। विवृत्सति। वृधू वर्त्स्यति। अवर्त्स्यत्। विवृत्सति। शृधू शर्त्स्यति। अशर्त्स्यत्। शिशृत्सति। स्यन्दू स्यन्त्स्यति। अस्यन्त्स्यत्। सिस्यन्त्सति। चतुर्भ्यः इति न वक्तव्यम्, वृद्ग्रहणं हि तत्र द्युतादिपरिसमाप्त्यर्थम् क्रियते कृपू सामर्थ्ये वृतिति, तदेव यदि वृतादिसमाप्त्यर्थम् अपि विज्ञायते न किञ्चिदनिष्टं प्राप्नोति? तत् क्रियते स्यन्देरूदिल्लक्षणम् अन्तरङ्गम् अपि विकल्पं प्रतिषेधो यथा बाधेत इति। चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः संनिधापितो भवति। परस्मैपदेषु इत्येव, वर्तिष्यते। वर्तिषीष्ट। अवर्तिष्यत। विवर्तिषते। अत्र अपि आत्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते। अन्यत्र सर्वत्र प्रतिषेधः। कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति, विवृत्सिता, विवृत्स त्वम् इति।

लघु-सिद्धान्त-कौमुदी

न वृद्भ्यश्चतुर्भ्यः ५४२, ७।२।५९

वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे। वर्त्स्यति, वर्तिष्यते। वर्तताम्। अवर्तत। वर्तेत। वर्तिषीष्ट। अवर्तिष्ट। अवर्त्स्यत्, अवर्तिष्यत्॥ दद दाने॥ १९॥ ददते॥

न्यासः

न वृद्भ्यश्चतुभ्र्यः। , ७।२।५९

"वृद्भ्यः" इति बहुवचननिर्देशादाद्यर्थो गम्यते। अत एवाह--"वृदादिभ्यः" इति। "वृतु वत्र्तने" (धा।पा।७५८), "वृधु वृधौ" (धा।पा।७५९), "शृधु शब्दकुत्सायम्()" (दा।पा।७६०) "स्यन्दू रुआवणे" (धा।पा।७६१)--इत्येते वृदादयश्चत्वार उदात्तः। तत्राद्यानां त्रयाणां नित्यमिटि प्रप्ते, स्यन्देस्तूदित्त्वात्? पाक्षिके प्राप्ते प्रतिषेधोऽयमुच्यते। "वत्स्र्यति" इति। "लृट्? शेषे च" 3।3।13 इति लृट्(), "वद्भ्याः स्यसनोः" 1।3।92 इति विकल्पेन परस्मैपदम्()। "विवृत्सति" इति। "हलन्ताच्च" 1।2।10 इति सनः कित्वाद्गुणाभावः। वृधिश्रृध्योर्धकारस्य "खरि च" 8।4।54 इति चत्र्वम्()--तकारः। "चतुभ्र्य इति न वक्तव्यम्()" इति। अत्र कारणमाह---"वृत्करणं हि" इत्यादि। तदेव यदि वृदादिपरिसमाप्त्यर्थमपि विज्ञायत इति तन्त्रेणानेकशक्तितो वा शब्दानां न किञ्चिदनिष्टं प्राप्नोति। एवमपि विशायमान इष्टस्यैव सिद्धेरत्यभिप्रायः। एवं प्रत्याख्याते चतुग्र्रहणे, प्रयोजनमाह--"तत्क्रियते" इत्यादि। यदि चतुग्र्रहणं न क्रियेत, तदा स्पन्देरूदिल्लक्षणोऽन्तरङ्गत्वाद्विकल्पः स्यात्()। अन्तरङ्गत्वं तु तसय वलाद्यर्धधातुकमात्राश्रयत्वात्()। अस्य तु प्रतिषेधस्यार्थधातुकविशेषाश्रयत्वाद्वहरङ्गत्वम्()। तस्मादन्तरङ्गमपि स्यन्देरूदिल्लक्षणं विकल्पमयं प्रतिषेधो यथा

बाधेतेत्येवमर्थञ्च चतुग्र्रहणं क्रियते। कथं पुनः क्रियमाणेऽपि चतुग्र्रहणे, अयमर्थो लभ्यते? इत्यत आह--"चतुग्र्रहणे" इत्यादि। स स्यन्दिः परः प्रधानो यस्य तत्? तत्परम्(), तद्भावस्तात्पर्यम्(), तेन तात्पर्येण तत्प्रधानतयेत्यर्थः। "सन्निधापितः" इति। उपस्थापित इत्यर्थः। तस्य चैवं सन्निधापितस्य विकल्पोऽनेन प्रतिषेधेन कथं नाम बाध्येतत्येतदेव प्रयोजनम्()। ततश्चतुग्र्रहणादन्तरङ्गमपि विक्लपं प्रतिषेधो बाधते। "अत्रपि" इत्यादि। कथं पुनः "परस्मैपदेषु" (७।२।५८) इत्यनुवत्र्तमानेऽन्यत्र सर्वत्र प्रतिषेधो लभ्यते? एवं मन्यते--गमेरित्यनुवत्र्तते, तत्रैवमभिसम्बन्धः करिष्यते--गमेः सकारादौ येन प्रकारेण इट्? तेनैव प्रकारेण वृदादिब्यो नेडिति। तेन यथा गमेरात्मनेपदवर्जनमन्यत्र सर्वत्रैवेङ् भवति, तथा वृदादिभ्योऽपि प्रतिषेध इति॥

बाल-मनोरमा

न वृद्भ्यश्चतुर्थः १८७, ७।२।५९

न वृद्भ्यः। सेऽसिचीति सूत्रात्से इति, आद्र्धदातुकस्येडिति चानुवर्तते। एभ्यः सकारादेरिति। तङानयोरभावे इति। "गमेरि"डित्यतः परस्मैपदेष्वित्यनुवृत्तम्। तेन च तङानयोरभावो लक्ष्यते, व्याख्यानादिति भावः। तेन "जिगमिषिते"त्यत्र गमेःसन्नन्तात्तृचि इट् सिध्यति, वृतेः सन्नन्ताद्धेर्लुकि विवृत्सेत्यत्र इण्निषेधश्च सिध्यति। वत्स्र्यतीति। लृटि स्यः। "वृद्भ्यः स्यसनो"रिति परस्मैपदविकल्पः। "न वृद्भ्यः" इति इण्निषेधः। गुणः। रपरत्वम्। परस्मैपदाऽभावे त्वाह-- वर्तिष्यते इति। "तङानयोरभावे" इत्युक्तेः "न वृद्भ्यः" ति इण्निषेधो न। अवर्तिष्टेति। परस्मैपदस्याङश्चाऽभावे रूपम्। अवत्स्र्यदिति। लृङि स्यः। "वृद्भ्यः स्यसनो"इति इण्निषेधोऽपि नेति भावः। वृधु शृधु इति द्वौ ऋदुपधौ। तत्रापि "द्युद्भ्यो लुङि" इति परस्मैपदपक्षे द्युतादिलक्षणोऽङ्। लृट्लृङो "वृद्भ्यः स्यसनोः" इति परस्मैपदपक्षे "न वृद्भ्यः" इति इण्निषेधश्च। तदाह-- इमौ वृतुदिति। वत्स्र्यति--वर्धिष्यते। अवृधत्--अवर्धिष्ट। अवत्स्र्यत्--अवर्धिष्यत। शत्स्र्यति--शर्धिष्यते। अशृधत्--अशर्धिष्ट। अशत्स्र्यत्-अशर्धिष्यत। स्यन्दू धातुः ऊदित्, नकारोपधः कृतानुस्वारपरसवर्णनिर्देशः। सस्यन्दिषे सस्यन्त्से इति। इडभावे दस्य चर्त्वेन तः। सस्यन्दिद्ध्वे सस्यन्द्ध्वे इति। इडभावे धकारात् प्राग् दकारः। खर्परकत्वाऽभावान्न चत्र्वम्। स्यान्दितास्यन्तेति। इडभावे दस्य चत्र्वम्। ननु लृटि स्ये सति "वृद्भ्यः स्यसनो"रिति परस्मैपदपक्षे परत्वादूदिल्लक्षणमिड्विकल्पं बाधित्वा "न वृद्भ्यश्चतुभ्र्यः" इति इण्निषेधे स्यन्त्स्यतीत्येव रूपमिष्यते, नतु स्यन्दिष्यत इति। तदयुक्तम्, अन्तरङ्गतया ऊदिल्लक्षणस्यैव इड्विकल्पस्य उचितत्वात्, सकारादिविशेषापेक्षतया तङानाभावनिमित्तापेक्षया च "न वृद्भ्यः" इति निषेधस्य बहिरङ्गत्वादित्यशङ्क्य निराकरोति-- वृदभ्य इति। "वृद्भ्यः स्यसनो"रिति परस्मैपदेकृते अन्तरङ्गमपि विकल्पं बाधित्वा "न वृद्भ्य" इति निषेध इत्यन्वयः। कुत इत्यत आह-- चतुग्र्रहमसामथ्र्यादिति। यदि ह्रत्र ऊदिल्लक्षण इड्विकल्प एव स्यान्नतु "न वृद्भ्यश्चतुभ्र्यः" इति निषेधस्तर्हि "चतुभ्र्यः" इति व्यर्थं स्यात्। न च कृपूव्यावृत्तिस्तत्फलमिति शङ्क्यं, "तासि च क्लृपः" इति चकारेण सकाराद्याद्र्धधातुकेऽपि नित्यमिण्निषेधप्रवृत्तेर्वक्ष्यमाणत्वात्। तथा च चतुग्र्रहणं चतुर्णामपि सर्वत्र इण्निषेधार्थमिति भावः। भाष्ये तु "निषेधाश्च बलीयांसः" इति न्यायेन अन्तरङ्गस्यापि ऊदिल्लक्षणेड्विकल्पस्य "न वृद्भ्यः" इति निषेधेन बाधसिद्धेश्चतुग्र्रहणं प्रत्याख्यातम्। तथा च लृटि परस्मपैदपक्षे तु ऊदित्त्वादिड्विकल्पं बाधित्वा "न वृद्भ्यः" इति नित्यमिण्निषेधे स्यन्त्स्यतीत्येकमेव रूपमिति स्थितम्। आत्मनेपदपक्षे तु ऊदित्त्वादिड्विकल्पं मत्वाह-- स्यन्दिष्यते स्यन्त्स्यते इति। इडभावे दस्य चत्र्वम्। आसीर्लिङि सीयुटि ऊदित्त्वादिड्विकल्पं मत्वा आह-- स्यान्दिषीष्ट स्यन्त्सीष्टेति। "न वृद्भ्यः" इति निषेधस्त न, तङानयोरभाव एव तत्प्रवृत्तेरिति भावः। लुङि विशेषमाह--द्युद्भ्यो लुङीत्यादिना। अङिति। "द्युतादिलक्षणे" इति शेषः। नलोप इति। "अनिदितामित्यनेने"ति शेषः। आत्मनेपदपक्षे तु अङभावादूदिल्लक्षणमिड्विकल्पं मत्वा आह-- अस्यन्दिष्ट अस्यन्त्तेति। तत्र इडभावपक्षे अस्यन्द् स् त इति स्थिते "झलो झली" ति सलोपे दस्य चत्र्वम्। न चाऽपित्त्वेन

ङित्वात् "अनिदिता"मिति नलोपः शङ्क्यः, सिज्लोपस्याऽसिद्धत्वेनाऽनुपधात्वादिति भावः।
अस्यन्त्सातामस्यन्त्सतेति। अस्यन्त्थाः, अस्यन्त्साथाम्। अस्यन्द्ध्वम्। अस्यनन्त्सि अस्यन्त्स्वहि अस्यन्त्स्महि।
अस्यन्त्स्यत्-- अस्यन्त्स्यत -अस्यन्दिष्यत।

तत्त्व-बोधिनी

न वृद्भ्यश्चतुर्भ्यः १६०, ७।२।५९

न वृद्भ्यः। गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः। वर्वर्तिष्यति। वर्वर्तिषति। चतुर्ग्रहणफलं तु मूले एव स्फुटीभविष्यति।
"सेऽसिची"ति सूत्रात्से इत्यनुवर्तते। तदाह-- सकारादेरिति। इण् न स्यादिति। स्यन्देरूदित्त्वाद्विकल्पे प्राप्ते, इतरेषां प्राप्ते,
इतरेषां नित्यमिटि प्राप्ते निषेधोऽयम्। तङानयोरिति। जिगमिषिता। जिगमिषितारावित्यादौ तृचि परतः सन
इडागमसिद्धये "गमेरिट् परस्मैपदग्रहणमं तङानयोरभावं लक्षयतीत्यभ्युपगम्यते। तञ्चात्रापि तथैवानुवर्तते,
अर्थाधिकाराश्रयणात्।तेन परस्मैपदाऽभावेऽपि तृचि विवृत्सितारावित्यत्र "अतो हे" रिति हेर्लुकि "त्वं विवृत्से"त्यत्र च
सन इण्निषेधः सिध्यतीति भावः। अत्र भाष्यवार्तिकयोर्वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनादन्यत्र निषेध इति
स्थितम्। तेन विवर्तिषते विवर्द्धिषते इत्यादाविड्भवति। विवृत्सतेवाचरति विवृत्सित्रीयते इत्यत्र त्वात्मनेपदोत्पत्तेः पूर्वं
तत्समानापदस्थत्वाऽभावादन्तरङ्गोऽयं निषेधः प्रवर्तते। स च पश्चात्तङि कृतेऽपि न निवर्तते, चतुर्ग्रहणसामर्थ्यादिति।
अत्र व्याचख्युः--- "पञ्चभ्य" इति वक्तुमुचितम्। [एवं च] "तासि चे"त्येव सूत्रं कर्तव्यम्। न च वृतादिष्वतिव्याप्तिः
तङानयोः सत्त्वादिति। अस्यन्त्तेति। अत्र "अनिदिता"मिति न लोपो न भवति, सिज्()लोपस्याऽसिद्धत्वेनानुपधात्वात्।

---

सूत्रम्

काशिका-वृत्तिः

तासि च क्लृपः ७।२।६०

कृप उत्तरस्य तासेः सकारादेश्च अर्धधातुकस्य परस्मैपदेषु इडागमो न भवति। श्वः कल्प्ता। कल्प्स्यति। अकल्प्स्यत्।
चिक्लृप्सति। पर्स्मैपदेषु इत्येव, कल्पितासे। कल्पिष्यते। कल्पिषीष्ट। अकल्पिष्यत। चिकल्पिषते। क्लृपेरप्यात्मनेपदेन
समानपदस्थस्य इडागमः इष्यते। अन्यत्र प्रतिषेधः। कृत्यपि हि पर्समिपदलुकि च प्रतिषेधो भवति, चिक्लृप्सिता,
चिक्लृप्स त्वम् इति।

न्यासः

तासि च क्लृपः।, ७।२।६०

"कृपू सामर्थ्ये" (धा।पा।७६२)। तस्मादूदित्त्वाद्विकल्पेनेटि प्राप्ते प्रतिषेधोऽयमारब्यते। "कल्प्ता" इति। लुट्(), "लुटि च
क्लृपः" १।३।९३ इति परस्मैपदं विकल्पेन, "कृपो रो लः" ८।२।१८ इति लत्वम्()। "चिक्लृप्सति" इति। पूर्ववत्किर्त्त्वम्()।
"क्लृपेरपि" इत्यादि। अयमर्थो वृदादीनामनुवृत्तर्लभ्यते, तदनुवत्तौ सत्यामेवाभिसम्बन्धः करिष्यते--यथा वृदादीना
प्रतिषेधो भवति, तथाऽयमपि क्लृपेरिति। यदि तर्हि वृददीनां ग्रहणमिहानुवत्र्तते, तदा वृदादीनामपि तासौ प्रतिषेधः
प्राप्नोति? योगविभागकरणसामर्थ्यान्न भविष्यति। यदि वृदादीनामपि तासौ स्यात्(), तदा "न वृद्भ्यः पञ्चभ्यस्तासि
च" इत्येकरणे कुर्यात्()॥

बाल-मनोरमा

तासि च क्लृपः १९१, ७।२।६०

तासि च। चकारात्सकाराद्याद्र्धदातुकं गृह्णते। "सेऽसिचि कृत"इत्यतः "से" इति, "आद्र्धधातुकस्ये"त्यत आद्र्धधातुकस्येडिति चानुवर्तते। "न वृद्भ्यश्चतुर्थ इत्यतो नेति च, "गमेरि"डित्यतः परस्मैपदमिति च। तदाह-- क्लृपेः परस्येत्यादिना।कल्प्तासीति। "लुटि च क्लृप" इति परस्मपैपदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा "तासि च क्लृपः" इति इण्निषेधे गुण रपरत्वे लत्वे रूपम्। परस्मपैदाऽभावपक्षे तु ऊदिल्लक्षममिड्विविकल्पं मत्वा आह-- कल्पितासे कल्प्तासे इति। लृटि तु "लुटि च क्लृपः" इति परस्मैपदपक्षे ऊदिल्लक्षणमिड्विकल्पं बाधित्वा "तासि च क्लृपः" इति इण्निषेधं मत्वा आह-- कल्प्स्यतीति। परस्मपैदाऽभावे तु ऊदित्त्वादिडविकल्पं मत्वा आह-- कल्पिष्यते कल्प्स्यत इति। कल्पताम्। अकल्प। कल्पेत। आशीर्लिङि ऊदिल्लक्षणमिड्विकल्पं मत्वा आह-- कल्पिषीष्टेति, क्लृप्सीष्टेति च। इडभावे "लिङ्सिचावात्मनेपदेषु" इति कित्त्वान्न गुणः। अक्लृपदिति। "द्युद्भ्यो लुङी"ति परस्मैपदपक्षे द्युतादिलक्षणे अङि सति ङित्वान्न गुणः। अङभावे तु ऊदिलक्षणमिड्विकल्पं मत्वा आह-- अकल्पिष्टेति, अक्लृप्तेति च। अकल्प्स्यदिति। लृङि स्ये "लुटि च क्लृप" इत#इ परस्मैपदपक्षे ऊदिलक्षणमिड्विकल्पं बाधित्वा "तासि च क्लृप" इति इण्निषेध इति भावः। परस्पैपदाऽभावपक्षे तु ऊदिल्लक्षणमिड्विकल्पं मत्वा आह-- कल्पिष्यत अकल्प्स्यतेति। वृदिति। वृत्तेः समास्र्यथकात्कर्तरि क्विप्। तदाह-- वृत्त इति। "गत्यर्थाकर्मके" ति कर्तरि क्तः। वृत्तशब्दस्य विवरणं--- सम्पूर्ण इति। द्युतादयः कृपूपर्यन्ता अनुदात्तेतो गताः। अथ त्वरत्यन्ता इति। "ञि त्वरा संभ्रमे" इत्यन्ता इत्यर्थः। षितश्चेति। षित्संज्ञका इत्यर्थः। षित्कार्यभाज इति वा। "ञि त्वरा संभ्रमे इत्युक्त्वा "घटादयः षितः"इति वक्ष्यमाणत्वादिति भावः। षित्फलं तु त्विति। मित्त्वफलं तु "मितां ह्रस्वः" इति णौ ह्रस्वः" इति णौ ह्रस्वः, "चिण्णमुलोर्दीर्घः" इति दीर्घश्च वक्ष्यते। "धातुपाठे अर्थनिर्देश उपलक्षण"मित्युक्तम्। ततश्चार्थान्तरवृत्तेरपि घटदातोर्घटादिकार्यं भवत्येव। तदाह--घटयति विघटयतीति। संश्लेषयति विश्लेषयतीत्यर्थः। णौ ह्रस्वोदाहरणमिदम्। अघटि अघाटीति। चिण्युदाहरणम्। घाटंघाटम्, घटंघटमिति ण्यन्ताण्णमुलि दीर्घविकल्पस्योदाहरणम्। "नित्यवीप्सयो"रिति द्विर्वचनम्। ननु यद्यर्थान्तरवृत्तेरपि घटधातोर्मित्त्वं तदा "उद्घाटनं" "प्रविघाटियते" त्यत्र विकासनार्थकस्यापि घटधातोर्णौ मित्त्वाद्ध्रस्वः स्यादित्याक्षिपति-- कथं तर्हीति। शृण्विति। "समाधानमिति शेषः। चौरादिकस्येति। चुरादौ "घट सङ्घाते" इति पठितम्। तदिदं घाटादिकाद्घटधातोर्धात्वन्तरमेव। तस्य णौ मित्त्वाऽभावाद्ध्रस्वाऽभावे "उद्घटनं" "प्रविघाटयिते"ति निर्बाधमेव, अर्थनिर्देशस्योपलक्षणतया सङ्घातादन्यत्र विकसनेऽपि चौरादिकस्य वृत्तिसंभवादिति भावः। ननु घटादिगणादन्यत्र अर्थान्तरे पठितानां धातूनामिह धातूनामिह घटादिगणे पाठो घटादिगणनिर्दिष्टएवार्थे मित्त्वार्थोऽनुवाद एव,नतु धातुभेदः। अन्यथा घाटादिकत्वं, गणान्तरस्थत्वं चादाय मित्त्वतदभावयोर्विकल्पापत्तेः। ये तु धातवो घटादिगण एव पठिता न तु गणान्तरे, ते,#आमन्त्वर्थान्तरवृत्तावपि मित्त्वमिति धातुवृत्त्यादिग्रन्थेषु सिद्धान्तः। घटधातुस्तु "घट सङ्घाते" इति चुरादौ पठितः। अतस्तस्यैवात्र गणे चेष्टायामर्थे मित्त्वार्थो()ऽनुवाद इति लब्धम्। एवं च "विघटयती"त्यादावर्थान्तरवृत्तौ ण्यन्तस्य कथं मित्त्वमित्याशङ्क्य निराकरोति---नचेति। तस्यैव-- चौरादिकस्यैव, घटधातोश्चेष्टात्मके अर्थविशेषे वृत्तौ मित्त्वार्थोऽनुवादः स्यादिति न वाच्यमित्यर्थः। कुत इत्यत आह-- नान्ये मितोऽहेताविति। चुराद्यन्तर्गणसूत्रमिदम्। तत्र हि "ज्ञप मिच्च" "यम च परिवेषणे" "चह परिवेषणे" "चह परिकल्कने" "रह त्यागे" "बल प्राणने" "चिञ् चयने" इति पञ्चधातून् पठित्वा "नान्ये मितोऽहेतौ" इति पठितम्। तत्र "चह परिकल्कने" इत्यस्य स्थाने "चपे"ति केचित्पठन्ति। तथाच पञ्चत्वस्य न विरोधः। एषु पञ्चस्वपि मिदित्यनुवर्तते। "अहेता"विति च्छेदः। कस्मादन्ये इत्यपेक्षायां संनिहितत्वाज्ज्ञापादिपञ्चभ्य इति लभ्यते। हेतुशब्देन "हेतुमति चे"ति सूत्रविहितो णिज्लभ्यते। तद्भिन्नो णिच् स्वार्थिकोऽहेतुः। तदाह--- अहेतौ स्वर्थे णिचीति। ज्ञप आदिर्येषामिति अतद्गुणसंविज्ञानो बहुव्रीहिः। ज्ञपधातोस्तदुत्तरेभ्यश्च पञ्चभ्य इत्येवं ष()ड्भ्योऽन्ये ये चुरादयस्ते मितो नेति फलितम्। एवं च चुरादौ ज्ञपादिपञ्चकव्यतिरिक्तानां मित्त्वाऽभावात् " घट चेष्टाया"मिति निर्देशश्चौरादिकस्य "घट सङ्घाते" इत्यस्य चेष्टायां वृत्तौ मित्त्वार्थोऽनुवाद इति न युज्यते, किंतु इहैव घटादिगणे "घट चेष्टाया"मित्यपूर्वोऽयं धातुः। तस्य चाऽर्थान्तरवृत्तावपि मित्त्वमस्त्येवेति

"विघटयती"त्यादौ मित्तवाद्ध्रवो निर्बाध इति भ#आवः।

तत्त्व-बोधिनी

तासि च क्लृपः १६२, ७।२।६०

तासि च क्लृपः। चकारात्साद्यार्द्धधातुकं गृह्यते। क्लृप्सीष्टेति। "लिङ्सिचावात्मनेपदेषु" इति कित्त्वान्न गुणः। (ग।) वृत। वृदिति। वृतु वर्तने इत्यस्मात्क्विप्। "ज्ञित्वरा संभ्रमे" इत्यस्यानन्तरं "घटादयः षितः" इत्युक्तत्वात्त्वरत्यन्तारुआयोदसैव षितो न तु फणान्ताः सर्वेऽपीति सिद्धं,तथापि स्पष्टप्रतिपत्त्यर्थमाह-- षितश्चेति। प्रयोजनं तु षिद्भिदादिभ्यः" इत्यङि टाप्। घटा व्यथेत्यादिरूपसिद्धिः। ये धातवोऽन्यत्राधीतास्तेषमिह पाठोऽर्थनियमाय। ये त्विहैव पठ()न्ते तेषामुपसर्गादिनाऽर्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति धातुवृत्त्यादिषु स्थितं। तदेतद्ध्वनयन्नुदाहरति-- विघटयतीति।

---

सूत्रम्

काशिका-वृत्तिः

अचस् तास्वत् थल्यनिटो नित्यम् ७।२।६१

तासौ ये नित्यानिटो धातवः अजन्ताः, तेभ्यस्तासाविव थलि इडागमो न भवति। याता ययाथ। चेता चिचेथ। नेता निनेथ। होता जुहोथ। अचः इति किम्? भेत्ता बिभेदिथ। तास्वतिति किम्? लूत्वा लुलविथ। थलि इति किम्? याता ययिव। ययिम। अनिड्ग्रहणं नित्यम् इत्यनेन विशेषणार्थम्। नित्यग्रहणं किम्? विधोता, विधविता विदुधविथ। तासि विभाषितेट्, थलि नित्यम् इडागमो भवति। तास्वतिति वतिनिर्देशः किमर्थः? तासौ ततस्थलि प्रतिषेधार्थः। यो हि तासावसन्, असत्त्वाच् च नित्यानिट्, तस्य थलि प्रतिषेधो न भवति। जघसिथ। उवयिथ। उत्तरसूत्रे ऽपि तास्वदिति वर्तते। अदादेशो हि घसिः, वेञादेशश्च वयिस्तासौ न अस्ति।

लघु-सिद्धान्त-कौमुदी

अचस्तास्वत्थल्यनिटो नित्यम् ४८२, ७।२।६१

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण्न॥

न्यासः

अचस्तास्वत्थल्यनिटो नित्यम्?। , ७।२।६१

क्रादिनियमादिदिट प्राप्तेज्जन्तानां तासौ नित्यानिटां थलि प्रतिषेधो विधीयते। "पाता" इत्यादि। लुडुपन्यासस्तासौ नित्यानिट्त्वप्रदर्शनार्थः"; अनिट्त्वं ["अनिट्प्रतिषेधात्()"--इत्येव मुद्रितः पाठः] च "एकाचः" (७।२।१०) इत्यादिनेट्? प्रतषेधात्()। "लूत्वा, लुलविथ" इति। तास्वदिति वचनादिह न भवति प्रतिषेधः।
त()स्मस्वनुच्यमान["त()स्मसत्वनुच्यमान इहापि प्रतिषेध स्यात्()--भवति, लुनाति। किति नित्यमनिटः "श्रयुकः किति" इति प्रतिषेधात्()"---इति मुद्रितः पाठः] इहापि प्रतिषेधः स्यात्()। भवति लुनातिः किति नित्यमनिट्()। "श्रयुकः किति" (७।२।११) इति प्रतिषेधात्? "पपिव, पपिम" इति। "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "अनिङ्ग्रहणं नित्यमित्यनेन" इत्यादि। नित्यमित्यनेनानिट्त्वं धातोः कथं नाम विशेष्येतेत्येवमर्थमनिड्ग्रहणमित्यर्थः। अथ सविता, लुलवथेति तासौ सेटस्थलौट्प्रतिषेधो मा भूदित्येवमर्थमनिड्ग्रहणं कस्मान्न भवति? नार्हत्येवमर्थं भवितुम्()। तथा हि--तास्वत्? थलीण्न भवतीत्युच्यते; न च यस्तासौ सेट्? तस्य प्रतिषेधो भवंस्तास्वदिति व्यपदेष्टुं शक्यते, यो ह्यमिजभावस्थलि विधीयते तस्य तासाविडमावेनैव सादृश्यं वतिराचष्टे। एवं तु वतिग्रहणादेव तासौ सेटस्थलि प्रतिषेधो न

भविष्यति; अन्यथा वतिना यत्? सादृश्यं समाख्ययते तन्न स्यात्()। तस्माद्युक्तमुक्तेमेवानिद्ग्रणस्य प्रयोजनम्()। अथाक्रयमाणेऽनिङ्ग्रहणे नित्यमिति कस्य विशेषणं विज्ञायते? प्रतिषेधस्य। ननु च नित्य एव प्रतिषेधः प्रकृतः, तत्र यदि नित्यग्रहणे न प्रतिषेधो विशिष्येत, तदा नित्यग्रहणमनर्थकं स्यात्()? नैतदस्ति; पूर्वसूत्रे प्रतिषेधस्यानित्यत्वं यथा स्यादित्येवमर्थं स्यात्()। अवं च पूर्वसूत्रेण पक्ष इडागमः स्यादेव। तस्मात्? पूर्वोक्तमेवानिङ्ग्रहणस्य प्रयोजनम्()। "तासौ विबाषितेट्()" इति। स्वरत्यादिसूत्रेम (७।२।४४) धूञ इङ्? विकल्पितः। तस्य नित्यग्रहणाद्विभाषितेटस्थलि नित्यमिडागमो भवति। असति च नित्यग्रहणे प्रतिषेधः स्यादेव। पाक्षिकेणापीडभावेनानिङ्व्यपदेशो भवत्येव। तथा हि--गुहेर्विभाषितेटोऽपि "शल इगुपधादनिटः क्सः" ३।१।४५ इति क्सो भवत्येव--अधुक्षदिति। अथ वतिना निर्देशः किमर्थः, न तासावित्येवोच्येत? इत्यत आह--"तास्वत्()" इत्यादि। असति वतिना निर्देशे योऽपि तासावसन्? असत्त्वाच्च नित्यमनिट्(), तस्यापि थलि प्रतिषेधः स्यात्()। वतिना निर्देशे तु सति, वतेः सर्वसादृश्यार्थत्वाद्यथाभूतस्य तासाविण्न भवति तथाभूतस्यैव थल्पपीटा न भवितव्यमिति न भवत्येव दोषप्रसङ्गः। यदि हि यस्तासावसत्? असत्त्वाच्च नित्यमनिट्? तस्यापि थलि प्रतिषेधः स्यात्()। एवं च सति तसावसत इडभावः, इतरत्र तु सत इति यथाभूतस्य तासादिडभावस्तथाभूतस्थापि थलि न स्यात्()। यो हि तासावसन्नसत्त्वाच्च नित्यमनिट्(), तस्य थलि प्रतिषेदो न भवति--जघसिथेति--उत्तरसूत्रेणेत्यभिप्राय इत्यत आह--"उत्तरसूत्रेऽपि" इत्यादि। तदेवमुत्तरार्थो वतिना निर्देशोऽयं भवति। इह तु नार्थो वतिनिर्देशेन, अनजन्तत्वादेव घसेर्वयेश्च परतिषेधो न भवतीति। "जघसिथ" इति। "लिट()न्यतरस्याम्()" (२।४।४।०) इत्यदेर्घस्लादेशः। "उदयिथ" इति। "वेञो वयिः" २।४।४१ इति वयिरादेशः; "लिट()भ्यासस्योभथेषाम्()" ६।१।१७ इति सम्प्रसरणम्()। कस्मात्? पूनर्घसेः, वयेश्च तासावसत्त्वान्नित्यानिट्त्वम्()? इत्याह--"अदादेशो हि" इत्यादि। नास्तितवं तयोः पुनस्तासावविधानाद्वेदितव्यम्()॥

बाल-मनोरमा

अचस्तास्वत्थल्यनिटो नित्यम् १३७, ७।२।६१

अत तस्य थलीडागमस्य भारद्वाजनियमाद्विकल्पं वक्ष्यस्तदुपयोगत्वेन सूत्रद्वयमुपन्यस्यति---अचस्तास्वत्। अधातोस्थलोऽभावाद्धातोरिरिति लभ्यते। "अच " इति तद्विशेषणम्। तदन्तविधिः। "उपदेशेऽत्वत" इत्युत्तरसूत्रादुपदेश इत्यपकृष्यत इति "ऋतो भारद्वाजस्ये"ति सूत्रभाष्ये स्थितम्। उपदेशे अजन्तादित्यन्वयः। "अनिट" इति बहुव्रीहेः पञ्चमी। नित्यमिड्विहीनादित्यन्वयः। "तासि च क्लृप" इत्यतस्तासीत्यनुवर्तते। तासौ नित्यमनिट इत्यन्वयः। थलीति षष्ठ()र्थे सप्तमी। "गमेरिट् परस्मैपदेष्वि"त्यत इडिति, "न वृद्भ्यश्चतुभ्र्य" इत्यतो नेति चानुवर्तते। "तास्व"दिति सप्तम्यान्तद्वतिः। तदाह--उपदेशे योऽजन्त इत्यादि, इण्न स्यादित्यन्तम्। "तास्व"-- दिति सेषः। यथा तासि नेट् तथा थल्यपि नेडित्यर्थः। चिचेथ जुहोथेत्याद्युदाहरणम्। अत्र क्रादिनियमप्राप्त इण्न भवति। अजन्तात्किम्?। बिभेदिथ। उपदेश इति किम्?। "ह्मञ्" जहर्थ। इह गुणे रपरत्वेऽजन्तत्वाऽभावादिण्निषेधो न स्यादित्युपदेशग्रहणम्। नित्यग्रहणं किम्?। "स्वृ गतौ" सस्वरिथ। "स्वरितसूती"ति तासौ विकल्पितेट्कत्वान्न निषेधः। तासौ किम्?। लूत्वा लुलविथ। थलः किम्?।पपिव पिम। इह तासीत्यनुव#ऋत्त्यैव सिद्धेः "तास्व"दिति नातीवोपयुज्यत इति केचित्। वस्तुतस्तु यस्तासौ विद्यते तस्मादेव परस्य थल इण्निषेधार्थ तास्वदित्यावश्यकम्। तेन "लिट()न्यतरस्या"मित्यदो घस्लृभावे जघसिथेत्यत्र न निषेधः, घसस्तासावभावादति--अद भक्षम इति धातौ मूल एव वक्ष्यते। "यस्तासावस्ति अनिट् चे"ति भाष्यम्। एव वेञो वयादेशेऽपि न निषेध ति बोध्यम्।

तत्त्व-बोधिनी

अचस्तास्वत्थल्यनिटो नित्यम् ११२, ७।२।६१

अचस्तास्वत्। उत्तरसूत्रादुपदेश इत्यपकृष्यते, तच्चाऽजन्तस्य विशेषणमित्याह-- उपदेशेऽजन्त इति। धातुरित्याक्षेपाल्लभ्यते। न ह्यधातोस्थल् संभवति। नित्यग्रहणमनिटो विशेषणम्। क्व नित्यमनिडित्यपेक्षायां संनिधानात्तासावेवेति विज्ञायते, "तासि च क्लृपः?र" इति सन्निहितं वाऽनुवर्तते। "न वृद्भ्यः" इत्यस्मान्नेत्यनुवर्तते , तदाह-- तासौ नित्यानिट् ततः परस्येत्यादि। तासाविव तास्वदिति सप्तम्यन्ताद्वतिः। यथा तासौ न भवति एवं थल्यपीत्यर्थः। अच इति किम्?। बिभेदिथ। रुरोधिथ। उपदेशे इति किम्?। जहर्थ। इह परत्वान्नित्यत्वच्च गुणे रपरत्वे च कृते अजन्तत्वाऽभावादेतस्याऽप्रवृत्ताविट् प्रसज्येतेत्युपदेश इत्युक्तम्। थलीति किम्?। पपिव पपिम। नित्यमनिटः किम्()। सस्वरिथ। सस्वर्थ। नाऽयं तासौ नित्यमनिट्, "स्वरतिसूती"ति विकल्पितेट्()त्वात्। इह तासीति नेति चानुवृत्त्यैवेष्टसिद्धेस्तास्वदित्येतन्नातीवोपयुज्यत इति केचित्। अन्ये तु --यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्येतल्लाभार्थं तत्।तेन उवयिथ, जघसिथेत्यत्र न निषेध इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

उपदेशे ऽत्वतः ७।२।६२

उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात् तासाविव थलि इडागमो न भवति। पक्ता पपक्थ। यष्टा इयष्ठ। श्क्ता शशक्थ। उपदेशे इति किम्? कर्ष्टा चकर्षिथ। अत्वतः इति किम्? भेत्ता बिभेदिथ। तपरकरणं किम्? राद्धा रराधिथ। तास्वतित्येव, जिघृक्षति। जग्रहिथ। नित्यम् अनिटः इत्येव, अङ्क्ता, अञ्जिता आनञ्जिथ।

लघु-सिद्धान्त-कौमुदी

उपदेशेऽत्वतः ४८३, ७।२।६२

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात्॥

न्यासः

उपदेशेऽत्वतः। , ७।२।६२

अनजन्तार्थोऽयमारम्भः। "इयष्ठ" ["इयष्ट" इति पदमञ्जरी] इति। पूर्ववदभ्यासस्य सम्प्रसारम्(), व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), ष्टुत्वम्()। "चकर्षिथ" इति। "कृष विलेखने" (धा।पा।९९०)। भवत्ययमकारवान्(), न तूपदेशे, किं तर्हि? पश्चाद्गुणे कृते। उपदेशग्रहमिह शक्यमकर्त्तुम्(), शक्यत एव हि "एकाच उपदेशे" (७।२।१०) इत्यत उपदेशग्रहणमनुवर्त्तयितुम्()? तत्? क्रियते विस्पष्टार्थम्()। असति तस्मिन्(), पूर्वसूत्रे तस्यानुपयोगान्निवृत्तिं()त मन्यमानः "तासावत्वतः" इत्येवमपि कश्चित्? प्रतिपद्येत। "रराधिथ" इति। "राध साध संसिद्धौ" (धा।पा।१२६२,१२६३)। "जिघृक्षति" इति। "सनि ग्रहगुहोश्च" ७।२।१२ इतीट्प्रतिषेधाद्भवति नित्यानिट्(), न तु तासौ, किं तर्हि? सचि। "आनाञ्जथ" इति। "अन्जू "व्यक्तिभ्रक्षणादिषु" ["व्यक्तिमरषणकान्तिगतिषु"--धा।पा।] (धा।पा।१४५८)। "अत आदेः" ७।४।७० इत्यभ्यासस्य दीर्घः, "तस्मान्नुड्? द्विहलः" ७।४।७१ नुट्(), भवत्ययं धातुरुपदेशेऽकारवान्(), न तु तासौ नित्यानिट्(); स्वरत्यादिसूत्रेण ७।२।४४ विकल्पितेट्कत्वात्()॥

बाल-मनोरमा

उपदेशेऽत्वतः १३८, ७।२।६२

उपदेशेऽत्वतः। "अत्वत" इति च्छेदः। अत् = ह्रस्वाकारः, सोऽस्याऽस्तीति अत्वान्। "तसौ मत्वर्थे" इति भत्वान्न जश्त्वम्। अच इति वर्जं पूर्वसूत्रं, तत्र यदनुवृत्तं तदप्यनुवर्तते। तदाह-- उपदेशेऽकारवत इति। "शक्लृ शशक्थ, "पच्"

पपक्थेत्युदाहरणम्। अत्र क्रादिनियमप्राप्त इण्न भवति। उपदेशे किम्?। "कृष विलेखने"। चकर्षिथ। अत्वत इति किम्?। बिभेदिथ। तपरः किम्?। रराधिथ। तासौ किम्?। जग्रहिथ "जिघृक्षती"त्यत्र "सनि ग्रहगुहोश्चे"ति सनि नित्यमनिट् , न तु तासौ। नित्येति किम्?। "अञ्ज", आनञ्जथ। "ऊदित्त्वात्तासौ वे"डिति भाष्यम्। चक्रमिथेत्यप्युदाहरणम्, स्नुक्रमो"रिति नियमेनात्मनेपदे तासावनिट्कत्वेऽपि परस्मैपदे सेट्कत्वात्।

तत्त्व-बोधिनी

उपदेशेऽत्वतः ११३, ७।२।६२

उपदेशेऽत्वतः। पपक्थ। इयष्ठ। उपदेशे किम्?। कर्ष्टा। चकर्षिथ। अकारवत इति किम्?। भेत्ता। बिभेदिथ। तपरकरणं कम्?। राद्धा। रराधिथ। तासौ किम्?। जिघृक्षति। जग्रहिथ। "सनि ग्रहगुहोश्चे"ति सनि नित्यमनिरट्। क्रान्तः। चक्रमिथ। ऊदित्त्वेन क्त्वायां वेट्कत्वात् "यस्य विभाषे"ति निष्ठायां नेट्। नित्यानित्याऽनिट्। "स्नुक्रमोरनात्मनेपदनिमित्ते" इति परस्मैपदे सेक्टत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

ऋतो भारद्वाजस्य ७।२।६३

ऋकारान्ताद् घातोः भारद्वाजस्य अचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति। स्मर्ता सस्मर्थ। ध्वर्ता दध्वर्थ। सिद्धे सत्यारम्भो नियमार्थः, ऋत एव भारद्वाजस्य, नान्येषां धातूनाम्। ययिथ। वविथ। पेचिथ। शेकिथ। तदयम् अर्थात् पूर्वयोः योगयोर्विकल्पः। तपरकरणम् ऋकारान्तस्य निवृत्त्यर्थम्। तथा हि सति विध्यर्थम् एतत् स्यात्।

लघु-सिद्धान्त-कौमुदी

ऋतो भारद्वाजस्य ४८४, ७।२।६३

तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मते। तेन अन्यस्य स्यादेव। अयमत्र संग्रहः --- अजन्तोऽकारवान्वा यस्तास्यनिट्थलि वेडयम्। ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत्॥चिक्षयिथ, चिक्षेथ। चिक्षियथुः। चिक्षिय। चिक्षाय, चिक्षय। चिक्षियिव। चिक्षियिम। क्षेता। क्षेष्यति। क्षयतु। अक्षयत्। क्षयेत्॥

न्यासः

ऋतो भारद्वाजस्य। , ७।२।६३

"सस्मर्थ" इति। "स्मृ चिन्तायाम्()" (धा।पा।९३३)। "दध्वर्थ" इति। "ध्वृ हूर्छने" (धा।पा।९३९)। ननु यद्यप्यकारान्तानां मद्ये वृङ्वृञावुदात्तौ तत्रापि वृङस्थल्न सम्भवत्येव, आत्मनेपदितत्वात्()। वृञस्तु "ववर्थेति निगमे" ७।२।६४ निपातनाद्भाषायामिटा भवितव्यमेव, तस्मात्? तयोरिट्प्रतिषेधार्थमेतन्नोपपद्यते; ये त्वन्ये ऋकारान्ताः, तेषामनुदत्तत्वात्? तासौ नित्यमनिट्त्वामिति "अचस्तास्वत्? थल्यनिटो नित्यम्()" ७।२।६१ इतीट्प्रतिषेधः सिद्ध एव, परत्वाद्गुणे कृते रपरत्ये चानजन्तत्वान्न सिध्यतीत्येवमेतन्नाशङ्कनीयम्(); उपदेशग्रहणस्य पुरस्तादनुकृष्टस्य "अचः" इत्यनेनाभिसम्भन्धात्(); अथ वा--"अचः" इति विहितविशेषणा पञ्चमी, तत्रैवं विज्ञास्यामः--अजन्ताद्यो वहितस्थलिति, तस्मादचस्तास्वदित्यनेनैव ऋकारन्तेभ्यः प्रतिषेधः सिद्धः, तत्किमर्थोऽप्यमारम्भः? इत्याह--"सिद्धे सत्यारम्भो नियमार्थः" इति। "नान्येभ्यः" इति। के पुनस्ते? य ऋकारान्तादन्येऽजन्ताः, अनजन्ताश्चोपदेशेऽत्वन्तः। अथैवं कस्मान्नियमो न विज्ञायते--ऋतो भारद्वाज्यैव, नान्येषामाचार्याणामिति? एवं मन्यते--पूर्वसूत्रादयोऽत्वत इति

चनुवत्र्तते, तदनुवृत्तेरेतदेव प्रयोजनम्()--अनेन नियमेन सन्निधानात्? तस्यैवाजन्तस्यानुवृ()त्तस्यात्वतश्च प्रकृतस्य धातोः। तथा च तदनुवृत्तिरपार्थिका स्यात्()। तस्मावृत एव भारद्वाजस्येत्ययमेव नियमो विज्ञायत इत्याह--"तत्()" इत्यादि। तदिति हेतौ। यस्मादेवंविधोऽत्र नियमः--तस्माद्दत एव भारद्वाजस्य प्रतिषेधो भवति, नान्येभ्यो धातुभ्य ति। तेन यद्यपि पूर्वयोगाभ्यां नित्यमिट्प्रतिषेधः कृतः, तथां च सामथ्र्थात्? पूर्वयोगयोरयं विकल्पो भवति। यद्यपि तत्र वाग्रहणम्(), आचर्यग्रहणं च क्रियते, तथाप्यर्थाल्लभ्यते। अथ तपरकरणं किमर्थम्(), न "उर्भारद्वाजस्य" इत्येवोच्येत? इत्याह--"तपरकरणम्()" इत्यादि। यदि ह्रुरित्येवोच्येत, ततोऽण्? सवर्णान्? गृह्णातीति ऋकारान्तानामपि ग्रहणं स्यात्()। ततस्तन्निवृत्त्यर्थं तपरकरणम्()। किं पुनः स्याद्यद्युकारान्तानां ग्रहणं न स्यात्()? इत्यत आह--"तथा हि" इत्यादि। तथेत्येवमर्थे। हिशब्दो यस्मादर्ये। एवं यस्मात्? तपरकरणमन्तरेणापि ऋकारानातानां ग्रहणे सति विध्यर्थमेतत्? सम्भाव्येत। असति हि विधेये नियमो भवति। ऋकारान्तानां ग्रहणे सति तेषामेव प्रतिषेधो विधेयः स्यात्(), न हि तेषां पूर्वेण प्रतिषेधः सिद्धः। सर्वेषामृकारान्तानां तासौ नित्यम्(); सेट्त्वात्?। तपरकरणे तु सति तकारेण दीर्घनिवृत्तौ कृतायां विधेयताभावान्नियमोऽयं सम्पद्यते॥

बाल-मनोरमा

ऋतो भारद्वाजस्य १३९, ७।२।६३

ऋतो भा। तासौ नित्यमनिट इति, थलीति, नेति, इडिति चानुवर्तते। भारद्वाजस्य मते ऋदन्ताद्धातोः परस्य थलो नेडिति फलितं। ह्रन्धृञादौ "अचस्तास्व"दित्येव सिद्धम्। अतो नियमार्थमिदमित्याह-- ऋदन्तादेवेति। अनृदन्तात्परस्य तु थल इट् स्यादेवेत्येवकारार्थः। तदाह--अन्यस्य स्यादेवेति। ऋदन्तभिन्नात्परस्य थल इट् स्यादेवेत्यर्थः। तथा च ऋदन्तभिन्नाद्धातोः परस्य थलो नेण्निवृत्तिरति भारद्वाजमते फलतीति न वैयथ्र्यमिति भावः। तथा च अनृदन्ताद्धातोः परस्य थलो भारद्वाजमते इट्,मतान्तरे तु अचस्तास्वदिति उपदेशेऽत्वत ति च तत्र नेडति विकल्पः फलतीति भावः। तद्यथा--पपिथ-पपाथ। पेचिथ- पपक्थ। अयमत्रेति। कृसृभृवृस्तुद्रुरुआउश्रुवो लिटी"ति, "अचस्तास्वत्थल्यनिटो नित्य"मिति, "उपदेशेऽत्वत" इति, "ऋतो भारद्वाजस्ये"ति च सूत्रचतुष्टयस्य विषयाणां सङ्ग्रहो वक्ष्यत इत्यर्थः। अजन्त इति। यो धातुः ऋदन्तभिन्नाऽजन्तो ह्रस्वाकारवान् वा तासौ नित्याऽनिट् नित्याऽनिडित्यर्थः। "अचस्तास्व"दिति पाणिनिमते "ऋतो भारद्वाजस्ये"ति भारद्वाजमतेऽपि तस्य अनिट्कत्वादिति भावः। क्राद्यन्य इति। क्राद्यष्टभ्योऽन्यो धातुर्लिटि नित्यं सेडित्यर्थः। क्राद्यष्टभ्य एव परस्य लिटि नेडिति कृसृभृवृ इति सूत्रेण नियमितत्वादिति भावः। नन्वत्र क्राद्यन्य इत्युक्त्या क्रादीनामष्टानां लिटि नित्यानिट्कत्ववगतं तदनुपपन्नं, स्तुद्रुरुआउश्रुवामृदन्तभिन्नत्वेन तेभ्यस्थलि अचस्तास्वदिति निषेधस्य भारद्वाजमतेऽप्रवृत्त्या इड्विकल्पस्य दुर्वारत्वात्। नचैवं सति कृसृभृवृ इति सूत्रे स्तुद्रुरुआउश्रुग्रहणमनर्थकमिति वाच्यं, तुष्टुव तुष्टुमेत्यादौ वमादिषु क्रादिनियमप्राप्तस्य इटो निवृत्त्या चरितार्थत्वादित्याशङ्क्य निराकरोति-- न चेति। कुत इत्यत आह-- अचस्तास्वदिति। ऋदन्तादेव परस्य थल इण्निषेधः, अनृदन्तात्परस्य तु थल इण्निषेधो नेति भारद्वाजीयं मतम्। अयं च इण्निषेधस्य निषेधः "अचस्त्वास्व" दिति "उपदेशेऽत्वत" इतिच सूत्रद्वयप्राप्तस्यैव इण्निषेधस्य पक्षे निवर्तको न तुक्रादिसूत्रप्राप्तस्य इट् प्रतिषेधस्यापीत्यर्थः। कुत इत्यत आह-- अनन्तरस्येति। "अचस्तास्व"दिति "उपदेशेऽत्वत" इति "ऋतो भारद्वाजस्ये"तिच सूत्रक्रमः। कृसृभृवृ इति सूत्रं तु ततः प्राग्बहुव्यवहितमिति भावः। किंच "नेड्वशि कृती" त्यादिप्रतिषेधकाण्डोत्तरम् "आद्र्धधातुकस्येड्वलादे" रिति विधिकाण्डारम्भसामथ्र्यादपि स्तुद्रुस्रुश्रुवामिण्निषेधो भारद्वाजनियमं बाधत इति "नेड्वशि कृती" त्यत्र , "वस्वेकाजाद्धसा"मित्यत्र च भाष्ये स्पष्टम्। ततश्च प्रकृते अजेस्थलि वीभावे तस्य अजन्तत्वात्तासौ नित्याऽनिट्त्वाच्च इड्विकल्प इति सिद्धं। तदाह---विवयिथ विवेथेति। सिबादेशस्य थलः पित्त्वादसंयोगादिति कित्त्वाऽभावाद्गुणः। इट्पक्षेऽयादेशः। आजिथेति। "वलादावाद्र्धधातुके वेष्यते इति वीभावाऽभावपक्षे अजधातोरनुदात्तोपदेशबहिर्भूतत्वादिट्।

द्वित्वम्। हलादिः शेषः। "अत आदे"रिति दीर्घः। विव्यथुरिति। अथुसि वीभावे द्वित्वे अभ्यासह्रस्वे असंयोगादिति कित्त्वाद्गुणाऽभावे इयङपवादे "एरनेकाच" इति यणि रूपम्। विव्येति। थस्य अकारे वीभावादि। विवाय विवयेति। "णलुत्तमो वे"ति णित्त्वविकल्पाद्वृद्धिविकल्पः। विव्यिव विव्यिमेति। "क्राद्यन्यो लिटि सेड्भवे"दिति नित्यमिटि यण्। वेता अजितेति। लुटि तासि वीभावविकल्पः। वेष्यति अजिष्यतीति। लृटि स्ये वीभावविकल्पः। वीयादिति। आशीर्लिङादेशस्य आद्र्धधातुकत्वाद्वीभावः।

तत्त्व-बोधिनी

ऋतो भारद्वाजस्य ११४, ७।२।६३

ऋतो भारद्वाजस्य। तपरकरणात्कृ()गृ()प्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते। ह्रस्वान्तेषु ह्रञ्धृञादिषु "अचस्तास्व"दित्येव सिद्धं, वृरञ्वृङौ तु यद्यपि सेटौ, तथापि वृङः थलेव नास्ति, आत्मनेपदित्वात्, वृञस्तु छन्दसि "ववर्थे"ति निपातनाद्ववरिथेति भाषायमिटा भाव्यम्। त्समान्नियमोऽयमित्याह--- ऋदन्तादेवेति। जहर्थ। दधर्थ। अन्यस्य स्यादेवेति। एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः फलितः। पपिथ। पपाथ। पेचिथ। पपक्थ। इयजिथ। इयष्ठ। अकारवानिति। ह्रस्वाऽकारवानित्यर्थः। ईदृगिति। यस्तास्यनिट् स ऋदन्तस्थलि नित्याऽनिड्भवतीत्यर्थः। ननु स्तुद्रुरुआउश्रुवामपि थलि भारद्वाजनियमादिट् स्यात्। न चैवं क्रादिसूत्रे तेषां पठनं निरर्थकं स्यादिति वाच्यं, तत्पठनस्य वमादिष्विण्निवृत्त्यर्थतया सफलत्वात्। अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशङ्क्याह-- न चेति। योगद्वयेति। क्रादियोगप्रापितस्य तु न निवर्तक इति भावः। कुत इत्याकाङ्क्षायामाह-- अनन्तरस्येति। न चैवम् "उपदेशेऽत्वतः" इत्यस्यैव बाधः स्यादिति वाच्यम्, अत्वत्सु धातुषु ऋदन्तत्वाऽदर्शनेन यद्यत्वतस्थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात्। ननु तर्हि "अचस्तास्व"दित्यस्यैव बाधोऽस्तु, तत्कथं "यगोद्वयप्रापितस्ये"त्युक्तम्। अत्राहुः-- "उपदेशेऽचस्तास्व"दित्येव सूत्रे कृतेऽपि तास्वत्थलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिसंबवे अत्वत इति सूत्रे उपदेशपदस्य, अच इति पूर्वसूत्रे तु तास्वत्थलीत्यादेश्च करणादुभयोः समानयोगक्षेम इति ज्ञायते। तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते। यदि तु "उपदेशेऽत्वतोऽचस्तास्वत्थल्यनिटो नित्य"मिति एको योगः स्वीक्रियते तदात्र नास्त्येव शङ्कालेशोऽपीति बोध्यमिति। अन्ये तु व्याचक्षते-- "अचस्तास्व"दिति सूत्रानन्तरमेव "ऋतो भारद्वाजस्ये"ति पठनीयं। द्वयोरनन्तरमस्यारम्भादिह " तास्वत्थल्यनिटो नित्यं" "तासी"त्यनुवर्त्य योऽयं तासि नित्यानिटस्थलि इण्निषेधः स बाधकमस्तु, पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्। अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाधेतेत्येतदर्थो हि स आरम्भः। अमुमेवार्थं सिद्धवत्कृत्य "ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थर"मिति मूलेऽप्युपनिबद्धमिति। विव्यिव। विव्यिमेति। क्रादिनियमान्नित्यमिट्।

---

सूत्रम्

काशिका-वृत्तिः

वभूथाऽततन्थजगृभ्मववर्थ इति निगमे ७।२।६४

बभूथ आततन्थ जगृभ्म ववर्थ इत्येतानि निपात्यन्ते निगमविषये। निगमो वेदः। त्वं हि होता प्रथमो बभूथ। बभूविथ इति भाषायाम्। आततन्थ येनानतरिक्षमुर्वाततन्थ। आतेनिथ इति भाषायाम्। जगृभ्म जगृभ्मा ते दक्षिणमिन्द्र हस्तम्। जगृहिम इति भाषायाम्। ववर्थ ववर्थ त्वं हि ज्योतिषा। ववरिथ इति भाषायाम्। क्रादिसूत्रादेव अस्य प्रतिषेधो सिद्धे नियमार्थं वचनम्, निगमे एव, न भषायाम् इति।

न्यासः

बभूथाततन्थजगृभ्मववर्थेति निगमे। , ७।२।६४

बभूथेत्यादौ सर्वत्र क्रादिनियमादिटः प्राप्तस्याभावो निपात्यते। "बभूथ" इति। "भवतेरः" ७।४।७३ इत्यभ्यासस्याकारस्यात्वम्()। "बभूविथ" इति। "भुवो वुग्लुङ्लिटोः" ६।४।८८ इति वुक्()। "आततन्थ" इति। "तनु विस्तारे" (धा।पा।१४६३), आङ्पूर्वः। "अतेनिथ" इति। "थलि च सेटि" ६।४।१२१ इत्येत्वाभ्यासलोपौ। "जगृभ्म" इति। "भुवो वुग्लुङ्()लिटोः" (६।४।८८) इति वुक्()। "आततन्थ" इति। "तनु विस्तारे" (धा।पा।१४६३), आङ्पूर्वः। "अतेनिथ" इति। "थलि च सेटि" ६।४।१२१ इत्येत्वाभ्यासलोपौ। "जगृभ्म" इति। ग्रहेर्लिट्(), "परस्मैपदानाम्()" ३।४।८२ इत्यादिना मसो मादेशः, "ग्रहिज्या" ६।१।१६ इति सूत्रेण सम्प्रसारणम्()। "ववपर्थ" इति। "वृञ्? वदणे" (धा।पा।१२५४)॥

बाल-मनोरमा

बभूथाततन्थजगृभ्मववर्थेति निगमे ३५७, ७।२।६४

निगमो- वेदः। तदाह-- एषां वेदे इति। ननु "कृसृभृवृ" इतिनिषेधादेव थलि ववर्थेति सिद्धे किमर्थं ववर्थग्रहणमित्यत आह-- तेन भाषायां थलीडिति। निगमे एव वृणोतेस्थलि इण्निषेध इति नियमलाभादिति भावः। व्रवे व्रवाते। ववृषे। "वृ()तो वा" इति मत्वाह -- वरितावरीतेति।

तत्त्व-बोधिनी

बभूथाततन्थजगृभ्मववर्थेति निगमे ३१२, ७।२।६४

बभूथाततन्थ। भूधातोस्तनोतेश्च थलि इडभावो निपात्यते। "त्वं हि होता प्रथमो बभूथ"। "येनान्तरिक्षमुर्वा ततन्थ"। भाषायां तु बभूविथ तेनिथ। "जगृम्भा तेदक्षिणमिन्द्र हस्तम्"। भाषायां तु जगृहिम। वृणोतेस्थलि क्रादिसूत्रेणेण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति। नियमार्थं ववर्थग्रहणम्। "ववर्थ त्वं हि ज्योतिषाम्"। भाषायां तु ववरिथ। ववृषे।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा सृजिदृशोः ७।२।६५

सृजि दृशि इत्येतयोः थलि विभाषा इडागमो न भवति। ससृअष्ठ, ससर्जिथ। दद्रष्ठ, ददर्शिथ।

न्यासः

विभाषा सृजिद्दशोः। , ७।२।६५

"सुज विसर्गे" (धा।पा।१४१४), "दृशिर्? प्रेक्षणे" (धा।पा।९८८)--अनयोः क्रादिनियमादिटि नित्यं प्राप्ते विकल्पार्थं वचनम्()। "सरुआष्ठ, दद्रष्ठ" इति। व्रश्चादिना ८।२।३६ षत्वम्(), "सृजिदृशोर्झल्यमकिति" ६।१।५७ इत्वम्()॥

बाल-मनोरमा

विभाषा सृजिदृशोः २३७, ७।२।६५

तत्राह-- विभाषा सृजि। पञ्चम्यर्थे षष्ठी। "गमेरिडित्यतत इडिति, "()चस्तास्व दित्यतस्थलीति चानुवर्तते। तदाह-- आभ्यामिति।

तत्त्व-बोधिनी

विभाषा सृजिदृशोः २०९, ७।२।६५

क्रादिनियमान्नित्ये प्राप्ते विभाषेयम्।

---

सूत्रम्

काशिका-वृत्तिः

इडत्त्यर्तिव्ययतीनाम् ७।२।६६

अत्ति अर्ति व्ययति इत्येतेषां थलि इडागमो भवति। आदिथ। आरिथ। विव्ययिथ। व्येञः न व्यो लिटि ६।१।४५ इति आत्वप्रतिषेधः। अत्तिव्ययत्योः ऋतो भारद्वाजस्य ७।२।६३ इति नियमाद् विकल्पः। अर्तेरपि नित्यः प्रतिषेधः। अत्र इड्ग्रहणम् विस्पष्टार्थम्। विकल्पविधाने हि सति अत्तिव्ययतिग्रहणम् अनर्थकम्, प्रतिषेधविधाने च अर्तिग्रहणम् इति नित्यो ऽयं विधिः इड्ग्रहणम् अन्तरेण अपि शक्यते विज्ञातुम्।

लघु-सिद्धान्त-कौमुदी

इडत्त्यर्तिव्ययतीनाम् ५५७, ७।२।६६

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आदिथ। अत्ता। अत्स्यति। अत्तु। अत्तात्। अत्ताम्। अदन्तु॥

न्यासः

इडत्त्यर्त्तिव्ययतीनाम्?। , ७।२।६६

"आदिथ, आरिथ" इति। "अद भक्षणे" (धा।पा।१०११), "ऋ गतो" (धा।पा।१०९८)। "अत आदेः" ७।४।७० इत्यभ्यासस्य दीर्घः। "विष्ययिथ" इति। "व्येञ्? संवरणे" (धा।पा।१००७), लिट()भ्यासत्योभयेषाम्()" ६।१।१७ इति सम्प्रसारणम्()। कस्मात्? पुनरत्र व्येञः "आदेच उपदेशे" (६।१।४५) इत्यात्त्वं न भवति? इत्याह--"व्येञो न व्यो लिटि इत्यादि। "अत्रेरपि नित्यं प्रतिषेधः" इति। "ऋतो भारद्वाजस्य" ७।२।६३ इत्यनेन। "अत्रेङ्ग्रणं विस्पष्टार्थम्()" इति। ननु च नित्यमिडागमो यथा स्यादित्येवमर्थमिङ्ग्रहणं स्यात्(), न हीङ्()ग्रहणमन्तरेणायं शक्यत इङ्()विधिर्नित्यो विज्ञातम्()? इत्याह--"विकल्पवधाने हि" इत्यादि। अनेन हि विकल्पस्यानन्तरस्य वा विधानं क्रियते, पूर्वपरकृतस्य वा नित्यप्रतिषेधस्य? शक्यते ह्रसावपि मण्डूकप्लुतिन्यायेनानुवत्र्तयुतम्()। तत्र यदि पूर्वको विकल्पस्तदाऽर्त्तिव्ययतिग्रहणमनर्थकं स्यात्(); "उपदेशेऽत्वतः" ७।२।६२ इत्यनेनैव विकल्पस्य सिद्धत्वात्()। अथेतरः, एवं सत्यर्त्तिग्रहणमनर्थकं स्यात्(); "ऋतो भारद्वाजस्यैव" ७।२।६३ इत्यनेनैव प्रतिषेधस्य सिद्धत्वात्()। यत एवं न विकल्पस्य विधानमुपपद्यते तेन नापि प्रतिषेधस्य। अस्मादन्तरेणापीङ्ग्रहणं नित्योऽयमिङ्विधिरिति शक्यते विज्ञातुम्()। प्रतिपत्तिगौरवं पुनरेवं विज्ञायमाने स्यादिति विस्पष्टार्थमिङ्ग्रहणं क्रियते॥

बाल-मनोरमा

इडत्त्यर्तिव्ययतीनाम् २२१, ७।२।६६

थलि तु क्रादिनियमप्राप्तस्य इटः "अचस्तास्व"दिति ऋदन्तत्वाद्भारद्वाजमतेऽपि निषेधे प्राप्ते-- इडत्त्यर्ति। पञ्चम्यर्थे षष्ठी। "अचस्तास्व"दित्यत स्थलीत्यनुवर्तते। "विभाषा सृजिदृशो"रिति पूर्वसूत्राद्विभाषाग्रहणमस्वरितत्वान्नानुवर्तते। तदाह-- अद् ऋ इत्यादिना। "आद्र्धधातुकस्ये"डित्यनुवृत्तौ पुनरिड्ग्रहणं तु "न वृद्ब्यश्चतुभ्र्यः" इत्यतो नेत्यनुवृत्तिनिवृत्तये इत्याहुः। आरिथेति। आरथुः। आरः। आर आरिव आरिम। क्रादिनियमादिट्। अरिष्यतीति। "ऋद्धनो"रिति इट्। ऋच्छतु।

आच्छत्। अर्यादिति। "गुणोऽर्ती"ति गुणे रपरत्वमिति भावः। आर्षीदिति। सिचि वृद्धिः। "सर्तिशास्त्यर्तिभ्यश्चे"ति अङ् तु न, ततर् भौवादिकस्य ऋधातोर्न ग्रहममित्यनुपदमेवोक्तेरिति भावः। आरिष्यत्। "ऋद्धनोः स्ये" इति इट्। गृ घृ। अनिटौ। गरतीति। जगार। असंयोगादित्वात् "ऋतश्चे"ति गुणो न। जग्रतुः जग्रुः। क्रादिनियमेन इटि प्राप्ते "अचस्तास्व"दिति नेट्। ऋदन्तत्वाद्भारद्वाजमतेऽपि नेट्। तदाह--जगर्थेति। जग्रथुः जग्र। जगार--जगर।जग्रिवेति। क्रादिनियमादिट्। जग्रिम। गर्ता। गरिष्यति। "ऋद्धनो"रितीट्। गरतु। अगरत्। गरेत्। रिङिति। आशीर्लिङि असंयोगादित्वात् "गुण#ओऽर्ती"ति गुणाऽभावे "रिङ् शयग्लिङ्क्षु" इति रिङित्यर्थः। ग्रियादिति। रीङि प्रकृते रिङ्()विधेर्न दीर्घः। अगार्षीदिति। सिचि वृद्धौ रपरत्वम्। अगार्ष्टाम्। अगरिष्यत्। "ऋद्धनोः"इति इट्। घृधातोस्तु भौवादिकस्य घृतं घर्मः घृणा इत्यत्रैव प्रयोगो नान्यत्रेति "तृज्वत्क्रोष्टु"रिति सूत्रे भाष्ये स्पष्टम्। ध्वृ इति। हूच्छनं कुटिलीभवनम्। ध्वरति। दध्वार। "ऋतश्चे"ति गुणः। दध्वरतुः दध्वरुः। थलि "अचस्तास्व"दिति क्रादिनियमप्राप्त इण्न। ऋदन्तत्वाच्च भारद्वाजमतेऽपि नेट्। दध्वर्थ दध्वरथुः दध्वर। दध्वार-दध्वर दध्वरिव दध्वरिम। क्रादिनियमादिट्। ध्वर्ता। "ऋद्धनो"रिति इट्--ध्वरिष्यति। ध्वरतु।अध्वरत्। ध्वरेत्। आशीर्लिङि "गुणोऽर्ती"ति गुणः। ध्वर्यात्। अध्वार्षीत्। अध्वरिष्यत्। रुआउ गतौ। अनिट्। रुआवति। सुरुआआव-सुरुआव। सुरुआउवेति। क्रादित्वान्नेट्। सुरुआउमेत्यपि ज्ञेयम्। रुआओता। रुआओष्यति। रुआवतु अरुआवत। रुआवेत्। रुआऊयादिति। "अकृत्सार्वधातुकयो"रिति दीर्घ इति भावः। लुङि विशेषमाह--णिश्रीति चङिति। "चङी"ति द्वित्वमित्यपि द्रष्टव्यम्। ननु असुरुआ अ त् इति स्थिते रेफादुत्तरस्य उकारस्य "सार्वधातुकाद्र्धधातुकयो"रिति गुणस्य चङ्निमित्तस्य ङित्त्वान्निषेधेऽपि उवङपेक्षया परत्वात्तिपं निमित्तीकृत्य रेफादुकारस्य लघूपधगुणः स्यादित्यत आह लघूपधगुणादन्तरङ्गत्वादुवङिति। बहिर्भूततिबपेक्षत्वनाल्लघूपधगुणो बहिरङ्गः। अन्तर्गतचङपेक्षत्वादुवङन्तरङ्गः। अतौवङेव भवति। परादन्तरङ्गस्य बलवत्त्वादिति भावः। असुरुआउवदिति। अरुआओष्यत्। षु प्रसवेति। अत्र प्रसवशब्दस्य गर्भमोचनपरत्वभ्रमं वारयति--प्रसवोऽभ्यनुज्ञानमिति। "ॐ प्रणयेति ब्राह्मआ प्रसौती"त्यादौ तथा दर्शनादिति भावः। षोपदेशोऽयम्। शपि उवङं बाधित्वा परत्वात्सार्वधातुकयोरिति गुणः। सवति। सुषाव। अतुसादौ कित्त्वाद्गुणाऽभावे उवङ्। सुषुवतुः सुषुवुः। भारद्वाजनियमात्थलि वेट्। तदाह-- सुषविथ सुषोथेति। अकित्त्वाद्गुण इति भावः। सुषुवथुः सुषुव। सुषाव-सुषव।वमयोस्तु क्रादिनियमान्नित्यमिट्। तदाह--सुषुविवेति। कित्त्वाद्गुणाऽभावे उवङ्। सोतेति। सोष्यति। सवतु। असवत्। सवेत्। सूयात्।

तत्त्व-बोधिनी

इडत्त्यर्तिव्ययतीनाम् १९३, ७।२।६६

नित्यमिट् स्यादिति। "विभाषा सृजिदृशो"रित्यतो विभाषा नानुवर्तत इति भावः। ध्वृ हूर्छने। हूर्झनं-- कौटिल्यम्। सृ गतौ। यद्यपि सामान्येन गतिरुक्ता तथापि द्रवदद्रव्यस्यैव गतिरिह ज्ञेया। रुआवति घृतम्।

---

सूत्रम्

काशिका-वृत्तिः

वस्वेकाजाद्घसाम् ७।२।६७

कृतद्विर्वचनानां धातूनाम् एकाचाम्, आकारान्तानाम्, घसेश्च वसौ इडागमो भवति। आदिवान्। आशिवान्। पेचिवान्। शेकिवान्। धात्वभ्यासयोः एकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति आत् ययिवान्। तस्थिवान्। घस् जक्षिवान्। सिद्धे सत्यारम्भो नियमार्थः, एकाजाद् घसाम् एव वसाविडागमो भवति न अनयेषाम्। बिभिद्वान्। चिच्छिद्वान्। बभूवान्। शिश्रिवान्। क्रादिनियमात् प्रतिषेधाभावाच् च य इट् प्रसक्तः स नियम्यते। आद्ग्रहणम्

अनेकाज्ग्रहणार्थम्। द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यम्। दरिद्रातेस् तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम् इत्यामा भवितव्यम्। दरिद्राञ्चकार। अथाप्याम् न क्रियते तथापि च दरिद्रातेः आर्धधातुके लोपः सिद्धश्च प्रत्ययविधौ इति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते इडागमस्य निमित्तं विहतं इति न इडागमो भवति, ददरिद्र्वानिति भवितव्यम्। घसेरपि यदि ग्रहणम् इह न क्रियते तदा द्विर्वचनात् परत्वाद् घसिभसोर्हलि च ६।४।१०० इति उपधालोपे कृते द्विर्वचनम् एव न स्यात्, अनच्कत्वात्। इह तु घसिग्रहणादुपधालोपम् अपि परत्वातिडागमो बाधते। तत्र कृते गमहनजनखनघसाम् ६।४।९८ इति उपधालोपः। स च द्विर्वचने ऽचि १।१।५८ इति द्विर्वचने कर्तव्ये स्थानिवद् भवति, तेन जक्षिवानिति सिध्यति।

न्यासः

वस्वेकाजाद्घसाम्?। , ७।२।६७

"कृतद्विर्वचनानां धातूनामेकाचाम्()" इति। कुत एतदवसितम्()? एकाज्ग्रहणसामथ्र्यात्()। न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति, यन्निवृत्त्यर्थमेकाज्ग्रहणं क्रियते। ननु च जागर्त्तिरस्ति, अतस्तन्निवृत्त्यर्थं तत्? स्यात्()? नैतदस्ति; न ह्येकमूदाहरणं प्रति योगारम्भं प्रयोजयति। यद्येतत्? प्रयोजनं स्यात्(), "जाग्रो न" इत्येवं ब्राऊयात्()। तदाप्ययमर्थः--प्रतिपत्तिगौरवं परिह्मतं भवति। ननु चोर्णोतेर्निवृत्त्यर्थमपि स्यात्()? नैतत्(); उक्तं हि प्राक्--"वाच्यौउर्णोर्णुवद्भावः" (कारिका।७।२।११) इति। तस्माद्युक्तमुक्तम्()--कृतद्विर्वचनानां धातूनामेकाचामिति। "आदिवान्()ािशिवान्()" इति। "अद भक्षणे" (धा।पा।१०११), "अश भोजने" (धा।पा।१५२३)। लिटः "क्वसुश्च" ३।२।१०७ इति क्वसुः, द्विर्वचनम्(), अभ्यासकार्थञ्च, "अत आदेः ७।४।७० इति दीर्घत्वम्()। सवर्णदीर्घत्वम्(), इट्(), "उगिदचम्()" ७।२।७० इति नुम्(), "सान्तमहतः" ६।४।१० इत्यादिना दीर्घः, हल्ङ्यादि-६।१।६६संयोगान्तलोपौ ८।२।२३। "पेचिवन्(), शोकिवान्()" इति। "अत एकहल्मध्ये" ६।४।१२० इत्यादिनैत्त्वाभ्यासलोपौ। "धात्वभ्यासयोरेकादेशे कृते" इत्यादि। ननु च षाष्ठिके द्विर्षचनविधौ "द्विष्प्रयोगो द्विर्वचनम्()" इत्येव पक्षो वृत्तिकारेणाश्रितः, एवं चाकृते दात्वभ्यासयोरेकदेशेऽकृतयोरपि चैत्वाभ्यासलोपयोः कृतद्विर्वचना अप्येत एकाचो भवन्ति। स्थाने द्विर्वचने हि शब्दान्तरमनेकाजतिदिश्यत इति स्यादेषां कृतद्विर्वचनानामनेकाच्त्वम्, न तु द्विष्प्रयोगे द्विर्वचने; तत्र हि स एव धातुर्द्विरुच्यते, न चासौ शतकृत्वोऽप्युच्चार्यमाण एकाच्त्वं जहाति, किंपुनर्द्विरुच्यमानः, तत्? क्रिमुच्यते--धात्वभ्यासयोरेकादेश एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एत एकाचो भवन्तीति? आवृत्तिकृतमेकाचो बेदमाश्रित्यैवमुक्तमित्यदोषः। भवति हि धर्मभेदादपि धर्मिणो भेदव्यवहारः? तथा हि, वक्तारो वदन्ति--परुद्भावान्? पटुरासीत्(), पटुतरश्चैषमः, पटुतमः परारि, सोऽन्य एवासि संवृत्त इति। अथ वा--स्थाने द्विर्वचनपक्षोऽपि तत्राश्रितः, द्विष्प्रयोगश्च द्विर्वचनमिति कृत्वा। चकारात्? स्थाने द्विर्वचनमपीति स्थाने द्विर्वचनपक्षस्यापि तत्र सूचनात्()। ये तु तत्पक्षभाविनो दोषस्ते तत्र प्रतिविहिता एव। "तस्थिवान्()" इति। "शर्पूर्वाः खयः" ७।४।६१ इति ख्यः शेषः; "अतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "जक्षिवान्()" इति। पूर्ववददेर्घस्लादेशः, इट्? "गमहन" ६।४।९८ इत्यादिनोपधालोपः, "कुहोश्चुः" ७।४।६२ इति चुत्वम्()--धकारस्य झकारः, "अभ्यासे चर्च्च" ८।४।५३ इति झकारस्य जकारः। परस्य धकारस्य "खरि च" ८।४।५४ इति चर्त्वम्()--ककारः, "शासिवसि" ८।३।६० इत्यादिना षत्वम्()। ननु चात्र क्रादिनियमादिडागमः सिद्ध एव, तत् किमर्थोऽयमारम्भः? इत्याह--"सिद्धे" इत्यादि। "क्रादिनियमात्? प्रसक्तः" इत्यादिना "सिद्धे सत्यारम्भो नियमार्थः" (कात।प।५९) इत्येतदेव स्पष्टीकरोति। "प्रसक्तः" इति। प्राप्त इत्यर्थः। "नियम्यते" इति। धात्वन्तरेभ्यो व्यावर्त्त्यैकाजादिष्वेव व्यवस्थाप्यत इत्यर्थः। अथाद्ग्रहणं किमर्थम्(), यावताऽकारान्ता अप्यतो लोपे कृते कृतद्विर्वचना एकाचो भवन्त्येव, तत्रैकाज्ग्रहणेनैव सिद्धम्()? इत्याह--"आद्ग्रहणमनेकाज्ग्रहणार्थम्()" इति। कथं पुनस्तेषामनेकाच्त्वम्()? इत्यत आह--"द्विर्वचने" इत्यादि। इण्निमित्तत्वादाकारलोपस्येटि सति तेषामाकारलोपेन

भवितव्यम्(), नासति, अतो यावदिण्न क्रियते तावदाकारलोपाभावात्? कृतद्विर्वचना एतेऽनेकाच इत्यसत्याद्ग्रहणे ["इत्यसत्यादिग्रहणे"--इति मुद्रितः पाठः] तेषां ग्रहणं न स्यात्()। तस्मादनेकाजर्थमाद्ग्रहणं कत्र्तव्यम्()। यद्येवम्(), दरिद्रातेरपीट्? प्रसज्येत? इत्यत आह--"दरिद्रातेस्तु" इत्यादि। दरिद्रातेः क्वसो सम्भव एव नास्ति, यतः "कास्यनेकान्ग्रहणम्()" (वा।३०५) इति वचनाद्दरिद्रातेरामा भवितव्यम्(), त()स्मश्च सति "आमः" (२।४।८१) इति लेर्लुका भवितव्यम्? तत्कुतोऽयमिट्प्रसङ्गः! "दरिद्राञ्चकर" इति। "कृञ्चानुप्रयुज्यते" ३।१।४० इति लिट्परस्य कृञोऽनुप्रयोगः। अभ्युपगम्यपि दरिद्रातेरामोऽभावं परीहारान्तरमाह--"अथाप्याम्न क्रियते" इत्यादि। आकारान्तानां धातूनामिहेड्()विधीयते। दरद्रातेरार्धधातुके "लोपः सिद्धश्च प्रत्ययविधौ" इति वचनात्? प्रागेव प्रत्ययोत्पत्तेराकारो लुप्त इतीडागमोऽस्मान्निमित्ताभावान्न भवति। क्रियतां नामाद्ग्रहणम्(), घसिग्रहणं न कत्र्तव्यमिति, अस्य द्विर्वचने कृते "घसिभसोर्हलि च" (६।४।१००) इत्युपधालोपे कृते चैकाच इत्येवं सिद्ध इडागमः? इत्याह--"घसेरपि" इत्यादि। "अनच्कत्वात्()" इति। द्विर्वचनाभावहेतुः। एकाचो द्विर्वचनमुच्यते; "एकाचः" ६।१।१ इत्यधिकारात्()। तस्मादुपधालोपे कृतेऽनच्कत्वान्न द्विर्वचनं स्यात्(), ततश्च जक्षिवानिति न सिध्यतीत्यभिप्रायः। अथ क्रियमाणेऽपि घसिग्रहणे कस्मादेव दोषो व भवति? इत्याह--"क्रियमाणे" ["नास्ति काशिकायाम्()। पदमञ्जर्यां तु "क्रियमाणे तु" इति प्रतीकमुपलभ्यते] इत्यादि। सुबोधम्()॥

बाल-मनोरमा

वस्वेकाजाद्घसाम् ८९९, ७।२।६७

वस्वे। "वसु" इत्यविभक्तिको निर्देशः। तथा च व्याख्यास्यति-- वसोरिति। नित्यत्वाद्द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह-- कृतद्विर्वचनानामेकाचामिति। कृतेऽपि द्वित्वे एकाच एव ये अवशिष्य्नते तेषामित्यर्थः। "नेड्वशि कृती"ति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्तस्य इटो नियमोऽयमित्याह-- नान्येषामिति। आदिवानिति। अद भक्षणे। द्वित्वहलादिसेषाऽभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वोऽप्यमेकाजेवेति इट्। आरिवानिति। "ऋ गतौ" "ऋच्छत्यृ()ता"मिति गुणे कृते पूर्वत्कृतेषु अयमेकाच्। दादिवानिति। डु दाञ् दाने। कृते द्वित्वे नाऽयमेकाच्। इण्निमित्तश्चाऽऽतो लोपो नाऽसति तस्मिन् भवतीति अनेकाजर्थमाद्ग्रहणम्। जक्षिवानिति। "लिट()न्यतरस्या"मित्यदेर्घस्लादेशः। द्वित्वे कृते नायमेकाजिति घसिग्रहणम्।

तत्त्व-बोधिनी

वस्वेकाजाद्घसाम् ७३९, ७।२।६७

वस्वे। "वस्वि" त्यविभक्तिको निर्देशस्तथा च व्याख्यास्यते--वसोरिति। नित्यत्वाद्द्वित्वे कृते एकाच्त्वमेव नेति कथमिट् स्यादित्यत आह-- कृतद्विर्वचनानामेकाचामिति। कृतेऽपि द्वित्वे एकाच एव ये अवशिष्यन्ते तेषामित्यर्थः। "नेड्वशि कृती"ति निषेधं बाधित्वा क्रादिनियमात्सर्वत्र प्राप्रस्येटो नियमोऽयमित्याह-- नान्येषामिति। आदिवानिति। अद भक्षणे, द्वित्वहलादिशेषाभ्यासदीर्घसवर्णदीर्घेषु कृतेषु कृतद्वित्वोऽप्ययमेकाजेवेतीड्भवति। आरिवानिति। ऋ गतौ। "ऋच्छत्यृ()ता"मिति गुणे कृते द्वित्वादिष #उपूर्ववत्कृतेष्वयमप्येकाच्। ददिवानिति। डुदाञ् दाने। कृते द्वित्वे नायमेकाच्, इण्निमित्तश्चातो लोपो नाऽसति तस्मिन्भवतीत्यनेकाजर्थमाद्ग्रहणम्। जक्षिवानिति।
"लिट()न्यतरस्या"मित्यदर्घस्लादेशः। द्वित्वे कृते नाऽयमेकाजिति घसिग्रहणम्। अत्र व्याचख्युः-- द्वित्वात्पूर्वं परत्वात् "घसिभसोर्हली"त्युपधालोपः स्यात्त()स्मश्च कृतेऽनच्कत्वाद्द्वित्वमेव न स्यात्। न चाऽस्य द्वित्वे कर्तव्ये "द्विर्वचनेऽची"त्यनेन स्थानिव्दभावो, निषेधो वा शङ्क्यः, द्वित्वनिमित्तस्याऽचोऽभावात्। ततश्च नाऽयं कृतद्विर्वचन एकाज्भवतीति घसिग्रहणं, तत्सामत्र्यात्तु परत्वादुपधालोपमिडागमो बाधते, कृते त्विडागमे "गमहने"त्युपधालोपस्तस्य

चाऽज्निमित्तत्वेन स्थानिवत्त्वाद्द्वित्वम्। यद्वा "द्विर्वचनेऽची"ति निषेधपक्षे तूपधालोपात्प्रागेव द्वित्वं, पश्चादुपधालोपः "शासिवसिघसीनां चे"ति षत्वं चर्त्वं क्षः। "अभ्यासे चर्चे" त्यभ्यासघकारस्य जश्त्वमिति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा गमहनविदविशाम् ७।२।६८

गम हन विद विश इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति। गम जग्मिवान्, जगन्वान्। मो नो धातोः ८।२।६४ इति नकारः। हन जघ्निवान्, जघन्वान्। विद विविदिवान्, विविद्वान्। विश विविशिवान्, विविश्वान्। विशिना साहचर्यादिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम्। ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति। दृशेश्चेति वक्तव्यम्। ददृशिवान्, ददृश्वान्।

न्यासः

विभाषा गमहनविदविशाम्?। , ७।२।६८

पूर्वस्मान्नियमाद्गमादीनामिङ्? न भवतीति विभाषेयमारभ्यते। "जग्मिवान्()" इति। परत्वादिट्? ततः "गमहन" ६।४।९८ इत्यादिनोपधालोपः, ततो द्विर्वचनम्()। "जघन्वानिति, जघ्निवान" इति। "अभ्यासाच्च" ७।३।५५ इति कुत्वम्()--हकारस्य घकारः। "लाभार्थस्य" इति। "विद्लृ लाभे" (धा।पा।१४३२) इत्यस्य। "न ज्ञानार्थस्य" इति। "विद ज्ञाने" (धा।पा।१०६४) इत्यस्य। "विद सत्तायाम्()" (धा।पा।११७१), "विद विचारणे" (धा।पा।१४५०)--इत्येतयोश्चात्मनेपदित्वादात्मनेपदेषु क्वसुर्न भवतीत्यनुपन्यासः। "दृशेश्च" इत्यादि। "वृशिर्? प्रेक्षणे" (धा।पा।९८८) इत्यस्माच्च परे क्वसोरिडागमो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"विभाषा" इति योगविभागः क्रियते, तेन दृशेरपि भविष्यतीति। न चैवं सति "गमहनविदविशाम्()" इत्यस्यानर्थक्यम्; पूर्वयोगस्यासर्ववषयत्वसूचनात्()। एवं ह्यतिप्रसङ्गः परिह्रतो भवति॥

तत्त्व-बोधिनी

विभाषा गमहनविदविशाम् ७४२, ७।२।६८

जग्मिवानित्यादि। इट्पक्षे "गमहने"त्युपधालोपः।

---

सूत्रम्

काशिका-वृत्तिः

सनिंससनिवांसम् ७।२।६९

सनोतेः सनतेर् वा धातोः सनिंससनिवांसम् इति निपात्यते। अग्निंचित्वाग्ने सनिंससनिवांसम्। इडागम एत्वाभ्यासलोपश्च निपात्यते। सनिङ्पूर्वात्तन्यत्र सेनिवांसम् इत्येव भवति। छन्दसि इदं निपातनं विज्ञायते। भाषायां सेनिवांसम् इति भवति।

न्यासः

सनिंससनिवांसम्?। , ७।२।६९

"सनोतेः" इति। "षणु दाने" (धा।पा।१४६४) इत्यस्य सनिंपूर्वस्य द्वितीयान्तस्योच्चारणेन नियता मानुपूर्वीमुपलक्षयति।

यत्रैषानुपूर्वी नियता तत्रैव यथा स्यात्()। इयं चानुपूर्वी छन्दस्यैव नियतेति तद्विषयमेवैतन्निपानं विज्ञायते। अत एव वृत्तिकृता छान्दसः प्रयोगो दर्शितः। "सेनिवांसम्()" इति। पूर्ववदेत्त्वाभ्याम्यासलोपौ। "वस्वेका जाद्()धसाम्()" ७।२।६७ इतीट्()॥

---

सूत्रम्

काशिका-वृत्तिः

ऋद्धनोः स्ये ७।२।७०

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति। करिष्यति। हरिष्यति। हनिस्यति। स्वरतेर् वेट्त्वातृद्धनोः स्ये इत्येतद् भवति विप्रतिषेधेन। स्वरिष्यति। तपरकरणं विस्पष्टार्थम्।

न्यासः

ऋद्धनोः स्ये। , ७।२।७०

विभाषेति निवृत्तम्()। ऋकारान्तानां हन्तेश्चानुदात्तत्वात्? "एकाचः" ७।२।१० इत्यादिना प्रतिषिद्धस्येदः स्ये विधानार्थमेतत्()। अथ स्वरतेः स्वरत्यादिसूत्रेण (७।२।४४) पक्ष इट्? अथानेन नित्यमित्याह--"स्वरतेः" स्ये विधानार्थमेतत्()। अथ स्वरतेः स्वरत्यादिसूत्रेण ७।२।४४ पक्ष इट्(), अथानेन नित्यामित्याह--"स्वरतेः" इत्यादि। स्वरतेर्धातोर्यत्? स्वरत्यादि७।२।४४सूत्रेण वेट्त्वं विहितं तस्मादनेन स्ये ऋकारान्तेभ्यो विधीयमानं नित्येट्त्वं भवति विप्रतिषधेन। अञ्चार्थः स्वरत्यादिसूत्र उक्तेऽपि विस्मरणशीलानामनुग्रहाय पुनरिहोच्यते। अथ तपरकरणं किमर्थम्()? दीर्घाणां मा भूदिति चेत्()? नैतदस्ति; उदात्तत्वाद्धि तेषां भवितव्यमेवेटा। एवं तह्र्रसति तपरकरणे यथा "स्मिपूङ्रञ्ज्वशां सनि" (७।२।७४) इत्यत्र स्वरत्यादिसाहचर्यात्? "ऋः" इत्येतस्य धातोग्र्रहणम्(), तथेहापि हन्तिना साहचार्यात्? "ऋ" इत्येतस्य धातोग्र्रहणं स्यात्()। तपरत्वे तु सति वर्णग्रहणमेतद्विज्ञायते। वर्णनिर्देशे हि तपरत्वं प्रसिद्धम्()। वर्णग्रहणे च वर्णग्रहणानि सर्वत्र तदन्तविधिं प्रयोजयन्तीति ऋकारान्तानामिट सिद्धो भवति॥

बाल-मनोरमा

ऋद्धनोः स्ये २०३, ७।२।७०

लृटि स्ये इण्निषेधे प्राप्ते-- ऋद्धनोः। ऋत् हन् अनयोद्र्वन्द्वात्पञ्चम्यर्ते षष्ठी। "स्ये"षष्ठ()र्थे सप्तमी। "आद्र्धधातुस्ये"डित्यत इडित्यनुवर्तते। तदाह--ऋत इत्यादिना। "एकाच" इतीणनिषेधस्यापवादः। भरिष्यतीति। भरिष्यते। भरतु भरताम्। अभरत् अभरत। भरेत् भरेत।

---

सूत्रम्

काशिका-वृत्तिः

अञ्जेः सिचि ७।२।७१

अञ्जेः सिचि इडागमो भवति। आञ्जीत्, आञ्जीष्टाम्, आञ्जिषुः। सिचि इति किम्? अङ्क्ता अञ्जिता। ऊदित्वाद् विभाषा भवति।

लघु-सिद्धान्त-कौमुदी

अञ्जेः सिचि ६७४, ७।२।७१

अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत्॥ तञ्चू संकोचने॥ १५॥ तनक्ति। तञ्चिता, तङ्क्ता। ओविजी भयचलनयोः॥ १६॥ विनक्ति॥ विङ्क्तः। विज इडिति ङित्त्वम्। विविजिथ। विजिता। अविनक्। अविजीत्॥ शिषॢ विशेषणे॥ १७॥ शिनष्टि। शिं शिंष्टः। शिंषन्ति। शिनक्षि। शिशेष। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। शिण्ड्ढि। शिनषाणि। अशिनट्। शिंष्यात्। शिष्यात्। अशिषत्॥ एवं पिषॢ संचूर्णने॥ १८॥ भञ्जो आमर्दने॥ १९॥ श्नान्नलोपः। भनक्ति। बभञ्जिथ, बभङ्क्थ। भङ्क्ता। भङ्ग्धि। अभाङ्क्षीत्॥ भुज पालनाभ्यवहारयोः॥ २०॥ भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्॥

न्यासः

अञ्जेः सिचि। , ७।२।७१

"अन्जू व्यक्तिम्रक्षणकान्तिगतिषु" ["व्यक्तिमर्षणकान्तिगतिषु--धा।पा।] (धा।पा।१४५८)। ऊदित्त्वादत्र स्वरत्यादिसूत्रेण ७।२।४४ विकल्पे प्राप्ते नित्यार्थं वचनम्()। "आञ्जीत्()" इति। "इतश्च" इतीकारलोपः, "अस्तिसिचोऽपृक्ते" (७।३।९६) इतीट्? "इट ईटि" ८।२।२८ इति सिचो लोपः, "आडजादीनाम्()" (६।४।७२) इत्याट्? "आटश्च" ६।१।८७ इति वृद्धिः। "आञ्जिष्टाम्()" इति। "तस्थस्थमिपाम्()" इति झेर्जुस्()॥

बाल-मनोरमा

अञ्जेः सिचि ९२६, ७।२।७१

अञ्जेः सिचि। "इडत्त्यर्ती" त्यत इडित्यनुवर्तते। ऊदित्()तवादेव सिद्धे नित्यार्थमिदम्। तदाह -- अञ्जेरित्यादिना। तञ्चू सङ्कोचने। नोपधः कृतपरसवर्णनिर्देशः। अञ्जूवद्रूपाणि यथायोग्यमूह्यानि। ओ विजीति। ओकार इत्। अनिट्सु इरितो ग्रहणादयं सेट्। रुधादयः।

॥ इति बालमनोरमायाम् रुधादयः॥

अथ समासान्तप्रकरणम्।

-----------------

तत्त्व-बोधिनी

अञ्जेः सिचि १०३७, ७।२।७१

अञ्जेः सिचि। नित्यमिट् स्यादिति। विभाषाग्रहमं नानुवर्तत इति भावः। सिचि किम्?। अङ्क्ता। पृची। ईदित्त्वान्निष्ठायां नेट्। पृक्तः "अपृक्त एका"लित्यत्र नञ्पूर्वः।

इति तत्त्वबोधिन्याम् रुधादयः।

---

सूत्रम्

काशिका-वृत्तिः

स्तुसुधूञ्भ्यः परस्मैपदेषु ७।२।७२

स्तु सु धूञित्येतेभ्यः सिचि परसमिपदे परत इडागमो भवति। अस्तावीत्। असावीत्। अधावीत्। परस्मैपदेषु इति किम्? अस्तोष्ट। असोष्ट। अधोष्ट, अधविष्ट।

लघु-सिद्धान्त-कौमुदी

स्तुसुधूञ्भ्यः परस्मैपदेषु ६४९, ७।२।७२

एभ्यस्सिच इट् स्यात्परस्मैपदेषु। असावीत्, असोष्ट॥ चिञ् चयने॥ २॥ चिनोति, चिनुते॥

न्यासः

स्तुसुधूञ्भ्यः परस्मैपदेषु। , ७।२।७२

"ष्टुञ्? स्तुतौ" (धा।पा।१०४३), "षुञ्? अभिषवे" (धा।पा।१२४७)--अनयोरनुदात्तत्वात्? प्रतिषेधे प्राप्ते, धूञस्तु स्वरत्यादिसुत्रेण ७।२।४४ विकल्पे प्राप्ते सतीदमारभ्यते॥

बाल-मनोरमा

स्तुसुधूञ्भ्यः परस्मैपदेषु २२२, ७।२।७२

लुङि असौषीदिति प्राप्ते--स्तुसुधूञ्भ्यः। "इडत्त्यर्ती"त्यत इडित्यनुवर्तते। "अञ्जेः सिची"त्यतः सिचीत्यनुवृत्तं षष्ठ()आ विपरिणम्यते। तदाह-- एभ्यः सिच इति। असावीदिति। सिचि वृद्धौ "इट ईटी"ति सिज्लोपः। पूर्वोत्तराभ्यामिति। स्तुञ्धूञ्भ्यामिभ्यर्थः। सुनोतिरिति। "षुञ् अभिषवे" इति श्नुविकरणस्येत्यर्थः। असौषीदिति। इडभावे "सिचि वृद्धि"रिति भावः। असोष्यत्। श्रु श्रवणे इति। उदन्तोऽयमनिट्।

तत्त्व-बोधिनी

स्तुसुधूञ्भ्यः परस्मैपदेषु १९४, ७।२।७२

स्तुसुधूञ्भ्यः। परस्मैपदेषु किम्?। अतोष्ट। अधोष्ट।

---

सूत्रम्

काशिका-वृत्तिः

यमरमनमाऽतां सक् च ७।२।७३

यम रम नम इत्येषाम् अङ्गानाम् आकारान्तानां च सगागमो भवति परस्मैपदे सिचि, इडागमश्च। यम् अयंसीत्, अयंसिष्टाम् अयंसिष्टां, अयंसिषुः। रम् अरंसीत्, अरंसिष्टाम्, अरंसिषुः। नम् अनंसीत्, अनंसिष्टाम् अनंसिषुः। अकारान्तानाम् अयासीत्, अयासिष्टाम्, अयासिषुः। यमादीनां हलन्तलक्षणा वृद्धिः प्राप्ता सा नेटि प्रतिषिध्यते। परस्मैपदेषु इत्येव, अयंस्त। अरंस्त। अनंस्त।

लघु-सिद्धान्त-कौमुदी

यमरमनमातां सक् च ४९७, ७।२।७३

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अग्लासीत्। अग्लास्यत्॥ ह्वृ कौटिल्ये॥ १८॥ ह्वरति॥

न्यासः

यमरमनमातं सक्? च। , ७।२।७३

"यम उपरमे" (धा।पा।९८४), "रमु क्रीडायाम्()" (धा।पा।८५३), "णम प्रह्वत्वे शब्दे च" (धा।पा।९८१)। आकारान्ताः "या प्रापणे" (धा।पा।१०४९) इत्येवमादयः। सर्वेषामनुदत्तत्वादिट्प्रतिषेधे प्राप्तेऽयमारम्भः। अत्र षष्ठीनिर्देशाद्यमादीनां सग्भवति, इट्? पुनरार्धधातुकाधिकारात्? सिच एव। "व्यरंसीत्()" इति। "व्याङ्परिभ्यो रमः" १।३।८३ इति

परस्मैपदम्()। द्विवचनबहुवचनयोर्युक्तमुदाहरणम्(); अस्ति हि तत्र सगिटोः श्रुतौ विशेषः; एकवचनस्य त्वयुक्तम्(), विशेषाभावात्()--इति यो वेशयेत्(), तं प्रति तत्रापि वृद्धिप्रतिषेधो विशेषोऽस्तीति दर्शयितुमाह--"यमादीनाम्()" इत्यादि। "आयंस्त" ["अयंस्त"--काशिका, पदमञ्जयमिपि--"आयंस्त" इत्येव प्रतीकीद्धारः] इति। "आङो यमहनः" १।३।२८ इत्यात्मनेपदम्()। "अरंस्त" इति। अत्रापि "अनुदात्त" १।३।१२ इत्यादिना॥

बाल-मनोरमा

यमरमनमातां सक् च २१४, ७।२।७३

सिचो लुगभावपक्षे आह-- यमरम। यम, रम, नम, आत्-एषां द्वन्द्वात्षष्ठीबहुवचनम्। "आ"दित्यनेन आदन्तं गृह्लते। तदाह--एषां सगिति। सकि ककार इत्। अकार उच्चारणार्थः। कित्त्वादन्तावयवः। चकारेण "इडत्यर्ती"त्यत इडिति, "स्तुसुधूञ्भ्यः" इत्यतः परस्मैपदेष्विति चानुकृष्यते। "अञ्जेः सिची"त्यतः सिचीति च।तच्च षष्ठ()आ विपरिणम्यते। तदाह--सिच इट् चेति। अधासीदिति। धातोः सगागमः। सिच इट्, ईट्। "इट ईटि" इति सिज्लोपः। अधासिष्टामिति। अपृक्तत्वाऽभावादीडभावान्न सिज्लोपः।सस्य षत्वे तकारस्य ष्टुत्वेन टः। आथासिषुरिति। अधासीः अधासिष्टम् अधासिष्ट। अधासिषम् अधासिष्व अधासिष्म। यद्यपि अधासीदित्यत्र सगिटोर्विधिव्र्यर्थ एव, तथापि अधासिष्टामित्याद्यर्थमातः सगिड्विधानम्। यमादीनं तु अयंसीदित्यादौ हलन्तलक्षणवृद्धेरभावार्थम्, अयंसिष्टामित्याद्यर्थं च।तदेतत्तत्तद्धातुषु स्पष्टीभविष्यति। अधास्यत्। ग्लै म्लै। धातुक्षय इति। बलक्षय इत्यर्थः। अनिटाविमौ। ग्लायतीति। शपि आयादेशः। शिद्विषयत्वादात्वं न। जग्लाविति। णलि आत्वे "आत णौ णल" इति औभावे वृद्धिरिति बावः। अतुसादौ द्वित्वे कृते आतो लोपः। जग्लतुः जग्लुः। भारद्वाजनियमात्थलि वेडित्याह-- जग्लिथ जग्लाथेति। इट्पक्षे आल्लोपः। जग्लथुः जग्ल। जग्लौ जग्लिव जग्लिम। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्।

तत्त्व-बोधिनी

यमरमनमातां सक् च १८६, ७।२।७३

यमरमनमाताम्। इह "आद्र्धधातुकस्येड्वलादे"रितीतडनुवर्तते। "अञ्जेः सिची"त्यतः सिज्ग्रहणं, "स्तुसुधूञ्भ्य" इत्यतः परस्मैपदग्रहणं च। तदाह--- एभ्यः सिच इडित्यादि। अयंसीत्। अयंसिष्टाम्। व्यरंसीत्। व्यरंसिष्टाम्। अनंसीत्। अनंसिष्टाम्। परस्मैपदेषु किम्?। उदायंस्त भारम्। अरंस्त। अरंसाताम्।

---

सूत्रम्

काशिका-वृत्तिः

स्मिपूङ्रञ्ज्वशां सनि ७।२।७४

स्मिङ् पूङ् अञ्जू अशू इत्येतेषां धातूनां सनि इडागमो भवति। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते। ङकारग्रहणं पूञो मा भूत्। पुपूषति इत्येव तस्य भवति। अशेः ऊदितो ग्रहणातश्नोतेर् नित्यम् इडागमो ऽस्त्येव।

न्यासः

स्मिपूङ्रञ्ज्वशां सनि। , ७।२।७४

"ण्मिङ्? ईषद्धसने" (धा।पा।९४८), "पूङ् पवने" (धा।पा।९६६)। अनुबन्धोच्चारणंपूञ्निवृत्त्यर्थम्()। "ऋ गतिप्रापणयोः" (दा।पा।९३६) इति भ्वादिः, "ऋ गतौ" (धा।पा।१०९८) इति जुहोत्यादिः--उभयोरपि ग्रहणम्(); विशेषानुपादनात्()।

ऋकारान्तानां त्वेतद्ग्रहणं न भवति; उत्तरत्र किरत्यादीनामिटो विधानात्()। "अन्जू म्रक्षणे" ["व्यक्तिमर्षणकान्तिगतिषु--धा।पा।] (धा।पा।१४५८), "अशू व्याप्तौ"["व्याप्तौ संधे च"--धा।पा।] (धा।पा।१२६४)। "अश भोजने" (धा।पा।१५२३) इत्यस्य ग्रहणं न भवति; उदात्तत्वादेवेट्? सिद्ध इति। तत्राञ्जेरशेश्चोदित्त्वाद्विकल्पे प्राप्ते, शेषाणां तूगन्तत्वात्? "सनिग्रहगुहोश्च" ७।२।१२ इति प्रतिषेधे प्राप्त इदमारभ्यते। "सिस्मियिषते" इति। "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। "पिपविषते" इति। "ओः पुयण्ज्यपरे" ७।४।८० इत्याभ्यासस्येत्त्वम्()। "अरिरिषति" इति। इटि सति गुणे कृतेऽजादेर्द्वितीयस्यैकाचो द्विर्वचनम्()। "अञ्जिजिषति इति "अशिशिषति" ["अशिशिषते"--काशिका। नास्ति--मुद्रितग्रन्थे] इति। अञ्जेर्नकारो न द्विरुच्यते; "न न्द्राः संयोगादयः" ६।१।३ इति निषेधात्()॥

बाल-मनोरमा

स्मिपूङ्?रञ्ज्वशां सनि ४५४, ७।२।७४

"इडत्यर्ती"त्यतस्तदनुवृत्तेरिति भावः। पूञस्तु पुपूषतीत्येव। "सनि ग्रहे"तीण्निषेधात्। सिस्मयिषते इति। "स्तौतिण्योरेवे"ति नियमान्न षः। पिपविषते इति। पूङ्धातोः पू इत्स्य द्वित्वे "ओः पुयण्जी"ति इत्त्वम्।अरिरिषतीति। ऋधातोः सनि इटि रूपम्। रिरशब्दस्येति। गुणे रपरत्वे "अजादेर्द्वितीयस्ये"ति रिस् इत्यस्य द्वित्वमित्यर्थः। ननु "द्विर्वचनेऽची"ति निषेधाद्गुणाऽसंभवात् रिस् इत्यस्य कथं द्वित्वमित्यत आह-- न प्रवर्तते इति। कुत इत्यत आह-- कार्यिणो निमित्तत्वाऽयोगादिति। "न हि कार्यी निमित्ततया आश्रीयते" इति निषेधादिडादेः सनो द्वित्वरूपकार्यिणो न द्वित्वनिमित्तत्वमिति भावः। ननु इडागमः सन्भक्तः, ततश्च इस् इत्यस्य द्वित्वेऽपि समुदायस्य इस इत्यस्य द्वित्वकार्यित्वाऽभावाद्द्वित्वनिमित्यत आह-- इसितीति। इस् इति सनोऽवयवो द्वित्वबागितिकृत्वा अवयवद्वारा इस इति समुदायस्य कार्यित्वमिति भावः। अञ्जिजिषतीति। अञ्जेः सनि इटि "न न्द्राः" इति नकारस्य निषेधात् जिसित्यस्य द्वित्वम्। ऊदित्तवादिड्विकल्पे प्राप्ते नित्यमिट्। अशिशिषते इति। "अशू व्याप्तौ" ऊदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट्। "अश भोजने" इति क्र्यादिस्तु नित्यं सेडेव। उच्चिछेरिति। "उच्छी विवासे"। अत्र "छे च" इति तुगित्यर्थः। श्चुत्वमिति। "तुक" इति शेषः। ननु उच्छ् इस इति स्थिते श्चुत्वस्याऽसिद्धत्वात्तकारसहितस्यद्वित्वे अभ्यासे तकारः श्रूयेतेत्यत आह-- पूर्वत्रेत्यादि। हलादि शेषः इति। च्छिस् द्वित्वे हलादिशेषादभ्यासे छकारसकारयोर्निवृत्तौ तुकश्चकार इकारश्च शिष्यते इत्यर्थः। तदाह- - उचिच्छिषतीति। उत्तरखण्डे छकारे परे इकारस्य तुकश्चुत्वेन चकारः। ननु च्छिस् इत्यस्य द्वित्वे हलादिशेषात्पूर्वखण्डे छकारसकारयोर्निवृत्तौ "निमित्ताऽपाये नैमित्तिकस्याप्यपायः" इति न्यायेन तुकोऽपि निवृत्तेस्तदादेशचकारस्य कथमभ्यासे श्रवणमित्यत आह-- निमित्तापाये इति। कथमनित्यत्वमित्यत आह-- च्छ्वोरिति। पृष्टः पृष्टवानित्यादौ प्रच्छेः छकारस्य "च्छ्वो"रिति शकारे व्रश्चादिना शस्य षत्वे तुक्ककारस्य श्रवणप्राप्तौ तन्निवृत्त्यर्थं सतुक्कग्रहणम्। तत्र चकारस्य शकारे सति निमित्ताऽभावादेव तुकोऽपि निवृत्तिसिद्धेः सतुक्कग्रहणं व्यर्थमापद्यमानम् "निमित्तापाये" इत्यस्याऽनित्यतां ज्ञापयतीत्यर्थः। प्रकृतिप्रत्यापत्तिवचनाद्वेति। "हनश्च वधः" इति हनधातोरप्प्रत्यये प्रकृतेर्वधादेशे वधशब्दः। कंसवधमाचष्टे कंसं घातयतीत्यादौ "आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्ति"रित्यप्प्रत्ययस्य लुकि प्रकृतेर्वधादेशनिवृत्तिर्विहिता। तत्र कृतो लुकि निमित्ताऽपायादेव वधाद्यादेशनिवृत्तिसिद्धेः प्रकृतिप्रत्यापत्तिवचनं व्यर्थमापद्यमानं "निमित्तापाये" इत्यस्य अनित्यतां ज्ञापयतीत्यर्थः। यद्यप्यत्र वधशब्दे अप्प्रत्ययो वधादेशश्च युगपद्विहितो, नतु प्रत्यये परे, तथापि संनियोगशिष्टत्वात् प्रत्ययस्य निमित्तत्वं पर्यवसानगत्येति बोध्यम्। वस्तुतस्तु पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके "पुष्ययोगे ज्ञी"ति वचने भाष्योक्तप्रकृतिप्रत्यापत्तिरित्यनुवृत्तिरिह ज्ञापिका। तत्र हि "चजो"रिति घिति परतः कुत्वम्। अन्यथा कृल्लुकि निमित्ताऽपायपरिभाषयैव कुत्वनिवृत्तौ किं प्रकृतिप्रत्यापत्त्यनुवृत्त्येति शब्देन्दुशेखरे विस्तरः। अथ "इङ् अध्ययने" "टु ओ ()इआ गतिवृद्ध्योः" इत्याभ्यां ण्यन्ताभ्यां सनि विशेषमाह-- णौ चेति। "णौ च संश्चङो"रिति सूत्रं द्वितीयस्य चतुर्थे पादे,

षष्ठस्य प्रथमे पादे च स्थितम्। "सन्परे चङ्परे च णौ इङो गाङ् वे"ति प्रथमस्यार्थः। "सन्परे चङ्परे च णौ ()आयतेः संप्रसारणं वे"त#इ द्वितीयस्यार्थः। प्रथमसूत्रेण इङो गाङ्, द्वितीयसूत्रेण ()आयतेः सम्प्रसारणमित्युभयमपि पाक्षिकं भवतीत्यर्थः। अधिजिगापयिषतीति। इङो णौ विवक्षिते गाङि पुकि गापीत्यस्मात्सनि रूपम्। "णौ च संश्चङो"रिति गाङ्विधौ विषयसप्तमीति प्रागेवोक्तम्। गाङभावे आह-- अध्यापिपयिषतीति। "क्रीङ्जीनां णौ"इत्यात्त्वे पुक्। शि()आआयतयिषतीति। ()इआधातोर्णौ वृद्धावायादेशे ()आआयि इत्यस्मात्सनि संप्रसारणाऽभावे रूपम्। संप्रसारणपक्षे आह-- शुशावयिषतीति। ण्यन्तात्सनि इटि ()इआ इ इस इति स्तिते "संप्रसारणं तदाश्रयं च कार्यं बलव"दिति वचनात्प्रथमं संप्रसारणं संप्रसारणं पूर्वरूपम्। "शु" इत्स्य द्वित्वे उत्तरखण्डे उकारस्य वृद्ध्यादेशौ, णिचो गुणाऽयादेशाविति भावः। ननु परत्वाद्द्वित्वात् प्रागेव उकारस्य वृद्ध्यावादेशयोः कृतयोर्हावित्यस्य द्वित्वे अभ्यासस्याऽत इत्त्वे इकार एव श्रूयेतेत्यत आह- णौ द्वित्वादिति। पुस्फारयिषतीति। स्फुरतेः ण्यन्तात्सनि इटि "चिस्फुरोर्णौ" इत्यस्मात् प्रागेव स्फुरित्यस्य द्वित्वम्, द्वित्वे कार्ये णावच आदेशस्य निषेधात्। "ओ, पुयण्जी"ति इत्त्वं तु न, फकारस्य सकारेण व्यवहिततया पवर्गपरत्वाऽभात्। चुक्षावयिषतीति। क्षुधातोर्ण्नर्य्तात्सनि इटि "क्षु"इत्यस्य द्वित्वम्। परिनिष्ठिते रूपे अवर्णपरत्वेन णावच आदेशस्य निषेधादिति भावः। ओः पुयणिति। हेतुमण्णिचप्रक्रियायामिदं व्याख्यातमपि स्मार्यते। पिपावयिषतीत्यादि। पू, भू, यू, रु, लू, जु एभ्यो ण्य्नतेभ्यः सनि इटि द्वित्वे कार्येणावच आदेशनिषेधात् उवर्णान्तानामेव द्वित्वे अभ्यासोवर्णस्य इत्त्वमिति भावः। जुः सौत्रो धातुः, "जुचङ्क्रम्ये"त्यत्रोक्तः। अथ "रुआवति शृणोती"ति सूत्रं हेतुमण्णिचप्रक्रियायां व्याख्यातं स्मारयति-- रुआवतीतीत्त्वं वेति। शुश्रूषते इति। "ज्ञाश्रुस्मृदृशां सनः"इत्यात्मनेपदम्। स्तौतिण्योरेव। "षणी"ति कृतषत्वस्य सनो ग्रहणम्। "अपदान्तस्य मूर्धन्यः" इत्यधिकृतम्, "इण्को"रिति च। तत्र कुग्रहमं निवर्तते, असंभवात्। णिग्रहणेन तदन्तग्रहणम्। "सहेः साडः सः" इत्यतः स इति षष्ठ()न्तमनुवर्तते। तदाह-- अभ्यासेण इत्यादि। षभूते इति। षकारं प्राप्ते सनीत्यर्थः। नान्यत्रेति। अभ्यासेणः परस्यचेत्सस्य षत्वं तर्हि स्तौतिण्यन्तयोरेवेत्यर्थः। न च "आदेशप्रत्यययो"रित्येव सिद्धे आरम्भसामथ्र्यादेव नियमलाभादेवकारो व्यर्थ इति शङ्क्यं, षण्येवेति नियमनिरसनार्थत्वात्। "षण्येव#ए"ति नियमे सति तुष्टावेत्यत्र षत्वाऽनापत्तेः। स्तौतेरुदाहरति-- तुष्टूषतीति। "अज्झने"ति दीर्घः। ण्यन्तस्योदाहरिष्यन्नाह-- घ्युतीति। उत्त्वमिति। वकारस्य संप्रसारणमुकार इत्यर्थः। सुष्वापयिषतीति। स्वपेर्णौ उपधावृद्धौस्वापि इत्यस्मात्सनि इटि वकारस्य संप्रसारमे सुप् इत्यस्य द्वित्व णेर्गुणे अयादेशे सनः षत्वे अभ्यासेणः परस्य षत्वमिति भावः। सिषाधयिषतीति।?त्रापि ण्यन्तत्वादभ्यासेणः परस्य षत्वमिति भावः। सिसिक्षतीति। सेक्तुमिच्छतीत्यर्थः। सिच्धातोः सन्। "हलन्ताच्चे"ति कित्त्वान्न लघूपधगुणः। "अभ्यासेणः परस्य सस्य चेत् षत्वं, तर्हि स्तौतिण्योरेवे"ति नियमान्न ष इति भावः। ननु परिषिषिक्षतीत्यत्र अभ्यासेणः परस्यसस्य कथं षत्वं, "स्तौतिण्योरेवे"ति नियमात्, "स्थादिष्वभ्यासेन चे"ति षत्वस्याप्यनेन नियमेन निवृत्तेरित्यत आह-- उपसर्गादत्विति। "स्तौतिण्योरेवे"ति नियमेन मद्येऽपवादन्यायबलात् "आदेशप्रत्यययोः" इति षत्वमेव बाध्यत इति भावः। षणि किमिति। कृतषत्वनिर्देशः किमर्थ इति प्रश्नः। तिष्ठासतीति। "धात्वादे"रिति षस्य सत्वे स्था इत्स्य द्वित्वे अभ्यासह्यस्वे इत्त्वे "आदेशप्रत्यययो"रिति ष्तवम्।कृतषत्वे सन्येवायं नियमः, अत्र तु सनः ष्तवाऽभावेन नियमाऽप्रवृत्तेः षत्वं निर्बाधमिति भावः। सुषुप्सतीति। स्वप्धातोः सनि"रुदविदमुषग्रहिस्वपी"ति कित्त्वात् "वचिस्वपी"ति संप्रसारमे कृते द्वित्वम्। कित्त्वान्न लघूपधगुणः। इहापि "स्तौतिण्योरेवे"ति नियमो न भवति, सनः षत्वाऽभावादिति भावः। ननु "षणि इणः परस्य सस्य चेत्षत्वं तर्हि स्तौतिण्योरेवे"त्येतावदेवास्तु, अभ्यासादिति किमर्थमित्यत आह-- अभ्यासादित्युक्तेर्नेहेति। प्रतीषिषतीति। इण्धातोः सनि "()जादेर्द्वितीयस्ये"ति स इत्यस्य द्वित्वे अभ्यासेत्त्वम्। इह षभूते सनि "इण् गतौ" इति धातोः परस्य सस्य षत्वं भवत्येव, अभ्यासेण परत्वे सत्येव नियमप्रवृत्तेरिति भावः। अधीषिषतीत्यप्येवम्।

तत्त्व-बोधिनी

स्मिपूङ्रञ्ज्वशां सनि ३९४, ७।२।७४

स्मिपूङ्। "पू"ङिति ङकारानुबन्धग्रहणात् पूञः पुपूषतीत्येव, " सनि ग्रहे"तीण्निषेधात्। सिस्मयिषत इति। स्मिङ् ईषद्धसने" अस्याऽनिट्त्वादिडागमस्याऽप्राप्तिः। "स्तौतिण्योरेवे"ति नियमान्न षः। अरिरिषतीति। अस्याप्यनिट्()त्वादिडागमस्याऽप्राप्तिः। रिस्()शब्दस्येति। सन इटि गुणे च कृते अरिस् इति स्थिते "अजादेद्र्वतीयस्ये"ति रिस्शब्दस्य द्वित्वमित्यर्थः। अञ्जिजिषतीत्यादि। "अञ्जू व्यक्तिम्रक्षणादौ"। "अशू व्याप्तौ" अनयोरूदित्त्वादिड्विकल्पे प्राप्तेनित्यमिट्। अश भोजन इति क्र्यादिस्तु नित्यं सेडेव। सूत्राभ्यामिति। एकं द्वितीयेऽपरं तु षष्ठे। तत्राद्येन गाङादेशोऽपरेण संप्रसारणम्। ह्वः संप्रसारणम्। इदं च णिजन्तेषु व्याख्यातमिह तु स्मारितम्। जिजावयिषतीति। जुः सौत्रो धातुः "जुचङ्क्रम्ये" त्यत्रोक्तः। शुश्रूषते इति। "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मपदम्।

---

सूत्रम्

काशिका-वृत्तिः

किरश् च पञ्चभ्यः ७।२।७५

किरादिभ्यः पञ्चभ्यः सनि इडागमो भवति। कॄ चिकरिषति। गॄ जिगरिषति। दृङ् दिदरिषते। धृङ् दिधरिषते। प्रच्छ्H पिप्रच्छिषति। पञ्चभ्यः इति किम्? सिसृक्षति। किरतिगिरत्योः इट् सनि वा ७।२।४१ इति विकल्पः प्राप्तः, वृतो वा ७।२।३५ इति च। अस्येटो दीर्घत्वं न इच्छन्ति।

न्यासः

किरश्च पञ्चभ्यः। , ७।२।७५

"कॄ? विक्षेपे" (धा।पा।१४०९), "गॄ? निगरणे" (धा।पा।१४१०), "दृङ्? अनादरे" (धा।पा।१४११), "धृङ् अनवस्थाने" ["अवस्थाने--धा।पा।](धा।पा।१४१२), "प्रच्छ ज्ञीपसायाम्()" (धा।पा।१४१३)। अत्रान्त्यस्यानुदात्तत्वादिट्()प्रतिषेधे प्राप्ते, दृङ्घृङोरुगन्तत्वात्? "सनि ग्रहगुहोश्च" ७।२।१२ इति निषेधे प्राप्ते, इतरयोस्तु वृत्तिकारप्रदर्शितविकल्पे प्राप्ते सतीदमारभ्यते। "पिपृच्छिषति" इति। "रुदविद" १।२।८ इत्यादिना सनः कित्त्वम्(), "ग्रहिज्या" ६।१।१६ इत्यादिना सम्प्रसारणम्(), "छे च" ६।१।७१। इति तुक्(), "उरत्()" ७।४।६६ इत्यभ्यासस्यात्त्वम्(), पूर्ववदित्त्वम्()। "सिसृक्षति" इति। "सृज विसर्गे" (धा।पा।११७८)। पञ्चग्रहणादस्येण्न भवति। सामान्यलक्षणोऽपीण्न भवत्येव; "एकाचः" ७।२।१० इति प्रतषेधात्()। "हलन्ताच्च" १।२।१० इति कित्त्वम्(), "चोः कुः" ८।२।३० इति कुत्वम्(), व्रश्चादिसूत्रेण ८।२।६६ षत्वम्(), "षढोः कः सि" ८।२।४१ इति कत्वम्()। "वृतो वेत्यस्य दीर्घत्वं नेच्छन्ति" इति। कथं पुनरिष्यमाणमपि न भवति? व्यवस्थिविभाषाविज्ञानात्()। "अस्य" इति। एतत्सूत्रविहितस्येटः॥

बाल-मनोरमा

दश्च २९९, ७।२।७५

दश्च। "सिपि धातो रुर्वा" इत्यनुवृत्तम्। "द इति षष्ठ()न्तेन धातुर्विशेष्यते। तदन्तविधिः। पदस्येत्यधिकृतम्। तदाह--धातोर्दान्तस्य पदस्येति। अलोऽन्त्यस्येत्यन्त्यस्य ज्ञेयम्। अवेदिति। सिपो हल्ङ्यादिलोपे दकारस्य रुत्वविकल्पः। अवित्तम् अवित्त। अवेदम् अविद्व अविद्म। विद्यात् विद्याताम् विद्युः। विद्यात् विद्यास्ताम्। विद्यासुः। अवेदीत्। अवेदिष्टाम्। अवेदिष्यत्। अस भुवीति। भवनं भूः। सत्तायामित्यर्थः। अस्तीति। सस्य चर्त्वेऽपि सकार एव भवति, नतु तकारः, अल्पप्राणतया प्रयत्नभेदात्।

बाल-मनोरमा

किरश्च पञ्चभ्यः ४३८, ७।२।७५

किरश्च पञ्चभ्यः। किर इति पञ्चमी। किरादिभ्य इति विवक्षितम्। तुदादौ "कृ? विक्षेपे", "गृ? निगरणे", "दृङ आदरणे", "धृङ् अवस्थाने", "प्रच्छ ज्ञीप्सायामिति स्थिताः। तदाह -- कृ? गृ? इत्यादिना। सन इडिति। "स्मिपूङ्रञ्ज्वशां सनी"त्यतः, "इडत्त्यर्ती"त्यतश्च तदनुवृत्तेरिति भावः। किरतिगिरत्योः "इट्सनि वे"ति विकल्पे, अन्येषां च "एकाच" इति निषेधे प्राप्तेऽयमिड्विधिः। शब्देन्दुशेखरे तु "सनि ग्रहेटति "एकाच" इति च निषेधे प्राप्ते वचनमित्युक्तम्। पिपृच्छषतीति। सनः कित्वात् "ग्रहिज्ये"ति संप्रसारणम्। चिकरिषतीति। "अचि विभाषे"ति लत्वविकल्प इति भावः। "इट् सनि वे"त्यस्यायमपवादः। चिकरिषति, जिगरिषतीत्यत्र "वृ()तो वे"ति दीर्घमाशङ्क्याह-- अत्रेटो दीर्घो नेष्ट इति। वार्तिकमिदं वृत्तौ स्थितम्। भाष्ये तु न दृश्यते। दिदरिषते दिधरिषते इति। दृङो धृङश्च सनि इटि रूपम्। "पूर्ववत्सनः" इत्यात्मनेपदम्। कथमिति। "उद्दिधीर्षुटरिति कथमित्यन्वयः। किरादित्वेन इट्प्रसङ्गादिति भावः। भौवादिकयोरिति। "धृङ् अवस्थानेट, "धृञ् धारणे" इत्यनयोर्भौवादिकयोः सनि किरादित्वाऽभावे "अज्झनगमां सनी"ति दीर्घे "ॠत इद्धातो"रिति इत्त्वे, रपरत्वे, "हलि चे"ति दीर्घे, षत्वे, उद्दिधीर्ष इत्स्मात्, "सनाशंसभिक्ष उः" इत्युप्रत्यये उद्दिधीर्षुरिति रूपमिति गृहाण- जानीहीति शङ्ककं प्रत्युत्तरम्।

तत्त्व-बोधिनी

दश्च २५९, ७।२।७५

दश्च। "सिपि धातो रुर्वे"त्यनुवर्तते, पदस्येति, "झलां जशोऽन्ते" इत्यस्मादन्त इति च। तदाह--धातोर्दस्येत्यादि। सिपि किम्?। तिपि अवेत्। दान्तस्य धातोः सिपि रुर्वेत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः। तञ्चिन्त्यम्। वेत्सीत्यत्राऽतिप्रसङ्गात्। चत्र्वस्याऽसिद्धत्वेन दान्तत्वात्।

तत्त्व-बोधिनी

किरश्च पञ्चभ्यः ३८२, ७।२।७५

किरश्च पञ्चभ्यः। "पञ्च"ग्रहणमुत्तरार्थं स्पष्टप्रतिपत्तये इहैव कृतम्। एवं च प्रच्छधातोरनन्तरं गणपाठस्थं वृत्करणं त्युक्तं शक्यम्। अत्रत्य "पञ्चब्य" इत्यनेनैव वृत्करणं यत्तदपाणिनीयमिति व्याख्येयमित्याहुः। केचित्तु-- "भूषाकर्मकिरादिसना"मिति वार्तिके किरादिज्ञानार्थं वृत्करणमावश्यकमित्याहुः॥ अत्रेट इति। "वृ()तो वे"ति प्राप्ते भाष्यकारेष्टिरियम्। भौवादिकयोरिति। तथा च "अज्झनगमा"मिति वक्ष्यमाणेन दीर्घ इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

रुदादिभ्यः सार्वधातुके ७।२।७६

रुदादिभ्यः उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति। रुद् रोदिति। स्वप् र्वपिति। श्वस् श्वसिति। अन् प्राणिति। जक्ष् जक्षिति। पञ्चभ्यः इत्येव, जागर्ति। सार्वधातुके इति किम्? स्वप्ता। वलादेः इत्येव, रुदन्ति।

न्यासः

रूदादिभ्यः सार्वधातुके। , ७।२।७६

"रुदिर्? अश्रुविमोचने" (धा।पा।१०६७), "ञि ष्वप्? शये" (धा।पा।१०६८), "()आस प्राणने" (धा।पा।१०६९), "अन च" (धा।पा।१०७०), "जक्ष अदने"["भक्षहसनयोः--धा।पा।] (धा।पा।१०७१)। रुदादयोऽदादिषु पठ()न्ते। "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्()" (शाक।प।९७) इति "रुदादिभ्यः" इत्येषा पञ्चमी "सार्वधातुके" इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयति। सप्तमीनिर्देशस्तदूत्तरार्थः। तेन सार्वधातुकस्य वलादेरिङ्? विज्ञायत इत्यत आह--"रुदादिभ्यः पञ्चभ्यः" इत्यादि। "प्राणिति" इति। "अनितेः" ८।४।१९ इति णत्वम्()। "स्वप्ता" इति। सार्वधातुकग्रहणादार्धधातुकस्येण्न भवति। सामान्यलक्षण इण्न भवत्येव; "एकाचः" ७।२।१० इति प्रतिषेधात्()। अन्येभ्यस्तु रुदादिभ्य उदात्तत्वादार्थधातुकस्यापीटा भवितव्यमेवेति स्वपेरेव प्रत्युदाहरणम्()॥

बाल-मनोरमा

रुदादिभ्यः सार्वधातुके ३०५, ७।२।७६

रुदादिभ्यः। इड्वलादेरित्यनुवृत्तिं()त मत्वाह-- वलादेरिति। रुदित इति। ङित्त्वान्न गुणः। रुदन्ति। रोदिषि रुदिथः रुदिथ। रोदिमि रुदिवः रुदिमः। रुरोद रुरुदतुः। [रुरुदुः] रुरोदिथ। [रुरुदथुः। रुरुद। रुरोद]।रुरुदिव रुरुदिम। रोदिता। रोदिष्यति। रोदितु--रुदितात् रुदिताम् रुदन्तु। रुदि हि इति स्थिते "हुझल्भ्यः" इति धित्वमाशङ्क्य आह-- हौ परत्वादिति। रुदिहीति। हेरपित्त्वेन ङित्त्वान्न लघूपधगुण इति भावः। रुदितात् रुदितम् रुदित। रोदानि रोदाव रोदाम।

तत्त्व-बोधिनी

रुदादिभ्यः सार्वधातुके २६४, ७।२।७६

वलादेः सार्वधातुकस्येति। वलादेः किम्?। रुदन्ति। सार्वधातुके किम्?। स्वप्ता। धित्वं नेति। सकृद्गताविति न्यायात्, हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थ इत्यादिप्रागुक्तसमाधानाद्वेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ईशः से ७।२।७७

ईश उत्तरस्य से इत्येतस्य सार्वधातुकस्य इडागमो भवति। ईशिषे। ईशिष्व।

न्यासः

ईशः से। , ७।२।७७

"से" इति। "सुपां सुलुक्()" ७।१।३९ इति षष्ठ()आ लकं कृत्वाऽविभक्तिकोऽयं निर्द्देशः। "ईशिषे" इति। "ईश ऐ()आर्ये" (धा।पा।१०२०), लट्? अनुदात्तेत्वादात्मनेपदम्, "थासः सेट ३।४।८०, अदादित्वाच्छपो लुक्()। "ईशिष्व" इति। लोट्(), से, "सवभ्यां वामौ" ३।४।९१ इति वादेशे कृते "एकदेशविकृतमनन्य वद्भवति" (व्या।प।१६) इतीहापि भवति॥

बाल-मनोरमा

ईशः से २७०, ७।२।७७

ईशः से।

तत्त्व-बोधिनी

ईशः से २३६, ७।२।७७

ईशः से। यथाश्रुतसूत्रन्यासे ईसो ध्वे शब्दे परे ईशिध्वे ईशिध्वमिति न सिध्येदत आह---

---

सूत्रम्

काशिका-वृत्तिः

ईडजनोर् ध्वे च ७।२।७८

ईड जन इत्येताभ्याम् उत्तरस्य ध्वे इत्येतस्य, स्ये इत्येतस्य च सर्वधातुकस्य इडागमो भवति। ईडिध्वे। ईडिध्वम्। ईडिषे। ईडिष्व। जनिध्वे। जनिध्वम्। जनिषे। जनिष्व। जनी प्रादुर्भावे इत्यस्य छान्दसत्वात् श्यनो लुकुपधालोपाभावश्च। जन जनने इत्यस्य अपि श्लुविकरणस्य ग्रहणम् अत्र इष्यते। तस्य कर्मव्यतिहारे व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम् इति च भवति। ध्वेशब्दे ईशेरपि इडागम इष्यते ईशिध्वे ईशिध्वम् इति। तदर्थं केचितीडिजनोः स्ध्वे च इति सूत्रं पठन्ति। तत्र सकारादेः सेशब्दस्य सूत्र एव उपादानाच् चशब्दो भिन्नक्रमः ईशेरनुकर्षणार्थो विज्ञायते। ईशीडिजनां सेध्वयोः इत्येकम् एव सूत्रं न पठितम्? विचित्रा हि सूत्रस्य कृतिः पणिनेः इति। ध्वे इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा। लोटि पुनरेकदेशविकृतस्य अनन्यत्वात् भवितव्यमिटा।

न्यासः

ईडजनोर्ध्वे च। , ७।२।७८

"ध्वे" इति। पूर्ववदेवाविभक्तिकोऽयं निर्द्देशः। "ईडिध्वे" इति। "ईड स्तुतौ" (धा।पा।१०१९), पूर्ववदात्मनेपदम्(), पूर्ववच्छपो लुक्()। "ईडिध्वम्()" इति। लोट्(), "सवाभ्यां वामौ" 3।४।९१ इत्यमादेशः। "जनिष्वम्()" इति। पूर्वदातमनेपदम्()। छान्दसत्वाच्छ्यनी लृक्? "बहुलं छन्दसि" ३।२।८८ इत्यनेन। "उपधालोपाभावश्च" इति। "गमहन" ६।४।९८ इत्यादिनोपधालोपः प्राप्नोति, तदभावश्छाब्दसत्वादेव, "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (पु।प।वृ।५६) इति। "जन जनन इत्यस्य" इत्यादि। ननु सानुबन्धकत्वादस्यैव["चानुबन्धकत्वात्()"--मुद्रितः पाठः।] ग्रहणेन भवितव्यम्(), न पूर्वस्य, उच्चारणार्थोऽकारः, नानुबन्धः? नैष दोषः; इह हि लध्वक्षरत्वाज्जनशब्दस्य पूर्वनिपाते प्राप्ते परनिपातो लक्षणव्यभिचाराय। तेन निरनुबन्धकपरिभाषाया (व्या।प।५३) इहानुपस्थानादुभयोरपि ग्रहणं भवति। "व्यतिजज्ञिध्वम्()" इति। "कत्र्तरि कर्मव्यतीहारे" १।३।१४ इति आत्मनेपदम्()। "तत्र" इत्यादि। तत्रैवं सूत्रपाठे "यस्मिन्? विधिस्तदावावल्ग्रहणे" (व्या।प।१२७) इति सकारग्रहणे सकारादेः सेशब्दस्य ग्रहणम्()। स च सकारादिशब्दः सार्वधातुकसंज्ञाकः सेशब्द एव सम्भवति; अन्यस्याऽसम्भवात्()। ननु च स्वशब्दोऽपि सम्भवति? नैतदेवम्(); एकदेशविकृतस्यानन्यत्वात्? (व्या।प।१६) सोऽपि सेशब्द एव, अतस्तद्ग्रहणेनापि भवितव्यम्()। "ये तु "ईडजनोध्र्ये च" इति। सूत्रं पठन्ति, ते "ईशः स" ७।२।७७ इत्यस्यैव योगस्यानुकर्वणार्थं चकारं कुर्वन्ति। तेनेशेरपि ध्वेशब्द इडागमो भवति। यदि तर्हीशेर()पि ध्व इडागम इष्यते, तदा "ईशीडजनां सेध्वयोः" इत्येकमेव सूत्रं कस्मान्न पठन्ति, एवं पृथग्विभक्तिर्नोच्चारयितव्या, चकारश्च न कत्र्तव्यो भवति? इत्याह--"विचित्रा सूत्रस्य" इत्यादि। "ध्व इति कृतटेरेत्त्वस्य" इत्यादि। कृतटेरेत्त्वस्यैतदेव प्रयोजनम्()--यत्र टेरेत्त्वं कृतं तत्रैव यथा स्यात्()। न च लङि टेरेत्तवमसिति, अतस्तत्रेटा न भवितव्यम्()। यद्येवम्(), लोट()पि न भवितव्यम्(), अमादेशे कृते टेरेत्त्वस्याभावात्()? इत्याह--"लोटि पुनः" इत्यादि॥

बाल-मनोरमा

ईडजनोर्ध्वे च २७१, ७।२।७८

ईडजनोर्ध्वे च। "इडत्यर्ती"त्यत इडिति, "रुदादिभ्यः" इत्यतः सार्वदातुक इति चानुवर्तते। से ध्वे इति लुप्तषष्ठीके इत्यभिप्रेत्य सूत्रद्वयं व्याख्याने तु ईशो ध्वेशब्दे परे न स्यात्, ईडजनोः सशब्दे परे न स्यादिति भावः। ननु तर्हि

"ईशीडजनां सेध्वयो"रित्येकमेव सूत्रं कुतोन कृतमित्यत आह-- योगविभागो वैचित्र्यार्थं इति। "से" इत्यस्य उत्तरत्रानुवृत्तिः, "ध्वे" इत्यस्य पूर्वत्रापकर्ष इति वैचित्र्यद्योतनार्थ इत्यर्थः। स्वतन्त्रेच्छस्य महर्षेर्नियन्तुमशक्यत्वादिति भावः। ईडिषे इति। इडे ईड्वहे ईड्()महे। लिटि तु ईडाचक्रे इत्यादि। ईडिता। ईडिष्यते। ईडाम्। नतु ईडिष्वेत्यत्र कथमिट्, सेशब्दाऽभावात्। तत्राह-- एकदेशेति। एकदेशविकृतत्वात्खशब्दस्य इटि ईडिध्व इति रूपमित्यर्थः। ननु तर्हि ईड्ढ्वमित्यत्र कथं नेट्, ध्वस्वरूपापेक्षया "ध्व"मित्यस्य एकदेशविकृतत्वादित्यत आह-- विकृतीति। प्रकृतिग्रहणे तदेकदेशविकृतस्य ग्रहणम्, न तु विकृतिग्रहणे तदेकदेशविकृताया अपि प्रकृतेग्र्रहणम्। "पुरुषमानये"त्युक्ते हि अन्धोऽनन्धो वा पुरु, आनीयते। "अन्धमानये" त्यत्र तु अन्ध एवानीयते न त्वनन्धः। तथा च ध्वम एत्वे कृते ध्वेशब्दः, तेन च विकृतेन ध्वमित्यस्य तत्प्रकृतिभूतस्य न ग्रहणमिति नेडिति भावः। इडै ईडावहै ईडामहै। ऐड ऐडाताम् ऐडत। ऐडाः ऐडाथाम् ऐड्ढ्वम्। ऐडि ऐड्वहि ऐड्महि। ईडीत। ईडिषीष्ट। ऐडिष्ट। ऐडिष्यत। ईशधातुरीडिवत्। ईष्टे इत्यादि। शस्य व्रश्चादिना षत्वे ष्टुत्वमिति विशेषः। आस उपवेशने। आस्ते इति। आध्यमिति। "धि चे"त सलोपः। आसै आसावहै आसामहै। आस्त, आसाताम्, आसत। आस्थाः, आसाथाम्, आध्वम्। आसि आस्वहि, आस्महि। आसीत् आसीयाताम्। आसिषीष्ट आसिषीयास्ताम्। आसिष्टेति। आसिषातामित्यादि। आसिष्यत। आङः शासु। आङः परः शासधातुरिच्छायामित्यर्थः। नमोवाकमिति। वचेर्घञि वाकः। नमश्शब्दस्य वचनं कुर्महे इत्यर्थः। धातूनामनेकार्थत्वात्। आसिवद्रूपाणि। वस आच्छादने इति। परिधाने इत्यर्थः। वध्वे इति। "धि चे"ति सलोपः। ववसे इति। वादित्वादेत्वाभ्यासलोपौ नेति भावः। वसितेति। अनिट्सु शब्विकरणस्यैव वसेग्र्रहणमिति भावः। वसिष्यते। वस्ताम्। अवस्त। वसीत। वसिषीष्ट। अवसिष्ट। अवसिष्यत। कसि सि गतीति। वसधातुवत्। इदित्त्वान्नुमिति विशेषः। तालव्यान्त इति। तालव्योष्मान्त इत्यर्थः। कष्टे इति। "व्रश्चे"ति शस्य षः, ष्टुत्वम्। कक्षे इति। शस्य षः, षस्य "षढो"रिति कः, षत्वम्। कड्वे इति। शस्य षः, तस्य जश्त्वेन डः, धस्य ष्टुत्वेन ढः। णिसि चुम्बने इति। णोपदेशोऽयम्। नुमि "नश्चे"त्यनुस्वारः। निंस्ते इत्यादि। निंस्से इति। नुमोऽनुस्वारः। थासः सेभावः। दन्त्यान्तोऽयमिति। दन्त्योष्मान्तोऽयमित्यर्थः। बभ्रामेति। "नुम्विसर्जनीयशव्र्यवायेऽपी"ति सूत्रे वृत्त्यादौ दन्त्योष्मान्तत्वोक्तेरिति भावः। णिजि शुद्धाविति। णोपदेशोऽयम्। अनिट्सु इरितएव ग्रहणादयं सेट्। निङ्क्ते इति। नुमि निन्()ज् ते इति स्थिते जस्य कुत्वेन गः, तस्य चर्त्वेन कः, नस्य अनुस्वारे परसवर्णो ङकारः। निञ्जाते। निङ्क्षे निञ्जाथे निङ्ग्ध्वे। निञ्जे निञ्ज्वहे निञ्ज्महे। लिटि संयोगात्परत्वात्कित्त्वाऽभावान्नलोपो न। निनिञ्जे निनिञ्जाते इत्यादि। निञ्जिता। निञ्जिष्यते। निङ्क्ताम्। अनिङ्क्तः। निञ्जीत। निञ्जिषीष्ट। अनिञ्जिष्ट। अनिञ्जिष्यत। शिजिपिजी अप्येवम्। पृजि इत्येके इति। ऋदुपधोऽयम्। वृजीधातुर्ऋदुपध ईदित्, अतो नुम् नेति भावः। पृची संपर्चने इति। ऋदुपधोऽयम्। पपृचे इत्यादि। ईरादयः पृच्यन्ता अनुदात्तेतो गताः। षूङ्धातुः षोपदेशः,सेट्। ङित्वात्तङ्। सूते इति। सुवाते सुवते।सूषे सुवाथे सूध्वे। सुवे सूवहे सूमहे। सुषुविषे इति। "स्वरती"तीड्विकल्पं बाधित्वा "श्र्युकः किती"ति निषेधे प्राप्ते, क्रादिनियमान्नित्यमिट्। "स्वरतिसूती"ति इड्विकल्पं मत्वा आह-- सोता सवितेति। तिङस्तासा व्यवधानात् "भूसुवो"रिति न गुणनिषेध इति भावः। सोष्यते सविष्यते। सूताम्। सुवाताम्। सुवताम्। सूष्व सूध्वम्। आटः पित्त्वाद्गुणे प्राप्ते आह--भूसुवोरिति। सुवै इति। सुवावहै सुवामहै। असूत। सुवीत। सविषीष्ट सोषीष्ट इत्यादि स्पष्टम्। शीङ् स्वप्ने। सेट्। ङित्वात्तङ्।

तत्त्व-बोधिनी

ईडजनोर्ध्वे च २३७, ७।२।७८

ईशीड्जनामिति। वैचित्र्यार्थं इति। "ध्वे" इत्यस्य पूर्वत्रापकर्षः, "से" इत्यस्योत्तरत्रानुवृत्तिरित्येवं वचित्रबोधार्थ इत्यर्थः। इह काशिकादौ जनेरुदाहरणमुक्तम्। तथा हि "जनी प्रादुर्भावे" इत्यस्माच्छयनश्चान्दसो लुक्, उपधालोपाऽभावश्च। जनिषे। जनिध्वे। जनिष्व। जनिध्वम्। "जन जनने" इति श्लुविकरणस्याप्युपधालोपे व्यतिजज्ञिषे। व्यतिजज्ञिध्वे। "कर्तरि

कर्मव्यतिहारे" इति तङ्। नमोवाकमिति। "नमस्ते रुद्र मन्यवे" इत्यादि नमोवचनम्। वचेर्घञ्। "चजो"रिति कुत्वम्। ववसे इति। वादित्वादेत्वाभ्यासलोपौ न। णिखि चुम्बने। बभ्रामेति। "नुम्विसर्जनीये"ति सूत्रे वृत्तिपदमञ्जर्यादिभिरुक्तं-- "नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते, तेन निस्से निस्त्वेत्यत्र न भवती"ति। तच्चाऽस्य सान्तत्वे युज्यते, शान्तत्वे तु "व्रश्चे"तिवत्वे "षढो"रिति कत्वे, कवर्गात्परत्वेन षत्वं दुर्वारमिति प्रत्युदाहरणमिदं न सङ्गच्छत इति भावः। णिजि शुद्धौ। अनिड्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति-- निञ्जितेति। शिजि अव्यक्ते शब्दे। क्तप्रत्यये---- शिञ्जितम्। आवश्यकणिन्यन्तान्ङीपि "शिञ्जिनी"। "भूषणानां तु शिञ्जितम्"। "मौर्वी ज्य#आ शिञ्जिनी गुणः" इति चामरः। सुषुविषे इति। "स्वरतिसूति" इति विकल्पं बाधित्वा "श्र्युकः किति" इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट्। शीङ् स्वप्ने।

---

सूत्रम्

काशिका-वृत्तिः

लिङः सलोपो ऽनन्त्यस्य ७।२।७९

सार्वधातुके इति वर्तते। सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति। कः पुनरनन्त्यो लिङः सकारः? यो यासुट्सुट्सीयुटाम्। कुर्यात्, कुर्याताम्, कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्। अनन्यस्य इति किम्? कुर्युः। कुर्याः। सार्वधातुके इत्येव, क्रियास्ताम्। क्रियासुः। कृषीष्ट, कृषीयास्ताम्, कृषीरन्।

लघु-सिद्धान्त-कौमुदी

लिङः सलोपोऽनन्त्यस्य ४२९, ७।२।७९

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः। इति प्राप्ते --।

न्यासः

लिङः सलोपोऽनन्त्यस्य। , ७।२।७९

"सार्वधातुके यो लिङ्()" इति। "सार्वधातुके" ७।२।७६ इत्येषात्र निर्धारणे सप्तमी, जातावेकवचनम्(), यथा "कारके" १।४।२३ इति। अथ वा--सुब्व्यत्ययेन बहुवचनस्य परसङ्ग एकवचनम्()। परसप्तमीत्येषा न न भवति--सार्वधातुके परतः; पूर्वस्य लिङोऽसम्भवात्()। "कुर्यात्()" इति। विध्यादिसूत्रेम ३।३।१६१ लिङ्, यासुट्(), "इतश्च" ३।४।१०० इतीकारलोपः, धातोर्गुणः, रपरत्वे "अत उत्? सार्वधातुके" ६।४।११० ३।४।१०८, "उस्यपदान्तात्()" ६।१।९३ इति पररूपत्वम्()। "कुर्वीत" इति। उकारस्य यणादेशः। "कुर्वीरन्()" इति। "झस्य रन्()" ३।४।१०५। "कुर्युः" कुर्याः" इति। अत्रानन्त्यग्रहणाज्जुसः सिपश्च न भवति। "क्रियास्ताम्(), क्रियासुः" इति। आशिषि लिङ्? ३।३।१७३, "रिङ्शयग्लिङ्क्षु" ७।४।२८ इति रिङादेशः। सार्वधातुकग्रहणादार्धधातुके न भवति। आर्धधातुकत्वं च "लिङाशिषि" ३।४।११६ इत्यार्धधातुकसंज्ञाविधानात्()। "कृषीष्ट, ह्रषीष्ट" इति। "उश्च" १।२।१२ इति कित्त्वम्(), गुणाभावः॥

बाल-मनोरमा

लिङः सलोपोऽन्त्यस्य ६०, ७।२।७९

लिङः स। सेति लुप्तषष्ठीकं पदम्। "रुदादिभ्यः सार्वधातुके" इत्यतः सार्वधातुक इत्यनुवृत्तं षष्ठ()आ विपरिणम्यते। तदाह-- सार्वधातुकलिङ इति। सकाद्वयस्यापीति। अविशेषात्सकारद्वयस्यापि युगल्लोपः प्रवर्तते, "लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति"रिति तु पर्यायेण पुनः प्रवृत्तिनिवृत्तिपरमिति भावः। यद्यपि भव यास् स् त् इत्यत्र स्कोरित्येव सिध्यति, तथापि भवेयुरित्याद्यर्थं सूत्रम्। ननु सुटो लोपे किमर्थस्सुड्विधिरित्यत आह-- सुटः श्रवणं त्वाशीर्लिङीति। भूयास्तमित्यादौ।

लिङाशिषीत्याद्र्धदातुकत्वेन तत्र सकारलोपस्याऽप्रसक्तेरिति भावः। "व्यञ्जनपरस्यैकस्याऽनेकस्य वोच्चारणे विशेषाऽभाव" इति भाष्यादाह-- स्फुटतरं त्विति। तत्रापि = आशिषि लिङ्यपि, एधिषीष्टेत्यादावात्मनेपदे स्फुटतरं सकारद्वयस्य श्रवणमित्यर्थः। तत्र यासुटोऽभावेन, सलोपाऽभावेन च सुट एव सकारस्य पृथक् स्पष्टं श्रवणसम्भवादिति भावः।

तत्त्व-बोधिनी

लिङः स लोपोऽनन्त्यस्य ४५, ७।२।७९

"रुदादिभ्यःर" इति सूत्रात्सार्वधातुक इत्यनुवर्तते, सेति लुप्तषष्ठीकमनन्त्यस्येत्यनेन विशेष्यते। तदाह-- सार्वधातुकलिङोऽनन्त्यस्येति। सकारद्वयस्यापीति। अवयवावयवोऽपि समुदायं प्रत्यवयव इत्याश्रयणात्सुटोऽपि लिङ्भक्तत्वादिति भावः। आशीर्लिङीति। भूयास्तमित्यादौ। ननु सुटि कृते "अनचि चे"ति द्वित्वस्याऽसिद्धत्वात्ततः प्रागेव "स्को"रिति यासुटः सकारो लुप्यते, झलि परे यः संयोगस्तदादित्वात्। तथा चैकसकारं रूपं तुल्यम्। सुडभावे यासुटः सकारस्य द्वित्वे कृते सुटि "स्को"रिति सलोपात्सुट एव सकारस्य द्वित्वे च द्विसकारकमपि रूपं तुल्यमेवेति सुटो विधानं व्यर्थमित्यपरितोषादाह-- स्फुटतरं त्विति। एधिषीष्टेत्यादाविति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अतो येयः ७।२।८०

अकारान्तातङ्गादुत्तरस्य या इत्येतस्य सार्वधातुकस्य इयित्ययम् आदेशो भवति, पचेत्, पचेताम्, पचेयुः इति। अत्र उस्यपदान्तात् ६।१।९३ इति पररूपं बाधितम्। अतः इति किम्? चिनुयात्। सुनुयात्। तपरकरणम् किम्? यायात्। सार्वधातुक इत्येव, चिकीर्ष्यात्। ननु च अतो लोपः ६।४।४८ इत्यनेन अत्र भवितव्यम्, पचेतित्यत्र अपि हि तर्हि अतो दीर्घो यञि ७।३।१०१ इति दीर्घत्वेन भवितव्यम्, तदनेन अवश्यं विध्यन्तरं बाधितव्यम्, स यथैव दीर्घस्य बाधकः एवम् अतो लोपस्य अपि बाधकः स्यात्? स्यादेतदेवं यदि दीर्घः सार्वधातुके विधीयते। अथ तु तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन दीर्घस्यैव बाधकः स्यान् न पुनरतो लोपस्य। येयः इत्यविभक्तिको निर्देशः। यः इति वा षष्ठीनिर्देशे यलोपस्य असिद्धत्वमनाश्रित्य आद्गुणः कृतः, सौत्रत्वान् निर्देशस्य इति। केचितत्र अतो यासियः इति सूत्रं पथन्ति। तेषां सकारान्तः स्थानी, षष्ठीसमासश्च।

लघु-सिद्धान्त-कौमुदी

अतो येयः ४३०, ७।२।८०

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय्। गुणः॥

न्यासः

अतो येयः। , ७।२।८०

सार्वधातुकं यत्? प्रकृतं तदर्थादिह विभक्तिविपरिणामेन षष्ठ()न्तं प्रतिपद्यते। अत एवाह--"अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य" इति। "पचेत" ["पठेत्()"--इति प्राचीनमुद्रितः पाठः] इति। इयादेशे कृतेऽकारेण सह "आद्गुणः" ६।१।८४, "लोपो व्योर्वलि" ६।१।६४ इति यकारलोपः। "चिनुयात्()" इति। "स्वादिभ्यः श्नुः" ३।१।७३ "यायात्()" इति। अदादित्वाच्छपो लुक्()। "चिकीष्र्यात्()" इति। सनन्तादाशिषि लिङ्()। "ननु चातो लोपेनात्र भवितव्यम्()" इति।

नार्थोऽनुवृत्तेन सार्वदातुकग्रहणेनेत्यभिप्रायः। "पचेदित्यत्रापि" इत्यादि। यद्यपि पचेदितोदमस्योदाहरणमभिमतम्(), तत्रापि "अतो दीर्गो यञि" ७।२।१०१ इति दीर्घत्वेन भवितव्यमिति, ततश्च सर्वविषयस्य विध्यन्तरेणावष्टब्धत्वादनवकाशोऽयमियादेशः। तस्मादवश्यमनेन विध्यन्तरं बाधितव्यम्()। एवञ्च यथा दीर्घस्यायं बाधकः, तथाऽतो लोपस्यापि स्यात्()। तस्मात्? सार्वधातुकग्रहणमनुवत्र्तयितन्यमिति भावः। "स्यादेतदेवम्()" इत्यादि। यदि च दीर्घत्वं "तुरुस्तुन्नम्यमः सार्वधातुके" ७।३।९५ इत्यतः सार्वधातुकग्रहणमनुवत्त्यं विधीयते, ततश्च स्यादेतदेवं यदुक्तवानसि; इयादेशस्यानवकाशत्वात्()। अथ "भूसुवोस्तिङि" ७।३।८८ इति तिङ्ग्रहणमनुवर्त्त्य विधीयते, तदा तिङ्मात्रमभावि दीर्घत्वमिति लिङ्? विधीयमान इत्यादेशे नाप्राप्ते तस्मिन्नयमारभ्यते, ततश्च "येन नाप्राप्ति" (व्या।प।४९) न्यायेन तस्यैव बाधको भवति, न त्वतो लोपस्य। इयोऽतो लोपे प्राप्ते चाप्राप्तेऽयमारभ्यते। आर्धधातुके हि प्राप्ते सार्वधातुके त्वप्राप्ते। अथ येय इति कोऽयं निर्द्देशः, अत्र हि "या" इत्येष यः स्थानी तत्र षष्ठ()आं कृतायामतो या अस्? इय इति स्थिते "आतो लोपः" ६।४।४८ इति "आतः "धातोः" ६।४।१४० इति योगविभागाद्वा आकारलोपे कृते "ससजुषोः" ८।२।६६ इति षष्ठीसकारस्य रुत्वे कृते त्सय "भोभयोअघोअपूर्वस्य योऽशि" ८।३।१७ इति यकारः। तस्यापि "लोपः शाकस्यस्य" ८।३।१९ इति लोपे च "य इयः" इति निर्द्देशेन भवितव्यमिति, न तु यत इति। न ह्यत्राद्गुणो भवितुमुत्सहते; "पूर्वत्रासिद्धम्" (८।२।१) इति यलोपस्यासिद्धत्वात्()? इत्यत आह--"येय इत्यविभक्तिकोऽयं निर्द्देशः" इति। येय इत्यस्मिन्? स्थान्यादेशसमुदयेन "या" इति। योऽयं निर्द्देशः सोऽविभक्तिकः; "सुपां सुलुक्()" ७।१।३९ इति विभक्तेर्लुप्तत्वात्()। अङ्गीकृत्य च सविभक्तिकत्वं निर्देशस्य परीहारान्तरमाह--"यः" इति। "वा" इत्यादि। कथं पुन लोपस्यासिद्धत्वं शक्यमनाश्रयितुम्()? इत्यत्राह--"सौत्रोऽयं निर्देशः" इति। इतिकरणो हेतौ। यस्मात्? "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (पु।प।वु।५६) इति "छन्दोवत्? सूत्राणि भवन्ति" (म।भा) इति, तस्मात्(), सौत्रत्वादस्य निर्द्देशस्यासिद्धत्वमनाश्रित्य "आद्गुणः" ६।१।८४ कृतः। इत्यादेशेऽकार उच्चारणार्थः॥

बाल-मनोरमा

अतो येयः ६१, ७।२।८०

तथा च भव या त् इति स्थिते--अतो येयः। "या" इति लुप्तषष्ठीकं पदम्। "अत इति" पञ्चमी। परस्येत्यध्याहार्यम्। "इय" इत्यत्राऽकार उच्चारणार्थः। "रुदादिभ्य" इत्यस्मात् "सार्वधातुक" इत्यनुवृत्तमवयवषष्ठ()आ विपरिणम्यते। तदाह-- अतः परस्येत्यादिना। भव इय् त् इति स्थितम्। गुण इति। "आद्गुण इत्येनेने"ति शेषः। भवेय् त् इति स्थितम्। यलोप इति। "लोपो व्योरित्यनेने"ति शेषः। भवेदिति।यलोपात्प्राग्घल्ङ्यादिलोपः संयोगान्तलोपश्च न शङ्क्यः, अन्तरङ्गत्वेन यलोपस्य पूर्वं प्रवृत्तेः, संयोगान्तलोपस्य त्रैपादिकत्वेनाऽसिद्धत्वाच्चेति भावः। सार्वधातुके किमिति। "रुदादिभ्य" इत्यतः सार्वधातुक इत्यनुवृत्तिलभ्यं। सार्वधातुकावयवस्येति किमर्थमित्यर्थः। भूयादित्यादावाशीर्लिङि आद्र्धधातुकेऽतः परत्वाऽभावादेव इयादेशाऽभावसिद्धेः सार्वधातुकग्रहणानुवृत्तिव्र्यर्थेत्याशयः। चिकीर्ष्यादिति। कृञ्धातोः सन्नन्तादाशीर्लिङि तिबादौ चिकीर्ष-- यादिति स्थिते "अतो लोप" इत्यकारलोपे चिकीर्ष्यादिति रूपम्। तत्र "अतो येय" इत्यत्र सार्वधातुकग्रहणाननुवृत्तौ चिकीर्ष--यादिति स्थिते "अतो येय" इति इयादेशे आद्गुणे यलोपे चिकीर्षेदिति स्यात्। सार्वधातुकग्रहणानुवृत्तो तु न दोषः, आशीर्लिङादेशस्य तिङो लिङाशिषीत्याद्र्धधातुकताया वक्ष्यमाणत्वादिति भावः। ननु आशिषि लिङि चिकीर्ष---यादिति स्थिते नित्यत्()वादतो लोप इत्यकारलोपे सति अतः परत्वाऽभावादेव "आतो येय" इत्यस्याऽप्रवृत्तेस्तत्र सार्वधातुकग्रहणानुवृत्तिव्र्यथैवेत्यत आह--मध्येऽपवादन्यायेन ह्यतो लोप एव बाध्येनेति। षष्ठस्य चतुर्थपादे अतो लोप इति सूत्रं, सप्तमस्य द्वितीयपादे अतो येय इति सूत्रं, सप्तमस्य चतुर्थपादे तु अतो दीर्घो यञीति सूत्रमिति स्थितिः। तत्र आशीर्लिङ आद्र्धधातुके चिकीर्ष-- यादित्यत्राऽल्लोपप्राप्त्या, विधिलिङि तु भव यादित्यत्र अतो दीर्घप्राप्त्या च इयादेशस्य निरवकाशत्वेन बाध्यसामान्यचिन्तामाश्रित्यापवादतया तेन अन्यतरस्मिन् बाध्ये सति,

"मद्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरा"निति न्यायेनातो लोप एव बाधमर्हति न तु अतो दीर्घ इत्यर्थः। एवं चाद्र्धधातुके भव--यादिति स्थिते इयादेशं परत्वाद्बाधित्वा "अतो दीर्घो यञी"ति यञादौ सार्वधातुके परे अतो विधीयमानो दीर्घः स्यात्। ततश्च अतः परत्वाऽभावादियादेशो न स्यादित्यव्याप्तिः स्यादित्यर्थः। न च इयादेशस्य निरवकाशत्वाद्दीर्घबाधकत्वं शङ्क्यम्। चिकीर्ष्यादित्याद्र्धधातुके दीर्घप्राप्त्ययोगे इयादेशस्य सावकाशत्वादिति भावः। भवेतामिति। तसस्तामादेशे शपि गुणे अवादेशे यासुडागमे सुटि सकारद्वयलोपे या इत्यस्य इयादेशे आद्गुणे यलोपः।

तत्त्व-बोधिनी

अतो येयः ४६, ७।२।८०

मध्येऽपवादन्यायेनेति। "रुदादिभ्य" इति सूत्रात्सार्वधातुक इत्यननुवृत्तावयं न्यायः प्रवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

आतो ङितः ७।२।८१

आकारस्य ङिदवयवस्य आकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य इयित्ययम् आदेशो भवति। पचेते पचेथे। पचेताम्। पचेथाम्। यजेते। यजेथे। यजेताम्। यजेथाम्। सार्वधातुकम् अपित् १।२।४ इत्यत्र न ङितीव ङिद्वतित्येवम् अङ्गीक्रियते, अपि तु ङित इव ङिद्वतिति। पूर्वसूत्र एव उच्चुकुटिषति इति प्रसिद्धये तथाङ्गीकरणम्। यदि गाङ्कुटादिसूत्रे ङित इव ङिद्वद् भवति इत्येवम् अङ्गीक्रियते, तदा अनुदात्तङिति आत्मनेपदम् १।३।१२ इत्यात्मनेपदं प्रप्नोति इति। आतः इति किम्? पचन्ति। यजन्ति। पचन्ते। यजन्ते। ङितः इति किम्? पचावहै। पचामहै। अतः इत्येव, चिन्वाते। सुन्वाते। तपरकरणम् किम्? मिमाते। मिमाथे।

लघु-सिद्धान्त-कौमुदी

आतो ङितः ५११, ७।२।८१

अतः परस्य ङितामाकारस्य इय् स्यात्। एधेते। एधन्ते॥

न्यासः

आतो ङितः। , ७।२।८१

"आतः", "ङितः" इति व्यधिकरणे षष्ठ्यौ। आत इयादेशापेक्षया स्थाने षष्ठीति। ङित इति आकारापेक्षयावयवषष्ठी" ङितो ह्णकारमात्रस्यासम्भवात्()। ङित इत्येषोऽवचवयोगे षष्ठो विज्ञायते--ङिदवयस्येति ङकार इद्यस्य स ङित्(), तस्यावयवो ङिदवयवः। "पचेते" पचेथे" इति। लट्(), स्वरितेत्त्वादात्मनेपदम्(), आतामथाम्(), "सार्वधातुकमपित्()" (१।२। ४) इति ङित्त्वम्()। "पचोताम्(), पचेथाम्()" इति। लोट्(), टेरेत्त्वे ३।४।७९ कृते "आमेतः" ३।४।९० इत्याम्()। ननु च ङिदवयवोऽत्राकारो न भवति, यस्माद्गाङ्कुटादिसूत्रे १।२।१ ङितीव ङिद्वदित्येवमर्वोऽङ्गौक्रियते, तथा "सार्वधातुकमपित्()" १।२।४ इत्यत्राप्ययमर्थः, तथा ह्णस्मिन्ननपि योगे तदेव ङिद्ग्रहणमनुवत्र्तते, त()स्मश्चार्थेऽङ्गीक्रियमाणे ङिति यत्कार्यं तदपि हि सार्वधातुके परतः पूर्वस्य लक्ष्यते, न तु तस्यैवापित्सार्वधातुकस्यङित्त्वम्()? इत्याह--"सार्वधातुकमपिदित्यत्र" इत्यादि। "पूर्वसूत्र एव" इति। गाङ्कुटादिसूत्रे १।२।१ यद्येवमङ्गीक्रियते--गाङ्कुटादिभ्यः परो योऽञ्णित्प्रत्ययोऽसौ ङिदवद्भवतीति, तदा कुटादिभ्यः परस्य सनो ङित्त्वं भवति, ङित्त्वे सति "अनुदात्तङितः" १।३।१२ इत्यादिनाऽऽत्मनेदपं स्यात्(), ततश्चोच्चुकुटिपतीति न सिध्येत्()।

तस्मादेतत्सिध्यर्थं ङितीय ङिद्वदित्यङ्गीक्रियते। "सार्वधातुकमपित्? (१।२।४) इत्यत्र तु तत्? सार्वधातुकं ङिद्भवतीत्येषोऽर्थोऽङ्गीक्रियते। तस्माद्युक्तमेवाकारस्य ङिदवयवत्वम्()। "पचन्ते, यजन्ते" इति। "भवत्यत्र ["भवत्यङिदवयवो"--मुद्रितपाठः] ङिदवयवोऽक्तादेशस्याकारः, तथाप्यात इति वचनात्र भवति। "पचावहै, पचामहै" इति। लोट्? वहिमहिङौ। आडुत्तमस्य पिच्च" ३।४।९२ इत्याट्(), उत्तमश्च पिद्भवतीति। अत्र पित्त्वान्ङित्त्वं न भवतीति आतो ङिददयवाकारो न भवति। "मिमाते, मिमाथे" इति। "माङ माने" ["माने शब्दे च"--धा।पा।] (धा।पा।१०८८), जुहोत्यादित्वाच्छ्रपः श्लुः। "श्लौ" ६।१।१० इति द्विर्वचनम्(), "भृञामित्()" ७।४।७६ इत्यभ्यासस्येत्त्वम्(), "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपः॥

बाल-मनोरमा

आतो ङितः ८१, ७।२।८१

आतो ङितः। ङित इत्यवयवषष्ठी। "अतो येय" इत्यस्मादत इति पञ्चम्यन्तम्, इय इति प्रथमान्तं चानुवर्तते। यकारादकार उच्चारणार्थः। तदाह--अतः परस्येति। "ङिता"मित्यनन्तरम्" "अवयवस्ये"ति शेषः। एधेते इति। एध--आतो इति स्थिते, आकारस्य इञ्, "#आद्गुणः" अन्तादेशे, पररूपे, टेरेत्वमिति भावः। अथ लटो मध्यमपुरुषैकवचने थासादेसे कृते "टित आत्मनेपदाना"मित्येत्वे प्राप्ते--

---

सूत्रम्

काशिका-वृत्तिः

आने मुक् ७।२।८२

आने परतो ऽङ्गस्यातः मुगागमो भवति। पचमानः। यजमानः। अकारमात्रभक्तो ऽयं मुकदुपदेशग्रहणेन गृह्यते इति अदुपदेशादिति लसार्वधातुकानुदत्तत्वं भवति। यद्येवम् आतो ङितः ७।२।८१ इत्ययम् अपि चिधिः प्राप्नोति? तपरनिर्देशान् न भविष्यति। मुकि सति अध्यर्धमात्रो भवति। लसार्वधातुकानुदात्तत्वम् अपि तर्हि न प्राप्नोति? न एष दोषः। उपदेशग्रहणं तत्र क्रियते। तेन उपदेशादूर्ध्वं सत्यपि कालभेदे भवितव्यम्। तथा च पचवः, पचामः इत्यत्र अपि भवति।

लघु-सिद्धान्त-कौमुदी

युवावौ द्विवचने ३१६, ७।२।८२

द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ॥

लघु-सिद्धान्त-कौमुदी

आने मुक् ८३५, ७।२।८२

अदन्ताङ्गस्य मुगागमः स्यादाने परे। पचमानं चैत्रं पश्य। लडित्यनुवर्तमाने पुनर्लड्ग्रहणात् प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् द्विजः॥

न्यासः

आने मुक्?। , ७।२।८२

"अङ्गस्यातः" इति। व्याधिकरणे षष्ठ()ओ--आङ्गस्य योऽत्? तसय मुगगमो भवतीति। तदिहाद्ग्रहणं तर्हि क्रियताम्()? न कत्र्तव्यम्(); "अतो येयः" ७।२।८० इत्यतोऽत इत्यनुवर्त्तिष्यते। ननु च पञ्चमीनिर्दिष्टं तत्र, षष्ठीनिर्दिष्टेन चेहार्थः?

नैतदस्ति; अत इत्येषा तु पञ्चमी तत्रेयादेशे चरितार्था, "आने" इत्येषा तु सप्तम्यकृतार्था। तस्मादान इत्येषा सप्तम्यत इत्यस्याः पञ्चमी तत्रेपादेशे चरतार्था, "आने इत्येषा तु सप्तम्यकृतार्था। तस्मादान इत्येषा सप्तम्यत इत्यस्याः पञ्चम्याः षष्ठीत्वं परिकल्पबयिष्यति, "तस्मिन्निति निर्द्दिष्टे पूर्वस्य" १।१।६५ इति नियमात्()। ननु चाकारोवर्णो मकारोऽपि वर्ण एव, मुगयं त्वन्तलिङ्गः, अन्तश्चावयवः, न च वर्णो "वर्णस्यावयवो ["वर्णस्यावयवी--मुद्रित पाठः] युज्यते, तेनानारब्धत्वात्(), तस्मादयुक्तमुक्तम्()--अतो मुगागमो भवतति? नैष दोषः; सर्वत्रैव हि यस्यागमो विधीयते, यश्चागमो विधीयते तत्समुदायापेक्षयाऽऽदित्वमन्तत्वं वा विधीयते। तस्मादत्तो मुगागमो भवतीत्यस्यार्थोऽयं विवक्षितः--अकारादिरयं समुदायो सकारान्तश्च भवतीति। "पचमानः" इति। लट्(), तस्य शानच्()। आने परतोऽह्गस्यातो मुगागमो भवतीत्युक्ते समानाधिकरणे एते षष्ठ()आविति मन्यमानोऽकारान्तस्य आने परतो मुगगगमो भवतीतीदं सूत्रार्थ गृहीत्वा य एवं देशयेत्()--यद्यकारान्तमङ्गमागमि, पचमान इत्यत्र "अदुपदेशाल्लसार्वधातुकमनुदात्तम्()" ६।१।१८० इत्यनुदात्तत्वं न स्यात्(); अकारस्य मुका व्यवहितत्वात्()। अकारो य उपदेश इत्येवं हि ततर व्यवस्थितम्(), न त्वकारान्तोऽयमुपदेश इति। न च शक्यते वक्तुम्()--अङ्गभक्तोऽयं नुक्(), अतो नास्ति व्यवदानमिति; अङ्गभक्तो ह्रयमङ्गमेव न व्यवदध्यात्(), अकारं तु व्यवदधात्येव। अवयवो हि समुदायस्य व्यवधायको न भवति। अवयवान्तरस्य तु व्यवधायको भवत्येवेत्यत आह--"अकारमात्रभक्तो ह्रयम्()" इत्यादि। मात्रशब्दोऽयमङ्गभक्तत्वव्यवच्छेदाय। अङ्गञ्चात्राकारविशेषणम्()। अकार एवागमी, नाङ्गम्()। तस्मात्? तदभक्तत्वात्? तदग्रहणेनैव मुग्? गृहयत इति व्यवधानाभावाल्लसार्वधातुकमनुदत्तं भवति। ननु चाकारान्तभक्तेऽपि मुकि भवितव्यमेव "लसार्वधातुकमनुदात्तमहन्विङोः" ६।१।१८० इत्यनुदात्तत्वेन, "स्वरविधौ व्यञ्जनमविद्यमानवत्()" (व्या।प।३७) इति मुकोऽविद्यमानवत्त्वाद्व्यवधानाभावात्()? एवं मन्यते--नैषा परिभाषा भाष्यकारस्य सम्मता। तथा हि--तेनेमां परिबाषां प्रत्याख्यायेयमन्या परिभाषा गृहीता--"हलःस्वरप्राप्तौ ["हल्स्वरप्राप्तौ--नी।प।वृ] व्यञ्जनमविद्यमानवत्()" (नी।पा।वृ।६८), इति। न चात्र हलः स्वरप्रापतिरस्ति, किं तर्हि? अचः। "यद्येवम्()" इत्यादि। यद्यकारभक्तोऽय मुकं तद्ग्रहहणेन गृह्य इत्येवं स्त्यव्यवधायकत्वादेव तस्य पचमान इत्यत्राकारादनन्तरस्यान इति, तस्य "आतो ङितः" ७।२।८१ इतीयदेशः प्राप्नोतीत्यत आत--"तपरकरणनिर्देशान्न भवति" इति। अकारो ह्रत्र मात्राकालस्तपरो निरदिष्टो मुकि सतयर्धमात्रो भवति। अतः कालभेदान्न भविष्यति। अधिकमद्र्ध यस्याः साऽध्यद्र्धा, अध्यद्र्धा मात्रा यस्या सोऽद्यद्र्धमात्रः। लसार्वधातुकमनुदात्तमपि तर्हि न प्राप्नोतीति तद्विधावपि तपरनिर्देशात्()। "उपदेशग्रहणम्()" इत्यादि। उपदेशग्रहण तत्र क्रियते प्रागवस्थोपलश्रणार्थम्()। तेन उपदेशावस्थायां मात्राकालस्तस्य यद्यप्युत्तरकालं मुकि कृते कालभेदोऽस्ति, तथापयुपदेशावस्थायां मात्राकालत्वाद्भवत्येवात्रानुदात्तत्वम्()। "तथा च" इत्यादि। यतस्तत्रोपदेशादूध्र्वं सत्यपि कालभेदेऽनुदात्तत्वेन भवितव्यम्(), एवञ्च कृत्वा यत्रापि "अतो दीर्घो यञि" ७।३।१०१ इति द#ईर्घत्वे कृते कालभेदोऽस्ति--पचाव इत्यादौ, तत्रापि भवति॥

बाल-मनोरमा

आने मुक् ९०३, ७।२।८२

आने मुक्। "अङ्गस्ये"त्यधिकृतम् "अतो येयः" इति पूर्वसूत्रादनुवृत्तेन षष्ठ()आ विपरिणतेन अता विशेष्यते। तदन्तविधिः। तदाह-- अदन्तस्येति। मुकि ककार इत्, उकार उच्चारणार्थः, कित्त्वादन्तावयवः। अनुवर्तमाने इति। "वर्तमाने ल"डिति पूर्वसूत्रादनुवृत्तस्य लडित्यस्य षष्ठ()आ विपरिमाणेन उक्तार्थलाभे सतीत्यर्थः। अधिकेति। सूत्राक्षराऽनारूढस्यापि अर्थस्य लाभार्थमित्यर्थः। सन् ब्राआह्मण इति। "अस भुवि" शतृप्रत्यये शपो लुक्, श्नसोरल्लोपः। माङीति। माङि प्रयुज्यमाने आक्रोशे गम्ये लटः शतृशानचाविति वक्तव्यमित्यर्थः। मा जीवन्निति। न जीवत्ययम्। अनुपकारित्वान्मृतप्राय इत्यर्थः। "मा पचमान" इत्यप्युदाहार्यम्। "लटः शतृशानचौ" इत्येव सिद्धेः किमर्थमिदमित्यत

आह-- माङि लुङितीति।

तत्त्व-बोधिनी

आने मुक् ७४४, ७।२।८२

आने मुक्। "अतो येयः" इति पूर्वसूत्रादनुवृत्तं पञ्चम्यन्तमप्यत इति पदं षष्ठ()आ विपरिणम्यते, "आने" इति सप्तमीबलात्। न चाऽत इति पञ्चमीबलादान इति सप्तम्यन्तं पं षष्ठ()आ विपरिणम्यते इति शङ्क्यं, पञ्चम्याः पूर्वसूत्रे चरितार्थत्वात्सप्तम्याश्चाऽचरितार्थत्वात्। तदेतदाह-- अङ्गस्याऽत इति। प्राचा त्वदन्तङ्गस्येति व्याख्यातं, तदयुक्तम्। "पचमान" इत्यादौ "अदुपदेशाल्लसार्वधातुकमनुदात्त"मिति शानचः स्वरस्याऽसिद्धिप्रसङ्गात्। "अदन्ताङ्गस्ये"ति पक्षे हि "अङ्गभक्तो मुक् स चाङ्गमेव न व्यवदध्यात् , तदवयवमकारं तु व्यवदध्यादेव। अकारमात्रभक्तत्वे तु तदवयवत्वान्नास्ति व्यवधानमित्यदोषः। ननु "स्वरविधौ व्यञ्जनमविद्यमानव"दिति परिभाषया मुकोऽविद्यमानवत्त्वेन व्यवधानाऽबावात्स्यादेवानुदात्तत्वमिति चेत्। अत्राहुः- हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवन्नान्यत्रेत्याकरारूढम्। न चाऽत्र हलः स्वरप्राप्तिरस्तीति प्रकृते परिभाषेयं नोपयुज्यते। अन्यथा मरुत्त्वनित्यादावपि "ह्रस्वनुड्()भ्यां मतु"विति मतुप उदात्तत्वं स्यादिति दिक्। लिडिति। यद्यपि प्रथमान्तं प्रकृतं, तथापि धातोरित्यधिकारात्पञ्चम्यन्तात्परं प्रथमान्तं षष्ठ()#आ विपरिणम्यत इति भावः। न च "वर्तमाने ल"डित्यत्रैवोक्तरीत्या विपरिणामोऽस्त्विति शङ्क्यं, प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वं नास्तीति "गुप्तिज्किद्भ्यः स"नित्यत्र भाष्यकारैः स्वीकृत्वात्। प्रथमासामानाधिकरण्येऽपीति। उपलक्षममिदम्। अप्रथमान्तेन सामानाधिकरण्याऽभावेऽपीत्यर्थः। उपलक्षणमिदम्। अप्रथमान्तेन सामानाधिकरण्याऽभावेऽपीत्यर्थः। तेन कुर्वतोऽपत्यं कौर्वतः। कुर्वतो भक्तिः कुर्वद्भक्तिः,कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिध्यति। अन्यथा कुर्वतोऽपत्यमित्यादौतद्धितसमासौ न स्याताम्।

---

सूत्रम्

काशिका-वृत्तिः

ईदासः ७।२।८३

आसः उत्तरस्य आनशब्दस्य ईकारादेशो भवति। आसीनो यजते। अत्र पञ्चम्याः परस्य षष्ठी कल्प्यते।

न्यासः

ईदासः। , ७।२।८३

"आसः" इति पञ्चम्यकृतार्था "आने" ७।२।८२ इति पूर्वत्र कृतार्थायाः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति; "तस्मादित्युत्तरस्य" १।१।६६ इति वचनात्()। तेनानस्यैवायमादेशो विधीयते, इत्याह--"आस उत्तरस्यानशब्दस्य" इति। "आसीनः" इति। "आस उपवेशने" (धा।पा।१०२१)। अनुदात्तेत्त्वादात्मनेपदम्(); "आदेः परस्य" १।१।५३ इत्याकारस्येकारः। अदादित्वाच्छयो लुक्()। तपरकरणं मुखसुखार्थम्()॥

बाल-मनोरमा

ईदासः ९०६, ७।२।८३

ईदासः। आस इति पञ्चमी। आनस्येति। "आने मु"गित्यतस्तदनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अष्टन आ विभक्तौ ७।२।८४

अष्टनो विभक्तौ परतः आकारादेशो भवति। अष्टाभिः। अष्टाभ्यः। अष्टानाम्। अष्टासु। विभक्तौ इति किम्? अष्टत्वम्। अष्टता। आ इति व्यक्तिनिर्देशो ऽयम्। आकृतिनिर्देशे तु नकारस्थने ऽनुनासिकाकारः स्यात्। विकल्पेन अयम् आकारो भवति, एतज् ज्ञापितम् अष्टनो दीर्घात् ६।१।१६६ इति दीर्घग्रहणात्, अष्टाभ्य औश् ७।१।२१ इति च कृतात्वस्य निर्देशात्। तेन अष्टभिः, अष्टभ्यः इत्यपि भवति। तदन्तविधिश्च अत्र इष्यते। प्रियाः अष्टौ येषाम् ते प्रियाष्टानः। प्रियाष्टौ।

लघु-सिद्धान्त-कौमुदी

अष्टन आ विभक्तौ ३०१, ७।२।८४

हलादौ वा स्यात्॥

न्यासः

अष्टन आ विभक्तौ। , ७।२।८४

"आ इति व्यक्तिनिर्देशोऽयम्()" इति। शुद्धाया निरनुनासिकाया आकारस्य व्यक्तेरेव निर्देश इत्यर्थः। अथाकृतिनिर्देशे को दोषः स्यात्(), यतस्तत्परीहारार्थो व्यक्तिनिर्देशोऽयमाश्रितः? इत्यत आह--"आकृतिनिर्देशे हि" इत्यादि। जातिरिहाकृतिर्विवक्षिता, न तु संस्थानम्()। जातिनिर्देशे सति शुद्धाया जातेर्निर्देष्टुमशक्यत्वात्? तदाधारभूतासु व्यक्तिषु कार्यं विज्ञायते। तत्र यदीह जातिनिर्देश आश्रीयेत, तदा सर्वास्वकारव्यक्तिषु जात्यावारत्वमुपगतासु "अलोऽन्त्यस्य" १।१।७१ इति नकारस्य विधोपमान आकार आन्तरतम्यादनुनासिकस्य स्थानेऽनुनासिक एव स्यात्()। व्यक्तिनिर्देशे त्वेष दोषो न भवति; इत्यादि न सिध्यति, न ह्यत्र विकल्पाभिधायि वचनमस्ति, नपि प्रकृतम्()? इत्यत आह--"विकल्पेन" इत्यादि। "अष्टनो दीर्घात्()" ६।१।१६६ इत्यनेनाष्टनी दीर्घादसर्वनामस्थानाविभक्तेरुदात्तत्वं विधीयते। यदि च नित्यमात्त्वं स्यात्(), दीर्घादिति विशेषणं निरर्थकं स्यात्()। अष्टाभ्य औश्()" ७।१।२१इत्यत्र च कृतात्त्वस्य निर्देशोऽनर्थकः स्यात्()। व्यवच्छेद्याभावदष्टन इत्येवं ब्राऊयात्()। तस्माद्दीर्घग्रहेन कृतात्त्वनिर्देशेन विकल्पेनेदमात्त्वं भवतीति ज्ञ#आपितम्()। तेनाष्टभिरित्याद्यपि पक्षे उपात्तः; एकवचननिर्देशात्()। अन्यथा हि बह्वर्थत्वादष्टानामित्येवं ब्राऊयात्()। तस्मात्? स्वरूपधानोयम्()। तत्राङ्गे प्रकृतेऽनेन विशेष्यमाणे तदन्तविधिर्लभ्यते। विशेषणेन हि तदन्तविधिर्भतीत्युक्तम्()। "प्रियाष्टा" [नेदमदाहरणं मूले दृश्यते] इति। "सर्वनामस्थाने" ६।४।८ इत्यादिना दीर्घः॥

बाल-मनोरमा

अष्टन आ विभक्तौ , ७।२।८४

तस्य विशेषमाह--अष्टन आ विभक्तौ। "रायो हली"त्यो हलीत्यपकृष्यते। तच्च विभक्तेर्विशेषणं, तदादिविधिः। तदाह--अष्टन आत्वमित्यादिना। ग्रहणकसूत्रेऽग्रहणेन वार्णसमाम्नायिकानामेव ग्रहणादाकारस्याऽनण्त्वाद्भाव्यमानत्वाच्च शुद्ध एव नकारस्य आकारः।

तत्त्व-बोधिनी

रायो हलि २४६, ७।२।८४

रायो हलि। "अष्टेन आ विभक्तौ"इत्यत "आ"इति, "विभक्ता"विति च वर्तते। तदाह--आकारोऽन्तादेश इत्यादि। "अर्थैरैविभवा अपी"त्यमरः। "रायश्छान्दसः"इति भाष्यम्, तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं नतु केलस्यापीति

"वन्तो यी"ति सूत्रे कैयटः। सएव केवलोपि च्छान्दस इति पक्षान्तरमप्याह। इत्यैदन्ताः। ग्लौरिति। "ग्लौर्मृगाङ्कः कलानिधि"रित्यमरः। एवं जनानवतीते "जनौः"। "ज्वरत्वरे"त्यूठ्। "एत्येदत्यूठ्"स्विति वृद्धिः। अच्यावादेशः।"जनावौ""जनाव"इत्यादि। न प्रवर्तते इति। हे ग्लौरित्यत्र संबुद्धिलोपः, "ग्लाव"इत्यत्र "ङसिङसोश्चे"ति पूर्वरूपं च न प्रवर्तते इत्यापि बोध्यम्। सावर्ण्यावज्ञापनादिति। सति तु सावर्ण्ये एचश्चतुर्विंशतेः संज्ञा भवन्तीति "वृद्धिरादै"जित्येतद्वृद्धिरादेङिति पठितुं शक्यत्वादैऔजिसूत्रं व्यर्थं सत्सावर्ण्याऽभावं ज्ञापयति। अतएव "एदैतोरोदौतोश्च न मिथः सावर्ण्यम्, ऐऔजिति सूत्रारम्भसामर्थ्या"दित्याद्यणुदित्सव्रणस्येति सूत्र एवोक्तमिति भावः। नन्वैऔजिति सूत्राऽभावे "न य्वाभ्या"मिति सूत्रे "ताभ्यामै"जिति प्रत्याहारोऽयं न सिध्येत्,"पूर्वौ तु ताभ्यामे"ङित्युक्ते तु विधीयमानस्य सवर्णाऽग्राहकतया "वैयाकरणः"सौवश्च इत्यादावेदोतावेवागमौ स्तो न त्वैदौतौ। ततश्चट वैयर्थ्याऽभावादै औजिति सूत्रारम्भः सावर्ण्याऽभावं न ज्ञापयतीति चैन्मैवं, "पूर्वौ तु ताभ्यामै औ"इति पठनेनापि इष्टसिद्धेस्तत्सूत्रवैयर्थ्यस्य तदवस्थत्वात्। स्थितस्य गतिप्रदर्शनमिदम्। वस्तुतस्तु "ए ओ"ङिति सूत्रारम्भसामर्थ्या"दित्युक्ते तु "ताभ्यामै"जित्यत्रानुपपत्तिर्नास्त्येव। न च "ए ओ "ङिति सूत्राऽभावे "आदेङ्गुणः""एङि पररूपम्,ेङः पदान्तादति"इत्यादावेङप्रत्याहारः कथं सिध्येदिति वाच्यं, सति तु सावर्ण्ये "अदेज्गुणः, "एचि पररूपम्"ेचः पदान्तादती"ति पठितुं शक्यत्वात्। अतिप्रसङ्गस्य"ए"ज्ग्रहणेऽपि तुल्यत्वात्। न चैवमप्येचां चतुर्णा" क्रमादायाद्यदेशसिद्ध्यर्थम् "ऐऔ"जिति सूत्रद्वयमप्यावश्यकमिति वाच्यं; "स्थानेऽन्तरतमः"इत्यनेनैव एचां क्रमादयादयः सिध्यन्तीति प्रागेवास्माभिरूपपादितत्वाति। यदा हि "स्वराणामूष्माणां चैवे"त्यादिदिप्रागुक्तशिक्षावचनानुरोधादेङौ विवृततपरौ, एचौ विवृततमौ" इत्यभ्युपगम्यते, तदात्वेदैतोरोदौतोश्च मिथः सावर्ण्यप्रसक्तिरेव नास्तीति "ऐऔ"जिति "एओ"जिति "ऐओ"ङिति वा सूत्रं नोक्तज्ञापकमिति ज्ञेयम्। केचित्तु विवृततरयोरेङ#ओर्विवृततमत्वाऽभावेऽपि विवृततरे विवृततमेव विवृतत्वस्य सत्त्वात्तदादाय तुल्यप्रयत्नत्वमेङोरैचोश्चास्तीति सावर्ण्यपर्सक्तावुक्तज्ञापकाश्रयणं सम्यगेवेत्याहुः। तदपरे न क्षमन्ते। तथाहि सति "इको गुणवृद्धी"इति सूत्रस्थशब्दकौस्तुभग्रन्थेन ससह विरोधप्रसङ्गात्। तत्र हि---"स्वराणामूष्मणां चे" त्यादिशिक्षानुरोधा "च्चेता""नेते"त्यादौ गुणाऽप्रवृत्तिः स्यात्, विवृतविवृततरत्वरूपवैलक्षण्यस्य, सत्त्वादिति न शङ्कयं, विधेर्निर्विषयत्वापत्तेः। "जयः करणम्""धान्यानां भवने"इत्यादिनिर्देशैरिकारादिषु गुणपर्वृत्त्यनुमानाच्चेति प्रकारान्तरे समाहितम्। तदुक्तरीत्या तुल्यप्रयत्नवत्त्वे तु "चेता""नेते"त्यादौ गुणाऽप्रवृत्तिशङ्का निरालम्बनैन स्यात्। तस्मादीषद्विवृतभेदेन स्वराणामूष्मणामिव विवृततरविवृततमभेदेन सावर्ण्याऽभावोऽत्र सुवच इति दिक्। इत्यजन्ता पुँल्लिङ्गाः।

तत्त्व-बोधिनी

अष्टन विभक्तौ ३३२, ७।२।८४

अष्टन आ विभक्तौ। सौत्रत्वादिहाऽल्लोपो न कृतः। "कनिन्युषितक्षी"त्यतः "कनिः नित्यनुवर्तमाने "सप्यशूभ्यां तुट् चे"त्यनेन सप्तन्नष्टन्शब्दौ निष्पन्नौ। "रायौ हली त्युत्तरसूत्राद्धलीत्यपकृष्यते, तच्च विभक्तेर्विशेषणमित्यभिप्रेत्य व्याचष्टे---हलादाविति। "हली"त्यस्यानपपकर्षणे त्वष्टानामिति न सिध्येत्। परत्वान्नित्यत्वाच्च नुटः प्रागात्वे कृते अनान्तत्वेन षट्संज्ञाऽभावान्नुटोऽप्रवृत्तेः।न च यथोद्देशपक्षेऽन्तकङ्गत्वात्प्रागेव कृता षट्संज्ञा एकदेशविकृतन्यायेन कृतात्वेऽपि सुलभेति वाच्यम्, अल्विधौ उक्तन्यायऽयौग्त्। किंच "प्रियाष्टानौ""प्रियष्टानः"प्रियष्टनः" "प्रियष्टने"त्याद्यपि न सिध्येत्, उक्तरीत्या तत्राप्यात्वप्रवृत्तेरिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

रायो हलि ७।२।८५

रै इत्येतस्य हलादौ विभक्तौ परतः आकारादेशो भवति। राभ्याम्। राभिः। हलि इति किम्? रायौ। रायः। विभक्तौ इति किम्? रैत्वम्। रैता। मृजेर् वृद्धिः ७।२।११४ इत्यतः प्राग् विभक्त्यधिकारः।
लघु-सिद्धान्त-कौमुदी
रायो हलि २१६, ७।२।८५

अस्याकारादेशो हलि विभक्तौ। राः। रायौ। रायः। राम्यामित्यादि॥ ग्लौः। ग्लावौ। ग्लावः। ग्लौभ्यामित्यादि॥
लघु-सिद्धान्त-कौमुदी
इत्यजन्तपुंल्लिङ्गाः। २१६, ७।२।८५

लघु-सिद्धान्त-कौमुदी
अथाजन्तस्त्रीलिङ्गाः २१६, ७।२।८५

लघु-सिद्धान्त-कौमुदी
रमा। २१६, ७।२।८५

न्यासः
रायो हलि। , ७।२।८५

बाल-मनोरमा
रायो हलि २८४, ७।२।८५

तस्य हलादिविभक्तिषु विशेषं दर्शयति--रायो हलि। "राय" इति "रै" शब्दस्य षष्ठयन्तम्। "अष्टन आ विभक्तौ" इत्यत "आ" इति विभक्ता"विति चानुवर्तते। "हलीत्यनेन विभक्ताविति विशेष्यते, ततस्तदादिविधिः। तदाह--रैशब्दस्येति। हल्ग्रहणादचि आत्वं न, किं तु आयादेश एवैत्यत आह--अचीति। राः आत्वे रुत्वविसर्गौ। अचि आयादेशमुदांहरंति--रायो राय इति। इत्यादिति। राभिः। राये राभ्याम् राभ्यः। राय राभ्याम् राभ्यः। रायः रायोः रायाम्। रायि रायोः रासु। रैशब्दः छान्दस इति भाष्यम्। क्यजन्त एव छान्दस इति पक्षान्तरम्। इत्यैदन्ताः।

अथ औदन्ताः। ग्लौशब्दश्चन्द्रवाची। "ग्लौर्मृगाङ्कः क्लानिधिः" इत्यमरः। तस्य हलादौ न कश्चिद्विकारः। अचि तु आवादेश इति मत्त्वाह--मलौर्ग्लावौ ग्लाव इति। ग्लावम्, ग्लावौ, ग्लावः। ग्लावा, ग्लौभ्याम्, ग्लौभिः। ग्लावे, ग्लौभ्याम्, ग्लौभ्यः। ग्लावः, ग्लौभ्याम्, ग्लौभ्यः। ग्लावः, ग्लावोः, ग्लावाम्। ग्लावि,ग्लावोः,ग्लौषु।

ननु "औतोऽम्शसोः" इत्यत्र ओद्ग्रहणेन सावर्ण्यादौकारस्यापि ग्रहणादम्शसोग्लौशब्दस्याऽऽत्वं कुतो न स्यादित्यत आह--औतोऽम्()शसोरितीह न प्रवर्तत इति। ऐऔजित्यादिग्रन्थस्तु संज्ञाप्रकरणे व्याख्यातः। एवं जनानवतीति जनौः। क्विप्। ज्वरत्वरेत्यूठ। एत्येधतीति वृद्धिः। जनावौ। जनाव इत्यादि। इत्यौदन्ताः॥

*****इति बालमनोरमायामजन्ताः पुंलिङ्गाः*****

*****अथ अजन्तस्त्रीलिङ्ग प्रकरणम्*****

रमेति। रमते इति रमा। "रमि क्रीडायाम्" पचाद्यचि "अजाद्यतष्टाप्"। प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि "ङ्याप्प्रातिपदिका"दिति ङ्यापोः पृथग्ग्रहणात्, लिङ्गविशिष्टपरिभाषया वा स्वादयः। "हल्ङ्या"बिति सुलोपः।

---

सूत्रम्

काशिका-वृत्तिः

युष्मदस्मदोरनादेशे ७।२।८६

युष्मदस्मदित्येतयोः अनादेशे विभक्तौ परतः आकारादेशो भवति। युष्माभिः। अस्माभिः। युष्मासु। अस्मासु। अनादेशे इति किम्? युष्मत्। अस्मत्। हलि इत्यधिकारादप्यत्र न स्यात्। उत्तरत्र तु अनादेशग्रहणेन प्रयोजनम् यो ऽचि ७।२।८९ इति, तदिहैव क्रियते।

लघु-सिद्धान्त-कौमुदी

युष्मदस्मदोरनादेशे ३२३, ७।२।८६

अनयोरात्स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः॥

न्यासः

युष्मदस्मदोरनादेशे। , ७।२।८६

"युष्मत्(), अस्मत्()" इति। "पञ्चम्या अत्()" ७।१।३१ इति पञ्चमीभ्यसोऽदादेशः, "शेषे लोपः" ७।२।९ इत्यन्तलोपे कृते "अतो गुणे" ६।१।९४ पररूपत्वम्()। यदि च हलीत्यधिकारादत्राप्यात्त्वं न स्यात्(), तत्? किमर्थमनादेशग्रहणम्()? इत्याह--"उत्तरत्र तु" इत्यादि। उत्तरत्र "योऽचि" ७।२।८९ इति सूत्रेऽनादेशस्य प्रयोजनमिति। यद्येवं तत्रैव कत्र्तव्यम्(), इह किमर्थं क्रियते? विस्पष्टार्थमित्यभिप्रायः॥

बाल-मनोरमा

युष्मदस्मदोरनादेशे , ७।२।८६

युष्मदस्मदोरनादेशे। "अष्टन आ विभक्तौ" इत्यत आ इति विभक्ताविति चानुवर्तते। "रायो हली"त्यतो हलीत्यनुवृत्तं विभक्तिविशेषणम्। तदादिविधिः। तदाह-अनयोरिति। युष्मदस्मदोरन्त्यस्येत्यर्थः। वस्तुतस्तु हलीति नानुवर्तनीयम्। "योऽचि" इत्यजादौ यत्वविधानेन परिशेषादेव तत्सिद्धेः। युवाभ्याम् आवाभ्यामिति। युष्मद् भ्याम्, अस्मद् भ्यामिति स्थिते युवावादेशयोर्दकारस्य आत्वे सवर्णदीर्घ इति भावः।?त्र हलीत्यनुवृत्तौ "योऽची"त्यज्ग्रहणं मास्तु। हलादावात्वस्य विशेषविहितत्वादेव यत्वनिवृत्तिसिद्धेरिति भाष्ये स्पष्टम्। युष्माभिः अस्माभिरिति। "युष्मदस्मदोरनादेशे" इत्यात्वे सवर्णदीर्घ इति भावः। अथ चतुर्थी। युष्मद् ए, अस्मद् ए इति स्थितौ "त्वमावेकवचने" इति प्राप्ते-।

तत्त्व-बोधिनी

युष्मदस्मदोरनादेशे ३५०, ७।२।८६

युष्मदस्मदोरमादेशे। आदेशे किम्()युष्मभ्यम्। न चाऽभ्यम्पक्षे आदेशो हलादिर्नत्यनादेशग्रहणं त्यक्तु शक्यमिति वाच्यं, "योऽचीच्यत्राऽनुवृत्त्यर्थं तस्यावश्यकत्वात्। हलादौ परे इति। "योऽची"त्यज्ग्रहणात्परिशेषसिद्धमिदम्, "रायौ हली"त्यतोऽनुवृत्त्या लब्धं वा।

---

सूत्रम्

काशिका-वृत्तिः

द्वितीयायां च ७।२।८७

द्वितीयायां च परतः युष्मदस्मदोः आकारादेशो भवति। त्वाम्। माम्। युवाम्। आवाम्। युष्मान्। अस्मान्। आदेशार्थं वचनम्।

लघु-सिद्धान्त-कौमुदी

द्वितीयायाञ्च ३२०, ७।२।८७

अनयोरात्स्यात्। त्वाम्। माम्॥

न्यासः

द्वितीयायाञ्च। , ७।२।८७

"त्वाम्(), माम्()" इति। "त्वमावेकवचने" ७।२।९७ इति त्वमादेशौ। "युवाम्(), आवाम्()" इति। "यवावौ१ द्विवचने" ७।२।९२ इति युवावादेशौ। सर्वत्र "ङे प्रथमपोरम्()" (७।१।२८) इत्यम्भावे विभक्तेः कृतोऽमि पूर्ववत्वम्? ६।१।१०३॥

बाल-मनोरमा

द्वितीयायां च , ७।२।८७

त्व अद् अम्, म अद् अम् इति स्थिते-। द्वितीयायां च। शेषपूरणेन सूत्रं व्याचष्टे--युष्मदस्मदोरिति। "युष्मदस्मदोरनादेशे" इत्यतस्तदनुवृत्तेरिति भावः। आकार इति। "अष्टन आ विभक्तौ" इत्यतस्तदनुवृत्तेरिति भावः। तथाच द्वितीयाविभक्तौ परतो युष्मदस्मदोराकारः स्यादिति फलति। "अलोऽन्त्यस्ये"ति दकारस्य भवति। त्व अ आ अम्, म अ आ अमिति स्थिते पररूपे, सवर्णदीर्घे, अमि पूर्वरूपे च परिनिष्ठितं रूपमाह--त्वां मामिति। युवाम्। आवामिति। पूर्ववत्। "द्वितीयायां चे"त्यात्वमिति विशेषः। प्रथमायाश्चे"त्यस्याऽत्राप्रवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

प्रथमायाश् च द्विवचने भाषायाम् ७।२।८८

प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोः आकारादेशो भवति। युवाम्। आवाम्। प्रथमायाः इति किम्? युवयोः। आवयोः। द्विवचने इति किम्? त्वम्। अहम्। यूयम्। वयम्। भाषायाम् इति किम्? युवं वस्त्राणि पीवसा वसाथे।

लघु-सिद्धान्त-कौमुदी

प्रथमायाश्च द्विवचने भाषायाम् ३१७, ७।२।८८

औङ्येतयोरात्वं लोके। युवाम्। आवाम्॥

न्यासः

प्रथमायाश्च द्विवचने भाषायाम्?। , ७।२।८८

इदमप्यादेशार्थं वचनम्()। "युवयोः, आवयोः" इति। ननु च "योऽचि" (७।२।८९) इति यत्वमत्र वाधकं भविष्यति? प्रथमाद्विवचनेऽपि तर्हि शेषेलोपो ७।२।९० बाधकः स्यात्()। तत्र यथा वचनसामर्थ्याच्छेषेलोपोऽनेन बाध्यते, तथा यत्वमपि बाध्येत। "पुरस्तादपवादा अनन्तरान्? विधीन्? बाधन्ते नोत्तरान्" (व्या।प।९) इति यत्वमपि बाध्येत। तस्मात्?

"प्रथमायाः" इति वक्तव्यम्()। "त्वम्? अहम्()" इति। "त्वाहौ सौ" ७।२।९४ त्वाहावादेशौ। "औ" इति वक्तव्ये प्रथमाया द्विवचनं वैचित्र्यार्थम्()॥

बाल-मनोरमा

प्रथमायाश्चाद्विवचने भाषायाम् , ७।२।८८

युव-अद्, आव-अदिति स्थिते "शेषे लोपः" इति प्राप्ते--प्रथमायाश्च द्विवचने। "अष्टन आ विभक्तौ" इत्यत आग्रहणमनुवर्तते। "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरिति च। तदाह--इहेति। भाषायां प्रथमाद्विवचने परे इत्यर्थः। बाषायामित्यस्य तु लोकिकव्यवहारे इत्यर्थः। युवाम्। आवामिति। युव अद् अम्, आव् अद् अम् इत्यत्र दकारस्य आत्वे पूर्वयोरकारयोः पररूपे ततः सवर्णदीर्घे "अमि पूर्वः" इति भावः। औङीत्येव सुवचमिति। द्वितीयाद्विचनेऽप्यात्वस्य इष्टत्वादिति भावः। युवं वस्त्राणीति। युष्मद्-औ इति स्थिते मपर्यन्तस्य युवादेशे सति शेषलोपे रूपम्। मपर्यन्तस्य किमिति। युष्मदस्मदोः समस्तयोरेव युवावादेशयोः कृतयोरपि आत्वे पूर्वरूपे च युवाम् आवामिति सिद्धेरिति प्रश्नः। साकच्कस्येति। "अव्ययसर्वनाम्ना"मिति टेः प्रागकचियुष्मकद्-औ अस्मकद्-औ इति स्थिते "ङे प्रथमयो"रित्यमि "युवावौ द्विवचने" इति समस्तयोः साकच्कयोस्तन्मधय्पतितन्यायेन युवावादेशयोः "प्रथमायाश्चे"ति दकारस्य आत्वे अमि पूर्वे च युवाम् आवामित्येव स्यात्, ककारो न श्रूयेत,?तो मपर्यन्तस्येति वचनमित्यर्थः। ननु समुदायादेशत्वेऽपि "ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकचि युवकाम् आवकामिति सिध्यत्येव, अत्र साकच्कयोर्युवावादेशाप्रसक्तेरित्यस्वरसादाह--त्वया मयेति। यदि मपर्यन्तस्येति न स्यात्तदा "त्वमावेकवचने" इति त्वमादेशौ समस्तयोः स्याताम्। ततश्च तृतीयैकवचने युष्मद् आ, अस्मद् आ इति स्थिते समस्तयोः स्थाने त्वमादेशयोः त्व-आ, म-आ इति स्थिते "योऽचि" इत्यकारस्य यत्वे त्व्या म्या इति स्यात्। अतो "मपर्यन्तस्ये"ति वचनम्। सति तस्मिन्()मपर्यन्तस्य त्वमादेशयोः कृतयोः-त्व अद् आ, म अद् आ इति स्थिते अकारयो पररूपे दकारस्य यत्वे च त्वया मया इति सिध्यतीत्यर्थः। ननु "योऽची"ति सूत्रस्थाने "अच्ये" इति सूत्रमस्तु। अजादिविभक्तौ युष्मदस्मदोरन्त्यस्य एकारः स्यादिति तदर्थः। तथाच त्वमयोः समस्तादेशत्वेऽपि तदन्त्यस्याकारस्य एत्वे अयादेशे च कृते त्वया मयेति सिध्यतीत्यस्वसादाह--युवकाभ्यामावकाभ्यामिति च न सिध्येदिति। "असति मपर्यन्तवचने" इति शेषः। "ओकारसकारे"त्यादिवचनेन भ्यामि टेः प्रागकचि तन्मध्यपतितन्यायेन साकच्कयोः स्थाने युवावादेशयोः युवाभ्यावावाभ्यामित्येव स्यात्। ककारो न श्रूयेत। युष्मकद् अस्मकद् इत्यत्र मपर्यन्तस्यैव युवावादेशयोस्तु "युष्मदस्मदोरनादेशे" इत्यात्वे युवकाभ्याम् आवकाभ्यामिति निर्बाधमित्यर्थः।

तत्त्व-बोधिनी

द्विवचने भाषायाम् ३४६, ७।२।८८

युवं वस्त्राणीति। शेषे लोपः। मपर्यन्तस्य किमिति। अधिकारसूत्रं किमर्थमिति प्रश्नः। युवकाम्। आवकामिति। ननु युवावयोः समुदायाशत्वेऽपि "युवका"मित्यादि सिध्यति। "ओकारसकारभकारादौ सुपि सर्वनामष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्यटेः प्रा"गिति युष्मदस्मद्विषये व्यवस्थायास्त्वयका मयकेत्यादिसिद्धये वक्ष्यमाणत्वात्, किमनेन "मपर्यन्तस्ये"त्यधिकारेणेत्यपरितोषादाह--त्वया मयेत्यत्रेति। ननु त्वमादेशयोरपि समुदायादेशत्वे "त्वये"त्यादि साधयितुं शक्यत एव, "योऽची"ति सूत्रं परित्यज्य "अच्ये"इति सूत्रे कृते अजादौ विभक्तौ परतोऽन्त्यस्य एकारदेशे सत्ययादेशप्रवृत्तेरिति पुनरपरितोषादाह--

---

सूत्रम्

काशिका-वृत्तिः
यो ऽचि ७।२।८९

अजादौ विभक्तौ अनादेशे युष्मदस्मदोः यकारादेशो भवति। त्वया। मया। त्वयि। मयि। युवयोः। आवयोः। अचि इति किम्? युवाभ्याम्। आवाभ्याम्। युष्मदस्मदोरनादेशे ७।२।८६ इत्यत्र यदि हलि इति अनुवर्तते, शक्यमकर्तुम् अचि इति एतत्? तत् क्रियते विस्पष्टार्थम्। अनादेशे इत्येव। त्वद् गच्छति। मद् गच्छति।
लघु-सिद्धान्त-कौमुदी
योऽचि ३२२, ७।२।८९

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः। त्वया। मया॥
न्यासः
योऽचि। , ७।२।८९

"युष्मदस्मोदारमादेश इत्यत्र" इत्यादि। "युष्मदस्मदोरनादेशे" (७।२।८६) इत्यत्र यदि पूर्वसूत्राद्? ७।२।८५ हल्ग्रहणमनुवत्र्तते, तदाऽविशेषेम विधीयमानं यत्वमुत्सर्गो ज्ञाप्यते। आत्वं तु विभक्तिविशेषे हलादौ विधीयमानमस्याप्यपवादः। एवं चाप्यन्तरेणाप्यज्ग्रहणम्(), यकारोऽजादावेवावतिष्ठते, तस्मदचीत्येच्छक्यमकर्त्तुम्()? तत्? क्रियते विस्पष्टार्थम्()। "स्वद्? गच्छति, मद्? गच्छति" इति। "एकवचनस्य च" ७।१।३२ इति ङसेरदादेशः॥
बाल-मनोरमा
योऽचि , ७।२।८९

योऽचि। "युष्मदस्मदोरनादेशे" इत्यनुवर्तते। "अष्टन आ विभक्तौ" इत्यतो "विभक्ता"विति चानुवर्तते। "अची"ति विभक्तिविशेषणं। तदादि विधिस्तदाह--अनयोरिति। युष्मदस्मदोरन्त्यस्येत्यर्थः। अचि किम्?, युवाभ्याम्। अनादेशे किम्?, त्वत्, मत्। "पञ्चम्या अत्" इत्यदादेशे सति न यत्वम्। "युष्मद् आ, अस्मद् आ इत्यत्र "त्वमावेकवचने" इति मपर्यन्तस्य त्वमादेशयोर्दकारस्य यत्वे पररूपे च रूपमिति भावः।

तत्त्व-बोधिनी
योऽचि ३४९, ७।२।८९

योऽचि। अचि किम्()। युवाभ्याम्। यदि तु "युष्मदस्मगदोरनाद्शे"इत्यत्र "रायो हली"त्यतो हलीत्यनुवर्तते तदेहा"ऽची"ति मास्तु, परिशेषादेव सिद्धेः।

---

सूत्रम्
काशिका-वृत्तिः
शेषे लोपः ७।२।९०

शेषे विभक्तौ युष्मदस्मदोर् लोपो भवति। कश्च शेषः? यत्र आकारो यकारश्च न विहितः। पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि। यान्यद्विवचनान्यत्र तेषु लोपो विधीयते। त्वम्। अहम्। यूयम्। वयम्। तुभ्यम्। मह्यम्। युष्मभ्यम्। अस्मभ्यम्। त्वत्। मत्। युष्मत्। अस्मत्। तव। मम। युष्माकम्। कस्माकम्। शेषग्रहणं विस्पष्टार्थम्। शेषे लोपे कृते स्त्रियां टाप् कस्मान् न भवति, त्वं ब्राह्मणी, अहं ब्राह्मणी? स्न्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य, अलिङ्गे वा

युस्मदस्मदी इति। केचित् तु शेषे लोपं टिलोपम् इच्छन्ति। कथम्? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य विधीयन्ते, तेन मपर्यन्ताद् यो ऽन्यः स शेषः इति। तत्र अयं लोपः इति टिलोपो भवति।

लघु-सिद्धान्त-कौमुदी

शेषे लोपः ३१५, ७।२।९०

एतयोष्टिलोपः। त्वम्। अहम्॥

न्यासः

शेषे लोपः। , ७।२।९०

"यान्यद्विवचनानि" इति। एकवचनबहुवचनानीत्यर्थः। "अत्र" इति। पञ्चम्यादिषु विभक्तिषु। "तेषु लोपो विधीयते" इति। तेषामेव शेषत्वात्()। "तुभ्यम्, मह्नम्()" इति। "तुभ्यमह्यौ ङयि" ७।२।९५ इति तुभ्यमह्यावादेशौ भवतः। "युष्मभ्यम्()" अस्मभ्यम्()" इति। "भ्यसो भ्यम्()" ७।१।३० इति भ्यमादेशः। "तव, मम" इति। "तवममौ ङसि" ७।२।९६ इति तवममादेशौ। "युष्माकम्(), अस्माकम्()" इति। "साम आकम्()" ७।१।३३ इति। अथ शेषग्रहणं किमर्थम्(), न "लोपः" इत्येवोच्येत, एवमुच्यमाने सत्यविशेषेण लोपः स्यादित्येतच्च नाशङ्कनीयम्(), अविशेषेण हि लोपो विधीयमान उत्सर्गो भविष्यति, तस्यानादेशे विभक्तिविशेषे यकाराकारापवादौ, एवञ्चान्तरेणापि शेषग्रहणं शेष एव लोपोऽवस्थाप्यते? इत्यत आह--"शेषग्रहणं विस्पष्टार्थम्()" इति। "शेषेलोपे कृते स्त्रियां टाप्? कस्मान्न भवति" इति। अन्त्यलोपे कृते सत्यदन्तत्वात्? "अजाद्यतष्टाप्()" ४।१।४ इति टापा भवितव्यमिति भावः। "सन्निपात" इत्यादि। विभक्त्यानन्तर्ये हि सति युष्मदस्मदी अकारान्ते समुपजाते। तत्र यदि टापमुत्पादयेयाताम्(), तदा विभक्तेरानन्तर्यं ताभ्यां विहतं स्यात्()। न च यो यत्सन्निपातलक्षणः स तद्विघातस्य निमित्तं भवतीति न भवति टाप्()। यद्येवम्(), त्यदादिभ्योऽपि न स्यात्()? नैष दोषः; यदयम्? "न यासयोः" ७।३।४५ इति निर्देशं करोति, तज्ज्ञापयति--भवति त्यदादिभ्यष्टाविति। अयञ्च स्त्रीलिङ्गत्वं युष्मदस्मदोरभ्युपेत्य परीहार उक्तः। इदानीं स्त्रीलिङ्गाभावादेव टाब्न भवतीति दर्शयितुमाह--"अलिङ्गे" इत्यादि। "केचित्तु शेषेलोपं टिलोपमिच्छन्ति" इति। त्वं ब्राआह्नणी, अहं ब्राआह्नणी--इत्यत्र टाब्मा भूदित्येवमर्थम्()। युष्मभ्यम्(), अस्मभ्यमित्यत्र भ्यमादेशे कृते "बहुवचने झल्येत्()" ७।३।१०३ इत्येत्त्वं मा भूदित्येवमर्थञ्च। "कथम्()" इति। एवं मन्यते--यत्र विभक्तावाकारो यकारश्च न विहितः स शेषः, तत्र शेषेलोप उचयमानष्टिलोपो न लभ्यते। "अलोऽन्त्यस्य" १।१।७१ इति परिभाषयाऽन्त्यस्यैव प्राप्नोतीति वक्ष्यमाणादेशापेक्षया शेष इत्यस्यार्थं "ते च" इत्यादिना स्पष्टीकरोति। "मपर्यन्ताद्योऽन्यः स शेषः" इति। स पुनष्टिरेव। अत्रायं शेषोलोपष्टिलोपो भवतीति लोपं प्रति शेषस्याधिकरणविवक्षायां सप्तमी। किमर्थं पुनर्लोप इत्युच्यते, यावता त्यदाद्यत्वेनैव सिद्धम्()? न सिध्यति; अत्यदादित्वात्()। त्यदादित्वं हि द्वपर्यन्तास्त्यदादयः" इति। तत्र चैतदेव शेषेलोपवचनं ज्ञापकम्()। तेन भवच्छब्दस्य त्यदाद्यत्वं न भवति--भवानिति॥

बाल-मनोरमा

शेषे लोपः , ७।२।९०

शेषे लोपः। "अष्टन आ विभक्तौ" इत्यत आविभक्तौ" इत्यनुवर्तते। विभक्तावित्यनुवृत्तं "शेषे" इत्यनेनान्वेति। "युष्मदस्मदोरनादेशे", "द्वितीयायां च", "प्रतमायाश्च द्विवचने भाषायां", "योऽची"त्यात्वयत्वयोः प्रागुक्तत्वात्तद्विषयातिरिक्तविभक्तिरिह "शेष" शब्दार्थः। "युष्मदस्मदो"रिति चानुवृत्तन्तदाह-आत्वयत्वेति। अन्त्यस्येति। अलोऽन्त्यपरिभाषालभ्यम्। शेषग्रहणमिह विभक्तिविशेषणं स्पष्टार्थमेव, विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसंभवादिति प्रकृतसूत्रे, "युष्मदस्मद्भ्यां ङ्सोऽश्" इति सूत्रे च भाष्यकैयटयोः स्पष्टम्। अतो गुणे इति। पूर्वयोरकारयोः पररूपमिति बावः। त्व अम्, अह अम् इत्यत्र पूर्वसवर्णदीर्घमाशङ्कमाह-अमि पूर्व इति। अत्र

शङ्कतेनन्विति। "ननु च स्याद्विरोधोक्तौ" इत्यमरः। शङ्कायामिति यावत्। अन्तरङ्गत्वादिति। "अजाद्यतः" इति टापः परनिमित्तानपेक्षतया पररूपादन्तरङ्गत्वं बोध्यम्। अर्धाङ्गीकारेण परिहरति--सत्यमिति। पररूपादन्तरङ्गष्टावित्यङ्गीक्रियते। इह प्रवृत्तिस्तु तस्य नाङ्गीक्रियते इत्यर्थः। अलिङ्गे युष्मदस्मदी इति। "साम आक"मिति सूत्रे भाष्ये पठितमेतत्। "युष्मदस्मदी"इत#इ शब्दस्वरूपपरत्वान्नपुंसके। शब्दस्वरूपपरत्वादेव च "त्यदादीनि सर्वैर्नित्य"मित्येकशेषोऽपि न, अत एव भाष्यप्रयोगात्। तेनेति। अलिङ्गत्वेनेत्यर्थः। ननु "ङे प्रथमयोः" इति सूत्रे भाष्ये पुंसि युष्मानस्मानित्यत्र "तस्माच्छसो न पुंसी"ति नत्वस्य सिद्धत्वात् "शसो ने"ति नत्वविधिवैयथ्र्यमाशङ्क्य स्त्रियां नपुंसके च युष्मान्ब्राआह्मणीः पश्य, अस्मान्ब्राआह्मणीः पश्य, युष्मान्ब्राआह्मणकुलानि पश्य, असमान्ब्राआह्मणकुलानि पश्ये"त्यत्र नत्वार्थं "शसो ने"ति नत्वाविधानमित्यादि स्थितम्। किंच स्वमोर्नपुंसकादित्यधिकारे "नेतराच्छन्दसी"ति सूत्रे "नपुंसकादेशेब्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेने"ति वार्तिकतद्भाष्ययोः शिशीलुङ्नुम्भिर्नपुंसकविहितैस्त्वाहादियुष्मदस्मदादेशानां विप्रतिषेध उपन्यस्तः। अतो युष्मदस्मदोरलिङ्गत्वमनुपपन्नम्। "साम आम"मिति सूत्रे "अलिङ्गे युष्मदस्मदी" इति भाष्यं तु पुंस्त्रीनपुंसकलिङ्गपदान्तरसमभिव्याहारं विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यां न प्रतीयते इत्येवंपरमिति तत्रैव भाष्ये स्पष्टम्। एवंच युष्मदस्मदोः स्त्रीलिङ्गसत्त्वाट्टाब्दुर्वार इत्यस्वरसादाह-यद्वेति। अधिकरणत्वविवक्षयेति। "विवक्षातः कारकाणि भवती"ति वक्ष्यमाणत्वादिति भावः। यदि हि शेषे इति विभक्ति विशेषणं स्यात्तर्हि व्यर्थमेव स्यात्, आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसंभवात्। अतः शेषस्य स्थाने इत्यर्थ आस्थेयः। ततः किमित्यत आह-तेनेति। शेषस्य स्थाने इत्यर्थाश्रयणेनेत्यर्थः। मपर्यन्तादिति। मपर्यन्तस्येत्यपकृष्टं पञ्चम्यन्ततया विपरिणम्यत इति भावः। एतच्च "त्यदादीनामः" इति सूत्रे "टिलोपष्टाबभावार्थः कर्तव्य इति स स्मृतः। अथवा शेषसप्तम्या शेषे लोपो विधीयते।" इति वार्तिकतद्भाष्ययोः स्पष्टम्। नच मपर्यन्तस्य त्व इति अह इति चादेशे कृते शिष्टस्य अदित्यस्य मपर्यन्तात्परत्वं नास्तीति वाच्यं, त्वाहादेशयोः कृतयोरदो लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाऽभावेऽपि त्वाहादेशप्रवृत्तेः पूर्वकालिकमपर्यन्ताच्छेषस्य अद्शब्दस्य लोपस्तथापि त्व अद् अम्, अह अद् अम् इति स्थिते पररूपापेक्षया परत्वाददो लोपे अदन्तत्वाट्टाब्दुर्वार इत्यत आह-स चेति। शेषे लोप इत्यर्थः। अन्तरङ्गे इति। "अतो गुणे" इत्यस्य बहिर्भूतविभक्त्यपेक्षलोपापेक्षयाऽन्तरङ्गत्वं बोध्यम्। अदन्तत्वाभावादिति। त्व अद् , अह अद् इत्यत्र पररूपे सति त्वद् अहद् इति स्थिते अदो लोपे त्व् अह् इत्यनयोरदन्तत्वाऽभावान्न टाबित्यर्थः। परमत्वमिति। "ङे प्रथमयोः" इत्यादीनामाङ्गत्वात्तदन्तविधिरिति भावः। अतित्वमिति। "ङे प्रथमयो"रित्यादीनां गौणेऽप्रवृत्तौ मानाऽभावादिति भावः।

तत्त्व-बोधिनी

शोषे लोपः ३४४, ७।२।९०

आत्वयत्वनिमित्तेतरेति। अन्त्यस्येति। अलोन्त्यपरिभाषयेति भावः। अतो गुण इति। नत्यास्तु "त्वाहौ सा"वित्यत्र त्वाहादेशयोरन्त्याकार उच्चारणार्थ एवाऽस्तु किमनेन पररूपकरणप्रयासेनेत्याहुः। त्वम्। अहमिति। ननु युष्मानतिक्रान्तः "अतित्व"मित्यादौ "त्वाहौ सौ"इत्यस्यावकाशोऽस्ति, त्वामतिक्रान्तेनाऽतित्वयेत्यादौ "त्वमावेकवचने"इत्स्यावकाशः, त्वमबमित्यत्र तूभयोः प्रसङ्गे "त्वमावेकवचने"इत्यनेन परत्वाद्भाव्यम्। नैष दोषः,--"त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः"इति वक्ष्यमाणत्वात्। अधिकरणत्वविवक्षयेति। यदि तु "शेषे"इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेव तत्, आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसम्भवत्। न चैवमन्त्यलोप इति पक्षस्य निरालम्बनतापत्त्या युष्मदस्मदोरन्त्यस्य लोपः स्यादिति ग्रन्थोऽयुक्त इति बाच्यम्, "साम आक"मिति ससुट्कनिर्द्देशेन तस्यापि पक्षस्य ज्ञापितत्वादिति भावः। अतो गुणे कृते प्रवर्तते ति। "वार्णादाङ्गं

बलीयः"इति तु समानाश्रय एव भवति, न तु व्याश्रये। इह तु शेषेलोपस्य विभक्तिर्निमित्तं, पररूपस्य त्वकार इति व्याश्रयत्वमिति भावः। समानाश्रये उदाहरणं तु "कारक"इत्यादि बोध्यम्। तत्र हि यण्वृद्ध्योः प्राप्तयोर्वृद्धिरेव भवति। आङ्गत्वात्तदन्तविधिरित्याह----परमत्वमित्यादि।

---

सूत्रम्

काशिका-वृत्तिः

मपर्यन्तस्य ७।२।९१

मपर्यन्तस्य इत्ययम् अधिकारः। यदित ऊर्ध्वम् अनुक्रमिष्यामो मपर्यन्तस्य इत्येवं तद् वेदितव्यम्।

न्यासः

मपर्यन्तस्य। , ७।२।९१

"युवकाम्(), आवकाम्()" इति। "अव्ययसर्वनाम्नामकच्प्राक्टेः" ५।३।७१ इत्यकच। अत्र यदि मपर्यन्तस्येति नोच्यते, ततोऽवधेरनुपादानात्? साकच्कस्यापि स्यादित्यत आह--"साकच्कस्य सर्वस्य मा भूत्()" इति। असति मपर्यन्तग्रहणे, अवधेरनुपादनादनेकाल्वाच्चादेशस्य सर्वस्यैव स्यात्()। कः पुनः सर्वादेशे दोषः स्यात्()? इत्यत आह--"तथा च" इत्यादि। "अनिष्टं रूपं स्यात्()" इति। अकारस्य "योऽचि" ७।२।८९ इति यकारे कृते त्व्या, म्या इति स्यात्()। मपर्यन्तग्रहणे तु सति युष्मदस्मदोर्मपर्यन्तस्य स्थानित्वेनाधिकृतत्वादस्यैव वक्ष्यमाणा आदेशा भवन्तीति न कश्चिद्दोष इति। अथ परिग्रहणं किमर्थम्(), न मान्तस्येत्येवोच्यतेत, एवमपि ह्रुचयमानेऽन्तशब्दस्य समीपवचनत्वात्? तद्गुणसंविज्ञानस्य बहुव्रीहेराश्रयणात्? सिद्धमिष्टम्()? इत्यत आह--"मान्तस्य" इत्यादि। एतस्मिन्? साकच्कस्यादेशाभावे अथवैतस्मिन्? युवकामावकामित्यादिके शब्दरूपे मान्तस्येत्येवं सिद्धं यत्? परिग्रहणं कृतं तदवधिद्योतनार्थम्()। युष्टदस्मदोरवयवसय स्थानिनोऽवधिद्योतनार्थम्()। तस्मान्मान्ते युष्मच्छब्दे अस्मच्छब्दे च वक्ष्यमाणं कार्यं मा भूदित्येवमर्थम्()। कदा? इत्यादि--"यदा ण्यन्तयोः" इत्यादि। तदाचष्ट इति युष्मदस्मद्भ्यां णिचि कृते "णाविष्ठवत्? कार्यं प्रातपदिकस्य" (वा।८१३) इतीष्ठवद्भावाट्टिलोपः, ततः क्विप्(), तत्र "णेरनिटि" ६।४।५१ इति णिचो लोपे कृते यदा मान्तत्वं विद्यते युष्यदस्मदोस्तदा मा भूदिति। असत्यपि परिग्रहणे मान्स्येत्येन युष्मदस्मदोरित्ययवावस्थानं लभ्यते, ततश्च यत्र मान्ते युष्मदस्मदी, तत्रैव वक्ष्यमाणा आदेशा भवेयुः। परिग्रहणे त्ववधिद्योतनार्थे सति नियोगतो वज्र्यमानेन भवितव्यम्(); न हि तेन वनाऽवधिः सम्भवति। तत्र समुदायावयवस्थानीनिर्दिश्यते। यत्राच्छब्दो वर्जनीयोऽस्ति तत्रैव भविष्यति, न तु म#आन्तयोरयुष्मदस्मादोरेव। ननु च विभक्तिपरयोर्युष्मदस्मदोरादेशा विधास्यन्ते, न च मान्तवस्थायां विभक्तिपरतस्ति; णिलोपस्य स्थानिवद्भावात्(), तत्? किं मान्तस्य निवत्त्यर्थेन परिग्रहणेन? इत्याह--आह--"स्थानिवत्त्वं च" इत्यादि। "क्वौ लुप्ते न स्थानिवत्()" (वा।१।१।५८) इति वचनात्? स्थानिवद्भावोऽत्र नास्ति। तस्माद्विद्यत एव विभक्तिपरत्वमित्यभिप्रायः॥

---

सूत्रम्

काशिका-वृत्तिः

वक्ष्यति युवावौ द्विवचने ७।२।९२

युवाम्। आवाम्। मपर्यन्तस्य इति किम्? युवकाम्, आवकाम् इति साकच्कस्य मा भूत्। त्वमावेकवचने ७।२।९७ त्वया। मया। मपर्यन्तस्य इति किम्? सर्वस्य मा भूत्। तथा च सति त्वमयोरकारस्य यो ऽचि ७।२।८९ इति यकारे कृते अनिष्टं रूपं स्यात्। मान्तस्य इत्येव सिद्धे अस्मिन् यत् परिग्रहणं कृतम्, अवधिद्योतनार्थं तत्। मान्ते मा भूत्। कदा? यदा

ण्यन्तयोः क्विपि मान्तत्वं विद्यते युष्मदस्मदोः। स्थानिवत्त्वं च णेरत्र क्वौ लुतत्वान् न विद्यते। युवावौ द्विवचने ७।२।९२। द्विवचने इत्यर्थग्रहणम्। द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोः मपर्यन्तस्य स्थाने युव आव इत्येतावादेशौ भवतः। युवाम्। आवाम्। युवाभ्याम्। आवाभ्याम्। युवयोः। आवयोः। यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्य अन्यसङ्ख्यत्वातेकवचनं बहुवचनं वा भवति, तदा अपि द्व्यर्थयोः युष्मदस्मदोः युवावौ भवतः , यदि त्वाहौ सौ ७।२।९४ इत्येवम् आदिना आदेशान्तरेण न बाध्येते। अतिक्रान्तं युवाम् अतियुवाम्। अत्यावाम्। अतिक्रान्तान् युवाम् अतियुवान्। अत्यावान्। अतिक्रान्तेन युवाम् अतियुवया। अत्यावया। अतिक्रान्तैर्युवाम् अतियुवाभिः। अत्यावाभिः। अतिक्रान्तेभ्यो युवाम् अतियुवभ्यम्। अत्यावभ्यम्। अतिक्रान्ताद् युवाम् अतियुवत्। अत्यावत्। अतिक्रान्तेभ्यो युवाम् अतियुवत्। अत्यावत्। अतिक्रान्तानां युवाम् अतियुवाकम्। अत्यावाकम्। अतिक्रान्ते युवाम् अतियुवयि। अत्यावयि। अतिक्रान्तेषु युवाम् अतियुवासु। अत्यावासु। त्वाहादीनां तु विषये परत्वात् ते एव भवन्ति। अतिक्रान्तो युवाम् अतित्वम्। अत्यहम्। अतिक्रान्ता युवाम् अतियूयम्। अतिवयम्। अतिक्रान्ताय युवाम् अतियुभ्यम्। अतिमह्यम्। अतिक्रान्तस्य युवाम् अतितव। अतिमम। यदा तु युष्मदस्मदी एकत्वबहुत्वयोर् वर्तेते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः। अतिक्रान्तौ त्वाम् अतित्वाम्। अतिमाम्। अतिक्रान्तौ युष्मानतियुष्मान्। अत्यस्मान्। एवमुन्नेयम्।

न्यासः

युवावौ द्विवचने। , ७।२।९२

"द्विवचने" इति। यदीदं पारिभाषिकस्य दविवचनस्य ग्रहणं स्यात्(), स्यात्(), तदा तस्मिन्? परत एव तावादेशो भवेताम्()। तथा च यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसंख्यत्वादेकवचनं बहुवचनं वा समासाद्भवति, तदा न स्यातामिति; यदा युष्मदस्मदी एकत्वे वा बहुत्वे वा वत्र्तेते समासार्थस्य द्वित्त्वे सति समासाद्()द्ववचनं वति, तदा युवादौ स्यातामेव, एतच्चानिष्टम्()" इति। द्वयोरर्थयर्वचनमुक्तिः=द्विवचनम्()। "द्विवचने ये युष्मदस्मदी" इति। "द्विवचने" इति। विषयसपतमीयम्()। तदेव विषयसप्मीत्वमस्या व्यक्तीकर्तुमाह--"द्व्यर्थाभिधानविषये" इति। "द्वयोरर्थयोरभिधानं द्व्यर्थाभिधानम्(), तद्विषय ये युष्मदस्मदी ते तथोक्ते। "तयोः" इत्यादि। तयोर्युष्मदस्मदोर्मपर्यन्तावयवः स्थानी, तस्य युवावौ भवतः। "यदा" इत्यादिनार्थग्रहणे सति यदिष्टं सिध्यति तद्दर्शयति। यदि तर्हि समासादेकवचनबहुवचनयोरुपजातयोर्द्व्यर्थाभिधानदिषयत्वाद्युष्मदस्मदोर्युवावौ भवतः, एवं सति "त्वाहौ सौ" ७।२।९४, "यूयववौ जसि" ७।२।९३, "तुभ्यमह्यौ ङयि" ७।२।९५, "तदममौ ङसि" (७।२।९६)--इत्येषामपि विषये स्याताम्()? इत्यत आह--"यदि त्वाहौ सौ" इत्यादि। "अतियुवामत्यावाम्()" इति। "आत्यादयः क्रान्ताद्यर्थे" (वा।९१) इति प्रादिसमासः। तत्र योऽसौ युष्मदस्मदर्थञ्चातिक्रान्तः स एकसंख्यावच्छिन्नोऽर्थ इति तत्र यद्यप्येकवचनं भवति, तथापि द्व्यर्थाभिधानविषयत्वाद्युष्मदस्मदोर्युवावौ भवत एव। अत्र हि "द्वितीयायाञ्च" ७।२।८७ इत्यात्त्वम्()। "अतियुवान्(), अत्यावान्()" इति। "शसो न" ७।१।२९ इति नत्वम्()। "अत्यावया" इति। "योऽचि" ७।२।८९ इति यत्वम्()। "अतियुवाभिरत्यावाभिः" इति। "युष्मदस्मदोरनादेशे" ७।२।८६ इत्यात्त्वम्()। "अतियुवभ्यमत्यावभ्यम्()" इति। "भ्यसो भ्यम्()" ७।१।३०। "अतियुवदत्यावत्()" इति। "एकवचनस्य च" ७।१।३२ इति ङसेरदादेशः। बहुवचनस्य तु "पञ्चम्या अत्()" ७।१।३१ इत्यनेन। "अतियुदाकम्(), अत्यावाकम्()" इति। "साम आकम्()" ७।१।३०। "अतियुवदत्यावत्()" इति। "एकवचनस्य च" ७।१।३२ इति ङसेरदादेशः। बहुवचनस्य तु "पञ्चम्या उत्" ७।१।३१ इत्यनेन। "अतियुवाकम्(), अत्यावाकम्()" इति। "साम आकम्()" ७।१।३३ "अतियुवयि, अत्यादयि" इति। पूर्ववद्यत्वम्()। "अतियुवासु अत्यावासु" इति। पूर्ववदात्त्वम्()। "त्वाहादीनां विषये" इत्यादिना यदुक्तं--"यदि त्वहौ ७।२।९४ इत्यादिनाऽऽदेशान्तरेण न बाध्येते" इति, तद्विस्पष्टीकरोति--"यदा तु" इत्यादिना। अर्थग्रहणे सति यदिष्टमुपपद्यते तद्दर्शयति--"अतित्वामतमाम्()" इति। अत्र यो युष्मदस्मदर्थावतिक्रान्तौ तौ द्विसंख्यौ समासार्थाविति

समासाद्यद्यमि द्विवचनं भवति, तथापि युष्मदस्मदोर्द्व्यर्थता नास्तीति युवावौ न भवतः। त्वमावेव भक्तः। "प्रथमायाश्च द्विवचने भाषायाम्()" ७।२।८८ इत्यात्त्वम्()। अथ वा--द्वितीयाद्विवचनमेतत्(), ततः "द्वितीयायाञ्च" ७।२।८७ इति। "एवसुन्नेयम्()" इति। वचनान्तरेष्वप्यादेशाभावं दर्शयति। युष्मानतिक्रान्तौ पश्य अतियुष्माम्(), अत्यस्माम्()। अतिक्रान्ताभ्यां त्वां कृतमतित्वाभ्याम्(), अतिमाभ्याम्()। अतिक्रान्ताभ्यां युष्मान्? कृतमतियुष्माभ्यां कृतम्()। त्वामतिक्रान्ताभ्यां देहि अतित्वाभ्यां देहि, अतिमाभ्यां देहि। अतिक्रान्ताभ्यां युष्मान्? देहि अतियुष्माभ्यामत्यस्माभ्यां देहि। अतिक्रान्ताभ्यां त्वामागतोऽतिस्याभ्यामागतः, अतिमाभ्यामागतः। अतिक्रान्तभ्यां युष्मानागतोऽतियुष्माभ्यामागतः, अत्यस्माभ्यामागतः। अतिक्रान्तयोस्त्वां स्वमतित्वयोः स्वम्(), अतिमयोः स्वम्()। युष्मानतिक्रान्तयोः स्वमतयुष्मयोः स्वम्(), अत्यस्मयोः स्वम्()। अतिक्रान्तयोस्त्वां निधेहि अतित्वयोर्निधेहि, अतिमयोर्निधेहि। अतिक्रान्तयोर्युष्मान्निधेहि, अतियुष्मयोर्निधेहि, अत्यस्मयोर्निदेहि॥

बाल-मनोरमा

युवावौ द्विवचने , ७।२।९२

"युष्मद्-औ, अस्मद्-औ, इति स्थिते "ङे प्रथमयो"रित्यमि कृते युष्मद्-अम्, अस्मद्-अम् इति स्थिते-युवावौ द्विवचने। "युष्मदस्मदोरनादेशे" इत्ययो युष्मदस्मदोरित्यनुवर्तते। मपर्यन्तस्येत्यदिकृतम्। उक्तिर्वचनम्। द्वयोर्वचनं द्विवचनम्। तत्र समर्थयोरित्यर्थः। द्वित्वविशिष्टार्थवाचिनोरिति यावत्। ननु द्विवचनसंज्ञके प्रत्यये परे इत्यर्थः, वचनग्रहणसामथ्र्यात्। अन्यथा "द्वित्वे" इत्येव ब्राऊयात्। "अष्टन आ विभक्तौ" इत्यते विभक्तावित्यस्यानुवृत्तौ सत्यां द्वित्वे या विभक्तिस्तस्यां परत इत्यर्थलाभात्। तदाह--द्वयोरुक्तावित्यादिना। द्वयोरुक्तावित्याश्रयणस्य फलमग्रे मूल एव स्पष्टीभविष्यति।

तत्त्व-बोधिनी

युवावौ द्विवचने ३४५, ७।२।९२

युवावौ द्विवचने। उक्तिर्वचनं, द्वयोर्वचनं द्विवचनं, तदेतदाह--द्वयोरुक्ताविति।न चात्र कृत्रिमाऽकृत्रिमन्यायविरोधः शङ्क्यः, वचनग्रहणसामथ्र्यादेव तद्बाधात्। अन्यथा "द्वित्वे"इत्येव ब्रायात्। "अष्टन आ विभक्ता"वित्यतो विभक्तावित्यधिकाराद्द्वित्वे य विभक्तिस्तस्यां परत इति ब्याख्यानसंभवात्।

---

सूत्रम्

काशिका-वृत्तिः

यूयवयौ जसि ७।२।९३

युष्मदस्मदोः मपर्यन्तस्य जसि परतो यूय वय इत्येतावादेशौ भवतः। यूयम्। वयम्। परमयूयम्। परमवयम्। अतियूयम्। अतिवयम्। तदन्तविधिरत्र भवति, अङ्गाधिकारे तस्य च तदुत्तरपदस्य च इति।

लघु-सिद्धान्त-कौमुदी

यूयवयौ जसि ३१८, ७।२।९३

अनयोर्मपर्यन्तस्य। यूयम्। वयम्॥

न्यासः

यूयवयौ जसि। , ७।२।९३

"परमयूयम्()" इति। "अङ्गाधिकारे तस्य च तदुत्तरपदस्य च" (पु।प।वृ।८५) इति वचनादुत्तरपदयोरपि भवतः। अथ

वा--"जसि" इति परसप्तमीयम्(), तेन समस्तयोरपि जसि परत इति भवतः। परमयूयमित्यादावपि युष्मदस्मद्भ्यां जसः परत्वमस्त्येव॥

बाल-मनोरमा

यूयवयौ जसि , ७।२।९३

"ङे प्रथमयो"रिति जसोऽमि कृते विशेषमाह--यूववयौ जसि। स्पष्टमिति। युष्मदस्मदोर्मपर्यन्तस्य यूय वय इत्यादेशौर स्तौ जसि परत इति सुगममित्यर्थः। यूय अद् अम्, वय अद् अम् इति स्थिते पररूपे "शेषे लोपः" इति मपर्यन्ताच्छेषस्य अदो लोपे परिनिष्ठितं रूपमाह--यूयं वयमिति। परमयूयमिति।यूयवयविधेराङ्गत्वात्तदन्तविधिरिति भावः। अतियूयमिति। गौणत्वेऽपि तदप्रवृत्तौ मानाऽभावादिति भावः। अत्र शीभावमाशङ्क्य परिहरति-इहेति। इह "शेषे लोप इत्यन्त्यलोप" इति पक्षे दकारस्य लोपे सति अवर्णान्तात्सर्वनाम्नः परत्वाज्जसः शीभावः। प्राप्तो न भवतीत्यन्वयः। कुत इत्यत आह-अङ्गकार्ये इति अङ्गादिकारविहिते कार्ये कृते सति पुनरङ्गाधिकारविहितं कार्यं न भवतीत्यर्थः। तेन त्वमित्यत्र पररूपे कृते "अमि पूर्वः" इत्यस्य नानुपपत्तिः। "ज्यादादीयसः" इति सूत्रे "ज्ञाजनोर्जे"ति सूत्रे च "अङ्गवृत्ते पुनर्वृत्तावविधि"रिति परिभाषा स्थिता। सा चाऽत्रार्थत उपनिबद्धा। नच द्वाभ्यामित्यत्र त्यदाद्यत्वे कृते "सुपि चे"ति दीर्घो न स्यादिति वाच्यं, "द्वयोरेकस्ये"त्यादिनिर्देशेन तदनित्यत्वज्ञापनात्। प्रकृते च शेषलोपस्य आङ्गस्य प्रवृत्तत्वाद#आङ्गः शीभावो न भवतीति भावः। ननु "अङ्गकार्ये" इति परिभाषा नात्र प्रवर्तते। शीभावस्य अङ्गाधिकारविहितत्वेऽपि अङ्गाधिकरणकत्वाऽभावात् "अहगवृत्ते पुनर्वृत्तावविधिः" इति परिभाषास्वारस्येन तथैव प्रतीतेः। अतोऽत्र शीभावो दुर्वार इत्यस्वरसादाह--ङे प्रतमयोरिति। "ङे प्रथमयोर"मित्यत्र अम् म् इति मकारान्तरं प्रश्लिष्यते। अम् च म् चेति द्वन्द्वः। अन्त्यो मकारः संयोगान्तलोपेन लुप्तः। प्रश्लिष्टश्च मकारोऽमो विशेषणं, तदन्तविधिः मकारान्तोऽम् स्यादिति लभ्यते। मकारान्तस्य अमः पुनर्मान्तत्वविधानादम् मान्त एव भवति नतु तस्य विकारो भवतीति लभ्यते। अतो न शीभाव इत्यर्थः। वस्तुतस्तु मकारान्तरप्रश्लेषो बाष्येऽदर्शनादुपेक्ष्यः। संनिपातपरिभाषयैवाऽत्र शीभावो न भवति। दकारस्य शेषलोपो हि आत्वयत्वनिमित्तेतरात्मकशेषविभक्त्यात्मकस्य अमो युष्मदस्मदोश्च संनिपातमाश्रित्य प्रवृत्तः। ततः शीभावे तु आद्गुणे यूये वये इति स्यात्। तत्र एकादेशस्य पूर्वान्तत्वे प्रकृत्यनुप्रवेशात् प्रत्ययसंनिपातभङ्गः। परादित्वे तु युष्मदस्मत्संनिपातविरोध इत्यलम्।

तत्त्व-बोधिनी

यूयवयौ जसि ३४७, ७।२।९३

युवकाभ्यादित्यादि। अङ्गकार्य इति। एतेन "अङ्गवृत्ते पुनर्वृत्तावविधि"रिति परिभाषा अर्थत उपनिवबद्धा। "अङ्गे-अङ्गधिकारे-वृत्तं वर्तनं यस्य तदङ्गवृत्तं शास्त्रं, तस्मिन्प्रवृत्ते सति पुनरन्यास्याऽङ्गवृतशाश्त्रस्य प्रवृत्तौ प्राप्तायामविधिः"इति तत्परिभाषाया अर्थः। एषा च परिभाषा "ज्ञाजनोर्जे"त्यनेन ज्ञापिता। उपपत्तिस्तु मनोरमातोऽवगन्तव्या। न चैवं "द्वाभ्या"मित्यत्र त्यदाद्यत्वे कृते "सुपि चे"ति दीर्घो न स्यादिति वाच्यं, "द्वयोरेकस्ये"त्यादिनिर्देशेन उक्तपरिभाषाया अनित्यत्वज्ञापनादिति दिक्। मकारान्तरमित्युपलक्षणं, "जसश्शी"त्यत्र "जसः स्िति सकारं प्रश्लिष्य सान्तस्य जस इति व्याख्यानात्, "अतोऽ"मितिसूत्रादम्ग्रहणमनुवर्त्य "अम् अमेवे"ति व्याख्यानाद्वेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

त्वाहौ सौ ७।२।९४

युष्मदस्मदोर् मपर्यन्तस्य सौ परे त्व अह इत्येतौ आदेशौ भवतः। त्वम्। अहम्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्।

लघु-सिद्धान्त-कौमुदी

त्वाहौ सौ ३१४, ७।२।९४

अनयोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः॥

न्यासः

त्वाहौ सौ। , ७।२।९४

"त्वमावेकवचने" ७।२।९७ इति वक्ष्यति, तस्यायमपवादः। अथ त्वग्रहणं किमर्थम्(), "अहः सौ" इत्येवोच्येत, त्वादेशो हि "त्वमावेकवचने" (७।२।९७) इत्येवं भविष्यति? अशक्यमेवं वक्तुम्(); असति त्वग्रहणे युष्मदोऽप्यहादेशः स्यात्()। अथ वा--अत्र "अस्मदोऽहः सौ" इतेयवोच्येत? एवमपि गौरवं स्यात्()। तस्माद्यथान्या समेवास्तु॥

बाल-मनोरमा

त्वाहौ सौ , ७।२।९४

त्वाहौ सौ। त्वश्च अहश्च त्वाहौ। मपर्यन्तस्येत्यधिकृतम्। युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते। तदाह--युष्मदस्मदोरित्यादिना। त्व अद् अम्, अह अद् अम् इति स्थितम्। यद्यप्यत्र "त्वमावेकवचने" #इत्येव युष्मच्छब्दस्य त्वादेशः सिद्धतस्तथापि युष्मानतिक्रान्तोऽतित्वमित्यत्र त्वादेशार्थमिह युष्मदस्त्वविधानम्। नहि "तत्र त्वमावेकवचने" इत्यस्य प्रवृत्तिरिति, अत्र युष्मच्छब्दस्य बुहुत्वविशिष्टे वृत्तेः। एकवचनशब्दो हि तत्र एकत्वविशिष्टवृत्तिवाची, नतु एकवचनसंज्ञकप्रत्ययवाचीत्यनुपदमेव वक्ष्यते।

तत्त्व-बोधिनी

त्वाहौ सौ ३४३, ७।२।९४

त्वाहौ सौ। यद्यपि युष्मदः "त्वमावेकवचने"इत्येवत्वादेशः सिद्धस्तथापि अस्मदोऽहादेशार्थमिदम्। किंच "त्वमौ"इति सूत्रेण युवां युष्मान् वाऽतिक्रान्तोऽतित्वमिति न सिध्यति, एकार्थवाचित्वऽभावाद्युष्मद इति भावः। युष्मदस्मदोरिति। एतच्च "युष्मदस्मदोरनादेशे"इत्यतो लभ्यते। शेषे। उक्तादन्यः शेषः, आत्वं यत्वं च प्रागुक्तम्, तद्विषयादन्यविभक्तिरिह शेषशब्दार्थस्तदेतद्याचष्टे----

---

सूत्रम्

काशिका-वृत्तिः

तुभ्यमह्यौ ङयि ७।२।९५

युष्मदस्मदोः मपर्यन्तस्य तुभ्य मह्य इत्येतावादेशुअ भवतो ङयि परतः। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्।

लघु-सिद्धान्त-कौमुदी

तुभ्यमह्यौ ङयि ३२४, ७।२।९५

अनयोर्मपर्यन्तस्य। टिलोपः। तुभ्यम्। मह्यम्॥

न्यासः

तुभ्यमह्यौ ङयि। , ७।२।९५

बाल-मनोरमा

तुभ्यमह्यौ ङयि , ७।२।९५

तुभ्यमह्यौ ङयि। "ङे" इत्यस्य सप्तम्येकवचने ङयीति। "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते। मपर्यन्तस्येत्यधिकृतम्। तदाह--अनयोरिति। युष्मदस्मदोरित्यर्थः। अमादेश इति। "ङे प्रथमयोरित्यनेने"ति शेषः। शेषे लोप इति। अदो दस्य वा लोप इत्यर्थः। "अमि पूर्वः" इति मत्वाह--तुभ्यं मह्ममिति। परमतुभ्यमिति। तुभ्यमह्यविध्योराङ्गत्वात्तदन्तेऽपि प्रवृत्तिरिति भावः। अतितुभ्यमिति। गौणत्वे तदप्रवृत्तौ मानाऽभावादिति भावः। युवाभ्याम् आवाभ्यामिति। तृतीयाद्विवचनवदिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

तवममौ ङसि ७।२।९६

युष्मदस्मदोः मपर्यन्तस्य तव मम इत्येतावादेशौ भवतो ङसि परतः। तव। मम। परमतव। परमम। अतितव। अतिमम।

लघु-सिद्धान्त-कौमुदी

तवममौ ङसि ३२८, ७।२।९६

अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि॥

न्यासः

तवममौ ङसि। , ७।२।९६

अनन्तरं वक्ष्यमाणयोस्त्वमयोः प्राप्तयोरिवं वचनम्()॥

बाल-मनोरमा

तवममौ ङसि , ७।२।९६

अथ षष्ठी। तवममौ ङसि। "युष्मदस्मदोरनादेशे" इत्यतो "युष्मदस्मदो"रित्यनुवर्तते। मपर्यन्तस्येत्यधिकृतं। तदाह-अनयोरिति। युष्मदस्मदोरित्यर्थः। "त्वमावेकवचने" इत्यस्यापवादः।

---

सूत्रम्

काशिका-वृत्तिः

त्वमावेकवचने ७।२।९७

एकवचने इत्यर्थनिर्देशः। एकवचने ये युष्मदस्मदी एकार्थामिधानविषये तयोर् मपर्यन्तस्य स्थाने त्व म इत्येतावादेशौ भवतः। त्वाम्। माम्। त्वया। मया। त्वत्। मत्। त्वयि। मयि। यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य

त्वन्यसङ्ख्यत्वात् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः। आदेशान्तराणां तु त्वाहौ सौ ७।२।९४ इत्येवमादीनां विषये पूर्वविप्रतिषेधेन ते एवेष्यन्ते। अतिक्रान्तः त्वाम् अतित्वम्। अत्यहम्। अतिक्रान्तौ त्वाम् अतित्वाम्। अतिमाम्। अतिक्रान्तान् त्वाम् अतित्वान्। अतिमान्। अतिक्रान्ताभ्याम् त्वाम् अतित्वाभ्याम्। अतिमाभ्याम्। अतिक्रान्तैः त्वाम् अतित्वाभिः। अतिमाभिः। इत्येवमाद्युदाहर्तव्यम्।

लघु-सिद्धान्त-कौमुदी

त्वमावेकवचने ३१९, ७।२।९७

एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ॥

न्यासः

त्वमावेकवचने। , ७।२।९७

"एकवचन इत्यर्थेनिर्देशः" इति। एतेनार्थस्येवं ग्रहणम्(), न तु पारिभाषिकस्यैकवचनस्येति दर्शयति। पारिभाषिकस्य तु ग्रहणे यो दोषः स "युवाधौ द्विवचने" ७।२।९२ इत्यत्रोक्त इत्यभिप्रायः। अर्थग्रहणं त्विह वचनग्रहणाल्लभ्यते। यदीह प्रत्ययग्रहणमभिमतं स्यात्(), "एकत्वे" इत्येवं ब्राऊयात्()। विभक्ताविति वत्र्तते, तत्रैवमभिसम्बन्धः करिष्यते--एकत्वे या विभक्तिरिति। अथ वा--एतदिति न ब्राऊयात्(); एकवचने हि "प्रत्ययोत्तरपदयोश्च" ७।२।९८ इत्येनेनैवादेशयोः सिद्धत्वात्()। "त्वाम्(), माम्()" इति। "द्वितीयायाञ्च" ७।२।८७ इत्यात्त्वम्()। "यदा समास एकार्थे" इत्यादिनाऽर्थग्रहणं सति यदिष्टं सिध्यति तद्दर्शयति। यदापि समासात्? संख्यान्तरयुक्ताद्()द्विवचनं बहुवचनं वा भवति, तदाप्येकार्थयोर्युष्मदस्मदोरेतावादेशो भवतः। एवं सति "त्वाहौ सौ" ७।२।९४, "यूय्वयौ जसि" ७।२।९३, "तुभ्यमह्यौ ङयि" ७।२।९५, "तवममौ ङसि" ७।२।९६--इत्येषामप्यादेशान्तराणां विषयं स्यातामित्यत आह--"आदेशान्तराणां तु" इत्यादि। पूर्वविप्रतिषेधस्येति वचनं परस्य विप्रतिषेधस्यासम्भवात्()। असम्भवस्त्वनयोरेव परत्वात्()। पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वाल्लभ्यते। तत्र "त्वाहौ सौ" ७।२।९४ इत्यस्यावकाशो यत्रैकार्थे युष्मदस्मदी न भवतः--अतिक्रान्तो युष्मानित्यतित्वमत्यहमिति, त्वमावेकवचन७।२।९७स्यावकाशो यत्रैकार्थाभ्यां विभक्त्यन्तरं भवति--त्वाम्(), मामिति; अतिक्रान्तस्त्वामतित्वमतिक्रान्तो मामत्यहमित्यत्रोभयप्रसङ्गे प्राप्ते त्वहौ सौ भवतः पूर्वविप्रतिषेधेन। अन्या दिशाऽऽदेशान्तरेषु प्राप्तेषु पूर्वं विप्रतिषेधो वक्तव्यः। "अतिक्रान्तो त्वामतित्वाम्(), अतिमाम्()" इति। अत्र यद्यपि समासाद्()द्विवचन भवति, तथाप्येकार्थे युष्मदस्मदी इति भवत एव त्वमादेशौ। पारिभाषिकस्य त्व#एकवचनस्य ग्रहणे न स्याताम्(); तस्येहाविद्यमानत्वात्()। "एवमाद्युदाहत्र्तव्यम्()" इति। अतिक्रान्तौ त्वां पश्यातित्वाम्(), अतिमां पश्य। अतित्वाभिरतिमाभिः कृतम्। अतक्रान्ताभ्यां त्वां देह्रतित्वाभ्यामतिमाभ्यां देहि। अतिक्रान्तेभ्यस्त्वां देह्रतित्वभ्यमतिमभ्यं देहि। अतिक्रान्तयोस्त्वां त्वामागतोऽतित्वाभ्यामतिमाब्यामागतः। अतिक्रान्तेभ्यस्त्वामागतोऽतित्वदागतोऽतिमदागतः। अतिक्रान्तयोस्त्वां स्वमतित्वयोः स्वम्(), अतिमयोः स्वम्()। अतिक्रान्तानां त्वां स्वमतित्वाकं स्वम्(), अतिमाकं स्वम्()। अतिक्रान्तयोस्त्वां निधेह्रतित्वयोर्निधेहि, अतिमयोर्निधेहि। अतिक्रान्तेषु त्वां निधेह्रतित्वासु निधेहि, अतिमासु निधेहि॥

बाल-मनोरमा

त्वमावेकवचने , ७।२।९७

अथ द्वितीयैकवचनस्याऽमो "ङे प्रथमयो"रित्यमि कृते युष्मद् अम्, अस्मद् अम् इति स्थिते--त्वमावेकवचने। "युष्मदस्मदोरनादेशे" इत्यतो "युष्मदस्मदो"रित्यनुवर्तते। "मपर्यन्तस्ये"त्यधिकृतम्। एकवचनशब्दो यौगिक एव, वचनग्रहणसामर्थ्यात्। तदाह--एकस्येत्यादिना।

तत्त्व-बोधिनी

त्वमावेकवचने ३४८, ७।२।९७

अविभक्तिकमिति। तथाच "ङे प्रथमयो"रिति पूर्वसूत्रेण प्राप्तषेधोऽयमिति भाष्ये शङ्कितम्। नच तथैब किं न स्यात्, "द्लितीयायां चे"त्यात्वे पूर्वसवर्णदीर्घे "तस्माच्छसः"इति नत्वे चेष्टसिद्धेरिति वाच्यं, स्त्रीनपुंसकयोर्नत्वाऽप्राप्त्या"युष्मान्ब्राआह्णणीः" "युष्मान्कुलानी"त्यसिद्धिप्रसङ्गात्। अलिङ्गत्वपक्षे तु युष्माम् ब्राआह्णणा"नित्यादेरप्यसिद्धिप्रसङ्गाच्च।

---

सूत्रम्

काशिका-वृत्तिः

प्रत्ययौत्तरपदयोश् च ७।२।९८

एकवचने इत्यनुवर्तते। प्रत्यये उत्तरपदे च परत एकवचने वर्तमानयोः युस्मदस्मदोर् मपर्यन्तस्य त्व म इत्येतावादेशौ भवतः। तवायं त्वदीयः। मदीयः। अतिशयेन त्वम् त्वत्तरः। मत्तरः। त्वाम् इच्छति त्वद्यति। मद्यति। त्वमिवाचरति त्वद्यते। मद्यते। उत्तरपदे तव पुत्रः त्वत्पुत्रः। मत्पुत्रः। त्वं नाथो ऽस्य त्वन्नाथः। मन्नथः। एकवचने इत्येव, युष्माकमिदम् युष्मदीयम्। अस्मदीयम्। युष्माकं पुत्रः, अस्माकं पुत्रः युष्मत्पुत्रः, अस्मत्पुत्रः। विभक्तौ इत्यधिकारात् पूर्वयोगो विभक्तावेव। ततो ऽन्यत्र अपि प्रत्यये उत्तरपदे च यथा स्यातित्ययम् आरम्भः। ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्याम् एव आदेशौ भविस्यतः? न एवं शक्यम्, लुका तस्या भवितव्यम्। बहिरङ्गो लुक्, अन्तरङ्गौ आदेशौ, प्रथमं तौ भविष्यतः? एतदेव तर्हि आदेशवचनं ज्ञापकम् अन्तरङ्गानपि विधीन् बहिरङ्गो ऽपि लुक् बाधते इति। तेन गोमान् प्रियो ऽस्य गोमत्प्रियः इत्येवम् आदौ नुमादि लुका बाध्यते। एवं च सति त्वाहौ सौ ७।२।९४ इत्येवम् आदयो ऽपि प्रत्ययोत्तर्पदयोरादेशा न भवन्ति। त्वं प्रधानम् एषां त्वत्प्रधानाः। मत्प्रधानाः। यूयं पुत्रा अस्य युष्मत्पुत्रः। अस्मत्पुत्रः तुभ्यं हितं त्वद्धितम्। मद्धितम्। तव पुत्रः त्वत्पुत्रः। मत्पुत्रः। अथ किमर्थ्म् एषां त्वाहादीनां बाधनार्थम् एतन् न विज्ञायते? लक्ष्यस्थित्यपेक्षया। ज्ञाप्कार्थे ह्येतस्मिन् बहुतरमिष्टं सङ्गृह्यते।

लघु-सिद्धान्त-कौमुदी

प्रत्ययोत्तरपदयोश्च १०८५, ७।२।९८

मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः॥

न्यासः

प्रत्ययोत्तरपदयोश्च। , ७।२।९८

"एकवचने वत्र्तमानयोः" इति। एकार्थाभिधानविषयोयोरित्यर्थः। "त्वदीयः मदीयः" इति। "त्यदादीनि च" (१।१।७४) इति वृद्धसंज्ञकत्वात्? "वृद्धाच्छः" ४।२।११३ इति च्छप्रत्ययः। "त्वत्तरः, मत्तरः" इति। "द्विवचनविभदज्योपपदे तरबीयसुनौ" ५।३।५७ इति तरप्()। "त्वद्यति, मद्यति" इति। "सुप आत्मनः क्यच्()" ३।१।८। "त्वद्यते, मद्यते" इति। "कर्त्तुः क्यङ सलोपश्च" ३।१।११ इति क्यङ। ननु च पूर्वेणेवदेशौ सिद्धौ, तत्? किमर्थोऽयमारम्बः? इत्यत आह--"विभक्तावित्यधिकारात्()" इत्यादि। "ननु च" इत्यादि देशकः। प्रकृतिप्रत्यययोः पूर्वोत्तरपदयोश्च या मध्ये वत्र्तते साऽन्तर्वत्तिनी विभक्तिः। नैवं शक्यम्()" इतीतरः। "लुका तस्य भवितव्यम्()" इति, अश्यतायां हेतुः। "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति प्रागेवादेशाभ्यां लुका भवितव्यमिति, ततश्च तन्निमित्तावादेशौ न स्यातामित्यभिप्रायः। "बहिरङ्गो लुक्()" इत्यादि देशकः। विभक्तिमात्रं ह्यादेशयोराश्रयः लुकस्तु धातुत्वं

प्रातिपदिकत्वञ्चापरम्()। तदेवं धातुप्रतिपदिकत्वे यथायोगं बाह्रप्रत्ययापेक्षत्वात्? समासापेक्षत्वाच्च बहिरङ्गे किं पुनस्तदपेक्षया लुको बहिरङ्गता? "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यादेशावेव प्रथमं भविष्यतः। "एतदेवेत्यादि" इतरोऽपि। "अन्तरङ्गानपि विथीन्? बहिरङ्गो लुग्न बाधते" इति पूर्वेणैव सिद्धत्वाददेशवचनं न कुर्यात्(), कृतञ्च, तदेव ज्ञापयति--"अन्तरङ्गानपि विधीन्? बहिरङ्गो लुग्? बाधते" (व्या।प।१२८) इति। किमेतस्य ज्ञापकस्य प्रयोजनम्()? इत्यत आह--"तेन" इत्यादि। यद्ययमर्थो न ज्ञाप्यते, तदा गोमान्? प्रियोऽस्येति गोमत्प्रिय इत्यन्तरङ्गत्वाल्लुकः प्राक्? "उगिदचाम्()" (७।१।७०) इति नुम्? स्यात्(), "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घत्वम्(), ततश्च संयोगान्तलोपे ८।२।२३ कृते गोमान्प्रिय इत्यनिष्टं रूपं प्रसज्येत। अस्मिन्? हयर्थे ज्ञापिते, अन्तरङ्गमपि नुमादिकं बहिरङ्गेण लुका बाध्यत इति न भवत्येष दोषप्रसङ्गः। एकेनादिशब्देन गोमन्तमिच्छति गोमत्यति, गोमानिवाचरति गोमत्यते--इत्यादेग्र्रहणम्()। द्वितीयेन दीर्घत्वस्य हल्ङ्यादिलोपस्य ६।१।६४। यद्यन्तरङ्गत्वाद्? हल्ङ्यादिलोपः ६।१।६४ स्यात्(), प्रत्ययलक्षणेन नुमादिकं स्यात्(), ततश्च तदेवानिष्टं रूपं स्यात्()। लुकि च सति "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणप्रतषेधान्न भवति। "एवं च" इत्यादि। यत एवं बहिरङ्गोऽपि लुगन्तरङ्गानपि विधीन्? बाधने, एवञ्च कृत्वा, "त्वाहौ सौ" ७।२।९४, "यूयवयौ जसि" ७।२।९३, "तुम्यमह्यौ ङयि" ७।२।९५ "तवममौ ङसि" ७।२।९६--इत्येत आदेशाः प्रत्यय उत्तरपदे च परतो न भवन्तीति। "अथ" इत्यादि। असति प्रयोजने ज्ञापकं भवति, अस्ति चास्यत्? प्रयोजनम्()--एवां त्वहटीनामादेशान्तराणां बाधनम्()। सत्येतस्मिन्? प्रयोजने, एतदर्थमेवेदं युक्तं विज्ञातुम्(), न तु ज्ञापनार्थमिति भावः। "लक्ष्यस्थित्यपेक्षया" इति। लक्ष्यस्य व्युत्पाद्यस्य स्थितिः=स्थानं लक्ष्यस्थितिः, तद्विषयेऽपेक्षा=लक्ष्यस्थित्यपेक्षा; तथा हेतु भूतया। नेदमादेशान्तराणां बाधनार्थं विज्ञायते। गोमत्प्रियो गोमत्यतीत्येवमादिकं लक्ष्यं लोके साधुभावेनादस्थितम्()। आदेशान्तरबाधनार्थे ह्रेतस्मिन्()" विज्ञायमाने न संगृहतं सायत्()। ज्ञापनार्थे त्वेतदपि संगृहीतं भवतत्येतद्दर्शयति---"ज्ञापनार्थे ह्रेतस्मिन्()" इत्यादि। कथं पुनः सत्येवं प्रयोजने सत्यामपि लक्ष्यस्थित्यपेक्षायां ज्ञापकार्थमेतत्? शक्यं विज्ञातुम्()? एवं मन्यते--प्रयोजनमेवैतन्न भवति; मपर्यन्तग्रहणस्य चकारेणानुकर्षणार्थत्वात्()। तदनुकर्षणस्यैतदेव प्रयोजनम्()--मपर्यन्तयोरादेशौ यथा स्यातामिति। यदि चादेशान्तराणां बाधनार्थमेतत्? स्यात्(), अनुकर्षणं तस्यापार्थकं स्यात्()। यद्बाधनार्थमेत्? सूत्रं प्रकल्प्यते तान्यादेशान्तराणि मपर्यन्तस्यैव प्रयुक्तानि, नान्यस्य। ततश्चान्तरेणापि मपर्यन्तग्रहणानुवृत्तिमुत्सर्गसमानदेशत्वादपवादानां मपर्यन्तस्यैव भविष्यत इति किं मपर्यन्तस्येत्यनुवत्र्तनेन! आदेशान्तरामबाधनार्थे ह्रेतस्मिन्? सर्वादेशिवृत्त्यर्थं मपर्यन्तग्रहणमनुवत्र्तयितुं युक्तम्()। तस्मादेतस्मान्मपर्यन्तग्रहणानुवत्र्तनान्नादेशान्तरबाधनमस्य प्रयोजनम्()। अतो ज्ञापकं विज्ञायते। ननु च किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायत इति परेण देशितम्()। तस्यायमभिप्रायः-- मपर्यन्तस्येतत्येतन्निवत्र्यादेशान्तरबाधनार्थमेतत्? कस्मान्न भवतीति? तत्रायमर्थः-- मपर्यन्तग्रहणस्यानुकर्षणार्थश्चकारो न कत्र्तव्यो भवति। मपर्यन्तग्रहणानुवृत्तावेतदादेशान्तरबाधनार्थं नोपपद्यते, तस्मिन्निवृत्तौ तूपपद्यत एव॥

बाल-मनोरमा

प्रत्ययोत्तरपदयोश्च १३५३, ७।२।९८

प्रत्ययोत्तरपदयोश्च। साप्तमिकमिदम्। "त्वमावेकवचने" इत्यनुवर्तते। "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्मदोरित्यनुवर्तते। मपर्यन्तस्येत्यधिकृतं। तदाह--मपर्यन्तयोरित्यादि। त्वदीयः मदीय इति। छे सुब्लुकि तवममयोर्निवृत्तौ मपर्यन्तयोः त्वदिति मदिति च आदेशौ। विभक्तिपरकत्वाऽभावान्न शेषे लोपः। उत्तरपदे तु परे त्वत्पुत्रो मत्पुत्र इत्युदाहरणम्।

---

सूत्रम्

काशिका-वृत्तिः

त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९

त्रि चतुरित्येतयोः स्त्रियां वर्तमानयोः तिसृ चतसृ इत्येतावादेशौ भवतो विभक्तौ परतः। तिस्रः। चतस्रः। तिसृभिः। चतसृभिः। स्त्रियाम् इति किम्? त्रयः। चत्वारः। त्रीणिं। चत्वारि। स्त्रियाम् इति च एतत् त्रिचतुरोरेव विशेषणं न अङ्गस्य। तेन यदा त्रिचतुःशब्दौ स्त्रियाम्, अङ्गं तु लिङ्गान्तरे, तदा अप्यादेशौ भवत एव। प्रियाः तिस्रो ब्राह्मण्यो ऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मणः। प्रियतिस्रौ, प्रियतिस्रः। प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि। प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः। प्रियचतसृ, प्रियचतसृणी, प्रियचतसृणि। नद्यृतश्च ५।४।१५३ इति समासान्तो न भवति, विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात्। यदा तु त्रिचतुःशब्दौ लिङ्गान्तरे, स्त्रियाम् अङ्गम्, तदा आदेशौ न भवतः। प्रियाः त्रयो ऽस्याः, प्रियाणि त्रीणि वा अस्याः ब्राह्मण्याः सा प्रियत्रिः। प्रियत्री, प्रियत्रयः। प्रियचत्वा, प्रियचत्वारौ, प्रियचत्वारः। तिसृभावे संज्ञायां कन्युपसङ्ख्यानं कर्तव्यम्। तिसृका नाम ग्रामः। चतसर्याद्युदात्तनिपातनं कर्तव्यम्। चतस्त्रः पश्य इत्यत्र चतुरः शसि ६।१।१३२ इत्येष स्वरो मा भूत्। चतसृणाम् इत्यत्र तु षट्त्रिचतुर्भ्यो हलादिः ६।१।१७३ इत्येव स्वरो भवति। हलादिग्रहणसामर्थ्यान् निपातनस्वरो बाध्यते।

लघु-सिद्धान्त-कौमुदी

त्रिचतुरोः स्त्रियां तिसृचतसृ २२५, ७।२।९९

स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ॥

न्यासः

त्रिचतुरीः स्त्रियां तुसृचतसृ। , ७।२।९९

"त्रयः" इति। "जसि च" ७।३।१०९ इति गुणः। "चत्वारः" इति। "चतुरनडुहोरामुदात्तः" ७।१।९८ इत्याम्()। "त्रीणि" इति। "जश्शसोः शिः" ७।१।२० इति शिभावः, "नपुंसकस्य झलचः" ७।१।७२ नुम्(), "नोपधायाः" ६।४।७, "सरवनामस्थाने चासम्बुद्धौ" ६।४।८ इति दीर्घः। "स्त्रियामिति चैतत्? त्रिचतुरोर्विशेषणम्()" इति। तयोरेव श्रुतत्वात्()। "नाङ्गस्य" इति। एवकारस्य व्यवच्छेद्यं दर्शयति--"तेन" इति। विशेषणविशेष्यभावेन। यदि हि स्त्रियामित्यनेनाङ्गमेव विशेष्यते, ["विशेष्येत"--मुद्रितपाठः] ततो यदा त्रिचतुशब्दौ पुंसि नपुंसके वा वत्र्तेते, अङ्गं ["अङ्गे"--मुद्रितपाठः] तु स्त्रियाम्(), तदाप्येतावादेशौ स्याताम्()। "त्रिचतुरोः स्त्रियाम्()" इत्यनेन विशेष्यमाणयोर्न भवतः। "प्रियत्रिः" इत्यादि। स्त्रिया अन्यपदार्थत्वादङ्गं स्त्रियां वत्र्तते, त्रिचतुःशब्दौ लिङ्गान्तरे। यदा त्वङ्गं पुंसि नपुंसके वा वत्र्तते, त्रिचतुःशब्दौ तु स्त्रियाम्(), तदा भवत एव। प्रियास्तिरुआओ बाह्रण्योऽस्येति प्रियतिसा, प्रियतिरुआऔ, प्रियतिस्नः। प्रियतिसृ ब्राआह्रणकुलम्(), प्रियतिसृणो, प्रियतिसृणि। प्रियचतसृ ब्राआह्रणकुलम्(), प्रियचतसृणी, प्रियचतसृणि। "तिसृभावे" इत्यादि। त्रिशब्दात्? संज्ञायां कन्()" ५।३।८७ इति कनि कृते विभक्त्यभावान्न प्राप्नोतीतीदमारभ्यते। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतपादनम्()--पूर्वसूत्रादिह चकारोऽनवत्र्तते, स चानुक्तसमुच्चयार्थः। तेन संज्ञायां कन्यपि भविष्यति। "तिसृका" इति। ग्रामस्यैषा संज्ञा। "चतसर्याद्युदात्तत्वनिपातनम्()" इति। चतरुआः पश्येत्यत्र "चतुरः शसि" ६।१।१६१ इत्यन्तोदात्तत्वं प्राप्नोति, आद्युदात्तञ्चेष्यते, तदर्थमाद्युदात्तत्वनिपातनं कत्र्तव्यम्()। निपातनस्वरेण बाधितत्वादन्तोदात्तत्वं मा भूदित्येवमर्थम्()। यथैवं तर्हि निपातनस्वरः शसिस्वरं बाधते, तथा "षट्()त्रिचतुर्भ्यो हलादिः" ६।१।१७३ इत्यमेन यदविभक्तेराद्युदात्तत्वं विधीयते तदपि बाधेत, ततश्चतसृणामित्यत्राम उदात्तत्वं न स्यत्()? इत्यत आह--"चतसृणामित्यत्र तु" इत्यादि। "हलादिग्रहणसामथ्र्यात्()" इति। तत्रैवायं हेतुः।

हलादिग्रहणं हि तत्राजादिनिवृत्त्यर्थं क्रियते। चतुःशब्दश्चायं हुवचनविषयः। सर्वाणि बहुवचानि प्रथमाद्वितीयाषष्ठीबहुवचनेभ्योऽन्यानि हलादीनि। तत्रामो नुमचिरतृज्वद्भावेभ्यो पूर्वविप्रतिषेधेन नुटि कृते भवितव्यमाद्युदात्तत्वेन; हलादितत्वात्()। जसस्तु "अञ्जेश्छन्दस्यसर्वनामस्थानाम्()" ६।१।१६४ इत्यतोऽसर्वनामस्थानग्रहणस्यानुवत्र्तमानत्वादाद्युदात्तत्वं ["ग्रहणानुवर्तमानत्वात्()"--मुद्रितः पाठः] न भवति। तस्माच्छसो मा भूदित्येवमर्थं तत्र हलादिग्रहणं कृतम्। यदि च निपातनस्वरो न भविष्यति। तस्मान्मा भूद्धलादिग्रहणस्य व#ऐयथ्र्यम्()। इह हलादिग्रहमसमश्र्यादिविभक्तिस्वरेण निपाततस्वरो बाध्यत इति, तेन चतसृणामित्यत्रान्तोदात्तत्वं भवति॥

बाल-मनोरमा

त्रिचतुरोः स्त्रियां तिसृचतसृ २९६, ७।२।९९

त्रिचतुरोः। एतयोरेताविति। त्रिचतुरोस्तिसृ चतसृ इत्येतावित्यर्थः। विभक्ताविति। "अष्टन आ विभक्तौ" इत्यतस्तदनुवृत्तेरिति भावः। जश्शसोः-तिसृ अस् इति स्थिते।

तत्त्व-बोधिनी

त्रिचतुरोः स्त्रियां तिसृचतसृ २५८, ७।२।९९

त्रिचतुरोः। "अष्टन आ विभक्ता"वित्यतोऽनुवर्तनादाह----विभक्तौ परत इति। "विभक्तौ किम्? "त्रिभार्यः चतुर्भार्य"इति केचित्। तन्मन्दम्। "स्त्रिया- पुंव"दिति पुंवद्भावेनापीष्टसिद्धेः। किंतु प्रियादौ पकतः पुंवद्भावो नेति "त्रिप्रिय"इत्याद्युदाहर्तव्यमिति नव्याः।

---

सूत्रम्

काशिका-वृत्तिः

अचि र ऋतः ७।२।१००

तिसृ चतसृ इत्येतयोः ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः। तिस्रः तिष्ठन्ति। तिस्रः पश्य। चतस्रः तिष्ठन्ति। चतस्रः पश्य। प्रियतिस्रः आनय। प्रियातस्रः आनय। प्रियतिस्रः स्वम्। प्रियचतस्रः स्वम्। प्रियतिस्रि निधेहि। प्रियचतस्रि निर्धेहि। पूर्वसवर्णोत्त्वङिसर्वनामस्थानगुणानाम् अपवादः। परमपि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते। अचि इति किम्? तिसृभिः। चतसृभिः। ऋतः इति किम्? तिसृचतस्रोः प्रतिपत्त्यर्थम्, अन्यथा हि तदपवादः त्रिचतुरोरेव अयम् आदेशो विज्ञायेत।

लघु-सिद्धान्त-कौमुदी

अचि र ऋतः २२६, ७।२।१००

तिसृ चतसृ एतयोरृकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः। तिसृभ्यः। तिसृभ्यः। आमि नुट्॥

न्यासः

अचि र ऋतः। , ७।२।१००

किमर्थं पुनरचि रादेश उच्यते, न यणादेशेन सिद्धत्वात्()? इत्यत आह--"पूर्वसवर्ण" इत्यादि। असति ह्येतस्मिन्? सूत्रे शसि "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति पूर्वसवर्णः स्यात्(), "ङसिङसोश्च" ६।१।१०६ "ऋत उत्()" ६।१।१०७ इत्युत्त्वञ्च, सर्वनामस्थाने ङौ च "ऋतो ङिसर्वनामस्थानयोः" ७।३।११० गुणः। तस्मादेतेषामपवादोऽयं रेफादेश

आरभ्यते। ननु युक्तः पूर्वसवर्णस्योत्त्वस्य चेहायमपवादो रेफादेशः, गुणस्य त्वयुक्तः; यस्मात्(), "मध्येपवादाः पूर्वान्? विधीन्? बाधन्ते नोत्तरान्()" (व्या।प।१०) इति? अत आह--"परमपि" इत्यादि। गुणस्यावकाशः--कत्र्तारौ, हत्र्तारौ, कत्र्तरीति; रेफस्यावकाशः--तिस्लः पश्येति, तिरुआस्तिष्ठन्तीति; प्रियतिरिउआ निधेहीति। अत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन रेफो भवन्? परमपि ङिसर्वनामस्थानगुणं बाधते। "ऋत इति किम्()" इति। एवं मन्यते--तिसृचतसृशब्दावहानुवर्त्तिष्येते। तौ च ऋकारान्तावेवेत्यलोऽन्त्यपरिभाषया [१।१।५१] ऋत एव भविष्यति। तिसृचतस्लोः प्रतिपत्त्यर्थम्()" इति। तिसृचतस--इत्येतयोरच्यपि परतस्त्रिचतुरोः स्थाने प्रतिपत्तिः=प्राप्तिर्यथा स्यादित्येवमर्थं "ऋतः" इत्युच्यम्()। "अन्यथा हि" इत्यादि। यदि "ऋतः" इति नोच्येत, तदा तयोरेव तिसृचतरुआओरयमपवादो विज्ञायेत, ततश्चाजादौ तौ न स्याताम्()॥

बाल-मनोरमा

अचि र ऋतः २९७, ७।२।१००

अचि र ऋतः। पूर्वसूत्रात्तिसृचतसृ इत्यनुवर्तते। तच्चेह लुप्तषष्ठीकमाश्रीयते। तदाह-तिसृ इत्यादिना। ननु "इको यणची"त्येव सिद्धमित्यत आह-गुणदीर्घोत्त्वानामपवाद इति। "ऋतो ङी"ति गुणस्य, "प्रथमयो"रिति पूर्वसवर्णदीर्घस्य, "ऋत उ"दित्युत्त्वस्य च रत्वमपवाद इत्यर्थः। तिरुआ इति। जश्शसोः रूपम्। तत्र जसि "ऋतो ङी"ति गुणस्य रत्वमपवादः। शसि तु "प्रथमयोः" इति पूर्वसवर्णदीर्घस्य रत्वमपवादः। आमीति। तिसृ-आम् इति स्थिते नुटं बाधित्वा "अचि र ऋतः" इति रत्वे तिरुआआमिति प्राप्ते "नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेने"ति रत्वं बाधित्वा नुडित्यर्थः।

तत्त्व-बोधिनी

अचि र ऋतः २५९, ७।२।१००

गुणदीर्घोत्वानामिति। तिस्रस्तिष्ठन्ती त्यत्र "ऋतो ङी"ति गुणस्य रत्वमंपवादः। "तिरुआः पश्ये"त्यत्र तु "प्रथमयो"रिति पूर्वसवर्णदीर्घस्यापवादः। "प्रियतिरुआ आगतः""प्रियतिरुआः स्व"मित्यत्र "ऋत उ"दित्युत्त्वस्येति विवेकः। यद्यपि मध्ये।()पवादन्यायेन दीर्घोत्त्वयोरेव रत्वमपवादः स्यान्न तु "ऋतो ङी"ति गुणस्य, तथापि बाध्यसमान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वमेव हि बाध्यत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

जराया जरसन्यतरस्याम् ७।२।१०१

जरा इत्येतस्य जरसित्ययम् आदेशो भवति अन्यत्रस्याम् अजादौ विभक्तौ परतः। जरसा दन्ताः शीर्यन्ते, जरया दन्ताः शीर्यन्ते। जरसे त्वा परिदद्युः, जरायै त्वा परिदद्युः। अचि इत्येव, जराभ्याम्। जराभिः। नुमो विधानात् जरसादेशो भवति विप्रतिषेधेन। अतिजरांसि ब्राह्मणकुलानि। इह अतिजरसं ब्राह्मणकुलं पश्य इति लुग् न भवति, आनुपूर्व्या सिद्धत्वत्। अतिजर अम् इति स्थिते लुक्, अम्भावः, जरस्भावः इति त्रीणि कार्याणि युगपत् प्राप्नुवन्ति। तत्र लुक् तावदपवादत्वादम्भावेन बाध्यते, अम्भावो ऽपि परत्वाज् जरसादेशेन। न च पुनर् लुक्शास्त्रं प्रवर्तते, भ्रष्टावसरत्वात्, इति एवम् एव भवति अतिजरसं ब्राह्मणकुलं पश्य इति। प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति, अतिजरैः इति च भवितव्यम् इति गोनर्दीयमतेन। किं कारणम्? सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति। अन्ये तु अनित्यत्वातस्याः परिभाषायाः अतिजरसं ब्राह्मणकुलं तिष्ठति, अतिजरसैः इत्येवं भवितव्यम् इति मन्यन्ते।

लघु-सिद्धान्त-कौमुदी

जराया जरसन्यतरस्याम् १६१, ७।२।१०१

अजादौ विभक्तौ। (प।) पदाङ्गाधिकारे तस्य च तदन्तस्य च। (प।) निर्दिश्यमानस्यादेशा भवन्ति। (प।) एकदेशविकृतमनन्यवत्, इति जरशब्दस्य जरस्। निर्जरसौ। निर्जरस इत्यादि। पक्षे हलादौ च रामवत्॥ विश्वपाः॥

न्यासः

जराया जरसन्यतरस्याम्?। , ७।२।१०१

"नुमो विधानाज्जरसदेशो भवति विप्रतषेधेन" इति। नुमोऽवकाशः--त्रपूणि जतूनि; जरसावेशस्यावकाशः--जरसौ; अतिजरांसि ब्राआह्नणकुलानीतयत्रोभयप्रसह्गे विप्रतिषेधेन परो जरसादेशो भवति। यदि हि पूर्वं नुम्? स्यात्(), नुमा व्यवहितत्वाज्जरसादेशो न लभ्यते, तथापि विहितविशेषणपाश्रयणेन लभ्यते। एवमपि "निर्दिश्यमानस्यादेशा भवन्ति" (व्या।प।१०६) इति जराशब्दस्यादेशे कृते सकारत्? परो नुम्? श्रूयेत। ["श्रूयते" मुद्रित पाठः] अथापि समुस्कस्यादेशः स्यात्()? एवमपि कृतकार्यत्वान्नुम्शास्त्रस्य पुनरप्रवृत्तेरादेशे कृते पुनर्नम्न स्यात्(), तथानिष्टं रूपं प्रसज्येत। अथेहातिजरसं ब्राआह्नणकुलं पश्येति जरसादेशे कृते "स्वमोर्नपुंसकात्()" (७।१।२३) इति सुक्कस्मान्न भवति? इत्यत आह--"इह" इत्यादि। जरामतिक्रान्तमिति प्रादिसमासः, "ह्यस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्यस्वः, द्वितीयैकवचनमम्? इति स्थित एकदेशविकृतस्यानन्यत्वात्()(व्या।पा।१६)कृतेऽपि ह्यस्वत्वे लुक्(), अम्भावः, जरस्भावः--इत्येतानि त्रीणि कार्यामि युगपत्? प्राप्नुवन्ति, तत्र लुगपवादत्वात्? "अतोऽम्()"७।१।२४ इत्यम्भावेन बाध्यते, अम्भावोऽपि परत्वाज्जरसादेशेन। अथ कृते जरसादेशे लुक्? पुनः कस्मान्न भवति? इत्यत आह--"पुनर्लुक्शास्त्रम्()" इत्यादि। न च लुक्शास्त्रं पुनः प्रवत्र्तते; भ्रष्टावसरत्वात्(), तृतीयाबहुवचने किमतजरैब्राआह्नणकुलैरित्येवं भवितव्यम्(); आहोसविदतिजरसम्(), अतिजरसैरित्येवम्()? इत्यत आह--"अतिजरसम्()" इत्यादि। "गोनर्द्दीयमतेन" इति। तथा हि भाष्ये उक्तम्()--"गोदर्दीय आह--"इषटमेषैतत्? संगृहीतं भवतीति--अतिजरमतिजरैतिति भवितव्यम्()" इति। का पुनरस्य युक्तिः? इत्यत आह--"सन्निपातलक्षण" इत्यादि। यद्यम्भावः, ऐस्भावश्च जरसादेशस्य निमित्तमात्रं स्यात्(), अकारान्तताऽङ्गस्य ताभ्यां विहता स्यात्()। एतच्चायुक्तम्(); तस्मन्निपाते हि तावभिनिर्वृत्तौ नोत्सहेते सां विहन्तुम्()। "अन्ये" इति। सूत्रकारमतानुसारिणः। कस्मात्? पुनस्त एवं मन्यन्ते? इत्यत आह--"अनित्यत्वादस्याः" इत्यादि। अनित्यत्वं पुनरस्याः--"अतो भिस ऐस्()" ७।१।९ इत्यत्र प्रतिपादितम्()॥

बाल-मनोरमा

जराया अरसन्यतरस्याम् २२५, ७।२।१०१

अस्य निर्जरशब्दस्य विशेषं दर्शयितुमाह--जरायाः। "अष्टन आ विभक्तौ" इत्यतो "विभक्ता"वित्यनुवृत्तम्, "अचि र ऋतः" इत्यतोऽनुवृत्तेन "अची"त्यनेन विशेष्यते। "यस्मिन् विधि"रिति तदादिविधिः। तदाह--जराशब्दस्येत्यादिना। ननु जराशब्दस्य विधीयमानो जरसादेशः कथं निर्जरशब्दस्य भवेदित्यत आह--पदेति। पदाधिकारे अङ्गाधिकारे च यस्य यद्विहितं तत्तस्य, तदन्तस्य च भवतीत्यर्थः। जरसादेशश्चाऽयमङ्गाधिकारस्थत्वाज्जराशब्दस्य, तदन्तस्य च भवति, जरसावित्यादौ तु व्यपदेशिवद्भावेन तदन्तत्वं बोध्यम्। यद्यपि "जराया" इत्यस्याऽङ्गविशेषणत्वादेव तदन्तविधिः सिद्धः, तथापि "येन विधि"रित्यस्य प्रपञ्चभूतेयं परिभाषेत्यदोषः। अत एव पदमङ्गं च विशेष्यं, विशेषणेन च तदन्तविधि"रिति प्रौढमनोरमायामुक्तम्। ननु जराशब्दान्तस्य विधीयमानो जरसादेशो निर्जरशब्दस्य कृत्स्नस्य स्यात्, अनेकाल्त्वादित्याक्षिप्य समाधत्ते--अनोकाल्त्वादिति।

निर्दिश्यमानस्येति। प्रत्यक्षनिर्दिशय्मानस्यैवेत्यर्थः। अनया परिभाषया जराशब्दस्यैव जरस्। जराशब्द एव ह्त्र स्थानी प्रत्यक्षनिर्दिष्टः। जराशब्दान्तस्य तु निर्द्देशस्तदन्तविधिलभ्यत्वादानुमानिक इति भावः। इयञ्च परिभाषा "षष्ठी स्थानेयोगे"ति सूत्रसिद्धार्थकथनपरेति तत्रैव भाष्ये स्पष्टम्। ननु निर्जरशब्दस्य जराशब्दान्तत्वाऽभावात्कथमिह जरसादेश इत्यत आह--एकदेशेति। "छिन्नेऽपि पुच्छे ()आआ ()औव, न चा()आओ नच गर्दभ" इति न्यायादिति भावः। निर्जरसा। निर्जरस इति। प्रथमाद्वितीययोर्द्विवचने बहुवचने च रूपम्। अमि "निर्जरस"मित्युदाहार्यम्। ननु तृतीयैकवचने पञ्चम्येकवचने च्, निर्जर-आ, निर्जर-अस् इति स्थिते इनाऽऽतोः कृतयोर्जरसादेशे निर्जरसिन निर्जरसादिति प्राप्तं, तथा चतुर्थ्येकवचने षष्ठ()एकवचने च-निर्जर ए, निर्जर अस्-इति स्थिते, यादेशे, स्यादेशे च सत्यजादिविभक्त्यभावाज्जरसादेशाऽभावे निर्जराय निर्जरस्येति प्राप्तं, तत्राह--इनादीनिति। इन-य-आत्-स्येत्यादेशान्-नुटं च परत्वाद्बाधित्वा जरसादेशः। ततस्च अदन्तत्वाऽभावादिनादयो न भवतीत्यर्थः।

निर्जरसेति। तृतीयैकवचनम्। निर्जसरे इति--चतुर्थ्येकवचनम्। निर्जरस इति--पञ्चम्येकवचने षष्ठ()एकवचने च रूपम्। निर्जरसोः, निर्जरसां, निर्जरसीत्यप्युदाहार्यम्। पक्ष इति। जरसादेशाऽभावपक्ष इत्यर्थः। हलादौ चेति। भिस ऐसादेशे "निर्जरै" रित्येव रूपं न तु जरसादेशे निर्जरसैरिति। अदन्तमङ्गमाश्रित्य प्रवृत्तस्यैसः संनिपातपरिभाषया तद्विघातकजरसादेशनिमित्तत्वाऽयोगात्।

अत वृत्तिकुदुत्प्रेक्षितं मतान्तरं दूषयितुमनुवदति--वृत्तिकृता त्वित्यादिना। "पूर्वविप्रतिषेधेनेत्यादि केचि"दित्यन्तो वृत्तिग्रन्थः। वृत्तिकृता तु इनातोः कृतयोर्जरसि कृते निर्जरसादिति रूपं, न तु निर्जरस इति केचिदित्युक्तमित्यन्वयः। ननु इनादेशमादादेशं च परत्वाद्बाधित्वा जरसि कृते।ऽदन्तत्वाऽभावात्कथमिनातौ स्यातामित्यत आह--पूर्वविप्रतिषेधेनेति। विप्रतिषेधे पूर्वस्य प्रवृत्तिर्यत्र बोध्यते तत् पूर्वप्रतिषेधं="विप्रतिषेधे परं कार्य"मिति सूत्रं तेनेत्यर्थः। तत्र परशब्दस्येष्टवाचित्वमाश्रित्य विप्रतिषेधे क्वचित्पूर्वस्य कार्यस्य प्रवृत्त्यभ्युपगमेनेति यावत्॥ नन्विनातोः कृतयोः कतं जरसादेशः, संनिपातपरिभाषाविरोधादित्यत आह--संनिपातपरिभाषाया इति। तथेति। भिस ऐसादेशे जरसादेशाऽभावपक्षे निर्जरैरिति रूपम्। संनिपातपरिभाषाया अन्त्यत्वाज्जरसि कृते तु निर्जरसैरिति रूपान्तरमुक्तमित्यर्थः। तदनुसारिभिति। निर्जरसिनेत्यादि रूपं यैरुक्तं तदनुसारिभिरित्यर्थः। निर्जरस्येत्येवेति। पूर्वविप्रतिषेधेन स्यादेशे कृतेऽजादिविभक्त्यभावान्न जरस्। इनातोः पूर्वविप्रतिषेधे आश्रिते सति एकसूत्रोपात्तत्वात्स्यादेशविषयेऽपि पूर्वविप्रतिषेध आश्रयितुमुचितः। अतो निर्जरस्येत्येकमेव रूपं,न तु "निर्जरस" इत्यपीति भावः।

एतच्चेति। वृत्तिकृदुत्प्रेक्षितं केषांचिन्मतं, तदनुसारिमतं चेत्यर्थः। भाष्यविरुद्धमिति। "टाङसिङसामिनात्स्याः" इत्यत्र नादेश एव विधेयः, इकारोच्चारणं मास्तु। तथा अदादेश एव विधेयो नतु दीर्घ आदिति। रामेणेत्यत्र एकारस्तु योगविभागाद्भवति, तथाहि "बहुवचने झल्येत्" "ओसि च" "आङि चापः" "संबुद्धौ चे"ति सूत्रक्रमः। तत्र आङीति योगविभागः क्रियते। अत एकारः स्यादङि। रामेण। "आपः संबुद्धौ चे"ति सूत्रक्रमः। तत्र आङीति योगविभागः क्रियते। अत एकारः स्यादाङि। रामेण। "आपः संबुद्धौ चे"त्यन्यो योगः। एकारः स्यात्सम्बुद्धौ आङि ओसि च। हे रमे रमया रमयोः। ङसेरदादेशे अकारोच्चारणसामथ्र्यात् "अतो गुणे" इति न पररूपमित्यादि टाङसिङसामिति सूत्रे भाष्ये स्थितम्। निर्जरसिन निर्जरसादिति रूपसत्त्वे एतद्भाष्याऽसङ्गति स्पष्टैव। अत्र इकारस्य आकारस्य च श्रवणाय इनादेशे इकारोच्चारणावश्यकत्वात्। किंच "गोनर्दीयस्त्वाह-अतिजरैरित्येव भवितव्यं संनिपातपरिभाषया" इति "जराया जरसन्यतरस्या"मिति सूत्रे भाष्ये स्थितम्। निर्जरसैरिति रूपाभ्युपगमे #एतदसङ्गतिः स्पष्टैव। अतः पूर्वविप्रतिषेधेनेत्यादि मतान्तरमशुद्धमित्यर्थः।

तत्त्व-बोधिनी

जराया जरसन्यतरस्याम् १९०, ७|२|१०१

जराया जर| "अष्टन आ विभक्तौ" इत्यतो "विभक्ता"वित्यनुवर्त्त्य "अचि र ऋतः" इत्यतो|ऽनुवृत्तेनाचीत्यनेन विशेष्यते, विशेषणेनेह तदादिविधिः, "यस्मिन् विधिस्तदादावल्ग्रहणे" इत्यस्य तदन्तविधेरपवादत्वादित्याशयेनाह--अजादौ विभक्ताविति| अजादौ किम्? जराभ्याम्| जराभिः| विभक्ताविति किम्()| जराया इदं जारम्| न च "जराया असु"ङेवाऽस्त्विति वाच्यम्| जराशब्दात् "तत्करोती"ति णिचि "णाविष्टवत्--" इति टिलोपे ततः क्विपि णिलोपे चैकदेशविकृतस्यानन्यतया "ज"रित्यस्य जराशब्दत्वादसुङि सति "ङिच्चे"त्यन्त्यस्य प्रवृत्त्या "जसौ" इति रूपापत्तेः| इष्यते त्वत्रापि "जरसौ" "जरस" इति| न च णिलोपस्य स्थानिवद्भावाद्विभक्तिपरत्वाऽभावेन "जरसा"वित्यादि न सिध्यतीति वाच्यम्, "क्वौ लुप्तं न स्थानिव"दिति निषेधात्| यद्यपि "क्वौ लुप्तं न स्थानिव"दिति क्वाचित्कं, तथापीह तदाश्रयणे "जर"सिति गुर्वादेशकरणमेव मानमित्यवधेयम्|

पदाङ्गाधिकार इति| परिभाषेयं "येन विधि"रित्यस्य प्रपञ्चभूता| अतएव मनोरमायां पदमङ्गं च विशेष्यं, विशेषणेन च तदन्तविधि"रित्युक्तम्| "विशेष्य"मिति तु प्रायेणेति बोध्यम्| तेन "अल्लोपोऽनः" इति सूत्रे "अङ्गावयवो योऽ"निति वक्ष्यमाणग्रन्थः [स्वरसतः] सङ्गच्छते| अत्र नव्याः--"नन्वाकारे "तस्य तदुत्तरपदस्य चे"ति प्रचुरः पाठः| "तदन्तस्य चे"ति पाठे तु बहुच्पूर्वकेषु न प्रवर्तन्त इत्याशयेन फलितार्थकथनपरतया "तदुत्तरपदस्य चे"ति पठितं न त्विदमपूर्वं वचन"मिति| सोपसर्गस्य सर्वस्य स्थाने जरसादेशमाशङ्क्याह|

निर्दिश्येति| ननु तदन्तविधिनाऽपि जराशब्दान्तं यदङ्गं तत्रैव निर्दिश्यमानजराशब्दे जरसादेशेन भवितव्यं, न त्वन्यत्रेत्यत आह-एकदेशविकृतस्येति| पदाधिकारेऽपि तदन्तविधाबुदाहरणं--तदन्तस्यापि रुत्वरत्वे "दीर्घाहा निदाघ" इति वक्ष्यति| "अलुगुत्तरपदे" इत्ययमुत्तरपदाधिकारोऽपि पदाधिकारग्रहणेन गृह्णते| तत्फलं तु तत्रैव स्फुटीकरिष्यति| पक्षे इति| जरसादेशभावे|

तदनुसारिभिरिति| ये तु "निर्जरसिने"त्यादि व्याचक्षते तन्मतानुसारिभिरित्यर्थः| निर्जरस्येत्येवेति| पूर्वविप्रतिषेधेन स्यादेशे कृते जरसादेशो न प्रवर्तत इत्येकमेव रूपमिति तेषामाशयः| अतएव "वीतजन्मजरसः परं शुचिब्राह्णणः पद"मिति भारविप्रयोगमसमञ्जसं मत्वा "वीतजन्मरजसः" इति पठनीयमिति तैरुक्तम्| एतच्चेति| भाष्यकृताहि "टाङ्सी"ति सूत्रे इनातौ प्रत्याख्याय, नादेशमदादेशं च विधाय, नादेशे परे एत्वम् "आङि चे"ति योगं विभज्य साधितम्| तथा च निर्जरसिनः" निर्जरसा"दित्येतद्भाष्यविरुद्धमिति स्पष्टमेव| न च नादेशे कृते हलि लोपप्रवृत्त्या "अनेने"त्येतन्न सिध्यतीति शङ्क्यम्, नशब्दे परतो विशिष्याऽनादेशविधानात्| तथाहि "अनाप्यकः; इत्यत्र "अन्-नापि" इति पदच्छेदः| नपुंसकत्वात्सोर्लुकि नलोपः| "नापी"ति समाहारद्वन्द्वात्सप्तम्येकवचनम्| न च ङसेरदादेशे कृते पररूपं स्यादित्यपि शङ्क्यम् , अकारोच्चारणसामर्थ्याद्दीर्घसंभवात्| तथा "जराया जरसन्यतरस्या"मित्यस्मिन्नेव सूत्रे भाष्ये उक्तम्-"अतिजरैरिति भवितव्यं संनिपातपरिभाषये"ति| ततश्च "निर्जरसै"रित्यपि बाष्यविरुद्धमेव| एतेन "अतो भिसः" इति सूत्रे "ए"सिति वक्तव्ये ऐस्करणं "निर्जरसै"रिति रूपार्थमिति केषांचिद्व्याख्यानं प्रामादिकमिति स्पष्टमेव|

---

सूत्रम्

काशिका-वृत्तिः

त्यदादीनाम् अः ७|२|१०२

त्यदित्येवम् आदीनाम् अकारादेशो भवति विभक्तौ परतः| त्यद् स्यः, त्यौ, त्ये| तद् सः, तौ, ते| यद् यः, यौ, ये| एतद्

एषः, एतौ, एते। इदम् अयम्, इमौ, इमे। अदस् असौ, अमू, अमी। द्वि द्वौ। द्वाभ्याम्। द्विपर्यन्तानां त्यदादीनामत्वमिष्यते। इह न भवति, भवत् भवान्। संज्ञोपसर्जनीभूताः त्यदादयः पाठादेव पर्युदस्ताः इति इह न भवति, त्यद्, त्यदौ, त्यदः। अतित्यद्, अतित्यदौ, अतित्यदः। त्यदादिप्रधाने तु शब्दे भवत्येव, परमसः परमतौ, पर्मते।

लघु-सिद्धान्त-कौमुदी

त्यदादीनामः १९३, ७।२।१०२

एषामकारो विभक्तौ। (द्विपर्य्यन्तानामेवेष्टिः)। द्वौ २। द्वाभ्याम् ३। द्वयोः २॥ पाति लोकमिति पपीः सूर्यः॥

न्यासः

त्यदादीनामः। , ७।२।१०२

"स्यः" इति। "तदोः सः सावनन्त्ययोः" ७।२।१०६ इति तकारस्य सकारः। "त्यः" इति। "जसः सी" ७।१।१७ इति शीभावः, "आद्गुणः" ६।१।८४। "इमौ" इति। "दश्च" ७।२।१०९ इति मत्वम्()। "असौ" इति। "अदस औ सुलोपश्च" ७।२।१०७। "अमू" इति। "अदसोऽसेर्दादु दो मः" ८।२।८०) इति मत्वोत्वे, "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घः। "अमी" इति। "एत ईद्बहुवचने" ८।२।८१ इतीत्वम्()। अथेह कस्मान्न भवति--भवानिति? अत आह--"द्विपर्यन्तानाम्()" इत्यादि। एतच्च "शेषे लोपः" ७।२।९० इत्यत्र प्राग्वि ज्ञापितम्()। "भवान्()" इति। "उगिदचाम्()" ७।१।७० इति नुम्(), "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। अथेह संज्ञोपसर्जनीभूतानामपि कस्मान्न भवति त्याददौ--त्यद्? अतिस्यद्(), अतित्यदः? इत्यत आह--"संज्ञोपसरजनीभूताः" इत्यादि। सर्वाद्यन्तःपातिनस्त्यदादयः। सर्वादयश्चासंज्ञीभूता अनुपसर्जनीभूतश्च पठ()न्ते। तथा हि--तेषां "सर्वनामानि" (१।१।२७) इति महत्याः संज्ञायाः करणस्यैतत्? प्रयोजनम्()--सर्वेषां नामभूतानां संज्ञा यथा स्यात्()। ये तु कस्याचिदेव संज्ञाभूता उपसर्जनीभूताश्च, तेषां मा भूदिति। तस्मात्? संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ताः, त्यदादिभ्यो बहिष्कृता इत्यर्थः। तस्मादत्यदादित्वात्? तेषां न भवति त्यदादिकार्यम्। "त्यदादिप्रधाने शब्दे तु भवत्येव" इति। त्यदादयः प्रधाना यस्मिन्? शब्दे स त्यदादिप्रधानः, तत्र भवत्येवात्वम्(); तस्य पाठापदर्युदस्तत्वात्()। अपर्युदस्तत्वं तु सर्वनामसंज्ञायस्तदन्तविधेः सर्वादेरभ्युपगमात्()॥

बाल-मनोरमा

त्यदादीनामः २६३, ७।२।१०२

द्वि-औ इति स्थिते-। त्यदादीनामः। "अष्टन आ विभक्ता"वित्यतो विभक्तावित्यनुवर्तते। एषामिति। त्यदादीनामित्यर्थः। त्यदादिर्येषामिति विग्रहः। "अन्तादेशः" इत्यलोऽन्त्यपरिभाषालभ्यः। विभक्तौ किम्?। तत्फलम्। "स्वमोर्नपुंसका"दिति लुकि अत्वं न।

द्विपर्यन्तानामिति। सर्वादिगणे ये त्यदादयः पठितास्तेषामिह द्विपर्यन्तानामेव ग्रहणे भाष्यकारस्येच्छत्यर्थः। द्विशब्दस्य द्विवचनेषु परतोऽत्वे कृते रामशब्दवद्रूपाणीत्याह-द्वावित्यादि। द्विपर्यन्तानामिति किमिति। युष्मदस्मदोरात्वयवत्वयलोपैर्बाधात्, किमः कादेशविधानाच्च तेषां त्यदादिष्वन्तर्भावेऽपि न दोष इति प्रश्नः। भवान् भवन्ताविति। भवत्-सिति स्थिते "उगिदचा"मिति नुमि हल्ङ्यादिलोपे संयोगान्तलोपे "अत्वसन्तस्य चे"ति दीर्घे "भवा"निति रूपम्। द्विपर्यन्ताना"मित्यभावे तु भवत्-सिति स्थिते तकारस्य?त्वे कृते "अतो गुणे" इति पररूपे "उगिदचा मिति नुमि "सर्वनामस्थाने" इति दीर्घे सुलोपे नलोपे "भवा" इति स्यात्। तथा"भवत्-औ" इति स्थिते पूर्ववत्तकारस्याऽत्वे नुमि दीर्घे च "भवाना"विति स्यादिति भावः। अथ यदुक्तं "संज्ञो पसर्जनीभूतानां सर्वादिगणकार्यमन्तर्गणकार्यं च न भवती"ति तत्स्मारयति--संज्ञायामित्यादिना। द्विर्नामेति। "नामे"त्यव्ययं प्रसिद्धौ। "द्वि"रिति प्रसिद्धः कश्चिदित्यर्थः। अत्र

च संज्ञाभूतस्य द्विशब्दस्य एकद्विबहुवचनानि सन्ति, एकद्वित्र्यादिष्वपि द्विसंज्ञकत्वसंभवादित्यभिप्रेत्य आह--द्विः द्वी द्वय इति। अतिद्विरिति। "अत्यादयः" इति समासः। परमद्वाविति। कर्मधारयोऽयम्। संज्ञोपसर्जनत्वाभावादिहाऽत्वं भवत्येव। आङ्गत्वेन पदाङ्गाधिकारपरिभाषया तदन्तग्रहणादिति भावः। उडूनि नक्षत्राणीव लोमानि यस्य स उडुलोमा। तस्यापत्यमौडुलोभिः। "बाह्वादिभ्यश्चे"ति इञ्। "नस्तद्धिते" इति टिलोपः। आदिवृद्धि अस्य एकवचनद्विवचनयोः सर्वत्र हरिवद्रूपम्। तदाह औडुलोमिरौड्डलोमी इति। बहुवचने तूडुलोमा इति।

ननु तथा रूपं कथं, बाह्वादिगणस्थत्वेन इञः प्रसङ्गादित्यत आह--लोम्नोऽपत्येषु। लोमन्शब्दाद्बहुष्वपत्येषु विवक्षितेष्वकारः प्रत्ययो वक्तव्य इत्यर्थः। बाह्वादीञ इति। बाह्वादिगणाद्विहितस्य इञोऽपवाद इत्यर्थः। "उडुलोमन्-अ" इति स्थिते "नस्तद्धिते" इति टिलोपः। ञ्णित्वाऽभावात्कित्त्वाऽभावाच्च नादिवृद्धिः। "उडुलोम"शब्दोऽकारान्तः। तस्य सर्वत्र बहुवचनेषु रामवद्रूपमिति भावः। इति इदन्तप्रकरणम्। अथेदानीमीकारान्ता निरूप्यन्ते। तत्र वातप्रमीशब्दो द्विधा। "माङ्भाने"इति धातोरीप्रत्ययान्तः क्विबन्तश्च। तत्र प्रथमं व्युत्पादयति--वातप्रमीरित्यादिना। "कि"दित्यनन्तरं "निपात्यते" इति शेषः। वातमिति वातमित्युपपदे कर्तरि माङ्धातोरीप्रत्यये कित्त्वात् "आतो लोप इटि चे"त्यल्लोपे "उपपदमतिङि"ति समासे तस्मात्सुबुत्पत्तौ "वातप्रमी"रिति प्रथमैकवचनम्। अङ्यन्तत्वान्न सुलोपः। एतदर्थमेव हल्ङ्यादिसूत्रे सत्यपि दीर्घग्रहणे ङीब्ग्रहणमिति भावः। दीर्घादिति। वातप्रमी-औ इति स्थिते "दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घे निषिद्धे "इको यणची"ति यणि वातप्रम्याविति रूपमित्यर्थः। हे वातप्रमीरिति। दीर्घान्तत्वात्। "ह्रस्वस्य गुणः" इति न। अमीति। वातप्रमी--अम् इति स्थिते "अमि पूर्वः" इति पूर्वरूपे "वातप्रमी"मिति रूपमित्यर्थः। "एरनेकाचः" इति यण्तु न, ईप्रत्ययान्तस्य धातुत्वाऽभावात्। वातप्रमीनिति। पूर्वसवर्णदीर्घे "तस्माच्छसः" इति नत्वम्। वातप्रम्येति। अघित्वात् "आङो नाऽस्त्रिया" मिति नाभावस्याऽभावे यण्। वातप्रम्ये इति अघित्वान्हेङसिङस्सु "घेर्ङिती"ति गुणो न। वातप्रम्यामिति। आमि यणादेशे रूपम्। दीर्घत्वान्न नुट्, "ह्रस्वनद्यापः" इति ह्रस्वग्रहणादिति भावः। ङौ त्विति। "वातप्रमी--इ" इति स्थिते परत्वाद्यणादेशं बाधित्वा सवर्णदीर्घे "वातप्रमी"ति रूपम्। अघित्वादिदुदन्तत्वाऽभावाच्च "अच्च घे"रिति, "औ"दिति च न भवति। वस्तुतस्तु "ईदूतौ च सप्तम्यर्थे" इति सूत्रे "सप्तम्यन्तमीदूदन्तं लोके नास्ति। अतः "सोमो गौरी अधिश्रितः" "मामकी तनू" इति वेद एव तदुदाहरण"मिति भाष्यविरोधाद्वातप्रमी इति सप्तम्यन्तस्य लोके प्रयोगो नेत्यनुमीयत इति शब्देन्दुशेखरे स्पष्टम्।

यापोरिति। "पापोः किद्द्वोषेचे"त्यौणादिकसूत्रम्। याधातोः, पाधातोश्च ईप्रत्ययः स्यात्, सच कित्। प्रकृतिभूतयोस्तयोर्द्वित्वं चेत्यर्थः। कित्त्वादातो लोप इटि चेत्याल्लोपः। अभ्यासह्रस्वः। क्विबन्तवातेति। "माङ् माने" इत्यस्मात्कर्तरि क्विपि "घुमास्थे"तीत्त्वे "वातप्रमी"शब्द इति केचित्। तन्न, "ईत्त्वमवकारादौ" इति वार्तिकविरोधात्। "मीञ् हिंसाया"मिति मीधातोः क्विपि तु "वातप्रमी"शब्दो निर्बाधः। वक्ष्यमाणो यणिति। अमिपूर्वरूपं, शसि पूर्वसवर्णदीर्घः, ङौ सवर्णदीर्घं च बाधित्वा परत्वात् "एरनेकाचः" इति यण्, ईकारान्तधातुत्वादिति भावः। प्रधीवदिति। प्रकृष्टं ध्यायतीति प्रधीः। "ध्यायतेः संप्रसारणं चे"ति क्विपि यकारस्य संप्रसारणमिकारः। "संप्रसारणाच्चे"ति पूर्वरूपम्। "हलः" इति दीर्घः। अस्य च ईकारान्तधातुत्वादमि ङसि ङौ च "एरनेकाचः" इति यणादेशः। बह्व्य इति। "बह्वादिभ्यश्चे"ति ङीष्। श्रेयस्य इति। अतिप्रशस्ता इत्यर्थः। "द्विवचनविभज्योपपदे" इति ईयसुन्। "प्रशस्यस्य श्रः" इति श्रः। "उगितश्चे"ति ङीप्। बहुश्रेयसीति। "स्त्रियाः पुंव"दिति पुंवत्त्वम्। "गोस्त्रियोरि"ति ह्रस्ववस्तु न, "ईयसोबह#उव्रीहेर्नेति वाच्य"मिति तन्निषेधात्। बहुश्रेयसी-सिति स्थिते प्रक्रियां दर्शयति--दीर्घङ्यन्तत्वादिति। ननु श्रेयसीशब्द एव ङ्यन्तः, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्। नच "स्त्रीप्रत्यये न तदादिनियमः" इति निषेधान्नेह तदादिनियम इति वाच्यम्, अनुपसर्जन एव स्त्रीप्रत्यये हि न तदादिनियम इति प्रतिषेधः। इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येवेति चेत्, अस्तु श्रेयसीशब्दस्यैव ङ्यन्तत्वम्, नतु बहुश्रेयसीशब्दस्य। तथापि हल्ङ्यादिलोपोऽत्र निर्बाधः। सोङ्यन्तात्

श्रेयसीशब्दात्परत्वस्याऽनपायात्। नहि"हल्ङ्याब्भ्य" इति विहितविशेषणं, प्रमाणाऽभावात्। या सा केत्यादावव्याप्तेश्च, तत्र सोष्टाबन्ताद्विहितत्वाऽभावात्। नहि"हल्ङ्याब्भ्य"इति विहितविशेषणं, प्रमाणाऽभावात्। या सा केत्यादावव्याप्तेश्च, तत्र सोष्टाबन्ताद्विहितत्वाऽभावात्, यत्त्किमिति हलन्तेभ्यः सुबुत्पत्तौ त्यदाद्यत्वे सत्येव टापः प्रवृत्तेः। नच तत्र हलन्ताद्विहितत्वेन निर्वाहः शङ्क्यः, यः सः क इत्यादावतिव्याप्तेः, कर्ता सखेत्यादावव्याप्तेश्चेत्यास्तां तावत्। "दीर्घाज्झसि चे"ति पूर्वसवर्णदीर्घनिषेधे यणि बहुश्रेयस्यौ। बह#उश्रेयस्यः।

तत्त्व-बोधिनी

त्यदादिनामः २२५, ७।२।१०२

त्यदादिनामः। "अष्टन आ विभक्तौ"इत्यतोऽनुवर्तनादाह-विभक्ताविति किम्()। तद्।यद्। सोर्लुका लुप्तत्वात्प्रत्ययलक्षणं न।

द्विपर्यन्तानां किमिति। युष्मदस्मच्छब्दयोरिष्ट()आभावेऽपि दोषो नास्ति, आत्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधनात्। तथा किंशब्देऽपि न दोषः, किमः कादेशस्य विशिष्टस्य विधानादिति प्रश्नः। भवानिति। भवत्-सु इति स्थिते तकारस्थाने अत्वे कृते "अतो गुणे" इति पररूपे "उगिदचाम्----"इति नुमि सति "सर्वनामस्थाने"इत्यनेन दीर्घे सुलोपे नलोपे च सति "भवा"इति रूपं स्यादिति भावः। भवन्ताविति। पूर्ववत्तकारस्याऽत्वे पररूपे नुमि दीर्घे "भवाना"विति रूपं स्यादिति भावः। उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः।

इञोऽपवाद इति। तथा च बहुत्वे अकारान्तोऽयमुडुलोमशब्दः, स औडुलोमिशब्दादन्य एव, तस्य च इकारान्तेषु व्युत्पादनं प्रासङ्गिकमिति बोध्यम्। इति इदन्ताः। किदिति। तेन "आतो लोप इटि चे" त्यालोप इति भावः। क्विबन्तवातप्रमीति। माङ्धातोः क्विपि "ईत्त्वमवकारादौ"इति निषेधादीत्त्वं नेति शङ्क्यायां मीनातेरेव क्विब्बोध्यः। यद्वा ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तात्कर्तरि क्विबोध्यः। श्रेयस्य इति। "प्रशस्यश्रः"इतीयसुनि श्रादेशः। "उगितश्चे"ङीप्। बहुश्रेयसीति। "स्त्रियाः पुंवत्--"इति पुंवद्भावः। "ईयसश्चे"ति न कप्। नाऽप्युसर्जनह्रस्वः, "ईयसो बहुव्रीहिर्ने"ति निषेधात्।

---

सूत्रम्

काशिका-वृत्तिः

किमः कः ७।२।१०३

किम् इत्येतस्य कः इत्ययम् आदेशो भवति विभक्तौ परतः। कः, कौ, के। साकच्कस्य अप्ययम् आदेशो भवति, तेन अकार एव किमो न विधीयते किमो ऽत् ५।३।१२ इति।

लघु-सिद्धान्त-कौमुदी

किमः कः २७३, ७।२।१०३

किमः कः स्याद्विभक्तौ। कः। कौ। के इत्यादि। शेषं सर्ववत्॥

न्यासः

किमः कः। , ७।२।१०३

अथाकार एव किमः कस्मान्न विधीयते, एवं हि लघु सूत्रं भवति, अकारो हि प्रकृतोऽनुवत्र्तत इति, तत्रैवं सुत्रं कत्र्तव्यम्(),

"किमोऽत्()" इति? अत आह--"साकच्कस्यादेशो भवति" इति। तेनाकारः किमो न विधीयते" इति। अयं ह्यादेशः "तन्मध्यपतितस्तद्ग्रहणेन गृह्नते" (व्या।पा।२१) अकचश्च किम्ग्रहणेन ग्रहणात्? साकच्कस्यापि भवति; तेनाकार एव किमः स्थाने न विधीयते। यदि हि विधीयेत, तदाऽनकच्कस्यादेशे कृते यश्चादकचि कक इत्यनिष्टं रूपं स्यादित्यभिप्रायः। कथं पुनः किमोऽत्त्वे कृते क इति भवति, यावता मकारस्यात्त्वे कृते सतकारस्य यणादेशे कृते क्य इति स्यात्()? नैष दोष; इकारस्यापि ह्नत्त्वं विधीयते, यदिह पूर्वसूत्रात्? "अः" इत्यनुवत्र्तते। नालोऽन्त्यस्यात्वं भवति यत्? पुनरिहाकारग्रहणं क्रियते। तेन "अनन्त्यविकारेऽन्त्यसदेशस्य" (व्या।प।६३) इतीकारसय, तत्र द्वयोरकारयोः परपूर्वत्वे क इति सिद्धम्()। क्यचित्? पाठः "इमः" इति। तत्रायं पूर्वपक्षः--अथाकार एवेमः कस्मान्न विधीयते? लघु ह्वेवं सूत्रं भवति; प्रकृतस्याकारस्येहानुवृत्तेः, तत्रैवं तावत्? सूत्रं कत्र्तव्यम्()--"इमः" इति। न चैवं सति "तिम ष्टिम आद्रीभावे" (धा।पा।११२३,११२४) इत्यस्य क्विबन्तस्य तीन्(), तिमौ, तिम इत्यत्रापि प्रसज्येत, त्यदादिभिरिमो विशेषणात्()--त्यदादीनां य इमिति? न; "दश्च" ७।२।१०९ इति मत्वे कृत इदम इमौ इम इत्यत्रापि प्रसज्येत। लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) नापीम इत्युचयमाने "अलोऽन्त्यस्य" १।१।५१ इति प्रसज्येतेत्याशङ्कनीयम्(), यस्मान्नानर्थकेऽलोन्त्यविधिः (व्या।प।६२)? इत्यत आह--"साकच्कस्यापि" इत्यादि। पूर्व एव पाठः साधुतरः। इतरत्र तु पाठ उत्तरसूत्रेण क्वादेश इमः कृते द्वयोः ककारयोश्च संयुक्तयोः श्रवणं प्रसज्येत, तच्चानिष्टम्()॥

बाल-मनोरमा

किमः कः , ७।२।१०३

तस्य विशेषमाह-किमः कः। विभक्ताविति। "अष्टन आ विभक्तौ" इत्यतस्तदनुवृत्तेरिति भावः। ननु "इमः" इत्येव सूत्र्यतां। "त्यदादीनाम" इत्यनुवृत्तौ त्यदादीनामिमोऽकारः स्यादित्यर्थलाभात्। "द्विपर्यन्ताना"मिति तु न सम्बध्यते, द्विपर्यन्तेषु त्यदादिषु इमोऽसम्भवात्। एवं च किंशब्दे "इम्" इत्यस्य स्थाने अकारे सति "क" इत्यदन्तत्वं सिध्यति। नच "अलोऽन्त्यस्ये"ति किंशब्दे इमोमकारस्यैव अकारः स्यात्। ततश्च इकारस्य यणि क्य इति स्यादिति वाच्यम्, "नानर्थकेऽलोन्त्यविधिः" इति निषेधेन अलोऽन्त्यपरिभाषाया अप्रवृत्तौ इमः कृत्स्नस्य स्थाने अकारे सति "क" इत्यस्य सिद्धेरित्यत आह-अकच्सहितस्येति। त्यदादेरिमोऽकारविधौ "अव्ययसर्वनाम्ना"मिति किंशब्दस्य अकचि कृते ककिमिति स्थिते इमोऽकारे कृते "कक" इति रूपं स्यात्। "किमः कः" इत्युक्तौ तु साकच्कस्यापि किंशब्दस्य "तन्मध्यपतितस्तद्ग्रहणेन गृह्नते" इति न्यायेन किंशब्दत्वात्तस्य कादेशे सति "क" इत्येव रूपं सिध्यतीति भावः। अत्र त्यदादीनामित्यनुवर्त्त्य वचनविपरिणामेन त्यदादेः किमः क इति व्याख्येयम्। अतः सर्वाद्यन्तर्गणकार्यत्वादुपसर्जनत्वे कादेशो न भवति। एवं च विभक्त्युत्पत्तौ कादेशे सर्वशब्दवद्रूपाणीत्याह-कः कावित्यादि। मारुते वेधसि ब्राध्ने पुंसि कः, कं शिरोऽम्बुनोः" इत्यमरः। तत्र कशब्दस्य किंशब्दत्वाऽभावान्न सर्वनामत्वम्। वेधसि तु किंशब्दोऽप्यस्ति। तस्य सर्वनामत्वमस्ति नास्तीति पक्षद्वयं "कस्येत्" इति सूत्रे भाष्ये स्थितम्। कायं हविरित्यत्र यदि किमः कादेशो, यदि वा शब्दान्तरम्, उभयथापि "कस्मा अनुब्राऊही"ति भवितव्यम्। सर्वस्य सर्वनामसंज्ञा। सर्वश्च प्रजापतिः। प्रजापतिश्च कः। अपर आह--उभयथापि कायानुब्राऊहीत्येव संज्ञैषा तत्रभवत इति।

तत्त्व-बोधिनी

किमः कः ३०२, ७।२।१०३

किमः कः। "कायतोर्डिमि"रिति डिमिप्रत्यये निष्पन्नः किंशब्दः। विभक्ताविति। "अष्टन आ विभक्ता"वित्यतोऽनुवर्तत इति बावः। नन्वत्र"इमः"इत्येव सूत्र्यताम्स तेन तिमष्टिमादीनां क्विबन्तानामतिप्रसङ्गवारणाय त्यदादीनामित्यनुवर्त्त्य "त्यदादीनामिमः अः स्या"दिति व्याख्यास्यते द्विशब्दात्प्रा()क्कशब्दस्य पाठः कर्तव्यः। "नानार्थके"इति

निषेधादारम्भसामर्थ्याच्चालोन्त्यविधिर्न भविष्यति, त()त्क कादेशेनेत्यत आह--अकच्सहितस्यापीति। इमोऽकारविधौ तु साकच्कस्य "कक"इति रूपं स्यादिति भावः। नन्वेवं गणकार्यत्वाऽभावादुपसर्जनत्वेऽपि स्यात्, मैवम्, "त्यदादीना"मित्यनुवर्त्य"त्यदादीनां किम"इति व्याख्यानात्।

---

सूत्रम्

काशिका-वृत्तिः

कु तिहोः ७।२।१०४

तकारादौ हकारादौ च विभक्तौ परतः किम् इत्येतस्य कु इत्ययम् आदेशो भवति। कुतः। कुत्र। कुह। तिहोः इति इकारः उच्चारणार्थः।

लघु-सिद्धान्त-कौमुदी

कु तिहोः १२०३, ७।२।१०४

किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। कुतः, कस्मात्॥

न्यासः

कु तिहोः। , ७।२।१०४

पूर्वस्यायमपवादः। तिशब्दस्य विभक्तेरभावादिकार उच्चारणार्थः। तकारस्यैव प्रयोजनम्()। तत्र "यस्मिन्विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) तकारादेशो विभक्तौ कार्यं विधीयते। अत आह--"तकारादौ" इत्यादि। "कुतः" इति। "पञ्चम्यास्तसिल्()" ५।३।७। "कुत्र" इति। "किमोऽत्()" ५।३।१२ इत्यत्र परसूत्राद्वाग्रहणं पुरस्तादपकृष्यते। तेन पक्षे "सप्तम्यास्त्रल्()" ५।३।१० इति त्रल्यपि भवति। "कुह" इति। "वा ह च च्छन्दसि" ५।३।१३ इति हः। एषाञ्च तसिलदीनां "प्राग्दिशो विभक्तिः" ५।३।१ इति विभक्तिसंज्ञा॥

बाल-मनोरमा

कु तिहोः १९२९, ७।२।१०४

कुतिहोः। "कु" इति लुप्तप्रथमाकम्। "किमः कः" इत्यस्मात् "किमः" इत्यनुवर्तते। "अष्टन आ" इत्यतो "विभक्ता"विति। तिश्च ह् च तयोरिति द्वन्द्वः। इकार उच्चारणार्थः। ताभ्यां विभक्तिर्विशेष्यते। तदादिविधिः। तदाह--किमः कुः स्यादित्यादिना। कुत इति। किंशब्दात् पञ्चम्यन्तात्तसिल्। सुब्लुक्। किमः कुभावः। "तसिलादयः प्राक्पाशपः" इत्युक्तेरव्ययत्वम्। वेत्यनुवृत्तेः फलमाह--कस्मादिति। "तिहो"रित्युक्तेरत्र न कुभावः। सर्वनाम्न उदाहरति--यत इति। यच्छब्दात्पञ्चम्यन्तात्सुब्लुक्, तसिलो विभक्तित्वात्तस्मिन्परे त्यदाद्यत्वं पररूपम्। एवं तच्छब्दात्तत इति रूपम्। पक्षे तस्मादिति भवति। अत इति। एतच्छब्दात्पञ्चन्तात्तसिल्। सुब्लुक्। एतदोऽन्। सर्वादेशः। नलोपः। पक्षे "एतस्मा"दिति भवति। इत इति। इदंशब्दात्पञ्चम्यन्तात्तसिल्। सुब्लुक्। "इदम इश्"। पक्षे अस्मादिति भवति। अमुत इति। अदस्शब्दात्पञ्चम्यन्तात्तसिल्, उत्वमत्वे च। पक्षे "अमुष्मा"दिति भवति। बहुत इति। पक्षे "बहुभ्य" इति भवति। द्व्यादेस्त्विति। सर्वनामत्वात्प्राप्तस्तसिल्-द्व्यादिपर्युदासान्नेत्यर्थः।

तत्त्व-बोधिनी

कु तिहोः १४७३, ७।२।१०४

कु तिहोः। तकारादिकार उच्चारणार्थः। वेत्यनुवृत्तेः फलं दर्शयेति---कस्मादिति। यतस्तत इति। "कृत्तद्धिते"ति

प्रातिपदिकत्वात्सुपो लुकि त्यादाद्यत्वम्। पक्षे--यस्मात्। तस्मात्। इति इति। "इदम इश्"। पक्षे अस्मात्। अत इति। एतदोऽनादेशः। पक्षे एतस्मात्। अमुत इति। "अदसोसे"रिति मुत्वम्। पक्षे। अमुष्मात्। बहुत इति। पक्षे---बहुभ्यः। द्वाभ्यामिति। सर्वनामत्वात्प्राप्तोऽपि तसिल् "अद्व्यादिभ्यः"इति पर्युदासान्न। तसेरिति। "प्रतियोगे पञ्चम्यास्तसिः;, "अपादाने चाहीयरुहो"रिति विहितस्य तसेस्तसिलादेश इत्यर्थः। विभक्त्यर्थ चेति। अन्यथा परत्वात्तसौ कृते तस्याऽप्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वांऽबावे "यतोऽवगच्छती"त्यादि न सिध्येदिति भावः। ननु तसेग्र्रामत इत्यादौ चरितार्थत्वात्किमादिभ्यस्तसिलो बाध्यत्वेन तसिर्नप्रवर्तते, तस्य निरलकाशत्वात्। तथा च "तसेश्चे"ति विधानं व्यर्थमिति वाच्यं, "कुतोऽवहीयते" "कुतोऽवरोहती"त्यादौ तसिलः सावकाशत्वात्।

सर्वोभयार्थाभ्यामेव।सर्वोभयार्थाभ्यामेवेति। अत्र चाभिधानस्वाभाव्यमेव हेतुः। तेनेह नभवति---परिषिञ्चति। अभिषिञ्चति। उपर्यर्थे परिः। अभिस्त्वाभिमुख्ये। नन्वोदनं परिषिञ्चतीत्यत्र सर्वतोभावो परिरिति तसिलभावः कथमिति चेन्मैवम्। वावचनाऽनुवृत्या तु तत्सिद्धेः।

---

सूत्रम्

काशिका-वृत्तिः

क्व अति ७।२।१०५

अति तियेतस्यां विभक्तौ परतः किम् इत्येतस्य क्व इत्ययम् आदेशो भवति। क्व गमिष्यसि। क्व भोक्ष्यते। आदेशान्तरवचनम् ओर्गुण निवृत्त्यर्थम्। किमो ड्वतिति प्रत्ययान्तरं न विधीयते, साकच्कार्थम्।

लघु-सिद्धान्त-कौमुदी

क्वाति १२१०, ७।२।१०५

किमः क्वादेशः स्यादति। क्व। कुत्र॥

न्यासः

क्वाति।, ७।२।१०५

कादेशस्यायमपवादः। "क्व" इति। "किमोऽत्()" ५।३।१२ इत्यत्()। अथ किमर्थमादेशान्तरं विधीयते, न प्रकृतः कु एव विधीयताम्(), तत्रापि यणादेशो क्वेति सिध्यत्येव; योगविभागश्च न कत्र्तव्यो भवति, "कुतिहात्सु" इत्येको योगः करिष्यते? इत्यत आह--"आदेशान्तरवचनम्()" इत्यादि। कुशब्दे ह्यादेशे सति यणादेशं बाधित्वा "ओर्गुणः" ६।४।१४६ इति गुणः स्यात्()। तस्मात्? तन्निवृत्त्यर्थं क्वादेश इत्युच्यते। एवमपि प्रत्ययविधावेव "किमो ड्वत्()" इति ड्वत्प्रत्ययो विधेयः, तत्रापि टिलोपे कृते क्वेति रूपं सिध्यत्येव। पदसंज्ञायां सत्यां "झलां जशोऽन्ते" (७।२।३९) इति ककारस्य गकारः प्राप्नोतीत्यतो न सिध्यतीति चेत्()? नैतदस्ति; "असिद्धं बहिरङ्गमन्तरङ्गे (व्या।प।४२) इति टिलोपस्यासिद्धत्वाज्जश्त्वं न भवति। टिलोपो हि डिति विधीयते, तेन डितमपेक्षमाणो बहिरङ्गो भवति। जश्त्वं तु पदान्ते विधीयमानं नापरनिमित्तमपेक्षत इत्यन्तरङ्गमित्यत आह--"किमो ड्वदिति प्रत्ययान्तरम्()" इत्यादि। यदि डवदिति प्रत्ययान्तरं विधीयेत, साकच्कस्य क्वेति रूपं न सिध्यति। असचि हि कृते ककिमिति स्थिते ड्वत्प्रत्यये परतष्टिलोपे सति कक्वेत्यनिष्टं रूपं स्यत्()। अत्प्रत्यये तु क्वादेशो विधीयमानोऽनेकास्त्वात्? साकच्कस्य सर्वादेश एव भवतीति न भवत्यनिष्टरूपप्रसङ्घः। तस्मात्? साकच्कार्थं ड्वदिति न प्रत्ययान्तरं विधीयते। साकच्कोऽर्थः प्रयोजनं यस्य तत्? साकच्कार्थम्()॥

बाल-मनोरमा

क्वाऽति १९३५, ७।२।१०५

क्वाऽति। क्व--अतीति छेदः। "क्वे"ति लुप्तप्रथमाकं। "किमः कः" इत्यतः किम इत्यनुवर्तते। तदाह--किमः क्वेति। किंशब्दात्सप्तम्यन्तादत्प्रत्ययः, तकार इत्, किमः क्वादेश इति भावः। कुत्रेति। अत्प्रत्ययाऽभावपक्षे त्रलि "कु तिहो"रिति कुभावे रूपम्। केचित्तु "किमोऽ"दित्यत्र उत्तरसूत्राद्वाग्रहणाऽपकर्षे प्रमाणाऽभावात्त्रलं बाधित्वा नित्य एव अत्प्रत्ययः, "कुत्रे"ति त्वपशब्द एवेत्याहुः।

तत्त्व-बोधिनी

क्वाऽति १४७६, ७।२।१०५

कुत्रेति। यद्यपि भागवृत्तिकारो बाषायं त्रल् नेच्छति, तथापि बहु प्रयोगदर्शनादिह स्वीकृतम्। तथा च श्रीहर्षः---"नान्यत्र कुत्रापि च साभिलाषम्"। अमरस्चाह---"साहचर्याच्च कुत्रचि"दिति।

---

सूत्रम्

काशिका-वृत्तिः

तदोः सः सावनन्त्ययोः ७।२।१०६

त्यदादीनां तकारदकारयोः अनन्त्ययोः सकारादेशो भवति सौ परतः। त्यद् स्यः। तद् सः। एतद् एषः। अदस् असौ। अनन्त्ययोः इति किम्? हे स। सा।

लघु-सिद्धान्त-कौमुदी

तदोः सः सावनन्त्ययोः ३१२, ७।२।१०६

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ। स्यः। त्यौ। त्ये॥ सः। तौ। ते॥ यः। यौ। ये॥ एषः। एतौ। एते॥

न्यासः

तदीः सः सावनन्त्ययोः। , ७।२।१०६

"सै" इति। किमिदं प्रथमैकवचनस्य ग्रहणम्()? उत सप्तमीबहुवचनस्य? आहोस्विदुभयोरपि? तत्र प्रथमैकवचनस्य ग्रहणम्()। तथा हि--द्वयोरपि सामान्येन ग्रहणं न भवति। यदि स्यात्(), सीत्र्येवं ब्राऊयात्()। एवं हि सकारादौ कार्यं विधीयमानं तयोद्र्वयोरपि भविष्यति। तस्मादन्यतरस्य ग्रहणम्()। तथा हि--"स्यश्छन्दसि बहुलम्()" ६।१।१२९ "सोऽचि लोपे चेत्()" (६।१।१३४) इत्येवमादेर्निर्देशात्? प्रथमैकवचनस्यैव ग्रहण युक्तम्()। "हे स, सा" इति। हे शब्दो निपातसमुदायोऽवधारणार्थे वत्र्तते। ननु च त्यदाद्यत्वमत्र बाधकं भविष्यति? नैतदस्ति; अनवकाशा हि विधयो बधका भवन्ति। सावकाशं चात्वम्()। कोवकाशः? द्विशब्दः-द्वाविति। सत्यपि तस्मिन्नवकाशे यद्यपि सकरस्याप्यनन्त्योवकाशः, तथाप्यन्तस्य परत्वात्? सत्वं स्यात्()। ततश्च हे स इत्यत्र "एङ ह्रस्वात्? सम्बुद्धेः" ६।१।६७ इति सोर्लोपो न स्यात्()। तत्र हल्ङ्यादिलोपे कृते रुत्वविसर्जनीययोः कृतयोरनिष्टं रूपं स्यात्()। सेत्यत्र तु "अजाद्यतष्टाप्()" ४।१।४ इति स्त्रियां टाब्न स्यात्()। तस्मात्? "अनन्त्ययोः" इति वक्तव्यम्()॥

बाल-मनोरमा

तदोः सः सावनन्त्ययोः , ७।२।१०६

तदोः सः सौ। त्यदादीनामिति। "त्यदादीनामः" इत्यतस्तदनुवृत्तेरिति भावः। तकारदकारयोरिति। सूत्रे तश्च द्चेति

विग्रहः। तकारादकार उच्चारणार्थ इति भावः। सः स्यादिति। आदेशेऽपि अकार उच्चारणार्थः। त्यौ इति। सावित्युक्तेर्न सत्वमिति भावः। त्ये इति। सर्वनामत्वाज्जसः शीभाव इति भावः। स्मायादीमप्युपलक्षणमिदम्। त्यं त्यौ त्यान्। त्येन त्याभ्यां त्यैः। त्यस्मै त्याभ्यां त्येभ्यः २। त्यस्मात्। त्ययोः २। त्येषां। त्यस्मिन् त्येषु। एवं तद्शब्दः। परमस इति। अत्वादीनामाङ्गत्वात्तदन्तेऽपि प्रवृत्तेरिति भावः। ननु युष्मच्छब्दस्यापि त्यदादित्वात्तस्य प्रथमैकवचने त्वमित्यत्र "तदोः सः सौ" इति सत्वं कुतो न स्यादित्यत आह--द्विपर्यन्तेति। "त्यदादीनामः" इत्यत्र पठितं "द्विपर्यन्तानामेवेष्यते" इति वार्तिकं "तदोः सः सौ" इत्यत्राप्यनुवर्तते एवेत्यर्थः। ततः किमित्यत आह--नेहेति। इहशब्दविवक्षितमाह--त्वमिति। युष्मच्छब्दस्य द्विशब्दादुपर्येव सर्वादिगणे पाठादिति भावः। ननु "त्वाहौ सौ" इति तकारोच्चारणसामर्थ्यादेव त्वमित्यत्र सत्वं न भवति, अन्यथा "स्वाहौ सौ" इत्येव ब्राऊयात्। अतो द्विपर्यन्तानामित्यनुवृत्तिरिह व्यर्थेत्याशङ्क्य निराकरोति - न चेति। तकारोच्चारणसामर्थ्यादिह सत्वं नेति न वाच्यमित्यन्वयः। अतित्वमिति। "द्विपर्यन्ताना"मित्यननुवृत्तौ "त्व"मित्यत्रापि सत्वं स्यात्। न च "त्वाहौ सौ" इति तकारोच्चारणानर्थक्यं, त्वामतिक्रान्तोऽतित्वमिति गौणे युष्मच्छब्दस्य त्वादेशे त्वाहाविति तकारोच्चारणस्य लब्धप्रयोजनत्वादित्यर्थः। नच अतित्वमित्यत्रापि सत्वप्रवृत्तेर्दुर्वारत्वात्त्वाहाविति तकारोच्चारणानर्थक्यं दुर्वारमिति वाच्यम्, सत्वस्य सर्वाद्यन्तर्गणकार्यत्वेन गौणे तस्याऽप्रवृत्तेः। अत एवाह-संज्ञायामिति। त्यदिति। कस्यचिन्नामेदम्। अतित्यदिति। त्यमतिक्रान्त इति विग्रहः। य इति। यच्छब्दस्य त्यदाद्यत्वे पररूपत्वे सर्वशब्दवद्रूपाणि। तकाराऽभावान्न सत्वम्। एष इति। एतच्छब्दस्य त्यदाद्यत्वे पररूपत्वे सर्ववदेव रूपाणि। सौ तु तकारस्य सत्वमिति विशेषः। अन्वादेशे त्विति। "द्वितीयाटौस्स्वेनः" इत्यस्य एतच्छब्देऽपि प्रवृत्तेरिति भावः।

तत्त्व-बोधिनी

तदोः सः सावनन्त्ययोः ३४१, ७।२।१०६

तदोः सः सावनन्त्ययोः। "त्यदादीनामः" इत्यतोऽनुवर्तनादाह--त्यदादीनामिति। त्यदादीनामिति किम्()। आतपः। तारकः। तदोरिति किम्()। यः। अनन्त्ययोः किम्()। हे स।अत्र परत्वात्त्यदाद्यत्वं बाधित्वा दस्य सकारे सति हल्ड()आदिना सुलोपे रुत्वविसर्गौ स्याताम्, तथाच "हे सः"इति रूपं सयात्।किञ्च स्त्रियां "स्"ति रूपं न स्यात्। यदा त्वन्त्यस्य सकारे जातेऽपि पुनःप्रसङ्गविज्ञानात्त्यदाद्यत्वं सकारस्य स्वीक्रियते, तदा न किंचिदनिष्टमित्यनन्त्ययोरिति त्यक्तुंशक्यम्। यदि तु "तदोः सः सा"--वित्यस्यानन्तरम् "अदस औ सुलोपश्चे"त्यत्र "अदसः"इति योगं विभज्याऽदस एव दकारस्य सत्वं नान्यस्य दस्ये"ति नियमः [स्वी]क्रियते, तदा तु "सकृद्गता "विति न्यायेप्यनन्त्ययोरिति त्यक्तुं शक्यम्। न चैवं द्वावात्मन इच्छति "द्वीयति", ततः क्विपि "स्व"इति रूपं नस्यात्, किंतु "द्व"इति रूपं स्यादिति फले भेदान्नियमपक्षो न संभवतीति वाच्यं,--गौणे अत्वसत्वयोरसंभवे "द्वी"रित्यस्यैव रूपस्य न्याय्यत्वादिति मनोरमायामुक्तत्वात्। सौ किम्()। तौ ते तं तौ तान्। ननु "तोः सः सौ"इत्येव सूत्रमस्तु, किमनेन "तदो"रिति पृथग्ग्रहणेनेति चेन्मैवम्, "अनेष"इत्यत्र नकारस्य सत्वप्रसङ्गात्। "नलोपो नञः""तस्मान्नडचि"इत्यजाद्युत्तरपदस्य "एष"इत्यस्य नुङ्विधानेन त्यदादितवर्गत्वान्नतारस्य। न च सत्वे सति नुङ्विधानं व्यर्थमिति वाच्यम्, "अन()आ"इत्यादौ सावकाशत्वात्। तथाच "तदौ"रित्येव सूत्रं युक्तम्। ननु "तस्मान्नुडची"ति सूत्रे "तस्मादिति पदं परित्यज्य लाङवात् "नुगची"त्येवोच्यतां, तथाच अजाद्युत्तरपदे परे नञ एव नुगागम इत्यनेष इत्यत्रनोक्तदोष इति चेत्ैवं तर्हि "नलोपः प्रातिपदिकान्तस्ये"ति सूत्रे पञ्चम्यन्तमावश्यकमेव टिदनुबन्धश्चेति। "तदो"रिति सूत्रे तोरिति वक्तुमशक्यम्। "अने,"इत्यत्रोक्तदोषात्। अत्र कैयटः--"तो"--रित्युक्तेऽप्यनेष इत्यत्र सत्वं न भवेत्, नुडागमस्य पदद्वयाश्रितत्वेन बहिरङ्गत्वादन्तरङ्सत्वद्दष्ट()आ असिद्धत्वादिति। उत्रपदाधिकारस्थाकार्ये बहिरङ्गपरिभाषाऽभावस्य "इच एकाचोऽम्--"इत्यत्र भाष्ये उक्तत्वादयं कैयटश्चिन्त्यः। गौणेचरितार्थत्वादिति। गौणे हि अन्तर्गणकार्यत्वात्सत्वं न

प्रवर्तते। "स्वाहौ सा"वित्युक्ते तु "अतिस्व"मिति स्यादिति भावः। अत्वसत्वे नेति। तयोः सर्वाद्यन्तर्गणकार्यत्वादिति भावः।अतित्यदिति। त्यमतिक्रान्तोऽतित्यद्।

---

सूत्रम्

काशिका-वृत्तिः

अदस औ सुलोपश् च ७।२।१०७

अदसः सौ परतः सकारस्य औकारादेशो भवति सोश्च लोपो भवति। असौ। औत्वप्रतिषेधः साकच्काद् वा वक्तव्यः सादुत्वं च। यदा च औत्वप्रतिषेधः तदा सकारादुत्तरस्य उत्वं भवति। असुकः। असुकौ। उत्तरपदभूतानां त्यदादीनाम् अकृतसन्धीनाम् आदेशा वक्तव्याः। परमाहम्। परमायम्। परमानेन। अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते। ह्रस्वाल् लुप्येत सम्बुद्धिर् न हलः प्रकृतं हि तत्। आप एत्वं भवेत् तस्मिन् न झलीत्यनुवर्तनात्। प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते।

लघु-सिद्धान्त-कौमुदी

अदस औ सुलोपश्च ३५७, ७।२।१०७

अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च। तदोरिति सः। असौ। त्यदाद्यत्वम्। वृद्धिः॥

न्यासः

अदस औ सुलोपश्च। , ७।२।१०७

"सौ" इत्येव। त्यदाद्यत्वापवादोऽदस औत्वं विधीयते। "असौ" इति। पूर्वसूत्रेण दकारस्य सकारः, "वृद्धिरेचि" ६।१।८५ इति वृद्धिः। "यदा च" इत्यादि। "सादुत्वञ्च" इति। चकारः सन्नियोगार्थः। तेन यस्मिन्? पक्षे औत्वप्रतिषेधः, तस्मिन्नेव पक्षे सादुत्तरस्याकारस्योत्त्वं विधीयते। "उत्तरपदमभूतानाम्()" इत्यादि। इह परमाहम्(), परमानेनेति "त्वाहौ सौ" ७।२।९४, "इदोऽय्? पुंसि" ७।२।१११, "अनाप्यकः" (७।२।११२) इति समासाद्? या विभक्तिः, तस्यामेत आदेशः भवन्तो बहिरङ्गा भवन्ति; प्रागेव तु विभक्त्युत्पत्तेः। अकः सवर्णे दीर्घत्वं प्राप्नुवदन्तरङ्गम्(), तस्मात्? पूर्वं तदेव स्यात्(), पश्चादादेशाः स्युः; ततश्च परमहम्(), परमयम्(), परमनेनेत्यनिष्टानि रूपाणि रूपणि स्युः। तस्मादुत्तपदभूतानामकृतसवरसन्धीनां त्यदीदीनामादेशा वक्तव्याः=व्याख्येया इत्यर्थः। आचार्यप्रवृत्तिर्ज्ञापयति--पूर्वोत्तरयोः पदयोस्तावत्? कार्यं प्रथमं भवति, पश्चादेकादेश ति। यदयं "नेन्द्रस्य परस्य" ७।३।२२ इति प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्()? इन्द्रे द्वावचौ, तत्रैकः--"यस्येति च" ६।४।१४८ इति लोपेनापह्रियते, अपरः--एकादेशेनेत्यनच्क इन्द्रशब्दः सम्पन्नः, तत्र को वृद्धिप्रसङ्गः! पश्यति त्वाचार्यः--पुर्वोत्तरयोः पदयोस्तावत् कार्यं भवति, पश्चादेकादेश इति; यतः "नेन्द्रस्य परस्य" ७।३।२२ इति वृद्धिप्रतिषेधं शास्ति। तदेतस्माज्ज्ञापकादकृतस्वरसन्धीनामुत्तरपदभूतानां त्यदादीनामादेशा भवन्तीति। "अवसः सोर्भवेदौत्वम्()" इत्यादि। अवधारणमत्र द्रष्टव्यम्()। अदःशब्दात्? परस्य सोरेवौत्वं भवेत्()। भवतु, मा वा भूत्()। अदश्शब्दस्य त्यदाद्यत्वे कृते "वृद्धिरेचि" ६।१।८५ इति वृद्धौ कृतायामसाविति सिध्यत्येव, तत्? किमर्थं सुलोपे विधीयते? निरर्थकतवान्नैवं सोर्लोपो विधेयः, औत्वमेव विधेयम्()। अत्र दोषमाह--"ह्यस्वाल्लुप्येत सम्बुद्धिः" इति। हेऽसावित्यत्र "एङ ह्यस्वात्? सम्बुद्धेः" ६।१।६७ इति सोर्लोपः प्रसज्येत, ततश्च सम्बुद्धौ हेऽसाविति न सिध्येत्()? "न हलः प्रकृतं हि तत्()" इति। नायं देषः; हलः सम्बुद्धेर्लोप औत्वे कृतेऽण्? भवति, न हलिति, तत्कुतो लोपप्रसङ्गस्तत्र! तर्हि हल्ग्रहणं कत्र्तव्यम्()? न कत्र्तव्यम्(); यस्मात्? प्रकृतं तत्()। "हल्ङ्याब्भ्यः सुतिस्यपृक्तं हल्()" ६।१।६६ इत्यतो हल्ग्रहणं प्रकृतमेव। यद्यपि तत्र प्रथमानिर्दिष्टम्(), षष्ठीनिर्देशेन चेहार्थः, तथापि "एङ्? ह्यस्वात्()" ६।१।६७ इति पञ्चमी

हलित्यस्याः प्रथमायाः षष्ठीत्वं प्रकलप्यिष्यति; "तस्मादित्युत्तरस्य" १।१।६६ इति वचनात्()। अथं तर्हि दोषः--"आप एत्वं भवेत्? तस्मिन्()" इत्यादि। तस्मिन्नोकारे परतस्त्यदाद्यत्वे कृते स्त्रियां टापि--हे असौ ब्राआह्मणीत्यतर "सम्बुद्धौ च" ७।३।१०६ इत्येत्वं स्यात्(), यथा हि हे खट्वे इत्यत्र? "न ज्ञलीत्यनुवत्र्तनात्()" इति। नायं दोषः; "सम्बुद्धो च" ७।३।१०६ इत्यत्र "बहुवचने झल्येत्()" ७।३।१०३ इत्यनुवत्र्तते, तेन झलादौ सम्बुद्धावेत्येन भवितव्यम्()। च चौकारे कृते झलादिः सम्बुद्धिर्भवति, किं तर्हि? अजादिः। "प्रत्ययस्थाच्च कादित्त्वं शीभावश्च प्रसज्यते" ["प्रसज्येत"--प्रा। मुद्रितः पाठः] इति। पूर्वकश्चकारः तह्रर्थे, इतरः समुच्चये। अयं तर्हि दोषः--असकौ ब्राआह्मणीत्यत्राज्ञाताद्यर्थविवक्षायामकचि कृते टापि च "प्रत्ययस्थात्? कात्()" (७।३।४४) इत्यादिना कात्? पूर्वस्येत्वं प्राप्नोति? असौ ब्राआह्मणी इत्यत्र "औङ आपः" ७।१।१८ इत्यनेन शीभावोऽदसस्त्ववयव ओकारे कृते टाबेव नास्तीति नैतद्दोषद्वयं सम्भवति। शीभावदोषश्च पाक्षिको वेदितव्यः, यस्मिन्? पक्षे सामान्यग्रहणार्थो ङकारः प्रत्ययस्यासज्यते। यदा तु पूर्वसूत्रनिर्देशस्तदा द्विवचनयोरेव शीभावः; तयोरेव पूर्वाचार्यैर्ङित्वस्य कृतत्वात्()। अन्यस्य प्राप्तिरेव नास्ति; आङित्त्वात्()॥

बाल-मनोरमा

अदस औ सुलोपश्च , ७।२।१०७

अदस्शब्दात्सौ त्यदाद्यत्वे प्राप्ते-अदस औ। "अदस इति षष्ठी। "औ" इत्यविभक्तिकनिर्देशः। "तदोः सः सौ" इत्यतः "सा वित्यनुवर्तते। तदाह--अदस इति। "अन्तादेश" इत्यलोन्त्यपरिभाषालभ्यम्। सकारस्य औत्त्वे कृते हलः परत्वाऽभावाद्धल्ङ्यादिलोपेऽप्राप्ते सुलोपविधिः। दस्य स इति। मुत्वापवाद इति भावः। असौ इति। अदस्स् इति स्थिते सकारस्य औत्त्वे, सुलोपे, दस्य सत्वे च रूपम्।

अत "अव्ययसर्वनाम्ना मित्यकचि अदकस्शब्दात्सो विशेषमाह--औत्वप्रतिषेध इति। "अदस औ सुलोपश्चे"त्यत्र अदस्()शब्देन तन्मध्यपतितन्यायेन अदकस्शब्दस्यापि ग्रहणादौत्वे प्राप्ते विकल्पेन तत्प्रतिषेदो वक्तव्यः। "तदोः सः सौ" इति दकारस्य सकारे कृते तस्मात्सकारात्परस्य अकारस्य उकारश्च वा वक्तव्य इत्यर्थः। ततश्च अदकस्स् इति स्थिते, औत्वाऽभावे, दसय् सत्वे सति, सकारातपरस्य अकारस्य उत्वे सति, त्यदाद्यत्वे, पररूपे, रुत्वे, विसर्गे असुक इति रूपम्। औत्वप्रतिषेधाभावपक्षे अदकस्स् इति स्थिते, सकारस्य औत्वे, सुलोपे, दस्य सत्वे, असकौ इति रूपं वक्ष्यति। तत्र औत्वप्रतिषेधाऽभावपक्षे औत्वे कृते सकारादकारस्य उत्वविकल्पः कुतो न स्यादित्यत आह--प्रतिषेधेति। "सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति न्यायादिति भावः। "अमुकः" "अमुकशर्मा" इत्यादि त्वसाध्वेवेत्याहुः। केचित्तु अदस्शब्दपर्यायोऽमुकशब्दोऽव्युत्पन्न इत्याहुः। अदस् औ इति स्थिते प्रक्रियां दर्शयति--त्यदाद्यत्वमिति। पररूपमपि बोध्यम्। मत्वोत्वे इति। "अदौ" इत्यत्र दात्परस्य औकारस्य दीर्घ ऊकारः, दस्य मत्वं चेत्यर्थः। जसि त्यदाद्यत्वं पररूपं च सिद्धवत्कृत्य आह--जसःशीति। आद्गुणे अदे इति स्थितम्।

तत्त्व-बोधिनी

अदस औ सुलोपश्च ३८९, ७।२।१०७

अदस औ सुलोपश्च। "अदस इति षष्ठी। "तदोः सः सौ इत्यतः सावित्यनुवर्तते, तदाह--औकारोऽन्तादेशः स्यात्सौ पर इति। नन्वदस इति पञ्चम्येवाऽस्तु ततः परस्य सोरेवौकारो विधीयतां, त्यदाद्यत्वेन असाविति रूपं सिध्यति किं सुलोपविधानेन()। न च स्वरे भेदः, उदात्तेन सहेकादेश औकारस्योदात्तत्वात्। मैवम्। "असकौ स्त्री"त्यत्र टापि "पत्र्ययस्था"दितीत्त्वपर्सङ्गात्। असुक इति। औत्वाऽभावे त्यदाद्यत्वे सादुत्वम्। स्त्रियां तु "असुकौ""असुका"इति। "अमुकी""असुकी"ति च प्रयोगऽसाधुरेव। एवममुकशर्मेत्यादिरपि। "अदकःशर्मे"त्यादेरेव न्याय्यत्वात्।

सूत्रम्

काशिका-वृत्तिः

इदमो मः ७।२।१०८

इदमः सौ परतः मकारो ऽन्तादेशो भवति। इयम्। अयम्। इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम्।

लघु-सिद्धान्त-कौमुदी

इदमो मः २७४, ७।२।१०८

सौ। त्यदाद्यत्वापवादः॥

न्यासः

इदमो मः। , ७।२।१०८

अलोऽन्त्यपरिभाषया १।१।५१ मकारस्यैवानेन मकारेण भवितव्यम्(), न च मकरसय मकारादेशे कृते विशेषोऽस्ति, तत्किमर्थं मकारस्य मकारः इत्युच्यते? --इत्येतच्चोद्यं निराकर्तुमाह--"मकारस्य" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

इदमो मः , ७।२।१०८

अथ इदंशब्दे विशेषमाह--इदमो मः। साविति। "तदोः सः सौ" इत्यतस्तदनुवृत्तेरिति भावः। "अलोऽन्त्यस्ये"त्यन्त्यस्य मस्य मः। ननु मस्य मविधिव्र्यर्थ इत्यत आह--त्यदाद्यत्वापवाद इति।

तत्त्व-बोधिनी

इदमो मः ३०३, ७।२।१०८

इदमो मः। "इन्दे कमिर्नलोपश्च"। इदम्। "तदोः सः सौ"इत्यतोऽनुवर्तनादाह---सौ पर इति।

---

सूत्रम्

काशिका-वृत्तिः

दश् च ७।२।१०९

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः। इमौ, इमे। इमम्, इमौ, इमान्।

लघु-सिद्धान्त-कौमुदी

दश्च २७७, ७।२।१०९

इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे। त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः॥

न्यासः

दश्च। , ७।२।१०९

"इदमः" इति वत्र्तते, "सौ" इति निवृत्तम्(); उत्तरसूत्रे पुनः "सौ" इति वचनात्()। तेनायं विभक्तिमात्रे दाकारस्य मकारो भवति॥

बाल-मनोरमा

दश्च , ७।२।१०९

दश्च। "इदमो मः" इत्यनुवर्तते। "द" इति षष्ठी। इदमो दकारस्येति। लभ्यते। "अष्टन आ विभक्तौ" इत्यतोऽतिव्यवहितमपि विभक्तावित्येतन्मण्डूकप्लुत्याऽनुवर्तते। "तदोः सः सौ" इत्यतः साविति तु संनिहितमपि नानुवर्तते, सौ इदमो दस्याऽभावात्, "यः सौ" इत्युत्तरसूत्रे सौग्रहणाच्च। तदाह-इदमो दस्येत्यादिना। तथाच इम-औ इति स्थिते रामवद्रूपाणीत्याह--इमावित्यादि। त्यदादेः संबोधनं नास्तीति। प्रचुरप्रयोगाऽदर्शनादिति भावः। नन्वेवं सति "तदोः सः सो" इति सूत्रे "हे स" इति भाष्यविरोध इत्यत आह-उत्सर्ग इति प्रायिकमित्यर्थः।

तत्त्व-बोधिनी

दश्च ३०५, ७।२।१०९

उत्सर्ग इति। तेन "तदोः सः सा"विति सूत्रे "अनन्त्ययोरिति किं हे स"इति भाष्यं, "भो अच्युत""भवन्नच्युते"त्यादि प्रयोदाश्च न विरुध्यन्त इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

यः सौ ७।२।११०

इदमो मकारस्य यकारादेशो भवति सौ परतः। इयम्। उत्तरसूत्रे पुंसि इति वचनात् स्त्रियामयं यकारः।

लघु-सिद्धान्त-कौमुदी

यः सौ ३६३, ७।२।११०

इदमो दस्य यः इयम्। त्यदाद्यत्वम्। पररूपत्वम्। टाप्। दश्चेति मः। इमे। इमाः। इमाम्। अनया। हलि लोपः। आभ्याम्। आभिः। अस्यै। अस्याः। अनयोः। आसाम्। अस्याम्। आसु॥ त्यदाद्यत्वम्। टाप्। स्या। त्ये। त्याः॥ एवं तद्, एतद्॥ वाक्, वाग्। वाचौ। वाग्भ्याम्। वाक्षु॥ अप्शब्दो नित्यं बहुवचनान्तः। असृन्निति दीर्घः। आपः। अपः॥

न्यासः

यः सौ। , ७।२।११०

उत्तरसूत्रे पुंसीति वचनात्? स्त्रियामयं यकारः। अथ नपंसके कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्(); नपुंसके हि "स्वमोर्नर्पुसकात्()" ७।१।२३ इति सोर्लुका भवितव्यम्()। अत्र सावुच्यमानः कथं त()स्मत्लुप्ते यकारः स्यात्(); प्रत्ययलक्षमेनेति चेत्()? न; "न लुमतङ्गस्य" १।१।६२ इति प्रत्ययलक्षणप्रतिधेधात्()। तस्माद्युक्तमुक्तम्()--"स्त्रियामयं यकारः" इति॥

बाल-मनोरमा

यः सौ , ७।२।११०

अथ इदम्शब्दस्य स्त्रीत्वे विशेषमाह-यः सौ। "इदमो मः" इत्यत "इदम" इत्यनुवर्तते, "दश्चे"त्यतो "द" इति च षष्ठ()न्तमनुवर्तते। तदाह--इदमो दस्येति। पुंसि तु नेदं प्रवर्तते, "इदोऽय्पुंसी"ति विशिष्य विधेः। नापि क्लीबे, तस्य सोर्लुका लुप्तत्वात्। ततश्च परिशेषात्स्तिरायमेवेदम्। इयमिति। इदम् स् इति स्थिते, दकारस्य यत्वे, इयम् स् इति स्थिते, त्यदाद्यत्वं बाधित्वा "इदमो मः" इति मकारस्य मकारे कृते, हल्ङ्यादिना सुलोप इति भावः। इदम्-औ इति स्थिते

प्रक्रियां दर्शयति--त्यदाद्यत्वमिति। त्यदाद्यत्वे सति पररूपे, अदन्तत्वाट्टापि "दश्चे"ति दकारस्य मत्वे, इमा-औ इति स्थिते, "औङ आपः" इति शीभावे, आद्गुणे "इमे" इति रूपम्। इमा इति। जसि त्यदाद्यत्वं, पररूपम्, टाप्, "दश्चे"ति मः, पूर्वसवर्णदीर्घ इति भावः। अत्र विभक्तौ सत्यां त्यदाद्यत्वं, पररूपं, टाप् च सर्वत्र भवन्तीति बोध्यम्। "इमाः" इत्यत्र इमा-अस् इति स्थिते पूर्वसवर्णदीर्घः। "जसः शी"ति तु न, टापि कृतेऽदन्तात्परत्वाऽभावात्। इमामिति। अत्पररूपटाब्मत्वेषु कृतेषु "अमि पूर्वः" इति भावः। इमे इति। औटि औवत्। इमा इति। अत्वपररूपटाब्मत्वेषु पूर्वसवर्णदीर्घः। स्त्रीत्वान्नत्वाऽभाव इति भावः। अनयेति। इदम्-आ इति स्थिते, अत्वं, पररूपम्, टाप्, "अनाप्यकः" इति इदित्यस्य अनादेशः। अन्-आ इति स्थिते, "आङि चापः" इत्येत्वे, अयादेश इति भावः। टाप्रभृत्यजादौ सर्वत्र अनादेश इति बोध्यम्। हलि लोप इति। भ्यामादौ हलि इदित्यस्य लोप इत्यर्थः। आभ्यामिति। इदम्-भ्यामिति स्थिते इदो लोपे, अत्वे, पररूपे, टापि च रूपमिति भावः। आभिरित्यप्येवम्। अस्यै इति। इदम् ए इति स्थिते, अत्वपररूपटाप्सु, स्याडागमे, ह्रस्वत्वे, इदो लोप इति भावः। "अस्याः" इत्यप्येवम्। अनयोरिति। इदम् ओस् इति स्थिते, इदम इदोऽनादेशे, अत्वपररूपटाप्सु, "आहि चापः" इत्येत्वे अयादेश इति भावः। आसामिति। इदम आम् इति स्थिते, अतद्वपररूपटाप्सु, सुटि, इदो लोप इति भावः। अस्यामिति। इदम् इ इति स्थिते, अत्वपररूपटाप्सु, ङेरामि, स्याडागमे, ह्रस्वत्वे, इदो लोप इति भावः। आस्विति। इदम्-सु इति स्थिते, अत्वपररूपटाप्सु, ङेरामि, स्याडागमे, ह्रस्वत्वे, इदो लोप इति भावः। आस्विति। इदम्-सु इति स्थिते, अत्वपररूपटाप्सु, अत्वपररूपटाप्सु, इदो लोप इति भावः। अन्वादेशे त्विति। "द्वितीयाटौस्स्वेनः" इत्येन#आदेशे, टापि रमावद्रूपाणि इति भावः। इति मान्ताः। अथ जान्ताः। रुआज्शब्दं व्युत्पादयति--ऋत्विगिति। "सृज विसर्गे" अस्मात्क्विन्, ऋकारात्परोऽमागमः, मकार इत्, ऋकारस्य यण् रेफः। रुआज्शब्दः स्त्रीलिङ्गः। "माल्यं मालारुआजौ मू()ध्न, इत्यमरः। रुआक्-रुआगिति। क्विन्प्रत्ययस्य कुः" इति कुत्वं, जश्त्वचर्त्त्वे इति भावः। इति जान्ताः। अथ दान्ताः। त्यद्शब्दस्य प्रक्रियां दर्शयति--त्यदाद्यत्वमिति। विभक्तौ, अत्वे, पररूपे, टापि "त्या" इति रूपम्। सर्वत्र ततः सर्वावद्रूपाणि। सौ तु "तदोः सः सौ" इति तकारस्य सकार इति विशेषः। एवमिति। तद् यद् एतद् एतेभ्यो विभक्तौ अत्वपररूपटाप्सु सर्वावद्रूपाणि। तच्छब्दस्य तु तकारस्य सत्वम्। एतच्छब्दस्य तु तकारस्य सत्वे "आदेशप्रत्यययोः" इति षत्वमिति विशेषः। इति दान्ताः।

अथ चान्ताः। वागिति। वचेः "क्विब्वची"त्यादिना क्विप्स दीर्घश्च, "वचिस्वपी"ति सम्प्रसारणाऽभावश्च। वाचिति रूपम्। "सुलोपः, चोः कुः, जश्त्वचर्त्वे इति भावः। इति चान्ताः। अथ पान्ताः। अप्शब्द इति। "अप्सुमनस्समासिकतावर्षाणां बहुत्वं चे"ति स्त्र्यधिकारे लिङ्गानुशासनसूत्रान्नित्यं बहुवचनान्तत्वं स्त्रीत्वं चेत्यर्थः। दीर्घ इति। "जसी"ति शेषः। अप इति। "अप्तृन्" इत्यत्र "सर्वनामस्थाने चासम्बुद्धौ" इत्यनुवृत्तेः शसि न दीर्घ इति भावः।

तत्त्व-बोधिनी

यः सौ ३९३, ७।२।११०

यः सौ। यत्वमिदं स्त्रियामेव, परिशेषात्। इदोऽय्पुंसी"ति पुंस्यय्वचनात्, क्लीवे सोर्लुका लुप्तत्वाच्च। एवमिति। सा। ते। ताः। याः ये। याः। एषा। एते। एताः। इत्यादीत्यर्थः। वागिति। वचेः "क्विब्वची"त्यादीना क्वीब्दीर्घोऽसंपर्सारणं च। "चोः कुः"।

---

सूत्रम्

काशिका-वृत्तिः

इदो ऽय् पुंसि ७।२।१११

इदमः इदरूपस्य पुंसि सौ परतः अयित्ययम् आदेशो भवति। अयं ब्राह्मणः। पुंसि इति किम्? इयं ब्राह्मणी।
लघु-सिद्धान्त-कौमुदी
इदोऽय् पुंसि २७५, ७।२।१११

इदम इदोऽय् सौ पुंसि। अयम्। त्यदाद्यत्वे॥
न्यासः
इदोऽय्? पुंसि। , ७।२।१११

बाल-मनोरमा
इदोऽय् पुंसि , ७।२।१११

"इदम् स् इति स्थिते--इदोऽय्पुंसि। "इद" इति स्थानषष्ठी। "इदम" इत्यनुवर्तते। अवयवषष्ठ()एषा। "यः सौ" इत्यतः सावित्यनुवर्तते। तदाद-इदम इति। इदम्शब्दस्यावयवो य इद्, तस्येत्यर्थः। अयम् स् इति स्थिते--सोर्लोप इति। "हल्ङ्यादिने"ति शेषः। अयमिति। सुलोपे प्रत्ययलक्षणमाश्रित्य मकारस्याऽनुस्वारस्तु न, मकारविधिसामथ्र्यात्। अन्यथा अनुस्वारमेव विदध्यात्। "वर्णाश्रये नास्ति प्रत्ययलक्षण"मिति निषेधाच्च। अथ औजसादिषु विशेषमाह--त्यदाद्यत्वमिति। इदम्-औ इति स्थिते

"त्यदादीनाम" इति मस्य अकार इत्यर्थः। पररूपत्वमिति। इद अ औ इति स्थिते "अतो गुणे" इति अकारयोरेकं पररूपम् अकार इत्यर्थः। इद-औ इति स्थिते।

तत्त्व-बोधिनी
इदोऽय् पुंसि ३०४, ७।२।१११

इदोऽय। पुंसीति किम्()। इयं स्त्री। त्यदादेः संबोधनं नास्तीति। प्रचुरप्रयोगा।ऽदर्शनमेवात्र मूलम्।

---

सूत्रम्
काशिका-वृत्तिः
अनाऽप्यकः ७।२।११२

इदमः अककारस्य इद्रूपस्य स्थाने अन इत्ययम् आदेशो भवति आपि विभक्तौ परतः। अनेन। अनयोः। अकः इति किम्? इमकेन। इमकयोः। आपि इति प्रत्याहारः तृतीयैकवचनात् प्रभृति सुपः पकारेण।
लघु-सिद्धान्त-कौमुदी
अनाप्यकः २७८, ७।२।११२

अककारस्येदम इदोऽनापि विभक्तौ। आबिति प्रत्याहारः। अनेन॥
न्यासः
अनाप्यकः। , ७।२।११२

"अनेन" इति। त्यदाद्यत्वे पररूपत्वे च कृत इद्रूपस्यानादेशः, "टाङसिङसामिनात्स्याः" ७।१।१२ इतीनादेशः, "आद्गुणः" ६।१।८४। "अनयोः" इति। "ओसि च" ७।३।१०४ इत्येत्वम्(), अनादेशः, सुलोपः। "पकारेण" इति। अथ कपः पकारेण

कस्मान्न भवति? प्रयोजनाभावात्()। ननु चेहेत्यत्र प्राग्दिशीयायां विभक्तौ "हलि लोपः" (७।२।११३) यथा स्यादितीदमस्ति प्रयोजनम्()? "इदम इश्()" ५।३।३ इतीशात्र बाधकेन भवितव्यम्()। अत्र च "अमेहक्वतिसित्रेभ्यः" (कारिका ४।२।१०४) इत्यत्र इहेत्यकृतेद्रूपलोपस्य हकारान्तस्येदमो तिर्देशो लिङ्गम्()॥

बाल-मनोरमा

अनाप्यकः , ७।२।११२

टादावचि विशेषमाह-अनाप्यकः। अन्,-आपि,-अक इति च्छेदः। न विद्यते क् यस्य सः अक्, तस्य-अकः। ककाररहितस्येत्यर्थः। "इदमो मः" इत्यत "इदम" इति, इदोऽय्पुंसी"त्यत "इद" इति चानुवर्तते। "अष्टन आ विभक्तौ इत्यतो विभक्ताविति। तदाह--अककारस्येत्यादिना। आपीत्यनेन टाप्डाप्चापां ग्रहणं नेत्याह-आबित्यादिना। "टा" इत्याकारमारभ्येत्यर्थः। विभक्तावित्यनुवृत्तिसामथ्र्यान्न टाबादिग्रहणमिति भावः। अनेनेति। इदम् आ इति स्थिते त्यदाद्यत्वं पररूपत्वम्। इदोऽनादेशः। अन-आ इति स्थिते इनादेशे गुण इति भावः।

तत्त्व-बोधिनी

अनाप्यकः ३०६, ७।२।११२

अनाप्यकः। "आ"विति प्रत्याहारो न तु टाप्, विभक्ताविति विशेषणादतो व्याचष्टे--टा इत्यारभ्य सुपः पकारेणोति।

---

सूत्रम्

काशिका-वृत्तिः

हलि लोपः ७।२।११३

हलादौ विभक्तौ परतः इदमो ऽककारस्य इद्रूपस्य लोपो भवति। आभ्याम्। एभिः। एभ्यः। एषाम्। एषु। नानर्थके ऽलोन्त्यविधिः इति सर्वस्य अयम् इद्रूपस्य लोपः। अथ वा न अयम् इल्लोपः। अनाप्यकः ७।२।११२ इति अङ्ग्रहणम् अनुवर्तते।

लघु-सिद्धान्त-कौमुदी

हलि लोपः २७९, ७।२।११३

अककारस्येदम इदो लोप आपि हलादौ। नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे॥

न्यासः

हलि लोपः। , ७।२।११३

पूर्वेणानादेशे प्राप्ते हलादाविद्रूपस्य लोपो विधीयते। "आभ्याम्()" इति। त्यदद्यत्वम्; अतो गुणे ६।१।९४ पररूपत्वम्(), "सुपि ;ट ७।३।१०२ इति दीर्घत्वञ्च। अथालोऽन्त्यपरिभाषया(१।१।५२)न्त्यस्यायं लोपः कस्मान्न भवति? इत्याह--"नानर्थके" इत्यादि। अभ्युपेत्यानर्थकेऽलोऽन्त्यविधिं परिहारान्तरमाह--"अथ वा" इत्यादि। न चाल्ग्रहणं कत्र्तव्यम्(), यतस्तदनुवत्र्तते? इत्यत आह--"अनाप्यकः" इत्यादि। यद्यपि तत्र प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः, तथापि हलीति सप्तमी अन्निति षष्ठीत्वं प्रकल्पयिष्यति; "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति वचनात्()। एवं परिहारो भाष्यकारमतेन बोद्धव्यः; अस्याः परिभाषया अनङ्गीकरणात्()। अत्र दर्शने तु त्रयाणामकराणां पररूपमेकादेशं कृत्वा दीर्घत्वादि विधेयम्()॥

बाल-मनोरमा

हलि लोपः , ७।२।११३

भ्यामादौ त्यदाद्यत्वे पररूपे च कृते "अनाप्यकः" इति प्राप्ते-हलि लोपः। "आप्यक" इति पूर्व सूत्रादनुवर्तते। "इदमो मः" इत्यत "इदम" इति "इदोऽय् पुंसी"त्यत "इद" इति "अष्टनः" इत्यतो विभक्ताविति चानुवर्तते। हलीति विभक्तिविशेषणं। तदादिविधिः। तदाह-अककारस्येत्यादिना। अलोऽन्त्यपरिभाषया इदो दकारस्य लोपमाशङ्क्याह--नानर्थक इति। परिभाषेयमुपधासंज्ञासूत्रे भाष्ये स्थिता। इदम्शब्दे इदित्यस्यानर्थकत्वात्तदन्तस्येति न लभ्यते। ततश्च इदित्यस्य कृत्स्नस्यैव लोप इति भावः। अनभ्यासविकार इत्यनुक्तौ विभर्तीत्यादौ "मृत्रामित्", अर्तिपिपत्र्योश्चे"तीत्त्वं कृत्स्नस्याभ्यासस्य स्यात्। द्वित्वे सति समुदायस्यैवार्थवत्त्वात्। "हलि लोप" इत्यत्र लोपग्रहणपनीय "हल्य" शित्येव सूत्रयितुमुचितम्, शित्वादिदः कृत्स्नस्याकारे पररूपे "सुपि चे"ति दीर्के आभ्यामित्यादिसिद्धेः।

तत्त्व-बोधिनी

हलि लोपः ३०७, ७।२।११३

नानर्थकेऽलोन्त्यविधिरिति। नन्वेवं "बिभर्ति""पिपर्ती"त्यादौ "भृत्रामित्"र्तिपिपत्र्योश्चे"तीत्त्वं सर्वस्याऽभ्यासस्य स्यात्, द्वित्वाऽभावे केवलस्याऽर्थवत्त्वेऽपि द्वित्वे सति समुदायस्यैवाऽर्थवत्त्वादित्याशङ्कायामाह--अनभ्यासविकार इति।

---

सूत्रम्

काशिका-वृत्तिः

मृजेर् वृद्धिः ७।२।११४

विभक्तौ इति निवृत्तम्। मृजेरङ्गस्य इको वृद्धिर् भवति। मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्। मृजेरिति धातुग्रहणम् इदम्, धातोश्च कार्यम् उच्यमानं धातुप्रत्यय एव वेदितव्यम्। तेन किंसपरिमृड्भ्याम्, कंसपरिमृड्भिः इत्यत्र न भवति।

लघु-सिद्धान्त-कौमुदी

मृजेर्वृद्धिः ७८५, ७।२।११४

मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः। मार्ग्यः॥

न्यासः

मृजेर्वृद्धिः। , ७।२।११४

"मार्ष्टा" इति। "मृजू शुद्धौ" (धा।पा।१०६६) व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), "ष्टुत्वम्()। मृजेः क्विबन्ताद्विभक्तावुत्पन्नायां कंसपरिमृड्भ्याम्(), कंसपरिमृङ्()भिरित्यत्र वृद्धिः प्राप्नोति, न च क्विबाश्रयः "क्ङिति च" १।१।५ इति वृद्धिप्रतिषेधो भवितुमुत्सहते; यस्मात्? क्ङितीति निंमित्तसप्तमी। न चात्र क्विब्निमित्ता वृद्धिः प्राप्नोति, किं तर्हि? विभक्तिनिम्त्ता। तस्मात्? तस्याः प्रतिषेधो वक्तव्य इत्यत आह--"मुजरिति धातुग्रहणम्()" इत्यादि। भ्रौणहत्य६।४।१७४मिति निपातनेन ज्ञापितोऽयमर्थः--धाताः कार्यमुच्यमानं धातुप्रत्यय एव भवतीति, तेन कंसमृड्भ्यामित्यत्र न भवति। यो हि धातोरित्येवं विहितः स धातुप्रतययः। न च भ्यामादिकं धातोरित्येवं विहितम्(), किं तर्हि? प्रातिपदिकादित्येवम्(), तस्मान्नासो धातुप्रत्ययः। "कंसपरिमृड्भ्याम्()" इत्यादि। पूर्ववत्? षत्वे कृत षकारस्य जश्त्वं डकारः॥

बाल-मनोरमा

मृजेर्वृद्धिः ३०४, ७।२।११४

मृजेर्वृद्धिः। "इको गुणवृद्धी" इति परिभाषया "इक" इत्युपस्थितम्। मृजेरित्यवयवषष्ठी। तदाह--मृजेरिको वृद्धिः स्यादिति। "धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञान"मिति परिभाषामभिप्रेत्य आह-- धातुप्रत्यये परे इति। धातोर्विहिते प्रत्यये इत्यर्थः। तेन परिमृड्भ्यामित्यत्र न वृद्धिरिति भावः। गुणापवादोऽयम्। क्ङित्यजादौ वेष्यते। "मृजेर्वृद्धि"रिति शेषः। "इको गुणवृद्धी" इति सूत्रभाष्ये इदं पठितम्। व्रश्चेति ष इति। मृज्-ति इति स्थिते ऋकारस्य वृद्धौ रपरत्वे जकारस्य व्रश्चेति षत्वे तकारस्य ष्टुत्वेन टकारे मार्ष्टीति रूपमित्यर्थः। मृष्ट इति। ङित्त्वान्न वृद्धिर्नापि गुण इति भावः। मृजन्ति मार्जन्ति इति। "क्ङित्यजादा"विति वृद्धिविकल्प इति भावः। मार्षि मृष्ठः मृष्ठ। मार्ज्मि मृज्वः मृज्मः। ममार्जेति। णलि "मृजेर्वृद्धि"रिति अतुसादावजादौ किति वृद्धिविकल्पं मत्वा आह-- ममार्जतुः ममृजतुरिति। ममार्जुः ममृजुरित्यपि ज्ञेयम्। ऊदित्त्वादिड्विकल्पं मृजेर्वृदिं()ध च मत्वा आह-- ममार्जिथ ममार्ष्ठेति। इडभावे जस्य व्रश्चेति षः। थस्य ष्टुत्वेन ठ इति भावः। ममार्जथुः--ममृजथुः, ममार्ज--ममृज। ममार्ज, ममार्जिव-ममृजिव-मम#ऋज्व, ममार्जिम-ममृजिम- ममृज्म। लुट()आह--- मार्जिता मार्ष्टेति। ऊदित्त्वदिटि, तदभावे च "मृजेर्वृद्धि"रिति भावः। मार्जिष्यति-- माक्ष्र्यति। मार्ष्टु-- मृष्टात्, मृष्टाम्, मार्जन्तु--मृज्नतु। मृड्ढीति। हेरपित्त्वेन ङित्त्वान् वृद्धिः। व्रश्चादिना जस्य षः। हेर्धिः, षस्य जश्त्वेन डः, धस्य ष्टुत्वे ढः। मृष्टात् मृष्टम् मृष्ट। मार्जानि मार्जाव मार्जाम। लङ्याह--अमार्डिति। तिप इकारलोपे वृद्धौ रपरत्वे हल्ङ्यादिना तकारलोपे व्रश्चादिना जस्य षः, तस्य जश्त्वचर्त्वे इति भावः। अमृष्टाम् अमार्जन्- अमृजन्। अमार्ट् अमृष्टम् अमृष्टं। अमार्जमिति। अमृज्व अमृज्म। मृज्यात्। मृज्याताम्। मृज्यात्। मृज्यास्ताम्। अमार्जीत् अमार्क्षीदिति। ऊदित्त्वादिड्विकल्प इति भावः। इट्पक्षे अमार्जिष्टाम् अमार्जिषुरित्यादि सुगमम्। इडभावे आमार्ष्टाम् अमार्क्षुः। अमार्क्षीः। अमाष्र्टम् अमाष्र्ट। अमाक्र्षम् अमार्क्ष्व अमार्क्ष्म। अमार्जिष्यत-- अमाक्ष्र्यत्। रुधिर्()धातुरितित्। सेट्।

तत्त्व-बोधिनी

मृजेर्वृद्धिः २६३, ७।२।११४

मृजेर्वृद्धिः। गुणापवादः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह-- धातुप्रत्यये किम्?। कंसपरिमड्भ्याम्।

*क्ङित्यजादाविति। एतञ्चाऽन्येषां वैयाकरणानां मतम्-- "इको गुणवृद्धी" इति सूत्रे भाष्यकृता स्वीकृतम्। मृड्ढीति। "हुझल्भ्यःर" इति हेर्धिः। षत्वष्टुत्वजश्त्वानि।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अचः ६।१ ञ्णिति ७।१ वृद्धिः ? अङ्गस्य ?

समासः॥

ञश्च णश्च ञ्णौ, ञ्णौ इतौ यस्य तत्, तस्मिन् ॰ द्वन्द्वगर्भबहुव्रीहिः

अर्थः॥

अजन्तस्य अङ्गस्य वृद्धिः भवति, ञिति णिति च प्रत्यये परतः॥

उदाहरणम्॥

ञिति - एकस्तण्डुलनिचायः। द्वौ शूर्पनिष्पावौ। कारः, हारः। णिति - गौः, गावौ, गावः। सखायौ, सखायः। जैत्रम्, यौत्रम्, च्यौत्नः॥

काशिका-वृत्तिः

अचो ञ्णिति ७।२।११५

अजन्तस्य अङ्गस्य ञिति णिति च प्रत्यये वृद्धिर् भवति। ञिति एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ। कारः। हारः। णिति गौः, गावौ, गावः। सखायौ, सखायः। जैत्रम्। यौत्रम्। च्यौत्नः। जयतेर् यौतेश्च उणादयो बहुलम् ३।३।१ इति ष्ट्रन् प्रत्ययः। च्यवतेरपि त्नण्।

लघु-सिद्धान्त-कौमुदी

अचो ञ्णिति १८२, ७।२।११५

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये॥

न्यासः

अचो ञ्णिति। , ७।२।११५

"निश्चायनिष्पावौ" ["एकसतण्डुलनिश्चायः, द्वौ शूर्पनिष्पावौ"--काशिका] इति। निष्पूर्वाच्चिनीतेः, पुनातेश्च "परिमाणाख्यायां सर्वेभ्यः" ३।३।२० इति धञ्()। "इदुपधस्य चाप्रत्ययस्य" ८।३।४१ इति विसर्जनीयषत्वम्()। "कारः, हारः" इति। कृञः ह्रञश्च भावे घञ्()। "गौः, गावो गावः" इति। "गोतो णित्()" ७।१।९० इति सर्वनामस्थानस्य णित्त्वम्()। "सखायौ, सखायः" इति। अत्रापि "सख्युरसम्बुद्धौ" ७।१।९२ इति। "जयतेः, यौतेश्च" इति। "जि जये" (धा।पा।५६१), "यु मिश्रणे" ["मिश्रणेऽमिश्रणे च"--धा।पा।] (धा।पा।१०३३)। "च्यवतेः" इति। "च्युङ छ्युङ्? ज्युङ्? प्रुङ्? प्लुङ्? गतौ"[नास्ति--धा।पा।] (धा।पा।९५५-९५८)। अज्ग्रहणमनिकोऽपि यथा स्यात्()--गोरिति। ननु णित्करणसामर्थ्यादेव तत्र भविष्यति? नैतदस्ति; अस्ति ह्यन्यत्? णित्करणस्य प्रयोजनम्(), किं तत्()? गावौ, गाव इत्यवादेशे कृते "अत उपधायाः" ७।२।११६ इति वृद्धिर्यथा स्यात्()। यद्येवम्(), गौरित्यत्रागुणविषये वृद्धिरियं कृतार्थेति कारयतीत्यादिषु परत्वाद्गुणेन बाध्येत? णित्करणसामर्थ्यान्न भविष्यतीति। एतच्चानुत्तरम्(); "णेरनिटि" (६।४।५१) इत्येवमादौ णित्करणस्य चरितार्थत्वात्()? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति--गुणविषयेऽपि वृद्धिरभवतीति; यदयं जागर्त्तर्वृद्धिविषये प्रतिषेधविषये च "जाग्रोऽविचिण्णल्ङित्सु" ७।३।८५ इति पुनर्गुम आरभ्यते। यदि हि गुणविषये वृद्धर्न स्यात्(), तदा जागरयतीत्यादिषु गुणोऽस्त्येवेति तद्विषये गुणारम्भोऽनर्थकः स्यात्()। वृद्धिविषयता चारम्भस्य चिण्णलोः प्रतिषेधाद्विज्ञायते। अथ योगविभागः किमर्थः, न "ञ्णित्यत उपथायाः" इत्येदोच्येत? अशक्यमेवं वक्तुम्(); एवं ह्युच्यमाने यद्यपि गावो, गाव इत्यत्रावादेशे कृते चायकः, लावक इत्यत्र गुणे कृतेऽयवादेशयोः कृतयोः सिध्यति--गौः, सखायौ; जैत्रमित्यादौ तु न सिध्यति; अयवादेशयोर्गुणस्य च यथायोगमसम्भवात्? स्माद्यथायोगं योगविभागः कत्र्तव्यः॥

बाल-मनोरमा

अचोञ्णिति २५२, ७।२।११५

अचोञ्णिति। ञ् च ण् चञ्णौ, तौ इतौ यस्य तत् ञ्णित्। "मृजेः" इत्यतो "वृद्धि"रित्यनुवर्तते। "अङ्गस्ये"त्यधिकृतमचा विशेष्यते। ततस्तदन्तविधिः। तदाह-अजन्तस्येत्यादिना। स्थानसाम्यादिकारस्य वृद्धिरैकारः। तस्य आयादेश इत्यभिप्रेत्याह-सखायाविति। एवं-सखायः। सखायं सखायौ। सखीनिति शसि हरिवद्रूपम्। असर्वनामस्थानत्वाण्णित्वाऽभावान्न वृद्धिः। घिसंज्ञाऽभावादिति। "शेषो घ्यसखी"त्यत्र असखीति पर्युदासादिति भावः। न तत्कार्यमिति। घिप्रयुक्तकार्यं नेत्यर्थः। सख्येति। सखि-आ इति स्थिते घित्वाऽभावादाङो नाऽस्त्रियामिति नाभावाऽभावे

यणि रूपम्। सख्ये इति। सखि-ए इति स्थिते घित्वाऽभावात् "घेर्ङिती"ति गुणाऽभावे यणि रूपम्। ङसिङसोः-सखि अस् इति स्थिते घित्वाऽभावात् "घेर्ङिती"ति गुणाऽभावे यणि सख्यस् इति स्थिते।

तत्त्व-बोधिनी

अचो ञ्णिति २१३, ७।२।११५

अचोञ्णिति। "मृजेर्वृद्धि"रित्यतो "वृद्धि"रित्यनुवर्तते, "अङ्गस्ये"ति चानुवृत्तमचा विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेन व्याचष्टे---अजन्ताङ्गस्येति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अतः ६।१ उपधायाः ६।१ ञ्णिति ? वृद्धिः ? अङ्गस्य ?

अर्थः॥

अङ्गस्य उपधायाः अकारस्य स्थाने वृद्धिः भवति, ञिति णिति प्रत्यये परतः

उदाहरणम्॥

भागः, पाकः, त्यागः, यागः॥ णिति - पाचयति, पाचकः, पाठयति, पाठकः॥

काशिका-वृत्तिः

अत उपधायाः ७।२।११६

अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर् भवति। पाकः। त्यागः। यागः। पाचयति। पाचकः। पाठयति। पाठकः। अतः इति किम्? भेदयति। भेदकः। उपधायाः इति किम्? चकासयति तक्षकः।

लघु-सिद्धान्त-कौमुदी

अत अपधायाः ४५७, ७।२।११६

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। जगाद। जगदतुः। जगदुः। जगदिथ। जगदथुः। जगद॥

न्यासः

अत उपधायाः। , ७।२।११६

पाक इत्यादौ भावे घञ्(), "चजोः कु घिण्ण्यतोः" ७।३।५२ इति कुत्वम्()। "रागः" इति। "घञि च भावकरणयोः" ६।४।२७ इत्यनुनासिकलोपः। "पाचयति" इति। "हेतुमति च" ३।१।२६ इति णिच्()। "चकासयति" इति। उपधाग्रहणादिह चकारादकारस्य न भवति। तपरकरणं लाघवार्थम्()। असति हि स्मिन्नस्योपधाया इत्युच्यमाने गौरवं स्यात्()। दीर्घनिवृत्त्यर्थं तु तपरकरणं न भवति, न दीर्घस्य कृतायां वृद्धौ कश्चिद्विशेषोऽस्ति॥

बाल-मनोरमा

अत उपधायाः १२६, ७।२।११६

णलि अजन्तत्वाऽभावादचो ञ्णितीति वृद्धेरप्राप्तौ-- अत उपधायाः। वृद्धिः स्यादिति। "मृजेर्वृद्धि"रित्यतस्तदनुवृत्तेरिति भावः। चखादेति। एत्वाभ्यासलोपौ तु नात्र भवतः, पित्त्वेऽकित्त्वात्, आदेशादित्वात्, तदपेक्षया वृद्धेः परत्वाच्च।

तत्त्व-बोधिनी

अत उपधायाः १०१, ७।२।११६

अत उप। अतः किम्। तुतोद। उपदायाः किम्। गणयति। इह अतो लोपं बाधित्वा परत्वाद्वृद्धिः स्यात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ तद्धितेषु ७।३ अचाम् ६।३ आदेः ६।१ अचो ञ्णिति ? वृद्धिः ? अङ्गस्य ?

अर्थः॥

तद्धिते ञिति णिति च प्रत्यये परतः अङ्गस्य अचाम् आदेः अचः स्थाने वृद्धिः भवति।

उदाहरणम्॥

ञिति - गार्ग्यः, वात्स्यः, दाक्षिः, प्लाक्षिः। णिति - औपगवः, कापटवः।

काशिका-वृत्तिः

तद्धितेष्वचाम् आदेः ७।२।११७

तद्धिते ञिति णिति च प्रत्यये परतो ऽङ्गस्य अचाम् आदेः अचः स्थाने वृद्धिर् भवति। गार्ग्यः। वात्स्यः। दाक्षिः। प्लाक्षिः। णिति औपगवः। कापटवः। त्वाष्ट्रः, जागतः इत्यत्र अचामादेर् वृद्धिरन्त्योपधालक्षणां वृद्धिं बाधते।

लघु-सिद्धान्त-कौमुदी

तद्धितेष्वचामादेः ९४१, ७।२।११७

ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात्। यस्येति च। पौर्वशालः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ। (द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य समासवचनम्)॥

लघु-सिद्धान्त-कौमुदी

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः १००२, ७।२।११७

दित्यादिभ्यः पत्युततरपदाच्च प्राग्दीव्यतियेष्वर्थेषु ण्यः स्यात्। अणोऽपवादः। दितेरपत्यं दैत्यः। अदितेरादित्यस्य वा॥

न्यासः

तद्धितेष्वचामादेः। , ७।२।११७

"अचाम्()" इति निर्धारणे षष्ठी। "अचामादेरचः स्थाने" इति। ननु चेक्परिभावोपस्थानादिक एव स्थाने वृद्ध्या भवितव्यम्(), तस्मादिकः स्थान इत्येवं वक्तव्यम्(), न त्वचः स्थान इति? एवं मन्यते--"अचो ञ्णिति" (७।२।११५) इत्यतः स्थानिनिर्देशार्थं द्वितीयमज्ग्रहणमनुवत्र्तते, तेन यथा "अचो ञ्णिति" ७।२।११५ इत्यत्र

स्थानिनिर्देशादिक्परिभाषा नोपतिष्ठते, तथेहापीत्यदोषः। "गार्ग्यः, वात्स्यः" इति। "गर्गादिभ्यो यञ्()" ४।१।१०५। "दाक्षिः, प्लाक्षिः" इति। "अत इञ्()" ४।१।९५। "औपगवः, कापटवः" इति। प्राग्दीव्यतीयोऽण्? ४।१।८३। अथ त्वाष्ट्रः, जागत इत्यतर त्वष्टृजगद्भ्यां "तस्येवम्()" ४।३।१२० इत्यणि कृते यथाक्रमं "अचो ञ्णिति" ७।२।११५ इत्यज्लक्षणा वृद्धिः प्राप्नोति, "अत उपधायाः" (७।२।११६) इत्युपधालक्षणा वृद्धिः कस्मान्न भवति?
इत्याह--"अचामादेर्वृद्धिरन्त्योपधावृद्धिं बाधते" इति। कथं पुनरन्यस्योच्यमानाऽन्यस्य बाधिका स्यात्()? ज्ञापकात्()। यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति, तज्ज्ञापयति--यत्रादिवृद्धिस्तत्रान्या वृद्धिर्न भवतीति। तस्यानुशतिकादिषु पाठस्यैतत्? प्रयोजनम्()--उभयपदवृद्धिर्यथा स्यात्(), पुष्करसदोऽपत्यं पौष्करसादिरिति। "बाहवादिभ्यश्च" ४।१।९६ इतीञ्()। यदि चादिवृद्धिरन्यस्या वृद्धेर्बाधिका न स्यात्(), उपधालक्षणेनैव वृद्धेः सिद्धत्वात्? पौष्करसादिशब्दस्य, पुष्करसच्छब्दोऽनुशतिकादिषु न पठ()एत। पश्यत्याचार्यः--यत्रादिपदवृद्धिस्तत्रान्या वृद्धिर्न भवतीति; यतोऽनुशतिकादिषु पुष्करसच्छब्दं पठति। ननु ठगर्थस्तत्र पठः, तत्र ह्युपधालक्षणा वृद्धिर्न प्राप्नोतीति ठकोऽञ्णित्त्वात्()--पुष्करसदा चरतीति पौष्करसादिक इति? नैतदस्ति; यदि पुष्करसच्छब्दाच्चरत्यर्थे ठगुत्पद्यते। कस्मात्? पुनर्नोत्पद्यते? अनभिधानात्()। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति। तस्माज्ज्ञापक एवानुशतिकादिषु पाठः पुष्करसच्छब्दस्य॥
बाल-मनोरमा
तद्धितेष्वचामादेः १०५९, ७।२।११७

तद्धितेष्वचामादेः। "अचोञ्णिती"त्यनुवर्तते। "मृजेर्वृद्धि"रित्यतो वृद्धिरिति च। "अचा"मिति निर्धारणषष्ठी। तदाह--ञितीति।

तत्त्व-बोधिनी
तद्धितेष्वचामादेः ८८५, ७।२।११७

तद्धितेष्व। अचां मध्ये आदिरजेवेति "अचोऽञ्णिती"ति सूत्रदच इत्यनुवर्तत इत्याशयेन व्याचष्टे--अच इति। वृद्धिः स्यादिति। "मृजेर्वृद्धि"रित्यतोऽनुवर्तत इति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ किति ७।१ ७।३।३१ च ० तद्दितेष्वचामादेः ? अचः ? वृद्धिः ? अङ्गस्य ?

अर्थः॥

तद्धिते परतः अङ्गस्य अचाम् आदेः अचः स्थाने वृद्धिः भवति

उदाहरणम्॥

चारायणः। आक्षिकः, शालाकिकः।
काशिका-वृत्तिः
किति च ७।२।११८

किति च तद्धिते परतो ऽङ्गस्याचाम् आदेः अचः स्थाने वृद्धिर् भवति। नडादिभ्यः फक् ४।१।९९ नाडायनः। चारायणः प्राग्वहतेष्ठक् ४।४।१ आक्षिकः। शालाकिकः। इति काशिकायां वृत्तौ सप्तमाध्यायस्य द्वितीयः पादः। सप्तमाध्यायस्य तृतीयः पादः।

लघु-सिद्धान्त-कौमुदी

किति च १००४, ७।२।११८

किति तद्धिते चाचामादेरचो वृद्धिः स्यात्। वाहीकः। (गोरजादिप्रसङ्गे यत्)। गोरपत्यादि गव्यम्॥

न्यासः

किति च। , ७।२।११८

यद्यपि "तद्धितेषु" ७।२।११७ इति बहुवचनान्तं प्रकृतम्(), तथापोहैकवचननिर्देशादेकवचनविषयो बहुवचनस्य विपरिणामेन विज्ञायते, इतयत आह--"किति च तद्धिते परतः" इति। "नाडायनः, जारायणः" इति। "नडादिभ्यः फक्()" ४।१।९९ इति फक्()। "आक्षिकः, शालाकिकः ति। अक्षिशलाकाशब्दाभ्यां "तेन दीव्यत खनति जयति जितम्" ४।४।२ इति ठक्(); "ठस्येकः" ७।३।५०॥ इकि बोधिसत्त्वदेशीयाचार्य श्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य द्वितीयः पादः - - - अथ सप्तमोऽध्यायः तृतीयः पादः

बाल-मनोरमा

किति च १०६०, ७।२।११८

किति च। तथेति। अचामादेरचो वृद्धिरित्यर्थः। इदं सूत्रं प्रकृतानुपय्कुत्मपि व्याख्यासोकर्यायेहोपन्यस्तम्। अपत्यादीति। आदिना समूहाद्यर्थसङ्ग्रहः। आ()आपतमिति। अ()आपतेरणि आदिवृद्धौ "यस्येति चे"तीकारलोपः। गाणपतमिति। अ()आपत्यादिषु गणपतिशब्दः पठित इति भावः। गाणपत्य इति। गणपतिर्देवता अस्य मन्त्रस्येति विग्रहः। प्रामादिकमेवेति। प्रमादादायातमित्यर्थः। गणपतिक्षेत्रपत्यादीनाम()आपत्यादिगणे पाठस्य वृत्तौ दर्शना पदादिति। पतिरुत्तरपदं यस्य तस्मादिति विग्रहः। प्राग्दीव्यतीयेष्वर्थेष्विति। "प्राग्दीव्यत" इत्यनुवृत्तेरिति बावः। अणोऽपवादैति। विशेषविहितत्वादिति भावः। दैत्य इति। दितेरपत्यमिति विग्रहः। दितेण्र्यप्रत्ययः। "चुटू" इति णकार इत्, आदिवृद्धिः, "यस्येति चे"तीकारलोपः। अदितेः, आदित्यस्य वेति। "अपत्यादी"ति शेषः। आदित्य इति। जाताद्यर्थे ण्ये आदिवृद्धौ "यस्येति चे"ति लोपे "आदित्य" इति रूपम्। आदित्यशब्दाण्ण्ये आदिवृद्धौ "यस्येति चे"ति लोपे "यणो मयः" इति पूर्वकारस्य द्वित्वे सति "हलो यमा"मित्याद्ययकारस्य लोपे द्वियकारं रूपम्। द्वित्वाऽभावे लोपे चाऽसति द्वियकारमेव। असति द्वित्वे यकारलोपे च सत्येकयकारं रूपम्। अनपत्यात्वात्, "आपत्यस्य चे"ति यलोपो न। अदितेरपत्ये ण्ये, आदित्यशब्दात्पुनरपत्ये ण्ये "आपत्यस्य चे"ति यलोपः प्राजापत्य इति। पत्युत्तरपदात् प्रजापतिशब्दाण्ण्ये आदिवृद्धौ "यस्येति चे"ति लोपः। "दैतेया" इति त्वसाध्वेव। साधुत्वश्रद्धाजाड()ए तु पृषोदरादित्वात्समाधेयम्। कासिकायामिति। बाष्ये त्विदं न दृश्यत इति भावः। याम्य इति। यमस्यापत्यादीतिविग्रहः।

पृथिव्या ञाऽञाविति। ञश्च, अञ् च वक्तव्यावित्यर्थः। पार्तिवेति। पृथिव्या अपत्यादीति विग्रहः। ञप्रत्यये "चुटू" इति ञकार इत्, आदिवृद्धिः,"यस्येति चे"ति लोपः। स्त्रियामदन्तत्वाट्टाप्। पार्थिवीति। अञि "टिड्ढाण"ञिति ङीप्। ञप्रत्ययस्यैव विधौ ङीब् न स्यात्। अञ एव विधौ टाब् न स्यात्। तस्मादुभयविधिः। #एतत्सूचनायः स्त्रीलिङ्गोदाहरणमिति बोध्यम्। देवादिति। देवशब्दाद्यञ्, अञ् च प्रत्ययौ प्राग्दीव्यतीयेष्वर्थेषु वक्तव्यावित्यर्थः। दैव्यं दैवमिति। "देवस्यापत्यादी"ति विग्रहः। यञि अञि च आदिवृद्धौ "यस्येति चे"ति लोपः।

बहिष इति। "बहि"सिति सकारान्तमव्ययम्। तस्मात्प्राग्दीव्यतीयेष्वर्थेषु यञ्, प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः। बाह्य इति। बहिर्भव इत्यादि विग्रहः। यञि टिलोपे आदिवृद्धिः। "अव्ययानां भमात्रे टिलोप" इत्यस्याऽनित्यत्वज्ञापनार्थमिह टिलोपविधानम्। तेन आराद्भव आरातीय इत्यादि सिध्यति।

ईकक् चेति। बहिष ईकक् च स्यात्, प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः। बाहीक इति। बहिष ईककि टिलोपे "किति चे"त्यादिवृद्धिः।

स्थाम्न इति। स्थामन्शब्दादकारप्रत्ययः। प्राग्दीव्यतीयेष्वर्तेषु वाच्य इत्यर्थः। अणोऽपवादः। अ()आत्थाम इति। अ()आस्येव स्थामा=स्थितिर्यस्येति विग्रहः। अ()आत्थाम्नोऽपत्यं, तत्र जात इत्यादिर्विग्रहः। प्रत्ययविधित्वेऽपि भाष्ये उदाहरणात्तदन्तविधिः। अ()आस्थामन्शब्दादकारप्रत्यये "नस्तद्धिते" इति टिलोपः। अणि तु आदि वृद्धिः स्यात्।

ननूदः परत्वाऽभावात्कथमिह सकारस्य थकार इत्यत आह--पृषोदकादित्वादिति। भवार्थे तु लुग्वाच्य इति। "अकारप्रत्ययस्ये"ति शेषः।

लोम्न इति। लोमन्शब्दाद्बहुषु अपत्येषु वाच्येषु अकारप्रत्ययो वक्तव्य इत्यर्थः। बाह्वादीञ इति। बाह्वादित्वप्रयुक्तस्य इञोऽपवाद इत्यर्थः। उडुलोमा इति। उडूनि नक्षत्राणीव लोमानि यस्य स उडुलोमा, तस्यापत्यमिति विग्रहः लोम्नोऽपत्ययोगाऽसंभवात्प्रत्ययविधित्वेऽपि तदन्तविधिः। अकारप्रत्यये सति "नस्यतद्धिते" इति टिलोपः। औडुलोमिरिति। उडुलोम्नोऽपत्यमिति विग्रहः। अत्रापत्यबहुत्वाऽभावादकारप्रत्ययो न। किंतु बाह्वादित्वादिञि टिलोप इति भावः।

सर्वत्र गोरिति। लोम्नोऽपत्येष्विति पूर्ववार्तिकादपत्यग्रहणानुवृत्तिनिवृत्त्यर्थं "सर्वत्र"ग्रहणम्। अपत्ये तदन्येषु च प्राग्दीव्यतीयेष्वर्थेषु गोशब्दादजादिप्रत्ययप्रसङ्गे सति यत्प्रत्ययो वाच्य इत्यर्थः। गव्यमिति। गवि भवं, गोरागतमित्यादि विग्रहः। अणपवादो यत्। गोरूप्यं गोमयमिति। "हेतुमनुष्येभ्योऽन्यतरस्या"मिति रूप्य इत्यर्थः। "मयड्वैतयो"रिति रूप्यमयटौ। हलादित्वान्नैतयोर्यत्प्रत्ययो बाधक इति भावः।

तत्त्व-बोधिनी

किति च ८८६, ७।२।११८

किति च। "वाहीकः" इत्याद्यर्थमपीदं सुगमव्याख्यानायत्रैवोपन्यस्तम्। "अचामादे"रिति निर्दिष्टस्थानिकत्वादिक्परिभाषाऽत्र नोपतिष्ठत इत्याशयेनोदाहरति--आ()आपतिमित्यादि। प्रामादिकमेवेति। एतच्च हरदत्तग्रन्थे स्थितम्। यदि तु देवतार्थकाऽण्णन्ताच्चातुर्वर्ण्यादेराकृतिगणत्वात्ष्यञिति व्याख्यायते तदा निर्दुष्ट एवायं प्रयोगः। अ()आपति गणपति राष्ट्रपति कुलपति गृहपति पशुपति क्षेत्रपतीत्य()आपत्यादिः।

---

सूत्रम्

काशिका-वृत्तिः

देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसाम् आत् ७।३।१

देविका शिंशपा दित्यवाट् दीर्घसत्र श्रेयसित्येतषाम् अङ्गानाम् अचामादेः अचः स्थने वृद्धिप्रसङ्गे आकारो भवति ञिति, णिति, किति तद्धिते परतः। देविकायां भवमुदकं दाविकमुदकम्। देविकाकूले भवाः शालयः दाविकाकूलाः शालयः।

पूर्वदेविका नाम प्राचां ग्रामः, तत्र भवः पूर्वदाविकः। प्राचां ग्रामनगराणाम् ७।३।१४ इति उत्तरपदवृद्धिः, सापि आकार एव भवति। शिंशपा शिंशपायाः विकारः चमसः शांशपः चमसः। पलाशादिरयम्, तेन पक्षे अण्, अनुदात्तादिलक्षणो वा अञ्। शिंशपास्थले भवाः शांशपास्थलाः देवाः। पूर्वशिंशपा नाम प्राचां ग्रामः, तत्र भवः पूर्वशांशपः। दित्यवाट् दित्यौहः इदम् दात्यौहम्। दीर्घसत्र दीर्घसत्रे भवम् दार्घसत्रम्। श्रेयस् श्रेयसि भवम् श्रायसम्। वहीनरस्येद्वचनं कर्तव्यम्। वृद्धिविषये ऽचामादेः अचः स्थाने वहीनरस्य इकारादेशो भवति। वहीनरस्य अपत्यम् वैहीनरिः। केचित् तु विहीनरस्य एव वैहीनरिम् इच्छन्ति।

न्यासः

देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्?। , ७।३।१

"तद्धितेष्वचामादेः" ७।२।११७ इत्यान्तरतम्यादैकारे वृद्धौ प्राप्तायां देविकादीनामाकारो विधीयते। "अत्र पक्षत्रयं सम्भाव्यते--१। प्रकृतेनाङ्गेन देविकादयो विशिष्यन्ते--देविकादीनामङ्गानामिति; २।
तैर्वाङ्गम्()--"देविकाद्यन्तस्याङ्गस्येति, अथ वा--३। तैराद्योऽच्()---देविकदीनां सम्बन्धिनामचां मध्ये य आदिरजिति। तत्र यद्याद्यः पक्ष आश्रीयेत, तदा देविकाकूले भवाः शालयो दाविकाकूलाः शालय इति न सिध्येत्(), न ह्तर देविकाशब्दोऽङ्गम्(), किं तर्हि? देविकाकूलशब्दः। ननु चाङ्गस्येत्यवयवषष्ठी, तत्रैवं विशेषणविशेष्यभावः करिष्यते-- अङ्गस्य ये देविकादयोऽवयवभूता इति, भवति चेहावयवोऽङ्गस्य देविकाशब्दः, ततोऽयमोदोष इति चेत्()? सत्यमेतत्? किन्त्वतिप्रसङ्गः स्यात्(), सुदेविकायां भवः सौदेविकः--इत्यत्रापि स्यात्()। अथ द्वितीयपक्ष आश्रीयेत, एवमपि दाविकाकूलाः शालय इति न सिध्येत्()। देविकादिभिः प्रकृतेऽङ्गे विशेष्यमाणे विशेषणे च तदन्तविधिरिति देविकाद्यन्तस्याङ्गस्येति भवितव्यम्(), न तदादेः। तस्मात्? तदादेरपि यथा स्थादिति यत्नान्तरमास्थेयमिति। तृतीये तु पक्ष आश्रीयमाणे, विनापि यत्नान्तरेण केवलस्य तदादेस्तदन्तस्य भवति। सर्वत्राचामादेरचो देविकादिसम्बन्धित्वात्()। अतस्तमेवाश्रित्याह--"देविकाशिंशपादित्यवाड्()दीर्घसत्त्रश्रेयस इत्येतेषाम्()" इत्यादि। एषां देविकादीनामचां मध्य आदिभूतो योऽज्? वृद्धेरैकारस्य प्रसङ्गे तस्याकारो विधीयते। "पूर्वशांशप" इति। पूर्ववदुत्तरपदस्य वृद्धिः। साप्याकार एव भवतीत्युत्तरपदाधिकारे देविकादीनामनुवृत्तेर्लभ्यते। "वहीनरस्येद्वचनं कत्र्तव्यम्()" इति। अकारस्य या वृद्धिः प्राप्नोति तद्बाधनार्थमेत्()। इकारे कृते या वृद्धिः प्राप्नोति सा तु भवत्येव। "केचित्" इत्यादि। कुणडवाडवादयः। विहीनो नरः कामक्रोधाभ्यामिति पृषोदरादित्वान्नलोपः, विहीनरस्यापत्यं वैहीनरिः--"अत इञ्()" ४।१।९५॥

बाल-मनोरमा

देवकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् १४१८, ७।३।१

देविका। आदिवृद्धि प्रकरणे इदं सूत्रम्। षामिति। देविका, शिंशपा, दित्यवाहू, दीर्घसत्र क्षेयस् इत्येषामित्यर्थः। वृद्धिप्राप्ताविति। आदिवृद्धिप्राप्तौ तदपवादत्वेन आदेरच आकारः स्यादित्यर्थः। दाविकमिति। देविका नाम नदी, तस्यां भवमित्यर्थः। दाविकाकूला इति। उत्तरपदवृद्धिभ्रमनिरासाय इदमुदाहरसणम्, अस्य सूत्रस्य तदधिकारबहिर्भूतत्वादिति भावः। शांशप इति। इकारस्य आकारः, अञिवृद्धिः, शिशपाशब्दस्य पलाशादौ पाठात् पाक्षिको।ञञ्। तदभावेऽणित्यर्थः। दात्यौहमिति। दित्यवाहशब्दात् "तस्येद"मित्यणि "वाह ऊठ्" इति संप्रसारणं, पूर्वरूपम्। "एत्येधत्यूठसु" इति वृद्धिः। इकारस्य आदिवृद्ध्यपवाद आकारः। दीर्घसूत्रमिति। "तस्येद"मित्यण्, आदेरीकारस्य आकारः। श्रायसमिति। तत्र भव इत्यणि एकारस्य आकारः।

---

सूत्रम्

काशिका-वृत्तिः

केकयमित्रयुप्रलयानां याऽदेरियः ७।३।२

केकय मित्रयु प्रलय इत्येतेषां यकारादेः इय इत्ययम् आदेशो भवति तद्धिते ञिति, णिति, किति च परतः। केकयस्य अपत्यम् कैकेयः। जनपदशब्दात् क्षत्रियादञ् ४।१।१६६ इति अञ् प्रत्ययः। मित्रयुभावेन श्लाघते मैत्रेयिकया श्लाघते। गोत्रचरणाच् छ्लाघाऽत्याकारतदवेतेषु ५।१।१३३ इति वुञ्। लौकिकं हि तत्र गोत्रं गृह्यते। लोके च ऋषिशब्दो गोत्रम् इत्यभिधीयते। प्रलय प्रलयातागतम् प्रालेयम् उदकम्।

न्यासः

केकयमित्रयुप्रलयानां यादेरियः।, ७।३।२

केकयमित्रयुप्रलयानामिति याद्यपेक्षयाऽवयवषष्ठी। यादेरित्येषापीत्यादेशापेक्षया स्थानषष्ठी-य आदिर्यस्य स यादिः। अकारसहितो यकार उकारसहितश्च। केकयादीनां योऽवयवो यादिस्तस्येयादेशो भवति। ननु च मित्रयुशब्दः परमप्रकृतिः, न गोत्रम्(); "अपत्यं पोत्रप्रभृति गोत्रम्()" ४।१।१६२ इत्यपत्यविशेषस्य गोत्रसंज्ञाविधानात्(), तत्कथं गोत्रादुच्यमानः प्रत्ययः परमपरकृतेर्भवति? इत्यत आह--"लौकिकं हि" इत्यादि। किं पुनर्लौकिकं गोत्रम्()? इत्यत आह--"लोके च" इत्यादि। इह लौकिकं गोत्रं गृह्रते। लोके च ऋषिशब्दः "गोत्रम्()" इत्यभिधीयते। मित्रयुशब्दश्चायमृषिवचनः, तस्मात्? ततोऽपि गोत्रादुच्यमानः प्रत्ययो भवतीति। "प्रालेयम्()" इति। "अत आगतः" ४।३।७४ इत्यण्()॥

बाल-मनोरमा

केकयमित्रयुप्रलयानां यादेरियः ११२८, ७।३।२

केकयमित्रयु। "तद्धितेष्वचामादे"रित्यतस्तद्धितग्रहणमनुवर्तते। "अचो ञ्णिति" "किति चे"त्यतो ञ्णितीति, कितीति च। तदाह--एषामिति। आदेशे यकारादकार उच्चारणार्थः। केकयस्यापत्यं स्त्री कैकेयी। "जनपदशब्दात्" इत्यञ्। मैत्रेयिकया श्लाघते। मित्रयोर्भाव इत्यर्थे "गोत्रचरणा"दिति वुञ्। प्रलयादागतं प्रालेयम्।?ण्। अत्र सर्वत्र यादेरियादेश इत्युदाहरणानि। प्राप्ते इति। मित्रयोरपत्ये ढञि एयादेशे मित्रयु-एय इति स्थिते ओर्गुणं बाधित्वा यु इत्यस्य इयादेशे सति आद्गुणे मैत्रेयेय इति प्राप्ते सतीत्यर्थः।

तत्त्व-बोधिनी

केकयमित्रयुप्रलयानां यादेरियः ९३९, ७।३।२

केकय। केकयस्यापत्यं स्त्री "कैकेयी"। "जनपदशब्दात्क्षत्रियादञ्"। "मैत्रेयिकया शर्()लाध्यते"। मित्रयूनां भावेनेत्यर्थः। "गोत्रचरणाच्छलाघात्याकारे"ति वुञ्। तत्र हि लौकिकं गोत्रं गृह्रते, लोके च "ऋषिशब्दो गोत्रमिति प्रसिद्ध"मिति काशिका। एतच्च यदा मित्रयुशब्दोऽभेदोपचारात्तदपत्यसंताने वर्तते तदा बोध्यम्, अन्यथा "मित्र यूनामि"ति बहुवचनान्तेन विग्रहो न स्यात्। प्रलयादागतं "प्रालेयम्"। इयादेशो वृदिं()ध न बाधते, "अचामादेरचो वृद्धिः," "यादिरियादेशः" इति भिन्नविषयत्वात्, अङ्गं तूभयोर्विशेषणं न तु कार्यीति हरदत्तः। आदिवृद्धेरपीदमेव सूत्रं विधायकमस्तु, किमनेन विषयभेदविचारेणेत्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्याम् ऐच् ७।३।३

यकारवकाराभ्याम् उत्तरस्य अचामादेः अचः स्थाने वृद्धिर् न भवति, ताभ्यां तु यकारवकाराभ्यां पूर्वम् ऐजागमौ भवतः ञिति, णिति, किति च तद्धिते परतः। यकारातैकारः, वकारातौकारः। व्यसने भवम् वैयसनम्। व्याकरणम् अधीते वैयाकरणः। स्वश्वस्य अपत्यम् औवश्वः। य्वाभ्याम् इति किम्? न्नर्थस्य अपत्यम् न्नार्थिः। पदान्ताभ्याम् इति किम्? यष्टिः प्रहरणम् अस्य याष्टीकः यतः छात्राः याताः। प्रतिषेधवचनम् ऐचोर् विषय प्रक्लृप्त्यर्थम्। इह मा भूत्, दाध्यश्विः, माध्वश्विः इति। नह्यत्र य्वाभ्याम् उत्तरस्य वृद्धिप्रसङ्गो ऽस्ति। वृद्धेरभावात् प्रतिषेधो ऽपि न अस्ति इत्यप्रसङ्गः। उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते। पूर्वत्र्यलिन्दे भवः पूर्वत्रैयलिन्दः। यत्र तु उत्तरपदसम्बन्धी यण् न भवति तत्र न इष्यते प्रतिषेधः। द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः।

लघु-सिद्धान्त-कौमुदी

न य्वाभ्याम् पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् १०५७, ७।३।३

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः। व्याकरणमधीते वेद वा वैयाकरणः॥

न्यासः

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्?। , ७।३।३

"तद्धितेष्वचामादेः" ७।२।११७ इत्यादिना ञ्णिदादौ तद्धिते वृद्धौ प्राप्तायां प्रतिषेधोऽयमुच्यते, तत्सन्नियोगेनैजागमौ भवतः। "यकारादैकारः" इत्यादिना यतासंख्येन सम्बन्धं दर्शयति। "वैयसनम्()" इति। "असु क्षेपणे" (धा।पा।१२०९)। विपूर्वाद्विशेषेणास्यते क्षिप्यते येनेति करणे ल्युट्(), प्रादिसमासः, यणादेशः, तत, "तत्र भवः" ४।३।५३ इत्यण्()। तत्र यकारात्? पदान्तात्? परस्याकारस्य वृद्धिर्न भवति, तस्मात्? पूर्वमैजागमः। "वैयाकरणः" इति। विशेषेणाक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति करणे ल्युट्(), व्याकरणमिति, प्रादिसमासः, ततः "तदधीते तद्वेव" ४।२।५८ इत्यण्(), तत्र पर्जन्यवल्लक्षणप्रवृत्त्या पदान्ताद्यकारात्? परसय या वृद्धिः प्राप्नोति सा न भवति, तस्मात्? पूर्वमैजागमः। "सौव()आः" इति। शोभनोऽ()आः स्व()आः, पूर्ववत्? समासः, ततोऽपत्यर्थे शिवाद्यण्? ४।१।११२। अत्र वकारात्? पदान्तात्? परस्य वृद्धिर्न भवति, तस्मात्? पूर्वमैजागमो भवति। "आर्थिः" इति। ना अर्थो यस्य स अर्थः, तस्यापत्यम्? "उत इञ्()" ४।१।९५। "याष्टकः" इति। "शक्तियष्ट()ओरीकक्()" ४।४।५९। "याताः" इति। इणः परस्य लटः शत्रादेशः, "इणो यण्()" ६।४।८१ इति यण्(), ततः "तस्येदम्()" ४।३।१२० इत्यण्()। तत्रोभयत्रापि यकारस्य पदान्तता भविष्यतः, यथा--"ब्राआह्णभ्यो दधि दीयतां तक्रं कौण्डिन्याय" इति दधिदानस्य तक्रदानां बाधकम्()। अथापि बाधगौ न स्याताम्(), तथापि नित्यत्वादैचोः कृतयो पश्चाद्()वृर्भवन्ती तयोरेव भविष्यतीति। न चात्र शब्दान्तरप्राप्त्या तयोरप्यैचोरनित्यत्वमाशङ्कनीयम्(), न हि तौ शब्दान्तरसय विधीयेते, अपि त्वभकतावेव य्वाभ्यां पूर्वौ। यद्यपि शब्दातन्तरस्य प्राप्तिः स्यात्(), तथापि द्वयोरनित्ययोः परत्वादैचोः कृतयोः सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (व्या।प।४०) इति पुनर्वृद्धिर्न भवति। यद्यपि पुनःप्रसङ्गविज्ञानाद्()वृद्धिः स्यात्(); तथापीष्टसिद्धिः स्यादेव; विशेषाभावादित्यत आह--"प्रतिषेधवचनम्()" इत्यादि। प्रक्लृतिः=प्रकल्पनम्(), व्यवस्येत्यर्थः। यत्र य्वाभ्यां परस्य वृद्धेः प्रतिषेधः स एवैचोर्विषयः कथन्नाम प्रकल्पेत()व्यवतिष्ठेतेत्येवमर्थः। प्रतिषेध उच्यते, किमर्थं पुनरै चोर्विषयपरक्लृप्तिः क्रियते? इत्यत आह--"इह मा भत्()" इति। यदि प्रतषेधवचनेनैचोर्विषयन्यवस्था न क्रियेत, तदा दाध्यश्विः, माध्व()इआरित्यत्रापि स्यात्। अतो मा भूदेष दोष इति प्रतिषेधवचनेनैचोर्विषयन्यवसथा क्रियते। दधिप्रियोऽ()आओ दध्य()आः मधुप्रियोऽ()आओ मध्य()आः। "सामानाधिकरणाधिकारे शापकपार्थिवादीनां समास उत्तरपदलोपश्च" (वा।८३) इति मध्यमपदलोपौ समासः। अथ क्रियमाणे प्रतिषेधवचने कस्मादेवात्र न भवति, यावता य्वाभ्यां परस्य वृद्धिर्नास्ति? इत्यत आह--"न ह्त्र" इत्यादि। प्रसङ्गे हि सति वृद्धेः प्रतिषेधो भवति, नासति; न चात्र य्वाभ्यां परस्य वृद्धेः

प्रसङ्गोऽस्ति, अतः प्रतेषेधो नास्त्येवेत्यभिप्रायः। ननु च "अचामादेः" ७।२।११७ इत्यनुवत्र्तते, तेन य्वौ विशिष्येते--अचामादेरचः स्थाने यौ य्वादिति। न च दध्य()इआरित्यादावेवंविधौ तौ स्त इति। न चात्रैचो भविष्यतः, अतो नार्थः? नैतदस्ति; एवं हयचामादिग्रहणम्(), तेन यदि य्वौ विशिष्येते तदा वृद्धिरविशेषिता स्यात्()। ततश्चेहापि वृद्धेः प्रतिषेधः स्यात्()--द्वे अशीती भृतो भृतो भावी वा "प्राग्वतेष्ठञ्()" ५।१।१८ द्व्याशौतिक इति। अथ वृद्धिर्विशिष्यते--अचामादेरित्येवं वा वृद्धिः, ततो न भवत्येष दोषः। न ह्त्राचामादेरित्येवं वृद्धिः, किं तर्हि? "संख्याया संवत्सरसंख्यस्य च" ७।३।१५ इत्येवम्()। किं तर्हि य्वौ न विशेषितौ स्याताम्()? ततश्च दाध्य()इआरित्यादावैचौ स्यातामेव। तस्मात्? तयोर्विषयव्यवस्थार्थं नेति वक्तव्यम्()। "उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते" इति। स चोत्तरपदाधिकारेऽस्यानुवत्र्तमानत्वाल्लभ्यते। "पूर्वत्रैयलिन्दे" इति। अत्र "विशोऽमद्राणाम्()" ७।३।१३ इत्युत्तरपदवृद्धौ प्राप्तायां प्रतिषेधः। यद्युत्तरपदवृद्धेरप्ययं प्रतिषेधः, तदा द्व्याशीतिक इत्यत्रापि "संख्यायाः संवत्सरसंख्यस्य च" ७।३।१५ इति या वृद्धिरुत्तरपदस्य आप्तेत्यस्या अपि प्रतिषेधः स्यादित्यत आह--"यत्र तु" इत्यादि। कथं पुनरिष्यमाणोऽप्यत्र प्रतिषेधो न भवति? उत्तरपदस्याचामाद्येनाचा हि य्वोर्विशेषणत्वात्()। उत्तरपदसम्बन्दी योऽचामादिरच्? तस्य स्थाने यो य्वौ ताभ्यामुत्तरपदस्य वृद्धिर्न भवति। न च द्व्याशीतिक इत्यत्रोत्तरपदस्याचामादेरचः स्थाने यकार इति नात्र वृद्धेः प्रतिषेधो भवतीति॥

बाल-मनोरमा

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् १०८२, ७।३।३

न य्वाभ्यां। य्च वश्च य्वाविति विग्रहः। वकारादकार उच्चारणार्थं। तदाह--यकारवकाराभ्यामिति। "परस्ये"त्यध्याहारलभ्यम्। न वृद्धिरिति। "मृजेर्व-द्धि"रित्यतस्तदनुवृत्तेरिति भावः। "तु" शब्दो विशेषप्रदर्शनार्थ इत्याह--किंत्विति। ताभ्यामिति। यकारवकाराभ्यामित्यर्थः। पूर्वाविति। पूर्वावयवावित्यर्थः। तेन आगमत्वं लभ्यते। तदाह--ऐचावागमाविति। ऐच्--प्रत्याहारः। यथासङ्ख्यं यकारात्पूर्व ऐकारः, वकारात्पूर्व औकारः। वैयासकिरिति। वेदान्व्यस्यति=विवधमस्यति--शाखाभेदेन विभजतीति वेदव्यासः। कर्मण्यण्। अत्र नामैकदेशग्रहणम्। व्यासस्यापत्यमिति विग्रहः। इञ्प्रत्ययः। प्रकृतेरकडादेशः। अत्र यकारः पदान्तः। तस्मात्परस्य आकारस्य पर्जन्यवल्लक्षणप्रवृत्या आदिवृद्धिः प्राप्ता न भवति, किंतु यकारात्पूर्व ऐकार आगमः। वैयसकिरिति रूपम्। स्व()आस्यापत्यं सौव()इआरित्यत्र वकारात्परस्य न वृद्धिः, किन्तु ततः पूर्व औकारः। नच ऐचो वृद्ध्यापवादत्वादेव वृद्ध्यभावसिद्धेस्तन्निषेधो व्यर्थ इति वाच्यं, यत्र य्वाभ्यां परस्य प्रसक्ताया वृद्धेर्निषेधस्तत्रैव ऐजागमाविति विषयनिर्देशार्थत्वात्। तेन दाध्य()इआरित्यादौ न। वृद्धिनिषेधोऽयं येन नाप्राप्तिन्यायेन आदिवृद्धेरेव। तेन द्वे अशीती भृतो "द्व्याशीतिक" इत्यत्र "सङ्ख्यायाः संवत्सरसङ्ख्यस्य च" इत्युत्तरपदवृद्धिर्भवत्येव। वरुडादयो जातिविशेषाः। वारुडकिः। नैषादकिः। चाण्डालकिः। बैम्बकिः।

तत्त्व-बोधिनी

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ९०५, ७।३।३

न य्वाभ्यां। य्वाभ्यां किम्()। न अर्थो यस्य नार्थः, तस्यापत्यं नार्थिः। पदान्ताभ्यां किम्()। याज्ञिकः। ऐचो विषयप्रदर्शनाय "ने"ति निषेधोक्तिः। तेनेह न---दाघ्यश्विः, माध्वश्विः। न ह्त्र य्वाभ्यां परस्य बृद्धिप्रसक्तिरस्ति। क्वचित्तु वृद्धिप्रसक्तिसत्त्वेऽपि नेष्यते। द्वे अशीति भृतो भूतो भावी वा व्याशीतिकः। वारुडकिरिति। बरिजादयो जातिविशेषाः। वकारस्यापदान्तत्वात् "न य्वाभ्या"मित्यैज्न। इत्यादीति। नैषादकिः, चाण्डालकिः, बैम्बकिः।

---

सूत्रम्

काशिका-वृत्तिः

द्वारादीनां च ७।३।४

द्वार इत्येवम् आदीनां य्वाभ्याम् उत्तरपदस्य अचामादेरचः स्थाने वृद्धिर् न भवति, पूर्वौ तु ताभ्याम् ऐजागमौ भवतः। द्वारे नियुक्तः दौवारिकः। द्वारपालस्य इदं दौवारपालम्। तदादिविधिश्च अत्र भवति। स्वरम् अधिकृत्य कृतो ग्रन्थः सौवरः। सौवरः अध्यायः, सौवर्यः सप्तम्यः इति। व्यल्कशे भवः वैयल्कशः। स्वस्ति इत्याह सौवस्तिकः। स्वर्भवः सौवः। अव्ययानां भमात्रे टिलोपः। स्वर्गमनम् आह सौवर्गमनिकः। स्वाध्याय इति केचित् पठन्ति, तदनर्थकम्। शोभनो ऽध्यायः इत्येतस्यां व्युत्पत्तौ तु पूर्वेण एव सिद्धम्। अथ अपि एवं व्युत्पत्तिः क्रियते, स्वो ऽध्यायः स्वाध्यायः इति? एवम् अप्यत्र एव स्वशब्दस्य एव पाठात् सिद्धम्। तदादावपि हि वृद्धिरियं भवत्येव। स्फ्यकृतस्य अपत्यम् स्फैयकृतः। स्वादुमृदुनः इदम् सौवादुमृदवम्। शुनः इदम् शौवनम्। अणि अन् ६।४।१६७ इति प्रकृतिभावः। शुनो विकारः शौवं मांसम्। प्रणिरजतादिभ्यो ऽञ् ४।३।१५२ इत्यञ्। श्वादंश्ट्रायां भवः शौवादंष्ट्रो मणिः। स्वस्य इदम् सौवम्। स्वग्रामे भवः सौवग्रामिकः। अध्यात्मादित्वात् ठञ्। अपदान्तार्थो ऽयम् आरम्भः। द्वार। स्वर। व्यल्कश। स्वस्ति। स्वर्। स्फ्यकृत। स्वादुमृदु। श्वन्। स्व। द्वारादिः।

न्यासः

द्वारादीनाञ्च।, ७।३।४

"दौवारिकः" इति। "तत्र नियुक्तः" ४।४।६९ इति ठक्()। "द्वारपालस्येदं दौवारपालम्" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। प्रायेण तु पुस्तकेषु "द्वारपालस्येवं दौवारपालिकम्" इति। पाठः, स चायुक्तः; न हि तस्यैद(४।३।१२०)मित्यत्रार्थे द्वारपालशब्दात्? लक्षणेन केनचिट्ठग्विहितः। क्वचित्? पुनः "द्वारपालस्यापत्यं दौवारपालिकः" इति पाठः, तत्र "रेवत्यादिभ्यष्ठक्? ४।१।१४६ इति ठक्()। ननु। तत्र द्वारपालीशब्दः पठ()ते, न तु द्वारपालशब्दः? एवं तर्हि मन्यते--द्वारपालशब्दस्तत्र पठितव्यः, स द्वारपालीशब्दमपि ग्राहयिष्यति; "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्()" (व्या।प।२९) इति। न्यायात्()। ये तु तत्र द्वारपालशब्दं न पठन्ति, तेऽपत्यार्थे दौवारपालिरितीञन्तमुदहरन्ति। कथं पुनद्र्वारस्य गणे द्वारपालस्य भवति? अत्रापि द्वारादिभिराद्यचो विशेषणत्()--द्वारादीनां शब्दानामचां मध्ये य आदिरजिति। वक्ष्यमाणाद्वा तदादिविधेर्ज्ञपिकात्()। "सौवरः" इति। स्वरमधिकृत्य कृतो ग्रन्थ इति "अथिकृत्य कृते ग्रन्थे" ४।३।८७ इत्यण्()। "सौवर्य्यः" इति। "टिड्ढाणञ्()" (४।१।१।५) इति ङीप्()। "वैयल्कशः" इति। "तत्र भवः" ४।३।५३ इत्यण्()। "सौवस्तिकः" इति। "तदाहेति माशब्दादिभ्य उपसंख्यानंम्()" (वा।४८२) इति ठक्()। "सोवर्गमनिकः" ["सौवर्गमिकः"--काशिका] इति। "आहौ प्रभूतादिभ्य उपसंख्यानम्()" (वा।४८३) इति ठक्()। "पूर्वेणैव सिद्धम्()" इति। वकारस्य पदान्तत्वात्? तत्रैतत्? स्यात्()। यद्येवं व्युत्पत्तिः क्रियते--स्वोऽध्यायः स्वाध्यायः, तदाऽपदान्तत्वान्न प्राप्नोति, तस्यां व्युत्पत्तावर्थवान्? स्वध्यायशब्दस्य पाठः? इत्यत आह--"अथाप्येवम्()" इत्यादि। कथं पुनः स्वशब्दात्? स्वाध्यायशब्दस्य सिध्यति? इत्याह--"तदादावपि हि" इत्यादि। "स्फैयकृतः"[स्फैकृतः--काशिका] इति। "ऋष्यन्धकवृष्णिकुरुभ्यश्च" ४।१।११४ इत्यण्()। "सौवादुमृदवः"[सोवादुमृदवम्()--काशिका] इति। अत्रापि "तस्यैदम्()" ४।३।१२० इत्यण्()। एवं "शौवनम्()" इत्यत्रापि। "शौवम्()" इति। "नस्तद्धिते" ६।४।१४४ इति टिलोपः। "शौवादंष्ट्रः" इति। "अन्येषामपि" ६।३।१३६ इति दीर्घः॥

बाल-मनोरमा

द्वारादीनां च १३६६, ७।३।४

द्वारादीनां च। "न य्वाम्या"मिति सूत्रं पदान्ताभ्यामितिवर्जमनुवर्तते, "मृजेर्वृद्धि"रित्यतो वृद्धिरिति च। तदाह--एषां न वृद्धिरैजागमश्चेति। द्वारादीनां नादिवृद्धिः , किन्तु यकारवकाराभ्यां पूर्वौ ऐजागमौ स्त इत्यर्थः। अत्र यकारवकारयोरपदान्तत्वात् "न य्वाभ्या"मित्यप्राप्ते वचनमिदम्। शौवस्तिकमिति। ()आस् इत्यव्ययाज्ञाताद्यर्थे ठञि इकादेशे तुडागमे वकारात्पूर्वमैजागमेन औकारः। अकारस्य न वृद्धिः।

तत्त्व-बोधिनी

द्वारादीनां च १०७५, ७।३।४

शौवस्तिकमिति। नन्वन्तरङ्गत्वात्तुटि ठस्य प्रत्ययादित्वाऽभावात्कर्मठ इत्यत्र ठच इवेकादेशो न स्यात्। न च परत्वादिकादेशे तस्य तुडिति वाच्यम्, आदेशात्प्रागेवान्तरङ्गत्वात्तुटः प्रवृत्तेः। इकादेशस्य त्वाङ्गत्वेन बहिरङ्गत्वात्। सूत्रभङ्गेन तुकि हि क्रियामाणे तु "इसुसुक्तान्ता"दिति कादेशप्रसङ्ग इथि चेत्। सत्यम्। वुञ्छणादिषु ठचश्चित्त्वेन()। कृते त्विकादेशे प्रत्ययस्वरबाधनाय चित्त्वं प्रयुज्यत इति मनोरमायां स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

न्यग्रोधस्य च केवलस्य ७।३।५

न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्य अचामादेः अचः स्थाने वृद्धिर् न भवति, तस्माच् च पूर्वम् ऐकार आगमो भवति। न्यग्रोधस्य विकारः नैयग्रोधः चमसः। केवलस्य इति किम्? न्यग्रोधमूले भवाः शालयः न्याग्रोधमूलाः शालयः। न्यग्रोधयति इति न्यग्रोधः इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे विध्यर्थम्।

न्यासः

न्यग्रोधस्य च केवलस्य। , ७।३।५

"नैयग्रोधः" इति। "तस्य विकारः" ४।३।१३२ इत्यण्()। "न्यग रोहतीति न्यग्रोधः" इति। न्यञ्चतीति ऋत्वि३।२।५९गादिनाऽञ्चतेः क्विन्(), "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्()--ककारः, नेर्यणादेशः। न्यक्पूर्वाद्रूहेः पचाद्यच्()। तत्र "न्यङ्क्वादीनाञ्च" ७।३।५३ इति हकारस्य धकारः, "झलां जशोऽन्ते" ८।२।३९ इति ककारस्य गकारः, लघूपधगुणः--एवं यदा न्यग्रोधशब्दो व्युत्पाद्यते तदा पदान्तत्वाद्यकारस्य "न य्वाभ्याम्()" ७।३।३ इत्यादिनैव सिद्धे नियमार्थमेतत्()--केवलस्यैव यथा स्यात्(), तदादेर्मा भूदिति। "अव्युत्पत्तिपक्षे विध्यर्थमेतत्()" इति। अपदान्तत्वाद्यकारस्य॥

बाल-मनोरमा

न्यग्रोधस्य च केवलस्य १५२२, ७।३।५

न्यग्रोधस्य च। "न य्वाभ्या"मित्युत्तरसूत्रमिदम्। अस्येति केवलस्य न्यग्रोधस्येत्यर्थः। केवलत्वं पदान्तरविहीनत्वं। न्यक् रोहितीति न्यग्रोध इति व्युत्पत्तिपक्षे यद्यपि "नय्वाभ्या"मित्येव सिद्धं, यकारस्य पदान्तत्वात्। तथापि केवलस्यैव इति नियमार्थं सूत्रम्। अव्युत्पत्तिपक्षे तु यकारस्य अपदान्तत्वाद्विध्यर्थमेव। केवलस्य किम्?। न्याग्रोधमूलाः शालयः।

तत्त्व-बोधिनी

न्यग्रोधस्य च केवलस्य ११८५, ७।३।५

न्यग्रोधस्य च। केवलस्येति किम्()। न्यग्रोमूले भवा न्याग्रोधमूलाः--शालयः। न्यक्--रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे तु विध्यर्थम्।

---

सूत्रम्

काशिका-वृत्तिः

न कर्मव्यतिहारे ७।३।६

कर्मव्यतिहारे यदुक्तं तन् न भवति। प्रतिषेधागमयोरयं प्रतिषेधः। व्यावक्रोशी, व्यावलेखी, व्याववर्ती, व्यावहासी वर्तते। कर्मव्यतिहारे णच् स्त्रियाम् ३।३।४३ इति णच्प्रययः, तदन्तात् णचः स्त्रियाम् अञ् ५।४।१४।

न्यासः

न कर्मव्यतिहारे। , ७।३।६

"यदुक्तम्()" इति। वृद्धिप्रतिषेधः, ऐजागमश्च। "व्यावक्रोशो" ["व्याक्रोशी" इति मु। पाठः] इत्यादि। "क्रुश आह्वाने" ["आह्वाने रोदने च"--धा।पा।] (धा।पा।८५६), "लिख अक्षरविन्यासे" (दा।पा।१३६५), "चर्च अध्ययने" (धा।पा।१७१२) चुरादिः, "हसे हसने" (धा।पा।७२१)--एभ्यो व्यवपूर्वेभ्यो णच्(), तदन्तादञ्()। अत्र यथोक्ते कार्ये प्रतिषिद्धे वृद्धिरेव भवति, द्वौ प्रतिषेधो प्रकृत्यर्थं गमयत इति कृत्वा। "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()॥

तत्त्व-बोधिनी

न कर्मव्यतिहारे १५३२, ७।३।६

ऐच् नेति। "न य्वाभ्या"मिति प्राप्तस्य निषेधेनादिवृद्धिरेव। णचस्तद्धितत्वाऽभावेऽप्यञस्तद्धितत्वादिति भावः। कृद्ग्रहमपरिभाषया सोपसर्गधातोर्णजन्तत्वात्ततोऽञि तत्प्रयुक्तादिवृद्धिरुपसर्गस्येत्याशयेनोदाहरति-- वयावक्रोशीति। क्रुश आह्वाने, हसे हसने।स्यादेतत्--"स्त्रियां क्ति"न्निति प्रकरण एवायं मञ्विधेयः। एवंच स्त्रियामिति न कर्तव्यमिति लाघवमिति चेन्मैवम्। स्त्रियामित्यधिकारे वासरूपविधिनिषेधापत्तेः। इष्यते तु व्यावक्रुष्टिरिति। स्त्रियां क्तिन्नपि अपवादविषये क्वचिदिष्यते-- व्यावचोरी। इह "ण्यासश्रन्थे" ति युच्प्राप्तः। व्यात्यक्षी। अत्र "गुरोश्च हलः" इत्यकारप्रत्ययः प्राप्तः। क्वचिदकार एवेष्यते, न तु णच्। व्यतीक्षा, व्यतीहा। सैषा व्यवस्था न्यायतो दुर्लभाऽपि बाहुलकात्स्वीकार्या।

---

सूत्रम्

काशिका-वृत्तिः

स्वागताऽदीनां च ७।३।७

स्वागत इत्येवम् आदीनां यदुक्तं तन् न भवति। स्वागतम् इत्याह स्वागतिकः। स्वध्वरेण चरति स्वाध्वरिकः। स्वङ्गस्य अपत्यम् स्वङ्गिः। व्यङ्गस्य अपत्यम् व्याङ्गिः। व्यडस्य अपत्यम् व्याडिः। व्यवहारेण चरति व्यावहारिकः। व्यवहारशब्दो ऽयं लौकिके वृत्ते वर्तते, न तु कर्मव्यतिहारे। स्वपतौ साधुः स्वापतेयः। द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः। स्वागत। स्वध्वर। स्वङ्ग। व्यङ्ग। व्यड। व्यवहार। स्वपति। स्वागतदिः।

न्यासः

स्वागतादीनाञ्च। , ७।३।७

"स्वागतिकः" इति। शोभनमागतं स्वागतम्()। "तदाहेत्यादौ प्रभूतादिब्य उपसंख्यानम्()" (वा।४८३) इति ठक्।

"स्वाध्वरिकः" इति। अत्रापि "चरति" ४|४|८ इति ठक्()। शोभनोऽध्वरः स्वध्वरः। "स्वाङ्गिः" इत्यादि। "स्वाङ्गिण्याडिः" इति। "अत इङ्()" ४|१|९५। शोभनान्यङ्गान्यस्य स्वङ्गः, विगतान्यङ्गान्यस्य व्यङ्गः, विगतोऽडोऽस्य व्यङः। व्यवहरणं व्यवहारः, भावे घञ्()। ननु च व्यवहारशब्दोऽयं क्रमव्यतीहारे वत्र्तते, तत्र "न कर्मव्यतीहारे" ७|३|६ इति प्रतिषेधः सिद्धः, तत्? कस्मादिह पठ()ते? इत्याह--"व्यवहारशब्दोऽयम्()" इति। किं पुनर्लौकिकम्()? लौकिकं पुनर्वृत्तं येनाचारेण व्यवहाराल्लोके व्यावहारिक इत्युच्यते तद्वेदितव्यम्()। "स्वापतेयम्()" इति। "पथ्यतिथिवसतिस्वपतेर्ढञ्()" ४|४|१०३। कथं पुनरत्र प्राप्तिः, यावता नास्य वकारः पदन्तः? इत्याह--"द्वारादिषु स्वशब्दपाठादस्य प्राप्तिः" इति। तदादिविधिनेत्यभिप्रायः। यता तदादिविधिर्भवति तथा तत्रैवोक्तम्()॥

बाल-मनोरमा

स्वागतादीनां च १५२८, ७|३|७

स्वागतादिगणे-स्वागत, स्वध्वर इति पठितं, तत्र विशेषमाह--स्वागतादीनां च। "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच" इति प्रकरणे "न कर्मव्यतिहारे" इत्यस्मादुत्तरं सूत्रमिदम्। ऐज्न स्यादिति। शेषपूरणमिदम्। "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच" इति प्राप्त ऐज्न स्यादित्यर्थः। स्वाध्वरिक इति। स्वध्वर इत्याहेत्यर्थः। अथ स्वागतादिगणशेषमुदाहरति--स्वङ्गस्येति। व्याङ्गिरिति। व्यङ्गस्यापत्यमिति विग्रहः। व्यडस्येति। न विद्यते डो यस्य स अडः, विगतोऽडो व्यडः। स्वापतेयमिति। "पथ्यतिथिवसतिस्वपतेर्ढञ्"। द्वारादित्वादैच् प्राप्तो निषिध्यते।

आहाविति। आहेति पदैकदेशादिकारस्य उच्चारणार्थो निर्देशः। तदिति पूर्ववार्तिकादनुवर्तते। आहेत्यर्थे द्वितीयान्तेभ्यः प्रभूतादिभ्यष्ठग्वाच्य इत्यर्थः। पार्याप्तिक इति। पर्याप्तमाहेत्यर्थः।

पृच्छताविति। "त"दित्यनुवर्तते। पृच्छतीत्यर्थे द्वितीयान्तेभ्यः सुस्नातादिभ्यष्ठग्वाच्य इत्यर्थः। सौखशायनिक इति। सुखशयनं पृच्छतीत्यर्थः। अनुशतिकादिरिति। "सुखशयनशब्द" इति शेषः। ततश्च "अनुशतिकादीनां चे"ति पूर्वोत्तरपदयोरादिवृद्धिरिति भावः।

गच्छताविति। तदित्यनुवर्तते। गच्छतीत्यर्थे परदारादिभ्यो द्वितीयान्तेभ्यष्ठगित्यर्थः। पारदारिक इति। परदारान्गच्छतीत्यर्थः। गौरुतल्पिक इति। गुरुतल्पं गच्छतीत्यर्थः। गुरुतल्पो=गुरुस्त्री।

तत्त्व-बोधिनी

स्वागतादीनां च ११८९, ७|३|७

स्वपतेयमिति। "पथ्यतिथि वसतिस्वपतेर्ढञ"। स्वशब्दस्य द्वारादित्वादैजागमस्य प्राप्तिः। द्वारादित्वफलं तु स्वस्येदं "सौव"मिति ज्ञेयम्।

आहौ प्रभूतादिभ्यः। आहाविति। "उपसङ्ख्यान"मित्यनुषज्यते। आहेतिपदे एकदेशस्य प्रकृतिभागस्यागन्तुकेनेकारेण "आहा"वित्यनुकरणम्। प्राभूतिक इति। क्रियाविशेषणाद्वक्तरि प्रत्ययः।

---

सूत्रम्

काशिका-वृत्तिः

श्वाऽदेरित्रि ७|३|८

श्वादेः अङ्गस्य इञि परतो यदुक्तं तन भवति। श्वभस्त्रस्य अपत्यम् श्वाभस्त्रिः। श्वादंष्ट्रिः। श्वन्श्बदो द्वारादिषु पठ्यते, तत्र च तदादिविधिर् भवति इति एतदेव वचनं ज्ञापकम्। इकारादिग्रहणम् कर्तव्यं श्वागणिकाद्यर्थम्। श्वगणेन चरति श्वागणिकः। श्वायूथिकः। तदन्तस्य च अन्यत्र अपि तद्धिते प्रतिषेध इष्यते। श्वाभस्त्रेः इदम् श्वाभस्त्रम्।

न्यासः

�आआदेरिञि। , ७।३।८

"()आआभास्त्रिः ()आआदंष्ट्रिः" इति। ()ओव भस्त्रा यसय, शुन इव दंष्ट्रा यस्येति बहुव्रीहिः, उपसर्जनह्यस्वत्वम्()। केन पुनः ()आआदेर्वृद्धिप्रतिषेधः प्राप्नोति; यतोऽयं प्रतिषेध उच्यते, न ह्रस्य वकारः पदानतः? इत्यत आह--"()आशब्दो द्वारादिषु पठ()ते" इति। ननु च केवलः ()आशब्दो द्वारादिषु पठ()ते, तत्र कः प्रसङ्गौ यतस्तदादेः स्यात्()! "यस्मिन्? विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) इत् तददिविधिर्ति चेत्()? नैतदस्ति; सप्तमीनिर्दिष्टै हल्ग्रहणे च सति तदादिविधिर्भवति, न चात्रैतदुभयमस्तीत्यत आह--"तत्र च" इत्यादि। यदि तत्र तदादिविधिर्न स्यात्(), तदैतत्? प्रतिषेधवचनमनर्थकं स्यात्(); प्राप्त्वभावादित्यभिप्रायः। ज्ञापकसय प्रयोजनम्()--शौवादंष्ट्रो मणिरित्यादौ वृद्धिप्रतिषेधः। "इकारादिग्रहणं कत्र्तव्यम्()" इति। इकारादितद्धितो गृह्यते, येन तदिकारादिग्रहणं व्याख्यानं कत्र्तव्यमित्यर्थः। किमर्थमित्याह--"()आआगणिकाद्यर्थम्()" इति। ()आआगणिकादीनामर्थः=प्रयोजनं य()स्मस्तत्? तथोक्तम्। अर्थस्तु तेषामादिवृद्धिरेव। तत्रैवं व्याख्यानम्()--इञ्()ग्रहणमिहेकारादेस्तद्धितस्योपलक्षणार्थम्(), तेनान्यत्रापि तद्धिते प्रतिषेधो भवतीति। "तदन्तस्य" इति। इञन्तस्यान्यन्नायीति। कथं पुनरिष्यमाणोऽन्यत्र लभ्यते, यावताऽन्यत्रापि तद्धित उत्पन्न इञः "यस्येति च" (६।४।१४८) इति लोपेन भवितव्यम्()? नैष दोषः; इञीति नेयं निमित्तसप्तमी, किं तर्हि? परसप्तमी। निमित्तसप्तम्यामण्निमित्ताय वृद्धेः प्रतिषेधस्य प्रतिषेधो न स्यात्()। परसप्तम्यां तु यद्यपि लोपः क्रियते, तथापि स्थानिवद्भावात्? प्रतिषेधः सिध्यति। "()आआभस्त्रम्()" इति। "इञश्च" ४।२।१११ इत्यण्()॥

बाल-मनोरमा

�आआदेरिञि १५३९, ७।३।८

()आआदेरिञि। "न कर्मव्यतिहारे" इत्यतो नेत्यनुवर्तते। अङ्गस्येत्यधिकृतम्। ()आन्शब्द आदिर्यस्येति विग्रहः। ()आन्शब्दपूर्वपदस्याङ्गस्य इञि परे नैजागम इत्यर्थः। ()आआमस्त्रिरिति। "अत इञ्"। ()आआदंष्ट्रिरिति। "()आदंष्ट्रस्याऽपत्यमित्यर्थः। ननु ()आन्शब्द एव द्वारादौ पठ()ते नतु ()आभस्त्रशभ्दः। ततश्च तस्य द्वारादित्वाऽभावादैजागमप्रसक्तिरेव नेत्यत आह--तदादिविधाविति। द्वारादिगणे ()आन्शब्दस्य पाटेऽपि अस्मादेव प्रतिषेधात् ()आन्शब्दपूर्वकस्याङ्गस्य द्वारादिगणे ग्रहणं विज्ञायत इत्यर्थः। तत्फलं तु ()आवहनस्येदं शौववहानं नाम नगरम्।

ननु प्रकृते ()आआगणिके इञभवात्कथमयं निषेध इत्यत आह--इकारादाविति वाच्यमिति। इञीति परित्यज्य इकारादाविति वाच्यमित्यर्थः। इढि तु व्यपदेशित्त्वेन इकारादित्वम्। ()आआगणिक इति ठञि आदिवृद्धिः। ()आगणिक इति। ष्ठनि रूपम्। ()आआगणिकीति। ठञन्तात् "टिड्ढाण"ञिति ङीप्। ()आगणिकीति। षित्त्वान्ङीष्।

तत्त्व-बोधिनी

रुदश्च पञ्चभ्यः २६५, ७।३।८

रुदश्च। पञ्चभ्यः किम्?। जागर्तेर्लङि--अजागः।

तत्त्व-बोधिनी

�आआदेरिञि ११९५, ७।३।८

इदमेव ज्ञापकमिति। द्वारादिगणे ()आन्()शब्दः पठ()ते, न तु ()आभस्त्र ()आदंष्ट्रेत्यादिस्तथा च "()आआदेरिञी"ति निषेधसूत्रमेव व्यर्थं सद्द्वारादिषु तदादिविधिं ज्ञापयतीत्यर्थः। फलं तु द्वारपालस्यायं "दौबारपाल"इत्यादावैजागमस्य प्रवृत्तिः।

इकारादाविति वाच्यम्। इकारादाविति। सूत्रे इञीत्यपनीय इकारादाविति पठनीयमित्यर्थः। अन्ये तु इञीति स्थाने इतीति पठनीयम्। तथा चाऽङ्गाक्षिप्तप्रत्ययस्य विशेष्यत्वात् "यस्मिन्विधिस्तदादौ"इत्यनेन इकारादिर्लभ्यत इत्याहुः। ()आगणिकीति। ष्ठनः षित्त्वान्ङीष्।

---

सूत्रम्

काशिका-वृत्तिः

पदान्तस्य अन्यतरस्याम् ७।३।९

श्वादेः अङ्गस्य पदशब्दान्तस्य अन्यतरस्यां यदुक्तं तन् न भवति। श्वपदस्य इदम् श्वापदम्, शौवापदम्।

न्यासः

पदान्तस्यान्यतरस्याम्?। , ७।३।९

पूर्वेण नित्ये प्राप्ते प्रतिषेधे विकल्प उच्यते। "पदान्तस्य" इति। पदशब्दान्तस्येत्यर्थः। "()आआपदम्()" इति। शुन इव पदमस्येति ()आपदः, तस्येदं ()आआपदम्()। "शौवापदम्()" इति। "अन्येषामपि दृश्यते" ६।३।१३६ इति दीर्घः॥

बाल-मनोरमा

पदान्तस्यान्यतरस्याम् १५४०, ७।३।९

प्रसङ्गादाह--पदान्तस्यान्यतरस्याम्। "()आआदेरिञी"त्यस्यमादुत्तरं सूत्रमिदम्। पदं-पदशब्दोऽन्तो यस्येति विग्रहः। तदाह--पदशब्दान्तस्येति ऐज्वेति। निषेधविकल्पे सति विधिविकल्पः। फलित इति भावः। ()आआपदस्येति। शुनः पदमिव पदं यस्येति विग्रहः। "शुनो दन्तदंष्ट्रे"त्यादिना दीर्घः। शौवापदमिति। "तस्येद"मित्यण्। "वृद्धाच्छः" इति तु न , अनभिधानादित्याहुः। अन्ये तु ()आपुच्छवद्दीर्घाऽभावे अणमाहुः।

तत्त्व-बोधिनी

पदान्तस्यान्यतरस्याम् ११९६, ७।३।९

()आआपादस्येति। "अन्येषामपि दृश्यते"इति दीर्घः। धावुक इति वेतनादिगणे धनुर्दण्डेति पठ()ते, तच्च सङ्घातविगृहीतार्थम्। तथा च "धानुर्दण्डिकः", "दाण्डिक" इत्यप्युदाहार्यम्।

---

सूत्रम्

काशिका-वृत्तिः

उत्तरपदस्य ७।३।१०

उत्तरपदस्य इत्ययम् अधिकारः हनस्तो ऽचिण्णलोः ७।३।३२ इति प्रागेतस्मात्। मदित ऊर्ध्वम् अनुक्रमिष्यामः

उत्तरपदस्य इत्येवं तद् वेदितव्यम्।

न्यासः

उत्तरपदस्य। , ७।३।१०

अङ्गस्यचामादेरचो वृद्धौ प्राप्तायामिदमुच्यते। ननु च "अवयवादृतौः" ७।३।११ इत्यदौ पञ्चमीनिर्देशादन्तरेणाप्युत्तरपदाधिकारं "तस्मादित्युत्तरस्य" १।१।६६ इत्युत्तरपदस्यैव भविष्यति, तत्? किमुत्तरपदाधिकारेण? इतयत आह--"यत्र"--इत्यादि। आदिशब्देन "ह्मद्भगसिन्ध्वन्ते पूर्वपदस्य" ७।३।१९, "अनुन्नतिकादीनाञ्च" ७।३।२०, "देवताद्वन्द्वे च" ७।३।२१--इत्येवमादयो गृह्रन्ते। एषु पञ्चमीनिर्देशाभावादसत्युत्तरपदाधिकारोऽङ्गसयाचामादेरच एव वृद्धिः स्यात्(), नोत्तरपदस्य। तस्मात्? तदर्थमुत्तरपदाधिकारः क्रियते। यद्येवम्(), इह "अवयवादृतोः" ७।३।११ इत्येतन्नोपन्यसनीयम्(), अत्र पञ्चमीनिर्देशस्य विद्यमानत्वात्? इति चोद्यमाशङ्क्यान्यार्थं क्रियमाणस्य यत्रापि पञ्चमीनिर्देशोऽस्ति, तत्रापि प्रासङ्किकं कार्यमाह--"पञ्चमीनिर्देशेष्वपि" इत्यादि। प्रयोजनान्तरमपर्याह--"वृद्धेश्च" इत्यादि। उत्तरपदाधिकारे या विहिता वृद्धिरित्येष व्यपदेशो वृद्धेर्यथा स्यादित्यवमक्छञ्चोत्तरपदाधिकारः क्रियते। किं पुनः कारणमेवं वृद्धेरव्यपदेशः प्राश्र्यते? इत्याह--"उत्तरपदवृद्धौ" इत्यादि। उत्तरपदाधिकारे विहिते वृद्धिमत्युत्तरपदे पूर्वपदस्यान्तोदात्तत्वं यथा स्यादित्येवमर्थम्()। "उत्तरपदवृद्धौ सर्वञ्च" ६।२।१०५ इत्यत्रोत्तरपदाधिकारे या विहिता वृद्धिरित्येवं विधायते। एतत्कथं शक्यते विज्ञातुम्()? यदि व्यपदेशार्थ उत्तरपदाधिकारः क्रियते, नान्यथा। तस्माद्व्यपदेशार्थश्चोत्तरपदाधिकारः कत्र्तव्यः॥

बाल-मनोरमा

उत्तरपदस्य १३७६, ७।३।१०

उत्तरपदस्य। अधिकारोऽयमिति। सप्तमे आदिवृद्धिप्रकरणे एतदादिसूत्राणि।

बाल-मनोरमा

नञः शुची�आरक्षेत्रज्ञकुशलनिपुणानाम् १४३९, ७।३।१०

नञः शुची()आरः। आदिवृद्धिप्रकरणे उत्तरपदस्य पूर्वस्य तु वेत्यनुवृत्ताविदं सूत्रम्। आशौचम् - आशौचमिति। अशुचेरागतमित्यर्थः। "तत आगत" इत्यणि पूर्वपदस्यादिवृद्धिविकल्पः। उक्त्रपदस्य तु नित्या आदिवृद्धिः। एवमग्रेऽपि अक्षेत्रज्ञात् अकुशलात् अनिपुणाच्च आगतमित्यर्थो बोध्यः। आनै()आर्यमित्यत्र तु ब्राआह्मणादित्वाद्भावे ष्यञ्।

---

सूत्रम्

काशिका-वृत्तिः

वक्ष्यति अवयवादृतोः ७।३।११

पूर्ववर्षिकम्। अपरवार्षिकम्। पुर्वहैमनम्। अपरहैमनम्। यत्र पञ्चमीनिर्देशो न अस्ति जे प्रोष्ठपदानाम् ७।३।१८ इत्येवम् आदौ, तदर्थम् उत्तरपदाधिकारः। पञ्चमीनिर्देशेष्वपि विस्पष्टार्थम्, वृद्धेश्च व्यपदेशार्थम्। उत्तरपदवृद्धौ सर्वं च ६।२।१०५ इति उत्तरपदाधिकारे या वृद्धिः इत्येवं विज्ञायते। अवयवादृतोः ७।३।११। अवयववाचिनः उत्तरस्य ऋतुवाचिनः उत्तरपदस्य च अचामादेः अचः वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। पूर्ववार्षिकम्। पूर्वहैमनम्। अपरवार्षिकम्। अपरहैमनम्। पूर्वं वर्षाणाम्, अपरं वर्षाणाम् इति एकदेशिसमासः। तत्र भवः ४।३।५३ इत्येतसिमिन्नर्थे वर्षभ्यष्ठक् ४।३।१८, हेमन्ताच् च ४।३।२१, सर्वत्र अण् तलोपश्च ४।३।२२ इत्यण् प्रत्ययः। तत्र ऋतोर् वृद्धिमद्विधौ अवयवातिति

तदन्तविधिः। अवयवातिति किम्? पूर्वासु वर्षासु भवम् पौर्ववर्षिकम्। कालाट् ठञ् ४।३।११ इति ठञ्। अवयवपूर्वस्य एव तदन्तविधिः, न अन्यस्य।

न्यासः

अवयवादृतोः। , ७।३।११

"ऋतोः" [नास्ति--मु। पुस्तके] इति। नेदं स्वरूपग्रहणम्(), किं तर्हि? अर्थग्रहठणम्()। तथा ह्नवययवादित्युच्यते, ऋतोश्चायं एवावयधी भवति। अवयविथ्येनतौ। विज्ञयमानेऽर्थनिर्देशोऽयं विज्ञायते, ततश्चावयववाचिनः पूर्वपदादुत्तरस्यर्त्तुवाचिनः कार्यं विज्ञायत इत्याह--"अवयववाचिनः" इत्यादि। "एकदेशिसमासः" इति। पूर्वापरादिसूत्रेण २।२।१। ननु ग्रहठणवता प्राप्तिपधेकेन तदन्तविधिः (व्या।प।८९) प्रतिषिध्यते, तत्कथं वर्षाहेमन्ताभ्यां प्रत्ययो विधीयमानस्तदन्ताभ्यां लक्ष्यते? इत्याह--"तत्र ऋती वृद्धिमद्विधाववयवानाम्()" इति। "पौर्ववर्षिकः" [पौर्ववार्षिकम्()--काशिका] इति। पूर्वाश्च ता वर्षाश्चेति विशेषणसमासं कृत्वा भवार्थे तद्धितो विधेयः। पूर्वशब्दोऽत्र कालवाची, न त्ववयववाचीत्यङ्गस्यादिवृद्धिरेव भवतोति। अथात्रापि तदन्तविधिना ठक्? कस्मान्न भवपति? इत्याह--"अवयवपूर्वस्यैव हि" इत्यादि॥

बाल-मनोरमा

अवयवादृतोः १३७७, ७।३।११

अवयवादृतोः। पूर्वपदादिति। "परस्ये"ति शेषः। ऋतुवाचिन इति। "उत्तरपदस्ये"ति सेषः। पूर्ववार्षिक इति। ऋतिविशेषे वर्णशब्दो नित्यस्त्रीलिङ्गो बहुवचनान्तः। वर्षाणां पूर्वं-पूर्ववर्षाः, तत्र जात इत्यर्थः। पूर्वापराधरोत्तर"मित्येकदेशिसमासः। अपरहैमन इति। हेमन्तस्यापरम्-अपरहेमन्तः। तत्र जातादिरित्यर्थः। एकदेशिसमासः। अपरहैमन इति। हेमन्तस्यापरम्--अपरहेमन्तः। तत्र जातादिरित्यर्थः। एकदेशिसमासः। "सर्वत्राण्च तलोपश्चे"त्यण्, तलोपश्च, उत्तरपदादिवृद्धिः। पूर्वासु वर्षास्विति। "तद्धितार्थ" इति समासः। आदिवृद्धिरेव, न तु उत्तरपदादि वृद्धिः, पूर्वपदस्य अवयववृत्तित्वाऽभावात्।

ननु कथमिह "वर्षाभ्यष्ठ"गिति ठक्, प्रत्ययविधौ तदन्तविधिप्रतिषेधात्, तत्राह--ऋतोरिति। अवयववाचकानां शब्दानामुपरि स्थिताद्दतुवाचकाद्वृद्धिनिमित्तकप्रत्ययविधाने कर्तव्ये तदन्तविधिर्वाच्य इत्यर्थकेन "येन विधि"रिति सूत्रभाष्यस्थितवचनेन पूर्वत्र=पूर्वमुदाह्मते उदाहरणे तदन्तविधिरित्यर्थः। तथाच पूर्ववार्षिक इत्यत्र "पूर्वहैमन" इत्यत्र चोदाहरणे "वर्षाभ्यष्ठ"गिति ठक्, "सर्वत्राण् च तलोपश्चे"त्यण्तलोपौ च सिध्यन्ति। इह तु नेति। प्रत्युदाहरणे तु तदन्तविधिर्नास्ति। पूर्वासु वर्षास्विति सामानाधिकरण्येन पूर्वशब्दस्य अवयववृत्तित्वाऽभावादित्यर्थः। ततश्च प्रत्युदाहरणे "पौर्ववार्षिक" इत्यत्र "कालाट्ठञि"ति ठञेव, नतु ठक्। स्वरे विशेषः। पौर्वहेमन्तिक इत्यत्रापि ठञेवेति भावः।

तत्त्व-बोधिनी

अवयवादृतोः १०८२, ७।३।११

अवयवादृतोः। पूर्ववार्षिक इत्यादि। वर्षाणां पूर्वः, हेमन्तस्यापर इति विग्रहे "पूर्वापराधरोत्तर"मित्येकदेशसमासः। पूर्वास्विति। तद्धितार्थे समासः।

ऋतोर्वृद्धिमद्विधाववयवानम्। ऋतोर्वृद्धिमद्विधाविति। ऋतुवाचिनः शब्दाद्वृद्धिनिमित्तकप्रत्ययविधाने तदन्तविधिर्वाच्यः, स चेदृतुवाची शब्दोऽवयवेभ्यः पर इत्यर्थः। पूर्वत्रेति। "पूर्ववाषिकः"अपरहेमन"इत्यत्र। तथा च "वर्षाब्यष्ठक्", "सर्वत्राण्च

तलोपश्चे"त्याभ्यां क्रमेण ठगणौ भवतः। वृद्धिमद्विधौ किं()। पूर्वप्रावृषम्। "प्रावृष एण्यः"इत्यत्र तदन्तविध्यभावादिह ऋत्वणेव। इह त्विति। "पौर्ववर्षिक"इत्यत्र। तथा चेह--"कालाद्व"ञिति ठञेवेति भावः। अवयवत्वाभावादिति। अन्यथा पूर्वासु वर्षास्वित सामानाधिकरण्यं न सङ्गच्छेतेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सुसर्वार्धाज् जनपदस्य ७।३।१२

सु सर्व अर्ध इत्येतेभ्यः उत्तरस्य जनपदवाचिनः उत्तरपदस्य अचामादेरचः वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। जनपदतदवध्योश्च ४।२।१२३, अवृद्धादपि बहुवचनविषयात् ४।२।१२४ इति वुञ्। सुसर्वार्धदिक्शब्देभ्यो जनपदस्य इति तदन्तविधिः।

न्यासः

सुसर्वार्धाज्जनपदस्य। , ७।३।१२

"जनपदस्य" इति। नेवं स्वरूपग्रहणम्(), उत्तरसूत्रे "अमद्राणाम्()" ७।३।१३ इति निषेधात्()। उत्तरसूत्रेहीदमेव जनपदग्रहणमनुवत्र्तते, ततोऽत्र यदि स्वरूपग्रहणं स्यात्(), मद्राणां प्रतिषेधोऽनर्थकः स्यात्(), तस्मादर्थस्येदं ग्रहणम्(), तेन जनपदवचिनः कार्यं विज्ञायत इत्याह--"सुसर्वार्धं इत्येतेब्य उत्तरस्य जनपदवाचिनः" इत्यादि। "सुपाञ्चालकः" इति। शोभनाः पञ्चाला इति प्रादिसमासः। "सर्वपाञ्चालकः" इति। "पूर्वकालैक" २।१।४८ इत्यादिना कर्मधारयः। "अर्धपाञ्चालकः" इति। "अर्ध नपुंसकम्()" २।२।२ इत्यर्धशब्देन तत्पुरुषः। सर्वत्र शैषिके जातादावर्थे तद्धितः। कथं जनपदात्? "जनपदतदवद्योश्च" (४।२।१२४) इत्युच्यमानः प्रत्ययस्तदन्ताद्भवति? इत्याह--"सुसर्वार्धदिक्शब्देभ्यः" इत्यादि॥

बाल-मनोरमा

सुसर्वार्धाज्जनपदस्य १३७८, ७।३।१२

सुसर्वार्धाज्जनपदस्य। सु, सर्व, अर्ध इत्येतत्पूर्वस्य जनपदवाचिन इत्यर्थः। उत्तरपदस्य वृद्धिरिति। शेषपूरणम्। सुपाञ्चालक इति। सुपञ्चालेषु जात इत्यर्थः। जनपदेति। "जवपदतदवध्यो"रित्यनुवृत्तौ "अवृद्धादपि बहुवचनविषया"दिति वुञित्यर्थः। ननु "अनृद्धादपी"ति प्रत्ययविधौ कथं तदन्तविधिरित्यत आह--सुसर्वेति। सु, सर्व अर्ध, दिक्शब्द -एभ्यः परस्य जनपदवाचिन उपरि प्रत्ययविधौ तदन्तविधिरित्यर्थकेन "येन विधि"रिति सूत्रभाष्यपठितवचनेन तदन्तविधिरित्यर्थः।

तत्त्व-बोधिनी

सुसर्वार्धाज्जनपदस्य १०८३, ७।३।१२

सुसर्वा। जनपदतदवध्योरितीति। तस्मिन्ननुवर्तमाने "अवृद्धादपि बहुवचनविषया"दित्यनेनेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

दिशो ऽमद्राणाम् ७।३।१३

दिग्वाचिनः उत्तरस्य जनपदवाचिनो मद्रवर्जितस्य अचामादेरचः वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। पूर्वपाञ्चालकः। अपरपाञ्चालकः। दक्षिणपाञ्चालकः। पूर्ववत् तदन्तविधिः प्रत्ययश्च। दिशः इति किम्? पूर्वः पञ्चालानाम् पूर्वपञ्चालः, तत्र भवः पौर्वपञ्चालकः। आपरपञ्चालकः। अमद्राणाम् इति किम्? पौर्वमद्रः। आपरमद्रः। मद्रेभ्यो ऽञ् ४।२।१०७ इति अञ्प्रत्ययः।

न्यासः

दिशोऽमद्राणाम्?। , ७।३।१३

"पूर्वपाञ्चालकः" इति। पूर्वेषु पाञ्चालेषु भवति इति तद्धितार्थे समासः, ततो वृञ्()। दिश इति किम्()? पूर्वं पाञ्चालानां पूर्वापाञ्चालः। पूर्वापरादि २।२।१ सूत्रेणैकादेशिसमासः, तत्र भवः पौर्वपाञ्चालः। दिशि यो वत्र्तते स इह दिक्शब्दोऽभिप्रेतः। न चायं पूर्वशब्दो दिशि वत्र्तते, किं तर्हि? अवयवे। तेन पूर्वपदवृद्धिरेव भवति। योगविभाग उत्तरार्थः। प्राचां ग्रामनगराणां दिश एवोत्तरपदस्य यथा स्यात्(), सुसर्वार्धान्मा भूदिति॥

बाल-मनोरमा

ब्राउव ईट् २८३, ७।३।१३

ब्राउव ईट्। "नाभ्यस्तस्ये"त्यतः पितीति, "उतो वृद्धि"रित्यतो हलीति चानुवर्तते। तदाह--ब्राउवः परस्येत्यादिना। ननु आत्थेत्यत्र आहादेशस्य स्थानवत्त्वेन ब्राऊत्वात्ततः परस्य थस्य ईडागमः स्यादित्यत आह-- आत्तेत्यत्रेति। स्थानिवद्भावात्प्राप्तोऽयमीडागमो न भवतीत्यन्वयः। कुत इत्यत आह-- झलीति थत्वविधानादिति। "आहस्थः" इति झलि परत आहादेशस्य थत्वं विधीयते। इटि तु सति झलादित्वाऽभावात्तन्निर्विषयं स्यात्। अत आत्थेत्यत्र ईण्नेति विज्ञायत इत्यर्थः। ब्राउवन्तीति। ब्रावीषि ब्राऊथः ब्राऊथ। ब्रावीमि ब्राऊवः ब्राऊमः। लट आत्मनेपदे आह-- ब्राऊते इति। ब्राउवः पञ्चाना"मित्यत्र परस्मैपदानामित्यनुवृत्तेराहादेशो न। ब्राउवाते ब्राउवते। ब्राऊषे ब्राऊवाथ ब्राऊध्वे। ब्राउवे ब्राऊवहे ब्राऊमहे।

बाल-मनोरमा

दिशोऽमद्राणाम् १३७९, ७।३।१३

दिशोऽमद्राणाम्। "अमद्राणा"मिति च्छेदः। दिग्वाचकादिति। "परस्ये"ति शेषः। जनपदवाचिन इति। मद्रवाचिभिन्नस्येत्यपि बोध्यम्। वृद्धिरिति। "आदे"रिति शेषः। पौर्वपञ्चाल इति। अत्र पूर्वशब्दः कालवाचीति भावः। पौर्वमद्र इति। "मद्रेभ्योऽञि"त्यञ्। ननु "सुसर्वार्धदिशो जनपदस्याऽमद्राणा"मित्येकसूत्रमेवास्त्वित्यत आह--योगविभाग उत्तरार्थ इति। "प्राचां ग्रामनगराणा"मित्युत्तरसूत्रे दिश एव संबन्धो यथा स्यादित्येवमर्थमित्यर्थः। एकसूत्रत्वे तु सुसर्वादिभ्यः परस्यापि मद्रशब्दस्य पर्युदासः प्रसज्येतेति इहार्थोऽपीत्येके।

तत्त्व-बोधिनी

ब्राउव ईट् २४७, ७।३।१३

ब्राउव ईट्। हलादेः किम्?। ब्रावाणि। पितः किम्?। ब्राऊतः। झलीति थत्वविधानादिति। ईडागमे कृते झलादित्वाभावादिति भावः। इण् गतौ।

तत्त्व-बोधिनी

दिशोऽमद्राणाम् १०८४, ७।३।१३

दिशो। पौर्वमद्रैति। "मद्रेभ्योऽ"ञित्यञ्। पूर्वाह्णक इथि। "विभाषा पूर्वाह्णापराह्णाभ्या"मित्यस्यापवादः।

---

सूत्रम्

काशिका-वृत्तिः

प्राचां ग्रामनगराणाम् ७।३।१४

प्राचां देशे ग्रामनगराणां दिश उत्तरेषाम् अचामादेरचो वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। ग्रामाणाम् पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः। अपरैषुकामशमः। पूर्वकार्ष्णमृत्तिकः। अपरकार्ष्णमृत्तिकः। नगराणाम् पूर्वस्मिन् पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः। अपरपाटलिपुत्रकः। पूर्वकान्यकुब्जः। अपरकान्यकुब्जः। ग्रामत्वादेव नगराणाम् अपि ग्रहणे सिद्धे भेदेन यदुभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थम्। दिक्पूर्वपदो हि समुदायः पूर्वेषुकामशम्यादिः ग्रामनामधेयम्। पाटलिपुत्रादिः पुनरुत्तरपदम् एव नगरम् आह। तत्र ग्रामवाचिनाम् अङ्गानाम् अवयवस्य दिक्शब्दादुत्तरस्य नगरवाचिनाम् उत्तरपदानाम् अवयवस्य च वृद्धिर् भवति इत्येवम् अभिसम्बन्धः क्रियते। इतरत्र तु दिश उत्तरेषाम् नगराणाम् इत्येव। पूर्वैषुकामशमः इत्येवम् आदिषु कृतायाम् उत्तरपदवृद्धौ एकादेशो भवति इति ज्ञापि त नेन्द्रस्य परस्य ७।३।२२ इति प्रतिषेधेन।

न्यासः

प्राचां ग्रामनगराणाम्?। , ७।३।१४

"जनपदस्य" ७।३।१२ इत्यनुवत्र्तते, तेन प्राचामित्येतद्देशग्रहणं विज्ञायते न त्वाचार्यग्रहणमिति मात्वाऽऽह--"प्राचां देशे ग्रामाणाम्()" इत्यादि। "पुर्वेषुकामशमः" इति। पूर्वा चासाविषुकामशमी चेति "दिक्संख्ये संज्ञायाम्()" २।१।४९ इति समासः, ततो भवार्थे "दिक्पूर्वपदादसंज्ञायां ञः" ४।२।१०६ इति। "पूर्वपाटलिपुत्रकः" इति। पूर्वस्मिन्? पाटलिपुत्रे भव इति पूर्ववत्? तद्धितार्थे समासः। "रोपधेतोः" ४।२।१२२ इति वुञ्()। ननु चैकमेव पाटलिपुत्रम्(), तत्र पाटलिपुत्रान्तरस्य व्यवच्छेद्यस्याभावात्(), तत्कथं पूर्वशब्देन पाटलिपुत्रशब्दो विशिष्यते? पाटलिपुत्रैकदेशे पाटलिपुत्रशब्दो वत्र्तत इत्यदोषः। अथ नगरग्रहणं किमर्थम्(), न "ग्रामाणाम्()" इत्येवं सिद्धम्(), नगरमपि हि ग्रामो भवत्येव; जननिकायनिवासे ग्रामो रूढः, नगरञ्च जननिकायनिवास एव, अतश्च नगरमपि ग्रामः, यतो ये ग्रामे विधयो नेष्यन्ते, नगरेऽपि ते न क्रियन्ते। तथा हि--"अभक्ष्यो ग्राम्यकुक्कुटः", "अभक्ष्यो ग्राभ्यशूकरः"--इत्युक्ते नागरोऽपि न भक्ष्यते; "ग्रामे नाध्येतव्यम्()" इत्युक्ते नगरेऽपि नाधीयते, तस्मान्नगरमपि ग्रामः। एवञ्च कृत्वा--"उदीच्यग्रामाच्च बह्चोऽन्तोदात्तात्()", ४।२।१०८, "वाहीकग्रामेभ्यश्च" ४।२।११६, "दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु" ६।२।१०३ इत्यत्र ग्रामग्रहणेन नगरग्रहणमपि भवतीत्याह--"ग्रामत्वादेव" इत्यादि। यदि तर्हि नगरमपि ग्रामः, तदा "विशिष्टलिङ्गो नदीदेशोऽग्रामाः" २।४।७ इत्यत्र नगरग्रहणं प्राप्नोति? सत्यमेतत्(), तत्र तु नगराणां प्रतिषेधो वक्तव्यः। स एव च सम्बन्धभेदः कुतो हेतोर्भवति, यस्य प्रतिपत्तथे ग्रामनगरयोर्भेदेनोपादानं क्रियते! इत्याह "दिक्पूर्वपदो हि" इत्यादि। यदि हि यथा दिक्पूर्वपदः पूर्वोत्तरसमुदायः पूर्वेषुकामशम्यादिग्रामनामधेयम्(), तथा नगरनामधेयमपि स्यात्(), ततः सम्बन्धो न भिद्येत। यथा च पाटलिपुत्रादिशब्दरूपमुत्तरपदभूतमेव नगरसय वाचकम्(), तथा यदि ग्रामनामधेयमपि ग्रामस्य स्यात्(), एवमपि सम्बन्धो न भिद्येत? न चैवम्(); अन्यादृश एव हि पूर्वोत्तरसमुदयातमको ग्रामवाची शब्दः, अन्यादृशश्चोततरपदात्मको नगरवाची शब्दः। तस्माद्ग्रामनगरयोर्भेदात्? सम्बन्धभेदो भवति। एवं सम्बन्धभेदहेतुं दर्शयित्वा सम्बन्धभेदं दर्शयन्नाह--"तत्र" इत्यादि। "ग्रामवाचिनाम्()" इति। पूर्वोषुकमशमीत्येवमादीनाम्()। "अवयवस्य" इति। इषुकामशमी-कृष्णमृत्तिकेत्येवमादेः। "दिक्शब्दात्()" इति। पुर्वादेः। "इतरत्र तु" इत्यादि। नगरेषु। "देश उत्तरेषां नगराणाम्()" इति। अत्र वृद्धिर्भवतीत्यभिसम्बन्धः क्रियत इत्येतदपेक्ष्यते॥ पूर्वेषुकामशन इत्येवमादिषु

पूर्वोत्तरपदयोरन्तरङ्गत्वाद्गुणे कृते दिक्शब्दोग्रामश्चोत्तरपदं नास्तीति वृद्धिर्न प्राप्नोति, वृद्धिर्हि तद्धिते कृते तदाश्रयेण भवन्ती बहिरङ्गा भवति। प्रागेव तद्धितोत्पत्तेर्गुणः प्राप्नुवन्नन्तरङ्गो भवति। न च वचनाद्वृद्धिर्भविष्यतीति शक्यते वक्तुम्(), यत्र ह्येकादेशो नास्ति स च वचनस्यावकाशः--पूर्वकार्ष्णमृत्तिक इत्येवमादौ। न चान्ताविवद्भावोऽस्ति; "उभयत आश्रये नान्तादिवत्()" (व्या।प।५१) इति प्रतिषेधात्()। अतोऽत्र पूर्वपदमुत्तरपदञ्चाश्रीयते? इति यश्चोदयेत्(), तं प्रत्याह--"पुर्वेषुकामशम इत्येवमादिषु" इत्यादि। यथा "नेन्द्रस्य परस्य" ७।३।२२ इति निर्देशनायमर्थो ज्ञापितः तथा "अदस औ सुलोपश्च" ७।२।१०७ इत्यत्र प्रतिपादितः। "ग्रामनगराणाम्()" इति बहुवचनं स्वरूपविधिनिरासार्थम्()॥

बाल-मनोरमा

प्राचां ग्रामनगरगाणाम् १३८०, ७।३।१४

प्राचां ग्रामनगराणां। दिश इति। दिशः परे ये प्राच्यग्रामवाचिनः प्राच्यनगरवाचिनश्च तेषामवयवस्यादेर्वृद्धिः स्यादित्यर्थः। पूर्वेषु कामशम्यामिति।"दिक्संख्ये संज्ञायाम्" इति समासः। अण् ष संज्ञात्वात्। "दिक्पूर्वपदा"दिति ञ न। समुदायस्य ग्रामनामत्वेऽपि उत्तरपदस्यापि तन्नामत्वमस्तीति उत्तरपदादिवृद्धिः। नगरे इति। उदाहरणसूचनम्। पूर्वपाटलिपुत्रक इति। "पूर्वापरप्रथमे"ति समासः। "अवृद्धादपी"ति वुञ्। यद्यपि पाटलिपुत्रशब्दे उत्तरपदे आदिर्वृद्धिरेव। तथापि पूर्वपदस्य वृद्धिनिवृत्ति फलम्।

---

सूत्रम्

काशिका-वृत्तिः

सङ्ख्यायाः संवत्सरसङ्ख्यस्य च ७।३।१५

सङ्ख्याया उत्तरपदस्य संवत्सरशब्दस्य सङ्ख्यायाश्च अचामादेरचः स्थाने वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। द्वौ संवत्सराबधीष्टो भृतो भूतो भावी वा द्विसांवत्सरिकः। सङ्ख्यायाः द्वे षष्टी अधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः। द्विसाप्ततिकः। द्विषष्ट्यादिशब्दो वर्षेषु संख्येयेषु वर्तमानः कालाधिकारविहितं प्रत्ययम् उत्पादयति। परिमाणान्तस्य असंज्ञाशाणयोः ७।३।१७ इत्येव सिद्धे संवत्सरग्रहणम् परिमाणग्रहणे कालपरिमाणस्य अग्रहणार्थम्। तेन द्वैसमिकः, त्रैसमिकः इति उत्तरपदवृद्धिर् न भवति। द्विवर्षा, त्रिवर्षा माणविका इति अपरिमाणबिस्ताचित इति पर्युदासो न भवति।

न्यासः

संख्यायाः संवत्सरसंख्यस्य च। , ७।३।१५

"द्विसांवत्सरिकः" इति। पूर्ववत्? तद्धितार्थे समासः। ततः प्राग्वतीयष्ठञ्()। "द्विषाष्टिकः, द्विसाप्ततिकः" इति। ननु च "तमधीष्टो भृतो भृतो भावी" ५।१।७९ इत्यत्र कालादिति। ५।१।७७ वत्र्तते, न द्विषष्ट()आदिः कालशब्दः, किं तर्हि? संख्याशब्दः, तत्कथं कालाधिकारविहितं प्रत्ययमुत्पादयति? इत्याह--"द्विषष्ट()आदिशब्दः" इत्यादि। कालवाचिशब्दस्तत्र कालग्रहणेन गृह्रते, द्विषष्ट()आदिशब्दो हि यदा वर्षेषु संख्येयेषु वत्र्तते, तदा कालवाचित्वात्? कालश्ब्दो भवति। ततः कालाधिकारीयं प्रत्ययमुत्यादयति। अथ संवत्सरग्रहणं किमर्थम्(), यावतः "परिमाणान्तस्यासंज्ञाशाणयोः" ७।३।१७ इत्यत्र परिमाणशब्देन परिच्छेदहेतुमात्र गृह्रते, न तु प्रस्थादिवदारोहपरिणाहपरिच्छेदहेतुः, अन्यथा हि शाणप्रतिषेधोऽनर्थकः स्यात्(), न हि शाणः परिमाणमारोहपरणाहपरिच्छेदहेतुः, अतः कालोऽपि परिच्छेदहेतुर्भवति, ततश्च सोऽपि परिमाणमिति संवत्सरशब्दस्य "परिमाणस्यासंज्ञाशाणयोः" (७।३।१७) इत्येव सिद्धम्()? इति चोद्यनिरासायाह--"संवत्सरग्रहणम्()" इत्यादि। परिमाणग्रहणेन कालपरिमाणस्य ग्रहणं मा भूदित्येवमर्थं संवत्सरग्रहणम्()। संवत्सरग्रहणेनासावर्थो

ज्ञाप्यते--"परिमाणग्रहणे कालपरिमाणग्रहणं न भवति" इति। ततश्च यत्र परिमाणग्रहणं तत्र कलपरिमाणं न गृह्नते। "तेन" इत्यादिना परिमाणग्रहणे कालपरिमाणस्याग्रहणे सति यदिष्टं सिध्यति तद्दर्शयति। "उत्तरपदवृद्धिरन भवति" इति। "परिमाणान्तस्य" ७।३।१७ इत्यादिना। "द्विवर्षा" इति। द्वे वर्षे भृतो भूतो भावी वा, पूर्ववट्ठक्, तस्य "वर्षाल्लुक्()" ५।१।८७ इत्यनुवत्र्तमाने "चित्तवति नित्यम्()" ५।१।८८ इति लुक्()। "पर्युदासो न भवति" इति। ङीप्प्रतिषेधे कत्र्तव्ये तेन प्रतिषेधः। प्रवत्र्तत एवेति "द्विगोः" ४।१।२१ इति ङीब्न भवति॥

बाल-मनोरमा

सङ्ख्यायाः संवत्सर सङ्ख्यस्य च १७२९, ७।३।१५

ठञि त्वादिवृद्धौ प्राप्तायां--संख्यायाः संवत्सर। आदिवृद्धिप्रकरणे "उत्तरपदस्ये"त्यधिकारे इदं सूत्रम्। संवत्सरश्चसङ्ख्या चेति समाहारद्वन्द्वात् षष्ठी। संख्याया उत्तरपदस्येति। संख्यायाः परस्य संवत्सरसंख्यस्योत्तरपदस्येत्यर्थः। नन्वत्र संवत्सरग्रहणं व्यर्थं, संवत्सरस्य द्वादशमासपरिमाणतया "परिमाणान्तस्याऽसंज्ञाशाणयो"रित्येव सिद्धेरित्यत आह--परिमाणान्तस्येत्येवेति।

तत्त्व-बोधिनी

सङ्ख्यायाः संवत्सरसङ्ख्यस्य च १३३६, ७।३।१५

उत्तरपदवृद्धिर्नेति। एतच्चोपलक्षणम्। "द्विवर्षा"इत्यत्र "द्विगो"रिति ङीन्बभवति। परिमाणपर्युदासेन पर्युदासाऽबावात् "अपरिमाणबिस्ताचिते"तीह निषेधप्रवृत्तेः। द्विवर्षे भृते "तमधीष्टः"इति ठञ्।"वर्षाल्लुक्च"इति लुक्। "चित्तवति नित्य"मिति नित्यलुको वक्ष्यमाणत्वादचित्तवानिह प्रत्ययार्थ इति प्रत्युदाहरति।

---

सूत्रम्

काशिका-वृत्तिः

वर्षस्य अभविष्यति ७।३।१६

सङ्ख्याया उत्तरस्य वर्षशब्दस्य अचामादेरचः वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः, स चेत् तद्धितो भविष्यत्यर्थे न भवति। द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः। त्रिवार्षिकः। अभविष्यति इति किम्? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये, अधिकं वा अपि विध्येत, स सोमं पातुम् अर्हति। त्रीणि वर्षाणि भावी इति त्रैवर्षिकम्। अधीष्टभृतयोरभविष्यति इति प्रतिषेधो न भवति। गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति इति द्विवार्षिको मनुष्यः।

न्यासः

वर्षस्याभविष्यति। , ७।३।१६

"द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतति दैवार्षिको मनुष्यः" इति। अत्राधीष्टभृतयोस्तद्धित उत्पन्ने भविष्यता प्रतीयते, तस्मात्? तयोरपि प्रतिषेधेन भवितव्यमिति कस्याचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"अधीष्टभृतयोः" इत्यादि। किं पुनः कारणं न भवति? इत्याह--"गम्यते हि" इत्यादि। तत्र यदि शब्दान्तरम्? "द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति" इति प्रयुज्यते, ततो भविष्यत्ता गम्यते, नान्यथा। तस्मान्नासौ तद्धितार्थ इत्यधीष्टभृतयोरभविष्यतीति प्रतिषेधो न भवति। ननु च मनुष्येऽभिधेये "चित्तवति नित्यम्()" ५।१।८८ इति ठञो लुका भवितव्यम्(), तत्कथं द्विवार्षिको मनुष्य इति सिध्यति? नैष दोषः; न ह्रसावविशेषेण लुक्(), किं तर्हि? विशिष्ट #एव विषये। कथम्()? ततर

नित्यग्रहणं कत्र्तव्यम्(), पूर्वेणैव सिद्ध आरम्भसामथ्र्यादेव नित्यं लुग्भविष्यतीति, तत्? कृतं विशिष्टे विषये भूते यथा स्यात्(), अधोष्टादी मा भूदित्येवमर्थम्()। तेनाधीष्टादौ "वर्षाल्लुक्()" ५।१।८७ इति विभाषैव लुग्भवति॥

बाल-मनोरमा

वर्षस्याऽभविष्यति १७३१, ७।३।१६

ठञि आदिवृद्धौ प्राप्तायां--वर्षस्याभविष्यति। आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम्। शेषपूरणेन तद्व्याचष्टे--उत्तरपदस्य वृद्धिः स्यादिति। अभविष्यति यो ञिदादिः, तस्मिन्परे इत्यर्थः। निर्वृत्तादिषु पञ्चस्वर्थेषु भविष्यदर्थं वर्जयित्वा तदितरेषु चतुष्र्वर्थेषु यस्तद्धितस्तस्मिन्परे इति यावत्। द्विवार्षिक इति। "व्याधि"रिति। शेषः। चित्तवति नित्यलुको वक्ष्यमाणत्वात्। नन्वेवं सति द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति द्विवार्षिक इत्यत्र कथमुत्तरपदवृद्धिः, भविष्यत्वस्य प्रतीतेरित्याशङ्क्याह--अधीष्टभृतयोरभविष्यतीति प्रतिषेधो नेति। कुत इत्यत आह--गम्यते हि तत्र भविष्यत्तेति। अध्येषणभरणयोः क्तप्रत्ययेन भूतत्वमेव शब्दशक्त्या गम्यते। तद्धितप्रत्ययेन च तथाविधाऽध्येषणभरणकर्मीभूतौ प्रतीयेते। एवंविधाऽध्येषणभरणविशिष्टयोस्तु भविष्यता कर्माचरणेन सम्बन्धः कर्म करिष्यतीत्यनेनावगत इति न स तद्धितार्थः। एवंच तत्रापि भविष्यदर्थकतद्धितपरकत्वाऽभावात्स्यादेवोत्तरपदवृद्धिरित्यर्थः। द्विवार्षिको मनुष्य इति। "चित्तवति नित्य"मिति वक्ष्यमाणस्तु नित्यलुङ्ग भवति, चित्तवतीत्येवारम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्नित्यग्रहणेन भूत एवार्थे नित्यं लुगित्यभ्युपगमादिति हरदत्तः। केचित्तु "द्विवार्षिकः--अमनुष्य" इति छिन्दन्ति।

---

सूत्रम्

काशिका-वृत्तिः

परिमाणान्तस्य असंज्ञाशाणयोः ७।३।१७

परिमाणान्तस्य अङ्गस्य सङ्ख्यायाः परं यदुत्तरपदं तस्य अचामादेरचः वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः, संज्ञायां विषये शाणे च उत्तरपदे न भवति। द्वौ कुडवौ प्रयोजनम् अस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। विभाषा कार्षापणसहस्राभ्यां ५।१।२९ इत्यत्र सुवर्णशतमानयोरुपसङ्ख्यानम् इति लुको विकल्पः। द्वाभ्यां निष्काभ्यां क्रीतम् द्वित्रिपूर्वान् निष्कात् ५।१।३० द्विनैष्किकम्। असंज्ञाशाणयो इति किम्? पाञ्चलोहितिकम्। पाञ्चकलापिकम्। पञ्च लोहित्यः परिमाणमस्य, पञ्च कलापाः परिमाणमस्य इति विह्रह्य तदस्य परिंआणम् ५।१।५६ इति योगविभागात् प्रत्ययः, तद्धितान्तश्चायं समुदायः संज्ञा। द्वाभ्यां शाणाभ्यां क्रीतम् द्वै शाणम्। त्रैशाणम्। शाणाद् वा ५।१।३५, द्वित्रिपूर्वादण् च ५।१।३५ इत्यण् प्रत्ययः। असंज्ञाशाणकुलिजानाम् इति केचित् पठन्ति। द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः।

न्यासः

परमाणान्तस्यासंज्ञाशाणयोः। , ७।३।१७

संज्ञायाः परत्वं न सम्भवतीत्यतः संज्ञाशाणयोरिति विषयसप्तमीं दर्शयन्नाह--"संज्ञायां विषये" इत्यादि। "शाणे चोत्तरपदे" इति। विषय इत्यपेक्षते। यद्यप्युत्तरपदस्य[यद्युत्तरपदस्य--मुद्रित पाठः] शाणस्य परत्वमुपपद्यते, तथापि दुर्घटमेकस्याः सप्तम्या विषयसप्तमीत्वम्(), परसप्तमीतवञ्चेति। तेन शाणशब्दमप्युत्तरपदं प्रति विषयसप्तम्येषा युक्ता। "द्विकौडविकम्()" इति। "प्राग्वतेष्ठञ" ५।१।१८। अनार्हीयत्वाच्च प्रत्ययस्य "अध्यर्थपूर्वद्विगोः" ५।१।२८ इति लुग्न भवति। "द्विसौवर्णिकः" [द्विसौवरणिकम्--काशिका] इति। स एव प्रत्ययः। कथं पुनरत्र वृद्धिः, यावता

परिमाणान्तस्येत्युच्यते, सुवर्णञ्च गुरुत्वमानादुन्मानम्(), न परिमाणमिति? नैव दोषः;
आचार्यप्रवृत्तिज्ञ्ज्ञायति--"गुरुत्वपरिमाणमपीह परिच्छेदहेतुत्वात्? पूरिमाणं गृह्नते" इति; यदयम्? "असंज्ञाशाणयोः" इति शाणप्रतिषेधमारमते। अथ "अध्यर्धपूर्व" (५।१।२८) इति लुक्कस्मान्न भवति? इत्याह--"विभावा" इत्यादि।
"द्विनैष्किकम्()" इति। "असमासे निष्कादिभ्यः" (५।१२०) इति ठक्()। "पाञ्चलोहितिकः"
[पाञ्चलोहितिकम्()--काशिका] इति। तस्मिन्नेव ठकि कृते "भस्याढे तद्धिते" (वा।७३१) इति पुंवद्भावेन
"वर्णादनुदात्तात्(), तोपधात्? तो तः" ४।१।३९ इत्यनेन विहितयोर्ङीब्नकारयोर्निवृत्ति। "द्वैकुलिजिकम्()" [द्वैकुलिजिकः--काशिका] इति। प्राग्वतीयष्ठञ्च॥
बाल-मनोरमा
परिमाणान्तस्याऽसंज्ञाशाणयोः १६६१, ७।३।१७

परिमाणान्तस्या। आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम्। शेषपूरणेन तद्व्याचष्टे--उत्तरपदवृद्धिः स्यादिति। उत्तरपदस्य आदेरचो वृद्धि स्यादित्यर्थः। ञिदादाविति। ञिति णिति किति चेत्यर्थः। परमनैष्किक इति। परमनिष्केण क्रीत इत्यर्थः। समासत्वाट्ठगभावे औत्सर्गिकष्ठञ्। स्वरे विशेषः। ननु निष्कादिभ्य एव ठको विधानात्तदन्तात् समासाट्ठकोऽप्रसक्तेरसमासग्रहणं व्यर्थम्। न च
प्रातिपदिकग्रहणस्यापञ्चमाध्यायसमाप्तेरधिकृतत्वात्प्रातिपदिकविशेषणतया तदन्तविधौ समासादपि ठकः प्रसक्तिरस्तीति वाच्यम्, "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"ति निषेधात्। निष्कादीनां च विशिष्य गृहीतत्वेन ग्रहणवत्त्वादित्यत आह--असमासग्रहममिति। सुगव्यमिति। सु=शोभना गौः-सुगौः, "न पूजना"दिति निषेधात् "गोरतद्धितलुकी"ति न टच्। "उगवादिभ्यः" इति गोशब्दान्ताद्यत्। यवापूप्यमिति। "विभाषहविरपूपादिभ्यः" इत्यपूपान्तत्वाद्यत्। नन्वसमासग्रहणाङ्ज्ञापकादिति ऊध्र्वमिति तदन्तविधिः किं न स्यात्। ततश्च "परमपारायणं वर्तयती"त्यत्रापि "पारायणतुरायणचान्द्रायणं वर्तयती"ति ठञ् स्यादित्यत आह--इत ऊध्र्वं त्विति। वार्तिकमिदम्। नन्वेवमपि द्विशूर्पशब्दान्तादपि "शूर्पादञन्यतरस्या"मित्यञ् स्यादित्यत आद--तच्चाऽलुकीति। इत ऊध्र्वं संख्यापूर्वपदानां तदन्तग्रहणमिति यदुक्तं तत्तद्धितलुकि सति न भवतीत्यर्थः। इदमपि वार्तिकमेव। द्विशूर्पमिति। तद्धितार्थ" इति द्विगुरयम्। तद्धितप्रकृतिभूतः शब्दो न लुगन्तः। अतः सङ्ख्यापूर्वपदाच्छूर्पान्तादस्मात् "शूर्पादञन्यतरस्या"मिति प्राप्तस्य अञष्ठञो वा "अध्यर्धे"ति लुक्। द्विशूर्पशब्दो लुगन्तः। ततश्च तस्मात् क्रीतेऽर्थे "शूर्पादञि"ति न भवति, लुकि सति तदन्तग्रहणाऽभावादित्यर्थः। द्विशौर्पिकमिति। "तेन क्रीत"मिति ठञि "परिमाणान्तस्याऽसंज्ञाशाणयो"रित्यनुत्तरपदवृद्धिः। अस्य ठञो लुक्तु न भवति, तस्य द्विगुनिमित्तत्वाऽभावात्।

तत्त्व-बोधिनी
परिमाणान्तस्याऽसंज्ञाशाणयोः १२८३, ७।३।१७

परिमा। अथ किमर्थम् "असमासे "इत्यच्यते , प्रातिपदिक ग्रहणे तदन्ग्रहणाऽभावादेवेष्टसिद्धेरत
आह---असमासगद्रहणमिति। सुगव्यमिति। "उगवादिभ्यो यत्"। यवापूप्यमिति। विभाषा हविरपूपादिभ्यः"इति यत्। अन्नविकारत्वादेव सिद्धे "अपूपादीनां प्रतिपदपाठसामथ्र्यात्तदन्तविधिर्नेतिन्यासग्रन्थस्तूपक्ष्यः,
वृत्यादिग्रन्थविरोधादिति भावः। अतएव तत्सूत्रे "अपूपादीनां केषांचित्पाठः प्रपञ्चार्थः"इत्यवोचाम्। इत ऊध्र्वमिति। ज्ञापकेन तदन्तविधौ लब्धेऽपि विशेषव्यवस्थार्थमिदम्। सङ्ख्यापूर्वपदानामिति किम्()। इह मा भूत्। परमपारायणं वर्तयति।

सङ्ख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चाऽलुकि। द्विशूर्पमिति। तद्धितार्थे द्विगुरम्ष। एषा हि प्रकृतिर्लुगन्ता न

भवतीति सङ्ख्यापूर्वपदादप्यस्मात् "शूर्पादञन्यतरस्या"मिति प्राप्तस्याऽञष्ठञो वा "अध्यर्धपूर्वे"ति लुक्। द्विशौर्पिकमिति। "परिमाणान्तस्ये"त्युत्तरपदवृद्धिः। ठञो द्विगुं प्रति निमित्तत्वाऽभावाल्लुगभावः। यद्यपि "अध्यर्धे"ति सूत्रे द्विगोः परस्यार्हीयस्य लुगित्येव मूले व्याख्यास्यते तथापि द्विगोर्निमित्तस्येति व्याख्येयमेव। अन्यथा अत्रैव ठञो लुक्स्यात्। एतच्च "अध्यर्धे"ति सूत्रे स्फुटीकरिष्यते। तपरः किमिति। दीर्घाकारस्य वृद्धौ कृतायामपि रूपे विशेषो नास्तीति प्रश्नः निषेधो न स्यादिति। तथा च वृद्धिनिषेदाऽभावाय तपरकरणमावश्यकमिति भावः। इदं च पुंवद्भावनिषेधाऽभावापादनं पूर्वपदस्य वृद्ध्यभावपक्षे क्रियते। यदा तु पूर्वपदस्य पाक्षिकी वृद्धि क्रियते, तदा फलोपधायवृद्धिनिमित्तं तद्धित इत्युत्तरपदाऽकारस्य वृद्धिनिषेधेऽपि स्यादेव पुंवद्भावनिषेध इति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

जे प्रोष्ठपदानाम् ७।३।१८

ज इति जातार्थो निर्दिश्यते। तत्र यः तद्धितो विहितः तस्मिन् ञिति, णिति, किति च परतः प्रोष्थपदानाम् उत्तरस्य अचामादेः अचः वृद्धिर् भवति। प्रोष्ठपदा नाम नक्षत्रम्, ताभिः युक्तः कालः इत्यण्। तस्य लुबविशेषे ४।२।४ इति लुप्। प्रोष्ठपदासु जातः, ऋतुनक्षत्रेभ्यो ऽणित्यण्, प्रोष्थपादः माणवकः। जे इति किम्? यदा प्रोष्थपदो मेघो धरणीमभिवर्षति, प्रोष्थपदासु भवः प्रौष्ठपदः। प्रोष्थपदानाम् इति बहुवचननिर्देशात् पर्यायो ऽपि गृह्यते भद्रपादः इति।

न्यासः

जे प्रोष्ठपदानाम्?। , ७।३।१८

"संख्यायाः" ७।३।१५ इति निवृत्तम्()। ""जे" इति जातार्थो निर्दिश्यते" इति। जातशब्दैकदेशस्य "जे" इति, तस्यायं प्रयोगः। भवति हि पदैकदेशस्यापि प्रयोगः, यथा--भोमो भीमसेनः, सत्यभामा भामेति। तस्माज्जातशब्दस्यैकदेशस्य प्रयोगेण जातार्थो निर्दिश्यत इति विज्ञेयम्()। "प्रोष्ठपदासु" इति। "लुपि युक्तवद्व्यक्तिवचने" १।२।५१ इति युक्तवदभावः। "भद्रयादाः" इति। भद्रपदेन युक्तः काल इति अणादिकार्यं पूर्ववद्विधेयम्()॥

बाल-मनोरमा

जे प्रोष्ठपदानाम् १३८८, ७।३।१८

जे प्रोष्ठपदानाम् आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम्। तदाह--प्रोष्ठपदानामिति। जशब्देन जातार्थप्रत्ययो विवक्षितः। तदाह--जातार्थे इति। "प्रोष्ठपदाना"मिति बहुवचनस्य प्रयोजनमाह बहुवचनेति। भद्रपाद इति। भद्रपदासु जात इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ७।३।१९

हृद् भग सिन्धु इत्येवम् अन्तो ऽङ्गे पूर्वपदस्य उत्तरपदस्य च अचामादेरचो वृद्धिर् भवति तद्धिते ञिति, णीति, किति च परतः। सुहृदयस्य इदम् सौहार्दम्। सुहृदयस्य भावः सौहार्यम्। सुभगस्य भावः सौभाग्यम्। दौर्भाग्यम्। सुभगायाः अपत्यम् सौभागिनेयः। दौर्भागिनेयः। कल्याण्यादिषु सुभगदुर्भगेति पठ्यते। सुभग मन्त्रे इत्युद्गात्रादिषु पठ्यते। तत्र उत्तरपदवृद्धिर् न इष्यते। महते सौभगाय। छन्दसि सर्वविधीना विकल्पितत्वात्। सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः,

सक्तुसिन्धुषु भवः साक्तुसैन्धवः। पानसैन्धवः। सिन्धुशब्दः कच्छादिषु पठ्यते, तेन तदन्तविधिरिष्यते इति अण्प्रत्ययः।
न्यासः
ह्मद्भगसिन्ध्वन्ते पूर्वपदस्य च। , ७।३।१९

"सौहार्दम्()" इति। तस्येदम्()" ४।३।१२० इत्यण्()। यदा सुह्मदयशब्दादण्(), तदा "ह्मदयस्य ह्मल्लेखयदण्लासेषु" ६।३।४९ इति ह्मद्भावः। "सौहाद्र्यम्()" इति। "गुणवचनब्राआह्मणादिभ्यः" ५।१।१२३ इति ष्यञ्(), "वा शोकष्यञ्रोगेषु" ६।३।५० इति ह्मद्भावः। "सौभागिनेयः, दौर्भागिनयः" इति। "कस्याण्यादीनामिनङ च" ४।१।१२६ इति ढकि कृत इनङादेशः। "सक्तुसिन्धवः" इति। शापकपार्थिवादित्वान्मध्यमपदलोपो समासः। "साक्तुसैन्धवः" इति। ओर्देशे ४।२।११८ ठञि प्राप्ते "कच्छादिभ्यश्च" ४।२।१३२ इत्यण्()। ननु च केवलस्तत्र सिन्धुशब्दः पठ()ते, कथं तदन्ताद्भवति? इत्याह--"तेन" इत्यादि। कथं पुनस्तेन सिन्धुशब्देन तदन्तविधिर्लभ्यते, यावता "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" (व्या।प।८९) इति तदन्तविधिः प्रतिषिध्यते? नैष दोषः; चकारस्तत्रानुक्तसमुच्चयार्थः, तेन सिन्धुशब्दात्? तदन्तादपि भवति॥
बाल-मनोरमा
ह्मद्भगसिन्ध्वन्ते पूर्वपदस्य च ११९७, ७।३।१९

ह्मद्भग। ह्मदाद्यन्त इति। ह्मत्, भग, सिन्धु-एतदन्तेषु समासेष्वित्यर्थः। चकारादुत्तरपदस्येत्यनुकृष्यते। तदाह--पूर्वोत्तरपदयोरिति। सौहार्द इति। अणि उभयपदादिवृद्धिः। ऋकारस्य तु आकारो रपरः। सौभागिनेय इति। कल्याण्यादित्वाड्ढकि इनङि उबयपदादिवृद्धिरिति भावः। एतत्प्रसह्गादेव इदं सूत्रमत्रोपन्यस्तम्। "महते सौभगाय" इत्यत्र तु उद्गात्रादित्वाद्भावे अञ्। उत्तरपदादिवृद्ध्यभावश्छान्दसः। सिन्धव इति। अ()आआ इत्यर्थः।

तत्त्व-बोधिनी
हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ९३४, ७।३।१९

हृद्भद। "पूर्वपदस्य चे"ति चकारेण "उत्तरपदस्य" इत्यनुकृष्यते। तदाह---पूर्वोत्तरपदयोरिति। "महते सौभगाये"त्यत्र तूद्गात्रादित्वादञ्। छान्दसत्वान्नोत्तरपदवृद्धिरित्याशयः। "चटकायाऋ"इति स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादित्याशङ्क्याह।

चटकस्येति वाच्यम्। चटकस्येति वाच्यमिति। एवं च "चटकादैरगि"त्येव सांप्रदायिकः पाठ इति न्यासकृदुक्तिर्वार्तिकविरोधादुपेक्ष्या।

स्त्रियामपत्ये लुग्वक्तव्यः। तयोरेवेति। तत्र टाबन्तात्तद्धित लुकि "लुक्तद्धितलुकी"ति टापो लुकी जातिलक्षमङीषं बाधित्वा अजादिलक्षणष्टाबिति भावः।

---

सूत्रम्
काशिका-वृत्तिः
अनुशतिकाऽदीनाम् च ७।३।२०

अनुशतिक इत्येवम् आदीनां चाङ्गानां पूर्वपदस्य च उत्तरपदस्य च चामादेरचः स्थाने वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। अनुशतिकस्य इदम् आनुशातिकम्। अनुहोडेन चरति आनुगौडिकः। अनुसंवरणे दीयते आनुसांवरणम्।

अनुसंवत्सरे दीयते आनुसांवत्सरिकः। अङ्गारवेणुः नाम कश्चित्, तस्य अपत्यम् आङ्गारवैणवः। असिहत्य तत्र भवम् आसिहात्यम्। अस्यहत्य इति केचित् पठन्ति, ततो ऽपि विमुक्तादित्वादण्। अस्यहत्यशब्दो ऽस्मिन्नध्याये ऽस्ति आस्यहात्यः। अस्यहेतिः इत्येवम् अपरे पठन्ति। अस्यहेतिः प्रयोजनम् अस्य आस्यहैतिकः। अत एव वचनादस्य समुदायस्य प्रातिपदिकत्वं विभक्तेश्च अलुक्। वध्योग इति बिदादिः अयम्, तस्य अपत्यम् वाध्यौगः। पुष्करसद्, अनुहरतिति बाह्वादिषु पठ्येते। पौष्करसादिः। आनुहारतिः। कुरुकत गर्गादिः , कौरुकात्यः। कुरुपञ्चाल कुरुपञ्चालेषु भवः कौरुपाञ्चालः। जनपदसमुदायो जनपदग्रहणेन न गृह्यते इति वुञ् न भवति। उदकशुद्धस्य अपत्यम् औदकशौद्धिः। इहलोक, परलोक तत्र भवः ऐहलौकिकः, पारलौकिकः। लोकोत्तरपदस्य इति ठञ्। सर्वलोक तत्र विदितः सार्वलौकिकः। सर्वपुरुषस्य इदम् सार्वपौरुषम्। सर्वभूमेः निमित्तं संयोगः उत्पातो वा सार्वभौमः। प्रयोग तत्र भवः प्रायौगिकः। परस्त्री पारस्त्रैणेयः। कुलटाया वा ४।१।१२७ इति इनङ्। राजपुरुषात् ष्यञि। राजपौरुष्यम्। ष्यञि इति किम्? राजपुरुषस्य अपत्यम् राजपुरुषायणिः। उदीचां वृद्धादगोत्रात् ४।१।१५७ इति फिञ्। शतकुम्भसुखशयनादयः शतकुम्भे भवः शातकौम्भः। सौखशायनिकः। पारदारिकः। सूत्रनडस्य अपत्यम् सौत्रनाडिः। आकृतिगणश्च अयम् इष्यते। तेन इदमपि सिद्धं भवति, अभिगममर्हति आभिगामिकः। अधिदेवे भवम् आधिदैविकम्। आधिभौतिकम्। चतस्र एव विद्याः चातुर्वैद्यम्। स्वार्थे ष्यञ्। अनुशतिक। अनुहोड। अनुसंवरण। अनुसंवत्सर। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसद्। अनुहरत्। कुरुकत। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। राजपुरुषात् ष्यञि। सूत्रनड। अनुशतिकादिः।

लघु-सिद्धान्त-कौमुदी

अनुशतिकादीनां च १०९८, ७।३।२०

एषामुभयपदवृद्धिर्ञिति णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलोकिकम्। आकृतिगणोऽयम्॥

न्यासः

अनुशतिकादीनां च। , ७।३।२०

"अनुशतिक" इति। शतेन क्रीतः--"शताच्च ठन्यतावशते" ५।१।२१ इति ठन्()--शतिकः, अनुगतः शतिकेनानुशतिकः, ततः "तस्येदम्()" ४।३।१२० इत्यण्()। आनुशातिकम्(), आनुहौडिकम्()" इति। "चरति" ४।४।८ इति ठक्()। "आनुसांवत्सरिकम्()" इति। "तत्र च दीयते कार्यं भववत्()" (५।१।९६) इत्यतिदेशात्? "बह्वचोऽन्तोदात्तात्()" ४।३।६७ इति ठञ्()। "आङ्गारवैणवः" इति। "तस्यापत्यम्()" ४।१।९२ इत्यण्()। "आसिहात्यम्()" इति। "तत्र भवः" ४।३।५३ इत्यण्()। "आस्यहात्यम्()" इति। "विमुक्तादिभ्योऽण्()" ५।२।६०। "आस्यहैतिकम्()" इति पाठे "तदस्य प्रयोजनम्()" ५।१।१०८ इति प्राग्वतीयष्ठञ्()। ननु च प्रातिपदिकादिति वत्र्तते, अस्यहत्यास्यहेतिश्च पदसमुदायोऽयम्(), न प्रातिपदिकम्(), तत्कथमतः प्रत्ययः? सत्यपि वा प्रत्यये कथं विभक्तेरलुक्()? इत्याह--"अत एव" इत्यादि। "वाध्यौगः" इति। "अनुष्यानन्तर्ये बिदादिभ्योऽञ्()" ४।१।१०४। "पौष्करसादिरानुहारतिः" इति। "बाह्वादिभ्यश्च" ४।१।९६ इतीण्()। "कौरुकात्यम्()" [कौरुकात्यः--काशिका] इति। गरगादित्वादयञ्()। "कौरुपाञ्चालः" इति। "तत्र भवः" ४।३।५३ इत्यण्()। ननु च जनपदशब्दा "जनपदतदवध्योश्च" ४।२।१२३ इति वुञा भवितव्यम्()! इत्यत आह--"जनपदसमुदायो जनपदग्रहणेन" इत्यादि। कुरुपञ्चालशब्दो हि जनपदमुदायवचनः, न च जनपदसमुदायो जनपदग्रहणेन गृह्रत इति कुतो वुञ्प्रसङ्गः? "औदकशौद्धिः" इति। "अत इञ्()" ४।१।९५। "ऐहलौकिकः, पारलौकिकः" इति। "लोकोत्तरपदस्य" [लोकोत्तरपदाच्च--इति वर्तिकम्()](वा।४५९) इति ठञ्()। एतत्? "समानस्य तदादेश्च" इत्येवमादिकायां कारिकायामियमिष्टिरिति पठ()ते। "सार्वलौकिकः" इति। "लोकसर्वलोकाट्ठञ्()" ५।१।४३। "सार्वपौरुषम्()" इति।

"तस्येदम्()" ४।३।१२० इत्यण्()। "सार्वभौमः" इति। "सर्वभूमिपृथिवीभ्यामणञौ" ५।१।४० इत्यण, अञ्चा। "प्रायौगिकः" इति। अध्यात्मादित्वात्? (वा।४५६) ठञ्()। "पारस्त्रैणेयः" इति। "कुलटाया व" ४।१।१२७ इतीनङ्()। तत्र "स्त्रीभ्यो ढक्()" (४।१।१२०) "कल्याण्यादीनामिनङ्? च" ४।१।१४६ इत्यनुवत्र्तते। "राजपौरुष्यम्()" इति। ब्राआहृणादित्वात्? ५।१।१२३ ष्यञ्()। "सौत्रनाडिः" इति। "अत इञ्()" ४।१।९५ "आभिगामिकः" इति। अभिगममर्हतीत्यार्हीयष्ठक्? ५।१।६२। "आधिदैविकम्(), आधिभौतिकम्()" इति। भवार्थेऽध्यात्मादित्वात्? (वा।४५६) ठञ्()। "चातुर्वेद्यम्()" इति। ष्यञ्()। स्वार्थिको वक्तव्यश्चातुर्वण्र्यादिसिद्ध्यर्थमिति स्वार्थे एव ष्यञ्()॥

बाल-मनोरमा

अनुशतिकादीनां च १४१७, ७।३।२०

अनुशतिकादीनां च। आदिवृद्धिप्रकरणे उत्तरपदस्य, पूर्वपदस्य चेत्यधिकारे इदं सूत्रम्। तदाह--एषामिति। आधिदैविकमिति। देवेष्वित्यधिदेवम्, तत्र भवमित्यर्थः। ठञि उभयपद वृद्धिः। आधिभोतिकमिति। भूतेष्वधिभूतम्। तत्र भवमित्यर्थः। ऐहलौकिकमिति। इह लोके भवमित्यर्थः। पारलौकिकमिति। परलोके भवमित्यर्थः। सर्वत्र ठञि उभयपदवृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

देवताद्वन्द्वे च ७।३।२१

देवताद्वन्द्वे च पूर्वपदस्य उत्तरपदस्य च अचामादेरचः स्थाने वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। आग्निमारुतीं पृश्निमालभेत। आग्निमारुतं कर्म। यो देवताद्वन्द्वः सूक्तहविःसम्बन्धी, तत्र अयं विधिः। इह तु न भवति, स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः। ब्रह्मप्रजापती ब्राह्मप्रजापत्यम्।

न्यासः

देवताद्वन्द्वे च। , ७।३।२१

"आग्निमारुतीम्()" इति। अग्निश्च मरुच्चेति द्वन्द्वः, तौ देवते अस्याः--"सास्य देवता" ४।२।२३ इत्यण्(); ततः पूर्वोत्तरयोर्वृद्धिः, "इद्वृद्धौ" ६।३।२७ इत्यग्निशब्दस्यानङ्()विषय इकारादेशः, "टिड्ढाणञ्()" ४।१।१५ इति ङीप्()। "यो देवताद्वन्द्वः सूक्तसम्बन्धी इत्यादि। यः सूक्तं भजते स सूक्तसम्बन्धी, यस्मै हविर्निरूप्यते स हविः सम्बन्धीति। अर्थद्वारकं चेदं द्वन्द्वस्य विशेषणम्()। "इह च न भवति" इत्यादि। कथं पनः सामान्योक्तो सत्यामयं विशेषो लभ्यते? एवं मन्यते--"नेन्द्रस्य परस्य" ७।३।२२ इत्यतर नेति योगविभागः कत्र्तव्यः, तेन सूक्तसम्बन्धिनो हविःसम्बन्धिनश्चान्यत्र न भवतीति। "स्कान्दविशाखः" इति। "तस्येदम्()" ४।३।१२० इत्यण्()। "ब्राआह्मप्रजापत्यम्()" इति। "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ४।१।८५।

बाल-मनोरमा

देवताद्वन्द्वे च १२२०, ७।३।२१

वृत्तः "साऽस्य देवता" इत्यधिकारः। अथ प्रासङ्गिकं -देवताद्वन्द्वे च "मृजेर्वृद्धि"रित्यतो वृद्धिरित्यनुवर्तते। "अचो ञ्णिती"त्यतो ञ्णितीति, "किति चे"ति सूत्रं चानुवर्तते। "तद्धितेष्वचामादे"रित्यतोऽचामादेरिति, "ह्यद्भगसिन्ध्वन्ते पूर्वपदस्य चे"त्यतः पूर्वपदस्येति, "उत्तरपदस्य चे"ति सूत्रं चानुवर्तते। तदाह--अत्रेत्यादिना। आग्निमारुतमिति। अग्निश्च मरुच्च अग्नामरुतौ। "देवताद्वन्द्वे चे"त्यानङ्। अग्नामरुतौ देवता अस्य आग्निमारुतम्। अणि अनेन उभयपदादिवृद्धिः

अलौकिके विग्रहवाक्ये एव आनङं बाधित्वा "इद्वृद्धौ" इति इत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

न इन्द्रस्य परस्य ७।३।२२

इन्द्रशब्दस्य परस्य यदुक्तम् तन् न भवति। सौमेन्द्रः। आग्नेन्द्रः। परस्य इति किम्? ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत्। इन्द्रशब्दे द्वावचौ, तत्र तद्धिते एकस्य यस्येति च ६।४।१४८ इति लोपः, अपरस्य पूर्वेण सह एकादेशः इत्यप्राप्तिरेव वृद्धेः, तदेदं प्रतिषेधवचनं ज्ञापकम्, बहिरङ्गम् अपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति पश्चादेकादेशः इति। तेन पूर्वैषुकामशमः इत्यादि सिद्धं भवति।

न्यासः

नेन्द्रस्य परस्य। , ७।३।२२

"सैमेन्द्रः, आग्नेन्द्रः" इति। "सास्य देवता" ४।२।२३ इत्यण्(), "देवताद्वन्द्वे च" ७।३।२१ इत्यानङादेशः, पूर्वपदस्याद्गुणः। "ऐन्द्राग्नम्()" इति। अत्रापि पूर्ववदणादिकार्यम्()। "इन्द्रशब्दे द्वावचौ" इत्यादि। प्रागेवोक्तत्वात्? सुबोधम्()॥

बाल-मनोरमा

नेन्द्रस्य परस्य १२२१, ७।३।२२

नेन्द्रस्य परस्य। "देवताद्वन्द्वे चेट"त्युक्ता उभयपदवृद्धिरुत्तरपदस्य इन्द्रशब्दस्य नेत्यर्थः। सौमेन्द्र इति। "चरु"रिति शेषः। तैत्तिरीये सौमेन्द्रं श्यामाकं चरुमिति छान्दसम्।

---

सूत्रम्

काशिका-वृत्तिः

दिर्घाच् च वरुणस्य ७।३।२३

दिर्घादुत्तरस्य वरुणस्य यदुक्तं तन् न भवति। ऐन्द्रावरुणम्। मैत्रावरुणम्। दीर्घातिति किम्? आग्निवारुणीमनड्वाहीमालभेते। अग्नेः ईदग्नेः सोमवरुणयोः ६।३।२६ इत्यस्य अनङपवादस्य इद्वृद्धौ ६।३।२७ इति प्रतिषेधो विधीयते, तेन दीर्घात् परो न भवति।

न्यासः

दीर्घाच्च वरुणस्य। , ७।३।२३

"ऐन्द्रावरुणम्(), मैत्रावरुणम्()" इति। "देवताद्वन्द्वे च" (७।३।२१) इत्यानङि कृते दीर्घात्? परो वरुणशब्दः॥

बाल-मनोरमा

दीर्घाच्च वरुणस्य १२२३, ७।३।२३

दीर्घाच्च वरुणस्य। ऐन्द्रावरुणमिति। इन्द्रावरुणौ देवता अस्येति विग्रहे द्वन्द्वः। आनङ्। इन्द्परावरुमशब्दादणि दीर्घाकारात्परत्वाद्वरुणस्य नादिवृद्धिः। आग्निवारुणमिति। "इद्वृद्धौ" इत्यग्नेरानङं बाधित्वा इत्वे कृते दीर्घातत्परत्वा।ऽभावान्निषेधाऽभावेसति "देवताद्वन्द्वे च" इत्युभयपदवृद्धिरिति भावः इतिप्रसङ्गिकम्।

अथ प्रकृतम्। तदस्मिन्निति। "महाराजप्रोष्ठपदाठ्ठ"ञिति सूत्रे वार्तिकमिदम्। "तदस्मिन्वर्तते" इत्यर्थे नवयज्ञादिभ्यः प्रथमान्तेभ्यष्ठञ उपसङ्ख्यानमित्यर्थः। नावयज्ञिकः काल इति। नवयज्ञो नूतनधान्यद्रव्यको यज्ञः-आग्रयणाख्याः, स यस्मिन्काले वर्तते स नावयज्ञिकः। आग्रयणकाल इति यावत्। पाकयज्ञिक इति। पाकयज्ञः-औपासनाग्निसाध्यः-पार्वणस्थालीपाकादिः स यस्मिन्काले वर्तते स पाकयज्ञिकः।

पूर्वमासादिति। "तदस्मिन्वर्तते" इत्यर्थे पूर्णमासशब्दात्प्रथमान्तादण् वक्तव्य इत्यर्थः। पूर्णो मासोऽस्यामिति। मासः-चन्द्रमाः, पूर्णश्चासौ मासश्च पूर्णमासः=पूर्वणचन्द्रः, स यस्यां तिथौ वर्तते सा पौर्णमासी तिथिरित्यर्थः। अणि "टिड्ढाणञि"ति ङीप्। यद्यपि पूर्वणो माः-चन्द्रः-पूर्वमाः। तस्येयमित्यर्थे "तस्येद"मित्यणि पौर्णमासीति सिद्धम्। तथापि ईदृश एवार्थे अयं साधुरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

प्राचां नगरान्ते ७।३।२४

प्राचां देशे नगरान्ते ऽङ्गे पूर्वपदस्य उत्तरपदस्य च अचामादेरचः वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। सुह्मनगरे भवः सौह्मनागरः। पौण्ड्रनागरः। प्राचाम् इति किम्? मद्रनगरम् उदक्षु, तत्र भवः माद्रनगरः।

न्यासः

प्राचां नगरान्ते। , ७।३।२४

यद्यत्र प्राचामित्यत्राचार्यग्रहणं स्यात्(), ततश्चोत्तरसूत्रे ७।३।२६ "विभाषितम्()" इति न ब्राऊयात्()ेतदेव विकल्पार्थं प्राचांग्रहणं तत्रानुवर्त्तिष्यते। तस्माद्देशग्रहणं विज्ञायते इत्याह--"प्राचां देशे" इत्यादि। नगरग्रहणेनेह स्वरूपग्रहणम्(); "स्वं रूपं शब्दस्य" १।१।६७ इति वचनात्()॥

बाल-मनोरमा

प्राचजां नगरान्ते १४१०, ७।३।२४

प्राचां नगरान्ते। अङ्गस्येत्यधिकृतं "नगरान्ते" इति सप्तम्यनुरोधेन सप्तम्या विपरिणम्यते। उत्तरपदस्येत्यधिकृतम्। "ह्मद्भगसिन्ध्वन्ते" इति सूत्रात्पूर्वपदस्येत्यनुवर्तते। तदयमर्थः। प्राचां यन्नगरं तदन्ते अङ्गे पूर्वपदस्योत्तरपदस्य च अचामादेरचो वृद्धिः स्यात्र् ञिति णिति किति च तद्धिते इति। सुह्नगरमिति पुण्ड्रनगरमिति च प्राग्देशस्य पूर्वान्तावधिः। मद्रनगरमुदक्ष्विति। उदग्देशे मद्रनगरं नाम किञ्चिन्नगरमस्तीत्यर्थः।

तत्त्व-बोधिनी

प्राचां नगरान्ते ११०७, ७।३।२४

प्राचां नगरान्ते। सप्तमीनिर्देशात् "अङ्गस्ये"त्यधिकृतमपि सप्तम्यन्तेन विपरिणम्यते। तदाह---नगरान्तेऽङ्गे इति।

---

सूत्रम्

काशिका-वृत्तिः

जङ्गलधेनुवलजान्तस्य विभाषितम् उत्तरम् ७।३।२५

जङ्गल धेनु वलज इत्येवम् अन्तस्य अङ्गस्य पूर्वपदस्य अचामादेरचो वृद्धिर् भवति, विभाषितम् उत्तरम् उत्तरपदस्य विभाषा भवति तद्धिते ञिति, णिति, किति च परतः। कुरुजङ्गलेषु भवम् कौरुजङ्गलम्, अकुरुजाङ्गलम्। वैश्वधेनवम्, वैश्वधैनवम्। सौवर्णवलजः, सौवर्णवालजः।

न्यासः

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्?। , ७।३।२५

"उत्तरम्()" इत्यनेनोत्तरपदं लक्ष्यते; तस्य चोत्तरपदस्य नित्यं सन्निधानात्? विभाषितत्वं नोपपद्यते। तस्मात्? तत्सम्बन्धिन्या वृद्धेर्विभाषितत्वात्? "विभाषितम्()" इत्युक्तम्()। अत एवाह--"उत्तरपदस्य विभाषा भवति" इति। वृद्धिरिति प्रकृतेन सम्बन्धः॥

बाल-मनोरमा

जङ्गलधेनुवलजान्तस्य विभाषितमत्तरम् १४११, ७।३।२५

जङ्गलदेनु। जङ्गलाद्यन्तस्याङ्गस्येति। जङ्गल, धेनु वलज इत्यन्तस्येत्यर्थः। कुरुजङ्गले इति। "भव"मिति शेषः। कुरुजङ्गलादिशब्दा देशविशेषु।

---

सूत्रम्

काशिका-वृत्तिः

अर्धात् परिमाणस्य पूर्वस्य तु वा ७।३।२६

अर्धशब्दात् परस्य परिमाणवाचिनः उत्तरस्य अचामादेरचः स्थाने वृद्धिर् भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, किति च परतः। अर्धद्रोणेन क्रीतम् आर्धद्रौणिकम्, अर्धद्रौणिकम्। आर्धकौडविकम्, अर्धकौडविकम्। परिमाणस्य इति किम्? अर्धक्रोशः प्रयोजनम् अस्य आर्धक्रोशिकम्।

न्यासः

अर्धात्? परिमाणस्य पूर्वस्य तु वा। , ७।३।२६

"आर्धद्रौणिकम्()" इति। "अर्धं नपुंसकम्()" २।२।२ इति समासः, "प्राग्वतेष्ठञ्()" ५।१।१८। अथ वावचनं किमर्थम्(), न विभाषितमिति ७।३।२५पूर्वसूत्रादनुवत्र्तष्यते, उत्तरमित्यनेन तत्? सम्बद्धम्(), अतस्तदनुवृत्तावृत्तरपदस्यैव विकल्पः स्यादिति चेत्()? नैतदस्ति; उततरपदमित्येतन्न स्वरिष्यते, तुशब्दश्चेह क्रियते, स नियमर्थो भविष्यति--पूर्वस्यैव भवति, नोत्तरस्येति। एवं तह्र्रकयोगे स्वरतत्वकरणाकरणाद्धि वावचनमेव लधीय इति पुनर्वावचनं क्रियते॥

बाल-मनोरमा

अर्धात्परिमाणस्य पूर्वस्य तु वा १६६२, ७।३।२६

अर्धात्परिमाणस्य। "परिमाणान्तस्ये"त्यस्मादुत्तरमिदं सूत्रम्। अर्धद्रौणिकम्-आर्धद्रौणिकमिति। द्रोणशब्दस्य निष्कादित्वेऽपि असमासग्रहणान्न ठक्। किंतु ठञेव।

---

सूत्रम्

काशिका-वृत्तिः

नातः परस्य ७।३।२७

अर्धात् परस्य परिमाणाकारस्य वृद्धिर् न भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, किति च परतः। अर्धप्रस्थिकः, आर्धप्रस्थिकः। अर्धकंसिकः, आर्धकंसिकः। अतः इति किम्? आर्धकौडविकः। तपरकरणं किम्? इह मा भूत्, अर्धखार्यां भवा अर्धखारी। किं च स्यात्? अर्धखारी भार्या यस्य अर्धखारीभार्यः, वृद्धिनिमित्तस्य च तद्धितस्य अरक्तविकारे ६।३।३८ इति पुंवद्भावप्रतिषेधो न स्यात्। यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते, स वृद्धिनिमित्तं न भवति इति पुंवद्भावो न प्रतिषिध्यते, यथा वैयाकरणी भार्या अस्य वैयाकरणभार्यः इति।

न्यासः

नातः परस्य। , ७।३।२७

पूर्वेण परिमाणस्य वृद्धिरुच्यमाना अकारस्याचमादेः प्राप्नोतीति प्रतिषिध्यते। पूर्वपदस्य तु विकल्पो भवत्येव; पूर्वस्य त्वित्यनुवृत्तेः। "आर्धप्रस्थिकः" इति। "अर्धं नपुंसकम्()" २।२।२ इति समासः, पूर्ववत्? प्रत्ययः। "किञ्च स्यात्()" इति। एवं मन्यते--आकारो हि वृद्धिमानेव, ततर नास्ति विशेषः सत्यसति वा वृद्धिपरतिषेधे, तदेव रूपम्(), अतोऽसत्यपि तपरकरणे नैव किञ्चिदनिष्टमापद्यत इति। "वृद्धिनिमित्तस्य" इत्यादि। यसति तपरकरणे तत्कालार्थे यदनिष्टमापद्यते तद्दर्शयति। किं पुनः कारणं पुंवद्भावप्रतिषेधो न स्यात्()? इत्यत आह--"यत्र हि" इत्यादि। वृदिं()ध कुर्वन्नेव हि तद्धितो वृद्धिनिमित्तं भवति। तस्माद्यत्र तद्धिते वृद्धिप्रतिषेधः क्रियते स वृद्धेनिमित्तं न भवति। तेन वृद्धिनिमित्तस्य तद्धितस्य पुंवद्भावो न प्रतिषिध्यत इति पुंवद्भावः स्यात्()। क्व? "यथा" इत्यादि। "वैयाकरणी भार्याऽस्य" इति। वृद्धिप्रतिषेधः पुनरत्र "न य्वाभ्याम्()" ७।३।३ इत्यादिना। अथ परस्येति किमर्थं, पूर्वस्य मा भूदिति? नैतदस्ति; अत इति विशेषणोपादानसामर्थ्यात्? पूर्वस्य न भविष्यति। न हि पूर्वस्यार्धशब्दस्यातोऽन्यो वृद्धिमाक्? सम्भवति, "पूर्वस्य तु वा" ७।३।२६ इति च विकल्पशासनमनर्थकं स्यात्(), यदि तस्य प्रतिषेधः स्यात्()। इदं तर्हि प्रयोजनम्()--तदन्तविधिर्मा भूदिति? तदन्तदिधौ सतीहापि प्रतिषेधः स्यात्()--अर्धद्रौणिकमिति। पूर्वस्तु विधिः--अर्धेन मुष्टिना क्रोतमर्धमौष्टिकम्(), आर्धमौष्टिकमित्येवमर्थः स्यात्(), परग्रहणे तु सति यदर्धात्? परमनन्तरं तदेवाश्रितं भवतीति नास्ति तदन्तविधिप्रसङ्गः॥

बाल-मनोरमा

नाऽतः परस्य १६६३, ७।३।२७

नातः परस्य। परिमाणाऽकारस्येति। परिमाणवाचकावयवस्य अकारस्येत्यर्थः। पूर्वपदस्य तु वेति। पूर्वपदस्यादेरचस्तु वृद्धिर्वेत्यर्थः। आर्धकौडविकमिति। अर्धकुडबेन क्रीतमित्यर्थः। "तेन क्रीत"मिति ठञ्। अत्र कुडवशब्दस्य परिमाणविशेषवाचिन आदेरचोरकारत्वाऽभावान्न वृद्धिनिषेधः। किन्तु "अर्धात्परिमाणस्य"त्युत्तरपदवृद्धिरिति भावः। तपरः किमिति। दीर्घस्याकारस्य वृद्धिनिषेधे फलाऽभावाद्ध्रस्वस्येति सिद्धमिति प्रश्नः। अर्धखारीति। निषेधो न स्यादिति। पूर्वपदस्य वृद्ध्यभावपक्षे वृदिं()ध प्रति फलोपहितनिमित्तत्वाऽभावादिति भावः। पूर्वपदस्य वृद्धिपक्षे तु वृदिं()ध प्रति फलोपहितनिमित्तत्वसत्त्वात् स्यादेव उत्तरपदाकारस्य वृद्धिनिषेधेऽपि पुंवत्त्वनिषेधः। परिमाणान्तस्येत्यारभ्या एतदन्तं साप्तमिकम्। अथ प्रकृतं पाञ्चमिकम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रवाहणस्य ढे ७।३।२८

प्रवाहणस्य ढे परतः उत्तरपदस्य अचामादेरचः वृद्धिर् भवति, पूर्वपदस्य वा भवति। प्रवाहणस्य अपत्यम् प्रावाहणेयः,

प्रवाहणेयः। शुभ्रादिभ्यश्च ४।१।१२३ इति ढक् प्रत्ययः।

न्यासः

प्रवाहणस्य ढे।, ७।३।२८

प्रवाहणशब्दस्य ढे प्रत्यये परत उत्तरपदस्येति व्यधिकरणे षष्ठ्यौ। प्रवाहणशब्दसय यदुत्तरपदमवयवस्तस्येत्यर्थः। "प्रवाहणेयः" इति। वहेः प्रपूर्वाण्णिच्()--प्रवाहयतीति प्रवाहणः। णिजन्तात्? "कृत्यल्युटो बहुलम्()" ३।३।११३ इति कत्त्रि ल्युट्(), प्रादिसमासः, "णेर्विभाषा" ८।४।२९ इति णत्वम्(), ततोऽपत्यार्थे ढक्()। किमर्थं पुनरुत्तरपदस्य वृद्धिर्विधीयते, यावता वृद्धिमवेवैतत्()? यदप्येवम्(), तथापि वृद्धिरविधातव्या; तद्धितस्य वृद्धिनिमित्तत्वात्(), "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" ६।३।३८ इति पुंवद्भावप्रतषेधो यथा स्यात्()। यदि ह्युत्तरपदवृद्धिर्न विधीयते, ततो यस्मिन्? पक्षे पूर्वपदे वृद्धिर्न विधीयते तस्मिन्? पक्षे प्रवाहणेयी भार्या अस्येति प्रवाहणेयीभायं इत्यत्र पुंवद्भावप्रतषेधो न स्यात्(); वृद्धेरनिमित्तत्वात्? तद्धितस्य। यथा--वैयाकरणभायं इत्यत्र। ननु चासत्यपि वृद्धिनिमित्तत्वे तद्धितस्य" "जातेश्च" ६।३।४० इति पुंवद्भावप्रतिषेधो भविष्यति, अस्ति ह्यत्रापि "गोत्रं च चरणैः सह" (म।भा।२।२२५) इति जातित्वम्()? एवं तर्हि एतज्ज्ञापयति--अनित्योऽयं प्रतिषेध इति। तेन हस्तिनीनां समूहो हास्तिकमित्यत्र "भस्याढे तद्धिते" (वा।७३१) इत्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवति॥

बाल-मनोरमा

प्रवाहणस्य ढे १११३, ७।३।२८

प्रवाहणस्य। उत्तरपदस्येत्यधिकृतम्। "तद्धितेष्वचामादे"रित्यतोऽचामादेरित्यनुवर्तते। "मृजेर्वृद्धि"रित्यतो वृद्धिरिति, "अर्धात्परिमाणस्य पूर्वस्य तु वे"त्यतः पूर्वस्य वेतिच। तदाह--प्रवाहणशब्दस्येति। प्रावाहणेयः प्रवाहणेनय इति। शुभ्रादित्वाड्ढकि पूर्वपदस्य पाक्षिकी आदिवृद्धिः। उत्तरपदस्य नित्यम्। उत्तरपदे आकारस्य वृद्धेः फलं तु "प्रवाहणेयीभार्य" इत्यत्र "वृद्धिनिमित्तस्य चे"ति पुंवत्त्वप्रतिषेध एव।

तत्त्व-बोधिनी

प्रवाहणस्य ढे ९३०, ७।३।२८

प्रवाहणस्य ढे। उत्तरपदस्येत्यधिक्रियते। "अर्धात्परिमाणे"त्यतः "पूर्वस्य तु वा" इति अनुवर्तते। तदाह---उत्तरपदस्याचामादेरित्यादि। नित्यमुत्तरपदवृद्धेः फलं तु "प्रवाहणेयीभार्यः"इत्यत्र "वृद्धिनिमित्तस्ये"ति पुंवद्भावप्रतिषेधः।

---

सूत्रम्

काशिका-वृत्तिः

तत्प्रत्ययस्य च ७।३।२९

ढक्प्रययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परतः उत्तरपदस्य अचामादेरचः वृद्धिर् भवति, पूर्वस्य तु वा। प्रवाहणेयस्य अपत्यम् प्रावाहणेयिः, प्रवाहणेयिः। प्रावाहणेयकम्, प्रवाहणेयकम्। बाह्यतद्धितनिमित्ता वृद्धिः ढाश्रयेण विकल्पेन बाधितुम् अशक्या इति सूत्रारम्भः।

न्यासः

तत्प्रत्ययस्य च।, ७।३।२९

"प्रावाहणेयिः" इति। "अत इञ्()" ४।१।९५। "प्रावाहणेयकम्()" इति। "गोत्रचरणादषुञ्()" ४।३।१२६। अथ

किमर्थमिदमुच्यते, यावता ढप्रत्ययन्तस्य प्रवाहणेयशब्दस्योत्तरपदं नित्यं वृद्धिमदेदेति, तदर्थस्तावदारम्भो न युक्तः; पूर्वपदस्य वृद्धेर्विकल्पो यथा स्यादित्येवमर्थोऽपि नैवास्यारम्भो युज्यते; इञादावपि तद्धिते तन्निमित्तां वृदिं()ध बाधित्वा पूर्वसूत्रेण च निमित्त एव विकल्पो भविष्यति, न हीञादावुतपन्ने तद्धिते ढस्य परत्वमपैति? इत्याह--"बाह्रतद्धित" इत्यादि। बाह्रतद्धिनो निमित्तं यस्याः सा तथोक्ता। बाह्रत्वं पुनरित्रदेस्तद्धितस्य प्रावाहणेयशब्देऽनन्तर्भावात्()। सैवं बाह्रं तद्धितं निमित्तमाश्रित्य भवन्ती बहिरङ्गा। प्रागेव तु ब्राआह्रतद्धितोत्पत्तेर्ढाश्रयो विकल्पो भवन्ननन्तरङ्गस्तां बाधितुं न शक्नोति। ततश्च यदीदं नारभ्येत तदा स्यादेव। तस्माद्विकल्पार्थमिदमारभ्यते॥

---

सूत्रम्

काशिका-वृत्तिः

नञः शुचीइश्वरक्षेत्रज्ञकुशलनिपुणानाम् ७।३।३०

नञः उत्तरेषां शुचि ईश्वर क्षेत्रज्ञ कुशल निपुण इत्येतेषाम् अचामादेरचः वृद्धिर् भवति, पूर्वपदस्य वा भवति तद्धिते ञिति, णिति, किति च परतः। शुचि अशौचम्, आशौचम्। ईश्वर अनैश्वर्यम्, आनैश्वर्यम्। क्षेत्रज्ञ अक्षैत्रज्ञ्यम्, आक्षैत्रज्ञयम्। कुशल अकौशलम्, आकौशलम्। निपुण अनैपुणम्, आनैपुणम्। अत्र केचिदाहुः इयं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते। न नञ्पूर्वात् तत्पुरुषातित्युत्तरो भावप्रत्ययः प्रतिषिध्यते। तत्र शुच्यादिभ्यः एव प्रत्यये कृते पश्चान्नञ्समासे सति वृद्धिरनङ्गस्यापि वचनात् भवति इति। तदपरे न मृष्यन्ते। भाववचनादन्योपि हि तद्धितो वृद्धिनिमित्तमपत्यादिषु अर्थेषु नञ्समासादेव विद्यते। बहुव्रीहेश्च नञ्समासात् भाववचनो ऽपि अस्ति, तत्र अङ्गाधिकारोपमर्दनं न युज्यते इति। अक्षेत्रज्ञानीश्वरौ तत्पुरुषौ एव ब्राह्मणादिषु पठ्येते, ततः ताभ्यां भावे ष्यञ् भवति।

न्यासः

नञः शुची�आरक्षेत्रज्ञकुशलनिपुणानाम्?। , ७।३।३०

उदाहरणान्युत्तरत्र व्युत्पादयिष्यन्ते। "अत्र केचदहुः" इत्यादि। ग्रहणकवाक्यम्()। अस्य "न नञ्पूर्वात्? तत्पुरुषात्()" इति विवरणम्()। "न नञ्पूर्वात्? तत्पुरुषात्()" ५।१।१२० इति त्वतल्भ्यामन्यो भावप्रत्ययः प्रतिषेध्यते, तत्रोत्तरं भावप्रत्ययमिच्छता शूच्यादिभ्य एव, न तु नञ्समासेभ्य उत्तरो भावप्रत्ययः कत्तव्यः। तस्मिन्? कृते पश्चान्नञ्समासः, ततश्चाङ्गस्यामादेरचो विधीयमाना वृद्धिर्न प्राप्नोति। न हि पूर्वं भावप्रत्यये कृते पश्चान्नञ्समासे नञ्? अङ्गसयाचामादिर्भवति, उत्तरपदस्यैवाङ्गत्वात्(); उच्यते चेदं वचनम्(), तत्र वचनसामर्थ्यादङ्गस्यापि वृद्धिर्भवति। "तदपरे" इत्यादि। यदुक्तमियं पूर्वपदस्य वृद्धिरप्राप्तैव विभाष विधीयत इति, तदपर आचार्या न क्षमन्ते। किं कारणम्()? इत्याह--"भाववचनादन्योऽपि हि" इत्यादि। एवकारो भिन्नक्रमो विद्यत इत्यस्यानन्तरं द्रष्टव्यः। यदि नञ्समासादपत्यादिष्वर्थेषु वृद्धिनिमित्तं भाववचनादपरस्तद्धितो न विद्येत, एवं बहुव्रीहेश्च नञ्समासाद्भाववचनादन्योऽपि न विद्येत; ततो युज्यतेऽशुच्चादिशब्दानामनङ्गत्वादङ्गाधिकारोपमर्दनेन वृद्धिवचनस्याकृतार्थत्वात्()। न त्वेतदेवम्; विद्यत एव ह्रन्योऽपत्यादिव्वर्थेषु नञ्समासाद्()वृद्धिनिमित्तस्यद्धितः--अकुशलस्यापत्यमाकौशलिः, अकुशलस्येदमाकौशलमिति। बहुव्रीहेश्च नञ्समासाद्भाववचनोऽपि विद्यत एव--नास्य शुचयो विदयन्त इत्यशुचिः, तस्य भावः, "इगन्ताच्च लघुपूर्वात्()" ५।१।१३० इत्यण्()--आशौचम्()। यत एवमन्योऽपि भाववचनात्? तद्धितो नञ्समासाद्धिद्यते, वृद्धिनिमित्तको बहुव्रीहेश्च नञ्समासाद्भाववचनोऽपि विद्यते; तस्मात्? तत्र कृतार्थत्वाद्वचनस्याङ्गाधिकारबाधनं च युच्यते। यदप्युक्तम्()--"न नञ्पूर्वात्? तत्पुरुषादित्यृत्तरो भावप्रत्ययः एव"(इति), तदप्ययुक्तमिति दर्शयन्नाह--"अक्षेत्रज्ञोऽनी()आरः"["अक्षेत्रज्ञानी()आरौ"--काशिका] इत्यादि। एतौ हि द्वौ शब्दौ बाह्रणादिषु तत्पुरुषावेव पठ()एते, तेनाभ्यां तत्पुरुषाभ्यामेव ष्यञ्? भवति, अन्यथा हि ब्राआह्रणादिष्वनयोः पाठस्य

वैयर्थ्यं स्यात्()। तस्मादङ्गस्यैवेयं वृद्धिर्नित्यं प्राप्ता सती भावप्रत्यये, अन्यत्र च तद्धिते विकल्पेन विधीयते यथायोगम्()। ततराशौचमिति यदि तत्पुरुषः क्रियते--न शुचिरशुतचिः, तदा "तस्येदम्()" ४।३।१२० इत्यणि कृते वृद्धिः; अथ बहुव्रीहिः--नास्ति शुचिरस्येन्यशुचिः, ततो यदि भावार्थो विवक्ष्यते तदा "इगन्ताचच लघुपूर्वात्()" ५।१।१३० इत्यण्(); अथ "तस्येदम्()" ४।३।१२० इत्यर्थो विवक्ष्यते, तदा "प्राग्दीवयतोऽण्()" ४।१।८३ इत्यण्()--आनै()आय्र्यम्(), आक्षैत्रज्ञ्यमिति। तत्पुरुषाभ्यां ब्राआह्मणादित्वात्? व्यञि कृते वृद्धिः। आकीशलमानैपुणमिति यदि बहुव्रीहिरयापि तत्पुरुषः, उभयथापि "तस्येदम्()" ४।३।१२० इत्यणेव। यद्यपि कुशलनिपुणशब्दौ ब्राआह्मणादिषु युधादिषु च पठ()एते तथापि तदन्तात्? तत्पुरुषाद्बहुव्रीहेरपि भावप्रत्ययो नोपपद्यते; तदन्तविधेरभावात्()।

---

सूत्रम्

काशिका-वृत्तिः

यथातथयथापुरयोः पर्यायेण ७।३।३१

यथातथ यथापुर इत्येतयोः नञः उत्तरयोः पर्यायेण अचमादेरचः वृद्धिर् भवति तद्धिते ञिति, णिति, किति च परतः। आयथातथ्यम्, अयाथातथ्यम्। आयथापुर्यम् अयाथापुर्यम्। अयथातथ अय्थापुर इति ब्राह्मणादिषु नञ्समासौ एतौ द्रष्टव्यौ। सूत्रे यथातथायथापुरशब्दौ तु यथा ऽसादृश्ये २।१।७ इति अव्ययीभावसमासौ। तथा नपुंसकाश्रयं ह्रस्वत्वं कृतम्। भास्ये तु यथादर्शित अयथातथाभावः इति तथा सुप्सुपेति समासो लक्ष्यते।

न्यासः

यथातथयथापुरयोः पर्यायेण। , ७।३।३१

"ब्राआह्मणादिषु नञ्समासावेतौ द्रष्टव्यौ" इति। तेन नञ्समासाभ्यां ष्यञ्? भवतीति भावः। "एतौ" इति। यथातथा--यथापुरशब्दौ। ""यथाऽसावृश्यते" इत्यव्ययीभावसमासौ" इति। ननु च "असादृश्य" (२।१।७) इति प्रतिषेधः प्राप्नोति? नैष दोषः; न ह्यत्र सादृश्यं गम्यते। तथा हि--यथातथमिति सत्यमुच्यते, यथा--पुरमिति पुरातनम्()। कथं पुनर्ज्ञायतेऽवययीभावसमासौ? इत्याह--"तथा हि" इत्यादि। अत्र हि "ह्यस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति नपुंसकाश्रय ह्यस्वत्वं कृतम्()। नपुंसकत्वं चाव्ययीभावस्य विहितम्(), तस्मादव्ययीभावसमासाविति ज्ञायते। "भाष्ये तु" इत्यादि। अयथातथाभाव इति ह्यस्वत्वमकृत्वा वाक्यं यथा दर्शितां तथा "सुप्सुपा" २।१।४ इति समासो लक्ष्यते नाव्ययीभावः। अव्ययीभावे हि नपुंसकाश्रयं ह्यस्वत्वं स्यात्()। अ()स्मस्तु पक्षे सौत्रत्वान्निर्देशस्य--"छन्दोवत्सूत्राणि भवन्ति" (म।भा।) इति वर्णव्यत्ययेन दीर्घस्य स्थाने ह्यस्वो वेदितव्यः॥

बाल-मनोरमा

यथातथायथापुरयोः पर्यायेण १७६६, ७।३।३१

तयोः ष्यञि आदिवृद्धौ विशेषमाह--यथातथायथापुरयोः। आदिवृद्धिप्रकरणे उत्तरपदस्य पूर्वस्य चेत्यधिकारे इदं सूत्रम्। "नञः शुची"त्यतो नञ इत्यनुवर्तते। तदाह--नञः परयोरेतयोरिति। यथातथा यथापुर इत्यनयोरित्यर्थः। पर्यायेणेति। कदाचित्पूर्वपदस्य, कदाचिदुत्तरपदस्येत्यर्थः। आयथातथ्यमिति। यथातथेति निपातनात्ष्यञि पूर्वपदस्यादिवृद्धिः। अयाथातथ्यमिति। उत्तरपदस्यादिवृद्धिः। आयथापुर्यमिति। यथापुरशब्दात्ष्यञि पूर्वपदस्यादिवृद्धिः। अयाथापुर्यमिति। उत्तरपदस्यादिवृद्धिः। आ पदासमाप्तेरिति। अत्र व्याख्यानमेव शरणम्।

चतुर्वर्णादीनामिति। चतुर्वर्णादीभ्यः स्वार्थे ष्यञ उपसङ्ख्यानमित्यर्थः। सर्ववेदा इति। "पूर्वकाल" इति समासः। लुगिति। "अध्येतृप्रत्ययस्ये"ति शेषः। स एव सार्ववैद्य इति। सर्ववेदशब्दात्स्वार्थे ष्यञिति भावः।

चतुर्वेदस्येति। वार्तिकमिदम्। "ष्य"ञिति शेषः। चतुर्वेद इति। "तद्धितार्थ" इति द्विगुः। ततोऽध्येतृप्रत्ययस्याऽणो "द्विगोर्लुगनपत्ये"[ इति लुक्। चतुर्विद्यस्येतीति। "चतुर्वेदस्योभयपदवृद्धिश्चे"ति वार्तिके चतुर्वेदस्येत्यस्य स्थाने चतुर्विद्यस्येति केचित्पठिन्तीत्यर्थः। चतरुआओ विद्या अधीते इत्यर्थे "तद्धितार्थ" इति द्विगौ "विद्यालक्षणकल्पान्ताच्चे"ति ठकि "द्विगोर्लुगनपत्ये" इति तस्य लुकि चतुर्विद्यशब्दात्स्वार्थे ष्यञि उभयपदवृद्धौ "चातुर्वैद्य" इति रूपमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

हनस् तो ऽचिण्णलोः ७।३।३२

तद्धितेषु इति निवृत्तम्, तत्सम्बद्धं किति इत्यपि। ञ्णिति इति वर्तते। हनः तकारोदेशो भवति ञिति, णिति प्रत्यये परतः चिण्णलौ वर्जयित्वा। घातयति। घातकः। साधुघाती। घातंघातम्। घातो वर्तते। अचिण्णलोः इति किम्? अघानि। जघान। धातो कार्यम् उच्यमानं धातोः प्रत्यये विज्ञायते। इह न भवति, वार्त्रघ्नम् इतरतिति।

लघु-सिद्धान्त-कौमुदी

अस्य च्वौ १२४६, ७।३।३२

अवर्णस्य ईत्स्यात् च्वौ। वेर्लोपे च्व्यन्तत्वादव्ययत्वम्। अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्। (अव्ययस्य च्वावीत्वं नेति वाच्यम्)। दोषाभूतमहः। दिवाभूता रात्रिः॥

न्यासः

हनस्तोऽचिण्णलोः। , ७।३।३२

"तद्धितेष्विति निवृत्तम्()" इति। अस्वरितत्वात्()। "तत्सम्बद्धं कितीत्यपि" इति। निवृत्तमित्यपेक्षते। तत्सम्बद्धत्वं पुनस्तस्य "किति च" ७।२।११८ इत्यत्र "तद्धितेषु" ७।२।११७ इत्यनुवृत्तेः। यदि पुनः कितीत्यनुवर्त्तत, ततो लक्षणे "जायापत्योष्टक्()" ३।२।५२ "अमनुष्यकर्तृके च" ३।२।५३ इति टकि कृते--जायाघ्नस्तिलकालक इत्यत्रापि स्यात्()। ञ्णिद्ग्रहणं तु प्रत्ययमात्रेण सम्बद्धम्()। अतः "तद्धितेषु" (७।२।११७) इत्येतस्मिन्? निवृत्तेऽपि तदनुवर्त्तत एव। "घातयति" इति। हेतुमण्णिच्()। "हो हन्तेर्ञ्णिन्नेषु" ७।३।५४ इति कृत्वम्()। "घातकः" इति। ण्वुल। "साधुघाती" इति। "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति णिनिः। "घातंघातम्()" इति। "आभीक्ष्ण्ये णमुल्? च" ३।४।२२, "आभीक्ष्ण्ये द्वे भवतः" (वा।८८७) इति द्विर्वचनम्()। "घातः" इति। भादे घञ्? ३।३।१८। "अधानि" इति। लुङ्(), "चिण्? भावकर्मणोः" ३।१।६६ इति चिणादेशश्च; "भावकर्मणोः १।३।१३ इत्यात्मनेपदम्(), "चिणो लुक्()" ६।४।१०४ इति तकारस्य लुक्()। "जघान" इति। लिट्(), तिप्(), तस्य णल्(), "अभ्यासाच्च" ७।३।५५ इति कुत्वम्()-घकारः। अथेह कस्मान्न भवति--वृत्रं हतवानिति। "ब्राह्मभ्रूणवृत्रेषु क्विप्()" ३।२।८७, तदन्तात्? "तस्येदम्()" ४।३।१२० इत्यण्(), "षपूर्वहन्धृतराज्ञामणि" ६।४।१३५ इत्यल्लोपः--वात्रघ्नः, भ्रौणघ्नः? इत्याह--"धातोः" इत्यादि। धातोरित्येवमुच्यार्य यो विहितः प्रत्ययः स धातुप्रत्ययः। धातौः कार्यमुच्यमानं तत्रैव धातुप्रत्यये भवति। एतच्च भौणहत्यमिति निपातनेन ६।४।१७४ ज्ञापितम्()। तेन वात्रघ्नः, भ्रौणघ्न इत्यादौ न भवति। न ह्यत्र धातोरित्येवं प्रत्ययो विहितः, किं तर्हि? प्रातपदिकादित्येवम्()॥

बाल-मनोरमा

हनस्तोऽचिण्णलोः ३३३, ७।३।३२

हनस्तोऽचिण्णलोः। "हन" इति षष्ठी। "त" इत्यत्राऽकार उच्चारणार्थः। तदाह - हन्तेस्तकार इति। "अन्तादेश" इत्यलोऽन्त्यपरिभाषया सिद्धम्। ञिति णिति चेति। "अचो ञ्णिती"त्यतस्तदनुवृत्तेरिति भावः। तथा च हनो नकारस्य तत्वे "हो हन्ते"रिति कुत्वेन हस्य घकारे "घाती"ति ण्यनतं फलितम्।ततो लटि "घाततयी"ति रूपं स्थितम्। कृतो लुकि समासनिवृत्तौ सुब्लुकोऽपि निवृत्तौ कंसमिति च स्तितम्। "आक्यानात्कृतः" इति वार्तिकस्थं "प्रकृतिवच्च कारक"मित्यंशं शङ्कोत्तरत्वेन योजयिष्यञ्छङ्कामवतारयति-- नन्विति। कंसवशिष्टस्येति। "कंसवध"शब्दस्यैवेत्यर्थः। तस्मादेव णिचो विधानादिति भावः। ननु कंसवधशब्दस्य अङ्गत्वे का हानिरित्यत आह-- ततस्चेति। कंसवधशब्दस्याऽङ्गत्वादड्()द्वित्वयोर्विषये दोषः स्यात्। कंसशब्दात्पूर्वमडागमः स्यात्। "कं"सित्यस्यद्विर्वचनं स्यात्। इष्यते तु "कंसमजीघत" दित्येवं हनधातोरेवोभयमित्यर्थः। किं चेति। कंसं घातयतीति कुत्वतत्वे न स्यातामित्यर्थः। कुत इत्यत आह -- धातोरिति। दातोर्हनित्यादितत्तत्स्वरूपेण ग्रहणे सति तत्प्रत्यये = धातोर्विहितप्रत्यये कार्यविज्ञानमिति परिभाषयेत्यर्थः। तेन वात्रघ्नमित्यत्र "हनस्तोऽचिण्णलो"रिति कुत्वं, "हनस्तोऽचिण्णलोटरिति सूत्रे भाष्ये स्पष्टम्। तथा च प्रकृते "कंसं घातयती"त्यत्र "हो हन्ते"रिति कुत्वं , "हनस्तोऽचिण्णलो" रिति तत्वं च न स्याताम्, अत्र णिचः प्रातिपदिकाद्विहितत्वेन धातोर्विहितत्वाऽभावदित्यर्थः। अत्र प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थस्य कर्मत्वेन कंसस्येति षष्ठी स्यादित्यप्याक्षेपोऽपि बोध्यः, तत्परिहारस्यापि वक्ष्यमाणत्वात्।तामिमां शह्कामद्र्धाङ्गीकारेण परिहरति - सत्यमिति। कंसवधशब्दस्यैवाङ्गत्वमित्याद्यङ्गीक्रियते, दोषापादनं तु नाङ्गीक्रियत इत्यर्थः। प्रकृतिवच्चेतीति। "आख्यानात्कृतः" इति वार्तिके "प्रकृतिवच्चे"ति चकारो भिन्नक्रमः। "प्रकृतिव"दित्यनन्तरपठितश्चकारः कारकमित्यस्मादूध्र्वं निवेशनीय इति भावः। तदेवाभिनीय दर्शयति - कारकं चेति। चकारोऽयमनुक्तसङ्ग्रहार्थ इत्याह -- चात्कार्यमिति। "समुच्चीयते" इति शेषः। तथा च कारकं कार्यं च प्रकृतिवदिति फलितम्। अत्र प्रकृतिशब्देन हेतुमण्णिचः प्रकृतिर्विवक्षिता, व्याख्यानात्। प्रकृताविव प्रकृतिवत्। सप्तम्यन्ताद्वतिः। तदाह -- प्रकृतेर्हन्यादेर्हेतुमण्णाविति। "प्रयुज्यमाने सती"ति शेषः। "कारक" मित्यस्य विवरण#ं -- द्वितीयान्तमिति। द्वितीयातृतीयादिकारकविभक्त्यन्तमित्यर्थः। हन्ति कंसं कृष्णः, तं प्रेरयतीत्यर्थे कंस घातयति, कंसमजीघतदित्यादौ हेतुमण्ण्यन्ते प्रयुज्यमाने यद्द्वितीयादिकारकविभक्यन्तं यच्च कार्यं कुत्वतत्वाऽड्()द्वित्वादि तत्सर्वम् "आख्यानात्कृत" इत्यस्योदाहरणे कंसवधमाचष्टे कंसं घातयति, कंसवधमाचष्टे कंसमजीघतदित्यादावपि भवतीति फलितम्। तत्र "कारक"मित्यनेन कंसात्षष्ठी निरस्ता, उदाह्मतहेतुमण्ण्यन्तस्थले कृद्योगाऽभावेन कर्मणि द्वितीयाया एव सत्त्वात्। "कार्य"मित्यनेन तु कंसस्य अड्()द्वित्वनिरासश्चेति बोध्यम्। आख्यानशब्दश्च कथंचिद्वृत्तानुवादपरो, न तु भारतादिप्रसिद्धकंसवधादिकथापरः। तेन राजागमनमाचष्टे राजानामागमयतीत्यादि सिध्यति। "द्वितीयान्त"मित्यत्र द्वितीयाग्रहममुपलक्षणम्। तेन पुष्ययोगमाचष्टे पुष्येण योजयतीति सिध्यतीति भाष्ये स्पष्टम्। कर्तृकरणाद्धात्वर्थे। इदमपि गणसूत्रम्, "प्रातिपदिकाद्धात्वर्थे" इत्यस्यैव प्रपञ्चः। कर्तुः करणं - कर्तृकरणं, न तु कर्ता च करणं च इति द्वन्द्वः, व्याख्यानात्। तदाह -- कर्तुव्र्यापारार्थमिति। अभिमतफलोत्पादनार्थमित्यर्थः। साधकतममिति यावत्। नन्वेवं सति "करणाद्धात्वर्थे" इत्येव सिद्धे कर्तृग्रहणं व्यर्थमित्यत आह-- न तु चक्षुरादिमात्रमिति। कर्तृग्रहणं विहाय करणादित्येवोक्तौ चक्षुरादीन्द्रियमेव सुप्रसिद्धत्वात्करणादिति शब्देन गम्येत। अतः कर्तृग्रहणमित्याहुः। वस्तुतस्तु "साधकतमं करण"मिति देवदत्तयती"ति कर्तुरुदाजह्युः। कदाचिद्दर्शने इति। चित्रेत्यनुवर्तते। तदाह -- चित्र इत्ययमिति। कदाचिद्दर्शने इत्यस्य विवरणम्-- अद्भुतदर्शने इति। "चित्र चित्रीकरणकदाचिद्दर्शनयो"रित्येव सुवचम्। वटि लजि इत्येके अदन्तेष्विति। अदन्तेषु पाठबलात् बण्ड लज्जेति कदाचिददन्तत्वमप्यनयोर्विज्ञायते। अदन्तत्वस्य च फलाऽभावादतो लोपं बाधित्वा "अचो ञ्णिती"ति वृद्धौ "अर्तिह्री"ति पुगित्यर्थः। फलितमाह -- वण्टापयतीति। शाकटायनस्त्विति। ऋषिविशेषोऽयम्। सङ्ग्राम युद्धे। गणसूत्रमिदम्। युद्धवाचि सङ्ग्रामेति प्रातिपदिकं करोत्यर्थे णिचं लभते इत्यर्थः। ननु "प्रातिपदिकाद्धात्वर्थे" इत्येव सिद्धे किमर्थमिदमित्यत आह-- अनुदात्तेदिति। एतदात्मनेपदार्थमिति भावः। ननु

सङ्ग्रामशब्दस्य प्रातिपदिकस्य अकारान्तत्वात्कथमनुदात्तेत्वमित्यत आह-- अकारप्रश्लेषादिति। सङ्ग्रामशब्दादनुदात्तानुनासिकं पररूपेण प्रश्लिष्य निर्देशादिति भावः। अससङ्ग्रामतेति। लुङि चङि सङ्ग्रामशब्दस्य ण्यन्तस्य अङ्गत्वात्ततः प्रागडिति भावः। एतच्चभृशादिसूत्रे कैयटे स्पष्टम्। अग्लोपित्वान्नोपधाह्रस्वः। सुखदुःख तत्क्रियायाम्। सुखानुकूले दुःखानुकूले च व्यापारे इत्यर्थः। सुख दुःखेति प्रातिपदिकाभ्यां तत्करोतीत्यर्थे णिच् स्यादिति यावत्। "प्रातिपदिकाद्धात्वर्थेट इत्येव आभ्यां णिजित्याहुः। बहुलमेतन्निदर्शनम्। गणसूत्रमिदम्। एतेषां कथादीनामदन्तानां निदर्शनं = पाठ इत्यर्थः। तदाह --अदन्तेति। बहुलग्रहणस्य फलमाह-- बाहुलकादिति। अपपर्णदिति। अग्लोपित्वान्न सन्वत्त्वमिति भावः। क्षिप प्रेरणे। क्षिपयति। अग्लोपस्य स्थानिवत्त्वान्न गुणः। एवमग्रेऽपि। वसनिवासे। वसयति। अदन्तत्वान्नोपधावृद्धि। "आन्दोलयती"त्यादावदन्तत्वेन अग्लोपित्त्वान्नोपधाह्रस्वः। तदेवं "बहुलमेतन्निदर्शन"मित्यस्य कथाद्यदन्तविषयत्वमुक्त्वा मतान्तरमाह -- अन्ये त्विति। भ्वादिः, अदादिः, जुहोत्यादिः, दिवादिः, स्वादिः, तुदादिः, रुधादिः, तनादिः, क्र्यादिः, चुरादिरिति दशगणी, तद्बहिर्भूता अपि सौत्रा- जुप्रभृतयः, लौकिकाः प्रेङ्खोलादयः, वैदिका-- "तद्रक्षांसि रात्रिभिरसुभ्न मित्यादौ सुभादयश्च सङ्गृहीता भवन्तीत्यर्थः। मतान्तरमाह -- अपरे त्विति। चुरादिभिन्ना उदाह्रता ये नव गणास्तेभ्योऽपि णिज्बहुलग्रहणादस्माल्लभ्यत इत्यर्थः। मतान्तरमाह -- चुरादिभ्य एवेति। वस्तुतस्तु भूवादिसूत्रे "पाठेन धातुसंज्ञे" ति भाष्यप्रतीकमुपादाय - "स पाठो नोपलक्षणार्थः। किंतु इयत्ताप्रतिपादनार्थ इति कैयट आह-- एवं च "बहुलमेतन्निदर्शन"मिति गणसूत्रमनार्षमिति शब्देन्दुशेखरे स्थितम्। णिङ्ङ्गान्निरसने इति। गणसूत्रम्। स्पष्टम्। ङित्त्वान्नित्यमात्मनेपदम्। ()ओता()आआ()आतर। इदमपि गणसूत्रम्। ()ओता()आआदीनामिति। ()ओता()आ, अ()आतर, गालोडित, आह्वरक-- एषामित्यर्थः। अ()आआदय इति। ()ओताऽ()आशब्दे "अ()आ"शब्दः, अ()आतरशब्दे "तर" शब्दः, गालोडितशब्द "इत" शब्दः, आह्वरकशब्दे "क"शब्दश्च लुप्यन्ते इत्यर्थः। णिङ् चेति। चकारलभ्यमिदम्। धात्वर्थे इति। "प्रातिपदिकाचित्त्विति। "()ओता()ओ" त्यादिसूत्रे णिचमेवानुवर्तयन्ति न तु णिङमित्यर्थः। णिच्()णिङोः फलभेदं दर्शयति --तन्मते इति। धात्वर्थे इत्येव सिद्धमिति। धातुपाठं रचयितुर्भीमसेनस्य वाकय्मिदमित्याहुः। "प्रातिपदिकाद्धात्वर्थे" इति णिचि सिद्धे "पुच्छभाण्डचीवराण्णि"ङिति न कर्तव्यमित्यर्थः। ननु नित्यात्मनेपदार्थं "पुच्छभाण्डे"ति णिङ्विधिरावश्यक इत्यत आह-- णिजन्तादेव बहुलवचनादिति बहुलवचनादिति। "बहुलमेतन्निदर्शन"मिति बहुलग्रहणादित्यर्थः। ननु "पुच्छादिषु धात्वर्थ इत्येव णि"जित्येव सिद्ध सिद्धशब्दो व्यर्थ इत्यत आह -- सिद्धशब्द इति। धातुपाठात्मकग्रन्थसमाप्तौ सिद्धशब्दप्रयोगो मङ्गलार्थ इत्यर्थः। पस्पशाह्निकभाष्ये हि "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकग्रन्थस्याऽऽदिमवार्तिकव्याख्यावसरे "सिद्धशब्दोपादनं मङ्गलार्थ"मित्युक्तम्। "मङ्गलादीनि मङ्गलमद्यानि मङ्गलान्तानि च शस्त्राणि प्रथन्ते" इति बूवादिसूत्रस्थभाष्याद्ग्रन्थान्तेऽपि मङ्गलस्य कर्तव्यतासिद्धिः। चुरादयः।

॥ इति बालमनोरमायाम् चुरादयः॥

अथ दिवादयः।

अथ श्यन्विकरणा धातवो निरूप्यन्ते--। दीवु क्रीडेति। उदिदयम्। तेन क्त्वायामिड्विकल्पः, निष्ठायां च नेट्। झॄ()षन्ता इति। जॄ()ष् झॄ()ष् वयोहानौ इत्येतत्पर्यन्ता इत्यर्थः।

तत्त्व-बोधिनी
हनस्तोऽचिण्णलोः २९०, ७।३।३२

णिच्प्रकृतिरिति। वधशब्दो णिच्प्रकृतिः, इदानां तु कृल्लक्यवशिष्टभाग एव प्रकृतिरित्यर्थः। आख्यानात्कृत इति। यद्यपि

"वध" शब्दः कृदन्तः, स आख्यानं न भवति तथाप्याख्यान वाची कृदन्तश्च कंसवधशब्दो भवत्येव, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। कृल्लुगिति। "हनश्च वधः"इति विहितस्य अप्प्रत्ययस्य लुक्। प्रकृतिप्रत्यापत्तिरिति। विकारपरित्यागेन स्वरूपेणाऽवस्थितिरित्यर्थः। तदेतत्सकलमभिप्रेत्याह-- कंसं हन् इ इति स्थिते इति। कंसविशिष्टस्येति। तस्मादेव णिचो विधानादिति भावः। दोष इति। कंसशब्दात्पूर्वमडागमः, कंस् इत्यस्य द्विर्वचनं स्यादित्यर्थः। किं चेति। एवं च कंसमजीघतदितीष्टं न सिध्येदिति भावः। तत्प्रत्यये-- धातोर्विहितप्रत्यये। तेन "वात्रघ्न"मित्यत्र "हनस्त" इति तत्वं न भवतीति ज्ञेयम्। उक्तदोषान्परिहरति-- सत्यमिति। "प्रकृतिवच्चे"ति चकारोऽनुक्तसङ्ग्रहार्थं इत्याह---- वात्कार्यमिति। यद्यप्यन्यतरादितदेशेनाप्यड्()द्विर्वचने सिध्यतः, तथापि धाताप्रसिद्धे कंसवधाद्युपाख्याने एव णि"जिति नाग्रहः, किं तूपाख्यानमात्रे। तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति। इह कृत्प्रकृतौ राज्ञः कर्तृत्वेऽपि गमेर्हेतुमण्णौ "गतिबुद्धी"त्यनेन तस्य कर्मत्वमिति द्वितीयान्तमेव रूपातिदेश बलात्स्वीक्रियते। देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तु देवदत्तस्य कर्तृत्वानपायात्तृतीयैव भवति। रुक्मिणीहरणमाचष्टे इत्यादौ "ह्मक्रोरन्यतरस्या"मिति विकल्पाद्रुक्मिणीं रुक्मिण्या वा हारयतीति प्रयोगः। कर्तृकरणादिति। कर्तृग्रहणाऽभावे चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरवबध्नाति अवकरयतीत्यादौ। लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वात्, अतस्तत्सङ्ग्रहार्थं कर्तृग्रहणमिति मनोरमायां स्थितम्। नव्यास्तु--- साधकतमत्वेन विवक्षितं यत्तत्करणशब्देन गृह्रते न तु लोकप्रसिद्धकरणमेव। अन्यथा "कर्तृकरणयोस्तृतीया" इत्यादावपि लोकप्रसिद्धकरणग्रहणप्रसक्त्या "बाणेन हत" इत्यादि रूपं न सिध्येततथा च कर्तृग्रहमं विनाप्यवकरयतीति रूपसिद्धौ न किंचिद्बाधकमिति व्याख्याय "कर्तृकरमा"दित्यत्र समाहारद्वन्द्वं मत्वा देवदत्तेन पाचयति देवदत्तयतीत्युदाजह्युः। कदाचिद्दर्शने। "चित्रकरणकदाचिद्दर्शनयो"रिति सुवचम्। अदन्तेषु पाठबलादिति। अदन्तस्य फलान्तराऽभावादतो लोपं बाधित्वा वृद्धिरित्यर्थः। सङ्ग्राम। सङ्ग्रामेति युद्धवाचि प्रातिपदिकं कर#ओत्यर्थे णिचं लभ्यते। अनुदात्तेदिति। एतच्च "भृशादिभ्यो भुवी"ति सूत्रे कैयटेनोक्तम्। अकारप्रश्लेषादिति। तेन प्रश्लिष्टस्येत्संज्ञा, प्रकृत्यकारस्य तु "इष्ठव"दिति टिलोपः। तथा च अग्लोपादससङ्ग्रामतेत्यत्र नोपधाह्रस्वः। सुख दुःख। तच्छब्देन प्रातिपदिकार्थौ पराभृश्येते। प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे अनयोः पाठः सोपसर्गात्प्रत्ययार्थ इत्येके। सुखदुःखाभ्यां तत्कियायामेव णिच् स्यान्न त्वाचष्ट इत्यस्मिन्नर्थे इत्येतदर्थः पाठ इत्यन्ये। पुच्छादिष्वति। भीमसेनस्य वाक्यम्। ग्रन्थान्त इति। भू सत्तायामित्यादिधातुपाठस्याऽन्त इत्यर्थः। इति चुरादयः।

अथ दिवादयः।

दिवु क्रीडा। उदित्करणं क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं, च। देवित्वा। द्यूत्वा।द्यूतम्। क्रीडायां-- दीव्यन्ति माणवकाः। विजिगीषायां--- शत्रुं दीव्यति। विजिगीषते इत्यर्थः। कान्तिरिच्छा। द्युतेः पृथग्ग्रहणात्। षिवु।परिषिषेवेति। "स्थादिष्वेवाऽभ्यासस्ये"ति नियमो नेह प्रवर्तते, तत्र "प्राक् सिता"दित्यनवृत्तेः। अस्य चाऽप्राक्()सितीयत्वात्। तेनाऽभ्यासस्य षत्वं "परिनिविभ्यः" इत्यनेन भवत्येव। न्यषवीदिति। "सिवादीनां वे"ति विकल्पः। नृती। ईदित्करणं "()आईदित" इति निष्ठायामिण्निषेधार्थम्। यद्यपि "सेऽसिची"ति इटो विकल्पतत्वात् "यस्य विभाषेऽत्यनेनैवेष्टं सिध्यति, तथापि "यस्य विभाषे"त्यस्याऽनित्यत्वज्ञापनार्थमीदित्करणं, तेन "दावितमिभराजधिया" इत्यादि सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

आतो युक् चिण्कृतोः ७।३।३३

आकारान्तस्य अङ्गस्य चिणि कृति ञ्णिति युगागमो भवति। अदायि। अधायि। कृति दायः। दायकः। धायः। धायकः। चिण्कृतोः इति किम्? ददौ। दधौ। चौडिः, बालाकिः, बाह्वादित्वातिञ्। ज्ञा देवता अस्य ज्ञः।

लघु-सिद्धान्त-कौमुदी

आतो युक् चिण्कृतोः ७६०, ७।३।३३

आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च। दायिता, दाता। दायिषीष्ट, दासीष्ट। अदायि। अदायिषाताम्॥ भज्यते॥

न्यासः

आतो युक्चिण्कृतोः। , ७।३।३३

"चिणि कृति च" ["च" नास्ति--काशिका] इति। चिण्ग्रहणमकृदर्थम्()। अकृत्त्वं तु तस्य द्वितीयधात्वधिकारेऽविहितत्वात्()। "अदायि, अधायि" इति। ददातिदधात्योः पूर्ववल्लुङादिकार्यम्()। "दायः, धायः" इति। धञ्()। "दायकः, धायकः" इति। ष्वुल्()। "ददौ, दधौ" इति। "आत औ णलः" ७।१।३४ इत्यौत्वम्()। "चौडिः, बालाकिः" इति। चूडाबलाकाभ्यां बाह्वादीञ्()। अचामादेरित्यनुवृत्तेरत्र न भविष्यतीति यो मन्येत, तं प्रत्युदाहरणान्तरमाह--"ज्ञा देवता अस्येति ज्ञः" (इति)। "सास्य देवता" ४।२।२३ इत्यण्()। अत्र व्यपदेशिवदभावेनाचामादिराकारो भवति। अत्रासति चिण्कृद्ग्रहणे सत्यामप्यचामादेरित्यनुवृत्तौ स्यादेवात्र युक्। "व्यपदेशिवदभावोऽप्रातिपदिकेन" (शाक।प।६५) इत्येतच्च प्रत्ययवधिविषय एव ह्युक्तम्()॥

बाल-मनोरमा

आतो युक् चिण्कृतोः ५८६, ७।३।३३

आतोयुक्। अङ्गस्येत्यत्यधिकृतमाता विशेषितं, तदन्तविधिः। "अचो ञ्णिती"त्यो ञ्णितीत्यनुवृत्तं कृतएव विशेषणं, नतु चिणः, तस्य णित्त्वाऽव्यभिचारात्। तदाह-- आदन्तानामित्यादि। दायितेति।चिण्वदिट्पक्षे युक्। अदायिषातामिति। "स्थाध्वोरिच्चे"त्येतद्बाधित्वा परत्वाच्चिम्वदिटि कृते "घुमास्थे"तीत्वं न, अजादित्वात्त्वं न, अजादित्वात्। पुनः "स्थाध्वोरिच्चे"रिति तु न भवति, अझलादित्वात्। तत्र हि "इको झ"लिति सूत्रझलित्यनुवृत्तं। तथा च झलादिरेव सिच् किदिति लाभादिडादिः सिज्न कित्, तत्संनियोगादित्त्वमपि न भवतीत्याहुः। वस्तुतस्तु सत्यपि तस्मिन्नाऽत्र काचित् क्षतिः। सिचः कित्तवेऽप्यनिग्लक्षणया वृद्ध्या रूपसिद्धेरिति दिक्। अथ हनधातोः कर्मलकारे आह-- हन्यते इति। अचिण्णलोरिति। लुटि चिण्वदिटि वृद्धौ "हनस्तोऽचिण्णलो"रिति हनो नकारस्य तकारो न भवति, चिण्ववत्त्वादित्यर्थः। कुत्वमिति। तस्यणिति विहितस्याऽत्र चिण्वत्त्वात्प्राप्तिरिति भावः। घानिष्यते इति। "ऋद्धनो"रिति बाधित्वा नित्यत्वाच्चिण्वदिट। "ऋद्धनो"रिति तु चिण्वदिटि कृते न भवतीत्यनित्यं, तत्र वलीत्यनुवृत्तेरिति भावः। नन्वाशीर्लिङि घानिषीष्टेत्यत्र हन् सीष्ट इत#इ स्थिते परमपि चिण्वत्त्वं बाधित्वा वधादेशः प्राप्नोति, आद्र्धधातुके विवक्षिते विहितत्वेन वधादेशस्याऽन्तरङ्गत्वादित्यत आह-- आशीर्लिङीत्यादि। नु घानितेत्यादौ अप्राप्तेऽपि वधादेशे आरम्भात्कथं वधादेशस्य चिण्वद्भावोऽपवादः स्यादित्यत आह-- आद्र्धधातुके सीयुटीति। "स्यसिच्सीयु"डिति सूत्रे अजन्तस्य स्ये, अजन्तस्य सिचि, अजन्तस्य आद्र्धधातुके, सीयुटि, अजन्तस्य तासौ, इत्यजन्तस्य चत्वारि वाक्यानि। एवं हनग्रहदृशामप्यैकैकस्य चत्वारि वाक्यानीति स्थितिः। तत्र हन आद्र्धधातुके सीयुटिचिण्वदिड्विधिर्निरवकाशत्वाद्वधादेशापवादः, अप्राप्त एव वधादेशे आरम्भात्। वधादेशस्तु न चिण्वदिटोऽपवादः, तस्य वध्यादित्यत्रकर्तरि लिङि चरितार्थत्वादिति भावः। पक्षे इति। चिण्वत्त्वाऽभावपक्षे। "हनो वध लिङी"ति वधादेशे वलादिलक्षणे इटि अतो लोपे रूपम्, वधादेशस्याऽदन्तत्वात्। न च हनधातोरनुदात्तत्वादुपदेशे एकाच्त्वात्तदीयवधादेशस्यापि तथाविधत्वादिह कथं वलादिलक्षम इडिति वाच्यम्, "एकाच उपदेशे" इत्यत्र "अच"

इत्येकत्वसामर्थ्यादेकत्वे सिद्धे पुनरेकग्रहणबलेन इटि अतो लोपे रूपम्, वधादेशस्याऽदन्तत्वात्। न च हनधातोरनुदात्तत्वादुपदेशे एकाच्त्वात्तदीयवधादेशस्यापि तथाविधत्वादिह कथं वलादिलक्षण इडिति वाच्यम्, "एकाच उपदेशे" इत्यत्र "अच" इत्येकत्ववसामर्थ्यादेकत्वे सिद्धे पुनरकेग्रहणबलेन "य उपदेशे एकाजेव नतु कदाप्यनेका"जिति लभ्यते। तेन वधेर्हन्त्युपदेशमादाय एकाचोऽपि न निषेधः। आदेशोपदेशे अनेकाच्त्वादित्युक्तं प्राक्। लुङि तु सिचश्चिणि उपधावृद्धौ कुत्वेन घः। " आत्मनेपदेष्वन्यतरस्या"मिति वधादेशाऽभावः। अघानिषातामिति। चिण्वदिटि वधादेशाऽभावपक्षे रूपम्।अहसातामिति। चिण्वदिडभावपक्षे "हनः सि"जिति कित्त्वादनुदात्तोपदेशेत्यनुनासिकलोपः। पक्षे अवधीति। "आत्मनेपदेष्वन्यतस्या"मिति वधादेशपक्षे इत्यर्थः अवधिषातामिति। "आत्मनेपदेष्वन्यतस्या"मिति वधादेशस्यापि पाक्षिकतयाऽप्राप्तेपि वधादेशे चिण्वत्त्वस्यारम्भन्नापवादत्वमिति भावः। ननु चिणि वधादेशस्य दृष्टत्वात्स्यादिषु चिण्वत्त्वाद्वधादेशः स्यादित्याशङ्क्य परिहरति-- न चेत्यादिना। आङ्गस्यैवेति। वधादेशस्तु द्वैतीयीकः, न त्वङ्गाधिकारस्थ इति भावः। अथ "ग्रह उपादाने" इत्यस्माददुपधात्कर्मलकारे उदाहरति-- गृह्नते इति। "ग्रहिज्ये"ति संप्रसारणम्। अथ लुटि तासि चिण्वदिटि "ग्रहोऽलिटी"ति दीर्घमाशङ्क्याह-- चिण्वदिटो न दीर्घत्वमिति। कुत इत्यत आह-- प्रकृतस्येति। वलादिलक्षणस्य इटः प्रकृतत्वात्तस्यैव "ग्रहोऽलिटी"ति दीर्घविधौ ग्रहणं नतु चिण्वदिट इति भाष्ये स्पष्टम्। अथ दृशेः कर्मलकारे उदाहरति-- दृश्यते इति। लिटि- ददृशे। लुटि तासि चिण्वदिट्पक्षे-- दर्शिता। चिण्वत्त्वाऽबावे "सृजिदृशो"रित्यम्। द्रष्टा।दर्शिष्यते। द्रक्ष्यते। दर्शिषीष्ट। चिण्वदिडभावे तु "लिङ्सिचावात्मनेपदेषु" इति सिचः कित्त्वात् "सृजिदृशो"रित्यम्न। नापि लघूपधगुणः। दृक्षीष्ट। अदर्शीति।चिणि लघूपधगुणः। अदर्शिषातामिति। चिण्वदिटि रूपम्। चिण्वत्त्वाऽभावे त्वाह--सिचः कित्त्वादम्नेति। "लिङ्सिचावात्मनेपदेषु" इति सिचः कित्त्वात् "सृजिदृशो"रित्यम्न भवति, अकितीति पर्युदासादित्यर्थः। अथ गृ()धातोः कर्मलकारे यकि ऋत इत्त्वे "हलि चे"ति दीर्घे-- गीर्यते। जगरे। लुटि तासि चिण्वत्त्वपक्षे-- गारिता। चिण्वत्त्वाऽभावे वलादिलक्षणे इटि गुणे रपरत्वे-- गरिता गरीता। "वृ()तो वे"ति वा दीर्घः। गारिष्यते गरिष्यते गरीष्यते। गीर्यताम्। अगीर्यत। गीर्येत। गारिषीष्ट। चिण्वत्त्वाऽभावपक्षे तु "लिङ्सिचोरात्मनेपदेषु" इति इड्विकल्पः। इडभावपक्षे "उश्चे"ति कित्त्वम्। इत्त्वम्। रपरत्वम्। "हलि चे"ति दीर्घः। षत्वम्। गीर्षीष्ट। इट्पक्षे तु --गारिषीष्ट। लुङि-- अगारि। अगारिषाताम्। अगीर्षाताम्- अगरिषातामिति सिद्धवत्कृत्य आह-- लुङि ध्वमि चतुरधिकं शतमिति। "रूपाणी"ति शेषः। तदेवोपपादयति-- तथाहिति। अगारिध्वमिति। गृ? स् ध्वम् इति स्थिते चिण्वदिटि वृद्धौ रपरत्वे "धिचे"ति सलोपे रूपमिति भावः। द्वितीये त्विटीति। चिण्वदिडभावपपक्षे वलादितलक्षणे सिच इटि ऋकारस्य गुणे रपत्वे "धि चे"ति सलोपे "वतो वा" इति दीर्घविकल्पे अगरिध्वम्, अगरीध्वमिति रूपद्वयमित्यर्थः। एषामिति। एषां त्रयाणां मध्ये एकैकस्मिन् रेफस्य "अचि विभाषे"ति लत्वम्। "विभाषेटः" इति वा धस्य ढत्वम्। तथा धस्य,तदादेशढस्य,वस्य, मस्य च द्वित्वत्रयमित्येवं पञ्च वैकल्पिकानीत्यर्थः तत्र धढयोर्मस्य च "अनचि चे"ति द्वित्वविकल्पः। वकारस्य तु "मय" इति पञ्चमीमाश्रित्य "यणो मयः" इति द्वित्वविकल्पैति विवेकः। यद्यपि धढयोर्वस्य मसय् च द्वित्वचतुष्टयमिति वक्तुमुचितं, तथापि ढस्य धस्थानिकतया धढयोरेकत्वमभिप्रेत्य "द्वित्वत्रय"मित्युक्तिः। इत्थमिति। एवं च त्रयाणामेषां लत्वविकल्पे रेफवन्ति त्रीणि, लकारवन्ति त्रीणीति षट् (६)। एषु षट्सु धस्य द्वित्वविकल्पे एकधानि षट्, द्विधानि च षडिति द्वादश (१२)। तथा रेफवत्सु त्रिषु लकारवत्सु च त्रिषु ढस्य द्वित्वविकल्पे एकढानि षट्, द्विढानि च षडिति द्वादश (१२)। उभयेषामपि द्वादशानां मेलने चतुर्विंशतिः। (२४)। एषु वस्य द्वित्वविकल्पे एकवानि चतुर्विंशति, द्विवानि चतुर्विंशतिरित्यष्टाचत्वारिंशत्। (४८)। एषु मस्यद्वित्वविकल्पे एकमान्यष्टाचत्वारिंशत्,द्विमान्यष्टाचत्वारिंशदिति (९६) षण्णवतिरित्यर्थः। लिङ्सिचोरितीति। चिण्वदिडभावपक्षे वलादिलक्षणस्य इटो "लिङ्सिचोरिति विकल्पितत्वात्तदभावपक्षे "उश्चे" ति सिचः कित्त्वाद्गुणाऽभावे ऋत इत्त्वे रपरत्वे "हलि चे"तिदीर्गे रेफादिणः परत्वात् "इणः षीध्व"मिति नित्यं ढत्वे अर्गीढ्वमिति रूपमित्यर्थः। ढवमानामिति। ढस्य "अचो रहाभ्या"मिति द्वित्वविकल्पे एकढं द्विढमिति द्वे रूपे। तयोर्वस्य "यणो मयः" इति द्वित्वविकल्पे एकवे द्वे , द्विवे द्वे

इति चत्वारि (४)। एषु चतुर्षु मस्य "अनचि चे"ति द्वित्वविकल्पे एकमानि चत्वारि, द्विमानि चत्वारीत्यष्टौ (८) रूपाणीत्यर्थः। षण्णवत्येति। उक्तषण्णवत्या अष्टानां मेलने सति या सङ्ख्या सिध्यति सा चतुरुत्तरशतसङ्क्या (१०४) उक्तेति ज्ञेयमित्यर्थः। उक्तप्रक्रियां श्लोकेन सङ्गृह्णाति-- इट्दीर्घ इत्यादिना। वलादिलक्,ण इट्, "वृ()तो वे"ति दीर्घः। अजन्तलक्षणश्चिण्वदिट्, "अचि विभाषे"ति लत्वं, "विभाषेट" इति वा ढत्वं, धढवमानां द्वित्वत्रिकमित्यष्टानां विकल्पाच्चतुरधिकं शतं रूपाणीत्यर्थः। "शमय्ते मोहो मुकुन्देने"त्यत्र प्रक्रियां दर्शयति-- हेतुमण्ण्यन्तादिति। शमधातोर्हेतुमण्णौ उपधावृद्धौ मन्तत्वेन मित्त्वाद्ध्रस्वे शमीत्यस्मात्कर्मणि लः, नतु भावे, हेतुमण्ण्यन्तस्य सकर्मकत्वनियमादिति भावः। यगिति। तङि कृते "सार्वधातुके य"गित्यनेन"ति शेषः। णिलोप इति। "णेरनिटीत्यनेने"ति शेषः। लुटि तासि शमि इ ता इति स्थिते अमन्तत्वेन मित्त्वान्नित्यमुपधाह्रस्वे प्राप्ते---

तत्त्व-बोधिनी

आतो युक् चिण्कृतोः ४८२, ७।३।३३

आतो युक्। "अचो ञ्णिती"त्यतो ञ्णितीत्यनुवर्तते। तच्च कृतो विशेषणं न तु चिणः, तस्य णित्त्वेनाऽव्यभिचारात्। चिण्कृतोः किम्?। चौडिः। बालाकिः। बाह्वादित्वादिञ्। ददौ। ञ्णितीति किं?। पानीयम्। दानीयम्। अदायिषातामिति। "स्थाधवोरिच्चे"त्येतद्बाधित्वा परत्वाच्चिण्वदिटि कृते "घुमास्थे" तीत्वं न भवति, अजादित्वात्। "स्थाध्वोरिच्चे"त्यपि पुनर्न् भवति, अज्झलादित्वादित्याहुः। तेषामयमाशयः-- इको झ"लिति सूत्राज्झलनुवर्तते। तथा च झलादिरेव सिच् किन्न त्वयमिडादिः सिच्। एवं च तत्संनियोगशिष्टत्वादित्त्वमप्यत्र न भवतीति। वस्तुतस्तु सत्यपि तस्मिन्नेह काचित्क्षतिः- सिचः कित्त्वेऽप्यनिग्लक्षणाया अनिषेधात् "अचो ञ्णिती"ति वृद्ध्या रूपनिष्पत्तेः। आशीर्लिङीति। न तु लुङि। तत्र चिण्वद्भावात् "आत्मनेपदेष्वन्यतस्यार"मिति वधादेशस्यापि वैकल्पिकतया येन नाप्राप्तिन्यायऽभावादिति भावः। आद्र्धधातुके सीयुटीत्यादि। यद्यपि "हनो वध लिङी" त्यत्रापि आद्र्धधातुकाधिकारादाद्र्धधातुके लिङीत्यपि समानं, तथापि लिङीति पदद्वयसाधारणं , सीयुट् तु आत्मनेपद एवेति विशेषविहितत्वमस्तीति भावः। अहसातामिति। चिण्वदिटोऽभावे "हनः सि"जिति कित्त्वात्, "अनुदात्तोपदेशे" त्यनुनासिकलोपः। चिणि वधादेशस्य दृष्टत्वाच्चिण्वद्भावेन स्यादिषु प्राप्तिमाशङ्क्य परहरति-- नचेत्यादिना। अदर्शिषातामिति। "न दृशः" इति क्सस्य निषेधादिह सिचि चिण्वदिट्। सिचः कित्त्वादिति। "लिङ्गिचावात्मनेपदेषु" इत्यनेन। लत्वमिति। "अचि विभाषे"ति। गिरते रेफस्य ल्वे षट्। ढत्वमिति। "विभाषेटः" इत्यनेन। षण्णां ढत्वे द्वादश। द्वित्वत्रयं चेति। "अनचि चे"ति। द्वादशानां मध्ये षण्णां ढस्य, षण्णां धस्य च द्वित्वे चतुर्विंशतिः (२४)। "मय" इति पञ्चमी "यण" इति षष्ठीति पक्षे वकारस्य द्वित्वे त्वष्टाचत्वारिंशत् (४८)। अनचि चे"ति मकारस्य द्वित्वे षण्णवतिः (९६)। ढवमानामिति। "अचो रहाभ्या"मिति द्वित्वे द्वयम् (२)। द्वयोरपि वस्य "यणो मयः" इति द्वित्वे चत्वारि (४)। चतुर्णामपि मस्य "अनचि च" इति द्वित्वे त्वष्टौ (८)।

---

सूत्रम्

काशिका-वृत्तिः

न उदात्तौपदेशस्य मान्तस्य अनाचमेः ७।३।३४

उदात्तोपदेशस्य मान्तस्य अनाचमेः ७।३।३४। उदातोपदेशस्य मान्तस्य अङ्गस्य आचमिवर्जितस्य चिणि कृति च ञ्णिति यदुक्तं तन् न भवति। किं च उक्तम्? अत उपधायाः ७।२।११६ इति वृद्धिः। अशमि। अतमि। अदमि। कृति खल्वपि शमकः। तमकः। दमकः। शमः। तमः। दमः। उदात्तोपदेशस्य इति किम्? यामकः। रामकः। कथम् उद्यमोपरमौ? अड उद्यमे, यम उपरमे इति निपातनादनुगन्तव्यौ। उपदेशग्रहणम् किम्? शमी, दमी, तमी इत्यत्र यथा स्यात्, इह मा भूत्,

यामकः, रामकः इति। मान्तस्य इति किम्? चारकः। पाठकः। अनाचमेः इति किम्? आचामकः। अनाचमिकमिवमीनाम् इति वक्तव्यम्। आचामः। कामः। वामः। आमः इति चौरादिकस्य णिचि वृद्धौ सत्यां भवति। तत्र हि मित्त्वं न अस्ति न अन्ये मितो ऽहेतौ इति। सूर्यविश्रामा भूमिः इत्येवम् आदिकं प्रयोगमन्याय्यम् एव मन्यन्ते। चिण्कृतोः इत्येव, शशाम। तताम।

न्यासः

नोदात्तोपदेशस्य मान्तस्यानाचमेः।, ७।३।३४

"अशमि, अतमि, अदमि" इति। "शमु उपशमे" (धा।पा।१२०१), "तमु काङ्क्षायाम्()" (धा।पा।१२०२), "दमु उपशमे" (धा।पा।१२०३), लुङादि पूर्ववत्()। "शमकः" इत्यादौ ण्वुल्()। "शमः" इत्यादौ घञ्()। "यामकः, रामकः" इति। "यम उपरमे" (धा।पा।९८४), "रमु क्रीडायाम्()" (धा।पा।८५६)। अनुदात्तोपदेशावेतौ। अथ कथमुद्यमोपरमौ? इत्याह--"उद्यमोपरमौ" इत्यादि। "अनुगन्तश्यौ" इत्यादि। साधुत्वेनेति शेषः। निपातनादेतो साधुत्वेन वेदितव्यावित्यर्थः। "शमी, तमी, दमीत्यत्र यथा स्यात्()" इति। शमादिभ्यः "शमित्यष्टाभ्यो घिनुण्()" ३।२।१४१। असत्युपदेशग्रहणेऽत्र न स्यात्(); प्रत्ययस्वरे कृते धातोरनुदात्तत्वात्()। उपदेशग्रहणे तु सति तेनाद्यवस्था लक्ष्य इति यद्यप्युततरकालमनुदात्तत्वं भवति, तथापि भवत्येव प्रतिषेधः; उपदेशावस्थायामुदात्तत्वात्()। "इह" इत्यादि। यद्युपदेशग्रहर्ण न क्रियते, ततो यामकः, रामक इत्यत्रापि स्यात्(); "लिति" (६।१।१९३) इति प्रत्ययात्? पूर्वस्योदात्तत्वविधानात्()। उपदेशग्रहणे तु न भवति; उपदेशेऽनुदात्तत्वात्()। "अनाचमिकमिवमीनामिति वक्तव्यम्()" इति। "कमु कान्तौ" (धा।पा।४४३), "टुवम उद्गिरर्णे" (धा।पा।८४९), "चम छमु, चमु, झमु अदने" (धा।पा।४६९,४७०,४७१,४७२) एषां त्रयाणां धातुनां प्रतिषेधो न भवतोत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--चमेस्तावदनाचमेरिति सूत्र एवोपादानात्? प्रतिषेधो न भवतीति। इतरयोस्तु "धामदेवाङ ड()डड()औ" ४।२।८, "धनहिरण्यात्? कामे" ५।२।६४ इति निपतनादिति। अथ कथमामः? इत्याह--"आम ति चौरादिकस्य" इत्यादि। "अम रोगे" (धा।पा।१७२०) इत्यस्य चौरादिकस्य णिचि वृद्धौ, "एरच्()" ३।३।५६ इत्यचि कृते-आम इति। न हि णिच्यपि वृद्धेः प्रतिषेधो भवति; तस्याचिण्कृत्त्वात्()। अकृत्त्वं तु पूर्ववद्वेदितव्यम्()। ननु "जनीजृ()ष्क्ससुरञ्जोऽमन्ताश्च" (धा।पा।८१७ अनन्तरम्? ग।सू।) इति मित्संज्ञायां सत्याम्? "मितां ह्रस्वः" (६।४।९२) इत्यनेनेह णौ भवितव्यम्()? इत्यत आह--"अत्र हि भित्त्वं नास्ति" इति। कथं नास्ति? इत्याह--"नान्ये" इत्यादि। यस्तु भ्वादिः "अम गत्यादिषु" (धा।पा।४६५) पठ()ते, अम इत्येवं तस्य भवितव्यम्()। अथ कथं विश्राम इति, न चायमसाधुरिति शक्यते वक्तुम्(), यतः "सूर्यविश्रामा भूमिः" इति प्रयोगो द#ऋश्यते? इत्याह--"एवमादिकं प्रयोगम्()" इत्यादि॥

बाल-मनोरमा

नोदात्तोपदेशस्य मान्तस्याऽनाचमेः ५८८, ७।३।३४

नोदात्तोपदेशस्य। "मृजेर्वृद्धि"रित्यतो वृद्धिरिति, "अत उपधायाः" इत्यत उपधाया इति, "अचो ञ्णिती"त्यतो ञ्णितीति, "आतो युक्" इत्यततश्चिण्णकृतोरिति चानुवर्तते। तत्र णितीति कृतएव विशेषणं, न तु चिणः, अव्यभिचारात्। तदाह-- उपधाया इत्यादिना। अनुदात्तोपदेशाः - सङ्गृहीताः। ततोऽन्यः सर्वोऽपि धातुरुदात्तोपदेशः। आङ्पूर्वश्चमिराचमिः, तद्वर्जस्येत्यर्थः। अशमि अदमीति। शमधातोर्दमधातोश्च लुङि चिणि "अत उपधायाः" इति वृद्धिर्न। अगामीति। गमेरनुदात्तोपदेशत्वादिति भावः। अवादीति। वदधातुर्न मान्त इति भावः। आचामीति। "अनाचमे"रित्युक्तेरिह नोपधावृद्धिनिषेधः। अनाचमिकमिवमीनामिति। आचामिकमिवमिवर्जानामित्यर्थः। एवं च कमिवम्योरपि न निषेध इति फलितम्। ननु कर्मेर्णिङन्तत्वात्केवलस्य तस्य चिणादौ प्रयोग एव नास्तीत्यत आह-- चिण्यायादय इति। णिङणिचोरप्येवमिति। णिङन्ताण्णिजन्ताद्वा कमेश्चिणि णिलोपे सति पूर्ववद्रूपं शिष्यते इत्यर्थः। ननु "जनिवध्योश्चे"ति

वधेरुपधावृद्धिनिषेधो व्यर्थः, वधादेशस्याऽदन्ततया अल्लोपस्य स्थानिवत्त्वादेव अवधीत्यादौ उपधावृद्ध्यभावसिद्धेरित्याशङ्क्य वधर्धात्वन्तरं हलन्तमेव "जनिवध्योश्चे"त्यत्र गृह्रत इत्यभ#इप्रेत्य आह--- वध हिंसायां हलन्त इति।

तत्त्व-बोधिनी

नोदात्तोपदेशस्य मान्तस्याऽनाचमेः ४८४, ७।३।३४

नोदात्तोपदेशस्य। ञिति कृति--शमः। दमः। घञ्। णिति कृति शमकः। दमकः। ण्वुल्। उपदेशैति किम्?। शमी।दमी। इह घिनुणि कृते वज्ञ्यमानस्वरेण उदात्तत्वाऽभावान्निषेधो न स्यात्। कथं तर्हि "हरेर्यदक्रामि पदैककेन खमिति श्रीहर्षप्रयोग इतिचेत्। अत्राहुः-- निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिचि ततश्चिण् बोध्यः। तथा च णिचोऽकृत्त्वाद्वृद्धेर्न निषेधः। "मिता"मिति ह्रस्वस्तु न भवति, "वा चित्तविरागे" इत्यतो वेत्यनुवत्र्य व्यवस्थितविभाषाश्रयणादिति घटादावुक्तत्वात्। किं च ह्रस्वे जातेऽपि न क्षतिः, "चिण्णमुलो"रिति दीर्घविकल्पनादिति। कथमड उद्यमे यम उपरमे इति प्रयोगः?। संज्ञापूर्वकविधेरनित्यवाद्वृरद्ध्यभाव इति ज्ञेम्। अथवा उद्यमोपरमशब्दौ घञर्थे कविधानाद्बोध्यौ। णिङ्णिचोरप्येवमिति। णिङन्ताण्णिजन्ताद्वा कमश्चिणि "णेरनिटी"ति णिलोपे सति रूपं तुल्यमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

जनिवध्योश् च ७।३।३५

जनि वधि इत्येतयोः चिणि कृति च ञ्णिति यदुक्तं तन् न भवति। अजनि। जनकः। प्रजनः। अवधि। वधकः। वधः। वधिः प्रकृत्यन्तरं व्यञ्जनान्तो ऽस्ति, तस्य अयं प्रतिषेधो विधीयते। भक्षकश्चेन्न विद्येत वधको ऽपि न विद्यते इति हि प्रयोगो दृश्यते। वधादेशस्य अदन्तत्वादेव वृद्धेरभावः। चिण्कृतोः इत्येव, जजान गर्भं महिमानमिन्द्रम्।

लघु-सिद्धान्त-कौमुदी

जनिवध्योश्च ६४५, ७।३।३५

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च। अजनि, अजनिष्ट॥ दीपी दीप्तौ॥ २०॥ दीप्यते। दिदीपे। अदीपि, अदीपिष्ट॥ पद गतौ॥ २१॥ पद्यते। पेदे। पत्ता। पत्सीष्ट॥

न्यासः

जनिवध्योश्च। , ७।३।३५

वधिरयं हनादेशोऽस्ति, तस्यैदं ग्रहणमिति कस्यचिदाशङ्का स्यात्(), अतस्तां निराकर्त्तुमाह--"वधिः प्रकृत्यन्तरम्()" इत्यादि। प्रकृत्यन्तरमपि भवन्? यदयकारान्तः स्यात्(), अनर्थकः प्रतिषेधः स्यात्(), धोपधत्वादेव न वृद्धिर्भवतीति मत्वाऽऽह--"व्यञ्जनान्तस्य" इति। कुतः पुनर्विधिः प्रकृत्यन्तरमस्तीत्येतदवसितम्()? इत्याह--"भक्षकश्च" इत्यादि। अथ हनादेशस्यैव वधेरयं प्रतिषेधः कस्मान्न भवति? इत्याह--"हनादेशस्य" इत्यादि। "जजान गर्भम्()" इत्यादि। छान्दसः प्रयोगः॥

बाल-मनोरमा

जनिवध्योश्च ३४१, ७।३।३५

जनीवध्योश्च। "अत उपधायाः" इत्यत उपधाया इति, "मृजेर्वृद्धि"रित्यतो वृद्धिरिति, "नोदात्तोपदेशस्ये"त्यतो नेति, "आतो

यु"गित्यतश्चिणकृतोरिति, "अचो ञ्णिती"त्यतो ञ्णितीति चानुवर्तते। तदाह--अनयोरिति। दीपीधातुरीदित्।"दीपजने"ति च्लेश्चिण्विकल्पं मत्वाह---अदीपि अदीपिष्टेति। पूरीधातुरपि ईदित्। "दीपजने"ति चिण्विकल्पं मत्वाह-- अपूरि अपूरिष्टेति।तूरी इत्यादयोऽपि "चूरी दाहे" इत्यन्ता ईदित एव।तप ऐ()आर्ये वेति। "श्यन् आत्मनेपदं चे"ति शेषः। उभयोः प्रकृतत्वादित्यभिप्रेत्य शेषं पूरयति--श्यनं तङ चेति। अन्यदा त्विति। ऐ()आर्यादन्यार्थे वृत्तिदशायामित्यर्थः। केचित्त्विति। "तप ऐ()आर्ये" "वावृतु वरणे" इति धातुपाठे स्थितम्। तत्र "वावृतु वरणे" इत्येवं वाशब्दं वृतु इत्यस्य आद्यवयवमिच्छन्तीत्यर्थः। एवं च "तप ऐ()आर्ये" इत्येव स्थितम्। अस्मिन्पक्षेतपधातोर्नित्यमेव श्यन् तङ् चेति भावः। तप्यते इति। ईष्टे इत्यर्थः। प्रथमपक्षे ऐ()आर्ये तपतीत्यपि भवति। पत इतीति। तपधातोस्तकारपकारयोः क्रमव्यत्यासेन "पत ऐ()आर्ये वा" इति पाठान्तरमित्यर्थः। एवं व्यत्यासेन पाठे प्रयोगं दर्शयति--द्युतद्यामा नियुत इति। प्रवायुमच्छा बृतीत्यृच एकदेशोऽयम्। "पत्यमान" इत्यस्य ईशान इत्यर्थः। अत्र लटः शानजात्मनेपदं श्यन् च। पक्षान्तरे इति। "वावृतु" इति पाठपक्षे इत्यर्थः। वावृत्यते इति। वृणोतीत्यर्थः। अपेक्षते इति यावत्। वावृतुधातोः प्रयोगं दर्शयति--ततोवावृत्यमानेति। अपेक्षमाणेत्यर्थः।न्यविवक्षतेति।"नेर्विशः " इत्यात्मनेपदम्। "शल इगुपधा"दिति क्सः। अथ पञ्च स्वरितेत इति। "शप आक्रोसे" इत्यन्ता इत्यर्थः। शुच्यतीति। क्लिन्नं भवतीत्यर्थः। अशुचदिति। इरित्त्वादङिति भावः। णह बन्धने इति। णोपदेशोऽयम्। अनिट्। ननाहेति। नेहतुः। भारद्वाजनियमात्थलि वेडिति मत्वाह-- नेहिथ ननद्धेति। इट्पक्षे "थलि चे सेटी"त्येत्त्वाभ्यासलोपौ। इडभावे तु "नहो धः" इति हस्य ध इति भावः। रञ्ज रागे। अनिट्। रज्यतीति। "अनिदिता"मिति नलोप इति भावः। ररञ्ज ररञ्जतुः। ररञ्जिथ- ररङ्क्थ। ररञ्जिव। रङ्क्ता इत्यादि। अथैकादशेति। "लिश अल्पीभावे" इत्यन्ता इत्यर्थः। पद गतौ। अनिट्।

तत्त्व-बोधिनी

जनिवध्योश्च २९८, ७।३।३५

ञिति णिति कृति चेति। ञिति कृत्युदाहरणं घञि-- जनः। णिति कृति तु -- जनकः। जनयतीत्यत्रोपधावृद्धौ सत्यां "जनीजृ()"षिति मित्त्वात् "मितां ह्रस्वः" इति ह्रस्वः। रदीपी दीप्तौ। ईदत्त्वान्निष्ठायामिण्न। दीप्तः। एं पूरीत्यादेरीदित्त्वात्पूर्ण इत्यादि ज्ञेयम्। केचित्त्विति। तेषां मते ऐ()आर्ये तप्यते इत्येव प्रयोगो न तु तपतीति। न्यविक्षतेति। निपूर्वाद्विशतेर्लुङि "शल इगुपधे"ति क्सः। "नेर्विशः" इति तङ्। वाशृ शब्दे। "मन्दिवाशी"त्युरच्। वाशुरा रात्रिः। तितिक्षायामिति। "गुप्तिज्किद्भ्यः" इति सन्। तत्र हि "तिजे क्षमाया"मित्युक्तम्। ई शुचिर्। ईदित्त्वान्नेट्। शुक्तम्। क्लिन्नमित्यर्थः। ननद्धेति। "नहो धः" इति धत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ ७।३।३६

सर्वं निवृत्तम्, अङ्गस्य इति वर्तते। अर्ति ह्री व्ली री क्नूयी क्ष्मायी इत्येतेषाम् अङ्गानाम् आकारान्तानां च पुगागमो भवति णौ परतः। अर्ति अर्पयति। ह्री ह्रेपयति। व्ली व्लेपयति। री रेपयति। क्नूयी क्नोपयति। क्ष्मायी क्ष्माप्यति। आकारान्तानाम् दापयति। धापयति। अर्ति इति ऋ गतिप्रापणयोः, ऋ गतौ इति द्वयोरपि धात्वोर् ग्रहणम्। री इत्यपि री गतिरेषणयोः, रीङ् श्रवणे इति। पुकः पूर्वान्तकरणम् अदीदपतित्यत्र उपधाह्रस्वो यथा स्यातिति।

लघु-सिद्धान्त-कौमुदी

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ७०५, ७।३।३६

स्थापयति॥

न्यासः

अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ। , ७।३।३६

अत्रीति श्तिता निर्देशः। ऋकारान्तस्य ग्रहणं मा विज्ञायीति, यथा--"ऋदृशोऽङि गुणः" ७।४।१६ इति। "अर्पयति" इति। हेतुमण्णिच्(), "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः। "ह्रेपयति, व्लेपयति" इति। "ह्री लज्जायाम्()" (धा।पा।१०८५) "व्लो वरणे (धा।पा।१५०२)। "क्नोपयति, क्ष्मापयति" इति। "क्नूयो शब्दे" (धा।पा।४।८५), "क्ष्मायी विधूनने" (धा।पा।४८६)। "लोपो व्योर्वलि" ६।१।६४ इति यकारलोपः। "द्वयोरपि धात्वोग्र्रहणम्()" इति। विसेषाभावात्()। रोत्येतस्यापि "री गतिशोषणयोः" (धा।पा।१५००), "रोङ्? श्रवणे" (धा।प।११३८)--इति द्वयोरपि ग्रहणमित्यपेक्ष्यते। ननु च "निरनुबन्धकग्रहणे न सानुबन्धकस्य" (व्या।प।५३) इति रीङो ग्रहणं न प्राप्नोति? नैष दोषः; अत्र ह्रल्पाच्तरत्वात्? ह्रोव्ल्यातामन्यतमस्य पूर्वनिपाते कत्र्तव्ये "अल्पाच्तरम्()" (२।२।३४) इत्येतदनपेक्ष्यार्त्तिशब्दस्य पूर्वं निपातं कुर्वताऽन्यदपि किञ्चिदिह शास्त्रवचनं नापेक्ष्यत इत्येतत्? सूचितम्()। तेन निरनुबन्धकपरिभाषा नापेक्ष्यत इति रीङोऽपि ग्रहणं भवति। अथ किमर्थं पुनः पुक् पूर्वान्तः क्रियते, न परादिरेव पुङ्? विधीयताम्(); पुटि सति गुणविधौ पुगन्तग्रहणं न कत्र्तव्यं भवति, "सार्वधातुकार्धधातुकयोः" (७।३।८४) इत्येवं सिद्धत्वात्? पुटि; अवश्यं पुड्ग्रहणं कत्र्तव्यम्(), अन्यथा हि "अचो ञ्णिति" (७।२।११५) इति वृद्धिः स्यादिति चेत्()? नैतदस्ति; नाप्राप्ते णिचो वृद्धिं प्रति निमित्तत्वे पुटं प्रत्यागमित्वमुच्यत इत्युत्तरस्य बाधकं भविष्यतीति नास्ति वृद्धेः प्रसङ्गः। अयं तर्हि परादौ दोषः--दाप्यते, दाप्यत इति--अत्र णेर्लोपेनापह्मतत्वात्? पकारस्य श्रवणं न स्यादिति? एषोऽप्यदोष-; न हि णिलोपः सर्वापहारी भवति, येन णेर्निवृत्तौ पुडागमोऽपि निवत्र्तत। प्रत्ययलश्रणञ्चास्तीति निवृत्तेऽपि णौ पुटः श्रवणं भविष्यतीत्याह--"पुकः पूर्वान्तकरणम्()" इत्यादि। दापयतेर्लुङ्(), च्लिः, तस्य "णिश्रिद्रु रुआउभ्यः कत्र्तर" ३।१।४८ इति चङि णिलोपः, "णौ चङ्युपधाया ह्रस्वः" ७।४।१ इति ह्रस्वत्वम्(), "चङि" ६।१।११ इति द्विर्वचनम्(), "सन्वल्लघुनि चङ्परे" ७।४।९३ इतीत्त्वम्(), "दीर्घो लघोः" ७।४।९४ इति दीर्घत्वम्()--अदीदपत्()। अत्र यदि पुट्? क्रियते तदा ह्रस्वत्वं न स्यात्(); अनुपधात्वात्()। पुकि तु सति भवति। अतो ह्रस्वार्थं पुकः पूर्वान्तकरणम्()॥

बाल-मनोरमा

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ३९८, ७।३।३६

अर्ति ह्री व्ली री क्नूयी क्ष्मायी आत् एषां द्वन्द्वात्षष्ठी। "पुक् णौ" इति छेदः। तदाह -- एषां पुक्स्याण्णौ इति। पुकि ककार इत्, उकार उच्चारणार्थः। कित्त्वादन्तावयवः। चाप् इ इति स्थिते चेत्यनुवर्त्य मित्त्वस्याऽनुकर्षणेन मित्त्वाद्ध्रस्वे "चपी"त्यस्मात्तिबादौ परिनिष्ठितमाह -- चपयतीति। आत्त्वाऽभावपक्षे त्वाह -- चययतीति। चेर्णिचि वृद्धौ आयादेशे मित्त्वादुपधाह्रस्व इति भावः। ननु चिञ्धातोरिह ञित्करणं व्यर्थम्, ण्यन्ताण्णिचश्चेत्येव उभयपदसिद्धेः। चौरादिकस्याऽस्य नित्यं ण्यन्तत्वेन चयति चयते इति केवलस्याऽण्यन्तस्य शशशृङ्गायमाणत्वदित्यताअह -- ञित्करणसामथ्र्यादिति। एवं च णिजभावपक्षे उभयपदार्थमिह ञित्करणमर्थवदिति भावः। "शेषे विभाषाऽकखादौ" इति णत्वनविकल्पं मत्वा आह-- प्रणिचयति प्रनिचयति इति। "नान्ये मितोऽहेतौ" इति। चुरादिगणसूत्रम्। अहेताबिति च्छेदः। किमपेक्षया अन्ये इत्याकाङ्क्षायां मितः प्राक् पठितज्ञपादिचित्रन्तेभ्य इति लभ्यते। तदाह -- अहेतौ स्वार्थं णिचीत्यादिना। अहेतावित्यस्य व्याख्यानं-- स्वार्थे णिचीति। तेनेति। ज्ञपादिचित्रन्तव्यतिरिक्तचुरादीनां मित्त्वनिषेधेनेत्यर्थः। शमादीनामिति। "शम आलोचने" "अम रोगे"इत्यादीनामग्रे चुरादौ पठिष्यमाणानामित्यर्थः। अमन्तत्वेति। "जनीजृष्क्नसुरञ्जौऽमन्ताश्चे"त्यमन्तत्वनिमित्तकमित्यर्थ-। कृ()त संशब्दने।

तत्त्व-बोधिनी

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ। ३४७, ७।३।३६

अर्तिह्री। परत्वादन्तरङ्गत्वाच्च आदौ पुक्, पश्चाद्गुणः। अर्पयति। ह्रेपयति। व्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मपयति। स्थापयति। चपयतीति। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते, "आतोऽनुपसर्गे" इति कबाधनाय "ह्वावामश्चे"त्यारम्भादिति भावः। ज्ञपादिभ्य इति। मुख्यमते पञ्च ज्ञपादयः। मतान्तरे तु सप्त पूर्ण इत्येके। पुणेत्यन्ये इति। ईदृशेषु पाठशुद्धिनिर्णेतुमशक्या। अत एव क्षीरस्वामिनोक्तम्()--"पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः। नविघ्नः किं जहीमोऽत्र किमुपादघ्नहे वयम्"। इति। पूलपूर्णादिषु पाठे भ्रंशः। पजधातोर्मार्गसंस्कारोऽर्थ उत संस्कार एवेत्यर्थे भ्रंशः। आगमभ्रंशात्---शास्त्रभ्रंशात्। चूर्ण संकोवने। प्रेरणे पठितस्य पुनः पाठोऽर्थभेदकृतः। मर्च चेति। क्वचिद्धातुपाठेऽस्याऽदृष्टत्वेऽपि नाऽयम प्रामाणिक इति मन्तव्यम्। "मिदचोऽन्त्यात्परः" इति सूत्रे कैयटेनाऽस्योपन्यस्तत्वात्। "मर्तो मर्तं मर्चयति द्वयेने"ति प्रयोगदर्शनाच्च।

---

सूत्रम्

काशिका-वृत्तिः

शाच्छासाह्वाव्यावेपां युक् ७।३।३७

शा धा सा ह्वा व्या वे पा इत्येतेषम् अङ्गानां युगागमो भवति णौ परतः। शा निशाययति। छा अवच्छाययति। सा अवसाययति। ह्वा ह्वाययति। व्या संव्याययति। वे वाययस्ति। पा पाययति। पाग्रहणे पै ओवै शोषणे इत्यस्य अपि इह ग्रहणम् इच्छन्ति। पा रक्षणे इत्यस्य लुग्विकरणत्वान् न भवति। लुगागमस्तु तस्य वक्तव्यः। पालयति। धूञ्प्रीञोर् लुग्वक्तव्यः। धूनयति। प्रीणयति। एते ऽपि पूर्वान्ता एव क्रियन्ते, तेन न्यशीशयत्, अपीपलत्, अदूधुनत्, अपिप्रिणतिति उपधाह्रस्वत्वं भवति। शाछासाह्वाव्यावेपां कृतात्वानां ग्रहणं पुकः प्राप्तिमाख्यातुम्। किम् एतस्य आख्याने प्रयोजनम्? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा न अस्ति इत्युपदिश्यते। तेन अध्यापयति, जापयति इत्येवम् आदि सिद्धं भवति।

न्यासः

शाच्छासाह्वाव्यावेपां युक्?। , ७।३।३७

"शो तनूकरणे" (धा।पा।११४५), "छो छेदने" (धा।पा।११४६), "षोऽन्तकर्मणि" (धा।पा।११४७), "ह्वेञ्? स्पर्धायाम्()" (धा।पा।१००८), "व्येञ्? संवरणे" (धा।पा।१००७), "वेञ्? तन्तुसन्ताने" (धा।पा।१००६), "पा पाने" (धा।पा।९२५), "पै ओवै शोषणे" (धा।पा।९२०,९२१)-इति द्वयोरपि। एषामाकारान्तत्वात्? पुकि प्राप्ते युको विधानम्()। "निशाययति" इत्यादि। "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्त्वम्()। "पाग्रणे" "पै ओवै शोषणे" इत्येतस्यापि ग्रहणमिज्छन्ति" इति। यत्र ह्रस्य ग्रहणं नेष्यते, तत्र पिबतेरित्याह; यथा--"लोपः पिबतेरीच्च" ७।४।४ इति भावः। अथ "पा रक्षणे" (धा।पा।१०५६) इत्यस्यापि ग्रहणं कस्मान्न भवति? इत्याह--"पा रक्षण इत्यस्य तु" इत्यादि। "लुगागमस्तु तस्य वक्तव्यः" इति। ननु च "पाल रक्षणे" (धा।पा।१६०९) इति चुरादौ पठ()ते, तस्य पालयतीति भविष्यति? सत्यमेतत; पुकस्तु निवृत्त्यर्थो लुगागम उपसंख्यायते, अन्यथा हि पातेः पाययतीति स्यात्()। "धूञ्प्रीञोर्नुग्वक्तव्यः" इति। "धूञ्? कम्पने" (धा।पा।१८३५), "प्रीञ्? तर्पणे" (धा।पा।१८३६) इति--एतयोर्नुग्वक्तव्यः, व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--धूञ्? विधूनने" (धा।पा।१३९८), "तृप प्रीणने" (धा।पा।११९५) इति निपातनादेतयोर्लुग्भविष्यतीति। "एतेऽपि" इति। युगादयः। निशाययतीत्यादिषु "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्त्वम्। न्यशीशयदित्यादीनि अदीदपदित्यनेन तुल्यानि, पूर्ववल्लुङादीनि विधाय

व्युत्पाद्यानि। "अदूधनत्()" इति। अनकारान्तत्वादिह सन्वद्भावोऽभ्यासस्य नास्तीति। "अपिप्रिणत्()" इत्यत्राप्यलघुत्वाद्दीर्घत्वं नास्ति। ननु च शाच्छासाह्वाव्याः--इत्येत एजन्ता गणे पठ()न्ते, तत्कथमेषां कृतात्त्वानां ग्रहणम्()? इत्याह--"शाच्छासाह्वा"["शाह्वेत्यादि"---मुद्रितपाठः] इत्यादि। कथं पनः कृतात्त्वानां ग्रहणेन पुकः प्राप्तिराख्यायते? आकारान्तानां पुग्विधानात्()। "अध्यापयति" इत्यादिना ज्ञापस्य प्रयोजनं दर्शयति। अध्यापयतीति "क्रोङ्जीनां णौ" ६।१।४७ इत्वात्त्वम्()। आदिशब्देन जापयतीत्यादीनां ग्रहणम्()। यदु पुकः प्राप्तिमाख्यातुं शाप्रभृतीनां कृतात्त्वानां गरहणं कृतम्(), तदा वेञोऽपि कृतात्त्वस्यैव ग्रहणं युक्तम्()? नैवं शक्यम्(), वेत्युच्यमाने "पै ओवै शोषणे" (धा।पा।९२०,९२१) इत्यस्यापि ग्रहणं स्यात्()। तस्मादकृतात्त्वस्यैव वेञो ग्रहणं युक्तम्()॥

बाल-मनोरमा

शाच्छासाह्वाव्यावेपां युक् ४१३, ७।३।३७

शाच्छासा। "शो तनूकरणे, "छो छेदने", "षो अन्तकर्मणिट, "ह्वेञ् स्पर्धायां शब्दे च", "व्येञ् संवरणे", एषां कृतात्त्वनिर्देशः। "वेञ् तन्तुसंताने" "पा पाने भ्वादिः। एषां द्वन्द्वात्षष्ठीबहुवचनात्। णौ परे इति। शे,फूरणमिदम्। आदन्तलक्षणपुकोऽपवादः। युकि ककार इत्। उकार उच्चारणार्थः। कित्त्वादन्तागमः। अत्र "लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्य ग्रहण"मिति वचनात् "पा रक्षणे" इति न गृह्रते। तस्यतु पालयतीति रूपमनुपदमेव वक्ष्यति। शाययतीति। लुङि अशीशयत्। छाययतीति। अचिच्छयत्। साययतीति। असीषयत्। ह्वाययतीति। लुङि तु विशेषो वक्ष्यते। व्याययतीति। अविव्ययत्। वाययति। अवीवयत्। पाययति। लुङि तु विशेषो वक्ष्यते।

तत्त्व-बोधिनी

शाच्छासाह्वाव्यावेपां युक् ३६१, ७।३।३७

शास्छासा। "शो तनूकरणे"। "छो छेदने"। "षोऽन्तकर्मणि"। "ह्()वेञ् स्पर्धायाम्"। "व्येञ्? संवरणे"। "वेञ् तन्तुसंताने"। पा पाने"। "लुग्विकरमाऽलुग्विकरणे"ति परिभाषया "पा रक्षणे" इति नेह गृह्रते। तस्य तु पालयतीति रूपमनुपदं वक्ष्यति। शाययति। अशीशयत्। छाययति। अचिच्छयत्। साययति। असीषयत्। ह्वाययति। अविह्वयत्। व्याययति। अविव्ययत्। वाययति। अवीवयत्। पाययति। अपीपयत्। इह शाच्छासादीनां कृतात्वानां निर्देशः पुकः प्रा()प्त ध्वनयितुम्। तत्प्रयोजनं त्वस्मिन्प्रकरणे लक्षमप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः। तेन ध्यापयति, क्रापयतीत्यादि सिद्धम्।

---

सूत्रम्

काशिका-वृत्तिः

वो विधूनने जुक् ७।३।३८

वा इत्येतस्य विधूनने ऽर्थे वर्तमानस्य जुगागमो भवति णौ परतः। पक्षेण उपवाजयति। विधूनने इति किम्? आवापयति केशान्। किमर्थं सूत्रम्, वज गतौ ण्यन्तस्य सिद्धत्वात्? वातेः पुक् मा भूतित्येवम् अर्थम्। पै ओवै शोषणे इत्येतस्य एतद् रूप्म्।

न्यासः

वो विधूनने जुक्?। , ७।३।३८

पुकि प्राप्ति जुग्विधीयते। "वा हत्येतस्य" इति। "वा गतिगन्धनयोः" (धा।पा।१०५०) इत्येतस्य। "विधूननेऽर्थे" इति। कम्पन इत्यर्थः। ननु "वज व्रज गतौ" (धा।पा।२५२,२५३) इत्यस्य धातोर्ण्यन्तस्योपवाजयतीति सिद्धम्(),

तत्किमर्थमेतत्()? वातेः पुग्मा भूदित्येवमर्थं जुको विधानम्()। "पै ओर्व शोषण इत्येतस्यैतद्रूपम्()" इति। ननु च लाक्षणिकस्याकारान्तत्वाम्(), अतो जुका न भवितव्यम्()? नैतदस्ति; इदानोमेव ह्युक्तम्()--एतस्मिन्? प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीति॥

बाल-मनोरमा

वो विधूनने जुक् ४१८, ७।३।३८

वो विधूनने। "ओ वै शोषणे" इति धातोः कृतात्त्वस्य "व" इति षष्ठ()न्तम्। "अर्तह्री" त्यतो णावित्यनुवर्तते। तदाह --वातेरित्यादि। पुकोऽपवादो जुक्।केशान्वापयतीति। सुगन्धीकरोतीत्यर्थः। अत्र वैधातोः पुगेव। वाधातोस्त्विह न ग्रहणं, लुगविकरणत्वात्। केचित्तु वातेरेवाऽत्र ग्रहणं, न तु वेञो, नापि वै इत्यस्य, लाक्षणिकत्वात्, सानुबन्धकत्वाच्चेत्याहुः। आत्वविधायकसूत्रं स्मारयति - विभाषा लीयतेरिति। लीलीङोरात्त्वं वा स्यादेज्वि,ये ल्यि चेति व्याख्यातं प्राक् श्यन्विकरणे। तत्र लीयतेरिति यका निर्देशो, नतु श्यना। तेन "ली श्लेषणे" इति श्नाविकरणस्य, "लीङ्श्लेषणे" इति श्यन्विकरणस्य च ग्रहणमिति च प्रागुक्तं न विस्मर्तव्यम्।

तत्त्व-बोधिनी

वो विधूनने जुक् ३६६, ७।३।३८

वो विधू। लुग्विकरणाऽलुग्विकरणपरिभाषया "ओवै शोषणे" इत्यस्यैव ग्रहणं न तु "वा गतिगन्धनयो" रित्यस्य। लक्षणप्रतिपदोक्तपरिभाषा त्वस्मिन्प्रकरणे न प्रवर्तते इत्युक्तं प्राक्। "ओवै शोषणे" इत्यस्य रूपमिति वदन्वामनोऽप्यत्रानुकूलः। वज गताविति धातुना वाजयीति रूपे सिद्धे जुगागमस्य पुङ्ननिवृत्तिरेवेहापि फलम्। वातेरिति। "वायते" रिति वक्तुं युक्तम्। आत्वविधायकसूत्रं स्मारयति-- विभाषा लीयतेरिति। लीयतेरिति यका निर्देशो नतु श्यना। अन्यथा "विभाषा लीङ" इत्येवाक्ष्यत्। तेन लीलीङोरुभयोरप्यात्वं भवति।

---

सूत्रम्

काशिका-वृत्तिः

लीलोर् नुग्लुकावन्यतरस्यां स्नेहविपातने ७।३।३९

ली ला इत्येतयोरङ्गयोः अन्यतरस्यां नुक् लुकियेतावागमौ भवतो णौ परतः स्नेहविपातने ऽर्थे। घृतं विलीनयति, घृतं विलाययति। विलालयति, विलापयति। ली ई इति ईकारः प्रश्लिष्यते, ततः ईकारान्तस्य एव नुक् भवति, न तु कृतात्वस्य विभाषा लीयतेः ६।१।५० इति। स्नेहविपातने इति किम्? जतु विलापयति। जटाभिरालापयते। ली इति लीलीङोर्ग्रहणम्। ला इति लातेः, कृतात्वस्य च लीयतेः।

न्यासः

लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने। , ७।३।३९

"स्नेहविपातनेऽर्थे" इति। किमिदं स्नेहविपातनं नाम? विगच्छतः स्नेहसय पातनं व्यापारणम्()। तथा हि--पातेर्ण्यन्तस्य भावे ल्युटि कृते वपीतनमिति। "विलीनयति" इति। गुणायादेशौ। अथ "विभाषा लीयतेः" (६।१।५१) इत्यत्त्वे कृत एकदेशविकृतस्यानन्यत्वाद्विलापयतीत्यत्र कस्मान्नुग्भवति? इत्याह--"ली" इत्यादि। ली+ई इति ईकारोऽत्र प्रश्लिष्यते--ईकारान्तस्यैव यथा स्यात्? कृतात्त्वस्य न भवति। "ली इति लीलीङोग्र्रहणम्()" इति। ननु च निरनुबन्धकपरिभाषया "ली श्लेषणे" (धा।पा।१५०१) इत्येतस्यैव क्रैयादिकस्य ग्रहणं युक्तम्(), न तु "लीङ्? श्लेषणे" (धा।पा।११३९) इत्येतस्य

दैवादिकस्य? एवं मन्यते--एक एवायं धातुर्विकरणद्वयर्थमात्मनेपदार्थञ्च द्विरुपदिश्यते। एवञ्च कृत्वा "लियः सम्माननशलिनोकरणयोश्च" १।३।७० इत्युभाभ्यामात्मनेपदं भवतीति। "ला इति लातेः, कृतात्वस्य च लोयतेः" इति। ग्रहणमिति प्रकृतेन सम्बन्धः॥

बाल-मनोरमा

लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ४१९, ७।३।३९

लीलोः। ली ला इत्यनयोः षष्ठीद्विवचनम्। णाविति। अर्तिह्री"त्यतस्तदनुवृत्तेरिति भावः। स्नेहस्य = तैलस्य, निपातनं = द्रावणं, स्नेहनिपातनम्। तदाह -- स्नेहद्रवे इति। आत्वाऽभावपक्षे आह -- विलीनयतीति। लीलीङोरीकारान्तयोर्नुकि रूपम्। द्रवीकरोतीत्यर्थः। लीलीङोरात्वनुगभावपक्षे आह -- विलाययतीति। लुगागमाऽभावे रूपम्। नु कृतात्वस्य लीधातोरपि एकदेशविकृतन्यायेन लीत्वान्नुक्स्यादित्यत आह-- ली ई इति। लोहं विलापयतीति। नुग्लुकोरभावादात्वपक्षे पुक्। आत्वाऽभावे तु वृद्ध्यायादेशाविति नित्यमात्त्वं वक्तव्यमित्यर्थः।

तत्त्व-बोधिनी

लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ३६७, ७।३।३९

लीलोः। "लीङ् श्लेषणे" दिवादिः। "ली श्लेषणे" क्र्यादिओः। लाग्रहणेन "ला आदाने" अदादिःष कृतात्वौ लीलीङौ च त्रयोऽपि गृह्यन्ते। "लीयते"रिति औचित्यादिहापि यका निर्देश इत्युभयोरपि ग्रहणम्। न च "निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहण"मिति परिभाषया सूत्रेऽपि लीङो न ग्रहणमिति वाच्यम्, इयं हि परिभाषा "वामदेवाड्()ड्यड्()ड()औ" इत्यत्र डित्त्वेन ज्ञापिता। ज्ञापनं च उत्सर्गतः सजातीयापेक्षमिति प्रत्ययग्रहणविषयत्वमस्याः कल्प्यते। यथा "सदव्ययतव्यसमानाधिकरणेने"त्यत्र तव्यस्यैव ग्रहणं न तु तव्यतः, अत एव "जृ()ब्राश्च्योः क्त्वी"ति सूत्रे जृणातजीर्यत्योरुभयोग्ग्रहणमिति न्यासकृतोक्तम्। अतोऽत्र लीलीङोग्ग्रहणमिति सम्यगेव। न चैवं "दिव औ"दित्यत्र निरनुबन्धपरिभाषया दिविति प्रातिपदिकस्यैव ग्रहणं न तु धातोरिति ग्रन्थः कथं सङ्गच्छत इति वाच्यम्, उत्सर्गतः प्रत्ययग्रहणविषयत्वेन क्वचिदन्यत्रापि प्रवृत्तौ बाधकाऽभावादिति वदन्ति। विलीनयतीति। लीलीङोरिकारान्तयोर्नुकि रूपम्। विलाययतीति। नुगभावपक्षे तयोरेव रूपम्। विलालयतीति। लातेः कृतानुग्लुकोरभावादात्()वपक्षे पुक्। आत्वाऽभावे तु वृद्ध्यादेशौ। प्रलम्भनेति। प्रलम्भनं वञ्चनम्। अशिति किम?। लीयते। लिनाति।

---

सूत्रम्

काशिका-वृत्तिः

भियो हेतुभये षुक् ७।३।४०

भी इत्येतस्य हेतुभये ऽर्थे षुगागमो भवति णौ परतः। मुण्डो भीषयते। जटिलो भीषयते। अत्र अपि भी ई इति ईकारप्रश्लेषः कृतात्वस्य पुग्निवृत्त्यर्थः। मुण्डो भापयते इत्येवं हि तत्र भवति। हेतुभये इति किम्? कुञ्चिकया एनं भाययति। न अत्र हेतुः प्रयोजको भयकारणम्, किं तर्हि, कुञ्चिका।

न्यासः

भियो हेतुभये षुक्?। , ७।३।४०

हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः। विभेत्यस्मादिति भयः, हेतुश्चासौ भयश्चेति हेतुभयः, तस्मिन्? हेतुभये। "ञिभी भये" (धा।पा।१०८४) इत्यस्य वृद्धौ प्राप्तायां "बिभेतेर्हेतुभये" ६।१।५५ इत्यात्त्वे च प्राप्ते पक्षे णौ धुग्विधीयते। "मुण्डो भीषयते"

 

इति। "भीस्म्योर्हेतुभये" १।३।७८ इत्यात्मनेपदम्()। अथात्त्वे कृते मुण्डो भापयत इत्यत्र कस्मान्न भवति? इत्याह--"अत्रापि" इत्यादि॥

बाल-मनोरमा

भियो हेतुभये षुक् ४२३, ७।३।४०

भियो हेतुभये षुक्। भी ई ति। द्वयोः सवर्णदीर्घे भीशब्दात् षष्ठीति भावः। इदं च स्थानिवत्सूत्रे भाष्ये स्पष्टम्। ईकारप्रश्लेषलब्धमाह-- ईकारान्तस्येति। तेन आत्वपक्षे न षुगिति फलितम्। णाविति। "अर्तिह्री" त्यतस्तदनुवृत्तेरिति भावः।

तत्त्व-बोधिनी

भियो हेतुभये षुक् ३७१, ७।३।४०

ईकारान्तस्येति। तेन आत्वपक्षे भाययते इत्येव, न त्वत्र षुगित्यर्थः। करणादेव हीति। तथा च करणात्स्मये आत्वाऽभावेन पुद्गुर्लभ इति भावः। प्रयोज्यकत्र्रीति। यद्यपि प्रथमणिजर्थं प्रति मनुष्यवागेव प्रयोजिका, अतएव आत्वं प्रवृत्तं तथापि द्वितीयणिजर्थाभिप्रायेणेदमुक्तमिति मनोरमायाम्। केचित्तु प्रयोज्यस्य कत्र्री। प्रयोजककत्र्रीति यावदिति प्रथमणिजभिप्रायेणैवेदं सुयोजमित्याहुः। ण्यन्ताण्णाविति। राजा विस्मयते, तंमनुष्यवाग्विस्मापयते, तया सिंहो विस्मापयन्नित्यर्थः। एवं च प्रथमणिचि हेतुर्मनुष्यवागिति आत्वपुकावुपपन्नौ।

---

सूत्रम्

काशिका-वृत्तिः

स्फायो वः ७।३।४१

स्फायित्येतस्य अङ्गस्य वकारादेशो भवति णौ परतः। स्फावयति।

न्यासः

स्फायो वः। , ७।३।४१

"स्फावयति" इति। "स्फायो, ओ प्यायी वृद्धौ" (धा।पा।४८७,४८८)॥

बाल-मनोरमा

स्फायो वः ४२५, ७।३।४१

स्फायो वः। णाविति शेषपूरणम्। "अर्तिह्री"त्यतस्तदनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

शदेरगतौ तः ७।३।४२

शदेः अङ्गस्य अगतौ अर्थे वर्तमानस्य तकारादेशो भवति णौ परतः। पुष्पाणि शातयति। अगतौ इति किम्? गाः शादयति गोपालकः।

न्यासः

शदेरगतौ तः। , ७।३।४२

किमर्थं पुनरिदमुच्यते, यावता "शद्लृ शातने" (धा।पा।१४२८) इत्यस्मादेव निपातनात्? तकारो भविष्यतीति? गतेरन्यत्र यथा स्यात्? गतौ मा भूदिति चेत्()? न; शातनशब्दो हि गतेरन्यमर्थमाचष्टे। एवं तर्हि एतज्ज्ञापयति---"अबाधकान्यपि निपातनानि भवन्ति" (पु।ल।प।वृ।९९) इति। तेन पुराशब्दात्? "सायञ्चिरम्()" ४।३।२३ इत्यादिना विधीयमानयोष्ट()उट()उलोः "पुराणप्रोक्तेषु" ४।३।१०५ इति निपातनेन तुदो बाधनं न भवतीतित। तेन पुरातनमित्यपि सिद्धं भवति॥

बाल-मनोरमा

शदेरगतौ तः ४२६, ७।३।४२

शदेरगतौ तः। "अर्त्तिह्री"त्यतो णावित्यनुवृत्तिं()त मत्वाह-- शदेर्णाविति। तोऽन्तादेश इति। तकार इत्यर्थः। अकार उच्चारणार्थः।

---

सूत्रम्

काशिका-वृत्तिः

रुहः पो ऽन्यतरस्याम् ७।३।४३

रुहेः अङ्गस्य अन्यतरस्यां पकारादेशो भवति णौ परतः। व्रीहीन् रोपयति, व्रीहीन् रोहयति।

न्यासः

रुहः पोऽन्यतरस्याम्?। , ७।३।४३

"रोपयति" इति। "रुह जन्मनि प्रादुर्भावे च" (धा।पा।८५९)। किमर्थं पुनरिदमुच्यते, यावता दिवादिषु "रुप लुप विमोहने" (धा।पा।१२३६,१२३७) इति रुपिः पठ()ते, तस्य रोपयतीति भविष्यती, रुहेस्तु रोहयतीति? जन्मार्थेऽपि रोपयतीति प्रयोगो यथा स्यात्(); अन्यथा हि विमोहनार्थस्यैव स्यात्()। अनेकार्थत्वाद्धातूनां रुपिर्जन्मनि वर्त्तिष्यत इति चेत्()? नैतदस्ति; अनेकार्था हि धातवः, न तु सर्वार्थाः। न हि रुप्यतीत्युक्ते अन्मार्थः प्रातीयते, किं तर्हि? विमोहनार्थ एव॥

बाल-मनोरमा

रुहः पोऽन्यतरस्याम् ४२७, ७।३।४३

रुहः पो। णावितिशेषपूरणम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रत्ययस्थात् कात् पूर्वस्य अत इदाप्यसुपः ७।३।४४

प्रत्ययस्थात् ककारात् पूर्वस्य अकारस्य इकारादेशो भवति आपि परतः, स चेदाप् सुपः परो न भवति। जटिलिका। मुण्डिका। कारिका। हारिका। एतिकाश्चरन्ति। प्रत्ययग्रहणं किम्? शक्नोति इति शका। स्थग्रहणम् विस्पष्तार्थम्। ककारमात्रं प्रत्ययो न अस्ति इति सामर्थ्यात् प्रत्ययस्थस्य ग्रहणम् शक्यते विज्ञातुम्। कातिति किम्? मण्डना। रमणा। पूर्वस्य इति किम्? परस्य मा भूत्, पटुका। मृदुका। अतः इति किम्? गोका। नौका। तपरकरणं किम्? राका। धाका। आपि इति किम्? कारकः। धारकः। अथ आपि इत्यनेन किम्? विशिष्यते? ककारः। यद्येवम्, कारिका इत्यत्र अपि न प्राप्नोति,

अकारेण व्यवहितत्वात्? एकादेशे कृते न अस्ति व्यवधानम्। एकादेशः पूर्वविधौ स्थानिवद्भवति इति व्यवधानम् एव? वचनाद् व्यवधानमीदृशं यत् स्थानिवद्भावकृतम् एकेन वर्णेन तदाश्रीयते। रथकट्यादिषु तु श्रुतिकृतम् अनेकेन वर्णेन व्यवधानम् इति इत्वं न भवति। असुपः इति किम्? बहवः परिव्राजका अस्यां मथुरायाम् बहुपरिव्राजका मथुरा। सुबन्तादयं बहुपरिव्राजकशब्दात् परः आपिति प्रतिषेधो भवति। प्रसज्यप्रतिषेधश्चायम्, न पर्युदासः। पर्युदासे हि सति समुदायादसुबन्तात् परतः आपिति इत्वम् अत्र स्यादेव। अविद्यमानः सुप् यस्मिन् सो ऽयम् असुपिति? एवम् अपि नाशीयते। तथा हि सति बहुचर्मिका इत्यत्र अपि न स्यात्। मामकनरकयोरुपसङ्ख्यानं कर्तव्यम् अप्रत्ययस्थत्वात्। मम इयं मामिका नरिका। अणि ममकादेशः। केवलमामक इति नियमात् संज्ञाछन्दसोः ईकारो न अस्त्यत्र, तेन अण्प्रत्ययान्तादपि टाप् भवति, नरान् कायति इति नरिका। आतो ऽनुपसर्गे कः [३।२।३](#) इति कः प्रत्ययः। प्रत्ययनिषेधे त्यक्त्यपोश्च उपसङ्ख्यानम्। उदीचामातः स्थाने यक्पूर्वायाः [७।३।४३](#) इति विकल्पो मा भूतिति। दीक्षिणात्यिका। इहत्यिका।

लघु-सिद्धान्त-कौमुदी

प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः १२६५, ७।३।४४

प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारः स्यादापि स आप्सुपः परो न चेत्। गोपालिका। अश्वपालिका। सर्विका। कारिका। अतः किम्? नौका। प्रत्ययस्थात्किम्? शक्नोतीति शका। असुपः किम्? बहुपरिव्राजका नगरी। (सूर्याद्देवतायां चाब्वाच्यः)। सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्? (सूर्यागस्त्ययोश्छे च ङ्यां च)। यलोपः। सूरी - कुन्ती; मानुषीयम्॥

न्यासः

प्रत्ययस्थात्कात्पूर्वस्यात इदापयसुपः। , ७।३।४४

"सुपः परो न भवति" इति। सुबन्तात्परो न भवतीत्यर्थः। एवं चार्थः प्रत्ययग्रहणपरिभाषया वेदितव्यः। "जटिलिका, मुण्डिका" इति। अज्ञातादिष्वर्थेषु "प्रागिवात्? कः" [५।३।७०](#)। "कारिका, हारिका" इति। ण्वुल्()। "एतिका" इति। एतदः "अव्ययसर्वनाम्नाम्()" [५।३।७१](#) इत्यकच्(), त्यादाद्यत्वम्(), "अतो गुणे" [६।१।९४](#) पररूपत्वम्(), टाप्(), अकः सवर्णे दीर्घत्वम्? [६।१।९७](#)। "शका" इति। पचाद्यच्(), टाप्()। "स्थग्रहण विस्पुष्टार्थम्()" इति। अत्र यत्र ककारमात्रं हि प्रतययसतत्र मा भूदित्येवमर्थं कस्मान्न भवति? इत्याह--"ककारमात्रं हि" इत्यादि। कादिति वर्णग्रहणम्()। अकारस्तूच्चारणार्थः। न तु केवलः ककारः प्रत्ययोऽस्ति यन्निवृत्त्यर्थं स्थग्रहणं स्यात्()। "कात्? प्रत्ययात्()" इत्युच्यमाने प्रत्ययावयवे प्रत्ययशब्दो वर्त्तिष्यते, अतोऽन्तरेणापि स्थग्रहणं प्रत्ययस्थस्य ककारस्य ग्रहणं शक्यते विज्ञातुम्()। तस्माद्वस्पष्टार्थं स्थग्रहणम्()। "मण्डना, रमणा" इति। नन्द्यादभ्यो लयुः (३।१।१३४। "पटुक" मृदुका, गोका, नौका" इति। पूर्ववत् कः। "राका, धाका" इति। "रालाऽदाने" (धा।पा।१०५७,१०५८) इत्यस्माद्द्षातेश्च "कृदाधारार्चिकलिभ्यः कः" (द।उ।३।१८) इत्यौणादिकः कप्रत्ययः। "अथ" इत्यादि। चोदतः। "ककारः" इतीतरः। ककरस्य श्रुतत्वात्? तस्यैवापीति विशेषणं युक्तमित्यभिप्रायः। येनाभिप्रायेण चोदकः पृष्टवांस्तमाविष्कर्तुमाह--"यद्येवम्()" इत्यादि। यद्यपीत्यनेन ककारो विशिष्यते--आपि परतो यः ककार इति। एवं सति करिकेत्यत्र न प्राप्नोति; ककारस्याकारेणायो व्यवहितत्वात्()। "एकादेशे कृते" इत्यादीतरः। व्यवसर्गे हि सति व्यवधानं भवति। न चैकादेशे कृते व्यवसर्गोऽस्तीत्यतो नास्ति व्यवधानम्()। "एकादेशः पूर्व" इत्यादि। चोदकः। स्थानिवद्भावस्तु "अचः परस्मिन्? पूर्वविधौ" [१।१।५६](#) इत्यनेन। "वचनात्()" इतीतरः। उच्यते चेदं वचनम्(), न चाप्यनन्तरं ककारः सकम्भवतीति तत्र वचनसामर्थ्यात् स्थानिवद्भावे कृते नैकेन वर्णेन सर्वत्र व्यवधानमाश्रीयते। यद तर्हि वचनसामर्थ्यात्? कारिकेत्यादौ व्यवधानेऽपि भवति, तदारथकट()आ, पुत्रकाम्येत्यत्रापि स्यात्()? इत्यत आह--"रथकट()आदिषु" इत्यादि। रथानां समूहः "इनित्रकट()चश्च" [४।२।५०](#) इति कट()च्(), ततष्टाप्()। पुत्रमिच्छतीति "कम्यच्च" [३।१।९](#) इति

काम्यच्प्रत्ययः। "अ प्रत्ययात्()" ३।३।१०२ ततष्टाप्()। तत्र श्रुतिकृतमनेकेन वर्णेन व्यवधानमितीत्वं न भवति। "येन नावयवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।प।४६) इत्येकेन वर्णेन व्यवधानमाश्रीयते। येन नावयवधानमपि तु सर्वत्र व्यवधानम्(), तेनैकेन वर्णेन व्यवहिते भवितुं युक्तम्()। स्थानिवद्भवकृतमेकेन वर्णेन सर्वत्र वयवधानमस्ति, सङ्घातेन त्वस्ति नास्ति च। तस्मात्? तदिह नाश्रीयते। "सुबन्तादयम्()" इति। परिव्राजकशब्दात्? पर आबिति प्रतययलक्षणे सुबन्तता वेदितव्या। "प्रसज्यप्रतिषेधश्चायम्()" इति। न चेत्सुबन्तादाप्? परो भवति। कः पुनः परयुदासे दोषो यतः स साश्रोयते? इत्याह--"पर्युदासे हि" इत्यादि। यद्ययं पर्युदासः स्यात्? सुपोऽन्योऽसप्(), ततश्चोदाप्? परो भवतीति; ततो बहुपरिब्राआजकेत्यत्रापि स्यादेवेत्त्वम्, असुबन्तात्? पूर्वोत्तरपदसमुदायात्? पर आबिति कृत्वा। असुबन्ततवं पुनः समुदायस्य, तस्मात्? सुदनुत्पत्तेः; अवयवाद्धि परिव्राजकशब्दादत्र सुबुत्पत्तिः, न तु समुदायात्()। "अविद्यमानः सुब् यस्मिन्? सोऽयमसुबित्ययमपि नाश्रीयते" इति। बहुव्रीहिरपि नाश्रीयत इत्यर्थः। कः पुनस्तदाश्रयणे दोषो यतः स नाश्रीयते? इत्याह--तथा हि" इत्यादि। एवं तर्हीत्यर्थः। बहुव्रीहौ पूर्वोत्तरपदयोः प्रत्ययलक्षणेन सुबन्तव्यपदेशोऽस्तीति नासावसुप, अपि तु विद्यमानसुबेव। तेन बहुचर्मिकेत्यत्र नासुपः पर आबितीत्वं न स्यात्()। बहूनि चर्माण्यस्यां विद्यन्त इति बहुव्रीहिः। "शेषाद्विभाषा" ५।४।१५४ इति कप्(), टाप्()। "मामिका" इति। ममेयमिति "तस्येदम्()" (४।३।१२०) इत्यण्? "तवकममकौ" ४।३।३ इति ममकादेशः। नन्वणन्तान्ममकशब्दात्? "टिड्ढाणञ्()" ४।१।१५ इति ङीपा भवितव्यम्(), तत्? कथं टाब्भवति? "केवलमामकेति नियमात्()" इत्यादि। "नरिका" इति। "कै गे शब्दे" (धा।पा।९१६,९१७)। "आदेच उपदेशेऽशिति" ६।१।४४ इत्यत्त्वम्(), "आतोऽनुपसर्गे कः" ३।२।३, ततष्टाप्()। "दाक्षिणात्यिका, इहत्यिका" इति। दक्षिणस्यां दिशि भवेत "दक्षिणापश्चात्पुरसस्त्यक्()" ४।२।९७ इति त्यक्()। इह भवेति "अव्ययात्यप्()" ४।२।१०३। उभयत्राज्ञातादिष्वर्थेषु "प्रागिवात्कः" ५।३।७०। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेवं प्रतिपादनम्()--"उदीचामातः, स्थाने" (७।३।४६) इत्यत्र व्यवस्थितविभाषाविज्ञानात्? त्यक्त्ययोर्नित्यं भविष्यतीति॥

बाल-मनोरमा

प्रत्ययस्थात्कात्पूर्वस्यात् इदाप्यसुपः ४५७, ७।३।४४

प्रत्ययस्थात्। ककारादिति। क् इति वर्णादित्यर्थः। अकार उच्चारणार्थः। "वर्णात्कारः" इत्युक्तेः। एवंच सूत्रे कादित्यत्राऽकार उच्चारणार्थ इति सूचितम्। स आबिति। इत्त्वविधौ यः परनिमित्तत्वेनोपात्तः स आबित्यर्थः। सुपः परो न चेदिति। सूत्रे "असुपः" इति पञ्चम्यन्तम्, असमर्थसमासः। आपि सुपः परस्मिन्सति इत्त्वं न भवतीत्यर्थो विवक्षित इति भावः। सर्विकेति। सर्वशब्दाट्टापि सवर्णदीर्घे सर्वाशब्दः। एकादेशस्य पूर्वान्तत्वेन ग्रहणात्सर्वनामकार्यम्। ततश्च अव्ययसर्वनाम्ना"मिति टेः प्रागकच्। तत्र ककारादकार उच्चारणार्थः। चकार इत्। अक् इति ककारान्तः प्रत्ययष्टेः प्राग्भवति। सर्वकाशब्देऽस्मिन्ककारात्पूर्वस्य अत इत्त्वे सर्विकेति रूपम्। ननु ककारात्पूर्वस्य अकारस्य कथमित्त्वम्, ककारेण व्यवहिततया आप्परकत्वाऽभावादिति चेत्, न, "येन नाव्यवधान"मिति न्यायेन तद्व्यवधानस्य अबाधकत्वात्। कारिकेति। कृञो ण्वुल्, अकादेशः "अचो ञ्णिती"ति ऋकारस्य वृद्धिः, रपरत्वं कारकशब्दाट्टाप्, सवर्णदीर्घः, कात्पूर्वस्य रेफादकारस्य इत्त्वम्। कादिति सङ्घातग्रहणे तु एतिका इति न सिध्यति। एतच्छब्दे टेः प्रागकचि एतकच्छब्दाज्जसि, त्यदाद्यत्वे, पररूपे, अदन्तत्वाट्टापि, कात्पूर्वस्य इत्त्वे एतिका इति रूपम्। अत्राऽकचि अकारस्य उच्चारणार्थतया प्रत्ययस्थकशब्दाऽभावादित्त्वं न स्यात्, ककारादुत्तराऽडवर्णस्याऽकजनवयवत्वात्। न चाऽकचि अकारस्य नोच्चारणार्थत्वमिति शङ्क्यम्, एवं सति निरित्यव्यये अकचि नकिरिति न स्यात्। अतः कादित्यनेन ककारादित्येव विवक्षितम्। यका सकेत्यत्र "न यासयोः" इतीत्वनिषेधाल्लिङ्गाच्च। अन्यथा तत्र प्रत्ययस्थककाराऽभावेन इत्वस्याऽप्राप्तेः किं तन्निषेधेनेत्यलम्।

नौकेति। नौशब्दात्स्वार्थिकः कः, टाप्। अत्र ककारात्पूर्वस्य औकारस्य इत्त्वनिवृत्त्यर्थमत इति वचनम्। शकेति। "शक्लृ शक्तौ" पचाद्यच्, टाप्। अत्र ककारस्य प्रत्ययस्थत्वाऽभावान्न ततः पूर्वस्य इत्त्वम्। बहुपरिव्राजकेति। परिपूर्वाद्व्रजेण्वुल्। बहवः परिव्राजका यस्यामिति बहुव्रीहिः। सुपो लुकि बहुपरिव्राजकशब्दाट्टाप्। अत्राऽकारस्य कात्पूर्वस्य इत्त्वं न, प्रत्ययलक्षणेन आपः सुबपेक्षया परत्वात्। "न लुमते"ति निषेधस्तु न, तस्य लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्य एव प्रवृत्तेः। इत्त्वं तु टाप्यनाङ्गकार्यमिति नात्र तन्निषेधः। यदि तु "असुपः" इति पर्युदासाअश्रीयते, तर्हि "बहुपरिव्राजक" इति समुदायस्य सुब्भिन्नत्वादापस्ततः परत्वादित्त्वं दुर्वारं स्यादिति भावः। राकेति। "कृदाधारार्चिकलिभ्यः कः" इति राधातोरौणादिकः कप्रत्ययः। "उणादयो बहुल"मिति बहुलग्रहणात् "केऽणः" इति ह्रस्वो न, ककारस्य च नेत्वम्। टाप्। स्त्रीत्वं लोकात्। "कलाहीने सानुमतिः पूर्णे राका निशाकरे" इत्यमरः। अत्र ककारात् पूर्वस्य दीर्घाकारत्वान्नेत्त्वमिति भावः।

मामकेति। मामकनरकशब्दयोः कात्पूर्वस्य इत्त्वं वक्तव्यमित्यर्थः। मामिकेति। ममेयमिति विग्रहे "युष्मदस्मदोरन्यतरस्यां खञ्चे"त्यणि, "तवकममकावेकवचने" इति ममकादेसे, आदिवृद्धिः, टाप्, "टिड्ढाणञ्" इत्यादिना ङीप्सु न, "केवकमामके"त्यादिना संज्ञाच्छन्दसोरेव मामकशब्दान्ङीब्नियमात्। ततस्चात्र ककारस्य प्रत्ययस्थत्वाऽबावात् "प्रत्ययस्था"दित्यप्राप्तौ वचनमिदम्। नरानिति। कैशब्दे "आदेच उपदेशे" इत्यात्त्वे, "आतोऽनुपसर्गे कः" इति कप्रत्यये "आतो लोप इटि चे"ति आलोपः, उपपदसमासः, सुपो लुक्, टाप्। अत्रापि ककारस्य प्रत्ययस्थत्वाऽभावात्।"प्रत्ययस्था"दित्यप्राप्तौ वचनम्। त्यक्त्यपोश्चेति। त्यगन्ते त्यबन्ते च प्रत्ययस्थात्कात्पूर्वस्याऽकारस्य इत्त्वं वक्तव्यमित्यर्थः। "उदीचामातः स्थाने" इति विकल्पस्यापवादः। दाक्षिणात्यिकेति। दक्षिणस्या दिशि अदूरे इति विग्रहे "दक्षिणादाच्" इत्याच्, "तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वम्। दक्षिणाशब्दाद्भवाद्यर्थे "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्, "किति चे"त्यादिवृद्धिः, दाक्षिणात्यशब्दाट्टाप्। ततः स्वार्थिकः कः, "केऽणः" इति टारो ह्रस्वः, पुनष्टाप्, इत्त्वम#इति भावः। "दक्षिणस्यां दिशि भवे"ति विग्रहे दक्षिणाशब्दाट्टाबन्तादेव त्यकन्" इति मतं तु प्रौढमनोकमायां दूषितम्। इहत्यिकेति। "अव्ययात्य"बिति त्यप्, टाप्, स्वार्थिकः कः, "केऽणः" इति ह्रस्वः, पुनः टाप्।

तत्त्व-बोधिनी
प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ४१२, ७।३।४४

प्रत्ययस्थात्कात्पूर्वस्य। "का"दित्यकार उच्चारणार्थः। व्यञ्जनमात्रं विवक्षितम्। अन्यथा एतिकाश्चरन्तीत्यादावकचि इत्वं न स्यात्। तत्र हि अकारविशिष्टककारस्य प्रत्ययस्थत्वाऽभावात्। न चाकच्यप्यकारान्तककार एल प्रत्ययस्थो भवतु, "अतो गुणे"इति पररूपे सत्येतिका इत्यादिरूपसिद्धेरिति वाच्यम्, "पचतकी"त्यादिवक्ष्यमाणरूपाऽसिद्धिप्रसङ्गादित्याशयेनाह--ककासादिति। वर्णनिर्देशे हि कारप्रत्ययो विहितः। क्वचित्समुदायात्प्रयोगस्तु "उच्चैस्तरां वा वषट्कारः"इत्यादिनिर्देशरूपत्रसाध्य इति भावः। आपि पर इति। एतच्चाऽकारविशेषणम्। तत्सामर्थ्यात्ककाराकाराभ्यां व्यवायेऽपि भवति, न तु "पुत्रकाभ्या""स्थकटये"त्यादौ त्रिचतुरादिव्यवाये। अतएव "सर्विके"त्यादावाद्याकारस्य न भवति, तदेतदुक्तम्---अकारस्येकारः स्यादापि पर इति। यदि त्वापीति ककारविशेषणं स्यात्तर्हि "रथकठ()ए"त्यादावतिप्रसङ्गः, व्यवहितस्यापि परत्वाऽपायात्। न च निर्दिष्टपरिभाया निस्तारः, अनुवादे परिभाषाणामित्यत्राऽनुवाद इत्यस्याऽनूद्यमानविशेषणेष्वित्यर्थाभ्युपगमात्। "कात्पूर्वस्यात् इ"दित्यत्र हि"अत"इत्यनूद्येत्वविधानादनुवाद्यत्वमेवाऽत इत्यस्य, न त्वनूद्यमानविशेषणत्वम्। "का"दित्यस्य त्वनूद्यमानविशेषणत्वं स्पष्टमेवेति न तत्र निर्दिष्टपरिभाषोपतिष्ठत इति वैषम्यात्ष। अनूद्यमानविशेषणे परिभाषा नोपतिष्ठत इत्येतत् "उदिचामातः"इति सूत्रस्थस्थाने ग्रहणेन ज्ञापयिष्यते। यदि "असुपः"इति पर्युदासः स्यात्तर्हि

"बहुपरिव्राजका नगरी"त्यत्रापि स्यादेव, उत्तरपदस्य सुबन्तत्वेऽपि समुदायस्याऽसुबन्तत्वात्ततः परष्टाबिति। तेनाऽत्रप्रसज्यप्रतिषेध इत्याह--स आप्सुपः परो न चेदिति। सुबन्तात्परो न चेदित्यर्थः। सर्विकेति। "अव्यय सर्वनाम्ना"मित्यज्ञातार्थेऽकच्। कारिकेति। करोतेर्ण्वुल्। णित्वाद्वृद्धिः। नौकेति। "नौ"शब्दात्स्वार्थे कः, ततष्टाप्। शकेति। शक्नोतीति विग्रहः। पचाद्यत्। ततष्टाप्। बहुपरिव्राजकेति। परिपूर्वद्व्रजेर्ण्वुल्। बहवः परिव्राजका यस्यामिति बहुव्रीहौ तदवयवस्य सुपो लुकि कृतेऽपि प्रत्ययलक्षणेनोत्तरपदस्य सुबन्तत्वाट्टापः सुबन्तात्परत्वमस्तीतीत्वमत्र न भवति। नन्दनेति। "नन्दीग्रही"ति ल्युः। पूर्वस्य किमति। अर्थादेवेदं लभ्यते। टाबेकादेशे कृते परत्र ह्रस्वाऽकाराभावादिति प्रश्नः। इतरो निर्दिष्टपरिभाषया कात्पूर्वस्येति न लभ्यते, किंतु टाबेकादेशं बाधित्वा कात्परस्यैवाकारस्य स्यादित्याशयेनाह---परस्येत्यादि। कटुकेति। कटुरत्र कटुरसवति। आज्ञातादौ कः। वस्तुतस्तु सूत्रे "प्रत्ययस्थे की"ति सप्तमीनिर्देशमेव कृत्वा "पूर्वस्ये"ति ग्रहणं सुत्यजमित्याहुः। राकेति। "कृदाधारार्चिकलिभ्यः कः"। बाहुलकादित्संज्ञाऽभावः। संज्ञापूर्वकविधेरनित्यत्वात् "केऽणः"इति ह्रस्वो न।

मामकनरकयोरुपसङ्ख्यानम्। मामकनरकयोरिति। ककारस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम्। मानिकेति। ममेयं मामिका। "युष्मदस्मदोरन्यतरस्यां खञ्चेत्यण्, "तवकममकावेकवचने"इति ममकादेशः, आदिवृद्धिः। "केवलमानके"त्यादिना "संज्ञाछन्दसोरेवे"ति नियमान्नङीप्। नरकेति। "कै शब्दे" "आदेच उपदेशे"इत्यत्वम्, "आतऽनुपसर्गे कः", "आतो लोप इटि चे"त्यलोपः टाप, इत्वम्। त्यक्त्यपोश्च। "उपसङ्ख्यान"मित्यनुषज्यते। "उदीचामातः"इति विकल्पापवादः। दाक्षिणात्यिकेति। दक्षिणस्यामदूरे दक्षिणा। "दक्षिणादाच्"दक्षिणा भवेति विग्रहे "दक्षिणापश्चात्पुरसस्त्यत्", "किति च" इत्यादिना वृद्धिः, टाप्। ततोऽज्ञातार्थे कः। "केऽणः"इति ह्रस्वः, टाप्। प्राचा तु "दक्षिणस्यां दिशि भवे"ति विगृहीतं, तच्च मनोरमायां दूषितम्। त्यग्विधावव्साहचर्यादाजन्तस्यैव दक्षैणाशब्दस्य ग्रहणात्। अन्यथा सर्वनाम्नो वृत्तिमात्रे पुंवद्भावापत्तेश्चेति। इहत्यिकेति। "अव्ययात्त्यप्"।

---

सूत्रम्

काशिका-वृत्तिः

न यासयोः ७।३।४५

या सा इत्येतयोः इकारादेशो न भवति। यका। सका। या सा इति निर्देशो ऽतन्त्रम्, यत्तदोरुपलक्षणमेतत्। इह अपि प्रतिषेध इष्यते, यकां यकामधीमहे तकां पचामहे इति। यासयोरित्त्वप्रतिषेधे त्यकन उपसङ्ख्यानम्। उपत्यका। अधित्यका। पावकादीनां छन्दस्युपसङ्ख्यानम्। हिरण्यवर्णाः शुचयः पावकाः। यासु अलोमकाः। छन्दसि इति किम्? पाविका। आशिषि च उपसङ्ख्यानम्। जीवतात् जीवका। नन्दतात् नन्दका। भवतात् भवका। उत्तरपदलोपे च उपसङ्ख्यानम्। देवदत्तिका, देवका। यज्ञदत्तिका, यज्ञका। क्षिपकादीनां च उपसङ्ख्यानम्। क्षिपका। ध्रुवका। तारका ज्योतिष्युपसङ्ख्यानम्। तारका। ज्योतिषि इति किम्? तारिका दासी। वर्णका तान्तव उपसङ्ख्यानम्। वर्णका प्रावरणभेदः। तान्तवे इति किम्? वणिका भागुरी लौकायते। वर्तका शकुनौ प्राचाम् उपसङ्ख्यानम्। वर्तका शकुनिः। प्राचाम् अन्यत्र उदीचां तु वर्तिका। शकुनौ इति किम्? वर्तिका भागुरी लौकायतस्य। अष्टका पितृदैवत्ये। अष्टका। पितृदैवत्ये इति किम्? अष्टिका खारी। वा सुतकापुत्रकावृन्दारकाणाम् उपसङ्ख्यानम्। सुतिका, सुतका। पुत्रिका, पुत्रका। वृन्दारिका, वृन्दारका।

न्यासः

न यासयोः। , ७।३।४५

येतयेतस्य "उदीचामातः स्थाने" ७।३।४६ इत्यादिना विकल्पे प्राप्ते, सेत्यस्य पूर्वेण नित्ये प्राप्ते प्रतिषेधोऽयमारभ्यते; प्राप्तिपूर्वकत्वात्? प्रतिषेधस्य। यदा तयोरकज्भवति तदाऽयं प्रतिषेधो विज्ञायते। "यका", "सका" इति। यत्तदोः पूर्ववदकच्(), सुः, त्यदाद्यत्वञ्च। "यासेति निर्देशोऽतन्त्रम्()" इति। अप्रधानमित्यर्थः। किं कारणम्()? इत्याह--"यत्तदोरुपलक्षणार्थमेतत्()" इति। किं कारणमेवं व्याख्यायते? इत्याह--"इहापि" इत्यादि। यासेति प्रथमैकवचनान्तरूपम्()। ततर यद्ययं निर्देशस्तन्त्रं स्यात्(), प्रथमैकवचनन्तयोग्र्रहणाद्विभक्त्यन्तरे यकाम्(), तकामित्यत्र न स्यात्(), इष्यते च तत्रापि। तस्मादतन्त्रमयं निर्देशो यत्तदोः प्रातिपदिकयोरुपलक्षणार्थमेतत्()--इत्युच्यते। "यासयोरित्त्वप्रतिषेधे" इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तदेतदुक्तं भवति--यत्तदोः प्रतिषेध इत्यस्मिन्? क्रियमाणे त्यकन्प्रत्ययान्तस्य त्यकन्प्रत्ययान्तस्य प्रतिषेधप्रतिपादनं कत्र्तव्यमिति। तत्रेदं प्रतिपादनम्()--नेति योगविभागोऽत्र क्रियते, तेन त्यकन्प्रत्ययान्तस्य प्रतिषेधो भविष्यतीति। एवमुत्तरत्राप्युपसंखघ्यानशब्दस्य प्रतिपादनार्थो वेदितव्यः। प्रतिपादनमप्येतदेव योगविबागकरणमाश्रितय कत्र्तव्यम्()। "उपत्यका, अधत्यका" इति। "उपाधिभ्यां त्यकन्नासन्नारूढयोः ५।२।३४ इति त्यकन्()। "पावका" इति। ण्वुल्()। "अलोमका" इति। नास्या लोमानि सन्तीति बहुव्रीहिः। "शेषाद्विभाषा" ५।४।१५४ इति कप्()। "जीवका, नन्दका" ति। "आशिषि च" ३।१।१५० इति वुन्()। "देवका, यज्ञका" इति। देवदत्तयज्ञदत्तशब्दाभ्यां "अनुकम्पायां कन्()" (५।३।७६) इति कनि कृते "अनजादौ च विभाषा लोपो वक्तव्यः" (वा। ६१४) इत्युत्तरपदलोपः। "क्षिपका, ध्रुवका" इति। "क्षिप प्रेरणे" (धा।पा।१२८५), "ध्रुव स्थैर्ये" (धा।पा।९४३), "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५। तदन्तादज्ञाताद्यर्थे "प्रागवात्कः" ५।३।७०। "तारका" इति। तरतेर्ण्वुल्()। "वर्णका" तान्तवः" इति। तन्तूनां विकार इति "ओरञ्()" ४।३।१३७, "ओर्गुणः" ६।४।१४६। तान्तवः=प्रावरणविशेषः। तत्र वर्णकेत्युपसंख्यातव्या। "वर्ण वर्णक्रियाधिस्तारगुणवचनेषु"["वर्ण"--नास्ति मुद्रितन्यसपाठे] (धा।पा।१९३८) इति चौरादिको धातुः, ततो ण्वुल्()--"वर्णिका" इति। व्याख्यत्रीत्यर्थः। "वत्र्तका" इति। "वृतु वत्र्तने" (धा।पा।७५८), ण्वुल्()। "वर्त्तिका" इति। अध्येत्रीत्यर्थः। "अष्टका पितृदैवत्ये" इति। पितृदैवत्यम्=वैदिककरमविशेषः, तत्राष्टकेत्युपसंख्यायते। "अशू व्याप्तौ" (धा।पा।१२६४) इत्यस्मात्? "इष्यसिभ्यां तकन्()" (द।उ।३-३०) इति तकन्()प्रत्ययः, व्रश्चादिसूत्रेण ८।२।३६ षत्वम्(), ष्टुत्वम्()। "अष्टका" इति। अष्टौ परिमाणमस्या इति "तदस्य परिमाणम्()" ५।१।६६ इति "संख्याया अतिशदन्तायाः कम्()" ५।१।२२। "वा सूतका" इत्यादि। उपसंख्यातशब्दसय प्रतिपादनमर्थः। तत्रैदं प्रतिपादनम्--सूतका, सूतिका--इत्यादयः शब्दा पृ()षोदरान्तःपातिनः, तेन पृषोदरादित्वादेवायं विकल्पः सिद्धः॥

बाल-मनोरमा

न यासयोः ४५८, ७।३।४५

न यासयोः। नात्र कृतटापोः प्रतमान्तयोर्निर्देशः। यत्त दोरित्येव विवक्षितमिति बाष्ये स्पष्टम्। "प्रत्ययस्था"दित्यतोऽत इति इदिति चानुवर्तते। तदाह--यत्तदोरिति। यका सकेति। "अव्ययसर्वनाम्ना"मिति यत्तच्छब्दयोष्टेः प्रागकचि सौ त्यदाद्यत्वं, पररूपं, टाप्, हल्ङ्यादिना सुलोपः। तच्छब्दे "तदोः सः सौ" इति तकारस्य सकारः। उभयत्रापि "प्रत्ययस्था"दिति प्राप्तमित्त्वमत्र सूत्रे निषिध्यते। अथ "न यासयो"रित्यस्य प्रथमान्तानुकरणत्वे किं बाधकमित्यत आह--यकां तकामिति।

त्यकनश्च निषेध इति। त्यकन्प्रत्ययान्तस्यापि "प्रत्ययस्था"दितीत्त्वप्रतिषेधो वक्तव्य इत्यर्थः। उपत्यका अधित्यकेति। "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्, टाप्, सोर्हल्ङ्यादिलोपः। "उपत्यकाद्रेरासन्ना भूमिरूध्र्वमधित्यका" इत्यमरः। ननु त्यकन्विधौ अकारस्य उच्चारणसामथ्र्यादेव इत्त्वं न भवति, अन्यथा त्यिकनमेव विदध्यात्, अतः किं तन्निषेधेनेति चेत्, मैवम्--"पञ्चोपत्यको ग्राम" इत्यत्र अकारश्रवणार्थत्वादित्यलम्।

आशिषीति। आशिषि यो बुन् तस्य योऽयमकादेशः, तदकारस्य "प्रत्ययस्था"दितीत्त्वं नेति वक्तव्यमित्यर्थः। जीवका भवकेति। जीवतात्, भवतादित्यर्थः। जीवधातोः भूधातौश्च "आशिषि चे"ति वुन्, "युवोरनाकौ" इति तस्य अकादेशः, "सार्वधातुकार्धधातुकयोः" इति भूधातोरूकारस्य गुणेऽवादेशश्च। उत्तरपदेति। उत्तरपदलोपेऽपीत्त्वं नेति वक्तव्यमित्यर्थः। देवकेति। देवदत्तशब्दाट्टाप्। देवदत्तिकेति तु दत्तपदस्य लोपाभिव्यक्तये उपन्यस्तम्।

क्षिपकादीनां चेति। क्षिपकादिशब्दानामित्त्वं नेति वक्तव्यमित्यर्थः। क्षिपकादिगणं पठति--क्षिपकेति। "क्षिप प्रेरणे"। इगुपधाज्ञाप्रीकिरः कः"। कित्त्वान्न लघूपधगुणः, क्षिपाशब्दात्स्वार्थे कः, "केऽणः" इति ह्यस्वः, पुनष्टाप्। ध्रुवकेति। "ध्रुव स्थैर्ये" कुटादिः, क्षिपकेतिवद्रूपम्। यद्वा "ध्र स्थैर्ये" पचाद्यच्, "गाङ्कुटादिभ्यः" इति ङित्त्वान्न गुणः, उवङ्। ध्रुवशब्दाट्टाप्। ततः स्वार्थिकः कः "केऽणः" इति ह्यस्वः। पुनष्टाप्। कन्यकेति। कन्याशब्दात्कः, "केऽणः" इति ह्यस्वः, पुनष्टाप्। चटकेति। "चट भेदेन। पचाद्यच्, टाप्। स्वार्थे कः, "केऽणः" इति ह्यस्वः पुनष्टाप्। क्षिपकादिराकृतिगणः। तेन अलका इष्टका इत्यादि। तारका ज्योतिषीति। वार्तिकमिदम्। ज्योतिषि वाच्ये तारकेति भवति। इत्त्वं न भवतीति यावत्। "तृ? प्लवनसंतरणयोः" ण्वुल्, अकादेशः ऋकारस्य वृद्धिः, रपरत्वं, टाप्। ज्योतिरित्यनेन नक्षत्रम्, अक्ष्णः कनीनिका च विवक्षिते। "नक्षत्रमृक्षं भं तारा तारकापि" इति, "तारकाक्ष्णः कनीनिका" इति चामरः। अन्यत्रेति। ज्योतिषोऽन्यत्र वाच्ये तारिकेत्येव भवतीत्यर्थः।

वर्णका तान्तव इति। इदमपि वार्तिकम्। तान्तवे गम्ये वर्णकेति भवति। इत्त्वं नेत्यर्थः। तन्तूनां विकारस्तान्तवम्। "ओरञ"। वर्णकेति प्रावरणविशेषः। "वर्ण वर्णक्रियाविस्तारगुणवचनेषु" चुरादिः। ण्यन्ताण्ण्वुल्, अकादेशः, णिलोपः, टाप्। अन्यत्रेति। तान्तवादन्यत्र वर्णकेति इत्त्वमित्यर्थः। वर्णिका-स्तोत्रीत्यर्थः। वर्णिकेति ग्रन्थविशेषस्य संज्ञा वा।

वर्तका शकुनौ प्राचामिति। इदमपि वार्तिकम्। शकुनिः पक्षी, तत्र गम्ये प्राचां मते वर्तकेति भवति, इत्त्वं न भवतीत्यर्थः। प्राचाङ्ग्रहणस्य प्रयोजनमाह--उदीचां त्विति। उदीचां मते तु शकुनौ गम्ये वार्तिकेतीत्त्वं भवतीत्यर्थः। वर्तयतेर्ण्वुल्, अकादेशः, णिलोपः, स्वार्थे कः, टाप्। "कोयष्टिकष्टिट्टिभका वर्तको वर्तिकादयः" इत्यमरः। शकुनेरन्यत्र तु नित्यमेवेत्त्वम्।

अष्टका पितृदेवत्ये इति। इदमपि वार्तिकम्। पितरश्च ता देवताश्च पितृदेवताः। तदर्थं पितृदेवत्यम्। "देवतान्तात्तादर्थ्ये य"दिति यत्। पित्रर्थे कर्मणि वाच्ये अष्टकेति भवति। "अश भोजने" इत्यस्मात् "इष्यशिभ्यां तक"न्निति तकन् प्रत्ययः, "व्रश्चा"दिना शस्य षः, तकारस्य ष्टुत्वेन टः, अष्टकशब्दाट्टाप्। अष्टिकान्येति। अष्टाबध्यायाः परिमाणमस्या अष्टिका पाणिनीयाष्टाध्यायी, "सङ्ख्यायाः अतिशदन्तायाः कन्" इति सूत्रेण अष्टौ इति सुबन्तात्कन्प्रत्ययः, सुबन्तात्तद्धितोत्पत्तेः सिद्धान्तयिष्यमाणत्वात्। ततस्तद्धितान्तत्वेन प्रातिपदिकत्वात् "सुपो धातुप्रातिपदिकयोः" इति जसो लुकि निमित्तापायादष्टन आत्वनिवृत्तौ, अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नकारलोपे, अष्टशब्दाट्टापि "प्रत्ययस्था"दितीत्त्वं भवत्येव। न चान्तर्वर्तिसुपः परत्वं टापः शङ्क्यं, ककारेण व्यवधानात्। असुप इत्यस्य "बहुपरिव्राजका नगरी"त्यत्राऽव्यवहिते सुपः परे टापि चरितार्थत्वात्। अतएव "क्षिपकादीनां ने"ति निषेधोऽर्थवान्। अन्यथा क्षिपाशब्दात्सुबन्तात्स्वार्थिके कप्रत्यये सुपो लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य टापः सुबपेक्षया परत्वादसुपैति निषेधसिद्धेः किं तेनेत्यलम्।

"वा सूतकापुत्रिकाबृन्दारकाणा"मिति वार्तिकमर्थतः पठति--सूतकेति। अत्र पुत्रिकाशब्द इकारमध्यो नत्वकारमध्यः, स्त्रियां पुत्रशब्दस्य शाङ्गरवादित्वेन ङीनन्तत्वादिति कैयटः। अत्रेत्त्वविकल्पभ्रमं वारयति--इह वा अ इति। सवर्मदीर्घे सति वा इति निर्देश इति भावः। अत्र अ इति लुप्तप्रथमाकं, कात्पूर्वस्येत्यनुवर्तते, अत इति निवृत्तम्, पुत्रिकाशब्दे अतोऽभावात्। तदाह--कात्पूर्वस्येति। नन्वत्र इत्त्वविकल्प एव कुतोन विधीयत इत्यत आह--तेनेति। अत्वविधानेनेत्यर्थः।

 

पुत्रशब्दाच्चाङ्गरवादित्वान्ङीनि स्वार्थिके कप्रत्यये "केऽणः" इति ह्रस्वे, टापि, पुत्रिकाशब्दः।अत्र इकारस्य इत्वविकल्पविधौ पुत्रिका पुत्रीकेति इन्मध्य ईन्मध्यश्च स्यात्। अत्वविधौ तु पुत्रका पुत्रिकेत्यकारमध्यः इकारमध्यश्च भवतीति भावः। ननु सूतकाशब्देवृन्दारकाशब्दे च कात्पूर्वस्याऽकारस्य अकारविधिः किमर्थमित्यताअह--अन्यत्रेति। सूतकाशब्दे वृन्दारकाशब्दे च "प्रत्ययस्था"दिति नित्यमित्त्वे प्राप्ते तद्विकल्पार्थमित्यर्थः। "षूञ्प्राणिगर्भविमोचने"। धात्वर्थेनोपसङ्ग्रहादकर्मकः। "गत्यर्थाकर्मके"त्यादिना कर्तरि क्तः, टाप्, स्वार्थिकः क#ः, केऽणः" इति ह्रस्वः, पुनष्टाप्। अत्राकारस्य अत्त्वाऽभावपक्षे "प्रत्ययस्था"दितीत्वम्। वृन्दमस्यास्तीति मत्वर्थे "श्रृङ्गबृन्दाभ्यामारक"न्नित्यारकन्प्रत्ययः। अमरेण तावद्देवतावाची बृन्दारकशब्दः "अमरा निर्जरा देवाः" इत्यादिना पुंलिङ्गेष्वनुक्रान्तः। रूपिवाची मुख्यवाची च त्रिलिङ्गः। "त्रिषूत्तरे" इत्युपक्रम्य "बृन्दरकौ रूपमुख्यौ" इत्यमरः। स्त्रियां टाप्। अत्राप्यकारस्य अत्त्वाभावपक्षे इत्त्वम्।

तत्त्व-बोधिनी

न सासयोः ४१३, ७।३।४५

न यासयोः। "प्रत्ययस्था"दिति प्राप्ते निषेधोऽयम्। "यासे"ति यत्तदोरुपलक्षणमित्याशयेनाह---यत्तदोरिति। यका सकेति। यत्तदोरकच्। त्यदाद्यत्वे टाप्। स्वरूपस्यऽविवक्षायां फलमाह--यकां तकामिति। यद्यपि "न यत्तदो"रित्येव सूत्रयितुमुचितं, तथापि संनिपातपरिभाषाया अनित्यत्वज्ञापनार्थं "न यसयो"रित्युक्तमित्याहुओः। वस्तुतस्तु ["न]यत्तदो"रित्युक्तेऽप्यनित्यत्वं सिध्यत्येव, अन्यथा अनयोरकारस्याप्परत्वं दुर्लभमिति किमनेन निषेधेनेति।

त्यकनश्च निषेधः। त्यकनश्च निषेध इति। ननु "मृदस्तिक"न्नितिवत्प्राक्रियालाघवाय "त्यिक"न्निति वक्तव्ये "त्यक"न्नित्यकारनिपर्देशसामथ्र्यादित्वाऽभावे सिद्धे किमनेन निषेधवचनेन()। मैवम्। पञ्चभोरुपत्यकाभिः क्रीतः "पञ्चोपत्यक"इत्यादौ तद्धितलुकि रुआईप्रत्ययस्यापि लुक्यकारस्य श्रवणार्थत्वात्तस्य। "त्यिक"न्नित्युक्ते हि "पञ्चोपत्यिक"इति स्यात्, इष्यते तु "पञ्चोपत्यक"इति। तस्मादावश्यकमेव निषेधवचनम्। "मृदस्तिक"न्नित्यत्रापीकारोच्चारणं तद्धितलुकि श्रवणार्थं न तु प्रक्रीयालाघवार्थम्। अन्यथा पञ्चमिर्मृत्तिकाभिः क्रीत इति "आर्हा"दिति ठकः "अध्र्धपूर्वे"ति लुकि कृते "लुक्तद्धितलुकी"ति टापो लुकी निमित्ताऽभावात् "प्रत्ययस्थादि"तीत्त्वं न स्यात्--पञ्चमृत्तिक इत्यत्र। नच लुकः प्रागेवाऽन्तारङ्गत्वात् "प्रत्ययस्थात्--"इतीत्त्वं सिध्यत्येवेति वाच्यम्, "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते"इत्यभ्युपगमात्। अतएव "सनीरुआंसते"इत्यादौ नलोपाऽभावः सिध्यति। पञ्चभिः खट्वाभिः क्रीतः "पञ्चखट्व"इत्यादौ टापा सहैकादेशोऽपि न भवति, अन्यथा एकादेशस्यादिवद्भावाट्टाब्ग्रहणेन ग्रहणात् "लुक्तद्धितलुकी"त्यनुपसर्जनस्त्रीप्रत्ययस्य लुकि कृते अकारस्य श्रवणं न स्यात्। एतच्च भाष्यकैयटयोः स्पष्टम्। उपत्यकेति। "उपाधिभ्यां त्यकन्नासन्नारुढयोः"।

आशिषीति। आशीरर्थे विहितस्य वुन्प्रत्ययस्याऽत इत्त्वं न भवतीति वक्तव्यमित्यर्थः। जीवका। भवकेति। जीवताद्भवतादित्यर्थे जीवतिभवतिभ्या "माशिषि चे"ति बुन्, तस्याऽकादेशे कृते टाप्।

उत्तरपदलोपे न। देवकेति देवदत्तशब्दात्स्वार्थिकः कः। "अनजादौ विभषा लोपो वक्तव्यः"इति प्रागिवीयेषु वक्ष्यमाणत्वाद्द्वितीयादच ऊध्र्वस्य दत्तशब्दस्य लोपः। देवदत्तिकाशब्दस्योपन्यासस्तु दत्तलोपमभिव्यङ्क्तुं, तद्भावे इत्वनिषेधाऽभावं च दर्शयितुम्।

क्षिपकादीनां च। क्षिपकादीनां चेति। "ने"त्यनुषज्यते। क्षिपकेत्यादि। क्षिपेरिगुपधलक्षणः कः। एवं "ध्रुव

स्थैर्ये"इत्यस्मादपि कः। यद्वा "ध्रु गतिस्थैर्ययोः"पचाद्यच्। कुटादित्वान्ङित्त्वेन गुणाऽभावे उवङ्। "चट भेदने"पचाद्यच्। ततष्टाप्। अज्ञातादौ कः। "केऽणः"इति ह्रस्वः। पुनष्टाप्।

तारका ज्योतिषि। तारकेतचि। तरतेर्ण्वुल्। अकादेशः। नक्षत्रं नेत्रकनीनिका च ज्योतिः।

प्रावारविशेषः। "वर्ण वर्णक्रियाविस्तारगुणवचनेषु"इति चौरादिकाण्ण्वुल्। तन्तूनां विकारस्तान्तवम्। अन्यत्र वर्णिकेति। ग्रन्थविशेषस्य व्याख्या स्तोत्रकत्री च।

वर्तका शकुनौ प्राचाम्। वर्तकेति। वर्तयतीति वर्तका। शकुनावेव वाच्येऽयं विकल्पः, अन्यत्र नित्यमेवेत्त्वमिति बोध्यम्।

अष्टका पितृदेवत्ये। अष्टकेति। पतरश्च तचा देवताश्च पितृदेवताः। तदर्थं कर्म--पितृदैवत्यम्। देवतान्तात्तादर्थ्ये यत्। अश्नन्ति ब्राआह्णा यस्यां सा अष्टाका। "इष्यशिभ्यां तकन्"। अष्टिकान्येति। अष्टौ परिमाणमस्याः। "सङ्ख्याया अतिशदन्तायाः कन्"।

सूतकापुत्रिकावृन्दरकाणां वेतिवक्तव्यम्। सुतकेति। सूतशब्दात् स्वार्थे कन्।वृन्दमस्यास्तीति मत्वर्थे "श्रृङ्गवृन्दाभ्यां" मित्यारकन्। देवतावाचिवृन्दारकशब्दस्य पुंलिङ्गत्वेऽपि रूपिमुख्यवाचिनोः स्त्रीलिङ्गत्वं संभवत्येव, अतएव "त्रिषूत्तरे"इत्युपक्रम्य "वृन्दारकौ रूपिमुख्यौ"इत्यमरेणोक्तम्।

---

सूत्रम्

काशिका-वृत्तिः

उदीचामातः स्थाने यकपूर्वायाः ७।३।४६

उदीचाम् आचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्च आतः स्थाने यो ऽकारः, तस्यातः स्थाने इकरादेशो भवति। उदीचां ग्रहणं विकल्पार्थम्। इभ्यिका, इभ्यका। क्षत्रियिका, क्षत्रियका। ककारपूर्वायाः चटकिका, चटकका। मूषिकिका, मूषिकका। आतः इति किम्? साङ्काश्ये भवा साङ्काश्यिका। स्थानग्रहणम् अनुवादे ऽपि स्थानसम्बन्धप्रतिपत्त्यर्थम्। आतः इत्यनेन ह्यतः इति स्थानी विशिष्यते। यकपूर्वायाः इति किम्? अश्वा अश्विका। यकपूर्वायाः इति स्त्रीलिङ्गनिर्देशः आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थम्। इह न भवति, शुभं याति इति शुभंयाः शुभंयिका। भद्रं याति इति भद्रंया भद्रंयिका। यकपूर्वाया धात्वन्तप्रतिषेधः। धात्वन्तयोः यकारककारयोरस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः। सुनयिका। सुशयिका। सुपाकिका। अशोकिका।

न्यासः

उदिचामातः स्थाने यकपूर्वायाः। , ७।३।४६

पूर्वेण नित्यमित्त्वे प्राप्ते विकल्पार्थं वचनम्()। यकौ पूर्वे। यस्याः सा यकपूर्वा। कोऽन्यपदार्थः? समुदायः। तथा हि, पूर्वशब्दोऽवयवे वत्र्तते। स चावयवः समुदायस्य भवति, नावयवान्तरस्य। न हि वर्णो वर्णस्यावयवो भवति। अवयवान्तरापेक्षस्तु तस्य पूर्वत्वव्यपदेशः। तत्? पुनरवयान्तरं प्रकृतत्वात्? स्थान्यकार एव विज्ञायते। स्त्रीलिङ्गनिर्देशस्तु तस्य[तस्येत्यारभ्य "तु" इति पर्यन्तं मुद्रितन्यासे नोपलक्ष्यते] समुदायस्यार्थधर्मेण स्त्रीत्वेन वेदितव्यः। प्रयोजनं तु तस्य वक्ष्यते। "आतः स्थाने" इति। योऽकार इति व्यवहितेन सम्बन्धः। "इभ्यिका" इत्यादि। इभ्यादिशब्देभ्यः "प्रागिवात्? कः" ५।३।७०, "केऽणः" ७।४।१३ इति ह्रस्वः। "सांकाश्यिका" इति। "धन्वयोपधाद्वुञ्()" ४।२।१२०। नात्रातः स्थानेऽकार इति नित्यमेवेत्त्वम्()। अथ स्थानग्रहणं किमर्थम्(), यावतात्? इत्येषैव षष्ठी स्थानेयोगं

प्रतिपादयिष्यति, "षष्ठी स्थानेयोगा" (१।१।४९) इति वचनात्()? इत्यत आह--"स्थानग्रहणम्()" इत्यादि॥ अकारस्य स्थाने लक्षणान्तरेण दिहितस्याकारस्य संकीत्र्तनम्()नुवादः। अत्रापि स्थाने सम्बन्धप्रतिपत्तिर्यथा स्यात्()--इत्येवमर्थं स्थानग्रहणम्()। किं पुनः कारणम्()--असति स्थानग्रहणेऽनुवादे सम्बन्धप्रतिपत्तिर्न स्यात्()? इत्याह--"आत इत्यनेन" इत्यादि। आदेशविधौ "अस्तेर्भूः" २।४।५२ इत्येवमादौ "षष्ठी स्थानेयोगा" १।१।४८ इत्येषा परिभाषोपतिष्ठते, न त्वनुवादे; विधिवाक्यशेषभूतत्वादस्याः। न चात्राकारस्य स्थानेऽकारोऽनेन विधीयते, किं तर्हि? लक्षणान्तरेणाभिनिर्वृत्तोऽनेन विशिष्यते--आतः स्थाने योऽकार इति। तेन नात्र तस्याः परिभाषाया उपसथानमिति तत्र यदि स्थानग्रहणं न क्रियेत, तदातः समीपो योऽकार इति सामीप्पसम्बन्धप्रतिपत्तिः स्यात्()। अथ वा पूर्ववत्? प्रश्ने कृत इत्याह--"आत इत्यनेन" इत्यादि। इकारस्य यः स्थानित्वेनोपात्तोऽकारः स आत इत्यनेन विशिष्यते। एवञ्च विशेष्यत्वादकारस्य प्रधान्यम्(); आकारस्य विशेषणत्वादप्राधान्यम्()। तत्रासति स्थानग्रहमे यद्यप#इ सा परिभाषानुवाद उपतिष्ठेत तथापि प्रधाने कार्यसम्प्रत्ययादात इत्यस्या एव षष्ठ्याः स्थानसम्बन्धो विज्ञायेत, न त्वात इत्यस्याः। स्थानग्रहणे तु सत्यस्या अपि विज्ञायते--एतदर्थं स्थानग्रहणम्()। "अ()इआका" इति। पूर्ववत्? कः, ह्यस्वत्वञ्च। अथ "यकपूर्वायाः" इति स्त्रीलिङ्गेन निर्देशः क्रिमर्थः? इत्याह--"स्त्रीलिङ्गेन निर्देशः। असति तस्मिन्नाकारमात्रस्थाने योऽकारस्तस्य स्थानित्वं विज्ञायेत, ततश्च यातेः शुभम्भद्रंशब्दयोरुपपदतः "विजुपे च्छब्दसि" ३।२।७३ इति "आतो मनिब्क्वनिब्वनिपश्च" ३।२।७४ इति विच्()। तदन्तात्? कप्रत्यये शुर्भयिका, भद्रंयिका इत्यत्रापि विकल्पः प्रसज्येत। तस्मात्? तन्निवृत्त्यर्थं स्त्रीलिङ्गनिर्देशः। शुभम्भद्रंशब्दौ मकारान्तौ निपातौ। "यकपूर्वायाः" इत्यादि। ग्रहणवाक्याम्()। तस्य "धात्वन्तयोर्यकारककारयोः" इत्यादि। विवरणम्()। "वक्तव्यम्()" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--व्यवस्थितविभाषाविज्ञानाद्धात्वन्तयोरपि यकारवकारयोरनन्तरस्याकारस्येत्त्वप्रतिषेधः प्राप्नोति, स न भविष्यतीति। "सुनयिका, सुशयिका" इति। णीञ्शीङ्भ्यां "एरच्()" ३।३।५६ इत्यच्()। शोभनो नयोऽस्याः, शोभनः शयोऽस्याः--सुनया, सुशया, ततः "प्रागिवात्? कः"५।३।७०, "केऽणः" ७।४।१३ इति ह्यस्वत्वम्()। "सुपाकिका", "अशोकिका" इति। "डुपचष्? पाके" (धा।पा।९९६), "शुच शोके" (धा।पा।१८३), भावे घञ्()। शोभनः पाकोऽस्याः, अविद्यमानः शोकोऽस्या इति बहुव्रीहिः, "शेषाद्विभाषा" ५।४।१५४ इति कप्(), "आपोऽन्यतरस्याम्()" ७।४।१५ इति ह्यस्वत्वम्()॥

बाल-मनोरमा

उदीचामातः स्थाने यकः पूर्वायाः ४५९, ७।३।४६

उदीचामातः। "प्रत्ययस्थात्" इति सूत्रमनुवर्तते। यश्च कश्च यकौ, तौ पूर्वौ यस्या इति विग्रहः। यकेति वर्णग्रहणम्, अकारावुच्चारणार्थौ। "यकपूर्वाया" इत्येतदात इत्यस्य विशेषणम्। तेन अर्थगतं स्त्रीत्वमाकारे आरोप्य "यकपूर्वाया" इति स्त्रीलिङ्गनिर्देशः। तेन आकारस्य स्त्रीवाचकत्वं लभ्यते। तदाह--यकपूर्वस्येत्यादिना। उदीचांग्रहणं विकल्पार्थमेव नतु देशतो व्यवस्थार्थमिति "न वेति विभाषा" इति सूत्रे बाष्ये स्पष्टम्। नच "षष्ठी स्थानेयोगा" इत्येव सिद्धेरिह स्थानेग्रहणं व्यर्थमिति वाच्यम्, अनुवादे परिभाषाणामनुपस्थितेः। तत्र च इदमेव स्थानेग्रहणं ज्ञापकम्। अत एव "वृद्धिर्यस्याचामादिस्तद्वृद्ध"मित्यत्र यस्यादिर्वृद्धिरित्यनुवादे इक्परिभाषा न प्रवर्तते। तत्प्रवृत्तौ तु शालाशब्दस्य वृद्धसंज्ञा न स्यात्, शकारादाकारस्य इक्श्तानिकत्वाऽभावात्। ततस्च शालीय इति "वृद्धाच्छः" इति छो न स्यात्, "औपगवीय" इत्यादावेव स्यादित्यलम्। केऽण इति ह्रस्व इति। आर्याशब्दात्स्वार्थिके कप्रत्यये यकाराकारस्य "केऽणः" इति ह्रस्व इत्यर्थः। पुनष्टापि आर्यकाशब्दः। तत्र यकारादकारस्य आकारस्थानिकत्वादित्त्वविकल्पः। "प्रत्ययस्था"दिति नित्यस्येत्त्वस्यापवादः। तदाह--आर्यका-आर्यिकेति। यकारपूर्वस्य उदाहरणमिदम्। अथ ककारपूर्वस्य उदाहरति--चटकका चटकिकेति। चटकाशब्दात्स्वार्थे कः, "केऽणः" इति ह्रस्वः, पुनष्टाप्, इत्वविकल्प इति भावः।

साङ्खाश्यिकेति। सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम्। "वृञ्छणकठ"जित्यादिना सङ्काशिदभ्यो ण्यः, आदिवृद्धिः, "यस्येति चे"त्यकारलोपः। साङ्काश्यशब्दाद्भवार्थे "धन्वयोपधाद्वुञ्"। अकादेशः "यस्येति चे"त्यकारलोपः, टाप्, "प्रत्ययस्था"दिति नित्यमित्त्वम्। इह यकारादकारस्य आकारस्थानिकत्वाऽभावादित्त्वविकल्पो न भवतीति भावः। ननु स्त्रीबोधकस्य अत इद्वा स्यादित्येवास्तु, आत इति मास्तु। साङ्काश्यकाशब्दे यकारादकारस्य वुञादेशावयवत्वेन स्त्रीबोधकत्वाभाऽदिति चेत्, तह्र्रात् इति स्पष्टार्थमित्याहुः। अ()इआकेति। अ()आआशब्दात्कः, "केऽणः" इति ह्रस्वः, पुनष्टाप्, अ()आकाशब्दः। अत्र अकारस्य आकारस्थानिकत्वेऽपि यकपूर्वकत्वा।ञभावादित्त्वविकल्पो न, किंतु "प्रत्ययस्था"दिति नित्यमित्त्वमिति भावः। स्त्रीप्रत्यय इति किमिति। "यकपूर्वाया" इति स्त्रीलिङ्गनिर्देशलब्धं स्त्रीप्रत्ययस्येति किमर्थमिति प्रश्नः। शुभंयिकेति। "शुभ"मिति मान्तमव्ययम्। तस्मिन्नुपपदे "या प्रापणे" इति धातोः "अन्येभ्योऽपि दृश्यते" इति विच्। शुभंयाशब्दात्स्वार्थे कः। "केऽणः" इति ह्रस्वः, टाप्, शुभंयकाशब्दः। अत्र यकारादकारस्य धात्ववयवस्य स्त्रीवाचकत्वाऽभावादित्त्वविकल्पो न, किन्तु "प्रत्ययस्थात्" इति नित्यमेवेत्त्वमिति भावः।

"यक पूर्वे धात्वन्तप्रतिषेधः" इति वार्तिकमर्थतः संगृह्णाति--धात्वन्तयकोस्तु नित्यमिति। यश्च कश्चेति विग्रहः। धात्वन्तयकारककारयोरुपरि विद्यमानस्य अकारस्य नित्यमित्त्वम्, न तु विकल्प इत्यर्थः। सुनयिकेति। णीञ्धातोः पचाद्यच्। "सार्वधातुकार्धधातुकयो"रिति गुणेऽयादेशे नयशब्दः। सु=शोभनो नयो यस्याः सा सुनया। ततः स्वार्थे कः, "केऽणः" इति ह्रस्वः। पुनष्टाप्, सुनयकाशब्दः। अत्र यकारस्य धात्वन्तत्वात्ततः परस्याऽकारस्य नेत्वविकल्पः, किंतु "प्रत्ययस्था"दिति नित्यमित्त्वमिति भावः।

तत्त्व-बोधिनी

उदीचामताः स्थाने यकपूर्वायाः ४१४, ७।३।४६

उदीचाम्। यकौ पूर्वौ यस्याः सा। अर्थगतं स्त्रीत्वमाकारे आरोप्य "यकपूर्वाया"इति स्त्रीलिङ्गनिर्देशः। तेन स्त्रीप्रत्ययो लभ्यत इत्यह--स्त्रीप्रत्ययाऽकारस्येति। अत्र "न यासयो"रित्यतो "ने"ति वर्तते। यकपूर्वस्य स्त्रीप्रत्ययाऽऽकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्योदीचां मते इत्त्वं नेत्यक्षरार्थः। एवं स्थिते फलितमाह---इद्वास्यादिति। एवमग्रेऽप्यूह्यम्। "षष्ठी स्थानेयोगे"त्यनेनैव लब्धे सूत्रे स्थानग्रहणमनूद्यमानविशेषणेषु परिभाषानोपतिष्ठत, तदा औपगवीय इत्यादावेव "वृद्धाच्छः"स्यात् नतु "शलीयः""मालीय"इत्यादौ।तत्र ह्याकारवृद्धेरिक्स्थानिकत्वाऽभावात्। तथा "अतो गुणे"इत्यत्रेक्परिभाषोपस्थितौ "एधे""पचे""यजे"इत्यादावेव पररूपं स्यात्। "टित आत्मनेपदाना"मिति इट एत्वे कृत्वे इक्स्थानिकत्वादेकारगुणस्य। "भवन्ती""पचन्ती"त्यादौ न स्यात्, तत्रेक्स्थानिकत्वाऽभावादकारगुणस्येत्यपि बोध्यम्। नव्यास्तु वृद्धाच्छं बाधित्वा "अणृगयनादिभ्यः"इत्यण्प्रत्ययो यथा स्यादित्येतदर्थभृगयनादिगणे व्याकरणशब्दः पठ()ते। यद्यनूद्यमानविशेषणेषु परिभाषा उपतिष्ठेरन् तर्हि तत्पठनं व्यर्थं स्यात्। आकारवृद्धेरिक्स्थानिकत्वाऽभावने वृद्धसंज्ञाया अभावाच्छस्याऽप्रवृत्तेः। तथा च तस्मादेव पाठादुक्तार्थज्ञापनसंभवे स्थानेग्रहणमिह स्पष्टर्थमित्याहुः। साङ्काश्यिकेति। शङ्काशेन निर्वृत्तं नगरं साङ्काश्यं, "वृञ्छ"णादिसूत्रेण "सङ्काशादिभ्योः ण्यः"। ततो भवार्थे "धन्वयोपधाद्वुञ्"। अकादेशः। स च साङ्काश्यभवां स्त्रियमाहेति तदकारस्यापि वैकल्पिकमित्त्वं स्यात्, तस्मादात इत्युक्तम्। अत्र वदन्ति--यथाऽयमकारो नाऽऽकारस्थानिकः, एवं स्त्रीप्रत्ययस्थानिकोऽपि नेति व्यङ्गविकलमेतत्, "अके"ति समुदायस्य स्त्रीवाचकवुञ्स्थानिकत्वेऽप्यकारमत्रस्याऽतथात्वात्। तस्मादात इति स्पष्टार्थमेवेति। शुभंया इति। "अन्येभ्योऽपि दृश्यते"इति विच्। "शुभ"मिति मान्तो निपातः।

धात्वन्तयकोस्तु नित्यम्। सुनयिकेत। सुष्ठु नयो यस्याः सा सुनया। ततः कः। "केऽणः"इति ह्रस्वः। एवं सुष्ठु पाको

यस्याः सा सुपाकिका।

---

सूत्रम्

काशिका-वृत्तिः

भस्त्राएषाऽजाज्ञाद्वास्वा नञ्पूर्वाणाम् अपि ७।३।४७

एषाम् आतः स्थाने यो ऽकारस् तस्य इत्वं न भवति उदीचामाचर्याणां मतेन। भस्त्रा भस्त्रका, भस्त्रिका। अभस्त्रका, अभस्त्रिका। एषा एषका, एषिका। अजा अजका, अजिका। अनजका, अनजिका। ज्ञा ज्ञका ज्ञिका। अज्ञका, अज्ञिका। द्वा द्वके, द्विके। स्वा स्वका, स्विका। अस्वका, अस्विका। एषाद्वे नञ्पूर्वे न प्रयोजयतः। किं कारणम्? तत्र हि सति यदि साकच्काभ्यां नञ्समासः, अथापि कृते नञ्समासे पश्चादकच्, उभयथापि समासाद् य विभक्तिरुत्पद्यते तस्यां सत्यां त्यदात्यत्वे सति टापा भवितव्यम्, सो ऽन्तर्वर्तिन्या विभक्त्या सुबन्तात् परः इति इत्वस्य प्राप्तिरेव न अस्ति। तेन अनेषका, अद्वके इत्येव नित्यं भवितव्यम्। स्वशब्दस्तु ज्ञातिधनाख्यायां नञ्पूर्वो ऽपि प्रयोजयति। भस्त्रा इत्ययम् अभाषितपुंस्कः, तस्य अभाषितपुंस्काच् च ७।३।४८ इत्येव सिद्धे यदिह ग्रहणं तदुपसर्जनार्थम्। अविद्यमाना भस्त्रा यस्याः अभस्त्रा। साल्पा अभस्त्रका, अभस्त्रिका। अत्र उपसर्जनह्रस्वत्वे कृते पुनर् बहुव्रिहौ कृते भाषितपुंस्काद् यः टापुत्पद्यते तस्य के ऽणः ७।४।१३ इति यो ह्रस्वः, न असौ अभासितपुंस्काद् विहितस्य अतः स्थाने भवति। नञ्पूर्वाणाम् अपि इत्यपिशब्दादन्यपूर्वाणां केवलानां च विधिरयम् इष्यते। निर्भस्त्रका, निर्भस्त्रिका, बहुभस्त्रका, बहुभस्त्रिका, इत्येवम् अनयोरपि इष्यते। अत्र नञ्पूर्वाणाम् इति वचनम् अनुवाद एव मन्दबुद्धिप्रतिपत्त्यर्थः।

न्यासः

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि। , ७।३।४७

"भस्त्रका, भस्त्रिका" इति। पूर्ववत्? कः। "अभस्त्रका, अभस्त्रिका" इति। पूर्ववत्? कप्रत्ययः, बहुव्रीहिः, ततपुरुषो वा। अथ कस्मादेषा--द्वे नञ्पूर्वे नोदाह्रियेते? इत्याह--"एषाद्वे नञ्पूर्वे न प्रयोजयतः" इति। प्रकृतत्वादित्त्वप्रतिषेधविकल्प इति विज्ञेयम्()। "किं कारणम्()" इति। अनेन नञ्पूर्वयोरप्रयोजकत्वे कारणं पृच्छति। "अत्र हि" इत्यादिना तत्करं दर्शयति। "सोऽन्तर्वर्तिन्या विभक्त्या" इति। याऽसौ समासार्था विभक्तिस्तया लुप्तयाऽपि प्रत्ययलक्षणेन स आप्सुबन्तादेवैतच्छब्दाद्? द्विशब्दाच्च परः सम्पद्यते, तेनेत्त्वस्य प्राप्तिरेव नास्ति; "असुपः" ७।३।४४ इति प्रतिषेधात्(), त()त्क प्रतिषेधविकल्पेन? तस्मादेषाद्वे नञ्पूर्वे न प्रयोजयतः। यद्येवम्(), अनयैव युक्त्या स्वशपब्दोऽपि न प्रयोजयेत्()? इत्यत आह--"स्वशब्दस्तु" इत्यादि। युक्तं यदेषाद्व नञ्पूर्वे न प्रयोजयतः, अत्र व्यवधानाभावात्? सुबन्तात्? पर आब् भवतीति कृत्वा, न हि प्राक्? टेर्भवन्नकज्? व्यवधायको भवितुमर्हति; स्वशब्दस्तु "स्वमज्ञाति धनाख्यायाम्()" १।१।३४ इति वचनाज्ज्ञातिधनयोरसर्वनामसंज्ञकः, तेन तस्मात्? कप्रत्ययेनैव भवितव्यम्(), नाकचा, तत्र यदि नञ्समासं कृत्वा कप्रत्ययः क्रियते, तदन्ताच्च टाप्(), तदासौ सुबन्तात्? परो न भवति; कप्रत्ययेन व्यवधानादिति असर्वनामंज्ञकः स्वशब्दो नञ्पूर्वोऽपि विकल्पं प्रयोजयति। "भस्त्रेत्ययमभाषितपुंस्कः" इति। स्त्रियामेव सर्वदा वृत्तेः। यद्येवम्(), "अभाषितपुंस्काच्च" ७।३।४८ इत्यनेनैव विकल्पः सिद्धः, तत्किमर्थमिहोपादीयते? इत्यत आह--"तस्य" इत्यादि। उपसर्जनमर्थः प्रयोजनं यस्य तत्? तथोक्तम्()। यदानुपसर्जनं भस्त्राशब्दो भवति, तदायमभाषितपुंस्क इति सत्यमुत्तरसूत्रेण सिद्धो विकल्पः; तत्रापि नञ्पूर्वाणामित्यनुषृत्तेः। यदा तूपसर्जनं भवति, तदा भाषितपुंस्कत्वं प्रतिपद्यत इति न सिध्यति। तस्मादुपसर्जनस्य भाषितपुंस्कस्यापि यथा स्यादित्येवमर्थमिह भस्त्राशब्दस्य ग्रहणम्()। "अभस्त्रका, अभस्त्रिका" इति। "अल्पे" (५।३।८५) इत्यर्थे "प्रागिवात्? कः" ५।३।७० "अत्र" इति। उपन्यस्त उदाहरणे। "उपसर्जनह्रस्वत्वे कृते" इति। अविद्यमाना भस्त्राऽसया इति बहुव्रीहौ कृते "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इत्यनेन।

"पुनः" इत्यादि। अभस्त्रशब्दो हि बहुव्रीहिः, स पुंस्यपि वत्र्तत इति भाषितपुंस्को भवति। तस्माद्यदा टाप्? स भाषितपुंस्कशब्दादुत्पदयते। तसय भाषितपुंस्कादुत्पन्नस्यापि टापो यः "केऽणः" ७।४।१३ इति ह्यस्वो भवति, नासावभाषितपुंस्काद्विहितस्यातः स्थाने भवति। तस्मादभाषितपुंस्कादित्यनेन न सिध्यति--इत्यभिप्रायः। "नञ्पूर्वाणामपीत्यपिशब्दादन्यपूर्वाणां केवलानां च विधिरयमिष्यते" इति। तत्रोदाहरणमाह--"निर्भस्त्रिका" इत्यादि। निर्गता भस्त्रा यस्याः सा निर्भस्त्रिका। वह्व्यो भस्त्रा यस्याः सा बहुभस्त्रिका। आदिशब्देन सुभस्त्रका, सुभस्त्रिका; भस्त्रका, भस्त्रिका-इत्येवमादीनां ग्रहणम्()। यदि तह्र्रन्यपूर्वाणां केवलानां च विधिरिष्यते, तदा "नञ्पूर्वाणाम्()" इति वचनमनर्थकं स्यात्()। नञादिपूर्वाणां तदन्तविधिना भविष्यति, केवलनाञ्च व्यपदेशिवद्भावेन; "ग्रहणवता प्रतिपदिकेन तदन्तविधिर्न" (व्या।प।८९) इति। "व्यपदेशिवद्भावोऽप्रातपदिकेन" (धा।प।पा।६५) इति वचनान्न सिध्यतीत्येतच्च नाशङ्कनीयम्(), उभे अपि ह्येते परिभाषे प्रत्ययविधिविषये एवेत्यत आह--"अत्र" इत्यादि। तदन्तवधिना व्यपदेशिवद्भावेनात्र सिद्धस्यैव प्रकरविधेर्नञ्पूर्वाणामपीति वचनानुवादः। किमर्थः? मन्दबुद्धिप्रतपत्त्यर्थः। नञ्पूर्वाणामपीति वचनमन्तरेण यः प्रतिपत्तुमनन्तरोक्तमर्थमसमर्थस्तस्यापि मन्दबुद्धेः प्रतिपत्तिर्यथा स्यादित्येवमर्थम्()॥

बाल-मनोरमा

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ४६०, ७।३।४७

भस्त्रैषा। यकपूर्वत्वाऽभावात् "उदीचा"मित्यप्राप्तौ वचनमिदम्। स्वेत्यन्तमिति। भस्त्रा, एषा, अजा, ज्ञा, द्वा, स्वा एषां षण्णां द्वन्द्वः। ततः षष्ठ()आ आर्षो लुक्। "भस्त्रैषाजाज्ञाद्वास्वाना"मिति विवक्षितमिति भावः। एषामिति। भस्त्रादीनामित्यर्थः।अत इद्वेति। पूर्वसूत्रादुदीचाङ्ग्रहणस्य "प्रत्ययस्था"गिति सूत्रादिदित्यस्य चानुवृत्तेरिति भावः। नन्वाङ्गत्वात्तदन्तविधौ भस्त्रादिशब्दान्तानामिति लभ्यते, व्यपदेशिवत्त्वेन केवलानामपि लभ्यते। एवं च नञ्पूर्वाणां तद्भिन्नपूर्वामां केवलानां च सिद्धे नञ्पूर्वाणामपीति व्यर्थमिस्यत आह--तदन्तविधिनैवेति। ननु तदन्तविधिना भस्त्रादिशब्दानां नञ्पूर्वाणामनञ्पूर्वाणां च प्राप्तौ, नञ्पूर्वाणामेवेति नियमार्थं नञ्पूर्वग्रहणम्। तथा सति केवलानां भस्त्रादिशब्दानां ग्रहणव्यावृत्तिः स्यादित्यपिशब्द इति व्याख्यातुमुचितमिति चेन्न, एवं सति निर्भस्त्रिकेत्याद्यसिद्धेः। तस्मान्नञ्पूर्वाणामिति स्पष्टार्थमेवेति भाष्ये स्पष्टम्। ननु भस्त्राशब्दस्य नित्यस्त्रीलिङ्गतया "अभाषितपुंस्काच्चे"त्युत्तरसूत्रेणैव इत्वविकल्पसिद्धेरिह भस्त्राग्रहणं व्यर्थमित्यत आह--भस्त्राग्रहणमुपसर्जनार्थमिति। "निर्भस्त्रिके त्युपसर्जनत्वे त्रिलिङ्गतया भाषितपुंस्कत्वेन तत्र "अभाषितपुंस्काच्चे"त्यस्य अप्रवृत्तेरिति भावः। अन्यस्य त्विति। उपसर्जनादन्यस्य भस्त्रशब्दस्य तु भस्त्रिका परमभस्त्रिकेत्यत्र नित्यस्त्रीलिङ्गतया "अभाषितपुंस्काच्चे"त्युत्तरसूत्रेणैव पाक्षिकमित्त्वं सिद्धम्। अतो "भस्त्रैषा" इत्यत्र भस्त्राग्रहणं तदर्थं न भवतीत्यर्थः। नन्वनेषका, परमैषका, अद्वके, परमद्वके इत्यत्रापि पाक्षिकमेतदित्त्वं स्यादित्यत आह--एषा द्वेति। एषा द्वा एतयोस्तु पूर्वपदसहितयोरिदं पाक्षिकमित्त्वं नेत्यर्थः। कुत इत्यत आह--अन्तर्वर्तिनीमिति। "इदाप्यसुपः" इत्यनुवर्तते। इह तु टाप् सुपः पर इति भावः। ननु टाबत्र सुपः परो न भवति। तथाहि--एतच्छब्दस्य टेः प्राक् "अव्ययसर्वनाम्नाम्" इत्यकचि, एतकच्छब्दात्सौ "तदोः सः सौ" इति तकारस्य सत्वे, "आदेशप्रत्यययोः" इति षत्वे, त्यदाद्यत्वे, पररूपे, स्त्रियाभादन्तत्वाट्टापि, सवर्णदीर्घे, हल्ङ्यादिलोपे, एषकेति रूपम्। ततो न एषकेति विग्रहे नञ्चच्पुरुषे कृते, "नलोपो नञः" इति नञो नकारस्य लोपे, "तस्मान्नुडची"ति नुटि, अनेषकेति रूपम्। तथा परमा एषकेति कर्मधारये, परमैषकेति रूपम्। अत्र सौ परे प्रवृत्तत्यदाद्यत्वसिद्धमदन्तत्वामाश्रित्य प्रवृत्तष्टाप्कथं सुपः परः स्यात्। नच नञ्तत्पुरुषे सोः सामासिके लुकि सति, सत्वत्यदाद्यत्वटाब्निवृत्तौ, समासात्पुनः सौ, सत्वत्यदाद्यत्वटाप्सु कृतेषु, भल्ङ्यादिलोपे, अनेषकेत्यत्र समासात्प्राक् प्रवृत्तात्सुपः पर एव टाबिति वाच्यं, सामासिकलुगपेक्षया हल्ङ्यादिलोपस्यैवान्तरङ्गत्वात्प्रवृत्तेः। ततश्च

लुप्तेष()पि सौ प्रत्ययलक्षणसत्त्वेन निमित्तानपायात्पूर्वप्रवृत्तसत्वत्यदाद्यत्वटापां निवृत्तिर्नास्ति। सच टाप्न सुपः पर इति चेत्, अत्र ब्राऊमः अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाध्ते" इति परिभाषया "सुपो धातुप्रातिपदिकयोः" इति सुब्लुग्विषयेऽन्तरङ्गोऽपि हल्ङ्यादिलोपो न प्रवर्तते। अतो राजकुमारीत्यादौ श्रूयमाणे एव सुपि समासः प्रवर्तते। एवंच गोमान् प्रियो यस्य स गोमत्प्रिय इत्यत्र गोमच्छब्दात्सोर्लुका लुप्तत्वादुगितचामिति नुमुपधादीर्घादिकं नेति "प्रत्ययोत्तरपदयोश्चे"ति सूत्रभाष्ये स्थितम्। "कृत्तद्धिते"ति सूत्रे प्रौढमनोरमायां परिष्कृतमेतत्। एवंच नञ् सु ए तरद् सु इति स्थिते, नञ्तत्पुरुषे कृते, "अन्तरङ्गानपी"ति न्याय#एन त्यदाद्यत्वप्रवृत्तेः प्रागेव सामासिकलुकि, अनेतकच्छब्दात् समासात्पुनः सौ, सत्वे, त्यदाद्यत्वे, पररूपे, टापि, सवर्णदीर्घे, सोर्हल्ङ्यादिलोपे, अनेषकेति भवति। अत्र सवर्णदीर्घप्रवृत्तेः प्राक्समासात्पूर्वोत्पन्नसुपः पर एव टाब्भवतीत्यास्तां तावत्।

अद्वके इति। न सु द्वकि औ इति स्थिते, नञ्तत्पुरुषे "अन्तरङ्गानपी"ति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव समासे औङो लुकि कृते, अद्वकिशब्दात्समासात्पुनरौङि, त्यदाद्यत्वे, पररूपे, टापि, औङश्शीभावे, आद्गुणे, अद्वके इति भवति। अत्रापि समासात्पूर्वोत्पन्नादौङः सुपः पर एव टाबिति भावः। एवं परमद्वके इत्यत्रापि।

स्यादेतत्--आत्मात्मीयज्ञातिधनवाची स्वशब्दः। तत्र ज्ञातावात्मनि च पुंलिङ्ग एव, आत्मीये तु विशेष्यनिघ्नः स्त्रीलिङ्गः। धने तु पुंनपुंसकलिङ्गः, "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इति कोशात्। यदा तु स्त्रीव्यक्तिविशेषस्य स्वशब्दः संज्ञा तदापि स्त्रीलिङ्गः। तत्र "स्वमज्ञातिधनाख्याया"मित्युक्तेः ज्ञातिधनवाचित्वे सर्वनामत्वं नास्ति। आत्मात्मीयवाचिन एव सर्वनामता, साप्यनुपसर्जनस्यैव भवति, "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इत्युक्तेरिति स्थितिः। तत्रात्मीयायां वाच्यायां सर्वनामत्वादकचि, टापि, "प्रत्ययस्था"दिति नित्यमित्त्वे, स्विकेत्येवष्यते। तत्तु न युज्यते। "भस्त्रैषा" इत्यादिना इत्त्वविकल्पस्य दुर्वारत्वात्। नचात्र अकजकारस्य आत्स्थानिकत्वाभावान्नायमित्त्वविकल्प इति वाच्यम्, "एषामत इद्वा स्या"दिति विवरणवाक्ये आतः स्थाने इत्यनुवृत्तेरदर्शनादित्यत आह--स्वशब्दग्रहणं संज्ञोपसर्जनार्थमिति। स्वशब्दस्य संज्ञाभूतस्य सर्वनामत्वाऽभावादकजभावे, स्त्रियां टापि, सौ कृते, "स्वार्थिककप्रत्यये, उक्तरीत्या " अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इति परिभाषया हल्ङ्यादिल#ओपं बाधित्वा प्रातिपदिकावयवत्वात्सोर्लुकि, केऽणः" इति ह्रस्वेः कप्रत्ययान्तात्पुनष्टापि, स्वकाशब्दः। निर्गता स्वस्या इति विग्रहे "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासे सुब्लुकिं, "गोस्त्रियोः" इति ह्रस्वे, टापि, सुपि, स्वार्थिके कप्रत्यये, "केऽणः"इति ह्रस्वे, पुनष्टापि, निःस्वकाशब्दः। एतद्द्वयमेव "भस्त्रैषा" इति स्वशब्दस्य उदाहरणम्। आत्मीयायां तु स्वशब्दो न संज्ञाभूतः, नाप्युपसर्जनीभूत इति नोदाहरणमित्यर्थः। कुत इत्यत आह--इह हीति। इह "भस्त्रैषा" इति सूत्रे "उदीचा"मिति पूर्वसूत्रादातः स्थाने इत्यनुवृत्तं, तच्च स्वशब्दस्यैव अतो विशेषणम्। एवं च "स्वशब्दस्य आत्स्थानिकस्य अत इद्वा स्या"दिति लभ्यते। एतद्विशेषविवक्षयैव "एषामत इद्वा स्या"दिति विवरणवाक्ये "आतः स्थाने" इत्यस्यानुवृत्तिर्न प्रदर्शितेति भावः। नतु द्वैषयोरिति। द्वा एषा इत्येतयोस्तु विषये आतः स्थान इति न संबध्यत इत्यर्थः। कुत इत्यत आह--असंभवादिति। एषा द्वेति सर्वाद्यन्तर्गणत्वदादित्वप्रयुक्तसत्वात्वनिर्देशेन सर्वनामत्वावश्यकत्वादकच्। तदकारस्य आत्स्थानिकत्वस्याऽप्रसक्तेरित्यर्थः। नाप्यन्येषामिति। भस्त्राजाज्ञाशब्दानामपि आतः स्थान इति विशेषणं नेत्यर्थः। कुत इत्यत आह--अव्यभिचारादिति। भस्त्राऽजाज्ञाशब्दानां सर्वनामत्वाऽभावेनाकजनर्हतया कप्रत्ययान्ततया तेषु "केऽणः" इति ह्रस्व संपन्नस्य अत आत्स्थानिकत्वनियमेन तद्विशेषणवैयर्थ्यादित्यर्थः। नन्वातः स्थाने इत्यनुवृत्तं स्वशब्दस्य अतो विशेषणमस्तु, तावता आत्मीयायां स्विका इत्यत्र इत्त्वविकल्पशङ्कायाः किमायातमित्यत आह--स्वशब्दस्त्विति। अनुपसर्जनात्मीयवाची स्वशब्दस्तु सर्वनामत्वादकजर्हः। अतस्तदकारस्य आत्स्थानिकत्वाऽभावान्न प्रकृतसूत्रेणेत्त्वविकल्पशङ्का, किं तु "प्रत्ययस्था"दिति नित्यमेव इत्वमित्यर्थः। ननु

स्वशब्दस्य आत्मात्मीयज्ञातिधनवाचिन आत्मीयायामुदाहरणत्वाभावेऽपि आत्मज्ञातिधनवाचिनस्तस्य उदाहरणत्वसंभवात्स्वशब्दग्रहणं संज्ञोपसर्जनार्थमित्यनुपपन्नमित्यत आह--अर्थान्तरे तु न स्त्रीति। आत्मज्ञातिधनेषु स्वशब्दो न स्त्रीलिङ्गः। उदाह्मतकोशरीत्या आत्मज्ञातिवाचिनः स्वशब्दस्य नित्यपुंलिङ्गत्वाद्धनवाचिनस्तस्य पुंनपुंसकलिङ्गत्वाच्चेत्यर्थः। तथा च "टापि परे" इत्यस्याऽभावान्नोदाहरणत्वप्रसक्तिः। "प्रत्ययस्था"दित्यत आपीत्यनुवृत्तेरिति भावः। इदमुपलक्षणम्, आत्मनि वाच्ये स्वशब्दस्य सर्वनामत्वेन अकजर्हतया तदकारस्य आत्स्थानिकत्वाऽभावाच्चेत्यपि द्रष्टव्यम्। ननु संज्ञोपसप्जनीभूतस्यापि स्वशब्दस्य कथमुदाहरणत्वम्(), तस्याप्यकचि तदकारस्य आत्स्()थानिकत्वाऽभावादित्यत आह--संज्ञोपसर्जनीभतस्त्विति। संज्ञोपसर्जनीभूतस्य स्वशब्दस्य असर्वनामतया अकजनर्हत्वेन स्वाशब्दात्सुबन्तात्स्वार्थिके कप्रत्यये, सुब्लुकि पुनष्टापि, "केऽणः" इति ह्यस्वापन्नस्याऽत आत्स्थानिकतया भवत्युदाहरणत्वमित्यर्थः। नचान्तर्वर्तिसुपः परष्टाबिति शङ्क्यं, केन व्यवधानादिति भावः। तदेवं "भस्त्रैषा" इत्यत्र "आतः स्थाने" इत्यनुवृत्तस्य स्वशब्देऽन्वयलाभात्स्वशब्दावयवस्य आत्स्थानिकस्य अत इद्वा स्यादिति लब्धम्, तस्य प्रयोजनमाह--एवं चेति। उक्तरीत्या स्वशब्दे आत्स्थानिकस्यैवाऽत इत्त्वविकल्पलाभादात्मीयायां स्वशब्दस्य सर्वनामत्वादकचि तदकारस्य आत्स्थानिकत्वाऽभावादित्त्वविकल्पाऽप्रवृत्तौ "प्रत्ययस्था"दिति नित्यमेवेत्त्वमित्यर्थः। तदेवं प्रत्युदाहणान्युक्त्वा उदाहरणान्याह--निर्भस्त्रकेत्यादि। भस्त्राया निष्क्रान्तेति विग्रहे "निरदयः क्रान्ताद्यर्थे" इति समासे, "गोस्त्रियोः" इति ह्यस्वत्वे, पुनष्टापि, समासात्सौ, कप्रत्यये, "केऽणः" इति ह्यस्वे, निर्भस्त्रकशब्दात्पुनष्टापि, सवर्णदीर्घे, निर्भस्त्रकाशब्दः। तत्र "प्रत्ययस्था"दिति नित्यमित्त्वे प्राप्तेऽनेनेत्त्वविकल्पे निर्भस्त्रिका निर्भस्त्रकेति रूपद्वयम्। केन व्यवधानान्न सुपः परष्टाबिति भावः। एषका एषिकेति। अकचि एतकच्छब्दात्सुः। "तदोः सः सौ" इति सत्वं, षत्वं, त्यदाद्यत्वं, पररूपं, टाप्। "प्रत्ययस्थात्" इति नित्यमित्त्वं बाधित्वा इत्त्वविकल्प इति भावः। नन्वकचि एतकच्छब्दात्स्त्रियामौजसादिषु एतिके एतिका इत्यादौ नित्यमित्त्वमिष्यते। तद्बाधित्वाऽनेन इत्त्वविकल्पः स्यादित्य आह--कृतषत्वेति। "भस्त्रैतज्ज्ञास्वा" इति वक्तव्ये एषेति कृतषत्वनिर्देशादौजसादिषु षत्वाऽभावान्नेत्त्वविकल्प इत्यर्थः। अजका अजिकेति। अजाशब्दात्कः, ह्यस्वः, पुनष्टाप्, सवर्मदीर्घः, इत्त्वविकल्पः। ज्ञका ज्ञिकेति। ज्ञाधातोः "इगुपधज्ञाप्रीकिरः कः" इति कः, "आतो लोप इटि चे"त्याल्लोपः। स्त्रियामदन्तत्वाट्टाप्, सवर्णदीर्घः। ज्ञाशब्दात्सुबन्तात्कः, सुब्लुक्, "केऽणः" इति ह्यस्वः, पुनष्टाप्, सवर्णदीर्घः, इत्त्वविकल्प, औङश्शी, आद्गुणः।निःस्वका नि#ःस्विकेति। स्वस्याः निष्क्रान्तेति विग्रहः। "निरादयः" इति समासः। उपसर्जह्यस्वः, टपा, सुपि कः, सुब्लुक्, कप्रत्ययान्तात्पुनष्टापि सवर्णदीर्घः, इत्त्वविकल्प इति भावः।

तत्त्व-बोधिनी

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ४१४, ७।३।४७

भस्त्रैषा। लुप्तषष्ठीकमिति। केचिदिह "स्वाः"इति च्छित्त्वा षष्ठ्याः स्थाने सौत्रत्वाद्दत्ययेन जसिति व्याचक्षते। "प्रत्ययस्थच्छादि"त्यतोऽनुवर्तनादाह---अत इद्वा स्यादिति। ननु "नञ्पूर्वाणामपी"त्यपिशब्देन केवलानां सङ्ग्रहः क्रियते, नतु नञ्भिन्नपूर्वाणामपि। तथा च "निर्भस्त्रिके"त्यादि न सिध्येदतस्तदन्तविधिरावश्यक इत्याशयेनाह--तदन्ताविधिनैवेत्यादि। आङ्गत्वादिति भावः। एवं च "नञ्पूर्वामा"मित्यस्य नियमार्थत्वशङ्का निरस्ता, "निर्भस्त्रिके"त्यादावव्याप्तिप्रसङ्गात्। अन्यस्य त्विति। अनुपसर्जनस्य तु "अभाषितपुस्काच्चे"त्यनेन सिद्धमित्यर्थः।एतयोस्त्विति। भस्त्राजाज्ञास्वानां तु सपूर्वाणामपीत्वं भवत्येव। तत्र टापः कप्रत्ययात्परत्वेन सुपः परत्वाऽभावत् "असुपः"इति निषेधाऽप्रवृत्तेरिति भावः। सपूर्वयोरिति। पूर्वावयवसहितयोः। विद्यमानपूर्वपदकयोरिति यावत्। अन्तर्वर्तिनीमित्यादि। "न सु एतद् सु"इति स्थितेऽकचि कृतेऽकचः प्रागेव वा नञ्तत्पुरुषे कृते "अन्तरङ्गानपी"ति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव सामासिके लुकि विशिष्टात्पुनः सुपि त्यदाद्यत्वे पररूपे च कृते

ततष्टाप्, स च आप् सुपः पर इति भावः। अनेषकेति। अज्ञाता एषा एषका, न एषका अनषका, अज्ञाता अनेषा अनेषकेति वा लौकिकविग्रहोऽत्र बोध्यः। एवमग्रेऽप्यूह्येम्। स्वशब्दस्यातो विशेषणमिति। यद्यपि हरदत्तग्रन्थे "अत्रातः स्थान इत्येतत्स्वशब्दस्य विशेषण"मित्युक्तं, तथापि तत्र "स्वशब्दस्ये"त्यनन्तरमत इति शेषो बोध्य इति भावः। अर्थान्तरे त्विति। आत्मज्ञातिधनेष्वित्यर्थः। नित्यमेवेति। "स्विके"त्यादावकचि कृते आतः स्थानिकोऽकारोऽत्र दुर्लभ इति प्रकृतसूत्रस्याऽविषयत्वात् "प्रत्ययस्था"दिति नित्यमेवेत्त्वप्रवृत्तेः। एवं च "हंसं तनौ संनिहितं चरन्तं मुनेर्मनोवृत्तिमिव स्विकाया"मिति श्रीहर्षश्लोके "भस्त्रैषे"ति वैकल्पिकमित्त्वमिति केषांचिद्व्याख्यानं नादर्तव्यमिति भावः। वस्तुतो "हंसं तनौ---"इति श्लोके "स्विकाया"मिति प्रयोगोऽसाधुरेव। आत्मीयायां स्वशब्दस्य सर्वनामत्वात्स्याडागमपर्वृत्तेरिति नव्याः। प्रत्युदाहरणान्युक्त्वोदाहरणान्याह---निर्भस्त्रिकेत्यादि। निष्कान्ता भस्त्रयाः निर्भस्त्रा। "निरादयः क्रान्ताद्यर्थे पञ्चम्या"इति समासः। उपसर्जनह्यस्वः। टाप्। ततोऽज्ञातादौ कः। "केऽणः"इति ह्यस्वः। पुनष्टाप्। सूत्रे "एषे"ति विकृतनिर्देशो विवक्षितविषयो , न तु "यासयोः"इतिवदुपलक्षणमित्यभिप्रेत्याह---कृतषत्वनिर्देशादिति। इहाऽजाज्ञेति स्त्रीलिङ्गनिर्देशादजादयः स्त्रीलिङ्गः एव गृह्नन्ते, तेनेह विकल्पो न, शभ्रोऽजो यस्याः सा शुभ्राआजिका। जानतीतिः ज्ञः। "इगुपधे"ति कः। प्रियो ज्ञो यस्याः सा प्रियज्ञिकेति।निःस्वकेति। स्वस्या निष्कन्तेति विग्रहो, न त्विह स्विकस्या निष्कान्ततेति। तथात्वे ह्रुपसर्जनेऽपि "निः स्विके"त्येकमेव रूपं स्यात्, आतः स्थानिकाऽकारस्य दुर्लभत्वेन प्रकृतसूत्राऽविषयत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

अभाषितपुंस्काच् च ७।३।४८

अभाषितपुंस्काद् विहितस्य आतः स्थाने यो ऽकारः तस्य उदीचाम् आचार्याणां मतेन इकारादेशो न भवति। खट्वका, खट्विका। अखट्वका, अखट्विका। परमखट्वका, परमखट्विका। बहुव्रीहौ यदा कपि ह्रस्वः क्रियते तदा भवितव्यम् अनेन विधिना। अत्र अपि अभाषितपुंस्काद् विहितस्य अतः स्थाने भवत्यकारः इति। यदा तु अविद्यमाना खट्वा अस्याः अखट्वा, अल्पा अखट्वा अखट्विका इति तदा न भवति। तथा अतिक्रान्ता खट्वाम् अतिखट्वा, अल्पा अतिखट्व अतिखट्विका।

न्यासः

अभाषितपुंस्काच्च। , ७।३।४८

नञ्पूर्वाणामपीत्यनुकर्षणार्थश्चकारः। खट्वका, खट्विका" इति। पूर्ववत्? कः। खट्वाशब्दोऽयमादिष्टलिङ्गो नित्यं स्त्रियामेव वत्र्तत इति भाषितपुंस्को न भवति। "अखटविका" इति। न खट्वा अखट्वेति नञ्समासः। "परमखट्विका" इत्यादि। "सन्महत्()" २।१।६० इत्यापिना समासः। सर्वत्र "कोऽणः" ७।४।१३ इति ह्यस्वः। बहुव्रीहेर्भाषितपुंस्कत्वादत्र न भवितव्यमनेन विकल्पेनेति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकरतुमाह--"बहुव्रीहौ" इत्यादि। कथं पुनरभाषितपुंस्कादित्युच्यमाने बहुव्रीहौ भाषितपुंस्कादपि भवति? इत्याह--"अत्राप्यभाषितपुंस्कात्()" इत्यादि। इतिकरणो हेतौ। यद्यपि बहुव्रीहेर्भाषितपुंस्को भवति, तथापि यदा कपि "आपोऽन्यतरस्याम्()" ७।४।१५ इति ह्यस्वः क्रियते, तदाऽभाषितपुंस्कादेव विहितस्याकारस्य स्थाने यः स्यादकारस्तस्माद्भवत्येव विकल्पः। अविद्यमाना खट्वाऽस्या इति बहुव्रीहिः, "शेषाद्विभाधा" ५।४।१५४ इति कप्(); ततो ह्यस्वः। स चाभाषितपुंस्कादेव विहितस्याकारस्य भवति। तेनाखट्वका, अखट्()विकेति विकल्पो भवत्येव। "यदा तु" इत्यादि। अविद्यमाना खट्वाऽस्या इति बहुव्रीहौ कृत उपसर्डजनह्यस्वत्वम्(); ततष्टाप्()। अल्पा अखट्वेति "प्रागिवत्? कः" ५।३।७०--"अखट्विका" इति। अत्र विकल्पो न

भविष्यति; भाषितपुंस्कत्वाद्बहुव्रीहेविहितस्यातः स्थानेऽकारस्य विहितत्वात्()। प्रादिसमासेऽपि न भवतीति दर्शयन्नाह--"तथा" इत्यादि। "अतिखट्()विका" इति। अत्रापि प्रादिसमासे कृते, उपसर्जनह्रस्वत्वे च, पुनस्तत्पुरुषाद्भाषितपुंस्काद्विहितस्यातः स्थाने विहितोऽकार इति न प्रवत्र्तते विकल्पः॥

बाल-मनोरमा

अभाषितपुंस्काच्च ४६१, ७।३।४८

अभाषितपुंस्काच्च। "उदीचामातः स्थाने" इत्यनुवर्तते, अत इदिति च। अभाषितः पुमान्येनेति विग्रहः। विहितस्येत्यध्याहार्यम्। तदाह--एतस्मादिति। अभाषितपुंस्कादित्यर्थः। अयकपूर्वार्थं वचनम्। गङ्गका। गङ्गिकेति। गङ्गाशब्दात्कः। "केऽणः" इति ह्रस्वः, इत्त्वविकल्पः। विहितविशेषणस्य फलमाह--बहुव्रीहिरिति। अविद्यमाना खट्वा यस्या इति विग्रहे "नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः" इति बहुव्रीहौ कृते, विद्यमानपदलोपे, नञो नलोपे "शेषाद्विभाषा" इति कबभावपक्षे, "गोस्त्रियोः" इति ह्रस्वे, अखट्वशब्दाट्टापि, सुपि अज्ञातादौ के, सुब्लुकि, "केऽणः" इति ह्रस्वे, पुनष्टापि अभाषितपुंस्काद्विहितस्य आतः स्थाने अतोऽभावान्नेत्त्वविकल्पः। किंतु "प्रत्ययस्था"दिति नित्यमित्त्वमित्यर्थः। "अभाषितपुंस्कात्परस्ये"ति व्याख्याने तु तादृशखट्वशब्दात्परस्य आतः स्थाने अतः सत्त्वादित्त्वविकल्पः स्यादिति भावः। शैषिके कपि त्विति। न स् खट्वा स् इत्यवस्थायां कपि सुब्लुक्। प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात् "नञोऽस्त्यर्थाना"मिति बहुव्रीहिसमासः। "समासान्त" इत्यन्वर्थसंज्ञाबलात्कबन्तस्यैव समासत्वम्। ततश्च अखट्वाकशब्दे अखट्वा इत्यंशस्य उपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकत्वाऽभावात् "गोस्त्रियोः" इति ह्रस्वो न भवति। नापि "केऽणः" इति ह्रस्वः, "न कपी"ति निषेधात्। किंतु "आपोऽन्यतरस्या"मिति ह्रस्वविकल्पः। तत्र खट्वाशब्दाद्विहितस्य कपः प्राग्वर्तिनष्टापोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकह्रस्वाकारस्यायमित्त्वविकल्पो भवत्येवेत्यर्थः। "आपोऽन्यतरस्या"मिति ह्रस्वाऽभावपक्षे तु अखट्लाकेत्येव बोध्यम्।

तत्त्व-बोधिनी

अभाषितपुंस्काच्च ४१५, ७।३।४८

अभषित। एतस्मादिति। नित्यस्त्रीलिङ्गादित्यर्थः। विहितविशेषणतया व्याख्यानस्य फलमाह---बहुव्रीहेरिति। ततो विहितस्य नित्यमिति। आवेद्यमाना खट्वा यस्याः सा "अखट्वे"त्यत्र "शेषद्विभाषे"ति समासान्तस् कपो वैकल्पिकत्वात्कबभावपक्षे "गोस्त्रियो"रित्युपसर्जनह्रस्वे कृते पुनरखट्वशब्दाद्भाषितपुंस्काट्टापि सत्यज्ञातादौ कप्रत्यये "केष()णः"इति ह्रस्वेऽस्य विकल्पस्याऽप्रवृत्तेः "प्रत्ययस्था"दित्युत्सर्ग एव पर्वर्तते, परविशेषणत्वे त्वयं विकल्पः स्यादेवेति भावः। "बहुव्रीहे"रित्युपसर्जनोपलक्षणं, तेनाऽतिखट्विकेत्यादावपि नित्यमेव। विकल्प एवेति। "अखट्वे"ति बहुव्रकीहौ "न सु खट्वा सु"इति स्थिते "सुपो धातु---"इति सोर्लुक्यपसर्जनह्रस्वत्वं बाधित्वा "शेषाद्विभाषे"ति समासान्ते कपि परत्वात्कृते स्त्रीप्रत्ययान्तत्वाऽभावादुपसर्जनह्रस्वो न प्रवर्तते, किन्तु "केऽणः"इति ह्रस्वस्य "न कपि"आपोऽन्यतरस्या"मिति वैकल्पिकनिषेधात्पाक्षिकह्रस्वे सति "अभाषितपुंस्काच्चे"ति विकल्पः प्रवर्तते। तत्र हि खट्वाशब्दात्परस्य टापोऽभाषितपुंस्काद्विहितत्वादिति भावः। ह्रस्वाऽभावपक्षे त्वखट्वाकेत्यतद्रूपान्तरम्।

---

सूत्रम्

काशिका-वृत्तिः

आदाचार्याणाम् ७।३।४९

अभाषितपुंस्कातातः स्थाने यो ऽकारः तस्य आचार्याणाम् आकारादेशो भवति। खट्वाका। अखट्वाका। परमखट्वाका।

न्यासः

आदाचार्याणाम्?। , ७।३।४९

नञ्पूर्वाणामपीत निवृत्तम्(); पूर्वसूत्रे चानुकृष्टत्वात्()। इत्त्वापवादोऽयं योगः। "केऽणः" ७।४।१३ इति ह्यस्वपवादश्च। आचार्यग्रहणं नित्यार्थम्()। असति हि तस्मिन्(); "उदीचाम्()" ७।३।४६ इत्यधिकाराद्विकल्पः स्यात्()। आचार्यग्रहणे तु सति तेन "उदीचाम्()" इत्येतस्मिन्निवर्त्तिते, नित्य एष विधिर्भवतीति॥

बाल-मनोरमा

आदाचार्याणाम् ४६२, ७।३।४९

आदाचार्याणां। पूर्वसूत्रविषय इति। अभाषितपुंस्काद्विहितस्यातः स्थाने अत इत्यर्थः। शुभ्रिकेति। शुभ्रशब्दो विशेष्यनिघ्नोऽनियतलिङ्गः। ततः स्त्रियां टापि शुभ्राशब्दात्कः। "केऽणः" इति ह्रस्वः, पुनष्टाप्। अत्र कात्पूर्ववर्तिनष्टापोऽभाषितपुंस्काद्विहितत्वाऽभावात्तत्स्थानिकस्याऽतो नेत्वविकल्पः। किं तु "प्रत्ययस्था"दिति नित्यमित्वमित्यर्थः। अनुपसर्जनादित्यधिकारस्य उत्तरावधिमाह--यूनस्तिरित्यभिव्याप्येति। "यूनस्तिः" इत्यत्राप्ययमधिकारो नतु ततः प्रागित्यर्थः। अत्र च व्याख्यानमेव शरणम्। अत्र यद्वक्तव्यं तत् "यूनस्तिः" इत्यत्र वक्ष्यते। ननु बहवः कुरुचरा यस्यां सा बहुकुरुचरा, नदमतिक्रान्ता अतिनदा इत्यादिषु उपसर्जनेषुकुरुचरनदादिशब्देभ्यः "टिड्ढाणञ"त्यादिना विधीयमानानां ङीबादिप्रत्ययानां प्रसक्तिरेव नास्ति, समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात्। तस्मादनुपसर्जनाधिकारो व्यर्थ इत्यत आह--अयमेवेति। अनुपसर्जनादित्यधिकार एवायं स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयतीत्यर्थः। एतच्च भाष्ये स्पष्टम्। तत्फलं तु "वनो र चे"त्यत्र वन्नन्तान्तलाभ इत्यादि ज्ञेयम्। ननु स्त्रीप्रत्ययेषु तदन्तविध्यभावेऽपि नद इवाचरति नदा स्त्रीत्यादिषु आचारक्विबन्तप्रकृतिककर्तृक्विबन्तेषु ङीबादिनिवृत्तये अनुपसर्जनाधिकारस्यावस्यकत्वात्कथं तस्य स्त्रीप्रत्ययविधिषु तदन्तविधिज्ञापकतेति चेत्, न, अनुपसर्जनाधिकारस्य स्त्रीप्रत्ययविधिषु तदन्तविधिज्ञापनार्थत्वपरभाष्यप्रामाण्येन स्त्रियामाचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधानोन्नयनादित्यलम्।

---

सूत्रम्

काशिका-वृत्तिः

ठस्य इकः ७।३।५०

अङ्गस्य निमित्तं यः ठः, कश्च अङ्गस्य निमित्तम्, प्रत्ययः, तस्य प्रत्ययठस्य इकः इत्ययम् आदेशो भवति। प्राग् वहतेष् ठक् ४।४।१ आक्षिकः। शालाकिकः। लवणाट् ठञ् ४।४।५२ लावणिकः। ठगादिषु यदि वर्णमात्रं प्रत्ययः, उच्चारणार्थो ऽकारः, तदा इह अपि अकार उच्चारणार्थः, वर्नमात्रं तु स्थानित्वेन उपादीयते। सङ्घातग्रहणे तु प्रत्यये ऽत्र अपि सङ्घातग्रहणम् एव। तत्र कणेष्ठः कण्ठः इत्येवम् आदीनाम् उणादीनाम् उणादयो बहुलम् ३।३।१इति न भवति। मथितं पण्यम् अस्य माथितिकः इत्यत्र तु यस्य इति च ६।४।१४८ इति लोपे कृते इसुसुक्तान्तात् कः ७।३।५१ इति स्थानिवद्भावादिकस्य कादेशः प्राप्नोति, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति न भवति। यस्येति च इति लोपस्य स्थानिवद्भावाद्वा। पूर्वस्मादपि हि विधौ स्थानिवद्भावः।

लघु-सिद्धान्त-कौमुदी

ठस्येकः १०३०, ७।३।५०

अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः॥

न्यासः

ठस्येकः।, ७।३।५०

अत्र यद्यविशेषेण ठस्य ग्रहणं स्यात्(), पठिता, पठितुमित्यादौ धात्वन्तस्यापि स्यात्()। अत एतद्दोषपरिजिहीर्षया प्रत्ययसय ठस्य ग्रहणम्(), न तु ठमात्रस्येति दर्शयितुमाह--"अङ्गस्य निमित्तं यष्ठः" इति। अङ्गस्येति सम्बन्धलक्षणा षष्ठी। अतर यद्यपि धात्ववयवो ह्रङ्गस्य सम्बन्धी भवति, तथापि यदा यतो ह्रङ्गस्यात्मलाभो यस्मिन्नङ्गमित्येतद्भवति, स एव प्रत्यासत्तेरङ्गस्य निमित्तीभूतः सम्बन्धी गृह्रते, न त्वरयवोऽपि। "कश्चाङ्गस्य निमित्तं भवति" इति। एवं मन्यते--यदि सामान्येनाङ्गस्य निमित्तं यत्तदिह गृह्रते धात्वन्तस्य ठस्य स्यादेव, भवन्ति हि अवयवा अङ्गसयावयविनो निमित्तम्(); तैस्तस्यारभ्यमाणत्वादित्याह--"प्रत्ययः" इति। अस्यायमभिप्रायः--सत्स्वप्यवयवेषु यावत्प्रत्ययो नोत्पद्यते तावत्तस्यावयविनोऽङ्गात्मलाभो न भवति, त()स्मस्तूत्पन्ने सति भवति; तस्मात्प्रत्यय एवाङ्गस्य निमित्तम्(), नावयव इति। "आक्षिकः, शालाकिकः" इति। अक्षैर्दीव्यति, ["अक्षैर्दीव्यतीत्यर्थे ठक्()--मु। पाठः] शलाकाभिर्दीष्यतीत्यर्थे ठक्()। "लावणिकः" इति। अत्रापि लवणं पण्यमस्येति "लवणाट्ठञ्()" ४।४।५२। इह ठस्येति वर्णमात्रस्य ग्रहणं वा स्यात्()? सङ्घातस्य वा? तत्र पूर्वस्मिन पक्षे ठस्येति निर्देशो नोपद्यते; इतर()स्मस्त्वोणादिकेऽतिप्रसङ्गः--"कणेष्ठः" (द।उ।५-६) कण्ठ इत्यादौ। इह तु मथितं पण्यमस्येति माथितिक इति ठस्येकादेशे कृते प्रकृतेश्च "यस्येति च" (६।४।१४८) इत्यकारलोपे सति तान्ततायामुपजातायामिकादेशस्य स्थानिवद्भावाद्ग्रहणेन ग्रहणात्? "इसुसुक्तान्तात्? कः" ७।३।५१ इति कादेशः प्रसज्येतेति यश्चोदयेत्(), तं प्रत्याह--"ठगादिषु" इत्यादि। आदिशब्देन ठञादीनां ग्रहणम्(), यदि तेषु वर्णमात्रमनच्कप्रत्ययोऽकारस्तूच्चारणार्थः, तदा "ठस्येकः" ७।३।५० इत्यत्राप्यकार उच्चारणार्थः। एवं वर्णमात्रं स्थानित्वेनोपादीयते। इहाप्यकार उच्चारणार्थ एवेति वर्णमात्रग्रहणेन यो दोषः परस्य चोदयिष्यतः स वर्णमात्रं स्थानित्वेनोपादीयते। इहाप्यकार उच्चारणार्थ एवेति वर्णमात्रग्रहणेन यो दोषः परस्य चोदयिष्यतः स निराकृतः। सत्यपि वर्णमात्रस्य ग्रहणे, आगन्तुकेनोच्चारणार्थेनाकारेण ठस्येति निर्देशस्योपादानात्()। "सङ्घातग्रहणे तु" इत्यादि। अथ ठगादिषु सङ्घातः साच्कष्ठशब्दः प्रत्ययः, एवं सत्यत्रापि सूत्रे सङ्घातस्येति स्थानित्वेन ग्रहणं युक्तम्()। यस्त्वस्मिन्? पक्षे प्रथमो दोषश्चोदयितुमिष्टः परस्य, तं जिहीर्षुराह--"तत्र" इत्यादि। योऽप्यस्मिन्? पक्षे द्वितीयो दोषस्तं "मथित पण्यमस्य" इत्यादिनाऽऽविष्कृत्य--"सन्निपातलक्षणो विधिः" इत्यादिना परिहरति। अजादिसन्निपातेन तकारान्ततोपजाता, सा नोत्सहतेऽजादित्वं विहन्तुमिति न भवति कादेशः। "यस्येति चेति लोपस्य स्थानिवद्भावाद्वावाद्वा" इति। न भवति कादेश इति प्रकृतेन सम्बन्धः; स्थानिवद्भावेन तकारान्ततया विहतत्वात्()। स्थानिवद्भावः पुनः "अचः परस्मिन्()" १।१।५६ इत्यादिना। पूर्वविधौ कत्तव्ये स्थानिवद्भवति, न चात्र पर्वस्य विधिः, किं तर्हि? पूर्वस्मादुत्तरस्य, तत्कुतः स्थानिवद्भावः? इत्याह--"पूर्वस्मादपि" इत्यादि। न केवलं पूर्वस्य विधिः पूर्वविधिरिति षष्ठसमासोऽभिमतः, अपि तु पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासोऽपीत्यभिप्रायः॥

बाल-मनोरमा

ठस्येकः ११५४, ७।३।५०

ठस्येकः। अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते। तदाह--अङ्गात्परस्य ठस्येति। ठकारस्येत्यर्थः। रैवतिक इति। रेवत्या अपत्यमिति विग्रहः। ठकि ककार इत्, अकार उच्चारणार्थः। ठकारस्य इकोऽदन्त आदेशः। अङ्गात्किम्?। कर्मण इत्यत्र ठकारस्य न भवति। अत्र भाष्ये अङ्गसंबन्धिठस्येति व्याख्याने कर्मठ इत्यत्र सुपं प्रति कर्मठशब्दस्याङ्गत्वात्तदीयठस्य इकादेशमासङ्ख्य अङ्गसंज्ञानिमित्तं यष्ठकारस्तस्ये को भवति, तादृशश्च ठकारः प्रत्यय

एव भवति, नचेह ठकारः प्रत्यय इति समाहितम्। ततश्च ठकि अकार उच्चारणार्थः, ठकार एव प्रत्यय इकति विज्ञायते। "ठस्येति सङ्घातग्रहण"मित्यपि भाष्ये स्थितम्। अस्मिन्पक्षे ठकि अकार उच्चारणार्थो न भवति, सङ्घात एव प्रत्ययः, इकादेशे अकार उच्चारणार्थ एवेत्यलम्।

---

सूत्रम्

काशिका-वृत्तिः

इसुसुक्तान्तात् कः ७।३।५१

इसुसित्येवम् अन्तानाम् उगन्तानां तान्तानां चाङ्गानाम् उत्तरस्य ठस्य कः इत्ययम् आदेशो भवति। इस् सार्पिष्कः। उस् धानुष्कः। याजुष्कः। उक् नैषादकर्षुकः। शाबरजम्बुकः। मातृकम्। पैतृकम्। तान्तात् औदश्वित्कः। शाकृत्कः। याकृत्कः। इसुसोः प्रतिपदोक्तयोर् ग्रहणादिह न भवति, आशिषा चरति आशिषिकः। उषा चरति औषिकः। दोष उपसङ्ख्यानम्। दोर्भ्यां तरति दौष्कः।

लघु-सिद्धान्त-कौमुदी

इसुसुक्तान्तात्कः १०५५, ७।३।५१

इस् उस् उक्तान्तात्परस्य ठस्य कः। साक्तुकम्। हास्तिकम्। धैनुकम्॥

न्यासः

इसुसुक्तान्तात्? कः। , ७।३।५१

पूर्वेणेकादेशे प्राप्त इसाद्यन्तात्? कादेश उच्यते। "सर्पिष्कः" इति। "तदस्य पच्यम्()" ४।४।५१ इति प्राग्वहतीयष्ठक्(), रुत्वविसर्जनीयौ, विसर्जनीयस्य "इसुसोः सामर्थ्ये" ८।३।४४ इति षत्वम्()। "धानुष्कः" इति। "तदस्य ग्रहणम्()" ४।४।५७ इति ठक्()। "याजुष्कः" इति। "तेन दीव्यति" ४।४।२ इति ठक्()। "नैषादकर्षुकः, शाबरजम्बूकः" इति। निषादकर्ष्वां जातः, शाबरजम्बां जात इति "ओर्देशे ठञ्()" ४।२।११८, "केऽणः" ७।४।१३ इति ह्रस्वः। "मातृकम्()" पैतृकम्()" इति। मातुरागतम्(), पितुरागतमिति--"ऋतष्ठञ्()" ४।३।७८। "औद()इआत्कः" इति। "उद()इआवतोऽन्यतरस्याम्()" ४।२।१८ इति ठक्()। शाकृत्कः, याकृत्कः" इति। शकृता यकृता संसृष्टे ४।४।२२ इति ठक्()। अथेह कस्मान्न भवति--आशिषा चरतीत्याशिषिकः, उषा चरतीत्यौषिकः? इत्याह--"इसुसोः" इत्यादि। "अर्चिसुचिहुसृपिछादिछर्दिभ्य इसिः" (द।उ।९।३०), "जनेरुसिः" (द।उ।९।३७), "अर्त्तिपृ()वपियजितनिधनितपिभ्यो नित्()" (द।उ।९।३९) इत्यादिना प्रकरणेन यौ विहितौ तयोर्लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) प्रतिपदोक्तयोरिसुसोग्र्रहणम्()। तेनाशिषिकः, औषिक इत्यत्रापि न भवति; लाक्षणिकत्वादिसुसोः। तथा ह्याङ्पूर्वात्? "शासु इच्छायाम्()" (धा।पा।१०२२) इत्यस्मात्(), "वस निवासे" (धा।पा।१००५) इत्येतस्माच्च केवलात्? क्विपि कृते "शास इदङ्हलोः" ६।१।१५ सम्प्रसारणे परपूर्वत्वे च कृत इसुसति रूपं प्रतिपद्यते। "आशिषिकः, औषिकः" इति। "शासिवसिधसीनां च। ८।३।६० इति षत्वम्()। तस्य त्वसिद्धत्वात्? कादेश प्राप्तिराशङ्किता। "दोष उपसंख्यानम्()" इति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()--"नञ्पूर्वाणामपि" ७।३।४७ इत्यतोऽपगरहणमनुवत्र्तते; स चानुक्तसमुच्चयार्थः, तेन दोषोऽपि भविष्यति॥

बाल-मनोरमा

इसुसुक्तान्तात्कः १२०२, ७।३।५१

इसुसुक्तान्तात्कः। इसुसुक्ता अन्ता यस्येति विग्रहः। तकारादकार उच्चारणार्थः। ठस्य कः स्यादिति। ठकि ककार इत्।

अकार उच्चारणार्थः, ठकारस्य शिष्यस्य ककार आदेश इति "ठस्येकः" इत्यत्रोक्तम्। "()आयती"त्यस्य विवरणम्--वर्धते इति। "टु ओ ()इआ गतिवृद्ध्योः" इति धातुरिह वृद्ध्यर्थक इति भावः। उद()इआदिति। क्विपि तुक्। "उदकस्योदः संज्ञाया"मित्युदादेशः। "तक्रं ह्रदु()इआन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्, इत्यमरः। प्रतिपदोक्तयोरिति। इत्प्रत्ययस्य उस्प्रत्ययस्य च उणादौ प्रतिपदोक्तयोरिह ग्रहणमित्यर्थः। यथा सार्पिष्कः, धानुष्क इति। आशिषिक इति। "चरती"ति ठक्। शासुधातो क्विपि "आशासः क्वौ" इत्युपधाया इत्वम्। उषा चरति औषिक इति। वसधातोः क्विपि सम्प्रसारणे उषेति तृतीयान्त्य---सोमे मत्तेर् मिस्सिन्ग्।

---सोमे मत्तेर् मिस्सिन्ग् >

तत्त्व-बोधिनी

इसुसुक्तान्तात्कः ९९४, ७।३।५१

इसुसुक्तान्तात्। "ता"दित्युक्तेऽप्यङ्गविशेषणेनैव तान्तादिति लब्धेऽन्तग्रहणं प्रत्ययोपदेशकाले यस्तान्तस्तस्मात्परस्य ठस्य कादेशो न भवतीति "ठस्येकः"इति सूत्रे कैयटः। संनिपातपरिभाषयैव इकस्य कादेशो न स्यादित्यन्तग्रहणं त्युक्तं शक्यमित्यन्ये। उद()इआदिति। ()आयतेः क्विपि तुक्। "उदकस्योदः"इत्युदादेशः। इहैव निपातनात्संप्रसारणाऽभावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चजोः ६।२ कु १।१ घिण्ण्यतोः ७।२

समासः॥

चश्च जश्च चजौ, तयोः, इतरेतरद्वन्द्वः।

घ् इत् यस्य सः घित्, बहुव्रीहिः। घित् च ण्यत् च घिण्ण्यतौ, तयोः, । इतरेतरद्वन्द्वः

अर्थः॥

चकार-जकारयोः स्थाने कवर्गादेशः भवति घिति ण्यति च प्रत्यये परतः

उदाहरणम्॥

पाकः, त्यागः, रागः। ण्यति - पाक्यम्, वाक्यम्, रेक्यम्

काशिका-वृत्तिः

चजोः कु घिण्ण्यतोः ७।३।५२

चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः। घिति पाकः। त्यागः। रागः। ण्यति पाक्यम्। वाक्यम्। रेक्यम्।

लघु-सिद्धान्त-कौमुदी

चजोः कु घिण्ण्यतोः ७८४, ७।३।५२

चजोः कुत्वं स्यात् घिति ण्यति च परे॥

न्यासः

चजोः कु घिण्ण्यतोः। , ७।३।५२

"पाकः, त्यागः" इति। भावे घञ्()। "पाक्यम्(), वाक्यम्()" इति। "ऋहलोण्र्यत्()" ३।१।१२४। ननु चात्र धिण्ण्यतोः कार्यिणोश्चजोः साम्याद्यथासंख्यं प्राप्नोति--चकारस्य धिति, जकारस्य ण्यति, तत्कथं त्यागः, राग इति धिति जकारसय कुत्वं प्राप्नोति? नैतदस्ति; ज्ञापकादत्र यथासंख्यं न भवति। यत्? "भुजन्युब्जौ पाण्युपतापयोः" ७।३।६१, "प्रयाजानुयाजौ यज्ञाङ्गे" ७।३।६२ इति घञि जकारस्य कुत्वाभावं निपातयति, "तेन रक्तं रागात्()" ४।२।१ इति च निर्देशं करोति, तज्ज्ञापयति--यथासंख्यमिह न भवतति॥

बाल-मनोरमा

चजोः कु घिण्ण्यतोः ६८४, ७।३।५२

चजोः कु। "कु" इत्यविभक्तिको निर्देशः। चजोर्घिण्ण्यतोश्च यथासङ्ख्यं तु न, "तेन रक्तं रागा"दित घञि जस्य कुत्वनिर्देशात्।

तत्त्व-बोधिनी

चजोः कु घिण्ण्यतोः ५६७, ७।३।५२

चजोः। यथासङ्ख्यं नेह विवक्षितं, "तेन रक्तं रागात्" इति लिङ्गादिति कैयटहरदत्तादिभिरुक्तं। तदालोच्याह-- चस्य जस्य चेत्यादि। घिति ण्यति च चस्य कुत्वं,घिति ण्यति च जस्य कुत्वमिति विवेकः।

---

सूत्रम्

काशिका-वृत्तिः

न्यङ्क्वादीनां च ७।३।५३

न्यङ्कु इत्येवम् आदीनां कवर्गादेशो भवति। न्यङ्कुः नावञ्चेः इति उप्रत्ययः। मद्गुः मिमस्जिभ्य उः इति मस्जेः उप्रत्ययः। भृगुः प्रथिमदिभ्रस्जां सम्प्रसारणं सलोपश्च इति उप्रत्ययः। दूरेपाकः, फलेपाकः दूरे पच्यते स्वयम् एव, फले पच्यते स्वयम् एव। पचाद्यच्। निपातनाद् वृद्धिः। तत्पुरुषे इऋति बहुलम् ६।३।१३ इति सप्तम्या अलुक्। क्षणेपाकः इत्यपि हि केचित् पठन्ति। दूरेपाका, फलेपाका इत् टाबन्तमप्रे ऽधीयते। उकारान्तावपरे दूरेपाकुः फलेपाकुः इति। तेषाम् उप्रत्ययः निपातनादेव। तक्रम् वक्रम् इति पञ्चतेर् वञ्चतेश्च स्फायितञ्चिवञ्चि इत्यादिना सूत्रेण रक्। व्यतिषङ्गः व्यतिषजति इति पचाद्यच्। अनुषङ्गः। अवसर्गः। उपसर्गः। श्वपाकः, मांसपाकः, कपोतपाकः, उलूकपाकः इति कर्मोपदादण् प्रत्ययः। संज्ञाया अन्यत्र अर्हः, अवदाहः, निदाहः। न्यग्रोधः, वीरुदित्यत्र न्यक्पूर्वस्य रुहेः पचाद्यचि, विपूर्वस्य क्विपि धकारो विधीयते। न्यग्रोहयति न्यग्रोधः। विरोहयति इति वीरुत्।

न्यासः

न्युङ्क्वादीनां च। , ७।३।५३

अधिण्ण्यदर्थोऽयमारम्भः। "नावञ्चतेरित्युप्रत्ययः" इति। तत्र "भृमृशीतृ()चरित्सरितनिधनिमिमस्जिभ्य उः" (द।उ।१।९२) इत्यनुवृत्तेः। "मद्गुः" इति। "टुमस्जो शुद्धौ" (धा।पा।१४१५), "झलां जश्? झशि" ८।४।५२ इति सकारस्य दकारः। "मिमस्जिभ्य उः" इति। अनेन "भृमृशीतृ()चरि" (द।उ।१।९२) इत्यादिकमुपलक्षयति। "भृगुः" इति। "भ्रस्ज

पाके" (धा।पा।१२८४)। "प्रथिभ्रदि" (द।उ।१।११३) इत्यादिके सूत्रऽत एव सूत्रा(द।उ।१।९२)दुप्रत्ययोऽनुवर्त्तते। "दूरेपाकः" ["दूरेपाकाः"--मु।पाठ] इति। कर्मकर्त्तरि पचाद्यच्()। "उकारान्तावपेर" इति। अधीयत इत्यपेक्ष्यते। "तञ्चतेः" इति। "तन्चु त्वन्चु गतौ" (धा।पा।१९१,१९२) इति, "वन्चु प्रलम्भने" (धा।पा।१७०३) "स्फायितञ्चिवञ्चि" इति सूत्रैकदेशः "स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपिद्दपितृपिवन्युन्दि()इआतिवृत्यजिनीपदिमदिमुदिखिदिभिदिछिदिमन्दिचन्दिदहि रक्()" (द।उ।८।३१) इत्येतत्? सूत्रमुपलक्षयति। "व्यतिषङ्गः" इति। "षन्ज सङ्गे" (धा।पा।९८७) "अवसर्गः" इति। "सृज विसर्गे" (धा।पा।११७८) पचाद्यच। "मेधः" इति। "मिह सेचने" (धा।पा।९९२)। अजेव। "()आपाकः" इति। कर्मोपपदादण्प्रत्ययः "कर्मण्यण्()" ३।२।१ इत्यनेन। "अर्हतेः" इति। "अर्ह पूजायाम्()" (धा।पा।७४०)। "दहेः" इति। "दहभस्मीकरणे" (धा।पा।९९२)। "रुहेः" इति। "रुह बीजजन्मनि प्रादुर्भावे" (धा।पा।८५९)। ननु च न्यङ्क्वादयः कृतकुत्वाः प्रातपदिकगणे पठ()न्ते, तत्किमर्थमिदम्(), यथैव हि कुत्वादन्यत्? कार्यं भवति निपातनात्? तथा कुत्वमपि भविष्यति? तस्यैव प्रातपदिकपाठस्याभ्यनुज्ञानार्थमितदमुच्यते। असति ह्यतस्मिन्? प्रमादपाठो विज्ञायतेत॥

तत्त्व-बोधिनी

न्यङ्क्वादीनां च ५६८, ७।३।५३

न्यङ्कुरिति। "कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

हो हन्तेर् ञ्णिन्नेषु ७।३।५४

हन्तेः हकारस्य कवर्गादेशो भवति ञिति णिति प्रत्यये परतः नकारे च। घातयति। घातकः। साभुघाती। घातंघातम्। घातो वर्तते। नकारे घ्नन्ति। घ्नन्तु। अघ्नन्। हः इति किम्? अलो ऽन्त्यस्य मा भूत्। हन्तेः इति किम्? प्रहारः। प्रहारकः। ञ्णित्प्रत्ययो हन्तेर् विशेषणम्, नकारो हकारस्य, नकारे ऽनन्तरस्य हन्तिहकारस्य इति। तच्चानन्तर्यं श्रुतिकृतं सन्निपातकृतम् आश्रीयते। स्थानिवद्भावशास्त्रकृतं तु यदनानन्तर्यं तदविघातकम्, वचनसामर्थ्यात्। यद्यपि सर्वैरेव ञ्णिन्नैर्हन्तिहकारो विशिष्यते तथापि येन नाव्यवधानं तेन व्यवहिते ऽपि वचनप्रामाण्यातिति ञ्णिति धात्ववयवेन व्यवहिते ऽपि सति भवति। इह तु न भवति, हननम् इच्छति हननीयति, हननीयतेर् ण्वुल् हननीयकः इति।

लघु-सिद्धान्त-कौमुदी

हो हन्तेर्ञ्णिन्नेषु २८९, ७।३।५४

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम्। वृत्रघ्नः इत्यादि। एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन्॥

न्यासः

हो हन्तेर्ञ्णिन्नेषु। , ७।३।५४

"धातयति" इत्याद्युदाहरणानि "हनस्तोऽचिण्णलोः" ७।३।३२ इत्यत्र व्युत्पादितानि। "ध्नन्ति" इति। लट्(), झेरन्तादेशः, "गमहन" ६।४।९८ इत्यादिनोपधालोपः। "ध्नन्तु" इति। लोट्()। "अध्वन्()" इति। लङ्(), "इतश्च" ३।४।१०० इतीकारलोपः। "प्रहारः, प्रहारकः" इति। हरतेर्घञ्ण्वुलौ। इह णिन्नग्रहणं हन्तिविशेषणं वा स्यात्()--ञ्णिन्नकारपरस्य हन्तेर्यो हकार इति, हकारविशेषणंवा--ञ्णिन्नकारपरसय हकारस्येति स चेद्धन्तेरिति? तत्र यदि पूर्वकः पक्ष आश्रीयेत, ध्नन्त्यादौ न स्यात्(), न ह्यत्र नकारपरो हन्तिः; अवयवेन समुदायस्य पौर्वापर्यानुपपत्तेः, अन्यस्य नकारस्याभावात्()। अथेतरः पक्ष आश्रीयेत, न क्वचित्? स्यात्(), न हि हकारस्य ञ्णिन्नकारपरता सम्भवति। असम्भवस्तु

ध्नन्तत्यादावकारलोपस्य पूर्वविधौ स्थानिवद्भावे सत्यकारेण व्यवधानात्, घातयतीत्यादावपि हकारात्? परेण हन्त्यवयवेनानशब्देन व्यवधानात्()। अथ वचनसामर्थ्याद्व्यवधानेऽपि कृत्वं स्यात्(), एवमपि हननमिच्छतीति "सुप आत्मनः क्यच" ३।१।८, "क्यचि च" ७।४।३३ इतीत्वम्(), क्यजन्ताण्ण्वुल्(), "अतो लोपः" ६।४।४८ इत्यकारलोपो हननीयक इत्यत्रापि स्यादिति यश्चोदयेत्(), तं प्रति पक्षान्तरमाश्रित्याह--"ञ्णित्प्रत्ययोऽत्र हन्तेर्विशेषणम्()" इत्याद। न हि सर्वेषां ञ्णिन्नकाराणां ह()न्त प्रति विशेषणत्वमुपपद्यते, नापि हकारं प्रति। तस्माद्यथासम्भवं किञ्चिदेव कस्यचिद्विशेषणम्()। ञ्णित्प्रत्ययस्तु हन्तेः परतः उपपद्यते इति तस्यासौ विशेषणम्()--ञ्णिति प्रत्यये परतोऽनन्तरस्य हन्तेरिति। नकारस्तु हन्तेर्विशेषणँ नोपपद्यते; पूर्वोक्तात्? कारणात्()। इकारस्य तूपपद्यत इति तस्यैव विशेषणम्()--नकारे परतोनन्तरस्य हन्तिहकारस्यानन्तर इति। अयं तु "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति निर्दिष्टग्रहणस्यानन्तर्यार्थत्वाल्लभ्यते। आनन्तर्याश्रयणे तु--हन्ता, हन्तुमित्यत्राप्यतिप्रसङ्गो निरस्तः। ननु चानन्तर्यमेव हकारस्य णकारेण न सम्भवति, अकारलोपस्य स्थानिवद्भावे सत्यकारेण व्यवधानात्()? इत्यत आह--"तच्च" इत्यादि। "सन्निपातकृतम्" इति। श्रुतिकृतमित्यर्थः। ननु चाश्रितेऽपि सन्निपातकृतानन्तर्ये स्थानिवद्भावशास्त्रेण यत्? कृतमनानन्तर्यं तद्विहन्यादेव कुत्वम्()? इत्यत आह--"स्थानिवद्भावशास्त्रकृतं तु" इत्यादि। किं कारणमविधातकम्()? इत्याह--"वचनसामर्थ्यात्()" इति। यदि स्थानिवद्भावशासतद्रकृतमनानन्तर्य व्यवधायकं बाधकं स्यान्नकारवचनमनर्थकं स्यात्(); निरवकाशत्वात्()। तस्माद्वचनसामर्थ्यान्न विघातकम्()। "यद्यपि" इत्यादिना यौ द्वौ पक्षावुपन्यस्तौ, तत्र द्वितीये पक्षे यो दोषस्तस्य परीहारः। तत्र नकारेण हकारे विशेष्यमाणे यो दोषः स पूर्वमेव परिह्रतः। सम्प्रति तु ञ्णित्प्रत्ययेन हकारे विसेष्यमाणे यो दोषस्तं परिहरति। योऽयं हन्तेरवयवो हकारात्? परोऽकारादिर्नकारान्तः, तेन सर्वत्र ञ्णित्प्रत्ययस्य व्यवधानम्()। अननीयशब्देन तु च्यवधानं सम्भवति, न सम्भवति च तत्र "येन नाव्यवधानं तेन व्यवहितेऽति वचनप्रामाण्यात्()" (व्या।प।४६) इति घातयतीत्यादौ कुत्वं भवति। येन त्वननीयशब्देन व्यवधानं न सम्भवति, सम्भवति च तेन व्यवधाने हननीयक इत्यत्र न भविष्यति। आद्ये तु पक्षे यो दोष उक्तः, स तस्यानभ्युपगमादेवानवसरः। हन्तेः श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्यर्थः। तत्र हि "अभ्यासाच्च" ७।३।५५ इति भवितव्यमेव कुत्वेन॥

बाल-मनोरमा

हो हन्तेर्ञ्णिन्नेषु , ७।३।५४

हो हन्तेः। "हः" इति स्थानषष्ठी, "हन्ते"रित्यवयवषष्ठी। ञ् च ण् च ञ्णौ। तौ इतौ ययोस्तौ ञ्णितौ। इच्छब्दः प्रत्येकं सम्बध्यते। ञ्णितौ च नश्च ञ्णिन्नाः, तेष्विति विग्रहः। अङ्गाधिकारात्प्रत्ययत्वं ञ्णितोर्लभ्यते। "चजोः कु घिण्यतो"रित्यतः कुग्रहणमनुवर्तते। तदाह--ञितीत्यादिना। "हन्ते"रिति श्तिपा निर्देशः। हन्धातोरित्यर्थः। प्रकृते हकारस्य नकारपरत्वात्कुत्वम्। तत्र घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थो घकारः। वृत्रघ्नः वृत्रघ्ना इत्यादि सिद्धम्।

तत्त्व-बोधिनी

हो हन्तेर्ञ्णिन्नेषु ३१८, ७।३।५४

हन्तेर्हस्येति। "ञिति" "णिती"त्येतद्धन्तेर्विशेषणम्, "नकारे"इति तु "हस्ये"ति यथासंभवं बोध्यम्। यद्वा ञिण्णिन्नाः सर्वेऽपि ह्यस्यैब विशेषणं। ञिति णितीत्यंशे येन नाव्यवधानन्यायेन द्वाभ्यां व्यवधानं स्वीक्रियते। ते "घातः""घातक"इत्यत्र कुत्वं भवति। इह तु न भवति, हननमात्मन इच्छति हननीयति। हननीयतेर्ण्वुल्--"हननीयक"इति। एतच्च भाष्यकैयटादौ स्पष्टम्।

सूत्रम्

काशिका-वृत्तिः

अभ्यासाच् च ७।३।५५

अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति। जिघांसति। जङ्घन्यते। अहं जघन। अभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य यो ऽभ्यासः तस्मादेव एतत् कुत्वम्। इह न भवति, हननीयितुम् इच्छति जिहननीयिषति।

लघु-सिद्धान्त-कौमुदी

अभ्यासाच्च ५६२, ७।३।५५

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात्। जघनिथ, जघन्थ। जघ्नथुः। जघ्न। जघ्निव। जघ्निम। हन्ता। हनिष्यति। हन्तु, हतात्। हताम्। घ्नन्तु॥

न्यासः

अभ्यासाच्च। , ७।३।५५

"जिघांसति" इति। सन्(), "अज्झनगमां सनि" ६।४।१६ इति दीर्घः, द्विर्वचनम्, "कुहोश्चुः" ७।४।६२ इति चुत्वम्()--झकारः; "अभ्यासे चर्च" ८।४।५३ इति जश्त्वम्()--जकारः, "सन्यतः" ७।४।७९ इतीत्त्वम्()। "जङ्घन्यते" इति। "नुगतोऽनुनासिकान्तस्य" ७।४।८५ इति नुक्()। जघान" इति। उत्तमपुरुषेणलि यदा णित्वं नास्ति तदेदमुदाहरणम्()। णित्त्वपक्षे तु पूर्वेणैव सिद्धम्()। अग्र हननशब्दात्? क्यचि कृते तदन्तात्? सनि जिहननीयिषतीत्यत्र कस्मान्न भवतीति, भवति ह्वाभ्यासात्? परो हन्तिहकरः? इत्याह--इहाभ्यासनिमित्तप्रत्यये" इत्यादि। इह "हन्तेः" ७।३।५४ इत्यनुवत्र्तते, अङ्गस्येति च। अभ्यासेनाभ्यासनिमित्तं प्रत्ययः सन्निधापितः, तस्य प्रत्ययः विशेषनिमित्तत्वात्(), तत्र तेनाभ्यासनिमित्तेन प्रत्ययेन हन्तेरङ्गं विशिष्यते। "अभ्यासनिमित्ते[अभ्यासनिमित्ते प्रत्येये हन्तेरङ्गस्य--काशिका] प्रत्यये यदङ्गं हन्तिः" इति। तेनाप्येवंविधेन हन्तिनाभ्यासो विशिष्यते। यथोक्तविशेषणविशिष्टस्य हन्तेरङ्गस्य योऽभ्यासः--इत्येवं विशेषणविशेष्यभावे सत्यभ्यासनिमित्ते सनादौ प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेव कुत्वेन भवितव्यम्()। "तेनेह ["तेन" नास्ति--काशिका] न भवति--"जिहननीयिषति" इति। न ह्वतराभ्यासनिमित्ते प्रत्यये सनि हन्तिरङ्गम्(), किं तर्हि? हननीयशब्दः। य()स्मस्तु हन्तिरङ्गम्(), ल्युटि स नाभ्यासनिमित्त्म्()॥

बाल-मनोरमा

अभ्यासाच्च २६१, ७।३।५५

अभ्यासाच्च। "हो हन्ते"रित्यनुवर्तते। "चजोः कु घिण्ण्यतो"रित्यतः कुग्रहणं च। तदाह--अभ्यासात्परस्येत्यादिना। जघनिथ जघन्थेति। इडभावे नस्याऽनुस्वारपरसवर्णौ। जघ्नथुः। जघ्न। जघान--जघन, जघ्निव जघ्निम। लृटि स्ये इण्निषेधमाशङ्क्याह-- ऋद्धनोरिति। हन् हि इति स्थिते "हुझल्भ्यः" इति धित्वे प्राप्ते--।

---

सूत्रम्

काशिका-वृत्तिः

हेरचङि ७।३।५६

हिनोतेर् हकरस्य अभ्यासादुत्तरस्य कवर्गादेशो भवति अचङि। प्रजिघीषति। प्रजेघीयते। प्रजिघाय। अचङि इति किम्?

प्राजीहयत् दूतम्। अचङि इति शक्यमकर्तुम्। कथम्? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति, तत्र अभ्यासनिमित्ते प्रत्यये हेरङ्गस्य इति विज्ञायमने प्राप्तिरेव न अस्ति? तत् क्रियते ज्ञापकार्थम्। एतत् ज्ञाप्यते, हेरचङि इति चङो ऽन्यत्र हेर्ण्य धिकस्य अपि कुत्वं भवति इति। तेन प्रजिघाययिषति इति सिद्धं भवति।

न्यासः

हेरचङि। , ७।३।५६

"प्रजिघीषति" इति। "हि गतौ" (धा।पा।१२५७) सन्(), पूर्ववद्दीर्घत्वम्()। "प्रजेघीयते" इति। "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः, द्विर्वचनम्(), "गुणो यङ्लकोः" ७।४।७२ इत्यभ्यासस्य गुणः। "प्रजिघाय" इति। णल्(), वृद्ध्यायादेशो। "प्राचीहयत्()" इति। हेतुमण्णिच, "णिश्रि" ३।१।४८ इत्यादिना चङादेशः, "णौ चङ्युपधायाः" ७।४।१ इति ह्रस्वः; "चङि" ६।१।११ इति द्विर्वचनम्()। तच्च "णौ कृतं स्थानिवद्भवति" (चां।प।२१) इति हिशब्दसय "दीर्घो लघोः" ७।४।९४ इति दीर्घः। "चङ्यम्यासनिमित्ते" इत्यादि। प्राजीहयदित्यत्र चङ्यभ्यासनिमित्ते परतो यो णिच्? तस्मिन्? हिनोतिरङ्गम्(), न तु तस्मिन्नेव चङ्यभ्यासनिमित्ते; इह सूत्रेऽब्यासाधिकारात्()। अभ्यासेनाक्षिप्तेऽऽभ्यासनिमित्ते प्रत्यये यदङ्गं हिनोतिरित्येवं विज्ञायते, एवञ्च विज्ञायमाने कः प्रसङ्गो यो व्यधिकस्य चङि स्यात्()? नैवं प्राप्नोतीस्यतो नार्थोऽचङीति प्रतिषेधेन। एवं प्रत्याख्याय चङ्ग्रहणम्(), तस्य प्रयोजनमाह--"तत्क्रियते" इत्यादि। किं पुनरनेन ज्ञाप्यते? इत्याह--"हेरचङि" इत्यादि। "हेरचङि" इत्यादि। "हेरचङि" इत्यनेन चङोऽन्यत्र सनादौ ण्यधिकस्यापि हिनोतेः कुत्वं भवतीत्येषोऽर्थो ज्ञाप्यते। "तेन" इत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। "प्रजिघाययिषति" इति। प्रहाययितुमिच्छतीति ण्यन्तात्? सन्()॥

बाल-मनोरमा

हेरचङि ३६१, ७।३।५६

हेरचङि। "चजोः" इति सूत्रात्कुग्रहणमनुवर्तते। "अभ्यासाच्चे"त्यतोऽभ्यासादिति। "हो हन्ते"रित्यतो ह इति षष्ठ()न्तमनुवर्तते। तदाह-- अभ्यासात्परस्येति। जिघायेति। जिघ्यतुः। जिघयिथ-- जिघेथ। जिघ्यिव। आप्लृ व्याप्तौ। अनिट्। आप्नुवन्तीति। संयोगपूर्वकत्वादेव "उतश्च प्रत्यया"दिति हेर्न लुक्। शक्लृ शक्ताविति। शक्नोति। शशाक। शेकतुः। शशक्थः शेकिथ। शेकिव।शक्ता। शक्ष्यति। अशकदिति। लृदित्वादङ्। राध साध संसिद्धौ। अनिटौ। दीर्घाकारवत्त्वात् "अत एकह"लिकत्यप्राप्तावाह--

तत्त्व-बोधिनी

हेरचङि ३१५, ७।३।५६

हेरचङि। जेघीयते। अचङीति किम्?। अजीहयत्। इह ण्यन्तस्य धात्वन्तरत्वात्केवलस्य त्वभ्यासनिमित्तप्रत्ययपरत्वाभावात्कुत्वप्राप्तिरेव नास्तीत्यचङीति निषेधो व्यर्थः सन् ज्ञापयति--ण्यधिकस्यापि कुत्वं भवतीति। तेन जिघापयिषतीत्यादि सिद्धम्। आप्नुहीति। संयोगपूर्वत्वात् "उतश्च प्रत्यया"दिति हेर्लुङ् न।

---

सूत्रम्

काशिका-वृत्तिः

सन्लिटोर् जेः ७।३।५७

सनि लिटि च प्रत्यये जेः अङ्गस्य यो ऽभ्यासः तस्मादुत्तरस्य कवर्गाऽदेशो भवति। जिगीषति। जिगाय। सन्लिटोः इति

किम्? जेजीयते। जिनातेः सम्प्रसारणे कृते यद्यपि जिर्भवति, तथापि लाक्षणिकत्वात् तस्य ग्रहणं न भवति, जिज्यतुः, जिज्युः इत्येव भवति।

न्यासः

सन्लिटोर्जेः। , ७।३।५७

"जिगीषति जिगाय" इति। "आदेः परस्य" १।१।५३ इति परस्यादेर्जकारस्य कुत्वम्(), "ज्या वयोहानौ" (धा।पा।१४९९) इत्यसय लिट्()। ग्रहिज्यादिसूत्रेण ६।१।१६ सम्प्रसारणे कृते परपूर्वत्वे च जिरत्येष रपविशेषो भवति। अतस्तस्यापि कुत्वं प्राप्नोति, जिग्रहणेन ग्रहणात्()। न च शक्यते वक्तुम्(), "हलः" ६।४।२ इति दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति, एकदेशविकृतस्यानन्यत्वात्(); (व्या।प।१६) अन्यथा हि जिगीषतीत्यत्रापि "अज्झनगमां सनि" ६।४।१६ इति दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति। अथ वा--प्रागेव दीर्घात्? परत्वात्? कुत्वेन भवितव्यमिति यश्चोदयेत्(), तं प्रत्याह--"जिनातेः" इत्यादि। लक्षणप्रतिपदोक्तपरिभाषया (व्या।प।३) "जि जये" (धा।पा।५६१) इति यः पठ()ते, तस्यैवेदं प्रतिपदोक्तस्य ग्रहणम्(), न जिनातेः। सम्प्रसारणे कृते यज्जीरूपं सम्पदयते, तस्य लाक्षणिकत्वात्()। "जिज्यतुः, जिज्युः" इति। "लिट्, अतुस्(), उस्(), "एरनेकाचोऽसंयोगपूर्वस्य" ६।४।८२ इति यणादेशः॥

तत्त्व-बोधिनी

संल्लिटोर्जेः १४४, ७।३।५७

सँल्लिटोर्जेः। शंल्लिण्निमित्त इति। यदि तु सनि लिटि च परे योऽभ्यास इति प्राचो व्याख्यानमाद्रियेत तदा "येन नाव्यवधान" न्यायेन प्रकृतिव्यवधानं सोठव्यमेव, परं तु यङ्लुगन्तात्सनि जेजयिषतीत्यत्र कुत्वं स्यात्, न च तन्माधवग्रन्थसंमतमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा चेः ७।३।५८

चिनोतेः अङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति। चिचीषति चिकीषति। चिकाय, चिचाय। सन्लिटोः इत्येव, चेचीयते।

लघु-सिद्धान्त-कौमुदी

विभाषा चेः ६५०, ७।३।५८

अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च। चिकाय, चिचाय; चिक्ये, चिच्ये। अचैषीत्, अचेष्ट॥ स्तृञ् आच्छादने॥ ३॥ स्तृणोति, स्तृणुते॥

न्यासः

विभाषा चेः। , ७।३।५८

बाल-मनोरमा

विभाषा चेः ३५५, ७।३।५८

विभाषा चेः। "चजोः कुघिम्ण्यतो"रित्यतः कुग्रहणमनुवर्तते। "अभ्यासाच्चे"त्यतोऽभ्यासादिति, "सन्लिटोर्जे"रित्यतः संन्लिटोरिति च। तदाह-- अभ्यासादित्यादिना। स्तृञ् आच्छादने इति। अनिट्। लिटि तस्तार। अतुसादौ "ऋतश्च

संयोगादेर्गुणः" इति गुणः। वृद्धिविषयेऽपि परत्वादस्य प्रवृत्तिः। तस्तरतुः। ऋदन्तत्वात्थल्यपि नित्यंनेट्। तस्तर्थ।तस्तरिव। तस्तरे तस्तराते तस्तरिते। तस्तरिषे। तस्तरिवहे। स्तर्ता। "ऋद्धनोः स्ये"।स्तरिष्यति। आशीर्लिङि परस्मैपदे यासुटः कित्वाद्गुणनिषेधे प्राप्ते आह-- गुणोर्तीति गुण इति। तङि आशीर्लिङि स्तृ- षीष्ट इति स्थिते---

तत्त्व-बोधिनी

विभाषा चेः ३१०, ७।३।५८

विभाषा चेः। "चजो"रिति सूत्रात्कुरनुवर्तते, "सन्लिटोर्जे"रित्यतः सन्लिटोरिति च। सन्युदाहरणं चिकीर्षति। चिचीषति। र

---

सूत्रम्

काशिका-वृत्तिः

न क्वादेः ७।३।५९

कवर्गादेः धातोः चजोः कवर्गादेशो न भवति। कूजो वर्तते। खर्जः। गर्जः। कूज्यम् भवता। खर्ज्यम्, गर्ज्यम् भवता।

न्यासः

न क्वादेः। , ७।३।५९

"चजोः कु घिण्ण्यतोः" ७।३।५२ इति कुत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते। "कूजः, खजः, गर्जः" इति। "कूज अव्यक्ते शब्दे" (धा।पा।२२३), "खर्ज व्यथने" (धा।पा।२२९) "गर्ज शब्दे" (धा।पा।२२६)॥

बाल-मनोरमा

न क्वादेः ६९५, ७।३।५९

न क्वादेः। कुः आदिर्यस्येति विग्रहः। "चजो कुः" इत्यनुवर्तते। तदाह-- क्वादेरिति। कवर्गादेरित्यर्थः। वार्तिककारस्त्विवत। "चजोः कु घिण्ण्यतोः" इति सूत्रे "निष्ठायामनिटः" इति पूरितम्। तथा च निष्ठायां योऽनिट् तद्धात्ववयवयोश्चजोः कुः" स्याद्घिति ण्यति चेत्यर्थः फलति। तथा "न क्वादे"रिति सूत्रम् "अजिव्रज्योश्चे"ति सूत्रं "यजयाचरुचप्रवचर्चश्चे"त्यत्र याचरुचग्रहणं च न कर्तव्यमिति प्रत्याचख्यावित्यर्थः। किं तत इत्यत आह-- तेनेति। सूत्रमते अर्जितर्जिप्रभृतीनां ण्यति कुत्वं स्यात्, "न क्वादेः" इति निषेधस्य तत्राऽप्रवृत्तेरिति भावः। तदेवं सूत्रमतेऽतिव्याप्तिमुक्त्वा अव्याप्तिमाह-- ग्रुचुरग्लुञ्चुप्रभृतीनामिति। तेषां कवर्गादित्वे।ऽपि ण्यति ग्रोक्यमित्यादौ कुत्वमिष्टं स्यादेव, वार्तिकमते "न क्वादे"रिति निषेधस्य प्रत्यख्यातत्वात्, सूत्रमते तु "न क्वादे"रिति निषेधात् "ग्रोक्य"मित्यादौ कुत्वमिष्टं स्यादित्यव्याप्तिरित भावः। नन्विदं वार्तिकं विपरीतफलमपि संमतत्वाद्ग्राह्यमेव, विरोधे विकल्पसय् वक्तुं शक्यत्वादिति शङ्कते-- सूत्रमते तु यद्यपीति। परिहरति-- तथापीति। यथोत्तरमिति। अयं वैयकारणसमयः।

तत्त्व-बोधिनी

न क्वादेः ५७६, ७।३।५९

गर्ज्यमिति। गर्ज शब्दे "ऋहलो"रिति ण्यति चजोरिति कुत्वे प्राप्तेऽयं निषेधः। कुत्वं स्यादेवेति। "उदितो वे"ति क्त्वायामिड्विकल्पात् "यस्य विभाषे"ति निष्ठायामनिट्()त्वादिति भावः। विपरीतमिति। सूत्रकारमते ग्रुचुग्लुञ्चुप्रभृतीनां "न क्वादे"रिति कुत्वं न भवति,वार्तिकारमते तु निष्ठायामनिट्त्वात् "चजो"रिति कुत्वं भवतीति

परस्परविरद्धमित्यर्थः। यथोत्तरमिति। तथाच वार्तिककानुरोधेन कुत्वं स्वीकर्तव्यमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अजिव्रज्योश् च ७।३।६०

अजि व्रजि इत्येतयोश्च कवर्गादेशो न भवति। समाजः। उदाजः। व्रजि परिव्राजः। परिव्राज्यम्। अजेस् तु अजेर् व्यघञपोः २।४।५६ इति वीभावस्य विधानात् ण्यति न अस्ति उदाहरणम्।

न्यासः

अजिव्रज्योश्च।, ७।३।६०

"समाजः उदाजः" इति। "अज गतिक्षेपणयोः" (धा।पा।२३०)। "समुदोरजः पशुषु" ३।३।६९ इति घञ्()। "परिव्राजः, परिव्राज्यम्()" इति। "वज व्रज गतौ" (धा।पा।२५२,२५३)। अथाजेण्यति कस्मादुदाहरणं नोपन्यस्तम्()? इत्याह--"वीभावस्य" इत्यादि। तत्र "अजेव्र्यघञपोः" २।४।५६ इति वीभावस्य विधानमिति; तेन तस्योदाहरणं नोपपद्यते, ततो न दर्शितमित्यभिप्रायः। चकारोऽनुक्तसमुच्चयार्थः, तेन वजेरपि प्रतिषेधो भवति--वाजः, वाच्यमिति॥

बाल-मनोरमा

अजिव्रज्योश्च ६९६, ७।३।६०

अजिव्रजय्श्चेत्यादि स्पष्टम्।

तत्त्व-बोधिनी

अजिव्रज्योश्च ५७७, ७।३।६०

समाज इति। "अज गतिक्षेपणयो"रित्यस्माद्घञि "चजो"रिति कुत्वे प्राप्तेऽयं निषेधः। एवं व्रजेरपि।

---

सूत्रम्

काशिका-वृत्तिः

भुजन्युब्जौ पाण्युपतापयोः ७।३।६१

भुज न्युबजित्येतौ शब्दौ निपात्येते पाणौ उपतापे च। भुज्यते अनेन इति भुजः पाणिः। हलश्च ३।३।१२१ इति घञ्। तत्र कुत्वाभावो गुणाभावश्च निपात्यते। उब्ज आर्जवे। न्युब्जिताः शेरते ऽस्मिन्निति न्युब्जः उपतापः, रोगः। तथैव घञि कुत्वाभावो निपात्यते। पाण्युपतापयोः इति किम्? भोगः। समुद्गः।

न्यासः

भुजन्युब्जौ पाण्युपतापयोः।, ७।३।६१

"भुजः" इति। "भुज पालनाभ्यवहारयोः" (धा।पा।१४५४), "हलश्च" ३।३।१२१ इति धञ्()। अत्र "अवे तृ()स्त्रोर्घञ्()" ३।३।१२० इत्यतो घञनुवर्त्तते। "न्युब्जः" इति। यदा दकारोपध उच्यते "उद्ज आर्जवे" इति तदा दकारस्य बकारो निपात्यते। अथ वा--"असिद्धेभ उद्जेः" ["इयवरट्()" सूत्रस्थमेतत्? वचनं महाभाष्ये] इत्यनयेष्ट()आ दकारस्य भकारे कृते जश्त्वेन बकारो भवति। यदि तु बकारोपधः "उब्ज आर्जवे" इति तदा समुद्ग इतयतर बकारसय दकारो वक्तव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

प्रयाजानुयाजौ यज्ञाङ्गे ७।३।६२

प्रयाज अनुयाज इत्येतौ निपात्येते यज्ञाङ्गे। पञ्च प्रयाजाः पञ्च अनुयाजाः। त्वमग्ने प्रयाजानां पश्चात् त्वं पुरस्तात्। यज्ञाङ्गे इति किम्? प्रयागः। अनुयागः। प्रयाजानुयाजग्रहणं प्रदर्शनार्थम्, अन्यत्र अप्येवं प्रकारे कुत्वं न भवति। एकादशोपयाजाः, उपांशुयाजमन्तरा यजति अष्टौ पत्नीसंयाजा भवन्ति, ऋतुयाजैश्चरन्ति इत्येवम् आदि सिद्धं भवति।

न्यासः

प्रयाजानुयजौ यज्ञाङ्गे। , ७।३।६२

"प्रयाजः, अनुयाजः" इति। प्रपूर्वादनुपूर्वाचच यजेः "अकत्र्तरि च कारके संज्ञायाम्()" (३।३।१९) इति घञ्? तस्मिन्न कुत्वं निपात्यते। "प्रदर्शनार्थम्()" इति। अन्यस्याप्येवंप्रकारस्योपलक्षणार्थमित्यर्थः। तेनान्यत्रापि प्रयाजानुयाजप्रकारे यज्ञाङ्गे कुत्वं न भवति। प्रदर्शनार्थता पुनः प्रयाजानुयाजशब्दयोर्यज्ञाङ्गगरहणाद्वेदितव्या, तद्ध्येवमर्थं क्रियते। कथं नाम प्रयाजनृयाजगरहणस्योपलक्षणार्थता प्रतीयेत! [प्रतीयते--प्रांउ। पाठः] अन्यथा हि निपातनसामथ्र्यादेव यज्ञाङ्गविषयता विज्ञायत इति तन्न कत्र्तव्यमेव स्यात्()॥

तत्त्व-बोधिनी

भुजन्युब्जौ यज्ञाङ्गे ५७८, ७।३।६२

न्युब्ज इति। उब्ज आर्जवे। निपूर्वस्याऽस्यजस्य कुत्वाऽभावो,दस्य बकारो निपात्यते।

---

सूत्रम्

काशिका-वृत्तिः

वञ्चेर् गतौ ७।३।६३

वञ्चेः अङ्गस्य गतौ वर्तमानस्य कवर्गादेशो न भवति। वञ्च्यं वञ्चन्ति वणिजः। गतौ इति किम्? वङ्कं काष्ठम्। कुटिलम् इत्यर्थः।

न्यासः

वञ्चेर्गतौ। , ७।३।६३

"वञ्चम्()" इति। "वञ्चु चञ्चु तञ्चु त्वञ्च म्रुञ्चु म्लञ्चु भ्रुचु म्लुचु गत्यर्थाः (धा।पा।१८९-१९६)। कर्मणि घञ्()। वञ्च्यं वञ्चन्ति गन्तव्यं गच्छन्तीत्यर्थः। "चङ्कम्()" इति। "हलश्च" ३।३।१२१ इति घञ्()॥

बाल-मनोरमा

वञ्चेर्गतौ ६९७, ७।३।६३

वञ्चेर्गतौ। कुत्वं नेति। शेषपूरणमिदम्। "चजोः कु घिण्ण्यतो"रित्यतः कुग्रहणस्य, "न क्वादे"रित्यतो नेत्यस्य चाऽनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ओक उचः के ७।३।६४

उचेर् धातोः के प्रत्यये ओकः इति निपात्यते। किम् पुनरत्र निपात्यते? कुत्वं गुणश्च। न्योकः शकुनतः। न्योको गृहम्। कर्तरि इगुपधलक्षणः कः प्रत्ययः। अधिकरणादौ तु कारकान्तरे घञर्थे कविधानम् इति। किम् अर्थं पुनरयं घञ्येव न व्युत्पद्यते? स्वरार्थम् अन्तोदात्तो ऽयम् इष्यते, घञि सति आद्युदात्तः स्यात्। दिवौकसः, जलौकसः इत्येवम् आदावप्यसुनि प्रत्यये उणादयो बहुलम् ३।३।१ इति कुत्वं द्रष्टव्यम्।

न्यासः

आक उचः के। , ७।३।६४

"न्योकः" इति। निपूर्वात्? "उच समवाये" (धा।पा।१२२३) इत्यस्मात्? "इगुपधज्ञप्रीकिरः कः" ३।१।१३५--न्युचतीति न्योकः, निवसतीत्यर्थः। न्युचन्त्यस्मिन्निति "घञर्थे कविधानम्()" (वा।३०६) इति वा कः--न्योकः, निवसन्त्यस्मिन्नित्यर्थः। "किमर्थं पुनः" इत्यादि। एवं मन्यते--रूढिशब्दोऽयम्(), नात्र कश्चिदवयवार्थोऽस्ति, व्यत्पत्तिः केवलं कत्तव्या, सा च "हलश्च" ३।३।१२१ इति घञ्यपि कृते भवत्येव, ततो नार्थोऽनेन योगेनेति। "घञि सत्याद्युदात्तः स्यात्()" इति। "ञ्नित्यादेर्नित्यम्()" ६।१।१९१ इत्यनेन। अथ दिवौकसः, जलौकस इत्यादौ कथं कुत्वम्ष यावता नात्र कप्रत्ययोऽस्ति, नापि धिण्ण्यतौ, किं तर्हि? असुन्निति? अत आह--"दिवौकसः" इत्यादि। गतार्थम्()॥

तत्त्व-बोधिनी

ओक उचः के ५७९, ७।३।६४

घञा सिद्धे इति। "उच समवाये" इत्यस्माद्घञि "चजो"रिति कुत्वे लघूपधगुणे च "ओक " इति रूपं सिध्यति, परं तु "ञ्नित्यादिर्नित्य"मित्याद्युदात्तत्वमनिष्टं स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ण्य आवश्यके ७।३।६५

ण्ये परतः आवश्यके ऽर्थे कवर्गो न भवति। अवश्यपाच्यम्। अवश्यवाच्यम्। अवश्यरेच्यम्। आवश्यके इति किम्? पाक्यम्। वाक्यम्। रेक्यम्।

न्यासः

ण्य आवश्यके। , ७।३।६५

"अवश्यपच्यम्()" इत्यादि। "डुपचष्? पाके" (धा।पा।९९६), "वच परिभाषणे" (धा।पा।१८४२), "आवश्यकाधमण्र्ययोर्णिनिः" ३।३।१७० इत्यनुवृत्तौ "कृत्याश्च" ३।३।१७१ इत्यावश्यके ण्यत्()। मयूरव्यंसकादित्वात्? २।१।७१ समासः, "लुम्प्येदवश्यमः कृत्ये तुम्काममनसोरपि" (काशिका ६।१।१४४) इत्यनयेष्ट()आऽवश्यमो मकारलोपः॥

बाल-मनोरमा

ण्य आवश्यके ६९८, ७।३।६५

ण्य आवश्यके। कुत्वं नेति। शेषपूरणमिदम्। आवश्यकेऽर्थे यो ण्यस्तस्मिन् परे "चजोः कु घिण्ण्यतो"रिति कुत्वं नेत्यर्थः।

तत्त्व-बोधिनी

ण्य आवश्यके ५८०, ७।३।६५

ण्य आवश्यके। अवश्यंभाव--- आवश्यकम्। मनोज्ञादित्वाद्वुञ्। "अव्ययानां भमात्रे टिलोपः"। अवश्यपाच्यमिति। "आवश्यकाधमण्र्ययोर्णिनिः""कृत्याश्चे"ति ण्यत्। आवश्यकशब्दोऽर्थद्योतनार्थो न तु प्रयोगार्थः। तेनाऽर्थप्रकरणादिगम्येऽपि तस्मिन् ण्यत्, कुत्वाऽभावश्च भवति। यथा "अशोच्यानन्वशोचस्त्व"मिति। केचित्तु--- शोचितुमर्हाः शोच्याः, न शोच्या अशोच्या इति भगवद्गीतास्विदं व्याचक्षते, तच्चिन्त्यम्। "अर्हे कृत्यतृचश्चे"ति ण्यति "चजोः" कुत्वप्रसङ्गात्। "चजो"रिति कुत्वं "निष्ठायामनिटः" इति वार्तिकमते तु सम्यगेवेति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

यजयाचरुचप्रवचर्चश् च ७।३।६६

यज याच रुच प्रवच ऋच इत्येतेषां ण्ये परतः कवर्गादेशो न भवति। यज याज्यम्। याच याच्यम्। रुच रोच्यम्। प्रवच प्रवाच्यम्। ऋच अर्च्यम्। ऋदुपधादपि ऋचेरत एव निपातनात् ण्यत् भवति। प्रवचग्रहणं शब्दसंज्ञार्थम्। प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थो ऽस्ति। अपरे पुनराहुः, उपसर्गपूर्वस्य नियमार्थम्, प्रपूर्वस्य एव वचेरशब्दसंज्ञायां कुत्वप्रतिषेधो यथा स्यात्, अन्योपसर्गपूर्वस्य मा भूतिति। अविवाक्यमहः इति पठन्ति। एतत् तु विशेष एव इष्यते, दशरात्रस्य यद् दशममहः। अन्यत्र अविवाच्यम् एव भवति। ण्यति प्रतिषेधे त्यजेरुपसङ्ख्यानम्। त्याज्यम्।

न्यासः

यजयाचरुचप्रवचर्चश्च। , ७।३।६६

"ण्ये" इत्येव। अनावश्यकार्थमिदम्()। "याज्यम्()" इत्यादि। "यज देवपूजादौ" (धा।पा।१००२), "टुयाच्? याच्ञायाम्()" (धा।पा।८६३), "रुच दीप्तौ" (धा।पा।७४५), "वच परिभाषणे" (धा।पा।१८४२) प्रपूर्वः, "ऋच स्तुतौ" (धा।पा।१३०२)। कथं पुनऋचेण्र्यत्(), यावता "ऋदुपधाच्चाक्लृ()पि चृतेः" (३।१।११०) इति ण्यदपदादेव क्यपा भवितव्यम्()? इत्याह-- ऋदुपधात्()" इत्यादि। अथ प्रवचिग्रहणं किमर्थम्(), यावता "वचोऽशब्दसंज्ञायाम्()" (७।३।६७) इत्यनेनैव प्रतिषेधो भविष्यति? इत्याह--"प्रवचिग्रहणं शब्दसंज्ञार्थम्()" इति। स्यादेतत्()। नास्त्येव कश्चिच्छब्दो यस्य वाच्यमिति नामधेयम्()? इत्याह--"प्रवाच्यो नाम" इत्यादि। "अपरे पुनः" इत्यादिना मतान्तरं दर्शयति। "एतत्तु" इति। अविवाक्यमेतद्रूपम्()। कः पुनरसौ विशेषः? इत्याह--"दशरात्रस्य" इत्यादि। यस्मिन्? याज्ञिका न विब्राउवते, तस्य दशरात्रस्य यद्दशमाहस्तत्रैवैतच्छशब्दरूपमिष्यते, नान्यत्र। यद्येवम्(), अनर्थकं नियमार्थं प्रवचिग्रहणम्(), अवश्यं तस्य विशिष्टविषये वृत्तिर्यथा स्यादित्यवमर्थो यत्नः कत्र्तव्यः, तत एव यत्नात्? तत्र कुत्वमपि भविष्यति? नैतदस्ति; नियमाद्ध्यन्योपसर्गस्य कुत्वप्रतिषेधो निवत्र्तते। अभिधेयव्यवस्था तु प्रसिद्धिवशादेव विज्ञास्यते। "ण्यति प्रतिषेधे" इत्यादि। ण्यति प्रतिषेधेऽस्मिन्? क्रियमाणे "त्यज हानौ" (धा।पा।९८६) इत्यस्योपसंख्यानं कत्र्तव्यम्()। उपसंख्यानशब्दसय प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()---चकारोऽनुक्तसमुच्चयार्थः, तेन त्यजेरपि प्रतिषेधो भविष्यतीति॥

बाल-मनोरमा

यजयाचरुचप्रवचर्चश्च ६९९, ७।३।६६

यजयाच। ण्ये कुत्वं नेति। शेषपूरणमिदम्। यज, या, रुच, प्रवच, ऋच् एषां द्वन्द्वात् षष्ठी। एषां ण्ये परे "चजोः कु घिण्ण्यतो"रिति कुत्वं नेत्यर्थः। ननु अच्र्यमित्यत् र कथं ण्यत्, "ऋदुपधाच्चाऽक्लृपिचृते"रिति ऋदुपधत्वलक्षस्य

ण्यदपवादत्वादित्यत आह-- ऋदुपधत्वेऽपीति। त्यजिपूज्योश्चेति। "ण्ये कुत्वं ने"ति शेषः।

तत्त्व-बोधिनी
यजयाजरुचप्रवचर्चश्च ५८१, ७।३।६६

यज। यज देवपूजादौ। टुयाचृ याच्ञायाम्। रुच दीप्तौ। प्रपूर्वो वच परिभाषणे। ऋच स्तुतौ। ग्रन्थविशेष इति। तथा च संज्ञेयमिति "वचोऽशब्दसंज्ञाया"मित्यस्याऽप्रसङ्गान्निषेधोऽयमिति भावः। ज्ञापकादिति। सरूपत्वाद्वासरपविधिना ण्यद्भवेदिति न शङ्कनीयमिति भावः।

---

सूत्रम्
काशिका-वृत्तिः
वचो ऽशब्दसंज्ञायां ७।३।६७

वचो ऽशब्दसंज्ञायां ण्यति परतः कुत्वं न भवति। वाच्यमाह। अवाच्यमाह। अशब्दसंज्ञायाम् इति किम्? अवघुषितं वाक्यमाह।
न्यासः
वचोऽशब्दसंज्ञायाम्?। , ७।३।६७

बाल-मनोरमा
वचोऽशब्दसंज्ञायाम् ७००, ७।३।६७

वचोऽशब्दसंज्ञायाम्। वचधातोण्र्ये कुत्वं न, शब्दसंज्ञां वर्जयित्वेत्यर्थः। वाच्यमिति। "वस्त्वि"ति शेषः। "अशब्दसंज्ञाया"मित्यस्य प्रयोजनमाह-- शब्दाख्यायां तु वाक्यमिति। "एकतिङ् वाक्य"मिति संज्ञाशब्दोऽयमिति भावः। "प्रवाच्य"मित्यत्र तु ग्रन्थविशेषसंज्ञात्वेऽपि नायं कुत्वनिषेधस्य निषेधः, "यजयाचे"त्यत्र प्रवचेति विशिष्योपादनात्, असंज्ञायामित्यस्य प्रपूर्वाद्वचेरन्यत्र चरितार्थत्वात्। एतदभिप्रायेणैव "प्रवाच्यं ग्रन्थविशेष" इत्युक्तं प्राक्।

तत्त्व-बोधिनी
वचोऽशब्दसंज्ञायाम् ५८२, ७।३।६७

वाक्यमिति। "तिङ्सुबन्तचयो वाक्यम्"। भोज्यम्। भक्ष्यमिहाभ्यवहार्यमात्रं विवक्षितं, न तुखरविशदमभ्यवहार्थम्। तेन भोज्या यवागूरित्यपि भवतीत्याहुः।

---

सूत्रम्
काशिका-वृत्तिः
प्रयोज्यनियोज्यौ शक्यार्थे ७।३।६८

प्रयोज्य नियोज्य इत्येतौ शब्दौ शक्यार्थे निपात्येते। शक्यः प्रयोक्तुम् प्रयोज्यः। शक्यो नियोक्तुम् नियोज्यः। शक्यार्थे इति किम्? प्रयोग्यः। नियोग्यः।
न्यासः
प्रयोज्यनियोज्यौ शक्यार्थो। , ७।३।६८

प्रपूर्वस्य निपूर्वस्य च "युजिर्? योगे" (धा।पा।१४४४) इत्यसय ष्यति कुत्वाभावो निपात्यते, स चेण्ण्यच्छक्यार्थे भवति। शक्यार्थे पुनण्र्यत् "शकि लिङ्? च" ३।३।१७२ इत्यनेन वेदितव्यः। तत्र हि "कृत्याश्च" ३।३।१७१ इत्यनुवत्र्तते। अथ किमर्थं पुनर्निपातनम्(), यावता "ण्ये" ७।३।६५ इत्यनुवत्र्तत एव? तत्र "प्रयुजनियुजोः शक्यर्थे" इति वक्तव्ये निपातनं रूढ()र्थम्()। अगुणभूता यत्र शक्यार्थता तत्र यथा स्यात्()--प्रयोज्यो भृत्यः, नियोज्यो दास इति। स्वमिनि प्रयोज्यो नियोज्य इति न भवति। न हि तत्र प्रयोज्यनियोज्यशब्दौ रूढौ, किं तर्हि? गुणभूतादेव॥

बाल-मनोरमा

प्रयोज्यनियोज्यौ शक्यार्थे ७०१, ७।३।६८

प्रयोज्यनियोज्यौ। शक्यार्थे ण्ये क्वुत्वाऽभावो निपात्यते। "शकि लिङ् चे"ति कृत्यानां शक्यार्थेऽपि विहितत्वाण्ण्यदन्तस्य शक्यार्थकत्वमपि।

---

सूत्रम्

काशिका-वृत्तिः

भोज्यं भक्ष्ये ७।३।६९

भोज्यम् निपात्यते भक्ष्ये ऽभिधेये। भोज्यः ओदनः। भोज्या यवागूः। इह भक्ष्यम् अभ्यवहार्यमात्रम्। भक्ष्ये इति किम्? भोग्यः कम्बलः।

न्यासः

भोज्यं भक्ष्ये। , ७।३।६९

"भोज्यम्()" इति। "भुज पालनाभ्यवहारयोः" (धा।पा।१४५४) इत्यस्य ण्यति भक्ष्येऽभिधेये कुत्वाभावो निपात्यते। "भोज्या यवागूः" इति। ननु च भक्षिरयं खरविशदेऽभ्यवहार्ये वत्र्तते, न तु द्रवद्रव्ये, यथा--"संस्कृतं भक्षाः" ४।२।१५ इत्यत्र, तत्कथं "भक्ष्ये" इत्युच्यमाने यवाग्वां भवति? इत्याह--"इह भक्ष्यम्()" इत्यादि। नावश्यं भक्षिः खरविरादे वत्र्तते। तथा हि--द्रवद्रव्येऽप्यस्य प्रयोगो दृश्यते। यथा--अबभक्षः, वायुभक्षः, वायुभक्ष इति। तस्मादभ्यवहार्यसामान्ये भक्षिर्वर्तत इति यवाग्वामपि भवति। "भुजो भक्ष्ये" इति वक्तव्ये निपातनं रूढ()र्थम्()। अभ्यवहार्ये भक्ष्ये कर्मणि यथा स्यात्? परिपालनीये मा भूत्()--भोग्या अपूपाः। पालनीया इत्यर्थः॥

बाल-मनोरमा

भोज्यं भक्ष्ये ७०२, ७।३।६९

भोज्यं भक्ष्ये। भक्ष्ये गम्ये ण्ये भुजेः कुत्वाऽभावो निपात्यते। इति प्रासङ्गिकम्। अथ प्रकृतम्-- लपिदभिभ्यां चेति। वार्तिकमिदम् "ऋहलोण्र्य"दिति सूत्रस्थम्। "पोरदुपधा" दिति प्राप्तस्य ण्यदपवादस्य यतोऽपवादः।

तत्त्व-बोधिनी

भोज्यं भक्ष्ये ५८३, ७।३।६९

भोज्यम्। भक्ष्यमिहाभ्यवहार्यमात्रं विवक्षितं, नतु खरविशदमभ्यवहार्यम्।तेन भोज्या यवागूरित्यपि भवतीत्याहुः। भोग्यमन्यदिति। पालनीयमुपभोग्यं चेत्यर्थः।

* लपिदभिभ्यां चेति वक्तव्यम्। लपिदभिभ्यां चेति। "पोरदुपधा" दिति प्राप्तस्य यतोऽपवादः। जयादित्यस्तु--

"आसुयुवपरिपी"ति सूत्रे लपं प्रक्षिप्य "रपिलपित्रपी"ति पठित्वाऽनुक्तसमुच्चयार्थेन चकारेण दभेः सङ्ग्रह इत्युक्तवान्,तत्र वैषम्येण व्याख्यानं निर्बीजं, भाष्यविरोधश्च स्पष्ट एवेति बोध्यम्। स्वीकार्य इति। "कास्यनेकाच आम्वक्तव्यश्चुलुम्पाद्यर्थ"मिति वार्तिकबलाद्यथा चुलुम्पादिभ्य आम् स्वीक्रियते तद्वदिति भावः। तथा च प्रयुज्यते "नता नशन्ति न दभाति तस्करः" , "विष्णुर्गोपा अदाभ्यः" इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

घोर् लोपो लेटि वा ७।३।७०

घुसंज्ञकानां लेटि परतो वा लोपो भवति। दधद्रत्नानि दाशुषे। सोमो ददद् गन्धर्वाय। न च भवति। यदग्निरग्नये ददात्। आडागमे सति लोपे ऽपि ददातिति सिद्धं भवति। तत्र वावचनं विस्पष्टार्थम्, एषा हि कस्यचिदाशङ्का स्यात्, ददातित्येव नित्ये प्राप्ते लोपः आरभ्य माणो बाधते एव एतद् रूपम् इति।

न्यासः

घोर्लोपो लेटि वा। , ७।३।७०

"ददन्()" इति। "डुदाञ्? दाने" (धा।पा।१०९१), लिङर्थे लेट्? ३।४।९७, झेरन्तादेशः, ७।१।३, "इतश्च लोपः परस्मैपदेषु" ३।४।९७ इतीकारलोपः, "लेटोऽडाटौ" ३।४।९४ इत्यट्, शप्(), तस्य जुहोत्यादित्वात्? श्लुः "श्लौ" ६।१।१० इति द्विर्वचनम्(), संयोगान्तलोपः, ८।२।२३ "ङमो ह्रस्वावचि ङमुण्णित्यम्()" ८।३।३२ इति ङ्मुडागमः। "सोमोददद्गन्धर्वाय" इति। ददातेस्पिप्(), शेषं पुर्ववत्()। "यदग्निरग्नये ददात्()" इति। ददा+आदिति स्थितेऽकः सवर्णे दीर्घत्वम्? ६।१।९७ शेषं पूर्ववत्()। यद्याडागमे ["यद्यडागमे"--प्रांउ।पाठः] कृते सत्यपि लोपे च ददादिति सिध्यति, किमर्थं तर्हि वेत्युच्यते? इत्याह--"तत्र" इत्यादि। स्यादेतत्()--विस्ष्टार्थं तर्हि वाग्रहणणयुक्तम्(); वदादित्यस्य रूपस्यासिदिं()ध प्रत्याशङ्काया अभावात्()? इत्यत आह--"एषा हि" इत्यादि। सुबोधम्()।

---

सूत्रम्

काशिका-वृत्तिः

ओतः श्यनि ७।३।७१

ओकारान्तस्य अङ्गस्य श्यनि परतो लोपो भवति। शो निश्यति। छो अवछ्यति। द्यो अवद्यति। सो अवस्यति।

लघु-सिद्धान्त-कौमुदी

युजेरसमासे ३०७, ७।३।७१

युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तलोपः। कुत्वेन नस्य ङः। युङ्। अनुस्वारपरसवर्णौ। युञ्जौ। युञ्जः। युग्भ्याम्॥

लघु-सिद्धान्त-कौमुदी

ओतः श्यनि ६३५, ७।३।७१

लोपः स्यात्। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति॥

न्यासः

ओतः श्यनि। , ७।३।७१

"निश्यति" इत्यादि। "शो तनूकरणे" (धा।पा।११४५), "छो छेदने"["नास्त्ययं धातुः"--मुद्रितग्रन्थे] (धा।पा।११४६) "दो अवखण्डने" (धा।पा।११४८) "षो अन्तकर्मणि" (धा।पा।११४७)। अथ किमर्थं इयनीत्युच्यते, न "शिति" इत्येवोच्येत, एवं ह्युच्यमाने श्यन्येव लोपो भविष्यति, न ह्योकारान्ताच्छयनोऽन्यच्छित्? सम्भवति, लघु चैवं सूत्रं भवति, तत्रायमप्यर्थः--"ष्ठिवुक्लमुचमां शिति" (७।३।७५) इत्यत्र शिद्ग्रहणं न कत्र्तव्यं भवतीत्येतदेव तत्रानुवर्त्तिष्यते? सत्यं सिध्यत्येव, किन्तु प्रतिपत्तिगौरवं स्यात्()। तस्मात्? प्रतिपत्तिगौरवपरीहारार्थं श्यनीत्युक्तम्()। "ओतः" इति। तपरकरणं मुखसुखार्थम्()। न ह्न्यदस्य निवर्त्त्यं विधेयं वा सम्भवति॥

बाल-मनोरमा

ओतः श्यनि ३३९, ७।३।७१

ओतः श्यनि। "घोर्लोपो लेटि वे"त्यतो लोप इत्यनुवर्तते इत्यभिप्रेत्य शेषं पूरयति-- लोपः स्यादिति। शशाविति। "आदेच" इत्यात्त्वे णल औत्त्वमिति भावः। शशतुरिति। शशिथ-- शशाथ। शशिव।शास्यतीति। श्यतु। अश्यत्। श्येत्। शायात्। लुङि सिचि विशेषमाह--विभाषा घ्रेति। सिचो लुक्पक्षे आह--अशादिति। "आतः र" इति जुसिति मत्वा आह-- अशुरिति। सिचो लुगभावे सगिटौ मत्वा आह--अशासीदिति। छोदातुरपि शोधातुवत्। षो अन्तकर्मणीति। समापने विनाशने वेत्यर्थः। शोधातुवद्रूपाणि। षोपदेशोऽयम्। स्यतीति। "ओतः श्यनी"ति लोपः। अभिष्यतीति। "उपसर्गा"दिति षत्वम्। अभ्यष्यदिति। "प्राक्सिता"दिति षत्वम्। अभिससाविति। "स्थादिष्वि"ति नियमान्न षः। दो अवखण्डने। प्रणिदातेति। "नेर्गदे"ति णत्म्। देयादिति। आशीर्लिङि "एर्लिङी"त्येत्त्वम्। अदादिति। "गातिस्थे"ति सिचो लुक्। अथात्मनेपदिन इति। "वाशृ शब्दे" इत्यन्ता इत्यर्थः। जनी प्रादुर्भावे इति। "()आईदितो निष्ठाया"मित्याद्यर्थमीदित्त्वम्।

तत्त्व-बोधिनी

ओतः श्यनि २९६, ७।३।७१

षोऽन्त। अन्तक्रम-- नाशनम्। "राघव !स्य शरैर्गौरैर्घोरं रावणमाहवे" इति। राघवेति संबुद्ध्यन्तम्। स्येति लोण्मध्यमैकवचनम्। अभिष्यतीति। "उपसर्गात्सुनोती"ति षत्वम्। अभ्यष्यदिति। "प्राक्सितादड्व्यवायेऽपी"ति षत्वम्। अभिससाविति। "स्थादिषु" इति नियमान्न षत्वम्। दो अवखण्डने। अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः, खण्डने इत्येतावत्युक्तेऽपीष्टसिद्धेः। प्रणिदातेति। "नेर्गदे"ति णत्वम्। देयादिति। "एर्लिङी"त्येत्त्वम्। अदादिति। "गातिस्थे"ति सिचो लुक्।

---

सूत्रम्

काशिका-वृत्तिः

क्षस्य अचि ७।३।७२

क्षस्यजादौ प्रत्यये लोपो भवति। अधुक्षाताम्। अधुक्षाथाम्। अधुक्षि। अचि इति किम्? अधुक्षत्। अधुक्षताम्। क्कारवतः उपादानं किम्? इह मा भूत्, उत्सौ। उत्साः। वत्सौ। वत्साः।

लघु-सिद्धान्त-कौमुदी

क्सस्याचि ५९५, ७।३।७२

अजादौ तङि क्सस्य लोपः। अधुक्षाताम्। अधुक्षन्त। अदुग्धाः, अधुक्षथाः। अधुक्षाथाम्। अधुग्ध्वम्, अधुक्षध्वम्।

अधुक्षि। अदुह्वहि, अधुक्षावहि। अधुक्षामहि। अधोक्ष्यत॥ एवं दिह उपचये॥ २२॥ लिह आस्वादने॥ २३॥ लेढि। लीढः। लिहन्ति। लेक्षि। लीढे। लिहाते। लिहते। लिक्षे। लिहाथे। लीढ्वे। लिलेह, लिलिहे। लेढासि, लेढासे। लेक्ष्यति, लेक्ष्यते। लेढु। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। अलेट्, अलेड्। अलिक्षत्, अलीढ, अलिक्षत। अलेक्ष्यत्, अलेक्ष्यत॥ ब्रूञ् व्यक्तायां वाचि॥ २४॥

न्यासः

क्सस्याचि। , ७।३।७२

"अधुक्षाताम्(), अधुक्षाथाम्()" इति। दुहेर्लुङ्(), च्लिः, "स्वरितञितः" १।३।७२ इत्यात्मनेपदम्(), आतामाथाम्(), "शाल इगुपधादनिटः क्सः" ३।१।४५ इति क्सादेशश्च्लेः, तस्यानेन "अलोऽन्त्यस्य" १।१।५१ लोपः, "दादेर्घातोर्घः" ८।२।३२ इति हकारस्य धकारः, "एकाचो वशो भष्()" ८।२।३७ इत्यादिना भष्()--धकारः, "खरि च" ८।४।५४ इति चर्त्वम्()--धकारस्य ककारः "इण्कोः" ८।३।५७ इति षत्वम्()। "अधिक्षि" इति। उत्तमपुरुषैकवचनमिट्()। "अधुक्षत्()" इति। तिप्(), "इतश्च" ३।४।१०० इतीकारलोपः। "अधुक्षताम्()" इति। "तस्थस्थमिपाम्()" ३।४।१०१ इत्यादिना तसस्ताम्()। ककारक्त उपादानम्, इह मा भूत्()--हंसौ हंसाः, षत्सौ, वत्सा इति॥

बाल-मनोरमा

क्सस्याऽचि १७६, ७।३।७२

अघृक्ष-- आतामिति स्थिते "आतो ङितः" इति इयादेशे प्राप्ते---क्सस्य। अचीत्यऽस्याङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः। "घोर्लोपो लेटि वे" त्यतो लोप इत्यनुवर्तते। तदाह--अजादावित्यादिना। अलोऽन्त्यस्येति। अन्त्यस्याऽकारस्य लोप इति भावः। वस्तुतस्तु "लुग्वा दुहदिहे"त्युत्तरसूत्रादात्मनेपदे इत्यपकृष्य तद्विशेषणत्वादचीति चदादिविधिः। तेन दृसेः क्सप्रत्यये "तादृक्षा" इत्यादौ नायं लोपः। "अजादौ तङी"त्येव क्वचित्पाठो दृश्यते। अघृक्षातामिति। अघृक्ष-- आतामिति स्थिते क्साऽकारस्य लोपे अतः परत्वाऽभावात् "आतो ङितः" इति इय् नेति भावः। अघृक्षन्तेति। झस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अकारलोपाऽभावादतः परत्वात् "आत्मनेपदेष्वनतः" इत्यदादेशो न। कृते तु झोऽन्तादेशे क्सस्याकारलोपः पररूपं वा। ग्लह चेति। ग्ल्हधातुरपि ग्रहणे वर्तत इत्यर्थः। अदुपधोऽयम्। घुषि कान्तीति। उदुपधोऽयम्। इदित्त्वान्नुम्। "नश्चे"त्यनुस्वारः। यय्परकत्वाऽभावान्न परसवर्णः। तदाह--घुषत इति। सेक्टोऽयम्। अदुपधपक्षे तु घषते। जघषे। ऊष्मान्ता आत्मनेपदिनो गताः। अथार्हत्यन्ताः परस्मैपदिन इति। "ऊष्मान्ता" इति शेषः। तत्र तुस ह्यसेत्यतः प्राक् षान्ताः। घुषिरिति।इर् इत्। प्रतिज्ञानमिति। "वेदाः प्रमाण"मित्याद्यभ्युपगम इत्यर्थः। ततोऽन्यस्मिन्निति। विशब्दनात् अन्यत्-- अविशब्दनं, तस्मिन्नित्यर्थः। इरित्त्वादङ् वेति। "इरितो वेत्यनेने"ति शेषः। अघुषदिति। अङो ङित्त्वान्न लघूपधगुणः। अघोषीदिति। अङभावपक्षे लघूपधगुणे "इट ईटी"ति सिज्लोपः। हलन्तलक्षणवृद्धेः "नेटी"ति निषेधः। अक्ष्()धातुरूदित्त्वाद्वेट्कः।

तत्त्व-बोधिनी

क्सस्याऽचि १५०, ७।३।७२

घुषि कान्तिकरणे। लुङि अघुंषिष्ट। अघुंषिषाताम्। अदुपधपाठे तु-- अघषिष्ट। अघषिषाताम्।

---

सूत्रम्

काशिका-वृत्तिः

लुग् वा दुहदिहलिहगुहाम् आत्मनेपदे दन्त्ये ७।३।७३

दुह दिह लिह गुह इत्येतेषाम् अङ्गानाम् आत्मनेपदे दन्त्यादौ परतः क्षस्य वा लुग् भवति। अदुग्ध, अधुक्षत। अधुग्धाः, अधुक्षथाः। अदुग्ध्वम्, अधुक्षध्वम्। अदुह्वहि, अधुक्षावहि। दिह अदिग्ध, अधिक्षत। लिह अलीढ, अलिक्षत। गुह न्यगूढ, न्यघुक्षत। दुहादीनाम् इति किम्? व्यत्यपुक्षत। आत्मनेपदे इति किम्? अधुक्षत्। दन्त्ये इति किम्? अधुक्षामहि। लोप इति वर्तमाने लुग्ग्रहणं सर्वादेशार्थम्। तच् च बह्यर्थम्। अन्यत्र तु अन्त्यस्य एव लोपे कृते झलो झलि ८।२।२६ इति सकारलोपेन सिध्यति। स्थानिवद्भावो ऽपि अकारलोपस्य न अस्ति, पूर्वत्र असिद्धे न स्थानिवतिति। दन्त्योष्ठो ऽपि वकारो दन्त्य इति गृह्यते। यदि स न गृह्येत ततः तौग्रहणम् एव अत्र कृतं स्यात्।

लघु-सिद्धान्त-कौमुदी

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ५९४, ७।३।७३

एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि। अदुग्ध, अधुक्षत॥

न्यासः

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। , ७।३।७३

"दुह प्रपूरणे" (धा।पा।१०१४), "दिह उपचये" (धा।पा।१०१५), "लिह आस्वादने" (धा।पा।१०१६), "गुहू संवरणे" (धा।पा।८९६)--सर्वं एते स्वरितेतः। स्वरितेत्त्वात्? "स्वरितित्रितः कत्र्रभिप्राये क्रियाफके" १।३।७२ इत्यामनेपदिनः। "अदुग्ध" इति। पूववद्घकरः, "झषस्तथोर्धोऽयः" ८।२।४० इति तकारस्य धकारः, "झलां जश्? झशि" ८।४।५२ इति धकारस्य गकारः। "अदुग्धाम्()" इति। थास्(), पूर्ववद्? धत्वादि। "अदुग्ध्वम्()" इति। ध्वम्()। "अदुह्वहि" इति। वहिः। "अदिग्ध" इति। पूर्ववद्? घत्वादि। "अलीढ" इति। हकारसय "हो ढः" ८।२।३१ इति ढकारः पूर्ववत्(), तकारस्य धत्वं ष्टुत्वञ्च, "ढो ढे लोपः" ८।३।१३, "ढ्रलोपः पूरवस्य ६।३।११० इत्यादिना दीर्घः। "न्यगूढ" इति। एतदपि पूर्वेण तुल्यम्()। "व्यत्यपुक्षत" इति। "पुष पुष्टौ" (धा।पा।११८२) व्यतिपूर्वः। "कत्र्तरि कर्मण्यतिहारे" १।३।१४ इत्यातमनेपदम्(), "षढोः कः सि" ८।२।४१ इति षकारस्य ककारः। "अजुक्षामाहि" इति। महिङ। अथ लुग्ग्रहणं किमर्थम्(), यावता लोप इत्यनुवत्र्तत एव? इत्याह--"लोप इति वत्र्तमाने" इति। यदि लोपग्रहणमनुवर्त्य लोपो विधीयते तत्? "अलोऽन्त्यस्य" १।१।५१ इत्यन्त्यस्य स्यात्()। कि तु सर्वस्यैव भवति; प्रत्ययादर्शनस्य लुक्संज्ञाविधानात्()। तस्मात्? सर्वस्य क्सस्य लोपो यथा स्यादित्येवमर्थं लुग्ग्रहणं कृतम्()। "वह्र्थम्()" इति। उत्तमपुरुषद्विवचनार्थमित्यर्थः। वहिरर्थः प्रयोजनं यस्य तत्? तथोक्तम्()। अथान्यार्थं कस्मान्न भवति? इत्याह--"अन्यत्र तु" इत्यादि। यदात्मनेपदं दन्त्यादि तत्सर्वं झलाद्येव। तत्रान्त्यस्यैवाकारस्य लोपे कृते "झलो झलि" ८।२।२६ इति सकारसय लोपेनेष्टं सिध्यत्येव। स्यादेतत्()--अन्यत्रापि लुका विना न सिध्यति; अकारलोपस्य सकारलोपे कत्र्तव्ये "अचः परस्मिन्? पूर्वविधौ" (१।१।५७) इति स्थानिवदभावादिति? अत आह--"स्थानिवद्भावोऽप्यकारलोपस्य नास्ति" इति। कस्मान्नास्ति? इत्याह--"पूर्वत्रासिद्धे न स्थानिवत्()" इति। तस्मान्नान्यार्थं लुग्ग्रहणम्(), अपि तु वह्र्थमेव। अत्र ह्रझलादित्वात्? "झलो झलि" ८।२।२६ इति सकारलोपो नास्तीति न सिध्यति। "ननु च क्रियमाणेऽपि लुग्ग्रहणे वहौ लुका न भवितव्यमेव, अदन्त्यादित्वात्(), न हि दन्त्यौष्ठ()ओ वकारो दन्त्यग्रहणेन गुह्रते? इत्याह--"दन्त्यौष्ठ()ओऽपि" इत्यादि। अत्रैव हेतुमाह--"यदि" इत्यादि। यदि दन्त्यौष्ठ्यौ दकारो दन्त्यग्रहणेन न गृह्येत्(), तदा तावित्येवं ब्राऊयात्(), न दन्त्य इति। तावप्युच्यमाने सर्वमिष्टं सिध्यत्येव। न हि तदर्गादन्यद्दन्त्यमात्मनेपदस्यास्ति। तस्माद्दन्त्यौष्ठ()ओऽपि वकारो दन्त्यग्रहणेन गृह्रते। तत्रेदं चोद्यते--यदुक्तम्()--"अन्यत्र ह्नन्त्यस्यैव लोपे कृते "झलो झलि" ८।२।२६ इति सकारलोपेनेष्टं सिद्ध्यत्येवेति, तदयुक्तम्(); न हि "झलो झलि" ८।२।२६ इत्यनेन सकारमात्रस्य लोपो विधियते, किं तर्हि? सिचः, तथा हि तत्रैव

वक्ष्यति--"अयमप सिच एव लोपः"" इति? नैतदस्ति; सिज्ग्रहणस्य च्ल्यादेशस्योपलक्षणार्थत्वाच्च्लेर्थ आदेशस्तत्सम्बन्धिन एव सकारस्य लोपो भवतीत्ययं तत्रार्थो वेदितव्यः॥

बाल-मनोरमा

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये २०२, ७।३।७३

लुङस्तङि विशेषमाह--लुग्वा दुह। दन्त्ये तङीति। दन्त्यादौ तङीत्यर्थः। प्रत्ययाऽदर्शनत्वात्सर्वादेशोऽयं लुक्। अगूढेति। अगुह् त इति स्थिते प्रक्रियां दर्शयति--ढत्वधत्वष्टुत्वढलोपदीर्घा इति। अघुक्षतेति। क्सलुगभावे ढत्वभष्भावकत्वषत्वानीति भावः। अघुक्षातामिति। च्लेः क्सादेशे क्सस्य कित्त्वेन गुणहेतुत्वाऽभावादूत्त्वाऽभावेढत्वभष्भावकत्वषत्वेषु कृतेषु "क्सस्याची"त्यन्तलोपे अतः परत्वाभावादातो ङित इति न भवतीति भावः। अघुक्षन्तेति। झस्य अजादित्वाऽभावात्तस्मिन्परे क्सस्य अन्त्यलोपाऽभावादतः परत्वाऽभावादात्मनेपदेष्वत इत्यदादेशो न भवति। कृते तु झोऽन्तादेशे क्सस्याऽन्तलोप इति भावः। अघुक्षथाः काघुक्षाथाम् अघुक्षध्वम्। अघुक्षि। इति रूपाणि सिद्धवत्कृत्याह-- अगुह्वहीति। दन्त्यादिप्रत्ययपरत्वत्क्सस्य लुङि अजादिप्रत्ययाऽभावादूत्त्वाऽभावे रूपम्। अघुक्षावहीति। क्स्लुगभावे ढत्वभष्भावकत्वषत्वानि, अतो दीर्घश्च। अघुक्षामहीति।दन्त्यादिप्रत्ययपरत्वाऽभावान्न क्सलुक्। इतिगूहत्यन्ताः स्वरितेतः। उभयपदिन इति। ञित्त्वादिति भावः। श्रिञ्धातुः सेट्। शिश्रियतुरिति। कित्त्वान्न गुणः। इयङ् शिश्रियुः। शिश्रयिथ शिश्रियथुः शिश्रिय। शिश्राय--शिश्रय, शिश्रियिव शिश्रियिम। शिश्रिये शिश्रियाते शिश्रियिरे। शिश्रयिषे शिश्रयाथे शिश्रियिढ्वे--शिश्रियिध्वे। शिश्रियेशिश्रियिवहे शिश्रयिमहे। श्रयितेति। श्रयिष्यति श्रयिष्यते। श्रयतु श्रयताम्। अश्रयत् अश्रयत। श्रयेत्। श्रीयात्। श्रयिषीष्ट। लुङि विशेषमाह-- णिश्रीति। अशश्रियदिति। "चङी"ति द्वित्वम्। अशिश्रियत। अश्रयिष्यत् अश्रयिष्यत। भृञ् धातुरनिट्। भरतीति। भरते इत्यपि ज्ञेयम्। बभ्रतुरिति। कित्त्वान्न गुणः। यण्। बभ्रुः। थलादौ "एकाचः" इति नेट्, कृसृभृवृस्तुद्रुरुआउश्रुषु लिट()पि तन्निषेधस्य प्रवृत्तेः। थलि "अचस्तास्व"दिति निषेधाच्च, ऋदन्तेषु भारद्वाजमतेऽपि थलि निषेधाच्च। तदाह--बभर्थेति। बभ्रथुः बभ्र। बभार-बभर। इति सिद्धवत्कृत्याह-- बभृवेति। बभृम। बभ्रे बभ्राते बभ्रिरे। इति सिद्धवत्कृत्याह-- बभृषे इति। बभ्राथे बभृढ्वे। बभ्रे बभृवहे बभृमहे।

तत्त्व-बोधिनी

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये १७५, ७।३।७३

दन्त्ये तङीति। दन्त्यादौ तङीत्यर्थः। अदुग्ध। अधुक्षत। अदिग्ध। अधिक्षत। अलीढ। अलिक्षतेत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

शमाम् अष्टानां दीर्घः श्यनि ७।३।७४

शमादीनाम् अष्टानां दीर्घो भवति श्यनि परतः। शम् शाम्यति। तम् ताम्यति। दम् दाम्यति। श्रम् श्राम्यति। क्षम् क्षाम्यति। क्लम् क्लाम्यति। मदी माद्यति। अष्टानाम् इति किम्? अस्यति। श्यनि इति किम्? भ्रमति। वा भ्राश इति श्यनो विकल्पः। बभ्राम।

न्यासः

शमामष्टानां दीर्घः श्यनि। , ७।३।७४

बहुवचननिर्देशादष्टग्रहणाच्चाद्यर्थो गम्यत इत्याह--"शमादीनाम्()" इत्यादि। "शमु उपशमे (धा।पा।१२०१), "तमु काङ्क्षायाम्()" (धा।पा।१२०२), "दमु उपशमे" (धा।पा।१२०३), "श्रमु तपसि खेदे च" (धा।पा।१२०४) "क्षमु सहने" (धा।पा।१२०६), "भ्रमु अनवस्थाने" (धा।पा।१२०५), "क्लमु ग्लानौ" (धा।पा।१२०७), "मदी हर्षे" (धा।पा।१२०८)--इत्येतेऽष्टौ शमादयः। "अस्यति" इति। "असु क्षेपणे" (धा।पा।१२०९)। अष्टाभ्यः परेणायं पठ()ते। "भ्रमति" इति। "वा भ्राश" (३।१।७०) इत्यादिना श्यन्? यस्मिन्? पक्षे नास्ति तत्रेदं प्रत्युदाहरणम्()। श्यन्()ग्रहणं स्पष्टार्थम्। शक्यते हि "ओतः श्यनि" (७।३।७१) इति यत्? प्रकृतं शन्ग्रहणं तल्लुग्ग्रणेव व्यवहितमपि मण्डूकप्लतिन्यायेनेहानुवत्र्तयितुम्()॥

बाल-मनोरमा

शमाष्टानां दीर्घः श्यनि ३४९, ७।३।७४

शमामष्टानाम्। स्पष्टम्। बहुवचनाच्छमादिग्रहणम्। तदाह-- शमादीनामिति। "शमस्तमुर्दमुरथ श्रमुभ्र्रमुरपि क्षमुः। क्लमुर्मदी चेत्येतेऽष्टौ शमादय इति स्थितिः।" दमु उपशमे इति। ननु "शमु यमु उपशमे" इत्येव पठितुं युक्तमित्यत आह-- उपशम इति ण्यन्तस्येति। शमधातोर्हेतुमण्ण्यन्ताद्धञि "नोदात्तोपदेशस्ये"ति वृद्ध्यभाव इत्यर्थः। ततः किमित्यत आह-- तेनेति। ततश्च् दाम्यतीत्यस्य शमयतीत्यर्थः। शेषं भ्वादिवदिति। आद्र्धातुकेषु शप्पक्षे च भ्वादिवदित्यर्थः। क्षमु सहने। ऊदित्त्वात्थलि वमादौ च इड्विकल्पः। तदाह--- चक्षमितेत्यादि। षित्त्वाऽषित्त्वयोः फलभेदं श्लोकार्द्धेन संगृह्णाति-- अषित इति। अषितः क्षाम्यतेः-- श्यन्विकरणपठितस्य क्षमधातोः क्तिनि क्षानतिरिति रूपम्। अषित्त्वात् "षिद्भिदादिभ्यः" इत्यङ्नाक्,मूषस्तु भौवादिकात् षित आत्मनेपदे शपि क्षपि परे इव श्यनि परेऽपि दीर्घसिद्धेः। न च "ष्ठिवुक्लमुचमांशिती"त्यत्रैव क्लमुग्रहणं त्यज्यतामितिवाच्यं, शपि दीर्घार्थं तस्यावश्यकत्वादित्यशङ्क्य परिहरति--शपीव श्यन्यपीत्यादि, घिनुणर्थ इत्यन्तम्। "शमित्यष्टाभ्यो घिनु"णिति विधानादिति भावः। शमादय इति। "शमु उपशमे" इत्यारभ्य "मदी हर्षे" इत्यन्ता अष्टौ शमादयो वृत्ता इत्यर्थः। असु क्षेपणे।

तत्त्व-बोधिनी

शमामष्टानां दीर्घः श्यनि ३०६, ७।३।७४

भ्रमु अनवस्थाने। शेषमिति। श्यनि दीर्घो लुङि अङ च विशेष उक्तस्ततोऽन्यदित्यर्थः। चक्षण्वेति। "म्वोश्चे"ति मस्य नत्वे कृते णत्वम्। शमादिपाठ इति। ""शमित्यष्टाभ्यो घिनुण्"। शमादय इति। शमुतमुदमुश्रमुभ्रमुक्षमुक्लमुमद इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ष्ठिवुक्लम्याचमां शिति ७।३।७५

ष्ठिवु क्लमि आचम् इत्येतेषां दीर्घो भवति शिति परतः। ष्ठीवति। क्लमु क्लामति। आचम् आचामति। क्लमिग्रहणम् शबर्थम्। चमेराङ्पूर्वस्य ग्रहणम्। इह मा भूत्, वमति। विचमति।

न्यासः

ष्ठिवुकलभ्याचमां शिति। , ७।३।७५

"ष्ठिवु निरसने" (धा।पा।१११०) "क्लमु ग्लागौ" (धा।पा।१२०७), "चमु छमु जमु झमु अदने" (धा।पा।४६९-४७२) आङ्पूर्वः। "क्लामति" इति "वा भ्राश" 3।१।७० इत्यादिना श्यनोऽभावे शप्()। "क्लमिग्रहणं शवर्थम्()" (इति। न तु

श्यनर्थम्(), तत्र पूर्वेणैव सिद्धत्वात्()। "चमेराङ्पूर्वस्य" इत्यादिना केवलस्यान्योपसर्गपूर्वस्य वा मा भूदित्येवमर्थं चमेराङ्पूर्वस्य ग्रहणमिति दर्शयति॥

बाल-मनोरमा

ष्ठिवुक्लमुचमां शिति १६०, ७।३।७५

ष्ठिवुक्लम्वाच। "शमामष्टानां दीर्घः श्यनी"त्यतो दीर्घ इत्यनुवर्तते। दीर्घश्रुत्या अच इत्युपस्थितम्। तदाह---- एषामचो दीर्घ इति। ष्ठिवु क्लमु आचम् एषां द्वन्द्वः। आचमित्यनेन आङ्पूर्वकस्य चमेग्र्रहणम्()। अचमीदिति। "हम्यन्ते"ति न वृद्धिः। क्रमु पादेति। उदित्त्वमुदितो वेति विकल्पार्थम्।

तत्त्व-बोधिनी

ष्ठिवुक्लमुचमां शिति १३४, ७।३।७५

ष्ठिवुक्लमु। ष्ठीवति। क्लामति। आङि चम इति। "ष्ठिवुक्लम्वाचमा"मिति वृत्तिकारोक्तपाठोऽयुक्त इति भावः। जिमिं केचिदिति। तथा च जेमनमिति भोजने प्रयुञ्जते।

---

सूत्रम्

काशिका-वृत्तिः

क्रमः परस्मैपदेषु ७।३।७६

क्रमः परस्मैपदपरे शिति परतो दीर्घो भवति। क्रामति, क्रामतः, क्रामन्ति। परस्मैपदेसु इति किम्? आक्रमते आदित्यः। इह उत्क्राम, सङ्क्राम इति हेर्लुकि कृते न लुमताङ्गस्य १।१।६५ इति प्रत्ययलक्षणप्रतिषेधात् दीर्घो न प्राप्नोति? न एष दोषः। लुमताशब्देन लुप्ते य दङ्गं तस्य कार्ये स प्रतिषेधः। न च हौ क्रमिरङ्गम्, किं तर्हि, शपि।

लघु-सिद्धान्त-कौमुदी

क्रमः परस्मैपदेषु ४८८, ७।३।७६

क्रमो दीर्घः परस्मैपदे शिति। क्राम्यति, क्रामति। चक्राम। क्रमिता। क्रमिष्यति। क्राम्यतु, क्रामतु। अक्राम्यत्, अक्रामत्। क्राम्येत्। क्रामेत्। क्रम्यात्। अक्रमीत्। अक्रमिष्यत्॥ पा पाने॥ १६॥

न्यासः

क्रमः परस्मैपदेषु। , ७।३।७६

"क्रामति" इति। "क्रमु पादविक्षेपे" (धा।पा।४७३)। "आक्रमते" इति। आङ्पूर्वः। "आङ उद्गमने" १।३।४० इत्यात्मनेपदम्()। "इहोत्क्राम, सङ्क्राम" इत्यादिना चोद्यम्()। उत्पूर्वात्? सम्पूर्वाच्च क्रमेर्लोट "सेह्रपिच्च" ३।४।८७ इति हिरादेशः, तस्य "अतो हेः" ६।४।१०५ इति हेर्लुकि कृते "न लुमताङ्गस्य" (१।१।६३) इति प्रत्ययलक्षणनिषेधात्? उत्क्राम सङ्क्राम" इत्यत्र दीर्घत्वं न प्राप्नोति; न ह्रसति प्रत्ययलक्षणे हौ लुप्ते क्रमः परस्मैपदपरता सम्भवति। "नैष दोषः, इत्यादि परीहारः। स्यादेतत्? लुमता लुप्ते क्रमः प्रत्यये हावेव करमिरत्राङ्गमित्याह--"न च क्रमिरङ्गम्()" इति। शपा व्यवहितत्वात्()। "किं तर्हि? "शपि" इति। शप एव ततो व्यवहितस्य विद्यमानत्वात्()॥

बाल-मनोरमा

क्रम परस्मैपदेषु १६२, ७।३।७६

क्रमः। दीर्घः स्यादिति। "शमामष्टाना"मित्यतस्तदनुवृत्तेरिति भावः। शितीति। "ष्ठिवुक्लम्वाचमा"मित्यतस्तदनुवृत्तेरिति भावः। क्रामत्विति। मध्यमपुरुषैकवचने क्रमेत्यत्र तु "क्रमः परस्मैपदेष्वि"ति दीर्घो भवत्येव। नच दीर्घस्याङ्गाधिकारस्थत्वान्नलुममेति निषेधः शङ्क्यः, लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्य एव तस्य प्रवृत्तेः। शिति परतः क्रमेरङ्गस्य दीर्घस्तु न लुप्तप्रत्यये परस्मैपदे परे अङ्गस्य कार्यं, किंतु शिति परे अङ्गस्य कार्यमिति बोध्यम्।

तत्त्व-बोधिनी

क्रम परस्मैपदेषु १३६, ७।३।७६

क्रमः। "ष्ठिवुक्लमुचमा"मित्यतोऽनुवर्तनादाह-परस्मैपदे शतीति। परस्मैपदे किम्?। उपक्रमते। पराक्रमते।

---

सूत्रम्

काशिका-वृत्तिः

इषुगमियमां छः ७।३।७७

इषु गमि यम इत्येतेषां शिति परतः छकारादेशो भवति। इच्छति। गच्छति। यच्छति। इषेरुदितो ग्रहणम्। इह मा भूत्, इष्यति, इष्णाति इति। ये तु इषिमुदितं न अधीयते ते इह च सूत्रे अचि इति अनुवर्तयन्ति। तच् च प्रधानम् अज्ग्रहणम् शिति इत्यनेन विशेष्यते इति वर्णयन्ति। तथा च सति तदादिविधिर्न भवति। यस्मिन् विधिस् तदादावल्ग्रहणे इत्येतदपि विशेष्णेन एव इस्यते, तेन इषाण इत्यत्र छत्वं न भवति। न ह्ययम् अजेव शितिति।

लघु-सिद्धान्त-कौमुदी

इषुगमियमां छः ५०६, ७।३।७७

एषां छः स्यात् शिति। गच्छति। जगाम॥

न्यासः

इषुगमियमां छः। , ७।३।७७

"इच्छति" इति। "तुदादिभ्यः शः" ३।१।७७। "गच्छति, यच्छति" इति। "कर्त्तरि शप्()" ३।१।६८। अथ किमर्थम्(), "इषु इच्छायाम्()" (धा।पा।१३५१) इत्येतस्योदितो ग्रहणम्()? इत्याह--"इषेः" इत्यादि। "इष गतौ" (धा।पा।११२७) इत्यसय दैवादिकस्येष्यतीत्यत्र मा भूत्()। "इष आभीक्ष्ण्ये" (धा।पा।१५२५) इत्यस्य क्रैयादिकसय इष्णातीत्यत्र मा भूदित्येवमर्थमुकारानुबन्ध इषिरिह गृह्तते। ये तर्हीषिमुदितमिह न पठन्ति, तेषामिष्यति, इष्णातीत्यत्रापि प्राप्नोति? इत्यत आह--"ये त्विषिमुदितम्()" इत्याद। य इषिमुकारानुबन्धविशिष्टमिह न पठन्ति; त इष्यति, इष्णातीत्यत्र च्छत्वं मा भूदित्येवमर्थम्(), "क्सस्याचि" ७।३।७२ इत्यतोऽज्ग्रहणमनुवत्र्तयन्ति। अनुवत्र्तमानेऽप्यस्मिन्? यदि तेन शितीत्येतद्विशिष्यते--शित च्छो भवति, किं विशिष्टे? अजादाविति, तदेष्णातेर्लोट्()सिपो हीत्यादेशे कृते "हलः श्नः शानज्झौ" (३।१।८३) इति श्नाप्रत्ययस्य शानजादेशे कृते सति इषणेत्यत्र "यस्मिन्? विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) इति तदादिविधिना छत्वं स्यादेवेति मन्यमान आह--"तच्च प्रधानमन्ग्रहणं शितीत्यनेन विशिष्यत इति वर्णयन्ति" इति। अचि च्छो भवति स चेच्छिद्भवति। प्राधान्पं पुनरज्ग्रहणस्य विशिष्यमाणत्वादेव। "तथा च सति" इत्यादि। एवमचीत्यस्मिन्? प्रधाने शितीत्यनेन विशिष्यमाणे तदादिविधिर्न भवति। किं कारणम्()? इत्याह--"यस्मिन्? विधिः" इत्यादि। न केवलं "येन वधिस्तदन्तस्य" १।१।७१ इत्येतदेव तदन्तविधानं विशेषणेनेष्यते, अपि तु "यस्मिन्विधिस्तददावल्ग्रहणे" (व्या।प।१२७) इत्येतदेव तदादिविधानं विशेषणेनैवेष्यते। तेन च

तदादिविधेरभावादषाणेत्यत्र छत्वं न भवति। असत्यपि तदादिविधौ शानजदेशस्य योऽयमादिराकारस्तत्र शिति परतश्छत्वं कस्मान्न भवति? इत्याह--"न ह्ययम्()" इत्यादि। शकारः समुदायानुबन्धः, नाकारस्याचः। तस्मान्नाजेव शित्(), अपि तु समुदाय एवेति न भवति च्छत्वम्()॥

बाल-मनोरमा

इषुगमियमां छः २३५, ७।३।७७

इषुगमि। शितीति। "ष्ठिवुक्लमुचमा"मित्यतस्तदनुवृत्तेरिति भावः। उदिन्निर्देशात्तौदादिकस्य इषेग्रहणम्। अत्राऽचीत्यनिवर्त्य अजादौ शितीत्याश्रित्य इष्यति इष्णाति इत्यत्र छत्वं नेति भाष्ये स्थितम्। एवं चात्र सूत्रे, तुदादौ च उदित्पाठोऽनार्ष इति शब्देन्दुशेखरे स्थितम्। गच्छतीति। शपि मकारस्य छकारः। जग्मतुरिति। "गमहने"त्युपधालोपः। एवं जग्मुः। भारद्वाजनियमात्थलि वेट्। तदाह--जगमिथ जगन्थेति। जग्मथुः जग्म। जगाम-- जगम जग्मिव जग्मिम। क्रादिनियमादिट्।

तत्त्व-बोधिनी

इषुगमियमां छः २०६, ७।३।७७

जग्मतुरिति। "गमहने"त्युपधालोपः।

---

सूत्रम्

काशिका-वृत्तिः

पाघ्राध्माशाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्थमनयच्छपश्यर्च्छधौशीयसीदाः ७।३।७८

प घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद सद इत्येतेषां पिब जिघ्र धम तिष्थ मन यच्छ पश्य ऋच्छ धौ शीय सीद इत्येते आदेशा भवन्ति शिति परतः। पा पिबति। घ्रा जिघ्रति। ध्मा धमति। स्था तिष्थति। मना मनति। दाण् यच्छति। दृशि पश्यति। अर्ति ऋच्छति। सर्ति धावति। शद शीयते। सद सीदति। पिबतेर् लघूपधगुणः प्राप्नोति, सः अङ्गवृत्ते पुनर् वृत्तावविधिर्निष्ठितस्य इति न भवति। अथ वा अकारान्तो ऽयम् आदेशः आद्युदात्तो निपात्यते। सर्तेर्वेगितायां गतौ धावादेशम् इच्छन्ति। अन्यत्र सरति, अनुसरति इत्येव भवति।

लघु-सिद्धान्त-कौमुदी

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ४८९, ७।३।७८

पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। पिबादेशोऽदन्तस्तेन न गुणः। पिबति॥

न्यासः

पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यच्छधौशीयसीदाः। , ७।३।७८

"पा पाने" (धा।पा।९२५), "घ्रा गन्धोपादाने" (धा।पा।९२६) "ध्मा शब्दाग्निसंयोगयोः" (धा।पा।९२७), "ष्ठा गतिनिवृत्तौ" (धा।पा।९२८), "म्ना अभ्यासे" (धा।पा।९२९), "दाण्? दाने" (धा।पा।९३०), "दृशिर प्रेक्षणे" (धा।पा।९८८); "ऋ गतिप्रापणयोः, (धा।पा।९३६), "ऋ सृ गतौ च" (धा।पा।१२९८,१०९९); "शद्लृ शातने" (धा।पा।१४२८), "षद्लृ वशरणे" (धा।पा।१४२७) तौदादकः, "षद्लृ? विशरणगत्यवसादनेषु" (धा।पा।८५४) भौवादिकः--एषां धातूनां स्थाने यथासंक्यं पिबादय आदेशा भवन्ति। ननु च द्वौ सदी, तत्र वैषम्याद्यथासंख्यं न प्राप्नोति? नैष दोषः; एक एव हि सदिर्विकरणद्वयार्थ द्वियपदिश्यते। "शीयते" इति। "शदेः शितः" १।३।६० इत्यात्मनेपदम्()। "अथ वा" इत्यादि। "पिबतेर्लघूपघगुणः

प्राप्नोति" इत्यत्र परिहारान्तरम्()। यद्याद्यदात्तो न निपात्येत, ततो धातुस्वरेणान्तोदात्तत्वे सति "एकादेश उदात्तेनोदात्तः" ८।२।५ इति शपा सहैकदेशे सति "अतो गुणे" ६।१।९४ पररूपत्वे उदात्ते कृते पिबतीति मध्योदात्तं पदं स्यात्(), आद्युदात्तञ्चेष्यते, तस्मादाद्युदात्तो निपात्यते। स निपातनस्वरो धातुस्वरसय बाधको यथा स्यात्()। "सर्त्तः" इत्यादि। वेगः=जवः; स यस्यास्ति स वेगी, तस्य भावो वेगिता, तस्यां गतौ सत्र्तेर्धावादेशमिच्छन्ति। स च "लुग्वा दुहदिह" ७।३।७३ इत्यादेः सूत्राद्वाग्रहणानुवृत्तेष्र्यवस्थितविभाषात्वाल्लम्यत इति वेदितव्यम्()। अर्त्तिसत्र्तीति शितपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः। न हि यङ्लुकि शित्परः सम्भवति; अदादत्वत्? ततो विहितस्य शपो लुग्वधानात्()। "बहुलं छन्दसि" (२।४।७३) इति शपो लग्न भविष्यतीति चेत्()? न, छन्दस यथादृष्टानुविधानात्()। अर्त्तिप्रभृतेश्छब्दसि यङ्लुकि शबन्तस्य प्रयोगादर्शनात्()॥

बाल-मनोरमा

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यच्छधौशीयसीदाः १९७, ७।३।७८

लटि शपि सद् अ ति इति स्थिते---पाघ्राध्मा। पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद् सद् एषां द्वन्द्वात् षष्ठीबहुवचनम्। पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सीद एषां द्वन्द्वात् प्रथमाबहुवचनम्। यथासङ्ख्यमादेशाः। "ष्ठिवुक्लमु"इत्यतः शितीत्यनुवर्तते। श् चासौ इच्चेति कर्मधारयः।अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः। तदाह--इत्संज्ञकेति। ससादेरिति। इत्संज्ञकशकारादिप्रत्ययाऽभावान्न सीदादेशः। श् इत् यस्य स शित्। शितीति बहुव्रीह्याश्रयणे तु पाधातोः कर्मणि लिटि एशि आल्लोपे "पपे" इत्यत्रापि पिबादेशः स्यादिति बोध्यम्। थलि क्रादिनियमप्राप्तस्य इटः "उपदेशेऽत्वतः" इति निषेधेऽपि भारद्वाजनियमाद्वेट्। तत्र इट्पक्षे "थलि च सेटी" त्येत्वाभ्यासलोपौ। तदाह-- सेदिथ ससत्थेति। सेदिव सेदिम। क्रादिनियमादिट्। न्यषीददिति। "प्राक्सितादड्()व्यवायेऽपि"ति षत्वम्।

तत्त्व-बोधिनी

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यच्छधौशीयसीदाः १७०, ७।३।७८

पाघ्राध्मा। पा पाने। पा रक्षणे इति तु न गृह्रते, लुग्विकरणत्वात्। "द्रष्टि" इति केषांचित्पाठस्तत्र "सृजिदृशो"रित्यम्। अर्तीत्यादौ ऋच्छादेशाद्यभाव इव सौत्रत्वात्पश्यादेशाऽभाव इति बोध्यम्। "दृश्यत्री"ति पाठस्तु निर्दुष्ट एव। पादीनामिति। एकादशानामेषां यथासङ्ख्यमेकादश- पिबाद्यादेशाः स्युरित्यर्थः। "ष्ठिवुक्लमुचमा"मित्यतः शितीत्यनुवर्तते। स च कर्मधारय इत्यभिप्रेत्याह-- इत्संज्ञकशकारादाविति। शकारादाविति किम्?। पपे। जिघ्रे। दध्मे। शितीति बहुव्रीहिरित्यभ्युपगमे त्विह पिबाद्यादेशाः स्युरेव।

---

सूत्रम्

काशिका-वृत्तिः

ज्ञाजनोर् जा ७।३।७९

ज्ञ जन इत्येतयोः जादेशो भवति शिति परतः। जानाति। जायते। जनेर् दैवादिकस्य ग्रहणम्।

लघु-सिद्धान्त-कौमुदी

ज्ञाजनोर्जा ६४२, ७।३।७९

अनयोर्जादेशः स्याच्छिति। जायते। जज्ञे। जनिता। जनिष्यते॥

न्यासः

ज्ञाजनोर्जा। , ७।३।७९

"जनेर्देवादकसय ग्रहणम्()" इति। द्वौ जनी--दैवादिकः "जनी प्रादुर्भावे" (धा।पा।११४९), जौहोत्यादिकः "जन जनने" (धा।पा।११०५) इति। तत्रैह दैवादिकस्य ग्रहणम्(), नेतरस्य। न हि ततः परः शित्? सम्भवति, श्लुविधानात्()। दीर्घोच्चारणस्य प्रयोजनमुत्तरत्र वक्ष्यति॥

बाल-मनोरमा

ज्ञाजनोर्जा ३४०, ७।३।७९

ज्ञाजनोर्जा। शितीति। "ष्ठिवुक्लमुचमा"मित्यतस्तदनुवृत्तेरिति भावः। जायते इति। ज्ञाधातोस्तुश्नविकरणत्वाज्जानातीत्युदाहरणम्। उभयत्रापि जादेशस्य ह्यस्वान्तत्वे "अङ्गकार्ये कृते पुनर्नाङ्गकार्य"मिति परिभाषया "अतो दीर्घो यञी" त्यप्रप्तर्जार्देशस्य दीर्घान्तत्वमाश्रितम्। जज्ञे इति। "गमहने"त्युपधालोपे नस्य श्चुत्वेन ञः। जायेत।जनिषीष्ट। लुङि अजन् त इति स्थिते आह-- दीपेति। वा चिणिति। "च्ले"रिति शेषः। अजन् इ त इति स्थिते उपधावृद्धौ प्राप्तायाम्--

तत्त्व-बोधिनी

ज्ञाजनोर्जा २९७, ७।३।७९

ज्ञाजनोर्जा। जानाति। शिति किम्?। ज्ञाता। "ज" इति ह्यस्वोच्चारणेऽपि "अतो दीर्घोयञी"ति दीर्घे सिद्धे जाग्रहणमङ्गवृत्तपरिभाषाज्ञापनार्थम्। तेन पाधातोः पिबादेशे कृते गुणो न भवति, पिबादेशस्याऽदन्तत्वाश्रयणं तूपायान्तरमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

प्वादीनां ह्रस्वः ७।३।८०

पू इत्येवम् आदीनां ह्रस्वो भवति शिति परतः। प्वादयः क्र्यादिषु पठ्यन्ते। पूञ् पवनित्यतः प्रभृति प्ली गतौ वृतिति यावत् केचितिच्छन्ति, वृत्करणम् एतत् ल्वादीनां प्वादीनां च परिसमाप्त्यर्थम् इति। अपरे तु ल्वादीनाम् एव परिसमाप्त्यर्थं वृत्करणम् एतदिच्छन्ति, आगणान्ताः प्वादयः इति। पूञ् पुनाति। लूञ् लुनाति। स्तॄञ् स्तृणाति। येषाम् आगणान्ताः प्वादयः तेषां जानाति इत्यत्र ह्रस्वः प्राप्नोति, ज्ञाजनोर् जा ७।३।७९ इति दीर्घकरणसामर्थ्यान् न भवति। जनेरपि हि जादेशे सति अतो दीर्घो यञि ७।३।१०१ इति दीर्घत्वेन जायते इति सिध्यति।

लघु-सिद्धान्त-कौमुदी

प्वादीनां ह्रस्वः ६९३, ७।३।८०

पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्लीनां चतुर्विंशतेः शिति ह्रस्वः। पुनाति, पुनीते। पविता॥ लूञ् छेदने॥ १२॥ लुनाति, लुनीते॥ स्तॄञ् आच्छादने॥ १३॥ स्तृणाति। शर्पूर्वाः खयः। तस्तार। तस्तरतुः। तस्तरे। स्तरीता। स्तरिता। स्तृणीयात्, स्तृणीत। स्तीर्यात्॥

न्यासः

प्वादीनां ह्रस्वः। , ७।३।८०

"व्ली गतौ वृदिति यावत्? केचिदिच्छन्ति" इति। तेषां ततः परेण पठितयोः "व्री वरणे" (धा।पा।१५०४), "भ्री भये" (धा।पा।१५०५)--इत्येतयोह्र्यस्वत्वेन न भवितव्यम्()--व्रीणाति, भ्रीणातीति। ननु ल्वादीनां परिसमास्यर्थं तद्()वृत्करणम्(), अन्यथा आ गणान्तात्? तेभ्यो निष्ठानत्वं स्यात्(), ल्वादिपरिसमास्यर्थे च तस्मिन्नागणान्ताः प्वादयो युक्ताः? इत्यत आह--"वृत्करणम्()" इत्यादि। न ह्रुभयगणपरिसमास्यर्थता केनचिद्विरुध्यत इत्यभिप्रायः। "अपरे" इत्यादि। ल्वादेर्गणस्यानन्तरत्वात्? तत्परिसमास्यर्थतैव वृत्करणस्य युक्तेति भावः। तेषामेवमिच्छतां व्री वरणे, भ्रो भये--इत्येतयोरपि भवितव्यं ह्यसवत्वेन व्रिणाति, भ्रिणातोति; प्वादिषूभयोरन्तर्भावात्()। "जानातीत्यत्र ह्यस्वः प्राप्नोति" इति। तल्याप प्वाद्यन्तर्भावादित्याह--"ज्ञाजनोर्जा" इत्यादि। यदि "जा" इत्यादेशे कृते ह्यसवः स्यात्? तदा दीर्घोच्चारणमनर्थकं स्यात्(), "ज" इत्येवं ब्राऊयात्()। तस्मात्? दीर्घोच्चारणसामथ्र्यज्जानातीत्यत्र ह्यस्वो न भविष्यति। ननु च दीर्घोच्चारणं जन्यर्थं स्यात्(), न हि जनेर्ज इत्यादेशे कृते जायत इति रूपं सिध्यति? इत्यत आह--"ज इत्यपि ह्यादेशे कृते" इत्यादि। येषान्तूभयगणपरिसमास्यर्थं वृत्करणं तेषां किमर्थं जा इति दीर्घोच्चारणम्()? जानातीत्यत्र दीर्घो यथा स्यात्()? नैतदस्ति; "अतो दीर्घो यञि" (७।३।१०१) इति दीर्घो भविष्यति? ननु च "अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य" (व्या।प।३८) इति न प्राप्नोति? नैतदस्ति; "निष्ठितस्य" इत्युच्यते, न च ज इत्यादेशे कृते निष्ठितमङ्गं भवति; अप्रयोगार्हत्वात्()। प्रतिपत्तिलाघवार्थं दीर्घोच्चारणम्()॥

बाल-मनोरमा

प्वादीनां ह्यस्वः ३८५, ७।३।८०

प्वादीनां ह्यस्वः। "ष्ठिवुकलमुचमा"मित्यः शितीत्यनुवर्तत इत्यभिप्रेत्य शेषं पूरयति-- शिति परे इति। पवितेति। ऊकारान्तत्वात्सेडिति भावः। स्तृ()ञ् आच्छादने। सेट्। तस्तरतुरिति। कित्त्वेऽपि "ऋच्छत्यृ()ता"मिति गुणः। स्तरिता स्तरीतेति। "वृ()तो वा इति दीर्घविकल्पः। आशिषि स्तीर्यादिति। "ऋत इद्धातो"रिति इतत्वे रपरत्वे "हलि चे"ति दीर्घः। स्तृ? - षीष्ट इति स्थिते आह -- लिङ्()सिचोरिति वेडिति। "वृ()तो वा" इति दीर्घविकल्पनिषेधसूत्रं स्मारयति - न लिङीति। वृ()त इटो दीर्घो नेत्यर्थः। इडभावपक्षे स्तृ()षीष्टेत्यत्र गुणमाशङ्क्याह-- उश्चेति कित्त्वमिति। लुङि परस्मैपद सिचि अस्तरिष्टामित्यत्र "वृ()तो वे"ति इटो दीर्घविकल्पे प्राप्ते आह -- सिचि चेति। अस्तरीष्ट अस्तरिष्टेति। "वृ()तो वे"ति दीर्घः। अस्तीष्र्टति। "लिङ्सिचो"रिति इडभावपक्षे ऋत इत्त्वे "हलि चे"ति दीर्घ इति भावः। कृ()ञ् हिंसायाम्।चकरे इति। "ऋच्छत्यतृ()ता"मितिगुणः। वृ()र()ञ् वरणे इति। आशिषीति। वृ? यात् इति स्थिते "उदोष्ठ()पूर्वस्ये"ति ऋकारस्य उत्वमित्यर्थः, तत्र दन्त्योष्ठ()पूर्वस्यापि ग्रहणादिति बावः। ऋत उत्वे रपरत्वे "हलि चे"ति दीर्घ इति बोद्ध्यम्। वरिषीष्ट पूर्षीष्टेति। "लिङ्सिचो"रिति वेट्। इडभावे "उश्चे"ति कित्वाद्गुणाऽभावे उत्वे रपरत्वे "हलि चे"ति दीर्घ इति भावः। अवारिष्टामिति। "सिचि चे"ति इटो न दीर्घ इति भावः। अवरिष्ट अवरीष्टेति। "वृ()तो वा"इति सिच इटो दीर्घविकल्प इति भावः। दुधविथ-- दुधीथेति। "स्वरतिसूतिसूयतिधूञूदितः"इति वेडेति भावः। श हिंसायाम्। सेट्। णलि -- शशार। श अतुस् इत्यत्र कित्त्वेऽपि "ऋच्छत्यृ()ता"मिति नित्ये गुणे प्राप्ते आह--शृ()द्द()प्रामिति। गुणाऽपवादे पाक्,िके ह्यस्वे कृते ऋकारस्य यणि रेफ इत्यर्थः। शशरिथ। पृ()धातुरपि शृ()धातुवत्। आशिषि पूर्यादिति। "उदोष्ठ()ऊपूर्वस्ये"त्युत्वमिति भावः। द्द? विदारणे। "शृ()द्द()प्रा"मिति हस्त्रविकल्पं मत्वाह -- ददरतुः दद्रतुरिति। ऋ गतौ। अरांचकारेति। व्यपदेशिवत्त्वेन गुरुमत्त्वादाम्। लङ्याह -- आर्णादिति। ज्या वयोहानौ। अनिट्। ज्या ना तीति स्थिते "ग्रहिज्ये" ति संप्रसारणे पूर्वरूपे च जिनातीति स्थिते--

तत्त्व-बोधिनी

प्वादीनां ह्यस्वः ३३६, ७।३।८०

प्वादीनां ह्रस्वः। "ष्ठिवुक्लमुचमा"मित्यतः शितीत्यनुवर्तत इत्याह-- शिति पर इति। न लिङीति। अनेन वृ()त इटो लिङि दीर्घो नेति स्मारितम्। उदोष्ठ()। दन्तोष्ठ()ओऽपि ओष्ठ()ग्रहणेन गृह्रत इत्याह-- वूर्यादिति। वरिषीष्टेति। "लिङ्सिचोरात्मनेपदेषु" इति वेट्। वूर्षीष्ट। अवूर्ष्टेति। "उश्चे"ति लिङ्सिचोः कित्वाद्गुणाऽभावे सत्युत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

मीनातेर् निगमे ७।३।८१

मीनातेरङ्गस्य शिति प्रत्यये परतो ह्रस्वो भवति निगमविषये। प्रमिणन्ति व्रतानि। निगमे इति किम्? प्रमीणाति।

न्यासः

मीनातेर्निगमे। , ७।३।८१

"प्रमिणन्ति" इति। "हिनु मीना" ८।४।१५ इति णत्वम्(), "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपः। मीनातेरिह विकरणनिर्देशः "मीञ्? हिंसायाम्()" (धा।पा।१४७६) इत्यस्य क्रैयादिकस्य ग्रहणं यथा सात्(), "मीङ्? हिंसायाम्()" (धा।पा।११३७) इत्यस्य दैवादिकसय ग्रहणं मा भूदित्येवमर्थम्()। "मीञः" इति निर्देशो न कृतो वैचित्र्यार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

मिदेर् गुणः ७।३।८२

मिदेरङ्गस्य इको गुणो भवति शिति प्रत्यये परतः। मेद्यति, मेद्यतः, मेद्यन्ति। शिति इत्येव, मिद्यते।

न्यासः

मिदेर्गुणः। , ७।३।८२

"ञिमिदा स्नेहने" (धा।पा।७४३,१२४३) इति भौवादिको दैवादिकश्च, तत्र दिवादेरिह ग्रहणम्(); इतरस्व ह्रङित्त्वाच्छपः "पुगन्तलघूपधस्य च" ७।३।८६ इत्येवं गुणः सिद्धः। "मिद्यते" इति। "भावकर्मणोः" १।२।१३ इत्यात्मनेपदम्(), "सार्वधातुके यक्()" ३।१।६७॥

बाल-मनोरमा

मिदेर्गुणः १८५, ७।३।८२

"मिमिदे" इत्यत्र लिटः "असंयोगा"दिति कित्त्वेऽपि गुणं शङ्कितुमाह--मिदेर्गुणः। "मिदे"रित्यवयवषष्ठी। गुणश्रुत्या "इको गुणवृद्धी" इति परिभाषया इक इत्युपतिष्ठते, "ष्ठिवुक्लमुचमां शिति" इत्यतः शितीत्यनुवर्तते। श् चासाविच्चेति कर्मधारयः। तेन च अधिकृताऽङ्गाक्षिप्तः प्रत्ययो विशेष्यते। तदादिविधिः। इत्संज्ञशकारादौ प्रत्यये परे इति लभ्यते। तदाह--मिदेरित्यादिना। दैवादिकमिदेः श्यनि मेद्यते इत्याद्युदाहरणम्। श् इत् यस्येति बहुव्रीहिमाश्रित्य शिति प्रत्यये परे मिदेरिको गुण इत्येव कुतो न व्याख्यायत इत्याशङ्क्य मिमिदे इत्यत्र गुणाऽभावार्थमित्संज्ञकशाकारादाविति व्याख्येयमित्यभिप्रेत्याह--एश आदिशित्त्वाभावादिति। ञिष्विदेति। षोपदेशोऽयम्। अनिट्सु स्विद्येति श्यन्विकरणस्यैव ग्रहणादयं सेट्। रुच दीप्तावभिप्रीतौ चेति। अभिप्रीतिः- प्रीतिविषयीभवनम्। दीप्तौ उदाहरत--रोचते सूर्य इति। प्रकाशत इत्यर्थः। अभिप्रीतौ उदाहरति-- हरये रोचते भक्तिरिति। भक्तिर्हर्याश्रितप्रीतिविषयो भवतीत्यर्थः। "रुच्यर्थाना"मिति

संप्रदानत्वाच्चतुर्थी। क्षुभ संचलने इति। क्षोभते। क्षुभ्यतीति दिवादौ। क्षुभ्नातीति क्र्यादौ। णभधातुर्णोपदेश नभते। आद्योऽभावे चेति। चात्संचलनेऽपि। तत्र अभावार्थकस्य प्रयोगं दर्शयति-- नभन्तामन्यके समे इति। मन्त्रोऽयम्। नन्वत्र मन्त्रे णभेर्हिंसार्थकत्वमेव कुतो न स्यादित्य आह--मा भूवन्नन्यके सर्वे इति। "नभन्ता"मित्यस्य विवरणं-- भा भूवन्निति। न भवन्तीत्यर्थः। "समे"इत्यस्य विवरणं-- सर्वे इति। निरुक्तमिति। वेदव्याख्यानात्मको यास्कप्रणीतो ग्रन्थविशेषो निरुक्तम्। रुआंसु ध्वंसु भ्रंसु इति। त्रयो नोपधा इति भावः। नारुआसदिति। "नारुआंस" दित्यपपाठः। नचाऽरुआंसदिति लङो रूपमिति भ्रमितव्यं, तत्र परस्मैपदाऽसंभवात्। रुआम्भुदातुरकारमध्यः। वृतु वर्तने इति। उदित् ऋदुपधः सेट्कः। वर्तते इति। शपि गुणे रपरत्वम्। ववृते इति। "असंयोगा"दिति कित्त्वाद्गुणाऽभावे द्वित्वे उरदत्त्वे रपरत्वे हलादिशेषे रूपम्। लुटि--वर्तिता।

तत्त्व-बोधिनी

मिदेर्गुणः १५८, ७।३।८२

मिदेर्गुणः। "ष्ठिवुक्लमुचमा"मित्यतः शितीत्यनुवर्तते। तत्र शश्चासौ इच्चेति कर्मदारयात्समसमी। अङ्गाक्षिप्तप्रत्ययस्तु विशेष्यः। तेन "यस्मिन्विधि"रिति तदादिविधिः प्रवर्तते। तदाह-- इत्संज्ञकशकारादाविति। आदिशित्त्वाभावादिति। मेद्यति मेद्यत इत्यादौ तु "दिवादिभ्य" इति श्यन आदिशित्त्वाद्गुणो भवत्येव। मिमिदे इति। "शिती"ति बहुव्रीहौ त्विह स्यादेव गुणः। तथा पपे तस्थे इत्यादौ पिबादयोऽपि स्युरिति भावः। ञिष्विदा। अनिट्कारिकायां स्विद्यतिरिति श्यना निर्देशादयं सेट्। स्वेदिता। स्वेदिष्यते। ञिक्ष्विदा चेति। पूर्वोक्तयोरेवार्थयोरयमिति बोध्यम्। हरये इति। "रुच्यर्थाना"मिति संप्रदानसंज्ञायां चतुर्थी। घुट्।परिवर्तनम्-- इतस्ततो भ्रमणम्। जुघुटे इति। "असंयोगा"दिति कित्त्वाद्गुणाऽभावः। क्षुभ। संचलनं-- प्रकृतिविपर्यासो,मन्थनं च। क्षोभते। "क्षुभ्यती"ति दिवादौ। "क्षुभ्नाती"ति क्र्यादौ। नारुआसदिति। "नारुआंस"दित्यपपाठ एव। न चेदं लहो रूपं, तत्र परस्मैपदाऽसंभवादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

जुसि च ७।३।८३

जुसि च प्रत्यये परतः इगन्तस्य अङ्गस्य गुणो भवति। अजुहवुः। अबिभयुः। अबिभरुः। अथ चिनुयुः, सुनुयुः इत्यत्र कस्मान् न भवति? अत्र हि द्वे ङित्त्वे, सार्वधातुकाश्रयम्, यासुडाश्रयं च। तत्र न अप्राप्ते सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे जुसि गुणः आरभ्यमाणः तम् एव बाधते। यासुडाश्रयङित्त्वनिमित्तं तु न बाधते, तत्र हि प्राप्ते च अप्राप्ते च आरभ्यते इति।

लघु-सिद्धान्त-कौमुदी

जुसि च ६११, ७।३।८३

इगन्ताङ्गस्य गुणोऽजादौ जुसि। अजुहवुः। जुहुयात्। हूयात्। अहौषीत्। अहोष्यत्॥ ञिभी भये॥ २॥ बिभेति॥

न्यासः

जुसि च। , ७।३।८३

इकात्र सन्निहितेन प्रकृतमङ्गं विशिष्यते, विशेषणेन तदन्तविधिर्भवतीत्यत आह--"इगन्तस्य" इत्यादि। "अजुहवुः" इति। लङ्(), "सिजभ्यस्तविदभ्यश्च" 3।४।१०९ इति झेर्जुस्(), शपः श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्()। "अबिभयुः" इति। "ञिभी भये" (धा।पा।१०८४)। "अबिभरुः" इति। "डु भृञ्? धारणपोषणयोः" (धा।पा।१०८७), "भृञामित्()" ७।४।७६

इत्यभ्यासस्येत्वम्()। "चिनुयुः सुनुयुः" इति। लिङ्(), यासुट्? झेर्जुस्(), "स्वादिभ्यः श्नुः" [३।१।७३](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) "उस्यपदान्तात्()" [६।१।९३](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इति पररूपत्वाम्()। "तत्र नाप्राप्ते" इत्यादि। सार्वाधातुकमाश्रयो यस्यतत्? सार्वधातुकाश्रयम्()। ङित्त्वं निमित्तं यस्य प्रतिषेधस्य स तथोक्तः। स सर्वत्रैव जुसि प्राप्नोतीति तस्मिन्नाप्राप्तेऽयं गुण आरभ्यमाणस्तस्यैव बाधको भविष्यति; न तु यस्य यासुडाश्रयं ङित्त्वं निमित्तम्(), तस्यापि। अत्र हि प्राप्ते चाप्राप्तेऽयमारभ्यते। चिनुयुरित्यादौ प्राप्ते, अजुहवुरित्यादावप्राप्ते। चकारः समुच्चये। नान्यत्? समुच्चेतव्यमस्तीत्यस्यैव लक्षणस्य पुनरावृत्तिमाचष्टे। तेन प्रकृतलक्षणस्यापि प्रतिषेधविषये भवति। "अदीधयुः" इति। "दीधीङ्? दीप्तिदेवनयोः" (धा।पा।१०७६), लङ्? व्यत्ययेन परस्मैपदम्(), झिः, "जक्षित्यादयः षट्()" [६।१।६](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इत्यभ्यस्तसंज्ञा, "सिजभ्यस्तविदिभ्यश्च" [३।४।१०९](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इति झेर्जुस्(), अदादित्वाच्छपो लुक्()। ततः "सार्वधातुकार्धधातुकयोः" [७।३।८४](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इति गुणः प्राप्तः, स "क्ङिति च" [१।१।५](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इति प्रतिषिद्धः, सोऽप्यनेन पुनः प्राप्तौ "दीधीवेवीटाम्()" [१।१।६](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इति प्रतिषिद्धः समुच्चयार्थत्वाच्चकारस्य भवति॥

बाल-मनोरमा

जुसि च ३११, ७।३।८३

जुसि च। अङ्गस्येत्यधिकृतम्। "मिदेर्गुण" इत्यतो गुण इत्यनुवर्तते। "इको गुणवृद्धी" इति परिभाषया "इक" इत्युपस्थितेन अङ्गस्य विशेषणात्तदन्तविधिः। "क्सस्याची"इत्यतोऽनुवृत्तेन अचीत्यनेन जुसीत्यस्य विशेषणात्तदादिविधिः। तदाह-- अजादावित्यादिना। अजगरुरिति। अजागः अजागृतम् अजागृत। अजागरम् अजागृव अजागृम। विधिलिङि यासुटो ङित्त्वान्न गुणः। जागृयात् जागृयताम्। जागृयुरिति। "जुसि चे"त्यत्र अजादावित्युक्तेर्न गुण इति भावः। जागृधातोर्लुङि सिचि इटि यणादिप्राप्तिक्रमं दर्शयति-- जागृ इसित्यत्रेति। तत्र कृते इति। "जाग्रोऽविचिण्ण"लिति गुणे रपरत्वे कृते अजागर् ईदिति स्थिते सतीत्यर्थः। तदाहुरिति। "वृद्धा" इति शेषः। अजागरिष्टाम् अजागरिषुरित्यादि सुगमम्। दरिद्राधातुरादन्तः सेट्। दुर्गतिः = धनहीनीभवनम्। दारिद्रातीति। धनहीनीभवतीत्यर्थः।

तत्त्व-बोधिनी

जुसि च २७१, ७।३।८३

जुसि च। चकारः स्पष्टप्रतिपत्त्यर्थः। "क्सस्याची"त्यतोऽत्यतोऽचीत्यनुवर्तत इत्याह-- अजादाविति। जागृयुरिति। एवं श्रृणुयुः चिनुयुरित्यादावपि गुणो नेति बोध्यम्। "यासुटो ङित्तवाच्छ्रृणुयुरित्यादौ गुणो ने"ति प्राचोक्तिस्तु मनोरमायां दूषिता, "जुसि चे"ति गुणस्य निषेधापवादत्वादिति। केचित्तु--"जुसि चे"त्यत्र उसीत्यावर्त्य "उरुआऊपे जुसी"ति व्याख्यानान्नोक्तदोष इत्याहुः। "अजादौ जुसी"ति समाधानं तु भाष्यारूढम्। जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रमं दर्शयति-- जागृ- इसित्यत्रेति।तत्र कृते इति। हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधः, तेन गुणेनहलन्तत्वसंपादनात्। या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते नान्येति भावः। अजागरिष्टाम्। अजागरिषुः। अजागरीदित्यादि। दरिद्रा।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ सार्वधातुकार्धधातुकयोः ७।२ [८६](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) गुणः १।१ [८२](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) अङ्गस्य ६।१ [६।४।१](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm)

समासः॥

सार्वधातुकश्च आर्धधातुकश्च सार्वधातुकार्धधातुके, तयोः ॰ इतरेतरद्वन्द्वः।

अर्थः॥

सार्वधातुके आर्धधातुके च प्रत्यये परतः एगन्तस्य अङ्गस्य गुणः भवति।

उदाहरणम्॥

सार्वधातुके -- तरति, नयति, भवति। आर्धधातुके -- कर्त्ता, चेता, स्तोता।
काशिका-वृत्तिः
सार्वधातुकाऽर्धधातुकयोः ७।३।८४

सार्वधातुके आर्धधातुके च प्रत्यये परतः इगन्तस्य अङ्गस्य गुणो भवति। तरति। नयति। भवति। आर्धधातुके कर्ता। चेता। स्तोता। सार्वधातुकार्धधातुकयोः इति किम्? अग्नित्वम्। अग्निकाम्यति। यदि हि प्रत्यये सङि इति वा उच्येत, इह अपि स्यात्।
लघु-सिद्धान्त-कौमुदी
सार्वधातुकार्धधातुकयोः ३९०, ७।३।८४

अनयोः परयोरिगन्ताङ्गस्य गुणः। अवादेशः। भवति। भवतः॥
न्यासः
सार्वधातुकार्धधातुकयोः। , ७।३।८४

"चेता, स्तेता" इति। तृच्()। "ऋदुशनस्पुरोदंसोऽनेहसाञ्च" ७।१।९४ इत्यनङ्(), "सर्वनामस्थाने" ६।४।८ इत्यादिना दीर्घः। "सार्वधातुकार्धधातुकयोरिति किम्()"? इति। एवं मन्यते--प्रत्यय इति वक्तव्यम्(), सङीति वा, एवं ह्रुच्यमाने भवतीत्यादौ गुणः सिद्ध एव, सङीति प्रत्याहारग्रहणं सनः सकारादारभ्य महिङो ङकारेण। "अग्नित्वम्()" इति। "तस्य भावस्त्वतलौ" ५।१।११८ इति त्वप्रत्ययः। "अग्निकाम्यति" इति। "काम्यच्च" ३।१।९ इति काम्यच्()। "यदि इत्यादि। यदि प्रत्यय इत्युच्येत, त्वाकाम्यचोरपि स्यात्()। अथापि सङीत्युच्येत, काम्यचि स्यात्(); तस्यापि प्रत्याहरेऽन्तर्भावात्()॥
बाल-मनोरमा
सार्वधातुकाद्र्धधातुकयोः १८, ७।३।८४

भू-अ-ति-इति स्थिते--सार्वधातुकाद्र्ध। "इको गुणवृद्धी" इति परिभाषया "इक" इत्युपस्थितेन अङ्गस्येत्यधिकृतं विशेष्यते। तदन्तविधिः। "मिदेर्गुण" इत्यस्माद्गुण इत्यनुवर्तते। तदाह--अनयोरित्यादिना। तथा च ऊकारस्य गुण ओकारः। अवादेश इति। "ओकारस्येटति शेषः। तथा च परिनिष्ठितं रूपमाह-- भवतीति। भवत इति। कर्तृद्वित्वविवक्षायां भूधातोर्लस्तसादेशे च कृते--झोऽन्तः।

---

सूत्रम्
काशिका-वृत्तिः
जाग्रो ऽविचिण्णल्ङित्सु ७।३।८५

जागृ इत्येतस्य अङ्गस्य गुणो भवति अविचिण्णल्ङित्सु परतः। जागरयति। जागरकः। साधुजागरी। जागरंजागरम्। जागरो वर्तते। जागरितः। जागरितवान्। वृद्धिविषये प्रतिषेधविषये च यथा स्यातिति जागर्तेरयं गुणः आरभ्यते। तस्मिन् कृते या अत उपधायाः ७।२।११६ वृद्धिः प्राप्नोति सा न भवति। यदि हि स्यातनर्थक एव गुणः स्यात्, चिण्णलोश्च प्रतिषेधवचनम् अनर्थकम्। अविचिण्णल्ङित्सु इति किम्? जृशृस्तृजागृभ्यः क्विन् जागृविः। चिण् अजागारि। णल् जजागार। ङित् जागृतः। जागृथः। वि इति केचिदिकारम् उच्चारणार्थं वर्णयन्ति, क्वसावपि वकारादौ गुणो न भवति। जजागृवान्। अजागरुः, अहं जजागर इत्यत्र प्रतिषेधः प्राप्नोति? न, अप्रतिषेधात्। अविचिण्णल्ङित्सु इति पर्युदासो ऽयम्, अथवा जाग्रः इति प्रसिरसावानन्तर्याद् विचिण्णल्ङित्सु प्रतिषिध्यते। या तु जुसि च ७।३।८३, सार्वधातुकार्धधातुकयोः ७।३।८४ इति च प्राप्तिः , सा न प्रतिषिध्यते।

न्यासः

जाग्रोऽविचिण्णल्ङित्सु। , ७।३।८५

"जागरयति" इति। णिच्()। "जागरकः" इति। ण्वुल्()। "साधुजागरी" इति। ताच्छील्ये णिनिः। "जागरञ्जागरम्()" इति। "आभीक्ष्ण्ये णमुल्()" ३।४।२२, "आभीक्ष्ण्ये द्वे भवतः" (वा।८८७) इति द्विर्वचनम्()। "जागरो वत्र्तते" इति। भावे धञ्()। एतानि वृद्धिविषय उदाहरणानि। "जागरिता, जगरितवान्()" इति प्रतिषेधविषये। किं पूनः कारणं वृद्धिविषये प्रतिषेधविषये चैवोपन्यस्तान्युदाहरणानि? इत्यत आह--"वृद्धिविषये प्रतिषेधविषये च" इत्यादि। वृद्धिप्रतिषेधविषयादन्यत्र पूर्वसूत्रेण गुणः सिद्धो भवति। तस्मादवृद्धिप्रतिषेधविषयेऽयं गुण आरभ्यते, तेन तद्विषयाणामेवोदाहरणानासुपन्यासः। जागरयतीत्यादौ गुणे कृते रपरत्वे च "अत उपधायाः" ७।२।११६ इति वृद्ध्या भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निरकर्त्तुमाह--"तस्मिन्? कृते" इत्यादि। किं पुनः कारणं तस्मिन्? कृते न भवति? इत्याह--"यदि हि" इत्यादि। यद्यस्मिन्? कृतेऽपि गुणे "अत उपधायाः" ७।२।११६ इति वृद्धिः स्यात्(), जागरयतीत्यादिकं रूपं न स्यात्(), तथा चानर्थको गुणः स्यात्(); "अचो ञ्णिति" ७।२।११५ इत्यनयैव वृद्ध्या सिद्धत्वात्()। "चिण्णलोश्च" इत्यादि। चिण्णलोः प्रतिषेधस्येतत्? प्रयोजनम्()--वृद्धेः श्रवणं यथा स्यात्()। यदि तु कृतेऽपि गुणे "अत उपधायाः" ७।२।११६ इति स्यात्(), चिण्णलोः प्रतिषेधोऽनर्थकः यात्(); अस्त्वत्र गुणः, सत्यपि तस्मिन्? पुनरुपधाया इति वृद्ध्या भवितव्यम्(), ततश्च वृद्धेः श्रवत्रं भविष्यतीति। "अजागारि" इति। लुङ्(), च्लिः, "चिण्भावकर्मणोः" ३।१।६६ इति च्लेश्चिण्(), "चिणो लुक्()" ६।४।१०४ इति तकारस्य लुक्()। "जागृतः, जागृथः" इति। लट्(), तस्थसौ, तयोः "सार्वधातुकमपित्()" १।२।४ इति ङित्त्वम्(), अदादित्वाच्छयो लुक्()। "वीति केचिदिकारमुच्चारणार्थं वर्णयन्ति" इति। किं पुनरेवं सतीष्टं सिध्यति, यत एवं व्याचक्षते? आह--"क्वसावप" इत्यादि। यदि समुदायस्थ वेः प्रत्ययस्येवं ग्रहणं स्यात्(), क्वासौ गुणप्रतिषेधो न स्यात्()। यदि त्विकार उच्चारणार्थो वर्णमात्रस्यैवेदं ग्रहणम्(), तदा "यस्मिन्? विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) इति तदादिविधिना क्वासावपि गुणप्रतिषेधः सिद्धो भवति। "जजागृवान्()" इति। लिटः "क्वसुश्च" ३।२।१०७ इति क्वसुरादेशः, "उगिदचाम्()" ७।१।७० इति नुम्(), "जजागृवान्()" इति। लिटः "क्वसुश्च" ३।२।१०७ इति क्वसुरादेशः, "उगिदचाम्()" ७।१।७० इति नुम्(), "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। "केचित्()" इति वचनात्()--अपर उच्चारणार्थं न वर्णयन्तीत्युक्तं भवति। त एवं मन्यन्ते--छान्दसः क्वसुः, लिट्? च छन्दसि सार्वधातुकमपि भवति; "छन्दस्युभयथा" (३।४।११७) इति वचनात्? ततः "सार्वधातुकमपित्()" १।२।४ इति ङित्त्वादेव पर्युदासो भविष्यतीति। "अजागरुः" इत्यादि। एवं मन्यते--"अविचिण्णल्ङित्सु" १।२।४ इति ङित्त्वादेव पर्युदासो भविष्यतीति। "अजागरुः" इत्यादि। एवं मन्यते--"अविचिण्णल्ङित्सु" इति प्रसज्यप्रतिषेधोऽयम्()--विचिण्णल्ङितसु न भवतीति, ततश्चाजागरुरित्यत्रापि "जुसि च" ७।३।८३ इत्यनेनापि प्राप्तस्य गुणस्या प्रतिषेधः प्राप्नोति। एवमहं जजागरेत्यत्र "णलुत्तमो वा" ७।१।९१ इति

वचनाण्णित्वं यदा नास्ति तदा "सार्वधातुकार्धधातुकायोः" ७|३|८४ इति गुण इष्यते, सोऽस्मात्? प्रतिषेधान्न प्राप्नोति। "न" अप्रतिषेधात्()" इति परिहारः। नायं दोषः; कुतः? अप्रतिषेधात्()। अप्रसज्यप्रतिषेधा दित्यर्थः। यदि प्रसज्यप्रतषेधो न भवति, कस्तह्र्यम्()? इत्याह--"अविचिण्णाल्ङित्स्विति पर्युदासोऽयम्()" इति। प्रसज्यप्रतिषेधे हि लक्षणान्तरेणापि प्रसक्तस्य प्रतिषेधः स्यात्(), न पर्युदासे। तथा हि पर्युदासे विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते, न तु तेषु विचिण्णलादिषु प्रतिषिध्यते। पर्युदासश्चायम्()। तस्माज्जुसि णलि च गुणो भवत्येव। अभ्युपेत्यापि प्रसज्यप्रतिषेधं परहारान्तरमाह--"अथ वा" इत्यादि। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" (व्या। प।९) इत्यानन्तर्यात्? जाग्र इति या प्राप्तिस्तस्या अयं प्रतिषेधः, या तु "जुसि च" ७|३|८३ इत्यादिना लक्षणान्तरेण प्राप्तिः सा न प्रतिषिध्यते। "अजागरुः" इति। लङ्(), "जक्षित्यादयः षट्()" ६|१|६ इत्यभ्यस्तसंज्ञा, "सिजभ्यस्तविदिभ्यश्च" ३|४|१०९ इति झेर्जुस्()॥

बाल-मनोरमा

जाग्रोऽविचिण्णल्ङित्सु ३१०, ७|३|८५

जाग्रोऽवि। "जाग्र" इति षष्ठी। "मिदेर्गुणः" इत्यतो गुण इत्यनुवर्तते। तदाह--जागर्तेर्गुणः स्यादिति। "अविचिण्णल्ङित्स्वि"ति च्छेदः। वि चिण् णल् ङित् एषां द्वन्देव नञ्समासः। तदाह--विचिण्णल्ङिद्भ्योऽन्यस्मिन्निति। चिण्णल्पर्युदासाद्वृद्धिविषयेऽप्यस्य प्रवृत्तिः। ङित्पर्युदासाद्गुणप्रतिषेधविषयेऽप्यस्य प्रवृत्तिः। तदाह--वृद्धिविषये चेति। जजागतुरिति। अत्र कित्त्वेऽपि गुणः। जजागरुः। जजागरिथ जजागरथुः जजगार। जजागार--जजागर, जजागरिव जजागरिम। विचिण्णल्ङित्सु तु न गुणः। वि--जागृविः। चिण्--अजागारि। णल्--जजागार। ङित्--जागृतः। वृद्धिविषये यथा ण्वुलि-- जागरकः। प्रतिषेधविषये यथा--जजागरतुः। कित्त्वेऽपि गुण इत्याद्यूह्रम्।जागरिता। जागरिष्यति। जागर्तु-- जागृतात् जागृताम् जाग्रतु। जागृहि--जागृतात् जागृतम् जागृत। जागराणि जागराव जागराम। लङ्याह-- अजागरति। तिपि इकारलोपे हल्ङ्यादिना तकारलोपे रेफस्य विसर्ग इति भावः। अभ्यस्तत्वाल्लङो जेरदादेशे प्राप्ते आह-- अब्यस्तत्वाज्जुसिति। "सिजब्यस्तविदिभ्यश्चे"त्यनेनेति भावः। जक्षित्यादित्वादभ्यस्तत्वम्। अजागृ उस् इति स्थिते "सार्वधातुकमपि"दिति ङित्त्वादविचिण्णल्ङित्स्विति पर्यादासादप्राप्ते गुणे आह--

तत्त्व-बोधिनी

जाग्रोऽविचिण्णल्ङित्सु २७०, ७|३|८५

जाग्रोऽविचिण्णल्। ङिद्भ्योऽन्यस्मिन्निति। जागृविः। विशब्देन वादिप्रत्ययो गृह्रते। "इकारस्तूच्चारणार्थ" इति वदतां मते क्वसावपि न भवति। जजागृवान्। जजागृवांसौ। चिण्- अजागारि। णल्- जजागार। ङित्--जागृतः। जागृथः। वृद्धिविषये इति। ण्वुलि-- जागरकः। घञि-- जागरः। णिचि-- जागरयति। नचैतेषु गुणे कृतेऽपि "अत उपधायाः" इति वृद्धिः स्यादिति वाच्यं, गुणविधेश्चिण्णल्प्रतिषेधस्य चाऽऽनर्थक्यापत्तेः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पुगन्तलघूपधस्य ६|१ ८७ च ० सार्वधातुकार्धधातुकयोः ७|२ ८४ गुणः १|१ ८२ अङ्गस्य ६|१ ६|४|१

समासः॥

पुकि अन्तः पुगन्तः, सप्तमीतत्पुरुषः। लघ्वी च असौ उपधा च लघूपधा, कर्मधारयतत्पुरुषः। पुगन्तश्च लघूपधा च पुगन्तलघूपधं, तस्य ॰ समाहारद्वन्द्वः।

अर्थः॥

पुगन्तस्य अङ्गस्य लघूपधस्य च इकः सार्वधातुके आर्धधातुके च परतः गुणः भवति।

उदाहरणम्॥

पुगन्तस्य -- व्लेपयति, ह्रेपयति, क्नोपयति। लघूपधस्य -- भेदनम्, छेदनम्, भेत्ता, छेत्ता।
काशिका-वृत्तिः
पुगन्तलघूपधस्य च ७।३।८६

पुगन्तस्य अङ्गस्य लघूपधस्य च सार्वधातुकार्धधातुकयोर् गुणो भवति। पुगन्तस्य व्लेपयति। ह्रेपयति। क्नोपयति। लघूपधस्य भेदनम्। छेदनम्। भेत्ता। छेत्ता। प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लग् हूपधगुणो न व्यावर्त्यते इति ज्ञापितम् एतत् क्नुसनोः कित्करणेन, त्रसिगृधिधृषिक्षिपेः क्नुः ३।२।१४०, हलन्ताच् च १।२।१० इति। संयोगे गुरुसंज्ञायां गुणो भेत्तुर् न सिध्यति। विध्यपेक्षं लघोश्च असौ कथं कुण्डिर् न दुष्यति। धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर् निपातनात्। अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः। अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत्। क्नुसनोर् यत्कृतं कित्वं ज्ञापकं स्याल् लघोर् गणे। उपधा च अत्र इगेव गृह्यते, ततो भिनत्ति इति गुणो न भवति। अपरे पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूय्पधम् इति सूत्रार्थं वर्णयन्ति।
लघु-सिद्धान्त-कौमुदी
पुगन्तलघूपधस्य च ४५३, ७।३।८६

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः। धात्वादेरिति सः। सेधति। षत्वम्। सिषेध॥
न्यासः
पुगन्तलघूपघस्य च। , ७।३।८६

पुगन्तस्याङ्गस्य, लघूपधस्य चेत्युभावपि बहुव्रीही--पुगन्तो यस्य तत्? तथोक्तम्(), लध्वी उपधा यस्य तल्लघूपधम्()। "भेत्ता, छेत्ता" इति। ननु च प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्ये सति "संयोगे गुरु" (१।४।११) इति गुरुसंज्ञया लघुसंज्ञायां वाधितायां गुणेनात्र न भवितव्यम्()? इत्यत आह--"प्रत्ययादेः" इत्यादि। "त्रसिगृधिधृषिक्षिपेः क्नुः" ३।२।१४०, "हलन्ताच्च" १।२।१० इति क्नुसनोः कित्करणस्यैतदेव प्रयोजनम्()--गृध्नुः, विभत्सतीत्यादौ गुणो मा भूदिति। यदि प्रत्ययादेर्हलोऽङ्गावयवस्य चानक्तर्ये सति लघूपधगुणो न स्यात्? तयोः कित्वं न कुर्यात्(), कृतञ्च, तस्मात्? क्नुसनो कित्त्वं कुर्वता--प्रत्ययाङ्गावयवयोर्हलोरानन्तर्येऽपि लघूपधगुणो न व्यावर्त्यत इति ज्ञापितमेतत्()। ननु च सनः कित्त्वं सिसृक्षतीत्यत्रामागमो मा भूदित्येवमर्थं स्यात्()? नैतदस्ति; यदि ह्रेतत्? प्रयोजनमभिमतं स्यात्? तत्रैवं प्रतिषेधं कुर्यात्()--सूजदृशोर्झल्यमकित्सनोरिति। तस्मात् सनः कित्करणं ज्ञापकमेव यद लघूपधल्यानेन गुणो विधीयते। एवं सति "इको गुणवृद्धी" १।१।३ इत्यस्या उपस्थाने सति यत्र तत्र स्थितस्येको गुणः प्रसज्येत, ततश्चेहापि प्राप्नोति--भिनत्तीति, भवति ह्रतर लघूपधमङ्गम्()। न च शक्यते वक्तुम्()--"हलोऽनन्तराः संयोगः" १।१।७ इति संयोगसंज्ञायां सत्यां लघूपधमेतन्न भवतीति गुणो न भविष्यतीति। यज्ज्ञापितमेतदिदाधीमेव--प्रत्ययादेरङ्गावयवसय च हलोरानन्तर्ये सति लघुपधगुणो न व्यावर्त्यत इति? अत आह--"उपधा चात्र" इत्यादि। इक्परिभाषया ह्रत्रकः

सनिधापितत्वादिगेवोपधा गृह्यते, तेन भिनत्तीत्यत्र गुणो न भवति; न ह्यत्राङ्गस्येगुपधा, किं तर्हि? अकारः। "अपरे तु" इत्यादिओ। सूत्रार्थ वर्मयन्ती त वक्ष्यमाणेन सम्बन्धः। पुकि अन्तः पुगन्तः--"सप्तमी" (२।१।४०) इति योगविभागात्? समासः। अन्तशब्दोऽयमवयववचनः, पुकि परतोऽवयव इत्यर्थः। कस्यावयवः? "अङ्गस्य" इत्यनुवृत्तेः पुगिति वचनात्()पुगागमवतोऽङ्गस्य। न पुनः पुगन्त इक्परिभाषोपश्तानादिगेव वेदितव्यः। "लध्वी उपधा लघूपधा" इति। विशेषणसमासः। "पुगन्तलघूपधम्()" इति। समाहारद्वन्द्वोऽयम्()। "सूत्रार्थम्" इति। तूत्रार्थैकदेशे सूत्रार्थशब्दो वत्र्तते, न ह्येतावानेव सूत्रार्थः, अपरिसमाप्तत्वात्()। अपरिसमाप्तिस्तु पुगन्तस्य तस्याश्च लघूपधाया गुणो भवतीत्यस्य सूत्रार्थस्यैकदेशस्यानभिधानात्()। "वर्णयन्ति" इति। व्याचक्षत इति। भिनत्तीत्यत्र गुणो मा भूदित्येवमर्थम्()। न ह्यत्र सूत्रार्थे भिनत्तीत्यत्र गुणः प्रसज्येत। बहुव्रीहौ ह्याश्रीयमाणेऽङ्गस्यान्यपदार्थस्य यो नाम कश्चिदिक्? तस्य यत्र तत्रावस्थितस्य गुणः प्रसज्येत। बहुव्रीहौ हयश्रीयमाणोऽङ्गसयान्यपदार्थस्य यो नाम कश्चिदिक्? तस्य यत्र तत्रावस्थितस्य गुणः प्रसज्येत। तत्पुरेषे तु नायं दोषः, तत्र हि लघूपधेग्भ्यामङ्गं विशिष्यते, अतस्तस्या एव गुणो विधीयते--अङ्गस्य या लघ#ऊपधा इक्? तस्या गुणो भवतीति। भिनत्तीत्यत्रयाऽङ्गस्य लघूपधा नासाविक्(), यश्चेक्? स यद्यपि लघुर्भवति लघुर्भवति न त्वस्योपधा। तस्मात्? तत्पुरुष आश्रीयमाणे नेह गुणस्य प्रसङ्गः। सार्वधातुकार्धधातुकयोरित्येव--"अगनिचित्त्वम्(), अग्निचितकाम्यति"। पुगन्तग्रहणं लघूपधार्थम्()॥

बाल-मनोरमा

पुगन्तलघुपधस्य च ३८, ७।३।८६

तथा च भावित्-- आ इति स्थिते--पुगन्तलघु। "मिदेर्गुण" इत्यतो गुण इत्यनुवर्तते। अङ्गस्येत्यधिकृतमवयवषष्ठ()न्तमाश्रीयते। पुगन्तलघूपधस्येति तद्विशेषणम्। पुक् अन्तो यस्य तत् पुगन्तं। लघ्वी उपधा यस्य तल्लघूपधं। पुगन्तं च लघूपधं चेति समाहारद्वन्द्वात् षष्ठी। "इको गुणवृद्धी" इति परिभाषया "इक" इत्युपस्थितं स्थानषष्ठ()न्तमाश्रीयते। तदाह--पुगन्तस्येत्यादिना। अङ्गस्येक इति। अङ्गावयवस्येत्यर्थः। द्वेष्टि द्वेष्टत्याद्युदाहरणम्। नन्वत्राऽङ्गावयवस्येकस्तदुपरितनहला व्यवधानात्सार्वधातुकपरत्वाऽभावात्कथमिह इको गुण इत्यत आह--येन नेति। येन = स्थान्युत्तरवर्णेन परनिमित्तस्य , नाऽव्यवधानं = व्यवधानमवर्जनीयमिति यावत्, तेन = वर्णेन व्यवहितेऽपि परनिमित्तं कार्यं भवतीत्यर्थः। कुत इत्यत आह-- वचनप्रामाण्यादिति। तथाविधवर्णव्यवधानेऽपि कार्यप्रवृत्तौ वचनारम्भस्यैव प्रमाणत्वादित्यर्थः। लघूपधस्य हीको गुणो विधियते, उपधात्वं चाऽन्त्यादलः पूर्वस्यैव भवति। ततश्चेक उपर्यन्त्यस्य वर्णस्याऽभावे इक उपधात्वाऽभावाल्लघूपधस्याऽङ्गस्य गुणविधानं निर्विषयमेव स्यादतस्तद्व्यवधानं सोढव्यमिति भावः। ननु व्यवहितस्यापीको गुणप्रवृत्त्यभ्युपगमे भिनत्ति छिनत्तीत्यादौ इकारस्यापि गुणः स्यादित्यत आह---तेनेति। अवर्जनीयव्यवधनास्यैवाश्रयमेनेत्यर्थः। उपधात्वस्यैकमेव वर्णमुपरितनमादाय सम्भवादनेकवर्णव्यवधानं नादर्तव्यमिति भावः। गुणे प्राप्त इति। भवित् - आ इति स्थिते डाभावसंपन्नस्याऽऽकारस्य स्थानिवत्त्वेन सार्वधातुकतया तस्मिन् परे भविदित्यङ्गावयवस्योपधाभूतस्येकारस्य गुणे प्राप्ते सतीत्यर्थः। न च भूधातोर्विहितं सार्वधातुकं प्रति भूधातुरेवाऽङ्गं, न तु भवित् इति विकरणविशिष्टमिति वाच्यम्, अङ्गसंज्ञासूत्रे तदादिग्रहणेन विकरणविशिष्टस्याऽप्यङ्गत्वात्।

तत्त्व-बोधिनी

पुगन्तलघूपधस्य च ३०, ७।३।८६

अनेकव्यवहितस्येति। सार्वधातुकादिकमिको विशेषणं न त्वङ्गस्येति भावः॥

---

सूत्रम्

काशिका-वृत्तिः

न अभ्यस्तस्य अचि पिति सार्वधातुके ७।३।८७

अभ्यस्तसंज्ञकस्य अङ्गस्य लघूपधस्य अजादौ पिति सार्वधातुके गुणो न भवति। नेनिजानि। वेविजानि। परिवेविषाणि। अनेनिजम्। अवेविजम्। पर्यवेविषम्। अभ्यस्तस्य इति किम्? वेदानि। अचि इति किम्? नेनेक्ति। पिद्ग्रहणम् उत्तरार्थम्। सार्वधातुके इति किम्? निनेज। लभूपधस्य इत्येव, जुहवानि। अजुहवम्। बहुलं छन्दसीति वक्तव्यम्। जुजोषतिति यथा स्यात्। पस्पशाते। चाकशीति। वावशीति। यङ्लुकि छान्दसमुपधाह्रस्वत्वं द्रष्टव्यम्। पस्पशाते इत्यत्र अभ्यासह्रस्वत्वं च। प्रकृत्यन्तराणां वा स्पशिकशिवशीनाम् एतानि रूपाणि।

लघु-सिद्धान्त-कौमुदी

नाभ्यस्तस्याचि पिति सार्वधातुके ६३०, ७।३।८७

लघूपधगुणो न स्यात्। नेनिजानि। नेनिक्ताम्। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। अनेनिजम्। अनेनिक्त। नेनिज्यात्। नेनिजीत। निज्यात्, निक्षीष्ट॥

न्यासः

नाभ्यस्तस्याचि पिति सार्वधातुके। , ७।३।८७

"नेनिजानि, वेविजानि, परिवेविषाणि" इति"। "णिजिर्? शौचपोवणयोः" (धा।पा।१०९३) "विजिर्? पृथग्भावे" (धा।पा।१०९४) "विषु व्याप्तौ" (धा।पा।१०९५)-एभ्यो लोट्(), मिप्? "मेर्निः" ३।४।८९, "आडुत्तमस्य पिच्च" ३।४।९२ इत्यट्(), "जुहोत्यादिभ्यः श्लुः" २।४।७५ इति शपः श्लुः, "शलौ" ६।१।१० इति द्विर्वचनम्(), "निजां त्रयाणां गुणः श्लौ" ७।४।७५ इत्याभ्यासस्य गुणः। "अनेनिजम्(), अवेविजम्(), पर्यवेषिषम्()" इति। लङ्(), "तस्थस्तमिपां तान्तन्तामः" तान्तन्तामः" ३।४।१०१ इति मिपोऽम्भावाः। "वेदानि" इति। "विद ज्ञाने" (धा।पा।१०६४)। "पूर्ववल्लोडादि यथायोगम्(), अदादितावाच्छपो लुक्()। "नेनेक्ति" इति। लट्(), तिप्, "चोः कुः" ८।२।३० इति कुत्वम्()। अथ पिद्ग्रहणं किमर्थम्(), यावताऽपिति सार्वधातुके "सार्वधातुकमपित्()" १।२।४ इति ङित्त्वे सति "क्ङिति च" १।१।५ इति निषेधेन भवितव्यमिति, न चानयोः प्रतिषेधयोः कश्चिद्()विशेषोऽस्ति? इत्यत आह--"पिद्ग्रहणम्()" इति। "तृणह इम्()" ७।३।९२ इतीमं वक्ष्यति, स पिति यथा स्यात्(), अपिति मा भूदित्येवमर्थं पिद्ग्रहणम्()। "निनेज" इति। लिट्()। स च "लिट्? च" ३।४।११५ इत्यार्धधातुकसंज्ञकः। "जुहवानि इति। "हु दाने" (धा।पा।१०८३)। पूर्ववल्लोडादि। "अजुहवम्()" इति। पूर्ववल्लङादि। अत्र "लघूपधस्य" ७।३।८६ इत्यनुवृत्तेः "सर्वधातुकार्यधातुकयोः" ७।३।८४ इतीगन्तस्य यो गुणो विहितस्तस्य प्रतिषेधो न भवति। "बहुलं छन्दसीति वक्तव्यम्()" इति। छन्दसि विषये बहुलं गुणप्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--इहेदं सूत्रं विभज्य द्वौ योगौ क्रियेते, तत्र "न" इत्येको योगः; "अभ्यस्तस्याचि पिति सार्वधातुके" इति द्वितीयः, तत्र च नेत्यनुवत्र्तते, यञ्च योगः पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थः। तेन च्छब्दसि बहुलं प्रतिषेधो भविष्यति। "जुजोषत्()" इति। "जुषी प्रतिसेवनयोः" (धा।पा।१२८८) लेट्(), तिप्(); "लेटोऽडाटौ" ३।४।९४ इत्यट्(), तुदादित्वाच्छः, तस्य "बहुलं छन्दसि" २।४।७३ इति श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्()। लघूपधगुणः। यद्यभ्यस्तस्याचि पिति सार्वधातुके गुणप्रतिषेध इध्यते, पस्पशाते, चकाशीति, वावशीतित्यत्रोपधाह्यसवत्वमिष्यते, तन्न प्राप्नोति; तस्मादभ्यस्तानामुपधाह्यस्वत्वमेव वक्तव्यम्(), न गुणप्रतिषेधः; ह्यस्वत्वे हि नेनिजानीत्येवमादि सिध्यति; पश्पशाते इत्यादि च? इति यश्चोदयेत्(), तं प्रत्याह--"पस्पशाते" इत्यादि। हि नेनिजानीत्येवमादि सिध्यति; पस्पशाते इत्यादि च? इति यश्चोदयेत्(), तं प्रत्याह--"पस्पशाते" इत्यादि। "स्पशिरिति

["स्पाशिरिति"--प्रां३।पाठः] गणपरिपठितो धात्वन्तरमस्त्येव, तस्माद्यङ्(), तस्य "यङोऽचि च" २।४।७४ इति लुक्(), द्विर्वचनम्(), "शर्पूर्वाः खयः" ७।४।६१ इति खयः शेषः; अभ्यासस्य ह्रस्वत्वे कृते "दीर्घोऽकितः" ७।४।८३ इति दीर्घः, "व्यत्ययो बहुलम्()" ३।१।८५ इति वर्णव्यत्ययेनोपधाया अभ्यासस्य च ह्रस्वः, लेट्(), व्यत्ययेनैवात्मनेपदम्(), आट्। "चाकशीति" इति। "काशृ दीप्तौ" (धा।पा।११६२), "कुहोश्चुः" ७।४।६२ इत्यभ्यासस्य चुत्वम्(), तिप्(), "यङो वा" ७।३।९४ इतीट्()। "वावशीति" इति। "वाशृ शब्दे" (धा।पा।११६३), शेषं यथायोगं पूर्ववत्()। "पस्पशाते इत्यत्राभ्यासह्रस्वत्वं च" इति। चकारादुपधाह्रस्वत्वञ्च। इतरत्र तूपधाह्रस्वत्वमेव, नाभ्यासस्य ह्रस्वत्वम्()। "प्रकृत्यन्तराणां वा" इति। "स्पश बाधनस्पर्शनयोः" (धा।पा।८८७), "कश गनिशासनयोः" (धा।पा।१०२४), "वश कान्तौ" (धा।प।१०८०)--एतानि प्रकृत्यन्तराणि ह्रस्वोपधानि सन्तीति, अत एषामेवैतानि रूपाणि। तस्माद्यथान्यासमेवास्तु॥

बाल-मनोरमा

नाभ्यस्तस्याऽचि पिति सार्वधातुके ३३२, ७।३।८७

नाभ्यस्स्याचि। "मिदेर्गुणः" इत्यतो गुण इति, "पुगन्ते"त्यतो लघूपधस्येति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति--लघूपधगुणो न स्यादिति। नेनिजानीति। नेनिजाव नेनिजाम। नेनिक्ताम् नेनिजाताम् नेनिजताम्। नेनिक्ष्व नेनिजाथाम् नेनिग्ध्वम्। नेनिजै नेनिजावहै। नेनिजामहै। लङि परस्मैपदे आह--अनेनेगिति। अनेनिजुरिति। अभ्यस्तत्वाज्जुसिति भावः। अनेनेक् अनेनिक्तम् अनेनिक्त। अनेनिजम्। "नाभ्यस्तस्ये"ति न गुणः। अनेनिज्व अनेनिज्म। निक्षीष्ट। लुङ्याह--अनिजदिति। इरित्त्वादङिति भावः। अनिक्तेति। "झलो झली"ति सिज्लोपः। अनिक्षातामित्यादि। विजिरपि णिजिर्वत्। अत्रेति। थलि इट्पक्षे "विज इ"डिति विहितं ङित्त्वं नेत्यर्थः। अतो न गुणनिषेध इति भावः। ओ विजी इत्यस्यैवेति। व्याख्यानादिति भावः। रुधादावपीति। ततश्च "रुधादिभ्यः श्न"मिति श्नम्विकरणावपि ताविति भावः। विष्लृ व्याप्तौ इति। लृदित्, उभयपदी, अनिट्। णिजेरिव रूपाणि। वेवेष्टीति। ष्टुत्वेन तकारस्य टः। सिपि "षढो"रिति षस्य कत्वम्। वेवेक्षि वेविष्ठः। वेविष्ठ। वेविड्ढि। अविषदिति। लृदित्त्वादङिति भावः। तङि क्स इति। "शल इगुपधा"दित्यनेनेति भावः। आ गणान्तादिति। जुहोत्यादिगणसमाप्तिपर्यन्तमित्यर्थः। घृधातुरनिट्। तिपि श्लौ द्वित्वेऽभ्यासकार्ये गुणे रपरत्वे जघर्ति। जघृतः जघ्रति। "जघम्र्य()ग्न हविषा घृतेन" इति बह्वृचमन्त्रपाठः। "जघम्र्य()ग्न मनसा घृतेने"ति तैत्तिरीयपाठः। अत्रेत्वमभ्यासस्य आह-- भृञामिदिति। ननु तत्र त्रयाणामेव ग्रहणमित्यत आह- बहुलमिति। इत्वं छान्दसमिति भावः। जघार जघ्रतुः। जघ्रुः। जघर्थ जघ्रथुः जघ्र। जघार--जघर। जघ्रिव। घरिष्यति। जघर्तु-- जघृतात्। जघ्रतु। जघृहि। जघराणि। अजघः अजघृताम् अजघरुः। अजघरम् अजघृव। जघृयात्। घ्रियात्। अघार्षीत्। अघरिष्यत्। ह्र इति। घृधातुवद्रूपाणि। अयं रुआउवो अभिजिहर्ति होमानिति। रुआउवे साद्यमाने याजमानो मन्त्रः। अत्रापि अभ्यासस्य इत्त्वं चान्दसमिति भावः। ऋ सृ गताविति। इमावनिटौ। तत्र ऋधातोः छान्दसत्वेऽपि लोकेऽपि क्वचित्प्रयोगं समर्थयति--बहुलमिति। "भृञामित्" "अर्तिपिपर्त्योश्च" "बहुलं छन्दसी"ति सूत्रस्थितिः। तत्र "बहुलं छन्दसी"त्येव ऋधातोरित्त्वसिद्धेः "अर्तिपिपर्त्योश्चेटत्यर्तिग्रहणाल्लोकेऽपि ऋधातोः श्लुविकरणस्य प्रयोगो विज्ञायत इत्यर्थः। एतच्चाऽत्रैव सूत्रे भाष्ये स्पष्टम्। अत एव भाष्यात् श्लुविकरणस्यैव ऋधातोः "अर्तिपिपर्त्योश्चे"त्यत्र ग्रहणम्, पिपर्तिसाहचर्याच्च, श्लवित्यस्य अभ्यासग्रहमस्य चानुवृत्तेश्चेत्यलम्। अभ्यासस्यासवर्णे इति। शपः श्लौ ऋ-ति इतिस्थिते द्वित्वे उरदत्त्वं बाधित्वा "अर्तिपिपर्त्योश्चे"त्यभ्यासऋकारस्य इत्त्वे रपरत्वे हलादिशेषे उत्तरखण्डस्य ऋकारस्य गुणे रपरत्वे इ अर् ति इति स्थिते "अभ्यासस्याऽसवर्णे"इतीयङि इयतीति रूपमित्यर्थः। इयृत इति। पूर्ववदेव द्वित्वादि। तसोऽपित्त्वेन ङित्त्वाद्गुणनिषेध इति भावः। इय्रतीति। पर्ववदेव द्वित्वादि। अभ्यस्तत्वाददादेशः। ङित्त्वान्न गुणः। उत्तरखण्डस्य ऋकारस्य यण् रेफ इति भावः। इयर्षि इयृथः। इयर्मि इयृवः इयृमः। लिट()आह--- आरेति। आरिव। आरिम। अर्तेति। अनिट्त्वादिति भावः। अरिष्यतीति। "ऋद्धनोः स्ये" इतीडिति भावः। इयर्तु इयृतात् इयृताम् इय्रतु। इयृहि-- इयृतात् इयृतम् इयृतैयराणीति।

आटः पित्त्वेनाऽङित्त्वान्न गुणनिषेध इति भावः। इयराव। इयराम। लङ्याह-- ऐय इति। श्लौ ऋ त् इति स्थिते द्वित्वेऽभ्यासस्य इत्त्वे रपरत्वे हलादिशेषे इयङि उत्तरखण्डस्य गुणे रपरत्वे च हल्ङ्यादिलोपे रेफस्य विसर्गे इय इति स्तिते आटि वृद्धौ #ऐय इति रूपमिति भावः। न च "लावस्थायाम"डिति पक्षे आट#इ वृद्धौ रपरत्वे आर् त् इति स्थिते द्वित्वे हलादिशेषे सवर्णदीर्घे हल्ङ्यादिलोपे रेफस्य विसर्गे ऐयरुरिति। ऐयः ऐयृतम् ऐयृत।ऐयरम् ऐयृव ऐयृम। विधिलिङ्याह-- इयृयादिति। यासुटो ङित्त्वाद्गुणनिषेध इति भावः। इयृयातामित्यादि। आशीर्लिङ्याह--- अर्यादिति। "अकृत्सार्वधातुकयो"रिति दीर्घः प्राप्तः। तं बाधित्वा "रिङ् शयग्लिङक्षु" इति रिङ् प्राप्तः। तं बाधित्वा "गुणोऽर्तिसंयोगाद्यो"रिति गुण इति भावः। लुङ्याह-- आरदिति। "सर्तिशास्त्यर्तिभ्यश्चे"त्यङि "ऋदृशोऽङी"ति गुण इति भावः। आरिष्यत्। तदेवमृधातुं निरूप्य सृधातुं निरूपयति-- ससर्तीति। ससृतः सरुआतीत्यादि सुगमम्। ससार। ससर्थ। ससृव। सर्ता। सरिष्यति। ससर्तु। अससः अससृताम् अससरुः। रिउआयात्। असरत्। भस भत्र्सनेति। अयं सेट्। बभस्तीति। श्लौ भस् तीति स्थिते द्वित्वेऽभ्यासजश्त्वमिति भावः। बभस् तस् इति स्थिते आह--घसिभसोरिति। "घसिभसोर्हलि चे"त्यस्यायमर्थः-- छन्दसि अनयोरुपधाया लोपः स्याद्धलादावजादौ च क्ङिति परे इति। तथा च बभस् तसित्यत्र उपधालोपे "झलो झली"ति सकारलोपे तकारस्य "झषस्तथो"रिति धत्वे भकारस्य जश्त्वमिति भावः। बप्सतीति। अभ्यस्तत्वाददादेशे बभस् अतीति स्थिते "घसिभसो"रित्युपधालोपे भकारस्य चत्र्वमिति भावः। बभस्सि बब्धः बब्ध। बभस्मि बप्स्वः बप्स्मः। बभास बप्सतुः बप्सः। बभसिथ बप्सथुः बप्स। बभास बभस बप्सिव बप्सिम। भसिता। भसिष्यति। बभस्तु--बब्धात् बब्धाम् बप्सतु। बब्धि-- बब्धात् बब्धम् बब्ध। बभसानि बभसाव बभसाम। अबभः अबब्धाम् अबप्सुः। अबभः अबब्धम् अबब्ध। अबप्सम् अबप्स्व। अबप्स्म। बप्स्यात्। भस्यात्। अभासीत्-अभसीत्। अभसिष्यत्। कि ज्ञाने। चिकेतीति। किधास्तोस्तिपि श्लौ द्वित्वे अभ्यासचुत्वे उत्तरखण्डस्य गुण इतिभावः। चिकितः चिक्यति। चिकेषि चिकिथः चिकिथ। चिकेमि चिकिवः। चिकिमः। चिकाय चिक्यतुः।चिक्युः। चिकयिथ--चिकेथ। चिक्यिव। केता। केष्यति। चिकेतु-- चिकितात् चिकिताम् चिक्यतु। चिकिहि। चिकयानि। अचिकेत् अचिकिताम् अचिकयुः। अचिकेः। अचिकयम् अचिकिव। चिकियात्। कीयात्। अकैषीत्। अकेष्यत्। तुर त्वरणे इति। तुतूर्त इति। "हलि चे"ति दीर्घः। तुतोर्षि तूतूर्थः तुतूर्थ। तुतोर्मि तुतूर्वः। तुतोर। तुतुरतुः तुतोरिथ। तुतुरिव। तोरिता। तोरिष्यति। तुतोर्तु--तुतूर्ताम् तुतुरतु। तुतूर्हि। तुतुराणि। अतुतोः अतुतूर्ताम्। अतुतुरुः। अतुतोः। अतुतुरम्।अतुतूरव। तुतूर्यात्। तूर्यात्। अतोरीत्। अतोतुतुराणि। अतुतोः अतुतूर्ताम्। अतुतुरुः। अतुतोः। अतुतुरम्। अतुतूर्व। तुतूर्यात्।तूर्यात्। अतोतीत्। अतोरिष्यत्। धिष शब्दे। सेट्। दिधेष्टीति। श्लौ द्वित्वादौ लघुपधगुणे तकारस्य ष्टुत्वमिति भावः। दिधिषति।दिधेक्षि दिधिष्ठः। दिधेष्मि दिधिष्वः। दिधेष दिधिषतुः। दिधेषिथ। दिधिषिव। धेषिता। धेषिष्यति। दिधेष्टु--दिधिष्टात्। दिधिषतु। दिधिड्ढि। दिधिषाणि। अदिधेट् अदिधिष्टाम् अदिधिषुः। अदिधिषम् अदिधिष्व। दिधिष्यात्। धिष्यात्। अधेषीत्। अदेषिष्यत्। धन धान्ये इति। धान्याऽर्जने इत्यर्थः। दधन्त इति। क्षमूष् सहने इति धातोश्चक्षंसे इतिवदनुनासिकस्य क्वीति न दीर्घः। दधंसि दधन्थः। दधन्मि दधन्वः दधन्मः। दधान दधनतुः। दधनिथ। दधनिव। धनिता। धनिष्यतु। दधन्तु--दधन्तात् दधन्ताम् दधनतु।दधंहि।दधनानि। अदधन् अदधन्ताम् अदधनुः। अद्धन् अदधन्तम् अदधन्त।अदधनम् अदधन्व अदधन्म। दधन्यात्। धन्यात्। अधानीत् अधनीत्। अधनिष्यत्। जन जनने इति। उत्पत्तौ?कर्मकः। उत्पादने सकर्मकः।

तत्त्व-बोधिनी

नाभ्यस्तस्याऽचि पिति सार्वधातुके २८९, ७।३।८७

नाभ्यस्तस्य। अभ्यस्तस्य। अभ्यस्तस्य किम्?। द्वेषाणि। अचि किम्?। वेवेष्टि। पिद्ग्रहणम् "उतो वृद्धिर्लुकि हली"त्युतरार्थम्। सार्वेति किम्?। निनेज। बहुलं छन्दसीतीत्त्वमिति। एतच्च पूर्वोत्तरान्वयि। इयर्तीति। अभ्यासस्य इयङ्,

अभ्यासादुत्तरस्य तु गुणः। इय्रतीति। "अदभ्यस्ता"दित्यत्। अर्यादिति। "गुणोऽर्ती"ति गुणः। आरदिति। "सर्तिशास्ती"त्यङि "ऋदशोऽङी"ति गुणः। बब्ध इति। तसस्तकारस्य "झषस्तथो"रिति धत्वम्। तुतूर्त इति। "हलि चे"ति दीर्घः। धन धान्ये। धान्यार्जन इत्यर्थः। दधन्त इति। छान्दसत्वात् "अनुनासिकस्ये"ति नेह दीर्घ इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

भूसुवोस् तिङि ७।३।८८

भू सू इत्येतयोः तिङि सार्वधातुके गुणो न भवति। अभूत्। अभूः। अभूवम्। सुवै, सुवावहै, सुवामहै। सूतेर् लुग्विकरनस्य इदं ग्रहणम्। सुवतिसूययोर् विकरणेन तिङो व्यवधानम्। विकरणस्यैव ङित्त्वाद् गुणाभावः सिद्धः। तिङि इति किम्? भवति। सार्वधातुके इत्येव, व्यतिभविषीष्ट। अथ बोभवीति इति यङ्लुकि गुणप्रतिषेधः कस्मान् न भवति? ज्ञापकात्, यदयं बोभूतु इति गुणाभावार्थे निपातनं करोति।

लघु-सिद्धान्त-कौमुदी

भूसुवोस्तिङि ४४२, ७।३।८८

भू सू एतयोः सार्वधातुके तिङि परे गुणो न। अभूत्। अभूताम्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

न्यासः

भूसुवोस्तिङि। , ७।३।८८

"अभूत्()" इति। "लुङ्(), "गातस्था" २।४।७७ इत्यादिना सिचो लुक्()। "सुवावहै, सुवामहै" इति। "षूङ्? प्राणिगर्भविमोचने" (धा।पा।१०३१), लोट्? वहिमहिङौ, टेरेत्वम्(), "एत ऐ" ३।४।९३, आदित्वाच्छपो लुक्(), "आङुत्तमस्य पिच्च" (३।४।९२) इत्याट्? "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङ्()। अथ कस्मात्? सूतेरादादिकस्योपन्यासः कृतः, न सुवतिसयत्योस्तौदादिकदैवादिकयोः? इत्यत आह--"सूतेर्लुग्विकरणस्य" इत्यादि। ननु च लुग्विकरणपरिभाषया (व्या।प।५०) "षू प्रेरणे" (धा।पा।१४०८) इत्येतस्य शविकरणस्य तौदादिकस्य, "षूङ्? प्राणिप्रसवे" (धा।पा।११३२)--इत्यस्य दैवादिकसय च ग्रहणं युक्तम्()? इत्यत आह--"सुवतिसूयत्योः" इत्यादि। तिङीति सप्तमीनिर्देशादनन्तरे तिङि प्रतिषेधेन भवितव्यम्()। न च सुवतिसूयतिभ्यामनन्तरस्तिङ्? सम्भवति, विकरणेन व्यवधानात्()। तस्मान्न तयोग्र्रहणमिति सूतेरेव ग्रहणं युक्तमित्यभिप्रायः। स्यादेतत्()--वचनप्राणाण्याद्विकरणेन व्यवधानेऽपि प्रतिषेधो भविष्यतीत्यतस्ययोरेव ग्रहणं युक्तमिति? अत आह--"विकरणस्यैव" इत्यादि। तयोर्हि "सार्वधातुकमपित्()" १।२।४ इति विकरणङित्त्वम्(), तत्र "क्ङिति च" १।१।५ इत्यनेनैव सिद्धः प्रतिषेध इति निरर्थकं तयोग्र्रहणं स्यात्(), अतो न ताविह गृह्वते। "भवति" इति। तिङीति वचनादिहातिङि शपि परतो निषेदो न भवति। "व्यतिभविषीष्ट" इति। आशिषि लिङ्? ३।३।१७३। स च "लिङाशिषि" ३।४।११६ इत्यार्धधातुकसंज्ञकः, सीयुट्(), "कत्र्तरि "कत्र्तरि कर्मण्यतिहारे" १।३।१४ इत्यात्मनेपदम्(), सुट्? षत्वम्(), ष्टुत्वम्()। "अथ" इत्यादि। "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवति" (व्या।प।७९) इति यङ्लुकोऽपि ग्रहणे सति तत्रापि प्रतिषेधेन भवितव्यमिति भावः। "बोभवीति" इति। "गुणो यङ्लुकोः" ७।४।८२ इत्यभ्यासस्य गुणः। "ज्ञापकात्()" इत्यादि। यदि यङ्लुक्यपि प्रतिषेधः स्यात्(), गुणाभावार्थं निपातनं न कुर्यात्(), कृतञ्च, तस्मादेव ज्ञापयति--यङलुक्ययं प्रतिषेधो न भवतीति॥

बाल-मनोरमा

भूसुवोस्तिङि ७२, ७।३।८८

भूसुवोस्तिङि। "मिदेर्गुण" इत्यतो "गुण" इति, "नाभ्यास्तस्याचि पिती"त्यतो नेति सार्वधातुक इति चानुवर्तते। तदाह--एतयोरिरिति। भू सू इत्यनयोरित्यर्थः। इह "षूङ् प्राणिगर्भविमोचने" इतिलुग्विकरणस्यैव ग्रहणं, न तु सुवतिसूयत्योः शविकरणश्यन्विकरणयोरपि, तत्र तिङो विकरणेन व्यवधानात्। अथ अभूत् इत्यत्र तकारस्येडागममाशह्कितुमाह--

तत्त्व-बोधिनी

भूसुवोस्तिङि ५५, ७।३।८८

"षूझ् प्राणिगर्भविमोचने"। सुवतिसूयत्योस्तु न ग्रहणं, तिङो विकरणेन व्यवधानात्।

---

सूत्रम्

काशिका-वृत्तिः

उतो वृद्धिर् लुकि हलि ७।३।८९

सार्वधातुके पिति इति वर्तते। उकारान्तस्य अङ्गस्य वृद्धिर् भवति लुकि सति हलादौ पिति सार्वधातुके। यौति। यौषि। यौमि। नौति। नौषि। नौमि। स्तौति। स्तौषि। स्तौमि। उतः इति किम्? एति। एषि। एमि। लुकि इति किम्? सुनोति। सुनोषि। सुनोमि। हलि इति किम्? यवानि। रवाणि। पिति इत्येव, युतः। रुतः। अपि स्तुयाद् राजानम् इत्यत्र हि ङिच्च पिन्न भवति इति पित्वप्रतिषेधाद् वृद्धेरभावः। न अभ्यस्तस्य इत्येतदिह अनुवर्तते, योयोति, रोरोति इत्येवम् आद्यर्थम्।

लघु-सिद्धान्त-कौमुदी

उतो वृद्धिर्लुकि हलि ५६९, ७।३।८९

लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके नत्वभ्यस्तस्य। यौति। युतः। युवन्ति। यौषि। युथः। युथ। यौमि। युवः। युमः। युयाव। यविता। यविष्यति। यौतु, युतात्। अयौत्। अयुताम्। अयुवन्। युयात्। इह उतो वृद्धिर्न, भाष्ये -ऽपिच्च ङिन्न ङिच्च पिन्न' इति व्याख्यानात्। युयाताम्। युयुः। यूयात्। यूयास्ताम्। यूयासुः। अयावीत्। अयविष्यत्॥ या प्रापणे॥ ४॥ याति। यातः। यान्ति। ययौ। याता। यास्यति। यातु। अयात्। अयाताम्॥

न्यासः

उतो वृद्धिर्लुकि हलि। , ७।३।८९

गुणे प्राप्त उत्तो वृद्धिरारभ्यते। यौतीत्यादौ पूर्ववच्छपो लुक्()। "सुनोति" इति। श्नुः। "यवानि" इति। लोट्()। उत्तमपुरुषैकवचनम्()। "युतः, रुतः" इति। लट्(), तस्()। तपरकरणं सूतीत्यत्र मा भूदति। अथ "अपि स्तुयाद्राजानत्र्()" इत्यत्र कस्मान्न भवति, अस्ति ह्रत्रापि यासुटस्तिङ्भक्तत्वात्? तिङ्ग्रहणेन ग्रहणमिति प्राप्तिः, न च शक्यते वक्तुम्()--"क्ङिति च" १।१।५ इति प्रतिषेधो भविष्यतीति; यस्मादिग्लक्षणाया वृद्धेः प्रतिषेधोऽसौ, न चेयमिग्लक्षणा; साक्षान्निर्दष्टस्थानिकत्वात्(), "यस्या हि वृद्धेः स्थानी न निर्दिश्यते सेग्लक्षणा" इत्युक्तम्()? इत्याह--"अपि स्तुयात्()" इत्यादि। अत्र हि "यासुट्? परस्मैपदेषूदात्तौ ङिच्च" ३।४।१०३ इति सार्वधातुकं ङित; "ङिच्च पिन्न भवति" इति ङित्त्वेन पित्त्वस्य बाधितत्वात्()। तस्मात्? पित्युच्यमाना वृद्धिरिहापि न भवति। अथ "योयोति, रोरोति" इत्यत्र कस्मान्न भवति, लुकि सति भवति ह्येतदङ्गद्वयमुकारान्तम्()? इत्याह--"नाभयस्तस्य" इत्यादि। गतार्थम्()। आदिशब्देन नोनोतीत्येवमादीनां["चोकोतीत्यादीनाम्()"--प्रांउ।पाठः] ग्रहणम्()॥

बाल-मनोरमा

उतो वृद्धिर्लुकि हलि २७४, ७।३।८९

उतो वृद्धिर्लुकि हलि। "नाभ्यस्याचि पिति सार्वधातुके" इति अचिवर्जमनुवर्तते। लुकीति विषयसप्तमी, दर्शनाऽभावस्य लुकः परत्वाऽसंभवात्।तदाह--लुग्विषय इत्यादिना। यौतीति। गुणं बाधित्वा वृद्धिः। युत इति। अपित्त्वान्न वृद्धिः। युवन्तीति। अपित्त्वाद्वृद्ध्यभावे ङित्त्वाद्गुणाऽभावे उवङिति भावः। यौषि युथः युथ। यौमि युवः युमः। युयावेति। युयुवतुः युयुवुः। युयविथ युयुवथुः युयुव। युयाव-युयव युयुविव युयुविम। यवितेति। उवङं बाधित्वा परत्वाद्गुण-। यविष्यति। यौतु युतात् युताम् युवन्तु। हौ अपित्त्वान्न वृद्धिः। युहि--युतात् युतम् युत। आटि पित्त्वेऽपि हलादित्वाऽभावान्न वृद्धिः। पित्त्वेन ङित्त्वाऽभावाद्गुणः। यवानि यवाव यवाम। अयौत् अयुताम् अयुवन्। अयौः अयुतम् अयुत। अयवम् अयुव अयुम। विधिलिङ्याह-- युयादिति। अत्र यासुडागमसहितस्य तिपः पित्त्वादुतो वृद्धिमाशङ्क्याह--- इह उतो वृद्धिर्नेति। कुत इत्यत आह-- भाष्ये इति। व्याख्यानादिति। "हलः श्नः शानज्झौ" इति सूत्रव्याख्यावसरे वचनादित्यर्थः। ननु यासुडागमसहितस्य तिपः पित्त्वात् "पिच्च ङिन्ने"त्युक्तवचनेन "यासुट् परस्मैपदेषु" इति ङित्त्वस्याऽप्यभावात् "क्ङिति चे"त#इ गुणनिषेधाऽभावाद्गुणः स्यादित्यत आह-- विशेषविहितेनेत्यादि, बाधादित्यन्तम्। "यासुट् परस्मैपदेषु" इति विशेषविहितेन यासुटो ङित्त्वेन तत्सहितस्य तिपो "ङिच्च पिन्ने"ति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाधान्ङित्त्वाद्गुणनिषेधो निर्बाध इत्यर्थः। आशीर्लिङ्याह-- यूयादिति। आद्र्धधातुकत्वान्न वृद्धिः। "अकृत्सार्वधातुकयो"रिति दीर्घः। यूयास्तामित्यादि। लुङ्याह-- अयावीदिति। सिचि वृद्धिः। "इट ईटी"ति सिज्लोपः। अयाविष्टामित्यादि। अयविष्यत्।

तत्त्व-बोधिनी

उतो वृद्धिर्लुकि हलि २४०, ७।३।८९

उतो वृद्धिः। "नाभ्यस्तस्याचि पिती"त्यतो निषेधानुवृत्तेराह-- न त्वभ्यस्तस्येति। उतः किम्?। एति। एषि। लुकीति किम्?। सुनोति। जुहोति। हलि किम्?। यवानि यवाव। "आडुत्तमस्ये"त्याडागमः पित्। पिति किम्?। युतः। रुतः। "नाभ्यस्तस्ये"ति किम्?। योयोति। रोरोति। सार्वधातुके किम्?। यूयात्। न चाऽत्र ङिच्च पिन्नेति व्याख्यानान्निर्वाहः शङ्क्यः, "किदाशिषी"ति यासुटः कित्त्वात्। केचित्तु युयात् स्तुयादित्यादावपि "ङिच्च पिन्ने"त्येतदानाश्रित्य व्याचक्षते। संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति। अन्यथा "उत औ" दित्येव वदेदिति।

---

सूत्रम्

काशिका-वृत्तिः

ऊर्णोतेर् विभाषा ७।३।९०

ऊर्णोतेर् विभाषा वृद्धिर् भवति हलादौ पिति सार्वधातुके। प्रोर्णौति, प्रोर्णोति। प्रोर्णौषि, प्रोर्णोषि। प्रोर्णौमि, प्रोर्णोमि। हलि इत्येव, प्रोर्णवानि।

लघु-सिद्धान्त-कौमुदी

ऊर्णोतेर्विभाषा ६०२, ७।३।९०

वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति, ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते।
(ऊर्णोतेराम्नेति वाच्यम्)॥

न्यासः

ऊर्णोतेर्विभाषा। , ७।३।९०

पूर्वेण नित्यायां वृद्धौ प्राप्तायां विकल्पार्थोऽयमुत्यते। "प्रोर्णोति" इति। पूर्ववच्छपो लुक्। "प्रोर्णवानि" इति।

लोड्उत्तमपुरुषैकवचनम॥

बाल-मनोरमा

ऊर्णोतेर्विभाषा २७६, ७।३।९०

ऊर्णोतेर्विभाषा। "उतो वृद्धि"रित्यतो वृद्धिरिति, हलीति चानुवर्तते। "नाभ्यस्तस्ये"त्यतः "पिति सार्वधातुके" इति च। इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- वृद्धिः स्यादित्यादिना। लिटि "इजादे"रिति, "कास्यनेका"जिति च आमि प्राप्ते आह--ऊर्णोतेराम् नेति। ऊर्णोतेर्नुवद्भावस्य वक्ष्यमाणतया इजादित्वस्य अनेकाच्त्वस्य चाऽभावादिति भावः। णलि ऊर्णु अ इति स्थिते "अजादेर्द्वितीयस्ये"ति "र्नु"इति रेफसहितस्य द्वित्वे हलादिशेषे नकारस्य निवृत्तौ ऊरुनावेति प्राप्ते----

तत्त्व-बोधिनी

ऊर्णोतेर्विभाषा २४२, ७।३।९०

"उतो वृद्धि"रिति नित्ये प्राप्ते विभाषेयम्। हलादौ किम्?। ऊर्णवानि। पिति किम्?। ऊर्णुतः। सार्वधातुके किम्?। ऊर्णूयात्।

*ऊर्णोतेराम्नेति वाच्यम्। ऊर्णोतेराम्नेति। "ऊर्णोतेर्णुवद्भावो वाच्यः" इति वक्ष्यमाणस्य आमभावोऽपि फलमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

गुणो ऽपृक्तो ७।३।९१

ऊर्णोतेर् धातोः अपृक्ते हलि पिति सार्वधातुके गुणो भवति। प्रोर्णोत्। प्रोर्णोः। हलि इति वर्तमाने यदपृक्तग्रहणं क्रियते, तेन एव ज्ञाप्यते भवत्येषा परिभाषा यस्मिन् विधिस् तदादावल्ग्रहणे इति।

लघु-सिद्धान्त-कौमुदी

गुणोऽपृक्ते ६०५, ७।३।९१

ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके। वृद्ध्यपवादः। और्णोत्। और्णोः। ऊर्णुयात्। ऊर्णुयाः। ऊर्णुवीत। ऊर्णूयात्। ऊर्णुविषीष्ट, ऊर्णविषीष्ट॥

न्यासः

गुणोऽपृक्ते। , ७।३।९१

विभाषेति निवृत्तम्()। पूर्वेण प्राप्तायाः पाक्षिक्या वृद्धेरयमपवादः। ननु हलत्यनुवत्र्तत एव, तत्र सामथ्र्यादपृक्त एव भविष्यतीति न तदादी, न हि हलादिसमुदायो हल्? भवति, तत्किमपृक्तग्रहणेन इत्यत आह--"हलीत्यनुवत्र्तमाने" इत्यादि। अपुक्तग्रहणं ह्वेवमर्थं क्रियते--हलीत्यनुवृत्तेस्तदादौ मा भूदिति। यदि चेयं परिभाषा न स्यात्(), अपृक्तग्रहणमनर्थकत्वान्न कुर्यात्()। हल्युचयमानो गुणः कः प्रसङ्गो यस्तदादावपि स्यात्()? नैव प्राप्नोति; तस्या हलात्मकत्वात्()। कृतञ्चेदमपृक्तग्रहणम्(), अतस्तोनास्तीयं परिभाषेति ज्ञाप्यते। अथ "नापृक्ते" इत्येवं कस्मान्नोक्तम्(), किं गुणग्रहणेन, वृद्धौ प्रतिषिद्धायामुत्सर्गेण गुणेनैव सिध्यति? नैतदस्ति; अन्तरोक्ताया विभाषायाः प्रतिषेधो विज्ञायेत, तथा च नित्यं वृद्धिः स्यात्()॥

बाल-मनोरमा

गुणोऽपृक्ते २७९, ७।३।९१

गुणोऽपृक्ते। "ऊर्णोतेविभाषे"त्यत ऊर्णोतेरिति, "नाभ्यस्तस्ये"त्यतः पिति सार्वधातुके इति, "उतो वृद्धि"रित्यतो हलीति चानुवर्तते। तदाह-- ऊर्णोतेरित्यादि। वृद्ध्यपवाद इति। "ऊर्णोतेर्विभाषे"ति वृद्धिविकल्पस्यापवाद इत्यर्थः। ऊर्णुयादित्यत्र "विभाषोर्णो"रिति वृद्धिविकल्पमाशङ्क्याह-- इह वृद्धिर्नेति। भाष्यादिति। तथा च यासुटो ङित्त्वेन पित्त्वाऽभावान्न वृद्धिविकल्प इति भावः। नचैवं सति गुणनिषेधोऽपि न स्यादिति शङ्क्यं, विशेषविहितेन यासुटो ङित्त्वेन "ङिच्च पिन्ने"ति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाध इति "यु मिश्रणे" इति धातावेवोक्तत्वादिति भावः। परस्मैपदे आशीर्लिङ्याह-- ऊर्णूयादिति। "अकृत्सार्वधातुकयो"रिति दीर्घः। ऊर्णूयास्तामित्यादि। आत्मनेपदे लिङ()आह-- ऊर्णविषीष्ट ऊर्णुविषीष्टेति। "विभाषोर्णो"रिति ङित्त्वविकल्प इति भावः। लुङि परस्मैपदे और्णु--ईदिति स्थिते "विभाषोर्णो"रिति ङित्त्वपक्षे गुणाऽभावे उवङि रूपमाह-- और्णुवीदिति। ङित्त्वाऽभावपक्षे गुणे नित्यं प्राप्ते।

तत्त्व-बोधिनी

गुणोऽपृक्ते २४४, ७।३।९१

गुणोऽपृक्ते। "नाभ्यस्तस्याची"त्यतः "पिति सार्वधातुके" इति, "उतो वृद्धिर्लुकि हली" त्यतो हलीति चानुवर्तते। तदाह--- हलादावित्यादि।

---

सूत्रम्

काशिका-वृत्तिः

तृणह इम् ७।३।९२

तृणह इत्येतस्याङ्गस्य इमागमो भवति हलि पिति सार्वधातुके। तृणेढि। तृणेक्षि। तृणेह्मि। अतृणेट्। वर्णाश्रये ऽपि अत्र प्रत्ययलक्षणम् इष्यते। हलि इति किम्? तृणहानि। पिति इत्येव, तृण्ढः। तृणह इति आगतश्नंको गृह्यते, श्नमि कृते इमागमो यथा स्यातिति।

लघु-सिद्धान्त-कौमुदी

तृणह इम् ६७०, ७।३।९२

तृहः श्नमि कृते इमागमो हलादौ पिति सार्वधातुके। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्॥

न्यासः

तृणह इम्?। , ७।३।९२

"तृह हिंसायाम्()" (धा।पा।१४५५) इति रुधादिः, "तृहू तृभ्‌ू हिंसार्थाः (धा।पा।१३४८,१३५०) इति तुदादी--तयोराद्यस्येदं ग्रहणम्(), नेतरस्य। तस्य विकरणेन व्यवधावादनन्तरो हल्? न सम्भवतीति। "तृणेढि" इति। "हो ढः" ७।२।३१, "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वम्(), "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्(), "ढो ढे लोपः" ८।३।१३, तस्येमागमः, "आद्गुणः" ६।१।८४। "तृणेक्षि" इति। "धढोः कः सि" ८।२।४१ इति कत्वम्()। "अतृणेट्()" इति। लङ्(), तिप्(), हल्ङ्यादिलोपः ६।१।६६, ढत्वे कृते "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वम्()--ढकारस्य डकारः, तस्य "वावसाने" ८।४।५५ इति चर्त्वम्()--टकारः। ननु चात्र लुप्तत्वात्? सार्वधातुकस्येमागमेन न भवितव्यम्(), लुप्तोऽपि तत्र प्रत्ययलक्षणेन भविष्यतीति चेत्()? न; वर्णाश्रये प्रत्ययलक्षणं नास्तीत्यत आह--"वर्णाश्रये" इत्यादि। एवं मन्यते--"वर्णाश्रये नास्ति प्रत्ययलक्षणम्()" (व्या।प।९६) इति नानेन सर्वधा वर्णाश्रयस्य प्रत्ययलक्षणस्य प्रतिषेधः क्रियते, किं तर्हि? "प्रत्ययलोपे प्रत्ययलक्षणम्()" १।१।६१ इत्यत्र प्रतययग्रहणस्य प्रयोजनं व्याख्यायते। प्रत्यये लुप्ते

द्विविधं कार्यं विज्ञायते--प्रत्ययनिमित्तम्(), अप्रत्ययनिमित्तञ्च। तत्र यत्? प्रत्ययनिमित्तं तत्? प्रत्ययलोपे यथा स्यात्(), इतरन्मा भूदित्येवमर्थम्()। तेन गवे हितं गोहितमित्यत्र लुप्तायां विभक्ताववादेशो न भवति। अवादेशस्य ह्रचीत्यधिकाराद्वर्णो निमित्तम्(), न प्रतयय एव। इह त्वङ्गाधकारात्? प्रत्यय एव हलादिराश्रीयत इतीमागमस्य प्रत्ययनिमित्तता। तेनासौ प्रत्ययलक्षणेन भवत्येव। यदि ह्रसौ प्रत्ययनिमित्तस्तत्कथं वर्णाश्रयेऽपयत्रेतयुक्तम्()? अतृणेडित्यत्रोदाहरणे त्ययस्य वर्णमात्रत्वात्? प्रत्ययविशेषणत्वेन वी वर्णस्याश्रयणादेवमुक्तम्(), न त्वप्रत्ययनिमित्तत्वात्(), वर्णस्यापि तकारस्य प्रत्ययत्वापरित्य#आगत्()। "तृणहानि" इत्यत्र तदेव लोडुत्तपुरुषैकवचनम्()। "तृण्ढः" इति। तस्(), "श्नसोरन्लोपः" ६।४।१११, पूर्ववड्ढत्वादि, "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारः, "अनुस्वारस्य ययिपरसवर्णः" ८।४।५७ इति परसवर्णो णकरः। अथ किमर्थमिह तृहीरागतश्नम्को गृह्रते, न तृह इत्येवोच्येत? इत्याह आह--"तृणह" इत्यादि। यद्यागतश्नम्कस्य ग्रहणं न क्रियेत, ततो नाप्राप्ते श्नम्ययमारभ्यते, देशहेतुकश्च तयोर्विरोधोऽस्तीति श्नम णमा बाधा स्यात्()। असत्यामपि बाधायामनिष्ठा व्यवस्था स्यात्()--पूर्वमिम्(), पश्चात्? श्नम्(); ततश्चानिष्टं रूपं स्यात्()। आगतश्नम्कस्य ग्रहणे सश्नम्कस्य तृहेरिमि विधीयमाने समावेशस्तयोर्भवति, इष्टा च व्यवश्था सम्पद्यते--पूर्वं श्नम्(), पश्चादिम्(); तस्मात्? श्नमि कृते सतीमागमो भवेदित्येवमर्थमागतश्नम्कस्तृहिर्ग्रृह्रते॥

बाल-मनोरमा

तृणह इम् ३७५, ७।३।९२

तृणह इम्। "तृणह" इति षष्ठी। कृतश्नमस्तृहधातोर्निर्देशः। र"नाभ्यस्तस्ये"त्यतः पितीति, "उतो वृद्धि"रित्यतो हलीति चानुवर्तते। फलितमाह - तृहः श्नमि कृते इति। मित्()तवादन्त्यादचः परः। "श्नमि कृते" इत्यनुक्तौ तु येन नाप्राप्तिन्यायेन इमागमेन श्नम्बाध्येत, "सत्यपि संभवे बाधनं भवती"ति नयायात्। अन्यथा "ब्राआह्रणेभ्यो ददि दीयतां, तक्रं कौण्डिन्याये"त्यत्र तक्रेण दधि न बाध्येत, श्नमा शप्च न बाध्येत, देशभेदेन उभयसंभवादिति भावः। तृणेढीति। तृणह् तस् इति इमागमे आद्गुणे तृणेह् ति स्थिते ढत्वधत्वष्टुत्वढलोपा इति भावः। तृण्ढ इति। तसि श्नमि कृते, तृणह् तस् इति स्थिते , तसोऽपित्त्वादिमागमाऽभावे "श्नसो"रित्यल्लोपे ढत्वधत्वष्टुत्वढलोपा इति भावः। तृंहन्ति। तृणेक्षि तृण्ढः तृण्ढ। तृणेहिर्भ तृंह्वः तृंह्मः। ततर्हेति।ततृहतुः। ततर्हिथ। ततृहिव। तर्हितेति। सेडिति भावः। तर्हिष्यति। तृणेढु - तृण्ढात् तृण्ढाम् तृंहन्तु। तृण्ढि - तृण्ड्ढि - तृण्ढात् तृण्ढम् तृण्ढ। तृणहानि तृणहाव तृणहाम। अतृणेडिति। लङ स्तिपि श्नमि इम् हल्ङ्यादिलोपः ढत्वजश्त्वे इति भावः। अतृण्ढाम् अतंहन्। अतृणेट् अतृण्ढम् अतृण्ढ। अतृणहम् अतृंह्व अतृंह्म। तृंह्यात्। तृह्यात्। अतर्हीत्। अतर्हिष्यत्। हिसिधातोरुदाहरति - हिनस्तीति। इह श्नमि इदित्त्वान्नुमि च कृते "श्नान्न लोपःर" इति नुमो लोप इति भावः। हिंस्तः हिंसन्ति। हिनस्सि हिंस्थः हिंस्थ। हिनस्मि हिंस्वः हिंस्मः। जिहिंसेति। किति इदित्तवान्नलोपो न। जिहिंसतुः। जिहिंसिथ। हिंसितेति। सेडिति भावः। हिंसिष्यति। हिनस्तु हिंस्ताम्। हौ श्नमि नुमि कृते "श्नान्नलोपः" इतिनुमो लोपे हेरपित्त्वेन ङित्त्वात् "श्नसो"रित्यल्लोपे "धिचे"ति सलोपे, हिन्धीति रूपम्। हिंस्तात्। हिनसानि। अहिनत् अहिस्ताम् अहिंसन्। सिपि रुर्वा - अहिनः अहिनत्, अहिंस्तम्। अहिनसम् अहिंस्व। हिंस्यात् हिंस्याताम्। आशीर्लिङ श्नमभावान्नुमेव। इदित्त्वान्नलोपो न। हिंस्यादित्येव। हिंस्यास्ताम्। अहिंसीत्। अहिंसिष्यत्। उन्दी क्लेदने। उन्दन्तीति। उनत्सि उन्त्थः। उनद्मि उन्द्वः। उन्दामिति। इजादेश्चेत्याम्। उन्दिता। उन्दिष्यति। उनत्तु - उन्त्तात्। उन्द्धि। उनदानि। लह्राह - औनदिति। औत्त्वाद्वेट्। अनक्तीति। श्नमि कृते परसवर्णस्याऽसिद्धत्वात् "श्नान्न लोपः" इति नकारलोपे जस्य कुत्वेन गः, तस्य चर्त्वेन क इत भावः। अङ्क्त इति। नलोपे अल्लोपे जस्य कुत्वेन गः। गस्य चर्त्वेन कः। श्नमो नस्य परसवर्णो ङ इति भावः। अञ्जन्तीति। नलोपाऽल्लोपौ। श्नमो नस्य परसवर्णो ञ इति भावः। अनक्षि अङ्क्थः। अनज्मि अञ्ज्वः। अङ्ग्धीति। हौ श्नमि धिभावे नलोपाऽल्लोपौ। जस्य कुत्वेन गकारः। नस्य परसवर्णो ङ्कार

इति भावः। अनजानीति। श्नान्नलोपः। आटः पित्वादल्लोपो न। लह्याह - आनगिति। आङ्क्ताम्। आञ्जन्। अञ्ज्यात्। अज्यात्।

तत्त्व-बोधिनी

तृणह इम् ३२९, ७।३।९२

तृणह इम्। "तृहू" इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो माभूदित्येवमर्थम्। न च तौदादिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शङ्क्यं, ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात्। "नाभ्यस्तस्याचि पिती"त्यतः पितीति, "उतो वृद्धि"रित्यतो हलीति च वर्तते। तदाह-- हलादौ पितीति। "प्रत्ययलोपे प्रत्ययलक्षण"मिति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते, किं तु पितीत्यनुवर्तत एव। तेन "तृण्ढ" इत्यत्र नातिप्रसङ्गः। नच हलीत्यनुवृत्तौ तृणहानीत्यत्रातिप्रसङ्ग इति वाच्यम्, अचि नेत्यनुवर्तनात्। उन्दी क्लेदनमाद्रीभावः। अञ्जू। व्यक्तिर्विवेचनम्। म्रक्षणं-- स्निग्धता।

---

सूत्रम्

काशिका-वृत्तिः

ब्रुव ईट् ७।३।९३

व्रू इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति। ब्रवीति। ब्रवीषि। ब्रवीमि। अब्रवीत्। हलि इत्येव, ब्रवाणि। पिति इत्येव, ब्रूतः।

लघु-सिद्धान्त-कौमुदी

ब्रुव ईट् ५९८, ७।३।९३

ब्रुवः परस्य हलादेः पित ईट् स्यात्। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। ब्रुवाते। ब्रुवते॥

न्यासः

ब्राउव ईट्?। , ७।३।९३

ब्राउवः" इत्येषा पञ्चम्यकृतार्था पूर्वत्र कृतार्थायाः "सार्वधातुके" इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति तस्मादितयुत्तरस्य" १।१।६६ इति वचनात्()। तेन हलादेः पितः सार्वधातुकस्यैवायमिङ्? विज्ञायत इत्यत आह--"ब्राऊ इत्येतस्मादुत्तरस्य हलादेः" इत्यादि। कथं पूनर्हल आगमित्वेन तदादिर्लभ्यते, "यस्मिने विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) इत्युच्यते, न तु यस्य विधिरिति, असति हि तदादिविधावब्रावीदित्यादावेव स्यात्(), ब्रावीतीत्यादौ न स्यात्()? नैष दोषः; उत्तरत्र ह्यपृक्तग्रहणात्? तदादिविधेः सम्भवो गम्यते, अन्यथा ह्यसति तदादिविधौ विनाप्यपृक्तग्रहणेनापृक्त एव भविष्यति, अपृक्तग्रहणमनर्थकं स्यात्()। "ब्रावीति" इति। पूर्ववच्छपो लुक्()। "ब्रावाणि" इति। तदेव लोडुत्तमपुरुषैकवचनम्()। "ब्राऊतः" इति। लट्(), तस्()॥

बाल-मनोरमा

सन्वल्लघुनि चङ्परेऽनग्लोपे १५६, ७।३।९३

सन्वल्लघुनि। "अनग्लोपे" इति च्छेदः। बहुव्रीहिरिति। चङ् परो यस्मादिति विग्रह इति भावः। कर्मदारयमाश्रित्य चङि परे इति नार्थः, परग्रहणवैयर्थ्यात्। ननु बहुव्रीह्याश्रयणेऽपि "अत्र लोपोऽभ्यासस्ये"त्यतोऽभ्यासस्येत्यनुवृत्तौ चङ्परके लघुनि परेऽभ्यासः सन्वदित्यर्थो लभ्यते। तथा सति अण्यन्तेभ्यः श्रिद्रुरुआउभ्यश्चङि द्वित्वे अशिश्रियत् अदुद्रुवत्

असुरुआउवदित्यत्रापि सन्वत्त्वं स्यात्। ततश्च "दीर्घो लघो"रिति सन्वद्भावविषये अभ्यासस्य वक्ष्यमाणो दीर्घः स्यादित्यत आह--अन्यपदार्थो णिरिति। तथा च चङ्परे णौ इति लभ्यते। अशिश्रियादित्यादौ च णेरभावान्न सन्वत्त्वमिति भावः। स चाङ्गस्येति चेति। बहुव्रीहिगम्यो णिः, अङ्गस्येत्यावृत्तौ एकं चङ्परे इत्यत्रान्वेति। निमित्तनिमित्तभावे षष्ठी। तथा च अङ्गसंज्ञानिमित्तभूते चङपरके वर्णे परे इति लभ्यते। चङ्परकश्च वर्णोऽर्थाण्णेरिकार एव, न तु श्रिद्रुरुआउवामन्त्यवर्णः, तस्य अप्रत्ययत्वेन अङ्गसंज्ञाप्रापकत्वाऽभावात्। एतदर्थमेव अङ्गस्येत्स्य निमित्तषष्ठ()न्तततामाश्रित्य चङ्पर इत्यनेनान्वयोऽभ्युपगतः। चङ्पर इत्येतावतैव तु णाविति न लभ्यते, श्रिद्रुरुआउषु व्यभिचारात्। द्वितीयं त्वङ्गस्येत्येतत् अभ्यासस्येत्यनुवृत्तेन अन्वेति। "सन्व"दिति सप्तम्यन्ताद्वतः। तदाह-- अङ्गसंज्ञानिमित्तमित्यादिना। अथवेति। अस्मिन्व्याख्याने "चङ्परे" इत्येतदङ्गस्येत्यत्रान्वेति, न तु लघुनि। अङ्गस्य च प्रत्ययनिमित्तत्वादेव णेरन्यपदार्थस्य लाभः। लघुनीति तु अभ्यासस्येत्यत्रैवान्वेति। तदाह-- चङ्परे णौ यदङ्गमित्यादिना। प्राग्वदिति। सनीव कार्यं स्याण्णावग्लोपेऽसतीत्यर्थः। अत्र प्रथमपक्ष एव भाष्यसंमतः, "अजजागर" इत्यत्र चङ्परे णौ यल्लघु, तदभ्यासव्यवहितमिति न सन्वत्त्व"मिति भाष्योक्तेः। एवं च प्रथमपक्षे उन्देण्यन्ताच्चङि द्वित्वे उन्दिदि अ त् इत्यत्र अभ्यासोत्तरखण्डे चङ्परे णौ लघोरभावेनाऽभ्यासस्य तथाविधलघुपरकत्वविरहात्सन्वत्त्वाऽभावान्नाऽभ्यासदीर्घः। द्वितीयपक्षे तु चङ्परे णौ यदङ्गम्-- "उन्दिद्" इत्येतत् , -- तदीयोऽभ्यासश्चङमादाय,लुप्तं णिमादाय वा लघुपर इति सन्वत्त्वसत्त्वादभ्यासदीर्घ इति भेदः। एवं च प्रकृते क कम् अ त इत्यत्र व्याख्याद्वयेऽपि सन्वत्त्वं स्थितम्।

---

सूत्रम्
काशिका-वृत्तिः
यङो वा ७।३।९४

यङः उत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति वा। शाकुनिको लालपीति। दुन्दुभिर् वावदीति। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश। न च भवति। वर्वर्ति, चर्कर्ति चक्रम्। हलादेः पितः सार्वधातुकस्य यङन्तादभावः इति यङ्लुगन्तस्य उदाहरणम्।
लघु-सिद्धान्त-कौमुदी
यङो वा ७२२, ७।३।९४

यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात्। भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न, बोभोतु, तेतिक्ते इति छन्दसि निपातनात्। बोभवीति, बोभोति। बोभूतः। अदभ्यस्तात्। बोभुवति। बोभवाञ्चकार, बोभवामास। बोभविता। बोभविष्यति। बोभवीतु, बोभोतु, बोभूतात्। बोभूताम्। बोभुवतु। बोभूहि। बोभवानि। अबोभवीत्, अबोभोत्। अबोभूताम्। अबोभवुः। बोभूयात्। बोभूयाताम्। बोभूयुः। बोभूयात्। बोभूयास्ताम्। बोभूयासुः। गातिस्थेति सिचो लुक्। यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्। अबोभूवीत्, अबोभोत्। अबोभूताम्। अबोभूवुः। अबोभविष्यत्॥ ।
लघु-सिद्धान्त-कौमुदी
इति यङ्लुक् प्रक्रिया ७२२, ७।३।९४

लघु-सिद्धान्त-कौमुदी
अथ नामधातवः ७२२, ७।३।९४

न्यासः

यङो वा। , ७।३।९४

"लालपीति" इत्यादि। लपिवदिरौतिभ्यो यङ्; पूर्वयोः "दीर्घोऽकितः" ७।४।८३ इत्यभ्यासस्य दीर्घः, रौतेस्तु "गुणो यङ्लुकोः" ७।४।८२ इति गुणः, "यङोऽचि च" २।४।७४ इति यङो लुक्()। "वर्वर्त्ति, चर्कत्ति" इति। वृत्कृत्रोर्यङ्लुकि "ॠतश्च" ७।२।९२ इत्यभ्यासस्य रुगागमः। किं पुनः कारणं यङ्लुक्येवोदाह्रियते, न यङन्ते? इत्याह--"हलादेः" इत्यादि। यङन्ते हि ङित्त्वादात्मनेपदम्(), न चात्मनेपदं हलादि पिदस्ति। हलादेः पितः परस्य सार्वधातुकस्याभावान्नेह यङन्तस्योदाहरणम्(), किं तर्हि? यङ्लुगन्तस्य। तत्र हि हलादि पित्? सार्वधातुकं सम्भवति, यङ्लुगन्तस्यादादौ "चर्करीतञ्च परस्मैभावम्()" इति पाठे सति परस्मैपदित्वात्(), तेन यङ्लृक्येवोदाह्रियते। चर्करीतमिति यङ्लुगन्तसय पूर्वाचारयसंज्ञा॥

तत्त्व-बोधिनी

यङो वा ४१०, ७।३।९४

यङो वा। "नाभ्यस्तस्याची"ति सूत्रात्पिति सार्वधातुक इति,"उतो वृद्धि"रित्यतो हलीति चानुवर्तते, "ब्राउव ई"डित्यत ईडिति च। तदेतदाह-- यङन्तादित्यादि। यङो लुक्यपि प्रत्ययलक्षणेनाऽत्र यङन्तत्वम्। एतेन यङन्ताद्धलादिपित्सार्वधातुकं न संभवतीति यङ्शब्देन यङ्लुगन्तं लक्ष्यत इति व्याख्यानं परास्तम्। उक्तरीत्या यङन्तत्वानपायात्। किं च यङन्ताद्वलादिपिन्न संभवतीति यङ्शब्देन यङ्लुगन्ते लक्षितेऽपि "सन्यङो"रिति द्वित्वस्य यङन्ते चरितार्थतया यङ्लुगन्तलक्षणायां बीजाऽभावाद्यङ्लुकि द्वित्वाऽभावप्रसङ्गादिति दिक्। छन्दसि निपातनादिति। गुणनिषेधे सिद्धे निपातनमिदं "छन्दस्येव गुणनिषेधो नाऽन्यत्रे"ति नियमार्थमित्यर्थः। बोभूत्विति। समुदायस्याऽतिरिक्तत्वात् "भूसुवो"रिति गुणनिषेधो न प्राप्नोतीति निपातनमिदं न नियमार्थमित्याशङ्कायामाह-- न चेत्। द्विः प्रयोग इति। तथा च प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमित्येतन्न्यायसिद्धं, नाऽपूर्वं वचनमिति बावः। बोभुवतीति। "अदभ्यस्ता"दित्यत्। बोभूवीदिति। केचिदिह "भुवो वुगि"ति सूत्रे "ओः सुपी"त्यत ओरित्यनुवर्तते। तथा च उवर्णान्तस्य भुवो वुगित्यर्थाद्गुणे कृते वुकः प्राप्तिर्न#आस्तीत्यनित्यो वुक्। स च पराभ्यां गुणवृद्धिभ्यां बाध्यते। तेनाऽबोभवी"दिति रूपमाहुः। तच्चिन्त्यम्। "भुवो वुको नित्यत्वा"दिति भाष्याग्रन्थविरोधात्। तस्माद्वुको नित्यत्वमाश्रित्य "इन्धिभवतिभ्यां चे"ति सूत्रं प्रत्याख्यातवतो भाष्यकृत ओरित्यनुवर्तनसंमतमेव। "आत" इति नियमाज्जुसभावमाशङ्क्याह--अभ्यस्ताश्रय इति। अयं भावः-- "सिजभ्यस्ते" ति सूत्रेण सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवाऽयं नियमो न त्वभ्यस्ताश्रयस्य जुस इति। "जुसि चे"ति गुणमाशङ्क्याह--- नित्यत्वाद्वुगिति। अबोभूविरिति। न चाऽत्र परत्वात् "अदभ्यस्ता"दित्यदादेशः स्यादिति वाच्यम्, अभ्यस्ताश्रयजुसोऽदादेशाऽपवादत्वात्। पास्पर्धीतीति। स्पर्ध संघर्षे। "दीर्घोऽकितः" इत्यभ्यासस्यदीर्घः। "यङो वे"ति ईड्विकल्पः। ईडभापक्षे "झषस्तथो"रिति धत्वं, "झरो झरि सवर्णे" इति वा धलोपः। लिटि-- पास्पर्धाचकार। लुट-- पास्पर्धिता। लृटि-- पास्पर्द्धिष्यति। लोटि पास्पर्धीतु। पास्पर्द्धु। पास्पर्धात्। पास्पर्धाम्। पास्पर्धतु। पास्पद्र्धीति। हेर्धित्वे वा धलोपः। लङि इडागमपक्षे-- अपास्पर्धीत्। रुत्वपक्षे इति। पक्षान्तरे तु अपास्पत्। अपास्दद्र्ध। लिङि-- पास्पध्र्यात्। पास्पध्र्याताम्। पास्पध्र्यास्ताम्। लुङि-- "अस्तिसिचोऽपृक्ते" इति नित्यमीट्। "इट ईटी"ति सलोपः। अपास्पर्धीति। अपास्पर्द्धिष्टाम्। अपास्पर्धिषुः। लृङि--- अपास्पर्धिष्यत्। जागाद्धीति। गाधृ प्रतिष्ठादौ। ईट्पक्षे तु जागाधीति। जाघात्सीति "एकाच" इति भष्भावः। धस्य चत्र्वम्। लोटि-- जागाधीतु। जागाद्धु। जागाद्धाम्। जागाधतु। लङि-- अजगाधीत्। अजाघात्। अजागाद्धाम्। अजागाधुः। लुङि-- अजागाधीत्। अजागाधिष्टाम्। नाथ नाधृ याच्ञादौ। नानात्तीति। ईट्पक्षे -- दादधीति। लुङि "अतो हलादे"रिति वा वृद्धिः। चोस्कुन्दीति। स्कुदि। आप्रवणे। "इदितः" इति नुम्। ईडभावे "झरो झरि सवर्णे" इति वा लोपः। लङि--ईट्पक्षे-- अचोस्कुन्दीत्। लुङि तु "अस्तिसिचः" इति नित्यमिट्। अचोस्कुन्दीत्। अचोस्कुन्दिष्टाम्। मोमुदीतीति। मुद हर्षे।

"नाभ्यस्तस्याऽची"ति लघूपधगुणनिषेधः। मोमोदितेति। न चाऽत्र "न धातुलोप" इति गुणनिषेधः शङ्क्यः, बहुलग्रहणेन प्राप्तस्य यङ्लुकोऽनैमित्तिकत्वात्। लुङि गुण इति। सिज्निमित्तकोऽयं गुणस्तेन "नाभ्यस्तस्याची"ति निषेधो न शङ्कनीय इति भावः। चोकूर्तीति। कुर्द खुर्द गुर्द गुद क्रीडायाम्। लङि तिपि ईट्पक्षे अचोकूर्दीत्। अचोखूर्दीत्। अचोगूर्दीत्। पक्षे अचोकूरिति। "दश्चे"ति रुत्वपक्षे इत्यर्थः। वनीवञ्चीतीति। वञ्च गतौ। "नित्यं कौटिल्ये गतौ" इति यङ्। "नीग्वञ्चु" इत्यभ्यासस्य नीगागमः। यङो लुका लुप्तत्वान्न तदाश्रितो नलोपः। वनीवक्त इति। तसो ङित्त्वदिह स्यादेव "अनिदिता"मिति नलोपः। लोटि-- वनीवञ्चीतु। वनीवङ्क्तु। वनीवक्तात्। वनीवक्ताम्। वनीवचतु। वनीवग्धि। वनीवञ्चानि। जहृगमीतीति। "नुगतोऽनुनासिकान्तस्ये"ति नुक्। जङ्ग्मतीति। "गमहने"त्युपधालोपः। अजङ्गन्निति। ईट्पक्षे त्वजङ्गमीत्। अजङ्गताम्। अजङ्ग्मुः। अजङ्गमीः। अजङ्गतम्। अजङ्गत। अजङ्गमम्। अजङ्गन्व। अजङ्गम। सामन्यापेक्षेति। अयं भावः-- एकाच इत्यत्रैकाज्ग्रहणाद्यङ्लुकि द्विर्वचनं न कुत्रापि प्राप्नोति, तथा च "गुणो यङ्लुको" इत्यभ्यासस्य विधीयमानो गुणो द्विर्वचनं विनानिवेशमलभमानः सन् "श्तिपा शपा" इति सर्वेषामपि निषेधानां क्वचिद्यङलुक्यप्रवृतिं()त ज्ञापयतीति। तथा च प्रयुज्यते-- "राजा वृत्रं जङ्घनत्" इत्यादि। द्वित्वं तु न भवतीति। वध्यात् अवधीदित्यत्र कृतद्विर्वचनस्य "हनो वध लिङि", "लुङि च" इति वधादेशात्पुनर्द्वित्वं न भवतीत्यर्थः। तत्र हेतुमाह-- स्थानिवत्त्वेनेति। आङ्पूर्वादिति। प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः। चञ्चूर्तीति। चरतिर्गतौ भक्षणे च। "चरफलोश्च" इत्यभ्यासस्य नुक्। "उतपरस्याऽतः" इत्युत्वम्। "हलि च" इति दीर्घः। अचञ्चूरित्यत्र तु पदान्तविषयत्वात् "र्वोरुपधायाः" इति दीर्घः। चङ्खनीतीति। खनु अवदारणे। चङ्खात इति। यत्तु केचिद्धातुग्रहणेन कृतं कार्यं यङ्लुकि वेति "जनसने"त्यात्वाऽभावे "अनुनासिकस्य क्विझलोः" इति दीर्घोऽपि न भवति। क्विप्साहर्याद्धि झलादिः कृदेव तत्र गृह्रते न तु तिङित्यभ्युपेत्य चङ्खन्त इति रूपमाहुः, तदयुक्तम्। धातुग्रहणेन कृतस्य यङ्लुक्यप्रवृत्तौ मानाऽभावात्। सत्यपि प्रमाणे आत्वं वेति विकल्पोत्तया चङ्खात इति रूपं केन वार्यताम्। यच्चोक्तम् "अनुनासिकस्य" इति सूत्रे क्विप्साहचर्याद्धि झलादिरपि कृदेव गृह्रत इति, तदप्युक्तमेव। यदि हि कृदेव क्विप्स्यात्तदा साहचर्योक्तिः सङ्गच्छेत। किं तु कृद्भिन्नोऽप्यस्त्येवाचारक्विप्। अतएव राजानति चर्माणतीत्यादौ माधवादिभिः क्विनिमित्तो दीर्घ उक्तः। चङ्खाहीति। हेरपित्त्वेन ङित्वात् "जनसने" त्यात्वम्। अचङ्खानीदिति। "अतो हलादेः" इति वा वृद्धिः। जाहेतीत्यादि। हाङ्हाकोस्तुल्यानि र#ऊपाणि, ङित्त्वप्रयुक्तस्यात्मनेपदस्य यङ्लुक्यप्रवृत्तेः। "भृञामित्" इति हाङ इत्त्वस्य श्लुनिमित्ताभ्यासस्यैव विहितत्वाच्च। नच अकितैति निषेधेन हाकोऽभ्यासस्य दीर्घो दुर्लभ इति कथमुभयोस्तुल्यरूपतेति शङ्क्यम्, अकित इत्यत्र हि न विद्यते किद्य्सयाभ्यासस्येति बहुव्रीहिराश्रीयते, तेन "द्विः प्रयोगो द्विर्वचनं षाष्ठम्" इत्यस्याऽभ्युपगमाद्धातोः कित्त्वे अभ्यासस्य कित्त्वेऽपि वनीवञ्चीतीत्यादाविव कित्त्वाऽभावान्न दोषः। किंच द्वित्वाऽभावे केवलस्यार्थवत्त्वेऽपि द्वित्वे सति समुदाय एवार्थवानिति हि सर्वसंमतम्। तथा कित्त्वमपि समुदायस्यैवास्तु न तु प्रत्यवयवमिति नास्त्येव दीर्घे प्रतिबन्धः। जाहीयादिति। "ई हल्यघोः" इतीत्वम्। लुका लुप्त इति। सर्वविधिभ्यो लुग्विधेर्बलीयस्त्वात्। अकृतव्यूहपरिभाषया च लुकः पूर्वं न शङ्क्यमेवेति भावः। उत्वं नेति। फलितार्थकथनमिदम्। "स्वपिस्यमि" इत्यादिना विधीयमानं यत्संप्रसारणं तन्नेत्यर्थः। असास्वापीदिति। "अतो हलादेः"-- इति विकल्पेन वृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

तुरुस्तुशम्यमः सार्वधातुके ७।३।९५

तु इति सौत्रो ऽयं धातुः, रु शब्दे, ष्टुञ् स्तुतौ, शमु उपशमे, अम गत्यादिषु इत्येतेभ्यः परस्य सार्वधातुकस्य हलादेर् वा

ईडागमो भवति। उत्तौति, उत्तवीति। उपरौति, उपरवीति। उपस्तौति, उपस्तवीति। शाम्यध्वम्, शमीध्वम्। अभ्यमति, अभ्यमीति। शम्यमोः बहुलं छन्दसि २।४।७३ इति विकरणलुकि सति हलादिसार्वधातुकम् अनन्तरं सम्भवति। आपिशलाः तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसि इति पठन्ति। तत्र सर्वेषाम् एव छन्दसि विषये विधिरयं भवति। सार्वधातुके इति अनुवर्तमाने पुनः सार्वधातुकग्रहणम् अपिदर्थम्, स्तुवीत, शमीध्वम् इत्यत्र अपि यथा स्यातिति।

न्यासः

तुरुस्तुशम्यमः सार्वधातुके।, ७।३।९५

"तु" इति सौत्रो धातुर्वृद्ध्यर्थे इत्येके, हिंसार्थे इत्यपरे। अस्य च लुग्विकरणत्वं स्मर्यते, तच्च "बहुल छन्दसि" २।४।७३ इति बहुलग्रहणेन भाषायामपि लुकसम्पादनाल्लभ्यते। "शमीष्पम्()" इति। लोट्()। "अशमीध्वम्()" इति। लङ्()। "अभ्यमीति" इति। लोट्()। "अशमीध्वम्()" इति। लङ्()। "अभ्यमीति" इति। "अम गत्यादिषु" (धा।पा।४६५) लट्(), तिप्()। कथं पुनः शम्यमिभ्यामनन्तरं हलादि सार्वधातुकं सम्भवति, यावता शमेव्र्यवधायकेनैव श्याना भवितव्यम्()। अमेरपि शप्? क्रियते? इत्याह--"शध्यमोः" इत्यादि। विकरणस्यात्र लुक्? "बहुलं छन्दसि" २।३।७३ इत्यमेन। "सार्वधातुकासु" इति। स्त्रीलिङ्गनिर्देशा। स्त्रीलिङ्गस्य सार्वधातुकाशब्दस्यापिशलिना संज्ञात्येन प्रचीतत्वात्()। अथ सार्वधातुकग्रहणं किमर्थम्(), यावता "नाभ्यस्तस्याचि पिति सार्वधातुके" (७।३।८७) इत्यतः सूत्रात्? सार्वधातुकग्रहणमनुवर्तते? इत्याह--"सार्वधातुक इत्यनुवत्र्तमाने" इत्यादि। तद्धि सार्वधातुकग्रहणं पितीत्यनेन सम्बद्धम्()। अतस्तदनुवृत्तौ पिद्ग्रहणमप्यमुवत्र्तेत तथा चापिति न स्यात्()। तस्मादपित्यपि यथा स्यादियेवमर्थं त्सार्वधातुकग्रहणं क्रियते॥

बाल-मनोरमा

तुरुस्तुशम्यमः सार्वधातुके २७५, ७।३।९५

तुरुस्तु। तु रु स्तु शमि अम् एषां समाहारद्वन्द्वात्पञ्चम्येकवचम्। "उतो वृद्धि"रित्यतो हलीति, "भूसुवो"रित्यतस्तिङीति, "ब्राउव ई"डित्यत ईडिति, "यङो वे"त्यतो वेति चानुवर्तते। तदाह--- एभ्य इत्यादिना। नाभ्यस्तस्येति। "नाभ्यस्तस्याऽचि पिति सार्वधातुके इत्यतः सार्वधातुके इत्यनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणं पितीत्यस्याऽनुवृत्तिर्मा भूदित्येतदर्थमित्यर्थः। रवीतिति। ईट्पक्षे हलादित्वाऽभावादुतो वृद्धिर्नेति भावः। रौतीति। ईडभावे "उतो वृद्धि"रिति भावः। रुवीतः रुत इति। अपित्त्वेऽपि ईड्विकल्प इति भावः। रुवन्तीति। अन्तादेशे कृते हलादित्वाऽभावादीडभावे उवङिति भावः। शाम्यतीति। श्यनस्तिङ्त्वाऽभावादीण्नेति भावः। आशिषि रूयादिति। आद्र्धधातुकत्वादीडभावे "अकृत्सार्वधातुकयो"रिति दीर्घः। विध्यादौ त्विति। आदिना निमन्त्रणादिसङ्ग्रहः। रुयात् रुवीयादिति। हलादिसार्वधातुकत्वादीड्विकल्प इति भावः। ईडभावपक्षे हलादौ पिति सार्वधातुके "उतो वृद्धि"रिति बोध्यम्। ननु धातुपाठे तुधातोरदर्शनाद्धातुत्वाऽभावात्कथं ततः सार्वधातुकस्य ईड्विधिरित्यत आह--तु इति सौत्रो धातुरिति। गतिवृद्धिहिंसास्विति। अत्र व्याख्यानमेव शरमम्। ननु शपा व्यवदानादस्य सार्वधातुकपरत्वं कथमित्यत आह--अयं च लुग्विकरण इति स्मरन्तीति। अव्यवहिततिङ ईड्विधानमेवाऽत्र बीजम्। शम्यमोस्तु "शमीध्वम् अभ्यमीती"ति वेदे शपो लुकि बोध्यम्। अयमनिट्। हलादौ सार्वधातुके रुधातुवत्। आद्र्धधातुके तु नेट्। तदाह---तोतेति। णु स्तुताविति। णोपदेशोऽयं सेट्। युधातुवद्रूपाणि। क्षुक्ष्णुस्नु धातवः सेट। युधातुवद्रूपाणि। चुक्षाव। चुक्ष्णाव। सुष्णाव इति। षोपदेशोऽयमिति भावः। ऊर्णुञ्धातुरुभयपदी। सेट्। उतो वृद्धेर्नित्यं प्राप्तौ--

तत्त्व-बोधिनी

तुरुस्तु शम्यमः सार्वधातुके २४१, ७।३।९५

"तुरुस्तु। "तुः सौत्रो धातु"रिति वक्ष्यति। अपिदर्थमिति। "एभ्यः परस्य पितः सार्वधातुकस्ये"ति प्राचो व्याख्यानं प्रामादिकं , रुवीतः स्तुवीत इत्याद्यसिद्()ध्यापत्तेरिति भावः। शम्यमोरुदाहरणं तु शमीध्वम्। अभ्यमीति। अभ्यन्ति। शम्यमोश्छन्दसि विकरणस्य लुकि सति झलादिसार्वधातुकमनन्तरं संभवतीति काशिकायामुक्तम्। आपिशलास्तु-- "तुरुस्तुशम्यमः सार्वधातुके छन्दसी"ति पठन्ति, तन्मते सूत्रमिदं छन्दस्येव।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अस्तिसिचः ५।१ ९७ अपृक्ते ७।१ १०० ईट् ? हलि ? सार्वधातुके ? अङ्गस्य ?

समासः॥

अस्तिश्च सिच् च अस्तिसिच्, तस्मात् ॰ समाहारः द्वन्द्वः

अर्थः॥

अस्तेः अङ्गात् सिजन्तात् च उत्तरस्य अपृक्तस्य हलादेः सार्वधातुकस्य ईडागमः भवति

उदाहरणम्॥

अस्तेः - आसीत्, आसीः। सिजन्तात् - अकार्षीत्, अहार्षीत्। अपावीत्, अलावीत्
काशिका-वृत्तिः
अस्तिसिचो ऽपृक्ते ७।३।९६

अस्तेरङ्गात् सिजन्ताच् च परस्य अपृक्तस्य सार्वधातुकस्य ईडागमो भवति। अस्तेः आसीत्। आसीः। सिजन्तात् अकार्षीत्। असावीत्। अलावीत्। अपावीत्। अपृक्ते इति किम्? अस्ति। अकार्षम्। आहिभुवोरीटि प्रतिषेधः इति स्थानिवद्भावप्रतिषेध तेन इह न भवति, आत्थ, अभूतिति।
लघु-सिद्धान्त-कौमुदी
अस्तिसिचोऽपृक्ते ४४७, ७।३।९६

विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः॥
न्यासः
असतिसिचोऽपृक्ते। , ७।३।९६

"अपृक्ते" इति। सुब्वयत्ययेन षष्ठ()र्थे सप्तदमी, तेनायमपृक्तस्यैवेट्()। अस्तिग्रहणं लङर्थय्()। "आसीत्()" इति। "अस भुवि" (धा।पा।१०६५), लङ्(), अदादित्वाच्छपो लुक्(), "आडजादीनाम्()" ६।४।७२ इत्याट्()। "आटश्च" ६।१।८७ इति वृद्धिः। "अकार्षीत्()" इति। सिचि वृद्धिः। "अलावीत्, अपाधीत्" इति। "इट ईटि" ८।२।२८ इति सिचो लोपः। "आत्थ" इति। अत्र ब्राउष उत्तरस्य सिपः "ब्राउवः पञ्चानामदित आहोब्राउवः" (३।४।८४) इति थलि कृते ब्राउवश्चाहादेशे कृते तस्य स्थानिवद्भावे सति ब्राऊञ्ग्रहणेन ग्रहमात्? थलोऽपि सार्वधातुकग्रहणेन ग्रहणादीट्? प्राप्नोति। "अभूत्()" इति। अस्तेः सिच्(), "अस्तेर्भूः" (२।४।५२) इति भूभावे तस्य स्थानिवद्भावे सत्यस्तिग्रहणेन ग्रहणादीट्? प्राप्नोति, स कस्मान्न

भवति? इत्याह--"आहिभुवोः" इत्यादि। "ईटि प्रतिषेधः" इति। आहेर्भुवश्चेटि कत्र्तव्ये स्थानिवद्बावस्य प्रतिषेधः। तेनेह न भवति--आत्व" इति। "आहस्थः"८।२।३५ इति हकारस्य थकारः, तस्य "खरि च" इति तकारः। "अभूत्" इति। "गातिस्था"२।४।७७ इति सिचो लुक्()॥

बाल-मनोरमा

अस्तिसिचोऽपृक्ते ७३, ७।३।९६

अस्तिसिचोऽपृक्ते। अस्तिश्च सिच्चेति समाहारद्वन्द्वात्पञ्चमी। "ब्राउव ई"डित्यत ईडित्यनुवर्तते। "तस्मादित्युत्तरस्ये"ति परिभाषया "अस्तिसिचः" इति पञ्चमी अपृक्तस्येति षष्ठी प्रकल्पयति। ततश्च अस्तेः सिचश्च परस्याऽपृक्तस्य ईडागमः स्यादिति प्राचीना व्याचक्षते। तथा सति लुङि अस्तेर्भूभावे अभूदिति न स्यात्, स्थानिवत्त्वेन अस्तितया तत्राऽपृक्तस्य हल ईडागमस्य दुर्वारत्वात्। तथा अगात् अस्थात् अपादित्यादावपि "गातिस्थे"ति सिचो लुक्यपि स्थानिवत्त्वेन सिचः परत्वादीडागमः स्यादतः प्रकारान्तरेण व्याचष्टे-- सिच्च अश्चेत्यादिना। ननु सिचस्()शब्दे सिच्शब्दस्य पूर्वखण्डस्यान्तर्वर्तिविभक्त्या पदत्वाच्चोः कुरिति कुत्वप्रसङ्ग इत्यत आह--सौत्रं भत्वमिति। तथ च भत्वेन पदत्वस्य बाधान्न कुत्वमिति भावः। ननु सिचस्()शब्दे असित्यनेनैवास्तेर्लाभादस्तिग्रहणं किमर्थमित्यत आह-- अस्तीत्यव्ययेन कर्मधारय इति। अस्तीति विभक्तिप्रतिरूपकमव्ययं लुप्तसुब्विभक्तिकं विद्यमानार्थकम्। तेन सिचस्()शब्दस्य कर्मधारय इत्यर्थः। तथा च "अस्तिसिच"सित्येक पदमिति स्थितम्। सौत्रो लुगिति। "सुपां सुलुगित्यनेनेटति शेषः। तथा च अस्तिसिच इति पदाल्लब्धार्थमाह-- विद्यमानादित्यादि। हल इति। "उतो वृद्धिर्लुकि हली"स्यतोऽनुवृत्तस्य हलीत्यस्य षष्ठ()आ विपरिणाम इति भावः। इतीण्नेहेति। अनेन सूत्रेण अभूत् इत्यत्र ईडागमो नेत्यर्थः। कुत इत्यत आह-- लुप्तत्वादिति। विद्यमानत्वविशेषणेन लुप्तात्सिचः परस्ये नेति भावः। एवं च अगादित्यादावपि लुप्तात्सिचः परस्य अस्तेर्लुङि कृतभूभावात्परस्य च नेत्युक्तप्रायम्। ऐधिषीति। एधधातोर्लुङि उत्तमपुरुषैकचवनम् इट्। अत्र इकारस्य सिचः परत्वेऽपि हल्वाऽभावादिडागमो नेति भावः। ऐधिष्टेति। एध धातोर्लुङि प्रथमपुरुषैकवचनम्। अत्र त इत्यस्य सिचः परत्वेऽपि एकाल्प्रत्ययत्वाऽभावेनाऽपृक्तत्वाऽभावादीडागमो नेति भावः। अभूतामिति। लुङस्तसि तस्य तामादेशः। च्लिः। सिच्। अट्। गुणनिषेधः।

तत्त्व-बोधिनी

अस्तिसिचोऽपृक्ते ५६, ७।३।९६

अत्र प्राञ्चः-- अस्तिश्च सिच्चेति समाहारद्वन्द्वे अस्तिसिच्, तस्मादिति विग्रहं मत्वा अस्तेः सिचश्च परस्येति व्याचख्युः। तच्चिन्त्यम्। तत्र समासान्तस्याऽनित्यत्वाश्रयणे "द्वन्द्वाच्चुदषहान्ता"दिति प्राप्तस्य टचः परिहारेऽपि, "समुद्राभ्राद्धः"इति निर्देशात् "अल्पाच्तर"मित्येतदनित्यमित्याश्रित्य सिच्छब्दस्य परत्वसमर्थेऽपि, "अस्तेर्भू"रिति भूभावस्य स्थानिवत्त्वेनाऽस्तितया तत्रापृक्तस्य हल ईडागमस्य दुर्वारत्वात्। तथा गातिस्थाघुपाभूभ्यः सिचो लुक्यपि स्थानिवद्भावेन सिचः पर्तवानपायादगादस्थादभूदित्यादावतिप्रसङ्गाच्च। तदेतद्ध्वनयन्व्याचष्टे-- सिच्च अस् चेति। सौत्रं भत्वमिति। तेनाऽत्र कुत्वजश्त्वे न भवत इति भावः। विद्यमानादिति। सिचोऽस्तेश्च विद्यमानविशेषणेन लुप्तात्सिचः, कृतभूभावादस्तेश्च नेति भावः॥ भाष्यकारास्त्वाहुः-- "अस्तिसिचोऽपृक्ते" इति द्विसकारकोऽयं निर्देश इति। अत्र माधवः-- अस् स् इति समुदायस्याऽधातुतया "इक्()श्तिपौ धातुनिर्देशे" इति श्तिप् प्रत्ययो न स्यादिति। अत्र वदन्ति-- द्विसकारकनिर्देशे श्तिप् न स्यादिति यदुक्तं, तद्भ्रमसोक्तिमात्रम्। इत्थं हि भाष्याशयः-- सिच इत्यस्यानन्तरं सकारः प्रश्लिष्यते न तु श्तिपः प्राक्, अत एव "सिचोऽपृक्ते इति द्विसकारकोऽयं निर्देश" इत्युक्तं भाष्ये। अन्यथा "अस्तीति निर्देशो द्विसकारक" इत्येव ब्राऊयात्, एवं च सान्तादस्तेः, सान्तात्सिच इति चार्थो निर्बाध एव। द्वितीयस्च सकारो लुप्यते,

"संयोगान्तस्य पदान्तस्ये"ति व्याख्यानात्, व्यपदेशिवद्भावेन पदान्तत्वाद्द्वितीयसकारस्य। न च संयोगान्तलोपस्याऽसिद्धत्वात् "अतो रो"रित्युत्वं दुर्लभमिति वाच्यं, "संयोगान्तलोपो रोरुत्वे" इति वार्तिकेनाऽसिद्धत्वनिषेधात्। "संयोगान्तां यत्पद"मिति व्याख्याने तु नेह संयोगान्तलोपः, किंतु सकारद्व्यस्यापि रुत्वे कृते "अतो रो"रित्यनेनैक एवोकारो भविष्यति, विधेयविशेषणस्यैकत्वस्य प()ओकत्ववद्विवक्षितत्वात्। न च स्थानिभेदेन उकारद्वये सत्यपि न क्षतिः, सवर्णदीर्घानन्तरमाद्गुणे सति समीहितरूपसिद्धेरिति वाच्यम्, एकपदाश्रयत्वेनाऽन्तरङ्गत्वादाद्गुणे पश्चादवादेशप्रवृत्त्या "अस्तिसिचोऽपृक्ते" इति रूपाऽसिद्धेः, तस्मादुक्तरीत्या एक एवोकार इति स्वीकर्तव्यम्। अत एव विधेयगतैकत्वस्य विवक्षितत्वात् "एकः पूर्वपरयो"रित्यत्रैकग्रहणं भाष्यादौ प्रत्याख्यातम्। नन्वति परे यो रुः, स त्वत#ः परो न भवति, अतः परस्तु अतिपूर्वो न भवतीति रुद्वयस्थाने कथमुकारः स्यात्?। मैवम्। "रो"रिति जातिपरनिर्देशेनाऽतः परत्वस्य पूर्वत्वस्य च संभवात्। न चैवमपि परत्वात् "हशि चे"ति प्रथमस्यैव रोरुः स्यादिति वाच्यं, रुत्वस्याऽसिद्धतया हश्परत्वाऽभावात्। न चाश्रयाऽसिद्धत्वमिति वाच्यं, स्थान्यंशे तथात्वेऽपि निमित्तभूतहशंशे तदसंभवात्। यद्यपि सत्वजातेरेकत्वादुभयोरपि एक एव रुर्भवतीति व्याख्यायां नायं क्लेशस्तथापि रुत्वविधौ पदस्येत्यनुवर्तनादेकपदान्तत्वं न संभवति, द्वितीयसकारस्य पृथक्पदत्वादित्याहुः। अपृक्तस्य हल इति। "अपृक्तसार्वधातुकस्ये"ति प्राचोक्तं त्युक्तम्, ऐधिषीत्यादावतिव्याप्तेः, सार्वधातुकग्रहमव्यावत्र्याऽलाभाच्च॥

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि ७।३।९७

अस्तिसिचोरपृक्तस्य सार्वधातुकस्य ईडगमो भवति बहुलं छन्दसि विषये। आप एव इदं सलिलं सर्वमाः। आसीदिति स्थाने आः क्रियापदम्। अहर्वाव तर्ह्यासीन्न रात्रिः। सिचः खल्वपि गोभिरक्षाः। प्रत्यञ्चमत्साः। अभैषीर्मा पुत्रक इति च भवति, छान्दसत्वात्। माङ्योगे ऽपि अडागमो भवति, अक्षः, अत्साः इति, सिच इडभावश्च।

न्यासः

बहुलं छन्दसि। , ७।३।९७

"सर्वमाः" इति। अस्तेर्लङ्(), पूर्ववदाट्, सियो हल्ङ्यादिलोपः ६।१।६६, सकारस्य रुत्वविसर्जनीयो। "गोभिरक्षाः प्रत्यञ्चमत्साः" इति। "क्षर सञ्()चलने" (धा।पा।८५१), "त्सर च्छद्मगतो" (धा।पा।५५४) इन्ङ्यादिना ६।१।६६ सिचो लोपः, "अतो ल्रान्तस्य" ७।२।२ इति वृद्धिः, पूर्ववद्विसर्जनीयः। "अभैषीः" इति। "ञिभी भये" (धा।पा।१०८४), सिचि वृद्धिः। अथाभैषीर्मा पुत्रकेत्यत्र कथमडागमः, यावता "न माङ्योगे" ६।४।७४ इति प्रतिषिद्धोऽसौ, इह चाक्षाः, अत्सा इत्यत् सिच ईजागमः कस्मान्न भवति? इत्याह--"छाब्दसत्वात्()" इत्यादि। अक्षाः, अतसा इत्यत्र चेडागमाभाव इति च्छान्दसत्वादिति प्रकृतेन सम्बन्धः। "वा छन्दसि" इति वक्तव्ये बहुलग्रहमुत्तरार्थम्()। उत्तरार्थतां चास्योत्तरत्र प्रतिपादपिष्यामः॥

---

सूत्रम्

काशिका-वृत्तिः

रुदश् च पञ्चभ्यः ७।३।९८

रुदादिभ्यः परस्य सार्वधातुकस्य हलादेः अपृक्तस्य ईडागमो भवति। अरोदीत्। अरोदीः। अस्वपीत्। अस्वपीः। अश्वसीत्। अश्वसीः। प्राणीत्। प्राणीः। अजक्षीत्। अजक्षीः। पञ्चभ्यः इति किम्? अजागर्भवान्। अपृक्तस्य इत्येव, रोदिति।

न्यासः

रुदश्च पञ्चभ्यः। , ७।३।९८

"रुदः" इति सुब्व्यत्ययेन बहुवचनस्यैकवचनम। एतचच "पञ्चभ्यः" इति बहुवचनाद्विज्ञायते। "रुदादिभ्यः सार्वधातुके" ७।२।७६ इतीटि प्राप्ते तदपवाद ईडागमो विधीयते। "रुदिर्? अश्रुविमोचने" (धा।प।१०६७), "ञिष्वप्? शये" (धा।पा।१०६८), "()आस प्राणने" (धा।पा।१०६९), "अन च" (धा।पा।१०७०), जक्ष भक्षहसनयोः" (धा।पा।१०७१)-इत्येते रुदादय आदादिकाः। "अरोदीत्()" इति। लङ्। "प्राणीत्()" इति। "अनितेः" ८।४।१९ इति णत्वम्()। "अजागर्भवान्()" इति। "अजागर्भवान्()" इति। जागर्त्तिः पञ्चभ्यः परेणायं पठ()ते। गुणे रपरत्वे च कृते हल्ङ्यादिलोपः ६।१।६६॥

बाल-मनोरमा

रुदश्च पञ्चभ्यः ३०६, ७।३।९८

रुदश्च। "नाभ्यस्तस्य" तः पिति सार्वधातुके इति, "उतो वृद्धि"रित्यतो हलीति, "गुणोऽपृक्ते" इत्यतोऽपृक्ते इति, "ब्राउव ई"डित्यत ईडिति चानुवर्तते। "रुद" इति पञ्चमी। "रुदादिभ्य" इति विवक्षितमित्यभिप्रेत्य सूत्रशेषं पूरयति--हलादेरित्यादिना।

---

सूत्रम्

काशिका-वृत्तिः

अड् गार्ग्यगालवयोः ७।३।९९

रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्य सार्वधातुकस्य अडागमो भवति गार्ग्यगालवयोर् मतेन। अरोदत्। अरोदः। अस्वपत्। अस्वपः। अश्वसत्। अश्वसः। प्राणत्। प्राणः। अजक्षत्। अजक्षः। गार्ग्यगालवयोर्ग्रहणं पूजार्थम्।

न्यासः

अडू गाग्र्यगालवयोः। , ७।३।९९

पूर्वेणेटि प्राप्तेऽडागमो विधीयते। गाग्र्यगालवग्रहणं पूजार्थम्(), न तु विकल्पार्थम्()। अडीटोरादिलिङ्गत्वादेकविषयत्वाच्च न सम्भवति; समुच्चय इत्यन्तरेणाप्याचार्यग्रहणं विकल्पस्य सिद्धत्वात्()॥

बाल-मनोरमा

अड्गाग्र्यगालवयोः ३०७, ७।३।९९

अड्गाग्र्यगालयवयोः। अनयोर्मते रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकस्य अपृक्तस्य अडागमः स्यादिति स्पष्टोऽर्थः। अरोदीरिति।अरुदितम् अरुदितेत्यपि ज्ञेयम्। अरोदमिति। अरुदिव अरुदिम इत्यपि ज्ञेयम्। ननु लिङस्तिपि यासुटंबाधित्वा परत्वात् "अड्गाग्र्यगालवयो"रिति, "रुदश्च पञ्चभ्यः" इति च अडीटौ स्यातामित्यत आह--प्रकृतिप्रत्ययेति। हलादिपित्सार्वधातुकाऽपृक्ताऽपेक्षत्वाच्चेत्यपि ज्ञेयम्। लुङि "इरितो"वेत्यङ्पक्षे आह-- अरुदिदिति। अङभावपक्षे त्वाह--अरोदीदिति। "अस्तिसिचः" इति ईट्। "रुदश्च पञ्चभ्य" इति तु नेह प्रवर्तते, सिचा व्यवहितत्वात्। ञिष्वप् शये इति। षोपदेशोऽयम्। आद्र्धधातुके अनिट्। स्वपितीति। "रुदादिभ्यः" इति इट्। स्वपित इति। स्वपन्ति। स्वपिषि स्वपिथः स्वपिथ। स्वपिमि स्वपिवः स्वपिमः। सुष्वापेति। द्वित्वे "लिट()भ्यासस्ये"ति संप्रसारणे पूर्वरूपे आदेशसकारत्वात् षत्वमिति भावः। सुषुपतुरिति। "वचिस्वपी"ति संप्रसारणे कृते द्वित्वादीति भावः। सुषुपुरित्यपि ज्ञेयम्। सुष्वपिथ सुष्वप्थेति। भारद्वाजनियमात्थलि वेडिति भावः। सुषुपथुः सुषुप। सुष्वाप--सुष्वप सुषुपिव सुषुपिम।

सुविनिर्दुर्भ्यः। कृतस#ंप्रसारणस्य स्वप्धातोः सुपीत्यनेन ग्रहणम्। सूतीत्यनेन सूतिशब्दः कृदन्तो गृह्रते। समेत्यनेनाऽपि समशब्दस्य ग्रहणम्। षष्ठ()र्थे प्रथमा। "सहेः साडः स" इत्यत स इति षष्ठ()न्तमनुवर्तते। मूर्धन्य इत्यधिकृतम्। तदाह---एभ्यः सुप्यादेरिति। सुषुप्तिः, सुषूतिः, सुषम इत्युदाहरणानि। अत्र कृतसंप्रसारमस्य स्वप्धातोग्र्रहमात्सुखप्र इत्यत्र न षत्वमिति भाष्यम्। नन्वेषं सति सुषुषुपतुरित्यत्र सुपूर्वस्य स्वपधातोः कथं षत्वम्। कृतसंप्रसारमस्य हि स्वपधातोः षत्वम्। तत्र यदि स्वप् अतुस् इति स्थिते पूर्वं द्वित्वे कृते पश्चात् "वचिस्वपी"ति संप्रासरणं तदा हलादिशेषे उत्तरखण्डस्यैव "वचिस्वपी"ति संप्रसारणं, न त्वभ्यासस्य। अतुसः कित उत्तरखण्डव्यवहितत्वात्, "न संप्रसारमए संप्रसारण"मिति निषेधाच्च। ततश्च सु ससुप् अतुसित्यत्र पूर्वखण्डस्य कृतसंप्रसारणत्वाऽभावात् कथं षत्वम्। उत्तरखण्डस्य च सु इत्युपसर्गादव्यवहितपरत्वाऽभावात्कथमनेन षत्वम्, इण्कवर्गाभ्यां इत्यस्य द्वित्वप्रवृत्तेः प्रागेव षत्वमिति वक्तव्यम्। तत्तु न युज्यते। "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे"ति परिभाषया सु इत्युपसर्गसंबन्धस्य द्वित्वात्प्रागप्रवृत्तेः। तथा च कृतसंप्रसारणस्य अकृतषत्वस्य सुप् इत्यस्य द्वित्वे उत्तरखण्डस्यैव "आदेशप्रत्यययो"रिति षत्वं स्यान्नतु पूर्वखण्डस्य, "सात्पदाद्यो"रिति निषेधात्। कृते हलादिशेषे सु इति पूर्वखण्डस्य सुब्राऊपत्वाऽभावेन "सुविनिर्दुर्भ्यः" इत्यस्याऽप्यप्रवृत्तिः। न च एकदेशविकृतस्याननयत्वं शङ्क्यम्, एवमप्यभ्यासस्यानर्थकत्वेन अर्थवद्ग्रहमपरिभाषया षत्वस्य तत्राऽप्राप्तेः। तस्मादिह सुषुषुपतुरित्यत्र पूर्वखण्डे षत्वं दुरुपपादमित्याशङ्क्याह-- पूर्वं धातुरित्यादिना। लक्ष्यानुरोधादिह "पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने"त्याश्रीयते। ततश्च द्वित्वात्परागेव परत्वात्संप्रसारणे सति सुप् इत्यस्य सु इत्युपसर्गपूर्वकत्वमादाय षत्वे च कृते सति पुनः प्रसङ्गविज्ञानात् षुबित्यस्य कृतषत्वस्य कतं द्वित्वं , द्वित्वे कत्रवये षत्वस्याऽसिद्धत्वादित्यत आह-- पूर्वत्रासिद्धीयमिति। ननु तर्हि सुसुष्वापेत्यत्रापि पूर्वखण्डे ष्तवं श्रूयेतेत्यत आह--पिति त्विति। पिति णलि कित्वाऽभावात् "वचिस्वपी"त्यस्याऽप्रवृत्तौ कृते द्वित्वे "लिच्यभ्यासस्ये"ति पूर्वखण्डस्य संप्रसारणम्। सु सुप् स्वप् अ इति स्थिते "सुविनिर्दुर्भ्यःर" इति षत्वस्याऽसिद्धत्वात् हलादिशेष इत्यर्थः। नित्यत्वाच्चेति। कृते अकृते च षत्वे हलादिशेषस्य प्राप्तेरिति भावः। तत इति। हलादिभावान्न ष इति द्रष्टव्यम्। स्वप्ता। स्वप्स्यति। स्वपितु-स्वपितात् स्वपिताम् स्वपन्तु। स्वपिहि-स्वपितात् स्वपितम् स्वपित। स्वपानि स्वपाव स्वपाम। लङ()आह-- सुप्यादिति। "वचिस्वपी"ति संप्रसारणमिति भावः। "सुविनिर्दुर्भ्यः" इति षत्वं मत्वाह-- सुषुप्यादिति। असवाप्सीदिति। अनिट्कत्वान्न सिज्लोप इति भावः। ()आस प्राणने इति। वलाद्याद्र्धधातुके सेडयम्। सार्वधातुके तु वलादौ "रुदादिभ्यः" इति इट्। लङस्तिपि "रुदश्चे"ति ईटम्, "अड्गार्ग्ये"त्यटं च मत्वा आह-- अ()आसीत् अ()आसदिति। विध्याशीर्लिङो ()आस्यादिति सिद्धवत्कृत्य आह--()आस्याताम्। ()आस्यास्तामिति। अन चेति। अनधातुरपि प्राणने वर्तते इत्यर्थः। सेडयम्। सार्वधातुकेऽपि वलादौ "रुदादिभ्यः" इति इट्। लङि ईडटौ मत्वा आह-- आनीत् आनदिति।

तत्त्व-बोधिनी

अङ्गाग्र्यगालवयोः २६६, ७।३।९९

प्रकृतिप्रत्ययेत्यादि। हलादिपित्सार्वधातुकाऽपृक्ताऽपेक्षत्वाच्च बहिरङ्गत्वमडीटोः। अरुदिति। "इरितो वे"त्यङ्। अरोदीदिति। "अस्तिसिच" इति ईट्। "रुदश्चे" त्यनेन तु न, सिचा व्यवधानेन रुदादेः परत्वाऽभावात्। सुषुपतुरिति। "वचिस्वपी"ति संप्रसारणम्। ततो द्वित्वम्।

---

सूत्रम्

काशिका-वृत्तिः

अदः सर्वेषाम् ७।३।१००

अद भक्षणे, अस्मादुत्तरस्य अपृक्तस्य सार्वधातुकस्य अडागमो भवति सर्वेषाम् आचार्याणां मतेन। आदत्। आदः।
अपृक्तस्य इत्येव, अत्ति। अत्सि।
लघु-सिद्धान्त-कौमुदी
अदः सर्वेषाम् ५५९, ७।३।१००

अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन। आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म।
अद्यात्। अद्याताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः॥
न्यासः
अदः सर्वेषाम्?। , ७।३।१००

सर्वेषांग्रहणं पूजार्थम्(), न तु नित्यार्थम्(); गार्ग्यगालवग्रहस्याविकल्पार्थत्वात्()॥
बाल-मनोरमा
अदः सर्वेषाम् २५७, ७।३।१००

अदः सर्वेषाम्। "अद" इति पञ्चमी। "तस्मादित्युत्तरस्ये"ति परिभाषया परस्येति लभ्यते। "गुणोऽपृक्ते" इत्यतः "अपृक्ते" इति, "तुरुस्तुशम्यमः" इत्यतः "सार्वधातुके" इति चानुवर्तते। सप्तमीद्वयं च षष्ठ()आ विपरिणम्यते। "अड्
गार्ग्यगालवयो"रित्तोऽडित्यनुवर्तते। "गार्ग्यगालवयो"रित्स्यानुवृत्तिनिवृत्तये "सर्वेषा"मिति। तदाह--अदः परस्येत्यादिना। टित्त्वादाद्यवयः। तदाह--आददिति। आत्तामिति। अपृक्तग्रहणान्नाऽडागम इति भावः। विधिलिङि रूपमाह--अद्यादिति। शपो लुकि अतः परत्वाऽभावात् "अतो येयः" इति नेति भावः।मिपः अमि यासुटि सलोपे सवर्णदीर्घे---अद्याम्। अद्याव अद्याम। आशीर्लिङि अद्यादिति सिद्धवत्कृत्याह--अद्यास्तामिति। लुङि अद् स् त् इति स्थिते--

तत्त्व-बोधिनी
अदः सर्वेषाम् २२६, ७।३।१००

अदः सर्वेषाम्। "अङ्गार्ग्यगालवयोः" इत्यतोऽडित्यनुवर्तते। गार्ग्यगालवयोरित्यसय् त्वनुवृत्ति शङ्कां निवारयितुं सर्वेषांग्रहणम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ अतः ६।१ १०४ दीर्घः १।१ १०२ यञि ७।१ १०२ सार्वधातुके ७।१ ८७ अङ्गस्य ६।१ ६।४।१

अर्थः॥

अकारान्तस्य अङस्य दीर्घः भवति, यञादौ सार्वधातुके परतः।

उदाहरणम्॥

पचामि, पचावः, पचामः। पक्ष्यामि, पक्ष्यावः, पक्ष्यामः।
काशिका-वृत्तिः

अतो दीर्घो यञि ७।३।१०१

अकारान्तस्य अङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः। पचामि, पचावः, पचामः। पक्ष्यामि, पक्ष्यावः, पक्ष्यामः। अतः इति किम्? चिनुवः। चिनुमः। यञि इति किम्? पचतः। पचथः। सार्वधातुक इत्येव, अङ्गना। केशवः। केचिदत्र तिङि इत्यनुवर्तयन्ति, तेषां भववानिति क्वसौ सार्वधातुकदीर्घो न भवति।
लघु-सिद्धान्त-कौमुदी
अतो दीर्घो यञि ३९२, ७।३।१०१

अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके। भवामि। भवावः। भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः॥
न्यासः
अतो दीर्घो यञि। , ७।३।१०१

तपरकरणमुत्तरार्थम्()। खट्वाभिरित्यत्र "बहुवचने झल्येत्()" ७।३।१०३ इत्येत्वं मा भूदित्येवमर्थम्()। "अङ्गना" इति। प्रशस्तान्यङ्गान्यस्याः सन्तीति लोमादिना ५।२।९९ नप्रत्ययः। "केशवः" इति। केशा यस्य सन्तीति "केशाद्? वोऽन्यतरस्याम्()" ५।२।१०८ इति वप्रत्ययः। "केचिदत्र तिङीत्यनुवत्त्रयन्ति" इति। "भूसुवोस्तिङि" ७।३।८८ इत्यतः। तेषां भववानिति क्वसौ सार्वधातुके दीर्घत्वेन न भवितव्यमिति; क्वसोरतिङन्तत्वात्()। "भगवान्()" इति। भवतेर्लिट्(), कवसुः, "छन्दस्युभयथा" ३।४।११७ इति तस्य पक्षे सार्वधातुकत्वम्(), तेन "कत्त्तरि शप्()" ३।१।६८ भवति, "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ (६।१।६८; ८।२।२३)। आदिति वक्तव्ये दीर्घग्रहणम्()--दीर्घ एव यथा स्यात्(), यदन्यत्? प्राप्नोति, तन्मा भूदिति। किञ्चान्यत्? प्राप्नोति? "विचार्यमाणानाम्()" ८।२।९७, "अनन्तरस्याप्येकैकस्य प्राचाम्()" "प्रश्नाख्यानयोः" ८।२।१०५ इति प्लुतः। अथ प्रकृतोऽजागमः कस्मान्न विधीयते? तत्राप्यकः सवर्णे दीर्घत्वेन ६।१।९७ वहीति "क्सस्याचि" ७।३।७२ इति लोपः स्यात्(), अतिजराभ्यामित्यत्राचीति जरस्भावः स्यात्(); तन्निवृत्त्यर्थं दीर्घग्रहमं कृतम्()। स चात्र प्लुतः प्रसज्येत॥
बाल-मनोरमा
अतो दीर्घो यञि २०, ७।३।१०१

उत्तमपुरुषैकवचनेऽपि शपि गुणे अवादेशे भव-मि इति स्थिते -अतो दीर्घो यञि। "अङ्गस्ये"त्यधिकृतमता विशेष्यते। तदन्तविधिः। "तुरुस्तुशम्यम" इत्यतः सार्वधातुक इत्यनुवृत्तं यञा विशेष्यते। तदादिविधिः। तदाह--अदन्तस्येत्यादिना। भवामीति। न च भूधातोर्विहितलादेशं प्रति भूधातुरेवाऽङ्गं , न तु भवेति विकरणान्तमिति वाच्यं, "यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्ग"मित्यत्र तदादिग्रहणेन विकरणविशिष्टस्यापि अङ्गत्वात्। भवावः भवाम इति। लस्य वसि मसि च शपि गुणेऽवादेशे अतोदीर्घे रुत्वे विसर्गे च रूपे। "न विभक्तौ" विति सस्य नेत्त्वम्। अथ प्रथममध्यमोत्तमपुरुषव्यवस्थामुक्तां स्मारयितुमाह-- स भवतीत्यादि। "अथ प्रहासे चे"ति सूत्रस्योदाहरति--एहीति। सर्वेषु भुक्तवत्सु भोक्तुमागतं जामातरं प्रति परिहासाय प्रवृत्तमिदं वाक्यम्। भो जामातः ! एहि = आगच्छ, "ओदनं भोक्ष्ये" इति त्वं मन्यसे, नैतद्युक्तमित्यर्थः। कुतैत्यत आह--भुक्तः सोऽतिथिभिरिति। स ओदनोऽतिथिभिर्भिक्षित इत्यर्थः। अत्र भुजेरुत्तमपुरुषे प्राप्ते मध्यमः पुरुषः। मन्येतस्तु मध्यमपुरुषे प्राप्ते उत्तमः पुरुषः। #एतम् एत चेति। हे जामातरौ ! आगच्छतम्, "ओदनं भोक्ष्यावह#ए" इति मन्येथे इति, भो जामातरः ! "ओदनं भोक्ष्यामहे" इति मन्यध्वे इति चार्थः। अत्रोभयत्रापि भुजेरुत्तमे प्राप्ते मध्यमः। मन्यतेस्तु मध्यमे प्राप्ते उत्तमः, द्वित्वबहुत्वयोरेकवचनं व्याचष्टे--मन्यस इत्यादिना। अनुवर्तत इति। "प्रहासे चेति सूत्रे" इति शेषः। एतु भवानिति। युष्मद्भवतोः

पर्यायत्वाऽभावस्यानुपदमेवोक्तत्वादिति भावः। इति लट्प्रक्रिया।

तत्त्व-बोधिनी
अतो दीर्घो यञि १६, ७।३।१०१

"तुरुस्तुशम्यमः" इति सूत्रात्सार्वधातुक इत्यनुवर्तते। सार्वधातुके किं?। केशवः अङ्गना। "अत आ" इति वक्तव्ये दीर्घग्रहणं दीर्घ एव यता स्यादित्येवमर्थम्। अन्यथाऽपाक्षीरोदनं देवदत्त !, ननु पचामि बोरित्यत्रानन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतः स्यात्। केचित्तु-- "अत आ" दिति सुवचं, तपरकरणसामर्थ्याद्विकारनिवृत्तिर्भवेदिति प्लुतस्याऽप्रसङ्गात्, उदात्तस्थाने उदात्त आकारः, अनुदात्तस्थानेऽनुदात्त आकार इत्यादि तु "स्थानेऽन्तरतमः" इत्यनेनैव सिद्धम्। अत एव "वृषाकप्यग्नी"ति सूत्रे वृषाकपिशब्दो मध्योदात्त एक एवोदात्तत्वं प्रयोजयति, अग्न्यादिषु तु "स्थानेऽन्तरतमः" इत्येव सिद्धमिति मनोरमादावुक्तम्। ततश्च प्रयोजनाऽभावात्तपरकरणमनणि विध्यर्थमिति नाशह्कनीयमेव। यदि तु "हल्ङ्याब्भ्यः" इत्यत्र आ-आबितिवत्, "अत आ" इत्यत्रापि आ-आ इति प्रश्लेषः क्रियते तदा तपरकरणं विनापीष्टसिद्धिरित्याहुः॥ "प्रहासे चे"ति सूत्रस्योदाहरणमाह-- एहि मन्ये इति। "ओदनं भोक्ष्ये" इति त्वं मन्यस इत्यर्थः॥ एतम् एत वेति। "एतं मन्ये ओदनं भोक्ष्येथे", "एत मन्ये ओदनं भोक्ष्यध्वे" इत्यन्वयः। भोक्ष्यावहे इति युवां मन्येथे, भोक्ष्यामह इति यूयं मन्यध्वे इति क्रमेणार्थः॥

---

सूत्रम्
काशिका-वृत्तिः
सुपि च ७।३।१०२

अतो दीर्घो यञि ७।३।१०१ इत्यनुवर्तते। सुपि च यञादौ परतो ऽकारान्तस्य अङ्गस्य दीर्घो भवति। वृक्षाय। प्लक्षाय। वृक्षाभ्याम्। प्लक्षाभ्याम्। अतः इत्येव, अग्निभ्याम्। यञि इत्येव, वृक्षस्य। प्लक्षस्य।
लघु-सिद्धान्त-कौमुदी
सुपि च १४१, ७।३।१०२

यञादौ सुपि अतोऽङ्गस्य दीर्घः। रामाभ्याम्॥
न्यासः
सुपि च। , ७।३।१०२

बाल-मनोरमा
सुपि च २००, ७।३।१०२

सुपि च। "अतो दीर्घो यञी"त्यनुवर्तते। "यञी"त्यनुवर्तते। "यञी"त्यनेन सुपीति विशेष्यते। "यस्मिन् विधि"रिति तदादिविधिरित्याह--यञा-दाविति। अतोङ्गस्येति। अदन्तस्याङ्गस्येत्यर्थः। राम-भिस् इति स्थिते, न विभक्ताविति सस्य नेत्त्वम्।

तत्त्व-बोधिनी
सुपि च १६८, ७।३।१०२

सुपि च। "यञी"त्यनुवर्तते। अल्ग्रहणात्तदादिविधिरित्याह--यञादौ सुपीति। यञि किम्?। रामः। अत इति किम्?। अग्निभ्याम्।

---

सूत्रम्

काशिका-वृत्तिः

बहुवचने झल्येत् ७।३।१०३

बहुवचने झलादौ सुपि परतो ऽकारान्तस्य अङ्गस्य एकारादेशो भवति। व्कृक्षेभ्यः। प्लक्षेभ्यः। वृक्षेषु। प्लक्षेषु। बहुवचने इति किम्? वृक्षाभ्याम्। प्लक्षाभ्याम्। झलि इति किम्? वृक्षाणाम्। सुपि इत्येव, यजध्वम्। पचध्वम्।

लघु-सिद्धान्त-कौमुदी

बहुवचने झल्येत् १४५, ७।३।१०३

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः। रामेभ्यः। सुपि किम्? पचध्वम्॥

न्यासः

बहुवचने झल्येत्?। , ७।३।१०३

ननु च वृक्षाणामित्यत्र "नामि" ६।४।३ इति दीर्घत्वं बाधकं भविष्यति, तत्? किं तन्निवृत्त्यर्थेन झल्ग्रहणेन? नैतदस्ति; "नामि" ६।४।३ इति ह्रग्नीनामित्यत्र सावकाशम्(), तत्रासति झल्ग्रहणे दीर्घत्वं बाधित्वा परत्वादेत्त्वमेव स्यात्()। "पचध्वम्(), यजध्वम्()" इति। लोट्? टेरेत्त्वम्(), "सवाभ्यां वामौ" ३।४।९१ इत्यामादेशः॥

बाल-मनोरमा

बहुवचने झल्येत् २०३, ७।३।१०३

भ्यसि न विभक्ताविति सस्य नेत्त्वम्। सुपि चेति दीर्घे प्राप्ते--बहुवचने झल्येत्। "अतो दीर्घो यञी"त्यतः "सुपि चे"त्यतश्च "अत" इति "सुपी"ति चानुवर्तते। "झली"त्यनेन "सुपी"ति विशेष्यते। "यस्मिन् विधि"रिति तदादिविधिस्तदाह--झलादाविति। अतोऽङ्गस्येति। अदन्तस्याङ्गस्येत्यर्थः। एत्वे सति रुत्वविसर्गौ सिद्धवत्कृत्याह--रामेभ्य इति। राम इति। अयोगवाहानामकारोपरि शर्षु चोपसंख्यातत्वेन विसर्गस्य झल्त्वात्स्थानिवद्भावेन सुप्त्वाच्च तस्मिन् परत एत्वं प्राप्तं, रुत्वविसर्गयोरसिद्धत्वेऽपि राम--सिति दशायां झलादिसुप्परत्वात्। अतो बहुवचनग्रहणमित्यर्थः। रामस्येति। बहुवचनग्रहणस्य प्रयोजनान्तरम्। षष्ठ()एकवचनस्य ङसः स्यादेशे तस्य स्थानिवद्भावेन सुप्त्वात्स्वतो झलादित्वाच्च तस्मिन् परत एत्वे प्राप्ते तन्निवृत्त्यर्थं बहुवचनग्रहणमित्यर्थः। संनिपातपरिभाषा तु "सर्वेषा"मिति निर्देशादेत्वविधौ न प्रवर्तत इत्याहुः। झलि किमिति। "उतो वृद्धिर्लुकि हलीत्यतो हली"त्यनुवर्त्य हलादौ बहुवचने सुपि एत्वमित्येव व्याख्यातु शक्यते। तावतैव "रामा" इत्याद्यजादिबहुवचने एत्वनिरासादिति प्रश्नः। रामाणामिति। "हलादौ बह#उवचने सुपि एत्व"मित्युक्तौ रामाणामित्यत्राप्येत्वं स्यात्। तन्निवृत्त्यर्थं झल्ग्रहणमित्यर्थः। यद्यप्यत्र संनिपातपरिभाषया ह्यस्वान्ताङ्गसंनिपातमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमेत्वं प्रति निमित्तत्वाऽसंभवादेव एत्वं न भविष्यति, तथापि झल्ग्रहणमेत्वे संनिपात परिभाषाया अप्रववृत्तिज्ञापनार्थम्। तेन "हलि सर्वेषा"मिति निर्देशात्सर्वशब्दे एत्वसिद्धावपि वि()ओषामित्यादावेप्यत्वं भवति। पचध्वमिति। ध्वमो झलादिबहुवचनत्वेऽपि सुप्त्वाऽभावान्न तस्मिन् परत एत्वमित्यर्थः। नच "बहुवचने झली"गित्योवास्तु। कित्त्वादन्तावयवे आद्गुणे च "रामेभ्य" इत्यादिसिद्धेरिति वाच्यम्, एवं सति "ओसि चे"त्युत्तरसूत्रेऽपि इगागमविधौ ज्ञानयोरित्यत्र "इकोऽचि विभक्ता"विति नुमापत्तेः।

अथ पञ्चमीविभक्तिः। तत्र "उपदेशेऽजनुनासिक इ"दिति ङसेरिकार इत्। तस्य लोपः। ङकारस्तु लशक्विति इत्। तस्य लोपः। ङकारस्तु लशक्विति इत्। तस्य लोपः। तदुभयोच्चारणं तु "ङसिङ्योः" "घेर्ङिती"त्याद्यर्थम्। "टाङसिङसा"मिति आत्। सवर्णदीर्घः। जश्त्वमिति। "झलां जशो।ञन्ते" इति नित्यतया जश्त्वं प्राप्तम्। तदपवादश्चत्र्वविकल्प आरभ्यत इत्यर्थः।

तत्त्व-बोधिनी

बहुवचने झल्येत् १७१, ७।३।१०३

रामः। रामस्येति। यद्यपि रामस्येत्यत्र संनिपातरिभाषयाप्येत्त्वं सुपरिहरम्, तथापि "अदः सर्वेषा"मिति निर्देशादेत्त्वविधौ संनिपातपरिभाषा न प्रवर्तत इत्याशयेनोक्तमिति स्थितस्य गतिः समर्थनीया।

---

सूत्रम्

काशिका-वृत्तिः

ओसि च ७।३।१०४

ओसि परतो ऽकारान्तस्य अङ्गस्य एकारादेशो भवति। वृक्षयोः स्वम्। प्लक्षयोः स्वम्। वृक्षयोर् निर्धेहि। प्लक्षयोर् निधेहि।

लघु-सिद्धान्त-कौमुदी

ओसि च १४७, ७।३।१०४

अतोऽङ्गस्यैकारः। रामयोः॥

न्यासः

ओसि च। , ७।३।१०४

बाल-मनोरमा

ओसि च २०५, ७।३।१०४

"राम ओस्" इति स्थिते वृद्धौ प्राप्तायाम्--ओसि चेति। "अतो दीर्घो यञी"त्यतोऽत इत्यनुवर्तते। "अङ्गस्ये"त्यधिकृतम्। "बहुवचने झल्ये"दित्यत "ए"दित्यनुवर्तते। तदाह--ओसि पर इति। अतोऽङ्गस्येति। अदन्ताङ्गस्येत्यर्थः। "रामे ओस्" इति स्थितेऽयादेशं रुत्वविसर्गौ च सिद्धवत्कृत्याह--रामयोरिति। "राम आ"मिति स्थिते सवर्णदीर्घे प्राप्ते--ह्रस्वनद्यापः ह्रस्वश्च नदी च आप्चेति समाहारद्वन्द्वाद्दिग्योगे पञ्चमी। "परस्ये"त्यध्याहार्यम्। "अङ्गस्ये"त्यधिकृतं पञ्चम्या विपरिणम्य ह्रस्वादिभिर्विशेष्यते, अतस्तदन्तविधिः। "आमि सर्वनाम्नः" इत्यत "आमी"त्यनुवर्तते। तच्च "उभयनिर्देशे पञ्चमां निर्देशो बलीयान्" इति न्यायात् "तस्मादित्युत्तरस्ये"ति षठ()न्तं सम्पद्यते।

---

सूत्रम्

काशिका-वृत्तिः

आङि चापः ७।३।१०५

आङिति पूर्वाचार्यनिर्देशेन तृतीयैकवचनं गृह्यते। तस्मिन्नाङि परतः, चकारादोसि च, आबन्ताङ्गस्य एकारादेशो भवति।

खट्वया। मालया। खट्वयोः मालयोः। बहुराजया। कारीषगन्ध्यया। बहुराजयोः। कारीषगन्ध्ययोः। आपः इति पितो ग्रहणं किम्? कीलालपा ब्रह्मणेन। कीलालपोः ब्रह्मणकुलयोः। ङ्याब्ग्रहणे ऽदीर्घग्रहणम् इति वचनातिह न भवति, अतिखट्वेन ब्राह्मणकुलेन।

लघु-सिद्धान्त-कौमुदी

आङि चापः २१९, ७।३।१०५

आङि ओसि चाप एकारः। रमया। रमाभ्याम्। रमाभिः॥

न्यासः

आङि चापः। , ७।३।१०५

"आङिति पूर्वाचार्यनिर्देशेन" इत्यादि। आचार्या हि पूर्व आङिति तृतीयैकवचननिर्देशं कुर्वन्ति स्म। तस्मात्? तदीयेनाङिति निर्देशेन तृतीयैकवचनं गृह्यते। "खट्वया" इति टाबन्तस्योदाहरणम्()। "बहुराजया" इति। जावन्तस्योदाहरणम्()। "डाबुभाभ्यामन्यतरस्याम्()" ४।१।१३ इति डाप्()। "कारीषगन्ध्यया" इति। चाबन्तस्य। करीषस्येव गन्धोऽस्य "उपमानाच्च" ५।४।१३७ इतीत्()--करीषगन्धिः, "तस्यापत्यम्()" ४।१।९२ इत्यण्(), तस्य "अणिञोरनार्षयोः" ४।१।७८ इत्यादिना व्यङ्(), तदन्तात्? "यङश्चाप्()" ४।१।७४ इति चाप्()। "कीलालपा" इति। कीलालं पिबतीति "अतो मनिन्क्वनिब्वनिपश्च" ३।२।७४ इति विच्(), तदन्तात्? तृतीयैकवचनम्(), "आतो धातोः" ६।४।१४० इत्यकारलोपः। अथेह कस्मान्न भवति--खट्वामतिक्रान्तेनातिखट्वेनेति, उपसर्जनह्रस्वत्वे कृते स्थानिवद्भावात्? तस्य प्राप्नोति? इत्याह--"ङ्याब्ग्रहणम्()" इत्यादि। केचिदाहुः--ङ्याब्ग्रहणे दीर्घग्रहणमित्येतद्वचनं कत्र्तव्यम्(), तेन ह्रस्वत्वे कृते न भवति अपरे त्वाहुः--"हल्ङ्याब्भ्यो दीर्घात्()" ६।१।६६ इति योगविभागः कत्र्तव्यः, यावच्छास्त्रे ङ्यापोः कार्यं तत्? सर्वं दीर्घयोर्यथा स्या ह्रस्वयोर्मा भूदिति; ततः "सुतिस्यपृक्तम्? ६।१।६६ इति द्वितीयो योगः, तत्र "हल्ङ्याग्भ्यः" इत्यनुवत्र्तत इति। चकारः "ओसि च" ७।३।१०४ इत्यनुकर्षणार्थः॥

बाल-मनोरमा

आङि चापः २८७, ७।३।१०५

आङि चापः। "ओसि चे"त्यनुवर्तते, "आप" इति षष्ठी,-"अङ्गस्ये"त्यदिकृतं तदन्तविधिः। "बहुवचने झल्ये"दित्यत एदित्यनुवर्तते। तदाह--आङि ओसि चेत्यादिना। "आङिति टासंज्ञां प्राचा"मित्युक्तम्। अलोऽन्त्यस्य एत्वेऽयादेश इत्याह-रमयेति। रमाभिरिति। "अतो भिसः" इति तपरकरणाअदैस्न। रमा-ए इति स्थिते-।

तत्त्व-बोधिनी

आङि चापः २४९, ७।३।१०५

आङि। चकारेण "ओसि चे"ति प्रकृतं परामृश्यत इत्याह----ओसि च पर इति। रमाभिरिति। नन्विह एकादेशस्य पूर्वान्तत्वेन ग्रहणादतो भिस एसित्यैस्प्राप्नोति। नच तपरत्वसामथ्र्यान्नैवमिति वाच्यम्, अकृतैकादेशे "विश्वपाभि"रित्यादौ कृतार्थत्वादिति चेन्मैवम्, अल्विधौ अन्तादिवच्चे त्यस्याऽप्रवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

सम्बुद्धौ च ७।३।१०६

आपः इति वर्तते। सम्बुद्धौ च परतः आबन्तस्य अङ्गस्य एत्वं भवति। हे खट्वे। हे बहुराजे। हे कारीषगन्ध्ये।

लघु-सिद्धान्त-कौमुदी

सम्बुद्धौ च २१८, ७।३।१०६

आप एकारः स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति संबुद्धिलोपः। हे रमे। हे रमे। हे रमाः। रमाम्। रमे। रमाः॥

न्यासः

सम्बुद्धौ च। , ७।३।१०६

बाल-मनोरमा

संबुद्धौ च २८६, ७।३।१०६

संबुद्धौ च। "बहुवचने झल्ये"दित्यत एदिति, "आङि चापः" इत्यत "आप" इति चानुवर्तते। तदाह-आप इत्यादिना। आबन्तस्येत्यर्थः। "अलोऽन्त्यस्य"। हे रमे स् इति स्थिते प्रक्रियां दर्शयति--एङ्ह्रस्वादिति। हल्ङ्यादिलोपस्तु न, परत्वात्प्रतिपदोक्तत्वाच्च एत्वे कृते हल्ङ्यादिलोपस्याऽप्राप्तेः, "एङ्ह्रस्वा"दिति लोपस्यैव परत्वेन न्याय्यत्वाच्चेति भावः। रमामिति। "अमि पूर्वः" इति पूर्वरूपम्। औङः शीभावे आद्गुणं मत्वाह--रमे इति। स्त्रीत्वादिति। शसि रमा-असिति स्थिते पूर्वसवर्णदीर्घे सति कृतपूर्वसवर्णदीर्घात्परत्वेऽपि "तस्माच्छसः" इति नत्वं स्त्रीलिङ्गत्वान्न भवतीत्यर्थः। रमा-आ इति स्थिते।

तत्त्व-बोधिनी

संबुद्धौ च २४८, ७।३।१०६

संबुद्धौ च। "बहुवचने झल्येत्" "आङि चापः"इत्यत "एत्"ाप"इति चानुवर्तते, तदाह---आप स्यादिति। एङ्ह्रस्वादिति। न चात्र हल्ङ्यादिनैध सुलोपोऽस्तु, प्रत्ययलक्षणन्यायेन "सुबुद्धौ चे"त्येत्त्वस्यापि प्रवृत्तिसंभवादिति शङ्क्यं, परत्वाकत्प्रतिपदोक्तत्वच्च एत्त्वे कृते हल्ङ्यादिलोपस्याऽप्राप्तेः, स्थानवद्भावादास्वेऽप्याकाररूपत्वाऽभावात्। "आ आ"बित्याकारं पश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानात्। "एङ्ह्रस्वा"दिति लोपस्यैव परत्वेन न्याय्यत्वाच्चेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अम्बार्थनद्योर् ह्रस्वः ७।३।१०७

सम्बुद्धौ इति वर्तते। अम्बार्थनाम् अङ्गानां नद्यन्तानां ह्रस्वो भवति सम्बुद्धौ परतः। हे अम्ब। हे अक्क। हे अल्ल। नद्याः खल्वपि हे कुमारि। हे शार्ङ्गरवि। हे ब्रह्मबन्धु। हे वीरबन्धु। डलकवतीनां प्रतिषेधो वक्तव्यः। हे अम्बाडे। हे अम्बाले। हे अम्बिके। छन्दसि वेति वक्तव्यम्। हे अम्बाड, हे अम्बाडे। हे अम्बाल, हे अम्बाले। हे अम्बिक, हे अम्बिके। तलो ह्रस्वो बा ङिसम्बुद्ध्योरिति वक्तव्यम्। देवते भक्तिः, देवतायां भक्तिः। हे देवत, हे देवते। छन्दस्येव ह्रस्वत्वम् इष्यते। मातृणां मातच् पुत्रार्थम् अर्हते। मातृणां मातजादेशो वक्तव्यः सम्बुद्धौ, पुत्राय पुत्रम् अभिधातुम्। कीदृशाय? अर्हते। मात्रा व्यपदेशम् अर्हति श्लाघनीयत्वाद् यः पुत्रस् तदर्थम्। हे गार्गीमात। नद्यृतश्च ५।४।१५३ इति समासान्तापवादो मातजादेशः। चित्करणम् अन्तोदात्तार्थम्।

लघु-सिद्धान्त-कौमुदी

अम्बार्थनद्योर्ह्रस्वः १९६, ७।३।१०७

सम्बुद्धौ। हे बहुश्रेयसि॥

न्यासः

अम्बार्थनद्योर्ह्रस्वः। , ७।३।१०७

पूर्वस्यायमपवादः। अम्बार्थाः=मात्रर्थाः। "डलकवतीनाम्()" इत्यादि। डलाका यासां श्रुतीनां सन्तीति ता डलकवत्यः। असंयोगावयवभूता डलका इह गृह्न्ते। अन्यथा हे अक्क, हे अल्ल--इत्यत्रापि स्यात्()। वक्तव्यशब्दस्य व्याख्यय इत्येषोऽर्थः। उत्तरयोरपि वक्तव्यशब्दयोरयमेवार्थो वेदितव्यः। तत्रैदं व्याख्यानम्()--"बहुलं छन्दसि" ७।३।९७ इत्यतो बहुलग्रहणं मण्डूकप्लुतिन्यायेनानुवत्र्तते, तेन सर्वं प्रतिषेधादिकं कार्यमपि भविष्यतीति। "अर्हते" इति। प्रशंसाभाजनभूतायेत्यर्थः। "गार्गोमाता" इति। यो गार्ग्या मात्रा ष्यपदेशेन प्रशंसामर्हति स एवमुच्यते॥

बाल-मनोरमा

अम्बार्थनद्योह्र्यस्वः २६५, ७।३।१०७

अम्बार्थानामिति। अम्बापर्यायाणामित्यर्थः नद्यन्तानामिति। अङ्गाधिकारस्थत्वात्तदन्तविधिः। तुल्यन्यायत्वादम्बार्थानामित्यत्रापि तदन्तविधिर्बोध्यः। सम्बुद्धाविति। "सम्बुद्धौ चे"त्यतस्तदनुवृत्तेरिति भावः। अम्बागौर्यादिशब्देषु ह्यस्वत्वं तु व्यपदेशिवद्भावेन तदन्तत्वाज्ज्ञेयम्। हे बहुश्रेयसि इति। ह्यस्वे सति "एङ्ह्यस्वा"दिति सम्बुद्धिलोपः। ह्यस्वे गुणस्तु न, प्रक्रियालाघवाय "अम्बार्थनद्योह्र्यस्वः" इत्यनुक्त्वा "अम्बार्थनद्योर्गुणः" इति वाच्ये ह्यस्वविधिसामथ्र्यादिति स्पष्टं भाष्ये। बहुश्रेयस्यौ। बहुश्रेयस्यः। "दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घनिषेधे यण्। "अमि पूर्वः"। बहुश्रेयसीम्। बहुश्रेयस्यौ। बहुश्रेयसीनिति। पूर्वसवर्णदीर्घ सति "तस्माच्छसः" इति नत्वमिति भावः। बहुश्रेयस्या। अघित्वान्नाभावो न, किन्तु यणादेशः। बहुश्रेयसीभ्याम्। बहुश्रेयसीभिः। बहुश्रेयसी-ए इति स्थिते घित्वाऽभावान्न तत्कार्यम्। यणि बहुश्रेयस्ये इति प्राप्ते-।

तत्त्व-बोधिनी

अम्बार्थनद्योह्र्यस्वः २२७, ७।३।१०७

वर्णसंज्ञापक्षाश्रयेणाह---नद्यन्तानामिति। हे बहुश्रेयसीति। अत्र ह्यस्वबुधानसामथ्र्याद्गुणो न प्रवर्तते। अन्यथा "अम्बार्थनद्योर्गुण"इत्येव ब्राऊयात्। न च लाघवाऽभावः शङ्क्यः, ह्यस्वग्रहणे मात्राधिक्यात्, "ह्यस्वस्यट गुणः"इत्युत्तरसूत्रे गुणग्रहणत्यागेन सुतरां लाघवसंभवाच्च। अन्ये तु कृतेऽपि ह्यस्वे यदि गुण इष्टः स्यात्तर्हि "अम्बार्थानां ह्यस्वः"इत्युक्त्वा "नदीह्यस्वयोर्गुणः"इत्येव ब्राऊयादित्याहुः। तत्र पदलाघवाऽभावेऽपि प्रक्रियालाघवमस्ति, परन्तु "जसि च त्यत्र" "ह्यस्वस्ये"त्येकदजाशानुवृत्तौ क्लेशोऽस्तीति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वस्य गुणः ७।३।१०८

सम्बुद्धौ इति वर्तते। ह्रस्वान्तस्य अङ्गस्य गुणो भवति सम्बुद्धौ परतः। हे अग्ने। हे वायो। हे पटो। हे कुमारि, हे ब्रह्मबन्धु इत्येवम् आदीनां ह्रस्वविधानसामर्थ्याद् गुणो न भवति। यदि गुणः इष्टः स्यात्, अम्बार्थानां ह्रस्वः इत्युक्त्वा नदीह्रस्वयोर् गुणः इत्येवं ब्रूयात्।

लघु-सिद्धान्त-कौमुदी

ह्रस्वस्य गुणः १६९, ७।३।१०८

सम्बुद्धौ। हे हरे। हरिम्। हरी। हरीन्॥

न्यासः

ह्यस्वस्य गुणः। , ७।३।१०८

ह्यस्वग्रहणं प्रकृताङ्गविशेषणम्(), विशेषणेन च तदन्तविधिर्भवतीत्याह--"ह्रस्वान्तस्य" इत्यादि। एवमुत्तरत्रापि तदन्तविधिर्वेदितव्यः। अथ हे कुमारि, हे ब्राह्मबन्ध्वित्येवमादीनां कस्मान्न भवति? इत्याह--"हे कुमारि" इत्यादि। यदि ह्यस्वत्वे कृते गुणः स्यात्, ह्यस्वकरणमनर्थकं स्यात्()। ननु च गुणार्थमेतत्? स्यात्, असति हि तस्मिन्? "ह्यस्वसय गुणः" [७।३।१०८](#) इति गुणो न स्यात्(), अह्यस्वान्तत्वात्()? इत्याह--"यदि" इत्यादि। एवं प्रक्रियागौरवं परिह्मतं भवतीति भावः॥

बाल-मनोरमा

ह्यस्वस्य गुणः २४०, ७।३।१०८

हे हरि स् इति स्थिते ह्यस्वस्य गुणः। "सम्बुद्धौ चे"त्यतः सम्बुद्धावित्यनुवर्तते। तदाह--ह्यस्वस्येत्यादिना। अनेन रेफादिकारस्य गुण एकारः। सम्बुद्धिलोप इति। एङः परत्वादिति भावः। नत्वत्र ह्यस्वात्परत्वमस्ति, परत्वान्नित्यत्वाच्च सम्बुद्धिगुणे कृते ह्यस्वात्परत्वाऽभावात्। हरिमिति। अमि पूर्वरूपे रूपम्। हरीनिति। पूर्वसवर्णदीर्घे "तस्माच्छसः" इति नत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

जसि च ७।३।१०९

जसि परतो ह्रस्वान्तस्य अङ्गस्य गुणो भवति। अग्नयः। वायवः। पटवः। धेनवः। बुद्धयः। जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधाया ह्रस्व इत्येतस्मात्। इतः प्रकरणात् प्रभृति छन्दसि वा इति वक्तव्यम्। किं प्रयोजनम्? अम्बे, दर्वि, शतक्रत्वः, पश्चे नृभ्यः, किकिदीव्या। अम्बे, अम्ब। पूर्णा दर्वि, पूर्णा दर्वी। अधा शतक्रत्वः, शतक्रतवः। पश्चे नृभ्यः, पशवे। किकिदीव्या, किकिदीविना।

लघु-सिद्धान्त-कौमुदी

जसि च १६८, ७।३।१०९

ह्रस्वान्तस्याङ्गस्य गुणः। हरयः॥

न्यासः

जसि च। , ७।३।१०९

"जसादिषु" इत्यादि। आदिशब्दः प्रकारे। जस्प्रकारेषु प्रत्ययेष्वित्यर्थः। "इतः प्रकरणात्()" इति। "अम्बार्थनद्योह्र्यस्वः" [७।३।१०७](#) इत्येवमादिकात्()। "छबदसीति वक्तव्यम्()" इति। छन्दसि विषये वा कार्यं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु तदेव बहुलवचनमाश्रित्य कत्र्तव्यम्()। "अम्बे" इत्यादि। "अम्बार्थनद्योह्र्यस्वः" [७।३।१०७](#) इति ह्यस्वो न भवति। "दर्वी" इत्यत्र ह्यस्वस्य गुणः। "शतक्रत्वः" इत्यत्रापि "जसि च" [७।३।१०९](#) इति। "प()ओ" इति। "घेर्ङिति" [७।३।१११](#) इति गुणः। "किकिदीव्या" इति। अत्र "आङो नास्त्रियाम्()" [७।३।११९](#) इति नाभावः॥

बाल-मनोरमा

जसि च २३९, ७।३।१०९

जसि च। "ह्रस्वस्य गुणः" इत्यनुवर्तते। "अहगस्ये"त्यधिकृतं ह्रस्वेन विशेष्यते। तेन तदन्तविधिः। तदाह--ह्रस्वान्तस्येत्यादिना। हरय इति। अलोऽन्त्यपरिभाषयाऽन्त्यस्य गुणः। इकारस्य तालुस्थानसाम्यादेकारः। अयादेशः। रुत्वविसर्गाविति भावः।

---

सूत्रम्

काशिका-वृत्तिः

ऋतो ङिसर्वनामस्थानयोः ७।३।११०

गुणः इति वर्तते। ऋकारान्तस्य अङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति। ङौ मातरि। पितरि। भ्रातरि। कर्तरि। सर्वनामस्थाने कर्तारौ। कर्तारः। मातरौ। पितरौ। भ्रातरौ। तपरकरणं मुखसुखार्थम्।

न्यासः

ऋतो ङिसर्वनामस्थानयोः। , ७।३।११०

"तपरकरणं मुखसुखार्थम्()" इति। न हि ङिसर्वनामस्थानयोर्दीर्घ ऋकारः सम्भवति यस्तपरेण निवर्त्त्येत॥

बाल-मनोरमा

ऋतो ङिसर्वनामस्थानयोः २७३, ७।३।११०

ऋतो ङि। "ह्रस्वस्य गुणः" इत्यतो"गुण" इत्यनुवर्तते। "अङ्गस्ये"त्यधिकृतम् "ऋत" इत्यनेन विशेष्यते, ततस्तदन्तविधिस्तदाह--ङाविति।

तत्त्व-बोधिनी

ऋतो ङिसर्वनामस्थानयोः २३७, ७।३।११०

ऋतो ङि। "कृ()" "तृ()" एतयोरनुकरणे ऋकारान्ते गुणवारणाय तपरकरणमिति बोध्यम्।

अप्तृन्। "तुरिष्ठेमेयस्स्वि"तिवृतृ इत्येवसिद्धे तृन्तृचोर्मभेदानोपादानं "क्वचित्सामान्योक्तावपि विशेष एव गृह्रते"इति ज्ञापनार्थन्। तेन "न कापधायाः"इत्यत्र सामान्योक्तावपि वुतद्धितयोरेव को गृह्रते, न कमात्रम्। तेन यदग्रे वक्ष्यति "कोपधप्रतषेधे तद्धितवुग्रहण"मिति, तदुपपन्नं भवतीत्येके। अन्ये त्वाहुः--"अप्तृ"--इत्योव वक्तव्ये "तृन्" "तृ"जिति भेदेनोपादानमर्वणस्तृव्।यावृत्तये। यद्यप्यर्थवत्परिभाषाया तन्निवृत्तिः सिध्यति, तथापि तस्याः परिभाषाया अनित्यत्वज्ञापनाय तयोः पृथगुपादानम्। तेन "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकतेन त तदन्तविधिं पर्योजयन्ती"ति सिद्धमिति। व्युत्पत्तिपक्षे तृन्नन्तत्वातृजन्तत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह--नियमार्थमिति। औणादिकानामन्यषां संज्ञाशब्दानां मा भूदित्येतदर्थमित्यर्थः। धातृशब्दस्त्वौणादिकः संज्ञाशब्दो न भवतीति तत्र दीर्घो भवत्येव। धातारौ। धातारः। अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति पितृभ्रातृप्रभृतीनां दीर्घशङ्कैव नास्तीति बोध्यम्।

तेनेति। पितरौ। पितरः।भ्रातरौ। भ्रातर इत्यादौ दीर्घे नेत्यर्थः। क्रोष्टेति। अनङ्। हल्ङ्यादिलोपात्परत्वादुपधादीर्घः। स च

"सर्वनामस्थाने चे"त्यनेन यद्यपि लभ्यते, तथापि परत्वात् "अप्तृ"न्नित्येवं न्याय्यः।
कृतेऽप्यनङिएकदेशविकृतस्यानन्यत्वेन तृच्त्वात्। अन्यथा गुणे कृतेऽपि "क्रोष्टारा"वित्यादौ दीर्घे न स्यादिति भावः।

---

सूत्रम्
काशिका-वृत्तिः
घेर् ङिति ७।३।१११

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति। अग्नये। वायवे। अग्नेरागच्छति। वायोरागच्छति। अग्नेः स्वम्। वायोः स्वम्। घेः इति किम्? सख्ये। पत्ये। ङिति इति किम्? अग्निभ्याम्। सुपि इत्येव, पट्वी। कुरुतः।
लघु-सिद्धान्त-कौमुदी
घेर्ङिति १७२, ७।३।१११

घिसंज्ञस्य ङिति सुपि गुणः। हरये। हरिभ्याम्। हरिभ्यः॥
न्यासः
घेर्ङिति। , ७।३।१११

"सख्ये, पत्ये" इति। सखिपतिशब्दौ घिसंज्ञकौ न भवतः; "शेषो ध्यसखि" १।४।७ इति पर्युदासात्(); "पतिः समास एव" १।४।८ इति नियमाच्च। "पट्वी" इति। "वोतो गुणवचनात्()" ४।१।४४ ङीषु। अत्र गुणो न भवति; "सुपि च" ७।३।१०२ इत्यतः सुपीत्यनुवृत्ते "कुरुतः" इति। करोतेस्तस्(), उप्रत्ययः, धातोर्गुणः, रपरत्वम्(), "अत उत्? सार्वधातुके" ६।४।११० इत्युत्त्वम्()। अत्रापि सुपीत्यनुवृत्तेस्तसि परतो विकरणान्तसय न भवति गुणः॥
बाल-मनोरमा
घेर्ङिति २४३, ७।३।१११

घेर्ङिति। "सुपि चे"त्यतः "सुपी"ति "ह्रस्वस्ये"त्यतो "गुण" इति चानुवर्तते। तदाह-घिसंज्ञकस्येत्यादिना। यणोऽपवादः। हरये इति। गुणे?यादेशः। सुपि किं पट्वीति। "वोतो गुणवचना"दिति ङीष्। तस्य ङित्त्वेऽपि सुप्त्वाऽभावात्तस्मिन् परतो न गुण इत्यर्थः। नच "घेङी"त्येव सूत्र्यताम्, इद्ग्रहणं न कर्तव्यम्, "यस्मिन् विधि"रिति परिभाषया ङकारादौ सुपीत्यर्थलाभादिति वाच्यम्, एवं सति "आण्नद्याः" इत्यत्रापि ङीत्येवानुवृत्तौ ङकारादेराम आङ्विधीयेत। ततश्च "मत्या"मित्यत्र आण्न स्यात्। आमो ङादित्वाऽभावात्। नच स्थानिवद्भावेन ङादित्वं शङ्क्यम्। अल्विधित्वात्। स्थानिनो ङेर्ङकारस्य इत्संज्ञालोपाभ्यामपह्रतत्वेन आम्स्थान्यल्त्वाऽभावात्, अनुबन्धानामनेकान्तत्वात्। एकान्तत्वपक्षे।ऽपि अल्ग्रहणेन अनुबन्धस्य ग्रहणं न भवति, "अनेकाल्शित्सर्वस्ये"त्यत्र शिद्ग्रहणाज्ज्ञापकात्। अन्यथा "इदम इ" शित्यादिशितां शकारेणानुबन्धेन सहानेकाल्त्वादेव सिद्धे किं तेन?। अतएव तिबाद्यादेशेषु पित्वादि सिध्यति। अत एव तिबाद्यादेशेषु पित्वादि सिध्यति। अत एव "सेह्र्यपिच्चे"त्यत्र अपिदित्यर्थवत्। अन्यथा पित्कार्यस्याऽल्विध#इत्वात्तत्र स्थानिवद्भावस्यैवाऽप्रसक्त्या हेः पित्वस्यैवाऽप्रसक्तौ किं तन्निषेधेन?। तदिदं स्थानिवत्सूत्रे शब्देन्दुशेखरे प्रपञ्चितम्। गुणे कृते इति। "ङसिङसो"रिति शेषः। हरे-अस् इति स्थितेऽपदान्तत्वात् "एङः पदान्ता"दिति पूर्वरूपे अप्राप्ते, अयादेशे प्राप्ते--।

---

सूत्रम्
काशिका-वृत्तिः

आण् नद्याः ७।३।११२

नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य आडागमो भवति। कुमार्यै। ब्राहमबन्ध्वै। कुमार्याः। ब्रह्मबन्ध्वाः।

लघु-सिद्धान्त-कौमुदी

आण्नद्याः १९७, ७।३।११२

नद्यन्तात्परेषां ङितामाडागमः॥

न्यासः

आण्नद्याः। , ७।३।११२

"नद्याः" इति पञ्चमी, सा चाकृतार्था पूर्वत्र कृतार्थाया ङितीत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति। तेन ङित एवायमाडागमो विज्ञायते, इत्याह--"नद्यन्तादङ्गादुत्तरस्य" इत्यादि। "कुमार्यै" इत्येवमादौ "आटश्च" ६।१।८७ इति वृद्धिः। अथ दीर्घोच्चारणं किमर्थम्(), न अडेवोच्येत, "वृद्धिरेचि" ६।१।८५ इति वृद्ध्या सवर्णदीर्घत्वेन सिद्ध्यत्येव; कुमार्यै, कुमार्या इत्यत्र "अतो गुणे" ६।१।९४ पररूपत्वं प्राप्नोतीत्येतच्च नाशङ्कनीयम्(), पररूपत्वं ह्रत्र वचनसामर्थ्यान्न भविष्यति? नैष दोषः; अस्ति ह्रन्यदवचनस्य प्रयोजनम्()। किं तत्()? श्रियै, श्रिया इत्यत्र "सावेकाचस्तृतीयादिर्विभक्तिः" ६।१।१६२ इत्युदात्तत्वं मा भूत्()। आगमा आद्युदात्ता भवन्तीत्यनुदात्तत्वं यथा स्यादिति। शक्यते ह्रेकादेशोन्तादिवद्भावादागमग्रहणेन ग्रहीतुम्()। आगमानुदात्तत्वञ्च यथा प्रत्ययस्वरम्()--लविता, लवितुमित्यादौ बाधते, तथा विभक्तस्वरमपि बाधेत। तस्मात्? "आटश्च" ६।१।८७ इति वृद्ध्यर्थमेतत्()॥

बाल-मनोरमा

आण्नद्याः २६६, ७।३।११२

आण्नद्याः। "अङ्गस्ये"-त्यधिकृतं पञ्चम्या विपरिणम्यते। "नद्या"इति पञ्चम्यन्तेन विशेष्यते, तदन्तविधिः। "घेर्ङिती"त्यतो "ङिती"त्यनुवृत्तं षष्ट()आ विपरिणम्यते, तदाह-नद्यन्तादित्यादिना।

तत्त्व-बोधिनी

आण्नद्यः २२८, ७।३।११२

आण्नद्यः। "आण्नद्याः"इत्येव सुवचम्, विधानसमाश्र्यात् "अतो गुणे" इत्यस्याऽप्रवृत्तौ यथायथं वृद्धिसवर्णदीर्घाभ्यां "बहुश्रेयस्यै" "बहुश्रेयस्या"इत्यादिरूपसिद्धेः। ननु "परत्वादाटा नुड् बाध्यते"इत्युत्तरग्रन्थपर्यालोचनया ङेरामि कृते तस्य नुडागमनिवारणार्थमड्विधेरावश्यकत्वात्सामश्र्यमुपक्षीमिति चेत्, एवं तर्हि "ह्यस्वनद्यापः"इत्यन्तरं "ङेर्ने"त्येव सूत्र्यतामामीत्यनुवृत्त्या "ङेरामो नुण्ने"त्यर्थलाभात्। तस्मात् "अण्नाद्याः"इति विधानसामश्र्यात् "अतो गुणे"इति न प्रवर्तते इति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

याडापः ७।३।११३

आबन्ता दङ्गादुत्तरस्य ङितः प्रत्ययस्य याडागमो भवति। खट्वायै। बहुराजायै। कारीषगन्ध्व्यायै। खट्वायाः। कारीषगन्ध्यायाः। बहुराजायाः। अतिखट्वाय इत्यत्र अकृते दीर्घे ङ्याब्ग्रहणे अदीर्घः इति वचनाद् याडागमो न भवति,

कृते तु लाक्षणिकत्वात्।

लघु-सिद्धान्त-कौमुदी

याडापः २२०, ७।३।११३

आपो ङितो याट्। वृद्धिः। रमायै। रमाभ्याम्। रमाभ्यः। रमायाः। रमयोः। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः॥

न्यासः

याडापः। , ७।३।११३

"खट्वायाम्()" इति। "वृद्धिरेचि" ६।१।८५ इति वृद्धिः। खट्वाया इत्यत्राकः सवर्णे ६।१।९७ दीर्घोच्चारणम्()--वृद्धिसवर्णदीर्घत्वे यथा स्याताम्(), पररूपत्वं मा भूदित्येवमर्थम्()। अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत्()? न; अस्ति ह्यन्यदकारोच्चारणस्य प्रयोजनम्()। किं तत्()? ज्ञायै, ज्ञाया इत्यत्र "सावेकाचस्तृतीयादिर्विभक्तिः" ६।१।१६२ इत्यनेनोदात्तत्वं मा भूत्(), आगमनुदात्तत्वं यथा स्यादिति। अथ खट्वामतिक्रान्तायातिखट्वायेत्यत्र कस्मान्न भवति, उपसर्जनह्रस्वत्वे कृते तस्य स्थानिवद्भावादाव्ग्रहणेन ग्रहणे सति प्राप्नोति? इत्यत आह--"अतिखट्वाय" इत्यादि। यदा तावत्? "सुपि च" ७।३।१०२ इति दीर्घत्वं न क्रियते, तदा ङ्याव्ग्रहणेन दीर्घग्रहणमित्येतद्ववचनान्न भवति। यदा दीर्घत्वं तदा लाक्षणिकत्वान्न भवति; "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्()" (व्या।प।३) इति वचनात्()॥

बाल-मनोरमा

याडापः २८८, ७।३।११३

यडापः। "आप" इति पञ्चमी। "धेर्ङिती"त्यतो ङितीत्यनुवृत्तं षष्ठ()आ विपरिणम्यते। तदाह--आपः परस्येत्यादिना। टित्त्वादाद्यवयवः। वृद्धिरेचीति। या-ए इति स्थिते आकारस्य एकारस्य च स्थाने ऐकार एकादेश इति भावः। सवर्णेति। ङसिङसोः रमा अस् इति स्थिते याडागमे "अकः सवर्णे दीर्घः" इति सवर्णदीर्घ इति भावः। "य"ङित्येव सुवचम्। "अतो गुणे" इति पररूपं तु न, अकारोच्चारणसामर्थ्यात्। रमयोरिति। "आङि चापः" इत्यात्त्वेऽयादेश इति भावः। रमाणामिति। "ह्रस्वनद्यापः" इत्यत्राऽऽब्ग्रहणन्नुटि पर्जन्यवल्लक्षणप्रवृत्त्या "नामी"ति दीर्घे "अट्कुप्वा" ङिति णत्वमिति भावः। रमायामिति। "रमा-इ" इति स्थिते "ङेराम्नद्याम्नीभ्यः" इत्यामादेशे याडागमे सवर्णदीर्घ इति भावः। "न विभक्तौ" इति मस्य नेत्त्वम्। सर्वशब्दाट्टापि सर्वाशब्दः। सोऽपि प्राये रमावत्। ङित्सु "याडापः" इति प्राप्ते-।

तत्त्व-बोधिनी

याडापः २५०, ७।३।११३

याडापः। "घेर्ङिती"त्यतोऽनुवृत्तं "ङिति"ति सप्तम्यन्तमाप इति पञ्चम्यनुरोधेन षष्ट()न्तं विपरिणम्यत् इत्याह---ङिद्वचनस्येति। अत्र "सुपि चे"त्यतः "सुपी"त्यमुवर्तनात्सुप एव याट्। तेन अपित्सार्वधातुकस्य ङित्त्वेऽपि मालेवाचरतो "मालात"इत्यादौ तसादेर्न भवति। एतच्च "अचः परस्मि"न्नित्यत्र पूर्वस्यविधिः पूर्वविधिरिति षष्ठीसमासपक्षाभ्युपगमेनोक्तम्। पञ्चमीसमासपक्षाभ्युपगमे तु शपः स्थानिवत्त्वेन व्यवधानात् "मालात्ित्यादौ याटः प्रसङ्ग एव नास्तीत्याहुः। "य"ङित्येव वक्तव्ये दीर्घोच्चारणं स्पष्टप्रतिपत्त्यर्थम्। न च "अतो गुणे"इति पररूपापत्तिः, अकारोच्चारणसामर्थ्यादेव तद्बाधात्। वृद्धिरेचीति। प्राचा तु "आटश्चे"त्युपन्यस्तंतदुपेक्षितम्। याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽभावात्।

सूत्रम्

काशिका-वृत्तिः

सर्वनाम्नः स्याड् ढ्रस्वश् च ७।३।११४

सर्वनाम्नः आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य स्याटागमो ह्रस्वश्च भवति। सर्वस्यै। विश्वस्यै। यस्यै। तस्यै। कस्यै। अन्यस्यै। सर्वस्याः। विश्वस्याः। यस्याः। तस्याः। कस्याः। अन्यस्याः। आपः इत्येव, भवति। भवते।

लघु-सिद्धान्त-कौमुदी

सर्वनाम्नः स्याड्ढ्रस्वश्च २२१, ७।३।११४

आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। सर्वस्याः। सर्वासाम्। सर्वस्याम्। शेषं रमावत्॥ एवं विश्वादय आबन्ताः॥

न्यासः

सर्वनाम्नः स्याड्ढ्रस्वश्च। , ७।३।११४

याटोऽपवादः। आकारोच्चारणं सर्वस्या इत्यत्र यथा स्यात्(), अन्यथा पररूपत्वं प्रसज्येत। अकारोच्चारणसामर्थ्यान्न प्रसज्येत--इत्येतच्च नाशङ्कनीयम्(), तद्धि तस्यामित्यत्र "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" ६।१।१६५ इति विभक्त्युदात्तत्वं मा भूत्(), आगमानुदत्तत्वं यथा स्यादित्येवमर्थम्()॥

बाल-मनोरमा

सर्वनाम्नः स्याड्ढ्रस्वश्च २८९, ७।३।११४

सर्वनाम्नः स्याड्। "याडापः" इत्यत "आप" इति पञ्चम्यन्तमनुवृत्तं, तेन "सर्वनाम्न" इत्येतद्विशेष्यते। तदन्तविधिः। "घेर्ङिती"त्यतो ङितीत्यनुवृत्तं षष्ठ()आ विपरिणम्यते। ततश्च "आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्या"दित्यर्थः। टित्त्वादाद्यवयवः। "ह्यस्वश्चे"ति वाक्यान्तरम्। "आप" इत्यनुवृत्तमावर्तते। षष्ठ()न्ततया च विपरिणम्यते। तच्च "ह्यस्व" इत्यत्रान्वेति। "आप स्थाने ह्यस्वो भवती"ति तदर्थः। तदाह--आबन्तादिति। याटोऽपवाद इति। येन नाप्राप्तिन्यायादिति भावः। सर्वस्यै इति। सर्वा-ए इति स्थिते स्याट्। वकारोत्तराकारस्य ह्यस्वः, वृद्धिरिति भावः। सर्वस्या इति। ङसिङसोः सर्वा-अस इति स्थिते-स्याट्, आपो ह्यस्वः, सवर्णदीर्घ इति भावः। नन्वाबन्तस्य सर्वाशब्दस्य सर्वादिगणे पाठाऽभावात्कथं सर्वनामत्वमित्यत आह--एकादेश-स्येति। वकारादकारस्य आपश्च योऽयमेकादेशः सवर्णदीर्घः, तस्येत्यर्थः। नन्वेकादेशनिष्पन्नस्य आकारस्य पूर्वान्तत्वे आप्त्वाव्याघातादाबन्तत्वं व्याहतम्। न च परादिवत्त्वेन आबन्तत्वमपीति वाच्यम्, उभयत आश्रयणे नान्तादिवदिति निषेधादिति चेत्, सत्यम्-लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम्। आबन्तत्वं तु परादिवद्भावेनेत्याहुः। सर्वस्यामिति। ङौ सर्वा-इ इति स्थिते "ङेरा"मित्याम्। सुटं बाधित्वा परत्वात्स्याट्, ह्यस्वश्च। सकृद्गतिन्यायान्न पुनः सुट्। एवमिति। सर्वादिगणपठितावि()आआदय आबन्तत्वं प्राप्ताः सर्वाशब्दवदित्यर्थः। उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालम् उत्तरपूर्वा। "दिङ्नामन्यन्तराले" इति बहुव्रीहिविशेषोऽयम्।

तत्त्व-बोधिनी

सर्वनान्मः स्याड्ढ्रस्वश्च २५१, ७।३।११४

सर्वनाम्नः स्याट्। दीर्घोच्चारणं प्राग्वत्स्पष्टपर्तिपत्यर्थाम्। आबन्तस्य सर्वादिगणे पाठाऽभावात्सर्वनामत्वं

नेत्याशङ्क्याह---एकाजेशस्य पूर्वान्तत्वेनेति।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा द्वितीयातृतीयाभ्याम् ७।३।११५

द्वितीया तृतिया इत्येताभ्याम् उत्तरस्य ङितः प्रत्ययस्य विभाषा स्याटागमो भवति, द्वितीयातृतियायोश्च ह्रस्वो भवति। द्वितीयस्यै, द्वितियायै। तृतीयस्यै, तृतीयायै।

न्यासः

विभाषा द्वितीयातृतयाभ्याम्?। , ७।३।११५

असर्वनामार्थं वचनम्()। ये तु "वाप्रकरणे तीयस्य ङित्सूपसंख्यानम्()" (वा। ६) इति सर्वनामसंज्ञां तीयस्योपसञ्चक्षते त इदं सूत्रं प्रत्याचक्षते; तेनैव सिद्धत्वात्()। तच्चोपसंख्यानमवश्यं कत्र्तव्यम्(), स्मायादयो ङिति विकल्पेन यथा स्युरिति--द्वितीयस्मै, द्वितीयाय, द्वितीयस्मिन्(), द्वितीय इति। अन्ये त्वनेनैव स्मायादयः सिध्यन्तीत्युपसंख्यानमेव प्रत्याचक्षते। कथम्()? "सर्वनाम्नः" इत्येतदिहानुवत्र्तते, स्याडिति निवृत्तम्(), तेनैवमभिसम्बन्धः क्रियते--सर्वनाम्नो ङिति यदुक्तं तद्विभाष द्वितीयातृतीयाभ्यां भवतीति। तेन स्यायादयोऽपयनेनैव भविष्यन्तीति नार्थ उपसंख्यानेन॥

बाल-मनोरमा

विभाषा द्वितीयातृतीयाभ्याम् २९१, ७।३।११५

विभाषा। "घेर्ङिती"त्यतो ङितीत्युनुवृत्तं षष्ठ()आ विपरिणम्यते। "याडापः" इत्यत आप इति, "सर्वनाम्नः स्याट्" इत्यतः "स्या"ङिति, "ह्यस्व" इति चानुवर्तते। तदाह--आभ्यामित्यादिना। इदमिति। "विभाषा द्वितीयातृतीयाभ्या"मिति सूत्रं न कर्तव्यमित्यर्थः। कुत इत्यत आह--तीयस्येति। विभाषाप्रकरणे तीयप्रत्ययान्तस्य ङित्सु सर्वनामत्वोपसङ्ख्यानादित्यर्थः। नच तीयस्य ङित्सूपसङ्ख्यानमेव त्यज्यतामिति वाच्यं, पुंनपुंसकार्थं तस्यावश्यकत्वात्। अम्बार्थेति। व्याख्यातमिदं पुंसीदन्ताधिकारे। तत्र नदीविषये उदाह्यतम्, अम्बार्थानुदाहरति-हे अम्बेत्यादि। शेषं रमावत्। अत्र भाष्ये "डलकवतीनां प्रतिषेधो वक्तव्यः। हे अम्बाडे। हे अम्बाले। हे अम्बिके। तदिदं वार्तिकं न कर्तव्यमित्युक्त्वा "द्व्यच्कस्यैवाम्बार्थस्य ह्यस्व" इति स्थितम्। यथाश्रुतवार्तिके तु हे अल्लेत्यत्राऽव्याप्तिः स्यादिति तदाशयः।

तदत्र फलितमाह--असंयुक्ता इति। द्व्यच्कानामम्बार्थानां ह्यस्व इत्यस्याङ्गत्वात्तदन्तविधिः। अतो जगदम्बेत्यत्र द्व्यच्काम्बान्तत्वाद्भवति ह्यस्वः। जरेति। "जृ()ष् वयोहानौ"। "षिद्भिदादिभ्यः" इत्यङ। "ऋद्दशोऽङी"ति गुणः, रपरत्वम्। अदन्तत्वाट्टाप्, सुः, हल्ङ्यादिना सुलोप इति भावः। जरसाविति। जराया जरसन्यतरस्या"मिति अजादौ जरसादेश इति भावः। ननु शीभावे कृते सति आबन्तसन्निपातमुपजीव्य प्रवृत्तस्य तस्य सन्निपातपरिभाषया आबन्तत्वविधातकजरसादेशनिमित्तत्वाऽसम्भवेन जरसादेशाऽभावे आद्गुणे "जरे" इत्येव स्यादित्यत आह--शोभावादिति। जरसि कृते तु आबभावान्न शीभाव इति भावः। जरसः। जरसं जरसौ जरसः। टा-जरसा। न चात्र जरा आ इति स्थिते जरसादेशं बाधित्वा परत्वात् "आङि चापः" इत्येत्त्वेऽयादेशे जरयेत्येव युक्तमिति वाच्यम्, एकदेशविकृतन्यायेन कृतेऽप्येत्येव प्रवृत्तस्य जरसादेशस्य नित्यतया तस्याव प्रवृत्तेः, परान्नित्यस्य बलवत्त्वात्, आपः परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात्। ङसिङसोः-जरसाः। अत्रापि पूर्ववद्याट् न। जरसोः। एत्त्वं बाधित्वा नित्यत्वाज्जरम्। आमि-जरसाम्। नन्वामि नुटि कृत#ए अजादिविभक्त्यभावात्कथं जरसादेश इत्यत

आह--आमि नुट इति। ङौ जरसि। परमपि ङे रामं याटं च नित्य्त्वादन्तरङ्गत्वाच्च क्रमेण बाधित्वा जरस्। पक्षे हलादौ च रमावदिति। जरसादेशाऽभावपक्षे हलादावपि रमावदित्यर्थः।

मतान्तरं दूषयितुमनुवदति-इह पूर्वेत्यादिना। इह=जराशब्दे जरा औ इति स्थिते शीभावमाश्रित्य जरसी इति केचिदाहुरित्यन्वयः। आश्रित्येत्यनन्तरं-"जरसादेशे कृते" इति शेषः। ननु शीभावं बाधित्वा परत्वाज्जरसादेश एव युक्त इत्यत आह--पूर्वविप्रतिषेधेनेति। "विप्रतिषेधे पर"मित्यत्र परशब्दस्येष्टवाचितामाश्रित्य क्वचित्पूर्वस्य प्रवृत्त्याश्रयणेनेत्यर्थः। नन्वाबन्तसंनिपातमुपजीव्य प्रवृत्तस्य शीभावस्य संनिपातपरिभाषया आबन्तसंनिपातविघातकजरसादेशनिमित्तत्वं न सम्भवतीत्यत आह--संनिपातपरिभाषाया अनित्यतां चेति। तन्निर्मूलमिति। पूर्वविप्रतिषेधाश्रयणस्य भाष्यापरिगणितेष्वप्रवृत्तेः संनिपातपरिभाषायाः सर्वत्रानित्यत्वाश्रयणे प्रमाणाऽभावाच्चेति भावः।

स्यादेतत्। जरसौ, जरसामित्यत्र "औङ आपः" "ह्रस्वनद्यापो नु" डित्यपेक्षया परत्वादस्तु जरसादेशः। अस्तु च ङेङसिङस्सु जरसे जरस इत्यत्र याटमन्तरङ्गत्वात् बाधित्वा जरसादेशः, अस्तु च ङौ जरसीत्यत्र नित्यत्वादाममन्तरङ्गत्वाद्याटं च बाधित्वा जरसादेशः। तथापि तस्य=जरसादेशस्य स्थानिवत्त्वेन आबन्तत्वात्तमाश्रित्य एत्वशीभावयाड्नुडागमाः कुतो न स्युः। किञ्चाऽनेनैव न्यायेन नासिकाशब्दस्य निशाशब्दस्य पृतनाशब्दस्य च एत्वशीभावयाड्नुडागमान् बाधित्वा जरसादेशः। तथापि तस्य=जरसादेशस्य स्थानिवत्त्वेन आबन्तत्वात्तमाश्रित्य एत्वशीभावयाड्नुडागमा प्रसज्येरन्निति शङ्कते--यद्यपीत्यादिना। परिहरति--तथापीति। स्थानीभूताबन्ताश्रयविधय एते एत्वादिविधयः, अतस्तेषु कर्तव्येषु जरसाद्यादेशानां स्थानिवत्त्वं न सम्भवति, अनल्विधाविति तन्निषेधात्। ततश्च जरसाद्यादेशानामाबन्तत्वाऽलाभादेत्वादिविधियो न भवन्तीत्यर्थः। नन्वल्त्वव्याप्याऽकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिः, नतु यथाकथञ्चिदलाश्रयविधिरपि, रामायेत्यत्र "सुपि चे"ति दीर्घाऽभावप्रसङ्गात्। तत्र हि दीर्घो यञादिसुपि परतो विधीयते। यादेशस्य च सुप्त्वं स्थानिवत्त्वलभ्यम्। यादेशस्य च एकारोऽल् स्थानी। ततश्च दीर्घस्य स्वनिमित्तभूतसुप्त्वांशे तदाश्रयत्वादनल्विधाविति निषेधाद्दीर्घे कर्तव्ये यादेशस्य स्थानिवत्त्वाऽभावेन सुप्त्वाऽभावत्तस्मिन् परतो दीर्घो न स्यात्। अल्त्वब्याप्याऽकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिरित्याश्रयणे तु न दोषः। दीर्घो हि यादेशस्थानिभूतमेकारमेकारत्वेन नाश्रयति। किंतु सुप्त्वेनैव। सुप्त्वं चाल्त्वव्याप्यं न भवति, भ्यामादावपि सत्त्वात्। ततश्च दीर्घस्यानल्विधात्वात्तस्मिन् कर्तव्ये यादेशस्य स्थानिवत्त्वेन सुप्त्वसंभवाद्दीर्घो निर्बाधः। प्रकृते च एत्वादिविधयो जरसादेशस्थानीभूताबन्तत्वपुरस्कारेण संभवत्प्रवृत्तिकाः। आप्त्वं च समुदास्य धर्मः, नत्वाकारमात्रस्या। ततश्च एत्वादिविधीनामनल्विधित्वात्तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वेनाबन्तत्वं दुर्वारमित्याशङ्क्याह--आ आबित्यादिना। "आङि चापः" इत्यादिषु सवर्णदीर्घेण आ आबिति प्रश्लिष्य आकाररूपाबन्ताश्रयणेन एत्वादयो विधीयन्ते। ततश्च ते आकारत्वरूपेणाप्यापमाश्रयन्तीति तेषामल्विधित्वात्तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वादाबन्तत्वं न संभवति। ततश्च एत्वादिविधयोऽत्र न भवन्तीत्यर्थः। प्रसङ्गादाह--एवमिति। यथा "आङि चापः" इत्यादिषु आ-आबिति प्रश्लेषः, एवं "हल्ङ्याब्भ्यां" इत्यत्र ङी ई, आ आबिति सवर्णदीर्घेण प्रश्लेषाद्दीर्घग्रहणं प्रत्याख्येयमित्यन्वयः। ननु तत्र दीर्घग्रहणाऽभावे--"अतिखट्वः" "निष्कौशाम्बि"रित्यत्रापि सुलोपः स्यात्। तथाहि खट्वाशब्दष्टाबन्तः खट्वामतिक्रान्तोऽतिखट्वः। "अत्यादयः क्रान्ताद्यर्थे " इति समासः। कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी। "तेन निर्वृत्त मित्यण्। "टिड्ढाण"ञिति ङीप्। निष्क्रान्तः कौशाम्ब्याः-निष्कौशाम्बिः। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासः। उभयत्रापि "गोस्त्रियो"रिति आपो ङीपश्च ह्रस्वः, ततः सुबुत्पत्तिरिति स्थितिः। अत्र स्थानिवत्त्वेनाऽऽकाररूपाबन्तत्वस्य ईकाररूपव्यन्तत्वस्य चानपायात्सोर्हल्ङ्यादिलोपे प्राप्ते तन्निवृत्त्यर्थं दीर्घग्रहणमावश्यकमेवेत्यत आह--अतिखट्वो

निष्कौशाम्बिरित्यादिसिद्धेरिति। अयमाशयः-ङी ई, आ आबिति प्रश्लेषे सति आत्वरूपेण ईत्वरूपेण च ङ्यापावाश्रित्य सुलोपप्रवृत्तिर्वक्तव्या। ईत्वात्वयोश्च अल्त्वव्याप्यधर्मत्वात्तत्पुरस्कारेण प्रवर्तमानवलोपविधेरल्विधित्वान्न स्थानिवत्त्वेन ङ्याबन्तत्वमस्तीति न सुलोप इति। एवञ्च दीर्घग्रहणप्रयोजनस्य प्रश्लेषेणैव सिद्धत्वाद्धल्ङ्यादिसूत्रे दीर्घग्रहणं न कर्तव्यमित्यन्यत्र विस्तरः। स्यादेतत्। "याडापः" इत्यत्र "आ-आ"बिति प्रश्लेषे सत्यपि अतिखट्वायेत्यत्र याड् दुर्वारः। खट्वामतिक्रान्तोऽतिखट्वः। "अत्यादयः" इति समासे "गोस्त्रियो"रिति ह्रस्वत्वे रूपम्। ततो ङेर्यादेशे "सुपि चे"ति दीर्घे अतिखट्वायेति रूपम्। तत्र "याडापः" इति याट् स्यात्। दीर्घे सति स्थानिवत्त्वेनाऽऽकाररूपाप्त्वस्य सत्त्वात्। नचाकारत्वस्य अल्त्वव्याप्यधर्मत्वात्तत्पुरस्कारेण प्रवर्तमानयाड्विधेरल्विधित्वान्न दीर्घस्य स्थानिवत्त्वेनाऽऽकारत्वावच्छिन्नाप्त्वमिति वाच्यं, याड्विविधिर्हि आकाररूपाऽऽबाश्रयः। तत्र आकाररूपत्वं दीर्घस्य स्वत एव सिद्धमिति न तत्स्थानिवत्त्वलभ्यम्। किन्तु आप्त्वमेव स्थानिवत्त्वलभ्यम्। आप्त्वं च समुदायधर्म एव। नत्वल्त्वव्याप्यधर्मः। तेन रूपेण स्थान्यलाश्रयत्वेऽपि अल्विधित्वाऽभावाद्याड्विधौ स्थानिवत्त्वं दुर्वारमिति शङ्कामुद्भाव्यपरिहरति-न चेति। एवमपीति। "याडाप#ः" इत्यत्राऽऽकारप्रश्लेषे सत्यपीत्यर्थः।

स्वाश्रयमिति। स्वः आकार आश्रयो यस्याकारत्वस्य तत्स्वाश्रयम्। स्तवस्सिद्धमिति यावत्। एवमपीत्यारभ्य याट् स्यादित्यन्तः संदर्भः शङ्कापरः। इति च न वाच्यमित्यन्वयः। कुत इत्यत आह--आबन्तं यदङ्गमिति। "याडपः" इत्यत्र हि आब्ग्रहणेन प्रत्ययग्रहणपरिभाषया आबन्तं गृह्नते। अङ्गस्येति तद्विशेषणं भवति। ततश्चाबन्तादङ्गात्परस्य ङितो याड्विधीयते। यस्माच्छब्दाद्यः प्रत्ययो विहितस्तादृशप्रकृतिभूतशब्दरूपाद्यवयवकस्य तत्प्रत्ययरूपान्तावयवकस्य समुदायस्य ग्रहणमिति परभाषार्थः। प्रत्ययग्रहणे प्रकृतिप्रत्ययसमुदायस्य ग्रहणमिति पर्यवसन्नार्थः। प्रकृते चातिखट्वायेत्यत्र खट्वशब्दाददन्ताट्टाब्विधानात्खट्वेत्येव टाबन्तम्। तत्तु ङितं विभकिं()त प्रति नाङ्गम्, अतिखट्वशब्दादेव ङितो विधानात्। यत्त्वमङ्गनतिखट्वेति, न तट्टाबन्तमतः स्थानिवत्त्वेन आप्त्वे सत्यपि न याडिति भावः। ननु "ष्यङः सम्प्रसारण"मित्यत्र भाष्ये "स्त्रीप्रत्यये चानुपसर्जने ने"त्युपसर्जनादन्यत्रैव तदादिनियमनिषेधस्योक्ततया तदन्ते गृहीते तेनाङ्गस्य विशेषणादाबन्तान्तं यदङ्गमित्यर्थादतिखट्वायेत्यत्र स दोषस्तदवस्थ इति वाच्यम्, अङ्गस्य विशेषणत्वाश्रयणात्। अत एव "ङ्याब्ग्रहणे अदीर्घ आदेशो न स्थानिव"दिति वार्तिककारमतं ह्रस्वे फलाऽभावेन स्थानिवद्भावाऽप्रसक्त्या कथं तत्स्थानिके दीर्घे तल्लाभ इति भाष्यकारेण दूषितम्। अथ नासिकाशब्दे विशेषमाह--पद्दन्निति। शसि-नसः। टा-नसा। नोभ्यामित्यादीति। नस्--भ्यामित्यत्र "स्वादिषु" इति पदत्वे "ससजुषो रुः" इति रुत्वे "हशि चे"त्युत्वे गुणे नोभ्यां नोभिरित्यादि रूपमित्यर्थः। नस्सु। पक्षे इति। शसादौ नशादेशाऽभावपक्षे इत्यर्थः। अथ निशाशब्दे विशेषं दर्शयति-निशाया निशिति। "शसादौ "पद्दन्नो" इत्यनेने"ति शेषः। निश्-भ्यामिति स्थिते।

तत्त्व-बोधिनी

विभाषा द्वितीयतृतीयाभ्याम् २५३, ७।३।११५

त्यक्तुं शक्यमिति। न चाबन्तस्य द्वितीयादिशब्दस्य तीयप्रत्ययान्तत्वाऽभावाद्विभाषा द्वितीयेति सूत्रमावश्यकमिति शङ्क्यम्, एकादेशस्य पूर्वान्तस्य द्वितीयादिशब्दस्य तीयप्रत्ययान्तात्वाऽभावाद्विभाषा द्वितीयेति सूत्रमावश्यकमिति शङ्क्यम्, एकादेशस्य पूर्वान्तत्वेन ग्रहणादाबन्तस्यापि तीयप्रत्ययान्तत्वात्। तीयस्येति। पुनंपुंसकार्थमवश्यं वक्तव्येनाऽनेनैव सिद्धौ "विभाषाद्वितीये"ति सूत्रं न कर्तव्यमिति भावः।

"अम्बार्थनद्योर्ह्रस्वः"। अत्र "अम्बार्थं द्व्यक्षरं यदी"तचि वचनात् द्व्यच्कस्यैवाऽम्बार्थस्य ह्रस्वो भवति नान्येषामित्याशयेन फलितमाह--

असंयुक्ता ये डलकास्तद्वतां ह्यस्वो न।-असंयुक्ता ये डलका इत्यादि। जरेति। "जृ()ष् वयोहाना"वित्यास्मात्षिद्भिदादिभ्य इत्यादि "ऋद्दशोऽङी"ति गुणे कृते टाप्। शीभावात्परत्वाज्जरसित्यादि। नु "औङ् आपः" "ह्यस्वनद्यापो नु"डित्यापेक्ष्या "जराया"इति सूत्रस्य परत्वादस्त्वेवं, परन्तु "आहि चापः""याडापः""ङेरा"मिति विधयो जरसादेशं बाधित्वा परत्वात्स्युरिति चेदत्राहुः,--"आहि चापः"इत्येकारादेशे कृतेऽप्येकदेशविकृतन्यायेन "जरायाः"इति जरसादेशप्रसक्त्या नित्यत्वादेकारादेशं बाधित्वा जरसादेश एव भवति। न चैकारादेशोऽपि नित्यएव, जरसादेशे कृतेऽपि स्थानिवत्त्वेनाबन्तत्वादङि चाप इति पर्वृत्तिरिति वाच्यम्, "आकारारूपस्यैवापः सर्वत्र ग्रहणा "दित्यनुपदमेव वक्ष्यमाणत्वात्तदप्रवृत्तेः। "याडपः"इति याडगमं तु जरसादेशोऽन्तरङ्गत्वाब्दाधते। आकाररूपादापः परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात्। ङेराममपि जरसादेशो नित्यत्वाब्दाधते। न चाकाररूपाबन्तात्परस्य ङेरामि कृते संनिपातपरिभाषया जरसादेशस्याऽप्रवृत्तेर्न तस्य नित्यतेति वाच्यम्, रूपमालायां "जरसी"इत्युक्तत्वादिष्टानुरोधेनोक्तपरिभाषाया अनित्यत्वाभ्युपगमे बाधकाऽभावादिति। स्वाश्रयमिति। यत्रादिसुबाश्रयं। तन्निमित्तकमित्यर्थः। यत्रादिसुप एव याडादमापादनात्स्वशब्देन तत्परामृश्यते। स्थानिवद्भानेवेति। न चैवं लक्षणिकत्वात्कथमिह याट् ल स्यादिति वाच्यम्, अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तावतिदेशस्य वैयथ्र्यापत्तेः। अतो व्याचष्टे आबन्तं यदङ्गमिति। "यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहण"मिति नियमादतिखट्वेति यदङ्गं तदाबन्तं न भवति, यच्चाबन्तं "खट्वे"ति, तदङ्गं न भवतीति नात्र #आडादमप्रसक्तिरिति भावः। अत्र नव्याः--प्रत्ययग्रहणे तदन्तग्रहण"मित्याब्ग्रहणेनाबन्तं गृह्नते। अबन्तस्याङ्गविशेषणे त्वाबन्तान्तग्रहणदतिखट्वायेत्यत्रोक्तदोषतादवस्थमिति यद्युच्यते, तह्र्रङ्गेनाबन्तं विशेष्यताम्---"अङ्गसंज्ञकं यदाबन्त"मिति, तथै च नोक्तातिप्रसङ्गशङ्कालेश इत्याहुः। स्त्रीप्रत्यये तदादिनियमो नेत्याशङ्क्याह--उपसर्जमेति। अयं भावः--"स्त्रीप्रत्यये चानुपलर्जने ने"त्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमप्रतिषेधो वक्ष्यते न तूपसर्जनेऽपि। अतएव परमकारीषगन्धपुत्रवदतिकारीषगन्ध्यपुत्र इत्यत्र "ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे"इति संप्रसारणं न भवति। अतिकारीषगन्ध्यस्य हि ष्यहन्तत्वाऽभावात्। न च "बहुश्रेयसी"--त्यत्र "श्रेयसी"त्युत्तरभागस्य ङ्यन्तत्वाद्य था हल्ङ्यादिलोपः प्रवर्तते तथा तत्राप्युत्तरभागस्य ष्यङन्तत्वात्संप्रसारणं स्यादेवेति शङ्क्यं, पूर्वपदस्य ष्यङन्तस्य पुत्रपत्योरुत्तचरपदयोः संप्रसारणमिति "ष्यङः संप्रसारण"मित्यत्रैव वक्ष्यमाणत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

ङेराम् नद्याम्नीभ्यः ७।३।११६

नद्यन्ताताबन्तात् नी इत्येतस्माच् च उत्तरस्य ङेः आम् आदेशो भवति। कुमार्याम्। गौर्याम्। ब्रह्मबन्ध्वाम्। धीबन्ध्वाम्। आपः खट्वायाम्। बहुराजायाम्। कारीषगन्ध्यायाम्। नी राजन्याम्। सेनान्याम्।

न्यासः

ङेराम्नद्याम्नीभ्यः। , ७।३।११६

"ङेः" इति सप्तम्येकवचनस्य ग्रहणम्()। एतच्च "स्त्रियाम्()" इत्येवमादिनिर्देशाद्धि ज्ञायते। "ग्रामण्याम्()" इति। ग्रामं नयतीति "सत्सूद्विष" ३।२।६१ इत्यादिना क्विप्(), "अग्रग्रामाभ्याञ्च" इति णत्वम्()। "एरनेकाचः" ६।४।७२ इति यणादेशः। अथ कुमार्याम्(), खट्वायाम्(), सर्वस्यामिति कथं सिध्यति, आमि कृते "ह्यस्वनद्यापो नुट्()" (७।१।५४) इति नुडागमेन भवितव्यम्()? नैष दोषः; नुटः परत्वादाट्()--याट्()--स्याटो भवन्ति। तेष कृतेषु नुटः प्राप्तिरेव नास्तीति, न हि द्वयोरादिलिङ्गयोः समुच्चय उपपद्यते॥

बाल-मनोरमा

ङेराम्नद्याम्नीभ्यः २६८, ७।३।११६

ङेराम्नद्याम्नीभ्यः। आङ्गत्वात्प्रत्ययग्रहणपरिभाषया च तदन्तविधिमभिप्रेत्य आह--नद्यन्तादित्यादिना। "ङे"रिति सप्तम्येकवचनं, व्याख्यानात्। नन्वामि कृते "ह्रस्वनद्यापः" इति नुटि "यदागमाः" इति न्यायेन नामोऽप्याम्ग्रहणेन ग्रहणात् "आण्नद्या" इति आडागमः स्यादित्याशङ्क्य आह--इह परत्वादिति। न च कृतेऽप्याडागमे नुट् किं न स्यादिति वाच्यं, विप्रतिषेधेन यद्बाधितं तद्बाधितमेवे"ति न्यायादिति भावः। शेषमीप्रत्ययान्तेति। वातप्रमीशब्दस्यापि इवर्णान्तधातुत्वाऽभावेन अमि शसि ङौ च "एरनेकाचः" इति यणः प्रात्प्यभावादिति भावः। लक्षेर्मुट् चे"ति लक्षधातोरीप्रत्यये तस्य मुटि च लक्ष्मीशब्दः। लक्ष्मीमतिक्रान्त इति विग्रहे "अत्यादयः क्रान्ताद्यर्थे" इति समासः। अस्त्रीप्रत्ययान्तत्वान्नोपसर्जनह्रस्वः। अङ्यन्तत्वादिति। औणादिकप्रत्ययान्तत्वादिति बावः। शेषं बहुश्रेयसीवदिति। "प्रथमलिङ्गग्रहणं चे"ति नदीत्वादिति भावः। अथ धातुत्वमापन्ने कुमारीशब्दे पुँल्लिङ्गे श्रेयसीशब्दाद्वैलक्षण्यं दर्शयितुमाह-कुमारीमिच्छन्नित्यादिना। क्यजन्तादिति। कुमारीमात्मन इच्छतीत्यर्थे "सुपः आत्मनः क्य"जिति क्यच्। कचावितौ। "सन#आद्यन्ता" इति क्यजन्तस्य धातुत्वात्तदवयवसुपोऽमः "सुपो धातुप्रातिपदिकयो"रिति लुक्। ततः क्विप् चे"ति कर्तरि क्विप्। कपावितौ। इकार उच्चारणार्थः। "अतो लोपः,""लोपो व्योः" इति यलोपः। वेरपृक्तस्ये"ति वलोपः। "कुमारी"ति रूपम्। आचारक्विबन्तादिति। कुमारीवाचरतीत्यर्थे "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विप्। कपावितौ। "वेरपृक्तस्ये"ति वलोपः। "सनाद्यन्ताः" इति धातुत्वात्कर्तरि क्विप्। तस्य च पूर्वत्कृत्स्नलोपः। "कुमारीति"रूपम्। नच क्विबर्थं प्रति कुमारीशब्दस्य उपसर्जनत्वात् "गोस्त्रियोः" इति ह्रस्वः शङ्क्यः, "गोस्त्रियो"रित्यत्र शास्त्रीयोपसर्जनस्यैव ग्रहणात्, कृत्रिमाऽकृत्रिमयोः कृत्रिमस्यैव ग्रहणात्। हल्ङ्याबिति सुलोप इति। नच क्यजन्ते कथं सोर्लोपः, पूर्वस्माद्विधावल्लोपस्यस्थानिवद्भावादिति वाच्यं, "क्वौ लुप्तं न स्थानिव"दिति निषेधादिति भावः।

तत्त्व-बोधिनी

ङेराम्नद्याम्नीभ्यः २३०, ७।३।११६

ङेराम्। "ङे"रिति सप्तम्येकवचनस्य ग्रहणं, "समानाधिकरणे" "स्त्रिया"मित्यादिनिर्देशात्। आटा नुड्बाध्यत इति। आटि कृते तु पुनर्न पर्वर्तते। "सकृद्गतौ"इति न्यायाश्रयणादिति भावः। न सुलोप इति। "लक्षेर्मुट् चे"त्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्द इत्युपसर्जनह्रस्वोऽपि नेति बोध्यम्। कुमारीति। यद्यपि क्किबर्थं प्रति ङ्यन्तस्योपसर्जनरत्वाद्ध्रस्तत्वं प्राप्तं,तथापि "गोस्त्रियोः"इत्यत्र कृत्रिमोपसर्जनत्वं गृह्यते न त्वप्रधानरूपमिति नात्र ह्रस्वः प्रवर्तते। अतएव हरीतक्याः फलानि हरीतक्य इत्यत्रापि ह्रस्वो न भवति। "लुक्तद्धितलुकी"त्यत्र त्वप्रधानरूपमुपसर्जनमेव गृह्यते, नतु कृत्रिमोपसर्जनमसम्भवादिति वक्ष्यामः।

---

सूत्रम्

काशिका-वृत्तिः

इदुद्भ्याम् ७।३।११७

इकारोकाराभ्यां नदीसंज्ञकाभ्याम् उत्तरस्य ङेः आम् आदेशो भवति। कृत्याम्। धेन्वाम्।

लघु-सिद्धान्त-कौमुदी

ङेराम्नद्याम्नीभ्यः १९९, ७।३।११७

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम्। बहुश्रेयस्याम्। शेषं पपीवत्॥ अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्॥ प्रधीः॥

लघु-सिद्धान्त-कौमुदी

इदुद्भ्याम् २२४, ७।३।११७

इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम्। मत्याम्, मतौ। शेषं हरिवत्॥ एवं बुद्ध्यादयः॥

न्यासः

इदुद्भ्याम्?। , ७।३।११७

नदीग्रहणमिहनुवत्र्तते। तेन चेदुतौ विशिष्यतेते नदीसंककौ यादिदुताविति। यद्येवम्(), अनर्थकमिदम्(), पूर्वेणैव सिद्धत्वात्()? नैतदस्ति; औकरो हि परत्वदुत्तरसूत्रेण स्यात्(), अ()स्मश्च सत्यामेव भवति॥

बाल-मनोरमा

इदुद्भ्याम् २९५, ७।३।११७

इदुद्भ्याम्। "ङेराम्" इति सूत्रान्नदीग्रहणं ङेरामिति चानुवर्तते। तदाह--नदीसंज्ञकाभ्यामित्यादिना। पक्षे इति। नदीत्वाऽभावपक्षे "अच्च घेः" इत्यत्वसंनियोगशिष्टमौत्वमित्यर्थः। मत्यां मताविति। नदीत्वे तदभावे च रूपम्। मत्यामित्यत्र संनिपातपरिभाषाया अनित्यत्वाद्यण्। एवं श्रुत्यादय इति। आदिना स्मृत्यादिसग्रहः।

तत्त्व-बोधिनी

इदुद्भ्याम् २५७, ७।३।११७

औत्त्वे प्राप्ते इति। "ङेरा"मित्यपेक्षया परत्वादिति भावः। प्राचा तु "औ"दिति सूत्रे "इदुभ्याम्"च्च घे"रिति पूर्वोत्तरसूत्रद्वयबललभ्यार्थमुपादाय "घिनदीसंज्ञावर्जिताभ्या"मिति व्याख्यातम्। "इदुभ्या"मिति सूत्रं च नोपन्यस्तमित्यसमञ्जसमेतत्।

---

सूत्रम्

काशिका-वृत्तिः

औत् ७।३।११८

इदुद्भ्याम् उत्तरस्य ङेः औकारादेशो भवति। यन् न नदिसंज्ञं न अपि घिसंज्ञम् इकारान्तम् , तदिह उदाहरणम्। सख्यौ। पत्यौ।

काशिका-वृत्तिः

अच् च घेः ७।३।११९

औतिति वर्तते। घिसंज्ञकादुत्तरस्य ङेः औकारादेशो भवति, तस्य च घेः अकारादेशो भवति। अग्नौ। वायौ कृतौ। धेनौ। पटौ। अतिति तपरकरणं स्त्रियां टापो निव्र्त्त्यर्थम्। औदच्च घेः इति येषाम् एकम् एव इदं सूत्रम्, ते प्रधानशिष्टम् इदुद्भ्याम् औत्त्वं वर्णयन्ति, अन्वाचयशिष्तं घेः अकारम् इति।

लघु-सिद्धान्त-कौमुदी

औत् १८४, ७।३।११८

इतः परस्य ङेरौत्। सख्यौ। शेषं हरिवत्॥

लघु-सिद्धान्त-कौमुदी

अच्च घेः १७४, ७।३।११८

इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च। हरौ। हरिषु। एवं कव्यादयः॥

न्यासः

औत्?। , ७।३।११८

नदीसंज्ञकात्? परस्य ङेराम्? पूर्वेण विहितः, घिसंज्ञकादुत्तरेणात्त्वसन्नियुक्तमौकारं वक्ष्यति, तस्मात्? पारिशेष्यात्? ताभ्यां यदन्यदिकारोरान्तं तदिहोदाहरणं विज्ञायत इत्याह--"यग्न नदीसंज्ञम्()" इत्यादि। अत्र च सखिपतिशब्दावस्त्र्याख्यात्वान्नदीसंज्ञकावपि न भवतः। घखिसंज्ञको यथा न भवतस्तथा पूर्वमेव प्रतिपादितम्()॥

न्यासः

अच्च घेः। , ७।३।११८

अथात्त्वे कृते "अजाद्यतष्टाप्()" ४।१।४ इति--कृतौ, धेनादित्येवमादौ टाप्? कस्मान्न भवति? इत्याह--"अदिति तपरकरम्()" इत्यादि। यस्मात्? तपरकरणं टाब्निवृत्तयर्थं क्रियते, तस्मात्? कृतेऽप्यत्त्वे टाब्न भवतीति भावः। तपरकरणं हि तत्कालावधारणार्थम्()। न चात्र भाव्यमानत्वादणो मात्रिकत्वाच्च स्थानिनो दीर्घत्वस्य प्राप्तिरस्ति। अतोऽन्येनापि हेतुना यद्दोर्घत्वमापद्यते तत्प्रतिषेधार्थमुपजायमानं तट्टापोऽभावमापादयति। टापि हि सत्यकः सवर्णे ६।१।९७ दीर्घत्वं स्यात्()। तथा चानर्थकं तपरकरणं स्यात्()। तस्मान्मा भूदनर्थकमिति कृतेऽप्यत्त्वे टापा न भवितव्यमिति। "औदच्च धेरिति येषाम्()" इत्यादि। इह केचित्? "औदच्च र्घेः" इत्येकं योगं कुर्वन्ति; तथा च सत्यौत्त्वात्त्वयोः सन्नियोगशिष्टत्वाद्यत्रात्त्वं तत्रैवोत्त्वेन भवितव्यम्()। घेश्चात्त्वमिति सख्यौ, पत्यावित्यत्रात्त्वाभावादौत्त्वमपि न स्यात्()। अतस्तस्य दोषस्य परीहाराय येषामेक एवायं योगस्ते प्रधानशिष्टमौत्त्वमाचक्षते। यथा "कर्त्तुः क्यङ्? सलोपश्च" ३।१।११ इत्यत्र प्रधानशिष्टमाचक्षते क्यङम्(), अक्षवाचयशिष्टं सलोपम्()। यथा तत्रैव--तत्रासत्यपि सलोपे यथा क्यङ्? भवति श्येनायते--इत्यादौ; एवमसत्यप्यत्त्वे सख्यौ, पत्यावित्यत्रौत्त्वं भवतीति तेषामभिप्रायः॥

बाल-मनोरमा

औत् २५४, ७।३।११८

ङौ सखि इ इति स्थिते घित्वाभावात् "अच्च घे"रित्यस्याऽप्रवृत्या सवर्णदीर्घे प्राप्ते-औत्। "इदुद्भ्यामि"ति सूत्रमनुवर्तते। "ङेरा"मित्यतो "ङे"रिति च, तदाह--इदुद्भ्यामित्यादिना। ननु घिसंज्ञकेषु हरिकव्यादिषु "अच्च घेः" इति प्रवर्तते, नदीसंज्ञकेषु तु "इदुद्भ्या"मिति पूर्वसूत्रं प्रवर्तते, अतः सूत्रद्वयविषयादन्यौ सखिपतिशब्दौ एवास्य सूत्रस्य विषय इति व्यक्तम्, एवं च उकारानुवृत्तिव्र्यर्थेत्यत आह--उकारेति। उकारानुवृत्तिः "अच्च घेः" इत्युत्तरसूत्रेऽनुवृत्त्यर्थेत्यर्थः। सख्यौ इति। ङेरौत्त्वे यणि रूपमिति भावः। सुसखेति। प्रादिसमासः। "राजाहः सखिभ्यष्ट"जिति टच् तु न भवति, "न पूजना"दिति निषेधात्। "अनङ् सौ" उपधादीर्घः, हल्ङ्यादिलोपः, "न लोपः" इति नकारलोप इति भावः।

सुसखायौ सुसखाय इति। णिद्वद्भावः, वृद्धिः। आयादेश इति भावः। नन्वनङ्णिद्वत्त्वे सखिशब्दस्य विधीयमाने कथं सुसखिशब्दे स्यातामित्यत आह--अनङित्यादि। अङ्गाधिकारस्थतया "पदाङ्गाधिकारे" इति परिभाषया सखिशब्दान्तेऽपि प्रवृत्तिरित्यर्थः। नन्वेवं सति सुसखिशब्दे असखीति पर्युदासाद्धित्वाऽभावे नात्वादि न स्यादित्यत

आह--समुदायस्येति। नच सुसखिशब्दस्य सखिशब्दरूपत्वाऽभावेऽपि सखिशब्दान्तत्वादीसिखतपर्युदासोऽपि दुर्निवार इति वाच्यं। "शेषो घ्यसखी"त्यस्य पदाङ्गाधिकारस्थत्वादिति बावः। सुसखिनेति। घित्वान्नात्वे रूपम्। सुसखये इति। "घेर्ङिती"ति गुणेऽयादेशः। ङसीति। ङसिङसोर्घेर्ङिति इति गुणे कृते "ख्यात्या"दित्युत्त्वं नेत्यन्वयः। कुत इत्यत आह-कृतयणादेशत्वाभावादिति। "ख्यत्या"दित्यत्र कृतयणादेशनिर्देशेन यत्र यणादेशप्रवृत्तिस्तत्रैवोत्त्वप्रवृत्तेरिति भावः। सुसखेरिति। ङसिङसोरेतद्रूपम्। सुसखाविति। "अच्च घेः" इत्यौत्त्वम्। एवमिति। सुसखिशब्दवदित्यर्थः। अतिसखेति। प्रादिसमासः, "न पूजाना"दिति न टच्।

वस्तुतस्तु उदाह्मते सुसखिशब्देऽतिसखिशब्दे च घिसंज्ञा न भवत्येव। "शेषो घ्यसखी"त्यत्र हि असखीति शेष विशेषणम्। तदन्तविधिः। सखिशब्दान्तभिन्नः शे,#ओ घिसंज्ञक इति लभ्यते। अत एव "यस्येति चे"ति सूत्रे इकारे परत इकारलोपे किमुदाहरणम्?। सखीत्यत्र "सख्यशि()आईति भाषाया"मिति ङीषि इकारलोपः। न च सवर्णदीर्घेण निर्वाहः सङ्क्यः। सखीमतिक्रान्तोऽतिसखिः। प्रादिसमासः। "गोस्त्रियोः" इति ह्यस्वः। "अतिसखेरागच्छती"त्यत्र इकारलोपाऽभावात्सवर्णदीर्घे तस्य एकादेशस्य पूर्वान्ततया सखिग्रहणेन ग्रहणादसखीति पर्यादासे घिसंज्ञाप्रतिषेधापत्तेः। इकारलोपे तु सति ङीषो ह्यस्वत्वे कृते नायं सखिशब्दः। ङीषस्तदवयवत्वाऽभावादिति भाष्यं सङ्गच्छते इति शब्देन्दुशेखरे प्रपञ्चितम्। परमसखेति। बहुव्रीहित्वात्तत्पुरुषत्वाऽभावान्न टच्। ननु बहुव्रीहौ सखिशब्दस्य गौणत्वात्कथ मनङ्णित्त्वे, "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति न्यायादित्यत आह--गौणत्वेऽपीति। "मिदचोऽन्त्या"दिति सूत्रे "तृज्वत् क्रोष्टुः" "स्त्रियां चे"ति भाष्यकैयटयोस्तथा दृष्टत्वादिति भावः। अतिसखिरिति। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। "गोस्त्रियोः" इति ह्यस्वः। "राजाहःसखिभ्यष्ट"जिति टच् तु न भवति, तस्मिन् कर्तव्ये ह्यस्वस्य बह्वपेक्षतया बहिरङ्गतयाऽसिद्धत्वेन ईकारान्तत्वात्। नन्वेवमपि "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण"मिति परिभाषया सखीशब्दान्तादपि टच्स्यादित्याशङ्क्य आह--लिङ्गविशिष्टेति। "शक्तिलाङ्गलाङ्कुशे"ति वार्तिके घटघटीग्रहणात्तस्या अनित्यत्वमिति भावः। ननु हरिवदिति कथम्, अनङ्णिद्वद्भावयोः प्रवृत्तौ रूपभेदादित्यत आह-इहेति। कुतो न भवति इत्यत आह--गोस्त्रियोरिति। लाक्षणिकत्वादिति। लक्षणं=शास्त्रं। तत्र भव इत्यर्थे "बह्वचोऽन्तोदात्ता"दिति वा अध्यात्मादित्वाद्वा ठञ्। अतिसखिशब्दस्वरूपस्य सामान्यतश्शास्त्रीदुन्नेयत्वादिति यावत्। सखिशब्दस्तु नैवम्। समानं ख्यायते जनैरित्यर्थे इणिति ङिच्चेति यलोप इति चानुवर्तमाने "समाने ख्यः स चोदात्तः" इति ख्याधातोरिणश्च विशि,()योपादानेन व्युत्पादितत्वेन तस्य प्रतिपदोक्तत्वादिति भावः। ननु लाक्षणिकस्यापि ग्रहणं कुतो नेत्यत आह--लक्षणेति। लक्षणशब्देन लाक्षणिकं विवक्षितम्। विशिष्य प्रत्यक्षोपदिष्टं प्रतिपदोक्तमित्युच्यते तयोर्मध्ये प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषितत्वादित्यर्थः। प्रतिपदोक्तं=झटित्युपस्थितम्। लाक्षणिकं तु लक्षणानुसन्धानाद्विलम्बितोपस्थितिकम्। प्रतिपदोक्तमादाय शास्त्रस्य चरितार्थत्वान्न लाक्षणिके प्रवृत्तिरिति न्यायसिद्धा चेयं परिभाषा।

बाल-मनोरमा

अच्च घेः २४५, ७।३।११८

"हरि इ" इति स्थिते "घेर्ङिती"ति गुणे प्राप्ते--अच्च घेः। ङेराम्नि"त्यतो "ङे"रित्यनुवर्तते। "इदुद्भ्या"मिति "औ"दिति च सूत्रमनुवर्तते। तदाह--इदुद्भ्यामिति। अन्तादेश इति। अलोऽन्त्यपरिभाषालभ्यमेतत्। वृद्धिरिति। हर-औ इति स्थिते वृद्धिरेची"ति वृद्धौ, हरौ इति रूपमित्यर्थः। हरिष्विति। "आदेशप्रत्यययो"रिति षत्वम्। अथ सखिशब्दात्सुः। सखि-स् इति स्थिते।

तत्त्व-बोधिनी

औत् २१५, ७।३।११८

आत्। एतच्च सूत्रं नदीसंज्ञकेषु "इदुभ्द्या"मिति पूर्वसूत्रेण बाध्यते। घिसंज्ञकेषु "अच्च घे"रिति उत्तरसूत्रेण। तस्मात्संज्ञाद्वयशून्योऽस्य विषयः। न च तादृश उकारोऽस्तीत्यत आह-उकारनुवृत्तिरिति। प्राचा तु "घिनदीसंज्ञावर्जिताभ्यामिदुभ्द्यां परस्ये"त्युक्तम्()। तदसत्। तादृसत्। तादृशस्योरकारस्याप्रसिद्धेः। सुसखेति। प्रादिसमासे "राजाहः सखिभ्या"इति टचो "न पूजना"दिति निषेधः। "शेषो ध्यसखी"इत्यत्राऽसखीति नायं प्रसज्यप्रतिषधः, असमर्थसमासादिदोषापत्तेः, किं तु पर्युदास एवेति "सुसखी"त्यस्य सखिशब्दभिन्नत्वाद्घिसंज्ञा स्यादेव। न च समुदायस्य सखिशब्दभिन्नत्वेऽपि सखिशब्दान्तभिन्नत्वं नेति कथमसखीति निषेधाऽपर्वृत्तिरिति शङ्क्यम्। विशेष्याऽसंनिधानादसखीत्यत्र "येन विधिस्तदन्तस्ये"त्यस्याऽप्रवृत्तेः। तदेतत्साकलभिग्रेत्याह--समुदायस्येत्यादि। एवमतिसखेत्यत्रापि समासान्तनिषेधादिकं बोध्यम्। गौणत्वेऽपीति। "अतिदन्धे"त्यादावस्थ्याद्यनङ्वदिति भावः। तथा च "येन विधि"रिति सूत्रे "परमसखाया"विति बहुर्वीहिः, तत्पुरुषे हि टचा भाव्यमिति कैथटः। तथा "द्वितीया श्रिते"ति सूत्रे "सोमसखे"ति प्रतीकमुपादाय बहुव्रीहित्वान्न सम#आसान्त इति स एवाह। "अनुयुक्षोवरुण इन्द्रसखा," "अग्ने याहि मरुत्सखा", "तीव्रं सोमं पिबति गोसखाय"मित्यादिप्रयोगाश्चैवमेव सङ्गच्छन्ते। तत्र [तु] बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात्। एतेन घिसंज्ञासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरन्तौ हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः। अनित्यत्वादिति। "शक्तिलाङ्गलाङ्कुशे"ति वार्तिके घटघटीग्रहणमत्र लिङ्गम्।

तत्त्व-बोधिनी

अच्च घेः २०६, ७।३।११८

अच्च घेः। अत्र"इदुद्भ्याम्", "औ"दिति "ङेरा"मित्यतो "ङे"रिति च पदत्रयमनुवर्तत इत्याशयेन व्याचष्टे-इदुद्भ्यां परस्य ङेरौत्स्यादिति। "घेरुत्तरस्ये"ति प्राचां व्याख्यानमिह तु नोक्तम्। सूत्रे "घे"रित्यस्य षष्ठ()न्तत्वात्, तन्त्रावृत्यादौ च प्रमाणाऽभावात्। "ओ"दिति पूर्वसूत्रे "इदुभ्द्यामुत्तरस्य ङे"रिति क्लृप्तम्बन्धस्य त्यागाऽयोगाच्च। यत्तु व्याचख्युः--"अ"दिति तपरत्वं "बुद्धा" वित्यादावत्त्वे कृते स्त्रियां टाब्मा भूदित्येतदर्थमिति;। तच्चिन्त्यम्। तपरग्रहणाद्धि टापा सह दीर्घो मा भूट्टाप्तु स्यादेव, लक्षणद्वयबाधे मानाऽभाबात्। अतएव "कृन्मजन्त"इति सूत्रे भाष्यादौ संनिपातपरिभाषया "पद्धता"वित्यत्र टान्मेत्युक्तम्, टापा व्यवधाने ह्यानन्तर्यविघातः स्यादिति। तपकरणाट्टबभावे तु संनिपातपरिभाषेपन्यासस्तत्र विरुध्यते। यदपि व्याचख्युः--"औतस्तकारः स्परितार्थ"इति, तदपि न। "स्तीर्णे बर्हिषि समिधाने अग्नौ" इत्यादौ स्वरितत्वाऽदर्शनात्। "न विभक्तौ इति सूत्रे ङे रौतस्तु तकार उच्चारणार्थो नेत्संज्ञक इति स्वयमेव उक्तत्वाच्च। तस्मादुभयत्र तपरकरणमुच्चारणार्थमेवेति मनोरमायां स्थितम्।"

---

सूत्रम्

काशिका-वृत्तिः

आङो ना ऽस्त्रियाम् ७।३।१२०

घेः उत्तरस्य आङः न अभावो भवति अस्त्रियाम्। अग्निना। वायुना। पटुना। पुंसि इति नोक्तम्, अमुना ब्राह्मणकुलेन। अस्त्रियाम् इति किम्? कृत्या। धेन्वा। इति काशिकायां वृत्तौ सप्तमाध्यायस्य तृतीयः पादः। । सप्तमाध्यायस्य चतुर्थः पादः।

लघु-सिद्धान्त-कौमुदी

आङो नास्त्रियाम् १७१, ७।३।११९

घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा। हरिणा। हरिभ्याम्। हरिभिः॥

न्यासः

आङो नाऽस्त्रियाम्?। , ७।३।११९

आङ इति स्थान्यन्तरनिर्देशादिहार्थाद्विभक्तिविपरिणामो भवतीति षष्ठ()न्तं यद्घेरिति प्रकृतं तदिह पञ्चम्यन्तमुपजायत इत्याह--"घेरुत्तरस्य" इत्यादि। अथ किमरथम्? "अस्त्रियाम्()" इत्युच्यते, "आङो ना पुंसि" इत्येवोच्येत; एवमुच्यमाने त्रपुणा जतुनेत्येतन्न सिध्यतीत्येतच्च नाशङ्कनीयम्(); "इकोऽचि विभक्तौ" (७।१।७३) इति नुमैव सिद्धत्वात्()? इति यो मन्येत, तं निराकर्त्तुम्()--"अमुना ब्राआहृणकुलेन इत्यस्योपन्यासः। अत्र हि त्यदाद्यत्वे कृते "अदसोऽसेर्दादु दो मः" ८।२।८० इत्युत्वमत्वे च। तत्र यदि पुंसीत्युच्यते, ततोऽमुनेति नपुंसके न सिध्येत्(); मुभावस्यासिद्धत्वात्()। नुमोऽभावात्? "अस्त्रियाम्()" इत्युच्यमाने नपुंसकेऽपि नाभावो भवतीत्यमुनेति सिद्धं भवति। न हि नाभावे कत्र्तव्ये मुभावस्यासिद्धत्वम्(); "न मु ने" ८।२।३ इति वचनादत्यभिप्रायः॥ इति बोधिसत्त्वदेशीयाचार्य श्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य तृतीयः पादः - - - अथ सप्तमोऽध्यायः चतुर्थः पादः

बाल-मनोरमा

आङो नाऽस्त्रियाम् २४२, ७।३।११९

आङो। घेः परस्येति। "अच्च घेः" इत्यतो घिग्रहणानुवृत्तेरिति भावः। हरिणेति। नादेशे "अट्कुप्वा"ङिति णत्वम्। नन्वाङो विहितो नाभावः कथं टा इत्यस्य स्यादित्यत आह--आङितीति। प्राचामाचार्याणां शास्त्रे संञ्ज्ञैषेत्यर्थः। मत्येति। "स्त्रियां क्ति"निति क्तिन्नन्तमतिशब्दस्य स्त्रीलिङ्गत्वान्नाभावो नेति भावः। हरिभ्याम्। हरिभिः। हरि-ए इति स्थिते।

तत्त्व-बोधिनी

आङो नाऽस्त्रियाम् २०४, ७।३।११९

आङो ना। "पुंसी"ति तु नोक्तम्, "अमुना कुलेने"त्यत्र यथा स्यात्। न च नुमा रूपसिद्धिः, मुत्वास्याऽसिद्धत्वा "इकोऽची"ति नुमोऽप्रवृत्तेः। नादेशे तु नाऽसिद्धत्वम्। "न मुने" इति निषेधात्। नच "न मु ने" इति निषेधो नुम्येव किं न स्यात्,-"न" इत्यकारस्याऽविवक्षितत्वादिति वाच्यम्, "अमुना घटेने"त्याद्यसिद्ध्यापत्तेः। "अमुष्मै कुलाये"त्यादौ नुम्प्रसङ्गाच्च। न च तत्रस्मायादेशे सति नुमोऽप्रवृत्तिरिति शङ्क्यं, स्मायादेशं बाधित्वा परत्वान्नुमः प्रवृत्तेः। प्राचामिति। "आचार्याणा"मिति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

णौ चङ्युपधाया ह्रस्वः ७।४।१

अङ्गस्य इति वर्तते। चङ्परे णौ यदङ्गम्, तस्य उपधाया ह्रस्वो भवति। अचीकरत्। अजीहरत्। अलीलवत्। अपीपवत्। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, तत्र कृते द्विर्वचनम्। इह तु मा भवानटिटतिति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति, तथा सति ह्रस्वभाविनो ऽङ्गस्य अकारस्य उपधात्वं विहितम् इति ह्रस्वो न स्यात्? नैष दोषः। ओणेः ऋदित् करणं ज्ञापकं नित्यम् अपि द्विर्वचनम् उपधाह्रस्वत्वेन बाध्यते इति। णौ इति किम्? चङ्युपधाया ह्रस्वः इत्युच्यमाने अलीलवतित्यत्र वचनसामर्थ्यातन्तरङ्गाम् अपि वृद्धिम् आदेशं च बाधित्वा ह्रस्वः स्यात्।

अदीदपतित्यत्र ह्रस्वत्वेन पुको बाधः स्यात्। अपीपचतित्येवम् आदौतु नैव स्यात्। चङि इति किम्? कारयति। हारयति। उपधाया इति किम्? अचकाङ्क्षत्। अववाञ्छत्। तदेददुपधाग्रहणम् उत्तरार्थम् अवश्यं कर्तव्यं तदिह अपि ह्रस्वत्वं निवर्तयति इत्येवम् अर्थं येन न अव्यवधानम् इत्येतन्नाश्रयितव्यम् इति। उपधाह्रस्वत्वे णेर्णिच्युपसङ्ख्यानम्। वदित्वन्तं प्रयोजितवानवीवदत् वीणां परिवादकेन। यो ऽसौ णौ णिलोपस्तस्य स्थानिवद्भावेन अग्लोपित्वातङ्गस्य ह्रस्वो न प्राप्नोति। ण्याकृतिनिर्देशात् सिद्धम्।

लघु-सिद्धान्त-कौमुदी

णौ चङ्युपधाया ह्रस्वः ५३२, ७।४।१

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्॥

न्यासः

णौ चङ�उपधाया ह्रस्वः। , ७।४।१

"चङ्परे णौ परतः" इति। चङ्? परो यस्माण्णेरिति स तथोक्तः। "अचीकरत्()" इत्यादि। कृञ्(), ह्मञ्, लूञ्(), पञित्येतेभ्यो हेतुमण्णिच्(), ततो लुङ्(), च्लिः,"णिश्रि" ३।१।४८ इत्यादिना च्लेश्चङ्(), "णेरनिटि" ६।४।५१ इति णिलोपः। अत्र द्विर्वचनोपधाह्मस्वत्वयोः प्राप्तयोः परत्वादुपधाह्मस्वत्वम्(), ततो द्विर्वचनम्(), ततश्च णौ कृतं सथानिवद्भवतीति कृ, ह्म--इत्यादिकमविकृतधातुरूपमेव द्विरुच्यते। अत्र कृ, ह्म--इत्येतयोरभ्यासस्य "उरत्()" ७।४।६६ इत्यत्त्वे कृते रपरत्वे हलादिशेषे च ततश्च "सब्वल्लधुनि" ७।४।९३ इत्यादिना सन्वद्भावादित्त्वम्()। पू, लू--इत्येतयोरपि ह्मस्वत्वे कृते "ओः पुयण्ज्यपरे" ७।४।८० इतीत्त्वम्()। सर्वत्र "दीर्घो लघोः" ७।४।९४ इति दीर्घत्वम्()। "अत्र द्विर्वचनोपधाह्मस्वत्वयोः प्राप्तयोः" इत्यादि। अचीकरवित्यादिषूदाहरणेषु कृताकृतप्रसङ्गित्वाद्()द्विर्वचनं नित्यमुपधाह्मस्वत्वमपि, तयोरुभयोः परत्वादुपधाह्मस्वत्वं भवति, तत्र कृते द्विर्वचनम्()--इत्येष कार्याणां प्रवृत्तिक्रमः। मा भवानटिटदित्यत्र तु द्विर्वचनमेव नित्यम्(), न ह्मस्वत्वं तु द्वितीयस्यै काचो द्विर्वचने कृते न प्राप्नोति; परेण टिशब्दरूपेण व्यवधानात्()। तस्मान्मा भवानटिटदित्यत्र नित्यत्वाद्()द्वितीयस्यैकाचो द्विर्वचनं प्रप्नोति। द्विर्वचने हि सति को दोषः स्यात्()? इत्यत आह--"तथा च सति" इत्यादि। एवञ्च द्विर्वचने कृते चङ्परे णौ यदङ्गं तस्य ह्मस्वभाव्याकार उपधा भवति। असति च ह्मस्वत्वे मा भवानटिटदिति रूपं न सिध्यति। मायोग आण्निवृत्त्यर्थः। आटि तु सति नास्ति विशेषः। सत्यसति वा ह्मस्वत्वे "आटश्च" ६।१।८७ इति वृद्ध्या भवितव्यमिति। भवच्छब्दः सन्देहनिरासार्थः। "नैष दोषः" इति। योऽनन्तरोक्तः स कथं लभ्यते? इत्याह--"ओणेॠदित्करणम्()" इत्यादि। "ओणृ अपनयने" (धा।पा।४५४) इत्येतस्य ॠदित्करणस्यैतत्प्रयोजनम्()--ॠदित्वान्नाग्लोपि ७।४।२ इत्यादिना ह्मस्वप्रतिषेधो यथा स्यादिति। यदि च नित्यमपि द्विर्वचनमुपधाह्मस्वत्वेन न बाध्यते, तदौणैॠदित्करणमनर्थकं स्यात्()। द्विर्वचने हि कृते परेण णिशब्दरूपेण व्यवधानादेव ह्मस्वो न भविष्यति, किमोणेॠदित्करणेनेति? आचार्यप्रवृत्तिज्ञ्रापयति--नित्यमपि द्विर्वचनमुपधाह्मस्वत्वेन बाध्यत इति; यत ओणेॠदत्करणं करोति। "णाविति किम्()" इति। एवं मन्यते--णिग्रहणे चाकृते लुङ्चङादेशयोः कृतयोर्णिलोपे चाकृते वृद्ध्यावादेशयोश्चाकृतयोः, अलू इ+अत्? इति स्थित ऊकरस्य ह्मस्वो मा भूदत्येवमर्थं वा णिग्रहणं क्रियते? ऊकारस्य वृद्धौ कृतायामौकारसय ह्मस्वो मा भूदित्येवमर्थं वा? एतच्चोभयमप्रयोजनम्(); अत्रान्तरङ्गत्वाद्वृद्ध्यावादेशाभ्यामेव भवितव्यम्()। अन्तरङ्गत्वं पुनस्तयोर्णिज्मात्राश्रयत्वात्(); ह्मस्वस्य च बहिरङ्गत्वं चङाश्रयत्वादिति। "चङ्युपधाया ह्मस्व इत्युच्यमाने" इत्यादि। एतावत्युच्यमानेऽसति णिग्रहणे चङ्परे यदङ्गं तस्योपधाया ह्मस्वो भवतीत्येवमर्थः स्यात्()। तथा चानवकाशो ह्मस्वोऽलीलवदित्यत्रान्तरङ्गामपि वृदिं()ध बाधित्वा वचनसामथ्र्यादृकारस्यैव स्यात्()। अथापि कथञ्चिद्? वृद्धिर्न बाध्यते; एवमपि वृद्धौ कृतायामन्तरङ्गमप्यावादेशं बाधित्वौकारस्यैव प्रसज्येत; अन्यथा हि वचनमिदमनर्थकं स्यात्()।

"अदीदपत्()" इति। अत्र ददातेर्णिचि लुङि चङि च कृते अ दा इ+अत्? इति स्थिते वचनप्रामाण्यादनवकाशो ह्रस्वोऽन्तरङ्गमपि पुकं बाधित्वा प्रसज्येत, तसमिंश्च सति पुग्()विहतनिमित्तत्वान्न स्यात्()। "अपीपचदित्यादौ तु नैव ह्रस्वः स्यात्()" इति। चङि परत#ओ यदङ्गं पाचिप्रभृति तदीयाया उपधायाश्चाकारादेरह्रस्वभाविनीत्वात्()। आदिशब्दोऽपीपठदित्यादिपरिग्रहार्थः। तस्माण्णाविति वक्तव्यम्()। "चङीति किम्()" इति। एषोऽभिप्रायः--केवले णौ ह्रस्वो मा भूदित्येवमर्थं चङीत्युच्यते; नैतच्चङग्रहणस्य प्रयोजनमुपपद्यते; यस्मादाचार्यप्रवृत्तिर्ज्ञापयति--णावेव केवले ह्रस्वत्वं न भवतीति, यदयम्? "मितां ह्रस्वः" [६।४।९२] इति ह्रस्वत्वं शास्ति। ततः कारयति, हारयतीत्यादौ न भविष्यतीत्यभिप्रायः। यद्येतस्माज्ज्ञापकात्? कारयतीत्यादौ ह्रस्वो न भवति, तदाऽचीकरदित्यत्रापि न स्यात्()। अथात्र वचनसामथ्र्याद्भविष्यति? एवमपि कारयतीत्यादौ स्यादेव। न हि "मितां ह्रस्वः" [६।४।९२] इत्युचयमाने सत्यचीकरदित्यादौ न भवतीत्येव विषयविभागः शक्यते विज्ञातुम्()। तस्मात्? चङ्ग्रहणं कत्र्तव्यम्()। "उपधाग्रहणं किम्()" इति। एवं मन्यते--अलोऽन्त्यस्य मा भूदित्येवमर्थमुपधाग्रहणं क्रियते, एतच्चाप्रयोजनम्(); चङ्परे णौ यदङ्गं तस्याचीकरदित्यादावपि णावन्तरङ्गत्वाद्? वृद्ध्यादिषु कृतेषु ह्रस्वभाव्यजन्त्यो न सम्भवति यत्राजन्ताण्णिजुत्पद्यते, किं पुनरपपठवित्यादौ यत्र हलन्ताण्णिजुत्पद्यते! तस्मादजन्त्यो ह्रस्वभावो नास्तीत्यन्तरेणाप्युपधाग्रहणं वचनादनव्त्यस्यैवोपधाभूतस्य ह्रस्वो भविष्यतीति। "अचकाङ्क्षत्(), अववाञ्छत्()" इति। "क्राक्षि वाक्षि माक्षि काङ्क्षायाम्()" (धा।पा।६६७,६६८,६६९)। यद्यप्यजन्तो ह्रस्वभावी नास्ति, तथापि वचनादनन्त्यस्याचोकरदित्यादौ यथा भवति, तथा अचकाङ्क्षदित्यादावपि स्यात्()। तस्मान्मा भूदेष दोष इत्युपधाग्रहणं क्रियत इत्यभिप्रायः। ननु चाङ्गस्य योऽच्? तस्य चङ्परे णौ ह्रस्वो विधीयते, तत्र यद्यप्यनन्तरोऽज्? न सम्भवति, तथापि "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।प।४६) इत्येकेन वर्णेनेति येन नाव्यवधानम्(), अपि तु सर्वदा व्यवधानमेव; तेन व्यवहितेऽपि वचनप्रामाण्याद्भवितव्यम्()। एकेनैव वर्णेन व्यवधानं सर्वत्र सम्भवति। सङ्घातेन तु व्यवधानं सम्भवति, न सम्भवति च। इहाचकाङ्क्षदित्यादौ सङ्घातेनैव व्यवधानम्(), अतो नास्त्येव ह्रस्वप्रसङ्ग इति किमुधाग्रहणेन? इत्याह--"तदेतत्()" इत्यादि। उपधाग्रहणमवश्यमुत्तरार्थं कत्र्तव्यम्()। इह तु क्रियमाणे सत्यचकाङ्क्षदित्येवमर्थम्? "येन नाव्यवधानम्()" (व्या।प।४६) इत्येषा परिभाषा नाश्रयितव्या भवति। उपधाग्रणेनैवात्र ह्रस्वस्य निवर्त्तितत्वादित्येष गुणो लभ्यते। तेनेहैव कृतम्(), नोत्ररत्र। "उपधाह्रस्वत्वे णेर्णिचयुपसंख्यानम्()" इति। चङ्परे णौ परतो यो णिस्तस्मिन्? परतोऽङ्गस्योपधापा ह्रस्वः उपसंख्येयः। "अवीवदत्()" इति। वदेः "हेतुमति च" [३।१।२६] इति णिच्(), तदन्ताद्वादितवन्तं प्रयोजितवानिति पुनः "हेतुमति च" [३।१।२६] इति णिच्, ततो लुङादिः,"णेरनिटि" [६।४।५१] इति णिलोपः। किं पुनः कारण न सिध्यति, यावता णिलोपे कृते चङ्परे णावङ्गस्याकारो ह्रस्वभाविन्युपधा भवत्येव? इत्याह--"योऽसो" इत्यादि। "अचः परस्मिन्? पूर्वविधौ" (१।१।५७) अपि णिलोपस्य ह्रस्वत्वे कत्र्तव्ये स्थानिवद्भावाण्णिजव्यवधानाद्? ह्रस्वो न प्राप्नोति। तेन वा णिलोपेनाग्लोप्यङ्गमेतद्भवति--तदेतस्माद्धेतोर्न हरसवत्वं प्राप्नोति। अग्लोपीत्यादिनानन्तरवक्ष्यमणिप्रतिषेधात्? (७।४।४) "ण्याकृतिनिदशात्? सिद्धम्()" इत्युपसंख्यानं प्रत्याचष्टे--"णौ इति। ण्याकृतिरिति णिजातिर्निर्देशयते, न तु णिव्यक्तिः। तेन व्यक्तौ व्यवधानं न भवति, न हि जातौ; एकत्वाण्णिजातेः। न हि तयैव तस्या व्यवधानमुपपद्यते। ननु चोत्तरया ण्याकृत्या जात्याधारभूतया णिव्यक्त्या णिजात्याश्रयेऽपि व्यवधानमुपपद्यत एव? नैतत्(); तस्यामपि व्यक्तौ जातेः समवायात्()। एवं तादद्व्यवधान#ं ण्याकृत्याश्रये नास्ति। अग्लोपित्वमपि नास्त्येव; न ह्यत्र णिजातिव्यतिरेकेणाऽन्योऽग्विद्यते, यस्य लोपेनाग्लोप्यङ्गं स्यात्()। न च ण्याकृतेर्लोपश्च; तस्याः श्रूयमाणत्वात्। न हि श्रूयमाणाया लोपे लपपद्यते; "अदर्शनं लोप" [१।१।५९] इति वचनात्()। ननु च जातिव्यतिरेकेणापि तदाश्रयभूता व्यकतिरग्विद्यत एव; न जातिव्यक्त्योरनन्यत्वमिति सांख्योयसिद्धान्तस्येहाश्रयणात्()। अथ वा--ण्याकृतिनिर्देशे सत्युपधाह्रस्वत्वस्य ण्याकृतनिमित्तत्वेना श्रोयते। तेन गोबलीवरदन्यायेन तस्या ण्याकृतेर्निमित्तत्वेनोपात्ताया अन्यस्याको लोपः प्रतिषेधनिमित्तत्वेन विज्ञायते, स चेह नास्ति।

तस्माण्ण्याकृतिनिर्देशात्? सिद्धम्()॥

बाल-मनोरमा

णौ चङ्युपधाया ह्रस्वः १५५, ७।४।१

णौ चङि। अङ्गाधिकारादाह-- यदङ्गमिति। उपधायाः किम्?। अचकाङ्क्षत्। चङि किम्?। कारयति। णौ किम्?। "चङ्युपधाया ह्रस्व"इत्युच्यमाने अदीदपदित्यत्र दाधातोण्र्यन्ताल्लुङि चङि दा इ अ त् इति स्थिते आकारस्य ह्रस्वे सति पुङ्न स्यात्। णावित्युक्तौ तु आकारस्य णौ परत उपधात्वाऽभावान् ह्रस्वः। "द्विर्वचनेऽची"ति निषेधस्तु न शङ्क्यः, द्वित्वनिमित्तचङ उपधया व्यवहितत्वात्। तथा च प्रकृते कम् अ त इति स्थितम्। चङि। "एकाचो द्वे प्रथमस्ये"ति "अजादेर्द्वितीयस्ये"ति चाधिकृतम्। "लिटि धातोरनभ्यासस्ये"ति सूत्रं लिटीति वर्जमनुवर्तते। तदाह--चङि पर इत्यादिना। तथा च कमित्यस्य द्वित्वे हलादिशेषे क कम् अ त इति स्थितम्।

तत्त्व-बोधिनी

णौ चङ्युपधाया ह्रस्वः १२९, ७।४।१

उपधायाः किम्?। अचकाङ्क्षत्।

---

सूत्रम्

काशिका-वृत्तिः

न अग्लोपिशास्वृदिताम् ७।४।२

अग्लोपिनाम् अङ्गानां शासेः ऋदितां च णौ चङि उपधाया ह्रस्वो न भवति। अग्लोपिनां तावत् मालामाख्यतममालत्। मातरमाख्यतमममातरत्। राजानम् अतिक्रान्तवानत्यरराजत्। लोमान्यनुमृष्टवानन्वलुलोमत्। अगेव यत्र केवलो लुप्यते तत्र स्थानिवद्भावादपि सिद्धम्, हलचोरादेशे तु न सिध्यति इति तदर्थम् एतद् वचनम्। शासेः अशशासत्। ऋदिताम् बाधृ अबबाधत्। याचृ अययाचत्। ढौकृ अडुढौकत्।

न्यासः

नाग्लोपिशास्वृदिताम्?। , ७।४।२

अगिति प्रत्याहारग्रहणम्()। अको लोपोऽग्लोपः, स एषामस्तीति तान्यग्लोपीन्यङ्गानि। "शासु अनुशिष्टौ" (धा।पा।१०७५) ऋदिद्येषां तानि ऋदिन्ति "बाधृ विलोडने" (धा।पा।५) इत्येवमादीनि। "अममालत्(), अममातरत्()" इति। "तत्करोति तदाचष्टे" (ग।सू।१८७) इति णिच्(), "णाविष्ठवत्कार्यं प्रातिपदिकस्य" (वा।८१३) इतीष्ठवद्भावः, "तुरिष्ठेमेयःसु" ६।४।१५४ इति टिलोपः, ततो लुङादिः। "अतयरराजत्()" इत्यादौ, "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (ग।सू।१८६) इति णिच्()। "अन्वलुलोमत्()" इति। "सत्यापपाशरूप" ३।१।२५ इत्यादिना णिच्()। "अगेव केवलो यत्र" इत्यादि। इह द्विविधमगलोपयङ्गम्()--क्वचिदगेव केवलो लुप्यते, अममालदित्यादौक्वचिद्धलचौ, अत्यरराजदित्यादौ। अगेव केवलो यत्र लुप्यते तत्राग्लोपस्य स्थानिवद्भावात्? सिद्धम्()। स्थानिवद्भावे सत्यग्लोपस्य व्यवधानादेव ह्रसवप्राप्तिः, तस्मान्न तदर्थमग्लोपीति वचनम्()। इतरत्र तु हलचोरुभयोरप्यादेश इति सिध्यति, अस्थानिवद्भावात्()। अजादेशसय हि परनिमित्तकस्य स्थानिवद्भाव उक्तः, न तु हलचोरादेशस्य। तस्माद्यत्र हलचोरादेशास्तदर्थमिदं वचनम्()। अन्यार्थमेतत्? क्रियमाणं यत्रागेव केवलो लुप्यते तदर्थमपि भविष्यतीति तदर्थमस्योदाहरणमुपन्यस्तम्()। "अडुढौकत्()" इत। "ककि वकि ()आकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ रघि लघि गत्यर्थाः"

(धा।पा।९४,९५,९६,९७,९८,९९,१००,१०१,१०२,१०३,१०४,१०५,१०६,१०७,१०८)। "अभ्यासे चचं" ८।४।५३ इति जश्त्वम्()--डकारः॥

बाल-मनोरमा

नाग्लोपिशास्वृदिताम् ४००, ७।४।२

नाग्लोपि। "णौ चङ्युपदायाः" इत्यनुवर्तते। णावित्यावर्तते। एकमग्लोपिन इत्यत्रान्वेति, द्वितीयं तु निषेधे परनिमित्तं। तदाह -- णिच्यग्लोपन इत्यादि। अलुलोकदिति। ऋदित्त्वाऽन्नाग्लोपीति निषेधेन उपधाह्रस्वाऽभावे सति लघुपरकत्वाऽभावान्नाऽभ्यासदीर्घ इति भावः। उदितत्वादिति। "वृतु वृधु" इत्युदितत्वम् "उदितो वे"त्यण्यन्तात् क्त्वायामिड्विकल्पार्थम्। ण्यन्तात्तु णिचा व्यवधानान्नेड्विकल्पप्रसक्तिः, अतो णिज्विकल्पो विज्ञायते इति भावः। पूरी आप्यायने। इण्निषेधायेति। अण्यन्तात्क्त्वायामिण्निषेधार्थमीदित्त्वम्। ण्यन्तात्तु णिचा व्यवधानादप्रसक्तेः। अतो णिज्विकल्पो विज्ञायते इत्यर्थः। स्वदधातुः षोपदेशः। तदाह - असिष्वददिति। आदेशसकारत्वात्षः। अभ्यासेऽकारस्य संयोगपरकत्वेन गुरुत्वान्नाऽभ्यासदीर्घः।दीर्घस्य त्विति।दीर्घमध्यस्य त्वित्यर्थः। अषोपदेशत्वादिति। ह्रस्वमध्यस्यैव स्वदेः षोपदेशेषु परिगणनादिति भावः। इत्यास्वदीयाः। आ धृषाद्वेति। गणसूत्रम्। विभाषितणिच इति। विकल्पितणिच्काः प्रत्येतव्या इत्यर्थः। आङभिव्याप्ताविति मत्वा आह - धृषधातुमभिव्याप्येति। णिजभावपक्षे आह -- अयौक्षीदिति। अर्च पूजायामिति। अयमनुदात्तेदिति शाकटायनः। अर्चयते। अर्चते। अस्य भ्वादौ पाठोऽनार्षः, अनेनैव सिद्धेः। न च परस्मैपदार्थं भ्वादावर्चेः पाठ इति वाच्यम्, भ्वादौ तस्याप्यात्मनेपदीयतायाः शाकटायनसंमतत्वेन माधवोक्तेः। एवमत्रत्यानामाधृषीयाणां भ्वादौ परस्मैपदिषु पाठः प्रामादिकएवेत्याहुः। ली द्रवीकरणे। लाययतीति। लीलोरिति नुक्तु न, लासाहचर्याद्धेतुमण्णावेवाऽस्य प्रवृत्तेः। लेतेति। "विभाषा लीयते"रित्यात्वं तु न, तत्र श्नाश्यन्विकरणयोरेव यका निर्देश इति भाष्यात्। वृञ् आवरणे। वरिता - वरीतेति। "वृ()तो वे"ति दीर्घः। आशीर्लिङि - व्रियात्। आत्मनेपदे तु "लिङिसचो"रितिवेट्। वृषीष्ट-- वरिषीष्ट। इडभावपक्षे "उश्चे"ति कित्वान्न गुणः। "न लिङी"ति इटो न दीर्घः। अवृत। ज्रि चेति। ह्रस्वान्तोऽयम्। रिच वियोजनेइति। अनिडयम्। ततश्च णिजभावपक्षे नेट्। तदाह -- रेक्तेति। शिष असर्वेति। अयमप्यनिट्। तदाह --शेष्टेति। अशिक्षदिति। "शल इगुपधा"दिति क्सः। अयं विपूर्वोऽतिशये इति। "वर्तते" इति शेषः। अयमस्माद्विशिष्ट इत्यत्र अधिक इति गम्यते। तृप तृप्ताविति। अनिट्सु श्यना निर्देशादयं सेट्। तदाह -- तर्पितेति। छृदी संदीपने इति। ईदित्त्वं निष्ठायामिण्निषेधार्थम्। धुवति स्फुटितेति। शविकरणस्य रूपम्। शस्य ङित्त्वाद्गुणाऽभावे उवङ्। प्रीञ् तर्पणे। प्रीणयतीति। "धूञ्प्रीञो"रिति वार्तिकान्नुगिति भावः। हरदत्तेति। अनेन भाष्याऽसंमतत्वं सूचितम्। उपसर्गाच्चेति। दैर्घ्ये तूपसर्गादनुपसर्गाच्च परस्तनुधातुराधृषीयो वेदितव्य इत्यर्थः। श्रद्धोपकरमयोस्त्वनुपसर्गादेवेति भावः। वच परिभाषणे। अवाक्षीदिति। "अस्यातिवक्ती"ति लुका निर्देशादङ्नेति भावः। "वचिस्वपी"ति संप्रसारणम्- उच्यात्। इत्याधृषीयाः। अथाऽदन्ता इति। "वक्ष्यन्ते" इति शेषः। अन्ते अकारो नेत्संज्ञको, नाप्युच्चारणार्थ इति भावः। तत्र कथदातोर्णिचि अतोलोपे "कथि" इत्यस्मात्तिपि शपि गुणेऽयादेशे कथयतीति रूपं वक्ष्यति। तत्र णिचमाश्रित्य उपधावृद्धिमाशङ्क्याह - अल्लोपस्य स्थानिवद्भावादिति। "अचः परस्मि"न्नित्यनेनेति भावः। अत्रेदमवधेयं-- स्थानिनि सति शास्त्रीयं यत्कार्यं तदेव स्थानिवदादेशोऽनल्विधावित्यत्रातिदिश्यते यत्तु स्थानिनि सति निमित्तव्याघातान्न भवति तस्याऽभावस्याऽशास्त्रीयत्वान्नाऽतिदेशः। अन्यथा "नायक" इत्यत्र ईकार स्थानिकस्य ऐकारस्य आयादेशानापत्तेः। ईकारे स्थानिनि सति आयभावस्य दृष्टत्वेन तस्याप्यैकारे अतिदेशप्रसङ्गात्। "अचः परस्मि"न्नित्यत्र तु स्थानिनि सति यच्छास्त्रीयं कार्यं प्रसज्यते तस्य, तदभावस्य चाऽशास्त्रीयस्याप्यतिदेश इति भाष्ये स्पष्टम्। अतोऽत्र थकारादकारे सति प्रसक्तस्य उपधावृद्ध्यभावस्याऽशास्त्रीयत्वेऽप्यतिदेश इति इति सिद्धम्। लुङि चङि "अचकथ" दित्यत्र सन्वत्त्वमाशङ्क्याह-- अग्लोपित्वादिति। सन्वत्वविषये जायमानोऽभ्यासदीर्घः सन्वत्त्वं नापेक्षत इति

पृथगुक्तिः। एवं वरादौ सर्वत्र ज्ञेयम्। गण सङ्ख्याने। चङि अल्लोपस्य स्थानिवत्त्वाद्दीर्घसन्वद्भावयोरभावे "अजगण"दित्येव प्राप्ते आह --

तत्त्व-बोधिनी

नाग्लोपिशास्वृदिताम् ३४९, ७।४।२

स्वाद इत्येके इति। अस्मिन्मते पूर्वत्राप्यास्वादः सकर्मकादिति पाठ()म्। ननु दीर्घपाठो व्यर्थः, ह्रस्वपाठेऽप्युपधावृद्ध्या स्वादयतीति रूपाणां तुल्यत्वादत आह--- दीर्घस्य त्विति। "सः स्विदिस्वदिसहीनां चे"ति सूत्रेण अभ्यासेणः परस्य सस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वात्सन्नन्तेऽपि सिस्वादयिषतीत्यादि रूपं तुल्यमेवेत्यभिप्रेत्याह--- असिस्वददिति। इत्यास्वदीयाः। आधृषाद्वा। व्याख्यानात्, योग्यताबलाद्वा णिजिति संबध्यते। अयौक्षीदिति। णिजभावपक्षे अनिट्कोऽयमिति भावः। ली द्रवीकरणे। "लिनातिलीयत्योर्यका निर्देश" इति भाष्यकारोक्त्या "विभाषा लीयते"रित्यात्वमिह न प्रवर्तत इति ध्वनयति--लेतेति। वरीतेति। "वृ()तो वे"ति वा दीर्घः। लिङि-- वूर्यात्। आत्मनेपदे तु वृषीष्ट। वरिषीष्ट। "लिङ्सिचोरात्मनेपदेषु" इति वेट्। "न लिङी"ति इटो दीर्घनिषेधः। इडभावपक्षे "उश्चे"ति कित्वान्न गुणः। लुङि अवारीत्। अवारिष्टाम्। अवारिषुः। "सिचि च परस्मैपदेषु" इति दीर्घनिषेधः। आत्मनेपदे तु अवरिष्ठ। अवरीष्ट। इडभावे सिचो लोपः। अवृत। रिच।णिजभावे अयमनिडित्याह--रेक्तेति। अशिक्षदिति। "शल इगुपधा"दिति क्सः। तृप। अनिट्सु श्यना निर्देशादयं सेडिति ध्वनयति-- तर्पितेति। छृदी। ईदित्वान्निष्ठायां नेट्। ऋवर्णान्नस्य णत्वम्। छृण्णः। छृण्णवान्।

*धूञ्प्रीञोर्नुग्वक्तव्यः। ह्रस्वश्चेति। धुञ् कम्पने इत्यर्थः। अवाक्षीदिति। "अस्यतिवक्ती"ति लुका निर्देशादङ् नेति भावः। "वचिस्वपी"ति संप्रसारणम्। उच्यात्। धृष प्रसहने। केचित्त्वादितमाहुस्तन्मते धृष्टो, मुख्यमते तु धृषितः। नन्वत्र "निष्ठा शीङि"त्यादिना सेण्निष्ठायाः कित्त्वनिषेधाद्गुणेन भाव्यमिति चेत्। अत्राहुः-- आदित्साहचर्यादादित एव। ञिधृषेत्यस्य तत्र ग्रहणात्।न च आदितो निष्ठाया इड् दुर्लभ इति शङ्क्यं, "विभाषा भावादिकर्मणो"रिति तत्संभवादिति। इत्याधृषीया युजादयः। अथाऽदन्ता इति। वक्ष्यमाणेषु धातुषु अन्त्यावयवोऽकारो न तूच्चारणार्थ इत्यर्तः। स्थानिवत्त्वान्न वृद्धिरिति। "अचः परस्मिन्" इति सूत्रेणेत्यर्थः। न च स्थानिनि सति यत्कार्यं तदेव स्थानवदित्यनेनातिदिश्यते नत्वादेशप्रयुक्तं वार्यते, अन्यथा नायक पावक इत्यादि न सिध्येदिति वृद्धिरत्र दुर्वारेति वाच्यम्, "अचः परस्मिन्" इत्यत्र स्थानिवदित्यनुवर्त्य शब्दाधिकारपक्षाश्रयेण भावाऽभावावुभावप्यतिदिश्यते इति सिद्धान्तात्। स्थानिनि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात्। "स्थानिनि सति यन्न भवति तदादेशेऽपि न भवती"त्यत्र तु "न पदान्ते"ति सूत्रस्थलोपादिग्रहणमेव लिङ्गिमिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

भ्राजभासभाषदीपजीवमीलपीडाम् अन्यतरस्याम् ७।४।३

भ्राज भास भाष दीप जीव मील पीड इत्येतेषाम् अङ्गानां णौ चङि उपधाया ह्रस्वो भवति अन्यतरस्याम्। भ्राज अबिभ्रजत्, अबभ्राजत्। भास अबीभसत्, अबभासत्। भाष अबीभषत्, अबभाषत्। दीप अदीदिपत्, अदिदीपत्। जीव अजीजिवत्, अजिजीवत्। मील अमीमिलत्, अमिमीलत्। पीड अपीपिडत्, अपिपीडत्। भ्राजभासोरृदित्करणम् अपाणिनीयम्। काण्यादीनां चेति वक्तव्यम्। कण अचीकणत्, अचकाणत्। वण अवीवणत्, अववाणत्।

न्यासः

भ्राजभासभावदीपजवमीलपीडामन्यतरस्याम्?। , ७।४।३

भ्राजिरयं भ्वादावनुदात्तेत्? पठ()ते, आत्मनेपदी ऋकारानुबन्धः फणादिषु "टुभ्राजु टुभ्रासु दीप्तौ" (धा।पा।८२३,८२४) इति पठ()ते, फणादिभ्यः पुरस्ताच्च "एजृभ्रेजृ भ्राजृ दीप्तौ" (धा।पा।१७९,१८०,१८१) इति। तन्त्रान्तर्गचकार्यार्थः फणादिष्ववश्यमेवास्य पाठोऽङ्गीकत्र्तव्य इति तेनैव शबादेरपि गणकार्यस्य सिद्धत्वात्()। अन्यत्रास्य पाठोऽनार्ष एव लक्ष्यते। "भासृ दीप्तौ" (धा।पा।६२४), "भा, व्यक्तायां वाचि" (धा।पा।६१२) "दीपी दीप्तौ" (धा।पा।१५०), "जीव प्राणधारणे" (धा।पा।५६२) "मील श्मील स्मील क्ष्मील निमेषणे" (धा।पा।५१७,५१८,५१९,५२०), "पीड अवगाहने" (धा।पा।१५४४)--एषां नित्ये ह्यस्वत्वे प्राप्ते विभाषेयमारभ्यते। "अबिभ्रजत्()" इति। यधा ह्यस्वत्वम्(), तदा पूर्ववत्सन्वद्भावेनेत्त्वम्()। "अबीभवत्()" इति। पूर्ववद्()दीर्घः। अथ भ्राजभासयोऋदित्करणं किमर्थम्(), यावता तयोर्हि ऋदित्करमस्यैतत्? प्रयोजनम्()--ऋदित्त्वात्? पूर्वसूत्रेण ह्यस्वप्रतिषेधो यथा स्यादिति। यदि विभाषया च तयोह्र्यस्वत्वं विधीयते तदा ऋदित्करणमस्य वैयथ्र्यमेव? इत्यत आह--"भ्राजभासोः" इत्यादि। "अपाणिनीयम्()" इति। पाणिनेरिदं पाणिनीयम्(), न पाणिनीयमपाणिनौयमिति; तेनानभ्युपगमात्(); न तु तेनाकृतत्वात्()। अन्यथा हि "बाधृ विलोडने" (धा।पा।५)--इत्येवमादीनामपि ऋदित्करणमपाणिनीयं स्यात्()। प्रतिपादितं हि पूर्वम्? (४।१।१०६ तमसूत्रे)---गणकारः पाणिनिर्न भवतीति। तथा च--अन्यो गणकारः अन्यश्च सूत्रकारः॥

बाल-मनोरमा

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ३९२, ७।४।३

भ्राजभास। "णौ चङ्युपधाया ह्यस्वः" इत्यनुवर्तते। तदाह - एषामिति। नित्ये उपधाह्यस्वे प्राप्ते विकल्पोऽयम्। ह्यस्वपक्षे लघुपरकत्वात्सन्वत्त्वादभ्यासदीर्घ इत्यभिप्रेत्य आह-- अपीपिडदिति। अत्र उत्तरखण्डे ह्यस्वः, पूर्वखण्डे तु दीर्घः। ह्यस्वाऽभावपक्षे तु लघुपरकत्वाऽभावात्सन्वत्त्वविरहान्नाऽभ्यासदीर्घ इति मत्वाह-- अपीपीडदिति। अत्र उत्तरखण्डे दीर्घः। पूर्वखण्डे ह्यस्वः। नट अवस्पन्दने। इति। अवस्पन्दनं नाट()म्। नाटयति। अनीनटत्। श्रथ प्रयत्ने। श्राथयति। अशिश्रथत्। सन्वत्त्वविधौ नेकहल्व्यवधनेऽपि लघुपरत्वं न विरुध्यते, अत्स्मृदृ()त्वरे"ति ईत्वापवादस्य अत्त्वस्य विधानाल्लिङ्गात्। अन्यथा अपप्रथदित्यादौ अनेकहल्व्यवधानाल्लघुपरत्वाऽभावादेव इत्त्वाऽप्रसक्त्या किं तेन?। पृ? पूरणे। ननु ह्यस्वात् एवायं धातुर्निर्दिश्यतां, तावतैव पारयतीत्यादि सिद्धेः। न च णिजभावपक्षे परिता परिष्यतीत्यत्र इडर्थं दीर्गोच्चारणम्, ऋदन्तत्वे अनिट्कत्वप्रसिङ्गादिति वाच्यं, चुरादिणिचो नित्यत्वेन ततो णिजभावस्य शशशृङ्गायमाणत्वादित्त आह - दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गमिति। "पृ()धातो"रिति शेषः। णिचः पाक्षिकतवे तु परित#एत्यादौ पर्तेत्यादिवारणाय दीर्घोच्चारणमर्थवदिति भावः। ननु ह्यस्वान्तत्वेऽपि परितेत्यादौ इट् कुतो न स्यादित्यत आह- तद्धि सेट्कत्वायेति। हि = यतः, तत् = दीर्घोच्चारणं परितेत्यादौ सेट्कत्वार्थम् ऋदन्तत्वे तु इण्न स्यात्, "ऊदृ()दन्तै"रित्यनिट्कारिकासु ऋदन्तस्य पर्युदासेन ऋदन्तस्याऽनिट्कत्वावगमादिति भावः। ननु पृ()धातोर्णिचः पाक्षिकत्वज्ञापनस्य किं फलम्?। श्नाविकरमश्नुविकरणपठिताभ्यामेव पृ()धातुभ्यां परितेत्यादिसिद्धेरित्यत आह-- एवं चेति। उक्तरीत्या पृ()धातोर्णिचः पाक्षिकत्वे ज्ञापिते सतीत्यर्थः। [पारयति] परतीति। "उदोष्ठ()पूर्वस्ये"त्युत्वं तु न भवति, पराभ्यां गुणवृद्धिभ्यां बाधादिति भावः। ऊर्ज बलेति। "सन्वल्लघूनी"ति सूत्रं द्वेधा व्यख्यातं प्राक्। तत्र चङि "न न्द्राः" इति निषेधात्, "जि" इति णिजन्तस्य द्वित्वे उत्तरखण्डे चङ्परे णौ लघोरभावात्प्रथमव्याख्यानेऽभ्यासस्य तथाविधलघुपरकत्वविरहात्सन्वत्त्वविरहान्नाऽभ्यासदीर्घः, और्जिजत्। द्वितीयव्याख्याने तु चङ्परे णौ यदङ्गम् ऊर्ज इत्येतत्, तदीयस्याभ्यासस्य चङमादाय वा णिचं लुसमादाय वा लघुपरकत्वाभ्यासस्य दीर्घः, और्जीजत्। एवमेव एवंजातीयकेषु द्रष्टव्यम्। प्रथ प्रख्याने। प्राथयतीति। णिचि उपधावृद्धिरिति भावः। नन्वस्य घाटादिकत्वेन मित्त्वाद्ध्रस्वः स्यादित्यत आह-- नान्ये इति। ज्ञपादिपञ्चकव्यतिरिक्तचुरादिषु मित्त्वनिषेधादिति भावः। घाटादिकस्य तु

मित्त्वाद्धेतुमण्णिचि "प्रथयती"त्येव भवति। न च चौरादिकस्यैव मित्त्वार्थं घटादावनुवादः किं न स्यादिति वाच्यं, "नान्ये मितोऽहेतौ" इति निषेधादित्यलम्।

तत्त्व-बोधिनी

भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ३४३, ७।४।३

पृ? पूरणे। दीर्घोच्चारणमित्यादि। पारयतीत्यादिरूपाणि ह्रस्वोच्चारणेऽपि सिध्यन्तीति परतीत्याद्यर्थं दीर्घोच्चारणमित्यर्थः। अत्र वदन्ति-- धातुपाठकृता पाणिनिना विशिष्यैव उदात्ता अनुदात्ताश्च पठिताः,न हि "ऋकारान्ताः सेट्का" इति तेन परिभाषितं येनेत्थं तस्याशयः कल्प्येत। कविकल्पद्रुमे त्वस्य नित्यण्यन्तत्वमुक्तमिति। एवं चाऽस्मिन्पक्षे दीर्घोच्चारमं व्यर्थमिति फलितम्। अन्ये तु दीर्घोच्चारमं परिता परीत्येत्यादौ "वृतो वे"ति इटो दीर्घविकल्पार्थम्। ततश्च णिज्विकल्पः सिद्ध एवेति परतीत्यादिरूपमाहुः। ऊर्ज। ऊर्जयति। बलवान्भवति। जीवति वेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

लोपः पिबतेरीच्च अभ्यासस्य ७।४।४

पिबतेः अङ्गस्य णौ चङि उपधायाः लोपो भवति, अभ्यासस्य ईकारादेशो भवति। अपीप्यत्, अपीप्यताम्, अपीप्यन्। उपधालोपे कृते ओः पुयण् वचनं ज्ञापकं णौ स्थानिवद्भावस्य इति स्थानिवद्भावाद् द्विर्वचनम्।

न्यासः

लोपः पिबतेरीच्चाभ्यासस्य। , ७।४।४

ह्रस्वत्वे प्राप्ते तदपवादः पिबतेर्लोपो विधौयते, ईकारश्चाभ्यासस्येति। उपधाधिकारादुपधाया एव। पर्यायेण लोपेकारौ मा भूताम्()--इत्येवमर्थमध्यासग्रहणम्()। "अपीप्यत्()" इति। "पा पाने" (धा।पा।९२५), णिच्(), "शाच्छासाह्वाव्यावेपाम्()" ७।३।३७ इति युक्()। ननु च नित्यत्वात्? परत्वाच्च पूर्वमुपधालोपे कृतेऽनच्कत्वाद्? द्विर्वचनेन न भवितव्यम्()? इत्यत आह--"उपधालोपे कृते" इत्यादि। सुबोधम्()। पिब्रातेः श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः--अपापयदिति। "पा रक्षणे" (धा।पा।१०५६, "पै ओवै शोषणे" (धा।पा।९२०,९२१)--इत्येतयोस्तु निवृत्त्यर्थः स नोपपद्यते; तत्र ह्लोकस्य लुग्विकरणत्वादेव न भविष्यति, अपरस्य तु लाक्षणिकत्वात्()॥

बाल-मनोरमा

लोपः पिबतेरीच्चाभ्यासस्य ४१५, ७।४।४

लोपः पिबतेः। चङ्परे णाविति। "णौ चङ्युपधायाः" इत्यतस्तदनुवृत्तेरिति भावः। अपीप्यदिति। "नानर्थकेऽलोऽन्त्यविधि"रित्स्य अनभ्यासविकार इति निषेधादभ्यासाऽन्त्यस्य ईत्त्वम्। इह उपधालोपे कृतेऽग्लोपित्वादलघूपधत्वाच्च सन्वत्त्वदीर्घयोरप्राप्तावीत्त्वविधिः। अर्तिहीति पुगिति। "क्रमेणोदाह्रियते" इति शेषः। अर्पयतीति। ऋधातोरुदाहरणम्। वृदिं()ध बाधित्वा नित्यत्वात् पुक्। गुणः। ह्रेपयतीति। "ह्री लज्जाया"मित्यस्य रूपम्। व्लेपयतीति। "व्ली विशरणे" इत्यस्य रूपम्। रेपयतीति। "री क्षये" इत्यस्योदाहरणम्। "क्नूयी शब्दे" इत्यस्य क्नोपयतीत्युदाहरिष्यन्नाह-- यलोप इति। क्नूयीधातोर्णौ पुकि "लोपो व्यो"रिति यलोप इत्यर्थः। ततः क्नूप् इ इति स्थिते अलघूपधत्वेऽपि पुगन्तत्वाद्गुणः। क्ष्मापयतीति। "क्ष्मायी विधूनने" अस्माण्णौ पुकि यलोपः।

आदन्तस्योदाहरति-- स्थापयतीति। लुङि चङि अतिष्ठप् अ त् इति स्थिते--

तत्त्व-बोधिनी

लोपः पिबतेरीच्चाभ्यासस्य ३६३, ७।४।४

अपीप्यदिति। उपधालोपस्य द्वित्वे कर्तव्ये प्रतिषेधात्कृते लोपे स्थानिवद्भावाद्वा पाय्()शब्दस्य द्वित्वे हलादिः शेषे ईकारः। सच अनभ्यासविकार इति निषेधादन्त्यस्यादेशः। इहाऽग्लोपित्वादलघूपधत्वाच्च सन्वदित्त्वदीर्घयोरप्राप्तवित्त्वं विधीयते। व्लेपयतीत्यादि। व्ली वरणे। रीङ् क्षये। क्नूयी शब्दे उन्दे चाक्ष्मायी विधूनने।

---

सूत्रम्

काशिका-वृत्तिः

तिष्ठतेरित् ७।४।५

तिष्ठतेरङ्गस्य णौ चङि उपधायाः इकारादेशो भवति। अतिष्ठिपत्, अतिष्ठिपताम्, अतिष्ठिपन्।

लघु-सिद्धान्त-कौमुदी

तिष्ठतेरित् ७०६, ७।४।५

उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्॥ घट चेष्टायाम्॥

न्यासः

तिष्ठतेरित्?। , ७।४।५

अयमपि ह्रस्वापवादः। "ईच्चाभ्यागस्य" ७।४।४ इति निवृत्तम्()। श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थ एव--अतास्थपदिति॥

बाल-मनोरमा

तिष्ठतेरित् ४१६, ७।४।५

तिष्ठतेरित्। "णौ चङ्युपधायाः" इत्यनुवर्तते। तदाह -- उपधाया इति।

तत्त्व-बोधिनी

तिष्ठतेरित् ३६४, ७।४।५

तिष्ठतेरित्। तकारो मन्दप्रयोजनः। श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। अतास्थपत्। लटि-- तास्थापयतीति तास्थापेति।

---

सूत्रम्

काशिका-वृत्तिः

जिघ्रतेर् वा ७।४।६

जिघ्रतेः अङ्गस्य नौ चङि उपधाया इकारादेशो वा भवति। अजिघ्रिपत्, अजिघ्रिपताम्, अजिघ्रिपन्। अजिघ्रपत्, अजिघ्रपताम्, अजिघ्रपन्।

न्यासः

जिघ्रतेर्वा। , ७।४।६

एषोऽपि ह्रस्वापवादः। अत्रापि श्तिपा निर्देशस्य तदेव प्रयोजनम्()--अजाघ्रपदिति॥

बाल-मनोरमा

जिघ्रतेर्वा ४१७, ७।४।६

जिघ्रतेर्वा। घ्राधातोरुपधाया इद्वा स्याच्चङ्परे णावित्यर्थः। अजिघ्रप् अ त् इति स्थिते उपधाया विकल्पः। उरृदिति। धातोरुपधाया ऋकारस्य ॠद्वा चङ्परे णाविति व्याख्यातं चुरादौ। अचीकृतदिति।कृ()त् इ अ त् इति स्थिते ॠत्वपक्षे कृत् इत्यस्य द्वित्वे उरदत्वे हलादिशेषे अभ्यासचुत्वे सन्वत्त्वादित्त्वे तस्यदीर्गे रूपम्। अचिकीर्तदिति। कृ()त् इ अ त् इति स्थिते "उरृ" दित्युपधाया ॠत्वाऽभावपक्षे "उपधायाश्चे"ति इत्त्वे रपरत्वे "किर्न्" इत्यस्य द्वित्वे उत्तरखण्डे "उपधायां चे"ति दीर्घे रूपम्। अवीवृतदिति। "वृतु वर्तने"। णिचि लघूपधगुणं बाधित्वा "उरृत्"। चङि "वृत्ित्यस्य द्वित्वे उरदत्वे सन्वत्तवादित्त्वं दीर्घश्चेति भावः। अववर्तदिति। ॠत्वाऽभावपक्षे वृद्धित्यस्य द्वित्वे उरदत्त्वे उत्तरखण्डस्य लघूपधगुणे रूपम्। लघुपरकत्वाऽभावान्न सन्वत्तवदीर्घौ। अमीमृजदिति। उपधाया ॠत्वपक्षे रूपम्। अममार्जिदिति। उपधाया ऋत्()तवाऽभावपक्षे द्वित्वे उरदत्त्वे उत्तरखण्डे "मृजेर्वृद्धि"रिति वृद्धौ रपरत्वे रूपम्। लघुपरत्वाऽभावान्न सन्वत्त्वम्। पातर्णौ लुगिति। लुगागम इत्यर्थः। पुकोऽपवाद इति। आदन्तलक्षणपुकोऽपवादैत्यर्थः।यद्यपि "पाल रक्षणे" इति धातोरेव सिद्धं,तथापि पुको निवृत्तिः फलम्।

तत्त्व-बोधिनी

जिघ्रतेर्वा ३६५, ७।४।६

"उरृत्"। चुरादौ व्याख्यातम्। अचिकीर्तदिति। ॠदादेशाऽभावपक्षे "उपधायायश्चे"तीत्वे रपरत्वम्। "उपधायां चे"ति दीर्घः।

* पातेर्णौ लुग्वक्तव्यः। पुकोऽपवाद इति। आदन्ततवात्पुकः प्राप्तिः। एवं च लुगागमस्य पुङ्निवृत्तिरेव फलम्। "पालयती"ति रूपस्य "पाल रक्षणे" इति धातुनापि सिद्धेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उरृत् ७।४।७

णौ चङि उपधायाः ऋवर्णस्य स्थाने वा ऋकारादेशो भवति। इरराराम् अपवादः। इर् अचिकीर्तत्, अचीकृतत्। अर् अववर्तत्, अवीवृतत्। आर् अममार्जत्, अमीमृजत्। वचनसामर्थ्यादन्तरङ्गा अपि इररारो बाध्यन्ते। तप्रकरणं दीर्घे ऽपि स्थानिनि ह्रस्व एव यथा स्यात्, अचीकृततिति। न च अयं भाव्यमानः, किन्तु आदेशान्तरनिवृत्यर्थं स्वरूपम् एव एतदभ्यनुज्ञायते।

न्यासः

उॠत्?। , ७।४।७

अत्र ऋकारः स्थानित्वेनोपात्तः, तस्य चान्तरङ्गत्वादिररार एव प्राप्नुवन्ति, न हि बहिरङ्गो ह्रस्वः, तस्मात्? तेषामपवादौ विज्ञायत इत्यत आह--"इरराराममपवादः" इति। "उपघायाश्च" ७।१।१०१ इतीकारः, "पुगन्तलघूपघस्य" ७।३।८६ इति गुणोऽकारः, "मृजेर्बृद्धिः" ७।२।११४ इत्याकारः--इत्येते च ऋकारस्य स्थाने "उरण्()रपरः" १।१।५० इति रपरा भवन्तो यताक्रममिररारो भवन्ति, तेषामपवादः। "अचीकृतत्()" इति। "कृ()त संशब्देने" (धा।पा।१६५३), चुरादिः, णिच्()। "अवीवृतत्()" इति। "वृतु वत्र्तने" (धा।पा।७५८) "अमीमृजत्()" इति। "मृजू शुद्धौ" (धा।पा।१०६६)

हेतुमण्णिच्()। ननु चान्तरङ्गत्वादिरारार्भिरेव भवितव्यम्(), अन्तरङ्गत्वं तु पुनस्तेषां ण्ज्मात्राश्रयत्वात्()। ऋकारस्तु चङ्परं णिचमाश्रित्य भवतीति बहिरङ्गः। तत्कथं तेनेररारो बाध्यन्ते? इत्यत आह--"वचनसामथ्र्यात्()" इत्यादि। यद्यन्तरङ्गत्वादिरराराः स्युः, वचनस्य तदा वैयथ्र्य स्यात्(); अनवकाशत्वात्()। तस्मादन्तरङ्गा अपि ते बाध्यन्ते। "तपरकरणम्()" इत्यादि। असति हि तपरकरणे यत्र दीर्घः स्थानी, तत्रान्तरतम्याद्दीर्घः प्रसज्येत तस्मा द्दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यादित्येवमर्थं तपरकरणम्()। ननु "भाष्यमानोऽण्? सवर्णान्न गृह्णाति" (व्या।प।३५) इति दीर्घस्यापि स्थानिनो ह्रस्व एव भविष्यति, न दीर्घः? इत्यत आह--"न चायं भाव्यमानः" इत्यादि। किं कारणम्()? इत्यत आह--"आदेशान्तरनिवृत्त्यर्थम्()" इति। इति। आदेशान्तरमिरराराादि; तस्य निवृत्त्यर्थमीकारस्यास्मीयरूपेणैवाभ्यनुज्ञायते, न त्वपूर्व एव ऋकारो विधीयते, तत्कुतोऽस्य भाव्यमानता!॥

बाल-मनोरमा

उरृत् ३९४, ७।४।७

उरृत्। "ऋ" इत्स्य "उ"रिति षष्ठ()न्तं रूपम्। "णौ चङ्युपधायाः"इत्यनुवर्तते। "जिघ्रतेर्वे"त्यतो वेति। तदाह -- उपधाया इति। ननु ऋकारस्य ऋकारविधिव्र्यर्थ इत्यत आह -- इरराराामपवाद इति। "कृ()त संशब्दने" "अचीकृ()त"दिदित्यादौ "उपधायाश्चे"ति इत्त्वे रपरत्वे इर् प्राप्तः, "अमीमृज"दित्यत्र तु "मृजेर्वृद्धि"रित्यार् प्राप्तः, प्रकृतपृथधातौ तु चङि णिलोपे प्रत्ययलक्षणेन णिचमाश्रित्य लघूपधगुणे रपरत्वे अर् प्राप्तः, तेषामपवाद इत्यर्थः। अपीपृथदिति। णिचमाश्रित्य प्राप्तं गुणं बाधित्वा ऋकारे, द्वित्वे, उरदत्त्वे, हलादिशेष सन्वत्त्वादित्वे, दीर्गे, रूपमिति भावः। अपपर्थदिति। ऋत्वाऽभावपक्षे "द्वर्वचनेऽची"ति निषेधाद्गुणात्प्राक् द्वित्वे उरदत्वे हलादिशेषे ऋकारस्य णिचमाश्रित्य गुणे रपरत्वे अपपर्थदित्यतर् लघुपरकत्वाऽभावेन सन्वत्त्वविरहादित्त्वदीर्घौ नेति भावः। अट्ट षुट्ट अनादरे। अयं दोपध इति। अट्टधातुरित्यर्थः। दकारस्य ष्टुत्वचत्र्वाभ्यां निर्देशैति भावः। दोपधत्वस्य प्रयोजनमाह-- ष्टुत्वस्येति। तथाच दकारं विहाय "टि" इत्यस्य द्वित्व अद् टिटत् इति स्थिते दस्य ष्टुत्वे चत्व च "आट्टिट"दिति रूपमिष्टं सिद्ध्यति। स्वाभाविकटोपधत्वे तु "न न्द्रा" इति निषेधाऽभावाट्टकारद्वयसहितस्य ण्यन्तस्य द्वित्वे हलादिशेषेणाऽभ्यासे प्रथमटकारस्य अनिवृत्तौ आटिट्टदिति अनिष्टं रूपं स्यादिति भावः। ष्मिङ् अनादरे। ननु णिचश्चेत्यात्मनेपदसिद्धेः किमर्थं ङित्करणमित्यताअह--- णिजन्तात्तङिति। तङेवेत्यर्थः। अकत्र्रभिप्रायेऽपि फले णिजन्तादात्मेपदार्थं ङित्करणमिति यावत्। ननु कृतेऽपि ङित्करणे णिजन्तस्य ङित्वाऽभावात्कथमुक्तप्रयोजनलाभ इत्यत आह -- अवयवेऽचरितार्थत्वादिति। ण्यन्तावयवे ष्मिङ्धातौ ङित्त्वं व्यर्थं, तस्य णिचं विना प्रयोगाऽभावात्। ततश्चाऽवयवे श्रुतं ङित्त्वं ण्यन्तादेव कार्यं साधयतीत्यर्थः। स्माययते इति। णिचि वृद्धौ आयादेशे स्मायीति ण्यन्ताल्लटस्तिपि शपि गुणाऽयादेशाविति भावः। असिष्मयत। तुल उन्माने। कथमिति। लघूपधगुणप्रसङ्गादिति भावः। तुलनेति। "ण्यासश्रन्थो यु"जिति भावः। समाधत्ते -- अतुलोपमाभ्यामिति। आदन्तस्येति। तुलधातोण्र्यन्तात्पचाद्यचि निपातनाद्गुणाऽभावे स्त्रीत्वे तुलाशब्द आदन्तः। "ततस्तत्करोति तदाचष्टे" इतिणिचि इष्ठवत्त्वाट्टिलोपे तुलीति ण्यनताल्लटस्तिपि युचि च "चुलयती"ति "तुलने"ति च रूपम्। अकारलोपस्य "अचः परस्मि"न्निति स्थानिवत्त्वान्न गुण इति भावः। व्रज मार्गेति। व्राजयति। मार्गयति। यद्वा-- मार्गेति न धात्वन्तरम्। व्रजधातुर्मार्गसंस्कारे गतौ चेत्यर्थः। ज्ञप मिच्चेति। ज्ञपधातुर्णिचं लभते, मित्संज्ञश्चेत्यर्थः। मित्त्वकार्यभागिति वा। धातुपाठेऽर्थनिर्देशाऽभावादाह -- अयमिति। "प्रच्छ ज्ञीप्सााया"मित्यत्र ज्ञाने, "श्लाघङ्नुङ्()स्थाशपां ज्ञीप्स्यमानः" इत्यत्र ज्ञापने च प्रयोगदर्शनादिति भावः।

तत्त्व-बोधिनी

उरृत् ३४४, ७।४।७

उरृत्। "जिघ्रतेर्वे"त्यतो वेति वर्तते। इरराराामिति। ऋकारोपधे तु "उपधायाश्चे"त्यचीकृतदित्यादौ इर् प्राप्तः, अमीमृजदित्यत्रमृजेर्वृद्धिरार् प्राप्तः, इतरेषांमृदुपधानां गुणेन अपीपृथदित्यादावरिति विवेकः। नन्विह उरित्यनूद्यमानः सवर्णान् गृह्णाति, ऋदिति विधीयमानस्तु न गृह्णाति। तथा च अचीक्लृपदित्यत्र "उरृ"दित्यनेन ऋवर्णे सति अचीकृपदिति प्रसज्येतेति चेत्। मैवम्। लत्वस्याऽसिद्धत्वेन प्रतमम् "उरृ"दित्यस्य प्रवृत्तौ पश्चात् "कृपो रो लः" इत्यनेन ऋकारैकदेशस्यलृकारैकदेशविधानादिष्टसिद्धेः। न च चलीक्लृप्यत इत्यादौ रीगागमादेर्लत्वार्थं "कृपो रो लः" इत्य्सयावश्यकत्वेऽपि कृपूदातुः "क्लृपू सामर्थ्ये" इत्येव पठ()ताम्, एवं हि प्रक्रियालाघवं लभ्यते, ऋकारैकदेशस्य लृकारैकदेश इति व्याख्यानक्लेशोऽपि न भवतीति वाच्यम्, अचीक्लृपदित्यत्र "उऋ"दित्यस्य प्रवृत्तावनिष्टरूपप्रसङ्गात्। कृपो रो लः" इत्यनेन ऋकारैकदेशस्यलृकारैकदेश इत्यभ्युपगमे तु उक्तव्याख्यानक्लेशध्रौव्यात्। [इदं च कैयटरीत्योक्तम्। नत्विदं क्षोदक्षमम्, "ऋत उत्" इत्यनेन तपरकरणेन लृवर्णग्राहकत्वेरूपसिद्धेः स्पष्टत्वात्] अयं दोपध इति। टोपधत्वे त्वाटिट्टदिति स्यादिति भावः। शठ ()आठ। शाठयति। असंस्कृतो भवति, गच्छति वेत्यर्थः। स्माययत इति।आत्वं तु नेह भवति, "नित्यं स्मयते"रिति निर्देशेन "स्मिङ् ईषद्धसने" इति भौवादिकादेव हेतुमण्णौ तद्विधानात्। श्रण दाने। विश्राणनं-- वितरणम्। चुद संचोदने। "ण्यासश्रन्थः" इति युचि-- चोदना। वज मार्ग। वाजयति। मार्गयति। केचित्तु मार्गेति न धात्वन्तरं किं तु वजेत्येक दातुर्मार्गसंस्कारे गतौ चेति व्याचख्युः। ज्ञप मिच्च। चाद्गत्यामत्येके। ज्ञपधातुर्णिचं लभते मित्संज्ञकश्चेत्यन्ये ज्ञाने ज्ञापने चेति। "प्रतिपज्ज्ञप्तिचेतनाः"। प्रच्छ ज्ञीप्सायामित्यत्र ज्ञाने, "श्लाघह्नु"ङिति सूत्रे "ज्ञीप्स्यमानो बोधयितुमिष्यमाण" इति व्याख्यायां ज्ञापने च प्रयोगदर्शनादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं छन्दसि ७।४।८

छन्दसि विषये णौ चङि उपधाया ऋवर्णस्य स्थाने ऋकरादेशो भवति नित्यम्। अवीवृधत् पुरोडाशेन। अवीवृधताम्। अवीवृधन्।

न्यासः

नित्यं छन्दसि। , ७।४।८

"अवीवृधत्()" इति। "वृधु वृद्धौ" (धा।पा।७५९) हेतुमाण्णिच्(), ततो लुङादिः। नित्यग्रहणं पूर्वसूत्रे वेत्येतदनुवृत्तेर्विज्ञापनार्थम्(); अन्यथा हि तत्राप्यस्याननुवृत्तिर्विज्ञायेत॥

---

सूत्रम्

काशिका-वृत्तिः

दयतेर् दिगि लिटि ७।४।९

दयतेरङ्गस्य लिटि परतो दिगि इत्ययम् आदेशो भवति। अव्दिग्ये, अवदिग्याते, अवदिग्यिरे। दयतेः इति दीङो ग्रहणं न तु दय दाने इत्यस्य। तस्य हि लिति आम् विहितः। दिग्यादेशेन द्विर्वचनस्य बाधनम् इष्यते।

न्यासः

दयतेर्दिगि लिटि। , ७।४।९

"अवदिग्ये" इत्यादि। "देङ्? रक्षणे" (धा।पा।९६२), लिट्(), ङित्त्वादात्मनेपदम्(), प्रथपुरुषः, "लिटस्तझयोरेशिरेच्()"

३।४।८१ इत्येशिरेचौ, एरनेकाचः" ६।४।८२ इत्यादिना यणादेशः। "दयतेरिति देङो ग्रहणम्(), न तु दय दान इत्यस्य" इति। ननु च "दय दानगतिरक्षणहिंसादानेषु" (धा।पा।४८१) इत्येतस्य ग्रहणं कस्मान्न भवति? इत्यत आह--"तस्य हि" इत्यादि। लिटीत्युच्यते, न च "दय दाने" (धा।पा।४८१)--इत्येतस्यानन्तरो लिडस्ति; यस्मात्? तस्य "दयायासश्च" (३।१।३७) इत्यनेनाम्? विहितः। ननु च "अमन्त्रे" इति तत्रानुवत्र्तते, ततो मन्त्र आमोऽभावात्? स्यादेवानन्तर्यम्()? एवं मन्यते--यथादृष्टानुविधिश्छन्दसीति। न च "दय दाने" (धा।पा।४८१) इत्येतस्य मन्त्रे दिग्यादेशो दृश्यत इत्यभिप्रायः। इहावदिग्ये--इत्यनवकाशात्वाद्? दिग्यादेसे कृते पश्चाद्? द्विर्वचनेन भवितव्यम्(), यथा चख्यावित्यत्र "चक्षिङः ख्याञ्()" (२।४।५४) इति ख्याञादेशस्यानवकाशत्वात्? तत्र कृते पश्चाद्()द्विर्वचनम्(), तथावदिग्ये इत्यत्रापि दिग्यादेशे कृते पश्चाद्? द्विर्वचन केन बाध्येत? इति यश्चोदयेत्()--तं प्रत्याह--"दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यते" इति। कथं पुनरिष्यमाणमपि लभ्यते? नित्यग्रहणानुवृत्तेः। इह पूर्वसूत्रान्नित्यग्रहणमनुवत्र्तते, न चात्र विभाषा प्राप्नोति, यन्निवृत्त्यर्थं नित्यग्रहणं विज्ञायते। तस्मादन्यल्लिटि यत्? कार्यं प्राप्नोति, तन्निवृत्त्यर्थं नित्यग्रहणं विज्ञायते; तेनैवमभिसम्बन्धः करिष्यते--"लिटि प्राप्नुवतां कार्याणां दिग्यादेश एव नित्यं भवति, नान्यत्कार्यम्()"। इत्येवं द्विर्वचननिवत्र्तनं भवति। यणादेशस्तु लिटित्युच्यायं न विधीयत इति "एरनेकाचः" ६।४।४२ इत्यचि भवति॥

बाल-मनोरमा

दयतेर्दिगि लिटि २२५, ७।४।९

दयतेर्दिगि। "दिगी"ति लुप्तप्रथमाकम्।देङ्धातोर्दिगीत्यादेशः स्याल्लिटीत्यर्थः। ननु लिट एशादौ दिग्यादेशे कृते द्वित्वे सति दिदग्ये इत्यादि स्यादित्यत आह--दिग्यादेशेनेति। एतच्च स्पष्टम्। वृत्तिरिति। भाष्यस्याप्युपलक्षणम्। क्रादिनियमादिट्। दिग्यिषे दिग्याथे दिग्यिध्वे। दिग्ये दिग्यिवहे दिग्यिमहे। दाता। दास्यते। दयताम्। अदयत। दयेत। दासीष्ट।

तत्त्व-बोधिनी

दयतेर्दिगि लिटि १९७, ७।४।९

दिग्यादेशेनेति। दयतेर्लिटि परे द्वित्वं प्राप्तं, दिग्यादेशश्च, तत्र विशेषविहितेन दिग्यादेशेन द्वित्वशास्त्रस्य बाधः, न चैवं "प्यायः पी", "चक्षिङः ख्या"ञिति पीख्याञोरपि विशेषविहितत्वात्ताभ्यां द्वित्वबाधः स्यादिति वाच्यं, विषयसप्तमीमाश्रित्य लिडुत्पत्तेः प्रागेव तयोः प्रवृत्तत्वात्। दिग्यादेशविधौ तु लिटीति परसप्तम्येव, न तु विषयसप्तमी, लक्ष्यानुरोधात्। तदेत्सूचयति-- इष्यत इति। "दयतेर्लिटि द्वित्वे प्राप्ते तद्बाधित्वा परत्वाद्दिग्यादेश"इति तु नोक्तम्। परस्परलब्धावकाशयोरेव परस्य बलीयस्त्वात्। दिग्यादेसं विना द्वित्वस्य सावकाशत्वेऽपि द्वित्वं विना दिग्यादेशस्य तदभावादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

ऋतश् च संयोगादेर् गुणः ७।४।१०

ऋकारान्तस्य अङ्गस्य संयोगादेः गुणो भवति लिटि परतः। स्वृ सस्वरतुः। सस्वरुः। ध्वृ दध्वरतुः। दध्वरुः। स्मृ सस्मरतुः। सस्मरुः। ऋतः इति किम्? चिक्षियतुः। चिक्षियुः। संयोगादेः इति किम्? चक्रतुः। चकुउः। प्रतिषेधविषये ऽपि गुणो यथा स्यातित्ययम् आरम्भः। वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेव इष्यते। सस्वार। सस्मार। लिटि इत्येव, स्मृतः। स्मृतवान्। संयोगादेर् गुणविधाने संयोगोपधग्रहणं कृञर्थं कर्तव्यम्। सञ्चस्करतुः, सञ्चस्करुः इति। अत्र हि पूर्वं

धातुः साधनेन युज्यते पश्चादुपसर्गेण इत्यत्र दर्शने लिति कृते, तदाश्रये च द्विर्वचने, पश्चादुपसर्गयोगे सति, अडभ्यासव्यवाये ऽपि ६।१।१३१ इति सुत् क्रियते। एवं च कृत्वा संस्कृषीष्ट, उपस्कृषीष्ट इत्यत्र सुटो बहिरङ्गलक्षणस्य असिद्धत्वातृतश्च संयोगादेः इति इडागमो न भवति।

लघु-सिद्धान्त-कौमुदी

ऋतश्च संयोगादेर्गुणः ४९८, ७।४।१०

ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि। उपधाया वृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। जह्वरथुः। जह्वर। जह्वार, जह्वर। जह्वरिव। जह्वरिम। ह्वर्ता॥

न्यासः

ऋतश्च संयोगादेर्गुणः। , ७।४।१०

"सस्वरतुः, सस्वरुः" इति। "स्वृ शब्दोपतापयोः" (धा।पा।९३२), "उरत्()" ७।४।६६ इत्यभ्यासस्यात्त्वम्(), रपरत्वम्(), हलादिशेषः। "दध्वरतुः, दध्वरुः" इति। "ध्वृ हूच्छने" (धा।पा।९३९)। "सस्मरतुः, सस्मरुः" इति। "स्मृ आध्याने" (धा।पा।८०७)। ननु च सर्वत्रैव साभ्यासमङ्गम्(), न च तत्? संयोगादि? नैष दोषः, "द्विष्प्रयोगो द्विर्वचनम्()" इत्येषोऽत्र पक्षः, तत्र परस्याप्यङ्गसंज्ञा भवत्येव। अथापि "स्थाने द्विर्वचनम्()" इत्यप्यदोषः; सर्वत्रैव हि लिट()भ्यासः संयोगादित्वं विहन्ति, उच्यते चेदं वचनम्(), तत्रैवं विज्ञास्यामः--प्राग्द्विर्वचनात्? संयोगादित्वमस्ति, इह च द्विर्वचनात्? प्राक् संयोगादित्वमस्ति। "चिक्षिपतुः, चिक्षिपुः" इति। "क्षि क्षये" (धा।पा।२३६), इयङादेशः। "प्रतिषेधविषयेऽपि" इत्यादि। यः "क्ङिति च" (१।१५) इत्यसय प्रतिषेधस्य विषयो न भवति थलादिः, तत्र "सार्वधातुकार्धधातुकयोः" ७।३।८४ इत्येवं गुणः सिद्धः। तस्माद्गुणप्रतिषेधविषयेऽपि यथा स्यादित्ययमारम्भः वृद्धिविषयेऽपि परत्वाद्गुणेन भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"वृद्धिविषये तु" इत्यादि। गुणस्यावकाशः--सस्वरतुः, सस्वरुरिति; ञ्णिति वृद्धेरवकाशः--स्वारकः, ध्वारक इति; सत्वार, दध्वारेत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन वृद्धिरेव भवति। अथ तपरकरणं किमर्थम्(), दीर्घस्यापि मा भूदित्येवमर्थं चेत्()? नैतदस्ति; भवितव्यमेव हि दीर्घस्योत्तरसूत्रेण--"स्तृञ्? आच्छादने" (धा।पा।१४८४), आतस्तरतुः, आतस्तरुरिति। ननु चैतस्मात्? तपरकरणान्न प्राप्नोत, सावकाशं चोत्तरवचनमसंयोगादौ--"कॄ? विक्षेपे" (धा।पा।१४०९) निचकरतुः, निकरुरिति? यद्येवम्(), एवे तर्हि न चेदं तपरकरणम्(), किं तर्हि तसिनायं निर्देशः। "संयोगादेः" इत्यादि। इहाङ्गप्रकरणादङ्गं संयोगादित्वेन विशिष्यते। न च करोतेः संयोगाद्यङ्गमिति न प्राप्नोति, तस्मात्? संयोगोपधग्रहणं कत्र्तव्यमिति करोतेरपि यथा स्याद्गुणः। "सञ्चस्करतुः, सञ्चस्करुः" इति। "सम्पर्युपेभ्यः करोतौ भूषणे" ६।१।१३२ इति सुट्(), स च "अडभ्यासव्यवायेऽपि" ६।१।१३१ इति वचनादभ्यासव्यवायेऽपि भवति। किं पुनः कारणमिह गुणो न सिध्यति, यावता सुटि कृते "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" (व्या।प।२१) इति करोतिः संयोगादर्भवति? इत्यत आह--"अत्र हि" इत्यादि। अनेन सुटो बहिरङ्गतां प्रतिपादयति। बहिरङ्गत्वे हि तस्य "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यन्तरङ्गे गुणे कत्र्तव्ये बहिरङ्गस्य सुटोऽसिद्धत्वात्? संयोगादित्वं करोतेर्नोपपद्यते। पूर्वं धातुरुपसर्गेण युज्यते पश्चात्? साधनेन" (जै।प।वृ।९८) इत्यस्मिन्दर्शने धातूपसर्गयोः कार्यमन्तरङ्गमिति सुटोऽपि धातूपसर्ययोः कार्यत्वादन्तरङ्गता स्यात्()। "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण" (सी।प।१२८) इत्यस्मिन्? दर्शने सुड्बहिरङ्गो भवति। तथा हि--अस्मिन्? दर्शने निरुपसर्गस्यैव धातोरर्थः साधनेन युज्यत इति साधनाभिधायी पूर्वं तावल्लिट्? कत्र्तव्यः; तत्र कृते तदाश्रये द्विर्वचने कृते पश्चादुपसर्गयोगे "अडभ्यासवयवायेऽपि" (६।१।१३६) इति सुट्? क्रियते। एवञ्च क्रियमाणे ह्यनेकपदाश्रितत्वात्(), बह्वपेक्षत्वाच्च सुटो बहिरङ्गता प्रतिपाद्यते। गुणस्तु लिडुत्पत्तिसमनन्तरकालमेव प्राप्नोति, नापरं किञ्चिदपेक्षते; एकपदापेक्षत्वादल्पापेक्षत्वाच्चान्तरङ्गः, ततश्च तस्मिन्? कत्र्तव्ये सुटोऽसिद्धत्वात्? करोतिः संयोगाद्यङ्गं न भवति।

तस्मादसौ न प्राप्नोति। "एवञ्च कृत्वा" इत्यादि। यत एवं सुड्बहिरङ्गः, एवञ्च कृत्वाऽन्तरङ्ग इटि कत्र्तव्ये तस्यासिद्धत्वादसंयोगादित्वात्? करोतेरुपस्कृषीष्ट, संस्कृषीष्ट--इत्यतर "ऋतश्च संयोगादेः" ७।२।४३ इतीडागमो न भवति। एतेन बहिरङ्गतैव सुटः प्रतिपादिता। ननु चाङ्गाधिकारात्? प्रत्यासत्तेरङ्गावयव एव संयोगो गृह्रते, कात्पूर्वग्रहणेन तत्र ज्ञापितमभक्तत्वं सुटः, ततश्चाभक्तत्वादेवासंयोगादित्वात्? करोतेरिण्न भविष्यति, किमत्र बहिरङ्गत्वेनासिद्धत्वेनोपन्यस्तेन? सत्यमेतत्(); एवं मन्यते--भवतु नाम करोतिभक्तत्वं सुटः, तथाप्यसिद्धत्वात्? तस्य संस्कृषीष्ट--इत्यत्रेट्प्रसङ्गो न भविष्यतीति संयोगोपधग्रहणं कत्र्तव्यमिति। अस्यायमर्थः--संयोगोपधः करोतिरङ्गं गृह्रते येन तत्? संयोगोपधग्रहणव्याख्यानं कत्र्तव्यमित्यर्थः। तत्रेदं व्याख्यानं कत्र्तव्यम्()--चकारोऽत्र क्रियते, स च करोतेः संयोगोपधस्य समुच्चयार्थः। तेन तस्यापि सुटि कृते संयोगोपधस्य गुणो भविष्यतीति॥

बाल-मनोरमा

ऋतश्च संयोगादेर्गुणः २१६, ७।४।१०

ऋतश्च। लिटीति। "दयतेर्दिगि लिटी"त्यतस्तदनुवृत्तेरिति भावः। ननु तिप्सिप्मिप्सु सार्वधातुकार्धधातुकयोरित्येव गुणे सिद्धे किमर्थमिदमित्यत आह-- किदर्थमपीदमिति। अतुसादिकिदर्थं णलाद्यकिदर्थं चेत्यर्थः। ननु अस्य गुणस्य अतुसादिषु चरितार्थत्वाण्णलि "अचो ञ्णिती"ति वृद्धिप्रसङ्गात्कथं णल्ययं गुण इत्यत आह-- परत्वाण्णल्यपि भवतीति। "अचो ञ्णिती"ति वृद्ध्यपेक्षया अस्य गुणस्य परत्वादित्यर्थः। तर्हि "जह्रारे"ति कथमित्यत आह-- उपधावृद्धिरिति। "अत उपधाया इत्यनेने"ति शेषः। जह्र्थेति। क्रादिनियमप्राप्तस्य इटः "अचस्तास्व"दिति, "ऋतो भारद्वाजस्ये"ति च निषेधादत भावः। जह्रथुः जह्र। जह्रार-जह्र जह्रिम। क्रादिनियमादिट्। ह्रतु। अह्रत्। ह्रेत्।

तत्त्व-बोधिनी

ऋतश्च संयोगादेर्गुणः १८८, ७।४।१०

ऋतश्च। संयोगादेः किम्?। चक्रतुः। चक्रुः। तपरकरणं स्पष्टार्थम्, स्तृ()ञित्यादेर्लिटि तस्तरतुरित्यादौ "ऋच्थत्यृ()ता"मिति गुणस्य जायमानत्वात्। चकारो मन्दप्रयोजनः। "दयतेर्दिगि लिटी"त्यतोऽनुवर्तनादाह-- गुणः स्याल्लिटीति। "अवृद्धिनिमित्ते लिटी"ति प्राचो व्याख्यानं तु नादर्तव्यम्। न च स्वविषये वृद्धिर्बाधिकेति फलितार्थकथनपरतया तदुक्तिः सङ्गच्छत इति वाच्यं, परत्वेन गुणस्यैव न्याय्यत्वादिति भावः।

तत्त्व-बोधिनी

गुणोऽर्तिसंयोगाद्योः १८९, ७।४।१०

गुणोऽर्ति। "अर्ती"ति भ्वादिह्वाद्योग्र्रहणम्। लुका निर्देशस्तु सौत्रः। ऋग्रहणे कर्तव्ये श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। "रीङृतः" इत्यस्माद्दत इति वर्तते, तच्च संयोगादित्वेन विशेष्यते। तदाह-- संयोगादेरिति। "अर्तिसंयोगाद्योर"इत्यकारे विधेये गुणग्रहणं चिन्त्यप्रयोजनम्। "अयङि() क्ङिती"ति सूत्राद्यीत्यनुवर्तते। तच्च लिङो विशेषणम्। "रिङ् शयग्लिङ्क्षु" इति सूत्राद्यग्ग्रहणस्य लिङ्ग्रहणस्य चानुवर्तनादित्यभिप्रेत्याह--- यकि यादीति। आद्र्धधातुके इत्येतत् "अकृत्सार्वधातुकयो"रित्यनुवृत्तिपर्यालोचनया फलितार्थकथनमिति ज्ञेयम्। संयोगादेरिति किम्?। क्रियात्। यादीति किम्?। सस्कृषीष्ट। आद्र्धधातुके किम्?। इयृयात्। स्वृ। उपतापो रोगः।

तत्त्व-बोधिनी

रीगृदुपधस्य च ४०६, ७।४।१०

रीगृदुपधस्य च। ऋदिति किम्?। चेकीत्र्यते। णिजभावपक्षे एकाच्त्वाद्यङ्।

---

सूत्रम्

काशिका-वृत्तिः

ऋच्छत्यृऋताम् ७।४।११

ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ऋकारान्तानां च लिटि परतो गुणो न भवति। ऋच्छ आनर्च्छ, आनर्च्छतुः, आनर्च्छुः। ऋ आरतुः, आरुः। ऋकारान्तानाम् निचकरतुः, निचकरुः। निजगरतुः, निजगरुः। ऋच्छेरलघूपधत्वादप्राप्तो गुणो विधीयते, ऋतां तु प्रतिषिद्धः। वृद्धिविषये तु पूर्वविप्रतिषेधेन वृद्धिरेव इष्यते। निचकार। निजगार।

लघु-सिद्धान्त-कौमुदी

ऋच्छत्यॄताम् ६१७, ७।४।११

तौदादिक ऋच्छेर् ऋधातोर् ॠतां च गुणो लिटि। पपरतुः। पपरुः॥

न्यासः

ऋच्छत्यताम्?। , ७।४।११

"ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु" (धा।पा।१२९६)। अत्रतेरप्यत्र प्रश्लेषः; बहुवचननिर्देशात्()। अत एवाह--"ऋच्छतेरङ्गस्य, ऋ इत्येतस्य, ऋकारान्तानां च" इति। ऋकारान्ताः--"कृ विक्षेपे" (धा।पा।१४०९), "गृ? निगरणे" (धा।पा।१४१०) इत्येमादयः। "आनच्छतुः, आनर्च्छुः" इत्यादि। अतुसुसौ, गुणः, द्विर्वचनम्(), अभ्यासकार्यं पूर्ववत्(), "अत आदेः" ७।४।७० इति दीर्घः, "तस्मान्नुड्? द्विहलः" ७।४।७१ इति नुट्। "आरतुः" आरुः" इति। पूर्ववदभ्यासस्य दीर्घः, ततः पूर्वसवर्णेनेति। "ऋच्छतेरलघूपधत्वात्()" इत्यादि। अलघूपधत्वं तु तस्यान्तरङ्गत्वात्()। "छे च" ६।१।७१ इति तुकि कृते "संयोगे गुरु" १।४।११ इति गुरुसंज्ञायां सत्यां गुरूपधत्वान्न प्राप्नोतीति वेदितव्यम्()। "ऋतां तु" इत्यादि। ऋ ऋतां तु प्रतिषिद्ध एवेति गुणो विधीयत इत्यपेक्ष्यते। गुणप्रतिषेधस्तु तेषां "असंयोगास्लिट्? कित्()" १।२।५ इति कित्त्वे सति "क्ङिति च" १।१।५ इत्यनेन वेदितव्यः। "वृद्धिविषये तु" इत्यादि। यथा "ऋतश्च संयोगावेः" ७।४।१० इति वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिरेवेध्यते, तथा ऋऋतामपीति। गुणस्यावकाशः--निचकरतुः, निचकरुरिति; वृद्धेरवकाशः--कारकः, हारक इति; निचकार, निजगारेत्यत्र वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिरेवेध्यते॥

बाल-मनोरमा

ऋच्छत्यृ?ताम् २२०, ७।४।११

ननु ऋ अतुस् इति स्थिते द्वित्वे उदरत्त्वे रपरत्वे हलादिशेषे "अत आदे"रिति दीर्घे आ ऋ अतुस्? इति स्थिते "असंयोगा"दिति कित्त्वादुत्तरखण्डस्य गुणाऽभावे यणं बाधित्वा परत्वाद्गुणे अरतुरिति स्यादित्यतस्तत्र गुणविधानमाह-- ऋच्छत्यृ()ताम्। "दयतेर्दिगि लिटी"त्यतो लिटीति," ऋतश्च संयोगादेर्गुण" इत्यतो गुण इति चानुवर्तते। ऋच्छति ऋ ऋत् एषां द्वन्द्वाद्बहुवचनम्। बहुवचनादेव ऋकारप्रश्लेषो गम्यते। प्रश्लिष्टेन च ऋकारेण ऋधातुरेव गृह्रते, ऋवर्णान्तधातुग्रहणे "ऋतश्च संयोगादेर्गुणः" इत्यस्य वैयर्थ्यात्। "ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु" इति तौदादिकस्य "ऋच्छती"त श्तिपा निर्देशः। भौवादिकस्य धातोस्तु ऋग्रहणेनैव सिद्धेः। तदाह-- तौदादिकस्येत्यादिना। किदर्थमपीदं सूत्रं परतवादकित्यपि भवति। णलि प्राग्वदिति। "ह्व कौटिल्ये" इत्यत्र उक्त्या रीत्या कित्सु चरितार्थोऽप्ययं गुणः "अचो ञ्णिती"ति वृद्ध्यपेक्षया परत्वाण्णल्यपि भवति, ततो रपरत्वे उपधावृद्धिरित्यर्थः। आरेति। ऋधातोर्लिटि तिपो णलि द्वित्वे उरदत्त्वे हलादिशेषे "अत आदे"रिति दीर्घे उत्तरखण्डस्य वृद्धौ रपरत्वे सवर्णदीर्घ इति भावः। आरतुरिति। पूर्ववद्द्वित्वादौ आ ऋ

अतुसिति स्थिते कित्त्वाद्गुणनिषेधे प्राप्ते "ऋच्छत्यॄ()ता"मिति गुणे रपरत्वे सवर्णदीर्घ इति भावः। आरुरित्यप्येवम्।

तत्त्व-बोधिनी

ऋच्छत्यॄताम् १९२, ७।४।११

प्राग्वदिति। किदर्थमारब्धोऽपि गुणः परत्वाण्णल्यपि भवति। रपरत्वम्। तत उपधावृद्धिरित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

शॄद्दॄप्रां ह्रस्वो वा ७।४।१२

शॄ दॄ पॄ इत्येतेषां अङ्गानां लिटि परतो वा ह्रस्वो भवति। शॄ विशश्रतुः, विशश्रुः। विशशरतुः, विशशरुः। दॄ विदद्रतुः, विदद्रुः। विददरतुः, विददरुः। पॄ निपप्रतुः, निपप्रुः। निपपरतुः, निपपरुः। ह्रस्ववचनम् इत्वोत्वनिवृत्त्यर्थम्। केचिदेतत् सूत्रं प्रत्याचक्षते। श्रा पाके, द्रा कुत्सायां गतौ, प्रा पूरणे इत्येतेषाम् अनेकार्था धातवः इति शॄद्दॄप्रामर्थे वर्तमानानां विशश्रतुः, विशश्रुः, विदद्रतुः, विदद्रुः, निपप्रतुः, निपप्रुः इत्येतानि रूपाणि साधयन्ति। तथा च सति क्वसौ विशशृवानित्येतद् रूपं न स्यात्।

लघु-सिद्धान्त-कौमुदी

शॄदॄप्रां ह्रस्वो वा ६१६, ७।४।१२

एषां लिटि ह्रस्वो वा स्यात्। पप्रतुः॥

न्यासः

शॄ?दॄ?प्रां ह्यस्वो वा। , ७।४।१२

"शॄ? हिंसायाम्()" (धा।पा।१४८८) "दॄ? विदारणे" (धा।पा।१४९०) "पॄ? पालनपूरणयोः" (धा।पा।१४८९)--एषां पूर्वसूत्रेण नित्यो गुणो भवत्येव। "विशश्रतुः" इति। ह्यस्वत्वे कृते यणादेशः। "ह्यस्ववचनम्()" इत्यादि। असति ह्यस्वग्रहणे वाश्धनेन विकल्पिते यस्मिन्? पक्षे गुणो नास्ति तस्मिन्? पक्षे "ऋत इद्धातोः" ७।१।१०० इतीत्त्वं प्रसज्येत, "उदीष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्त्वञ्च। तस्मात्? तन्निवृत्त्यर्थं ह्यस्व इत्युच्यते? ऋदिति कत्तव्ये ह्यस्वग्रहणमुत्तरार्थम्()। केचित्? इत्यादि। कथं पुनरस्य प्रत्याच्यमाने विशश्रतुः--इत्येवमादीनि रूपाणि सिध्यन्ति? इत्याह--"श्रा पाके" इत्यादि। यद्यपि "आतो लोप इटि च" ६।४।६४ इत्यकरलोपे कृते श्रादीनां विशश्रतुरित्येवमादीनि रूपाणि सिध्यन्तीति, तथाप्यर्थमेवो भवति; तदाऽयुत्तमस्य प्रत्याख्यानमित्याशङ्क्यानेकार्थत्वाद्धातूनामित्युक्तम्()। "तथा च सति" इत्यादिना प्रत्यादिना प्रत्याख्यानं प्रत्याचष्टे। यदि सूत्रस्य प्रत्याख्यानं क्रियते, क्वासौ कृते विशशृषानिति रूपं न सिध्यति, तथा हि--यदि शृणातेह्र्यस्वो न क्रियते, तदा विशशर्वानिति रूपं स्यात्()। अथ श्रातेः, विशश्रिवानिति। तस्मादयुकतमस्य प्रत्याख्यानम्()॥

बाल-मनोरमा

शॄ?दॄ?प्रां ह्यस्वो वा ३२५, ७।४।१२

शॄ()दॄ()प्राम्। शॄ? दॄ? पॄ? एषां द्वन्द्वः। लिटीति। "दयतेर्दिगि लिटीटत्यतस्तदनुवृत्तेरिति भावः। यद्यपि पूर्वसूत्रेषु क्वापि कितीति न दृष्टं तथापि अस्य "ऋच्छत्यॄ()ता"मिति गुणाऽपवादत्वाद्गुणस्य च तस्य किदर्थत्वात्कितीत्युक्तम्। पप्रतुरिति। पपॄ? अतुस् इति स्थिते ऋकारस्य ह्यस्वे तस्य यणिति भावः। गुणपक्षे आह---पपरतुरिति। गुण एव तु न विकल्पितः,

गुणाऽभावे "वार्णादाङ्गं बलीयः" इति यणं बाधित्वा "उदोष्ठ()ए"त्युत्त्वप्रसङ्गात्। पपरिथ पप्रथुः--पपरथुः पप्रपपर। पपार पपर पप्रिव पपरिव। "वृ()तो वा" इति दीर्घविकल्पं मत्वा आह---परिता परितेति। परिष्यति-- परीष्यति। पिपर्तु--पिपूर्तात् पिपूर्ताम् पिपुरतु। पिपूर्हि--पिपूर्तात् पिपूर्तम् पिपूर्त। पिपराणि पिपराव पिपराम। लङ्याह-- अपिपरिति। अपि पृ? त् इति स्थिते गुणे रपरत्वे हल्ङ्यादिना तकारलोपे रेफस्य विसर्गः। अपिपरुरिति। अभ्यस्तत्वात् जुस्। कृते "जुसि चे"ति गुणे रपरत्वम्। अपिपः अपिपूर्तम् अपिपूर्त। अपिपरम् अपिपूर्व अपिपूर्म। केचिदिति। अन्ये आचार्या इत्यर्थः। ह्रस्वान्तत्वपक्षे "उदोष्ठ()ए"त्युत्त्वं नेति मत्वा आह---पिपृत इति। ह्रस्वान्तस्य अनिट्त्वाल्लुडादौ पर्तेत्यादि। पिपृहि। अपार्षीदिति। ह्रस्वान्तस्य अनिट्त्वान्न सिज्लोप इति भावः। नन्वाचार्यान्तरसंमतं ह्रस्वान्तत्वं कुतोऽस्माभिरादर्तव्यमित्यत आह--पाणिनीयेति। पाणिनिसंमतदीर्घान्तत्वस्यैवाश्रयणे "तं रोदसी पिपृत"मित्यादौ "उदोष्ठ()"त्युत्त्वापत्त्या"ऋकारस्य ह्रस्वस्य श्रवणाऽनापत्त्या तद्विषये छान्दसत्वमेव शरणमनुसरणीयं स्यादत्यर्थः। डुभृञिति। अनिडयम्। ञित्त्वादुभयपदी। श्लौ सति द्वित्वनादौ बिभर्तीत्यादि स्थितम्।

तत्त्व-बोधिनी

शॄ?दॄ?प्रां ह्रस्वो वा २८१, ७।४।१२

शॄ()दॄ()प्रां। शॄ? हिंसायाम्। दॄ? विदारणे। इमौ क्र्यादी। पक्षे गुण इति। "ऋच्छत्यॄ()ता"मित्यनेन। पप्रतुरिति। ह्रस्वपक्षे यण्। ननु ह्रस्वग्रहणमिह मास्तु, गुणानुवृत्त्या तस्यैव विकल्पोऽस्तु। तथा च यणादेसेन पप्रतुः शश्रतुरित्यादि सिध्यत्येव। गुणपक्षेतु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत्, मैवम्। गुणाऽभावपक्षे "ऋत इद्धातो" रितीत्त्वप्रसङ्गात्। न चान्तरङ्गत्वाद्यणेव स्यादिति वाच्यं, वार्णादाङ्गसय् बलीयस्त्वात्। डुभृञ्। "ड्वितः क्त्रिः"। भृत्रिमम्।

---

सूत्रम्

काशिका-वृत्तिः

के ऽणः ७।४।१३

के प्रत्यये परतो ऽणो ह्रस्वो भवति। ज्ञका कुमारिका। किशोरिका। अणः इति किम्? गोका। नौका। राका, धाका इत्यत्र उणादयो बहुलम् 3।3।1 इति ह्रस्वो न भवति। न कपि ७।४।१४ इति प्रतिषेधसामर्थ्यात् कनो ऽपि सानुबन्धकस्य ग्रहणम् इह भवति।

न्यासः

केऽणः। , ७।४।१३

अणिति पूर्वेम णकारेण प्रत्याहारग्रहणम्(); अन्यथा "केऽचः" इत्येवं ब्राऊयात्()। अथ वा--अच इत्येतदपि न ब्राऊयात्(), अच एव हि हरस्वदीर्घल्पुता भवन्ति। "ज्ञका" इति। जानातीति ज्ञा, "इगुपधज्ञाप्रीकिरः कः" ३।१।१३५, तदन्ताट्टाप। अज्ञाता ज्ञेति "प्रागिवास्? कः" ५।३।७०। अथ वा--अनुकम्पिता ज्ञेति "अनुकम्पायाम्()" (५।३।७६) इति कन्? कनि कृते तदन्ताट्टाप्()। अथेह कस्मान्न भवति--"कृदाधारार्चिकलभ्यः कन्()" (द।उ।३।१८) इति रातेर्दधातेश्च कन्(), तदन्ताट्टाप्()--"राका, धाका" इत्यादि। सुबोधम्()। निरनुबन्धस्येह ग्रहणान्निरनुबन्धकपरिभाषया कनो ग्रहणेन न [नास्ति--मुद्रिते] भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"न कपि" इत्यादि। यद्येषा परिभाषोपतिष्टते, तदा "न कपि" ७।४।१४ इति प्रतिषेधोऽनर्थकः स्यात्()। सानुबन्धकत्वादेव कपो ग्रहणं ग्रहणं न भविष्यतीत्यभिप्रायः॥

बाल-मनोरमा

केऽणः ८२४, ७।४।१३

केऽणः। ह्रस्वः स्यादिति। "शृ()दृ()प्रा"मित्यतस्तदनुवृत्तेरिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

न कपि ७।४।१४

कपि प्रत्यये परतो ऽणो ह्रस्वो न भवति। बहुकुमारीकः। बहुवधूकः। बहुलक्ष्मीकः। गोस्त्रियोरुपसर्जनस्य १।२।४८ इत्ययम् अपि ह्रस्वः कपि न भवति। समासार्थे हि उत्तरपदे कपि कृते, पश्चात् कबन्तेन सह समासेन भवितव्यम् इति स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति।

न्यासः

न कपि। , ७।४।१४

"बहुकुमारीकः" इति। बह्व्यः कुमार्यो यस्य सः। "नद्यृतश्च" ५।४।१५६ इति कप्(); अनुबन्धलोपः। अथात्रास्मिन्? ह्रस्वत्वे प्रतिषिद्ध उपसर्जनह्रस्वत्वं कस्मान्न भवति? अत #एव प्रतिषेधान्न भविष्यतीति चेत्()? न; "अनन्तरस्य विधिरावा प्रतिषेधो वा" (व्या।प।१९) इत्यनन्तरस्यैव ह्रस्वस्य ह्ययं प्रतिषेधो न सर्वस्य। कपीति वचनसामथ्र्यादुपसर्जनह्रस्वत्वमिति न भविष्यतीति चेत्()? यत्र ह्रुपसर्जनह्रस्वत्वस्य प्राप्तिरस्ति, "गोस्त्रियोरुपसर्जनस्य" १।२।४८ इति ह्रस्वशासने स्त्रीशब्देन स्त्र्यधिकारविहितानां प्रत्ययानां टाबादीनां ग्रहणात्()। तस्माद्बहुकुमारीक इत्यत्रोपसर्जनस्य ह्रस्वत्वेन भवितव्यमित्यत आह--"गोस्त्रियोरुपसर्जनस्य" इत्यादि। कस्मान्न भवति? इत्याह--"समासार्थे हि" इत्यादि। उपसर्जनह्रस्वत्वं हि स्त्रीप्रत्ययान्तस्य समासप्रातिपदिकसय विधीयते, तद्विधाने "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इत्यतः प्रातिपदिकग्रहणानुवृत्तेः समासप्रातिपदिकस्यैव स्त्रीप्रत्ययान्तस्योपसर्जनह्रस्वः स्यात्()। न च बहुकुमारीक इत्यादौ स्त्रीप्रत्ययान्तं समासप्रातिपदिसं भवति; यस्मात्? "समासान्ताः" ५।४।६८ इत्यधिकार एवायां कब्विधीयते। "समासान्ताः" इत्यत्रान्तग्रहणस्यैतत्? प्रयोजनम्()--समासस्यान्तोऽवचयो यथा स्यादिति, स च कथं समासस्यावयवो भवति? यदि तेन सह समाससंज्ञा भवति। कथञ्च तेन समाससंज्ञा भवति? यद्यकृते समासे समासार्थादुत्तरपदात्? कब्भवति, पश्चात्? कदन्तेन समासो भवति, नान्यथा। तस्मात्? समासान्ताधिकारे कपो विधानात्? समासार्थादुत्तरपदात्? कपि कृते पश्चात्? समासेन भवितव्यम्()। ततश्च स्त्रीपरत्ययान्तमिह समासपरातपदेकं न भवतीति न भवत्युपसर्जनह्रस्वत्वम्()।

बाल-मनोरमा

न कपि ८२५, ७।४।१४

न कपि। अणो ह्रस्व इति।"केऽणः" इत्यतः, "शृ()दृ()प्रा"मित्यतश्च तदनुवृत्तेरिति भावः। ननु "कल्याणपञ्चमीकः पक्ष" इत्यत्र पञ्चदशाहोरात्रात्मके पक्षेऽन्यपदार्थे पञ्चम्या रात्रेः प्रवेशात्प्राधान्यं दुर्वारमित्यत आह--अत्र तिरोहितेति। रात्रे तत्प्रवेशाऽभावादप्राधान्यमिति भावः। भाष्ये एवमुदाहरणेवात्र लिङ्गम्। ऋदन्तोत्तरपदात्कपमुदाहरति--बहुकर्तृक इति। बहवः कर्तरो यस्येति विग्रहः। तदेवमपूरणीप्रियादिषित्यत्र पूरणीविषयं प्रपञ्च्य प्रियादिषु परेषु पुंवद्भावनिषेधस्य प्रयोजनं पृच्छति--अप्रियादिषु किमिति। कल्याणीप्रिय इति। कल्याणी प्रिया यस्येति विग्रहः। प्रियादिगणं पठति--प्रिया मनोज्ञेत्यादि।

ननु भक्तिशब्दस्य प्रियादिषु पाठे दृढा भक्तिर्यस्य स दृढभक्तिरित्यत्र कथं पुंवत्त्वमित्यत आह--सामान्ये नपुंसकमिति। "आश्रित्ये"ति शेषः। दृढमिति। पदसंस्कारपक्षे सामान्यपरतत्त्वमाश्रित्य दृढशब्दो नपुंसकलिङ्गो व्युत्पाद्यः, ततस्तस्य भक्तिशब्देनान्वये पूर्वप्रवृत्तं नपुंसकत्वं नापैति, लिङ्गविशेषस्याऽविवक्षितत्वात्, "वेदाः प्रमाण"मितिवत्। अत्र चार्थे पस्फशाह्निकभाष्ये "शक्यं चानेन ()आमांसादिभिरपि क्षुत्प्रतिहन्तु"मिति प्रयोगो लिङ्गम्। नन्वेवं सति प्रियादिषु भक्तिशब्दपाठो व्यर्थ इत्यत आह--स्त्रीत्वविवक्षायां त्विति। वाक्यसंस्कारपक्षे विशेष्यानुसारेण स्त्रीत्वप्रतीतेर्नियमादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अपो ऽन्यतरस्याम् ७।४।१५

आबन्तस्याङ्गस्य कपि ह्रस्वः न भवत्यन्तरस्याम्। बहुखट्वाकः, बहुखट्वकः। बहुमाल कः बहुमालकः।

न्यासः

आपोऽन्यतरस्याम्?।, ७।४।१५

"बहुखट्वाकः" इति। "शेषाद्विभाषा" ५।४।१५४ इति कप्()॥

बाल-मनोरमा

आपोऽन्यतरस्याम् ८८३, ७।४।१५

आपोऽन्यतरस्याम्। कपीति। "न कपी"त्यतस्तदनुवृत्तेरिति भावः। आबन्तस्येति। प्रत्ययग्रहणपरिभाषया लब्धमिदम्। ह्यस्वो वेति। "शृ()दृप्रां ह्यस्वो वा" इत्यतस्तदनुवृत्तेरिति भावः। "न कपी"ति नित्यं निषेधे प्राप्ते विकल्पार्थमिदं वचनम्। बहुवमालाक इति। बह्व्यो माला यस्येति विग्रहः। ह्यस्वपक्षे "बहुलमालक" इति भावति। कपो वौकल्पिकत्वात् पक्षे बहुमालः। सर्वत्र "स्त्रियाःपुंवदि"ति पुंवत्त्वम्।

---

सूत्रम्

काशिका-वृत्तिः

ऋदृशो ऽङि गुणः ७।४।१६

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति। शकलाङ्गुष्ठको ऽकरत्। अहं तेभ्यो ऽकरं नमः। असरत्। आरत्। जरा। दृशेः अदर्शत्, अदर्शताम्, अदर्शन्।

न्यासः

ऋदृशोऽङि गुणः।, ७।४।१६

"क्ङिति च" १।१।५ इति प्रतिषेधे प्राप्तेऽयं गुणो विधीयते। "अकरत्()" इति। कृञो लुङ्(), च्लिः, "तिप्(), "कृमृदृरुहिभ्यश्छन्दसि" ३।१।५९ इति च्लेरङ। "असरत्()" इति। "सृ गतौ" (धा।पा।९३५)। "आरत्()" इति। "ऋ गतिप्रापणयोः" (धा।पा।९३६), "सर्त्तिशास्त्यर्त्तिभ्यश्च" ३।१।५६ इति च्लेरङ्(), अत्तेरजादित्वादाटि कृते "आटश्च" ६।१।८७ इति वृद्धिः। "अदर्शत्()" इत "इरितो वा" ३।१।५७ इत्यङ्()। अथ गुणग्रहणं किमर्थम्()। अकार एव नोच्येत? नैवं शक्यम्(); अकार इत्युच्यमाने दुशेरन्त्यस्य स्यात्()। गुणग्रहणे तु सति संज्ञाविधाने नियम इतीक एव स्थाने भवति॥

बाल-मनोरमा

ऋदृशोऽङि गुणः २३९, ७।४।१६

ऋदृशोऽङि। "ऋ" इत्यङ्गविशेषणत्वात्तदन्तविधिः। तदाह-- ऋवर्णान्तानामिति। अङभावे इति। अङभावपक्षे "शल इगुपधा" दिति क्सादेशे प्राप्ते सतीत्यर्थः।

तत्त्व-बोधिनी

ऋदृशोऽङि गुणः २११, ७।४।१६

अदाङ्क्षीदिति। "वदव्रजे"ति वृद्धिः। अदांष्टाम्। अदाङ्क्षुः।

---

सूत्रम्

काशिका-वृत्तिः

अस्यतेस् थुक् ७।४।१७

अस्यतेरङ्गस्य थुगागमो भवति अङि परतः। आस्थत्, आस्थताम्, आस्थन्।

न्यासः

अस्यतेस्थु क्?। , ७।४।१७

"आस्थत्()" इति। "असु क्षेपणे" (धा।पा।१२०९) "अस्यतिवक्तिखक्यातिभ्योऽङ्()" ३।१।५२ इति च्लेरङादेशः॥

बाल-मनोरमा

अस्यतेस्थुक् ३५०, ७।४।१७

अस्यतेस्थुक्। शेषं पूरयति-- अङि परे इति। "ऋदृशोऽङी"त्यतस्तदनुवृत्तेरिति भावः। थुकि ककार इत्। उकार उच्चारणार्थः। कित्त्वादस्धातोरन्तत्यावयवः। ननु पुषादित्वादेवाऽस्यतेश्च्लेरङि सिद्धे "अस्यतिवक्तिख्यातिब्योऽङित्यत्राऽस्यतिग्रहणं व्यर्थमित्याशङ्क्य निराकरोति-- अस्य पुषादित्वादित। तङर्थमिति। "पर्यास्थते"त्यत्र आत्मनेपदेऽङर्थमस्यतिवक्तीत्यत्र अस्यतिग्रहणमित्यर्थः, पुषाद्यङः परस्मैपदमात्रविषयतया आत्मनपदे अप्रसक्तेरिति भावः। नन्वस्यतेः केवलपरस्मैपदित्वादात्मनपदं दुर्लभमित्यत आह-- तङ् तु उपसर्गादिति वक्ष्यते इति। "पदव्यवस्थाया"मिति शेषः। यसु प्रयत्ने।

---

सूत्रम्

काशिका-वृत्तिः

श्वयतेरः ७।४।१८

श्वयतेः अङ्गस्य अकारादेशो भवति अङि परतः। अश्वत्, अश्वताम्, अश्वन्।

न्यासः

�आयतेरः। , ७।४।१८

"अ()आत्()" इति। "टु ओ()इआ गतिवृद्ध्योः" (धा।पा।१०१०)। "जृ()स्तम्भुम्रुचु" ३।२।५८ इत्यादिनाङ् द्वयोरकारयोः पररूपत्वम्()॥

बाल-मनोरमा

�आयतेरः १२५९, ७।४।१८

()आयतेरः। ()आयतेः-- अ इति च्छेदः। ()आयतेरिति श्तिपा निर्देशः। ()इआधातोरित्यर्थः। "अलोऽन्त्यस्ये"त्यन्त्यस्य इकारस्येति लभ्यते। "ऋद्दशोऽङो" इत्यतोऽङीत्यनुवर्तते। तदाह--()आयतेरिकारस्येति। अ()आ अ त् इति स्थिते सवर्णदीर्घमाशङ्क्याह--पररूपमिति। आद्र्धधातुकोपदेशे अदन्तत्वाऽभावान्न अल्लोपः। अ()आन्निति। अ()आः अ()आतम् अ()आत। अ()आम् अ()आआव अ()आआम। अङभावपक्षे त्वाह--विभाषेति। इयङिति। "चङी"ति द्वित्वमित्यपि ज्ञेयम्। तदाह--अशि()इआयदिति। अङ्श्चङ्श्चाऽभावे तु अ()इआ ईत् इति स्थिते इकारस्य सिचि वृद्धौ सत्यामायादेशे अ()आआयीदित प्राप्ते आह-- ह्म्यन्तेति न वृद्धिरिति। ()इआग्रहणादिति भावः। न च "नेटी"त्येव सिचि अ()इआ ईत् इति स्तिते सिचि वृद्ध्यपेक्षया परत्वादन्तरङ्गत्वाच्च इकारस्य गुणे एकारे कृते इगन्तत्वाऽभावेन सिचि वृद्ध्यप्राप्त्या अयादेशे कृते यान्तत्वादेव हलन्तलक्षणवृद्धेर्निषेधसिद्धेः "ह्म्यन्ते"त्यत्र ()इआग्रहणं व्यर्तमिति व्याच्यम्, अनवकाशतया अपवादत्वेन गुणं बाधित्वा सिचि वृद्धेः प्राप्तौ तन्निषेधार्थत्वादित्यलम्। वृदित्यस्य व्याख्यानम्-- यजादयो वृत्ता इति। ननु भ्वादयो वृत्ता इति कुतो न व्याख्यायते इत्यत आह-- भ्वादिस्त्वाकृतिगण इति। चुलुम्पतीति। चुलुम्पधातुर्लोपार्थकः, तस्यापि भ्वादिगणे पाठाच्छब्विकरणत्वमिति भावः। इति भ्वादय इति। नचैवं सति "अद भक्षणे" इत्यादीनां वक्ष्यमाणानां धातुत्वं क्थमिति शङ्क्यं, शब्विकरणा भ्वादयः समाप्ता इत्यर्थात्।

इति बालमनोरमायां भ्वादयः।

अथ चातुरर्थिक प्रकरणम्।

-------------------

तत्त्व-बोधिनी

�आयतेरः १२६४, ७।४।१८

()आयतेरः। अलोऽन्त्यपरिभाषालभ्यमाह-- इकारस्येति। पररूपमिति। अतो लोपस्तु न भवति, "आद्र्धधातुकोपदेशे यदकारान्त" मिति व्याख्यातत्वात्। इयङिति॥ लघूपधगुणापेक्षयाऽन्तरङ्गत्वादिति भावः। अ()आयीदिति। नन्विहान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तत्वादेव वृद्धिनिषेधो भवेदिति किमनेन णि()इआग्रहणेनेति। चेत्। अत्राहुः--- "न सिच्यन्तरङ्गमस्ती"ति ज्ञापनार्थं णि()इआग्रहणम्। तेन चिरिणोतिजिरिणोत्योर्यङ्लुगन्तानां चिनीप्रभृतीनां च सिचि बहिरङ्गा वृद्धिरेव भवति। अचिरायीत्। अजिरायीत्। अचेचायीत्। अनेनायीदिति। तेनेति। उक्तं च वार्तिककृता-- "कास्यनेकाज्घणं चुलुम्पाद्यर्थ"मिति। चुलुम्पतीति। लुम्पतीत्यर्थः, चुलुम्प लोपे इति कविकल्पद्रुमे उक्तत्वात्। इति तत्त्वबोधिन्यां भ्वादयः।

---

सूत्रम्

काशिका-वृत्तिः

पतः पुम् ७।४।१९

पतेरङ्गस्य पुमागमो भवति अङि परतः। अपप्तत्, अपप्तताम्, अपप्तन्।

न्यासः

पतः पुम्?। , ७।४।१९

"अपप्तत्()" इति। "शल हुल पत्लृ गतौ (धा।पा।८४३,८४४,८४५), पुषादिनाङ। मकारो देशविध्यर्थः॥
तत्त्व-बोधिनी
पतः पुम् १६५, ७।४।१९

पतः पुम्। मित्त्वादन्त्यादचः परः। अक्वथीदिति। एदित्त्वान्न वृद्धिः। एवम्-- अपथीत्। अमथीदित्यत्रापि। टुवम्। केचिदमुमुदितं पठित्वा वान्त्वा वमित्वेत्युदाहरन्ति , तत्तु वामनेन विरुध्यते। तेन हि "आदितश्चे"ति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य "वान्त" इत्यत्र इडभावः साधितः। उदित्त्वे तु "यस्य विभाषे"त्येनेनैव "वान्त" इति सिद्धेस्तदसङ्गतं स्यात्। एवं च क्त्वाप्रत्यये वमित्वेत्येव साधु। निपातनादिति। अन्यथा गुणे सति उद्गरण इति स्यात्। यद्यपि अर्थनिर्देश आधुनिकस्तथापि पृषोदरादित्वमित्यत्रैव तात्पर्यं बोध्यत्। इत्याद्यप्युदाह्रतमिति। "वेमुश्च केचिद्रुधिर" मित्यादिप्रयोगानुरोधेन तथोदाह्रतमित्याहुः। ननु वादित्वेन निषेधादेत्त्वाब्यासलोपौ कथमिह स्यातामिति चेत्। अत्राहुः-- "न शसददवादिगुणाना"मिति सूत्रितेऽपि वेत्यकारान्तसङ्घातग्रहणेनेष्टसिद्धेरादिग्रहणमौपदेशिकप्रतिपत्त्यर्थम्। "एकान्ता अनुबन्धा" इति च स्वीक्रियते। तथा च नायं वादिः, किं तु ट्वादिरिति। अन्ये तु वमेरादौ "लोपो व्यो"रिति लोपेन यकारः प्रश्लिष्यते। ततश्चोपदेशे वादित्वाऽभावान्निषेधो नेत्याहुः। भ्रमु चलने। मण्डलाकारेण चलनमेव धात्वर्थो, न तु चलनमात्रम्। तदभाववद्विशेष्यकं तत्प्रकारकज्ञानं च धात्वर्थः। "शुकिं()त पश्यन् रजतमिति भ्रमती"ति प्रयोगात्। "उदितो वे" ति क्त्वायां वेट्। भ्रमित्वा। भ्रान्त्वा। "यस्य विभाषे"ति निष्ठायां नेट्। भ्रान्तः। नन्वस्य ज्वलादिगणे पाठः किमर्थः। न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यं, पचादेराकृतिगणत्वादच्प्रत्ययेनाऽपि "भ्रम" इति रूपसिद्धेः, "नोदात्तोपदेशस्ये"ति वृद्धिनिषेधाण्णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादिति चेत्। अत्राहुः- यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि "अभ्रम" इत्यत्र "अच्कावशक्तौ" इति नञः परमन्तोदात्तं स्यात्। णप्रत्यये त्विह "तत्पुरुषे तुल्यार्थे" त्याद्युदात्तमेव भवतीति।

---

सूत्रम्
काशिका-वृत्तिः
वच उम् ७।४।२०

वचेः अङ्गस्य अङि परतः उमागमो भवति। अवोचत्, अवोचताम्, अवोचन्।
लघु-सिद्धान्त-कौमुदी
वच उम् ६०१, ७।४।२०

अङि परे। अवोचत्, अवोचत। अवक्ष्यत्, अवक्ष्यत। (ग। सू।) चर्करीतं च। चर्करीतमिति यङ्लुगन्तस्य संज्ञा, तददादौ बोध्यम्॥ ऊर्णुञ् आच्छादने॥ २५॥
न्यासः
वच उम्?। , ७।४।२०

"अवोचत्()" इति। "वच परिभाषणे" (धा।पा।१८४२), "अस्यतिवक्तिख्यातिभ्यः" ३।१।५२ इत्यादिनाङ्()। मकारसय तदेव प्रयोजनम्()॥
बाल-मनोरमा

वच उम् २८५, ७।४।२०

वच उम्। शेषपूरणेन सूत्रं व्याचष्टे--- अङि परे इति। "ऋदृशोऽङी त्यतस्तदनुवृत्तेरिति भावः। मित्त्वादन्त्यादचः परः। आद्गुणः। तदाह-- अवोचदिति। अवक्ष्यत् अवक्ष्यत। इङ् त्विति। "इङ् अध्ययने" इति धातुस्तु ङित्त्वादात्मनेपदीत्यर्थः। इण्गताविति। "इणो य"णित्यादौ विशेषणार्थो णकारः। एतीति। शपो लुकि तिपः पित्त्वेन ङित्त्वाऽभावाद्()गुणः। इत इति। अपित्त्वेन ङित्त्वान्न गुणः। इ--अन्तीत्यत्र ङित्त्वाद्गुणाऽभावे इयङि प्राप्ते---

---

सूत्रम्

काशिका-वृत्तिः

शीङः सार्वधातुके गुणः ७।४।२१

शीङः अङ्गस्य सार्वधातुके परतः गुणो भवति। शेते, शयाते, शेरते। सार्वधातुके इति किम्? शिश्ये।

लघु-सिद्धान्त-कौमुदी

शीङः सार्वधातुके गुणः ५८६, ७।४।२१

क्क्ङिति चेत्यस्यापवादः। शेते। शयाते॥

न्यासः

शीङः सार्वधातुके गुणः। , ७।४।२१

अप्राप्तविषयत्वाद्गुणविधानस्य ङिति सार्वधातुक एतद्विधानम्()। पिति तु सामान्यलक्षणैनैव गुणः सिद्धः। लोट्(), "आडुत्तमस्य पिच्च" ३।४।९२ इत्यादि--शयै, शयावह इत। तस्माद्यत्र गुणो न प्राप्नोति तत्र विधीयते। "शेरते" इति। अदादित्वाच्छपो लुक्? "त्मनेपदेष्वनतः" ७।१।५ इति झकारस्यादादेशः। अत्र "शीङो रुट्()" ७।१।६ रुडागमो भवति। "शिश्ये" इति। लिट्(), "लिट्? च" ३।४।११५ इत्यार्धधातुकसंज्ञा, उत्तमपुरुषस्यैकवचनम्(), प्रथमपुरुषस्यैकवचनं वा। यदा प्रथमपुरुस्यैकवचनं तदैश्(), पूर्ववदेव द्विर्वचनम्, "एरनेकाचोऽसंयोगपूर्वस्य" ६।४।८२ इति यणादेशः; अन्यदेट्(), टेरेत्वम्()। अथ गुणग्रहणं किमर्थम्(), न "शीङः सार्वधातुके एत" इत्यैवोच्येत? एवं मन्यते--"शीङः" इति सानबन्धकनिर्देशे षष्ठ्युच्चारिता, निवृत्तिधर्मा चानुबन्धः तस्येत्संज्ञायां लोपेन निवृत्तौ प्राप्तायामयमन्यप्रकारो निवृत्तेरवज्ञायेत। तस्य नान्येत्संज्ञा निवर्त्तिका, किं तर्हि? एकारः। एवं तर्हि ङकारस्य स्थान एकार आपद्यते। तस्माद्गुणग्रहणं त्विकमुपस्थापयति। ङकारस्तु तेनैव हेतुना निवत्र्तत इति यद्येवम्(), ङकारो नोच्चारयिष्यते, "झियः" इति निर्देशः करिष्यते? नैष शक्यम्(); एवं हि निर्देशे सति यङ्लुक्यपि स्यात्()--शेशीत, शेश्यतीति॥

बाल-मनोरमा

शीङः सार्वधातुके गुणः २७२, ७।४।२१

शीङः सार्वधातुके। स्पष्टम्। "सार्वधातुकाद्र्धधातुकयो"रित्येव सिद्धे किमर्थमिदमित्यत आह--क्ङिति चेत्यस्यापवाद इति। झस्य अदादेशे सति शे-अते इति स्थिते--

तत्त्व-बोधिनी

शीङः सार्वधातुकयोः २३८, ७।४।२१

क्ङिति चेत्यस्येति। अन्यत्र "सार्वधातुकाद्र्धधाततुकयो"रित्यनेन सिद्धमिति भावः।

सूत्रम्

काशिका-वृत्तिः

अयङ् यि क्ङिति ७।४।२२

यकारादौ क्ङिति प्रत्यये परतः शीङः अङ्गस्य अयङित्ययम् आदेशो भवति। श्य्यते। शाशय्यते। प्रशय्य। उपशय्य। यि इति किम्? शिश्ये। क्ङिति इति किम्? शेयम्।

न्यासः

अयङ्यि क्ङिति। , ७।४।२२

"शय्यते" इति। "सार्वधातुके यक्()" ३।१।६७। "शाशय्यते" इति यङ्(), परत्वान्नित्यत्वाच्च द्विर्वचनात्? प्रागयङादेशः, ततः शय्येत्यस्य द्विर्वचनम्(), "दीर्घोऽकितः" ७।४।८३ इत्यभ्यासस्य दीर्घत्वम्()। "प्रशय्य" इति। "समानकर्तृकयोः पूर्वकाले क्त्वा" ३।४।२१, "कुगतिप्रादयः" २।२।१८ इति समासः, "समासेऽनञ्पूर्वे क्त्वो ल्यप्()" ७।१।३७ "येम्()" इति। "ऋचो यत्()" ३।१।९७। "शय्या" [नास्ति--काशिकायाम्()] इति। "सञ्ज्ञायां समजनि" ३।३।९९ इत्यादिना क्यप्()॥

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गाद् ध्रस्व ऊहतेः ७।४।२३

उपसर्गादुत्तरस्य उहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः। समुह्यते। समुह्य गतः। अभ्युह्यते। अभ्युह्य गतः। उपसर्गातिति किम्? ऊह्यते। ऊहतेः इति किम्? समीह्यते। यि इत्येव, समूहितम्। क्ङिति इत्येव, समूह्यो ऽयम् अर्थः। अणः इत्येव, आ ऊह्यते ओह्यते। समोह्यते।

न्यासः

उपसर्गाद्ध्रस्व ऊहते। , ७।४।२३

"समुह्य गतः" इति। "ऊह वितर्के" (धा।पा।६४८)। यद्यपि यजादित्वात्? किति सम्प्रसारणेनैतत् सिध्यति, तथाप्यूहेरपि दीर्घस्याश्रवणं तथा स्यादित्येवमर्थमिदं ह्रस्वविधानम्()। "समीह्यते" इति। "ईह चेष्टायाम्()" (धा।पा।६३२)। "समूहितः" इति। क्तः। "समूहयोऽयमर्थः" इति। "ऋहलोण्र्यत्()" ३।१।१२४। "अण इत्येव" इत्यादि। "केऽणः" ७।४।१३ इत्यतोऽण्ग्रहणमनुवत्र्तते। "आ उह्यते ओह्यते, समोह्यते" इति। ह्रस्वत्वं न भवति। यद्यण्ग्रहणमनुवत्र्तते, तदा ह्रस्वविधानमनर्थकं स्यात्(), उपसर्गादूहतेरुदिति वक्तव्यम्()? नानर्थकम्(); उत्तारार्थत्वात्--"एतेलिङि" (७।४।२४) इति वक्ष्यति, तत्र "ह्रस्वः" इत्येतस्यानुवृत्तिर्यथा स्यात्()॥

बाल-मनोरमा

उपसर्गाद्ध्रस्व ऊहतेः ५२५, ७।४।२३

उपसर्गाद्ध्रस्व ऊहतेः। "यादौ क्ङिति" इति शेषपूरणम्। "अयङि() क्ङिति" इत्यतस्तदनुवृत्तेरिति भावः। ब्राह्ह समुह्यादिति। ऊह वितर्के। सम्यग्विचारयेदित्यर्थः। अत्र आशीर्लिङि यासुटः कित्त्वेन ऊकारस्य ह्रस्वः। अ()ग्न समुह्येति। परितः संमृज्येत्यर्थः। क्त्वादेशस्य ल्यपः कित्त्वमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

एतेर् लिगि ७।४।२४

एतेरङ्गस्य उपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति। उदियात्। समियात्। अन्वियात्। आशिषि लिङि अकृत्सार्वधातुकयोः इति दीर्घत्वे कृते ह्रस्वो ऽनेन भवति। उपसर्गातित्येव, ईयात्। अणः इत्येव, आ ईयातेयत्। समेयात्।

लघु-सिद्धान्त-कौमुदी

दीर्घ इणः किति ५८४, ७।४।२४

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि। ईयतुः। ईयुः। इययिथ, इयेथ। एता। एष्यति। एतु। ऐत्। ऐताम्। आयन्। इयात्॥एतेर्लिङि॥ उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि। निरियात्। उभयत आश्रयणे नान्तादिवत्। अभीयात्। अणः किम्? समेयात्॥

न्यासः

एतेर्लिङि। , ७।४।२४

"उदियात्()" इति। "इण्? गतौ" (धा।पा।१०४५), आशिषि लिङ, "स्कोः संयोगाद्योरन्ते च" ८।२।२९ इति सकारलोपः। "अभीयात्()" इति। सवर्णदीर्घत्वेऽकृते ह्रस्वः। "आशिषि लिङि" इत्यादिना सूत्रस्य विषयं दर्शयति। सार्वधातुके हि लिङि दीर्घत्वमिणो न सम्भवतीति नात्रास्योपयोगः। यत्राकृत्सार्वधातुकयोर्दीर्घत्व ७।४।२५ मापद्यते; तत्र दीर्घत्वे कृतेऽनेन ह्रस्वो भवति।

बाल-मनोरमा

एतेर्लिङि २८८, ७।४।२४

एतेर्लिङि। "उपसर्गाद्ध्रस्व ऊहते"रित्यत "उपसर्गाद्ध्रस्व" इति , "केऽणः"इत्यतोऽण इति, "अयङ्यि क्ङिती"त्यतः कितीति चानुवर्तते। तदाह--उपसर्गात्परस्येत्यादि। इह आद्र्धधातुके इति प्रामादिकं, पूर्वसूत्रेषु तदभावादनुवृत्तेरसंभवात्, किति लङीत्येव सिद्धेश्च। ङितीति तु नानुवर्तते, इण आद्र्धधातुकलिङो ङित्त्वाऽभावात्। नन्वमीयादित्यत्रापि ह्रस्वः स्यादित्यत आह-- उभयत इति। अत्र एकादेशस्य ईकारस्य पूर्वान्तत्वे उपसर्गानुप्रवेशादिणधातुत्वं न सम्भवति, परादिवत्त्वेन इण्धातुत्वाश्रयणे तु न उपसर्गात्परत्वम्, उपसर्गैकदेशस्य इकारस्य ईकारात्मना सत्त्वेन "अभ्" इत्यस्य उपसर्गत्वाऽभावात्। एकादेशस्य आदिवत्त्वमाश्रित्य इण्धातुत्वम्, अन्तवत्त्वमाश्रित्य तस्य उपसर्गानुप्रवेशश्चेत्यपि न संभवति, पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्यां च विरोधस्य पुरः स्फूर्तिकतया विरुद्धातिदेशद्वयस्य युगपदसंभवादित्यर्थः। इदं च अन्तादिवत्सूत्रे भाष्ये स्पष्टम्। न च "अभ्" इति भान्तस्य एकदेशविकृतन्यायेन उपसर्गत्वदीकारस्य परादिवत्त्वे ह्रस्वो दुर्वार इति वाच्यं, लक्ष्यानुसारेण क्वचिदेकदेशविकृतन्यायानाश्रयणादिति शब्देन्दुशेखरे विस्तरः। सम#एयादिति। आ-इयात् एयात्। समेयादित्यत्र एकारस्य अनण्त्वान्न ह्रस्वः। ग्रहणकसूत्रादन्यत्र पूर्वेणैव णकारेण प्रत्याहाराश्रयणादिति भावः। तर्हि क्वचित् "समीया"दिति प्रयोगः कथमित्याशङ्क्याह-- समीयादिति प्रयोगस्तु भौवादिकस्येति। "इट किट कटी गतौ" इति प्रश्लिष्टस्य इधातोराशीर्लिङि "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घो बोध्य इति भावः। लुङि विशेषमाह--

तत्त्व-बोधिनी

एतेर्लिङिः २५०, ७।४।२४

एतेर्लिङि। इहाद्र्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तम्। किति लिङीत्येतावतैवेष्टसिद्धेः। उभयत आश्रय इति। अन्तादिशब्दाववयवविशेषवाचिनौ। तत्र यदि पूर्वस्यावयवबुद्ध्या एकादेश आश्रीयते तदा तस्यैव परस्य कथमादिवद्भावः स्यात्। एवं परस्यादित्वात् पूर्वस्यान्तवद्भावो न स्यात्, एकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः। नन्वेवं रामौ इत्यस्य "सुप्तिङन्त"मिति पदत्वं न स्यात्, परादित्वे रामेति प्रकृतेरभावात्। "यस्मादत्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहण"मिति स्वीकाराद्रामित्यस्याऽप्रकृतित्वात्। पूर्वान्तत्वे तु परत्र प्रत्ययाऽभावात्। अत्राहुः-- पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोषः। इह च ज्ञापकं [तु] "सुपिसूतिसमाः" इति। विध्यादौ समीयादिति न भवत्येव। आशीर्लिङि तु "अकृत्सार्वे"ति दीर्घे कृतेऽपि ह्रस्वत्वेन भाव्यमित्याङक्याह--- समीयादिति प्रयोगस्तु भौवादकस्येति। "इटकटी"त्यत्र प्रश्लिष्टस्य इधातोराशीर्लिङि इदं रूपम्। "वीगती"त्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते इति मते तु विध्यादिलिङ()पि भवत्येवेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

अकृत्सार्वधातुकयोर् दीर्घः ७।४।२५

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतो ऽजन्तस्य अङ्गस्य दीर्घो भवति। भृशायते। सुखायते। दुःखायते। चीयते। चेचीयते। स्तूयते। तोष्टूयते। चीयात्। स्तूयात्। अकृतिति किम्? प्रकृत्य। प्रहृत्य। परत्वात् दीर्घत्वेन तुको बाधः स्यात्। असार्वधातुके इति किम्? चिनुयात्। सुनुयात्। क्ङिति इत्येव, उरुया। धृष्णुया।

लघु-सिद्धान्त-कौमुदी

अकृत्सार्वधातुकयोर्दीर्घः ४८५, ७।४।२५

अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः। क्षीयात्॥

लघु-सिद्धान्त-कौमुदी

ह एति ५१८, ७।४।२५

तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्यध्वे। एधिष्ये। एधिष्यावहे। एधिष्यामहे॥

न्यासः

अकृत्सार्वधातुकयोर्दीर्घः। , ७।४।२५

"भृशायते" इति। "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" ३।१।१२ इति क्यङ्()। "सुखायते" इति। "सुखादिभ्यः कर्तृवेदनायाम्()" ३।१।१८ इति क्ङ्()। "चीयते" इति। कर्मणि लकारः, "सार्वधातुके यक्()" ३।१।६७। "चेचीयते" इति। "गुणो यङ्लुकोः" ७।४।८२ इत्यभ्यासस्य गुणः। "तोष्टूयते" इति। "ष्टुञ्? स्तुतौ" (धा।पा।१०४३), "शर्पूर्वाः खयः" ७।४।६१ इति खयः शेषः। "चीयात्(), स्तूयात्()" इति। आशिषि लिङ्()। "प्रकृत्य" इति। पूर्ववल्ल्यप्()। स च "कृदतिङ्()" ३।१।९३ इति कृत्संज्ञकः। ननु च दीर्घश्रुत्याऽजित्येतस्मिन्नुपस्थिते तेनाङ्गं विशिष्यते तत्र विशेषणेन च तदन्तविधिरित्यजन्तस्याङ्गस्य दीर्घत्वेन भवितव्यमिति, इह "ह्रस्वस्य पिति कृति" ६।१।६९ तुकि कृतेऽजन्तता नास्ति, ततश्चानजन्ततत्वादेव दीर्घत्वेन भवितव्यमिति, इह "ह्रस्वस्य पिति कृति" ६।१।६९ तुकि कृतेऽजन्तता नास्ति, ततश्चानजन्तत्वादेव दीर्घत्वं न भविष्यति, किमेतन्निवृत्त्यर्थेनाकृद्ग्रहणेन? इत्यत आह--"परत्वात्()" इत्यादि। तुकोऽवकाशः--अग्निचिदिति, दीर्घस्यावकाशः--चीयत इति; प्रकृत्य, प्रह्रतय--इत्यत्रोभयप्राप्तौ सति, असत्यकृद्ग्रहणे

परत्वाद्दीर्घत्वेन तुग्बाध्येत। तस्मादकृद्ग्रहणं कत्र्तव्यम्()। "चिनुयात्()" इति। विध्यादिलिङ्(), स च "तिङशित्सार्वधातुकम्()" ३।४।११३ इति सार्वधातुकसंज्ञकः। "उरुया, धृष्णुया" इति। उरु धुष्णुशब्दयोस्तृतीयैकवचने "सुपां सुलुक्()" ७।१।३९ इत्यादिना याभावः॥

बाल-मनोरमा

अकृत्सार्वधातुकयोर्दीर्घः १४१, ७।४।२५

आशीर्लिङि विशेषमाह-- अकृत्सार्व। अङ्गस्येत्यधिकृतम्। "अयङि() क्ङिती"त्यतो यीतिसप्तम्यन्तमनुवृत्तमङ्गाक्षिप्तप्रत्ययविशेषणं, तदादिविधिः। दीर्घश्रुत्या "अच" इत्युपस्थितमङ्गविशेषणं। तदन्तविधिः।तदाह--अजन्तस्येत्यादिना। अकृत्सार्वधातुकयोरिति किम्?। प्रकृत्य। तुकं बाधित्वा परत्वाद्दीर्घो न। चिनुयात्। सार्वधातुकत्वान्न दीर्घः। क्षीजेति। ईदुपधः। कूजिनेति। "कूज अव्यक्ते शब्दे" इत्यनुपदमेव पठितं, तत्रैव "कुज क्षीज अव्यक्ते शब्दे" इति पठितुं युक्तमित्यर्थः, अर्थैक्यादिति भावः। लज लजि। भत्र्सन इति क्वचित्पाठः। "भत्र्सनं त्वपवादगी"रित्यमरः। द्वितीय इदित्। आशीर्लिङि--लञ्ज्यात्। लाज लाजि। भर्जन इति क्वचित्पाठः। आदुपधौ। द्वितीय इदित्। जज जजीत्यादि। स्पष्टम्। वज व्रजेति। आद्यस्य असंयुक्तहल्मद्यस्थाऽकारवत्त्वेऽपि "न शसददवादिगुणाना"मित्येत्त्वाभ्यासलोपौ नेत्याह-- ववजतुरिति। अवाजीत्। अवजीत्। द्वितीयस्य तु संयुक्तहल्मध्यस्थाऽकारवत्त्वादेवैत्त्वाऽभ्यासलोपयोर्न प्रसक्तिः। "अव्राजी"दित्यत्र "अतो हलादे"रिति वृद्धिविकल्पमाशङ्क्याह--- वदव्रजेति वृद्धिरिति। हलन्तत्वादेव सिद्धे व्रजग्रहणस्य "अतो हलादे"रिति विकल्पनिरासार्थत्वनादिति भावः। शुचादयो द्विसप्ततिर्वृत्ताः। शाड्रन्ता इति। "शाडृ श्याघाया"मित्यन्ता इत्यर्थः। "शाड()न्ता" इति क्वचित्पाठः। अट्टेति। तवर्गतृतीयोपधोऽयम्। चत्र्वष्टुत्वाभ्यां टोपधनिर्देशः। तदाह--दोपधोऽयमिति। तथा च अट्टधातोः सनि इटि अट्टिस् इति स्थिते ष्टुत्वचत्र्वयोरसिद्धत्वादजादेर्द्वितीयस्येति प्रवर्तमानं द्वित्वं "न न्द्राः संयोगादय" इति दकारं विहाय टिस् इत्यस्य भवति। ततो हलादिशेषे दकारस्य ष्टुत्वचत्र्वयोः "अट्टिटिषते" इतीष्टं सिध्यति। स्वाभावकमूर्धन्योपधत्वे "न न्द्रा" इति निषेधाऽभावाट्टकारद्वयसहितस्यैव द्वित्वे हलादिशेषेण द्वितीयटकारस्य निवृत्तौ अटिट्टिषते इत्यनिष्टं प्रसज्येतेति भावः। तोपध इत्यन्य इति। ष्टुत्वेन टोपधनिर्देश इति भावः। अस्मिन्पक्षे सनि द्वित्वे कर्तव्ये ष्टुत्वस्याऽसिद्धत्वेऽपि "न न्द्रा" इति निषेधाऽभावात्तकारविशिष्टस्य त्()टिस् इत्यस्य द्वित्वे हलादिशेषेण टकारस्य निवृत्त्या अतिट्टिषते इति रूपमिति भाव-। आनट्टे इति। इह "न न्द्रा" इति निषेधो न, तत्र द्वितीयस्यैकाच इत्यनुवृत्तेः। घट्ट चलन इति। अयं चुरादावपि। स्फुट विकसन इति। अयं कुटादावपि। अठि गताव#इति। लिटि नुमि द्वित्वे हलादिशेषे "अत आदे"रिति दीर्घे "तस्मान्नुड् द्विहल" इति नुडिति मत्वाह-- आनण्ठ इति। वठि एकचर्यायामिति। असहायचर्यायमित्यर्थः। मडि चेति। विभाजन इत्यनुषज्यते। "मडि भूषाया"मिति परस्मैपदेषु वक्ष्यते। शाडृ श्लाघायमिति। डलयोरैक्याच्छालत इति काश्यपः। इत्यट्टादयः षट्()तिं()रशद्गताः। अथ टवर्गीयान्ता [गड()न्ता] इति। "गडि वदनैकदेशे"इत्यन्ता इत्यर्थः। म्लेट्ट म्रेड्ट इति। एदुपधौ। द्वितीयो डान्त इति। टवर्गतृतीयान्त इत्यर्थः। ननु टान्तेष्वस्य कथं पाठः चुड्ड भावकरण इत्यारभ्यानुक्रम्यमाणेष्वेवास्य पठित्वं युक्तत्वादित्यत आह-- टान्तमध्ये इति। नाथतिवदि त। "एध वृद्धा" वित्यारभ्यानुक्रान्तेषु तवर्गचतुर्थान्तेषु यथा "नाथृ नाधृ याच्ञे"ति तवर्गद्वितीयान्तस्यापि अर्थसाम्यात्पाठः, तद्वदित्यर्थः। कटे इति। कण्ठ()आदिः। चटे इति। तालव्यादिः। आद्यस्य लिटि अभ्यासस्य चुत्वमित्याह-- चकाटेति। चकटतुः। द्वितीयस्य चेटतुः। वैरूप्यापादकाऽऽदेशादित्वाऽभावादेत्त्वाभ्यासलोपौ। प्राप्तायामिति। हलन्तलक्षणाया नित्यवृद्धेर्नेटीति निषेधात् "अतो हलादे"रिति वैकल्पिकवृद्धौ प्राप्तायामित्यर्थः।

तत्त्व-बोधिनी

अकृत्सार्वधातुकयोर्दीर्घः ११६, ७।४।२५

दीर्घग्रहणेन "अचश्चे"ति परिभाषोपस्थानादाह-- अजन्तेति। यादौ प्रत्यय इति। "अयङ् यि क्ङिती"त्यतो यीत्यनुवर्त्यं अङ्गाक्षिप्तप्रत्ययस्तेन विशेष्यते, विशेषणेन तदादिविधिः। "यस्मिन्विधि"रिति परिभाषोपस्थानादिति भावः। न त्विति। कृद्यकारे-- प्रकृत्य। प्रह्मत्य। उच्चैः कृत्य। तुकं बाधित्वापरत्वाद्दीर्घः स्यात्। तुग्विधिस्तु-- अग्निचित्। सोमसुदित्यादौ चरितार्थः। ल्यपः पित्त्वमप्यनुदात्तार्थकतया चरितार्थमित्याहुः। सार्वधातुकयकारे तु --चिनुयात्। सुनुयात्। कृजिनेति। अर्थैक्यादेकत्र पाठ उचित इति भावः। लज लजि। लज्यात्। लञ्ज्यात्। लज प्रकाशने इति कथादौ। भत्र्सने चेति। चाद्व्र्जने। तुजि पालने। भाषार्थोऽयं युजादौ। गज गजि। "गञ्जा तु मदिरागृहम्"। गज मदने च। मदनं-- मदः - चित्तविकारः। वज व्रज। वादित्वादेत्वाभ्यासलोपौ न। ववजतुः। वव्रजतुः। शाड()न्ता इति। "शाडृ श्लाघाया"मित्यन्ता इत्यर्थः। दोपधोऽयमिति। तथा च ष्टुत्वशास्त्रस्याऽसिद्धत्वाटन्न न्द्राःर" इति द्वित्वनिषेधेन दकारं विहाय टिशब्दस्य द्वित्वे पश्चाद्दकारस्य ष्टुत्वे च अट्टिटिषते आट्टिटदित्यादि सिध्यति। टोपधत्वे तु अटिट्टिषते। आटिट्टदिति स्यादिति भावः। तोपध इति। अ()स्मस्तु पक्षे-- अतिट्टिषते आतिट्टदित्यादि बोध्यम्। हलादिः शेषेण टकारनिवृत्तौ तननिमित्तस्यापि ष्टुत्वस्य निवृत्तत्वादिति नव्याः। मनोरमायां तु "पूर्वत्रासिद्धीयमद्विर्वचने" इति ष्टुत्वस्याऽसिद्धत्वाऽभावट्टकारद्वयसहितस्य द्वित्वे हलादिः शेषे अटिट्टिषते आटिट्टदित्यादि सिध्यतीत्युक्तम्। "निमित्ताऽपाये नैमित्तिकस्याप्यपायः" इति त्विनित्यमिति तदाशयः। आनट्टे इति। इह "न न्द्राः" इति निषेधो न, तत्र द्वितीयस्येत्यनुवर्तनाद्द्वितीयैकाच एव नदराणां निषेधात्। घट्ट चलने। अयं चुरादावपि। स्फुट। अयं कुटादावपि। आनण्ठे इति। "तस्मान्नुड् द्विहलः"। इति नुट्। वण्ठते इति। सहायं विना चरतीत्यर्थः। मडि च। पृथक्पाठसामथ्र्यादयं वेष्टनेऽपीत्याहुः। "मडि भूषाया"मित्यग्रे परस्मैपदिषु। भडि। "यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषण"मित्यमरः।

शडि। "शण्डोऽसुरपुरोहितः"। दाड्ट। विशरणम्-- अवयवविभागः। शाड्ट। डलयोरैक्यात् "शालते" इति काश्यपः। शौट्ट गर्वे। अस्योणादुषु ईरन्वक्ष्यते। "तदेतदतिशौटीर्यमौडुलोमेर्न मृष्यति" इति कल्पतरुः। कटे।

---

सूत्रम्

काशिका-वृत्तिः

च्वौ च ७।४।२६

च्विप्रत्यये परतो ऽजन्तस्य अङ्गस्य दीर्घो भवति। शुचीकरोति। शुचीभवति। शुचीस्यात्। पटूकरोति। पटूभवति। पटूस्यात्।

लघु-सिद्धान्त-कौमुदी

च्वौ च १२४९, ७।४।२६

च्वौ परे पूर्वस्य दीर्घः स्यात्। अग्नीभवति॥

न्यासः

च्वौ च। , ७।४।२६

"शुचीकरोति" इति। "उभूततद्भावे" ५।४।५० इत्यादिना च्विः। चकारः पूर्वापेक्षया समुच्चयार्थः॥

बाल-मनोरमा

च्वौ च , ७।४।२६

अथ "शुचीभवती"ति "वक्ष्यन्नाह--च्वौ च। दीर्घः स्यादिति। "अकृत्सार्वधातुकयो"रित्यतस्तदनुवृत्तेरिति भावः।

अव्ययस्येति। अव्ययस्य "च्वौ चे"ति दीर्घो नेत्यर्थः। तेन स्वस्तिस्यादित्यत्र च्वौ न दीर्घ इति भावः। तन्निरमूलमिति। भाष्यावदृष्टत्वादिति भावः। तर्हि "स्वस्ति स्या"दिति न स्यात्, दीर्घप्रसङ्गादित्यत आह--स्वस्ति स्यादिति त्विति। ननु महाविभाषया दीर्घाऽभावे स्वस्ति स्यादिति सिद्धावपि, कदाचित्स्वस्ती स्यादिति दीर्घो दुर्वार इति शङ्कते--स्वस्तीस्यादित्यपि पक्षे स्यादिति। इष्टापत्तिरित्याह--अस्त्विति। "दीर्घतदभावाभ्यां रूपद्वय"मिति शेषः। प्रामाणिकत्वादुभयमप्यादर्तव्यमिति। भावः। ननु शिष्टानङ्गीकारात्कथं दीर्घपाठादर इत्यत आह-यदि नेष्यते इत्यादि। मातृशब्दाच्च्विप्रत्यये विशेषमाह--रीङृत #इति।

---

सूत्रम्

काशिका-वृत्तिः

रीङृतः ७।४।२७

ऋकारान्तस्य अङ्गस्य अकृद्यकारे असार्वधातुके यकारे च्वौ च परतो रीङित्ययम् आदेशो भवति। मात्रीयति। मात्रीयते। पित्रीयति। पित्रीयते। चेक्रीयते। मात्रीभूतः। क्ङिति इत्येतन् निवृत्तम्, तेन इह अपि भवति, पितुरागतं पित्र्यम्। ऋत इति तपरकरणं किम्? चेकीर्यते। निजेगिल्यते।

लघु-सिद्धान्त-कौमुदी

रीङ् ऋतः १०४८, ७।४।२७

अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः। यस्येति च। पित्र्यम्। उषस्यम्॥

न्यासः

रीङृतः। , ७।४।२७

यिग्रहणमनुवर्त्तते, अकृत्सार्वधातुकयोरिति च। "मात्रीयति" इति। "सुप आत्मनः क्यच्()" ३।१।८। "पित्रीयते" इति। "कर्त्तुः क्यङ् सलोपश्च" ३।१।११ इति क्यङ्()। "चेक्रीयते" इति। करोतेर्यङ्()। "पित्र्यम्()" इति। "पितुर्यच्च" ४।३।७९ इति यत्प्रत्ययः; रीङादेशे कृते "यस्येति च" ६।४।१४८ इतीकारलोपः। कथं पुनः क्ङितोत्युचयमाने तत्रादेशो भवति? इत्याह--"क्ङितीत्येतदिह निवृत्तम्()" इति। यद्येवं यिग्रहणस्यापि निवृत्तिः प्राप्नोति, तदेकयोगनिर्दिष्टत्वात्()? नैतदस्ति; स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः। इह च यिग्रहणस्यैव स्वरितत्वं प्रतिज्ञायत इति तदेवानुवर्त्तते, क्ङिद्ग्रहणस्य स्वरितत्वं न प्रतिज्ञायत इति न तदिहानुवर्त्तते। "चेकीर्यते" इति। "कृ विक्षेपे" (धा।पा।१४०९), "ऋत इद्धातोः" ७।१।१०० इतीत्वे रपरत्वम्()। "हलि च" ८।२।७७ इति दीर्घः। "निजेगिल्यते" इति। "गृ? निगरणे" (धा।पा।१४१०), "लुपसद" ३।१।२४ इत्यादिना यङ्(), "यो यङि" ८।२।२० इति लत्वं रेफस्य। अथ दीर्घग्रहणं किमर्थम्(), न रिङित्येवोच्येत, "अकृत्सार्वधातुकयोः" ७।४।२५ इतिदीर्घत्वेनैव सिद्धमिति, तत्राप्ययमर्थः--उत्तरसूत्रे पुना रिङ्ग्रहणं न कर्त्तव्यं भवति, एतदेव हि तत्रानुवर्त्तिष्यते? न सिध्यति; नाप्राप्ते दीर्घत्वे रिङारभ्यमाणस्तस्य बाधकः स्यात्()। भवतु नाम ऋकारस्य यो दीर्घस्तस्य बाधकः, यस्तु कृत आदेशे स्थान्यन्तरस्य प्राप्नोति तस्य कथं बाधकः, न ह्यस्मिन्? प्राप्ते रिङारभ्यते? एवं तर्हि मन्दधियां सुखप्रतिपत्त्यर्थं दीर्घोच्चारणम्()। ङकारोऽन्त्यादेशार्थः॥

बाल-मनोरमा

रीङृतः १२१५, ७।४।२७

रीङृतः। अङ्गस्येत्यधिकृतम् ऋता विशेष्यते। तदन्तविधिः। "अयङ् यि क्ङिती"त्यतो यीत्यनुवर्तते। "अकृत्सार्वधातुकयो"रित्यतोऽकृत्सार्वधातुकयोरिति, "च्वौ चे"ति सूत्रं च, तदाह--अकृदित्यादिना। पित्र्यमिति। पितरो

देवता अस्येति विग्रहः। यति पितृशब्दस्य रीङ्। "ङिच्चे"त्यन्तादेशः। "यस्येति चेति ईकारलोपः। क्यचि पित्रीयतीत्यादौ "अङ्गकार्ये कृते पुनर्नाङ्गकार्य"मिति वचनात् "अकृत्सार्वदातुकयो"रिति दीर्घे अप्राप्ते ईकारोच्चारणम्। उषस्यमिति। उषः देवता अस्येति विग्रहः। भत्वेन पदत्वाऽभावात्सकारस्य न रुत्वादि। द्यावापृथिवी। द्यावापृथिवी, शुनासीर, मरुत्वत्, अग्नीषोम, वास्तोष्पति, गृहमेध-एतेभ्यः-छो यच्च स्यादित्यर्थः। अणः, पत्युत्तरपदण्यस्य चापवादः।

तत्त्व-बोधिनी

रीङृतः ९९८, ७।४।२७

रीङृतः। अङ्गवृत्तपरिभाषया "अकृत्सार्वे"ति दीर्घो न प्रवर्तत इति दीर्घग्रहणमित्याहुः। यस्येति चेति। "पित्रीयती"त्यत्र रूङ्()विधिः सावकाश इति भावः। उषस्यमिति उषस्()शब्दः स्त्रीलिङ्गो दिवो दुहितरं देवतां ब्रावीति।

---

सूत्रम्

काशिका-वृत्तिः

रिङ् शयग्लिङ्क्षु ७।४।२८

ऋकारान्तस्य अङ्गस्य शयकित्येतयोः लिङि च यकारादौ असार्वधातुके परतो रङित्ययम् आदेशो भवति। श आद्रियते। आध्रियते। यक् क्रियते। ह्रियते। लिङ् क्रियात्। ह्रियात्। रिङ्वचनं दीर्घनिवृत्त्यर्थम्। असार्वधातुके इत्येव, बिभृयात्। यि इत्येव, कृषीष्ट। हृषीष्ट।

लघु-सिद्धान्त-कौमुदी

रिङ् शयग्लिङ्क्षु ५४५, ७।४।२८

शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् आदेशः स्यात्। रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न। भ्रियात्॥

न्यासः

रिङ्? शयग्लिङ्क्षु। , ७।४।२८

अत्रापि यिग्रहणम्(), अकृत्सार्वधातुकं चानुवत्र्तते। तत्र सम्भवव्यभिचाराल्लिङ एव विशेषणाम्? न शयकोः। "आद्रियते, आध्रियते" इति। "दृङ्? आदरे" (धा।पा।१४११), "धृङ्? अवस्थाने" (धा।पा।१४१२) आङ्पूर्वः, तुदादित्वाच्छः। "क्रियात्()" इति। "आशिषि लिङ्()" ३।३।१७३। "बिभृयात्()" इति। अत्र बिध्यादिलिङ्(), जुहोत्यादित्वात्? श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्(), "भृञामित्()" ७।४।७६ इतीत्वमभ्यासस्य। "कृपीष्ट" इति। "आशिषि लिङ्()" ३।३।१७३। "उश्च" १।२।१२ इति कित्त्वाद्गुणाभावः॥

बाल-मनोरमा

रिङ् शयग्लिङ्क्षु २०४, ७।४।२८

आशीर्लिङि परस्मैपदे भृ यादिति स्थिते-- रिङ् शय। श यक् लिङ् एषां द्वन्द्वात्सप्तमीबहुवचनम्। "अयङ्यि क्ङिती"त्यतो यीति सप्तम्यन्तमनुवृत्तं लिङो विसेषणम्। तदादिविधिः। शे तु यीति नान्वेति, असंभवात्। नापि यकि, अव्यभिचारात्। अत एव?कृत्सार्वधातुकयोरित्यनुवृत्तमपि लिङ एव विशेषणं। तदाह--शे यकीत्यादिना। ऋत इति। "रीङृत" इत्यतस्तदनुवृत्तेरिति भावः। अङ्गस्येधिकृतम्। "ऋत" इति तद्विशेषणं। तदन्तविधिः। ऋदन्तस्याऽङ्गस्येति लभ्यते। आदेशे ङकार इत्। ङित्वादन्तादेशः। निर्दिश्यमानपरिभाषयैव सिद्धे ङकारोच्चारणम्, इङागमेनैव सिद्धे रेफोच्चारमं च स्पष्टार्थम्। ननु भ्रियादिति वक्ष्यमाणमुदाररणमयुक्तम्, कृते रिङि "अकृत्सार्वधातुकयो"रिति दीर्घप्रसङ्गादित्यत

आहरीङि प्रकृते इति। कृते रिङि यदि दीर्घः स्यात्तर्हि रिङ्विधिव्र्यर्थः स्यात्, "रीङृत" इत्येव सिद्धेः। अतो रिङि कृते सति न दीर्घ इत्यर्थः। भ्रियादिति। भ्रियास्तमित्यादि सुगमम्।

तत्त्व-बोधिनी

रिङ् शयग्लिङ्क्षु १७६, ७।४।२८

लिङ् शयग्लिङ्क्षु। "अयङ् यि क्ङिती"त्यतोऽनुवृत्तं यीत्येतल्लिङ एव विशेषणं, सेऽसंभवात्। यकि तु वैयथ्र्यात्। तथा "अकृत्सार्वधातुकयो" रित्यनुवृत्तमपि लिङ एव विशेषणमित्यभिप्रेत्याह--- यादावित्यादि। शे--म्रियते। "तुदादिभ्य" इतिशः। यकि--क्रियते। म्रियते।

---

सूत्रम्

काशिका-वृत्तिः

गुणो ऽर्तिसंयोगाद् योः ७।४।२९

ऋतः यकि लिगि इति वर्तते। श इत्यसम्भवात् निवृत्तम्। गुणो भवति अर्तेः संयोगादीनाम् ऋकारान्तानां यकि परतो लिगि च यकारादौ असार्वधातुके। अर्यते। अर्यात्। स्मर्यते। स्मर्यात्। इह संस्क्रियते, संस्क्रियातिति सुटो बहिरङ्गलक्षणस्य असिद्धत्वातभक्तत्वात् वा संयोगादित्वम् अङ्गस्य न अस्ति इति गुणो न प्रवर्तते। यि इत्येव, स्वृषीष्ट। ध्वृषीष्ट। असार्वधातुके इत्येव, इयृयात्।

लघु-सिद्धान्त-कौमुदी

गुणोऽर्तिसंयोगाद्योः ५००, ७।४।२९

अर्तेः संयोगादेरृदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च। ह्रर्यात्। अह्वार्षीत्। अह्वरिष्यत्॥ श्रु श्रवणे॥ १९॥

न्यासः

गुणोऽर्तिसंयोगाद्योः। , ७।४।२९

"ऋ गतिप्रापणयोः" (धा।पा।९३६), "ऋ सृ गतौ" (धा।पा।१०९८,१०९९)--इत्येतयोर्भौवादिकजौहोत्यादिकयोग्र्रहणम्()। "छन्दोवत्? सूत्राणि भवन्ति" (म।भा।) इत्यतः "बहुलं छन्दसि" २।४।७३ इति शयो लुकं कृत्वाऽर्त्तिति निर्देशः कृतः; अन्यथा हि यद्यृच्छतीति निर्देशः क्रियेत, एवं सति जौहोत्यादिकस्य ग्रहणं न स्यात्()। अथापीयर्त्तिनिर्देशः क्रियते, एवमपि भौवादिकस्य ग्रहणं न स्यात्()। "ऋ" इत्येतन्निर्देशस्तु न कृतः, वैचित्र्यार्थः। पूर्वेण रिङः प्राप्तस्यायमपवादः। "श इत्यसम्भवान्निवृत्तम्()" इति। असम्भवस्त्वर्त्तिसंयोगाद्योरशविकरणत्वात्()। "अर्यते" इति। यक्()। "अर्यात्()" इति। आशिषि लिङ्()। अथ संस्क्रियते, संस्क्रियादित्यत्र कस्मान्न भवति, भवति हि करोतिरपि सुटि कृते संयोगाद्यङ्गम्()? इत्यत आह--"इहेत्यादि। बहिरङ्गत्वं तु सुटो द्विपदाश्रयत्वात्()। गुणस्य पुनरन्तरङ्गत्वमेकपदाश्रयत्वात्()। "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इति सुटोऽसिद्धत्वात्? संयोगादित्वमङ्गस्य नास्ति। अथापि कथञ्चित्? सुटसिद्धत्वं स्यात्(), एवमप्यभक्तत्वात्? सुटः संयोगादित्वं नास्ति, अतो गुणो न प्रवत्र्तते। अङ्गाधिकारादङ्गावयवः संयोगो गृह्रते। न ह्रत्राभक्तत्वे सुटोऽङ्गावयवः संयोग उपपद्यते। "इयृयात्()" इति। "ऋ गतौ" (धा।पा।१०९८), विध्यादिलिङ्()। जुहोत्यादित्वाच्छपः श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्(), "अर्त्तिपिपत्र्योश्च" ७।४।७७ इत्यभ्यासस्येत्त्वम्(), "अभ्यासस्यासवर्णे" ६।४।७८ तीयङ्(), "लिङः सलौपोऽनन्त्यस्य" ७।२।७९ इति सलोपः। "अर्त्तिसंयोगाद्योरत्()" इति कत्र्तव्ये गुण ग्रहणं वैचित्र्यार्थम्()॥

बाल-मनोरमा

गुणोऽर्तिसंयोगाद्योः २१७, ७।४।२९

आशीर्लिङि हृ यादिति स्थिते कित्त्वाद्गुणनिषेधे प्राप्ते-- गुणोऽर्ति। भौवादिको जौहोत्यादिकश्च ऋधातुरर्तीत्यनेन गृह्रते। लुका निर्देशस्तु न विवक्षितः। अङ्गस्येत्यधिकृतम्। "रीङृतः" इत्यत ऋत इत्यनुवर्तते। तच्च अङ्गविशेषणं, तदन्तविधिः। ऋदन्तस्याङ्गस्येति लभ्यते। संयोगाद्योरित्यपि तद्विशेषणम्। "अकृत्सार्वधातुकयो"रित्यतोऽसार्वधातुकग्रहणमनुवर्तते। आद्र्धधातुके इति लभ्यते। "रिङ् शयग्लिङ्क्षु" इत्यतो यकि लिङीति च लभ्यते। "अयङि() क्ङिती"त्यतो यीति सप्तम्यन्तमनुवर्तते। आद्र्धधातुकविशेषणत्वात्तदादिविधिः। तदाह-- अर्तेरित्यादिना। तथ् च हृ-यात् इतिस्थिते गुणे रपरत्वे रूपमाह-- ह्र्यादिति। अह्रार्षीदिति। सिचि वृद्धिः। रपरत्वं। षत्वम्। अह्ररिष्यत्। स्वृ इति। अयमप्यनिट्। स्वरति। लिटि तु कित्यपि गुणः। णलि तु कृते गुणे रपत्वे उपधावृद्धिः। सस्वार सस्वरतुः सस्वरुः। थलि तु क्रादिनियमप्राप्तस्य इटः "अचस्तास्व"दित, "ऋतो भारद्वाजस्ये"ति च नित्यनिषेधे प्राप्ते आह-- स्वरतिसूतीति वेडिति। सस्वरिथ सस्वर्थेति। सस्वरथुः सस्वर। सस्वार-सस्वर। इत्यपि ज्ञेयम्। वमयोस्त्विति। क्रादनियमान्नित्यमिडित्यन्वयः।

---

सूत्रम्

काशिका-वृत्तिः

यङि च ७।४।३०

यगि च परतः अर्तेः संयोगादेश्च ऋतः गुणो भवति। अरार्यते। सास्वर्यते। दाध्वर्यते। सास्मर्यते। अर्तेः अट्यर्त्यशूर्णोतीनाम् उपसंख्यानम् इति यङ्। न न्द्राः संयोगादयः ६।१।३ इति द्विर्वचनप्रतिषेधH यकारस्य नेष्यते। हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः। जेघ्नीयते। हिंसायाम् इति किम्? जङ्घन्यते।

न्यासः

यङि च।, ७।४।३०

पूरवेम प्राप्तस्य रीङोऽयमपवादः। "अरार्यते" इति। यङ गुणः, रपरत्वम्()। "अजादेर्द्वितीयस्य ६।१।२ इति द्विर्वचनम्(); हलादिशेषः, "दीर्घोऽकितः" ७।४।८३ इति दीर्घत्वम्()। ननु चात्रेतेरहलादित्वाद्यङ न प्राप्नोति? इत्यत आह--"अर्त्तेः" इत्यादि। भवतु नामोपसंख्यानाद्यङ्(), रेफादेश्तु द्विर्वचनेन न भवितव्यम्(), "न न्द्राः संयोगादयः" (६।१।३) इति प्रतिषेधात्()? इत्यत आह--"न न्द्राः संयोगादयः" इति। उक्तं हि ततर--यकारपरस्य रेफस्य प्रतिषेधो वक्तव्यः। तस्माद्रेफादेर्यं इत्येतस्य द्विर्वचनं भवति। "जङ्घन्यते" इति। "नुगतोऽनुनासिकान्तस्य" ७।४।८५ इति नुक्(), "अभ्यासाच्च" ७।३।५५ इति कुत्वम्()॥

तत्त्व-बोधिनी

यङि च ४००, ७।४।३०

यङि च। इह "गुणोऽर्तिसंयोगाद्यो"रित्येतत्सर्वमप्यनुवर्तते। यकारपररेफस्येति। यदि भाष्योदाहरणं सामान्यापेक्षं ज्ञापकं स्यात्तदाऽर्यमाख्यत् आरर्यदित्यादि सिध्यति।

---

सूत्रम्

काशिका-वृत्तिः

ई घ्राध्मोः ७।४।३१

घ्रा ध्मा इत्येतयोः यङि परतः ईकारादेशो भवति। जेघ्रीयते। देध्मीयते।

न्यासः

ई घ्रध्मोः। , ७।४।३१

अत्र दीर्घोच्चारणं किमर्थम्(), दीर्घो यथा स्यात्(), ह्रस्वो मा भूत्()? नैतदस्ति; ह्रस्वस्यापि हि विधाने अकृत्सार्वधातुकयोर्दीर्घः" ७।४।२५ इत्येवं सिध्यति, "च्वौ च" (७।४।२६) इति यथायोगं दीर्घो भविष्यति? एवं तह्र्येतज्ज्ञापयति--"संज्ञापूर्वको विधिरनित्यः" (व्या।प।६४) इति। तेन स्वायम्भुवमिति सिद्धं भवति॥

तत्त्व-बोधिनी

ई घ्राध्मोः ४०८, ७।४।३१

ई घ्माध्मोः। दीर्घोच्चारणं प्राग्वत्। जेघ्रीतः [वस्तुतस्तु] "अस्य च्वौ" इत्याद्यर्थं दीर्घग्रहणमिति तु सुवचम्। शाशय्यते इति। परत्वादन्तरङ्गत्वाच्चाऽयङादेशे कृते द्वित्वम्।

इति तत्त्वबोधिन्यां यङन्तक्रिया।

अथ यङ्लुगन्तप्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

अस्य च्वौ ७।४।३२

ई इति वर्तते। अचर्णान्तस्य अङ्गस्य च्वौ परतः ईकारादेशो भवति। शुक्लीभवति। शुक्लीस्यात्। खट्वीकरोति। खट्वीस्यात्।

न्यासः

अस्य च्वौ। , ७।४।३२

"च्वौ च" ७।४।२६ इति दीर्घस्यापवादः॥

बाल-मनोरमा

अस्य च्वौ , ७।४।३२

अस्य च्वौ। ईत्स्यादिति। "ई ध्राध्मो"रित्यतस्तनुवृत्तेरिति भावः। वेर्लोप इति। "वैरपृक्तस्ये"त्यनेन"ति शेषः। च्व्यन्तत्वादव्ययत्वमिति। "ऊर्यादिच्विडाचश्चेति"निपातत्वात्स्वरादिनिपातमित्यव्ययत्वमित्यर्थः। "तद्धितश्चासर्वविभक्ति"रित्यत्र "शस्प्रभृतयः प्राक्समासान्तेभ्यः" इति परिगणितेष्वन्तर्भावादव्ययत्वमिति केचित्। कृञ्योगे उदाहरति--कृष्ण इति। वस्तुतोऽकृष्णः सन्वेषादिना कृष्णभावे प्राप्नोतीत्यर्थः। तं करोतीति। अकृष्णं कृष्णरूपेण संपद्यमानं करोतीत्यर्थः। कृष्णीकरोतीति। अत्र वस्तुतोऽकृष्णो नटः प्रकृतिभूतः। स तावत्कृष्णभावं विकारं प्राप्नुवन्सम्पद्यमानत्वात्सम्पद्यकर्ता भवतीति तत्राऽभेदारोपमवलम्ब्य वर्तमानो विकारभूतकृष्णवाचकः शब्दः। तस्माच्च्विप्रत्ययः। चकार इत्, उकार उच्चारणार्थः। तस्मिन्परे अकारस्य ईत्त्वम्। "वेरपृक्तस्ये"ति वकारलोपः।

"कृष्णी"ति ईकारान्तमव्ययम्। ब्राह्मईभवतीति। अब्राह्म ब्राह्म संपद्यमानं भवतीत्यर्थः। ब्राह्मन्शब्दाच्च्विः। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्न लोपः। ईत्वमिति भावः। अत्यन्तस्वार्थिकानामेव प्रातिपदिकादुत्पत्तिर्नतु सुबन्तादिति न#इयमः। अतो न च्वेः प्रातिपदिकादुत्पत्तिः,किंतु सुबन्तादेवेति बोध्यम्। अत एव अगौर्गोः समपद्यत गोऽभवदित्यत्र च्व्यन्तस्य गोशब्दस्य "एङः पदान्ता"दिति पररूपमुदाह्मतं भाष्ये सङ्गच्छत इत्यलम्। गङ्गी स्यादिति। अगङ्गा गङ्गात्वेन संपद्यमाना स्यादित्यर्थः। "अस्य च्वौ" इति ईत्त्वम्। दोषाभूतमहरिति। दोषेत्याकारान्तमव्ययं रात्रावित्यर्थे वर्तते। इह तु रात्रिरित्यर्थः वत्र्तते। अदोषाभूतमहो बहुलमेघावरणान्धकाराद्दोषाभूतमित्यर्थः। दिवाभूतारात्रिरिति। दिवेत्याकारान्तमव्ययमहनीत्यर्थे इह तु अहरित्यर्थे वर्तते। चन्द्रिकातिशयवशादहर्भूतेत्यर्थः। ननु "अव्ययस्य च्वावीत्त्वं ने"ति वार्तिकम् "अस्य च्वौ" इति सूत्रभाष्ये न दृश्यत इत्यत आह--एतच्चेति।

तत्त्व-बोधिनी

अस्य च्वौ १५७६, ७।४।३२

सम्पद्यकर्तरीति। सम्पद्यश्चासौकर्ता चेति विग्रहः। "पाघ्राध्माधेट्दृशः शः"इति विहितः शप्रत्ययोऽस्मादेव निपातनात्सम्पदोऽपि भवति। दिवादित्वाच्छ्यनिति हरदत्तः। वक्तव्यमिति। वृत्तिकारस्तु "अभूततद्भावे"इति सूत्रमध्ये प्चिक्षेप। भ्रान्तत्वादिति।

अव्ययस्य च्वावीत्वं नेति वाच्यम्। च्व्यन्तत्वादिति। तस्य निपातत्वात् "स्वारादिनिपातमव्यय"मित्यनेनेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

क्यचि च ७।४।३३

अस्य इति वर्तते। क्यचि परतः अवर्णान्तस्य अङ्गस्य ईकारादेशो भवति। पुत्रीयति। घटीयति। खट्वीयति। मालीयति। अकृत्सार्वधातुकयोर् दीर्घः ७।४।२४ इत्यस्य अपवादः। पृथग्योगकरणम् उत्तरार्थम्।

लघु-सिद्धान्त-कौमुदी

क्यचि च ७२५, ७।४।३३

अवर्णस्य ईः। आत्मनः पुत्रमिच्छति पुत्रीयति॥

न्यासः

क्यचि च्?। , ७।४।३३

"अकृत्सार्वधातुकयोर्दीर्घः" ७।४।२५ इत्यस्यायमपवादः। चकारः "अस्य" ७।४।३२ श्यनुकर्षणार्थः। अथ पृ()थग्योगकरणं किमर्थम्(), नास्य "च्चिक्यचोः" इत्येकयोग एव क्रियताम्()? इत्यत आह--"पृथग्योगकरणम्()" इत्यादि। "न च्छन्दस्यपुत्रम्य" ७।४।३५ इत्येवमाद्युत्तरकार्यं क्यचि यथा स्यात्(), च्वौ मा भूत्()--इत्येवमर्थो योगविभागः कृतः॥

बाल-मनोरमा

क्यचि च ४८३, ७।४।३३

क्यचि च। "अस्य च्वौ" इत्यतोऽस्येत्यनुवर्तते। "ई घ्राध्मो"रित्यत ईग्रहणं चेति मत्वा शेषं पूरयति-- अस्येति। अकारस्येत्यर्थः। पुत्रीयतीति। क्यचि पुत्र य इति स्थिते ईत्वे पुत्रीयमिच्छतीत्यत्र पुत्रशब्दान्न क्यच्। गव्यतीति।

गामात्मन इच्छतीत्यर्थः। नाव्यतीति। नावमात्मन इच्छतीत्यर्थः। अपदान्तत्वादिति। "लोपः शाकल्यस्ये"त्यस्य पदान्त एव प्रवृत्तेरिति भावः। नन्वन्तर्वर्तिविभक्त्या पदत्वमस्त्येवेत्यत आह-- तथा हीति। यथा पदत्वं न भवति तथोच्यते इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अशनायौदन्यधानाया बुभुक्षापिपासागर्धेषु ७।४।३४

अशनाय उदन्य धनाय इत्येतानि निपात्यन्ते बुभुक्षा पिपासा गर्ध इत्येतेषु अर्थेषु। अशनाय इत्यशनशब्दस्य आत्वं क्यचि निपात्यते। अशनायति इति भवति बुभुक्षा चेत्। अशनीयति इत्येव अन्यत्र। उदन्य इति वदकशब्दस्य उदन्नादेशो निपात्यते। उदन्यति इति भवति पिपासा चेत्। उदकीयति इत्येव अन्यत्र। धनाय इति धनशब्दस्य आत्वं निपात्यते। धनायति इति भवति गर्धः चेत्। धनीयति इत्येव अन्यत्र।

न्यासः

अशनायोदन्यधनायाबुभुक्षापिपासागर्थैषु। , ७।४।३४

भोक्तुमिच्छा बुभुक्षा। पातुमिच्छा पिपासा। गर्धनं गर्धः। अभिकाङ्क्षेत्यर्थः॥

बाल-मनोरमा

अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ४८६, ७।४।३४

अशनायोदन्य। अशनाय, उदन्य, धनाय इत्येषां द्वन्द्वः। क्यजन्ता इति। एते त्रयः शब्दाः क्रमेण बुभुक्षादिष्वर्थेषु निपात्यन्ते इत्यर्थः। भोक्तुमिच्छा बुभुक्षा। पातुमिच्छा पिपासा। गर्द्धः अभिकाङ्क्षा। अशनायतीति। अश्यते यत्तदशनम् = अन्नं, तद्भोक्तुमिच्छतीत्यर्थः। "क्यचि चे"ति ईत्त्वाऽभावो निपात्यते। "अकृत्सार्वे"ति दीर्घः। उदन्यतीति। उदकं पातुमिच्छतीत्यर्थः। उदकशब्दस्य उदन्नादेशो निपात्यते, नलोपाऽबावश्च। धनायतीति। जीवनार्थं सत्यपि धने अधिकं धनं वाञ्छतीत्यर्थः। "क्यचि चे"ति ईत्त्वाऽभावो निपात्यते। अशनीयतीति। अशनम् = अन्नं, तत्सङ्ग्रहीतुमिच्छति वै()आदेवाद्यर्थमित्यर्थः। उदकीयतीति। सस्यादिसेचनार्थमुदकमिच्छतीत्यर्थः। धनीयतीति। दरिद्रः सन् जीवनाय धनमिच्छतीत्यर्थः।

तत्त्व-बोधिनी

अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ४१७, ७।४।३४

अशनायोदन्य। क्यजन्ता इति। उदकशब्दस्योदन्भावोऽन्ययोर्दीर्घ इत्यपि ज्ञेयम्। इह यः सद्यएव भोक्तुमशनमिच्छति, यश्च पातुमुदकं, यश्च धने सत्यपि पुनर्धनं-- तत्रोदाहरणानि। यस्तु कालान्तरोपयोगार्थमशनमिच्छति, यश्च स्नातुमुदकं,यश्च दरिद्रः सन् धनमिच्छति तत्र प्रत्युदाहरणानि। नु "उदन्या तु पिपासा तृ"डिति निघण्टौ परस्परसामानाधिकरण्यं न स्यात्, उदन्याशब्दस्य उदकेच्छावाचित्वादिति चेत्। अत्राहुः-- "अशनायती"त्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षापिपासादिकमेवार्थः, तथा च नोक्तदोष इति।

---

सूत्रम्

काशिका-वृत्तिः

न च्छन्दस्यपुत्रस्य ७।४।३५

छन्दसि विषये पुत्रवर्जितस्य अवर्णान्तस्य अङ्गस्य क्यचि यदुक्तं तन् न भवति। किं चोक्तम्? दीर्घत्वम् ईत्वं च। मित्रयुः। संस्वेदयुः। देवाञ् जिगाति सुम्नयुः। अपुत्रस्य इति किम्? पुत्रीयन्तः सुदानवः। अपुत्रादीनाम् इति वक्तव्यम्। जनीयन्तो ऽन्वग्रवः।

न्यासः

न च्छन्दस्यपुत्रस्य। , ७।४।३५

"क्यचि यदुक्तं तन्नभवति" इति। किं पुनस्तत्()? इत्याह--"दीर्घत्वमीत्वञ्च" इति। ननु च "अनन्तरस्य विधिर्वा भनत प्रतिषेधो वा" (व्या।प।१९) इत्यनन्तरस्य ईत्वस्य प्रतिषेधेन भवितव्यम्(), न तु व्यवहितस्य दीर्घत्वस्य? नैष दोषः; "अ()आआधस्यात्()" ७।४।३७ इत्य()आआघयोराद्वचनं ज्ञापकम्()--दीर्घत्वस्याप्ययं प्रतिषेधो भवतीति; अन्यथा दीर्घत्वेनैव सिद्धत्वादाकारकरणमनर्थकं स्यात्()। "मित्रयुः" इति। "क्याच्छन्दसि" ३।२।१७० इत्युप्रत्ययः; "अतो लोपः" ६।४।४८ इत्यकारलोपः। "अपुत्रादीनामिति वक्तव्यम्()" ति। पुत्रादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"क्यचि च" (७।४।३३) इत्यस्यानन्तरं पुत्रस्येति वक्तव्यम्(), किमर्थमिदम्()? "नच्छन्दसि" इति प्रतिषेधं वक्ष्यति तद्बाधनार्थम्()। एवं "अपुत्रस्य" इति नञ्? उच्चारयितव्यो न भवति। तदिदं "क्यचि च" (७।४।३३) इत्यस्यानन्तरं पुत्रस्येति वक्तव्ये यदिहापुत्रस्येति वचनं तत्? पूत्रादीनां प्रतिषेधो यथा स्यादित्येवमर्थम्()। एतच्च पुत्रस्योपलक्षणत्वाल्लभ्यते॥

---

सूत्रम्

काशिका-वृत्तिः

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ७।४।३६

दुरस्युः द्रविणस्युः वृषण्यति रिषण्यति इत्येतानि छन्दसि निपात्यन्ते। दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते। अवियोना दुरस्युः। दुष्टीयति इति प्राप्ते। द्रविणशब्दस्य द्रविणस्भावो निपात्यते। द्रविणस्युर्विपन्यया। द्रविणीयति इति प्राप्ते। वृषशब्दस्य वृषण्भावो निपात्यते। वृषण्यति। वृषीयति इति प्राप्ते। रिष्टशब्दस्य रिषण्भावो निपात्यते। रिषण्यति। रिष्टीयति इति प्राप्ते।

न्यासः

दुरस्युद्र्रविणस्युर्वृषण्यतिरिषण्यति। , ७।४।३६

---

सूत्रम्

काशिका-वृत्तिः

अश्वाघस्य आत् ७।४।३७

अश्व अघ इत्येतयोः क्यचि परतः छन्दसि विषये आकारादेशो भवति। अश्वायन्तो मघवन्। मा त्वा वृका अघायवो विदन्। एतदेव आत्ववचनं ज्ञापकं न च्छन्दस्यपुत्रस्य ७।४।३५ इति दीर्घरतिषेधो भवति इति।

न्यासः

अ�आआघस्यात्?। , ७।४।३७

"एतदेवाद्ववचनं ज्ञापकम्()" इत्यादि। कथं कृत्वा ज्ञापकम्()? यदि "न च्छन्दसि" ७।४।३५ इत्यनन्तरस्यैवेत्वस्यायं प्रतिषेधः तदाऽद्वचनमनर्थकं स्यात्(), "अकृत्सार्वधातुकयोः" ७।४।२५ इत्यनेनैव सिद्धत्वात्(), कृतञ्च, तस्मादेतज्ज्ञापयति--दीर्घस्याप्ययं प्रतिषेधो भवतीति॥

---

सूत्रम्

काशिका-वृत्तिः

देवसुम्नयोर् यजुषि काठके ७।४।३८

देव सुम्न इत्येतयोः क्यचि परतः आकारादेशो भवति काठके यजुषि। देवायते यजमानाय। सुम्नायनतो हवामहे। यजुषि इति किम्? देवाञ् जिगाति सुम्नयुः। काठके इति किम्? सुम्नयुरिदमसीदमसि।

न्यासः

देवसुम्नयोर्यजुषि काठके। , ७।४।३८

"न च्छन्दसि" ७।४।३५ इति प्रतिषेधे प्राप्ते देवसुम्नयोरिदमारभ्यत आद्वचनम्()। "काठके" इति। यजुष एवैतद्विशेषणम्()। कठस्येदं यजुः काठकम्()--"गोत्रचरणाद्वञ्()" ४।३।१२६॥

---

सूत्रम्

काशिका-वृत्तिः

कव्यधवरपृतनस्यर्चि लोपः ७।४।३९

कवि अध्वर पृतना इत्येतेषाम् अङ्गानां क्यचि परतो लोपो भवति ऋचि विषये। कव्यन्तः सुमनसः। अध्वर अध्वर्यन्तः। पृतना पृतन्यन्तः तिष्ठन्ति।

न्यासः

काव्यध्वरपृतनस्यचिं लोपः। , ७।४।३९

"काव्यन्तः" इति। "अलोऽन्त्यस्य" १।१।५१ लोपः। क्यजन्ताच्छतृप्रत्ययः, तदन्ताज्जस॥

---

सूत्रम्

काशिका-वृत्तिः

द्यतिस्यतिमास्थाम् इत् ति किति ७।४।४०

द्यति स्याति मा स्था इत्येतेषाम् अङ्गानाम् इकारादेशो भवति तकारादौ किति प्रत्यये परतः। द्यति तिर्दितः। निर्दितवान्। स्यति अवसितः। अवसितवान्। मा मितः। मितवान्। स्था स्थितः। स्थितवान्। ति इति किम्? अवदाय। किति इति किम्? अवदाता।

न्यासः

द्यतिस्यतिमास्थामिति किति। , ७।४।४०

छन्दसि, यजुषि, ऋचीति सर्वं निवृत्तम्(); तेन सामान्येनायं विधिः। "दो अवखण्डने" (धा।पा।११४८), "षो अन्तकर्मणि" (धा।पा।११४७)। "मा माने" (धा।पा।१०६२), "माङ माने" (धा।पा।११४२), "मेङप्रणिदाने" (धा।पा।९६१)--"गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति त्रयाणामपि ग्रहणम्()। "ष्ठा गतिनिवृत्तौ" (धा।पा।९२८)।

तत्राद्यस्य "दो दद्घोः" [७।४।४६](#) इति दत्त्वे प्राप्ते शेषाणां "घुमास्था" [६।४।६६](#) इत्यादिसूत्रेण ईत्त्वे प्राप्त इत्त्वं विधीयते॥ "अवदाय" इति। पूर्ववत्? क्त्वो ल्यप्()। "अवदाता" इति। तृच्()। द्यतिस्यतति श्तिपा निर्देशोऽयं यङलुग्निवृत्त्यर्थः। तेन तयोर्यथाप्राप्तमेव भवति--दादत्तः, दादत्तवान्(), सासीतः, सासीतवान्()। तपरकरणं मुखसुखार्थम्(), न तु दीर्घनिवृत्त्यर्थम्()। "भाव्यमानोऽण्? सवर्णान्न गृह्णाति" (व्या।प।३५) इति दीर्घस्याप्राप्तेः॥

बाल-मनोरमा

द्यतिस्यतिमास्थामित्ति किति ८८१, ७।४।४०

द्यतिस्यति। एषां चतुर्णां द्वन्द्वात्षष्ठी। "दो अवखण्डने" इत्यस्य द्यतीति निर्देशः। "षो अन्तकर्मणी"त्यस्य तु स्यतीति निर्देशः। इत्-ति- कितीति च्छेदः। ईत्वेति। "घुमास्थे"ति ईत्त्वस्य, "दो दद्घो"रिति दद्भावस्य च यथासंभवमपवाद इत्यर्थः। दोधातोरुदाहरति-- दित इति। मा माङ् मेङिति। "गामादाग्रहणेष्वविशेषः" इति वचनादिति भावः।

तत्त्व-बोधिनी

द्यतिस्यतिमास्थामित्ति किति ७२४, ७।४।४०

द्यतिस्यति। दोऽवखण्डने, षोऽन्तकर्मणि, मा माने, माङ् माने ,मेङ् प्रणिदाने, ष्ठा गतिवृत्तौ। श्तिपा निर्देशो धातुविशेषणार्थः। न हि श्तिपं विना श्यन् सुलभः। यत्तु प्रसादकृतोक्तं-- "श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः, दादत्तः [सासात"] इति। तन्न। यङ्लुकि हि इटा भाव्यं-- दादितः सासित इति। तत्र "ति कितीति वचनान्नाऽस्ति प्रसङ्गः। किंच "दो दद्घो"रिति विधीयमान आदेशोऽनेकाल्त्वात्सर्वस्येति निर्विवादम्। तथा च हन्तेर्यङ्लुगन्तस्य वधादेशवत्साभ्यासस्य प्रवर्ततेति दादत्त इति त्वदुदाह्रतरूपं कथमुक्तिसम्भवं लभेतेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

शाछोरन्यतरस्याम् ७।४।४१

शा छा इत्येतयोः अन्यतरस्याम् इकारादेशो भवति तकारादौ किति। शा निशितम्, निशातम्। निशितवान्, निशातवान्। छा अवच्छितम्, अवच्छातम्। अवच्छितवान्, अवच्छातवान्। श्यतेरित्त्वं व्रते नित्यम् इति वक्तव्यम्। शंशितो ब्रह्मणः। संशितव्रतः इत्यर्थः। व्यवस्थितविभाषविज्ञानात् सिद्धम्। देवत्रातो गलो ग्राह इति योगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः।

न्यासः

शाच्छोरन्यतरस्याम्?। , ७।४।४१

"शो तनूकरणे" (धा।पा।११४५), "छो छेदने" (धा।पा।११४६)। "श्यतेरित्त्वं व्रते नित्यम्()" इति। ब्रात इति नोत्तरपदं गृह्रते, किं तर्हि? विषयः। व्रतविषये श्यतेर्नित्यमित्त्वं भवति। "संशितो ब्राआह्रणः" इति। आचारविशेषे व्रताख्ये यत्नवानेवोच्यते संशितव्रत इति। संशितं यत्नेन सम्यक्? प्रतिपादितं व्रतं यस्य येन वा स एवमुच्यते। ननु च व्रतविषये विधौयमानेनेत्त्वेनैव व्रतस्य द्योतितत्वाद्()व्रतशब्दस्य प्रयोगो न प्राप्नोति? नैष दोषः; अन्यत्र हीत्वं भवत्येव, व्रते तु नित्यमाख्यायते, सोऽयं सामान्यशब्दो भवति। अत्र विशेषार्थो व्रतश्ब्दः प्रयुज्यते। परनिपातस्त्वाहितग्न्यादित्वाद्द्रष्टव्यः। "व्यवस्थितविभाषाविज्ञानात्? सिद्धम्? इति। एतदागमवाक्येन द्रढयितुमाह--"देवत्रातः" इत्यादि। "त्रैङ्? पालने" (धा।पा।९६५), क्तः। "नुदविदोन्दत्राघ्रह्रीभ्योऽन्यतरस्याम्()" [८।२।५६](#)

इति संज्ञाविषये नत्वं न भवत्येव--देवैस्त्रातो देवत्रातः, देवशब्दोऽत्र संज्ञोपलक्षणार्थः। केवलस्यापि त्रातशब्दस्य संज्ञायां न नत्वं प्रतिपद्यते। एवं सज्ञाया अन्यत्रोभयं भवति--त्राणः, प्रात इति। "गलः" इति। गिरतेः पचाद्यच्()। "ग्रो यङि" ८।३।२०, "अचि विभाषा" ८।२।२१ इति प्राण्यङ्गे नित्यं लत्वम्()--गल इति। विषे तु भवत्येव--गर इति। "ग्राहः" इति। ग्राहेः "विभाषा ग्रहः" ३।१।१४३ इति णप्रत्ययः। जलचरे नक्रे नित्यं णप्रत्ययो भवति--ग्राह इति। आदित्यसोमादिषु पचाद्यज्भवत्येव--ग्रह इति। "इतियोगे च सद्विधिर्न भवति" इति। वर्षतीति धावति, हन्तीति पलायते इति--"लक्षमहेत्वोः क्रियायाः" ३।२।१२३ इति सत्संज्ञकौ शतृशानचावितियोगे न भवत एव, व्यवस्थितविभाषया। तत्र "नन्वोर्विभाषा" (३।२।१२१) इत्यतो विभाषाग्रहणमनुवत्त्तते--अर्जयन्? वसति, अधीयानो वसति। तत्रासतीति योगे नित्यावेव तौ भवतः। ननु चेतिशब्देनैव हेत्वर्थस्य द्योतितत्वाद्वर्षतीति, हन्तीत्येवमादौ सद्विधिर्न भविष्यति, यत्र त्वितिशब्दो न प्रयुज्यते तत्र भवत्येव--अर्जयन्? वसतीत्यादौ, तदत्र विभाषाधिकारनन्तरेणापि विभाषा लभ्यत एव; अतो विभाषाग्रहणं नानुवर्त्त्यमेव, तस्मादनुदाहरणमेतद्()व्यवस्थितविभाषायाः? इदं तर्ह्युदाहरणम्()--करिष्यामीति व्रजतीति। अत्र "लृट्? शेषे च" (३।३।१३) इति चकारात्? क्रियायामुपपदे क्रियार्थायां लृट्(), तस्य लृटः सद्विधिर्न भविष्यतीति; व्यवस्थितविभाषया। अप्रथमासमानाधिकरणेनेतियोगादन्यत्र नित्यं भवति--करिष्यन्तं पश्येति, प्रथमासमानाधिकरणे तु विकल्पः--ब्राआह्णः करिष्यन्? ब्राआह्णः करिष्यतीति। "मिथः" इत्यादि। मिथ इति सहभावेन। देवत्रातगलग्राहादयस्त्राणगरग्रहादिभिः सहैकस्मिन्? विषये विकल्पेन नान्वाख्यायन्त इत्यर्थः। "गवाक्षः" इति। "सर्वत्र विभाषा गोः" (६।१।१२२) इत्यनुवत्त्तमाने "अवङ्? स्फोटायनस्य" (६।१।१२३) इति वातायने नित्यमवङ्? भवति, प्राण्यङ्गो तु गोऽक्षमित्यत्र न भवति; अन्यत्रोभयम्()--गवाक्षम्(), गोऽक्षमिति। "संशितव्रतः" इति। व्रते नितयमित्त्वम्()। अन्यत्र विकल्पेन--निशितम्(), निशातं शस्त्रम्()। तीक्ष्णमित्यर्थः। तदेतत्? सर्वं व्यवस्थितविभाषया लभ्यते। क्वचिद्विधिरेव, क्वचित्? प्रतिषेध एव, क्वचिदुभयमपीत्येवंविधा विविधार्थे स्थितां विभाषा व्यवस्थितविभाषा। एतच्च विविधमवस्थानमाकृतौ पदार्थे वेदितव्यम्()। तत्र हि सर्व लक्ष्यराशिमेकीकृत्याभिसंक्षिप्य तदुभयमुपदिश्यते। विधिः प्रतिषेधश्च जातौ पदार्थ उभयमपि भवतीत्येतावतोऽर्थस्य प्रतिपादने शास्त्रस्य व्यापारः। यस्तु क्वचिदर्थे विधिरेव, क्विचित्? प्रतिषेध एव, क्वचिदुभयमित्यसङ्करेण व्यवस्थानम्(), एतच्चाविच्छिन्नाचार्यपारम्पर्योपदेशाल्लभ्यते॥

बाल-मनोरमा

शाच्छोरन्यतरस्याम् ८८२, ७।४।४१

शाच्छोः। शो तनूकरणे" "छो छेदने" अनयोः कृतात्वयोर्निर्देशः। अनयोरिकारोऽन्तादेशो वा स्यात्तादौ कितीत्यर्थः। व्यवस्थितेति। एतच्च भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

शाच्छोरन्यतरस्याम् ७२५, ७।४।४१

शाच्छो। शो तनूकरणे। छो छेदने।

---

सूत्रम्

काशिका-वृत्तिः

दधातेर् हिः ७।४।४२

दधातेरङ्गस्य हि इत्ययम् आदेशो भवति तकारादौ किति प्रत्यये परतः। हितः। हितवान्। हित्वा।

लघु-सिद्धान्त-कौमुदी

दधातेर्हिः ८२९, ७।४।४२

तादौ किति। हितम्॥

न्यासः

दधातेर्हिः। , ७।४।४२

धुमास्था" ६।४।६६ इति सूत्रेणेत्वे प्राप्ते दधातेर्हिरादेशो विधीयते। श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः। तेन यङ्लुगन्तस्य हिरादेशो न भवति--दाधीतः, दाधीतवान्(), दाधीत्वेति॥

बाल-मनोरमा

दधातेर्हिः ८८३, ७।४।४२

दधातेर्हिः। तादौ कितीति। शेषपूरणमिदम्। "द्यतीस्तयती"त्यतस्तदनुवृत्तेरिति भावः। दो दद्घोः "द" इति षष्ठ()न्तम्। तदाह-- दा इत्स्येति। "दथ्" इति च्छेदः। तदाह-- दथ् स्यादिति। तवर्गद्वितीयान्तोऽयमादेशः। तादौ कितीति। "ति किती"त्यनुवृत्तेरिति भावः। चत्र्वमि#इत। "खरि चे"ति थकारस्य तकार इत्यर्थः। दात इति। दाप्दैपो रूपम्। "अदा"वित्युक्तेर्घुत्वाऽभावान्न दद्भावः। तान्तो वेति। तवर्गप्रथमान्त इत्यर्थः। नन्वेवं सति "विदत्त " मित्यादौ "दस्ती"त्युपसर्गस्य दीर्घत्वापत्तिः। तत्र हि "द" इति षष्ठी सप्तम्यर्थे। इगन्तोपसर्गस्य दीर्घः स्यात्तकारान्ते ददातौ परत इत्यर्थ इत्याशङ्क्य नराकरोति-- न चैवमिति। आदेशस्य तवर्गप्रथमान्त्वे सतीत्यर्थः। तकारादाविति। "दस्ती"त्यत्र द इति षष्ठी तीत्यत्रान्वेति। तथा च इगन्तोपसर्गस्य दीर्घः स्याद्दादेशतकारादावुत्तरपदे इत्यर्थः। उत्तरपदाधिकारात्। ततश्च उत्तरपदस्याऽत्र तकारादित्वाऽभावान्न दीर्घ इति भावः। दान्तो वा धान्तो वेति। तवर्गतृतीयान्तो वा, चतुर्थान्तो वा अयमादेश इत्यर्थः। न चेति। दान्तत्वे निष्ठानत्वं, धान्तत्वे "झषस्तथो"रिति धत्वं च न शङ्क्यमित्यन्वयः। संनिपातेति। दान्तादेशस्य, धान्तादेशस्य च तकारादिप्रत्ययोपजीव्यतया तद्विघातकनत्वधत्वे प्रति निमित्तत्वाऽसंभवादिति भावः।

तत्त्व-बोधिनी

दधातेर्हि ७२६, ७।४।४२

दधातेर्हिः। श्तिपा निर्देशो धटो निवृत्त्यर्थः। तीत्यनुवृत्तेर्यङ्लुकिन। दाधितः। अत्रापि प्रसादकृता--श्तिपा निर्देशस्य यङ्लुङिवृत्त्यर्थत्वद्दाधीत इति "घुमास्थे"तीत्वमुदाह्मतं, तत्पूर्ववदेव हेयम्।

---

सूत्रम्

काशिका-वृत्तिः

जहातेश् च क्त्वि ७।४।४३

जहातेरङ्गस्य हि इत्ययम् आदेशो भवति क्त्वाप्रत्यये परतः। हित्वा राज्यं वनं गतः। हित्वा गच्छति। जहातेर् निदेशात् जिहीतेर् न भवति। हात्वा।

लघु-सिद्धान्त-कौमुदी

जहातेश्च क्त्वि ८८६, ७।४।४३

हित्वा। हाङस्तु - हात्वा॥

न्यासः

जहीतेश्च क्त्वि। , ७।४।४३

पूर्ववदीत्त्वे प्राप्ते क्त्वाप्रत्यये हिरादेशो विधीयते। यद्यपि "हि गतौ" (धा।पा।१२५७) इत्यस्यापि हित्वेति सिध्यति, तथापि जहातेरिकारनिवृत्त्यर्थं वचनम्()। अथ किमर्थं जहातेरिति श्तिपा निर्देशः, न "हः" एवोच्यते? इत्याह--"जहातेः" इत्यादि। एतेन "ओहाङ्? गतौ" (धा।पा।१०८९) इत्यस्य निवृत्त्ये निर्देशः क्रियत इति दर्शयति। यदि हि "हः" इति निर्देशः स्यात्(), तदा तस्य साधारणत्वाज्जिहातेरपि स्यात्()। जहातेरिति श्तिपा निर्देशे तु न भवति। अनेन जहातिरेव निर्दिश्यते, न जिहातिः। न हि तस्यैवंविधो निर्देशे यङ्लुगन्तस्य न भवति--जाहात्वेति। ईत्वमप्यत्र न भवति; तद्विधावपि श्तिपा निर्देशात्()। अत्र चेटि कृते "आतो लोप इटि च" ३।४।६४ इत्याकारलोपः॥

तत्त्व-बोधिनी

जहातेश्च क्त्वि १५९९, ७।४।४३

जग्ध्वेति। "झरो झरी"ति पाक्षिको धलोपः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा छन्दसि ७।४।४४

जहातेरङ्गस्य विभाषा हि इत्ययम् आदेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः। हित्वा शरीरं यातव्यम्। हात्वा।

न्यासः

विभाषा छन्दसि। , ७।४।४४

---

सूत्रम्

काशिका-वृत्तिः

सुधितवसुधितनेमधितधिष्वधिषीय च ७।४।४५

सुधित वसुधित नेमधित धिष्व धिषीय इत्येतानि छन्दसि विषये निपात्यन्ते। तत्र सुधित वसुधित नेमधित इति सुवसुनेमपूर्वस्य दधातेः क्तप्रत्यय इत्त्वम् इडागमो वा प्रत्ययस्य निपात्यते। गर्भं माता सुधितम्। सुहितम् इति प्राप्ते। वसुधितम् अग्नौ जुहोति। वसुहितम् इति प्राप्ते। नेमधिता बाधन्ते। नेमहिता इति प्राप्ते। धिष्व इति लोण्मध्यमैकवचने दधातेः इत्त्वम् इडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते। धिष्व स्तोमम्। धत्स्व इति प्राप्ते। धिषिय इति आशीर्लिङि आत्मनेपदोत्तमैकवचने दधातेः इत्त्वम्, इडागमो वा प्रत्ययस्य निपात्यते। धिषीय। धासीय इति प्राप्ते।

न्यासः

सुधितवसुधितनेमधितधिष्वधिषीय च। , ७।४।४५

चकारेण छन्दसीत्यनुकृष्यते। "इडागमो वा" इति। यदेडागमस्तदा "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "सुधितम्()" इति, "कुगतिप्रादयः" २।२।१८ इति समासः। "वसुधितम्()" इति। विशेषणसमासः। पूर्ववदाकारलोपः। "नेमधितम्()" इति। "सामि" २।१।२६ इति द्वितीयासमासः। सामीति तत्रार्थग्रहणमित्युक्तम्()। नेमशब्दश्चायं सामिशब्दपर्यायः। "धिष्व" इति। "थासः से" ३।४।८०, "सवाभ्यां वामौ" ३।४।९१ इति वकारः। "द्विर्वचनाभावः" इति।

"श्नौ" ६।४।११२ इत्यकारलोपः; घकारस्य "खरि च" ८।४।५४ इति चर्त्वम्()--तकारः, "दधस्तथोश्च" ८।२।३८ इत्यभ्यासस्य भष्भावेन धकारः। "धिषीय" इति। आशिषि लिङ्(), "इटोऽत्()" ३।४।१०६ इत्यत्त्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

दो दद् घोः ७।४।४६

दा इत्येतस्य घुसंज्ञकस्य ददित्ययम् आदेशो भवति तकारादौ किति प्रत्यय परतः। दत्तः। दत्तवान्। दत्तिः। दः इति किम्? धीतः। धीतवान्। धेटः एतद् रूपम्। घोः इति किम्? दाप् लवने दातं बर्हिः। दैप् शोधने अवदातम् मुखम्। अयम् आदेशः थान्तः इष्यते। एवं ह्युक्तम् तान्ते दोषो दीर्घत्वं स्याद् दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वप्राप्तिस्थान्ते ऽदोषस्तस्मात् थान्तम्। यदि तु दस्ति इति तकारादौ दीर्घत्वं तदा तान्ते ऽपि अदोषः। दान्तधान्तयोरपि सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति नत्वधत्वे न भविष्यतः इति न दोषः। अवदत्तं विदत्तम् च प्रदत्तं चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तम् इति चेष्यते। अच उपसर्गात् तः ७।४।४७ इति प्राप्ते निपात्यन्ते। अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः।

लघु-सिद्धान्त-कौमुदी

दो दद् घोः ८३०, ७।४।४६

घुसंज्ञकस्य दा इत्यस्य दथ् स्यात् तादौ किति। चर्त्वम्। दत्तः॥

न्यासः

दो दद्घोः। , ७।४।४६

छन्दसीति निवृत्तम्(); पूर्वसूत्रे चकारेणानुकृष्टत्वात्()। "दत्तः दत्तवान्()" इति। क्तक्तवतू। "दत्तिः" इति। क्तिन्()। "धीतः, धीतवान्()" इति। पूर्ववदीत्त्वम्()। अथ "दधातेर्हिः" (७।४।४२) इति हिरादेशः कस्मान्न भवति? इत्यत आह--"धेट एतद्रूपम्()" इत्यादि। "धेट्? पाने" (धा।पा।९०२) इत्यस्य रूपम्(), न दधातेः। तेन हिरादेशो न भवतीति भावः। "दातम्()" इति। "दाप्? लवने" (धा।पा।१०५९) इत्येतस्यैतद्रूपम्(); तस्य घुसंज्ञा नास्ति; "अदाप्()" १।१।१९ इति प्रतिषेधात्()। "दो दद्घोः" इति जश्त्वेनायं न्र्देशः, तत्र न ज्ञायते--किं तककारान्तोऽयमादेशः? आहोस्विद्दकारान्तः? उत धकारान्तः? अथ थकारान्त इति वा()--इति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"अयमादेशः" इत्यादि। कथं ज्ञायते? इत्याह--"एवं ह्रुक्तम्()" इत्यादि। यद्ययमादेशस्तकारान्तः स्यात्, सुदत्तेत्यत्र "इकः काशे" ६।३।१२२ इत्यनुवत्र्तमाने "दास्ति" ६।३।१२३ इती दीर्घत्वं स्यात्()। अथ दकारान्तः, तदा "रदाभ्याम्()" ८।२।४२ इति निष्ठानत्वं स्यात्()। अथ धकारान्तः, तदा "झषस्तथोर्धोऽधः" ८।२।४० इति झषन्ताद्धत्वमापद्येत निष्ठातकारस्य। "थान्तेऽदोषः" इति। नञोऽत्र प्रश्लेषः। थान्ते दोषो नास्तोत्यर्थः। "तस्मात्()" इत्यादि। यस्मात्? त्रिषु पूर्षकेषु पक्षेषु दोषः, तस्मात्थान्तोऽयमादेशः। उदाहरणे दत्तः, दत्तवानिति "खरि च" ८।४।५४ इति चत्र्वम--थस्य तः। "यदि तु" इत्यादि। द्वौ पक्षौ भाष्ये "दस्ति" ६।३।१२३ इत्यत्र दर्शितौ--"दा" इत्येत()स्मस्तकारादौ, तकारान्ते वेति। तत्र यदि तकारान्ते "दा" इत्येतस्मिन्? दीर्घत्वं भवतीति--एष पक्ष आश्रीयते, तदैव दीर्घत्वप्राप्तिदोषः। यदि तु तकारादौ "दा" इत्येतस्मिन्? दीर्घत्वं भवतीति--एष पक्ष आश्रीयते, तदा तान्तेऽप्यदोषः। यत्र तकारादित्वम्(), "दा" इत्येतस्य, तत्र दीर्घत्वं भवत--नीत्तम्(), वीत्तमित्यादौ, न तु सुदत्तादौ। तस्मात्? पाक्षिको दीर्घप्राप्तिदोषः। "दान्तधान्तयोरपि" इत्यादि। तकारादिसन्नियोगेन हि दान्तधान्तावादेशाविमौ विहितौ नोत्सहेते तद्विघातनिमित्ततामुपगन्तुम्()। तस्माद्दान्तधान्तयोरप्यदोषः। "अवदत्तम्()"

इत्यादि। आदिकर्मणि=क्रियारम्भे। आदिभूतक्रियाक्षण इत्यर्थः। अत्र "अच उपसर्गात्तः" ७।४।४७ इति तकारादेशे प्राप्त एतेऽवदत्तादयो निपात्यन्ते। "आदिकर्मणि" इति च सर्वेषां विशेषणम्(), न तु प्रदत्तमित्यस्यैव। आदिकर्मणोऽन्यत्र "अच उपगर्गात्तः" ७।४।४७ इति तकारादेशो भवति, न तु दद्भावः--अवत्तम्(), वीत्तम्(), सूत्तम्(), अनूत्तमिति। "अनुपसर्गाः" इत्यादि। अथ वा--अवादयो ददातिं प्रत्युपसर्गसंज्ञका एव न भवन्ति; तद्वाच्यायाः क्रियया अन्या या क्रिया गमिर्वाच्या तद्विषयत्वात्()--अवगतं दत्तमवदत्तमित्येवमन्यत्रावगन्तव्यम्()। तस्माद्? गमिं प्रत्युपसर्गसंज्ञका एते, न ददातिं प्रति। तथा ह्युक्तम्()--यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति। तस्मादुपसर्गसंज्ञाया अभावान्नैवात्र तकारः प्रसजेदिति किं निपातनेन!॥

तत्त्व-बोधिनी

दो दद्घोः ७२७, ७।४।४६

दो दद्घोः। इहादेशः थान्त एव, न तु त-द-धान्तः, जश्त्वे कृते संहितायास्तुल्यत्वेऽपि प्रक्रियायां दोषादिति प्राञ्चः। तथा चाहुः-- "तान्ते दीर्घत्वाख्यो दोषो, दान्ते दोषो निष्ठानत्वम्। धान्ते दोषो धत्वाख्यः स्यान्निर्दोषत्वात्थान्तो ग्राह्यः" इति। तदनुसारेणाह-- दथ्स्यादिति। दात इति। दाप् लवने। "अदा"बिति निषेधान्न घुत्वम्। इह सर्वे प्षाः सूपपादा इत्याह--- तान्तो वेत्यादिना। दीर्घापत्तिरिति। विदत्तमित्यादावुपसर्गस्येत्यर्थः। "दस्तीटत्यत्र द्वौ पक्षौ-- इत्यस्य य आदेशः स तकारान्तः" "तकारादिर्वे"ति?। तत्राद्ये पक्षेऽयं दोषो नान्त्ये इत्याशयेनोक्तदोषं परिहरति-- तकारादाविति। निष्टानत्वमिति। "रदाभ्याटमित्यनेन। सन्निपातेति। तादि निमित्तीकृत्य विहतो यो दान्ताद्यादेशः स तकारविघातकनत्वादिविधेर्निमित्तं न भवतीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अच उपसर्गात् तः ७।४।४७

अजन्तादुपसर्गादुत्तरस्य दा इत्येतस्य घुसंज्ञकस्य त इत्ययम् आदेशो भवति तकारादौ किति। प्रत्तम्। अवत्तम्। नीत्तम्। परीत्तम्। अचः इति किम्? निर्दत्तम्। दुर्दत्तम्। उपसर्गातिति किम्? दधि दत्तम्। मधु दत्तम्। घोः इत्येव, अवदातम् मुखम्। उपसर्गातिति पच्चमीनिर्देशादादेरलः प्राप्नोति? तत्र समाधिमाहुः। अचः इत्येतद् द्विरावर्तयितव्यम्, तत्र एकं पच्चम्यन्तं उपसर्गविशेषणार्थम्, अपरम् अपि षष्ठ्यन्तं स्थानिनिर्देशर्थम् इत्याकारस्य स्थाने तकारो भवति। द्वितकारो वा संयोगो ऽयम् आदिश्यते, सो ऽनेकाल्त्वात् सर्वस्य भविष्यति। अपो भि ७।४।४८ इत्यत्र पञ्चम्यन्तम् अचः इत्यनुवर्तते। तेन पकारमात्रस्य भविस्यति। द्यतेरित्त्वादचस्त इत्येतद् भवति विप्रतिषेधेन। अवत्तम्। प्रत्तं जुहोति।

न्यासः

अच उपसर्गात्तः। , ७।४।४७

ददादेशस्यायमपवादः। "त इत्ययमादेशो भवति" इति। अकार उच्चारणार्थः। प्रत्तमित्यादावाकारस्य तकारे कृते दकारस्य चत्र्वम्()--तकारः "नीत्तम्()" इति। "दस्ति" ६।३।१२३ इति दीर्घत्वम्()। "अवदात्तम्()" इति। "दैप्? शोधने" (धा।पा।९२४) इत्येतस्यैतद्रूपम्()। "आदेरलः प्राप्नोति" इति। "आदेः परस्य" १।१।५३ इति वचनात्()। "अच इत्येतदद्विरावत्र्तयितव्यम्()" इति। "अचः" इत्येतस्य द्विरावृत्तावचोऽच इति द्वे शब्दरूपे भवतः। तत्रैकं पञ्चम्यन्तम्(); अपरं षष्ठ()न्तम्()। तत्रैकेनोपसर्गो विशिष्यते--अजन्तादुपसर्गादिति। इतरेणापि स्थानी निर्दिश्यत इत्येवमाकारस्यायमादेशो भवति। "द्वितकारो वा" इति। अथ वा--"अच उपसर्गात्तः" इति। द्वितकार एव संयोगादेशो

निर्दिश्यते, तेनास्यानेकास्त्वात्? सर्वस्यैव भवति, यदि तर्हि द्वितकारकोऽयं निर्देशस्तदा "अपो भि" ७।४।४८ इत्यनेनापि सर्वादेशः प्राप्नोति, नेकाल्त्वादित्याह--"अषो भि" इत्यादि। "अपो भि" इत्यत्र पञ्चम्यन्तमच इत्यनुवर्त्तते, तेन सत्यप्यनेकाल्त्वे "तस्मादित्युत्तरस्य" १।१।६६ इति पकारमात्रस्य भविष्यति, न सर्वस्येति। "द्यतेः" इत्यादि। द्यतेरित्यस्यावकाशः--यत्राजन्त उपसर्गो न भवति--निर्दितम्(), दुर्दितमिति; अस्यादेशस्यावकाशः--अजन्तादुपसर्गात्? परो योऽन्यो घुसंज्ञकः--"डुदाञ्? दाने" (धा।पा।१०९१), अवत्तम्(), परीत्तमिति; अजन्तादुपसर्गादुत्तरस्य द्यतेरुभयप्रसङ्गे सति तकार एव भवति विप्रतिषेधेन--अवत्तम्(), प्रत्तमिति॥

बाल-मनोरमा

अच उपसर्गात्तः ८८४, ७।४।४७

अच उपसर्गात्तः। त इत्यत्राऽकार उच्चारणार्थः। "अच" इत्यावर्तते, एकमुपसर्गविशेषणं, द्वितीयं तु स्थानिसमर्पकं। तदाह-- अजन्तादिति। घोरिति। घोरवयवस्येत्यर्थः। तः स्यादिति। तकारः स्यादित्यर्थः। ददादेशापवादः। चत्र्वमिति। प्र दा त इति स्थिते दकारादाकारस्य तकारादेशे दकारस्य चर्त्वेन तकार इत्यर्थः। अवदत्तं विदत्तं चेति। भाष्यस्थश्लोकोऽयम्। अत्र आदिकर्मणीत्येतत् प्रदत्तमित्यत्रैव संबध्यते। नाऽयम् "अच उपसर्गात्तः" इत्यस्याऽपवाद इति भ्रमितव्यमित्याह-- चशब्दाद्यथाप्राप्तमिति। तथा चाऽवदत्तादिशब्देषु ददादेशोऽपि कदाचिल्लभ्यते इत्यर्थः। अत एव प्रकृतसूत्रभाष्ये "अच उपसर्गात्तःर" इत्यस्यावकासः-- प्रत्तमवत्तमिति सङ्गच्छते इति भावः।

तत्त्व-बोधिनी

अच उपसर्गात्तः ७२८, ७।४।४७

अच उपसङ्ख्यार्गात्तः। तकारादकार उच्चारणार्थः। "अच" इत्यावर्तते। तत्रैकं पञ्चम्यन्तमुपसर्गं विशिनष्टि। अपरं षष्ठ()न्तं स्थानलाभायेति व्याचष्टे-- अजन्तादित्यादिना। यद्वा "अच इत्यनावृत्तं पञ्चम्यन्तमेवास्तु किं तु द्वितकारकोऽयमादेशस्तेनानेकाल्त्वात्सर्वस्य घोर्भविष्यति। एकतकारो हि "अलोऽन्त्यस्ये"ति बाधित्वा "आदेः परस्ये" त्यादेरेव स्याद च इति पञ्चमीनिर्देशात्। यद्येवम् "अपो भी" त्युत्तरसूत्रेऽपि द्वितकार एवेति सर्वादेशः स्यादिति चेत्। अत्राहुः-- पञ्चम्यान्तस्याऽच इत्यनुवृत्तेरचः परस्य पकारस्यैव भविष्यत तत्रान्त्यस्य संयोगान्तलोपे पूर्वस्य जश्त्वेन सिद्धमिष्टमिति। अवदत्तमित्यादि। आदिकर्मणीत्येतत्प्रदत्तमित्यस्यैव विशेषणं, नेतरेषाम् , असंभवात्। दातुं प्रक्रान्तमारब्धमिति प्रदत्तमित्यस्याऽर्थः। इष्यते इति। तादेशबाधनार्थं निपातनमिष्यत इत्यर्थः। अन्ये तु अवादीनामपुसर्गप्रतिरूपकत्वाश्रयणे ह्रवदत्तं विदत्तमित्यादि सिध्यति, उपसर्गत्वाश्रयणे तु पूर्वोक्तमवत्तं वीत्तमित्यादीति नाऽपूर्वमिदं वचनमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

अपो भि ७।४।४८

अपित्येतस्य अङ्गस्य भकारादौ प्रत्यये परतः त इत्ययम् आदेशो भवति। अद्भिः। अद्भ्यः। भि इति किम्? अप्सु। स्ववःस्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ। स्ववद्भिः। स्वतवद्भिः। माद्भिरिष्ट्वा इन्द्रो वृत्रहा। समुषद्भिरजायथाः।

लघु-सिद्धान्त-कौमुदी

अपो भि ३६४, ७।४।४८

अपस्तकारो भादौ प्रत्यये। अद्भिः। अद्भ्यः। अद्भ्यः। अपाम्। अप्सु॥ दिक्, दिश्। दिशौ। दिशः। दिग्भ्याम्॥ त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्, दृग्। दृशौ। दृग्भ्याम्॥ त्विट्, त्विड्। त्विषौ। त्विड्भ्याम्॥ ससजुषो रुरिति रुत्वम्। सजूः। सजुषौ। सजूर्भ्याम्॥ आशीः। आशिषौ। आशीर्भ्याम्॥ असौ। उत्वमत्वे। अमू। अमूः। अमुया। अमूभ्याम् ३। अमूभिः। अमुष्यै। अमूभ्यः २। अमुष्याः। अमुयोः २। अमूषाम्। अमुष्याम्। अमूषु॥
लघु-सिद्धान्त-कौमुदी
इति हलन्तस्त्रीलिङ्गाः। ३६४, ७।४।४८

लघु-सिद्धान्त-कौमुदी
अथ हलन्तनपुंसकलिङ्गाः ३६४, ७।४।४८

लघु-सिद्धान्त-कौमुदी
स्वमोर्लुक्। दत्वम्। स्वनडुत्, स्वनडुद्। स्वनडुही। चतुरनडुहोरित्याम्। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत् वाः। वारी। वारि। वार्भ्याम् चत्वारि किम्। के। कानि इदम्। इमे। इमानि (अन्वादेशे नपुंसके वा एनद्वक्तव्यः)। एनत्। एने। एनानि। एनेन। एनयोः अहः। विभाषा ङिश्योः। अह्नी, अहनी। अहानि ३६४, ७।४।४८

न्यासः
अपो भि। , ७।४।४८

"अद्भिः" इति। "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वम्()--तकारस्य दकारः। "द्वितकारपक्षे तु पूर्वस्यापि "झलां जश्झशि" ८।४।५२ इति जश्त्वम्--दकारः। "झरो झरि सवर्णे" ८।४।६४ इति पूर्वदकारलोपः। "सुवः" ["स्ववः" इति। काशिका] इत्यादि। सुवस्(), स्वतवस्(), मास, उवस्()--इत्येतेषां च भकारादौ परतस्त इत्ययमादेश इष्यते च्छन्दसि विषये। स च "व्यत्ययो बहुलम्()" ३।१।८५ इत्यनेनैव लभ्यत इति वेदितव्यम्()॥
बाल-मनोरमा
अपो भि ४३८, ७।४।४८

अपो भि। "अच उपसर्गात्तः" इत्यस्मात्त इत्यनुवर्तते। अङ्गाधिकारस्थमिदम्। ततश्च अङ्गाभिक्षिप्तप्रत्ययो भीति सप्तम्यन्तेन विशेष्यते, तदादिविधिः। तदाह--अपस्तकार इत्यादिना। प्रत्यये किम्?, अब्भक्षः। अद्भिरिति। पकारस्य तकारे जश्त्वमिति भावः। इति पान्ताः। अथ शान्ताः। दिगिति। "दिश अतिसर्जने" ऋत्विगादिना क्विन्, सुलोपः, व्रश्चे ति षः, तस्य जश्त्वेन डः, तस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन गः, तस्य चत्र्वविकल्प इति भावः। दृश्यन्ते अर्था अनयेति विग्रहे संपदादित्वाद्दृशेः क्विप्। ततः सुलोपः, "व्रश्चे"ति षत्वमाशङ्क्याह--त्यदादिष्विति। अन्यत्रापीति। त्यदाद्युपपदाऽभावेऽपीत्यर्थः। क्विन् प्रत्ययो यस्माद्विहित इति बहुव्रीह्याश्रयणादिति भावः। दृगिति। षडगकाः प्राग्वत्। इति शान्ताः। अथ षान्ताः। त्विडिति। "त्विष दीप्तौ" क्विप्, सुलोपः, जशष्त्वचर्त्वे इति भावः। सजूरिति। "जुषी प्रातिसेवनयोः" क्विप्, "सहस्य सः संज्ञायाम्" इति वा "ससजुषो" इति निपातनाद्वा सहस्य सभावः, सुलोपः, "ससजुषो रुः" इति षस्य रुत्वं, "र्वोरुपधायाः" इति दीर्घः। "आङः शासु इच्छायाम्" क्विप्, "अशासः क्वावुपसङ्ख्यानम्" इत्युपदाया इत्वं, "शासिवसिघसीनां चे"ति सस्य षः, आशिष्शब्दात्सोर्लोपः। एतावत्सिद्धवत्कृत्य आह--षत्वस्येति। आशीरिति। षस्य रुत्वे कृते "र्वोरुपधायाः" इति दीर्घ इति भावः। इति षान्ताः। अथ सान्ताः। असाविति। अदश्शब्दस्य स्त्रियामपि पुंवदेव सौ रूपमित्यर्थः। अदस् औ इति स्थिते प्रक्रियां दर्शयति--त्यदाद्यत्वमित्यादिना। अत्वे, पररूपे, टापि, औङः शीभावे, आद्गुणे, अदे इति स्थिते,-एकारस्य दीर्घत्वादूत्वं दस्य मत्वं चेत्यर्थः। विभक्तौ सत्याम् अत्वं, पररूपं,

टाबित्येतत्सर्वत्र ज्ञेयम्। अमूरिति। जसि अत्वपररूपटाप्सु, पूर्वसवर्णदीर्घे, ऊत्वमत्वे। टापि सति अदन्तत्वाऽभावाज्जसः शीभावो न। एकाराभावान्नेत्वम्। अमूमिति। पुंवत्। उत्वं विशेषः। अमू इति। औटि औवत्। अमूरिति। शसि जसीव रूपम्। स्त्रीत्वान्नत्वाऽभावः। अमुयेति। अदस् आ इति स्थिते, अत्वपररूपटाप्सु, "आङि चापः" इत्येत्वे , अयादेशे, उत्वमत्वे इति भावः। अमूभ्यामिति। अत्वपररूपटाप्सु, ऊत्वमत्वे इति भावः। एवममूभिरिति। अमुष्यै इति। अदस-ए इति स्थिते अत्वपररूपटाप्सु, स्याड्ढ्रस्वौ, उत्वमत्वे, षत्वमिति भावः। "अमूभ्यः" इत्यपि भ्याम्वत्। टापि अदन्तत्वाऽभावादेत्त्वं न। अमुष्या इति। ङसिङसोर्वेवत्। रुत्वविसर्गौ तु विशेषः। अमुयोरिति। ओसि अत्वपररूपटाप्सु, "आङि चापः" इत्येत्त्वे, अयादेशे, मुत्वमिति भावः। अमूषामिति। आमि, अत्वपररूपटाप्सु, ङेरामि, स्याड्ढ्रस्वौ, मुत्वमिति भावः। अमूष्विति। सुपि अत्पररूप टाप्सु ऊत्वमत्वे, षत्वमिति भावः। इति सान्ताः।

***** इति स्त्रीलिङ्गप्रकरणम् *****

***** अथ नपुंसकलिङ्गप्रकरणम् *****

अथ हान्ताः। सु शोभना अनड्वाहो यस्य कुलस्येति बहुव्रीहौ स्वनडुहशब्दान्नपुंसकलिङ्गात्सुबुत्पत्तिः। ननु तत्र सौ परतः "चतुरनडुहोः" इत्याम्, "अम् संबुद्धौ" इत्यम्, "सावनडुहः" इति नुम् च स्यात्। हल्ङ्यादिना सुलोपेऽपि प्रत्ययलक्षणसत्त्वादित्यत आह--स्वमोर्लुगिति। परत्वाद्धल्ङ्यादिलोपं बाधित्वा "स्वमोर्नपुंसरा"दिति लुक्। ततश्च लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावादामादि न भवतीति भावः। दत्वमिति। "वसुरुआंसु" इत्यनेने"ति शेषः। दत्वविधेः पदाधिकारस्थत्वेन तदन्तेऽपि प्रवृत्तेरिति भावः। नच तत्रापि न "न लुमते"ति निषेधः शङ्क्यः, दत्वस्य सुबन्तत्वरूपपदत्वनिमित्तकतयाऽऽङ्गकार्यत्वाऽभावादित्याहुः। स्वनडुदिति। दत्वे चत्र्वविकल्पः। "उरःप्रभृतिभ्यः क" विति तु न शङ्क्यं, तत्र गणेऽनड्वानित्येकवचनस्यैव पाठादिति बहुव्रीह्यधिकारे मूल एव वक्ष्यते। स्वनडुही इति। "नपुंसकाच्चे"त्यौङः शीभावः। स्वनड्वांहीति। "जश्शशोः शि"रिति शिभावे, तस्य सर्वनामस्थानत्वाच्चतुरनडुहोरित्यामि "नपुंसकस्य झलच" इति नुमि "नश्चे"त्यनुस्वार इति भावः। अत्र यद्वक्तव्यं तत्पुंलिङ्गनिरूपणे उक्तम्। इति हान्ताः। अथ वान्ताः। विमला द्यौः=आकाशं यस्य अह्न इति बहुव्रीहौ , सुब्लुकि विमलदिव्शब्दात्सोर्लुक्। येतावत्सिद्धवत्कृत्य आह--दिव उदिति। अहर्विमलद्यु इति। वस्य उत्वे इकारस्य यणिति भावः। अहग्र्रहणं नपुंसकत्वसूचनार्थम्। ननु विमलदिव औ इति स्थिते "नपुंसकाच्चे"ति शीभावे विमलदिवी इति रूपं वक्ष्यति, तदयुक्तं, "दिव उत्" इत्युत्त्वप्रसङ्गात्। नच विमलदिवी इति समुदायस्यैव सुबन्ततया पदत्वान्न वकारस्य दिव्शब्दरूपपदान्तत्वमिति वाच्यं, "सुपो धातु" इति लुप्तां दिव्शब्दोत्तरां विभकिं()त प्रत्ययलक्षणेनाश्रित्य दिवित्यस्य पदत्वात्। नच लुका लुप्तत्वान्न प्रत्ययलक्षणमिति वाच्यं, पदसंज्ञायाः सुबन्तधर्मतयाऽङ्गधर्मत्वाऽभावेन तत्र "न लुमते"ति निषेदाऽप्रवृत्तेः। अन्यथा राज्ञः पुरुषो राजपुरुष इत्यादौ पूर्वभागे नलोपादिकं न स्यादित्याशङ्क्य आह--अन्तर्वर्तिनीमित्यादि।

उत्तरपदत्वे चेति। समासे उत्तरखण्डस्य पदसंज्ञायां कर्तव्यायामन्तर्वर्तिविभक्तिलोपे प्रत्ययलक्षणप्रतिषेधो वक्तव्यः, पदादिविधिं वर्जयित्वेत्यर्थः। वार्तिकमेतत्। विमलदिवी इति। औङि रूपम्। विमलदिवीति। शसि सति "जश्शसो शिः" इति शिभावे रूपसिद्धिः। अझलन्तत्वान्न नुम्। दधिसेचाविति। सिञ्चतेः क्विप्। दध्नः सेचौ दधिसेचौ। समासे पूर्वोत्तरपदावयवसुपोर्लुकि समासात्पुनः सुबुत्पत्तिरिति स्थितिः। तत्र उत्तरखण्डादुत्तरा विभकिं()त लुप्तां प्रत्ययलक्षणेनाश्रित्य सेचित्यस्य पदत्वेन तत्सकारस्य पदादितया "सात्पदाद्योः" इति षत्वनिषेध इष्टः। "उत्तरपदत्वे प्रत्ययलक्षणप्रतिषेधः, इत्येतावत्येवोक्ते तु सेचित्युत्तरखण्डस्य पदसंज्ञायां कत्र्तव्यायांप्रत्ययलक्षणप्रतिषेधः स्यात्। तथाच सेचित्यस्य सुबन्तत्वाऽभावेनाऽपदतया तत्सकारस्य पदादित्वाऽभावेन षत्वनिषेधो न स्यादतोऽपदादिविधावित्युक्तम्। षत्वनिषेधस्य पदादिविधितया तस्मिन् कर्तव्ये प्रत्ययलक्षणप्रतिषेधाऽभावेन

प्रत्ययलक्षणमाश्रित्य सेचित्यस्य पदत्वात्तत्सकार्सय "सात्पदाद्यो"रिति षत्वनिषेधो निरर्बाधः। ननु सेचित्युत्तरखण्डस्य पदत्वे चकारस्य कुत्वं स्यादित्यत आह--चकारस्य कुत्वं तु नेति। कुत्वे कर्तव्ये तु सेचित्यस्य पदत्वं नास्त्येव, कुत्वस्य पदान्तविधित्वेन पदादिविधिभिन्नतया तस्मिन् कर्तव्ये प्रत्ययलक्षणप्रतिषेधसत्त्वेन पदत्वाऽभावादिति भावः। ननु दधि सिञ्चत इति सोपपदाद्विचि #उपपदसमासे षत्वं दुर्वारं, "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्र सुबुत्पत्ते"रिति वक्ष्यमाणत्वेन सेचित्यस्याऽन्तर्वर्तिसुबभावेनाऽपदान्ततया "सात्पदाद्योः" इति निषेधस्य तत्राऽप्रवृत्तेरिति चेत्,?त्र सोपपदात्सिचेर्विचोऽनभिधानमिति भाव इति कैयटः समाहितवान्। पदादादिः पदादिरिति पक्षे तु उपपदसमासेऽपि षत्वं सुपरिहरम्। नचैवमपि परमश्चासौ दण्डी च परमदण्डी, स प्रियो यस्य सः "परमदण्डिप्रय" इत्यत्राऽवान्तरतत्पुरुषस्योत्तरखण्डे नलोपानुपपत्तिः, "उत्तरपदत्वे चे"ति प्रत्ययलक्षणप्रतिषेधेन तस्य पदत्वाऽभावादिति वाच्यं, मध्यपदत्वानाक्रान्तस्यैव उत्तरखण्डस्य विवक्षितत्वादित्यास्तां तावत्। इति वान्ताः। अथ रान्ताः। वारिति। वार्()शब्दो रेपान्तो नपुंसकलिङ्गः। "आपः स्त्री भूम्नि वार् वारी"त्यमरः। वार्शब्दात्स्वमोर्लुक्, रेफस्य विसर्ग इति भावः। चत्वारीति। चतुर्शब्दो नित्यं बहुवचनान्तः, तस्य जश्शसोश्शिः, तस्य सर्वनामस्थानत्वा"च्चतुरनडुहो"रिति प्रकृतेराम्। स च मि वादन्त्यादच उकारात्परः, उकारस्य यण्, अझलन्तत्वान्न नुमिति भावः। इति रेफान्ताः। अथ मान्ताः। किम्()शब्दात्स्वमोर्लुकि प्रत्ययल७णमाश्रित्य विभक्तिपरकत्वात्कादेशमाशङ्क्य आह--न लुमतेति। सोरमश्चान्यत्र कादेशे सर्वशब्दवद्रूपाणीत्याह--के कानीति। इदमिति। स्वमोर्लुकि रूपम्। "इदमो मः" "दश्चे"त्यादिविधयो न भवन्ति, "न लुमते"ति निषेधादिति भावः। इमे इति। औङि अत्वं, पररूपम्, "दश्चे"ति दस्य मः" "नपुंसकाच्चे"ति शीभावः, गुण इति भावः। इमानीति। "जश्शसोश्शिः" अत्वंस पररूपं "दश्चे"ति मः, "नपुंसकस्य झलचः" इति नुम्, "सर्वनामस्थाने चे"ति दीर्घ इति भावः।

एनद्वक्तव्य इति। "इदमेतदोः" इति शेषः। इदं च अम्येव भवति। तथाच भाष्ये "एनदिति नपुंसकैकवचने वक्तव्य"मिति पठित्वा "कुण्डमानय प्रक्षालयैनत्" इत्युदाह्मतम्। औट्शसोष्टायामोसि च "द्वितीयाटोस्स्वेनः" इत्येनादेश #एव इति मत्वाऽऽह--एने इत्यादि। वस्तुतस्तु "द्वितीयाटौस्स्वेनत्" इत्येव सूत्र्यताम्। नपुंसकेऽमो लुकि एनदिति सिध्यति। एनम्, एनौ, एनान्, एनेन, एनयोरिति तु त्यदाद्यत्वेन सिद्धमिति भाष्ये स्थितम्। परमार्थतस्तु नपुंसकैकवचनेऽमि एनदादेशः। एनम्, एनौ इत्याद्यर्थं "द्वितीयाटौस्स्वेनः" इत्यत्र एनादेशो विधातव्यः। येन नाप्राप्तिन्यायेन एनदादेशस्य त्यदाद्यत्वापवादत्वेन त्यदाद्यत्वाऽसंभवादिति शब्देन्दुशेखरे स्थितं भाष्यप्रदीपोद्द्योते प्रपञ्चितं च। इति मान्ताः। अथ नान्ताः। ब्राह्मएति। वेदादौ वाच्ये ब्राह्मन्()शब्दो नपुंसकलिङ्गः। "वेदस्तत्त्वं तपो ब्राह्मआ ब्राह्मआ विप्रः प्रजापतिः" इत्यमरः। स्वमोर्लुकि नलोप इति भावः। ब्राह्मणी इति। औङः शी, "अट्कुप्वा"ङिति णत्वम्। "विभाषा ङिश्योः" इत्यल्लोपस्तु न, "न संयोगाद्वमन्ता"दिति निषेधादिति भावः। ब्राह्मआणीति। "जश्शसोः शिः", तस्य सर्वनामस्थानत्वान्नान्तलक्षणो दीर्घः। हे ब्राह्मन्निति। "संबुद्धौ नपुंसकाना"मिति नलोपविकल्प इति भावः। अथ अहन्शब्दात्स्वमोर्लुकि "अहन्" इति रुत्वे प्राप्ते आह--रोऽसुपीति। लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावादिति भावः। अहर्भातीति। अत्र रुत्वे तु हशि चेत्युत्वे गुणे अहो भातीति स्यात्। रेफविधौ तस्य उत्वं न, रोरित्युकारानुबन्धग्रहणादिति भावः। अहानीति। जश्शसोः शिः, सर्वनामस्थानत्वादुपधादीर्घः। अल्लोपस्तु न, सर्वनामस्थानत्वादिति भावः।

टादावचि अल्लोपः, अह्ना, अह्ने इत्यादि। भ्यामादौ हलि विशेषमाह-अहन्। "ससजुषो रुः" इत्यतो रुरित्यनुवर्तते, "स्कोः संयोगाद्योः" इत्यतोऽन्ते #इति च। पदस्येत्यधिंकृतम्। "अहन्" इति लुप्तषष्ठीकम्। तदाह--अहन्नित्यस्येत्यादिना। अहोभ्यामिति। नकारस्य रुत्वे, "हशि चे"त्युत्वे, गुण इति भावः। ननु अहः, अहोभ्यामित्यत्र रत्वरुत्वयोरसिद्धत्वान्नलोपः स्यात्। नच रत्वरुत्वे नलोपापवादाविति वाच्यं, "न ङिसम्बुद्ध्योः" इति नलोपनिषेधस्थले हे अहरित्यत्र, दीर्घाणि अहानि यस्मिन् स दीर्घाहाः, हे दीर्घाहो निदाघ इत्यत्र च नलोपेऽसत्यपि

रत्वरुत्वयोरारम्भादित्याशङ्क्य निराकरोति--इहेति। एकेनेति। आवृत्तयोः प्रथमेन "अहन्" इति सूत्रेण-"पदान्ते अहन्नित्येव स्यात्, न तु नलोप" इत्यर्थकेनेत्यर्थः। द्वितीयेनेति। "अङन्नित्यस्य रुः स्यात् पदान्ते" इत्यर्थकेनेत्यर्थः। एवं च "अह्नो नलोपप्रतिषेधः" इति वार्तिकं न कर्तव्यमिति भावः।

टादावचि अल्लोपः, अहना, अह्ने इत्यादि। भ्यामादौ हलि विशेषमाह-अहन्। "ससजुषो रुः" इत्यतो रुरित्यनुवर्तते, "स्कोः संयोगाद्योः" इत्यतोऽन्ते इति च। पदस्येत्यधिंकृतम्। "अहन्" इति लुप्तषष्ठीकम्। तदाह--अहन्नित्यस्येत्यादिना। अहोभ्यामिति। नकारस्य रुत्वे, "हशि चे"त्युत्वे, गुण इति भावः। ननु अहः, अहोभ्यामित्यत्र रत्वरुत्वयोरारम्भादित्याशङ्क्य निराकरोति--इहेति। एकेनेति। आवृत्तयोः प्रथमेन "अहन्" इति सूत्रेण-"पदान्ते अहन्नित्येव स्यात्, न तु नलोप" इत्यर्थकेनेत्यर्थः। द्वितीयेनेति। "अहन्नित्यस्य रुः स्यात् पदान्ते" इत्यर्थकेनेत्यर्थः। एवं च "अह्नो नलोपप्रतिषेधः" इति वार्तिकं न कर्तव्यमिति भावः। पदान्तस्यापीति। अहन्शब्दान्तस्यापि रत्वरुत्वे भवतः, पदाधिकारस्थत्वादिति भावः। "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती"ति निषेधस्तु प्रत्ययविधिमात्रविषय इति "असमासे निष्कादिभ्यः" इति सूत्रे भाष्यकैयटयोः स्पष्टम्। तदन्ते रुत्वप्रवृतिं()त दर्शयति--दीर्घाहा निदाघ इति। दीर्घाहन्शब्दात्पुंलिङ्गात्सौ परत्वादुपधादीर्घे कृते हल्ङ्यादिना सुलोपः। "अहन्" इति रुत्वे, भोभगो" इत्यपूर्वत्वाद्यत्वे "हलि सर्वेषा"मिति यलोपे, रूपमिति भावः। ननु सुलोपे कृते "रोऽसुपी"ति रत्वे तस्य यत्वं न भवति, यत्वविधौ रोरित्युकारानुबन्धग्रहणात्। तथाच दीर्घाहार्निदाघ इत्येव युक्तमित्यत आह--इह हल्ङ्यादीत्यादि। ननु नान्तलक्षणदीर्घस्य परत्वेऽपि अकृतव्यूहपरिभाषया हल्ङ्यादिलोपात्प्राक्प्रवृत्तिर्न, सम्भवति, रुत्वेन नकारस्य विनाशोन्मुखत्वादित्यत आह--तस्यासिद्धत्वादिति। प्रवृत्तस्य रुत्वस्याऽसिद्धत्वान्नान्तलक्षणो दीर्घो निर्बाध इति भावः। वस्तुतस्तु अकृतव्यूहपरिभाषाया निर्मूलत्वादिह हल्ङ्या#इलोपात्पूर्वमेव परत्वादुपधादीर्घ इत्येवोचितमित्यलम्। सम्बुद्धौ त्विति। सोरत्र हल्ङ्यादिलोपात्प्रत्ययलक्षणमाश्रित्य असम्बुद्धौ इति प्रवृत्तेरुपधादीर्घाऽभावे रुत्वे, "हशि चे"त्युत्वे, आद्गुणे, हे दीर्घाहो निदाघ इति रूपमित्यर्थः। अत्र रोऽसुपी"ति रत्वविधेस्तदन्तेऽपि प्रवृत्तौ फलं तु नपुंसके दीर्घाहर्निदाघजालमित्यादि बोध्यम्। दण्डीति। दण्डोऽस्यास्तीत्यर्थे "अत" इनिठनौ, इति इनिः। दण्डिन्शब्दात्स्वमोर्लुक्, नस्य लोप इति भावः। दण्डिनो इति। औङ्श्सी। अरुआवनामस्थानत्वादिनहन्निति नियमाच्च न दीर्घ इति भावः। दण्डीनीत#इ। "जश्शसोः शि" "इन्हन्" इति दीर्घ इति भावः। रुआग्वीति। "असमायामेधारुआजो विनिः" इति रुआग्शब्दान्मत्वार्थीयो विनिः। रुआज् इत्यस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जस्य कुत्वं। रुआग्विन्शब्दात्सुबुत्पत्तिः। दण्डिवद्रूपाणि। अत्र इनोऽनर्थकत्वेऽपि "इन्हन्" इत्यत्र ग्रहणं भवत्येव, "अनिनस्मन्" इति वचनादिति बोध्यम्। वाग्ग्मीति। "वाचो ग्मिनि"रिति ग्मिनिः। तद्धितत्वान्न गकार इत्, चकारस्य जश्त्वं कुत्वम्। वाग्ग्मिशब्दात्सुबुत्पत्तिः, रुआग्विवद्रूपाणि। बहवो वृत्रहणो यस्मिन् मन्वन्तरे इति बहुव्रीहौ बहुवृत्रहन्शभ्दात्स्वमोर्लुकि, नलोपे, बहुवृत्रहेति रूपम्। औङः श्याम्, अल्लोपे, "हो हन्तेः" इति कुत्वे, "बहुवृत्रघ्नी" इति रूपम्। "अत्पूर्वस्य" इति नियमान्न णत्वम्। एतावत्सिद्धवत्कृत्य जश्शसोराह--बहुवृत्रहाणीति। शेः सर्वनामस्थानत्वेन तस्मिन्परेऽल्लोपाऽभावात् "इन्हन्" इत्युपधादीर्घे "एकाजुत्तरपदे णः" इति णत्वमिति भावः। बहुपूषाणीति। बहवः पूषणो यस्मिन्निति बहुव्रीहिः। बहुपूष, बहुपूष्णी। रषाभ्यामिति णत्वम्। जश्शसोस्तु शिः, शौ दीर्घः, "अट्कुप्वा"ङिति णत्वम्। बह्वर्यमाणीति। बहवोऽर्यमाणो यस्मिन्निति बहुव्रीहिः।

तदेतदर्थतः सङ्गृह्णाति--बहूर्जीति। बहूर्ज्शब्दे अन्त्यादच ऊकारादुपरि नुमः प्रतिषेधो वक्तव्यः, किंतु अन्त्याद्वर्णात्पूर्वो नुम्वा स्यादित्यर्थः। बहूर्जीति। जश्शसोर्नुमभावे रूपम्। बहूर्न्जीति। जकारात्पूर्वं रेफादुपरि नुमि कृते, श्चुत्वस्याऽसिद्धत्वा"न्नश्चे"ति तस्यानुस्वारे, तस्य परसवर्णे ञकारे रूपं बोध्यम्। अत्र "बहूर्जि प्रतिषेध" इति प्रथमवार्तिकं न कर्तव्यं, "नपुंसकस्य झलचः" इति सूत्रस्य अचः परो यो झल्तदन्तस्य क्लीबस्य नुम्स्यादिति व्याख्याने सति नुम

एवात्राऽप्रसक्तेः। न चैवं सति वनानीत्यादावव्याप्तिः शङ्क्या, "इकोऽचि विभक्तौ" इत्यतोऽचीत्यनुवर्त्य अजन्तस्य क्लीबस्य सर्वनामस्थाने परे नुम्स्यादिति वाक्यान्तराश्रणादिति भाष्ये स्थितम्। एवं च ऊर्क्छब्दे शौ "नरजाना संयोगः" इति मूलं भाष्यविरुद्धत्वादुपेक्ष्यमेव, तत्र अचः परस्य झलोऽभावेन नुमोऽप्रसक्तेः। इति जान्ताः। अथ दान्ताः। त्यदिति। त्यद्, तद्, यद्, एतद्, एषां स्वमोर्लुका लुप्तत्वात्त्यदाद्यत्वं, पररूपं "तदोः सः सौ" इति सत्वं च न भवति। इतरत्र तु सर्वत्र त्यदाद्यत्वे। पररूपे च अदन्तवद्रूपाणि, सर्वनामकार्यं च इति बोध्यम्। अन्वादेशे त्वेनदिति। अन्वादेशे नपुंसकैकवचने तद्विधानादिति भावः। औङि जश्शसोश्च-एने, एनानि। बेभिद्यतेरिति। श्तिपा निर्देशोऽयम्। बेभिद्य इति यङन्ताद्धातोरित्यर्थः। "भिदिर्विदारणे" अस्माद्याङि "सन्यङो"रिति द्वित्वे हलादिः शेषे, "अब्यासे चर्चे"त्यब्यासभकारस्य जश्त्वेन वकारे, "गुणो यङ्लुको"रिति गुणे, "बेभिद्ये"ति रूपम्। तस्मात् "सनाद्यन्ताः" इति धातुत्वात्क्विप्, अतो लोपः, "यस्य हलः" इति यलोपः। बेभिच्छब्दात्स्वमोर्लुक्, जश्त्वचर्त्वे बेभिदिति रूपमिति भावः। बेभिदी। इति औङः श्यां रूपम्। जश्शसोश्शौ झलन्तलक्षणनुममाशङ्क्य आह--शाविति। स्थानिवत्त्वादिति। "अचः परस्मिन्" इत्यनेने"ति शेषः। न चात्र अल्लोपस्थानिभूतादचः पूर्वो दकार एव न त्विकारः तस्य दकारेण व्यवधानात्, तथाच तस्य नुम्विधिः स्थानिभूतादचः पूर्वस्य विधिर्नेति वाच्यम्, "अचः परस्मिन्" इत्यत्र व्यवहितपूर्वस्यापि ग्रहणस्योक्तत्वात्। "क्वौ लुप्तं न स्थानिव"दिति तु न सार्वत्रिकमिति "दीधीवेवीटा"मित्यत्र कैयटे स्पष्टम्। नन्वल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणनुमोऽभावेऽप्यजन्तलक्षणो नुम्दुर्वार इत्यत आह--अजन्तलक्षणस्तु नुम्नेति। कुत इत्यत आह--स्वविधौ स्थानिवत्त्वाभावादिति। अल्लोपस्य स्थानिवत्त्वमाश्रित्य मित्त्वादन्त्यादचः परः प्रवर्तमानो हि मुम्दकारोपरितनस्य अकारोपलक्षितदेशस्योपरि प्रवृत्तिमर्हति, तथाच लोपस्थानिभूतस्य स्वस्यैवात्र नुम्विधिः तस्मिन्कर्तव्येऽल्लोपस्य स्थानिवत्त्वं न संभवति, स्थान्यपेक्षया पूर्वस्यैव विधौ "अचः परस्मिन्" इत्यस्य प्रवृत्तेः। स्थानिवत्सूत्रमपि स्थानिभूतस्य स्वस्य कार्यविधौ न प्रवर्तते, अनल्विधाविति निषेधादित्यर्थः। "अचः परस्मि"न्निति सूत्रे पूर्वविधावित्यपनीय "अपरविधाविति वक्तव्यं स्वविधौ स्थानिवत्त्वार्थ"मिति वार्तिकं तु भाष्ये प्रत्याख्यातमित्यदोषः। इति दान्ताः। अथ चान्ताः। जायन्ते नव सौ, तथामि च नव, भ्यांभिस्भ्यसां सङ्ग्रमे षट्सङ्ख्यानि, नवैव सुप्यथ जसि त्रीण्येव, तद्वच्छसि। चत्वार्यन्यवचस्सु कस्य विबुधाः। शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः।"

इति प्राचीनस्य कस्यचित्प्रश्नस्य श्लोकद्वयेन उत्तरमाह--गवाक्छब्दस्येति।?र्चागतिभेदत इति। "अनिदिताम्" इत्यञ्चेर्गतौ नकारस्य लोपः, पूजायां तु "नाञ्चेः पूजायाम्" इति निषेधान्नस्य लोपो नेत्येव गतिपूजात्मकार्यभेदनिबन्धननलोपतदभावाभ्यामिति यावत्। "

इति प्राचीनस्य कस्यचित्प्रश्नस्य श्लोकद्वयेन उत्तरमाह--गवाक्छब्दस्येति। अर्चागतिभेदत इति। "अनोदिताम्" इत्यञ्चेर्गतौ नकारस्य लोपः, पूजायां तु "नाञ्चेः पूजायाम्" इति निषेधस्य लोपो नेत्येवं गतिपूजात्मकार्यभेदानिबन्धननलोपतदभावाभ्यामिति यावत्। "असन्धी"ति प्रकृतिभावो विवक्षितः। "असन्ध्यवङ्पूर्वरूपै"रित्यनन्तरं चब्दोऽध्याहर्तव्यः। शतमित्यनन्तरमितिशब्दश्च। तथा च गत्यर्थ पूजार्थभेदनिबन्धननवोपतदभावाभ्याम्, असन्ध्यवङ्पूर्वरूपैश्च गवाक्छब्दस्य रूपाणै नवाधिकशतमिति मतं=संमतमित्यर्थः। एतेन "विंशत्याद्याः सदैकत्वे सङ्ख्यास्सङ्घ्येयसङ्ख्ययोः" इति कोशाच्छतशब्दस्य सङ्ख्यापरत्वे "गवाक्छब्दस्य रूपाणा"मिति भाव्यं, सङ्ख्येयपरत्वे तु "मत"मित्येकवचनानुपपत्तिरिति निरस्तम्। सङ्ख्येपरत्वमाश्रित्य इतिशब्दमध्याह्यत्य नवाधिकशतं रूपाणीति मतमित्यर्थाश्रयणात्। यद्वा शतशब्दस्य सङ्ख्येयपरत्वेऽपि शतमित्येकत्वाभिप्रायं मतमित्येकवचनमित्यदोषः। नवाधिकशतमित्येतत्प्रपञ्चयति--स्वम्सुप्सु नवेति। "प्रत्येक"मिति शेषः। "रूपाणी"ति सर्वत्रान्वेति। षड्भादाविति। भिसि भ्यांत्रये, भ्यस्द्वये च प्रत्येकं षडित्यर्थः।

त्रीण#इ जश्शसोरिति। "प्रत्येक" मिति शेषः।

चत्वारि शेषे दशके इति। "प्रत्येक"मिति शेषः। स्वम्सुप्सु नवेत्येतदुपपादयति--तथाहीति। गामञ्चतीति। गां गच्छति पूजयति वेत्यर्थः। क्विनि उपपदसमासे सुब्लुकि गो अञ्च इति स्थिते। प्रक्रियां दर्शयति--गतौ नलोप इति। गत्यर्थकत्वे "अनिदिता"मिति नस्य लोप इत्यर्थः। गवाक्-गवागिति। गो अच् स्, गो अच् अम् इति स्थिते,स्वमोर्लुकि, अक्लीबस्येति पर्युदासात्सर्वनामास्थानत्वाऽभावेन "उगिदचा"मिति नुमभावे, ओकारस्याऽवङादेशे सवर्णदीर्घे, जश्त्वचत्त्वे इति भावः। सर्वत्रेति। अवङादेशस्य वैकल्पिकत्वात्तदभावपक्षे "सर्वत्र विभाषे"ति प्रकृतिभावात् "एङः पदान्तादती"ति पूर्वरूपस्याऽप्यभावे सतीत्यर्थः। पूर्वरूपे इति। अवङः, प्रकृतिभावस्य चाऽभावे "एङः पदान्ता"दिति पूर्वरूपे सतीत्यर्थः। तदेवं गत्यर्थकत्वे षड्(६) रूपाणि। पूजायामिति। "नाञ्चेः पूजाया"मिति नवोपाऽभावाद्गो अञ्चित्यस्मात्स्वमोर्लुकि, चकारस्यासंयोगान्तलोपे, नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन ङकारः। ततोऽवङि, प्रकृतिभावे, पूर्वरूपे च , त्रीणि(३) रूपाणीति भावः। पूर्वोदाहृतषड()पसङ्कलनया सौ नव (९) रूपाणि। औङः शीति। गत्यर्थकत्वे नलोपे औङश्शीभावे च सति अक्लीबस्येति पर्युदासादसर्वनामस्थानतया भत्वात् "अचः" इत्यल्लोपे "गोची" इत्येकमेव(१) रूपम्, अकारस्य लुप्तत्वेन अवङाद्यसंभवात्। पूजायां त्विति। अलुप्तनकारत्वात् "अचः" इत्यल्लोपो नेति भावः। तथाच औङि त्रीणि(३) रूपाणि। पूर्वादाहृतैकरूपसङ्कलनया प्रत्येकं चत्वारि(४) रूपाणि। शेः सर्वनामेति। गत्यर्थकत्वे नलोपे सति, शौ "उगिदचा"मिति नुमि, तस्य "नश्चे"त्यनुस्वारः, परसवर्ण इति भावः। पूजार्थकत्वे त्वलुप्तनकारत्वान्नुम्न। किंतु स्वाभाविकनकारस्य अनुस्वारः परसवर्ण इति भावः। गतिपूजनयोः शौ अविशिष्टान्येव त्रीणि रूपाणीत्याह--त्रीण्येवेति। गोचेति। गत्यर्थत्वे लुप्तनकारत्वात् "अचः" इत्यल्लोपे एकमेव(१) रूपमिति भावः। पूजार्थत्वे तु अलुप्तनकारत्वात् "अचः" इत्यल्लोपाऽभावे अवङि, प्रकृतिभावे, पूर्वरूपे च त्रीणि(३), रूपाणीत्याह-गवाञ्च-गोअञ्चा-गोऽञ्चेति। भ्यामि गत्यर्थकत्वे नलोपे सति चस्य जश्त्वे कुत्वेऽवङसन्धिपूर्वरूपैस्त्रीणि (३) रूपाणि। पूजार्थत्वे तु नलोपाऽभावाच्चकारस्य संयोगान्तलोपे नकारस्य "क्विन्प्रत्ययस्ये"ति कुत्वेन ङकारे अवङसन्धिपूर्वरूपैस्त्रीणि(३) रूपाणीत्यभिप्रेत्याह--गवाग्भ्यामित्यादिना। इत्यादीति। गवाग्भिः गोअग्भिः गोऽग्भि। गवाङ्भिः गोअङ्भिः गोऽङ्()भिः। गोचे गवाञ्चे गोअञ्चे गोऽञ्चे। भ्यामि, भ्यसि च, प्राग्वत्षड()पाणि। ङसौ--गोचः-गवाञ्चः-गोअञ्चः-गोऽञ्चः। गोचोः-गवाञ्चोः-गोअञ्चोः-गोऽञ्चोः। गोचाम् गवाञ्चां, गोअञ्चाम् गोऽञ्चाम्। गोचि गवाञ्चि-गोअञ्चि-गोऽञ्चि। ओसि प्राग्वत्। सुपि त्विति। पूजार्थकत्वे नलोपनिषेधाच्चकारस्य संयोगान्तलोपे नकारस्य "क्विन्प्रत्ययस्ये"ति कुत्वेन ङकारः। ततश्च अवङ्संधिपूर्वरूपैस्त्रायाणां रूपाणां ङकारान्तानां कुगागम इत्यर्थः। कुगभावे तु गवाङ्षु-गोअङ्षु-गोऽङ्ष्विति त्रीणि(३) रूपाणि सुगमत्वान्नोक्तानि। गतौ तु नलोपे सति चस्य कुत्वेन ककारे अवङसन्धिपूर्वरूपैस्त्रीणि(३) रूपाणि दर्शयति--गवाक्षु इत्यादि। तथाच सुपि नव(९) रूपाणि। नन्वेषां मध्ये ककारवत्सु षड्()रूपेषु "चयो द्वितीयाः" इति ककारस्य खकारपक्षे षड()पाणि(६) सखकाराण्यधिकानि स्युरित्याशङ्क्य निराकरोति--नचेहेति। चत्र्वस्येति। गतौनलोपे सति, चकारस्य कुत्वे, तस्य जश्त्वेन गकारे, तस्य "खरि चे"ति चर्त्वेन ककारे, गवाक्षु-गोअक्षु-गोऽक्ष्विति त्रीणि रूपाणीति स्थिति#ः। तत्र "चयो द्वितीयाः" इति शास्त्रदृष्ट()आ चत्र्वशास्त्रस्याऽसिद्धत्वात्ककारो नास्त्येव, किन्तु गकार एवास्ति, तस्य चय्त्वाऽभावात् "चयो द्वितीयाः" इति न भवतीत्यर्थः। तथाच गतौ त्रयाणामधिक्यं निरस्तम्। पूजायां तु कुक्पक्षे गवाङ्क्षु-गोअङ्क्षु-गोऽङ्क्षु इति त्रिषु ककारस्य द्वितीये सति खकारवतां त्रयाणामाधिक्यमिष्टमेवेत्याह--कुक्पक्षे त्विति। नचैवं सति नवाधिकशतिमिति। विरोधः शङ्क्यः, "नवाधिकशत"मिति सूत्रकारस्य मतमित्यर्थात्।

ऊह्रमेषामिति। प्रदर्शितानां द्वादशाधिकशत(११२) रूपाणामित्यर्थः। अ()आआक्षिभूतानीति। सप्तविंशत्यधिकपञ्चशतानीत्यर्थः(५२७) अ()आशब्दो हि सप्तत्वसङ्ख्यावच्छिन्नलक्षकः, "सप्ता()आआ हरितः सूर्यस्य"

इति दर्शनात्। अक्षिशब्दस्तु द्वित्वसङ्ख्यावच्छिन्नलक्षकः, मनुष्यादिषु प्रायेणाऽक्ष्णोर्द्वित्वात्। भूतशब्दस्तु पञ्चत्वसङ्ख्यावच्छिन्नलक्षकः, पृथिव्यप्तेजोवाय्वाकाशानां भूतशब्दवाच्यानां पञ्चत्वात्। तत्राशब्देन प्रथमनिर्दिष्टेन सप्तत्वसङ्ख्यैव विवक्षिता। अक्षिशब्देन तु द्वितीयानिर्दिष्टेन सूचितया द्वित्व सङ्ख्यया दशकद्वयात्मिकाविंशतिसङ्ख्या विवक्षिता। भूतशब्देन तु तृतीयनिर्दिष्टेन सूचितया पञ्चत्वसङ्ख्यया पञ्चशतं लक्ष्यते। उक्तंच ज्यौतिषेण "एकदशशतसहस्नायुतलक्षप्रयुतकोटयः क्रमशः। अर्युदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्। जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः।" इति। अत्र अ()आशब्दसूचितां सप्तत्वसङ्ख्यामादौ लिखित्वा तदुत्तरतोऽक्षिशब्दसूचिता द्वित्वसङ्ख्या लेख्या। तदुत्तरतस्तु भूतशब्दसूचिता पञ्चत्वसङ्ख्या लेख्या। "अङ्कानां वामतो गति"रिति वचनादित्यादि गणकसंप्रदायप्रवर्तकलील#आवत्यादिग्रन्थतो ज्ञेयम्। तथाच सप्त च विंशतिश्च पञ्चशतानि(५२७) च रूपाणि भवन्तीति मनीषिभिरूह्यमित्यर्थः। तथाहि सौ नवानां रूपाणामन्त्यवर्णस्य "अनचि चे"ति द्वित्वे तदभावे च अष्टादश(१८) रूपाणि। प्रथामाद्विवचने चतुर्णां मध्ये पूजार्थानां त्रयाणां मकारस्य "अनचि चे"ति द्वित्वे तदभावे च षड्()रूपाणि। "अणोऽप्रगृह्यस्ये"ति तु न, प्रगृह्यत्वात्। गतौ त्वेकमेव। सङ्कलनया सप्त(७)। जसि तु त्रयाणां ञकारस्य द्वित्वे तदभावे च षड्()रूपाणि (६) "षण्णमेषामन्त्यस्य इकारस्य "अणोऽप्रगृह्यस्ये"त्यनुनासिकपक्षे षट्, (६) अनुनासिकत्वाभावपक्षे तु षट् स्थितान्येव, संकलनया जसि द्वादश(१२)। तथाच प्रथमयां विभक्तौ सप्ततिं()रशत्(३७)। एवं द्वितीयायां विभक्तावपि सप्ततिं()रशत्(३७)। तृतीयैकवचने तु चतुर्णां मध्ये पूजार्थानां त्रयाणां ञकारद्वित्वे तदभावे च षड()पाणि, गतौ त्वेकमेव। सङ्कलनया चतुर्दश(१४)। भ्यामि तु षण्णां मध्ये गतौ गकारस्य पूजायां ङकारस्य च द्वित्वे षट्, तदभावे षट् स्थितान्येव। सङ्कनया द्वादश(१२)। एषु यकारस्य "यणो मयः" इति द्वित्वे द्वादश(१२), मय इति पञ्चमी यण इति षष्ठीत्याश्रयणात्। यकारद्वित्वाऽभावे त#उ द्वादश स्थितान्येव। सङ्कलनया चतुर्विंशंतिः (२४)। एषु मकारस्य द्वित्वे चतुर्विशतिः, (२४) तदभावे चतुर्विंशति स्थितान्येव। संकलनया भ्यामि अष्टाचत्वारिंशत् (४८)। भिसि तु षण्णां गतौ गकारस्य पूजायां ङकारस्य च द्वित्वे षट्, तदभावे षट् स्थितान्येव, सङ्कलनया द्वादश(१२)। एषु विर्गस्य द्वित्वे द्वादश(१२)। अयोगवाहानामटसु शर्षु चोपसङ्ख्यातत्वेन विसर्गस्य यत्रवात्। तस्य तु द्वित्वाऽभावे द्वादश स्थितान्येव, संकलनया भिसि चतुर्विशतिः (२४)। तथाच तृतीयाविभक्तौ षडशीतिः (८६)। चतुर्थ्येकवचने चतुर्णां मध्ये पूजार्थानां त्रयाणां ञकारद्वित्वे तदभावे च षट्(६)। गतौ त्वेकमेव(१)। सङ्कलनया ङयि सप्त(७)। एकारस्य अनण्त्वान्नानुनासिकः। भ्यामि तु प्राग्वदेव अष्टाचत्वारिशत्(४८)। भ्यसि तु षण्णां मध्ये गतिपूजनयोः प्रत्येकं त्रयाणां गङयोर्द्वित्वे षट्(६)। तदभावे तु षट्(६) स्तितान्येव। सङ्कलनया द्वादश(१२)। एषुयकारस्य "यणो मयः" इति द्वित्वे द्वादश, तदभावे तु चतुर्विंशतिः स्थितान्येव, संकलनया भ्यसि अष्टाचत्वारिंशत्(४८)। तथा च चतुर्थ्यां विभक्तौ त्र्यधिकं शतम् (१०३)। ङसौ तु पूजायां त्रयाणां रूपाणां ञकारद्वित्वे तदभावे च षट्, गतौ त्वेकं स्थितमेव, सङ्कलनया सप्त(७)। एषु विसर्गाद्वित्वे सप्त, तदभावे तु सप्त स्थितान्येव, सङ्कलनया ङसौ चतुर्दश(१४)। भ्यामि भ्यसि च प्रागवत्प्रत्येकं अष्टाचत्वारिंशत्(४८)। तथाच पञ्चम्यां विभक्तौ दशाधिकं शतम् (११०)। ङसि तु ङसिवच्चतुर्दश(१४)। ओसि तु चतुर्णां मध्ये पूजायां त्रयाणां ञकारस्य द्वित्वे तदभावे च षट्, गतौ त्वेकं, सङ्कलनया सप्त(७)। एषु विसर्गस्य द्वित्वे तदभावे च चतुर्दश(१४)। आमि तु चतुर्णां मध्ये पूजायां त्रयाणां त्रिषु ञकारस्य द्वित्वे षट्, गतौ त्वेकं, सङ्कलनया सप्त(७)। एषु मकारस्य द्वित्वे तदभावे च चतुर्दश(१४)। तथाच षष्ठ()आं द्विचत्वारिंशत् (४२)। ङौ पूजायां त्रयाणां ञकारस्य द्वित्वे तदभावे षट्, गतावेकं संकलनया सप्त(७)। एषु अन्त्यस्य इकारस्य अनुनासिकत्वे तदभावे च चतुर्दश(१४)। ओसि प्राग्वच्चतुर्दश। सुपि तु द्वादशानां मध्ये पूजायां कुगभावपक्षे डकारस्य द्वित्वे त्रीणि, तदभावे तु त्रीणि स्थितान्येव, सङ्कलनया द्वादश(१२)। एषां द्वादशानां "खयः शरः" इति षकारद्वित्वे द्वादश, तदभावे तु द्वादश स्थितान्येवस सङ्कलनया चतुर्विंशतिः(२४)। कुगभावे तु षट्(६) स्थितान्येव, सङ्कलनया पूजायां तिं()रशत् (३०)। गतौ तु त्रयाणां ककारस्य द्वित्वे त्रीणि, तदभावे तु त्रीणि स्थितान्येव, षण्णामेषां "खयः शरः" इति षकारद्वित्वे षट्, तदभावे तु षट् स्थितान्येव।

सङ्कलनया द्वादश (१२)। तथाच सङ्कलनया गतौ पूजायां च द्विचत्वारिंशत्(४२)। एषामन्त्यस्यानुनासिकत्वे तदभावे च सुपि चतुरशीतिः(८४)। एवं च सु अष्टादश(१८)। औ-सप्त(७)। जस्-द्वादश(१२)। आहत्य प्रथमायां सप्ततिं()रशत्(३७)। टा चतुर्दश(१४)। भ्याम्-अष्टाच-त्वारिंशत्(४८)। भिस्-चतुर्विंशतिः(२४)। आहत्य तृतीयायां षडशीतिः(८६)। ङे-सप्त(७) भ्याम् अष्टाचत्वारिंशत्(४८)। भ्यस् अष्टाचत्वारिंशत्(४८)। आहत्य चतुर्थ्यां त्र्यधिकं शतम् (१०३)। ङसि चतुर्दश(१४)। भ्याम्-अष्टाचत्वारिंशत्(४८)भ्यस्-अष्टाचत्वारिंशत्(४८)। आहत्य पञ्चम्यां दशाधिकं शतं (११०)। ङस्चतुर्दश(१४)। ओस्चतुर्दश(१४)। आम् चतुर्दश(१४)। आहत्या षष्ठ()आं द्वाचत्वारिंशत्(४२)। ङि-चतुर्दश(१४)। आहत्य षष्ठ()आंद्वाचत्वारिंशत् (४२)। ङ्-चतुर्दश(१४)। ओस्वतुर्दश(१४)। सुप्चतुरशीतिः(८४)। आहत्य सप्तम्यां द्वादशाधिकं शतम्(११२)। ततश्च सङ्कलनया पञ्चशतानि च, विंशतिश्च, सप्त च (५२७) रूपाणि। इति गवाक्छब्दप्रक्रिया। तिर्यगिति। तिरः अञ्चतीति विग्रहे ऋत्विगादिना क्विन्। गतौ "अनिदिता"मिति नलोपः। तिरस्-अच् इत्यस्मात्सुबुत्पत्तिः, स्वमोर्लुक्, प्रत्ययलक्षणविरहहादसर्वनामस्थानत्वाच्च न नुम्। अभत्वात् "अचः" इत्यल्लोपो न। तिरसस्तिर्यादेशः, यण्, "क्विन्प्रत्ययस्ये"ति कुत्वस्या।त्रसिद्धत्वाच्चकारस्य "चोः कुः"रिति कुत्वम्, जश्त्वचर्त्वे इति भावः। तिरश्ची इति। तिरस् अच् औ इति स्थिते औङः श्यां भत्वात् "अचः" इत्यल्लोपः। "अलोपे" इत्युक्तेर्न तिर्यादेशः। सस्य श्चुत्वेन श इति भावः। तिर्यञ्चीति। तिरस् अच् इत्यस्माज्जसि जश्शसोः शिः, सर्वनामस्थानत्वान्नुम्, अनुस्वारपरसवर्णौ, तिरसस्तिरिः, यण्। अभत्वात्, "अचः" इत्यल्लोपो नेति भावः। तिर्यङिति। स्वमोर्लुकि अभत्वादलुप्तनकारत्वात् "अचः" इत्यल्लोपाऽभावात्तिर्यादेशः, चकारस्य संयोगान्तलोपः, नस्य कुत्वेन ङकार इति भावः। तुर्यञ्ची इति। औङः श्यां रूपम्। अलुप्तनकारत्वादच इत्यल्लोऽपाभावात्तिरिः। तिर्यञ्चीति। जश्शसोः शिः। शेषं पुंवत्। इति चान्ताः।

अथ तान्ताः। यकृदिति। मांसपिण्डविशेषो यकृन्नाम याज्ञिकप्रसिद्धः। स्वमोर्लुक्, जश्त्वचर्त्वे इति भावः। यकृती इति। औङ्श्शी। यकृन्तीति। जश्शसोः शिः, झलन्तत्वान्नुम्, अनुस्वारपरसवर्णाविति भावः। शसादौ विशेषमाह--पद्दन्निति वा यकन्निति। यकानीति। शसश्शिः, यकन्नादेशः सर्वनामस्थानत्वान्नान्तयकन्नभावे यकृद्भ्यामित्यादि। शकृदिति। शकृच्छब्दो विष्ठावाची यकृद्वत्। ददत् ददती इति। शतृप्रत्यययान्तोऽयं ददच्छब्दः पुंलिङ्गनिरूपणे व्युत्पादितः। तस्य स्वमोर्लुक्। औङश्शी। नुम्तु न, असर्वनामस्थानत्वात् "नाभ्यस्ताच्छतुः" इति निषेधाच्च।

तत्त्व-बोधिनी
अपो भिं ३९४, ७।४।४८

अप्शब्द अत्। "आप्नोतेर्ह्रस्वश्चे"ति ह्रस्वः, चकारात्क्विवत्। "अच उपसर्गात्तः"इत्यतोऽनुवर्तनादाह--तकारः स्यादिति। दिगिति। क्विन्निन्तत्वात्कुत्वम्। षडगकाः प्राग्वदूह्याः। अन्यत्रापीति। त्यदाद्युपपदत्वाभावेऽपीत्यर्थः। त्विहिति। "त्विष दीप्तौ"इत्यस्यात्क्विप्। जश्त्वचर्त्वे। सजूरिति। "जुषी प्रीतिसेवनयो रित्यस्मात्क्विप्। "ससजुषो"रिति षस्य रुत्वम्। "र्वो"रिति दीर्घः। आशिषाविति। "आशसः क्ववुपधाया इत्वं वाच्य मित्युपधाया इत्वम्, "शासिवसी"ति षत्वम्। असाविति। अदसस्त्यदाद्यत्वं, टाप्। एकादेशस्य पूर्वान्तत्वेन ग्रहणात् "अदस औ सुलोपश्च"। "तदोः--"इति सत्वमित्येके। अन्ये चु परत्वाद्विशेषविधेश्च पूर्वमौत्वं, ततोऽत्र नाऽत्वटापावित्याहुः। इति हलन्तस्त्रीलिङ्गप्रकरणम्।

उत्तरपदत्वे चाऽपदादिविधौ प्रतिषेधः॥ उत्तरपदत्वे चेति। उत्तरशब्देनोत्तरपदमुच्यते। उत्तरपदस्य पदत्वे=पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः। एतेन "सुधियौ" "सुधिय"इत्यत्रान्तर्वर्तिसुपा पदत्वात्पक्षे शाकलप्रसङ्ग इत्याशङ्का परास्ता, उक्तरीत्या प्रत्ययलक्षणप्रतिषेधात्। उत्तरपदत्वे किम्()। "राजपुरुष"इत्यादौ नलोपो यथा स्यात्। "पश्यति दधी"त्यादावपि दधिशब्दस्य पदत्वे प्रत्ययलक्षणं भवत्येव। उत्तरपदस्य समासावयवे रूढत्वात्। दधिसेचाविति।सिञ्चत इति सोचौ। "अन्येभ्योऽपि दृश्यन्ते"इति विच्। दध्नः सेचाविति षष्ठीसमासः। उपपदेसमासे तु

प्राक् सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञा नास्तीति पदादित्वं सकारस्य न स्यात्। नन्वेमुपपदसमासे षत्वं दुर्वारमिति चेत्, अत्राह कैयट---"अनभिधानत्सोपपदाद्विजभावः, दधिसेचाविति प्रयोगाऽभावा"दिति। वस्तुतस्तु पदादादिः पदादिरिति पक्षे तूपपदसमासेऽपि षत्वं सुपरिहरम्।

अन्वादेशे नपुंसके एनद्वक्तव्यः। अन्वादेश इत। अभ्येवेदं विधीयते नत्वौट्शसादिषु, फलाऽभावात्। "स्वोमोर्नपुंसकात्िित्यमो लुका लुप्तत्वेऽपि प्रत्ययलक्षणमिह पर्वर्तते, वचनसामथ्र्यादित्याहुऋ। वस्तुतस्तु "द्वितीयाटौओःसु---"इति सूत्र एव एनद्वक्तव्यः। एनम् एनौ एनानित्यादि तु त्यदाद्यत्वेन सिद्धम्। क्लीबे अमि लुका लुप्तत्वेऽपि तकारोच्चारणसमाथ्र्यादेनदादेशः। न चैवमेतच्छ्रित इत्यत्राप्येनदादेशापत्तिः। "द्वितीयाश्रिते"ति समासे कृते सुपो लुकि द्वितीयदिविभक्तिपरत्वाऽभावात्। न च तकारोच्चारणसामथ्र्यादेनदादेश इत्युक्तमिति वाच्यम्, एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्बेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तिरिति मनोरमायां स्थितम्। ब्राहमणी इति। इह "विभाषा ङिश्यो"रित्यल्लोपो न, "संयोगाद्वमन्ता"दिति निषेधात्। रोऽसुपि। अहर्भातीति। "अहन्" इति रुतच्वे कृते तु "हशि चे"त्युत्वपर्वृत्त्या "अहोभाती"ति स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सः स्यार्धधातुके ७।४।४९

सकारान्तस्य अङ्गस्य सकारादौ आर्धधातुके परतः तकारादेशो भवति। वत्स्यति। अवत्स्यत्। विवत्सति। जिघत्सति। सः इति किम्? वक्ष्यति। सि इति किम्? घासः। वासः। आर्धधातुके इति किम्? आस्से। वस्से।

लघु-सिद्धान्त-कौमुदी

सः स्यार्धधातुके ७१०, ७।४।४९

सस्य तः स्यात्सादावार्धधातुके। अत्तुमिच्छति जिघत्सति। एकाच इति नेट्॥

न्यासः

सः स्यार्धधातुके। , ७।४।४९

अत्रापि द्वितकारपक्षेऽनेकाल्त्वात्? सर्वादेशः प्राप्नोति, तस्मात्? "अचः" इति। पञ्()चम्यन्तमनुवत्र्तनीयमिति। अथ वा--"निर्दिश्यमानस्यादेशा भवन्ति" (व्या।प।१०६) इति सकारस्यैव भविष्यति। "वत्स्यति" इति। "वसनिवासे" (धा।पा।१९४२)। "जिघत्सति" इति। अदेः सन्(), "लुङ्सनोर्घस्लृ" २।४।३७ इति तस्य घस्लादेशः। "वक्ष्यति" इति। "वच परिभाषणे" (धा।पा।१८४२), "चोः कुः" ८।२।३० इति कुत्वम्()। "घासः, वासः" इति। भावे घञ्(), "घञपोश्च" २।४।३८ इत्यदेर्घस्लादेशः। "आस्से, वस्से" इति। "आस उपवेशने" (धा।पा।१०२१), "वस आच्छादने" (धा।पा।१०२३), अनुदात्तेत्त्वादात्मनेपदम्(), "चासः से" ३।४।८०, अदादित्वाच्छपो लुक्()। अथ "सः स्यतिङ्()" इति कस्मान्नोक्तम्()? नैवं शक्यम्(); इहापि न स्यात्()--व्यतिवत्सीष्ठा इति॥

बाल-मनोरमा

सः स्याद्र्धधातुके १८१, ७।४।४९

सः सि। "सः" इति छेदः। "स" इति षष्ठ()न्तम्। सीति सप्तम्यन्तमाद्र्धधातुकविशेषणं। तदादिविधिः। "अच उपसर्गात्तः" इत्यतस्त इत्यनुवर्तते। अकार उच्चारणार्थः। तदाह--सस्य तः स्यादिति। आदेशे अकारस्य उच्चारणार्थत्वत्तकारः

स्यादित्यर्थः।

तत्त्व-बोधिनी

सः स्याद्र्धधातुके १५४, ७।४।४९

सः--सीति च्छेदः। सादौ किम्?। घस्मरः। आद्र्धधातुके इति किम्?। वत्स्से। आशिषीति। आशीर्लिङीत्यर्थः। एतच्च कर्तरि प्रोगमभिप्रेत्योक्तम्। कर्मणि तु यग्विषये प्रयोगो नेति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

तासस्त्योर् लोपः ७।४।५०

तासेः अस्तेश्च सकारस्य सकारादौ प्रत्यये परतः लोपो भवति। तासेः कर्तासि। कर्तासे। अस्तेः त्वम् असि। व्यतिसे। अस्तेः अकारासकारयोः लुप्तयोः से इति प्रत्ययमात्रम् एतत् पदम्, तेन सात् पदाद्योः ८।३।११३ इति षत्वं न भवति।

लघु-सिद्धान्त-कौमुदी

तासस्त्योर्लोपः ४०८, ७।४।५०

तासेरस्तेश्च सस्य लोपस्स्यात् सादौ प्रत्यये परे।

न्यासः

तासस्त्योर्लोपः। , ७।४।५०

"अनद्यतने लुट्()" ३।३।१५ तासिः, सिप्()। "कर्त्तासे" इति। "थासः से" ३।४।८०। "त्वमसि" इति। "स भुवि" (धा।पा।१०६५), पूर्ववच्छपो लुक्। "व्यतिसे" इति। "कर्त्तरि कर्मव्यतीहारे" १।३।१४ इत्यात्मनेपदं भवति। "थासः से" ३।४।८०, "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः। अथ "आदेशप्रत्यययोः" (८।३।५९) इति षत्वं कस्मान्न भवति? इत्यत आह--"अस्तेरकारसकारयोः" इत्यादि। अकारसकारयोर्हि लुप्तयोः प्रत्ययमात्रमवशिष्यते, तदेव पदम, अतः "सात्पदाद्योः" (८।३।१११) इति प्रतिषेधात्? षत्वं न भविष्यतीति भावः॥

बाल-मनोरमा

तासस्त्योर्लोपः ४०, ७।४।५०

तदाह--तासस्त्योः। "सः स्यार्धधातुके" इत्यतः सीत्यनुवर्तते, अङ्गाक्षिप्तस्य प्रत्ययस्य सीत्यनेन विशेषणात् "यस्मिन्विधि"रिति तदादिविधिः, तदिदमाह--सादाविति। एवं रादावित्त्राप्यूह्यम्।

तत्त्व-बोधिनी

तासस्त्योर्लोपः ३१, ७।४।५०

"सः स्यार्धदातुके" इत्यतः सीत्यनुवर्तते, अङ्गाक्षिप्तस्य प्रत्ययस्य सीत्यनेन विशेषणात् "यस्मिन्विधि"रिति तदादिविधिः, तदिदमाह-- सादाविति। एवं रादावित्यत्राप्यूह्यम्।

---

सूत्रम्

काशिका-वृत्तिः

रि च ७।४।५१

रेफादौ च प्रत्यये परतः तासस्त्योः सकारास्य लोपो भवति। कर्तारौ। कर्तारः। अध्येतारौ। अध्येतारः।

लघु-सिद्धान्त-कौमुदी

रि च ४०९, ७।४।५१

रादौ प्रत्यये तथा। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

न्यासः

रि च। , ७।४।५१

"कर्त्तारौ, कर्त्तारः" इति। लुट्(), तस्(), झिः, "लुटः प्रथमस्य डारौरसः" २।४।८५ इति तसो झेश्च यथाक्रमं रौरसौ भवतः। "अध्येतारौ, अध्येतारः" इति। इङो ङित्त्वादत्मनेपदम्? आताम्(), झः तयोश्च पूर्ववद्रौरसौ। अस्ते रेफादिप्रत्ययो न सम्भवतीति नास्त्युदाहरणम्()। केचित्तु--"व्यतिरे" इत्युदाहरणं दर्शयन्ति; एतच्च च्छब्दस्येवं प्रयोगो यद्यसति ततो युक्तम्(), अथ तु नास्त्येवं सत्ययुक्तम्()। "इरयो रे" ६।४।७६ इति रेभावश्छन्दसि विधीयते, "यथादृष्टानुविधिश्छन्दसि" (व्या।प।६८) इति। चकारः पूर्वापेक्षया समुच्चयार्थः॥

बाल-मनोरमा

रि च ४१, ७।४।५१

प्राग्वदिति। तासेर्लोप इत्यर्थः। अस्तिस्तु नेह संबध्यते, ततो रादिप्रत्ययस्याऽसंभवात्।

तत्त्व-बोधिनी

रि च ३२, ७।४।५१

प्राग्वदिति। तासेर्लोप इत्यर्थः। अस्तिस्तु नेह संबध्यते,ततो रादिप्रत्ययस्याऽसंभवात्॥

---

सूत्रम्

काशिका-वृत्तिः

ह एति ७।४।५२

तासस्त्योः सकारस्य हकारादशो भवति एति परतः। कर्ताहे। अस्तेः व्यतिहे।

न्यासः

ह एति। , ७।४।५२

"कर्त्ताहे" इति। कृञो लुट्(), आत्मनेपेदम्(), उत्तमपुरुषैकवचनम्(), इट्, टे#एत्त्वम्()। अत्र सकारस्यानेन हः। "व्यतिहे" इति। अस्तेः "कर्त्तरि कर्मव्यतिहारे" १।४।१४ इत्यात्मनेपदम्(), पूर्ववदकारलोपः। "एति" इति। तपरकरणं सप्तम्यामयादेशपरीहारार्थम्()। अयादेशे हि सति सन्देहः स्यात्()--कस्यायं निर्देश इति--किमयादेशस्य? अथैकारस्य()॥

बाल-मनोरमा

ह एति ९६, ७।४।५२

अथ लुट इडादेशे एत्वे तासि इटि एधितास्, ए इति स्थिते--ह एति। "ह" इति प्रथमान्तम्। अकार उच्चारणार्थः। सः

स्यार्धधातुक इत्यतः स इति, तासस्त्योर्लोप #इत्यतस्तासस्त्योरिति चानुवर्तते। तदाह--तासस्त्योरिति। तासः सस्य हकारे "एधिताहे" इति रूपम्। एधितास्वहे इति। लुटो वहिभावः। टेरेत्वं। तास्। इट्। एवम्-- एधितास्महे इति। तत्र महिभावो विशेषः। इति लुट्प्रक्रिया। एधिष्यत इति। लृटस्तादेशे टेरेत्वम्। "स्यतासी"इति शबपवादः स्यः।इट्। प्रत्ययावयवत्वात्षत्वम्। एधिष्येते इति। आताम्। टेरेत्वं। स्यः। इट्। "आतो ङित" इत्याकारस्य इय्। लोपो व्योरिति यलोपः। आद्गुणः। षत्वम्। एधिष्यन्त इति। झस्य टेरेत्वं। झकारस्य अन्तादेशः। स्यः।इट्। पररूपं। षत्वम्। थासादावपि लटीव सुयोजमिति मत्वा रूपाणि न प्रदर्शितानि। तत्र थासः से।स्यः। इट्। षत्वम्। एधिष्यसे इति रूपम्। एधिष्येते इतिवदाथामि एधिष्येथे इति रूपम्। ध्वम एत्वे स्यः। इट्। षत्वम्। एधिष्यद्वे इति रूपम्। इट एत्वे स्यः। इडागमः। षत्वम्। अतोगुण इति पररूपम्। एधिष्ये इति रूपम्। वहिमह्योष्टेरेत्वम्। स्यः। इट्। अतो दीर्घः। एधिष्यावहे एधिष्यामहे इति रूपे। इति लृट्प्रक्रिया।

---

सूत्रम्

काशिका-वृत्तिः

यीवर्नयोर् दीधीवेव्योः ७।४।५३

यकारादौ इवर्णादौ च परतो दीधीवेव्योः लोपो भवति। यकारादौ आदीध्य गतः। आवेव्य गतः आदीध्यते। आवेव्यते। इवर्णादौ आदीधिता। आवेविता। लिङि आदीधीत। आवेवीत। यीवर्णयोः इति किम्? आदीध्यनम्। आवेव्यनम्।

न्यासः

यीवर्णयोर्द्दीधीवेव्योः। , ७।४।५३

स्वरितत्वाल्लोपोऽनुवत्र्तते, न त्वनन्तरो हकारः, तस्यास्वरितत्वाप्रतिज्ञानात्()। यकारे त्विकार उच्चारणार्थः। यिश्च इवुर्णश्च तौ योवर्णौ तयोः परतः "दीधीङ्? दीप्तिदेवनयोः" (धा।पा।१०७६) "वेवीङ्? वेतिनां तुल्ये" (धा।पा।१०७७)--इत्यनयोर्लोपो भवति, स च "अलोऽन्त्यस्य" १।१।५१ इत्यन्त्यस्य। यकारादौ श्रवणे प्राप्त इवर्णादौ "एरनेकाचः" ६।४।८२ इति यणादेशे प्राप्ते लोपवचनमिदम्()। "आदीध्य, आवेव्य" इति। ल्यप्()। "आदीध्यत, आवेवित" इति। "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्(), "सार्वधातुके यक्()" ३।१।६७। "आदीधित, आवेवित" इति। "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्(), "सार्वधातुके यक्()" ३।१।६७। "आदीधित, आवेवित" इति। तृच्()। "आदीध्यनमादेव्यनम्()" इति। ल्युट्(), "दौधीवेवीटाम्()" १।१।६ इति गुणनिषेधाद्यणादेशः। अत्र यद्यपि निमित्त्योः कार्यिणोः समानत्वम्(), तथापि यथासंख्यं न भवति; अस्वरतत्वात्()। वर्णग्रहणमिवर्णे श्रूयमाणे यथा स्यात्(), इह मा भूत्()--आदीधयतेः, आवेवयतेर्णिजन्ताण्णवुल्(), आदीध्यकः, आदेव्यकः। अत्र हि नित्यत्वाण्णिलोपे कृते प्रत्ययलोपलक्षणन १।१।६१ प्राप्नोति, अतो वर्णग्रहणान्न भवति॥

बाल-मनोरमा

यीवर्णयोर्दीधीवेव्योः १७६, ७।४।५३

यीवर्णयोर्दीधीवेव्योः। यिश्च इवर्णश्चेति द्वन्द्वात्सप्तमी। "यि" इत्यत्र इकार उच्चारणार्थः। "तासस्त्यो"रित्यतो लोप इत्यनुवर्तते। "अलोऽन्त्यस्ये"त्यन्त्यस्य" लोपः। तदाह--- एतयोरित्यादि। "आदीध्यगतः" "आवेव्य गतः"। अत्र ल्यपि ईकारस्य लोपः। इवर्णे उदाहरणं वक्ष्यते। इति लोपमिति। लट इडादेशे दीधी इ इत्यत्र "यीवर्णयो"रिति इवर्णपरत्वात्प्राप्तं लोपं परमपि बाधित्वा नित्यत्वाट्टेरित्त्वमित्यर्थः। कृते अकृते च लोपे प्रवृत्तेरेत्त्वं नित्यम्। तस्मिन्कृते यीवर्णपरकत्वाऽभावान्न लोप इति भावः। गुणनिषेध इति। दीधी-- आमिति स्थिते "सार्वधातुकाद्र्धधातुकयो"रिति

प्राप्तस्य निषेध इत्यर्थः। दीधितेति। इटि कृते इवर्णपरकत्वादीकारस्य लोप इति भावः। दीधीताम् दीध्याताम् दीध्यताम्। दीधीष्व दीध्याथाम्। दीधीध्वम्। दीध्यै दीध्यावहैदीध्यामहै। अदीधीत अदीध्याताम् अदीध्यत। अदीधीथाः अदीध्याथाम् अदीधीद्वम्। अदीधि?दीधीवहि अदीधीमहि। दीधीत् दीधीयाताम्। दीधिषीष्ट दीधिषीयास्ताम्। दीधिषीरन्। अदीधिष्ट। अदीधिष्यत। वस्तुतस्तु छन्दसि दृष्टानुविधित्वादेषां पञ्चानां लोकानुसारेण रूपवर्णनमनुचितम्। वेवीङ वेतिना तुल्ये इति। दीधीवद्रूपाणि। इति जक्षित्यादयः।षस षस्ति स्वप्ने इति। षोपदेशावेतौ। द्वितीय इदित्। तत्र षसधातोरुदाहरति-- सस्तीति। ससन्तीति। अनभ्यस्तत्वादन्तादेश एवेति भावः। एत्वाभ्यासलोपौ मत्वा आह-- सेसतुरिति। सेसुः। ससिथ सेसथुः सेस। ससास-- ससस सेसव सेसिम। ससिता। ससिष्यति। सस्तु--सस्तात् सस्ताम् ससन्तु। सस् हि इति स्थिते हेर्धिभावे "धि चे" ति सलोपं मत्वाह--सधीति। तत्र "धि इत्यस्य स्थानिवत्त्वेन हित्वात् "अतो हे"रिति लुकमाशङ्क्याह--- पूर्वत्रेति। सस्तात् सस्तम् सस्त। ससानि ससाव ससाम। लङ्याह-- असदिति। असस् त इति स्थिते हल्ङ्यादिना तकारलोपे "तिप्यनस्ते"रिति सस्य दत्वमिति भावः। असस्तामिति। अससन्नित्यपि ज्ञेयम्। लङः सिपि तु असस् स् इति स्थिते हल्ङ्यादिना तकारलोपे "तिप्यनस्ते"रिति सस्य दत्वमिति भावः। असस्तामिति। अससन्नित्यपि ज्ञेयम्। लङः सिपि तु असस् स् इति स्थिते "सिपि धातो"रिति रुर्वा। पक्षे दः। हल्ङ्यादिलोपः। तदाह-- असः असदिति। असस्तम् असस्त। अससम् असस्व असस्म। लिङ्याह-- सस्यादिति। सस्याताम्। सस्यास्तामित्यादि। लुङ्याह-- असासीदिति। "अतो हलादे"रिति वृद्धिविकल्प इति भावः। अससिष्यत्। अत षस्तिधातोरुदाहरति-- सन्तीति। इद#इत्त्वान्नुम्। इदित्त्वान्नुम्। "नश्चे"त्यनुस्वारे संस् त् ति इति स्थिते, "स्को"रिति सलोपे,परसवर्णे, "झरो झरी"ति प्रथममतकारस्य लोपविकल्पे , एकतं द्वितं वा रूपमिति भावः। संस्तन्तीति। अनभ्यस्तत्वादन्तादेश एवेति भावः। सिपि संस्त् सि इति स्थिते "स्को"रिति सलोपे अनुस्वारस्य परसवर्णो नकारः। सवर्णपरत्वाऽभावात् "झरो झरी"ति तकारलोपे न। सन्त्सि सन्थः सन्थ। संस्त्मि संस्त्वः संस्त्मः। ससंस्त ससंस्ततुः। ससंस्तिथ। ससंस्तिव ससंस्तिम। संस्तिष्यति। सन्तु--सन्तात् सन्ताम् संस्तन्तु। संस्त् हि इति स्थिते हेर्धिभावे "स्को"रिति सलोपे परसवर्णे सन्त् धि इति स्थिते "झरो झरी"ति तकारस्य लोपः। सन्धि। लोपाऽभावे तकारस्य जश्त्वे सन्द्धि--सन्तात् सन्तम् सन्त। संस्तानि संस्ताव संस्ताम। लङस्तिपि असंस्त् त् इति स्थिते हल्ङ्यादिलोपे संयोगादिलोपे संयोगान्तस्य लोपे--असन्। असन्ताम् असंस्तन्। असन् असन्तम् असन्त। असंस्तम् असंस्त्व असंस्त्म। संस्त्यात्। असंस्तीत्। असंस्तिष्यत्। मतान्तरमाह---बहूनामिति। इत्याश्रित्येति। तथा च प्रकृते लटस्तिपि संस्त् ति इति स्थिते झलि परे अनुस्वारसकारतकाराणां त्रयाणां समवायात् स् त् इत्यनयोः संयोगसंज्ञाविरहात् "स्को"रिति लोपाऽभावात् संस्तीत्याद्यूह्यमित्यर्थः। वश कान्ताविति। कान्तिरिच्छा। सेट्। वष्टीति। "व्रश्चे"ति शसय् षत्वे तकारस्य ष्टुत्वेन टः। उष्ट इति। ङिति "ग्रहिज्या" इति संप्रसारणे रूपमिति बावः। उवाशेति। लिटि अकिति "लिट()भ्यासस्ये"ति संप्रसारणमिति भावः। ऊशतुरिति। परत्वाद्ग्रहिज्येति संप्रसारणे कृते द्वित्वे हलादिशेषे सवर्णदीर्घ इति भावः। उवशिथ ऊशथुः ऊश। उवाश--उवश ऊशिव ऊशिम। वशितेति। अनेन सेट्त्वं द्योतितम्। वशिष्यति। उष्टामिति। उशन्त्वत्यपि ज्ञेयम्। उड्ढीति। वश् हि इति स्थिते धिबावे अपित्त्वेन ङित्त्वाद्ग्रहिज्येति संप्रसारणे शस्य षत्वे धस्य ष्टुत्वेन ढकारे षस्य जश्त्वेन ड इति भावः। वशानि वशाव वशाम। लङ्याह--अवडिति। हल्ङ्यादिलोपे शस्य षः, षस्य डः, तस्य चत्र्वविकल्प इति भावः। औशन्निति। अवट् औष्टम् औष्ट। अवशमिति। पित्त्वान्न संप्रसारणमिति भावः। औ()आ औश्म। वध्याशीर्लिङो उश्यादिति सिद्धवत्कृत्य आह--उश्याताम् उश्यास्तामिति। अवशीत् अव्राशीत्। अवशिष्यत्। तदेवं दीधीह् वेवीङ् षस षस्ति वश एते पञ्च धातवस्छान्दसा एवेति माधवादयः। तत्र "दीधीवेवीटा"मिति सूत्रे "दीधीवेव्योश्छन्दोविषयत्वा"दिति भाष्यम्। "जक्षित्यादयः ष" डिति सूत्रे "षसिवशी छानदसा"विति भाष्यम्। एतद्भाष्यादेव षस्तिधातोर्नाऽत्र पाठ इति प्रतीयते। अत एव "षस शास्ति स्वप्ने" इति पाठमभ्युपगमस्य स्तिपा निर्देशेन शास एवाथभेदात्पुनः पाठ इति कैयट आह। अत्र वशधातोरपि छान्दसत्ववचनं प्रायिकम्, "वष्टि भागुरिरल्लोपं "जयाय सेनान्यमुशन्ति देवाः"

इत्यादिप्रयोगदर्शनादित्यास्तां तावत्। चर्करीतं चेति। धातुपाठे गणसूत्रमिदम्। "चर्करीत"मिति यङ्लुगन्तस्य संज्ञा पूर्वाचार्यसिद्धा। तदाह--यङ्लुगन्तमदादाविति। तेन यङ्लुगन्ताच्छबेव विकरणः, तस्य लुक्, न तु श्यनादि विकरणान्तरम्। "परस्मपैदिन" इत्युपक्रमाद्यङ्लुगन्तस्य परस्मैपदित्वमेव। ह्नुङ् अपनयने इति। अनिडयम्। ह्नुते इति। ह्नुवाते ह्नुवते इत्यादि। जुह्नुवे इति। जुह्नुवाते जुह्नुविरे। क्रादिनियमादिट्। जुह्नुविषे। जुह्नुविवहे। ह्नोता। ह्नोष्यते। ह्नुताम्। ह्नुष्व। ह्नवै ह्नवावहै। अह्नुत। इति सिद्धवत्कृत्य विधिलिङ्याह-- ह्नुवीतेति आशीर्लिङ्याह-- ह्नोषीष्टेति। लुङ्ाह--अह्नोष्टेति। इति बालमनोरमायां लुग्विकरणम्।

तत्त्व-बोधिनी

यीवर्णयोर्दीधीवेव्योः १४६, ७।४।५३

यीवर्णयोः। "य्वो"रित्युक्तेऽपीष्टसिद्धौ यकारेकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम्। यिश्च इवर्णश्च यीवर्णौ, तयोः। यिश्चेति इकार उच्चारणार्थो न तु विवक्षितस्तदाह--- यकारे इवर्णे चेति। "यिवर्णयो"रिति पाठस्तूचितः। लोपं बाधित्वेति। रलोपस्य तूदाहरणम्। आदीध्य गतः। आवेव्य गतः। दीधिता। दीधिष्यते। वेविता। वेविष्यते। यीवर्णयोरिति किम्?। आदीध्यनम्। आवेव्यनम्। षस। असदिति। "तिप्यनस्ते"रितिदत्वम्। अस इति। "सिपि धातो" रिति रुर्वा। पक्षे दः। सन्तीति। इदित्वान्नुमि सन्()सत्()ति इति स्थिते "स्को"रिति सलोपे "झरो झरि सवर्णे" इति तकारस्य वा लोपः। संस्ति संस्त इति। इहापि पूर्ववत्तलोपो वा बोध्यः। वश कान्तौ। भाषायामप्यस्य प्रयोगो दृश्यते। "वष्टि भागुरिरल्लोपं", "जयाय सेनान्यमुशन्ति देवाः इति। (ग)चर्करीतं च। गणसूत्रमिदम्। चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा। अदादौ बोध्यमिति। तेन यङ्लुगन्तेषु "अदिप्रभृतिभ्यः" इति शपो लुग् भवतीति भावः। प्राचा तु "चर्करीत"मिति यङ्लुगन्तं परस्मैपदमित्युक्तं, तच्चेहाऽप्रकृतत्वादुपेक्षितम्।

इति तत्त्वबोधिन्याम् अदादयः।

* अथ अजन्तपुलिङ्गप्रकरणम्। *

---

सूत्रम्

काशिका-वृत्तिः

सनि मीमाघुरभलभशकपतपदाम् अच इस् ७।४।५४

सनि प्रत्यये सकारादौ परतः मी मा घु रभ लभ शक पत पद इत्येतेषाम् अङ्गानाम् अचः स्थाने इसित्ययम् आदेशो भवति। मी इति मीनातिमिनोत्योः द्वयोरपि ग्रहणम् इष्यते। मित्सति। प्रमित्सति। मा इति गामादाग्रहणेषु अविशेषः। मित्सते। अपमित्सते। घु दित्सति। धित्सति। रभ आरिप्सते। लभ आलिप्सते। शक शिक्षति। पत् पित्सति। पद प्रपित्सते। सनि इति किम्? दास्यति। सि इत्येव, पिपतिषति। तनिपतिदरिद्राणाम् उपसङ्ख्यानम् इति पतेः इडागमविकल्पः। सनि राधो हिंसायाम् अच इस् वक्तव्यः। प्रतिरित्सति। हिंसायाम् इति किम्? आरिरात्सति।

न्यासः

सनि मीमाघुरभलभशकपतपदामच इश्?। , ७।४।५४

"सः स्यार्धधातुके" ७।४।४९ इत्यतः सीत्यनुवत्र्तते, तच्च सोन विशेषणम्()। "मीति मीनातिमिनत्योः" इति। "मीञ्? हिंसायाम्()" (धा।पा।१४७६), "डुमिञ्? प्रक्षेपणे" (धा।पा।१२५०)--इत्येतयोः। ननु च "मी" इत्येतस्मिन्नुच्चार्यमाणे मिनोतेग्र्रहणं नोपपद्यते? नैवम्(); अस्यापि "अज्झनगमां सनि" ६।४।१६ इति दीर्घत्वे कृते मीत्येवं रूपं भवति। एवमपि

लक्षणप्रतिपदोक्तपिभाषया (व्या।प।३) तस्य ग्रहणं नोपपद्यते? नैतदस्ति; अत्र हि घुसंज्ञकत्वात्? "घु" इत्यस्य पूर्वनिपातमकुर्वतैतत्? सूचितम्()--यथा पूर्वनिपात इह नापेक्ष्यते, तथान्यदपि किञ्चिच्छास्त्रीयं वचनमिति। तेनेयं परिभाषा नापेक्ष्यत इति युक्तं मिनोतेरपि ग्रहणम्()। "मा हि गामादाग्रहणेष्वविशेषः" इति। मेङ्प्रभृतीनां पूर्वोक्तानां त्रयाणां ग्रहणम्()। "घु" इति घुसंज्ञकौ "दा" "धा"--इत्यतौ गृह्रते। "रभ राभस्ये" (धा।पा।९७४), "डुलभष्? प्राप्तौ" (धा।पा।९७५), "शक्लृ शक्तौ" (धा।पा।१२६१), "शल हुल पत्लृ गतौ" (धा।पा।८४३,८४४,८४५), "पद गतौ" (धा।पा।११६९)--एषामचः स्थाने सकारादौ प्रत्यये सनीस्? भवति। अच इत्यस्य ग्रहणं सर्वादेशो मा भूदित्येवमर्थम्()। असति हि तस्मिन्ननेकाल्त्वात्? सर्वादेशः स्यात्()। "प्रमित्सनि" इति। "अत्र लोपोऽब्यासस्य" ७।४।५८ इत्यभ्यासलोपः, "सः स्यार्धधातुके" ७।४।४९ इति तस्य सः। "अपमित्सते" इति। "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। एवं आरिप्सते" "आलिप्सते" इत्यत्रापि। "खरि च" ८।४।५४ इति चत्र्वम्()--भकारस्य पकारः, "त्कोः संयोगाद्योरन्ते च" ८।२।२९ इति सलोपः॥

बाल-मनोरमा

सनि मीमाघुरभलशकपतपदामच इस् ४५१, ७।४।५४

सनि मीमा। सादौ सनीति। "सः सि" इत्यतः सीत्यनिवृत्तेरिति भावः। अभ्यासलोप इति। "अत्र लोपः" इत्यनेनेति भावः। पिस्त् स इति स्थिते आह-- स्कोरिति। दरिद्रातेः सनि "तनिपती"ति इड्विकल्पमुदाहरति-- दिदरिद्रिषति। दिदरिद्रासतीति। डु मित्रिति। "डु मित्र् प्रक्षेपणे" स्वादिः, "मीत्र् हिंसायाम्" क्र्यादिः, आभ्यां सन्नित्यर्थः। "सनि मीमे"त्यतर् मीग्रहणेन एतयोरुभयोग्र्रहणमिति भावः। ननु मीति दीर्घश्रवणात् डु मित्र् इत्यस्य ह्रस्वान्तस्य कथं ग्रहणमित्यत आह-- कृतदीर्घस्येति। डु मित्र्()धातोः सनि "अज्झने"ति कृतदीर्घस्य, तथा "मीत्र् हिंसाया"मिति स्वतः सिद्धदीर्घस्य च मीरूपाऽविशेषादुभयोरपि ग्रहणमित्यर्थः। सः सीति। उभयोरपि धात्वोः मी स इति स्थिते "सनि मीमे"ति इसादेशे द्वित्वे "अत्र लोपः" इत्यभ्यासलोपे "सः सी"ति सस्य तकार इत्यर्थः। मित्सति मित्सते इति। प्रकृतेर्ञित्त्वात् "पूर्ववत्सनःर" इति उभयपदित्वम्। माङ्मेङोरिति। मेङः सनि "आदेचः" सनि आत्वे कृते मारूपत्वाऽविशेषात् "सनि मीमे"त्यत्र उभयोरपि ग्रहणमिति भावः। दोदोणोरिति। "दो अवखण्डने" इतिधातोः सनि आत्वे कृते दारूपाऽविशेषाद्घुत्वादुभयोग्र्रहणमिति भावः। दित्सतीति। "हलन्ताच्चे"ति कित्वान्नोपधागुणः। देङिति। तस्यापि कृतात्त्वस्य घुत्वात् "सनि मीमे"त्यत्र ग्रहणमिति भावः। रिप्सते इति। रभधातोः रूपम्। लिप्सते इति। लभधातो रूपम्। पित्सतीति। पत्लृधातो रूपम्। पदधातोः पित्सते इति रूपम्। सनि इस् वाच्य इति। "आकारस्ये"ति शेषः।ष रित्सतीति। सनि इसादेशः। "अत्र लोपः" इत्यभ्यासलोपः।

तत्त्व-बोधिनी

सनि मीमाघुरभलभशकपतपदामच इस् ३९१, ७।४।५४

सनि मीमा। "सः सी"त्यतः सीत्यनुवर्तते। तस्य सनो विशेषणत्वात्सादौ सनीति लाभः। मीरूपाऽविशेषादिति। ननु मिनोतेर्मीरूपस्य लाक्षणिकत्वान्मीग्रहणेन ग्रहणं न प्राप्नोति। नैष दोषः। यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र "लक्षणप्रतिपदोक्तयो"रिति परिभाषोपस्थानं न तु यत्र प्रयोगाश्रयणं तत्रेति "इको झ"लिति सूत्रे कैयटेनोक्तत्वात्। तस्यायमाशयः-- मीरूपमात्रस्य प्रयोगाऽत्राश्रितः। "विभाषा दिक्समासे" इत्यत्र तु लक्षणाभिनिर्वृत्तस्य समासशब्दस्याश्रयणात् "दिङ्नामान्यन्तराले इति प्रतिपदोक्त एव समास आश्रीयते इति। लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात्क्वचिदुपतिष्ठते क्वचिन्नोपतिष्ठते इतितु निष्कृष्टोऽर्थः। मित्सतीति। "हलन्ताच्चे"ति कित्वान्नोपधागुणः। शिक्षतीति। ननु निरनुबन्धपरिभाषया "शक मर्षणे" इत्यस्यैव ग्रहणमुचितमिति चेत्। अत्राहुः-- इयं हि परिभाषा

प्रत्ययग्रहणविषया। अत ए "जृ()व्रश्च्यो"रित्यत्र जजृ()षोरुभयोग्ररहणमिति न्यासकारेणोक्तमतोऽत्रापि स्वादिदैवादिकयोग्ररहणं युक्तमेवेति।

---

सूत्रम्

काशिका-वृत्तिः

आप्ज्ञप्यृधाम् ईत् ७।४।५५

आप् ज्ञपि ऋध इत्येतेषाम् अङ्गानाम् अच ईकारादेशो भवति सनि सकारादौ परतः। आपीप्सति। ज्ञपि ज्ञीप्सति। ऋद्H ईर्त्सति। ज्ञपेः द्वावचौ, तत्र णेः पूर्वविप्रतिषेधेन लोपः, इतरस्य तु ईत्वम्। सनि इत्येव, प्राप्स्यति। सि इत्येव, जिज्ञपयिषति। अर्दिधिषति। सनीवन्तर्ध इति ज्ञपेः ऋधेश्च इटो विकओपः।

न्यासः

आप्ज्ञप्यृधामीत्?। , ७।४।५५

"ईप्सति" इति। "आप्लृ व्याप्तौ" (धा।पा।१२६०)। "ज्ञीप्सति" इति। "ज्ञा अवबोधने" (धा।पा।१५०७), णिच्(), "अर्त्ति" ७।३।३६ इत्यादिना पुक्(), "मारणतोपणनिशामनेषु ज्ञा" (धा।पा।८११) "मिच्च" इति मित्संज्ञायां ह्यस्वः, "णेरनिटि" ६।४।५१ इति णिलोपः। "ईत्र्सति" इति। "ऋधु वृद्धौ" (धा।१२७१), ईकारः, रपरत्वं च, श्रकारस्य "खरि च" ८।४।५४ इति चत्र्वम्()--तकारः। इह च ज्ञापिनाङ्गेनाज्विशेषयितव्यः, न त्वचा ज्ञापिः, व्यभिचाराभावात्()। न हि ज्ञपरजन्ततां व्यभिचरति। अचि तु ज्ञपिनाङ्गेन विशिष्यमाणे सर्वस्य ज्ञपिसम्बन्धिनोऽच ईत्त्वेन भवितव्यम्(), तथा च णेरपीत्त्वे कृते ज्ञीप्सतीति न सिध्येदित्येतच्चोद्यमाशङ्क्याह--"ज्ञपेद्र्वावचौ" इत्यादि। तत्रेत्त्वास्यावकाशोऽजाद्यः, णिलोपस्यावकाशः--कारणा, हारणा; द्वितीयस्याच उभयप्रसङ्गे णिलोप एव भवति पूर्वविप्रतिषेधेन--ज्ञीप्सतीति। "इतरस्य" इति। अकारस्य। "अर्दिधिषति" इति। लघूपधगुणः, रपरत्वम्(), "अजादेर्द्वितीयस्य" ६।१।२ इति "धि" इत्येतद्()द्विरुच्यते। रेफस्य तु द्विर्वचनं न भवति; "न न्द्राः संयोगादयः" ६।१।३ इति प्रतिषेधात्()। अभ्यासस्य जश्त्वम्()--जकारः। तकारो मुखसुखार्थः॥

बाल-मनोरमा

आप्ज्ञप्यृधामीत् ४४७, ७।४।५५

आप्ज्ञप्यृधामीत्। सादौ सनीति। "सनि मीमाघुरभे"त्यतः सनीति, अच इति चानुवर्तते। "सः स्याद्र्धधातुके" इत्तः सीत्यनुवृत्तं सनो विशेषणम्। तदादिविधिरिति भावः।

तत्त्व-बोधिनी

आप्ज्ञप्यृधामीत् ३८८, ७।४।५५

आप्ज्ञ। "सनि मीमे" त्यतः --अच इत्यनुवर्तते, "सः स्याद्र्धधातुके" इत्यतः सीति च। तदाह-- अव ईत्स्यादाविति। "सी"त्यस्य सनो विशेषमात्सादाविति लाभः।

---

सूत्रम्

काशिका-वृत्तिः

दम्भ इच्च ७।४।५६

दम्भेः अच इकारादेशो भवति, चकारातीत् च सनि सकारादौ परतः। धिप्सति, धीप्सति। सि इत्येव, दिदम्भिषति।

न्यासः

दम्भ इच्च। , ७।४।५६

चोन्तिन्॥।

न्यासः

दम्भ इच्च। , ७।४।५६

"धिप्सति, धीप्सति" इति। "दन्भु दम्भे" (धा।पा।१२७०)। तस्य यदा "सनीवन्तर्ध" ७।२।४९ इत्यादिनेण्न क्रियते, सनि सकारादाविकारः, ईकारश्च, "हलन्ताच्च" १।२।१० इति कित्त्वादनुनासिकलोपः, भकारस्य चर्त्वे पकारः॥

बाल-मनोरमा

दम्भ इच्च ४४९, ७।४।५६

दम्भ इच्च। "सनि मीमे"त्यतः सनीति, अच इति चानुवर्तते। चकारात् "आप्ज्ञप्यृधा"मिति सूत्रादीदिति समुच्चीयते। "सः सी"त्त सीत्यनुवृत्तं सनो विशेषणं, तदादिविधिः। तदाह-- दम्भेरच इत्यादि। अभ्यासलोप इति। "अत्र लोपः" इत्यनेने"ति शेषः। दिम्भ् स इति स्थिते इक्समीपादनुस्वारादव्यवहितपरत्वाऽभावेऽपि हलन्तादित्यस्य प्रवृत्तिमुपपादयति -- हलन्ताच्चेत्यत्रेति। हल्ग्रहणं हल्त्वजात्याक्रान्तैकाऽनेकव्यक्तिरपरिमिति प्रागुक्तमित्यर्थः। ततः किमित्यत आह-- तेनेति। धिप्सतीति। "सनीवन्ते"ति इडभावे इत्वे रूपम्। धीप्सतीति। इडभावे इत्वे च रूपम्। दिदम्भिषतीति। इट्पक्षे सनो झलादित्वाऽभावादकित्त्वान्नलोपो नेति भावः। शिश्रीषतीति। "सनीवन्ते"ति इडभावे "अज्जने"ति दीर्घः। सनः कित्तवान्न गुणः। इट्पक्षे आह-- शिश्रयिषतीति। अझलादित्वान्न कित्वं, नाप्यज्झनेति दीर्घः। स्वृधातोः सनि ऋकारस्य उत्त्वविधिं स्मारयति-- उदोष्ठ()एति। सुस्वूर्षतीति। "सनीवन्ते"ति इडभावे ऋकारस्य "अज्झने"ति दीर्घे कृते उत्त्वे रपरत्वे "उपधायां चे"ति दीर्घ इति भावः। सिस्वरिषतीति। "स्वृ " इत्स्य द्वित्वे उदरत्वे इत्तवमिति भाव-। युयूषतीति। "सनीवन्ते"ति इडभावे "अज्झने"ति दीर्घः। यियविषतीति। इट्पक्षे "द्विर्वचनेऽची"ति गुणनिषेधात् "यु"इत्यस्य द्वित्वम्। "ओः पुयण्जी"तीत्त्वमिति भावः। ऊर्णुनूषतीति। "सनीवन्ते"ति इडभावपक्षे "न न्द्रा" इति रेफं वर्जयित्वा नुस् इत्यस्य द्वित्वे "अज्झने"ति दीर्घः। "इको झलि"ति सनः कित्वान्न गुणः। इट्पक्षे तु "विभाषणोर्णो"रिति सनो ङित्वविकल्पं मत्वाह---ऊर्णुनुविषति। ऊर्णुनविषतीति। ङित्वपक्षे गुणाऽभावान्नुशब्दस्य द्वित्वे उत्तरखण्डे उवङ्। ङित्वाऽभावपक्षे "नु"इत्यस्य द्वित्वे उत्तरखण्डस्य गुणावादेशाविति भावः। उभयत्राप्यभ्यासे उवर्णः श्रूयते। ननु ङित्वाऽभावपक्षे ऊर्णु इस इति स्थिते द्वित्वात्, प्रागेव परत्वाद्गुणे अवादेशे च कृते नव्शब्दस्य द्वित्वेऽभ्यासस्याऽत इत्त्वे ऊर्णिनविषतीति अभ्यासे इकार एव श्रूयेत, नतु उकार इत्याशङ्क्य निराकरोति-- द्विर्वचनेऽचीति। अस्मिन् सूत्रे "स्थानिव"दित्यनुवत्र्य रूपातिदेशं चाश्रित्य द्वित्वनिमित्ते अचि परे योऽजादेशः स द्वित्वे कर्तव्ये स्थानिरूपं प्रतिपद्यते इत्येकोऽर्थः। "न पदान्ते"त्यतो नेत्यनुवर्त्त्य द्वित्वनिमित्ते अचि योऽजादेशः स न स्याद्()द्वित्वे कर्तव्ये इत्यन्योऽर्थः। तत्र प्रथमव्याख्याने तु कृतस्यापि गुणस्य स्थानिभूतोकाररूपप्रतिपत्त्या "नु"इत्यस्य द्वित्वे अभ्यासे उकार एव श्रूयते। द्वितीव्याख्यानेऽपि द्वित्वात् प्राग्गुणस्य निषिद्धतया नुशब्दस्यैव द्वित्वे अभ्यासे उकार एव श्रूयते इति भावः। ननु ऊर्णु इस इति सन्नन्तस्य द्वित्वरूपकार्यभाक्त्वेन तदन्तर्गतसय् इस इत्यस्यापि कार्यित्वान्न द्वित्वनिमित्तत्वम्, "नहि कार्यी निमित्ततया आश्रीयते" इत्युक्तेः। तथा च द्वित्वे कर्तव्ये द्वित्वनिमित्ताऽच्परकादेशस्य क्रियमाणो निषेधः कथमिह गुणस्य प्रसज्यते इत्याशङ्क्य निराकरोति-- न च सन्नन्तस्येति। कार्यमनुभवन्निति। अत्र व्याख्यानमेव शरणम्। न चेह सन्निति। कितं नुशब्द इत्यर्थः। बुभूर्षतीति। "सनीवन्ते"ति इडभावपक्षे भृ स इति स्थिते

"अज्झने"ति दीर्घे "उदोष्ठ()पूर्वस्ये"त्युत्वे रपरत्वे उत्तरखण्डस्य "हलि चे"ति दीर्घः। सनः कित्वान्न गुण इति भावः। इट्पक्षे आह-- बिभरिषतीति। भृ इस इति स्थिते द्वित्वे उरदत्वे रपरत्वे हलादिशेषे अभ्यासस्य अत इत्वे उत्तरखण्डस्य गुणे रपरत्वमिति भावः। ज्ञपिः पुगन्तो भित्संज्ञक इति। "सनीवन्ते"ति सूत्रे गृह्रते" इति शेषः। "मारणतोषणनिशामनेषु ज्ञे"ति घटादौ।ततो हेतुमण्णौ पुकि घटादित्वेन मित्त्वादुपधाह्रस्वे ज्ञपीति ण्नय्तो गृह्रत इत्यर्थः। पकारान्तश्चौरादिकश्चेति। "ज्ञप मिच्चे"ति यः स्वतः परकारान्तः पठितश्चुरादौ, न तु पुगन्तः, सोऽपि "सनीवन्ते"ति सूत्रे गृह्रते इत्यर्थः। इडभावे इति। उभयविधादपि ण्यन्ताज्ज्ञपीत्यस्मात्सनि इडभावपक्षे णेः परसय् सनः "इको झल्" इति कित्वाण्णेर्गुणो नेत्यर्थः। परत्वादिति। णेर्लोपे सति अचोऽभावान्न दीर्घ इति भावः। तथा च "ज्ञी" बित्यस्य द्वित्वे हलादिशेषे "अत्र लोपःर" इत्यभ्यासलोपे परिनिष्ठितमाह-- ज्ञीप्सतीति। इट्पक्षे आह-- जिज्ञपयिषतीति। सनधातोः सनि आह-- जनसनेत्यात्वमिति। "नकारस्ये"ति शेषः। सिषासतीति। आत्वे कृते सा इत्यस्य द्वित्वे अभ्यासस्य ह्रस्वे अत इत्वे षत्वे रूपम्। नच "स्तौतिण्योरेवे"ति नियमान्न ष इति शङ्क्यं, सनः षत्वे सत्येव तत्प्रवृत्तेः। इट्पक्षे त्वाह-- सिसनिषतीति। अत्र "जनसने"त्यात्त्वं तु न, सनो झलादित्वाऽभावात्। "स्तौतिण्योरेवे"ति निमयान्न ष इति भावः। तनिपतीति। प्राप्तविभाषेयम्।

तत्त्व-बोधिनी

दम्भ इच्च ३९०, ७।४।५६

यियविषतीति। "द्विर्वचनेऽचीत्यादेशनिषेधाद्द्वित्वे कृतेऽभ्यासस्योवर्णस्येत्वम्। ऊर्णुनूषतीति। इडभावे "अज्झनगमा"मिति दीर्घः। इट्पक्षे तु "विभाषोर्णो"रिति वा ङित्त्वम्। न चेह सन्निति।किं तु नुशब्द इत्यर्थः। कित्वान्न गुण इति। णिचः स्थाने इत्यर्थः।

*आशङ्कायां सन्वक्तव्यः। स्वा मुमूर्षतीति। एक()आविषया मरणशङ्केति बोधः। मरणाऽऽशङ्काविषयो भवतीत्यन्ये। "पूर्ववत्सनः" इत्यात्मनेपदमिह न शङ्क्यं, "शदे"रित्यादसूत्रद्वये "सनो ने"त्यनुवर्त्य वाक्यभेदेन व्याख्येयमिति वक्ष्यमाणत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

मुचो ऽकर्मकस्य गुणो वा ७।४।५७

मुचो ऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः। हलन्ताच् च १।२।१० इति कित्वप्रतिषेधो विकल्प्यते। मोक्षते वत्सः स्वयम् एव, मुमुक्षते वत्सः स्वयम् एव। अकर्मकस्य इति किम्? मुमुक्षति वत्सं देवदत्तः। कर्मकर्तरि मुचिरकर्मको भवति, कर्मविशेषस्य अविवक्षिताद्वा।

लघु-सिद्धान्त-कौमुदी

णिजां त्रयाणां गुणः श्लौ ६२९, ७।४।५७

णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेनिक्ते। निनेज, निनिजे। नेक्ता। नेक्ष्यति, नेक्ष्यते। नेनेक्तु। नेनिग्धि॥

न्यासः

मुचोऽकर्मकस्य गुणो वा। , ७।४।५७

"मोक्षते" इति। "मुच्लृ मोक्षणे" (धा।पा।१४३०)। "चोः कुः" ८।२।३० इति कुत्वम्(); "इण्कोः" ८।३।५७ इति षत्वम्(), "कर्मवत्कर्मणा" ३।१।८७ इत्यदिना कर्मवदतिदेशादात्मनेपदम्()। "स्वयमेव" इति वचनं कर्मकर्तृत्वप्रदर्शनार्थम्()। वत्सं मोक्तुमिच्छति, स मोक्तुमिष्यमाणो मुक्तिक्रियां प्रत्यानुकूल्यं यदा प्रतिपद्यते तदा स्वतन्त्रत्वादस्मिन्? कर्मणि कर्त्तृत्वेन विवक्षिते मुचिरकर्मको भवति। अथ गुणग्रहणं किमर्थम्(), नोदित्येवोच्येत? नमु चैदं सत्योकारश्चकारस्य स्थाने "अलोऽन्त्यस्य" १।१।५१ प्राप्नोति, गुणग्रहणादिक एव भवति, संज्ञाविधाने नियमात्()? नैतदस्ति; अच इत्यनुवत्र्तते। तेनान्त्यस्य न भविष्यति। एवं तह्र्येतज्ज्ञापयति--अच इति निवृत्तमिति। तेन "अत्र लोपोऽभ्यासस्य" ७।४।५८ इत्यत्रातोऽभ्यासस्य लोपो न भवति। सति त्वजधिकारे, मा भूत्? तस्यानुवृत्तिरपार्थिकेत्यच एव लोपः स्यात्()॥

बाल-मनोरमा

मुचोऽकर्मकस्यो गुणो वा ४५२, ७।४।५७

मुचोऽकर्मकस्य। सादौ सनीति। शेषपूरणमिदम्। "सः सी"त्यतः सीत्, "सनि मीमे"त्यतः सनीति चानुवृत्तेरिति भावः। "हलन्ताच्चे"ति कित्तवाद्गुणनिषेधे प्राप्ते वचनम्। अभ्यासलोप इति। "अत्र लोपः" इत्यनेने"ति शेषः। मोक्षते इति। "अत्र लोपः" इत्यभ्यासलोपः। तङि त्विति। "न वृद्भ्यः" इत्यत्र परस्मैपदग्रहणानुवृत्तेरुक्तत्वादिति भावः। निनृत्सतीति। इडभावपक्षे "हलन्ताच्चे"ति कित्त्वान्न गुणः।

तत्त्व-बोधिनी

मुचोऽकर्मकस्यो गुणो वा ३९२, ७।४।५७

मुचोऽकर्मकस्य। "हलन्ताच्चे"ति कित्त्वेन गुणाऽभावे प्राप्ते विधिरयम्। विवत्सतीति। "वृद्भ्यः स्यसनो"रिति विकल्पेन परस्मैपदम्।

---

सूत्रम्

काशिका-वृत्तिः

अत्र लोपो ऽभ्यासस्य ७।४।५८

यदेतत् प्रक्रान्तं सनि मीमा इत्यादि मुचो ऽकर्मकस्य इति यावत्, अत्र अभ्यासलोपो भवति। तथैव उदाहृतम्। अभ्यासस्य इत्येतच् च अछिकृतं वेदितव्यम् आ अध्यायपरिसमाप्तेः। इत उत्तरं यद् वक्ष्यामः अभ्यासस्य इत्येवं तद् वेदितव्यम्। वक्ष्यति, ह्रस्वः ७।४।५९ डुढौकिषते। तुत्रौकिषते। सनि मीमाधुरभलभशकपतपदामच इस्, अभ्यासलोपश्च, इत्येवम् सिद्धे यदत्रग्रहनम् इह अक्रियते, तद् विषयावधारणार्थम्, अत्रैव अभ्यासलोपो भवति, सन्वद्भावविषये न भवति। अमीमपत्। अदीदपत्। सन्वल्लघुनि चङ्परे ऽनग्लोपे ७।४।९३ इति सन्वद्भावात् प्राप्नोति। सर्वस्य अभ्यासस्य अयं लोपः इष्यते, तदर्थम् एव केचितत्रग्रहणं वर्णयन्ति। नानर्थके ऽलो ऽन्त्यविधिः इत्यपरे सर्वस्य कुर्वन्ति।

न्यासः

अत्र लोपोऽभ्यासस्य। , ७।४।५८

अत्रेत्यनेन यन्निर्दिश्यते तद्दर्शयितुमाह--"यदेतत्()" इत्यादि। अथात्रग्रहणं किमर्थम्()? "सनि मीमा" ७।४।५४ इत्यादौ प्रकरणे यथा स्यात्(); ददौ, ददतुरित्यादौ मा भूदिति चेत्()? न; यदि ह्येतत्? प्रयोजनमभिमतं स्यात्? "सनि मीमाधुरभलभशकपतपदामच इसभ्यासलोपश्च" इत्येवमुद्दिश्येत, एवमिहैव प्रकरणे भदिष्यति, नान्यत्र, ततो निष्प्रयोजनमत्रग्रहणमित्यत आह--"सनि मीमाधुरभलभ" इत्यादि। "विषयावधारणार्थम्()" इति। अभ्यासलोपविषयस्य

नियमार्थमित्यर्थः। तामेव तस्य विषयनियमार्थतां दर्शयितुमाह--"अत्रैव" इत्यादि। अत्रेत्यनेनेसादिविषयो निर्दिश्यते। इसादिविषय एवाभ्यासलोपो यथा स्यादिति नियमेन यद्व्यवच्छिन्नं तद्दर्शयितुमाह--"सन्वद्भावविषये न भवति" इति। "अमीमपत्()" इति। "भीञ्? हिंसायाम्()" (धा।पा।१४७६) "मीनातिमिनोतिदीङां ल्यपि च" ६।१।४९ इत्यात्त्वम्(), णिच्(), पूर्ववत्? पुक्(), लुङः, च्लेश्चङ्(), णिलोपः, उपधाह्रस्वत्वम्(), द्विर्वचनम्(), अट्(), "सन्वल्लघुनि चङ्परे" ७।४।९३ इत्यादिना सन्वद्भावे "सन्यतः" ७।४।७९ इतीत्त्वम्(), "दीर्घो लघोः" ७।४।९४ इति दीर्घः। "अदीदपत्()" इति। "डुदाञ्? दाने" (धा।पा।१०९१) पूर्ववण्णिजादिः। अत्रग्रहणादिहाभ्यासलोपो न भवति। कथं पुनः सन्यभ्यासलोप उच्यमान इह प्राप्नोति, यन्निवृत्त्यर्थमत्रग्रहणं क्रियते? इत्याह--"सन्वल्लघुनि" इत्यादि। यथैव हि सन्वद्भावातिदेशादित्त्वं भवति, एवमभ्यासलोपः स्यात्()। इहालोन्त्यपरिभाषया "अलोऽन्त्यस्य" १।१।५१ लोपेन भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"सर्वस्य" इत्यादि। कथं पुनः सर्वस्य लभ्यते? इत्यत आह--"तदर्थमेव" इत्यादि। एतेनैवकारेण विषयावधारणार्थतां निरस्यति। यद्येवम्(), सन्वद्भावविषयेऽपि प्राप्नोति? एवं मन्यते-- सन्वद्भावविषयेऽप्यभ्यासलोपप्रसङ्गः परिहर्तु शक्यते। तत्र सन्वदिति सनाश्रयकार्यमतिदिश्यते। न चाभ्यासलोपः सनमेवापेक्षते, किं तर्हि? इस्भावादिकमपि। तदभावादसत्यप्यत्रग्रहणेऽमीमपदित्यादिष्वभ्यासलोपो न भविष्यति। तस्मादतिरिच्यत एवात्रग्रहणमिति न कत्र्तव्यमेव। तत्? क्रियते--सर्वस्याभ्यासलोपो यथा स्यादिति। कथं पुनः क्रियमाणेऽप्यत्रग्रहणे सर्वस्य लोपो लभ्यते? ग्रन्थाधिक्यादर्थाधिक्यमित्येके। अत्रग्रहणेन महत्? सूत्रं प्रयणतैतत्? सूचितम्()--महतः स्थानिनोऽयं लोपः कत्र्तव्यः। एवञ्चायं महतः स्थानिनः कृतो भवति यदि सर्वस्याभ्यासलोपः क्रियते, नान्यथेत्यन्ये। "नानार्थकेऽलोन्त्यविधिरित्यपरे" इति। के पुनस्ते? ये विषयावधारणार्थतामत्रग्रहणस्य वर्णयन्ति ते वेदितव्याः। अनर्थकत्वमभ्यासस्य स्थाने द्विर्वचनपक्षे वेदितव्यम्()। अत्र हि यस्य स्थाने यच्छब्दान्तरं विधीयते तत्? समस्तमेवार्थवत्()। एकदेशस्त्वभ्यासोऽनर्थक एव।
द्विष्प्रयोगद्विर्वचनपक्षेऽप्यनर्थान्तरवाचित्वादनर्थान्तरवाचित्वादनर्थकताभ्यासस्य॥

बाल-मनोरमा

अत्र लोपोऽभ्यासस्य ४४८, ७।४।५८

अत्र लोपोऽभ्यासस्य। "सनि मीमे"ति "आप्ज्ञप्यृधामी"दिति "दम्भ इच्चे"ति , "मुचोऽकर्मकस्य गुणो वे"ति पूर्वसूत्रचतुष्टयविहितकार्यमत्रेत्यनेन परामृश्यते। तदाह-- सनि मीमेत्यारभ्यते। सूत्रचतुष्टकार्ये कृते सतीत्यर्थः। ईप्सतीति। आप् धातोः सनि आकारस्य इत्त्वे "अजादेर्द्वितीयस्ये"ति प्स इत्यस्य द्वित्वेऽभ्यासलोप इति भावः। रपरत्वमिति। ऋधेः सनि इडभावे ऋकारस्य ईत्त्वे रपरत्वमित्यर्थः। चत्र्वमिति। ईर्ध् स इति स्थिते धस्य चर्त्वे "न न्द्राः" इति रेफं वर्जयित्वा "अजादेर्द्वितीयस्ये"ति, "त्स" इत्यस्य द्वित्वे अभ्यासस्य लोप इति भावः। "पूर्वत्राऽसिद्धीयमद्वित्वे" इति वचनाच्चत्र्वे कृते द्वित्वमिति बोध्यम्। इट्पक्षे आह-- अर्दिधिषतीति। सनः सादित्वाऽभावादीत्त्वाऽभावे गुणे रपरत्वे अर् ध् इ स इति स्थिते धिस् इत्यस्य द्वित्वमिति भावः। भ्रस्ज्धातोः सन इटि "भ्रस्जो रोपधयो"रिति रमागमाऽभावे आह--बिभ्रज्जिषतीति। सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः। क्ङिदभावात् "ग्रहिज्ये"ति संप्रसारणं न। बिभर्जिषतीति। इटि रमागमपक्षे भ्रस्ज् इस इति स्थिते अकारादुपरि साकरात्प्राग्रेफागमे भकाराद्रेफस्य सकारस्य च निवृत्तौ भर्ज् इस इति स्थिते भर्ज् इत्यस्य द्वित्वं हलादिशेषे अभ्यासस्य इत्त्वे जश्त्वे सनः षत्वे च रूपम्। तदेवमिट्पक्षे रमागमतदभावाभ्यां रूपद्वयम्। बिभ्रक्षतीति। इडभावे रमागमाऽभावे च रूपम्। जस्य कुत्वं सस्य षः। बिभक्र्षतीति। इडभावे रमागमे च रूपम्। तदेवमिडभावपक्षे रमागमतदभावाभ्यां द्वे रूपे।

तत्त्व-बोधिनी

लोपोऽभ्यासस्य ३८९, ७।४।५८

ईप्सतीति। "अजादेर्द्वितीयस्ये"तिप्सशब्दस्य द्वित्वम्। बिभ्रज्जिषतीति। इटि तदभावे च रमागमविकल्पाच्चत्वारि रूपाणि। सुस्वूर्षतीति। "अज्झनगमा"मिति दीर्घे सत्युत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वः ७।४।५९

ह्रस्वो भवति अभ्यासस्य। दुढौकिषते। तुत्रौकिषते। डुढौके। तुत्रौके। अडुढौकत्। अतुत्रौकत्। अभ्यासस्य अनचि। अभ्यासस्य यदुच्यते अनचि तद् भवति इति वक्तव्यम्। चराचरः। चलाचलः। पतापतः। वदावदः। हलादिः शेषो न भवति।

लघु-सिद्धान्त-कौमुदी

ह्रस्वः ३९९, ७।४।५९

अभ्यासत्याचो ह्रस्वः स्यात्॥

न्यासः

ह्रस्वः। , ७।४।५९

"डुढौकिषते, तुत्रौकिषते" इति। ढौकृ, त्रौकृ--इत्येताभ्यामनुदात्तेत्त्वादात्मनेपदिभ्यां सन्(), "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। "अडुढौकत्(), अतुत्रौकत्()" इति। आभ्यामेव ण्यन्ताभ्यां लुङ्(), पूर्ववच्चङादिकार्यम्()। "डुढौके, तुत्रौके" इति। लिट, एकवचनम्(), तस्यैश्()। "अभ्यासस्यानचि" इत्यादि। अभ्यासस्य यत्? कार्यं विधीयते तदनचिपरे भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"वा चरिचलिपतिददोनामच्याक्याभ्यासस्य" (वा।६५८) इत्यागमविधानसामथ्र्याद्धलादिशेषेण न भवितव्यम्()। हलादिशेषे हि सत्यादेशस्यागमस्य च क()इआद्विशेषो नास्तीत्यादेशमेव विदध्यात्()। एवञ्च--अभ्यासलोपाभावात्? पारिशेध्यादचोऽन्यत्रैव भविष्यति॥

बाल-मनोरमा

ह्रस्वः २९, ७।४।५९

भू भूव् अ इति स्थिते--ह्रस्वः। "अत्र लोपोऽभ्यासस्ये"त्यतोऽभ्यासस्येत्यनुवर्तते। ह्रस्वश्रवणादचश्चेति परिभाषया अच इत्युपस्थितम्। तदाह-- अभ्यासस्याऽच इति। भु भूव् अ इति स्थितम्। यद्यपि "भवतेर" इति वक्ष्यमाणाऽकारविधिनैव सिद्धमिदं तथापि लुलावेत्याद्यर्थमावश्यकमिदमत्रैव न्याय्यत्वादुपन्यस्तम्।

---

सूत्रम्

काशिका-वृत्तिः

हलादिः शेषः ७।४।६०

अभ्यासस्य हलादिः शिष्यते, अनादिर् लुप्यते। जग्लौ। मम्लौ। पपाच। पपाठ। आट, आटतुः, आटुः। आदिशेषनिमित्तो ऽयम् अनादेर् लोपो विधीयते, तत्र अभ्यासजातेः आश्रयणात् क्वचिदपि वर्तमानो हलादिः अनदेः सर्वत्र निवृत्तिं करोति। अपरे तु ब्रुवते, शेषशब्दो ऽयं निवृत्त्या विशिष्टम् अवस्थानम् आह। तदवस्थानम् उक्तितो यद्यपि प्रधानम्, अविधेयत्वात् तु तदप्रधानम्। निवृत्तिरेव तु विधेयत्वात् प्रधानम्। तत्र अयम् अर्थो ऽस्य जायते, अभ्यासस्य अनादेर् हलो निवृत्तिः भवति इति। सा किम् इति आदेरविधेयां सतीम् अनिवृत्तिम् अपेक्षिष्यते इति।

लघु-सिद्धान्त-कौमुदी

हलादिः शेषः ३९८, ७।४।६०

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते। इति वलोपः॥

न्यासः

हलादिः शेषः। , ७।४।६०

"हलादिः" इति। हल्? चासावादिश्चेति हलादिः--कर्मधारयोऽयम्(), न तु षष्ठीसमासः--हलामादिर्हलादिः। यदि षष्ठीसमासः स्यात्(), तदायमर्थः स्यात्()--अभ्यासस्य यै हलस्तेषामादिः शिष्यत इति। तथा च--आनक्षतुः, आनक्षुरित्यत्र "अक्षू व्याप्तौ" (धा।पा।६५४) इत्यस्याजादित्वाद्()द्वितीयस्यैकाचोऽभावात्? प्रथमस्यैकाचो द्विर्वचने कृते यद्यप्यभ्यासादिः ककारो न भवति, तथापि हलादिर्भवति, तस्य शेषः प्रसज्येत। कर्मधारये तु न दोषः, तत्राभ्यासापेक्षं हलादित्वं विधीयते, न चात्र ककारोऽभ्यासादिः। तस्मात्? कर्मधारयोऽयम्()। "जग्लौ" "मम्लौ" इति। "ग्लै हर्वक्षये" (धा।पा।९०३), "म्लै गात्रविनामे" (धा।पा।९०४), "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्त्वम्(), "आत औ णलः" ७।१।३४ इत्यौत्त्वम्()। "आटतुः" आटुः" इति। "अत आदेः" ७।४।७० इत्यभ्यासस्य दीर्घत्वे कृते सवर्णदीर्घत्वम्()। ननु च शेषोऽवस्थानम्(), तच्चानेः सिद्धमेव, तत्किमर्थं विधीयते? इत्याह--"आदिशेषनिमित्तोऽयम्()" इत्यादि। आदिशषो निमित्तं यस्य लोपस्य स तथोक्तः। न ह्यत्रादेः शेषो विधीयते, किं तर्हि? तन्निमित्तोऽयमनादेर्लोपो विधीयते। सिद्ध एव ह्यादेरवस्थाने हलादिशेष इतीदं विधीयमानं नियमार्थं विज्ञायते--आदेरेव हलोऽवस्थानं भवति, त्वनादेरिति एवमादिशेषनिमित्तमनादेरदर्शनं विहितं भवति। यदि तह्र्यादिशेषनिमित्तोऽयमनादेर्लोपो विधीयते, एवं सत्यादुतुराटुरित्यत्र लोपो न भवति; निमित्ताभावात्(), अभ्यासस्य हलेव तावदादिर्नास्ति, कुतः पुनस्तस्य शेषः? इत्यत आह--"तत्र" इत्यादि। अनादिलोपे कत्र्तव्येऽभ्यासजातिराश्रीयते, नाभ्यासव्यक्तिः। तेन यद्यपि सर्वास्वभ्यासव्यक्तिषु हलादिर्न वत्र्तते, तथापि क्वचिदपि पपाचेत्यादौ वत्र्तमानो हलादिरनादेः सर्वत्राटतुः, आटुरित्येवमादावपि निवृतिं()त करोति; अभ्यासजातेरभिन्नत्वात्()। यैव हि पपाचेत्यादावभ्यासजातिः, सैवाटतुः आटुरित्यादावपि। "अपरे तु" इत्यादि। आटतुः, आटुरित्यादावनादेर्लोपं प्रतिपादयितुमपरे ब्राउवत इति। शेषशब्दोऽयं नावस्थानमात्रमाह, किं तर्हि? निवृत्त्या विशिष्टमवस्थानम्(), यद्येवम्(), अवस्थानस्य विशेष्यत्वात्? प्राधान्यम्(), निवृत्तेस्तु विशेषणावादप्राधान्यम्()। तथा च--परधानानुयायित्वादप्राधान्यं गुणानाम्()। यत्रैवाभ्यासस्य हलादेरवस्थानं पपाचेत्यादौ, तत्रैदानादेर्हलो निवृत्त्या भवितव्यम्(); ततः स एव दोषः--आटतुः, आटुरित्यादावनादेर्हलो निवृत्तिर्न प्राप्नोतीति? अत आह--"तदवस्थानम्()" इत्यादि। यद्यपि निशेष्यभूतं तदवस्थानं शेषशब्देनाभिधीयत इत्युक्तितः प्रधानम्? तथाप्यविधेयत्वादप्रधानम्()। अविधेयत्वं तु तस्य सिद्धत्वात्()। निवृत्तरेव विशेषणभूतापि विधेयत्वात्? प्रधानम्()। तथा चोक्तम्()--सिद्धमुपकारकं परार्थमङ्गम्(), साध्योऽनुपकारकस्त्वङ्गीति कृत्वा प्रधानम्()। तत्र निवृत्तौ विधेयत्वात्? प्रधानभूतायामयमस्य सूत्रस्यार्थो जायते--"अभ्यासस्यानादेर्हलो निवृत्तिर्भवति" इति। ततश्चासौ विधेयत्वात्? प्राधान्यमापन्ना सती किमित्यादेरविधेयामप्रधानभूतामनिवृत्तिमपेक्षिध्यते। केन कारणेनापेक्षिष्यते? न केनचिदित्यर्थः। न हि प्रधानस्य गुणानुय#आयित्वं युक्तम्()। तस्मादसत्यपि हलादेरवस्थानेऽवादेर्लोपेन भवितव्यमिति भावः॥

बाल-मनोरमा

हलादिः शेषः २८, ७।४।६०

हलादिः शेषः। "अत्र लोपोऽभ्यासस्ये"त्यस्मादभ्यासस्येत्यनुवर्तते। शिष्यत इति शेषः, कर्मणि घञ्। शिषधातुरितरनिवृत्तिपूर्वकाविस्थितौ। तदाह-- अभ्यासस्येत्यादिना। इति वलोप इति। भूव् भूव् इत्यत्र अभ्यासवकारस्य

लोप इत्यर्थः।

तत्त्व-बोधिनी

हलादिः शेषः २४, ७।४।६०

अभ्यासस्येति जातिपरो निर्देशस्तेन आटतुः आटुरित्यादौ तकारादिनिवृत्तिः सिध्यति, क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात्॥

---

सूत्रम्

काशिका-वृत्तिः

शर्पूर्वाः खयः ७।४।६१

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते। चुश्च्योतिषति। तिष्ठासति। पिस्पन्दिषते। शर्पूर्वाः इति किम्? पपाच। खयः इति किम्? सस्नौ। खर्पूर्वाः खय इति वक्तव्यम्। उचिच्छिषति इत्यत्र उच्छेः अन्तरङ्गत्वात् तुकि कृते द्विर्वचनम्, तत्र हलादिः शेषे सति अभ्यासे तकारः श्रूयेत।

लघु-सिद्धान्त-कौमुदी

शर्पूर्वाः खयः ६५१, ७।४।६१

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते। तस्तार। तस्तरतुः। तस्तरे। गुणोर्ऽतीति गुणः। स्तर्यात्॥

न्यासः

शर्पूर्वाः खयः। , ७।४।६१

पूर्वेण शरां सेषे प्राप्ते खयां शेष आरभ्यते। अनादिशेषश्चायमादिशेषं बाधते। न हि शरामवस्थाने खयां शेषशब्दो विशेषणमुपपद्यते। स हि निवृत्त्या विशिष्टमवस्थानमाह--इत्युक्तम्()। न चोभयोरवस्थाने निवृत्त्या विशिष्टमवस्थानं भवति। तस्मादादिशेषस्यायमनादिशेषोऽपवादः। "चुश्चोतिषति" इति। "श्चुतिक्षरणे" (धा।पा।४१), सन्(), इट्()। "तिष्ठासति" इति। "षष्ठा गतिनिवृत्तौ" (धा।पा।९२८)। "पिस्पन्दिषते" इति। "स्पदि किञ्चिच्चलने" (धा।पा।१४), अनुदात्तेत्(), इदित्वान्नुम्(), "पूर्ववत्सनः" १।४।६१ इत्यात्मनेपदम्()। "सस्नौ" इति। "ष्णा शौचे" (धा।पा।१०५२)। पूर्ववण्णल औत्वम्()। "खर्पूर्वाः" इत्यादि। "उचिच्छिवति" इति। "उच्छी विवासे" (धा।पा।२१६), सन्? उछिष्? इति स्थिते द्विर्वचनं प्राप्नोति, तुक्? च; तत्र वर्णाश्रयेणान्तरङ्गत्वात्? तुक्()। तस्मान्? कृते, द्विर्वचनं प्राप्नोति, चुत्वञ्च, ततर परत्वात् द्विर्वचने कत्र्तव्ये चुत्वस्यासिद्धत्वाद्()द्विर्वचनं प्राप्नोति छिष्()शब्दस्य। तत्र छकारस्य शेषो न प्राप्नोति; अशर्पूर्वत्वात्()। न ह्रं तकारः अर्भवति, ततश्च पूर्वेण हलादिशेषे कृते सत्यभासे तकारः श्रूर्यत।

अथापीदमस्ति--"पूर्वत्रासिद्धोयमद्विर्वचने" (जै।प।वृ।७०) इति चुत्वं पश्चाद्()द्विर्वचनं क्रियते, तथापि हलादिशेषेण छकारे निवृत्ते "निमित्तापाये नैमित्तिकस्याप्यपायः" (व्या।प।४७) इति चुत्वे निवृत्ते उचिच्छिषतीत्यतर तकार एवाभ्यासे श्रूयेत। तस्मात्? खर्पूर्वाः खय इति वक्तव्यन्()। एवं हि सति च्छकारस्य शेषे कृते तकारो निवत्र्तत इति न भवत्यनिष्टप्रसङ्गः॥

बाल-मनोरमा

शर्पूर्वाः खयः १०४, ७।४।६१

किन्तु लिटस्तादेशे "लिटस्तझयो"रिति तस्यैशि "लिटि धातो"रिति द्वित्वे "हलादिः शेषः" इत्यभ्यासे प्रथमहल्व्यतिरिक्तहलां निवृत्तौ सस्पर्धे इति प्राप्ते--शूर्पर्वाः। अभ्यासस्येति। "अत्र लोपोऽभ्यासस्ये"त्यतस्तदनुवृत्तेरिति

भावः। "शर्पूर्वाः" इत्यत्र शर् पूर्वो येभ्य इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन शर्न शिष्यते। शिष्यन्त इति। "हलादिः शेषः" इत्यतः शेष इत्यनुवृत्तं कर्मणि घञन्तं बहुवचनान्ततया विपरिणम्यत इति भावः। तथा च प्रकृते अभ्यासे खय् पकारः शिष्यते। "न न्द्राः संयोगादय" इति रेफस्य द्वित्वनिषेधो न शङ्क्यः, द्वितीयैकाजवयवस्यैव तन्निषेधात्। तदाह--पस्पर्ध इति। नच व्रवश्चेत्यत्राभ्यासे चकार एव शिष्येतेति वाच्यं, हलादिः शेष इत्यतो हि आदिरित्यप्यनुरवर्तते। शव्र्यतिरिक्तवर्णापेक्षया धात्वादिभूता इत्यर्थः। पस्पर्धाते, पस्पर्धिरे, पस्पर्धिषे पस्पर्धाथे, पस्पर्धिध्वे , पस्पर्धे पस्पर्धिवहे पस्पर्धिमहे इति लिटि रूपाणि सुगमानि। स्पर्धितेति। लुटि एध धातुवद्रूपाणि सुगमानीति भावः। स्पर्धिष्यत इति। लृटि एधदातुवद्रूपाणीति भावः। स्पर्धतामिति। लोटि एधवद्रूपाणीति भावः। अस्पर्धतेति। लङि एधिवद्रूपाणीति भावः। हलादित्वादडेव न त्वाडिति विशेषः। स्पर्धेतेति। विधिलिङि एधिवद्रूपाणि। अडागमः, न त्वाडिति विशेषः। अस्पर्धिष्यतेति। लृङि एधिवद्रूपाणि। अस्पर्धिष्टेति। लुङि एधिवद्रूपाणि। अडागमः, न त्वाडिति विशेषः। अस्पर्धिष्यतेति। लृङि एधिवद्रूपाणि। अडागमो विशेषः, न त्वाट्। गाधृ प्रतिष्ठेति। चतुर्थान्तो धातुः। ऋकारो "नाग्लोपिशास्वृदिता"मिति निषेधार्थः। अजगाधत् प्रतिष्ठा-- आधारे स्थितिः। ग्रन्थः-- ग्रन्थनं, रचनम्। जगाधे इति। लिटि द्वित्वादि। अभ्यासस्य ह्रस्वः। चुत्वम्। बाधृ इति। प्रतिघातः--पीडनम्। नाथृनाधृ इति। द्वितीयचतुर्थान्तौ धातू। उपतापः-- ज्वरप्रयुक्ता पीडा। आशीः-- आशासनम्। द्वितीयान्तस्य नाथृधातोर्विशेषमाह-- आशिषि नाथ इति। अत्र "नाथ" इति षष्ठी। "अनुदात्तङित" इत्यत आत्मनेपदमित्यनुवर्तते। अनुदात्तेत्वादेव सिद्धे नियमार्थमिदं वार्तिकं तदाह-- अस्याशिष्येवेति। आशासनार्थवृत्तेरेव नाथधातोरात्मनेपदम्। याच्ञाद्यर्थवृत्तेषु "शेषात्कर्तरी"ति परस्पैपदमेवेत्यर्थः। नाथत इति। आशास्ते इत्यर्थ-। अन्यत्रेति। याच्ञाद्यर्थे विद्यमानस्येत्यर्थः। अथ चतुर्थान्तस्य नाधधातोरुदाहरति-- नाधते इति। दधेति। चतुर्थान्तोऽयम्।

तत्त्व-बोधिनी

शर्पूर्वाः खयः ७८, ७।४।६१

शर्पूर्वाः। अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तेन शरो न शेषः, कि #ं तु खयामेव। इह स्पर्ध इत्यत्र रेफस्यापि द्वित्वं भवति, द्वितीयस्यैकाचः संबन्धिरेफस्यैव "नन्द्राः" इति निषेधादिति बोध्यम्। गाधृ। ऋकारो "नाग्लोपिशास्वृदिता"मिति निषेधार्थः। अजगाधत्। आस्पदं स्थापना अवस्थानं वा प्रतिष्ठा। एकत्र स्थापनं संदर्भो वा ग्रन्थः। नाथृ नाधृ। उपतापो रोगः। अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह---

आशिषि नाथ इति वाच्यम्। आशिष्येवेति। अत एकहल्मध्ये। एकशब्दोऽत्राऽसहायवचनः। एकयोर्हलोर्मध्ये इत्यर्थः। तद्व्याचष्टे-- असंयुक्तेति। इष्टानुरोधेन लिटीत्यावत्र्य आदेशविशेषणमेत्वस्य नमित्तं च क्रियत इत्याह--

---

सूत्रम्

काशिका-वृत्तिः

कुहोश् चुः ७।४।६२

अभ्यासस्य कवर्गहकारयोः चवर्गादेशो भवति। चकार। चखान। जगाम। जघान। हकारस्य जहार। जिहीर्षति। जहौ।

लघु-सिद्धान्त-कौमुदी

कुहोश्चुः ४५६, ७।४।६२

अभ्यासकवर्गहकारयोश्चवर्गादेशः॥

न्यासः

कुहोश्चुः। , ७।४।६२

"चखान" इति। "खनु अवदारणे" (ध।पा।८७८), द्विर्वचनम्(), तस्य चुत्वम्()--छकारः, "अभ्यासे चर्च" ८।४।५३ इति छकारस्य चकारः। "जघाति" इति। "लिट()न्यतरस्याम्()" २।४।४० इत्यदेर्घस्लादेशः, अभ्यासस्य चुत्वम्()। नादवतो महाप्राणस्य स्थाने तादृश एव झकारः, तस्यापि जश्त्वम्()--जकारः। "जहार" इति। "ह्मञ्? हरणे" (धा।पा।८९९)। "जिहीर्षति" इति। "इको झल्()" १।२।९ इति सनः कित्त्वम्(), "अज्झनगमां ६।४।१६ इति दीर्घत्वम्(), "ऋत इद्धातोः" ७।१।१०० इतोत्त्वम्(), रपरत्वम्(), "हलि च" ८।२।७७ इति दीर्घत्वम्(), हीर्ष-इत्यस्य द्विर्वचनम्()॥

बाल-मनोरमा

कुहोश्चु ९१, ७।४।६२

एवं च --कृ कृ ए इति स्थिते-- कुहोश्चुः। कु ह् इत्यनयोद्र्वन्द्वात्षष्ठीद्विचवनम्। "अत्र लोपोऽभ्यासस्ये"त्यतोऽभ्यासस्येत्यनुवर्तते। तदाह--अभ्यासेति। यद्यपि स्थानिनां कवर्गीयाणां हकारस्य च षट्()त्वात्, चवर्गीयाणां पञ्चत्वान्न यथासङ्ख्यं, नापि स्थानत आन्तर्यं, कण्ठतालुस्थानभेदात्। आभ्यन्तरप्रयत्नसाम्यं तु कवर्गचवर्गयोरविशिष्टम्। हकारचवर्गयोस्तु नास्त्येव तत्, अतो बाह्रप्रयत्नत एवान्तर्यमिह व्यवस्थापकमाश्रयणीयम्। तत्र प्रथमस्य कवर्गीयस्य पर्थम एव चवर्गीयो भवति, अघोष()आआसविवाराऽल्पप्राणप्रयत्नसाम्यात्, न तु द्वितीयः, महाप्राणत्वात्। नापि तृतीय पञ्चमौ, घोषसंवारनादप्रयत्नत्वात्। नापि चतुर्थः,घोषसंवारनादमहाप्राणप्रयत्नत्वात्। तथा द्वितीयस्य कवर्गीयस्य द्वितीय एव चवर्गीयो भवति, अघोष()आआसविवाराऽप्रामप्रयत्नत्वात्, न तु प्रथमः, अल्पप्राणत्वात्। नापि तृतीयपञ्चमौ, घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। नापि चतुर्थःष घोषसंवारनादप्रयत्नत्वात्। तथा तृतीयस्य कवर्गीयस्य तृतीय एव चवर्गीयो भवति। घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। न तु प्रथमः, अघोष()आआसविवारप्रयत्नत्वात्। अत एव न द्वितीयोऽपि, महाप्रामप्रयत्नत्वाच्च। नापि चतुर्थः महाप्राणत्वात्। नापि पञ्चमः, घोषसंवारनादाल्प्राणसाम्येऽपि अनुनासिकतया भेदात्। तथा चतुर्थस्य कवर्गीयस्य चतुर्थ एव चवर्गीयो भवति, घोषसंवारनादमहाप्राणप्रयत्नत्वात्। न तु प्रथमः, अघोष()आआसविवाराल्पप्राणप्रयत्नत्वात्। नापि द्वितीयः, अघोषविवार()आआसप्रयत्नत्वात्। नापि तृतीयपञ्चमौ, अल्पप्राणत्वात्। पञ्चमस्य तु कवर्गीयस्य अनुनासिकत्वाञ्ञकार एव। हकारस्य तु घोषसंवारनादमहाप्राणवतस्तादृशो वर्गचतुर्थ एव झकार इति विवेकः। प्रकृते तु क कृ ए इति स्थिते अभ्यासककारस्य चकारे ऋकारस्य यणि रेफः। तदाह--एधांचक्र इति। एककर्तृका भूतानद्यतनपरोक्षा वृद्धिरूपा कियेत्यर्थ-। एधांचक्राते इति। कृञो लिट आतामि टेरेत्वम्। "द्वर्वचनेऽची"ति यणि निषिद्धे "कृ" इत्यस्य द्वित्वे उरदत्वम्। हलादिः शेषः। चत्र्वम्। यण्। न च आतामित्यस्य द्वित्वनिमित्तत्वेऽपि आकारस्याऽचो द्वित्वनिमित्तत्वाऽभावात्कथमिह "द्वर्वचनेऽची"ति यण्()निषेध इति वाच्यं, साक्षाद्वा, समुदायघटकतया वा द्वित्वप्रयोजकस्यैव द्वित्वनिमित्तशब्देन विवक्षितत्वादिति भावः। एधांचक्रिर इति। झस्य इरेच्। कृ इत्यस्य द्वित्वादि पूर्ववत्।

---

सूत्रम्

काशिका-वृत्तिः

न कवतेर् यङि ७।४।६३

कवतेः अभ्यासस्य यङि परतः चुः न भवति। कोकूयते उष्ट्रः। कोकूयते स्वरः। कवतेः इति विकरणनिर्देशः कौतेः कुवतेश्च

निवृत्यर्थः। तयोः चुत्वम् एव भवति। चोकूयते। यङि इति किम्? चुकुवे।

न्यासः

न कवतेर्यङि। , ७।४।६३

पूर्वेण प्राप्तस्य चुत्वस्यायं निषेधः। "कोकूयते" इति। "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः, "गुणो यङ्लुकोः" ७।४।८२ इत्यभ्यासस्य गुणः। अथ विकरणनिर्देशः किमर्थः, न "कोः" इत्येवोच्येत? इत्यत आह--"कवतेः" इत्यादि। "कुङ्? शब्दे" (धा।पा।१४०१) इति तौदादिकः, "कु शब्दे" (धा।पा।१०४२) इत्यादादिकः, "कुङ्()" (धा।पा।१५१) इति मौदादिकः शब्दार्थ एव; तत्र भौवादिकस्य ग्रहणं यथा स्यात्(), इतरयोर्मा भूदित्येवमर्थो विकरणनिर्देशः। ननु चानयोर्निवृत्तेरेतत्? फलम्()--चोकूयत इत्येतदपि रूपं यथा स्यादिति, एतच्च "कोः" इत्यपि निर्देशे निरनुबन्धकपरिभाषया कौतेरेव निरनुवन्धकस्य ग्रहणे सति सिध्यत्येव, तस्मात्? "कोः" इत्येवं निर्देशः कत्र्तव्यः? नैतदेवम्(); सत्यपि हि शब्दार्थत्वे भिद्यत एवैषामभिधेयम्()। तथा हि--कवतिस्तावदव्यक्तशब्दे वत्र्तते--उष्ट्रः कोकूयत इति; कुवतिरप्यात्र्तस्वरे वत्र्तते--चोकूयते बृषल इति, पोडित इत्यर्थः; कौतिस्तु शबदमात्रे। तस्माद्विशिष्यटार्थस्य परिग्रहो यथा स्यादित्येवमर्थो विकरणनिर्देशः कत्र्तव्यः। ननु लुग्विकरणपरिभाषया कौतेर्न भविष्यतीति, तत्किमर्थं तन्निवृत्तयर्थता विकरणस्योपपद्यते? एवं मन्यते--कुवतिनिवृत्त्यर्थोऽवश्यं विकरणनिर्देशः कत्र्तव्यः, सोऽन्यार्थः क्रियमाणः कौतेर्निवृत्त्यर्थोऽपि भवति, तेन लुग्विकरणपरिभाषा (व्या।प।५०) अत्र कौतेर्निवृत्त्यर्थमाश्रयितव्या न भवति। "चुकुवे" इति। पूर्ववत्? तशब्दस्यैच्? "अचि श्नुधातु" ६।४।७७ इत्यादिनोवङ्()॥

तत्त्व-बोधिनी

न कवतेर्यङि ४०४, ७।४।६३

न कवतेर्यङि। इह कोरित्येव वाच्ये कवतेरिति शपा निर्देशात्कूङ् शब्द इति भ्वादिरेव गृह्रते न तु कु शब्द इत्यदादिः, कूङ् शब्द इति तुदादिश्चेत्याशयेनाह-- कौतिकुवत्योस्त्विति। ननु "को"रित्युक्तेऽपि कूङः प्रसङ्गो नास्ति, दीर्घान्तत्वात्, लुग्विकरणपरिभाषया च कौतेरपि प्रसङ्गो नास्तीति चेत्। अत्राहुः-- "को"रित्युक्ते तु निनुबन्धपरिभाषाया अपि जागरूकत्वादुभयोग्र्रहणं स्यादिति कौतिव्यावृत्त्यर्थं शपा निर्देश कर्तव्यः। कृते च तस्मिन्कुवतिमपि व्यावर्तयतीत्यत्र तात्पर्यमिति। "कुङ" इत्येवाऽत्र सुवचम्।

---

सूत्रम्

काशिका-वृत्तिः

कृषेश्छन्दसि ७।४।६४

कृषेः छन्दसि विषये यङि परतः अभ्यासस्य चुः न भवति। करिकृष्यते यज्ञकुणपः। छन्दसि इति किम्? चरीकृष्यते कृषीवलः।

न्यासः

कृषेश्छन्दसि। , ७।४।६४

"करीकृष्यते" इति। "कृष विलेखने" (धा।पा।९९०) "रीगृहुपधस्य" ७।४।९० इति रीगागमः॥

---

सूत्रम्

काशिका-वृत्तिः

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्ते

ऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदत्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्याऽगनीगन्ति इति च ७।४।६५

दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिकते अलर्षि आपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतः दविद्युतत् तरित्रतः सरिसृपतम् वरीवृजत् मर्मृज्य आगनीगन्ति इत्येतानि अष्टादश छन्दसि विषये निपात्यन्ते। दाधर्ति दर्धर्ति दर्धर्षि इति धारयतेः, धृङो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च। दाधर्ति। एवं दर्धर्ति। श्लौ रुकभ्यासस्य निपात्यते। तथा दर्धर्षि इति। अत्र च यल्लक्षणेन अनुपपन्नं तत् सर्वं निपातनात् सिद्धम्। बोभूतु इति भवतेः यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते। नैतदस्ति प्रयोजनम्, अत्र भूसुवोस्तिङि ७।३।८८ इति गुणाभावः सिद्धः? ज्ञापनार्थं तर्हि निपातनम् एतत्। ज्ञापयति, अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवति इति। बोभोति, बोभवीति। तेतिक्ते तिजेः यङ्लुगन्तस्य आत्मनेपदं निपात्यते। यङो ङित्त्वात् प्रत्ययलक्षणेन आत्मनेपदं सिद्धम् एव? ज्ञापनार्थं तु आत्मनेपदनिपातनम्, अन्यत्र यङ्लुगन्तादात्मनेपदं न भवति। अलर्षि इति इयर्तेः लटि सिपि अभ्यासस्य हलादिः शेषापवादो रेफस्य लत्वं निपात्यते। सिपा निर्देशो ऽतन्त्रम्, तिप्यपि दृश्यते अलर्ति दक्षः। आपनीफणतिति फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीक् निपात्यते। संसनिष्यदतिति स्यन्देः संपूर्वस्य यङ्लुक्, शतर्येव अभ्यासस्य निक्, धातुसकारस्य षत्वं निपात्यते। न चास्य सम्पूर्वता तन्त्रम्, अन्यत्र अपि हि दृश्यते, आसनिष्यदतिति। करिक्रतिति करोतेः यङ्लुगन्तस्य शतरि चुत्वभ्यावः, अभ्यासककारस्य रिगागमो निपात्यते। कनिक्रदतिति क्रन्देः लुङि च्लेः अङादेशः, द्विर्वचनम् अभ्यासस्य, चुत्वाभावः, निगागमश्च निपात्यते। तथा चास्य हि विवरणं कृतम्। अक्रन्दीतिति भाषायाम्। भरिभ्रतिति बिभर्तेः यङ्लुगन्तस्य शतरि भृञाम् इत् ७।४।७६ इति इत्वाभावो जश्त्वाभावो ऽभ्यासस्य रिगागमः निपात्यते। दविध्वतः इति ध्वरतेः यङ्लुगन्तस्य शतरि जसि रूपम् एतत्। अत्र अभ्यासस्य विगागमः ऋकारलोपश्च निपात्यते। दविध्वतो रश्मयः सूर्यस्य। दविद्युततिति द्युतेः यङ्लुगन्तस्य शतरि अभ्यासस्य अम्प्रसारणाभावः अत्त्वम्, विगागमश्च निपात्यते। तरित्रतः इति तरतेः शतरि श्लौ षष्ठ्येकवचने अभ्यासस्य रिगागमः निपात्यते। सरीसृपतम् इति सृपेः शतरि श्लौ द्वितीयैकवचने अभ्यासस्य रीगागमः निपात्यते। वरीवृजतिति वृजेः शतरि श्लौ रीगागमः निपात्यते अभ्यासस्य। मर्मृज्य इति मृजेः लिटि णलि अभ्यासस्य रुगागमः धातोश्च युगागमो निपात्यते। ततो मृजेर् वृद्धिः ७।२।११४ न भवति, अलघूपधत्वात्। लघूपधगुणे प्राप्ते वृद्धिरारभ्यते। आगनीगन्ति इति आङ्पूर्वस्य गमेर्लति श्लौ अभ्यासस्य चुत्वाभावः नीगागमश्च निपात्यते। वक्ष्यन्ती वेदागनीगन्ति कर्णम्। इतिकरणम् एवं प्रकारणाम् अन्येषाम् अप्युपसङ्ग्रहार्थम्।

न्यासः

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजनमर्मृज्यागनीगन्तीति च। , ७।४।६५

चकारश्छन्दसीत्यनुकर्षणार्थः। "धारयतेः" इति। "धृञ्? धारणे" (धा।पा।९००) "धृङ्? अवस्थाने" (धा।पा।१४१२) "धृङ्? अवध्वंसने" (धा।पा।९६०)--इत्येताषां ण्यन्तानां ग्रहणम्(), "धृङो वा" इति। अनन्तरोक्तयोरण्यन्तयोः। "श्लौ यङ्लुकि वा" इति। तत्र तावत्? "दाधर्त्ति इति--यदा धारयतेः श्लौ निपात्यते, तदा णिलोपोऽभ्यासस्य दीर्घत्वं निपात्यते। यदा तु यङ्लुकि, तदाऽनेकाच्त्वाद्यङ्? न प्राप्नोति, सोऽपि निपात्यते, उपधाह्रस्वत्वञ्च। णिलोपस्त्वार्धधातुकत्वादेव यङः "णेरनिटि" ६।४।५१ इत्येवं सिद्धः। भ्यासस्य दीर्घत्वमपि "दीर्घोऽकितः" ७।४।८३ इत्येवं सिद्धम्()। "दर्धर्ति, दर्धर्षि" इति। अत्रापि यदा धारयतेः श्लौ तदाऽभ्यासस्य रुगागमो णिलोपश्च। श्लुस्तु सर्वत्र "बहुलं छन्दसि" २।४।७६ इत्यनेनैव वेदितव्यः। यदा तु यङ्लुकि, तदा "दीर्घोऽकितः" ७।४।८३ इत्यनेन दीर्घत्वे प्राप्ते तदभावश्च निपात्यते। यदा धृङः--

दाधर्तीति श्लौ निपात्यते, तदा द्विर्वचने कृतेऽभ्यासस्य दीर्घत्वं निपात्यते। यदा तु तस्यैव धृङो यङ्लुकि तदाऽस्यासस्य "ऋतश्च" ७।४।९२ इति प्राप्तस्य रुगादेरभावो निपात्यते। "दर्धर्ति, दर्धर्षि" इति। अत्रापि यदा ध#ऋङ्(), श्लौ, तदाभ्यासस्य रुगागमो निपात्यते; यदा तु यङलुकि, तदा पूर्ववत्? प्राप्तस्य दीर्घस्याभावो निपात्यते, न तु रुगागमः; तस्य हि "रुग्रिकौ च लुकि" (७।४।९१) इत्येवं सिद्धत्वात्? परस्मैपदं च व्यत्ययो बहुलम्()" ३।१।८५ इति। "बोभूतु" इति। "अन्यत्र" इति। लोट्प्रथमपुरुषस्यैकवचनापेक्षमन्यत्वं वेदितव्यम्()। "बोभवीति" इति। अदादित्वाच्छपो लुक्? "बहुलं छन्दसि" २।४।७३ इति बहुलवचनत्वाद्भवति; "यङो वा" ७।३।९४ इति पक्षे ईट्()। "तेतिषते" इति। "तिजेः" इति। "तिज निशाने" (धा।पा।९७१) इत्येतस्य। ननु च यङो ङित्वात्? प्रत्ययलक्षणेनात्मनेपदं १।१।६१ सिद्धम्(), एतत्? किमर्थं निपात्यते? इत्याह--"यङो ङित्वात्()" इत्यादि। ज्ञापनार्थमात्मनेपदं सिद्धम्()। ज्ञापनार्थमात्मनेपदं निपात्यत इति दर्शयति। ज्ञापनस्य तु प्रयोजनम्()--अन्यत्र यङ्लुगन्तादात्मनेपदं न भवतीति--भावः, बोभवीतीति। "अलर्षि" इति। "ॠ सृ गतौ" (धा।पा।१०९८,१०९९)--इत्यस्य जौहोत्यादिकस्य "उरत्()" ७।४।६६ इत्यत्वे कृते रपरत्वे च हलादिशेषः प्राप्नोति, तदपवादौ रेफस्य लत्वं निपात्यते। किं पुनः कारणं सिपा निर्देशोऽयमतन्त्रमित्येवं व्याख्यायते? इत्याह--"तिप्यपि" इत्यादि। "फणतेः" इति। "फण गतौ" (धा।पा।८२१)--इत्येतस्य। "स्यन्देः" इति। "स्यन्दू प्ररुआवणे" (धा।पा।७६१)--इत्येतस्य। किमर्थं पुनः सम्पूर्वस्यातन्त्रत्वं व्याख्यायते? इत्याह--"अत्रापि हि" इत्यादि। "करिक्रत्()" इति। "डुकृञ्? करणे" (धा।पा।१४७२)। यणादेशे कृतेऽनृकारान्तत्वात्? "ऋतश्च" ७।४।९२ इत्यभ्यासस्य रिगागमो न प्राप्नोति, स निपात्यते। "क्रन्देः" इति। "कदि क्रदि क्लदि आह्वाने रोदने च" (धा।पा।७७२,७७३,७७४) इत्येतस्य। कथं पुनज्र्ञायते लुङीत्येतन्निपातनम्()? इत्याह--"अस्य हि" इत्यादि। यस्माल्लुङन्तेन क्रन्दतेरर्थो निर्दिश्यते, ततो ज्ञायते--लुङ्येतन्निपातनमिति। अत्र चाभ्यासस्य रीगागमो निपात्यत एव। "विभर्तेः" इति। "डुभृञ्? धारणपोषणयोः" (धा।पा।१०८७) इत्यस्य। "ध्वरतेः" इति। "ध्वृ हूच्र्छने" (धा।पा।९३९)। "द्युतेः" इति। "द्युत दीप्तौ" (धा।पा।७४१) इत्यस्य। "सम्प्रसारणाभावः" इति। "द्युतिस्वाप्योः सम्प्रसारणम्()" ७।४।६७ इति सम्प्रसारणं प्राप्नोति, अतस्तदभावो निपात्यते। "तरतेः" इति। "तॄ? प्लवनतरणयोः" (धा।पा।९६९) इत्यस्य। "सृपेः" इति। "गम्लृ सृप्लृ गतौ" (धा।पा।९८२,९८३) इत्यस्य। "वृजेः" इति। "वृजो वर्जने" (धा।पा।१८१२) इत्येतस्य। "मर्मृज्य" ति। "मृजू शुद्धौ" (धा।पा।१०६६) इत्येतस्य णलि रूपम्()। "आगनीगन्ति" इति। एतदपि सटि तिपि। इतिकरणस्य प्रकारार्थतां दर्शयितुमाह--"एवम्प्रकाराणाम्()" इत्यादि। दाधर्त्तिप्रभृतीनामिव येषां छन्दस्यलाक्षणिकं कार्यं दृश्यते त एवम्प्रकारा दाधर्त्तिसदृशा इत्यर्थः। के पुनस्ते? गलगत्रीत्येवमादयः। "गृ? निगरणे" (धा।पा।१४१०) इत्येतस्य यङ्लुकि श्लौ वा गलगत्रीति रूपम्(), अभ्यासस्य चर्त्वाभावः, हलादिशेषापवादः, रेफस्य लत्वं च निपात्यते॥

---

सूत्रम्

काशिका-वृत्तिः

उरत् ७।४।६६

ऋवर्णान्तस्य अभ्यासस्य अकारादेशो भवति। ववृते। ववृधे। शशृधे। नर्नर्ति, नरिनर्ति, नरीनर्ति इत्येवम् आदौ अभ्यासविकारेषु अपवादो न उत्सर्गान् विधीन् बाधते इति उः अदत्वे कृते रुगादय आगमाः क्रियन्ते।

लघु-सिद्धान्त-कौमुदी

उरत् ४७५, ७।४।६६

अभ्यासऋवर्णस्यात् प्रत्यये। रपरः। हलादिः शेषः। वृद्धिः। गोपायाञ्चकार। द्वित्वात्परत्वाद्यणि प्राप्ते -----।

न्यासः

उरत्?। , ७।४।६६

छन्दसीति निवृत्तम्(); पूर्वसूत्रे च कारानुकृष्टत्वात्()। "ववृते, ववृधे, शशृधे" इति। "वृतु वर्त्तने" (धा।पा।७५८), "वृधु वृद्धौ" (धा।पा।७५९), "शृधु शब्दकुत्सायाम्()" (धा।पा।७६०), लिट्(); तत्राद्ययोरनुदात्तेत्त्वादात्मनेपदम्(), इतरत्र स्वरितेत्त्वात्(); पूर्ववदेव द्विर्वचनम्(), हलादिशेषे च कृत ऋवर्णान्ततयामुपजातायामद्भावः, रपरत्वम्(), हलादिशेषः। "नर्नर्त्ति, नरिनर्त्ति, नरीनर्त्ति" इत्येवमादौ "ऋदुपधस्य च" [७।४।९०](#) इति, "रुग्रिकौ च लुकि" [७।४।९१](#) इति वा परत्वादपवादेषु कृतेषु रीगादिषु ऋवर्णान्ताभावादनेन न भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"नर्नर्ति" इति॥

बाल-मनोरमा

उरत् ९०, ७।४।६६

उरत्। उः--अदिति छेदः। "ऋ"इत्यस्य उरिति षष्ठ()एकवचनम्। "अत्र लोपोऽभ्यासस्ये"त्यस्मादभ्यासस्येत्यनुवर्तते। अङ्गस्येत्यधिकृतं। तद्वशात्प्रत्यये परत इति लभ्यते। प्रत्यये परत एव अङ्गसंज्ञाविधानात्। तदाह--अभ्यासऋवर्णस्येत्यादिना। रपरत्वमिति। अभ्यासऋवर्णादेशस्याऽकारस्योरण्()रपर इति रपरत्वमित्यर्थः। तथा च कर् कृ ए इति स्थिते। हलादिः शेष इति। रेफस्य निवृत्तिरिति भावः। प्रत्यये किमिति। अङ्गेनैव प्रत्ययस्याक्षिप्तत्वात्प्रत्यये परत इति किमर्थमित्यर्थः। वव्रश्चेति। "ओ व्रश्चू च्छेदने" , लिटि णल् द्वित्वं। लिट()भ्यासस्येत्यभ्यासरेफस्य सम्प्रसारणमृकारः। उरत्। रपरत्वम्। हलादिः। शेषः। वव्रश्चेति रूपम्। अत्र अभ्यासऋवर्णस्य रेफस्थानिकस्य सम्प्रसारणस्य य उरदत्वसम्पन्नोऽकारस्तस्य अचः परस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणतया तस्मिन्परे वकारस्य "न सम्प्रसारणे सम्प्रसारण"मिति निषेधान्न सम्प्रसारममिति स्थितिः। उरदित्यत्र "प्रत्यये परत" इत्यनुक्तौ तु सम्प्रसारणभूतऋकारस्थानिकस्य अकारस्य परनिमित्तकत्वाऽभावेन स्थानिवत्त्वाऽप्रसक्तेः सम्प्रसारणत्वाऽभावात्तस्मिन् परतो "न सम्प्रसारणे सम्प्रसारण"मिति निषेधो न स्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

द्युतिस्वाप्योः सम्प्रसारणम् ७।४।६७

द्युति स्वापि इत्येतयोः अभ्यासस्य सम्प्रसारणं भवति। विदिद्युते। व्यदिद्युतत्। विदिद्योतिषते। विदिद्युतिषते। विदेद्युत्यते। स्वापेः सुष्वापयिषति। स्वापिः ण्यन्तो गृह्यते, तस्य अभ्यासनिमित्तेन प्रत्ययेन आनन्तर्ये सति सम्प्रसारनम् इष्यते। इह न भवति, स्वापयतेर् ण्वुल् स्वापकः, तस्मात् क्यचि स्वापकीयति, स्वापकीयते, सन् सिष्वापकीयिष्ति।

लघु-सिद्धान्त-कौमुदी

द्युतिस्वाप्योः सम्प्रसारणम् ५३९, ७।४।६७

अनयोरभ्यासस्य सम्प्रसारणं स्यात्। दिद्युते॥

न्यासः

द्यूतिस्वप्योः सम्प्रसारणम्?। , ७।४।६७

हलादिशेषे प्राप्ते तस्यापवादौ द्युतिस्वाप्योः सम्प्रसारणमारभ्यते। "विदिद्युते" इति। "द्युत दीप्तौ" (धा।पा।७४१), लिट्(), अनुदात्तेत्त्वादात्मनेपदम्(); तत्र सम्प्रसरणमनेन, "सम्प्रसारणाच्च" [६।१।१०४](#) इति परपूर्वत्वम्()। "व्यद्युतत्()" ति।

ण्यन्ताल्लुङ; श्लेश्चङ्(), णिलोपः उपधाह्रस्वत्वम्(), द्विर्वचनम्(), अडागमः। "विदिद्युतिषते, विदिद्योतिषते" इति। सन्(), "रलो व्युपधात्()" १।२।२६ इत्यादिना विकल्पेन कित्त्वम्()। यदा कित्वं नास्ति, तदा लघूपधगुणः, "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। "सुस्वापयिषति" इति। "ञिष्वप्? शये" (धा।पा।१०६८), णिच्(), तदन्तात्? सन्()। किं कारणं ण्यन्तस्योदाहरणमुपन्यस्तम्()? इत्यत आह--"स्वपिण्र्यन्तो गृह्नते" इति। तेन ण्यन्तस्योदाहरणमुपदर्शितमित्यभिप्रायः। ण्यन्तस्य ग्रहणं स्वापेरिति निर्देशादेव विज्ञायते। न ह्रण्यान्तस्यैवंविधो निर्देश उपपद्यते। अपि च--अण्यन्तस्य योऽब्यासस्तस्यानेनैव शास्त्रेण सम्प्सारणं सिद्धम्()। तथा हि--लिटि तावत्? "लिट()भ्यासस्योभयेषाम्()" ६।१।१७ इत्यनेनैव सिद्धम्(), सनि तु "रुदविद" १।२।८ इत्यादिना सनः कित्त्वे सति वच्यादिसूत्रेण ६।१।१५ कृतसम्प्रसारण एव सुपिभूतो द्विरुच्येत, यङ्यपि "स्वपिस्यमिव्येञां यङि" ६।१।१९ इति कृतसम्प्रसारण एवासौ द्विरुच्यते। तस्मादण्यन्तस्यानेन शास्त्रेण सम्प्रसारणस्य सिद्धत्वात्? स्वापिण्र्यन्तो गृह्नते। यदि स्वापिण्र्यन्तो गृह्नते। तदा स्वापयतेर्ण्वुल्()--स्वापकः, स्वापकमिच्छतीति क्यच्(), स्वापकीय इति स्थिते स्वापकीयितुमिच्छतीति सन्()--सिध्वापकीयिषति, अत्रापि सम्प्रसारणं प्राप्नोति? इत्याह--"तस्य" इत्यादि। तस्य स्वापेरभ्यासस्य नि मत्तं यः प्रत्ययस्तेनानन्तर्ये सत्यव्यवधान इदं सम्प्रसारणमिष्यते, तेन सिध्वापकीयिषतीत्यत्र न भवति। न ह्रभ्यासनिमित्तं यः प्रत्ययः इह स स्वापेरनन्तरः; ण्वुला क्यचा च व्यवधानात्()। कथं पुनरभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति सम्प्रसारणं लभ्यते, यावता नायं विशेषः सूत्रोपात्तः? एवं मन्यते--अभ्यासेनाभ्यासनिमित्तं यः प्रत्ययः सन्निधापितः, तस्य प्रत्ययविशेषनिमित्तत्वात्(); तत्र लेनाभ्यासनिमित्तेन प्रत्ययेन स्वापिरङ्गं विशिष्यते--अभ्यासनिमित्ते प्रत्यये यदङ्गं स्वापिरिति। एवञ्च विशेष्यविशेषणभावे सक्यभ्यासनिमित्ते प्रत्ययेऽनन्तरे सति स्वापेरङ्गस्य योऽभ्यासस्तस्यैव सम्प्रसारणेन भवितव्यम्()। न तु व्यवहितेन प्रत्ययान्तरेण हि यो व्यवहितः प्रत्ययः सन्नभ्यासे निमित्त तदपेक्षया स्वापिरङ्गं भवति, न च सिध्वापव्यवहितेन प्रत्ययान्तरेण हि यो व्यवहितः प्रत्ययः सन्नभ्यते निमित्तं तदपेक्षया स्वापिरङ्गं भवति, न च सिध्वापकौयिषतत्यभ्यासनिमित्तं यः प्रत्ययः स स्वारेरङ्गस्यानन्तरः, यस्तु स्वापेरनन्तरो ण्वुल्? तदपेक्षया स्वापिरङ्ग भवति, न चासावभ्यासनिमित्तं भवति। इह तर्हि कस्मान्न भवति--स्वपनं स्वापो घञ्(), स्वापं करोतति णिच्(), स्वापयितुमिचछतीति सन्? सिष्वापयिषतीति? उच्यते; अकारलोपश्य स्थानिवद्भावात्? स्वापेर्योऽभ्यासस्तस्य सम्प्रसारणेन भवितव्यम्()। न चाकारलोपस्य स्थानिवद्भावे सति स्वापेरभ्यासः, किं तर्हि शब्दान्तरस्य स्वाप इत्येतस्य॥

बाल-मनोरमा

द्युतिस्वाप्योः संप्रसारणम् १८३, ७।४।६७

द्युतिस्वाप्योः। अभ्यासस्येति। "अत्र लोपोऽभ्यासस्ये"त्यतस्तदनुवृत्तेरिति भावः। दिद्युते इति। द्वित्वे "हलादिः शेषः" इत्यनेन यकारस्य लोपे प्राप्ते तदपवादत्वेन "द्युतिस्वाप्यो"रिति संप्रासरणे, "संप्रसारणाच्चे"ति उकारस्य पूर्वरूपे रूपम्।

तत्त्व-बोधिनी

द्युतिस्वाप्योः संप्रसारणम् १५६, ७।४।६७

द्युतिस्वाप्योः। "स्वापी"ति णिजन्तस्य ग्रहणम्। दिद्युते इति। संप्रसारणे कृते "संप्रसारणाच्चे"ति पूर्वरूपम्। तेनेह न--स्वापेर्ण्वुल् स्वापकः, तमिच्छति स्वापकीयति, ततः सन् सिस्वापकीयिषति।

---

सूत्रम्

काशिका-वृत्तिः

व्यथो लिटि ७।४।६८

व्यथेर् लिटि परतो ऽभ्यासस्य सम्प्रसारणं भवति। विव्यथे, विव्यथाते, विव्यथिरे। हलादिः शेषेण यकारस्य निवृत्तौ प्राप्तायां सम्प्रसारणं क्रियते, वकारस्य न संप्रसारने संप्रसारणम् ६।१।३६ इति प्रतिषिद्यते। लिटि इति किम्? वाव्यथ्यते।
न्यासः
व्यथो लिटि। , ७।४।६८

"विव्यथे" इति। "व्यथ भयचलनयोः" (धा।पा।७६४), अनुदात्तेत्त्वादात्मनेपदम्()। अथ यकारस्य हलादिशेषेण निवृत्त्या भवितव्यम्(), वकारस्य सम्प्रसारणेन? इति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"यकारस्य" इत्यादि। "वाव्यथ्यते" इति। यङ्()॥
बाल-मनोरमा
व्यथो लिटि १९२, ७।४।६८

व्यथधातुर्द्वितीयान्तः। व्यथो लिटि। "अत्र लोपःर" इत्यतोऽभ्यासस्येति, "ग्रुतिस्वाप्यो"रत्यतः संप्रसारणमिति चानुवर्तते। तदाह--व्यथोऽभ्यासस्येत्यादिना। हलादिशेषापवाद इति। व्यथ् व्यथ् ए इति स्थिते हलादिशेषलभ्यं यकारस्य लोपं बाधित्वा संप्रसारणमित्यर्थः। तथा च यकारस्य इकारे पूर्वरूपे विव्यथे इति रूपम्। वकारस्य तु न संप्रसारणं, "न संप्रसारणे संप्रसारण"मिति निषेधात्। ननु संप्रसारणेन हलादिशेषबाधे थकारस्यापि निवृत्तिर्न स्यादित्यत आह-- थस्येति। यकारलोपस्य बाधं विना संप्रसारणस्य प्रवृत्त्यनुपपत्तेस्तेन तद्बाधेऽपि थकारलोपस्य बाधे प्रमाणाऽभावादिति भावः। मृद मर्दने इति। ऋदुपधोऽयम्। मर्दते। ममृदे। क्षिजधातुरिदित्। क्षञ्जते। चक्षञ्जे। नु घटादिगणेऽस्य पाठो व्यर्थः, क्षञ्जयतीत्यत्र णौ नुमि कृते अकारस्यानुपधात्वेन उपधादीर्घस्याऽप्रसक्त्या "मितां ह्रस्वः" इत्यस्याऽप्रवृत्तावपि विशेषाऽभावादनुपधात्वेन "मितां ह्रस्व" इत्यस्य प्रसक्त्यभावाच्च। अत एव अक्षञ्जि क्षञ्जं क्षञ्जिमित्यत्रापि "चिण्णमुलो"रिति दीर्घविकल्पस्यापि न प्रसक्तिरित्यत आह--मित्त्वसामथ्र्यादिति। दक्ष गतीति। ननु "दक्ष वृद्धौ शीघ्रार्थे चे"त्यनुदात्तेत्सु पाठादेव सिद्धे किमर्थमिह पाठः?, अर्थनिर्देशस्योपलक्षणत्वादेव गतिहिंसार्थकत्वस्यापि संभवादित्यत आह-- वृद्धिशैघ्र्ययोरिति। मित्त्वसामथ्र्यादनुपधात्वेऽपि चिण्णमुलोर्दीर्घविकल्पः। अदक्षिः अदाक्षि। दक्षंदक्षम्, दाक्षंदाक्षम्। क्रप कृपायां गताविति। अदुपधोऽयम्। कृपायां गतौ चेत्यर्थः। कदि क्रदि क्लदि इति नन्दिमते। क्षीरस्वामिमते च त्रय एव धातवः। मैत्रेयमते चत्वार इति बोध्यम्। तत्र इदितां त्रयाणां पौनरुक्त्यं परिहरति-- कदिक्रदिक्लदिनामित्यादिना। ञित्वरेति। ञिरित्। "ञीतः क्तः" इति क्तः प्रयोजन्। आदित्त्वं तु "आदितश्चे"ति निष्ठायामिण्निषेधार्थम्। वस्तुतस्तु आदित्त्वं व्यर्थं, ह्रस्वेऽप्यात्नेपदसिद्धेः "रुष्यमत्वरसङ्घषास्वना"मिति निष्ठायामिड्विकल्पसिद्धेश्च। घटादयः षित इति। "त्वरत्यन्ता" इति शेषः। घटादिषु त्रयोदशानुदात्तेतो गताः। "द्युत दीप्तौ" इत्यतः प्राग्घटादिसमाप्तिरिति वक्ष्यते। अथ फणान्ता इति। "फण गता" वित्येतत्पर्यन्ता इत्यर्थः। ज्वर रोगे इति। णौ ज्वरयति। चिणि तु अज्वरि-- अज्वारि। णमुलि तु --ज्वरंज्वरं ज्वारंज्वारम्। एवमग्रेऽपि ज्ञेयम्। हेड वेष्टन इति। डकारादकार उच्चारणार्थः। ततश्च "नाग्लोपिशास्वृदिता"मिति निषेधो न भवति। स एवेति। हेड्टधातुरेव ऋकारानुबन्धमुत्सृज्य वेष्टनरूपेऽर्थविशेषे मित्त्वार्थमनूद्यते इत्यर्थः। धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। नन्वात्मनेपदिन एवाऽत्रानुवादे परस्मैपदं न स्यादित्यत आह---परस्मैपदिभ्य इति। यदि त्वात्नेपदमिष्टं तर्हि घटादिषु त्वरत्यन्तेष्वेवानुदात्तेत्सु पठ()एतेति भावः। हेडतीति। वेष्टते इत्यर्थः। हिडयतीति। वेष्टयतीत्यर्थः। "हेतुमती"ति णिचि "मितां ह्रस्वः" इति ह्रस्व इति भावः। अडिहि अहीडीति। "चिण्णमुलो"रिति दीर्घविकल्पः। हेडयतीति। वेष्टनरूपाऽर्थ एव मित्त्वान्न ह्रस्व इति भावः। "वट परिभाषणे" इति नाऽपूर्वो धातुरित्याह--वट वेष्टने इत्यादि। अनुवाद

इति। धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। "णट नृत्तौ" इत्यस्य पौनरुत्तयमाक्षिपति-- इत्थमेवेति। "टवर्गान्तेष्विटति शेषः। तथा च उभयोरप्यर्थैक्येन अर्थविशेषे मित्त्वार्थमिहानूद्यते इति परिहारस्याऽसंभवात्पौनरुक्त्यमेवेति भावः। परिहर्तुमुपक्षिपति-- तत्रायं विवेक इति। तत्र = तयोर्धात्वोः, अयं = वक्ष्यमाणः, विवेकः = अर्थभेदः, प्रत्येतव्य इत्यर्थः। पूर्वं पठतस्येति। टवर्गान्तेषु पठितस्येत्यर्थः। यत्कारिष्विति। यस्य कर्तृषु नटव्यवहारस्तन्नाट()ं पूर्वं पठितस्यनटधातोरर्थ इत्यर्थः। किं तन्नाट()मित्यत्राह--वाक्यर्थेति। घटादौ त्विति। यस्य कर्तृषु नर्तकव्यपदेशस्तन्नृत्यं, नृत्तं च घटादौ पठितस्य नटेरर्थः इत्यर्थः। नृत्यनृत्तयोः को भेद इत्यत आह-- पदार्थेति। एवंच टवर्गान्तेषु पठितस्य घटादगतस्य चाऽर्थभेदसत्त्वादर्थविशेषे मित्त्वार्थोऽनुवाद इति युज्यते। धात्वन्तरत्वे तु भित्त्वतदभावयोर्विकल्पः स्यादिति भावः। अथ नटधातोरस्य णोपदेशपर्युदासभ्रमं वारयति--णोपदेशेति। "अनर्द्()नाटी"त्यादिपर्युदासवाक्ये नाटीति णिज्लक्षणवृद्धिनिर्देशेन "नट अवस्पन्दने" इति चौरादिकस्यैव ग्रहणादयं णोपदेश एवेत्यर्थः। ष्टकधातुः षोपदेशः। कृतष्टुत्वस्य निर्देशः। स्तकतीति। "धात्वादे" रिति षस्य सत्वे ष्टुत्वनिवृत्तिः। चक तृप्तौ। तृप्तीति। "चक तृप्तौ प्रतीघाते चे"त्यात्मनेपदिषु पठितस्य तृप्तावर्थे मित्त्वार्थोऽत्राऽनुवाद इत्यर्थः। एवं च धात्वन्तरत्वाऽभावान्न मित्त्वततदभावविकल्पः। ननु आत्मनेपदिषु पठितस्यात्रानुवादादात्मनेपदं स्यादित्यत आह-- आत्नेपदिष्विति। षगे ष्टगे इति। षोपदेशौ। ष्टगे इति कृतष्टुत्वनिर्देशः। कगे नोच्यत इति। ननु यदि न कोऽपि क्रियाविशेषोऽस्यार्थस्तर्हि कथमयं धातुरित्यत आह-- क्रियासामान्यार्थवाचित्वादिति। धातुपाठपठितस्य क्रियाविशेषार्थकत्वाऽभावे सति क्रियासामान्यवाचित्वं परिशेषलभ्यमिति भावः। अनेकेति। "कलिः कामधेनु"रिति न्यायेन कलधातुवदपरमितार्थकत्वमिति भावः। श्रथ क्नथ क्रथ क्लथ इति। चत्वारोऽपि द्वितीयान्ताः। आद्यतृतीयौ रेफमध्यौ। द्वितीयो नकारमध्यः। चतुर्थस्तु लकारमध्यः। आद्यस्तु शकारादिः। इतरे ककारादयः। ननु क्रथधातोर्घटादित्वेन मित्त्वाण्णौ उपधावृद्धिसंपन्नस्य अकारस्य "मितां ह्रस्व" ति ह्रस्वत्वे क्रथयतीति स्यान्नतु क्राथयतीति। तत्राह-- जासिनीति। "जासिनिप्रहणनाटकाथपिषां हिंसाया"मिति षष्ठीविधौ णौ मित्()वेऽपि क्राथेति वृद्धिर्निपात्यत इत्यर्थः। नन्वेवं सति घटादौ क्रथधातोः पाठो व्यर्थ इत्यत आह-- मित्त्वं त्विति। चिण्णमुलोर्दीर्घपक्षे चरितार्थमित्यन्वयः। ननु तत्रापि क्राथेति निपातनाद्वृद्धिरित्यत आह-- निपातनात्परत्वादिति। "क्राथे"ति निपातनापेक्षया "चिण्णमुलो"रित्यस्य परत्वादित्यर्थः। यद्यपि "मितां ह्रस्वः" इत्यपि परन्तथापि पुरस्तादपवादन्यायेन क्राथेतिवृद्धिनिपातनं "मितां ह्रस्वः" इत्यस्यैवाऽव्यवहितस्य बाधकं, नतु "चिण्णमुलो"रित्यस्यापि, तस्य व्यवहितत्वादिति बोध्यम्। अक्रथि--अक्राथीति। क्रथेण्यन्ताच्चिणि दीर्घविकल्पः। क्रथंक्रथं क्राथंक्राथमिति। णमुलि दीर्गविकल्पः। वन चेति। चकारो हिंसानुकर्षकः। तदाह---हिंसायामितीति। वन शब्दे, वन संभक्ताविति पठितस्य हिंसायां मित्त्वार्थोऽत्रानुवादः। वनति। णौ तु --वनयति। णमुलि तु वनंवनं वानंवानम्। वनु च नोच्यते इति। "कगे नोच्यते" इति वद्व्याख्येयम्। नन्वन्यत्र पठितस्य घटादौ मित्त्वार्थोनुवाद इति सिद्धान्तात्तनादौ "वनु याचने" इति पठितस्य अनुदात्तेतोऽनुवादात्क्रियासामान्येऽर्थे वनुते इत्यात्मनेपदम्, उप्रत्ययश्च स्यादित्यत आह--अपूर्व एवायमिति। उदित्करणेति। यदि तानादिकस्यैव अत्रानुवादः स्यात्तर्हि तनादिगणे "वनु" ति कृतेन उदित्करणेनैव "उदितो वे"त्याद्युदित्कार्यस्य सिद्धेरिह गणे पुनरुदित्करणमनर्थकं स्यात्। अतस्तानादिकस्य नात्रानुवादः, किं त्वपूर्व एवायं वनुधातुः। तथाच "वनती"ति परस्मैपदं, शब्विकरणं चेत्याह-- तेन क्रियासामान्ये वनतीत्यादीति। आदिना वनतः वन्नतीत्यादिसङ्ग्रहः। प्रवनयतीति। घाटादिकस्य क्रियासामान्यवाचिनो णिचि मित्त्वाद्ध्रस्वः। वक्ष्यत इति। "ग्लास्नावनुवमां चे"त्यनेने"ति शेषः। तानादिकात्तु वनु याचने इत्यस्माण्णिचि उपधादीर्घे "वानयती"त्येव भवति। ज्वल दीप्तौ। मप्रत्ययार्थमिति। "ज्वलितिकसन्तेभ्यो णः" इति णप्रत्ययार्थं ज्वलादिगणे पठिष्यमाणस्य इह मित्त्वार्थोऽनुवाद इत्यर्थः। ज्वलतीत्यादि सिद्धवत्कृत्य मित्त्वस्य णौ ह्रस्वं प्रयोजनमाह-- प्रज्वलयतीति। धात्वन्तरत्वे तु मित्त्वतदभावयोर्विकल्पः स्यादिति बोध्यम्। स्मृ आध्याने। चिन्तायामिति। "स्मृ चिन्ताया"मिति पठिष्यमाणस्य

आध्याने मित्त्वार्थोऽनुवाद इत्यर्थः। चिन्ताया आद्यानमन्यदिति दर्शयितुमाह--आध्यानमुत्कण्ठेति। दृ? भये इति। अस्य दृणातीति रूपं,न तु शप्। तदाह--मित्वार्थोऽनुवाद इति। "भयेऽर्थे मित्त्वार्थ"मिति शेषः। अर्थनिर्देशस्य उपलक्षणत्वाद्भये वृत्तिः। तथाच ऋयादित्वात् श्नविकरण एवायमिति भावः। मित्त्वप्रयोजनं दर्शयति-- दरयतीति। भीषयतीत्यर्थः। दारयतीति। भेदयतीत्यर्थः। धात्वन्तरमेवेति। नतु क्रयादेरनुवाद इत्यर्थः। अस्मिन्मते भौवादिकत्वाच्छबेवेत्याह--दरतीत्यादीति। सूत्रे चेति। "अत्स्मृद्दृत्वरप्रथम्दस्तृ()स्पशा"मित अत्वविधावित्यर्थः। ह्यस्वं पठन्तीति। तन्मते क्र्यादेरनुवादप्रसिक्तिरेव नास्तीति भावः। तन्नेतीति। यदि ह्ययं घटादौ ह्यस्वान्तः, क्र्यादौ तु दीर्घान्तो भवेत्तर्हि "शॄ()दॄ()प्रां ह्यस्वो वे"त्यत्र दॄ()ग्रहणमनर्थकं स्यात्। ह्यस्वदीर्घान्तधातुभ्यामेव तत्फलसिद्धेरिति भावः। नॄ? नये इति। नयः --नयनम्। क्र्यादिष्विति। "नॄ? नये" इत्येव क्र्यादिषु पठ()ते। तत्रार्थनिर्देशो न विवक्षितः। क्र्यादिषु पठिष्यमाणस्य नॄ()धातोर्नयादन्यत्र विद्यमानस्य नयेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः। तथा च श्नविकरण एवायम्। नृणातेर्धातत्वन्तरत्वाऽभावान्न मित्त्वतदभावौ। अपि तु नित्यमेव मित्त्वम्। श्रा पाके इति। नन्वत्र भ्वादौ पठ()मानाच्छ्रायतेः, उत्तरत्र अदादौ पठिष्यमाणाच्च श्रान्तेरन्य एव यदि कश्चन स्वतन्त्रो धातुर्घटादौ निर्दिश्येत तदा प्रकृते लटि शपि श्रातीति रूपसंपत्त्या लुग्विकरणस्थेन "श्रा पाके" इत्यनेन पौनरुक्त्यमित्यत आह--श्रै इतीति। अग्रे भ्वादिगणे "श्रै पाके" इति पठिष्यते, तस्य कृतात्वस्यानुकरणमित्यन्वयः। तथाच तस्यैव श्रैधातोरनेकार्थकतया पाके वृत्तस्य मित्त्वार्थमत्रानिवादाच्छपि श्रायतीत्यादि रूपम्। एतच्च "शृतं पाके" इति सूत्रे भाष्यैकैयटयोः स्थितम्। एवं च "सति संभवेऽन्यत्र पठितनामिह मित्त्वार्थोऽनुवाद" इति सिद्धान्तादग्रे भ्वादौ "श्रै पाके" इत्यस्य पौनरक्त्यं न शङ्क्यम्। नन्वेवं सति "श्रै पाके" इत्येवात्र कुतो न पठितमित्यत आह--श्रा इत्यादादकस्य चेति। ननु लाक्षणिकत्वात् " श्रै पाके" इति भौवादिकस्य कृतात्वस्याप्यनुवाद इति न युज्यत इत्यत आह-- लुग्विकरणेत्यादि, परिभाषाब्यामित्यन्तम्। परिभाषाभ्यामुभयोरनुकरणमित्यन्वयः। "स्वरतिसूयती"ति सूत्रे "सू" इति पठितेऽपि द्वयोग्र्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं "लुग्विकरणे"ति परिभाषां ज्ञापयतीत्याहुः। प्रतिपदोक्तपरिभाषा तु न्यायसिद्धेत्युक्तमेव। श्रपयतीति। श्रैधातोर्णिचि "आदेच उपदेशे" इत्यात्वे "अर्तिह्री"ति पुकि "मितां ह्यस्वः"। श्राधातोस्तु स्वत एवाऽऽदन्तत्वाण्णिचि पुकि ह्यस्वः। पाकादन्यत्रेति। अर्थनिर्देशस्योपलक्षणत्वादिति भावः। मारणति। मारणे तोषणे निशामने च ज्ञाधातुर्वर्तत इत्यर्थः। अक्षतस्य मारमे संपूर्वकस्यैव ज्ञाधातोः प्रयोगः। चाक्षुषज्ञानमिति। निपूर्वकाच्छम आलोचने इत्यस्माच्चौरादिकण्यन्तात्ल्युटि निशामनशब्दस्य निष्पत्तेरिति भावः। ज्ञापनमात्रमिति। उपसर्गवशादिह ज्ञापने वृत्तिः, चाक्षुषत्वं च ज्ञानस्य यन विवक्षतमिति भावः। निशानेष्विति। "मराणतोषणनिशामनेषु ज्ञे"ति पाठान्तरमित्यर्थः। ननु ज्ञाधातोरस्माल्लडादौ शपि "ज्ञाजनोर्जे"ति जादेशे जाति जात इत्यादि स्यादित्यत आह--एष्वेवेति। "ज्ञा अवबोधने" इति श्नविकरणस्यैव मारणादिष्वर्थेषु णौ मित्त्वार्थमिहानुवादात् श्नविकरण एवायमिति भावः। जानातेर्मित्त्वफलं तु णौ ह्यस्वः-- "पशुं संज्ञपयति"। अक्षतं मारयतीत्यर्थः। "हरिं ज्ञपयति"। संतोषयीत्यर्थः। "रूपं ज्ञपयति"। माधवमते दर्शयतीत्यर्थः। मतान्तरे तु बोधयतीत्यर्थः। "शरं ज्ञपयति"। तीक्ष्णीकरोतीत्यर्थः। ननु माधवमते बोधयतीत्यर्थे ज्ञपयतीति कथं मित्त्वम्, तन्मते चाक्षुषज्ञानस्यैव निशामनशब्दार्थत्वादित्यत आह---ज्ञप मिच्चेति चुरादाविति। एवं च चौरादिकं ज्ञाधातुमादाय बोधनेऽप्यर्थे ज्ञपयतीति ह्यस्वः सङ्गच्छते इति भावः। शृण्विति। "उत्तर"मिति शेषः। मित्त्वाऽभावादिति। "ह्यस्वो ने"ति शेषः। "विज्ञापने"त्यत्र "तज्ज्ञापयती"त्यत्र च अचाक्षुषमेवाऽऽत्मज्ञानं विवक्षितमिति भावः। ननु "ज्ञापनमात्रे मित्त्व"मिति मते "विज्ञापने"त्यत्र "तज्ज्ञापयती"त्यत्र च मित्त्वं दुर्वारमित्यत आह---ज्ञापनमात्रे इति। चौरादिकस्येति। "विज्ञापनेति ज्ञापयतीति च रूप"मिति शेषः। "नान्ये मितोऽहेतौ" इति निषेधान्न तस्य मित्त्वमिति भावः। ननु नियोगार्थस्य तस्य कथं ज्ञापने वृत्तिरित्यत आह-- धातूनामिति। न कापीति। "विज्ञापने"त्यत्र, "ज्ञापयती"त्यत्र च ज्ञापनार्थवृत्तित्वाज्ज्ञापनस्य च मारणतोषणतीक्ष्णीकरणान्यत्वान्न तस्मिन्नर्थे ज्ञाधातोर्मित्त्वप्रसक्तिरिति भावः। एवं च माधवमते बोधने ज्ञाधातोज्र्ञापयतीत्युपधादीर्धः। ज्ञपधातोस्तु ज्ञपयतीत्युपधाह्यस्व इति रूपद्वयमपि साध्विति

स्थितम्। कम्पने चलिरिति। इका निर्देशोऽयम्। चलधातुः कम्पने मिदित्यर्थः। ज्वलादिरिति। तस्य चलेः कम्पने मित्त्वार्थोऽत्रानुवाद इति भावः। शीलं चालयीति। अत्र कम्पनार्थकत्वाऽभावान्न मित्त्वमिति भावः। तदाह--अन्यथा करोतीत्यर्थ इति। धातूनामनेकर्थत्वादिति भावः। छदिरूर्जने इति। इका निर्देशोऽयम्। छदधातुरूर्चजने मिदित्यर्थः। ऊर्जनं-- बलवत्करणं, प्राणनं वा, "ऊर्ज बलप्राणनयो"रित्युक्तेः। अन्यत्र पठितस्यात्रार्थविशेषे णौ मित्त्वार्थोऽनुवाद इति सिद्धान्तः। छदधातुस्त्वयं चुराद्यन्तर्गणे युजादौ पठितः। तस्याऽत्रानुवादो व्यर्थः, "नान्ये मितोऽहेता"वित ज्ञापादिपञ्चकव्यतिरिक्तस्य चुरादौ मित्त्वनिषेधादित्यत आह-- छद अपवारणे इति। चुराद्यन्तर्गणयुजादिपठितस्य "आ धृषाद्वे" ति स्वार्थिकणिजभावपक्षे ऊर्जनेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः। [हेतुमण्णिचीतियावत्]। स्वार्थिकणिचि सत्येव "नान्ये मित" इति निषेधप्रवृत्तिरिति भावः। नन्वपवारणार्थकस्य छदेः कथमूर्जने वृत्तिरित्यत आह-- अनेकार्थत्वादिति। नु स्वार्थणिजभावे सति मित्त्वं किमर्थमित्यत आह-- छदयतीति। अत्र हेतुमण्णिचि ह्यस्वः। "नान्ये मित" इति निषेधस्तु हेतुमण्णिचि नेति भावः। अन्यत्रेति। ऊर्जनादन्यत्र अपवारणे इत्यर्थ-। स्वार्थे णिचि त्विति। "नान्ये मितः" इति निषेधस्य तत्र प्रवृत्तेरिति भावः। जिह्वोन्मथने लडिरिति। इका निर्देशोऽयम्। लडधातुर्जिह्वोन्मथने मिदित्यर्थः। लडेति। "लड विलासे" इति टवर्गान्तेषु भ्वादौ पठितस्य जिह्वोन्मथनेऽर्थे मित्त्वार्थोऽनुवाद इत्यर्थः। एवं च धातुभेदाऽभावात्सर्वथैव मित्त्वकार्यं भवति। गणभेदाद्धातुभेदे मित्त्वतदभावयोर्विकल्पः स्यादिति भावः। लडयति जिह्वामिति। रसनां रसान् ज्ञापयतीत्यर्थः। "गतिबुद्धी"ति द्विकर्मकोऽयम्। लडयति जिह्वयेति। देवदत्तो रसान् जानाति, तज्जिह्वया ज्ञापयतीत्यर्थः। तद्व्यापार इति। शब्दप्रयोगादिजह्वाव्यापार इत्यर्थः। समाहारेति। जिह्वा च उन्मथनं चेति समाहारद्वन्द्वः। जिह्वाव्यापारे उदाहरति-- लडयति शत्रुमिति। "गेहेशूर" इत्यादिशब्दप्रयोगेण गर्हत इत्यर्थः। "उन्मथनं लोडन"मित्यभिप्रेत्योदाहरति-- लडयति दधीति। विलोडयतीत्यर्थः। अन्यत्रेति। जिह्वोन्मथनादन्यत्रेत्यर्थः। लाडयति पुत्रमिति। क्रीरडयतीत्यर्थः। ग्लेपनं दैन्यमिति। दीनीभवनमित्यर्थः। ननु लडादौ शपि मदतीत्यादि स्यादित्यत आह--दैवादिकस्येति। तथा च श्यन्विकरण एवाऽयमिति भावः। ध्वन शब्दे इति। पूर्वमनुनासिकान्तेषु "अण रणे"त्यत्र ध्वणधातुर्मूर्धन्यान्तः पठितः, अयं तु दन्त्यान्त इति भेदः। भावीति। ज्वलादौ "ध्वन शब्दे" इति पठिष्यमाण एवात्र ध्वन्यात्मके अनुच्चारणजन्ये शब्दने मित्त्वार्थमनूद्यते इत्यर्थः। धातुभेदे तु मित्त्वतदभावौ स्यातामिति भावः। ध्वनयति घण्टामिति। शब्दायमानां करोतीत्यर्थः। अन्यत्रेति अस्पष्टोच्चारणात्मके शब्दने इत्यर्थः। अत्रेति। "घटादा"वित्यर्थः। तत्रेति। दलिवल्यादिष्वित्यर्थः। उदाह्यताविति। "घटादा"विति शेषः। तत्र ध्वनिरनुपदमेवोदाह#ऋतः।रणिस्तु "कण रण गता"वित्यत्रेति बोध्यम्। भोजमते प्रागनयोःपाठो नेति न पौनरुक्त्यम्। गता इति। भ्वादौ पठिता इत्यर्थः। "इह मित्त्वार्थमनूद्यन्ते" इति शेषः। धात्वन्तरत्वे तु मित्त्वतदभावौ स्यातामिति भावः। ननु क्षपेरत्र पाठान्मित्त्वे णौ ह्यस्वे "क्षपयती"ति वक्ष्यति। अस्त्वेवम्, तथापि "क्षै क्षये" इति भ्वादौ पठिष्यमाणस्य णौ आत्वे पुकि क्षापयतीत्यपि स्यात्, क्षैधातोः क्षपीत्यनुवादाऽसंभवात्। तत्राह--- क्षै इत्यादि। णौ आत्वे पुकि मित्त्वाद्ध्रस्वे सति क्षपीति क्षै इत्यस्यानुवादसंभव इति भावः। स्वन अवतंसने इति। अवतंसनम्---अलङ्कृतिः। पठिष्यमाणस्येति। घटादिगणादूध्र्वं "स्वन शब्दे" इति पठिष्यमाणस्य स्वनेरवतंसनेऽर्थे णौ मित्त्वार्थोषऽत्रानुवाद इत्यर्थः। धात्वन्तरत्वे तु मित्त्वतदभावौ स्यातामिति भावः। घटादयो मित इति। गणसूत्रम्। ननु घटादिषु मकारानुबन्दाऽदर्शनात्कथं मितस्ते स्युरित्यत आह--मित्संज्ञका इति। मित्कार्यभाज इत्यर्थः। जनीजृषिति। गणसूत्रम्। जनी जृ()ष् क्नसु रञ्ज् एषां द्वन्द्वात्प्रथमाबहुवचनम्। अम् अन्ते येषां ते अमन्ताः-- क्रिमिगम्यादयः। एते अघटादित्वेऽपि मित इत्यर्थः। जीर्यतेरिति। "जृ()ष् वयौहानौ" इति श्यन्विकरणस्येत्यर्थः। जृणातेस्त्वति। "जृ? वयोहानौ" इति श्नविकरणस्य षित्वाऽभावेनात्र ग्रहणाऽभावान्न मित्त्वमिति भावः। उदाहरन्ति। तन्मते जृणातेरप मित्त्वमिति भावः। ज्वलह्वलेत्यपि गणसूत्रम्। प्राप्तविभाषेयमिति। ज्वहह्वलह्लां घटादित्वान्नमेर्मान्तत्वाच्च मित्त्वस्य प्राप्तेरिति भावः। उपसृष्टे त्विति। सोपसर्गे त्वित्यर्थः। कथं तर्हीति। रानुपसर्गादिति विशेषणे सति ज्वलेर्नमेश्च णौ मित्त्वविकल्पाऽभावाज्जनीजृ()षिति

मित्त्वाद्ध्रस्वो नित्यः स्यादित्याक्षेपः। समाधत्ते-- घञन्तादिति। तत्करोतीति णावित्यनन्तरं "समाधेय"मिति शेषः। प्रज्वलनं प्रज्वालः। उन्नमनम् उन्नामः। भावे घञ्। उपधावृद्धिः। प्रज्वालं करोतीति, उन्नामं करोतीति चार्थे "तत्करोति तदाचष्टे" इति णिचि "णाविष्ठव"दितीष्ठवत्त्वाट्टिलोपे सति तस्य स्थानिवत्त्वान्मित्त्वप्रयुक्तह्रस्वाऽभावे प्रज्वालि उन्नामीत्याभ्यां लटि तिपि शपि गुणे अयादेशे प्रज्वालयति उन्नामयतीति रूपं इति भावः। ननु संपूर्वात्क्रमेर्णौ संक्रामयतीति रूपमिष्यते, तत्र अमन्तत्वेन मित्त्वाद्ध्रस्वप्रसङ्गः। नच क्रमणं क्राम इति घञन्तात्ततत्करोतीति णावुक्तरीत्या ह्रस्वाऽभाव इति कृत्वा समाधानं संभवति, क्रमेर्घञि हि "नोदात्तोपदेशस्ये"ति वृद्धिप्रतिषेधे सति "क्रम" इत्येव भवति, नतु "क्राम" इति कृत्वा उक्तसमाधानाऽसंभवादित्यप्रेत्याक्षिपति--- कथमिति। समाधत्ते-- मितामिति। "मितां ह्रस्वः" इति सूत्रे वेत्यनुवर्त्य मित्त्वाऽभावे संक्रामयतीति रूपमित्यन्वयः। ननु कदाचिद्ध्रस्वो दुर्वार इत्यत आह-- व्यवस्थितेति। तथा चात्र ह्रस्वाऽभाव एवाश्रीयत इति भावः। वृत्तिकृदिति। भाष्ये तु नैतत् दृश्यते इति भावः। एतेनेति। व्यवस्थितविभाषाश्रयणेनेत्यर्थः। "ग्लास्नावनुवमां चे" त्यपि गणसूत्रम्। प्रथमार्थे षष्ठी। अनुपसर्गादिति, मित इति, वेति चानुवर्तते। फलितमाह-- अनुपसर्गादिति। आद्ययोरिति। ग्ला स्ना इत्यनयोरघटादित्वादप्राप्ते मित्त्वे, इतरयोर्वनुवमोः प्राप्ते मित्त्वे विभाषेत्यर्थः। तत्र वनेः "वनु च नोच्यते" इति घटादौ पाठाद्वमेस्त्वमन्तत्वान्मित्त्वप्राप्तिरिति बोध्यम्। "न कम्यमिचमा"मिति "शमो दर्शने" इति च गणसूत्रम्। दर्शनं-- चाक्षुषज्ञानम्। "शम उपशमे" इति दैवादिकः श्यन्विकरणः एवात्र गृह्रते नतु "शम आलोचने" इति चौरादिकः, "नान्ये मितोऽहेतौ" इति तस्य मित्त्वनिषेधात्। तद#आह-- शाम्यतिरिति। निशामयति रूपमिति। पश्यतीत्यर्थः। उपशमार्थकस्यापि अनेकार्थत्वाद्दर्शने वृत्तिः। अन्यत्रेति। दर्शनादन्यत्रेत्यर्थः। निशमय्येति। श्रावयित्वेत्यर्थः। शमेण्यन्तात् क्त्वो ल्यपि कृते "ल्यपि लघुपूर्वा"दिति णेरयादेशः। कथमिति। तर्हि-- तर्हि-- दर्शनार्थकस्यैव शमेर्मित्त्वनिषेधे सति, "शृणु" इत्यर्थे मित्त्वाद्ध्रस्वप्रसङ्गन्निशामयेति कथमित्याक्षेपः। समाधत्ते--- चौरादिकस्येति। "निशामयेति रूप"मिति शेषः। "नान्ये मितोऽहेता"विति तस्य मित्त्वनिषेधान्न ह्रस्व इति भावः। ननु चौरादिकस्य शमेरालोचनार्थकत्वात्कथं श्रवणे वृत्तिरित्यत आह-- धातूनामिति। साम्यतिवदिति। श्यन्विकरणस्य शमेरुपशमार्थकस्य यथा दर्शन वृत्तिस्तद्वदित्यर्थः। "यमऽपरिवेषणे" इत्यपि गणसूत्रम्। भोजनपात्रे ओदनाऽपूपादिभोज्यद्रव्याणां स्थापवनं परिवेषणम्। तदाह--भोजनातोऽन्यत्रेति। भुक्त्यनुकूलपरिवेषणादन्यत्रेत्यर्थः। आयामयतीति। अत्राऽपरिवेषणे वृत्तेर्न मित्त्वमिति भावः। तदाह--द्राघयतीति। दीर्घीकरोतीत्यर्थः। व्यापारयतीति। प्रवर्तयतीत्यर्थः। यमयति ब्राआह्णानिति। परिवेषमार्थकत्वान्मत्त्वमिति भावः। तदाह-- भोजयतीति। भुञ्जते ब्राआह्मणाः, तान्परिवेषणेन प्रवर्तयतीत्यर्थः। ननु "पर्यवसितं नियमय"न्नित्यत्र अपरिवेषणार्थकतया मित्त्वाऽभावात्कथं ह्रस्व इत्यत आह-- पर्यवसितमित्यादि। नियमनं नियमः। "यमः समुपनिविषुचे"ति भावेऽप्प्रत्ययः। तस्मान्मतुप्। नियमवच्छब्दात्तकरोतीति णिचि "वन्मतोर्लु"गिति मतुपो लुकि ण्यन्ताल्लटश्शतरिगुणाऽयमादेशयोर्नियमयच्छब्द इति भावः। वस्तुतस्तु मतुपो लुकि टिलोपस्याऽप्राप्त्या "अचो ञ्णिती"ति वृद्धौ पुगागमापत्तिः। ततश्च नियमवदित्यर्थकादर्शाअद्यजन्तान्नियमशब्दात् "तत्करोती"ति णिचि इष्ठवत्त्वाट्टिलोपे तस्य स्थानिवत्त्वादुपधावृद्ध्यभावे "नियमय"न्निति समर्थनीयमिति शब्देन्दुशेखरे स्थितम्। स्खदिरवपरिभ्यां चेत्यपि गणसूत्रम्। स्खदिरिति इका निर्देशः। अव परि-आभ्यां परः स्खदधातुर्मिन्नेत्यर्थः। स्खद स्खदने इति घटादौ पाठान्मित्त्वप्राप्तिः। परिस्खादयतीति। अषोपदेशत्वेन आदेशसकारत्रापि मित्त्वाऽभावान्न ह्रस्वः। स्वामी त्विति। "न कम्मिचमा" मित्यत्र श्रुतो नञ् "शमो दर्शने" "यमोऽपरिवेषणे" "स्खदिरवपरिभ्यां चे"ति त्रिषु सूत्रेषु नानुवर्तते। शमः-- अदर्सने इति च्छेदः। शमधातुर्दर्शने मित्स्यादित्यर्थः। अमन्तत्वादेव सिद्ध#ए नियमार्थमिदम्। "अदर्शन एव शमधातुर्मित्स्यान्नतु दर्शने" इति स्वाभिमतम्। इदं च पर्यवसानगत्या पूर्वमतान्नाऽतिरिच्यते। यमस्त्विति। यमदातोस्तु अपरिवेषण एव मित्त्वमाहेत्यर्थः। अमन्तत्वादेव सिद्धेरपरिवेषण एव यमधातुर्भिन्न तु परिवेषण इति फलति। एवं च द्राघयति व्यापारयति वेत्यर्थे मित्तवाद्ध्रस्वे "आयमयती"त्येव रूपम्। परिवेषणे तु

मित्त्वाऽभावाद्ध्रस्वाऽभावे "यामयति ब्राआह्णा"निति भवतीति पूर्वमताद्विपरीतं फलति। एवं च "पर्यवसितं नियमय"न्नित्यत्र यमेरपरवेषणार्थत्वान्मित्त्वे ह्रस्वो निर्बाधः। तदाह--तन्मते इति। स्खदेर्घटादित्वादेव मित्त्वसिद्धेः "स्खदिरवपरिभ्यां चे"ति सूत्रमपि नियमार्थम्। "सोपसर्गस्य चेत्स्खदेर्मित्त्वं तर्हि अवपरिभ्यां परस्यैव मित्त्वं न तूपसर्गान्तरा"दिति। एवं च प्रस्खादयतीत्यत्र मित्त्वाऽभावान्न ह्रस्वः। अवस्खदयति परिस्खदयतीत्यत्र तु मित्त्वाद्ध्रस्व इति फलति। तदाह--उपसृष्टस्येति। सोपसर्गस्येत्यर्थः। पूर्वमते तु अवपरिभ्यां परस्य मित्वनिषेधादवस्खादयति परिस्खादयतीति न ह्रस्वः। प्रस्खदयतीत्यत्र तु अवपरिपूर्वकत्वाऽभावेन मित्त्वनिषेधाऽभावाद्ध्रस्व इति विपरीतम्। तस्मादिति। "यमोऽपरिवेषणे", "स्खदिरवपरिभ्यां चे"ति सूत्रद्वये उक्तरीत्या मित्त्वनियमविध्याश्रयणादुदाहरणप्रत्युदाहरणयोरुक्तरीत्या व्यत्यासः फलित इत्यर्थः। उपेक्ष्यमिति। "न पादम्या"ङिति सूत्रव्याख्यावसरे "यमोऽपरिवेषणे इति मित्त्वं प्रतिषिध्यत" इति वृत्तिन्यासयोरुक्तत्वादिति भावः। केच्चित्तु स्वामिमते "पर्यवसितं नियमय" न्नित्यादिसामञ्जस्यात्तावेवोपेक्ष्यावित्याहुः। फण गताविति। ननु घटादित्वेऽपि नायं मित्, इतः प्राक् "स्वन अवतंसने" इत्युत्तरमेव "घटादयो मित" इत्युक्तेः। अतः कथमत्र निषेधः। तत्राह-- नेति निवृत्तमिति। प्रा()प्त विना मित्त्वस्य निषेधाऽसंभवादिह नेति नानुवर्तते, किंतु मिदित्येवानुवर्तते इत्यर्थः। ननु फम गतावित्यत्र मिन्नेति यदि नानुवर्तते। "घ्वसोः" इत्यत एदिति, "गमहने" त्यतः कितीति, "वा जॄ()भ्रमुत्रसा"मित्यतो वेति च। तदाह--एषामिति। फणादीनामित्यर्थः। फणामिति बहुवचनात्तदादिलाभः। "फण गतौ" इत्यत्र मिदित्येवानुवर्तते, नेति तु नानुवर्तते इत्यस्य प्रयोजनमाह--फणयतीति। वृदिति-- कर्तरि क्विबन्तम्। वृतुधातुरिह समास्यर्थकः। तदाह--घटादिः समाप्त इति। फणेः प्रागेवेति। एवं सति फणेरघटादित्वान्न मित्त्वमित#इ भावः। तदाह--तन्मते फणयतीत्येवेति। इति घटादयः। राजृ दीप्ताविति। इत आरभ्य षण्णामेत्त्वाऽभ्यासलोपौ फणादित्वात्पक्षे भवतः। तदाह--रेजतुरित्यादि। ननु "फमां च सप्ताना"मित्यत्र अत इत्यनुवृत्तेः कथमिह एत्त्वाभ्यासलोपावित्यत आह--अत इत्यनुवृत्तावपिति। अत इति नानुवर्तते। तदनुवृत्तावपि फणादिसप्तानामपि वचनसामर्थ्याद्राजृधातोराकारस्याप्येत्त्वाभ्यासलोपस्य विकल्पः स्यादेवेत्यर्थः। "अत" इति राजादिधातौ न संबध्यते, असंभवादिति यावत्। टु भ्राजृ इत्यादि। टुरित् "ट्वितोऽथुच्" इत्येतदर्थः। अनुदात्तेत इति। "एते त्रय" इति शेषः। ननु पूर्वं चवर्गान्तेष्वनुदात्तेत्सु भ्राजतेः पठात्पुनरपि तस्येह पाठः किमर्थ इत्यत आह--भ्राजतेरिति। तर्हि "एजृ भ्रेजृ भ्राजृ दीप्तौ" इति भ्राजेः पूर्वं पाठो व्यर्थ इत्यत आह-- पूर्वं पाठस्त्विति। षत्वाऽभावार्थ इति। "व्रश्चभ्रस्जे" ति षत्वविधौ भ्राजेग्र्रहणाऽभावार्थ इत्यर्थः। ननु पूर्वं पठितस्यापि षत्वविधौ कुतो न ग्रहणमित्यत आह--तत्र हीति। षत्वविधौ हीत्यर्थः। एत्त्वाभ्यासलोपयोः पाक्षिकत्वादाह--भ्रेजे बभ्राजे इति। द्वावपीमाविति। द्वितीयतृतीयावित्यर्थः। ननु "विष्वणती" इत्यत्र कथं षत्वं? केवलदन्त्याऽजन्तसादित्वाऽभावेनाऽषोपदेशतया आदेशसकारत्वाऽभावात्। अवष्वणतीत्यत्र इण्कवर्गाभ्यां परत्वाऽभावान्न षत्वस्य प्रसक्तिः। "सात्पदाद्यो"रिति निषेधाच्चेत्यत आह-- वेश्च स्वन इतीति। तत्र चकारेण "अवाच्चे"त्यपि लभ्यत इति भावः। फणादयो गता इति। "ध्वनतेः प्रा"गिति शेषः। ततश्च ध्वनेर्न फणादिकार्यमिति भावः। तदाह--दध्वनतुरिति। षम ष्टमेति। षोपदेशौ।तस्तामेति। सत्वे सति ष्टुत्वनिवृत्तिरिति भावः। तैक्ष्ण्यमिति। तीक्ष्णीभवनमित्यर्थः। टल ट्वल। वैक्लव्यं--भयादिजनितो व्यग्रीभावः। णल। णोपदेशोऽयम्। गन्धः--- गन्धक्रिया। तद्व्यापार इति बन्धुतानुकूलो विवाहादिव्यापार इत्यर्थः। पत्लृधातुस्तवर्गप्रथमान्तः सेट्कः। लुङि लृदित्त्वाच्च्लेरङि कृते अपत् अ त् इति स्थिते-- पतः पुम्। शेषपूरणेन सूत्रं व्याचष्टे-- अङि परे इति। "ऋद्दशोऽङी"इत्यतस्तदनुवृत्तेरिति भावः। पतेः पुम् स्यादङि परे इति फलितम्। पुमि मकार इत्। उकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। तदाह--अपप्तदिति। क्वथे। जलक्षीरघृतादीनां पादमुदित्। तेन "उदितो वे"ति क्त्वायामिड्विकल्पो न। "गॄ? निगरणे" इति दीर्घान्तोऽयम्। नन्वस्माद्धातोर्ल्युटि "ॠत इद्धातोः" इति इत्त्वं बाधित्वा परत्वात् "सार्वधातुके" इति गुणे सति "उद्गरण" इत्येव निर्देशो युज्यत इत्यत आह-- इहैवेति। "उद्गिरणे" इत्यर्थनिर्देशः पाणिनीय इति सुधाकरो मन्यते। भ्रमु चलने इति। वक्रमार्गसंचारे इत्यर्थः। अयथार्थज्ञानेऽप्ययम्।

"उदितो वे"ति क्त्वायामिड्विकल्पार्थमुदित्त्वम्।

तत्त्व-बोधिनी

व्यथो लिटि १६३, ७।४।६८

व्यथो लिटि। हलादिः शेषापवाद इति। हलादिः शेषप्रक्रमणादिति भावः। एवं च "उत्सर्गसदेशश्चापवादःर" इति परस्यैव संप्रसारणं भवति न पूर्वस्येति कैयटाद्युक्त्या "न संप्रसारणे" इति निषेदोऽत्र नापेक्षितः। केचित्तु हलादिः शेषेण यकारनिवृत्तावपि वकारस्य सत्त्वात्सूत्रमिदं सावकाशमित्यपवादत्वं न संभवतीति मत्वा "संप्रसारणं तदाश्रयं च कार्यं बलव"दिति वचनाद्धलादिःशेषं बाधित्वा परस्य संप्रसारणे पूर्वस्य निषेधः। "संप्रसारणं तदाश्रयं चे"ति वचनाऽभावे तु "व्यथो लिटी"ति संप्रसारणस्य धातुविशेषप्रत्ययविशेषाश्रयत्वेन, "इग्यण" इति संज्ञाविशेषद्वयाश्रयत्वेन च बह्वपेक्षस्य बहिरङ्गत्वात्संप्रसारणं बाधित्वा हलादिः शेषे जाते वकारस्य संप्रसारणं स्यादित्याहुः। थस्येति। संप्रसारणस्याऽभ्यासान्तर्गतयकारनिवृत्तेरपवादत्वं न तु थकारनिवृत्तेरिति भावः। लिटीति किम्?। विव्यथिषते। इह "सन्यतः" इति इत्त्वम्। वाव्यथ्यते। वाव्यथीति। क्रप कृपायां गतौ। चकाराभावेऽपीहार्थद्वयमित्येव बोध्यमित्याहुः। क्रदि क्रदि। क्रन्दयति। क्रन्दयति। अक्रन्दि। अक्रान्दि। क्रन्दंक्रन्दम्। क्रान्दंकान्दम्। त्रित्वरा। आदित्त्वमिह व्यर्थम्, ह्रस्वोच्चारणेन#आप्यात्मनेपदसिद्धेः। न च निष्ठायाम् "आदितश्च" इतीद्प्रतिषेधार्थमिति शङ्क्यम्। "रुष्यमत्वरे"ति निष्ठायामिटो विकल्पितत्वात्। तूर्णः। त्वरितः। ज्वर रोगे। णौ- ज्वरयति। अज्वरि। अज्वारि। ज्वरं ज्वरम्। ज्वारंज्वारम्। गड सेचने। णौ गडयति। अगडि। अगाडि। गडंगडांगाडंगाडम्। एवमन्यत्राप्यूह्यम्। हेड वेष्टने। उत्सृष्टानुबन्ध इति। तेन वेष्टने "नाग्लोपी"ति निषेधशङ्कैव नास्तीति भावः। णोपदेश एवेति। प्रणटति। प्रणटयति। "नाटी"त्यस्य तु प्रनाटयति। वृद्धिर्निपात्यत इति। तेन "मितां ह्रस्व" इति न प्रवर्तत इति भावः। निपातनात्परत्वादिति। निपातनविषयीभूत "मितां ह्रस्व" इत्यस्मात्परत्वात्। "मितां ह्रस्वः" इत्येतदेव निपातनेन बाध्यते न तु ततः परं "चिण्णमुलो"रित्येतदित्यर्थः। वन च। संभक्तौ पठितस्य हिंसायां मित्त्वार्थोऽनुवादः। वनति। णौ-- वनयति। अवनि। अवानि। वनंवनम्। वानंवानम्। तानादिकस्येति। वनु याचन इत्यस्येत्यर्थः। सामर्थ्यादिति। अनुवादे तु तत्र कृतेनोदित्त्वेन क्त्वायामिड्वकल्पस्य, निष्ठायामिट्प्रतिषेधस्य च सिद्धेः पुनरिदित्करणं व्यर्थं स्यादिति भावः। वनतीत्यादीति। णौ-- वनयति। तानादिकस्य तु -- वनुते। वानयति। मित्त्वविकल्प इति। "ग्लास्नावनुवमां चे"ति गणसूत्रेण। णप्रत्ययार्थमिति। "ज्वलितिकसन्तेभ्यो णः" इति ज्वलादिभ्यो णप्रत्ययार्थम्। द भये। धातोरनेकार्थत्वाद्भ्यार्थकत्वम्। दृणाति। दरयति। तन्नेतीति। माधवस्यायमाशयः-- सूत्रे दीर्घान्त एव पाठः सर्वसंमतः। घटादावपि दीर्घान्त एव सर्वैः पठ()ते। यद्ययं ह्रस्वान्तो भवेत्तर्हि "शृ()दृ()प्रां ह्रस्वो वे"ति ह्रस्वविकल्पविधायके सूत्रे दृ()ग्रहणमनर्थकं स्यात्। धातुद्वयेन दद्रतुः ददरतुरिति रूपद्वयसिद्धः। न च "दृ? विदारणे" इत्यस्य रूपद्वयलाभार्तं दृ()ग्रहणमावश्यकमिति वाच्यं, धातूनामनेकार्थत्वात्समीहितसिद्धेरिति। नृ? नये। नृणाति। नरयति। अनरि। अनारि। नरंनरं। नारंनारम्। श्रै इतीति। अयं हि वक्ष्यमाणो भौवादिकः। लुग्विकरणेति। अत्र व्याचक्षते---"स्वरतिसूती"ति सूत्रे "सूङ" इति पठितेपि द्वयोग्रहणे सिद्धे सूतिसूयत्योः पृथग्ग्रहणं व्यर्थं सदिमां परिभाषां ज्ञापयति। नन्वलुग्विकरणं बलीय इति वैपरीत्यं किं न स्यादिति शङ्क्यम्, इष्टानुरोधात्। "सूङ" इति पठिते स्वरतिसाहचर्यादलुग्विकरणस्यैव ग्रहणं स्यान्न तूभयोरित्यपि न शङ्क्यं, साहचर्यस्याऽनत्यत्वात्। तस्मात्पृथग्ग्रहणं व्यर्थं सज्ज्ञापकमेवेति। परिभाषाभ्यामिति। यद्यप्युक्तपरिभाषयोः परस्परविरोधेनाऽप्रवृत्तावपीष्टं सिध्यति, तथाप्यविशेषादुभयोः प्रवृत्तिरप्यत्र युक्तैवेति भावः। मारणतोषण। "निशामन" मित्यस्य शम आलोचन इत्यस्मान्निष्पन्नत्वादाह--- चाक्षुषं ज्ञानमिति। एष्वर्थेष्विति। पशुं संज्ञपयति। मारयतीत्यर्थः। विष्णुं विज्ञपयति। संतोषतीत्यर्थः। संज्ञपयति रूपम्। माधवमते-- दर्शयतीत्यर्थः। मतान्तरे तु बोधयतीत्यर्थः। पज्ञपयति शरम्। तीक्ष्णीकरोतीत्यर्थः। स्यादेतत्---"निशामनं ज्ञापनमात्र"

मिति वदतां मते"श्लाघह्नुङ्स्थे"ति सूत्रे "ज्ञीप्स्यमानो बोधयितुमभिप्रेत" इति वृत्तिग्रन्थः सङ्गच्छतां नाम, माधवमते तु तद्ग्रन्थस्य का गतिरित्यत आह-- ज्ञप मिच्चेति। ज्ञापनमिति। एवं च वृत्तिग्रन्थो माधवमतेऽपि सङ्गच्छत इति भावः। मारणादिकं चेति। एतच्च मतान्तराभिप्रायेणोक्तम्। चुरादिषु तु "ज्ञप मिच्च, अयं ज्ञाने ज्ञापने च वर्तते" इति वक्ष्यमाणत्वात्। कथमिति। ज्ञाधातोर्ज्ञपधातोश्च णौ मित्त्वाद्ध्रस्वेन भवितव्यमिति भावः। मित्त्वाऽभावादिति। एवं च बोधने ज्ञापयति , ज्ञपधातोस्तु ज्ञपयतीति रूपद्वयं माधवमते बोध्यम्॥ छदिरुर्जने। "ऊर्ज बलप्राणनयोः"। अत्र छदिर्मित्। चुराद्यन्तर्गणो यौजादिकः। स्वार्थे णिजभाव इति। "आधृषाद्वे"ति वैकल्पिकत्वादिति भावः। लडयति। जिह्वामिति। जिह्वां ज्ञापयतीत्यर्थः। जिह्वयेति। जिह्वया पदार्थान्तरं ज्ञापयतीत्यर्थः। जिह्वाव्यापारे उदाहरणमाह--- लडयति शत्रुमिति। शत्रुमुद्दिश्य गालिदानादिकं [गालनादिकं] करोतीत्यर्थः। लडयति दधीति। उन्मध्नाति। विलोडयतीत्यर्थः। केचित्तु जिह्वाव्यापारे लडयति दधि, उन्मथने तु लडयति शत्रुमिति व्यत्यासेन योजयन्ति। लाडयति पुत्रमिति। शर्करादिदानेनाऽनुकूलयीत्यर्थः। ध्वनिरणी उदाह्मताविति। ध्वनिरव्यवधानेनोदाह्मतः, रणिस्तु अस्वानीति। अस्वनि। अस्वानि। स्वनंस्वनम्। स्वानंस्वानम्।(ग) घटादयो [मितः]। मित्संज्ञा इत्यर्थ इति। अन्ये तु मकारानुबन्धा इति व्याचक्षते। "घटम् चेष्टाया"मिति प्रत्येकं पाठे गौरवादेकत्रैव सर्वेषां मित्संज्ञा, मकारानुबन्धकत्वं वाऽनेन सूत्रेण विधीयत इति भावः। (ग) जनीजॄ()ष्क्नसुरञ्जोऽमन्ताश्च। जनीजॄ()ष्। जनी प्रादुर्भावे। जॄ()ष् वयोहानौ। क्नसु ह्वरणदीप्त्योः। त्रयोऽपि दिवादयः। रञ्ज रागे। दैवादिको भौवादिकश्च। अमन्ताः-- क्रमिगमीत्यादयः। जनयति। जरयति। क्नसयति। रजयति। मृगान्। रञ्जयति पक्षिणः। क्रमयति। गमयति। रमयति।(ग) ज्वलह्वह्मलनमामनुपसर्गाद्वा। ज्वलह्वल। एषां मित्त्वमिति। "मित" इत्यनुवृत्तस्येह भाव प्रधानता, "अनुपसर्गा"दिति तु षष्ठ()र्थे पञ्चमीत्येवं क्लेशेन व्याख्येयमिति भावः। "नमोऽनुपसर्गाद्वे" ति पाठान्तरं, तत्र न कश्चित्क्लेशः। प्राप्तविभाषेति। ज्वल दीप्तौ, ह्वल ह्मल चलने इति त्रयाणां पूर्वपठितत्वात्, नमेस्त्वमन्तत्वादिति भावः। कथं संक्रामयतीति। क्रमेः "नोदात्तोपदेशस्ये"ति वृद्धिप्रतिषेधाद्धञि "क्रम" इत्येव भवति, न तु "क्राम" इति पूर्वोक्कतसमाधानस्याऽत्राऽसंभवात्पृथक् प्रश्नः। व्यवस्थितविभाषेत्यादि। क्वचिण्णौ मितां ह्यस्वो न प्रवर्तत इति भावः। वृत्तिकृदिति। केचित्तु घञन्ताक्रमशब्दात्प्रज्ञाद्यणि क्रामशब्दं स्वीकृत्य तस्मात् "तत्करोती"ति णौ सङ्क्रामयतीति। समादधत इति भावः। इतरयोः प्राप्ते इति। वनेः पूर्वं पाठाद्वमेरमन्तत्वाच्चेति भावः। ग्लापयति। ग्लपयति। स्नापयति। स्नपयति। वानयति। वनयति। वामयति। वमयति। शाम्यतिवदिति। यथा शाम्यतिर्निशामयतीत्यादौ दर्शने प्रयुज्यते तथा चुरादिः शमधातुरपि, श्रवणे भविष्यतीत्यर्थः। (ग) यमोऽपरिवेषणे। यच्छतिरिति। "यम उपरमे" इत्यय#ं धातुर्भोजनातोऽन्यत्र। भोजनाशब्दो "ण्यासश्रन्तो यु"ञिति युजन्तो ज्ञेयः। परिवेषणमिह भोजनानुकूलव्यापारस्ततोऽन्यस्मिन्नर्थे मिन्निषेधः। नियमयन्निति। नियमवच्छब्दाण्णिचि विन्मतोर्लुकि शतरि शप्प्रत्यये गुणे च ज्ञेयम्। व्यत्यासः फलित इति। स्वामिमते त्वपरिवेषणे-- आयामयति। परिवेषणे तु -- यमयति ब्राआह्मणान्। अवादिपूर्वस्य (ग) स्खदिरवपरिभ्यां च। स्खदेः -- अवस्खदयति। परिस्खदयति। प्रपूर्वस्य तु प्रस्खादयतीत्येवं व्यत्यासो ज्ञेयः। उपेक्ष्यमिति। "न पादम्या"ङिति सूत्रे "आयामयते" इत्युदाह्मत्य वृत्तावुक्तं--- "यमोऽपरिवेषणे इत्यनेन मित्त्वं प्रतिषिध्यते" इति। न्यासेऽपि "तत्र न कम्यमीत्यतो नेत्यनुवर्तते" इत्युक्तम्। एवं हि निषेधानन्तरं पाठ उपपद्यते। अन्यथा "न कमी" त्यतः प्रागेव त्रिसूत्रीं पठेदिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

दीर्घ इणः किति ७।४।६९

इणो ऽङ्गस्य यो ऽभ्यासः तस्य दीर्घो भवति किति लिटि परतः। ईयतुः, ईयुः। इणो यण् ६।४।८१ इति यणादेशे कृते

स्थानिवद्भावाद् द्विर्वचनम्। किति इति किम्? इयाय। इययिथ।

न्यासः

दीर्घ इणः किति।, ७।४।६९

इणो ह्रस्वस्यैव श्रवणे प्राप्ते दीर्घत्वं विधीयते। "ईयतुः ईयुः" इति। ननु च परत्वात्? "इणो यण्()" (६।४।८१) इति यणादेशे सत्यनच्कत्वात्? द्विर्वचनं न प्राप्नोतीत्यत आह--"इणो यण्()" इत्यादि। स्थानिवद्भावस्तु "द्विर्वचनेऽचि" १।१।५८ इत्यनन। स च नियतकाले द्विर्वचन एव कत्र्तव्ये कृते च तस्मिन्नादेशरूप एवावतिष्ठते। "इयाय, इययिथ" इति। णलि थलि चेति यथाक्रमं वृद्धिगुणयोः कृतयोः स्थानिवद्भावाद्()द्विर्वचनमिकारः, तस्य "अभ्यासस्यासवर्णे, ६।४।७८ इतीयङ्()॥

बाल-मनोरमा

दीर्घ इणः किति २८७, ७।४।६९

दीर्घ इणः। "अत्र लोपः" इत्यतोऽभ्यासस्येति, "व्यथो लिटीत्यतो लिटीति चानुवर्तते। तदाह--इणोऽभ्यासस्येति। ईयतुरिति। भारद्वाजनियमात्थ्लि वडिति मत्वा आह-- इययिथ इयेथेति। इयथुः ईय। इयाय इयय ईयिव ईयिम। एता। एष्यति। एतु--इतात् इताम् यन्तु। इहि--इतात् इतम् इत। अयानि अयाव अयाम। ऐदिति लङि तिप इकारलोपे इकारस्य गुणे आटो वृद्धिः। आयन्निति। झेरन्तादेसे इकारलोपे इ--अन् इति स्थिते "इणो य"णिति यणि कृते तस्याभीयत्वेनाऽसिद्धत्वादाडिति भावः। ऐः ऐतम् ऐत। आयम् ऐव ऐम। विधिलिङ्याह-- इयादिति। इयाताम्। इयुरित्यादि। आशीर्लिङ्याह-- ईयादिति। "अकृत्सार्वधातुकयो"रिति दीर्घ इति भावः। ईयास्तामित्यादि।

तत्त्व-बोधिनी

दीर्घ इणः किति २४९, ७।४।६९

दीर्घ इणः किति। "अत्र लोपोऽभ्यासस्ये"त्यतोऽभ्यासस्येत्यनुवर्तते। "व्यथो लिटीत्यतो लटीति च। किति किम्?। इयाय। अत्र वदन्ति--- इह दीर्घे कृतेऽपि "अभ्यासस्याऽसवर्णे इतीयङा रूपसिद्धेः कितीति व्यर्थम्। न च दीर्घस्येयङि दीर्घविधानं व्यर्थमिति वाच्यम्, ईयतुः ईयरित्यत्रि "वार्णादाङ्गं बलीयः" इति यणि कृते दीर्घविधेरावश्यकत्वात्। किंच लिटीत्यनुवर्तनमपीह व्यर्थमेव, व्यावर्त्त्याऽभावादिति। एता। एष्यति। एतु। इतात्। इताम्। यन्तु। इहि। उत्तमे तु अयानि। अयाव। अयाम। लङ्मध्यमे-ऐः। ऐतम्। ऐत। उत्तमे तु आयम्। ऐव। ऐम। ईयादिति। "अकृत्सार्वे"ति दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

अत आदेः ७।४।७०

अभ्यासस्य आदेः अकारस्य दीर्घो भवति लिटि परतः। अतो गुणे पररूपत्वस्य अपवादः। आट, आटतुः, आटुः। आदेः इति किम्? पपाच। पपाठ।

न्यासः

अत आदेः।, ७।४।७०

लिटीत्यनुवत्र्तते। किद्ग्रहणं तु निवृत्तम्()। "अतो गुणे" ६।१।९४ इति पररूपत्वे प्राप्ते दीर्घत्वमारभ्यते। तपरकरणं स्वभावत एव यो ह्रस्वस्तस्य दीर्घो यथा तेनोपदेशे वो दीर्घस्तस्य ह्रस्वत्वे कृतेऽपि दीर्घो न भवति--"आच्छि आयामे"

(धा।पा।२०९), आच्छ, आच्छतुः, आच्चुरिति। लिट्(), तिपो णल्(), तसोऽतुम्(), झेरुस्(), द्विर्वचने हलादिशेषे "ह्रस्वः" ७।४।५९। किञ्च स्याद्? यद्यत्र दीर्घः स्यात्()? "तस्मारुआउड्()द्विहलः" (७।४।७१) इति नुट्? स्यात्()। "आदेः" इति वचनादिहान्तस्य दीर्घो न भवति--पपाचेत्यादौ॥

बाल-मनोरमा

अत आदेः ९४, ७।४।७०

ततश्च अनुप्रयुज्यमानादस्धातोर्लिटि भूभावनिवृत्तौ णलि एधाम् अस् अ इति स्थिते द्वित्वे हलादिः शेषे अ अस् इति स्थिते सवर्णदीर्घं बाधित्वा अतो गुण इति पररूपे प्राप्ते--अत आदेः। "अत्र लोप" इत्यस्मादभ्यासस्येत्यनुवर्तते। "दीर्घ इण" इत्यतो दीर्घ इति इति च। तदाह--अभ्यासस्येति। अत्र यद्वक्तव्यं तन्नामधातुप्रक्रियायाम् "अ इवाचरति अती" त्यादिग्रन्थस्य व्याख्यानावसरे वक्ष्यते। एधामासेति। नचाऽत्रानुप्युज्यमानाभ्यामस्तिभूभ्यामाम्प्रत्ययवदित्यात्मनेपदं शङ्क्यं, तत्र कृञ्ग्रहणेन प्रत्याहारग्रहणाऽभावस्य भाष्ये उक्तत्वात्। एधामासतुरित्यादीति। एधामासुः। एधामासिथ। एधामासथुः। एधामास। एधामासिव। एधामासिम। इति लिट्प्रक्रिया। एधितेति। लुटस्तादेशे एध्-त इति स्थिते शबपवादस्तस्। लुटः प्रथमस्येति डा। टिलोपः। एधितेति रूपम्। दीधीवेवीटामिति लघूपधगुणो न। एधिताराविति। लुट आताम्। तास् इट्। आतामित्यस्य रौभावः। रि चेति सलोपः। एधितार इति। झस्य रस्। तास्। इट्। रि चेतिसलोपः। रुत्वविसर्गौ। एधितास इति। थासः से। तास् इट्। तासस्त्योरिति सलोपः। एधितासाथे इति। आथाम् टेरेत्वं।तास्। इट्।

तत्त्व-बोधिनी

अत आदेः ७३, ७।४।७०

पररूपापवाद इति। "अपवाद" इत्ययं ग्रन्तो नामधातुप्रक्रियास्थस्वग्रन्थेन सह विरुध्यते। तत्र हि "अ इवाचरति अति। प्रत्ययग्रहणमुपनीय कास्यनेकाजित्युक्तेर्नाम्। औ। अतुः। उः। द्वित्वम् "अतो गुणे", "अत आदेः" इति दीर्घः। णल औ वृद्धि"रित्युक्तत्वात्। हलादिःशेषात्प्रागेव परत्वात् "अत आदे" दिति दीर्घे कृते तु पररूपशङ्कापि तत्र नास्तीति चिन्त्योऽयं ग्रन्थ इति नव्याः।

---

सूत्रम्

काशिका-वृत्तिः

तस्मान् नुड् द्विहलः ७।४।७१

तस्मादतो ऽभ्यासाद् दीर्घीभूतादुत्तरस्य द्विहलो ऽङ्गस्य नुडागमो भवति। आनङ्ग, आनङ्गतुः, आनङ्गुः। अनञ्ज, आनञ्जतुः, आनञ्जुः। द्विहलः इति किम्? आट, आटतुः, आटुः। ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते, तेन इह अपि द्विहलो ऽङ्गस्य नुडागमो भवति, आनृधतुः, आनृधुः।

लघु-सिद्धान्त-कौमुदी

तस्मान्नुड् द्विहलः ४६६, ७।४।७१

द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात्। आनर्च। आनर्चतुः। अर्चिता। अर्चिष्यति। अर्चतु। आर्चत्। अर्चेत्। अर्च्यात्। आर्चीत्। आर्चिष्यत्॥ व्रज गतौ॥ १०॥ व्रजति। वव्राज। व्रजिता। व्रजिष्यति। व्रजतु। अव्रजत्। व्रजेत्। व्रज्यात्॥

न्यासः

तस्मान्नुड्द्विहलः। , ७।४।७१

द्वौ हलौ यस्य तद्()द्विहल्()। "आनङ्ग, आनङ्गतुः, आनङ्गुः" इति। "अगि रगि लगि गत्यर्थाः" (धा।पा।१४६,१४४,१४५), इदित्त्वान्नुम्()। "आनञ्ज, आनञ्जतुः, आनञ्जुः" इति। "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" (धा।पा।१४५८)। "ऐऔच्()" (मा।सू।४) इत्यत्र "प्रत्याहारे वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयः, तेषु तत्कार्यं न भवति, तच्छायानुकारिणो हि ते, न पुनस्त एव; पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः" इत्युक्त्वा "नुड्()विधिलादेशविनामेष्वृकारे प्रतिविधातव्यम्()" इत्युक्तम्()। तत्रावसरप्राप्त्या ऋकारे नुङ्()विधौ प्रतिविधानमाह--"ऋकारैकदेशो रेफौ हल्ग्रहणेन गृह्नते" इति। "आनुधतुः, आनृधुः" इति। "ऋधु वृद्धौ" (धा।पा।१२७१)। कथं पुनर्वर्माअत्मकानां हला ग्रहणेनावर्णात्मक ऋकारैकादेशो रेफो गृह्नते? द्विहल्ग्रहणसाममथ्र्यादिति भावः। अत्र "तस्मान्नुट्()" इत्येवं वक्तव्यम्()। न चैवं सत्याटतुः, आटुरित्यादौ नुट्प्रसङ्गो भवति; अश्नोतेरित्यस्य नियमार्थत्वात्()--अद्विहलो यदि भवति नुट्? तदाश्नोतेरेव, नान्यस्येति। अश्नाति निवृत्त्यर्थं तदेतन्नाशङ्कनीयम्(); यद्येतावत्? प्रयोजनं स्यात्? "नाश्नः" इत्येवं ब्राऊयात्()। तस्मान्नियम एवास्य प्रयोजनम्()। तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यतो द्विहल्ग्रहणं करोति तस्यैतत्? प्रयोजनम्()--द्विहल्समानाकृतेरपि यथा स्यात्()। यस्याप्येको हल्? मुख्योऽवयवो द्वितीयस्त्वमुख्यस्तच्छायानुकारित्वादुपचारेण हलव्यपदेशार्हः, तस्यापि यथा स्यादित्येवमर्थम्()। एतस्य कथं ल्यते? यद्यत्र द्विहल इत्येवंश्रुतिस्तच्छायानुकारिण्यपि ऋकारावयवे रेफे वत्र्तते, नान्यथा। तस्माद्()द्विहल्ग्रहणसामथ्र्यादत्र हल्ग्रहणेन ऋकारैकदेशो रेफो गृह्नते; अन्यथा द्विहल्ग्रहणमनर्थकं स्यात्()॥

बाल-मनोरमा

तस्मान्नुड् द्विहलः १३२, ७।४।७१

लिटि णलि द्वित्वे हलादिशेषे अत आदेरित्यभ्यासाकारस्य दीर्घे आ अर्देति स्थिते--तस्मान्नुट्। द्वौ हलौ यस्य तस्येति विग्रहः। तच्छब्देन "अत आदे"रिति कृतदीर्घः परामृश्यते। तदाह---दीर्घीभूतादिति। टकार इत्। उच्चारणार्थः। टित्त्वादाद्यवयवः। तदाह-- आनर्देति। आर्दीदिति। "इट ईटी"ति सिज्लोपः। नर्देत्यादि स्पष्टम्। कर्देति। कुत्सितशब्देन कुत्सितविशेषो विवक्षित इत्याह-- कौक्ष इति। कुक्षिभवे इत्यर्थः। खर्देति। दन्दशूकः-- दंशनस्वभावः सर्पः। "दन्दशूको बिलेशयः" इत्यमरः। ननु सर्पस्य क्रियात्वाऽभावात्कथं धात्वर्थत्वमित्यत आह--दंशनेति। अति अदीति। इदित्त्वान्नुम्। तदाह--अन्ततीति। आनन्तेति। "अत आदे"रिति दीर्घः। "तस्मान्नुड् द्विहलः" इति नुट्। एवम्-अन्दति। आनन्देति। नुट्। आन्दीत्। इदीति। परमै()आर्यम् = परमे()आरीभवनम्। इन्दतीति। इदित्त्वान्नुम्। इन्दांचकारेति। "इजादेश्चे"त्याम्। बिदीति। इदित्त्वान्नुमित्याह--बिन्दतीति। नन्ववयवस्य अक्रियारूपत्वातक्थं धात्वर्थमित्यत आह-- अवयवं करोतीत्यर्थ इति। अबिन्दीत्। अबिन्दिष्टामित्यादि। पाटान्तमिति। पवर्गीयचतुर्थादिरित्यर्थः। गडीति। वदनैकदेश इति। तत्क्रियायामित्यर्थः। गण्डति। अगण्डीत्। अन्तत्यादय इति। अति अदि बन्धने, इदि परमै()आर्ये, बिदि अवयवे, गडि वदनैकदेशे इति पञ्च धातवस्तिङ्()प्रकृतयो न भवन्तीति काश्यपमतमित्यर्थः। अन्य इति। काश्यपादन्ये मुनयस्तिङमपि एभ्य् इच्छन्तीत्यर्थः। णिदीति। इदित्त्वान्नुम्। णोपदेशत्वाण्णस्य नत्वम्। तदाह-- निन्दतीति। प्रणिन्दतीति। "उपसर्गादसमासेऽपी"ति णत्वम्। टु नदीति। समृद्धिः--प्रजाप()आआदिसम्पत्तिः।

तत्त्व-बोधिनी

तस्मान्नुड् द्विहलः १०६, ७।४।७१

तस्मात्। तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह-- दीर्घीभूतादिति। खर्द [दन्दशूके] दन्दशूकस्य सर्पत्वात्तद्वाचित्वे धातुत्वं न सङ्गच्छत इत्याह-- दन्दशूकक्रियायामिति। दन्दशूककर्तृकायामित्यर्थः। आनन्तेति। इदित्त्वान्नुम्। तस्मान्नुड् द्विहलः इति नुट्। वदनैकदेश इति। तत्क्रियायामित्यर्थः।

सूत्रम्

काशिका-वृत्तिः

अश्नोतेश् च ७।४।७२

अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति। व्यानशे, व्यानशाते, व्यानशिरे। अश्नोतेः इति विकरणनिर्देशः अश्नातेर् मा भूतिति। आश, आशतुः, आशुः।

न्यासः

अश्नोतेश्च।, ७।४।७२

अद्विहलार्थोऽयमारम्भः। "व्यान शे" इति। "अशू व्याप्तौ" (धा।पा।१२६४), अनुदात्तेत्त्वादात्मनेपदम्(), त, एश्()। अश्नोतेरिति विकरणनिर्देशः "अश भोजने" (धा।पा।१५२३) इत्येतस्य क्रैयादिकस्य निवृत्तये। चकारो नुडागमानुकर्षणार्थः॥

बाल-मनोरमा

अश्नोतेश्च , ७।४।७२

अश्नोतेश्च। "अत्र लोपःट इत्यतो अभ्यासस्येत्यनुवर्तते, "तस्मान्नु"डिति च। तच्छब्देन "अत आदे"रिति कृतदीर्घोऽकारः परामृश्यते। तदाह-- दीर्घादिति। आनशे इति। आनिशिषे आनक्षे। आनशिवहे - आन()आहे। अष्टेति। व्रश्चादिना शस्य षत्वे ष्टुत्वम्। विधिलिङ्याह-- अश्नुवीतेति। आशीर्लिङि ऊदित्त्वादिड्विकल्पं मत्वाह---- अक्षीष्ट अशिषीष्टेति। लुङि सिच इट्पक्षे आह-- आशिष्टेति। अनिट्पक्षे "झलो झली"ति सिचो लोपं मत्वाह--- आष्टेति। ष्टिघ धातुः षोपदेशः। सेट्। आ गणान्तादिति। स्वादिगणसमाप्तिपर्यन्तमित्यर्थः। इत्युक्तमिति। भ्वादाविति भावः। कित्त्वपक्षे आह--- अनिदितामिति नलोप इति। नन्वनिदितामिति नलोपे सति "अत एकहल्मध्ये" इत्येत्त्वसिद्धेः "दम्भेश्चे"ति व्यर्थमित्यत आह-- तस्याभीयत्वादिति। नलोपस्येत्यर्थः। दभ्यादिति। आशीर्लिङि "अनिदिता"मिति नलोपः। छन्दसीति। गणसूत्रमिदम्। तद्व्याचष्टे - आ गणान्तादिति। रि क्षि इति। रि क्षि चिरि जिरि दाश दृ इति षट् धातवः। आद्यद्वितीयवेकारक्षरौ। तदाह-- रिणोति। क्षिणोतीति। अयं भाषायामपीति। क्षिधातुरित्यर्थः। तत्र प्रयोगं दर्शयति-- न तद्यश इति। वृदिति। स्वादयो वृत्ता इत्यर्थः। इति स्वादयः।

॥ इति बालमनोरमायाम् स्वादयः॥

अथ स्वार्थिकाः।

-----------

तत्त्व-बोधिनी

अश्नोतेश्च १३१, ७।४।७२

अश्नोतेश्च। "तस्मान्नुडि"त्यनुवर्तत इत्याह--दीर्घादिति। श्नुविकरणनिर्देशः किम्?। क्र्यादेरश भोजन इत्यस्य माभूत्। आश। आशतुः। त्रिधृषा। शूलेन धृष्णोति प्रगल्भते इति शूल धृक् शूलधृषौ। "ऋत्विग्दधृ"गिति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्म्। दम्भु। लोकवञ्चनाय विहितक्मानुष्ठानं दम्भः। तृप। अयं सेट्कः, अनुदात्तेषु श्यना निर्देशात्। अह व्याप्तौ। अस्मात् "ऋहलोण्र्य"दिति ण्यति "अह्य" इति "तस्यादित उदात्तमद्र्धह्रस्व"मित्यत्रास्माभिरुपपादितम्। अन्ये

त्वाहुः--- "शतचक्रं योऽह्नो वर्तनि"रित्यत्र "अह्न" इति षष्ठयन्तमेव। "घेर्ङिती"ति गुणस्तु अहिशब्दस्य च्छान्दसत्वान्नेति। रि क्षि। एते षट् धातवः। एक एवाजादिरिति मते तु पञ्च धातवः॥

इति तत्त्वबोधिन्याम् स्वादयः॥

* अथ स्वादिसन्धिः *

अथस्वादिसन्धिः। "शिव" इत्यस्यावसाने विसर्गस्तस्याच्य इत्यनेन समभिव्याहारे सस्याभावाद्रुत्वं कथं स्यादित्याशङ्कायामाह-स्वौजसमौडित्यादिनेति। एवं चात्र मूलभूत एव सुरस्तीति रुत्वादिकं स्यादेव, विसर्गस्त्विह न भवति, खरवसानाऽभावात्। भाविन्यवसानभङ्गेऽकृतव्यूहपरिभाषयाऽच्यपदसमभिव्याहारात्पूर्वमपि न भवतीति बोध्यम्।

---

सूत्रम्
काशिका-वृत्तिः
भवतेरः ७।४।७३

भवतेरभ्यासस्य अकारादेशो भवति लिटि परतः। बभूव, बभूवतुः, बभूवुः। भवतेः इति कृतविकरननिर्देशादिह न भवति, अनुबभूवे कम्बलो देवदत्तेन। लिटि इत्येव, बुभूषति। बोभूयते।
लघु-सिद्धान्त-कौमुदी
भवतेरः ४००, ७।४।७३

भवतेरभ्यासोकारस्य अः स्याल्लिटि॥
न्यासः
भवतेरः।, ७।४।७३

"बभूव" इति। "भुवो वुग्लुङ्()लिटोः" ६।४।८८ इति वुक्()। "अनुबभूवे" इति। कर्मण्यात्मनेपदम्()। श्तिपा निर्देशी यङ्लुग्निवृत्त्यर्थः--वोभावेति॥
बाल-मनोरमा
भवतेरः ३०, ७।४।७३

भवतेरः। भवतेः- अ इति छेदः। भवतेरिति निर्देशः। भूधातोरित्यर्थः। "इक्()श्तिपौ धातुनिर्देशे" इत्युक्तेः। "अत्र लोपोऽभ्यासस्ये"त्यस्मादभ्यासस्येनुव्रतते। "व्यथो लिटि" इत्यस्माल्लिटीति। भूधातोरभ्यासस्य भवन्नकारः "अलोऽन्त्यस्ये" त्यन्त्यस्योकारस्य भवति। तदाह--- अभ्यासोकारस्येति। "नानर्थकेऽलोन्त्यविधि"रिति तु नेह प्रवर्तते, "अनभ्यासविकारे" इत्युक्तेः।

तत्त्व-बोधिनी
भवेतरः २५, ७।४।७३

"अत्र लोपोऽभ्यसस्ये"ति सूत्रादभ्यासपदमनुवर्तते। अत्र प्राचोक्तं-- भवतेरिति कर्तृनिर्देशाद्भावकर्मणोर्नाऽत्वमिति। व्याख्यातं च तत्पौत्रेण-- "कत्र्रर्थयोः श्तिप्शपोर्निर्देशादित्यर्थ" इति। तन्न। धातुनिर्देशमात्रे श्तिपो विधानात्, शपश्च

विकरणत्वनानर्थकत्वात्, कत्र्रर्थके परे विहितस्यापि तस्य श्तिपः शित्त्वसामथ्र्यादेवेह प्रवृत्तेः, अन्यथा त्वदुक्तरीत्या "उपसर्गात्सुनोतिसुवती"त्यादीनामपि भावकर्मणोरप्रवृत्तौ सर्वोपप्लव एव स्यात्, अपसिद्धान्तश्चाऽयमिति स्पष्टमेवाकरद्दशाम्। प्रयुञ्जते चकर्मण्यप्यकारं कवयः-- "तस्यातपत्रं बिभरांबभूवे", "विभावरीभिर्विभरांबभूविरे" इत्यादि। एतच्च प्रक्रियाप्रसादग्रन्थदूषणं मनोरमायां स्थितम्।

अत्र नव्याः-- "श्तिपः शित्त्वसामथ्र्यादेवेह शपः प्रवृत्ति"रिति यदुक्तं, तन्नापिबतिग्र्लायतिरित्यादौ पिबद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात्। एवं च "उपसर्गात्सुनोतिसुवति", "भवतेरः" "ध्यायतेः संप्रसारणं चे"त्यादिनिर्देशादकर्तृवाचिन्यपि परे शवादय इत्येव व्याख्येयम्। अन्यथा "इक्श्तिपौ" इति सूत्रे वक्ष्यमाणस्वग्रन्थेन सह विरोधापत्तेः। केचित्तु-- शित्वात्तिपः सार्वधातुकत्वेन भवतिरित्यादौ "आद्र्धदातुकस्येड्वलादे"रितीडागमनिवृत्त्या, "ब्रावीति"रित्यत्र "ब्राउव ईडि" तीडागमप्रवृत्त्या च शित्त्वं चरितार्थमिति व्याचख्युः, तञ्चिन्त्यम्। "तितुत्रे" त्यनेनेण्णिषेधादाद्र्धधातुकत्वेऽपि क्षत्यभावात्। "ब्राउव ई"डित्यत्र "ब्राउवः परस्य हलादेः पित ईडागम" इत्येतन्मात्रस्य मूले व्याख्यातत्वात्सार्वधातुकस्येति विशेषणाऽभावेऽपि क्षत्यभावात्। न च हलादेःपित्प्रत्ययस्य "साव्र्धातुकस्ये"ति विशेषणाऽभावे ब्राउवो लिटि वच्यादेशे सिपस्थलि उवक्थेत्यत्राऽतिप्रसङ्गः स्यादिति वाच्यं, थलोऽत्र पित्तवाऽभावात्। न च स्थानिवद्भावेन पित्त्वं, श्नः शानचः शित्त्वेन लिङ्गेन क्वचिदनुबन्धकार्येऽप्यनल्विध#आविति तन्निषेधात्। तस्मात्पूर्वोक्तरीत्यैव श्तिपः शित्त्वसाम्रथ्यादकर्तर्यपि शपः प्रवृत्तिरिति ग्रन्थो निराकर्तव्य इत्याहुः। तदपरे न क्षमन्ते। थलः पित्त्वाऽभावे हि "असंयोगाल्लिट्कि"दिति कित्त्वात्? "वचिस्वपी"ति संप्रसारणे सत्युवचिथ उवक्थेति न सिध्येत्, किंतु ऊचिथ ऊक्थेति स्यात्। तस्मात्स्थानिवत्त्वेन थलः पित्त्वेऽभ्युपगते उवक्थेत्यादावतिप्रसङ्गवारणाय "पितः सार्वधातुकस् ईडागम" इति व्याख्यातमेव, तथा च ब्रावीतिरित्यत्र ईडागमप्रवृत्त्या शित्त्वं चरितार्थमिति कैश्चिद्यदुक्तं तदपि सम्यगेवेति॥

---

सूत्रम्

काशिका-वृत्तिः

ससूवेति निगमे ७।४।७४

ससूव इति निपात्यते। सूतेर् लिटि परस्मैपदं वुगागमः अभ्यासस्य च अत्वं निपात्यते। ससूव स्थाविरं विपश्चिताम्। सुषुवे इति भाषायाम्।

न्यासः

ससूवेति निगमे। , ७।४।७४

"सूतेः" इति। "षूङ्? प्राणिगर्भविमोचने" (धा।पा।१०३१)--इत्येतस्य। "सुषुवे" इति। ङित्त्वादात्मनेपदम्(); उवङ्()। इतिकरणमेवम्प्रकाराणामन्येषामुपसङग्रहार्थम्()। तेन जाग्रमः, अदर्शमेत्यादि सिद्धं भवति। जाग्रम इति जागत्र्तेरग्निपात्यते। अदर्शमेति लङि दृशेः पश्यादेशाभावः। जागृम्(), अपश्यामेति भाषायामृ()। दाधर्त्यादिषु ससूवग्रहयणं न कृतम्(); वैचित्र्यार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

णिजां त्रयाणां गुणः श्लौ ७।४।७५

निजादीनां त्रयाणां अभ्यासस्य गुणो भवति श्लौ सति। णिजिर् नेनेक्ति। विजिर् वेवेक्ति। विष्लृ वेवेष्टि। त्रिग्रहणम् उत्तरार्थम्, एषां हि वृत्करणम् समाप्त्यर्थं पठ्यते एव इति। श्लौ इति किम्? निनेज।

न्यासः

णिजां त्रयाणां गुणः �आऔ। , ७।४।७५

बहुवचननिर्देशादाद्यर्थो गम्यत इत्यत आह--"एवाम्()" इत्यादि। "णिजिर्? शौचपोषणयोः" (धा।पा।१०९३), "विजिर्? पृथग्भावे" (धा।पा।१०९४), "विष्लृ व्याप्तौ" (धा।पा।१०९५)--इत्येते णिजादयो जौहोत्यादिकाः। "त्रिग्रहणमुत्तरार्थम्()" इति। "भृञामित्()" ७।४।७६ इतीत्त्वम्()। त्रयाणामेव यथा स्यादधिकानां मा भूदित्येवमर्थं त्रिग्रहणम्()। एतदर्थमपि कस्मान्न भवति? इत्यत आह--"एवाम्()" इत्यादि। यद्यत्र त्रिग्रहणं क्रियते निजादीनामन्ते बृत्करणं किमर्थम्()? एतद्गणकारः प्रष्टव्यः, न सूत्रकारः। "अन्यो हि गणकारोऽन्यश्च सूत्रकारः" इत्युक्तं प्राक्। गणकारेणापि वैचित्र्यार्थं वृत्करणं कृतमिति वेदितव्यम्()। विचित्रा हि गणस्य कृतिर्गणकारेण। अथ गुणग्रहणं किमर्थम्(), एकार एव नोच्येत? अशक्यमेवेदं वक्तुम्(); एवं ह्युच्यमाने द्वेव्यमपि कश्चिद्विजानीयात्()--हलादिशेषापवादोऽयं निजादीनामेकर इति। गुणग्रहणे हि संज्ञाविधाने नियम इतीक एव भवति, हलस्तु हलपादिशेषेण निवृत्तिर्भवति॥

तत्त्व-बोधिनी

निजां त्रयाणां गुणः श्लौ २८८, ७।४।७५

निजाम्। श्लाविति किम्?। निनेज।

---

सूत्रम्

काशिका-वृत्तिः

भृञामित् ७।४।७६

भृञादीनां त्रयाणाम् अभ्यासस्य इकारादेशो भवति शलौ सति। भृञ् बिभर्ति। माङ् मिमीते। ओहाङ् जिहीते। त्रयाणाम् इत्येव, जहाति। श्लौ इत्येव, बभार।

लघु-सिद्धान्त-कौमुदी

भृञामित् ६२५, ७।४।७६

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ। मिमीते। मिमाते। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ट। अमास्त। अमास्यत॥ ओहाङ् गतौ॥ ७॥ जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत॥ डु भृञ् धारणपोषणयोः॥ ८॥ बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। विभराञ्चकार, बभार। बभर्थ। बभृव। बिभराञ्चक्रे, बभ्रे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभृयात्, बिभ्रीत। भ्रियात्, भृषीष्ट। अभार्षीत्, अभृत। अभरिष्यत्, अभरिष्यत॥ डु दाञ् दाने॥ ९॥ ददाति। दत्तः। ददति। दत्ते। ददाते। ददते। ददौ, ददे। दातासि, दातासे। दास्यति, दास्यते। ददातु॥

न्यासः

भृञामित्?। , ७।४।७६

"डु भृञ्? धारणपोषणयोः" (धा।पा।१०८७), "माङ्? माने" (धा।पा।१०८८), "ओहाङ्? गतौ" (धा।पा।१०८९)--इत्येते

भृञादयो जौहोत्यादिका एव। "मिमीते, जिहीते" इति। "ई हल्यघोः" ६।४।११३ इतीत्त्वम्()॥

बाल-मनोरमा

भृञामित् ३२६, ७।४।७६

भृञामित्। भृञामिति बहवचनाद्भृञादीनामिति लभ्यते। "अत्र लोपः" इत्यतोऽभ्यासस्येति, "निजां त्रयाणां गुणः श्लौ" इत्यतस्त्रयाणां श्लाविति चानवर्तते। तदाह--भृञ् माङित्यादिना। बिभ्रतीति। अभ्यस्तत्वाददादेशे यण्। बिभर्षि बिभृथः बिभृथ। बिभर्मि बिभृवः बिभृमः। बिभृते बिभ्राते बिभ्रते। बिभृषे बिभ्राथे। इति सिद्धवत्कृत्य आह-- बिभृध्वे इति। बिभ्रे बिभृवहे बिभृमहे। श्लुवद्भावादिति। "भीह्रीभृहुवा"मित्यनेनेति भावः। बिभरामासेति। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो नेति भावः। बभारेति। श्लावित्यनुवृत्तेर्भृञामिदिति नेत्त्वम्। बभ्रतुः बभ्रुरित्यपि ज्ञेयम्। "कृसृभृवृ"इति लिटि इण्निषेधः। थल्यपि "अचस्तास्व"दिति नित्यमिण्निषेधः। ऋदन्तत्वेन भारद्वाजमतेऽपि निषेधात्। तदाह--- बभर्थेति। बभ्रथुः बभ्र। बभार--बभर इति सिद्धवत्कृत्य आह--- बभृवेति। क्रादित्वादिण्निषेध इति भावः। बभ्रे बभ्राते बभ्रिरे। बभृषे बभ्राथे बभृढ्वे। बभ्रे बभृवहे बभृमहे। भर्ता। भरिष्यति। भरिष्यते। बिभर्तु-- बिभृतात् बिभृताम् बिभ्रतु। इति सिद्धवत्कृत्य आह--बिभृहीति। हेरपित्त्वेन ङित्त्वाद्गुणनिषेध इति भावः। बिभृतात् बिभृतम् बिभृतेति सिद्धवत्कृत्य आह--- बिभराणीति। आटः पित्त्वेन ङित्त्वाऽभावान्न गुणनिषेध इति भावः। बिभराव बिभराम। लङ्याह--अबिभरिति। अबिभृ त् इति स्थिते गुणे रपरत्वे हलङ्यादिलोपे रेफस्य विसर्ग इति भावः। अबिभरुरिति। अभ्यस्तत्वात् झेर्जुस्। "जुसि चे"ति गुण-। अबिभः अबिभृतम् अबिभृत। अबिभरम् अबिभृव अबिभृम। अबभृत अबिभ्राताम् अबिभ्रत। अबिभृथाः अबिभ्राथाम् अबिभृध्वम्। अबिभ्रि अबिभृवहि अबिभृमहि। आशीर्लिङ्याह--- भ्रियादिति। "रिङ्शयग्लिङ्क्षु" इति रिङ्। आत्मनेपदे आसीर्लिङ्याह--- भृषीष्टेति। "उश्चे"ति कित्त्वान्न गुणः। अभार्षीदिति। अनिट्त्वान्न सिज्लोपः। सिचि वृद्धिः। रपरत्वमिति भावः। अभार्ष्टामित्यादि। आत्मनेपदे लुङ्याह-- अभृतेति। "ह्रस्वादङ्गा"दिति सिचो लोपः। अभृषातामित्यादि। माङ् माने इति। अनिट्। ङित्त्वादात्मनेपदी। श्लौ द्वित्वे "भृञामि"दिति अभ्यासस्य इत्त्वे मि मा ते इति स्थिते--

तत्त्व-बोधिनी

भृञामित् २८२, ७।४।७६

भृञामित्। णिजां त्रयाणा"मित्यतोऽनुवर्तनादाह-- एषां त्रयाणामिति। केचित्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः। त्रयाणां किम्?। जहाति। "श्लौ किम्?। बभार।

---

सूत्रम्

काशिका-वृत्तिः

अर्तिपिपर्त्योश् च ७।४।७७

अर्ति पिपर्ति इत्येतयोः अभ्यासस्य इकारादेशो भवति श्लौ। इयर्ति भूमम्। पिपर्ति सोमम्।

लघु-सिद्धान्त-कौमुदी

अर्तिपिपर्त्योश्च ६१३, ७।४।७७

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ। पिपर्ति॥

न्यासः

अर्तिपिपत्र्योश्च। , ७।४।७७

"इयर्ति, पिपर्ति" इति। "ऋ सृ गतौ" (धा।पा।१०९८,१०९९) "पृ? पालनपूरणयोः" (धा।पा।१०८६), जुहोत्यादिकत्वाच्छपः श्लुः गुणः द्विर्वचनम्(), "उरत्()" ७।४।६६ इत्यत्त्वम्(), अनेनेत्त्वम्(), रपरत्वञ्च। अर्त्तेः "अभ्यासस्यासवर्णे" ६।४।७८ इतीयङ्()। अथार्तिग्रहणं किमर्थम्(), यावता निजादिभ्योऽयं परः पठ()ते। ये च निजादिब्य परे ते सर्व एव च्छान्दसाः, तथा हि तान्? पठित्वा छन्दसीत्युक्तम्()। छान्दसत्वाच्चार्तेः "बहुलं छन्दसि" (७।४।७८) इत्येवं सिद्धम्()? एवं तह्र्येतज्ज्ञापयति--भाषायामप्यर्त्तेः प्रयोगो भवतीति॥

बाल-मनोरमा

अर्तिपिपर्त्योश्च ३२३, ७।४।७७

अर्तिपिपर्त्योश्च। "अत्र लोपः" इत्यस्मादभ्यासस्येति, "भृञामि"दित्यस्मात् इदिति, "निजां त्रयाणा"मित्यतः श्लाविति चानुवर्ततते इत्यभिप्रेत्य शेषं पूरयति--- अभ्यासस्येत्यादिना। तथाच अभ्यासे ऋकारस्य इत्वे रपरत्वे हलादिशेषे उत्तरखण्डस्य गुणे रपरत्वे पिपर्तीति वक्ष्यति। तत्र उत्तरखण्डे ऋकारस्य उत्वं शङ्कितुमाह--

तत्त्व-बोधिनी

अर्तिपिपर्त्योश्च २७९, ७।४।७७

अर्तिपिपर्त्योश्च। अर्तेरुदाहरणमियतीति वक्ष्यति।

---

सूत्रम्

काशिका-वृत्तिः

बहुलं छन्दसि ७।४।७८

छन्दसि विषये अभ्यासस्य श्लौ बहुलम् इकारादेशो भवति। पुर्णां विवष्टि। वशेरेतद् रूपम्। तथा वचेः जनिमा विवक्ति। सचेः वत्सं न माता सिषक्ति। जघर्ति सोमम्। न च भवति। ददाति इत्येवं ब्रूयात्। जजनदिन्द्रम्। माता यद्वीरं दधनद्धनिष्ठा।

न्यासः

बहुलं छन्दसि। , ७।४।७८

"विविष्टि" इति। "वश कान्तौ" (धा।पा।१०८०), "बहुलं छन्दसि" २।४।७६ इति शपः श्लुः, व्रशस्चादिसूत्रेण ८।२।३६ षत्वम्()। "विवक्ति" इति। "वच परिभाषणे" (धा।पा।१८४२)। "सिषक्ति" इति। "सच समवये" (धा।पा।९९७), "सच सेचने" (धा।पा।१६३) इति वा। "जिगर्त्ति, जिघर्त्ति" इति। "गृ घृ सेचने" (धा।पा।९३७,९३८)। सर्वत्र पूर्ववच्छपः श्लुः। "जजनम्(), दधनम्()" इति। "जन जनने" (धा।पा।११०५), "धन धान्ये" (धा।पा।११०४)। लुङ्()मिपोऽम्(), जुहोत्यादित्वाच्छपः श्लुः; "बहुलं छन्दस्यामाङ्योगेऽपि" ६।४।७५ इत्यङ्()निषेधः॥

---

सूत्रम्

काशिका-वृत्तिः

सन्यतः ७।४।७९

सनि परतो ऽकारान्ताभ्यासस्य इकारादेशो भवति। पिपक्षति। यियक्षति। तिष्ठासति। पिपासति। सनि इति किम्? पपाच। अतः इति किम्? लुलूषति। तपरकरणं किम्? पापचिषते।

लघु-सिद्धान्त-कौमुदी

सन्यतः ५३५, ७।४।७९

अभ्यासस्यात इत् स्यात् सनि॥

न्यासः

सन्यतः। , ७।४।७९

"पिपक्षति" इत्यादि। पचियज्यो रूपे। "पिपासति" इति। पातेः, पिबतेर्वा। "लुलूषति" इति। "लूञ्? छेदने" (धा।पा।१४८३)। "इको झल्()" १।२।९ इति कित्त्वाद्गुणाभावः। "सनि ग्रहगुहोश्च" ७।२।१२ इतीट्प्रतिषेधः। तपरकरणं किमर्थम्()? पापच्यतेः सन्? पापचिषत इत्यत्र मा भूत्()। किं पुनः कारणमत्र ह्रस्वो न भवति? दीर्घविधानसामर्थ्यात्()। यदि "सनि योऽभ्यासः" इत्येवं विज्ञायेत, [विज्ञायते-प्रांउ। पाठः] ततो मुखसुखार्थम्()॥

बाल-मनोरमा

सन्यतः १५७, ७।४।७९

सन्यतः।सनि-अत इति च्छेदः। "अत्र लोप" इत्यतोऽभ्यासस्येत्यनुवर्तते। "भृञामि"दित्यस्मादिदिति। तदाह-- अभ्यासस्येति। कि कम् अ त इति स्थितम्।

तत्त्व-बोधिनी

सन्यतः १३१, ७।४।७९

"अत्र लोपोऽभ्यसस्ये"त्यतोऽभ्यासस्येति, "भृञामि" दित्यत इद्ग्रहणं चानुवत्र्तते। तदाह-- अभ्यासस्येत्यादि। तपरकरणं किम्?। पापच्यतेः सन्। पापचिषते। न च सनि योऽभ्यासः सन्निमित्त इति विज्ञानात्तरपरकरणाऽभावेऽपि नोक्तातिप्रसङ्गः, अभ्यासस्येह यङ्निमित्तत्वादिति वाच्यं, तादृशविवक्षायामधीषिषति प्रतीषिषतीत्यादावव्याप्तः। न हि कार्यी निमित्तत्वेनाश्रीयते। यद्याश्रीयेत तर्हि "द्विर्वचनेऽची"ति निषेधेन रिस्()शब्दस्य द्वित्वाऽप्रवृत्तावरिरिषतीत्यादि न सिध्येत्। नन्वेवं पिपक्षतीत्यादावपव्याप्तिः, अभ्यासस्य सन्परत्वाऽभावात्। न च "येन नाव्यवधान" न्यायेन सन्प्रकृत्या व्यवहितेऽप्यभ्यासस्येत्वं स्यादेवेति वाच्यं, प्रतीषिषतीत्यादावभ्यासस्याऽव्यवहितसन्परत्वसंभवादुक्तव्यायस्याऽप्रवृत्तेरिति चेत्। अत्राहुः-- सना धातुमाक्षिप्य सनि सति यो धातुः सन्नन्तस्तदीयाभ्यासस्येति व्याख्यानान्नोक्तदोषः। न च सनि परे अभ्यासस्येति यथाश्रुतं परित्यज्योक्तव्याख्याने किं मानमिति वाच्यम्, तपरकरणस्यैव तत्र मानत्वात्। किं च अकारग्रहणमपि तत्र मानम्। अन्यथा "सन" इत्येव ब्राऊयात्, तावताप्यधीषिष[ति प्रतीषिष] तीत्यादावित्त्वप्रृत्तिसिद्धेरिति।

---

सूत्रम्

काशिका-वृत्तिः

ओः पुयण्ज्यपरे ७।४।८०

सनि इति वर्तते, इतिति च। उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे च अवर्णपरे परतः इकारादेशो भवति सनि प्रत्यये परतः। पवर्गे अपरे पिपविषते। पिपावयिषति। बिभावयिषति। यण्यपरे यियविषति। यियावयिषति। रिरावयिषति। लिलावयिषति। ज्यपरे जु इति सौत्रो ऽयं धातुः। जिजावयिषति। एतदेव पुयण्ज्यपरे इति वचनं ज्ञापकम्, अद्विर्वचननिमित्ते ऽपि णौ स्थानिवद् भवति इति। ओः इति किम्? पापच्यतेः सन् पापचिषते। पुयण्जि इति किम्?

अवतुतावयिषति। जुहावयिषति। अपरे। इति किम्? बुभूषति।

लघु-सिद्धान्त-कौमुदी

ओः पुयण्ज्यपरे ७०४, ७।४।८०

सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयणजकारेष्ववर्णपरेषु परतः॥ अबीभवत्॥ ष्ठा गतिनिवृत्तौ॥

न्यासः

ओः पुयण्यज्यपरे। , ७।४।८०

"पुयण्जि" [नास्ति--काशिका] इति। पुयण्जामेकवद्भावं कृत्वा सप्तम्या निर्देशः। "अपरे" [नास्ति--काशिका] इति। अः परो यस्मात्? पुयण्जस्तदपरमवर्णपरमित्यर्थः। "पिपविषते" इति। पूङ्? पदने" (धा।पा।९६६) सन्(), "स्मिपूङ्रञ्()च्वशां सनि" ७।२।७४ इतीट्(), गुणावादेशौ। स्थानिवद्भावात्? "पू" इत्यस्य द्विर्वचनम्(), स्थानिवद्भावस्तु "द्विर्वचनेऽचि" १।१।५८ इत्यनेन। "पिपावयिषति" इति। पूङो ण्यन्तात् सन्()। अत्रापि स्थानिवद्भावात्? "पू" इत्येतद्()द्विरुच्यते। "बिभावयिषति" इति। "भू सत्तायाम्()" (धा।पा।१) ण्यन्तात्? सन्()। "यियावयिषति" इति। यौतेण्र्यन्तात्? सन्()। "सनौवन्तं ७।२।४९ इत्यादेनेठ्()। "रिरावयिषति; लिलावयिषति" इति। रौतिलुनातिभ्यां ण्यन्ताभ्यां सन्()। "जिजावयिषति" इति। "जु" इति सौत्रो धातुः ३।२।१५०; "जुचंक्रम्य" ३।२।१५० इत्यादौ पाठात्()। तस्मात्? ण्यन्तात्? सन्()। कथं पुनः पिपादयिषतीत्यादावुकारान्तताऽभ्यासस्य, यावता णौ परतोऽन्तरङ्गत्वाद्()वृद्ध्यावादेशयोः कृतयोर्वकारान्तस्याद्विर्वचनेन भवितव्यम्(), स्थानिवद्भावादुकारान्तस्य द्विर्वचनं भविष्यतीति चेत्()? न; न हि णौ कृतस्य स्थानिवद्भावो भवति। णेरद्विर्वचननिमित्तत्वादित्यत आह--"एतदेव" इत्यादि। न हि णिचमन्तरेण पुयण्जोवर्णपराः सर्वे सम्भवन्ति। तत्र हि यदि णौ कृतस्य स्थानिवद्भावो न स्यात्(), तदा येषां णिचमन्तरेण पुयण्जोऽवर्णपराः सर्वे सम्भवति। तत्र हि यदि माउ कृतस्य स्थानिवद्भवो न स्यात्(), तदा येषां णिचमन्तरेणावर्णपरता न सम्भवति, तेषामुवर्णान्तोऽभ्यासो न स्यात्(), उच्यते चेदं "ओः पुयज्जयपरे" इति वचनम्()। तस्मादेतज्ज्ञापकम्()--अद्विर्वचननिमित्ेऽपि णौ स्थानिवद्भवतीति। तेन तुतावयिषति, बिभावयिषतीत्यादि सिद्धं भवति। केषाञ्च पुनर्णिचमन्तरेणावर्णपरता न सम्भवति? यकारपकाराभ्यामन्येषां सर्वेषामेव। "पापचिषते" इति। "अतो लोपः" ६।४।४८ इत्यकारलोपः, "यस्य हलः" ६।४।४९ इति यकारस्य। "तुतावयिषति" ["अवतुतावयिषति" इति काशिकापदमञ्जर्योः पाठः] इति। "तु" इति सौधो धातुः; "तुरुस्तुशम्यमः" ७।३।९५ इत्यादौ सूत्रे पाठात्()। "जुहावयिषति" इति। "हु दाने" (धा।पा।१०८३) ण्यन्तात्? तस्मात्? सन्()। "बुभूषति" इति। पूर्ववदिङ्गुणयोरभावः॥

बाल-मनोरमा

ओः पुयण्ज्यपरे ४०५, ७।४।८०

ओः पुयण्। "उ" इत्यस्य "ओ" रिति षष्ठी। "पुयण्जी"ति छेदः। पुश्च यण् च ज् चेति समाहारद्वन्द्वात्सप्तमी। अः परो यस्मादिति बहुव्रीहिः। "सन्यतः" इत्यस्मात्सनित्यनुवर्तते। अङ्गस्येत्यधिकृतम्। "अत्र लोपः" इत्यस्मादभ्यासस्येति, भृञामिदित्यस्मादिदिति चानुवर्तते। तदाह -- सनि परे इत्यादिना। अबीभवदिति। भू इ अत् इति स्थिते द्वित्वे कार्ये णौ अच आदेशस्य निषेधाद्वृद्ध्यावादेशाभ्यां प्रागेव "भू"इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वेऽभ्यासेऽकाराऽभावेन "सन्यतः" इत्यस्याऽप्रवृत्त्या सन्वत्त्वादनेने इत्त्वे दीर्घ इति भावः। अपीपवदिति। पूङ्धातो रूपम्। मूङित्यस्माद्धातोरमीमवदिति रूपमित्यर्थः। अयीयवदिति। युधातो रूपम्। अरीरवदिति। रुधातो रूपम्। अलीलवदिति। लूञ्धातो रूपम्। अजीजवदिति। जुः सौत्रो दातुर्जुचङ्क्रम्येत्यत्र निर्दिष्टः। ननु भू भू इति द्वित्वोत्तरं वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वे तस्य स्थानिवत्त्वेन लघुपरत्वाऽभावात्सन्वत्त्वाऽप्रसक्त्या कथमिहाभ्यासोवर्णस्य

इत्वमिति चेन्न, आरम्भसामथ्र्यादेव स्थानिवत्त्वाऽप्रवृत्तेरिल्यम्।

तत्त्व-बोधिनी

ओः पुयण्ज्यपरे ३५४, ७।४।८०

ओः पुयण्जि। "पुयण्जी"ति समाहारद्वन्द्वात्सप्तम्येकवचनम्। "अपरे" इति बहुव्रीहिः। "अत्र लोपोऽभ्यासस्ये"त्यतोऽभ्यासस्येत्यनुवर्तते। "भृत्रामी"दित्यत इद्ग्रहणं, "सन्यतः" इत्यतः सनीति च, अङ्गस्येति तु अधिक्रियत एव। तदेतदभिप्रेत्याह--- सनि परे यदङ्गमित्यादि। अपरे किम्?। बुभूषति। पवर्गयण्जीति किम्?। ऊर्णुनविषति। अबीभवदित्यादि। "भू सत्तायाम्"। "पूङ् पवने"। मृङ् बन्धने"। "यु मिश्रणादौ"। रु शब्दे"। "लूञ्छेदने"। "जु गतौ"। सौत्रोऽयं धातुः "जुचङ्क्रम्ये"त्यत्र निर्दिष्टः। ननु भू भू इति द्वित्वोत्तरं वृद्ध्यावादेशौ भवस्ततः कृतस्य "णौ चङी"ति ह्रस्वस्य स्थानिवद्भावेन लघुपरत्वाऽभावात्सन्वद्भावाऽप्रवृत्त्याऽबीभवदित्यादावभ्यासोवर्णस्येत्वं दुर्लभमिति चेत्। अत्राहुः-- आरम्भसामथ्र्यादेव न स्थानिवत्त्वमिति।

---

सूत्रम्

काशिका-वृत्तिः

स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ७।४।८१

स्रवति शृणोति द्रवति प्रवति प्लवति च्यवति इत्येतेषाम् अभ्यासस्य ओः अवर्नपरे यणि वा इकारादेशो भवति सनि परतः। सिस्रावयिषति, सुस्रावयिषति। शृणोति शिश्रावयिषति, शुश्रावयिषति। द्रवति दिद्रावयिषति, दुद्रावयिषति। प्रवति पिप्रावयिषति, पुप्रावयिषति। प्लवति पिप्लावयिषति, पुप्लावयिषति। च्यवति चिच्यावयिषति, चुच्यावयिषति। वचनसामर्थ्यादेकेन वर्णेन यणो व्यवधानमाश्रीयते। पूर्वसूत्रेन तु अनन्तर एव यणि भवितव्यम् इति अप्राप्तबिभाषेयम्। अपरे इत्येव, सुस्रूषति। शुश्रूषते।

न्यासः

रुआवतिश्रृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा। , ७।४।८१

"सु रुआउ गतौ" (धा।पा।९४०) "श्रु श्रवणे" (धा।पा।९४२) "दु द्रु गतौ" (दा।पा।९४४,९४५)"प्रुङ्()प्लुङ् च्युङ्? गतौ" (धा।पा।९५७,९५८,९५६) "सिरुआआवयिषति" इत्यादि। एभ्यो ण्यन्तेभ्यः सर्वत्र सन्()। ननु च सकारादिना वर्णेनात्र यणो व्यवधानम्(), अत्रावर्णपरे यणि परत इत्वमुच्यमानं व्यवधाने कथं भवति? इत्याह--"वचनसामथ्र्यात्()" इति। सवत्रैव हि सकारादिनैकवर्णेन व्यवधानम्(), उच्यते चेदं वचनम्(), तस्मादत्र वचनसामथ्र्यादेकेन वर्णेन व्यवधानमाश्रीयते; अन्यथा हि वचनमिदमनर्थकं स्यात्। "पूर्वसूत्रेण" इत्यादेनाऽप्राप्तविभाषेयमिति दर्शयति। "शुश्रुषति" [शुश्रूयते--काशिका] इति। पूर्ववदिङ्गुणयोरभावः। श्तिपः निर्देशो धातुनिर्देशार्थः, न यङलग्निवृत्त्यर्थः। अत्र गुणे कृत उकारान्तताभावादित्वं न भवतीति। "सोरुआविषति"॥[नास्ति--कीशिका]

बाल-मनोरमा

रुआवतिशृणोतिद्रवतिप्रवृतिप्लवतिच्यवतीनां वा ४०६, ७।४।८१

रुआवतिशृणोति। अपर इत्यनुवर्तते, न तु पुयण्जीति, पवर्गजकारयोरसंभवात्,रुआवत्यादौ यणः सत्त्वेऽप्यव्यभिचारात्। तदाह -- अवर्णपरे धात्वक्षरे इति। अक्षरशब्दो वर्णपरः। असिरुआवत् असुरुआवदिति। द्विहल्व्यधानेन लघुपरकत्वाऽभावान्न सन्वत्त्वमिति भावः। अशिश्रवत् अशुश्रवत्।अदिद्रवत् अदुद्रवत्। अपिप्रवत् अपुप्रवत्। अपिप्लवत्

अपुप्लवत्। अचिच्यवत्।अचुच्यवत्। अथ सासुधतोरशशादित्यत्राह-- नाग्लोपीति। अडुढौकदिति। ढौकृ गतावित्यस्य ऋदित्त्वादिति भावः। अचीचकासदिति। चकासृ दीप्तौ। ऋदित्त्वान्नोपधाह्रस्वः। "चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर" इति पक्षे सन्वत्त्वम्, अभ्यासदीर्घश्चेति भावः। मतान्ते त्विति। "अङ्गं यत्र द्विरुच्यते" इति मते" चङ् परेणौ यल्लघु तत्परो योऽङगस्य अभ्यास" इति मते चेत्यर्थः। आग्लोपीतीति। अग्लोपिन उपधाह्रस्वनिषेधे मा भवानूननदिति उदाह्रतम्। अतितिरायदित्याद्युदाहणान्तरं सुब्धातुरनिरूपणे वक्ष्यते इत्यर्थः। ननु "चुर स्तेये" इत्यस्मात्स्वार्थे णिचि उपधागुणे "चोरि इति रूपम्,तस्माद्धेतुमण्णौ प्रथमस्य णेर्लोपे सति "चोरिट इत्येव हेतुण्ण्यन्तम्। तसमाल्लटि तिपि शपि गुणे अयादेशे "चोरयती"त्येव रूपम#इष्यते। तन्नोपपद्यते, हेतुमण्णौ परे प्रथमस्य णेर्लोपं बाधित्वा परत्वाद्वृद्धावायादेशे चोराय् इ इत्यस्माल्लटि चोराययतीत्यापत्तेरित्यत आह-- ण्यन्ताण्णिचीति। ण्यन्ताण्णिचि वृदिं()ध बाधित्वा णिलोपैत्यन्वयः। कुत इत्यत आह-- पूर्वविप्रतिषेधादिति। "ण्यल्लोपावियङ्()यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने"ति वार्तिकेनेति भावः। अपवादत्वाद्वेति। "कमु कान्तौ" इति धातौ द्विधा प्रपञ्चितत्वादिति भावः। अथ ण्यन्ताण्णौ ततो हेतुमण्णेर्लोपे चुरित्यस्य द्वित्वे सन्वद्भावविषयत्वाह-- दीर्घो लघोरिति। तथा च अचूचुरदिति सिद्धम्। ननु उपदाह्रस्वोऽभ्यासदीर्घश्चेति द्वयमपि चङ्परे णौ विहितं, तदुभयमप्यत्र प्रत्ययलक्षणमाश्रित्य प्रथमणिचमादाय न संभवति, तस्य द्वितीयणिचा व्यवहितत्वेन चङ्()परकत्वाऽभावात्। नापि द्वितीयणिचमादायतदुभयसंभवः, द्वितीयणिच्प्रकृतेः प्रथमसंभवो न शङ्क्य इत्यर्थः। कुत इत्यत आह-- ण्याकृतिनिर्देशादिति। "चङ्परे णा"वित्यत्र णावित्यस्य चङ्परकमित्वजात्याश्रयैकाऽनेकणिज्व्यक्तिपरकत्वं विवक्षितम्। तथा च णिद्वयस्य चङ्परकत्वाऽभावेऽपि णित्वस्य चङ्परकत्वमस्तीति ह्रस्वदीर्घयोरस्ति प्रवृत्तिरिति भावः। अत्र जातिन#इर्देशोऽयुक्त इति शब्देन्दुशेखरे प्रपञ्चितम्। "टु ओ ()इआ गतिवृद्धयोः" अस्माद्धेतुमण्णौ वृद्ध्यायादेशयोः ()आआयीत्यस्माल्लडादौ ()आआययतीति रूपम्। लुङि चङि अ()इआ इ अ त् इति स्थिते विशेषमाह--

तत्त्व-बोधिनी

रुआवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ३५५, ७।४।८१

रुआवतिशृणोति। "अपरे" इत्यनुवर्तते न तु पुयण्जीति" पवर्गजकारयोरसंभवात्। यणः संभवेऽप्यव्यभिचारात्तदाह-- अवर्णपरे धात्वक्षरे इति। "अक्षर" शब्दोऽत्र वर्णपरः। अवर्णपरे किम्?। सुरुआऊषति। शृमोत्यादेरुदाहरणं तु-- अशिश्रवत्। अशुश्रवत्। अदिद्रवत्। अदुद्रवत्। रापिप्रवत्। अपुप्रवत्। अचिच्यवत्। अचुच्यवत्। अडुढौकदिति। "ढौकृ गतौ"। "चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर" इति पक्षाश्रयेणाह--- अचीचकासदिति। मतान्तर इति। "अङ्गं यत्र द्विरुच्यते" इति मते, "चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याऽभ्यास"इति मते चेत्यर्थः। सुब्धातुप्रकरण इति। अतितिरायत्। अससध्रायत्। अविविष्वद्रायत्। अदिदेवद्रायदित्याद्युदाहरिष्यत इत्यर्थः। वृदिं()ध बाधित्वेति। "ण्यल्लोपाविय"ङित्यादिवचनात्, लोपांऽशप्रत्याख्यानपक्षेऽपवादत्वाद्वेत्यर्थः। असंभव इति। तथा च अचुचोरदित्येव रूपमिति भावः। ण्याकृतिनिर्देशादिति। "चङ्परे णा"वित्यत्र चङ्परे णित्वे इत्यर्थः। तेन णिद्वये सत्यपि णित्वं चङ्परमस्तीति ह्रस्वदीर्घयोरस्ति संभव इति भावः। एतेन "अवीवदद्वीणां परिवादकेने"त्यादौ सन्वद्भावो व्याख्यातः, तत्रापीकत्थमेव पूर्वपक्षसिद्धान्तयोस्तुल्यत्व#आत्।

---

सूत्रम्

काशिका-वृत्तिः

गुणो यङ्लुकोः ७।४।८२

यङि यङ्लुकि च इगन्तस्य अभ्यासस्य गुणो भवति। चेचीयते। लोलूयते। यङ्लुकि जोहवीति। यगो वा इति इड्विकल्पः। चोक्रुशीति।
लघु-सिद्धान्त-कौमुदी
गुणो यङ्लुकोः ७१५, ७।४।८२

अभ्यासस्य गुणो यङि यङ्लुकि च परतः। ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट॥
न्यासः
गुणो यङ्लुकोः। , ७।४।८२

अभ्यसस्य गुणोऽयं विधीयते। तेन यद्यप्यत्र लुक्शब्दोऽयं सामान्यः, तथापि यङ्लुक एव सम्प्रत्ययो भवति। न ह्त्र लुक्यभ्यासः सम्भवतीति मत्वाऽऽह--"यङि यङ्लुकि च" इत्यादि। "चौक्रुशीति" "क्रुश आह्वाने" (धा।पा।८५६) यङ्(), तस्य "यङोऽचि च" २।४।७४ इति लृक्(), "यङो वा" ७।३।९४ इतीट्(), "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणनिषेधाद्यङो लुकि कृते गुणो न प्राप्नोतीति लुग्ग्रहणम्()। "पुगन्तलघुपधस्य च" ७।३।८६ इति प्राप्तोऽपि गुणः "नाभ्यस्तस्याचि पिति सार्वधातुके" ७।३।८७ इति निषिध्यते॥
तत्त्व-बोधिनी
गुणो यङ् लुकोः ३९७, ७।४।८२

ब्राउवो वचिरित्यादीति। वावच्यते, चाख्यायत इत्यादिरूपसिद्धिः प्रयोजनमित्यर्थः। धातुग्रहणाऽभावे धिगित्यव्ययादपि स्यात्तस्य क्रियावाचित्वादेकाच्त्वाच्चेति तद्वारणार्थमपि धातुग्रहणमावश्यकमित्याहुः।

---

सूत्रम्
काशिका-वृत्तिः
दीर्घो ऽकितः ७।४।८३

अकितो ऽभ्यासस्य दीर्घो भवति यगि यङ्लुकि च। पापच्यते। पापचीति। यायज्यते। यायजीति। अकितः इति किम्? यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। ननु चात्र अपवादत्वान् नुकि कृते अभ्यासस्य अनजन्तत्वादेव दीर्घत्वं न भविष्यति? एवं तर्हि अकितः इत्यनेन एतज् ज्ञाप्यते, अभ्यासविकारेष्वपवादा न उत्सर्गान् विधीन् बाधन्ते इति। किम् एतस्य ज्ञापने प्रयोजनम्? डोढौक्यते इत्यत्र दीर्घो ऽकितः इत्यनेन सन्ध्यक्षरह्रस्वो न बाध्यते, अचीकरतित्यत्र दीर्घो लघोः ७।४।९४ इत्यनेन सन्वदित्वं न बाध्यते, मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते मीमांसते, ई च गणः ७।४।९७ इतीत्वेन हलादिशेषो न बाध्यते अजीगणत्।
लघु-सिद्धान्त-कौमुदी
दीर्घोऽकितः ७१७, ७।४।८३

अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः। कुटिलं व्रजति वाव्रज्यते॥
न्यासः
दीर्घोऽकितः। , ७।४।८३

"यंयम्यते" इति। "यम उपरमे" (धा।पा।९८४), "नुगतोऽनुनासिकान्तस्य" ७।४।८५ इति नुक्()। "ननु च"

इत्यादिनाऽकित इत्येतत्प्रत्याचष्टे। यंयम्यत इत्यत्र मा भूदित्येवमर्थं "अकितः" इत्युच्यते। अत्र ह्यपवादत्वान्नुकि कृतेऽनजन्तत्वादेव दीर्घो न भविष्यतीति नार्थोऽकित इत्यनेन। "एवं तर्हि" इत्यादिना "अभ्यासविकारेष्वपवादा नोत्सर्गान्? विधीन्? बाधन्ते" (व्या।प।२३) इत्येतां परिभाषां ज्ञापयितुं "अकितः" इत्येतदुच्यत इति दर्शयति। "डोढौक्यते" इति। "ढौकृ गतौ" (धा।पा।९८) इत्यस्य यङि कृते हलादिशेषे च "ह्रस्वः" ७।४।५९ इति ह्रस्वत्वम्(), पूर्वसूत्रेण गुणः। तत्रासत्यस्मिन्? ज्ञापके पिपासतीत्येवमादौ सावकाशं ह्रस्वत्वं "दीर्घोऽकितः" ७।४।८३ इत्येनेन सन्ध्यक्षरे दीर्घत्वेन बाध्येत। दीर्घस्य दीर्घविधाने प्रयोजनाभावाद्दीर्घो न भविष्यतीति चेत्()? नैतत्(); अस्ति हि दीर्घस्य दीर्घविधाने प्रयोजनम्(), किं तत्()? ह्रस्वो मा भूदिति। एवं चासत्यस्मिन्? ज्ञापके "अचीकरत्()" इत्यत्राप्यचिक्षणदित्यादौ सावकाशमित्त्वम्? "दीर्घो लघोः" ७।४।९४ इति दीर्घत्वेन बाध्येत। "मीमांसते" इत्यादावसत्यस्मिन्? ज्ञापके पिपक्षतीत्यादौ सावकाशं "सन्यतः" ७।४।७९ इतीत्वं मान्बधादिसूत्रेण ३।१।६ विहितेन दीर्घत्वेन बाध्यते। "अजीगणत्()" इत्यत्राप्यसत्यास्मेन्? ज्ञापके पपाठेत्यादौ सावकाशो हलादिशेषः "ई च गणः" ७।४।९७ इतीत्वेन बाध्यते। अ()स्मस्तु सति तर्वमेतन्न बाध्यते। ननु चासति प्रयोजने ज्ञापकं भवति; अस्ति चास्य प्रयोजनम्(), किं तत्()? धातुकित्त्वमपेक्ष्य जहातेर्मा भूत्()--जाहाति, जाहेतीति? नैतदस्ति; यदि ह्येतत्? प्रयोजनं स्यात्(), तदा "अहाकः" इति प्रतिषेधं कुर्यात्()। किञ्च "अकितः" इत्यभ्यासस्य विशेषणं भवितुमर्हति, यद्यभ्यासावस्थायां कित्त्वमुपजायते। न च जहातेः कित्त्वमभ्यासमपेक्षते, पूर्वमेव हि तदभ्यासाद्भवति। तस्माज्जहातेः--जाहाति, जाहेतीति रूपेण भवितव्यम्()। ततश्च "अकितः" इति वचनं ज्ञापकमेव। कित्करणं तु जहातेः "हश्च व्रीहिकालयोः" ३।१।१४८ इत्यत्र सामान्यग्रहणाविघातार्थम्()। अथ दीर्घग्रहणं किमर्थम्(); आदित्येव नो()येत/ नैवं शक्यम्(), "अकितः" इत्यस्य ज्ञापकता नोपपद्यते। सति हि दीर्घग्रहणे नुकि कृतेऽनजन्तत्वादेव हि दीर्घस्य प्राप्तिर्नास्तीति "अकितः" इति प्रतिषेधस्य ज्ञापकत्वमुपपद्यते। आकारस्तु विधीयमानोऽजन्तस्याभ्यासस्य स्यादिति "अकितः" इत्यस्य ज्ञापकत्वं न स्यात्()। तस्माद्दीर्घग्रहणं कत्र्तव्यम्()॥

तत्त्व-बोधिनी

दीर्घोऽकितः ३९९, ७।४।८३

दीर्घोऽकितः। अकितः किम्?। यंयम्यते। रंरम्यते। ननु दीर्घश्रुत्योपस्थितेनाऽचा "अत्र लोपोऽभ्यासस्ये"त्यतोऽनुवृत्तमभ्यासस्येत्येतद्विशिष्येत। ततश्चाऽजन्ताभ्यासस्य दीर्घो भवतीत्यर्थात् पापच्यत इत्यादावेव दीर्घो भवेन्न तु यंयम्यते जङ्घनीतित्यादौ। तत्र हि परत्वान्नुकि कृतेऽभ्यासस्याऽजन्तत्वाऽभावाद्दीर्घस्य प्रसक्तिरेव नास्तीति किमनेनाऽकित इत्यनेन। न चाभ्यासावयवस्याऽचो दीर्घ इति वैयधिकरण्यान्वये स्वीकृतेऽकिद्ग्रहणं प्रयोजनवदिति वाच्यं, संभवति सामानाधिकरणे वैयधिकरण्यस्याऽन्याय्यत्वात्। येन नाप्राप्तिन्यायेन नुको दीर्घापवादत्वस्वीकाराच्च। तस्मादकित इति व्यर्थमिति चेत्। अत्राहुः-- डोढौक्यते इत्यत्राभ्यासह्रस्वं बाधित्वा परत्वात् "दीर्घोऽकितः" इति दीर्घे कृते डोढौक्यत इति स्यात्। तस्मादभ्यासविकारेषु उत्सर्गविधीन्बाधका न बाधन्त इति ज्ञापनायाऽकित इति ग्रहणं कर्तव्यमिति। रतथाचोक्तज्ञापकनिर्वाहाय "दीर्घोऽकितः" इत्यत्राऽभ्यासस्याऽच इति वैयकरम्यपक्षस्याश्रयणाद्यंयम्यत इत्यादौ दीर्घात्प्रागेव नुकि कृतेऽपि दीर्घः स्यात्, तद्वारणार्थमकित इत्यावश्यकमिति दिक्। अटाट()त इति। इह ट()शब्दस्य द्वित्वम्।

---

सूत्रम्

काशिका-वृत्तिः

नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ७।४।८४

वञ्चु स्रंसु ध्वंसु भ्रंसु कस पत पद स्कन्द इत्येतेषाम् अभ्यासस्य नीगागमो भवति यङि यङ्लुकि च। वञ्चु वनीवच्यते। वनीवञ्चीति। स्रंसु सनीस्रस्यते। सनीस्रंसीति। ध्वंसु दनीध्वस्यते। दनीध्वंसीति। भ्रंसु बनीभ्रस्यते। बनीभ्रंसीति। कस चनीइकस्यते। चनीकसीति। पत पनीपत्यते। पनीपतीति। पद पनीपद्यते। पनीपदीति। स्कन्द चनीस्कद्यते। चनीस्कन्दीति।

न्यासः

सन्योरिति सप्तम्यन्तमिदं वा स्यात्?? षष्ठ�न्तं वा? तत्र यदि सप्तम्यन्तं स्यात् तदायमर्थः स्यात्?--सन्यङोः परत इति, ततश्चेटः सन्भक्तत्वात्? सन्ग्रहणेनेन ग्रहणात्?, सनश्चेह द्विर्वचननिमित्तत्वान्निमित्तस्य च कार्यिणोऽयोगादिटो द्विर्वचनं न स्यात्?, ततश्चाटिटिषतीत्यादि न सिद्ध्येत्?। षष्ठ�न्ते त्वस्मिन्? प्रत्ययग्रहणपरिभाषया (भो।पसू।७) तदन्त उपस्थापिते सत्ययमर्थो जायते--सनन्तस्य यङन्तस्य च यः प्रथम एकाज्? द्वितीयो वा तेनेटो द्विर्वचनं भवतीति। तथा चाटिटिषतीत्यादि सिध्यतीत्यतदालोच्याऽऽह--ꣳसन्यङोरिति षष्ठ�न्तमेतत्? इति। अत्र च ज्ञापको योगविभाग इति। यदि हि ꣳसन्यङोः इति सप्तम्यन्तं स्यात्? ꣳश्नुसन्यङः इत्येकमेव योगं कुर्यात्?। ननु चासत्यपि प्रयोजने ज्ञापकमस्ति, अस्ति चेह योगविभागस्य प्रयोजनम्?, किं तत्?? सामथ्र्याद्यथासंख्यं यथा स्यात्?--सनि प्रथमस्य, यङि द्वितीयस्येति? नैतदस्ति; यदि ह्रत्र यथासंख्यमभिप्रेतं स्यात्? तदा ꣳनीग्वञ्चु , ७।४।८४

"अटाट()ते" इति। यङ्()विधौ "सूचिसूत्रिमूत्र्यट()त्र्यशूर्णोतीनामुपसंख्यानम्()" (वा।१९८) ति यङ्()। "प्रोर्णोनूयते" इति। "अकृत्()सार्वधातुकयोः" ७।४।२५ इति दीर्घः। "जुगुप्सिषते" इति। गुपेः "गुप्तिज्किद्भ्यः सन्()" (३।१।५) ति सन्? तदन्तात्? "धातोः कर्मणः समानकर्तृकात्()" ३।१।७ इत्यादिनेच्छायां पुनः सन्()। "लोलूयिषते" इति। यङ्न्तात् सन्()॥

न्यासः

नीग्वञ्चुरुआंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्?। , ७।४।८४

"वन्चु चन्चु तन्चु त्वन्चु भ्रुन्चु ग्लुन्चु ["मुन्चु" इति प्रां३। न्यासपाठः] गत्यर्थाः" (धा।पा।१८९-१९४)। "रुआन्सु ध्वन्सु अवरुआंसने" (धा।पा।७५४,७५५), "कस गतौ" (धा।पा।८६०) "शल हुल पत्लृ गतौ" (धा।पा।८४३-८४५), "स्कन्दिर्? गतिशोषणयोः" (धा।पा।९७९)। "वनीवच्यते" इति। "अनिदिताम्()" ६।४।२४ इत्यादिनानुनासिकलोपः। "वनीवञ्चीति" इति। अत्र न भवत्यनुनासिकलोपः। यङी लुप्तत्वात्? "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणनिषेधात्()। अथ नीकि कृते ह्यस्वत्वं कस्मान्न भवति? दीर्घोच्चारणसामर्थायत्()॥

तत्त्व-बोधिनी

नीग्वञ्चुरुआंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ४०५, ७।४।८४

इत्यादीति। दनीध्वनस्यते। बनीभ्रस्यते। चनीकस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते। एं वनीञ्चीति सनीरुआंतीति दनीध्वंसीतीत्यादि यङ्लुक्युदाहर्तव्यम्।

*हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः। घ्नीभाव इति। ह्नीभावे कृतेऽपि "अभ्यासाच्चे"ति कुत्वेन जेघ्नीयत इति सिध्यति, तथापि प्रक्रियालाघवाय "घ्नी"त्युक्तमिति मनोरमा। अन्ये तु "सेर्हिः" "मेर्नि"रिति इकारोच्चारणसामथ्र्याद्यता "एरु"रित्युत्वं न भवति तथा ह्नीभावे हि कृते "अभ्यासाच्चे"ति कुत्वं न स्यादित्याशयेन घ्नीभावः कृत इत्याहुः। अत्र च दिग्यादेशेनैव घ्रीभावेन द्वित्वं न बाध्यते पुनः प्रसङ्गविज्ञानादिति केचित्। वस्तुतस्तु यङन्तावयवस्य द्वितीयाऽवजवधिकस्य द्वित्वं, घ्नीभावस्तु प्रकृतिमात्रस्येति विषयभेदादद्वत्वं निर्बाधमेव।

---

सूत्रम्

काशिका-वृत्तिः

नुगतो ऽनुनासिकान्तस्य ७।४।८५

अनुनासिकान्तस्य अङ्गस्य यो ऽभ्यासः तस्य अकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः। तन्तन्यते। तन्तनीति। जङ्गम्यते। जङ्गमीति। यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। नुकित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम्। स्थानिना हि आदेशो लक्ष्यते। तेन यंयम्यते इत्येवम् आदौ अझल्परत्वे ऽपि अनुस्वारो भवति। पदान्तवच्चेति वक्तव्यम्। वा पदान्तस्य ८।४।५८ इति परसवर्नविकल्पो यथा स्यातिति। अतः इति किम्? तेतिम्यते। तपरकरणं तु भूतपूर्वस्य अपि दीर्घस्य निवृत्यर्थम्, बाभम्यते। अनुनासिकान्तस्य इति किम्? पापच्यते।

न्यासः

नुगतोऽनुनासिकान्तस्य। , ७।४।८५

"दीर्घोऽकितः" ७।४।८३ इत्यनेन दीर्घत्वे प्राप्ते वचनमिदमारभ्यते। "तन्तन्यते" इत्यादीनि तमिगमियमिरमीणां रूपाणि। यदि नुक्? क्रियते, यम्यम्यते इत्यादौ "नश्चापदान्तस्य झलि" ८।३।२४ इति झल्युच्यमानोऽनुस्वारो न सिध्यति, अझल्परत्वात्()? इत्यत आह--"नुगित्ये तत्()" इत्यादि। कथं पुनर्नुगित्येतदनुस्वारोपलक्षणार्थं शक्यते द्रष्टुम्()? इत्याह--"स्थानिना हि" इत्यादि। नुका हि स्थानिनाऽत्रादेशोऽनुस्वार उपलक्ष्यते। तस्मादनुस्वार एवागमोऽत्र विधीयते, न तु नुक्()। यम्यम्यत इत्यादौ यद्यप्यझल्परताऽस्ति, तथाप्यनुस्वारः सिध्यति। एवं "अनुस्वारस्य ययि परसवर्णः" ८।४।५७ प्राप्नोति, इष्यते च पक्षेऽनुस्वारस्य श्रवणम्(), तन्न सिध्यति, अपवान्तत्वात्()? इत्यत आह--"पदान्तवच्च" इत्यादि। पदान्तवदनुस्वारो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--तदन्तविधिर्नवानुनासिकान्तस्यानुस्वारो भवतीति नार्थोऽन्तग्रहणेन, तत्क्रियते--पदान्तस्यानुत्वारस्य यो धर्मा स नुकोऽपि स्यादित्येवमर्थम्(); तेनानुस्वारस्य पक्षे श्रवणं भविष्यतीति। "तेतिम्यते" इति। "तिम ष्टिम आद्रीभावे" (धा।पा।११२३,११२४)। अथ तपरकरणं किमर्थम्(), यावता नास्ति किञ्चिदन्यदस्य व्यावर्त्यमिति सर्वत्र ह्यस्वाभावात्()? इत्यत आह--"तपरकरणम्()" इत्यादि। वत्र्तमानस्य दीर्घस्याभावाद्भूतपूर्वस्यापि दीर्घस्य निवृत्यर्थं तपरकरणं भविष्यतीति। "बाभाम्यते" इति। "भाम क्रोधे" (धा।पा।४४१)॥

---

सूत्रम्

काशिका-वृत्तिः

जपजभदहदशभञ्जपशां च ७।४।८६

जप जभ दह दश भञ्ज पश इत्येतेषाम् अभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः। जञ्जप्यते जञ्जपीति। जभ जञ्जभ्यते। जञ्जभीति। दह दन्दह्यते। दन्दहीति। दश दन्दश्यते। दन्दशीति दश इति दंशिः अयं नकारलोपार्थम् एव निर्दिष्टः। तेन यङ्लुक्यपि नकारलोपो भवति। भञ्ज बम्भज्यते। बम्भञ्जीति। पश इति सौत्रो धातुः पम्पश्यते। पम्पशीति।

न्यासः

जपजभदहदशभन्जपशां च। , ७।४।८६

अनुनासिकार्तोऽयमारम्भः। "जप जल्प व्यक्तायां वाचि" (धा।पा।३९७,३९८), "जभि जृभी गात्रविनामे" (धा।पा।३८८,३८९) "दह भस्मीकरणे" (धा।पा।९९१), "दन्श दशने" (धा।पा।९८९) "भव्जो आमर्दने" (धा।पा।१४५३), "पशिः" सौत्रो धातुः। "जञ्जप्यते" इत्यादिषु "दंदश्यते" इति पर्यन्तेषु "लुपसद" ३।१।२४ इत्यादिना यङ्()। इतरत्र सामान्यलक्षणेन"

३।१।२२॥

---

सूत्रम्

काशिका-वृत्तिः

चरफलोश् च ७।४।८७

चर फल इत्येतयोः अभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः। पञ्चूर्यते। पञ्चूरीति। पम्फुल्यते। पम्फुलीति।

न्यासः

चरफलोश्च। , ७।४।८७

"चर गतौ" (धा।पा।५५९)। "ञि फला विशरणे" (धा।पा।५१६), "फल निष्यत्तौ" (धा।पा।५३०)-द्वयोरपि ग्रहणम्()। निष्यत्त्यर्थस्याकार उच्चारणार्थः, नानुबन्धः, प्रयोजनाभावात्(), ततश्च निरनुबन्धकपरिभाषया (व्या।प।५३) निरनुबन्धस्य निष्पत्त्यर्थस्यैवास्य ग्रहणं प्राप्नोति, न विशरणार्थस्य? नैष दोषः; चकारोऽत्र क्रियते, स च विशरणार्थस्य समुच्चयार्थो भविष्यति। "चञ्चूर्यते" इति। "लुपसद" ३।१।२४ इत्यादिना यङ। उत्तरसूत्रेणाकारस्योकारे कृते "हलि च" ८।२।७७ इति दीर्घः। योगभाग उत्तरार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

उत् परस्य अतः ७।४।८८

चरफलोः अभ्यासात् परस्य अतः उकारादेशो भवति यङ्यङ्लुकोः परतः। चञ्चूर्यते। चञ्चूरीति। पम्फुल्यते। पम्फुलीति। परस्य इति किम्? अभ्यासस्य मा भूत्। अतः इति किम्? अलो ऽन्त्यस्य मा भूत्। उदिति तपरकरणं चञ्चूर्ति, पम्फुलीति इत्यत्र लघूपधगुणनिवृत्त्यर्थम्। दीर्घस्य असिद्धत्वातिह लभुत्वं न निवर्तते।

न्यासः

उत्परस्यातः , ७।४।८८

"अभ्यासस्य मा भूत्()" इति। असति परग्रहणेऽभ्यासाधिकारादभ्यासस्यैव स्यादित्यभिप्रायः। "अलोऽन्त्यस्य मा भूत्()" इति। यदि "अतः" इति नोच्येत, ततोऽलोऽन्त्य (१।१।५२) परिभाषयाऽभ्यासात्परस्य धातुरूपस्य योऽन्त्योऽल्? तस्य स्यादिति मन्यते। अथ तपरकरणं किमर्थम्(), यावता मात्रिकस्य स्थान आन्तरतम्याद्विधीयमानो मात्रिक एव भविष्यति? इत्यत आह--"तपरकरणम्()" इत्यादि। असति तपरकरण उकारे कृते चञ्चूर्ति, पम्फुल्तीत्यत्र "पुगन्तलघूपधस्य" ७।३।८६ इति गुणः स्यात्(), स मा भूदित्येवमर्थं तपरकरणं क्रियते। ननु चञ्चूर्तीत्यत्र दीर्घत्वमेव गुणस्य बाधको भविष्यति, तत्किमेतन्निवृत्त्यर्थेन तपरकरणेन? इत्यत आह--"दीर्घत्वम्()" इत्यादि। असिद्धत्वं तु "पूर्वत्रासिद्धम्()" ८।२।१ इत्यनेन। यदि तर्हि लक्षणान्तरेण प्राप्तो गुणस्तपरकरणेन निवत्र्तते, गुणवद्दीर्घत्वमपि न स्यात्()/ नैष दोषः; तपरकरणे हि दीर्घत्वमपि सिद्धमिति। तेन दीर्घस्य निवृत्तिर्न शक्यते वक्तुम्()। तथा च --"अत उत्? सार्वधातुके" ६।४।११० इति तपरकरणेन दीर्घत्वमशक्यं निवत्र्तयितुमिति मन्यमानेन "न भकुर्च्छुराम्()" ८।२।७९ इति करोतेर्दीर्घत्वप्रतिषेध आरभ्यते। अत इति तपरकरणमिह मा भूत्()--फलन्तं प्रयुङ्क्ते फालयति, फालयतेः क्विप्(), तदन्तात्? "आचारे पुनः सर्वप्रातिपदिकेभ्यः" (वा।१८६()) इति क्विप्(), तदन्ताद्यङ्()--पन्फाल्यते, पम्फालोति। कथञ्च प्राप्नोति? एकदेशविकृतस्यानन्यत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

ति च ७।४।८९

तकारादौ प्रत्यये परतः चरफलोः अकारस्य उकारादेशो भवति चरणं चूर्तिः। ब्रह्मणः चूर्तिः। प्रफुल्तिः। प्रफुल्ताः सुमनसः। यङ्यङ्लुकोः, अभ्यासस्य इति च अनुवर्तमानम् अपि वचनसामर्थ्यादिह न अभिसम्बध्यते।

न्यासः

ति च। , ७।४।८९

अयङलुगर्थोऽयमारम्भः। "चूर्त्तिः" इति। "स्त्रियां क्तिन्()" [३।३।९४](#) पूर्ववद्दीर्घः। "प्रकृल्ताः" इति। "निष्ठा, तदन्ताट्टाप्(); जस्()। "वचनसामथ्र्यादिह नाभिसम्बध्यते" इति। यदीह यङ्लुग्ग्रहणमभ्यासग्रहणञ्चाभिसम्बध्येत, ततो वचनस्य वैयथ्र्यं स्यात्()। पूर्वेणैव यङयङ्लुकोरभ्यासस्य सिद्धत्वादित्यभिप्रायः॥

तत्त्व-बोधिनी

ति च ६९१, ७।४।८९

निवृत्त्यर्थमित्युपलक्षणम्। फुल्लवानिति रूपस्य, "निष्ठा च द्व्यजना"दित्याद्युदात्तस्य च सिद्ध्यर्थमिति बोध्यम्।

* उत्फुल्लसंफुल्लयोरुपसङ्ख्यानम्। उत्फुल्लसंफुल्लयोरिति। यद्यपि प्रफुल्ल इतिवत् फुल्लेः पचाद्यचा सिद्धं, तथापि उत्फुस्तः, संफुस्त इति प्रयोगानिवृत्त्यर्थं वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

रीगृदुपधस्य च ७।४।९०

ऋदुपधस्य अङ्गस्य यो ऽभ्यासः तस्य रीगागमो भवति यङ्यङ्लुकोः परतः। वरीवृत्यते। वरीवृतीति। वरीवृध्यते। वरीवृधीति। नरीनृत्यते। नरीनृतीति। रीगृत्वत इति वक्तव्यम्। इह अपि यथा स्यात्, वरीवृश्च्यते। वरीवृश्चीति। परीपृच्छ्यते। परीपृच्छीति।

लघु-सिद्धान्त-कौमुदी

रीगृदुपधस्य च ७१९, ७।४।९०

ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवर्तिता॥

न्यासः

रीगृदुपधस्य च। , ७।४।९०

"वरीवृत्यते" इत्यादीनि वृतिवृधिनृतीनां (धा।पा।७५८,७५९।१११६) रूपाणि। "रीगृत्वत इति वक्तव्यम्()" इति। ऋदुपधादन्यस्यापि ऋत्वतो रीगादयो यथा स्युरित्येवमर्थो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--चकारोऽत्र क्रियते, स च ऋदुपधादन्यस्यापि ऋत्वतः समुच्चयार्थः, तेन वृश्चतिप्रभृतीनामपि ऋत्वतां रीगादयो भवन्तीति। "रीगृत्वतः" इति सूत्रं न कृतम्(); वैचित्र्याथम्()। "ऋदुपधस्य" इति तपरकरणमसन्देहार्थम्()। उकारे परतो यणादेशे कृते सन्देहः स्यात्()--किमृकारोपधस्य? अथ वा रेफोपधस्येति()॥

---

सूत्रम्

काशिका-वृत्तिः

रुग्रिकौ च लुकि ७।४।९१

यङ्लुकि ऋदुपधस्य अङ्गस्य यो ऽभ्यासस् तस्य रुग्रिकौ आगमौ भवतः, चकाराद् रीक् च। नर्नर्ति, नरिनर्ति, नरीनर्ति। वर्वर्ति, वरिवर्ति, वरीवर्ति। उकारः उच्चारणार्थः। मर्मृज्यमानास इत्युपसङ्ख्यानम्। मर्मृज्यते। मर्मृज्यमानासः।

न्यासः

रुग्रिकौ च लुकि। , ७।४।९१

तत्त्व-बोधिनी

रुग्रिकौ च ४११, ७।४।९१

रुग्रिकौ च। चकारेण रीगृदुपधस्य" इत्यतो रीगनुकृष्यते। रुक उकार उच्चारणार्थः।

---

सूत्रम्

काशिका-वृत्तिः

ऋतश् च ७।४।९२

ऋकारान्तस्य अङ्गस्य यो ऽभ्यासः तस्य रुग्रिकौ आगमौ भवतः रीक् च यङ्लुकि। चर्कर्ति, चरिकर्ति, चरीकर्ति। जर्हर्ति। जरिहर्ति। जरीहर्ति। तपरकरनम् किम्? किरतेश्चाकर्ति। किरतिं चर्करीतान्तं पचति इत्यत्र यो नयेत्। प्राप्तिज्ञं तमहं मन्ये प्रारब्धस् तेन सङ्ग्रहः। तत्रेयं प्राप्तिः तपरकरनसामर्थ्यादङ्गविशेषणम् ऋतः इत्येतत्, तया चाप्राप्तिः किरतेरुगादीनाम् इति।

न्यासः

ऋतश्च। , ७।४।९२

लुकीत्येव। चकारेण रीगादयोऽनुकृष्यन्ते। "चर्कर्ति" इति। "डुकृञ्? करणे" (धा।पा।१४७२) "जर्हति" इति। "ह्मञ्? हरणे" (धा।पा।८९९)। "किरतेश्चाकर्ति" इति। "कृ? विक्षेपे" (धा।पा।१४०९), इत्यस्य। "किरतिम्()" इत्यादि। किरतिग्रहणमुपलक्षणार्थम्()। तेन "गृ निगरणे" (धा।पा।१४१०) इत्येवमादेरपि ऋकारान्तस्य ग्रहणं वेदितव्यम्()। "चर्करीतान्तम्()" इति। यङ्लुगन्तमित्यर्थः। यङ्लुक एव पूर्वाचार्यप्रणीतैषा संज्ञा "चर्करीतम्()। इति। "पचति" इति। लट्प्रथमपुरुषस्यैकवचनम्()। एतदप्युपलक्षणार्थमेव। वचनान्तराणामपि ह्यत्र ग्रहणम्()। तेन "कृ()" इत्येवमादिकमृ()कारान्तं यो लट्प्रथमपुरुषैकवचनादौ नये=चाकर्तीत्येवमादीनि रूपाणि प्रापयेत्(), सम्पादयेदितग्रथः। "प्राप्तिज्ञं तमहं मन्ये" इति। प्रा()प्त जानातीति प्राप्तिज्ञः। इह तु रुगादीनां प्रकृतत्वात्? तत्प्रा()प्त यो जानाति स प्राप्तिज्ञो वेदितव्यः। मन्यं=अवगच्छा। "प्रारब्धस्तेन संग्रहणः" इति। अनेन प्राप्तितायां हेतुमाह। सम्यग्गृह्रते ज्ञापये लक्षणमनेनेति संग्रहः=व्याकरणशास्त्रम्()। प्रकर्षेणारब्धः प्रारब्धः; बहुभ्यो बहुशः श्रवणात्()। का पुनरसां प्राप्तिर्यत्परिज्ञानाय प्राप्तिज्ञमवगच्छामीत्याह--"तत्रेयम्()" इत्यादि। द्वयमिह प्रकृतम्()--अङ्गम्? अभ्यासश्चेति। ऋत इति विशेषणमुपात्तम्(); तत्र यद्यप्युमयं प्रकृतं तथाप्यृत इत्येतदङ्गस्यैव विशेषणम्(), नाभ्यासस्य। कुतः? तपरकरणसामर्थ्यात्()। सर्वत्रैव ह्भ्यासस्य "ह्रस्वः" ७।४।५९ इति ह्रस्वत्वेन भवितव्यम्(); अतो दीर्घस्याम्यासस्याभावात्()। यदि "ऋतः" इत्येदभ्यासस्य विशेषणं स्यात्(), तदा तपरकरणमनर्थकं स्यात्()। तस्मात्?

तपरकरणसामथ्र्यादङ्गस्यैव विशेषणमृत इत्येतत्(), नाभ्यासस्य। एवञ्च सति किरतेरप्राप्तिः; रुगादीनां तपरकरणेन व्यावर्त्तितत्वात्()। आदिशब्देन रिगादीनां परिग्रहः। "तथा चाप्राप्तिः किरते रुगादीनाम्()" इति ब्राउवर्ततदुक्तं भवति-- करोतिप्रभृतीनामेव ह्यस्वान्तानां परिशेष्यात्? प्राप्तिरिति॥

तत्त्व-बोधिनी

ऋतश्च ४१२, ७।४।९२

ऋतश्च। ऋताऽनुवर्तमानमङ्गं विशेष्यते। ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः। "ऋदन्ताद्धातो"रिति पाठस्तु फलितार्थकथनपरतया नेयः। लोटि-- वर्वृतीतु। ३ वर्वतु ३। वर्वृतात्। वर्वृताम् ३। वर्वृतत्तु ३। वर्वृद्धि ३। अङ्नेति। "पुषादिद्युतादी"त्यनेन। चर्करीतीति। डुकृञ् करणे। चर्कृयादति। सार्वधातुकत्वात् "अकृत्सार्वे" तिन दीर्घः। लुङि "सिचि वृद्धि"रिति वृद्धिः। अचर्कारीत् ३। अचर्कारिष्टाम् ३। अचर्कारिषु३। अचर्कारीः ३। चाकर्तीति। ईट्पक्षे-- चाकरीति।लोटि-चाकरीतु। चाकर्तु। चाकीर्ताम्। चाकिरतु। चाकीर्हि। लङि अचाकरीत्। अचाकः। अचाकीर्ताम्। अचाकरुः। लिङि-- चाकीर्यात्। आशिषि तु--- चाकीर्यास्ताम्()। लुङि-- अचाकारीत्। अचाकारिष्टाम्। एवं तातरीतीत्यादि। अर्तेरिति--- भौवादिकजौहोत्यादिकयोग्ररहणम्। उरदत्वमिति। के#इत्तु "गुणो यङ्लुको" रित्यभ्यासस्य गुणमाहुः। फले तु न विशेषः। रिग्रीकोस्त्विति। एवं च अरियर्तीति रूपमुभयोस्तुल्यमिति भावः। आरतीति। "रो री"ति लोपे "ढ्रलोपे" इति दीर्घः। "दीर्घोऽकितः" इति दीर्घस्तु न भवति, कित्त्वात्। अरिय्रतीति। परत्वात्पूर्वमियङ्। ततो यण्। रिग्रीकोस्तुल्यमिदम्। मध्यमोत्तमयोस्तु-- अरर्षि। अरियर्षि। अररीषि। अरियरीषि। अरृथः अरियृथः। अरर्मि। अरियर्मि। अररीमि। अरियमरीमि। अरृवः। अरियृवः। अरियृमः। लिटि-- अररांचकार। रिग्रीकोस्तु--अरियरांचकार। लुटि--अरियृताम्। आरतु। अरिय्रतु। अरृहि। अरियृहि। अरराणि। अरियराणि। अरराव। अरियराव। लङि--आरः। आरियः। आररीत्। आरियरीत्। आरृताम्। आरियृताम्। आररुः। आरियरुः। आरः। आरियः। आररीः। आरियरीः। आरृतम्। आरियृतम्। आरृत्। आरियृत। आररम्। आरियरम्। आरृव। आरियृव। विधिलिङि-- अरृयात्। अरियृयात् अरृयाताम्। अरियृयाताम्। अरृत्युः। लिङीति। आशीर्लिङीत्यर्थः। अरिग्रियादिति। रिग्रीकोः-- अरियृ इति स्थिते लिङि रिङ्। बहिरङ्गत्वेन रिङोऽसिद्धत्वाद्यलोपो न भवति, "अचः परस्मिन्नि"ति स्थानिवत्त्वाच्च। न च "न पदान्ते"ति निषेधः शङ्क्यः, स्वरदीर्घयलोपेषु लोपरूपाऽजादेश एव न स्थानिवदित्युक्तत्वात्। न च अकृतव्यूहपरिभाषया इयङ्नेति शङ्क्यं,रिङः स्थानिवत्त्वेन निमित्तविनाशाऽभावादुक्तपरिभाषाया अप्रवृत्तेः। अतएव अरिय्रतीत्यपि सिद्धम्। तत्रापियणः स्थानिवत्त्वेन निमित्तविनाशाऽभावादुक्तपरिभाषाया अप्रवृत्तेः। अतएव अरिय्रतीत्यपि सिद्धम्। तत्रापि यणः स्थानिवत्त्वेन निमित्तविनासाऽभावादुक्तपरिभाषाया अप्रवृत्तेरियङो निर्बातत्वात्। क्वचित्तु मूलपुस्तेषु परत्वान्नित्यत्वाच्च पूर्वं रिङि कृते इयङोऽप्रवृत्तिरित्याशयेन-- "अरिरियात् अरीरिया"दिति पठ()ते, तदापाततः। अरिय्रतीति रूपाऽसिद्ध्या पूर्वोत्तरग्रन्थयोर्विरोधापत्तेः। लुङि आरारीत्। आरियारीत्। लृङि आररिष्यत्। जर्गृहीतीति। "नाभ्यस्तस्याची"ति गुणनिषेधः। मध्यमोत्तमयोस्तु-- जर्गृहीषि ३। जर्घर्क्षि ३। ज्गृढः ३। जर्गृहीमि ३। जर्गर्हिऋ ३। जर्गृह्वः ३। जर्गृह्मः ३। जर्गृहतु ३। जर्गृहांचकार ३। जर्गर्हिता। जरिगर्हिता। जरीगर्हिता। इहानुबन्धनिर्देशादूदिल्लक्षण इड्विकल्पो नाजर्गृहीतु। जर्गर्ढु। जर्गृढाम् ३। जर्गृहतु ३। जर्गृढि ३। मिपि जर्गृहाणि ३। लुङि अजर्गृहीत् ३। ईडभावे-- "एकाच" इति भष्भावः। अजर्घर्ट् ३। यद्यपि इह "यत्रैकाज्ग्रहणं चे"ति निषेधाद्भष्भावो दुर्लभस्तथापि "गुणो यङ्लुको " रित्यनेन "श्तिपा शपे"त्यादिनिषेधस्याऽनित्यत्वज्ञापनाद्भष्भावोऽत्र प्रवर्तते इत्याहुः। अजर्गृढाम् ३। अजर्गृहुः ३। अजर्घर्टः ३। अजर्घर्ड् ३। अजर्गृढम् ३। अजर्गृढ ३। अजर्गृहम् ३। अजर्गृह्व ३। जर्गृह्मात् ३। अजर्गर्हीत् ३। अजर्गर्हिष्टाम् ३। अजर्गर्हिष्यत् ३। जाग्रहीतीति। ग्रह उपादाने। यङो लुका लुप्तत्वात्तन्निमित्तं "ग्रहिज्ये"ति संप्रसारणमिह नेति भावः। जर्गृढ इति। "उरत्"। "दीर्घोऽकितः"। तत्रैकाच इत्यनुवर्तत इति "एकाचो द्वे" इत्यस्मिन् सूत्रे हरदत्तेनोक्तत्वादिति भावः। माधवस्त्विति। अयं

भावः-- "ग्रहोऽलिटि" इति सूत्रे "यङ्लोपे चोक्त"मिति वार्तिकतदीयभाष्यकैयटादिपर्यालोचनया जरीगृहीतेत्यादिषु ग्रहेर्यङन्तात्तृचस्तासेर्वा य इट् तस्य दीर्घाऽभावे युक्तिद्वयं लभ्यते। पूर्वस्मादपि विधौ स्थानिद्भाव इत्येके। ग्रहेर्विरोत य इट् तस्य दीर्घ इत्यपरे। तत्राद्यः पक्षो भाष्यवार्तिककाररीत्या। ताभ्यां हि "पूर्वत्रासिद्धे न स्थानिव"दित्यवष्टभ्य दीर्घादिग्रहणस्य प्रत्याख्यानात्। त्रैपादिकदीर्घातिरिक्तदीर्घेऽस्मिन् कर्तव्ये स्थानिवद्भावस्य तन्मते सुवचत्वात्। द्वितीयस्तु सूत्ररीत्या, तेन तु सामान्यतो दीर्घविधौ स्थानिवद्भावस्य वक्तुमशक्यत्वात्। एवं च यङ्लुकि दीर्घप्रवृत्तौ न किंचिद्बाधकम्, यङ्लुकोऽनैमित्तिकत्वात्, अज्झलादेशत्वाच्च स्तानिवद्भावाऽयोगात्। "द्विः प्रयोगो द्विर्वचनं षाष्ठ"मिति सिद्धान्ताद्यङ्लुगन्ताद्गृह्णातेर्विहितस्य ग्रहेर्विहितत्वाऽनपायाच्च। तद्भाष्यादिविरुद्धमिति। आदिशब्देन कैयटहरदत्तौ गृह्नेते। विरोधाश्चात्र मनोरमायामुपपादितः। तथा हि-- "एकाचो द्वे प्रथमस्ये"ति सूत्रे "ग्रहेरङ्गा"दिति भाष्यामुपादाय कैयट आह-- "तृचो हि "जरीगृहि"त्यङ्गं, न तु ग्रहिः, विशेषणसामश्र्याद्धि यथाश्रुतरूपाश्रयण"मिति। यद्यपि तत्र यङन्तं प्रक्रम्येदमुक्तं, तथापि युक्तसाम्याद्यङ्लुगन्तेऽपि न दीर्घ इति लक्ष्यते। एकाज्ग्रहणमनुवर्तयन् हरदत्तोऽप्यत्रानुकूलः। न ह्स्मिन्पक्षे यङ्लुकि दीर्घस्य प्रसक्तिरस्ति। एवं च पूर्वस्मादपि विधौ स्थानिवद्भाव इति ग्रहेर्विहितस्य य इट् तस्य "ग्र"हिति यथाश्रुतरूपाश्रयणे "गृहीत" इत्यादाविटो दीर्घो न स्यादिति वाच्यम्, अङ्गसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव सत्त्वात्। "ग्राहित"मित्यादौ तु नैवम्। "एकाच" इति समाधानं तु णिज्भिन्नविषयकमेव, "निष्ठायां सेटी"ति णिलोपे ग्राहितमित्यादावेकाच्त्वानपायात्। तदित्थं-- "यङ्लुगन्ताण्णिजन्ताच्च यङन्ताच्च ग्रहेरिटः। द्विधा त्रिधा चतुर्धा च दीर्घप्राप्तिः समाहिता"। अस्यार्थः--- यङ्लुगन्ताद्दीर्घे प्राप्ते समाधानद्वयम्। ग्रहेरङ्गादिति व्याख्यानमेकाच इत्यनुवृत्तिश्चेति। णिजन्तात्तु ग्रहिस्वरूपाऽभावः, विहितविशेषणं, स्थानिवद्भावश्चेति समाधानत्रयम्। यङन्तात्समाधानचतुष्टयम्, "एकाचः"इत्यनुवृत्तिः, पूर्वोक्तसमाधानत्रयं चेति। अजर्घा इति। गृधु अभिकाङ्क्षायाम्। इह अपदान्तस्यापि रेफस्य "रो री"ति लोपो भवत्येव, तत्र मण्डूकप्लुत्या पदस्येत्यनुवर्तनात्। पाप्रष्टीति। प्रच्छ ज्ञीप्सायाम्। "व्रश्चे"ति षः। पाप्रच्छिता। पाप्रच्छिष्यति। प्रापष्टु। पाप्रष्टात्। पाप्रष्टाम्। पाप्रच्छतु। पाप्रड्ढि। पाप्रच्छानि। अपाप्रच्छीत्। अपाप्रट्। अपाप्रष्टाम्। अपाप्रच्छुः। अपाप्रच्छीः। अपाप्रट्। अपाप्रष्टाम्। अपाप्रष्ट। अपाप्रच्छम्। अपाप्रच्छव। अपाप्रश्म। भाष्ये ध्वनितमिति। "च्छोः शू"डिति सूत्रे भाष्ये क्ङिद्ग्रहणे "च्छः षत्वं वक्तव्य"मिति। अननुवर्तमाने त्वनेन छः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादिसिद्धये व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमिति भावः। एवं हि वदता भाष्यकृता ऊठ् भाविभ्यो यङ्लुङ्नास्तीत्युक्तप्रायम्। अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति देदेषि इत्यादौ भावाऽभावाभ्यां महान् विशेषः स्यात्। तत्र क्ङिद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्। ततश्चैतावानेवेत्यवकारो विरुध्येत। रिउआविमव्योस्त्विति। रिउआवु गतिशोषणयोः। मव बन्धने। जाहामीति। ईट्पक्षे जाहयीमि। लोटि जाहयीतु। जाहुत। जाहतात्। जाहताम्। जाहयतु। जाहहि। जाहतात्। जाहयानि। जाहयाव। जाहयाम। लङि-- अजाहयीत्। अजाहत्। अजाहताम्। अजाहयुः। अजाहयीः। अजाहः। अजाहतम्। अजाहत।अजाहयम्। अजाहाव। अजाहाम। जाहय्यात्। "ह्म्यन्तक्षणे"ति वृद्धिनिषेधः। अजाहयीत्। अजाहयिष्टाम्। अजाहयिष्यत्। ज्वरत्वर।

---

सूत्रम्

काशिका-वृत्तिः

सन्वल् लघुनि चङ्परे ऽनग् लोपे ७।४।९३

लघुनि धात्वक्षरे परतो यो ऽभ्यासः तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे। सन्यतः ७।४।७९ इत्युक्तम्, चङ्परे ऽपि तथा। अचीकरत्। अपीपचत्। ओः पुयण्ज्यपरे ७।४।८० इत्युक्तम्, चङ्परे ऽपि तथा। अपीपवत्। अलीलवत्। अजीजवत्। स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ७।४।८१ इत्युक्तम्, चङ्परे ऽपि तथा। असिस्रवत्, असुस्रवत्।

अशिश्रवत्, अशुश्रवत्। अदिद्रवत्, अदुद्रवत्। अपिप्रवत्, अपुप्रवत्। अपिप्लवत्, अपुप्लवत्। अचिच्यवत्, अचुच्यवत्। लुघुनि इति किम्? अततक्षत्। अररक्षत्। जागरयतेः अजजागरत्। अत्र केचिद् गशब्दम् लभुमाश्रित्य सन्बद्भावम् इच्छन्ति, सर्वत्रैव लघोरानन्तर्यम् अभ्यासेन न अस्ति इति व्यवधाने ऽपि वचनप्रामाण्याद् भवितव्यम्, तदसत्। येन न अव्यवधानं तेन व्यवहिते ऽपि वचनप्रामाण्यातित्येकेन व्यवधानम् आश्रीयते, न पुनरनेकेन। यद्येवम्, कथम् अचिक्षणतिति? आचार्यप्रवृत्तिर् ज्ञापयति भवत्येवं जातीयकानाम् इत्वम् इति। यदयं तद् बाधनार्थं सम्रत्यादीनाम् अत्वम् विदधाति। चङ्परे इति किम्? अहं पपच। परग्रहणं किम्? चङि एव केवले मा भूत्, अचकमत। अनग्लोपे इति किम्? अचकथत्। दृषदमाख्यातवानददृषत्। वादितवन्तं प्रयोजितवानवीवदतित्यत्र यो ऽसौ णौ णेर्लोपो नासावग्लोप इत्याश्रीयते। किं कारणम्? चङ्परे इति णिजातेर् निमित्तत्वेन आक्षेपात्, ततो ऽन्यस्य अको लोपः परिगृह्यते। मीमादीनाम् अत्र ग्रहणात् सन्वद्भावेन अभ्यासलोपो न भवति इत्युक्तम्। किं च सन्वतिति सनाश्रयं कार्यमतिदिश्यते, न च लोपः सनम् एव अपेक्षते, किं तर्हि, इस्भावाद्यपि। तदभावातमीमपतित्यादौ अभ्यासलोपो न भविष्यति।

लघु-सिद्धान्त-कौमुदी

सन्वल्लघुनि चङ्परेऽनग्लोपे ५३४, ७।४।९३

चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः, तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति॥

न्यासः

सन्वल्लघुनि चङ्परेऽनग्लोपे। , ७।४।९३

"सन्यतः" ७।४।७९ इत्यादिना सूत्रत्रयेण यदभ्यासस्य सनि कार्यं भवति तल्लघुनि चङ्पर इत्यतिदिश्यते। "लघुनि" "चङ्परे" इति। व्यधिकरणे सप्तम्यौ--चङपरे णौ परतो यत्? पूर्वं लघु तस्मिन्? परतो योऽभ्यासस्तस्य सन्वद्भवतीति। "चङपरे" इति बहुव्रीहिः--चङ्? परो यस्मादिति तच्चङ्परम्(); न तु चङ्? चासौ परश्चेति तत्पुरुष। तेन सामथ्र्याण्ण्यन्तस्यैवायमतिदेशो विज्ञायते; अन्यथा हि यदि प्रकृत्यन्तस्यायमतिदेशः स्यात्(), तदा "सन्वच्चङि" इत्येवं ब्राऊयात्()। "अनन्लोपे" इति। "चङ्परे" इत्यस्यैतद्विशेषणम्()। अगिति प्रत्याहारग्रहणम्। अको लोपोऽग्लोपः, स यस्य नास्ति तदनग्लोपम्()। "अपीपचत्()" इति। पचेर्णित्(), लुङ्(), च्लेश्चङ्(), उपधाह्रस्वत्वम्(), द्विर्वचनमभ्यासकार्यम्(), हलादिशेषे च कृतेऽनेन सन्वद्भावः, "सन्यतः" ७।४।७९ इतीत्वम्(), उत्तरसूत्रेण ७।४।९४ दीर्घत्वम्()। "अततक्षत्(), अररक्षत्()" इति। अत रेफतकारयोः संयोगपरत्वाद्? गुरुसंज्ञायां सत्यां न भवति सन्वद्भावः। "अजजागरत्()" इति। अत्र जकाराकारस्य दीर्घत्वाद्गुरुत्वम्()। "अत्र केचित्()" इत्यादि। तेषां "अजीजागरत्()" इति भवितव्यम्()। किं पुनः कारं त एवमिच्छन्ति, यावता लघुनि चङ्पर इत्यच्यते, व्यवहितश्चात्र लघुनि चङ्परे? इत्यत आह--"सर्वत्रैव" इत्यादि। "अचीकरत्()" इत्यादावपि ककारादिना वर्णेन व्यवधानाल्लघोरानन्तर्यमभ्यासे नास्ति; उच्यते चेदं वचनम्(), अतो वचनप्रामाण्या द्व्यवधान एव सन्वद्भावेन भवितव्यम्()। ततश्च यथा "अचीकरत्()" इत्यादौ व्यवधानेऽपि भवति, तथेहापि व्यवधाने सन्वत्कार्येण भवितव्यम्()। अथ चेद्व्यवधानान्न भवति, अत्रापि न स्यादिति भावः। "तदसत्()" इति। "अजजागरत्()" इत्यत्र गृशब्दं लघुमाश्रित्य यत्? सनवद्भावमिच्छन्ति, सर्वत्रैवेत्यादिना च यत्? कारणमुक्तम्(), तदुभयमत्राशोभनम्(); अयुक्तत्वात्()। कथम्()? इतयाह--"येन" इत्यादि। एकेन वर्णेन व्यवधानमस्ति सर्वत्र। वर्णसङ्घातेन व्यवधानमस्ति नास्ति च। तत्र "येन नाव्यधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।प।४६) इति यन्नियतभाव्येकेन वर्णेन व्यवधानमशक्यं परिहर्तुम्(), तदेवाश्रीयते, न तु वर्णसङ्गातेन। "अजजागरत्()" इत्यत्र वर्णसङ्घातेन व्यवधानम्()। यदि तर्हि वर्णसङ्घातेन व्यवधानं नाश्रीयते, व्यञ्जनसङ्घातेन व्यवधाने न सिद्धयति? इत्यभिप्रायेणाह--"कथमचिक्षणत्()" इत्यादि। "क्षणु हिंसायाम्()" (धा।पा।१४६५) इत्येतस्यैतद्रूपम्()। अत्रापि ज्ञापकेन सिद्ध्यतीत्यत आह--"आचार्यप्रवृत्तिः" इत्यादि। क्षणोतिना ये

सदृशाः संयोगादयस्त एवञ्जातीयाः। क्षणोतिप्रकारः इत्यर्थः। तेषां यदीत्त्वं न स्यात्(), तदा तद्बाधनार्थं "अत्स्मृदृ()त्वरप्रथम्रद" ७।४।९५ इत्यादिनात्त्वं न विदध्यात्(), विदधाति च। तस्मादेतदेवात्वविधानलक्षणमाचार्यप्रवृत्तिज्ञ्ज्ञापयति--"भवत्येवञ्जातीयकानामित्त्वम्()" इति। "अहं पपच" इति। उत्तमे णलि यदा "णलुत्तमो वा" ७।१।९१ इति णित्त्वं नास्ति तदेदं प्रत्युदाहरणं भवति। अत्र लघुपरतोऽक्षरम्(), न तु चङ्परम्()। "अचकमत" इत्यादि। कमेश्चोपसंख्यानम्()" (वा।२०८) इति "कमु कान्तौ" (धा।पा।४४३) इत्येतस्मात्? प्रकृत्यन्तादेव लुङ्(), चङ्()। "अचकथत्()" इति। "कथ वाक्यप्रबन्धे" (धा।पा।१८५१) चुरादावदन्तः। अत्र "अतो लोपः" ६।४।४८ इत्यकारलोपः। अत्र त्वग्लोपस्य स्थानिवद्भावे सति व्यवधानेऽपि न स्यात्()। अतः प्रत्युदाहरणान्तरमाह--"दृषदमाख्यददृषत्()" इति। "तत्करोति तदाचष्टे" (वा।२००()) इति णिच्()। "णाविष्ठवत्? कार्यं प्रातिपदिकस्य" (वा।८११) इतीष्ठवद्भावाट्टिलोपः। अत्राज्झलोर्लोपः, नाक एव केवलस्येति नास्त्यत्र स्थानिवद्भावः। अन्यार्थं त्वग्लोप इति क्रियमाणमचकथदित्यत्रापि सन्वद्भावं निवत्र्तयतीत्यस्योपन्यासः। "अवीवदत्()" इति। वदतेण्र्यन्ताद्? वादितवन्तं प्रयोजितवानिति "हेतुमति च" ३।१।२६ इति णिच्(), पुनर्णिच्युत्पन्ने "णेरनिटि" ६।४।५१ इति णिलोपे कृते सत्यप्यग्लोप्यङ्गं भवति, अतो न भवितव्यं सन्वद्भावेनेति यो मन्यते, तं प्रत्याह--"वादितवन्तं प्रयोजितवान्()" इत्यादि। "चङ्परे" इत्यादिना णिलोपस्याग्लोपित्वेनानाश्रयणे कारणमाह। "चङ्परे" इत्यनेन हि सन्वद्भावनिमित्तेन णिजातिराक्षिप्ता। तस्माद्गोबलीवर्दन्यायेन णिजातिर्निमित्तत्वेनाश्रीयते। अतो णिजातेरन्यस्याको लोपः प्रतिषेधनिमित्तत्वेन परिगृह्रते, न तु तस्या एव णिजातेः। तस्माण्णिलोपस्याग्लोपित्वेनानाश्रयणात्? तल्लोपेऽग्लोप्यङ्गं न भवति। अतो भवत्येवात्र सन्वद्भावः। सन्वदित्यतिदेशेन यथाचीकरदित्यादावभ्यासस्येत्वं भवति तथामीमपदित्यादावप्यभ्यासलोपेन मीमादीनां भवितव्यमिति यश्चोदयेत्(), तं प्रत्याह--"मीमादीनाम्()" इत्यादि। आदिशब्देन ध्वादीनां ग्रहणम्()। "किञ्च" इत्यादिना परीहारान्तरम्()। सन्वदित्यतिदेशेन हि सनाश्रयणेव कार्यमतिदिश्यते। सनाश्रयञ्च किं कार्यम्()? यत्? सनमपेक्षते, नापरं किञ्चित्()। न च "अत्र लोपेऽभ्यासस्य" ७।४।५८ इत्यनेन विधीयमानो लोपः सनमेवापेक्षते, किं तर्हि? इस्भावादिकमपि। आदिशब्देन ध्वादीनां ग्रहणम्()। "किञ्च" इत्यादिना परोहारान्तरम्()। सन्वदित्यतिदेशेन हि सनाश्रयमेव कार्यमतिदिश्यते। सनाश्रयञ्च किं कार्यम्()? यत्? सनमपेक्षते, नापरं किञ्चित्()। न च "अत्र लोपेऽभ्यासस्य" ७।४।५८ इत्यनेन विधीयभानो लोपः सनमेवापेक्षते, किं तर्हि? इस्भावादिकमपि। आदिशब्देन--"अब्ज्ञप्यृधामीत्()" ७।४।५५ इतीत्त्वम्(), "मुचोऽकर्मकस्य" ७।४।५७ इति गुणश्च परिगृह्रते। तेन "अभीमपत्()" इत्यादाविसादेशो न भवति। अभ्यासलोपेऽपि न भवतीत्यभिप्रायः॥

तत्त्व-बोधिनी

स्वल्लघुनि चङ्परेऽनग्लोपे १३०, ७।४।९३

चङ्पर इत्येतावतैव णिरिति न लभ्यते, श्रिद्रुरुआउवामपि चङ्परत्वात्। अत आह-- "अङ्गसंज्ञानिमित्तमिति। अङ्गस्याभ्यास इति। अङ्गस्य ये द्वे विहिते तयोः पूर्वोऽभ्यास इत्यर्थः। अङ्गस्येति नावर्तत इति। अ()स्मस्तु व्याख्याने "चङ्परे" इत्येतावतैव णिरिति लभ्यते, श्रिद्रुरुआउषु परेषु अङ्गत्वाऽसंभवादतो व्याचष्टे-- चङ्परे णौ यदङ्गमिति। चङ्परे इत्यस्यैव व्याख्यानं "णा"विति ज्ञेयम्। अनग्लोपे किम्?। अचकथत्।

---

सूत्रम्

काशिका-वृत्तिः

दीर्घो लघोः ७।४।९४

दीर्घो भवति लघोः अभ्यासस्य लघुनि णौ चङ्परे अनग्लोपे। अचीकरत्। अजीहरत्। अलीलवत्। अपीपचत्। लघोः इति

किम्? अबिभ्रजत्। लघुनि इत्येव, अततक्षत्। अररक्षत्। चङि इत्यव, अहं पपच। परे इत्येव, अचकमत। अनग्लोपे इत्येव, अचकथत्।

लघु-सिद्धान्त-कौमुदी

दीर्घो लघोः ५३६, ७।४।९४

लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये। अचीकमत, णिङ्भावपक्षे -- (कमेश्च्लेश्चङ् वाच्यः)। अचकमत। अकामयिष्यत, अकमिष्यत॥ अय गतौ॥ ३॥ अयते॥

न्यासः

दीर्घो लघोः। , ७।४।९४

बाल-मनोरमा

दीर्घो लघोः १५८, ७।४।९४

दीर्घोः लघो। "अत्र लोपोऽभ्यासस्ये"त्यतोऽभ्यासस्येत्यनुवर्तते। अभ्यासस्य लघोर्दीर्घ इति। अभ्यासावयवस्य लघोरित्यर्थः। "सन्वल्लघुनि चङ्परे" इति सूत्रं सन्वच्छब्दवर्जमनुवर्तते। तच्च प्रग्वदेवद्वेधा व्याख्येयम्। तथा च फलितमाह-- सन्वद्भावविषय इति। "सन्यत" इत्यत्र तपरत्वं स्पष्टार्थमिति "दीर्घोऽकित" इति सूत्रे भाष्ये स्पष्टम्। तथाच कि कम् अ तेत्यत्र अभ्यासेकारस्य दीर्घेऽभ्यासचुत्वेऽडागमे परिनिष्ठितं रूपमाह--अचीकमतेति। अत्र लघोर्णिपरत्वं येन नाव्यवधानन्यायाद्बोध्यम्। णिङभावपक्षे त्विति। "आयादय आद्र्धधातुके वे"ति णिङो वैकल्पिकत्वादिति भावः। कमेश्च्लेश्चङ् वक्तव्य इति। अण्यन्तत्वादप्राप्तौ वचनम्। णेरभावादिति। णिङभावपक्षे कमिधातोरनुदात्तेत्त्वात्तङि प्रथमपुरुषैकवचने न भवति, तत्र लघुनि चङ्परेऽनग्लोप इत्यनुवत्र्य चङ्परे णावेव तद्विधानोक्तेः। अत एव सन्वत्त्वाऽभावात्सन्यत इत्यभ्यासाऽसकारस्य इत्वं च न भवतीत्यर्थः। "दीर्घो लघो"रिति दीर्घविधौ सन्वत्त्वं न निमित्तं, किंतु लघुनि चङ्पर इत्यस्य तत्रानुवृत्त्या सन्वद्भावविषये तत्प्रवृत्तिः। अतो दीर्घसन्वद्भावाविति पृथगुक्तिः। अत पञ्चभिः श्लोकै#ः सन्वद्भावसूत्रं, "दीर्घो लघो"रिति सूत्रं च विशदयति-- संज्ञाया इत्यादिना। अस्मिन् शास्त्रे "कार्यकालं संज्ञापरिभाष"मित्येकः पक्षः। "कार्यकाल"मित्यस्य कार्यप्रदेशकमित्यर्थः। अस्मिन्पक्षे तत्तत्कार्यविधिप्रदेशेषु संज्ञाशास्त्रस्य परिभाषाशास्त्रस्य परिभाषाशास्त्रस्य च उपस्थितिः। "यथोद्देशं संज्ञापरिभाष"मिति पक्षान्तरम्। उद्देशाः-- संज्ञापरिभाषाशास्त्राम्नानप्रदेशाः, तान् अनतिक्रम्य यथोद्देशम्। संज्ञाशास्त्रं परिभाषाशास्त्रं च स्वप्रदेशे स्थितमेव तत्तद्विध्यपेक्षितं स्वं स्वमर्तं समर्पयतीति यावत्। अस्मिन्पक्षे कार्यप्रदेशेषु संज्ञापरिभाषायां तदर्तस्यैवोपस्थितिर्न तु संज्ञापरिभाषाशास्त्रयोरिति स्थितिः। "सन्वल्लघुनी"ति सूत्रे, "दीर्घो लघो"रिति सूत्रे च अङ्गस्येति अभ्यासस्येति चानुवृत्तम्। तत्र कार्यकालपक्षे "पूर्वोऽभ्यास" इति सूत्रं संनिहितम्। ततश्च अङ्गस्य ये द्वे उच्चारणे तयोः पूर्वोऽभ्याससंज्ञः, स सन्वद्भवतीति फलितम्। तत्र कृदन्तोच्चारणशब्दयोगादङ्गस्येति कर्मणि षष्ठी, न त्ववयवषष्ठी,कारकषष्ठ()आ बलवत्त्वात्। अङ्गं च प्रत्यये परतः कृत्स्नमेव प्रकृतिरूपं, न तु तदेकदेशः। ततश्च कृत्स्नमङ्ग#ं यत्र द्विरुच्यते न तु तदेकदेशमात्रं तत्रैव "दीर्घो लघो"रिति दीर्घः, "सन्वल्लघुनी"ति सन्वद्भावश्च भवति। एवं च अङगस्य एकाच्कत्वे सत्येव तयोः प्रवृत्तिः, तत्र कृत्स्नस्याङ्गस्य द्विरुक्तेः। अनेकाच्केषु तु अङ्गेषु न तयोः प्रवृत्तिः, तत्र एकस्यैव एकाचोऽङ्गैकदेशस्य द्विरुक्तेरिति माधवोमन्यत इति प्रथमश्लोकस्यार्थः। "नानेकाक्ष्वि"त्युक्तं विशदयति----चकास्तीति श्लोकेन। "चकासृ दीप्तौ"। अर्थमाचष्टे इत्यर्थे णिचि "अर्थवेदयो"रिति प्रकृतेरापुगागमे अर्थापिधातुः। "ऊर्णुञ् आच्छादने"।एते त्रयोऽनेकाच्का धातवः। आदिना "जागृ निद्राक्षये" इत्यादिसंग्रहः। एभ्यो ण्नय्तेभ्यश्चङि अङ्गं कृत्स्नं न द्विरुच्यते, किंतु अङ्गस्य कश्चिदेकाजवयव एव द्विरुच्यते, तस्मादनेकाच्केषु कृत्स्नस्याङ्गस्य द्विरुक्त्यभावात्। किंच अजजागरदित्यत्र

सन्वत्त्वमाशङ्क्य "णिपरकलघोर्गकाराकारस्य "जा" इत्यनेन व्यवहितत्वादभ्यासस्य न सन्वत्त्व"मिति समाहितं भाष्ये। तदेतदनेकाच्काङ्गेषु सन्वत्त्वस्याऽप्रवृत्तौ विरुध्येत, कृत्स्नस्याङ्गस्य द्विरुक्तभावादेव तत्र सन्वत्त्वस्याऽप्राप्तौ तच्छङ्काया एवानुन्मेषादित्यस्वारस्याद्यथोद्देशपक्षमालम्ब्य#आह-- वस्तुत इति। "अङ्गस्ये"त्यवयवषष्ठी। अङ्गावयवस्याभ्याससस्येति लभ्यते। ततश्च ऊर्णुत्रि ण्यन्ते चङि "नु" इत्येकदेशस्य द्वित्वेऽपि "और्णूनुव" दित्यत्र "दीर्घो लघो"रित्यभ्यासलघुर्दीर्घीभवति। सन्वत्त्वं तु प्रयोजनाऽभावादुपेक्षितम्, अभ्यासे अकाराऽभावेन "सन्यत" इत्यस्याऽसंभवात्। अर्थमाचष्टे इत्यर्थे णिचि प्रकृतेरापुकि अर्थापिथातोश्चङि णिलोपे उपधाह्रस्वे थप् इत्यस्य द्वित्वेऽपि "अर्तीथप"दित्यत्र सन्वद्भावात् "सन्यत" इत्यभ्यासस्य इत्त्वम्, अभ्यासदीर्घश्चेति द्वयं भवतीति जानीम इति तृतीयश्लोकार्थः। "अङ्गस्यावयव" इति पक्षेऽपि चकास्तौ विशेषमाह--- चकास्तौ त्विति। चतुर्थश्लोकोऽयम्। अवस्था-- वस्तुस्थितिः। व्यवस्थया। पक्षद्वयेनेति यावत्। "चङ्परे" इत्यनेन अन्यपदार्थतया लब्धस्य णवित्यस्य संनिहितं लघुनीत्येतद्विशेष्यम्। तथा च "चङ्परे णौ यल्लघु" इति प्रतमव्याख्यानं फलितम्। अङ्गमेव वा णेर्विशेष्यम्। तथा च "चङ्परे णौ यदङ्ग"मिति द्वितीयं व्याख्यानं फलितम्। इति व्यवस्थया = पक्षद्वयेन सन्वत्त्वं दीर्घश्चेत्युभयमिदं चकासृधातौ ण्यन्ते णिलोपे द्वित्वे अचचकासदित्यत्र न स्यात्, स्याच्चेत्यन्वयः। तत्र "चङ्परे णौ यल्लघ्वि"ति व्याख्यानेसति नैव उभयं स्यात्, चङ्परस्य णेः कास् इत्यनेन व्यवहितत्वात्। अचीकमतेत्यादौ त्वेकव्यवधानं येन नाव्यवधनानन्यायात्सोढव्यमेव। "चङ्परे णौ यदङ्ग"मिति व्याख्याने तु अचीचकासदित्यत्र उभयं स्यादेव, अङ्गस्य णिपरकत्वसत्त्वादिति बोध्यम्। ननु चङ्परे णौ यल्लध्विति, चङ्परे णौ यदङ्गमिति च व्याख्याभेदे किं प्रमाणमित्यत आह-- व्याख्याविकल्पस्य कैयटेनैव वर्णनादिति। "आदर्तव्यते"ति शेषः। ननु णौ इत्यवृत्तिमभ्युपगमस्य अग्लोपेऽपि तदन्वयः किमर्थ इत्यत आह-- णेरग्लोपेऽपीति। अगितामिति। "कमुकान्ता" वित्यादिनामपीत्यर्थः। सिद्धय इति। दीर्घसन्वत्त्वसिद्ध्यर्थमित्यर्थः। अन्यथा कमुप्रभृतीनामुकाराद्यनुबन्धलोपमादाय अग्लोपित्वात् दीर्घसन्वद्भावौ न स्यातामित्यर्थः। इति घिणिप्रभृतयः कम्यन्ता दश गताः। क्रम्यन्ता इति। "क्रमु पादविक्षेपे" इत्येतत्पर्यन्ता इत्यर्थः। "अनुनासिकान्ता" इति शेषः। अण रणेति। ऋदित्त्वं "नाग्लोपी"ति निषेधार्थम्। ध्रण शब्द इति। अदुपधोऽयम्। उपदेश इति। धातूपदेशे नकारान्तोऽयम्। अकारस्य उच्चारणार्थस्य निवृत्तौ तवर्गपञ्चमान्त इत्यर्थः। तर्हि णकारस्य कथं श्रवणमित्यत आह-- रषाभ्यामिति णत्वमिति। ननु स्वाभाविक एव णकार इत्यस्तु, किं नकारस्य कृतणत्वस्य निर्देश इति कल्पनयेत्यत आह-- णोपदेशेति। नकारस्थानिकणोपदेशस्य "नश्चे" त्यनुस्वारात्मककं फलं यङ्लुकि प्रत्येतव्यमित्यर्थः। दन्ध्रन्तीति। ध्रणधातोर्यङ्लुकि द्वित्वे हलादिशेषे "नुगतोऽनुनासिकान्तस्ये" त्यब्यासस्य नुकि उत्तरखण्डे णकारएव श्रूयेतेति परसवर्णे तस्याऽसिद्धत्वाण्णत्वाऽभावे नकारस्यैव श्रवणम्। स्वाभाविकणकारोपदेशे तु उत्तरखण्डे णकार एव श्रूयेतेति भावः। बणेत्यपीति। पवर्गतृतीयादिरित भावः। "कन दीप्ती"त्यारभ्य अम गत्यादिष्वित्यतः प्राक्तवर्गपञ्चमान्ताः। ष्टन वनेति। आद्यः षोपदेशः। ष्टुत्वसंपन्नष्टकारः। तदाह---स्तनतीति। वन षणेति। द्वितीयः षोपदेशः। ननु "ष्टन वन शब्दे" इति वनेः पठितस्य पुनः व्यर्थ इत्यत आह-- अर्थभेदादिति। वनेः शब्दे संभक्तौ च वृत्तिरिष्टा। ष्टनेस्तु शब्द एव वृत्तिरिष्टा। तत्र "ष्टन वन शब्दे संभक्तौ चे"त्युक्तौ ष्टनेरपि संभक्तौ वृत्तिः स्यात्। "ष्टन शब्दे" इत्युक्त्वा "वन संभक्तौ चे"ति पाठे तु गौरवमिति भावः।

तत्त्व-बोधिनी

दीर्घो लघोः १३२, ७।४।९४

दीर्घो लघोः। लघोरभ्यासस्येति। ननु अज्झल्समुदायाऽभ्यासस्य लघुसंज्ञा दुर्लभा, "ह्रस्वं लघु" इति सूत्रितत्वात्। नैष दोषः। इमे हि न समानाधिकरणे षष्ठ्यौ, किं तु व्यधिकरणे, तथा चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः। "लघुनि चङ्परेऽनग्लोपे" इतिच सर्वमिहानुवर्तते। तच्च प्राग्वदेव द्वेधा व्याख्येयं। तदाह-- "सन्वद्भावविषय इति। "हलादे"रिति

प्राचोक्तमिहोपेक्षितं, निष्प्रमाणत्वात्। न हि मुनित्रयोकिं()त विना हलादेरिति व्याख्यातुमुचितम्। न चैवमौन्दिददत् आट्टिटदित्यादौ दीर्घः स्यादिति शङ्क्यम्, अङ्गलघ्वोरुभयोरपि णिचं प्रति विशेष्यत्वे दीर्घस्य तत्राऽप्राप्तेः। चङ्परं हि यदङ्गम् उन्द्? इति, न तदीयोऽभ्यासो, न वा चङ्परणिच्परं यल्लघु तत्परः। एतेन आट्टिटदित्यादिभाष्योदाहरणमेव "हलादे"रिति व्याख्याने प्रमाणमिति, केषांचिदुत्प्रेक्षापि प्रयुक्ता। दीर्घाऽप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात्। लघोः किम्?। क्ष्णु हिंसायाम्। अचिक्ष्णवत्॥ शास्त्रेऽस्मिन् "कार्यकालं संज्ञापरिभाषं, "यथोद्देशं संज्ञापरिभाषमिति पक्षद्वयमप्यस्ति जातिव्यक्तिपक्षवत्। तथा च "पूर्वोऽभ्यासः" इत्यस्य "सन्वल्लघुनी"त्यादिना सह पक्षद्व्येऽपि एकवाक्यता समानैव, तथापि कार्यकालपक्षे पदैकवाक्यता, यथोद्देशपक्षे तु वाक्यैकवाक्यतेत्यस्ति विशेषः। तत्रेदानीं कार्यकालपक्षपातिमाधवमतं तावद्व्याचष्टे-- संज्ञाया इत्यादिना। क्ष्लोकद्व्येन। अङ्गं यत्रेति। अयं भावः-- "सन्वल्लघुनि" "दीर्घो लघो"रिति सूत्रद्वये अङ्गस्येत्यनुवर्तते, अभ्यासस्येति च। तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम्। "द्वे" इत्यत्र च "उच्चारणे" इति विशेष्यसमर्पकमध्याह्रियते, तच्च कृदन्तं , तद्योगादङ्गस्येति कर्मणि षष्ठी। तेन यत्राङ्गं द्विरुच्यते तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति। अचीकरत्। अपीपचत्। युक्तं चैतत्। अङ्गस्येति षष्ठ्याः कारकविभक्तित्वसंभवे तदुपेक्ष्य शेषष्ठीत्वकल्पनाया अन्याय्यत्वात्। नाङ्गं द्विरुच्यते इति। एवं च अचचकासत्। आर्तथपत्। और्णुनवदित्येव भवतीति भावः। अवयवः कश्चिदिति। हलादेः प्रथमावयवो द्विरुच्यते, अजादेस्तु द्वितीयावयव इत्यर्थः। अङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधीयमानौ एकाक्ष्वेवेति च फलितम्। किंच अस्मिन्पक्षे "एकाच" इत्यङ्गस्य विशेषमं शब्दतोऽपि सुलभम्, "एकाचो द्वे" इत्यधिकारादित्याशयेनाह-- तस्मादेकाक्ष्विति। स्यादेतत्-- उक्तरीत्या ह्रस्वहलादिशेषचुत्वादीन्यपि अनेकाक्षु न स्युः। न चेष्टापत्तिः। दिद्रासति। दिदरिद्रासति। जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात्। तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इतिचेत्, तर्हि इहापि स एवोचितः। अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वात्, वृत्त्यादिषु स्वीकृतत्वाच्चेत्यभिप्रेत्याह-- वस्तुत इति। ऊर्णौ दीर्घ इति। "स्या" दित्यपकृष्यते। और्णुनवत्। इह सन्वद्भावस्तुनोपयुज्यते, णौ कृतस्यादेशस्य स्थानवद्भावेन, निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाऽभावादिति भावः। अर्थापयताविति। अर्थमाचष्टे इत्यर्थे णिच्यापुगागमे ततश्च च्लेश्चङि दीर्घस्य, "सन्यतः" इतीत्वस्य च प्रवृत्तौ आर्तीथपदित्येव भवतीति भावः। "अर्थ उपयाच्ञाया"मित्यस्य तु चङ्परे णौ आर्तथतेति भवति, न तु तत्र दीर्घसन्वद्भावयोः प्रवृत्तिरिति चुरादिषु स्फुटीभविष्यति। उभयमिति। दीर्घः, सन्वच्चेत्येतद्व्यमित्यर्थः। न स्यात्स्याच्च व्यवस्थयेति। "चङ्परे णौ यल्लघ्वि"ति व्याख्याने न स्यात्, "चङ्परे णौ यदङ्ग"मिति व्याख्याने तु स्यात्। एवं च अचचकासत्चीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः। ननु यता "चङ्परे णौ यल्लघ्वि"ति व्याख्याने "येन नाव्यवधान" न्यायेन अपीपचदित्यादावेवोभ्यं भवति, न त्वनेकव्यवाये अचचकासदित्यादौ, तथा न्यायसाम्येन "लघनि योऽभ्यास" इत्यत्राप्येकनैव व्यवायस्य स्वीकार्यत्वादचिक्षणदित्यादौ सन्वदितीत्वं न स्यादिति चेत्। अत्राहुः-- "अत्स्मृदृत्वरे" तीत्त्वापदेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेऽपीत्वस्य ज्ञापितत्वान्नोक्तदोषः। अत एव "दीर्घो लघो"रिति सूत्रे लघोरिति सार्थकम्। माधवोऽपि जागृधातावित्थमेवाह। एवं च वदन् यथोद्देशपक्षमेवाशिश्रियत्। तता च ऊर्णुधातौ यत्तेनोक्त"मौर्णुनवदित्यत्र "दीर्घो लघो"रित्यब्यासस्य दीर्घो न भवति, चङ्परे णौ यदङ्गं तसय् योऽभ्यास इति सूत्रार्थात्। अत्र त्वहगावयवस्याभ्यासो न त्वङ्गस्ये" त्यादि, तत्र तस्याप्याग्रहोनास्तीति गम्यते। अतएव चकास्तावचीचकासदित्युदाजहार। तथा च मतभेदाभिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति। कातन्त्रपरिशिष्टे त्वित्वदीर्घयोरजीजागरदित्युदाह्रतं, तन्मतदव्येऽप्यसंभवादुपेक्ष्यम्। व्यवस्थामेव विवृणोति णेरिति। "सन्निहित"मिति हेतुगर्भविशेषणं, "लघुनी" त्येतण्णेर्विशेष्यं भवति, सन्निहितत्वादित्यर्थः। अङ्गमेवेति। अस्य चङ्पर#ए इत्यत्र आदेशरूपपचङंशे आकाङ्क्षाऽभावेऽपि णाविति प्रत्ययांशे उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः। कैयटेनैवेति। तथा च एकं हरदत्तमतम्परं तु कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्षा इति भावः। चङ्परे इत्यावत्र्य अग्लोपविशेषणतयापि

योजितं, तस्य फलमाह-- णेरिति। श्रिद्रुरुआउषु परतोऽग्लोपित्वाऽसंबवादिहापि चङ्पर इत्येतावतैव णाविति लभ्यत इति बोध्यम्। अगितामपिति। पचिकमिशकिप्रभृतीनामित्यर्थः। नहीत्संज्ञकानां लोपो णिचं प्रतीक्षत इति भावः। णोपदेशफलमिति। अनुस्वार इत्यर्थः। दंध्रन्तीति। "नुगतोऽनुनासिकान्तस्ये"इत्यभ्यासस्य नुक्।

---

सूत्रम्

काशिका-वृत्तिः

अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ७।४।९५

स्मृ दृ त्वर प्रथ म्रद स्तृ स्पश इत्येतेषाम् अभ्यासस्य अतित्ययम् आदेशो भवति चङ्परे णौ परतः। स्मृ असस्मरत्। दृ अददरत्। त्वर अतत्वरत्। प्रथ अपप्रथत्। म्रद अमम्रदत्। स्तृ अतस्तरत्। स्पश अपस्पशत्। सन्वद्भावातित्वं प्राप्तम् अनेन बाध्यते। तपरकरणसामर्थ्याततति कृते दीर्घो लघोः ७।४।९४ इत्येतदपि न भवति, अददरत्।

न्यासः

अत्स्मृदृ?त्वरप्रथम्रदस्तृस्पशाम्?। , ७।४।९५

"स्मृ चिन्तायाम्()" (धा।पा।९३३), "दृ भये" (धा।पा।८०८), "ञि त्वरा सम्भ्रमे" (धा।पा।७७५), "प्रथ प्रख्याने" (धा।पा।१५५३), "म्रद मर्दने" (धा।पा।७६७), "स्तृञ्? आच्छादने" (धा।पा।१४८४), "स्पशबाधनस्पर्शनयोः" (धा।पा।८८७)। अथ "अददरत्()" इत्यत्र "दीर्घो लघोः" ७।४।९४ इति दीर्घत्वं कस्मान्न भवतीत्याह--"तपरकरणसामथ्र्यात्()" इत्यादि। अनेनैव हि लक्षणेन दीर्घो औव प्राप्नोति, यस्य निवृत्तिस्तपरकरणेन क्रियते; "भाव्यमानोऽण्? सवर्णान्? न गृह्णाति" (व्या।पा।३५)। इति भाव्यमानानां सवर्णानामग्रहणात्? सर्वत्र स्थादिनो ह्रस्वत्वाच्च। तत्र यदि लक्षणान्तरेणापि प्राप्नुक्तो दीर्घस्य निवत्र्तकं तपरकरणं न स्यान्निरत्र्तकमेव तपरकरणं स्यात्()। तस्मात्? तपरकरणसामथ्र्यादिति कृते "दीर्घो लघोः" ७।४।९४ इति दीर्घो न भवतीति भावः॥

बाल-मनोरमा

अत्स्मृदृत्वरप्रथम्रदस्तृ?स्पशाम् ३९३, ७।४।९५

अत्स्मृ। अभ्यासस्येति। "अत्र लोपोऽभ्यासस्ये"त्यतस्तदनुवृत्तेरिति भावः। चङ्परे णाविति। "सन्वल्लघुनीत्यततश्चङ्परे इत्यनुवर्तते। चङ् परो यस्मादिति बहुव्रीहिः। अन्यपदार्थस्त्वर्तोण्णिरेवेति भावः। इत्वेति। "सन्यतः" इति इत्वस्यापवाद इत्यर्थः। अपप्रथदिति। अत्र अत्त्वविधानादेव सन्वत्त्वविधावनेकहल्व्यवधानेऽपि लघुपरकत्वमिति विज्ञायते। अन्यथा येन नाव्यवधानन्यायादेकहल्व्यवधानस्यैवाश्रयादत्र सन्वत्त्वविरहादेव इत्वाऽप्रवृत्त्या किं तेन?। संयोगे परे गुरुत्वान्नाऽभ्यासदीर्घः। पृथ प्रक्षेपे। ऋदुपधः। पर्थयतीति। णिचि लघूपधगुणः। रपरत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा वेष्टिचेष्ट्योः ७।४।९६

वेष्टि चेष्टि इत्येतयोः अभ्यासस्य विभाषा अतित्ययम् आदेशो भवति चङ्परे णौ परतः। अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्। अभ्यासह्रस्वत्वे कृते अत्त्वं पक्षे भवति।

न्यासः

विभाषा वेष्टिचेष्ट्योः। , ७।४।९६

"वेष्ट वेष्टने" (धा।पा।२५५), "चेष्ट चेष्टायाम्()" (धा।पा।२५६)--एतयोरभ्यासस्य लघुपरता नास्तीत्यप्राप्त एव सन्वद्भाव इति अनेन विभाषाऽकारो विधीयते॥

बाल-मनोरमा

विभाषा वेष्टिचेष्ट्योः ४११, ७।४।९६

विभाषा वेष्टिचेष्ट्योः। "अत्र लोपः" इत्यस्मादभ्यासस्येत्यनुवर्तते। "अत्स्मृदृ()त्वरे" त्यतोऽदिति, "सन्वल्लघुनी"इत्यतश्चङ्परे इति। चङ् परो यस्मादिति बहुव्रीहिः। णावित्यार्थिकम्। तदाह -- अभ्यासस्याऽत्वमिति। अबिभ्रजदिति। उपधाह्रस्वपक्षे लघुपरत्वात्सन्वत्त्वादभ्यासस्य इत्वम्। "दीर्घो लघो"रिति तु न, संयोगापरत्वादलघुत्वात्। काण्यादीनां वेति। "णौ चङ्युपधाया इति ह्रस्व" इति शेषः। ण्यन्ताः कणरणेति। "कण निमीलने" "रण शब्दे", "भण शब्दे" "श्रण दाने", "लुप छेदने", "हेठ विबाधाया"मिति षट् धातवो ण्यन्ताः काण्यादयो भाष्ये पठिता इत्यर्थः। ह्वायीति। "ह्वेञ् स्पर्धायां शब्दे च"। आत्त्वे युकि च निर्देशः। "वण शब्दे" दन्त्योष्ठ()आदिः, "लुठ प्रतिघाते"टवर्गद्वितीयोपधः, "लप व्यक्तायां वाचि"ति चत्वारो ण्यन्ता भाष्योक्तेभ्योऽधिका न्यासग्रन्थे पठिता इत्यर्थः। चाणिलोटी इति। "चण दाने" तालव्यादिः। "लुट स्तेये" टवर्गप्रथमान्तो भ्वादिः। चुरादौ भाषार्थकोऽपि। एतावपि ण्यन्तौ द्वौ भाष्यन्यासग्रन्थाभ्यामन्यत्र क्वचिद्ग्रन्थे पठितावित्यर्थः। इत्थं द्वादशेति। अनेन मतभेदेन काण्यादयो द्वादशेत्यर्थः। अचीकणदिति। उपधाह्रस्वपक्षे लघुपरत्वात्सन्वत्त्वदीर्घौ च। अचकाणदिति। उपधाह्रस्वाऽभावपक्षे रूपम्। अरीरणत्- अरराणत्। अबीभणत्- अबभाणत्।अशिश्रणत्- अशश्राणत्। अलूलुपत्-अलुलोपत्। अजीहिठत्-अजिहेठत्। अजूहवत्- अजुहावत्। अवीवणत्- अववाणत्। अलूलुठत् - अलुलोठत्। अलीलपत- अललापत्। अचीचमत्- अचचाणत्। अलूलुटत्- अलुलोटत्।

---

सूत्रम्

काशिका-वृत्तिः

ई च गणः ७।४।९७

गणेः अभ्यासस्य ईकारादेशो भवति चङ्परे णौ परतः, चकारातत् च। अजीगणत्, अजगणत्। इति श्रीवामनविरचितायां काशिकायां वृत्तौ सप्तमाध्यायस्य चतुर्थः पादः। अष्टमो ऽध्यायः प्रथमः पादः।

लघु-सिद्धान्त-कौमुदी

ई च गणः ७००, ७।४।९७

गणयतेरभ्यासस्य ई स्याच्चङ्परे णौ चादत्। अजीगणत्, अजगणत्॥

लघु-सिद्धान्त-कौमुदी

इति चुरादयः ७००, ७।४।९७

लघु-सिद्धान्त-कौमुदी

अथ ण्यन्तप्रक्रिया ७००, ७।४।९७

न्यासः

ई च गणः। , ७।४।९७

"गण संख्याने" (धा।पा।१८५३) चुरादावदन्तः। तत्राकारात्? "अतो लोपः" ६।४।४८ इति लोपे कृतेऽनग्लोप इति

वचनादप्राप्तयोरेव सन्बद्भावदीर्घयोरिवमीत्वं विधीयते। चकारो विभाषेत्यनुकर्षणार्थः॥ इति बोधसत्त्वदेशीयाचायं श्रीजिनेन्द्रवुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य चतुर्थः पादः समाप्तश्च सप्तमोऽध्यायः - - - अष्टमोऽध्यायः प्रथमः पादः

बाल-मनोरमा

ई च गणः ४०१, ७।४।९७

ई च गणः। "सन्वल्लघुनी" त्यतश्चङ्परे इति, "अत्र लोपे"त्यतोऽभ्यासस्येति चानुवर्तते। तदाह --- गणेरभ्यासस्येति। "अत्स्मृद्द()त्वरे"ति पूर्वसूत्रादद्ग्रहणं चकारादनुकृष्यते। तदाह -- चाददिति। स्तनगदी देवशब्दे इति। पर्जन्यगर्जने इत्यर्थः। स्तनश्च गदिश्चेति द्वन्द्वः। गदीति इका निर्देशः। गदेत्यकारान्तदिकि अल्लोपे गदीति निर्देशः। एवं च प्राकरणिकमदन्तत्वं न व्याहन्यते। पत गतौ वेति। गतावर्थे पतधातुर्णिचं वा लभत इत्यर्थः। तदाह -- वा णिजन्त इति। आधृषीयत्वाऽभावाद्विकल्पविधिः। यद्वा वाशब्दस्य अदन्तत्व एवाऽन्वयः। णिच् तु नित्य एव। तदाह -- वा अदन्त इत्येके इति। प्रथमपक्षे तु अदन्तत्वमेव। तदाह-- आद्ये पतयतीति। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः। पतांचकारेति। णिजभावेऽप्यदन्तत्वात्कास्यनेकाजित्यामिति भावः। चङि-- अपपतत्। अग्लोपित्वान्न दीर्घसन्वत्त्वे। द्वितीये पातयतीति। तकारादकारस्युच्चारणार्थत्वादुपदावृद्धिरिति बावः। अपीपतदिति। अग्लोपित्वाऽभावाद्दीर्घसन्वत्त्वे इति भावः। कृपयतीति। अदन्तस्य त्वस्य धात्वन्तरत्वात् "कृपो रो लः" इति न भवति। स्पृह ईप्सायाम्। आप्तुमिच्छा- ईप्सा। अबभामदिति। चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। सूच पैशुन्ये। अषोपदेशत्वादिति। अनेकाच्त्वादिति भावः। खेट भक्षणे। तृतीयान्त इति। टवर्गतृतीयान्त इत्यर्थः। साम सान्त्वप्रयोगे। सान्त्वप्रयोगः = अकटुभाषणम्। अससामदिति। अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। ननु "साम सान्त्वने" इति कथादेः प्राक् चुरादौ पाठो व्यर्थः, अनेनैव सिद्धेरित्यत आह -- सामसान्त्वने इत्यतीतस्य तु असीषमदिति। पूर्वपठिते सामधातौ मकारादकारस्य उच्चारणार्थतया उपधाह्रस्वे, दीर्घसन्वत्त्वे चेत्यर्थः। यद्यपि "साम सान्त्वप्रयोगे" इत्येव प्राक् चुरादौ पठितम्,ततापि सान्त्वनस्य सामप्रयोगादनन्यत्वात्तथोक्तिरिति भावः। गवेष मार्गणम् - अन्वेषणम्। चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः। तदाह - अजगवेषदिति। निवास आच्छादने। अनिनिवासत्। ऊन परिहाणे। परिहाणम् - न्यूनीभावः। ऊनयतीति। णावतो लोप इति भावः। ननु लुङि चङि ऊन इ अ त् इति स्थिते णिलोपे "चङी"त्यजादेर्द्वितीयस्य नशब्दस्य द्वित्वे अतो लोपे अग्लोपित्वेन सन्वत्त्वाऽभावादभ्यासे इत्वदीर्घयोरभावे आटो वृद्धौ औननदिति रूपं वक्ष्यति, तदनुपपन्नं, द्वित्वात्प्रागेव परत्वादतो लोपे कृते निशब्दस्य द्वित्वे औनिनदित्येवमभ्यासे इकारश्रवणप्रसङ्गात्। न च द्वित्वे कार्ये अतो लोपस्य "द्विर्वचनेऽची"ति निषेधः शङ्क्यः, अल्लोपपययोरपरयो"रित्येव वक्तव्ये "पु" इति पवर्गस्य, "य"णिति प्रत्याहारस्य , जकारस्य च ग्रहणं लिङ्()मित्यन्वयः। कुत्र लिङ्गमित्यत आह -- णिचीत्यादि। द्वित्वे कार्ये णिज्निमित्तकोऽच आदेशो न स्यादित्यत्र लिङ्गमिति पूर्वेणान्वयः। "तथाहि - "ओः पुयण्ज्यपरे" इति सूत्रम्। "सनि परे यदङ्गं तदवयवाऽभ्यासोवर्णस्य इकारः स्यादवर्णपरकेषु पवर्गयण्जकारेषु परत" इति तद। "पुङ्" पिपवायिषति, "भू"बिभावयिषति, "यु"- यियावयिषति, "रु"- रिरावयिषति, "लूञ्"- लिलावयिषति, "जु"- जिजवयिषतीत्युदाहरणानि। अत्र द्वित्वं प्रत्यनिमित्ते णिचि "द्विर्वचनेऽची"ति निषेधाऽप्रवृत्त्या द्वित्वात्प्रागेव परत्वाद्वृद्ध्यावादेशयोः कृतयोरभ्यासेष्वाकारस्य ह्रस्वे सति "सन्यतः" इत्येव इत्वसिद्धेः पवर्गयण्प्रत्याहारजकारग्रहणं व्यर्थम्। पकारयकारग्रहणं तु न व्यर्थं, पिपावयिषति यियावयिषतीत्यत्र उक्तरीत्या "सन्यतः" इति इत्वसिद्धावपि पिपविषते यियविषतीत्यत्र पूङ्धातोर्युधातोश्च अण्यन्तात्सनि अब्यासे इत्वार्थं तदावश्यकत्वात्। तत्र हि -- "इको झ"ल#इति सनः कित्त्वात् "श्र्युकः किति" इति प्राप्तमिण्निषेधं बाधित्वा, "स्मिपूङ्रञ्ज्वशां सनी"ति, "सनीवन्तद्र्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसना"मिति च सूत्राभ्यामिटि कृते इडादेः सनो द्वित्वनिमित्तत्वेन इटोऽपि

द्वित्वनिमित्ततया "द्विर्वचनेऽची"ति गुणावाऽदेशयोर्निषेधे सति "पू" "यु" इत्यनयोर्द्वित्वे अभ्यासे अकाराऽभावेन "सन्यतः" इत्यस्याऽप्रवृत्त्या तत् इत्त्वार्थं "पययो"रित्यावश्यकम्। वर्गप्रत्याहारजकारग्रहणं "तु द्वित्वे कार्ये णावच आदेशो ने"त्यनाश्रयणे व्यर्थमेव। तदाश्रयणे तु बिभावयिषतीत्यादिषु णिचि लु()पते सति "चङी"ति द्वित्वे कार्ये प्रत्ययलक्षममाश्रित्य णिचि गुणाऽवादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्व अभ्यासे अकाराऽभावेन "सन्यतः" इत्यस्याऽप्रवृत्त्या वर्गप्रत्याहारजकारग्रहणमर्थवत्। अतो द्वित्वे कार्ये णावच आदेशो नेति विज्ञायत इत्यर्थः। ननु "कृ()त संशब्दने" अस्मात् णौ "उपधायाश्चे"ति दीर्घे अचिकीर्तदिति रूपमिष्यते। तन्न युज्यते। द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया इत्त्वात्प्रागेव कृ()दित्यस्य द्वित्वे, उरदत्वे, रपरत्वे, हलादिशेषे, कस्य चुत्वे, उत्तरखण्डे, ऋत इत्त्वे, रपरत्वे, उपधादीर्घे, अचकीर्तदित्यापत्तेरित्यत आह-- यत्र द्विरुक्तावित्यादि। यत्र धातौ चङि द्विर्वचने कृते अभ्यासोत्तरखण्डस्य आद्योऽच् अवर्णो लभ्यते तत्रैव द्वित्वे कार्ये णावच आदेशो नेत्ययं निषेध इत्यन्वयः। यद्यपि धातोरवयवस्य एकाचो द्वित्वे कृते अभ्यासोत्तरखण्डे द्वितीयस्याऽचोभावादाद्योऽजिति व्यर्थमेव, तथापि स्पष्टार्थं तदित्याहुः।
नन्वभ्यासोत्तरखण्डस्याद्योऽजवर्णो लभ्यते इत्यत्र किमवर्णो द्वित्वप्रवृत्तिवेलायां विवक्षितः, उत परिनिष्ठिते रूपे विवक्षितः?, नाद्यः, क्षुधातोण्र्यन्तात्सनि चुक्षावयिषतीत्यत्र "क्षु" इत्यस्य द्वित्वे कृते अभ्यासोत्तरखण्डे प्रक्रियादशायामवर्णाऽभावेन वृद्ध्यावादेशयोर्निषेधाऽप्रवृत्त्या द्वित्वात्प्रागेव परत्वाद्वृद्ध्यावादेशयोः क्षावित्यस्य द्वित्वे चिक्षावयिषतीत्यापत्तेः। न द्वितीयः, ऊन इ अ त् इति स्थिते सति "ने"त्यस्य द्वित्वेऽभ्यासोत्तरखण्डेऽल्लोपे सत्यवर्णाऽभावेन णावल्लोपस्य निषेधाऽप्रवृत्त्या द्वित्वात् प्रागेव परत्वादतो लोपे सति "नी" त्यस्य द्वित्वे औननदित्यापत्तेरित्यत आह-- प्रक्रियायां परिनिष्ठिते रूपे वेति। न त्वमुकत्रैवेत्याग्रह इति भावः। सजातीये पुयण्जामभ्यासोत्तरखण्डेऽवर्णपरत्वनियमादिति भावः। सिद्धमिति। प्रक्रियायां परिनिष्ठिते वा उत्तरखण्डे अवर्णाऽभावादृ()त इत्त्वस्य न निषेध इति भावः। एवं च "चुक्षावयिषती"त्यत्र "क्षु" इत्यस्य द्वित्वे प्रक्रियादशायामभ्यासोत्तरखण्डेऽवर्णाऽभावेऽपि परिनिष्ठिते रूपे तत्सत्त्वाण्णौ गुणावादेशयोर्भवत्येव द्वित्वे कार्ये निषेधः। औननदित्यत्रापि णौ भवत्येवाऽल्लोपस्य निषेध इत्याह -- प्रकृते त्विति। औननदित्यत्रेत्यर्थः। नशब्दस्येति। अल्लोपात्प्रागेव नशब्दस्य द्वित्वाश्रयणे प्रक्रियादशायामुत्तरखण्डेऽवर्णलाभादल्लोपस्य निषेधे सति नशब्दस्यैव द्वित्वं, न तु निशब्दस्येति भावः। तत इति। नशब्दस्य द्वित्वाऽनन्तरमुत्तरखण्डे अल्लोप इति भावः। अत्र नशब्दद्वित्वार्तमेव ऊनधातोरदन्तत्वं स्थितम्। फलान्तरं सूचयन्नाह -- मा भवानूननदिति। अग्लोपित्वान्नोपधाह्रस्व इति भावः। पाठान्तरमिति। "केत श्रावणे" इत्यादि ज्ञेयमित्यर्थः। चकारात्केतेति। "समुच्चीयते" इतिशेषः। सङ्कोचने इतीति। इतिशब्दः पाठान्तरसमाप्तौ। स्तेन चौर्ये। अनेकाच्त्वान्न षोपदेशोऽयमिति मत्वा आह-- अतिस्तेनदिति। गृह ग्रहणे। ऋदुपधोऽयम्। गृहयते इति। अल्ल#ओपस्य स्थानिवत्त्वान्न गुण इति भावः। लुङि - अजगृहत। अग्लोपित्वान्न सन्वत्तवम्। मृग अन्वेषणे। मृगयते इति। इहाऽप्यल्लोपस्य स्थानिवत्त्वान्न गुणः। "मार्ग् अन्वेषणे" इत्याधृषीयस्य तु मार्गयति,मार्गतीति च गतम्। अर्थ उपयाच्ञायाम्। अर्थयते इति। अर्थ इ इति स्थिते अतो लोपः, न तु "अचो ञ्णिती"ति वृद्धि, "वृद्धेर्लोपो बलीया" निति न्यायात्। "अर्थवेदयो"रित्यापुक्तु न, तत्र प्रातिपदिकस्य ग्रहणात्। गर्व माने। अभिमाने इत्यर्थः। ननु कथादावस्य पाठो व्यर्थः, अदन्तत्वे फलाऽभावात्। नच सन्वत्त्वनिवृत्तये अग्लोपित्वाय अदन्तत्वमिति शङ्क्यं, लघुपरकत्वाऽभावादेव तदप्रसक्तेः। नाऽप्यल्लोपस्य स्थानिवद्भावादुपधावृद्धिनिवृत्त्यर्थमदन्तत्वमिति, शङ्क्यं, गकारादकारस्यानुपधात्वादेव तदप्रसक्तेरित्यत आह- - अद्रतत्वसामर्थ्याण्णिज्विकल्प इति। ननु "गर्वते" इत्यत्र णिजभावेऽप्यदन्तत्वं निष्फलमिति कतं तस्य विकल्पज्ञापकतेत्यत आह -- धातोरन्त उदात्त इति। तेन "गर्वते" इत्यत्र वकारादकारौदात्तः फलति। अदन्तत्वाऽभावे तु गकारादकार उदात्तः स्यादिति भावः। लिट()आम् चेति। "गर्वाचक्रे" इतय्त्र "कास्यनेकाचः" इत्याम्प्रत्ययोऽप्यदन्ततत्वस्य फलमित्यर्थः। अन्यथा अनेकाच्त्वाऽभावादाम्न स्यादिति भावः। एवमग्रेऽपीति। "मूत्र प्ररुआवणे" इत्यादावित्यर्थः। इत्यागवर्वीयाः। सूत्र वेष्टने। अनेकाच्त्वादषोपदेशत्वार्थमस्य

अदन्तत्वमिति न ततोऽस्य णिज्विकल्पः। कत्र शैथिल्ये। कर्त इत्यपीति। अदन्तत्वसामर्थ्यादस्य णिज्विकल्प इति मत्वाह -- कर्तयति कर्ततीति। प्रातिपदिकाद्धात्वर्थे। चुरादिगमसूत्रमिदम्। "इष्ठ"वदिति सप्तम्यन्ताद्वतिः। तेन भुवमाचष्टे भावयीत्यत्र "इष्ठस्य यिट् चे"ति यिडागमो न भवति। तदाह --इष्ठे यथेति। अत्र "धात्वर्थे इत्यनेन करणम् आख्यानं दर्शनं वचनं श्रवणमित्यादि गृह्नते। पुंवद्भावेति। अतिशयेन पट्वी पटिष्ठेत्यत्र "भस्याऽढे" इति पुंवत्त्वम्। "द्रढिष्ठ" इत्यत्र "र ऋतो हलादेर्लघो"रिति रभावः। अतिशयेन साधुः साधिष्ठ इत्यत्र टिलोपः। अतिशयेन रुआग्वी रुआजिष्ठ इत्यत्र "विन्मतोर्लु"गिति विनो लुक्। अतिशयेन गोमान् गविष्ठ इत्यत्र मतुपो लुक्ऽतिशयेन स्थूलः स्थविष्ठ इत्यादौ "स्थूलदूरयुवे"त्यादिना यणादिलोपः, पूर्वस्य च गुणः। अतिशयेन प्रियः प्रेष्ठ इत्यादौ "प्रियस्थिरे"त्यादिना प्रस्थाद्यादेशः। अतिशयेन रुआग्वी रुआजिष्ठ इत्यत्र भत्वान्न कुत्वम्। एते इष्ठे इव णावपि परतः स्युरित्यर्थः। पटयतीति। पटुमाचष्टे इत्याद्यर्थे णिच्। इष्ठवत्त्वाट्टेरिति टिलोप इति भावः। ननु उकारस्य टेर्लोपे सति अग्लोपित्वात्सन्वत्त्वं न स्यादित्यत आह--- परत्वाददृद्धौ सत्यां टिलोप इति। "अचो ञ्णितीत"ति उकारस्य वृद्धौ कृतायामेकारस्य टेर्लोपः। अकृतायां तु वृद्धावुकारस्य टेर्लोपः। ततश्च "शब्दान्तरस्य प्राप्नुवन्विधिरनित्यः" इति न्यायेन टिलोपोऽनित्यः। वृद्धिस्तु टिलोपे कृते सति नैव भवतीति साऽप्यनित्या। एवंच वृद्धिटोलोपयोरुभयोर्मध्ये परत्वादुकारस्य वृद्धिरौकारः। तस्याऽवादेशात्प्रागेव परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च औकारस्य टेर्लोपैत्यर्थः। एवं च अनग्लोपित्वात्सन्वत्त्वमिति मत्वाऽऽह - अपीपटदिति। एतच्च "मुण्डमिश्रे"ति सूत्रे भाष्यकैयटयोः स्पष्टम्। स्थितमिति। तथा च वृद्धेः प्रागुकारस्य लोपेऽग्लोपित्वान्न सन्वत्त्वमित्यर्थः। भाष्ये उभयथा दर्शनाद्रूपद्वयमपि साध्विति बोध्यम्। शब्देन्दुशेखरे तु -- "वृद्धेर्लोपो बलीया"निति "णौ चङी"ति सूत्रभाष्यमेव प्रमाणं। "मुण्डमिश्रे"ति सूत्रभाष्यं त्वेकदेश्युक्तिरिति प्रपञ्चितम्। अत्र पुंवद्भावादिकमुदाह्रियते-- एनीमाचष्टे एतयति। पुंवद्भावान्ङीब्नकारयोर्निवृत्तिः। दृढमाचष्टे द्रढयति। "र ऋतः" इति रभावः। रुआग्विणमाचष्टे रुआजयति। "विन्मतो"रिति विनो लुक्। गोमन्तमाचष्टे गवयति। मतुपो लुक्। अङ्गवृत्तपरिभाषया न वृद्धिः। स्थूलमाचष्टे स्थवयतीत्यादिषु यणादिलोपः। प्रियमाचष्टे प्रापयति, स्थिरमाचष्टे स्थापयतीत्यादिषु प्रस्थस्फाद्यादेशाः। अत्र वृद्धिर्भवत्येव, "द्वयो"रिति निर्देशेन अङ्गवृत्तपरिभाषया अनित्यत्वाश्रयणात्। रुआग्विणमाचष्टे रुआजयति। सुबन्ताद्विहितस्य विनो लुक्यन्तर्वर्तिविभक्त्या पदत्वात् प्राप्तं कुत्वं भत्वान्न भवति। तत्करोति तदाचष्टे। इदमपि चुरादिगणसूत्रम्। प्रातिपदिकादित्यनुवर्तते। तत्करोति, तदाचष्टे इति चार्थे प्रातिपदिकाण्णिच् स्यादित्यर्थः। आचारक्विबिव प्रातिपदिकादेवेदम्। ननु "प्रातिपदिकाद्धात्वर्थे" इत्येव सिद्धे किमर्थमिदमित्यत आह-- पूर्वस्यैव प्रपञ्च इति। ननु करोति आचष्टे इति वर्तमानानिर्देशादकरोदित्याद्यर्थेषु न स्यादित्यत आह --करोत्यचष्टे इत्यादि। लडर्थ इत्युपलक्षणम्। तेन भूते भविष्यति द्वित्वे बहुत्वे च प्रत्ययो भवत्येव। तेनातिक्रामति। इदमपि गणसूत्रम्। "प्रातिपदिकाद्धात्वर्थे" इत्यस्यैव प्रपञ्चः। वाचाऽतिक्रामति वाचयति इत्यत्र कुत्वं तु न शङ्क्यम्, असुबन्तादेव प्रातिपदिकात्प्रत्ययोत्पत्तेः। धातुरूपं चेति। इदमपि गणसूत्रम्। णिच्प्रकृतिरिति, प्रतिपद्यते #इति चाध्याह्रत्य वयाचष्टे -- णिच्()प्रकृतिर्धातुरूपं प्रतिपद्यत इति। ननु प्रातिपदिकाद्धात्वर्थे णिज् भवति, णिच्()प्रकृतिर्धातुरूपं च प्रतिपद्यते इति प्रतीयमानार्थश्रयणे भुक्तमाचष्टे भुक्तयतीति न स्यात्। भुक्तशब्दस्य भुजदातुरादेशः स्यादित्यत आह-- वशब्दोऽनुक्तसमुच्चयार्थ इति। किमनुक्तं समुच्चीयते इत्यत आह-- तथा च वार्तिकमिति। आख्यानात्कृत इति।"हेतुमति चे"ति सूत्रे इदं वार्तिकं स्थितम्। आख्यानं --वृत्तकथाप्रबन्धः। तद्वाचिनः कृदन्तात्कंसवधादिशब्दात्तदाचष्टे इत्यर्थे णिचि कृते णिच्प्रकृत्यवयवभूतस्य कृतः लुक्, तस्यैव कृतो या प्रकृतिर्हनादिधातुरूपा, तस्याः प्रत्यापत्तिः = आदेशादिविकारपरित्यागेन स्वरूपेणाऽवस्थानं भवतीत्यर्थः। "प्रकृतिवच्च कारकटमित्यशस्तु मूल एव व्याख्यास्यते। कंसवधमाचष्टे कंसं घातयतीत्युदाहरणम्। हननं वधः। "हनश्च वधःर" इति भावे हनधातोरप्प्रत्ययः प्रकृतेर्वधादेशश्च। कंसस्य वधः कंसवधः। तदन्वाख्यानपरवाक्यसन्दर्भो विवक्ष#इतः। तमाचष्टे इत्यर्थे णिच्। अप्प्रत्ययस्य कृतो लुक् , प्रकृतिभूतस्य हनधातोर्वधादेशस्य च निवृत्तिः। तथा च फलितं दर्शयति-- इह कंसं हन् इ इति स्थिते इति।

तत्त्व-बोधिनी

ई च गणः ३५०, ७।४।९७

ई च गणः। "अत्स्मृद्द()त्वरे"त्यत्र योऽत् स चकारेण समुच्चीयते। स्तन गदी। "गदी" त्यत्र इका निर्देशादतो लोपः। अनेकाच्त्वेनाषोऽपदेशत्वात्षत्वं न। तिस्तनयिषति। "स्तनिह्रषिपुषी"ति णेरिष्णुचि "अयामन्ते"त्ययादेशः। "स्तनयित्नुर्बलाहकः"। पत गतौ वा। गणसूत्रमिदम्। कृपयतीति। "कृपो रो लः" इति न प्रवर्तते, तत्र कृपू सामथ्र्य इत्यस्य ग्रहणात्, कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात्। स्पृह। आप्तुमिच्छा ईप्सा। अबभामदिति। अल्लोपस्य स्थानिवत्त्वात् "णौ चङी"त्युपधाह्रस्वो न। सूच। पिशूनो दुर्जनस्तस्य कर्म पैशुन्यम्। अषोपदेशत्वादिति। अनेकाच्त्वादिति भावः। साम सान्त्वने इत्यतीतस्य त्विति। अयं धातुरितः प्राङ् मूलपुस्तके न कुत्रापि दृष्टः, पुस्तकान्तरेषु मृग्यः। केचित्तु "साम सान्त्वने" इत्यस्य क्वाप्यपठितत्वेपि "षान्त्व सामप्रयोगे" इति प्राक्पठितमेव। तत्र च "षान्त्व" "सामे"ति धातुद्वयं प्रयोगे वर्तते। प्रयोगश्च सान्त्वप्रयोगपरः। स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समथ्र्यन्ते। गवेष। मार्गणम्-- अन्वेषणम्। ऊन परिहाणे। अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन "अजादेर्द्वितीयस्ये"ति णिचा सह दित्वे औ निनदित्यनिष्टं प्रसज्येत, किं तु औननदित्येवं रूपमिष्टम्। तच्च नशब्दस्य दित्वं सिध्यतीति वाच्यं, णिचो द्वित्वनिमित्तत्वाऽभावादत आह-- ओः पुयण्जीत्यादि। संपूर्णसूत्रं लिङ्गमिति केषांचिद्भ्रमं निवर्तयितुमाह-- पययोरिति। अयं भावः--- "स्मिपूङ्ञ्ज्वशां सनि", "सनीवन्तर्द्धे"ति सूत्राभ्यां पूङ्यौतिभ्यां परस्य सन इडागमे कृते "द्विर्वचनेऽची"ति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णान्तस्यैव द्वित्वमिति--पुपविषते युयविषतीत्यनिष्टं प्रसज्येत। ततश्चाऽभ्यासोवर्णस्येत्वार्थं पययोरित्यपेक्षितम्। अन्यथा पिपविषते यियविषतीति न सिध्येदिति। वर्गप्रत्याहारेति। "पुयण्जी"ति वर्गादिग्रहणफलं तु -- अबीभवत् अमीमवत् अरीरवत्, अलीलवत्, अजीजवत्, बिभावयिषति मिमावयिषति रिरावयिषति लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यम्।तदुभयं सूपपादम्। णिचि परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वात्, अकारस्य "सन्यतः" इतीत्वेन रूपसिद्धेश्च। ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः। ज्ञापनफलं तु यत्र "ओः पुयण्जी"त्यस्याऽप्राप्तिस्तत्र बोध्यम्। तद्यथा--- चुक्षावयिषति। चङि अचुक्षवत्। तु इति सौत्रो धातुस्ततो णौ सन्। तुतावयिषति। चङि अतूतवत्। नुनावयिषति। अनूनवत्। पुस्फारयिषति। अपुस्फुरत्। "चिस्फुरोर्णौ" इति वा आत्वम्। अपुस्फरदित्यादिष्वभ्यासे उकारश्रवणं भवति ज्ञापनात्, अन्यथा चिक्षावयिषतीत्यादि प्रसज्येत। तदेतत्सकलमभिप्रेत्य वार्तिककृतोक्तम् "ओः पुयण्जिषु वचनं ज्ञापकं-- णौ स्थानिवद्भावस्ये"ति। स्थानिवद्भावः प्रतिषेधस्याप्युपलकक्षणम्()। अच आदेशो न स्यादिति। प्रतिषेधपक्षो मुख्य इत्यभिप्रेत्येदमुक्तम्। प्रतिषेधः स्थानिवद्भाव्सयाप्युपलक्षणमिति वा बोध्यम्। नन्वेवं कृ()तसंशब्दन इति धातोर्णौ चङि इरादेशात्प्रागेव कृ()त इत्यस्य द्वित्वे उरदत्वे च अचकीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह-- यत्र द्विरुक्ताविति। आद्योऽजिति। चङ्सहितस्योत्तरखण्डत्वमभ्युपेत्येदमुक्तम्। अन्ये तु आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं, धातोरवयस्यैकाचो दित्वे सत्यभ्यासोत्तरखण्डे अज्द्वयाऽसंभवादित्याहुः। औजढत् औननदित्यादौ परिनिष्ठिते अवर्णस्याऽलाभादाह-- प्रक्रियायामिति। चुक्षावयिषतीत्यादौ प्रक्रियायामवर्णो न लभ्यते इत्याह-- परिनिष्ठिते रूपे वेति। वाशब्दोऽनास्थायाम्। क्वचिदवर्णपरत्वं विवक्षितं, न तु अमुकत्रैवेत्याग्रह इति भावः। सजातीयापेक्षत्वादिति। "पुयण्जी"त्यभ्यासोत्तरखण्डे अवर्णपरा भवन्ति। अतस्तथैव ज्ञापकमित्यर्थः। अत एव भाष्यकृता "पवर्गादेरन्यस्मिन्नपि हलि अवर्णपरे एव स्थानिवत्तवमिति अचिकीर्तदित्यादौ नाऽतिव्याप्ति"रिति सिद्धान्तितम्। ननु "ओः पुयण्जी" ति सूत्रे णिचि इति नास्ति, तथा च णिच्यच आदेशो न स्यादित्यर्थे कथमिदं ज्ञापकं भवेत्। न च सामान्यतो द्वित्वे कार्ये अच आदेशो न स्यादित्येव ज्ञाप्यतामिति वाच्यं, दिदवनीयिषति निनयिषतीत्यादावभ्यासे उकारश्रवणप्रसङ्गादिति चेत्। अत्राहुः-- येन

नाव्यवधानमित्यकेन प्रत्ययेन द्वित्वनिमित्तप्रत्यस्य व्यवधानमाश्रीयते। तच्च णेरेव संभवतीति णिज्विषयकमेव ज्ञापकं, दिदवनीयिषतीत्यत्र तु ल्युटा क्यचा च व्यवदानादनेकव्यवधानमिति न तद्विषयकं ज्ञापनमिति। अस्मन्मते आचारक्विबन्ताद्दिवनशब्दात्सनि दुदवनिषतीति स्यात्, तच्च नेष्यते, "णौ स्थानिवद्भावस्य ज्ञापक" मिति वार्तिकोक्तेः। स्थानिवत्त्वेन प्रतिषेधेन वा णावेवाभ्यासे उकारेण भवितव्यम्। अतो वार्तिककारवचनादेव णौ स्थानिवदिति स्वीकर्तव्यम्। तथा च न पूर्वोदाहरणेषु दोष इति दिक्। फलितमाह-- प्रकृतेत्वित#इ। औननदिति। "नोनयति ध्वनयती"ति चङ् निषेधस्त्विह न। तत्र छन्दसीत्यनुवृत्त्या "मा त्वायतो जरितुः काममूनयी"रित्यादिवेदे एव तन्निषेधात्। यद्यपि परिनिष्ठित एवाऽवर्णपरत्वमितयाशयेन "उवर्णादेश एव स्थानिवत्स्यान्नाऽन्य" इति वदतां बोपदेवादीनां मते औनिनदित्येव भाव्यम्, अवर्णादेशस्य स्थानिवत्त्वे तु परिनिष्ठितरूपे अवर्णपरत्वाऽलाभात्, तथापि अचिकीर्तदित्यादौ स्थानिवत्त्वाशङ्क्य उत्तरभागे अवर्णाऽभावादिति भाष्यकारोक्तपरिहारपर्यालोचनया उवर्णादेश एव स्थानिवदिति नियमो नास्तीत्यौननदितिरूपं निर्बाधमेव। चङि उपधालोपे तस्य स्थानिवत्त्वात्पाय्()शब्दस्य द्वित्वमिति वृत्तिग्रन्थो विरुध्येत। अपि च "शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथे"ति वैयाघ्रपद्यवार्तिकस्य औजढदिति प्रयोगोऽपि विरुध्येत। एतद्धि पूर्वत्राऽसिद्धमित्यस्य प्रयोजन कथनवार्तिकम्। तद्यथा--- शुष्किकेत्यत्र तु "उदीचामातः" इतीत्वविकल्पो न, "शुषः कः"इति कत्वस्याऽसिद्धत्वेन यकपूर्वत्वाऽभावात्। "सुष्करजङ्घे"त्यत्र कत्वस्याऽसिद्धत्वादेव "न कोपधायाः" इति पुंवद्भावनिषेधो न। क्षामिमानित्यत्र तु "मादुपधाया" इति वत्वं न, "क्षायो मः" इति मत्वस्याऽसिद्धत्वात्। वहेः क्तान्ताण्णिचि चङि औजढदित्यत्र ढत्वस्याऽसिद्धत्वाण्णौ कृतस्य टिलोपस्य स्थानिवत्त्वाच्च ह्()तशब्दस्य द्वित्वं। "कुहोश्चुः" "अभ्यासे चर्च"। सन्वदित्वं तु अनग्लोपीति प्रतिषेधान्न भवति। एवं काशिकायामपि "पूर्वत्रासिद्ध"मिति सूत्रे औजढदित्युदाहृत्य, ऊढिमाख्यदौजिढदित्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवतीत्युक्तं, तदपि विरुध्येत। "उवर्णादेश एव स्थानिव"दिति नियमे णौ कृतस्य टिलोपस्याऽत्र स्थानिवत्त्वाऽभावेन ह्()तशब्दस्य ह्तिशब्दस्य वा द्वित्वाऽसंभवात्। एवं चाऽङ्कधातोर्णिच्यल्लोपे चङि स्थानिवत्त्वात्कशब्दस्य द्वित्वे आञ्चकदिति रूपमेव सर्वसंमतं, न त्वाञ्चिकदिति बोपदेवोक्तमिति बोध्यम्। नन्वचिकीर्तदित्यादौ स्थानिवत्त्वमाशङ्क्योत्तरभागे अवर्णाऽभावादिति वदन्भाष्यकारो न बोपदेवग्रन्थस्य प्रतिकूलः। उत्तरभागे परिनिष्ठितरूपे अवर्णपरत्वमुवर्णादेशस्यैव संभवति नान्यस्येत्याशयेनैव भाष्यकारेण तथोक्तमिति वक्कतुं शक्यत्वादिति चेत्। मैवम्। तथा हि सति यत्र "ओः पुयण्जी"त्यस्याऽप्राप्तिस्तत्राप्युवर्णादेश एवस्थानिवत्, ज्ञापकस्य सजातीयापेक्षत्वादित्येवमेव भाष्यकारो वदेत्। ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनाऽयोगादिति दिक्। सङ्केत। चत्वारोऽत्र धातवः। पाठान्तरमिति। "सङ्कोचने" इत्येतत्पर्यन्तम्। अनेकाच्त्वेनाऽषोपदेशत्वात्षत्वं नेति ध्वनयति-- अतिस्तेनदिति। गृहयते इति। अल्लोपस्य स्थानिवत्त्वान्न गुणः। लुङि--अजगृहत। अग्लोपान्न सन्वद्भावः। मृगयते इति। मार्गयति मार्गतीति तु मार्ग अन्वेषणे इत्याधृषीयस्य। अर्थ। अर्थयते इति। "वृद्धेर्लोपो बलीया"नित्यल्लोपान्न वृद्धिः। बोपदेवस्तु-- वृद्धौ कृतायां पुकि चाऽर्थापयते इति रूपमाह, तद्भ्रसात्। न च "अर्थवेदसत्याना"मित्यापुक् स्यादेवेति वाच्यं, तत्र प्रातिपदिकस्य ग्रहणात्। अदन्तत्वसामर्थ्यादिति। कथादिषूपधावृद्धिदीर्घसन्वद्भावविरहेण, सारभामप्रभृतीनामुपधाह्रस्वस्य, गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनाऽदन्तत्वं सार्थकम्। इह त्वदन्तत्वे प्रागुक्तफलाऽभावाण्णिचः पाक्षिकत्वं ज्ञापयीति भावः। नन्वदन्तत्वसार्थकत्वाय "वाऽल्लोप" इति प्राचोक्तमेवाभ्युपगम्यतामिति चेत्। अत्राहुः-- "चिन्तयतेरिदित्वं सामान्यापेक्षं ज्ञापक"मिति मते इह अदन्तवस्य फलं स्पष्टमेव। "विशेषाऽपेक्षं ज्ञापक"मिति मते तु तत्र तत्र आकार ईकार उकार ऊकारश्चेत्यनुबन्धा यथा ज्ञापकतय#आ स्वीकृतास्तथा अदन्तताऽपि णिच्विकल्पमेव ज्ञापयतु, क्लृप्तेनैव णिज्विकल्पेन कृतार्थत्वे अपूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात्। एवं हि सति मतद्वयेऽप्येकरूपमेव फलं लभ्यत इति। असुसूत्रदिति। अनेकाच्त्वान्न षत्वम्। प्रातिपदिकादिति। यदि सुबन्ताण्णिच् स्यात्तदा रुआजयतीत्यादौ कुत्वं स्यादिति भाव इति केचित्। तन्न। इष्ठवद्भावेन भत्वे कुत्वस्याऽप्रसक्तेः। अत्र "बहुलं णिच्

स्यात्। स च णिच् इष्ठवद्भवती"त्यन्वयात्पक्षे वाक्यमपि भवतीत्याह-- पटुमाचष्ट इति। धात्वर्थ इत्यनेन करणऽऽख्यानादिर्गृह्यत इति भावः। ननु बहून्याचष्टे भावयीत्यत्र "इष्ठस्य यिट् चे"ति णिचोऽपि यिट् स्यात्। अत्राहुः-- "टे"रिति सूत्रे "णाविष्ठवत्प्रातिपदिकस्ये"ति वार्तिके प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो माभूदित्येवमर्थम्। तेनाऽत्र णिचोऽपीण्न भवति, तदभावे भूभावेनापि न भवितव्यं, संनियोगशिष्टत्वात्, किंतु बहयतीत्येव भवितव्यमिति मतान्तरम्। एतच्च तत्रैव सूत्रे कैयटे स्पष्टमिति। अन्ये त्वाहुः-- इष्ठवदिति हि सप्तम्यन्ताद्वतिः, णावित्युपमेये सप्तमीदर्शनात्, तेन इष्ठनि परे पूर्वस्य यत्कार्यं तदतिदिश्यते न त्विष्ठनोऽपीति। पुंवद्भावेति। अतिशयेन पट्वी पटिष्ठेत्यत्र "भस्याऽढे तद्धिते" इति पुंवद्भावः। क्रशिष्ठः द्रढिष्ठ इत्यत्र "र ऋतो हलादे"रिति रभावः। "साधिष्ठ" इत्यादौ टिलोपः। अतिशयेन रुआग्वी रुआजिष्ठ इत्यत्र "विनमतोर्लु"गिति विनो लुक्। अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक्। स्थविष्ठ इत्यादौ "स्थूलदूरे"त्यादिना यणादिलोपः। प्रेष्ठ इत्यादौ "प्रियस्थिरे"त्यादिना प्रस्थाद्यादेशः। तद्वण्णावपीति। पुंवद्भावस्योदाहरणम्- ऐनीमाचष्टे एतयति। टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिध्यर्थमिति बोध्यम्। द्रढयतीत्यादौ रभावः। रुआग्विणमाचष्टे रुआजयतीत्यत्र विनो लुक्। गोमन्तमाचष्टे गवयतीत्यत्र मतुपो लुक्। अङ्गवृत्तपिरभाषया वृद्धिरत्र न भवति। प्रियमाचष्टे प्रापयति, स्थिरमाचष्टे स्थापयीत्यादौ तु वृद्धिर्भवत्येव, "द्वयो"रिति निर्देशेन तस्याः परिभाषाया अनित्यत्वज्ञापनादिति दिक्। परत्वाद्वृद्धाविति। लोपः शब्दान्तरप्राप्त्याऽनित्यः। वृद्धिरप्यनित्या। उभयोरनित्ययोः परत्वाद्वृद्धिः। तस्यां कृतायामौकारस्याऽऽवादेशात्प्रागेव परतवाद्वार्णादाङ्गस्य बलीयस्त्वाच्च लोप इत्यर्थः। एवं चाऽनग्लोपित्वाद्दीर्घसन्वद्भावौ स्त इत्याह--- अपीपटदिति। इह टिलोपस्य स्थानिवत्त्वेन व्यवधानाद्दीर्घसन्वद्भावौ नति न भ्रमितव्यम्, स्थानिवत्त्वेऽप्यङ्गस्य णिच्परत्वाऽनपायात्। चङ् परे णौ यल्लघ्विति पक्षेऽपि अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव। केचित्तु "चङ् परे णौ यल्लघ्वि"ति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिच्परं लघु दुर्लभमिति सन्वद्भावाऽप्राप्त्या अपपटदित्येव रूपम्। प्रथमं टिलोपः, पश्चाद्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत्, तन्नादर्तव्यम्। "णिच्यच आदेशो न स्याद्वित्वे कर्तव्ये" #इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुस्तन्मन्दम्। अपीपटदित्यत्र द्वितीयाऽच्पर्यन्तस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादम्। तथा च द्वितीयस्याऽचो द्वित्वकरणात्प्रथमं टिलोपः स्यादेवेति। वृद्धेर्लोप इति। कृताऽकृतप्राप्तिमात्रेण लोपो नित्यः, वृद्धिस्त्वनित्या, टिलोपे सति स्थानिनः पूर्वत्र कर्तव्यायां लोपस्य स्थानिवत्त्वात्, स्वविधौ स्वस्य स्थानिवत्त्वाऽभावाच्च। अ()स्मस्तु पक्षे "मुण्डमिश्रे"ति सूत्रे हलिकल्योरदन्तत्वनिपातनस्य वैयथ्र्यमेव, वृद्धेः प्राक् टिलोपे सति अग्लोपित्वसंभवात्। तथा चाऽदन्तत्वनिपातनसामथ्र्याट्टिलोपात्पूर्वं वृद्धिरेवेत्यनग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते। भाष्यद्वयप्रामाण्याद्रूपद्वयमपि साध्विति बहवः। लडर्थस्त्विति। करोत्याचष्टे इति हि कर्तरि वर्तमाने लडेकवचनम्। लडर्थाऽविवक्षायां तु ण्यन्ताद्भावकर्मणोर्भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययो भवत्येवेति भावः। यद्यप्येकत्वादिसङ्ख्या लडर्थो न भवति, तथापि लडादेशतिङर्थोऽपीह लडर्थत्वेन गृहीत इति ज्ञेयम्। तेनातिक्रामति। तृतीयाप्रकृतिभृतात्प्रातिपदिकाण्णिच्। तृतीयान्तण्णिजित्यन्ये। एवं तत्करोतीत्यत्रापि द्वितीयाप्रकृतिभूताद्द्वितीयान्ताद्वा णिच्। न च सुबन्ताण्णिचि वाचं करोत्याचष्टे वाचाऽतिक्रामति वा वाचयतीत्यत्र कुत्वं विनो लुकि प्राप्तस्य पदकार्यस्य बाधार्थं भसंज्ञातिदेशस्यावश्यकत्वात्, "तत्करोती"त्यादिनिर्देशानुगुणत्वाच्च सुबन्ताण्णिजिति पक्ष एव ज्यायानित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

सर्वस्य द्वे ८।१।१

सर्वस्य इति च द्वे इति च एतदधिकृतं वेदितव्यम्। इत उत्तरं यद् वक्ष्यामः पदस्य ८।१।१६ इत्यतः प्राक्, सर्वस्य द्वे भवतः इत्येवं तद् वेदितव्यम्। वक्ष्यति नित्यवीप्सयोः ८।१।४ इति, तत्र सर्वस्य स्थाने द्वे भवतः। के द्वे भवतः? ये शब्दतश्च अर्थतश्च उभयथान्तरतमे। एकस्य पचतिशब्दस्य द्वौ पचतिशब्दौ हवतः। पचति पचति। ग्रामो ग्रामो रमणीयः। यदा तु द्विः प्रयोगो द्विर्वचनम् तदा स एव पचतिशब्दो द्विरावर्तते, तस्य द्वे आवृत्ती भवतः। सर्वस्य इति किम्? विस्पष्टार्थम्। अथ पदस्य इत्येव कस्मान् न उच्यते? न एवं शक्यम्, इह हि न स्यात् प्रपचति प्रपचति इति। इह द्रोग्धा, द्रोढा इति घत्वढत्वयोः असिद्धत्वादकृतयोरेव तयोर् द्विवचनं प्राप्नोति, तत्र पश्चाद् विकल्पे सत्यनिष्टम् अपि स्यात् द्रोग्धा द्रोढा, द्रोढा द्रोग्धा इति। तस्माद् वक्तव्यम् एतत् पूर्वत्र असिद्धीयम् अद्विर्वचने इति। सर्वस्य इत्येतदेव वा कृतं सर्वकार्यप्रतिपत्त्यर्थं द्रष्टव्यम्।

न्यासः

सर्वस्य द्वे। , ८।१।१

स्वरितलिङ्गासङ्गादधिकारत्वमस्यावगम्याह--"सर्वस्य" इत्यादि। "वक्ष्यामः" इति। व्याख्यास्याम इत्यर्थः। "प्राक्? पदस्य" ["पदस्य" इत्यतः प्राक्()--काशिका] इति। "पदस्य" (८।१।१६) इति वक्ष्यमाणो यो योगस्तस्मात्? प्रागिन्यर्थः। "पदस्य" ८।१।१६ इति वक्ष्यमाणस्य योगस्यानुकरणमेतत्()।
विभक्तिस्त्वनुकार्यानुकरणयोर्भेदस्यादिवक्षिततत्वादसत्यर्थवत्वे प्रातिपदिकत्वाभावान्न भवति, यथा--गवित्ययमाहेति। "सर्वस्य द्वे भवत इत्येवं तद्वेदितव्यम्()" इति। इतिकरणोऽर्थनिर्देशार्थः। "सर्वस्य द्वे भवतः" इति योऽयमर्थः प्रतीयत एतदर्थरूपं तद्वक्ष्यमाणं वेदितव्यमित्यर्थः। "वक्ष्यति" इति। सूत्रकारः। "तत्र" इति। "नित्यवीप्सयोः" ८।१।४ इत्यत्र योगे। इह द्वौ पक्षौ सम्भवतः--स्थाने द्विर्वचनम्(), द्विष्प्रयोगो द्विर्वचनञ्चेति। कथं कृत्वा? सर्वस्येति शब्दानुशासनप्रस्तावात्? सर्वस्य शब्दस्येति गम्यते। यद्? द्विशब्दश्चायं "आदशभ्यः संख्याः संख्येये वत्र्तन्ते" (हे।ग।९०) इति संख्येयवचनः, तच्चेह संख्येयं शब्दरूपं वा स्यात्(), आवृत्तिर्वा? "द्वे" इत्यपि निर्देशो नपुंसकलिङ्गेन वा स्यात्()? स्त्रीलिङ्गेन वा? तत्र यदा नपुंसकलिङ्गेन निर्देशः, तदा शब्दरूपे संख्येये। यदि स्त्रीलिङ्गेन निर्देशा, तदा शब्दस्यावृत्ती उच्चारणलक्षणे क्रिये। तत्र यदा शब्दरूपे विधीयेते तदा सर्वस्येति स्थानषष्ठीयं सम्पद्यते; अनियतसम्बन्धत्वात्? "षष्ठी स्थानेयोगा" १।१।४८ इति न्यायात्()। अस्मिन्? दर्शने "स्थाने द्विर्वचनम्()" इत्येष पक्षो भवति। यदा तु द्वे आवृत्ती विधीयेते तदा "द्विष्प्रयोगो द्विर्वचनम्()" इत्येष पक्षो जायते। अस्मिन्? दर्शने स्थान्यादेशभावो नास्ति। आवृत्तिर्हि क्रिया, तस्याश्चेह शब्दः साधनम्()। न च क्रियायाः साधनस्य च स्थान्यादेशभाव उपपद्यते। यदि हि स्यात्(), शब्दस्य स्थानिनो निवृत्तिधर्मत्वान्निवृत्तिरेव स्यात्(); ततश्च क्रियाया अभाव एव स्यात्()। न हि शब्देन विनोच्चारणक्रियोपपद्यते; तस्याः शब्दधर्मत्वात्()। तस्माद्यदाद्वे आवृत्ती विधीयेते तदा "द्विष्प्रयोगो द्विर्वचनम्()" इत्येष पक्ष उपजायते। अ()स्मस्तु पक्ष आवृ()त्तिशब्दापेक्षया सर्वस्येति "कर्त्()तृकर्मणोः कृति" २।३।६५ इति कृद्योगलक्षणा कर्तृषष्ठी वेदितव्या। सर्वो हि शब्द आवर्त्यमान एवावृत्तिक्रियायाः कत्र्ता भवति। अवाद्यां पक्षमाश्रित्यैतदुक्तम्()--सर्वस्य स्थाने द्वे भवत इति। कथं पुनः स्थाने द्विर्वचनपक्ष आश्रितः? कथं पुनर्नाश्रयितव्यः? सदोषत्वात्()। स्थाने द्विर्वचने पुनः--()आलिट्च्छ्वलिट्(), दाग्वागिति "पूर्वत्रासिद्धम्()" (८।२।१) इत्यसिद्धत्वात्? पूर्वं ढत्वादिभ्यो द्विर्वचने कृते ढत्वादयोऽत्र न सिद्ध्यन्ति; अपदान्तत्वात्()? नैष दोषः; वक्ष्यति ह्येतत्()--"पूर्वत्रासिद्धीयमद्विर्वचने" (जै।प।द्द।७०) इति। अपि च नित्येऽर्थे वीप्सायाञ्च यः शब्दो वत्र्तते तस्य द्विर्वचनं विधीयते, न च ढत्वादिष्वकृतेषु नित्यादावर्थे पदस्य वृत्तिरुपपद्यते। तस्मात्? पूर्वं ढत्वादिभिरेव भवितव्यम्(); पश्चाद्()द्विर्वचनेनेत्येष क्रमः। इह तर्हि विसंविसम्(), मुसलम्भुलमित्यत्र "आदेशप्रत्यययोः" (८।३।५९) इति षत्वं प्राप्नोति? अयमप्यदोषः; यस्मादादेशो यः सकारस्तस्य षत्वं विधीयते, न

ह्यत्रादेशः सकारः, किं तर्हि? तदवयवः। इह तर्हि नृभिर्नृभिरित्यत्र "रषाभ्यां नो णः समानपदे" (८।४।१) इति णत्वं प्राप्नोति? एषोऽप्यदोषः; कार्यिणो नकरस्य रेफादिना निमित्तेन यदा सर्वदा समानपदस्थत्वमेवं सति णत्वेन प्राप्नोति? एषोऽप्यदोषः; कार्यिणो नकारस्य रेफादिना निमित्तेन यदा सर्वदा समानपदस्थत्वमेवं सति णत्वेन भवितव्यमित#इ। किं वक्तव्यमेतत्()? न; कथं तर्हि अनुच्यमानं लभ्यते? समानग्रहणसामर्थ्यात्()। यदि हि यत्र समानपदस्थत्वमसमानपदत्वञ्च तत्रापि स्यात्(), समानग्रहणमनर्थकं स्यात्()। नृभिरिति शब्दस्य नकारस्य द्विर्वचन एव कृते रेफेण निमित्तेन समानपदस्थत्वम्(), नाऽकृते। तस्माददुष्ट एव स्थाने द्विर्वचनपक्ष इति युक्त एवाश्रयितुम्()। "के द्वे" इति। एवं मन्यते--विशिष्टे द्वे एवेष्येते, इह च विशेषानुपादानादनियमेन ये केचन शब्दरूपे अप्नुत इति। "स्थानेऽन्तरतमः" १।१।४९ इति परिभाषया व्यवस्था भवितव्यतीत्यनेनाभिप्रायेणाह--"ये शब्दतश्च" इत्यादि। इह केषाञ्चित्? शब्दानां शब्दत एवान्तरतम्यम्(), यथा--बिभीतकादिवाचिनामक्षादिशब्दानाम्()। केषाञ्चिदर्थत एव, न शब्दतः, यथा--तरुपादपादिशब्दानाम्()। केषाञ्चिदुभयत एव, यथा--द्वयोः पजतिशब्दयोस्तिङतयोः। ततोभयथा यत्रान्तरतम्यमस्ति तत्र यथा स्यादित्येवमर्थमुभयोग्र्रहणम्()। एतच्च "स्थानेऽन्तरतमः" (१।१५०) इति परिभाषायास्तमब्ग्रहणाल्लभ्यते। ते एवोभयथाऽन्तरतमे दर्शयितुमाह--"एकस्य" इत्यादि। अथ "स्वं रूपं शब्दस्याशब्दसंज्ञा" (१।१।६८) इति स्वरूपग्रहणाद्()द्विशब्दादेश एव कस्मान्न भवति? द्विर्वचनेन निर्देशात्()। स्वरूपग्रहणे तु सति द्विशब्दादेशप्रसङ्गः। यतश्चायं "तस्य परमाभ्रेडितम्()" ८।१।२, "अनुदात्तञ्च" ८।१।३ इत्याह, ततो, विज्ञायते--न द्विशब्दादेश इति। द्विशब्दादेशे हि सति भेदनिबन्धनत्वात्? परस्य द्विशब्दस्य चाभिन्नत्वात्? परत्वमेव तावन्न द्विशब्दादेशे स्यात्(), कुतः पुनराम्रेडितसंज्ञा, अनुदात्तत्वञ्च? यदि च द्विशब्द आदेशः स्यात्(), "अव्यक्तानुकरणस्यात इतौ" ६।१।९५ इत्यनुवत्र्तमाने "नाम्रेडितस्यान्त्यस्य तु या" ६।१।९६ इत्याम्रेडितावयवस्याच्छब्दस्य पररूपत्वप्रतिषेधो नोपपद्यते, न द्विशब्दस्याच्छब्दोऽवयवोऽस्ति। एतेन सर्वशब्दस्यापि स्वरूपग्रहणं प्रतिक्षिप्तम्()। यदि हि सर्वशब्दस्य स्वरूपग्रहणं स्यात्(), तस्यैव हि द्विर्वचनं स्यात्()। ततश्च पूर्ववदाम्रेडितसम्बन्धिनोऽच्छब्दस्य पररूपत्वप्रतिषेधो नोपपद्यते, "नित्यवीप्सयोः" ८।१।४ इत्यत्र नित्यग्रहणं चानर्थकं स्यात्()। तत्र हि नित्येऽर्थे वीप्सायां च वत्र्तमानस्य द्विर्वचनं विधास्यते। न च सर्वशब्दस्य नित्येऽर्थे वृत्तिरस्ति, तिङ्क्षु नित्यता; "अव्ययकृत्सुच्सुप्सु वीप्सा" इति वचनात्()। तस्मात्? सर्वस्येत्यत्रार्थग्रहणम्()। सर्वशब्दोऽयमिह सकले कलावति वत्र्तते, तेन पचतीत्यादेः कृत्स्नस्य शब्दस्य द्विर्वचनं भवतीत्यलमतिप्रसङ्गेन। एवं तावत्? स्थाने द्विर्वचनपक्षमाश्रित्य "सर्वस्य स्थाने द्वे भवतः" इत्युक्तम्()। इदानीम्? "द्विष्प्रयोगो द्विर्वचनम्()" इति पक्षमाश्रित्याह--"यदा तु" इत्यादि। तुशब्दः पूर्वस्मात्? पक्षाद्विशेवस्य प्रदर्शकः, तत्रान्तरतम्येन द्वे शब्दरूपे आदिश्येते। इह तु स एव शब्दो द्विरावर्त्यते, द्विरुच्यत इत्यर्थः। "द्वे आवृत्ती भवतः" इति। द्वे उच्चारणाक्रिये भवत इत्यर्थः। कथं पुनः "द्विष्प्रयोगो द्विर्वचनम्()" इति पक्ष आश्रयितव्यः? कथं च नाश्रयितव्यः? सदोषत्वात्()। द्विष्प्रयोगे हि--"आम्? पचसि पचसि देवदत्त" इत्यत्र "आम एकान्तरमामन्त्रितमनन्तिके" ८।१।५५ इति निघातप्रतिषेधो न प्राप्नोति; आमन्त्रितस्य पदद्वयेन व्यवधानादेकान्तरताया अभावात्()। स्थाने पुनर्द्विर्वचने ह्येकपदस्यायमादेश इति सत्यप्यादेशस्य स्वगते भेदे स्थानिवद्भावादेकत्वव्यपदेशे सत्येकीवितरती भवतीति निघातप्रतिषेधः सिध्यति? नैष दोषः; धर्मभेदादुपचरितो हीह भेदः, स्वगतस्त्वभेद एव; अन्यथा वृत्तिरेव न स्यात्()। एकस्यैव हि वस्तुन आवृत्तदिः क्रियते। तस्माद्भिन्नत्वाद्वस्तुन इहैव सुनरमेकान्तरता सिध्यति। इह तर्हि पौनःपुन्यमिति? अत्र "गुणवचनब्राआह्मणादिभ्यः कर्मणि च" (५।१।१२४) इति ष्यञ्? न प्राप्नोति, पौनःपुनिक इत्यत्र च "कालाट्ठञ्()" (४।३।११) इति ठञ्? न प्राप्नोति; अप्रातिपदिकत्वात्()। अप्रातिपदिकत्वं त्वर्थवत्समुदायानां समासस्यैवेति समासग्रहणस्य नियमार्थत्वात्()। स्थाने द्विर्वचने पुनर्यद्यपि सुबन्ततया स्वाश्रया प्रातिपदिकसंज्ञा नास्ति, तथापि स्थानिवद्भावात्? प्रातिपदिकग्रहणे ग्रहणात्? प्रातिपदिकं भवति। यद्यपि चास्य स्थानी प्रत्ययलक्षणेन सुबन्तः; तथाप्यप्रत्ययः १।२।४५ इति प्रातिपदिकसंज्ञायाः प्रतिषेधो न भवति;

प्रातिपदिकसंज्ञायाः प्रत्ययलक्षणेताप्रत्यय १।२।४५ इति प्रतिषेधो न भवतीत्यस्यार्थस्य "न ङिसम्बुद्ध्योः" ८।२।८ इत्यनेन ज्ञापितत्वात्()। द्विष्प्रयोगे द्विर्वचसेऽपि न दोषः। अत्र समासग्रहणं हि तुल्यजातोयस्यैव प्रातिपदिकसंज्ञां निवत्र्तयति। कश्च तुल्यजातीयः? यस्य भेदसंसर्गद्वारेण समुदायार्थ उपजायते। कस्य चैवं विधोऽर्थं उपजायते? वाक्यस्य। नित्यादिश्चायमर्थः पदादस्थायां न दृष्ट एव। द्विरुक्तिकाले दृश्यमानः पदान्तरेण न भिद्यते, नापि संसृज्यत इति कुत एवम्प्रकारस्य समासग्रहणान्निवृत्तिः। अथ वाऽऽचार्यप्रवृत्तिज्र्ञापयति--भवत्येवंजातोयेभ्यस्तद्वितोत्पत्तिरिति, यदयं कस्यादिषु कौतस्कुतशब्दं पठति। कुतः कुत आगत इति "अव्ययात्त्यप्()" ४।२।१०३ इति त्यपि प्राप्तेऽस्मादेव निपातनादण्()। सर्वस्येति वचनमिह "अलोऽन्त्यस्य" (१।१।५२) निवृत्यर्थं वा स्यात्()? षष्ठ()र्थप्रतिपत्त्यर्थ वा? तत्र त्वलोऽन्त्यनिवृत्यर्थं तावन्नोपपद्यते। तथा हि--शब्दतश्चार्थतश्चान्तरतमाभ्यां द्वाभ्यां शब्दरूपाभ्यां भवितव्यम्()। ये चैवम्प्रकारे ते नियोगतोऽनेकाल्स्वरूपे इत्यन्तरेणापि सर्वग्रहणेन "अनेकाल्शित्सर्वस्य" १।१।५४ इति। सर्वस्यैव भविष्यतः, नान्त्यस्य। षष्ठ()र्थप्रतपत्त्यर्थमपि सर्वग्रहणं नोपपद्यते। तथा हि--यत्र तावत्? षष्ठ्युच्चार्यते "परेर्वर्जने" ८।१।५ इत्यादौ, तत्र षष्ठ्युच्चारणादेव षष्ठ()र्थस्य प्रतिपत्तिर्भविष्यति। "नित्यवीप्समोः" ८।१।४ इत्यत्र यद्यपि षष्ठी नोच्चार्यते, तथापि सर्वस्येति वचनमन्तरेणापि शक्यते षष्ठ()र्थोऽवगन्तुम्()। कथम्()? "द्वे" इति ह्यादेशनिर्देशः, आदेशश्च सम्बन्धिनमपेक्षते, "नित्यवीप्सयोः" ८।१।४ इति चार्थनिर्देशाः; न चार्थनिर्देशे स्थान्यादेशसम्बन्ध उपपद्यते। तस्मान्नित्यदीप्सयोर्यः शब्दो वत्र्तते तस्य द्वे भवतः--इत्येवं वाक्यार्थः स्थाने द्विर्वचनपक्षे तावदवगम्यते। यदा "द्विष्प्रयोगो द्विर्वचनम्()" तदापि विना सर्वस्येति वचनेन षष्ठ()र्थोऽवगम्यत एव। एवं ह्यावृत्तिर्हि क्रिया, तस्या अवश्यं साधनेन सम्बन्धिना भवितव्यम्(); तदायत्तत्वादात्मलाभस्य क्रियायाः। तस्माद्यत्तस्याः क्रियायाः साधनं तस्य द्वे भवत इति विल्पष्टैव षष्ठ()र्थप्रतिपत्तिर्भवतीत्यभिप्रायेणाह--"सर्वस्येति किम्()" इति। "विस्पष्टार्थम्()" इति। य एवं न शक्नोति सर्वादेशं षष्ठ()र्थं वा प्रतिपत्तुम्(), तं प्रति सुखप्रतिपत्तये सर्वस्येत्युच्यत इति भावः। "अथ" इत्यादि। एवं मन्यते--"पदस्य" इत्युच्यमाने समासतद्धितवाक्यानां द्विर्वचननिवृत्तिः कृता भवति; उत्तरत्र च "पदस्य" (८।१।१६) इति वक्तव्यं न भवति। एतदेव हि "पदस्य" इति वचनं तत्रानुवत्र्तयिष्यते। अनुच्यमाने "पदस्य" इत्येस्मिन्(), समासस्यापि द्विर्वचनं स्यात्()--पर्वणिपर्वणि सप्तसप्त पर्णान्यस्य सन्तीति सप्तपर्ण इति; तद्धितस्यापि द्वौ द्वौ पादौ ददाति "पादशतस्य संख्यादेः" ५।४।१ इत्यादिना वन्()--द्विपदिकां ददातीति; वाक्यस्यापि--ग्रामेग्रामे पानीयमिति। पदस्य" (८।१।१६) इति चोत्तरत्र न वक्तव्यं भवति। "नैवं शक्यम्()" इति। अत्र कारणमाह--"इह हि" इत्यादि। "प्रपचति" इति। वाक्यमेतत्(), पदसमुदायात्मकत्वात्()। अत्र "पदस्य" इत्युच्यमानेऽस्य द्विर्वचनं न स्यात्()। तस्मादशक्यं पदस्येति वक्तुम्()। सप्तपर्णः, द्विपदिकां ददातीत्यत्र तु पदस्येत्युच्यमाने द्विर्वचनं न भविष्यति; समासतद्धिताभ्यामेवोक्तत्वात्()। वीप्सायां ग्रामेग्रामे पानीयमित्यत्रापि न भविष्यति; अवयवद्विर्वचनेनैव वीप्साया द्योतितत्वादित्यभिप्रायः। "इह" इत्यादि। "द्रूह जिधांसायाम्()" (धा।पा।११९७), ततस्तृच्(), द्रुह्()+तृ इति स्थिते घत्वढत्वे प्राप्नुतः, द्विर्वचनं च, तत्र "पूर्वत्रासिद्धम्()" ८।२।१ इति द्विर्वचने कत्र्तव्ये यत्वढत्वयोरसिद्धत्वादकृतयोरेव तयोर्द्विर्वचनं पूर्वं प्राप्नोति। कृते तस्मिन्? पश्चात्? "वा द्रुहमुहष्णुष्णिहाम्()" ८।२।३३ इति विकल्पे सत्यनिष्टमपि प्राप्नोति। नावश्यमिष्टमेव यद्ययं नियमो लभ्यते। यदैकस्य धत्वं भवति तदा द्वितीयस्यापि घत्वेन भवितव्यम्(), यदा त्वेकस्य ढत्वं तदा द्वितीयस्यापि ढत्वेन भवितव्यमिति तदेष्टमेव स्यात्()। न त्वेष नियमो लभ्यते; नियमकारणाभवात्()। तस्मात्? कदाचिदनिष्टमपि स्यात्()। तत्र यदा पूर्वोत्तरयोरेकस्य घत्वं भवत्यपरस्य ढत्वम्(), तदानिष्टमपि प्राप्नोति। यदोभयोरपि घत्वं ढत्वं वा भवति, तदेष्टं स्यात्? तस्मादनिष्टनिवृत्त्यर्थम्? "पूर्वत्रासिद्धीयमद्विर्वचने" (जै।प।वृ।७०) इति वक्तव्यम्()। "पूर्वत्रासिद्धम्()" ८।२।१ इत्यस्मिन्नधिकारे भवं पूर्वत्रासिद्धीयं नलोपादिकार्यम्()। गहादित्वाच्छः ४।२।१३७, ततो द्विर्वचनादन्यत्रासिद्धं भवति, न तु द्विर्वचने। अथ वा--पूर्वत्र सपादसप्ताध्याय्यामसिद्धं पूर्वत्रासिद्धम्(), तदेव नलोपादिकार्यम्(), तत्र भवं पूर्वत्रासिद्धीयम्()। तत्? पुनस्तस्यैव नलोपादेरसिद्धत्वम्, तद्()द्विर्वचनादन्यस्मिन्? कत्र्तव्ये भवति, न तु द्विर्वचन एव। एतदर्थरूपं

व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"न मु ने" ८।२।३ इत्यत्र नेति यचोगविभागः कत्र्तव्यः, तेन द्विर्वचने कत्र्तव्येऽसिद्धत्वं न भविष्यतीति। असति चासिद्धत्वे द्रूहेस्तृचि कृते पूर्वं विकल्पेन घत्वम्(), "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वम्(), "झलां जश्? झशि" ८।४।५२ इति जश्त्वम्()--धकारस्य गकारः, ततो द्विर्वचनम्()--द्रोग्धाद्रोग्योति। यदा तु घत्वं नास्ति तदा "हो ढः" ८।२।३१ इति ढत्वम्(), पूर्ववद्धत्वम्()। ष्टुत्वञ्च, "ढो ढे लोपः" ८।३।१३ इति पूर्वढकारलोपः, ततो द्विर्वचनम्()--द्रोढाद्रोढेति; इष्टमेव सिध्यति। यदि तर्हि "पूर्वत्रासिद्धीयमद्विर्वचने" (जै।प।वृ।७०) इत्येतद्वक्तव्यम्(); तदा "पूर्वत्रासिद्धम्()" (८।२।१) इत्यत्र औजढवित्यस्य सिद्धये यद्वक्ष्यति--"ढत्वष्टुत्पढलोपादीनामसिद्धत्वाण्णौ यष्टिलोपस्तस्य स्थानिवद्भावाद्? हत्? इत्येतद्()द्विरुच्यते" इति--तद्विरुध्यते? न#आस्ति विरोधः; "पूर्वत्रासिद्धीयमद्विर्वचने" (जै।प।वृ।७०) इत्यस्यासर्वविषयत्वात्()। कथं विज्ञायते? "उभौ साभ्यासस्य" ८।४।२० इत्यस्य सूत्रस्यारम्भात्()। यदि हि "पूर्वत्रासिद्धीयमद्विर्वचने" (जै।प।वृ।७०) इत्येतत्? सर्वविषयकं स्यात्(), एवं सति "अनितेः" ८।४।१९ इत्यनेन कृतणत्वस्य द्विर्वचनेन भवितव्यमिति सिद्धम्()--प्राणिणिषतीत्यादिकं रूपम्(), किम्? "उभौ साभ्यासस्य" (८।४।२१) इत्येनेन सूत्रारम्भेम? आरब्धञ्च, ततो ज्ञापते, पूर्वत्रासिद्धीयमद्विर्वचने" (जै।प।वृ।७०) इत्येतदसर्वविषयमिति। यस्तु मन्यते--आष्टमिकं द्विर्वचनमभिप्रेत्यैतद्वक्यव्यमिति, तदयुक्तम्(); तस्य "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" ८।३।८८ इत्यत्र विषुषुपुरित्यस्य सिद्ध्यर्थं यद्वक्ष्यति--"षुपिभूतो द्विरुच्यते" इति; तद्विरुध्यते; यदि हि षष्ठिके द्विर्वचने कत्र्तव्ये षत्वस्यासिद्धत्वं नास्ति, एवं षुपिभूतस्य द्विर्वचनं लभ्यते, नान्यथा। तस्मात्? पूर्व एव परीहारः साधुः। "सर्वस्येतद्वा" ["सर्वस्य" इत्येतदेव--काशिका, पदमञ्जरी च] इति। वाशब्दः पूर्वप्रयोजनापेक्षया विकल्पार्थः। अथ वा--नैवम्(), विस्पटार्थ सर्वग्रहणम्()। किं तर्हि? कृतसर्वकार्यस्य प्रतिपत्त्यर्थं कृतम्()। सर्वं ढत्वादिकार्यं यस्य तस्य प्रतिपत्तिः प्रतीतिर्यथा स्यादित्येवमर्थं सर्वग्रहणं द्रष्टव्यम। एतत्? कथम्()? सर्वशब्दोऽयं मत्वर्थीयाकारप्रत्ययान्तः--सर्वं कार्यमस्यास्तीति सर्वः, अर्शाअदित्वादच्? ५।२।१२६, तेन कृतसर्वकार्यस्य द्विर्वचनं भवतीत्युक्तं भवति॥

बाल-मनोरमा

सर्वस्य द्वे , ८।१।१

अथ द्विरुक्तप्रकरणम्। सर्वस्य द्वे। इत्यधिकृत्येति। "द्विर्वचनवधयोऽनुक्रंस्यन्ते" इति शेषः।

तत्त्व-बोधिनी

सर्वस्य द्वे १५८९, ८।१।१

सर्वस्य द्वे। सर्वशब्दस्य द्वे भवत इति विधिरत्र न शङ्क्यः, किं तु "नित्यवीप्सायो"रित्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽयं, तदाह----इत्यधिकृत्येति। एतदर्थरूपमधिकृत्येत्यर्थः। स्वरूपग्रहणं तु न भवति, "नाम्रेडितस्यान्त्यस्य तु वे"ति लिङ्गात्। स्वरूपग्रहणे हि सति द्विरुक्तसर्वशब्दस्यैव परमाम्रेडितं स्यान्न तु द्विरुक्तस्याऽव्यक्तानुकरणशब्दस्य परमिति "नाम्रेडितस्ये"ति पररूपनिषेधोऽन्त्यस्य तकारस्य विकल्पविधिश्च कथं सङ्गच्छेत()। ननु "नित्यवीप्सयो"रित्यादौ "पदस्ये"ति वक्ष्यमाणमपकृष्य पदस्यैव द्वित्वं विधीयते इति किमनेन सर्वस्येति ग्रहणेनेति चेत्। अत्राहुः--"स्वादिषु "इति पदसंज्ञामादाय "वृक्षाभ्या"मित्यादौ प्रकृतिभागमात्रस्य द्विर्वचनं स्यात्। कृते तु "सर्वस्ये"ति ग्रहणे "सर्वशब्दोऽवयवकात्स्न्र्त्ये वर्तते"इति "सर्वावयवोपेतस्य द्वित्वं न तु कस्चिदवयो वज्र्यते"इत्यर्थलाभादिष्टसिद्धिरिति। इह "द्वे"इत्यस्य सङ्ख्येयापेक्षायां शब्दरूपे गृह्रेते, शब्दानुशासनप्रस्तावात्। "सर्वस्ये"ति स्थानषष्ठी। सोऽयं स्थाने द्विर्वचनपक्षः। यदि तु उच्चारणे सङ्ख्येये, तदा स्थान्यादेशभावो न सम्भवति, निवृत्तिधर्मा हि स्थानं, भवति, सर्वं चेन्निवृत्तं कस्योच्चारणं स्यात्, अतः "सर्वस्ये"त्यद्याह्रतोच्चारण शब्दापेक्षया "कर्तृकर्मणोः कृती"ति कर्मणि षष्ठी। "सर्वं द्विरुच्चारये"दिति फलितोऽर्थः। सोऽयं "द्विःप्रयोगो द्विर्वचन"मिति पक्षः। ननु

आद्यपक्षे स्थानिवद्भावेन समुदायस्यैव पद्त्वं स्यान्न त्ववयवयोः, ततश्च पदकार्याणि न स्युः। न चेष्टापत्तिः। "अपचन्नपच"न्नित्यत्र ङमुट्, "वृक्षान् वृक्षा"न्नित्यत्र "पदान्तस्ये"ति णत्वनिषेधः, "अग्रेऽग्रे"इत्यत्र "एङः पदान्ता"दिति पूर्वरूपत्वं च न सिध्येत्। किं चाऽपदान्तत्वप्रयुक्तकार्याणि स्युः। तद्यथा "पयःपयः"इत्यत्र "सोऽपदादौ"इति सत्वं स्यात्, "पपीःपपीः" इत्यत्र "इणः षः"इति षत्वं स्यात्। "पाशकल्पककाम्येषु"इति वृत्तिग्रन्थमवष्टह्य कथञ्चित्सत्वषत्वपरिहारेऽपि "अशीताश्नीते"त्यत्र "अतो गुणे"इति पररूपं स्यादिति चेत्। अत्राहुः---यदि प्रत्यस्तमितावयवभेदः समुदाय एव एवादेशः स्यात्, "द्वे" इति द्विवचनमनुपपन्नं स्यात्, अतो "द्वे"इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयते, तत्र स्थानिवद्भावेन समुदायस्य पदत्वं, स्त एव चावयवयोरपीति न कश्चिद्दोष इति। स्यादेतत्---द्विःप्रयोगपक्षे प्रत्येकं पदसंज्ञायां सिद्धायामपि समुदायस्य सा न सिध्यति। ततश्च "देवदत्तः पचतिपचती"त्यादौ "तिङ्ङतिङः"इति सर्वस्य पदस्य निघातो न सिध्यतीति चेत्। अत्राहुः---"पचतिपचती"त्यादौ हि स एव धातुः प्रत्ययश्चाऽत्र द्विः पठ()ते। ततश्च [यो] यस्मात्प्रत्ययो विहितस्तदादितदन्तमिति विधीयमाना पदसंज्ञा समुदायस्यापि प्रवर्तते। तेनाऽवग्रहादिः सिध्यतीति।

---

सूत्रम्

काशिका-वृत्तिः

तस्य परम् आम्रेडितम् ८।१।२

तस्य द्विरुक्तस्य यत् परं शब्दरूपं तदाम्रेडितसंज्ञं भवति। चौर चौर ३, वृषल वृषल ३, दस्यो दस्यो ३ घातयिष्यामि त्वा, बन्धयिष्यामि त्वा। आम्रेडितप्रदेशाः आम्रेडितं भर्त्सने ८।२।९५ इत्येवम् आदयः।

लघु-सिद्धान्त-कौमुदी

तस्य परमाम्रेडितम् ९९, ८।१।२

द्विरुक्तस्य परमाम्रेडितम् स्यात्॥

न्यासः

तस्य परमाम्रेडितम्?। , ८।१।२

"तस्य" इत्ववयवषष्ठी। तस्य द्विरुक्तस्य यत्? परमवयवभूतं शब्दरूपं तस्याभ्रेडितसंज्ञा विधीयते। अथ द्विष्प्रयोगद्विर्वचनपक्षे कथं परमिति व्यपदेशः? कथञ्च न स्यात्()? तस्य भेदनिबन्धनत्वात्()। परव्यपदेशो हि भेदनिबन्धनः। न च द्विष्प्रयोगद्विर्वचनपक्षे शब्दभेदोऽस्ति, आवृत्तिमात्रं हि तत्र भिद्यते, न शब्दः? नैष दोषः; अभिन्नस्यापि शब्दस्य धर्मभेदादौपचारिकमन्यत्वं भविष्यति। भवति हि धर्मभेदादभिन्नेऽपि वस्तुनि भेदव्यवहारः। तथा हि वक्तारो वदन्ति--परुद्भवान्? पटुरासीत्? पटुतरश्चैषमोऽन्य एवासि संवृत्त इति। "चौर चौर" इति। "एङ्ह्रस्वात्सम्बुद्धेः" ६।१।६७ इति सुलोपः, "वाक्यादेरामन्त्रितस्य" ८।१।८ इत्यादिना भत्र्सने द्विर्वचनम्(), "आर्म्रेडितं भत्र्सने" ८।२।९५ इति प्लुतः। "दस्यो दस्यो" इति। "सम्बुद्धौ च" ७।३।१०६ इति गुणः। अथ तस्यग्रहणं किमर्थम्(), यावता "द्वे" इत्यनुवर्त्तिष्यते, तत्रैवं विज्ञायते--द्वयोर्यत्? परमिति? नैवं शक्यम्(); "एकाचो द्वे प्रथमस्य" ६।१।१ इत्यत्रापि परमाम्रेडितसंज्ञं स्यात्()। तस्यग्रहणे सति यत्रैतद्वक्ष्यमाणं द्विर्वचनं तस्य परमिति विज्ञायते। तेन न भवत्यतिप्रसङ्गः। आम्रेडितमिति महत्याः संज्ञायाः करणमन्वर्थसंज्ञाविज्ञानार्थम्()। आम्रेड()त आधिक्येनोच्यत इत्याम्रेडितम्()। तेनेहापि भवति--अहो दर्शनीया अहो दर्शनीया, मह्यं रोचते मह्यं रोचत इति। दर्शनीयत्वस्य रुचेश्चाधिक्यं द्योतयितुमत्र द्रष्टव्यं द्विर्वचनम्()। एतदेव महत्याः संज्ञायाः करणं ज्ञापकम्()--आधिक्याभिधाने द्विर्वचनं भवतीति॥

बाल-मनोरमा

तस्य परमाम्रेडितम् ८३, ८।१।२

अभियुक्ताश्चाहुः--"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतद्बहुलग्रहे तु।" इति। ननु किमाम्रेडितं नाम?, तत्राह--तस्य परमाम्रेडितम्। "सर्वस्य द्वे" इत्यनन्तरमिदं सूत्रं पठ()ते। ततश्च "तस्ये"त्यनेन द्विरुक्तस्येति लभ्यते। अवयववाचिपरशब्दयोगे अत एव ज्ञापकात्षष्ठी। तदाह--द्विरुक्तस्येत्यादिना। पटत्पटेतीति। पटत् पटत् इति इति स्थिते तकारस्येकारस्य च पररूपमिकारः। ततश्च आद्गुणः।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तं च ८।१।३

अनुदात्तं च तद् भवति यदाम्रेडितसंज्ञम्। भुङ्क्ते भुङ्क्ते। पशून् प्शून्।

न्यासः

अनुदात्तञ्च। , ८।१।३

प्रकृतिस्वरे प्राप्ते परस्यानुदात्तत्वमुच्यते। अनुदात्तशब्दश्चात्र परशब्दसामानाधिकरण्यान्न शास्त्रीयमनुदात्तमाह, किं तर्हि? अन्वर्थो विज्ञायते--अविद्यमानमुदात्तमनुदात्तमिति। शास्त्रीये ह्यनुदात्ते गृह्रमाणे सम्बन्धार्थं परस्यैति षष्ठ्युच्चारयितव्या स्यात्()। तथा च "अलोऽन्त्यस्य" १।१।५१ स्यात्()। अथापि सर्वस्येत्यनुवत्र्तत, एवमपि वचनप्रामाण्यादेककाल एव सर्वादेशः प्रसज्येत। तस्मादन्वर्थस्यैव ग्रहणं युक्तम्()। "भुङक्तेभुङ्क्ते" इति। "भुजोऽनवने" १।३।६६ इत्यात्मनेपदम्()। तस्मिन्? कृते सति शिष्टस्वरत्वाद्धातुस्वरं बाधित्वा प्रत्ययस्वरः। श्नमि कृते यद्यपि तस्य स्वरः सतिशिष्टः, तथापि "विकरणस्वरः सार्वधातुकस्वरं न बाधते" इति तेशब्द एव स्वरे प्रसक्ते "तस्यनुदात्तेविङददुपदेशाल्लसार्वधातुकमनुदात्तमह्? न्विङोः" ६।१।१८० इति सार्वधातुकस्यानुदात्तत्वम्(), श्नसोरल्लोपे कृते "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इति पुनस्तेशब्द उदात्तः, नित्ये चार्थे द्विर्वचनम्(), तस्मिन्? कृतेऽनेन परमनुदात्तं भवति। "पशून्पशून्()" इति। "कुभ्रश्च" (द।उ।१-१०७) इत्यत "कुः" इत्यनुवत्र्तमाने "अर्जिवृशिकसम्यमिपशिबाध#आमृजिपशितुग्धुग्दीर्घहकाराश्च" (द।उ।१।११२) इति कुप्रत्ययः, दृशे पशिरदिशश्च। पशृशब्दः प्रत्ययस्वरेणान्तोदात्तः, विभक्त्यकारेण सहैकादेशः, "एकादेश उदात्तेनोदात्तः" ८।२।५ वीप्सायां द्विर्वचनम्(), अनेन परस्यानुदात्तत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

नित्यवीप्सयोः ८।१।४

नित्ये चार्थे विप्सायां च यद् वर्तते तस्य द्वे भवतः। केषु नित्यता? तिङ्क्षु नित्यता अव्ययकृत्सु च। कुत एतत्। आभीक्ष्ण्यम् इह नित्यता। आभीक्ष्ण्यं च क्रियाधर्मः। यां क्रियां कर्ता प्राधान्येन अनुपरमन् करोति तन् नित्यम्। पचति पचति। जल्पति जल्पति। भुक्त्वा भुक्त्वा व्रजति। भोजं भोजं व्रजति। लुनीहि लुनीहि इत्येवायं लुनाति क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षायाम् एव पौनःपुन्यप्रकाशने शक्तिः। यङ् तु तन्निरपेक्षः प्रकाशयति, पुनः पुनः पचति पापच्यते इति। यदा तु तत्र द्विर्वचनम् तदा क्रियासमभिहारे पौनःपुन्यं द्रष्टव्यम् पापच्यते पापच्यते इति। अथ केषु

वीप्सा? सुप्सु वीप्सा। का पुनर् वीप्सा? व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा। का पुनः सा? नानावाचिनाम् अधिकरणानां क्रियागुणाभ्यां युगपत् प्रयोक्तुर्व्याप्तुम् इच्छा वीप्सा। नानाभूतार्थवाचिनां शब्दानां यान्यधिकरणानि वाच्यानि तेषां क्रियागुणाभ्यां युगपत् प्रयोक्तुम् इच्छा वीप्सा। ग्रामो ग्रामो रमणीयः। जनपदो जनपदो रमणीयः। पुरुषः पुरुषो निधनम् उपैति। यत् तिङन्तं नित्यतया प्रकर्षेण च युक्तं ततः कृतद्विर्वचनात् प्रकर्षप्रत्यय इष्यते पचति पचतितराम् इति। इह तु आढ्यतरमाढ्यतरमानय इति प्रकर्षयुक्तस्य वीप्सायोग इष्यते।

लघु-सिद्धान्त-कौमुदी

नित्यवीप्सयोः ८८९, ८।१।४

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात्। आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु च कृदन्तेषु च। स्मारंस्मारं नमति शिवम्। स्मृत्वास्मृत्वा। पायम्पायम्। भोजम्भोजम्। श्रावंश्रावम्॥

न्यासः

नित्यवीप्सयोः। , ८।१।४

"नित्ये चार्थे वीप्सायाञ्च" इति। अनेन "नित्यदीप्सयोः" इति सप्तमीयमर्थनिर्देशार्था, न तु षष्ठीयमिति दर्शयति। यदि ह्येषा षष्ठी स्यात्(), तदा स्वरूविधिः प्रसज्येत, ततश्च "नित्यं क्रोडाजीविकयोः" २।२।१७ इति, "पादशतस्य संक्यादेर्वीप्सायाम्()" ५।४।१ इत्यादिनिर्देशो नोपपद्यते। इह नित्यशब्दोऽयं सर्वकालभादिनो य आत्माकाशादयः, यषामुत्पत्तिविनाशौ प्रयोक्तृभिर्नोपलभ्येते, तेष्वपि प्रयुज्यमानो लोके दृश्यते--नित्य आत्मा, नित्यमाकाशम्(), नित्या द्यौरिति। आभीक्ष्ण्येऽपि--नित्यं प्रहसितः, नित्यं प्रजल्पित इति। तत्र यदीह सामान्येन तत्र नाम नित्यताऽभिधेयभावेन वत्र्तते तस्य नित्यार्थवाचिनो ग्रहणं स्यात्(), आत्माकाशादिशब्दानामपि द्विर्वचनं प्रसज्येत--इत्येनेनाभिप्रायेणाह--"केषु नित्यता" इति। इतरो विदिताभिप्राय आह--"तिङ्क्षु नित्यताऽव्ययकृत्सुण" इति। अव्ययानि च तानि कृन्ति चेति कर्मधारयः। यद्यप्यात्माकाशादिशब्देष्वपि सर्वकालभावित्वलक्षणा नित्यताऽभिधेयभावेन वत्र्तते, तथापीह भावप्रधानेषु तिङ्क्ष्वव्ययकृत्सु चाभीक्ष्ण्यलक्षणा या नित्यता सैवाश्रीयते। अतोऽतिप्रसङ्गो न भवतीति भावः। ननु च नित्यशब्दोऽयं सामान्यवचनः। न च सामान्यशब्दाः प्रकरणादिकमन्तरेण विशेषेऽवस्थातुमुत्सहन्ते। न चेह तथाविधं किञ्चित्? प्रकरणादिकमस्ति, यतो विशेषेऽवस्थानं स्यात्(), तत्कुतो नित्यताविशेषपरिग्रहो लभ्यते? इति मन्यमान आह--"कुत एतत्()" इति। आभीक्ष्ण्यमिह नित्यतेत्याश्रीयत इति शेषः। व्याप्तेराभीक्ष्ण्यवचनस्य नित्यशब्दस्य ग्रहणादिहाभीक्ष्ण्यलक्षणा नित्यताऽऽश्रीयते, पदस्य हि द्विर्वचनमुच्यते। तच्च पदं सुबन्तं तिङन्तं च, तत्र सुप्सु दीप्सेति वक्ष्यति। यदि च नित्यशब्दोऽयं कूटस्थवचनो गृह्रते, ततश्च कूटस्थमिति सुबन्तेष्वभिधेयभावेन वत्र्तत इति सुबन्थानामेव द्विर्वचनं स्यात्(), न तिङन्तानाम्(), नाप्यव्ययकृताम्()। आभीक्ष्ण्यवचनस्य तु नित्यशब्दस्य ग्रहणे सति नित्यलक्षणद्विर्वचनमाख्यातानामव्यकृतां च भवति। वीप्सालक्षणञ्चान्येषामिति सर्व पदजातमनुगृहीतं भवति। तस्माद्वयाप्तेराभीक्ष्ण्यवचनस्य नित्यशब्दस्य ग्रहणादिह "आभीक्ष्ण्यं नित्यता" इत्युपपन्नं भवति। "आभीक्ष्ण्यमिह नित्यता" (इति)। सा च तिङ्क्ष्वव्ययकृत्सु चेति। कुत एतत्()? इत्याह--"आभीक्ष्ण्यं च" इत्यादि। आभीक्ष्ण्यं हि पुनः पुनः प्रवृत्तिः। तच्च साध्यरूपायाः क्रियाया एव सम्भवतीति तस्या एव धर्मः, न तु द्रव्यस्य; तस्य सिद्धरूपस्यैव सुबन्तेनाभिधानात्()। सा च क्रिया तिङन्तादिभिरेवाभिधीयत इति तेष्वेव नित्यता। कीदृशी पुनः सा क्रिया? आभीक्ष्ण्यलक्षणेन या नित्यत्वेन योगान्नित्यशब्देनोच्यते, इत्याह--"याम्()" इत्यादि। "अनुपरमन्()" इति। "विरतिमकुर्वन्()" इत्यर्थः। "तन्नित्यम्()" इति। तत क्रियारूपं वस्तु नित्यमित्यर्थः। "प्राधान्येन" इति। यदुद्दिश्य क्रियाप्रवृत्तिस्तत्? प्रधानम्(), तस्य भावस्तथा। यद्यपि ग्रामं गन्तुमिच्छन्? वृक्षमूलोपसर्वणं पुनः पुनः करोति, तथापि न तन्नित्यमिति। एतदुक्तं भवति--न ह्रसौ प्राधान्येन तत्करोति; तदुद्दिश्याप्रवृत्तेः। तेन ग्रामं गच्छन्?

वृक्षमूलान्युपसर्पतीत्यत्र सत्यप्यामभीक्षण्ये द्विर्वचनं न भवति। "यां क्रियाम्()" इत्यनेन हि क्रिया धर्मिणी दर्शिता। "अनुपरमन्? करोति" इत्यनेनापि तस्या आभीक्षण्यं धर्मः। "पचतिपचति" इति। तिङन्तस्योदाहरणम्()। "भुक्त्वाभुक्त्वा, भोजंभोजम्()" इति। अत्र "आभीक्षण्ये णमुल्च" ३।४।२२ इति क्त्वाणमुलौ। "लुनीहिलुनीहि" इति। "क्रियासमभिहारे" ३।४।२ इत्यादिना लोट्(), तस्य हिरादेशः, "लोट्धर्माणौ हिस्वो भवतः" इति ३।४।२ तत्रोक्तम्(), तेन विकरणम्(), ["विकरणः"--प्रांउ।पाठः] "ईहल्यघोः" ६।४।११३ इतीत्वम्()। एतानि त्रीण्यव्ययकृतामुदाहरणानि। एषां क्त्वादीनां "कृदतिङ्()" ३।१।९३ इति कृत्संज्ञा। अव्ययसंज्ञा तु क्त्वाप्रत्ययस्य "कत्वातोसुन्कसुनः" १।१।३९ इति। णमुलस्तु "कृन्मेजन्तः" १।१।३८ इति। लोटस्तु स्वरादिष्वाभीक्षण्यस्य पाठात्()। ननु चैते क्त्वाणमृल्लोटश्चाभीक्ष्ण्य एव विधीयन्ते, तत्र यथा पापच्यत इति क्रियासमभिहारे विधीयमानेन यङा पौनःपुन्यस्य प्रकाशितत्वाद्()द्विर्वचनं न भवति, तथा कत्वादिभिरपि तस्य प्रकाशितत्वान्न भवितव्यम्()। अथ प्रकाशितेऽपि तस्मिंस्तु तद्भवति, पापच्यत इत्यत्रापि स्यात्()? इत्यत आह--"कत्वाणमुलोः" इत्यादि। भिन्ना हि भावानां शक्तयः। तथा हि--यामेव क्रियां भारोद्वहनादिकां कश्चित्? सहायसापेक्षः करोति, तामेवान्यः सहायनिरपेक्षः, तस्माद्यद्यपि चाभीक्ष्ण्ये क्त्वा णमुल्लोट्? च विधीयते, तथापि तैर्नैवाभीक्ष्ण्यभिव्यक्तं भवति। द्विर्वचनसापेक्षाणामेव तेषां पौनःपुन्यप्रकाशने शक्तिः, न केवलानाम्()। तेन भवत्येव तदन्तस्य द्विर्वचनम्(); यङन्तु द्विर्वचननिरपेक्षस्यापि पौनःपुन्याभिव्यक्तौ सामर्थ्ययमस्तीति तेनैवाभीक्षण्यस्य द्योतितत्वात्? पापण्यत इत्यत्र न भवति। आभीक्ष्ण्यप्रकाशनाय हि द्विर्वचनमुच्यते, एतच्च यङैव प्रकाशितमिति किं द्विर्वचनेन() ननु च यङन्तस्यापि क्वचिद्()द्विर्वचनमिष्यत एव, तच्च यङो द्विर्वचननिरपेक्षस्य यौनःपुन्यप्रकाशने शक्तौ सत्यां न सिद्ध्यति? इत्याह--"यदा तु" इत्यादि। द्विप्रकारः क्रियासमभिहारः पौनःपुन्यम्(), भृशार्थश्च। तत्र यदा यङन्तेन द्विर्वचनं भवति तदा भृशार्थे यङ्()। द्विर्वचनं तु नस्यैव भृशार्थस्य धर्मे पौनापुन्ये, न हि तद्यङा प्रकाशितम्(); तस्य भृशार्थे विदितत्वादित्यभिप्रायः। "क्रियासमभिहारे पौनःपुन्यं द्रष्टव्यम्()। इति। अत्र यद्यपि क्रियासमभिहारशब्दः सामान्यः, तथापि सामर्थ्यादभृशार्थलक्षणा एव क्रियासमभिहारे तस्य वृत्तिर्विज्ञायते, न हि पौनःपुन्येऽन्यस्य पौनःपुन्यस्य सम्भवोऽस्ति। अथ कथं पौनःपुन्ये यङ्? भवति? कथं च न स्यात्()? द्विर्वचनेनापदादेन बाधितत्वात्()। यङः कोऽवकाश इति चेत्()? भृशार्थ एव? नैष दोषः; पदस्य हि द्विर्वचनमुच्यते, धातोश्च यङ्()। तथा कार्यिणोरतिभेदात्? कुतो बाधा() "नित्यवीप्सयोः" इत्युक्तम्(), तत्र नित्यता तिङ्क्ष्वव्ययकृत्सु चेत्युक्तम्()। वीप्सा तु न विज्ञायते--क्वाभिधेयभावेन वत्र्तते? इति, अतस्तत्परिज्ञानार्थं पृच्छते--"अथ केषु वीप्सा" इति। इतरो विदिताभिप्राय आह--"सुप्सु वीप्सा" इति। सुपामेव तदभिवयक्तौ सामर्थ्यात्()। यदि सामान्येन व्याप्तुमिच्छा वीप्सा तदा चिकीर्षाशब्दस्यापि द्विर्वचनं प्राप्नोति, तस्य करोतिक्रियया कटादेर्व्याप्तुमिच्छा तत्र वृत्तिरिति मन्यमान आह--"का पुनर्वीप्सा" इति। "व्याप्तिविशेषविषया" इत्यादि। नानादाचिनामधिकरणानां क्रियादिसम्बन्धेन युगपद्व्याप्तिर्व्याप्तिविशेषः, स विषयो यस्या इच्छायाः सा तथोक्ता। सैवंविधा "प्रयोक्तुरिच्छा वीप्सा"। प्रयोक्तुरित्यनेन प्रयोक्तृधर्मो वीप्सा, नाभिधेयधर्म इति दर्शयति। कथं पुनर्व्याप्तिविशेषविषयेत्येष विशेषो लभ्यते? विशब्दप्रयोगात्()। यदि ह्यविशेषेण व्याप्तुमिच्छां दीप्साऽभिमता स्यात्(), "नित्येप्सयोः" इत्येवं ब्राऊयात्()। "व्याप्तिविशेषविषया प्रयोक्तुरिच्छा वीप्सा" इत्युक्तम्(), स तु विशेषोऽनिर्दिष्टस्वरूपत्वान्न विज्ञायते, तदज्ञानच्च तद्विशिष्टा वीप्सापि न ज्ञायत इत्यतः पृच्छति--"का पुनः सा" इति। "नानावाचिनाम्()" इत्यादि। नानावाचिनाम्(), अधिकरणानामिति--व्यधिकरणे षष्ठ्यौ। नाना=पृथग्भूताः, तान्? वक्तुं शीलं येषां शब्दानां ते नानावाचिनः। तत्सम्बन्धिनामधिकरणानां वाच्यानामित्यर्थः। "क्रियागुणाभ्याम्()" इति। करणे तीया। "युगपत्()" इति। एककालम्()। "प्रयोक्तुः" इति। वक्तुः। यो द्विर्वचनं प्रयुङ्क्ते तस्य। "व्याप्तुम्()" इति। सम्बन्धविशेषेणाप्तुम्()। साकल्येन सम्बन्धुमित्यर्थः। "इच्छा" इति। अभिलाषः। "वीप्सा" इति। प्रादिसमासः--विशिष्टा ईप्सा वीप्सा। "नानाभूतार्थवाचिनाम्()" इत्यादिना अनन्तरेक्तं वाक्यं विवृणोति। यत एवंविधा वीप्सा, तेन चिकीर्षेत्यत्र द्विर्वचनं न भवति। चिकीर्षा हि कर्त्तुरिच्छा, न प्रयोक्तुः। यतश्चैवंविधा

वीप्सा, तेन जातिवाचिनामपि द्विर्वचनं न भवति--निष्पन्नो यव इति। न हि जातिशब्दा नानाभूतार्थवाचिनः। यदा तु क्रमेण व्याप्तुमिच्छा तदापि न भवति--अयं ग्रामो रमणीयः, अयञ्च ग्रामो रमणोय इति। द्वन्द्वैकशेषयोरपि न भवति--अस्मिन्वने शोभना धवखदिरपलाशाः, अस्मिन्वने शोभना वृक्षा इति। अशेषविशेषव्याप्तावनभिमतायामप्येवं प्रयोगः क्रियत इति सर्वविशेषाभिधानं ["सर्वविशेषाविधानं"--कांउ। पाठः] न भवति, अतः प्रयोक्तुरप्यशेषान्? विशेषान्? व्याप्तुमिच्छा न जायते। बाहुल्येन तु शोभनत्वमाश्रित्येवं वाक्यं प्रयोक्ता प्रयुङ्क्ते--ग्रामो ग्रामो रमणीय इति। अत्र हि दिन्देशादिभेदेन भिन्नानां ग्रामाणां रमणीयत्वेन गुणेन प्रयोक्तुर्युगपद्व्याप्तुमिच्छा दीप्सा। "जनपदो जनपदः" इति। अत्रापि जनपदानाम्()। "पुरुषः पुरुषे निषनमुपैति" इति। अत्र पुरुषाणां निधनक्रियया। निधनम्()--विनाश इत्यर्थः। क्रियागुणग्रहणमुपलक्षणार्थम्()। द्रव्येणापि नानावाचिनामधिकरणानां युगपद्व्याप्तुं प्रयोक्तुर्येच्छा सा वोप्सैव। तेन ग्रामे ग्रामे पानीयमित्यत्रापि द्विरवचनं सिद्धं भवति। यस्तु "द्रव्यस्य द्रव्यान्तेण सह सम्बन्धो न भवति, सिद्धरूपत्वात्()" इत्याह, तस्य यदुक्तम्()--क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः सम्बन्धोऽत्यन्तसंयोगः" इति, तद्वचनं व्याहन्यते; ग्रामे ग्रामे पानीयमित्ययं च शिष्टप्रयोगो नोपपद्यते। अथ कथं ग्रामशब्दोऽयं वीप्सायां वत्र्तते, यावता न तस्या वीप्साः-भिधेया, किं तर्हि? जनाकीर्मो भूखण्डः? सत्यमेतत्(); यद्येवम्(), तथापि द्विर्वचनप्रतिपत्तिद्वारेण तस्या द्योतितत्वात्? स तस्यां वत्र्तत इत्युच्यते। ग्रामो हि द्विर्वचनं प्रतिपद्यमानो वीप्सां द्योतयतीति तस्यां द्योतनद्वारेण वत्र्तते। अथ ग्रमो ग्राम इति कथमेकवचनम्(), यावता बहुत्वाद्धिप्रामाणां बहुवचनेनैव भवितव्यम्(); अथ कृते द्विर्वचने? नैतदस्ति; समुदाय एवात्र बहुत्वमुपजायते, न प्रत्येकम्()? उपातैकत्वसंख्येऽवयवेऽविरुद्धं ह्रेकत्वं बहुत्वेन। तेनावयवाद्बहुवचन न भवति। समुदायात्? तर्हि कथं न भवति? बहुत्वस्याबगतत्वाद्वीप्सया। स हि समुदायो वीप्सायां बहुत्वमन्तरेण न सम्भवतीति तां प्रकाशयन्नान्तरीयकत्वाद्बहुत्वमपि गमयति। ततोऽवगतार्थत्वाद्बहुवचनं न प्रयुज्यते। अथ यत्? तिङन्तं नित्यतया प्रकर्षेण च युक्तम्(), तत्र किं कृते द्विर्वचने प्रकर्षप्रत्ययेन भवितव्यम्()। अथ वा कृते प्रकर्षेप्रत्यये द्विर्वचनेन? इत्यत आह--"यत्तिङन्तम्()" इत्यादि। अत्र विप्रतिषेधो हेतुः। तत्र द्विर्वचनस्यावकाशो यत्र नित्यार्थो विवक्षितः, न प्रकर्षः--पचतिपचतीति; प्रकर्षप्रत्ययस्यावकाशो यत्र प्रकर्षेण योगः, न नित्यतया--पचतितरामिति; यत्र तूभाभ्यां योगस्तत्र विप्रतषेधेन द्विर्वचनं भवति--पचतिपचतितरामिति। सुबन्तमपि तर्हि यद्वीप्सया प्रकर्षेण च युक्तम्(), तस्मादत एव हेतोः कृतद्विर्वचनात्? प्रकर्षप्रत्ययः स्यात्(), ततश्चाढ()तरमाढ()तरमानयेति न सिद्ध्येदित्यत आह-"इह तु" इत्यादि। यदि सुबन्तस्यैककालं वीप्सा प्रकर्षेण च योगः स्यात्(), तदा स्यादयं प्रसङ्गः, स न नास्ति; यतः सुबन्तस्य प्रकर्षप्रत्ययेन संयुक्तस्य पश्चाद्वीप्सया योग इष्यते। कथम्()? इह हि वीप्सा नाम पौरुषेयो धर्म इच्छाविशेषः, स च तथा प्रयोक्तुर्विदुषः प्रवत्र्तते यथा शब्दे नानिष्टमापद्यते, नापि प्रयोक्तरि। यदि प्रकर्षप्रत्ययात्? प्राक्? सहभावेन वा वीप्सा स्याच्छब्देनिष्टमापद्यते, तद्द्वारेण प्रयोक्तर्यपि, यथा--हेलयो हेलय इति ब्राऊवप्सु पुरुषेषु; यज्ञेषु चानिष्टमापद्यते। तस्मात्? प्रकर्षयोगविवक्षाया उत्तरकालं शिष्टस्य प्रयोक्तुर्वीप्सया भवितव्यमिति सिद्धमाढ()तरमाढ()तरमानयेति। अपरः प्रकारः--इहापि तर्हि तत एव हेतोः कृते द्विर्वचने प्रकर्षप्रत्ययः स्यात्(), ततश्चाढ()तरमाढ()तरमानयेति न सिद्ध्यति()--इत्येतस्मिन्? पूर्वपक्ष इदमाह--"इह तु" इत्यादि। प्रकर्षसाहचर्यात्? प्रकर्षप्रत्ययः प्रकर्षशब्देनोक्तः। वीप्सासाहचर्याद्धि द्विर्वचनं वीप्साशब्देन। तदेतदुक्तं भवति--प्रकर्षप्रत्यययुक्तस्य द्विर्वचनेन योग इष्यत इति। अत्र चायमभिप्रायः--येन हेतुना युगपत्? प्रकर्षेण नित्यतया च युक्तस्य पूर्वं द्विर्वचनं भवति, स विप्रतिषेधोऽत्र नास्ति; अतुल्यबलत्वात्()। अतुल्यबलत्वं तु प्रकर्ष प्रत्ययस्यान्तरङ्गत्वात्(), द्विर्वचनस्य बहिरङ्गत्वात्()। तथा हि ङ्याप्प्रातिपदिकादातिशायिको भवति, द्विर्वचनं तु पदस्य। "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इति सिद्धासिद्धयोश्चायुक्तो विप्रतिषेधः। तस्मात्? पहूर्वं प्रकर्षप्रत्ययेन सुबन्ताद्भवितव्यम्, पश्चात्? तदन्तस्य द्विर्वचनेनेति। ननु चातिशायिको नैवान्तरङ्गः, समर्थाद्धि स उपपद्यते, "समर्थानां प्रथमाद्वा" ४।१।८२ इत्यधिकारात्(), सामथ्र्य च सुबन्तेनैव? नैतत्(); उक्तं हि तत्रैव ४।१।८२ "स्वार्थिकप्रत्ययावधिश्चायमधिकारः प्राग्दिशो विभक्तिरिति ५।३।१ यावत्(),

स्वार्थिकेष्वस्योपयोगो नास्ति" इति। स्वार्थिकाश्चतिशायिकाः। तस्मादन्तरङ्गत्वादुत्पन्ने तस्मिन्? पश्चात्? सुबन्तस्य द्विर्वचनेन भवितव्यम्()॥

बाल-मनोरमा

नित्यवीप्सयोः , ८।१।४

नित्यवीप्सयोः। नित्यशब्देन नित्यत्वं विवक्षितम्। तच्च आभीण्यमिति भाष्यम्। व्याप्तुमिच्छा वीप्सा=व्याप्तिप्रतिपादनेच्छा। सा च प्रयोक्तृधर्मः। व्याप्तिरेव तु शाब्दबोधविषय इति भाष्यस्वरसः। तथा च "नित्यव्याप्त्या"रित्येव सुवचनम्। व्याप्तिश्च कात्स्न्यन्येन संबन्धः, उपसर्गबलात्। पदस्येत्यधिकरिष्यमाणमिहापकृष्यते। "सर्वस्ये"ति स्थानषष्ठी। "द्वे" इति त्वादेशसमर्पकम्। तस्य च "शब्दरूपे" इति विशेष्यमर्थाल्लभ्यते, शब्दानुशासनप्रस्तावात्। ते च शब्दरूपे स्वरूपतोऽतश्चान्तरतमे पदे इति स्थानेऽन्तरतमपरिभाषया लभ्यते। ततश्च पौनःपुन्ये कात्स्न्र्ये च गम्ये कृत्स्नावयवविशिष्टस्य पदस्याऽर्थतश्च शब्दतश्चान्तरतमे द्वे पदे भवत इति फलितम्। तदभिप्रेत्याह--आभीक्ष्ण्ये वीप्सायां च द्योत्ये इति। द्योत्यं च द्योत्या च द्योत्यम्। तस्मिन्नित्यर्थः। "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या"मिति नपुंसकैकशेषः। एकत्वं च नित्यवीप्से च प्रकृतिगम्ये। द्विर्वचनं तु द्योतकम्। सत्यपि प्रकृतेर्द्वित्वे द्विरुक्तयोः प्रकृत्यनतिरेकादिति बोध्यम्। द्विर्वचनं स्यादिति। द्वे पदे आदेशौ स्त इत्यर्थः। तत्रावयवयोः पदत्वं स्वतः सिद्धम्। समुदायस्य तु पदद्वयात्मकस्य स्थानिवत्त्वात्सुबन्तत्वम्। तेन "अपचन्नपचन्नि"त्यत्र ङमुट्, "वृक्षान्वृक्षा"नित्यत्र "पदान्तस्ये"ति णत्वनिषेधः, "अग्रेऽग्रे" इत्यत्र "एङः पदान्ता"दिति पूर्वरूपं चेत्यादीन्यवयवानां पदकार्याणि सिध्यन्ति। "पुनःपुन"रिति समुदायस्य स्थानिवत्त्वेन सुबन्तत्वाद्भावे ष्यञि, भवे ठञि च पौनः पुन्यम्, पौनःपुनिक इति च सिध्यति। "द्वे उच्चारणे स्त" इत्याश्रयणे तु सर्वं पदं द्विरुच्चारयेदित्यर्थः फलितः स्यात्। ततश्च पुनरित्येकस्यैव द्विरुच्चार्यमाणस्य पुनःपुनरित्यादेशत्वाऽभावेन स्थानिवत्त्वाऽप्रसक्त्या सुबन्तत्वविरहात्तद्धितोत्पत्तिर्न स्यात्। तस्मादादेशपक्ष एव श्रेयानित्यास्तां तावत्। आभीक्ष्ण्यं तिङन्तेष्विति। आक्षीक्ष्ण्यं-पौनः पुन्यम्। तच्चैह प्रधानभूतक्रियाया एव। क्रियाप्राधान्यं चाख्यातेष्वस्तीति "प्रशंसायां रूप"विति सूत्रे भाष्ये स्पष्टम्। अव्ययकृत्स्वपि क्त्वातुमुन्नादिषु क्रियाप्राधान्यम्, "अव्ययकृतो भावे" इत्युक्तेः तथा च तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च पौनःपुन्यनिमित्तकद्विर्वचनं नान्यत्रेत्यर्थः। तथैवोदाहरति--पचति पचति भुक्त्वा भुक्त्वेति।

वीप्सायामिति। "उदाह्रियते" इति शेषः। वृक्षं वृक्षमिति। कृत्स्नं वृक्षमित्यर्थः। अत्र प्रकृततद्वाटिकागतवृक्षकात्स्न्र्यंगम्यते, जगतीतलस्थितकृत्स्नवृक्षसेचनस्याऽशक्यत्वात्। सर्वशब्दस्य कात्स्न्र्यवाचित्वेऽपि न द्वित्वमित्यनुपदमेव "यथास्वे" इत्यत्र वक्ष्यते। वृक्षं-वृक्षमित्यत्र कात्स्न्र्यावगमेऽपि प्रत्येकनिषठमेकत्वमेव भासते, नतु बहुत्वम्, अतो न बहुवचनम्, "एकैकस्य प्राचा"मिति लिङ्गाच्च। "सर्वस्ये"त्यभावे वृक्षाभ्यामित्यादौ "स्वादिषु" इति पदत्वमवलम्ब्य प्रकृतिभागमात्रस्य द्विर्वचनं स्यात्। कृते तु सर्वग्रहणे पदावयवत्वानाक्रान्तस्यैव कृत्स्नावयवोपेतस्य पदस्य द्वित्वमित्यर्थलाभान्न दोषः। पदस्येति किम्?। वाक्यस्य मा भूत्।

तत्त्व-बोधिनी

नित्वविप्सयोः १५९०, ८।१।४

नित्यवीप्सयोः। नित्यमिह पौनःपुन्यमित्याह---आभीक्ष्ण्य इति। द्योत्य इति। "नपुंसकमनुपुंसकेने"त्येकशेषः, एकवद्भावश्च बोध्यः पदस्येति। तेन नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस्य न भवति। किं च क्रियासमभिहारे

धातोर्विहितो यङन्तरङ्गः, पदस्योच्यमानं द्विर्वचनं तु बहिरङ्गमिति यङं न बाधते। अन्यथा हि पौनःपुन्यं भृशार्थश्च क्रियासमभिहार इति भृसार्थे सावकाशो[ऽयं]यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्येत। न च पदस्य द्विर्वचनाभ्युपगमे सगतिकस्य प्रपचति प्रपठतीत्यादेर्द्विर्वचनं न स्यादिति वाच्यं, वार्तिककारवचनात्तत्सिद्धेः। अत्र वदन्ति सगतिकस्य द्वित्वे ऐकपद्यं नास्त्येव, स्थानिनः पदत्वाऽभावेन आदेशेऽपि तस्य दौर्लभ्यात्। द्विःप्रयोगपक्षे तु प्रथमगतिं विहायाऽवशिष्टस्य पदत्वं प्राप्तं, तस्मिन् सत्यपि न क्षतिः। वस्तुतस्त्विह स्थाने द्विर्वचनपक्ष एव मुख्यः। स्थानिनः सुबन्तत्वेनादेशस्यापबि सुबन्तत्वात्सुबन्तात्तद्धित इति पक्षे समुदायात् ष्यज्()ठञोः संभवेन पौनःपुन्यं पोनःपुनिक इति रूपसिद्धेः। "प्रातिपदिकात्तद्धितः"इति पक्षाभ्युपगमेऽपि श्रूयमाणप्रत्ययान्तस्यैव प्रातिपदिकत्वनिषेधात्पुनरित्यस्य[एव] प्रातिपदिकत्वे[न] आदेशस्यापि प्रातिपदिकत्वात्पौनः पुन्यमित्यादि सिध्यत्येव। द्विःप्रयोगपक्षे त्वन्तरङ्गत्वादव्ययात्सुपो लुकि द्वित्वं प्रवर्तत इति समुदायस्य सुबन्तत्वाऽभावात् प्रातेपदिकत्वाऽभावाच्च ष्यञ्ञौ नच भवतः। न च "अर्थवदधातु"रित्यादिना समुदायस्य प्रातिपदिकत्वेवे सोरुत्पत्तौ तस्य लुकि च सुबन्तत्वं प्रातिपदिकत्वं च संभवत्येवेति वाच्यम्। "यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति समासस्यैवे"ति नियमेन प्रातिपदिकत्वस्याऽसंभवेन सुबन्तत्वस्याप्यसंभवात्। न च द्विःप्रयोगपक्षे स एव धातुः प्रत्ययश्च द्विःपठ()त इति समुदायस्यापि पदसंज्ञा प्रवर्तते इत्यधुनैवोक्तत्वात्पुनःपुनरिति समुदायस्य सुबन्तत्वमस्त्येवेति शङ्क्यम्, अन्तरङ्गत्वात्सोर्लुकि प्रकृतिभागस्य द्विर्वचने सति यस्मात्प्रत्ययो विहितस्तदादि तदन्तमिति विधीयमानायाः पदसंज्ञायाः समुदायस्य दुर्लभत्वात्। ततश्चैकपद्याऽभावे "पुनःपुनर्जायमाना पुराणी" इत्यादाववग्रहोऽपि न सिध्येदिति। आभीक्ष्ण्यमिति। तद्धि क्रियानिष्ठधर्मः। तेन तद्द्योतनार्थं द्वित्वं क्रियाप्राधानानामेव न्याय्यम्। क्रियाप्राधान्यं चाख्यातेऽस्ति, कृद्वि शेषे च "अव्ययकृतो भ#आवे"इति वक्ष्यमाणत्वादिति भावः। केचित्तु क्रियाप्रधानानामेव द्वित्वे परिगृहीतसाधनाया एव क्रियायाः व्यवहारोपयोगित्वात्तदनभिधानाच्च धातुमात्रस्य द्वित्वं न भवति, किंतु तादृश क्रियाभिधायिनः पदस्यैव स्यादिति पदस्येत्यस्यापकर्षणाऽभावेऽपि न क्षतिरित्याहुः। तच्चिन्त्यम्। उक्तरीत्या नानाकारकविशिष्टक्रियासमर्थकस्य वाक्यस्यैव द्वित्वापत्तेः। किं च भावार्थकलकारान्तानामव्ययकृतां च भवदुक्तरीत्या द्वित्वं न स्यात्। ननु तत्र नित्यतावगत्यन्तरं पदान्तरैः साधनाकाङ्क्षा परिपूर्यत इति भूयते पक्त्वेत्यादिपदानां द्वित्वं स्यादेवेति चेत्। तर्हि तत्रैव धातुमात्रस्य द्वित्वं केन वार्यताम्। किं च तद्वदेव कर्तृकर्मलकारस्थलेऽपि धातिमात्रस्य द्वित्वं दुर्वारमिति पदस्येत्यपकर्षणमावश्यकमेवेति दिक्। वीप्सायामिति। व्याप्तुमिच्छा वीप्सा। व्याप्तिप्रतिपिपादयिषेति यावत्। सा च प्रयोक्तृधर्मः आबाधवत्। "गतगत"इत्युक्ते प्रियस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते इति यथा प्रतीयते तथा वृक्षंवृक्षं सिञ्चितीत्यादावपि व्या()प्त बुबोधयिषोरिदं वाक्यमित्यवगमात्। शाब्दबोधविषयस्तु व्याप्तिरेव। तथाच "नित्यव्याप्त्यो"रित्येव सूत्रयितुं शक्यम्। व्याप्तिरिह कात्स्न्र्यं, तच्चाधिकारिकम्। "सर्वे ब्राआह्मणा आमन्त्रिताः "इत्यादौ यथा। "न हि जगतीतले विद्यमाना ब्राआह्मणाः सर्वेऽपि केनतिदामन्त्रयितुं शक्यन्ते"इति स्वग्रामस्थस्वजातीयब्राआह्मणपरतया तत्र सङ्कोचो यद्यप्यभ्युपेयते तह्र्यत्राऽपि सकलवृक्षसेचनसामर्थ्यं कस्यापि मनुष्यस्य नास्तीति यत्र वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृक्षाणामेव कात्स्न्र्यं "वृक्षंवृक्षं"सिञ्चती"त्यादौ गम्यते इत्यभ्युपेयम्। यत्र तु सङ्कोचे कारणं नास्ति, तत्राऽसंकोच इष्ट एव, "जातोजातो निधनमुपैती"ति यथा। न चैवं वृक्षंवृक्षमित्यादौ बहुवचनप्रसङ्गः। बहूनां भानेऽपि बहुत्वसंख्यायास्तत्राऽभानात्। प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते इत्यादि मनोरमायां स्थितम्। "वृक्षंवृक्ष"मिति समुदायस्य तु प्रातिपदिकत्वाभावाद्बहुवचनस्य प्रसङ्ग एव नास्ति। न च "अर्थवदधातु"रित्यनेन प्रातिपदिकत्वं शङ्क्यम्। "यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति [तर्हि] समासस्यैवे"ति नियमात्। न चाष्टमिकं द्विर्वचनमादेशरूपमिति सङ्घातो न भवतीत्यपि शङ्क्यम्, "द्वे" इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इति प्रागुक्तत्वात्। नन्वेवमपि "सरित्सरित्""योषायोषे"त्यादौ बहुवचनोत्पत्तिर्दुर्वारैव। "सरि"दिति स्थानिनः प्रातिपदिकत्वसंभवने तदादेशस्यापि सरित्सरिदित्यादेः स्थानिवद्भावेन

प्रातिपदिकत्संभवादिति चेत्। अत्राहुः----अन्तरङ्गैकसङ्ख्यावरुद्धो। द्विरुक्तार्थः सङ्ख्यान्तरे निराकाङ्क्ष एव। न हि वस्तुगत्या बहुत्वमस्तीत्येतावतैव तस्य शाब्दबोध आपादयितुं शक्यते। असत्त्वार्थकेष्वपि तदापत्तेः। न हि शयनबाहुल्याभिप्रायेण ["देवदत्तेन]शय्यन्ते"इति भावे कश्चित्प्रयुङ्क्ते। तत्राऽयोग्यं तदिति चेत्। समं प्रकृतेऽपि। अत्र च लिङ्गम् "एकैकस्य प्राचा"मिति निर्देश इति।

---

सूत्रम्

काशिका-वृत्तिः

परेर् वर्जने ८।१।५

परि इत्येतस्य वर्जने ऽर्थे द्वे भवतः। परि परि त्रिगर्तेभ्यो वृष्टो देवः। परि परि सौवीरेभ्यः। परि परि सर्वसेनेभ्यः। वर्जनं परिहारः। वर्जने इति किम्? ओदनं परिषिञ्चति। परेर् वर्जने ऽसमासे वेति वक्तव्यम्। परि परि त्रिगर्तेभ्यो वृष्टो देवः, परि त्रिगर्तेभ्यः। समासे तु तेन एव उक्तत्वाद् वर्जनस्य न एव भवति, परित्रिगर्तं वृष्टो देवः इति।

न्यासः

परेर्वर्जने। , ८।१।५

"परि परि त्रिगत्र्तेभ्यः" इति। "अपपरी वर्जने" (१।४।८८) इति परेः कर्मप्रवचनीयसंज्ञायां सत्याम्? "पञ्चम्यपाङ्परिभिः" २।३।१० इति पञ्चमी। "परिषिञ्चति" इति। सर्वत्र सिञ्चतीत्यर्थः। "उपसर्गात्? सुनोति" ८।३।६५ इत्यादिना षत्वम्()। "परेर्वर्जनेऽसमासे वा" इत्यादि। परेर्वर्जनेऽर्थेऽसमासे विभाषा द्विर्वचनं भवतीत्येतदर्थरपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"विभाषा वेषिटिचेष्ट्योः" ७।४।९६ इत्यतो मण्डूकप्लुत्या विभाषाग्रहणमनुवत्र्तते, तेनासमासे द्विर्वचनं परेर्वर्जने विभाषा भवतीति। "असमासे" इति। वचनात्? समासे तु नित्यमेव द्विर्वचनेन भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"समासे तु" इत्यादि। यथा दध्नोपसिक्त ओदनो दध्योदन इतीहोपसिक्तशब्दः समासेऽन्तर्भूतः, तथा "अपपरिबहिरञ्चवः पञ्चम्या" २।१।११ इति समासे कृते तत्र वर्जनम्()। परिशब्दस्तु समासेऽनर्थक एव; तेन वर्जनेऽर्थे वत्र्तमानस्य द्विर्वचनमुच्यमानं समासे न भवति। अथापि परिशब्दो वर्जनेऽर्थेऽर्थवान्? स्यात्(); एवमपि समासेनैव वर्जनार्थप्रत्यायितत्वान्नैव द्विर्वचनेन भवितव्यम्()। "परित्रिगत्र्तम्()" इति। समासादुत्पन्नस्य सोः "नाव्ययीभावादतोऽस्त्वपञ्चम्याः" २।४।८३ इत्यम्भावः॥

बाल-मनोरमा

परेर्वर्जने , ८।१।५

परेर्वर्जने। वर्जने वर्तमानस्य परीत्यस्य द्वे स्त इत्यर्थः। परि परि वङ्गेभ्यो वृष्ट इति। "पर्जन्य" इति शेषः। "अपपरी वर्जने" इति परिः कर्मप्रवचनीयः। "पञ्चम्यपाङ्परिभि"रिति पञ्चमी। "परि हरेः संसारः" इत्यत्र तु "परेरसमासे इति वक्तव्य"मिति वार्तिकान्नद्विर्वचनम्।

तत्त्व-बोधिनी

परेर्वर्जने १५९१, ८।१।५

परेर्वर्जने। अत्र वार्तिकं---"परेर्वर्जनेऽसमासे"। नेह---परित्रिगर्तं वृष्टो देवः। "वेति च वक्तव्यम्"। तथा च अप हरेः परि हरेः संसार इति कारकेषूदाहृतम्।

परेर्वर्जने वावचनम्।परिपरि वङ्गेभ्य इति॥ "अपपरी वर्जने"इति कर्मप्रवचनीयसंज्ञायां "पञ्चम्यपाङ्परिभि"रिति

पञ्चमी।

---

सूत्रम्

काशिका-वृत्तिः

प्रसमुपोदः पादपूरणे ८।१।६

प्र सम् उप उतित्येतषां पादपूरणे द्वे भवतो द्विर्वचनेन चेत् पादः पूर्वते। प्रप्रायम् अग्निर् भरतस्य शृण्वे। संसमिद्युवसे वृषन्। उपोप मे परा मृश किं नोदुदु हर्षसे दातवा उ। पादपूरणे इति किम्? प्र देवं देव्या धिया। सामार्थ्याच् छन्दस्येव एतद् विधानम्। भाषायाम् अनर्थकं स्यात्, प्रयोगाभावात्।

न्यासः

प्रसमुपोदः पादपूरणे। , ८।१।६

"प्रसमुपोदः" इति। "द्वन्द्वाच्चुदषहान्तात्? समाहारे" ५।४।१०६ इति समासान्तो न कृतः; समासान्तविधेरनित्यत्वात्()। "पादपूरणे" इति। "यस्य च भावेन भावलक्षणम्()" २।३।३७ इति सप्तमीयम्()। पादपूरणस्य भावेनोत्पत्तिलक्षणेन द्विर्वचनसक्य भावो लक्ष्यते। ननु च द्विर्वचनात्? प्राक्? पादपूरणमसदेव, तत्? कुतस्तस्य भावो द्विर्वचनस्य लक्षणं स्यात्(), न हि तत्? सत्त्वम्()? असारमेतत्(); तदुत्पत्तिह्रत्र भावः, सा चानिष्पन्नसत्ताकस्यैव भवति, न निष्पन्नसत्ताकस्य। न हि मृत्तिकावस्थायां सन्तो घटादय उत्पद्यन्तेः पादश्चेह विशेषानभिधानेऽपि सामथ्र्यादृच एव गृह्रते, न श्लोकस्य। लौकिको हि श्लोकः, लोके चार्थपरत्वादनर्थकस्य प्रयोगो नोपपद्यते॥

---

सूत्रम्

काशिका-वृत्तिः

उपर्यध्यधसः सामीप्ये ८।१।७

उपरि अधि अधसित्येतेषां द्वे भवतः सामीप्ये विवक्षिते। सामीप्यं प्रत्यासत्तिः कालकृता देशकृता च। उपर्युपरि दुःखम्। उपर्युपरि ग्रामम्। अध्यधि ग्रामम्। अधो ऽधो नगरम्। सामीप्ये इति किम्? उपरि चन्द्रमाः। इह कस्मान् न भवति, उपरि शिरसो घटं धारयति? औत्तराधर्यम् एव विवक्षितं न सामीप्यम् इति द्विर्वचनं न भवति।

न्यासः

उपर्यध्यधसः सामीप्ये। , ८।१।७

"सामीप्ये" इति। प्रत्यासत्तावित्यर्थः। एतच्चोपर्यादीनां विशेषणम्()। सामीप्यं देशकृतम्(), कालकृतञ्च भवति। तत्र "उपर्युपरि ग्रामम्()" इति देशकृतस्योदाहरणम्()। समीपे ग्रामस्येत्यर्थः। द्वितीयात्र "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु" (वा।११८) इत्याद्युपसंख्यानात्()। कालकृतस्योदाहरणम्()--"उपर्युपरि दुःखम्()" इति। समीपं यद्()दुःखमचिरकालातिक्रान्तमचरकालभावि वा तदेवमुच्यते। "अथेह["अथ"--नास्ति--काशिका] कस्मान्न भवति--उपरि शिरसो घटं धारयति" इति, अस्ति ह्यत्र घटेन शिरसः प्रत्यास्तिः? इत्याह--"उपरि शिरसो घटम्()" इत्यादि। न हीह शास्त्रे वस्तुनः सत्तैव शब्दव्युत्पत्तेः प्रथानं कारणम्, किं तर्हि? तद्विवक्षापि, सा चेह नास्ति। औत्तराधर्यमात्रस्य विवक्षितत्वात्()। तेनेह न भवति द्विर्वचनम्()। द्वितीययाऽपि न भवितव्यम्(), नाम्रेडितत्वात्()॥

न्यासः

वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभत्र्सनेषु। , ८।१।७

आख्यातं साध्ययकारकविशेषणं वाक्यम्(), तस्यादिर्वाक्यादिः। असूयादीनपेक्षमाणस्यापि गमकत्वात्? समासः। "असूयासम्मतिकोपकुत्सनभत्र्सनेषु यदि तद्वाक्यं भवति" इति। एतेनासूयादीनां वाक्यं प्रति विशेषणभावं दर्शयति। ननु चामन्त्रितस्य विशेष्यत्वात्? प्राधान्यम्(), वाक्यस्य विशेषणत्वादप्राधान्यम्(), तत्र प्राधान्यादामन्त्रितं प्रत्येवैषां ["प्रत्येषां"--प्रांउ।पाठः] विशेषणत्वं युक्तम्()? नैतदस्ति; आमन्त्रितविशेषणत्वे हि सति तेषामसूयादिवृत्तेरेवामन्त्रितस्य द्विर्वचनं स्यात्()--असूये असूय इत्यादौ वाक्ये, माणवक माणवकेत्यादौ तु वाक्ये न स्यात्()। वाक्यविशेषणत्वं [वाक्यविशेषणत्वे--प्रांउ।पाठः] ह्नसूयादीनां सर्वत्र भवति। तस्माद्वाक्यविशेषणतैघासूयादीनां युक्त; व्याप्तेः। कदा पुनर्वाक्यमसूयादिषु भवति? यदा तस्मिन्? वाक्ये प्रयुच्यमाने असुयादयो गम्यन्ते। असहनम्? अक्षान्तिः। पूजनम्? शब्देन गुणाविष्करणम्()। "एते च प्रयोक्तृधर्माः" इति। यो वाक्यं प्रयुङ्क्ते तस्यैते धर्मा गुणविशेषा इत्यर्थः। प्रयोक्तृधर्मत्वं च तेषां प्रयोक्तरि वृत्तेः। "नाभिधेयधर्माः" इति। अभिधेये तेषामवृत्तेः। न हि यथा माणवकादावभिधेय आभिरूप्यादयो धर्मा वत्र्तन्ते, तथाऽसयादयः। तथा हि--"माणवका मणवक आभिरूपका अभिरूपक रिक्तं त आभिरूप्यम्()"--इत्येवं वाक्यप्रयोगे प्रयोक्तृगता एवासूयादयः प्रतयन्ते, न तु माणवकादिगताः। "रिक्तम्()" इति। असारमित्यर्थः। "शक्तिके शक्तिके" इति। कुत्सिता शक्ता। "प्रागिवात्? कः" ५।३।७०, "केऽणः" ७।४।१३ इति ह्यस्वः; टाप्(), "प्रत्ययस्थात्()" ७।३।४४ इतीत्त्वम्(), "सम्बुद्धौ च" ७।३।१०६ इत्येत्त्वम्()। "आन्नेडितस्यैव" इति। भत्र्सने यदुक्तमिहोदाहरणं तदधिकृत्यैतदुक्तम्(), न तु "आम्रेडितं भत्र्सने" ८।२।९५ इत्यनेनाम्रेडितस्यैव प्लुतः क्रियते, अपि तु पर्यायेण; "भत्र्सने पर्यायेण" (वा।९३०) इति वचनात्()। "शोभनः खल्वसि माणवक" इत्यत्रास्ति पूजनम्(), न त्वामन्त्रितं वाक्यादि। "उदारो देवदत्तः" इत्यत्रास्ति पूजनम्()। वाक्यादित्वञ्चोदारशब्दस्य, न त्वामन्त्रितत्वम्()। ननु चासूयायाः कुत्सनं कार्यम्(), भत्र्सनं कोपस्य, तत्र कुत्सनमत्संनयोद्विर्वचने कृते ततः प्रतीयमानाभ्यां कुत्सनभत्र्सनाभ्यां कोपासूययोरपि प्रतीतिर्भविष्यति; कार्यस्य कारणाव्यभिछारात्(), तस्मात्? कोपासूययोग्र्रहणं न कत्र्तव्यमेव? नैवम्(); न हि कोपासूयाप्रभवे एव कुत्सनभत्र्सने। तथा हि--पित्रादयः पुत्रादीननसयन्तोऽपि कुत्सयन्ति, अकुप्यन्तोऽपि भत्र्सयन्ते। यद्यपि तदानीं कायवाग्विकारोऽस्ति, तथापि न त्वसावसूया, नापिकोपः; तयोश्चैतसिकत्वात्()। अतः कार्यकरणभावसस्याभावात्? कुत्सनभत्र्सनप्रतीत्या कोपासूययोः प्रतीतिर्नोपपद्यते। अथ कोपासूयाप्रभवे एव विशिष्टे कुत्सनभत्र्सने, ये ते गृहीत्वा कोपासूययोरनुमानं करिष्यत इति चेत्()? न; विशेषस्यावधारयितुमशक्यत्वात्()। तथा हि--यथाऽसयन्कुत्सयति तथाऽनसूवन्नपि। यथा कुप्यन्नपि भत्र्सयते तथाऽकुप्यन्नपि। तस्मात्? कोपासूययोरपि ग्रहणं कत्र्तव्यम्()॥

बाल-मनोरमा

उपर्यध्यधसः सामीप्ये , ८।१।७

उपर्यध्यधसः। उपरि, अधि, अधः एतेषां द्वे स्तः सामीप्ये गम्ये इत्यर्थः। सामीप्यं च उपर्युपरि ग्राममित्यत्र अधोऽधो लोकमित्यत्र च देशतः, अध्यधि सुखमित्यत्र तुकालत इति ज्ञेयम्।

तत्त्व-बोधिनी

उपर्यध्यधसः सामीप्ये १५९२, ८।१।७

उपर्यध्य। सामीप्यं प्रत्यासत्तिः, तच्च कालकृतं देशकृतं वा। अध्यधि सुखमिति। कालकृतस्योदाहरणमिदम्। सामीप्य इति किम्()ष उपरि चन्द्रमाः। "उपरि शिरसो घचं धारयती"त्यत्र तु वस्तुतो विद्यमानमपि सामीप्यं न विवक्षितं, किं त्वौत्तराधर्यमेव केवलं विवक्षितमिति द्विर्वचनं नभवति। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम्। अत्र च "उपज्ञोपक्रमं तदाद्यचिख्यासाया"मिति सन्नन्तप्रयोगो ज्ञापक इत्याहुः।

सूत्रम्

काशिका-वृत्तिः

वाक्यादेरामन्त्रितस्य असूयासम्मतिकोपकुत्सनभर्त्सनेषु ८।१।८

एकार्थः पदसमूहो वाक्यम्। वाक्यादेरामन्त्रितस्य द्वे भवतः असूयासम्मतिकोपकुत्सनभर्त्सनेषु यदि तद् वाक्यं भवति। तत्र परगुणानामसहनम् असूया। पूजा सम्मतिः। कोपः क्रोधः। निन्दनं कुत्सनम्। अपकारशब्दैर्भयोत्पादनं भर्त्सनम्। एते च प्रयोक्तृधर्माः, नाभिधेयधर्माः। असूयायाम् तावत् माणवक ३ माणवक, अभिरूपक ३ अभिरूपक, रिक्तं ते आभिरूप्यम्। सम्मातौ माणवक ३ माणवक, अभिरूपक ३ अभिरूपक, शोभनः खल्वसि। कोपे माणवक ३ माणवक, अविनीतक ३ अविनीतक, इदानीं ज्ञास्यसि जाल्म। कुत्सने शक्तिके ३ शक्तिके, यष्टिके ३ यष्टिके, रिक्ता ते शक्तिः। भर्त्सने चौर चौर ३, वृषल वृषल ३, घातयिष्यमि त्वां बन्धयिष्यामि त्वाम्। असूयादिषु स्वरितम् आम्रेडिते ऽसूयासंमतिकोपकुत्सनेषु ८।२।१०३ इति पूर्वपदस्य प्लुतः। भर्त्सने तु आम्रेडितं भर्त्सने ८।२।९५ इत्याम्रेडितस्य एव प्लुतः। वाक्यादेः इति किम्? अन्तस्य मध्यमस्य च मा भूत्, शोभनः खल्वसि माणवक। आमन्त्रितस्य इति किम्? उदारो देवदत्तः। असूयादिषु इति किम्? देवदत्त गामभ्याज शुक्लाम्।

बाल-मनोरमा

वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभत्र्सनेषु , ८।१।८

वाक्यादेः। "द्वे स्त" इति शेषः। यद्यपि कोपाद्भत्र्सनम्, असूयया कुत्सनं, तथापि विनापि कोपाऽसूये भत्र्सनकुत्सनयोः शिष्यादौ संभवात्पृथग्ग्रहणमिति भाष्ये स्पष्टम्। सुन्दरेति। सोन्दर्यमसहमानस्येदं वाक्यम्। देवेति। तव वन्दनं सम्मतिमित्यर्थः। दुर्विनीतेति। क्रोधाविष्टस्य वाक्यम्। ज्ञास्यसीति। "दुर्विनयस्य फल"मिति शेषः। धानुष्केति। युद्धाऽसमर्थं प्रति निन्देयम्। चोरेति। चोरं प्रति अवाच्यवादोऽयम्।

तत्त्व-बोधिनी

वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनाङत्र्सनेषु १५९३, ८।१।८

वाक्यादेः। सुन्दरसुन्दरेत्यादि। "स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु", "आम्रेडितं भत्र्सने"इति सूत्राभ्यां यतायथं प्राप्तःप्लुतौ वैकल्पिकत्वान्नेह कृतः। उक्तं हि प्राक् "सर्वः प्लुतो वैकल्पिकः"इति। नन्वत्र कोपाऽसूयाभ्यां पृथक्कुत्सनभत्र्सनग्रहणमपार्थकम्। न ह्सूयां विना कुत्सयते, न वा अकुपितो भत्र्सयते इथि चेकत्। अत्राहुः---गुरवो हि हतैषित्वादकुपिता अपि भत्र्सनं कुर्वते, "विनाप्यसूयां कुत्सां कुर्वन्ती"ति पृथक्तया निर्देशः सूत्रकारेण कृतः। "साऽमृतैः पाणिभिर्ध्नन्ति गुरवो न विषोक्षितैः। लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणा"इति।

---

सूत्रम्

काशिका-वृत्तिः

एकं बहुव्रीहिवत् ८।१।९

एकम् इत्येतच् छब्दरूपं द्विरुक्तं बहुव्रीहिवद् भवति। बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ। कैकमक्षरं पठति। एकैकया आहुत्या जुहोति। सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ताः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते। तेन अतिदेशिके बहुव्रीहौ न भवन्ति। एकैकस्मै। न बहुव्रीहौ इति प्रतिषेधो न भवति, बहुव्रीहिरेव यो बहुव्रीहिः इति विज्ञानात्। नन, सुसु, नञ्सुभ्याम् ६।२।१७१ इत्यन्तोदात्तत्वं न भवति। ऋकृक्, पूः पूः, ऋक् पूः इति समासान्तो न भवति।

न्यासः

एकं बहुव्रीहिवत्?।, ८।१।९

यद्यविशेषेणैकशब्दस्य बहुव्रीहिवद्भावो विधीयते, तदैकमित्यत्रापि स्यादिति मन्यमानोऽतिप्रसङ्गं परिजिहीर्षुराह--"एकमित्येतद्()द्विरुक्तं बहुव्रीहिवद्भावो भवति" इति। कथं पुनर्द्विरुक्तमित्येव विशेषो लभ्यते, यावता नायं सूत्रोपात्तः? एवं मन्यते--वीप्साऽनुवत्र्तते, ["वीप्सामनुवत्र्तते"--प्रांउ।पाठः] वीप्सायाञ्च पूर्वमेव द्विर्वचनं विहितम्()। न च तदेकशब्दस्यानेन बहुव्रीहिवद्भावेन बाध्यते; अन्यथा हि "एकैकस्य प्राचाम्()" ८।२।८६ इति निर्देशो नोपपद्येत। तस्माद्वीप्साग्रहणानुवृत्तेर्द्विरुक्तस्यैकशब्दस्यायं बहुव्रीहवद्भावो विज्ञायत इति। किं पुनर्बहुव्रीहिवद्भावे प्रयोजनमित्याह--"बहुव्रीहिवत्त्वे" इत्यादि। यद्यपि सुब्लृक्पुंवद्भावौ बहुव्रीहावित्येवं नोच्येते, तथाप्येतौ तत्र दृष्टावित्यस्मिन्नतिदेशे तयोः प्रवृत्तिः प्रयोजनम्()। "एकैकम्()" इति। वीप्सायां द्विर्वचने कृते यता चित्रगुरित्यादौ बहुव्रीहौ "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति सुब्लुग्भवति, तथेहाप्यतिदेशेन। अतिदेशेनैव समासे प्रातिपदिकत्वात्? सुः, "अतोऽम्()" ७।१।२४ इत्यम्भावः। "एकैकया" इति। पूर्ववद्विभक्देर्लुक्(), "स्त्रियाः पुंक्त्()" ६।३।३३ इत्यादिना यथा दर्शनीयभार्य इत्यत्र बहुव्रीहौ पुंवद्भावो भवति, तथेहाप्यतिदेशेन, तृतीयैकवचनम्(), "आङि चापः" ७।३।१०५ इत्येत्तवम्(), अयादेशः। ननु चासत्यपि पुंवद्भावे "वृद्धिरेचि" (६।१।८८) इति वृद्धावपि कृतायामेतत्? सिध्यत्येव? यद्यप्येतत्? सिध्यति, तथापि गतगतेत्येतत्? "आबाधे च" ८।१।१० इति द्विर्वचने कृते न सिध्यति। तस्मादुत्तरसूत्रे पुंवद्भावो बहुव्रीहिवदित्यस्यातिदेशस्यैव प्रयोजनत्वेनोच्यते। एकैकयेत्येतत्तु "एकमित्येष नपुंसकलिङ्गेन निर्देशोऽन्त्रम्()" इत्येतत्सूचयितुमुक्तम्()। अतन्त्रत्वं तु सूत्रे लिङ्गनिर्देशस्य "अर्धं नपुंसकम्()" २।२।२ इत्यत्र नपुंसकग्रहणेन ज्ञापितम्()। यदि सौत्रो निर्देशस्तन्त्रमभविष्यत्(), अर्धमित्यत्र तत एव निर्देशाल्लिङ्गविशेषे सिद्धे नपुंसकमिति नावक्ष्यत्()। अथ पूर्वपदप्रकृतिस्वरत्वमपि प्रयोजनं कस्मान्नोच्येत? विशेषाभावा। परस्य निघाते कृते पूर्वपदप्रकृतिस्वर एव भविष्यति। यदि तर्हि बहुव्रीहौ यद्()वृष्टं तदतिदिश्यते, सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्तानामप्यतिदेशः प्राप्नोति? इत्यत आह--"सर्वनामसंज्ञा" इत्यादि। कथं पुनरेते सर्वनामसंज्ञाप्रतिषेधादयः समासाधिकारे विहिते बहुव्रीहौ शक्या विज्ञातुम्()? उच्यते; सर्वनामसंज्ञाप्रतिषेधस्तावत्? "बहुव्रीहौ" १।१।२७ इत्यनुवत्र्तमाने पुनर्बहुव्रीहि १।१।२८ ग्रहणाच्च शक्यते विज्ञातुम्()। तस्य ह्तत्? प्रयोजनमुक्तम्()--बहुव्रीहेरेव यो बहुव्रीहिस्तत्र प्रतिषेधो यथा स्यात्(), बहुव्रीहिवद्भावेन यो बहुव्रीहिस्ततर मा भूदिति। एवञ्चार्थात्? समासाधिकारविहित एव बहुव्रीहौ प्रतिषेधो विज्ञायते। न हि ततोऽन्यो बहुव्रीहिरेव बहुव्रीहीर्भवति; "एकैकस्मै" इत्यादेर्बहुव्रीहिवद्भावेन बहुव्रीहिवत्वात्()। "नञ्सुभ्यम्()" ६।२।१७१ इत्यनेनापि "बहुव्रीहाविदमेतत्तद्भ्यः ६।२।१६१ इत्यतो बहुव्रीहिग्रहणेऽनुवत्र्तमाने नञ्सुभ्यां परस्य बहुव्रीहावन्तोदात्तत्वं विधीयते, न तु तयोरपि; यस्मात्? सुनञादिह निमित्तत्वेनोपात्तौ। न च निमित्तयोः कार्यित्वं युक्तम्()। यथीक्तम्()---"नेमौ ["हयवरट्()" (मा।सू।५) इत्येतस्मिन्? सूत्रे भाष्यकारेण] रहौ कार्यिणौ, किं तर्हि? न#इमित्तमिमौ द्विर्वचनस्य" इति। तस्माद्यत्र बहुव्रीहौ नञ्सूभां सुनञोरेव परभूतत्वात्? "आबाधे च" ८।१।१० इति द्विर्वचनम्(), बहुव्रीहिवद्भावश्च। अथ वा स्वरविधौ "समासस्य" ६।१।२१७ इत्यतः समातग्रहणमनुवत्र्तते, तेन च बहुव्रीहि विशेषयिष्यामः--समासो यो बहुव्रीहिरिति। ननु च नन, सुस्वित्यतावपि समासावेव, अस्ति ह्नयोरेव बहुव्रीहिवद्भावेनोत्पादिता समाससंज्ञा, ततश्च विशिष्यमाणऽपि समासग्रहणे न बहुव्रीहौ स्वरः प्राप्नोतीत्येव? नैव दोषः; विशिष्यते हि समासग्रहणेन बहुव्रीहिः, न कश्चिदसमासो बहुव्रीहिरस्ति, तत्र विशेषणसामथ्र्यावतिदेशद्वारेम यस्य समाससंज्ञा तस्य न भवति। स च समासाधिकारे विहितो बहुव्रीहिरिति विज्ञायते। ननु च समासग्रहणेन बहुव्रीहौ विशिष्यमाणे विशेषणसामथ्र्याद्विशिष्टस्य बहुव्रीहेरिवं ग्रहणमित्येतादन्मात्रं निश्चीयते, तत्र तु विशिष्टे बहुव्रीहौ सन्देह एव? उच्यते; भवति व्याख्यानतो विशेषप्रतिपत्तिः, न हि सन्देहादलक्षण(व्या।पा।७५)मित्यदोषः, समासान्तविधावपि "समासाच्च तद्विषयात्()" ५।३।१०६ इत्यतः

समासग्रहणमनुवर्त्तते। तत्र समासाधिकारादेव समासान्तत्वे वक्ष्यमाणानां प्रत्ययानां सिद्धे समासग्रहणानुव#ऋत्तिविशिष्टे समासे समासान्तत्वं यथा स्वादित्येवमर्थं विज्ञायते। स पुनर्विशिष्टः समासो यः समासाधिकारे विहितः स एव व्याख्यानाद्वेदितव्यः। अथ ननेत्यत्र "नलोपो नञः" [६।३।७२] इति नलोपः कस्मान्न भवति, अस्ति तस्यापि बहुव्रीहौ दर्शनम्()? नैष दीषः; "नलोपो नञः" इत्यत्र हि उत्तरवदाधिकारोऽनुवर्त्तते--उत्तरपदे नलोपो विधीयते। नञ्? च कार्यित्वेनोपात्तः, कार्यिणश्चेह निमित्तभावो नोपपद्यत इति नञोऽन्यस्मिन्नुत्तरपदे लोपेन भवितव्यम्(), यथा--अब्राआह्मण इति, न तु तस्मिन्नेवेति कुतो नकारलोपस्य प्रसङ्गः()॥

बाल-मनोरमा

एकं बहुव्रीहिवत् , ८।१।९

एकं बहुव्रीहिवत्। द्विरुक्त इति। द्विर्वचनं प्राप्त इत्यर्थः। एतच्च प्रकरणाल्लभ्यते, "वीप्सामात्रविषयमिद"मिति भाष्याच्च। तेनेति। बहुव्रीहिवत्त्वेन सुब्लोपपुंवद्भावौ सिध्यत इत्यर्थः। तत्र सुब्लोपमुदाहरति-एकैकमिति। इहेति। "एकैक"मित्यत्र एकमित्यस्य द्विर्वचने सति, एकमेकमिति स्थिते सुपो लुकि, समुदायात्सुबित्यन्वयः। ननु "यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैवे"ति नियमेन समुदायस्य प्रातिपदिकत्वाऽभावात्कथमिह सुपो लुक्, कथं वा समुदायात्सुबित्यत आह--बहुव्रीहिवद्भावादेव प्रातिपदिकत्वादिति। एतच्च "सुपोर्लुकी"त्यत्र, "समुदायात्सु"बित्यत्र च मध्यमणिन्यायेनान्वेति। अथ पुंवत्त्वेऽप्युदाहरति--एकैकयाऽऽहुत्येति। "एकये"त्यस्य द्विर्वचने सति एकया--एकयेति स्थिते, "बहुव्रीहिवत्त्वेन समुदायस्य प्रातिपदिकत्वात्सुपोर्लुकि, पूर्वखण्डस्य पुंवत्त्वे कृते, समुदायात्पुनस्तृतीयोत्पत्तौ, एकैकयेति रूपम्। बहुव्रीहिवत्त्वाऽभावे तु इह समुदायस्य प्रातिपदिकत्वा।ञभावात्सुपोर्लुक्, पूर्वखण्डस्य पुंवत्त्वं च न स्यात्, उत्तरपदपरकत्वाऽभावात्, समासचरमावयवस्यैव उत्तरपदत्वादिति भावः। "एक#ऐका"मित्यत्र उत्तरखण्डस्य "सर्वनाम्नो वृत्तिमात्रे" इति पुंवत्वं बहुव्रीहिवत्त्वे सत्यपि न प्रवृत्तिमर्हति, पूर्वस्यैवेदं "भस्त्रैषाद्वे" ति लिङ्गादित्युक्तत्वादिति। बोध्यम्। ननु सुपोर्लुकि पूर्वखण्डस्य एकाशब्दस्य पुंवत्त्वे सत्यसति वा वृद्धौ एकैकयेति सिध्यत्येवेत्यत आह--इह पूर्वभागे इति। अवग्रहे इति। समस्तपदस्य द्विधा करणे पूर्वखण्डोऽवग्रहः। "तस्य पूर्वोऽवग्रहः" इति प्रातिशाख्यम्। "एकैकयेत्येक-एकया" इतीष्यते पूर्वखण्डस्य पुवत्त्वम्। बहुव्रीहिवत्त्वाऽभावे तु एकैकयेत्येका-एकयेति स्यादिति भावः। तैत्तिरीयास्तु "एकैकयेत्येका एकया" इत्येवाऽवगृह्णन्ति। "एकं समासव"दित्येव सिद्धे बहुव्रीहिग्रहणं "बहुव्रीहौ प्रकृत्यापूर्वपद"मिति स्वरार्थम्। ननु बहुव्रीहिवत्त्वे सति "न बहिव्रीहौ" इति सर्वनामत्वनिषेधादेकैकस्यैदेहीत्यादौ कथं सर्वनामकार्यमित्यर्थ आह--न बहुव्रीहावित्यत्रेति। "विभाषा दिक्समासे बहुव्रीहौ" इत्यतो बहुव्रीहिग्रहणानुवृत्त्यैव सिद्धे न बहुव्रीहौ" इत्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम्। अतो बहुव्रीहिवदित्यतिदिष्टबहुव्रीहौ सर्वनामत्वनिषेधो नेत्यर्थः। तदाह--त#एनेति। तदेवं प्राचीनोक्तं परिहारमुक्त्वा सिद्धान्तिमतेनाह--वस्तुतस्त्विति। एतदिति। "न बहुव्रीहौ" इति सूत्रमित्यर्थः। एवं च बहुव्रीहावपि सर्वनामत्वस्य भाष्यसंमततया बहुव्रीहिवत्त्वातिदेशे सत्यपि सर्वनामत्वं निर्बाधमिति भावः। सूत्रमतेऽपीति। "उपसर्जनत्वादेव बहुव्रीहौ सर्वनामत्वनिषेधेसिद्धे " नबहुव्रीहौ" इति बहुव्रीह्यर्थके अलौकिकविग्रहवाक्ये एव समासात्प्राक्सर्वनामत्वं निषिध्यत इति प्रागेवोक्तम्। तस्मादिह बहुव्रीह्यतिदेशप्रयुक्तसर्वनामकार्याऽभावशङ्कैव नास्तीत्यर्थः। एकैकस्मै देहीति। इह द्वयोरपि सुपोर्लुकि पुनः सर्वादिपठितैकशब्दान्ततया सर्वनामत्वात्समैभाव इति भावः।

तत्त्व-बोधिनी

एकं बहुव्रीहिवत् १५९४, ८।१।९

एकं बहुव्रीहिवत्। द्वे इत्यनुवर्तते। तच्चानुवाद्यसमर्पकं, तदाह---द्विरुक्त इति। तेनेति। यद्यप्येतौ बहुव्रीहौ विशिष्य न

विहितौ , तथापि तत्र दृष्टवित्येतावतैवातिदिश्येते इति भावः। सुब्लोपपुंवद्भावाविति। पूर्वपदप्रकृतिस्वरश्च बोध्यः। समुदायात्सुबिति। तच्चैकवचनमेवेति, अन्तरङ्गैकसङ्ख्यावरुद्धो द्विरुक्तार्थः सङ्ख्यान्तरे निराकाङ्क्ष इतिप्रागेवोक्तत्वात्। पूर्वभाग इति। नतूत्तरभागेऽपि। तथाहि द्विधाऽत्र पुंवद्भावः "सर्वनाम्नो वृत्तिमात्रे"इति वा, "स्त्रियाः पुंव"दिति वा। तत्राद्यः पूर्वभागस्यैव, "भस्त्रैषे"ति ज्ञापकादित्युक्तम्। द्वितीयस्तु समानाधिकरणे परे विधीयते, न चोत्तरबागस्य समानादिकरणपरत्वमस्तीति भावः। अवग्रहे विशेषैति। "एकैकयेत्येकएकये"ति भवतीत्यर्थः। एकैकस्मै इति। ननु सुब्लोपपुंवद्भावाविव बहुव्रीहौ सर्वनामसंज्ञाऽभावोऽपि दृष्ट इत्ययमपि बहुव्रीहिवद्भावेनातिदिश्यताम्, तथाच स्मायादेशोऽत्र दुर्लभ इति चेत्। अत्राहुः----सुब्लोपपुंवद्भावाविव सर्वनामसंज्ञाऽभावः शास्त्रेण न दृष्ट। किं तु बहुव्रीहेर्गौणत्वात्सर्ववाचकत्वं न संभवतीति तदभावो दृष्ट इति नायमतिदिश्यते। "न बहुव्रीहौ"इति शास्त्र#ं त्वलौकिकवाक्ये निषेधकं , नतु बहुव्रीहावित्युक्तत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

आबाधे च ८।१।१०

आबाधनमाबाधः, पीडा प्रयोक्तृधर्मः, न अभिधेयधर्मः। तत्र वर्तमानस्य द्वे भवतः, बहुव्रीहिवच्चास्य कार्यं भवति। गतगतः। नष्टनष्टः। पतितपतितः। गतगता। नष्टनष्टा। पतितपतिता। प्रियस्य चिरगमनादिना पीड्यमानः कश्चिदेवम् प्रयुङ्क्ते प्रयोक्ता।

न्यासः

आबाधे च। , ८।१।१०

"आबाधनभावाधः" इति। भावे घञ्()। यद्यत्राबाधोऽभिधेयधर्म आश्रीयते, तदा बाधितपीडिताविशब्दानामेव द्विर्वचनं स्यात्(), न तु गतादिशब्दानाम्()। प्रयोक्तृधर्म आश्रीयमाणे सर्वत्र भवति। तस्माद्व्याप्तिव्यायात्? प्रयोक्तृधर्म एवाश्रीयते, इत्याह--"प्रयोक्तृधर्मः" इति। "तत्र वत्र्तमानस्य" इति। द्विर्वचनप्रतिपत्तिद्वारेण, बहुव्रीहिवद्भावप्रतिपत्तिद्वारेण च तत्प्रकाशनात्? तत्र तस्य वृत्तिर्वेदितव्या, न तु तदभिधानात्()। न हि गतादयः शब्दा कथञ्चिदाबाधनमभिदधति। चकारो वाक्यभेदमाचष्टे। तेन द्वयमत्र विधीयते--एकेन वाक्येन द्विर्वचनम्(), अपरेण च बहुव्रीहिवद्भावः। "गतगतः" इत्यादौ पूर्ववत्? सोर्लुक्()। "गतगता" इत्यादौ तु पुंवद्भावः पूर्ववदेव। "प्रियस्य गमनादिना" इत्यादि। एतेन प्रयोक्तृधर्मताऽबाधस्येति दर्शयति। आदिशब्देन विनाशादेग्र्रहणम्()॥

बाल-मनोरमा

आबाधे च , ८।१।१०

आबाधे च। आबाधः=पीडा। तदाह--पीडायामिति। गतगत इति। "प्रिया विना काल" इति शेषः। आबाधं दर्शयितुमाह--विरहादिति। स्त्रीवियोगादित्यर्थः। बहुव्रीहिवद्भावादिति। "गत" इत्यस्य द्विर्वचने सति बहुव्रीहिवत्त्वात्समुदायस्य प्रातिपदिकत्वेन सुपोर्लुकि समुदायात्सुबुत्पत्तिरित्यर्थः। गतगतेति। "ग्रिये"ति शेषः। इयमपि स्त्रीविरहात्पीड()मानस्यौक्तिः। एकस्या एव गमनकर्त्र्या द्विः कथनात्समानाधिकरणं स्त्रीलिङ्गमुत्तरपदमिति "स्त्रियाः पुंव"दिति पुंवत्त्वम्, बहुव्रीहिवत्त्वादुत्तरपदत्वस्यापि सत्त्वात्। तदाह--इह पुंवद्भाव इति।

तत्त्व-बोधिनी

आबाधे च १५९५, ८।१।१०

आबाधे च ष। इहेति। "बहुव्रीहि वद्भावा"दित्यनुषज्यते। तथा च "स्त्रियाः पुंव"दिति वर्तते। न च द्विरुक्तस्य परमुत्तरपदं नेति वाच्यं, "बहुव्रीहि व"दित्यतिदेशबलेनैव उत्तरपदत्वस्यापि लाभात्। ननु बहुव्रीहिवद्भावेनोत्तरपदत्वलाभे सति "नने"त्यत्र "नलोपो नञः" इथि कस्मान्न भवति। उच्यते---"न लोपो नञः"इत्यत्र उत्तरपदे इति [प्र]वर्तते, नञ इति च कार्यिणो निर्देशः, तत्र साक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते। यथा मद्रह्रदो भद्रह्रद इति। अत्र रेफस्य "अचो रहाभ्यामि"ति द्वित्वप्रसङ्गे आकरे उक्तं "नेमौ रहौ कार्यिणौ किं तु निमित्तमेतौ द्विर्वचनस्ये"ति। नन्वेवमपि "धूर्धूः" "पन्थाःपन्थाः" इत्यादौ "ऋक्पूरब्धू"रिति समासान्तः स्यादिति चेन्। "समासाच्च तद्विषया"दित्यतः समासादित्यनुवर्तमाने "समासान्ताः"इति पुनः समासग्रहणं हि समासाधिकारविहितो यः समासस्तत्परिग्रहार्थम्। तेनातिदेशिके समासे समासान्तानामप्रवृत्तिरति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

कर्मधारयवदुत्तरेषु ८।१।११

इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्यं भवति इत्येतद् वेदितव्यम्। कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि। सुब्लोपः पटुपटुः। मृदुमृदुः। पण्डितपण्डितः। पुंवद्भावः पटुपट्वी। मृदुमृद्वी। कालककालिका। कोपधाया अपि हि कर्मधारयवद्भावात् पुंवत्कर्मधारयः इति पुंवद्भावो भवति। अन्तोदात्तत्वम् पटुपटुः। पटुपत्वी। समासान्तोदात्तत्वम् अनेन एव विधीयते इति परत्वदाम्रेडितानुदात्तत्वं बाध्यते। अधिकारेणैव सिद्धे यतुत्तरेषु इति वचनं तद्विस्पष्टार्थम्।

न्यासः

कर्मधारयवदुत्तरेषु। , ८।१।११

कर्मधारयवत्? कार्यं भवतीत्यनेन कार्यातदेशोऽयमित्याचष्टे। कार्यातिदेशस्य फलमुत्तरत्र दर्शयिष्यते। "कर्मधारयवत्त्वे प्रयोजनम्()" इत्यादि। तत्र सुग्लुग्बहुव्रीहिवद्भावे, अस्मिन्नतिदेशे च साधारणं प्रयोजनम्()। पुंवद्भा वस्तु क्वचित्? साधारणम्(), क्वचिदसाधारणम्(); यत्र हि पुंवद्भावस्य प्रविषेधो नास्ति--पटुपट्वीत्यादौ, तत्र साधारणम्(), यत्र तु " न कोपधायाः" ६।३।३६ इत्यादिना पुंवद्भावप्रतिषेधोऽस्ति--कालककालिकेत्यादौ, तत्रा साधारणम्()। तथा हि यस्य हि पुंवद्भावः प्रतिविद्धस्तस्यापि "पुंवत्कर्मधारय" ६।३।४१ इत्यादिना कर्मधारये पुंवद्भावो विधीयते। अन्तोदात्तत्वं त्वसाधारणमेव। यस्मात्? कर्मधारय एव "समासस्य" ६।१।२१७ इत्यन्तोदात्तत्वं विधीयते, न बहुव्रीहौ; तत्र "बहुव्रीहौ प्रकृत्या पूर्वपदम्()" ६।२।१ इति पूर्वपदप्रकृतस्वरस्य समासान्तोदात्तस्यापवादस्य विधीनात्()। तत्र यदसाधारणं प्रयोजनं तदिममतिदेशं प्रयोजयति, नेतरत्()। तद्धि बहुव्रीहिवदित्यतिदेशस्यानुवृत्तावपि सिद्ध्यत्येव। सति त्वन्यार्थोऽस्यारम्भे बहुव्रीहिवदित्यतिदेशस्यानुवृत्तिरपार्थिका; अनेनैव साधारणस्यापि सिद्धत्वात्()। अतः सुब्लुगादिकमपि साधारणं कर्मधारयवत्त्वे प्रयोजनं न भवति। "पटुपट्वी" इति। "वोतो गुणवचनात्()" ४।१।४४ इति ङीष्()। स च पूर्वपदे पुंवद्भादेन निवत्र्तते। "कालककालिका" इति। अज्ञाताद्यर्थे "प्रागिवात्? कः" ५।३।७०, टाप्(), "केऽणः" ७।४।१३ इति ह्रस्वः, पूर्ववदित्त्वम्()। पुंवद्भावेन पूर्वपदे टाबित्त्वयोर्निवृत्तिः। कथं पुनरत्र पुंवद्भावः, यावता "न कोपधायाः" (६।३।३७) इत्यस्य प्रतिषेधः कृतः? इत्याह--"कोपधायाः" ["न कोपधायाः" इत्यादि--प्रा। मु। पाठ] इत्यादि। कर्मधारये हि "पुंवत्कर्मधारय" ६।३।४१ इत्यादिनां योगेन प्रतिषेधविषयेण पुंवद्भावो विहितः तेन कोपधाया अपि पुंवद्भावो भवत्येव। ननु चाभ्रेडितानुदात्तत्वमाष्टिकिमम्(), समासान्तोदात्तत्वं च षाष्ठिकम्(), अतः परत्वादाभ्रेडितानुदात्तत्वेनैव भवितव्यम्(); न चैवं सति कर्मधारयदित्यतिदेशस्य वैयथ्र्यं स्यात्(), तस्य प्रयोजनान्तरे चरितार्थत्वात्()? इत्यत

आह--"समासान्तोदात्तत्वमनेन" इत्यादि। शल्त्रातिदेशे हि शस्त्रेध्वतिदिष्टेषु तैरेव स्वदेशस्थैः कार्याणि क्रियन्त इत्याभ्रेडितानुदात्तस्य समासान्तोदात्तत्वात्? परत्वं स्यात्()। न चायं शास्त्रातिदेशः, किं तर्हि? कार्यातदेशः। कार्यातिदेशे सत्यतिदेशशास्त्रेणैव विधियते। तस्मादन्तोदत्तत्वेमेव परम्()। अतस्तस्मात्? परत्वादाभ्रेडितानुदात्तत्वं बाधते। ननु चान्तरेणाप्युत्तरग्रहणं यथा "प्रत्ययः" ३।१।१ इत्येवमादीनामधिकाराणामुत्तरत्रावस्थानं भवति, तथाऽस्यापि भविष्यति; अधिकाराणामुत्तरत्रानुधृत्तिदर्शनात्(), तत्किकमर्थम्? "उत्तरेषु" इति वचनम्()? इत्याह--"अधिकारेणैव" इत्यादि। अधिकाराणां क्वचिल्लक्षणत्वस्य व्यवहारः, यथा "शेषे" ४।२।९१ इत्यधिकारस्य लक्षणत्वमस्ति, तच्चाविस्पष्टम्(); अन्येष्वधिकारेषु "प्रत्ययः" ३।१।१ इत्येवमादिष्वदृष्टत्वात्()। तस्मादस्य विस्पष्टत्वं यथा स्यादित्येवमर्थमुत्तरेष्विति वचनम्()। एतद्धि लक्षणत्वमस्य मा भूदित्येवमर्थं क्रियते। यदि तु लक्षणस्याधिकारेष्वसम्भवः स्यात्(), उत्तरेष्विति वचनमनर्थकं स्यात्(); व्यात्र्याभावात्()। अथ वा--सिंहावलोकितव्यायस्येत्यव्याहारः। प्रायेण ह्णिकारणमुत्तरत्रानुवृत्तिर्दुष्टेति सिहावलोकितन्यायस्याविस्पष्टता; केषुचित्? प्रत्ययादिष्वदृष्टत्वात्()। तस्मात्? तस्य विस्पष्टीकरणार्थमुत्तरेष्विति वचनम्()। यदि सिंहावलोकितन्यायेन पूर्वत्रानुवृत्तेरधिकारणां न सम्भव एव स्यात्(), उत्तरेष्विति वचनमनर्थकं स्यात्(); व्यावर्त्याभावात्()॥

बाल-मनोरमा

कर्मधारयवदुत्तरेषु , ८।१।११

कर्मधारयवदुत्तरेषु। "कार्यं स्या"दिति शेषः। कर्मधारयवत्त्वस्य फलमाह--प्रयोजनमिति। सुब्लोपादीनां प्रत्येकान्वयाभिप्रायमेकवचनम्। अन्तोदात्तत्वानीति। "अनुदात्तं चे"त्यधिकृतमपि भाष्यप्रामाण्यान्नात्र सम्बध्यत इति भावः।

तत्त्व-बोधिनी

कर्मधारयवदुत्तरेषु १५९६, ८।१।११

कर्मधारयवदुत्तरेषु। अधिकरेणैव सिद्धे "उत्तरेषुटैति वचनं विस्पष्टार्थमिति वृत्तिः।

---

सूत्रम्

काशिका-वृत्तिः

प्रकारे गुणवचनस्य ८।१।१२

प्रकारो भेदः सादृश्यं च। तदिह सादृश्यं प्रकारो गृह्यते। प्रकारे वर्तमानस्य गुणवचनस्य द्वे भवतः। पटुपटुः। मृदुमृदुः। पण्डितपण्डितः। अपरिपूर्णगुणः इत्यर्थः। परिपूर्णगुणेन न्यूनगुणस्य उपमाने सत्येवं प्रयुज्यते। जातीयरो ऽनेन द्विर्वचनेन बाधनं नेष्यते। पटुजातीयः, मृदुजातीयः इत्यपि हि भवति। तत् कथम्? वक्ष्यमाणम् अन्यतरस्यांग्रहणम् उभयोः शेषो विजायते। प्रकारे इति किम्? पटुर्देवदत्तः। मुणवचनस्य इति किम्? अग्निर् माणवकः। गौर्वाहीकः। यद्यप्यत्र अग्निशब्दो गोशब्दश्च मुख्यार्थसम्बन्धादवभृतभेदं तैक्ष्ण्यजाड्यादिकमर्थान्तरे गुनविशेषम् एव प्रतिपादयितुं प्रवृत्तः, तथापि सर्वदा गुणवचनो न भवति इति न द्विरुच्यते। आनुपूर्व्ये द्वे भवत इति वक्तव्यम्। मूले मूले स्थूलाः। अग्रे ऽग्रे सूक्ष्माः। ज्येष्ठं ज्येष्ठं प्रवेशय। स्वार्थे ऽवधार्यमाणे ऽनेकस्मिन् द्वे भवत इति वक्तव्यम्। अस्मात् कार्षापणादिह भवद्भ्याम् माषं माषं देहि। स्वार्थे एतद् द्विर्वचनम्, न वीप्सायाम्। अत्र हि द्वावेव माषौ दीयेते, न सर्वे कार्षापणसम्बन्धिनो माषाः, तेन वीप्सा न विद्यते। अवधार्यमाणे इति किम्? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि, द्वौ माषौ देहि, त्रीन् वा माषान् देहि। अनेकस्मिनिति किम्? अस्मात् कार्षापणादिह भवद्भ्यां माषमेकं देहि। चापले द्वे भवत इति वक्तव्यम्। सम्भ्रमेण

प्रवृत्तिश्चापलम्। अहिरहिः, वुध्यस्व बुध्यस्व। नावश्यं द्वावेव शब्दौ प्रयोक्तव्यौ, किं तर्हि, यावद्भिः शब्दैः सो ऽथो ऽवगम्यते तावन्तः प्रयोक्तव्याः। अहिरहिरहिः, बुध्यस्व बुध्यस्व बुध्यस्व इति। क्रियासमभिहारे द्वे भवत इति वक्तव्यम्। स भवान् लुनीहि लुनीहि इत्येव अयं लुनाति। आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्। भुक्त्वा भुक्त्वा व्रजति। भोजं भोजं व्रजति। नित्य इत्येव सिद्ध इति तत्र उक्तम्। डाचि द्वे भवत इति वक्तव्यम्। पटपटाकरोति। पटपटायते। अव्यक्तानुकरणे डाजन्तस्य द्विर्वचनम् इष्यते। इह न भवति, द्वितीयाकरोति, तृतीयाकरोति। तदर्थं केचित् डाचि बहुलम् इति पठन्ति। पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम्। पूर्वं पूर्वं पुष्प्यन्ति। प्रथमं प्रथमं पच्यन्ते। आतिशयिको ऽपि दृश्यते, पूर्वतरं पुष्प्यन्ति, प्रथमतरं पच्यन्ते इति। डतरडतमयोः समसम्प्रधारणयोः स्त्रीनिगदे भवे द्वे भवत इति वक्तव्यम्। उभाविमावाढ्यौ। कतरा कतरा अनयोराढ्यता। सर्व इमे आढ्याः। कतमा कतमा एषाम् आढ्यता। डतरडतमाभ्यामन्यत्र अपि हि दृश्यते। उभाविमाउ आढ्यौ। कीदृशी कीदृशि अनयोराढ्यता। तथा स्त्रीनिगदाद्भावातन्यत्र अपि हि दृश्यते, उभाविमावाढ्यौ, कतरः कतरो ऽन्योर्विभवः इति। कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम्। यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य अन्यमन्यमिमे ब्राह्मणा भोजयन्ति, अन्योन्यमिमे ब्राह्मणा भोजयन्ति। अन्योन्यस्य ब्राह्मणा भोजयन्ति। इतरेतरं भोजयन्ति। इतरेतरस्य भोजयन्ति। स्त्रीनपुंसकयोरुत्तरपदस्य च अम्भावो वक्तव्यः। अन्यो ऽन्यामिमे ब्राह्मण्यौ भोजयतः। अन्योन्यं भोजयतः। इतरेतरां भोजयतः। इतरेतरं भोजयतः। अन्योन्यामिमे ब्राह्मणकुले भोजयतः। इतरामिमे ब्राह्मणकुले भोजयतः। इतरेतरमिमे ब्राह्मणकुले भोजयतः।

न्यासः

प्रकारे गुणवचनस्य। , ८।१।१२

"प्रकारो भेदः। सादृश्यं च" इति। उभयन्नापि प्रकारशब्दस्य प्रयोगदर्शनात्()। तत्र भेदे प्रयोगो दृश्यते--बहुभिः प्रकारैर्भुङ्क्ते। बहुभिर्भेदैः, विशेवैर्भुङ्क्त इत्यर्थः। सादृश्येऽपि--बाह्णप्रकारोऽयं माणवकः। ब्राआह्णसदृश इत्यर्थः। "तदिह सादृश्यं प्रकारो गृह्वते" इति। कुत एतत्()? लक्ष्यानुरोधात्()। न हि कृतद्विर्वचनात्? गुणवचनात्? पदादिह भेदो गम्यते, किं तर्हि? सादृश्यम्()। अत्र च शब्दशक्तिस्वाभाव्यं हेतुः। "प्रकारे वत्र्तमानस्य" इति द्विर्ववचनप्रतिपत्तिद्वारेण तद्द्योतनात्? तत्र तस्य वृत्तिर्विज्ञेया। "परिपूर्णगुण" इत्यादि। एतेनोदाहरणे गुणवचनत्य सादृदये वृत्ति दर्शयति। उपमानं हि सादृश्यम्()। परिपूर्णः=सकलः पाटवादिर्गुणो यस्य स तथोक्तः। स एव न्यूनः=असकलोऽपरिसमाप्तो यस्य स न तथोक्तः। जातीयरपि प्रकारवचन एव विधीयत इति नाप्रप्ते तस्मिन्निदामारभ्यत इति तद्बाधनं प्राप्नोति? इति यश्चोदयेत्(), तं प्रत्याह--"जातीयरोऽनेन बाधनं नेष्यते" इति। कथं पुनरिष्यमाणमपि बाधनं न भवितव्यति? वक्ष्यमाणस्यान्यतरस्यांग्रहणस्योभयोरपि योगयोः शेषभूतत्वात्()। किं पुनः कारणं बाधनं नेष्यते? इत्याह--"पटुजातीयो मृदुजातीय इत्यपि [इत्यादि भवतीति"--प्रांउ।पाठः] हि भवति" इति। यस्तु "पटुपटुजातीयो मृदुमृदुजातीयः" इति प्रायेण पुस्तकेषु पाठः स प्रमादकृतः। कुतः? एकस्य कार्यिणोऽनेकेषां कार्याणां प्राप्तौ बाध्यबाधकभावो भवति। इह तु पटुदटुमृदुमृदुशब्दाभ्यामेव प्रकारस्य द्योतितत्वात्? तयोः पुनर्द्विर्वचनं न प्रप्नोति, नापि जातीयर्();
तस्मादपपाठोऽयम्()। "अग्निर्माणवकः, गौर्वाहिकः" इति। अग्निशब्दो गोशब्दश्चान्नाप्रकारे वत्र्तते। तथा ह्ग्निना माणवकस्य सूदृश्यं गम्यते, गवा च चाहीकस्य। न हि तौ गुणवचनौ, किं तर्हि? द्रव्यवचनौ;
माणवकवाहीकयोद्र्रव्यत्वात्()। ननु चमावपि मणवचनावेव, तथा हि--यज्जातयस्तैरुण्यादिर्गुणो यह्लो दृष्टस्तज्जातीयमेव गुणविशेषमुपादाय सोऽयमित्यभेदोपचारेण सम्बन्धेनोपमानोपमेयभावेन वाऽग्निशब्दोऽयं माणयके वत्र्तते; तमेव गुणविशेषं प्रतपादयितुं प्रवृत्तत्वात्()। एवं गोशब्दोऽपि यज्जातीयो जाड()आदिर्गुणः सास्नादिमति दृष्टः, तज्जातीयमेद गुणविशेषमुपादाय पूर्वोक्तयोः सम्बन्धयोरन्यतरेण सम्बन्धेन वाहोके वत्र्तते, तस्यैव गुणविशेषस्य

प्रतिपादनाय। तस्माद्गुणविशेषे प्रतिपादयितुं प्रवृत्ताविमावपि गुणवचनावेव, इत्याह--"यद्यप्यत्र" इत्यादि। यतः शब्दात्? श्रुतिमात्रेण योऽर्थः प्रतियते स तस्य मुख्योऽनपचरितोऽर्थः। स्त्वभेदोपचारादिना निमित्तन कथञ्चिद्यत्वेन प्रतीयते, स गौण इति। उपचरित इत्यर्थः। अग्निशब्दात्? श्रुतिमात्रेण पावकः प्रतीयते, गोशब्दाच्च सास्नादिमान्()। अतोऽग्निशब्दस्य पावको मुख्यार्थः, गोशब्दस्यापि वाहिकः। मुख्येनार्थेन यावकादिना गौणस्य माणवकादेः सम्बन्धः। पूर्वोक्तयोः सम्बन्धयोरन्यतरो मुख्यार्थसम्बन्धः। तेन हेतुना करणेन वाऽवधतो निश्चितो भेदो विशेषो यस्य तैक्ष्ण्यजाड()आदेर्गुणस्य स तथोक्तः। कथं पुनस्तेन सम्बन्धेन तस्य निश्चयो भवति? तत्प्रतीनी तत्प्रततेः। स हि गुणविशेषस्तस्य सम्बन्धस्य हेतुः; तस्मिन्? सति तत्सद्भावात्()। अतः सम्बन्धो द्विप्रकारोऽपि प्रतीतः सन्? तत्प्रतीतिंजिनयति; धूम इवाग्नौ। तमेवंविधं गुणविशेषमेव यद्यपि मुख्यादर्थादन्यस्मिन्? गौणेऽर्थे गोशब्दोऽग्निशब्दश्च प्रतिपादयितुं प्रवृत्तः, तथापि सर्वकालं गुणवचनो न भवतीति न तद्()द्विरुच्यते, तथा हि--यदासावमुख्येऽर्थे साधर्म्येण माणवके वाहीके च प्रयुज्यते, तदा गुणवचनो न भवतीति न तद्()द्विरुच्यते, तथा हि--यदासावमुख्येऽर्थे साधर्म्येण माणवके बाहीके च प्रयुज्यते, तदा गुणवचनो भवति। यदा च वह्नौ सास्नादिमति च, तदा जातिवचनो द्रव्यवचनो वा। तत्र यदाऽग्निशब्दोऽग्नित्वे वत्र्तते गोशब्दोऽपि गोत्वे, तदा जातिवचनौ भवतः। यदा तु जातिवचनो द्रव्यवचनो वा। तत्र यदाऽग्निशब्दोऽग्नित्वे वत्र्तते गोशब्दोऽपि गोत्वं, तदा जातिवचनौ भवतः। यदा तु जात्युपलक्षिते जतिमति द्रव्ये तदा द्रव्यवचनौ। तस्मात्? सर्वकालमगुणवचनत्वान्न भवति तयोर्द्विर्वचनम्()। एतच्च गणवचग्रहणाल्लभ्यते। प्रकारे हि वत्र्तमानः शब्दः सर्व एव गुणवचनः सम्पद्यते, उच्यते चेदं वचनम्? गुणवचनस्येति, तत्र सर्वप्रकर्षावगतिर्विज्ञायते--साधीयान यो गुमवचन इति। कश्च साधीयान्? गुणवचनः? यः [नास्तीदं वाक्यं भुद्रिते] सर्वदा गुणवचनः। यदि तर्हि सर्वदा यो गुणवचनस्तस्य द्विर्वचनेन भवितव्यम्(); तदा पटुशब्दस्यापि द्विर्वचनं न प्राप्नोतीति, सोऽपि यदा पाटवमात्रे गुणविशेषे वत्र्तते तदैव गुणवचनः; यदा तु तद्वति द्रव्ये तदा द्रव्यवचन एव? नैतत; न हि विशेषणमनभिदधता विशेष्यं शक्यमभिधातुम्()। अतो विशेष्यं द्रव्यमभिदधता नियोगतो विशेषणमव्यभिधेयम्()। तस्मस्द्द्रव्येऽपि वत्र्तमानः पटुशब्दस्तद्विशषणमपि मुणमभिदधात्येव। इयांस्तु विशेषः--गुणमुपसर्जनीभूतमभिदधाति, द्रव्यं तु प्रधानभूतमिति। आनुपुव्र्ये, इत्यादि। अवीप्सार्थमिदम; वीप्साया असम्भवात्()। तल्यजातीयानां हि भिन्नानां वीप्सा भवति, यथा--यामाणाम्()। सर्वे, हि वे ग्रामत्वजास्यैकयाऽध्यासितत्वात्? तुल्युजातीया दिग्देशादिभेदेन भिन्नाः। "मूले मूले स्थूलाः" इत्यादौ तु देण्? नडादोनां ["नलादीनाम्()--प्रांउ।पाठः] ये भागस्तेषामेकमेव मुख्यं मूलं यस्याधोभागान्तरं न सन्निविष्टम्()। एवकेकमेव च मुख्यमग्रं ग्रस्पोपरिभागान्तरं न सन्निविष्टम्()। तथा हि वेणोर्मूलमित्यक्ते यस्याधोभायान्तरं नास्ति तत्रैव प्रतीतिरुपजायते। तथा वेणोरग्रमित्युक्ते यस्योपरिभागान्तरं नास्ति तत्रेव ग्रतीतिरुपजायते नतरेव। यस्तु तेषु मूलव्यपदेशोऽग्रव्यपदेशश्च, सोऽपेक्षाकृतः, अपरि सन्निविष्टमपेक्ष्य मूलवयपदेशः, अधःसन्निविष्टमपेक्ष्याग्रमिति। तस्माद्यथा सर्वे ग्रामास्तुल्यजातीया न तथा वेणुभागः भवन्ति। ग्रामाणां हि न किञ्चिदपेक्षाकृतं ग्रामत्वम्? भागानां त्वेकस्यैव मुख्यं मूलत्वमग्रत्वञ्चानपेक्षाकृतम्()। अनेकेषां भागानां तूभयम्()। यत्तदपेक्षाकृतमेव तस्माद्भिन्नजातीयः भागाः। न च भिन्नजातीयानां वीप्सा भवति, यथा--सास्नादिमतां गदां वाहिकानाञ्च। न हि गोगौरित्यक्ते वाहीकगतापि दीपासा गम्यते। अप चैतावातिहार्थो विवक्षितः---आनुपूव्र्येण वेणु नडादयः ["नलादयः"---प्रांउ।पाठः] स्थूलाः सूक्ष्मा वेति प्रतियते; न तु वीप्सा। "ज्र्यष्ठं ज्येष्ठं प्रदेशय" इति। अत्रानुपूव्र्यमात्रं विवक्षितम्()। यः सर्वेयां ज्येष्ठस्त तावत्प्रदेशय, ततसतदन्येषां यो ज्यष्ठन्तं प्रदेशयेति। अन्यथा यद्यत्र ज्येष्ठानां वीप्सा स्यात्? सर्वकनीयसः प्रवेशो न स्यात्(); तस्य वीप्सयाऽविवयीकृतत्वात्(), न ह्रसौ ज्येष्ठः। तस्मादत्रापि नास्ति वीप्सा। तेनानुपूव्र्ये द्वे भवत इत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--यथा "शेषे" ४।२।९१ इति लक्षणञ्च, अधिकारश्च; तथा "सर्वस्य द्वे" ८।१।१ इत्येतदपि लक्षणमधिकारश्च। तेनानुपूव्र्ये द्वे भवत इत्युत्तरत्रापि द्विर्वचनविधौ यथायोगमेव व्याख्यानं कत्र्तव्यम्()। यदि तर्हि "सर्वस्य द्वे इत्येतल्लक्षणमपि, एवं सति "नित्यवीप्सयोः"

८।१।४ इत्यादेर्वेयर्थत्य न भवति, तत्रैव ["तथा हि"--प्रंउ।पाठः] "नित्यदीप्सयोः" इत्येसादीनाम प योगानाम्()। "अस्मात्? काषपिणादिह भवद्भ्यां मा मावं देहि" इत। अत्र द्वावेवेत्यवधार्यते। द्वावेव देहि, नैकम्(), नापि बहुनित्यर्थः। विनापि ह्येवकारप्रयोगेणावधारणे गम्यते; विवक्षितत्वात्(), यथा--पार्थो धनुर्धर इति। ननु किं पुनः कारणे दीप्सा न सम्भवति? इत्याह--"अत्र हि" इत्यादि। अनेन वीप्साया अभाव दर्शयति। कार्षापणौ ह्यनेकमावसमुदायः। न च सर्वे मावा दानक्रियया व्याप्तुमिष्यन्ते, अपि तु द्वादेदेति नास्त्यतर वीप्सा--माषं देहि, द्वौ माषौ देहि, क्रीन्? मावान्? देहीति। एकं माषं देहि, द्वौ वा, त्रीन वा--इत्ययमत्रार्थो विवक्षितः, न त्ववधारणमिति द्विर्वचनं न भवति। "सम्भ्रमेण" इति। त्वरया। "प्रवृत्तिः" इति। प्रवत्तनम्()। "अहिरहिर्बुध्यस्व बुध्यस्व" इति। यद्ययं न वुध्यतेऽह चर्व नावबोधयाम्(), ततो नून दृष्ट [दष्टः--प्रांउ।पाठ] एवायमहिनेति मत्वा सम्भ्रमेणैवं वाक्य प्रयुक्ते। "क्रियासमभिहारे द्वे भवत इति वक्तव्यम्()" (वा।८८६), "आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्()" (वा।८८७) इत्येवं वाक्यद्वयं लोडादिभिरेव तन्नित्यताया द्योतितत्वाद्()द्विवचनं न प्राप्नोतीत्युपन्यस्तम्()। "नित्य" इत्यादिना "नित्यवीप्सयोः" ८।१।४ इत्यनेनैवात्र द्विर्वचनं सिद्धमिति दर्शयति। यथा च सिद्ध तथा तत्रैव "क्त्वाणगलोर्लोटश्च द्विर्वचनापेक्षया इत्यादिना ग्रन्थेन प्रतिपादितम्()। पटपटाकरोति" इति। पटच्छपब्दस्य डाचि विषयभूतेऽनुत्पन्न एव द्विर्वचनम्()। ततः "अव्यक्तानुकरणाद्व्यर्जवरार्धादनितौ डाच" ५।४।५७, नित्यमाम्रीडते डाजि" ६।१।९६ इति तकारस्य पररूपत्वम्()। "पटपटायते इति। "लोहितादिडाज्भ्यः क्यष" , "वा क्यषः" १।३।९० इत्यात्मनपदम्()। "ढाजन्तस्य" इति। भाविडाजन्तमभिप्रेत्यैवमुक्तम्()। तस्मात्? डाचि विषयभूतेऽनुत्पन्न एवैतद्()द्विर्वचनमिष्यते। अत एव वृत्तिकारेण "अव्यक्तानुकरण" ५।४।५७ इत्यादौ सूत्रे उक्तम्()--डाचीति विषयसप्तमीयमिति। अत्र "नित्यमाम्रेडिते डाचि" ६।१।९६ इति पररूपविधानं ज्ञापकम्()। तत्र ह्र इति, अन्तस्येति, च वत्र्तते। यदि डाचि परभूते द्विर्वचनमिष्यते, ततो डाचि विहिते पटच्छब्दस्य नित्यत्वाट्()टिलोपेनैव प्राग्भवितव्यम्(); तथा च सत्यच्छब्दाभावात्? तत्? पररूपं नोपपद्यते। तस्माद्विषयसप्तमीयम्()। एवं कृत्वा "नित्यमाम्रेडिते डाचि" (६।१।१००) इत्यत्र यदुक्तम्()--"प्राक्? टिलोपाद्()द्विर्वचनमिष्यते" इति, तदुपपन्नं भवति। एवं हि प्राक्? टिलोपाद्()द्विर्वचनं सिध्यति; यदि डाचि विषयभूते तत्र तद्विधीयते; अन्यथा हि यदि तस्मिन्? परभूते विधीयेत, ततो नित्यत्वात्? प्राक्? टिलोप एव स्यात्(), न तु द्विर्वचनम्()। "द्वितीयाकरोति" इत्यादि। "कृञो द्वितीयतृतीय" ५।४।५८ इत्यादिना डाच्()। "तदर्थम्()" इति। अव्यक्तानुकरणडाजन्तस्यैव द्विर्वचनं यथा स्यादित्येवमर्थम्()। "केचित्()" इति वचनात्? केचिद्बहुलमिति न पठन्तीत्युक्तं भवति। तेषामयमभिदप्रायः--"सर्वस्य द्वे" इत्यतो विभाषाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेनाव्यक्तानुकरणडाजन्तस्यैवात्र द्विर्वचनं भविष्यति, नान्यस्येति। ततो नार्थो बहुलग्रहणस्येति। "पूर्वप्रथमयोः" इत्यादि। "अर्थातिशयविवक्षायाम्()" इति। पूर्वप्रथमशब्दस्य वाच्यस्यातिशयः प्रकर्षः, तस्य विवक्षा वक्तुमिच्छा, तस्यां द्वे भवत इत्येतर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्वमेव कृतम्()। "नाप्राप्ते आतिशायिके द्विर्वचनमिदमारभ्यमाणं तस्य बाधकं प्राप्नोति" इति यो मन्येत, तं प्रत्याह--"आतिशायिकोऽप दृश्यते" इति। कथम्()? "सर्वस्य द्वे" ८।१।१ इत्यनेनैव द्विर्वचनं विधीयते। अत्र विभाषाधिकाराद्विकल्पेन। तेन यदा नास्ति द्विर्वचनं तदातिशायको भवति। "डतरडतमयोः" इत्यादि। "किंयत्तदोः" ५।३।९२ इत्यादिना इतज्विहितः। " वा बहूनां जातिपरिप्रश्ने" ५।३।९३ इत्यादिना डतमच्()। समेन गुणेनाढ()त्वादिना निरूपणायोभादिमावाढ()आवित्येवमादिप्रकारा सा सम्प्रधारणा। स्त्रीलिङ्गशब्धः स्त्रीलिङ्गयोगात्? स्त्रीत्युक्तः। निगद्यतेऽनेनेति निगदः--"पुंसि संज्ञायां घः प्रायेण" ["प्रायेण"--नास्ति मुद्रिते] ३।३।११८ इति घः। स्त्रीनिगदो यस्य स स्त्रीनिगदो भावः। डतरडतमान्तयोः स्त्रीनिगदे भावे वत्र्तमानयोः शब्दयोः सम्प्रधारणायां विषयभूतायां द्वे भवतः। डतरडतमग्रहणमत्रोपलक्षणार्थ द्रष्टव्यम्()। अत एव वक्ष्यति--"डतरडतमान्यामन्यत्रापि दृश्यते" ["हि" इल्यधिकम्()--काशिका] इति। इहाढ()त्वं कस्यचित्? साधनसम्बन्धकृतम्(), कस्यचिद्यत्नकृतम्(), कस्यचिद्भाग्यसम्पत्कृतम्। तत्रोभाविमावाढ()आवित्युक्ते प्रतिपत्ता किंकृतमनयोराढ()त्वमिति प्रतिपद्यमानः कतराकतराऽनयोराढ()तेति वाक्यं प्रयुङ्क्ते, तदाढ()ता विभूतिपर्यायः

स्त्रीनिगदो भावः। तत्र च डतरडतमान्ते वत्र्तते; तां प्रष्टुं प्रवर्त्तितत्वात्()। "कर्मव्यतिहारे" इत्यादि। कर्मव्यतिहारः क्रियाविनिमयः। एकस्यान्यभोजनापदरस्यापीतरो भोजनादिः। समासवद्भावोऽनेन बहुलं विधीयते। द्विर्वचनं तु "सर्वस्य द्वे" ८।१।१ इत्यनेनैव सिद्धम्()। स च समासवद्भावो बहुलवचनादन्योऽन्यशब्दे न भवत्येव। इतरेतरशब्दे तु नित्यम्()। असमासपक्षे पूर्वपदस्य प्रथमैकवचनं कत्र्तव्यम्()। "अन्योऽन्यमिमे ब्राआह्मणा भोजयन्ति" इति। अन्यमित्यस्य द्वितीयैकवचनान्तस्य द्विर्वचनम्()। अत्र समासवद्भावो नास्तीति पूर्वपदस्य प्रथमैकवचनम्()। तस्य च "ससजुषो रुः" ८।२।६६, "अतो रोरप्लुतादप्लुते" ६।४।११३ इत्युत्वम्(); "आद्गुणः" ६।१।८४, "एङः पदान्तादति" ६।१।१०५ इति पूर्वरूपत्वम्()--एते विधयो विधेयाः। "अन्योऽन्यस्य" इति। षष्ठ()न्तस्य द्विर्वचनम्()। अन्योऽन्यसम्बन्धिनं पुत्रादिकं भोजयन्ति। अन्योऽप्यस्येत्यर्थः। "इतरेतरं भोजयन्ति" इति। द्वितीयान्तस्य द्विर्वचने कृते द्वितीयैकवचनम्(), अमि पूर्वत्वम्? ६।१।१०३। इतरेतरस्य" इति। षष्ठ()न्तस्य द्विर्वचनम्()। सुब्लुकि कृते समासप्रातिपदिकत्वात्? पुनः षष्ठ()एकवचनं भवति। "स्त्रीनपुंसकयोः" इत्यादि। स्त्रीनपुंसकयोर्यत्? सर्वनाम कर्मव्यतिहारे वत्र्तते तदुत्तरपदस्य विकल्पेनाम्भावो वक्तव्यः। उत्तरपदस्येत्यवयवसम्बन्धे षष्ठी, तेनोत्तरपदस्य या विभक्तिरवयवभूता तस्या अयमादेशो भवति। स्थाने षष्ठ()आं ह्रस्यामनेकाल्त्वात्? सर्वादेशः स्यात्()। "अन्योन्यामिमे ब्राआह्मण्यो भोजयतः" इति। अन्यामित्यस्य द्विर्वचनम्(), विभक्तेराम्भावः, पूर्वपदस्य बहुलवचनाध्यस्वत्वम्(), पूर्ववद्रुत्वादि। "अन्योऽन्यम्()" इत्यत्र उत्तरपदस्यापि पूर्ववद्? ह्रस्वत्वादिः। "इतरेतरां भोजयतः" इति। समासवद्भावे सति सर्वनाम्नो वृत्तिमात्रे पुंवद्भावेन (जैन।वृ।१०३) टापो निवृत्तिः। एवं "इतरेतरम्()" इत्यत्रापि॥

बाल-मनोरमा

प्रकारे गुणवचनस्य , ८।१।१२

प्रकारे गुणवचनस्य। प्रकारशब्दः सादृश्ये वर्तते, व्याख्यानादित्यभिप्रेत्याह--सादृश्ये द्योत्य इति। गुणवचनशब्देन "आकडारा"दिति सूत्रस्थभाष्यपरिगणिताः शब्दा गृह्रन्त इति "वोतो गुणवचना"दित्यादौ प्रपञ्चितमिदम्। तेनेति। कर्मधारयवत्त्वेनेत्यर्थः। पुंवद्भाव इति। "पुंवकर्मधारये"त्यनेने"ति शेषः। पटुपट्वीति। पट्वीशब्दस्य द्विर्वचने कर्मधारयवत्वात् "पुवत्कर्मधारये"ति पूर्वखण्डस्य पुंवत्त्वे रूपमिति भावः। यद्यपि बहुव्रीहिवत्त्वेऽपि "स्त्रियाः पुंव"दिति पुंवत्त्वादिदं सिद्धं, तथापि कारिकेत्यादिकोपधादिष्वपि पुंवत्त्वार्थं "कर्मधारयव"दिति वचनमिति भावः। पटुपटुरिति। "वोतो गुणवचना"दिति ङीषभावे पुंसि च द्विर्वचने रूपम्। पटुसदृश इति। "इत्यर्थ" इति शेषः। फलितमाह--ईषत्पटिरिति। इह गुणवचनशब्दस्य गुणोपसर्जनद्रव्यवाचित्वमेवेति भ्रमं निरस्यति--गुणोपसर्जनेति। शुक्लशुक्लं रूपमिति। शुक्लसदृशमित्यर्थः। ईषच्छुक्लमिति यावत्। एवं शुक्लशुक्लः पट इति बोध्यम्।

आनुपूव्र्ये इति। अत्र वार्तिके "कर्मधारयव"दिति न सम्बध्यते, तदुदाहरणे भाष्ये सुब्लोपाऽदर्शनादित्यभिप्रेत्योदाहरति--मूलेमूले इति। पूर्वपूर्वो मूलभाग उत्तरोत्तरमूलभागापेक्षया स्थूल इति। यावत्।

संभ्रमेणेति। वार्तिकमिदम्। संभ्रमः=भयादिकृता त्वरा, तेन प्रवृत्तौ गम्यमानायां यथेष्टम्िच्छानुसारेण अनेकधाशब्दः प्रयोक्तव्य इति वक्तव्यमित्यर्थः। अनेकधेत्युक्तेद्र्वे इति निवर्तते। "यथेष्ट"मित्युक्तेरसकृत्त्वेऽप्येकस्य प्रयोगः। बोधात्मकफलपर्यवसायित्वाच्छब्दप्रयोगस्येत्यर्थः। एतच्च भाष्ये स्पष्टम्। अत्रापि कर्मधारयवत्त्वानतिदेशान्न सुब्लुक्, भाष्ये तथैवोदाहरणात्।

क्रियासमभिहारे चेति। वार्तिकमिदम्। "द्वे स्त" इति शेषः। पौनःपुन्यं भृशत्वं च क्रियासमभिहारः। लोडन्तविषयमेवेदम्। "क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमो"रिति सूत्रभाष्ये क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे भवत इति वक्तव्यमिति पाठमभिप्रेत्योदाहरति--लुनीहिलुनीहीत्येवायं लुनातीति। "लूञ् छेदने" अस्मात् "क्रियासमभिहारे लोट्,

लोटो हिस्वौ" इति लोट्। तस्य हीत्यादेशः। श्नाविकरणः। "लुनीही"त्यस्य अनेन द्विर्वचनम्। "यथाविध्यनुप्रयोगः पूर्वस्मि"न्नित्यनुप्रयोगः। तस्माल्लडादयः। अतिशयेन पुनर्वा लवनं लुनीहीति द्विरुक्तस्यार्थः। एककर्तृकं लवनमनुप्रयोगस्याऽर्थः। इतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयतीत्यादि मूल एव लकारार्थप्रक्रियायां स्फुटीभविष्यति। तथा च अतिशयितमेककर्तृकं लवनमिति फलितोऽर्थः। नित्येति। "नित्यवीप्सयो"रिति पौनः पुन्ये द्विर्वचने सिद्धेऽपि भृशार्थे द्विर्वचनार्थमिदं वार्तिकमित्यर्थः। नन्वस्य भृशार्थ एव द्विर्वचनफलकत्वे "भृशे चे"त्येव सिद्धे "क्रियासमभिहारे" इति व्यर्थमित्यत आह--पौनःपुन्येऽपीति। लुनीहि--लुनीहीत्यत्र पौनः पुन्ये लोटो द्विर्वचनस्य च समुच्चयार्थमिति यावत्। अन्यथा--पौनःपुन्येऽपीति। लुनीहि--लुनीहीत्यत्र पौनःपुन्ये द्विर्वचनस्य च समुच्चयार्थमिति यावत्। अन्यथा लोटैव पौनःपुन्यस्य द्योतितत्वात्तत्र नित्यवीप्सयोर्द्विर्वचनस्य प्रवृत्तिर्न स्यादित्यर्थः। एवं च "धातोरेकाचः" इति पौनः पुन्ये यङन्ते "पापच्यते" इत्यादौ न द्विर्वचनमित्यन्यत्र विस्तरः।

कर्मव्यतिहारे इति। क्रिया विनिमयः=कर्मव्यतिहारः, तस्मिन्गम्ये सर्वनाम्नो द्वे स्तः। ते च द्विरुक्ते पदे बहुलं समासवदित्यर्थः। अत्र "बहुल"मिति समासवदित्यत्रैवान्वेति। द्विर्वचनं तु नित्यमेव। अन्यपरयोरिति। अन्यशब्दपरशब्दयोरेव बहुलं समासवत्त्वम्, इतरशब्दस्य तु नित्यमेवेत्यर्थः। अत एव अन्यशब्दस्य समासवत्त्वरहितमेव, इतरशब्दस्य तत्सहितमेवोदाहरणं भाष्ये दृश्यते। तथा "परस्परोपपदाच्चे"ति वार्तिकप्रयोगात्परशब्दस्यापि समासवत्त्वाऽभावो गम्यत इति भावः। एवंच क्रियासमभिहारे अन्यशब्दस्य परशब्दस्य च नित्यद्विर्वचनम्। द्विरुक्तयोस्तु समासवत्त्वं बहुलम्। इतरशब्दस्य तु तदुभयमपि नित्यम्। एतत्रयव्यतिरिक्तसर्वनामशब्दस्य तु नेदं द्वित्वं बहुलग्रहणादिति स्थितिः।

असमासवद्भावे इति। इदमन्यपरशब्दयोरेव, इतरशब्दस्य समावत्त्वस्यैवोक्तत्वात्। सुपः सुरिति। सु"बिति प्रत्याहारः। सप्तानामपि विभक्तीनां पूर्वपदस्थानां प्रथमैकवचनं सु इत्यादेशो वाच्य इत्यर्थः। इदं द्वित्वादिविधानं प्रथमैकवचनमात्र विषयमिति केचित्। तदेतद्भाष्यविरुद्धं, भाष्ये द्वितीयादिविभक्तेरूदाह्मतत्वादित्यभिप्रेत्य द्वितीयादिविभक्तीरुदाहरति--अन्योन्यं विप्रा नमन्तीत्यादि। इह अन्यम् अन्यौ इत्यादीनां द्वित्वे पूर्ववत्सुपः सुः। प्रथमैकवचनस्यैवेदं द्वित्वादीत्येतन्न कविसंमतमित्याह--अन्योन्येषामित्यादि, माघ इत्यन्तम्। "परस्पर"मित्यत्र विसर्गस्य सत्त्वापवादमुपध्मानीयमाशङ्क्य आह--कस्कादित्वादित्यादि। इतरेतरमिति। इतरः इतरावित्यादीनां द्वित्वे समासवत्त्वात्, सुपोर्लुकि समुदायात्पुनः सुबुत्पत्तिरिति भावः।

स्त्रीनपुंसकयोरिति। स्त्रीनपुंसकयोर्विद्यमानानामन्यपरेतरपदानां कर्मव्यतिहारे द्वित्वे उत्तरपदस्थविभक्तेरामित्यादेशो बहुलं वक्तव्य इत्यर्थः। अन्योन्यामित्यादि। अन्योन्याम्, अन्योन्यं वा इमे ब्राआह्मण्यौ कुले वा भोजयतः, परस्परां परस्परं वा इमे ब्राआह्मण्यौ कुले वा भोजयतः। इतरेतराम्, इतरेतरं वा इमे ब्राआह्मण्यौ कुले वा भोजयत इत्यन्वयः। तत्र "अन्या"मित्यस्य द्वित्वे "दलद्वये टाबभाव" इति वक्ष्यमाणतया पुंवत्त्वाट्टापो निवृत्तौ समासवत्त्वाऽभावात्सुपोरलुकि पूर्वपदस्थविभक्तेः सुभावे रुत्वे "अतो रोरप्लुता"दित्युत्वे आद्गुणे उत्तरपदस्थविभक्तेरनेन आम्भावे अन्योन्यामिति रूपम्। आम्भावविरहे तु पुंवत्तट्टाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे पुंलिङ्गवदेव अन्योन्यमिति रूपम्। इयं ब्राआह्मणी अन्यां ब्राआह्मणीं भोजयति, अन्या त्विमामित्येवं विनिमयेन ब्राआह्मण्यौ भोजयत इत्यर्थः। इदं कुलं कर्तृ अन्यत्कुलं भोजयति, अन्यत्कुलं कर्तृ इदं कुलमित्येवं विनिमयेन कुले भोजयत इत्यर्थः। अत्राऽन्यच्छब्दस्य नपुंसकलिङ्गस्य द्वित्वे पूर्वपदस्थायाः विभक्तेः सुभावे उत्तरपदस्थविभक्तेराम्भावे अन्योन्यामिति रूपम्। आम्भावविरहे तु "क्लीबे चाद्()ड्विरहः स्वमो"रिति वक्ष्यमाणतया पुंवत्त्वाददड्डादेशाऽभावे अन्योन्यमिति पुंवदेव रूपमिति बोध्यम्। एवं स्त्रीत्वे परामिति पदस्य द्वित्वे दलद्वयेऽपि पुंवत्त्वाट्टापो निवृत्तौ पूर्वोत्तरपदस्थविभक्त्योः क्रमेण सुभावे आम्भावे च परस्परामिति रूपम्।

आण्भावविरहे तु द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे परस्परमिति रूपम्। नपुंसकत्वे तु परमित्यस्य द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे उत्तरपदस्थविभक्तेराम्भावे परस्पमिति रूपम्। आमभावे तु द्वित्वे पूर्वपदस्थविभक्तेः सुभावे परस्परमिति रूपम्। इतरामित्यस्य द्वित्वे पुंवत्त्वाटापो निवृत्तौ उत्तरपदस्थविभक्तेराम्भावे समासवत्त्वात्पूर्वपदस्थविभक्तेर्लुकि इतरेतरामिति रूपम्। आम्भावविरहे तु इतरेतरमिति रूपम्। नपुंसकस्य तु इतरच्छब्स्य द्वित्वे पुंवत्त्वाददड्डादेशविरहे पूर्वपदस्थविभक्तेर्लुकि उत्तरपदस्थविभक्तेराम्भावतदभावाभ्यां रूपद्वयम्। अत्र भाष्यादौ द्वितीयाविभक्त्यन्तस्योदाहरणादितरविभक्तिषु आम्भावो न भवतीति प्राचीनमतमाह--अत्र केचितदिति। तेनेति। द्वितीयेतरविभक्तिषु आम्भावविरहेणेत्यर्थः। पुंवदेवेति। आम्भावविरहे सति बहुमग्रहणात्पुंवत्त्वे टाबभावे प्रथमतृतीयादिविभक्तिषु पुंवदेव रूपम्। नपुंसकत्वे प्रथमतृतीयादिविभक्तिषु आम्भावविरहात्प्रथमैकवचस्य इदं पुंवदेव रूपमित्यर्थः। सिद्धान्तमाह--अन्ये त्विति। दिङ्मात्रत्वादिति। दिक्प्रदर्शनमात्रत्वादित्यर्थः। उपलक्षणत्वादिति यावत्।

द्वलद्वये टाबभावः क्लीबे चाद्ड्विरहः स्वमोः।

समासे सोरलुक्चेति सिद्धं बाहुलकात्रयम्॥

अथाऽत्र बहुलग्रहणानुवृत्तेः प्रयोजनकथनपरप्राचीनश्लोकमाह--दलद्वये इति। स्त्रीलिङ्गेष्वन्यपरेतरशब्देषु कर्मव्यतिहारे द्वित्वे सति पूर्वोत्तरखण्जयोः पुंवत्त्वाट्टाब्निवृत्तिरित्यर्थः। यद्यपि "इतरेतर" मित्यत्र समासवत्त्वात्सर्वनाम्नो वृत्तिमात्रे इति पुंवत्त्वादेव पूर्वखण्डे टाबभावः सिद्धस्तथाप्युत्तरखण्डे टाबभावार्थं बाहुलकाश्रयणमिति भावः। क्लीबे इति। "अन्योन्य"मित्यादावद्ड्डादेशविरह इत्यर्थः। समासे सोरिति। कृतद्वित्वस्य अन्येन समासे पूर्वखण्डस्थस्येत्यर्थः। तथाहीति। यथेदं स्पष्टं भवति, तथा उदाहृत्य प्रदश्र्यत इत्यर्थः। ननु पूर्वदले "सर्वनाम्नो वृत्तिमात्र" इति पुंवत्त्वस्याऽत्र न प्रसक्तिरित्यर्थः। कुत इत्यत आह--अन्यपरयोरिति। "समासवच्च बहुल"मिति समासवत्त्वमितरशब्दमात्रविषयं, न त्वन्यपरहशब्दविषयमिति प्रागुक्तमित्यर्थः। ननु मास्तु समासवत्त्वं, तथापि "सर्वनाम्नो वृत्तिमात्रे" इति पुंवत्त्वं दुर्वारम्, द्विर्वचनस्य वृत्तित्वादित्याशङ्क्य निराकरोति--नच द्विर्वचनमेव वृत्तिरिति। "कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः" इति परिगणनादिति भावः। द्विर्वचनस्य वृत्यन्तर्भ#आवे बाधकमाह--यां या मिति। द्विर्वचनस्य वृत्त्यन्तर्भावे "यांयां प्रियः प्रैक्षत कातराक्षी सासा ह्रिया नम्रमुखी बभूवे"त्यत्र श्लोके यांयामित्यत्र सासेत्यत्र च "सर्वनाम्नो वृत्तिमात्रे" इति पूर्वखण्डस्य पुंवत्त्वं स्यादित्यर्थः। क्लीबे चाद्ड्विरहः" इत्यस्योदाहरति--अन्योन्यमिति। ननु "समासे सोरलुक् चे"ति कथम्, अन्यपरशब्दयोः समासवत्त्वाऽभावादित्याशङ्क्य कृत्तद्वित्वस्यान्येन समासे पूर्वखण्डस्थस्य सोरलुगिति तदर्थमभिप्रेत्य तथैवोदाहरति--अन्योन्यसंस,क्तमिति। अन्योऽन्येन संसक्तमिति तृतीयासमासः। अहश्च त्रियामा चेति समाहारद्वन्द्वः। अहश्च रात्रिश्च अन्योन्येन संयुर्तमित्यर्थः। अन्योन्याश्रय इति। अन्योऽन्यस्य आश्रय इति षष्ठीसमासः। परस्पराक्षिसादृश्यमिति। अक्ष्णा सादृस्यमक्षिसादृश्यम्। परस्परस्याऽक्षिरसादृश्यमिति विग्रहः। अपरस्परैरिति। न परस्परे अपरस्परे,तैरिति विग्रहे एषु कृतद्वित्वेषु समासावयवेषु पूर्वखण्डस्थस्य सुबादेशस्य सोर्लुक् प्राप्त इत्यर्थः। सुभावविधानं तु अन्योन्यमित्यादावसमासे चरितार्थमिति भावः। ननु बहुलग्रहणादेतत्समाधेयमित्यत्र किं प्रमाणमित्यत आह--प्रकृतवार्तिकेति। "स्त्रीनपुंसकयो"रिति प्रकृतवार्तिके "अन्योन्यमिमे ब्राआहृण्य"विति, "इतरेतरमिमे कुले" इति चोदाहरणात् "दलद्वये टाबभावः क्लीबे चाद्ड्विरहः स्वमो"रिति विज्ञायते। "स्त्रिया"मिति सूत्रे "अन्योन्यसंश्रयं त्वेत"दिति बाष्यप्रयोगात्समासे सोरलुगिति विज्ञायत इत्यर्थः।

तत्त्व-बोधिनी

प्रकारेगुणवचनस्य १५९७, ८।१।१२

प्रकारे गुणवचनस्य। यद्यपि प्रकारशब्दो भेदे सादृश्ये च वर्तते। बहुभिः प्रकारैर्भुङ्क्ते। बहुभिर्भेदैर्विशेषैरित्यवगमात्। ब्राआहृणप्रकारोऽयं माणवकः, ब्राआहृणसदृश इत्यवगमाच्च। तथापीह विवक्षितमाह---सादृश्य इति। व्याख्यानमेवाऽत्र शरणम्। पुंवद्भाव इति। "पुंवत्कर्मधारये"ति सूत्रात्। तच्च कोरधादिष्वपि कालककालिकेत्यादिषु प्रवर्तते। तेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावोक्तिव्र्यर्थेति शङ्काया निरवकाश इति बोध्यम्। पटुपटुरिति। इह द्वित्वेन जातियरो बाधा नेष्यते, "पटुजातीय"इति वामनः। अन्यता ब्राआहृणजातीय इत्यदावगुणवचनेऽपि भेदरूपेऽर्थे सावकाशो जतीयर् गुणवचनेषु सादृस्ये परेण द्वित्वेन बाध्येतेति भावः। गुणवचनस्येति किम्()। अग्निर्माणवकः। सिंहो माणवकः। यद्यपीहाऽग्निसिंहशब्दाभ्यां गौण्या वृत्त्या तैक्ष्णक्रौर्यादिगुणो गम्यते, तथापि प्रकारे वर्तमानस्येत्येव सुद्धे गुणवचनग्रहणसामथ्र्यात् मुख्यवृत्त्या गुणपराणामेव द्वित्वं, न त्वन्येषामित्याकरः। "नवंनवं प्रीतिरहो करोतो"त्यत्र वीप्सायां द्विर्वचनम्। अनेन तु द्विर्वचने सुब्लुक् स्यात्। "नवनवा वनवायुभिराददे"इत्यत्र त्वनेनैव द्विरह्वचनं, नतु वीप्स#आयामिति पुंवद्भावः। कथं "भीतभीत इव शीतमयूखः"इति भारविः। इवशब्देन सादृस्यस्योक्ततया इह प्रकारे द्वित्वाऽयोगात्। सत्यम्। भीतेभ्यो भीत इति कथंचिव्द्याख्येयम्। तेनाऽतीभीत इति फलितम्। "आधिक्ये द्वे वाच्ये" इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटादिभिरुक्तं समाधानं नादर्तव्यम्। तादृशस्य वार्तिकस्याऽप्रसिद्धत्वात्। अथ कथं "खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणःक्षीणः परिलघु पयः रुआओतसां चोपयुज्ये"ति मेघदूतः। पदार्थबेदस्याऽभावेन वीप्सार्थस्यासंभवादिति चेत्। अत्राहुः---एकस्यापि केदावस्थासु क्षयावस्थासु च भेदं परिक्ल्प्य वीप्सा बोध्येति। अथ कथं "मन्दं मन्दं नुदति पवनश्चानुकूलो यता त्वा"मिति मेघदूतः। वीप्सार्थस्याऽसंभवादनेनैव द्विर्वचने कृते "मन्दमन्दमुदितः प्रययौ ख"मितिवत्सुब्लुक् स्यादिति चेत्। सत्यम्। स्वतो मन्दगामिनं त्वां पवनो मन्दं नुदतीति कथं चिव्द्याख्येयम्। सिद्धस्य गतेश्चिन्तनीयत्वात्। शुक्लशुक्लमिति। केवलगुणवाचिन उदाहरणमिति ध्वनयति---रूपमिति।

आनुपूव्र्ये द्वे वाच्ये। आनुपूव्र्ये इति। वीप्साऽबावादयमारम्भः। मूलेमूले इति। "अग्रेअग्रे सूक्ष्म"इत्यप्युदाहर्तव्यम्। एकस्य वस्तुनो वेणुदण्डादेरेकमेव मुख्यं मूलमगं च। इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः। स्थौल्य सोक्ष्म्ये अपि नैकरूपे, किं तर्हि यथामूलमुपचीयते स्थौल्यं, यथा अग्रं सौक्ष्म्यं तता नेतरे भागा इति वीप्साया असंभवः। "मूलेमूले पथि विटपना"मित्यत्र तु वीप्सायां द्विर्वचनम्। एतच्च हरदत्तग्रन्थे स्पष्टम्।

संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः। न्यायसिद्ध इति। याव्द्भिः शब्दैः संबोध्याऽर्थमवगच्छति तावतां प्रयोक्तव्यत्वादिति भावः।

क्रियासमभिहारे च। पौनःपुन्य इति। पुनःपुनर्भवितरि वर्मानात्पुनः--पुनःशब्दाद्भावे प्रत्ययः। लोटा सह समुच्चित्येति। नन्वत्र लोटा सह समुच्चित्य यथा द्विर्वचनं भवति, तथा क्रियासमभिहारे यङि यङा सह समुच्चित्य द्विर्वचनं स्यात्---पापच्यतेपापच्यते बोभूयते बोभूयते इति। अत्राहुः---लोटे क्रियासमभिहारं व्यभिचरति, समुच्चयेऽपि जायमानत्वात्। ततस्च लोट्? द्विर्वचनयोरेव तद्द्योतकत्वं, न त्वेकैकस्येति युक्तं लोडन्तस्य द्विर्वचनम्। यङ् तु क्रियासमभिहारं न व्यभिचरतीति द्विर्वचनं विनैव तस्य द्योतकत्वम्। तेन तदन्तस्य न द्विर्वचनमिति।

कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये। कर्मव्यतिहार इति। क्रियाविनिमय इत्यर्थः। द्वे इति। नित्यमेवेदं द्वित्वम्, बाहुलकं तु समासवद्भावस्यैव।

असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः। सुपः सुर्वक्तव्य इति। अत्र कैश्चिदुक्तं --द्वितीयादीनामेवेदं स्वादेशविधानम्। अतएवोत्तरदलेऽपि द्वितीयादय एव न तु प्रथमा, तत्राप्येकवचनमेव , न तु वचनान्तरमिति। तदपाणिनीयम्।

भाष्यादावनुक्तत्वात्। तदेतद्ध्वनयन् वचनान्तरमुदाहरति-----अन्योन्यावन्योन्यानिति। माघ इति। स च भाष्यानुगुण एवेति भावः। एतेनाऽर्वाचीनमतं कवयोऽपि नाद्रियन्त इत्युक्तं भवति। भारविस्चाह---"क्षितिनभःसुरलोकनिवासिभिः कृतमिकेतमदृष्टपरस्परै "रिति। अत्राऽदृष्टः परस्परो यैरिति विग्रहः। यदि तु द्वितीयादीनामेव स्वादेशविधानं न तु प्रथमायाः, तह्र्ययं प्रयोगो न सिध्येदिति दिक्।

स्त्रीपुंसकयोरुत्तरपदस्थाया विभक्तेराम्बावो वा वक्तव्यः। अन्योन्यमिति। न चाऽत्र आमबावेऽपि टाप् स्यादिति शङ्क्यम्। "बहुलग्रहणाट्टाबभावः"इत्यनुपदमेव वक्ष्यमाणत्वात्। स्त्रीनपुंसकयोस्तृतीयादिषु पुंवदिति प्राचो ग्रन्थं परिष्कुर्वन्नाह---अत्र केचिदिति। वस्तुस्थितिमाह---अन्ये त्विति। अतिप्रसङ्गादिति। तथा च एकशेषप्रतिबन्धाद्द्विर्वचनस्यापि वृत्तित्वमाश्रित्य तद्बलेन पुंवद्भावो न श्ङ्क्यो, लक्ष्यविरोधात्। "कारकं चेद्विजानीयाद्यां यां मन्येत सा भवे"दिति"अकथित"सूत्रस्थ---"यांया "मिति भाष्यप्रयोगविरोधाच्चेति भावः। नव्यास्तु--"यांया प्रियः प्रैक्षते"त्यादिमागप्रयोगे "सासा"इति द्विर्वचनमयुक्तम्, द्विरुक्तार्थस्य सेत्यनेनैव परामर्ष्टुं शक्यत्वात्। अतएव भाष्ये "यांया मन्येता सा भवे"दित्येवोक्तमित्याहुः। सोर्लुक् च प्राप्त इति। सुपः स्वादेशविधानस्याऽन्योन्यं परस्परमित्यत्र केवले चरितार्थत्वादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ८।१।१३

प्रिय सुख इत्येतयोः अन्यतरस्यां द्वे भवतः अकृच्छ्रे द्योत्ये। कृच्छ्रं दुःखम्, तदभावः अकृच्छ्रम्। प्रियप्रियेण ददाति। सुखसुखेन ददाति। प्रियेण ददाति। सुखेन ददाति। अखिद्यमानो ददाति इत्यर्थः। अकृच्छ्रे इति किम्? प्रियः पुत्रः। सुखो रथः।

न्यासः

अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्?। , ८।१।१३

नञत्र विपक्षे वत्र्ततेऽधर्मानृतादिवत्()। कृच्छ्रम्()=दुःखम्(), प्रयत्नः=प्रयास इत्यर्थः; स पुनः प्राणिधर्मः। कृच्छ्रविपक्षोऽकृच्छ्रम्(); प्राणिधर्म एव, यस्मिन्? सति प्रयत्नमन्तरेणैव दानादिक्रियां सम्पादयति। तत्र वत्र्तमानयोः प्रियखशब्दयोद्र्वे भवतः। प्रियप्रियेण ददाति। विना प्रयासेन ददातीत्यर्थः। तृतयैकवचनान्तस्य द्विर्वचने कृते सुब्लकि च पुनस्तृतीयैकवचनमेव समासवद्भावेन भवति। "प्रियः पुत्रः, सुखो रथः" इति। नात्र प्रियसुखशब्दौ कृच्छ्रविपक्षे प्राणिधर्मविशेषे वत्र्तते, किं तर्हि? द्रव्ययोः। पुत्रो हि प्रीणातीति कृत्वा प्रिय इत्युच्यते, रथोऽपि सुखयतीत कृत्वा सुखः॥

बाल-मनोरमा

अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् , ८।१।१३

अकृच्छ्रे। कृच्छ्रं-कष्टम्। अकृच्छ्रम्-अनायासः। तस्मिन्वर्तमानयोः प्रिय सुख इत्यनयोद्र्वे वा स्तः। कर्मधारयवद्भावादिति। "कर्मधारयवदुत्तरेषु" इत्यधिकारादिति भावः। "समासवच्च बहुल"मित्यतः समासवदित्यनुवृत्तिस्तु न शङ्क्या, तस्य वार्तिकस्थत्वात्, एवं च "प्रियेणे"त्यस्य "सुखेने"त्यस्य च द्वित्वे सति कर्मधारयवत्त्वात्सुपोस्तृतीयैकवचनयोर्लुकि पुनः समुदायात्तृतीयैकवचनमिति फलितम्।

---

सूत्रम्

काशिका-वृत्तिः

यथास्वे यथायथम् ८।१।१४

यो य आत्मा, यद् यदात्मीयम्, तत्तद्, यथास्वम्, तस्मिन् यथायथम् इति निपात्यते। यथाशब्दस्य द्विर्वचनं नपुंसकलिङ्गता च निपात्यते। ज्ञाताः सर्वे पदार्थाः यथायथम्। यथास्वभावम् इत्यर्थः। सर्वेषां तु यथायथं यथात्मीयम् इत्यर्थः।

न्यासः

यथास्वे यथायथम्?। , ८।१।१४

"यथास्वम्()" इति। "यथाऽसादृश्ये २।१।७ इति वीप्सायामव्ययीभावः। स्वशब्दो हीहात्मवचनः, आत्मीयवचनो वा--इति दर्शयितुमाह--"यो य आत्मा" इत्यादि। "यथायथम्()" इति। "ह्यस्वो नपुंसके" १।२।४७ इति ह्यसवः॥

बाल-मनोरमा

यथास्वे यथायथम् , ८।१।१४

यथास्वे यथायथम्। वीप्सायामिति। कात्स्न्र्येसंबन्धो वीप्सेत्युक्तम्। स्वशब्दार्थगतकात्स्न्र्ये द्योत्ये यथाशब्दस्य स्वशब्देनाऽव्ययीभाव इत्यर्थः। कृत्स्न श्चासौ स्वश्चेत्यस्वपदविग्रहः, नित्यसमासत्वात्। स्वशब्दस्तु आत्मात्मीयज्ञातिधनवाची। इह तु आत्मात्मीयवाच्येव गृह्रते, नतु ज्ञातिधनवाची, व्याख्यानादित्यभिप्रेत्य विग्रहवाक्यस्य फलितमर्थमाह--द्वे इति। "स्त" इति शेषः। निपातनादिति भावः। न च "नित्यवीप्सयो"रित्येव वीप्सया द्वित्वमिह सिद्धमिति शङ्क्यम्, द्वित्वविषयस्य शब्दस्य लक्षणया कात्स्न्र्यविशिष्टे वृत्तावेव वीप्सायां द्विर्वचनविधानात्। अन्यथा "सर्वो घटः" इत्यादौ सर्वशब्दस्यापि द्वित्वापत्तेरिति भावः। क्लीबत्वमिति। "यथा-यथा इति समुदायस्ये"ति शेषः। अन्यथा अव्ययत्वादलिङ्गत्वं स्यादिति भावः। एवं च कृतद्वित्वस्य नपुंसकह्यस्वत्वं च फलितम्। यथायथं ज्ञातेति। अत्र "ज्ञाते"ति तृन्नन्तम्। "तद्योगे "न लोके"ति षष्ठीनिषेधात्कर्मणि द्वितीया। तृजन्तत्वे तु "यथायथस्य ज्ञाते"त्येव।

तत्त्व-बोधिनी

यथास्वे यथायथम् १५९८, ८।१।१४

यीऽयमात्मेत्यादि। आत्मात्मीययोरपि स्वशब्दवाच्यत्वात्। यथायथमिति। "न लोके"त्यनेन कृद्योगषष्ठीनिषेधः, ज्ञातेत्यस्य तृन्नन्तत्वात्। "यो य आत्मा"इत्यर्ते विद्यमानयथायथशब्दस्यार्थमाह---यतास्वभावमिति। "आत्मा यत्नो धृतिर्बुद्धिः स्वबावो ब्राह्ण वष्र्म चे"त्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ८।१।१५

द्वन्द्वम् इति द्विशब्दस्य द्विर्वचनम्, पूर्व पदस्याम्भावः, अत्त्वं च उत्तरपदस्य निपात्यते रहस्य मर्यादावचन व्युत्क्रमण यज्ञपात्रप्रयोग अभिव्यक्ति इत्येतेषु अर्थेषु। तत्र रहस्यं द्वन्द्वशब्दवाच्यम्, इतरे विषयभूताः। द्वन्द्वं मन्त्रयते। मर्यादावचने मर्यादा स्थीत्यनतिक्रमः। आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति। माता पुत्रेण मिथुनं गच्छति, पौत्रेण, तत्पुत्रेण अपि इति मर्यादार्थः। व्युत्क्रमणे द्वन्द्वं व्युत्क्रान्ताः। व्युत्क्रमणं भेदः, पृथगवस्थानम्। द्विवर्गसम्बन्धनेन पृथगवस्थिता

द्वन्द्वं व्युत्क्रान्ता इत्युच्यन्ते। यज्ञपात्रप्रयोगे द्वन्द्वं न्यञ्चि यज्ञपात्राणि प्रयुनक्ति धीरः। अभिव्यक्तौ द्वन्द्वं नारदपर्वतौ। द्वन्द्वं सङ्कर्षणवासुदेवौ। द्वावप्यभिव्यक्तौ साहचर्येण इत्यर्थः। अन्यत्र अपि द्वन्द्वम् इत्येतद् दृश्यते, तदर्थं योगविभागः कर्तव्यः, द्वन्द्वं युद्धं वर्तते, द्वन्द्वानि सहते धीरः, चार्थे द्वन्द्वः २।२।२९ इति।

न्यासः

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगामिव्यक्तिषु। , ८।१।१५

"पूर्वपदस्याम्भावः" इत्यादि। द्विर्वचने कृते द्वि+औ इति स्थिते सुब्लुकि कृतेऽम्भावोऽत्वञ्चोभयमपीकारस्य क्रियते, यथा क्रमं समुदायात्? सुः, "अतोऽम्()" ७।१।२४ इति कृतेऽमि पूर्वत्वञ्च ६।१।१०३, अन्यथा हि द्वन्द्वसिति रूपं त सिध्येत्()। किं पुनरेदेषु रहल्यादिदाच्येषु द्वन्द्वमिति निपात्यते? उत विषयभूतेष्वित्यत आह--"तत्र" इत्यादि। रहः=गुप्तिः, तत्र साधु रहल्यम्(), "तत्र साधुः" ४।४।९८ इति "प्राग्घिताद्यत्त" ४।४।७५। अथ वा--रहसि भवमिति दिगादित्वाद्यत्? ४।३।५४। "मर्यादादचने" इति। मर्यादः=स्थित्यनतिक्तमः, तस्या वचनं मर्यादावचनम्()। वचनग्रहणम्()--शब्दोपात्तायां मर्यादायां यथा स्यात्(), अर्थप्रकरणादिना गम्यमानायां मा भूत्()। "आचतुरम्()" इति। "आङ्? मर्यादाभिविध्योः" २।१।१२ इत्यव्ययीभावः; "अव्ययीभावे शरत्प्रभृतिभ्यः" ५।४।१०७ समासान्तष्टच्()। उदाहरणे भर्यादार्थमभिव्यक्तीकत्र्तमाह--"माता पुत्रेण" इत्यादि। माता हि मिथुताय चतुरः सन्तानजान्? प्राप्नोति, न तु ततोऽधिकान्? पुत्रपौत्रपयौत्रतत्पुत्रान्()। "मर्यादार्थः" इति। मर्यादेवर्थो मर्यादार्थः। "प्रयुनक्ति" इति। उपकल्पयतीत्यर्थः। "द्वन्द्वानि" इति। शीतोष्णादीनि सुखदुःखहेतूनित्यर्थः। [सुखदुःखहेतूनीत्यर्थः--प्रांउ।पाठः] यदि योगविभागः क्रियते, रहस्यादिग्रहणमनर्थकम्()? नानर्थकम्(); प्रपञ्चार्थत्वात्()। द्वन्द्वमित्यस्य वा योगविभागस्यासर्वविषयज्ञापनार्थत्वात्()॥

बाल-मनोरमा

द्वन्द्वं रहस्यमर्यादावचनव्युक्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ९१७, ८।१।१५

द्वन्द्वं रहस्य। पूर्वपदस्येति। द्वौ द्वाविति द्वित्वे कर्मधारयत्वात्सुब्लुकि समुदायात्पुनः सुपि पूर्वपदावयवस्य इकारस्य "अ"मिति मकारान्तादेश इत्यर्थः। अत्वमिति। उत्तरपदस्य अकारोऽन्तादेश इत्यर्थः। न च त्यदाद्यत्वमुत्तरपदान्तस्य सिद्धमिति वाच्यं, संज्ञात्वात्तदप्राप्तेरित्याहुः। नपुंसकत्वं चेति। चकारोऽनुक्तसमुच्चये। कृतद्वित्वस्य नपुंसकत्वं द्विवचनाऽभावश्चेत्यर्थः। आचतुरं हीति। आङभिविधौ। "आङ्भर्यादे"त्यव्ययीभावः। शरत्प्रभृतित्वाट्टच्। चतुर्थान्तमिति फलितोऽर्थः। पशवः स्वप्रभृति चतुर्थपर्यन्तं द्वन्द्वं मिथुनीयन्तीत्यन्वयः। मिथनशब्देन मैथुनं विवक्षितम्। मिथुनस्य कर्म मैथुनम्। तदिच्छतीत्यर्थे "सुप आत्मनः" इति क्यच्। फलितमर्थमाह--मिथुन गच्छतीति। मिथुनत्वं प्राप्नोतीत्यर्थः। मिथुनायन्ते इति क्यङ्पाठस्तु प्रामादिकः मर्यादीकृत्येति। स्वप्रभृति चतुरोऽभिव्याप्येत्यर्थः। अत्यन्तसहचरितत्वेन लोकविज्ञानमभिव्यक्तिरिति भाष्याल्लभ्यते। तदाह--सहचर्येणेत्यर्थ इति। अत्र "द्वन्द्वं न्यञ्ची"त्यत्र वीप्सायां द्वित्वम्, अन्यत्र स्वार्थे इति बोध्यम्। अन्यत्रापीति। "द्वन्द्व#आनि सहते" इत्यादावित्यर्थः। शीतमुष्णं च एकं द्वन्द्वम्। सुखं दुःखं चापरम्। क्षुत्तृष्णाचान्यत्। इह स्वार्थे द्वन्द्वः। अम्भावादि पूर्ववत्। "चार्थे द्वन्द्वः" इति निपातनादन्यत्रापीति सिद्धम्।

**** इति द्विरुक्तप्रकरणम्।****

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकारादिबहुगुणविराजमानप्रौढापरिमितमहाध्वरस्य "श्रीशाहजी तुक्वोजी भोसल" चोलमहीमिहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्याध्वर्यणा पञ्चपुरुषीपोष्येण, बाल्य एव तद्दयानिर्वर्तितताऽपरिमिताग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन,

पदवाक्यप्रमाणपारावारपारीणाग्रजन्मवि()ओ()आवाजपेययाजितो लब्धविद्यावैशद्येन,
अध्वरमीमांसाकुतूहलवृत्तिनिर्माणप्रकटितसर्वतन्त्रस्वातन्त्र्येण,
बौधायनापस्तम्बसत्याषाढभावद्वाजकात्यायना()आलायनद्राह्यायणादिकल्पसूत्रतद्भाष्यपारीणमहादेववाजपेययाजिसुतेन,
अन्नुपूर्णाम्बागर्भजातेन, वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां पूर्वार्धम्।

**********************

*****अथ एकशेषप्रकरणम्*****

अथैकशेषो निरूप्यते। तदेवं द्वन्द्वे निरूपिते तदपवादमेकशेषप्रकरणमारभते--अथैकशेष इति। "निरूप्यते" इति शेषः। तत्रैकशेषसूत्राणि व्याचिख्यासुः पूर्वं व्याख्यातमपि सूत्रं सन्दर्भशुद्धये आह--सरूपाणामिति। तदुदाहरणमपि स्मारयति--रामौ रामा इति।

विरुपाणामिति। "सरूपाणा"मित्यनेन सूत्रेणार्थ भेदेऽपि शब्दैकरूप्ये एकशेष उक्तः, एकार्थकत्वे विरूपाणामप्येकशेषो वक्तव्य इत्यर्थः। वक्रदण्डश्चेति। अत्र शब्दवैरूप्येऽप्यर्थैक्यादन्यतरः शिष्यत इति भावः।

तत्त्व-बोधिनी
द्वन्द्वं रहस्यमर्यादावचनव्युक्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ७९४, ८।१।१५

पूर्वपदस्येति। द्वि औ द्विऔ इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवस्येकारस्येत्यर्थः। अत्वमुत्तरपदस्येति। उत्तरपदावयवस्येकारस्येत्यर्थः। नपुंसकत्वं चेति। चकारादेकवद्भाव इत्यपि बोध्यम्। तेन "अतोऽ"मित्यमादेशे द्वन्द्वमिति सिध्यति। रहस्यं द्वन्द्वशब्दवाच्यमिति। द्वाभ्यां निर्वृत्ते रहस्ये योगरूढिरेवेत्यर्थः। द्वन्द्वं मन्त्रयते इति। द्वौ द्वौ भूत्वा मन्त्रयेते इत्यर्थः। एवं हि तद्रहस्यं भवति। आचतुरमिति। "आङ्भार्यादाभिविध्यो"रित्यव्ययीभावः। "अव्ययीभावे शरत्प्रभृतिभ्यः"इति टच्। चतुःशब्दोऽत्र चतुर्णा पूरणे द्रष्टव्यः। आ चतुर्थादित्यर्थः। द्वन्द्वं यज्ञपात्राणीति। "स्फ्यश्च कपालानि चे"त्यादीनि पात्राणि द्वन्द्वं प्रयुनक्ति। आसादयतीत्यर्थः। अभिव्यक्तौ साहचर्येणेत्यर्थ इति। अत्र "द्वन्द्व"मित्यत्र स्वार्थे द्विर्वचनम्। एकवद्भावादिकं तु पूर्ववत्। अन्यत्रापीति। "द्वन्दंव युद्धं प्रवर्तते"। इह वीप्सायां द्विर्वचनम्। द्वयोद्र्वयोर्युद्धमित्यर्थः। "द्वन्द्वानि सहते"। "शीतमुष्णमेकं द्वन्द्वं, सुखदुःखे चापरं, क्षुतृष्णे चापरम्"। इह स्वार्थे द्विर्वचनमेकदवद्भावादि पूर्ववत्। बहुत्वं त्वेकशेषवशात्।

सिद्धान्तकौमुदीव्याख्या विहिता तत्त्वबोधिनी।

समाप्तं तत्र पूर्वार्धं तेन तुष्यत शङ्करः॥१॥

इति श्रीपरमहंसपरिव्राजकाचार्यवामनेन्द्रस्वामिचरणारविन्दसेवकज्ञानेन्द्रसरस्वतीकृतौ सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां पूर्वाद्र्धम्।

द्वन्द्वापवादत्वेनाह-अथैकशेष इति।

विरूपाणामपि समानार्थानाम्। विरूपाणामिति। रूप्यते बोध्यत इति व्युत्पत्त्या सौत्रस्य रूपशब्दस्याऽर्थपरयापि व्याख्यानात्सूत्रारैरेव लब्धुं शक्यत इति प्रागेव व्याख्यातम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ पदस्य ६।१ ८।३।५४

अर्थः॥

प्रागपदान्तात् अधिकारात् इतोऽग्रे वक्ष्यमाणानि कार्याणि पदस्य भवन्ति इति अधिकारः वेदितव्यः।

उदाहरणम्॥

वक्ष्यति - {संयोगान्तस्य लोपः (८।२।२३)} पचन्, यजन्
व्याख्या (सरलबोधिनी)
मम व्याख्या।
काशिका-वृत्तिः
पदस्य ८।१।१६

पदस्य इत्ययम् अधिकारः प्रागपदान्ताधिकारात्। यदित ऊर्ध्वम् अनुक्रमिष्यामः पदस्य इत्येवं तद् वेदितव्यम्। वक्ष्यति संयोगान्तस्य लोपः ८।२।२३। पचन्। यजन्। पदस्य इति किम्? पचन्तौ। यजन्तौ। वक्ष्यमाणवाक्यापेक्षया पदस्य अधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्याः क्वचित् स्थानषष्ठी, क्वचिदवयवषष्ठी।
न्यासः
पदस्य। , ८।१।१६

"प्रागपदान्ताधिकारात्()" इति। "अपदान्तस्य मूर्धन्यः" ८।३।५५ इत्यतः प्राक्()। अनन्तरेषु योगेष्वामन्त्रितादेः सुबन्तस्य तिङन्तस्य च यत्? कार्य विधीयते तत्रान्तरेणापि पदाधिकारं पदस्यैव कार्यं लभ्यते, अतस्तानुल्लङ्ध्य यत्र पदाधिकारस्योपयोगस्तमेवोपन्यस्यत। "वक्ष्यति--संयोगान्तस्य लोपः" इति। "षष्ठी स्थानेयोगा" (१।१।४९) इति नियमात्? "पदस्य" इत्येषा स्थानषष्ठी। स्थानषष्ठ()आञ्चास्यान्? "उदात्तस्वरतयोर्यणः स्वरितोऽनुदात्तस्य" ८।२।४ इत्यस्यायमर्थो जायते--उदात्तस्वरितयोर्यणः परो योऽनुदात्तस्तदन्तस्य पदस्य स्वरितो भवतीतिः तथा चात्रैव स्यात्()--कुमार्याविति, कुमार्य इत्यत्र न स्यात्()। न ह्येतदुदात्तस्वरितयोर्यणः परो योऽनुदात्तस्तदन्तं पदम्(), किं तर्हि? सकारान्तम्। "एकादेश उदात्तेनोदात्तः" ८।२।५ इत्यत्रापि स्थानषष्ठ()आमस्यामयमर्थो जायते--उदात्तानुदात्तयोर्य एकदेशस्तदन्तस्य पदस्योदात्तो भवतीति। तथा चात्रैव स्यात्()--वृक्षाविति, वृक्षा इत्यतर न स्यात्()। न ह्यत्रोदात्तानुदात्तयोर्य एकादेशस्तदन्तं पदम्(), किं तर्हि? सान्तमिति यश्चोदयेत्(), तं प्रत्याह--"वक्ष्यमाणवाक्यापेक्षया" इत्यादि। हेताविय़ं तृतीया। वक्ष्यमाणानां वाक्यानां याऽपेक्षा तया हेतुभूतया पदस्याधिकृतस्य षष्ठ()र्थव्यवस्था द्रष्टव्या। व्यवस्था=नियम इत्यर्थः। वक्ष्यमाणानि हि वाक्यानि कानिचित्? "संयोगान्तस्य लोपः" ८।२।२३ इत्येवमादीनि पदस्येति स्थानवष्ठीमपेक्षन्ते। कानिचित्? "उदात्तस्वरितयोर्यणः" ८।२।४ इत्येवमादीन्यवयवषष्ठीमिति। अत एव परापेक्षया षष्ठ()र्थे नियमो भवति। अधिकारा हि परार्था भवन्ति। एवञ्चैषां परार्थता भवति यदि ते परापेक्षानुरोधेनार्थमात्मसात्? कुर्वन्ति। "क्यचित्()" इत्यादिना तामेव षष्ठ()र्थव्यवस्थां दर्शयति। किं पुनः कारणन्? "षष्ठो "स्थाने योगा" (१।१।४९) इत्येष नियमोऽत्र न प्रवत्र्तते? एवं मन्यते--सम्बन्धन्ध्यन्तरापेक्षया नियमोऽयम्()।

योगो हि सम्बन्धः, स चानेकसम्बन्ध्याधारः। न चेहाधिकारसूत्रे सम्बन्ध्यन्तरं विद्यते, अतो नास्त्येव तस्येहोपस्थानमिति॥

तत्त्व-बोधिनी

पदस्य ३५४, ८।१।१६

पदस्य। "अपदान्तस्य मूर्धन्यः"इति विरोधिनिर्देशात्प्राक्()पदस्येत्ययमधिकारः। तेन "राजा" राजभ्या"मित्यादौ "नलोपः प्रातिपदिकान्तस्ये"ति नलोपः सिध्यति। न तु "राजानौ"राजान"इत्यत्र। तथा "गोमान्""यवमा"नित्यादौ संयोगान्तलोपो, न तु "गोमान्तौ""यवमन्ता"वित्यादौ। तथा "मो नो धातोः"इति नत्वं "प्रशान्भ्या"मित्यादौ भवति न तु "प्रशमौ"प्रशाम्ि्त्यत्र। तथा "हरिं वन्दे"इत्यादौ "मोऽनुस्वारः"प्रवर्तते, न तु "गम्यते"इत्यादौ। नच "उञि च पदे"इत्यतः "पदे"इत्यधिकारात्पदे परतो मस्याऽनुसव्रः स्यात्, न तु गम्यत इत्यत्रेति किमिह पदस्येत्यधिकारेणेति वाच्यं, "पुंस्वि"ति रूपाऽसिद्धिप्रसङ्गात्। तस्मात् "मोऽनुस्वारः"इत्यत्र "पदस्ये"त्यनुवर्तनीयमेव। "पदे"इत्यस्योत्तरसूत्रेऽप्युपयोगो नास्तीति "उञिच पदे"इत्यत्राऽवोचाम। इह "पदस्यो#ए"ति संबन्धसामान्ये षष्ठी, सा तूत्तरेषु वाक्येषु यथायोगं सम्बन्धविशेषेऽवतिष्ठते। क्वचित्स्थाने षष्ठी, क्वचिदवयवषष्ठीति। तत्र "संयोगान्तस्य लोपः""मो नो धातोः" "मोऽनुस्वारः"इत्यादौ पदस्येति स्थानषष्ठी। अवयवषष्ठ()आन्तूक्ताऽतिप्रसङ्गात्। "मादुपधाया"इत्यादौ त्ववयवषष्ठी। अन्यथा "वृक्ष्वा"निप्यत्रैव मतुपोमस्य वत्वं स्यान्न तु "वृक्षवन्तौ""वृक्षवन्त"इत्यत्र। एतच्चानुपपादयिष्यते। यद्यपि "षष्ठी स्थानेयोगे"ति परिभाषया "पदस्ये"त्()यत्र स्थानषष्ठ()एव लभ्यते, न त्ववयवषष्ठी, तथापि सनलोपस,#ऊत्रे अन्तस्येति ग्रहणाज्ज्ञापकादवयवषष्ठ()पिलभ्यते। यदि तु "पदस्ये "ति स्थानषष्ठ()एव स्यात्तर्हि नान्तस्य पदस्य लोपो भवन्नलोऽन्त्यस्य स्यादिति अन्तग्रहणमनर्थकं स्यात्। अवयवषष्ठ()ङ्गीकारे चु "अन्तस्ये"ति ग्रहणं सार्थकम्। तद्यथा,--नलोपसूत्रे "प्रातिपदिकान्तस्ये"त्यसमासनिर्देशः। प्रातिपदिकसंज्ञकस्य पदस्य अन्तावयवो यो नकारस्तस्य लोप इति सूत्रार्थ इति। नन्वेमन्तस्येतिग्रहणमवयवषष्ठीत्वज्ञापनार्थमिति स्वीकृतत्लात्पदस्येत्यत्र कथं नाम स्थानषष्ठीलाभः, संबन्धविशेषस्()य निर्धारितत्वेन स्ाथनषष्ठीपरिभाषाया अनुपस्थितेः। अत्राहुः प्रयोगमूलत्वाद्ध्यकरणस्मृतेर्लक्ष्यानुरोधेन स्थानषष्ठ()पि स्वीक्रियते, ज्ञापकसिद्धा अबयवषष्ठी न सर्वत्र स्वीक्रियते इति नलोपसूत्रे मनोरमायान्तग्रहणं त्युक्तं शक्यमित्युक्तम्। भाष्यादौ तु "पदस्ये"त्यधिकृतस्याऽवयवषष्ठ()न्तत्वमप्यभ्युपगम्यते न तु स्थानषष्ठ()न्तत्वमेवेति ज्ञापनार्थंमन्तग्रहणम्। तेन "वृक्षवन्तौ""वृक्षवन्त"इत्यत्र "मादुपधायाः"इति वत्वं सिध्यति, पदावयवस्य मतुपः सत्त्वात्।अन्यथा "पदस्ये"त्यस्य विसेष्यत्वे मतुपातदन्ताविधौ "मत्वन्तं यत्पदं तदवयवस्य मतुपो मादुपधायाः परस्य मस्य वत्वं भवती"त्यर्थः स्यात्। तथा च "वृक्षवा"नित्यत्रैव स्यात्, नतु "वृक्षवन्तौ" "वृक्षवन्त"इत्यत्रे"ति स्थितम्।

---

सूत्रम्

काशिका-वृत्तिः

पदात् ८।१।१७

पदातित्ययम् अधिकारः प्राक् कुत्सने च सुप्यगोत्रादौ ८।१।६९ इत्येतस्मात्। यदिति ऊर्ध्वम् अनुक्रमिष्यामः पदातित्येवं तद् देदितव्यम्। वक्ष्यति आमन्त्रितस्य च ८।१।१९। आमन्त्रितस्य पदात् परस्य अनुदात्तादेशो भवति इति। पचसि देवदत्त। पदातिति किम्? देवदत्त पचसि।

न्यासः

पदात्?। , ८।१।१७

"प्राक्? कुत्सने च सुप्यगोत्रादौ" इत्यादि। कुत एतत्()? अत्र केचिदाहुः--""सुपि" ८।१।६९ इति येयं सप्तमी तथा "पदात्()" इत्यस्याः पञ्चम्या निमित्तभावस्य बाधितत्वान्नोत्सहते प्रवर्त्तितुम्(), अतो बाध्यते पञ्चस्या निमित्तभावः" इति, एतच्चायुक्तम्(); न हि सप्तमीपञ्चम्योर्निमित्तत्वे सत्याश्रीयमाणे कश्चिद्विरोधः। तत्रैवमभिसम्बन्धः स्यात्()--पदात परं यत्तिङन्तं कुत्सनवाचिनि सुबन्ते परतस्तस्मिन्निहन्यत इति, ततश्चेहैव स्यात्()--देवदत्तः पचति पूतीति, इह तु न स्यात्()--पचति पूतीति। किञ्च "चनचिदिवगोत्रादितद्धिताम्रेडितेध्वगतेः" ८।१।५७ इत्यत्रापि पदादित्यस्यानुवृत्तिर्न स्यात्()। सप्तम्या "पदात्()" इत्यस्याः पञ्चम्याः बाधितत्वात्(); ततश्च निघातार्थमेव सूत्रे स्यात्()। चनादिप्रयोगे सति विज्ञायेत--तस्मादिति। अतोऽधिकाराणां प्रवृत्तिनिवृत्ती भवत इति समाधेयम्()। अथ वा--पदादिस्येतत्? प्रतिषेधेन सम्बद्धम्()। अतः "कुत्सने" ८।१।६९ इत्यतर प्रतिषेधे निवृत्ते "पदात्()" इत्येतदपि निवत्र्तते॥

तत्त्व-बोधिनी

पदात् ३५५, ८।१।१७

पदात्। "कुत्सने च सुप्यगोत्रादौ"इत्यतः प्रागयमधिकारः। यदि तु "कपत्सने च सुपी"त्यत्रापि पदादित्यनुवर्तते, तदा "देवदत्तः पचति पूति"त्यत्रैव निघातः स्यान्न तु "पचति पूती"त्यत्र।

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तं सर्वम् अपादादौ ८।१।१८

अनुदात्तम् इति च, सर्वम् इति च, अपादादौ इति च, अपादादौ इति च एतत् त्रयम् अधिकृतं वेदितव्यम् आ पादपरिसमाप्तेः। इत उत्तरं यद् वक्ष्यामः अनुदात्तं सर्वम् अपादादौ इत्येवं तद् वेदितव्यम्। वक्ष्यति आमन्त्रितस्य च ७।१।१९ इति। पचसि देवदत्त। अपादादौ इति किम्? यत् ते नियानं रजसं मृत्यो अनवधर्ष्यम्। बहुवचनस्य वस्नसौ ८।१।२१। ग्रामो वः स्वम्, जनपदो नः स्वम्। अपादादौ इति किम्? रुद्रो विश्वेश्वरो देवो यष्माकं कुलदेवता। स एव नाथो भगवानस्माकं शत्रुमर्दनः। पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यते। सर्वग्रहणम् सर्वम् अनूद्यमानं विधीयमानं च अनुदात्तं यथा स्यातिति। तेन युष्मदस्मदादेशानाम् अपि वाक्यभेदेन अनुदात्तत्वं विधीयते। युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य पदस्य यथा स्युः, यत्र अपि स्वादिपदं पदसंज्ञं भवति। ग्रामो वां दीयते। जनपदो नौ दीयते।

न्यासः

अनुदात्तं सर्वमपादादौ। , ८।१।१८

"यत्? ते नियतम्()" इत्यादि। अत्र "मृत्यो" इत्येतदामन्त्रितं पदं भवति रजसमित्येतस्मात्? पदात्? परन्()। किन्तु मृत्यो अनवधृष्यभित्यस्य पदस्यादौ वत्र्तत इति न भवति निघातादेशः। अस्मिन्नसति "आमन्त्रितस्य च" ६।१।१९२ इत्यामन्त्रिस्य षाष्ठिकमेवाद्युदात्तत्वं भवति। "रुद्रो वि()आ" इति। अत्र "देवः"--इत्यस्मात्पदात्? परं "युष्माकम्()" इत्येतत्? पदं भवति, किन्तु "युष्माकं कुलदेवता" इत्यस्य पादस्यादौ वत्र्तत इति न भवति वसादेशः। अनन्तरेऽपि प्रत्युदाहरणे "अस्माकं शत्रुमर्वनः" इत्यस्य पादस्यादौ वर्त्तेऽस्माकमित्येतत्पदम्()। तेन "भगवान्()" इत्यस्मात्? पदात्? परस्यापि तस्य नसादेशो न भवति। "पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृहृते" इति। विशेषानुपादानात्()। अथ सर्वग्रहणं किमर्थम्(), यावता "अनुदात्तं पदमेकवर्णम्()" ६।१।१५२ इति पदेषु स्वरित उदात्तो वैव एव भवति; तस्य चानुदात्त आदिष्टे सर्वमेवानुदात्तं पदं जायते? इत्याह--"सर्वग्रहणम्()" इत्यादि। "अनूद्यमानम्()" इत्यादिना सर्वग्रहणस्य प्रयोजनमाचष्टे। तद्()द्विविधं पदम्()--अनूद्यमानम्(), विधीयमानञ्च। तत्र यत्? सिद्धमेव कार्यन्तरार्थं संकीत्र्यते

नदनूद्यमानं पदम्(), यत्त्वपूर्वमेव विधीयते तद्विधीयमानम्(); तदुभयमप्यनुदात्तं यथा स्यादित्येवमर्थं सर्वग्रहणम्()। तेन किं सिद्धं भवति? इत्याह--"तेन" इत्यादि। युष्मदस्मदादेशा हि विधीयमानत्वादसिद्धसत्ताकाः। सिद्धस्य हि वस्तुनो धर्मान्तरं खस्यते कर्तुम्(), यथा--निष्पन्नरूपस्य वाससो रागः, नानिष्पन्नस्य; तथा तस्यैवानुपजातावस्थस्य। तत्रासति सर्वग्रहणे यदेव सिद्धसत्ताकं पदमनूद्यमानमामन्त्रितादि, तस्यैदानुदात्तत्वं विधीयते, न तु युष्मदस्मदादेशानाम्()। सर्वग्रहणे तु सति तेषामपि विधीयते। अथ क्रियमाणेऽपि सर्वग्रहणे कथं युष्मदस्मदादेशानामप्यनुदात्तत्वं शक्यं विधातुम्()? न हि तेन तेषां विधानकाले यदसिद्धत्वं तदपनीतम्()? इत्यत आह--"वाक्यभेदेन" इत्यादि। सर्वग्रहणसामथ्र्यादत्र व#आक्यभेद उक्तो भवति, न ह्न्यथा सर्वग्रहणस्यानुदात्तत्वं शक्यं विज्ञातुम्()। तत्रैकेन वाक्येनादेशा विधीयन्ते द्वितीयेन च तेषामनुदात्तत्वम्()। कथं तर्हि विधीयमानमित्युक्तम्(), यावता विहितानामेव युष्मदस्मदादेशानां वाक्यान्तरेणानुदात्तत्वं विधीयते? यदिह प्रकरणे विधीयमानं तद्विहितं सदुत्तरकालमनुदात्तं यथा स्यात्()--इत्ययं तेत्राभिप्रायो वेदितव्यः। यद्यसिद्धस्य धमन्तिरमशक्यं विधातुम्(), तत्कथं "लुङलङ्लृङ्क्ष्वडुदात्तः" (६।४।७१) इत्यत्र विधीयमानस्याट उदात्तत्वं विधीयते? तत्रापि वचनप्रामाण्याद्वाक्यभेदः कृतो भवेत्()--तत्रैकेन वाक्येनाङ्()विधीयते, अपरेण तु विहितस्योदात्तत्वम्(); इह त्वसति सर्वग्रहणे वाक्यभेदो न लभ्यत इत्यनुदात्तत्वमेव न स्यात्? अनुदात्तवचनस्यामन्त्रितादिषु चरितार्थत्वात्()। "युष्मदस्मदादेशाश्च" इति। चशब्दः प्रयोजनान्तरसमुच्चये। इदञ्चान्यत्? सर्वग्रहणस्य प्रयोजनम्()--युष्मदस्मदोर्वान्नावादय आदेशा सर्वस्य सुबन्तस्य पदस्य यथा स्युरिति; अन्यथा ह्रसति सर्वग्रहणे "युष्मदस्मदोः" ८।१।२० इति षष्टीनिर्देशाद्विभकिं()त विहाय तयोः केवलयोरेव स्युः। ननु च "पदस्य" ८।१।१६ इति वत्र्तते, विभक्यन्तं हि पदम्(), तत्रान्तरेणापि सर्वग्रहणं सर्वस्य सविभक्तिकस्यैव पदस्य भविष्यति? इत्यत आह--"यत्रापि" इत्यादि। स्वादौ पदं स्वादिपदम्(), "सप्तमी" (२।१।४०) इति योगविभागात्? समासः; तत्पुनर्यस्य "स्वादिष्वसर्वनामस्थाने" १।४।१७ इति पदसंज्ञा विहिता। असति सर्वग्रहणे यत्र विभक्त्यन्तं पदं तत्रैव सविभक्तिकस्य पदस्य स्युः। यत्र विभक्तौ परतः पूर्व पदं तत्र न स्युः, इष्यन्ते च तत्रापि सर्वस्य। तस्माद्यत्रापि स्वादिपदं चतुर्थीद्विवचनादौ तत्रापि सर्वस्य सुबन्तस्य यथा स्युः इत्येवमर्थं "सर्वम्()" त्युचेयते। ननु चामन्त्रितस्य पदात्? परस्यानुदत्तत्वं वक्ष्यति। तत्र नाप्राप्ते आमन्त्रिताद्युदात्तत्व इदमनुदात्तत्वमारभ्यत इति तस्यापदादः, ततश्च तेन तस्मिन्? बाधिते प्रकृतिल्वरत्वमामन्त्रितल्यापद्येत; सर्वग्रहणात्तु सर्वस्वरप्राप्तिरामन्त्रितानुदात्तत्वेन बाध्यते, तस्मात्? सर्वस्वरप्राप्तिबाधनार्थमपि सर्वग्रहणं कस्मान्न भवति? नार्हत्येवं भवितुम्(); अनुदात्तशब्दो ह्रयमामन्त्रितसमानाधिकरणः सर्वस्वरप्रा()प्त बाधिष्यते। न ह्याद्युदात्तत्वे प्रतिषिद्धे प्रकृतिस्वरे क्रियमाणेऽनुदात्त शब्देनामन्त्रितमुच्यते। तस्मात्? पूर्वोक्तमेव सर्वग्रहणस्य प्रयोजनम्()॥

तत्त्व-बोधिनी

अनुदात्तं सर्वमापादादौ ३५६, ८।१।१८

अनुदात्तं सर्वमपादादौ। इदं पदत्रयमा पादपरिसमाप्तचेरधिक्रियते।

---

सूत्रम्

काशिका-वृत्तिः

आमन्त्रितस्य च ८।१।१९

आमन्त्रितस्य पदस्य पदात् परस्य अपदादौ वर्तमानस्य सर्वम् अनुदात्तं भवति। पचसि देवदत्त। पचसि यज्ञदत्त। आमन्त्रिताद्युदात्तत्वे प्राप्ते वचनम्। समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः। इह मा भूवन्, अयं दण्डो हर अनेन, ओदनं पच तव भविष्यति, ओदनं पच मम अभविष्यति। इह च यथा स्यात्, इह देवदत्त माता ते कथयति, नद्यास्तिष्ठति

लूके, शालीनां ते ओदनं दास्यामि इति। आमन्त्रितान्तं तिङन्तं युष्मदस्मदादेशाश्च यस्मात् पराणि न तेषां सामर्थ्यम् इति तदाश्रया निघातयुष्मदस्मदादेशा न स्युः, समर्थः पदविधिः (*२,१।१।) इति वचनात्।

न्यासः

आमन्त्रितस्य च। , ८।१।१९

"आमन्त्रिताद्युदात्तत्वे प्राप्त इदमुच्यते। इह पदाधिकारमात्रं प्रकृत्य निघातयुष्मदादेशा विधीयमाना यत्रापि नेष्यन्ते, तत्रापि प्रसजन्ति। यत्रापि क्वचिदिष,()यन्ते, तत्रापि क्वचिन्न प्राप्नुवन्ति, अत एतद्दोषपरिजिहीर्षयाऽऽह--"समानवाक्ये" इत्यादि। यस्मात्? पदात्? परस्यामन्त्रितादेर्निघातादि कार्यं विधीयते, तयोः समान एकस्मिन्? वाक्य आधारभूते सति विघातादयो विधीयन्त इति वक्तव्यम्()। किमर्थम्()? इत्याह--"इह" इत्यादि। "अयं दण्डः" इति। अत्रास्तीत्येतदपेक्षते। अप्रयुज्यमानमपि गम्यत इत् तथोक्तम्()। "यत्रान्यत्? क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रयुज्यते इत्यप्रयुज्यमानोऽपि गम्यते" इति, तदेवमस्तीत्यनेन गम्यमानेन सहितमयं दण्ड इत्येकं धाक्यम्(), हरानेनेत्यपरम्()। तत्र यद्येकवाक्ये निघातादयो नोच्येरन्(), ततो दण्डादिशब्दादतिङन्तात्? परस्य हरेत्यस्य तिङन्तस्य निघातः प्रसज्येत। ननु पदविधिरयम्(), स च सामर्थ्ये सति भवति, न चेह तदस्ति, अतोऽसामथ्र्यान्निधातो न भविष्यतीति चेदिहापि तर्हि न स्यात्()--इह देवदत् माता ते कथयति, नद्यास्तिष्ठति कूले, शालीनां त ओदनं दास्यामीति। न ह्यत्रेहेत्यनेन देवदत्तेत्यामन्त्रितस्यास्ति सामथ्र्यम्(); अपि च विद्यत एवायं दण्डो हरानेनेत्यत्र सामथ्र्यम्, तथा ह्यनेनेति सर्वनाम्ना यत करणेन प्रत्यवमुश्यते तद्धरेत्येतदपेक्षते। तच्च प्रत्यासत्तेर्वण्ड एवेत्यस्ति दण्डस्य हरेत्येतस्य च व्यपेक्षालक्षणं सामथ्र्यम्()। "ओदनं पच तव भविष्यति" इति। ओदनं पचेत्यकं वाक्यम्(), तव भविष्यतीत्यपरम्()। "ओदनं पच मम भविष्यति" इति। अत्राप्योदनं पचेत्येकं वाक्यम्(), मम भविष्यतीत्यपरम्()। तत्र यद्येकवाक्ये युष्मदस्मदादेशा नोच्येरन्(), ततः पचेत्येतस्मात्? पदात्? परयोर्युष्मदस्मदोस्तु "तेमयावेकवचनस्य" ८।१।२२ इति तेमयावादेशो स्याताम्(), अस्ति ह्यत्रापि सामथ्र्यम्()। तथा हि--युष्मच्छब्ददाच्योऽस्मच्छब्दवाच्यश्च योऽर्थस्तत्साधनेन पाकेन तत्त्वामिकौदनो भविष्यतीत्येवम्भूता पाकस्य युष्मदस्मदोश्च व्यपेक्षा विद्यते। असः समानवाक्यग्रहणे तु सति न किञ्चिदनिष्टमापद्यते। "इह च" इत्यादि। चशब्दः समुच्चये। इदञ्चापरमत्त्या इष्टेः प्रयोजनमिति दर्शयति। "इह देवदत्त माता ते कथयति" इत्येकं वाक्यम्(), "नद्यास्तिष्ठति कूले" इति द्वितीयम्()। "शालीनां त ओदनं दास्यामि" इति तृतीयम्()। तत्र प्रथमे वाक्ये--इहेत्यस्मात्? पदात्? परस्य देवदत्तस्यामन्त्रितस्यानेन निघातो यथास्यात्(), द्वितीये--नद्या इत्वस्मात्परस्य युष्मच्छब्दस्य "तेमयावेकवचनक्य" ८।१।२२ इति त इत्येवमादेशो यथा स्यादित्येवमर्थं समानवाक्ये निघातादयो वेदितव्याः। अस्मच्छब्दादेशोदाहरणमिह नोपन्यस्तम्(); युष्मच्छब्दादेशोदाहरणेनैवावगम्यमानत्वात्()। तात्पुनः शालौनामोदनं मे देहीत्येवंजातीयकं तत्र द्रष्टव्यम्()। किं पुनः स्याद्यदि समानवाक्ये निघातयुष्मदस्मदादेशा नोच्येरण्()? इत्यत आह--"आमन्त्रितान्तम्()" इत्यादि। प्रथमे तावद्वाक्ये--इहेत्येतदधिकरणप्रधानम्(), अधिकरणञ्चाधेयापेक्षम्(), तच्चाधेयं माता न तु देवदत्तः। इह ते स्विता माता कथयतीत्यर्थः। तस्मादिहशब्देन नास्तिदेवदत्तत्यस्यामन्त्रितस्य सामथ्र्यम्()। द्वितीये तु नद्या इत्येतस्मात्? परं तिष्ठतीत्येतत्? तिङन्तम्()। न च तस्या नद्या इत्यनेन सामथ्र्यम्(); किं तर्हि? कूल इत्यस्य। त#ऋतीयेऽपि--शालीनामित्यस्मात्? पदाद्युष्मच्छब्दः परः, म तु शालीनामित्यनेन तस्य सामथ्र्यमस्ति, किं तर्हि? ओदनस्येति। ततः सामथ्र्याभावात्? तदाश्रया निघातादयो न त्युः। "तदाश्रयाः" इति। इहेत्येतत्? पदं "नद्या" इत्येच्छालीनामित्येतच्छाश्रयो निमित्तं यथां ते तथोक्ताः। अथ वा--तत्? सामथ्र्यमाश्रयो येषां ते तथोक्ताः। असल्यां ह्यस्यामिष्टौ पदादधिकारात्? पदविधिर्निघातादि कार्यं भवति, स च सामथ्र्यनिबन्धनः। तच्च सामथ्र्यमिह नास्तीति कुतो निघातादेः प्रसङ्गः! तस्मादसामर्थ्येऽपि यथा स्यादित्येवमर्थं समानवाक्ये निघातादि कार्यं वक्तव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर् वान्नावौ ८।१।२०

युष्मदस्मदित्येतयोः षष्ठीचतुर्थीद्वितीयास्थयोः यथासङ्ख्यं वाम् नौ इत्येतावादेशौ भवतः, तौ चानुदात्तौ। पदस्य, पदात्, अनुदात्तं सर्वमपादादौ इति सर्वम् इह सम्बध्यते। ग्रामो वां स्वम्। जनपदो नौ स्वम्। ग्रामो वां दीयते। जनपदो नौ दीयते। ग्रामो वां पश्यति। जनपदो नौ पश्यति। एकवचनबहुवचनान्तयोरादेशान्तरविधानाद् द्विवचनान्तयोः एतावादेशौ विज्ञायेते। षष्ठीचतुर्थीद्वितीयास्थयोः इति किम्? ग्रामे युवाभ्यां कृतम्। स्थग्रहणं श्रूयमाणविभक्त्यर्थम्। इह मा भूत्, अयं युष्मत्पुत्रः अयम् अस्मत्पुत्रः इति।

लघु-सिद्धान्त-कौमुदी

साम आकम् ३३१, ८।१।२०

आभ्यां परस्य साम आकं स्यात्। युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु। अस्मासु॥युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ॥ पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः॥

न्यासः

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ। , ८।१।२०

"षष्ठीचतुर्थीद्वितीयास्ययोः" इति। षष्ठ()आदिषु यौ तिष्ठतस्तौ तथोक्तौ। "सुपि स्था" ३।२।४ इति कः। कि पुनः कारणं द्विवचनान्तयोरेवोदाहरण पन्यस्तम्()? इत्याह--"एकवचनान्तबहुवचनान्तयोः" इत्यादि। अथ स्थग्रहणं किमर्थम्(), न "युष्मदस्मदोः षष्ठीचतुर्थीद्वितौयासु" इत्येवोच्येत, षष्ठ()आदिषु विधीयमानेध्ववश्यं युष्मदस्मदोस्तात्स्थ्यं भविष्यति? इत्यत आह--"स्थग्रहणम्()" इत्यादि। श्रूयमाणा विभक्तिरर्थः प्रयोजनं निमित्तं यस्य तत्? तथोक्तम्()। ["तथोक्तं भवति--कांउ।पाठः] एतदुक्तं भवति--श्रूयमाणाअ षष्ठ()आदिका विभक्तिरादेशस्य निमित्तं कथं नाम लभ्येतेत्येवमर्थं स्थग्रहणमिति? तेन विभक्तिर्यत्रन श्रूयते तत्र न भवतीति--अयं युष्मत्पुत्रोऽयमस्मत्पुत्र इति। असति तु स्थग्रहणे लुप्तायामपि विभक्तौ प्रत्ययलक्षणेन १।१।६१ स्यातामेवादेशौ। अश्रूयमाणरणं पुनरत्र विभक्तेः षष्ठीसमासे कृते "सुपो धातुप्रातिपदिकयोः" २।४।७१ इति लुप्तत्वात्()। कथम्()? पुनः स्थग्रहणे श्रूयमाणा [एष पंक्तिभागः का। मुद्रितेनोपलभ्यते] विभक्तिरादेशस्य निमित्तत्वेन लभ्यते? श्रूयमाणायामेव तस्यां तात्स्थ्यस्य सम्भवात्()। अथ वा--तिष्ठतिरयमपरिहाणावर्थे वत्र्तते, यथा--"समये तिष्ठ सुग्रीव" ["न च सङ्कुचितः पन्थाः येन वाली हतो गतः। समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः॥"] (वा।रा।किं।स।३०।श्लो।८१) इति। समयं न परिजहिहीत्यर्थः। तेनैवं विज्ञायते--षष्ठ#ईचतुर्थीद्वितीयामपरिजहतोर्युष्मदस्मदोरादेधाविति। एवं च विज्ञायमाने श्रूयमाणैव विभक्तिरादेशस्य निमित्तत्वेनोपात्ता भवतीति॥

तत्त्व-बोधिनी

युष्मादस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वानावौ ३५७, ८।१।२०

षष्ठीचतुर्थीदि। "अल्पाच्तर"मिति "षष्ठी"त्यस्य पूर्वनिपातः। षष्ठ()आदिविशिष्ययोरिति। ननु युष्मदस्मदोरित्युक्तत्वात्तयोरेव उक्तरूत्या वस्नसादौ दोषाऽभावेऽपि भ्यामादौ परतो युष्मदस्मदोः पदत्वात्केवलयोर्वानावादेशप्रसङ्गस्य दुर्वारत्वात्। तथा च "सुखं वां नौ ददात्वीशः"इति प्रयो#ओ न सहगच्छेत। नापि "द्वितीयास्थयो"रिति स्थग्रङणसामथ्र्याद्विभक्तिविशिष्योरेव आदेशा भवेयुरिति वाच्यम्,

"स्थग्रहणाच्छ()यमाणविभक्तिकयोरेवे"ति वक्ष्यमाणतया तत्सामर्थ्यस्योपक्षयात्। मैवम्, "अनुदात्तं सर्व"मिति सर्वग्रहणाधिकारात्सर्वस्यैव विभक्तिविशिष्टस्य आदेशा भवन्तीति आकरे स्पष्टत्वात्। यदि तु सर्वस्य द्वे"इत्यतः "सर्वस्येति पदमनुवर्तते, तदा सर्वग्रहणमिह त्यक्तुं शक्यमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

बहुवचनस्य वस्नसौ ८।१।२१

बहुवचनान्तयोः युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः यथासङ्ख्यम् वस् नसित्येतावादेशौ भवतः। ग्रामो वः स्वम्। जनपदो नः स्वम्। ग्रामो वो दीयते। जनपदो नो दीयते। ग्रामो वः पश्यति। जनपदो नः पश्यति।

लघु-सिद्धान्त-कौमुदी

बहुवचनस्य वस्नसौ ३३२, ८।१।२१

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः॥

न्यासः

बहुवचनस्य वस्नसौ। , ८।१।२१

---

सूत्रम्

काशिका-वृत्तिः

तेमयावेकवचनस्य ८।१।२२

युष्मदस्मदोः एकवचनान्तयोः षष्थीचतुर्थीस्थयोः यथासङ्ख्यं ते मे इत्येतौ आदेशौ भवतः। ग्रामस्ते स्वम्। ग्रामो मे स्वम्। ग्रामस्ते दीयते। ग्रामो मे दीयते। द्वितीयान्तस्य आदेशान्तरविधानसामर्थ्यात् षष्ठीचतुर्थ्योः एवायं योगः।

लघु-सिद्धान्त-कौमुदी

तेमयावेकवचनस्य ३३३, ८।१।२२

उक्तविधयोरनयोष्षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः॥

न्यासः

तेमयावेकवचनस्य। , ८।१।२२

किं पुनः कारणं षष्ठीचतुर्थ्यन्तयोरेवोदाहरणमुपन्यस्तम्(), न द्वितीयान्तयोः? इत्याह--"द्वितीयान्तस्य" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

त्वामौ द्वितीयायाः ८।१।२३

एकवचनस्य इति वर्तते। द्वितीयाया यदेकवचनं तदन्तयोः युष्मदस्मदोः यथासङ्ख्यम् त्वा मा इत्येतौ आदेशौ भवतः। ग्रामस्त्वा पश्यति। ग्रामो मा पश्यति।

लघु-सिद्धान्त-कौमुदी

त्वामौ द्वितीयायाः ३३४, ८।१।२३

द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः॥श्रीशस्तवावतु मापीह दत्तात्ते मेऽपि शर्म सः। स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः। सोऽव्याद्वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः॥(एकवाक्ये युष्मदस्मदादेशा वक्तव्याः)। एकतिङ् वाक्यम्। ओदनं पच तव भविष्यति। (एते वान्नावादयोऽनन्वादेशे वा वक्तव्याः)। अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति वा। तस्मै ते नम इत्येव॥ सुपात्, सुपाद्॥ सुपदौ॥

न्यासः

त्वामौ द्वितीयायाः। , ८।१।२३

बाल-मनोरमा

तेमयावेकवचनस्य , ८।१।२३

तेमयौ। षष्ठीचतुर्थ्येकवचनान्तयोरिति। अत्र द्वितीयाग्रहणं नानुवर्तते, तत्र त्वामादेशयोर्वक्ष्यमाणत्वात्। "तेमयौ" इति सूत्रे तेश्च मेश्च तेमयाविति विग्रह इति भावः। अयमपि वानावोरपवादः।

बाल-मनोरमा

त्वामौ द्वितीयायाः , ८।१।२३

त्वामौ द्वितीयायाः। त्वाश्च माश्चेति विग्रहः। एकवचनस्येत्यनुवर्तते। तदाह-द्वितीयेत्यादिना।

अथ विभक्तिक्रमक्लृप्तद्वितीयाचतुर्थीषष्ठीक्रमेण एकद्विबहुवचनक्रमेण चोदाहरति-श्रीश इत्यादि। "तत्र "श्रीशस्त्वावतु मापीहे"ति प्रथमः पादः। श्रिया ईशः==पतिः--विष्णुः, त्वा मा अपि पातु इत्यन्वयः। अत्र त्वां, मामिति द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ। दत्तात्ते मेऽपि शर्म स इति। स श्रीशः ते मेऽपि शर्म सुखं दत्तादित्यन्वयः। "डु दाञ् दाने" आशिषि लोटि दत्तादिति रूपम्। "दद्या"दिति क्वचित्पाठः। अत्र तुभ्यं मह्ममिति चतुर्थ्येकवचनान्तयोस्ते मे इत्यादेशौ। स्वामी ते मेऽपि स हरिरिति। अत्र तव मम इति षष्ठ()एकवचनान्तयोस्ते मे आदेशौ। पातु वामपि नौ विभुरिति। विभुः=सर्वव्यापको वां नौ अपि पातु इत्यन्वयः। अत्र युवाम् आवाम् इति द्वितीयाद्विवचनयोर्वां नौ इत्यादेशौ। सुखं वां नौ ददात्वीश इति। "नौ" इत्यनन्तरमपिशब्दोऽध्याहार्यः। अत् युवाभ्याम् आवाभ्याम् इति चतुर्थीद्विवचनान्तयोर्वांनावौ। पतिर्वामपि नौ हरिरिति। अत्र युवयोरावयोरिति षष्ठीद्विवचनान्तयोर्वांनावौ। सोऽव्याद्वो न इति। सः=हरि वः नः अपि अव्यात्=रक्षतादित्यर्थः। अत्र युष्मान् अस्मान् इति द्वितीयाबहुवचनान्तयोर्वस्नसौ। शिवं वो नो दद्यादिति। शिवमिति शुभमुच्यते। "न" इत्यनन्तरम् "अपी"त्यध्याहार्यम्। अत्र युष्मभ्यम्, अस्मभ्यम् इति चतुर्थीबहुवचनान्तयोर्वस्नसौ। सेव्योऽत्र वः स न इति। स हरिः वः नः-अपि सेव्यः=भजनीयः इत्यर्थः। "कृत्यानां कर्तरि वा" इति षष्ठी। अत्र युष्माकम्, अस्माकम् इति षष्ठीबहुवचनान्तयोर्वस्नसौ। त्वां पातु मां पात्विति। अत्र युष्मदस्मोः पदात्परत्वाऽभावात् "त्वामौ द्वितीयायाः" इति न भवतीत्यर्थः। अद्यप्यत्र अस्मच्छब्दस्य पात्विति पदात्परत्वमस्ति, तथापि भिन्नकालं वाक्यद्वयमिह विवक्षितमित्यदोषः। संवेद्योऽस्मानिति। अत्राऽस्मच्छब्दस्य पादादौ स्थितत्वान्नादेशः। यद्यप्यनुष्टुप्छन्दस्कोऽयं श्लोकः, तत्र एकैकः पाटोऽष्टाक्षर इति स्थितिः। तत्र सन्ध्यभावे "अस्मान्कृष्णः सर्वदाऽवतु #इत्यस्य नवाक्षरत्वान्न पादत्वम्। कृते तु सन्धौ ओकारस्य परादित्वे सति अष्टाक्षरत्व व्याघातः। "संवेद्य" इत्यस्य पदत्वाऽभावादस्मदः पदात्परत्वाऽभावश्च। पूर्वान्तत्वे तु "स्मा"नित्यस्य पादादिस्थितस्य

नास्मच्छब्दरूपता, तथापि "संवेद्यो" इत्येकादेशविशिष्टस्य पूर्वान्तत्वात्पदत्वम्। "स्मानित्यस्य तु एकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दरूपत्वम्। वस्स्तुतस्तु ओकारस्य पूर्वान्तत्वात्संवेद्यो इत्यस्य पदत्वम्, स्मानित्यादेरष्टाक्षरत्वं च। परादित्वाच्चास्मच्छब्दरूपता। "उभयत आश्रयणे नान्तादिव"दिति तु नास्तीतीण्धातौ निरूपयिष्यामः। केचित्तु "अपदादौ किं, युष्मान् रक्षतु गोविन्दोऽस्मान् कृष्णस्सर्वदावतु" इति प्रत्युदाहरन्ति। तन्नि, युष्मानित्यस्य पदात्परत्वाऽभावादेवाऽप्राप्तेः। अस्मानित्यस्य तु पदात्परत्वेऽपि समानवाक्यस्थपदात्परत्वाऽभावात्। ननु "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयान्तयोः" इत्येव सूत्र्यतां, कि स्थग्रहणेन। स्थग्रहणे।ऽपि कथञ्चित्तस्यैवार्थस्य लामादित्यत आह--हासीरिति गम्यते। ततश्च षष्ठीचतुर्थीद्वितीयास्तिष्ठतः=न परित्यजत इति व्युत्पत्तिर्विवक्षिता। षष्ठ()आदिविभक्तीरपरित्यजतोरित्यर्थः। अलुप्तषष्ठ()आदिविभक्तिविशिष्ठयोरिति फलतीति भावः। इति युष्मत्पुत्र इति। पदात्परत्वं सम्पादयितुम् "इति" शब्दः। युवयोर्युष्माकं वा पुत्रः, आवयोरस्माकं वा पुत्र इति विग्रहः। अत्र विभक्तेर्लुका लुप्तत्वात्श्रूयमाणविभक्तिकत्वाऽभावान्नादेशप्रवृत्तिः। तव पुत्रो मम पुत्र इति विग्रहस्तु न, "प्रत्ययोत्तरपदयोश्चे"ति तत्र त्वमादेशयोर्वक्ष्यमाणत्वात्।

समानवाक्ये #इति। निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थः। निघातशब्दोऽनुदात्तवाची। एकतिङिति। तिङित्यनेन तिङन्तं विवक्षितम्। एकस्तिङ् यस्येति विग्रहः। इदं च वाक्यलक्षणमेतच्चास्त्रोपयोग्येव। तेन "पश्य मृगो धावती"त्यादौ नाऽव्याप्तिरिति समर्थसूत्रे भाष्पे स्पष्टम्। ओदनमिति।"ओदनं पचे"त्येकं वाक्यम्। "तव भविष्यती"त्यपरं वाक्यम्। ततश्च तवेति युष्मच्छब्दस्य भिन्नवाक्यस्थात्पदात्परत्वाऽभावान्नादेश इति भावः। शालीनामिति। व्रीहीणामित्यर्थः। प्रकृतिविकारभावे षष्ठी।

एते वांनावादय इति। इदंच "सपूर्वायाः" इति सूत्रे भाष्ये स्थितम्। धातेति। महादेवं प्रति वचनमेतत् "अन्वादेशे तु नित्य"मित्यस्योदाहरणमाह--तस्यमै ते नम इत्येवेति। अत्र "योऽग्निर्हव्यवाट् य इन्द्रो वज्रबाहुः" इत्यादिपूर्ववाक्यं द्रष्टव्यम्। एवंच किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं बोधयितुं पुनरूपादानादन्वादेशोऽयमिति तत्र नित्य एवादेश इति भावः।

तत्त्व-बोधिनी
त्वामौ द्वितीयायाः ३५८, ८।१।२३

उक्तानादेशान्वचनक्रमेणोदाहरति--श्रीश इत्यादिना। स्मी ते मेऽपीति। "स्वामी()आराधिपती"ति षष्ठीसप्तम्योर्विधानादिह षष्ठी। द्विवचनान्तयोरुदाहरणमाह--पातु वामित्यादिना। बहुवचनान्तयोस्तु--सोऽव्याव्दोन इत्यदि। सेव्योऽत्र वः स न इति। "अर्हे कृत्यतृचश्चे"ति ण्यत्। "कृत्यानाम कर्तरि वे"ति षष्ठी। वेदैरशेषैरिति।"युष्मान् रक्षतु गोविन्दः"इति प्राचः पाठस्तूपेक्षितः, "युष्मा"नित्यस्य पदात्परत्वाऽभावादेवाऽप्राप्तेः। "अस्मा"नित्यस्य तु पदात्परत्वेऽपि समानवाक्यस्थपदात्परत्वाऽभावात्। ननु "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाना"मिति सूत्र्यतां, विशेषणेन तदन्तविधौ षष्ठ()आद्यन्तयोर्युष्मदस्मदोः पर्यवस्यति। न च"स्थ"ग्रहणाऽभावे युष्मदस्मदोः सम्बन्धिनीनां षष्ठीचतुर्थीद्वितियानां वानावावित्यर्थः स्यादिति वाच्यं, "सर्वस्य पदस्ये"त्यनुवर्तनादतो व्याचष्टेस्थग्रहणादिति। तिष्ठतिरिहाऽहानौ वर्तते। यथा "समये तिष्ठ सुग्रीवे"ति। समयं मा हासीरिति गम्यते। तेन षष्ठयादीनविजहतोरेव युष्मदस्मदोरादेशा इत्यर्थः। इतियुष्मत्पुत्र इति। युवयोः पुत्रो युष्माकं पुत्र इति वा विग्रहः, न तु तव पुत्रं इति। तथा हि सति "त्वत्पुत्र"इत्येव स्यात्। एवमस्मत्पुत्र इत्यत्राप्यूह्मम्। पदात्परत्वं संपादयितुम्--इतिशब्दः। ननु राज्ञोः पुरुषो राज्ञां पुरुष इति विग्रहे "राजपुरुष"इति नेष्यत इति सुद्धान्तविरोधाद्युष्मत्पुत्रोऽस्मत्पुत्र इत्यत्र युवयोर्युष्माकमित्यादिविग्रहो नसंभवतीति चेदत्राहुः--यत्र वृत्तौ सङ्ख्यविशेषबोधकं प्रमाणं नास्ति तत्रैवैकत्वसङ्ख्याऽऽश्रूयते, यथा "राजपुरुष"इति। न हि

"राजपुरुष"इत्यत्र विभक्तौ निवृत्तायां राजपदार्थे द्वित्वादिप्रत्यायकं किंचिदस्ति। यत्र पुनः सङ्ख्याभेदगमकमर्थप्रकरणाद्यस्ति, भवति तत्र द्विवचनबहुवचनयोरपि वृत्तिः। प्रकृते त्वेकवचनान्तेव विग्रहे प्रत्ययोत्तरपदयोश्चे"ति त्वमागेशप्रसङ्गादर्थाद्द्विवचनबहुवचनान्तेनेति विग्रहे वृत्तिर्भविष्यतीति। अर्थः--- अर्थाद्यथा,--मुद्रैः क्रीतो मौद्रिकः। न ह्येकेन मुद्रेन द्वाभ्यां वा मुद्राभ्यां क्रयणं संभवति। प्रकरणाद्यथा"भवाद्गिरामवसरप्रदानाय वचांसि नः"। भवतोरिगिरामिति तत्र ह्यर्थः। समानवाक्य इति। "देवदत्त अस्त्ययं दण्डो, देवदत्त हराऽनेने"त्यत्र "दण्ड"इत्येतत्पूर्ववाक्यस्थमिति समानवाक्यस्थत्वाऽभावादामन्त्रितनिघातो न भवति। एकातिङिति। एकं तिङन्तं यत्रेत#इ बहुव्रीहिः। ननु ओदनस्त्वया पक्तव्यस्तव भविष्यतीत्यत्रातिप्रसङ्गः, पक्तव्योऽस्तीत्यध्याहारेण भिन्नवाक्यतासमर्थनेऽपि पश्य मृगो धावतीत्यादावेकवाक्यत्वव्यवहारो न स्यात्।सत्यम्। प्रकृतोपयोगित्वेनेदमुक्तं। "पश्य मृग"इत्यादौ तु "अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्या"दिति शास्त्रान्तरप्रसिद्धमेवेत्येक। अन्ये तु----"अख्यातं सविशेषणं वाक्य"मिति वार्तिककारवचनपर्यालोचनया "एकति"ङित्यत्र तिङन्तं विशेष्यसमर्तकं विवक्षितं, ततश्च "पश्य मृगो धावती"त्यत्र तिङन्तद्वये सत्यपि पश्येत्यस्यैव विशेष्यसमर्पकत्वान्नोक्तदोष इत्याहुः। एकशब्दः समानवचनो न तु सङ्ख्यावाची। बहुव्रीहिश्चायम्। तेन "ब्राऊहि ब्राऊहि देवदत्ते"त्यत्रवाक्यत्वादामश्चितनिघातः सिध्यतीति समर्थसूत्रे कैयटः। "युष्मदस्मदोर्विभाषा अनन्वादेशे"इति वार्तिकमर्थतः पठति एते वांनावादय इत। यद्यपि "सपूर्वायाः प्रथमाया विभाषे"त्यत्रैतत्पठ()ते तथाप्यविशेषेण विकल्पोऽयं विधीयते इत्याशयेन सपूर्वत्वाऽभावेऽपि विकल्पमुदाहरति--धाता ते भक्त इति। अन्वादेशे तु नित्यमुदाहरति--तस्मै ते नम इत्येवेति। "तुल्यार्थै"रित्यादिवन्न चवाहाहैवैरिति तृतीयानिर्देशेनाऽपि युक्तार्थलाभे "युक्त"ग्रहणमनर्थकमित्यत आह--

---

सूत्रम्

काशिका-वृत्तिः

न चवाहाहएवयुक्ते ८।१।२४

च वा ह अह एव एभिर् युक्ते युष्मदस्मदोः वान्नावादयोः न भवन्ति। पुर्वेण प्रकारेण प्राप्ताः प्रतिषिध्यन्ते। ग्रामस्तव च स्वम्, ग्रामो मम च स्वम्, युवयोश्च स्वम्, आवयोश्च स्वम्, युष्माकं च स्वम्, अस्माकं च स्वम्। ग्रामस् तुभ्यां च दीयते, ग्रामो मह्यं च दीयते, युवाभ्यां च दीयते, आवाभ्याम् च दीयते, युष्मभ्यं च दीयते, अस्मभ्यं च दीयते। ग्रामस्त्वां च पशयति, ग्रामो मां च प्शयति, युवां च पश्यति, आवां च पश्यति, युष्मांश्च पश्यति, युष्मान् वा पश्यति, अस्मान् वा पश्यति। वा ग्रामस्तव वा स्वम्, ग्रामो मम वा स्वम्, युवयोर् वा स्वम्, आवयोर् वा स्वम्, युष्माकं वा स्वम्, अस्माकं वा स्वम्। ग्रामस्तुभ्यं वा दीयते, ग्रामो मह्यं वा दीयते, युवाभ्यां वा दीयते, आवाभ्यां वा दीयते, युष्मभ्यं वा दीयते, अस्मभ्यं वा दीयते। ग्रामस्त्वां वा पश्यति, ग्रामो मां वा पश्यति, युवां वा पश्यति, आवां वा पश्यति, युष्मान् वा पश्यति, अस्मान् वा पश्यति। ह ग्रामस्तव ह स्वम्, ग्रामो मम ह स्वम्, युवयोर् ह स्वम्, आवयोर् ह स्वम्, युष्माकं ह स्वम्, अस्माकं ह स्वम्। ग्रामस्तुभ्यं ह दीयते, ग्रामो मह्यं ह दीयते, युवाभ्यां ह दीयते, आवाभ्यां ह दीयते, युष्मभ्यां ह दीयते, अस्मभ्यं ह दीयते। ग्रामस्त्वां ह पश्यति, ग्रामो मां ह पश्यति, युवां ह पश्यति, आवां ह पश्यति, युष्मान् ह पश्यति, अस्मान् ह पश्यति। अह ग्रामस्तव अह स्वम्, ग्रामो मम अह स्वम्, युवयोरह स्वम्, आवयोरह स्वम्, युष्माकम् अह स्वम्, अस्माकमह स्वम्। ग्रामस्तुभ्यमह दीयते, ग्रामो मह्यम् अह दीयते, युवाभ्याम् अह दीयते, आवाभ्याम् अह दीयते, युष्मभ्यम् अह दीयते, अस्मभ्यम् अह दीयते। ग्रामस्त्वाम् अह पश्यति, ग्रामो माम् अह पश्यति, युवाम् अह पश्यति, आवाम् अह पश्यति, युष्मानह पश्यति, अस्मानह पश्यति। एव ग्रामस्तव एव स्वम्, ग्रामो मम एव स्वम्, युवयोरेव स्वम्, आवयोरेव स्वम्,

युष्माकम् एव स्वम् अस्माकम् एव स्वम्। ग्रामस्तुभ्यम् एव दीयते, ग्रामो मह्यम् एव दीयते, युवाभ्याम् एव दीयते, आवाभ्याम् एव दीयते, युष्मभ्यम् एव दीयते, अस्मभ्यम् एव दीयते। ग्रांस्त्वाम् एव पश्यति, ग्रामो माम् एव पश्यति, युवाम् एव पश्यति, आवाम् एव पश्यति, युष्मानेव पश्यति, अस्मानेव पश्यति। युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम्। युक्तयुक्ते प्रतिषेधो न भवति। ग्रामश्च ते स्वम्, नगरं च मे स्वम्।

न्यासः

न चवाहाहैवयुक्ते। , ८।१।२४

"एभिर्युक्ते" इति। "नपुंसके भावे क्तः" ३।३।११४ एभिर्योग इत्यर्थः। अथ वा--"तयोरेव कृत्यक्त खलर्थाः" ३।४।७० इति कर्मणि क्तः। एभिर्युक्ते सम्बद्धे। कस्मिन्()? युष्मच्छब्देऽस्मच्छब्दे च। यद्यपि तौ द्विर्वचनान्तौ प्रकृतौ, तथापीह प्रत्येकमभिसम्बन्धादेकवचनं कृतम्()। "तव, मम" इति। "युष्मदस्मद्भ्यां ङसोऽश्()" ७।१।२७, "तवममौ ङसि" ७।२।९६। "युवयोरावयोः" इति। "युवावौ द्विवचने" ७।२।९२। "युष्माकमस्माकम्()" इति। "साम आकम्()" ७।१।३३। "तुभ्यं मह्यम्()" इति। "ङेप्रथमयोरम्()" ७।१।२८ इत्यम्(), "तुभ्यमह्यौ ङयि" ७।२।९५। "धुष्मभ्यमस्मभ्यम्()" इति। "भ्यसो भ्यम्()" ७।१।३०। "त्वां माम्()" इति। "त्वमावेकवचने" ७।२।९७ इति त्वमादेशौ, "द्वितीयायां च" ७।२।८७ इत्यात्वम्()। "युष्मान्(), अस्मान्()" इति। "शसो न" ७।१।२९, "पूर्ववदात्वम्()"। "युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम्()" इति। साक्षादव्यवधानेन चादिभिर्योगः। तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थ युक्तग्रहणम्()। कथं पुनर्युक्तग्रहणे साक्षाद्योगप्रतिपत्तिर्भवति? एवं मन्यते--अपरिसमाप्तत्वादस्य वाक्यस्य तृतीयानिर्देश एव युक्तग्रहणमध्याहरिष्यति, यथा--"तुल्यार्थै रतुलोपमाभ्याम्()" २।३।७२ इत्यत्र। तस्माद्युक्तग्रहणं न कत्र्तव्यमेव? तत्? क्रियते साक्षाद्योगप्रतिपत्तिर्यथा स्यादिति। अन्यस्त्वाह--पदविधिरयम्(), पदविधिश्च समर्थानामेव भवति, तत्र पदविधित्वादेव योगे लब्धे यद्युक्तग्रहणं क्रियते तत्? साक्षाद्योगप्रतिपत्तिर्यथा स्यादिति? एतच्चायुक्तम्(); असामर्थ्येऽपि निघातादिकार्यं समानवाक्ये भवतीत्युक्तमेतत्()। कदा पुनश्चादिभिः साक्षाद्युष्मदस्मदोर्योगः? यदा तदर्थगतान्? समुच्चयादीनर्थास्ते द्योतयन्ति। इहैते चादयः समुच्चयादिना द्योत्येनार्थेनार्थवन्तः, तत्र यदा युष्मदस्मदनुगतानेव समुच्चयादीन्? धर्मान्? द्योतयन्ति, तदा चादिभिः साक्षाद्युष्मदस्मदोर्योगः। यदा तु ग्रामादिसम्बन्ध्यन्तरगताः, तदा युक्तयोगः, न तु साक्षाद्योगः। तत्र युक्तयोगे प्रतिषेधो न भवति--ग्रामश्च ते स्वं नगरञ्च मे स्वमिति। तत्र ग्रामशब्दो नगरशब्दश्च चशब्देन युक्तः; तदर्थगस्तस्य समुच्चयस्य तेन द्योतनात्()। युष्मदस्मच्छब्दौ तु ग्रामनगराभ्यां युक्तौ; तयोस्ताभ्यां स्वस्वामिकत्वसम्बन्धस्यार्थस्येह सम्भवात्()। ननु च साक्षाद्योगप्रतिपत्त्यर्थं युक्तग्रहणम्()--युक्तयुक्ते मा भूदित्येवमर्थं कथं क्रियते, न च चादियोगे प्रतिषेध उच्यमानो युक्तयुक्ते प्राप्नोति, न हि यश्चादिभिर्युक्तयुक्तेन योगः स चादियोगो भवति, त()त्कसाक्षाद्योगप्रतिपत्त्यर्थेन युक्तग्रहणेन? एवं तह्र्येतदेव युक्तग्रहणं ज्ञापयति--इह प्रतिषेधकाण्डे युक्तयुक्तेऽपि प्रतिषेधो भवतीति। तेनोत्तरसूत्रे यद्वक्ष्यते--"पस्यार्थैर्युक्तयुक्तेऽपि प्रतिषेधः" इति तदुपपन्नं भवति॥

बाल-मनोरमा

न चवाहाऽबैवयुक्ते , ८।१।२४

न चवाहा। च इत्यव्ययं समुच्चये, वा इति विकल्पे, हा इत्यद्भुते, अह इति खेदे, एव इत्यवधारणे, एतेषां द्वन्द्वः युक्त इति भावे क्तः। तदाह--चादिपञ्चकयोगे इति। पञ्चानामन्यतमेन योगे इत्यर्थः। एते इति। वांनावादय इत्यर्थः। "युष्मदस्मदोः षष्ठी"त्यादिसूत्रेभ्यस्तत्तदनुवृत्तेरिति भावः। इत्यादीति। "कृष्णो मम हा प्रसीदति"। अद्भुतमिदमित्यर्थः। "कृष्णो ममाऽह न प्रसीदति "। अहेति खेदे। कृष्णो ममैव सेव्यः। ननु " न चवाहाहैवैः" इत्येवास्तु, मास्तु युक्तग्रहणम्। "वृद्धो यूना" इत्यादिवत्तृतीययैव तल्लाभादित्यत आह--युक्तग्रहणादिति। अत्र चाद्यर्थैः समुच्चयादिभिर्युष्मदस्मदर्थोः साक्षादन्वयस्तत्रैवायं निषेध इत्यर्थः। हरो हरिश्चेति। अत्र "च" शब्दस्य हरिहरियोः साक्षादन्वयः।

समुच्चितयोर्हरिहरियोः स्वामीत्यत्रान्वयः। "स्वामी"त्यस्य मे इत्यनेनान्वयः। ततश्च चशब्दस्य अस्मच्छब्देन साक्षादन्वयाऽभावान्मेआदेशस्य निषेधो नेति भावः।

तत्त्व-बोधिनी

न चावाहाऽहैवयुक्ते ३५९, ८।१।२४

युक्तग्रहणादिति। यत्र युष्मदस्मदर्थगतान् समुच्चयादींश्चादयो द्योतयन्ति तदा चादिभिः सहाऽर्थद्वारा युष्मदस्मदोः साक्षाद्योगः, तत्रैवायं निषेध इत्यर्थः। हरो हरिश्चेति। अत्र "च"शब्दो हरहरिगतसमुच्चयमाह। हरिहराभ्यां त्स्मदः सम्बन्धो, नतु समुच्चयेनेति न साक्षाद्योगः किंतु परम्परायोग इति न निषेध इति भावः। पश्यार्थैश्चाऽना। अकएव निपातनाद्भावे "पघ्राघ्माधे"डिति शः। दर्शनं पश्यः। तच्चेह ज्ञानमात्रम्। "अदर्शनं लोपः"इत्यत्र यथा, न तु चाक्षुषज्ञानमेव, "अनालोचने"इति निषेधात्।

---

सूत्रम्

काशिका-वृत्तिः

पश्यार्थैश् च अनालोचने ८।१।२५

पश्यार्थाः दर्शनार्थाः। दर्शनं ज्ञानम्, आलोचनम्, चक्षुर्विज्ञानम्। तैः पश्यार्थैरनालोचने वर्तमानैर् युक्ते युष्मदस्मदोः वान्नावादयो न भवन्ति। ग्रामस्तव स्वं समीक्ष्यागतः। ग्रामो मम स्वं समीक्ष्यागतः। ग्रामस्तुभ्यं दीयमानं समीक्ष्यागतः। ग्रामो मह्यं दीयमानं समीक्ष्यागतः। ग्रामस्त्वां समीक्ष्यागतः। ग्रामो मां समीक्ष्यागतः। अनालोचने इति किम्? ग्रामस्त्वा पश्यति। ग्रामो मा पश्यति। पश्यार्थैर् युक्तयुक्ते ऽपि च प्रतिषेध इष्यते। तथा च एव उदाहृतम्।

न्यासः

पश्यार्थैश्चानालोचने। , ८।१।२५

पश्यार्थैरिति बहुव्रीहिः। तत्र "पश्य" इति यदि "पाध्रध्माधेट्वृशः शः" (३।१।१३७) इति कत्र्तरि शप्रत्ययान्तः स्यात्? ततो द्रष्टृथैरित्यर्थः स्यात्()। एवं च "अनालोचने" इति प्रतिषेधो दुर्घटः स्यात्()। तस्मादालोचनशब्दोऽयं भावसाधनः--आलोचितिरालोचनमिति। तत्र द्रष्टृर्थैर्युक्त प्रतिषेध उच्यमानः कः प्रसङ्गो यदालोचनवृत्तिभिर्युक्ते स्यात्(), नैव प्राप्नोति, स एधोऽनालोचन इति प्रतिषेध उच्यमानः कः प्रसङ्गो यदा लोचनवृत्तिभिर्युक्ते स्यात्(), नैव प्राप्नोति, स एवोऽनालोचन इति प्रतिषेधः कथमुपपद्यते? यदि पश्यशब्दो भावसाधनो भवति, नान्यथा। तस्मादत एव निपातनात्? "कृत्यल्युटो बहुलम्()" ३।३।११३ इति वा भावेऽत्र शप्रतत्ययः, तत्र "पाघ्रा" ७।३।७८ इत्यादिना पश्यादेशः, द्वयोरकारयोः पररूपत्वम्? ६।१।९४। पश्योऽर्थो येषां ते पश्यार्था दर्शनार्था इत्यर्थः। दर्शनशब्दोऽयं चक्षुष्पर्यायोऽस्ति, यथा--"अक्ष्णोऽद्रशनात्()" ५।४।७६ इत्यत्र। अतश्चक्षुधोऽपि सम्प्रत्ययः कस्यचिन्मा भूदित्यत आह--"दर्शनं ज्ञानम्()" इति। तच्चोत्तरत्रालोचनं चक्षुर्ज्ञानमिति, चक्षुर्ज्ञानस्य पृथगुपादानात्(), ततोऽन्यद्विज्ञायते। "ग्रामस्त्वां समीक्ष्यागतः" इत्यादिकं साक्षाद्युक्त उदाहरणम्()। "ग्रामस्तव स्वं समीक्ष्यागतः" इत्यादिकं युक्तयुक्ते। "समीक्ष्यागतः" इति। मनसा निरूप्यागत इत्यर्थः। "ग्रामस्त्वा पश्यति" इति। चक्षुर्ज्ञानेन त्वां पश्यातीत्यर्थः। "तथा चैवोदाह्रतम्()" इति। यादृशीयमिष्टिस्तदर्थरूपमेवोदाह्रतमित्यर्थः॥

बाल-मनोरमा

पश्यार्थैश्चाऽनालोचने , ८।१।२५

पश्यार्थैश्चानालोचने। दर्शनं पश्यः। "दृशिर् प्रेक्षणे" इत्यस्मादत एव निपातनाद्भावे शप्रत्ययः। "पाघ्रे"ति पश्यादेशः। पश्यः=दर्शनम् अर्थो येषां ते पश्यार्थाः, तैरिति विग्रहः। आलोचनं=चाक्षुषं ज्ञानं, तद्भिन्नमनालोचनम्, तत्र विद्यमानैः। दर्शनार्थकैरित्यर्थः। पश्येति दृशिना ज्ञानसामान्यं विवक्षितम्, अनालोचने इति चाक्षुषपर्युदासात्। तदाह--अचाश्रुषेत्यादिना। चेतसेति। देवेत्यध्याहार्यम्। हे देव मनसा त्वां चिन्तयतीत्यर्थः। परम्परेति। "न चवाहे"त्यत्र युक्तग्रहणसामश्र्यात्साक्षात्संबन्धविवक्षा युक्ता। इह तु तद्विवक्षायां मानाऽभावात्परम्परान्वयेऽपि स्यादेव निषेध इत्यर्थः। भक्तस्तवेति। देवेत्यध्याहार्यम्। इह तवेत्यस्य रूपेणान्वयो न तु साक्षाद्भ्यायतिनेति भावः। "अनालोचने" इत्यस्य प्रयोजनमाह--आलोचना त्विति।

तत्त्व-बोधिनी

पश्यार्थैश्चाऽनालोचने ३६०, ८।१।२५

तदेतदाह--अचाक्षुषज्ञानार्थैरिति। परम्पासम्बन्धेऽपीति। पूर्वसूत्रस्थ--"युक्त"ग्रहणेन ज्ञापितमेतद्भवत्यन्यत्र परम्परासम्बन्धेपि निषेधैति।

---

सूत्रम्

काशिका-वृत्तिः

सपूर्वायाः प्रथमाया विभाषा ८।१।२६

विद्यमानपूर्वात् प्रथमान्तात् पदातुत्तरयोः युष्मदस्मदोः विभाष वान्नावादयो न भवन्ति। ग्रामे कम्बलस्ते स्वम्, ग्रामे कम्बलस्तव स्वम्। ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम्। ग्रामे कम्बलस्ते दीयते, ग्रामे कम्बलस्तुभ्यं दीयते। ग्रामे कम्बलो मे दीयते, ग्रामे कम्बलो मह्यं दीयते। ग्रामे छात्रास्त्वा पश्यन्ति, ग्रामे छात्रास्त्वां पश्यन्ति। ग्राम् छात्रा मा पश्यन्ति, ग्रामे छात्रा मां प्श्यन्ति। सुपूर्वायाः इति किम्? कम्बलस्ते स्वम्। कम्बलो मे स्वम्। पथमायाः इति किम्? कम्बलो ग्रामे ते स्वम्। कम्बलो ग्रामे मे स्वम्। युष्मदस्मदोर् विभाषा अनन्वादेशिति वक्तव्यम्। इह मा भूत्, अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलो मे स्वम्। अपर आह सर्व एव वान्नावादयो ऽनन्वादेशे विभाषा वक्तव्याः। कम्बलस्ते स्वम्, कम्बलस्तव स्वम्। कम्बलो मे स्वम्, कम्बलो मम स्वम्। अनन्वादेशे इति किम्? अथो कम्बलस्ते स्वम्। अथो कम्बलो मे स्वम्। न तर्हि इदानीमिदं वक्तव्यम् सपूर्वायाः प्रथमाया विभाषा इति? वक्तव्यं च। किं प्रयोजनम्? अन्वादेशार्थम्। अनवादेशे हि विभाषा यथा स्यात्। अथो ग्रामे कम्बलस्ते स्वम्, अथो ग्रामे कम्बलस्ते स्वम्। अथो ग्रामे कम्बलो मे स्वम्, अथो ग्रामेकम्बलो मे स्वम्, अथो ग्रामे कम्बलो मम स्वम्।

न्यासः

सपूर्वायाः प्रथमाया विभाषा। , ८।१।२६

सहशब्दोऽत्र विद्यमानवचनः, पूर्वशब्दो व्यवस्थावाची। सह विद्यमानं पूर्व यस्याः सा सपूर्वा--पञ्चम्यर्थे बहुव्रीहिः, "वोपसर्जनस्य" ६।३।८१ इति सहस्य सभावः। "प्रथमायाः" इति। प्रत्ययग्रहणपरिभाषया (भो।प।७) तदन्तग्रहणं विज्ञायते। अत एवाह--"प्रथमान्तात्? पदात्()" इति। "युष्मदस्मदोर्विभाषा" इत्यादि। आदेशः=कथनम्(), अन्दादेशः=अनुकथनम्()। न अन्वादेशोऽनन्वादेशः। तत्रानन्वादेशे युष्मदस्मदोर्विभाधा भवतीति वक्तव्यम्()। किमर्थमित्याह--"इह" इत्यादि। "सर्व एव" इत्यादि। ये सपूर्वात्? प्रथमान्तात्? पदात्परयोर्युष्मदस्मदोः प्राप्नुवन्त्यादेशाः, ये च ततोऽन्ये ते सव एवानत्वादेशे विभाषा वक्तव्याः। यद्येवम्? अनेन वचनेनैव सर्वत्र विकल्पस्य सिद्धत्वादपार्थकमिदं सूत्रमिति मन्ममान आह--"न तर्हि" इत्यादि। "अन्वादेशार्थम्? इति। यद्येतन्नोच्येत,

ततोऽनन्वादेश इत्यभिधानात्? सपूर्वात्? प्रथमान्तादन्वादेशे विकल्पो न स्यात्()। तस्मात्? सपूर्वात्? प्रथमान्तादन्वादेशेऽपि विकल्पो यथा स्यादित्येवमर्थं क्रियमाणेऽप्युपसंख्याने सूत्रमिदं कत्र्तव्यमेव। अ()स्मस्तु क्रियमाणे तदुपसंख्यानं न कत्र्तव्यम्()। कथम्()? सिंहावलोकितत्यायेन विभाषाग्रहणं पूर्वत्राप्युपतिष्ठते। सत्र व्यवस्थितविभाषाग्रहणादनन्वादेशे सर्वत्र विकल्पो भविष्यति, अन्वादेशे तु नित्यं दान्नावादयः, सपूर्वायाः प्रथमाया अन्वादेशेऽपि विकल्प इति॥

बाल-मनोरमा

सपूर्वायाः प्रथमाया विभाषा , ८।१।२६

सपूर्वायाः। वां-नावाद्यादेशा अनन्वादेशे पाक्षिकाः, अन्वादेशे तु नित्या इत्युक्तम्। अन्वादेशेऽपि क्वचिद्विकल्पार्थमिदम्। सहशब्दोऽत्र "सलोमक" #इत्यादिवद्विद्यमानवाची। वीद्यमानं पूर्वं यस्य इति विग्रहः, "तेन सहेति तुल्ययोगे" इति सहस्य समासः। तुस्ययोगवचनं प्रायिकमिति वक्ष्यमाणत्वात्। "प्रथमे"त्यनेन तदन्तं गृह्रते। तदाह--विद्यमानेत्यादिना। परयोरित्यनन्तरं "युष्मदस्मदो"रिति शेषः। भक्तस्त्वमिति। "देवदत्ते"त्यद्याहार्यम्। हे देवदत्त त्वमपि भक्तः, अहमपि भक्त इत्यन्वयः। तेनेति। भक्तत्वेनेत्यर्थः। त्रायते इति पालयतीत्यर्थः। अत् पूर्ववाक्योपात्तयुष्मदस्मदर्थयोरिह पुनरूपादानादन्वादेशोऽयम्। अत्र "तेने" त्येतत् पूर्वं विद्यमानं पदं, ततः परं "हरि"रिति प्रथमान्तं, ततः परस्य युष्मच्छब्दस्यान्वादेशेऽपि त्वादेशविकल्पः। तथा "त्रायते" इत्येतत्पूर्वं विद्यमानं पदम्, ततः परं "सः" इति प्रतमान्तम्, ततः परस्याऽस्मच्छब्दस्यान्वादेशेऽपि मादेशविक्लपः। "त्रायत" इत्येतन्मध्यमणिन्यायेनोभयत्र संबध्यते। तेने निमित्तनिमित्तिनोः समानवाक्यस्थत्वं, स इत्यस्य विद्यमानपूर्वत्वं च बोध्यम्।

तत्त्व-बोधिनी

सपूर्वायाः प्रथमाया विभाषा ३६१, ८।१।२६

सपूर्वायाः। "सह"शब्दोऽत्र "सलोमक"इत्यत्रेव विद्यमानवचनः। "तेन सहेती"त्यत्र तुल्ययगवचनं प्रायिकमिति वक्ष्यमाणत्वाद्विद्यमानवचनस्यापि सहस्य समासः। "वोपसर्जनस्ये"ति सभावः। "प्रथमाया"इति च प्रत्ययग्रहणात्तदन्तविधिरित्यावोच्याह--विद्यमानपूर्वादित्यादि। "एते वानावादय आदेशाः"इत्यविशेषोत्तयैव विभाषया सिद्धे, किमर्थमिदं व चनमित्याशङ्कां परिहन्नाह--अन्वादेशेऽपीति। भक्तस्त्वमित्यादि। त्वं हरेस्त्वं भक्तस्तेनैव कारणेनाऽहमपी ति व्याचक्षाणानां तु यच्छब्दाध्याहारक्लेश इति बोध्यम्। अत्र "तेने"ति पूर्वं विद्यमानं पदं, ततो हरिरिति प्रथमान्तं, ततः परस्य युष्मच्छब्दस्यादेशः। तथा "त्रायते"इकत्यस्मात्परं"स"इति प्रथमान्तं, ततः परस्याऽस्मच्छब्दस्यादेशः।

---

सूत्रम्

काशिका-वृत्तिः

तिङो गोत्रादीनि कुत्सनाऽभीक्ष्ण्ययोः ८।१।२७

तिङन्तात् पदात् पराणि गोत्रादीनि कुत्सने आभीक्ष्ण्ये चार्थे वर्तमानानि अनुदात्तानि भवन्ति। पचति गोत्रम्। जल्पति गोत्रम्। आभीक्ष्ण्ये पचति पचति गोत्रम्। जल्पति जल्पति गोत्रम्। ब्रुवः पचति ब्रुवम्। जल्पति ब्रुवम्। पचति पचति ब्रुवम्। जल्पति जल्पति ब्रुवम्। ब्रुवः इति ब्रुवः कन्निपातनाद् वच्यादेशाभावश्च। गोत्र। ब्रुव। प्रवचन। प्रहसन। प्रकथन। प्रत्ययन। प्रचक्षण। प्राय। विचक्षण। अवचक्षण। स्वाध्याय। भूयिष्थ। वा नाम। नाम इत्येतद् वा निहन्यते। पक्षे आद्युदात्तम् एव भवति। पचति नाम। पठति नाम। तिङः इति किम्? कुत्सितं गोत्रम्। गोत्रादीनि इति किम्? पचति

पापम्। कुत्सनाभीक्ष्ण्ययोः इति किम्? खनति गोत्रं समेत्य कूपम्। कुत्सनाभीक्ष्ण्यग्रहणं च पाठविशेषणं द्रष्टव्यम्। तेन अन्यत्र अपि गोत्रादिग्रहणेन कुत्सनाभीक्ष्ण्ययोरेव कार्यं भवति।

न्यासः

तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः। , ८।१।२७

यथायथमुदात्तादिषु प्राप्तेष्विदमारभ्यते। "पचति गोत्रम्()" इति। यः स्वपुरुषकारेण जोविकां कल्पयितु मशक्तो गोत्रखककककक्यापनेन तां कल्पयति स एवमुच्यते। "पचति" इति। व्यक्तीकरीतीत्यर्थः। "पचि व्यक्तीकरणं" (धा।पा।१७४) "पचतिपचति गोत्रम्()" इति। नित्येऽर्थे द्विर्वचनम्()। यस्त्वाभीक्षण्येन गोत्रं ख्यापयति स एव मुच्यते। "वाच्यादेशाभावश्च" इति। "ब्राउवो वचिः" २।४।५३ इति वच्यादेशः प्राप्नोति, तस्याभावो निपातनादव। "विचक्षण" इति। अत्रापि "चक्षिङः ख्यात्र" २।४।५४ इति प्राप्तस्य ख्यात्रादेशस्याभावो निपानादेव वेदितव्यः। "नामेत्येतदवा निहन्यते" इति। विभाषाग्रहणस्यानुवृत्तेः। न च तदनुवृत्तावतिप्रसङ्गो भवति; व्यवस्थित विभाषाविज्ञानात्()। "पक्षे आद्युदात्तमेव भवति" इति। "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इति नामशब्दस्याद्युदात्तत्वात्()। "कुत्सितं गोत्रम्()" इति। "गुङ्? अव्यक्ते शब्दे" (धा।पा।९४९) इत्यस्मादौणादिके ष्ट्रनि विहिते गोत्रमिति भवति। तस्मान्नित्स्वरेण गोत्रशब्दोऽत्राद्युद्त्तः। "पचति पापम्()" इति। पापशब्दः कुत्सने वत्र्तते, सिङन्ताच्च परो भवति, न तु गोत्रादिरिति न निहन्यते। इह कुत्सनाभिक्ष्ण्यग्रहणे, एतदनुदात्तविशेषणं वा स्यात्()--तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्ति कुत्सनाभीक्ष्ण्ययोरिति, उत गोत्रादीनां पाठविशेषणं वा स्यात्()--एतयोरर्थयोर्गोत्रादीनि भवन्ति, तानि च तिङः पराण्यनुदात्तानि भवन्तीति? अनयोरर्थयोर्गोत्रादिव्यपदेशमासादयन्तीति योऽसौ तेषां प्रातिपदिकेषु विशिष्टानुपूर्वीकः पाठः, स एव तयोरर्थयोवंत्र्तमानानां भवतीति यावत्()। तत्र पूर्वस्मिन्? पक्षे "चनचिदिवगोत्रादितद्धिताम्रेडितेध्वगतेः" ८।१।५७ इत्यत्र "कुत्सने च सुप्यगोत्रादौ" ८।१।६९ इत्यत्र च कुत्सनाभीक्ष्ण्ययोरपि वत्र्तमानानं कार्यं प्राप्नोति; विशेषानुपादानात्()। इतर()स्मस्तु पक्षे न भवत्येष दोषः। यानि हि न कुत्सनाभीक्ष्ण्ययोर्वत्र्तन्ते तेषां गोत्रादिव्यपदेश एव नास्ति; कुत्सनाभीक्ष्ण्यवृत्तीनामेव गणे पठितत्वात्()। एतत्? सर्वं चेतसि कृत्वाऽऽह--"कुत्सनाभीक्ष्ण्यग्रहणं च" इत्यादि। पठ()त इति पाठः, सन्निवेशविशेषः। सद्विशेषणमेव तद्वेवितव्यम्()। तेन किमिष्टं भवतीत्याह--"तेन" इत्यादि। कथं पुनरेकेन यत्नेन गोत्रादीनां पाठश्च शक्यो विशेषयितुमनुदात्तत्वञ्चैषां विधातुम्()? एवं मन्यते--योगविभागः कत्र्तव्यः, तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्ति; ततः "कुत्सनाभीक्ष्ण्ययोः", गोत्रादीनीत्येव। न चात्र द्वितीयेयोगे विधेयमन्यदस्तीति गोत्रादीन्येव कुत्सनाभीक्ष्ण्यग्रहणेन विशिष्यन्ते। अथ वा--उभयथा सूत्रमाचार्येण शिष्याः प्रतिपादिताः, उभयञ्चैतत्? प्रमाणम्(), अत उभयं ग्रहीष्यन्तीति। वृत्तिग्रन्थस्तु तिङन्तात्? पदादुत्तराणि गोत्रादीनीत्यादिको वाक्यभेदेनैव नेयः--गोत्रादीनि कुत्सने चामीक्ष्ण्ये च भवन्ति, तान्येव तिङन्तात्? पदादुत्तराण्यनुदात्तानि भवन्तीति। ननु च गोत्रादयः शब्दा गोत्रादावेवानर्थान्तरे वत्र्तन्ते, ते कथं कुत्सनाभीक्ष्ण्ययोर्वत्र्तरन्()? तमेव स्वार्थं यदा तु कुत्सनाभीक्ष्ण्यविशिष्टमाचक्षते तदा तयोर्वर्तन्त इत्यदोषः॥

---

सूत्रम्

काशिका-वृत्तिः

तिङ्ङतिङः ८।१।२८

तिङन्तं पदम् अतिङन्तात् पदात् परम् अनुदात्तं भवति। देवदत्तः पचति। यज्ञदत्तः पचति। तङिति किम्? नीलम् उत्पलम्। शुक्लं वस्त्रम्। अतिङः इति किम्? भवति पचति।

न्यासः

तिङ्ङतिङः। , ८।१।२८

"नीलमुत्पलम्()" इति। उत्पलमित्येतत्? "नव्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्याद्युदात्तं भवति। "भवति पचति" इति। पचतिक्रिया भवतीत्ययमस्यार्थः। पचतिशब्दे शप्तिपावनुदात्तौ, अकारो धातुस्वरेणोदात्तः, "उदात्तादनुदात्तस्य स्वरितः" ८।४।६५ इति शबकारः स्वरितः। ननु च समासवाक्ये निघातादय उच्यन्ते, इदञ्च वाक्यमेव न भवति, तत्? किमेतन्निवृत्त्यर्थेनातिङग्रहणेन? किं पुनः कारणमेतद्वाक्यं न भवति? अख्यातं साव्ययकारकविशेषणं वाक्यम्()" इत्यत्र वाक्यलक्षण एकत्वस्य विवक्षितत्वात्(), इह चाख्यातस्य द्वित्वात्()? नैष दोधः; अत्राप्याख्यातं यदकारकं तद्विवक्षितम्()। तच्चास्मिन्नेकमेव भवतिशब्दः, पचतीत्येतत्तु कारकम्()। तथा हि भाष्ये उक्तम्()--"पचत्यादयः क्रियाः ["क्रियाः भवन्ति" नास्ति का। मुद्रिते] भवन्ति, क्रियायाः कत्र्यो भवन्ति" इति। यदपीदमुक्तम्()--"एकतिङ्? पदसमूहो वाक्यम्()" इति, अत्रापि प्रधानं यत्? तिङ्? तदधिकृत्यैकतिङित्युक्तम्()। अत्र चैकमेव तिङन्तं प्रधानम्()। यद्येतत्(), किं तर्हि अत्र तिङन्तं तत्()? भवतीति। पचतीत्येतत्? पुनः साधनत्वादप्रधानम्()॥

---

सूत्रम्

काशिका-वृत्तिः

न लुट् ८।१।२९

पूर्वेण अतिप्रसक्ते प्रतिषेध आरभ्यते। लुडन्तं नानुदात्तं भवति। श्वः कर्ता। श्वः कर्तारौ। मासेन कर्तारः। तासेः परस्य लसार्वधातुकस्य अनुदात्तत्वे सति सर्वतासिरेव उदात्तः। यत्र तु टिलोपः, तत्र उदात्तनिवृत्तिस्वरो भवति।

न्यासः

न लुट्?। , ८।१।२९

"()आः कत्र्ता" इति। करोतेर्लुट्(), तासिः, "लुटः प्रथमस्य डारौरसः" २।४।८५ इत्येकवचनस्य डादेशः, डिति टिलोपः। "तासेः परस्य" इत्यादि। आगमः प्रत्ययस्वरेणाद्युदात्तः। तस्य यत्र टिलोपो नास्ति--इत्रारो, कत्र्तार इत्यादौ, तत्र "नास्यनुदात्तेन्ङित" ६।१।१८० इत्यादिना लसार्वधातुकस्यानुदात्तत्वे कृते तासेरेवोदात्तत्वं भवति। यत्र तु टिलोपस्तत्र "अनुदात्तस्य च यत्रोदात्तलोपः ६।१।१५५ इति लसार्वधातुकमेवोदात्तं भवति॥

---

सूत्रम्

काशिका-वृत्तिः

निपातैर् यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुतम् ८।१।३०

न इति वर्तते। यत् यदि हन्त कुवित् नेत् चेत् चण् कच्चित् यत्र इत्येतैर् निपातैर् युक्तं तिङन्तं नानुदात्तं भवति। यत् यत् करोति। यत् पचति। यदि यदि करोति। यदि पचति। हन्त हन्त करोति। नेत् नेज् जिह्मायन्त्यो नरकं पताम्। चेत् स चेद् भुङ्क्ते। स चेदधीते। चण् णिद्विशिष्टो ऽयं चेदर्थे वर्तते। अयं च मरिष्यति। अयं चेन्मरिष्यति इत्यर्थः। समुच्चयादिषु तु यः चशब्दः, तेन योगेन विधिरयं न भवति। कच्चित् कच्चिद् भुङ्क्ते। कच्चिदधीते। यत्र यत्र भुङ्क्ते। यत्र अधीते। निपातैः इति किम्? यत् कूजति शकटम्। गच्छत् कूजति शकटम् इत्यर्थः। इणः शतरि रूपम् एतत्। युक्तम् इति किम्? यत्र क्व च ते मनो दक्षं दधस उत्तरम्।

न्यासः

निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चेण्कच्चिद्यत्रयुक्तम्?। , ८।१।३०

यद्यपि निपातैरित्येतदपेक्षमाणावां यदादीनां सामथ्र्यम्(), तथापि गमकत्वाद्युक्तशब्देन समास एषां युक्त एव। अथ वा--मत्र न समासः, विभक्तिस्त्वव्ययत्वादेषां लुप्तेते न श्रूयते। युक्तग्रहणं त्विहापि साक्षाद्योगप्रतिपत्त्यर्थम्(), तेन युक्तयुक्ते प्रतिषेधो न भवति। एतच्च प्रयुदाहरणेऽपि स्पष्टीकरिष्यामः। अत्र यद्यत्रयोग्र्रहणमाभ्यां पूर्वस्यापि तद्युक्तस्य प्रतिषेधो यथा स्यादित्येवमर्थम्()। यद्धि ततः परं तिङक्तं तस्य "यद्()वृत्तान्नित्यम्()" ८।१।६६ इत्येवं सिद्धः प्रतिषेधः, पूर्वस्य तु तेन न सिध्यति। तदा हि यद्वृत्तादिभिः पञ्चमी "तस्मादित्युत्तरस्य" १।१।६६ इति परस्यैव निघातप्रतिषेधं प्रतिपादयति, नेतरस्य। "यत्करोति" इति। करोतिशब्द उकारप्रत्ययस्योदात्तत्वान्मध्योदात्तः। "नेज्जिह्मायन्तो नरकं पताम" ["नोज्जिह्मायन्तो"--प्रां३।पाठः] इति। पतेर्लट्(), मस्(), शप्(), "अतो दीर्घो यञि" ७।३।१०१ इति दीर्घः। ङिददुपदेशत्वाल्लसार्वधातुकत्वादनुदात्तत्वे ६।१।१८० कृते धातुत्वरेणाद्युदात्तमेतत्()। "स चेट्भुङ्क्ते" इति। "भुजोऽनवने" १।३।६६ इत्यात्मनेपदम्(), रुधादित्वात्वात्? श्नम्()। पूर्ववल्लसार्वधातुकानुदात्तत्वम्(); "इनसोरल्लोपः" ६।४।१११, "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इत्युदात्तत्वे कृते भुङ्क्त इत्येतदन्तोदात्तम्()। "स चेदधीते" इति। इङ्? धातुस्वरेणोदात्तः। ङित इति लसार्वधातुकमेवानुदात्तम्()। आदिशब्दापेक्षया निघाते प्राप्ते न प्रतिपदोक्तपरिभाषोपतिष्ठते (व्या।प।३), साहचर्यञ्च व्यवस्थाकारणं न भवतीति। तेन "यावद्यथाभ्याम्()" ८।१।३६ इति यथाशब्दसाहचर्याद्यावच्छब्दोऽपि नाव्ययमेव परिगृह्यते, किं तर्हि? परिमाणशब्दोऽपि लाक्षणिकः। यावतोऽदवान्? प्रतिगृह्णीयादित्यत्रापि निघातप्रतिवेधो भवति। "यत्तदेतेभ्यः परिमाणे वतुम्()" ५।२।३९ इति वतुबन्तोऽत्र यावच्छब्दः। "यत्र क्व च ते मनो दक्षं दधस उत्तरम्()" इति। "दध धारणे" (धा।पा।८) लट्(), धास्(), "धासः से" ३।४।८०। अत्र यत्रेत्यनेनैधिकरणप्रधाने उत्तरमित्येतदाधेयं युक्तम्(), तेन युक्तं तिङन्तम्(), अतः साक्षाद्योगो नास्तीति प्रतिषेधो न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

नह प्रत्यारम्भे ८।१।३१

नह इत्येतेन युक्ते प्रत्यारम्भे तिङन्तं नानुदात्तं भवति। चोदितस्य अविधीरणे उपालिप्सया प्रतिषेधयुक्तः प्रत्यारंहः क्रियते। नह भोक्ष्यसे। नह अध्येष्यसे। प्रत्यारम्भे इति किम्? नह वै तस्मिंश्च लोके दक्षिणाम् इच्छन्ति।

न्यासः

न ह प्रत्यारम्भे। , ८।१।३१

नहेत्ययं निपातसमुदायः प्रतिषेधे वत्र्तते। तेन युक्तं तिङन्तं प्रत्यारम्भविषये न निहन्यते। पुनरारम्भः=प्रत्यारम्भः। स च यत्र विषये क्रियते तद्दर्शयितुमाह--"चोदितस्य" इत्यादि। भुङक्ष्याधीष्वेत्येवं चोदितं विहितं यत्? कत्र्तव्यतयोपन्यस्तं भोजनादौ यदा तत्? कर्त्तुं न प्रवत्र्तते नाद्रियते, अवधीर्यत इति यावत्(); तदा तस्यादधीरणेऽदज्ञाने सति तमवधीरयितारमुपालब्धुं या इच्छा तथोपालिप्सयैतस्यैव भोजनादेरवधीरितस्य प्रतिषेधेन सम्बन्धः प्रत्यारम्भः। "प्रत्यारम्भः क्रियते" इति। प्रतिषेधसम्बद्धस्य पुनरुपन्यासः क्रियत इत्यर्थः। "नह भोक्ष्यसे, नहाध्येध्यसे" इति। भुजेरिङश्च लृट्(), "थासः से" ३।४।८० , अदुपदेशत्वात्? ङित्वाच्च तयोर्धात्वोर्लसार्वधातुकमनुदात्तम्()। स्यः प्रत्ययस्वरेणोदात्तः। "इच्छन्ति" इति। "इषु इच्छायाम्()" (धा।पा।१३५), तुदादित्वाच्छ, "इषुगमियमां छः" ७।३।७७॥

---

सूत्रम्

काशिका-वृत्तिः

सत्यं प्रश्ने ८।१।३२

सत्यम् इत्यनेन युक्तं तिङन्तं न अनुदात्तं भवति प्रश्ने। सत्यं भोक्ष्यसे। सत्यम् अध्येष्यसे। प्रश्ने इति किम्? सत्यं वक्ष्यामि नानृतम्।

न्यासः

सत्यं प्रश्ने। , ८।१।३२

सत्यशब्दोऽयमुदाहरणे प्रश्ने वत्र्तते। प्रत्युदाहरणे तु ऋतशब्दस्यार्थे॥

---

सूत्रम्

काशिका-वृत्तिः

अङ्गाप्रातिलोम्ये ८।१।३३

अङ्ग इत्यनेन युक्तं तिङन्तं अप्रातिलोम्ये गम्यमाने नानुदात्तं भवति। अङ्ग कुरु। अङ्ग पच। अङ्ग पठ। अप्रातिलोम्ये इति किम्? अङ्ग कूज ३ वृषल, इदानीं ज्ञास्यसि जाल्म। कूजनमनभिमतमसौ कुर्वन् प्रतिलोमो भवति।

न्यासः

अङ्गाप्रातिलोभ्ये। , ८।१।३३

प्रातिलोभ्यम्()=प्रातकूल्यम्(), अनभिमतकारित्वमित्यर्थः। ततोऽन्यदप्रातिलोभ्यम्()नुकूलत्वम्(), अभिमतकारित्वमिति यावत्()। तस्मिन्? गम्यमानेऽयं प्रतिषेधः। "अङ्ग कुरु, ङ्ग पच" इति। अङ्गशब्दोऽयं निपात इहानुज्ञायां वत्र्तमानोऽप्रातिलोभ्यं गमयति। करोतेर्लोटि सिप्(), "सेह्रपिच्च" ३।४।८७, धातोर्गुणे कृते "अत उत्सार्वधातुके" ६।४।११० इत्युत्त्वम्(), "उत्तश्च प्रत्ययात्()" (६।४।१-६) इति हेर्लुक्()। अत्रोकारः प्रत्ययस्वरेणोदात्तः। "पच" इति। "अतो हेः" ६।४।१०५ इति लुक्()। धातुस्वरेणाद्युदात्तमेतत्()। प्रत्युदाहरणेऽङ्ग शब्दोऽमर्धे वत्र्तते। "आनुलभ्ये" इति वक्तव्येऽप्रातिलोम्ये इति वचनं वैचित्र्यार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

हि च ८।१।३४

हि इत्यनेन युक्तं तिङन्तम् अप्रातिलोम्ये नानुदात्तं भवति। स हि कुरु। स हि पच। स हि पठ। अप्रातिलोम्ये इत्येव, स हि कूज वृषल, इदानीं ज्ञास्यसि जाल्म।

न्यासः

हि च। , ८।१।३४

चकारोऽप्रातिलोभ्य इत्यस्यानुकर्षणार्थः। "स हि कुरु, स हि पच" इति। हिशब्दोऽत्रावधारणे, हेतौ वा वत्र्तते। प्रत्युदाहरणे त्वमर्धे॥

न्यासः

नहो धः। , ८।१।३४

"उपानत्()" इति। "णह बन्धने" (धा।पा।११६६) क्विप्(), "नहिवृति" ६।३।११५ इत्यादिना दीर्घः। एवं परीणत्()" इति। अत्र णत्वं तु "उपसर्गादसमासेऽपि, ८।४।१४ इत्यादिना। प्रक्रियालाघवार्थं दकारे विधातव्ये धकारविधानम्()--नद्धेत्यत्र "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वं यथा स्यादित्येवमर्थम्()। दकारे हि तन्न स्यात्(), दकारस्याझष्त्वात्()। "रदाभ्यां निष्ठातो नः" ८।२।४२ इत्येवमर्थं च, नकारो यथा न स्यादिति॥

---

सूत्रम्

काशिका-वृत्तिः

छन्दस्यनेकम् अपि साकाङ्क्षम् ८।१।३५

हि च इति वर्तते। छन्दसि विषये हियुक्तं तिङन्तं साकाङ्क्षंअने कम् अपि नानुदात्तं भवति, एकम् अपि। कदाचिदेकं कदाचिदनेकम् इत्यर्थः। तत्र अनेकं तावत् अनृतं हि मत्तो वदति, पाप्मा एनं विपुनाति। तिङन्तद्वयम् अप्येतन् न निहन्यते। एकं खल्वपि अग्निर् हि पूर्वमुदजयत् तमिन्द्रो ऽनूदजयत् तिङन्तद्वयम् अपि हिशब्दयुक्तम् एतत्। तत्र एकम् उदजयतित्याद्युदात्तम्, अपरम् अनुदात्तम्। अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज् जनितारम् अग्ने। अजनिष्ट इत्याद्युदात्तम्, अपश्यतित्यनुदात्तम्।

न्यासः

छन्दस्यनेकमपि साकाङ्क्षम्?। , ८।१।३५

"हि च ८।१।३४ इत्येव। सहाकाङ्क्षया वत्र्तत इति साकाङ्क्षम्()। एतच्च तिङन्तस्यार्थद्वारकं विशेषणं वेदितव्यम्()। "एकमपि" इति। हीत्यनेन युक्त तिङन्तं साकाङ्क्षं भवतीति प्रकृतेन सम्बन्धः। अत्र च योऽप्ययमेकस्यानुदात्तत्वप्रतिषेधः, सोऽपि यत्रानेकतिङन्तं हियुक्तं तत्रैद वदितव्यः; अन्यथा यदि यत्रैकं हियुक्तं तत्रायमेकस्य हियुक्तस्य निघातप्रतिषेधोऽपिशब्दप्रायितः स्यात्(), सूत्रमिदमनुर्थकं स्यात्(); समानेनैकस्या नेकस्य वा पूर्वेणैव सिद्धत्वात्()। यथा यत्रानेकस्य हियुक्तस्य उपनिपातस्तत्रैवैकस्यानुदात्तत्वप्रतिषेधः, तथा न भवति वैयथ्र्यप्रसङ्गः; पूर्वेण नित्ये प्राप्ते विकल्पार्थत्वात्। "कदाचित्()" इत्यादिना तमेवानन्तरोक्तमर्थं विस्पष्टो करोति। "अनृतं हि मत्तो यदति पाप्मा एनं विपुनाति" इति। अत्र द्वयोरपि तिङन्तयोर्हेतुहेतुमद्भावे साकाङ्क्षता। पाप्मा मद उच्यते। यस्मादनृतं मत्तो वदति तस्मात्? पाप्मा एनं षिपुनाति शुद्धिमापादयति, मत्तस्यानृतमदोष इति कृत्वा। द्वे अपि चैते हिशब्देन युक्ते; तदर्थगतस्त हेतुहेतुमद्भावस्य तेन द्योतेतत्वात्()। तत्र वदतीत्येतत्? पचतीत्यनेन तुल्यस्वरम्()। पुनातीत्येतत्तु विकरणस्वर#एण मध्योदात्तम्()। "अग्निर्हि" इत्यादि। अत्रापि हेतुहेतुमद्भावात्? साकाङ्क्षता। यस्मादग्निरग्रे पूर्वमुदजयत्? तस्मादग्निमिन्द्र अनुश्चादुदजयत्()। "उदजयत्()" इति। उत्पूर्वाज्जयतेर्लङि रूपम्()। "एकमुदजयदित्याद्युदात्ततम्()" इति। तद्भक्तस्पाट उदात्तत्वात्()। "अपरमनुदात्तम्()" इति। तत्र निघातप्रतिषेधस्याप्राप्तेः। "अजा ह्न्तेरजनिष्ट" इत्यादि। तत्रापि तत एव हेतो साकाङ्क्षत्वम्()। तस्मादजा ह्ग्नेर्गर्भस्य जनितारमपश्यत्? तस्मादग्नेर्गर्भमजनिष्ट जनितवती। "जनिः प्रादुर्भावे" (धा।पा।११४९) लुङ्(), "च्लेः सिच्()" ३।१।४४ इट्(), षत्वम्(), ष्टुत्वम्()। अन्तर्भावितव्यर्थोऽत्र जनिर्वेदितव्यः, अन्यथा कर्मत्वं गर्भस्य नोपपद्यते; अकर्मकत्वात्()। "अपश्यत्()" इति। दृशेर्लङ्? पाध्रादिसूत्रेण ७।३।७८ पश्यदेशः। "अजनिष्ट" इति। आद्युदात्तम्()। "अपश्यदित्यनुदात्तम्()" इति। पूर्ववत्()॥

न्यासः

आहस्थः। , ८।१।३५

"आत्थ" इति। "ब्राउवः पञ्चानामादित आहो ब्राउवः" (३।४।८४) इति लडादेशस्य सिपस्थल्? ब्राउवश्चाहादेशः, तस्यानेन

थकारः, तस्य "खरि च" ८।४।५४ इति चत्त्वम्()--तकारः। किमर्थमादेशान्तरं क्रियते, न प्रकृतेर्विकार एव विधीयते? इत्यत आह--"आदेशान्तरकरणम्()" इत्यादि। यदि धकार आदिश्येत, ततः "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वं स्यात्(), अतस्तन्निवृत्त्यर्थमादेशान्तरं क्रियते। "ह्मग्रहोः" इत्यादि। हरतेः, ग्रहेश्च यो हकारस्तस्य च्छन्दसि विवये भकारो वक्तव्यः। हकारस्येति वचनं हरत्यर्थम्()। ग्रहेस्तु "अलोऽन्त्यस्य" १।१।५१ इत्येव भविष्यति हकारस्य। "ग्रभीता" इति। तृन्(), इट्(), "ग्रहोऽलिटि दीर्धः" ७।२।३७। "जभ्रिरे" इति। ह्मञो लिट्(), "लिटस्तझयोरेशिरेच्()" ३।४।८१ इति झस्येरेच्(); यणादेशः, द्विर्वचनम्(), अभ्यासकार्यम्()। "उद्ग्राभम्()", "निग्राभम्()" इति। ग्रहेः "हलश्च" ३।३।१२१ इति घञ्()। एतत्तु सर्वं "व्यत्ययो बहुलम्()" ३।१।८५ इति वर्णव्यत्ययेनैव सिद्धम्()। वक्तव्यशब्दस्य व्याख्येयमित्येषोऽर्थो वेदितव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

यावद्यथाभ्याम् ८।१।३६

यावत् यथा इत्येताभ्यां युक्तं तिङन्तं नानुदात्तं भवति। यावद् भुङ्क्ते। यथा भुङ्क्ते। यावदधीते। यथा अधीते। देवदत्तः पचति यावत्। देवदत्तः पचति यथा। परेण अपि योगे भवति प्रतिषेधः।

न्यासः

यावद्यथाभ्याम्?। , ८।१।३६

किमर्थं पुनरिदमारभ्यते? न "यद्()वृत्तान्नित्यम्()" ८।१।६६ इत्येव सिद्धमिति यश्चोदयेत्(), तं प्रति--"देवदत्तः पचति यावत्()", "देवदत्तः पचति यथा"--इत्येतदुदाहरणद्वयमुपन्यस्तम्()। एषोऽभिप्रायः--यद्()वृत्तादिति पञ्चमीनिर्देशात्? "तस्मादित्युत्तरस्य" १।१।६६ इति यत्रैव यावद्यथाभ्यां परं तिङन्तं तत्रैव प्रतिषेधः स्यात्()। यत्र तु ताभ्यां पूर्वं तत्र न स्यात्()। इह तु तृतीयनिर्देशात्? तत्रापि भवतीति॥

---

सूत्रम्

काशिका-वृत्तिः

पूजायां न अनन्तरम् ८।१।३७

यावद् यथा इत्येताभ्यां युक्तम् अनन्तरं तिङन्तं पूजायं विषये नानुदात्तं न भवति, किं तर्हि? अनुदात्तम् एव। यावत् पचति शोभनम्। यथा पचति शोभनम्। यावत् करोति चारु। यथा करोति चारु। पूजायाम् इति किम्? यावद् भुङ्क्ते। यथा भुङ्क्ते। अनन्तरम् इति किम्? यावद् देवदत्तः पचति शोभनम्। यथा देवदत्तः करोति चारु। पुर्र्वेण अत्र निघातः प्रतिषिध्यते।

न्यासः

पूजायां नानन्तरम्?। , ८।१।३७

"पूजायां विषये" इति। विषयग्रहणे पूजायामिति विषयसप्तमीति दर्शयति। "किं तह्र्रमुदात्तमेव" इति। द्वौ प्रतिषेधो प्रकृतमर्थं गमयत इति कृत्वा। "यावत्? पचति शोभनम्()" इति। स्तुतिरत्र पूजा, सा च क्रियायाः साधनस्य वा॥

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गव्यपेतं च ८।१।३८

यावद्यथाभ्यां युक्तं उपसर्गव्यपेतं च पूजायां विषये नानुदात्तं न भवति, किं तर्हि? अनुदात्तम् एव भवति। पूर्वम् अनन्तरं इत्युक्तम्, उपसर्गव्यवधानार्थो ऽयम् आरम्भः। यावत् प्रपचति शोभनम्। यथा प्रपचतिशोभनम्। यावत् प्रकरोति चारु। यथा प्रकरोति चारु। अनन्तरम् इत्येव, आवद् देवदत्तः प्रपचति। यथा विष्णुमित्रः प्रकरोति चारु।

न्यासः

उपसर्गव्यपेतञ्च। , ८।१।३८

"उपसर्गव्यपेतम्()" इति। उपसर्गव्यवहितम्()। चकारेण "पूजायाम्()" इत्यनुकृष्यते; अनन्तरमिति चानुवत्र्तते। तत्रोपसर्गेण व्यवधानमाश्रीयत इति। सामथ्र्यात्? अनन्तरग्रहणं शब्दान्तरव्यवधाननिरासार्थं विज्ञायते॥

---

सूत्रम्

काशिका-वृत्तिः

तुपश्यपश्यताहैः पूजायाम् ८।१।३९

तु पश्य पश्यत अह इत्येतैर् युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये। तु माणवकस्तु भुङ्क्ते शोभनम्। पश्य पश्य माणवको भुङ्क्ते शोभनम्। पश्यत पश्यत माणवको भुङ्क्ते शोभनम्। अह अह माणवको भुङ्क्ते शोभनम्। पूजायाम् इति किम्? पश्य मृगो धावति। पूजायाम् इति वर्तमाने पुनः पूजायाम् इत्युच्यते निघातप्रतिषेधार्थम्। तद् धि प्रतिषेधस्य प्रतिषेधेन सम्बद्धम् इति।

न्यासः

तुपश्यपश्यताहैः पूजायाम्?। , ८।१।३९

ननु "पूजायां नानन्तरम्()" ८।१।३७ इति पूजाग्रहणमनुवत्र्तत एव, तत्किमर्थं पूजायामित्युच्यते? इत्याह--"पूजायामित्यनुवत्र्तते" इत्यादि। स्यादेतत्()--तदेव पूजाग्रहणमिहानुवत्र्तमानं निघातप्रतिषेधार्थं भविष्यतीति? अताअह--"तद्धि" इत्यादि। तद्धि पूर्वत्र पूजाग्रहणं निघातप्रहतिषेधस्य प्रतिषेधेन सम्बद्धम्()। तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्()। एवञ्च तेषां निघातप्रतिषेधः। लुडादीनां तेषां तुप्रभृतिभिर्योगे निघातप्रतिषेधस्य प्रतिषेधो विज्ञायेत। तस्मान्निघातस्य प्रतिषेधो यथा स्यादित्येवमर्थं पुनः पूजाग्रहणम्()। अत्राहग्रहयणं किमर्थम्(), चनादिषु (८।१।५७) चेत्येव सिद्धम्()? न सिध्यति; "चनचिदिवगोत्रादितद्धिताम्रेडितेवष्गतेः" ८।१।५७ इत्यतो गतेरिति तत्रानुवृत्तेः। तथा च-देवदत्तः प्रपचत्यहेत्यत्र प्रतिषेधो न स्यात्()। परभूतेषु वा स प्रतिषेध इति पूर्वभूतेऽबशब्दे च न स्यात्()--देवदत्तोऽह पचतीति#ई॥

---

सूत्रम्

काशिका-वृत्तिः

अहो च ८।१।४०

अहो इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये। अहो देवदत्तः पचति शोभनम्। अहो विष्णुमित्रः करोति चारु। पृथग्योगकरणम् उत्तरार्थम्।

न्यासः

अहो च। , ८।१।४०

चकारेण पुजायामित्यनुकृष्यते। अथ योगविभागः किमर्थम्? पूर्वसूत्र एवाहोग्रहणं क्रियते? इत्यत आह--"पृथक्()#ं"

इत्यादि। पृथग्योगे "शेषे विभाषा" ८।१।४१ इति अहेत्यनेनैव योगे यथा स्यात्(), तुप्रभृतीनां मा भूदित्येवमर्थं पृथग्योगकरणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

शेषे विभाषा ८।१।४१

अहो इत्यनेन युक्तं तिङन्तं शेषे विभाषा नानुदात्तं भवति। कश्च शेषः? यदन्यत् पूजायाः। कटम् अहो करिष्यसि। मम गेहम् एष्यसि। असूयावचनम् एतत्। पूजायाम् इत्यसय् पूर्वत्र च अनुकृष्टत्वादनधिकारे सिद्धे शेषवचनं विस्पष्टार्थम्।

न्यासः

शेषे विभाषा। , ८।१।४१

"करिष्यसि" इत्यादि। लृङन्तं स्यस्वरेण मध्योदात्तम्()। ननु च पूजाग्रहणं पूर्वसूत्रे चानुकृष्टम्()। तत्र चानुकृष्टस्येहानुवृत्तेरविशेषे भविष्यति, तत्? किं शेषग्रहणेन? इत्यत आह--"पूजायामित्यस्य" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

पुरा च परीप्सायाम् ८।१।४२

पुरा इत्यनेन युक्तं तिङन्तं परीप्सायाम् अर्थे विभाषा नानुदात्तं भवति। परीप्सा त्वरा। अधीष्व मानवक, पुरा विद्योतते विद्युत्। पुरा स्तनयति स्तनयित्नुः। पुराशब्दो ऽत्र भविष्यदासत्तिं द्योतयति। पैइप्सायाम् इति किम्? नडेन स्म पुरा अधीयते। अत्र भूतकालविप्रकर्षं पुराशब्दो द्योतयति। ऊर्णया स्म पुरा अधीयते।

न्यासः

पुरा च परीप्सायाम्?। , ८।१।४२

चकारो विभाषेत्यनुकर्षणार्थः। "परीप्सायामर्थे" इति। गम्यमान इति शेषः। "परीप्सा त्वरा" इति। सम्भ्रमः=अशुप्रवृत्तिरित्यर्थः। "अधीष्व माणवक" इत्यादि। त्वरितमधीष्वेत्येधोऽर्थो गम्यते। तथा ह्त्र पुरा विद्योतते विद्युत्(), पुरा स्तनयति स्तनियुरितत्येतदुभयमप्यध्ययनदिषययोस्त्वरायाः कारणत्वेनोपातम्()। विद्युद्द्योतनादौ हि न पठितव्यं पर्वदिवसेष्विव। एतदुक्तं भवति--यस्मादचिरकालभावि विद्युद्द्योतनं स्तनयित्नुस्तननं वाऽध्ययनन्तरायोऽतोऽधीष्येति। "पुरा विधीयते" इति। "यावत्पुरानिपातयोर्लट्(), ३।३।४, अनुदात्तेत्त्वादात्मनेपदम्()। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे ६।१।१८० कृते धातुस्वरेणाद्युदात्तमेतत्()। "पुरा स्तनयति" इति। "स्तन गदी देवशब्दे" (धा।पा।१८५९,१८६०) चुरादिणिच्()। अदन्तत्वाद्वृद्ध्यभावुः। एतदपि पूर्ववन्मध्योदात्तम्()। "पुराशब्दोऽत्र भविष्यदासतिं()त द्योतयति" इति। भविष्यद्विद्युद्द्योतनादिरध्ययनान्तरायो यस्तस्य प्रत्यासतिं()त सामीप्यर्माचरकालभादित्वं द्योतयति। तेन त्वरा गम्यत इत्यभिप्रायः॥

---

सूत्रम्

काशिका-वृत्तिः

नन्वित्यनुज्ञाएषणायाम् ८।१।४३

ननु इत्यनेन युक्तं तिङन्तं नानुदात्तं भवति। अनुज्ञैषणायां विषये। अनुज्ञाया एषणा प्रार्थना अनुज्ञैषणा। अनुज्ञाप्रार्थना इत्यर्थः। ननु करोमि भोः। अनुजानीष्व मां करणं प्रति इत्यर्थः। अनुज्ञैषणायाम् इति किम्? अकार्षीः कटं देवदत्त? ननु करोमि भोः। पृष्टप्रतिवचनम् एतत्, न अनुज्ञैषणा।

न्यासः

नन्वित्यनुज्ञैषणायाम्?। , ८।१।४३

"अनुज्ञाया एतणा प्रार्थना" इति। किञ्चित्? कर्तुं स्वयमेवोद्यतस्यैवं क्रियतामित्यनुज्ञानमनुज्ञा। प्रार्थनायां मूलोदाहरणयोः "वत्र्तमाने लट्()" ३।३।१२३ इति लट्()। प्रत्युदाहरणे तु भूते "ननौ पृष्टप्रतिवचने" ३।२।१२० इत्यनेन। इतिकरण एकनिपातोऽयमिति प्रदर्शनार्थः। नन्वनुज्ञेषणायामिति ह्रुच्यमाने सन्देहः स्यात्()--किमयमेकनिपातः? उत निपातद्वयमिति? यथा--"नन्वोर्विभाषा" ३।२।१२१ इत्यत्रः इतिकरणेन त्ववच्छिद्यमानमेकमेवेवं शब्दरूपमिति गम्यते॥

---

सूत्रम्

काशिका-वृत्तिः

किं क्रियाप्रश्ने ऽनुपसर्गम् अप्रतिषिद्धम् ८।१।४४

किम् इत्येतत् क्रियाप्रश्ने यदा वर्तते तदानेन युक्तं तिङन्तं अनुपसर्गम् अप्रतिषिद्धं नानुदात्तं भवति। किं देवदत्तः पचति, आहोस्विद् भुङ्क्ते। किं देवदत्तः शेते, आहोस्विदधीते। अत्र केचिदाहुः, पूर्वं किंयुक्तम् इति तन् न निहन्यते, उत्तरं तु न किंयुक्तम् इति तन्निहन्यत एव इति। अपरे त्वाहुः, यद्यप्येकस्य आख्यातस्य समीपे किंशब्दः श्रूयते, तथापि सर्वस्य संशयविषयस्य तेन योगः इति उभयत्र प्रतिषेधेन भवितव्यम् इति। क्रियाग्रहणं किम्? साधनप्रश्ने मा भूत्, किं देवदत्तः ओदनं पचति, आहोस्विच्छाकम् इति। प्रश्न इति किम्? किम् अधीते देवदत्तः। क्षेपे किंशब्दो ऽयम्, न प्रश्ने। अनुपसर्गम् इति किम्? किं देवदत्तः प्रपचति, आहोस्वित् प्रकरोति। अप्रतिषिद्धम् इति किम्? किं देवदत्तो न पठति, आहोस्विन् न करोति।

न्यासः

किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषषिद्धम्?। , ८।१।४४

"अप्रतिषिद्धम्()" इति। प्रतिषेधः प्रतिषिद्धम्()। भावे निष्ठा। नास्य प्रतिषिद्धमस्तीत्यप्रतिषिद्धम्()। अथ वा--कर्मणि निष्ठा, निविद्धं प्रतिषिद्धमप्रतिषिद्धम्()। अर्थद्वारकञ्चैतत्? तिङो विशेषणम्()। "पूर्वं किंयुक्तम्()" इति। तत्समीपे किमः श्रूयमाणत्वादित्यभिप्रायः। "उत्तरं तु न किंयुक्तम्()" इति। तस्यासमीपे श्रूयमाणत्वादिति भावः। "अपरे त्वाहुः" इत्यादि। न हि समीपे श्रुयमाणत्वं किंशब्दस्य शब्दान्तरेण सम्बन्धे हेतुः अपि तु संशयविषयत्वम्()। यथा चात्र पूर्वस्याख्यातस्य, तथा तत्परस्यापीत्यस्ति तस्य योगः किंशब्देनेत्युभयत्र प्रतिषेधः॥

---

सूत्रम्

काशिका-वृत्तिः

लोपे विभाषा ८।१।४५

किमो लोपे क्रियाप्रश्ने तिङन्तम् अनुपसर्गम् अप्रतिषिद्धं विभाषा नानुदात्तं भवति। क्व च अस्य लोपः? यत्र गम्यते चार्थः, न च प्रयुज्यते किंशब्दः। देवदत्तः पचति, आहोस्वित् पठति। विनैव किमा प्रश्नो ऽवगम्यते। प्राप्तविभाषेयम् किमर्थेन योगात्। पूर्ववत् प्रत्युदाहरणानि।

न्यासः

लोपे विभाषा। , ८।१।४५

किंशब्दस्य प्रकृतत्वात्? तस्यैव लोपो विज्ञायते, इत्याह--किमो लोपे इति। किंशब्दस्य शास्त्रे न क्वचिल्लोपो विहितः, इत्यतः पृच्छति--"क्व चास्य लोपः" इति। अदर्शनमात्रस्य "लोपः" १।१।५९ इति संज्ञा कृता न तु शास्त्रकृतस्यैवादर्शनस्येत्यभिप्रायेणाह--"यत्र" इत्यादि। "गम्यते चार्थः" इति। कुतश्चिदर्थप्रकरणादेः। "न च प्रयुज्यते" इति। गम्यमानार्थत्वात्()। "देवदत्तः पचत्याहोस्वित्? पठति" इति। अत्रायमाहोस्विच्छब्दः पक्षान्तरे वत्र्तते। पक्षान्तरोपन्यसनं किमर्थम्()? प्रश्नं न व्यभिचरतौति। अत्राप्रयुज्यमानस्यापि तस्यार्थो गम्यते। पत्रतिशब्दोऽयं पक्षे पचतिशब्देन तुल्यस्वरः॥

---

सूत्रम्

काशिका-वृत्तिः

एहि मन्ये प्रहासे लृट् ८।१।४६

एहि मन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं भवति प्रहासे। प्रकृष्टो हासः प्रहासः, क्रीडा। एहि मन्ये ओदनं भोक्ष्यसे, न हि भोक्ष्यसे, भुक्तः सो ऽतिथिभिः। एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता। प्रहासे इति किम्? एहि मन्यसे ओदनं भोक्ष्ये इति। सुष्ठु मन्यसे। साधु मन्यसे। गत्यर्थलोटा लृटित्येव सिद्धे सत्यारम्भो नियमार्थः, एहिमन्येयुक्ते प्रहासे एव यथा स्यात्, अन्यत्र मा भूतिति , एहि मन्यसे ओदनं भोक्ष्ये इति। एहि मन्ये इत्युत्तमोपादानम् अतन्त्रम्। प्रहासे एव हि मन्यतेरुत्तमो विहितः, ततो ऽन्यत्र मध्यम एव भवति। तत्र अनेन नियमेन निवृत्तिः क्रियते, एहि मन्यसे ओदनं भोक्ष्ये इति।

न्यासः

एहिमन्ये प्रहासे लृट्?। , ८।१।४६

"एहिमन्य इत्यनेन" इति। समुदायस्यैकत्वात्? तदपेक्षयैकवचनम्(), अन्यथा हि द्वे एते आख्याते इति द्वित्वाद्()द्विवचनं स्यात्()। "प्रहासः" इति। प्रकृष्टो हासः; परिहास इत्यर्थः। "एहि मन्य ओदनं भोक्ष्यसे" इति। "प्रहासे च मन्योपदे" १।४।१०५ इति पुरुषव्यत्ययः। भुजेरस्मद्युपपदे मध्यमः, मन्यतेर्युष्मद्युपपदे उत्तमः। "एवम एहि मन्ये रथेन यास्यसि" इत्यत्रापि पुरुषव्यत्ययो वेदितव्यः। द्वे अपि चैते लृङन्ते स्यप्रत्ययस्वरेण मध्योदात्ते। "प्रहास इति किम्()? एहि मन्यस ओदनं भोक्ष्ये" इति। अत्र मन्यतेः "यष्मद्युपपदे" १।४।१०४ इत्यादिना मध्यमः। भुजेस्तु "अस्मद्युत्तमः" १।४।१०६ इत्युत्तमः। सुष्ठु मन्यसे, साधु मन्यसे" इति। अनेन यथाभूतं दर्शयत्? प्रहासाभावं दर्शयति। ननु च "गत्यर्थलोटा लृट्()" ८।१।५१ इत्यादिनैव सिद्धम्(), तत्? किमर्थोऽयमारम्भः? इत्यत आह--"गत्यर्थलोटा" इत्यादि। "एहिमन्येयुक्ते" इत्यादिना नियमार्थतामस्य व्यक्तीकरोति। कथं पुनरेहिमन्य इत्येनेन योगेन नियमः क्रियमाणः "एहि मन्यसे ओदनं भोक्ष्ये" इत्यत्र निवृत्ति करोति, न ह्यतर पहीत्यनेव लृडन्तं युक्तम्(), किं तर्हि? एहि मन्यस इत्यनेन? इत्यत आह--"एहि मन्य इत्युत्त्मोपादानमतन्त्रम्()" इति। अतन्त्रत्वं तु तस्योपलक्षणार्थत्वात्()। ननु च "मन्यतेरुत्तमः" १।४।१०५ इति वचनाद्युष्मद्युपपदे मन्यतेरुत्तमेनैव भवितव्यम्(), एवञ्च "एहि एव हि मन्यतिरुत्तमः" इति। गतार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

जात्वपूर्वम् ८।१।४७

जातु इत्येतदविद्यमानपूर्वम्, तेन युक्तं तिङन्तं नानुदात्तं भवति। जातु भोक्ष्यसे। जातु करिष्यामि। अपूर्वम् इति किम्? कटं जातु करिष्यति।

न्यासः

जात्वपूर्वम्?। , ८।१।४७

"अपूर्वम्()" इति। अविद्यमानं पूर्वं यस्मात्? तदपूर्वम्()। अत्र च द्वयं सम्भाव्यते--तिङन्तस्य चेदं विशेषणं स्यात्(), जातुशब्दस्य वेति। तत्र यदि तिङन्तस्य स्यात्? "आहोउताहो जानन्तरन्()" ८।१।४९ इत्यत्रानन्तर ग्रहणं न कुर्यात्()। अस्यैव ह्रपूर्वग्रहणस्य तत्रानुवृत्तेस्तिङन्तस्यानन्तर्यं लभ्यते; तस्माज्जातुशब्दस्येदं विशेषणम्(), इत्यालोच्याह--"जात्वित्येतत्()" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

किंवृत्तं च चिदुत्तरम् ८।१।४८

किमो वृत्तं किंवृत्तम्। किंवृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्, डतरडतमौ च प्रत्ययौ। तत् किंवृत्तं चिदुत्तरम् अविद्यमानपूर्वं यत् तेन युक्तं तिङन्तं नानुदात्तम् भवति। कश्चिद् भुङ्क्ते। कश्चिद् भोजयति। कश्चिदधीते। केनचित् करोति। कस्मैचिद् ददाति। कतरश्चित् करोति। कतमश्चिद् भुङ्क्ते। चिदुत्तरम् इति किम्? को भुङ्क्ते। अपूर्वम् इत्येव, देवदत्तः किञ्चित् पठति।

न्यासः

किंवृत्तं च चिदुत्तरम्?। , ८।१।४८

"चिदुत्तरम्()" इति। चिदित्येतदुत्तरं यस्मात्? तत्? तथोक्तम्()। पूर्वोक्तया नोत्यैतदपि किवृत्तस्यैव विशेषणम्()। "किंवृत्तग्रहणेन तद्विभक्त्यन्तम्()" इत्यादि। "किवृत्ते लिप्सायाम्()" ३।३।६ इत्यत्रैतदुक्तार्थम्()। "भोजयति" इति। पूर्ववन्मध्योदात्तमेवैतत्()। "कस्मैचिद्ददाति" इति। "अभ्यस्तानामादिः" ६।१।१८३ इत्याद्युदात्तमेतत्()। "कतरः" इति। "किंयत्तदोर्निर्धारणे" ५।३।९२ इति डतरच। "कतमः" इति। "वा बहूनां जातिपरिप्रश्ने" ५।३।९३ इति डतमच्()॥

---

सूत्रम्

काशिका-वृत्तिः

आहो उताहो च अनन्तरम् ८।१।४९

निघातप्रतिषेधो ऽनुवर्तते, अपूर्वम् इति च। आहो उताहो इत्येताभ्याम् अपूर्वाभ्यां युक्तम् अनन्तरं तिङन्तं नानुदात्तं भवति। आहो भुङ्क्ते। उताहो भुग्क्ते। आहो पठति। उताहो पठन्ति। अनन्तरम् इति किम्? शेषे विभाषां वक्ष्यति। अपूर्वम् इत्येव, देवदत्त आहो भुङ्क्ते। देवदत्त उताहो भुङ्क्ते।

न्यासः

आहोउताहो चानन्तरम्?। , ८।१।४९

अविद्यमानमन्तरं व्यवधानं यस्य तदनन्तरम्()। अव्यवहितमित्यर्थः। तिङन्तविशेषणमेतत्()। आनन्तर्यञ्चाहो, उताहो--इत्येतयोः श्रुतत्वात्? तदपेक्षयैव वेदितव्यम्()।?त्रापि चकारोऽपूर्वमित्यस्यानुकर्षणार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

शेषे विभाषा ८।१।५०

आहो उताहो इत्येताभ्यां युक्तं तिङन्तं नानुदात्तम् शेषे विभाषा भवति। कश्च शेषः? यदन्यदनन्तरात्। आहो देवदत्तः पचति, पचति। उताहो देवदत्तः पचति, पचति। आहो देवदत्तः पठति, पठति। उताहो देवदत्तः पठति, पठति।

न्यासः

शेषे विभाषा। , ८।१।५०

शेषः सन्निहितापेक्षः। शेषत्रयञ्च पूर्वसूत्रे सन्निहतं निघातकारणम्--आहो उताहोशब्दौ, अनन्तर मित्येतत्(), अपूर्वमित्येतच्च। तत्र न ज्ञायते--किं कारणभावापेक्षः शेष इति। किमाहोउताहोशब्दापेक्षः? उतानन्तरभावापेक्षः? आहोस्विदपूर्वभावापेक्षः()--इत्यतः पृच्छति--"कश्च शेषः" इति। इह निघातमिच्छता तत्कारणमवश्यमेवापेक्षणीयम्()। "आहो उदाहो" इति। अपूर्वमित्येतदपि, द्विश्चकारेणानुकृष्टत्वात्()। तस्य हि द्वयोर्योगयोश्चकारोऽनुकर्षणार्थ एव कृतः। कथं नामात्रापि तदपेक्षा स्यादिति! अन्यथा हि समनन्तरातीति एव सूत्रे तदनुकर्षणार्थश्चकारः क्रियते। किंवृत्तादिसूत्रे ८।१।४८ हि स्वरितत्वादेव तदनुवत्र्तत इति। तस्मात्? पारिशेष्यादनन्तरभावपेक्षः शेषो विज्ञायते? इत्यत आह--"यदन्यदनन्तरात" इति॥

---

सूत्रम्

काशिका-वृत्तिः

गत्यर्थलोटा लृण् न चेत् कारकं सर्वान्यत् ८।१।५१

गमिना समानार्था गत्यर्थाः। गत्यर्थानां लोट् गत्यर्थलोट्। तेन गत्यर्थलोटा युक्तं लृडन्तं तिङन्तं नानुदात्तं भवति, न चेत् कारकम् सर्वान्यद् भवति। यत्र एव कारके कर्तरि कर्मणि वा लोट्, तत्र एव यदि लृडपि भवति इत्यर्थः। कर्तृकर्मणी एव अत्र तिङन्तवाच्ये कारकग्रहणेन गृह्येते, न करणादि कारकान्तरम्। आगच्छ देवदत्त ग्रामम्, द्रक्ष्यसि एनम्। आगच्छ देवदत्त ग्रामम्, ओदनं भोक्ष्यसे। उह्यन्तां देवदत्तेन शालयः, तेन एव भोक्ष्यन्ते। उह्यन्तां देवदत्तेन शालयः, यज्ञदत्तेन भोक्ष्यन्ते। गत्यर्थग्रहणं किम्? पच देवदत्त ओदनम्, भोक्ष्यसे एनम्। लोटा इति किम्? आगच्छेः देव्दत्त ग्रामम्, द्रक्ष्यसि एनम्। लृटिति किम्? आगच्छ देवदत्त ग्रामम्, पश्यसि एनम्। न चेत् कारकम् सर्वान्यतिति किम्? आगच्छ देवदत्त ग्रामम्, पिता ते ओदनं भोक्ष्यते। उह्यन्तां देवदत्तेन शालयः, सक्तवः तेन पास्यन्ते। सर्वग्रहणम् किम्? आगच्छ देवदत्त ग्रामम्, त्वं चाहं च द्रक्ष्यावः एनम् इत्यत्र अपि निघातप्रतिषेधो यथा स्यात्। लृडन्तवाच्ये हि सर्वस्मिन् कारके अन्यस्मिन् न भवितव्यम्, इह तु यत् लोडन्तस्य कारकं तच्चान्यच्च लृडन्तेन उच्यते इति।

न्यासः

गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्। , ८।१।५१

"गमिना समानार्था गत्यर्थाः" इति। अर्थप्रदर्शनमेवैतत्()। एवं तु विग्रहः कत्र्तव्यः--गतिरर्थो येषामिति। "गत्यर्थलोटा युक्तम्()" इति। योगः पुननिमित्तनिमित्तरूपः। तयोर्निमित्तमिति भावः। "न चेत्कारकम्()" इत्यादेरर्थं विस्पष्टीकर्तुमाह--"यत्रैव" इत्यादि। अनेन लोडन्तवाच्यं लृडन्तवाच्यार्थं यत्? कारकं तस्यैवानन्यत्वमाश्रितम्(); न शब्दातन्तरवाच्यस्येति दर्शयति, एवच्च प्रत्यासत्तेर्लभ्यते। तिङन्तस्य हि तदेव प्रत्यासन्नं कारकं यत्? तेनैवाभिधीयते न शब्दान्तरेण; तेन शब्दान्तरवाच्ये भिद्यमानेऽपि भवत्येव भिधातप्रतिषेधः। "आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम्()"

इति। आगच्छेति गत्यर्थलोट, द्रक्ष्यसीति लृडन्तम्(); तयोश्चैकमेवात्र कारकं देवदत्तः कत्र्ता। "द्रक्ष्यसि" इति। "सृजिदृशोर्झल्यमकिति" ६।१।५७ इत्यमागमः; व्रश्चादि सूत्रेण ८।२।३६ षत्वम्(), "षढोः कः सि"८।२।४१ इति कत्वम्()। स्यप्रत्ययस्वरेण मध्योदात्तमेतत्()। एवमुत्तरत्रापि यत्र निघातप्रतिषेधस्तत्र लृडन्तस्य मध्योदात्तता वेदितव्या। "आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे" इति। अत्रापि तदेवाभिन्नमुभयलकारवाच्यं कर्त्तुकारकम्()। कर्म तु यद्यपि भिद्यते, तथाप#इ तच्छब्दान्तरवाच्यमिति सत्यपि त्भेदे भवत्येव निघातप्रतिषेधः। "उह्रन्तां देवदत्तेन शालयो यज्ञदत्तेन भोक्ष्यन्ते" इति। अथात्र शालय इत्युभयलकारवाच्यमभिन्नं कर्मं कारकम्(), कर्ता तु यद्यपि भिद्यते, तथापि स शब्दान्तरवाच्य इति तद्भेदेऽपि निघातप्रतिषेधो भवत्येव। "उह्रन्ताम्()" इति। वहेः कर्मणि लोट्(), आत्मनेपदम्(), झस्यान्तादेशः, "सार्वधातुके यक्()" ३।१।६७ वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्(), टेरेत्वम्? ३।४।७९, "आमेतः" ३।४।९० इत्याम्भावः। कथं पुनरिहाभिन्नं कारकम्(), यावता शक्तिः कारकम्(), सा च प्रतिक्रियं भिद्यत एव शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वादेकं कारकं भविष्यतीत्यदोषः। "आगच्छेर्देवदत्त ग्रामं द्रक्ष्यस्यनम्()" इति। अत्र गत्यर्थलिङा लृङन्तं युक्तम्(), न गत्तयर्थलोटा। "आगच्छ देवदत्त ग्रामं पश्यस्येनम्()" इति। अत्र गत्यर्थलोटा लङन्तं युक्तम्(), न तु लुङन्तम्()। "आगच्छ देवदत्त ग्रामं पिता त ओदनं भोक्ष्यते" इति। अत्र लोङन्तस्य देवदत्तः कर्ता, लृडन्तस्य तु पितेति भिद्यते कारकम्()। "आगच्छ देवदत्त ग्रामं त्वं चाहं च" इत्यादि। यथा पूर्वोपन्यस्तेषु मूलोदाहरणेषु यल्लोडन्तस्य कर्त्रादि कारकं वाच्यं तन्मात्रमेव लृङन्तस्यापि, इह तु न तथा। अत्रापि ["तत्रापि--कां३।पाठः] लोङन्तस्य देवदत्तो युष्मदर्थ एवप कत्र्ता वाच्यः, लृङन्तस्य तु स चास्मदर्थश्च; तत्रासति सर्वग्रहण इह निघातप्रतिषेधो न स्यात्()। अत इहापि यथा स्यादित्येवमर्थं सर्वग्रहणम्()। अथ सत्यपि सर्वग्रहणे निघातप्रतिषेधः कथमेवात्र भवति, यावाता भिद्यते लोङन्तवाच्यात्? कारकाल्लृङन्तवाच्यो योऽर्थः कारकं कर्तात? इत्यत आह--"लृङन्तवाच्ये हि" इत्यादि। सर्वग्रहणे सति लोडन्तवाच्यं यत्कारकं तस्माल्लृङन्तस्य यदि सर्वमन्यद्भवति, तथाप्येवं न निघातप्रतिषेधेन भवितव्यम्(), अन्यथा तु सति भवत्येव। यदि हि यत्रापि लोङन्तस्य किञ्चित्? तदेव कारकं वाच्यम्(), लृङन्तस्य किञ्चित्? ततोऽन्यत्रापि निघातप्रतिषेधो न स्यात्(), सर्वग्रहणमनर्थकं स्यात्()। तस्मात् सर्वग्रहणाद्भवत्येवात्र निघातप्रतिषेधः। तत्रैवं स्यात्()--अस्मिन्नप्युदाहरणे लृङन्तस्य वाच्यं यत्? कारकमन्यदेव तल्लोङन्तवाच्यात्()। अतः सत्यपि सर्वग्रहणे न भवितव्यं निघातप्रतिषेधेण? इत्यत आह--"इह तु" इत्यादि। गतार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

लोट् च ८।१।५२

लोडन्तं तिङन्तं गत्यर्थलोटा युक्तं नानुदात्तं भवति, न चेत् कारकं सर्वान्यद् भवति। लोडन्तयोरेकं कारकं यदि भवति इत्यर्थः। आगच्छ देवदत्त, ग्रामं पश्य। आगच्छ विष्णुमित्र, ग्रामं शाधि। आगम्यतां देवदत्तेन, ग्रामो दृश्यतां यज्ञदत्तेन। गत्यर्थानाम् इत्येव, पच देवदत्तौदनम्, भुङ्क्ष्व एनम्। लोटा इत्येव, आगच्छेः देवदत्त ग्रामम्, पश्य एनम्। न चेत् कारकं सर्वान्यतित्येव, आगच्छ देवदत्त ग्रामम्, पश्यतु एनम् यज्ञदत्तः। सर्वग्रहणानुवृत्तेस्तु इह भवत्येव, आगच्छ देवदत्त ग्रामम् त्वं चाहं च पश्याव। पृथग्योगकरणम् उत्तरार्थम्।

न्यासः

लोट्? च। , ८।१।५२

चकारः पूर्वापेक्षया समुच्चयार्थः। "पश्य" इति। अन्तोदात्तम्()--"एकादेश उदात्तेनोदात्तः" ८।२।५ "अतो गुणे" ६।१।९४ इति गुणग्रहणे पररूपस्येवोदात्तत्वात्()। "शाधि" इति। "शासु अनुशिष्टौ" (धा।पा।१०७५), "सेह्रपिच्च" ३।४।८७ इति सिपो

हिरादेशः, अदादित्वाच्छपो लुक्(); "शा हौ" ६।४।३५ इति धातोः शादेशः, "हुझल्भ्यो हेर्धिः" ६।४।१०१ इति हेर्धिभाव-। प्रत्ययस्वरेणान्तोदात्तमेतत्()। एवं दृश्यतामित्येदपि; "विकरणस्वरात्? सार्वधातुकस्वरो बलीयान्()" इति वचनात्()। अथ पृथग्योगकरणं किमर्थम्(), न पूर्वसूत्र एव लोङ्ग्रहणमपि क्रियेत? इत्यत आह--"पृथक्()" इत्यादि। उत्तरत्र लोट एव कार्यं यथा स्यात्(), लृटो मा भूदित्येवमर्थं पृथग्योगकरणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषितं सोपसर्गम् अनुत्तमम् ८।१।५३

पूर्वं सर्वम् अनुवर्तते। प्राप्तविभाषा इयम्। लोडन्तं सोपसर्गम् उत्तमवर्जितं गत्यर्थलोओता युक्तं तिङन्तं विभाषितं नानुदात्तम् भवति, न चेत् कारकं सर्वान्यद् भवति। आगच्छ देवदत्त, ग्रामं प्रविश, प्रविश। आगच्छ देवदत्त, ग्रामं प्रशाधि, प्रशाधि। सोपसर्गम् इति किम्? आगच्छ देवदत्त, ग्रामं पश्य। अनुत्तमम् इति किम्? आगच्छानि देवदत्त, ग्रामं प्रविशानि।

न्यासः

विभाषितं सोपसर्गमनुत्तमम्?। , ८।१।५३

पूर्वेण नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्? विभाषितशब्दश्चायं विभावाशब्देन समानार्थः। "नपुंसके भावे क्तः" ३।३।११४। "प्रविशानि" इति। मिपः "मेनिः" ३।४।८९, "आडुत्तमस्य पिच्च" ३।४।९२ इत्याद्()॥

---

सूत्रम्

काशिका-वृत्तिः

हन्त च ८।१।५४

पूर्वं सर्वमनुवर्तते गत्यर्थलोटं वर्जयित्वा। हन्त इत्यनेन युक्तं लोडन्तं सोपसर्गम् उत्तमवर्जितं विभाषितं नानुदात्तम् भवति। हन्त प्रविश, प्रविश। हन्त प्रशाधि, प्रशाधि। सोपसर्गम् इत्येव, हन्त कुरु। निपातैर् यद्यदिहन्त इति नित्यम् अत्र निघातप्रतिषेधो भवति। अनुत्तमम् इत्येव, हन्त प्रभुनजावहै। हन्त प्रभुनजामहै।

न्यासः

हन्त च। , ८।१।५४

चकारः "विभाषितं सोपसर्गमनुत्तमम्" ८।१।५३ इत्यस्यानुकर्षणार्थः। "कुरु" इति। करोतेर्गुणे कृते "अत डत्सार्वधातुके ६।४।११० इत्युत्त्वम्(), "उतश्च प्रत्ययात्()" ६।४।१०६ इत्यादिना हेर्लुक्()। प्रत्ययस्वरेणान्तोदात्तमेतत्()। "हन्त प्रभुञ्जावहै" ["प्रभुनजावहै"--प्रांउ।पाठः] इति। भुजेर्लोट्(), वहिः, टेरेत्वम्(), "आडुत्तमस्य पिच्च" ३।४।९२, श्नम्()। अत्रापि "निपातैर्यद्यदि" ८।१।३० इत्यादिना निघातप्रतिषेधः। अदुपदेशाल्लसार्वधातुकस्यानुदात्तत्वे ६।१।१८० कृते विकरणस्वरेण मध्योदात्तमेतत्()॥

---

सूत्रम्

काशिका-वृत्तिः

आम एकान्तरम् आमन्त्रितम् अनन्तिके ८।१।५५

आमः उत्तरम् एकपदान्तरम् आमन्त्रितान्तम् अनन्तिके नानुदात्तं भवति। आम् पचसि देवदत्त ३। आम् भो देवदत्त ३। भो

इत्यामन्त्रितान्तम् अपि, नामन्त्रिते समानाधिकरणे सामान्यवचनम् इति नाविद्यमानवद् भवति। आमः इति किम्? शाकं पचसि देवदत्त ३। एकान्तरम् इति किम्? आम् प्रपचसि देवदत्त ३। आमन्त्रितम् इति किम्? आम् पचति देवदत्तः। अनन्तिके इति किम्? आम् देवदत्त। आम एकान्तरम् आमन्त्रितं यत् तस्य एकश्रुतेरनुदात्तस्य च प्रतिषेध इष्यते। तदुभयम् अनेन क्रियते इति केचिदाहुः। प्लुतोदात्तः पुनरसिद्धत्वान् न प्रतिषिद्यते। अपरेषां दर्शनम्, अनन्तिके इत्यनेन यन् न दूरं न सन्निकृष्टं तत् परिगृह्यते, तेन अस्मिन्नेकद्श्रुतेः प्राप्तिरेव न अस्ति, प्लुतोदात्तो ऽपि नोदाहर्तव्यः इति।

न्यासः

आम एकान्तरमामन्त्रितमनन्तिके। , ८।१।५५

"एकान्तरम्()" इति। अन्तरयतीत्यन्तरम्()। व्यवधायकमित्यर्थः। एकं पदमन्तरं यस्य तत्तथोक्तम्()। एकेन निपातेन व्यवहितमित्यर्थः। "आम्? पचसि देवदत्तात्रि इति। निघाते प्रतिषिद्धे "आमन्त्रितस्य" ६।१।१९२ इति धाष्ठिकमामन्त्रिताद्युदात्तत्वं भवति। "दूराद्धूते च" ८।२।८४ इति प्लुतः। "आम भो देवदत्तात्रि" इति। भवद्भगवदघवतामोच्चावस्य" (८।३।१।वा।२) इति भवच्छब्दावयवस्यावशब्दस्यौत्त्वम्(); दकारस्य रुत्वम्(), तस्य "भोभगोअधोअपूर्वस्य" ८।३।१७ इत्यादिना यकारः, तस्य "हलि सर्वेषाम्()" ८।३।२२ इति लोपः। ननु चात्र भोःशब्दस्य "आमन्त्रितं पूर्वमविद्यमानवत्()" (८।१।७२) इत्यविद्यमानत्वादेकान्तरता नोपपद्यते? इत्यत आह--"भो इत्यामन्त्रितान्तमपि" इत्यादि। "भोः" इति सामान्यवचनम्()। अत्र "भोः" इति यद्यप्यामन्त्रितम्(), तथापि नाविद्यमानवत्(), "नामन्त्रिते" ८।१।७३ इत्यादिनाऽविद्यमानवद्भावस्य प्रतिषेधात्()। "तदुभयमप्यनेन क्रियते" [तदुभयमनेन--काशिका] इति। कथं पुनरुभयमप्यनेन कर्तुं शक्यम्(), यावतानुदात्ताधिकारादनुदात्तस्यैवानेन युज्यते प्रतिषेधः? न शक्यते कर्तुमप्रकृताया असंशब्दिताया एकश्रुतेः? नैष दोषः; "अनन्तिके" ८।१।५५ इति नञत्र विरोधे वर्तते, अधर्मानृतादिवत्()। अन्तिकविरुद्धमनन्तिकम्()। दूरमित्यर्थः। दूरात्? सम्बुद्धौ चकश्रुतिरुच्यते;"एकश्रुति दूरात्? सम्बुद्धौ" १।२।३३ इति वचनात्()। एवं हि प्रपचसि देवदत्तेत्येवमादिष्वामन्त्रितनिघातं कृतार्थं बाधित्वा यत्राम एकान्तरमामन्त्रितमनन्तिकम्(), तचैकश्रुतिरेव भवति; यदिदं नारभ्येत। अतो नाप्राप्तायामेकश्रुतौ इवमारभ्यत इति तां तावद्बाधते, ततस्तस्याञ्च बाधितायां बाधकाभावात्? प्राप्नुवत्? तं निघातमपि बाधत एव। कुतः? निघातप्रतिषेधाधिकारे वचनात्()। एकश्रुतिप्रतिषेधे हि विधित्सिते सत्येकश्रुतिप्रकरण एव (१।२।३३-४०) प्रतिषेधं कुर्यात्(), नाम एकान्तरमिति; तत्राप्ययमर्थः--"आमन्त्रितमनन्तिके" (८।१।५५) इति वक्तव्यं न भवति। तस्मान्निघातप्रतिषेधाधिकारे वचनान्निघातमपि बाधत इति युक्तम्()--तदुभयमनेन क्रियत इति। नैष दोषो यदि तद्दूरप्रकरणापन्नाशब्दिताप्येकश्रुतिरनेन प्रतिषिध्यते। इह "दूराद्धूते च" तदुभयमनेन क्रियत इति। नैष दोषो यदि तद्दूरप्रकरणापन्नाशब्दिताप्येकश्रुतिरनेन प्रतिषिध्यते। इह "दूराद्धूते च" ८।२।८४ इति यः प्लुतोदात्तः प्राप्नोति; सोऽपि प्रतिषिध्यते? इत्यत आह--"प्लृतोदात्तः पुनः" इत्यादि। तस्मिन्? कत्र्तव्येऽसिद्धत्वात्? प्लुतोदात्तो नास्त्येव, स कथं प्रतिषिध्येत!["प्रतिषिध्यते"--प्रांउ।पाठः] असिद्धत्वं तु "पूर्वत्रासिद्धम्()" ८।२।४ इति वचनात्()।

---

सूत्रम्

काशिका-वृत्तिः

यद्धितुपरं छन्दसि ८।१।५६

आमन्त्रितम् इत्येतदस्वरितत्वान् नानुवर्तते। तिङिति वर्तते एव। यत्परं, हिपरं, तुपरं च तिङन्तं छन्दसि नानुदात्तं भवति। यत्परं तावत् गवां गोत्रमुदसृजो यदङ्गिरः। हिपरम् इन्दवो वामुशन्ति हि तुपरम् आख्यास्यामि तु ते। निपातैर् यद्यदिहन्त इति, हि च ८।१।३४ इति, तुपश्यपश्यताहैः इति च निघातप्रतिषेधे सिद्धे वचनम् इदं नियमार्थम्, एभिरेव

परैर्योगे प्रतिषेधो भवति, नान्यैः इति। इह न भवति, जाये स्वो रोहावैहि। एहि इत्यनेन गत्यर्थलोटा युक्तस्य रोहाव इत्यस्य लोडन्तस्य हिघातो भवत्येव।

न्यासः

यद्धितुपरं छन्दसि। , ८।१।५६

यद्धितवः परे यस्मात्? तत्तथोक्तम्()। "उदसृजोऽयम्()" इति। अत्र हि तिङन्तमट्स्वरेणाद्युदात्तम्()। "सृज विसर्गे" (धा।पा।११७८), लङ्? सिप्(), तुदादित्वाच्छः, "हशि च" ६।१।११० इत्युत्वम्(), "आद्गुणः" ६।१।८४। "उशन्ति हि" इति। "वश कान्तौ" (धा।पा।१०८०) झेरन्तादेशः ७।१।३, पूर्ववच्छपो लुक्(), ग्रहज्यादिसूत्रेण ६।१।१६ सम्प्रसारणम्()। प्रत्यस्वरेण मध्योदात्तमेतत्()। "आख्यस्यामितु" इति। "ख्या प्रकथने" (धा।पा।१०६०), चक्षिङादेशो वा, लृङ्()। स्यप्रत्ययस्वरेण मध्योदात्तमेतत्()। "निपातैर्यद्यदिहन्त" ८।१।३० इत्यादिना नियमस्य कारणं दर्शयि। "वचनम्()" इत्यादिनाप्यस्य वचनस्य नियमार्थत्वम्()। "एभिरेव" इत्यादिनापि नियमसय स्वरूपम्। "नान्यैः" इति। अनेनापि नियमस्य व्यवच्छेद्यम्()। "इह" इत्यादिनापि व्यवच्छेद्यस्य विषयम्()। "स्वो होहावैहि" इति। "रुह बीजजन्मनि प्रादुर्भावे" (धा।पा।८५९), लोट्(), वस्(), शप्(), "आडुत्तमस्य पिच्च" ३।४।९२, "स उत्तमस्य" ३।४।९८ इति सकरलोपः। रोहावेत्येतस्मिन्? परभूते स्वरित्यस्य "रो रि" ८।३।१४ इति रेफस्य लोपो न भवति; छान्दसत्वात्()। तस्मिन्नसति पूर्ववदुत्वम्()। "आद्गुणः" ६।१।८४ इति हि गुणे, लोमण्यध्यमपुरुषैकवचने रूपम्। क्वचित्()-- "जाये स्वो रोहावैहीत्येहीत्यनेन गत्यर्थलोटा युक्तस्य" इति पाठः, तत्राङ्पूर्वस्येणः प्रयोगो वेदितव्यः। अथ परग्रहणं क्रिमर्थम्(), न "यद्धितुष्वेव" नैवं शक्यम्(); सप्तमीनिर्देशे हि निर्दिष्यटग्रहणस्यानन्तर्यार्थत्वादनन्तरेष्वेवाक्यवादिषु भवतीति नियमो विज्ञायते। ततोऽनन्तरेष्वेव पददिषु भविष्यति, न व्यवहितेष्विति। तथा चाव्ययोगनिवृत्तेनियमेनाकृतत्वात्? स्वो रोहावैहीत्यत्र स्यादेव प्रतिषेधः॥

---

सूत्रम्

काशिका-वृत्तिः

चनचिदिवगोत्रादितद्धिताऽम्रेडितेष्वगतेः ८।१।५७

चन चिदिव गोत्रादि तद्धित आम्रेडित इत्येतेषु परतः अगतेः उत्तरं तिङन्तं नानुदात्तं भवति। चन देवदत्तः पचति चन। चित् देवदत्तः पचति चित्। इव देवदत्तः पचतीव। गोत्रादि देवदत्तः पचति गोत्रम्। देवदत्तः पचति ब्रुवम्। देवदत्तः पचति प्रवचनम्। इह अपि गोत्रादयः कुत्सनाभिक्ष्ण्ययोः एव गृह्यन्ते। तद्धित देवदत्तः पचतिकल्पम्। देवदत्तः पचतिरूपम्। अनुदात्तः तद्धित इह उदाहरणम्, अन्यत्र तद्धितस्वरेण तिङ्स्वरो बाध्यते, पचतिदेश्यः। आम्रेडित देवदत्तः पचति पचति। अगतेः इति किम्? देवदत्तः प्रपचति चन। अत्र अगतिग्रहणे, सगतिरपि तिङित्यत्र च उपसर्गग्रहणं द्रष्टव्यम्। इह मा भूत्, शुक्लीकरोति चन। यत् काष्ठं शुक्ली करोति। यत् काष्ठं कृष्णीकरोति।

न्यासः

चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः। , ८।१।५७

"इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्णन्ते" इति। न केवलं "तिङो गोत्रादीनि" ८।१।२७ इत्यादो सूत्र इत्यपिशब्दार्थः। यथा चात्रापि कुत्सनाभीक्ष्ण्ययोरेव गोत्रादीनि गृह्णन्ते, तथा तत्रैवोपपादितम्()। "पचतिकल्पम्()" इति। "ईषदसमाप्तौ कल्पप्()" ५।३।६७। तत्र हि "तिङश्च" ५।३।५६ इत्यनुवत्र्तते, "अनुदात्तस्तद्धित इहोदाहरणमिति कस्मान्न भवति? इति प्रश्नावसरे आह--"अन्यत्र तद्धितस्वरेण तिङ्स्वरो वाच्ये, इति तद्धितस्योदात्तत्वे सति "अनुदात्तं पदमेकवर्जम्? ६।१।१५२

इति चानुदात्तत्वापततिः। एवञ्चान्यत्र निघातः सिद्ध एवेति। अनुदात्त एव तद्धित इहोदाहरणम्()। "अत्र इत्यादि। कथं पुनरुपसर्गग्रहणं शक्यं द्रष्टुम्()? उत्तरसूत्रे "चादिषु च" ८।१।५८ इति चशब्देनास्य सूत्रस्य द्वितदीयो व्यापार उच्यते, स आनन्तर्याद्गतेरित्यस्य विशेषणार्थो भविष्यति--चादिषु यो गतिरिति। चादिष्विति सामीप्यलक्षणमधिकरणम्()। कश्चादिषु गतिः? चादिसमीपे य उदितः। तेनायं प्रादीनामेवेपसर्गसंज्ञानां प्रतिषेधो विज्ञायते। एवं तावदस्मिन्? सूत्रे गतिग्रहणेनोपसर्गस्य ग्रहणं विज्ञायते। "सगतिरपि तिङ्()" इति। अत्रापि "चादिलोपे विभाषा" (८।१।६३) इति सूत्रात्? मण्डूकप्लुतिन्यायेन विभावेत्यनुवत्र्तते, सा च व्यवस्थितविभाषा। तेनोपसर्गसंज्ञेन गतिना यो गतिः सः। तस्यैवानुदात्तत्वेन भवितव्य मित्युपसर्गऽस्यैव गतेग्र्रहणं विज्ञायते। अथ वा--द्वयोरप्येतयोर्बोगयोः "विभाषितं सोपसर्गमनुत्तमम्()" ८।१।५३ इत्यत उपसर्गग्रहणं मण्डूकप्लुतिन्यायेनानुवत्र्तते, गतिग्रहणमनर्थकं स्यात्(); उपसर्गग्रहणानुवृत्त्यैव सिद्धत्वात्()। नानर्थकम्(); विस्पष्टार्थत्वात्()। "उपसर्गाच्छन्दसि धात्वर्थे" ५।१।११७ इत्यत्र ह्रुपसर्गग्रहणं प्राद्युपलक्षणार्थम्()। तत्रासति गतिग्रहणे, इहाप्युसर्गग्रहणं प्राद्युपलक्षणार्थमिति कस्यचित्? सन्देहः स्यात्()। प्राद्युपलक्षणे च सति को दोषः? अनुपसर्गाणामपि प्रादीनां ग्रहणं विज्ञायेत। ततः शुक्लौकरोतीत्यत्र निघातप्रतिषेधो भवत्येव। "अभूततद्भावे" (५।४।५०।वा।१) इत्यादिनेह च्दिः, तस्य "ऊर्यादिच्विडाचश्च" १।४।६० इति गतिसंज्ञा, "अस्य च्वौ" ७।४।३२ इतीत्त्वम्()। "यत्? काष्ठं शुक्लीकरोति" इति। अत्र "सगतिरपे तिङः" ८।१।६८ इति निघातो न वत्र्तते। तेन "निपातैर्यद्यदि" ८।१।३० इत्यादिना निघातप्रतिषेध एव भवति॥

---

सूत्रम्

काशिका-वृत्तिः

चादिषु च ८।१।५८

चादिषु च परतः तिङन्तमगतेः परं नानुदात्तं भवति। चादयः न चवाहाहैवयुक्ते ८।१।२४ इत्यत्र ये निर्दिष्टाः, ते इह परिगृह्यन्ते। चशब्दे तावत् देवदत्तः पचति च खादति च। वा देवदत्तः पचति वा खादति वा। ह देवदत्तः पचति ह खादति ह। अह देवदत्तः पचत्यह खादत्यह। एव देवदत्तः पचत्येव खादत्येव। अगतेरित्येव, देवदत्तः प्रपचति च प्रखादति च प्रखादति च। प्रथमस्यात्र तिङन्तस्य चवायोगे प्रथमा इति निघातः प्रतिषिध्यते एव, परं तु निहन्यते।

न्यासः

चादिषु च। , ८।१।५८

द्विविधाश्चादयः--गणपरिपठिताश्च, यावङ्गीकृत्यैतदुक्तम्()--"चादयोऽसत्त्वे १।४।५७ इति; सूत्रपठिताश्च--"न चवाहाहैवायुक्ते" ८।१।२४ इति; तत्र प्रत्यासत्तेर्य इह प्रकरणे पठितास्तेषामेव ग्रहणं युक्तम्()? इति मत्वाऽऽह--"चादयो न चदाहाहैव" इत्यादि। खादतिशब्दः पचतिशब्देन तुल्यस्वरः। "प्रथमस्यात्र तिङन्तस्य" इत्यादिना द्वितीयमिह गतेरित्यस्य प्रत्युदाहरणमिति दर्शयति। चश्बदो गतेरित्यस्यानुकर्षणार्थः। अन्यच्चास्य प्रयोजनमुक्तमेव॥

---

सूत्रम्

काशिका-वृत्तिः

चवायोगे प्रथमा ८।१।५९

अगतेः इति पूर्वसूत्रे च अनुकृष्टम् इत्यत्र नानुवर्तते। च, वा इत्येताभ्यां योगे प्रथमा तिङविभक्तिर् नानुदात्ता भवति। गर्दर्भाश्च कालयति, वीणां च वादयति। गर्दभान् वा कालयति, वीणां वा वादयति। योगग्रहणं पूर्वाभ्याम् अपि योगे निघातप्रतिषेधो यथा स्यातिति। प्रथमाग्रहणम् द्वितीयादेः तिङन्तस्य मा भूतिति। चवायोगो हि द्विसमुच्चये विकल्पे च

सति भवति, स च अनेकस्य धर्म इति।

न्यासः

चवायोगे प्रथमा। , ८।१।५९

"प्रथमा तिङविभक्तिः" इति। एतेन प्रथमेति स्त्रीलिङ्गनिर्देशो विभक्त्यपेक्षः सूत्रे कृत इति दर्शयति। प्रथमात्वं तस्य पुनः प्रथममुच्चारणाद्वेदितव्यम्? "गर्दभाँश्च कालयति" इति। "कल विल क्षेपे" (धा।पा।१६०४-१६०५) चुरादिणिच्()। चित्स्वरेण लकारेऽकार उदात्त इति मध्योदात्तमेतत्()। द्वितदीयं तु निहन्यत एव। अथ योगग्रहणं किमर्थम्(), न च वयोरित्येव सप्तम्या निर्देशः क्रियेत, यथा "चादिष च" (८।१।५८)? इत्यत आह--"योगग्रहणम्()" इत्यादि। यथा "चादिषु च" ८।१।५८ इति सप्तम्या निर्देशे सति परैरेव चादिनिर्योगे प्रतिषेधो भवति, न पूर्वैः; तथेहापि पराभ्यामेव चवाभ्यां योगे स्यात्(), न पूर्वाभ्याम्()। ताभ्यामपि योगे यथा स्यादित्येवमर्थं योगग्रहणम्()। यदि तु चवाभ्यामिति तृतीयया निर्देशः क्रियते, विनापि योगग्रहणेन पूर्वाभ्यामपि योगे स्यादेव प्रतिषेधः? सन्देहपरिहारार्थं तु तथा न कृतम्(), चवाभ्यामित्युच्यमाने सन्देहः स्यात्()--किमयं तृतीयया निर्देशः? उत पञ्चम्येति? पञ्चम्या निर्देशे को दोषः स्यात्()? परमताभ्यां योगे न स्यात्()। कथं पुनर्द्वितीयादितिङन्तस्य चवाभ्यां योगः, यत्तन्निवृत्त्यर्थं प्रथमाग्रहणं क्रियेत? इत्यत आह--"चवायोगो हि" इत्यादि। इह चयोगः समुच्चये भवति, वायोगस्तु विकल्पे। स च समुच्चयो वपिकल्पश्चानेकस्य धर्मः, द्वित्वादिवत्()। अतो यत्र तौ समुच्चयविकल्पौ, तत्रावश्यमनेकस्य द्वितीयादेः सन्निधानेन भवितव्यम्()। तस्मात्? तन्निवृत्त्यर्थं प्रथमाग्रहणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

हेति क्षियायाम् ८।१।६०

ह इत्यनेन युक्ता प्रथमा तिङ्विभक्तिः नानुदात्ता भवति क्षियायां गम्यमानायाम्। क्षिया धर्मव्यतिक्रमः, आचारभेदः। स्वयं ह रथेन याति ३, उपाध्यायं पदातिं गमयति। स्वयं ह ओदनं भुङ्क्ते ३, उपाध्यायं सक्तून् पाययति। प्रथमस्य तिङन्तस्य अत्र निघातः प्रतिषिध्यते। क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ८।२।१०४ इति च प्लुतो भवति।

न्यासः

हेति क्षियायाम्?। , ८।१।६०

"आचारभेदः" इति। शिष्टाचारव्यतिक्रम इत्यर्थः। "याति" इति। धातुस्वरेणाद्युदात्तः। इतिकरणेन हशब्दमात्रलस्य निघातकारणत्वमाख्यायते। असति हि तस्मिन्? क्षिया हशब्दस्योपाधिर्विज्ञायेत तिङन्तस्य वा। तथा च यदा हशब्दस्तिङन्तं वा क्षियायां न प्रयुज्यते, तदा निघातप्रतिषेधो न स्यात्()। इतिकरणे तु सति स्वरूपमात्रप्रधानो हशब्दो निघातस्य कारण भवतीति असत्यामपि हशब्दस्य तिङन्तस्य वा क्षियायां वृत्तौ निघातप्रतिषेधः सिद्धो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

अह इति विनियोगे च ८।१।६१

अह इत्यनेन युक्ता प्रथमा तिङ्विभ्क्तिर् नानुदात्ता भवति विनियोगे गम्यमाने, चशब्दाद् क्षियायां च। नानाप्रयोजनो नियोगो विनियोगः। त्वमह ग्रामं गच्छ। त्वमह अरण्यं गच्छ। क्षियायाम् स्वयमह रथेन याति ३, उपाध्यायं पदातिं

गमयति। स्वयमह ओदनं भुङ्क्ते ३, उपाध्यायं सक्तून् पाययति। पूर्ववन्निघातप्रतिषेधः, प्लुतश्च।

न्यासः

अहेति विनियोगे च। , ८।१।६१

चकारेण क्षियायामित्येतदनुकृष्यते। "नानाप्रयोजनः" इति। अनेकप्रयोजन इत्यर्थः। "नियोगः" इति। प्रेषणम्(), व्यापारणमित्यर्थः। इतिकरणमस्य पूर्ववदेव प्रयोजनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

चाहलोप एव इत्यवधारणम् ८।१।६२

चलोपे अहलोपे प्रथमा तिङ्विभक्तिः नानुदात्ता भवति। एव इति एतच् चेदवधारणार्थं प्रयुज्यते, क्व च अस्य लोपः? यत्र गम्यते चार्थः, न च प्रयुज्यते, तत्र लोपः। तत्र चशब्दः समुच्चयार्थः, आहशब्दः केवलार्थः इति समानकर्तृके चलोपः, नानाकर्तृके अहलोपः। चलोपे देवदत्त एव ग्रामं गच्छतु, स देवदत्त एवारण्यं गच्छतु। ग्रामं चारण्यं च गच्छतु इत्यर्थः। अहलोपे देवदत्त एव ग्रामं गच्छतु, यज्ञदत्त एवारण्यम् गच्छतु। ग्रामं केवलम्, अरण्यं देवलम् इत्यर्थः। अवधारणम् इति किम्? देवदत्तः क्वेव भोक्ष्यते। अनवक्लृप्तावयम् एवशब्दः। न क्व चिद् भोक्ष्यते इत्यर्थः। एवे चानियोगे इति पररूपम्।

न्यासः

चाहलोप एवेत्यवधारणम्?। , ८।१।६२

"क्व चास्य लोपः" इति। "लोपे विभाषा" ८।१।४५ इत्यत्र योऽभिप्राय प्रष्टुरुक्तः स इहापि वेदितव्यः। "यत्रार्थो गम्यते" इत्यादि। अत्रापि यस्तत्राभिप्राय इतरस्याभिहितः स एव द्रष्टव्यः। कः पुनरर्थस्तयोः प्रयुक्तयोरपि गम्यते? इत्याह--"तत्र" इत्यादि। क्य पुनर्दिषये चलोपः? क्व वाहलोपः? इत्याह--"समानकर्तृके" इत्यादि। यस्मिन्? व्यापारविशेषे समास एकः कत्र्ता स समानकत्र्तकः। "समानकर्तृके चलोपः, नानकर्तृकेऽहलोपः" इति। नाना कत्र्ता यस्मिन्? स नानाकर्तुकः। "देवदत्त एव ग्रामं गच्छतु, स देवदत्त एवारण्यं गच्छतु" इति। अत्र ग्रामकर्मकमरण्यकर्मकञ्च गमनं यत्? तस्य देवदत्त एव कत्र्तति तत्? समानकर्तृकम्()। चार्थं च दर्शयितुमाह--"ग्रामं च" इत्यादि। अत्र हि देवदत्त एवारण्यं गच्छतु देवदत्त एव ग्रामं गच्छत्विति देवदत्तस्यैव नियोज्यस्य गन्तुग्र्राम एव गन्तव्यतयोपदिश्यते, यज्ञदत्तस्य त्वरण्यमेव केवलम्()। तेनासत्यप्यहशब्दस्य प्रयोगे तदर्थो गम्यते--ग्रामं केवलं देवदत्तो गच्छतु, अरण्यं केवलं यज्ञदत्तो गच्छत्विति। "अनवक्लृप्तौ" इति। असम्भावनायामित्यर्थः। यो हि देवदत्तस्य भोजनं न क्वचित्सम्भावयति स एव प्रयुङ्क्ते--देवदत्त तदेव भोक्ष्यसे" इति। पररूपत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

चदिलोपे विभाषा ८।१।६३

चादयः, न चवाहाहएवयुक्ते ८।१।२४ इति सूत्रनिर्दिष्टा गृह्यन्ते। तेषां लोपे प्रथमा तिङ्विभक्तिः नानुदात्ता भवति विभाषा। चलोपे शुक्ला व्रीहयो भवन्ति, भवन्ति, अवेता गा आज्याय दुहन्ति। भवन्ति इत्येतद् विकल्पेन न निहन्यते। वालोपे व्रीहिभिर्यजेत, यजेत, यवैर्यजेत। एवं शेषेष्वपि यथादर्शनम् उदाहार्यम्।

न्यासः

चादिलोपे विभाषा। , ८।१।६३

"सूत्रनिर्दिष्टा गह्न्ते" इति। पूर्वतः प्रत्यासत्तेः। अत्र चवालोपे "चवायोगे प्रथमा" ८।१।५९ इति प्राप्ते विभाषा, परिशेषाणामप्राप्ते। "भवन्ति" इति। पक्षे प्रत्ययस्वरेण मध्योदात्तः। "यजेत" इति। अत्र पक्षेऽदुपदेशाल्लसार्वधातुकस्यानुदात्तत्वे कृते धातोकदात्तत्वे सत्याद्युदात्तत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

वैवाव इति च च्छन्दसि ८।१।६४

वै वाव इत्येताभ्यां युक्ता प्रथमा तिङ्विभक्तिः विभाषा नानुदात्ता भवति छन्दसि विषये। अहर्वै देवानामासीद् रात्रिरसुराणाम्। बृहस्पतिर्वै देवानां पुरोहित आसीच्छण्डामर्कावसुराणाम्। वाव अथं वाव हस्त आसीत्, नेतर आसीत्।

न्यासः

वैवावेति च च्छन्दसि। , ८।१।६४

"आसीत्()" इति। "अस भुवि" (धा।पा।१०६५), लङ्? अदादित्वाच्छयो लुक्(), "अस्तिसिचोऽपृक्ते" ७।३।९६ इति आट्(), स चोदात्त इत्याद्युदात्तमेतत्()। इतिकरणस्य पूर्वोक्तमेव प्रयोजनम्()। चकारोऽनुक्तसमुच्चयार्थः। या द्विः पचत्विह तस्याः संवत्सरस्य सस्यं पच्यते द्विरित्यनेन युक्ता प्रथमा तिङ्()विभक्तिः पचत्विति वा न निहन्यते॥

---

सूत्रम्

काशिका-वृत्तिः

एकान्याभ्यां समर्थाभ्याम् ८।१।६५

एक अन्य इत्येताभ्यां समर्थाभ्यां युक्ता प्रथमा तिङ्विभक्तिः विभाषा नानुदात्ता भवति छन्दसि विषये। प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम्। जिन्वति इत्येतत्पक्षे न निहन्यते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति। अत्ति इत्येतत्पक्षे न निहन्यते। समर्थाभ्याम् इति किम्? एको देवानुपातिष्ठत्। एक इति सङ्ख्यापदम् एतत्, अन्यार्थे न वर्तते। एकशब्दस्य व्यवस्थार्थं च समर्थग्रहणम्, व्यभिचारित्वात् तस्य।

न्यासः

एकान्याभ्यां समर्थाभ्याम्?। , ८।१।६५

"समर्थाभ्याम्()" इति। नायमस्यार्थः--तिङन्तेन संगताभ्यामिति; अन्यथा ह्रस्योपादानमनर्थकमेव स्यात्(), "चदायोगे प्रथमा" ८।१।५९ इत्यतो योगग्रहणानुवृत्तेरेवास्यार्थस्य लब्धत्वात्()। तस्मात्? समानार्थाभ्यामित्यस्यायमर्थः। सा च समानार्थता तिङन्तापेक्षया भवतीति परस्परापेक्षया वेदितव्या। "एका जिन्वति" इति। जयतेर्लट्(), "व्यत्ययो बहुलम्()" ३।१।८५ इति श्नुः, "बहुलं छन्दसि" ७।१।८ इति झेरदादेशः, "हुश्नुवोः सार्वधातुके" ६।४।८७ इति यणादेशः। अनिघातपक्षे सार्वधातुकस्वरेण मध्योदात्तमेतत्()। सतिशिष्टादपि हि विकरणस्वरात्? सार्वधातुकस्वरो बलीयानिष्यते। "अत्ति" ["अन्ति"--प्रांउ।पाठः] इति। अदेः "खरि च" ८।४।५४ इति चर्त्वम्()। अनिघातपक्षे धातुस्वरेणादाद्युत्तमेतत्()। "चाकशीति" इति। "काशृ दीप्तौ" (धा।पा।६४७), अस्य यङ्लुगन्तस्य रूपमेतत्()। "उपातिष्ठत्()" इति। तिष्ठतेर्लङ पाध्रादिसूत्रेण ७।३।७८ तिष्ठादेशः। "एक इति संख्यापदमेतत्()" इति। अनेन प्रत्युदाहरण एकशब्दस्यान्यशब्देनासमानार्थतां दर्शयति। किं पुनः कारणमन्यशब्देनासमानार्थेन योगेन प्रत्युदाहरणं न दर्शितम्()?

इत्याह--"एकशब्दस्य व्यवस्थार्थं च" इत्यादि। चशब्दोऽवधारणार्थः। अनेकार्थसम्भवेऽरहृथान्तराद्व्यवच्छिस्यैकत्रैवार्थे व्यवस्थानं व्यवस्था। एकशब्दस्य व्यवस्थार्थमेव समर्थग्रहणम्(); नान्यशब्दस्य व्यवस्थार्थम्()। न हि तस्यानेकार्थः सम्भवति। तस्मादेकशब्दस्य व्यवस्थार्थं समर्थग्रहणं कृतम्()। तेनैवैकशब्देनासमर्थेन योगे युक्तं प्रत्युदहरणमुपदर्शयितुम्(), नान्यशब्देनेत्यभिप्रायः। कस्मात्? पुनरेकशब्दव्यवस्थार्थमेव समर्थग्रहणं कृतम्()? इत्याह--"व्यभिचारित्वात्? तस्य" इति। एकशब्दो हि यत्रार्थेऽन्यत्रादौ वृष्टस्तं व्यभिचरति? तथा हि--स क्वचिदन्यशब्दस्यार्थे दृश्यते, क्वचित्प्राथम्ये, क्वचित्? संख्यायाम्(), तस्मादसौ व्यभिचारी। अनवस्थित इत्यर्थः। तद्व्यवस्थार्थं समर्थग्रहणं युक्तम्(), नान्यशब्दव्यवस्थार्थम्(); तस्याख्यभिचारित्वात्()। न ह्नन्यशब्दो यत्रार्थे दृष्टस्ततोऽन्यत्र वत्रते। नन#3 च व्यवस्थाया एतत्फलम्()--अन्यशब्दसमानार्थस्यैकशब्दस्य ग्रहणं यथा स्यादिति, एतच्चान्तरेणापि व्यवस्थाकारणं समर्थग्रहणमन्यशब्दसाहचर्यादेव लभ्यते, तदनर्थकं समर्थग्रहणम्()? नैतदस्ति; "निपातैर्यद्यदि" ८।१।३० इत्यादौ सूत्रे निपातग्रहणेन ज्ञापितम्()--साहचर्यमिह प्रकरणे व्यवस्थाकारणं न भवतीति॥

---

सूत्रम्

काशिका-वृत्तिः

यद्वृत्तान् नित्यम् ८।१।६६

प्रथमा, छन्दसि इति निवृत्तम्। निघातप्रतिषेध इत्येव। यदो वृत्तं यद्वृत्तम्। यत्र पदे यच्छब्दो वर्तते तत्सर्वं यद्वृत्तम्। इह वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्। डतरडतमौ च प्रत्ययौ इत्येतन् न अश्रीयते। तस्माद् यद् वृत्तादुत्तरं तिङन्तं नानुदात्तम् भवति नित्यम्। यो भुङ्क्ते। यं भोजयति। येन भुङ्क्ते। यस्मै ददाति। यत्कामास्ते जुहुमः। यद्रियङ् वायुर्वाति यद् वायुः पवते। पञ्चमीनिर्देशे ऽप्यत्र व्यवहिते कार्यमिष्यते। याथाकाम्ये वेति वक्तव्यम्। यत्र क्वचन यजन्ते।

न्यासः

यद्?वृत्तान्नित्यम्?। , ८।१।६६

"प्रथमा छन्दसीति च निवृत्तम्()" इति। तयोर्विभाषाग्रहणेन सम्बद्धत्वात्()। तस्य चेह नित्यग्रहणेन निवर्त्तितत्वात्()। अतस्तन्निवत्तौ तत्सम्बद्धयोरपि निवृत्तिर्भवति। वृत्तशब्दोऽयमिहाधिकरणसाधनम्()--वत्रते तस्मिन्निति वृत्तम्(); वृतेरकर्मकत्वात्? "क्तोऽधिकरणे च" ३।४।७६ इत्यातदिनाऽधिकरणे क्तः। तत्पुनरधिकरणं पदाधिकारात्? पदमेव विज्ञायते, इत्याह--"यत्र पदे यच्छब्दो वत्रते" इत्यादि। यदि यद्()वृत्तमित्यधिकरणे क्तः, तर्हि "अधिकरणवाचिना च" (२।२।१३) इति प्रतिषेधात्? षष्ठीसमासो न प्रवत्रते? अत एव निपातनात्? समास इत्यदोषः। "एतन्नाश्रीयते" इति। यद्येतदाश्रीयेत, "यत्कामास्ते जुहुमः" इत्यादौ न स्यादिति भावः। कथं पुनरत्र परिभाषा शक्या नाश्रयितुम्()? वक्तव्यमेवैतत्()--इह परिभाषा न भवतीति। "ददाति जुहुमः" इति। अभ्यस्तानामादिः" ६।१।१८३ इत्युभयमप्येतदाद्युदात्तम्()। "यत्कामाः" इति। यस्मिन्? काम एषामिति बहुव्रीहिः। "यद्र()ङ्()" इति पदम्? यदञ्चतीति "ऋत्विक्()" ३।२।५९ इत्यादिना क्विन्(), "अनिदिताम्()" ६।४।२४ इत्यनुनासिकलोपः, हल्ङ्यादिलोपः, "उगिदचाम्()" ७।१।७० इति तुम्(), संयोगान्तलोपः, विष्वग्देवयोः" ६।३।९१ इत्यद्र()आदेशः, क्विन्प्रत्ययस्य कुः" ८।२।६२। "वाति" इति। "वा गतिगन्धनयोः" (धा।पा।१०५०), अदादित्वाच्छपो लुक्()। धातुस्वरेणाद्युदात्तमेतत्()। "पवते" इति। "पूङ पवने" (धा।पा।९६६) एतदपि पूर्ववदाद्युदात्तम्()। अत ङित्त्वाल्लसार्वधातुकस्यानुदात्तत्वे कृते धातुस्वर एव भवति। ननु च यद्वृत्तादिति पञ्चमीनिर्देशोऽयम्(), यत्कामस्ते जुहमः--इत्यादिषु चोदाहरणेषु त इत्यादिना पदेन व्यवधानम्(), अतो निर्देष्टग्रहणस्यानन्तर्यार्थत्वादिह निघातप्रतिषेधेन भवितव्यम्()? इत्याह--"पञ्चमीनिर्देशेऽप्त्र व्यवहितेऽपि कार्यमिष्यते" ["व्यवहिते" इत्येव--काशिका] इचि एतच्चोत्तरसूत्रे ज्ञापयिष्यते॥

---

सूत्रम्

काशिका-वृत्तिः

पूजनात् पूजितम् अनुदात्तं काष्ठादिभ्यः ८।१।६७

पूजनेभ्यः काष्ठादिभ्यः उत्तरपदं पूजितम् अनुदात्तं भवति। काष्ठ काष्ठाध्यापकः। काष्ठाभिरूपकः। दारुण दारुणाध्यापकः। दारुणाभिरूपकः। अमातापुत्र अमातापुत्राध्यापकः। अयुत अयुताभिरूपकः। अयुताध्यापकः। अद्भुत अद्भुताध्यापकः। अनुक्त अनुक्ताध्यापकः। भृश भृशाध्यापकः। घोर घोराध्यापकः। परम परमाध्यापकः। सु स्वध्यापकः। अति अत्यध्यापकः। मलोपश्च। इति वार्तिककारमतम्। मयूरव्यंसकादित्वात् समासः। समासे च एतदनुदात्तत्वम्। समासान्तोदात्तत्वापवाद इष्यते। दारुणम् अध्यापकः इत्येवम् आदिषु न भवति। मलोपश्च इत्यनेन अप्ययम् एव विषय आख्यायते, यत्र विभक्तेरभावात् मकारो न श्रूयते तत्र औदात्तत्वम् इति। असमासे हि मलोपो न एव इष्यते। दारुणंधीते दारुणमध्यायकः इति। पूजनातित्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणम् अनन्तरपूजितप्रतिपत्त्यर्थं। एतदेव ज्ञापकम् इह प्रकरणे पञ्चमीनिर्देशे ऽपि नानन्तर्यमाश्रीयते इति। तथा च यद्वृत्तान् नित्यम् ८।१।६६ इत्यत्र उदाहृतम्। अनुदात्तम् इति वर्तमाने पुनरनुदात्तग्रहणम् प्रतिषेधनिवृत्त्यर्थम्।

न्यासः

पूजानात्पूजितमनुदात्तं काष्ठादिभ्यः। , ८।१।६७

"पूजनात्()" इति। सुपां सुपो भवन्तीति (७।१।३९।वा) बहुवचनस्य स्थान एकवचनम्(), अत एवाह--"पूजनवचनेभ्यः" इति। "उत्तरपदम्()" इति। सुबन्तं वेदितव्यम्()। ननु तिङिति वत्र्तते? सत्यमेतत्(); उत्तरत्र ८।१।६८ तिङिति वचनादिह सुबन्तस्य ग्रहणं विज्ञायते। अपि च वक्ष्यत्येतत्()--इहैव समासे चैतदनुदात्तत्वमिति। समासश्च काष्ठादीनां सुबन्तेनैव सम्भवति, न तिङन्तेनेति युक्तमिह सुबन्तस्यैव पदस्य गरहणम्()। सर्व एते काष्ठादयोऽद्भुतपर्यायाः पूजनवचना भवन्ति। अद्भुतं योऽधीते स काष्ठाध्यायक इत्युच्यते। एवं दारुणादिषु वेदितव्यम्()। इह सर्व एवैते काष्ठादयः क्रियाविशेषणभूताः समस्यन्ते, न च क्रियाविशेषणानां समासः क्वचिद्विहितः, तत्कथमत्र समासः? इत्याह--"मयूरव्यंसकादित्वात्? समासः" इति। "समासे चैतत्()" इत्यादि। चकारोऽवधारणार्थः। समास एवेत्यर्थः। कथं पुनः समास एवैतल्लभ्यते? "चादिलोपे विभाषा" ८।१।६३ इत्यतो मण्डूकप्लुतिन्यायेन विभाषाग्रहणानुवृत्तेः। सा व्यवस्थितविभाषेति विज्ञानाच्च। यद्येवम्(), कथं वार्त्तिककारेणोक्तम्()--मलोपश्चेति, काष्ठादिषु हि योऽकारान्तास्तेषां विभक्तेरम्भावे कृते मकारः सम्भवति, समासे चैतदनुदात्तत्वेन भवितव्यम्(), तत्र विभक्तेरभावान्मकारो न सम्भवतीति मलोपवचनमयुक्तं स्यात्()? इत्यत आह--"मलोपश्चेत्यनेनापि" इत्यादि। एवमस्माभिरनुदात्तत्वस्य विषय आख्यातः। मलोप श्चेत्यनेनापि स एवाख्यायते; यस्मात्? समासे मलोपो न भवति; विभक्तेर्लुप्तत्वात्()। असमासे विभक्तेरम्भावे कृते मकारस्य श्रवणमेव भवति, न तु लोपः। अथासमासे मलोपार्थमित्येतदुक्तमित्येव कस्मान्न विज्ञायते? इत्याह--"असमासे["अथासमासे"---कां३।पाठः] हि इत्यादि। अथ पूजितग्रहणं किमर्थम्(), यावता पूजनशब्दोऽयं पूजितापेक्षत्वात्? सम्बन्धिशब्दः, तेन सम्बन्धिशब्दत्वात्? पूजितमर्थादुपस्थापयति, तन्त्रान्तरेणापि पूजितग्रहणं पूजितस्यैव परिग्रहो भविष्यति? इत्यत आह--"पूजनादेव" इत्यादि। पूजनग्रहणादेव पूजितग्रहणे लब्धे पूजितग्रहणं यत्? क्रियते तस्यैतत्? प्रयोजनम्()--विशिष्टस्याव्यवहितस्य प्रत्यासन्नस्य ग्रहणं यथा स्यादित्येवमर्थम्()। तेनोत्तरसूत्रे (८।१।६८) यत्? काष्ठं देवदत्तः पचतीत्यत्र व्यवहितस्य न भविष्यति। ननु पञ्चमीनिर्देशादेव व्यवहितस्य न भविष्यति? इत्यत आह--"एतदेव" इत्यादि। यादृशमिदं ज्ञापकं तदनुरूपम्? "यद्()वृत्तान्नित्यम्()" ८।१।६६ इत्यत्र यत्कामास्ते जुहुमः, यद्र()ङ्? वायुर्वातीत्येवमाद्युदाह्मत मित्यर्थः। एतेन ज्ञापनस्य प्रयोजनं दर्शितम्()। अथानुदात्तग्रहणं किमर्थम्(), यावता "अनुदात्तं सर्वमपादादौ" ८।१।१८ इत्यतोऽनुदात्तग्रहणमनुवर्तत ["अनुवत्र्तेत इत्याह"---कां३।पाठः] एव?

इत्याह--"अनुदात्त इति वत्र्तमाने" ["अनुदात्तमिति"--काशिका] इत्यादि। तद्ध्यनुदात्तग्रहणं "न लुट्()" ८।१।२९ इति प्रतिषेधेन सम्बद्धम्(), अतस्तदनुवृत्तौ सोऽप्यनुवत्र्तते। तथा च सति यस्यामन्त्रितादेः पूजितस्य निघातप्राप्तिरस्ति तस्यायं काष्ठादिभ्यः परस्य निघातप्रतिषेधो विज्ञायेत। तस्मात्? प्रतिषेधनिवृत्त्यर्थमन्यदिहानुदात्तग्रहणं क्रियते॥

---

सूत्रम्

काशिका-वृत्तिः

सगतिरपि तिङ् ८।१।६८

सगतिरगतिरपि पूजनेभ्यः काष्ठादिभ्यः परं पूजितं तिङन्तम् अनुदात्तम् भवति। यत्काष्ठं पचति। यत्काष्ठं प्रपचति। यद्दारुणं पचति। यद् दारुणं प्रपचति। तिङ्ङतिङः ८।१।२८ इति निघातस्य, निपातैर् यद्यदिहन्त इति प्रतिषेधे प्राप्ते पुनर् विधानम्। सगतिग्रहणाच् च गतिरपि निहन्यते। गतिग्रहणे च अत्र उपसर्गग्रहणम् इष्यते। इह न भवति, यत् काष्ठं शुक्लीकरोति। यत् काष्ठं कृष्णीकरोति।

न्यासः

सगतिरपि तिङ्?। , ८।१।६८

"सगतिग्रहणाच्च गतिरपि निहन्यते" इति। तुल्ययोगेऽत्र सहशब्दः। तत्रोभयोरपि विधीयमानेन कार्येण सम्बन्धो भवति। तथा हि सपुत्रो भोज्यतामित्युक्ते द्वयोरपि पितापुत्रयोर्भोजनेन सम्बन्धो भवति। तस्मादिहाप्यगतेस्तिङन्तस्य च निघाते च सम्बन्धो विज्ञायते। "गतिग्रहणेन चात्रोपसर्गग्रहणमिष्यते" इति। यथा चैतल्लभ्यते तथा पूर्वमेवाख्यातम्()। तिङ्ग्रहणं पूर्वो निघातः सुबन्तविषयो यथा विज्ञायेतेत्येवमर्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

कुत्सने च सुप्यगोत्रादौ ८।१।६९

पदातिति निवृत्तम्। सगतिरपि तिङिति वर्तते। कुत्सने च सुबन्ते गोत्रादिवर्जिते परतः सगतिरपि तिङगतिरपि अनुदात्तो भवति। पचति पूति। प्रपचति पूति। पचति मिथ्या। प्रपचति मिथ्या। कुत्सने इति किम्? पचति शोभनम्। सुपि इति किम्? पचति क्लिश्नाति। अगोत्रादौ इति किम्? पचति गोत्रम्। पचति ब्रुवम्। पचति प्रवचनम्। क्रियाकुत्सन इति वक्तव्यम्। कर्तुः कुत्सने मा भूत्, पचति पूतिर् देवदत्तः। प्रपचतिपूतिः। पूतिश्चानुबन्धो भवति इति वक्तव्यम्। तेन अयं चकारानुबन्धकत्वादन्तोदात्तो भवति। विभाषितं च अपि बह्वर्थम् अनुदात्तम् भवति इति वक्तव्यम्। पचन्ति पूतिः, पचन्ति पूतिः। प्रपचन्ति पूतिः, प्रपचन्ति पूतिः। सुपि कुत्सने क्रियाया मलोप इष्टो ऽतिङि इति चोक्तार्थम्। पूतिश्च चानुबन्धो विभाषितं च अपि बह्वर्थम्।

न्यासः

कुत्सने च सुप्यगोत्रादौ। , ८।१।६९

"पचति पूति" इति। पतिशब्दसय क्रियादिविशेषणत्वात्? "स्वमोर्नपुंसकात्()" ७।१।२३ इति विभक्तेर्लुक्()। "पचति, क्लिश्नाति" इति। "क्लिशू विबाधने" (धा।पा।१५२२), क्र्यादित्वात्? श्ना। अत्र क्लिश्नातीत्येतत्? कुत्सनं भवति, यो यस्य बाधनं करोति तेन स कुत्स्यते। सम्बन्धोऽप्यनयोस्तिङन्तयोरस्त्येव। यस्मात्? पचति तस्मात्? क्लिश्नातीति। सुबन्तं तु क्लिश्नातीत्येतन्न भवति, अस्य न भवति निघातः। "क्रियाकुत्सने" इत्यादि। तिङन्ते द्वयमस्ति--साधनम्(), क्रिया

च। तत्र क्रियायाः कुत्सनेऽनुदात्तत्वं भवतीत्येतदर्थमिदं व्याख्येयम्(), कर्तुः कुत्सने मा भूदित्येवमर्थं च। तत्रेदं व्याख्यानम्()--"चादिलोपे विभाषा" विभाषा" ८।१।६३ इत्यतो विभाषाग्रहणमनुवत्र्तते। व्यवस्थितविभाषा च सा, तेन क्रियाकुत्सन एव भविष्यति, न कर्त्तुः कुत्सन इति। ननु च क्रियाप्रधानमाख्यातम्(), साधनं तु तत्राप्रधानम्(), तस्य क्रियाङ्गत्वात्(), अत्र प्राधान्यादेव पतीत्येवमादिना विशेषणेन क्रियाया एव सम्बन्धो भविष्यति, न गुणभूतस्य कर्तुः, तत्किमुच्यते क्रियाकुत्सनमिति? एवं मन्यते--यथैव कृदन्तेषु दारुणाध्यायकादिषु क्रियायाः प्रधानभूताया अपि विशेषणेन सम्बन्धो भवति, तथाऽख्यातेष्वप्राधान्येऽपि साधनस्य विशेषणेन सम्बन्धेन भवितव्यमिति। "पूतिश्चानुबन्धः" इत्यादि। पूतिशब्दश्चकारानुबन्धो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--चकारोऽत्र क्रयते, स चानुक्तसमुच्चयार्थः, तेन पूतिश्चानुबन्धो भविष्यतीति। ननु च पूतिशब्दस्य प्रातिपदिकत्वादप्रतिषिद्धमेवान्तोदात्तत्वम्(), कस्मात्? स चानुबन्धः क्रियते? न चायं क्तिन्नन्तः, पूतिरयमिति पुंसा सामानाधिकरण्यात्()। तह्र्रनेन चकारानुबन्धकरणेनैवैतद्()दर्शयति--यत्र सगतेस्तिङोऽनुदात्तत्वं तत्र पूतेरन्तोदात्तत्वम्(), अन्यत्रायमाद्युदात्त एव; तेन क्रियाकुत्सनेऽन्तोदात्तः कत्र्तव्यः, कुत्सन आद्युदात्त इति। "तेनायम्()" इत्यातदिना चानुबनधकत्वस्य फलं दर्शयति। "विभाषितम्()" इत्यादि। बह्वर्थ यत्? तिङन्तं तद्विभाषाऽनुदात्तं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्विहापि विभाषाग्रहणानुवृत्तेः। तेन व्यवस्थितविभाषात्वं चश्रित्य कत्र्तव्यम्()। "सुपि कुत्सने" इत्यादि। अथमुक्तार्थसंग्रहश्लोकः। तत्रायेन पादेन यदुक्तं क्रियाकुत्सन इति वरक्तव्यमिति तस्य संग्रहः। "मलोपः" इत्यादि। नास्मिन्? तिङ्? विद्यत इत्यतिङिति। स पुनः प्रस्तावात्? [प्रस्तादान्()--प्रा।कांउद्रितपाठौ] काष्ठादीनां समासो विज्ञायते। तत्रातिङि काष्ठादिसमासे मलोप इष्टः। एतच्च मलोपश्चेत्यनेनायमेव विषय आख्यायत इत्यादिना तूक्तार्थम्(), तदनेन समास चैतदनुदात्तत्वमित्यादिना यदुक्तं ततसर्वं ग्रहीतुम्()। अथ वा मलोप इत्यनेन मलोपश्चेत्येतद्वचनमुपलक्षयति। अस्य चोक्तार्थमित्यनेन सम्बन्धः। तदेतदुक्तं भवति--मलोपश्चेति यत्? कार्यं वचनं तन्मलोपश्चेत्यनेनैपित्यादिना पूर्वमेवोक्तप्रयोजनमिति। "अतिङि" इति। अनुदात्तमित्येतद्वक्तव्यमिति वृत्तभङ्गभयान्नोक्तम्()। अनुक्तमपि तस्य श्लोकस्य पूर्वोक्तार्थसंग्रहार्थत्वात्? काष्ठादीनाम च पूर्वमनुदात्तस्य चोक्तत्वाद्गम्यत एव। अतिङीति चानेन बहुव्रीहिणा समासः। तेनैतदुक्तं भवति--काष्ठादीनां समासेऽनुदात्तत्वं भवतीति। शेषं सुगमम्()॥

---

सूत्रम्

काशिका-वृत्तिः

गतिर् गतौ ८।१।७०

गतिः गतौ परतः अनुदात्तो भवति। अभ्युद्धरति। समुदानयति। अभिसम्पर्याहरति। गतिः इति किम्? देवदत्तः प्रपचति। गतौ इति किम्? आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। याहि इत्येतत् प्रति क्रियायोगादाङित्येष गतिः, तस्य गतौ इत्येतस्मिन् न सति गतिः इत्यनाश्रितपरनिमित्तकम् अनुदात्तत्वं स्यात्।

न्यासः

गतिर्गतौ। , ८।१।७०

"अभ्युद्धरति" इति। अभिशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्त उच्छब्दे गतौ परतोऽनुदात्तत्वं भवति। "समुदानयति" इति। अत्रापि "निपाता आद्युदात्ताः" (फि।सू।४।८०), "उपसर्गाश्चाभिवर्जम्()" (फि।सू।४।८१) इति सम आद्युदात्तत्वे प्राप्तेऽनुदात्तत्वं भवति। कथं पुनरत्राह--समश्च गतिसंज्ञेति यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसज्ञे भवत इत्युक्तम्? (जै।प।वृ।९९), न चोच्छब्दस्य क्रियावाचित्वम्()? नैष दोषः; क्रियाविशेषवाचिनो हि प्रादयः।

क्रियाविशेषश्च क्रियैव। कारकाणां प्रवृत्तिविशेषः क्रियेत्युक्तम्()। उपसगऽपि कारकप्रवृत्तिविशिष्यत एव। न [न हृद्धरतीति()] हृत्तरतीति हरत्यर्थ एव केवलं कर्त्तृव्यापारं व्यवच्छिनत्ति। किं तर्हि? उपसर्गार्थोऽपि। अथ वा हरणादर्थान्तरमेवोद्धरणम्(), तस्याभिर्विशेषणमिति नानुपपन्ना गतिसंज्ञा। "देवदत्तः प्रपचति" इति। देवैर्दासीष्टेति "क्तिच्क्तौ च संज्ञायाम्()" ३।३।१७४ इति क्तः; "दो दद्()घोः" ७।४।४६ इति ददादेशः। "तृतीया कर्मणि" ६।२।४८ इत्याद्युदात्तत्वे प्राप्ते "कारकाद्दत्तश्रुतयोरेवाशिषि" ६।२।१४७ इति देवदत्तशब्दोऽन्तोदात्तः। "आमन्द्रैः" इत्यादि। अत्र सर्वमस्ति, न तु मन्द्रोगतिरिति। तस्मिन्? परत आङोऽनुदात्तत्वं न भवति। असति चनुदात्तत्वे "निपाता आद्युदात्ताः" (फि।सू।४।८०) "उपसर्गश्चाभिवर्जम्()" (फि सू ४।८१) इत्याद्युदात्तत्वमेव भवति। कथं पुनराङो गतिसंज्ञा, क्रियायोगे हि सति विहिता सा, न चात्रास्ति क्रियायोगः, मन्दरशब्दस्याक्रियावाचित्वात्()? इत्यत आह--"याहीत्येतत्? प्रति क्रियायोगादाङित्वेष गतिः" इति। सत्यपि व्यवधाने व्यवहिताश्च १।४।८१ इति गतिसंज्ञाविधानादिति भवाः। स्यादेतत्(), यद्यपि याहीत्येतत्? प्रत्याङो गतित्वम्(), तथापि मन्द्रशब्दं प्रति नास्येव तस्य गतिसंज्ञा, तेन यद्यपि गतावित्येतन्नोच्येत, तथापि नैवेहानुदात्तत्वं प्राप्नोति? इत्यत आह--"तस्य" इत्यादि। अत्रास्यानुदात्तत्वं स्यादेवेति। अस्य "अनाश्रितपनिमित्तकम्()" इत्यनेन हेतुरुक्तः। तस्यानाश्रितपरनिमित्तकस्यापि गतावित्यस्मिन्नसत्येनेन गतिग्रहणस्याभावो हेतुरभिहितः। यदि गतावित्येन्नोच्येत, ततोऽनाश्रितपरनिमित्तमेवानुदात्तत्वमुक्तं स्यात्()। न ह्रसति सप्तमीनिर्दिष्टे गतिग्रहणे परनिमित्तताश्रीयते। ततश्च गतिरित्येतावत्युच्यमाने यद्यपि मन्द्रशब्दो गतिर्न भवति, तथापि तस्याङाश्रितपरनिमित्तमनुदात्तत्वमिह स्यादेव। गतावित्य()स्मस्तु सति न भवत्येष दोषः; गतेः परनिमित्तस्याश्रयणात्? तस्य चेहाभावात्()॥

---

सूत्रम्

काशिका-वृत्तिः

तिङि च उदात्तवति ८।१।७१

गतिः इति वर्तते। तिङन्ते उदात्तवति परतो गतिरनुदात्तो भवति। यत् प्रपचति। यत् प्रकरोति। तिङ्ग्रहणम् उदात्तवतः परिमाणार्थम्। अन्यथा हि यं प्रति गतिः, तत्रानुदात्तो भवति इति धातौ एव उदात्तवति स्यात्, प्रत्यये न स्यात् यत् प्रकरोति इति। यत्क्रियाप्रयुक्ताः प्रादयस् तेषाम् तं प्रति गत्युपसर्गसंज्ञे भवतः इति तिङन्ते धातुम् एव प्रति गतिसंज्ञा। आमन्ते तर्हि न प्राप्नोति, प्रपचतितराम्, प्रपचतितमाम् इति? अत्र केचिदामन्तेन गतः समासं कुर्वन्ति। तेषाम् अव्ययपूर्वपदप्रकृतिस्वरत्वे सत्यक्रियमाणे ऽपि तिङ्ग्रहणे परमनुदात्तवद् भवति इति गतिनिघातो नैव सिध्यति। अथ तरबन्तस्य् गतिसमासः? एवम् अपि सतिशिष्टत्वादाम एव स्वरे सति गतेः अनुदात्तं पदम् एकवर्जम् ६।१।१५२ इत्येवानुदात्तत्वं सिद्धम्। येषां गतिकारकोपपदानां कृद्भिः समासवचनम् प्राक् सुबुत्पत्तेः इत्यनेन वचनेन कृदन्तेन एव प्राक् सुबुत्पत्तेः समासो भवति, न अन्येन, इति दर्शनम्, तेषाम् एवंविधे विषयेसमासेन न एव भवितव्यम् इति। पृथक् स्वरप्रवृत्तौ सत्यामनेन निघातेन प्रयोजनम् अस्ति। तदर्थं यत्नः कर्तव्यः। उदात्तवति इति किम्? प्रपचति। प्रकरोति।

---

सूत्रम्

काशिका-वृत्तिः

आमन्त्रितं पूर्वम् अविद्यमानवत् ८।१।७२

आमन्त्रितं पूर्वम् अविद्यमानवद् भवति, तस्मिन् सति यत्कार्यं तन भवति, असति यत् तद् भवति। कानि पुनरविद्यमानवत्त्वे प्रयोजनानि। आमन्त्रिततिङ्निघातयुष्मदस्मदादेशाभावाः। देवदत्त, यज्ञदत्त इत्यत्र आमन्त्रितस्य

पदात् परस्य इति निघातो न भवति। षष्ठिकामन्त्रिताद्युदात्तत्वं भवति। देवदत्त पचसि इत्यत्र तिङ्ङन्तिङः ८।१।२८ इति निघातो न भवति। देवदत्त तव ग्रामः स्वम्, देवदत्त मम ग्रामः स्वम् इत्येवम् आदिसु युष्मदस्मदादेशा न भवन्ति। पूजायामनन्तरप्रतिषेधः प्रयोजनम्। यावद् देवदत्त पचसि इत्यत्र अपि पूजायां नानन्तरम् इत्येव प्रतिषेधो भवति। जात्वपूर्वम् ८।१।४७ तियेतत्, देवदत्त जातु पचसि इत्यत्र अपि भवति। आहो उताहो चानन्तरम् ८।१।४९ इति, आहो देवदत्त पचसि, उताहो देवदत्त पचसि इत्यत्र अपि भवति। आम एकान्तरमामन्त्रितमनन्तिके ८।१।५५ इति, आम् भो पचसि देवदत्त इत्यत्र अपि भवति। आमन्त्रितम् इति किम्? देवदत्तः पचति। पूर्वम् इति किम्? देवदत्त इत्येतस्य आमन्त्रिताद्युदात्तत्वे कर्तव्ये न अविद्यमानवद् भवति। पूर्वत्वम् च परापेक्षम् भवति इति परस्य एव कार्ये स्वनिमित्ते ऽन्यनिमित्ते वा तदविद्यमानवद् भवति, न तु स्वकार्ये। देवदत्त पचसि इत्यत्र अपि हि आमन्त्रिताद्युदात्तत्वं भवत्येव। इह इमं मे गङ्गे यमुने सरस्वति इति गङ्गेशब्दः पूर्वमानन्त्रितम्, ततः परस्य यमुनेशब्दस्य अनुदात्तत्वे कर्तव्ये स्वयम् अविद्यमानवत्त्वान् निमित्तं न भवति। मेशब्दस्य निमित्तभावं न प्रतिबध्नाति।

न्यासः

आमन्त्रितं पूर्वमविद्यमानवत्?। , ८।१।७२

"तस्मिन्? सति" इत्यादिनाऽविद्यमानवद्भवतीत्यस्यार्थमाचष्टे। "अविद्यमानवत्()" इति। वतिना निर्देशोऽयम्(), अविद्यमानेन तुल्यं वत्रतत इत्यविद्यमानवत्()। वतिश्च साद्श्ये भवति, एवञ्च तस्याविद्यमानेन सादृश्यं भवति यदि सत्यपि त()स्मस्तन्निबन्धनं कार्यं न भवति। असति च तस्मिन्? यत्? कार्यं तदत्तानिबन्धनं तत्? सत्यपि तस्मिन्? भवति। "आमन्त्रितनिघातेन" [आमन्त्रिततिङनिघात--काशिका--पदमंजरी च] इत्यादिना तस्मिन्? सति यत्कार्यं प्राप्नोति तदभावमविद्यमानवद्भावस्य प्रयोजनं दर्शयति। "देवदत् यज्ञदत्त" इति। अत्र पूर्वस्याविद्यमानत्वादसति निघाते यज्ञदत्तशब्दस्य षाष्टिकमेवामन्त्रि ६।१।१९२ ताद्युदात्तत्वं भवति। "देवदत्त मम ग्रामः स्वम्()" ति। "तवममौ ङसि" ७।२।९६ इति तदममादेशौ सास्रिकौ। "इत्येवमादिषु" इति। आदिशब्देन "देवदत्त तुभ्यं दीयते" इत्येवमादीनां ग्रहणम्(), "युष्मदस्मदादेशा न भवन्ति" इति। "तेमयावेकवचनस्य" ८।१।२२ इत्येवमादयः। "पूजायामनन्तरप्रतिषेधः प्रयोजनम्()" इत्यादिना तस्मिन्नामन्त्रितेऽसति यत्कार्यं प्राप्नोति तस्य सत्यपि तस्मिन्? भावेऽविद्यमानवद्भावस्य प्रयोजनं दर्शयति। "यावद्देवदत्त पचसीत्यत्रापि" इत्यादि। यत्राप्यामन्त्रितं व्यवधायकमित्येषोऽपिशब्दस्यार्थो वेदितव्यः। "देवदत्तः पचति" इति। अत्राविद्यमानत्वाभावत्? तिङनिघातो भवत्येव। "पूर्वम्()" इति। किं देवदत्त इति पूर्वं परमपि खलु भवति? न चेह परमस्तीति नास्ति देवदत्तेत्यस्य पूर्वत्वम्()। तेनामन्त्रिताद्युदात्तत्वे कत्र्तव्ये नाविद्यमानवद्भवति। "देवदत्त पचसि" इति। अत्र पचसीत्येतदपेक्षया देवदत्तशब्दस्य पूर्वत्वमस्तीत्यविद्यमानवद्भावेन तस्य भवितव्यम्(), ततश्चामन्त्रिताद्युदात्तत्व तस्य न स्यात्()। "इमं मे गङ्गे यमुने"--इत्यत्र च गङ्गेशब्दस्य यमुनेशब्देनानन्तर्यमपनयन्? स निघातनिमित्तभावं प्रतिबध्नीयादिति यमुनेशब्दस्य निघातो न स्यादित्येतच्चोद्यद्वयमाशङ्क्याह--"पूर्वत्वं च" इत्यादि। चकारोऽवधारणे, भिन्नक्रमश्च। परापेक्षमेवेत्येवं द्रष्टव्यम्()। इतिकरणो हेतौ। येषां यद्भावो यदपेक्षवद्भवति तेषां तद्भावेनानूद्यमानानां विधीयमानो धर्मस्तद्विषय एव प्रतीयते। तद्यथा--पुत्रः कार्येष्ववहित इति पुत्रस्य पुत्रभावः पुत्रापेक्ष इति तस्य पुत्रभावेनानूद्यमानस्य विधीयमानं कार्येष्ववहितत्वं यदपेक्षं पुत्रत्वं तत्कार्येष्ववगम्यते, नान्यकार्येषु। पूर्वत्वं चेदं परापेक्षमेव। तस्मात्? तदनूद्यामन्त्रितस्याविद्यमानवद्भावो यदपेक्षं तत्पूर्वत्वं तस्यैव परस्य कार्ये कत्र्तव्ये भवति, नान्यस्य। किंविशिष्टे कार्ये? स्वानिमित्ते, अन्यनिमित्ते या। स्वं निमित्तं यस्य तत्? स्वनिमित्तम्(), आमन्त्रितमित्यर्थः। तस्मादन्यच्छब्दान्तरं निमित्तं यस्य तदन्तनिमित्तम्()। यत एवं परस्यैव कार्ये कत्र्तव्ये तदामन्त्रितमविद्यमानवद्भवति, न तु स्वकार्ये कत्र्तव्ये, तेन देवदत्त पचसौत्यत्रामन्त्रिताद्युदात्तत्वं न परस्य कार्यम्(); किं तर्हि? आमन्त्रितस्यैव। यतः परस्य कार्यमनुदात्तत्वम्(), त()स्मस्त्वविद्यमानव्दभवत्येव। एवं प्रथमचोद्यं निराकृत्य द्वितीयं निराकर्त्तुमाह--"इमं मे

गङ्गे यमुने" इत्यादि। अत्रापि पूर्वत्वं च परापेक्षं भवतीत्येष एव हेतुः। गङ्गेशब्दः पूर्वमामन्त्रितान्तः स्वयमविद्यमानवत्त्वान्निमित्तं न भवतीति सम्बन्धनीयम्()। क्व विषये निमित्तं न भवति? परस्यैव सुमुनेशब्दस्यानुदात्तत्वे कत्र्तव्ये। मेशब्दस्य च निमित्तभावं न प्रतिबध्यातीति गङ्गेशब्दः पूर्वमामन्त्रितो यमुनेशब्दस्यानुदात्तत्वे कत्र्तव्ये विद्यमानवत्त्वादिति सर्वमपेक्षते। इह पूर्वशपब्दस्य सम्बन्धिशब्दत्वात्? परस्य कार्ये कत्र्तव्ये पूर्वस्यामन्त्रितस्याविद्यमानवद्भावो विधीयते। "इमं मे गङ्गे यमुने" इत्तयत्र च यद्यपि गङ्गेशब्दादन्यच्छब्दान्तरं "मे" इत्येतद्यमुनेशब्दस्यानुदात्तस्य निमित्तम्(), तथापि तदनुदात्तत्वं पस्यैवामन्त्रितस्य कार्यमिति तस्मिन्नपि कत्र्तव्ये गङ्गेशब्दोऽविद्यमानवद्भवति। अत एव प्रागुक्तम्()--अन्यनिमित्ते वैतेनाविद्यटचमानत्वान्मेशब्दस्य निघातं प्रति यो निमित्तभावः तं न प्रतिबध्नाति। वत्करणं किमर्थम्()? स्वाश्रयमपि यथा स्यात्()--आम्? भो देवदत्तत्रि। "आम एकगान्तरमामन्त्रितमनन्तिके" ८।१।५५ इत्येकान्तरतानिबन्धनो निघातप्रतिषेधः सिद्धो भवति। बहुवचनान्तञ्चैतद्विज्ञेयम्(); एकवचनान्ते हि "नामन्त्रिते समानाधिकरणे सामान्यवचनम्()" ८।१।७३ इति प्रतिषेधान्नैवाविद्यमानवत्त्वमस्ति। बहुवचनान्ते तु "विभाषितं विशेषवचने बहुवचनम्()" ८।१।७४ इति पक्षे विद्यते। ननु च परार्थे प्रयुज्यमानाः शब्दा अतिदेशं गमयन्ति, यथा--"गौर्वाहीक इति, तत्र विद्यमानस्याविद्यमानमिति वचनादतिदेशो गम्यते। अतिदेशधर्मश्च स्वाश्रया निवृत्तिरिति नार्थो वतिना? सत्यमेतत्(); एवं तु मन्यते--वतिमन्तरेण प्रयोगव्यवस्थार्थमिवं स्यात्(), कुतश्चिदामन्त्रितं पूर्वं न भवतीति। तथा चामन्त्रितस्यामन्त्रितेन पूर्वेणैकान्तराता न स्यादिति॥

बाल-मनोरमा

आमन्त्रितं पूर्वमविद्यमानवत् , ८।१।७२

आमन्त्रितं पूर्वम्। स्पष्टमिति। अनुवर्तनीयपदान्तराऽभावादिति भावः। "अग्ने तवेति। "अग्ने तव श्रवो वयः" इत्यृचि "अग्ने" इत्यविद्यमानवत्। देवास्मानित्यत्र देवशब्दोऽविद्यमानवत्। "अग्ने नये"त्यृचि "अग्ने" इत्यविद्यमानवत्। "अग्न इन्द्र वरुणे"त्यृचि "अग्ने" इत्यविद्यमानवदिति भावः। ततः किमित्यत आह-इहेति। अग्ने तवेत्यत्र देवाऽस्मानित्यत्र च युष्मदस्मदोः ते-नसावादेशौ न भवतः, तव?समानित्यनयोः पदात्परत्वाऽभावात्पादादौ स्थितत्वाच्चा। "अग्ने नये"त्यत्र "नये"ति तिङन्तस्य "तिङ्ङ्तिङः" इत्यनुदात्तत्वं न भवति अतिङन्तात्पदात्परं तिङन्तं निहन्यते इति हि तदर्थः। इह च "अग्ने" इत्यतिङन्तस्याऽविद्यमानवत्त्वादतिङन्तात्परत्वाऽभावान्नानुदात्तत्वम्। अग्न इन्द्र वरुणेत्यत्र तु "आमन्त्रितस्य चे"ति सर्वानुदात्तत्वं न भवति, पदात्परमामन्त्रितं निहन्यते इति हि तदर्थः। इह च अग्नेशब्दस्याऽविद्यमानवत्त्वेन पदात्परत्वाऽभावादिन्द्रशब्दस्य नानुदात्तत्वम्। एवं वरुणशब्दस्यापि नानुदात्तत्वं, ततः प्राचीनयोरग्ने इन्द्र इत्यनयोरविद्यमानत्वात्। ननु "सर्वदा रक्ष देव नः" इत्यत्र कथं नसादेशः, देवेत्यस्याऽविद्यमानबत्त्वादित्यत आह--सर्वदेति। "लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि""प्रतापरूद्र!ते ख्याति"रित्यादौ तु "ते" इति विभक्ति प्रतिरूपकमव्ययं, तत्र आमन्त्रितस्याऽविद्यमानवत्त्वाद्युष्मच्छब्दस्य पादादिस्थत्वात्। एवमिति। "इदं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमँ परुष्णिया" इति मन्त्रे सर्वेषां निघात इत्यन्वयः। "आमन्त्रितस्य चे"त्यनुदात्तत्वमित्यर्थः। सर्वशब्दं विशिनष्टि--यमुने इत्यादिभ्यप्राचीनानामिति। इति आदिर्येशामिति विग्रहः। आदिना सरस्वतिशुतुद्रीत्यनयोग्र्रहणम्। तद्गुणसंविज्ञानो बहुव्रीहिः। "यमुने" "सरस्वति" "शुतुद्रि" इत्येतेषु एकैकस्मात्प्राचीनानां "गङ्गे" "यमुने" "सरस्वति" इत्येषां सर्वेषां निघात इत्यर्थः। शुतुद्रिशब्दस्य त्वनुदात्तत्वं नेत्यविवादं, तस्य द्वितीयपादादिस्थत्वात्। "आमन्त्रितस्य चे"त्यत्र "पदस्य, "पदात्", "अनुदात्तं सर्वमपादादौ" इत्यनुवृत्तेः" "इमं मे" इत्यृचो जगतीच्छन्दस्कतया सरस्वतीत्यन्तप्रथमपादस्य द्वादशाक्षरस्य समाप्ते। ननु "गङ्गे" इत्यस्यानुदात्तत्वमुचितं, तस्य मे इति पदात्परत्वात्, यमुने, सरस्वति इत्यनयोस्तु नानुदात्तत्वसंभवः, ततः प्राचीनयोर्गङ्गे यमुन#ए इत्यनयोरविद्यमानवत्त्वे

पदात्परत्वाऽभावादित्यत आह--आमन्त्रि[नाम]विद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्येति। आमन्त्रितानां मध्ये गङ्गे यमुने इत्यनयोरविद्यमानवद्भावेऽपीति योजनीयम्। एवंच "इत्यादिभ्य" इति "सर्वेषा"मिति च बहुवचनमनुपपन्नमित्यपास्तम्। क्वचित् पुस्तकेषु "यमुने इत्यादिप्राचीनाऽऽमन्त्रिताऽविद्यमानवद्भावेऽपी"ति पाठो दृश्यते। तत्र आदिना सरस्वतीत्येतदुच्यते। यमुने सरस्वतीत्याभ्यचां प्राचीनयोरामन्त्रितयोरविद्यमानवद्भावेऽपीति सुगममेव। अयं च निघातः पदकाले स्पष्टं श्रूयते।

तत्त्व-बोधिनी

आमन्त्रितं पूर्वमविद्यमानवत् ३६३, ८।१।७२

इहेति। "अग्ने तव" "देवास्मा"नित्यत्रयुष्मदस्मदोर्न भवत्यादेशः, "अग्ने नये"त्यत्र "तिङ्ङतिङः"इति न तिङन्तनिघातः, "अग्न इन्द्र वरुणे"त्यत्र तु "आमन्त्रितस्य चे"त्यमान्त्रितनिघातो नेति विवेकः। सर्वेषां निघात इति। अयं च निघातः पदकाले श्रीयते न तु संहिताकाले। "स्वरितात्संहितायामनुदात्ताना"मिति संहितायामेकश्रुतिविधानात्()।

---

सूत्रम्

काशिका-वृत्तिः

न आमन्त्रिते समानाधिकरणे सामान्यवचनम् ८।१।७३

अविद्यमानवत्त्वस्य प्रतिषेधः आमन्त्रितान्ते समानाधिकरने परतः पूर्वम् आमन्त्रितान्तं सामान्यवचनम् न अविद्यमानवद् भवति। किं तर्हि? विद्यमानवदेव। अग्ने गृहपते। माणवक जटिलकाध्यापक। पूर्वस्य विद्यमानवत्त्वात् परमनुदात्तम् एव भवति। आमन्त्रिते इति किम्? देवदत्त पचसि। समानाधिकरने इति किम्? देवदत्त पण्डित यज्ञदत्त। अत्र यज्ञदत्तविशेषनम् पण्डितशब्दः, न पूर्वेण समानाधिकरनः। सामान्यवचनम् इति किम्? पर्यायेषु मा भूत्, अध्न्ये, देवि, सरस्वति, ईडे, काव्ये, विहव्ये। पर्यायशब्दा एते। एवं हि उक्तम्, एता ते अघ्न्ये नामानि इति।

न्यासः

नामन्त्रिते समानाधिकरणे सामान्यवचनम्?। , ८।१।७३

"समानाधिकरणम्()" [समानाधिकरणे--काशिका] इति। समानाभिधेयमित्यर्थः। "अग्ने गृहपते" इति। अग्निशब्दोऽत्राग्निमात्राभिधायित्वात्? सामान्यवचनोऽपि गृहपतिशब्देन विशेषाभिधायिना व्यवच्छिद्यमानस्तद्वाच्ये गार्हपत्याख्येऽग्निविशेषे एवावतिष्ठत इति गृहपतिशब्दस्तेन समानाधिकरणः। एवं "माणवक जटिलाध्यापक" इत्यत्रापि समानाधिकरणाता विज्ञेया। अत्र जटिलकशब्दस्यापेक्षाभेदात्? सामान्ये विशेषत्वं न; किं तर्हि? माणवकापेक्षया विशेषत्वम्(), अध्यापकापेक्षया सामान्यभावः। अत्र जटिलके समानाधिकरणे परतो माणवकस्याविद्यमानवत्त्वं न भवति, अध्यापके तु जटिलकशब्दस्य। पूर्वस्य" इत्यादिना प्रतिषेधस्य फलं दर्शयति। "देवदत्त पचसि" इति। तत्र देवदत्तस्य योऽभिधेयोऽर्थस्तत्रैव कत्र्तरि लकारो विहित इति भवति पचसीत्येतद्देवदत्तशब्देन समानाधिकरणम्()। आमन्त्रितं तु न भवति--देवदत्त यज्ञदत्तेति। देवदत्तशब्दोऽत्र न संज्ञाशब्दो गृह्रते, किं तर्हि? क्रियानिमित्तकः; अन्यथा संज्ञशब्दस्यैकवस्तुनिष्ठत्वात्? सामान्यवचनः, स न स्यात्()। "एते पर्यायाः" इति। एतेन सामान्यवचनत्वाभावं दर्शयति। विशेषापेक्षं सामान्यम्()। न चात्र कस्यचिद्विशेषो वाच्यो यदपेक्षया सामान्यं स्यात्(), सर्वेषामत्यन्ताभिन्नार्थत्वात्(), अन्यथा पर्याया एवं न स्युः। कथं पुनज्र्ञायन्ते पर्याया एते? इत्याह--"एवं ह्रुक्तम्()" इत्यादि॥

बाल-मनोरमा

नामन्त्रिते समानाधिकरणे सामान्यवचनम् , ८।१।७३

नामन्त्रिते। आमन्त्रितम् अविद्यमानवदित्यनुवर्तते।"सामान्यवचन"मित्यनेन विशेष्यसमर्पकः शब्दो विवक्षितः। विशेष्यस्य विशेषणापेक्षया सामान्यरूपत्वात्। तेन च विशेषणमाक्षिप्यते। समानाधिकरणे इति तत्रान्वेति। समानम् अधिकरणं यस्येति विग्रहः। समानशब्द एकत्वपरः। विशेष्यबोधकशब्देन अभेदसंसर्गेण एकार्थवृत्तित्वं विवक्षितमित्याशयेनाह-विशेष्यमित्यादिना। हरे दयालो इति। अत्र "दयालो" इति समानाधिकरणविशेषणे परे हरिशब्दो नाऽविद्यमानवत्। ततश्च "दयालो" इत्यस्याऽविद्यमानवत्त्वेऽपि "हरे" इति पदात्परत्वान्नसादेश इति भावः। अग्ने तेजस्विन्निति। इह " तेजस्वि"न्निति विशेषणे परे "अग्ने" इत्यस्य अविद्यमानवत्त्वाऽभावात्पदात्परत्वात्तेजस्विन्नित्यस्य निघात इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषितं विशेषवचने बहुवचनम् ८।१।७४

पूर्वेण विद्यमानवत्त्वे प्रतिषेद्धे विकल्प उच्यते। विशेषवचने समानाधिकरने आमन्त्रितान्ते परतः पूर्वम् आमन्त्रितं बहुवचनान्तं विभाषितम् अविद्यमानवद् भवति। देवाः शरण्याः, देवाः शरण्याः। ब्राहमणा वैयाकरणाः, ब्राह्मणाः वैयाकरणाः। सामान्यवचनाधिकारदेव विशेषवचने इति सिद्धे विशेषवचनग्रहणं विस्पष्टार्थम्। भुवचनम् इति किम्? माणवक जटिलक। नित्यम् एतद् विद्यमानवदेव। इति वामनकाशिकायां वृत्तौ अष्टमस्य अध्यायस्य प्रथमः पादः। अष्टमाध्यायस्य द्वितीयः पादः।

न्यासः

विभाषितं विशेषवचने बहुवचनम्?। , ८।१।७४

पूर्वेण नित्यं विद्यमानवत्त्वे प्राप्ते विकल्पार्थमिदं वचनम्()। "देवाः शरण्याः" इति। यदाऽविद्यमानवत्त्वं तदा शरन्या इत्यस्यामन्त्रिताद्युदात्तत्वं भवति; अन्यथा निघातः। एवं "ब्राआहृणा वैयाकरणाः" इत्यात्रापि वैयाकरणशब्दस्याद्युदात्तत्वम्(), पाक्षिकनिघातश्च वेदितव्यः। अथ विशेषवचनं किमर्थम्(), यावता "सामान्यवचनम्()" इत्यनुवत्र्तते, सामान्यञ्च विशषापेक्षम्(), तत्रान्तरेणापि विशेषवचनं विशेषवचनं विज्ञास्यते? इत्यत आब--"सामान्यवचनाधिकारादेव" इत्यादि। य एवं न शक्नोति मन्दधीः प्रतिपत्तुम्(), तं प्रति विस्पष्टार्थ विशेषवचनग्रहणं क्रियते। यदि तर्हि सामान्यस्य विशेषापेक्षत्वात्? सामान्यवचनग्रहणाद्विशेषवचने कार्यं विज्ञायते, तत्र पूर्वसूत्रेऽपि ८।१।७३ तत्रैव कार्यं विज्ञायते, तथा च देवदत्त यज्ञवत्तेति प्रत्युदाहरणं द्वयङ्गविकलं स्यात्(); तथा हि यथा यज्ञदत्तशब्दो न समानाधिकरणो भवति, तथा विशेषवचनोऽपि। अथासौ विशेषवचनः? एवं सति यथाऽग्ने गृहपत इत्यत्राग्निशब्दः सामान्यवचनोऽपि गृहपतिशभ्देन विशेषाभिधायिना व्यवच्छिद्यमानस्तदग्नि विशेषणं भवति गृहपतिशब्दस्तेन समानाधिकरणः, एवं देवदत्तशब्दो विशेषाभिधायिना यज्ञदत्तशपब्देन व्यवच्छिद्यमानस्तद्वच्य एव विशेषेऽवतिष्ठत इति यज्ञदत्तशब्दस्तेन समाधिकरण इति चिन्त्यमेतत्()॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायामष्टमाध्यायस्य प्रथमः पादः - - - अथाष्टमाऽध्यायः द्वितीयः पादः

बाल-मनोरमा

विभाषितं विशेषवचने , ८।१।७४

सु=शोभनौ पादौ यस्येति बहुव्रीहौ "संख्यासुपूर्वस्ये"ति पादशब्दान्त्यलोपे सुपाच्छब्दः। तस्य सुटि रूपाण्याह--

सुपादित्यादिना।

तत्त्व-बोधिनी
विभाषितं विशेषवचने ३६४, ८।१।७४

अग्ने तेजस्विन्निति। इह पदात्पपरत्वात्तेजस्विन्नित्यस्य "आमन्त्रिस्य चे"त्याष्टमिकनिघातः सर्वानुदात्तः।

तत्त्व-बोधिनी
विभाषितं विशेषवचने ३६५, ८।१।७४

सुपादिति। शोभनौ पादौ यस्येति बहुव्रीहिः। सङ्ख्यासुपूर्वस्याऽन्तलोपः।

---

सूत्रम्
काशिका-वृत्तिः
पूर्वत्र असिद्धम् ८।२।१

पूर्वत्र असिद्धम् इत्यधिकारो ऽयम् आ अध्यायपरिसमाप्तेः। यदित ऊर्ध्वम् अनुक्रमिष्यामः पूर्वत्र असिद्धम् इत्येवं तद् वेदितव्यम्। तत्र येयं सपादसप्ताध्यायी अनुक्रान्ता, एतस्याम् अयं पादोनो ऽध्यायो ऽसिद्धो भवति। इत उत्तरं च उत्तर उत्तरो योगः पूर्वत्र पूर्वत्र असिद्धो भवति असिद्धवद् भवति। सिद्धकार्यम् न करोति इत्यर्थः। तदेतदसिद्धत्ववचनम् आदेशलक्षणप्रतिषेधार्थम्, उत्सर्गलक्षणभावार्थं च। अस्मा उद्धर, द्वा अत्र, द्वा आनय, असा आदित्यः इत्यत्र व्यलोपस्य शसिद्धत्वात्, आद् गुणः ६।१।८४ इति, अकः सवर्णे दीर्घः ६।१।९७ इति च न भवति। अमुष्मै, अमुष्मात्, अमुष्मिनिति उत्वस्य असिद्धत्वात् स्मायादयो भवन्ति। शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा। मतोर्वत्त्वे झलां जश्त्वे गुडलिण्मान् निदर्शनम्। शुष्किका इत्यत्र शुषः कः ८।२।५१ इत्यस्य असिद्धत्वादुदीचामातः स्थाने यकपूर्वायाः ७।३।४६ इत्येतन् न भवति। शुष्कजङ्घा इति न कोपधायाः ६।३।३६ इति पुंवद्भावप्रतिषेधो न भवति। क्षामिमानिति क्षामस्य अपत्यं क्षामिः, क्षामो वा अस्य अस्ति इति क्षामी, क्षामिः क्षामी वा यस्य अस्ति इति क्षामिमान्। क्षायो मः इत्यस्य असिद्धत्वान् मादुपधायाश्च इति वत्वं न भवति। औजढतिति वहेर्निष्ठायामूढः, तमाख्यतिति णिच्, तदन्ताल् लुङ्, चङि ६।१।११ इति द्विर्वचने कर्तव्ये ढत्वधत्वष्टुत्वढलोपानाम् असिद्धत्वाण् णौ च यः टिलोपः, तस्य स्थानिवद्भावात् थ इत्येतद् द्विरुच्यते। अनग्लोपे इति प्रतिषेधात् सन्वदित्वं न अस्ति, तेन औजढतिति भवति। औजिढतित्येतत् तु क्तिन्नन्तस्य उढिशब्दस्य भवति। गुडलिण्मानिति गुडलिहो ऽस्य सन्ति इति मतुप्, तत्र ढत्वजश्त्वयोरसिद्धत्वात् झयः ८।२।१० इति वत्वं न भवति। ये ऽत्र षष्ठीनिर्देशाः, सप्तमीनिर्देशाः, पञ्चमीनिर्देशाश्च, तेषां षष्ठी स्थानेयोगा १।१।४८, तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।५९, तस्मादित्युत्तरस्य इति च कर्तव्ये न असिद्धत्व भवति, कार्यकालं हि संज्ञापरिभाषम् इति पूर्वत्वमासां परिभाषाणां न अस्ति इति। विप्रतिषेधे परम् इत्येषा च परिभाषा येन पूर्वेण लक्षणेन सह स्पर्धते, परं लक्षणं तत्प्रति तस्य असिद्धत्वान् न प्रवर्तते। तथा च विस्फोर्यम्, अगोर्यम् इति गुणः परेण हलि च ८।२।७७ इति दीर्घत्वेन न बाध्यते। अपवादस्य तु परस्य अपि उत्सर्गे कर्तव्ये वचनप्रामण्यादसिद्धत्वं न भवति। तेन दोग्धा, दोग्धुम् इत्यत्र घत्वस्य असिद्धत्वाद् हो ढः ८।२।३१ इति न भवति।

लघु-सिद्धान्त-कौमुदी
पूर्वत्रासिद्धम् ३१, ८।२।१

सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्। हर इह, हरयिह। विष्ण इह, विष्णविह॥

न्यासः

पूर्वत्रासिद्धम्?। , ८।२।१

एष योगः परिभाषा वा स्यात्? अधिकारो वेति पक्षद्वयं सम्भाव्यते। तत्र यद्ययं परिभाषा स्यात्? सर्वस्यामष्टाध्याय्याम्पूर्वस्मिन्नुत्तरमसिद्धं स्यात्(), ततश्च "अतो भिस ऐस्()" (७।१।९) इत्यत्र त्यदाद्यत्वस्यासिद्धत्वात्? तैः, यैः--इत्यत्रैस्भावो न स्यादितीमं परिभाषापक्षे दोषं दृष्ट्वा स्वरितत्वेनाधिकारत्व १।३।११ मस्येति निश्चित्याह--"पूर्वत्रासिद्धमित्यधिकारोऽयम्()" इति। "अध्यायपरिसमाप्तेः" इति। अवधिप्रदर्शनार्थमेतत्()। "तत्र" इति वाक्योपन्यासे। "सपादा" इति। सह पादेनानन्तरं प्रक्रान्तेन वत्र्तत इति सपादा। "सप्ताध्यायी" इति। सप्तानामध्यायानां समाहारः, "द्विगोः" ४।१।२१ इति ङीप्()। क्वचित्? "सपादसप्ताध्यायी" इति पाठः, तत्र सपादा चासौ सप्ताध्यायी चेति विशेषणसमासः, पुंवद्भावः। "अयम्()" इति। वक्ष्यमाणः। "पादोनोऽध्यायः" इति। अनन्तरोक्तेन पादेनोनोऽपरिपूर्णः पादोनोऽध्यायः। "असिद्धो भवति" इत्यादि। पादोनाध्यायग्रहणेनोत्तरोत्तरयोगग्रहणेन च शास्त्रासिद्धत्वमिहाश्रीयत इति दर्शयति। कार्यासिद्धत्वाश्रयणे हि यथा देवदत्तस्य हन्तरि हते न पुनर्वेवदत्तस्य प्रादुर्भावो भवति, तथा कार्यस्यासिद्धत्वे तिपादिते न प#उनः प्रकृतेः प्रत्यापत्तिर्भवति। ["प्रादुर्भावो"--प्रांउ।पाठः] ततश्चामुद्धत्वे तुस्मैभावशास्त्रमेव प्रवत्र्तते, न त्वशास्त्रमसिद्धतवामिति न भवत्येष दोषप्रसङ्गः। अपि च शास्त्रस्य मुख्यत्वं पूर्वत्वं कार्यस्यौपचारिकत्वम्()। यस्य कार्यस्य शास्त्रं पूर्वं तदप्युपचारेण पूर्वमित्युच्यते, न स्वत एव तसय पूर्वत्वम्(); सन्निवेशविशेषाभावात्()। कार्यं हि लक्ष्()यगतम्(), तत्र यथा लक्ष्यस्य सन्निवेशो नास्ति तथा तद्गतस्यापि कार्यस्य। न च मुख्ये पूर्वत्वे सति गौणत्वस्य परिग्रहणं मुक्तम्()। तस्माच्छास्त्रं [तस्माच्छास्त्रपूर्वग्रहणेन--प्रांउ।पाठः] पूर्वग्रहणेन गृह्रते। तस्य च पूर्वत्वं परशास्त्रमेवापेक्ष्य भवति। अतो यदपेक्षं तस्य पूर्वत्वं ततः परस्य शास्त्रस्यैवासिद्धत्वमनेन कर्त्तुं युक्तम्()। शास्त्रस्यासिद्धौ च कृतायामर्थतः कार्यासिद्धत्वं कृतमेव भवति; तस्य तन्निबन्धनत्वात्()। सिद्धशब्दो निष्पन्नवचनः। सिद्धं निष्पन्नमित्यर्थः। न सिद्धमसिद्धम्(), अनिष्पन्नमित्युच्यते। परञ्च शास्त्रं यच्च निष्पन्नं तन्न शक्यं वचनशतेनाप्यनिष्पन्नसत्तायामापादयितुम्()। अन्यथा न कश्चिद्()दुःखविवशां दशामनुभवेतु; असिद्धवचनेनैव न दु#ःखस्यानिष्पन्नतापादानात्()। तस्माद्यथा ब्राह्मदत्तोऽब्राह्मदत्तोऽयमित्युक्तेऽकतिदेशोऽयं गम्यते, तथेहाप्यसिद्धत्वमित्युक्तेऽतिदेशोऽयं गम्यत इत्याह--"असिद्धवद्भवति" इति। एतदेव स्पष्टीकर्तुमाह--"सिद्धकार्यम्()" इत्यादि। एवं हि तदसिद्धवद्भवकति यदि सिद्धस्य यत्कार्यं तन्न करोति। "तदेतत्()" इत्यादि। तदिति हेतो, यस्मादनन्तरोक्तोऽसिद्धशब्दस्यार्थः, तस्मादेतदसिद्धवचनमादेशलक्षणप्रतिषेधार्थम्()। आदेशो लक्षणं निमित्तं यस्य तदादेशलक्षणम्(), तस्य प्रतिषेधः। सोऽर्थः प्रयोजनं यस्य तत्तथोक्तम्()। "उत्सर्गलक्षणभाववार्थं च" इति। उत्सृज्यते निवत्र्यत इत्युत्सर्गः=स्थानिलक्षणम्(), उत्सर्गौ लक्षणं निमित्तं यस्य तदुत्सर्गलक्षणं कार्यम्(), तस्य भाव उपजननमुत्सर्गलक्षणभावः, सोऽर्थः प्रयोजनं यस्य तत्तथोक्तम्()। "अस्मा उद्धर" इत्यादि। अस्मै इतोदंशब्दाच्चतुर्थी, उद्धरेत्यस्मिन्? परत आयादेशः, "लोपः शाकल्यस्य" ८।३।१९ इति वकारलोपः। तत्र कृतेऽकः सवर्णेदीर्घत्वं प्राप्नोति; वकारलोपस्यासिद्धत्वान्न भवति। "व्यलोपस्यासिद्धत्वात्()" इति। तादर्थ्याद्व्यलोपशास्त्रं व्यलोपशब्देनोक्तम्()। अथ वा--व्यलोपशस्त्रस्यासिद्धत्वाद्व्यलोपस्यासिद्धत्वमित्युच्यते। एवूदाहरणेष्वादेशलक्षणप्रतिषेधोऽसिद्धत्वावचनस्य प्रयोजनम्()। इदानीं येषूदाहरणेषूत्सर्गलक्षणभावः प्रयोजनम्(), तानि दर्शयितुमाह--"अमुष्मै" इत्यादि। अदसश्चतुर्थीपञ्चमीसप्तम्यैकवचनानि। त्यदाद्यत्वम्? ७।२।१०२। अत्रासत्यप्यसिद्धत्वे परत्वात्? "अदसोऽसेर्दादु दो मः" ८।२।८० इत्युत्वम्(), ततश्चाकारान्तस्याभावात्? तन्निबन्धनाः "सर्ववाम्नः स्मै" ७।१।१४, "ङसिङ्योः स्मात्स्मिनौ" ७।१।१५ इति स्मायादयो न स्युः। असिद्धत्वे सति शास्त्रस्य ते भवन्ति। "उत्वस्यासिद्धत्वात्()" इति। अत्रापि तादर्थ्यादुत्वशब्देनोत्वशास्त्रमुक्तम्()। "शुष्किका" इत्यादिश्लोकः। अत्र "निदर्शनम्()" इत्येतत्? शुष्किकेत्यादिभिः

प्रत्यकमभिसम्बध्यते। "झलां चश्त्वे" इति। अत्राप्यसिद्ध इति वृत्तभङ्गभयान्नोक्तम्()। अनुक्तमपि प्रकरणेन ज्ञायते। "शुष्किका" इति। "शुष शोषणे" (धा।पा।११८३) इत्येतस्मात्? क्तप्रत्ययः, "शुषः कः" ८।२।५१ इति कादेशः, टाप्(), अज्ञातार्थे "प्रागिवात्? कः" ५।३।७०, "केऽणः" ७।४।१३ ति ह्रस्वत्वम्(), ततष्टाप्(), "प्रत्ययस्यात्? कात्()" ७।३।४४ इत्यादिना नित्यमित्त्वं भवति, न तु "उदीचाम्()" ७।३।४६ इत्यादिना पाक्षिकम्(); "शुषः कः" ८।२।५१ इत्यस्यासिद्धत्वात्()। "शुष्कजङ्घा" इति। शुष्के जङ्घे अस्या इति बहुव्रीहिः, "न कोपधायाः" ६।३।३६ इचि पुंवद्भावनिषेधो न भवति। "शुषः कः" ८।२।५१ इत्यस्यासिद्धत्वादिति प्रकृतेन सम्बन्धनोयम्()। ननु च सत्यप्यसिद्धत्वे नैवात्र पूर्वद्भावप्रतिषेधो न प्राप्नोति, "कोपधप्रतिषेदे तद्धितवुग्रहणं कत्र्तव्य्()" (धा।७३३) इति वचनात्()? न; वाक्यकारमतमेतत्(), सूत्रकारमतेन तु श्लोकवार्त्तिककारेण च न चात्रैतत्? प्रयोजनमुपन्यस्तम्()। एतयोर्हि सामान्येन कोपधप्रतिषेधोऽभिमतः। "क्षामिमान्()" इति। "क्षै जै षै क्षये" (धा।पा।९१३,९१४,९१५), "आदेच उपदेशेऽशिति" ६।१।४४ इत्यात्त्वम्(), "क्षायो मः" ८।२।५३ इति निष्ठातकारस्य मकारः--क्षाम इति स्थिते "अत इञ्()" ४।१।९५ इतीञं कृत्वा "अत इनिठनौ" (५।२।११५) इतीनिप्रत्ययं वा कृत्वा मतुप्? कत्र्तव्यः। "वहेः" इत्यादि। "वह प्रापणे" (धा।पा।१००४) इत्येतस्मान्निष्ठा, सम्प्रसारणम्? ६।१।१५, "हो ढः" ८।२।३१ इति ढत्वम्(), "झषस्तथोर्धोऽधः" ८।२।४० इति धत्वम्(), "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्(), "ढो ढे लोपः" ८।३।१३ इति ढलोपः, "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इति दीर्घः, ऊढ इति स्थिते, तमाचष्ट इति णिच्(), "णाविष्ठवत्? कार्य प्रातिपदिकस्य" (वा।८१३) इतीष्ठवद्भावाट्टिलोपः, तदन्ताल्लुङ्(), "णिश्रि" ३।१।४८ इत्यादिना चङ्()। अत्र धत्वष्टुत्वादीनामसिद्धत्वाद्योऽसौ णो टिलोपलस्तस्य णौ कृतं स्थानिवद्भवतीति (चांप।पा।२१) स्थानिवद्भावात्? "चङि" ६।१।११ इति "अजादेर्द्वितीयस्य" ६।१।२ इति हत इत्येतस्य द्विर्वचनम्(), "कुहोश्चुः" ७।४।६२ इति चुत्वम्()--महाप्राणस्य हकारस्य स्थाने महाप्राण एव झकारः, "अभ्यासे चर्च" ८।४।५३ इति झकारस्य स्थाने जकारः, "आडजादीनाम्()" ६।४।७२ इत्याट्(), "आटश्च" ६।१।८७ इति वृद्धिः। अथ "सस्वल्लधुनि चङ्परे" (७।४।९३) इति सन्वद्भावः कस्मान्न भवति? इत्याह--"अनग्लोपे" इत्यादि। यदि तह्रूरनग्लोप इति प्रतिषेधात्? सन्वद्भावो न भवति तदौजिढदिति ["तदोजढदिति"--प्रांउ।पाठः] न स#इध्यति? इत्याह--"औजिढत्()" ["औजढत्()"--प्रांउ।पाठः] इत्यादि। गुडलिण्मान्()" इति। गुडं लेढीति क्विप्(), तदन्तान्मतुप्(), पूर्ववड्ढत्वम्(), "झलां जशोऽन्ते" (८।२।३९) इति जश्त्वम्()--ढकारस्य डकारः! मतोर्वत्वे कत्र्तव्य ढत्वजशत्वयोरसिद्धत्वात्? "झयः" ८।२।१० इति वत्वं न भवति। कारिकायां झलां जश्त्वग्रहणमुपलक्षणार्थं निदर्शनमिति। अनेनैतत्? दर्शयति--निदर्शनमेतच्छुष्किकादीनाम्(), न तु परिगणनमिति। यदि हि सपादायां सप्ताध्याय्यां कत्र्तव्यायां पादोनोऽध्यायोऽसिद्ध इत्युच्यते तदा य इह षष्ठीनिर्देशसप्मीनिर्देश-पञ्चमीनिर्देशाः क्रियन्ते तेऽप्यसिद्धः स्युः, ततश्च "संयोगान्तस्य लोपः" (८।२।२३) इत्यत्र षष्ठीनिर्देशस्यासिद्धत्वात्? "षष्ठी स्यानेयोगा" १।१।४८ इत्येषा नोपतिष्ठेन, एवञ्च सामीप्ययोगाप्येषा षष्ठी स्यातः ततः संयोगान्तसमीपो यस्तस्यापि लोप आपद्येत; "झलो झलि" (८।१।२६) इत्यत्रापि सप्मीनिर्देशस्यासिद्धत्वात्? "तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६५ इत्येषा परिभाषा नोपतिष्ठेत, तथा च पूर्वस्यैवानन्तरे भवितव्यमिति नियमस्याभावात्? सामान्येन पूर्वस्य परस्य वानन्तरे व्यवहिते झलि लोपः; "ह्रस्वादङ्गात्? (८।२।२७) इत्यादावपि पञ्चमीनिर्देशस्यासिद्धत्वात्? "तस्मादित्युत्तरस्य" १।१।६६ इत्यस्योपस्थानं न स्यात्(), ततश्चानियमात्? पूर्वस्य परस्य वानन्तरस्य व्यवहितस्य च लोपः प्रसज्येतेत्यत आह--"येऽत्र षष्ठीनिर्देशाः" इत्यादि। किं पुनः कारणमसिद्धत्वं न भवति? इत्याह--"कार्यकालं हि" इत्यादि। यदि हि "यथोद्र्दशं संज्ञापरिभाषम्()" (व्या।प।५९) स्यात्(), एवमासां परिभाषाणां पूर्वत्वे सति षष्ठोनिर्देशादीनामसिद्धत्वं न स्यात्(), न तु यथोद्देशं संज्ञापरिभावम्(), किं तर्हि? "कार्यकालं संज्ञापरिभाषम्()" (व्या।पा।५८), कार्यकालाः कार्यप्रयुक्ता हि संज्ञाः परिभाषाश्च। तस्माद्यत्र कार्यं तत्रैव ताः प्रयुज्यन्ते, तेन ता उपदेश एव। अतो निर्देशैरभिन्नदेशत्वात्? परिभाषाणामत्र पूर्वत्वं नास्ति, ततः कुतस्तासु कत्र्तव्यासु तेषामसिद्धत्वप्रसङ्गः! यदि कार्यकालं संज्ञापरिभाषम्(), "विप्रतिषेधे परं कार्यम्()" (१।४।२)

इत्येषाऽत्रोपतिष्ठेत? तत्र को दोवः? "स्फुर स्फुल सञ्चलने" (धा।पा।१३८९), १३९०), "गुरी उद्यमने" (धा।पा।१३९६)--आभ्यां "ऋहलोर्ण्यत्()" ३।१।१२४ इति ण्यति कृते दिस्फोयम्(), अवगोर्यमिति न सिध्येत्()। अस्या हि परिभाषाया उपस्थाने, गुणं परत्वाद्बाधित्वा "हलि च" ८।२।७७ इति दीर्धत्वं प्राप्नोतीत्यत आह--"विप्रतिषेधे परमित्येषा तु" इत्यादि। "विप्रतिषेधे परम्()" १।४।२ इत्येषा परिभाषाऽत्र न प्रवत्र्तत इति प्रकृतेन सम्बन्धः। कस्मान्न प्रवत्र्तते? इत्याह--"येन" इत्यादि। द्वयोर्हि तुल्यबलयोर्विप्रतिषेधो भवति। इह तु येन पूर्वेण लक्षणेन "पुगन्तस्य" ७।३।८६ इत्यादिना सह परं लक्षणं स्पर्धते तदप्यभिभवितुमिच्छति। पर#ं लक्षणं "हलि च" ८।२।७७ इत्यादिकम्(), तत्? पूर्वं प्रति तस्यासिद्धत्वम्()। अतोऽतुल्यबलत्वाद्विप्रतिषेधो नास्तीति "विप्रतिषेधे परम्()" १।४।२ इत्येषा परिभाषा न प्रवत्र्तते। "तथा च" इत्यादि। एवमस्याः परिभाषाया अप्रवृत्तौ सत्यामित्यर्थः। यदि तर्हि पूर्वस्मिन्? कार्ये कत्र्तव्ये परमसिद्धं भवति, एवं सत्युत्सर्गे कत्र्तव्ये परस्यापवादस्यासिद्धत्वां सायत्()। ततश्च दोग्धा, दोग्धृमित्यत्र "दादेर्घातोर्घः" (८।२।३२) इति धस्यासिद्धत्वाड्ढत्वं स्यात्()? इत्यत आह--"अपवादसर्य तु" इत्यादि। यद्यप्यपवादविषयस्यापि परस्योत्सर्गे कत्र्व्येऽसिद्धत्व स्यात्(), निर्विषयत्वाच्चापवादवचनस्य वैयथ्र्यं स्यात्()। अतोऽपवादस्य परस्यापि वचनप्रामाण्यादसिद्धत्वं न भवति। ननु च वचनप्रामाण्यात्? पर्यायेण तयोर्भावः स्यात्(), तत्कुतो वैयथ्र्य प्रसङ्ग? नैतदस्ति; यद्यपवादस्य पर्यायता स्यात्(), "वा द्रुहमुह" ८।२।३३ इति विकल्पेन धत्वविधाननमनर्थकं स्यात्()॥

बाल-मनोरमा

पूर्वत्रासिद्धम् १४, ८।२।१

तथाविधं सूत्रमाह-पूर्वत्रासिद्धम्। पाणिनिप्रणीता अष्टाध्यायी। तत्र अष्टमाध्याये द्वितीयपादस्येदमादिमं सूत्रम्। इतः प्राक्तनं कृत्स्नं सूत्रजालं "सपादसप्ताध्यायी"ति व्यवह्रियते। उपरितनं तु कृत्स्नं सूत्रजालं त्रिपादीति व्यवह्रियत इति स्थितिः। तत्र यदीदं सूत्रं स्वतन्त्रविधिः स्यात्, तदा इतः पूर्वस्मिन् शास्त्रे प्रवर्तमाने उपरितनं शास्त्रमसिद्धं स्यादित्यर्थो लभ्येत। ततश्च सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धेति पर्यवस्येत्। एवं सति त्रिपाद्यामपि पूर्वं शास्त्रं प्रति परं शास्त्रमसिद्धमित्यर्थो न लभ्येत। तथा सति किमु उक्तं किम्वुक्तमित्यत्र "मोऽनुस्वारः" इति शास्त्रं त्रैपादिकं प्रति "मय उञो वो वा" इति वत्वशास्त्रं त्रैपादिकं नासिद्धं स्यादित्यत आह-अधि-कारोऽयमिति। अधिक्रियते उपरितनसूत्रजालशेषत्वेन पठ()त इत्यधिकारः। कर्मणि घञ्। "घञजबन्ताः पुंसि" इति पुंस्त्वम्॥ अयमिति तदपेक्षया पुंलिङ्गनिर्देशः। इदं सूत्रमुपरितनसूत्रेष्वनुवृत्त्यर्थमेव, न तु स्वतन्त्रविधिरिति यावत्। "मय उञो वो वा" इति सूत्रे पूर्वत्रासिद्धमित्यनुवत्र्तते। ततश्च "मयः परस्य वकारो वो वा स्यात्। इदं श#आस्त्रं पूर्वत्रासिद्ध"मिति तदेकवाक्यं संपद्यते। तत्र च अनुवृत्तपूर्वशब्देनैतः प्राक्तनं त्रिपादीस्थं सपादसप्ताध्यायीस्थं च कृत्स्नं सूत्रजालं विवक्षितमिति "मोऽनुस्वारः" इति त्रैपादिकं शास्त्रं प्रति "मय उञो वो वा" इति शास्त्रस्याऽसिद्धत्वं निर्बाधमित्याह-तेनेति। अदिकारत्वेनेत्यर्थः। परं शास्त्रमसिद्धमिति। असिद्धत्वं चाऽत्र नात्यन्ताऽसत्त्वम्। किंतु पूर्वशास्त्रदृष्ठ()एत्यनुपदेमेवोक्तम्। "परं शास्त्र"मित्यनेन प्रक्रियाकौमुद्यादिग्रन्थोक्तं कार्यासिद्धत्वमप्रामाणिकमिति ध्वनितम्। कार्याऽसिद्धत्वं पूर्वपक्षयित्वा शास्त्रासिद्धत्वस्यैवात्र सूत्रे, "असिद्धवदत्राभात्" दिति सूत्रे च भाष्ये सिद्धान्तिततत्वात्। शास्त्रसिद्धत्वकार्याऽसिद्धत्वयोः फलभेदस्तु शब्देन्दुशेखरे व्यक्तः। अस्माभिश्च स्वादिसन्धौ "मनोरथ" इत्यत्र मूलव्याख्यावसरे , हलन्तशब्दाधिकारे च अदःशब्दप्रक्रियाव्याख्यावसरे प्रपञ्चयिष्यते। तदेवम् "अ अ" इति संवृतविधेः स्वप्राक्तनीं कृत्स्नामष्टाध्यायीं प्रत्यसिद्धत्वात् प्रक्रियादसायामवर्णस्य ह्रस्वस्य विवृतत्वमेव। परिनिष्ठितदशायामेव संवृतत्वमिति स्थितम्। यद्यपि परिनिष्ठ#इतदशायां संवृतविधिः क्वचिदप्यस्मिन् शास्त्रे नोपयुज्यते, तथापि परिनिष्ठिते संवृतविधिबलात्संवृतत्वेन ज्ञाने सत्येव प्रयोगार्हतेति कल्प्यम्, विवृतसंवृतयोरुच्चारणभेदो वा कल्प्य इत्यलं बहुना। अथ बाह्रप्रयत्नान् प्रपञ्चयति--बाह्रप्रयत्नस्त्विति। प्रशब्दोऽत्र चिन्त्यः, प्रशब्दबलेन आभ्यन्तरयत्नस्यैव प्रयत्नशब्दवाच्यताया तुल्यास्यसूत्रे उक्तत्वात्, यत्नो द्विधेत्युपक्रमाच्च।

अविवक्षितार्थो वाऽत्र प्रशब्दः। उदात्तानुदात्तस्वरितशब्दा धर्मपराः। कस्य को बाह्ययत्न इत्याकाङ्क्षायां तद्व्यवस्थां श्लोकद्वयेन संगृह्णाति--

खयामिति। "यम" शब्दो व्याख्यास्यते। ()आआसोऽनुप्रदानो येषां ते ()आआसानुप्रदानाः=()आआसाख्यबाह्ययत्नवन्तः। विवृण्वते कण्ठमिति। विवार एषां यत्न इति भावः। संवृताः=संवाराख्ययत्नवन्तः। नादभागिनः=नादाख्ययत्नभाजः। अयुग्मा वर्गयमगा इति। कादिपञ्चकं टादिपञ्चकं तादिपञ्चकं पादिपञ्चकमिति पञ्च वर्गाः। वर्गगता यमगताश्च अयुग्माः=प्रथमतृतीयपञ्चमवर्णा इत्यर्थः। अल्पासवः=अल्पप्राणाः।

अथ श्लोकद्वयं व्याख्यास्यन् यमशब्दं तावत्सामान्यतो व्याचष्टे--वर्गेष्वित्यादिना। "आद्यानां चतुर्णा"मिति निर्धारणे षष्ठी। "एकैकस्मा"दित्यव्याहार्यम्। तेन "अन्यारादितरर्ते" इति परशब्दयोगे पञ्चमीप्रसङ्गादाद्यानां चतुर्णामिति षष्ठ()नुपपन्नेति निरस्तम्। यमो नामेति। नामशब्द इतिपर्यायः। तदयमर्थः--कादिचादिटादितादिपादिपञ्चकात्मकेषु वर्णेषु एकैकस्य वर्गस्य आद्यानां चतुर्णां मध्ये एकैकस्मात्पञ्चमे वर्णे परे मध्ये पूर्ववर्णसदृशो वर्णो यम इति प्रातिशाख्ये प्रसिद्ध इति। अथ यमानुदाहृत्य दर्शयति--पलिक्क्नीत्यादिना तत्सदृशा एव यमा इत्यन्तेन। एवं वर्गान्तरयमानामप्युदाहरणं याच्ञ्त्रेत्यादि द्रष्टव्यम्। तदेवं यमशब्दं सामान्यतो व्याख्याय श्लोकद्वयं व्याचष्टे--तत्रेत्यादिना। तत्र "खय" इत्यस्य व्याख्या--वर्गाणां प्रथमद्वितीयाः खय इति। "खयां यमा" इत्यस्य विवरणं--तथा तेषामेव यमा इति। "क पौ" इत्यस्य विवरणं--जिह्वामूलीयोपध्यमानीयाविति। विसर्गशब्दः प्रसिद्धत्वात् स णवोपात्तः। "शर" इत्यस्य विवरणं--शषसा इति। "एते ()आआसानुप्रदाना अघोषाश्च विवृण्वते कण्ठ"मित्येतद्व्याचष्टे-एतेषां विवारः ()आआसोऽघोषश्चेति। "अन्ये तु घोषाः स्युः संवृता नादभागिन" इत्येतद्व्याचष्टे-अन्येषां तु संवारो नादो घोषश्चेति। "अयुग्मा वर्गयमगा" इत्येतद्व्याचष्टे--वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमाविति। पञ्चमानां यमाऽभावादिति बावः। "यणश्चाल्पासवः स्मृता" इत्येतद्व्याचष्टे--यरलवाश्चाल्पप्राणा #इति। ननु श्लोकद्वये महाप्राण एतेषामिति नोक्तम्। अतो न्यूनतेत्याशङ्क्य तदपि परिशेषादुक्तप्रायमित्याह--अन्ये महाप्राणा इति। वर्गाणां द्वितीयचतुर्थाः शलश्च महाप्राणाः " इति।

नन्विह बाह्ययत्नप्रपञ्चनं व्यर्थं, तुल्यास्यसूत्रे प्रयत्नशब्दस्य आभ्यन्तरयत्नमात्रपरत्वादित्याशङ्कते--बाह्यप्रयत्नाश्चेति। "यद्यपी"ति समुदायः शङ्काद्योतकः। परिहरति-तथापीति। सवर्णसंज्ञाप्रस्तावे बाह्ययत्नानामुपयोगाभावेऽपि "स्थानेऽन्तरतमः" इति वक्ष्यमाणान्तरतम्यविचारे तेषामुपयोगसत्त्वान्न वैयर्थ्यम्। इह तत्प्रपञ्चनं तुल्यास्यसूत्रे आभ्यन्तरत्वविशेषणव्यावर्त्यत्वेनोपस्थितत्वात्प्रासङ्गिकमिति भावः। उदात्तादित्रयस्य तु अज्धर्मत्वस्य प्रसिद्धत्वादिह न तद्व्यवस्थोक्ता। अथ स्पृष्टं प्रयतनं स्पर्शानामित्यादिसंदर्भे उपन्यस्तान् स्पर्शादिशब्दान् व्याचष्टे-कादञ इत्यादिना। क आदिर्येषां ते "कादयः"। मः अवसाने येषां ते "मावसानः"। इदं च लोकप्रसिद्धपाठपेक्षम्।

इति स्थानयत्नविवेक इति। स्थानयत्निविवेचनं समाप्तमित्यर्थः। स्थानप्रयत्नेति प्रशब्दपाठस्तु चिन्त्यः, अविवक्षितार्थो वा "प्र"शब्द। ऋलृवर्णयोर्मूर्धदन्तात्मकभिन्नस्थानकत्वात्सवर्णसंज्ञायामप्राप्तायाम् "ऋकारलृकारयोः सवर्णविधिः" इति तद्विधायकं वार्तिकमर्थतः संगृह्य पठति-ऋलृवर्णयोर्मिथः। आ च आ च रलौ। ऋशब्दस्य च "आ" इति प्रथमैकवचनम्। ऋ लृ औ इति स्थिते लृकारस्य "ऋतो ङि सर्वनामस्थानयोः" इति गुणः, अकारः, "उरण्()परः"इति लपरत्वम्, ञकारस्य यणादेशो रेफः। रलौ च तौ वर्णौ च ऋलृवर्णौ। तयोर्मिथः परस्परं सावर्ण्यं=सवर्णत्वं वक्तव्यं, तुल्यास्यसूत्रेण तदलाभादिति सूत्रकारः शिक्ष्यते (वार्तिककृता)। उक्तामुक्तदुरुक्तचिन्तनात्मकं हि वार्तिकम्। अकारहकारयोरिति। उभयोः कण्ठस्थानविवृतप्रयत्नसाम्यात्सावर्ण्यं प्राप्तम्। अकारस्य कवर्गेण तु न सावर्ण्यप्रसक्तिः, कण्ठस्थानसाम्ये सत्यपि विवृतस्पृष्टप्रयत्नभेदात्। विसर्जनीयस्य तु अकारोपरि शर्षु च पाठस्योपसङ्ख्यातत्वेन विवृतत्वेऽपि तेन अकारस्य न

सवर्णसंज्ञा, प्रयोजनाऽभावात्। ततश्च अकारस्य हकारेण सावर्ण्यं परिशिष्टत इति भावः। इकारशकारयोरिति। तालुस्थानविवृतप्रयत्नसाम्यादुभयोः सावर्ण्यं प्राप्तम्। इकारस्य चवर्गेण यकारेण च न सावर्ण्यप्रसक्तिः,इकारस्य विवृतत्वात् , चवर्गस्य स्पृष्टत्वात्, यकारस्य ईषत्स्पृष्टत्वाच्च। अत इकारस्य शकारेण सावर्ण्यं परिशिष्यत इति भावः। ऋकारषकारयोरिति। मूर्धस्थानविवृतयत्नसाम्यादुभयोः सावर्ण्यं प्राप्तम्। ऋकारस्य टवर्गेण रेफेण च न सावर्ण्यप्रसक्तिः ऋकारस्य विवृतत्वात्, टवर्गस्य स्पृष्टत्वात् , रेफस्यैइषत्स्पृष्त्वाच्च। अत ऋकारषकारयोः सावर्ण्यं परिशिष्टत इति भावः। लृकारसकारयोरिति। दन्तस्थानविवृतप्रयत्नसाम्यादुभयोः सावर्ण्यं प्राप्तम्। लृकारस्य तवर्गेण लकारेण च न सावर्ण्यप्रसक्तिः, लृकारस्य विवृतत्वात्, तवर्गस्य स्पृष्टत्वात्, लकारस्य ईषत्सपृष्टत्वाच्च। अतः लृकारस्य सकारेण सावर्ण्यं परिशिष्यते।

तत्त्व-बोधिनी
पूर्वत्रासिद्धम् १४, ८।२।१

पूर्वत्रासिद्धम्। यद्ययं स्वतन्त्रो विधिः स्यात्तर्हि त्रिपादी पूर्वं प्रत्यसिद्धेत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यात्, तथाच प्रशानित्यत्र "मो नो धातोः" इति नत्वस्य सिद्धत्वान्नलोपः स्यात्, नत्वविधेः संबुद्धौ चरितार्थत्वात्। तथाऽनड्वानित्यत्र संयोगान्तलोपस्य सिद्धत्वान्नलोपः स्यात् , नुम्बनिधेस्तु संबुद्धौ चरितार्थत्वात्। तथाऽनड्वानित्यत्र संयोगान्तलोपस्य सिद्धत्वान्नलोपः स्यात्, नुम्बिधेस्तु संबुद्धौ चरितार्थत्वाद्त आह-अदिकारोऽयमिति। त्रिपाद्यां विहितं कार्यमिति कार्याऽसिद्धिपक्षे अमू अमूमित्यादि न सिद्ध्येदिति भावः। यथा चैतन्न सिध्यति तथाऽदःशब्दव्याख्यावसरेऽस्माभिरुपपादयिष्यते। एकादशधेति। यद्यपि भाष्येऽष्टावुक्ताः, उदात्तादयस्तु नोक्ताः, तथापि कैयटोक्तिमनुसृत्यैकादशोक्ता इति बोध्यम्। खयां यमा इति। बालबोधनाय बाह्रप्रयत्नाः कैश्चित्सुगमोपायेनोपनिबद्धाः। तद्यथा-"खरो विवाराः ()आआसा अघोषाश्च, हशः संवारा नादा घोषाश्च, वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः" इति। ()आआसानुप्रदाना इति। ()आआसप्रयत्नका इत्यर्थः। विवृण्वते कण्ठमिति। विवार एषा प्रयत्न इति भावः। अन्येत्विति। हशो, हशां यमाः, अनुस्वारश्च। नादेति। नादभागिनः। नाश्प्रयत्नवन्त इत्यर्थः। अयुग्मा इति। प्रथमतृतीयपञ्चमा वर्गेष्वयुग्माः। वर्गयमगा इति। वर्गगा-यमगाश्चेत्यर्थः। अल्पेति। अल्पासवः=अल्पप्राणाः। "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः। अनुपयुक्ता इति। अन्यथा कखगघादीनां परस्परं सावर्ण्यं न स्यादिति भावः। आन्तरतम्यपरीक्षायामिति। परीक्षा च-"अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः", "घोषवतो नादवतो महाप्राणस्य हस्य तादृशो वर्गचतुर्थ" इत्यादिना मूले एव स्फुटीभविष्यति।

कादय इति। लोकप्रसिद्धपाठापेक्षमिदम्। चतुर्दशसूत्र्यां सादृश्यमुच्चारणे लेखने च बोध्यम्। कपाभ्यां प्रागिति। एतच्चोपलक्षणम्। खफाभ्यां प्रागित्यपि बोध्यम्। अर्धविसर्गेति। सादृश्यमुच्चारणे लेखने च बोध्यम्। ऋलृवर्णयोरिति। "ऋत्यकः" इति प्रकृतिभावः। विग्रहस्तु आ च लृवर्णश्च ऋलृवर्णौ, तयोरित्येके। मनोरमायां तु-आ च आ च रलौ, तौ च तौ वर्णौ चेत्यादिं स्थितम्। नाज्झलौ। आकारसहित इति। "कालसमयवेलासु" इत्यादिनिर्देशा आकारप्रश्लेषे लिङ्गम्। यणादिकमिति। शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः। इह "असेध" दित्यादौ "हो ढः" इति ढत्वं नेत्यपि सुवचम्। "इण" इति सस्य षत्वमपि नेति तु न सुवचम्, ढत्वं प्रति तस्याऽसिद्धत्वादिति दिक्। अन्यथेति। "नाज्झलौ" इत्यस्यानारम्भे। ग्रहणकशास्त्रबलादिति। अयं भावः,-दीर्घादीनामिव हकारादीनामप्यकारवाच्यत्वेऽभ्युपगते ह्रच्त्वं स्यात्, प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमादिति।

---

सूत्रम्

काशिका-वृत्तिः

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२

नलोपः पूर्वत्र असिद्धो भवति सुब्विधौ, स्वरविधौ, सज्ञाविधौ, तुग्विधौ च कृति। विधिशब्दो ऽयं प्रत्येकम् अभिसम्बध्यमानः स्वरसंज्ञातुकां विधेयत्वात् तैः कर्मषष्ठीयुक्तैः भावसाधनो ऽभिसम्बध्यते। सुपा तु सम्बन्धसामान्यवचनषष्ठ्यन्तेन कर्मसाधनः। तेन सुपः स्थाने यो विधिः, सुपि च परभूते, सर्वो ऽसौ सुब्विधिः इति सर्वत्रासिद्धत्वं भवति। सुब्विधौ तावत् राजभिः, तक्षभिः इत्यत्र नलोपस्य असिद्धत्वाततो भिस ऐस् ७।१।९ इति न भवति। राजभ्याम्, तक्षभ्याम्, राजसु, तक्षसु इति सुपि च ७।३।१०२ इति, बहुवचने झल्येत् ७।३।१०३ इति दीर्घत्वमेत्वं च न भवति। स्वरविधौ राजवती इत्यत्र नलोपस्य असिद्धत्वातन्तो ऽवत्याः ६।१।२१४ इति न भवति। पञ्चार्मम्, दशार्मम्, इत्यत्र नलोपस्य असिद्धत्वातर्मे चावर्णं द्व्यच् त्र्यच् ६।२।९० इति पूर्वपदस्य आद्युदात्तत्वं न भवति। पञ्चदण्डी इत्यत्र नलोपस्य असिद्धत्वादिगन्ते द्विगौ इति पूर्वपदप्रकृतिस्वरो न भवति। संज्ञाविधौ पञ्च ब्राह्मण्यः, दश ब्राह्मण्यः इति नलोपस्य असिद्धत्वात् ष्णान्ता षट् १।१।२३ इति षट्संज्ञा भवति, ततश्च न षट्स्वस्रादिभ्यः ४।१।१० इति टापः प्रतिषेधो भवति। तदेतत् प्रयोजनं कथं भवति? यदि प्रतिकार्यं संज्ञाप्रवृत्तिः इत्येतद् दर्शनम्। या हि जश्शसोर्लुगर्था षट्संज्ञा प्रवृत्ता, तया स्त्रीप्रत्ययप्रतिषेधो न क्रियते इति सा पुनः प्रवर्तयितव्या इति। तुग्विधौ वृत्रहभ्याम्, वृत्रहभिः इति नलोपस्य असिद्धत्वात् ह्रस्वस्य पिति कृति तुक् ६।१।६९ इति तुग् न भवति। अत्र केचित् सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति तुकं प्रति नलोपस्य अनिमित्तत्वात्, बहिरङ्गलक्षणेन वा असिद्धत्वात्, तुग्विधिग्रहणम् अनर्थकम् इति प्रतिपन्नाः। तत् तु क्रियते परिभाषद्वयस्य अनित्यत्वं ज्ञापयितुम्। कृति इति किम्? वृत्रहच्छत्रम्, वृत्रहच्छाया, छे च ६।१।७१ इति तुग् भवति। अत्र सिद्धे सत्यारम्भो नियमार्थः, एतेष्वेव नलोपो असिद्धो भवति, न अन्यत्र। तेन राजीयति, राजायते, राजाश्वः इति ईत्वम्, दीर्घत्वम्, एकदेशश्च सिद्धो भवति।

लघु-सिद्धान्त-कौमुदी

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति २८४, ८।२।२

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र - राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न। राजभ्याम्। राजभिः। राज्ञि, राजनि। राजसु॥ यज्वा। यज्वानौ। यज्वानः॥

न्यासः

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति। , ८।२।२

कृतोत्येतदनन्तरोक्तेन तुग्ग्रहणेनैव सम्बध्यते, न तु सर्वैः सुबादिभिः; अन्यथा यथा विधिशब्दस्य प्रत्येकं विधिसम्बन्धो दर्शितः, तथाऽस्यापि सम्बन्धं दर्शयेत्()। इहायं विधिशब्दः सुबादिभिःसम्बध्यमानो भावसाधनो वा सम्बध्येत? कर्मसाधनो वा? तत्राद्ये पक्ष आश्रीयमाणे--राजभिः, तक्षभिरित्यत्रैस्भावे कत्र्तव्ये नलोपस्यासिद्धत्वं न प्राप्नोति, भावसाधने हि यत्रासतो विधानं तत्रासिद्धत्वेन भवितव्यम्(), न तु सतः। न चात्रासतः सुपो विधानम्(); किं तर्हि? सत एव, यतस्तस्य स्थान ऐस्भावस्य राजभ्यां राजभ्य इत्यत्रापि "सुपि च" ७।३।१०२ इति दीर्घत्वे "बहुवचने झल्येत्()" ७।३।१०३ इत्येत्वे च कत्र्तव्ये नैवासिद्धत्वं प्राप्नोति; यस्मादिह सुपि परतो दीर्घत्वस्यैत्वस्य च विधानम्(), त्वसतः सुपः। इतर()स्मस्तु पक्षे स्वरसंज्ञातुकामसतामेव विधानेन लोपस्यासिद्धत्वमिष्यते, एतच्च न सिध्यति; कर्मसाधने हि विधिशब्दे तैः सम्बाध्यमाने सतामेव तेषामन्यस्मिन्? कार्ये विधीयमाने सत्यसिद्धत्वेन भवितव्यम्(), न तु तेषामसतां विधानेन ["विधानेन तु"--प्रांउ।पाठः] शक्यते वक्तुम्()--सुपा कर्मसाधनः सम्बध्यते, स्वरादिभिश्च भावसाधन इति। एको ह्यय#ं विधिशब्दः सूत्रोपात्तः, स च भावसाधनो वा स्यात्(), कर्मसाधनो वेति; न तूभयसाधनः, न

ह्येकस्योभयसाधनत्वमुपपद्यत इति? --एतच्चोद्यमपाकर्त्तमाह--"विधिशब्दोऽयम्()" इत्यादि। यद्येव विधिशब्दः सुप्स्वरादिभिः समुदायेन सम्बध्यते, तदा स्यादयं दोषः। न च समुदायेन सम्बध्यते, किं तर्हि? सुबादिभिः प्रत्येकम्। प्रत्येकञ्चास्मिन्? सम्बध्यमाने यावद्भिः सहायं सम्बध्यते तावन्त्येव स्वरादिदिधौ मलोपोऽसिद्धो भवतीत्येवमादीनि वाक्यानि भवन्ति। नलोपः सुप्स्वरसंज्ञातुग्विधिष्वेतद्ग्रहणकवाक्यं तेषामेव। निबन्धनम्()। तेषु च भिन्नेषु वाक्येषु विधिशब्दोऽपि भिन्न एव। तत्र कश्चिद्भावसाधनः, कश्चित्कर्मसाधनः। तत्र स्वरसंज्ञातुकामसतामेव विधाने कर्त्तव्ये नलोपस्यासिद्धत्वमुच्यते, तेन च ते विधीयमानत्वात्? कर्मभावमापद्यन्ते। ततो भावसाधनेन विधिशब्देन कर्मणोऽनभिहितत्वादेषु "कर्त्तृकर्मणो कृति" [२।३।६५](http://sanskritdocuments.org) इति षष्ठ()आ भवितव्यम्()। तेन तैः कर्मषष्ठीयुक्तैर्भावसाधनोऽभिसम्बध्यते, सुपा च सम्बन्धसामान्यवचनषष्ठ()न्तेन। "कर्मसाधनः" इति। सुपो विधीयमानेन कार्येण सम्बन्धमात्रम्()। सम्बन्धसामान्ये षष्ठी तु यत्र "शेषे" २।३।५० इति षष्ठी विधीयते तत्र वेदितव्यम्()। सम्बन्धसामान्यस्य वचनीति षष्ठीसमासः, सा चासौ षष्ठी चेति विशेषणसमासः सम्बन्धसामान्यवचनषष्ठी अन्ते यस्य सुपः स तथोक्तः। कर्मषष्ठीयुक्तेन सुपा कर्मसाधनस्य विधिशब्दस्य सम्बन्धो नोपपद्यते; कर्मषष्ठ()नुपपत्तेः। यदि हि सुप्? कर्म स्यात्? तत्र कर्मणि षष्ठी स्यात्(), न चासौ सुप्? कर्म; सुपो विधीयमानत्वात्()। तत्तु तत्सम्बन्धिकार्यम्()। विधीयमानत्वात्? कर्म तद्विधिशब्देनोक्तम्()। अतस्तत्रापि तावत्? कर्मषष्ठो न सम्भवति, किं पुनरकर्मणि सुपि! ["सुप्()"--कांउ।पाठः] "तेन" इत्यादि। यस्मात्? सम्बन्धमात्राभिधायिनी या षष्ठी तदन्तेन सुपा कर्मसाधनो विधिशब्दः सम्बध्यते, तेन हेतुना सुपः स्थाने यो विधिर्भिस ऐस्भावः, सुपि परतः यो विधिर्दीर्घत्वादिर्यस्य सुब्निमित्तं सर्वोऽसौ सुप्सम्बन्धी भवतीति सर्वत्राप्यसिद्धत्वं भवति। ननु च "षष्ठी स्थानेयोया" (१।१।४९) इति वचनात्? सम्बन्धविशेषे षष्ठ()आ भवितव्यम्(), न तु सम्बन्धसामान्ये। ततश्च सुप एव स्थाने यत्? कार्यं तत्रैवासिद्धत्वं स्यात्(), नान्यत्र? नैतदस्ति; यत्र ह्यादेशो विधीयते--"अस्तेर्भूः" २।४।५२ इत्येवमादौ तत्रास्याः परिभाषाया व्यापारः, न तु यत्र लक्षणान्तरेण विहितं कार्यं कार्यान्तरार्थ मुपादीयते तत्रापि; अन्यथा "उदीकारस्तस्य ग्रहणं भवति। ननु चेह सुपामादेशो न विधीयते, किं तर्हि? लक्षणान्तरविहितस्यापि सिद्धत्वम्()। तस्मान्नान्न स्थानेयोगपरिभाषाया १।१।४८ व्यापारः। "राजवती" इत्यादि। राजशब्दाद्()मतुप्(), "उगितश्च" ५।१।६ इति ङीपि कृते अन्तोऽबत्या" ६।१।२१४ इत्यन्तोदात्तत्वं प्राप्नोति। नलोपस्यासिद्धतवान्नायमवतीशब्द इति न भवति। तस्मिन्नसति "कनिन्युवृवितक्षिराजिधन्विद्युप्रतिदिवः" (द।उ।६।५१) इति राजशब्दस्य कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वात्? राजवतीशब्द आद्युदात्त एव भवति। "पञ्चार्भम्(), दशार्मम्()" इति। "दिक्संख्ये संज्ञायाम्()" २।१।४९ इति मासः। अत्र नलोपे कृतेऽवर्णान्तं पूर्वपद जातमिति "अर्भे चावर्णम्()" ६।२।९० इत्यादिना सूत्रेण तस्याद्युदात्तत्वं प्राप्नोति, असिद्धत्वान्न भवति, समासान्तोदात्तत्वमेव ६।१।२१७ भवति। "पञ्चदण्डि" [पञ्चदण्डी--काशिका] इति। पञ्चानां दणाडिनां समाहार इति "तद्धितार्थ" २।१।५० इत्यादिना समासः, समाहाहे द्विगुः, "स नपुंसकम्()" २।४।१७ इति नपुंसकत्वम्()। नलोपे कृत इगन्तता जातेति "इगन्तकालकपालभगालशरावेषु द्विगौ" ६।२।२९ इति पूर्वपदस्य प्रकृतिस्वरः प्राप्नोति, नलोपस्यासिद्धत्वान्न भवकति, समासान्तोदात्तत्वमेव ६।१।२१७ भवति। "तदेतत्()" इत्यादि। इह केषाञ्चिदेकयैव संज्ञयाऽनेकसंज्ञाकार्यं क्रियते--"यावन्ति संज्ञाकार्याणि तत्रैकैव संज्ञा प्रवर्त्तते" इति। दर्शनम्()। अन्येषां तु "यथा संज्ञयैककार्यं क्रियते तयैवान्यम्(), अतो यावन्ति संज्ञाकार्याणि तावस्य एव संज्ञाः प्रवर्त्तन्ते इति दर्शनम्()। तत्र पूर्वस्मिन्? दर्शने नेदं प्रयोजनम्(); ययैव हि पाक्प्रवृत्त्या संज्ञया "षड्भ्यो लुक्()" ७।१।२२ इति जश्शसोर्लुक्कार्यं कृतं तयैव हि टाप्प्रतिषेधो भविष्यति। तस्मादितरस्मिन्? दर्शने तत्? प्रयोजनं भवति। अत्रापि कथमेतत्? प्रयोजनं भवति? इत्याह--"या हि" इत्यादि। हिशब्दो यस्मादर्थे। इतिकरणस्तस्मादर्ते। यस्माज्जश्शसोर्लुगर्था या षट्संज्ञा प्रवृत्ता तया स्त्रीप्रत्ययप्रतिषेधो न भवति, तस्मात्? पुनः सा प्रवर्त्तयितव्या। यस्मात्? सा प्रवर्त्तयितव्या तस्मादेतत्? प्रयोजनमित्यर्थः। "वृत्रहाभ्याम्(), वृत्रहभिः" इति। वृत्रं हतवानिति "ब्राह्मभ्रूणवृत्रेषु क्विप"

(३।२।८७) तदन्तात्? भ्याम्भिसौ, ततर नलोपे कृते "ह्रस्वस्य पिति कृति तुक्()" ६।१।६९ स्यात्(), असिद्धत्वान्न भवति। "अत्र केचित्()" इत्यादि। सन्निपातः=आनन्तर्यम्(), तल्लक्षणं निमित्तं यस्य न तथोक्तः। सुपः सन्निपातेन नलोपः। स यदि तुकं प्रवत्र्तयेत्? तत्? सन्निपातं विहन्यात्()। अनिमित्तञ्च "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्या।पा।१२) इति। तस्मान्नलोपस्तुकं न प्रवत्र्तयतीति तुग्ग्रहणमनर्थकम्()। ननु च तुकः पूर्वान्तत्वात्? तुक्? प्रातपदिकग्रहणेनैव गुह्र्ते, तत्? कुतस्तस्य सन्निपातस्य विघातः, न हि स्वावयवेनैव स्वस्य व्यवधानमुपपद्यते? नैतदस्ति; ह्रस्वो ह्रागमी तुकः, न तदन्तः समुदायः, तत्कुतस्तस्य प्रातिपदिकग्रहणेन ग्रहणम्()? बहिरङ्गलक्षणेन वासिद्धत्वात्? तुकं प्रति नलोपस्य, तुग्विधिग्रहणमनर्थकम्()। पदस्य बाह्वविभक्तिप्रत्ययमाश्रित्य नलोपो विधीयत इति तस्य बहिरङ्गत्वम्(), अन्तर्वर्तिनं पदमाश्रित्य वर्णस्य तुग्विधीयत इति तस्यान्तरङ्गत्वमिति--"असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इति। यद्येवम्(), युक्तमेवेति प्रतिपन्ना#ः, तत्किमर्थं तुग्ग्रहणं क्रियते? इत्यत आह--"तत्? क्रियते" इत्यादि। अनित्यत्वज्ञापने तु सन्निपातलक्षणपरिभाषायाः प्रयोजनम्()--"वृक्षाय" इत्यत्र "सुपि च" ७।३।१०२ इति दीर्घत्वसिद्धिः। अकारान्ततासन्निपाते हि ङेर्यो ७।१।१३ विधीयत इति; तन्निमित्तत्वादिति दीर्घत्वनिमित्तभावोपगमनद्वारेण तद्विघातं न कुर्यात्()। अनित्यत्वात्? करोति। अन्यच्चात्र प्रयोजनमुत्तरत्रैव वक्ष्यते। बहिरङ्गलक्षणपरिभाषया सुप्यनित्वस्य ज्ञापने--एषा, द्वे इतयत्र टाप्सिद्धिः। अत्र हि त्यादद्यत्वस्य विभक्त्याश्रयत्वाद्बहिरङ्गत्वम्(), प्रातिपदिकाश्रयत्वाट्टाबन्तरङ्गः। तत्र टाप कत्र्तव्ये त्यदाद्यत्वस्यासिद्धत्वं स्यात्, ततष्टाप्? न सिद्ध्येत्()। अनित्यत्वात्तु सिध्यति। प्रतिदीब्नेत्यत्र "हलि च" ८।२।७७ इति दीर्घत्वसिद्धिः प्रयोजनम्()। असति तस्यानित्यत्वे "हलि च" इति दीर्घत्वे कत्र्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्? हलि परतो वकारान्तो धातुर्न भवतीति दीर्घत्वं न स्यात्()। अनित्यत्वात्तु सिद्ध्यति। "राजीयति" इति। "सुप आत्मनः क्यच्()" ३।१।८ इति क्यच्(), "क्यचि च" ७।४।३३ इतीत्त्वम्()। "राजायते" इति। "कर्त्तुः क्यङ सलोपश्च" ३।१।११ इति क्यङ् "अकृत्सार्वधातुकयोः" ७।४।२५ इति दीर्घः। "राजश्यः" इति। "अकः सवर्णो दीर्घः" ६।१।९७॥

बाल-मनोरमा

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति , ८।२।२

नच नलोपस्याऽसिद्धत्वादिह दीर्घ ऐस् एत्वं च नेति वाच्यं, नलोपविषये "पूर्वत्राऽसिद्ध"मित्यस्य प्रवृत्तौ राजा()आओ दण्ड()श्च इत्यादावपि नलोपस्याऽसिद्धत्वात्सवर्णदीर्घ यणाद्यनापत्तेरित्यत आह--नलोपः सुप्। नस्य लोपो नलोपः। विधिशब्दो भावसाधनः, विधानं विधिः। सुप्च स्वरश्च संज्ञा च तुक्च तेषां विधय इति सम्बन्धसामान्यषष्ठ()आ समासः। "कृती"ति तु तुकैव सम्बध्यते, अन्यत्राऽसम्भवात्तदाह--सुब्विधावित्यादिना। सुपो विधिः सुब्विधिः। सम्बन्धसामान्यं विवक्षितम्। सुबाश्रयविधाविति यावत्। स्वरस्य विधिः। कर्मणः शेषत्वविवक्षया षष्ठी। स्वरे विधेये इति यावत्। एवं संज्ञाविधावित्यपि कर्मणः शेषत्वविवक्षया षष्ठी। संज्ञायां विधेयायामिति यावत्। कृति परतो यस्तुक् तस्य विधिः कृतितुग्विधिः। इहापि कर्मणः शेषत्वविवक्षया षष्ठी। कृति परे यस्तुक्। तस्मिन् विधेये इति यावत्। "पूर्वत्रासिद्ध"मित्येव सिद्धेऽन्यनिवृत्तिफलकनियमार्थमेतदित्याह--नान्यत्रेति। "अन्यत्र"त्येतदुदाह्मत्य दर्शयति-राजा()आ इत्यादाविति। आदिना दण्डय()आ इत्यादिसङ्ग्रहः। अत्र सवर्णदीर्घयणादिविधीनां सुब्विध्यटाद्यनन्तर्भावात्तेषु कर्तव्येषु नलोपस्याऽसिद्धत्वाऽभावे सति नकारलोपस्य सत्त्वात्सवर्णदीर्घादिकं निर्बाधमिति भावः। प्रकृते-राजाभ्यां राजभ्य इत्यत्र दीर्घादिन भवत्येवेत्याह--इत्यसिद्धत्वादिति। सुपि परतो दीर्घविधिः, भिसः ऐस्विधिः, भ्यसि एत्वविधिश्च सुबाश्रयविधय इति तेषु कर्तव्येषु परिसङ्ख्याविधिलभ्याऽसिद्धत्वनिषेधाऽभावे सति "पूर्वत्रासिद्ध"मिति नलोपस्याऽसिद्धत्वान्नदीर्घादिकमित्यर्थः। वस्तुतस्त्वन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव नियमविधित्वम्। अत एव "पञ्च पञ्चनखा भक्ष्याः" इत्यत्र पञ्चानां पञ्चनखप्राणिनां भक्षणनियमे तदितरेषां पञ्चनखानां भक्षणप्रतिषेधो

गम्यते इति पस्पशाह्निकभाष्ये प्रपञ्चितम्। तदाह-इत्यसिद्धत्वादिति। ननु दण्डिष्वित्यत्र नलोपे कृत इणः परत्वात्सस्य षत्वमिति स्थितिः। तत्र षत्वविधेः सुबाश्रयविधित्वात्तत्र कर्तव्ये नलोपस्याऽसिद्धत्वात्कथं षत्वमिति चेत्, मैवं--न हि षत्वविधि सुब्विधिः। सुप्त्वं तद्व्याप्यधर्मं वा पुरस्कृत्य प्रवर्तमानो विधिर्हि सुब्विधिरिह विवक्षितः। नच षत्वविधिस्तथा। अतस्तत्र नलोपस्य सिद्धत्वमस्त्येवेति षत्वं निर्बाधम्। अस्तु वा षत्वविधिरपि सुब्बिधिस्तथापि तस्मिन् कर्तव्ये नलोपस्याऽसिद्धत्वं न भवत्येव। तदसिद्धत्वंहि किं "पूर्वत्रासिद्ध"मित्यनेनापाद्यते, उत "नलोपः सुप्स्वरे"त्यनेनैव?। न तावदाद्यः, नलोपविधेः षत्वविध्यपेक्षया पूर्वत्वेन तस्य षत्वे कर्तव्येऽसिद्धत्वाऽसंभवात्। न द्वितीयः, "नलोपः सुप्स्वरे"त्यनेन हि "राजभ्या"मित्यादौ नलोपस्याऽसिद्धत्वमपूर्वं न विधीयते, किंतु "पूर्वत्रासिद्ध"मित्यनेन प्राप्तमेव नियमार्थं पुनर्विधीयते "राजा()आ" इत्यादौ सुप्स्वरसंज्ञातुग्बिधिभिन्नसवर्णदीर्घादिविधिसिद्धये। दण्डिष्वित्यत्र तु नलोपस्याऽसिद्धत्वं "पूर्वत्रासिद्ध"मित्यनेन प्राप्तं न भवतीति तस्य "नलोपः सुप्स्वरे"ति सूत्रविषयत्वं न सम्भवति। अन्यथा सुब्विधावित्यनेन दण्डिष्वित्यादौ षत्वे कर्तव्ये नलोपाऽसिद्धत्वमपूर्वं विधीयेत। राजभ्या"मित्यादौ तु दीर्घादौ कर्तव्ये सिद्धमेव नियमार्थं विधीयत इति विधिवैरूप्यमापद्येत, तस्माद्दण्डिष्वित्यादौ षत्वे कर्तव्ये नलोपस्याऽसिद्धत्वाऽभावान्नलोपस्य सत्त्वादिणः परत्वाऽनपायात्षत्वं निर्बाधमिति शब्देन्दुशेखरे प्रपञ्चितम्। प्रकृतमनुसरामः। स्वरविधौ यथा-पञ्चार्मम्। अत्र नलोपस्याऽसिद्धत्वादकारान्तत्वाऽभावात् "अर्मेचावर्णं द्व्यच्त्र्य"जिति पूर्वपदाद्युदात्तत्वं न भवति। संज्ञाविधौ यथा-दण्डिदत्तौ दत्तदण्डिनौ। अत्र "द्वन्द्वे धी"ति पूर्वनिपातनियमो न भवति, घिसंज्ञाविधौ नलोपस्याऽसिद्धत्वेन इदन्तत्वविरहात्। कृतितुग्विधौ यथा-वृत्रहभ्याम् वृत्रहभिः। अत्र "ब्राह्मभ्रूणवृत्रेषु क्वि"बिति विहितं क्विपमाश्रित्य "ह्रस्वस्य पिति कृति तुगि"ति न तुक्, नलोपस्याऽसिद्धत्वेन ह्रस्वस्य नकारव्यवहितत्वात्। कृतीति विशेषणाच्छे चे"ति तुग्विधौ नलोपस्य नाऽसिद्धत्वम्। ततश्च वृत्रहच्छत्रम्। इह स्यादेव "छे चे"ति तुक्। भाष्ये तु वृत्रहभ्यामित्यादौ नलोपस्य सत्त्वेऽपि संनिपातपरिभाषया "ह्रस्वस्य पिती"ति तुक् न भविष्यतीति तुग्विधिग्रहणं प्रत्याख्यातम्। "स्वादिषु" इति पदत्वद्वारा भ्याम्()संनिपातमिमित्तको नलोपस्तद्विघातकं न प्रवर्तयतीत्याशयः।

ननु "वृत्रहधन"मित्यत्र तुग्व्यावृत्त्यर्थं तुग्विधिग्रहणमावश्यकं, तत्र नलोपस्यान्तर्वर्तिनीं विभक्तिमाश्रित्य प्रवृत्तं पदत्वमादाय प्रवृत्तस्य नलोपस्य संनिपातनिमित्तकत्वाऽभावादिति चेन्न, तुग्विधिग्रहणप्रत्याख्यानपरभाष्यप्रामाण्येनतादृशसंनिपाताऽनिमित्तकनलोपविषयाणां "वृत्रहझन"मित्यादीनामनिधानकल्पनादित्यास्तां तावत्। राज्ञि-राजनीति। "विभाषा ङिश्योः" इत्यल्लोपविकल्प इति भावः। प्रतिदिवेति। "दिवु क्रीडादौ"। तस्मात् "कनिन्युवृषितक्षी"त्युणादिसूत्रेण कनिन्प्रत्ययः। कनावितौ। इकार उच्चारणार्थः। प्रतिदिवन्शब्दात्सुबुत्पत्तिः। "सर्वनामस्थाने चे"ति दीर्घः। हल्ङ्यादिना सुलोपे "प्रतिदिवा" इति रूपम्। सुटि राजवत्। अस्येति। प्रतिदवन्शब्दस्य शसादावचि अल्लोपोऽन इत्यल्लोपे सतीत्यर्थः।

तत्त्व-बोधिनी

नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ३१३, ८।२।२

नलोपः सुप्स्वर। "पूर्वत्रासिद्ध"मित्यनेनैव नियमार्थोऽयमारम्भ इत्याह--नान्यत्रेत्यादि। तेन "राजा()आ"इत्यादौ सवर्णदीर्घो कर्तव्ये नलोपोऽसिद्धो न भवतीति भावः। सुब्विधिमिदाहरति--आत्वमित्यादिना। सुबाश्रितो विधिः--सुब्विधिः। स्वरविधौ तु "पञ्चार्मम्"। "दिक्सङ्खये संज्ञाया"मिति समासे नलोपे कृते अवर्णान्तं पूर्वपदं जातमिति "अर्मे चाऽवर्णं द्व्यच्त्र्य"जिति पूर्वपदाद्युदात्तत्वं प्राप्तंनलोपस्यादिद्धत्वान्न भवति।थ संज्ञाविधौ "पञ्चेत्यत्र नलोपे कृतेऽपी"त्यादिना स्त्रीप्रत्ययेषु वक्ष्यति। अन्येतु--"दण्डिगुप्तौ""गुप्दण्डिना"वित्यप्युदाहरन्ति। अत्र

नलोपस्याऽसिद्धत्वाद्घिसंज्ञा नास्तीति "द्वन्द्वे घी"ति पूर्वनिपातनियमो न भवतीत्याहुः। कृति तुग्विधाविति किम्? वृत्रहच्छत्रम्। इह स्यादेव "छे चे"ति तुक्। यद्यपि "वृत्रहभ्या"मित्यत्र "असिद्धं बहिरङ्गमन्तरङ्गे"इत्यनेनैव नलोपस्याऽसिद्धत्वं सिध्यति, तथाप्यस्याः परिभाषाया अनित्यत्वज्ञापनार्थं कृति तुग्ग्रहणं, तेन"या""से"त्यादि सिध्यति। अन्यथा विभक्त्यश्रयस्याऽत्वस्य बहिरङ्गत्वेनाऽसिद्धत्वाट्टाब्न स्यात्। एतच्च "नजानन्तर्ये बहिष्ट्वप्रक्लृप्ति"रित्यत्र "यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्य"मिति हरदत्तादिमतेन कैश्चिदुक्तम्। "उत्तरकार्ये अच आनन्तर्य"मिति कैयटमते तु नाऽत्र बहिरङ्गपरिभाषा प्रवर्तते। "या""से"त्यत्र टाप्तु संनिपातपरिभाशषामपि बाधित्वा "न यासयो "रिति निर्देशादेव सिध्यतीति ज्ञेयम्। प्रतिदिवेति। "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः"इति कनिन्।

---

सूत्रम्

काशिका-वृत्तिः

न मु ने ८।२।३

मुभावो नाभावे कर्तव्ये न असिद्धो भवति। किं तर्हि? सिद्ध एव। अमुना। मुभावस्य असिद्धत्वात् घिलक्षणो नाभावो न स्यात्। कृते तु नाभावे मुभावस्य असिद्धत्वात्, सुपि च ७।३।१०२ इति दीर्घत्वं यत् प्राप्नोति, तत् सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति न भवति। अथवा योगद्वयम् इदम् उभयार्थं तन्त्रेण उच्चारितम्। अथ वा ने परतो यत् प्राप्नोति तस्मिन् कर्तव्ये मुभावो न असिद्धः इत्येष एव अत्र सूत्रार्थः। ने तु कर्तव्ये मुभावस्य यत् सिद्धत्वं तदर्थात् सङ्गृहीतम्। तेन अत्र मुभावस्य सिद्धत्वात् नाभावश्च भवति, दीर्घत्वं च न भवति। एकादेशस्वरो ऽन्तरङ्गः सिद्धो वक्तव्यः। किं प्रयोजनम्? अयायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम्। वृक्ष इदम्, प्लक्ष इदम्। अत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः। स एकादेशस्वरो ऽन्तरङ्गः सिद्धो वक्तव्यः। किं प्रयोजनम्? अयायावेकादेशशतृस्वरैकाननुदत्तसर्वानुदात्तार्थम्। वृक्ष इदम्, प्लक्ष इदम्। अत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेकादेशः। स एकादेश उदात्तेन उदात्तः ८।२।५ इत्युदात्तः। तस्य? सिद्धत्वं वक्तव्यम्। आन्तर्यतः अयादेशः उदात्तो यथा स्यात्। आय् कुमार्या इदम्। कथम् इदम् उदाहरणम् यदि उदात्तयणो हल्पूर्वात् ६।१।१६८ इत्युदात्तत्वे कृते विभक्तेः आटश्च ६।१।८७ एकादेशः, तदा भवति इदम् उदाहरणम्। अथ तु कृते एकादेशे उदात्तयणो हल्पूर्वात् ६।१।१६८ इति स्वरः, तदा न एतदस्य प्रयोजनं भवति। आव् वृक्षाविदम्। प्लक्षाविदम्। एकादेशः स्वरः गाङ्गे ऽनूप इति गाङ्गेशब्दे एकारः एकादेश उदात्तेन उदात्तः ८।२।५ इति उदात्तः। तस्य सिद्धत्वात् य पुनः एङः पदान्तादति ६।१।१०५ इति एकादेशः स एकादेश उदात्तेन उदात्तः ८।२।५ इति, अत स्वरितो वा ऽनुदात्ते पदादौ ८।२।६ इत्येतद् भवति। शतृस्वरः तुदती। नुदती। अदुपदेशातिति लसार्वधातुकानुदत्तत्वे कृते एकादेशः, तदुदात्तस्य सिद्धत्वात् शतुरनुमो नद्यजादी ६।१।१६७ अन्तोदात्तातित्येष स्वरो भवति। अनुम इति प्रतिषेधो ज्ञापकः, एकादेशस्वरः शतृस्वरे सिद्धः इति। नहि सनुंकं शत्रन्तं शत्रन्तं किञ्चिदेकादेशस्वरम् अन्तरेण अन्तोदात्तम् अस्ति। एकाननुदात्तः तुदन्ति। लिखन्ति। एकदेशस्वरस्य सिद्धत्वात् तेन अनुदात्तं पदम् एकवर्जम् ६।१।१५२ इति वर्ज्यमानता भवति। सर्वानुदात्तः ब्राह्मणास् तुदन्ति। ब्राह्मणाः लिखन्ति। एकादेशस्वरस्य सिद्धत्वात् कृते तस्मिन् तिङ्ङतिङः ८।१।२७ इति निघातो भवति। अन्तरङ्ग इति वचनाद् बहिरङ्गस्य असिद्धत्वम् एव, पचतीति, प्रपचतीति। संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः। किं प्रयोजनम्? हरिवो मेदिनं त्वा। हरिवः इति मतुबन्तम् एतत्, तत्र छन्दसीरः ८।२।१५ इति वत्वे, संयोगान्तस्य लोपे च कृते, मतुवसो रु मम्बुद्धौ छन्दसि ८।३।१ इति रुत्वम्, तस्य संयोगान्तस्य लोपस्य असिद्धत्वात् हशि च ६।१।११० इति उत्वं न प्राप्नोति। सिज्लोप एकादेशे सिद्धो वक्तव्यः। अलावीत्। अपावीत्। इट ईटि ८।२।२९ इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घत्व भवति। निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्H वक्तव्यः। वृक्णः। वृक्णवान्।

निष्ठादेशस्य सिद्धत्वात् झलि इति षत्वं न भवति। कुत्वं तु प्रति असिद्ध एव इति तद् भवति। स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियते। तत्र च निपातनम् अनेकधा समाश्रीयते। यदा क्षीबेर् निष्ठायाम् इटि कृते इत्शब्दलोपो निपात्यते, तदा क्षीबः इति संज्ञायाम् इत्शब्दलोपस्य असिद्धत्वात् निष्ठा च द्व्यजनात् ६।१।१९९ इत्येष स्वरो न प्राप्नोति, क्षीबेन तरति क्षीबिकः इति द्व्यजलक्षणष्ठन् न प्रप्नोति। यदा तु तकारलोपो निपात्यते, तदा तस्य असिद्धत्वातिडागमः प्राप्नोति। प्लुतविकारस्तुग्विधौ छे सिद्धो वक्तव्यः। अग्ना३इच्छत्रम्। पटा३उच्छत्रम्। प्लुतविकारस्य असिद्धत्वत् छे च ६।१।७१ इति ह्रस्वलक्षणो नित्यस् तुग् न प्राप्नोति। श्चुत्वं धुटि सिद्धं वक्तव्यम्। श्च्युतिर् क्षरणे इत्ययं धातुः सकारादिः पठ्यते, तस्य श्चुत्वस्य असिद्धत्वातट् श्च्योतति, रट् श्च्योतति इति डः सि ढुट् ८।३।२१ इति प्राप्नोति। अटति इति अड्, रटति इति रड्, क्विबन्तो ऽयम्। किमर्थं पुनः सकारादिः पठ्यते? इह मधु श्च्योतति इति मधुश्च्युत्, क्विबन्तः, मधुश्च्युतम् आचष्टे इति णिच्, मधुश्च्ययति, मधुश्च्ययतेः पुनः क्विपि कृते संयोगादित्वात् सलोपः, संयोगान्तत्वाद् यलोपः, चकारस्य कुत्वम्, मधुगिति सिद्धम्। शकारादौ पुनरेतस्मिन् संयोगान्तलोपेन यकारचकारयोः लुप्तयोः शकारस्य षत्वे सति मधुडिति स्यात्। अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वक्तव्ये। बभणतुः। बभणुः। अभ्यासजश्त्वस्यासिद्धत्वातनादेशादेः इति एत्वं प्राप्नोति। छिदेः विचिच्छित्सति, उच्छेः उचिच्छिषति इति अभ्यासादेशस्य असिद्धत्वात् छे च ६।१।७१ इति तुक् न प्राप्नोति। द्विर्वचने परसवर्नवं सिद्धं वक्तव्यम्। सय्यँ य्यँ यन्ता, सव्वँ व्वँ, वत्सरः, यल्लँ ल्लँ, लोकम्, तल्लँ ल्लँ लोकम् इति परसवर्णस्यासिद्धत्वाद् यरः इति द्विर्वचनं न स्यात्। पदाधिकारश्चेल् लत्वघत्वढत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि। लत्वम् गलो हलः, गरो गरः। घत्वम् द्रोग्धा द्रोग्धा। ढत्वम् द्रोढा द्रोढा। नत्वम् नुन्नो नुन्नः, नुत्तो नुत्तः। रुत्वम् अभिनो ऽभिनः, अभिनदभिनत्। षत्वम् मातुःष्वसा मातुःष्वसा, मातुःस्वसा मतुःस्वसा। पितुःष्वसा पितुःष्वसा, पितुःस्वसा पितुःस्वसा। णत्वम् माषवापाणि माषवापाणि, माषवापानि माशवापानि। अनुनासिकम् वाङ्नयनं बाङ्नयनम्, वाग्नयनं वाग्नयनम्। छत्वम् वक्च्छयनं वाक्च्छयनम्, वाक्शयनं वाक्शयनम्। लत्वादीनां विकल्पितानाम् असिद्धत्वात् कृते द्विर्वचने सत्युपरिष्टद् विकल्पे सिति गरो गलः, गलो गरः इत्येवं रूपम् अपि द्विरुक्तं स्यात्। तदेतत् सर्वं न मु ने इति योगविभागेन साध्यते। न इत्येतावदनिष्टे विषये पूर्वत्र असिद्धस्य प्रतिषेधार्थम्। ततो मु ने इति। नेत्येतदनुवर्तते।

लघु-सिद्धान्त-कौमुदी

न मु ने ३६०, ८।२।३

नाभावे कर्तव्ये कृते च मुभावो नासिद्धः। अमुना। अमूभ्याम् ३। अमीभिः। अमुष्मै। अमीभ्यः २। अमुष्मात्। अमुष्य। अमुयोः २। अमीषाम्। अमुष्मिन्। अमीषु॥

लघु-सिद्धान्त-कौमुदी

इति हलन्त पुंल्लिङ्गाः ३६०, ८।२।३

लघु-सिद्धान्त-कौमुदी

अथ हलन्तस्त्रीलिङ्गाः ३६०, ८।२।३

न्यासः

न मु ने। , ८।२।३

"मु" इत्यविभक्तिकोऽयं निर्देशः। "अमुना" इति। अदसस्त्यदाद्यत्वम्(), "अदसोऽदेर्दादु दो मः" ८।२।८० इत्युत्वमत्वे, "अच्च घेः" ७।३।११८ इत्यतः "घेः" इत्यनुवत्र्तमान "आङो नास्त्रियाम्()" ७।३।११९ इति नाभावः। यदि मुभावो नाभावे कत्र्तव्ये नासिद्धो भवति--इत्येव सूत्रार्थः स्यात्(), एवं सति नाभावे कृते यत्? कार्यं प्राप्नोति तत्र तस्यासिद्धत्वं न

स्यात्(), ततश्चामुनेत्यत्राकारान्तस्याङ्गस्य "सुपि च" (७।३।१०२) इति विधीयमानं दीर्घत्वं प्रसज्येत? इत्यत आह--"कृते तु नाभावे" इत्यादि। ह्रस्वसन्निपातेन हि नाभावो ह्रस्वस्य विघातं प्रति निमित्तं न भवतीति सत्यप्यसिद्धत्वे न भवति दीर्घत्वप्रसङ्गः। "अथ वा" इत्यादि। यथैकेन हि क इतो धावतीति पृष्टोऽपरेणापि किंवर्णो धावतीति प्रश्ने कश्चिन्निपुणमतिस्तन्त्रेण वाक्यद्वयमुत्तरयति--()ओतो धावतीति, तथेहापि योगद्वयमेतत्? तन्त्रेणोच्चरितम्()। तत्र द्वितीयस्य योगस्य न परतो यत्? प्राप्नोति तस्मिन्? कत्र्तव्यं मुभावो नासिद्ध इत्येव सूत्रार्थः। तेन दीर्घत्वं न भविष्यति। एकस्मिन्नेव योगे दीर्घत्वप्राप्तिमपाकर्त्तुमाह--"अथ वा" इत्यादि। ननु चास्मिन्? सूत्रार्थे ने कत्व्र्ये मुभावस्य यत्? सिद्धत्वं तत्? सूत्रेण संगृहीतं स्यात्(), ततश्च नाभाव एव तावन्न प्राप्नोति, कुतः पुनस्तस्मिन्? परतो यत्? प्राप्नोति तस्मिन्? कत्र्तव्ये मुभावस्यासिद्धत्वम्()? इत्याह--"ने तु कत्र्तव्ये" इत्यादि। यथा पुत्रा मे बहुक्षीरघृतमोदनं सुवर्णापात्र्यां भुञ्जोरन्निति वरं प्रार्थयमानया वृद्धकुमार्या अर्थतः पतिः पुत्रा गावो धनं संगृहीतम्(), एवमिहापि ने परतो यत्? कार्यं प्राप्नोति तस्मिन्? कत्र्तव्ये मुभावस्य सिद्धत्वं ब्राउवता ने कत्र्तव्ये मुभावस्यासिद्धत्वं नाश्रितम्()। "तेन" इत्यष्दि। यस्मादेव एव वाक्यार्थः--ने कत्र्तव्ये मुभावस्य यत्? सिद्धत्वं तदर्थतो गृहीतम्(), तेन हेतुना नाभावश्च भवति, दीर्घत्वञ्च न भवतीति। "एकदेश" इति। "प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोः" इति। वृक्षशब्दः प्रातिपदिकस्वरेणान्तोदात्त इति तस्यान्तो योऽकारः स उदात्तः। सप्तम्येकवचनम्(), "अनुदात्तौ सुप्पितौ" ३।१।४ इत्यनुदात्तम्(), तयोः "आद्गुणः" (६।१।८७) इत्येकादेश आन्तरतम्यात्? स्वरिते प्राप्ते "एकादेश उदात्तेनोदात्तः" असिद्धत्वे हि सति तस्य स एकादेशः स्वरित एवायादेशे कत्र्तव्ये स्यादिति तस्य स्थानेऽयादेश आन्तर्यतः स्वरित एव प्रसज्येत। अन्तरङ्गत्वं पुनरेकादेशस्यान्तरश्रितत्वात्()। आद्गुणो ह्रवान्तरङ्गः; एकपदाश्रितत्वात्()। अयादेशस्तु बहिरङ्गः; तद्विपर्वयात्()। "कुमार्या इदम्()" इति। कुमारशब्दो वृक्षशब्दवदन्तोदात्तः। तस्मात्? "वयसि प्रथमे" ४।१।२० इति ङीप्(), "यस्येति च" ६।४।१४८ इत्यकारलोपः, "अनुदात्तस्य च य्रोदात्तलोपः" ६।१।१७५ इतीकारस्योदात्तत्वम्(), चतुर्थ्येकवचनम्(); कुमारी+ए इति स्थिते "आण्()नद्याः" (७।३।११२) इत्याट्? यणादेशः ६।१।७४, "उदात्तयणो हल्पूर्वात्()" ६।१।१६८ इति विभक्तेरुदात्तत्वम्()। तच्च "आदेः परस्य" १।१।५३ इति विभक्तिभक्तस्याट एव भवति, "आटश्च" ६।१।८७ इति वृद्धिरेकादेशः। स च पूर्ववत्? स्वरिते प्राप्ते "एकादेश उदात्तेनोदात्तः" ८।२।५ इत्युदात्तः क्रियते। तस्य सिद्धत्वं वक्तव्यम्()--कुमार्या इदमित्यत्रायादेश उदात्ते यथा स्यात्(), अन्यथा हि पूर्ववत्? स्वरितः [वास्ति--कांउ।पुस्तके] स्यातद्()। "यदि" इत्यादि। यदि पूर्वमुदात्तत्वं क्रियते, पश्चादेकादेशः, यथादर्शितमनन्तरायां रूपसिद्धावेवायादेश कत्र्तव्ये सिद्धो भवतीति युज्यत इदमुदाहरणम्()। "अथ तु" इत्यादि। कुमारी+ए इति स्थित आट्(), यणादेशः। "तत्रैकादेशे "उदात्तयणो हल्पूर्वात्()" ६।१।१६८ इति विभक्तिस्वरः" इति। यदि कृत एकादेशे विभक्तिस्वरः क्रियते तदा नैतदस्योपसंख्यानस्य प्रयोजनम्()। अस्यां हि रूपसिद्धावेकादेशस्य यदुदात्तत्वं तस्यायादेशे कत्र्तव्ये सिद्धत्वादनेन प्रकारेणोपसंख्यानस्येदं प्रयोजनं न भवतीत्याचष्टे। युक्तञ्चैतत्()। तथा हि--अन्तरङ्गवादेकादेशेनैव तावद्भवितव्यम्, पश्चद्विभक्तिस्वरेण। वर्ण ह्राश्रित्यैकादेशो भवतीति तस्यान्तरङ्गत्वम्()। उदात्तत्वं विभक्तेराश्रितत्वात्? पदस्य भवतीति तस्य बहिरङ्गत्वम्()। "वृक्षाविदम्()" इति। वृक्ष इदमित्येतदनुसारेणानुगन्तव्यम्(), एकादेशः पुनरत्र "वृद्धिरेचि" ६।१।८५ इति वृद्धिः। प्रथमयोः पूर्वसर्वदीर्घः ६।१।९८ इत्येतत्त न प्रवत्र्तते; "नादिचि" ६।१।१०० इति दीर्घप्रतिषेधात्()। "गाङ्गेऽनूपः" इति। गङ्गायां जात इत्यणि कृते प्रत्ययस्वरेणान्तोदात्तो गाङ्गशब्दः। अनुगता आपोऽस्मिन्निति बहुव्रीहिः, "ऊदनोर्देशे" ६।३।९७ इत्यूत्त्वम्(), ऋक्पूरब्धूःपथामानक्षे" ५।४।७४ इत्यकारप्रत्यये कृतेऽनूपशब्दोऽपि प्रत्ययस्वरेणान्तोदात्तः, शेषमस्यानुदात्तम्()। "तस्य सिद्धत्वात्()" इति। योऽसावेकारो गाङ्गशब्दे सप्तम्यकवचने परतः "आद्गुणः" ६।१।८४ इत्यनेनाभिनिर्वृत्तः, तस्य सिद्धत्वाद्यः पुनः "एङः पदान्तादति" ६।१।१०५ इत्येकादेशोऽनूपशब्दाकारेण सह सः "एकादेश उदात्तेनोदात्तः" ८।२।५ इति भवति। अतो हेतोः "स्वरितो वानुदात्ते पदादौ" ८।२।६ इति पक्षे स्वरितो भवति। यदि पुनरसिद्धत्वं स्यात्? तदासावेकार उदात्तानुदात्तस्थानित्वादान्तर्यतः स्वरितः

स्यात्()। यः पुनः "एङः पदान्तादति" ६।१।१०५ इत्येकादेशः, स उदात्तनानुदात्तस्य न भवतीति "स्वरितो वानुदात्ते पदादौ" ८।२।६ इति पक्षे स्वरितो न स्यात्(), अपि तु स्वरितानुदात्तयोः स्थाने भवन्नान्तरतम्यान्नियमेन स्वरितः स्यात्()। "शतृस्वरः" इति। शत्राश्रयः स्वर इति शाकपार्थिवादित्वादुत्तरपदलोपो (वा।८३) समासः। "तुदती, नुदती" इति। तुदिनुदिभ्यां (धा।पा।१२८१,१२८२) लट्(); तुदादित्वाच्छः, स च प्रत्ययस्वरेणान्तोदात्तः, लसार्वधातुकस्यानुदात्ते कृते "अतो गुणे" ६।१।९४ पररूपत्वमेकादेशः। स च "एकादेश उदात्तनोदात्तः" ८।२।५; तदुदात्तसय सिद्धत्वात्()। "अन्तोदात्तादुत्तरपदात्()" ६।१।१६३ इत्यन्तोदात्तादित्यनुवत्र्तमाने "शतुरनुमो नद्यजादी" ६।१।१६७ इति शत्रन्तादन्तोदात्तादीकारस्योदात्तत्वं भवति। असिद्धत्वे त्वेकादेशेऽस्योदात्तत्वं न स्यात्(); अन्तोदात्तादित्यधिकारात्? ६।१।१६३। "अनुमः इत्यादिना ज्ञापकमाश्रित्यैतत्प्रयोजनमपाकरोति। कथं पुनरेतज्ज्ञापकम्()? इत्याह--"न हि" इत्यादि। हिशब्दो हेतौ। अनुम इति प्रतिषेधस्यैतत्? प्रयोजनम्()--तुदन्ती, नुदन्तीत्यत्र "आच्छीनद्योर्नुम्()" ७।१।८० इति नुमि कृते सनुम उदात्तत्वं मा भूदिति। यदि च शतृस्वरे, एकादेशस्वरोऽसिद्धः स्यात्(), प्रतिषेधस्य वैयथ्र्यं स्यात्(); यस्मादेकादेशस्वरमन्तरेण नास्ति शतुरन्तोदात्तत्वम्()। अतः प्रतिषेधादवसीयते--सिद्ध एकादेशस्वरः। न हि एकादेशस्वरमन्तरेण शत्रन्तं सनुम्क#ं किञ्चिदन्तोदात्तमस्ति। तस्मादनुम इति प्रतिषेधवचनं ज्ञापकमेव। "तुदन्ति, लिखन्ति" इति। अत्रापि पूर्ववल्लसार्वधातुकानुदात्तत्वे कृत उदात्तत्वे कृत उदात्तानुदात्तयो रेकादेश उदात्तः। "तेन" इति। एकादेशस्वरेण सिद्धेन। "वज्र्यमानता" इति। "अनुदात्तं पदमेकवर्णम्()" ६।१।१५२ इत्येषोऽर्थोऽनेन लक्ष्यते। एकं वर्जयित्वा शेषस्यानुदात्तत्वं भवतीत्यर्थः। यदि पुनरसिद्धत्वं स्यात्? "अनुदात्तं पदेमकवर्जम्()" (६।१।१५८) इत्यस्मिन्? कत्र्तव्ये सत्येकादेशस्वरस्यासिद्धत्वादसत्यां च वज्र्यमानतायां द्वयोरुदात्तयोः श्रवणं प्रसज्येत। ननु चासिद्धवचनमुत्सर्गलक्षणभावार्थमित्युक्तम्(), अस्य च स्थानी स्वरितः; तथा हि "अतो गुणे" ६।१।९४ पररूपत्व इत्यनेनैवान्तयैतो यो विहितः स्वरितस्यस्य स्थाने "एकदेश उदात्तेनोदात्तः" ८।२।५ इत्यनेनोदात्त आदेशो विधीयते, तत्र यद्युदात्तस्यादेशस्यासिद्धत्वात्? तन्निमित्ता वज्र्यमानता न भवति मा भूत्(); यस्त्वस्य स्वरितस्य स्थानी तन्निमित्ता भविष्यति, तत्कथमेतत्? प्रयोजनमुपपद्यते? यथोपपद्यते तथाख्यायते--"एकादेश उदात्तेनोदात्तः" ८।२।५ इत्यत्र चत्वारि दर्शनानि। "आद्गुणः" (६।१।८७) इत्येवमादिभिरुदात्तानुदात्तयोरेकादेश आन्तरतम्यात्? स्वरितगुणयोर्निवृत्तः, तस्य "एकादेश उदात्तेनोदात्तः" ८।२।५ इत्यनेन स्वरितस्य स्थान उदात्तगुण आदेशो विधीयत इत्येकं दर्शनम्()। स्वरितगुणस्यैवाभिनिर्वृत्तस्य गुणान्तरापसिद्वारेण शब्दान्तरं प्रतिपद्यत इति द्वितीयम्()। परिभाषेयमनुदात्तानुदात्तयोरेकादेश उदात्त इति तृतीयम्()। अस्मिन्? दर्शने परिभाषायाः पराङ्गभूतत्वादेकादेशशास्त्रैः सहास्यैकवाक्यता भवति, तत्रायमर्थः सम्पद्यते--आद्गुणो भवति, उदात्तानुदात्तयोस्तु "आद्गुणः" ६।१।८४ भवतीति। चतुर्थं तु दर्शनम्()--उदात्तानुदात्तयीर्य एकादेशः स उदात्तो भवति, न स्वरितगुणयुक्त इति। स्वरितस्यापवादभूतस्तूदात्तत्वमारभ्यते। येन नाप्राप्तिब्यायेनेदं (व्या।प।४९) दर्शनमाश्रित्येवं प्रयोजनमुपन्यस्तम्()। उपपद्यते च तदेतस्मिन्? दल्शने। अत्र हि नाम विधान समकालमेवोदात्तत्वं विधीयते, न तु स्वरितगुणविहितस्य पुनरुदात्तत्वगुण आदेश इति न सम्भवति स्वरितेन स्थानिना वज्र्यमानता; एकादेशस्वरस्य सिद्धत्वात्()। "कृते तस्मिन्? तिङङतिङ इति निघातः" इति। असति तु तस्य सिद्धत्वे पश्चादेकादेशस्वरः स्यात्(), ततश्च मध्योदात्तता प्रसज्येत। "पचति" इति। अत्र तिशब्दे य इकारः स सतिशिष्टत्वादनुदात्तः, इतिशब्दः "निपाता आद्युदात्ताः" (फि।सू।४।८०) इत्याद्युदात्तः; तयोरकः सवर्णदीर्घत्वमेकादेशो द्विपादश्रयत्वाद्वाहिरङ्गः, तस्य बहिरङ्गत्वात् तदाश्रयोऽपि स्वरो बहिरङ्गः, तत इकारस्यासिद्धतवमेव भवति। ततश्च तेन "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इति वज्र्यमानता न भवति। "प्रपचति" इति। अत्रापि बहिरङ्गत्वेनासिद्धत्वात्? तिङि चोदात्तवति" ८।१।७१ इति गतेरनुदात्तत्वं न भवतति "तिङङतिङः ८।१।२८ इति निघात एवात्र भवति। "हरिवो मेदिनम्()" इति। हरिशब्दान्मतुप्(), सुः, नुम्? हल्ङ्यादि६।१।६६ लोपः, संयोगान्तलोपश्च ८।२।२३, तस्मिन्? कृते रुत्वम्(), "हशि च" ६।१।११० इत्यस्योत्वम्(),

"आद्गुणः" ६।१।८४। "संयोगान्तलोपस्यासिद्धत्वात्? हशि चेत्युत्वं न प्राप्नोति" इति। संयोगान्तलोपस्यासिद्धत्वे सति तकारेक इशो मकारस्य व्यवधानात्(), तकारस्याहक्त्वात्()। "अलादीत्()" इति। लुङ्(), च्लेः सिच्(), इट्(), "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्(), सिज्वृद्धिः, "इट ईटि" ८।२।२८ इति सिचो लोपेऽकः सवर्णदीर्घत्वम्()। "वृक्णः, वृक्णवान्()" इति। "ओव्रश्चू छेदने" (धा।पा।१२९२) निष्ठा, ग्रहिज्यादिसूत्रेण ६।१।१६ सम्प्रसारणम्(), "चोः कुः" ८।२।३० इति कुत्वम्(), "ओदितश्च" ८।२।४५ इति नत्वम्(), "अट्कुप्वाङ्()" ८।४।२ इति णत्वम्()। षत्वे चासति "स्कोः संयोगाद्योः" ८।२।२९ इति सलोपः। "कुत्वं प्रत्यासिद्ध एव" इति। षत्वस्वरपरत्ययविधीङ्()विधिग्रहणस्य व्यावर्त्त्यं दर्शयति--"स्वरप्रत्ययविधीडविधिषु क्षीबशब्द उदाह्रियते" इति। कथं पुनस्त्रिषु विधिषु क्षीबशब्द एक एवोदाहरणमुपपद्यते? इत्याह--"तत्र" इत्यादि। "अनुपसर्गात्? फुल्लक्षीव" (८।२।५५) इत्यत्र "क्षीब्? मदे" (धा।पा।३८२) इत्यस्मात्? क्तप्रत्यये परभूते क्षीबशब्दो निपातितः। तत्र चानेकपरकारं निपातनमाश्रितम्()। तत्र क्वचिन्निपातने प्रत्ययविधौ स्वरविधौ च क्षीबशब्द उदाह्रियते, क्वचिदिङ्()विधौ। कथम्()? इत्याह--"यदा" इत्यादि। संज्ञायामित्यादिग्रहणम्(); "संज्ञायामुपमानम्()" ६।१।१९८ इत्यतः संज्ञाग्रहणानुवृत्तेः। "एष स्वरः" इति। आद्युदात्तः। तत्र हि "कर्षात्वतो घञोऽन्त उदात्तः" ६।१।१५३ इत्यतः उदात्तग्रहणमनुवत्र्तते, "ञ्नित्यादिर्नित्यम्()" ६।१।१९१ इत्यत आदिग्रहणञ्च प्राप्नोतीति; इच्छब्दलोपस्यासिद्धत्वे सति क्षीबशब्दस्याद्व्यच्कत्वात्()। न होच्छब्दलोपस्यासिद्धत्वे सति क्षीबशब्दो द्व्यच्को भवति, किं तर्हि? त्र्यच्कः। "क्षीबिकः" इति। "नौद्व्यचष्ठन्()" ४।४।७। "इडागमः प्राप्नोति" इति। तकारलोपस्या सिद्धत्वे सति; आर्धधातुकस्य बलादित्वात्()। "अग्नात्रि [अग्नात्रि इच्छत्रमिति] इच्छत्रम्(), पटात्रि उच्छत्रम्()" इति। अग्निपटुशब्दयोः सम्बुद्धौ ह्रस्वस्य गुणे कृते एङ्? ह्रस्वात्? सम्बद्धेः" ६।१।६७ इति सम्बुद्धिलोपे "एचोऽप्रगृह्रस्यादूराद्धते पूर्वस्यार्धस्यादूत्तरस्येदूत्तौ" ८।२।१०७ इत्येकारौकारयोः पूर्वस्यार्थस्याकारावशः, स च पुनरुत्तरस्य च यथाक्रममिकारोकारौ। "नित्यस्तुग्न प्राप्नोति" इति। नित्यश्चेष्यते; "पदान्ताद्वा" ६।१।७३ इत्यनेन विकल्पेन प्राप्नोति, स चातिष्टः। तस्मात्तुग्विधौ प्लुतविकारः सिद्धो वक्तव्यः। छ इति किम्()? अन्यत्र तुग्विधौ प्लुतविकारस्यासिद्धत्वमेव यथा स्यात्()--खलं पुनाति ब्राह्णकुलमिति। क्विप; "ह्रस्वो नपुंसके प्रातिपदिकस्य" ७।१।२३ इति तस्य लुक्(), "ह्रस्वस्य गुणः ७।३।१०८, पूर्ववत्? प्लुतविकारः। अस्यासिद्धत्वात्? खलपु इत्यत्र "ह्रस्वस्य पिति कृति तुक्()" ६।१।६९ इति तुग्न भवति। "श्चुत्वं धुटि" इत्यादि। अट्श्च्योतति, रट्श्च्योतति" इति। अट रट गतौ" (धा।पा।२९५,२९७) इत्याभ्यां क्विप; सुः, हल्ङ्यादिलोपः ६।१।६६, "झलां जशोऽन्ते ८।२।३९ इति टकारस्य डकारः। तस्मिन्? श्च्योततिशब्दे परतः श्चुत्वस्यासिद्धत्वात्? धुङ्? न प्राप्नोति तस्मात् श्चुत्वं धुट्त्वे कत्र्तव्ये सिद्धं वक्तव्यम्()। किमर्थं पुनरयम्()" इत्यादि। न त्वस्य सकारस्य क्वचित्? क्वचित्? श्रवणमस्तीत्यभिप्रायः। "मधुश्च्यत्()" इति। तत्करोति तदाचष्टे" (वा।२०९) इति भधुश्च्युतमाचष्ट इति णिचि कृते "णाविष्ठवत्? प्रातिपदिकस्य" (वा।८१३) इति। णिलोपः, मधुश्च्यित्? इति स्थिते ण्यब्तात्? पुनरपि क्विप्(), "णेरनिटि" ६।४।५१ इति णिलोपः। श्चुत्वस्यासिद्धत्वात्? "स्फोः संयोगाद्योः" ८।२।२९ इति सकारस्य संयोगाद्यस्य लोपः, ततः सयोगन्तस्य लोपः" ८।२।२३ इति यलोपः, ततः "चोः कुः" ८।२।३० इति कुत्वम्()--मधुगित्येतदिष्टं रूपं भवति। तदर्थं सकारादिः पठ()तेऽयमित्यभिप्रायः स्यादेतत्()। शकारादावप्येतस्मिन्नेतद्रूपं भवत्येव? इत्यत आह--"शकारादौ पुनरेतस्मिन्()" इत्यादि। पूर्वं तावद्यकारस्य संयोगान्तस्य लोपः" ८।२।२३ इति लोपः, लुप्ते यकारे चकारः संयोगान्तो जात इति तस्यापि लोपः, ततः शकारस्य व्रश्चादिसूत्रेण ८।२।३६ षत्वे सति "झलां जशोऽन्ते" ८।२।३९ इति षकारस्य डकारे मधुङित्यपि नित्यं स्यात्()। "बभणतुः, बभणुः" इति। "अण रण भण" (धा।पा।४४४,४४५,४४७) इत्यस्माल्लिट्(), तस्य तावद्()द्विर्वचने "अभ्यासे चर्च" ८।४।५३ इति जश्त्वम्()--बकारः, तस्यासिद्धत्वादनादेशादिरेवायमिति, "अत एक हल्मध्येऽनादेशादेलिटि" ६।४।१२० इत्येत्त्वं प्राप्नोतीति। "विचिच्छित्सति" इति। छिदेः सन्(), द्विरवचनं छिदत्यस्य, "अभ्यासे चर्च" ८।४।५३ इति चर्त्वं चकारः, तस्य सिद्धत्वादभ्यासे परे चिशब्दस्य "छे च" ६।१।७१ इति तुग्न भवति। "उचिच्छिषति" इति। "उछी विवासे"

(दा।पा।२१६), सन्(), अजादेर्द्वितीयस्य (६।१।२) इत्युच्छेरन्तरङ्गत्वात्? तुकि कृते त्छिस्शब्दो द्विरुच्यते, तत्र "खर्पूर्वाः खयः" (वा।८७८) इति छकारः शिष्यते, पूर्ववच्चत्वम्(), तस्य सिद्धत्वादुकारस्य तुग्न भवति। "सयँय्यन्ता, सवँव्वत्सरः" इत्यादि। समित्येतस्य यन्तेत्येतस्मिन्? परतः वत्सरशब्दे च परतः, यल्लोकं तल्लोकमित्यत्रापि यत्तदोर्द्वितीयैकवचनान्तयोर्लोकशब्दे परतो मोऽनुस्वारे ८।३।२३, तस्य "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इति परसवर्णे आन्तर्यतः सानुनासिके ययि कृते तस्यासिद्धत्वात्? "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति वत्र्तमाने "अनचि च" ८।४।४६ इति यरो द्विर्वचनं न प्राप्नोति। ततश्च पक्षे त्रयाणां यकारादीनां द्वित्वं न स्यात्()। "पदाधिकारश्चेत्()" इत्यादि। यदि लत्वादिषु "पदस्य" ८।१।१६ इति नानुवत्र्तते, तदा पदस्य द्विर्वचनमपदस्य द्विर्वचनेन तुल्यत्वाद्()द्विर्वचनस्य् बहिरङ्गत्वम्(), लत्वादीनाञ्चान्तरङ्गत्वम्()। "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इति लत्वादिषु कत्र्तव्येषु द्विवैचनसिद्धत्वात्? ["द्विर्वचनस्यासिद्धम्()"--प्रां३।पाठः। द्विर्वचनेनेति सिद्धत्वात्()--कां३। पाठ]"पूर्वत्रासिद्धम्()" ८।२।१ इत्येतन्न प्रवत्र्तते, ततश्च लत्वादिभिरेव तावद्भवितव्यम्(), तेषु सत्सु पश्चाद्()द्विर्वचनेनेति सिध्यत्येवेष्टम्()। पदाधिकारे सति लत्वादीनामपि बहिरङ्गत्वादसत्या बहिरङ्गपरिभाषया (व्या।प।४२) तेषु सत्सु द्विर्वचनं सिद्धम्()। लत्वादयस्त्वस्मिन्? कत्र्तव्येऽसिद्धाः, पूर्वत्रासिद्धत्वात्? ८।२।१; ततश्च पूर्वं द्विर्वचने कृते पश्चाल्लत्वादिषु विधीयमानेषु परतश्चानिष्टमपि प्रसज्येत। तस्माद्यदि पदाधिकारः ततो लत्वादीनि सिद्धानि वक्तव्यानि। "गलो गलः" इति। "मृ? निगरणे" (धा।पा।१४१०)। "नुन्नः" इति। "मुदविव" ८।२।५६ इत्यादना नकारः, पक्षे तकारश्च। "अभिनोऽफभिनः" ति। भिदेर्लङ्(), सिप्(), श्नम्(), हल्ङ्यादिलोपः, ६।१।६६ "सिपि धातोरुर्व#आ" ८।२।७४, "दश्च" ८।२।७५ इति वा रुत्वं पूर्ववदेव "अतो रोरप्लुदादप्लुते" ६।१।१०९ इत्युत्वम्()। "आद्गुणः" ६।१।८४। "मातृष्ष्वसा, पितृष्षवसा" इति। "मातुःपितृभ्यामन्यतरस्याम्()" ८।३।८५ इति पक्षे षत्वम्()। "माष वापाणि" इति। "वा भावकरणयोः" ८।४।१० इत्यनुवत्र्तमाने "प्रातिपदिकान्तनुम्बिभक्तिषु" ८।४।११ इति पक्षे णत्वम्()। "वाङनयनम" इति। "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति पक्षेऽनुनासिकः। "वाक्छयनम्()" इति। "झयो होऽन्यतरस्याम्()" ८।४।६१ इति वत्र्तमाने "शश्छोटि" ८।४।६२ इति वा छत्वम्()। "लत्वादीनाम्()" इत्यादि। एतेनासिद्धत्वे सति लत्वादीनां यो दोषस्तं दर्शयति। लत्वादीनामसिद्धत्वात्? पूर्वं द्विर्वचने कृते सत्युत्तरत्र काले विकल्पविधित्वादयमर्थः प्रवत्र्तमानो यथा पूर्वत्र वत्र्तते, तथा नियोगातः परत्रापि न प्रवत्र्तत ["प्रवत्र्तेत"--कां३।पाठः] इत्यनियोगो लभ्यते; नियमकारणाभावात्()। ततश्चानिष्टो विकल्पः स्यात्()--पूर्वपरयोरेकत्र प्रवृत्तेः, अपरत्राप्यप्रवृत्तेः। नेषेटोऽनिष्टो विकल्पः। तथा सति गरो गलः, गलो गर इत्येवमाद्यनिष्टमापद्यते। तत्र "न" इत्येतावदनिष्टविषये सूत्रं कत्र्तव्यम्()। किमर्थम्()? अनिष्टविषये पूर्वत्रासिद्धत्वस्य प्रतिषेधार्थम्()। यत्र पूर्वत्रासिद्धत्वस्यानिष्टविषयः। ततः "भु ने" इत्येतद्ध्यत्र वचनेऽनुवत्र्तते। यद्येदम्(), किमर्थमिदम्(), पूर्वसूत्रेणैव सिद्धा प्रतिषेधः? सर्वत्र तत्? सूत्रं नास्तीति ज्ञापनार्थम्()। तेन यत्रासिद्धत्वमिष्यते तत्रैदासौ प्रवत्र्तते। तदन्यत्र विपर्ययस्तु न भवति; योगविभागादस्मिन्? सूत्रे॥

बाल-मनोरमा

न मु ने , ८।२।३

ननु कृतेऽपि प्रथमं मुत्वे नाभावो न संभवति, तस्मिन् कर्तव्ये मुत्वस्याऽसिद्धतया घेः परत्वाऽभावादित्यत आह--नमुने इति। असिद्धमित्यनुवर्तते। म् च उश्चेति समाहारद्वन्द्वः। "ने" इति ना इत्यस्य सप्तम्येकवचनम्। विषयसप्तमी सत्सप्तमी च एषा। तथाच "नाभावे कर्तव्ये कृते चे"ति लभ्यते। तदाह-नाभावे इत्यादिना। प्रकृते च नाभावे कर्तव्ये मुत्वस्याऽसिद्धत्वाभावाद्धेः परत्वान्नाभावो निर्बाधः। यदि तु नाभावे कर्तव्ये मुभावो नासिद्ध इत्येवाश्रीयते, तर्हि प्रकृते नाभावे कृते "सुपि च" इति दीर्घः प्रसज्येत। दीर्घे कर्तव्ये मुत्वस्याऽसिद्धतयाऽकारस्य सत्त्वात्। अतः "कृतेऽपी"त्याश्रितम्। ततश्च प्रकृते नाभावे कृतेऽपि दीर्घे कर्तव्ये मत्वस्याऽसिद्धत्वाभावादकाराऽभावात् न दीर्घ इति

भावः। अमूभ्यामिति। त्यदाद्यत्वे, पररूपे, "सुपि च" इति दीर्घे, दस्य मत्वम्, आकारस्य ऊत्त्वमिति भावः। अमीभिरिति। त्यदाद्यत्वं, पररूपं, "नेदमदसोरकोः" इति ऐस्()निषेधः, "बहुवचने झल्येत्" इत्येत्वम्, "एत ईद्बहुवचने" इति ईत्त्वमत्वे इति भावः। अमुष्मै इति। त्यदाद्यत्वं, पररूपं, ङेः स्मै, उत्त्वमत्वे, षत्वमिति भावः। अमीभ्य इति। त्यदाद्यत्वं, पररूपं "बहुवचने झल्येत्" इत्येत्वम्, ईत्त्वमत्वे इति भावः। अमुष्मादिति। त्यदाद्यत्वं, पररूपं, ङसेः स्मात्, उत्वमत्वे, षत्वमिति भावः। अमुष्येति। त्यदाद्यत्वं, पररूपं, ङसः स्यादेशः, उत्वमत्वे, षत्वमिति भावः। अमुयोरिति ओसि त्यदाद्यत्वं, पररूपम्, "ओसि चे"त्येत्त्वम्, अयादेशः, उत्वमत्वे इति भावः। अमीषामिति। आमि त्यदाद्यत्वं, पररूपं, "ङेः स्मिन्नादेशः, उत्वमत्वे, षत्वमिति भावः। अमीष्विति। सुपि त्यदाद्यत्वं, पररूपम्, एत्त्वम्, ईत्त्वमत्वे, षत्वमिति भावः। इति सान्ताः।

***** इति हलन्ताः पुंलिङ्गाः *****

***** अथ हलन्तस्त्रीलिङ्गप्रकरणम् *****

तत्त्व-बोधिनी
न मु ने ३९१, ८।२।३

न मु ने। "ने"इति विषयसप्तमीत्याह--नभावे कर्तव्य इति। अन्यथा घेः परत्वाऽभावान्नाभावो न स्यादिति भावः। नन्वेवमपि कृते नाभावे "सुपि चे"ति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्याऽसिद्धत्वादत आह--कृते चेति। एतच्च "ने"इत्यस्यावृत्त्यां लभ्यते। एकत्र विषयसप्तम्यपरत्र तु परसप्मीत्याश्रयणात्। वस्तुतस्तु "कृते चे"चि व्याख्यानं व्यर्थं, संनिपातपरिभाषाया "सुपि चे"ति दीर्घस्य सिसमाधेयत्वात्। ननु "अधुना"इति वत् "अमुना"इत्येवोच्यतां किमनेनाऽसिद्धक्वनिषेधेनेति चेत्। अत्राहुः---"न मु ने"इत्युक्तिः "न"इति योगविभागार्था, तेन "रामः""रामेभ्य"इत्यादि सिध्यति। अन्यथा हि रोरसिद्धतयोकारस्येत्संज्ञालोपौ कतं स्याताम्। न चानुनासिकनिर्देशसामर्थादित्संज्ञालोपौ प्रति रुत्वम नासिद्धमिति वाच्यम्, "तरुमूलं" "देवरुही"त्यादौ "हशि चे"त्यस्य व्यावृत्तये "अतो रो"रित्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात्। एवं च स्थानिवत्सूत्रस्यापि प्रवृत्तौ पदत्वाद्विसर्गौ लभ्यते। "पत्र्ययः""परश्चे"त्यादिनिर्देशाश्चेह लिङ्गमिति दिक्। इति हलन्तपुंलिङ्गप्रकरणम्।

---

सूत्रम्
काशिका-वृत्तिः
उदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४

उदात्तयणः स्वरितयणश्च परस्य अनुदात्तस्य स्वरितः आदेशो भवति। उदात्तयणः कुमार्यौ। कुमार्यः। उदात्तनिवृत्तिस्वरेण अयम् ईकारः उदात्तः, तस्य स्थाने यणादेशः स उदात्तयण्, तस्मात् परस्य अनुदात्तस्य स्वरितः आदेशो भवति। स्वरितयणः सकृल्ल्व्याशा। खलप्व्याशा। सकृल्लूः, खलपूः इति कृत्स्वरेण अन्तोदातौ, तयोः रोः सुपि ८।३।१६ इति यणादेशः, स उदात्तयण्, ततः परस्य सप्तम्येकवचनस्य स्वरितत्वम्, तस्य यणादेशः स्वरितयण्, तस्मात् स्वरितयणः परस्य आशाशब्दाकारस्य अनुदात्तस्य स्वरितो भवति। ननु च सप्तम्येकवचनस्य यदुदात्तयणः इति स्वरितत्वम्, तदसिद्धं यणादेशे, तत् कथमयं स्वरितयण् भवति? आश्रयात् सिद्धत्वं भविष्यति। यदि एवम्, उदात्तादनुदात्तस्य स्वरितः ८।४।६५ इत्येतस्य अपि आश्रयात् सिद्धत्वं प्राप्नोति, ततश्च दध्यशा इत्यत्र अपि स्वरितः स्यात्? तस्मादयम् एव यण्स्वरो यणादेशे सिद्धो वक्तव्यः। केचित् तु ब्रुवते, उदात्तात् स्वरितयणो ऽपि परस्य अनुदात्तस्य स्वरितत्वं दृश्यते। तथा च

तैत्तिरीयके शाखान्तरे पठ्यते यास्ते विश्वाः समिधः सन्त्यग्ने इति। अग्ने इत्ययम् अकारः स्वरितः पठ्यते। तथा ब्राह्मणे ऽपि दध्याशयति इत्याकारः स्वरितः पठ्यते इति। यथा तु वार्तिकं भाश्यं च, तथा उदात्तात् स्वरितयणः परस्य अनुदात्तस्य अनेन स्वरितत्वं न भवति इति स्थितम्। तथा च भाष्ये स्वरितयण्ग्रहणम् इदं प्रत्याख्यायते। सकृल्ल्व्याशा इत्येवम् आदौ उदात्तयणः इत्येव स्वरितस्य सिद्धत्वात्। स्वरितयण्व्यवधानम् अव्यवधानम् एव, स्वरिविधौ व्यञ्जनम् अविद्यमानवतिति। तत् तु क्रियते, पूर्वस्मादपि विधौ स्थानिवद्भावात् व्यवधानम् अस्ति, स्वरदीर्घयलोपेषु च लोपाजादेशस्य स्थानिवद्भावः प्रतिषिध्यते इति। उदात्तस्वरितयोः इति किम्? वैदी आशा वैद्याशा। शार्ङ्गरव्याशा। अनुदात्तयणादेशो ऽयम्। अनुदात्तस्य इति किम्? कुमार्यत्र। किशोर्यत्र। अत्र इत्ययम् आद्युदात्तो लित्स्वरेण।

न्यासः

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य। , ८।२।४

"उदात्तयणः, स्वरितयणश्च" इति। उदात्तस्थाने यो यण स उदात्तयण; स्वरितस्थाने यो यण्? स स्वरितयणित्यर्थः। "कुमार्यौ, कुमार्यः" इति। अत्र "अनुदात्तौ सुप्पितौ" ३।१।४ इत्यौजसावनुदात्तौ, तयोरुदात्तयणोः परयोः स्वरितो भवति। "उदात्तनिवृत्तिस्वरेण" इति। उदात्तलोपनिमित्तस्वरः पूर्वमुदात्तस्य लोपो यस्मात्(), स पुनरुदात्तनिवृत्तिस्वरः "अनुदात्तस्य च यत्रोदात्तलोपः" ६।१।१५५ इत्यत्र यो विहिसः स [नास्ति--कांउ। पाठे] वेदितव्यः। "कृत्स्वरेणान्तोदात्तौ" इति। "ल्व्या प्व्या" इति। लूपूभ्यां धातुस्वरेणान्तोदात्ताभ्यां क्विप्(), "उपपदमतिङ्()" २।२।१९ इति समासः। "गतिकारकोपपदात्? कृत्()" ६।२।१३८ इति कृदन्तस्योत्तरपदस्य प्रकृतिभावदिधानादेतौ कृत्स्वरेणान्तोदात्तौ भवतः। "उदात्तयणाअदेशश्च" इति। इहनेन सूत्रेणानुदात्तयोदात्तयणः परस्य स्वरितो विधीयते, स्वरितयणश्च परसय सप्तम्येकवचनस्य पूर्वेण प्रकारेण स्वरितो विधीयत इति दर्शयति। "तस्य यो यण्()" इति। तस्येत्यनेन सप्तम्येकवचनस्य परामर्शः। "आशाशब्दाकारस्यानुदात्तस्य" इति। "आशाया अदिगारव्या चेत्()" (फि।सू।१।१८) इत्याशाशब्द आद्युदात्तः, तेन "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इत्याकारस्यानुदात्तत्वम्()। "ननु च" इत्यादि। सप्तम्येकवचनस्य "उदात्तयणः" इत्येवमनेन सुत्रेण यत्? स्वरितत्वं विहितं तत्? षाष्ठिकयणादेशे कत्र्तव्येऽसिद्धम्(), ततश्च नैवायं स्वरितस्य स्थाने यणादेश इति सकृल्ल्व्याशा खलप्व्यशेत्यत्र स्वरितत्वं न भवतीत्यभिप्रायः। "आश्रयात्()" इत्यादि। आहायम्()--स्वरितयण इति; न क्वचित्? सिद्धः स्वरितः। तत्राश्रयात्? सिद्धत्वं भविष्यति, यथा "अतो रोरप्लुतादप्लुते" इत्यत्र रुत्वस्य। "यद्येवम्()" इत्यादि। एतेनाश्रयात्? सिद्धत्वे समाश्रोयमाणेऽतिप्रसङ्गमुद्भावयति। "दध्याशा" इति। दधिशब्दः "नब्विषयस्यानिसन्तस्य" (फि।सू।२।२६) इत्याद्युदात्तः, शेष स्यानुदात्तत्वम्(), "उदात्तादनुदात्तस्य स्वरितः" ८।४।६५ इति धकारात्परस्येकारस्य स्वरितत्वम्()। तस्याश्रयात्? सिद्धत्वे तत्स्थानिकाद्यण उत्तरस्याशाशब्दाकारस्य स्वरितत्वं स्यात्()। "तस्मात्()" इत्यादि। यत एवमाश्रयात्? सिद्धत्व आश्रीयमाणेऽयमतिप्रसङ्गो भवति; तस्मादयमेव यण्स्वरो योऽनेन सूत्रेण ८।२।४ विधीयते, तस्य यणादेशे कत्र्तव्ये सिद्धत्वं वक्त्व्यम्()। वक्तव्य मित्यस्य व्याख्यानमर्थः। तत्तु पूर्ववदेव योगादिभागमाश्रित्य कत्र्तव्यम्()। "केचित्तु" इत्यादि। यद्येवमित्यादिना योऽतिप्रसङ्गदोष उद्भावितः, तं केषाञ्चिन्मतेन परिहरति। अनिष्टेऽपि विषये प्रवृत्तिरतिप्रसङ्गः। न च "उदात्तादनुदात्तस्य स्वरितः" (८।४।६६) इत्यनेनोदात्तात्? परो यः स्वरितो विधीयते तस्याश्रयात्? सिद्धत्वमानिष्टम्(); यस्मादुदात्तात्? परो यः स्वरितयण्? तत्परस्यानुदात्तस्य स्वरितत्वम्(), ततः स्थानित्वाद्यणः परस्याशाशब्दाकारस्य स्वरितत्वं तैत्तिरीयके शाखान्तरे पठ()ते। तदनुदात्तत्वं पुनरग्निशब्दसयाकारस्य; तस्य प्रातिपदिकस्वरेणान्तोदात्तत्वात्()। "तथा ब्राआह्मणेऽपि इति। [इति-नस्ति--प्रांउ।पाठे] तदेकदेशविशेषो ब्राआह्मणशब्देनेह विवक्षितः। "दध्याशयति" इति। अश्नोतेर्णिजन्तस्य धातुस्वरेण चित्स्वरेण वान्तोदात्तादकारोऽनुदात्तः। तस्य स्वरितयणः परस्य ब्राआह्मे स्वरितत्वं पठ()ते। "यथा तु" इत्यादि। एतेन तमेवातिप्रसङ्घं समर्थयते। वार्तिककारेणोक्तम्()--"आक्षयात्? सिद्धमिति चेदुदात्तात्? स्वरिते दोषः"

इति। अस्यायमर्थः--यद्याश्रयात्? स्वारतस्य सिद्धत्वमुदात्तात्? परो यः स्वरितस्तस्य यो यण्? ततः परस्यानुदात्तस्य स्वरितत्वमिष्टं स्यात्(), तत्र दोषः। तेनानेन सूत्रेण स्वरितत्वं न भवतीति स्थितम्()। अनेन हि वार्त्तिकेन--उदात्तात्? परो यः स्वरितयण्? तस्मात्परस्यानुदात्तस्य स्वरती भवतीत्येषोऽर्थो न प्रतीयते। तस्मादेतच्च न। यथा भाव्यं तथोदात्तस्यानेन स्वरितयणः परस्यानुदात्तस्य स्वरितो न भवतीति सिद्धं भवतीति। "तथा" इत्यादिनानन्तरमेवार्थं द्रढयति। भाष्ये हि "स्वरितग्रहणं न करिष्यते" इत्यादिना यन्थेन स्वरितग्रहणासिद्धत्वे सूत्रे प्रत्याच्याते। एवञ्च तत्प्रत्याल्यानमुपपद्यते, यद्युदात्तात्? स्वरितयणः परस्यानुदात्तस्य स्वरितत्वं नेष्यते; अन्यथा तन्निमित्तस्य स्वरितस्येष्टौ सत्यां प्रत्याख्यानमुपपन्नमेव न स्यात्()। किं ["कि" नास्ति--प्रांउ।पाठः] पुनर्भाष्ये स्वरितयणो ग्रहणं प्रत्याख्यायते, यावता तस्मिन्? प्रत्याख्याते सकुल्ल्व्याशेथ्येवमादावनुदात्तस्य स्वरितो न सिध्यति? इत्यत आह--"सकृल्ल्व्याशेत्येमादौ" इत्यादि। उदात्तयण्? पुनरत्रोकारवकारेको यकारः। ननु च योऽसौ सप्तम्येकवचनस्य स्थाने जायते तेन व्यवधानान्न सिध्यति? इत्यत आह--"स्वरितयण्()" इत्यादि। अत्रैव कारणमाह--"स्वरविधौ" इत्यादि। इतिकरणो हेतौ। यदि स्वरितग्रहणन्तरेणापि सिध्यति, कस्मात्? सूत्रे तद्ग्रहणं क्रियते? इत्यत आह--"तत्तु क्रियते" इत्यादि। "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इत्यस्य हि--पूर्वस्माद्विधौ कत्र्तव्येऽजादेशः स्थानिवद्भवतीत्येषोऽर्थोऽभिमतः। उदात्तयणः परस्यानुदात्तस्य स्वरितविधौ कत्र्तव्य सप्तम्येकवचनस्थाने यो यणादेशस्तस्य स्थानिवद्भावादिकारेण व्यवधानमस्ति; व्यञ्जनस्य स्वरविधावविद्यमानवद्भावात्? (व्या।प।३७)। तेन व्यवधानं सति सकृल्ल्व्याशेत्यत्र "उदात्तयणः" इत्येव न सिध्यतीति स्वरितग्रहणं क्रियते। ननु च "नपदान्तरद्विर्वचन" १।१।५७ इत्यादिना स्वरविधौ प्रतिषिध्यते स्थानिवद्भावः। तत्कुतो व्यवधानम्()? इत्यत आह--"स्वरदीर्घयलोपेषु" इत्यादि। अचो हि लोपादेशस्य स्वरविधौ [अयं भागः कांउद्रिते नास्ति] स्थानिवद्भावः प्रतिषिध्यते। तथा हि तत्रोक्तम्()--"स्वरदीर्घयलोपेषु[अयं भागः कांउद्रिते नास्ति] लोपाजादेशो [लोपादेशो--कांउद्रितपठिः] न स्थानिवद्भवतीति वक्तव्यम्()" (१।१।५८।वा।१) ति। न चात्राचो लोपादेशः, किं तर्हि? यणादेशः तस्मान्नास्ति स्थाविद्भावप्रतिषेधः। "वैद्याशा" इति। विदस्यायत्यमिति "अनृष्यानन्तर्ये ४।१।१०४ इत्यादिना विदादित्वादञ्(), तदन्तात्? "शाङ्गरवाद्यञो ङीन्()" ४।१।७३ इति ङीन्()। अत्र नित्त्वादाद्युदात्तत्वे कृते शेषस्यानुदात्तत्वमिति बैद्याशाशब्देऽचानुदात्तस्थाने यण्(), नोदात्तस्य, नापि स्वरितस्य। "अत्र" इति। "अयमाद्युदात्तो लित्स्वरेण" इति। "सप्तम्यास्त्रल्()" ५।३।१० इति त्रल्प्रत्ययान्तत्वात्()। "हलि लोः" ७।२।११३ इतीद्रूपस्य लोपः॥

---

सूत्रम्

काशिका-वृत्तिः

एकादेश उदात्तेन उदात्तः ८।२।५

उदात्तेन सह अनुदात्तस्य य एकादेशः स उदात्तो भवति। अनुदात्तस्य इति वर्तते। अग्नी। वायू। वृक्षैः। प्लक्षै। उदात्तेन इति किम्? पचन्ति। यजन्ति। लसार्वधातुकानुदात्तत्वे कृते द्वयोरनुदात्तयोः अयम् एकादेशः, पररूपे कर्तव्ये स्वरितस्य असिद्धत्वात्।

न्यासः

एकादेश उदात्तेनोदात्तः। , ८।२।५

"अनुदत्तस्य" इति। उदात्तेन सहानुदात्तस्य यस्मिन्नेकादेशः स उदात्तः स्यात्(), न तु स्वरितः। स्वरिते प्राप्त इदमारभ्यते। उदाहरणेष्वग्निप्रभृतयः प्रातिपदिकस्वरेणान्तोदात्ताः (फि।सू।१।१) विभक्तिस्तु "अनुदात्तौ सुप्पितौ" ३।१।४ इत्यनुदात्ता। "अग्नी, वायू" इति। "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घः। "वृक्षी, प्लक्षौ इति। "वृद्धिरेचि" ६।१।८५ इति वृद्धिः।

"पचन्ति, यजन्ति" इति। "अतो गुणे" ६।१।९४ पररूपत्वम्()। "द्वयोरनुदात्तयोरयमेकादेशः" इति। ननु च "उदात्तादनुदात्तस्य स्वरितः" ८।४।६५ इति शबकारस्य स्वरितत्वे कृते स्वरितानुदात्तयोरयमेकादेशः, तत्कथं द्वयोरनुदात्तयोरिति? एवमाह--"पररूपे कत्र्तव्ये स्वरितस्यासिद्धत्वात्()"॥

---

सूत्रम्

काशिका-वृत्तिः

स्वरितो वा ऽनुदात्ते पदादौ ८।२।६

अनुदात्ते पदादौ उदात्तेन सह य एकादेशः स स्वरितो वा भवति उदात्तो वा। सु उत्थितः सूत्थितः, सूत्थितः। वि ईक्षते वीक्षते, वीक्षते। वसुकः असि वसुको ऽसि, वसुको ऽसि। सूत्थितः इति सुशब्दः सुः पूजायाम् १।४।९३ इति कर्मप्रवचनीयः, तस्य प्रादित्वात् समासे सति अव्ययपूर्वप्रकृतिस्वरत्वेन आद्युदात्तः, शेषम् अनुदात्तम् इति च अनुदात्ते पदादौ एकादेशो भवति। वीक्षते, वसुको ऽसि इत्यत्र अपि तिङ्ङतिङः ८।१।२८ इति निघाते कृते ऽनुदात्ते पदादावेकादेशः। स्वरितग्रहणम् विस्पष्टार्थम्। उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यत एव स्वरितो भविष्यति इति। अनुदात्ते इति किम्? देवदत्तो ऽत्र। पदादौ इति किम्? वृक्षौ। वृक्षाः।

न्यासः

स्वरितो वाऽनुदात्ते पदादौ। , ८।२।६

"सूत्थितः" इति। "कुगतिप्रादयः" २।२।१८ इति समासः। "अत्र सुशब्दः कर्मप्रवचनीयः" इति। अनेन सुशब्दस्य गतित्वमपनयति। गतित्वे हि सति "गतिर्गतौ" ८।१।७० इति निघातः स्यात्(), ततश्चोदात्तेनानुदात्तस्यायमेकादेशो न स्यात्()। "प्रादिसमासे" इत्यादि। सुशब्द आद्युदात्तः। तत्र हि प्रादिसमासे कृते "तत्पुरुषे तुल्यार्थ" ६।२।२ इत्यादिना पूर्वपदप्रकृतिस्वरत्वादाद्यूदात्तत्वं भवति। अतस्तेन प्रकृतिस्वरत्वेन हेतुनायमादेशः, यतोऽकः सवर्णदीर्घत्वमनुदात्ते पदादौ भवति। सुशब्दस्य ह्याद्युदात्तस्य प्रकृतिस्वरत्वे सति शेषस्यानुदात्तभावोपपत्तेः। ननु "प्रादिसमासे ["प्रादिप्रसङ्गे" इति वातिकपाठः] कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः" (वा।९६) इत्युक्तम्(), तत्कथमिह प्रादिसमासः? नैष दोषः; तस्य प्रतिधेधस्यानित्यत्वात्()। अनित्यत्वं तु सुशब्दस्य सुषामादिषु ८।३।९८ प्रयोगाद्विज्ञेयम्()। तस्य हि तत्र "उपसर्गात्सुनोति" (८।३।६५() इत्यादिनैव सिद्धेऽनुपसर्गार्थः पाठः। अनुपसर्गत्वं च सोः "सुः पूजायाम्()" १।४।९३ इति कर्मप्रवचनीयत्वात्()। अथ वा स्वतिभ्यामन्ये ये प्रादयस्तत्रायं प्रतिषेधः। तथा हि तत्र "स्वती पूजायाम्()" (का।२।२।१८) इति पूजायां स्वतिशब्दयोः प्रातिसमास उक्तः पूजायां च तयोः कर्मप्रवचनीयत्वं विवक्षितम्()। "दीक्षते" इति। विशब्दो निपरातस्वरेणाद्युदात्तः। अत्रापि "तिङ्ङतिङः" ८।१।२८ ति निघाते कृत एकादेश इत्यनुदात्ते पदादौ भवतीति सम्बन्धनीयम्()। "वसुकोऽसि" इति। वसुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ततः सुप्रन्ययान्ततत्वात्? कस्य ह्रसिशब्दे परतः "अतो रोरप्लुतादप्युते" ६।१।१०९ इत्युत्वम्(), तस्य स्थानिवद्भावेन सुप्त्वादनुदात्तत्वमम्(), पूर्वेण सह "आद्गुणः" ६।१।८४ स च पूर्वसूत्रे ८।२।५ णान्तोदात्तः। "असि" इति। "तायस्त्योर्लोपः" ७।४।५० इति सकारलोपे कृते लटि सिपि रूपम्()। अत्र "तिङ्ङतिङः" ८।१।२८ इति निघातेनाकारोऽनुदात्तः, तसयाकारेण सह "एङः पदान्तादति" ६।१।१०५ इति परपूर्वत्वम्()। "स्वरितग्रहणम्()" इत्यादि। कथं पुनरसति स्वरितग्रहणे स्वरित आदेशो भवति, पुनः स्वरितग्रहणं विस्पष्टार्थम्(); न पुनः पक्षे स्वरितविधानार्थम्()? इत्यत आह--"उदात्ते हि" इत्यादि। उदात्ते हि विकल्पिते यस्मिन्? पक्षे स न भवति तस्मिन्नुदात्तानुदात्तयोरन्तरतमो यस्तेनैव भवितव्यम्(), स च स्वरित एव। अतोऽन्तरेणापि स्वरितग्रहणं स्वरित एव भविष्यति।

---

सूत्रम्

काशिका-वृत्तिः

नलोपः प्रातिपदिकान्तस्य ८।२।७

पदस्य इति वर्तते। प्रातिपदिकस्य पदस्य यो ऽन्त्यो नकारः तस्य लोपो भवति। राजा। राजभ्याम्। राजभिः। राजता। राजतरः। राजतमः। प्रातिपदिकग्रहणं किम्? अहन्नहिम्। अन्तग्रहणं किम्? राजानौ। राजानः। प्रातिपदिकग्रहणम् असमस्तम् एव सुपां सुलुकिति षष्ठ्या लुका निर्दिष्टम्। अह्नो नलोपप्रतिषेधो वक्तव्यः। अहः। अहोभ्याम्। अहोभिः। रो ऽसुपि ८।२।६९, अहन् ७।२।६८ इति रेफरुत्वयोरसिद्धत्वात् नलोपः प्राप्नोति, सावकाशं तदुभयं सम्बुद्धौ, हे ऽहः, हे दीर्घातो निदाघेति? तत्र समाधिमाहुः। अहनिति रुविधौ यदुपादीयते प्रथमैकवचनान्तम् अकृतनलोपं तदावर्त्यते, तत्र एकया आवृत्त्या तदेवं रूपं नलोपाभावार्थम् अन्वाख्यायते, द्वितीययापि तस्य रुः विधीयते।

लघु-सिद्धान्त-कौमुदी

नलोपः प्रातिपदिकान्तस्य १८०, ८।२।७

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः। सखा॥

न्यासः

नलोपः प्रातिपदिकान्तस्य। , ८।२।७

"प्रातिपदिकस्य" इति, "पदस्य" इति समानाधिकरणे षष्ठ्यौ। "अहन्नहिम्()" इति। हन्तेर्लङ्(), तिप्(), हल्ङ्यादिलोपः" ६।१।६६ अदादित्वाच्छपो लुक्()। "अधातुः" १।२।४५ इति प्रतिषेधादिह प्रातिपदिकत्वं नास्ति। "राजा, राजानौ, राजानः" इति। असर्वनामस्थाने पदसंज्ञाप्रतिषेधादिह १।४।१७ प्रातिपदिकस्यावयवोऽन्तो नकारो भवति। "प्रातिपदिकान्तस्य" इति। षष्ठीतत्पुरुषेऽत्रोत्तरपदप्रधानत्वादस्यैव पदस्य तद्विशेषणं युक्तम्(), न तु गुणभूतस्य। प्रातिपदिकेनान्तशब्देन चात्र नकारो विशेषितः, स च नकारः प्रातिपदिकस्यान्तर्भूतः। "पदस्य" इति। अनिष्टयोरपि व्यधिकरणयोः पदप्रातिपदिकान्()तर्योर्विशेषणविशेष्यभावेन भवितव्यम्()--प्रातिपदिकान्तस्येति, पदस्येति। पदस्य योऽवयवः सोऽपि प्रातिपदिकस्येत्यर्थः। एवञ्च सति क्रियमाणेऽप्यन्तग्रहणे राजानौ, राजान इत्यत्र प्राप्नोत्येव नलोपः, भवति ह्त्रापि पदावयवः प्रातिपदिकस्यान्तो नकारः()--इत्येतच्चोद्यमपाकर्तुमाह--"प्रातिपदिकग्रहणमसमस्तमेव" इति। ततश्च तस्य "पदस्य" इत्येतत्? समानाधिकरणविशेषणं युक्तमेवेत्यभिप्रायः। यदि तह्र्रसमस्तमेव प्रातिपदिकग्रहणं षष्ठ()आश्रयणं प्राप्नोतीत्यभिप्रायः? इत्यत आह--"सुपां सुलक्()" इति। अनेन यत्? षष्ठ()आं लुक्? तेन ल#उका निर्दिष्टं प्रातिप्रार्तिपदिकग्रहणम्(), अतो न भवति षष्ठ्याः प्रसङ्गः। "अहः" इति। "स्वमीर्वपुंसकात्()" ७।१।२३ इति सोर्लुक्(), "रोऽसुपि" ८।२।६९ इति नकारस्य रेफः। प्रत्ययलक्षणेनाह्नः १।१।६१ सुप्परता नास्ति; "लुमता लुप्ते प्रत्ययलक्षणं नास्ति" १।१।६२ इति वचनात्()। "अहोभ्याम्(), अहोभिः" इति। "अहन्()" ८।२।६८ इति रुत्वम्, "हशि च" ६।१।११० इत्युत्वम्(), "आद्गुणः" ६।१।८४। ननु च प्राप्तिपूर्वकः प्रतिषेधो भवति; इह च रेफरुत्वयोः कृतयोर्नलोपस्य प्राप्तिरेव नास्ति, नकाराभावात्? त()त्क प्रतिषेधेन? इत्यत आह--"अहन्()" ८।२।६८ "रोऽसुपि" इति आदिश्येते। तद्रेफो रुत्पञ्च द्वयमप्येतदनवकाशम्(), अतो लोपे न भवति; अन्यथा हि तयोर्विधानमनर्थकं स्यादित्यत आह--"सावकाशम्()" इत्यादि। सम्बुद्धौ हि लोप न; "न ङिसम्बुद्ध्योः" ८।२।८ इति प्रतिषेधात्()। अतस्तत्रोभयमप्येतत्? सावकाशम्()। "हे दीर्घाहो निदाघ" इति। दीर्घाण्यहानि यस्मिन्निदाघ इति बहुव्रीहिः, तत्सम्बुद्धिः, हल्ङ्यादिलोपः ६।१।६६। सत्यपि लोपे प्रत्ययलक्षणेन सुप्परतास्ती ति "रोऽसुपि" ८।२।६९ इत्येतन्न प्रवत्र्तते, "अहन्()" ८।२।६८ इति रुत्वमेव भवति। "अहन्()" इति। "प्रथमैकवचनान्तम्()" इत्यादि। तत्र "अहन्()" (८।२।६८) इति रुत्वविधौ यदुपादीयते तदावत्र्तते--

इत्येतावति वक्तव्ये "अहन्()" इत्यनेन सूत्रेण केवलं रुत्वमादेशो न विधीयते, अपि त्वावृत्तिन्यायादहन्नित्येतच्छब्दरूपमन्वाख्यायते--इत्यत्रोपपत्तिप्रदर्शनार्थम्? "प्रथमैकवचनान्तमकृतनलोपम्()" इत्युक्तम्()। यदि ह्यादेशनात्रमहन्नित्यनेन विधीयते, तदादेशसम्बन्धे षष्ठ()आ भवितव्यमिति षष्ठ्युपादीयेत, न प्रथमा। प्रथमया ह्युपादीयमानं कृतनकारलोपमुपादीयेत, नकारलोपलक्षणस्य भावात्(); न चैव कृतम्(); तस्मात्? प्रथमान्तस्याकृतनकारलोपस्योपादानदवसीयते--अहन्निति रूपस्यान्वाख्यानं क्रियत इति। अन्वाख्यायते--साधुत्वेन प्रतिपाद्यत इत्यर्थः। किमर्थम्()? नलोपाभावार्थम्()। "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इत्यनेन लोपो मा भूदित्येवमर्थम्()॥

बाल-मनोरमा

न लोपः प्रातिपदिकान्तस्य २३४, ८।२।७

न लोपः। "न" इति स्थानषष्ठ()न्तं पृथक्पदम्। आर्षः षष्ट()आ लुक्। नकारस्य लोपः स्यादित्यर्थः। अन्तस्येति नकारस्य विशेषणम्। अत एव च नस्य विशेषणसापेक्षत्वाल्लोपशब्देन समासो न भवति, असामर्थ्यात्। कस्यान्त इत्यपेक्षायां पदस्येत्यधिकृतमवयवष्ठ()न्तमन्वेति - पदस्य योऽयमन्तावयवस्तस्य नकारस्य लोप इति। कीदृशं पदमित्यपेक्षायां प्रातिपदिकेति लुप्तषष्ठ()न्तमन्वेति। प्रातिपदिकसंज्ञकं यत् पदं तस्य योऽयमन्तावयवो नकारस्तस्यः लोपः स्यादिति। अत एव प्रातिपदिकान्तस्येति न समस्तमेकं पदम्। तस्य पदशब्देनान्वितत्वेनाऽन्तशब्देनाऽसामर्थ्यात्। तदाह-नेति प्रातिपदिकेति च लुप्तेति। तदन्तस्येति। तस्य पदस्य अन्तावयवो यो नककारस्तस्येत्यर्थः। प्रातिपदिकग्रहणं किम्?। अहन्। तिङन्तस्य न भवति। पदग्रहणं किम्?। अहन्। तिङन्तस्य न भवति। पदग्रहणं किम्?। राजानौ। ननु नलोपे सति यूषभ्यामित्यत्र "सुपि चे"दीर्घः स्यात्। यूषभिरित्यत्र "अतो भिस ऐ"सिति ऐसादेशः स्यात्। "यूषभ्य" इत्यत्र "बहुवचने झल्ये"दित्येत्वं स्यादित्यत आह-नलोपस्यासिद्धत्वादिति। इत्यादीति। यूष्णे यूष्णः। यूष्णोः यूष्णामिति आदिशब्दार्थः। य#ऊषन्-ङि इति स्तिते अल्लोपोऽन इति नित्येऽल्लोपे प्राप्ते-।

तत्त्व-बोधिनी

न लोपः प्रातिपदिकान्तस्य १९८, ८।२।७

नलोपः प्रातिपदिकान्तस्य। लुप्तषष्ठीके इति। सौत्रत्वात्। न तु षष्ठीतत्पुरुषौ, पूर्वपदे सापेक्षत्वेन समासाऽसंभवात्, प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः। तदन्तस्येति। षष्ठीतत्पुरुषोऽयम्। तस्य-प्रातिपदिकसंज्ञकपदस्याऽन्तो यो नकारस्तस्येत्यर्थः। यतदि तु प्रातिपदिकेनेव"ने"त्यनेनापि पदं विशेष्यते तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्त्तुमिति मनोरमायां स्थितम्। प्रातिपदिकेति किम्?। अहन्। पदमिति किम्?। राजानौ। राजानः।

---

सूत्रम्

काशिका-वृत्तिः

न ङिसम्बुद्ध्योः ८।२।८

ङौ परतः सम्बुद्धौ च नकारलोपो न भवति। आर्द्रे चर्मन्। लोहिते चर्मन्। सुपां लुकिति ङेर्लुक्। सम्बुद्धौ हे राजन्। हे तक्षन्। एतस्मादेव नलोपप्रतिषेधवचनातप्रत्ययः इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा न प्रतिषिध्यते इति ज्ञाप्यते, भसंज्ञा च न भवति इति। तथा च राज्ञः पुरुषः राजपुरुषः इत्यत्र नलोपश्च भवति, अल्लोपश्च न भवति। ङावुत्तरपदे प्रतिषेधस्य प्रतिषेधो वक्तव्यः। चर्मणि तिला अस्य चर्मतिलः। हे राजन् वृन्दारक इत्यत्र समुदायार्थसम्बोधनम्, न पूर्वपदार्थसम्बोधनं प्रतीयते इति सम्बुद्ध्यन्तं पूर्वपदं न एव समस्यते। वा नपुंसकानाम् इति वक्तव्यम्। हे चर्मन्, हे चर्म।

लघु-सिद्धान्त-कौमुदी

न ङिसम्बुद्ध्योः २८३, ८।२।८

नस्य लोपो न ङौ सम्बुद्धौ च। हे राजन्। (ङावुत्तरपदे प्रतिषेधो वक्तव्यः)। ब्रह्मनिष्ठः। राजानौ। राजानः। राज्ञः॥

न्यासः

न ङिसम्बुद्ध्योः।, ८।२।८

"चर्मन्()" इति। "सुपां सुलुक्()" ७।१।३९ इति ङेर्लुक्()। ननु च सुराजन्निति प्रातिपदिकसंज्ञा हि विद्यते, प्रत्ययलक्षणेन १।१।६१ "अप्रत्ययः" १।२।४५ इति न प्रतिषेधात्()। "आद्र्रे चर्मन्()" इति। अत्र तु न केवल प्रातिपदिकसंज्ञा पूर्वोक्तादेव हेतोर्नास्ति; प्रत्ययलक्षणेन प्रवृत्तया भसंज्ञया बाधितत्वात्()। अतो नलोपप्राप्तिर्नास्त्येवेत्यर्थः। कथं प्रतिषेधः? इत्यत आह--"एतस्मादेव" इत्यादि। "भसंज्ञा च न भवति" इति। अत्राप्येतस्मादेव प्रतिषेधवचनात्? प्रत्ययलक्षणेन च ज्ञाप्यत इति सम्बध्यते। "तथा च" इत्यादिना ज्ञापनप्रयोजनं दर्शयति तदेवमेतस्मात्? प्रतिषेधादर्थद्वयं ज्ञाप्यते। एवञ्च कृत्वा--राजपुरुष इत्यत्र प्रातिपदिकसंज्ञायां सत्यां नलोपश्च भवति। भसंज्ञायामसत्यां "अल्लोपोऽनः" ६।४।१३४ इत्यलोपश्च न भवति। न भसंज्ञाभावन्चेत्यस्येह "यथोद्देशं संज्ञापरिभाषम्()" (व्या।प।५९) इत्यस्मिन्? दर्शने प्रयोजनं वेदितव्यम्()। "कार्यकालं हि संज्ञापरिभाषम्()" (व्या।प।५८) इत्यस्मिन्? दर्शने भसंज्ञायामङ्गकार्यं भवतीति "न लुमताङ्गस्य" १।१।६२ इति प्रत्ययलक्षणप्रतिषेधादेव भसंज्ञा न भवतीति नार्थस्तत्र भसंज्ञाया अभावज्ञापनेन। "ङावुत्तरपदे" इत्यादिनायं ङौ परतो नलोपप्रतिषेधस्य प्रतिषेध उक्तः। तस्योत्तरपदे परतो यो ङिस्तत्र प्रतिषेधो वक्तव्यः। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--"स्वरितो दानुदात्तं पदादौ" ८।२।६ इत्यतः "वा" इत्यनुवत्र्तते, सा च व्यवस्थितविभाषा, तेन ङावुत्तरपदे न भविष्यतौति। "चर्मणि तिला अस्य चर्मतिलः" इति। वैयधिकरण्येऽपि गमकत्वात्? समासः। ननु चात्यल्पमिदमुच्यते--ङावुत्तरपदे प्रतिषेधो वक्तव्य [अयं भागः का। मुद्रितपूस्तके नास्ति] इति। सम्बुद्धावपि ह्युत्तरपदे प्रतिषधो [अयं भागः का। मुद्रितपूस्तके नास्ति] वक्तव्य एव; अन्यथा हि हे राजन्? वृन्दारकेति विगृह्य "वृन्दारकनागकुञ्जरैः" (२।१।६२) इति समासे कृते हेराजन्? वृन्दारकेत्यत्र नलोपो न स्यात्()? इत्यत आह--"हे राजन्? वृन्दारकेत्यत्र तु" इत्यादि। समानार्थेन वाक्येन समासेन भवितव्यम्(), एवं हि सामथ्र्यं भवति, नान्यथा। तथा चोक्तम्()--ग्रहणवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्य इति। यश्चेहार्थो हे राजन्? वृन्दारकेति वाक्येन गम्यते, स न ज्ञायते--हे राजवृन्दारकेति समासेन। वाक्येन ह्येकार्थीभावाभावात्? सम्बोधनं गम्यते, समासे तु विपर्ययात्? समुदायार्थः सम्बोधनम्()। तस्माद्राजा चासौ वृन्दारकश्चेत्येवमेव विगृह्य समासः कत्र्तव्यः, ततः सम्बुद्धिः, एवञ्च सम्बुद्ध्यन्तं पूर्वपदम्()। हे राजन्? वृन्दारकेत्यत्र समासो भविष्यत्येव; ततश्चोत्तरपदे परतः सम्बुद्धेरभावान्नलोपप्रतिषेधस्य प्राप्तिरेव नास्तीति नार्थस्ततप्रतिषेधेन। "वा नपुंसकानाम्()" इत्यादि। नपुंसकलिङ्गानां वा नलोपप्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमिति। अत्र व्याख्यानं तु--इहापि वाग्रहणानुवृतिं()त व्यवस्थितविभाषात्वं चाश्रित्य कत्र्तव्यम्()॥

बाल-मनोरमा

न ङिसंबुद्ध्योः, ८।२।८

हे राजन् स् इति स्थिते हल्ङ्यादिना सुलोपे सति नकारस्य पदान्तत्वात्प्रातिपदिकान्तत्वाच्च लोपे प्राप्ते--न ङिसंबुद्ध्योः। "न लोपः प्रातपदिकान्तस्ये"त्यतो "न लोप" इत्यनुवर्तते। तत्र "ने" ति लुप्तषष्ठीकन्तदाह--नस्येत्यादिना। हे राजन्निति। "सर्वनामस्थाने चे"ति दीर्घस्तु न, "असंबुद्धा"वित्युक्तेः। नन्वत्र ङिग्रहणं व्यर्थं, राजनीत्यत्र भत्वात्पदत्वाऽभावान्नलोपस्याऽप्रसक्तेरित्यत आह--ङौ तु छन्दसीति। छन्दस्येवेत्यर्थः। ननु छन्दस्यपि ङौ परतो

भत्वात्पदत्वाऽभावात्कथं नकारस्य लोपप्रसङ्गो येन तन्निषेधोऽर्थवान् स्यादित्यत आह--सुपामिति। ननु "परमे व्योमन्" इत्यादौ ङेर्लुका लुप्तत्वात्प्रत्ययलक्षणाऽभावात्कथं तत्र "न ङिसंबुद्ध्यो"रित्यस्य प्रवृत्तिरित्यत आह--निषेधसामथ्र्यादिति। छन्दस्यपि ङिलुकि प्रत्ययलक्षणाऽभावे सति "न ङिसबुद्ध्यो"रित्यप्रवृत्तौ तद्वैयथ्र्यादिति भावः।

ननु यदि छन्दसि "परमे व्योमन्" इत्यादौ ङेर्लुका लुप्तत्वेऽपि प्रत्ययलक्षणमाश्रित्य "न ङिसंबुद्ध्यो"रित्यस्य प्रवृत्तिरभ्युपगम्यते, तर्हि चर्मणि तिला अस्य चर्मतिलः, ब्राह्मणि निष्ठा अस्य ब्राह्मनिष्ठ इत्यत्रापि समासे ङिलुकः प्रत्ययलक्षणमाश्रित्य "न ङिसंबुद्ध्यो"रिति नकारस्य लोपनिषेधः स्यादित्यत आह--ङावुत्तरपदे इति। उत्तरपदे परतो यो ङिस्तस्मिन् परे "न ङिसंबुद्ध्यो"रिति निषेधस्य प्रतिषेधो वक्तव्य इत्यर्थः। एवं च "चर्मतिलः" इत्यत्र "उत्तरपदे परतो न ङिसंबुद्ध्यो"रिति प्रतिषेधाभावान्नकारस्य लोपो निर्बाध इति भावः। भाष्ये तु छन्दसि "परमे व्योमन्" इत्यत्र "अयस्मयादीनि छन्दसी"ति भत्वात् पदत्वाऽभावान्नकारलोपस्याऽप्रसक्तेर्ङौ प्रतिषेधो न कर्तव्य इति ङिग्रहणं प्रत्याख्यातम्। न च "राजन्यती"त्यत्र लोके राजनीवाचरतीत्यर्थे "अधिकरणाच्चे"ति क्यचि "सनाद्यन्ताः इति धात्ववयवत्वात्सुपो धातुप्रातिपदिकयोरिति ङेर्लुकि "राजन्ये"त्यस्मात्तिपि "राजन्यती"त्यत्राप्यन्तर्वर्तिविभक्त्या पदत्वमाश्रित्य नकारस्य लोपप्राप्तौ तन्निषेधार्थं ङिग्रहणस्यावश्यकत्वात्तत्प्रत्याख्यानभाष्यमनुपपन्नमिति वाच्यम्, एतद्भाष्यप्राम#आण्यादे राजनीवाचरतीत्यर्थे "अधिकारणाच्चे"ति क्यचोऽनभिधानाभ्युपगमादित्यलम्। राजानमित्यादौ सुटि "सर्वनामस्थाने चे"ति दीर्घः। शसि विशेषमाह--अल्लोपोऽन इति। अनेन सूत्रेण जकारादकारस्य लोप इत्यर्थः। राजन् अस् इति स्थिते-। श्चुत्वमिति। ततश्च नकारस्य ञकारे "राज्ञ" इति सिद्धम्। ननु "अचः परस्मिन्" इत्यल्लोपस्य पूर्वस्मादपि विधौ स्थानिवत्त्वात्कथमिह श्चुत्वमित्यत आह--नचाल्लोपः स्थानिवदिति। कुत इत्यत आह--पूर्वत्रेति। "पूर्वत्रासिद्धे" इति श्चुत्वे कर्तव्ये स्थानिवत्त्वनिषेधादित्यर्थः।

नन्वल्लोपो भसंज्ञापेक्षो बहिर्भूतस्वादिप्रत्ययापेक्षो बहिरङ्गः, श्चुत्वं तु श्चुयोगमात्रापेक्षत्वादन्तरङ्गम्। ततश्च "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया श्चुत्वे कर्तव्ये बहिरङ्गस्याऽल्लोपस्याऽसिद्धत्वादकारेण व्यवधानात्कथमिह श्चुत्वमित्यत आह--नापीति। यथोद्देशेति। "यथोद्देशं संज्ञापरिभाष"मित्येकः पक्षः। उद्देशाः=उत्पत्तिप्रदेशाः,ताननतिक्रम्य यथोद्देशम्। यत्र प्रदेशे संज्ञापरिभाषयोरुत्पत्तिस्तत्रैव ते स्थिते प्रतिविधि व्याप्रियेते इत्यर्थः। "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषेयं षष्ठाध्याये "वाह ऊठ" इति सूत्रे ज्ञापितेति तत्रैव भाष्ये स्पष्टम्। ततश्च इयं षाष्ठी परिभाषा त्रैपादिके श्चुत्वे कर्तव्येऽन्तरङ्गे।ञपि न प्रवर्तते,तां प्रति श्चुत्वस्याऽन्तरङ्गस्याऽसिद्धतया तद्दृष्ट()आ श्चुत्वस्यैवाऽभावेन तद्विषये तस्याः परिभाषायाः प्रवृत्त्यसंभवात्। तथा च श्चुत्वे कर्तव्ये बहिरङ्गस्याप्यल्लोपस्याऽसिद्धत्वाऽभावादिह श्चुत्वं निर्बाधमिति भावः। "कार्यकालं संज्ञापरिभाष"मित्यप्यस्ति पक्षान्तरम्। प्रतिविधिप्रदेशं प्राप्य संज्ञापरिभाषे व्याप्रियेते इत्यर्थः। अस्मिन् पक्षे यद्यपि श्चुत्वमन्तरङ्गं पुरस्कृत्य "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषाऽत्र प्रवृत्तिमर्हति, तथापि लक्ष्यानुरोधात्कार्यकालपक्षो नेहाश्रीयत इत्यलम्। जञयोगे तादृशध्वनेर्लोकवेदसिद्धत्वादिति भावः। नत्विदं वर्णान्तरम्, शिक्षादावदर्शनात्। अत "एतज्ज्ञान"मिति श्चुत्वसिद्धिरित्याहुः। राज्ञः राज्ञति। शसादावचि भत्वादल्लोपे नकारस्य श्चुत्वेन ञकार इति बावः। ननु राजन्-भ्यामिति स्थिते "स्वादिषु" इति पदत्वात्कृते नलोपे "सुपि चे"ति दीर्घः प्राप्नोति। तथा राजन्-भिस् इति स्थिते नलोपे, "अतो भिसः" इत्यैस् प्राप्नोति। तथा राजन्-भ्यस् इति स्थिते नलोपे "बहुवचने झल्येत्" इत्येत्त्वं प्राप्नोति।

---

सूत्रम्

काशिका-वृत्तिः

मादुपधायाश् च मतोर् वो ऽयवाऽदिभ्यः ८।२।९

मतोः इह कार्यित्वेन उपादानात् सामर्थ्यलब्धं प्रातिपदिकं तत् मातिति मकारावर्णाभ्यां विशिष्यते। मकारावर्णविशिष्टया च उपधया इत्ययम् अर्थो भवति। मकारान्तात् मकारोपधातवर्णान्तादवर्णोपधात् च उत्तरस्य मतोः वः इत्ययम् आदेशो भवति, यवादिभ्यस् तु परतो न भवति। मकारान्तात् तावत् किंवान्। शंवान्। मकारोपधात् शमीवान्। दाडिमीवान्। अवर्णान्तात् वृक्षवान्। प्लक्षवान्। खट्वावान्। मालावान्। अवर्णोपधात् पयस्वान्। यशस्वान्। भास्वान्। मादुपधायाश्च इति किम्? अग्निमात्। वायुमान्। अयवादिभ्यः इति किम्? यवमान्। दल्मिमान्। ऊर्मिमान्। यव। दल्मि। ऊर्मि। भूमि। कृमि। क्रुञ्चा। वशा। द्राक्षा। एतेषां मादुपधायाश्च। इति प्राप्नोति। ध्रजि, ध्वजि, सञ्जि इत्येतेषां छन्दसीरः ८।२।१५ इति। हरित्, ककुत्, गरुतित्येतेषां झयः ८।२।१० इति। इक्षु, मधु, द्रुम, मण्ड, धूम इत्येतेषां संज्ञायाम् ८।२।११ इति। आकृतिगणश्च यवादिः। अकृतवत्वो मतुब् यवादिषु द्रष्टव्यः। यस्य सति निमित्ते मतुपो वत्वं न दृश्यते स यवादिषु द्रष्टव्यः इह नृमतः इदं नार्मतम् इति बहिरङ्गलक्षणत्वातवर्णोपधस्य मतुपो वत्वं न भवति।

लघु-सिद्धान्त-कौमुदी

मादुपधायाश्च मतोर्वोऽयवादिभ्यः १०६८, ८।२।९

मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः। वेतस्वान्॥

न्यासः

मादुपधायाश्च मतोर्वोऽयवादिभ्यः। , ८।२।९

मकारान्तान्मकारोपधादवर्णान्तादवर्णोपधाच्चोत्तरस्य मतुपो मकारसय "च" इत्ययमादेशो भवतीत्ययमर्थोऽभिमतः। स एव यथा सम्पद्यते, तथा दर्शयितुमाह--"मतोरिह" इत्यादि। अत्र मतुप कार्यित्वेनीपात्तः। स च नास्त्यन्तरेण प्रातिपदिकत्वम्(); तद्विधौ प्रातिपदिकाधिकारात्? ४।१।१। तस्मान्मतुपः पूर्वं सामर्थ्यलभ्यं प्रातिपदिकम्(), तन्मकारावर्णाभ्यां मादिति विशिष्यते--मकारोऽन्तो यस्यं, अवर्णोऽन्तो यस्येति। मकारावर्णविशिष्टा या चोपधेति सामर्थ्यम्()। कथम्()? पूर्वं प्रातिपदिकान्तं विशिष्यते इति सम्बन्धनीयम्()। मकारेण विशेषणेन, अवर्णेन विशेषणेन च विशिष्टा योपधा सा च विशिष्यते--मकार उपधा यस्य, अवर्ण उपधा यस्येति। मकारावर्णविशिष्टस्येति मतुपो विशेषणे "उपधायाश्च" इत्यत्र मा भूदिति? अस्यापेक्षितस्वल्लभ्यत इत्ययमर्थो भवतीति। इतिकरणो हेतौ। यस्मात्? सामर्थ्यप्राप्तं प्रातिपदिकमेव विशिष्यते, तस्मादयं वक्ष्यमाणोऽर्थः सूत्रस्यापि भविष्यतीति। "किंवान्()" इति। किमस्यास्तीति मतुप्(); "उगिदचाम्()" ७।१।७० इत्यादिना नुम्(), हलङ्यादिसंयोगान्तलौ (६।१।६८; ८।२।२३), "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "नार्मतम्()" इति। नरोऽस्य सन्तीति नृमान्(), नृमत इदमिति "तस्येदम्()" ४।३।१२० इत्यण्(), तत्र वृद्धौ कृतायां दार्मतमित्यत्रावर्णोपधमतुप्? प्रातिपदिकं जातमिति वत्वं प्राप्नीति, तत्? कस्मान्न भवति? इत्याह--"इह" इत्यादि। नार्मतमित्यत्र ह्रवर्णोपधमतुप्त्वं वृद्धिरेव, सा च बाह्रतद्धितनिमित्ता। अतोऽवर्णौपधत्वस्य बहिरङ्गत्वम्(), वत्वं तु प्रवृत्तिनिमित्तमिति तस्यान्तरङ्गत्वम्(), असिद्धं च बहिरङ्गमन्तरङ्गे (व्या।प।४२) इति, तेन नार्मत मित्यत्र वत्वं न भवति॥

बाल-मनोरमा

मादुपधायाश्च मतर्वोऽयवादिभ्यः १८७२, ८।२।९

मादुपधायाश्च। मात् उपधायाश्चेति च्छेदः। मादित्यावर्तते। मू च अश्चेति समाहारद्वनद्वात्पञ्चम्येकवचनम्। मतुप्प्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वात्तदन्तविधिः। णवर्णान्तादवर्णान्तात्प्रातिपदिकात्परस्य मतोर्मस्य वः स्यादित्येकोऽर्थः। मादित्युपधाविशेषणम्। मकारात्मिका अकारात्मिका च या उपधा ततः परस्य मतोर्मस्य वः

स्यादित्यन्योऽर्थः। फलितमाह--मवर्णेत्यादिना। मान्तादुदाहरति--किंवानिति। किमस्यास्मिन्वाऽस्तीति विग्रहः। एवमग्रेऽपि। अकारान्तादुदाहरति--ज्ञानवानिति। अत्र तपरकरणाऽभावादाकारस्यापि ग्रहणमिति मत्वाग--विद्यावानिति। मोपधादुदाहरति--लक्ष्मीवानिति। अदुपदादुदाहरति--यशस्वानिति। "तसौ मत्वर्थे" इति भत्वान्न रुत्वम्। आकारोपधादुदाहरति--लक्ष्मीवानिति। अदुपधादुदाहरति-यशस्वानिति। "तसौ मत्वर्थे" इति भत्वान्न रुत्वम्। आकारोपधादुदाहरति--भास्वानिति।

तत्त्व-बोधिनी

मादुपधायाश्च मतोर्वोऽयवादिभ्यः १४४१, ८।२।९

मादुपधायाः। म्च अश्च मं। समाहारो द्वन्द्वः। तेन मतुप्प्रत्ययाक्षिप्तं प्रातिपदिकं विशेष्यते। तदाह---मवर्णावर्णान्तादिति। "उपधायाश्चे"ति वाक्यान्तरम्। उपधाभूतान्मात्परस्य मतोरित्यर्थः। "येन नाव्यवधान"न्यायेनाऽन्त्याऽल्व्यवहितेऽपि भवतीति। एवमक्षरार्थे स्थिते फलितमाह---मवर्णावर्णोपधादिति।

---

सूत्रम्

काशिका-वृत्तिः

झयः ८।२।१०

झयन्तादुत्तरस्य मतोः वः इत्ययम् आदेशो भवति। अग्निचित्वान् ग्रामः। विद्युत्वान् बलाहकः। इन्द्रो मरुत्वान्। दृषद्वान् देशः।

लघु-सिद्धान्त-कौमुदी

झयः १०६७, ८।२।१०

झयन्तान्मतोर्मस्य वः। कुमुद्वान्। नड्वान्॥

न्यासः

झयः। , ८।२।१०

"अग्निचित्वान्()" इति। "तसौ मत्वर्थे" १।४।१९ इति भसंज्ञा। तेन पदसंज्ञानिबन्धनं "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वं न भवति॥

बाल-मनोरमा

झयः १८७३, ८।२।१०

अथ "विद्युत्वा"नित्यत्र मकाराऽकारान्तत्वाऽभावान्मकाराऽकारोपधत्वाऽभावान्न मादुपधाया इति वत्वाऽप्राप्तावाह--झयः। अपदान्तत्वादिति। तसौ मत्वर्थे" इति भत्वेन पदत्वबाधादिति भावः।

तत्त्व-बोधिनी

झयः १४४२, ८।२।१०

झयः। इदमपि मतुबाक्षिप्तस्य प्रातिपदिकस्य विशेषणम्। तदाह----झयन्तादिति। विद्युत्वानिति। एतेन "वह्निमद्वा"निति नैयायिकप्रयोगो निरस्तः। उक्तरीत्या जश्त्वस्याऽप्रवृत्तेः। मत्वन्तान्मतुपो निषेधाच्च। ननु गोधुङ्भान् मधुलिण्मानित्यत्र

हस्य घत्वे ढत्वे च कृते "झयः"इति वत्वप्रवृत्त्याऽनुनासिकपरत्वाऽभावात् "प्रत्यये भाषायां नित्य"मित्यनेन धकारढकारयोरनुनासिकाऽप्रवृत्तेर्गोधुग्वान् मधुलिड्वानित्यनिष्टं प्रसज्येत। मैवम्। घत्वढत्वयोरसिद्धत्वेन "झयः"इति वत्वाऽप्रवृत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

संज्ञायाम् ८।२।११

संज्ञायां विषये मतोः वः इत्ययम् आदेशो भवति। अहीवती। कपीवती। ऋषीवती। मुनीवती।

न्यासः

संज्ञायाम्?। , ८।२।११

"अहीवती" इति। "नद्यां मतुप्()" ४।२।८४ इति चातुरर्थिको भतुप्(), "शरादीनाञ्च" ६।३।११९ दीर्घः॥

---

सूत्रम्

काशिका-वृत्तिः

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ८।२।१२

आसन्दीवतष्ठीवत् चक्रीवत् कक्षीवत् चर्मण्वती इत्येतानि संज्ञायां निपात्यन्ते। वत्त्वं पूर्वेण एव सिद्धम्, आदेशाथानि निपातनानि। आसन्दीवतिति आसनशब्दस्य आसन्दीभावो निपात्यते। आसन्दीवान् ग्रामः। आसन्दीवदहिस्थलम्। आसनवानित्येव अन्यत्र। अपरे तु आहुः, आसन्दीशब्दो ऽपि प्रकृत्यन्तरम् एव अस्ति, तथा चोक्तम्, औदुम्बरी राजासन्दी भवति इति। तस्य संज्ञायाम् ८।२।११ इति वत्त्वेन सिद्धम्। आसन्दीवतित्येत प्रपञ्चार्थम् इह पठ्यते। अष्ठीवतिति अस्थ्नो ऽष्ठीभावः। अष्ठीवानिति शरीरैकदेशसंज्ञा। अस्थिमानित्येव अन्यत्र। चक्रीवतिति चक्रशब्दस्य चक्रीभावो निपात्यते। चक्रीवान् राजा। चक्रवानित्येव अन्यत्र। चक्रीवन्ति सदो हविर्धानानि भवन्ति इत्येतत् तु छान्दसत्वादनुगन्तव्यम्। कक्षीवतिति कक्ष्यायाः सम्प्रसारणं निपात्यते। कक्षीवान् नाम ऋषिः। कक्ष्यावानित्येव अन्यत्र। रुमण्वतिति लवणशब्दस्य रुमण्भावो निपात्यते। लवणवानित्येव अन्यत्र। अपरे तु आहुः, रुमनिति प्रकृत्यन्तरम् अस्ति, तस्य एतन् निपातनं नकारलोपाभावार्थम्, णत्वार्थं च। मतोर् वा नुडर्थम् इति। चर्मण्वती इति चर्मणो नलोपाभावो णत्वं च निपात्यते। मतोर् वा नुडागमः। चर्मण्वती नाम नदी। चर्मवती इत्येव अन्यत्र।

न्यासः

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती। , ८।२।१२

अथाष्ठीवदिति किमर्थं निपात्यते, यावतोर्वष्ठीवमित्यस्मादेव निपातनात्? (५।४।७७) एतत्सिद्धम्()? एवं मन्यते--द्वन्द्व एवैतन्निपातनमिति तत्रैव स्यात्(), इह तु निपातनं क्रियमाणं सर्वविषयं भविष्यतीति। कथं पुनर्ज्ञायते--आसन्दीशब्दः प्रकृत्यन्तरं विद्यते? इत्याह--"तथा चोक्तम्" इत्यादि। यदि तर्हि तत्रैव संज्ञायामिति वत्वे च ८।२।११ सिद्धमासन्दीवदिति, तत्किमर्थमिह पठ()ते? इत्याह--"आसन्दीवत्()" इत्यादि। "तत्प्रयञ्चार्थम्()" इति। यदि तर्हि चक्रीवदिति संज्ञायामेतन्निपातनम्(), कथं चक्रीवन्ति सदोहविर्धानानि भवन्तीति, न हीयं संज्ञा? इत्यात आह--"चक्रीवन्ति" इत्यादि। छन्दसि ह्ययं प्रयोगः, तत्र "व्यत्ययो बहुलम्()" ३।१।८५ इति वर्णव्यत्ययेनाकारस्येकारे कृते "छन्दसीरः" (८।२।१५) इति मतोर्वत्वे चक्रीवन्तीत्येतत्? सिध्यति। तस्माच्छान्दसत्वादेवमेतत्? साधुत्वेनानुगन्तव्यम्()।

"कक्षीवान्()" इति। "हलः"["हलि च" इति सूत्रम्()] ८।२।७७ इति दीर्घः। "नलोपाबावार्थम्()" इति। "नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नकारलोपः प्रापनोति, स मा भूदित्येवमर्थम्()। "णत्वर्थं च" इति। "पदान्तस्य" ८।४।३६ इति णत्वप्रतिषेधः प्राप्नोति, अतो णत्वार्थञ्च निपातनम्()। "मतोर्वा नुडर्थमिति" इति। वाशब्दो विकल्पार्थः। थ वा--नैव नकारलोपाभावार्थं निपातनम्(), नापि णत्वार्थम्(), किं तर्हि? मतोर्नुडर्थम्()। नुटि कृते नलोपे सत्यपि सिध्यत्येवेष्टम्(), णत्वप्रतिषेधस्य प्राप्नीस्त्येव; अपदान्तत्वात्()। "अट्कुप्वाङ्()" ८।४।२ इति णत्वं भवति॥

न्यासः

परेश् घाङ्कयोः। , ८।२।१२

"परिधः" इति। पर उपपदे हन्तेर्धातोरप्प्रत्ययः। हलोपः, धत्वञ्च निपात्यते, उपपदसमासः। "पर्यङ्कः" इति "अकि लक्षणे" (धा।पा।८७) इत्यस्मात्? पचाद्यच, "हलश्च" ३।३।१२१ इति वा घञ्(), प्रादिसमासः--परिगतोऽङ्कः पर्यङ्कः। [नास्ति--कांउ।पुस्तके] ननु च [नास्ति--कांउ।पुस्तके]"घ" इति तरप्तमपोरपीयं संज्ञा, स्वं रूपं शब्दस्य" १।१।६७ इति स्वरूपग्रहणं प्रतिषिष्यते, तत्किमिति घरूप एव लत्वमुदाह्रियते? इत्याह--"घ इति स्वरूपग्रहणमत्र" इति। एवं मन्यते--अङ्क इत्यनेनासंज्ञाशब्देन साहचार्यद्ध इत्यस्याप्यसंज्ञाशब्दस्यैव ग्रहणमिति। "योगे चेति वक्तव्यम्()" इति। योगशब्दे च परतः परेर्विकल्पेन [परविकल्पेन--कांउ।पाठः] लत्वं भवतत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--चकारोऽनुक्तसमुच्चयार्थः क्रियते, तेन योगेऽपि भविष्यतीति।

बाल-मनोरमा

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वतो १८७५, ८।२।१२

आसन्दीवत्। समाहारद्वन्द्वे ह्रस्वत्वम्। निपात्यन्त इति। आसन्दीभावादिकमेवात्र निपात्यते, वत्वं तु संज्ञायामिति सिद्धम्। कक्ष्यायाः सम्प्रसारणमिति। "निपात्यते" इति शेषः। "न सम्प्रसारणे" इति सूत्रभाष्ये तु "कक्ष्यायाः संज्ञायां मतौ सम्प्रसारणं वक्तव्य"मित्यारब्धम्। अतोऽत्र सूत्रे कक्षीवच्छब्दपाठोऽनार्ष इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

उदन्वनुदधौ च ८।२।१३

उदन्वानिति उदकशब्दस्य मतावुदन्भावो निपात्यते उदधावर्थे, संज्ञायां विषये च। उदन्वान् नाम ऋषिः यस्य औदन्वतः पुत्रः। उदधौ उदन्वान्। यस्मिन्नुदकं धीयते स एवम् उच्यते। उदधाउ इति किम्? उदकवान् घटः इत्यत्र तु दधात्यर्थो न विवक्ष्यते। किं तर्हि? उदकसत्तासम्बन्धसामान्यम्।

न्यासः

उदन्वानुदधौ च। , ८।२।१३

"उदधावर्थे" इति। यस्मिन्नुदकं धीयते तस्मिन्नर्थं इत्यर्थः। तथा ह्रुदके कर्मण्युपपदे "कर्मण्यधिकरणे च" ३।३।९३ इति किप्रत्यये कृते "पेषंवासवाहनधिषु च" ६।३।५७ इत्युदकस्योदभावे कृत उदधिशब्दो व्युत्पाद्यते। चकारेण "संज्ञायाम्()" ८।२।११ इत्यनुकृष्यत इति दर्शयति। "संज्ञायां च" इत्यादि। "उदधावर्थे" इत्यादि। उदधिग्रहणञ्च संज्ञार्थम्()। "उदन्दान्" इति। डदकं धेयमास्मिन्नस्तीत्यर्थविवक्षायां मतुप्()। "स एव मुच्यते" इति। न तु गङ्गादिः। यदि यस्मिन्नुदकं धीयते [नास्ति--कांउ।पुस्तके] स एव मुच्यते--उदकवान्? घट इत्यभिधानं प्राप्नोति, घटेऽप्युदकं धीयत इत्यत आह--"उदकवान्? घटः" इत्यादि। इह विवक्षा शब्दव्युत्पत्तेः प्रधानं कारणम्(), न वस्तुनः सत्ता। स च येन

दधात्यर्थेनोदधिरित्युच्यते, सोऽस्मिन्? प्रयोगे घटे न विवक्षितः, किं तर्हि? उदकसत्तायाः सम्बन्धमात्रम्()। उदकमस्मिन्नस्तीत्येवन्मात्रं विवक्षितम्। अतो दधात्यर्थस्याविवक्षितत्वाद्घटस्योदधित्वं विद्यमानमप्यसङ्कल्प्यमेवेति नायं निपातनस्य विषयः। तेन घट उदकवानित्युच्यते। यदा तु दधात्यर्थो विवक्ष्यते तदोदन्वानित्येवं वक्तव्यम्()॥

बाल-मनोरमा

संज्ञायाम् १८७४, ८।२।१३

संज्ञायाम्। "अहीवती"त्यादि नदीविशेषस्य, नगरीविशेषस्य वा संज्ञा। शरादित्वादिति। "शरादीनां चे"ति दीर्घ इत्यर्थः।

बाल-मनोरमा

उदन्वानुदधौ च १८७६, ८।२।१३

उदन्वानुदधौ च। उदधौ संज्ञायां चेति। वस्तुतस्तु उदन्वांश्चेत्येव सूत्रयितुमुचितं, संज्ञायामित्यनुवृत्यैव समुद्रेऽपि उदन्वच्छब्दस्य सिद्धत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

राजन्वान् सौराज्ये ८।२।१४

राजन्वानिति निपात्यते सौराज्ये गम्यमाने। शोभनो राजा यस्मिन्निति स राजन्वान् देशः। राजन्वती पृथ्वी। राजवानित्येव अन्यत्र।

न्यासः

राजन्वान्? सौराज्ये। , ८।२।१४

"राजन्वानिति निपात्यते" इति। किमन्न निपात्यते? नलोपाभावः, नुङ्वा। "सौराज्यम्()" इति। शौभनो राजा यस्मिन्? देशे स सुराजा, तद्भावः सौराज्यम्(), ब्राआह्णादित्वात्? व्यञ्(), "नस्तद्धिते" [६।४।१४४](#) इति नलोपः। तत्पुनः सौराज्यं यत्र शोभनेन राज्ञा देशस्य सम्बन्धः। "समासकृत्तद्धितेषु सम्बन्धाभिधानम्()" (सी।पा।१३०) इति वचनाद्राजन्वानित्यस्य शब्दस्य देश एव वाच्यः, न सौराज्यम्()। स तु देश शब्दात्? प्रतीयमानः; सौराज्येनाविनाभावित्वात्()। तच्च गमयतीत्याह--"गम्यमाने" इति। "राजन्वान्()" इति पुंल्लिङ्गम्()। तस्यातन्त्रतां दर्शयितुम्()--"राजन्वती पृथिवी" इत्यस्योदाहरणस्योपन्यासः॥

बाल-मनोरमा

राजन्वान् सौराज्ये १८७७, ८।२।१४

राजन्वान् सौराज्ये। सु=शोभनोराजा यस्य देशस्य स सुराजा, तस्य भावः सौराज्यम्। तस्मिन्नर्थे राजन्शब्दान्मतुपि "मादुपधायाः" इति वत्वं सिद्धम्। नलोपाऽभावो निपात्यते।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि इरः ८।२।१५

छन्दसि विषये इवर्णान्ताद् रेफान्ताच् च उत्तरस्य मतोर्वत्वं भवति। इवर्णान्तात् तावत् त्रिवती याज्यानुवाक्या भवति। हरिवो मेदिनं त्वा। अधिपतिवती जुहोति चरुरग्निवानिव। आ रेवानेतु मा विशत्। रयेर्मतौ इति सम्प्रसारणम्। सरस्वतीवान् भारतीवान्। दधीवांश्चरुः। छन्दसि सर्वे विधयो विकल्प्यन्ते इति इह न भवति, सप्तर्षिमन्तम्, ऋषिमान्, ऋतीमान्, सूर्यं ते द्यावापृथिवीमन्तम् इति। रेफान्तात् गीर्वान्। धूर्वान्। आशीर्वान्।

न्यासः

छन्दसीरः।, ८।२।१५

"हरिवो मेदिनम्()" इति। "न मु ने" ८।२।३ इत्यत्रैतद्व्युत्पादितम्()। "आरेवानेतु मा विशत्()" इति। रयिशब्दस्य "रयेर्मतौ बहुलम्()" (दा।६६५) इति सम्प्रसारणम्(), परपूर्वत्वम्(), "आद्गुणः" ६।१।८४। अथेह कस्मान्न भवति--सप्तर्षिमन्तं द्यावापृथिवीमन्तम्()? इत्याह--द्यौश्च पृथिवी चेति द्वन्द्वे कृते "दिवसश्च पृथिव्याम्()" ६।३।२९ इति दिवो द्यावादेशः। "गोर्वान्(), धूर्वान्(), आशीर्वान्()" इति। "गृ? शब्दे" (धा।पा।१४९८), "धुर्वी हिंसार्थः (धा।पा।५७३), "आङः शासु श्छायाम्()" (धा।पा।१०२२), एषां सम्पदादित्वात्? क्विप्()। गृणातेः "ऋत इद्धातोः" ७।१।१०० इतीत्वम्(), धुर्वेः "राल्लोपः" ६।४।२१ इति वकारलोपः, "शास इदङ्हलोः" ६।४।३४, इत्यत्र शास इत्वे "आशासः क्वावुपसंख्यानम्()" (वा।७८१) इत्याङ्पूर्वस्य शास इत्वम्(), मतुपि कृते "ससजुषो रुः" ८।२।६६ इति रुत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अनो नुट् ८।२।१६

छन्दसि इति वर्तते। अनन्तादुत्तरस्य मतोः नुडागमो भवति छन्दसि विषये। अक्षण्वन्तः कर्णवन्तः सखायः। अस्थन्वन्तं यदनस्था बिभर्ति। अक्षण्वता लाङ्गलेन। शीर्षण्वती। मूर्धन्वती। नुटः असिद्धत्वात् तस्य च वत्वं न भवति, ततः परस्य च भवति।

न्यासः

अनो नुट्?।, ८।२।१६

"अक्षण्यन्तः" इति। "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" ७।१।७५, " छन्दस्यापि दृश्यते" ७।१।७६ इत्याङ्(); नुट्(), अनङी नकारस्य लोपः नुमो णत्वम्()। "अस्थन्वन्तम्()" इति। अस्थिशब्दस्य णत्ववर्जं पूर्ववदनङादि कर्त्तव्यम्()। "शीर्षण्वती" इति। "शीर्षंश्छन्दसि" ६।१।५९ निपातितम्()। ननु च नुटोऽनन्तरत्वात्? तस्यैव वत्वेन भवितुं युक्तम्(), न तु तद्व्यवहितस्य मकारस्य, तत्कथमिह नुटो वत्वं न भवति, ततस्तु परस्य न भवति? इत्याह--"नुटोऽसिद्धत्वात्()" इत्यादि। अथायं नुट्? परत्वादपवाद एव कस्मान्न भवति? भिन्नजातीयत्वात्()। समानजातीयकार्यपन्नो हि विशेषः सामान्यस्य बाधको भवति, इह कार्यभेदोऽस्ति; वत्वस्यादेशत्वान्नुटस्थ्वागमत्वादिति नास्ति वाध्यबाधकभावः, नुटः परादिकरणं णत्वं यथा स्यादित्येवमर्थम्(); अन्यथा हि "पदान्तस्य" ८।४।३६ इति प्रतिषेधः स्यात्()॥

---

सूत्रम्

काशिका-वृत्तिः

नाद् घस्य ८।२।१७

नकारान्तातुत्तरस्य घसंज्ञाकस्य नुडागमो भवति छन्दसि विषये। सुपथिन्तरः। दस्युहन्तमः। भूरिदाव्नस्तुड् वक्तव्यः।

भूरिदावत्तरः। ईद् रथिनः। रथिनः ईकारान्तादेशो धे परतः। रथीतरः। रथशब्दादेव वा मत्वर्थीयो ऽयम् ईकारः छन्दसीवनिपौ इति।

न्यासः

नादघस्य। , ८।२।१७

"सुपथिन्तरः" इति। शोभनः पन्था इति प्रादिसमासः--सुपन्थाः, सुशब्दात्? "न पूजनात्()" (५।४।६९) इति प्रतिषेधात्? "ऋक्पूरब्धूः" ५।४।७४ इत्यादिना समासान्तो न भवति, तरप्()। "दल्युहन्तमः"। दस्युं हतवानिति क्विप्(), तदन्तात्? तमप्()। "भूरिदावत्तरः" इति। भूरि वदातीति "आतो मनिन्()" ३।२।७४ इत्यादिना वनिप्(), तदन्तादुत्तरपदस्य तुट्()। "रथीतरः" इति। रथिन्नित्येतस्मान्मत्वर्थीयेनिप्रत्ययान्तात्? तरप्(), नकारस्य लोपः, ईकारः अथ वा--नकारस्यैवेकारः, सवर्णदीर्घत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

कृपो रो लः ८।२।१८

कृपेः धातोः रेफस्य लकारादेशो भवति। रः इति श्रुतिसामान्यम् उपादीयते। तेन यः केवलो रेफो, यश्च ऋकारस्थः, तयोर् द्वयोरपि ग्रहणम्। लः इत्यपि सामन्यम् एव। ततो ऽयं केवलस्य रेफस्य स्थाने लकारादेशो विधीयते। ऋकारस्य अप्येकदेशविकारद्वारेण ऌकारः, एवं च लुटि च क्लृपः १।३।९३ इत्येवम् आदयो निर्देशा उपपद्यन्ते। कल्प्ता। कल्प्तारौ। कल्प्तारः। चिक्लृप्सति। क्लृप्तः। क्लृप्तवान्। कृपा इत्येततृपेः सम्प्रसारणम् च इति भिदादिषु पाठाद् भवति। तस्य हि कृतसम्प्रसारणस्य लाक्षणिकत्वातिह कृपः इति ग्रहणं न अस्ति। कृपणकृपीटक्रपूरादयो ऽपि क्रपेरेव द्रष्टव्याः। उणादयो बहुलम् ३।३।१ इति वा कृपेरेव लत्वाभावः। वालमूललघ्वसुरालम् अङ्गुलीनां वा रो लमापद्यत इति वक्तव्यम्। वालः, वारः। मूलम्, मूरम्। लघु, रघु। असुरः, असुलः। अलम्, अरम्। अङ्गुलिः, अङ्गुरिः। कपिलकादीनां संज्ञाछन्दसोर् वा रो लमापद्यत इति वक्तव्यम्। कपिरकः, कपिलकः। तिल्पिलीकम्, तिर्पिरीकम्। लोमानि, रोमाणि। पांशुरम्, पांशुलम्। कर्म, कल्म। शुक्रः, शुक्लः। रलयोरेकत्वस्मरणम् इति केचित्। किम् इदम् एकत्वस्मरणमिति? समानविषयत्वम् एव तयोः स्मर्यते इत्यर्थः।

न्यासः

कृपो रो लः। , ८।२।१८

इह र इति वर्ण उपादीयते, ल इत्यस्यादेशस्तादृश एव; ततश्च केवलो यो रेफवरणो नावयवभूतस्तस्यैव तथाभूत एव लकारादेशः स्यात्(), ऋकारस्य तु लकारो न स्यात्(); तयोः स्थान्यादेशभावेन सूत्रोऽनुपादानात्()। ततश्च क्लृप्तः, क्लृप्तवानित्यादि न सिध्येदिति यश्चोदयेत्(), तं प्रत्याह--"र इति सामान्यमुपादीयते" इति। वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य यत्? सामान्य वर्णात्मिकायामवर्णात्मिकायां च रेफव्यक्तौ वत्र्तते यतस्तयोर्वर्णत्वावर्णत्वादिभेदभिन्नयोद्र्वयोरपि र इत्यभिधानप्रत्ययावभिन्नौ भवतस्तदुपादीयते, न तु वर्णात्मकः--एवं विशेषः। "तेन" इति। सामान्योपादानेन द्वयोरपि ग्रहणं भवतीति। तस्य सामान्यस्य द्वयोरपि भावात्? "ल इत्यपि सामान्यमेव" इति। उपदीयत इत्यपेक्षते। अत्रापि तेन यश्चकेवलो लकारो यश्च ऌकारस्थः, तयोद्र्वयोरपि ग्रहणमित्येतद्वाच्यम्()? पूर्वानुसारेण गम्यमानार्थत्वान्नोक्तम्()। "ततोऽयम्()" इत्यादि। यत एवं द्वयोरपि रेफयोलकारयोश्च ग्रहणम्(), तस्मात्? केवलस्य रेफस्य केवलो लकार आदेशो विधीयते। आन्तरतम्यादृकारस्यापि

लृकारः। ननु च सत्यपि द्वयोरपि ग्रहणे ऋकारस्य स्थान ऋकारो विधीयत इत्येतन्न लभ्येत, न हि ऋकारस्थो रेफ ऋकारो भवति, किं तर्हि? तदवयवः; तत्र द्वयोरपि ग्रहणे सति ऋकारस्थस्यापि रेफस्य लृकारस्थो लकारस्त त्सदृश एवान्तरतन्याद्भवतीत्येषोऽर्थो लभ्यते, न तु ऋकारस्यापि स्थाने लृकारो भवतीत्येषोऽर्थोऽपि? इत्येतस्य चोद्यस्य निराकरणार्थं "एकदेशविकारहद्वारेण" इत्युक्तम्। एकदेश ऋकारस्यावयवो रेफस्तस्य विकार लृकारावयवो लकारः। अथ वा--एकदेश लृकारस्यावयवो लकारः, स एव विकारः। ऋकारस्य रेफस्यैकदेशविकारः। द्वारम्()--मुखम्(), उपाय इति यावत्()। तेन ऋकारस्य स्थान लृकारादेशो विधीयते। यदि ऋकारलृकारस्थयो रेफलकारयोरृकारलृकाराभ्यां पृथग्भावः सम्भवति। तस्मान्नान्तरीयकत्वादेकदेशविकारद्वारेण समस्तस्यैव ऋकारस्य समस्त एव लृकारादेशो विधीयते। अस्यैवार्थस्य द्रढीकरणायाह--"एवं च" इत्यादि। यत एवमेकदेशविकाद्वारेण ऋकारस्य स्थाने लृकारो विधीयते, एवञ्च "लुटि च क्लृपः" इत्येवमादीनां ग्रहणम्()। तदेवं चोद्यं परिहरता यदुक्तम्()--"नुङ्()विधिलादेशविनामेष्वृकारः ["ऋकारे"--काशिका, पदमञ्जरी च] प्रतिविधातव्यः" [विधातव्यम्()--काशिका, पदमञ्जरी च] (वा।१) इति, तत्रावसरे प्राप्ते लादेशे प्रतिविहितम्()। "कल्प्ता, कल्प्तारौ, कल्प्तारः" इति। तृच्(), अथ वा लुट्()। "चिक्लृप्सति" इति। सन्(), "हलन्ताच्च" १।२।१० इति कित्वाद्गुणाभावः। "क्लृप्तः, क्लृप्तवान्()" इति। क्तक्तवत्()। "कृपा" इति। एतत्कथं सिध्यति? यावताऽत्रापि लत्वेन भवितव्यम्()? इत्यत आह--"कृपेत्येतत्()" इत्यादि। एतेन "क्रप कृपायां गतौ" (धा।पा।७७१) इत्यस्मात्? "षिद्भिदादिभ्यो॥ऽङ्()" (३।३।१०४) इत्यङि तत्सन्नियोगेन च सम्प्रसारणे कृते कृपेत्येतद्भवतीति दर्शयन्? कृपेत्यस्य रूपस्य लाक्षणिकत्वं दर्शयति। यद्येवम्(), ततः किमत्यत्र लत्वं न भवति? इत्याह--"तस्य हि" इत्यादि। यतसतस्य कृतसम्प्रसारणस्य क्रपेः कृपेत्येतद्रूपं भवति, तस्माल्लाक्षणिकत्वम्()। अतो लक्षणप्रतिपदोक्तपरिभाषयैव (व्या।प।३) न गृह्वते इति भवति लप्रसङ्गः। कृपण, कृपीट, कर्पूरादिषु ह्यौपदेशिकमेव कृपेत्येसद्रूपम्(), न लाक्षणिकम्()। तथा हि "रञ्जे क्वुन्()" ["रजः क्युन्()" इति द।उ।पाठः "रजेः, रञ्जेः" इति पाठान्तरे] (द।उ।५।२४) इति यः क्वुन्? विहितः, तस्मिन्? बहुलवचनात्? कृपेरेव विहिते कृपण इति भवति; "कृ()तृ()कृपिभ्यः कीटन्()" ["कृ()तृ()कृपिकम्पिभ्यः कीटन्()" इति द।उ।पाठः "कपिकम्पिभ्यः" इति पाठान्तरम्()] (द।उ।५।३) इति कृपेरेत कोटनि विहिते कृपीट इति भवत; "खर्जिपिञ्जादिभ्य ऊरोलचौ" (द।उ।१०।१०) इत्युरप्रत्यये कृते कर्पूर इति भवतीत्याह--"कृपणकृपीट" इत्यादि। एवं मन्यते--बहुलवचनात्? क्रपेरेव क्युन्? [क्वुन्? प्रां।उ।पाठः] भवति, तत्र चास्य सम्प्रसारणं कृतम्(), "कृ-तृकृपिभ्यः कीटन्()" (द।उ।५।३) इत्यत्रापि कृपिग्रहणमपनीय क्लृपिग्रहणं करिष्यते, सम्प्रसारणं तु बहुलवचनादेव भविष्यति; "खर्जिपिञ्जादिभ्य ऊरोलचौ" इत्यत्रापि आदिग्रहणे कृपिरेव ग्रहीष्यते, सम्प्रसारणं च पूर्ववदेव भविष्यतीति। यद्यपि कृपणकृपाणेत्येवमादीनि रूपाणि स्युः, तदास्य दोष इति दर्शयितुमाह--"जणादयो बहुलमिति वा" इत्यादि। अत्यन्तभिन्नरूपयोरभिन्नस्वभावत्वमसम्भावयन्? पृच्छति--"किमिदम्()" इत्यादि। "समानविषयत्वम्()" इति। अभिन्नविषयत्वमेकशब्देनात्र विवक्षितम्(), न त्वभिन्नस्वभावत्वमिति दर्शयति। किमर्थं पुनः कृपिमुद्दिश्य लादेशो विधीयते, न कृपिरेवोद्दिश्येत? गु स्थाने लत्वमात्रं कत्र्तव्यम्(), तच्चावश्यमुकत्र्तव्यमुपल्कारीयतीत्येवमर्थम्()। तथा च--"ऋदुपधाच्चक्लृपि चृतेः ३।१।११० इत्यत्र क्लृपिप्रतिषेधो न कत्र्तव्यो जायते। तेनैवं शक्यम्()--इह ह्यचोक्लृपदिति ऋकारलृकारयोः सवर्णसंज्ञादिधानादृकारस्य विधीयमानमुरत्त्वं लृकारस्यापि स्यात्()। तथा च लृकारस्याप ऋवर्णः प्रसज्यते; ऋकारान्तं तूपदिश्य लत्वे विधीयमाने तस्यापि लृकारस्य लत्वं सिद्धं भवति॥

बाल-मनोरमा

कृपो रो लः १८९, ८।२।१८

तङि प्रथमपुरुषैकवचनस्य टेरेत्त्वे शपि लघूपधगुणे रपरत्वे कर्पते इति स्थिते-- कृपो रो लः। "कृप" इति लुप्तविभक्तिकम्।

षष्ठ()एकवचने उदिति ॠकरास्य रूपम्। अवयवषष्ठी। कृप उरिति स्थिते आद्गुणे कृपोरिति भवति। "र" इति षष्ठ()न्तम्। कृपोर् रः इति स्थिते "रो री"ति रेफलोपे "कृपो रः" इति भवति। "ल" इति प्रथमान्तम्। अकार उच्चारणार्थः। तदाह--- कृप उः [रः ल] इति च्छेद इति। एतच्च ॠलृक्सूत्रभाष्ये स्थितम्। ननु कृपेत्यत्र का विभक्तिर्लुप्तेत्यत आह-- लुप्तषष्ठीकमिति। पकारादकार उच्चारणार्थः। कृप्धातोरिति लभ्यते। तच्चावर्तते इति। कृप रः लः इति पदत्रयमावर्तत इत्यर्थः। तथा च वाक्यद्वयं संपद्यते-- "कृप रः लः" इत्येकं वाक्यम्। तदाह-- कृपो यो रेफस्तस्य लः स्यादिति। तथा च "कल्पते" इति भवति। "कृप उः रः लः" इति द्वितीयं वाक्यम्। तत्र कृपेत्वयवषष्ठ()न्तम् उरित्यत्रान्वेति। उरित्यवयवषष्ठ()न्तं रेफे अन्वेति। तथाच कृप्धातोरवयवो य ॠकारस्तस्य यो रेफस्तस्य लकारः स्यादिति लभ्यते। तत्र ॠकारादवयवत्वं रेफस्य न संभवतीति रेपशब्दो रेफसदृशे ॠकारांशे लाक्षणिकः। ल इत्यपि लकारसदृशे लृकारांशे लाक्षणिकः। तदाह--कृपेरृकारस्यावयव इत्याद#इना। एवं च लिटि चकृप् ए इतिस्थिते कित्वाद्गुणाऽबावे ॠकारैकदेशस्य रेफसदृशस्य लकारसदृशे सति "चक्लृपे" इति रूपम्। "कृपः रः लः" इति च्छेदमभ्युपगम्य कृपधातो रेफस्य लकार इति व्याख्याने तु "चक्लृपे" इति न सिध्येत्। तदर्थमावृत्तिराश्रितेत्यभिप्रेत्याह-- कल्पते चक्लृपे इति। ऊदित्त्वादिड्विकल्पं मत्वा आह-- चक्लृपिषे चक्लृप्से इति। स्यन्दिवदिति। चक्लृपाथे चक्लृपिध्वे--चक्लृब्ध्वे। चक्लृपे चक्लृपिवहे, चक्लृपिमहे- चक्लृप्महे।

तत्त्व-बोधिनी

कृपो रो लः १६२, ८।२।१८

"कृपो रो लः" इत्यर्वाचीनपाठस्तु नादर्तव्य इति ध्वनयति-- कृपेरृकारस्येत्यादिना। वर्णैकदेशस्य वर्णग्रहणेन ग्रहणादाह-- रेफसदृश इति। एवं चात्र कृपेत्यस्यावृत्तिरवश्यं स्वीकर्तव्या। तथा च "लुटि च क्लृपः" इत्यादिसौत्रनिर्देशोऽप्युपपद्यत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गय अयतौ ८।२।१९

अयतौ परतः उपसर्गस्य यो रेफः तस्य लकारः आदेशो भवति। प्लायते। पलायते। अत्र च यो ऽयम् एकादेशः, तस्य स्थानिवद्भावादयतेः उपसर्गस्य च विभागे सति, यदि अयतिग्रहणं रेफस्य विशेषणम्, तदा येन न अव्यवधानं तेन व्यवहिते ऽपि वचनप्रामाण्यातिति एकेन वर्णेन व्यवधाने ऽपि लत्वं भवति। तथा च पल्ययते इत्यत्र अपि भवति। उपसर्गविशेषणे तु अयतिग्रहणे सिद्धम् एव एतत् सर्वम्, प्रतेरपि तु व्यवहिते ऽपि प्राप्नोति। तत्र केषांचिद् दर्शनं भवितव्यम् एव प्लत्ययते इति। प्रथमपक्षदर्शनाभिनिष्टास्तु प्रत्ययते इत्येव भवति इति मन्यन्ते। अपरे तु प्रतिशब्दोपसृष्टस्य अयतेः प्रयोगम् एव न इच्छन्ति। निस् दुसित्येतयोस् तु रुत्वस्य असिद्धत्वाल् लत्वेन न एव भवितब्यम्। निरयणम्। दुरयणम्।

लघु-सिद्धान्त-कौमुदी

उपसर्गस्यायतौ ५३७, ८।२।१९

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते॥

न्यासः

उपसर्गस्यायतौ। , ८।२।१९

इह द्वौ पक्षौ सम्भवतः--अयतिग्रहणं रेफविशेषणमित्येकः पक्षः, उपसर्गस्य विशेषणमिति द्वितीयः। तत्राद्ये पक्षेऽयतौ परत इत्येवामादिको वृत्तिग्रन्थ एवं नेयः--अयतौ परतो यो रेफ उपसर्गस्थस्तस्य लकारादेशो भवतीति। द्वितीये ह्येवं नेयः--अयतौ परतो म उपसर्गस्तस्योपसर्गस्य यो रेफस्तस्य लकारादेशो भवतीति। "प्लायते" पलायते" इति। "अय ण्य" इत्यस्मादनुदात्तेत्त्वादात्मनेपदम्()। कथमत्राद्ये पक्षे लत्वं भवति, यावता तस्मिन्? कत्र्तव्ये "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति स्थानिवद्भावेन भवितव्यम्(), ततश्च प्रकृत्युपसर्गयोर्निमागे सत्यवर्णेन व्यवधानद्रेफस्यायतिपरता न सम्भवति? इत्याह--"अत्र योऽयम्()" इत्यादि। विभागे विश्लेष इत्यर्थः। एकग्रहणं प्रत्यय इत्यत्र सङ्घाते व्यवधाने लत्वं न भवतीति प्रदर्शनार्थम्()। येन हि व्यवधानमेव नाव्यवधानं तेन व्यवधाने वचनाप्रामाण्याल्लत्वेन भवितव्यम्()। केन व्यवधानमेवम्()? एकेन वर्णेन। सङ्घातेन पुनव्र्यवधानमस्ति नास्ति चेति, तेन व्यवधाने भवति। "तथा च" इत्यादि। एवमाद्ये पक्ष एकेन वर्णेन व्यवधाने लत्वं भवति। न केवल पल्ययत इत्यत्र प्रवत्र्तते यत्र स्यानिवद्भावद्वारेणाशास्त्रीयं व्यवधानम्(); यत्रापि तु श्रूयमाणेनैव वर्णेन लौकिकं व्यवधानम्(), तत्रापि प्रवर्त्त इत्येषोऽपिशब्दस्यार्थः। ननु च निरः कुषः" ७।२।४६ इत्यत्र निर इति निर्देशेन ज्ञापितमेतत्()--निरिति रेफान्तमुपसर्गान्तर मस्तीति, ततश्च निलय इत्यत्र वचनस्यावकाशे सति कथं "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।पा।४६) इत्युक्तम्()? एवं मन्यते--नैकमुदाहरणं सामान्यलक्षणं सामान्यलक्षणं प्रयोजयति, यदि ह्येतावत्? प्रयोजनं स्यात्(), निर एव ग्रहणं कुर्यादिति। एवं प्रथमे पक्षे सर्वस्य सिद्धतां प्रतिपाद्य द्वितीये पक्षे प्रतिपादयितुमाह--"उपसर्गविशेषणे तु" इत्यादि। तुशब्दोऽयमपिशब्दस्यार्थे वत्र्तते। न केवलं रेफविशेषणेऽयतिग्रहणे पल्ययत इत्यादि सर्वं सिद्धम्(), अपि तूपसर्गविशेषणेऽपि तस्मिन्? सर्वमेतत्? सिद्धम्()। अथ वा--तुशब्दः पूर्वस्मात्पक्षादस्य विशेषं द्योतयति। तत्र हि वयवधानाल्लत्वं प्राप्नोतीत्येतच्चोद्यमवतरति। अतो यदेतत्? प्रतिपाद्यमेतत्? सर्वम्()। इह त्वस्य चोद्यस्यावतार एव नास्तीति सिद्धमेवैतत्(), न यत्नसाध्यमित्यर्थः। प्रतेरपि प्राप्नोतीति चोदकः। तुशब्दः पूर्वस्माद्विशेषणार्थः, पूर्वत्र प्रतेर्न प्राप्नोति; सङ्घातेन व्यवधानात्(); इह तु नास्ति केनचिद्व्यवधानम्(), अतः प्रतेरपि प्राप्नोतीति मन्यन्ते। "अपरे" इति। द्वितीयपक्षाभिनिविष्टानामम्यतमे। "निस्दुसित्येतयोः" इति। यद्ययतिग्रहणं रेफस्य विशेषणम्(), अथाप्युपसर्गस्य विशेषणम्(), सर्वथाः रत्वे कृते लत्वं प्राप्नोति? इति यश्चोदयेत्(), तं प्रत्याह--"निस्दुस्()" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

उपसर्गस्यायतौ १६६, ८।२।१९

उपसर्गस्याऽयतौ। अयताविति श्तिपा निर्देशः। "कृपो रो ल" इत्यतो रो ल इत्यनुवर्तते। तदाह--अयतिपरस्येत्यादिना। प्लायत इति। प्र इत्युपसर्गः। प्लायत इति। परा इत्याकारान्त उपसर्गः। ननु निरयते दुरयत इत्यत्रापि लत्वं स्यादित्यत आह---निस्दुसोरिति। तर्हि निलयते दुलयत इति कथमित्यत आह--निर्दुरोस्त्विति। एतदर्थमेव प्रादिषु रेफान्तयोश्च निर्देश इति भावः। तर्हि "प्रत्यय" इत्यत्रापि प्रतेरयतिपरत्वाद्रस्य लत्वं स्यादित्यत आह--- प्रत्यय इति त्विति। प्रतिपूर्वकादिण्धातोरतच्प्रत्यये "प्रत्यय" इति रूपम्। अयतिपरत्वाऽभावान्न लत्वमित्यर्थः। अयधातुमादय "प्लत्यय" इति न, अनभिधानादिति कैयटः। कथमुदयतीति। उत्पूर्वकादयधातोः शत्रन्तात्सप्तम्यन्तमिति मत्वा आक्षेपः। अनुदात्तेत्त्वेन लटः शानच्प्रसङ्गादिति भावः। प्रश्लिष्टस्येति। "इधातो"रिति शेषः। तस्य अनुदात्तेत्वाऽबावाच्छतृप्रत्ययो निर्बाध इति भावः। ज्ञापकादिति। "चक्षिङ् धातोरिकारस्याऽनुदात्ततया अनुदात्तेत्वादेवात्मनेपदसिद्धौ ङित्करणमनुदात्तेत्त्वप्रयुक्तात्मनेपदस्याऽनित्यतां ज्ञापयति। तस्याऽनित्यत्वे तु नित्यात्मनेपदार्थं ङित्करणमर्थवदिति भावः। इदं तु भाष्ये न दृश्यते। वादित्वादिति वयधातोर्लिटि वादित्वादेत्वाभ्यासलोपयोरभावे सति "ववये" इति रूपमित्यर्थः। णयधातुर्णोपदेश इति मत्वा आह--प्रणयत इति। "उपसर्गादसमासेऽपी"ति णत्वमिति भावः। दयांचक्र इति। "दयायासश्चे"त्याम्। ऊयांचक्र इति। इजादित्वादाम्। उन्दने चेति। क्लेदने चेत्यर्थः। स्फायी ओप्यायीति।

ओदित्वम् "ओदितश्चे"ति निष्ठानत्वार्थम्। ईदित्वं तु "()आईदितो निष्ठाया"मितीण्निषेधार्थम्।

तत्त्व-बोधिनी

उपसर्गस्यायतौ १३९, ८।२।१९

अथ कथमिति। शानचा भाव्यमिति शङ्कितुराशयः। क्नूयी शब्दे शब्दे च। उन्दः क्लेदनम्।

---

सूत्रम्

काशिका-वृत्तिः

ग्रो यङि ८।२।२०

गॄ इत्येतस्य धातोः रेफस्य लकार आदेशो भवति यङि परतः। निजेगिल्यते, निजेगिल्येते, निजेगिल्यन्ते। भावगर्हायां ग्रो यङ् विहितः। केचिद् ग्रः इति गिरतेः गृणातेश्च सामान्येन ग्रहणम् इच्छन्ति। अपरे तु गिरतेरेव, न गृणातेः। गृणातेर् हि यङेव न अस्ति, अनभिधानादिति। यङि इति किम्? निगीर्यते।

न्यासः

ॣवृ? वरणे (धा।पा।१४९०) इत्यस्येदं ग्रहणं वा स्यात्??, २। अथ वा--अस्यान्येषाञ्च ॠकारान्तानाम्??, ३। उत्त तस्यान्येषाञ्च ॠकारान्तानाम्??, ४। आहोस्विद्? वृ?ङवृञोश्चान्येषाञ्च ॠकारान्तानाम्?? अथ वा--५। तयोश्च ॠकारान्तानाम्?? तत्र यदि प्रथमः पक्ष आश्रितः स्यात्? तदा यणादेशं कृत्वा ॣव्रः इति निर्देशं कुर्यात्?, यथा--ॣग्रो यङि, ८।२।२०

"वृ()त इति किम्()" इति। एवं मन्यते--"उर्षा" इत्येवं वक्तव्यम्(), एवमप्युच्यमाने वृङ्वृञोॠकारान्तयोः सवर्णग्रहणादॄकारान्तानाञ्च ग्रहणं भविष्यति। एवमप्युच्यमाने सत्यतिप्रसङ्गो भवतीति दर्शयन्नाह--"करिष्यति, हरिष्यति" इति। अत्र "ॠद्धनोस्ये" ७।२।७० इतीट्()॥

न्यासः

ग्रो यङि। , ८।२।२०

"निजेगिल्यते" इति। "ॠत इद्धातोः" ७।१।१०० इतीत्त्वम्(), द्विर्वचनम्(), अभ्यासकार्यम्()। "भावगर्हायां ग्रो यङ विहितः" इति। "लुपसदचर" ३।१।२४ इत्यादिना। "गिरतेः" इति। "गॄ? निगरणे" (धा।पा।१४१०) इत्येतस्य तौदादिकस्य। "गृणातेः" इति। "गॄ शब्दे" (धा।पा।१४९८) इत्यस्य ॠयादिकस्य।"सामान्येन ग्रहणमिच्छन्ति" इति। विशेषणानुपादानात्()। "अपरे तु" इत्यादि। कथं पुनः सामान्योपादानेऽपि गिरतेरेव ग्रहणं लभ्यते? इत्याह--"गृणातेः" इत्यादि। किं "कारणं यङेव नास्ति? इत्याह--"अनभिधानात्()" इति। "निगीर्यते" इति। "सार्वधातुके यक्()" ३।१।६७, "हलि च" ८।२।७७ इति दीर्घः॥

तत्त्व-बोधिनी

ग्रो यङि ४०२, ८।२।२०

ग्रो यङि। "कृपो रो लः" इत्यतो रो ल इति वर्तते। तदाह-- रेफस्य लत्वमिति। चेक्रीयते। इति। परत्वाद्रीङि कृते द्विर्वचनम्। संचेस्क्रीयते इति। रीङि द्वित्वे च सुट्। न च "सं - कृ"इत्यस्यामवस्थायां द्वित्वात्परत्वात्सुटि कृते संयोगादित्वेन रीङ्प्रवृत्तेः प्राग्गुणः स्यादिति वाच्यम्, "अडभ्यासव्यवायेऽपी"त्यस्यारम्भेण अडभ्यासयोः कृतयोरेव सुण्न तु ततः प्रागिति सिद्धान्तात्।एतेन "सुटो बहिरङ्गत्वान्न संयोगादित्वेन गुण" इति केषांचित्समाधानं परास्तम्।

अभ्यासात्परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदन्तत्वं च नास्तीति गुणप्राप्तेरभावात्। ननु "अडभ्यासव्यवायेऽपि सुट्कात्पूर्वः"इति वार्तिकप्रत्याख्यानाय "पूर्वं धातुरुपसर्गेण युज्यते" इति पक्षं स्वीकृत्य भाष्यकृता सं त्यादावन्तरङ्गत्वात्सुटि ससुक्टस्यैव द्वित्वाभ्युपगमात् संचेस्क्रियते इति न सिध्येत्। तत्र हि सुटि कृते रीङं बाधित्वा पर्तवात् "यङि चे"ति गुणे संचास्कर्यत इत्यनिष्टरूपप्रसङ्गात्। यदि तु इष्टानुरोधेन "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे"ति मताश्रयणेन रीङादेशं द्वित्वं च कृत्वा पश्चात्सुटि इष्टं रूपं सिध्यतीत्युच्यते, तर्हि "अडभ्यासव्यवायेऽपी"ति वचनं स्वीकर्तव्यमेव स्यादिति चेत्। अत्राहुः-- "अडभ्यासव्यवायेऽपी"ति वचनं स्वीकर्तव्यमेव स्यादिति चेत्। अत्राहुः-- अडभ्यासे"त्यादिवार्तिकं विनापि संचस्करतुरित्यादरूपसिद्धये भाष्याकृता "पूर्वं धातुरुपसर्गेण युज्यते" इति पक्ष आश्रितः। संचेस्क्रीयते संचस्करतुरित्यादिरूपसिद्धये समचेस्क्रियतेत्यादिसिद्धिस्तु वार्तिकायत्तैवेति।

---

सूत्रम्

काशिका-वृत्तिः

अचि विभाषा ८।२।२१

अजादौ प्रत्यये परतो ग्रो रेफस्य विभाषा लकारादेशो भवति। निगिरति, निगिलति। निगरणम्, निगलनम्। निगारकः, निगालकः। इयं तु व्यवस्थितविभाषा। तेन गलः इति प्राण्यङ्गे नित्यं लत्वं भवति, गरः इति विषे नित्यं न भवति। निगार्यते,निगाल्यते इति णिलोपस्य स्थानिवद्भावातचि विभाषा इति लत्वविकल्पः। पूर्वत्र असिद्धे न स्थानिवतिति एतदपि सापवादम् एव, तस्य दोषः संयोगादिलोपलत्वणत्वेषु इति। अन्तरङ्गत्वाद् वा कृते लत्वविकल्पे णिलोपो भविष्यति। गिरौ, गिरः इत्यत्र धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् इति लत्वं न भवति। गिरतिर् वा लत्वविधावधिकृतः, गृणातेरेतद् रूपम्।

लघु-सिद्धान्त-कौमुदी

अचि विभाषा ६६६, ८।२।२१

गिरते रेफस्य लो वाजादौ प्रत्यये। गिरति, गिलति। जगार, जगाल। जगरिथ, जगलिथ। गरीता, गरिता, गलीता, गलिता॥ प्रच्छ ज्ञीप्सायाम्॥ ४२॥ ग्रहिज्येति सम्प्रसारणम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्॥ मृङ् प्राणत्यागे॥ ४२॥

न्यासः

अचि विभाषा। , ८।२।२१

"गिरति" इति। निगरणार्थस्य रूपम्()। "निगरणम्()" इति। ल्युट्()। "निगारकः" इति। ण्वुल्()। निगार्यते" इति। अत्र हि णिलोपे कृते विकल्पो न सिध्यत्यचः परस्याभावात्()? इत्येतच्चोद्यमपाकर्तुमाह--"निगार्यते" निगाल्यते" इति। स्थानिवद्भावस्तु पूर्ववत्()। स्यादेतत्()। नास्त्येवात्र स्थानिवद्भावः; "पूर्वत्रासिद्धे न स्थानिवत्()" (जै।प।वृ।४८) इति प्रतिषेधात्()? इत्यत आह--"पूर्वत्रासिद्धे" इत्यादि। अपवादः=दोषः, सह तेन वत्र्तत इति सापवादम्()। दोष एवायमस्याः परिभाषाया इत्यर्थः। अपिशब्दः समुच्चये। न केवलं तच्चोद्यं सापवादम्(), अपि तु "पूर्वत्रासिद्धं न स्थानिवत्()" (जै।प।वृ ४८) इत्येतदपि वचनं सापवादमेव। तदेव सापवादत्वमाप्तवचनेन प्रतिपादयितुमाह--"तस्य" इत्यादि। तत्र संयोगादिलोपविधावयं दोषः--काक्यर्थः, वास्यर्थ इति; अत्रासति यणादेशस्य स्थानिवदभावे "स्कोः संयोगाद्योः" ८।२।२९ इति ककारसकारयोर्लोपः प्रसज्येत। लत्वविधौ--निगार्यते, निगाल्यत इति; णिलोपस्य सति स्थानिवद्भावे विकल्पेन लत्वं न स्यात्()। णत्वविधौ--प्रहिणोति प्रमीणीन इति; अत्र गुणेत्त्वयोरसति स्थानिवद्भावे "हिनुमीना" ८।४।१५ इति णत्वं

न प्राप्नोति। "अन्तरङ्गत्वाद्वा" इत्यादि। परिहारन्तरम्()। अन्तरङ्गत्वं तु लत्वविकल्पस्य वर्णाश्रयत्वात्()। णिलोपस्य तु बहिरङ्गत्वम्(); आर्धधातुकाश्रयत्वात्()। अथ गिरौ, गिरः--इत्यत्र लत्वं कस्मान्न भवति? इत्याह--"गिरौ, गिरः" इत्यादि। इतिकरणो हेतौ। धातोः स्वरुपेण ग्रहणे सति तत्प्रत्यये धातोरित्येव यः प्रत्ययो विहितस्तत्र तत्कार्यं विज्ञायते। तस्मादगिरो, गिर इत्यत्र न भवति। न ह्यत्र श्रातो ३।१।९१ रित्येव गिरतेः क्विबन्तादौजसौ विहितौ, किं तर्हि? प्रातिपदिकाधिकारात्? ४।१।१॥

बाल-मनोरमा

अचि विभाषा ३७१, ८।२।२१

अचि विभाषा। "ग्रो यङी"त्यतो ग्र इत्यनुवर्तते। "कृपो रो लः" इत्यतो रो ल इति। तदाह -- गिरतेरिति। अजादाविति। "धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति परिभाषालब्धस्य प्रत्ययस्य अचा विशेषणात्तदादिविधिः। तेन गिरावित्यादौ नेति "मृजेर्वृद्धि"रिति सूत्रभाष्ये स्पष्टम्। दृङ् आदरे इति। ह्रस्वान्तोऽयम्। "उश्चे"ति कित्वान्न गुणः। आदृतेति। "ह्रस्वादङ्गा"दिति सलोपः। प्रच्छ ज्ञीप्सायामिति। ज्ञातुमिच्छा - ज्ञीप्सा। अनिडयम्। पृच्छतीति। शस्य ङित्त्वात् "ग्रहिज्ये"ति रेफस्य संप्रसारणमृकारः, पूर्वरूपं चेति भावः। पप्रच्छतुरिति। संयोगात्परत्वेन कित्त्वाऽभावान्न संप्रसारणमिति भावः। भारद्वाजनियमात्थलि वेडिति म्तवाह -- पप्रच्छिथ पप्रष्ठेति। इडभावपक्षे व्रश्चादिना छस्य षः, थस्य ष्टुत्वेन ठ इति भावः। पप्रच्छिव। प्रष्टेति। छस्य व्रश्चेति। सूत्रे सतुक्कस्य छस्य ग्रहणात्। किरादयो वृत्ता इति। नचैवं सति "किरश्च पञ्चभ्यः" इत्यत्र पञ्चग्रहणं व्यर्थं, किरादीनां पञ्चत्वादिति वाच्यं, स्य "रुदादिभ्यः सार्वधातुके" इत्युत्तरार्थत्वात्। सृज विसर्गे। अनिट्। सृजति।ससर्ज। ससृजतुः। अजन्ताऽकारवत्त्वाऽभावेऽपि "विभाषा सृजिदृशो"रिति थलि वेडिति मत्वाह -- ससर्जिथ सरुआष्ठेति। इडभावे "व्रश्चे"तिजस्यषः, थस्य ष्टुत्वेन ठः, पित्त्वेनाऽकित्वात् "सृजिदृशो"रित्यमागम इति भावः। ससृजिव। टु मस्जो। मज्जतीति। सस्य श्चुत्वेन शः, तस्य जश्त्वेन ज इति भावः। ममङ्क्थेति। मस्जेर्द्वित्वे हलादिशेषे ममस्ज् थेति स्तिते "स्को"रिति सकारलोपे ममज् थ इतिस्थिते जस्य कुत्वेन गकारे, "मस्जिनशो"रिति नुमि, तस्यानुस्वारे, तस्य परसवर्णो ङकारः, गस्य चर्त्वेन क इति बोध्यम्। यद्यपि अकारात्परत्र नुमि सत्यपि इदं सिध्यति, तथापि "अन्त्यात्पूर्वो नु"मित्यस्य" "मग्न" इत्यादौ नलोपः फलम्। अन्यथा उपधात्वाऽभावान्नस्य लोपो न स्यादिति भावः। एवं - मङ्क्तेति। मङक्ष्यतीत्यत्र तु सस्य षत्वं विशेषः। "रुजो भङ्गे" इत्यारभ्य "विच्छ गतौ" इत्यतः प्रागनिटः। "अनुदात्तस्य चर्दुपधस्ये"त्यम्विकल्पं मत्वाह - स्प्रष्टा स्पर्ष्टेति। णुद प्रेरणे। णोपदेशोऽयम्। "विश प्रवेशने" इत्यारभ्य "सद्लृ शातने" इत्यन्ता अनिटः। तत्र अदुपधस्य थलि वेट्। अन्यस्य तु नित्यमेवेट्। मृशेः "अनुदात्तस्य चे" त्यम्विकल्पः। तदाह - अम्राक्षीत् - अमर्क्षीदिति। "स्पृशमृशे"ति सिज्वेति भावः। सिजभावे "शल इगुपधा"दिति क्सं मत्वाह --अमृक्षदिति। णुदधातुर्णोपदेशः। ननु तनादिगण एवाऽस्मिन्स्वरितेत्सु पठितस्य किमर्थमिह पाठ इत्यत आह - कत्रभिप्रायेऽपीति। षद्लृधातोर्भ्वादौ पठितादेव सीदतीत्यादिसिद्धेरिह पाठो व्यर्थ इत्यत आह - इह पाठ इति। सीदन्तीति। शविकरणाच्छत्रन्तान्ङीपि "आच्छीनद्यो"रिति नुम्विकल्पार्थ इह पाठ इत्यर्थ-। भ्वादावेव पाठे तु "शप्श्यनोर्नित्य"मिति नित्यो नुम् स्यादिति भावः।तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह - ज्वलादाविति। "ज्वलितिकसन्तेभ्यः" इति कर्तरि णप्रत्ययार्थ इति भावः। तदुदाहृत्य दर्शयति - साद इति। उभयत्र पाठस्य फलान्तरमाह - स्वरार्थश्चेति। तदेव विशदयति - शबनुदात्तेति। "अनुदात्तौ सुप्पितौ" इति पित्स्वरेणेति भावः। शस्तूदात्त इति। "प्रत्ययः" "आद्युदात्तश्चे"त्यनेनेति भावः। ननु "शद्लृ शातने" इत्स्य भ्वादौ पाटादेव सिद्धे इह पाठो व्यर्थ इत्यत आह - स्वार्थ एवेति। प्रागुक्तपित्त्वाऽपित्त्वकृतस्वरभेदार्थ एवेत्यर्थः। मुच्लृ मोक्षणे।

तत्त्व-बोधिनी

अचि विभाषा ३२५, ८।२।२१

दृङ् आदरे। "तथाद्रियन्ते न बुधाः सुधामपी"ति श्रीहर्षः। प्रच्छ ज्ञीप्सायाम्। ज्ञातुमिच्छा ज्ञीप्सा। अत्र ज्ञपिज्ञ्ज्ञाने। "आप्ज्ञप्यृधामीत्"। "अत्र लोपः" इत्यभ्यासलोपः। ण्वुलि प्रच्छकः। पृच्छाशब्दात् "तत्करोती"ति णिजन्ताण्ण्वुलि तु -- पृच्छकः। पृच्छाशब्दस्तु भिदादेराकृतिगणत्वादङि संप्रसारणे बोध्यः। किरादयो वृत्ताः इति। एतेच "भूषाकर्मकिरादिसना"मिति वक्ष्यमाणयकिणादिनिषेधवार्तिके उपयोक्ष्यन्ते। "किरश्च पञ्चभ्य"इत्येतदुत्तरसूत्रेऽनुवृत्त्यर्थमिति बोध्यम्। ससर्जिथेति। "विभाषा सृजिदृशो"रिति थलि वेट्।

* मस्जेरन्त्यात्पूर्वो नुम्वाच्यः। विच्छ गतौ। तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो,न तु शप्। तेन विच्छायती विच्छायन्तीति नुम्विकल्पः। केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्य पाक्षिकत्वं स्वीकृत्य विच्छती विच्छन्तीति नुम्विकल्पं, विच्छति विच्छतः विच्छन्तीत्यादिरूपाणि चोदाजह्रुः, तेषां तु मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छबेव। तेन विच्छायन्ती [इ]ति नित्यमेव "शप्श्यनो"रिति नुम्। पठितस्येति। अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः। तङर्थ इति। पूर्वपाठस्तु संश्लेषणे कत्र्रभिप्रायेऽपि परस्मैपदार्थः।

---

सूत्रम्

काशिका-वृत्तिः

परेश् च घाङ्कयोः ८।२।२२

परि इत्येतस्य यो रेफः तस्य घशब्दे अङ्कशब्दे च परतो विभाषा लकार आदेशो भवति। परिघः परिघः। पर्यङ्कः, पल्यङ्कः। घ इति स्वरूपग्रहणम् अत्रेष्यते, न तरप्तमपौ इति। योगे चेति वक्तव्यम्। परियोगः, पलियोगः।

---

सूत्रम्

काशिका-वृत्तिः

संयोगान्तस्य लोपः ८।२।२३

संयोगान्तस्य पदस्य लोपो भवति। गोमान्। यवमान्। कृतवान्। हतवान्। इह श्रेयान्, भूयानिति रुत्वम् परम् अपि असिद्धत्वात् संयोगान्तसय् लोपं न बाधते। जश्त्वे तु नाप्राप्ते तदारभ्याते इति तस्य बाधकं भवति, यशः, पयः इति। दध्यत्र, मध्वत्र, इत्यत्र तु यणादेशस्य बिहिरङ्गलक्षणस्य असिद्धत्वात् संयोगान्तलोपो न भवति।

लघु-सिद्धान्त-कौमुदी

संयोगान्तस्य लोपः २०, ८।२।२३

संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्॥

न्यासः

संयोगान्तस्य लोपः। , ८।२।२३

"संयोगान्तस्य" इति। संयोगोऽन्तो यस्य तत्तथोक्तम्()। अन्तग्रहणं विस्पष्टार्थम्()। "पदस्य" ८।१।१६ इति हि वत्र्तते, तत्र संयोगेन पदे विशिष्यमाणे "येन विधिस्तदन्तरस्य" १।१।७१ इत्येव संयोगान्तता पदस्य लभ्यते। "गोमान्()" इति। हल्ङ्यादिलोपे कृतेऽलोऽन्त्यस्य लोपः १।१।५१, "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "क्षेयान्(), भूयान्()" इति। अत्र संयोगान्तलोपे न प्राप्नोति; परत्वाद्रुत्वेन बाध्यत इति यो मन्येत, तं प्रत्याह--"श्रेयान्(), भूयान्()" इत्यादि। यदि तर्हि परमपि रुत्वमसिद्धत्वात्? संयोगान्तसय बाधकं न भवति, एवं सत्यत एव हेतोर्जश्त्वस्यापि बाधकं न स्यात्(),

ततश्च यशः, पय इति जशत्वमेव स्यात्(), न रुत्वम्()? इत्यत आह--"जश्त्वे तु" इत्यादि। संयोगान्तलोपे हि प्राप्ते चाप्राप्ते च रुत्वमारभ्यते। श्रेयानित्यादौ प्राप्ते, पय इत्यत्र त्वप्राप्त इति युवतं यद्रुत्व न बाधते। जश्त्वे तु सर्वत्र प्राप्त एव तदारभ्यते। श्रेयानित्यादौ प्राप्ते, पय इत्यत्र त्वप्राप्त इति युक्तं यद्रूत्व न बाधते। जश्त्वे तु सर्वत्र प्राप्त एव तदारभ्यते। तस्माद्बाधकलक्षणयोगाद्रुत्वं जशतवस्य बाधकं भवत्येव। श्रेयानिति--"प्रहशस्यस्य श्रः" ५।३।६) इतीयसुनि श्रभावः, "आद्गुणः" ६।१।८४, "सान्तमहतः" ६।४।१० इति दीर्घः। भूयानिति--"बहोर्लोपो भू च बहोः" ६।४।१५८ इतीयसुनि ईकारस्य लोपः, बहोश्च भूभावः। अथ दध्यत्र, मध्वत्रेत्यत्र संयोगान्तलोपः कस्मान्न भवति? इत्याह--"दध्यात्र" इत्यादि। बहिरङ्गत्वं तु यणादेशस्य द्विपदाश्रयत्वात्()। संयोगान्तलोपस्य त्वेकपदाश्रयत्वादन्तरङ्गत्वम्()। पदस्येति किम्()? गोमन्तौ, गोमन्तः॥

बाल-मनोरमा

संयोगान्तस्य लोपः ५६, ८।२।२३

तदाह--प्रसक्तस्येति। तत्र श्रवणाऽभावात्मके लोपे विहिते श्रवणार्थमुच्चारणमपि नास्तीत्यर्थाल्लभ्यते। प्रसक्तस्य किम्? दधीत्यादौ क्विपोऽश्रवणात्मकलोपस्य प्रत्ययलक्षणमाश्रित्य ह्रस्वस्य पिति कृतीति तुग्मा भूत्। संयोगान्तस्य लोपः। पदस्येत्यधिकृतम्। संयोगोऽन्तो यस्येति विग्रहः। संयोगान्तस्य पदस्य लोप इत्यन्वयः। न च कृत्स्नपदस्य लोपः किन्त्वलोऽन्त्यस्येति परिभाषया तदन्तस्यैव। तदाह--संयोगान्तमित्यादिना। अत्र अन्तग्रहणं स्पष्टार्थमेव। संयोगस्य पदविशेषणतया येन विधिरित्येव तदन्तलाभात्। यत्तु संयोगावन्तौ यस्येति विग्रहलाभार्थमन्तग्रहणम्। अन्यथा सुदृषत्प्रासाद इत्यत्र पकारात् पूर्वस्यतकारस्य लोपः स्यादिति, तन्न, संयोगसंज्ञाया व्यासज्यवृत्तित्वात्, प्रत्येकवृत्तित्वमब्युपगम्या।ऽन्तग्रहणप्रयोजनवर्णनस्य व्यर्थत्वादिति शब्दरत्ने विस्तरः।

इति यलोप इति। सुध् य इति यकारस्याऽनेन सूत्रेण लोपे प्राप्ते तत्प्रतिषेध आरभ्यते। यणः प्रतिषेधो वाच्यः। यणः संयोगान्तलोपप्रतिषेधो वक्तव्य इत्यर्थः। "अनेन वार्तिकेन यकारस्य संयोगान्तलोपो न भवती"ति शेषः। इदं वार्तिकमाकरे प्रत्याख्यातम्।

अथात्र यकारस्याऽचः परत्वाऽभावादच्परकत्वाच्चाऽनचि चेति द्वित्वाऽप्राप्तौ द्वित्वविधिमाह--यणो मयो द्वे वाच्ये। अनेन वार्तिकेन यकारस्य द्वित्वमित्यन्वयः। ननु यदि यण इति पञ्चमी मय इति षष्ठी तर्हि यणः परस्य मयो द्वित्वमिति लभ्यते। प्रकृते च यकारो न यणः परो नापि मय्। अतः कथमनेन वार्तिकेन तस्य द्वित्वमित्यत आह--मय इतीति। "पक्षे" इत्यनेन उभयथा व्याख्यानमिष्टमिति सूचि तम्। विनिगमनाविरहादिति भावः। अत्रापि वार्तिके "यरोऽनुनासिक" इत्यतो "वा" ग्रहणमनुवर्तते। ततश्च फलितमाह--तदिहेति। "त"दित्यव्यम्। इयता संदर्भेण यत्प्रपञ्चितं तेन इह=सुध् यित्यत्र यकारधकारयोर्द्वित्वविकल्पाच्चात्वारि रूपाणि सम्पद्यन्ते इत्यर्थः। एकधमेकयमिति। एको धकारो यस्य तदेकधम्। एवमेकयमित्यपि। धकारयकारयोरुभयोरपि द्वित्वाऽभावे एकधकारमेकयकारं च प्रथमं रूपमित्यर्थः। द्विधं द्वियमिति। द्वो धाकारौ यस्य द्विधम्। एवं द्वयमित्यपि। धकारयकारयोरुभयोरपि द्वित्वे द्वियकारं द्विधाकारं च द्वितीयं रूपमित्यर्थः। द्विधमेकयमिति। धकारस्य द्वित्वे यकारस्य द्वित्वाऽभावे द्विधमेकयं च तृतीयं रूपमित्यर्थः। एकधं द्वियमिति। धकारस्य द्वित्वाऽभावे यकारस्य द्वित्वे एकधं द्वियं च चतुर्थं रूपमित्यर्थः। सुद्ध्युपास्य इति। इह "न भूसुधियो"रिति निषेधस्तु न भवति, तस्याऽजादौ सुपि विधानात्। "इकोऽसवर्णे" इत्यपि न, "न समासे इति तन्निषेधात्। मद्ध्वरिरिति। मधुर्नाम असुरविशेषः तस्यारिश्शत्रुः--मद्ध्वरिः। हरिरित्यर्थः। अत्र धकारादुकारस्य स्थानत आन्तर्याद्यथासंख्यपरिभाषया वा वकारः। न चात्र वकारस्य द॰न्तस्थानाधिक्यान्न स्थानसाम्यमिति वाच्यं, यावत्स्थानसाम्यस्य सावर्ण्यप्रयोजकत्वेऽपि आन्तरतम्ये यत्किञ्चित्स्थानसाम्यस्यापि प्रयोजकत्वात्। अन्यथा चेता स्तोतेत्यादौ इकारादेरेकाराद्यनापत्तेः। धात्रंश

इति। अत्र तकारस्यैव द्वित्वं न तु रेफस्येत्यनुपदमेव अचोरहाब्यामित्यत्र वक्ष्यते। लाकृतिरिति। लृवर्णस्य आकृतिरिव आकृतिर्यस्येति विग्रहः। अत्र आकारे परे लृवर्णस्य दन्तस्थानसाम्याल्लकारः। न च दन्तस्थानसाम्यात्प्रथमातिक्रमे कारणाऽभावाच्च तस्य वकार एवास्तु। आन्तरतम्ये य()त्कचित्स्थानसाम्यस्य प्रयोजकताया मध्ध्वरिरित्यत्रोक्तत्वादिति वाच्यम्,?त्र हि चत्वारो यणो यवरला विधेयाः। तत्र वकारविधिरुकारे ओष्ठस्थानसाम्यान्निस्सपत्नः सावकाशः, तत्र लकारस्य दन्तरूपस्थानभेदादप्राप्तेः। लाकृतिरित्यत्र लृवर्णे तु वकारो लकारश्चेत्युभयमपि प्राप्तम्। अत्र शब्दपरविप्रतिषेधमाश्रित्य लकारविधिः परत्वादपवादत्वाच्च वकारविधिं बाधते। यदि हि प्रथमातिक्रमे कारणाऽबावादत्रापि वकार एव स्यात्तर्हि लकारविधिर्निरवकाश एव स्यात्। अतोऽत्र लृवर्णस्य लकार एवेत्यास्तां तावत्।

तत्त्व-बोधिनी

संयोगान्तस्य लोपः ४८, ८।२।२३

संयोगान्तस्य। तदन्तस्येति। अलोऽन्त्यस्ये"ति परिभाषयेति भावः। यद्यपि विशेषणेन तदन्तविधिवलाभात्संयोगस्येत्येव सूत्रयितुमुचितं तथापि "प्रत्येकं संयोगसंज्ञे"ति पक्षे "दृष्टत्करोती"त्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणमिति मनोरमायां स्थितम्। "संयोग" इति महासंज्ञाकरणसामर्थ्यादेकस्य संयोगसंज्ञा न भविष्यतीति अन्तग्रहणमिह त्यक्तुं शक्यम्।

यणः प्रतिषेधः इति। वाचनिकमिदम्। यद्वा वाच्यो=व्याख्येयः। व्याख्या च द्वेधा, "झलो झली"त्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति, अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा। न च षाष्ठी परिभाषा त्रैपादिकमन्तरङ्गलोपं न पश्यतीति वाच्यम्; कार्यकालपक्षाभ्युपगमात्। न च "नाजानन्तर्ये" इति निषेधः, उत्तरकालप्रवृत्ते लोपेऽजानन्तर्याभावात्। तदुक्तम्-"संयोगान्तलोपे यणः प्रतिषेधः"। "न वा झलो लोपात्" "बहिरङ्गलक्षणत्वाद्वे"ति।

चत्वारि रूपाणीति। इह धकारस्य द्वित्वे जश्त्वे च कृते "पूर्वत्रासिद्धीयमद्वित्वे" इति जशोऽसिद्धत्वाभावेन लक्ष्यभेदात्पुनर्दकारे द्वित्वप्रवृत्तौ रूपाधिक्यमस्ति। अत्र केचिदाहु-"उकारात्पर्सय यरो द्वित्वे कृते पुनरुकारात्परस्य यरो द्वित्वं न भवति, निमित्तभादेभावादित्याशयेनेदमुक्तमिति। तेषां तु तुदादिगणे "वव्रश्चेत्यत्र उरदत्वस्य, अचः परस्मिन्निति स्थानिवद्भावान्न संप्रसारणे इति वस्योत्वं ने"ति समाधानग्रन्थो मूलस्थो विरुध्येत, तन्निमित्तस्य लिटो भेदाऽभावादिति दिक्। अन्ये तु धकारस्य जश्त्वे कृते "पूर्वत्रासिद्धीयमद्वित्वे" इति जशोऽसिद्धत्वाबावाद्दकारे पुनर्द्वित्वं भवत्येव, व्यक्तिभेदात्। अत एव सय्यँन्तेत्यादौ परसवर्णद्वित्वं भाष्यकृता उदाह्मतम्। "षट्त्स्सन्त" इत्यत्र सकारद्वित्वसिद्धये "पूर्वत्रासिद्धीयमद्वित्वे" इति मनोरमायामप्युक्तम्। एवं यकारेऽपि द्वित्वस्य पुनः प्रवृत्तौ क्षत्यभावः, आष्टमिकद्विर्वचनस्य स्थाने द्विर्वचनरूपत्वात्स्थान्यादेशव्यक्तयोश्च भेदात्। यत्तूक्तं मनोरमायायम्-"एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्तते" इति "एकः पूर्वपरयोः" इति सूत्रे भाष्ये सिद्धान्तिततत्वात्कथं पुनर्द्वित्वप्रवृत्तिः, अन्यथा द्वित्वानन्त्यापत्ते"-रित्यादि, तदनवधाननिबन्धनम्,तत्राधानादिशास्त्रदृष्टान्तेन प्रयोगान्तरेऽपि गुणादिशास्त्रप्रवृत्तेरेव सिद्धान्तिततत्वात्, न तु सकृच्छास्त्र प्रवृत्तेः। आनन्त्यापत्तिरपि प्रकृते न दोषः। सा हि अनन्तकार्यसहितप्रयोगस्याशक्यत्वात्तच्चास्त्रकत्र्तव्यस्य परिनिष्ठितप्रयोगस्याऽभावात्तच्छास्त्रस्याननुष्ठापकत्वापत्त्या दोषः। प्रकृते तु नास्ति, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्ति द्वित्वप्रयोगसहितस्य परिनिष्ठितत्वेन तेनैव शास्त्रस्य कृतार्थत्वात्। "लिटि धातो"रिति द्वित्वस्य तु नित्यत्वादानन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्पनीयायां लाघवात्प्रथमप्रवृत्तावेव विश्रान्तिकल्पनादनभ्यासग्रहणं प्रत्याख्यातम्। अत एव "सर्वस्य द्वे" इत्यस्यापि न पुनः पुनः प्रवृत्तिरित्याहुः। नन्वत्र

"इकोऽसवर्णे" इति शाकल्यमतेन रूपान्तरमस्त्विति चेन्मैवम्; समासे तन्निषेधात्। न च नित्यसमास एव तन्निषेध इति वाच्यम्; "सिन्नित्यसमासयोः शाकलप्रतिषेधः" इति वार्तिकस्थनित्यग्रहणस्य भाष्ये प्रत्याख्यतत्वात्। मनोरमायां तु जश्त्वेन दकारे कृते तस्य द्वित्वं नेत्याद्य#आशयेन सकारद्वित्वेनाष्टौ, विसर्गाद्वित्वेन षोडशेत्युक्तम्। द्विधमिति। यद्यपि धस्य जश्त्वेन दकारे धद्वय नास्ति, तथापि भूतपूर्वगतिमाश्रित्यैवमुक्तम्। सुध्युपास्य इति। "कर्तृकरणे कृता बहुल"मिति तृतीयासमासः। नन्विह यणेव दुर्लभः, "सुधी"शब्दस्य ध्यायतेः संप्रसारणेन निष्पन्नत्वेन "संप्रसारणाच्चे"ति पूर्वरूपापत्तेरिति चेन्मैवम्, "संप्रसारणपूर्वत्वे समानाङ्गग्रहण"मिति वार्तिकोक्तेः। न चैवमपि " न भूसुधियो"रिति यण्निषेधः शङ्क्यः ; आङ्गत्वेन प्रत्यये परत एव तन्निषेधप्रवृत्तेः। "सुपी"त्यनुवर्त्य सुपि परत एव यण्निषेधाच्च। धात्रंश इति। अत्र रेफस्य द्वित्वं न, द्वित्वप्रकरणे "रहाभ्या"मिति साक्षाच्छ()तेन निमित्तभावेन रेफस्य कार्यित्वबाधनात्। "सुध्युपास्य" इत्यादौ तु स्थानित्वेन निमित्तत्वमिको न बाध्यते, "तस्मादित्युत्तरस्य" "वाय्वृतुपित्रुषसः" इत्यादिनिर्देशाज्ज्ञापकात्। तकारस्य तु द्वित्वं भवत्येव। तच्च वेत्यतो रूपद्वयम्।

---

सूत्रम्

काशिका-वृत्तिः

रात् सस्य ८।२।२४

संयोगान्तपदस्य यो रेफः तस्मादुत्तरस्य अन्तस्य सकारस्य लोपो भवति। गोभिरक्षाः। प्रत्यञ्चमत्साः। क्षरतेः त्सरतेश्च लुङि सिचः छान्दसत्वादीडभावः बहुलं छन्दसि ७।३।९७ इति वचनात्। दीर्घे सति रूपम् एतत्। मातुः, पितुः इति ऋत उत् ६।१।१०७ इति उत्त्वे कृते रपरत्वे च सति रात् सस्य इति सलोपः। सिद्धे सत्यारम्भो नियमार्थः, रात् सस्य एव लोपो भवति, न अन्यस्य इति। ऊर्जेः क्विप् ऊर्क्। मृजेः लङि अमार्ट्।

लघु-सिद्धान्त-कौमुदी

रात्सस्य २१०, ८।२।२४

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः २। क्रोष्ट्रोः २। (नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन)। क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्॥ हूहूः। हूह्वौ। हूह्वः। हूहूम् इत्यादि॥ अतिचमूशब्दे तु नदीकार्य्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्॥ खलपूः॥

न्यासः

रात्सस्य। , ८।२।२४

"संयोगान्तस्य पदस्य" इत्यादि। अत्र संयोगान्तं पदं रेफस्य विशेषणम्(), रेफोऽपि सकारस्य। संयोगान्तस्य पदस्य योऽवयवो रेफस्तस्मादुत्तरो यः सकारस्तस्यालोऽन्त्यस्य लोपो भवति। "अक्षाः, अत्साः" इति। "क्षर सञ्चलने" (धा।पा।८५१), "त्सर च्छद्मगतौ" (धा।पा।५५४), लङ्(), "अतो ल्रान्तस्य" ७।२।२ इति वृद्धिः, तिपो हल्ङ्यादिलोपः ६।१।६६, सिचः सकारस्याप्यनेन, अडागमः, रेफस्य विसर्जनीयः ८।३।१५। ननु चैतत्? पूर्वेणैव सिद्धम्(), तत्किमर्थमिदमारभ्यते? इत्याह--"सिद्धे" इत्यादि। "रात्? सस्यैव" इति नियमस्य स्वरूपं दर्शयति। रादेव सस्य--इत्येष तु विपरीतनियमोऽत्र नाशङ्कनीयः, उरः प्रभृतिषु ५।४।१५१ पुमानिति कृतसंयोगान्तलोपस्य ["कृतसंयोगान्तस्य लोपस्य"--इति प्रां।पाठः] पुम्स्शब्दस्य पाठात्()। न हि विपरीतनियमे तस्य संयोगान्तलोप उपपद्यते। "ऊर्क्()" इति। "ऊर्ज बलप्राणनयोः" [उर्ज--प्रांउपाठः] (दा।पा।१५४९), "भ्राजभ्रास" ३।२।१७७ इत्यादिना क्विप्()। अत्र नियमाज्जकारस्य लोपो न भवति, तस्मिन्नसति "चोः कुः" ८।२।३० इति कुत्वम्()--जकारस्य गकारः, "वावसाने" ८।४।५५ इति

चत्र्वम्()--ककारः। "न्यमार्ट्()"माटै--काशिका, पदमञ्जरी च] इति। "मृजू शुद्धौ" (धा।पा।१०६६), अदादित्वाच्छपो लुक्(), तिपो हल्ङ्यादिलोपः ६।१।६६ "मृजेर्वृद्धिः" ७।२।११४, "व्रश्च" ८।२।३६ इत्यादिना षत्वम्(), तस्य जश्त्वम्()--डकारः, तस्यापि चत्र्वम्()-टकारः॥

बाल-मनोरमा

रात्सस्य २७८, ८।२।२४

क्रोष्टुर् स् इति स्थिते-रात्सस्य। "संयोगान्तस्य लोप" इत्येव सिद्धे नियमार्थमिदमित्याह--सस्यैवेति। तेन ऊर्गित्यादौ न संयोगान्तलोपः। रेफस्य विसर्ग इति। "खरवसानयो"रिति विसर्ग इत्यर्थः। परत्वादिति। परत्वान्नुटं बाधित्वा तृज्वत्त्वे कृते ततो नुटि "नामी"ति दीर्घे णत्वे कृते क्रोष्टृ()णामिति स्यादित्यर्थः। नच नुट् नित्य इति वाच्यं, तृज्वत्त्वे कृते संनिपातपरिभाषया नुटो दुर्लभत्वात्।

नुमचिरेति। "अचिरे"त्यनुकरणम्। "अचि र" इति विहितो रेफो विवक्षितः। प्रकृतिवदनुकरणं भवतीति त्वनित्यम्। ततश्च "अचि-रे"त्यस्य समासप्रवेशेऽपि न लुक्। क्रोष्टनामिति। तृज्वत्त्वं बाधित्वा नुटि कृते "नामी"ति दीर्घे रूपम्।

क्रोष्टरीति। तृज्वत्त्वे क्रोष्टु-इ इति स्थिते "ऋतो ङी"ति गुणे रपरत्वे रूपम्। क्रोष्ट्रोरिति। तृज्वत्त्वे ऋकारस्य यण् रेफः। पक्षे इति। तृतीयादिष्वजादिषु तृज्वत्त्वाऽभावपक्षे इत्यर्थः। ननु "तृज्वत्क्रोष्टुः,""स्त्रियां च", "विभाषा तृतीयादिष्वची"ति त्रिसूत्री व्यर्था। सृगालवाचिनोःक्रोष्टृक्रोष्टु शब्दयोः स्वतन्त्रयोः सत्त्वादिति चेत्, श्रृणु-"सर्वनामस्थाने स्त्रियां च ऋदन्तस्यैव क्रोष्टृशब्दस्य प्रयोगः। तृतीयादिष्वजादिषु तूभयस्य, शसि हलादिषु च उदन्तस्यैवे"ति नियमार्था त्रिसूत्रीति। इति उदन्ताः। अथ ऊदन्ताः। हूहूरिति। गन्धर्वविशेषवाच्यव्युत्पन्नं प्रातिपदिकमेतत्। हूह्वा हूह्व इत्यादि। दीर्घाज्जसि चे"ति पूर्वसवर्णदीर्घनिषेधः। "इको यणची"ति यणि रूपम्। हे हूहूः। हूहूम् हूह्वौ हूहून् हूह्वा। हूह्वे। हूह्वः। हूह्वोः। हूह्वाम्। हूह्वि। अतिचमूशब्दे त्विति। चमूमतिक्रान्तोऽतिचमूः। "अत्यादयः क्रान्ताद्यर्थे" इति समासः। स्त्रीप्रत्ययान्तत्वाऽभावाद्गोस्त्रियो"रिति ह्रस्वो न भवति। नदीकार्यमिति। "प्रथमलिङ्गग्रहणं चे"ति वचनादिति भावः। खलपूरिति। खलं पुनातीति क्विप्। खलपू-औ, खलपू-अस् इति स्थिते "अचि श्नुधात्वि"त्युवङि प्राप्ते।

तत्त्व-बोधिनी

रात्सस्य २४०, ८।२।२४

रात्सस्य। "संयोगान्तस्य लोपः"इत्यनेनैव सिद्धे नियमार्थमिदमित्याह--सस्यैवेति। नान्यस्येति। "उर्क् परिमार्ट्ित्यादौ रेफात्संयोगान्तस्य लोपो नेत्यर्थः। "रादेव सस्ये"ति विपरीतनियमोऽत्र न भवति, उरप्रभृतिषु कृतसंयोगान्तलोपस्य "पुमा"नित्यस्य दर्शनात्। परत्वादिति। न च नुट् नित्यैति वाच्यम्, तृज्वद्भावे कृते संनिपातपरिभाषया नुटो दुर्लभत्वादिति भावः।

नुमन्विरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन। नुमचिरेति।"वारीणा तिसृणां" "क्रोष्टुना"मिति क्रमेणोदाहरणानि। ननु रेण स्वविषये प्राप्तं सर्वं बाध्यं, बाध्यसामान्यचिन्ताश्रयणात्त एव "गुणदीर्घोत्वानामपवाद"इति वक्ष्यति। तथा चाऽविशेषान्नुडप्यनेन बाध्यत इति कथमिह विप्रतिषेधः, उत्सर्गापवादयोस्तदयोगादिति चेत्; अत्राहुः--अतएव तदंशे विप्रतिषेधं दूषयित्वा "न तिसृचतसृ"इतिज्ञापकान्नुडिति भाष्यकृतोक्तम्। एवंच "नुम्तृज्वद्भावाभ्या"मित्येव सुवचमिति। इत्युदन्ताः। हु हु रिति। गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम्। हूह्वविति। "दीर्घज्जसि चे" ति पूर्वसवर्णदीर्घनिषेधे सति "इक"इति यण्। अतिचमूशब्दे त्विति। "पर्थमलिङ्गग्रहणं चे"त्युक्तेः। तथा च

"एवमतिचम्वादय"इति प्राचोक्तं नादर्तव्यमिति भावः। खलूपूरिति। खलं पुनातीति। पूञः क्विप्।

---

सूत्रम्

काशिका-वृत्तिः

धि च ८।२।२५

धकारादौ प्रत्यये परतः सकारस्य लोपो भवति। अलविध्वम्, अलविढ्वम्। अपविध्वम्, अपविढ्वम्। यद्यत्र सकारलोपो न स्यात्, सिचः षत्वे जश्त्वे च विभाषेटः ८।३।७९ इति मूर्धन्याभावपक्षे ऽपि न धकारः श्रूयेत। इतः प्रभृति सिचः सकारस्य लोप इष्यते। इह न भवति, चकाद्धि पलितं शिरः इति। तथा पयो धावति इत्येवम् आदावपि न भवति। सग्धिः, बब्धाम् इति छान्दसो वर्ण लोपः। भाष्यकारस्त्वाह, चकाधि इत्येव भवितव्यम् इति। तेन पयो धावति इत्येवम् आदौ यत्नानतरमास्थेयम्। धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम्। आशाध्वं तु कथं जश्त्वं सकारस्य भविष्यति। सर्वम् एवं प्रसिद्धं स्याच् छु तिश्चापि न भिद्यते। लुङश्चापि न मुर्धन्ये ग्रहणं सेटि दुष्यति। घसिभसोर् न सिध्येत तस्मात् सिज्ग्रहणं न तत्। छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे। निष्कर्तारमध्वरस्य इत्येवं प्राप्ते।

लघु-सिद्धान्त-कौमुदी

धि च ५१७, ८।२।२५

धादौ प्रत्यये परे सस्य लोपः। एधिताध्वे॥

न्यासः

धि च। , ८।२।२५

"अलविध्वम्(), अलविढ्वम्()" इति। लुङ्(), सिच्? ३।१।४४ सस्य "धि च" इति लोपः, "विभाषेटः" ८।३।७९ इति पक्षे मूर्धन्यः। "यद्यत्र" इत्यादिना सति सकारलोपे यदिष्टं प्राप्नोति तद्दर्शयति। असति हि सकारलोपे सिचः "आदेशप्रत्यययोः" (८।३।५९) इति षत्वे कृते "झलां जश्? झशि" ८।४।५२ इति जश्त्वे च डकारे "ष्टुना ष्टुः" ८।४।४० इति धकारस्य ष्टुत्वे ढकारेण भवितव्यम्(), ततश्च मूधन्याभावपक्षेऽपि धकारो न श्रूयते। विभाषाग्रहणं तु सिद्धं लिडर्थं लिङर्थं च स्यात्()। तस्मादमूर्धन्यपक्षे धकारस्य श्रवणं यथा स्यादिति लोपो विधीयते। "इतः प्रभृति सिचः सकारस्य लोप इष्यते" इति। स च "अचि विभाषा" ८।२।२१ इत्यतो विभाषाग्रहणाअनुवृत्तेव्र्यवस्थितविभाषाविज्ञानाच्च लभ्यते। "चकाद्धि" इति। "चकासृ दीप्सौ" (धा।पा।१०७४), लोट्(), सिप्(), "सेह्र्यपिच्च" ३।४।८७ इति हिरादेशः, "हुझल्भ्यो हेर्धिः" ६।४।१०१ इति हेर्धिभावः, पूर्ववच्छपो लुक्(), पूर्ववज्जश्त्वम्()--सकारस्य दकारः। "पयो धावति" इति। पयः शब्दस्य रुत्वम्(), "हशि च" ६।१।११० इत्युत्त्वम्(), "आद्गुणः" ६।१।८४। यदीतः प्रभृति सिचो लोप इष्यते, सग्धिः, बब्धायित्यत्र "झलो झलि" ८।२।२६ इति सकारस्य लोपो न प्राप्नोतीति चोद्यमाशङ्क्याह-सग्धिर्बब्धाम्()" इत्यादि। "अद भक्षणे" (धा।पा।१०११), स्त्रियां क्तिन्? ३।३।९४ "बहुलं छन्दसि" २।४।३९ इति घस्लादेशः, "घसिभसोर्हलि च" ६।४।१०० इत्युपधालोपः, सकारस्य "बहुलं छन्दसि" इति च्छान्दसो लोपः। क्वचिदन्यदेवोच्यते एषोऽपि बहुलस्यार्थः। इष्यते "झषस्तथोर्धोऽधः" ८।२।४० इति तकारस्य धत्वम्(), पूर्ववज्जश्त्वम्()--घकारस्य गकारः। समाना ग्धिरिति विशेषणसमासः, "समानस्य च्छन्दसि" ६।३।८३ इति सभावः। बब्धामिति--"भस भत्र्सनद्दीप्त्योः" (धा।पा।११००), लोट्? तस्य "लोटो लङ्वत्()" (३।४।८५) इत्यतिदेशात्? तसस्ताम्(), जुहोत्यादित्वाच्छपः श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्(), पूर्ववदुपधासलोपौ, पूर्ववदेव तकारस्य दत्वञ्च, भकारस्य दकारः "अभ्यासे चर्च" ८।४।५३ इति जश्त्वम्()। एवमिदं तावत्? श्लोकवार्तिककारस्याभिमतं दर्शितम्()। इदानीं भाष्यकारस्य मतं दर्शयितुमाह--"भाष्यकारस्त्वाह इत्यादि।

एतेनाविशेषेणैव सकारमात्रस्य भाष्यकाशे लोपमिच्छतीति दर्शयति। "तेन" इत्यादि। अविशेषेण हि सकारमात्रस्य यो लोपमिच्छति तस्य पयो धावतीत्यत्रापि प्राप्नोति। तस्मादिह मा भूदिति यत्नान्तरमास्थेयम्()। यत्नान्तरं तु व्यवस्थितविभाषाश्रयणमेव पूर्वधत्()। अयं तु विशेषः--पूर्वत्र व्यवस्थितविभाषया धि चैव सिचो भविष्यति, नान्यस्य; इह तु यत्र समानपदस्थौ निमित्तनिमित्तिनौ तत्रैवाविशेषेण सकारमात्रस्य लोपो भवति। अत्र तु भिन्नपदस्थौ पयोधावतौत्यादौ, तत्र न भवन्येवेति। एतावता विशेषेण व्यवस्थितभाषा यत्नान्तरमित्युच्यते। संक्षिप्तमेतमर्थं विस्तरेण सचोद्यपरिहरं वक्तुमाह--"धि सकारे सिचो लोपः" इत्यादि। धीत्येतद्यत्र परभूते सकारलोप इत्यतः प्रभृति विधातव्यः, तदुपलक्षणं वेदितव्यम्()। कुत एतत्()? इत प्रभृति सिचः सकारस्यलोप इष्यत इति प्राग्वचनात्()। लोपं प्रति सकारस्याधिकरणत्वेन विवक्षतत्वात्? सप्तम्या निर्देशः। किं प्रयोजनम्()? इत्याह--"चकाद्धि" इत्यादि। यदि सिचो लोपः, आशाध्वं तु कथम्()? आङः शासु इच्छायाम्()" (धा।पा।१०२२), लोट्(), ध्वम्(), टेरेत्वम्(), "सवाभ्यां वामौ" [३।४।९१] इत्यमादेशः, पूर्ववच्छपो लुक्()। अत्र सकारस्य लोप इष्यते, स न प्राप्नोति; यदि सिच एव सकारस्य लोपो विधीयते? "जश्त्वं सकारस्य भविष्यति" इति। "झलां जश्झशि" [८।४।५२] इत्यनेन जश्त्वम्()--सकारस्य दकारो भविष्यतीति सिद्धम्()--आशाब्दमित्येतत्()। इतः सकारलोपशास्त्रं प्रत्याख्यातुमाह--"सर्वमेवं प्रसिद्धं स्यात्()" इति। यदि सकारस्य भवति, एवं सति तेनैद जश्त्वेन सर्वं लक्ष्यं प्रसिद्धं स्यात्()। ततश्च सकारलोपशास्त्रमेतन्न कर्तव्यमेवेत्यभिप्रायः। तत्रैतत्स्यात्()--जश्त्वे सति श्रुतिभेदो भवति, तथा हि "अनचि च" [८।४।४६] इति सकरस्य द्विर्वचने कृते सकारयोश्च जश्त्वे दकारद्वयस्य श्रवणं प्रसजतीत्याह--"श्रुतिश्चापि न भिद्यते" इति। न हि व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रुतिं प्रति विशेषोऽस्तीति भावः। "लुङश्चापि न मूर्धन्ये ग्रहणम्()" इति। कत्र्तव्यं भवतीति शेषः। अयं चान्यो जश्त्वे सति गुणः। "इणः षीध्वंलुङ्लिटां धोऽङ्गात्()" [८।३।७८] इत्यत्र मूर्धन्ये कत्र्तव्ये लुङ उपादानं कत्र्तव्यं न भवतीति; अच्चोढ्वम्(), अप्लोढ्वमित्यादौ षत्वजश्त्वष्टुत्वैरेव मूर्धन्यस्य सिद्धत्वात्()। "च्युङ्? छ्युङ्? [अयं धातुर्धातुपाठे नोपलभ्यते] ज्युङ्? [न स्तः--प्रांउ।पुस्तके] प्रुङ्प्लुङ गतौ" [न स्तः--प्रांउ।पुस्तके] (धा।पा।९५५,९५६,९५७,९५८), लुङ्? ध्वम्(), सिच्(), "आदेशप्रत्यययोः" [८।३।५९] इति षत्वम्(), "झलां जश्? झशि" [८।४।५२] इत्यनेन षकारस्य जशत्वम्()--इकारः, धकारस्य ष्टुत्वम्()--ढकारः। एवं षत्वादिकार्यक्रमेण लुङि घकारस्य मूर्धन्यः सिदध इति, किं लुङ्ग्रहणेन? एवं लुङ्? प्रत्याख्यायते। सलोपे परे लुङ्ग्रहणं कत्र्तव्यमिति यस्याभिमतम्(); स आह--"सेटि दुष्यति" इति। यदि मूर्धन्यविदौ लर()ङ्ग्रहणं न क्रियेत, ततः "विभाकेटः" [८।३।७९] इत्यत्र मूर्धन्यो न प्राप्नोति, ततश्च पूर्ववत्? षत्वादिषु कृतेष्वलविध्वमित्थेव नित्यं स्या, न तु कदाचिदपयलविढ्वमिति। तस्मादुत्तरार्थं लुङ्ग्रहणं कत्र्तव्यम्()। "धि च" (८।२।२५) इति सकारलोपोवक्तव्यः--अलविढ्वमित्यस्य सिद्ध्यर्थम्()। न ह्रेतदसति सकारलोपे सिध्यति, ततश्च यदुक्तम्()--"सर्वमेवं प्रसिद्धं स्यात्()" इति, तदयुक्तम्()। "श्रि च" [८।२।२५] इत्येतस्मिश्च क्रियमाणे चकाद्धोति मा भूदिति सिच्ग्रहणं कत्र्तव्यम्(), एवं श्लोकबार्त्तिककारमतेन सिज्ग्रहणं कत्र्तव्यमिति स्थितम्()। इतरस्तस्मिन्? क्रियमाणेऽपरं दोषं दर्शयितुमाह--"घसिभसोनं "सिध्येत"[सिध्येत्? त्विक्ष्यादि--कांउद्रितःपाठः] इत्यादि। तुशब्दो हेतौ। यस्मात्? सिज्ग्रहणस्य हि धसिभसोः सकारलोपः सग्धिर्बब्धामित्यत्र न सिध्यतीत्येष हेतुरुक्तः स चायमहेतुः; यस्माद्यद्यपि सिज्ग्रहणे क्रियमाणे धसिभसोः "झलो झलि" [८।२।२६] इत्यनेन लोपो न भविष्यति, तथापि च्छाब्दसो वर्णलोपो भविष्यति; तेनापि सग्धिः, बब्धामित्येतदुभयं सिध्यत्येव। क्व यथा च्छान्दसो वर्णलोपः? इत्याह"यथा" इत्यादि। यथाध्वरविषये प्रयोगे इष्कत्तरिमध्वरस्येत्यत्र च्छान्दसो वर्णलोपो भवति, तथा साग्धिः, बब्धामित्यत्रापि घसिभयोर्भविष्यति। वाशब्दोऽत्रैवोपपत्त्यन्तरं सूचयति। तत्रेदमुपपत्त्यन्तरम्()--सग्धिरिति नैतद्धसे रूपम्(), किं तर्हि? "षघ हिंसायाम्()" (धा।पा।१२६८) इत्यस्य। ननु चार्थभेदो भवति, स्वरभेदश्च; पूर्वस्यां व्युत्पत्तौ समानावनमित्येषोऽर्थो भवति, तसासस्वरेणान्तोदात्तत्वञ्च; षधिस्तु क्तिनि विहिते हिंसार्थो भवति, नित्स्वरेणाद्युदात्तश्च? अनेकार्थत्वाद्धातूनां षघिश्च समानावनमित्यस्मिन्नर्थे वर्त्तिध्यते, स्वरव्यत्ययेन चान्तोदात्तत्वं भविष्यतीत्यदोषः। बन्धाम#इति च नैतद्भसे

रूपम्(), किं तर्हि? "बध बन्धने" (धा।पा।९७३) इत्यस्माल्लोटि तस्माम्(), "व्यत्ययो बहुलम्()" ३।१।८५ इति धत्वे तकारस्य "व्यत्ययो बहुलम्()" ३।१।८५ इति धातुधकारस्य बकारे च कृते बब्धामिति भवति। एवं च सिज्ग्रहणे क्रियमाणे घसिभसोर्यदि न सिध्यति नाम, तथापि नैव किञ्चिदनिष्टम्(); यस्मादनयापि व्युत्पत्त्या तदपाकृतं भवति। तदुक्तम्()--"घसिभसोर्न सिध्येत्तु ["सिध्येत"--काशिका] तस्मात्? सिज्ग्रहणं न तत्()" (का। ८।२।२५)। ततश्च "धि सकारे सिचो लोपश्चकाद्धीति प्रयोजनम्()" (का। ८।२।२५) इत्येतदवस्थितं श्लोकवार्त्तिककारस्य मतम्()॥

बाल-मनोरमा

धि च ९५, ८।२।२५

अथ ध्वमि टेरेत्वे तासि इटि एधितास्-- ध्वे इति स्थिते-धि च। "सः स्यार्धधातुके" इत्यतः स इत्यनुवर्तते। तासस्त्योरित्यतो लोप इति। अङ्गाक्षिप्तप्रत्ययो धीत्यनेन विशेष्यते। तदादिविधिः। तदाह-- धाताविति। तासः सलोपे "एधिताध्वे" इति रूपम्।

---

सूत्रम्

काशिका-वृत्तिः

झलो झलि ८।२।२६

झलः उत्तरस्य सकारस्य झलि परतो लोपो भवति अभित्त। अभित्थाः। अच्छित्त। अच्छित्थाः। अवात्ताम्, अवात्त इत्यत्र वा सिचः सकारलोपस्य असिद्धत्वात् सः स्यार्धधातुके ७।४।४९ इति सकारस्य तकारः। झलः इति किम्? अमंस्त। अमंस्थाः। झलि इति किम्? अभित्साताम्। अभित्सत। अयम् अपि सिच एव लोपः, तेन इह न भवति, सोमसुत् स्तोता, दृष्त्स्थानम् इति।

लघु-सिद्धान्त-कौमुदी

झलो झलि ४८०, ८।२।२६

झलः परस्य सस्य लोपो झलि। अगौप्ताम्। अगौप्सुः। अगौप्सीः। अगौप्तम्। अगौप्त। अगौप्सम्। अगौप्स्व। अगौप्स्म। अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत्॥ क्षि क्षये॥ १३॥ क्षयति। चिक्षाय। चिक्षियतुः। चिक्षियुः। एकाच इति निषेधे प्राप्ते --।

न्यासः

झलो झलि। , ८।२।२६

"अभित्त, अभित्थाः" इति। भिदेर्लुङि स्वरितेत्त्वादात्मनेपदम्(); तथासो, दकारस्य "खरि च" ८।४।५४ इति चत्र्वम्()--तकारः। "अवात्ताम्()" इति। दसेर्लुङि तसस्ताम्()। "अदात्त" इति। थस्य तः, "वदव्रज" ७।२।३ इत्यादिना वृद्धिः। अत्र सकारलोपे कृते "सः स्यार्धधातुके" ७।४।४९ इति तकारो न प्राप्नोतीति यस्य भ्रान्तिः स्यात्(), तं प्रत्याह--"अवात्ताम्()" इत्यदि। "अमंस्त, अमंस्थाः" इति। "मन ज्ञाने" (धा।पा।११७६), अनुदात्तेत्त्वादात्मनेपदम्()। "अभित्साताम्()" इति। भिदेराताम्()। "अभित्सत" इति। "आत्मनेपदेष्वनतः" ७।१।५ इति झस्यादादेशः॥

बाल-मनोरमा

झलो झलि १२५, ८।२।२६

असैध् स् तामिति स्थिते, अपृक्तत्वाभावादीडभावादिडभावाच्च, इट ईटीति सिचो लोपेऽप्राप्ते-- झलो झलि। झल इति

पञ्चमी। संयोगान्तस्येत्यतो लोप इति, रात्सस्येत्यतः सस्येति चानुवर्तते। तदाह--झलः परस्येत्यादि। असैद्धामिति। असैध् स् तामिति स्थिते सलोपे धत्वे जश्त्वे च रूपम्। पक्ष इति। इट्पक्षे इत्यर्थः। असेधीदिति। इट ईटीति सलोपः। नेटीति वृद्धिप्रतिषेधः। लघूपधगुणः। खादृ इति। अत्र ऋदित्वं "नाग्लोपी"त्याद्यर्थमित्यभिप्रेत्याह-- ऋकार इदिति। खदेति। स()थैर्यं--स्थिरीभवनम्।

तत्त्व-बोधिनी

झलो झलि १००, ८।२।२६

"संयोगान्तस्ये"त्यतो लोप इति, "रात्सस्ये"त्यतः सस्येति चानुवर्तते। तदाह-- सस्य लोपः स्यादिति। पदस्येत्यधिकारात्प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसंबन्धित्वे लोपोऽयम्। तेन "सोमसुत्स्थानटमित्यत्र नभवति। झलः किम्। अनैष्टाम्। झलि किम्?। असैत्सीत्। असेधीदिति। "नेटी"ति वृद्धिप्रतिषेधः गुणः। रखादृ भक्षणे। ऋकार इदिति। तेन "नाग्लोपी"ति निषेधः। अचखादत्।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वादङ्गात् ८।२।२७

ह्रस्वान्तादङ्गादुत्तरस्य लोपो भवति झलि परतः। अकृत। अकृथाः। अहृत। अहृथाः। ह्रस्वातिति किम्? अच्योष्ट। अप्लोष्ट। अङ्गातिति किम्? अलाविष्टाम्। अलाविषुः। झलि इत्येव, अकृषाताम्। अकृषत। अयम् अपि सिच एव लोपः, तेन इह न भवति, द्विष्टराम्, द्विष्टमाम् इति। सुजन्ताद् द्विशब्दात् तरप्तमपौ, अद्रव्यप्रकर्षे आतिशयिकः आम् प्रत्ययः।

लघु-सिद्धान्त-कौमुदी

ह्रस्वादङ्गात् ५४७, ८।२।२७

सिचो लोपो झलि। अभृत। अभृषाताम्। अभरिष्यत्, अभरिष्यत॥ हृञ् हरणे॥ ३॥ हरति, हरते। जहार। जहर्थ। जह्रिव। जह्रिम। जह्रे। जह्रिषे। हर्तासि, हर्तासे। हरिष्यति, हरिष्यते। हरतु, हरताम्। अहरत्, अहरत। हरेत्, हरेत। ह्रियात्, हृषीष्ट। हृषीयास्ताम्। अहार्षीत्, अहृत। अहरिष्यत्, अहरिष्यत॥ धृञ् धारणे॥ ४॥ धरति, धरते॥ णीञ् प्रापणे॥ ५॥ नयति, नयते॥ डुपचष् पाके॥ ६॥ पचति, पचते। पपाच। पेचिथ, पपक्थ। पेचे। पक्तासि, पक्तासे॥ भज सेवायाम्॥ ७॥ भजति, भजते। बभाज, भेजे। भक्तासि, भक्तासे। भक्ष्यति, भक्ष्यते। अभाक्षीत्, अभक्त। अभक्षाताम्॥यज देवपूजा सङ्गतिकरणदानेषु॥ ८॥ यजति, यजते॥

न्यासः

ह्रस्वादङ्गात्?। , ८।२।२७

"अलाविष्टाम्()" इति। तसस्ताम्(), सिचि वृद्धिः। अत्र श्रुतिकृते पौर्वापर्ये सति ह्यस्वादिङः परः सकारो भवति, न त्वङ्गात्(); इडागमः प्रत्ययभक्तत्वेनानङ्गत्वात। "अलाविषुः" इति। "सिजभ्यस्तविदिभ्यश्च" ३।४।१०९ इति झेर्जुस्()। "अकृषाताम्()" इति। "उश्च" १।२।१२ इति कित्त्वाद्गुणाभावः। "द्विष्टचाम्()" इति। "द्वित्रिचतुभ्र्यः सुच्()" ५।४।१८ तदन्तादतिशायने तरप्(); "किमेत्तिङ्()" ५।४।११ इत्यादिनामुः, "ह्यसवात्तादौ तद्धिते" ८।३।१०३ इति सकारस्य मूर्धन्यः॥

बाल-मनोरमा

ह्यसवादङ्गात् २०६, ८।२।२७

तङि तु अभृ स् त इति स्थिते---ह्यस्वादङ्गात्। ह्यस्वान्तादित्यर्थः। सिच इति भाष्यम्। "झलो झली"त्यतो झलीति, "संयोगान्तस्य लोपः" इत्यतो लोप इति चानुवर्तते-- इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- सिचो लोपः स्याज्झलीति। ह्यस्वात्किम्?। अच्योष्ट। अङ्गात्किम्?। अलाविष्टाम्। सिचः किम्?। द्विष्टराम्। द्विष्टमाम्। सुजन्तात्तरप्तमौ। अभृतेति। "उश्चे"ति सिचः कित्त्वान्न गुणः। "झली"त्युक्तेरभृषाताम् अभृषतेत्यत्र न सिज्लोपः। अनतः परत्वाज्झस्य अदादेशः। अभृथाः अभृषाथाम् अभृढ्वम्। अभृषि अभृष्वहि अभृष्महि। ह्यधातुरनिट्। हरणं चतुर्विधमित्याह-- प्रापणमित्यादि। तद्यथा--भारं हरति। प्रापयतीत्यर्थः। अशं हरति। स्वीकरोतीत्यर्थः। परत्वं हरति। चोरयतीत्यर्थः। पापं हरति हरते वा। नाशयतीत्यर्थः। जहार जह्यतुः जह्युः। "एकाचः" इतीण्निषेधस्य क्रादिष्वेव लिटि नियमितत्वादिह थलि इटि प्राप्ते "अचस्तास्व"दिति तन्निषेधः। ऋदन्तत्वेन भारद्वाजमतेऽपि इण्निषेध एव। तदाह--जहर्थेति। जह्यथुः जह्य। जहार--जहर। इति सिद्धवत्कृत्याह---जह्यिवेति। क्रादिनियमादिट्। जह्यिम। जह्यिषे। क्रादिनियमादिट्। जह्याथे जह्यिढ्वे--जह्यिध्वे। जह्य#ए जह्यिवहे जह्यिमहे। लुडादिषु भृञ इव रूपाणि। धृञ्धातुरनिट्। ह्मञ इव रूपाणि। णीञ्धातुरनिट्। णोपदेशः। नयति नयते। निनाय निन्यतुः निन्युः। क्रादिनियमाल्लिटि इट्। थलि तु "अचस्तास्व" दितीण्निषेधस्य भारद्वाजनियमादिड्विकल्प इत्यभिप्रेत्याह-- निनयिथ निनेथेति। निन्यिषे निन्याथे निन्यिढ्वे--निन्यिध्वे। निन्ये निन्यिवहे निन्यिमहे। नेता। नेष्यति नेष्यते। नयतु नयताम्। अनयत् अनयत। नयेत् नयेत। नीयात् नेषीष्ट। अनैषीत् अनेष्ट। अनेष्यत् अनेष्यत। इत्यजन्ता उभयपदिनो गताः। परस्मैपदिन इति। "जि ज्र अभिभवे इत्येत्पर्यन्ता" इति शेषः। धेट् पाने इति। "स्तनन्धयी"त्यादौ ङीबर्थं टित्त्वम्, अवयवे टित्त्वस्यव्यर्थतया समुदायार्थत्वादिति हरदत्तः।

तत्त्व-बोधिनी

ह्यस्वादङ्गात् १७८, ८।२।२७

प्रत्ययस्यैव तत्रापीष्टत्वात्सिच एव लोपो भवति। तेनेह न--- अस्तं द्विष्टमाम्। केचित्त्विहाऽङ्गग्रहणाऽभावे अयाविष्टाम् अलाविष्टामित्यादावपि अतिप्रसङ्गः स्यादित्याहुः। तदपरे न क्षमन्ते। संनिपातपरिभाषयापि परिहारसंभवादिति। झलीति किम?। अभृषाताम्। अभृषत। ह्मञ् हरणे। चत्वार इहाऽर्थाः। भारं हरति। प्रापयतीत्यर्थः। अंशं हरति। स्वीकरोतीत्यर्थः। स्वर्णं हरति। चोरयति। पापं हरति। नाशयति। धृञ्। दधार। दध्रतुः। दधर्थ। दध्रे। दध्राते। धर्ता। ध्रियात्। णीञ्। निनयिथेति। भारद्वाजनियमादिड्विकल्पः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ इटः ५।१ ईटि ७।१ सस्य ? लोपः ?

अर्थः॥

इट् उत्तरस्य सकारस्य लोपः भवति, ईटि परतः

उदाहरणम्॥

अदेवीत्, असेवीत्, अकोषीत्, अमोषीत्

काशिका-वृत्तिः

इट ईटि ८।२।२८

इटः उत्तरस्य सकारस्य लोपो भवति ईटि परतः। अदावीत्। अलावीत्। असेवीत्। अकोषीत्। अमोषीत्। इटः इति किम्? अकार्षीत्। अहार्षीत्। ईटि इति किम्? अलाविष्टाम्। अलाविषुः।

लघु-सिद्धान्त-कौमुदी

इट ईटि ४४८, ८।२।२८

इटः परस्य सस्य लोपः स्यादीटि परे। (सिज्लोप एकादेशे सिद्धो वाच्यः)। आतीत्। आतिष्टाम्॥

न्यासः

इट ईटि। , ८।२।२८

"अदेवीत्()" इति। "नेटि" ७।२।४ इति वृद्धिप्रतिषेधे कृते लघूपधगुणः, "अस्तिसिचोऽपृक्ते" ७।३।९६ इतीट्()॥

बाल-मनोरमा

इट ईटि ११०, ८।२।२८

इट ईटि। "इट" इति पञ्चमी। रात्सस्येत्यतः सस्येति, संयोगान्तस्येत्यतो लोप इति चानुवर्तते। तदाह--इटः परस्येति। एवं च आति स् ई त् इति स्थिते सकारस्यलोपे आति ईत्--इति स्थिते सवर्णदीर्घे आतीदिति रूपं वक्ष्यति। तत्र सलोपस्याऽसिद्धत्वात्कथं सवर्णदीर्घं इत्यत आह-- सिज्लोप एकादेशे सिद्धो वक्तव्य इति। आतिष्टामिति। लुङस्तस्। तस्य ताम्। च्लेः सिच्। तस्य इटि आचि वृद्धौ षत्वम्। अपृक्तत्वाऽभावेन ईडभावात्सलोपो न। आतिषुरिति। लुङो झिः। च्लेः सिच्। जुस् इट् आट् वृद्धिः। षत्वं रुत्वविसर्गौ। आतीः आतिष्टम् आतिष्ट। आतिषम् आतिष्व आतिष्म।

तत्त्व-बोधिनी

इट ईटि ८५, ८।२।२८

"संयोगान्तस्य लोपः"इत्यतो लोप इति, "रात्सस्ये"त्यतः सस्येति चानुवर्तते। तदाह-- लोपः स्यादिति। इटः किम्?। अहार्षीत्। ईटि किम्?। आतिष्टाम्। आतिषु।

सिज्लोप एकादेशे सिद्धो वाच्यः। सिज्लोप इति। अत्र वदन्ति-- सलोप इति वक्तव्ये सिज्ग्रहणं "झलो झली"त्यादिसूत्रत्रयं सिज्विषयकमिति ज्ञापनार्थम्। तेनेह सोमस्तुत्। स्तोता। द्विष्रकटराम्। द्विष्टमाम्। "धि चे"ति सूत्रे तु वामनमते सिचो लोपः। भाष्यमते तु सस्येति भेदो बोध्य इति।

---

सूत्रम्

काशिका-वृत्तिः

स्कोः संयोगाऽद्योरन्ते च ८।२।२९

पदस्य अन्ते यः संयोगः, झलि परतो वा यः संयोगः, तदाद्योः सकारककारयोर् लोपो भवति। लस्जेः लग्नः। लग्नवान्। साधुलक्। मस्जेः मग्नः। ककारस्य तक्षेः तट्। तष्टः। तष्टवान्। काष्ठतत्। झलि सङीति वक्तव्यम्। किम् इदं सिङि इति? सनः सप्रभृति महिङो ङकारेण प्रत्याहारः। इह मा भूत्, कष्ठशक्ष्थाता इति। थकारे झलि ककारस्य संयोगादेर् लोपः

प्राप्नोति। तदत्र शकेः क्विबन्तस्य प्रयोग एव न अस्ति इत्याह काष्ठशगेव न अस्ति, कुतो ऽयं काष्ठशकि तिष्ठेतिति। वास्यर्थम्, काक्वर्थम् इत्यत्र अपि बहिरङ्गलक्षणस्य यणादेशस्य असिद्धत्वात् संयोगादिलोपो न भवति। स्कोः इति किम्? नर्नर्ति। वर्वर्ति। संयोगाद्योः इति किम्? पयःशक्। अन्ते च इति किम्? तक्षितः। तक्षकः।

लघु-सिद्धान्त-कौमुदी

स्कोः संयोगाद्योरन्ते च ३११, ८।२।२९

पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः। भृट्। सस्य श्चुत्वेन सः। झलां जश् झशि इति शस्य जः। भृज्जौ। भृड्भ्याम्॥ त्यदाद्यत्वं पररूपत्वं च॥

न्यासः

स्कोः संयोगाद्योरन्ते च। , ८।२।२९

झलोति वत्र्तते। "संयोगाद्योः" इति षष्ठीसमासः। अत्र यद्यपि संयोग उत्तरपदार्थो गुणभूतः, तथापि संयोगाद्योः स्कोरन्तग्रहणं विशेषणं न भवतीति गुणभूतोऽपि तेन संयोग एव विशिष्यत इति विज्ञायते, इत्याह--"पदस्यान्ते यः संयोगः" इति। "अन्ते" इति। अवसान इत्यर्थः। "झलि परतः" इति। पदस्येत्यपेक्षते। "तदाद्योः" इति। तस्यैवम्भूतस्य संयोगस्यादिभूतयोरित्यर्थः। "लग्नः" इति। "ओलजो ओलस्जीव्रीडे" (धा।पा।१२९०, १२९१), निष्ठा। अत्र जकारे झलि परतः सकारजकारयोर्यः संयोगः पदस्यादयवस्तदादेः सकारस्य लोपः, "ओदितश्च" ८।२।४५ इति नत्वम्(), "()आईदितो निष्ठायाम्()" ७।२।१४ इतीट्प्रतिषेधः, "चोः कुः" ८।२।३० इति कुत्वम्()--गकारः। "साधुलक्()" इति। साधु लज्जात इति क्विप्()। अत्र पदस्यादसाने संयोगः। ७।१।६० इति नुम्(), स च भवत्? "मस्जेरन्त्यात्? पूर्वो नुमनुषङ्गसंयोगादिलोपार्थम्()" (वा। ७) इति वचनादन्त्याज्जकारात्? पूर्वो भवति, तस्य च "अनिदिताम्()" ६।४।२४ इत्यनुनासिकलोपः। "तष्टः" इति। "तक्षू त्वक्षू तनूकरणे" (धा।पा।६५५,६५६) ऊदित्त्वात्(), स्वरत्यादिसूत्रेण ७।२।४४ विभाषितेट्(); तेन निष्ठायां "यस्य विभाषा" ७।२।१५ इतीट्प्रतिषेधः। "काष्ठशवस्थाता" इति। काष्ठं शक्नोतीति क्विप्(); काष्ठशकि स्थातेति "सप्तमी" २।१।३९ इति योगविभागात्समासः। "तदत्र" इत्यादिना "झलि सडीति वक्तव्यम्()" (वा ९१७) इति यदुक्तम्(), तत्? प्रत्याचष्टे। तदिति वाक्योपन्यासार्थः। "शकेः क्विबन्तस्य प्रयोग एव नास्ति" इति। शकेः "अन्येभ्योऽपि दृश्यते" (३।२।१७८) इति क्विप्? स्यात्(), इह च "दृश्यते" इत्यस्य ग्रहण एवायमर्थः--यत्र लौकिके प्रयोगे क्विबन्तस्य प्रयोगो दृश्यते तत्र यथा स्यादिति, न च लोके काष्ठशगित्येवंविधः शकेः क्विबन्तस्य प्रयोगो दृश्यते। ततः शकेः क्विबन्तस्य प्रयोग एव नास्ति, अतो हेतोः "झलि सडीति वक्तव्यम्()" (वा।९१७) इत्येतत्? प्रत्याख्यातुमाह भाव्यकारः--"काष्ठाशगेव नास्ति; कुतोऽयं काष्ठशकि तिष्ठेत्()" इति। आधारपरतन्त्व उद्धनादावस्य वृत्तिः, अतो यत्र काष्ठशगाधार एव नास्ति, तत्र तदाधेयः स्थाता सुतरामेव नास्ति तस्मान्न झलि सडीति वक्तव्यम्(); व्यावर्त्याभावात्()। इह कस्मान्न भवति--वाक्स्थातेति? संयोगादिलोपे कुत्वम्यासिद्धत्वात्()। अथेह कस्मान्न भवति--वास्यार्थम्? काक्यर्थम्? इत्याह--"दास्यर्थम्(), काक्यर्थम्()" इत्यादि। अथ स्कोरिति किमर्थम्()? नर्नर्तीत्यत्र मा भूत्()। नृतेर्यङ्लुगन्तस्य "रुग्रिकौ च लुकि" ७।४।९१ इत्यभ्यासस्य रुकि कृते रूपमेतत्()। "संयोगाद्योरिति किम्()? "पयःशक्()" इति। क्विबन्तमेतत्()। सोपपदस्य हि शकेः क्विबन्तस्य प्रयोग एव नास्ति। केवलस्य तु स्यादेव। अन्ते चेति किम्()? तक्षिता, तक्षकः॥

बाल-मनोरमा

स्कोः संयोगाद्योरन्ते च , ८।२।२९

तत्र विशेषमाह--स्कोः संयोगाद्योः। "पदस्ये"त्यधिकृतम्। चकारात् "झलो झली"त्यतो "झली"त्यनुवर्तते। पदस्यान्ते

इति झलीति च संयोगेत्यनेन संबध्यते। "संयोगे"ति लुप्तषष्ठीकं पृथक्पदम्। स् च क् च स्कौ, तयोरिति विग्रहः "संयोगान्तस्य लोपः" इत्यतो "लोप" इत्यनुवर्तते। तदाह--पदन्ते इत्यादिना। अत्र काष्ठशक् स्थातेत्यत्र झल्परसंयोगादित्वात्ककारस्य लोपप्राप्तौ तन्निवृत्त्यर्थं वार्तिकं पठितं-झलीत्यपहाय "सङीति वक्तव्य"मिति। सनः सकारमारभ्य आमहिङो ङकारेण प्रत्याहारः। तदिदं वार्तिकं बाष्ये प्रत्याख्यातं-"काष्ठशगेव नास्ति "कुतः काष्ठशक् स्थाते"ति। ककारान्तेब्यो नास्ति क्विप्, अनभिधानादित्याशयः। नच पृथक्()स्थातेत्यत्र ककारस्य लोपनिवृत्तये "सङी"ति वार्तिकमावश्यकमिति वाच्यं, तत्प्रत्याख्यानपरभाष्यप्रमाण्यादेवंजातीयकसंयोगादिलोपप्राप्तियोग्योदाहरणानामप्रयोगावगमादिति शब्देन्दुशेखरे स्पष्टम्। भृट्-भृडिति। भृस्ज् स् इति स्थिते हल्ङ्यादिलोपे "स्को"रिति सकारलोपे जकारस्य व्रश्चादिना षत्वे जश्त्वचर्त्वे इति भावः। यद्यपि जकारस्य संयोगान्तलोपेऽपि सकारस्य "व्रश्चे"ति षत्वे जश्त्वचत्र्वयोर्भृट्-भृड् इति सिध्यति तथापि न्याय्यत्वादिह संयोगादिलोप एव भवति। सस्येति। भृस्ज-औ इत्यादावचि पदान्तझल्परसंयोगादित्वाऽभावान्न संयोगादिलोपः। "झलां जस् झशी"ति जश्त्वस्या।त्रसिद्धत्वात्सकारस्य श्चुत्वमिति भावः। तस्येति। शकारस्येत्यर्थः। तालुस्थानकत्वात्शकारस्य जकारः। नच जश्त्वस्यासिद्धत्वात्शकारस्य व्रश्चेति षत्वं शङ्क्यं, षत्वं प्रति श्चुत्वस्याऽसिद्धत्वात्। ब्यामादौ तु "स्वादिषु" इति पदत्वात्संयोगादिलोपः। व्रश्चेति षत्वं, जश्त्वं च। भृड्भ्यमित्यादि। ऋत्विगित्यादिनेति। "ऋ गतौ" औणादिकस्तुः। ऋतुः=गमनं, प्रापति, दक्षिणाद्रव्यलाभो विवक्षितः। तस्मिन्निमित्ते यजन्ति=यज्ञियव्यापारं कुर्वन्तीत्यर्थे ऋतावुपपदे यजधातोः क्विन्। "वचिस्वपी"ति यकारस्य संप्रसारणमिकारः। पूर्वरूपम्। यणादेशश्च। ऋत्विजिति रूपम्। ततः सोर्हल्ङ्यादिलोपः। एतावत्सिद्धवत्कृत्याह--क्विन्नन्तत्वात्कुत्वमिति।"क्विन्प्रत्ययस्येत्यनेने"ति शेषः। एतदर्थमेव क्विन्विधानमिति भावः। नच क्विपि "चोः कुः" इति कुत्वेनैवैतत्सिध्यतीति वाच्यं, चोः कुरिति कुत्वं हि "व्रश्चे"ति षत्वेनाऽपवादत्वाद्बाध्येत। "क्विन्प्रत्ययस्ये"ति कुत्वं तु क्विन्विधिसामथ्र्यादेव न बाध्यते। यष्टेत्यादौ षविधेश्चरितार्थत्वादिति भावः। ऊर्क ऊर्गिति। "ऊर्ज बलप्राणनयोः"चुरादिण्यन्तात् "भ्राजभासे"त्यादिना क्विप्, णिलोपः। ऊर्जिति रूपम्। ततः सोर्हल्ङ्यादिलोपः। "चोः कुः" इति जस्य कुत्वं गकारः। "वाऽवसाने" इति चत्र्वविकल्पः। नच कुत्वे कर्तव्ये णिलोपस्य स्थानिवत्त्वं शङ्क्यं , पदान्तविधौ तन्निषेधात्, पूर्वत्रासिद्धीये न स्थानिव"दिति वचनाच्च। इति जान्ताः। अथ दकारान्ता निरूप्यन्ते। त्यद्()शब्दस्तद्शब्दपर्यायः। तस्य विशेषमाह--त्यदाद्यत्वं पररूपत्वमिति। सर्वत्र विभक्तावुत्पन्नायां "त्यदादीनाम" इति दकारस्यान्त्यस्य अकारः, "अतो गुणे" इति पररूपं चेत्यर्थः। तथश्चाऽदन्तवद्रूपाणीति भावः। त्य स् इति स्थिते।

तत्त्व-बोधिनी

स्कोः संयोगाद्योरन्ते च ३४०, ८।२।२९

स्कोः। "पदस्ये"त्यनुवर्तते, "झलो झलि"त्यतो "झली"ति च। "संयोगे"ति लुप्तषष्ठीकं झलन्ताभ्यां विशेष्यते। तदेतदाह--पदान्ते झलि च परे इति। झलि किम्()भ्रष्टा। भृज्जतीति भृट्। क्विप्। "ग्रहिज्ये"ति संप्रसारणम्। "व्र()ओ"ति षत्वम्। ऊर्गिति। "ऊर्ज बलप्राणनयोः"। अस्माच्चुरादिण्यन्तात् "भ्रजभासे"त्यादिना क्विपि णिलोपः, स च चोः कुत्वे न स्थानिवत्, पदान्तविधित्वात्, पूर्वत्राऽसिद्धत्वाच्च। इह जान्तेषु--अवयाः। अवयाजौ। अवयाजैति नोदाह्मतं, "मन्त्रे()ओतवहोक्थे"ति पर्कृत्य "अव यजः"इति विहितस्य ण्विनस्तदपवादस्य पदान्ते ङसश्छान्दसत्वेन वैदिकप्रक्रियायामेव वक्तुमुचित्वात्। इति जान्ताः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ चोः ६।१ कुः १।१ झलि ७।१ २६ अन्ते ७।१ २९ च ० २९ पदस्य ६।१ ८।१।१६

अर्थः॥

चवर्गस्य स्थाने कवर्गादेशो भवति झलि परतः पदान्ते च।

उदाहरणम्॥

पक्ता, पक्तुम्, पक्तव्यम्। वक्ता, वक्तुम्, वक्तव्यम्॥ पदान्ते -- ओदनपक्, वाक्॥
काशिका-वृत्तिः
चोः कुः ८।२।३०

चवर्गस्य कवर्गादेशो भवति झलि परतः, पदान्ते च। पक्ता। पक्तुम्। पक्तव्यम्। ओदनपक्। वक्ता। वक्तुम्। वक्तव्यम्। वाक्। क्रुञ्चा इत्यत्र सिङि इति वचनाद् ञकारस्य चकारे झलि कुत्वं न भवति, युजिक्रुञ्चां च इति निपातनाद् वा। नकारोपधो वा धातुरयं रेफरहितश्च क्रुञ्च कौटिल्याल्पीभावयोः इति पठ्यते। नकारलोपे हि निकुचितिः इति दृश्यते। युजिक्रुञ्चां च इति तस्यैव रेफो ऽधिको नकारस्य लोपाभावश्च इति निपात्यते। तत्र अनुस्वारस्य परसवर्णस्य च असिद्धत्वात् ञकार एव न अस्ति इति कुत्वं न भविष्यति।
लघु-सिद्धान्त-कौमुदी
चोः कुः ३०८, ८।२।३०

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। सुयुक्, सुयुग्। सुयुजौ। सुयुग्भ्याम्॥ खन्। खञ्जौ। खन्भ्याम्॥
न्यासः
चोः कुः। , ८।२।३०

"झलि पदान्ते च" इति। "परतः" इति प्रत्येकमभिसम्बध्यते। ननु च पूर्वसूत्रे चकारेण झलनुकृष्ट इति तस्येहानुवृत्तिरयुक्ता? नैतदस्ति; न हि तत्र चकारेण झलनुकृष्टः, किं तर्हि? स्वरितत्वादेवानुवर्त्तमानस्यान्तग्रहणं न बाधकमित्यतादच्चकारेण व्याख्यातम्()। "वाक्()" इति। वचेः "क्विब्वचि" (वा।२८८) इत्यादिना ज्विप्(), दीर्घश्च। "क्रुञ्च" इति। इह केचित्? "कुञ्च कौटिस्याल्पीभादयोः" (धा।पा।१८६) इति सरेफं अकारोपधं धातुं पठन्ति, "कुञ्च कौटिल्याल्पीभावयोः" (धा।पा।१८५) इत्यरेकं नकारोपधं परे। तत्र पूर्वपाठं गृहीत्वा यश्चोदयेत्()--अथ क्रुञ्चेत्यत्र कस्मान् भवतीति? तं प्रत्याह--"ॠञ्च" इत्यादि। अनेन "झलि सङीति न वक्तव्यम्()" इति यत्? पूर्वं प्रत्याख्यातं तस्येहार्थतां दर्शयति। "युजिक्रुञ्चाञ्च" ३।२।५९ इति निपातनाद्वेति। "क्रुञ्चेत्यत्र ञकारस्य चकारे कुत्वं न भवतीति सम्बन्धः। "ञकारोपधस्य [ञकारिपदस्य--कांउद्रितपाठः] सरेफस्य पाठमभ्युपेत्य प्राप्तौ तस्यामेवं परिहारद्वयमुक्तम्()। इपानीं कुत्वस्य प्राप्तिरेव नास्ति; यस्मान्नायं ञकरोपधः पठ()ते, किं तर्हि? नकारोपध इति दर्शयितुमाह--"नकारोपधो वा" इत्यादि। किं पुनः कारणं नकारोपधः पठ()ते? किं तर्हि? नकारोपध इति दर्शयितुमाह--"नकारोपधो वा" इत्यादि। किं पुनः कारणं नकारोपधः पठ()ते? इत्याह--"नकारलोपे हि"["सकारलोपे हि"--प्रांउ।पाठः] इत्यादि। निकुचित इत्येष प्रयोगोऽस्त्येव। धातोर्निष्ठान्तस्य "श्नान्नलोपः" ६।४।२३ इत्यनुवर्त्तमाने-"अनिदिताम्()" ६।४।२४ इति नलोपादिह नकारलोपस्य दर्शनान्नकारोपधोऽयं पठ()ते; अन्यथा ह्वेष प्रयोगो नोपपद्यते। न हि ञकारलोपस्य किञ्चिल्लक्षणमस्ति।

यदि तर्हि कुञ्चेति रेफरहितो नकारोपधः पठ()ते, एवं सति क्रुङ, क्रुञ्चौ, क्रुञ्चः--इति न सिध्यति; ऋत्विगित्यादिना ३।२।५९ सूत्रेण हि क्विनि कृते "अनिदिताम्()" ६।४।२४ इति नलोपे कुक, कुचौ, कुचः--इत्येवं प्राप्नोतीत्यत आह--"युजिक्रुञ्चाम्()" इत्यादि। स्यादेतत्()--यद्यपि नकारलोपाभावो निपात्यते, तथापि नकारस्यानुस्वारे तस्य ययि परसवर्णे (८।४।५८) ञकारे स्यादेव कुत्वम्()? इत्यत आह--"तत्र" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

चोः कुः , ८।२।३०

युक्षु। "असमासे" इत्यस्य व्यावर्त्यं सुयुज्शब्दं कथयिष्यंस्तत्र विशेषमाह--चोः कुः। "झलो झली"त्यतो "झली"त्यनुवर्तते। "पदस्ये त्यधिकृतम्। "स्कोः संयोगाद्योः" इत्यतोऽन्ते इत्यनुवर्तते, तदाह-चवर्गस्येति। ननु "चोः" इत्यत्र उकारस्य उपदेशाऽभावादित्त्वाऽभावेन उदित्त्वाऽभावात्कथमिह सवर्णग्रहणमिति चेन्न, चोरित्युकारान्तग्रहणसामथ्र्यादेव तत्र उकारस्य इत्त्वाभ्यनुज्ञानात्। अन्यथा "चः कुः" इत्येव ब्राऊयादिति। कुत्वमिति। सुयुज्शब्दे जकारस्य कुत्वं गकारः, घोषसंवारनादाल्पप्राणसाम्याद्यथासंख्यसूत्राच्चेति भावः। नन्विह "क्विन्प्रत्ययस्ये"त्येव कुत्वं कुतो न स्यात्। यद्यपि सुपूर्वाद्युजेः "सत्सूद्विषे"त्यादिना क्विपि उपपदसमासे सुयुज्शब्दो न क्विन्नन्तोऽयम्। निरुपपदाद्युजेः क्विन्निति अनुपदेमेवोक्तत्वात्। तथापि क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्संप्रति क्विबन्तत्वेऽपि अनेनैव कुत्वमित्यत आह--क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वादिति। तथा चात्र "चोः कु"रित्येव न्याय्यमिति भावः। सुयुक्सुयुगिति। "वाऽवसाने" इति चत्र्वविकल्पः। ननु युगित्यपि रूपमिष्टं कथं सिध्येत्, क्विनि नुम#इ युङित्येवापत्तेः। नच "ऋत्वि"गित्यादिसूत्रे "युजेरसमासे" इति सूत्रे च युजीति इकारावेशिष्टस्यैव निर्देशात् "युज समाधौ" इति दैवादिकस्य अकारान्तस्याऽग्रहणात्ततः "क्विप् चे"ति क्विपि नुमबावे कुत्वे युगिति सिध्यतीति वाच्यम्, "इक्श्तिपौ धातुनिर्देशे" इति इक्प्रत्ययान्तत्वस्य उभयत्रापि संभवेन उभाभ्यां क्विनि नुमि युङित्येवापत्तेरित्यत आह--युजेरिति। "युजेरसमासे" इति सूत्रे युजीति ऋत्विगादिसूत्रे युजीति च धातुपाठे "युजिर्योगे" इतीकारविशिष्टो यः पठितस्तस्यैव रेफशिरस्कतया ग्रहणं, नत्विका निर्देशः, व्याख्यानादित्यर्थः। ततः किमित्यत आह--तेनेति। "खजि गतिवैक्लव्ये" क्विप्, इदित्त्वान्नुम्। "नश्चापदान्तस्ये"त्यनुस्वारः, परसवर्णो ञकारः। खञ्ज्शब्दः तस्य विशेषमाहसंयोगान्तेति। हल्ङ्यादिना सुलोपे जकारस्य संयोगान्तलोपः। ततो निमित्तापायादनुस्वारपरसवर्णयोर्निवृत्तिः। खन्निति रूपमित्यर्थः। "अनिदिता"मिति नलोपस्तु न, इदित्त्वात्। "राजृ दीप्तौ" इत्यस्मात्क्विपि राज्शब्दः। तस्य विशेषमाह--व्रश्चेति। हल्ङ्यादिना सुलोपे "व्रश्चे"ति षत्वम्। जश्त्वेन डकारः। "वाऽवसाने" इति चत्र्वविकल्पः। भ्यामादौ "स्वादिषु" इति पदत्वात् षत्वं जश्त्वं च। राड्भ्यामित्यादि। "ङः सि धु"डिति विकल्पं मत्वाह--राट्त्सु, राट्स्विति। एवं विभ्राडिति। राज्शब्दवत्षत्वादीत्यर्थः। "टु भ्राजृ दीप्तौ"क्विप्। विशिष्ट भ्राजते इति विभ्राट्। देवान् यजतीति देवेट्। देवान् यजतीति विग्रहे क्विपि यजादित्वा"द्वचिस्व"पीति संप्रसारणम्। "अद्गुणः"। वि()आसृडिति। "सृज विसर्गे"क्विपि "व्रश्चे"ति षत्वादि। ननु क्विबन्तेऽपि देवेज्शब्दे वि()आसृज्शब्देच क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणादृत्विक्शब्दवत्कुत्वं कुतो न स्यादित्यत आह--इहेति। "सृजिदृशो"रिति सूत्रे काम्यच्सूत्रे च वि()आसृज्भ्यामिति उपयट्काम्यतीति च भाष्यप्रयोगात् "क्विन्प्रत्यस्ये"ति कुत्वं नेत्यर्थः। परिमृडिति। "मृजू शुद्धौ" क्विप्। "क्ङिति चे"ति निषेधात् "मृजेर्वृद्धि"रिति न भवति। "व्रश्चे"ति षत्वम्। परिमार्ष्टीति परिमृट्। अथ विभ्रागिति औणादिकसूत्रमेतत्। "क्विब्वचिप्रच्छी"त्यादिपूर्वसूत्रात्क्विबिति दीर्घ इति चानुवर्तते। "पदान्त" इति "ष" इत्येनेनैव संबध्यते, नतु क्विब्दीर्घाभ्यामपि, व्याख्यानात्। तदाह--परावुपपदे इत्यादिना। षत्वं चेति। "चोः कुः" इत्यस्यापवाद इति भावः। वि()आस्मिन् राजते इत्यर्थे "सत्सूद्विषे"त्यादिना क्विपि उपपदसमासे वि()आराज्शब्दाः।

तत्त्व-बोधिनी

चो कुः ३३८, ८।२।३०

सुयुगिति। सुष्ठु युनक्तीति विग्रहे"सत्सूद्विषे"ति क्विप्। तेनेह नेति। नम्नेकत्यर्थः। क्विन्प्रत्ययस्तु स्यादेव, "ऋत्वि"गित्यादिसूत्रे"युजी"ति इका निर्देशात्। खन्निति। खञ्जतीनि खन्। "खजि गतिवैकल्ये"। एवं विभ्राडिति। फणादिरयम्। विशेषे भ्राजते इथि विभ्राट्। देवान् यजतीति देवेट्। क्विपि यजादित्वात्संप्रसारणे आद्गुणः। वि()आं सृजतीति वि()आसृट्, क्विबन्तः। क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रणात्कुत्वं कस्मान्न भवतीत्यशङ्क्याह---नेति क्लीबे वक्ष्यत इति।"रज्जुसृङ्भ्या"मिति भाष्यकारप्रयोगात्। यद्वा "व्र()आआदिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः"इति वक्ष्यत इत्यर्थः। परिमार्ष्टीति---परिमृट्। परौ व्रजेः। "क्विब्वचिप्रच्छिश्रिरुआउद्रुप्रुज्वां दीर्घोऽसंप्रसारणं चे"त्यौणादिकात्पूर्वसूत्रादिह क्विब्दीर्घावनुवर्तेते, तदाह--क्विप्स्याद्दीर्घश्चेति।

---

सूत्रम्

काशिका-वृत्तिः

हो ढः ८।२।३१

हकारस्य ढकारदेशो भवति झलि परतः पदान्ते च। सोढा। सोढुम्। सोढव्यम्। जलाषात्। वोढा। वोढुम्। वोढव्यम्। प्रष्ठवाट्। दिव्यवाट्।

लघु-सिद्धान्त-कौमुदी

हो ढः २५२, ८।२।३१

हस्य ढः स्याज्झलि पदान्ते च। लिट्, लिड्। लिहौ। लिहः। लिड्भ्याम्। लिट्त्सु, लिट्सु॥

न्यासः

हो ढः। , ८।२।३१

"सोढा" इति। "हो ढः" इति ढत्वे कृते "झषस्तथोर्धोऽधः" ८।२।४० इति तृचतकारस्य धत्वम्(), ष्टुत्वम्(), "ढो ढे लोपः" ८।२।१३ "सहिवहोरोदवणस्य" ६।३।१११ इत्योत्वम्()। "जलाषाट्()" इति। जलं सहत इति "भजो ण्विः" ३।२।६२, "छन्दसि सहः" ३।२।६३ इति ण्विः, उपधावृद्धिः उपपदसमासः, "अन्येषामपि दृश्यते" ६।३।१३६ इति पूर्वपदस्य दीर्घ, ढकारस्य जश्त्वम्()--डकारः, तस्य चत्त्र्वम्()--टकारः, "सहेः साडः सः" ८।३।५६ इति मूर्धन्यः। "प्रष्ठवाट्()" इति। "वहश्च" ३।२।६४ इति ण्विः। "चुहोः कुढौ" इत्येकयोग एव कत्र्तव्ये पृथग्योगकरणं समसंख्यात्वप्रतिषेधार्थम्()। एकयोगे तु समसंख्यत्वाज्झलादौ कुत्व पदान्ते ढत्वं स्यात्()॥

बाल-मनोरमा

हो ढः , ८।२।३१

अथ हकारान्ताः। तत्र वर्णसमाम्नायक्रममनुसृत्य हकारान्तमादौ निरूपयितुमाह--हो ढः। "ह" इति षष्ठ()न्तम्। झलो झलीत्यतो झलीत्यनुवत्र्तते। पदस्येत्यधिकृतम्। "स्कोः संयोगाद्योरन्ते चे"त्यतोऽन्ते इत्यनुवर्तते। तदाह--हस्येति। झलीति। झलि परतः पूर्वस्य हकारस्य, पदान्ते विद्यमानस्य हकारस्य वेत्यर्थः। नच डकार एव कुतो न विहित इति वाच्यं, "वा द्रुहे"त्यत्र वक्ष्यमाणत्वात्। पदान्तत्वादिति। सुलोपे सति प्रत्ययलक्षणमाश्रित्य झल्परत्वाच्चेत्यपि बोध्यम्। लिडिति। "लिह आस्वादने"क्विष्। हल्ङ्यादिना सुलोपः। हस्य ढत्वे "वावसाने" इति चत्र्वविकल्प इति भावः। लिड्भ्यामिति। स्वादिष्वसर्वनामस्थाने" इति पदत्वाज्झलां जशोऽन्ते" इति जश्त्वमिति भावः। इत्यादीति। लिड्भिः।

लिड्भ्यः। लिहे। लिहः। लिहः लिहो लिहाम्। लिट्त्सु इति। लिह्-सु इति स्थिते हस्य ढः। तस्य जश्त्वेन डः। "खरि चे"ति चत्र्वस्याऽसिद्धत्वात्ततः प्रागेव "डः सी"ति धुट्। ततो डस्य चर्त्वेन टः। धुटश्चत्र्वसंपन्नस्य तकारस्याऽसिद्धत्वा"च्चयो द्वितीयाः" इति न भवति। "न पदान्ता"दिति तकारस्य ष्टुत्वं न। लिट्सु इति। धुडभावे रूपम्। हस्य ढः। तस्य जश्त्वेन डः। तस्य चर्त्वेन टः। तस्याऽसिद्धत्वा च्चयो द्वितीयाः" इति न। "न पदान्तात्" इति सस्य न ष्टुत्वमिति भावः।

तत्त्व-बोधिनी

हो ढः २८४, ८।२।३१

अथ हलन्ताः पुंलिङ्गाः। हो ढः। "झलो झलि""पदस्य""स्कोः संयोगाद्योरन्ते चे" त्यतो झलीति पदस्यान्त इति चानुवर्तते। तदाह--झलित्यादि। झलि परतः पदान्ते वा विद्यमानल्। हस्येत्यर्थः। लिडिति। "लिह आस्वादने"क्विप्। लिट्()स्विति। ढस्य जश्त्वेन डः, तस्य "खरि चे"ति चर्त्वेन टः। तस्याऽसिद्धात्वाच्चयो द्वितीया इति पक्षे टस्य ठो न। सस्य ष्टुत्वं तु न भवति, "न पदान्ताट्टो"रिति निषेधात्। लिट्()त्स्विति। ढस्य जश्त्वेन डकारे कृते चत्र्वस्याऽसिद्धत्वात्ततः प्रागेव "डः सी"ति पक्षे धुट्। तस्य चर्त्वेन तकारः, ततो डस्य चर्त्वेन टः। धुटश्चत्त्वस्यऽसिद्धित्वात्पक्षे "चयो द्वितीया"इति तस्या थो न। ष्टुत्वं तु तकारस्य न शङ्क्यमेव, "न पदान्ता"दिति निषेधस्याऽधुनैवोक्तत्वादिति।

---

सूत्रम्

काशिका-वृत्तिः

दादेर् धातोर् घः ८।२।३२

दकारादेः धातोः हकारस्य घकारादेशो भवति झलि परतः पदान्ते च। दग्धा। दग्धुम्। दग्धव्यम्। काष्ठधक्। दोग्धा। दोग्धुम्। दोग्धव्यम्। गोधुक्। दादेः इति किम्? लेढा। लेढुम्। लेढव्यम्। गुडलिट्। धातोः इति दादिसमानाधिकरणम् एतन् न, किं तर्हि, तद्विशेषणम् अवयवषष्ठ्यन्तम्, धातोरवयवो यो दादिः शब्दस् तदवयवस्य हकारस्य इति। किं कृतं भवति? अधोकित्यत्र अपि घकारः सिद्धो भवति। कथं दोग्धा, दोग्धुम् इति? व्यपदेशिवद्भावात्। अथ वा धातूपदेशे यो दादिः इत्येवं विज्ञायते। तथा च दामलिहमिच्छति दामलिह्यति, दामलिह्यतेः क्विप् प्रत्ययः दामलिटित्यत्र अपि न भवति।

लघु-सिद्धान्त-कौमुदी

दादेर्धातोर्घः २५३, ८।२।३२

झलि पदान्ते चोपदेशे दादेर्धातेर्हस्य घः॥

न्यासः

दादेर्धातोर्घः। , ८।२।३२

"दग्धा, दग्धुम्()" इति। पूर्ववद्धत्वम्(), घकारस्य झशि झशत्वम्()--गकारः। "काष्ठधक्()" इति। क्विबन्तमेतत्()। "एकाचो बशो भष" ८।२।३७ इत्यादिना दकारस्य भष्()--धकारः, घकारस्य जश्त्वम्()--गकारः, तस्य चत्र्वम्()--ककारः। "दादेः" इत्युच्यते, तेनाधोगित्यत्र घत्वं न सिध्यति, अदकारादित्वेऽस्याविहितत्वादित्यत आह--"धातोः" इत्यादि। "तद्विशेषणम्()" इति। दादेर्विशेषणमित्यर्थः। किंविशिष्टम्()? अवयवषष्ठ()न्तमिति। अवयवसम्बन्धिनी या षष्ठी तदन्तमित्यर्थः। "किं कृतं भवति? इति। एवं सति किमिष्टं साधितं भवतीत्यर्थः। "अधोगित्यत्रापि घकारः सिद्धो भवति" इति। अत्रापि धातोरवयवो यो दादिशब्दस्तदवयवत्वाधकारस्य। दुहेर्लङ्(), तिप्(),

अदादित्वाच्छपो लुक्(), हल्ङ्यादिलोपः ६।१।६६, पूर्धवद्भष्भावः, अट्()। "कथम्()" इत्यादि। धातोरवयवो यो दादिशब्दस्तदवयवसय हकारस्य घत्वं भवति। एवं सति दग्धा, दग्धुमित्यत्र घत्वं न कथञ्चिदित्यर्थः। तथा ह्रत्र धातोरवयवो यो दादिशब्दो न तस्यावयवो हकारः। यस्य तु समुदायस्य हकारोऽवयवः स धातुरेव, न हकारावयवः। अत्रोत्तरमाह--"व्यपदेशिवद्भावात्()" इति। एषोऽपि व्यपदेशिवद्भावेन धातोर्वादिरवयवो भवति। अभेदेऽपि व्यपदेशिवद्व्यवहारो लोके दृश्यते। तथा हि--शिलापु त्रकस्य शरीरम्(), राहोः शिर इति च। "अथ वा" इत्यादि। धातूपदेशो धातुपाठः। तत्र यो दादिरित्येवं विज्ञायते। कथं पुनर्धातुपाठे दकारादित्वं विशेषणं लभ्यते, धातुग्रहणसामर्थ्यात्()। तस्य हीदं प्रयोजनं स्यात्()--अधातोर्मा भूदिति। एतच्चाप्रयोजनम्(), न ह्रधातोर्धकारादेर्झलि वा पदान्ते च हकारोऽवयवः सम्भवति, यन्निवृत्त्यर्थं धातुग्रहणम्()। तदतिरिच्यमानं धातूपदेश एव दकारादित्वं विशेषणं भवतीत्यमुमर्थं गमयति। एवं विज्ञायमाने यद्यपि "धातोः" इत्यस्य "दादेः" इत्यनेन सामानाधिकरण्यम्(), तथाप्यधोगित्यत्र घत्वं प्रवत्र्तत एव; धातुपाठे दुहेर्दकारादित्वात्()। "तथा च" इत्यादि। एवञ्च विज्ञायमाने यद्यपि दामलिह्रतेर्दकारादित्वम्(), तथापि दामलिडित्यत्र न भवति धत्वम्()"; धातूपदेशे तस्यादकारादित्वात्()। धातुत्वं तस्य "सनाद्यन्ता धातवः" ३।१।३२ इति। न केवलमधोगित्वत्र धत्वं भवति, अपि तु दामलिहेरपि भवतीत्यपिशब्दो द्योतयति। दाम लेढोति दामलिडिति क्विप्(), तदन्ताद्? दामलिहमिल्छतीति "सुप आत्मनः क्यच्(); ३।१।८ इति क्यच्(), क्यजन्तात्? क्विप्(), "अतो लोपः" ६।४।४८ इत्यकारलोपः, "क्यस्य विभाषा" ६।४।५० इति यकारस्य च, "हो ढः" ८।२।३१ इति ढत्वम्(), ढकारस्य जश्त्वम्()॥

बाल-मनोरमा

क्षादेर्धातोर्धः , ८।२।३२

दुह्धातोः क्विन्तात्सुलोपे दुहित्यत्र ढत्वे प्राप्ते ढत्वं क्वचिदपवदति--दादेर्धातोः। "हो ढः" इत्यतो "ह" इति षष्ठ()न्तमनुवर्तते। "झली"ति "पदस्ये"ति, "अन्ते" इति च पूर्ववदनुवर्तते। "धातो"रिप्यावर्तते। एकं धातुग्रहणमवयवषष्ठ()न्तं हकारेऽन्वेति-"धातोरवयवस्य हस्ये"ति। "दादे"रित्येतत्तु धातोरित्यत्र सामानाधिकरण्येनान्वेति। दाअदिर्यस्येति बहुव्रीहिः, "धातो"रिति द्वितीयं धातुग्रहणं तु धातोरुपदेशकालं लक्षयति। ततश्च फलितमाह--उपदेशे इत्यादिना। धातूपदेशकाले यो दकारादिर्धातुस्तदवयवस्य हस्येत्यर्थः। आवृत्तधातुग्रहणलब्धोपदेशग्रहणस्य फलं पृच्छति--उपदेशे किमिति। अधोगिति। "दुह प्रपूरणे" लङ्, अडागमः, तिप्, शप्, तस्य लुक्, लघूपधगुणः, हल्ङ्यादिना तिपो लोपः, "दादेः" इति हस्य घः। "एकाचो वशः" इति भष्भावेन दकारस्य धकारः। "वाऽवसाने" इतचि चत्र्वजश्त्वे इति भावः। यथा स्यादिति। यथेति प्राप्तियोग्यतायाम्। घत्वमत्र प्राप्तियोग्यं, तच्च उपदेशग्रहणे सत्येव स्यादित्यर्थः। घत्वप्रवृत्तिवेलायां दुह्धातोर्दकारादित्वं नास्ति, कृतेऽडागमे "तदागमास्तद्ग्रहणेन गृह्रन्ते" इत्यकारादित्वात्। अतोऽत्र घत्वं न स्यादित्यव्याप्तिः स्यात्। उपदेशग्रहणे तु नायं दोषः, घत्वप्रवृत्तिवेलायां दुहेरत्र दकारादित्वाऽभावेऽपि धातूपदेशकाले दादित्वादिति भावः। तदेवमव्याप्तिपरिहारफलमुक्त्वाऽतिव्याप्तिपरिहारफलमाह--दामेति। ग्रीवासु गवादिपशुबन्धनार्थरज्जुपर्यायो दामशब्दः। "लिह आस्वादने"दाम लेढीति दामलिट्। तमात्मन इच्छतीत्यर्थे "सुप आत्मनः क्यजि"ति क्यचि "सनाद्यन्ताः" इति धातुत्वात्तिपि शपि दामलिह्रतीति रूपम्। ततः क्विपीति। क्यजन्तात्कर्तरि क्वपि अल्लोपे यलोपे च दामलिह्शब्दात्सोर्लोपे "होढः" इति ढत्वे "वावसाने"इति चत्र्वविकल्पे दामलिट्-दामलिडिति रूपमित्यर्थः। अत्र मा भूदिति। माङि लुङ्। सर्वलकारापवादः। अत्र घत्वं न भवेदित्येतदर्थमप्युपदेशग्रहणम्। कृते तु तस्मिन् घत्वमत्र न भवति। धातूपदेशे दामलिहिति सुब्दातो पाठाऽभावादिति भावः। तथा च प्रकृतोदाहरणे सौ-दुघिति स्थिते-।

तत्त्व-बोधिनी

दादेर्धातोर्घः २८५, ८।२।३२

दादेर्धाकोर्घः। "धातो"रित्यावर्तते। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह---उपदेश इति। उपदेशग्रहणस्याऽव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह---अधोगित्यादिना--अत्र मा भूदित्यन्तेन।

---

सूत्रम्

काशिका-वृत्तिः

वा द्रुहमुहष्णुहष्णिहाम् ८।२।३३

द्रुह मुह ष्णुह ष्णिह इत्येतेषां धातूनां हकारस्य वा घकारादेशो भवति झलि परतः पदान्ते च। द्रुह द्रोग्धा, द्रोढा। मित्रध्रुक्, मित्रध्रुट्। मुह उन्मोग्धा, उन्मोढा। उन्मुक्, उन्मुङ्। ष्णुह उत्स्नोग्धा, उत्स्नोढा। उत्स्नुक्, उत्स्नुट्। ष्णिह स्नेग्धा, स्नेढा। स्निक्, स्निट्। द्रुहेः दादित्वाद् घत्वंनित्यं प्राप्तम्, इतरेषाम् अप्राप्तम् एव घत्वं विकल्प्यते।

लघु-सिद्धान्त-कौमुदी

वा द्रुहमुहष्णुहष्णिहाम् २५५, ८।२।३३

एषां हस्य वा घो झलि पदान्ते च। ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्, ध्रुड्भ्याम्। ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु॥ एवं मुक्, मुग् इत्यादि॥

न्यासः

वा द्रुहमुहष्णुहष्णिहाम्?। , ८।२।३३

"द्रूहेः" इति। "द्रुह जिघांसायम्()" (धा।पा।११९७) इत्यस्य। "इतरेवाम्()" इति। "मुह वैचित्त्ये" (धा।पा।११९८), "ष्णुह उद्()गिरणे" (धा।पा।११९९), "ष्णिह प्रीतौ" (धा।प।१२००)-इत्येषामप्राप्तेः। पुनरेषं घत्वं स्यात्(), अदकारादित्वात्()॥

तत्त्व-बोधिनी

वा द्रुहमुहष्णुहष्णिहाम् २८७, ८।२।३३

वा द्रुह। "द्रुह जुघांसायाम्", "मुह वैचित्ये", "ष्णुह उ द्गिरणे", "ष्णिह प्रीतौ"। द्रुहेर्दादित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते उभयत्र विभाषेयम्। ननु द्रुहादयो दिवादिष्वनेनैव क्रमेण पठ()न्ते, तत्र "वा द्रुहादीनाम्ित्येवास्तु, दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिस्तदन्तर्गणो द्रुहदिस्तु। रधादिगणसमाप्तये स्निहधातोरनन्तरं वृत्करणस्य कृतत्वेनाऽतिप्रसङ्गशङ्कया निरवकाशत्वात्। मैवम्, तथाहि सति यङ्लुकि दोध्रुडित्यादि न सिध्येत् "निर्दिष्टं यद्गणेन चे"ति निषेधात्।

---

सूत्रम्

काशिका-वृत्तिः

नहो धः ८।२।३४

नहो हकारस्य धकारादेशो भवति झलि परे पदान्ते च। नद्धम्। नद्धुम्। नद्धव्यम्। उपानत्। परीणत्।

लघु-सिद्धान्त-कौमुदी

नहो धः ३६१, ८।२।३४

नहो हस्य धः स्याज्झलि पदान्ते च॥

बाल-मनोरमा

नहो धः , ८।२।३४

अथ हान्ताः। "णह बन्धने" "णो नः"। उपनह्रते इति विग्रहे उपपूर्वात्संपदादित्वात्कर्मणि क्विप्। "नहिवृती"त्यादिना पूर्वपदस्य दीर्घः। उपानह्()शब्दः स्त्रीलिङ्गः--पादुकावाची। "पादूरुपानत्स्त्री" इत्यमरः। नहो धः। "हो ढः" इत्यतो "ह" इत्यनुवर्तते। "पदस्ये"त्यधिकृतम्। "स्कोः संयोगे"त्यतोऽन्ते इत्यनुवर्तते। "झलो झली"त्यतो "झली"त्यनुवर्तते। तदाह--नहो हस्येत्यादिना। "हो ढः" इति ढत्वापवादः। उपानदिति। उपानह्()शब्दात्सोर्हल्ङ्यादिलोपः, हस्य धः, जश्त्वचर्त्वे इति भावः। अत्र दकार एव तु न विहितः, तथा सति "नद्ध"मित्यत्र "रदाभ्या"मिति नत्वप्रसङ्गादित्यलम्। उपानद्भ्यामिति। हस्य धत्वे जश्त्वमिति भावः। उपानत्स्विति। धत्वे "खरि चे"ति चत्र्वमिति भावः। उष्णिहशब्दश्छन्दोविशेषवाची स्त्रीलिङ्गः। तुं व्युत्पादयितुमाह--ष्णिह प्रीतावित्यादिना। दलोपषत्वे इति। उदो दकारस्य लोपः, सस्य षत्वं च निपात्यत इत्यर्थः। न च "धात्वादेः षः सः" इति कृतसकारस्य "आदेशप्रत्यययोः" इत्येव षत्वे सिद्धे किं तन्नि पातनेन इति वाच्यं, सात्पदाद्यो"रिति निषेधबाधनार्थं षत्वनिपातनस्यावश्यकत्वात्। न च उष्णिह्()शब्दात्समासात्सुबुत्पत्तेः पूर्वं स्निहित्येतन्न पदम्। नितरां सकारस्य पदादित्वमिति वाच्यं, "पदादादि"रिति पक्षे षत्वनिषेधप्रसक्तेरित्याहुः। हस्य घ इति। घोषनादसंवारमहाप्राणसाम्यादिति भावः। नच "क्विन्प्रत्ययस्ये"ति कुत्वस्याऽसिद्धत्वाद्धो ढ इति ढत्वमेवोचितमिति वाच्यं, "षत्वापवादः कुत्व"मिति कैयटादिमते तुल्यन्यायतया षत्वस्येव ढत्वस्यापि कुत्वेन बाधात्। जश्त्वचर्त्वे इति। नच जश्त्वे कर्तव्ये "क्विन्प्रत्ययस्य कु"रिति कुत्वस्याऽसिद्धत्वं शङ्क्यम्, "उष्णिगञ्चु" इति निर्देशेन जश्त्वे कर्तव्ये कुत्वस्याऽसिद्धत्वाऽभावज्ञापनात्। वस्तुतस्तु "क्विन्प्रत्ययस्य कु"रिति कुत्वं षत्वापवादो न भवती"ति मूलकारमते तुल्यन्यायाड्ढत्वस्यापि नापवादः। ततश्च तद्रीत्या ढडगका इति बोध्यम्। इति हान्ताः।

अथ वान्ताः। द्यौरिति। दिव्शब्दः स्त्रीलिङ्गः। "द्यौदिवौ द्वे स्त्रिया"मित्यमरः। तस्मात्सुः, "दिव औ"दिति वकारस्य औकारः, इकारस्य यण्, रुत्वविसर्गौ। सुलोपस्य औत्वस्थानिभूतवकाराश्रयत्वेनाल्विधित्वात्स्थानिवत्त्वाभावान्न हल्ङ्यादिलोप इति भावः। द्युभ्यामिति। भ्यामादौ हलि "दिव उदि"त्युत्त्वमिति भावः। इति वान्ताः। अथ रान्ताः। गीरिति। "गृ? निगरणे"क्विप् , "ॠत इद्धातो"रितीत्त्वं रपरत्वं, गिर्शब्दात्सुबुत्पत्तिः, सोर्लोपः, र्लोरुपधायाः" इति दीर्घः, रेफस्य विसर्ग इति भावः। भ्यामादौ तु हलि "र्वोः" इति दीर्घः, गीर्भ्यामित्यादि। गीर्षु। एवं पूरिति। गीर्वदित्यर्थः। "पृ? पालनपूरणयोः" क्विप्, "उदोष्ठ()पूर्वस्ये"त्युत्त्वं, रपरत्वम्। पुर्शब्दात्सोर्लोपः, "र्वो"रिति दीर्घः, रेफस्य विसर्ग इति भावः। चतरुआआदेश इति। जश्शसोः स्त्रीलिङ्गस्य चतुर्शब्दस्य "त्रिचतुरोः स्त्रिया"मित्यनेनेति भावः। चतरुआ इति। परत्वा"च्चतुरनडुहो"रित्यमानं बाधित्वा चतसृभावे यण्। चतसृभावे कृते आम्तु न, "विप्रतिषेधे यद्बाधितं तद्बाधितमेवे"ति न्यायादिति स्थानिवत्सूत्रे भाष्ये स्पष्टम्। चतसृणामिति। "न तिसृचतसृ" इति दीर्घनिषेधः। इति रान्ताः। अथ मान्ताः। किम इति। किम्शब्दात्स्त्रीलिङ्गाद्विभक्तौ "किमः कः" इति प्रकृतेः कादेशे कृतेऽदन्तात्वाट्टाबित्यर्थः। सर्वावदिति। सर्वाशब्दवदित्यर्थः। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति न, शब्दस्वरूपपरस्य गौणतया कदाऽपि सर्वनामत्वाऽभावादिति भावः।

तत्त्व-बोधिनी

नहो धः ३९२, ८।२।३४

नहो धः। "द"इत्येव तु नोक्तं, तथा हि सति "नद्ध"मित्यत्र "रदाभ्यां"मिति नत्वं स्यात्, "झषस्तथो"रिति च न स्यात्। नहो

हस्येति। "हो ढः"इत्यतोऽनुवृत्तेः "अलोऽन्त्यस्ये"त्यनेन वा हस्यैवादेश इति भावः। "झलो झलि""पदस्य""स्कोः "संयोगाद्योरन्ते चे"त्यतो झल्पदान्तग्रहणान्यनुवर्तन्ते। तदाह--झलीत्यादि। झलि परतः पदान्ते वा विद्यमानेस्येत्यर्थः। उपानदिति। उपपूर्वान्नहेः संपदादित्वात्क्विपि "नहिवृती"ति पूर्वपदस्य दीर्घः। सोर्हङ्यादिलोपे धत्वम्। जश्त्वचर्त्वे। अत्रेदं बोध्यम्--सुष्ठु अनड्वाहो यस्यामिति बहुव्रीहौ "स्वनड्वा"निति पुंवदेव रूपम्ष। केचित्तु गौरादिङीषं कृत्वा "स्वनड्वाही"त्युदाजह्रुः। तदसत्। अनुपसर्जनाधिकारविरोधात्। गीरिति। "गृ? निगरणे", "गृ? शब्दे"इत्यस्माद्वा क्विप्। "ऋत इद्धतोः"इतीत्त्वे रपरत्वम्। "र्वोरुप धाया दीर्घः"इति दीर्घः। पूरिति। "पृ? पालनपूरणयोः""उदोष्ठ()पूर्वस्य"इत्युत्त्वम्। चतरुआ इति। इह "चतुरनडुहो"रित्याम्न भवति, परत्वादामं बाधित्वा चतरुआआदेसे कृते सकृद्गतिन्यायेन पुनस्तस्याऽप्रवृत्तेः। चतसृणामिति। "न तुसृचतसृ"इति न दीर्घः। सर्ववदिति। "तेन तुल्य"मिति वति। "सर्वनाम्नो वृत्तिमात्रे"इति पुंवद्भावः।

---

सूत्रम्

काशिका-वृत्तिः

आहस्थः ८।२।३५

आहो हकारस्य थकारादेशो भवति झलि परतः। इदमात्थ। किमात्थ। आदेशान्तरकरणं झषस्तथोर्धोऽधः ८।२।४० इत्यस्य निवृत्त्यर्थम्। झलि इत्येव, आह, आहतुः, आहुः। हृग्रहोर्भश्छन्दसि हस्येति वक्तव्यम्। गर्दभेन सम्भरति। ग्रभीता। जभ्रिरे। उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्।

लघु-सिद्धान्त-कौमुदी

आहस्थः ५९७, ८।२।३५

झलि परे। चर्त्वम्। आत्थ। आहथुः॥

बाल-मनोरमा

आहस्थः २८२, ८।२।३५

आहस्थः। "आह" इति षष्ठ()न्तम्। "झलो झलि" इत्यतो झलीत्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे-- झलि परे इति। आह्? इत्यस्य थकारः स्याज्झलीति फलितम्। "अलोऽन्त्यस्ये"त्यन्त्यस्य भवति। चत्त्वमति। आथ्--थेति स्थिते प्रथमथकारस्य "खरि चे"ति चर्त्वे आत्थेति रूपमित्यर्थः। आहादेशस्य अकारान्तत्वे तु हकारादकारस्य थकारादेशे हस्य ढत्वे चर्त्वे आट्त्थ इति स्यादिति बोध्यम्। पञ्चानं णलाद्यभावपक्षे आह----

---

सूत्रम्

काशिका-वृत्तिः

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८।२।३६

व्रश्च भ्रस्ज सृज मृज यज राज भ्राज इत्येतेषाम्, छकारान्तानाम्, शकारान्तानां च षकारः आदेशो भवति झलि परतः पदान्ते च। व्रश्च व्रष्टा। व्रष्टुम्। व्रष्टव्यम्। मूलवृट्। भ्रस्ज भ्रष्टा। भ्रष्टुम्। भ्रष्टव्यम्। धानाभृट्। सृज स्रष्ट। स्रष्टुम्। स्रष्टव्यम्। रज्जुसृट्। मृज मार्ष्टा। मार्ष्टुम्। मार्ष्टव्यम्। कंसपरिमृट्। यज यष्टा। यष्टुम्। यष्टव्यम्। उपयट्। राज सम्राट्। स्वराट्। विराट्। भ्राज विभ्राट्। राजभ्राजोः पदान्तार्थं ग्रहणम्, झलादिराभ्यामिटा पर्यवपद्यते। केचित् तु राष्टिः, भ्राष्टिः इति क्विन्नन्तम् इच्छन्ति। छकारान्तानाम् प्रच्छ प्रष्टा। प्रष्टुम्। प्रष्टव्यम्। शब्दप्राट्। च्छ्वोः शूडनुनासिके च ६।४।१९ इत्यत्र

क्ङिति इत्यनुवर्तते इति छग्रहणम् इह क्रियते। शकारान्तानाम् लिश् लेष्टा। लेष्टुम्। लेष्टव्यम्। लिट्। विश् वेष्टा। वेष्तुम्। वेष्टव्यम्। विट्।

लघु-सिद्धान्त-कौमुदी

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ३०९, ८।२।३६

झलि पदान्ते च। जश्त्वचर्त्वे। राट्, राड्। राजौ। राजः। राड्भ्याम्॥ एवं विभ्राट्, देवेट्, विश्वसृट्॥ (परौ व्रजेः षः पदान्ते)। परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते षत्वमपि। परिव्राट्। परिव्राजौ॥

न्यासः

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। , ८।२।३६

"ओ व्रश्चू छेदने" (धा।पा।१२९२), "भ्रस्जो पाके" ["भ्रस्ज" इत्येव धातुपाठः] (दा।पा।१२८४), "सृज विसर्गे" (धा।पा।११७८), मृजू शुद्धौ" (धा।पा।१०६६), "यज देवपूजासङ्गतिकरणदानेषु" (धा।पा।१००२), "राजृ दीप्तौ" (धा।पा।८२२), "टु भ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ" (धा।पा।८२३,८२४,८२५)। छ इति च्छकारान्तावां ग्रहणम्(); श इति शकारान्तानाम्()। अत्र च शकारस्य जश्त्वे प्राप्ते, इतरेषां तु कत्वे तदपवादः षकारो विधीयते। "व्रष्टा" इति। "स्कोः संयोगाद्योः" ८।२।२९ इति सकारलोपः, ऊदित्त्वात्? पक्ष इडभावः। "मीलबृट्(), धानाभृट्? इति। "ग्रहिज्या" ६।१।१६ इति सूत्रेण सम्प्रसारणम्()। "रुआष्टा" इति। "सृजिदृशोर्झल्यमकिति" ६।१।५७ इत्यमागमः। "मार्ष्टा" [मार्ष्टीति का। मुद्रितपाठ] इति। "मृजेर्वृद्धिः" ७।२।११४। "उपयट्()" ति। यदेः "विजुपे छन्दसि" ३।२।७३ इति विच्()। "सम्राट्()" इति। "मो राजि समः क्वौ" ८।३।२५ इति समो मकारस्य मकारादेशः। किं पुनः कारणं राजभ्राजोर्झल्युदाहरणं न प्रदर्शितम्()? इत्याह--"राजभ्राजोः" इत्यादि। झलत्वं कस्मान्न भवतीत्याह--"झलादिराभ्याम्()" इत्यादि। आभ्यां परो यो झलादिः स इटा पर्यवपद्यत इतीङ्()विधीयते; सेट्त्वादनयोः। इतरेष्वाद्यचतुर्थे। विभाषितेटौ, स्वरतीत्यादिसूत्रेम ७।२।४४ शेषास्त्वानिटः; "एकाचः" ७।२।१० इतीट्प्रतिषेधात्()। तस्मात्? तेषामुभयार्थमेव ग्रहणम्()। "राष्टिः भ्राष्टिः" इति। "क्वितन्नाबादिभ्यश्च" (वा।३०७) इति क्तिन्प्रत्ययः, "तितुत्र" ७।२।९ इत्यादिनेट्प्रतिषेधः। "शब्दप्राट्()" इति। शब्दं पृच्छतीति "क्विव्वचि" (वा।२८८) इत्यादिना क्विप्(), दीर्घश्च। अथ किमर्थं छग्रहणम्(), यावता "च्छ्वोः शूडनूमासिके च" (६।४।१९) इति च्छकारस्य शकारे कृते शकारान्तत्वादेव पृष्ट इत्यादौ षत्वं भविष्यति? इत्यत आह--"च्छदोः शूट्()" इत्यादि। "अत्र" इत्यादि। इतिकरणौ हेतौ। तत्र हि "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इत्यनुवत्र्तते, तेन च्छग्रहणं क्रियते; अन्यथा पृष्टः, पृष्टवानित्याद्येव सिध्यत्(); न तु प्रष्टा, प्रष्टुमित्यादि; तृजादावक्ङिति शत्वाभावात्()। एतच्च सूत्रकारमतेनोत्तम्()। केचिदाचार्याः छग्रहणमिह सूत्रे प्रत्याचक्षत एव। तथा हि--"च्छ्रवो शूडनुनासिके च" ६।४।१९ इत्यत्रोक्तम्()--"केचिदिह क्ङितीत्येतन्नानुवरत्तयन्ति। कथं द्युभ्याम्(), द्युभिरित्यूठि कृते? "दिव उत्()" ६।१।१२७ इति तपरकरणान्मात्राकालो भविष्यतीति। "छशां षः" ८।२।३६ इत्यत्र च्छग्रहणं न कत्र्तव्यम्(), अनेनैव हि सर्वत्र शकारो विधीयते" इति। "लेष्टा" इति। "लिश अल्पीभावे" (धा।पा।११७९) "वेष्टा" इति। "विश प्रवेशने" (धा।पा।१४२४)॥

बाल-मनोरमा

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः २९२, ८।२।३६

व्राश्चभ्रस्ज। व्रश्चादयः सप्त धातवः। छशौ वर्णौ, ताभ्यां शब्दरूपविशेष्यमादाय तदन्तविधिः। "झलो झली"त्यतो "झली"त्यनुवर्तते। "पदस्ये"त्यधिकृतम्। "स्कोःसंयोगाद्योरन्ते चे"त्यतोऽन्ते इत्यनुवर्तते। तदाह--व्रश्चादीनामिति। अन्तादेश इत्यलोऽन्त्यसूत्रलभ्यम्। षस्य जश्त्वेनेति। प्रकृतसूत्रेण शस्य षत्वे तस्य षकारस्य "स्वादिषु" इति पदत्वाज्झलाञ्जशोऽन्ते" इति जश्त्वेन स्थानसाम्याड्डकारे निड्भ्यामित्यादि रूपमित्यर्थः। सुपीति। निश्-सु इति

स्थिते "व्रश्चे"ति षत्वे तस्य जश्त्वेन डकारे "ङसि धुट्" इति कदाचिद्धुडागमः। चत्र्वमिति। "डधयो"रिति शेषः। स्थानसाम्याड्डस्य टः, धस्य तः। तस्येति। चत्र्वस्येत्यर्थः। ठथौ नेति। धुडभावपक्षे टस्य ठो न, धुट्पक्षे तस्य थो नेत्यर्थः। "नादिन्याक्रोशे" इति सूत्रस्थभाष्ये "चयो द्वितीया" इत्यस्य पाठदर्शनात्तदपेक्षया चत्र्वस्य परत्वम्। अथ तकारस्य ष्टुत्वेन टकारमाशङ्क्य आह--न पदान्तादिति। "स्वादिषु" इति पदत्वं बोध्यम्। निट्त्सु इति। धुट्पक्षे रूपम्। तदभावपक्षे तु निट्सु।

तत्त्व-बोधिनी

व्रश्चभ्रस्जसृजमृजयजराजभ्रजच्छशां षः २५४, ८।२।३६

टतयोष्ठथौ नेति। धुडभावे टस्य ठो न, धृट्पक्षे तु तस्य थो नेति विवेकः। न भवतीति। जशत्वात्प्राक् षस्य कुत्वं न भवतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७

धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भषादेशो भवति झलि सकारे ध्वशब्दे च परतः पदान्ते च। अत्र चत्वरो बशः स्थानिनो भषादेशाश्चत्वार एव, तत्र सङ्ख्यातानुदेशे प्राप्ते डकारस्य स्थानिनो ऽभावात् ढकारादेशो न भवति? आन्तर्यतो व्यवस्था विज्ञास्यते। बुध भोत्स्यन्ते। अभुद्ध्वम्। अर्थभुत्। गुह निघोक्ष्यते। न्यघूढ्वम्। पर्णघुट्। दुह धोक्ष्यते। अधुग्ध्वम्। गोधुक्। अजर्घाः गुधेः यङ्लुगन्तस्य लङि सिपि लभूपधगुणे कृते सिपो हल्ङ्यादिलोपे च धातोः अवयवस्य एकाचो बशः स्थाने भष्भावः, ततो धकारस्य जश्त्वम्, दश्च ८।२।७५ इति रुत्वम्, रो रि ८।३।१४ इति पूर्वरेफस्य लोपः, ढ्रलोपे पूर्वस्य दीर्घो ऽणः ६।३।११० इति दीर्घत्वम्। गदर्भयतेः अप्रत्ययः गर्धप्। एकाचः इति किम्? दामलिहम् इच्छति दामलिह्यति, दामलिह्यतेरप्रत्ययः, दामलिट्। असति ह्येकाज्ग्रहणे धातोः इत्येतद् बशो विशेषणं स्यात्। बशः इति किम्? क्रुध क्रोत्स्यति। झषन्तस्य इति किम्? दास्यति। स्ध्वोः इति किम्? बोद्धा। वोद्धुम्। बोद्धव्यम्। धकारस्य बकारोपसृष्टस्य ग्रहणं किम्? दादद्धि। दध धारणे इत्येतस्य यङ्लुकि लोटि हुझल्भ्यो हेर्धिः ६।४।१०१ इति धिभावे सत्येतद् भवति।

लघु-सिद्धान्त-कौमुदी

एकाचो बशो भष् झषन्तस्य स्ध्वोः २५४, ८।२।३७

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। धुक्, धुग्। दुहौ। दुहः। धुग्भ्याम्। धुक्षु॥

न्यासः

एकाचो बशो भष्? झषन्तस्य स्ध्वोः। , ८।२।३७

"धातोः" ८।२।३२ इति यदीहानुवत्र्तते तदवयवषष्ठ()न्तमेकाचो विशेषणम्()। "झषन्तस्य" इत्येतदपि समानाधिकरणं तस्यैव विशेषणम्()। "एकाचः" इत्येतदवयवषष्ठ()न्तं बशः। "तदवयवस्य" इति। तस्यावयवस्तदवयवः। योऽसौ धातोरवयव एकाज्? झषन्तस्तस्य, तदित्यनेनाभिसम्बध्यते। "झलि परतः" इत्यनेन झलीत्यनुवत्र्तते ८।२।२६, तस्य सकारो विशेषणमिति दर्शयति। किमर्थं पनर्झलीत्यनुवत्र्तते? पदान्तस्येत्यनुवृत्तिर्यथा स्यात्(); अन्यथा झलीत्यस्मिन्? निवत्र्तमाने तत्सम्बद्धं पदान्तग्रहणमपि निवत्र्तत, ततश्च पदान्ते न सिध्येत्()। ननु च स्वरितत्वात्?

पदान्तस्येस्यानुवृत्तिर्भविष्यति? तद्धरनेनापि प्रकारेणाख्यायते मन्दधियां सुखप्रतिपत्त्ये। "ध्वशब्दे च" इति। अत्र झलीत्येतन्नापेक्षते, असम्भवात्()। न हि कश्चित्? झल्? ध्वशब्दोऽस्ति; तस्य प्रत्याहारेष्वसन्निवेशात्()। "भोत्स्यते" ["भोत्स्यन्ते"--काशिका, पदमञ्जरी च] इति। "बुध अवगमने" (धा।पा।८५८), लृट्(), स्यः, "खरि च" ८।४।५४ इति चर्त्वम्()--तकारः, अनुदात्तेत्वादात्मनेपदम्()। अत्र बुधेर्धातोर्व्यपदेशिवद्भावेन स्वरूपमेवैकाजवयवो झषन्तः, तदवयवो बकारो बश, अस्यान्तरतम्यादोष्ठ()स्य स्थान ओष्ठ्य एव भकारो भविष्यति। एवमन्यत्रापि विज्ञेयम्()। "अभुध्वम्()" ["अबुद्ध" इति प्रांउ।पाठः] "षढोः कः सि" ८।२।४१ इति कत्वम्(), "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्()। "न्यघूढ्वम्()" इति। "ढ्रलोपे पूर्वस्य दोर्घोऽणः" ६।३।११०। "धोक्ष्यते" इति। दुहो लृट्(), "दादेर्धातोर्धः" ८।२।३२, तस्य "खलि च" ८।४।५४ इति चर्त्वम्()--ककारः। "अजर्घाः" इति। "गुधु अभिकाङ्क्षायाम्()" (धा।पा।१२४६), यङ्(), द्विर्वचनम्(), हलादिशेषः, "उरत्()" ७।४।६६ इत्यत्वम्(), "कुहोश्चुः" ७।४।६२ इति चुत्वम्(), "यङोऽचि च" २।४।७४ यङ्लुक्(), "रुग्रिकौ च लुकि" ७।४।९१ इति रुक्()। जगृध इति स्थिते इङादयो विधेयाः। अत्र मुख्य एव गृध इत्ययं धातोर्झषन्तोऽवयवः। "गर्दभयतेः" इति। गर्दभशब्दात्? तदाचष्ट इति णिच्(), "णाविष्ठवत्? प्रातिपदिकस्य" (वा।८१३) इति टिलोपः। अत्र गर्वभीत्ययं मुख्य एव धातोर्झषन्तोऽवयवः। "अप्रत्ययः" इति। अश्राविप्रत्ययः क्विबादिरप्रत्यय इत्युच्यते। "दामलिट्()" इति। अत्र "होढः" ८।२।३१ इति ढत्वे कृते झषन्ततायामुपजातायामेकाज्ग्रहणाद्भष्भाषो न भवति। ननु चात्र द्वावेकाजवयवौ--दकारादिर्मकारान्तः, लकारादिर्झषन्तश्च; तयोश्चासत्यप्येकाज्ग्रहणे नैव भष्भावः प्रसज्यते। तथा हि-यो झषन्तस्तस्य वश्? न विद्यते, यस्तु दकारादिर्मकारान्तस्तस्य वश्? विद्यते, झषन्तता तु नास्ति, तदनर्थमेकाज्ग्रहणम्()? इत्यत आह--"असत्येकाजग्रहणे" इत्यादि। वशो विशेषणं व्यवच्छेदार्थम्()। व्यवच्छेदोऽर्थः प्रयोजनं यस्य तत्तथो क्तम्()। यद्येकाज्ग्रहणं न स्यात्(), ततोऽन्यस्येहाश्रुतत्वात्(), बशस्तु श्रुतत्वाच्च स एव धातोरित्यनेन विशेष्यते न धातोरवयवो वशिति। एवं च बशो झषन्तता न सम्भवतीति झषन्तस्येत्यनेन धातुरेव विशेष्यते; अन्यस्येहासम्भवात्()। तथा चायं सूत्रार्थः स्यात्()--झषन्तस्य धातोर्योऽवयवो बश तस्य झलि सकारे ष्वे च परतः पदान्ते च भव्? भवतीति। अ()स्मश्च सूत्रार्थे दामलिडित्यत्रापि प्रसज्येत। भवति दकारोऽत्र बश्? झषन्तस्य धातोरवयवः। एकाच इत्येतस्मिन्? सति धातोर्झषन्तस्येत्येतदुभयान्तस्यैव विशेषणं भवति, तदपि बशः। तेन वृत्तिकारोपदर्शित एव सूत्रार्थो जायते; ततश्च न किञ्चिदनिष्टमापद्यते। दामलिडित्यत्र हि यो झषन्त एकाजवयवो लकारादिनं तस्य बश्? विद्यते, यस्य तु विद्यते दकारादिर्मान्तस्य स झषन्तो न भवति। "क्रोत्स्यति" इति। "क्रुध कोपे" (धापा।११८९)। "दादद्वि" इति। "दीर्घोऽकितः" ७।४।८३ इत्यभ्यासस्य दीर्घत्वम्()। अन्तग्रहणमसन्देहार्थम्()। असति हि तस्मिन्? सन्देहः स्यात्()--किमत्र बशः स्थानित्वम्()? अथ झषः? इति॥

बाल-मनोरमा

एकाचो बशोभष् झषन्तस्य स्ध्वोः , ८।२।३७

एकाचो वशो। स् च् ध्व् च स्ध्वौ, तयोरिति विग्रहः। ""बश" इति स्थानषष्ठी। एकाच" इत्यवयवषष्ठी। एकोऽच् यस्येति विग्रहः। झषन्तस्येत्यस्य शब्दस्येति विशेष्यम्। एकाच्कस्य झषन्तशब्देनान्वेति। पदस्येत्यधिकृतं "स्कोः संयोगाद्योः" इत्यतोऽन्ते चेत्यनुवर्तते। तदाह--धातोरवयव इत्यादिना। ननु संभवति सामानाधिकरण्ये वैयधिकरण्याश्रयणस्या।त्रन्याय्यत्वादेकाच् झषन्तो यो धातुस्तदवयवस्य बश इत्येवान्वय उचित इत्यत आह--एकाचो धातोरित्यादि। गर्दभयतीति। "तत्करोति तदाचष्टे" इति णिजन्तस्य "सनाद्यन्ताः" इति दातुत्वात्तिबादि। ततः क्विबिति। गर्दभि इति ण्यन्तात्कर्तरि क्विबित्यर्थः। कपावितौ। वेर्लोपः। णिलोप इति। "णेरनिटीत्यनेने"ति शेषः। गर्धबिति। गर्दभित्यस्मात्सुः। हल्ङ्यादिलोपः। "एकाचो बशः" इति दस्य धः। "वावसाने" इति चर्त्वम्। "एकाचो धातोर्झषन्तस्ये"त्यन्वये गर्दभित्यस्य सुब्धातोरनेकाच्त्वाद्दकारस्य भष्भावो न स्यात्। धात्ववयवस्य

झषन्तस्येत्यन्वये तु दभिति एकाचो झषन्तस्य धात्वयवत्वात्तदवयवस्य दस्य भष्भावो निर्बाध इति भावः। अत्र प्राचीनैर्झलीत्यनुवर्तितम्। तदयुक्तमित्याह--झलीति निवृत्तमिति। स#आमथ्र्यादिति। "झली"त्यनुवृत्तौ तद्वैयथ्र्यादिति भावः। ननु झलीत्यस्यानुवृत्तिरेवास्तु। स्ध्वोरित्येव न क्रियतामित्यत आह--तेनेति। झलीत्यननुवर्तनेनेत्यर्थः। दुग्घमिति। दुहेः क्तः। कित्त्वान्न सघूपधगुणः। "दादेः"ति हस्य धः। "झषस्तथोर्धोऽधः" इति तकारस्य धः। "झलां जश् झशी"ति घस्य गः। दुग्धमिति रूपम्। दोग्धेति। दुहेस्तृच्। लघूपधगुणः। "दादेः" इति हस्य घः। "झषस्तथोः" इति तकारस्य धः। "ऋदुशनस्" इत्यनङ्। "सर्वनामस्थाने च" इति दीर्घः। हल्ङ्यादिलोपः। " न लोपः" इति नकारलोपः, "दोग्धा" इति रूपम्। झलीत्यनुवृत्तौ इहोभयत्रापि घत्वे कृते भष्भावः स्यादिति भावः। ननु दुहेः क्विबन्तात्सोर्लोपे"दादेः" इति घत्वे कृते दुघिति झषन्तमेकाच्कम्। तस्य धातुत्वाद्धात्ववयवत्वाऽभावात्कथमिह दकारस्य भष्भावेन धकारः स्यादित्यत आह--व्यपदेशिद्भावेनेति। विशिष्टोऽपदेशो व्यपदेशः=मुख्यव्यवहारः, सोऽस्यास्तीति व्यपदेशी, तेन तुल्यं व्यपदेशिवत्। धातावेव धात्वयवयत्वव्यवहारो गौणः, "राहोश्शिरः" इत्यादिवदिति भावः। इदं च "आद्यन्तवदेकस्मि"न्निति सूत्रे भाष्ये स्पष्टम्। धुक्दुगिति। क्विपः प्राक् प्रवृत्ताया धातुसंज्ञाया अनपायात् "दादेः" इति धत्वे कृते झषन्तत्वाद्भष्भावे चत्र्वविकल्प इति भावः। दुहौ दुहः। दुहम् दुहौ दुहः। दुहा। भ्यामादौ "दादेः" इति घत्वे कृते स्वादिष्विति पदत्वात् पदान्तत्वप्रयुक्तो भष्भावः। "झलां जशो।ञन्ते" इति जश्त्वम्। धुग्भिः। दुहे धुग्भ्याम् धुग्भ्यः। दुहः दुहोः दुहाम्। दुह् सु इति स्थिते प्रक्रियां दर्शयति--षत्वेति। घत्वे कृते भष्भावे "झलां जशोऽन्ते" इति जश्त्वेन गकारः। तस्य "खरि चे"ति चत्र्वस्याऽसिद्धत्वात् "आदेशप्रत्यययोः" इति षत्वे कृते चत्र्वे धुक्षु इति रूपमिति भावः। "द्रुह जिघांसायाम्," "मुह वैचित्त्ये" "ष्णुह उद्गिरणे" "ष्णिह प्रीतौ" एभ्यः क्विबन्तेभ्यः सोर्लोपे द्रुहेर्दादित्वाड्ढत्वं बाधित्वा नित्यं घत्वे प्राप्ते इतरेषामदादित्वादप्राप्ते घत्वे इदमारभ्यते।

तत्त्व-बोधिनी

एकाचो बशो भष् झषन्तस्य स्ध्वोः २८६, ८।२।३७

एकाचो बशो। झलीति निवृत्तमिति। "धुग्भ्यां" "धुक्ष्वि"त्यादौ "पदान्ते"इत्येव भष्भावसिद्धेरिति भावः। प्राचा तु "प्रातिपदिकस्य"तु झलि पदान्ते चे"त् व्याख्यातम्। तत्प्रामादिकमेव। "अधोक्" "अधोग्ित्याद्यसिद्ध्यापत्तेः। प्रातिपदिकग्रहणस्याऽप्रकृतत्वाच्च। ननु "धातोरवयव"इति वैयधिकरण्येनाऽन्वये क्विन्तस्य दुह्#H "दादे"रिति घत्वेन झषन्तत्वेऽपि भष्भावो न स्यात्, "दु"घिति समुदायस्य यः पूर्ववयवो "दु"घिति समुदायस्य यः पूर्वावयवो "दु"इत्येकाच् तस्य झषन्तत्वाऽभावात्। "उघ्ित्युत्तरावयवे तु बशोऽभावादित्यत आह---व्यपदेशिवद्भावेनेति। न च धात्ववयवो धातुरित्येव व्यपदिश्यतां, तथाच "गर्ध"बिति सिध्येदिति वाच्यम्, अर्थवतां हि व्यपदेशिवद्भावः, न चावयवोऽर्थवानिति तस्य धातुत्वव्यपदेशाऽसंबवात्। भष्भाव इति। क्विपः प्राक्प्रवृत्ताया धातुसंज्ञाया निरपवादत्वेनावस्थितत्वात् "दादेर्धातो"रिति घत्वे कृते झषन्तत्वादिति भावः। धुगिति। "दुह प्रपूरणे"क्विप्।

---

सूत्रम्

काशिका-वृत्तिः

दधस् तथोश् च ८।२।३८

दधः इति दधतिः कृतद्विर्वचनो निर्दिश्यते। तस्य झलन्तस्य बशः स्थाने भषादेशो भवति तकारथकारयोः परतः, चकारात् स्ध्वोश्च परतः। धत्तः। धत्थः। धत्से। धद्ध्वम्। वचनसामर्थ्यादातो लोपस्य स्थानिवद्भावो न भवति। अभ्यासजश्त्वस्य च असिद्धत्वम्। तथोः इति किम्? आनन्तर्यात् स्ध्वोरेव विज्ञायेत। चकारः तयोरनुवृत्त्यर्थः। झषन्तस्य

इत्येव, दधाति।

लघु-सिद्धान्त-कौमुदी

दधस्तथोश्च ६२८, ८।२।३८

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तयोः स्ध्वोश्च परतः। धत्तः। दधति। दधासि। धत्थः। धत्थ। धत्ते। दधाते। दधते। धत्से। धद्ध्वे। घ्वसोरेद्धावभ्यास लोपश्च। धेहि। अदधात्, अधत्त। दध्यात्, दधीत। धेयात्, धासीष्ट। अधात्, अधित। अधास्यत्। अधास्यत॥ णिजिर् शौचपोषणयोः॥ ११॥ (इर इत्संज्ञा वाच्या)॥

न्यासः

दधस्तथोश्च। , ८।२।३८

दधातेरप्येतत्? कृतद्विर्वचनस्य रूपमस्ति। "दध धारणे" (धा।पा।८)--इत्यस्य चाकृतद्विर्वचनस्य रूपम्(), तत्र तु शपा व्यवहितत्वादनन्तरौ तथो न सम्भवतः; तस्माद्दधातेरेव ग्रहणं विज्ञायते, इत्याह--"दध इति कृतद्विर्वचनो दधातिः परिगृह्यते" इति। "धत्तः, इति। लटस्तस्थसौ, शपः [शपः श्लुलुपि द्विर्वचनम्()--प्रांउद्रितः पाठः] श्लुः "श्लौ" ६।१।१० (इति) द्विर्वचनम्(), "अभ्यासे चर्च" ८।४।५३ इति जश्त्वम्()--दकारः, "श्नाभ्यस्तयोरातः" ६।४।११२ इत्याकारलोपः, अभ्यासदकारस्य भष्? धकारः। धातुधकारस्य चत्र्वम्()--तकारः। "धत्से" इति। "थासः से" ३।४।८० "धध्वे" इति। टेरेत्वम्()। "धध्वम्()" इति। लोटि "सवाभ्यां वामौ" ३।४।९१ इत्यमादेशः। कथं पुनरत्र भष्भावः; यावता दधातेर्झषन्तस्य यो दश्? तस्य भष्? भवतीत्युच्यते, अत्र नापि झषन्ततास्ति; आकारलोपस्य "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इति स्थानिवद्भावात्(); नापि बश्(), अभ्यासजशत्वस्यासिद्धत्वात्()? इत्यत आह--"वचनसामथ्र्यात्()" इत्यादि। "अभ्यासजश्त्वस्यासिद्धत्वम्()" इति वचनसामथ्र्यान्न भवतीत्य पेक्षते। यद्याकारलोपस्य स्थानिवद्भावः स्यादभ्यासजश्त्वस्यासिद्धत्वम्()। एवं सत्यपार्थकतैवास्य वचनस्य स्यात्(), न हि दधातेराकारलोपेन विना बश्? स्यात्()। तस्माद्वचनप्रामाण्यादुभयं न भवति। इह झलोत्यनुवत्र्तते, झषन्तस्येति च, तकारथकाराभ्यामन्यः स झलस्ति यत्र दधातेर्झषन्तस्य भष्भावो नेष्यते। तस्मात्? "तथोः" इति वचनमन्तरेणापिसिद्धमिष्टमित्यभिप्रायेणाह--"तथोरिति किम्()" इति। "आनन्तर्यात्()" इत्यादि। अनन्तरसूत्रे हि "स्ध्वोः" ८।२।३७ इत्युक्तम्(), ततश्च "अनन्तरलस्य विधिर्वा भवति प्रतिषेधो वा" (व्या।प।१९) इति स्ध्वोरेव भष्भावो विज्ञायते, न तथोः; अतः "तथोः" इत्युच्यते। यद्येवम्(), निमित्तान्तरोपा दाने पूर्वस्य निमित्तस्य निवृत्त्या भवितव्यम्(), ततश्च तथोरेव स्यात्(), न स्ध्वोः? इत्यत आह--"चकारः" इत्यादि। परिहारः॥

बाल-मनोरमा

दधस्तथोश्च ३३१, ८।२।३८

दधस्तथोश्च। धाधातोः कृतद्वित्वस्य दधा इत्यस्य "दधः" इति षष्ठ()न्तम्। "एकाचो बशः" इत्यतो झषन्तस्य बशो भष् इत्यनुवर्तते। त थ् अनयोद्र्वन्द्वात् सप्तमीद्विवचनम्। तकारादकार उच्चारणार्थः। तकारथकारयोरिति लभ्यते। चकारात्स्ध्वोरिति समुच्चीयते। सकारे ध्वशब्दे चेति लभ्यते। तदाह-- द्विरुक्तस्येत्यादिना। तथा च अभ्यासे दकारस्य धकारः, तकारपरकत्वात्। ननु "श्नाभ्यस्तयो"रित्याल्लोपः। धत्थधत्त इति। धस्य चर्त्वेन त इति भावः। दधतीति। "अदभ्यस्ता"दित्यदादेशे "श्नाभ्यस्तयो"रित्याल्लोपः। धत्थ इति। थकारपरकत्वाद्भष्। धत्थ। दधामि। दध्व इति। परनिमित्ताऽभावान्न भष्। दध्मः। धत्ते इति। दधाते दधते। धत्से इति। सकारपरकत्वाद्भषिति भावः। दधाथे। धद्ध्वे इति। दध् ध्वे इति स्थिते ध्वशब्दपरकत्वाद्भषिति भावः। दधे दध्वहे दध्महे। दधौ। दधे। धाता। धास्यति धास्यते। दधातु--धत्तात् दधतु। धेहीति। "ध्वसो"रित्येत्वाभ्यासलोपाविति बावः। धत्तात् धत्तम् धत्त। दधानि दधाव दधाम। धत्ताम्

दधाताम् दधताम्। धत्स्व दधाथाम् धद्ध्वम्। दधै दधावहै दधामहै। अदधात् अदधात् अधत्त। दध्यात् दधीत। धेयात् धासीष्ट। अधात्। अधितेति। "स्थाध्वोरिच्चे"ति इत्त्व#ए "ह्रस्वादङ्गा"दिति सिचो लोप इति भावः। अधास्यत् अधास्यत। णिजिर् धातुः। अनिडयं णोपदेशः। इरित्। इकारस्य प्रत्येकमित्त्वाऽभावान्न नुम्। इकारस्य स्वरितत्वप्रतिज्ञाबलादात्मगे फले आत्मनेपदं भवत्येव। तस्मादयमप्युभयुपदी। एवं विजिरपि ज्ञेयः। निजां त्रयाणाम्। निजां त्रयाणाम्। निजामिति बहुवचनात्तदादीनां ग्रहणम्। "अत्र लोपः" इत्यतोऽभ्यासस्येत्यनुवर्तते। तदाह-- णिजिरित्यादिना। नेनेक्तीति। श्लौ द्वित्वे हलादिशेषे उत्तरखण्डस्य तिपमाश्रित्य गुणे पूर्वखण्डस्यानेन गुणे चोः कुत्वमिति भावः। अभ्यस्तत्वाददादेशं मत्वा आह-- नेनिजतीति। नेनेक्षि नेनिक्थः नेनिक्थ। नेनेज्मि नेनिज्मः। नेनिक्ते नेनिजाते नेनिजते। नेनिक्षे नेनिजाथे नेनिध्वे। नेनिजे नेनिजवहे नेनिज्महे। निनेज निनिजतुः निनिजुः। निनेजिथ निनिजथुः निनिज। निनेज निनिजिव निनिजिम। निनिजे निनिजाते निनिजिरे। निनिजिषे निनिजाथे निनिजिध्वे। निनिजे निनिजिवहे निनिजिमहे। नेक्ता। नेक्ष्यति। नेनेक्तु नेनिक्तात् नेनिक्ताम् नेनिजतु। नेनिग्धीति। अपित्त्वेन ङित्त्वान्न गुणः। हेर्धिः। नेनिक्तात् नेनिक्तम् नेनिक्त। "आडुत्तमस्य" इति पित्त्वेन अङित्त्वाल्लघूपधगुमे प्राप्ते

तत्त्व-बोधिनी
दधस्तथोश्च २८७, ८।२।३८

दधस्तथोश्च। "दध" इति कृतद्विर्वचनाभ्यासकार्यो धात्रेव गृह्रते न तु दध धारण इत्ययमिति व्याचष्टे--- द्विरुक्तस्येति। झषन्तस्य किम्?। दधाति। नन्वेवं "धत्ते" इत्यादावपि न स्यादाल्लोपस्य स्थानिवत्त्वेनाऽझषन्तत्वादत आह-- वचनसामथ्र्यादिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ झलाम् ६।३ जशः १।३ अन्ते ७।१ पदस्य ६।१ ८।१।१६

अर्थः॥

पदस्यान्ते वर्त्तमानानां झलां जशः आदेशाः भवन्ति।

उदाहरणम्॥

वागत्र, श्वलिडत्र, अग्निचिदत्र, त्रिष्टुबत्र॥
काशिका-वृत्तिः
झलां जशो ऽन्ते ८।२।३९

झलां जशः आदेशा भवन्ति पदस्यान्ते वर्तमानानाम्। वागत्र। श्वलिडत्र। अग्निचिदत्र। त्रिष्टुबत्र। अन्तग्रहणं झलि इत्येतस्य निवृत्त्यर्थम्। वस्ता। वस्तव्यम्।
लघु-सिद्धान्त-कौमुदी
झलां जशोऽन्ते ६७, ८।२।३९

पदान्ते झलां जशः स्युः। वागीशः॥

न्यासः

झलां जशोऽन्ते।, ८।२।३९

"()आलिट्()" इति। ढत्वे कृते जश्त्वम्()। अथान्तग्रहणं किमर्थम्(), ननु "स्कोः संयोगाद्योरन्ते च" (८।२।२९) इत्यतोऽन्तग्रहणमनुवत्र्तत एव? इत्यत आह--"अन्तग्रहणम्()" इत्यादि। तद्ध्यन्तग्रहणं झलीत्यनेन सम्बद्धम्(), अतस्तदनुवृत्तौ झलीत्येतदप्यनुवत्र्तत, तस्मादेतन्निवृत्त्यर्थमन्यदेवान्तग्रहणं क्रियते। तेन च वसतेः--वस्ता, वस्तुमित्यत्र न भवति॥

बाल-मनोरमा

झलां जशोऽन्ते ८४, ८।२।३९

अथ पररूपाऽभावपक्षे पटत्पटत्-इतीत्यत्र तकारस्य दकारं विधत्ते-झलां जशोन्ते। पदस्येत्यधिकृतं। तदाह--पदान्त इति। पटत्पटदितीति। स्थानसाम्यात्तकारस्य दकारो जशिति भावः। अत्राच्छब्दस्य पररूपनिषेधाऽभावे तकारमात्रस्य पररूपैकादेशविकल्पविधौ तस्य पररूपाभावपक्षेऽच्छब्दस्य पूर्वसूत्रेण पररूपापत्तौ पटत्पटितीति स्यादिति ध्येयम्।

---

सूत्रम्

काशिका-वृत्तिः

झषस् तथोर् धो ऽधः ८।२।४०

झष उत्तरयोः तकारथकारयोः स्थाने धकारः आदेशो भवति, दधातिं वर्जयित्वा। लब्धा। लब्धुम्। लब्धव्यम्। अलब्ध। अलब्धाः। दुह दोग्धा। दोग्धुम्। दोग्धव्यम्। अदुग्ध। अदुग्धाः। लिह लेढा। लेढुम्। लेढव्यम्। अलीढ। अलीढाः। बुध बोद्धा। बोद्धुम्। बोद्धव्यम्। अबुद्ध। अबुद्धाः। अधः इति किम्? धत्तः। धत्थः।

लघु-सिद्धान्त-कौमुदी

झषस्ताथोर्धोऽधः ५५१, ८।२।४०

झषः परस्योस्तथोर्धः स्यान्न तु दधातेः॥

न्यासः

झषस्तथोर्धोऽधः।, ८।२।४०

"अथः" इति। अनेन धातुप्रतिषेधोऽयं न धकारप्रतिषेध इति दर्शयति। यदि हि धकारप्रतिषेधः स्यात्(), धकारात्? परयोस्तथोर्धकारो न भवतीति। ततः "मतिबुद्धिपूनार्थेभ्यश्च" ३।२।१८८, "वृद्धिर्यस्याचामादिस्तद्()वृद्धम्()" १।१।७२ इत्येवमादयो निर्देशा नोपपद्येरन्()। "अलब्ध, अलब्धाः" इति। लुङ्(), तस्य तथासौ, "झलो झलि" ८।२।२६ इति सकारलोपः। "अलीढ, अलीढाः" इति। ढत्वष्टुत्वढलोपदीर्घत्वानि कत्र्तव्यानि॥

बाल-मनोरमा

झषस्तथोर्धोऽधः १२४, ८।२।४०

झषस्तथोः। झष इति पञ्चमी। तश्च थ् चेति द्वन्द्वः। तकारादकार उच्चारणार्थः। तकारथकायोरिति लभ्यते। "धः" इति प्रथमैकवचनम्। अकार उच्चारणार्थः। धकार इति लभ्यते। "अध" इति षष्ठ()न्तम्। धाधातुभिन्नस्येति लभ्यते। तदाह--झषः परयोरिति। जश्त्वमिति। सिसेध् ध इति स्थिते "झलां जस् झशी"ति प्रथमधकारस्य दकारे सिषेद्धेति

रूपमित्यर्थः। सिषिदिव--सिषिध्व। सिषिधिम--सिषिध्म। क्रादिनियमस्तु नेड्वशीति प्रक्रमाननञ्प्रापितस्यैवाऽभावस्य निवर्तको, नतु विभाषादप्रापितस्यापि, अनन्तरस्येति न्यायात्। इट्पक्षे आह-- सिषेधिथेति। सेद्धेति। लृट् तास् इडभावः। डा टिलोपः गुणः। धत्वं जश्त्वम्। सेद्धार इत्यादि। सेधितेति। इट्पक्षे रूपम्। सेत्स्यति सेधिष्यतीति। लृटि स्यः। इड्विकल्पः। असैत्सीदिति। लुङस्तिप्। इकारलोपः। च्लिः। सिच्। इडभावः। "अस्तिसिचः" इति ईट्। वदव्रजेति वृद्धिः। धकारस्य चत्र्वम्।

तत्त्व-बोधिनी

झषस्तथोर्धोऽधः ९९, ८।२।४०

"अध" इति किम्?। धत्तः। असैत्सीदिति। "अस्तिसिचः"इति ईडागमः। "वदव्जे"ति वृद्धि। ततश्चत्र्वम्।

---

सूत्रम्

काशिका-वृत्तिः

षढोः कः सि ८।२।४१

षकारढकारयोः ककारादेशो भवति सकारे परतः। षकारस्य पिष् पेक्ष्यति अपेक्ष्यत्। पिपक्षति। धकारस्य लिह लेक्ष्यति। अलेक्ष्यत्। लिलिक्षति। सि इति किम्? पिनष्टि। लेढि।

लघु-सिद्धान्त-कौमुदी

षढोः कः सि ५५०, ८।२।४१

यक्ष्यति, यक्ष्यते। इज्यात्, यक्षीष्ट। अयाक्षीत्, अयष्ट॥ वह प्रापणे॥ ९॥ वहति, वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ॥

न्यासः

षढोः कः सि। , ८।२।४१

"पेक्ष्यति" इति। "पिष्लृ सञ्चूर्णने" (धा।पा।१४५२), लृट्()। "अपेक्ष्यत्()" इति। लृङ्()। "पिपिक्षति" इति। सन्(), "हलन्ताच्च" १।२।१० इति किन्त्वाद्गुणाभावः। "पिनष्टि" इति। रूधादित्वात्? श्नम्()। "लेढि" इति। अदादित्वाच्छपरो लुक्()॥

बाल-मनोरमा

षढोः कः सकि २९३, ८।२।४१

तत्र धुडभावपक्षे निश्-सु इति स्थिते "व्रश्चे"ति षत्वे तस्य षकारस्य जश्त्वात्प्राक् ककारमाशङ्कितुमाह--षढोः कः सि। षश्च ढश्चेति द्वन्द्वः। "सी"ति सप्तमी। तदाह--षस्येत्यादिना। इति तु न भवतीति। षकारस्य ककारो न भवतीत्यर्थः। जश्त्वं प्रत्यसिद्धत्वादिति। "झलाञ्जशोऽन्ते" इत्यपक्षया "षढोः कः सी"त्यस्य परत्वादिति भावः। शसादिषु निशादेशाऽभावपक्षे सुटि च रमावत्। व्रश्चादिसूत्रे मतान्तरमाह-केचित्त्विति। "एकाचो वशः" इत्युत्तरसूत्रे धातोरित्यस्यानुवृत्त्या मध्येऽपि तदनुवृत्तेरौचित्यादिति भावः। अनुवृत्तं च धातोरित्येतच्छशयोरेव विशेषणम्, व्रश्चादिषु धातुत्वाऽव्यभिचारात्। जश्त्वेनेति। निश्म्यामित्यादौ निशित्यस्य धातुत्वाऽभावात्षत्वाऽभावे "झलाजशोऽन्ते" इति जश्त्वेन शकारस्य स्थानसाम्याज्जकार इत्यर्थः। निज्भ्यामित्यत्र कुत्वमाशङ्क्याह--कुत्वं तु नेति। जश्त्वस्यासिद्धत्वादिति। "कुत्वं प्रती"ति शेषः। निच्शु इति। निश्सु इति स्थिते शस्य जश्त्वेन जः, तस्य श्चुत्वेन शः, जस्य चर्त्वेन चः, शस्य छत्वविकल्पः।

मासपृतना। मांस, पृतना, सानु इत्येतेषां मांस्, पृत्, स्नु इत्यादेशा वाच्या इत्यर्थः। "पद्दन्नो" इति सूत्रे वार्तिकमेतत्। अत एवाह--शसादौ वेति। "पद्दन्नि"ति सूत्रस्य विकल्पेन प्रवृत्तेरिति भावः। मांससानुशब्दयोरस्त्रीलिङ्गत्वात्पृतनाशब्दस्यैव शसादौ पृदादेशमुदाहरति--पृत इति। पक्षे इति। पृदादेशाऽभावपक्षे इत्यर्थः। गोपा वि()आपावदिति। आबन्तत्वाऽभावान्न सुलोप इत्यर्थः। इत्यादन्ताः। अथ इदन्ताः। प्रायेणेति। प्रायशब्दो बहुलपर्यायः। "प्रायोभूम्नि" इत्यमरः। इह तु ईषदूनत्वे वर्तते। प्रकृत्यादित्वात्तृतीया। मतिशब्द ईषदूनहरिशब्दवत्प्रत्येतव्य इत्यर्थः। शसि विशेषमाह--स्त्रीत्वान्नत्वाभाव इति। "तस्माच्छसो नः पुंसी"तिनत्वस्य पुंस्त्वे विधानादिति भावः। तृतीयैकवचने घित्वान्नाभावमाशङ्क्याह--नात्वं नेति। "आङो नाऽस्त्रिया"मिति नात्वविधावस्त्रियामिति पर्युदासादिति भावः।

तत्त्व-बोधिनी

षढोः कः सि २५५, ८।२।४१

केचित्त्विति। परिशिष्टकारादयः। निच्शु इति। अत्र "शश्छोट

#ई"ति पक्षे छत्वं बोध्यम्।

मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा। मांसपृतनेति। पृतना---सेना। नात्वं नेति। "अस्त्रियां"मिति पर्युदासादिते भावः।

---

सूत्रम्

काशिका-वृत्तिः

रदाभ्यां निष्थातो नः पूर्वस्य च दः ८।२।४२

रेफदकाराभ्याम् उत्तरस्य निष्थातकारस्य नकारः आदेशो भवति पूर्वस्य च दकारस्य। रेफान्तात् तावत् आस्तीर्णम्। विस्तीर्णम्। विशीर्णम्। निगीर्णम्। अवगूर्णम्। दकारात् भिन्नः। भिन्नवान्। धिन्नः। छिन्नवान्। रदाभ्याम् इति किम्? कृतः। कृतवान्। रः इत्यत्र रश्रुतिसाम् अन्यं न उपादीयते, किं तर्हि, व्यञ्जनमात्रम्। रेफसामान्यनिर्देशे ऽपि सति रेफात् परा या ऽज्भक्तिस् तद्व्यवधानान्नत्वं न भवति। निष्था इति किम्? कर्ता। हर्ता। तः इति किम्? चरितम्। मुदितम्। पूर्वस्य इति किम्? परस्य मा भूत्, भिन्नवद्भ्याम्। भिन्नवद्भिः। इह कृतस्य अपत्यं कार्तिः इति वृद्धेः बहिरङ्गलक्षणाया असिद्धत्वान्नत्वे कर्तव्ये रेफस्य असिद्धत्वम्।

लघु-सिद्धान्त-कौमुदी

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८१९, ८।२।४२

रदाभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दस्य च॥ शृ हिंसायाम्॥ ऋत इत्। रपरः। णत्वम्। शीर्णः। भिन्नः। छिन्नः॥

न्यासः

रदाभ्यां निष्ठातो नः पूर्वस्य च दः। , ८।२।४२

"आस्तीर्णम्()" इति। "स्तृ()ञ्? आच्छादने" (धा।पा।१४८४)। "ऋत इद्धातोः" ७।१।१०० इतीत्त्वम्(), "हलि च" ८।२।७७ इति दीर्घः। "विशीर्णम्()" इति। "शृ()हिंसायाम्()" (धा।पा।१४८८)। "निगीर्णम्()" इति। "गृ? निगरणे" (धा।पा।१४१०)। एषु "श्रयुकः किति" ७।२।११ इतीट्()प्रतिषेधः, "अवगूर्णम्()" इति। "गुरी उद्यमने" (धा।पा।१३९६)। "()आईदितो

निष्ठायाम्()" ७।२।१४ इतीट्प्रतिषेधः। अथ यथा "कृपो रो लः" ८।२।१८ इत्यत्र "र" इति वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य सामान्यस्योपादानम्(), तथेहापि, अस्ति च ऋकारे रेफः; ततश्च कृतः कृतवानित्यत्र भवितव्यमेव नत्वेनेति यो मन्यते, तं प्रत्याह--"र इत्यत्र" इत्यादि। यद्यत्र "र" इति सामान्यमुपादीयेत तस्मादेवः प्रसङ्गः, न तु रश्रुतिसामान्यमुपादीयते, किं तर्हि? व्यञ्जनमर्धमात्रात्मकम्()। न च समानाकारोऽस्तीति कुतो नत्वप्रसङ्गः? भवतु नाम सामान्यस्योपादानम्(), तथापि नैवात्र नत्वं प्रसज्यत इति दर्शयितुमाह--"सामान्यनिर्देशेऽपि" इत्यादि। ऋकारोऽत्र ये भागास्तन्मध्यवर्ती रेफो मात्राचतुर्भागात्मकः, तत्र योऽसौ रेफात्परस्तृतीयो भागस्तेन व्यवधानान्न भवति। "चरितम्, मुदितम्" इति। "चर गत्यर्थः" (धा।पा।५५९),"मुद हर्षे" (धा।पा।१६)। असति हि "त" इति ग्रहणे "रदाभ्याम्()" इत्यनेन निष्ठा विशेष्यते--रदाभ्यां परा या निष्ठेति, ततश्चरितमित्यादौ "आदेः परस्य" १।१।५३ इति इट एव नत्वं स्यात्(); तस्य निष्ठाभक्तत्वात्()। अथ "त" इत्युच्यमाने चरितमित्यादौ तकारस्य कस्मान्न भवति? इटा व्यवहितत्वात्()। स हि प्रत्ययभक्तत्वात्? प्रत्ययमेव न व्यवदध्यात्। तदवयवत्वं तु व्यवदध्यादेव। "परस्य मा भूत्()" इति। असति हि पूर्वग्रहणे यदि हि सन्निहितया निष्ठया दकारो विशेष्येत--निष्ठाया यो दकार इति, ततो जशत्वे कृते परस्यैव स्यात्()--भिन्नवद्भ्याम्(), भिन्नवद्भिरित्यादौ। अथ न विशेष्येत, ततो विशेषानुपादानाद्यथापूर्वस्य भवति, तथा परस्यापि। तस्मात्? परस्य मा भूदित्येवमर्थं पूर्वग्रहणं कृतम्()। अथ कृतस्यापत्यम्(), "अत इञ्()" (४।१।९५) कार्तिरित्यत्र कस्मान्न भवति? इत्याह--"इह" इत्यादि। वृद्धिर्हि तद्धितं निमित्तमाश्रित्य भवतीति बहिरङ्गा, नत्वं तु न किञ्चिद्बाह्यं निमित्तमाश्रित्य भविष्यतीत्यतस्तदन्तरङ्गम्()। तस्माद्()वृद्धेर्बहिरङ्गत्वान्नत्वे कत्र्तव्ये रेफस्यासिद्धत्वम्()। ननु च यदि तर्हि बहिरङ्गलक्षणा सा, तस्या एवासिद्धत्वेन भवितुं युक्तम्(), न तु रेफस्यापि, न हि रेफो वृद्धिर्भवति? नैष दोषः; वृद्ध्याश्रितो हि रेफः, ततो वृद्धेर्बहिरङ्गत्वाद्रेफस्यापि बहिरङ्गत्वेन भाव्यम्()॥

बाल-मनोरमा

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८२६, ८।२।४२

रदाभ्यां। रदाभ्यामित्यकारावुच्चारणाऽर्थौ। तदाह-- रेफदकाराभ्यामिति। निष्ठायाः - त्- निष्ठात्, तस्य निष्ठात इति विग्रहः। तदाह-- निष्ठातस्येति। निष्ठातकारस्येत्यर्थः। नः स्यादिति। नकारः स्यादित्यर्थः। सूत्रे "न" इति प्रथमान्तम्। अकार उच्चारणार्थः। दकारसय्चेति "नकार"इत्यनुषज्यते। सूत्रे "द" इति षष्ठ()न्तमिति भावः। चरितम् उदितमित्यत्र तु नत्वं न, निष्ठातकारस्य इटा व्यवहितत्वेन रदाभ्यां परत्वाऽभावात्। रेफात्परस्योदाहरति-- श इति। शॄ? धातोः क्तप्रत्ययसूचनमिदम्।ननु कृतस्यापत्यं कार्तिः। अत इञ् , आदिवृद्धिः, रपरत्वम्। अत्रनिष्ठातकारस्य रेफात् परस्य नत्वं स्यादित्यत आह-- बहिरङ्गत्वेनेति। दात्परस्योदाहरति-- छिन्नः भिन्न इति। अत्र निष्टातकारस्य, धात्वन्तदकारस्यच नत्वमिति भावः।

तत्त्व-बोधिनी

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ६७९, ८।२।४२

रदाभ्याम्। इह रदाभ्यामित्यनेन तकारो विशेष्यते, न निष्ठा, तेन चरितमुदितमित्यत्र न , तकारस्येटा व्यतत्वात्। तदेतदाह-- परस्य निष्ठातस्येति। बहिरङ्गत्वेनेति। निष्ठातकाराद्बहिर्भूतं तद्धितञित्प्रत्ययमाश्रित्याऽङ्गस्यादेरचो विधीयमानत्वाद्वृद्धिर्बहिरङ्गेति भावः। द्राण इति। द्रा कुत्सायां गतौ। ग्लानः म्लान इति। ग्लौ म्लै हर्षक्षये।

---

सूत्रम्

काशिका-वृत्तिः

संयोगादेरातो धातोर् यण्वतः ८।२।४३

संयोगादिः यो धातुराकारान्तो यण्वान्, तस्मादुत्तरस्य निष्थातकारस्य नकारदेशो भवति। प्रदाणः। प्रदाणवान्। म्लानः। म्लानवान्। संयोगादेः इति किम्? यातः। यातवान्। आतः इति किम्? च्युतः। च्युतवान्। ल्पुतः। प्लुतवान्। धातोः इति किम्? निर्यातः। निर्वातः। यण्वतः इति किम्? स्नातः। स्नातवान्।
लघु-सिद्धान्त-कौमुदी
संयोगादेरातो धातोर्यण्वतः ८२०, ८।२।४३

निष्ठातस्य नः स्यात्। द्राणः। ग्लानः॥
न्यासः
संयोगादेरातो धातोर्यण्वतः। , ८।२।४३

"प्रद्राणः" इति। "द्रा कुत्सायां गतौ" (धा।पा।१०५४)। "कृत्यचः" ८।४।२८ इति णत्वम्()। "म्लानः" इति। "म्लै गात्रविनामे" ["म्लै हर्षक्षये"--इति धातुपाठः] (धा।पा।९०४)। "च्युतः, प्लुतः" इति। "च्युङ्? प्लुङ्? गतौ" (धा।पा।९५५,९५८)। "निर्यातः" इति। "या प्रापणे" (धा।पा।१०४९)। "निर्वातः" इति। "वा गतिगन्धनयोः" (धा।पा।१०५०)। अत्र र्या, र्वा-इत्येतयोर्धातुत्वं न भवति। "र्या" इत्ययं हि समुदायः संयोगादिः, न चायं धातुः, किं तर्हि? "या" इत्ययम्()। एवं "र्वा" इत्ययं संयोगादिः, न चैष धातुः, किं तर्हि? "वा" इत्ययम्()। ननु च बहिरङ्गमत्र संयोगादित्वम्(), द्विपदाश्रयत्वात्(), नत्वं तु विपर्ययादन्तरङ्गम्(); "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यसिद्धत्वादेव संयोगादित्वस्य नत्वं न भवतीति किं धातुग्रहणेन? एवं तर्हि एतज्ज्ञापयति--उपसर्गसम्बन्धेन यो धर्म उपजायते धातूपसर्गसमुदायस्य स धातोरतद्धर्मवतोऽपि कार्याणि प्रापयतीति। तेनोपास्तते गुरुः, अभिभूयते शत्रुरिति कर्मणि लकारः सिद्धो भवति। अत्र ह्यु पसर्गसम्बन्धेन सकर्मकत्वधर्मो जातः। स च धातूपसर्गसमुदायस्य, न धातुमात्रस्य। तत्र यद्ययमर्थो न ज्ञाप्येत, कर्मणि लकारो न स्यात्(); धातोरकर्मकत्वात्()। अ()स्मश्चार्थे ज्ञापिते तु भवति। "स्नातः" इति। "ष्णा शौचे" (धा।पा।१०५२)॥
बाल-मनोरमा
संयोगादेरातोधातोर्यण्वतः ८२७, ८।२।४३

संयोगादेः। निष्टातस्य नः स्यादति। शेषपूरणमिदम्। द्राण इति। "द्रा कुत्सायां गतौ"अस्मात् क्तः, तनत्वम्, णत्वम्। ग्लान इति। "ग्लै हर्षक्षये" "आदेचः" इत्यात्त्वे नत्वम्। ल्वादिभ्य एकविंशतेरिति। क्र्यादिषु प्वादयो द्वाविंशति, तेषु आद्यं पूञं विहाय ल्वादिभ्य एकविंशतेरित्यर्थः। ज्येति। धातुसूचनम्। ग्रहिज्येति। संप्रसारणसूचनम्। जीन इति। ज्या- त इति स्थिते "संयोगादे"रिति निष्टानत्वस्याऽसिद्धत्वात्ततः प्रागेव संप्रसारणे पूर्वरूपे च कृते आतः परत्वाऽभावात् "संयोगादेरातः" इति नत्वस्याऽप्राप्तावनेन नत्वम्। दुग्वार्दीर्घश्चेति। वार्तिकमिदम्। दु गु आभ्यां परस्य निष्ठातस्य नत्वं प्रकृतेर्दीर्घश्च इत्यर्थः। "मृदुतया दुतया" इति माघकाव्ये दुतशब्दं साधयितुमाह-- टु दु उपतापे इत्यादि। गून इति। गुधातोः क्ते दीर्घः। पूञो विनाशे इति। वार्तिकमिदम्। विनाशार्थात् पूञः परस्य निष्ठातस्य नत्वमित्यर्थः। सिनोतेरिति। वार्तिकमिदम्। कर्मैव कर्ता कर्मकर्ता, ग्रासः कर्म कर्ता यस्यस ग्रासकर्मकर्तृकः, तस्मात् "षिञ् बन्धने" इत्यस्मात्परस्य निष्ठातस्य नत्वमित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः

ल्वादिभ्यः ८।२।४४

लूञ् छेदने इत्येतत् प्रभृति वृञ् वरणे इति यावत् वृत्करणेन समापिता ल्वादयो गृह्यन्ते। तेभ्यः उत्तरस्य निष्ठातकारस्य नकारादेशो भवति। लूनः। लूनवान्। धूनः। धूनवान्। जीनः। जीनवान्। ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति इति वक्तव्यम्। कीर्णिः। गीर्णिः। शीर्णिः। लूनिः। पूनिः। दुग्वोर्दिर्घश्च इति वक्तव्यम्। दु आदूनः। दु विगूनः। पूञो विनाश इति वक्तव्यम्। पूना यवाः। विनष्टाः इत्यर्थः। विनाशे इति किम्? पूतम् धान्यम्। सिनोतेर् ग्रासकर्मकर्तृकस्य इति वक्तव्यम्। सिनो ग्रासः स्वयम् एव। ग्रासकर्मकर्तृकस्य इति किम्? सिता पाशेन सूकरी। ग्रासो ऽपि यदा कर्मैव भवति न कर्मकर्ता, तदा न भवति, सितो ग्रासो देवदत्तेन इति।

लघु-सिद्धान्त-कौमुदी

ल्वादिभ्यः ८२१, ८।२।४४

एकविंशतेर्लूञादिभ्यः प्राग्वत्। लूनः॥ ज्या धातुः॥ ग्रहिज्येति संप्रसारणम्॥

न्यासः

ल्वादिभ्यः। , ८।२।४४

"जीनः" इति। "ज्या वयोहानौ" (धा।पा।१४९९), "ग्रहिज्या" ६।१।१६ इत्यादिसूत्रेण सम्प्रसारणम्(), "हलः" ६।४।२ इति दीर्घः। "ॠकारल्पादिभ्यः" इत्यादि। ॠकारान्तेभ्यो ल्वादिभ्यश्च परो यः क्तिन्? स निष्ठा भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं नु "ओदितश्च" ८।२।४५ इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात्()। यथा ॠकारल्पादिभ्यो निष्ठातकारस्य नत्वं भवति, तथा क्तिनोऽपि तकारस्य नत्वं भवतीति। "दुग्वोः" इति। "दु उपतापे" ["टु टु उपतापे"--धातुपाठः, पदमञ्जर्यां तु-"दु गतौ(९४४)इत्ययं धातुरुपात्तः, न "टु टु उपतापे" इति] (धा।पा।१२५६)। "गु पुरीषोत्सर्गे" (धा।पा।१३९९)। "पूनाः" इति विनष्टा इत्यर्थः। "पूतं धान्यम्()" इति। विधूतमित्यर्थः। "सिनोतेः" इति। "विञ्? बन्धने" (धा।पा।१२४८) इत्येतस्य। "ग्रासकर्मकर्त्तृकस्य" इति। ग्रासः कर्मकर्ता यस्य स तथोक्तः। अर्थद्वारकञ्चेदम्()। तस्य ग्रासकर्मकर्त्तृकत्वं विशेषणं वेदितव्यम्()। यथा सिनो ग्रासो बन्धनक्रियायां व्यञ्जनविशेषयोगादानुकूल्यं प्रतिपद्यते, तथा कर्मणोऽपि सतस्तस्य कर्त्तृत्वं विवक्षितमिति कर्मकत्रासौ भवति। "सिनो ग्रासः" ति। स्वयमेव बद्ध इत्यर्थः। "सिता पाशेन सूकरी" इति। समुदायप्रत्युदाहरणमेतत्()। अवयवप्रत्युदाहरणं दर्शयितुमाह--"ग्रासोऽपि" इत्यादि। ग्रासोऽपि यदि कर्मैव भवति न कर्मकर्ता, तदापि न भवति; ग्रासकर्मकर्त्तृकत्वमस्य तदाभावात्()। ग्रासकर्मतो हि स तदानीं भवति ग्रासकर्मकर्त्तृकः॥

तत्त्व-बोधिनी

ल्वादिभ्यः ६८०, ८।२।४४

एकविंशतेरिति। क्र्यादिषु प्वादयो द्वाविंशतिः पठ()ते,तत्र पूञं विहाय ल्वादयो ज्ञेयाः। जीन इति। "हल" इति दीर्घः। सिद्धत्वान्नित्यत्वाच्च "ग्रहिज्ये" ति संप्रसारणे कृते "संयोगादेरातः र" इत्यस्याऽप्राप्तिः।

*दुग्वोदीर्घश्च। गून इति। गु परीषोत्सर्गे।

*पूञो विनाशे। विनष्टा इति। धातूनामनेकार्थत्वात्पूञ पवन इत्यस्य विनाशेऽपि वृत्तिः।

* सिनोतेग्र्रासकर्मकर्तृकस्य। सिनोतेरिति। षिञ् बन्धने। ग्रासरूपं कर्म ग्रासकर्म,तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः। सिनो ग्रास इति। पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद्बन्धनेऽनुकूलो भवति

तदा कर्मण्येव कर्तृत्वमिति बोध्यम्। ग्रासेति किमिति?। "ग्रास कर्मकर्तृकस्ये"ति किमर्थमित्यर्थः। कर्मकर्तृकेति किमिति। "ग्रासकर्मकस्ये"त्येवास्तु कर्तृपदं किमर्थमित्यर्थः। कर्मपदं विहाय "ग्रासकर्तृकस्ये"त्युक्तौ तु "ग्रासेन कण्ठः सित" इत्यत्रापि स्यादिति बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

ओदितश् च ८।२।४५

ओकारेतो धातोरुत्तरस्य निष्ठातकारस्य नकारादेशो भवति। ओलस्जी लग्नः। लग्नवान्। ओविजी उद्विग्नः। उद्विग्नवान्। ओप्यायी वृद्धौ आपीनः। आपीनवान्। स्वादय ओदितः। षूङ् सूनः। सूनवान्। दूङ् दूनः। दूनवान्। दीङ् दीनः। दीनवान्। डीङ् डीनः। डीनवान्। धीङ् धीनः। धीनवान्। मीङ् मीनः। मीनवान्। रीङ् रीणः। रीणवान्। लीङ् लीनः। लीनवान्। व्रीङ् व्रीणः। व्रीणवान्।

लघु-सिद्धान्त-कौमुदी

ओदितश्च ८२३, ८।२।४५

भुजो भुग्नः। टुओश्वि, उच्छूनः॥

न्यासः

ओदितश्च।, ८।२।४५

"आपीनः" इति। "प्यायः पी" ६।१।२८ इति पीभावः। "स्वादय ओदितः" इति। ते पुनः "षूङ प्राणिप्रसवे" (धा।पा।११३२) इत्यादयः "व्रीङ्? प्रीणात्यर्थे" [वृणोत्यर्थे-धातुपाठः] (धा।पा।११४०) इत्येवमन्ता दिवादिषु पठ()न्ते॥

बाल-मनोरमा

ओदितश्च ८२८, ८।२।४५

ओदितश्च। ओकारेतो धातोः परस्य निष्ठातस्य नत्वमित्यर्थः। भुग्न इति। नत्वस्याऽसिद्धत्वाज्जस्य पूर्वं कुत्वम्। ततो नत्वम्। उच्छून इति। उत्पूर्वात् "टु ओ ()इआ" इति धातोः क्तः, यजादित्वात्संप्रसारणम्, पूर्वरूपम्, "()आईदितः" इति नेट्, "हल" इति दीर्घः, निष्ठानत्वम्। प्रहीण इति। "घुमास्थे"तीत्त्वं, नत्वं, "कृत्यचः" इति णत्वम्। स्वादय इति। "षूङ् प्राणिप्रसवे" इत्याद्या नव धातव ओदित इति दिवादिगणे उक्तमित्यर्थः। सून इति। षूङः क्तः, नत्वं। "श्र्युकः किती"तीण्निषेधः। दून इति। "दूङ् परितापे" अस्मात् क्तः, स्वादित्वेन ओदित्त्वान्नत्वम्। ननु "डीङ् विहायसा गतौ" इत्यस्य उड्डीन इति कथं रूपं, सेट्कत्वादुगन्तत्वाऽभावेन "श्र्युकः किती"ति निषेधस्याऽप्रवृत्तेरित्यत आह-- ओदन्मध्ये डीङः पाठसामर्थ्यान्नेडिति। इटि सति निष्ठातस्य ओदितो डीङः परत्वाऽभावान्नत्वाऽप्रसक्तेस्तस्य ओदित्सु पाठो व्यर्थः स्यादित्यर्थः।

तत्त्व-बोधिनी

ओदितश्च ६८१, ८।२।४५

भुग्न इति। भुजो कौटिल्ये। नत्वस्याऽसिद्धत्वाज्झलि परतः कुत्वम्। उच्छून इति। ()आयतेर्यजादित्वात्संप्रसारणे पूर्वरूपे च "हलः" इति दीर्घः। प्रहीण इति। "घुमास्थे"ति ईत्वम्। सून इति। षूङ् प्राणिप्रसवे। दून इति। दूङ् परितापे। ओदिन्मध्ये इति। यदि डीङ इट् स्यात्तर्हि धातोः परो निष्ठातकारो न संभवतीति नत्वार्थः पाठोऽनर्थकः स्यादिति भावः। न च

ओदिन्मध्ये पाठसामर्थ्यादिटा व्यवधाने नत्वं बवेदिति वैपरीत्यं किं न स्यादिति शङ्क्यम्, लक्ष्यानुरोधेन इडभावकल्पनाया एव न्याय्यत्वात्। अन्ये तु सत्यपि इडागमे सवर्णदीर्घे चैकादेशस्य पूर्वान्तत्वेन ग्रहणादिटा व्यववधानं नास्त्येवेतीष्टं सिध्यतीत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

क्षियो दीर्घात् ८।२।४६

क्षियो धातोः दीर्घादुत्तरस्य निष्थातकारस्य नकारादेशो भवति। क्षीणाः क्लोशाः। क्षीणः जाल्मः। क्षीणः तपस्वी। क्षियः निष्ठायाम् अण्यदर्थे ६।४।६०, वा आक्रोशादैन्ययोः ६।४।६१ इति दीर्घत्वं भवति। दीर्घातिति किम्? अक्षितमसि मामेक्षेष्ठाः। अक्षितम् इति क्तप्रत्ययो भावे, भावश्च ण्यदर्थः इति दीर्घाभावः। ह्रस्वस्य अपि हि धात्वनुकरणस्य इह इयङा निर्देशः। क्षियः निष्थायाम् अण्यदर्थे ६।४।६० इत्यत्र दीर्घग्रहणं क्रियते। विपराभ्यां जेः १।३।१९ इत्येवम् आदौ तु धातुत्वम् अनुकार्यगतं सदप्यविवक्षितत्वाद् जिरुपसामान्यानुकरणं द्रष्टव्यम्।

न्यासः

क्षीयो दीर्घात्?। , ८।२।४६

"क्षियः" इति। "क्षि क्षये" (धा।पा।२३६), "क्षि निवासगत्योः" (धा।पा।१४०७) इति द्वयोरपि ग्रहणम्(); विशेषानुपादानात्()। "क्षीणाअः क्लेशाः" इति। "क्तोऽधिकरणे" च" (३।४।७६) इत्यादिनाऽकर्मकत्वात्? कत्र्तरि निष्ठा, "निष्ठायामण्यदर्थे" ६।४।६० इति दीर्घः। "क्षीणो जाल्मः, क्षीणस्तपस्वी" इत्यादि। "वाऽऽक्रोशदैभ्ययोः" ६।४।६१ इति। ननु च "क्षियः" इति निर्देशादेव दीर्घस्य ग्रहणं विज्ञायते, तत्? किं दीर्घग्रहणेन? यदि ह्यस्वस्येवं ग्रहणं स्यात्(), एवं सति परत्वात्? "घेर्ङिति" (८।३।१११) इति गुणे कृते क्षेरिति निर्देशः स्यात्()? इत्यत आह--"ह्यस्वस्यापि हि" इत्यादि। यदि नियोगतो दीर्घस्यैव धात्वनुकरणस्येयङा निर्देशः स्यात्(), ततोऽस्मान्निर्देशाद्दीर्घस्येदं ग्रहणमिति विज्ञायते। न च दीर्घस्यैवेयङा निर्वेशो भवति। तथा हि ह्यस्वान्तस्यासौ दृष्टः क्षियः। "निष्ठायामण्यदर्थे" ६।४।६० इत्यत्रावसितं ह्यस्वान्तस्थेदमनुकर्णम्(), न दीर्घान्तस्येति? उच्यते; यथाभूतस्यैवानुकर्तुयुक्तम्()। ह्यस्वान्तस्य च दीर्धत्वं विधेयम्()। अतस्तस्यैवानुकरणमिदमिति विज्ञायते। यदि तर्हि ह्यस्वान्तस्यापि धात्वनुकरणस्येयङा निर्देशो भवति, "विपराभ्यां जेः" १।३।१९, "विभाषा चेः" (७।३।५८) इत्येवमादावपि कस्मान्न भवति? इह "विपराभ्यां जेरित्येवमादौ" इत्यादि। अत्रासङ्कल्पमित्यतदध्याहार्यम्()। धात्वनुकरणस्य हि "प्रकृतिवदनुकरणं भवति" (व्या।प।११३) इतीयङा निर्देशो भवति। धात्वनुकरणं च किं भवितुमर्हति येन धातावनुकार्येव स्थितम्()? धातुत्वं क्रियावाचित्वलक्षणं विवक्ष्यते। "विपराभ्यां जेः" १।३।१९ इत्येवमादौ त्वनुकार्यगतं धातुत्वं सदप्यववक्षितत्वादसङ्कल्पम्()। तस्मान्नात्र धात्वनुकरणम्()। अपि तु ङीप्रभृतेः क्रियावाचिनश्च तत्सादृश्यशब्दान्तरस्य ङीत्येवमादेर्यद्रूपसामान्यमर्थशून्यं तदनुकरणं द्रष्टव्यम्()। तस्मादधात्वनुकरणत्वान्न भवतीयङादेश इत्यभिप्रायः। यदि तर्हि धात्वनुकरण स्यात्(), प्रकृतिवदनुकरण भवतीति, एवं सत्यधातो १।२।४५ इति प्रातिपदिकसंज्ञाप्रतिषेधोऽपि स्यात्(), ततश्च विभक्तिर्नोपपद्यते? वत्करणेनानुकार्येणार्थेणार्थनार्थवत्त्वस्याश्रयात्? प्रातिपदिकसंज्ञा भविष्यतीत्यदोषः॥

बाल-मनोरमा

क्षियो दीर्घात् ८२५, ८।२।४६

क्षियो दीर्घात्। दीर्घादितिक्षियो विशेषमं। तदाह--दीर्घात्क्षिय इति। दीर्घान्तादित्यर्थः। निष्ठातस्य न इति।

"रदाभ्या"मित्यतस्तदनुवृत्तेरिति भावः। क्षीणवानिति। क्षिधातोः कर्तरि क्तवतुः, "निष्ठायामण्यदर्थे" इति दीर्घः, तकारस्य नत्वम्, षात्परत्वाण्णः। क्षितः कामो मयेति। क्षपित इत्यर्थः। "क्षि क्षये" इत्यस्मादन्तर्भावितण्यर्थात्कर्मणि क्तः। भावे तु क्षितं कामेनेत्युदाहार्यम्। अत्र ण्यदर्थयोर्भावकर्मणोर्विहिते क्ते दीर्घो न भवति, अण्यदर्थ इत्युक्तेः। दीर्घान्तत्वाऽभावात् "क्षियो दीर्घा"दिति नत्वं न। श्र्युकः कितीति। "श्रित" इत्यादौ इण्निषेधस्मारकमिदम्। क्षुतैति। "टु क्षु शब्दे" अस्मात्क्तः। ननु ऊर्णुत इति कथम्, अनेकाच्कत्वेन "श्र्युक"इति निषेधस्याऽप्रवृत्तेरित्यत आह-- ऊर्णोतेर्नुवदिति। वार्तिकमिदम्।

तत्त्व-बोधिनी

क्षियो दीर्घात् ६७८, ८।२।४६

क्षियो। क्षि क्षये, क्षि निवासगत्योः, द्वयोरपि ग्रहणम्। क्षितः काम इति। अन्तर्भावितण्यर्थत्वेन सकर्मकत्वात्कर्मणि क्तः। एतच्च "अक्षितोतसनेदिम"मिति मन्त्रव्याख्यायां माधवग्रन्थे स्पष्टम्। भावे तु क्षितं कामेनेत्याद्युदाहरणीयम्। इण्निषेधसूत्रं स्मारयति--श्र्युकः कितीति। क्षुत इति। टुक्षु शब्दे। नुत इति। णु स्तुतौ। वृत इति। वृङ् संभक्तौ,वृञ् रणे।

---

सूत्रम्

काशिका-वृत्तिः

श्यो ऽस्पर्शे ८।२।४७

श्यायतेः उत्तरस्य निष्थातकारस्य अस्पर्शे नकारः आदेशो भवति। शीनं घृतम्। शीनं मेदः। शीना वसा। अस्पर्शे इति किम्? शीतं वर्तते। शीतो वायुः। शीतम् उदकम् इत्यत्र गुणभूतो ऽपि स्पर्शः नत्वप्रतिषेधस्य सम्प्रसारणस्य च निमित्तं भवति। गुणे च स्पर्शे प्रतिषेधो ऽयम्, न रोगे, तेन प्रतिषीनः इत्यत्र नत्वं भव्त्येव।

न्यासः

श्योऽस्पर्शे। , ८।२।४७

"शीनम्()" इति। "श्यैङ्? गतौ" (धा।पा।९६३), "द्रवमूर्त्तिस्पर्शयोः श्यः"६।१।२४ इति सम्प्रसारणम्(), "हलः" ६।४।२ इति दीर्घः। "शोतं वत्र्तते" इति। भावे निष्ठा। पूर्वत्र तु कत्र्तरि। एवं "शीतो वाधुः" इत्यादौ। "शीतमुदकमित्यत्र" इत्यादि। "गुणभूतोऽपि" इति। अप्रधानभूतोऽपीत्यर्थः। ननु च प्रधाने कार्यसम्प्रत्ययादप्रधानस्य नत्वप्रतिषेधादिकार्यं प्रति निमित्तभावो नोपपद्यते? नैष दोषः; "अस्पर्शे" इति हि यद्ययं पर्युदासः स्यात्(), एवं सति शीतो वायुरित्यादौ स्पर्शादन्यद्द्रव्यमस्तीति नत्वं स्यात्(); न त्वयं पर्युदासः, किं तर्हि? प्रसज्यप्रतिषेधः। तेन यत्र ल्पर्शनगन्धोऽस्ति तत्र तदाश्रयेण नत्वप्रतिषेधेन भवितव्यम्()। अस्ति चेह गुणभूतः स्पर्शः, तेन तदाश्रयो नत्वप्रतिषेधो भवत्येव। भवत्वेवं नत्वप्रतिषेधः, सम्प्रसारणस्य तु गुणभूतः स्पर्शः कथं कारणं भवति? नियमस्य त्यागात्()। इह "अल्पाच्तरम्()" २।२।३४ इति नियमः--अल्पाच्तरं द्वन्द्वे पूर्वमेव प्रयोक्तव्यमिति; "द्रवमूर्तिस्पर्शयोः श्यः" ६।१।२४ इत्यत्र स्पर्शशब्दस्याल्पाच्तरस्य परनिपातं कुर्वताऽस्य नियमस्य त्वागः कृतः। स किमर्थं कृतः? स्पर्शोऽत्रानियमेन प्रधानभूत उपसर्जनभूतो वा सम्प्रसारणस्य कारणमित्यस्यार्थस्य सूचनार्थः। तेन गुणभूतोऽपि स्पर्शः सम्प्रसारणस्य निमित्तं भवति। स्पर्शशब्दोऽयमस्ति गुणवचनः, अस्ति च रोगवचनः; तदिह विशेषानुपादानादुभयोरपि ग्रहणम्()। ततो रोगेऽपि प्राप्नोतीति प्रतिशीन इत्येतन्न सिध्येदिति चोद्यमाशङ्क्याह--"गुणे च" इत्यादि। गुण एवेत्यर्थः। कथं पुनर्गुण एव प्रतिषेधो लभ्यते? ज्ञापकात्()। यदयं "द्रवमूर्तिस्पर्शवोः श्य-" ६।१।२४ इत्यत्र सम्प्रसारणं विधाय पुनः "प्रतेश्च" ६।१।२५ इति विधत्ते, तज्ज्ञापयति--श्यायतेर्यत्र ग्रहणं तत्र स्पर्श उपादीयमानो रोगं न प्रत्याययतीति। यदि हि प्रत्याययेत्(), पुनर्विधानमनर्थकं स्यात्(); पूर्वेणैव सिद्धत्वात्()। प्रतिपूर्वो हि रोग एव श्यायतिर्वत्तेते, नान्यत्र॥

बाल-मनोरमा

श्योऽस्पर्शे ८३०, ८।२।४७

श्योऽस्पर्शे। श्यः- अस्पर्शे इति छेदः। दीर्घ इति। नत्वात्प्रागेव "हल" इति दीर्घ इत्युचितम्, नत्वस्य त्रैपादिकत्वात्। शीनं घृतमिति। घनीभूतमित्यर्थः। धातूनामनेकार्थत्वात्। यद्यपि घृतेऽप्यनुष्णस्पर्शोऽस्त्येव, तथापि शीताख्यस्पर्शविशेष एव विवक्षित इति भावः। अस्पर्शे किमिति। श्यैङो निष्ठातस्य नत्वं स्यादित्येतावदेवास्त्वित्यर्थः। शीतं जलमिति। शीतस्पर्शवदित्यर्थः। अत्र "द्रवमूर्ती"ति संप्रसारणमेव न तु निष्ठानत्वमित्यर्थः। एवं च "द्रवमूर्तिस्पर्शयो"रित्स्य स्पर्शे इदमुदाहरणम्। "श्योऽस्पर्शे" इत्यस्य तु प्रत्युदाहरणमिति बोध्यम्। सूत्रयोः स्पर्शशब्दः प्रधानभूते गुणभूते च वर्तते। तत्र गुणभूते विशेष्यनिघ्नः। शीता आपः, शीतं जलमित्यादि। यदा तु स्पर्सविशेषो गुणः प्राधान्येन विवक्षितस्तदा क्लीबत्वमेव। "शीतं गुणे"इत्यमरः। #एसंप्रसारणविधौ पृच्छति-- द्रमूर्तिस्पर्शयोः किमिति। संश्यान इति। अत्र स्पर्शस्याऽप्रतीतेर्न संप्रसारणम्। नत्वं तु भवत्येवेति भावः।

तत्त्व-बोधिनी

श्योऽस्पर्शे ६८२, ८।२।४७

संश्यान इति। श्यैङ् गतावित्यस्य "आदेच" इत्यात्वे "संयोगादेरातः" इति निष्ठातस्य नः।

---

सूत्रम्

काशिका-वृत्तिः

अञ्चो ऽनपादाने ८।२।४८

अञ्चतेः उत्तरपदस्य निष्थातकारस्य नकारादेशो भवति न चेदपादानं तत्र भवति। समक्नौ शकुनेः पादौ। तस्मात् पशवो न्यक्नाः। अनपादाने इति किम्? उदक्तम् उदकं कूपात्। व्यक्तम् इत्येतदञ्जेः रूपम्।

न्यासः

अञ्चोऽनपादाने। , ८।२।४८

"न चेदपादानं तत्र भवति" इति। तत्रेत्यनेनाञ्चतिः परामृश्यते। शब्दद्वारेणाञ्चत्यर्थं एवायमपादानस्य प्रतिषेधसामर्थ्याद्विज्ञायते। न ह्रञ्चतावपादानत्वं सम्भवति, किं तर्हि? तदर्थे क्रियाविषयत्वात्? कारकाणाम्()। तदेतदुक्तं भवति--न चेदञ्चत्यर्थे विषयभूतेऽपादानं न भवतीति। "समक्नौ" इति। सङ्गतावित्यर्थः। "अन्चु गतिपूजनयोः" ["अन्चू" इति काशीमुद्रितः पाठः](धा।पा।१८८) इत्युदित्त्वाद्विभाषितेट्()। [इत्यूदित्त्वात्()--काशीमुद्रितः पाठः] तेन "यस्य विभाषा" ७।२।१५ इति निष्ठायामिट्()प्रतिषेधः, "अनिदिताम्()" ६।४।२४ इत्यनुनासिकलोपः। "उदक्तमुदकम्()" इति। उद्धृतमुदकमित्यर्थः। अथ व्यक्तमित्यत्र नतवं कस्मान्न भवति? इत्याह--"व्यक्तमित्येतत्()" इत्यादि। "अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु" ["अन्चू" इति। काशीमुद्रितः पाठः] (धा।पा।१४५८) इत्येतस्यैतद्रूपम्(),ित्येतद्रूपम्()--काशीमुद्रितः पाठः] नाञ्चतेः; ततो नत्वमिह न भवतीति भावः॥

बाल-मनोरमा

अञ्चोऽनपादाने ८३३, ८।२।४८

अञ्चोऽनपादाने। न त्वपादाने इति। अपादानसमभिहव्याहारे असतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

दिवो ऽविजिगीषायाम् ८।२।४९

दिवः उत्तरस्य निष्थातकारस्य नकारादेशो भवति अविजिगीषायम् अर्थे। अद्यूनः। परिद्यूनः। अविजिगीषायाम् इति किम्? द्यूतं वर्तते। विजिगीषया हि तत्र अक्षपातनादि क्रियते।

न्यासः

दिवोऽविजिगीषायाम्?। , ८।२।४९

"आद्यूनः, परिद्यूनः" इति। अविजिगीषुरित्यर्थः। "च्छ्वोः शूडनुनासिके च" ६।४।१९ इति ऊठ्()। "द्यूतं वत्र्तते" इति। विजिगीषार्थोऽत्र विवक्षित इति नत्वं न प्रवत्र्तते। कथं पुनरिह विजिगीषार्थः, यावता अक्षपातनलक्षणक्रोडा न प्रतीयते? इत्याह--विजिगीषायां हि"[इत्येतद्रूपम्()--काशीमुद्रितः पाठः] इत्यादि। विजेतुमिच्छा विजिगीषा, तस्याम्()। तत्र क्रोडायामक्षपातनादि क्रियते। तस्माद्विजिगीषार्थेऽवतिष्ठत इति भावः। आदिशब्देन शलाकापातादेग्र्रहणम्()॥

बाल-मनोरमा

दिवोऽविजिगीषाम् ८३६, ८।२।४९

दिवो। "अविजिगीषाया"मिति च्छेदः। द्यून इति। स्तुत इत्यर्थः। "च्छ्वो"रित्यूठ्। विजिगीषायां तु द्यूतमिति। द्यूतस्य विजिगीषया प्रवृत्तेरिति भाव-।

तत्त्व-बोधिनी

दिवोऽविजिगीषाम् ६८५, ८।२।४९

द्यून इति। "च्छ्वोः शू"डित्यूठ्। क्षीण इत्यर्थः। द्यूतमिति। विजिगीषया हि तत्राऽक्षाः पात्यन्ते इति गम्यते विजिगीषा।

---

सूत्रम्

काशिका-वृत्तिः

निर्वाणो ऽवाते ८।२।५०

निर्वाणः इति निस्पूर्वाद् वातेरुत्तरस्य निष्थतकारस्य नकारो निपात्यते, न चेद् वाताधिकरणो वात्यर्थो भवति। निर्वाणः अग्निः। निर्वाणः प्रदीपः। निर्वाणः भिक्षुः। अवाते इति किम्? निर्वातः वातः। निर्वातं वातेन। निर्वाणः प्रदीपो वातेन इत्यत्र तु प्रदीपाधिकरणो वात्यर्थः, वातस्तु तस्य करणम् इति भवत्येव नत्वम्।

न्यासः

निर्वाणोऽवाते। , ८।२।५०

"दातेरुत्तरस्य" इति। "वा गतिगन्धनयोः" (धा।पा।१०५०) इत्येतस्मात्()। "न च" इत्यादि। धातमचिकरणमाधारो यस्य स तथोक्तः। एतदुक्तं भवति--धातेर्धातोर्योऽर्थः स यदि धातेन समवेतो भवतीत्यर्थः। "निर्वाणोऽग्निः, निर्वाणः प्रदीपः" इति। अत्र स्वरूपस्य यः प्रशम उपरतिलक्षणः स धात्वर्थः। "एष निर्वाणो भिक्षुः" इति। अत्रापि। अथ वा--रागादिप्रहाणं धात्वर्थः। "निर्वातो वातः" इति। अकर्मकत्वात्? कत्र्तरि निष्ठा। "निर्वातं वातेन" इति। अत्र भावे। उभयत्राप्यत्र गतिनिरोधो धात्वर्थ-। "निर्वाणः प्रदीपी वातेन" इति। अत्र वातेनेति कर्त्रि तृतीया। तस्माद्वात एव दात्यर्थस्याधारः, ततश्च

नत्वेन भवितव्यमिति कस्यचिद्व्यामोहः स्यात्(), अतस्तान्निराकरणायाह--"निर्याणः प्रदीपः" इत्यादि। अत्र निर्वाणंधात्वर्थः, तच्च प्रदपाधारम्(), न वाताधारम्()। वाताधारे हि तस्मिन्निर्वाण इति यदि कत्र्तरि निष्ठा, तदा तयैवाभिहितत्वात्? कर्त्तुर्वातात्? तृतीया न स्यात्()। अथ "नपुंसके भावे क्तः" (३।३।११४) इति भावे? एवं ससि निर्वाण इति पुंल्लिङ्गं न स्यात्()। तस्मात्? प्रदीप एव कत्र्ता धात्वर्थस्याधारः। यद्येवम्(), कथं वातेनेत्यत्र तृतीया? इत्यत आह--"वातस्तु" इत्यादि। एतेनैषा तृतीया न कत्र्तरीति दर्शयति॥

बाल-मनोरमा

निर्वाणोऽवाते ८३७, ८।२।५०

निर्वाणोऽवाते। कर्ता नेति। निरित्युपसर्गपूर्वो वाधातुर्विनाशे वर्तते, उपरमे च। तस्मिन् धात्वर्थे यदिवायुः कर्ता तदा नत्वं नेत्यर्थः। वनिर्वाणोऽग्निर्मुनिर्वेति। नष्ट, उपरत इति क्रमेणार्थः। "गत्यर्थाकर्मके"त्यादिना कर्तरि क्तः। निर्वातो वात इति। अत्र वातस्य कर्तृत्वान्नत्वं नेति भावः। "निर्वाणो दीपो वातेने"त्यत्र तु वातस्य करणत्वे विवक्षितत्वात्कर्तृत्वाऽभावान्नत्वं निर्वाह्रम्। भावे तु निर्वातं वातेन।

तत्त्व-बोधिनी

निर्वाणोऽवाते ६८६, ८।२।५०

निर्वाणोऽवाते। वा गतिगन्धनयोः,निर्पूर्वादस्मान्निष्ठातस्य नत्वे णत्वम्। वातश्चेत्कर्ता नेति। एवं च "वातेन हेतुना निर्वाणो दीप" इत्यत्र निषेधो नेत्याहुः। निर्वात इति। "गत्यर्थाकर्मके"ति कर्तरि क्तः। नितरां वातो गतः इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

शुषः कः ८।२।५१

शुषेः धातोरुत्तरस्य निष्थातकारस्य ककारादेशो भवति। शुष्कः। शुष्कवान्।

लघु-सिद्धान्त-कौमुदी

शुषः कः ८२४, ८।२।५१

निष्ठातस्य कः॥ शुष्कः॥

न्यासः

शुषः कः। , ८।२।५१

"शुष शोषणे" (धा।पा।११८३) इत्यस्मात्? परस्य निष्ठातकारस्य ष्टुत्वे प्राप्ते ककारो विधीयते। अकार उच्चारणार्थः। "शुष्कः, शुष्कवान्()" इति। युक्तं शुष्वानित्येतदुदाहरणम्(), शुष्क इत्येतत्त्वयुक्तम्(); न ह्येतदर्थेऽस्य सूत्रस्यारम्भो युज्यते, "शुष्कधृष्टौ" (६।१।२०६) इति निपातनेनैव सिद्धत्वात्()? नैतदस्ति; निपातनेन हि ककारे सति शुष्किकेत्यत्र "उदीचामातः स्थाने यकपूर्वायाः" ७।३।४६ इति विभाषेत्वं स्यात्(), शुष्कजङ्घेत्यत्र च "न कोपधायाः" ६।३।३६ इति पुंवद्भावप्रतिषेधः स्यात्(); इह तु ककारस्य विधाने सति तस्यासिद्धत्वादेतदुभयं न भवति। तस्माच्छुष्क इत्येतदर्थोऽप्यस्यारम्भो युक्तः॥

बाल-मनोरमा

शुषः कः ८३८, ८।२।५१

शुषः कः। निष्ठात इति। शुषः परस्य निष्ठातस्य कः स्यादिति फलितम्।

तत्त्व-बोधिनी

शुषः कः ६८७, ८।२।५१

शुष्क इति। शुष शोषणे।

---

सूत्रम्

काशिका-वृत्तिः

पचो वः ८।२।५२

पचेः धातोरुत्तरस्य निष्थातकारस्य वकारादेशो भवति। पक्वः। पक्ववान्।

लघु-सिद्धान्त-कौमुदी

पचो वः ८२५, ८।२।५२

पक्वः॥ क्षै क्षये॥

न्यासः

पचो वः। , ८।२।५२

"पक्वः, पक्ववान्()" इति। "डुपटचष्? पाके" (धा।पा।९९६)। यद्येवम्(), पक्व इत्यतत्? "सिद्धशुष्कपक्वबन्धैश्च" २।१।४० इति निपातनादपि हि सिध्यति; तथापि पक्ववानित्येतदर्थमिदमवश्यमारब्धव्यम्()। अन्यार्थं चारभ्यमाणं पक्व इत्येतदर्थरूपमपि भवतीति पस्वशब्दोऽस्योदाहरणमुपन्यस्तम्()। निपातनद्वारेण हि तद्व्युत्पत्तौ प्रतिपत्तिगौरवं स्यादित्यभिप्रायः॥

बाल-मनोरमा

पचो वः ८३८, ८।२।५२

पचो वः। पचेः परस्य निष्टातस्य वः स्यादित्यर्थः। पक्व इति। वत्वस्याऽसिद्धत्वात्कुत्वम्।

---

सूत्रम्

काशिका-वृत्तिः

क्षायो मः ८।२।५३

क्षैधातोः उत्तरस्य निष्थातकारस्य मकारादेशो भवति। क्षामः। क्षामवान्।

लघु-सिद्धान्त-कौमुदी

क्षायो मः ८२६, ८।२।५३

क्षामः॥

न्यासः

क्षायो मः। , ८।२।५३

"क्षै जै वै क्षये" (धा।पा।९१३-९१५)॥ "प्रस्तीमः" इति। "ष्ट()ऐ स्त्यै सङ्घातशब्दयोः" (धा।पा।९११,९१०)। "स्त्यः प्रपूर्वस्य" ६।१।२३ इति सम्प्रसारणम्(); पूर्ववद्दीर्घः। इह यदा मत्वं न भवति। तदा "संयोगादेः" ८।२।४३ इत्यनेन नत्वेन भवितव्यम्(); ततश्च प्रस्तीनः, प्रस्तीनवानितीष्टं स्यात्()--इति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्त्तुमाह--"यदा मत्वं नास्ति" इत्यादि। कृते तर्हि प्रथमं सम्प्रसारणे नत्वं कस्मान्न भवति? इत्याह--"तत्र कृते" इत्यादि॥

बाल-मनोरमा

क्षायो मः ८३९, ८।२।५३

क्षायो मः। "क्षै क्षये" इत्यस्मात् परस्य निष्ठातस्य मः स्यादित्यर्थः। क्षाम इति। "आदेचः" इत्यात्वम्। "गत्यर्थाकर्मके"ति कर्तरि क्तः। क्षीण इत्यर्थः। अन्तर्भावितण्यर्थत्वे क्षपित इत्यर्थः।

तत्त्व-बोधिनी

क्षायो मः ६८८, ८।२।५३

क्षाम इति। क्षै क्षये। "आदेचः" इत्यात्वम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रस्त्यो ऽन्यतरस्याम् ८।२।५४

प्रपूर्वात् स्त्यायतेः उत्तरस्य निष्थातकारस्य अन्यतरस्यां मकारादेशो भवति। प्रस्तीमः। प्रस्तीमवान्। प्रस्तीतः। प्रस्तीतवान्। यदा मत्वं न अस्ति, तदा संयोगादेरातो धातोर् यण्वतः ८।२।४३ इत्यस्य पूर्वत्र असिद्धत्वात् संप्रसारणं प्रथमं क्रियते, तत्र कृते निमित्तव्याघातान् नत्वं न भवति।

बाल-मनोरमा

प्रस्त्योऽन्यतरस्याम् ८४१, ८।२।५४

प्रस्त्योऽन्यतरस्याम्। "प्रस्त्य" इति पञ्चमी। प्रपूर्वात्स्त्यैधातोरित्यर्थः। "निष्ठातस्य म" इति शेषः। प्रस्तीम इति। सङ्गीभूत इत्यर्थः।

तत्त्व-बोधिनी

प्रस्त्योऽन्यतरस्याम् ६८९, ८।२।५४

प्रस्तीमः प्रस्तीत इति। स्त्यै ष्टै शब्दसङ्घातयोः। आत्वे कृते "संयोगादे"रित्यस्याऽसिद्धत्वात्पूर्वं संप्रसारणे पूर्वरूपे कृते "हलः" इति दीर्घः, पश्चाद्यण्वत्त्वादन्तत्वयोर्विरहान्न नत्वम्। "संस्त्यान" इत्यत्र तु भवत्येव।

---

सूत्रम्

काशिका-वृत्तिः

अनुपसर्गात् फुल्लक्षीबकृशौल्लाघाः ८।२।५५

फुल्ल क्षीब कृश उल्लाघ इत्येते निपात्यन्ते, न चेदुपसर्गादुत्तरा भवन्ति। फुल्लः इति ञिफला विशरणे इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य लकारो निपात्यते। उत्वमिडभावश्च सिद्ध एव। क्तवत्वन्तस्य अप्येतल् लत्वम् इष्यते,

फुल्लः, फुल्लवानिति। क्षीबकृशोल्लाधाः इति क्षीबिकृशिभ्याम् उत्पूर्वाच् च लाघेः क्त प्रत्ययस्य तलोपः इडभावश्च निपात्यते। कृते व इटि इच्छब्दलोपः। क्षीबः। कृशः। उल्लाघः। अनुपसर्गातिति किम्? प्रफुल्ताः सुमनसः। प्रक्षीबितः। प्रकृशितः। प्रोल्लाधितः। लाघेरुदो ऽन्यः उपसर्ग प्रतिषिध्यते। उत्फुल्लसम्फुल्लयोरिति वक्तव्यम्। उत्फुल्लः। सम्फुल्लः। परिकृशः इत्यत्र यः परिशब्दः स क्रियान्तरयोगात् कृशिं प्रत्यनुपसर्ग एव, परिगतः कृशः परिकृशः इति।
न्यासः

अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः। , ८।२।५५

"फुल्लः" इति। "ञिफला विशरणे" (धा।पा।५१६), "आदितश्च" ७।२।१६ इतीट्()प्रतिषेधथः, "उत्परस्यातः" ७।४।८८ इत्युत्वम्()। "क्तवत्वन्तस्याप्येतल्लत्वमिष्यते" इति। कथं पुनरिष्ययाणमपि लभ्यते, न हि क्तवत्वन्तः शब्दः सूत्र उपात्तः? उच्यते; इह निष्ठायास्तकारान्तं यच्छब्दरूपं तस्य "फुल्ल" इत्येतन्निपात्यते, क्तवतोश्च ["क्तक्तवतोश्च" इति काशीमुद्रितः पाठः] तत्? तुल्यम्()। परस्तु यदि क्तवतोऽर्थो वा विशेष्यते? विशेष्यताम्, न हि तेन समानेनासमानेन वा परयोजनमस्ति। तस्मात्? क्तवत्वन्तस्याप्येतल्लत्वं भवति। एवमनयैव युक्त्या क्षीबकृशोल्लाघादिष्वपि यन्निपात्यते, तदपि क्तवत्वन्तस्य प्रसज्यते()["प्रसज्येत"--इति कां३।पाठः] नैष दोषः; वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोर्योगयोः शेषः। व्यवस्थितविभाषा च न ज्ञायते, तेनातिप्रसङ्गो न भविष्यतीति। "क्षीविकृशिभ्याम्()" इति। "क्षीबृ मदे" (धा।पा।३८२), "कृश तनूकरणे" (धा।पा।३८२), "कृश तनूकरणे" (धा।पा।१२२७)। "इडभावश्च निपात्यते" इति। क्तलोपस्यासिद्धत्वाद्वलादिरार्धधातुको भवतीतीट्? प्राप्नोति; अतस्तदभावश्च निपात्यते। "कृते वा इटि इच्छब्दलोपः" इति। निपात्यत इति सम्बन्धः। इडभावापेक्षो विकल्पः। अथ वा--नेडभावो निपात्यते। किं तर्हि? कृत इटीच्छब्दलोपः। "लाघेरुदोऽन्य उपसर्गः प्रतिषिध्यते" इति। उत्पूर्वस्य ग्रहणसामर्थायत्()। अन्यथा ह्रुत्पूर्वस्योपादानमनर्थकं स्यादित्यभिप्रायः। अनुपसर्गादित्युच्यते, तत्र परिकृश इति न सिध्यति? इत्यत आह--"परिकृश इत्यत्र" इत्यादि। तनूकरणलक्षणक्रियाया अन्यक्रिया गमनलक्षणा क्रियान्तरम्(), तेन योगोऽयम्(), न परिशब्दः, अतर कृशिं प्रत्युपसर्गसंज्ञा भवतीति कृत्वा। "परिगतः कृशः" इति। अनेन तं क्रियान्तरयोगं दर्शयति। अथ किमर्थं निपातनम्(); यावता फुल्ल इति "फुल्ल विकसने" (धा।पा।५३२) इत्यस्मात्? पचाद्यचि सिध्यति, क्षीबेरिगुपधलक्षणे के--क्षौव इति, कृश इत्यपि कृशेरचैव, उल्लराघ इति--लाघ इत्येव पचाद्यचि सिद्ध्यत्येव? सत्यमेवैतत्(); निष्ठायां तु फलतिप्रभृतीनामसत्यस्मिन्ननिष्टं रूपं प्राप्नोति। अतस्तन्निवृत्त्यर्थमारब्धध्यमेतत्()॥
बाल-मनोरमा

अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ८४२, ८।२।५५

अनुपसर्गात्। एते निपात्यन्ते, उपसर्गात्परा न चेदित्यर्थः। लत्वमिति। "आदितश्चे"ति इडभावः, "ति चे"त्युत्वं च सिद्धमिति भावः। "फल निष्पत्तौ" इत्यस्य तु नाऽत्र ग्रहणम्, इडभावस्याऽपि निपात्यत्वापत्तेः। ननु क्तवतुप्रत्यये फुल्लवानिति कथं, क्तवतुप्रत्यये क्तस्याऽनर्थकत्वेन फुल्लशब्देनाऽग्रहणादित्यत आह-- क्तवत्वेकदेशस्यापीति। क्षीबादिष्विति। क्षीबकृशोल्लाघेष्वित्यर्थः। क्तप्रत्ययस्यैवेति। नतु क्तवत्वेकदेशस्यापीत्यर्थः। अनर्थकत्वादित भावः। तस्येति। तलोपस्येत्यर्थः। क्षीबो मत्त इति। क्षीबेः क्तः, तलोपः, इडभावश्च। अत्र मत्तादिरेवार्थः, निपातनबलात्। अनुपसर्गात्किमिति। अत्र "प्रफुल्त" इति प्रत्युदाहरणं विवक्षंस्तत्र विशेषमाह--

तत्त्व-बोधिनी

अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ६९०, ८।२।५५

क्षीबादिष्विति। क्षीबृ मदे,कृश तनुत्वे, लाघृशक्तावुत्पूर्वः, एभ्यः क्तः। ननु फुल्ल विकसन इत्यस्मादुल्लाघेश्च पचाद्यचि

इतराभ्यामिगुपधलक्षणे कप्रत्यये च फुल्लादयः सिध्यन्ति त()त्क सूत्रेणेत्यत आह-- सूत्रं त्विति।

---

सूत्रम्

काशिका-वृत्तिः

नुदविदौन्दत्राघ्राह्रीभ्यो ऽन्यतरस्याम् ८।२।५६

नुद विद उन्द त्रा घ्रा ह्री इत्येतेभ्यः उत्तरस्य निष्ठातकारस्य नकार आदेशो भवति अन्यतरस्याम्। नुद नुन्नः, नुत्तः। विद विन्नः, नित्तः। उन्द समुन्नः, समुत्तः। त्रा त्राणः, त्रातः। घ्रा घ्राणः, घ्रातः। ह्री ह्रीणः, ग्रीतः। ह्री इत्येतस्मादप्राप्तं नत्वम्, इतरेषां नित्यं प्राप्तं विकल्प्यते। विद विचारणे इत्यस्य विदेरिह ग्रहणम् इष्यते। एवं ह्युक्तम् वेत्तेस्तु विदितो निष्ठा विद्यतेर् विन्न इष्यते। विनतेर् विन्नश्च वित्तश्च भोगवित्तश्च विन्दतेः। इति।

न्यासः

नुदविदोन्दत्राघ्रह्रीभ्योऽन्यतरस्याम्?। , ८।२।५६

"समुन्नः, समुत्तः" इति। "अनिदिताम्()" ६।४।२४ इति नलोपः। "ह्यीत्यस्य" ["ह्यी" इत्यतस्य--काशिका, पदमञ्जरी च] इति। "ह्यी लज्जायाम्()" (धा।पा।१०८५३० इत्यस्य। "अप्राप्त्रः" इति। केनचिदविधानात्()। "इतरेषाम्()" इति। तत्र "नुद प्रेरणे" ["णुद प्रेरणे"--धातुपाठः] (धा।पा।१४२६), "उन्दी क्लेदने" (धा।पा।१४५७)--तयोः "रदाभ्याम्()" ८।२।४२ इति नित्यं प्राप्सम्()। "त्रैङ्? पालने" (धा।पा।९६५), "घ्रा गन्धोपादाने" (धा।पा।९२६)--एतयोः "संयोगादेः" ८।२।४३ इत्यादिना। "विद विचारणे" इत्यस्य विदेरिह ग्रहणमिध्यते" इति। कथं पुनरस्य ग्रहणमिष्यते, श्लुविकरणेन ह्यीत्यनेन ["ह्यीणा"--प्रांउ पाठः] साहचार्यात्()? नैतदस्ति; शविकरणेन नुदिना साहचर्याल्लाभार्थस्य विदेग्रह्रणप्रसङ्गात्()? एवं तह्र्रन्यतरस्यामित्येषा व्यवस्थितविबाषा, तेन विचारणार्थस्यैव भवितव्यम्(), नान्यस्य; यस्यैवं भवितव्यं तस्यैव ग्रहणं युक्तमिति स एव गृह्रते। कथं पुनज्र्ञायते--विचारणार्थस्य विदेर्यहणमिष्यते? इत्याह--"एवं हि" इत्यादि। इष्यत इति वक्ष्यमाणं प्रत्येकमभिसम्बध्यते। "निष्ठा" इत्यनेन निष्ठान्तमुपलक्षयतिः "वेत्तेः" इत्यादि। "विद ज्ञाने" (धा।पा।१०६४) इत्यस्य "विदितः" इत्येतद्रूपमिष्यते; नित्येट्त्वात्(), तस्येटा निष्ठातकारस्य व्यवधाने सति नत्वस्यासम्भवात्()। "विद्यतेः" इति। "विद सत्तायाम्()" (धा।पा।११७१) इत्यस्य श्यन्विकरतस्य [नास्ति--कांउपाठे] निष्ठान्तस्य "विन्नः" इत्येतद्रूपमिध्यते; "एकाचः" ७।२।१० इतीट्प्रतिषेधात्(); "रदाभ्याम्()" ८।२।४२ इत्यादिना च नित्यं नत्वविधानात्()। "विन्तेविन्नश्च वित्तश्च" इति। "विद विचारणे" (धा।पा।१४५०) इत्यस्य निष्ठान्तस्यैतद्रूपद्व्यमिष्यते; पूर्ववदिट्प्रतिषेधात्(), अनेन च सूत्रेण ८।२।५६ पक्षे नत्वविधानात्()। "भोगिवित्तश्च विन्दतेः" इति। विब्दतेरित्यनेन लाभार्थविदिं दर्शयति। तस्य हि "शे मुचादीनाम्()" ७।१।५९ इति नुमि कृते विन्दतीत्येतद्रूपं भवति। भोगवित्त इति--भोगे वित्तो भोगवित्तः, "सप्तमी" (२।१।४०) इति योगविभागात्? समासः। भोगग्रहणं चोपलक्षणमात्रम्()। प्रत्ययोऽयि गृह्रते। "विद्लृ लाभे" (धा।पा।१४३२) इत्यस्य भोगे प्रत्यये चार्थे वित्त इत्येतद्रूपं निष्ठायामिष्यते; "वितो भोगप्रत्यययोः" ८।२।५८ इति नत्वाभावस्य निपातनात्(), "यस्य विभाषा" ७।२।१५ इति निष्ठायामिट्प्रतिषेधाच्च। विन्दतेर्हि क्वसौ "विभाषा गमहनविदविशाम्()" ७।२।६८ इतीङ्()विभाषितः; "भोगवित्तश्च विन्दतेः" इति ब्राउवताऽर्थतौ भोगप्रत्ययाभ्यामन्यत्र विन्न इत्येतद्रूपमिष्यत इत्युक्तं भवति॥

बाल-मनोरमा

नुदविदोन्दत्राघ्राह्यीभ्योऽन्यतरस्याम् ८४४, ८।२।५६

नुदविदोन्द। ह्यीधातोरप्राप्ते, इतरेभ्यो नित्यं प्राप्ते न्तवविकल्पोऽयम्। रौधादिक इति। "विद विचारणे" इत्ययमित्यर्थः।

वेत्तेस्त्विति। "विद ज्ञाने" इत्यस्येत्यर्थः। अयं सेट्, अनिट्केष्वनन्तर्भावात्। तदाह-- विदित इति। अत्र निष्ठातस्य इटा व्यवहितत्वान्नत्वं नेति भावः। विद्यतेर्विन्न इति। "विद सत्ताया"मित्ययमनिट्। "रदाभ्या"मिति नित्यं नत्वमिति भावः। उन्दीति। उदाहरणसूचनम्।

तत्त्व-बोधिनी

नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ६९२, ८।२।५६

नुदविदो। "रदाभ्यां" "संयोगादेरातः" इति नित्ये प्राप्ते, ह्रीत्यस्याऽप्राप्ते उभयत्र विभाषेयम्। वेत्तेस्त्विति। तथा च भाष्यम्--- वेत्तेस्तु विदितो निष्ठा विद्यतेर्विघ्न इष्यते। विन्तेर्विन्नश्च वित्तश्च भोगे वित्ततश्च विदन्तेः" इति। नुन्नः नुत्त इति। "अनिदिता"मिति नलोपः।

---

सूत्रम्

काशिका-वृत्तिः

न ध्याख्यापृमूर्च्छिमदाम् ८।२।५७

ध्या ख्या पृ मूर्च्छि मद इत्येतेषां निष्ठातकारस्य नकारादेशो न भवति। ध्यातः। ध्यातवान्। ख्यातः। ख्यातवान्। पूर्तः। पूर्तवान्। मूर्तः। मूर्तवान्। मत्तः। मत्तवान्। रदाभ्याम्, संयोगादेः इति च प्राप्तः प्रतिषिध्यते।

न्यासः

न ध्याख्यापमू�च्छमदाम्?। , ८।२।५७

"ध्यै चिन्तायाम्()" (धा।पा।९०८), "ख्या प्रकथने" (धा।पा।१०६०), "चक्षिङः ख्याञ्()" २।४।५४ इति च--द्वयोरपि ग्रहणम्()। ननु च चक्षिङादेशस्य सानुबन्धकत्वान्निरनुबन्धकग्रहणपरिभाषया (व्या।प।५३) न प्राप्नोतीति? नैष दोषः; इह हि निष्ठातकारस्य परत्वप्रतिपादने पञ्चमी युक्ता, यथा--"रदाभ्याम्? ८।२।४२ इति। तत्र पञ्चमीनिर्देशे कत्र्तव्ये यः षष्ठीनिर्देशः क्रियते, स सम्बन्धसामान्यं प्रतिपादयितुम्()। न च सम्बन्धिन मन्तरेण सम्बन्धसामान्यमुपपद्यते। न च सानुबन्धके परित्यज्यमाने सम्बन्धिभेदः सम्भवतीति युक्तं तस्यापि ग्रहणम्(), "पृ? पालनपूरणयोः" (धा।पा।१४८९), "मुच्र्छा मोहसमुच्छ्राययोः" (धा।पा।२१२), "मदी हर्षे" (धा।पा।१२०८)। एषु ध्याख्याप्रभृतिषु--आद्ययोः "संयोगादेः" ८।२।४३ इत्यादिना नत्दे प्राप्ते, इतरेषामपि "रदाभ्याम्()" ८।२।४२ इत्यादिना, प्रतिषेधोऽयमारभ्यते। "पूर्तः" इति। "श्रयुकः किति" ७।२।११ इतीट्प्रतिषेधः, "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्त्वम्(), पूर्ववद्दीर्घः। "मूर्तः" इति "राल्लोपः" ६।४।२१ इति च्छकारलोपः, "आदितश्च" ७।२।१६ इतीट्प्रतिषेधः। "मत्तः" इति। अत्रापि "()आईदितो निष्ठायाम्()" ७।२।१४ इति॥

बाल-मनोरमा

न ध्याख्यापृ?मू�च्छमदाम् ८४६, ८।२।५७

न ध्याख्या। पञ्चम्यर्थे षष्ठी। तदाह-- एभ्य इति। ध्यात इति। ध्यैधातोः क्तः। "आदेचः" इत्यात्वम्। अत्र "संयोगादेरातः" इति प्राप्तं नत्वं न। ख्यात इति। ख्याञादेशपक्षे यण्वत्त्वात् "संयोगादेरातः" इति प्राप्तं नत्वं न। ख्यादेशस्य शस्य यत्वे तु यस् णत्वप्रकरणगतस्याऽसिद्धत्वाद्यण्वत्त्वाऽभावात् "संयोगादेरातः" इति नत्वस्य न प्रसक्तिः। स्वतः सिद्धख्याधातोस्तु आद्र्धधातुके प्रयोगो नाऽस्त्येवेति ख्याग्रहणं व्यर्थमेव। पूर्त इति। पृ()धातोः क्तः। "श्र्युकः किती"ति नेट्। "उदोष्ठ()पूर्वस्ये"ति उत्त्वं,रपरत्वम्। इह "रदाभ्या"मिति प्राप्तं नत्वं न। मुर्छाधातोः क्ते आह--राल्लोप इति। छस्य लोप इति

भावः। मूर्त इति। "आदितश्चे"ति नेट्। छलोपे "रदाभ्या"मिति प्राप्तं नत्वं न। "हलि चे"ति दीर्घः। मत्त इति। "मदी हर्षग्लेपनयोः" अस्मात् क्तः। "()आईदितः" इति नेट्। अत्र "रदाभ्या"मिति प्राप्तं नत्वं न।

तत्त्व-बोधिनी

न ध्याख्यापृ?मू�च्छमदाम् ६९३, ८।२।५७

न ध्या। ध्यै चिन्तायाम्। ख्या प्रकथने। प पालनपूरणयोः। मुच्र्छा मोहसमुच्छ्राययोः। मदी हर्षे। पूर्त इति। "श्र्युकः किती"ति इण्निषेधः। छलोपविधिं स्मारयति---राल्लोपैति। मूर्तैति। "आदितश्चे"ति नेट्। मत्त इति। "()आईदितः" इति नेट्।

---

सूत्रम्

काशिका-वृत्तिः

वित्तो भोगप्रत्यययोः ८।२।५८

वित्तः इति विदेर् लाभार्थातुत्तरस्य क्तस्य नत्वाभावो निपात्यते भोगे प्रत्यये च अभिधेये। वित्तमस्य बहु। धनम् अस्य बहु इत्यर्थः। धनं हि भुज्यते इति भोगो ऽभिधीयते। प्रत्यये वित्तो ऽयं मनुष्यः। प्रतीतः इत्यर्थः। प्रतीयते इति प्रत्ययः। भोगप्रत्यययोः इति किम्? विन्नः।

न्यासः

वित्तो भोगप्रत्यययोः। , ८।२।५८

"धनमस्य बहवित्यर्थः" इति। कथं पुनर्भोगे व्यत्पादितस्य धने वृत्तिरर्थो भवति? इत्याह--"घनं हि" इत्यादि। अनेन कर्मसाधनत्वं भोगशब्दस्य दर्शयन्? धनेऽस्य वृतिं()त दर्शयति। "प्रतीत इत्यर्थः" इति। एतेन प्रत्ययशब्दस्य कर्मसाधनतामाचष्टे। प्रतीत इति कर्मणि निष्ठा। प्रतीत आख्यात इत्यर्थः। स चायमर्थः प्रत्यये व्युत्पाद्यमानेऽस्य कथं [नास्ति--कांउ।पाठे] भवति, यदि प्रत्यशब्दोऽपि कर्मसाधनो भवति--प्रतीयत इति प्रत्ययः। तेन प्रत्ययशब्दस्य कर्मसाधनता वेदितव्या॥

बाल-मनोरमा

वित्तो भोगप्रत्यययोः ८४८, ८।२।५८

वित्तो भोग। भुज्यत इति भोगः-- भोग्यम्। प्रतीयते इति प्रत्ययः-- प्रख्यातः। अत्र विन्दतेरेव ग्रहणमिति भाष्ये स्पष्टम्। तदाह-- विदन्तेरिति। निपातोयमिति। "नुदविदोन्दे" ति प्राप्तस्य पाक्षिकनत्वस्य अभावनिपातनमित्यर्थः। तस्य भोगप्रत्यययोः कदाऽपि नत्वं नेत्यर्थः। प्रतीते इति। प्रख्याते इत्यर्थः। वित्तः पुरुष इति। प्रख्यात इत्यर्थः। विन्न इति। लब्धश्चोरादिरित्यर्थः। अत्र "यस्य विभाषे"ति इण्निषेदमुपपादयति-- विभाषा गमेति। "एकाच" इति निषेधाच्चेत्यपि बोध्यम्।

तत्त्व-बोधिनी

वित्तो भोगप्रत्यययोः ६९४, ८।२।५८

वित्तो। ज्ञानार्थकाद्विदेरिटा भाव्यं, सत्तार्थकविदेर्विचारणार्थकविदेश्च भोगप्रत्यययोर्वृत्तिर्न संभवतीत्याशयेनाह--विन्दतेरिति। विद्लृ लाभ इत्यस्येत्यर्थः। भुज्यत इति भोगः। प्रतीयत इति प्रत्यय इति कर्मसाधनावेताविति व्याचष्टे-

भोगे प्रतीते चार्थ इति।

---

सूत्रम्

काशिका-वृत्तिः

भित्तं शकलम् ८।२।५९

भित्तम् इति निपात्यते शकलं चेत् तद् भवति। भित्तं तिष्ठति। भित्तं प्रपतति। शकलपर्यायो ऽयम्। अत्र भिदिक्रिया शब्दव्युत्पत्तेरेव निमित्तम्। भिदिक्रियाविवक्षायां हि शकलविषये भिन्नम् भित्तम् इत्येव भवति।

न्यासः

भित्तं शकलम्?। , ८।२।५९

"भित्तमिति निपात्यते" इति। किं निपात्यते? रदाभ्यामिति ८।२।४२ नत्वे प्राप्ते तदभाव इति। "शकलं चेत्तद्भवति" इति। शकलशब्दस्य योऽर्थः, खमण्ड इति यस्यापरमभिधानम्(), भित्तशब्दस्यापि यदि स एवार्थो भवतीत्यर्थः। कथं पुनर्भित्तशब्दस्य शकलमर्थो भवति? इत्याह--"शकलपर्यायोऽयम्()" इति। भित्तशब्दः शकलस्यैव पर्यायः। तस्माद्यथा शकलशब्दस्य शकलमभिधेयं भवति, एवं भित्तशब्दस्यापि। ननु च शकलशब्दोऽयं जातिशब्दः; जातिप्रव-त्तिनिमित्तमुपादाय स्वाभिदेये प्रवृत्तत्वात्(); भित्तशब्दस्तु क्रियाशब्दः, क्रियाप्रवृत्तिनिमित्तत्वात्(); तथा हि--भिदेर्विदारणार्थात्? क्ते विहिते भित्तमिति निपात्यते, न च क्रियाशब्दो जातिशब्दपर्याय उपपद्यते? इत्याह--"अत्र" इत्यादि। शब्दव्युत्पत्तिः=शब्दसंस्कारः, तस्या एवात्र भित्तशब्दे भिदिक्रियानिमित्तत्वाम्(); न तु तत्प्रवृत्तेः; असत्त्वात्()। जातिरेव तु तत्प्रवृत्ति प्रति निमित्तम्(); तस्या विद्यमानत्वात्()। तस्माच्छकलशब्दवद्भित्तशब्दोऽपि जातिशब्द एव; न क्रियाशब्द इति युक्ता तस्य तत्पर्यायता। यदि तह्र्यसत्येवात्र भिदिक्रिया, शब्दसंस्कारत्वस्यापि सा निमित्तं नोपपद्यते? नैतदस्ति; न ह्ययं नियोगोऽभिधीयते--विद्यमानैव क्रिया शब्दसंस्कारस्य निमित्तं भवतीति। तथा हि तैलपायिकाशब्दो यत्र प्राणिविशेषे रूढः, तत्र तैलपानक्रियाशब्दोऽपि नास्ति; तथापि तैलपानक्रिया तत्संस्कारनिमित्तत्वेनाश्रीयते। कथं पुनर्भित्तशब्दो भिदिक्रियाप्रवृत्तिनिमित्तं न भवति? इत्याह--"भिदिक्रियाविवक्षायां हि" इत्यादि। अत्र भिन्नमित्यस्य च भित्तशकलशब्दाभ्यां प्रत्येकमभिसम्बन्धः। तेन "भिन्नं भित्तमित्येव भवति" इति। एतत्? प्रयोगद्वयमपि भिदिक्रियादिवक्षायां सिद्धं भवति। विदीर्णे हि शकले तस्य विदीर्णतां प्रतिपादयितुं भिन्नम्(), भित्तमित्येष प्रयोगो भिदिक्रियाविवक्षायां क्रियते। यदि च भित्तशब्द क्रियाप्रवृत्तिनिमित्तं स्यात्(), ततो भित्तशब्देनैव भिदिक्रियानिमित्तकेन विदीर्णता शकलस्य प्रतिपाद्यत इत्येष प्रयोगो नोपपद्यते, न हि तदस्ति यस्य भित्तशब्देनाप्रतिपादितस्य भिन्नशब्दयोगो भवेत्()। भिन्नं शकलमित्येष च प्रयोगो नोपपद्यते; शकलव्युत्पादितेन भित्तशब्देन भिदिक्रियानिमित्तकेन भिन्नशब्दस्य बाधितत्वात्()। अस्ति चायं द्विविधोऽपि प्रयोगः, तस्गाद्भित्तशब्दस्य भिदिक्रियानिमित्तत्वं न गम्यते॥

बाल-मनोरमा

भित्तं शकलम् ८४९, ८।२।५९

भित्तं शकलम्। शकले वाच्ये भिदेः क्तस्य नत्वाऽभावो निपात्यते। शकलत्वजातिविशिष्टेऽवयवार्थमनपेक्ष्य रूढोऽयम्। ततश्च भित्तशकलयोः पर्यायत्वान्न सहप्रयोगः। भिदिक्रियाविवक्षायां तु "भित्तं भिन्न"मिति भवतीति भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

भित्तं शकलम् ६९५, ८।२।५९

भित्तं शकलम्। भिदेः क्ते "रदाभ्या"मिति प्राप्तनत्वस्याऽभावो निपात्यते। "भित्तं शकलखण्डे वा" इत्यमरः। भिन्नमन्यदिति। विदीर्णमित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

ऋणम् आधमर्ण्ये ८।२।६०

ऋणम् इति ऋ इत्येतस्माद् धातोरुत्तरस्य निष्ठातकारस्य नकारो निपात्यते आधमर्ण्यविषये। अधमः ऋणे अधमर्णः, एतस्मादेव निपातनात् सप्तम्यन्तेन उत्तरपदेन समासः, तद्भावः आधमर्ण्यम्। यद्येवम्, उत्तमर्णः इति न सिध्यति? न एष दोषः। कालान्तरदेयविनिमयोपलक्षणार्थं चेदमुपात्तम्। तेन उत्तमर्णः इत्यपि हि भवति। ऋणं ददाति। ऋणं धारयति। आधमर्ण्ये इति किम्? ऋतं वक्ष्यामि नानृतम्।

न्यासः

ऋणमाधमण्र्ये। , ८।२।६०

"ऋ इत्येतस्मात्()" इति। "ऋ गतौ" (धा।पा।१०९८) इत्येतस्मात्(), "ऋ गतिप्रापणयोः" (धा।पा।९३६) इत्येतस्माद्वा। "अधम ऋणेऽधमर्णः" इति। केन पुनरत्र समास इति? यावता नात्र किञ्चित्? समासलक्षणमस्ति; "सप्तमिति योगविभागात्? समासः" इत्येतच्च न वक्तव्यम्(), सप्तम्याः पूर्वनिपातप्रसङ्गत्()? इत्यत आह--"एतस्मादेव" इत्यादि। "तद्भाव आधमण्र्यम्()" इति। तत्? प्रतिदास्यतीति ग्रहणक्रियाभिसम्बन्धः। तद्योगाद्भावेऽसावधमर्ण इत्युच्यते। "कालान्तर" इत्यादि। यस्मिन्? कालेऽधमर्णो गृह्णाति तस्मात्? कालादन्य आगामी कालः कालान्तरम्(), तत्र यद्देयं तत्? कालान्तरदेयम्(), तेन यो विनिमयः= विपरिवत्र्तनम्(), तदुपलक्षणार्थमेवाधमर्णग्रहणमेवमुपात्तम्(), न च स्वार्थपरतिपादनार्थमेव। किं कारणमेवं व्याख्यायते? इत्याह--"उत्तमर्ण इत्यपि भवति" इति। ऋणे ह्येकोऽधमर्णो भवति, यो गृहीत्वा प्रतिदास्यतीति; यस्तु दत्वा ग्रहौष्यति स उत्तमर्णः। तत्र यद्याधमण्र्यग्रहणं स्वार्थप्रतिपादनार्थमेवोपात्तम्(), तदोत्तमर्ण इति न सिध्येत्(), न ह्यत्राधमण्र्यं विवक्षितम्()। तत्तर्हीदं चोत्तमर्यर्णेऽपि कालान्तरदेयविनिमयोपलक्षणार्थत्वादाधमण्र्यग्रहणे सत्येतदपि सिध्यति, अस्ति ह्यत्र कालान्तरद्वयविनिमयः। तथा ह्युत्तमर्णोऽपि प्रयच्छन्? कालान्तरे यद्देयं तेन विनिमयं करोति॥

बाल-मनोरमा

ऋणमाधमण्र्ये ८५०, ८।२।६०

ऋणमाधमण्र्ये। अधमर्णस्य कर्म - आधमण्र्यम्। आधमण्र्यव्यवहारे इति। स च अन्यदीयं द्रवयं गृहीतमियता कालेन इयत्या वृद्ध्या प्रतिदीयते इति संविद्रूपः, तस्मिन्विषये इत्यर्थः। ऋतमन्यदिति। सत्यमित्यर्थः।

तत्त्व-बोधिनी

ऋणमाघणण्र्ये ६९६, ८।२।६०

ऋणमाधमण्र्ये। अधमं दुःखप्रदमृणमस्य सोऽधमर्णः, तस्य भाव आधमण्र्य। तेन व्यवहारविशेषो लक्ष्यते। ततश्च उत्तमर्णोऽपि सिध्यतीत्याशयेन व्याचष्टे--- अधमर्णव्यहार इति। स च व्यवहारो दातृग्रहीत्रोः संबन्धी भवतीत्युत्तमर्णोऽपि प्रयोगो न विरुध्यते। लक्षणायां तु "धारेरुत्तमर्णः" इति निर्देशो लिङ्गम्।

---

सूत्रम्

काशिका-वृत्तिः

नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ८।२।६१

नसत्त निषत्त अनुत्त प्रतूर्त सूर्त गूर्त इत्येतानि छन्दसि विषये निपात्यन्ते। नसत्त, निषत्त इति सदेः नण्पूर्वात् निपूर्वाच् च नत्वाभावो निपात्यते। नसत्तमञ्जसा। नसन्नम् इति भषायाम्। निषत्तः। निषण्णः इति भाषायाम्। अनुत्तम् इति उन्देः नञ्पूर्वस्य निपातनम्। अनुत्तमा ते मघवन्। अनुन्न इति भाषायाम्। प्रतुर्तम् इति त्वरतेः तुर्वी इत्येतस्य वा निपातनम्। प्रतूर्तं वाजिन्। प्रतूर्णम् इति भाषायाम्। सूर्तम् इति सृ इत्येतस्य उत्वं निपात्यते। सूर्ता गावः। सृता गावः इति भाषायाम्। गूर्तम् इति गूरी इत्येतस्य नत्वाभावो निपात्यते। गूर्ता अमृतस्य। गूर्णम् इति भाषायाम्।

न्यासः

नसत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि छन्दसि। , ८।२।६१

"सदेः" इति। "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।८५४) इत्येतस्मात्()। "निषत्तः" इति। "सदिरप्रतेः" ८।३।६६ इतिषत्वम्()। "अनुत्तम्()" इति। "उन्दी क्लेदने" (धा।पा।१४५७), "अनिदिताम्()" ६।४।२४ इति नलोपः। "प्रतूर्त्तम्()" इति। यदा "ञित्वरा सम्भ्रमे" (धा।पा।७७५) इत्यस्य निपात्यते, तदा "ज्वरत्वर" ६।४।२० इत्यादिना वकारस्योपधायाश्चोत्वम्()। यदा "उर्वी तुर्वी थुर्वी हिंसार्थाः" (धा।पा।५६९,५७०,५७१) इत्यस्य, तदा "राल्लोपः" ६।४।२१ इति रकारलोपः, पूर्ववद्दीर्घः। "सूर्त्तम्()" इति। "सृ गतौ" (धा।पा।९३५) उत्वसन्नियोगे रपरत्वम्(), पूर्वद्दीर्घः। "गूर्त्तम्()" इति। "गुरी उद्यमाने" ["गूरी"--प्रां।पाठ] (धा।पा।१३९६)।

---

सूत्रम्

काशिका-वृत्तिः

क्विन्प्रत्ययस्य कुः ८।२।६२

पदस्य इति वर्तते। क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वम् इष्यते। क्विन् प्रत्ययो यस्माद् धातोः स क्विन्प्रत्ययः, तस्य पदस्यालो ऽन्त्यस्य कवर्गादेशो भवति। स्पृशो ऽनुदके क्विन् ३।२।५८। घृतस्पृक्। हलस्पृक्। मन्त्रस्पृक्। क्विनः कुः इति वक्तव्ये प्रत्ययग्रहणं कृतं बहुव्रीहिविज्ञानार्थम्। क्विन् प्रत्ययो यस्माद् विहितस् तस्मादन्यस्मिन्नपि प्रत्यये कुत्वं यथा स्यात्। मा नो अस्राक्। मा नो अद्राक्। सृजिदृशिभ्यां हि क्विन् विहितः, तयोर् लुङि कुत्वम् एतत्। माङ्योगे ऽपि छन्दसत्वादडागमः। ईट् च न भवति, बहुलं छन्दसि ७।३।९७ इति। तथा दृग्भ्याम्, दृग्भिः इति क्विबन्तस्य अपि दृशेः कुत्वं भवति। एवं च सति रज्जुसृड्भ्याम् इत्यत्र अपि कुत्वं प्राप्नोति। अथ तु न इष्यते, प्रतिविधानं कर्तव्यम् इति।

लघु-सिद्धान्त-कौमुदी

क्विन्प्रत्ययस्य कुः ३०६, ८।२।६२

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते। अस्यासिद्धत्वाच्चोः कुरिति कुत्वम्। ऋत्विक्, ऋत्विग्। ऋत्विजौ।ऋत्विग्भ्याम्॥

न्यासः

क्विन्प्रत्ययस्य कुः। , ८।२।६२

"घृतस्पृक्()" इति। अत्र शकारस्य विवृत्तकरणस्य ()आआसानुप्रदानस्याघोषस्य तादृश एव खकारः, तस्य

जश्त्वम्()--गकारः। गकारस्यापि चत्र्वम्()--ककारः। अथ प्रत्ययग्रहणं किमर्थम्(), न क्विन इत्येवोच्येत, न हि क्विन्? प्रत्ययत्वं व्यभिचरति। एवमुच्यमाने लोपापवादः क्विन एव कुत्वं स्यादित्येतच्च नाशङ्कनीयम्(), तथा हि--क्विन्निति प्रत्ययग्रहणं यत्र प्रत्ययग्रहणं प्रत्ययग्रहणपरिभाषया (भो।प।सू।७) क्विन्नन्त उपस्थापिते क्विनो लोपे कत्र्तव्ये कुत्वस्यासिद्धत्वात्? पूर्वं लोपेनैव भवितव्यम्()। तस्मिन्? सति पश्चाद्भवत्कुत्वं परिशिष्टस्य धातोरेव भविष्यिति? इत्यत आह--"क्विनः कुरिति वक्तव्ये" इत्यादि। असति हि प्रत्ययग्रहणे क्विन्प्रत्ययान्तस्यैव पदान्तस्य स्यात्(), मान्यप्रत्ययान्तस्य, तस्यापि चेष्यते। तस्मात्? प्रत्ययग्रहणं क्रियते। प्रत्ययग्रहणे सति बहुव्रीहिर्लभ्यते। तेन बहुव्रीहिणा यस्माद्विहितः स धातुरूपलक्ष्यत इति सर्वस्य सिध्यति। "मानो अरुआआक्(), मानो अद्राक्()" इति। "सृज विसर्गे" (धा।पा।१४१४) "दृक्षिर्? प्रेक्षणे" (धा।पा।९८८), लुङ्(), च्लेः सिच्? ३।१।४४, तिप्(), "सृजिदृशोर्झल्यमकिति" ६।१।५७ इत्यमागमः, "वदव्रज" ७।२।३ इत्यादिना वृद्धिः, हल्ङ्यादिलोपः ६।१।६६, अडागमः, अनेन कृत्वम्()। "सृजिदृशिभ्यां क्विन्विहितः" इति। "ऋत्विक्()" ३।२।५९ इत्यादिना सृजेः क्विन्विहितः। दृशेरपि "त्यवादिषु दुशेरनालोचने कञ्च" ३।२।६० इत्यनेन। कथं पुनरत्राडागमः, यावता "न माङयोगे" (६।४।७४) इति प्रतिषिद्धोऽसो? इत्यत आह-"माङ्योगेऽपि" इत्यादि। छान्दसौ ह्येतौ प्रयोगौ। तेन सत्यपि माङ्योगे "बहुलं छन्दस्यामाङ्योगेऽपि" ६।४।७५ इत्यडागमो भवत्येव। "अस्तिसिचोऽपृक्ते" (७।३।९६) इतीट्? तर्हि कस्मान्न भवति? इत्याह-ईट्? च न भवति" इत्यादि। प्रत्ययग्रहणाद्यथा क्विन्प्रत्ययस्य लुगन्तस्य कृत्वं भवति, दृग्भ्यामित्या दौदृशेः क्विबन्तस्यापि। "एवम्()" इत्यादि। प्रत्ययग्रहणात्? क्विन्प्रत्ययो यस्माद्विहितः, तस्यान्यप्रत्ययान्तस्यापि कुत्वं भवतीत्यस्मिन्नर्थे व्यवस्थिते रज्जुसृङ्भ्यामित्यत्रापि ब्राश्चादिसूत्रेण (८।२।३६) षत्वं यत्? प्राप्नोति तद्बाधित्वा कृत्वेन भवितव्यम्()। "अथ तु नेष्यते, प्रतिविधानं कत्र्तव्यम्()" इति। [नास्ति--प्रांउ।पाठे] प्रतिविधानमुत्तरसूत्रे वाग्रहणं यत्? तदुभयोर्योगयोः शेषः। व्यवस्थितविभाषा च, तेनेह न भविष्यतीति। एवञ्च सति रज्जुसृभ्याम्(), रज्जुसृङ्भ्य इति भवितव्यम्()॥

बाल-मनोरमा

क्विन्प्रत्ययस्य कुः , ८।२।६२

क्विन्प्रत्ययस्य कुः। "पदस्ये"त्यधिकृतम्। "झलाञ्जशोऽन्ते" इत्यतेऽन्त इत्यनुवर्तते। क्विन् प्रत्ययो यस्मात् स क्विन्प्रत्ययः, तस्येति बहुव्रीहिः। क्विन्नन्तस्येति तु नार्थः, तथासति "क्विनः कु"रित्येव ब्राऊयात्, प्रत्ययग्रहणपरिभाषाया क्विन्नन्तस्येत्यर्थलाभात्। तदाह--क्विन्प्रत्ययो यस्मादित्यादिना। बहुव्रीहेः प्रयोजनं तु घृतस्पृश्शब्दानिरूपणे मूल एव वक्ष्यते। कुरिति कवर्गो गृह्रते, उदित्त्वात्। अणिदित्सूत्रे "अप्रत्यय" इत्येतदणैव संबध्यते, नतूदिता, उदित्करणसामथ्र्यात्। तेन कुरिति विधायमानोपि सवर्णग्राहकः। ननु नकारस्य कुत्वे कखगघङा पञ्चापि पर्यायेण प्राप्नुयुः, स्थानत आन्तर्यस्य पञ्चस्वप्यभावात्, स्पृष्टप्रयत्नत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात्, घोषसंवारनादवता अल्पप्राणवता च नकारेण गकारस्यापि आन्तर्यसत्त्वात्। अत आह--नस्येति। नासिकास्थानत आन्तर्यादिति भावः। युङिति। "युजिर् योगे।" रूधादिः। युनक्तीति युङ्। नुमि कृते तदीयनकारस्य "चोः कुः" इति कुत्वं न प्रानोतीति "क्वन्प्रत्ययस्ये"त्यारम्भः। अथ औजसादिषु विशेषमाह--नश्चेति। नुम इति। "युजेरसमासे" इति विहितस्ये"ति शेषः। परसवर्ण इति। "अनुस्वारस्य ययी"ति परसवर्णो ञकारो, नासिकास्तथानत आन्तर्यादिति भावः। तेन युञ्जावित्यादि सिद्धम्। नन्विह ञकारस्य झलि जकारे परे "चोः कु"रिति कुत्वं कुतो न स्यादित्यात आह--तस्येति। परसवर्णस्येत्यर्थः। युग्भ्यामिति। "स्वादिषु" इति पदत्वाज्जकारस्य गकार इति भावः।

तत्त्व-बोधिनी

क्विन्प्रत्ययस्य कुः ३३७, ८।२।६२

क्विन्प्रत्ययस्य। क्विनः कु " रित्युक्तेऽपि प्रत्ययग्रहणे तदन्तग्रहणात्क्विन्नन्तस्य ग्रहणे सिद्धे प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थमित्याशयेन व्याचष्टे--क्विन्प्रत्ययो यस्मादितिष।बहुव्()रीह्याश्रयणफलं तु "स्पृ"गित्यादि स्फुटीबविष्यति।

---

सूत्रम्

काशिका-वृत्तिः

नशेर् वा ८।२।६३

पदस्य इति वर्तते। नशेः पदस्य वा कवर्गादेशो भवति। सा वै जीवनगाहुतिः। स वे जीवनडा हुतिः। नशेरयं सम्पदादित्वाद् भावे क्विप्। जीवस्य नाशो जीवनक्, जीवनट्। षत्वे प्राप्ते कुत्वविकल्पः।

लघु-सिद्धान्त-कौमुदी

नशेर्वा ३५१, ८।२।६३

नशेः कवर्गोऽन्तादेशो वा पदान्ते। नक्, नग्; नट्, नड्। नशौ। नशः। नग्भ्याम्, नड्भ्याम्॥ ,

न्यासः

नशेर्वा। , ८।२।६३

"जीवनड्गाहुतिः" इति। अत्राकुत्वपक्षे व्रश्चादिसूत्रेण ८।२।३६ षत्वे कृते जश्त्वम्()--डकारः॥

बाल-मनोरमा

नशेर्वा , ८।२।६३

नशेर्वा। "क्विन्प्रत्ययस्य कुः" इत्यतः कुरित्यनुवर्तते, "स्कोः संयोगाद्योः" इत्यतोऽन्ते इति च। "पदस्ये"त्यदिकृतं। तदाह--नशेरित्यादि। "अन्तादेश" इत्यलोऽन्त्यसूत्रलभ्यम्। पक्षे "व्रश्चे"चि षत्वम्। नक् नगिति। कुत्वपक्षे जश्त्वचत्र्वाभ्यां रूपे। नट् नडिति। षत्वपक्षे जश्त्वचत्र्वाभ्यां रूपे। नग्भ्यां नढ्भ्यामिति। कुत्वपक्षे जश्त्वेन गकारः। षत्वपक्षे तु जश्त्वेन डकारः। "मस्जिनशोर्झली"ति नुम् तु न, धातोर्विहिते प्रत्यये एव तत्प्रवृत्तेर्वक्ष्यमाणत्वात्।

तत्त्व-बोधिनी

नशेर्वा ३८३, ८।२।६३

नगिति। षडगकाः प्रग्वात्।

---

सूत्रम्

काशिका-वृत्तिः

मो नो धातोः ८।२।६४

मकारन्तस्य धातोः पदस्य नकारादेशो भवति। प्रशान् प्रतान्। प्रदान्। शमितमिदमादीनां क्विप्, अनुनासिकस्य क्विझलोः क्ङिति ६।४।१५ इति दीर्धत्वम्। नत्वस्य असिद्धत्वान् नलोपो न भवति। मः इति किम्? भित्। छित्। धातोः इति किम्? इदम्। किम्। पदस्य इत्येव, प्रतामौ। प्रतामः।

लघु-सिद्धान्त-कौमुदी

मो नो धातोः २७२, ८।२।६४

धातोर्मस्य नः पदान्ते। प्रशान्॥

न्यासः

मो नो धातोः। , ८।२।६४

"पदस्य" इति वत्र्तते। तच्च धातुसमानाधिकरणं मकारेण विशेष्यते--मकारान्तस्य पदस्य धातोरिति। "प्रशान्(), प्रतान्? इति। "शमु उपशमे" (धा।पा।१२०१), "तमु काङ्क्षायाम्()" (धा।पा।१२०२), क्विप्(), "अनुनासिकस्य क्विझलोः क्ङिति" ६।४।१५ इत्युपधादीर्घत्वम्(), हल्ङ्यादिलोपः ६।१।६६। अथेह "नलोपः प्रातिपदिकान्तस्य" (८।२।७) ति नकारलोपः कस्मान्न भवति? इत्याह--"नत्वस्य" इत्यादि॥

बाल-मनोरमा

मो नो धातोः , ८।२।६४

अथ मकारान्ताः। अथ प्रपूर्वात्शमुधातोः क्विपि "अनुनासिकस्य क्वझलोः क्ङिति" इति दीर्घे सति निष्पन्ने प्रशाम्शब्दो विशेषमाह--मो नो धातोः। "म" इति षष्ठ()न्तं "धातो"रित्यस्य विशेषणं, ततस्तदन्तविधिः। पदस्येत्यधिकृतं, "स्कोः संयोगाद्योः" इत्यतोऽन्ते इत्यनुवर्तते। तदाह-मान्तस्येत्यादिना। "अलो।ञन्त्यस्ये"ति मकारस्य भवति। तत्र सोर्हल्ङ्यादिलोपे सति नकारस्य प्रातिपदिकान्तत्वात्पदान्तत्वाच्च "न लोपः प्रातिपदिकान्तस्ये"ति नलोपमाशङ्क्याह--नत्वस्येति। प्रशानिति। स्वरादिपाठेऽप्यस्य नाव्ययत्वं, सत्त्ववाचित्वात्। असत्त्ववाचित्वे तु स्वरादिपाठाद्वययत्वमेवेति भावः। प्रशान्भ्यामिति। भ्यामादो हलि "स्वादिष्वसर्वनामस्थाने" इति पदत्वान्नत्वमिति भावः। इत्यादीति। प्रशान्भिः। प्रशामे। प्रशान्भ्यः। प्रशामः। प्रशामः। प्रशामोः। प्रशामाम्। प्रशामि प्रशान्त्सु-प्रशान्सु। "नश्चेति"धुड्विकल्पः। अथ कायतेर्डिमिरिति निष्पन्नः किम्()शब्दः प्रष्टव्ये वर्तते।

तत्त्व-बोधिनी

मो नो धातोः ३०१, ८।२।६४

प्रशानिति। "शम उपशमे"क्विप्। "अनुनासिकस्य क्वी"ति दीर्घः।

---

सूत्रम्

काशिका-वृत्तिः

म्वोश् च ८।२।६५

मकारवकारयोश्च परतः मकारान्तस्य धातोः नकारादेशो भवति। अगन्म तमसः पारम्। अगन्व। गमेर्लङि बहुलं छन्दसि इति शपो लुक्। जगन्वान्। विभाषा गमहनजनविदविशाम् ७।२।६८ इति क्वसौ इडागमस्य अभावः। अपदान्तार्थः आरम्भः।

लघु-सिद्धान्त-कौमुदी

म्वोश्च ८३३, ८।२।६५

मान्तस्य धातोर्नत्वं म्वोः परतः। जगन्वान्॥

न्यासः

म्वोश्च। , ८।२।६५

"अगन्म" इति। "स उत्तमस्य" ३।४।९८ इति सकारलोपः। "जगन्वान्()" इति। गमेर्लिट्(), क्वसुः, हल्ङ्यादि ६।१।६६ संयोगान्तलोपौ ८।२।२३, "सान्तमहतः" ६।४।१० इति दीर्घः, "गमहन" ६।४।९८ इत्यादिनोपधालोपः। "छन्दस्युभयथा" ३।४।११७ इति सार्वधातुकत्वं न भवति। चकारः "धातोः" इत्यनुकर्षणार्थः॥
तत्त्व-बोधिनी
मोश्च १२४, ८।२।६५

कमु कान्तौ। अस्य णिङभावे "उदितो वे"ति क्त्वायामिड्विकल्पः। कमित्वा। कान्त्वा। निष्ठायां तु "यस्य विभाषे"ति निषेधात्कान्तः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स-सजुषोः ६।२ रुः १।१ पदस्य ६।१ ८।१।१६

समासः॥

सश्च सजुष च स-सजुषौ तयोः ॰ इतरेतरद्वन्द्वः

अर्थः॥

स-कारान्तस्य पदस्य सजुष् इत्येतस्य च रुः भवति

उदाहरणम्॥

सकारान्तस्य - अग्निरत्र, वायुरत्र। सजुषः - सजूरृषिभिः, सजूर्देवेभिः।
काशिका-वृत्तिः
ससजुषो रुः ८।२।६६

सकारान्तस्य पदस्य सजुषित्येतस्य च रुः भवति। सकारान्तस्य अग्निरत्र। वायुरत्र। सजुषः सजूरृतुभिः। सजूर्देवेभिः। जुषेः क्विपि सपूर्वस्य रुपम् एतत्।
लघु-सिद्धान्त-कौमुदी
समजुषो रुः १०५, ८।२।६६

पदान्तस्य सस्य सजुषश्च रुः स्यात्॥
न्यासः
ससजुषो रुः। , ८।२।६६

"सजूः" इति। "जुषी प्रीतिसेवनयोः" (धा।पा।१२८८), सह जषत इति क्विप्(), उपपदसमासः, "सहस्य सः संज्ञायाम्()" ६।३।७७ इति सभावः। रुत्वे कृते "वोंरुपधायाः" ८।२।७६ इति दीर्घः। सजुवो ग्रहणमसकारान्तार्थम्()। योगश्चायं

जश्त्वापवादः॥

बाल-मनोरमा

ससजुषो रुः १६१, ८।२।६६

ससजुषो रुः। ससजुषो रु रिति छेदः। "रो रि"इति रेफलोपः। सश्च सजूश्च ससजुषौ, तयोरिति विग्रहः। रुविधौ उकार इत्। तत्फलं त्वनुपदमेव वक्ष्यते। "स" इति सकारो विविक्षितः। अकार उच्चारणार्थः। पदस्येत्यधिकृतं सकारेण सजुष्शह्देन च विशेष्यते। ततस्त दन्तविधिः। सकारान्तं सजुष्()शब्दान्तं च यत् पदं तस्य रुः स्यादित्यर्थः। सच "अलोऽन्त्ये"त्यन्त्यस्य भवति। तत्फलितमाह-पदान्तस्य सस्येति। सजुष्()शब्दस्य चेति। सजुष्शब्दान्तं यत् पदं तदन्तस्य षकारस्येत्यर्थः। ततश्च सजुषौ सजुष इत्यत्र षकारस्य न रुत्वम्, पदान्तत्वाभावात्। "सजुष्()शब्दान्तं यत् पदं तदन्तस्य षकारस्येत्यर्थः। ततस्च सजुषौ सजुष इत्यत्र षकारस्य न रुत्वम्, पदान्तत्वाभावात्। "सजुष्शब्दान्तं यत्पद"मिति तदन्तविधिना परमसजूरित्यत्र नाव्याप्तिः। न च सजूरित्यत्राव्याप्तिः शङ्क्या, व्यपदेशिवद्भावेन तदन्तत्वात्। "व्यपदेशिवद्भावो।ञप्रातिपदिकेन" इति "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न" इति च पारिभाषाद्वयं "प्रत्ययग्रहणे यस्मा"दितिविषयं, नतु येन विधिरितिविषयमिति "असमासे निष्कादिभ्यः" इति सूत्रे भाष्ये स्पष्टम्। ननु शिवसिति सकारस्य "झलाञ्जशोन्ते" इति जश्त्वेन दकारः स्यात्, जश्त्वं प्रति रुत्वस्य परत्वेऽपि असिद्धत्वादित्यत आह--जश्त्वापवाद इति। तथा च रुत्वस्य निरवकाशत्वान्नासिदधत्वमिति भावः। तदुक्तं भाष्ये "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये"ति , "अपवादो वचनप्रामाण्यादि"ति च।

तत्त्व-बोधिनी

ससजुषो रुः १३२, ८।२।६६

ससजुषो रुः। "पदस्ये"त्यनुवृतं ससजूभ्र्यां विशेष्यते, विशेषणेन तदन्तविधिः। न च सजूःशब्दांशे "ग्रहणवता प्रतिपदिकेन तदन्तविधिर्न"ति निषेधः शङ्क्यः, तस्य प्रत्ययविधिविषयकत्वात्। सान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यात्स चाऽलोन्त्यस्य। एवं स्थिते फलितमाह-पदान्तस्य सस्येति। सजुष्शब्दस्येति। तदन्तस्य पदस्येत्यर्थः। तेन "सुजुषौ" "सजुष" इत्यत्रापि नातिव्याप्तिः। नच "सजू"रित्यत्राऽव्याप्तिः, "व्यपदेशिवद्भावोऽप्रातिदिकेने"ति निषेधादिति वाच्यं, तस्यापि प्रत्ययविधिविषयकत्वात्। अतएव "व्यपदेशिवद्भावोऽप्रातिपदिकेने"ति "ग्रहणवते"ति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति "दिव उ"त्सूत्रे हरदत्तेनोक्तम्। कैयटहरदत्ताभ्यामिति तु मनोरमायां स्थितम्। तत्र कैयटेनानुक्तत्वात्कैयटग्रहणं प्रमादपतिततमिति नव्याः। केचित्तु "दिव उ"त्सूत्रं यस्मिन्निति बहुव्रीहिरयं, सूत्रसमुदायश्चान्यपदार्थः। तथाच "दिव उ"त्सूत्रशब्देन "द्वन्द्वे चे"ति सूत्रस्यापि क्रोटीकारात्तत्र च कैयटेनोक्तत्वान्नोक्तदोष इति कुकविकृतिवत्क्लेशेन मनोरमां समर्थयन्ते।

---

सूत्रम्

काशिका-वृत्तिः

अवयाः श्वेतवाः पूरोडाश् च ८।२।६७

अवयाः श्वेतवाः पुरोडाः इत्येते निपात्यन्ते। अवपूर्वस्य यजेः अवेतपूर्वस्य वहेः, पुरस् पूर्वस्य दाशतेः मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ३।२।७१, अवे यजः ३।२।७२ इति ण्विनि कृते, श्वेतवहादीनां डस्पदस्य इति डस्प्रत्यये निपातनानि एतानि। किमर्थं तर्हि निपातनं यावता पूर्वेण एव रुः सिद्धः, दीर्घत्वम् अपि अत्वसन्तस्य चाधातोः ६।४।१४ इति? सम्बुद्धौ दीर्घार्थम् एते निपात्यन्ते। अत्वसन्तस्य चाधातोः ६।४।१४ इत्यत्र हि असम्बुद्धौ इति वर्तते। हे अवयाः। हे

श्वेतवाः। हे पुरोडाः। चकारो ऽनुक्तसमुच्वयार्थः। हे उक्थशाः।

न्यासः

अवयाः �ओतवाः पुरोडाश्च। , ८।२।६७

"दाशेः" ["दाशतेः"--काशिका] इति। "दाशृ दाने" (धा।पा।८८२) इत्यस्माण्ण्विनि कृत इति। वहिदाशिभ्यां "मन्त्रे ()ओतवहोक्थशस्पुरोडाशो ण्विन्()" ३।२।७१ इत्यनेन, यजेश्च "आवे यजः" ३।२।७२ इति ण्विन्प्रत्ययान्तेभ्यः सम्बुद्धिः, तस्या हलङ्यादिलोपः ६।१।६६, ततः "()ओतवाहादीनां डस्पदस्य" (वा।२६३) इति डस्प्रदस्य" टिलोपः। किमर्थमेते निपात्यन्ते, यावता ()ओतवोभ्याम्, ()ओतवोभिरित्येवमाद्यर्थम्? "()ओतवाहादीनां डस्पदस्य" इत्यदश्यमिदं वक्तव्यम्(), डसि च कृते "ससजुषो रुः" (८।२।६६) इत्येव सिद्धम्()? इत्याह--"()ओतवाहादीनाम्()" इत्यादि। नैते रुत्वार्थं निपात्यन्ते, किं तर्हि? सम्बुद्धौ दीर्घत्वार्थम्। ननु च द्रीर्घत्वमप्येषां "अत्वसन्तस्य चाधातोः" (६।४।१४) इत्येव सिद्धम्()? इत्यत आह--"अत्वसन्तस्य च" इत्यादि। तत्र हि "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इत्यतः "असम्बुद्धौ" इत्येतदनुवत्र्तते, तेन सम्बुद्धौ दीर्घत्वं प्राप्नोतीति, तदर्थमेते निपात्यन्ते। "पुरोडाः" इति। "मन्त्रे ()ओतवहोक्थशस्()" ३।२।७१ इत्यादिनैव सूतद्रेण दकारस्य डकारो निपात्यते। "उक्थशाः" इति। "शन्सु स्तुतौ" (दा।पा।७२८)। उक्थानि शंसतीति "मन्त्रे ()ओतवह" ३।२।७१ इत्यादिनैव ण्विन्(), ततः पूर्ववत्? सम्बुद्ध्यादिः॥

---

सूत्रम्

काशिका-वृत्तिः

अहन् ८।२।६८

अहनित्येतस्य पदस्य रुः भवति। अहोभ्याम्। अहोभिः। नलोपम् अकृत्वा निर्देशो ज्ञापकः नलोपाभावो यथा स्यातिति। दीर्घाहा निदाधः, हे दीर्घाहो ऽत्र इति। अहनित्यत्र तु लाक्षणिकत्वादहन्शब्दस्य रुः न भवति। अह्नो रुविधौ रूपरात्रिरथन्तरेषूपसङ्ख्यानं कर्तव्यम्। अहोरूपम्। अहोरात्रः। अहोरथन्तरम्। रो ऽसुपि ८।२।६९ इत्यस्य अपवादो रुत्वम् उपसङ्ख्यायते। अपर आह सामान्येन रेफादौ रुत्वं भवति, अहोरम्यम्, अहोरत्नानि इति।

न्यासः

अहन्?। , ८।२।६८

"नलोपः प्रातिपदिकान्तस्य" ८।२।७ इति नलोपे प्राप्ते विधीयते। " अहोभ्याम्(), अहोभिः" इति। "हशि च" ६।१।११० इत्युत्वम्(), "आद्गुणः" ६।१।८४। "दीर्घाहो निदाघः" ["दर्घाहा"--काशिका, प्राचीनमुद्रितन्यासपाठश्च] इति। बहुव्रीहिः, हल्ङ्यादिलोपः ६।१।६६, रुत्वस्यासिद्धत्वात्? "सर्वनामस्थाने च" ६।४।८ इत्यादिना दीर्घः, "भोभगोअधो" ८।३।७ इत्यादिना रेफस्य यकारः, तस्य "हलि सर्वेषाम्()" ८।३।२२ इति लोपः। "हे दीर्घाहोऽत्रि" इति। "अतो रोरप्लुतादप्लुते" ६।१।१०९ इत्युत्वम्(); "आद्गुणः" ६।१।८४, "एङः पदान्तात्()" ६।१।१०५ इति परपूर्वत्वम्()। हन्तेर्लङि तिपा हल्ङ्यादिलोपे ६।१।६६ कृते तिपश्च लुक्यडागमे चाहन्नित्येतद्रूपं सम्पद्यते, तस्मात्तस्य रुत्वेन भवितव्यम्()? इति कसयचिद्भ्रान्तिः स्यात्(), अतस्तन्निरासायाह--"अहन्()" इत्यादि। उपसंख्यानशब्दोऽत्र प्रतिपादने वत्र्तते। अह्नो रूविधौ कत्र्तव्ये रूपादिषु रुत्वस्य प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--पूर्वसूत्रादिह चकारोऽनुवत्र्तते, स चानुक्तसमुच्चयार्थः, तेनाह्नो रूपादिषु रुत्वं भविष्यतीति। "अहोरूपम्()" इति। अह्नो रूपमिति षष्ठीसमासः। कथं पुना रात्रिशब्द उच्यमानं रुत्वं रात्रशब्दे भवति? स्थानिवद्भावात्(), एकदेशविकृतस्यानन्यत्वाद्वा। रात्रशब्दास्य तु ग्रहणं न कृतम्(), रात्रिशब्दस्यापि यथा स्यात्()--गतमहो रात्रिरागतेति। "अहो रथन्तरम्()" इति। षष्ठीसमासः। अथ

वा--असमास एव। "रोऽसुपि" इत्यस्यापवादो रुत्वम्()" इत्यादि। अहोरूपमित्यादि यदि समासः, यद्यसमासो वा, सर्वथा विभक्तेर्लुका भवितव्यम्()। लुकि सत्यह्नो रविधौ लुमता लुप्ते १।१।६२ प्रत्ययलक्षणस्य प्रतिषेधः। तेन सुप्परत्वस्याभावात्? "रोऽसुपि" (८।२।६९) इत्येतत्? प्राप्नोतीति रुत्वं विधीयते। किमर्थम्()? "हशि च" ६।१।११० इत्युत्वं यथा स्यात्()। यदि रुरुदुत्पन्नस्य स्यात्(), उत्वविधौ "रोः" इत्युकारानुबन्धविशिष्टस्य रेफस्यानुवृत्तेः॥
तत्त्व-बोधिनी

अहन् ३९५, ८।२।६८

नलोपाभावं निपात्येति। "अहन्िित्यत्र नकारान्तरं प्रश्लिष्य "नान्तस्य अहन्शब्दस्य रु"रिति व्याख्यायामपि रुत्वरत्वयोर्नकारस्थानिकत्वं सेत्स्य।तीति बोध्यम्। तदन्तस्यापीति। पदाधिकारस्थत्वादिति भावः। न चात्र प्रत्ययलक्षणन्यायेन अन्त वर्तिनीं विभक्तिमाश्रित्य समासैकदेशस्याप्यहन्शब्दस्य पदत्वाद्रुत्वं स्यादेव, किमनेन तदन्तविध्याश्रयणेनेति शङ्क्यम्। "उत्तरपदत्वे चापदादिविधौ"इति प्रतिषेधेनुप्रत्ययलक्षणाऽप्रवृत्तः।सृजिदृशीरिति सूत्र इति। एतच्चोलक्षणम्,"मृजेर्वृद्धिः"इति सूत्रेऽपि तत्प्रयोगात्। रज्जुसृड्भ्यामति। ननु भ्याम्प्रत्ययोझलादिरकिद्भवतीति "सृजिदृशोः"इत्यमागमः स्यात्। मैवम्। धातोः स्वरूपेणानुपादानादिति शङ्क्यम्, धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति परिष्कारात्। एवं च "प्रसृड्भ्यां" "प्रसृड्भि"रित्यादौ नायं दोषः पर्सज्यते। एतच्च मृजेर्बुद्धि"रिति सूत्रे भाष्ये स्पष्टम्। ननु धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति चेत् "धियौ""धियः", "भुवौ"भुवः इत्यादवियङुवङौ न स्यातां, किंतु "चिक्षियतुः""लुलुवतु"रित्यादावेव स्याताम्। सत्यं। वस्तुगत्या धातोरेवाच्यमानं कार्यमियङादिकं न भवति किन्त्वङ्गस्योच्यमानमिति वैषम्यात्। कुत्वापवाद इति। षत्वसूत्रे "सृजमृजयजे"ति विशिष्य ग्रहणादिति भावः। असृक्शब्दस्त्विति। एतच्च क्षीरस्वामिग्रन्थे स्पष्टम्। ऋज्प्रत्यये बोध्य इति। यद्यप्यस्मिन्पक्षे स्वरो भिद्यते, तथापि लोके स्वरस्याऽनारहराद्वेदे तु बाहुलकादिष्टःस्वरः सिध्यतीति भावः।

बहुर्जिनुम्प्रतिषेधः। बहूर्जीति। इदमन्त्यादिति वाचनिकम्। तथा च वार्त्तिकं--बहूर्जि प्रतिषेधः," "अन्त्यात्पूर्वं नुममेके"इति। भाष्ये तु अचः परोयो झल्तदन्तस्य नुमित्याश्रित्य पर्थमवार्तिकं प्रत्याख्यातम्। एवं च "ऊन्र्जी"त्यत्र नुम् दुर्लभः। किंच "उर्दमाने क्रिडायां च", "गर्हं गर्हायाम्"। इत्यादीनां क्विबन्तानां भाष्यमते नुमा न भाव्यमेवेति बोध्यम्। अल्लोपस्य स्थानिवत्त्वादिति। "क्वौ लुप्तं न स्थानिवत्िति तु नेहाश्रीयते, तस्य क्वाचित्कत्वात्। "क्वौ विधिं पर्ति न स्थानिव"दित्यस्यैव सार्वत्रिकत्वादिति भावः। जायन्ते नव सौ,तथाऽमि च नव, भ्य्रांभिस्भ्यसां सङ्गमे--षट्सङ्ख्यानि, नवैव सुप्यथ जसि त्रिण्येव, तद्वच्छसि। चत्वार्यन्यवचःसु कस्य विबुधाः। शब्दस्य रूपाणि तज्जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः।"इति नरपतिसभायां क्वचित्केनचित्प्राचीनेन कृतस्याक्षेपस्य प्राचीनैरेव पण्डितैः कैश्चित् "गवाक्छब्दस्ये"त्यादिना "विभावये"त्यन्तेन श्लोकद्वयेन सभाधाननुक्तम्। तदेव श्लोकद्वयं प्रकृतोपयोगादाह--गवाक्छब्दस्य रूपाणीति। अञ्चतेर्गतौ नलोपः, पूजायां तु नेत्याशयेनाह---अर्चागतिभेदत इति। आद्यादित्वात्तसिः। पूजागत्यर्थभेदेनाषऽसन्ध्यवङादिभिर्नवाधिकशतं रूपाणि बोध्यानीत्यर्थः। उक्तसङ्ख्यापयति--स्वम्सुप्स्विति। "प्रत्येक"मिति शेषः। एवमग्रेऽपि "षट्" "त्रीणि""चत्वारी"त्यत्रापि बोध्यम्। रूपाणीति। सङ्कलनया नवाधिकशतं रूपाणीत्यर्थः। इह "चयो द्वितीयाः"इति वार्तिकमनाश्रित्य "नवाधिकशत"मित्युक्तमिति बोध्यम्। तदाश्रयणे तु "त्रीणि रूपाणि वद्र्धन्ते"इत्यनुपदमेव वक्ष्यमाणत्वात्। इत्यादीति। आदिशब्देनाऽन्यान्यपि ज्ञेयानि। तद्यथा--गवाग्भिः। गोअग्भिः। गोग्भिः। गवाङ्भिः। गोऽङ्भिः। ङयि--गोचे। गवाञ्चे। गोऽञ्चे। भ्यामि प्राग्वत्। भ्यसि गवाग्भ्यः। गोअग्भ्यः। गोग्भ्यः। गवाङ्भ्यः। घोअङ्भ्यः। ङसौ--गोचः। गवाञ्चः।गोअञ्चः। गोऽञ्चः। भ्यामि भ्यसि च प्राग्वत्। ङसि पञ्चम्येकवचनत्। ओसि--गोचोः। गवाञ्चोः गोअञ्चोः। गोऽञ्चोः आमि--गोचाम्। गवाञ्चाम् गोअञ्चम्। गोऽञ्चाम्। ङौ तु--गोति। गवाञ्चि। गोअञ्चि। गोऽञ्चि। ओसि प्रग्वत्। सुपि तु--गवाङ्क्षु। गवाङ्षु। गोअङ्क्षु। गोअङ्षु।

गोऽङ्क्षु। गोऽङ्षु। गवाक्षु। गोअक्षु। गोक्षु। ननु भ्याम्त्रये भ्यस्द्वये ङसिङसोरोस्द्वये च समानरूपत्वात् कथमिह नवाधिकशतमित्युक्तमिति च#एत्। अत्राहुः--अर्थभेदेन रुपभेदमाश्रित्य तथोक्तमिति। षण्णामाधिक्यं शङ्क्यमिति। नवसु मध्ये ककारस्थाने पाक्षिकखकारप्रवृत्त्या रूपषट्काधिक्यं न शङ्क्इत्यर्थः। वद्र्धन्त एवेति। एवं च त्रयाणामाधिक्यसंभवात्सुपि द्वादश रूपाणि भवन्तीति सङ्कलनया द्वादशाधिकशतं मतं म तु नवाधिकशतमिति भावः। अ()आआक्षिभूतानीति। सप्तविंशत्यधिका(५२८)पञ्चशतीत्यर्थः। सौ नवानामन्त्यस्य द्वित्वे अष्टादश। औडिचतुर्णां मध्ये पूजार्थानां त्रयाणां ञद्वित्वे सप्त। "अणोऽपर्गृह्रे"त्यनुनासिकस्तु नास्ति, पर्गृह्रत्वात्। जसि ञद्वित्वस्यानुनासिकस्य च विकल्पात् द्वादश। सङ्कलनयां सप्ततिं()रशत्(३७)। एवं द्वितीयायामपि विभक्तौ सप्ततिं()रशत्। तथा च सङ्कलनया चतुःसप्तति(७४)टायां चतुर्णां मध्ये पूजार्थानां त्रयाणां ञद्वित्वे सप्त। तेषां च सप्तानामनुनासिकचतुर्दश। सङ्कलनया अष्टाशीतिः(८८)। भ्यामि षट्सु रूपेषु भात्पूर्वस्य द्वित्वे द्वादश, तेषां द्वादशानामपि "यणो मयः"इति यद्वित्वे चतुर्विंशतिः, तेषामपि मकारस्य द्वित्वेऽष्टचत्वारिंशत्। संकलनया षट्()तिं()रशदधिकं शतम्। भिसि चतुर्विंशतिः,भात् पूर्वस्य विसर्गस्य च द्वित्वात्सङ्कलनया षष्ट()उत्तरशतम्। ङयि चतुर्णा मध्ये पूजार्थानां त्रयाणां ञद्विक्ने सप्त। अनुनासिकस्तु नास्ति, एकारस्यानण्त्वात्। सङ्कलनया सप्तोत्तरषष्ठ()धिकं शतद्वयम्। ङसौ चतुर्णा मध्ये ञद्वित्वे सप्त। तेषां तु सप्तानां विसर्गद्वित्वे चतुर्दश। सङ्कलनया सप्तोत्तरसप्तत्यधिकं शतद्वयम्। ङसौ चतुर्णां मध्ये ञद्वित्वे सप्त। तेषां तु सप्तानां विसर्गद्वित्वे चतुर्दश। सङ्कलनया स्पतोत्तरसप्तत्यधिकं शतद्वयम्। भ्याम्भ्यासोः प्राग्वदेव प्रत्येकमष्टचत्वारिंशत्। सङ्कलनया त्रिसप्तत्यधिकं शतत्रयम्। ङसाविवङसोसाम्ङिओसित्यत्रापि प्रत्येकं चतुर्दश। चतुर्षु रूपेषु मध्ये ञद्वित्वे सप्तानामप्यन्त्यस्य द्वित्वात्। ङौ तु सप्तानामप्यन्त्यस्य "अणोऽप्रगृह्रस्ये"ति वैकल्पिकानुनासिकपर्वृत्तेः सङ्कलनया त्रिचत्वारिंशदधिकं शतचतुष्टयम्। सुपि गत्यर्थे त्रयाणां कद्वित्वे षट्। तेषां तु "खयः शरः"इति षद्वित्वे द्वादश। उकारस्यानुनासिके चतुर्विंशतिः। सङ्कलनया सप्तोत्तरषष्ठ()धिकं शतचतुष्टयम्। पूजायां तु कुगभावे त्रयाणां ङकारद्वित्वेऽनुनासिके च द्वादश। कुक्पक्षे तु चयो द्वितायादेशे षट्। षण्णां ङषग्रोर्द्वित्वेऽनुनासिके चाऽष्टचत्वारिंशत्। सङ्कलनया सप्तविंशत्यधिका पञ्चशतीत्यर्थः। तिरश्ची इति। भत्वात्--"अचः" इत्यल्लोपः। "अलोपे"इति वचनात्तिर्यादेशाऽभावः।

---

सूत्रम्

काशिका-वृत्तिः

रो ऽसुपि ८।२।६९

अहनित्येतस्य रेफादशो भवति असुपि परतः। अहर्ददाति। अहर्भुङ्क्ते। असुपि इति किम्? अहोभ्याम्। अहोभिः। ननु चत्र अपि प्रत्ययलक्षणेन सुबस्ति, अहर्ददाति, अहर्भुङ्क्ते इति? न एतदस्ति। उक्तम् एतत् अह्नोरविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवति इति। नायमहःशब्दः सुप्परो भवति। यत्र तु लोपशब्देन लुप्यते तत्र प्रत्ययलक्षणं भवत्येव, यथा हे दीर्घहो ऽत्र, दीर्घाहो निदाघ इति। अत्र हि हल्ङ्याब्भ्यः इति लोपेन प्रत्ययस्य निवृत्तिः।

लघु-सिद्धान्त-कौमुदी

रोऽसुपि ११०, ८।२।६९

अह्नो रेफादेशो न तु सुपि। अहरहः। अहर्गणः॥

न्यासः

रोऽसुपि। , ८।२।६९

पूर्वस्यायमपवादः। रेफेऽकार उच्चारणार्थः। "अहर्ददाति" इति। यद्यत्र रुत्वं स्यात्? "हशि च" ६।१।११० इत्युत्वं प्रसज्येत। तस्माद्रो विधीयते। ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति? नैष दोषः; अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणस्य प्रतिषेधः। लोपशब्देन यत्र लोपस्तत्र हि प्रत्ययलक्षणम्(), यथा--"हे दीर्घाहोऽत्र। हे दीर्घाह निदाघ" इति। अत्र हल्ङ्यादिलोपः ६।१।६६॥

न्यासः

रोऽसुपि। , ८।२।६९

पूर्वस्यायमपवादः। रेफेऽकार उच्चारणार्थः। "अहर्ददाति" इति। यद्यत्र रुत्वं स्यात्? "हशि च" ६।१।११० इत्युत्वं प्रसज्येत। तस्माद्रो विधीयते। ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति? नैष दोषः; अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणस्य प्रतिषेधः। लोपशब्देन यत्र लोपस्तत्र हि प्रत्ययलक्षणम्(), यथा--"हे दीर्घहोऽत्र। हि दीर्घाह निदाघ" इति। अत्र हल्ङ्यादिलोपः ६।१।६६॥

बाल-मनोरमा

रोऽसुपि १७१, ८।२।६९

रोऽसुपि। रः-असुपीति छेदः। "अहन्" इति सूत्रमनुवर्तते, तच्च लुप्तषष्ठीकं पदन्तदाह-अह्न इति। नतु सुपीति। पर्युदासाश्रयणे तु "नञिवयुक्त"न्यायेन सुब्भिन्ने प्रत्यये परे इत्यर्थः स्यात्, ततश्च अहर्वानित्यादावेव स्यान्न त्वहर्भातीत्यादावेव स्यान्न त्वहर्भातीत्यादावपि, अतः प्रसज्यप्रतिषेध इहाश्रितः। ननु अह इत्यस्य रुः स्यात् पदान्ते इत्यर्थकेन अहन्निति सूत्रेणैव सिद्धत्वात्किमर्थमिदमित्यत आह--रोरपवाद इति। अहरहरिति। "नित्यवीप्सयो"रिति द्विर्वचनम्। अहन्-अहन् इति स्थिते रत्वम्। "न लुमते"ति निषेधात्सुप्परकत्वाऽभावः। "अह"न्निति रुत्वे तु "अतो रोरप्लुता"दित्युत्वं स्यात्। अहर्गण इति अह्नां गण इति विग्रहः। "अह"न्निति रुत्वे तु "अतो रोरप्लुता"दित्युत्वं स्यात्। अहर्गण इति। अह्नां गण इति विग्रहः। "अह"न्निति रुत्वे तु "हशि चे"त्युत्वं स्यात्। अहोभ्यामिति। "अहन्-भ्या"मिति स्थिते नकारस्य सुप्परकत्वान्न रेफः। अत्रेति। "अह" न्निति रुत्वे "हशि चे"त्युत्वे आद्गुणः।

रूपरात्रि। "अहन्()शब्दस्ये"ति शेषः। "रोऽसुपी"ति रत्वस्याऽयमपवादः। अहोरूपमिति।अह्नो रूपमिति विग्रहः। "अहन्-रूप"मिति स्तिते नकारस्य रुत्वम्, उत्वम्, आद्गुणः। रत्वे तु हशि चेत्युत्वं न स्यात्। गतमहो रात्रिरेषेति। "अहन्-रात्रि"रिति स्थिते, रुत्वम्, उत्वम्ाद्गुणः। रत्वे तु उत्वं न स्यात्। ननु अहश्च रात्रिश्चेति द्वन्द्वे, "अहस्सर्वैकदेशे"त्यादिना समासान्ते अचि, "यस्येति चे"ति लोपे, अहन्-रात्र इति स्थिते, नकारस्य रुत्वे, उत्वे आद्गुणे, "रात्राह्नाहाः पुंसी"ति पुंस्त्वे, "अहोरात्र" इति रूपम्। अत्र नकारस्य रात्रिशब्दपरकत्वाभावात्कथं रुत्वम्?, ततश्च "रोऽसुपी"ति रत्वे उत्वं न स्यादित्यत आह-एकदेशेति। अहोरथन्तरमिति। अहश्च रथन्तरं चेति द्वन्द्वः। रथन्तरं = सामविशेषः।

अहरादीनाम्। ननु "अहरादीना"-मिति रेफविसिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमित्यत आह-विसर्गापवाद इति। अहर्पतिरिति। अह्नां पतिरिति विग्रहः। गीर्पतिरिति। गिरां पतिरिति विग्रहः। धूर्पतिरिति। धुरां पतिरिति विग्रहः। उभयत्रापि "र्वोरुपधाया" इति दीर्घः। पक्षे इति। रत्वाऽभावपक्षे विसर्गस्य "कुप्वो"रिति उपध्मानीयविसर्गौ। "इदुदुपधस्ये"ति षत्वं तु तपरकरणान्नेति भावः।

तत्त्व-बोधिनी

रोऽसुपि १४१, ८।२।६९

रोऽसुपि। "असुपी"ति यदि पर्युदासः स्यात्ततः सुप्सदृशे प्रत्यय एव स्यादहर्यतीत्यादौ, न त्वहर्भातीत्यादावपि। तस्मात्प्रसज्यप्रतिषेध एवेति व्याचष्टे-न तु सुपीति। अहरहरिति। "नित्यवीप्सयो"रिति द्वित्वम्। न चात्र रेफादेशस्याऽसिद्धत्वात्पूर्वं नलोपे अकारस्यैव रेफः स्यादिति वाच्यम्, "अह"न्नित्यावर्त्य एकेन लोपाभावं निपात्य द्वितीयेन रुर्विधेय इति "अह"न्निति सूत्रे वक्ष्यमाणतया रुत्वपवादस्यापि रेफादेशस्य नकारस्थानिकत्वलाभात्।

अहोरात्र इति। "अहःसर्वैकदेशे"त्यादिना समासान्तो वक्ष्यते। "रात्राह्नाहाः पुंसी"ति पुंस्त्वम्। अहोरथन्तरमिति। रथन्तरं साम। तेनाह्नः समाहारद्वन्द्वः। पृथक्()पदत्वं वा।

अहारादीनामिति। उभयत्राप्यादिशब्दः प्रकारे। तेन "स्वर्चक्षा रथिरः," "कविः काव्येना स्वर्चना" इत्यादि ग्राह्यम्।

---

सूत्रम्

काशिका-वृत्तिः

अम्नरूधरवरित्युभयथा छन्दसि ८।२।७०

अम्नसूधसवसित्येतेषां छन्दसि विषये उभयथा भवति, रुर्वा रेफो वा। अम्नस् अम्न एव, अम्नरेव। ऊधस् ऊध एव, ऊधरेव। अवस् अवः एव, अवेरेव। यदा रुत्वं तदा भोभगो ऽघो ऽपूर्वस्य यो ऽशि ८।३।१७ इति यकारः। छन्दसि भाषायां च विभाषा प्रचेतसो राजन्युपसङ्ख्यानं कर्तव्यम्। प्रचेता राजन्, प्रचेतो राजन्। अहरादीनां पत्यादिषु उपसङ्ख्यानं कर्तव्यम्। अहर्पतिः, अहः पतिः। गीर्पतिः, गीःपतिः। धूर्पतिः, धूःपतिः। विसर्जनीयबाधनार्थम् अत्र पक्षे रेफस्य एव रेफो विधीयते।

न्यासः

अभ्नरूधरवरित्युभयथा छन्दसि। , ८।२।७०

नित्यं रुत्वे प्राप्ते पक्षे रोऽपि यथा स्यादित्येवमर्थमिदम्()। सकारस्य रुत्वं कृत्वा निर्देशः--यस्मिन्? प्राप्ते रेफ उच्येते, तस्य रुत्पस्योभयथाग्रहणेन पक्षेऽबावो विज्ञायेत-इत्येवमर्थञ्च; इतरथा हि द्वेष्यमपि विज्ञायेत। यस्मिन्? प्राप्ते रुत्वमारभ्यते तस्य जश्त्वं पक्षेऽभ्यनुज्ञायत इति। "अम्न एव" इति। रुत्वपक्षे "भोभगो" ८।३।१७ इत्यादिना यकारः, तस्य "लोपः शाकल्यस्य" ८।३।१९ इति लोपः। "प्रचेतस उपसंख्यानम्(), अहरादीनां पत्यादिषूपसंख्यानम्()" इति। उभयत्रोपसंख्यानशब्दसय प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()--इतिकरणः प्रदर्शनार्थः, एवम्प्रकारेष्वन्येष्वप्युभयथा भवति--रुत्वं वा रेफो वेते। तेन प्रचेतःशब्दस्य राजनि, अहरादीनाञ्च पत्यादिषूभयता भवति। "प्रचेतो राजन्()" इति। प्रकृष्टं चेतो यस्येति बहुव्रीहिः, आमन्त्रितैकवचनम्(), रुत्वम्(), "हशि च" ६।१।११० इत्युत्वम्(), "आद्गुणः" ६।१।८४। इत्युत्वं यथा स्यात्()। यदि रुरुदुत्पन्नस्य स्यात्(), उत्वविधौ "रोः" इत्युकारानुबन्धविशिष्टस्य रेफस्यानुवृत्तेः॥

न्यासः

अम्नरूधरवरित्युभयथा छन्दसि। , ८।२।७०

नित्यं रुत्वे प्राप्ते पक्षे रोऽपि यथा स्यादित्येवमर्थमिदम्()। सकारस्य रुत्वं कृत्वा निर्देशः--यस्मिन्? प्राप्ते रेफ उच्यते, तस्य रुत्पस्योभयथाग्रहणेन पक्षेऽभावो विज्ञायेत-इत्येवमर्थञ्च; इतरथा हि द्वेष्यमपि विज्ञायेत। यस्मिन्? प्राप्ते रुत्वमारभ्यते तस्य जश्त्वं पक्षेऽभ्यनुज्ञायत इति। "अम्न एव" इति। रुत्वपक्षे "भोभगो" ८।३।१७ इत्यादिना यकारः, तस्य "लोपः शाकल्यस्य" ८।३।१९ इति लोपः। "प्रचेतस उपसंख्यानम्(), अहरादीनां पत्यादिषूपसंख्यानम्()" इति। उभयत्रोपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्()--इतिकरणः प्रदर्शनार्थः, एवम्प्रकारेष्वन्येष्वप्युभयथा

भवति--रुत्वं वा रेफो वेति। तेन प्रचेतःशब्दस्य राजनि, अहरादीनाञ्च पत्यादिषूभयता भति। "प्रचेतो राजन्()" इति। प्रकृष्टं चेतो यस्येति बहुव्रीहिः, आमन्त्रितैकवचनम्(), रुत्वम्(), "हशि च" ६।१।११० इत्युत्वम्(), "आद्गुणः" ७।१।८७। "प्रचेता राजन्()" इति। रेफे कृते तस्य "रो रि" ८।३।१४ इति लोपः, "ढ्रलोपे" ६।३।११० इत्यादिना दीर्घः। सम्बुद्ध्यन्तोदाहरणं रुत्वरेफयोर्विशेष सम्प्रतिपादनार्थम्(); असम्बुद्धौ हि रुत्वरेफयोरसिद्धत्वात्? "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घत्वे तुल्यमेव रूपं भवति। "अहर्पत्तिः" इति। षष्ठीसमासः। "रोऽसुपि" ६।२।६९ इति रेफे कृते तस्य पक्षे रेफो विधीयते। "अह पत्तिः" इति। रेफस्य विसर्जनीये कृते "कुप्वोः क पौ च" ८।३।३७ इति पक्षे उपध्मानीयः। "गीर्पतिः" इति। "गृ? शब्दे" (धा।पा।१४९८)। सम्पदादित्वात्? क्विप्(), "ऋत इद्धातोः" ७।१।१०० इतीत्वम्(), रपरत्वम्()। "धूर्पतिः" इति। धुर्वेः क्विप्(), "राल्लोपः" ६।४।२१ इति वकारलोपः। अथ किमर्थं रेफस्यैव रेपो विधीयते? इत्याह--"विसर्जनीयवाधनार्थम्()" इत्यादि। "खरवसानयोः" ८।३।१५ इति विसर्जनीयः प्राप्नोति, तद्वाधनार्थं रेपस्यैव रेफो विधीयते॥

---

सूत्रम्

काशिका-वृत्तिः

भुवश् च महाव्याहृतेः ८।२।७१

भुवसित्येतस्य महाव्याहृतेः छन्दसि विषये उभयथा भवति, रुर्वा रेफो वा। भुव इत्यन्तरिक्षम्, भुवरित्यन्तरिक्षम्। महाव्याहृतेः इति किम्? भुवो विश्वेषु सवनेषु यज्ञियः। भुवः इत्येतदव्यव्यम् अन्तरिक्षवाचि महाव्याहृतिः।

न्यासः

भुवश्च महाव्याह्मतेः। , ८।२।७१

भुवःशब्दः षष्ठ() तप्रतिरूपकमव्ययम्(), तस्य नित्यं रुत्वे प्राप्ते पक्षे रेफो यता स्यादित्येवमर्थमिदम्()। चकार उभयथेत्यस्यानुकर्षणार्थः। तेनोत्तरत्रानुवृत्तिर्न भवति। "भुवो वि()आस्य" इति। मूशब्दस्य षष्ठ()न्तस्य पञ्चम्यन्तस्य वा प्रयोगः। यद्येवम्(), लाक्षणिकत्वादेवास्य ["लाक्षणिकत्वादिनास्य"--प्रां३।पाठः] न भविष्यति, तत्किमेन्निवृत्त्यर्थेन महाव्याह्मतिग्रहणेन? एवं तह्र्येतज्ज्ञापयति--अनित्यलक्षणा प्रतिपदोक्तपरिभाषेति। तेन क्रापयतीत्यतर पुगागमः सिद्धो भवति, नित्यत्वे तु तस्य न स्यात्(), अस्याकारान्तस्य लाक्षणिकत्वात्()। कीदृशी भुवःशब्दो महाव्याह्मतिर्भवति? इत्याह--"भुवसित्येतत्()" इत्यादि। अन्तरिक्षं हि महत्(), तस्य व्याह्मतिः=उक्तितर्यस्मात्(); तस्मान्महाव्याह्मतिर्भवति॥

---

सूत्रम्

काशिका-वृत्तिः

वसुस्रंसुध्वंस्वनडुहां दः ८।२।७२

ससजुषो रुः ८।२।६६ इत्यतः सः इति वर्तते, तेन सम्भवात् व्यभिचाराच् च वसुरेव विशेष्यते, न स्रंसुध्वंसू, व्यभिचाराभावात्, असम्भवाच् च न अनडुह्, शब्दः। वस्वन्तस्य पदस्य सकारान्तस्य स्रंसु, ध्वंसु, अनडुः इत्येतेषां च दकारादेशो भवति। वसु विद्वद्भ्याम्। विद्वद्भिः। पपिवद्भ्याम्। पपिवद्भिः। स्रंसु उरवास्रद्भ्याम्। उरवास्रद्भिः। ध्वंसु पर्णध्वद्भ्याम्। पर्णध्वद्भिः। अनडुः अनडुद्भ्याम्। अनडुद्भिः। सः इत्येव, विद्वान्। पपिवान्। नकारस्य न भवति। रुत्वे नाप्राप्ते इदम् आरभ्यते इति तद् बाध्यते। संयोगान्तलोपस् तु न एवम् इति तेन एतदेव दत्वं बाध्यते। अनडुहो ऽपि ढत्वम् अनेन बाध्यते। नुमस्तु विधानसामर्थ्यान्न भवति, अनड्वान्, हे अनड्वनिति। पदस्य इत्येव, विद्वांसौ। विद्वांसः।

लघु-सिद्धान्त-कौमुदी

वसुस्रंसुध्वंस्वनडुहां दः २६३, ८।२।७२

सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि॥ सान्तेति किम्? विद्वान्। पदान्ते किम्? स्रस्तम्।ध्वस्तम्॥

न्यासः

वसुरुआंसुध्वंस्वनडुहां दः। , ८।२।७२

"विद्वद्भ्याम्()" इति। "विदेः शतुर्वसुः" ७।१।३६ इति वसुरादेशः। "पपिवद्भ्याम्(), पपिवद्भिः" इति। पिवतेः पातेर्वा लिट्(), क्वसुः, "वस्वेकाजाद्घासाम्()" ७।२।६७ इतीट्(), "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः, स्थानिवद्भावेन "पा" इत्येतद्()द्विरुच्यते। "उखारुआत्(), पर्णध्वत्()" इति रुआंसिध्वंसिभ्याम्()--उखायाः रुआंसते, पर्णानि ध्वंसत इति क्विप्(), "अनिदिताम्()" ६।४।२४ इति नलोपः। इहेदं वसोर्दत्वमनवकाशम्(), सर्वस्य विषयस्य विध्यन्तरेणावष्टब्धत्वात्(); तथापि विद्वानित्यादौ संयोगान्तलोपः प्राप्नोति, विद्वद्भ्यामित्यादौ तु रुत्वम्()। अतस्तदनवकाशत्वाद्यदा रुत्वं बाधते तदा संयोगान्तलोपोऽपि तेन बाधितव्यः, ततश्च विद्वानिति न सिध्यतीति तस्य व्यामोहः स्यात्(), तं प्रत्याह-"रुत्वे नाप्राप्ते" इत्यादि। "यस्मिन्नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" (व्या।प।४९), न चाप्राप्ते रुत्व इदमारभ्यते, अतस्तदेव दत्वेन बाध्यते। "संयोगान्तलोपस्तु नैवम्()" इति। तुशब्दो रुत्वाद्विशेषं दर्शयति। इतिकरणो हेतौ। यथा रुत्वं सर्वत्र प्राप्नोति नैवं स्योगान्तलोपः। स हि विद्वानित्यादावेव प्राप्नोति, न विद्वद्भ्यामित्यादौ। तस्मात्? तेनैव दत्वं बाध्यते, न त्वसौ दत्वेन; संयोगान्तलोपे कत्र्तव्ये दत्वस्यासिद्धत्वादित्यभिप्रायः। अत यथा "हो ढः" ८।२।३१ इत्यस्य दकारोऽत्रापवादः, तथा स ["स तथा"--प्रां।पाठः] "सावनडुहः" ७।१।८२ इत्यस्यापि कस्मान्न भवति, यता ह्यवकाशत्वाद्दकारो ढत्वस्य बाधकस्तथा नुमोऽपि बाधक एव युक्तः? इत्यत आह--"नुमस्तु विधानसामथ्र्यान्न भवति" इति। प्रतिपदं हि "सावनडुहः" नुम्? विधीयते, तस्य यद्ययं दकारोऽपवादः स्यात्(), नुम्वधानमनर्थकं स्यात्()। "अनड्वान्()" इति। "चतुरनडुहोरामुदात्तः" ७।१।९८ इत्याम्(), यणादेशः, हल्ङ्यादि ६।१।६६ संयोगान्त ८।२।२३ लोपौ। "हे अनड्वन्()" इति। "अम् सम्बुद्धौ" ७।१।९९ इत्यम्()। सेषं पूर्ववत्()॥

बाल-मनोरमा

वस्रंसुध्वंस्वनडुहां दः , ८।२।७२

भ्यामादौ हलि विशेषमाह--वसुरुआंसु। वसुः प्रत्ययः, तेन तदन्तं गृह्रते। "रुआंसु ध्वंसु अवरुआंसने" इति धातू। "ससजुषो रुः" इत्यतः "स" इति लुप्तष,()ठीकमनुवृत्तम्। तेन च वसुर्विशेष्यते। तदन्तविधिः। सान्तत्वं रुआंसुध्वंस्वोर्न विशेषणम्, अव्यभिचारात्। नाप्यनडुहः, असंभवात्। पदस्येत्यधिकृतं बहुवचनान्तत्वेन विपरिणम्यते। "अलोऽन्त्यस्ये"ति तदन्तस्य भवति। फलितमाह--सान्तेत्यादिना। यथासंभवं रुत्वढत्वयोरपवादः। अनडुद्भ्यामिति। "स्वादिष्वसर्वनामस्थाने" इति पदत्वादिति भावः। इत्यादीति। अनडुद्भिः। अनडुद्भ्यः २। अनडुहे। अनडुहः। अनडुहः अनडुहोः अनजुहाम्। दत्वे "खरि चे"ति चत्र्वम्। अनडुत्सु। सान्तेति किमिति। वसोरपि सान्तत्त्वाऽव्यभिचारात्प्रश्नः। विद्वानिति। विद्वस् स् इति स्थिते "अतवसन्तस्ये"ति दीर्घे "उगिदचा"रिति नुमि सुलोपे संयोगान्तलोपे च रूपम्। अत्र वसोः सकारान्तत्वाऽभावान्न दत्वमिति भावः।

रुआस्तं ध्वस्तमिति। क्तप्रत्ययान्तम्। अत्र पदान्तत्वाऽभावान्न दत्वम्। विद्वांसौ अनड्वाहावित्याद्यप प्रत्युदाहार्यम्।

तत्त्व-बोधिनी

वसुरुआंसुध्वंस्वनडुहां दः २९४, ८।२।७२

वसुरुआंसु। वस्विति प्रत्ययः, तेन तदन्तं ग्राह्रम्। "ससजुषो"रिति सूत्रात्सेत्यनुवर्तते, तच्च वसोरेव विशेषणं, न तु सरंसुध्वंस्वोः, अव्यभिचारात्। नाऽप्यड्डहः, असंभवादित्यभिप्रेत्याह--सान्तवस्वन्तस्येति।

---

सूत्रम्

काशिका-वृत्तिः

तिप्यनस्तेः ८।२।७३

तिपि परतः सकारान्तस्य पदस्य अनस्तेः दकार आदेशो भवति। अचकाद् भवान्। अन्वशाद् भवान्। तिपि इति किम्? चकास्तेः क्विप्, चकाः। अनस्तेः इति किम्? आप एव इदं सलिलं सर्वमाः। आः इत्यस्तेः लङि तिपि बहुलं छन्दसि ७।३।९७ इति ईड् न कृतः।

लघु-सिद्धान्त-कौमुदी

तिप्यनस्तेः ६७२, ८।२।७३

पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः। ससजुषोरुरित्यस्यापवादः। अहिनत्, अहिनद्। अहिंस्ताम्। अहिंसन्॥

न्यासः

तिप्यनस्तेः। , ८।२।७३

"अचकात्? अन्वशात्()" इति। "चकासृ दीप्तौ" (धा।पा।१०७४), "शासु अनुशिष्टौ" (धा।पा।१०७५), लङ्(), तिप्(), अदादित्वाच्छपो लुक्(), हल्ङ्यादिलोपः ६।१।६६। भवानित्यनुप्रयोगस्तिपोऽभिव्यक्तेये। "आ" इति। "आडजादीनाम्()" ६।४।७२ इत्याट्(), "आटश्च" ६।१।८७ इति वृद्धिः, तिपो लोपे कृते धातुसकारस्य रुत्वम्(), तस्य विसर्जनीयः॥

बाल-मनोरमा

तिप्यनस्तेः ३१४, ८।२।७३

तिप्यनस्तेः। न अस्तिः--अनस्तिः, तस्येति विग्रहः। पदस्येत्यधिकृतम्। "झलां जशोऽन्ते" इत्यतोऽन्ते इत्यनुवर्तते। "ससजुषो"रित्यतः स इति षष्ठ()न्तमनुवर्तते। "वसुरुआंसुध्वंस्वनडुहां दः" इत्यतो द इति। तदाह--- पदान्तस्येत्यादिना। अनस्तेः किम्?। "सलिलं सर्वमा इदम्"। "आ" इत्यसदातोर्लङस्तिपि इकारलोपे "बहुलं छन्दसी"ति "अस्तिसिचः" इति ईडभावे हल्ङ्यादिलोपे रूपम्। प्रकृते तु चकासेर्लङस्तिपो हल्ङ्यादिलोपे सकारस्य दत्वे "वाऽवसाने" इति चत्र्वजश्त्वे इत्यभिप्रेत्याह--अचकात् अचकादिति। अचकासुरिति। "सिजभ्यस्ते"ति जुसिति भावः।

बाल-मनोरमा

र्वोरुपधाया दीर्घ इकः , ८।२।७३

र्वोरुपधायाः। र् च, व् च र्वौ, तयोरिति विग्रहः। "सिपि धातो रुर्वा" इत्यतो धातोरित्यनुवर्तते। र्वोरिति तद्विशेषणं, ततस्तदन्तविधिः। "पदस्ये"त्यधिकृतम्। "स्कोः संयोगाद्योः" इत्यतोऽन्ते इत्यनुवर्तते। तदाह--रेफेत्यादिना। पिपठीरिति। ठकारादिकारस्य दीर्घे रेफस्य विसर्ग इति भावः। पिपठीभ्र्यामिति। "स्वादिषु" इति पदत्वात् "र्वोरुपधायाः" इति भ्यामादौ पदान्तत्वलक्षणे दीर्घ इति भावः। सुपि विशेषमाह--वा शरीति। पिपठिष्-सु इति स्थिते

षत्वस्याऽसिद्धत्वाद्रुत्वे, दीर्घे, विसर्जनीये, तस्य सत्वं बाधित्वं "वा शरी"ति विकल्पेन विसर्जनीयः। तदभावपक्षे विसर्जनीयस्य सत्वमित्यर्थः। तत्र विसर्जनीयपक्षे पिपठीः-सु इति स्थिते,इण्कवर्गाभ्यां परत्वाऽभावात् "आदेशप्रत्यययोः" इति षत्वे अप्राप्ते-।

---

सूत्रम्

काशिका-वृत्तिः

सिपि धातो रुर्वा ८।२।७४

सिपि परतः सकारान्तस्य पदस्य धातोः रुः इत्ययम् आदेशो भवति, दकारो वा। अचकाः त्वम्, अचकात् त्वम्। अन्वशाः त्वम्, अन्वशात् त्वम्। धातुग्रहणं च उत्तरार्थं रुग्रहणं च।

लघु-सिद्धान्त-कौमुदी

सिपि धातो रुर्वा ६७३, ८।२।७४

पदान्तस्य धातोः सस्य रुः स्याद्वा, पक्षे दः। अहिनः, अहिनत्, अहिनद्॥ उन्दी क्लेदने॥ १३॥ उनत्ति। उन्तः। उन्दन्ति। उन्दाञ्चकार। औनत्, औनद्। औन्ताम्। औन्दन्। औनः, औनत्, औनद्। औनदम्॥ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु॥ १४॥ अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। आनञ्जिथ, आनङ्क्थ। अञ्जिता, अङ्क्ता। अङ्ग्धि। अनजानि। आनक्॥

न्यासः

सिपि धातो रुर्वा। , ८।२।७४

"अचकास्त्वम्()" इति। रुत्वे कृते तस्य विसर्जनीयः, तस्य "विसर्जनीयस्य सः" ८।३।३४ इति सकारः। "त्वम्()" इति अनुप्रयोगः सिपोऽभिव्यक्तये। अथ धातुग्रहणं किमर्थम्(), यावता सकारान्तस्यापि रेफदकारावुच्येते, न च सिपि सकारान्ताद्धातोरन्यदस्ति? इत्यत आह--"धातुग्रहणम्()" इत्यादि। उत्तरार्थता चास्व "र्वोरुपधायाः" ८।२।७६ इत्यत्र दर्शयिष्यते। क्रियतामुत्तरार्थं धातुग्रहणम्(), रुग्रहणं तु न कत्र्तव्यम्(); अनर्थकत्वात्(); दकारे हि विकल्पिते यथाप्राप्तं रुत्वं पक्षे लभ्यत एव? इत्यत आह--"रुग्रहणं च" इति। उत्तरार्थमित्यपक्षते। "दश्च" ८।२।७५ इति वक्ष्यति, तत्र पक्षे रुत्वं यथा स्यादित्येवमर्थम्()। असति हि तस्मिन्? यदा दत्वं न भवति, तदा यथाप्राप्तं चत्वं न स्यात्()॥

बाल-मनोरमा

सिपि धातो रुर्वा ३१५, ८।२।७४

सिपि धातोः। पदस्येत्यधिकृतम्। "झलां जशोऽन्ते" इत्यतोऽन्ते इत्यनुवृत्तम्। "ससजुषो"रित्यतः स इति लुप्तषष्ठीकमनुवर्तते।तदाह-- पदान्तस्येति। पक्षे इति। "वसुरुआंस्वि" त्यतस्तदनुवृत्तेरिति भावः। सिपि धातुत्वस्य अव्यभिचाराद्धातोरित्युत्तरार्थम्। अचकासीत्। अचकासिष्यत्। शासधातुरुदित्। सेट्।

---

सूत्रम्

काशिका-वृत्तिः

दश् च ८।२।७५

दकारान्तस्य धातोः पदस्य सिपि परतो रुः भवति, दकारो वा। अभिनः त्वम्, अभिनत् त्वम्। अच्छिनः त्वम्, अच्छिनत् त्वम्।

लघु-सिद्धान्त-कौमुदी
दश्च ५७६, ८।२।७५

धातोर्दस्य पदान्तस्य सिपि रुर्वा। अवेः, अवेत्। विद्यात्। विद्याताम्। विद्युः। विद्यात्। विद्यास्ताम्। अवेदीत्। अवेदिष्यत्॥
अस् भुवि॥ १७॥ अस्ति॥
न्यासः
दश्च। , ८।२।७५

चकारेण "दः" ८।२।७२ इत्यनुकृष्यते, तेनोत्तरत्र तस्यानुवृत्तिर्न भवति। "अभिनस्त्वम्()" इति। लङ्(), रुधारित्वात्?
श्नम्()॥

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ र्वोः ६।२ ७९ उपधायाः ६।१ ७९ दीर्घः १।१ ७९ इकः ६।१ ७९ धातोः ६।१ ७४ पदस्य ६।१ ?

समासः॥

र्श्च वश्च र्वौ, तयोः ॰ इतरेतरद्वन्द्वः।

अर्थः॥

रेफान्तस्य वकारान्तस्य च धातोः पदस्य उपधायाः इकः दीर्घः भवति।

उदाहरणम्॥

रेफान्तस्य -- गीः, धूः, पूः, आशीः। वकारग्रहणम् उत्तरार्थं तेन तत्रैव उदाहरिष्यते।
काशिका-वृत्तिः
र्वोरुपधाया दीर्घ इकः ८।२।७६

रेफवकारान्तस्य धातोः पदस्य उपधायाः इकः दीर्घो भवति। गीः। धूः। पूः आशीः। वकारग्रहणम् उत्तरार्थम्। उपधाग्रहणं किम्? अबिभर् भवान्। अभ्यासेकारस्य मा भूत्। इकः इति किम्? अत्र एव प्रत्युदाहरणे भशब्दाकारस्य मा भूत्। धातोः इत्येव, अग्निः। वायुः। पदस्य इत्येव, गिरौ। गिरः।
लघु-सिद्धान्त-कौमुदी
वोरुपधाया दीर्घ इकः ३५३, ८।२।७६

रेफवान्तयोर्धात्वोरुपधाया इको दीर्घः पदान्ते। पिपठीः। पिपठिषौ। पिपठीर्भ्याम्॥ ,
न्यासः
र्वोरुपधाया दीर्घ इकः। , ८।२।७६

पदस्येत्येव, धातोरिति च, तदुभयमिह समानाधिकरणं रेफवकाराभ्यां विशेष्यते, विशे णेन च

तदन्तविधिर्भवतीत्याह--"रेफवकारान्तस्य" इति। वकारस्योदाहरणं कसमान्न प्रदर्शितम्()?
इत्याह--"दकारग्रहणमुतरार्थम्()" इति। तेन वकारान्तस्योदाहरणं न प्रदर्शितमिति भावः। एतदर्थं तु तन्न भवति; वकारान्तस्य पदस्य धातोरसम्भवात्()। "अबिभः" इति। भृञो लङ्(), तिप्(), गुणः, रपरत्वम्(), "जुहोत्यादिभ्यः श्लुः" २।४।७५, द्विर्वचनम्(), "उरत्()" ७।४।६६ इत्यत्त्वम्(), "भृ()ञामित्()" ७।४।७६ इतीत्त्वम्(), हल्ङ्यादिलोपः ६।१।६६॥
तत्त्व-बोधिनी
र्वोरुपधाया दीर्घ इकः ३८५, ८।२।७६

"षड्भयो लुक्" "षट्चतुर्भ्यश्चे"ति बहुवचननिर्देशात्षडर्थप्राधान्ये एव लुङ्नुटौ भवत इति भावः। पिपठिषतेः क्विप्यतो लोपे कृदन्तत्वात्स्वाद्युत्पत्तौपिपठिष्--सु इति स्थिते सोर्हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वात्सस्य रुर्भवति। न च रुत्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वं शङ्क्यं, पूर्वत्रासिद्धे तन्निषेधात्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ हलि ७।१ ७८ च ० र्वोः ६।२ ७५ उपधायाः ६।१ ७५ दीर्घः १।१ ७५ इकः ६।१ ७५ धातोः ६।१ ७४

अर्थः॥

हलि च परतः रेफ-वकारान्तस्य धातोः उपधायाः इकः दीर्घः भवति।

उदाहरणम्॥

रेफान्तस्य -- आस्तीर्णम्, विस्तीर्णम्, विशीर्णम्, अवगूर्णम्। वकारान्तस्य दीव्यति, सीव्यति।
काशिका-वृत्तिः
हलि च ८।२।७७

हलि च परतो रेफवकारान्तस्य धातोः उपधायाः इकः दीर्घः भवति। आस्तीर्णम्। विस्तीर्णम्। विशीर्णम्। अवगूर्णम्। वकारान्तस्य दीव्यति। सिव्यति। धातोः इत्येव, दिवम् इच्छति दिव्यति। चतुरः इच्छति चतुर्यति। इकः इत्येव, स्मर्यते। भव्यम्। अपदान्तार्थो ऽयम् आरम्भः।
लघु-सिद्धान्त-कौमुदी
हलि च ६१५, ८।२।७७

रेफवान्तस्य धातेरुपधाया इको दीर्घो हलि। पिपूर्तः। पिपुरति। पपार॥
न्यासः
हलि च। , ८।२।७७

"दिव्यति, चतुर्यति" इति। दिव्? चतुर्()--इत्युभयं प्रातिपदिकमत्र, तेन न भवति। "स्मेर्यते" इति। भावे यक्(), "गुणोर्त्तिसंयोगाद्योः" ७।४।२९ इति गुणः। "भव्यम्()" इति। "अचो यत्()" ३।१।९७ गुणः; "धातोस्तन्निमित्तस्यैव" ६।१।७७ इत्यवादेशः॥

बाल-मनोरमा

हलि च , ८।२।७७

हलि च। "र्वोरुपधाया दीर्घ इकः" इत्यनुवर्तते। "सिपि धातोः" इत्यतो धातोरिति च। तच्च र्वोरित्यनेन विशेष्यते। तदन्तविधिः। तदाह-रेफवान्तस्येत्यादिना। रेफान्तस्य-जीर्यतीत्युदाहरणम्। अपदान्तत्वात् "र्वोरुपधायाः" इत्यप्राप्ते विधिः। प्रकृते च प्रतिदिव् न् अस् इति स्थिते नकारे हलि परे वान्तस्य दिव्धातोरूपधाया इकारस्य दीर्घ इति भावः। ननु "अचः परस्मि"न्नित्यल्लोपस्य स्थानिवत्त्वादकारेण व्यवधानाद्धल्परत्वाऽभावात्कथमिह दीर्घ इत्याशङ्क्य परिहरति--नचेति। कुत इत्यत आह--दीर्घविधौ तन्निषेधादिति। "न पदान्ते"ति सूत्रेण दीर्घवधौ स्थानिवत्त्वनिषेधादित्यर्थः। नन्वेवमपि भसंज्ञापेक्षस्याऽल्लोपस्य बहिर्भूतप्रत्ययापेक्षत्वेन बहिरङ्गतया तस्याऽन्तरङ्गे दीर्घे कर्तव्येऽसिद्धत्वादकारेण व्यवधानाद्धल्परत्वाऽभावात्कथमिह दीर्घ इत्यत आह-बहिरङ्गेति। यथोद्देशपक्षे षाष्ठीं परिबाषां प्रति श्चुत्वस्याऽसिद्धतयाऽन्तरङ्गाऽभावे परिभाषाया अप्रवृत्तेरिति राजन्शब्दोक्तन्यायेन दीर्घस्याऽसिद्धतया तद्विषये "असिद्धं बहिरङ्ग"मिति परिभाषा न प्रवर्तते इति भावः। प्रतिदीव्न इति। "न भकुर्छुरा"मिति निषेधस्तु वान्तस्याऽभत्वान्नेति भावः। इत्यादीति। प्रतिदिव्ने। प्रतिदीव्नः २। प्रतिदीव्नोः २। भ्यामादौ हलि राजवदित्यर्थः। यज्वन्शब्दः सुटि राजवदित्याह--यज्वेति।

तत्त्व-बोधिनी

हलि च ३१४, ८।२।७७

हलि च। "र्वोरुपधाया दीर्घ इकः"इत्यनुवर्तते, "सिपि धातोः"इत्यतो "धातो"रिति च, तच्च धातुग्रहणं र्वो"रित्यनेन विशेष्यते, विशेषणेन तदन्तविधिस्तदाह----रेफवान्तस्य धातोरित्यादि। रेफान्तस्य तु "गीर्यति""पर्यति""गीर्ण""पूर्ण"मित्याद्युदाहरणानि। धातोः किम्? रेफान्तस्य पदस्य मा भूत्। अग्निः करोति। वायुः करोति। नन्वस्तु धातोरनुवर्तनं परंतु "र्वो"रित्यनेन धातुर्न विशेष्यते--"रेफवान्तस्य धातो"रिति, किं तु इग्विशेष्यते,--"रेफवान्तस्येको दीर्घः स्यात्तौ च रेफवकारौ धातोश्चेत्"। अन्तशब्दोऽत्र समीपवाची। तथाच "उपधायां चे"ति सूत्रं त्यक्तुं शक्यम्, अनेनैव मूर्छतिहूर्छतूत्यादिरूपसिद्धेरिति चेन्मैवम्। "कुर्कुरीयती"त्यादवतिप्रसङ्गः स्यात्। तस्मात् "र्वो"रित्यनेन धातुरेव विशेष्यः। एतच्चाकरे स्पष्टम्। यत्तु "उपधायां चे"ति कैश्चिदुपन्यस्तम्, तन्न, दिवेर्वकारस्याऽनुपधात्वात्। उक्तन्यायेनेति। यथो#एद्देशपक्षे षाष्ठीं परिभाषां प्रति दीर्घस्याऽसिद्धतयेत्यर्थः। प्रतिदिव्न इथि। न भकुर्छुरा"मित्यत्र "र्वो"रित्यनुवर्तनाद्रेफवान्तस्यैव भस्य निषेध इति न दीर्घनिषेधोऽत्र शङ्क्यो, नान्तस्येह भत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

उपधायां च ८।२।७८

हलि इति अनुवर्तते। धातोः उपधाभूतौ यौ रेफवकारौ हल्परौ तयोः उपधायाः इको दीर्घो भवति हुर्च्छा हूर्च्छिता। मुर्च्छा मूर्छिता। उर्वी ऊर्विता। धुर्वी धूर्विता। हलि इत्येव, चिरि, जिरि चिरिणोति। जिरिणोति। इह कस्मान् न भवति, री गतौ रिर्यतुः, रिर्युः, वी गत्यादिषु विव्यतुः विव्युः इति? यणादेशस्य स्थानिवत्त्वातसिद्धत्वाच् च बहिरङ्गलक्षणत्वेन हल्परौ रेफवकारौ न भवतः। चतुर्यिता इत्यत्र अपि बहिरङ्गलक्षणत्वातततो लोपस्य धातोः उपधाभूतो रेफो न भवति। प्रतिदीव्ना इत्यत्र तु हलि च ८।२।७७ इति दीर्घत्वम्, दीर्घविधौ लोपाजादेशस्य स्थानिवद् भावप्रतिषेधात्। असिद्धं

बहिरङ्गमन्तरङ्गे इत्येतत् तु नाश्रयितव्यम्। उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि इति जिव्रिः, कर्योः, गिर्योः इत्येवम् आदिषु दीर्घो न भवति।

न्यासः

उपधायाञ्च। , ८।२।७८

पूर्वं रेफवकारान्तस्य घातोर्दीर्घत्वविधानादरेफवकारान्तार्थमिदम्()। उपधायामिति सुब्व्यत्ययेन षष्ठीद्विवचनस्य स्थाने सप्तम्येकवचनम्()। "उपधाभूतौ" इति। उपधात्वं प्राप्तावित्यर्थः। अलोऽन्त्यात्? पूर्वौ इति यावत्()। "हल्परो" इति। हल्? पर आभ्यामिति बहुव्रीहिः। स पुनर्हल्? धात्ववयव एव वेदितव्यः। यत्र हि प्रत्ययावयवो रेफवकाराभ्यां हल्परस्तत्र पूर्वेणैव सिद्धः। "हूर्छिता" इति। "हुच्छ कौटिल्ये" (धा।पा।२११)। "मू()च्छता" इति। "मुच्छा मोहसमुच्छ्राययोः" (धा।पा।२१२)। ननु च "अचो रहाभ्यां द्वे" (८।४।४६) इति द्विर्वचने कृते रेफोऽत्रोपधा न भवति? नैतदस्ति; दीर्घत्वे कत्र्तव्ये द्विर्वचनस्यासिद्धत्वाच्छकारोऽत्रैक एव हलिति भवत्येवोपधात्वं रेफस्य। "चिरिणोति, जिरिणोति" इति। "रि क्षि चिरि जिरि दाश दृ हिंसायाम्()" (धा।पा।१२७५-१२८०) स्वादित्वात्श्नुः"। इह "री गतौ" (धा।पा।१५००), "धी गतिप्रजनादिषु" (धा।पा।१०४८)-एताभ्यां लिट्(), अतुसि, उसि च, "एरनेकाचः" ६।४।८२ इति यणादेशः; तस्य स्थानिवद्भावाद्()द्विर्वचने कृते "रिर्यतुः, रिर्युः; विव्यतुः विव्यु" इति स्थितेऽभ्यासेकारस्य दीर्घस्य प्राप्नोति, हल्परयो रेफवकारयोरुपधाभूतत्वात्()। एतत्कस्मान्न भवति? इत्याह--"रिर्यतुः, रिर्यः" इत्यादि। स्थानिवद्भावः "अचः परस्मिन्()" १।१।५६ इत्यादिना। ननु च "न पदान्त" १।१।५७ इत्यादिना दीर्घविधौ प्रतिषिध्यते स्थानिवद्भावः, तत्? कुतस्तस्येह सम्भवः? नैतदस्ति; परिगणनं हि तत्र क्रियते--"स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्()" (का।वृ।१।१।५८) इतिः "असिद्धत्वाद्वा" इत्यादि। अत्र बहिरङ्गत्वं यणादेशस्य; अङ्गाधिकारे विधीयमानस्य प्रत्ययाश्रितत्वात्()। दीर्घत्वस्य त्वन्तरङ्गत्वम्(); प्रकृत्याश्रयत्वात्()। "असिद्धञ्च बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इति दीर्घत्वे कत्र्तव्ये यणादेश स्यासिद्धत्वाद्रेफवकारौ हल्परौ न भवतिः, तत्कुतो दीर्घत्वस्य प्राप्तिः। इह तर्हि चतुर्यितेति दीर्घत्वं कस्मान्न भवति, अत्र हि "चतुर्य" इत्यस्य क्यजन्तस्य धातोस्तृचि परतः "अतो लोपः" ६।४।४८ इत्यकारलोपे कृत उपधाभूतो रेफो हल्परो भवतीत्यस्ति दीर्घत्वस्य प्राप्तिः, इत्याह--"चतुर्यितेत्यत्रापि" इत्यादि। बहिरङ्गत्वमतो लोपस्यार्थधातुकाश्रय स्यात्()। दीर्घस्यान्तरङ्गत्वं पूर्ववत्()। तर्हि प्रतिदीव्नेत्यत्रापि दीर्घत्वं न स्यात्()। यथैव हि चतुर्यितेत्यत्र धातोरुपधा रेफो न भवति, तथा प्रतिदीव्नेत्यत्रापि वकारः। तथा हि--दीव्येत्येतावान्? धातुः, नकारस्तु प्रत्यय सम्बन्धी; न च दिवेर्धातोर्वकर उपधाभूतः, किं तर्हि? अन्तभूतः? इत्यत आह--"प्रतिदीव्नेत्यत्र" इत्यादि। प्रतिपूर्वाद्दिवः "कनिन्? युवृषितक्षि" (द।उ।६।५१) इत्यादिना कविन्(), "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः। ननु च "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इत्यल्लोपस्य स्थाविवद्भावाद्धलि परतो वकारान्तोऽत्र धातुर्न भवति। तत्कथं "हलि च" (८।२।७७) इति दीर्घत्वम्()? इत्याह--"दीर्घविधौ" इत्यादि। स्थानिवद्भावप्रतिषेधस्तु "न पदान्त" १।१।५७ इत्यादिना। नन्वेवमपि बहिरङ्गलक्षणसिद्धत्वादल्लोपस्य नैवात्र हलि परतो वकारान्तो धातुरुपपद्यते? इत्याह--"असिद्धं बहिरङ्गम्()" इत्यादि। अनाश्रयणस्य तु हेतुरनित्यत्वमस्याः परिभाषायाः। अनित्यत्वं तु "नलोपः सुप्स्वर" ८।२।२ इत्यादौ सूत्रे तुग्विधिग्रहणाज्ज्ञापितम्()। अथ जिव्रिः, किर्योरित्यादौ "हलि च" ८।२।७७ इति दीर्घत्वं कस्मान्न भवति जिव्रिशब्दोऽप्ययमे वं व्युत्पाद्यते, "जीर्यतेः क्रिन्? रश्च वः" (द।उ।१-८०) इति। "जृ()ष्? ["जृ()ष"-धा।पा।] झृ()ष्? ["झृ()ष"--धा।पा।] वयोहानौ" (धा।पा।११३०,११३१) इत्यस्मात्? क्रिन्प्रत्ययः; "ऋत इद्धातोः" ७।१।१०० इतीत्वम्(), रपरत्वम्(), रेफस्य वकार आदेशः--इत्येवं व्युत्पत्तौ जिव्रिरित्येतस्य वकारान्तस्य धातो रेफे हलि परतः "हलि च" ८।२।७७ इत्यस्ति दीर्घत्वस्य प्राप्तिः। किरिः गिरिरित्येवमादीनामपि शब्दानामेवं व्युत्पत्तिः क्रियते। "अच इः" (द।उ। १-६७) इत्यत इप्रत्ययेऽनुवत्र्तमाने "भुजेः किच्च" (द।उ। १-७१) इति च "कृगृ()शृ()पृ()कुटिभिदिच्छिदिभ्यश्च" (द।उ।

१-७२) इतिकिरतिप्रभृतिभ्यो धातुभ्य इप्रत्ययं विधाय व्युत्पाद्यन्त एते। एवं हि व्युत्पत्तावोसि यणादेशे कृते यकारे हलि परतो रेफान्तानां किरिप्रभृतीनां "हलि च" (८।२।७७) इति दीर्घत्वं प्राप्नोति? इत्यत आह--"उणादयोऽव्युत्पन्नानि" इत्यादि। ननु च किर्योः, गिर्योरित्यत्र व्युत्पत्तिपक्षेऽपि दीर्घत्वं न प्रसजति, न ह्यत्र हलि परतः किरतिगिरती रेफान्तौ, दीर्घत्वे कत्र्तव्ये यणादेशस्य स्थानिवद्भावात्? स्वराविलोपेषु हि लोपाजादेशो न स्थानिवत्(), अन्यस्तु स्थानिवदेव? सत्यमेतत्(); अभ्युपगम्येवं परिहार उक्तः। एवं मन्यते--भवत्यविशेषेण स्थानिवद्भावप्रतिषेधः, तथापि नैवात्र दीर्घत्वं प्रसज्येत; अव्युत्पन्नत्वादुणादीनामिति। यद्युणादयोऽव्युत्पन्नानि प्रातिपदिकानीति, न हि तत्रैव सूत्रे व्युत्पत्तिपक्षश्चाश्रयितुं युक्तः, योऽपि "आतो मनिन्क्वनिब्वनियश्च" ३।२।७४ इति "अन्येभ्योऽपि दृश्यन्ते" (३।२ ७५) इति क्वनिप्प्रत्ययान्त प्रतिदिवञ्शब्दं व्युत्पादयेत तस्यापि नैव दीर्घत्वं सिध्यति, "लोपोव्योर्वलि" (६।१।६६) इति वकारलोपे कृते धातोरवकारान्तत्वादिति? कत्र्तव्योऽत्र यत्नः। एव क्रियते-"हलि च" ८।२।७७ इत्यत्र "व्याक्तः पदार्थः" इत्येतद्दर्शनमाश्रीयते। अ()स्मश्च दर्शने प्रतिलक्ष्यं लक्षणभेदो भवतीति यावन्ति लक्ष्याणि तावन्त्येव लक्षणाम्युपदिशन्ति, तत्र भिन्नेषु लक्ष्यानुरोधात्? क्वचित्? प्रतिदीव्नेत्यादौ व्युत्पत्तिपक्ष आश्रीयते; क्वचित्? पुनर्जिव्रिः, किर्योः, गिर्योरित्यादावव्युत्पत्तिपक्ष इति। चकारो हलोत्यनुकर्षणार्थः॥

बाल-मनोरमा

उपधायां च १०९, ८।२।७८

उपधायां च। सिपि धातोरिति, "र्वोरुपाधाया" इत्यतो र्वोरिक इति, "हलि चे"त्यतो हलीति चानुवर्तते। "उपधयो"रित्यर्थे उपधायामित्यार्षम्। तदाह--धातोरित्यादि। ऊर्दत इति। अत्र धातोः रेफवान्तत्वाऽभावात् "र्वोरुपधायाः" इत्यस्य "हलि चे"त्यस्य चाऽप्राप्तौ "उपाधायां चे"त्यारम्भः। धातोरित्यभावे पदाधिकारस्थत्वात्पदस्य उपधाभूतयोरित्यर्थः स्यात्। ततश्च क्विबन्ते ऊर्दित्यत्रैव स्यात्, ऊर्दत इत्यादौ न स्यात्। रेफवकारयोः किम्?। पुष्प्यति। हल्परयोः किम्?। चिरिणोति। इकः किं?। नर्दति। ऊर्दांचक्र इति। इजादित्वादाम्। "कृञ्चानुप्रयुज्यते" इत्यनुप्रयोगः। कुर्देति। गुदेत्यपि पृथग्धातुः। "क्रीडायामेवे"त्यर्थनिर्देशः। एवकारस्तु इतोऽन्यत्र धात्वर्थनिर्देशस्य उपलक्षणत्वं ज्ञापयति। कूर्दत इति। "उपधायां चे"ति दीर्घः। चुकूर्द इति। "कुहोश्चु"रिति चुत्वम्। खूर्दत इति। "उपधायां चे"ति दीर्घः। एवं गूर्दते इति। गोदत इति। शपि लघूपधगुणः। जुगुद इति। "असंयोगा"दिति कित्वान्न गुणः। षूदेति। क्षरणं--प्ररुआवणम्। सूदत इति। प्ररुआवतीत्यर्थः। "धात्वादे"रिति षस्य सः। अलघूपधत्वान् गुणः। सुषूद इति। "धात्वादे"रिति षस्य सत्वे लिटि द्वित्वादौ इणः परस्यादेशसकारत्वात्षत्वम्। यदि धातुपाठे सकारस्यैव पाठस्तर्हि इहादेशसकात्वाऽभावात् षत्वं न स्यात्। षोपदेशे तु षस्य सत्वे सति आदेशसकारत्वात्षत्वं सूपपादमिति भावः। ननु धातुपाठे के धातवः षादयः पठिताः, के वा सादयः, पाणिनिकृतषोपदेशपाठस्य इदानीं परिभ्रष्टत्वादित्याशङ्क्य पाणिनीयपरम्परासिद्धान् षोपेदेशान् पठति --सेगिति श्लोकेन। "दन्त्याजन्तषादय एकाचः षोपदेशाः स्यु"रित्यन्वयः। दन्त्यश्च अच्च दन्त्याचौ, तौ अन्तौ = अव्यवहितपरौ यस्य स दन्त्याऽजन्तः, तथाविधः षः = षकार आदिर्येषां ते -- दन्त्याजन्तषादयः। दन्त्यपरकोऽच्परकश्च यः षकारस्तदादय एकाचो धातव इदानीं कृतसत्वाः सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेन पाणिनिनोपदिष्टाः प्रत्येतव्या इत्यर्थः। "सादय" इति पाठेऽप्येवमेव व्याख्येयम्। "अज्दन्त्यपराः षादयः षोपदेशाः" इति भाष्यम्। षूद क्षरणे इत्यादयोऽच्परकषोपदेशाः। "ष्ठा गतिनिवृत्ता"वित्यादयस्तु दन्त्यपरकषोपदेशाः। दन्त्याजन्तेति किम्?। स्कुदि आप्रवणे। चुस्कुन्दे। अत्र सकारो न दन्त्यपरको, नाप्यच्परकः। एकाचः किम्?। सोसूत्र्यते। "सूत्र वेष्टने", चुरादिरजन्तोऽनेकाच्। यद्यप्येकाच इति भाष्ये न दृश्यते, तथापि यङ्विधौ सोसूच्यत इति भाष्यं तत्र मानमिति बोध्यम्। एवं च "साध-संसिद्धौ" इत्यादौ सकारपाठस्यैव दृश्यमानत्वेऽपि षोपदेशत्वमेव। ननु "सेकृ गतौ", "सृप्लृ गतौ" , "सृ गतौ", "सृज विसर्गे" एते चत्वारोऽच्परकसादयः। स्तृञ् आच्छादने" ऋदन्तः श्नुविकरणः,। "स्तृ()ञ् आच्छादने ऋदन्तः

श्नविकरणः, स्त्यै शब्दसङ्घातयोः"। एते त्रयो दन्त्यपरकसादयः। एषां सप्तानामपि षोपदेशत्वं स्यादित्यतिव्याप्तिमाशङ्क्य तद्भिन्नत्वं विशेषणमाह--- सेक् सृप् सृ स्तृ सृज् स्तृ()म्त्यान्ये इति। स्त्यै धातोः कृतात्वस्य निर्देशः श्लोके समावेशार्थः, स्त्यै इत्यैकारान्तस्य निर्देशे "स्त्यार्यन्य" इत्येकस्याक्षरस्याधिक्यापत्तेः। नन्वेवमपि ष्वष्क् गतौ, ञिष्विदा गात्रप्ररुआवणे, ष्वद आस्वादने, ष्वञ्ज परिष्वङ्गे, ञिष्वप् शये, ष्मिङीषद्धसने-- इत्येतेषु सकारस्य दन्त्यपरकत्वाऽभावादच्परकत्वाऽभावाच्च षोपदेशेष्वसङ्ग्रह स्यादित्यव्याप्तिमाशङ्क्य तानपि संङ्गृह्णाति--ष्वक् स्विद् स्वद् स्वप् स्मिङ इति। "अपी"ति शेष-। ननु "स्वृ शब्दोपतापयो"रित्यादीनामपि दन्त्यवकारपरकत्वात्षोपदेशत्वं स्यादित्यत आह-- दन्त्यः केवलदन्त्य इति। कुत इत्यत आह-- ष्वष्कादीनांमिति। अन्यथा दन्त्यपरकत्वादेव सिद्धे ष्वष्कादिग्रहणं व्यर्थं स्यादिति भावः। यद्यपि ष्वष्कतिरत्र भाष्ये न दृश्यते तथापि सुब्धातुष्ठिनुष्वष्कतीनां सत्वप्रतिषेध इति वार्तिकात्तल्लाभ इति भावः। हादेति। रेफवानयम्। अव्यक्तशब्दः--- अमनुष्यवाक।जहाद इति। अभ्यासस्य ह्रस्वः। चुत्वम्। ह्लादीति। लकारवानयम्। "स्वीदितो निष्ठाया"मितीण्निषेधार्थमीत्वम्। स्वादेति केवलदन्त्यपरकत्वाऽभावान्नायं षोपदेशः। असिस्वदत्। पदेति। गुदरव इत्यर्थः। यतीति। ईदित्त्वमिण्निषेधार्थम्। येते इति। "अत एकहल्मध्ये" इत्येत्वाभ्यासलोपौ। युतृ जुतृ इति। ऋदित्त्वम् "नाग्लोपिशास्वृदिता"मित्याद्यर्थम्। योतत इति। शपि लघूपधगुणः। युयुत इति। "असंयोगा"दिति कित्त्वान्न गुणः। विथृ वेथृ इति। द्वितीयान्तविमौ। ननु "विथृ" इत्येवास्तु, लघूपधगुणे सति घेथत इत्यस्याऽविशिष्टत्वादित्यत आह-- विविते विवेथे इति। वेथृधातोर्विवेथे इति रूपम्। विथृधातोस्तु असंयोगादिति कित्त्वाद्गुणाऽभावे विविथ इति रूपमिति भावपः। श्रथीति। द्वितीयान्तः। शैथिल्यं-- रुआंसनम्। श्रन्थते इति। इदित्त्वान्नुम्। ग्रथीति। द्वितीयान्तः। काटिल्यं-- वक्रीभवनम्। ग्रन्थत इति। इदित्त्वान्नुम्। कत्थेति। अविद्यमानगुणज्ञापनं श्लाघा। अथाष्टातिं()रशदिति। अष्टौ च तिं()रशदिति द्वन्द्वः। अष्टाधिका तिं()रशदिति वा। "द्व्यष्टनः सङ्खाया"मित्यात्वम्। "अष्ट तिं()रश"दिति पाठे तु अष्टेति पृथक्पदम्। परस्मैपदिन इति। अनुदात्तस्वरितङ्()ञित्त्वाऽभावात् "शेषात्कर्तरी"ति परस्मैपदिन एवेति भाव-। अतेति। सातत्यगमनं-- संततगमनम्। लिटि णलि द्वित्वे हलादिशेषे अ अत् अ इति स्थिते पररूपे प्राप्ते आह-- अत आदेरिति। "इति दीर्घ"इति शेषः। तथा च अभ्यासाऽकारस्य दीर्गे सति सवर्णदीर्घः। तदाह-आतेति। अकारस्य हल्मध्यस्थत्वऽभावादेत्वाभ्यासलोपौ न। लुङिति। अतधातोर्लुङस्तिपि इतश्चेति इकारलोपे च्लेः सिचि तस्य इडागमे "अस्तिसिचोऽपृक्त" इति ईडागमे आटि वृद्धौ आतिस् ई त् इति स्थिते सतीत्यर्थः।

तत्त्व-बोधिनी

उपधायां च ८४, ८।२।७८

"सिपि धातो"रित्यतो धातोरित्यनुवर्तते, "र्वरुपधायाः" इत्यतो र्वोरिक इति। "हलि चे"त्यतो हलीति च। तदाह-- धातोरित्यादि। धातोः किम्?। "ऊङुतः"। कुरूः कुर्वौ कुर्व इत्यत्रेको दीर्घो माभूत्। न चात्र रेफस्य प्रातिपदिकोपधात्वेऽपि पदोपधात्वाऽभावदेव दीर्घो भवेदिति धातोरित्यनुवर्तनमिहानावश्यकमिति वाच्यं, पदस्येत्यनुवृत्तौ तु कूर्दते गूर्दते इत्याद्यसिद्धिप्रसङ्गात्। वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारात् "अचः परस्मि"न्निति स्थानिवत्त्वस्य निषेधाभ्युपगमेऽपि कार्यकालपक्षे "असिद्धं बहिरङ्ग"मिति परिभाषायाः प्रवृत्तेर्बहिरङ्गयणोऽसिद्धत्वात्कुर्वौ कुर्व इत्यत्र "उपधायां चे"ति दीर्घो न भवेदिति धातुग्रहणानुवर्तनस्य नात्यन्तावश्यकता, पदस्येत्यननुवृत्त्या कूर्दते इत्यादौ दीर्घः सिध्यत्येवाहुः। रेफवकारयोः किम्?। "पुष्प विकसने" पुष्प्यति। हल्परयोः किम्?। चिरणोति। जिरिणोति। इकः किम्?। अर्वते। नर्दति। ननु "हलि चे"त्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्यायां कूर्दते गूर्दते इत्यादि सिध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत्। अत्राहुः-- "हलिचे"त्यत्र धातुग्रहणमनुवर्तनीयमेव। अन्यथा दिवमिच्छति दिव्यतीत्यादावतिप्रसङ्गः स्यात्। तथा च "उपधायां चे"ति सूत्राऽभावे उपधाभूतयोः र्वोः परतो दीर्घोन स्यात् किं

तुरेफवान्तयोरेव धात्वोः "हलि चे"ति सूत्रेण स्यादित्येतत्सूत्रमावश्यकमेवेति। सूदते इति। रुआवतीत्यर्थः। ननु स्वर्दतिवत्स्वद सूदेति दन्त्यादय एव धातवः पठ()न्ताम्, षोपदेशान् पठित्वा सत्वविधौ गौरवात्। मैवम्। तथाहि सति ण्यन्च्चङि असिष्विदत, असूषुददित्यादौ, लिटि सुषूदे सिषेधेत्यादौ च "आदेशप्रत्यययोः" इति षत्वं न स्यात्। इणः परस्य सकारमात्रस्य षत्वविधौ तु सुपिसौ सुपिस इत्यादावपि स्यादिति धातुपाठे पाणिनिना तालव्यदन्त्यादिपाठवत्षोपदेशा अपि व्यवस्थयैव पठिताः, स च पाठ इदानीं परिभ्रष्टः। साधादिषु सादिपाठस्यैव दृश्यमानत्वात्। अतो लक्षणमुखेन तान्व्यवस्थापयति-- सेगित्यादि। दन्तश्च अञ्च दन्त्यादौ, तौ अन्तौ अव्यवहितपरौ यसय् स दन्त्याजन्तः। दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्यान्तसादयोऽजन्तसादयश्चैकाचः षोपदेशा बोध्याः। तथा च साधादौ सांप्रतं पठ()मानः सकार उपदेशे न स्थित इत्यनुमेयदन्तौ।उक्तलक्षणस्यातिव्या()प्त वारयितुमाह-- सिगिति। "सकृ गतौ"। "सृप्लृ गतौ" "स्तृञ् आच्छादने"। "सृज विसर्गे"। स्तृ()ञ् " आच्छादने"। "स्त्यै शब्दसङ्घातयो"। एभ्योऽन्ये। पूर्वेण केषांचिदसङ्ग्रहादाह-- ष्वष्केति। "ष्वष्क गतौ" ञिष्विदा गात्रप्रक्षरणे"। "स्वद आस्वादने"। "ष्वञ्ज परिष्वङ्गेट। "ञिष्वप् शये"। "स्मिङ् ईषद्धसने" एते षोपदेशा" इत्यन्वयः। "स्वाद आस्वादने" इत्यादावतिव्याप्तिमाशङ्क्ायाह-- दन्त्यः केवलदन्त्य इति। तथा च असिस्वददित्यादौ षत्वं नेति भावः। ह्लादी सुखे च। चादव्यक्ते शब्दे। ईकारः "()आईदितो निष्ठाया"मितीण्निषेधार्थः। प्रह्लन्नः प्रह्लन्नवान्। इह "ह्लादो निष्ठाया"मित्युपधाह्रस्वः। श्लाघायामिति। अविद्यमानगुणसम्बन्धज्ञापनं-- श्लाघा। आततुरिति। हल्मध्यस्थत्वाऽभावादेत्वं न।

---

सूत्रम्

काशिका-वृत्तिः

न भकुर्छुराम् ८।२।७९

रेफवकारान्तस्य भस्य कुर् छुरित्येतयोस् च दीर्घो न भवति। धुरं वहति धुर्यः। धुरि साधुः धुर्यः। दिव्यम्। कुर् कुर्यात्। छुर् धुर्यात्। रेफवकाराभ्यां भविशेषणं किम्? प्रतिदीव्ना। प्रतिदीव्ने।

लघु-सिद्धान्त-कौमुदी

न भकुर्छुराम् ६८१, ८।२।७९

भस्य कुर्छुरोरुपधाया न दीर्घः। कुर्वन्ति॥

लघु-सिद्धान्त-कौमुदी

न भकुर्छुराम् ११३६, ८।२।७९

भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात्। धुर्यः। धौरेयः॥

न्यासः

न भकुर्चछराम्?। , ८।२।७९

"हालि च" ८।२।७० इति दीर्घत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते। "धुर्यः" इति। "धुरं वहतीति "धुरी यङ्ढकौ" ४।४।७७ इति यत्()। "कुर्यात्()" इति। करोतेलिङ्(), "तनादिकृञ्भ्य उ" ३।१।७९, धातोर्गुणः, रपरत्वम्(), "अत उत्? सार्वधातुके" ६।४।११० इत्युत्त्वम्(), "ये च" ६।४।१०९ इत्युकारलोपः। "कुर्यात्()" इति। आशिषि लिङ्()। करोतेर्विकरणेन निर्देशश्चिकीर्षतीत्यत्र प्रतिषेधो मा भूवित्येवमर्थः॥

बाल-मनोरमा

न भकुर्च्छुराम् १६०९, ८।२।७९

न भकुर्छुराम्। "र्वोरुपधायाः" इत्यत "उपधाया" इति दीर्घ इति चानुवर्तते। तदाह--भस्येत्यादिना। "धूर्वहे धुर्यधौरेयधुरीणाः" इत्यमरः।

---

सूत्रम्

काशिका-वृत्तिः

अदसो ऽसेर् दादु दो मः ८।२।८०

अदसो ऽसकारान्तस्य वर्णस्य दात् परस्य उवर्णादेशो भवति, दकारस्य च मकारः। अमुम्, अमू, अमून्। अमुना, अमूभ्याम्। भाव्यमानेन अप्युकारेण सवर्णानां ग्रहणम् इष्यते इति एकमात्रिकस्य मात्रिकः, द्विमात्रिकस्य द्विमात्रिकः आदेशो भवति। असेः इति किम्? अदः इच्छति अदस्यति। अदसो ऽनोस्र इति वक्तव्यम्। ओकाररेफयोरपि प्रतिषेधो यथा स्यातिति। अदो ऽत्र। अदः। तदर्थं केचित् सूत्रं वर्णयन्ति, अः सेः यस्य सो ऽयम् असिः, यत्र सकारस्य अकारः क्रियते इति, तेन त्यदाद्यत्वविधाने एतदन्यत्र न भवितव्यम् एव इति। अद्र्यादेशे कथम्? अदसो ऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्। केचिदन्त्यसदेशस्य नेत्येके ऽसेर्हि दृश्यते। इति। यैः असेः इति सकारस्य प्रतिषेधः क्रियते, अनन्त्यविकारे अन्त्यसदेशस्य इति च परिभाषा न अश्रीयते, तेषाम् उभयोरपि मुत्वेन भवितव्यम्, अमुमुयङ्, अमुमुयञ्चौ, अमुमुयञ्चः इति , यथा चलीक्लृप्यते इति लत्वम्। ये तु परिभाषाम् आश्रयन्ति तेषाम् अन्त्यसदेशस्य एव भवितव्यम्, अदमुयङ्, अदमुयञ्चौ, अदमुयञ्चः इति। येषं तु त्यदाद्यत्वविषय एव मुत्वेन भवितव्यम् इति दर्शनम् तेषाम् अत्र न भवितव्यम्, अदद्र्यङ्, अदद्र्यञ्चौ, अदद्र्यञ्चः इति। दातिति किम्? अलो ऽन्त्यस्य मा भूत्, अमुया। अमुयोः।

लघु-सिद्धान्त-कौमुदी

अदसोऽसेर्दादु दो मः ३५८, ८।२।८०

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च। आन्तरतम्याद्ध्स्वस्य उः, दीर्घस्य ऊः। अमू। जसः शी। गुणः॥

न्यासः

अदसोऽसेर्दादु दो मः। , ८।२।८०

"असेः" इतीकार उच्चारणार्थः। अविद्यमानः सकारो यस्य स तथोक्तः। यश्चैवंविधः स सकारान्तो न भवतीत्याह--"असकारान्तस्य" इत्यादि। "अमुम्()" इत्यादि। अदसोऽमादिषु त्यदाद्यत्वे "अतो गुणे" ६।१।९४ पररूपत्वे च कृतेऽसि ६।१।१०३ पूर्वत्वम्()। औटि, "वद्धिरेचि" ६।१।८५ इति वद्धिः। शसि प्रथमयोः पूर्वसवर्णदीर्घत्वम्()। अत्र स्थानेऽन्तरतमपरिभाषया १।१।४९ एकवचने मात्रिकस्य मात्रिक एव भवति, अन्यत्र द्विमात्रिकस्य द्विमात्रिकः ननु च मात्रिकः सूत्र उपात्तः, तत्कथं द्विमात्रिको लभ्यते? "अणुदित्? सवर्णस्य चाप्रत्ययः" (१।१।६९) इति सवरणग्रहणादिति चेत्()? न; "भाव्यमानोऽण्? सवर्णान्? न गृह्णाति" (व्या।प।३५) इति प्रतिषेधादित्यत आह--"भाव्यमानोऽपि" इत्यादि। एतच्च "ऋत उत्()" ६।१।१०७ इत्यत्र तपरकरणेन ज्ञापितम्()। "अदस्यति" इति। "सुप क्षात्मनः क्यच्()" ३।१।८। "अदसोऽनोरुआ इति वक्तव्यम्()" इति। ओकारसकाररेफाणां द्वन्द्वः, अविद्यमान्ना ओरुआओऽस्येति बहुव्रीहिः। अदोऽत्रेति नपुंसकत्वात्? "स्वमोर्नपुंसकात्स" ७।१।२३ इति सोर्लुक्(), सकारस्य रुत्वे "अतो रोरप्लुतादप्लुते" ६।१।१०९ इति रोरुत्वम्(), "आद्गुणः" ६।१।८४, "एङः पदान्तादति" ६।१।१०५ इति परपूर्वत्वम्()। इदमीकारप्रतिषेधस्य प्रत्युदाहरणम्()। "अदः" इति। एतत्तु रेफप्रतिषेधस्य। रुत्वे कृते विसर्जनीयः। "तदर्थम्()" इति। सकाररेफयोरपि प्रतिषेधो यथा स्यादित्येवमर्थम्()। "अः सेर्यस्य" इति। सकार [नास्ति-कांउ।पाठे] उच्चारणार्थः। अकारः सकारस्य यस्येत्यर्थः।

"कथम्()" इत्यादि। यदाऽदसोऽद्र्()आदेशः क्रियते, तदेदमदसोऽद्रेश्च पृथङ्मुत्वं भवति? उतान्त्यसदेशस्य? आहोस्विददद्र्()आदेशविषये न भवत्येव? इत्येतत्? पृच्छति। "अदसोऽद्रः" इत्यादि। मश्च उश्च मुः, तस्य भावो मुत्वम्()। अदसोऽद्रेश्चोभयोरपि केचिन्मुत्वमिच्छन्तीत्यर्थः। विनापि हि चकारेण तदर्थो गम्यते। तद्यथा--अहरहर्नयमानो गाम()आं पुरुषं पशुमित्यादौ वाक्ये। कथम्()? यथेत्याह--"लत्ववत" इति। यथा चलीक्लृप्यत इत्यत्र "कृपो रो लः" ८।२।१८ इति धातो रेफस्य रीशब्दस्य चोभयोरपि लत्वमिच्छन्ति, तद्वददशः, अद्रेश्च मुत्वम्()। "केचिदन्त्यसदेशस्य" इति। अद्र्()आदेश इकारान्तः, तस्य केचिदुत्वमिच्छन्ति। स पुनरद्र्()आदेशसम्भन्धी दकारो रेफश्च। "नेत्येके" इति। अपरे तु--यदाऽदसोऽद्र्()आदेशः क्रियते तदा न भवितव्यमेव मुत्वेनेतीच्छन्ति। अत्रैव कारणमाह--"असेर्हि दृश्यते" इति। अः सेर्यस्य सोऽयमसिः, तस्यासेः। हिशब्दो यस्यादर्थे। यस्मात्? सकारस्य स्थाने यस्यादसोऽकारो भवति तस्य पज्डितैर्मुत्वं दृश्यते। न च कृताद्र्()आदेशस्यादसः सकारस्य स्थानेऽत्वं भवति; विभक्तेः परहस्य निमित्तस्यानावात्()। तस्मात्? न तस्य मुत्वेन भवितव्यमिति। "यैः" इत्यादिना श्लोकस्य पूर्वार्ध व्याचष्टे। असेरति सकारस्य प्रतिषेधः क्रियते-नास्य सिर्विद्यत इत्येवं व्याचक्षाणैः। "उभयोरपि" इति। अदसः, अद्रेश्च। "अमुमुयङ्()" इत्यादि। अदोञ्चतीति ऋत्विगित्यादिना (३२।५९) सूत्रेणाञ्चतेः क्विन्(), "अनिदिताम्()" ६।४।२४ इति नलोपः, उपपदसमासः, "उगिदचाम्()" ७।१।७० इति नुम्(), हल्ङ्यादि ६।१।६६संयोगान्त८।२।२३ लोपौ। एकवचने "क्विन्प्रत्ययस्य कुः" ८।२।६२ इति कुत्वम्()--नकारस्य ङ्कारः। अन्यत्र "न श्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारः, "अनुस्वारस्य यपि परसवर्णः" ८।४।५७ इति परसवर्णो ञकारः, ["ङ्कारः"--कांउ।पाठः] "आसर्वनाम्नः" ६।३।९० इत्यतः "सर्वनाम्नः" इत्यमुवत्र्तमाने "विष्वग्देवयीश्च टेरद्र्()ञ्चतौ वप्रत्यये" ६।३।९१ इत्यदः शब्दस्य टेरद्र्()आदेशः, पूर्वस्माद्दकारादुत्तरस्योत्वम्(), दकारस्य मत्वम्(), द्वितीयस्मादपि दकाराद्रफस्योत्वम्(), दकरस्य मत्वम्()--अमुमुयङ्(), अमुमुयञ्चाविति भवति। "यथा" इत्यादिना लत्ववदित्यस्थार्थमाचष्टे। "चलीक्लृप्यते" इति। "कृपू सामर्थ्ये" (धा।पा।७६२)। अत्यन्तं कल्पत इति यङ्(), द्विर्वचनम्(), "उरत्()" ७।४।६६ इत्यत्त्वम्(), "हलादिः शेषः" ७।४।६०, "रीगृदपधस्य च" ७।४।९० इति रीक्(), "कुहोश्चः" ७।४।६२ इति चुत्वम्(), "कृपो रो लः" ८।२।१८ इत्युभयोरपि लत्वम्(); "अनन्त्यविकारेऽन्त्यसदेशस्य" (व्या।प।६३) इति परिभाषानाश्रयणात्()। "ये तु" इत्यादिना "केचिदन्त्यसदेशस्य" इत्यस्यार्थ कथयन्ति। "अदमुयङ्(), अदमुयञ्चौ" इति। अत्राद्रिदकारादेरुत्तरस्योत्वम्(), अद्रिदकारस्यैव च मत्वम्()। शेषं पूर्ववत्()। "येषां तु"["तेषां तु"--प्रांउ।पाठे] इत्यादिना "एके" इत्यादेव्र्याख्यानम्()। केषां पुनस्त्यदाद्यत्वविषय एव मुत्वेन भवितव्यम्()? ये "अः सेयंस्य सोऽयमसिस्तस्यासेः" इत्येवं वर्णयन्ति तेषाम्()। "अत्र" इति। अद्र्()आदेशविषये नैव भवितव्यमिति;त्यदाद्यत्वाभावात्()। अदद्र्()ङ, अदद्र्()आञ्चौ, अदद्र्()ञ्चः" इति। पूर्ववत्()। मुभावस्तु विशेषः। "अमुया, अमुयोः" इति। अदसस्तृतीयैकवचन ओसि च परतस्त्यदाद्यत्वम्(), ७।२।१०२ टाप्(), एकादेशः, तस्य "अन्तादिवच्च" ६।१।८२ इति पूर्वं प्रत्यन्तवद्भावो दादुदोग्रहणेनैव ग्रहणम्()। अत्र यदि दादिति नोच्येत तदा "आङि चापः" ७।३।१०५, "ओसि च" ७।३।१०४ इति ङित्येत्वे कृते तस्य चायादेशेऽलोन्त्यपरिभाषया १।१।५१ यकारस्यैवोत्वं स्यात्()। दादिति वचनान्न भवति। उदिति तपरकरणं मुखसुखार्थम्()॥

बाल-मनोरमा

अदसोऽसोर्दादु दो मः , ८।२।८०

तदाह--अदसोऽसान्तस्येति। असेः किम्?। अदस्यति। दात् किम्?। अमुया। अत्र "अलोऽन्त्यस्ये"ति यकारस्य न भवति। ननु उदूताविति कथम्, उ इत्यस्यैव श्रवणादित्यत आह--उ इतीति। उश्च ऊश्च तयोः समाहार इति विग्रहे द्वन्द्वे सति, सुब्लुकि, सवर्णदीर्घे "स नपुंसक"मिति नपुंसकत्वे "ह्रस्वो नपुंसके प्रातिपदिकस्ये"ति ह्रस्वत्वे, समाहास्यैकत्वादेकवचननस्य सोः "स्वमोर्नपुंसका"दिति लुकि उ इति रूपमित्यर्थः। आन्तरतम्यादिति। अर्धमात्रस्य

व्यञ्जनस्य ईषत्सदृशो मात्रिको ह्रस्व उकारः। ह्रस्वस्य तु मात्रिकस्य मात्रिकत्वसादृश्यादुकारो ह्रस्वः, दीर्घस्य तु द्विमात्रत्वसादृश्याद्द्विमात्र ऊकार इत्यर्थः। अमुमुयङिति। अदद्र()च् स् इति स्थिते "उगिदचा"मिति नुमि, हल्ङ्यादिलोपे, चकारस्य संयोगान्तलोपे, नुमो नकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वे, अदद्र()ङिति स्थिते, प्रथमदकारस्य मत्वे, तदुत्तरस्याऽकारस्य उत्वे, द्वितीयदकारस्य मत्वे, तदुत्तरस्य रेफस्य उत्वे च कृते, अमुमुयङिति रूपमिति भावः। प्रक्रियाक्रमस्तु सूत्रपौर्वापर्यज्ञानवतां सुगमः। अमुमुयञ्चाविति। प्राञ्चावितिवद्रूपम्। उत्वमत्वे पूर्ववत्। अमुमु इ अच् औ इति स्थिते यणिति विशेषः। अमुमुईच इति। अमुमु इ अच् अस् इति स्थिते "अन्तरङ्गोऽपि यण् "अचः" इति लोपविषये न प्रवर्तते" इत्युक्तरीत्या अकृते यणि "अचः" इत्यकारलोपे "चौ" इतीकारस्यदीर्घ इति भावः। अमुमुयग्भ्यामिति। "चोः कुः" इति कुत्वमिति विशेषः। इकारे परे मकारादुकारस्य यणमाशङ्क्य आह--मुत्वस्यासिद्धत्वादिति। अमुमुईचे। अमुमुईचः २। अमुमुईचौः २। अमुमुयक्षु। मतान्तरमाह--अन्त्यबाधे इति। अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य कार्याऽभावे सति अन्त्यसमीपवर्तिनः कार्यं भवतीत्यर्थः। प्रकृते च अदस इति नावयवषष्ठी, किन्तु स्थानषष्ठी। ततश्च "अलोऽन्त्यस्ये"त्युपतिष्ठते। असान्तस्य अदसोऽन्त्यस्य दात्परस्य उत्वं दस्य च म इति फलितम्। अदसश्चान्त्यवर्णः सकारो दात्परो न भवति, अद्र()आदेशे कृते तु इकारोऽन्तः, सोऽपि दात्परो न भवति। ततश्च अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य आदेशबाधे सति अन्त्यसमीपवर्तिन एव दात्परस्य उत्वं, दस्य च मः, नतु ततः प्राचीनयोरपि दकारतदुत्तरवर्णयोर्मुत्वमित्यर्थः। नन्वेवं सति "णो नः" इति धात्वादेर्णकारस्य विहितं नत्वं नेता इत्यत्रैव स्यान्नमतीत्यत्र न स्यादिति चेत्, मैवम्-अलोऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यसदेशानन्त्यसदेशयोर्युगपत्प्राप्तौ अन्त्यसदेशस्यैव भवतीति परिभाषार्थ इति "ष्यङः संप्रसारण"मिति सूत्रे बाष्ये स्पष्टं प्रपञ्चितत्वात्। यद्यपि "ष्यङः सम्प्रसारण"मिति सूत्रे प्रकृतसूत्रे च "अनन्त्यविकारे अन्त्यसदेशस्ये"ति परिभाषा पठिता तथापि सैवाऽत्रार्थतः सङ्गृहीता। अन्त्यस्य विकारः-आदेशः अन्त्यविकारः। अन्त्यविकारस्याऽभावः अनन्त्यविकारः। "अर्थाभावेऽव्ययीभावेन सह नञ्()तत्पुरुषो विकल्प्यते" इति वक्ष्यमाणत्वात्तत्पुरुषः। अव्ययीभावपक्षे तु "तृतीयासप्तम्योर्बहुल"मित्यम्भावाऽभावः। अलो।ऽन्त्यपरिभाषाया अप्रवृत्त्या अन्त्यस्य आदेशाऽभावे सतीति यावत्। अदमुयङिति। अत्र पूर्वस्य दकारस्य तदुत्तराऽकारस्य च न मुत्वमिति विशेषः। मतान्तरमाह--अः सेः सकारस्येति। सेरित्यस्य विवरणं--सकारस्येति। "असे"रिति नायं नञ्तत्पुरुषः, किंतु अः सेर्यस्य स-असिः, त्सय असेरिति विग्रहः। सेरिति स्थानषष्ठी, इकार उच्चारणार्थः,सकारस्थानकाऽकारवत इत्यर्थः। अदस्()शब्दस्य त्यदाद्यत्वे कृते सकारस्थानकाऽकारवत्त्वम्। अतस्त्यदाद्यत्ववत एवादस्()शब्दस्य मुत्वं नान्यस्येति फलितम्। अतोऽद्र()आदेशे सति सकारस्थानकाऽकारवत्त्वाऽभावान्न मुत्वमित्यर्थः।

तदिदं पक्षत्रयमपि भाष्यसंमतमित्याह--उक्तं चेति। अदसष्टेरद्रेर्विधौ सति अदद्र()चित्यत्र प्रथमद्वितीययोर्दकारयोः पृथङ्()मत्वे, तदुत्तरयोः अवर्णरेफयोरुत्वं च युगपदेव। लत्ववत्। चलीक्लृप्यते इत्यत्र चरीकृप्यते इति स्थिते रेफऋकारयोर्यथा "कृपो रो लः" इति लत्वं, तथा केचिदिच्छन्ति। हि-यतोऽसेः सकारस्थानकाकारवत एव मुत्वं दृश्यते=अः सेः यस्येति बहुव्रीहिणा प्रतीयत इति योजना। विष्वग्देवयोः किमिति। विष्वग्देवयोश्चेति किमर्थमित्यर्थः। अ()आआचीति। अत्र विष्वग्देवयोः सर्वनाम्नश्चाऽभावान्नाद्र()आदेश इति भावः। विष्वग्देवयोश्चेति किमर्थमित्यर्थः। अ()आआचीति। अत्र विष्वग्देवयोः सर्वनाम्नश्चाऽभावान्नाद्यादेश इति भावः। विष्वगञ्चनमिति। अत्र "अन" इति ल्युडादेशस्य श्रूयमाणतया अञ्चेरप्रत्ययान्तत्वं नेति भावः। ननु उत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगञ्चनमित्यत्र आद्र()आदेशस्याऽप्रसक्तेः किमप्रत्ययग्रहणेनेत्यत आह--अप्रत्ययग्रहणमिति। तेनेति। अन्यथा "अतः कृकमी"त्यत्र "नित्यं समासे" इत्यतोऽनुवृत्तसमासग्रहणेन उत्तरपदाक्षेपात्कृधातुरूपे उत्तरपदे इत्यर्थलाभादयस्कृदित्यत्रैव सत्वं स्यात्, अयस्कार इत्यत्र न स्यादित्यर्थः। उदङिति। उत् अञ्चतीति विग्रहे

क्विन्नादिरिति भावः।

तत्त्व-बोधिनी
अदसोऽसेर्दादु दो मः ३७१, ८।२।८०

अदसोऽसेः। "असे"रिति इकार उच्चारणार्थस्तदाह---अदसोऽसान्तस्येति। असान्तस्येति किम्? अमुमात्मन इच्छति अदस्यति। दात्परस्य किम्? अमुया" "अमुयो"रित्यत्राऽन्त्ययकारस्य माभूत्। ह्रस्वव्यञ्जनयोरिति। व्यञ्जनस्य हि ह्मस्व ईषात्सदृशो, दीर्घस्तु विसदृश इथि भावः। प्राञ्चस्तु--ह्मस्वदीर्घयोः समाहारद्वन्द्वमकृत्वैव "विधायमानोऽप्यण् क्विचित्सवर्णान् गृह्णाती"ति सावीकृत्य आन्तरतम्याद्ध्रस्वव्यञ्जनयोह्र्यस्वो दीर्घस्य दीर्घ इति व्याचक्षते।अन्त्यबाध इति। सूत्रे "अदस" इति नाऽवयवषष्ठी, किन्तु स्थानेषष्ठी, एवं हि अलोऽन्त्यपरिभाषोपतिष्ठते। तथा च अदसो योऽन्त्यः स दात्परो न भवति, दात्परो यः सोऽदसोऽन्त्यो न भवतीत्येवमन्त्यबाधेऽन्त्यसमीपस्य भवतीति तेषामाशयः। उक्तं चेति। "वार्तिककृते"ति शेषः। एवं च "अमन्द्य"ङ्ङिति केषाञ्चिदुदाहरणं भाष्यादावनुक्तत्वादुपेक्ष्यमिति भावः। लत्ववदिति। "चलीक्लृप्यते"इत्यत्र "कृपो रो लः"इत्युभयोर्यथा लत्वं तथेत्यर्थः।
नन्वप्रत्ययग्रहणाभावेऽप्युत्तरपदाधिकारस्थत्वाद्विष्वन्द्यङ् देवन्द्यङ्ङित्यञ्चत्युत्तरपदेष्वेवाऽद्यादेशः स्यान्न तु "विष्वगञ्चन"मित्यत्राऽतो व्याचष्टे-अप्रत्ययग्रहणं ज्ञापयतीति। अन्यत्रेति। "अतः कृकमी"त्यादौ। तेनेति। अन्यथा "नित्यं समासे"इत्यतोऽनुवृत्तेन समासग्रहणेनोत्तरपदस्याक्षेपादतः कृकमीति कृधातुग्रहणे कृधातूत्तरपदक एवाऽयस्कृदित्यादौ सत्वं स्यान्नत्वणन्तोत्तरपदकेऽयस्कार इत्यत्रेति भावः।

---

सूत्रम्
काशिका-वृत्तिः
एत ईद् बहुवचने ८।२।८१

अदसो दकारादुत्तरस्य एकारस्य ईकारादेशो भवति, दकारस्य च मकारः, बहुवचने बहूनामर्थानामुक्तौ। अमी। अमीभिः। अमीभ्यः। अमीषाम्। अमीषु। बहुवचने इत्यर्थनिर्देशो ऽयम्, पारिभाषिकस्य हि बहुवचनस्य ग्रहणे अमी इत्यत्र न स्यात्।
लघु-सिद्धान्त-कौमुदी
एत ईद्बहुवचने ३५९, ८।२।८१

अदसो दात्परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ। अमी। पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे। अमुम्। अमू। अमून्। मुत्वे कृते घिसंज्ञायां नाभावः॥
न्यासः
एत ईद्रबहुवचने। , ८।२।८१

"बहुवचन इत्यर्थविर्देशोऽयम्()" इति। अन्वर्थनिर्देश इत्यर्थः। एतदुक्तं भवति--नेदं पारिभाषिकस्य बहुवचनस्य ग्रहणम्(), किं तर्हि? अन्वर्थस्य ग्रहणम्()--बहुनामर्थानामुक्तिः बहुवचनमिति। किं कारणमेवं व्याख्यातम्()? इत्याह--"पारिभाषिकस्य हि" इत्यादि। यदि पारिभाषिकस्य बहुवचनस्येदं ग्रहणं स्यात्(), अमी इत्यत्र न स्यात्()। न ह्रत्रैकारात्? परं पारिभाषिकं बहुवचनमस्ति। अन्वर्थग्रहणे त्वत्रापि बहुनामर्यानामभिधानमस्तीति सिध्यति। अन्वर्थग्रहणं तु व्याप्तिन्यायाल्लभ्यते--एव इति एकारस्य स्थानिवत्त्वं यथा विज्ञायेत। "एः" इत्युच्यमाने, इकारस्यापि स्थानित्वमाशङ्क्येत। किञ्च स्यात्()? अद्र()आदेशे कृते तदवयव स्येकारस्य यणादेशो बाधितः स्यात्()। ईदिति तकारो

मुखसुखार्थः॥

बाल-मनोरमा

एत ईद्बहुवचने , ८।२।८१

तत्र दकारादेकारस्य ऊत्त्वे प्राप्ते एत ईत्। "अदसोऽसेर्दादु दो मः" इत्यस्मात् "अदसो दा"दिति "दो मः" इति चानुवर्तते। तदाह-अदस इत्यादिना। बह्वर्थोक्ताविति। सूत्रे बहुवचनशब्दो यौगिकः। पारिभाषिकस्य ग्रहणे तु अमीभिरित्यादिसिद्धावपि अमी इति न सिध्येत्, "अदे" इत्येकारस्य बहुवचनतया तत्परकत्वाऽभावादिति भावः। ननु औजसादिषु त्यदाद्यत्वे पररूपे च उत्त्वमत्वयोः कृतयोरमुऔ अमुअः इत्यादि स्यात्। मुत्वस्याऽसिद्धत्वान्न "यणित्याशङ्क्य आह--पूर्वत्रेति। विभक्तिकार्यमिति। त्यदाद्यत्वादिकमित्यर्थः। यदि तु पूर्वत्रासिद्ध मित्यत्र "कार्याप्रवृत्तेरावश्यकतया परत्वात्रैपादिके मुत्वे कृते सति उत्वस्थानिनोऽकारस्यापहारे सति, पश्चान्मुत्वेऽभावप्रतियोगित्वारोपेऽपि "देवदत्तस्य हन्तरि हते सति देवदत्तस्य न पुनरुन्मज्जन"मिति न्यायेन स्थानिभूतस्य दकारादकारस्याऽभावाद्वृद्धिगुणादि न स्यात्। शास्त्राऽसिद्धत्वपक्षे तु यद्यत्रैपादिकं शास्त्रं प्रवृत्त्युन्मुखं तत्तच्छास्त्र एवाऽभावारोपसम्भवात्पूर्वशास्त्रप्रतिबन्धकस्य परशास्त्रस्य उच्छेदबुद्धौ सत्यां "विप्रतिषेधे परं कार्य"मिति न प्रवर्तते। तदुक्तं "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये"ति। ततश्च स्थानिनोऽकारस्य निवृत्त्यभावाद्वृद्धिगुणादिप्रवृत्तिर्निर्बाधा। एतच्च "पूर्वत्रासिद्ध"मित्यत्र "अचः परस्मिन्" इत्यत्र "षत्वतुकोरसिद्धः" इत्यत्र च भाष्ये स्पष्टम्। प्रपञ्चितं च शब्देन्दुशेखरे शब्दरत्ने च इत्यास्तां तावत्। अमुमिति। अदस् अम् इति स्थिते त्यदाद्यत्वं, पररूपम्, अमि पूर्वः, उत्वमत्वे इति भावः। अमू इति। द्वितीयाद्विवचनं प्रथमाद्विववचनवत्। अमूनिति। शसि, त्यदाद्यत्वं, पररूपं, पूर्वसवर्णदीर्घः, नत्वम्, उत्वमत्वे इति भावः। तृतीयैकवचने अदस् आ इति स्थिते त्यदाद्यत्वं, पररूपम्, उत्वमत्वे च सिद्धवत्कृत्याह--नाभाव इति। "शेषो घ्यसखी"ति घिसंज्ञायाम् "आङो नाऽस्त्रिया"मिति नाभाव इत्यर्थः। ननु "पूर्वत्रासिद्ध"मिति विभक्तिकार्यं प्राक्()पश्चादुत्वमुत्वे इति प्रागुक्तम्। सम्प्रति तु मुत्वे कृते घिसंज्ञायां नाभाव इत्युच्यते। तदिदं पूर्वाऽपरविरुद्धमिति चेत्सत्यम्। यद्विभक्तिकार्यं प्रति मुत्वं निमित्तं न भवति, तदेव विभक्तिकार्यं प्राक् भवति, न त्वन्यदिति विवक्षितम्। इह च नाभावं प्रति मुत्वं निमित्तमिति प्रथमं मुत्वप्रवृत्तेरविरोधः, "न मु ने" इत्यारम्भसामर्थ्यादित्यलम्।

तत्त्व-बोधिनी

न ङिसंबुद्ध्योः ३१२, ८।२।८१

निषेधसामर्थ्यादिति। यदा तु "न ङिसंबुद्ध्यो"रित्यत्र षष्ठ()न्ततामश्रित्य "ङ्यन्तस्य संबुद्ध्यन्तस्य च पदस्य ने"ति व्यख्यायते, तदा प्रत्ययलक्षणं सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्तव्य इत्याहुः। पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याह--न चेति। षाष्ठीं परिभाषामिति। "वाह ऊ"डित्यत्र ज्ञापतत्वेन तद्देशस्थत्वादिति भावः।

तत्त्व-बोधिनी

एत ईद्बहुवचने ३९०, ८।२।८१

एत ईद्बहुवचने। परिभाषिकस्य बहुवचनस्य ग्रहणे "अमीभि रित्यादिसिद्धावपि जसु "अमी ति न सिध्येत्। न ह्यत्र एकारस्य बहुवचनपरताऽस्ति। अतो व्याचष्टे--बह्वार्थोक्ताविति। विभक्तिकार्य प्रागिति। "त्यदादीनामः"इत्यादिसपादसप्ताध्यायीं प्रति "अदसोऽसे"रिति त्रैपादिकसास्त्रस्याऽसिद्धत्वात्, अकृते विभक्तिकार्ये सान्तत्वादुत्वमत्वयोरप्रवृत्तेश्चेति भावः। यदि तु "पूर्वत्रासिद्ध"मित्यत्र कार्याऽसिद्धत्वमिष्येत, तर्हि "अमू""अमु"मित्यादि

न सिद्ध्येत्। त्यदाद्यत्वे कृते पररूपात्प्रागेवोत्वमत्वयोः कृतयोः पश्चान्मुत्वकार्यस्याऽसिद्धतया "अतो गुणे"इति पररूपे "अमौ"इत्यादि रूपसिद्धिपर्सङ्गात्। किंच चर्म वस्ते "चर्मवः", सुष्टु वस्ते "सुवः"। अत्र परत्वात्स्कोरिति सलोपे तस्याऽसिद्धत्वा४द्धल्ह्यादिलोपे उक्तरूपं न सिध्यतीति कार्यऽसिद्धि पक्षो हेय एव। अत्र वदन्ति--"सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद्यां विहितमसिद्ध"मिति प्रक्रियाग्रन्थोक्तकार्याऽसिद्धिपक्षे "मनोरथः" "अमु"मित्यादि न सिद्ध्येदिति केचुत्। तन्न। प्रक्तियाग्रन्थोक्तेर्हि कार्य प्रति--कार्ये कर्तव्ये, असिद्धं--पूर्वमेव न जातमित्यर्थः। शस्त्राऽसिद्धत्वेऽप्येवमेव फलितोऽर्थः। तदुक्तं कैयटेन---"यच्छास्त्रमुच्चारितं तस्याऽसिद्धत्वमशक्यं कर्तुमित्यसिद्धवचनादतिदेश आश्रीयते"इति। तथा चातिदशेन कार्याऽप्रवर्तकत्वरूपोऽसिद्धधर्मः शास्त्रेऽतिदिश्यमानः कार्याऽसिद्धत्व एव फलति। एवं च "मनोरथ"इत्यत्र उत्वे कर्यव्ये रेफलोपस्य पूर्वमेवाऽप्रवृत्तौ रोरुत्वस्याऽपर्तीघातान्मनोरथसिद्धिरस्यूहा। तथा "अमु"मित्यादिसिद्धिरिति कार्याऽसिद्धपक्षे न काप्यनुपपत्तिरिति।

---

सूत्रम्

काशिका-वृत्तिः

वाक्यस्य टेः प्लुत उदात्तः ८।२।८२

अधिकारो ऽयम्। वाक्यस्य टेः इति, प्लुतः इति च, उदात्तः इति च, एतत् त्रयम् अप्यधिकृतं वेदितव्यमापादपरिसमाप्तेः। यतिति ऊर्ध्वम् अनुक्रमिष्यामः वाक्यस्य टेः प्लुत उदत्तः इत्येवं तद् वेदितव्यम्।

न्यासः

वाक्यस्य टेः प्लुत उदात्तः। , ८।२।८२

"वाक्यग्रहणम्()" इत्यादि। असति हि वाक्यग्रहणे वाक्ये यावन्ति पदानि तेषां सर्वेषामेव प्लुतः प्रसज्येत। वाक्यग्रहणे त्वन्त्यस्यैव भविष्यति, नानन्त्यस्य। अन्त्यस्यैव हि पदस्य यष्टिः स वाक्यटिर्भवति, न त्वितरस्य। तस्मादनन्त्यस्य पदस्य प्लुतौ मा भूत्(), अन्त्यस्यैव यता स्यादित्येवमर्थम्()। अनन्त्यस्य कस्मान्न भवति? अनिष्टत्वात्()। न हि पदाधिकारस्य निवृत्तिरिष्यते, तथा हि प्रागुक्तम्()--पदाधिकारः प्रागपदान्ताधिकारादिति। असत्यत्वाच्च; न हि वाक्यग्रहणेन वाक्ये यावन्ति पदान्ति तेषां सर्वेषाम्()। एक एव हि वाक्यस्य टिः, स नियोगतः पदस्यापि भवति, अतो न युक्ता वाक्यस्य पदाधिकारनिवृत्त्यर्थता। अथ टिग्रहणं किमर्थम्(), यावताऽलोऽन्त्यपरिभाषयैव (१।१।५२) आयुष्मानेधि देवदत्त३ इत्यत्र टेः प्लुतो भविष्यति? इत्यत्र आह--"टिग्रहणम्()" इत्यादि। असति हि टिग्रहणे यथा "ह्रस्वो नपुंसके प्रातिपदिकस्य" १।२।४७ इति ह्रस्वग्रहणेघ समुत्थापिते "अचः" १।२।२८ इत्येतस्मिन्नचा प्रातिपदिके विशेषिते तस्याजन्तस्यैव ह्रस्वत्वं भवति, नानजन्तस्य--सुवाग्? ब्राआह्णकुलमिति; तथेहापि प्लुतग्रहणेन "अचः" इत्येतस्मिन्नुपस्थापिते सत्यचा वाक्ये विशेषितेऽजन्तस्यैव प्लुतः स्यात्(), न व्यञ्जनान्तस्य। टिग्रहणे तु सति टिसंज्ञकेनाज्विशेष्यते, न त्वचा टिसंज्ञकः। यदि ह्यचा टिसज्ञको विशेष्येत, ततोऽजन्तो यष्टिस्तस्य प्लुतः स्यात्(); तथा चानर्थकं हि टिग्रहणं स्यत्()। विनापि तेनाचा वाक्ये विशेषिते तस्याजन्तस्य प्लुतो भवन्नलोऽन्त्यपरिभाषया १।१।५१ऽन्त्यस्याचः सिध्यति। तस्माट्टिग्रहणस्य नानर्थक्यमिति। टिसंज्ञकेनाज्विशेष,()यते--टिसंज्ञको योऽजिति। एवं च सति व्यञ्जनस्यापि टेर्योऽच्? तस्यापि प्लुतः सिध्यति। "अग्निचि३त्त" इति। अव्यञ्जनान्तस्यापि व्यपदेशिवद्भावेन--देवदत्त३ इति। तस्माद्व्यञ्जनान्तस्यापि टेरचः प्लुतो यथा स्यादित्येवमर्थं टिग्रहणं कृतम्()। उदात्तग्रहणं तु स्वरान्तरनिवृत्त्यर्थम्(), तच्चानन्तोदात्तं प्रयोजयति; योह्यन्तोदात्तस्तत्र स्थानिवद्भावादेवान्चोदात्तो भवति॥

बाल-मनोरमा

वाक्यस्य टेः प्लुत उदात्तः ९४, ८।२।८२

अथ प्लुतप्रगृह्या इति सूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तप्लुतप्रकरणमारभते--वाक्यस्य टेः। "पदस्ये"त्यधिकृतम्। वाक्यस्य टेः पदावयवस्य प्लुतो भवति, सच उदात्तो भवतीत्यर्थः। अत्र पदस्येत्यनुवृत्तिर्नश्छव्यप्रशानित्याद्युत्तरार्था, इहानुवृत्तिविच्छेदे उत्तरत्रानुवृत्तेरसंभवात्। वाक्यस्येत्यभावे पदस्य टेरित्युक्ते यावन्ति वाक्ये पदानि तावतां टेः प्लुतः प्रसज्येत। "वाक्यस्ये"त्युक्ते तु वाक्यस्य टिरन्त्यस्यैव पदस्य संभवतीति न दोषः। टिग्रहणाभावे प्लुतश्रुत्याऽचश्चेति परिभाषयाऽच इत्युपस्थितौ तस्य वाक्यविशेषणत्वात्तदन्तविधावजन्तस्य वाक्यस्येत्यर्थे सत्यलोऽन्त्यपरिभाषया वाक्यान्तस्याचः प्लुत इति पर्यवसानादग्रामं गच्छाग्निचि ३ दित्यादिहलन्तवाक्येषु प्लुतो न स्यात्। टिग्रहणे तु तत्सामर्थ्यादेव टिनाऽचो विशेषणाट्टेरवयवस्याचः प्लुत इत्यर्थो लभ्यत इति न दोष इति भाष्ये स्पष्टम्। इत्यधिकृत्येति। "प्लुतविधय आरभ्यन्ते" इति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

वक्ष्यति प्रत्यभिवादे ऽशूद्रे ८।२।८३

अभिवादये देवदत्तो ऽहम्, भो आयुष्मानेधि देवदत्त३। पदाधिकारो ऽनुवर्तते एव। वाक्यग्रहणम् अनन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थम्। टिग्रहणं व्यञ्जनान्त्यस्य अपि टेरचः प्लुतो यथा स्यात्, अग्निचि३तिति। प्रत्यभिवादे ऽशूद्रे ८।२।८३। प्रत्यभिवादो नाम यदभिवाद्यमानो गुरुराशिषं प्रयुङ्क्ते, तत्र अशूद्रविषये यद् वाक्यं वर्तते तस्य टेः प्लुत उदात्तो भवति। अभिवादये देवदत्तो ऽहम्, भो आयुष्मानेधि देवदत्त३। अशूद्रे इति किम्? अभिवादये तुषजको ऽहन्, भो अयुष्मानेधि तुषजक। स्त्रियाम् अपि प्रतिषेधो वक्तव्यः। अभिवादये गार्ग्यहम्, भो आयुष्मती भव गार्गि। असूयके ऽपि केचित् प्रतिषेधम् इच्छन्ति, अभिवादये स्थाल्यहं भोः, आयुष्मानेधि स्थालिन्। यावच् च तस्य असूयकत्वं न ज्ञायते तावदेव प्रत्यभिवादवाक्यम्। तस्मिंस्त्वसूयकत्वेन निर्ज्ञाते प्रत्यभिवादः एव न अस्ति, कुतः प्लुतः। तथा ह्युक्तम् असूयकस्त्वं जाल्म, न त्वं प्रत्यभिवादनम् अर्हसि, भिद्यस्व वृषल स्थालिनिति। अभिवादनवाक्ये यत् सङ्कीर्तितं नाम गोत्रं वा, तद् यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्र प्लुतिः इष्यते। इह न भवति, देवदत्त कुशल्यसि, देवदत्त आयुष्मानेधि इति। भो राजन्यविशाः वेति वक्तव्यम्। भो अभिवादये देवदत्तो ऽहम्, आयुष्मानेधि देवदत्त भोः३, आयुष्मनेधि देवदत्त भोः। राजन्य अभिवादये इन्द्रवर्मा अहं भोः, आयुष्मानेधि इन्द्रवर्म३न्, आयुष्मानेधि इन्द्रवर्मन्। विश् अभिवादये इन्द्रपालितो ऽहम् भोः, आयुस्मानेधि इन्द्रपालित३, आयुष्मानेधि इन्द्रपालित।

न्यासः

प्रत्यभिवादेऽशूद्रे। , ८।२।८३

"यदभिवाद्यमानो गुरुः" इत्यादि। अत्र सामान्योपक्रमेण विशेषस्यानभिधानाद्? यदिति नपुंसकलिङ्गेन निर्देशः। "आयुष्मानेधि देवदत्त३" इति। इदमत्रोदाहरणम्(); प्रत्यभिवादवाक्यत्वात्()। अत्र "अभिवादये देवदत्तोऽहम्()" इत्येतत्तु गुरोरभिवाद्यमानतां दर्शयितुमुपन्यस्तम्। अभिवाद्यमानो गुरुर्यामाशिषं प्रयुङ्क्ते स प्रत्यभिवादः। तत्रावश्यं गुरोरभिवाद्यमानता दर्शयितव्या; अन्यथा प्रत्यभिवादो न गम्येत। "एधि" इति। भवेत्यर्थः। "अस भुवि" (धा।पा।१०६५), लोट्(), मध्यमपुरुषैकवचनम्(), "सेह्यपिच्च" ३।४।८७, ध्वसोरेद्धावभ्यासलोपश्च" ६।४।११९ इत्येत्वम्(), "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः, "हुझल्भ्यो हेर्धिः" ६।४।१०१ इति धिरादेशः। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--"सिपि धातो रुर्वा" ८।२।७४ इत्यतो मण्डूकप्लुतिन्यायेन वेत्यनुवत्र्तते, सा च व्यवस्थितविभाषा, तेन स्त्रियां न भविष्यतीति। "असूयकेऽपि" इति। असूयतीत्यसूयकः। यो गुरुमसाध्व्या प्रवृत्त्या सामर्षं करोति स उच्यतेऽसूयक इति। "तस्मिन्()" इत्यादिना प्रतिषेध इष्यमाणोऽपि न वक्तव्य इति दर्शयति। यदा

ह्रसावभिवादयिताऽसूयकत्वेन न निज्ञ्रायते, तदा तेनाभिवाद्यो गुरुः प्रत्यभिवादने तस्य प्लुतं करोत्येव। यदा तु "असूयकोऽयं मां विहेडयितुकामः" इत्येवं विज्ञातो भवति, तदात्र प्रत्यभिवादना नास्त्येवेति किं प्रतिषेधेन! कथं पुनज्ञ्रायते--तत्रासूयकत्वेन निज्ञ्राते प्रत्यभिवादो नास्ति? इत्याह--"तथा च" इत्यादि। केनाप्यविनीतेनोपगम्याविधिनाभिप्रायेणाभिवादयेऽयं भोः स्थालीत्येवमभिवादिते गुरुस्तस्यासूयकत्वमज्ञात्वा स्थालिञ्शब्दोऽयमस्य संज्ञेति मत्वा प्रत्यभिवादयन्? प्लुतं प्रयुक्तवान्()--"आयुष्मानेधि स्थालि३न्()" इति। अथ सोऽविनीत उक्तवान्()--नैष मम संज्ञा, मया दण्डिन्यायो विवक्षितः। ततो गुरुः प्लुतरहितं प्रत्यभिवादनं कृतवान्()--"आयुष्मानेधि स्थालिन्निति। पुनः स उक्तवान्()--न न मया दण्डिन्यायो विवक्षितः, संज्ञा ममैषेति; अथ स गुरुरसूयकत्वमस्य विज्ञायोनतवान्()--"असूयकस्त्वं जाल्म, न त्वं प्रत्यभिवादमर्हसि, भिद्यत्वं वृषल स्थालिन्()" इति। अथाभिवाद्यमानो यदा देवदत्त कुशल्यसि, देवदत्तायुष्मानेधीत्येवं प्रत्यभिवादं प्रयुङ्क्ते तदा कस्मात्? प्लुतो न भवति? इत्याह--"अभिवादनवान्ये" इत्यादि। अभिवाद्यतेऽनेनेत्यभिवादनम्(), अभिवादनञ्च तद्वाक्यञ्चेत्यभिवादनवाक्यम्()। तत्र तावत्? सङ्कोर्त्तितं संशब्दितं नाम देवदत्तोऽहमित्येवम्(), गोत्रम्()--वात्स्योऽहमित्येवम्()। यद्यत्र प्रत्यभिवादवाक्यस्यान्ते=अवसाने प्रयुज्यते तत्रायं प्लुत इष्यते। देवदत्त कुशल्यसीत्यादौ तु यदभिवादनवाक्ये सङ्कीर्तितं नाम देवदत्तशब्दः, तत्? प्रत्यभिवादनवाक्यस्यादौ प्रयुक्तम्(), नावसाने। तस्मात्? प्लुतो न भवति। कुतः पुनरेतल्लभ्यते? वेत्यनुवृत्तेः, व्यवस्थितविभाषाविज्ञानाच्च, प्राधान्याद्वा। इह हि प्रधाने कार्यसम्प्रत्ययात्? प्रधानस्य वाक्यस्यान्ते वत्र्तमानस्य टेः प्लुतेन भवितव्यम्()। प्राधान्यञ्च पदस्यार्थद्वारकम्()। प्रधानस्यार्थस्य यद्वाचकं पदं तत्? प्रधानं ["प्रधाने"--कां।पाठः] चार्थोऽभिवादयिता, तदनुग्रहार्थत्वात्? प्रत्यभिवादस्य। तथा ह्रभिवादयितुरनुगुहीतार्यं गुरुः प्रत्यभिवादं प्रयुङक्ते। तस्मादभिवादयिता संस्कार्यः, कुशलिताऽऽयुष्मत्तादीनि तस्यैव संस्कारकाणि। अतोऽभिवादयिता संस्कार्यत्वात्? प्रधानम्(), तस्य वाचकं पदं संज्ञाशब्दो गोत्रशब्दश्चेति तस्यैव वाक्यान्ते वत्र्तमानस्य टेः प्लुतो भवति। यद्यपि तिङन्तवाच्योऽर्थः साध्यः, न तु तस्य साध्यत्वमिह प्राधान्येनाश्रितम्(), किं तर्हि? संस्कारकत्वमेव, तस्मान्न तस्यापि प्राधान्यम्()। "भोराजन्यविशाम्()" इत्यादि। भो इति--स्वरूपग्रहणम्(), राजन्य इति--क्षत्रियनाम्नः, विश इति--वैश्यनाम्नः। अत्र भोःशब्दस्याप्राप्ते विभाषा, असंज्ञागोत्रशब्दत्वात्()। इतरेषां तु प्राप्ते; संज्ञाशब्दत्वात्()॥

बाल-मनोरमा

प्रत्यभिवादेऽशूद्रे ९५, ८।२।८३

प्रत्यभिवादेऽशूद्रे। "वाक्यस्य टेःप्लुत उदात्त" इत्यधिकृतम्। अशूद्र इति च्छेदः। न शूद्रः अशूद्रः=द्विजातिः। तद्विषयः प्रत्यभिवादः=विधिवदभिवादयमानं प्रति विधिवदाशीर्वचनम्। भावे घञ्। अस्मिन् प्रत्यभिवादे विषये यद्वाक्यं तस्य टेः प्लुतः स्यात्स चोदात्त इत्यर्थः। अभिवादविधिमाह--आपस्तम्बः-"दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राआह्मणोऽभिवादयीत, उरःसमं राजन्यः, मध्यसमं वैश्यः, नीचैः शूद्रः। "प्राञ्जलि" इति। "तिष्ठन्तापातरभिवादमभिवादयीतासावहं भोः" इति च। "असा" विति स्वनामनिर्देशोऽभिमतः। "देवदत्तोऽहं भो" इति ब्राउवन् अभिवादम्ाशीर्वचनम्। अभिवदायीत=वक्तव्यत्वेन विज्ञापयेत्। ततश्च यथा वर्णं दक्षिणं वाहुं प्रसार्य "अभिवादये देवदत्तोऽहं भोः" इति ब्राऊयादित्यर्थः। अयमभिवादनप्रकारः। प्रत्यभिवादनप्रकारस्तु मनुना दर्शितः-आयुष्मान् भव सौम्येति विप्रो वाच्योऽभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः॥" इति। अत्र नाम्नो।ञन्ते इति वचनादायुष्मान् भव सौम्येत्यनन्तरमबिवादयमानस्य नाम संबुद्ध्यन्तं प्रयोक्तव्यमिति स्मृत्यन्तरसिद्धमनुगृहीतं भवति। अस्य नाम्नोऽन्ते अक#आरश्चा वाच्यः=प्रयोज्यः। तस्मादकारात्पूर्वाक्षरः=पूर्वोऽच् प्लुतः प्रयोक्तव्य इत्यर्थः। एवंच "आयुष्मान् भव सौम्य देवदत्त३ अ" इति प्रत्यभिवादवाक्यं संपन्नमिति स्थितिः। "अभिवादये देवदत्तोऽहट"मिति अभिवादवाक्यप्रदर्शनम्। भो इत्यस्याप्युपलक्षणम्। आयुष्मान् भव देवदत्त ३ इति प्रत्यभिवादवाक्यप्रदर्शनम्। "अभिवादये" इत्यस्य

अबिवादमाशीर्वचनं वक्तव्यत्वेन विज्ञापयामीत्यर्थः। भवेत्यनन्तरं सौम्यशब्दस्य देवदत्त इत्यनन्तरमकारस्याप्युपलक्षणम्। अत्र देवदत्तशब्दे तकारादकारस्य प्लुतः। आयुष्मत्त्वस्य विधेयत्वात्संबोधनविभक्त्यभावः। अत्र प्रत्यभिवादवाक्ये शर्मान्तं ब्राआह्णस्येत्यादि न भवति, एचोऽप्रगृह्यस्येति सूत्रे शर्मादिशब्दं विना केवलस्य नाम्नो भाष्ये उदाहरणात्, उक्तमन्वादिस्मृतिविरोधाच्च। "अशूद्र इति किम्?"कुशल्यसि तुषजक" इति भाष्यम्। एवंच शूद्रविषये आयुष्मान् भवेति न प्रयोक्तव्यमिति गम्यते। "अशूद्रस्त्र्यसूयकेष्विति वक्तव्य"मिति वार्तिकम्। शूद्रविषय एव प्लुतप्रतिषेधो न भवति, किंतु शूद्रवत्स्त्रीविषये असूयकविषयेऽपि प्लुतप्रतिषेधो भवतीति वक्तव्यमित्यर्थः।

तत्र शूद्रविषये उदाह्यतम्। स्त्रीविषये वार्तिकं विभज्यार्थतः संगृह्णाति--स्त्रियां नेति। स्त्रीविषयकप्रत्यभिवादवाक्ये उक्तो विधिर्न भवतीत्यर्थः। "अभिवादये गार्ग्यह"मिति अभिवादनवाक्ययोर्नाम्नो गोत्रस्य च विकल्पः। तदाह-नाम गोत्रं वेति। अत्र नामशब्देन "द्वादशेऽहनि पिता नाम कुर्या"दिति विहितं नामैव गृह्यते। अत एव "आयुष्मान्भव दण्डि"न्नित्यादौ प्लुतो नेति भाष्ये स्पष्टम्। "नाम गोत्रं वे"ति परिगणनस्य प्रयोजमाह--नेहेति। आयुष्मानेधीति। अस्तेस्सिप् हिः। ध्वसोरित्येत्वं, हेर्धिः। "श्नसोरल्लोपः"। अत्र धकारादिकारस्य न प्लुतः, अनामत्वादगोत्रत्वाच्च।

भोराजन्यविशाम्। भोस्शब्दस्य राजन्यवैश्यवाचकनाम्नोश्च टेः प्लुतो वा स्यादिति वक्तव्यमित्यर्थः। भोस्शब्दस्याऽप्राप्ते इतरयोस्तु नामत्वात्प्राप्ते विभाषेयम्। तत्र भोस्()शब्दे यथा-आयुष्मनेधि बोः ३। देवदत्त भोः" इति भाष्यम्। अत #एव प्रत्यभिवादवाक्यान्ते नाम्नोऽनन्तरं भोश्शब्दस्य भवशब्देन एधिशब्दस्य च प्रयोगाविकल्पो गम्यते। राजन्ते यथा-आयुष्मानेधि इन्द्रवर्म३न्, इन्द्रवर्मन्। वैश्ये यथा-आयुष्मनेधि इन्द्रपालित३, इन्द्रपालित इति भाष्यम्। अत एव भाष्यात् प्रत्यभिवादवाक्ये शर्मान्तं ब्राआह्णस्य वर्मान्तं क्षत्रियस्य पालितान्तं वैश्यस्येति विधयोऽपि प्रवर्तन्त इति गम्यते। उक्तभाष्यमन्वादिस्मृतिविरोधाद्विकल्पः। अत्र भाष्ये अपर आहेत्युक्त्या प्रत्यभिवादे सर्वस्यैव नाम्नो भोश्शब्द आदेशो वक्तव्य इति पठित्वा आयुष्मानेधि भो इत्येतावदेव सर्वत्र प्रत्यभिवादवाक्यमित्युक्तम्।

तत्त्व-बोधिनी

प्रत्यभिवादेऽशूद्रे ७६, ८।२।८३

प्रत्यभिवादे। इह "प्रत्यभिवाद"शब्देन आशीर्वचनमुच्यते। अशूद्रे किम्?, अभिवादये तुषजकोऽहम्भोः। आयुष्मानेधि तुषजक। आयुष्मानेधीति। अस्तेः सेर्हिः। "ध्वसो"रिति एत्वम्। "हुझल्भ्यो हेर्धिः"। "श्नसोरल्लोपः"। नाम गोत्रं वेति। गोत्रस्योदाहरणम्-"अभिवादये गार्ग्योऽहम्भोः, आयुष्मानेधि गार्ग्या" इत्यूह्यम्।

---

सूत्रम्

काशिका-वृत्तिः

दूराद् धूते च ८।२।८४

दूराद् धूते यद् वाक्यं वर्तते तस्य टेः प्लुतो भवति, स च उदात्तः। आह्वानं हूतम्, शब्देन सम्बोधनम्। आगच्छ भो माणवक देवदत्त३। आगच्छ भो माणवक यज्ञदत्त३। दूरं यद्यप्यपेक्षाभेदादनवस्थितम्, तथापि हूतापेक्षं यत् तदाश्रीयते इति यत्र प्राकृतात् प्रयत्नाद् यत्नविशेषे आश्रीयमाणे शब्दः श्रूयते तद् दूरम्। हूतग्रहण च सम्बोधनमात्रोपलक्षणार्थं द्रष्टव्यम्। तेन यत्र अप्याह्वानं न अस्ति तत्र अपि प्लुतिर् भवति, सक्तून् पिब देवदत्त३, पलायस्व देवदत्त३ इति। अस्याश्च प्लुतेरेकश्रुत्या समावेशः इष्यते। दूरातिति किम्? आगच्छ भो माणवक देवदत्त। दूरादाह्वाने वाक्यस्यान्ते यत्र सम्बोधनपदं भवति तत्र

अयं प्लुतः इष्यते, तेन इह न भवति, देवदत्त आगच्छ।

लघु-सिद्धान्त-कौमुदी

दूराद्धूते च ४९, ८।२।८४

दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा॥

न्यासः

दूराद्धूते च। , ८।२।८४

"दूरात्()" इति। आरात्()। "दूरान्तिकेभ्यो द्वितीया च" २।३।३५ इति पञ्चमी। ह्वानं हूतम्()। भावे निष्ठा। दूरादित्युच्यते, दूरञ्चानवस्थितम्()। यवेवालस्यापहतं प्रति दूरं भवति तदेवोत्साहसम्पन्नं प्रत्यन्तिकम्()। एवं हि कश्चित्? कञ्चिदाह--य एष पार्(ातः करकस्तमानयेति। स आह-उत्थाय गृहाण, दूरं गन्तुं न शक्ष्यामीति। अतो दूरस्यानवस्थितत्वान्न ज्ञायते--कस्यामवस्थायां प्लुत्या भवितव्यमिति। अत आह--"दूरम्()" इत्यादि। हूतं ह्वानम्()। तदपेक्षं यद्()दूरं तदिहाश्रीयते। इतिकरणो हेतौ। यस्माद्धूतापेक्षमिह दूरमाक्षीयते तस्मात्? प्राकृतात्? प्रकृतौ भवात्? प्रयत्नाद्यः प्रत्यत्नविशेषः प्राकृतयत्नादधिकस्तस्यिन्नाश्रीयमाणे यत्र शब्दाह्वानं तत्? श्रूयते तद्()दूरम्। ततो न भवति दूरस्यानवस्थितत्वमित्वभिप्रायः। अथेह कथं प्लुतः स्यात्()--सक्तून्? पिव देवदत्त३ इति? न शब्दमात्रं हूतम्(), अपि तु शब्दविशेधः, येन परत आगमने नियुज्यते स शब्दविशेषो हूतम्(), न च तदिहास्ति? इत्यत आह--"हूतग्रहणं च" इत्यादि। सम्बोधनं शब्दसाधनं हूतम्()। चशब्दस्तस्मादित्यर्थे। तेन तत्साध्यं सम्बोधनं लक्ष्यत इति हूतग्रहणं सम्बोधनमात्रोपलक्षणं वेदितव्यम्()। इहायं प्लुतोऽपि दूरात्? सम्बोधने विधीयते; एकश्रुतिरपि; "एकश्रुति दूरात्? सम्बुद्धौ" १।२।३३ इति; तत्रैवमेकत्र प्राप्नुवतामनेकेषां बाधाविकल्पसमुच्चयानामन्यतमेन भवितव्यम्(), अत्र न ज्ञायते--किमेतयोः समुच्चयो भवति? उत विकल्पः? आहोस्विदन्यतरस्य बाधेति? तत्परिज्ञानायाह--"अस्याश्च" ["अस्यां च"--प्रांउ। न्यासपाठः"] इत्यादि। बाधया तावन्न भवितव्यम्(); समानविषयत्वात्()। विषयभेदे हि सति बाध्यबाधकभावो भवति, तद्यथा--"कर्मण्यण्()"["तत्तथा"--प्रांउंयासपाठः] ३।२।१, "आतोऽनुपसर्गे कः" ३।२।३ इति; अत्र ह्रेकस्य विशेषो विषयः; अपरस्य सामान्यमित्यस्ति विषयभेदः। अनयोस्तु विशेषो नास्तीत्ययुक्ता ["नास्तीत्युक्ता--कांउ।पाठः] बाधा। विकल्पोऽप्ययुक्तः; असहप्राप्तेः। सहप्राप्तयोर्हि विकल्पो भवति, यथा--तच्यदादीनाम्()। न चैकश्रुत्यपेक्ष्येह सहप्राप्तिरस्ति; प्लुतस्यासिद्धत्वात्()। तस्मात्पारिशेष्यात्? समादेश एव भवति। समावेशः पुनरत्रैकस्मिन्? वाक्ये प्रवृत्तिः, न त्वेकस्मिन्नवयवे; दिरुद्धयोरेकस्मिन्? प्रवृत्तेरसम्भवात्()। वाक्यस्य त्वेनेकावयवात्मकत्वात्()। टेरचः प्लृतो भवति। अवशिष्टस्य त्वेकश्रुतिरिति युज्यते समावेशः॥

बाल-मनोरमा

दूराद्धूते च ९६, ८।२।८४

दूराद्धूते च। यत्र प्रदेशे स्थितस्य प्रयत्नोच्चारितं बोध्यमानो न श्रृणोति किं त्वधिकं प्रयत्नमपेक्षते तद्दूरम्। हूतमाह्वानं। भावे क्तः। तच्च सम्बोधनमिह विवक्षितम्। "वाक्यस्य टेः प्लुत उदात्त" इत्यधिकृतम्। तदाह-दूरात्सम्बोधन इत्यादिना। यदि तु आह्वानमेवात्रं विवक्षितं स्यात्तर्हि एहि देवदत्तेत्यादावाह्वानवाचकपदे सत्येव स्यात्। सम्बोधनपरत्वे तु तदन्यत्रापि भवतीत्यभि प्रेत्योदाहरति--सक्तूनिति।

तत्त्व-बोधिनी

दूराद्धूते च ७७, ८।२।८४

दूराद्धूते च। हूतमाह्वानं, तच्च संबोधनमात्रोपलक्षणमित्याह--दूरात्संबोधन इति। उपलक्षणतया व्याख्यानस्य फलमुदाहरति-सक्तन्पिवेत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

हैहेप्रयोगे हैहयोः ८।२।८५

हैहेप्रयोगे यद् वाक्यं वर्तते तत्र हैहयोः एव प्लुतो भवति। है३ देवदत्त। हे३ देवदत्त। देवदत्त है३। देवदत्त हे३। पुनर् हैहयोर् ग्रहणम् अन्त्ययोरपि यथा स्यात्।

न्यासः

हैहेप्रयोगे हैहयोः। , ८।२।८५

पूर्वसूत्रेण प्राधान्याद्? हूयमानस्यैव प्लुतो विहितः। प्राधान्यं तु तस्य तदभिमुखीकरणाय वाक्यप्रयोगात्()। अतो हैहयोर्न प्राप्नोति, एतदर्थोऽयमारम्भः। अथ पुनर्हैहयोग्र्रहणं किमर्थम्(), यावता विनापि तेन श्रुतत्वात्? तयोरेव भविष्यति? इत्याह--"पुनः" ["पुनस्त्वित्यादि"--कां।पाठः] इत्यादि। "हैहेप्रयोगे" इत्युच्यमाने "वाक्यस्य टेः प्लुत उदात्तः" ८।२।८२ इत्यधिकारादन्त्ययोरेव स्यात्(), नानन्त्ययोः; तयोरपि यता स्यादित्येवमर्थं पुनर्हैहेग्रहणम्(), हैहेग्रहणे प्रयोगग्रहणं चानर्थकयोरपि यथा स्यात्()। तदा चैतावनर्थको यदाऽऽमन्त्रितान्तम्()। तेनैवामन्त्रितार्थस्यावगमितत्वादर्थान्तस्य द्योत्यस्याभावात्? तावनर्थकौ भवतः। अन्ये त्वाहुः--निपातसमाहारावपि तौ स्तो हन्त हैह इति। तत्रासति प्रयोगग्रहणे तयोर्न स्यात्(); लाक्षणिकत्वात्()। तस्मात्? प्रयोगमात्रे लाक्षणिकयोरपि यथा स्यादित्येवमर्थं प्रयोगग्रहणमिति॥

बाल-मनोरमा

हैहेप्रयोगे हैहयोः ९७, ८।२।८५

हैहेप्रयोगे। है हे इत्यव्यये सम्बोधनद्योतके। तयोः प्रयोगे हैहयोः प्लुतः स्यादित्यर्थः। पूर्वसूत्रेण गुरोरनृत इत्यनेन च सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमिति व्याचष्टे--हैहयोरेवेति। हैहयोरेवेति नियमार्थमिति बावः। पाहि है३ राम, पाहि हे३ रामेत्यत्र हैहयोरेव प्लुतो न तु गुररोनृत इत्यन्त्यस्यापीत्येतद्धैहयोरित्यनेन लभ्यत इति यावत्। प्रयोगग्रहणाभावे वाक्यस्य टेरित्यधिकाराद्राम है३ राम हे३ इत्यत्रैव स्यादतः "प्रयोग"ग्रहणम्। ततश्चाऽनन्त्ययोरपि तयोः प्लुतो भवति।

---

सूत्रम्

काशिका-वृत्तिः

गुरोरनृतो ऽनन्त्यस्य अप्येकैकस्य प्राचाम् ८।२।८६

प्रत्यभिवादे ऽशूद्रे ८।२।८३ इत्येवम् आदिना यः प्लुतो विहितः, तस्य एव अयं स्थानिविशेषः उच्यते। ऋकारवर्जितस्य गुरोः अनन्त्यस्य, अपिशब्दादन्त्यस्य अपि टेः एकैकस्य सम्बोधने वर्तमानस्य प्लुतो भवति प्राचाम् आचार्याणां मतेन। देस्३वदत्त, देवद३त्त, देवदत्त३। य३ज्ञदत्त, यज्ञद३त्त, यज्ञदत्त३। गुरोः इति किम्? वकारात् परस्य मा भूत्। अनृतः इति किम्? कृष्णमि३त्र, कृष्णमित्र३। एकैकग्रहणं पर्यायार्थम्। प्राचाम् इति ग्रहणं विकल्पार्थम्। आयुष्मानेधि देवदत्त। तदनेन यदेतदुच्यते, सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्तव्यः इति तदुपपन्नं भवति।

लघु-सिद्धान्त-कौमुदी

अहन् ३६५, ८।२।८६

अहन्नित्यस्य रुः पदान्ते। अहोभ्याम्॥ दण्डि। दण्डिनी। दण्डीनि। दण्डिना। दण्डिभ्याम्॥ सुपथि। टेर्लोपः। सुपथी। सुपन्थानि॥ ऊर्क, ऊर्ग। ऊर्जी। ऊन्र्जि। नरजानां संयोगः। तत्। ते। तानि॥ यत्। ये। यानि॥ एतत्। एते। एतानि॥ गवाक्, गवाग्। गोची। गवाञ्चि। पुनस्तद्वत्। गोचा। गवाग्भ्याम्॥ शकृत्। शकृती। शकृन्ति॥ ददत्॥

न्यासः

गुरोरनृतोऽनन्त्यस्याप्यैकैकस्य प्राचाम्?। , ८।२।८६

प्रत्यभिवादादिषु वाक्यस्य टेः प्लुत उदात्तः। स एव तु ऋकारवर्जितस्य गुरोरनन्त्यस्य प्लुत उच्यते। "अव्त्यस्यापि टेः" इति। अनेनापिशब्दष्टेः तमुच्चयं करोतीति दर्शयति। यदि ह्यपिशब्देन गुरोः समुच्चयः क्रियते, अनन्त्यस्यापि,गुरोरन्त्यस्यापीति, तदानेन गुरावनन्त्ये प्लुतः। लघुरन्त्यः पूर्वेण प्लुत एव। ततश्च द्वयोः प्लुतयोः श्रवणं युगपत्? प्रसज्येत। न च "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इति वचनान्न भविष्यतीति शक्यं वक्तुम्(); तस्मिन्? कत्र्तव्ये प्लुतस्यासिद्धत्वात्()। यदा टिसंज्ञकोऽपिशब्देन समुच्चीयते तदानेनैव सूत्रेणान्त्यस्य[सूत्रेणानन्त्यस्य--प्रां३।पाठः] गुरोरनन्त्यस्य च टेः प्लुतो विधीयते। तत्रैकैकस्येति वचनाद्यथानन्त्यस्य पर्यायो न भवति, तथान्त्यस्यापीति न भवति यौगपद्यप्रसङ्गः। "एकैकग्रहणम्()" इत्यादि। यद्येकैकग्रहणं न क्रियत, तदा पक्षे युगपदेव सर्वेषां प्रसज्येत। तस्मात्? पर्यायेण यथा स्यादित्येनमर्थमेकैकग्रहणम्()। एतच्च "यथोद्देशं संज्ञापरिभाषम्()" (व्या।प।५९) इत्याश्रित्य कृतमिति वेदितव्यम्()। दर्शनान्तरे "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इत्यस्योपस्थाने सति न प्लुतयोद्र्वयोर्यौगपद्यप्रसङ्गः। अथ प्राचामिति किम; यावतैकैकग्रहणादेव विभाषा सिध्येत्()? इत्यत आह--"प्राचाम्()" इति। सर्वस्य प्लुतस्येत्यभिप्रायः। अत एवाह--"तदनेन" इत्यादि। अपायहेतुमविमृश्य प्रवृत्तिः=साहसम्()॥

बाल-मनोरमा

गुरोरनृतोऽनन्त्य्स्याप्येकैकस्य प्राचाम् ९८, ८।२।८६

गुरोरनृतः। "दूराद्धूते चे"त्यनुवर्तते। "वाक्यस्य टेः प्लुत उदात्त" इत्यधिकृतं। दूरात्सम्बोधने यद्वाक्यं तत्र सम्बोध्यमानवाचकं यत्पदं तदवयवस्य ऋकारभिन्नस्याऽनन्त्यस्य गुरोः प्लुतः स्यात्, अन्त्यस्य तु गुरोरगुरोश्च स्यादित्यर्थः। टेरपिना समुच्चयात्। तदाह--दूरादित्यादिना। दे३वदत्तेत्यादिषु सर्वत्र "एही"ति शब्दः प्राग्ध्याहर्तव्यः। अन्यथा "एकतिङ् वाक्य"मिति वाक्यत्वानुपपत्तेः। पर्यायार्थमिति। अन्यथा सर्वेषां गुरूणां युगपत् प्लुतः स्यादिति भावः। इह प्राचामिति। "गुरोरनृतोऽनन्त्यस्याप्येकैकस्ये"त्येकं वाक्यं, "प्राचा"मित्यन्यत्। तत्र "प्लुत" इत्येवानुवर्तते। प्राचां मते प्लुतः स्यान्नान्यमते इति फलति। ततः किमित्यत आह-तेनेति। एवं च "सर्वः प्लुतः साहसमनिच्छता विभाषा वक्तव्य" इति वार्तिकं न कर्तव्यमिति भावः। प्लुतशास्त्रत्यागात्मकं साहसमनिच्छतेत्यर्थः। प्लुतशास्त्रेषु श्रद्धाजाड()ं विहायेति यावत्। अप्लुतवत्। "किमिदमुपस्थितं नाम? अनार्षमितिकरण"मिति भाष्यम्। अवैदिक इतिशब्द इत्यर्थः। "प्लुत" इत्यध्याहार्यम्। अवैदिके इतिशब्दे परे प्लुतोऽप्लुतवत्स्यादिति फलति।

तत्त्व-बोधिनी

गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ७८, ८।२।८६

गुरोरनृतः। अनन्त्यस्याप्रीति। अत्र वदन्ति-यद्यन्त्यस्य गुरोः प्लुतार्थोऽपिशब्दः इति व्याख्यायेत तर्हि गुरुस्थानिकप्लुतानामेव पर्यायता स्यात्तथाच्च "दूराद्धूते" इति लक्षणान्तरेण लघोष्टेः स्थाने विहितेन प्लुतेन सह युगपत्प्रयोगः प्रसज्येत। तस्मादपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थ इत्येव व्याख्यातव्यं, "टे"रिति प्रकृतत्वादिति। देवदत्तेति। वाक्यत्वसंपत्तये अस्यादिरेहीति शब्दो बोध्यः। एवमग्रेऽपि। सर्वः प्लुतो विकल्प्यत इति। एतेन "द्वैपायनो

विशकातर आजुहाव पुत्रेति" इति भागवतं व्याख्यातम्। "प्लुतस्य वैकल्पिकत्वादार्षः प्रयोगः" इति श्रीधराचार्योक्तिस्तु भादत्र्तव्या। विस्तरस्त्वत्र मनोरमायामनुसन्धेयः।

---

सूत्रम्

काशिका-वृत्तिः

ओम् अभ्यादाने ८।२।८७

अभ्यादानं प्रारम्भः, तत्र यः ओंशब्दः तस्य प्लुतो भवति। ओ३म् अग्निमील्ले पुरोहितम्। अभ्यादाने इत् किम्? ओम् इत्येतदक्षरम् उद्गीथम् उपासीत।

न्यासः

ओमभ्यादाने। , ८।२।८७

"प्रारम्भः" इति। कस्य प्रारम्भे? स्वाध्यायादेः॥

---

सूत्रम्

काशिका-वृत्तिः

ये यज्ञकर्मणि ८।२।८८

ये इत्येतस्य यज्ञकर्मणि प्लुतो भवति। ये३ यजामहे। यज्ञकर्मणि इति किम्? ये यजामह इति पञ्चाक्षरम् इति स्वध्यायकाले मा भूत्। ये यजामहे इत्यत्र एव अयं प्लुतः इष्यते। इह हि न भवति, ये देवासो दिव्येकादश स्थ इति।

न्यासः

ये यज्ञकर्मणि। , ८।२।८८

"येज्ञकर्मणि" इति। कर्मशब्दः क्रियावाची। यज्ञक्रियायामित्यर्थः। "ये३ यजामहे" इत्यत्रैवायं प्लुत इष्यत इत्येतच्च "प्राचाम्()" इत्यस्यानुवृत्तेः, व्यवस्थितविभाषाविज्ञानाच्च लभ्यत इति वेदितव्यम्()॥

---

सूत्रम्

काशिका-वृत्तिः

प्रणवष् टेः ८।२।८९

यज्ञकर्मणि इति वर्तते। यज्ञकर्मणि तेः प्रणवः आदेशो भवति। क एष प्रणवो नाम? पादस्य वा अर्धर्चस्य वा अन्त्यम् अक्षरम् उपसंगृह्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारम् ओङ्कारं वा विदधति तं प्रणव इत्याचक्षते। अपां रेतांसि जिन्वतो३म्। देवान् जिगाति सुम्न्यो३म्। टिग्रहणं सर्वदेशर्थम्। ओकारः सर्वादेशो यथा स्यात्, व्यञ्जनान्ते अन्त्यस्य मा भूतिति। यज्ञकर्मणि इत्येव, आपं रेतांसि जिन्वति।

न्यासः

प्रणवष्टेः। , ८।२।८९

"क एष प्रणवो नाम" इति। इह शास्त्रे प्रणवस्यापरिभाषितत्वाल्लोके चाप्रसिद्धत्वात्? प्रश्नः। "पादस्य वा" ["पादस्य चेल्यादिना"--प्रांउ।पाठः] इत्यादिना शास्त्रान्तरपरिमाषया प्रणवस्वरूपं दर्शयति। "वान्त्यमक्षरम्()" इति।

स्वरोऽत्राक्षरशब्देन विवक्षितः। अन्त्यत्वं पुनस्तस्येतरस्वरापेक्षयः। "उपसंगृह्य" इति। गृहीत्वेत्यर्थः। तदन्त्यमक्षरमादौ यस्याक्षरशेषस्य तत्? तदादि। अक्षरञ्च शेषञ्चेति [इति--नास्ति प्रां३।पाठे] समाहारे द्वन्द्वः। अक्षरं स्वरः, तस्य शेषः व्यञ्जनम्(), तदाचि च तदक्षरशेषञ्च, तदक्षरशेषं यत्रान्त्यात्? स्वरात्? परं व्यञ्जनं नास्ति तत्र स एव। तदादि तस्य बहुव्रीहेरन्यपदार्थः। व्यपदेशिवद्भावेन तत्रापि तदादिव्यपदेशो भवति। यत्रान्त्यात्? स्वरात्? परं व्यञ्जनमस्ति तत्र सह स्वरेण व्यञ्जनमन्यपदार्थः; तद्गुणसंविज्ञानस्य बहुव्रीहेरिहाश्रितत्वात्()। योऽयमनेन ग्रन्थेन टिसंज्ञक एवोक्तो भवति तद्व्यक्षरशेषस्य ल्थाने यत्? त्रिमात्रनोकारम्(), ओङ्कारं वा विदवाति तत्? प्रणवं कथयन्ति। "जिन्वतो३म्()" इति। जयतेः परस्य लट्(), तस्य शत्रादेशः, व्यत्ययेन श्नुप्रत्ययः, यणादेशः; जिन्वन्निति स्थितेऽन्शब्दस्यान्त्याक्षरादेः प्रणवः। "सुम्नयो३म्()" इति। सुम्नशब्दात्? क्यच्(), "क्याच्छब्दसि" ३।२।१७० इति उप्रत्ययः, "देवसुम्नयोर्यजुषि काठके" ७।४।३८ इति आभावः, सुम्नाअयुस्? इति स्थिते उसित्यस्यान्त्याक्षरादेः प्रणवः। ननु च टिस्थानिकयोरेव त्रिमात्रयोरोकारौकारयोः प्रणव इति परिभाषा कृता। तत्रान्तरेणापि टिग्रहणं टेरेव भविष्यति, तत्? किं टिग्रहणेन? इत्यत आह--"टिग्रहणम्()" इत्यादि। असत्यत्र टिग्रहणे व्यञ्जनान्तेष्वलोऽन्त्यपरिभाषया१।१।५१न्त्यस्यैव स्यात्()। अतष्टिग्रहणं क्रियते--सर्वस्यैव टेर्यथा स्यादिति। "अन्त्यस्य मा भूत्()" इति। ओङ्कारस्यानेकाल्त्वात्? सर्वादेशो भविष्यतीत्योकारार्थं टिग्रहणम्()॥

---

सूत्रम्

काशिका-वृत्तिः

याज्यान्तः ८।२।९०

याज्या नाम ये याज्याकाण्डे पठ्यन्ते मन्त्राः, तेषाम् अन्त्यो यः टिः स प्लवते यज्ञकर्मणि। स्तोमैर्विधेमाग्नये३। जिह्वामग्ने चकृषे हव्यवाह३म्। अन्तग्रहणं किम्? याज्या नाम ऋचः काश्चिद्वाक्यसमुदायरूपः, तत्र यावन्ति वाक्यानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति। सर्वान्त्यस्य एव इष्यते, तदर्थम् अन्तग्रहणम्।

न्यासः

याज्यान्तः। , ८।२।९०

इहान्तग्रहणं टेरित्येतस्य निवत्र्तकं वा स्यात्()? विशेषणं वा? पूर्वस्मिन्? पक्षेऽचान्ते विशेषितेऽजन्ताया एव याज्याया प्लुतः स्यात्()। इतर()स्मस्त्वन्तग्रहणमनर्थकम्(), न ह्रनन्त्यष्टिः सम्भवति; "अचोऽन्त्यादि टि" १।१।६३ इत्यस्यैव टिशब्दरूपविशषसंज्ञाविधानादित्यभिप्रायेणाह--"अन्तग्रहणं किम्()" इति। इतरोऽपि विदिताभिप्रायोऽन्यदेवान्तग्रहणस्य प्रयोजनं दर्शयितुमाह--"याज्या नाम" इत्यादि। गतार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

ब्रूहिप्रेष्यश्रौषड्वौषडावहानाम् आदेः ८।२।९१

ब्रूहि प्रेष्य श्रौषट् वौषटावह इत्येतेषाम् आदेः प्लुतो भवति यज्ञकर्मणि। अग्नये ऽनुब्रू३हि। प्रेष्य अग्नये गोमयान् प्रे३ष्य। श्रौषट् अस्तु श्रौ३षट्। वौषट् सोमस् ने वीहि वौ३षट्। आवह आग्निमा३वह। आवह देवान् यजमानाय इत्येवम् आदावयं प्लुतो न भवति, सर्वे विधयः छन्दसि विकल्प्यन्ते इति।

न्यासः

ब्राऊहिप्रेष्यश्रौषड्वौषडावहानामादेः। , ८।२।९१

श्रौषट्(), वौषडिति निपातौ; इतराणि लोण्मध्यमपुरुषैकवचनानि। केचित्तु आवहशब्दोऽपि निपात इत्याहुः। "प्रेष्य" इति। "ईषु गतौ" [दिवादिषु "इष गतौ" इत्येव पठ()ते] (धा।पा।११२७), दिवादित्वाच्छ्यन्(), उपसर्गाकारेण सह "आद्गुणः" ६।१।८४। अथेह कस्मान्न भवति--"आवह देवान्? यजमानाय" (वा।सं।५।१२), "आवह जातवेदः" (आ।श्रौ।सू।१।३।२२), "सुयजा यज"? इत्याह--"आवह देवान्()" इत्यादि। आदिग्रहणं वाक्यादेर्मा भूदिति॥

---

सूत्रम्

काशिका-वृत्तिः

अग्नीत्प्रेषणे परस्य च ८।२।९२

अग्नीधः प्रेषणम् अग्नीत्प्रेषणम्। तत्रादेः प्लुतो भवति परस्य च। आ३ श्रा३वय। ओ३ श्रा३वय। अत्र एव अयं प्लुत इष्यते। तेन इह न भवति, अग्नीदग्नीन् वि हर बर्हिः स्तृणाहि इति। तदर्थं केचिद् वक्ष्यमाणं विभाष इत्यभिसम्बध्नन्ति, सा च व्यवस्थितविभाषा इति। अपर आह सर्व एव प्लुतः साहसमनिच्छता विभाष विज्ञेयः इति। इह तु, उद्धर३ उद्धर, अभिहर३ अभिहर इति छान्दसः प्लुतव्यत्ययः। यज्ञकर्मणि इत्येव, ओ श्रावय।

न्यासः

अग्नीत्प्रेषणे परस्य च। , ८।२।९२

अग्निमिन्त्रे इत्यस्मिन्नर्थेऽग्नीट्()ृत्विग्विशेषः, तस्य प्रेषणं नियोजनमग्नीत्प्रेषणमित्यर्थः। आदेः सन्निहितत्वात्? तदपेक्षयैव परोऽपि ज्ञायत इत्याह--"तस्मादेवादेः" इत्यादि। "अत्रैव" इति। अनन्तरोक्त उदाहरणद्वय एवकारेण यद्व्यवच्छिन्नं तद्दर्शयितुमाह--"अग्नीदग्नीन्? विहर बर्हिस्तृणीहि" इति। कथं पुनरेतल्लभ्यते? इत्याह--"तदर्थम्()" इत्यादि। यथा च सर्वत्र प्लुतो विभाषा शक्यो विज्ञातुम्(), तथा "गुरोरनृतोऽनन्त्यस्य" ८।२।८६ इत्यादौ सूत्रे प्रतिपादितम्()। यदि तर्हि सर्वत्र प्लुतो विभाषा विज्ञायेत, उत्तरत्र विभाषाग्रहणमनर्थम्()? न; प्रपञ्चार्थत्वात्()। अथेह कथं प्लुतः--"उद्धर३ उद्धर, अभिहर३ अभिहर" इति; स्वाध्यायकाले ह्ययंप्लुतः, नाग्नीत्प्रेषणे, न चायमादेः, नापि "आदेः परस्य" १।१।५३, किं तर्हि? ततोऽन्यस्यैव? इत्यत आह-देः सन्निहितत्वात्? तदपेक्षयैव परोरपि ज्ञायत इत्याह--"तस्मादेवादेः" इत्यादि। "अत्रैव" इति। अनन्तरोक्त उदाहरणद्वय एवकारेण यद्व्यवच्छिन्नं तद्दर्शयितुमाह--"अग्नीदग्नीन्? विहर बर्हिस्तृणीहि" इति। कथं पुनरेतल्लभ्यते? इत्याह--"तदर्थम्()" इत्यादि। यथा च सर्वत्र प्लुतो विभाषा विज्ञायेत, उत्तरत्र विभाषाग्रहणमनर्थकम्()? न; प्रपञ्चार्थत्वात्()। अथेह कथं प्लुतः--"उद्धर३ उद्धर, अभिहर३ अभिरह" इति; स्वाध्यायकाले ह्ययं प्लुतः, नाग्नीत्प्रेषणे, न चायमादेः, नापि "आदेः परस्य" १।१।५३, किं तर्हि? ततोऽन्यस्यैव? इत्यत आह--"इह तु" इत्यादि। विस्पष्टार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

विभाषा पृष्टप्रतिवचने हेः ८।२।९३

पृष्टप्रतिवचने विभाषा हेः प्लुतो भवति। अकार्षीः कटं देवदत्त? अकार्षं हि३, अकार्षं हि। अलावीः केदारं देवदत्त? अलाविषं हि३, अलाविषं हि। पृष्टप्रतिवचने इति किम्? कटं करिष्यति हि। हेः इति किम्? करोमि ननु।

न्यासः

विभाषा पृष्टप्रतिवचने हेः। , ८।२।९३

"पृष्टप्रतिवचनम्()" इति। पृष्टस्य प्रतिवचनम्()ाख्यानं पृष्टप्रतिवचनम्()। प्रतिवचनशब्दोऽयं विरुद्धेऽपि वचने प्रवत्र्तते--विरुद्धं वचनं प्रतिवचनमिति, प्रतिशब्दो ह्रत्र विरोधं द्योतयति, यथा--प्रतिमल्लः, प्रतिगज इति; वीप्सायामपि वत्र्तते--वचनं वचनं प्रतीति प्रतिवचनम्(), "यथार्थे यदव्ययम्()" २।१।६ इति दीप्सायामव्ययोभावः; समाधानेऽपि वत्र्तते--यदनेनाभिहितं तस्य मया प्रतिवचनं विहिनमिति, समाधिर्विहित इति गम्यते; तत्र "प्रतिवचने" इत्युच्यमाने सर्वत्र प्रसज्येत। तस्मात्? प्रतिवचनविशेषार्थं पृष्टग्रहणम्()। पृष्टस्य यत्? प्रतिवचनम्()र्थाख्यानं तत्रैव यथा स्यात्(), अन्यत्र मा भूदिति॥

---

सूत्रम्

काशिका-वृत्तिः

निगृह्यानुयोगे च ८।२।९४

स्वमतात् प्रच्यावनं निग्रहः। अनुयोगः तस्य मतस्य आविष्करणम्। तत्र निगृह्यानुयोगे यद् वाक्यं वर्तते तस्य टेः प्लुतो भवति विभाषा। अनित्यः शब्दः इति केनचित् प्रतिज्ञातम्, तम् उपालिप्सुः उपपतिभिर् निगृह्य सभ्यसूयम् अनुयुङ्क्ते, अनित्यः शब्द इत्यात्थ३, अनित्यः शब्द इत्यात्थ। अद्य श्राद्धम् इत्यात्थ३, अद्य श्राद्धम् इत्यात्थ। अद्यामावास्य इत्यात्थ३, अद्यामावास्य इत्यात्थ। अद्य अमावास्या इत्येवं वादी युक्त्या प्रच्याव्य स्वमतादेवम् अनुयुज्यते।

न्यासः

निगृह्रानुयोगे च। , ८।२।९४

"निगृह्र" इति। ल्यबन्तमेतत्()। "स्वतात्()" इति। स्वावगमात्()। "प्राच्यावनम्()"["प्रच्याचनम्()"--प्रांउ।पाठः] इति। अपनयनम्()। "आविष्करणम्()" इति। प्रकाशनम्()। "श्राद्धम्()" इति। कर्मविशेषः। "एवमनुयुज्यते" इति। एवमादिष्कृतस्वमतः क्रियत इत्यर्थः। चकारो विभाषेत्यस्यानुकर्षणार्थः। तेनोत्तरविधिर्नित्यो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

आम्रेडितं भर्त्सने ८।२।९५

वाक्यादेः आमन्त्रितस्य इति भर्त्सने द्विर्वचनम् उक्तम्, तस्य आम्रेडितं प्लवते। चौर चौर३, वृषल वृषल३, दस्यो दस्यो३, घातयिस्यामि त्वा, बन्धयिस्यामि त्वा। भर्त्सने पर्यायेण इति वक्तव्यम्। चौर३ चौर, चौर चौर३। तदर्थम् आम्रेडितग्रहणम् द्विरुक्तोपलक्षणार्थं वर्णयन्ति।

न्यासः

आम्रेडितं भत्र्सने। , ८।२।९५

"चौर चौर३" इति। "वाक्यादेरामन्त्रितस्य" ८।१।८ इत्यादिना भत्र्सने द्विर्वचनम्()। यद्यपि वाक्यग्रहणमेतदन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थम्(), तथापीह वचनसामथ्र्यादनन्त्यस्यापि भवति। न हि वाक्यान्ते भत्र्सन आम्रेडितं सम्भवति, वाक्यादेरेव पदस्य भत्र्सने द्विर्वचनविधानात्()। "तदर्थम्()" इति। पर्यायेण पूर्वोत्तरयोः पदयोर्यथा स्यादित्येवमर्थम्(); द्विरुक्तोपलक्षणार्थञ्च। आम्रेडितस्य भत्र्सनग्रहणाद्विज्ञायते--तद्()द्विरुक्तस्य हि यत्? परं तदाम्रेडितम्()। न च तावता भत्र्सने प्रवृत्तिः सम्भवति; भत्र्सनस्य द्विरुक्तिद्योत्यत्वात्()। तस्माद्()द्विरुक्तोपलक्षणार्थमाम्रेडितग्रहणं विज्ञायते। तद्()द्विरुक्तिश्च पूर्वोत्तरविषयेऽपीति द्वयोरपि प्लुतो भवति। स च पर्यायेण भवति, न यौगपद्येन; भत्र्सनद्योतनफलत्वात्?

प्लुतेः। अन्यतरप्लुत्यैव च तद्भत्र्सनस्य द्योतितत्वात्()॥

---

सूत्रम्

काशिका-वृत्तिः

अङ्गयुक्तं तिङाकाङ्क्षम् ८।२।९६

अङ्ग इत्यनेन युक्तं तिङन्तम् आकाङ्क्षं भर्त्सने प्लवते। अङ्ग क्ज३, अङ्ग व्याहर३, इदानीं ज्ञास्यसि जाल्म। तिङिति किम्? अङ्ग देवदत्त, मिथ्या वदसि। आकाङ्क्षम् इति किम्? अङ्ग पच। न एतदपरमाकाङ्क्षति। भर्त्सने इत्येव, अगाधीष्व, ओदनं ते दास्यमि।

न्यासः

अङ्गयुक्तं तिङाकाङ्क्षम्?। , ८।२।९६

"आकाङ्क्षम्()" इति। आकाङ्क्षति अपेक्षत इत्याकाङ्क्षम्(), पचाद्यच्()। "अङ्ग कूज३" इत्यादि। अङ्गकूज ३, अङ्ग व्याहर ३--इत्येतदुभयमपि "इदानीं ज्ञास्यति जाल्म" इत्येतदपेक्षते। "अङ्ग देवदत्त" इत्येतदपि "मिध्या वदसि" इत्येतत्()। "अधीष्व" इत्येतदपि "ओदनं ते दास्यामि" इत्येतत्()। "नैतदपरमाकाङ्क्षति" इति। विवक्षितार्थस्य परिसमाप्तत्वात्()। अथ युक्तग्रहणं किमर्थम्(), यावता पदविधित्वादेव योगो विज्ञास्यते। एवं तर्हि युक्तग्रहणं कुर्दन्नेतज्ज्ञापयति--"समर्थः पदविधिः" २।१।१ इत्येषा परिभाषाऽनित्या। तेनाऽसूर्यम्पश्यानि मुखानीति नञोऽसत्यपि सूर्यशबद्देन सामर्थ्ये समासः सिद्धो भवति॥

---

सूत्रम्

काशिका-वृत्तिः

विचार्यमाणानाम् ८।२।९७

प्रमाणेन वस्तुपरीक्षणं विचारः, तस्य विषये विचर्यमाणानां वाक्यानां टेः प्लुतो भवति। होत्व्यं दीक्षितस्य घा३इ। होतव्यं न होतव्यम् इति विचार्यते। तिष्टेयूपा३इ। यूपा३इ। यूपे तिष्ठेत्, यूपे अनुप्रहरेतिति विचार्यते।

न्यासः

विचार्यमाणानाम्?। , ८।२।९७

"प्रमाणेन वस्तुपरीक्षणं विचारः। तेन विषयीक्रियमाणानि विचार्यमाणानि। बहुवचननिर्देशो येषामर्थगत एव विचारो न स्वरूपगतः, तेषामपि यथा स्यादित्येवमर्थः; इतरथा हि येषां स्वरूपगतो विचारस्तेषामेव स्यात्()। न हि मुख्ये वाक्ये विचार्यमाणे सत्यर्थद्वारकं गौणं यस्य विचार्यमाणत्वं तस्य ग्रहणं युक्तम्()। "गृहा३इ" इति। गृह इत्यत्र एकारः, तस्य "एचोऽप्रगृह्रस्य" ८।२।१०७ इत्यादिना पूर्वार्थस्याकारः, उत्तरार्धस्य त्विकारः। तस्याकारस्यानेन प्लुते भवति॥

---

सूत्रम्

काशिका-वृत्तिः

पूर्वं तु भाषायाम् ८।२।९८

भाषायां विषये विचार्यमाणानां पूर्वम् एव प्लवते। अहिर्नु३ रज्जुर्नु। लोष्ठो नु३ कपोतो नु। प्रयोगापेक्षं पूर्वत्वम्। इह भाषाग्रहणात् पूर्वयोगश् छन्दसि विज्ञायते।

न्यासः

पूर्वं तु भाषायाम्?। , ८।२।९८

पूर्वेणैव सिद्धे नियमार्थमेतत्()। तुशब्दस्त्विष्टतोऽवधारणार्थः। असति हि तस्मिन्? विपरीतोऽपि नियमो विज्ञायेत--भाषायामेव पूर्वमिति। पूर्वत्वं च प्रयोगापेक्षम्()। अहिर्नु३, रज्जुर्नु३--इत्येतयोर्वाक्यायोर्यत्? पूर्वं प्रयुज्यते तस्यैव टेः प्लुतो भवति। इह तु भावाग्रहणात्? पूर्वयोगाश्छन्दसीति विज्ञायते॥

---

सूत्रम्

काशिका-वृत्तिः

प्रतिश्रवणे च ८।२।९९

प्रतिश्रवणम् अभ्युपगमः, प्रतिज्ञानम्। श्रवणाभिमुख्यं च तत्र अविशेषात् सर्वस्य ग्रहणम्। प्रतिश्रवणे यद् वाक्यं वर्तते तस्य टेः प्लुतो भवति। मां मे देहि भोः, अहं ते ददामि३। नित्यः शब्दो भवितुमर्हति३। देवदत्त भोः, किमात्थ३।

न्यासः

प्रतिश्रवणे च। , ८।२।९९

प्रतिश्रुतिः प्रतिश्रवणम्()। प्रतिपूर्वाच्छृणोतेर्भावे ल्युट्(), "कुगति" २।२।१८ इत्यादिना तत्पुरुषः। प्रतिपूर्वस्य शणोतिर्यदा परानुग्रहो विवक्ष्यते, तदाभ्युपगमे वत्र्तते। अथ त्वविवक्षा परानुग्रहस्य, तदा प्रतिज्ञाने। यदा श्रितिः--श्रवणमिति भावसाधनेन श्रवणशब्देन प्रतिशब्दस्य "लक्षणेनाभिप्रती आभिमुख्ये" २।१।१३ इत्यव्ययीभावः क्रियते, तदा श्रवणाभिमुख्ये श्रवणं प्रति प्रवृत्त इत्यर्थः। तदिह विशेषानभिधानात्? सर्वस्मिन्? प्रतिश्रवणे वाक्यस्य टेः प्लुतो भवति। "देवदत्त भोः किमात्थ३" इति। एतच्छ्रवणाभिमुख्य उदाहरणम्()। "देवतत्त भोः" इत्यामन्त्रितम्()। तप्र श्रवणार्थमेवमाह--"किमात्थ३" इति। एकत्र श्रवणमुद्दिश्य प्रवृत्तत्वादभिमुखं भवति। अभ्युपगमे तूदाहरणम्()--"गां मे देहि भोः, अहं ते ददामि३" इति। प्रतिज्ञाने--"नित्यः शब्दो भवितुमर्मति" इति। चकारो भाषायामित्यनुकर्षणार्थः॥

---

सूत्रम्

काशिका-वृत्तिः

अनुदात्तं प्रश्नान्ताभिपूजितयोः ८।२।१००

अनुदात्तः प्लुतो भवति प्रश्नान्ते, अभिपूजिते च अगमः३ः पूर्वा३न् ग्रामा३न् ग्रामा३नग्निभूता३इ, पटा३उ? अग्निभूते, पंटो इत्येतयोः प्रश्नान्ते वर्तमानयोणनुदात्तः प्लुतो भवति। अगमः इत्येवम् आदीनां तु अनन्त्यस्य अपि प्रश्नाख्यानयोः ८।२।१०५ इति स्वरितः प्लुतो भवति। अभिभूजिते शोभनः खल्वसि माणवक३।

न्यासः

अनुदात्तं प्रश्नान्ताभिपूजितयोः। , ८।२।१००

अगमः३" इति। गमेर्लुङ्? पुवदिसूत्रेण ३।१।५५ लृदित्त्वादङ्(), सिप्()। "अग्निभूता३इ" इति, "पटा३उ" इति। सम्बुद्धौ परतः "ह्रस्वस्य गुणः" ७।३।१०८ इति गुणः, "एचोऽप्रगृह्रस्य" ८।२।१०७ इत्यादिनाऽकारः, इदुतौ च। उदाहरणवाक्ये पूर्वपदानामेतेनैव प्लुतः, कृत इति गृहीत्वा यश्चोदयेत्()--अथ कथमिहानन्त्यस्यापि प्लुतो भवति, यावता वाक्यस्य टेरित्यनुवत्र्तते इति? तं प्रत्याह--"अग्निभूते, पटो इत्येतयोः" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

चिदिति च उपमार्थे प्रयुज्यमाने ८।२।१०१

अनुदात्तम् इति वर्तते। चितित्येतस्मिन् निपाते उपमार्थे प्रयुज्यमाने वाक्यस्य टेः अनुदात्तः प्लुतो भवति। प्लुतो ऽप्यत्र विधीयते, न गुणमात्रम् अग्निचिद् भाया३त्। राजचिद् भाया३त्। अग्निरिव भायात्, राजेव भायातित्यर्थः। उपमार्थे इति किम्? कथञ्चिदाहुः। प्रयुज्यमाने इति किम्? अग्निर्माणवको भायात्।

न्यासः

चिदिति चोपमार्थे प्रयुज्यमाने। , ८।२।१०१

"चिदिति" इति। इतिकरणः प्रयुज्यमान इत्येतच्छब्दस्य विशेषणमित्यस्यार्थस्य द्योतनाव। असति ह्येतदर्थं इतिकरणे ह्युपमार्थेऽन्यस्मिन्? प्रयुज्यमाने चिच्छब्दः प्लवत इति विज्ञायेत। तत्प्रज्यमानतयात्र तस्मिन्? विशेषिते वाक्यस्य टेः प्लतः सिद्धो भवति। "कतथञ्चिदाहः" इति। अत्र कृच्छ्रे चिच्छब्दो वत्र्तते। "अग्निर्माणवको भायात्()" इति। अग्निरिव माणवको दीप्येतेत्यर्थः अस्तीहोपमार्थः, तथापि चिच्छब्दस्य प्रयोगो नास्तीति न प्लुतो भवति। असति तु प्रयुज्यमानग्रहणे इहोपमानगतौ सत्यां यदप्यन्येषामपि सर्वेषामुपमानार्थानां प्रयोगो गम्यते, तथापि योऽत्र चिच्छब्दस्य प्रयोगस्तदाश्रयः प्लुतः स्यादेव। चकारोस्यैव प्लुतस्य समुच्चयार्थः। समुच्चयश्च भेदाधिष्ठान इति प्लुतानन्तरमेवेदमाख्यातं भवति; अन्यथा पूर्वध्वेव प्लुतनिमित्तेष्वेतस्मिन्? विषयेऽनुदात्तत्वमात्रं विधीयत इति विज्ञायेत॥

---

सूत्रम्

काशिका-वृत्तिः

उपरिस्विदासीदिति च ८।२।१०२

अनुदात्तम् इति वर्तते। उपरिस्विदासीतित्येतस्य टेः अनुदत्तः प्लुतो भवति। अंधः स्विदासी३तुपरि स्विदासी३त्। अधः स्विदासीदित्यत्र विचार्यमाणानाम् ८।२।९७ इति उदात्तः प्लुतः, उपरि स्विदासीतित्यत्र तु अनेन अनुदात्तः।

न्यासः

उपरिस्विदासीदति च। , ८।२।१०२

इतिकरणः कार्यिणो निर्देशार्थः। कार्यं हि विधातुमवश्यं षष्ठ()आसौ निर्देष्टव्यः। इतिकरणेन वेति वार्थः प्रत्यवमृश्यते। शब्दप्रधानस्त्विवहोपरिस्विदादिशब्दः कार्यं इष्यत इतीतिकरणेन निर्दिष्टः प्लुतो यथा विज्ञायेत। "अधःस्विदासीदित्यत्र" इत्यादि। अत्राधःस्विदासीत्(), उतोपरिस्विदासीवित्येतद्विचार्यते; तत्र पूर्वस्मिन्? वाक्ये "विचार्यमाणानाम्()" ८।२।९७ इत्यादिनोदात्तः प्लुतः, इतर()स्मस्त्वनेनानुदात्तः, तस्यैवापवादः। चकारस्य पूर्ववदेव प्रयोजनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

स्वरितम् आम्रेडिते ऽसूयासम्मतिकोपकुत्सनेषु ८।२।१०३

स्वरितः प्लुतो भवति आम्रेडिते परतः असूयायाम्, सम्मतौ, कोपे, कुत्सने च गम्यमाने। वाक्यादेरामन्त्रितस्य असूयासम्मतिकोपकुत्सनभर्त्सनेषु ८।१।८ इति द्विर्वचनम् उक्तम्, तत्र अयं प्लुतविधिः। असूयायां तवत् माणवक३

माणवक, अभिरूपक३ अभिरूपक, रिक्तं त आभिरूप्यत्म्। सम्मतौ माणवक३ माणवक, अभिरूपक३ अभिरूपक, शोभनः खल्वसि। कोपे माणवक३ माणवक, अविनीतक३ अविनीतक, इदानीं ज्ञास्यसि जाल्म। कुत्सने शाक्तीक३ शाक्तीक, याष्टीक३ याष्टीक, रिक्ता ते शक्तिः। असूयादिषु वावचनं कर्तव्यम्। माणवक माणवक इत्येवमाद्यपि यथा स्यात्।

न्यासः

स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु। , ८।२।१०३

असूयादिशब्दानां "वाक्यादेरामन्त्रित" ८।१।८ इत्यादौ सूत्रेऽयं आख्यातः। "माणवक३ माणवक" इत्यादौ द्विर्वचनं तेनैव सूत्रेण वेदितव्यम्()। "वावचनं कत्र्तव्यम्()" इति। वेत्येतद्विकल्पोपलक्षणम्()। वचनं व्याख्यानमित्यर्थः। अत्रैतदुक्तं भवति--विकल्पव्याख्यानं कत्र्तव्यमिति। तत्रेदं व्याख्यानम्()--"विभाषा पृष्टप्रतिवचने हेः" ८।२।९३ इत्यतो मण्डूकप्लुतिन्यायेन विभाषाग्रहणनुवत्र्तते, तेन विकल्पो भविष्यतीति॥

---

सूत्रम्

काशिका-वृत्तिः

क्षियाऽअशीःप्रैषेषु तिङाकाङ्क्षम् ८।२।१०४

स्वरितः इति वर्तते। क्षिया आचरभेदः, आशीः प्रार्थनाविशेषः, शब्देन व्यापारणम् प्रैषः, एतेषु गम्यमानेषु तिङन्तम् आकाङ्क्षणं यत् तस्य स्वरितः प्लुतो भवति। आकाङ्क्षति इति आकाङ्क्षम्, तिङन्तम् उत्तरपदम् आकाङ्क्षति इत्यर्थः। क्षियायां तावत् स्वयं रथेन याति३, उपाध्यायं पदातिं गमयति इति। स्वयम् ओदनं ह भुङ्क्ते३, उपाध्यायं सक्तून् पाययति। पूर्वम् अत्र तिङन्तम् उत्तरपदम् आकाङ्क्षति इति साकाङ्क्षं भवति। आशिषि सुतांश्च लप्सीष्ट३ धनं च तात। छन्दो ऽध्येषीष्ट३ व्याकरणम् च भद्र। प्रैषे कटं कुरु३ ग्रामं च गच्छ। यवान् लुनीहि३ सक्तूंश्च पिब। आकाङ्क्षम् इति किम्? दीर्घं ते आयुरस्तु। अग्नीन् विहर।

न्यासः

क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्?। , ८।२।१०४

क्षिया=आचारभेदः। इष्टाशंसनम्()ाशीः। नियोगः=प्रैषः। आकाङ्क्षत्यपरं तिङन्तमेव। कुत एतत्()? आकाङ्क्षाग्रहणादेव। सुबन्ते हि साधनादायिनी तिङन्तस्यावश्यम्भाविनी अपेक्षेति। "धनं च तात" इति। अत्र लप्सीष्टेत्येतदपेक्षते। "व्याकरणं च" इति। अत्राप्यध्येषीष्टेत्येतत्()। "लुनीहि३" इति। "ई हल्यघोः" ६।४।११३ इतीत्वम्()। "पिब" इति। पाध्रादिसूत्रेण ७।३।७८ पिबादेशः। "अस्तु" इति। अस्तेर्लोट्(), "एरुः" ३।४।८६ इत्युत्वम्(), अदादित्वाच्छपो लुक्(), एतच्चापरं तिङन्तं नापेक्षते। एवं "विहर" इत्येतदपि॥

---

सूत्रम्

काशिका-वृत्तिः

अनन्त्यस्य अपि प्रश्नाख्यानयोः ८।२।१०५

पदस्य इति वर्तते, स्वरितम् इति च। अनन्त्यस्य अपि अन्त्यस्यापि पदस्य टेः प्लुतो भवति प्रश्ने आख्याने च। अगम३ः पूर्वा३न् ग्रामा३नग्निभूता३इ, पटा३उ। सर्वेषम् एव पदानाम् एष स्वरितः प्लुतः। अन्त्यस्य अनुदात्तं प्रश्नान्ताभिपूजितयोः ८।२।१०० इति अनुदत्तो ऽपि पक्षे भवति। आख्याने अगम३ः पूर्वा३न् ग्रामा३न् भो३ः।

न्यासः

अनन्त्यस्यापि प्रश्नाख्यानयोः। , ८।२।१०५

"अन्त्यस्य तु" इत्यादि। तुशब्दः पदान्तरेभ्यो विशेषं दर्शयति। अन्त्यस्येत्यनेनापि स्वरितः, "अनुदात्तं प्रश्नान्ताभिपूजितयोः" ८।२।१०० इत्यनेनाप्यनुदात्तः; तयोश्चैकत्र यौगपद्यं न सम्भवति। तत्र वचनप्रामाण्यादनुदात्तोऽपि पक्षे न भवति, स्वरितोऽपि॥

---

सूत्रम्

काशिका-वृत्तिः

प्लुतावैच इदुतौ ८।२।१०६

दूराद्धूतादिषु प्लुतो विहितः। तत्र ऐचः प्लुतप्रसङ्गे तदवयवभूतौ इदुतौ प्लुतौ। ऐ३तिकायन। औ३पमन्यव। अत्र यदेवर्णोवर्णयोः अवर्णस्य च संविभागः, तदा इदुतौ द्विमात्रावनेन प्लुतौ क्रियेते। प्लुतौ इति हि क्रियानिमित्तो ऽयं व्यपदेशः। इदुतौ प्लवेते वृद्धिं गच्छतः इत्यर्थः। तावती च सा प्लुतिर् भवति यया तावेचौ त्रिमात्रौ सम्पद्येते। यदा तु अर्धमात्रा अवर्णस्य अध्यर्धमात्रा इवर्णोवर्णयोः, तदा तौ अर्धतृतीयमात्रौ क्रियेते इति। भष्ये तु उक्तम्, इष्यते एव चतुर्मात्रः प्लुतः इति। तत् कथम्? समप्रविभागपक्षे इदुतोरनेन त्रिमात्रः प्लुतो विधीयते।

न्यासः

प्लुतावैच इदुतौ। , ८।२।१०६

"दूराद्धूते च" ८।२।८४ इत्येवमाविभिर्लक्षणैः प्लुतो विधीयमानः "अचश्च" १।२।२८ इत्यस्योपस्थाने सति यत्रैव प्लुत उक्तः, तत्र तस्यैवैचः समुदायात्मनः स्यात्(), तदवयवयोरेवेष्यते। स च वचनमन्तरेण न सिध्यतीतीदमारभ्यते। तस्य तु प्लुतस्य निमित्तं दूराद्धूतादेवैचः प्रसङ्ग इति पूर्वेण प्रकरणेन प्लुतस्य प्राप्तौ सत्यामित्यर्थः। "ऐ३तिकायन्(), औ३पमन्यव" इति। अत्र "गुरोरनृतीः" ८।२।८६ इत्यादिना एचः प्लुते प्राप्तेऽनेन तदवयवयोरिदुतोः प्लुतः क्रियते। ऐ३तिकायन, औ३पमन्यवेत्यत्र यद्यैचोरवयवयोरिदुतोः प्लुतः क्रियते, तत्रैकारीकारौ चतुर्मात्रौ साद्र्धत्रिमात्रो वा प्राप्नुतः। इह ह्यैचौ समाहारवर्णौ; मात्राऽवर्णस्य मात्रेवर्णोवर्णयोः। अपरे त्वाहुः--अर्धमात्राऽवर्णस्य, अध्यर्धमात्रेवर्णोवर्णयोरिति। अत्र पर्वस्मिन्? दर्शनेऽनेन प्लुते कृते सति इदुतोस्तिरुआओ मात्राः, अवर्णस्य चैकमात्रेति चतुमत्रिः प्राप्नोति; इतरत्र तु दर्शनेऽवर्णस्यार्धमात्रा, इदुतीस्तु ता एव तिन्न इति सार्धत्रिमात्रः प्राप्नोतीत्यत आह--"अत्र यदा" इत्यादि। ननु च त्रिमात्रस्य "प्लुत इति संज्ञा कृता, तत्कथं द्वित्रिमात्रावपि प्लृतौ शक्यावनेन कर्त्तुम्()? इत्यत आह--"प्लुतावविति हि" इत्यादिना। एतेन लौकिकस्यात्र प्लुतस्य ग्रहणम्(), न पारिभाषिकस्येति दर्शयति। कुतः पुनरेतल्लभ्यते? पुनः प्लुतग्रहणमनर्थकं स्यात्(), लोके हि च प्लुतो वृद्धिमानुष्यते। अत एवाह--"इदुतौ वृदिं()ध गच्छत इत्यर्थः" इति। अनेकार्थत्वाद्धातूनां प्लवतिर्वृद्धावपि वत्र्तते। नन्वेवमप्यनियमेन वृद्धिः प्रसज्यते; इयत्तानभिधानात्(); ततश्च यावती वृद्धिः स्यात्(), याक्त्या चतुर्मात्रावचौ सम्पद्येयातामिति? अत ["अत्राह"--कांउ।पाठः] इत्यादि। प्लुतिर्वृद्धिरित्यर्थः। कथं पुनरयं नियमो लभ्यते? एवं मन्यते--ऐच इति प्लुतापेक्षया षष्ठी। इदुतौ तथा प्लवेते यथा स प्लुत एङोर्भवति; एवञ्चंचोर्भवति यदि तावती वृद्धिर्भवति यावत्या तावैचौ त्रिमात्रौ सम्पद्येते। अकृतायां हि वृद्धौ ऐच्त्वमेव स्यात्(); युक्तपरिमाणत्वादैचाम्(), ततश्चैच्सम्बन्धी प्लुतो न स्यादिति। "अर्धतृतीयमात्रौ" इति। अर्धतृतीयं ययोर्मात्रयोस्तेऽर्धतृतयमात्रे, ते ययोस्तावर्धतृतयमात्रौ। इदं तावद्वार्त्तिककारमतमाश्रित्य समाधानमुक्तम्()। भाष्यकारस्य त्विष्टैव चतुर्मात्रता प्लुतस्येति दर्शयन्नाह--"भाष्ये तूक्तम्()" इत्यादि। "तत्कथम्()" इति। यदि तत्? भाव्यकारस्य मतं तत्? केन प्रकारेण सम्पद्येत? इत्येतत्? पृच्छति। "सम्परविभागपक्षे" इत्यादिना यथा तत्? सम्पद्यते तथा दर्शयति।

समप्रविभागपक्षे ह्यनेन सूत्रेणेदुतोस्त्रिमात्रः प्लुतः क्रियते, ततश्च तत्सम्बन्धिन्यो यास्मिरुआओ मात्रा या च पूर्वाकारमात्रा ताः सर्वाः समाह्यताश्चतरुआओ मात्रा भवन्ति। एवञ्च चतुर्मात्रः प्लुतो भवति। अत्र भाष्यकारदर्शने पुनः प्लुतग्रहणं सर्वत्र प्लुतोपसंग्रहार्थम्(); अन्यथा स्वरितप्रकरणात्? तस्यैव प्रसङ्गे सत्येवेदुतोरिवं प्लुतिः स्यात्()। पुनः प्लुतग्रहणे तूदात्तानुदात्तयोरपि भवति। तपरकरणं मुखमुखार्थम्()॥ चोन्तिन्॥ओवेम्बेर् fइले

---

सूत्रम्

काशिका-वृत्तिः

एचो ऽप्रगृह्यस्य अदूराध्दूते पूर्वस्य अर्धस्य अदुत्तरस्य इदुतौ ८।२।१०७

एचो ऽप्रगृह्यस्य अदूराद् धूते प्लुतविषयस्य अर्धस्य अकारः आदेशो भवति, स च प्लुतः, उत्तरस्ये कारोकारावादेशौ भवतः। विषयपरिगणनं कर्तव्यम् प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवदयाज्यान्तेष्विति वक्तव्यम्। प्रश्नान्ते अगमः३ पूर्वा३न् ग्रामा३नग्निभूता३इ, पटा३उ। अभिपूजिते भद्रं करोषि माणवक३ अग्निभूता३इ, पटा३उ। विचार्यमाणे होतव्यं दीक्षितस्य गृहा३इ प्रत्यभिवादे आयुष्मानेधि अग्निभूता३इ, पटा३उ। याज्यान्ते उक्षन्नाय वशान्नाय सोमपृष्ठाय वेधसे। स्तोवैर्विधेमाग्नया३इ। सो ऽयम् आकरः प्लुतो यथाविषयम् उदात्तो ऽनुदात्तः स्वरितो वेदितव्यः। इदुतौ पुनरुदात्तावेव भवतः। परिगणनं किम्? विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वा। आगच्छ भो माणवक विष्णुभूते। परिगणने च सति अदूराद् धूते इति न वक्तव्यम्। पदान्तग्रहणं तु कर्तव्यम्। इह मा भूत्, भद्रं करोषि गौः इति। अप्रगृह्यस्य इति किम्? शोभने खलु स्तः खट्वे३। आमन्त्रिते छन्दसि प्लुतविकरो ऽयं वक्तव्यः। अग्ना३इ पत्नी वा३इ।

न्यासः

एचोऽप्रगृह्रस्यादूरादूधूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ। , ८।२।१०७

एचः समाहारवर्णाः तत्र एकारस्य ओकारस्य च पूर्वेण प्रकरणेन समुदायस्यैष प्लुतः, एचोः पुनरवयवयोरिदुतोः। अनन्तरसूत्रेणेदमारभ्यते "विषयपरिगणनं कत्र्तव्यम्()" इति। एतद्ग्रहणवाक्यम्()। अस्य "प्रश्नान्ताभिपूजित" इत्यादिना विवरणं करोति "कत्र्तव्यम्()" [वक्तव्यम्()--काशिका] इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"अनुदात्तं प्रश्नान्ताभिपूजितयोः" ८।२।१०० इत्यादयो योगा इहानुवत्र्तन्ते, तेनान्यत्र न भवति। "यथाविषयम्()" इति। यो यस्य विषयो यथाविषयम्()--"यथाऽसादृश्ये" २।१।७ इत्यव्ययीभावः, "प्रश्नान्ताभिपूजितयोः" ८।२।१०० अनुदात्तः प्लुतः। प्रश्ने तु "अनन्त्यस्यापि प्रश्नाख्यानयोः" ८।२।१०५ इति स्वरितः, शेषेपूदात्तः। "इतुतौ पुनरुदात्तावेतौ" इति। "टेरुदात्तः" ८।२।८२ इति चाधिकारात्()। "विष्णुभूते विष्णुभूते३" इति। अत्र "आम्रेडितं भत्र्सने" ८।२।९५ इति प्लुतः। "आगच्छ भो माणवक विष्णुभूते३" इति। अत्र "दूराद्धते च" ८।२।८४ इति। ननु चासत्यपि परिगणने नैव प्लुतः प्राप्नोति; "अदूराद्धते" इति वचनात्(), तत्किमर्थमिदं परिगणनस्य प्रत्युदाहरणित्याह--"परिगणने च" इत्यादि। असति परिगणने, अदूराद्धूत ["अदूराद्धूतेन भविष्यतीति" इत्येव--कां०।पाठः] इत्युच्यते। अ()स्मस्तु सत्येतन्न वक्तव्यम्()। परिगणनादेव हि दूराद्धूते न भविष्यतीति। "कत्र्तव्यम्()" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"याज्यान्तः" ८।२।९० इत्यतोऽन्तग्रहणमनुवत्र्तते, तेनान्तस्यैव भविष्यतीति। "भद्रं करोषि गौः" इति। "अभिपूजिते" ८।२।१०० इति प्लुतः। अन्तग्रहणानुवृत्तेरत्रायं विधिर्न भवति, न ह्यत्रैतच्छब्दोऽश्ते, किं तर्हि? व्यञ्जनम्()। "शोभने खल्? स्तः खट्वे३" इति। अत्रापि "अभिपूजिते" ८।२।१०० इत्येव प्लुतः। "आमन्त्रिते "च" ["च" नास्ति--काशिका पदमञ्जरी च] इत्यादि। प्लुतश्चासौ विकारश्चेति प्लुतविकारः। प्लुतव्यपदेशस्त्विदुतोः प्लुतसाहचर्याद्वेदितव्यः। इदुतोग्र्रहणमैचः पूर्वस्योत्तरस्य चैत आदेशा मा भूवन्नित्येवमर्थम्()। तपरकरणमिहापि मुखसुखार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

तयोर् य्वावचि संहितायाम् ८।२।१०८

तयोः इदुतोः यकारवकारादेशौ भवतो ऽचि संहितायां विषये। संहितायाम् इत्येतच् चाधिकृतम्। इत उतरम् आध्यायपरिसमाप्तेः यद् वक्ष्यामः संहितायाम् इत्येवं तद् वेदितव्यम्। अग्नाउयाशा। पटाउवाशा। अग्नाउयिन्द्रम्। पटाउवुदकम्। अचि इति किम्? अग्नाउइ। पटाउउ। संहितायाम् इति किं? अग्नाउइ इन्द्रम्। पटाउउ उदकम्। इदुतोरसिद्धत्वातिको यणचि ६।१।७४ इति न प्राप्नोति इत्ययम् आरम्भः। अथापि कथञ्चित् तयोः सिद्धत्वं स्यात्, एवम् अपि स्वर्णदीर्घत्वनिवृत्यर्थं शाकलनिवृत्यर्थं च वक्त्वयम् एतत्। अथापि तन् निवृत्यर्थं यत्नान्तरम् अस्ति, तथापि यण्स्वरनिवृत्यर्थम् इदम् आरभ्यते। यणादेशस्य असिद्धत्वातुदात्तस्वरितयोर् यणः स्वरितो ऽनुदात्तस्य ८।२।४ इत्येष स्वरो न भवति। किं नु यणा भवति इह न सिद्धं य्वाविदुतोर्यदयं विदधाति। तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ। इक् तु यदा भवति प्लुतपूर्वस् तस्य यणं विदधात्यपवादम्। तेन तयोश्च न शाकलदीर्घौ यण्स्वरबधनम् एव तु हेतुः। इति श्रीवामनविरचितायां काशिकायां वृत्तौ अष्टमाध्यायस्य द्वितीयः पादः। अष्टमाध्यायस्य तृतीयः पादः।

न्यासः

तयोयर्वावचि संहितायाम्?। , ८।२।१०८

"तयोः" इति। अनन्तरविहिताविदुतौ प्रत्यवमृश्येते। "अग्नाउयाशा, पटाउवाशा" इति। अग्ने आशा, पटो आशा इति स्थिते "प्रद्रान्ताभिपूजितदिचार्यमाणप्रत्यभिवाख्याज्यान्तेषु" (वा।९३२) इत्येतेषामन्यतमस्मिन्? विवक्षिते, एचः पूर्वस्यार्थस्याकारः प्लुतः, उत्तरस्यार्थस्येदुतौ, तयोरनेन य्वौ। किमर्थं पुनरेतदारभ्यते? एतौ "इको यणचि" (६।१।७७) इत्येव सिध्यत? इत्यत आह--"इदुतोरसिद्धत्वात्()" इत्यादि। ननु च सिद्धा प्लुतः स्वरसन्धिषु। यणादेशादिषु यदयम्? "प्लुतप्रगृह्या अचि" ६।१।१२१ इति प्लुतस्य प्रकृतिभावमाह; सतो हि कार्यम भवितव्यम्(), नासतः; प्लुतस्य चेकः, अतस्तावपि स्वरमन्धिषु सिद्धावेष? इत्यत आह--"अथापि" इत्यादि। यदीदं नोच्येत, तदा "अग्नाउ इ इन्द्रम्(), पटाउ उ उदकम्? ति स्थिते षाष्ठिकं यणादेशं बाधित्वाऽकः सवर्णे दीर्घत्वं ६।१।९७ स्यात्()। इह चाग्नाउ इति आशा इति स्थिते "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" ६।१।१२३ इति प्रकृतिभावः स्यात्()। तस्माद्यथानयोः सिद्धत्वं स्यात्(), तथापि दीर्घत्वं शाकलविषिश्च मा भूदित्येवमर्थमिदं वक्तव्यमेव। ननु चान्यदेव तन्निवृत्यर्थ यत्नान्तरमस्ति, किं पुनस्तदिति चेत्()? उच्यते; "श्को यणचि" (६।१।७७) इत्यत्रोपसंख्यायते--"इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः शाकलदीर्घनिवृत्यर्थम्()" (वा।६७३) इति। तस्योपसंख्यानमवश्यं कत्र्तव्यम्()। य इक्? भोःशब्दस्य प्लुतः। अत्र भोःशब्दात्? पर इकारो निपातः, न प्लुतविकारः। तस्य यणादेश इष्यते, सोऽसति तस्मिन्नुपसंख्याने न स्यात्()। तस्मादवश्यं तत्? कत्र्तव्यम्()। य()स्मश्च क्रियमाणे प्लुतविकारयोरपीदुतोस्तेनैव भवितव्यम्(), ततो नेदं वक्तव्यमित्यत आह--"तथापि" इत्यादि। अग्नाउ इति आशा इति स्थिते यदि तेन षाष्ठिकोपसंखक्यानेन यणादेश इहोदात्तल्येकारस्य स्थाने क्रियेत, तस्योदात्तयण्स्वरे कत्र्तव्ये सिद्धत्वादाशाशब्दाकारस्यानुदात्तस्य "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" ८।२।४ इति स्वरितः प्रसज्येत। आशाशब्दः "आशाया अदिगाख्या चेत्()" (फि।सू।१-१८) इत्यन्तोदात्तः। शेषमपि "अनुदात्तम्()" ६।१।१५२ इत्याकारोऽनुदात्तः। तस्मादस्ति स्वरितत्वपरसङ्ग इति तन्निवृत्यर्थमिदमुच्यते। "किन्त यणा" इत्यादि। संग्रहश्लोकद्वयम्()। किमिति प्रश्ने। तु इति वितर्के। "इको यणचि" ६।१।७४ इति यणादेशेन किं न सिद्धं भवतीहाग्नाउ याशेत्येवमादावुदाहरणे यदाचार्य इदुतीर्य्वौ विदधाति! सर्वमेव सिद्धमित्यभिप्रायः। स्यादेतत्()--यणादेशो न प्राप्नोति, तस्मिन्? कत्र्तव्ये इदुतोरसिद्धत्वादित्यत आह--"तौ च"

इत्यादि। तुशब्दो हेतौ। यदा इक्? प्लुतपूर्वो भवति तदा तस्य स्यात्()। तस्मात्? "इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः शाकलदीर्घनिवृत्त्यर्थम्()" (वा।६७३) इत्युपसंख्याने यणादेशमपवादं करोति शाकलदोर्घविध्योः। तेन हेतुना तयोरिदुतोः शाकलदीर्घविधी न भविष्यतः। चशब्दः समुच्चये; भिन्नक्रमश्च प्रतिषेधानन्तरं द्रष्टव्यः। "तौ च मम स्वरसन्धिषु सिद्धौ"। न च शाकलदीर्घविधी प्रयोजयतः। एवमपवादः। तेषां शाकलदीर्घनिवृतेः प्रयोजनत्वे प्रयोजनान्तरमाह--"यणस्वरबाधनमेव तु हेतुः" इति। यणादेशाश्रयः स्वरो यणस्वरः, तस्य बाधनं हेतुः कारणम्()। कस्य? प्रकरणात्? सूतारम्भस्यैति गम्यते। तुशब्दोऽवधारणे। यण्स्वबाधनमेव तु सूत्रारम्भस्य हेतुरित्यर्थः॥ इति बोधिसत्त्वदेशीयाचार्य श्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायामष्टमाध्यायस्य द्वितीयः पादः - - - अथाष्टमाऽध्यायः तृतीयः पादः

---

सूत्रम्

काशिका-वृत्तिः

मतुवसो रु सम्बुद्धौ छन्दसि ८।३।१

संहितायाम् इति वर्तते। मत्वन्तस्य वस्वन्तस्य च पदस्य रुः इत्ययम् आदेशो भवति सम्बुद्धौ परतः छन्दसि विषये। मत्वन्तस्य तावत् इन्द्र मरुत्व इह पाहि सोमम्। हरिवो मेदिनं त्वा। मरुतो ऽस्य सन्ति, हरयो ऽस्य सन्ति इति मतुप्। सुप्तकारयोः हल्ङ्यादिलोपे संयोगान्तस्य लोपे च कृते नकारस्य रुः भवति। वस्वन्तस्य खल्वपि मीढ्वस्तोकाय तनयाय मृल। इन्द्र साह्वः। क्वसोर् निपातनम् दाश्वान्साह्वान्मीढ्वांश्च इति। मतुवसोः इति किम्? ब्रह्मन् स्तोष्यामः। सम्बुद्धौ इति किम्? य एवं विद्वानग्निम् उपतिष्ठते। छन्दसि इति किम्? हे गोमन्। हे पपिवन्। वन उपसङ्ख्यानं कर्तव्यम्। यस्त्वायन्तं वसुना प्रातरित्वः। इणः प्रातःपूर्वस्य छन्दसि क्वनिप्। विभाषा भवद्भगवदघवतामोच्चावस्य। छन्दसि भाषायां च भवत् भगवतघवतित्येतेषां विभाष रुः वक्तव्यः, अवशब्दस्य च ओकारादेशः। सामान्येन छन्दसि भाषायां च इदं वचनम्। भवत् हे भोः, हे भवन्। भगवत् हे भगोः, हे भगवन्। अघवन् हे अघोः, हे अघवन्। निपातनविज्ञानाद् वा सिद्धम्। अथ वा भो इत्येवम् आदयो निपाता द्रष्टव्याः। असम्बुद्धौ अपि द्विवचनबहुवचनयोरपि दृश्यन्ते। भो देवदत्तयज्ञदत्तौ। भो देवदत्तयज्ञदत्तविष्णुमित्राः। तथा स्त्रियाम् अपि च दृश्यन्ते, भो ब्राह्मणि इत्यादि। संहिताधिकार उत्तरत्र उपयुज्यते, यत्र भिन्नपदस्थौ निमित्तनिमित्तिनौ नश्छव्यप्रशान् ८।३।७ इति।

न्यासः

मतुवसो रु सम्बुद्धौ छन्दसि। , ८।३।१

"युधोः" (७।१।१) इत्यत्र द्वेष्यपरीहारायोक्तं तत्? "मतुवसोः" इत्यत्रापि द्रष्टव्यम्()। "इन्द्रमरुत्व" इति। मरुच्छब्दान्मतुप्(), "झयः" ८।२।१० इति यत्वम्(), "उगिदचाम्()" ७।१।७० इति नुम्(), हल्ङ्यादि ६।१।६६ संयोगान्त ८।२।२३ लोपौ, नकारस्य रुत्वम्(), तस्य "भोभगो" ८।३।१७ इत्यादिना यकारः, तस्यापि "लोपः शाकल्यस्य" ८।३।१९ इति लोपः। "हरिषो मेदिनं त्वा" इति। हरिशब्दान्मतुप्(), "छन्दसीरः" ८।२।१५ इति वत्वम्(), पूर्ववन्नुमादि। अयं त्वत्र विशेषः--"हशि च" ६।१।११० इति रोरुत्वम्(), पूर्वेण स ह "आद्गुणः" ६।१।८४। "मीढ्वस्तोकाय" इति। "मिह सेचने" (धा।पा।९९२) लिटः क्वसुः, "दा()आआन्? सह्वान्? मीढ्वांश्च" ६।१।१२ इत्यद्वित्वम्(), अनिट्त्वम्? उपधादीर्घत्वञ्च निपात्यते, "हो ढः" ८।२।३१ इति ढत्वम्(), रोर्विसर्जनीये कृते तस्य "विसर्जनीयस्य सः" ८।३।३४ ति सकारः। शत्रादेशस्य वसोः सम्बुद्धौ छन्दसि दिषये प्रयोगो नास्तीति तस्यानुदाहरम्()। अत एव "एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" (व्या।प।५२) इत्येषा परिभाषा नोपतिष्ठते; एकानुबन्धकस्य सम्बुद्धिपरस्य च्छन्दसि वसोः प्रयोगादर्शसात्()। "विद्वान्()" इति। "विदेः शतुर्वसुः" ७।१।३६। "हे पपिवन्()" इति। पातेः पिबतेर्वा परस्य क्वसोः

"वस्वेकाजाद्घसाम्()" ७।२।६७ इतीट्(), "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः स्थानिवद्भावाद्()द्विर्वचनम्()। "वन उपसंख्यानम्()" इति। अननुबन्धकस्य वनोऽसम्बवात्सामान्येन क्वनिब्बनिपोग्र्रहणम्()। यश्च मत्वर्थे "क्वनिब्वनिपौ छन्दसि वक्तव्यौ" (वा।५८२()) इत्यौपसंख्यानिकः, तस्यापि ग्रहणम्()। "प्रातरित्व" इति। "इण्? गतौ" (धा।पा।१०४५) प्रातापूर्वः, आतो मनिन्क्वनिब्धनिपश्च" ३।२।७४ इत्यनुवत्र्तमाने "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति क्वनिप्(), "ह्मस्वस्य पिति कृति तुक्()" ६।१।६९। इदं तु सम्पदादित्वादिना क्विपि तुकि तदन्तन्मतुपि "झयः" ८।२।१० इति वत्वे मत्वन्तादेव सिध्यतीति नोपसंख्यानं प्रयोजयति। "विभाषा" इत्यादि। भवच्छब्दः "भातेर्डवतुः" ["भातेर्डवतुप्()"--पं।उ।१-६४] इति डवतुप्रत्ययान्तो व्युत्पादितः। अव्युत्पन्नं वोकारानुबन्धं प्रातिपदिकम्(); इतरौ तु मत्वन्तौ। "हे भोः" इति। नुमो रुत्वे कृतेऽवशब्दस्य सर्वस्यैव स्थान ओकारः क्रियते, नालोऽन्त्यस्य, "नान्र्थकेऽलोन्त्यविधिः" (व्या।प।६२) इति कृत्वा। "नुपातविज्ञानात्? सिद्धम्()" इति। एतद्ग्रहणकवाक्यम्()। "अथ वा" इति। अस्यैव विवरणम्()। "असम्बद्धावपि" इत्यादि। एतेन निपातत्वे हेतुं दर्शयति। यद्युपसंख्यानादेव भो इत्येवमादिकं स्यात्(), द्विवचनबहुवचनयोर्न स्यात्(); सम्बुद्ध्यभावात्()। स्त्रियाञ्च सम्बुद्धावपि न स्यात्()--भो ब्राआह्नणीति; अत्र स्त्रीलिङ्गविशिष्टानामनुपादानात्()। "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्()" (व्या।प।२९) इति चेत्(), न; विभ्कतौ तत्प्रतिषेधात्()--विभक्तौ यत्कार्यं विषीयते तत्रेयं परिभाषा प्रतिषिध्यते; "विभक्तौ लिङ्गविशिष्टस्याग्रहणम्()" (व्या।प।३०) इति वचनात्()। अथापि न प्रतिषिध्यते? एवमपि भवतीति स्थिते इकारस्य["ईकारस्य"--प्रांउ।पाठः] रुत्वे कृतेऽवशब्दस्य चौकारे कृते रुत्वस्यासिद्धत्वात्? संयोगान्तलोपाभावे सति विसर्जनीये कृतेनिष्टं रूपं स्यात्()। तस्मादसम्बुद्धौ, स्त्रियाञ्च दर्शनान्निपाता एवैते वेदितव्याः। निपातत्वं पुनरेषां विभक्तिप्रतिरूपकत्वात्(), "विभक्तिस्वरप्रतिरूपकाश्च" (ग।सू।१६) इति चादिषु पाठात्()। पवञ्च भोः शब्दस्य निपातत्वं स्यात्(); भवतेर्विचि कृते गुणे च विभक्त्यन्ते भोःशब्दस्यैव विद्यमानत्वात्(), इतरयोस्तु न स्यात्()। न ह्रसत्यस्मिशुपसंख्याने भगोशब्दः, अघोःशब्दस्च विभक्त्यन्तोऽस्ति, यत्प्रतिरूपकौ निपातौ स्याताम्()। तस्मात्? सौत्रा एवैते निपाता वेदितव्याः; "भोभगोअधोअपूर्वस्य" ८।३।१७ इत्यत्र सूत्रे एषां पाठात्()। अथ वा--उपसर्गविभक्तित्वरप्रतिरूपकाश्चेति चकारस्यानुक्तसमुच्चयार्थत्वान्निपातत्वमेषां वेदित्वयम्()। यदि तर्हि निपातत्वमेषामाश्रित्योपसंख्यानं प्रत्याख्यायते, तदा भोःशब्दप्रयोगे समोस्ततोभोस्तत्रभो इत्यत्र "इतराभ्योऽपि दृश्यन्ते" (५।३।१४) ति भवदादियोगे विधीयमानास्तसिलादयो न सिध्यन्ति? अनिष्टस्वाददोषः। यो हि निपातत्वादुपसंख्यानं प्रत्याचष्टे स भोःशब्दप्रयोगे तसिलादीन्नेच्छत्येव॥

---

सूत्रम्

काशिका-वृत्तिः

अत्रानुनासिकः पूर्वस्य तु वा ८।३।२

अधिकारो ऽयम्। इत उत्तरं यस्य स्थाने रुः विधीयते ततः पूर्वस्य तु वर्णस्य वा अनुनासिको भवति इत्येतदधिकृतं वेदितव्यम्, यदित ऊर्ध्वम् अनुक्रमिष्यामस् तत्र। वक्ष्यति समः सुटि ८।३।५। समँस्कर्ता। समँस्कतुम्। समँस्कर्तव्यम्। अत्रग्रहणं रुणा सह संनियोगप्रतिपत्त्यर्थम्। अधिकारपरिमाणापरिग्रहे हि सति ढो ढे लोप ८।३।१३ इत्यत्र अपि पूर्वस्य अनुनासिकः आशङ्क्येत।

लघु-सिद्धान्त-कौमुदी

अत्रानुनासिकः पूर्वस्य तुवा ९१, ८।३।२

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा॥

न्यासः

अत्रानुनासिकः पूर्वस्य तु वा। , ८।३।२

पूर्वत्वमिदमापेक्षिकम्(), रुश्चेहानुवत्र्तते। न च तदपेक्षं पूर्वत्वमस्य विज्ञातुं शक्यते; इत उत्तरं ह्रनुनासिको रुश्च समनुवृत्तेरेककालं विधौयत इत्यनुनासिकविधानकाले रोरनिष्पन्नत्वम्()। अतस्तदपेक्षया पूर्वत्वमिदमशक्यं विज्ञातुम्()। तस्माद्यस्य स्थाने रुत्वं विधीयते तदपेक्षया पूर्वत्वं विज्ञायते, इत्याह--"यस्य स्थाने रुर्विधीयते ततः पूर्वस्य" इति। तुशब्दः परस्मात कार्यिणः पूर्वस्य विशेषं दर्शयति। परस्य रुत्वकार्यम्(), पूर्वस्य त्वनुनासिक इति। अथ वा--रुत्वादननासिकस्य विशेषं दर्शयति। रुत्वं नित्यम्? अनुनासिकस्तु विभाषेति। अछाच्कद्कगणं किमर्थम्()? अत्र रुप्रकरणे यथा स्यादिति चेन्न; अधिकारादेवैतत्? सिद्धम्()। यथा हि "अनुनासिकः पूर्वस्य" इत्यधिकृतमुत्तरत्रानुवत्र्तते, तथा रुरित्येतदपि। तत्रान्तरेणाप्यत्रेति वचनं रुप्रकरणे भविष्यतीत्यत आह--"अत्र" इत्यागदि। सन्नियोगः--यौगपद्यम्()। यौगपद्यम्()। रुणा सह कथं नाम स प्रतीयेतेत्येवमर्थमत्रग्रहणम्()। अवधारणञ्चात्र द्रष्टव्यम्()--रुणैवेति। सन्नियोगमात्रं हि रुत्वानुनासिकयोः; उत्तरत्र द्वयोरप्यनुवृत्तेः। स्थानिऊभेदेन विरोधाभावाद्विनाप्यत्रग्रहणेन लभ्यत एव। ननु रुप्रकरणादूध्र्वमनुनासिकस्यास्वरितत्वादेव सन्नियोगो न विज्ञास्यते, त()त्क तदर्थेनात्रग्रहणेन? इत्यत आह--"अधिकारपरिमाणापरिग्रहे हि" इत्यादि। अधिकारस्य परिमाणमियत्ता, तस्य परिग्रहः=परिज्ञानम्(), निश्चयः। तस्मिन्नसति मन्दधीभिः प्रतिपत्तृभिः किमुत्तरत्रानुनासिकस्य स्वरितत्वमस्ति? अहोस्विन्नास्ति? इति जातसन्देहैः "ढोढे लोपः" (८।३।१३) इत्यादावपि यस्य स्थाने ढलोपदिकार्यं विधीयते तस्मात्? पूर्वस्यानुनासिक आशङ्क्येत। अथ वाग्रहणं किमर्थम्(), यावतोत्तरसूत्रे नित्यग्रहणादेव विकल्पोऽस्य विज्ञास्यते? नैतदस्ति; एवं हि पूर्वसत्रे विकल्पो विज्ञायेत। तस्माद्वेति वक्तव्यम्()? न वक्तव्यम्(); आचार्यप्रवृत्तिज्र्ञापयति--विकल्पेनायं विधिर्भवतीति, यदयमुत्तरसूत्रे यस्यानुनासिको न कृतस्तस्माद्रोः पूर्वस्मात्? परमनुस्वारागमं शास्ति। न हि नित्येऽस्मिन्? विधौ तत्? सम्भवति, रोः पूर्वस्य यस्यानुनासिको न कृत इति। एवं तर्हि विस्पष्टार्थं वाग्रहणम्()॥

बाल-मनोरमा

अत्रानुनासिकः पूर्वस्य तु वा १३५, ८।३।२

अत्रानुनासिक। "मतुवसौ रु सम्बुद्धौ" इति रुत्वविध्यनन्तरमिदं पठितम्। अतोऽत्रेत्यनेन रुप्रकरणे इत्यर्थो गम्यते। पूर्वत्वं च "रु" इत्यपेक्षया ज्ञेयम्, प्रकृत्वात्। तदाह--अत्रेति। उत्तरसूत्रे अनुनासिकाभावपक्षानुवादादेव विकल्पे सिद्धे "वा"ग्रहणं स्पष्टार्थम्। "परस्य नित्यं रुत्वं, पूर्वस्य तु अनुनासिकविकल्प" इति वैषम्यस्य सिद्धस्यैव द्योतनार्थस्तुशब्दोऽपि स्पाष्टार्थ एव। इदमेवाभिप्रेत्य मूले विवरणवाक्ये वाग्रहणं त्यक्तमिति प्रौढमनोरमायां मूलकृतैव उक्तम्। अनेन सूत्रेण "सर्" इत्यत्र सकारादकारोऽनुनासिकः। सँर्()स्कर्तेति स्थिते।

तत्त्व-बोधिनी

अत्रानुनासिकः पूर्वस्य तु वा १०९, ८।३।२

अत्रानुनासिकः। अयमधिकारो विधिर्वेति पक्षद्वयम्। आद्ये "अत्राग्रहणमनर्थकम्, अधिकारादेव रूप्रकरणलाभात्। "तु"शब्दस्तु अधिकारपक्षे परस्मात्कार्यिणः पूर्वकार्यस्य विशेषद्योतनार्थः,-"परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक" इति। विधिपक्षे "तु"शब्दो व्यर्थो "वा" ग्रहणं स्पष्टार्थम्, "अनुनासिकात्परः" इति ज्ञापकादेव सिद्धेः। नहि विकल्पं विना "अनुनासिकं विहाये"त्यनुनासिकाऽभावपक्षः संभवति। इदमेव ध्वनयितुं वृत्तौ "तुध्वे"तिशब्दावनुक्त्वा "रोः पूर्वस्यानुनासिकः स्या"दित्येवोक्तम्। रोः पूर्वस्येति। उपलक्षणमेतल्लोपस्यापि। अत्र "रुप्रकरणे यो विधिस्ततः पूर्वस्ये"ति निष्कृष्टोऽर्थः। एवं "रोः पूर्वस्मात्पर" इत्यस्यापि "रुप्रकरणे यो विधिस्ततः पूर्वस्मात्पर" इत्यर्थो बोध्यः।

---

सूत्रम्

काशिका-वृत्तिः

अतो ऽटि नित्यम् ८।३।३

अटि परतो रोः पूर्वस्य आकारस्य स्थाने नित्यम् अनुनासिकादेशो भवति। दीर्घादटि समानपादे ८।३।९ इति त्वं वक्ष्यति, ततः पूर्वस्य आतो ऽनुनासिकविकल्पे प्राप्ते नित्यार्थं वचनम्। महाम्ँ असि। महाम्ँ इन्द्रो य ओजसा। देवां अच्छा दीद्यत्। केचिदनुस्वारम् अधीयते स च्छान्दसो व्यत्ययो द्रष्टव्यः। आतः इति किम्? ये वा वनस्पतींरनु। अटि इति किम्? भवांश्चरति। भवांश्छाघयति। नित्यग्रहणं विस्पष्टार्थम्।

न्यासः

आतोऽटि नित्यम्?। , ८।३।३

"देवं अच्छादीव्यत्()" इति। अत्र योऽकारस्तस्मिन्नटि परतो "दूर्घादटि समानपादे" (८।३।९) इति न कारस्य रुत्वे कृते तस्मात्? पूर्वस्याकारस्यानेनानुनासिकत्वम्(), पूर्ववद्रोर्यकारः, तस्य पूर्वदेव लोपः। यदि महां इन्द्रो म ओजसेति "केचिदनुस्वारमधीयते" इति वक्तव्यम्(), तर्हि तद्यथासौ सिध्यतीत्यत आह--"सः" इत्यादि। व्यत्ययो बहुलम्()" ३।१।८५ इत्यनेन बोद्धव्यः। "यो वा वनस्पतीं रनु" इति। वनस्पतीन्? अन्विति स्थिते "दीर्घादटि समानपादे" (८।३।९) इति नकारस्य रुत्वे कृते "अनुनासिकात्? परोऽनुस्वारः" (८।३।४) इतीकारात्? परोऽनुस्वारः "भवांशस्चरति" इति। "नश्छव्यप्रशात्()" ८।३।७ इति नकारस्य रुत्वम्(), तस्य विसर्जनीयस्य सकारः, तस्य "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वम्()। नित्यग्रहणं विस्पष्टार्थम्()।["स्पष्टार्थम्()"--प्रां३।पाठः] पूर्वेणैव विकल्पे सिद्धे सत्यारम्भसामथ्र्यादेव नित्योऽयं विधिर्विज्ञास्यते। ननु चात एवाटि, अथ वाऽट()एवातः--इत्येव नियमो यथा स्यादित्येवमर्थः सिद्धे सत्यारम्भः स्यात्()? नैतदस्ति; असति हि विधेये नियमो भवति। इह त्वस्ति विदेयम्(), किं तत्()? नित्योऽनुनासिकः। तस्माद्विधिरेव युक्तः; न नियमः। तथा चोक्तम्()--"विधिनियमसम्भवे विधिरेव व्यायान्()" (व्या।प।१३०) इति। "आतः" इति तकारोऽसब्देहार्थः। "आ इत्युच्यमाने सन्देहः स्यात्()--किमर्थं षष्ठ()न्तस्याकारस्य कार्यिनो निर्देशः? उताादेशान्तस्य प्थमान्तस्य? इति॥

---

सूत्रम्

काशिका-वृत्तिः

अनुनासिकात् परो ऽनुस्वारः ८।३।४

अन्यशब्दो ऽत्राध्याहर्तव्यः। तदपेक्षया चेयम् अनुनासिकातिति पञ्चमी। अनुनासिकादन्यो यो वर्णः रोः पूर्वः, यस्य अनुनासिकः न कृतः, ततः परो ऽनुस्वार आगमः भवति।

लघु-सिद्धान्त-कौमुदी

अनुनासिकात्परोऽनुस्वारः ९२, ८।३।४

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः॥

न्यासः

अनुनासिकात्? पोरऽनुस्वारः। , ८।३।४

"अन्यशब्दोऽत्राध्याहार्यः" इति। असति ह्यन्यशब्दस्याध्याहरे परशब्दस्य धुतत्वात्? तदपेक्षयैवानुनासिकादित्येषा

पञ्चमी स्यात्(); अन्यस्येह पञ्चमीहेतोरसम्भवात्()। ननु "तस्मादित्युत्तरस्य" (१।१।६७) उपस्थाने उत्तरशब्दापेक्षयैव पञ्चमौ स्यात्()? नैतदस्ति; यदि ह्रल्याः परिभाषाया इहोपस्थानं स्यात्? परग्रहणमनर्थकं स्यात्()। तस्मात्? परशब्दापेक्षयैव पञ्चम्या भवितव्यम्()। सा भवन्ती च "अन्यारादितरत्ते" २।३।२९ इत्यादिवा सूत्रेण परशब्दयोगे दिग्बृत्तिगा वा स्यात्(), अन्यार्थवृत्तिना वा? तत्र पूर्वस्मिन्? पक्षे रोः पूर्वस्मादनुनासिकादेव परोऽनुस्वारो विज्ञायेत, न च तस्मात्? पर इष्यते। इतर()स्मस्त्वयमर्थं आपद्येत--अनुनासिकात्? परो भवतदि, अनुनासिकादन्योऽनुस्चारो भवतीत्यर्थः। एवञ्च परग्रहणनर्थकं स्यात्(); न ह्ननुनासिकापेक्षयानुस्वरोऽन्यत्वं व्यभिरति। किञ्च--श्रुतत्वात्? तस्यैवानुनासिकस्यानुस्वारो विज्ञायेत, प्रकृतत्त्वाद्रोर्वाः; अनिष्टञ्चैतत्? अन्यशब्दाध्याहारे तु वस्यानुनासिको न कृतस्यस्मादेव पर इति विज्ञायते। तस्मादन्यशब्दोऽत्राध्याहार्यः। सत्यप्यन्यशब्दाध्याहारे तु यस्यानुनासिको न कृतस्यस्मादेव पर इत#इ विज्ञायते। तस्मादन्यशब्दोऽत्राध्याहार्यः। सत्यप्यन्यशाब्दाध्याहारे यदि परशब्दापेक्षयैव "अनुनासिकात्()" इत्येषा पञ्चमी स्यात्(), स दोषस्तदवस्थ एव स्यादिति मत्वाऽऽह--"तदपेक्षया चेयम्()" इत्यादि। चशब्दोऽवधारणे। अन्यशब्दापेक्षयैव, न परशभ्दापेक्षयेत्यर्थः। "अनुनासिकदन्यो यः" इत्यनेन तदेवान्यशब्दापेक्षत्वं पञ्चम्या दर्शयति। "रोः पूर्वः" इत्यनेनापि पूर्वग्रहणानुवृत्तिम्()। पूर्वत्वञ्च रुत्वापेक्षम्()। "यस्यानुनासिको न कृतः" इत्यनेनाप्यन्यशब्दाभिधेयमर्थं दर्शयति। "ततः" इत्यनेनापि पूर्वग्रहणस्यार्थादिह पञ्चम्यन्ततया विपरिणाअमम्()। अन्यशब्दस्य चाव्याह्मतस्य पञ्चम्यन्ततां पर इत्यनेनापि। तस्या अन्यशब्दस्य सम्बन्धिन्याः पञ्चम्याः परशब्दापेक्षताम्()। "आगमः" इत्यनेनाप्यादेशाभावम्()। परग्रहणं शक्यमकर्तुम्()। अन्यशब्दस्य पञ्चम्यन्तस्याध्याहरे सति पूर्वग्रहणस्य चार्थात्? प्रथमान्ततया विपरिणामे सत्येवं विज्ञास्यते--अनुनासिकाद्योऽन्यस्तस्मादुत्तरो यो रुस्ततः पूर्वोऽनुस्वारागमो भवति। एवञ्च विज्ञायमानेऽसत्यपि परग्रहयणे संस्कत्र्तेत्यादि सिध्यत्येव, किं परग्रहणेन? एतत्? क्रियते विस्पष्टार्थम्()॥

बाल-मनोरमा

अनुनासिकात्परोऽनुस्वारः १३६, ८।३।४

अनुनासिकात्। "अनुनासिका"दिति ल्यब्लोपे पञ्चमी। "विहाये"ति गम्यम्। पूर्वस्येत्यनुवृत्तं पञ्चम्यन्ततया विपरिणम्यते। पूर्वत्वं च रुत्वकृतरेफापेक्षया। परत्वं च रोर्यः पूर्ववर्णस्तदपेक्षया, तदाह--अनुनासिकं विहायेति। अनुनासिकाऽभावपक्षे इत्यर्थः। आगमत्वं परशब्दलभ्यम्। ततश्च सकारादकारस्य अनुनासिकाऽभावपक्षे अकारात्परोऽनुस्वारागमः। संर्()स्कर्ता। अथ रेफस्य विसर्गविधिं स्मारयति-खरवसानयोरिति।

तत्त्व-बोधिनी

अनुनासिकात्परोऽनुस्वारः ११०, ८।३।४

अनुनासिकात्। ल्यब्लोपे पञ्चमीत्याह--अनुनासिकं विहायेति। अनुनासिकाऽभावपक्षे इत्यर्थः। "पूर्वस्ये"ति प्रकृतस्य तु विभक्तिविपरिणामेन पञ्चम्यन्ततेत्यभिप्रेत्याह-रोः पूर्वस्मादिति। "-संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात् "अवत्सा धेनुरानीयता"मित्यत्रेवसंभावितानुनासिकत्वगुणक एवोपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यत इत्यभिप्रेत्याह-रोः पूर्वस्मादिति-" इति तु मनोरमायामवतारितं, तत्तु "पूर्वस्ये"त्यनुवर्तनं विभक्तिविपरिणामं चानपेक्ष्य लौकिकन्यायेनैवेष्टं सिध्यतीत्याशयेनोक्तमित्याहुः। अनुस्वारागम इति। आगमत्वं च परशब्देनैव लभ्यते। यथा "पूर्वौ तु ताभ्यामै"जित्यत्र पूर्वशब्देन ऐचोरागमत्वमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

वक्ष्यति समः सुति ८।३।५

संस्कर्ता। संस्कर्तुम्। संस्कर्तव्यम्।

लघु-सिद्धान्त-कौमुदी

समः सुटि ९०, ८।३।५

समो रुः सुटि॥

न्यासः

समः सुटि। , ८।३।५

"मोऽनुस्वारः" ८।३।२३ इत्यनुस्वारे प्राप्ते वचनम्()। "सँस्कर्ता"["संस्कर्तेति"--न्यासे, पदमञ्जर्यां च मुद्रितः पाठः] इत्यादि। करोतेः सम्पूर्वात्? तृजादयः, "सम्पर्युपेभ्यः करोतौ भूषणे" ६।१।१३२ (इति) सुट्(), समो मकारस्य "अलोऽन्तस्य" १।१।५१ इत्यनेन रुत्वे ततः पूर्वस्यानुनासिकः, रोर्विसर्जनीयः। तस्य "वा शरि" ८।३।३६ इति विकल्पेन सकारे प्राप्ते विसर्जनीये च यथा नित्यं सकारो भवति, तथा वृत्तौ दर्शितम्()। कथं पुनरस्मिन्? सूत्रे सकारो निर्द्दिश्यते? इत्याह--"समः स्सुटि" इत्यादि। यस्मिन्? पक्षे विभक्तिसकारस्य विसर्जनीये कृते "वा शरि" (८।३।३६) इति सकारो न क्रियते, सं पक्षमाश्रित्येदमुक्तम्(); अन्यथा हि त्रिसकारकोऽयं निर्देश इति वक्तव्यं स्यात्(); त्रयाणां सकाराणां सन्निपातात्()। एको हि विभक्तिसम्बन्धी सकारः, द्वितीयस्त्वादेशसम्बन्धी, तृतीयः सुटसम्बन्धी। यदा तु त्रिसकारं कृत्वा सूत्रं पठ()ते, तदा द्विशब्दोऽधिकसकारोपलणार्थो द्रष्टव्यः। यदि तर्हि सकार आदेशो विधीयते, "संस्कत्र्ता" इत्यत्रानुनासिको न प्राप्नोति; यस्मादत्रात्रग्रहणं रुणैव सह सन्नियोगप्रतिपत्त्यर्थमुक्तम्()। रुग्रहणस्यास्मिन्? प्रकरणे यद्विधीयते तदुपलक्षणार्थत्वाददोषः। "रुणा सह" इति। रुप्रकरणे यद्विधीयते तेन सहेत्यर्थः। यदपि पूर्वस्मिन्? सूत्रे वृत्तो "रोः पूर्वः" इत्युक्तम्(), तत्रापि रुग्रहणस्यास्मिन्? प्रकरणे यद्विधीयते तदुपलक्षणार्थं वेदितव्यम्(); अन्यथा हि "संस्कर्ता" इति पक्षेऽनुस्वारो न स्यात्()॥

बाल-मनोरमा

समः सुटि १३४, ८।३।५

समः सुटि। "सम" इति षष्ट()न्तम्। "मतुवसो रु सम्बुद्धौ" इत्यतः रुग्रहणमनुवर्तते। तदाह-समो रुरिति। "रु" इत्युकार इत्। अलोऽन्त्यस्येति। "उपतिष्ठते" इति शेषः। सम्पूर्वात्करोतेस्तृचि "सम्परिभ्या करोतौ भूषणे" इति सुडागमे सम्-स्कर्तेति स्थिते मस्य रुत्वम्। सर्-स्कर्तेति स्थिते।

तत्त्व-बोधिनी

समः सुटि १०८, ८।३।५

समः सुटि। यद्यपि मोऽनुस्वारेण सिद्धं, तथापि अनुनासिकत्रिसकारसिध्यर्थमिदम्।

---

सूत्रम्

काशिका-वृत्तिः

पुमः खय्यम्परे ८।३।६

पुंस्कामा।

लघु-सिद्धान्त-कौमुदी

पुमः खय्यम्परे ९४, ८।३।६

अम्परे खयि पुमो रुः। पुंस्कोकिलः, पुंस्कोकिलः॥

न्यासः

पुमः स्वय्यम्परे। , ८।३।६

"पुमः" इति। पुंसः सकारादवशिष्टो यो भागस्तस्यायं निर्दशः, सकारस्य संयोगान्तलोपे कृते तस्यैव कार्यित्वात्()। "अम्परे" इति। अम्? परो यस्मात्? स तथोक्तः। अमिति प्रत्याहारस्य ग्रहणम्(), न द्वितीयैकवचनस्य। कुत एतत्()? व्याप्तिन्यायात्? "खयि" इति प्रत्याहारेण साहचर्याच्च। "पुंश्चली" इति। चलडिति पचादौ पठ()ते। तेन "चल कम्पने" (धा।पा।८३२) इत्यस्मात्? पचाद्यच्? टिद्भवति, "टिड्ढणञ्()" ४।१।१५ इति ङीप्()। पुंश्चलीति षष्ठीसमासः। "पुंस्कामा" इति। पुंसि कामोऽस्या इति बहुव्रीहिः। अथ वा--पुमांसं कामयत इति "शीलिकामिभिक्षाचरिभ्यो णो वक्तव्यः" (वा।२२९) इति णः; ततष्टाप्()। अत्र पुंस्कामेत्यत्रोदाहरणे। "सकार एवादेशः" इति। विसर्जनीयस्येत्यपेक्षते। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--"कुप्वोः क पौ च" ८।३।३७ इत्यत्र "वा शरि" ८।३।३६ इत्यतो वाग्रहणमनुवत्र्तते, सा च व्यवस्थितविभाषा। तेनात्रापि विसर्जनीयस्य सकार एव भविष्यति, न विसर्जनीयजिह्वामूलीयाविति। इदं तावत्? पूर्वसूत्रे यदा द्विसकारपक्षो नाश्रीयते, तदा प्रतिविधानमुक्तम्()। यदा तु तत्र "द्विसकारको निर्देशः" इत्येष पक्ष आश्रीयते, तदा प्रतिविधातुमाह--"द्विसकारकनिर्देशपक्षे तु" इत्यादि। ननु च रुरप्यनुवरत्तत एव, तत्र यथा सकारोऽनुवत्र्तमानो भवति तथा रुरपि पक्षे स्यात्(), ततश्च रुत्वपक्षे विसर्जनीये कृते जिह्वामूलोयः स्यादेव? इत्यत आह--"रुत्वं त्वनुवत्र्तमानम्()" इत्यादि। तत्रैव कारणमाह--"सम्बन्धानुवृत्तिस्तस्य" इत्यादि। इतिकरणो हेतौ, स हि "मतुवसो रु सम्बुद्धौ" ८।३।१ इत्यतः स्वेन सम्बन्धिना मतुपा वसुना च सम्बद्ध इहानुवत्र्तते। तस्मान्नोत्सहते सम्बन्ध्यन्तरेण सम्बन्धमनुभवितुम्()। "पुंदासः" इति। षष्ठीसमासः--पुंसो दास इति। कर्मधारयो वा। एवं "पुगवः" इति। अत्र तु "गोरतद्धितलुकि" (५।४।९२) इति टच्? समासान्तः। "पुंक्षीरम्(), पुंक्षुरम्()" इति। षष्ठीसमासः। "खय्यमि" इति। वक्तव्ये परघणं विपरीतकल्पनानिरासार्थम्()। असति परग्रहणे--अमि खयि पर इति विज्ञायेत, ततश्च "पुमाख्यः, पुमाचारः" इत्यत्रापि स्यात्()। अतः परग्रहणम्()॥

बाल-मनोरमा

पुमः खय्यम्परे १३८, ८।३।६

पुमः। "रु" ग्रहणमनुवर्तते। अम् परो यस्मादिति विग्रहः। तदाह-अम्परे खयीति। "पुमान्-कोकिल" इति कर्मधारये "सुपो धातुप्रातिपदिकयो"रिति सुब्लुकि "संयोगान्तस्य लोप" इति सकारलोपे पुम्-कोकिल इति स्थिते मस्य रुत्वम्, अनुनासिकानुस्वारविकल्पः, विसर्गः, "संपुंकाना"मिति सः। ननु "विसर्जनीयस्य स" इत्येव सिद्धे "संपुंकाना"मित्यत्र "पु"ग्रहणं व्यर्थमित्यत आह। व्युत्पत्तीत्यादि। ><क><पयोः प्राप्तौ संपुंकानामिति स इत्यन्वयः। "विसर्जनीयस्य स" इति सत्वापवादं कुप्वो ><क><चेति विधिं बाधितुं पुंग्रहणमित्येव वक्तुमुचितमित्यत आह--अप्रत्ययस्येति षत्वपर्युदासादिति। पूञो डुम्सुन्नित्यौणादिकप्रत्ययस्थमकारस्थानिकत्वाद्विसर्गस्येति भावः। ननूणादयोऽव्युत्पन्नानि प्रातिपदिकानीत्यायनेयीति सूत्रस्थभाष्यरीत्या औणादिकप्रत्ययान्तेषु प्रकृतिप्रत्ययविभागाभावात्कथमिहाप्रत्ययस्येति पर्युदास इत्यत आह--व्युत्पत्तिपक्ष इति। औणादिकशब्देषु प्रकृतिप्रत्ययविभागाभावात्कथमिहाप्रत्ययस्येति पर्युदास इत्यत आह--व्युत्पत्तिपक्ष इति। औणादिकशब्देषु प्रकृतिप्रत्ययविभागव्युत्पादनमस्ति नास्तीति

पक्षद्वयमादेशप्रत्यययोरिति सूत्रभाष्ये स्थितम्। तत्र व्युत्पत्तिपक्षे पुंस्()शब्दस्य डुम्सुन्()प्रत्ययान्ततया तत्र मकारस्थानिकविसर्गस्याऽप्रत्ययस्येति पर्युदासेनेदुदुपधस्य चाप्रत्ययस्येति षत्वस्य तत्र न प्रसक्तिः। अतस्तत्र कुप्वोरिति विधिं बाधितुं "संपुंकाना"मिति पुंग्रहणमित्यर्थः। अव्युत्पत्तीति। औणादिकशब्देषु प्रकृतिप्रत्ययविभागाऽभावपक्षेऽप्रत्ययस्येति पर्युदासस्यात्राऽप्रसक्तेरिदुदुपधस्येति प्रसक्तं षत्वं बाधितुं "संपुकाना"मिति पुंग्रहणमित्यर्थः। "पुँस्कोकिल" इत्यनुनासिकपक्षे रूपम्। "पुंस्कोकिल" इत्यनुस्वारपक्षे रूपम्। "पुंस्कोकिल" इत्यनुस्वारपक्षे रूपम्। ननु चक्षिङ् व्यक्तायां वाचि"अस्मात् ल्युट्, अनादेशः, चक्षिङः ख्याञ्, पुंसः ख्यानं पुंख्यानमित्यत्रापि पुमो मस्य रुत्वं स्यादित्यत आह--

ख्याञादेशे नेति। भाष्ये "चक्षिङः ख्शा" ञिति पठित्वा पूर्वत्रासिद्धमित्यसिद्धकाण्डे रषाभ्यामिति णत्वविध्यनन्तरं "ख्शाञश्शस्य यो वे"ति पठितमिति वक्ष्यते। एवंच यत्वस्याऽसिद्धतया खकारस्याऽम्परकत्वाऽभावात् "पुनः खयी"ति रुत्वं नेत्यर्थः। पुंख्यानमिति। "मोऽनुस्वारः" "वा पदान्तस्ये"ति परसवर्णविकल्पः। नच "वर्जने प्रतिषेधः, असनयोश्चे"त्यनादेशे परे प्रतिषेधात्कथमत्र ख्याञादेश इति वाच्यं, ख्शाञादेशप्रयोजनपरवार्तिके पुंख्यानमित्यादिप्रयोगात्तदुपपत्तेः।

तत्त्व-बोधिनी

पुमः खय्यंम्परे ११२, ८।३।६

पुमःखयि। पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम्। "अम्पर" इति बहुव्रीहिः। पर्युदासादिति। "इदुदुपधस्ये"ति षत्वविधायके सूत्रे इति भावः। ख्य ञादेशे नेति। "चक्षिङः ख्या"ञित्यत्र ख्()शादिरयमादेशः। असिद्धकाण्डे णत्वानन्तरं "शस्य यो वे"ति स्थितमिति वक्ष्यते। एवंच यत्वस्यासिद्धतयाऽम्परत्वाऽभावात् "पुमः खयी"ति रुत्वं नेत्यर्थः।

पुंख्यानमिति। चक्षिङो "ल्युट् चे"ति ल्युटि ख्याञादेशः। ननु आदेश इह दुर्लभः, "वर्जने प्रतिषेधः"-"असनयोश्चे"ति वार्तिकादिति चेत्सत्यम् ; "बहुलं तण्यन्नवधकगात्रविचक्षणाऽजिरातद्यर्थ"मिति वार्तिके बहुलग्रहणात्समाधेयम्। विस्तरस्तिवह मनोरमायामनुसन्धेयः। त्रायस्वेति। "त्रैङ् पालने"लोटि शप्यायादेशः।

---

सूत्रम्

काशिका-वृत्तिः

नश्छव्यप्रशान् ८।३।७

भवांश्चरति। केचित् तु परशब्दम् एव अन्यार्थं वर्णयन्ति। अनुनासिकात् परः अनुनासिकातन्यः अनुस्वारो भवति। यस्मिन् पक्षे ऽनुनासिको न अस्ति तत्र अनुस्वारागमो भवति। स तु कस्य आगमो भवति? रोः पूर्वस्य एव इति वर्तते, व्याख्यानादादेशो न भवति। समः सुटि ८।३।५। रुः वर्तते। समः इत्येतस्य रुः भवति सुटि परतः संहितायां विषये। सम्ँस्कर्ता। सम्ँस्कर्तुम्। सम्ँस्कर्तव्यम्। संस्स्कर्ता। संस्स्कर्तुम्। संस्स्कर्तव्यम्। अत्र रोर्विसर्जनीये कृते वा शरि ८।३।६६ इति पक्षे विसर्जनीय एव प्राप्नोति। व्यवस्थितविभाषा द्रष्टव्या। तेन अत्र नित्यं सकार एव भवति। अस्मिन्नेव सूत्रे सकारादेशो वा निर्दिश्यते, समः सुटि इति द्विसकारको निर्देशः। समः इति किम्? उपस्कर्ता। सुटि इति किम्? संकृतिः। कश्चिदाह संपुंकानां सो वक्तव्यः। रुविधौ ह्यनिष्टप्रसङ्गः, संस्स्कर्ता, पुंस्स्कामा, कांस्स्कानिति। पुमः खय्यम्परे ८।३।६। पुम् इत्येतस्य रुः भवति अम्परे खयि परतः। पुम्ँस्कामा, पुंस्कामा। पुम्ँस्पुत्रः, पुंस्पुत्रः। पुम्ँस्फलम् पुंस्फलम्। पुम्ँश्चली, पुंश्चली। पुंस्कामा इत्यत्र विसर्जनीयस्य कुप्वोः ẖकẖपौ च ८।३।३७ इति प्राप्नोति। तस्मादत्र सकार एबादेशो

वक्तव्यः। द्विसकारकनिर्देशपक्षे तु पूर्वस्मादेव सूत्रात् सः इत्यनुवर्तते। रुत्वम् तु अनुवर्तमानम् अपि नात्राभिसम्बध्यते, सम्बन्धानुवृत्तिस्तस्य इति। खयि इति किम्? पुंदासः। पुंगवः। अम्परे इति किम्? पुंक्षीरम्। पुंक्षुरम्। परग्रहणं किम्? पुमाख्याः। पुमाचारः। नश् छव्यप्रशान् ८।३।७। अम्परे इति वर्तते। नकारान्तस्य पदस्य प्रशान्वर्जितस्य रुः भवति अम्परे छवि परतः। भवाम्̐श्छादयति, भवांश्छादयति। भवांश्चिनोति, भवांश्चिनोति। भवांष्टीकते, भवांष्टीकते। भवाम्̐स्तरति, भवांस्तरति। छवि इति किम्? भवान् करोति। अप्रशानिति किम्? प्रशान् छाव्यति। प्रशान् चिनोति। अम्परे इत्येव, भवान्त्सरुकः।

लघु-सिद्धान्त-कौमुदी

नश्छव्यप्रशान् ९५, ८।३।७

अम्परे छवि नान्तस्य पदस्यरुः; न तु प्रशान्शब्दस्य॥

न्यासः

नश्छव्यप्रशान्?। , ८।३।७

"स" इति। निवृत्तम्(), रुरेवानुवत्र्तते; सोऽपि मतुवसुभ्यामसम्बद्ध एव; तयोरपि निवृत्तत्वात्()। "न" इति वर्णग्रहणम्(), तच्च प्रकृतस्य पदस्य विशेषणम्(), विशेषणेन च तदन्तविधिर्भवतीत्याह---"नकारान्तस्य पदस्य" इत्यादि। "भवांश्छादयति" इति। "झद अपवारणे" (धा।पा।१८३३), चुरादिणिच्()। "भवांष्टीकते" इति। "टिकृ टीकृ रधि लघि गत्यर्थाः" (धा।पा।१०३,१०४,१०७,१०८)। अनुदात्तत्वादात्मनेपदम्()। "प्रशान्()" इति। प्रपूर्वाच्छमेः क्विप्? "अनुनासिकस्य विवझलोः क्ङिति" ६।४।१५ इति दीर्घः, "मो नो धातोः" ८।२।६४ इति मकारस्य नकारः, तस्यासिद्धत्वान्नलोपाभावः। "भवान्? त्सरुकः" इति। त्सरौ कुशलः, "आकर्षादिभ्यः कन्()" ५।२।६३ इति कन्प्रत्ययः॥

बाल-मनोरमा

नश्छव्यप्रशान् १३९, ८।३।७

नश्छव्यप्रशान्। "न" इति षष्ठ()न्तं पदस्येत्यधिकृतस्य विशेषणम्। तदन्तविधिः। "अम्परे" इत्यनुवर्तते, "रु" इति च। तदाह-अम्पर इत्यादिना। "अप्रशा"निति षष्ठ()र्थे प्रथमा। तदाह-न त्विति। विसर्ग इति। "शा()ङ्ग-छिन्धि" "चक्रिन्-त्रायस्वे"ति स्थिते नकारस्यानेन रुत्वम्। अनुनासिकानुस्वारविकल्पः। ततो विसर्गः, सत्वं, सस्य श्चुत्वेन शकार इत्यर्थः। शार्ङिंश्छिन्धीति। अनुनासिकपक्षे रूपम्। शार्ङिंश्छिन्धीति। अनुस्वारपक्षे रूपम्। "चक्रिंस्त्रायस्वे"त्यनुनासिकपक्षे। अनुस्वारपक्षे तु "चकिं()रस्त्रायस्वे"ति। त्रैङ् पालने। ङित्वादात्मनेपदी। "त्राही"ति प्राचीनग्रन्थस्तु प्रामादिकः। त्रायत इति त्राः, त्रा इवाचरती त्रातीत्याचारक्विबन्ताल्लोट् परस्मैपदमिति वा कथञ्चत्समाधेयम्। प्रशानिति। प्रपूर्वाच्छाभ्यतेः क्विप्। "अनुनासिकस्य क्वी"ति दीर्घः। "मो नो धातो"रिति मस्य नः। तस्यासिद्धत्वान्नलोपो न।

तत्त्व-बोधिनी

नश्छव्यप्रशान् ११३, ८।३।७

प्रशानिति। प्रपूर्वाच्छाम्यतेः क्विप्। "अनुनासिकस्ये"ति दीर्घः। "मो नो धातो"रिति नः। तस्याऽसिद्धत्वान्नलोपो न।

---

सूत्रम्

काशिका-वृत्तिः

उभयथ र्क्षु ८।३।८

पुर्वेण नित्ये प्राप्ते विकल्पः क्रियते। नकारान्तस्य पदस्य छवि परतः अम्परे उभयथा ऋक्षु भवति, रुर्वा नकारो वा। तस्मिंस्त्वा दधाति, तस्मिन् त्वा दधाति। ऋक्षु इति किम्? ताम्स्त्वं खाद सुखादितान्।

न्यासः

उभयथर्क्षु। , ८।३।८

पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्()॥

---

सूत्रम्

काशिका-वृत्तिः

दीर्घादटि समानपादे ८।३।९

नः इत्यनुवरते। दीर्घादुत्तरस्य पदान्तस्य नकारस्य रुः भवति अटि परतः, तौ चेन् निमित्तनिमित्तिनौ समानपादे भवतः। ऋक्षु इति प्रकृतत्वादृक्पादः इह गृह्यते। परिधींरति। देवाम्ँ अच्छा दीद्यत् महाम्ँ इन्द्रो य ओजसा। दीर्घातिति किम्? अहन्न्नहिम्। अटि इति किम्? इभ्यान् क्षत्रियान्। समनपादे इति किम्? यातुधानानुपस्पृशः। उभयथा इत्येव, आदित्यान् हवामहे।

न्यासः

दीर्घादटि समानपादे। , ८।३।९

"समानपादे" इति। कर्मधारयात्? सप्तमी। समानशब्दश्चायमेकार्थे वत्र्तमा इह गृह्नते। समाने=एकस्मिन्? पादे निमित्तनिमित्तनोराधारभत इत्यर्थः। तत्रैकग्रहणे कत्र्तव्ये क्वचिदसमानपादेऽपि यथा स्यादिति समानग्रहणं कृतम्()। तेनेहापि रुर्भवति--यजामहै यज्ञिया इन्द्रदेवां इलामहै ईक्षां अनाज्यैति। अत्र भिन्नयोः पादयोर्निमित्तनिमित्तिनौ वत्र्तते। अथ वा--सादृश्ये वत्र्तमानः समानशब्दो गृह्नते, अन्यथा ह्रेकग्रहणं कुर्यात्()। इह च सादृश्यमुभयोरस्ति पादयोः, क्रियापदयोस्तुल्यार्थत्वात्()। यथा यजामहायित्येतत्(), क्रियापदं पूजायां वत्र्तते, तथेलामहायित्येतदपि। "ईड स्तुतौ" (धा।पा।१०१९), लोट्(), टेरेत्तवम्(), "वैतोऽन्यत्र" ३।४।९६ इतीकारस्यैकारहः। धातोर्वर्णव्यत्ययेन डकारस्य लकारः। छान्दसत्वाद्? ह्यस्वत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

नॄन् पे ८।३।१०

नॄनित्येतस्य नकारस्य रुर्भवति पशब्दे परतः। अकारः उच्चारणार्थः। नॄम्ँH पाहि, नॄंंः पाहि। नॄम्ँH प्रीणीहि, नॄंंः प्रीणीहि। पे इति किम्? नॄन् भोजयति। उभयथा इत्यपि केचिदनुवर्तयन्ति नॄन् पाहि इत्यपि यथा स्यात्।

लघु-सिद्धान्त-कौमुदी

नॄन् पे ९७, ८।३।१०

नॄनित्यस्य रुर्वा पे॥

न्यासः

नॄन्पे। , ८।३।१०

"नृ()न्?" इति। "सुपां सुलुक्()" ७।१।३९ इत्यादिना षष्ठ()आ लुकं कृत्व निर्देशः। अथ वा-- विभक्तिरेवात्र नोत्पद्यते, अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात्()। यथा-गवित्ययमाहेत्यादि। "पे" इति पकारमात्रमेव निमित्तत्वेनोपात्तम्(); न समुदायः। अकारस्तूच्चारणार्थः, अन्यथा हि यद्यकारसमुदायो निमित्तत्येनाश्रीयते, तदा नृ()#ः पचतीत्येवमादावेव स्यात्(), न तु नृ()न्? प्रीणीहीत्यादौ। "अटि" इति चेह निवृत्तम्(); निमित्तान्तरो पादानात्()। अथ तस्यैव निमित्तस्यैतद्विशेषणं कस्मान्न विज्ञायते--अटि परतो यः पकार इति? अशक्यमेवं विज्ञातुम्(); इह न स्यात्()--नृ()#ः प्साति, नृ()#ः प्लावयतीति। तस्मादस्य निवृत्तिरङ्ग्रहणस्य युक्ता॥

बाल-मनोरमा

नृ?न्पे १४०, ८।३।१०

नृ()न्पे। "नृ()न्" इति द्वितीयान्तशब्दस्वरूपपरं षष्ठ()न्तम्। षष्ठ्याः सौत्री लुक्। नलोपाऽभावोऽपि सौत्र एव। "मतुवसो रु" इत्यतो "रु" इत्यनुवर्तते। "उभयथर्क्ष्वि"त्यतं "उभयथे"त्यनुवर्तते। कदाचिद्भवति कदाचिन्न भवतीत्येवमुभयथा रुः प्रत्येतव्य इत्यर्थः। विकल्प इति यावत्। तदाह-नृ()नित्यस्येत्यादिना। "अलोऽन्त्यस्य"। नृ()न्-पाहीति स्थिते नस्य रुत्वम्। अनुनासिकानुस्वारविकल्पः"।

तत्त्व-बोधिनी

नृ?न्पे ११४, ८।३।१०

नृ()न्पे। पकारोपरि अकार उच्चारणार्थः। तेन "नृ()#ः पुनाती"त्यादि सिद्धम्। "उभयथर्क्षु" इत्यत "उभयथे"नुवृत्तेर्विकल्पः फलित इत्याशयेनाह-रुः स्याद्वेति। कुप्वो क। अत्र "कुप्वो"रिति रेफस्य विसर्गः, जिह्वामूलीयस्य खत्र्वात्। "खर्परे शरी"ति विसर्गस्यास्य लोपः, जिह्वामूलीयस्य शत्र्वात्। "वा शरी"ति विसर्गस्य विसर्ग एव वा। आदेशयोः कपावुच्चारणार्थौ। चाद्विसर्ग इति। प्राचा तु "चाद्विकल्पः" इत्युक्तं , तदसत्। कपाभ्यां मुक्ते विसर्जनीयस्य सत्वप्रसङ्गात्।

---

सूत्रम्

काशिका-वृत्तिः

स्वतवान् पायौ ८।३।११

स्वतवानित्येतस्य नकारस्य रुर्भवति पायुशब्दे परतः। स्वतवाम्̐H पायुरग्ने।

न्यासः

स्वतवान्पायौ। , ८।३।११

स्वतवानिति पूर्ववन्निर्देशौ वेदितव्यः। तथा "कान्()" ८।३।१२ इति परसूत्रेऽपि। "स्वतवाः, पायुरग्ने" इति। "द्दक्स्वःसवतवसाञ्छन्दसि" ७।१।८३ नुम, हल्ङ्यादि६।१।६६ संयोगान्त८।२।२३लोपौ॥

---

सूत्रम्

काशिका-वृत्तिः

कानाम्रेडिते ८।३।१२

कानित्येतस्य नकार्स्य रुः भवति आम्रेडिते परतः। कांस्कानामन्त्रयते। कांस्कान् भोजयति। अस्य कस्कादिषु पाठो द्रष्टव्यः। तेन कुप्वोः ẖकẖपौ च ८।३।३७ इति न भवति। समः सुटि ८।३।५ इत्यतो वा सकारो ऽनुवर्तते, स एव अत्र

विधीयते। पूर्वेषु योगेषु सम्बन्धावृत्त्या गतस्य रोः अत्र अनभिसम्बन्धः। आम्रेडिते इति किम्? कान् कान् पश्यति। एको ऽत्र कुत्सायाम्।

लघु-सिद्धान्त-कौमुदी

कानाम्रेडिते १००, ८।३।१२

कान्नकारस्य रुः स्यादाम्रेडिते। कांस्कान्, कांस्कान्॥

न्यासः

कानाम्रेडिते। , ८।३।१२

"कांस्कान्()" इति। किमः शसि "किमः कः" ७।२।१०३ इति कत्वम्(), प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घः, "तस्माच्छसो नः पुंसि" ६।१।९९ इति सकारस्य नकारः, वीप्सायां द्विर्वचनम्(), रुत्वम्? विसर्जनीयः, तसय "विसर्जनीयस्य सः" ८।३।३४ इति सः। कथं पुनरत्र सकारः, यावता "कुप्वोः क पौ च" (८।३।३७) इति विसर्जनोयजिह्वामूलीयाभ्यां भवितव्यम्()? अत आह--"अस्य" इत्यादि। तत्र यद्यपि न पठ()ते, तथापि भवत्येवानिष्टप्रसङ्ग इति दर्शयितुमाह--"समः सुटि" इत्यादि। यदि सकारोऽत्रानुवर्त्तिष्यते, पूर्वयोगेऽपि सर्वत्रैतस्मादनुवर्त्तमानात्? सकारः प्रसज्येत? इत्याह--"पूर्वयोगेषु" इत्यादि। पूर्वयोगेषु हि "समः सुटि" ८।३।५ इति स्वेन सम्बन्धिना समा सुटा च सम्बद्धस्यैव तस्यानुवृत्तिः, ततो न तस्य सम्बन्ध्यन्तरेणा सम्बन्धो भवति। कान्? कानिति वक्तव्ये, आम्रेडितग्रहणम्()--यत्र द्विर्वचनं तत्र यथा स्यात्()। तेनेह न भवति--कान्? कान् पश्यतीति। एकोऽत्र किं शब्दः प्रश्ने, द्वितीयस्तु कुत्सायाम्()। कान्? कुत्सितान्? पश्यतीत्यर्थः॥

बाल-मनोरमा

कानाम्रेडिते १४२, ८।३।१२

कानाम्रेडिते। "का"निति द्वितीयान्तशब्दस्वरूपपरं षष्ठ()न्तम्। षष्ठ्याः सौत्रो लुक्। नलोपाभावोऽपि सौत्र एव। अलोऽन्त्यपरिभाषया कान्शब्दान्तस्येति लभ्यते। "रु" इत्यनुवर्तते, तदाह--कान्नकारस्येत्यादिना। संपुंसानामिति। "कान्" इत्यस्य वीप्सायां द्विर्वचने कान्-कान् इति स्थिते प्रथमनकारस्य रुत्वेऽनुनासिकानुस्वारविकल्पः। रेफस्य विसर्गः। तस्य "विसर्जनीयस्य स" इति सत्वं बाधित्वा "कुप्वो"रिति प्राप्तौ "संपुंकाना"मिति सत्वमित्यर्थः। वस्तुतस्तु "संपुंकाना"मिति वार्तिके कानिति निष्फलमित्याह--यद्वेति।

तत्त्व-बोधिनी

कानाम्रेडिते ११५, ८।३।१२

कानाम्रेडिते। "कान्कान्" इति वाच्ये आंम्रेडितग्रहणं यत्र दिं()वरुक्तिस्तत्रैव यथा स्यात्। इह मा भूत्--"कान् कान् पश्यसी"ति। अत्र एकः किंशब्दः प्रश्ने। द्वितीयः क्षेपे। कान् कुत्सितान् पश्यसीत्यर्थः। वार्तिके कान्ग्रहणाऽभावेऽपि सत्वं सिध्यतीत्याशयेनाह-यद्वेति। संपुमोस्तु वार्तिकेनैव सत्वम्। कस्कादिषु संस्कर्ता संसकरिष्यति पुंस्कोकिलः पुंस्काम इत्यादिबहूनां पाठे गौरवात्। कस्कादिषु "संपुंका"निति पठित्वा सर्वमपि वार्तिकं त्यक्तुमशक्यं "पुस्कोकिल" इत्यादाविणः परत्वेन विसर्गस्य षत्वप्रसङ्गात्। किं तु कान्ग्रहणमिव सम्()ग्रहणं वार्तिके त्यक्तुं शक्यमित्यम्ये।

---

सूत्रम्

काशिका-वृत्तिः

ढो ढे लोपः ८।३।१३

ढकारस्य ढकारे लोपो भवति। सत्यपि पदाधिकारे तस्य असम्भवादपदान्तस्य ढकारस्य अयं लोपो विज्ञायते। लीढम्। उपागूढम्। ष्टुत्वस्य अत्र सिद्धत्वमाश्रयाद् द्रष्टव्यम्। श्वलिड् ढौ कते इत्यत्र तु जश्वे कृते कार्यं न अस्ति इति लोपाभावः। न च ढलोपो जश्त्वापवादो विज्ञातुं शक्यते, तस्य हि लीढादिः विषयः सम्भवति। तत्र हि श्रुतिकृतमानन्तर्यम् अस्ति। शास्त्रकृतं तु यदा नानन्तर्यं ष्टुत्वस्य असिद्धत्वेन प्राप्तम्, तत् तु सूत्रकरणसामर्थ्याद् बाध्यते। श्वलिड् ढौकते इत्यत्र तु न श्रुतिकृतमनन्तर्यम्, न शास्त्रकृतम् इति अविषयो ऽयं ढलोपस्य।

लघु-सिद्धान्त-कौमुदी

ढो ढे लोपः ५५२, ८।३।१३

न्यासः

ढो ढे लोपः। , ८।३।१३

"ढे" इति वर्णमात्रं निमित्तत्वेनाश्रीयते; न वर्णसमुदायः। कुत एतत्()? व्यास्या। अकार उच्चारणार्थः। वर्णग्रहणे तु सति लीढ्वा, मीढ्वेत्यादावपि भवति; अन्यथा हि यदि वर्णसमुदायो निमित्तत्वेनाधीयते तदा लौढम्(), मीढमित्यादावेव स्यात्(), न तु लीढवेत्यादौ। "लीढम्()" इत्यादि। "लिह आस्वादने" (धापा।१०१६) "मिह सेचने" (दा।पा।९९२), "गुहू संवर्णे" (धा।पा।८९६)--एभ्यः [एभ्यः "ष्टुना ष्टुः" इति ष्टुत्वम्()--कांउ।पाठः] क्तः, "हो ढः" ८।२।३१ इति ढत्वम्(), "झवस्तथोर्धोऽधः" ९८।२।४०) इति धत्वम्()। "ष्टुना ष्टुः" ८।४।४० इति ष्टुत्वम्(), ढलोपः, ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इति दीर्घः। कथं पुनर्लीढमित्याद्युदाहणमुपपद्यते, यावता ढकारोऽत्र परनिमित्तं नास्त्येव ढलोपे कत्त्रव्ये ष्टुत्वस्यासिद्धत्वात्()? इत्यत--"ष्टुत्वस्य" इति। ढकारोऽत्र ढलोपनिमित्तनाश्रीयते, न चासौ क्वचित्? सिद्धः सम्भवति यत्रानेन ढलोपः कत्त्रव्यः। तस्माद्? ढकारस्य निमित्तत्वेनाश्रयणादेव ष्टुत्वस्य सिद्धत्वं वेदितव्यम्(); अन्यथा ह्रस्य वचनस्य वैयथ्र्यं स्यात्(); अनवकाशत्वात्()। स्यादेतत्()। ()आलीड्ढौकत इत्यनेन ढलोपो भविष्यति, सिद्धो ह्रत्र ढकारः, तत्? कुतो वचनस्य वैयथ्र्याम्()? इत्याह"()आलिड्ढौक्ते" इत्यादि। यद्यप्यत्र निमित्तं ढकारः सिद्धः, तथापि नैव ढलोप उपपद्यते; जश्त्वे कृते कार्यिणो ढकारस्याभावात्()। ननु च निर्विषयत्वाड्ढलोपो जश्त्वापवादो भविष्यति? इत्याह--"न च" इत्यादि। कुत एतत्()? इत्याह--"तस्य हि" इत्यादि। यदि हि तस्य विषयो न सम्भाव्येत, ततो जशत्वापवादः सक्यते विज्ञातम्()। सम्भवति चास्य विषयो लीढाटिः, तस्मान्न शक्यौऽसौ जशत्वापदाद इति विज्ञातुम्()। कथं पुनर्लीढादिरस्य विषयः पावता यथा ()आलिड्ढौकत इत्यत्र जश्त्वे कृते कार्यिणोऽसम्भवाड्ढलोपस्या विषयः, तथा लोढादावपवि ष्टुतवस्यासिद्धत्वे सति निमित्तस्याभावात्()। अथात्र वचनसमाश्र्याड्ढलोपेन ष्टुत्वस्यासिद्धत्वं बाध्यते? इतरत्रापि जश्त्वं कस्मान्न बाध्यते; तस्माद्यदि पुनर्लीढाविढंलोपस्य विषय इत्तरेणापि तद्विषयेण भवितव्यम्(), न तु लीढादिनैवेतरत्रापीत्यत आह--"तत्र हि" इत्यादि। इह "ढे" इति सप्तमीनिर्देशा दानन्तर्यमाश्रितम्(); न तु लीढादिनैवेतरत्रापीत्यत आह--"तत्र हि" इत्यादि। इह "ढे" इति सप्तमीनिर्देशा तद्विषयेण भवितध्यम्(), न तु लीढादिनैवेतरत्रापीत्यत आह--"तत्र हि" इत्यादि। इह "ढे" इति सप्तमीनिर्देशा दानन्तर्यमाश्रितम्(); निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात्()। ततश्चानन्तर्ये सति ढलोपेन भवितव्यम्()। अस्ति च लोढादो श्रुतिकृतमानन्तर्यम्(), उभयोर्निमित्तकार्यिणोर्ढकारयोः श्रयमाणत्वात्()। तस्मादेष एव ढलोपस्य विषयः? सत्यमिहासत्यानन्तर्यं श्रुतिकृतम्(); अनानन्तर्यमप्यस्ति शास्त्रकृतम्(); शास्त्रेण ष्टुत्वस्यासिद्धत्वोपादानात्()। सति च तस्मिन्? सोऽपि न ढलोपस्य विषय इत्यत आह--"शास्त्रकृतम्(); शास्त्रेण ष्टत्वस्यासिद्धत्वोपादानात्()। सति च तस्मिन सोऽपि न ढलोपस्य विषय इत्यत आह--"शास्त्रकृतम्()" इत्यादि। विद्यमानमपि शास्त्रकृतमनान्तर्यं ढलोपेन बाध्यते; अन्यथा हि वचनवैयध्र्यं स्यात्()।

यथा शास्त्रकृतमनानन्तर्यं वचनसामर्थ्याद्बाधित्वा ढलोपो भवति, तथा श्यलिङ्ढौकत इत्यत्रापि श्रुतिकृतमानानन्तर्यं बाधित्वा ढलोपः स्यादित्याह--"()आलिङ्ढौकत इत्यत्र तु" इत्यत्र तु" इत्यादि। तुशब्दो लौढादेरस्य विशेषं दर्शयति। अत्र लीढादौ हि यद्यपि शास्त्रकृतमानन्तर्यं नास्ति, श्रुतिकृतं त्वस्ति। इह तु नापि श्रुतिकृतमानन्तर्यं द्वयोर्ढकारयोरश्रूयमाणत्वात्(), नापि शास्त्रकृतम्(), शास्त्रेण जशत्वस्यासिद्धत्वानुपायनात्()। तस्मान्नैव ढलोपस्य विषयः॥

बाल-मनोरमा

ढो ढे लोपः १७४, ८।३।१३

इडभावे तु गाह् ता इति स्थिते हस्य ढत्वे "झषस्तथोर्धोऽधः" इति तकारस्य धत्वे, ष्टुत्वेन धस्य ढत्वे, गाढ्--ढा इति स्थिते-- इडभावे तु गाह्? ता इति स्थिते ढो ढे। "ढः" इति षष्ठ()न्तम्। तदाह--ढस्येति। ढकारस्येत्यर्थः। इति पूर्वस्य ढकारस्य लोपे "गाढा" इति रूपम्। ढलोपे ष्टुत्वस्याऽसिद्धत्वं तु न, तथा सति ढलोपविधिवैयर्थ्यात्। घाक्ष्यते इति। इडभावे हस्य ढः, गस्य भष् घकारः, ढस्य कः, सस्य ष इति भावः। अगाहिष्टेति। सिच इट्, सस्य षः, तकारस्य ष्टुत्वेन टः। इडभावे त्वाह-- अगाढेति। अगाह् स् त इति स्थिते सिच इडभावे "झलो झली"ति लोपः। ढत्वधत्वष्टुत्वढलोपः। सलोपात्पूर्वं भष्भावस्तु न, भष्भावस्याऽसिद्धतया "झलो झली"ति सलोपस्य पूर्वं प्रवृत्तेः। न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सकारपरकत्वात् भष् दुर्वार इति शङ्क्यं, वर्णाश्रये प्रत्ययलक्षणाऽभावादिति भावः। अधाक्षातामिति। इडभावपक्षे ढघकषाः। अघाक्षतेति। पूर्ववत्। अगाढा इति। थास् सिच्। इडभावे सलोपः। ढत्वधत्वष्टुत्वढलोपाः। अघाढ्वमिति। ध्वमि इडभावपक्षे सलोपः। ढत्वघत्वष्टुत्वढलोपाः। ध्ममाश्रित्य ढलोपात्पूर्वं भष्भावः। अघाक्षीति। इडभावे हस्य ढः, भष्भावः, ढस्य कः, सस्य षत्वमिति भाव-। अघाक्ष्वहि। अघाक्ष्महि। अगाहिष्यत अघाक्ष्यत। गृहूधातुरूदित् ऋदुपधः। गर्हते इति। लटस्तिपि शपि लघूपधगुणे रपरत्वम्। जगृहे इति। "असंयोगा"दिति कित्त्वाद्गुणाऽभावः। न च कित्वात् परत्वाद्गुणः शङ्क्यः , "ऋदुपधेभ्यो लिट कित्त्वं गुणात्पूर्वप्रतिषेधेने"ति वार्तिकादिति भावः। ऊदित्त्वादिड्विकल्पं मत्वा आह-- जगृहिषे जघृक्षे इति। अभ्यासे उरदत्वं, हलादिः शेषः, जश्त्वम्, इट्, षत्वम्। इडभावे तु ढत्वभष्भावकत्वषत्वानि। ध्वमि जगृहिध्वे इति सिद्धवत्कृत्य इडभावे आह--जघृढ्वे इति। हस्य ढः, भष्भावष्टुत्वढलोपाः। गर्ढेति। इडभावे गुणे रपरत्वे ढत्वधत्वष्टुत्वलोपाः। घक्ष्यते इति। गुणः, रपरत्वं, हस्य ढः, भष्भावः, ढस्य कः षत्वम्। अगर्हिष्टेति। सिच इटि गुणे रपरत्वे षत्वे रूपम्।

तत्त्व-बोधिनी

ढो ढे लोपः १४८, ८।३।१३

अगाढेति। "झलो झली"ति सलोपः। ढत्वधत्वष्टुत्वढलोपाः। सिज्लोपात्पूर्वं भष्भावस्तु न , असिद्ध्तवात्। भष्भावस्तु सिज्लोपानन्तरमपि न बवति, सकारपरत्वाऽभावात्। न च कृतेऽपि सलोपे प्रत्ययलक्षमेन सिच्परत्वाद्भष्भावो दुर्वार इति शङ्यं, वर्णाश्रये प्रत्ययलक्षणाऽभावात्। अन्यथा गवे हितं गोहितमित्यत्राऽवादेशः स्यादिति दिक्। जगृहे इति। कित्त्वात्परत्वात् "पुगन्ते"ति गुणे प्राप्ते "रऋदुपधेब्य" इति वार्तिकात्कित्त्वे गुणाऽभावः।

---

सूत्रम्

काशिका-वृत्तिः

रो रि ८।३।१४

रेफस्य रेफे परतो लोपो भवति। नीरक्तम्। दूरक्तम्। अग्नी रथः। इन्दू रथः। पुना रक्तं वासः। प्राता राजक्रयः। पदस्य इत्यत्र

विशेषणे षष्ठी, तेन अपदान्तस्य अपि रेफस्य लोपो भवति, जर्गृधेः अजर्घाः, पास्पर्धेः अपास्पाः इति।

लघु-सिद्धान्त-कौमुदी

रो रि १११, ८।३।१४

रेफस्य रेफे परे लोपः॥

न्यासः

रो रि। , ८।३।१४

किं पुनरिदं सानुबन्धकारस्य रेफस्य ग्रहणम्()? उत्त निरनुबन्धकस्य? किञ्चात्र यदि सानुबन्धकस्य ग्रहणम्()? सिद्धम्()--अग्नीरथः, इन्दूरथ इति; नीरक्तं दूरक्तमिति तु न सिध्यति। अथ निरनुबन्धकरस्य ग्रहणम्()? तदा सिध्यति--नीरक्तम्(), दूरक्तमिति; अग्नीरथः, इन्दूरथ इति न सिध्यति? नैष दोषः; इह तन्तेणाचार्यः "रो रि" इति द्वे सूत्रे उच्चारितवान्(), तत्रैकत्र सानुबन्धकस्य ग्रहणम्(), अपरत्र निरनुबन्धकस्येति। नीरक्तमित्यादौ "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ६।३।११० इति दीर्घत्वम्()। इह यदि पदस्येति स्थानषष्ठी स्यात्(), ततः "अलोऽन्त्यस्य" १।१।५१ इति पदान्तस्यैव ["पदान्तस्य"--कांउ।पाठः] रेफस्य [अयं भागः कांउ।पाठे नास्ति]लोपः स्यात्()--नीरक्तमित्यादौ। अजर्धा इत्यादौ त्वपदान्तस्य[अयं भागः कांउ।पाठे नास्ति] न स्यात्(); विशेषणषष्ठ()आं त्वस्यामिहापि भवतीत्येतच्चेतसि कृत्वाऽऽह--"पद्स्य" इत्यादि। विशेषणषष्ठ()आं हि पदस्येत्यस्यैवमभिसम्बन्धः क्रियते--पदस्यावयवो यो रेफस्तस्य रेफे परतो लोपो भवतीति। तेनापदान्तस्यापि भवति। "अजर्धाः" इति। "एकाचो बशो भव्()" ८।२।३७ इत्यादौ सूत्र इवं व्युत्पादितम्()। "अपास्पाः" इति। "स्पद्र्ध सङ्घर्षे" (धा।पा।३) असमाद्यङ्(), द्विर्वचनम्(), "शर्पूर्वाः खयः" ७।४।६१ इति खयः शेषः, "दीर्घोऽकितः" ७।४।८३ इति दीर्घत्वम्(), "यङोऽचि च" २।४।७४ इति यङो लुक्(); पास्पद्र्ध इति स्थिते लङ् अडापमः, सिप्(), "चर्करौतञ्च" (धा।पा।१०८१) इत्यादिषु पाठाच्छपो लुक्(), सिपो इल्ङ्यादिना ६।१।६६ लोपः, जश्त्वेन धकारस्य दकारः, "दश्च" ८।२।७५ इति तस्यैव दकारस्य रुत्वम्(), तत्रानेन रेफस्य लोपः, पूर्ववद्दीर्धत्वम्()। योगविभागकरणमुत्तरार्थम्(), उत्तरसूत्रे रेफस्यानुवृत्तिर्यथा स्यादित्येवमर्थम्(); इतरथा हि ढकारस्यापि ततरानुवृत्तिः स्यात्(), ततश्च तस्यापि विसर्जनीयः प्रसज्येत॥

बाल-मनोरमा

रो रि १७२, ८।३।१४

रो रि। "र" इति षष्ठी। "ढो ढ लोप" इत्यतो "लोप" इत्यनुवर्तते, तदाह-रेफस्येति। पुनर्-रमते इति स्थिते रेफस्य लोपः।

तत्त्व-बोधिनी

रो रि १४२, ८।३।१४

विसर्गापवाद इति। मो राजिवद्रेफस्य रेफो विधीयते विकारनिवृत्त्यर्थमिति भावः।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ खरवसानयोः ७।२ विसर्जनीयः १।१ रः ६।१ १४ पदस्य ६।१ ८।१।१६ संहितायाम् ७।१ ८।२।१०८

समासः॥

खर् च अवसानं च खरवसाने, तयोः ॰ इतरेतरद्वन्द्वः

अर्थः॥

रेफान्तस्य पदस्य खरि परतः अवसाने च विसर्जनीयादेशो भवति संहितायां विषये

उदाहरणम्॥

वृक्षश्छादयति, प्लक्षश्छादयति, वृक्षस्तरति, प्लक्षस्तरति। अवसाने - वृक्षः, प्लक्षः॥
काशिका-वृत्तिः
खरवसानयोर् विसर्जनीयः ८।३।१५

रः इति वर्तते। रेफान्तस्य पदस्य खरि परतो ऽवसाने च विसर्जनीयादेशो भवति। वृक्षश्छादयति। प्लक्षश्छादयति। वृक्षस्तरति। प्लक्षस्तरति। अवसाने वृक्षः। प्लक्षः। खरवसानयोः इति किम्? अग्निर् नयति। वायुर् नयति। इह नृकुट्यां भवः नार्कुटः, नृपतेरपत्यं नार्पत्यः इति वृद्धेर् बहिरङ्गलक्षणत्वात् तदाश्रयस्य रेफस्य असिद्धं बहिरङ्गम् इति असिद्धत्वाद् विसर्जनीयो न भवति।
लघु-सिद्धान्त-कौमुदी
खरवसानयोर्विसर्जनीयः ९३, ८।३।१५

खरि अवसाने च पदान्तसाय रेफस्य विसर्गः। (संपुंकानां सो वक्तव्यः)। संस्स्कर्ता, संस्स्कर्ता॥
न्यासः
खरवसानयोर्विसर्जनीयः। , ८।३।१५

यद्यत्र पदस्येति विशेषणवष्ठी स्यात्()--पदस्यावयवो यो रेफ इति, तदा "अर्कः" इत्यादानप्यपदान्तस्य रेफस्यापि विसर्जनीयः स्यात्()। स्थानषष्ठ()आ न दोषः; अत्र हि पदं रेफेण विशेष्यते, विशेषणेन च तदन्तविधिर्भवति, तेन रेफान्तसय कार्यमुच्यमानमलोऽन्त्यस्यैव भवतीत्येतदालौच्च पदसयेत्येषा स्थाने षष्ठी; तच्च पदं रेफेण वेशेष्यत इत्यतद्दर्शयन्नाह--"रेफान्तस्य पदस्य" इति। "खरि परतोऽवसाने च" इति। "पतः" इत्येतत्? पूर्वेणैव सम्बध्यते, न परेणावसानेन,["परेण अवसाने--कांउ।पाठः] तस्य पौर्वापर्याभावात्()। तथा हि येन वर्णेन विरम्यते सोऽवसानं स्यात्()। विरतिर्वा विरामः=वर्णस्यानुच्चारणम्()। तेन रेफान्तात्? पदाद्येन वर्णेन विरभ्यते स तावदवसानसंज्ञकः परो न सम्भवति; तन्मात्रस्याप्रयोगात्()। अप्रयोगस्तु निरर्थकत्वात्()। इतरत्र तु पुनरवसानमभावरूपम्()। अभावे च पौर्वापर्यं न सम्भवति; तस्य वर्णधर्मत्वात्()। तस्मात्? तदपि नैव रेफान्तात्? पदात्? परमुपपद्यते। केचित्तु बुद्धिकल्पितं पौर्वापर्यमाश्रित्य "अवसाने च" इत्यानेनापि सह "परतः" इत्येतत्सम्बन्धन्ति। तत्र यदि वुद्धिकल्पितं पौर्वापग्र्यं नाश्रीयते, तदा "खरवसानयोः" इत्येकाप्येषा सप्तम्यधिकरणभेदाद्भिद्यते; खर्यौपश्लेषिकेऽत्रिकरणे सप्तमी भवति--खरि परत इति, अवसाने तु वैषयिकेऽधिकरणे सप्तमी भवति--अवसाने विषय इति। यदा तु वृद्धिकल्पितमभावेऽपि पौर्वापयमवसानेऽप्याश्रीयते, तदोभत्रापि परसप्तम्येव। उदाहरणेषु खरि विसर्जनीये कृते "विसर्जनीयस्य सः" ८।३।३४ इति सकारः, तस्य चवर्गे परतः श्चुत्वम्()। ञधेह नृकुट()आं भवः, "तत्र भवः" ४।३।५३ इत्यणि--नार्कुटः, नृपतेरपत्यम्? "दित्यादित्यादित्यपत्युत्तरपदाण्ण्यः" (४।१।८५) इति नार्पत्य इत्यत्र विसर्जनीयः कस्मान्न भवति? इत्याह--"इह"

इत्यादि। वृद्धिर्हि भवादावर्थे विहितं तद्धितमाश्रित्य भवन्ती बहिरङ्गा, तस्याश्च बहिरङ्गत्वात्? तदाश्रयस्यापि रेफस्य बहिरङ्गत्वम्(); वृद्ध्याश्रितत्वात्(), पुना रेफस्य तद्भक्तात्वात्? तन्निमित्तात्वाच्च। विसर्जनीयक्तु खर्माधमाश्रित्य भवतीत्यन्तरङ्गः। "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इति विसर्जनीये कत्र्तव्ये रेफोऽसिद्धः, अत इह विसर्जनीयो न भवति। ननु च बृद्धौ कत्र्तव्यायां विसर्जनीयोडभिमतोऽन्तरङ्गोऽसद्धः, तदसति तस्मिन्? "वृद्धेर्बहिरङ्गव्यपदेशो नोपपद्यते, तस्यान्तरङ्गापेक्षकत्वात्(); असति तस्मिन्? वृद्धेर्बहिरङ्गव्यपदेशे रेफस्यापि स न स्यात्()। वृद्धेर्बहिरङ्गद्वारकं हि रेफस्य बहिरङ्गत्वम्(); ततश्चोमयाङ्गविकलत्वात्? बहिरङ्गपरिभाषा (व्या।प।४२) नोपतिष्ठत इति यदुक्तम्()--"बृद्धेर्बहिरङ्गलक्षणत्वात्()" इति, तन्नोपपद्यते? नैतत्(); "न मु ने" (८।२।३) इति कार्यान्तरार्थम्? "न" इति योगाविभागः कृतः। तेन वृद्धौ कत्र्तव्यायां विसर्जनीयस्यासिद्धत्वं न भविष्यति। अत एव बहिरङ्गपरिभाषायामपि विसर्जनीयस्यासिद्धत्वं न भविष्यतीति वेदितव्यम्()। "कार्यकालं संज्ञापरिभाषम्()" (व्या।प।५८) इत्यस्य दर्शनस्येहाश्रितत्वाच्च। युक्तञ्चैतत्(), कार्यप्रयुक्तत्वाद्धि संज्ञापरिभाषस्य तद्देशतैव न्याय्या। यत्र ह्यनयाऽसिद्धत्वं क्रियते सोऽस्याः कार्यदेशः। क्व चानयाऽसिद्धत्वम्()? विसर्जनीयविधौ। तस्मात्? तद्देशैवेयम्(); न तु यत्रोपसंख्याता--"विप्रतिषेधे परं कार्यम्()" १।४।२ इति, तद्देशा; नापि यत्र ज्ञापिता--"वाह ऊरु" ६।४।१३२ इत्यत्र, तद्देशा॥

बाल-मनोरमा

खरवसानयोर्विसर्जनीयः ७७, ८।३।१५

इति रेफस्येति। उपाच्छतीत्यत्र आरित्येकादेशस्य पूर्वन्तवत्त्वेन रेफस्य पदान्तत्वे सति विसर्गे प्राप्ते इत्युत्तरेणान्वयः। कथं विसर्गप्राप्तिरित्यत आह--खरवसानयोः। "रो री"त्यतो र इति षष्ठ()न्तमनुवर्तते। तच्च पदस्येत्यधिकृतस्य विसेषणम्। येन विधिरिति रेफान्तस्येति लभ्यते। खरि अवसाने च परतो रेफान्तस्य पदस्य विसर्जनीयः स्यादित्यर्थः। अलोऽन्त्यस्येत्यन्त्यस्य भवति। अभावरूपस्य चावसानस्य बुद्धिकृतं परत्वम्। फलितमाह--खर्यवसाने चेति। पदान्त इति। "विद्यमानस्ये"ति शेषः। यदि तु अन्त्यवर्णस्य अवसानसंज्ञा तदा अवसानं इत्यत्र योजना विरामोऽवसानमित्यत्रोक्ता। इति विसर्ग इति। उपाच्छतीत्यादवनेन विसर्गे प्राप्ते तत्परिहार उच्यत इत्यर्थः। अन्तवदिति। अन्तवत्त्वेन पदान्तत्वं प्राप्तस्य रेफस्य विसर्गो न भवतीत्यर्थः। कुत इत्यत आह--उभयथर्क्ष्विति। अन्यथा तत्रापि विसर्गनिर्देशः स्यादिति भावः। नन्वत्र धाताविति व्यर्थम् , उपसर्गग्रहणादेव धातावित्यस्य सिद्धेः, क्रियायोगे सत्येव उपसर्गसंज्ञाविधानात्। नच उपगत ऋकार उपर्कार इत्यत्र क्रियायोगस्य सत्त्वादुपसर्गत्वाच्च वृद्धिप्राप्तौ तन्निवृत्त्यर्थमिह धातुग्रहणमिति वाच्यं, यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा इति परिभाषया गम्यमानगमनक्रियां प्रत्येव उपसर्गत्वात्, प्रकृते च ऋकारादिनिमित्तकोपसर्गत्वस्यैव विवक्षितत्वादित्याशङ्क्याह--उपसर्गेणैवेत्यादिना। उपसर्गग्रहणेनैव धातोराक्षेपे= अन्यथानुपपत्तिरूपार्तापत्तितो लाभे सति, पुनर्धाताविति वचनं पुनर्विधानार्थमित्यन्वयः। कथं पुनर्विधानलाभ इत्यत आह--योगविभागेनेति। योगशब्दः सूत्रशब्दपर्यायः। उपसर्गादृतीति धाताविति च सूत्रं विभज्यते। तत्र उपसर्गादृतीति पूर्वसूत्रे धातावित्यर्थाल्लभ्यमादाय उक्तार्थलाभः। धातावित्युत्तरसूत्रेऽपि उपसर्गादृतीति पूर्वसूत्रमनुवर्त्तते। तथाच पूर्वसूत्रसमानार्थकमेतत्सूत्रं संपद्यत इति पुनर्विधानलाभ इत्यर्थः। किमर्थमिदं पुनर्विधानमित्यत आह-तेनेति। पुनर्विधानेनेत्यर्थः।

तत्त्व-बोधिनी

खरवसानयोर्विसर्जनीयः ६४, ८।३।१५

न विसर्ग इति। एतच्च "सुखार्त"इत्यादावपि बोध्यम्।

---

सूत्रम्

काशिका-वृत्तिः

रोः सुपि ८।३।१६

रु इत्यस्य रेफस्य सुपि परतो विसर्जनीयादेशो भवति। पयःसु। सर्पिःषु। यशःसु। सुपि इति सप्तमीबहुवचनं गृह्यते। सिद्धे सत्यारम्भो नियमार्थः, रोरेव सुपि विसर्जनीयादेशः, न अन्यस्य। गीर्षु धूर्षु।

लघु-सिद्धान्त-कौमुदी

रोः सुपि २७०, ८।३।१६

रोरेव विसर्गः सुपि। षत्वम्। षस्य द्वित्वे प्राप्ते॥

न्यासः

रोः सुपि। , ८।३।१६

"पयःसु, यशःसु" इति। क्वचित्? सकारद्वयं पठ()ते। तत्र "वा शरि" ८।३।३६ इति विसर्जनीयस्य सकारः। "सर्पिःषु" इति। यत्र विसर्जनीयः पठ()ते तत्र "नुम्विसर्जनीयशर्व्यवायेऽपि" ८।३।५८ इति प्रत्ययसकारस्य षत्वम्()। यत्र सर्पिष्ष्विति षकारद्वयं पठ()ते, तत्र पूर्ववदेव विसर्जनीयस्य सकारे कृते पूर्ववदेव प्रत्ययसकारस्य वत्वम्(), पूर्वस्य ष्टुत्वम्? ८।४।४०। सुपीति प्रत्याहारग्रहणशङ्कानिरासायाह--"सुपि" इत्यादि। एतच्च "खरि" इत्यनुवत्र्तनाल्लभ्यते, न हि सप्तमीबहुवचनदन्यः सुप्? क्षरादिरस्ति। मा भूत्(); खरीत्यनुवृत्तेः। सप्तम्याः पकारेण प्रत्याहारग्रहणं कस्मान्न भवतीति? सम्भवति ["न सम्भवति--कांउ।पाठ] तत्र खरादिः सुप्()। यदि स्यात्? किञ्च स्यात्()? अगीःकः, अधःक इत्यत्र नियमाद्विसर्जनीयो न स्यात्()। तस्माद्व्याख्यानमेव शरणम्()। किमर्थं पुनरिदम्(), यावता ननु सिद्धः पूर्वेणैव विसर्जनीयः? इत्याह--"सिद्धे सति" इत्यादि। विपरीतनियमो नाशङ्कनीयः, "किमः क्षेपे" ५।४।७० इत्यादौ विसर्जनीयनिर्देशात्()। "गीर्णु", धूर्षु" इति। "र्थोरुपधायाः" ८।२।७६ इत्यादिना दीर्घः॥

बाल-मनोरमा

रोः सुपि , ८।३।१६

रोः सुपि। "खरीत्यनुवृत्तेः सप्तमीबहुवचनमेवात्र सुप्। "खरवसानयो"रित्येव सिद्धे नियमार्थ एवैष विधिरित्याह--रोरेवेति। विपरीतनियमस्तु न, "हलोऽनन्तराः संयोगः" इति निर्देशात्। षत्वमिति। "आदेश प्रत्यययो"रित्यनेने"ति शेषः। रेफस्य इण्त्वेन ततः परत्वादिति भावः। षस्य द्वित्व इति। "अचो रहाभ्या"मित्यनेने"ति शेषः।

तत्त्व-बोधिनी

रोः सुपि २९९, ८।३।१६

रोः सुपि। "सुपि"ति न प्रत्याहारः, "खरी"त्यनुवृत्तेः। तेन "पराभ्या"मित्यादौ विध्यर्थमेतन्न भवति। "खरवसानयो"रित्येव सिद्धेऽयमारम्भो नियमार्थ इत्याह--रोरेवेति। "रोः सुप्येव विसर्जनीयः"इति विपरीतनियमस्त्विह न भवति, "हलोऽनन्तराः संयोगः"इत्यादिनिर्देशात्।

---

सूत्रम्

काशिका-वृत्तिः

भोभगोअघोअपूर्वस्य यो ऽशि ८।३।१७

भोर् भगोरघोरित्येवं पूर्वस्य अवर्णपूर्वस्य च रोः रेफस्य यकारादेशो भवति अशि परतः। भो अत्र। भगो अत्र। अघो अत्र। अभो ददाति। भगो ददाति। अघो ददाति। अपूर्वस्य क आस्ते, कयास्ते। ब्राह्मणा ददति। पुरुषा ददति। भोभगोअघोअपूर्वस्य इति किम्? अग्निरत्र। वायुरत्र। अशग्रहणं किम्? वृक्षः। प्लक्षः। न एतदस्ति, संहितायाम् इत्यनुवर्तते। तर्हि अशग्रहणम् उत्तरार्थम्। हलि सर्वेषाम् ८।३।२२ इत्ययं लोपः अशि हलि यथा स्यात्, इह मा भूत्, वृक्षं वृश्चति इति वृक्षवृट्, तमाचष्टे यः स वृक्षवयति, वृक्षवयतेरप्रत्ययः वृक्षव् करोति। अथ तत्र एव अशग्रहणं कस्मान् न कृतम्? उत्तरार्थम्, मो ऽनुस्वारः ८।३।२३ इति हल्मात्रे यथा स्यात्। व्योर् लघुप्रत्यत्नतरः शाकटायनस्य ८।३।१८, लोपः शाकल्यस्य ८।३।१९ इत्येतच् च वृक्षव् करोति इत्यत्र मा भूतित्यशग्रहणम्। रोः इत्येव, प्रातरत्र। पुनरत्र।

लघु-सिद्धान्त-कौमुदी

भो भगो अघो अपूर्वस्य योऽशि १०८, ८।३।१७

एतत्पूर्वस्य रोर्यादेशोऽशि। देवा इह, देवायिह। भोस् भगोस् अघोस् इति सान्ता निपाताः। तेषां रोर्यत्वे कृते॥

न्यासः

भोभगोअघोअपूर्वस्य योऽशि। , ८।३।१७

"भो अत्र" इत्यादौ "ओतो गार्ग्यस्य" ८।३।२० इति नित्यो यलोपः। गार्ग्यग्रहणं तत्र पूजार्थम्()। "भो ददाति" इत्यादावपि "हलि सर्वेषाम्()" ८।३।२२ इति नित्य एव यलोपः। अथाशग्रहणं किमर्थम्(), यावताऽशोऽम्यः खर्यो भवति तत्र खरवसानयोर्विसर्गेण भवितव्यम्(), कृते विसर्णनीये तस्य स्थानिवद्भावाद्रुग्रहणेन ग्रहणे सति स्यादिति चेत्()? न; ज्ञापकात्()। यदयम्? "अत्रानुनासिकः पूर्वस्य तु धा" ८।३।२ इत्यत्र विसर्जनीययकारमकृत्वा निर्देशं करोति तज्ज्ञापयति--विसर्जनीयस्य खरि यकारो न भवति। अवसाने तर्हि स्यादिति चेत्()? न; "संहितायाम्()" ८।२।१०८ इत्यधिकारात्()। तस्मादन्तरेणाप्य()आचनमश्येण भवति, इत्यत आह--"अदग्रहणमुत्तरार्थम्()" इति। "हलि सर्वेषाम्()" ८।३।२२ इत्यादिना तामेवोत्तरार्थतां दर्शयति। "द्दक्षवृट्()" इति। "ओव्रश्चू छेदने" (धा।पा।१२९२), क्विप्(), ग्रह्यादिना ६।१।१६ सम्प्()रसारणम्(), "स्कोः संयोगाद्योरन्ते च" ८।२।२९ इति सकारलोपः, चकारस्य व्रश्चादिना ८।२।३६ चकारः, तस्य जश्त्वेन डकारः, तस्यापि चत्र्वम्()--टकारः, वृक्षवृट्(), तमाचष्ट इति णिच्(), "णाविष्ठवत्? प्रातिपदिकस्य" (धा।८१३) इतीष्ठवद्भाः, "टेः" ६।४।१५५ इति टिलोपः, वृक्षवयतेण्र्यन्तात्क्विप्(), "णेरनिटि" ६।४।५१ इति णिलोपः। "वृक्षव्? करोति" इति। अत्राशग्रहणाद्वकरस्य ककारे परतो लोपो न भवति। अत एवाश्ग्रहणात्? "लोपो व्योर्वलि" ६।१।६४ इति लोपो न भवत्येव। अन्यथादग्रहणमनर्थकं स्यात्()। यद्युत्तरार्थमशग्रहणं स्यात्? तर्हि तत्रैव कत्र्तव्यम्(), एवं ह्रनुवृत्त्यर्थ स्वरितत्वं न कत्र्तव्यं भवतीत्यभिप्रायेणाह--"अथ" इत्यादि। "उत्तरार्थम्()" इति। "हलि सर्वेषाम्()" (८।३।२२) इत्यस्मात्? सूत्रादुत्तरसूत्रेऽर्थः प्रयोजनं यस्य तत्? तथोक्तम्()। "मोऽनुस्वारः" ८।३।२३ इत्यादिना तदेवोत्तरार्थत्वं स्पष्टीकरोति। यदि हि "हलि सर्वेषाम्()" ८।३।२२ इत्यत्राशग्रहणं क्रियेत, ततः "मोऽनुस्वारः" ८।३।२३ इत्यत्र यथा हल्ग्रहणस्यानुवृत्तिः, तथाशग्रहणस्यापि स्यात्()। ततश्चाश्येव हलि मोऽनुस्वारः स्यात्(), न हल्मात्रे। यदा तु तत्राशग्रहणं न क्रियते, तदोत्तरत्र हल्मात्रेऽनुस्वारः सिध्यति। पुनरुत्तरार्थतामशग्रहणस्य दर्शयति--"व्योर्लधुप्रत्यत्नतरः" इत्यादि। गतार्थम्()॥

बाल-मनोरमा

भोभगोअघोअपूर्वस्य योऽशि १६६, ८।३।१७

भोभगो। "रोस्सुपी"त्यतो "रो"रि त्यनुवर्तते। भो भगो अघो अ इत्येषां द्वन्द्वः। एतो पूर्वे यस्मादिति बहुव्रीहिः। पूर्वशब्दश्च प्रत्येकं संबध्यते--भोपूर्वकस्य भगोपूर्वकस्य अघोपूर्वकस्य अकारपूर्वकस्य च रोरिति। तदाह--एतत्पूर्वकस्येति। अत्र सूत्रे

भगो अघो इत्यत्र, अघो अपूर्वस्येत्यत्र च एङः पदान्तादतीति पूर्वरूपमाशङ्क्याह--असन्धिरिति। सन्ध्यभावः सूत्रप्रयुक्त इत्यर्थः। "कृतलब्धे"त्यण्। देवाय् इह इति स्थिते सस्य रुः। तस्य अशपरकत्वाभावाद्यत्वं न। किन्तु विसर्गः। "विसर्जनीयस्य सः"। नन्विह अश्ग्रहणं व्यर्थम्। नच देवार्--सन्तीति स्थिते रेफस्य यत्वव्यावृत्त्यर्थं तदिति वाच्यं यत्वस्याऽसिद्धतया विसर्गे सति सत्वे देवास्सन्तीति सिद्धेरिति शङ्कते--यद्यपीति। परिहरति-तथापीति। अस्तु यत्वस्यासिद्धत्वाद्रेफस्य विसर्गः, तथापि तस्य स्थानिवद्भावेन रुत्वाद्यत्वं दुर्वारम्। अतोऽश्ग्रहणमावश्यकमिति भावः।

ननु यत्वविधौ विसर्गस्य स्थानिवद्भावेन कथं रुत्वम्। अनल्विधाविति निषेधात्। विसर्गस्थानिभूतं रेफमाश्रित्य प्रवर्तमानस्य यत्वविधेः स्थान्यलाश्रयत्वादित्यत आह--न ह्रमल्विधिरिति। कुत इत्यत आह--रोरिति समुदायरूपाश्रयणादिति। यद्यपि यत्वविधिर्विसर्गस्थानिभूतं रेफमाश्रयति, तथापि नाऽल्विधिः। ह्यस्वत्वादिरूपवर्णमात्रवृत्तिधर्मपुरस्कारेण स्थान्यलाश्रयत्वस्य तत्र विवक्षितत्वात्। प्रकृते च यत्वविधी रुत्वेनैव रेफमाश्रयति नतु रेफत्वेन, तथा सति प्रातरत्रेत्यादावतिव्याप्तेः। रुत्वं च रेफोकारसमुदायधर्मो न तु रेफमात्रवृत्ति। अतो यत्वविधिर्विसर्गस्थानिभूतं न रेफं वर्णमात्रवृत्तिधर्मपुरस्कारेणाश्रयतीति नाल्विधिः। अतो यत्वे कर्तव्ये विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात्। अतोऽशीति परनिमित्तमाश्रितमिति भावः। निपाता इति। चादेराकृतिगणत्वादिति भावः।

रोर्यत्वे कृत इति। "भोभगोअघो इत्यनेने"ति शेषः। "भोय्-अच्युत" इति स्थिते "लोपश्शाकल्यस्ये"ति न भवति, यकारस्य अपूर्वकत्वाऽभावात्।

तत्त्व-बोधिनी

भोभगोअघोअपूर्वस्य योऽशि १३६, ८।३।१७

भोभगो। असन्धिः सौत्र इति। सूत्रे कृतः सौत्रः। "कृतलब्धे"त्यण्। भगोअघोशब्दयोरोकारस्याऽकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः। यदि तु भोस्भगोसघोसिति सान्तं रान्तं वाऽनुकृत्य-"भो" इत्यादीनां त्रयाणाम् "अलोऽन्त्यस्ये"त्यन्त्यस्य यः स्यात्, अपूर्वस्य रो"श्चे"ति व्याख्यायेत, तर्हि असन्धिन्र्याय्य #एवेति बोध्यम्। ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्यस्थानि, तथा च "अनल्विधौ" इति स्थानिवद्भावो न स्यादित्याशङ्क्याह- नह्रयमिति। अथा "अग्र"ही"दित्यत्र "ग्रहोऽलिटी"ति दीर्घस्य स्थानिवद्भावेन इट्त्वादिट् ईटीति प्रवर्तते एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्तेतेति भावः। यद्यपि "रोरी"त्यतो "र" इत्यनुवर्त्त्य "रोर्यो रोफस्तस्य यादेश" इति व्याख्याने अयमल्विधिरेव, तथापि उत्तरार्थं कर्तव्यमशिग्रहणं "र"इत्यस्यानुवृत्तिक्लेशवारणार्थमिहैव कृतम्। निपाता इति। "भोभगो-" इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः। यदि तु "विभाषा भवद्भगवदघवतामोच्चावस्ये"ति वार्तिकेन "एषां रुः स्यादवस्योकारो वा संबुद्धौ" इत्यर्थकेन निष्पन्ना एव भोःशब्दादयो गृह्रेरन्, तदा पुँल्लिङ्गैकवचनमात्रे "भ#ओ हरे" इत्यादिसिद्धावपि "भो हरिहरौ", "भो विद्वद्वृन्द," "भोगङ्गे" इत्यादि न सिद्ध्येत्। तस्मा"द्विभाषा भव"दिति वार्तिकं नावश्यमाश्रयणीयमिति भावः। मनोरमायां तु-"भाष्यस्वरसरीत्या तु "विभाषे"ति वार्तिकमारब्धव्यमेवे"त्युक्तम्। तथाहि "हे भवन्" इतिवत् "हे भो" इति प्रयोगस्यापीष्टत्वात्। तस्य च वार्तिकारम्भ एव सिद्धेः। "स्युः पाट्()प्याडङ्गहैहेभोः" इत्यमरोक्तानां तु संबोधनार्थानां निपातानां सह प्रयोगाऽयोगात्। किंच "अत्र भवान्हरिः" "तत्र भवान्", "ततो भवान्," इतिवत्तत्र भो इत्याद्यपि वार्तिके सत्येव सिध्यति, "इतराभ्योऽपि दृश्यन्ते" इति सर्वविभक्त्यन्तात्रतसोर्भवदादियोग"एवेष्टत्वात्। किंच आमत्रितत्वे पदात्परस्याष्टमिकनिघातः, "आमत्रितं पूर्वमविद्यामानव"दित्यविद्यमानद्भावश्चेत्यादि सिध्यति नान्यथा। "भो हरिहरा"वित्यादिसिद्धये "भो" #इति निरातोऽप्यवश्याभ्युपगन्तव्यः। यदि तु भगोअघो इति निपातावपि प्रामाणिकौ, तर्हि स्तां नाम, वार्तिकं तूक्तप्रयोजनाय

स्वीकर्तव्यमेवेति दिक्। स्यादेतत्-निपातानामभ्युपगमे यत्वविधौ त एव गृह्लेरन् प्रतिपदोक्तत्वान्न तु संबुद्ध्यन्ताः, लाक्षणिकत्वादिति चेन्मैवम्। "स्वरितेनाधिकारः" इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्। लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वाच्च। अनित्यत्वे लिङ्गं तु"भुवश्च महाव्याह्मतेः"इति सूत्रे महाव्याह्मतिग्रहणं, "यावत्पुरे"ति सूत्रे निपातग्रहणं च। न चैवं लाक्षणिकानामपि ग्रहणे "विभोरिदं",-सुप्रभा गौर्यस्य स सुप्रभगुः, तस्य-"सुप्रभगोरिदं, "रघो"रिदमित्यत्रापि यत्वापत्तिरिति वाच्यम्, परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्योषामग्रहणात्। साहचर्यं त्वेषां संबोधनार्थे इति बोध्यम्। "भो" इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादिति व्याख्याने त्वर्थवद्ग्रहणपरिभाषया नातिप्रसङ्गः। न च "अजहत्साव्र्था वृत्ति"रिति पक्षे विभोरिदं""प्रभोरिद"मित्यत्र "भो"रित्येकदेशस्य अर्थोऽस्तीति शङ्क्यम्, "जहत्स्वार्था वृत्ति"रिति मुख्यपक्षे तदभावादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

व्योर् लघुप्रयत्नतरः शाकटायनस्य ८।३।१८

वकारयकारयोः भोभगोअघोअवर्णपूर्वयोः पदान्तयो लघुप्रयत्नतर आदेशो भवति अशि परतः शाकटायनस्य आचर्यस्य मतेन। भोयत्र, भो अत्र। भगोयत्र, भगो अत्र। अघोयत्र, अभो अत्र। कयास्ते, क आस्ते। अस्मायुद्धर, अस्मा उद्धर। असवादित्यः, असा आदित्यः। द्वावत्र, द्वा अत्र। द्ववानय, द्वा आनय। लघुप्रयत्नतरत्वम् उच्चारणे स्थानकरणशैथिल्यम्। स्थानं ताल्वादि। करणं जिह्वामूलादि। तयोरुच्चारणे शैथिल्यं मन्दप्रयत्नता।

न्यासः

व्योर्लघुप्रयत्नतरः शाकटायनस्य। , ८।३।१८

"लघुप्रयत्नतरः" इति। प्रयत्नः प्रयतनम्()। "यजयाच" ३।३।९० इत्यादिना नङ्()। लघुः प्रयत्नो यस्य स लघुप्रयत्नः, अतिशयेन लघुप्रयत्नो लघुप्रयत्नतरः। किं पुनरिदं लघुप्रयत्नतरत्वम्(), यद्योगाल्लघुप्रयत्नतरो भवतीत्याह--"लघुप्रयत्नतरत्वम्()" इत्यादि। स्थानम्()--ताल्वादि, करणम्()--झ्वामूलादि, तयोरुच्चारणे शैथिल्यं लघुप्रयत्नतरत्वम्()" इत्यादि। स्थानम्()--ताल्वादि, करणम्()--जिह्वामूलादि, तयोरुच्चारणे शैथिल्यं लधुप्रयत्नतरत्वम्()। उदाहरमेष्वान्तरतम्याद्वकारस्य वकार एव भवति, यकारस्य यकार एव। शाकटायनग्रहणं पूजार्थम्()। अनेन हि व्योर्लघुप्रयत्नतरत्वं विधीयते, उत्तरसूत्रेणापि लोपः; तत्रोभयोविधानसामथ्र्यादेव पक्षे विधिर्विज्ञास्यते॥

तत्त्व-बोधिनी

व्योर्लघुप्रयत्नतरः शाकटायनस्य १३७, ८।३।१८

व्योर्लघु। वकारयकारयोरिति। भोभगोअघोअपूर्वयोरित्यर्थः। लघुप्रयत्नतरः=लघूच्चारणतरः। स चान्तरतम्याद्वस्य वः;यस्य य इत्याह-वयाविति।

---

सूत्रम्

काशिका-वृत्तिः

लोपः शाकल्यस्य ८।३।१९

वकारयकारयोः पदान्तयोः अवर्णपूर्वयोः लोपो भवति शाकल्यस्य आचार्यस्य मतेन अशि परतः। क आस्ते कयास्ते। काक आस्ते, काकयास्ते। अस्मा उद्धर, अस्मायुद्धर। द्वा अत्र, द्वावत्र। असा आदित्यः, असावादित्यः। शाकल्यग्रहणं विभाषार्थम्। तेन यदा ऽपि लघुप्रयत्नतरो न भवति आदेशः, तदापि व्योः पक्षे श्रवणं भवति।

लघु-सिद्धान्त-कौमुदी

लोपः शाकल्यस्य ३०, ८।३।१९

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाशि परे॥

न्यासः

लोपः शाकल्यस्य। , ८।३।१९

ओतः परयोव्र्योर्लोपो नित्यं वक्ष्यति। तस्मादवर्णपूर्वयोरयं विधिर्विज्ञायत इत्याह--"अवर्णपूर्वयोः" इत्यादि। "शाकल्यग्रहणं विभाषार्थम्()" (इति)। ननु च शाकटायनस्य मतेन लघुप्रयत्नतरो विहितः। तत्रान्त रेणापि शाकल्यग्रहणं पाक्षिक एव विधिर्विज्ञास्यते; अन्यथा हि["हि"--नास्ति कां०।पाठे] लघुप्रयत्वविधानमनर्थकं स्यात्(), त()त्कशाकल्यग्रहणेन? इत्यत आह--"तेने" इत्यादि। असति हि शाकल्यग्रहणे विभाषार्थे लघुप्रयत्नतरेण मुक्ते नित्यो लोपः स्यात्(), ततश्चालघुप्रयत्नतरयोव्र्योः पक्षे श्रवणं न स्यात्()। शाकल्यग्रहणे तु सति लोपो विकल्प्यते। तेन तयोरपि पक्षे श्रवणं सिद्धं भवति। एवञ्च त्रीणि रूपाणि भवन्ति--एकं लघुप्रयत्नतरपक्षे, द्वितीयं लोपपक्षे, तृतीयं तूभयोरभावपक्षे॥

बाल-मनोरमा

लोपः शाकल्यस्य ६८, ८।३।१९

हरे एहि, विष्णो इह, श्रियै उद्यतः, गुरौ उत्क इत्यत्र एचां क्रमेण अयवायावादेशेषु कृतेषु यकारवकारयोर्वैकल्पिकं लोपं विधत्ते--लोपः शाकल्यस्य। "भो भगो" इत्यतोऽपूर्वस्येति, अशीति चानुवर्तते। "व्योर्लघुप्रयत्न"त्यतो व्योरित्यनुवर्तते। वकारयकारयोरित्यर्थः। अपूर्वस्येति च व्योरित्यस्य विशेषणम्। अवर्णः पूर्वो यस्मात्स अपूर्वः। अपूर्वस्य वस्य यस्य चेति प्रत्येकमन्वयाभिप्रायमेकवचनम्। पदस्येत्यधिकृतमवर्णपूर्वकाभ्यां यकारवकाराभ्यां विशेष्यते। विशेषणत्वाच्च व्योरिति तदन्तता लभ्यते। ततश्चाऽवर्णपूर्वो यो वकारो यकारश्च, तदन्तपदस्य लोपः स्यादशि परत इत्यर्थः। अलो।ञन्त्यपरिभाषया तादृशपदान्तस्येति लभ्यते। शाकल्यग्रहणान्मतान्तरे न भवतीति गम्यते। ततश्च फलितमाह--अवर्णपूर्वयोरित्यादिना। "व्यो"रित्यनुवृत्तवपि वर्णसमाम्नाये यकारस्य प्राथम्याद्यवयोरित्युक्तम्। न च शाकल्यवंश्यानामेव पुरुषाणामेतल्लोपानुसरणं नान्येषामिति पुरुषभेदेन व्यवस्थार्थमेव शाकल्यग्रहणं कुतो न स्यादिति वाच्यम्, "न वेति विभाषे"ति सूत्रभाष्ये "आचार्यदेशशीलने च तद्विषयते"ति प्रस्तुत्य "इको ह्रस्वोऽङ्यो गालवस्य " "प्राचामवृद्ध#आ"दित्यादौ गालवाद्याचार्यग्रहणं, प्राचामुदीचामित्यादिदेशविशेषग्रहणं च अविशेषेण विकल्पार्थमेव, नतु तत्तद्वंश्यतत्तद्देशभेदेन प्रयोगव्यवस्थार्थमिति सिद्धान्तिततत्वात्। ननु हरे एहीत्यत्र अयादेशे यकारस्य लोपे सति "ओमाङोश्चे"ति पररूपं स्यात्। विष्णो-इह,श्रियै-उद्यतः, गुरौ-उत्क इत्यत्र अवायावादेशेषु वकारयकालोपे आद्गुण #इति गुणः स्यादित्यत आह--पूर्वत्रेति। वकारयकारयोर्लोपस्याऽसिद्धत्वेन ताभ्यां व्यवहितततया।ञच्परकत्वाऽभावादाशङ्कितोऽच्सन्धिर्न भवतीत्यर्थः। तदेवमिक्सन्धिरेच्सन्धिश्च निरूपितः। तदुभयत्रातिप्रसङ्गमाशङ्क्य समाधत्ते--कानीत्यादिना। "यद्यपि, तथापी"त्यध्याहार्यम्। कानि सन्ति, कौ स्त इत्यत्र यद्यपि यणावादेशो प्राप्तौ तथापि न भवत इत्यन्वयः। नन्वत्र इकारौकारयोः सकारपरकत्वादच्()परकत्वाऽभावात् कथं यणावोः प्राप्तिरित्यत आह--अस्तेरल्लोपस्य स्थानिवद्भावेनेति। अस्()धातोरादादिकाल्लटिप्रथमपुरुषबहुवचने "सन्ती"ति रूपम्। प्रथमपुरुषद्विवचने तु "स्त" इति रूपम्। उभयत्रापि "श्नसोरल्लोपः" इति धात्वादेरकारस्य लोप इति

स्थितिः। तत्राऽल्लोपस्य स्थानिवत्त्वेनाऽच्त्वादिकारौकारयोरच्परकत्लाद्यणावादेशौ प्राप्नुत इत्यर्थः। न च स्थानिवदादेशोऽनल्विधाविति स्थानिवद्भावोऽत्र न सम्भवति। अल्लोपस्य स्थानिभूतो योऽकारस्तं परं निमित्तत्वेनाश्रित्य प्रवर्तमानयोर्यणावादेशविध्योः स्थान्यलाश्रयत्वादिति वाच्यम्, "अचः परस्मिन् पूर्वविधौ" इति स्थानिवद्भावोपपत्तेः। अल्लोपस्य क्ङिति परे विधीयमानस्य परनिमित्तकाजादेशतया तत्स्थानीभूतादकारात्पूर्वत्वेन दृष्टयोरिकारोकारयोर्यणावादेशविधौ "अचः परस्मि"न्निति प्रवृत्तेरिति भावः।

तत्त्व-बोधिनी

लोपः शाकल्यस्य ५७, ८।३।१९

लोपः शाकल्यस्य। अवर्णपूर्वयोः किम्?, दध्यत्र। मध्वत्र। अशि पर इति। एतच्च "भोभगो" इति सूत्रादनुवर्तते। अशि किम्?। वृक्षव्यकरोति। अत्र लोपो मा भूत्। न चात्र टिलोपस्य स्थानिवद्भावेन निर्वाहः, "पूर्वत्रासिद्धे न स्थानिव"दित्यभ्युपगमात्। न चैवमपि "हलि सर्वेषा"मिति नित्यं लोपः स्यादिति शङ्क्यम् ; तत्र "अशि" इत्यनुवर्त्त्य अशा हलो विशेषणात्। "लोपो व्योर्वली"ति लोपस्तु न शङ्कनीय एव, (टिलोपस्य णिलोपस्य वा) स्थानिवत्त्वन्नेति "न पदान्ते"ति सूत्र एवोक्तत्वात्। हर एहीति। "ओमाङोश्चे"ति पररूपं प्राप्तम्।

तन्निषेधादिति। नच स्थानिवत्त्वनिषेधेऽपि "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यल्लोपस्याऽसिद्धत्वाद्यणावादेशौ स्त एवेति वाच्यम्, पदद्वयाश्रयत्वेन तयोरेव बहिरङ्गत्वात्। "नाजानन्तर्ये" इति निषेधाच्च।

---

सूत्रम्

काशिका-वृत्तिः

ओतो गर्ग्यस्य ८।३।२०

ओकारादुत्तरस्य यकारस्य लोपो भवति गार्ग्यस्य आचार्यस्य मतेन अशि परतः। भो अत्र। भगो अत्र। भो इदम्। भगो इदम्। नित्यार्थो ऽयम् आरम्भः। गार्ग्यग्रहणं पूजार्थम्। यो ऽयमलघुप्रयत्नस्य विकल्पेन लोपः क्रियते सो ऽनेन निवर्त्यते। लघुप्रयत्नतरः तु भवत्येव यकारः। भो अत्र भोयत्र। भगो अत्र, भगोयत्र। अघो अत्र, अघोयत्र। केचित् तु सर्वम् एव यकारम् अत्र न इच्छन्ति।

न्यासः

ओतो गाग्र्यस्य। , ८।३।२०

ओकारादुत्तरो वकारो नास्ति, पदान्त इति यकारस्यैवायं विधिर्विज्ञास्यत इत्याह--"ओकारादुत्तरस्य यकारस्य" इति। ननु च पूर्वसूत्रेणैवौकारादुत्तरस्य यकारलोपः सिद्धः, तत्किमर्थमिदमारभ्यते? इत्याह--"मित्यार्थोऽयमारम्भः" इति। गाग्र्यग्रहणं तर्हि किमर्थम्()? इत्याह--"गाग्र्यग्रहणम्()" इत्यादि। व्योरिह प्रकरणे लघुप्रयत्नतरपक्षेविहितो लोपोऽपि, तत्कस्यार्य नित्यो लोपो बाधकः? इत्याह--"योऽयम्()" इत्यादि। अथ वा--यदि नित्यार्थोऽयमारम्भः, पक्षे लघुप्रत्यत्नतरो न स्यादित्यत आह--"योऽयम्()" इत्यादि। लोपविकल्पस्यानन्तरत्वात्? तस्यैव निवृत्तिर्युक्ता कर्तुमिति भावः। "केचित्तु" इत्यादि। कथं पुनरिष्यमाणमपि लघुप्रयत्नतरस्य बाधनं भवति, यावतानन्तरत्वाल्लोपविकल्पस्यानेन बाधा युक्ता? व्योः कार्यसमुदायस्यापेक्षितत्वाददोषः। यदि लोपविफल्पमात्रमपेक्षते, ततः स एव बाध्यते, न लघुप्रयत्नतरः; लोपेन व्यवहितत्वात्()। यदा तु व्योर्यवस्मिन्? प्रकरणे कार्यं विहितं तत्समुदायोऽपेक्ष्यते, तदा तस्यानन्तर्यात्? स एव निवर्त्यते। तपरकरणमसन्देहार्थम्()। यतो हि "ओः" इत्युक्ते सन्देहः स्यात्()--किमयमोकरस्य निर्देशः?

आहोस्विदुकारस्येति? मैवम्(); "भोभगोअघोअपूर्वस्य" [८।३।१७] इत्यनुवत्र्तते, न भोःप्रभृतीनामुकारोऽस्ति, तत्कुतः सन्देङः? एवं तर्हि मुखसुखार्थम्()॥

बाल-मनोरमा

ओतो गाग्र्यस्य १६८, ८।३।२०

अतो गाग्र्यस्य। "ओत" इति पञ्चमी। "व्यो"रित्यतो यग्रहणमनुवत्र्तते, नतु वकारोऽपि, ओतः परस्य तस्याऽसंभवात्। "पदस्ये" त्यधिकृतं यकारेण विशेष्यते, ततस्तदन्तविधिः। तेन ओकारात्परो यो यकारस्तदन्तस्य पदस्येति चार्थो लभ्यते। अलोऽन्त्यपरिभाषया च पदान्तस्य यकारस्येति फलितम्। "भोभगो" इत्यतोऽशीत्यनुवर्तते। "लोपश्शाकल्यस्ये"त्यतो "लोप" इत्यनुवर्तते। सच पूर्वविगितलघुप्रयत्नस्य न भवति, विधानसामथ्र्यात्, तदाह--ओकारादिति। ननु लोपस्य कथं नित्यत्वं, "गाग्र्य"ग्रहणादित्यत आह--गाग्र्यग्रहणमिति। व्याख्यानादिति भावः। भो अच्युतेति। अलघुप्रयत्नपक्षे यकारस्य नित्यं लोपः। लघुप्रयत्नपक्षे-भोयज्युतेति। अत्र लघुप्रयत्नस्य विधिसामथ्र्यान्न लोपः। तोयमिति। अत्र यकारस्य पदान्तत्वाभावादोतो गाग्र्यस्येति न भवति। अनेनाऽत्र "भोभगो" इति नानुवर्तते इति सूचितम्।

तत्त्व-बोधिनी

ओतो गाग्र्यस्य १३८, ८।३।२०

विधानसामथ्र्याल्लघुप्रयत्नतरस्य न भवतीत्याशयेनाह-अलघुप्रत्नयस्येति। भोयच्युतेति। एवं भगोयच्युत। अघोयच्युत। वकारस्योदाहरणं तु-"असावादित्यः"। एतच्च काशिकायां स्पष्टम्।

---

सूत्रम्

काशिका-वृत्तिः

उञि च पदे ८।३।२१

अवर्णपूर्वयोः व्योः पदान्तयोर् लोपो भवति उञि च पदे परतः। स उ एकविंशवर्तनिः। स उ एकाग्निः। पदे इति किम्? तन्त्र उतम्, तन्त्रयुतम्। वेञः सम्प्रसारणे कृते उञिति भूतपूर्वेण ञकारेण शक्यते प्रतिपत्तुम् इति। अथ उञित्येवं रूपो निपातः प्रतिपदोक्तो ऽस्ति? तदा लाक्षणिकत्वाद् वेञादेशस्य ग्रहणम् इह न अस्ति, उत्तरार्थं पदग्रहणं क्रियते।

न्यासः

उञि च पदे। , ८।३।२१

"लोपः शाकल्यस्य" [८।३।१९] इति सिद्धे नियमार्थम्()--उञि पद एव, नान्यत्रेति। "अवर्ञपूर्वयोः" इति। ओकारपूर्वस्य वकारस्यासम्भवाद्यकारस्य पूर्वेणैव सिद्धत्वादवर्णपूर्वयोरेवायं लोपो विज्ञायत इत्यवर्णपूर्वयोरित्युक्तम्()। "स उ" इति। तच्छब्त्? सुः, त्यदाद्यत्वम्(), "तदोः सः सावनन्त्ययोः" [७।२।१०६] इति सः, रुत्वाम्(), तस्य यकारः, तस्यानेन लोपः। "तन्त्रयुतम्()" इति। "तन्त्रे" इत्येतस्य सप्तम्यन्तस्य उतशब्दे निष्ठान्ते परतोऽयादेशः। ननु च "उञि" ["उञ्()"--कांउ।पाठः] इत्युच्यते, न चायमुञ्(), ञकाराभावात्? तत्किमेतन्निवृत्त्यर्थेन पदग्रहणेन? इत्यत आह--"वेञः सम्प्रसारणे" इत्यादि। सम्प्रसारणं तु "वचिस्वपि" [६।१।१५] इत्यादिना। एवं तावदुञो निपातस्य प्रतिपदोक्तस्यास्तित्वमनपेक्ष्य पदग्रहणप्रयोजनं दर्शितम्()। यदा तु तस्यास्तित्वमपेक्ष्यते, तदा प्रयोजनान्तरं दर्शयितुमाह--"उत्तरार्थम्()" इति। "ङमो ह्रस्वादचि ङमुण्? नित्यम्()" [८।३।३२] इत्येष विधिरजादौ पदे यथा स्यात्(), इह

मा भूत्()--परमदण्डिनेति। यद्युत्तरार्थम्(), तत्रैव कस्मान्न कृतम्(), कः पुनरेवं सिति लाभः? स्वरितत्वं न प्रतिज्ञायत इत्येष लाभः। इहापि क्रियमाणे लक्षणप्रतिपदोक्तपरिभाषा (व्या।प।३) नाश्रयणीया भवतीति समानम्()। चकारोऽवर्णपूर्वस्यानुकर्वणार्थः; क्षन्यथा ह्लोतोऽनन्तरत्वात्? ततः परस्य यकारस्य लोपो विज्ञायेत? नैतदस्ति; एवं हि विज्ञायमाने निरर्थकमेवेदं सूत्रं स्यात्(), पूर्वेणैव सिद्धत्वात्()। नानर्थकम्(), नियमार्थत्वात्()--उङि पद एव यथा स्यात्()--भो उ पदश्यतीति। असति ह्यस्मिन्नियमार्थे भो युतम्(), भगो युतमित्यत्रापि नित्यो लोपः स्यात्()। यदि तु निपातस्येदमुञो ग्रहणम्(), तदा नियमार्थस्य व्यावत्र्यत्वं नास्तीति पूर्वापेक्षया चकारः समुच्चयार्थो द्रष्टवप्यः। उञीति ञकारोऽसन्देहार्थः। असति हि तस्मिन्? सप्तम्या औ इति निर्देशः स्यात्()। ततश्च किमयमुकारस्य निर्देशः? उत्तेकारस्येति? सन्देहः स्यात्()। ननु च क्रियमाणेऽपि तस्मिन्? किमुञीति निपातस्य ग्रहणम्()? आहोस्विदुकारादारभ्य झभञ्()" (मा।सू।८) इति ञकारस्येति सन्देहः स्यादेव? नैवम्(); इदं तावद्भवान्? प्रष्टव्यः--किमुञिति प्रत्याहरे येऽन्तर्गता हलस्तेष्वेव नित्यो लोपः? उतान्येष्वपीति? किमत्र वक्तव्यम्()--"अन्येष्वपि" इति? तथा हि वक्ष्यति--"हलि सर्वेषाम्()" (८।३।२२) इति। एवं तर्हि यद्यत्र प्रत्याहारग्रहणभिमतं स्यात्? "एऔच्()" (मा।सू।४) इति चकारेण प्रत्याहरं गृह्णीयात्()--उचि च पद इति। हल्यपि "हलि सर्वेषाम्()" इत्यनेन भविष्यतीति। तत्राप्ययमर्थः--सन्देहः परिह्रतो भवति। अथ वा यद्यत्रोकारादीनामुञा प्रगत्याहरग्रहणभिमतं स्याद्धलीति लकारेण प्रत्याहरं गृहीत्वैकमेवेमं योगं कुर्यात्()--"उलि च पदे सर्वेषाम्()" इति। न हि योगविभागस्य किञ्चित्? प्रयोजनं पश्यामः। तस्मान्नात्रोकारादीनां प्रत्याहारग्रहणमिष्टम्()। ततश्चोञो निपातस्यैव ग्रहणमित्यसन्दिग्धमेतत्()॥

बाल-मनोरमा

उञि च पदे १६९, ८।३।२१

उञि च पदे। अपूर्वस्येति, पदस्येति, व्योरिति लोप इति चानुवर्तते। तदाह--अवर्णेति। स उ एकाग्निरिति। "उ" इति निपातः। सस् उ इति स्थिते सस्य रुः, भोभगो इत्यपूर्वत्वाद्यत्वम्। लोपश्शाकल्यस्येति विकल्पनिवृत्त्यर्थमिदम्। वकारोदाहरणं तु "असा उ एकाग्नि"रिति वृत्तिः। पदे किमिति। उञः पदत्वाऽव्यभिचारात्पदे इति तद्विशेषणस्य किं प्रयोजनमिति प्रश्नः। तन्त्रयुतमिति। तन्त्रे-उतमिति विग्रहः। अयादेशः। अत्र यकारस्य लोपनिवृत्त्यर्थं पदग्रहणमिति भावः। नन्वत्र उञ्()परकत्वाऽभावादेव लोपनिवृत्तिसम्भवात्पदग्रहणं व्यर्थमेवेत्यत आह--वेञ, इति। "वेञ् तन्तुसन्ताने" इत्यतः क्तप्रत्यये, "वचिस्वपियजादीनाम्" इति वकारस्य संप्रसारणे उकारे, पूर्वरूपे, उतमिति रूपम्। अत्र उञ्परकत्वे।ञपि तस्य उञः पदत्वाऽभावात्तस्मिन् परे यस्य लोपो न भवतीत्यर्थः। ननु स उ एकाग्निरित्यत्र उञ् प्रतिपदोक्तः, चादौ पठितत्वात्। उतमित्यत्र तु उञ् लाक्षणिकः , संप्रसारणादिविधिनिष्पन्नत्वात्। ततश्च "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण"मिति परिभाषया चादिपठितस्यैव उञोऽत्र ग्रहणं भविष्यति। नतु उतमित्यत्र उञोऽपि। अतः पदग्रहणं व्यर्थमेवेत्यत आह-यदीति। उत्तरार्थमिति। ङमो ह्रस्वादचीत्यर्थमित्यर्थः। एतच्चात्रैव भाष्ये स्पष्टम्।

तत्त्व-बोधिनी

उञि च पदे १३९, ८।३।२१

उत्तरार्थं पदग्रहणमिति। वस्तुतस्तूत्तरत्रापि नोपयुज्यते, "पदस्ये"त्यनुवृत्त्यैव निर्वाहात्। "उञि च पदे" इत्यतः "पदे" इत्यनुवर्त्य "अजादेः पदस्ये"ति व्याख्यानात्। "परमदण्डिनावित्यादौ ङमुण्णे"ति प्राचो व्याख्यानस्य "ङमो हस्वादची"ति सूत्रे मनोरमायां निरस्तत्वाच्च। ननु "हलि सर्वेषा"मित्यत्र "पदे"ग्रहणानुवृत्तौ "हलादौ पदे" इति व्याख्यानलाभाद्वृक्षव्भ्यां वृक्षव्भिरित्यत्र वस्य नित्यं लोपो न भवति, किं तु "लोपः शाक्ल्यस्ये"ति वैकल्पिक एव लोपैत्यस्ति "पदे"-ग्रहणस्य

प्रयोजनमिति चेन्मैवं; हलि सर्वेषा"मित्यत्र वस्याऽननुवर्तितत्वात्। किंच "माभ्यां" "माभि"रित्यत्र भ्यामादौ परतो यस्य विकल्पेनैव भवन्मते लोपः स्यात्, तत्र "हलि सर्वेषा"मित्यस्याऽप्रवृत्तेः। न चेष्टापत्तिः, भाष्यकारैर्दण्डिनेत्यत्र ङमुङ्वारणाय "ङमो ह्रस्वादची"त्यत्रानुवृत्यर्थं पदग्रहणमित्युक्तत्वात्। न च तदेव प्रयोजनमस्त्विवति वाच्यं, "ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमु"डिति व्याख्यानेन "दण्डिने"त्यत्र प्रसक्तयभावात्।

---

सूत्रम्

काशिका-वृत्तिः

हलि सर्वेषां ८।३।२२

हलि परतः भोभगोअघोअपूर्वस्य यकारस्य पदान्तस्य लोपो भवति सर्वेषाम् आचार्याणां मतेन। भो हसति। भगो हसति। अघो हसति। भो याति। भगो याति। अघो याति। वृक्षा हसन्ति। सर्वेषां ग्रहणं शाकटायनस्य अपि लोपो यथा स्यात्, लघुप्रयत्नतरो मा भूतिति।

लघु-सिद्धान्त-कौमुदी

हलि सर्वेषाम् १०९, ८।३।२२

भोभगोअघोअपूर्वस्य यस्य लोपः स्याद्धलि। भो देवाः। भगो नमस्ते। अघो याहि॥

न्यासः

हलि सर्वेषाम्?। , ८।३।२२

"भोभगोअघोअपूर्वस्व" इति। भोभगोअघोपूर्वस्य वकारस्यासम्भवात्()। अवर्णपूर्नस्तु वकारः सम्भवति। तस्य तु पूर्वमेव "हलि सर्वेषाम्()" इत्यनेन लोपो न भवतीति दर्शितम्()। तेनेह यकारस्यैव ग्रहणं न वकारस्य, तस्य लोपो न भवतीति दर्शितम्()--"भोभगोअघोअपूर्वस्य" ८।३।१७ इत्यादौ सूत्रे। तत्राश्ग्रहणं किमर्थम्()? हलि सर्वेषामित्ययं लोपोऽशि हलि यथा स्यात्(), इह मा भूत्()--वृक्ष वृश्चतीति वृक्षवृट्(), तमाचष्ट इति णिच्(), वृक्षववति, वृक्षवयतेरप्रत्ययः वृक्षव्()--"वक्षव्? करोति" इति। एवमश्ग्रहणस्य प्रयोजनं दर्शयतामेन सूत्रेणाशि हलि वकारस्यावर्णपूर्वस्य लोपो न भवतीत्युक्तं भवति। ननु चावर्णपूर्वस्येत्यस्यानुवृत्तिरयुक्ता; पूर्वसूत्रे चानुकृष्टत्वात्(), तत्कथमवर्णपूर्वस्य लोपो भवतीति? नैतदस्ति; "चानुकृष्टमुत्तरत्र् नानुवत्र्तते" (व्या।प।७६) इति प्रायिकमेतत्()। कथं ज्ञायते? "एकाजुत्तरपदे णः" ८।४।१२ इत्यत्र "णः" इति प्रकृते पुनर्णग्रहणम्(), "वा भावकरणयोः" ८।४।१० इत्यत्र "वा" इति यदनुवृत्तं तन्निवृत्त्य्थ कृतम्()। यदि चेदं प्रायिकं न स्यात्(), पुनर्णग्रहणमनर्थम्(); पूर्वसूत्रे चानुकृष्टत्वादेव हि वाग्रहणस्यानुवृत्तिर्न भविष्यतीति किं पुनर्णग्रहणेन? कृतञ्च, ततोऽवसीयते--चानुकृष्टपरिभाषाऽनित्येति। "शाकटायनस्यापि लोपो यथा स्यात्()" इति। अपिशब्दाच्छाकल्यस्यापि। असति तु सर्वग्रहणे प्रत्यासन्नस्य गाग्र्यस्य मतेन लोप एव विज्ञायेत॥

बाल-मनोरमा

हलि सर्वेषाम् १७०, ८।३।२२

हलि सर्वेषाम्। "भोभगोअघोअपूर्वस्ये"त्यनुवर्तते। "व्योर्लघुप्रयत्ने"त्यतो यकारग्रहणमनुवर्तते। तदाह--भोभगो इति। लघ्वलघूच्चारणस्येति। ओकारात् परस्य यस्य लघुप्रयत्नतरस्यैवानेन लोपः। अलघुप्रयत्नतरस्य त्वोकारात् परस्य यस्य ओतो गाग्र्यस्येत्येव सिद्धम्। अपूर्वकस्य तु यस्य लघ्वलघूच्चारणस्येति विवेकः। यकारस्येति। वकारस्त्वत्र नानुवर्तते। भोभगोअघोअपूर्वस्य वकारस्याऽभावादिति वृत्तिः। "अव्यपर" इति निर्देशादिति तदाशयः। वृक्षं वातीति वृक्षवाः; तचामष्टे वृक्षव्, ण्यन्तात् क्विप्, इष्ठवद्भावाट्टिलोपः। णेरनिढीति णिलोपः, वृक्षव् करोतीत्यत्र अपूर्वकस्य वस्य सम्भवेऽपि नात्र

लोपप्रसक्तिः, अशीत्यनुवर्त्त्य अशात्मके हलीति भाष्ये व्याख्यातत्वात्। वृक्षव् करोतीत्यत्र अपूर्वकस्य वस्य सम्भवेऽपि नात्र लोपप्रसक्तिः अशीत्यनुवर्त्त्य अशात्मके हलीति भाष्ये व्याख्यातत्वात्। वृक्षव् हसतीति तु अस्मादेव भाष्यादसाधुरित्याहुः। सर्वेषां मतेनेति। सर्वाचार्यसंमतत्वादयं लोपो नित्य इति फलितम्। अत्र यदि "विभाषा भवद्भगवदघवतामोच्चावस्ये"ति वार्तिकेन "मातुवसो रु सम्बुद्धौ" इत्यत्र पठितेन "एषामन्तस्य संबुद्ध#औ रुत्वं वा स्यात्, अवेत्यंशस्य ओकारश्चे"त्यर्थकेन निष्पन्ना भोरादिशब्दा एव गृह्येरन् तर्हि पुँल्लिङ्गैकवचनमात्रे भो हरेइत्यादिसिद्धावपि तदन्यत्र द्विवचनादौ स्त्रीनपुंसकयोश्च भो हरिहरौ, भो देवाः, भो लक्ष्मिः, बो विद्वद्वृन्देत्यादौ लोपो न सिध्येत्। अतो भोस् इत्यादिनिपातानामप्यत्र ग्रहणमित्यभिप्रेत्योदाहरति--भो देवा इत्यादि। देवा म्या इति। नचात्र यकारस्य लोपो व्योरित्येव लोपः सिद्ध इति वाच्यम्, लोपो व्योरिति लोपं प्रति यत्वस्याऽसिद्धवात्।

तत्त्व-बोधिनी
हलि सर्वेषाम् १४०, ८।३।२२

हलि सर्वेषाम्। यकारस्येति। वकारस्तु नानुवर्तते। भोभगोअघोअपूर्वस्याऽसंभवात्। अपूर्वस्तु यद्यपि संभवति "वृक्षव्करोती"ति, तथापि तत्र लोपाऽप्रसङ्गः "अशी"त्यनुवर्त्त्याऽशा हलो विशेषणात्। "वृक्षव्हसती"त्यादि त्वनभिधानादसाध्वित्याहुः। "गव्य" मित्यत्र तु पदान्तत्वं नास्ति। "गव्यूति"रित्यत्र वकारप्रश्लोषान्न वलोप इत्युक्तम्। देवा नम्या इति। अत्र "लोपो व्योर्वली"ति न प्रवर्तते, तं प्रति यत्वस्याऽसिद्धत्वात्। हलि किं देवायिहेति। उत्तरार्थमावश्यकं "हली"ति ग्रहणमिहैव कृतम्। तेन "लोपः शाकल्यस्ये"त्यस्यास्य च विषयविभागोऽत्र सिध्यतीति भावः।

तत्त्व-बोधिनी
द्विस्त्रिश्चतुरिति कृत्वोऽर्थे १२७, ८।३।२२

द्विस्त्रिश्चतुरिति। इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते। कृत्वोर्थग्रहणं तु "साहचर्यं न सर्वत्र व्यवस्थपक"मित्यत्र ज्ञापकम्। तेन "दीधीवेवीटा"मित्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणम्। चतुष्कपाल इति। चतुर्षु कपालेषु संस्कृत इत्यर्थे "संस्कृतं भक्षाः"इत्यणो "द्विगोर्लुगनपत्ये" इति लुक्। अत्र मनोरमायाम्-"इदुदुपधस्येति नित्यं ष"इत्युक्तम्। एवं च "द्वितं त्रितमिति चतुःपञ्चाश"दिति स्वमूलग्रन्थे प्रयोगश्चिन्त्यः स्यात्, चतुष्कपालवत्तत्रापि नित्यतया षत्वप्रवृत्तेः। अतोऽत्र षत्वनिवारणाय "अप्रत्ययस्ये"त्यत्र "प्रत्ययस्य यो विसर्जनीयो न भवती"त्यर्थ एव स्वीकर्तव्यः। "चतुष्कपाल" इत्यत्र (तु) कस्कादेराकृतिगणत्वात्षत्वप्रवृत्तिरित्याहुः।

---

सूत्रम्
काशिका-वृत्तिः
मो ऽनुस्वारः ८।३।२३

मकारस्य पदान्तस्य अनुस्वारः आदेशो भवति हलि परतः। कुण्डं हसति। वनं हसति। कुण्ड याति। वनं याति। हलि इत्येव, त्वम् अत्र। किम् अत्र। पदन्तस्य इत्येव, गम्यते। रम्यते।
लघु-सिद्धान्त-कौमुदी
मोऽनुस्वारः ७७, ८।३।२३

मान्तस्य पदस्यानुस्वारो हलि। हरिं वन्दे॥
न्यासः

मोऽनुस्वारः। , ८।३।२३

पदस्येति स्थानषष्ठी, तच्च पदं मकारेण विशेष्यते, विशेषणेन त तदन्तविधिर्भवतीति मकारान्तपदस्यानुस्वारो विधीयमानोऽलोऽन्त्यपरिभाषया १।१।५१ मकारस्यैव विज्ञायते, इत्याह--"मकारान्तस्य पदस्य"["मकारस्य पदान्तस्य"--काशिका, पदमञ्जरी च] पदस्य" इति॥

बाल-मनोरमा

मोऽनुस्वारः १२३, ८।३।२३

मोऽनुस्वारः। पदस्येत्यधिकृतम्। म इति षष्ठ()न्तं पदस्य विशेषणं। तदन्तविधिः। हलि सर्वेषामित्यतो हलीत्यनुवर्तते। तदाह-मान्तस्येत्यादिना। अलोन्त्यस्येति। उपतिष्ठत इति शेषः। ततस्च मान्तस्य पदस्य योऽन्त्योऽल् तस्येत्यर्थः। पदान्तस्य मस्येति फलितम्। हरिं वन्द इति। हरिम्-वन्द इति स्थिते मस्यानुस्वारः। गम्यत इति। गम्लृ गतौ। कर्मणि लट्। "भावकर्मणोः" इत्यात्मनेपदे यक्। अत्र मस्य पदान्तत्वाभावान्नानुस्वारः।

तत्त्व-बोधिनी

मोऽनुस्वारः ९७, ८।३।२३

मोऽनुस्वारः। "हलि सर्वेषा"मित्यतो "हली"त्यनुवर्तते "पदास्ये"ति च, तदाह-मान्तस्येत्यादि। हलि किम्?। त्वमत्र। किमत्र।

---

सूत्रम्

काशिका-वृत्तिः

नश् च अपदान्तस्य झलि ८।३।२४

नकारास्य मकारस्य च अपदान्तस्य अनुस्वारादेशो भवति झलि परतः। पयांसि। यशांसि। सर्पींषि। मकारस्य आक्रंस्यते। आचिक्रंस्यते। अधिजिगांसते। अपदान्तस्य इति किम्? राजत् भुङ्क्ष्व। झलि इति किम्? रम्यते। गम्यते।

लघु-सिद्धान्त-कौमुदी

नश्चापदान्तस्य झलि ७८, ८।३।२४

नस्य मस्य चापदान्तस्य झल्यनुस्वारः। यशांसि। आक्रंस्यते। झलि किम्? मन्यते॥

न्यासः

नश्चापदान्तस्य झलि। , ८।३।२४

"हलि" इति निवृत्तम्(), झल्ग्रहणात्()। चकारो मकारानुकर्षणार्थः। असति हि तस्मिन्निकारस्यापदान्तस्य कार्यिण इह ग्रहणान्मकारो निवृत्त इत्याशङ्का स्यात्()। "पयांसि" इति। "जश्शसोः शिः" ७।१।२०, "नपुंसकस्य झलचः" ७।१।७२ इति नुम्(), "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः। "आक्रंस्यते" इति। आङ्पूर्वात्? क्रमेर्लृट्(), "आङ्? उद्यमने" १।३।४० इत्यात्मनेपदम्()। "आचिक्रंसते" इति। "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। एवं "अथिजिगांसते" इत्यत्रापि। इङः सनि "इङश्च" २।४।४८ इति गमिरादेशः; "अज्झनगमां सनि" ६।४।१६ इति दीर्घः; द्विर्वचनम्(), अभ्यासकार्यम्()। "राजन्()" इति। राजतेः शत्रान्तात्? सम्बुद्धिः, तस्या हल्ङ्यादिना ६।१।६६ लोपः॥

---

सूत्रम्

काशिका-वृत्तिः

मो राजि समः क्वौ ८।३।२५

समो मकारस्य मकारः आदेशो भवति राजतौ क्विप्प्रत्ययान्ते परतः। सम्राट्। साम्राज्यम्। मकारस्य मकारवचनम् अनुस्वारनिवृत्त्यर्थम्। राजि इति किम्? संयत्। समः इति किम्? किंराट्। क्वौ इति किम्? संराजिता। संराजितुम्। संराजितव्यम्।

लघु-सिद्धान्त-कौमुदी

मो राजि समः क्वौ ८१, ८।३।२५

क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्॥

न्यासः

मो राजि समः क्वौ। , ८।३।२५

"सम्राट्()" इति। सम्पूर्वाद्राजतेः "सत्सूद्विव" ३।२।६१ इत्यादिना क्विप्(), व्रश्चादिना ८।२।३६ षत्वम्(), षकारस्य जशत्वम्()--डकारः, तस्य चर्त्वम्()--टकारः। "साभ्राज्यम्()" इति। ब्राआह्णणादित्वत्? व्यञ्()। किमर्थं पुनर्मकार उच्चार्यते? इत्याह--"मकारस्य मकारवचनम्()" इत्यादि। "मोऽनुस्वारः" ८।२।२३ इत्यनुस्वारः प्राप्नोति, स मा भूदित्येवमर्थं मकारस्य मकारो विधीयते। यद्येवम्(), नेति प्रतिषेधः कत्र्तव्यः, एवं हि लघु सूत्रं भवति; विभक्त्यनुच्चारणात्()? एवं तर्हि निर्देशाधिक्येन तु मकारविधानेनैतत्? सूचयति--अत्र प्रकरणेऽधिको हि विधिर्भवतीति। यवलपरे यवला वा भवन्तीत्युपपन्नं भवति। "संयत्()" इति। यमेः सम्पूर्वात्? क्विप्(), "अनुदात्तोपदेश" ६।४।३७ इत्यादिना मकारलोपः, अकारस्य "ह्यस्वस्य पिति कृति" ६।१।६९ इति तुक्()॥

बाल-मनोरमा

मो राजि समः क्वौ १२७, ८।३।२५

मो राजि। म इति प्रथमान्तम्। मोऽनुस्वार इत्यतो म इति स्थानष्ठ()न्तमनवर्तते। सम इत्यवयवषष्ठी। प्रत्ययग्रहणपरिभाषया क्विग्रहणेन क्विप्प्रत्ययान्तलाभः। तदाह--क्विबन्त इत्यादिना। म एवेति। न त्वनुस्वार इत्यर्थः। मस्य मविधानमनुस्वारनिवृत्त्यर्थमिति भावः। सम्राडिति। राजृ दीप्तौ सम्पूर्वात्सत्सूद्विषद्रुहेत्यादिना क्विप्। व्रश्चेति षत्वम्। जश्त्वेन डत्वम्। चर्त्वम्। अत्र मोऽस्वारो न भवति। हे मपरे वा। "मोऽनुस्वार" इत्यतो "म" इति षष्ठ()न्तमनुवर्तते। "मोराजी"त्यतो "म" इति प्रथमान्तमनुवर्तते। मः परो यस्मादिति च विग्रहः। तदाह--मपरे इति। ह्लयतीति ण्यन्ताल्लट्। "ज्वलह्लसह्लनमामनुपसर्गाद्वा" इति मित्त्वण्णौ मितां ह्यस्वः।

यवलपरे इति। यवलाः परा यस्मादिति विग्रहः। यवलपरके हकारे परे मस्य म एव वा स्यादित्यर्थः।

तत्त्व-बोधिनी

मो राजि समः क्वौ १००, ८।३।२५

मो राजि समः क्वौ। राजीति किम्? संपत्। सम इति किम्?, इदं राट्। क्वाविति किम्? संराजितुं, संराजितव्यम्। मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं, तदाह--म एव स्यादिति। सम्राडिति। "राजृ दीप्तौ" संपूर्वादस्मात् "सत्सूद्विषे"त्यादिना क्विप्। व्रश्चादिना षत्वं, जश्त्वचर्त्वे।

---

सूत्रम्

काशिका-वृत्तिः

हे मपरे वा ८।३।२६

हकारे मकारपरे परतो मकारस्य वा मकार आदेशो भवति। किं ह्मलयति, किम् ह्मलयति। कथं ह्मलयति, कथम् ह्मलयति। यवलपरे यवला वा। यवलपरे हकारे मकारस्य यवला यथासङ्ख्यं वा भवन्ति इति वक्तव्यम्। किय्म्ँ ह्यः, किं ह्यः। किव्म्ँ ह्वलयति, किं ह्वलयति। किल्म्ँ ह्लादयति, किं ह्लाहयति।

लघु-सिद्धान्त-कौमुदी

हे मपरे वा ८२, ८।३।२६

मपरे हकारे परे मस्य मो वा। किम् ह्मलयति, किं ह्मलयति। (यवलपरे यवला वा)। किंय्ह्यः, किं ह्यः। किंव्ह्वलयति, किं ह्वलयति। किंल् ह्लादयति, किं ह्लादयति॥

न्यासः

हे मपरे वा। , ८।३।२६

मः परो यस्मादिति बहुव्रीहिः। "किम्? ह्वलयति" इति। "ह्वल ह्मल चलने" (धा।पा।८०५,८०६), "ज्वलह्वलह्मलनमामनुपसर्गाद्वा" (ग।सू।धा।पा।८१७ इत्यस्यानन्तरम्()) इति वा मित्संज्ञा, "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वः। "यवलपरे" इत्यादि। यवलाः परे यतः स यवलपरस्तस्मिन्? हे मकारस्य वा यवला भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्वं विहितमेव। यवलाश्चैते भवन्त आन्तरतम्यात्? सानुनासिका एव भवन्ति। वावचनात्? पक्षेऽनुस्वारो भवत्येव। अथ "हे भः" इत्येव कस्मान्नोक्तम्(); एवं हि परग्रहणं न कत्र्तव्यं भवति, सप्तम्यैव हि तदर्थं प्रतिपादयिष्यते--मकारे परतो योऽकार इति? नैतदस्ति; "हे मः" इत्युच्यमाने विपर्ययोऽपि विज्ञायेत--हकारपरे मकार इति, ततश्च किमह्म इत्यादावेव स्यात्()। अकारेण व्यवधानान्न भविष्यतीति चेत्()? न; "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्()" (व्या।प।४६) इत्येकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेनेति। आद्यपक्षे किम्? ह्वलयतीत्यादिषु कृतार्थं वचनम्(), अतो न शक्यं व्यवधानमाश्रयितुमिति चेत्()? न; येन हकारपदे मकार इत्येष सूत्रार्थो गृहीतः, तं प्रति पक्षान्तरस्यासम्भवात्()। तस्मात्? परग्रहणमेव कत्र्व्यं विपर्ययप्रतीतिर्मा भूदित्येवमर्थम्()॥

तत्त्व-बोधिनी

हे मपरे वा १०१, ८।३।२६

हे मपरे वा। मपर इति बहुव्रीहिः। यवलेति। यवलाः परा यस्माद्यवसपरस्तस्मिन्हकारे परे मस्य यवला (वा) भवन्तीत्यर्थः॥

---

सूत्रम्

काशिका-वृत्तिः

नपरे नः ८।३।२७

नकारपरे हे परतः मकारस्य वा नकारादेशः भवति। किन् ह्नुते, किं ह्नुते। कथन् ह्नुते, कथं ह्नुते।

लघु-सिद्धान्त-कौमुदी

नपरे नः ८३, ८।३।२७

नपरे हकारे मस्य नो वा। किन् ह्नुते, किं ह्नुते॥

न्यासः

नपरे नः। , ८।३।२७

नः परो यस्मादिति बहुव्रीहिः। परग्रहणं नकारपरे यथा स्यादित्येवमर्थम्(), अन्यथा हि "ने नः" इत्युच्य माने नकार एव केवले परतो विज्ञायेत, न इति निमित्तान्तरोपादनाद्? हे इत्यस्य निवृत्तिः? नैतदस्ति; एवं हि वचनमिदमनर्थकं स्यात्()। कृते ह्नुत्त्वारे नकारे परतः "अनुस्वारस्य ययि परसवर्णः" (८।४।५८) इत्यनेन नकारः सिध्यति? सत्यम्(); विकल्पार्थमेतत्()। अत्र हि यदानेन नकारो न क्रियते, तदा वचनसामर्थ्यात्? परसवर्णो न भवतीति विकल्पः सिध्यति। तस्मात्? परग्रहण कर्त्व्यम्()--नपरे हकारे यथा स्यात्(), केवले मा भूदिति। "किन्? ह्नुते" इति। "ह्नुङ्? अपनयने"; (धा।पा।१०८२), अदादित्वाच्छपो लुक्()। इह केचिच्चोदयन्ति--न इति प्रतिषेधः कस्मान्न विज्ञायत इति? एतच्चायुक्तम्(); सविसर्गस्य पाठात्? प्रतिषेधवाचिनश्च नकारस्य विसर्गानुपपत्तेः। अथाप्यविसर्गः पठ()ते? एवमप्ययुक्ता प्रतिषेधाशङ्का; प्राप्त्यभावात्()॥

बाल-मनोरमा

नपरे नः १२९, ८।३।२७

नपरे नः। "हे" इति "वे"-ति "म" इति चानुवर्तते। नः परो यस्मादिति विग्रहः। तदाह--नपरे इति। किन्ह्नुते इति। "ह्नुङ्-अपनयने" मस्य नत्वे रूपम्। तदभावे मोऽनुस्वारः।

तत्त्व-बोधिनी

नपरे नः १०३, ८।३।२७

नपरे। अयमपि बहुव्रीहिरेव। "हे" इति त्वनुवर्तते, तदाह--नपरे हकारे इति।

---

सूत्रम्

काशिका-वृत्तिः

ङ्णोः कुक्टुक् शरि ८।३।२८

ङकारणकारयोः पदान्तयोः कुक् टुकित्येतावागमौ वा भवतः शरि परतः। प्राङ्क् शेते, प्राङ् शेते। प्राङ्क् षष्ठः, प्राङ् षष्ठः। प्राङ्क् साये, प्राङ् साये। णकारस्य वण्ट् शेते, वण् शेते। पूर्वन्तकरणं प्राङ्क् छेते इत्यत्र छन्त्वर्थम्। शश्छो ऽटि ८।४।६२ इति हि पदन्ताज् झयः इति तद् विज्ञायते। इह मा भूत्, पुरा क्रूरस्य विसृपो विरप्शिन्। प्राङ्क् सायः इत्यत्र अपि सात् पदाद्योः ८।३।११३ इति षत्वप्रतिषेधार्थं च। वण्ट् सायः इत्यत्र च न पदान्ताट् टोरनाम् ८।४।४१ ष्टुत्वप्रतिषेधार्थम्।

लघु-सिद्धान्त-कौमुदी

ङ्णोः कुक्टुक् शरि ८५, ८।३।२८

वा स्तः। (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्)। प्राङ्ख् षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः। सुगण्ठ् षष्ठः सुगण्ट् षष्ठः, सुगण् षष्ठः॥

न्यासः

ङ्णोः कुक्टुक्? शरि। , ८।३।२८

ङश्च णश्च तौ ङ्णौ, कश्च टश्च कटौ, तयोरुकारककाराभ्यां प्रत्येकमभिसम्बन्धः--कुक्ट्गिति। उकार उच्चारणार्थः, ककारो देशविध्यर्थः। "प्राङ्क्? छेते" इति। प्राङिति "क्विन्प्रत्ययस्य कुः" ८।२।६२ इत्यत्र व्युत्पादितम्()। वण्()ट् छेते" इति। वणतेर्विच्()। किमर्थं पुनः पूर्वान्तादेतौ क्रियेते? इत्याह--"पूर्वान्तकरणम्()" इत्यादि। किं पुनः कारणं पूर्वान्तत्वे च्छत्वं भवति, न पुनः परादित्वे? इत्यत आह--"शश्छोऽटि" इत्यादि। किमर्थं पुनरेतद्धि "विज्ञायते? [वलिज्ञायेत"--कांउ।पाठः] इत्यत आह--"इह" इत्यादि। यदि पदान्ताज्झय ८।२।१० इत्येवं तत्र न क्रियेत, तदा विरप्शिन्नित्यत्र च्छत्वं विज्ञायेत, एवञ्च विज्ञायमाने न भवति, न ह्यत्र पदान्ते झय्()। "विरिप्शिन्()" इति। विपूर्वाद्रपेः "लृटः सद्वा" ["लटः"--प्रांउ।पाठः] ३।३।१४ इति शत्रादेशाः, "व्यत्ययो बहुलम्()" ३।१।८५ इति स्यप्रत्ययस्य सकारस्य शकारः, यकारस्य चेकारः। "प्राङ्क्? सायः" इति। अत्र परादित्वे सति "इण्कोः" ८।३।५७, "आदेशप्रत्यययोः" ८।३।५९ इति प्राप्तस्य षत्वस्य "सात्पदाद्योः" ८।३।११४ इति प्रतिषेधो न स्यात्(); अपदादित्वात्()। "वण्ट्? सायः" इति। अत्रापि "ष्टुना ष्टुः" ८।४।४० इति प्राप्तस्य ष्टुत्वस्य "न पदान्ताट्टोरनाम" ८।४।४१ इति प्रतिषेधो न स्यात्(); अपदान्तत्वात्()। तस्मात्? प्राङ्क्छेत इत्यादौ छत्वादिसिध्यर्थ पूर्वान्तकरणम्()॥

बाल-मनोरमा

ङ्णोः कुक् टुक् शरि १३०, ८।३।२८

ङ्णोः। "हे मपरे वे"त्यतो वेत्यनुवर्तते। कुक् च टुक् चेति समाहारद्वन्द्वः। आगमाविति। एतच्च "आद्यन्तौ टकिता"विति लभ्यम्। यतासङ्ख्यपरिभाषया च ङकारस्य कुक्, णकारस्य टुक्। उभयत्र ककार इत्ष उकार उच्चारणार्थः। "प्राङ् षष्ठः सुगण् षष्ठः" इति स्थिते, यथाक्रमङ्कुकिटुकि च तयोः पूर्वावयवत्वेन पदान्तत्वाज्जश्त्वमाशङ्क्याह--कुक्टुकोरिति।

चयो द्वितीया इति। "पौष्करसादिशब्दस्य चयो द्वितीया" इत्यर्थभ्रमं वारयति--पौश्करसादिराचार्य इति। तथाच विकल्पः फलतीति भावः। प्राङ्()क् षष्ठ इति कुकि रूपम्। "चयो द्वितीया" इति पक्षे प्राङ् ख् षष्ठ इति रूपम्। नचात्र खकारस्य खरि चेति चर्त्वं खकारारम्भविधिसामथ्र्यात्। "चयो द्वितीया" इति "नादिन्याक्रोश" इति सूत्रभाष्यपठितमिदम्। "प्राङ् षष्ठ" इति कुगभावे रूपम्। एवं टुक्यपि सुगण्()टषष्ठ इत्यादि।

तत्त्व-बोधिनी

ङ्णोः कुक् टुक् शरि १०४, ८।३।२८

ङ्णोः। चयो द्वितीया इति। एतच्च नादिन्याकोशे इति सूत्रे भाष्ये स्थितम्। अतएव मनोरमायां "डः सी"ति सूत्रे "तु"डित्युच्यमाने "चयो द्वितीयाः-" इति पक्षे थकारापत्तिरुक्ता। यदि तु "ङ्णोः" इति सूत्रस्थं स्यात्तर्हि "तु"डित्येव सुवचं स्यात्। तुटोऽसिद्धत्वेन चयो द्वितीयाः-इत्यस्याऽप्रवृत्तेः। पौष्करसादेरिति। पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्। तस्यापत्यं पौष्करसादिराचार्यः। बाह्वादित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः।

---

सूत्रम्

काशिका-वृत्तिः

डः सि धुट् ८।३।२९

डकारन्तात् पदातुत्तरस्य सकारादेः पदस्य वा धुडागमो भवति। श्वलिट्त्साये, श्वलिट् साये। मधुलिट्त्साये, मधुलिट् साये। परादिकरणं न पदान्ताट् टोरनाम् ८।४।४१ इति ष्टुत्वप्रतिषेधार्थम्।

लघु-सिद्धान्त-कौमुदी

ङः सि धुट् ८६, ८।३।२९

डात्परस्य सस्य धुड्वा। षट्त्सन्तः, षट् सन्तः॥

न्यासः

ङः सि धुद्?। , ८।३।२९

"उभयनिर्देशे पञ्चमीनिर्देशो बलीयाम्()" (शाक।प।९७) इति "ङः" इति पञ्चम्या "सि" इत्यस्याः सप्तम्याः षष्ठ()आं परिकल्पितायां शकारस्यैव धुडविधीयते, इत्याह--"डकारान्तात्()" इत्यादि। यद्येवम्(), सप्तमीनिर्देशः किमर्शः? लाघवार्थः। "ङः सो धुट्()" इत्युच्यमाने माधाधिक्याट्? गौरवं स्यात्()। अथ "यस्मिन्? विधिस्तदादावल्ग्रहणे" (व्या।प।१२७) इत्येवमर्थः सप्तमीनिर्देशः कस्मान्न विज्ञायते? केवलस्य सकारस्याभावादेव तत्सिद्धेः, पद इत्यधिकाराच्छ। ()आलिटत्याय इत्यत्र धुटि कृते धकारस्य चत्र्वम्()--तकारः। प्रक्रियालाघवार्थं तु तुटि वक्तव्ये धुड्वचनमुत्तरार्थम्()--"नश्च" (८।३।३०) इत्यत्र धुडयथा स्यात्(), तुण्मा भूदिति। यदि हि स्यात्(), तर्हि किम्()? भवान्त्साय इत्यत्र "नश्छव्यप्रशान" (८।३।७) इति रुः प्रसज्येत? नैतदस्ति; अम्पर इत्यत्रानवत्र्तते, न चेहाम्परस्तकारोऽस्ति। अथथेहापि भूतपूर्वेणोकारेणाम्परः स्यात्()? एवमप्यसिद्धत्वात्? तुटो रुत्वं न भविष्यति। तस्मात्तुडेव वक्तव्यः। एवं तर्हि वैचित्र्यार्थं धुडवचनम्()। अथ किमर्थं धुट्? पराधिः क्रियते, न घ्रुगेव पूर्वान्तः क्रियेत, एवं हि "शि तुक्()" ८।४।३० इत्यत्र तुग्ग्रहणं न कत्र्तव्यं भवति, धुगेव हि तत्रानुवर्त्तिष्यते? इत्यत आह--"परादिकरणम्()" इत्यादि। यदि पूर्वान्तः क्रियेत, ()आलिट्त्साय इत्यत्र धुकः ष्टुत्वं स्यात्()। परादिकरणे तु टकारस्य पदान्तत्वं न विहितमिति "न पदान्ताट्टोरनम्()" ८।४।४१ इति प्रतिषेधः सिध्यति। तदर्थं परादिकरणम्()॥

बाल-मनोरमा

ङ सि धुट् १३१, ८।३।२९

ङः सि धुट्। "ड" इति पञ्चमी। ततश्च तस्मादित्युत्तरस्येति परिभाषया "सी"ति सप्तमी षष्ठी सम्पद्यते-डात्परस्य सस्येति। "हे मपरे वे"त्यतो वेत्यनुवर्तते। तदाह--डात्परस्येत्यादिना। "तस्मिन्निति निर्दिष्टे" इति नेह भवति, "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वा"दिति न्यायात्। धुट् चतुर्थधकारनिर्देशः। टकार इत्। उकार उच्चारणार्थः। थुडिति द्वितीयविधौ तत्सामथ्र्याच्चत्वं न स्यात्। अन्यथा तकारमेव विदध्यात्। चतुर्थविधेस्तु न तत्सामथ्र्यम्, प्रथमविधौ तस्य चयो द्वितीया इत्यापत्तौ तन्निवृत्या चरितार्थत्वात्। षट् सन्त इति। षषिति षकारस्य जश्त्वेन डः, षड्-सन्त इति स्थिते चत्र्वस्यासिद्धत्वाड्डात्परत्वात्सस्य धुट् आद्यवयवः। तस्य चत्र्वेन तकारः। "चयो द्वितीया" इति तु नेह, चत्र्वस्यासिद्धत्वात्। ततो लक्ष्यभेदाड्डस्य चत्र्वेन टः।

तत्त्व-बोधिनी

ङः सि धुट् १०५, ८।३।२९

ङः सि धुट्। "उभयनिर्देशे पञ्चमीनिर्देशो वलीयान्परत्वा"दित्यभिप्रेत्याह--सस्येति। सीति सप्तमी निर्देशस्तु लाघवार्थः। षट्सन्त इति। धुटश्चत्र्वेन तकारः। "चयो द्वितीयाः--" इति तस्य थो न, चत्र्वस्याऽसिद्धत्वात्। अतएव धुडभावे "षट्सन्त" इत्यत्र टस्य ठो न भवति। नन्वेवमपि "ङः सि धु"गिति धुग्विधीयतां डकारस्य सकारे परे धु"गिति व्याख्यानसंभवात्किमनेन धुटः परादित्वाभ्युपगमेन?। मैवम्। पूर्वान्तत्वे तु न पदान्ताट्टोरनामिति निषेधाप्रवृत्त्या धकारस्य ष्टुत्वप्रसङ्गात्। अतएव वक्ष्यमाणस्तुगिहैव न कृतः। डस्य तुकि ष्टुत्वे तस्याऽसिद्धत्वेन चयो द्वितीया इत्यस्यापि प्रसङ्गाच्च। इग धुड्विकल्पेन रूपद्वये सति टकारनकारविसर्गाणां द्वित्वविकल्पात्षोडश रूपाणि। खयः शर

इति द्वित्वे द्वातिं()रशत् (३२)। शरोऽचीति निषेधोऽत्र न प्रवर्तते। तस्य सौत्रद्वित्वमात्रविषयत्वस्योक्तत्वात्। न च चत्र्वस्यासिद्धत्वात्खयः परत्वमेव नास्तीति शङ्क्यम्। "पूर्वत्रासिद्धीयमद्वित्वे" इत्युक्तेः॥

---

सूत्रम्

काशिका-वृत्तिः

नश् च ८।३।३०

नकारान्तात् पदातुत्तरस्य सकारस्य वा धुडागमो भवति। भवान्त्साये, भवान् साये। महान्त्साये, महान् साये। धुटः चर्त्वस्य च असिद्धत्वात् नश्छव्यप्रशान् ८।३।७ इति रुत्वं न भवति।

लघु-सिद्धान्त-कौमुदी

नस्च ८७, ८।३।३०

नान्तात्परस्य सस्य धुड्वा। सन्त्सः, सन्सः॥

न्यासः

नश्च। , ८।३।३०

चकारो धुडित्यनुकर्षणार्थः। ननु च स्वरितत्वादेवानुवर्त्तिष्यते, न चोत्तरत्रानुवर्त्तिष्यते, आगमान्तरस्योपादानात्(), अस्वरितत्वाद्वा? सत्यमेतत्(); प्रतिपत्तिगौरवं तु मन्दधियां स्यात्()। अथ भवान्त्साय इत्यत्र धुटश्चात्वे कृते "नश्छव्यप्रशान्()" (८।३।७) इति रुः कस्मान्न भवति? इत्याह--"धुटश्चत्र्वस्य चासिद्धत्वात्()" इत्यादि। यदि केवलस्य चत्वेस्य धुटो वासिद्धत्वं स्यात्(), तथापि रुत्वप्राप्तेरसम्भव एव, किं पुनरुभयोरसिद्धत्वे सतीति रुत्वप्राप्तेरत्यन्तासभ्भवं दर्शयितुमुभयोग्ग्रहणम्()। क्वचित्? "घुटश्चत्र्वस्यासिद्धत्वात्()" इति पाठः। तत्राप्ययमर्थो वेदितव्यः--विनापि हि चकारेण तदर्थो गम्यते, यताहरहर्नयमानो वैवस्थतो गाम()आं पुरुषं पशुमित्यादौ वाक्ये। अथ वा--अस्मि पाठे धुटो यच्चात्र्वं तस्यासिद्धत्वादित्यर्थः। ननु धुडप्यसिद्ध एव, तत्? कुतश्चत्र्वस्यासिद्धावमुच्यते? पुनर्धुटोऽपि? नैतत्(); सत्यपि धुटि विना चर्त्वेन रुत्वप्रप्तिरेव नास्ति। ततो यस्मिन्? सति रुत्वमादाङक्यते, तस्यासिद्धत्वं युक्तनुक्तमिति भावः। कथं पुनः सत्यपि चत्र्वस्यासिद्धत्वे रुत्वमाक्षङ्()कितम्(), यावताऽम्परे छवि तदुच्यते, न चेहाम्परत्वमस्ति? भूतपूर्वेणोकारेणाम्परत्वमस्तीति युगतमाशङकितम्()। ननु च साम्प्रतिकाभावे भूतपूर्वगतिर्भवति, अस्ति साम्प्रतिकत्वमन्यत्राम्परत्वं रुत्वस्य? सत्यमेतत्(); अध्यारोप्यैवमुक्तम्(); एवं मन्यते--भवतु नाम, भूतपूर्वेणोकारेणाम्परत्वं प्रसज्यत इत्याह--"धुटश्मत्र्वस्यासिद्धत्वात्()" इति॥

बाल-मनोरमा

नश्च १३२, ८।३।३०

नश्च। "सि धुट्" इति, "वे"ति चानुवर्तते। न इति पञ्चमी। तस्मादित्युत्तरस्येति परिभाषया सीति षष्ठी सम्पद्यते। तदाह-नकारान्तात्परस्येति। सन्त्स इति। धुटि धस्य चत्र्वम्।

---

सूत्रम्

काशिका-वृत्तिः

शि तुक् ८।३।३१

नकारस्य पदन्तस्य शकारे परतो वा तुगागमो भवति। भवाञ्च्छेते। पूर्वान्तकरणं छत्वार्थम्। यद्येवं कुर्वञ्च्छेते इत्यत्र नकारस्य अपदान्तत्वात् णत्वं प्राप्नोति? तत्र समधिमाहुः, स्तोः श्चुना श्चुः ८।४।३९ इत्यत्र योगविभागः क्रियते, णत्वप्रतिषेधार्थं स्तोः श्चुना णकारो न भवति इति, ततः श्चुः इति।

लघु-सिद्धान्त-कौमुदी

शि तुक् ८८, ८।३।३१

पदान्तस्य नस्य शे परे तुग्वा। सञ्छम्भुः, सञ्च्छम्भुः, सञ्च्शम्भुः, सञ्शम्भुः॥

न्यासः

शि तुक्?। , ८।३।३१

"शि" इति सप्तम्यकृतार्था "नः" इति पूर्वसूत्रे कृतार्थायाः पञ्चम्याः षष्ठीत्वं प्रकल्पयति; "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति वचनात्(), तेन नकर एवागमी विज्ञायत इत्याह--"नकारान्तस्य" इत्यादि। अथ किमर्थं तुक्? पूर्वान्तः क्रियते, न प्रकृतो धुडेव परादिः क्रियेत; तथापि चर्त्वेन सिध्यति? इत्यत आह--"पूर्वान्तकरणम्()" इत्यादि। पूर्वान्तः=पूर्वस्यान्तः, स पुनः प्रकरणात्? तुग्विज्ञायते, तल्प करणम्()=विधानम्(), छत्वं यथा स्यादित्येवमर्थम्()। यदि प्रकृतो धुडेव विधीयेत, "शश्छोऽटि" ८।४।६२ इति च्छत्वं न स्यात्()। तत्र च कारणं पूर्वमेवोक्तम्()। "यद्येवम्()" इत्यादि। यदि पूर्वान्तस्तुक्? क्रियते, कुर्वञ्चेते--इत्यत्र तुका पदान्तताया रहितत्वात्? नकारस्य "अट्कुप्वाङ्()" ८।४।२ इत्यनेन णत्वं प्राप्नोति, परादित्वे त्वेष दोषो न भवति; "पदान्तस्य" ८।४।३६ इति णत्वपरतिषेधादिति भावः। "तत्र" इत्यादिना "न भाभूपूकमिगमि" ८।४।३३ इत्यादेः सूत्रान्नेति वत्र्तमाने "स्तोः श्चुना श्चः" ८।४।३९ इति योगविभागः क्रियते, तेन चवर्गयोगे कुर्वञ्चेते--इत्यत्र णत्वं न भवत्येव। ननु च क्रियमाणेऽपि योगदिभागे णत्वं प्राप्नोत्येव, यस्मादिह चवर्गयोगो नास्त्येव, तुकः श्चुत्वस्यासिद्धत्वात्()? योगविभागकरणसामथ्र्यात्? श्चुत्वस्यासिद्धत्वेऽपि णत्वप्रतिषेधो भविष्यतीत्यदोषः॥

बाल-मनोरमा

शि तुक् १३३, ८।३।३१

शि तुक्। पूर्वसूत्रात् "न" इति पञ्चम्यन्तमनुवृत्तमिह षष्ठ()न्तमाश्रीयते, शब्दाधिकाराश्रयणात्। पदस्ये"त्यधिकृतम्। अवयवषष्ठ()न्तमाश्रीयते। "हे मपरे वे"त्यतो "वे"त्यनुवृत्तं। तदाह-पदान्तस्येति। "नान्तस्य पदस्ये"त्युचितम्। उकार उच्चारणार्थः। "सन् शम्भु"रिति स्थिते नकारस्यान्तावयवस्तुक्। ननु तुग्ग्रहणं व्यर्थं, ङः सि धुडित्यतो धुडेवानुवर्त्त्य नकारात्परस्य शस्य विधीयतां। खरि चेति चर्त्वे सन्()त्?शम्भुरित्यस्य सिद्धेरित्यत आह--शश्छोऽटीति छत्वविकल्प इति। "शकारस्ये"ति शेषः। धुटो विधौ तु तस्य परादित्वात्पदान्तत्वाऽभावाच्छत्वं न स्यात्, छत्वविधेः पदादिकारस्थत्वेन पदान्ताज्झयः परस्यैव शश्य तत्प्रवृत्तेर्भाष्ये सिद्धान्तितत्वात्। अन्यथा विसृपो विरफ्()शिन्नित्यांदावपि शस्य छत्वापत्तेः। पक्ष #इति। कदाचिज्झरो झरीति तुकस्तकारस्य श्चुत्वमापन्नस्य लोप इत्यर्थः। सञ्छम्भुरिति। तकारस्य चुत्वमापन्नस्य लोपे सति नकारस्य श्चुत्वेन ञकारे रूपम्। सञ्च्छम्भुरिति। चुत्वमापन्नस्य तकारस्च लोपाभावे नकारस्य च श्चुत्वे ञकारे रूपम्। तुको जश्त्वं तु न, जश्त्वं प्रति तस्यासिद्धत्वात्। अत एव श्चुत्वोत्तरमपि जश्त्वं न। सञ्च्शम्भुरिति। शस्य छत्वाभावे तकारनकारयोश्चुत्वे च रूपम्।

सञ्शम्भुरिति। तुकोऽभावे नकारस्य चुत्वे रूपम्। तदिदं रूपचतुष्टयमुक्तक्रमं श्लोकेन संगृह्णाति--ञछाविति। तुक्()छत्वचलोपानां विकल्पनात्-ञछौ ञचछा ञचशा ञशाविति रूपाणां चतुष्टयमित्यन्वयः।

ङमो ह्यस्वात्। "ङम्" प्रत्याहारः। "ङम" इति पञ्चम्यन्तम्। तद्विशेषणत्वात् पदस्येत्यधिकृतं पञ्चम्यन्ततया विपरिणम्यते। "ङम" इति च "ह्यस्वा"दिति विशेषणसम्बन्धमनुभूय पदविशेषणत्वं भजत्तदन्तपरम्। "ङम" इति पञ्चमी बलादचीति सप्तमी षष्ठ()र्थे। तदाह--ह्यस्वात्पर इति। ङमुडागम इति। टकार इत्। उकार उच्चारणार्थः। संज्ञायां कृतं टित्त्वमानर्थक्यात्तदङ्गन्यायात्संज्ञिभिः सम्बध्यते। ततश्च ङुट् णुट् नुडिति त्रय आगमाः फलिताः। टित्त्वादच आद्यवयवा यथासङ्ख्यं प्रवर्तन्ते। "हे मपरे वे"ति वाग्रहणानुवृत्तिशङ्काव्युदासार्थं नित्यग्रहणम्। प्रत्यङ्()ङात्मेति। प्रत्यङ्-आत्मा इति स्थिते आकारात्प्राक् ङुट्। सुगण्णीश इति। "गण संख्याने" चुरादिः। ण्यन्ताद्विचि णिलोपः। नतु क्विप्। "अनुनासिकस्य क्वी"ति दीर्घप्रसङ्गात्। ङमुटि कर्तव्ये णिलोपस्तु न स्थानिवत्, "पूर्वत्रासिद्धे न स्थानिव"दित्युक्तेः। सुगण्-ईश इति स्थिते ईकारात्प्राक् णुट्। सन्नच्युत इति। सन्-अच्युत इति स्थिते अकारात्प्राक् नुट्। नच परमदण्डिनावित्यत्र परमदण्डिन्-औ इति स्थिते प्रत्ययलक्षणेनाऽन्तर्वतिर्विभक्त्या पदत्वान्नुट् स्यादिति वाच्यम्, "उत्तरपदत्वे" चापदादिविधा"विति प्रत्ययलक्षणप्रतिषेधात्। वस्तुतस्तु उत्तरपदत्वे चेति प्रत्ययलक्षणप्रतिषेधो यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवर्तते। अन्यथा "पदव्यवायेऽपी"ति निषेधो "माषकुम्भवानपेने"त्यत्र न स्यात्। अतः परमदण्डिनौ इत्यत्र ङमुड्वारणाय "उञि च वदे" इत्यतः पदे इत्यनुवत्र्याऽजादेः पदस्य ङमुडिति व्याख्येयमिति शब्देन्दुशेखरे प्रपञ्चितम्।

तत्त्व-बोधिनी

शि तुक् १०६, ८।३।३१

शि तुक्। "शी"ति सप्तमी पूर्वत्र कृतार्थाया "न" इति पञ्चम्याः षष्ठीं कल्पयतीत्याह--नस्येति। चलोप इति। "झरो झरी"त्यत्र सवर्णग्रहणसामर्थ्याद्यथासङ्ख्यं न प्रवर्तत इति भावः। सञ्छम्भुरिति। इह श्चुत्वतुकोरसिद्धत्वमाश्रित्य "नश्छवी"ति रुत्वं नाशङ्क्यं, छत्वस्याऽसिद्धत्वात्। चतुष्टयमिति। अत्र तुकः श्चुत्वे "चयो द्वितीयाः" इति पक्षे चस्य छत्वे शस्यापि छत्वविकल्पात्सञ्छ्()छम्भुः शञ्छशम्भुरिति रूपद्वयवृद्धिर्वोध्या। न च शस्य छत्वपक्षे शर्परत्वाऽभावात् "चयो द्वितीयाः-" इति पक्षे चस्य छो निति शङ्क्यम्, "शश्छोऽटी"ति छत्वस्याऽसिद्धत्वादित्याहुः।

"ञछौ ञचछा ञचशा ञशाबिति चतुष्टयम्।

रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्॥"

---

सूत्रम्

काशिका-वृत्तिः

ङमो ह्रस्वादचि ङमुण् नित्यम् ८।३।३२

ह्रस्वात् परः यो ङम् तदन्तात् पदात्तुत्तरस्य अचः ङमुडागमो भवति नित्यम्। ङणनेभ्यो यथासङ्ख्यं ङणना भवन्ति। ङकारान्तात् ङुट् प्रत्यङ्ङास्ते। णकारान्तात् णुट् वण्णास्ते। वण्णवोचत्। नकारान्तात् नुट् कुर्वन्नास्ते। कुर्वन्नवोचत्। कृषन्नास्ते। कृषन्नवोचत्। ङमः इति किम्? त्वमास्से। ह्रस्वातिति किम्? प्राङास्ते। भवानास्ते। अचि इति किम्? प्रत्यङ् करोति। इह परमदण्डिनौ, परमदण्दिना इति उत्तरपदत्वे चापदादिविधौ इति प्रत्ययलक्षणप्रतिषेधादुत्तरपदस्य पदत्वं न अस्ति इति ङमुट् न भवति। अथ वा, उञि च पदे ८।३।२१ इत्यतः सप्तम्यन्तं पदे इत्यनुवर्वते। तेन अजादौ पदे ङमुट् भवति।

लघु-सिद्धान्त-कौमुदी

ङमो ह्रस्वादचि ङमुण् नित्यम् ८९, ८।३।३२

ह्रस्वात्परे यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुट्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः॥
न्यासः
ङमो ह्रस्वादचि ङमुण्नित्यम्?। , ८।३।३२

"इमः" इति, "ङमुट" इति उभयमपि प्रत्याहारग्रहणम्()। उडिति प्रत्येकं ङकारादिभिः सम्बध्यते। "ह्यस्वात्()" इत्येतन्ङमो विशेषणम्(), ह्यस्वविशेषितोऽपि ङम्? पदस्य विशेषणम्(), विशेषणेन च तदन्तविधिर्भवतीति तदन्तात्? पदादिति विज्ञायते। यद्यपि पदस्येति षष्ठ()न्तं प्रकृतम्(), तथापि तदिहार्थात्? पञ्चम्यन्ततया विपरिणम्यते--"उभयनिर्देशे पञ्चमोनिर्देशो बलीयान्()" (शाक।प।९७) इति। "ङमः" इति पञ्चम्या "अचि" इति सप्तम्याः षष्ठ()आं परिकल्पितायामच एवागमित्वं प्रतिपद्यते। सप्तमीनिर्देशस्तु लाघवार्थः; उत्तरार्थश्चेत्येतत्सर्वं चेतसि कृत्वाऽह--"ह्रस्वात्? परो यो ङम्(), तदन्तात्()" इति। संख्यातानुदेशो हीह वेदितव्यः; आगमिनामागमानाञ्च समानत्वात्()। "प्रत्यङ्ङास्ते" इति। "आस उपवेशने" (धा।पा।१०२१), अदादित्वाच्छपो लुक्()। "कृवन्नास्ते" इति। "कृष विलेखने" (धा।पा।९९०) लौदादिकः, शत्()। अथ परमदण्डिनोत्तमदण्डिनेति "सन्महत्()" (२।१।६१) इत्यादिना समासे कृते ङमन्तात्? तृतीयैकवचने तस्य नुट्? कस्मान्न भवति; अत्र हि "यचि भम्()" (१।४।१८) इति भत्वेऽपि समासस्य ह्यस्वादिकारात्? परो ङम्? नकारः, तदन्ताद्दण्डिनेत्यस्माद्या विभक्तिस्तस्यां लुप्तायामपि प्रत्ययलक्षणेन (१।१।६२) लब्धपदसंज्ञत्वात्? तृतीयैकवचनमच्परं भवतीत्यस्ति ङमुट्प्राप्तिः? इत्याह--"परमदण्डिना" त्यादि। उत्तरपदत्वे उत्तरपदव्यपदेशे कत्र्तव्ये सत्यपदादिविधौ पदाविधिधेरन्यत्र प्रत्ययलक्षणं न भवतीति वाक्यार्थः। असति प्रत्ययलक्षणे दण्डिनेत्यस्य पदसंज्ञा न भवति। ततश्च पदान्तादुत्तरस्योच्यमानो ङमुडागमो न भवति। एवं तावत्? कात्यायनमतेन परीहार उक्तः। यस्तु सूत्रकारमतेन, तं दर्शयितुमाह--"अथ वा" इत्यादि। पद इत्यनुवृत्ती सत्यामचा पदे विशेष्यमाणे "यस्मिन्? विधिस्तदादावल्ग्रहणे" (वा।१४) इत्यनेनाजादौ पदे कार्येण भवितव्यम्(), न चात्राजादि पदमस्ति, तत्कुतो नुट्प्रसङ्गः। अथ नित्यग्रहणं किमर्थम्(), यावतोत्तरसूत्रे (८।३।३३) वाग्रहणादेव नित्यो विधिर्विज्ञास्यते? सत्यमेतत्(); पूर्वसूत्रेऽपि ८।३।३१ नित्यत्वं विज्ञायेत। तस्मात्? पूर्वसूत्रेषु "हे मपरे वा" ८।३।२६ इत्यतो "वा" इत्नुवत्र्तत इति ज्ञापनार्थं नित्यग्रहणम्()॥
तत्त्व-बोधिनी
ङमो ह्यस्वादचि ङमुण्नित्यम् १०७, ८।३।३२

ङमो ह्यस्वात्। ङम् प्रत्याहारः, संज्ञायां च कृतं टित्त्वं सामथ्र्यात्संज्ञिभिः संबध्यते। तेन यथासङ्ख्यं ङुट्-णुट्-नुटः प्रवर्तन्ते। नित्यग्रहणं विस्पष्टार्थं, "हे मपरे" इति "मय उञो वे"ति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्व लाभात्। नन्विह नित्यग्रहणाऽभावे "हे मपरे वे"ति वाग्रहणमुत्तरसूत्रेषु पञ्चस्वप्यनुवर्तते वा न वेति शङ्का स्यादिति चेत्सत्यम्। अतएव "विस्पष्टार्थ"मित्युक्तं न तु व्यर्थमिति। तस्मात्परस्याऽच इति। ननु "ङम" इत्यस्य षष्ठ()न्ततामाश्रित्याऽचि परे पूर्वस्यैव विधीयतां को दोष इति चेन्मैवम्, तथाहि सति ङमन्तस्य पदस्य पूर्वावयवः स्यादित्यनिष्टं प्रसज्येत। "पदस्य यो ङम् तस्ये"ति वैयधिकरण्येन व्याख्यायामपि "कुर्वन्नास्ते" इत्यत्र णत्वं प्रसज्येत, "पदान्तस्ये"ति निषेधस्याऽप्रवृत्तेः। यद्यपि बहिरङ्गपरिभाषया ङमुड्विधेरसिद्धत्वादिष्टं सिध्यति, तथापि यथोद्देशपक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेः प्रसज्यत एव णत्वमिति यथोक्तव्याख्यानमेव सांध्विति दिक्। सुगण्णीश इति। ण्यल्लोपौ न स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात्। ननु "परमदण्डिना"वित्यादावन्तर्वर्तिविभक्तया पदत्वान्नुट् स्यादिति चेन्न; "उत्तरपदत्वे चापदादिविधौ" इति प्रत्ययलक्षणप्रतिषेधात्। अतएव परमवाचौ" "परमगौदुहौ" "परमलिहा"वित्यादौ

कुत्वघत्वनत्वादीनि न। प्राचा तु "उञि च पदे" इत्यतः "पदे" इत्यनुवर्त्य "अजादेः पदस्ये"ति व्याख्यानान्ङमुण्नेत्युक्तं, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाऽप्यनुसर्तव्यत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

मय उञो वो वा ८।३।३३

मय उत्तरस्य उञो वा वकारादेशो भवति अचि परतः। शंवस्तु वेदिः, शमु अस्तु वेदिः। तद्वस्य परेतः, तदु अस्य परेतः। किंवावपनम्, किमु आवपनम्। प्रगृह्यत्वातुञः प्रकृतिभावे प्राप्ते वकारो विधीयते। तस्य असिद्धत्वाद् हलि इति मो ऽनुस्वारः ८।३।२३ न भवति।

लघु-सिद्धान्त-कौमुदी

मय उञो वो वा ५८, ८।३।३३

मयः परस्य उञो वो वाचि। किम्वुक्तम्, किमु उक्तम्॥

न्यासः

मय उञो वो वा। , ८।३।३३

"मयः" इति प्रत्याहारस्य ग्रहणम्(), न तु अय वय "मय" इति धातोः। कुत एतत्()? व्याप्तिन्यायात्()। किमर्थमिदमुच्यते, यावता "इको यणचि" ६।१।७४ इत्युञो वकारः सिद्ध एव, विकल्पार्थमिति चेत्()? स्यादेतत्()--यदि "इको यणचि" इति नित्यं स्यात्(), तस्माद्विकल्पार्थं वचनमिति? एतच्च न; "पदान्ताद्वा" ६।१।७३ इत्यतो वेत्यनुवर्त्तिष्यते, सा च व्यवस्थितविभाषा विज्ञायते। तेनोञो विकल्पेन यन्मवतीत्याह--"प्रगृह्रत्वात्()" इत्यादि। प्रगृह्रत्वं पुनः "उञः" १।१।१७ इति प्रगृह्रसंज्ञाविधानात्()। तस्मिन्? सति "प्लुतप्रगृह्र अचि" ६।१।१२१ इति प्रकृतिभावः प्राप्नोति, तस्मिन्? प्राप्ते वकारो विधीयते। एवमपि "इको यणचि" इत्यस्यानन्तरमुञो यण्? वकारो विधेयः() एवं हि व इति न कत्र्तव्यं भवति; यणः प्रकृतत्वात्()। वेति वचनं न कत्र्तव्यं भवति; "पदान्ताद्वा" (६।१।७६) इत्यतो वाग्रहणं मण्डूकप्लुत्याऽनुवत्र्तते? इत्याह--"असिद्धत्वात्()" इत्यादि। तत्र ह्रुच्यमाने वकारस्य [नास्ति--कांउ।पाठे] सिद्धत्वाद्धलि विधीयनानोऽनुस्वारः स्यात्(), न चेष्यते, तस्मादिहैव क्रियते। इह क्रिममाणो मोऽनुस्वारो न भवति, वत्वस्यासिद्धत्वात्()॥

बाल-मनोरमा

मय उञो वो वा १०९, ८।३।३३

मय उञो वो वा। "मय" इति पञ्चमी, "उञ" इति षष्ठी। "ङमो ह्रस्वादचि" इत्यतोऽचीत्युवर्तते, तदाह--मयः परस्येति। किम्वुक्तमिति। "किमु उक्त"मिति स्थिते मकारोत्तरोकारस्य उञो "निपात एकाच्" इति नित्यं प्रगृह्रत्वात्प्रकृतिभावाद्यणभावे प्राप्ते वत्ववचनमिदम्। ननु तर्हीको यणचीत्यनन्तरमेव "मय उञो वे"ति पठितव्यं, वग्रहणाऽभावेन लाघवात्। त्रिपाद्यां पाठे वग्रहणस्यापि कर्तव्यत्वेन गोरवादित्यत आह--वत्वस्येति। यदि षष्ठस्य प्रथमे पादे इको यणचीत्यत्रैव मय उञो यणादेशविकल्पो विधीयेत,तर्हि किम्वुक्तमित्यत्र "मोऽनुस्वार" इति मकारस्य वकारे परेऽनुस्वारः स्यात्। त्रिपाद्यां वत्वविधौ तु तस्याऽसिद्धत्वान्नानुस्वारः। त्रिपाद्यामनुस्वारविध्यपेक्षया वत्वविधेः परत्वादिति भावः।

तत्त्व-बोधिनी

मय उञो वो वा ८९, ८।३।३३

"प्रगृह्य"मित्यनुवर्तनादाह--प्रगृह्यश्चेति। ननु दीर्घोच्चारणसामर्थ्यादेव प्रकृतिभावासिद्धौ किमनेन प्रगृह्यत्वेनेति चेदत्राहुः- प्रगृह्याप्रगृह्ययोर्द्वयोरप्युञोरादेशापत्तौ प्रगृह्यादेशे प्रकृतिभावादिष्टसिद्धावपि अप्रगृह्यादेशस्याऽनुनासिको वकारः स्यात्तद्वारणाय प्रगृह्यत्वाश्रयणमिति। आदेशस्यास्य स्थानिवत्त्वेनोञ्त्वादुञ इति प्रगृह्यत्वविकल्पे प्राप्ते नित्यार्थं तदाश्रयणमित्यन्ये। यदि तु "प्रगृह्य"मित्यस्य स्थानिविशेषणत्वं स्वीकृत्य "प्रगृह्यस्योञः ऊँ इत्यमादेशः" इति व्याख्यायते, तदा दीर्घानुनासिकोक्तिवत्प्रगृह्यश्चेत्युक्तिरपि स्वरूपकथनमेवेति बोध्यम्। ऊँ इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्ततश्च "विति" "ऊँ अत् " एते द्वे रूपे स्याताम्, तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सिद्धे त्रीणि रूपाणि सिध्यन्तीति कैयटस्तदाह--अयमादेषो वा स्यादिति। व(त्व)स्यासिद्धत्वादिति। अत एवेदं त्रिपाद्यां विधीयते। प्रकृतिभावमात्रबाधनार्थत्वे हि "इको य"णित्यनन्तरं "मय उञो वे"त्येवावक्ष्यत्, यणं चाऽन्ववर्तयिष्यत्।

---

सूत्रम्

काशिका-वृत्तिः

विसर्जनीयस्य सः ८।३।३४

खरि इत्यनुवर्तते। विसर्जनीयस्य सकारः आदेशः भवति खरि परतः। वृक्षश्छादयति। प्लक्षश्छादयति। वृक्षस्ठकारः। प्लक्षष्ठकारः। वृक्षस्थकारः। प्लक्षस्थकारः। वृक्षस्चिनोति। प्लक्षश्चिनोति। वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षस्तरति। प्लक्षस्तरति।

लघु-सिद्धान्त-कौमुदी

विसर्जनीयस्य सः ९६, ८।३।३४

खरि। चक्रिंस्त्रायस्व, चक्रिंस्त्रायस्व। अप्रशान् किम्? प्रशान्तनोति। पदस्येति किम्? हन्ति॥

लघु-सिद्धान्त-कौमुदी

विसर्जनीयस्य सः १०३, ८।३।३४

खरि। विष्णुस्त्राता॥

न्यासः

विसर्जनीयस्य सः। , ८।३।३४

"खरोत्यनुवत्र्तते" इति। खरवसानयोर्विसर्जनीयः" ८।३।१५ इत्यतः अनुवृत्तिश्च मण्डूकपलतिन्यायेन, स्वसम्बन्धानुवृत्त्या वा वेदितव्यः; अन्यथा पूर्वसूत्रेऽपि ८।३।३३ खरि कार्यं विज्ञायेत॥

बाल-मनोरमा

विसर्जनीयस्य सः। १३७, ८।३।३४

विसर्जनीयस्य सः। "खरवसानयो"रित्यतो मण्डूकप्लुत्या खरीत्यनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञानात्। केचित्तु विसर्गश्रवणात् खरीत्यार्थिकम्, अवसानस्य तु न संबन्धः, व्याख्यानादित्याहुः। तदाह--खरीति। "विसर्जनीयस्य स" इति सिद्धे "संपुंकाना"मिति पुनर्विधानं व्यर्थमित्यत आह--एतदपवादेनेति। पुनर्विधानं "वा शरी"ति

पाक्षिकविसर्गबाधनार्थमिति भावः।

संपुंकानामिति। सम् पुम्-कान्-एतेषां विसर्गस्य सकारो वक्तव्य इत्यर्थः। "अनेन वार्तिकेनात्र विसर्गस्य नित्यमेव सत्व"मिति शेषः।

सँस्स्कर्तेति। अनुनासिकपक्षे रूपम्। संस्स्कर्तेति। अनुस्वारपक्षे रूपम्। उभयत्रापि द्विसकारत्वमेव। समो वेति। समो मस्य सुटि लोपमेके आचार्या इच्छन्तीत्यर्थः। एकशब्दोऽन्यपर्यायः। "एके मुख्यान्यकेवलाः" इत्यमरः। लोपपक्षेप्यनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयमित्याह--लोपस्यापीति। "अत्रानुनासिकः पूर्वस्य तु वे"त्यत्र रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य लोपस्यापि, अन्यथा रुप्रकरण इत्यर्थस्य "अत्रे"त्यस्य वैयथ्र्यात्। एवमनुनासिकात्परोऽस्वार इत्यत्र रोः पूर्वस्मादित्यपि। ततस्च समो मलोपस्यापि रुप्रकरणस्थतया लोपात्पूर्ववर्तिनोऽकारस्य कदाचिदनुनासिकः। तदभावपक्षेऽकारात्परोऽनुस्वारागम इत्येवमनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयमित्यर्थः। द्विसकारं तूक्तमेवेति। "रुत्वपक्षे" इति शेषः। ननु लोपपक्षे एवाऽनचि चेति सुटः सकारस्य द्वित्वेन द्विसकाररूपद्वयस्य सिद्धत्वात्समः सुटीति रुत्वविधानं व्यर्थमित्यत आह--तत्रेति। तत्र= द्विसकाररूपयोर्मध्ये, रुत्वे सति तत्स्थानिकसकारस्याऽनचि चेति द्वित्वपक्षे त्रिसकारमपि रूपद्वयमित्यर्थः। एतदर्थमेव रुत्वविधानमिति भावः। स्कोरिति लोपस्तु न, र#उत्वस्यासिद्धत्वात्। नच लोपपक्ष एव सुटः सकारस्याऽनचि चेति द्वित्वे प्रथमसकारस्य तेनैव सूत्रेण पुनर्द्वित्वे त्रिसकारमपि रूपद्वयं सिद्धमिति समो रुत्वविधिव्र्यर्थ एवेति वाच्यं, "लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति"रिति न्यायात्। ननु वर्णसमाम्नायेऽनुस्वारस्य पाठाऽभावादनच्त्वात्ततः। परस्य सकारस्य कथमनुस्वारपक्षे द्वित्वमित्यत आह-अनुस्वारविसर्गेति। एतच्च हयवरट्()सूत्रे भाष्ये स्थितम्। अकारोपरीति। इकाराद्युपरि पाठे "पयःसु" इत्यादौ इणः परस्य विहितमादेशप्रत्यययोरिति षत्वं स्यादिति भावः। कश्चित्तु "इणः ष" इति षत्वं स्यादिति वदन् वभ्राम, तत्र विसर्गस्यैव षत्वविधेः। एवं चाऽनुनासिकपक्षे एकसकारं द्विसकारं त्रिसकारमिति त्रीणि रूपाणि। एवमनुस्वारपक्षेऽपि त्रीणि रूपाणीति स्थितम्। अनुनासिकवतामिति। अनुनासिकपक्षे एकद्वित्रिसकाराणां कद्वित्वे त्रीणि, तदभावे त्रीणीति षडित्यर्थः। ननु ककारस्याऽचः परत्वाऽभावात्कथमनचि चेति द्वित्वमित्यत आह--शरः खय इतीति। शरः परस्य खयोद्वे वा स्त इति वार्तिकार्थः। एवं चाऽनुनासिकपक्षे द्विककाराणि त्रीणि रूपाणि, एकककाराणि त्रीणिति षड()पाणि स्थितानि। अनुस्वारपक्षे तु द्वादश रूपाणीत्याह-अनुस्वारवतामिति। अनुस्वारस्यापीत्यपिना ककारसंग्रहः। अनुस्वारपक्षे एकद्वित्रिसकाराणां रूपाणामनुस्वारस्य शर्षु पाठस्योपशङ्ख्यातत्वेन शत्वाद्द्वित्वविल्पे सति द्व्यनुस्वाराणि त्रीणि(३), एकानुस्वाराणि त्रीणि(३) इति षट्(६)। अथ षण्णामप्येषां "शरः खय" इति ककारस्य द्वित्वविकल्पे सति द्विककाराणि षट्(६) एकककाराणि षट्-इत्यनुस्वारपक्षे द्वादश(१२) इत्यर्थः। एवं च अनुनासिकपक्षे षट्(६) अनुस्वारपक्षे द्वादश(१२) इत्यष्टादश(१८) रूपाणि। एषामिति। उक्तानामष्टादशानां रूपाणां तकारस्याऽचो रहाभ्यामिति द्वित्वविकल्पे सति प्रथमस्य तकारस्य "यणो मय" इति पुनर्द्वित्वे एकैकस्य एकतं द्वितं त्रितमिति सङ्कलनया-एकतान्यष्टादय(१८), द्वितान्यष्टादश(१८), त्रितान्यष्टादश(१८) इति सङ्कलनया चतुरधिकपञ्चाशद्रूपाणि (५४) सम्पन्नानीत्यर्थः।

अणोऽनुनासिकत्व इति। अणोऽप्रगृह्रस्यानुनानासिक इति तकारादाकारस्याऽनुनासिकत्वविकल्पे सत्यानुनासिक्ये चतुष्पञ्चाशत् (५४)। तदभावे चतुष्पञ्चाशत् (५४) इति सङ्कलनया अष्टाधिकं शतं(१०८) रूपाणि सम्पन्ननीत्यर्थः।

तत्त्व-बोधिनी

विसर्जनीयस्य सः १११, ८।३।३४

विसर्जनीयस्य। खरीति। एतच्च"खरवसानयोः" इति सूत्रान्मण्डूकप्लुत्याऽनुवर्तते।

संस्स्कर्तेति। "संपरिभ्या"मिति करोतेः सुट्। नन्वनुस्वारस्याऽनच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यनुस्वारपक्षे त्रिसकारकं रूपं कथं स्यादित्याशङ्क्याह-अनुस्वारविसर्गेत्यादि। अकारोपरीति। यदि त्विकारोपरि पठ()एरंस्तर्हि "पयःसु" "यशःसु" इत्यादौ "इणः परस्ये"ति षत्वं स्यादिति भावः। अच्त्वादिति। न चैवं "हरिः कर्ता" "हरिंस्मरेत्" "रामः पातीत्यादौ यणादिप्रसङ्गः, त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। अनुस्वारस्यापि द्वित्वे इति। अपिशब्दात्ककारस्य। वचनान्तरेणेति। "अचो रहाभ्या"मिति कृतेऽपि "यणो मयः" इति भवत्येवेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

शर्परे विसर्जनीयः ८।३।३५

शर्परे खरि परतो विसर्जनीयस्य विसर्जनीयादेशो भवति। शशः क्षुरम्। पुरुषः क्षुरम्। अद्भिः प्सातम्। वासः क्षौमम्। पुरुषः त्सरुः। घनाघनः क्षोभणश्चर्षणीनाम्। न इति वक्तव्ये विसर्जनीयस्य विसर्जनीयादेशविधानं विकारनिवृत्त्यर्थम्, तेन जिह्वमूलीयोपध्मनीयौ न भवतः।

न्यासः

शर्परे विसर्जनीयः। , ८।३।३५

शर्? परो यस्मादिति वहुव्रीहिः। अथ परग्रहणं किमर्थम्(), न शरीत्येवोच्येत() अशक्यमेवं वक्तुम्(), एवं ह्युच्यमाने शर एव केवलं निमित्तभावो विज्ञायेत, न खरीत्यनुवृत्तेः "वा शरि" ८।३।३६ इति विधानाच्च। विपर्ययस्तर्हि विज्ञार्येत--शरीति, तथा च नित्यः स्फोटः, पुरुषः स्थूल इत्यादादेव स्यात्(), वासः क्षीममित्यादौ तु न स्यात्()? तस्माद्विपर्ययो मा विज्ञायीत्येवमर्थं परग्रहणम्()। अथ किमर्थं विसर्जनीय इत्युच्यते, नेत्येवोच्येत, सकारस हि प्रतिषेधे कृते विसर्जनीयः स्वेनैव रूपेणावस्थास्यते? इत्याह--"विमर्जनीयस्य" इत्यादि। तस्य विसर्जनीयसय विकारो जिह्वामूलीयादिः, तन्निवृत्यर्थ विसर्जनीयग्रहणम्(); अन्यथा यदि नेत्येवोच्येत, ततः "अनन्तरस्य विधिर्वा भवति प्रतिषेदो वा" (व्या।प।२९) इति सकारस्यैव विज्ञायेत। ततश्च जिह्वामूलीयादिर्विसर्जनीयस्य विकारः स्यादेव। विसर्जनीयग्रहणे तु तत्सामथ्र्यादेव न भवति॥

तत्त्व-बोधिनी

शर्परे विसर्जनीयः १२२, ८।३।३५

शर्परे विसर्जनीयः। "शर्परे" इति बहुव्रीहिः। अनुवर्तमानश्च खरन्यपदार्थः। सत्वादेरयमपवादः। यदि तु "शर्परे ने"त्यवोच्येत तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः क पौ स्याताम् "वासः क्षौममद्भिः प्सात"-मित्यादौ। विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह -न त्वन्यदिति। तदेव स्फुटयति-इहेति।

---

सूत्रम्

काशिका-वृत्तिः

वा शरि ८।३।३६

विसर्जनीयस्य विसर्जनीयादेशो वा भवति शरि परे। वृक्षः शेते, वृक्षश्शेते। प्लक्षः शेते, प्लक्षश्शेते। वृक्षः षण्डे, वृक्षष्षण्डे।

वृक्षः साये, वृक्षस्साये। खर्परे शरि वा लोपो वक्तव्यः। वृक्षा स्थातारः, वृक्षाः स्थातारः, वृक्षास्स्थातारः।

लघु-सिद्धान्त-कौमुदी

वा शरि १०४, ८।३।३६

शरि विसर्गस्य विसर्गो वा। हरिः शेते, हरिश्शेते॥

न्यासः

वा शरि। , ८।३।३६

तत्त्व-बोधिनी

अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ३९६, ८।३।३६

अयःसहितेति। न त्वयसो विकारः, "जानपदे"तिङीष्वप्रसङ्गात्। अयस्कर्णीति। अय इव कर्णौ यस्याः। "नासिकोदर" इति ङीष्। अधःशिरसी। एतयोरिति। सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोध्या। अधस्पदमिति। पदस्याध इति विग्रहः। मयूरव्यंसकादित्वात्समासः। शिरस्पदमिति। षष्ठीसमासः।

* इति तत्वबोधिन्यां विसर्गसन्धिः *

अथ यङन्तप्रक्रिया।

धातोरेकाचो हलादेः क्रियासमभिहारे यङ्।३।१।२२।

धातोरेकाचो। क्रियासमभिहार इत्युक्तत्वाद्धातोरेव स्यान्न तु प्रातिपदिकादिति पृच्छति धातो धातोः किमिति।

---

सूत्रम्

काशिका-वृत्तिः

कुप्वोः h̲कh̲पौ च ८।३।३७

कवर्गपवर्गयोः परतो विसर्जनीयस्य यथासङ्ख्यम् h̲कh̲प इत्येतावादेशौ भवतः, चकाराद् विसर्जनीयश्च। वृक्षh̲ करोति, वृक्षः करोति। वृक्षh̲ खनति, वृक्षः खनति। वृक्षh̲ पचति, वृक्षः पचति। वृक्षh̲ फलति, वृक्षः फलति। कपौ उच्चारणार्थौ। जिह्वामूलीयोपध्मानीयौ एतावादेशौ। विसर्जनीयस्य सः ८।३।३४ इत्येतस्मिन्नाप्राप्ते इदम् आरभ्यते इति एतस्य बाधकम्, शर्परे विसर्जनीयः ८।३।३५ इत्येतत् तु न बाध्यते, वासः क्षौमम्, अद्भिः प्सातम्। पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य इति शर्परे विसर्जनीयः ८।३।३५ इत्येतदेव भवति। केचित् तु एतदर्थं योगविभागं कुर्वन्ति। कुप्वोः शर्परयोः विसर्जनीयस्य विसर्जनीयः आदेशो भवति, किमर्थम् इदम्, h̲कh̲पौ च इति वक्ष्यति, तद्बाधनार्थम् इति।

लघु-सिद्धान्त-कौमुदी

कुप्वोः एक एपौ च ९८, ८।३।३७

कवर्गे पवर्गे च विसर्गस्य एक एपौ स्तः, चाद्विसर्गः। नृं पाहि, नृंः पाहि, नृंः पाहि। नॄन् पाहि॥

न्यासः

कुष्वोः क पौ च। , ८।३।३७

"विसर्जनीयश्च" इति। अनेन विसर्जनीयानुकर्षणार्थश्चकार इति दर्शयति। अथ वाग्रहणमनुवच्यं जिह्वामूलीयोपध्मानीयौ कस्मान्न विकल्प्येते, एवञ्च विसर्जनीयानुकर्षणार्थश्चकारो न कत्र्तव्यो भवति; आभ्यां हि मुक्ते पक्षे विसर्जनीय एव भविष्यति? नैवम्(); शपंरयोरेव हि कुप्वोरेवं स्यात्। अशर्परयोस्तु पक्षे "विसर्जनीयस्य सः" ८।३।३४ इति सकारः प्रतज्येत। तस्माच्चकारः कत्र्तव्यः। इह ककारपकारयोर्जिह्वामूलोयोपष्मानोययोः सूत्र उच्चारणात्? तथाभूतावादेशो विसर्जैनीयस्य विज्ञायेते? इति कस्याचिवाशङ्का स्यात्(), अतस्तां निराकर्त्तुमाह--"ककारपकारावुच्चारणार्थौ" इति। आभ्यां विना तयोरुच्चारयितुमशक्यत्वादिति भावः। कीदृशौ तावादेशौ? इत्यत आह--"जिह्वामूलीयोपध्मानीयावेव त्वादेशौ" इति। तुशब्द आशङ्किताभ्यां समुदायरूपाभ्यामादेशाभ्यां विशेषं द्योतयति। एवकारोऽवधारणार्थः। जिह्वामूलीयोपध्मानीयावेव केवलौ। न तु समुदायरूपावित्यर्थः। इह सर्वस्य विषयस्य विध्यन्तरेणावष्टब्धत्वात्? "कुप्वोः क पौ च" ८।४।३६ इत्यस्यानवकाशत्वम्(), अतो यथा वृक्षः करोतीत्यादौ "विसर्जनीयस्य सः" ८।३।३४ इतीमं विधिं बाधित्वः "कुप्वोः क पौ च" इति प्रवत्र्तते, तथा वासः क्षौमम्(), अद्भिः प्सातमित्यादौ "शर्परे" (८।३।३५) इतीममपि विधिं कस्मान्न बाधते? इति यो देशयेत्? तं प्रत्याह--"विसर्जनीयस्य" इत्यादि। "शर्परे विसर्जनीयः" (८।३।३५) इत्येतस्मिन्? प्राप्ते चाप्राप्ते चेदमारभ्यते। वाशः क्षौमम्(), अद्भिः प्सातमित्यादौ प्राप्ते; वृक्ष करोति वृक्ष पचतीत्यत्राप्राप्ते। "विसर्जनीयस्य सः" ८।३।३४ इत्येत()स्मस्तु सर्वत्र प्राप्ते। एवं तस्य विशेषणं खर्मात्रे विधानात्? स्यात्(), तस्यैवेदं बाधकम्(); नेतरस्य विधेः; तं प्रति बाधकलक्षणस्यायोगात्()। स्यादेतत्()--शर्परे विसर्जनीयस्य कवर्गपवर्गाभ्यामन्यः शर्परः खरवकाशः, "कुप्वोः क पौ च" ८।३।३७ इत्यस्याशर्परौ कवर्गपवर्गौ--वासः क्षौमम्(), अद्भिः प्सतमित्यत्रोभयं प्राप्नोति, तत्र "विप्रतिषेधे परं कायम्()" (१।४।२) इति विसर्जनीयं बाधित्वा जिह्वामूलीयोपध्मानीयाभ्यां भवितुं युक्तम्()? इत्याह--"पूर्वत्रासिद्धे" इत्यादि। अत्रैवोपपत्तिमाह--"अभावादुत्तरस्य" इति। द्वयोस्तुल्यबलयोर्युगपदेकत्र प्राप्तौ विरोधो भवति, नचात्र युगयत्? प्राप्तिरस्ति; पूर्वस्मिन्? कत्र्तव्ये सत्यसिद्धत्वादुत्तरस्याविद्यमानत्वात्()। इतिकरणो हेतौ। यस्मात्? पूर्वत्रासिद्धीये नास्ति विप्रतिषेधः, तस्माद्वासः क्षौमम्(), अद्भिः प्सातमित्यत्र "शर्परे विसर्जनीयः" ८।३।३५ इत्येतदेव भवति, न जिह्वामूलीयोपध्मानीयाविति। "केचित्()" इत्यादि। वासः क्षौमम्(); अद्भिः प्सातमित्यत्र विसर्जनीयो यथा स्यादित्येवमर्थ "कुप्वोः क पौ च" इत्यत्र योगविभाघं कुर्वन्ति--"कुप्वोः" योगः, " क पौ" इति द्वितीयः। तत्र पूर्वस्मिन्? योगे "शर्परे विसर्जनीयः" ८।३।३५ इत्येतदनुवत्र्तते। तेन शर्परयोः कुप्वोर्विसर्जनीय एव भवति, न जिह्वामूलीयोपध्मानीयाविति॥

बाल-मनोरमा

कुप्वो >< क >< पौ च १४१, ८।३।३७

"खरवसानयो"रिति रेफस्य नित्यं विसर्गे प्राप्ते-कुप्वौ ><क><पौ च। "कुप्वोः" इति छेदः। ओसस्सस्य रुत्वे तस्य खर्परत्वाद्विसर्गः, जिह्वामूलीयस्य शर्पूपसङ्ख्यातत्वेन खत्र्वात्। तस्य च विसर्गस्य "खर्परे शरि वा विसर्गलोपो वक्तव्य" इति लोपः। अतः सूत्रे कुप्वोरिति विसर्गो न श्रूयते। "विसर्जनीयस्य स" इत्यतो विसर्जनीयस्येत्यनुवर्तते। तदाह-कवर्गे इत्यादिना। "क्रमा"दिति यथासंख्यसूत्रलभ्यम्। चाद्विसर्ग इति "शर्परे विसर्जनीयः" इत्यतो "विसर्जनीय" इत्यनुकृष्यत इत्यर्थः। चकारः पक्षे विसर्गसमुच्चयार्थ इति यावत्। अन्यथा जिह्वामूलीयोलपध्मानीयाभ्यां विसर्गस्य बाध एव स्यादिति भावः। एवं च प्रकृते पकारे परे विसर्गस्य सत्वं बाधित्वा कदाचिदुपध्मानीयः कदाचिद्विसर्गः। तयोरुच्चारणे भेदः। इहादेशयोः कपावुच्चारणार्थौ, न तु विधेयकोटिप्रविष्टौ।

ननु कुप्वोरिति जिह्वामूलीयोपध्मानीयविसर्गविधना यथा विसर्जनीयस्य सत्वं बाध्यते, तथा "शर्परे विसर्जनीय" इति केवलविसर्गविधिरपि बाध्येत। तथाच वासः क्षौममित्यत्रापि कुप्वोरिति कदाचिज्जिह्वामूलीयः कदाचिद्विसर्गश्च स्याताम्। इष्यते तु केलविसर्ग इत्यत आह--येन नाप्राप्तीति। "येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवादः" इति

न्यायः। प्रापेति भावे क्तः। येनेति कर्तरि तृतीया। कर्तृकर्मणोरिति षष्ठी तु न भवति, "न लोके"ति निषेधात्। द्वौ नञावावश्यकत्वं द्योतयतः। यस्य विधेरवश्यं प्राप्तौ सत्यामित्यर्थः। अनेन न्यायेन कुप्वोरिति विधिः "विसर्जनीयस्य स" इत्यस्यैपवादः। सत्वे प्राप्त एव तदारम्भात्। "शर्परे विसर्जनीय" इत्यस्य तु कुप्वोरिति नापवादः। "कः करोती"त्यादौ शर्परे खरीत्यप्राप्तेऽपि कुप्वोरित्यस्यारम्भादित्यर्थः। तेनेति। "वासः क्षौम"मित्यादौ कुप्वोरिति विधिना शर्परे इत्यस्य बाधाऽभावेन शर्परे खरीति केवलविसर्ग एव भवतीत्यर्थ। नृ()#ँ><पाहिं, नृ()#ं><पाहीत्युपध्मानीयपक्षे आनुनासिक्येऽनुस्वारे च सति रूपद्वयम्। नृ()#ँ:पाहि,नृ()#ँ:पाहीति विसर्गपक्षेऽनुनासिकानुस्वाराभ्यां रूपद्वयम्। नृ()न्-पाहीति रुत्वाऽभावे रूपम्। तथाच पञ्च रूपाणि। सूत्रे "पे" इत्यकार उच्चारणार्थः। तथाच नृ()न्नुनातीत्यादावपि पञ्च रूपाणि भवन्ति।

---

सूत्रम्

काशिका-वृत्तिः

सो ऽपदादौ ८।३।३८

सकार आदेशः भवति विसर्जनीयस्य कुप्वोः अपदाद्योः परतः पाशकल्पककाम्येषु। याप्ये पाशप् ५।३।५७ पयस्पाशम्। ईषदसमाप्तौ कल्पप् पयस्कल्पम्। यशस्कल्पम्। प्रागिवात् कः ५।३।७० पयस्कम्। यशस्कम्। काम्यच् पयस्काम्यति। यशस्काम्यति। अपदादौ इति किम्? पयḫ कामयते। पयḫ पिबति। सो ऽपदादावित्यनव्ययस्य इति वक्तव्यम्। इह मा भूत्, प्रातः कल्पम्, पुनः कल्पम् इति। रोः काम्ये नियमार्थम्। रोरेव काम्ये न अन्यस्य इति नियमार्थं वक्तव्यम्। पयस्काम्यति। यशस्काम्यति। इह म भूत्, गीः काम्यति। धूः काम्यति। उपध्मानीयस्य कवर्गे परतः सकारादेशो भवति इति वक्तव्यम्। किं प्रयोजनम्? उब्जिरुपध्मानीयोपधः पठ्यते इति दर्शने अभ्युद्गः, समुदगः इति यथा स्यात्।

लघु-सिद्धान्त-कौमुदी

सोऽपदादौ ९८३, ८।३।३८

पाशकल्पककाम्येषु विसर्गस्य सः॥

न्यासः

सोऽपदादौ। , ८।३।३८

पूर्वस्यायमपवादः। "अपदादौ" इति। सुब्व्यत्ययेन द्विर्वचनस्य स्थान एकवचनम्(); अन्यथा ह्नपदादित्वं कुप्वोर्विशेषणमिति नोपपद्यते। द्वित्वे सत्यपदाद्योरिति कुर्यात्()। "पाशकल्पककाम्येषु" इति सम्भवदर्शनम्(), न परिगणनम्(); व्यवच्छेद्याभावात्()। "पयस्पाशम्()" इति। "याप्ये पाशप्()" ५।३।४७। "पयस्कल्पम्()" इति। "ईषदसमाप्तौ कल्पप्()" ५।३।३७ इत्यादिना कलपप। "पयस्कम्()" इति। अज्ञातं पयः--"अज्ञाते" ५।३।७३ इति कः। "पयस्काम्यति" इति। "सुप आत्मनः क्यच्()" ३।१।८, "काम्यच्च" ३।१।९ इति काम्यच्()। "पय कामयते" इति। "कमेर्णिङ्()" ३।१।३०। "पय विबति" इति। "पा पाने" (धा।पा।९२५) पाघ्रादि ७।३।७८ सूत्रेण पिबादेशः। "सोऽपदादावनव्ययस्येति वक्तव्यमम्()" इति। "सोऽपदादौ" इत्यस्मिन्? सूत्रेऽनव्ययविसर्जनीयस्य सकारादेशो भवतीत्येतदर्थरूप् व्याख्येयमित्यर्थः। तत्रैदं व्याख्यानम्()--"वा शरि" ८।३।३६ इत्यतो वाग्रहमनूवत्र्तते, सा च व्यवस्थितविभाषा; तेनानव्ययस्यैव भविष्यतीति, नाव्ययस्य। "रोः काम्ये नियमार्थम्()" इति। एतद्? ग्रहणकवाक्याम्()। "रोरेव" इति। अस्यैव विवरणम्()। वक्तव्यशब्धस्यात्रापि स एवार्थः। व्याख्यानं पूर्वपदेव कत्र्तव्यम्()। "रोः" इति विसर्जनीयाक्षया स्थानषष्ठी। रोर्यो विसर्जनीयस्तस्येत्यर्थः। "उजब्जिरुपध्मानीयोपधः पठ()ते" इति। इह

केषाञ्चिद्दर्शनमिदम्()--"उबज आर्जवे" (धा।पा।१३०३) इति, उपध्मानीयस्य त्वश्रवणम्(); कृतजश्त्वनिर्देशात्()। अन्येषां तु दर्शनम्? "उद्ज आर्जवे" ति। तत्राद्यपक्ष डब्जेः "हलश्च" ३।३।१२१ ति घत्रि "चजोः कु घिण्णयतोः" (७।३।५२) इति कुत्वे उपध्मानीयस्य "झलां जश्? झशि" ८।४।५२ इति बकारे अभ्युब्गः, समुबग इत्यनिष्टं रूपं न्यात्()। तस्मादुपध्यामीयस्य कवर्गे परतः सकारो वक्तव्यः; सकारे ह्रुपध्मानोयस्य कृते तस्य जश्त्वेन दकारः, एवमभ्पुद्गः समुद्गः--इतीष्टं सिध्यति। द्विर्वचनप्रतिनेधोऽप्युपध्मानीयस्य वक्तव्य एव; अन्यथा एव; अन्यथा ह्रुब्जिजिषतीत्यत्र "अजादेर्द्वितीयस्य" (६।१।२) इत्युपध्मानीयस्य द्विर्वचनं प्रसज्येत। इतरस्मिन्स्तु दर्शने--असिद्धकाण्डे भ उब्जेर्वक्तदव्यः, अन्यथोब्जिजिषति, उब्जितेत्यादि न सिध्येत्()। तथा चोक्तम्()--"असिद्धे भ उब्जेः" इति। असिद्धवचनमसिद्धत्वाद्धकारस्य। उब्जिजिषतीत्यत्र "न न्द्राः संयोगादयः" ६।१।३ इति द्वितीयस्यैकाचो द्विर्वचनप्रतिषेधो यथा स्यात्()। तह्र्रयं भकारो वक्तव्यः? न वक्तव्यः; निपातनेन सिद्धत्वात्()। किं पुनर्निपातनम्()? "भुजन्युज्जौ प#आच्युपतापयोः" ७।३।६१ इति। अत्र हि तर्हि प्राप्नोति--अभ्युद्गः, समुदग इति? अकुत्वविषये निपातनमित्यदोषः।
तत्त्व-बोधिनी
सोऽपदादौ १२३, ८।३।३८

सोऽपदादौ। अपदाद्योरिति। सूत्रे व्यत्ययेन एकवचनम्। यदि तु "विसर्जनीयस्य सः" "शर्परे विसर्जनीयः" इत्यत्र मण्डूकप्लुत्यानुवर्तितो यः खर् स इहाप्यनुवत्र्य विशेष्येत "अपदादौ री"ति, तदा यथाश्रुतं साधु। परन्तु पनर्मण्डूकप्लुत्याऽनुवर्तने क्लेश इति भावः। अन्ये त्वाहुः-पुनर्मण्डूकप्लुति विनाप्यनुवर्त्तितुं शक्यः, "वा शरी"त्यत्र शरा खरं विशेष्य "शर्रूपे खरी"ति व्याख्याने, "कुप्वो"रिति सूत्रे "कुप्वोः खरी"ति व्याख्याने च क्षत्यभावादिति।

पयस्पाशमिति। "याप्ये पाशप्"। "ईषदसमाप्तौ कल्पप्"। "अज्ञाते" "कुत्सिते" इति कः। "काम्यच्चे"ति काम्यच्। पाशकल्पककाम्येष्विति वृत्तिः। सम्भवदर्शनमेतन्नतु परिगणनम्, अन्यस्याऽसम्भवात्। प्रातःकल्पमिति। अधिकरणशक्तिप्रधानस्यापि "प्रातः" शब्दस्येह वृत्तिविषये शक्तिमत्परत्वं, "दोषाभूतमहः" दिवाभूत रात्रि"रितिवत्।

गीः काम्यतीति। नच सत्वनिषेधेऽपीह "इणः षः" इति षत्वं स्यादिति वाच्यं, तत्रापि "काम्ये रोरेव"त्यस्याऽनुवृत्तेः। यदि तु "इणः षः" इत्यत्रैवेदं पठ()ते तर्हि षत्वमात्रप्रतिषेधेऽपि पूर्वेण सत्वं स्यात्।

---

सूत्रम्
काशिका-वृत्तिः
इणः षः ८।३।३९

अपदादौ इति वर्तते। इणः उत्तरस्य विसर्जनीयस्य षकारादेशो भवति कुप्वोरपदाद्योः परतः पाशकल्पककाम्येषु। पाश सर्पिष्पाशम्। यजुष्पाशम्। कल्प सर्पिष्कल्पम्। यजुष्कल्पम्। क सर्पिष्कम्। यजुष्कम्। काम्य सर्पिष्काम्यति। यजुष्काम्यति। अपदादौ इत्येव, अग्निः करोति। वायुः करोति। अग्निः पचति। वायुः पचति। कुप्वोः इत्येव, सर्पिस्ते। यजुस्ते। इत उत्तरं सः इति, इणः सः इति च वर्तते। तत्र इणः परो यो विसर्जनीयः तस्य षकारो भवति, अन्यस्य सकारो भवति।
लघु-सिद्धान्त-कौमुदी
इणः षः ९८५, ८।३।३९

इण उत्तरस्य विसर्गस्य षः पाशकल्पककाम्येषु परेषु। प्रियसर्पिष्कः॥

न्यासः

इणः षः। , ८।३।३९

पूर्वेण सकारे प्राप्ते तदपवादः षकारो विधीयते। "सर्पिस्तत्र"["सर्पिस्ते"--काशिका] इति। "विसर्जनीयस्य सः" ८।२।३४ इति स एव भवति। इतः प्रभृति यदि षकार एवानुवत्र्तते, न सकारोऽपि; तदा "नमस्पुरसोर्गत्योः" ८।३।४०, "अतः कृकमिकंस" ८।३।४६ इत्यादौ सकारग्रहणं कत्र्व्यम्()। क्रियमाणेऽपि यदि षकारस्तन्नानुवर्तते, तदा सोऽपि, प्राप्नोति सङ्करः। अथेतः परभृति यदि सकार एवानुवत्र्तते, न षकारोऽपि, तदा "इदुदुपधसय चाप्रत्ययस्य" ८।३।४१, "द्विस्त्रिश्धतुरिति कृत्वोऽर्थे" ८।३।४३, "इसुसोः सामथ्र्ये" ८।३।४४, "नित्यं समासेऽनुत्तरपदस्थस्य" ८।३।४५ इत्येतेषु योगेषु षकारग्रहणं कत्र्व्यम्()। क्रियमाणेऽपि तस्मिन्? यदि सकारोऽप्यनुवत्र्तते, तदा सोऽपि प्राप्नोति, एषोऽपि सङ्करः प्रसज्येत? इत्याह--"उत्तरम्()" इत्यादि। एतेन सकारषकारयोः करणं यद्देशितं तन्निरस्तम्()। यस्तु सङ्करदोषो दर्शितः, तस्याप्यपाकरणमाह--"तत्र" इत्यादि। कथं पुनरुभयोरुत्तरत्र सममनुवृत्तौ सत्यामेष विषयविभागो लभ्यते? मण्डूकपलुतिन्यायेनानुवत्र्तमानत्वात्()॥

तत्त्व-बोधिनी

इणः षः १२४, ८।३।३९

इणः षः। सोऽपदादावित्यस्यापवादः।

---

सूत्रम्

काशिका-वृत्तिः

नमस्पुरसोर् गत्योः ८।३।४०

नमस् पुरसित्येतयोः गतिसंज्ञकयोः विसर्जनीयस्य सकारादेशो भवति कुप्वोः परतः। नमस्कर्ता। नमस्कर्तुम्। नमस्कर्तव्यम्। गत्योः इति किम्? पूः, पुरौ, पुरः करोति।

न्यासः

नमस्पुरसोर्गत्योः। , ८।३।४०

"अपदादौ" ८।३।३८ इति निवृत्तम्()। नमःशब्दस्य "साक्षात्प्रभृतीनि च" १।४।७३ इति गतिसंज्ञा, पुरःशब्दस्य तु "पुरोऽव्ययम्()" १।४।६६ इत्यनेन। "पूः पुरौ, पुरः करोति" इति। "पृ पालनपूरणयोः" (धा।पा।१०८६), "भ्राजभ्रास" ३।२।१७७ इत्यादिना क्विप्(), "उदोष्ठ()पूर्वस्य" ७।१।१०२ इत्युत्त्वम्(), रपरत्वम्(), स्वादयः, हल्ङ्यादिलोपः ६।१।६६, "र्वोरुपधाया दीर्घः" ८।२।७६ इत्येकवचने दीर्घः। पूः, पुरावित्यत्रागतिसंज्ञकत्वात्? पुराशब्दस्य सत्वं न भवति, तस्मिन्नसति विसर्जनीय एव स्यात्(); पक्ष उपध्मानीयोऽपि। पुरः करोतीत्यत्रागतिसंज्ञकत्वात्? सकारो न भवति, तस्मिन्नसति विसर्जनीय एव भवति, पक्षे जिह्वामूलीयोऽपि। नमःशब्दस्य तु नमःकृत्वेति प्रत्युदाहरणं वेदितव्यम्()। वृत्तिकृता तु सुबोधत्वान्न दर्शितम्()॥

तत्त्व-बोधिनी

नमस्पुरसोर्गत्योः १२५, ८।३।४०

पुरःप्रवेष्टव्या इति। "पृ? पालनपूरणयोः"। भ्राजभासे"त्यादिना क्विप्। तदन्ताज्जस्। जसन्ततां स्फुटीकर्तुं "पूः पुरा"वित्युपन्यस्तम्।

---

सूत्रम्

काशिका-वृत्तिः

इदुदुपधस्य च अप्रत्ययस्य ८।३।४१

इकारोपधस्य उकारोपधस्य च अप्रत्ययस्य विसर्जनीयस्य षकार आदेशो भवति कुप्वोः परतः। निर्दुर्बहिराविश्चतुर्प्रादुस्। निस् निष्कृतम्। निष्पीतम्। दुस् दुष्कृतम्। दुष्पीतम्। वहिस् बहिष्कृतम्। बहिष्पीतम्। आविस् आविष्कृतम्। आविष्पीतम्। चतुर् चतुष्कृतम्। चतुष्कपालम्। चतुष्कलम्। चतुष्कण्टकम्। प्रादुस् प्रादुष्कृतम्। प्राउद्ष्पीतम्। अप्रत्ययस्य इति किम्? अग्निः करोति। वायुः करोति। मातुः करोति, पितुः करोति, अत्र रात् सस्य ८।२।२४ इति सकारलोपे कृते रेफस्य यो विसर्जनीयः, तस्य अप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति? कस्कादिषु तु म्रातुष्पुत्रग्रहणं ज्ञापकम् एकादेशनिमित्तत्वात् षत्वप्रतिषेधस्य। पुम्मुहुसोः प्रतिषेधो वक्तव्यः। पुंस्कामा। मुहुḫ कामा। नैष्कुल्यम्। दौष्कुल्यम्। दौष्पुरुष्यम्। नि३ष्कुलम्। दु३ष्कुलम्। दु३ष्पुरुषः। बहिरङ्गलक्षणयोर् वृद्धिप्लुतयोरसिद्धत्वात् षत्वं प्रवर्तते।

न्यासः

इदुदुपधस्य चाप्रत्ययस्य। , ८।३।४१

इच्च उच्च तौ इदुत्तौ। इकारोकारायुपधे यस्य स तथेक्तः। "निदुर्वहिः" इत्यादि। सम्भवदर्शनार्थमेतत्(), न परिगणनम्(); वयावर्त्त्याभावात्()। "मातुः करोति, पितुः करोति" इति। अत्र यथा न भवति तथा वक्ष्यति। "पुंस्कामा, मुहुःकामा" इति। अत्रापि यथा न भवति तथा वक्ष्यति। "चतुष्कपालम्(), चतुष्कष्टकम्()" इति। चतुःशब्दस्य कपालकण्टकशब्दाभ्यां बहुव्रीहिः, समाहारे द्विगुर्वा। "अकारान्तोत्तरपदो ["पदद्विगुः"--प्रां३।पाठे] द्विगुः स्त्रियां भाष्यते" (वा।१५६) इति स्त्रीलिङ्गता न भवति; "पात्रादीनां प्रतिषेधः" (वा।१५९) इति वचनात्()। "मातुः करोति, पितुः करोति" इति देश्यम्()। मातुपितृशब्दाभ्यां षष्ठ()एकवचनम्(); "ऋत उत्()" ६।१।१०७ इत्युत्वमेकादेशः, रपरत्वम्(), "रात्सस्य" ८।२।२४ इति सलोपः, रेफस्य विसर्जनीयः। स च रेफस्याप्रत्ययत्वात्? प्रत्ययविसर्जनीयो न भवति, अतः षत्वं प्राप्नोति। तत्कस्मान्न भवति? इत्याह--"कस्कादिषु" इत्यादि। परोहारः। एकादेशश्चासो निमित्त्? चेति कर्मधारयः। यद्येकादेशादिणो निमित्तभूतात्? षत्वं स्यात्(), कस्कादिषु भ्रातुष्पुत्रशब्दस्य ग्रहणं न कुर्यात्(); अनेनैव सिद्धत्वात्(), कृतं च, एतदेव ज्ञापयति--एक#आदेशनिमित्तात् षत्वं न भवतीति। "पुम्मुहुसाः" इत्यादि। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्()--उत्तर ८।३।४२ सूत्रेऽन्यतरस्यांग्रहणमुभयोर्योगयोः शेषभूतं विज्ञायेत। सा व्यवस्थितविभाषा, तेन पुंमुहुसोर्न भवति। अन्येषां तु नित्यमेव भविष्यति। पुमित्यस्य प्रहणं रुत्वादेशपक्षमाश्रित्य कृतम्()। सकारादेशपक्षे हि विसर्जनीयाभावात्? प्रतिषेधसर्जनीय" ८।३।३४ इति सकारः। जिह्वामूलीयस्तु यथा न भवति तथा पूर्वमेव प्रतिपादितम्()। "मुहुकामा" इति। षत्वे प्रतिषिद्धे जिह्वामूलीयो भवति। क्वचित्? "मुहुस्कामा" इति। सकारः पठ()ते। तत्र यथा पुंस्कामेत्यत्र जिह्वामूलीयाभावः प्राक्प्रतपादितस्तथेहापि प्रतिपाद्यः। "नैष्कुस्यम्(), दौष्पुरुध्यम्()" इति ब्राआहृणादित्वात्? ष्यञि कृते तन्निमित्तायां च वृद्धाविदुदुपधत्वाभावात्? षत्वं न प्राप्नोति। "निश्ष्कुलम्(), दुश्ष्पुरुषः" इत्यत्रापि "गुरोरनुतः" ८।२।८६ इत्यादिना प्लुते विहिते नैव तत्प्राप्नोति, इदुदुपधत्वाभावादिति यो देशयेत्(), तं प्रत्याह--"नैष्कुल्यम्()" इत्यादि। वुद्धे स्तावद्बहिरङ्गत्वं तद्धितापेक्षत्वात्(), तद्धितो भवाद्यर्थापेक्षत्वाद्बहिरङ्गः। तेन तदाश्रिताऽपि वृद्धिर्वहिरङ्गा भवत#इ। प्लुतोऽपि दूरद्धूतावावर्थे वाक्यस्य विधीयमानत्वाद्विहिरङ्गः, षत्वं तु वर्णस्य पदसम्बान्धिनो दिधीयत इतयल्पापेक्षीत्यन्तरङ्गम्()। तेनान्तरङ्गे षत्वे कत्र्तव्ये वृद्धिप्लुतयोर्थहिरङ्गयोरसिद्धत्वात्? प्रदत्र्तत एव षत्वम्()। [अयं भाहगः कां३।पाठे नास्ति] तपरकरणमाशीः करोति, गोः करोति, धूः करोतीत्यत्र मा

भूदित्येवमर्थम्()॥[अयं भाहगः कांउ।पाठे नास्ति] "इदुदुपधस्य" इत्यादिना द्विस्त्रिश्चतुरिति ग्रहणं प्रत्याचष्टे। एतद्धि एवमर्थं क्रियते--द्विरादीनामेव विसर्जनीयस्य षत्वं यथा स्यात्(), पञ्चकृत्वः करोतीत्यत्र मा भूदिति। ननु च "इदुदुपश्रस्य" ८।३।४१ इत्यस्मिन्ननुवत्र्तमाने कृत्वोऽर्थो विवयो यसय पदस्य तस्य यो विसर्जनीय इत्येवं कृत्वोऽर्थविषयेण पदेन विसर्जनीयो यदा विशेष्यते, तदान्यस्य न प्राप्नोति; द्विरादेरन्यस्येदुदुपधस्य कृत्वोऽर्थवृत्तेः पदस्यासम्भवात्()। तस्मादन्तरेणापि द्विरादीनां ग्रहणम्(), तेषामेव हि विसर्जनीयस्य षत्वं भविष्यति। द्विस्त्रिश्चतुरिति शक्यमकर्तुम्()। "कृत्वसुजर्थे षत्वं ब्रावीति कस्मात्()" इति। अस्मिन्? षत्वविक्लपविधाने हेतुं कृत्वोऽर्थवचनस्य पृच्छति। कस्मात्? "कृत्वोऽर्थे" इत्येवमुक्त्वेमं षत्वविकल्पं ब्रावीति? किं तत्? प्रयोजनं यतो हेतोरिह षत्वविकल्पविधौ कृत्वोऽर्थग्रहणं करोतीत्यर्थः। अत्र वक्ष्यमाण एवाभिप्रायः। अतो हेतुमाह--"चतुष्कपाले" इत्यादि। असति कृत्वोऽर्थग्रहणे चतुश्कपालेऽपि विभाषा षत्वं स्यात्(), नित्यं चोष्यते। तस्मादत्र विभाषा षत्वं मा भूदित्येवमर्थं कृत्वोऽर्थ इत्युच्यते। येनाभिप्रायेण परं पृष्टवान्(), तमाविष्कर्त्तुमाह--"ननु सिद्धं तत्र पूर्वेण" इति। नान्वित्यभ्युपगमे। एतदनेन दर्शयति--भवत्वनेन षत्वं विभाषा, तथापु पूर्वसूत्रेण नित्यं भविष्यति षत्वमस्य श्रवणम्(); यस्माद्यदाप्यनेन षत्वं न भवति तदापि पूर्वसूत्रेण "इदुदुपधस्य चाप्रत्ययस्य" ८।३।४१ इत्यनेन चतुष्कपाले सिद्धं षत्वमिति। "सिद्धे ह्रयं विधत्ते" इति। सिद्धे प्राप्त इत्यर्थः। एतदाचष्टे--"इदुदुपधस्य" इत्यादिना नित्ये षत्वे प्राप्त इमं षत्वविकल्पं विदधात। नाप्राप्ते तस्माद्येन नाप्राप्तिन्यायेन (व्या।प।४९) तस्यायं बाधकः स्यादिति। तदनेन यदुक्तम्()--"सिद्धं तत्र पूर्वेण" इति, तन्निराकृतम्()। तस्माद्विभाषानिवृत्त्यर्थ कृत्वोऽर्थग्रहणम्()। स्यादेतत्()--कृत्वोऽर्थविवक्षायां सुचि कृते तस्य यदा विसर्जनीयः क्रियते तदा पूर्वेण न प्राप्नोति, अप्रत्ययस्येति ८।३।४१ प्रतिषेधात्(); तपश्च "सिद्धे ह्रयं विधत्ते" इति यत्तन्नोपपद्यते, तत्कुतो ह्रनेन विकल्पेन नित्यं षत्वं बाध्येत? इत्याह--"यदापि कृत्वोऽर्थे" इत्यादि। चतुःशब्दो वत्र्तत इति शेषः। अस्य च "सिद्धे ह्रं दिधत्ते चतुरः षत्वम्()" इत्यनेन प्रकृतेन सम्बन्धः। अस्यार्थः--एतदुक्तं भवनि, न केवलं यदा कृत्वोऽर्थवृत्तिश्चतुःशब्दस्तदा पूर्वेण प्राप्ते सतीमं षत्वविकल्पं विधत्ते, अपि तु यदा कृत्वोऽर्थस्तदापीति। अत्रैवोपपत्तिमाह--"लुप्ते कृत्वोऽर्थीये" इत्यादि। इत्यादि। हिशब्दो हेतौ। कृत्वोऽर्थे भवः कृत्वोऽर्थीयः,क सुच, गहादित्वाच्छः। यस्मात्? "रात्सस्य" (८।२।२४) इति लुप्ते कृत्वोऽर्थीये रेफस्याप्रत्यस्य विसर्जनीयो भवति तस्मात्? कृत्वोऽर्थेऽपि पूर्वेण नित्ये षत्वे प्राप्त इमं षत्वविकल्पं विधतते। ततश्च सर्वत्र कृत्वोऽर्थेऽप्यकृत्वोऽर्थेऽपि नाप्राते पूर्वेण षत्वे विकल्प आरभ्यत इति तस्य बाधक एव स्यात्()। एवञ्चासति कृत्वोऽर्थग्रहणे चतुष्कपाले विभाषा षत्वं प्रसज्येत। तस्मात्? तन्निवृत्त्यर्थं कृत्वोऽर्थग्रहणमिति ["इति" नास्ति--प्रां३।पाठः] स्थितमेतत्()। "एवम्()" इत्यादि। यदि कृत्वोऽर्थग्रहणं क्रियते, एवं तर्हि तस्मिन्? सति किमिदानीं द्विस्त्रिश्चतुरित्यनेन कार्यम्()? न किञ्चित; व्यावत्र्यभावात्()। तस्मान्न कत्र्तव्यमिदमित्येवाभिप्रायः।[मेदेत्यभिप्रायः--प्रां३।पाठः] स्यादेतत्()--असत्यस्मिन्? पञ्चकृत्वः करोतीत्यादावपि विभाषा षत्वं स्यात्(), अतस्तन्निवृत्तिरनेन क्रियते इति? अत आह--"अन्यो हि" इत्यादि। "इदुदुपधस्य" ८।३।४१ इत्यनुवत्र्तते, "कृत्वोऽर्थे" इति चोच्यते, न च द्विरादिभ्योऽन्य इदुदुपधः कृत्वोऽर्थे वत्र्तते; तस्मात्? सामथ्र्यादेषामेव भविष्यति, नान्येषामित्यनर्थकं द्विरादीनां ग्रहणम्()। "अक्रियमाणे" इत्यादिना असति हि द्विरादिग्रहणे यो दोषस्तं दर्शयति। यदि द्विरादिग्रहणं न क्रियेत, तदा विसर्जनीयस्य प्रकृतस्वात्स एव कृत्वोऽर्थग्रहणेन विशेष्यते--कृत्वोऽर्थे यो वत्र्तते विसर्जनीय इति। कः पुनरेवं सति दोषः स्यात्()? इत्यत आह--"चतुरो न सिध्यति" इति। "तथा" इति। तथैवं कृत्वोऽर्थग्रहणेन विसर्जनीये विशेष्यमाणे चतुःशब्दस्य विभाषा षत्वं न सिध्यति। किं कारणं न सिध्यति? इत्यत आह--"रेफस्य" इत्यादि। हिशब्दो हेतौ, यस्माच्चतुरः "रात्सस्य" ८।२।२४ इति सुचः सकारे लुप्ते प्रकृत्यवयवस्य रेफस्य विसर्जनीयः, तस्मान्न सिध्यति। न ह्रसौ विसर्जनीयः कृत्वोऽर्थे वत्र्तते। अथ क्रियमाणेऽपि तस्मिन्? कस्मादेव दोवो न भवति? इत्यत आह--"तस्मान्()" इत्यादि। तस्मिन्? द्विस्त्रिश्चतुरित्येत()स्मस्तूपादोयमाने कृत्वोर्थग्रहणं चतुःशदस्य विशेषणं न्यायं भवति। तथा हि--तस्य श्रुतत्वात्? स एव विशेष्यते, कृत्वोऽर्थे यो वत्र्तते

चतुःशब्द इति। लुप्तेऽपि कृत्वोऽर्थीये चतुःशब्दः कृत्वोऽर्थे वत्र्तत इति न भवति द्विरादिग्रहणे क्रियमाणेऽपि दोषः। तस्माद्()द्विरादिग्रहणं कत्र्तव्यम्()--कृत्वोऽर्थग्रहणं तस्य विशेषणं यथा स्यात्()। एतदपि न भवति तस्य प्रयोजनमिति दर्शयन्नाह--"प्रकृतं पदं तदन्तम्()" इति। तदन्तं विसर्जनीयान्तम्()। अतः "तस्यापि तद्विशेषणं न्याय्यम्()" उपपत्तिमाह--तदन्तत्वं तु पदस्य विसर्जनीयेन विशेष्यत्वाल्लभ्यते। अपिशब्दोऽवधारणे। तस्यैवेत्यर्थः। कुत एतत्()? व्याप्तिन्यायात्()। विसर्जनीये हि विशेष्यमाणे चतुरो न सिध्यति, पदे तु विशेष्यमाणे सर्वत्र भवति। तस्मात्? तदेव विशेषयिष्यामः--कृत्वोऽर्थे यद्वत्र्तते पदमिति। पदे विशेष्यमाणे चतुरः षत्वं सिध्यत्येव। लुप्तेऽपि कृत्वोऽर्थीये चतुरित्येतत्पदं कृत्वोऽर्थे वत्र्तत इति। तस्मान्नार्थो द्विरदिग्रहणेनेति श्लोकवात्र्तककारेम प्रत्याख्यातं द्विरादिग्रहणम्()। सूत्रकारस्य त्वयमभिप्रायः--विसर्जनीयस्य कार्यित्वात्? पदेन विशेष्यमाणत्वाच्च प्राधान्यम्()। तत्रासति द्विरादिग्रहणे प्राधान्यादविसर्जनीय एव कृत्वोऽर्थग्रहणेन विशेष्यत ति। त()स्मस्तु सति तदुपादानसामथ्र्यात्? साक्षात्? क्षुतत्वाच्च द्विरादेरेव पदस्यैतद्विशेषणम्(), न तु स्वरितत्वादनुमितस्य विसर्जनीयसय। तस्माद्युक्तं द्विरादिग्रहणं कर्त्तुमिति। "एवं तु" इत्यादिना ग्रन्थेन द्विस्त्रिश्चतुग्र्रहणं सूत्रकारमतेन स्थापयति। "पूर्वेण" इति। "इदुदुपधस्य" [८।३।४१](#) इत्यादिना। तत्रैतत्? स्यात्()--"इदुदुपधस्य" इत्यस्यावकाशः--निष्कृतम्(), दुष्कृतमिति; अस्यावकाशः--द्विष्करोतीत्यादौ; चतुष्करोतीत्यत्र परत्वात्? पूर्वविधिं बाधित्वाऽयमेव विकल्पो भविष्यति? इत्यत आह--"पूर्वत्रासिद्धे" इत्यादि। किं कारणं नास्तीति? अत आह--"अभावादुत्तरस्य" इति॥

तत्त्व-बोधिनी

इदुदुपधस्य चाऽप्रत्ययस्य १२६, ८।३।४१

इदुदुपधस्य। इदुदिति किम्?, गीः करोति। पूः करोति। इह "इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्ग" इति वैयधिकरण्येन सम्बन्धः। "अप्रत्ययस्ये"ति तु "अप्रत्ययो यो विसर्ग" इति सम्बध्यते। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्, "अग्निः करोती"त्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्, "अप्रत्ययस्ये"ति निषेधेनैव सिद्धतिवज्ञापनात्। अतएव "अग्नि"रित्यादौ रोर्विसर्गः सिध्यति। अन्यथाऽपदान्तत्वान्न स्यात्। विसर्गविधिस्तु "पुन"रित्यादौ चरितार्थः। ज्ञापकं च विशेषापेक्षम्। तेन "अचः परिस्मिन्-" इति त्रापाद्यां न प्रवर्तते। एवं च "पूर्वत्रासिद्धीये न स्थानिव"दिति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति मनोरमायां स्थितम्।

अत्र वदन्ति-"अप्रत्ययस्ये"त्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्याद्यर्थ एव आकारे स्थित इति "अप्रत्ययो यो विसर्ग" इति सामानाधिकरण्येनान्वयो न युक्तः। "सर्पिष्करोती"त्यत्र "इसुसोः सामर्थ्ये" इति वैकल्पिकशत्वप्रवृत्तावपि "तिष्ठतु सर्पिः पिबत्वमुदक"मित्यत्र "इदुदुपधस्ये"त्यनेन नित्यं षत्वप्रसङ्गात्। न चाकरमतेऽप्युणाअदीनामव्युत्पत्त्याश्रयणे तथा स्वीकारादिष्टापत्तिरिति वाच्यम्, व्युत्पत्त्याश्रयणे दोषतादवस्थ्यात्। "इसुसो"रित्यत्र "सर्पिष्करोती"त्युदाहरणेन व्युत्पत्तिपक्षस्यैव वार्तिककारेण स्वीकृतत्वानुमानात्। अन्यथा "इदुदुपधस्ये"त्यनेनैव व्युत्पत्त्यव्युत्पत्तिपक्षभेदेन षत्वविकल्पसिद्धेस्तदुदाहरणस्याऽसङ्गतिप्रसङ्गात्। किंच "तिष्ठतु सर्पि"रित्यादौ "इदुदुपधस्ये"ति षत्वस्येष्टत्वे-"कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः"-इति स्वमूलग्रन्थविरोध इति। अत्र केचित्, "इदुभ्द्यामप्रत्ययस्ये"ति वक्तव्ये "इदुदुपधस्ये"तिग्रहणं नित्यं य #इदुदुपधस्तस्यैव विसर्गस्य षत्वं यथा स्यात्, "कविभिः कृत"मित्यादौ मा भूदित्येवमर्थम्। भिसो विसर्गस्य हि नित्यमिदुदुपधत्वं नास्ति" "रामै"रित्यादौ तदभावादिति, तन्न; "अग्निः करोती"ति निषेधादाहारणस्याऽसाङ्गत्यापत्तेः। "देव" इत्यादावकारोपधत्वात्। "प्रियचत्वा" इत्यादावाकारोपधत्वेन "चतुष्कपाल" इत्यादौ षत्वानापत्तेश्चेति यत्किञ्चिदेतत्। अन्ये तु-"प्रत्ययस्य यो विसर्जनीयो न भवती"त्यादिव्याख्याने तूक्तोदाहरणे

षत्वस्याऽप्रवृत्तेरुपधस्येत्येतत्सुत्यजमित्याहुः। स्यादेतत्। "अप्रत्ययग्रहणमेव--स्थानिवत्सूत्रं प्रति त्रिपादी सिद्धेत्यत्र ज्ञापक"मित्युक्तम्। तदिदं वैयधिकरण्येनान्वयमभ्युपगच्छतां न सिध्येत्। अत्राहुः--"न मु ने" इत्यत्र "ने"ति योगं विभज्य "स्थानिवत्सूत्रं प्रति त्रिपादी नासिद्धे"ति व्याख्यायते। "प्रत्ययः", परश्चे"त्यादिनिर्देशाश्चेहानुकूलाः। योगविभागस्येष्टसिद्ध्यर्थत्वात। "अचः परस्मिन्--" इति सूत्रं प्रति त्वसिद्धैव। ततश्च "पूर्वत्रासिद्धे न स्थानिव"दिति सिद्धान्तो युक्तिमूलक इत्यादि सर्वं सङ्गच्छत इति। "अप्रत्ययो यो विसर्ग" इति सामानाधिकरण्यपक्षे "मातुः कृपे"त्यादौ "इदुदुपधस्ये"ति षत्वमाशङ्क्याह--एकादेशशास्त्रनिमित्त कस्येति। "मातु"रित्यत्र हि "ऋत उत्" इति एकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम्। आकरे तु "एकादेशनिमित्ता"दिति प्रचुरः पाठः। तत्र एकादेशः--एकादेशशास्त्रं, तन्निमित्तं यस्य उकारस्य तस्मादित्यर्थः। नन्वेवम् "अप्रत्ययस्ये"त्यत्र सामानाधिकरण्यपक्षोऽप्याकरसंमत इति चेदत्राहुः, "प्रत्येकं संयोगसंज्ञे"ति पक्ष आकरसंमतोऽपि यथा निष्प्रयोजनस्तथायमपि।
वैयधिकरण्यपक्षस्त्वावश्यक-एव। अन्यथा "तिष्ठतु सर्पिः पिब त्वमुदक"मित्याद्यसिध्यापत्तेरितिं। भ्रातुष्पुत्रशब्दस्य पाठादिति। नच "षत्वतुकोरसिद्धः" इत्येकादेशशास्त्रस्याऽसिद्धत्वात्षत्वाऽप्राप्तौ विध्यर्थ एव तत्र पाठो न ज्ञापनार्थं इति वाच्यम्, "षत्वे तुकि चंकर्तव्ये पदान्तपदाद्योः सतोरेवैकादेशोऽसिद्ध" इति सिद्धान्तात्। अन्यथा "शकहूष्वि"त्यत्रापि षत्वं न स्यात्। शकान् ह्वयन्तीत्यत्र "आदेच उपदेशे" इत्यात्वे क्विपि संप्रसारणे कृते "संप्रसारणाच्चे"ति पूर्वरूपैकादेशे च "हलः"इति दीर्घः। भवति हि "कोऽसिचत्" "सोऽसिच"दित्यादौ पदान्तपदाद्योरादेशः। तेन तत्र षत्वनिषेधः सिध्यति, न तु "शकहूष्वि"त्यत्र। एवं च "भ्रातुष्पुत्र" इत्यत्रापि "षत्वतुको"रित्येकादेशशास्त्रमसिद्धं न भवतीत्युक्तं न ज्ञापकं सुस्थमेव। ननूक्तज्ञापकात् "शकहूष्वि"त्यत्रापि "मातुः कृपे"त्यत्रेव षत्वं न स्यात्। मैवम्। तुल्यजातीयस्य ज्ञापकत्वात्। कश्च तुल्यजातीयः, यः कुप्वोरिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

तिरसो ऽन्यतरस्याम् ८।३।४२

तिरसः विसर्जनीयस्य अन्यतरस्यां सकारादेशो भवति कुप्वोः परतः। तिरस्कर्ता। तिरस्कर्तृम्। तिरस्कर्तव्यम्। तिरःकर्ता। तिरः कर्तुम्। तिरः कर्तव्यम् गतेरित्येव, तिरः कृत्वा काण्डं गतः।

---

सूत्रम्

काशिका-वृत्तिः

द्विस्त्रिश्चतुरिति कृत्वो ऽर्थे ८।३।४३

षः इति सम्बध्यते। द्विस् त्रिस् चतुरित्येतेषां कृत्वो ऽर्थे वर्तमनानां विसर्जनीयस्य षकार आदेशो भवति अन्यतरस्यां कुप्वोः परतः। द्विष्करोति, द्विः करोति। त्रिष्करोति, त्रिः करोति। चतुष्करोति, चतुः करोति। द्विष्पचति, द्विः पचति। त्रिष्पचति, त्रिः पचति। चतुस्पचति, चतुः पचति। कृत्वो ऽर्थे इति किम्? चतुस्कपालम्। चतुस्कण्टकम्। पूर्वेण नित्यं षत्वं भवति। इदुदुपधस्य इत्येतस्य अनुवृत्तौ सत्यां क्त्वो ऽर्थविषयेण च पदेन विसर्जनीये विशेष्यमाणे द्विस्त्रिश्चतुरिति शक्यमकर्तुम्। क्त्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुस्कपाले मा। षत्वं विभाषया भून्ननु सिद्धं तत्र पूर्वेण। सिद्धे ह्ययं विधत्ते चतुरः सत्वं यदापि कृत्वो ऽर्थे। पुल्ते कृत्वो ऽर्थीये रेफस्य विसर्जनीयो हि। एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम्। अन्यो हि नेदुदुपधः कृत्वो ऽर्थः कश्चिदप्यस्ति। अक्रियमाणे ग्रहणे विसर्जनीयस् तदा विशेष्येत। चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि। तस्मिंस् तु क्रियमाणे युक्तं चतुरो विशेषणं भवति। प्रकृतं पदं तदन्तं तस्य अपि

विशेषणं न्याय्यम्। एवं तु क्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे चतुःशब्दस्य कृत्वो ऽर्थे ऽपि वर्तमनस्य पूर्वेण एव नित्यं षत्वं स्यात्। पूर्वत्र सिद्धे न अस्ति विप्रतिषेधो ऽभावादुत्तरस्य।

---

सूत्रम्

काशिका-वृत्तिः

इसुसोः सामर्थ्ये ८।३।४४

षः इति सम्बध्यते। इसुसित्येतयोः विसर्जनीयस्य अन्यतरस्यां षकारादेशो भवति सामर्थ्ये कुप्वोः परतः। सर्पिष्करोति, सर्पिः करोति यजुस्करोति, यजुः करोति। सामर्थ्ये इति किम्? तिष्ठतु सर्पिः, पिव त्वमुदकम्। सामर्थ्यम् इह व्यपेक्षा, न पुनरेकार्थीभावः, उभयं वा।

न्यासः

इसुसोः समर्थ्ये। , ८।३।४४

यदि "अर्चिशुचिहुसृपिच्छादिच्छृदिभ्य इसिः" (द।उ।९-३०), "जनेरुसिः" (द।उ।९-३७) इत्यनुवर्त्तमाने "अर्तिं()तपृ()वपियजितनिधानितपिभ्यो नित्()" (द।उ।९।३९) इत्येषं सर्पिं#ः, यजुरादयः शब्दा इसुस्प्रत्ययान्ता व्युत्पाद्यन्ते--इति दर्शनम्(), ततश्च केनचिदप्राप्त एव षत्वे "कुप्वोः" ८।३।३७ इत्यादिना जिह्वामूलीयादिषु प्राप्तेष्विदं वचनम्()। अथ "अथादयोऽव्युत्पन्नानि प्रातिपदिकानि" (पु।प।वृ।७०) इति दर्शनम्()। ततोऽप्रात्ययविसर्जनीयत्वात्? "इदुदुपधस्य चाप्रत्ययस्य" ८।३।४१ इति नित्ये षत्वे प्राप्तेऽयमारम्भः। "सामर्थ्ये सति" इति। कुप्वोर्निमित्तत्वेनाश्रयणात्? तदादिनैव शब्दान्तरेण सह सामथ्र्यं वेदितव्यम्()। सर्पिष्करोतीत्यत्र सर्पिः साधनं करोतीत्येवं साध्यां क्रियामपेक्षते, करोतीत्यर्थोऽपि[करोत्यर्थोऽपि--करोत्यर्थोऽपि--प्रांउ।पाठः] साध्यः। साधनं सर्पिरित्यस्ति सामथ्र्यम्()। "तिष्टतु सर्पिः पिब त्वमुदकम्()" इति। अत्र सर्पिरित्यत्र पिबेत्यनेन सामथ्र्यं नास्ति। तथा हि--पिबेत्ये तदुदुकमपेक्षते, सर्पिरित्येतत्तु तिष्टत्विति। अथ परमसपिःकुण्डिकेत्यत्र विभाषया षत्वं समासे कस्मान्न भवति? इत्याह--"सामथ्र्यमिह" इत्यादि। दाशब्दोऽप्यर्थे वत्र्तते; अनेकार्थत्वादव्ययस्य। "न पुनः" इत्यस्यैकार्थीभाव इत्यनेन, उभय इत्येनेन च सम्बन्धः। अवधारणं चात्र द्रष्टव्यम्(); व्यवच्छेदफलकत्वात्? सर्ववाक्यानाम्()। तदयमत्रार्थः--सामथ्र्यमिह व्यपेक्षैवाश्रयते, उभयं तु कथं नाश्रयितुं युक्तम्(); न हि सामान्यशब्दाः प्रकरणादिकमन्तरेण विशेषेष्ववतिष्ठन्ते, न चेह प्रकरणादिकमस्ति तथाविधं किञ्चिद्येन व्यपेक्षालक्षणमेव सामथ्र्य ग्रहीतव्यम्()? नैषः दोषः; "कार्यकालं संज्ञापरिभाषम्()" (व्या।प।५८) इति, इह "पदस्य" इति वत्र्तते, तत्र पदाधिकारादेव समर्थपरिभाषाया उपस्थानात्? सामर्थ्ये लब्धे यतः सामथ्र्यग्रहणं क्रियगते तस्येदं प्रयोजनम्()--इष्टसामथ्र्यस्य परिग्रहो यथा स्यात्()। इह च व्यपेक्षालक्षणमेवेष्टं सामथ्र्यमिति तदेवाश्रयितुं युक्तम्(); नैकार्थीभावः, नाप्युभयमिति॥

तत्त्व-बोधिनी

इसुसोः सामर्थ्ये १२८, ८।३।४४

व्यपेक्षाविरहेऽपीति। "तिष्ठतु सर्पिष्कुण्डिकामानाये"त्यादावित्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

नित्यं समासे ऽनुत्तरपदस्थस्य ८।३।४५

इसुसोः इति वर्तते। समासविषये इसुसोः विसर्जनीयसुअ अनुत्तरपदस्थस्य नित्यं ष्त्वं भवति कुप्वोः परतः। सर्पिष्कुण्डिका। धनुष्कपालम्। सर्पिष्पानम्। धनुष्फलम्। अनुत्तरपदस्थस्य इति किम्? परमसर्पिःकुण्डिका। परमधनुःकपालम्। पूर्वसूत्रेण विकल्पो ऽप्यत्र न भवति। एतदेव अनुत्तरपदस्थस्य इति वचनं ज्ञापकम् इसुसोः प्रत्ययग्रहणे यस्मात् स विहितः तदादेः इत्ययं नियमो न भवति। तेन वाक्ये ऽपि परमसर्पिष्करोति, परमसर्पिः करोति, इसुसोः सामर्थ्ये ८।३।४४ इत्येतद् भवति। व्यपेक्षा च तत्र सामर्थ्यमाश्रितम् इति समासे न भवति।

न्यासः

नित्यं समासेऽनुत्तरपदस्थस्य। , ८।३।४५

"सपिष्कुण्डिका" इति। षष्ठीसमासः। एवं "धनुष्कपालम्()" इत्यादावपि। "परममपिःखुम्डिका" इति। परमसर्पिः शब्दयोः सन्महत्()" २।१।६० इत्यादिना कर्मधारयं कृत्वा कुण्डिकाशब्देन सह षष्ठीसमासः। अत्र परमशब्दापेक्षया सर्पिःशब्द उत्तरपदम्(), तत्रस्थश्च विसर्जनीय इति षत्वं न भवति। ननु च "इसुसोः सामर्थ्ये" ८।३।४४ इत्यत्र "इसुसोः" इति प्रत्ययग्रहणमेतत्(), तत्र "प्रत्ययग्रहणे यस्मात्? स विहितस्तदादेस्तदन्तस्य" (भो।पु।सू।७) इति नियमाद्यत एवेसुसौ विहितौ तदादेरेव ग्रहणेन भवितव्यम्(), नाधिकस्य, अधिकश्च परमशाब्दः; केवलाद्धि सपेरिस्प्रत्ययो विहितः, न परमशब्दादेः; एवञ्चोत्तरपदप्रकृतिरेव नास्ति, किं प्रतिवेधेन? इत्याह--"एतदेव" इत्यादि। यद्ययमिह नियमः स्यात्? "अनुत्तरपदस्थस्य" इति नोक्तं स्यात्(), उक्तञ्च, तस्मादेतज्ज्ञापयति--नायमिह नियमो भवतीति। किमस्य ज्ञापकस्य प्रयोजनम्()? इत्याह--"तेन" इत्यादि। यस्मादयमिह नियमो न भवति, तेन हेतुना वाक्येऽधिकस्यापि ग्रहणे सति परमसर्पिः करोति, परमसर्पिष्करोतीत्यत्र पूर्वसूत्रेण षत्वबिकल्पो भवति; नियमे तु सति न स्यात। समासेऽपि तर्हि परमसर्पिःकुण्डिकेत्यत्र षत्वविकल्पेन भवितव्यम्(); नियमाभावात्()? इत्यत आह--"व्यपेक्षा च तत्र" इत्यादि। चकोरोऽवधारणार्थः। इतिकरणो हेतौ। तत्र "इसुसोः" (८।३।४४) इत्यादौ सूत्रे सामाथ्र्यग्रहणाद्व्यपेक्षैव सामथ्र्य वत्वविकल्पस्य निमित्तं यस्मादाश्रितं तस्मात्? समासे न धवति; तत्र तदभावात्()॥

---

सूत्रम्

काशिका-वृत्तिः

अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८।३।४६

अकारादुत्तरस्य अनव्ययविसर्जनीयस्य समासे अनुत्तरपदस्थस्य नित्यं सकारादेशो भवति कृ कमि कंस कुम्भ पात्र कुशा कर्णी इत्येतेषु परतः। कृ अयस्कारः। पयस्कारः। कमि अयस्कामः। पयस्कामः। कंस अयस्कंसः। पयस्कंसः। कुम्भ अयस्कुम्भः। पयस्कुम्भः। अयस्कुम्भी, पयस्कुम्भी इत्यत्र अपि भवति, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य अपि ग्रहणम् भवति इति। पात्र अयस्पात्रम्। पयस्पात्रम्। अयपात्री पयस्पात्री। कुशा अयस्कुशा। पयकुशा। कर्णी अयस्कर्णी। अपय्स्कर्णी। शुनस्कर्णः इत्ययं तु कस्कादिषु द्रष्टव्यः। अतः इति किम्? गोःकारः। धूःकारः। तपरकरणं किम्? भाःकरणम्। भास्करः इत्ययं तु कस्कादिषु द्रष्तव्यः। अनव्ययस्य इति किम्? श्वःकारः। पुनःकारः। समासे इत्येव, यशः करोति। पयः करोति। यशः कामयते। अनुत्तरपदस्थस्य इत्येव, परमपयःकारः। परमपयःकामः।

लघु-सिद्धान्त-कौमुदी

अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ७९८, ८।३।४६

आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु। यशस्करी विद्या। श्राद्धकरः। वचनकरः॥

न्यासः

अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। , ८।३।४६

"कुप्वोः क पौ च" ८।३।३७ इति प्राप्ते वचनमिदम्()। "अयस्कारः" इति। "कर्मण्यण" ३।२।१। एवं "अयस्कामः" इत्यत्रापि। "शीलिकामिभिक्ष्याचरिभ्यो णो वकतव्यः" (वा।२२९) इति त्वत्र न प्रवत्र्तते। तत्रोपसंख्याने ण्यन्तस्य कमेरुपादानात्(), इह त्वण्न्तस्य। यदा "आयादय आर्धधातुके वा" (३।१।३१) इति कमेर्णिङ्? नास्ति, तदा कमेरण्यन्तता। "अयस्कंसः" इति। षष्ठीसमासः। ननु कमेरेव "वृ()तृ()वदिहनिकमिकषिभ्यः सः" (द।उ।९।२९) इति से कृते कंस इति भवति, तत्र कमिग्रहणेनैव सिद्धत्वात्()। कंसग्रहणमनर्थकम्()? न; ज्ञापनार्थत्वात्()। एतदनेन ज्ञाप्यते--अस्तीदमपि दर्शनम्()--"उणादयोऽव्युत्पन्नानि। प्रापतिपदिकानि" (है।प।पा।१०३) इति,। "अयस्कुम्भः" इति। अयसो विकारः कुम्भ इति "समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च" (वा।८३) इति पध्यपदलोपी समासः। षष्ठीसमासो वा। "अय स्कुम्भी" इति। गौरादित्वाङ्ङीष्()। अयस्कुम्भवत्समासः। "अयस्पात्री" इति। पात्रशब्दः ष्ट्रन्प्रत्ययान्तः, "षिद्गौरादिभ्यश्च ४।१।४१ इति ङीष्()। "अयस्कुशा" इति। अयोदिकारोऽत्र न विवक्षितः। तेन जानपदाविसूत्रेण ४।१।४२ इति ङीष्()। "अयस्कुशा" इति। अयोदिकारोऽत्र न विवक्षितः। तेन जानपदादिसूत्रेण (४।१।४२) ङीष्? न भवति। अय इव कर्णावस्या इत्ययस्कर्णी, "नासिकोदर" ४।१।५५ इत्यादिना ङीव्()। ईकारान्तस्य कर्णशब्दस्य ग्रहणम्()। अतः शुनःकर्ण इत्यत्र सत्वेन त भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), निराकर्तुमाह--"शुनस्कर्ण इत्ययं तु" इत्यादि। "भाःकरणम्()" इति। ल्युडन्तेन समासः। यदि तर्हि तपरकरणं न क्रियेत भास करोतीति विवादिसूत्रेण (३।२।२१) टे कृते भास्कर इत्यत्रापि भवति? अत आह--"भास्कर इत्ययं तु" इत्यादि। सुबोधम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अधःशिरसी पदे ८।३।४७

अधस् शिरसित्येतयोः विसर्जनीयस्य समासे अनुत्तरपदस्थस्य सकारः आदेशो भवति पदशब्दे परतः। अधस्पदम्। शिरस्पदम्। अधस्पदी। शिरस्पदी। समासे इत्येव, अधः पदम्। अनुत्तरपदस्थस्य इत्येव, परमशिरःपदम्। अधस्पदम् इति मयूरव्यंसकादित्वात् समासः।

न्यासः

अधःशिरसी पदे। , ८।३।४७

"अथःशिरसो" इति। सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमा। "पदशब्दे परतः" इति एतेन पद इति स्वरूपस्य ग्रहणम्(); न पारिभाषिकस्येति दर्शयति। यदि हि पारिभाषिकस्य ग्रहणं स्यात्(), पदग्रहणमनर्थकं स्यात्()। समासाधिकारादेव तस्य लब्धत्वादित्यभिप्रायः। "शिरस्पदम्()" इति। षष्ठीसमासः॥

---

सूत्रम्

काशिका-वृत्तिः

कस्कादिषु च ८।३।४८

कस्क इत्येवम् आदिसु च विसर्जनीयस्य सकारः वा यथायोगमादेशो भवति कुप्वोः परतः। कस्कः। कौतस्कुतः। कुत आगतः इत्यण्। भ्रातुष्पुत्रः। शुनस्कर्णः। सद्यस्कालः। सद्यस्क्रीः। क्रीणातेरयं सम्पदादित्वात् क्विप् प्रत्ययः, तत्र भवः क्रतुः साद्यस्क्रः। कांस्कान्, कानाम्रेडिते ८।३।१२ इति रुत्वमत्र सर्पिष्कुण्डिका, धनुष्कपालम्, वर्हिष्पूलम्, यजुष्पात्रम्

इत्येषां पाठः उत्तरपदस्थस्य अपि षत्वं यथा स्यादिति। परमस्त्रिपःफलम् इत्येवम् आदि प्रत्युदाहरणातिति पारायणिका आहुः। भाष्ये वृत्तौ च नित्यं समासे ऽनुत्तरपदस्थस्य ८।३।४५ इत्यत्र प्रमसर्पिःकुण्दिका इत्येतदेव प्रत्युदाहरणम्। अयस्काण्डः। मेदस्पिण्डः। अविहितलक्षण उपचारः कस्कादिषु द्रष्टव्यः।

लघु-सिद्धान्त-कौमुदी

कस्कादिषु च ९८४, ८।३।४८

एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः। इति सः। व्यूढोरस्कः॥

न्यासः

कस्कादिषु च। , ८।३।४८

"कुत्वोः" ८।३।३७ इत्यस्यायमपवादः। "यथायोगम्()" इति। इणः परो यो विसर्जनीयस्तस्य षकारः, यस्त्वन्यस्तस्य सकार इत्येष यथायोगार्थः "कस्कः" इति। सौ परतः "किमः कः" ७।२।१०३ इति कादेशः, दीप्सायां द्विर्वचनम्()। "कौतस्कुतः" इति। "पञ्चम्यास्तसिल्()" ५।३।७, "कु तिहोः" ७।२।१०४ इति किमः स्थाने कुभावः, पूर्ववद्()द्विरुक्तिः, "तत आगतः" ४।३।७४ इत्यणि कृते "अव्ययानां भमात्र" (वा।८४२) इति टिलोपः। "भ्रातुष्पुत्रः" इति। यदा समासस्तदा "ऋतो विद्यायोनिसम्बन्धेभ्यः" ६।३।२२ इति षष्ठ()आ अलुक्()। "शुवस्कर्णः" इति। संज्ञायाम्()" ष्ठ()आ आक्रोशे" ६।३।२० इत्यलुक्()। असंज्ञायां तु समासे ()आकर्ण इत्येवं भवति। ननु च सर्पिष्कुण्डिकादीनां "नित्यं समासेऽनुत्तरपदस्थस्य" ८।३।४५ इत्येवं षकारः सिद्धः, तत्किपर्थमेषामिह पाठः? इत्यत आह--"एषाम्()" इत्यादि। पारायणेन दीव्यन्तीति पारायणिकाः "तेन दीव्यति"४।४।२ इती ठक्()। "भाव्ये वृत्तौ च" इति। अनुत्तरपदस्थस्येति किम्()? परमसर्पिःकुण्डिकेति भाष्ये वृत्तौ च प्रत्युदाह्रतम्(); अतस्तयोरिह पाठो नाभिमतोऽमीषामिति दर्शयति। "अविहितलक्षणः" इत्यादिना कस्कादेराकृतिगणतामाचष्टे। चकारोऽनुक्तसमुच्चयार्थो भवन्नेवमर्थं द्योतयति। विसर्जनीयस्थानिकयोः सकारषकारयोः "उपचारः" इत्येषा संज्ञा विहिता॥

बाल-मनोरमा

कस्कादिषु च १४३, ८।३।४८

कस्कादिषु च। "इण इत्यनुवर्तते। तच्च पञ्चम्यन्तम्। "विसर्जनीयस्य स" इत्यतो विसर्जनीयस्येत्यनुवर्तते। कस्कादिष्विति विषयसप्तमी। कस्कादिगणे इणः परस्य विसर्गस्य सत्वं स्यादित्यर्थः। सोऽपदादावित्यतः स इति प्रथमान्तमनुवर्तते। कस्कादिष्वनिणः परस्य विसर्गस्य सत्वं स्यादित्यर्थः। तदेवं वाक्यद्वयं सम्पद्यते। कस्कादिषु तथाविधानामेव कृतषत्वसत्वानां निर्देशादयं विषयविभागः। ><क><पयोरपवाद इति। ><क><पयोरित्युपलक्षणं कुप्वोरिति विहितविसर्गस्यापि। अन्यस्य तु स इति। प्रकृते विसर्गस्य इणः परत्वाऽभावान्न षत्वं, किन्तु सत्वमित्यर्थः। काँस्कानिति। अनुनासिकपक्षे रूपम्। कांस्कानिति। अनुस्वारपक्षे रूपम्। अथ कस्कादिगणं पठति--कस्क इत्यादिना। वाप्सायां द्वित्वे पूर्वखण्डेऽकारात्परस्य विसर्गस्य सत्वम्। "कः कोऽत्र भोः" इति प्रयोगे तु संहिताविरहात्सत्वाऽभावः, "कस्कादिषु चे"त्यस्य "तयोय्र्यावाचि संहिताया"मिति संहिताधिकारस्थात्वादित्याहुः। कोतस्कुत इति। वीप्सायां द्विर्वचने कुतः-कुत आगत इत्यर्थे तत आगत इत्यण्। "अव्ययानां भमात्रे टिलोपः"। अत व निपातना"दव्ययात्यवि"ति न। सर्पिष्कुण्डिकेति। अत्र इणः परत्वात्षत्वम्। एवं धुनिष्कपालं, चतुष्कपालमित्यत्रापि। ननु कस्कादिगणे कांस्कानित्यत्र सत्वसिद्धेः संपुङ्कानामित्यत्र कान्ग्रहणं न कर्तव्यमिति भावः।

तत्त्व-बोधिनी

कस्कादिषु च ११६, ८।३।४८

कस्कादिषु च। अत्र "सौपदादौ" इत्यतः स इति, "इणः षः" इति सूत्रं चानुवर्तते, तदाह-एष्विण उत्तकस्येत्यादि। कौतस्कुत इति। कुतः कुत आगत इत्यर्थे अव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादणित्याहुः। "अव्ययानां भमात्रे" इति वक्ष्यमाणेनाऽत्र टिलोपः। सर्पिष्कुण्टिकेति। "नित्यं समासे" इत्येव सिद्धे इह पाठस्य प्रयोजनमसमासे व्यपेक्षाविरहेऽपि षत्वार्थमित्यादि वक्ष्यति।

---

सूत्रम्

काशिका-वृत्तिः

छन्दसि वा ऽप्राऽम्रेडितयोः ८।३।४९

छन्दसि विषये विसर्जनीयस्य वा सकारादेशोः भवति कुप्वोः परतः, प्रशब्दम् आमेर्दितं च वर्जयित्वा। अयःपात्रम्, अयस्पात्रम्। विश्वतःपात्रम्, विश्वतस्पात्रम्। उरुणःकारः, उरुणस्कारः। अप्राम्रेडितयोः इति किम्? अग्निः प्रविद्वान्। परुषः परुषस्परि। सूर्यरश्मिर्हरिकेशः पुरस्तात्, स नः पावक इत्येवम् आदिषु सर्वे विषयश्छन्दसि विकल्प्यन्ते इति सत्वं न भवति।

न्यासः

छन्दसि वाऽप्राम्रेडितयोः।, ८।३।४९

"अयस्पात्रम्()" इति षष्ठीसमासे कृते "अतः कृकमि" ८।३।४६ इत्यादिना नित्ये षत्वे प्राप्तेऽनेन विकल्पो विधीयते। एवं "वि()आतस्पात्रम्()" इत्यादावपि यदि समासः, तदा प्राप्ते। "उरुणस्कारः" इत्यत्राप्यसमासत्वादेवा प्राप्ते। उरुशब्दात्? परस्यास्मच्छब्दस्य "बहुवचनस्य वस्नसौ" ८।१।२१ इति नसादेशः, "नश्च धातुस्थोरुषुभ्यः" ८।४।२६ इति णत्वम्()। अथेह "हरिकेशः पुरस्तात्()" (ऋवे।१०।१३९।१), स नः पावक (ऋ।वे।१।१२।१०) इत्यादौ च कस्मान्न भवति? इत्याह--"हरिकेश" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

कःकरत्करतिकृधिकृतेष्वनदितेः ८।३।५०

कः करत् करति कृधि कृत इत्येतेषु परतः अनदितेः विसर्जनीयस्य सकारादेशो भवति छन्दसि विषये। कः विश्वतस्कः। करत् विश्वतस्करत् करति पयस्करति। कृधि उरु णस्कृधि कृत सदस्कृतम्। अनदितेः इति किम्? यथा नो अदितिः करत्।

न्यासः

कः करत्करतिकृधिकृतेष्वनदितेः।, ८।३।५०

वेति निवृत्तम्()। "कर्()" इति। कृञो लुङः, च्लिः, तस्य "मदत्रे घस" २।४।८२ इत्यादिना लुक्(), तिप्(), गुणः रपरत्वम्(), हल्ङ्यादिना ६।१।६६ तिलोपः, रेफस्य विसर्जनीयः, "बहुलं छन्दस्यामाङ्योगेऽपि" ६।४।७५ इत्यडागमाभावः। "करत्()" इति। कृञो लङ, "कृमृदृरुहिभ्यश्छन्दसि" ३।१।५९ इत्यङ, "ऋदृशोरङि गुणः" ७।४।१६ इति गुणः, पूर्ववदडागमाभावः। अथ वा लटः शत्रादेशः, व्यत्ययेन शप्()। "करति" इति। लट्(), तिप्(), पूर्ववच्छप्()। "कृधि" इति। कृञो लोट्(), "सेह्रपिच्च" ३।४।८७ इति सिपो हिरादेशः, तस्य "श्रुशृणुपृ()कृवृभ्यश्छन्दसि" ६।४।१०२ इति धिभावः, "बहुलं छन्दसि" २।४।७३ इति विकरणलुक्()। "कृतम्()" इति। निष्ठान्तमेतत्()। "वि()आतस्कः" इति। "पञ्चभ्यास्तसिल्()" ५।३।७।

"उरुणस्कृधि" इति। पूर्ववन्नसादेशः, णत्वं च। "सदस्कृतम्()" इति। सदसि कृतमिति "सप्तमी" २।१।३९ इति योगविभागात्समासः॥

---

सूत्रम्

काशिका-वृत्तिः

पञ्चम्याः परावध्यर्थे ८।३।५१

छन्दसि इत्येव। पञ्चमीविसर्जनीयस्य सकारादेशो भवति परौ परतः अध्यर्थे। दिवस्परि प्रथमं जज्ञे। अग्निर्हिमवतस्परि। दिवस्परि। नहस्परि। पञ्चमाः इति किम्? अहिरिव भोगैः पर्येति बाहुम्। परौ इति किम्? एभ्यो वा एतल् लोकेभ्यः प्रजापतिः समैरयत्। अध्यथे इति किम्? दिवस्पृथिव्याः पर्येज उद्भृतम्। अत्र परिः सर्वतोभावे, अध्यर्थः उपरिभावः।

न्यासः

पञ्चम्याः परहावध्यर्थे।, ८।३।५१

"अध्यर्थम्()" इति। परेरिदं विशेषणम्()। "हिमवतस्परि" इति। हिमवत उपरीत्यर्थः। पञ्चमी च सुब्ब्यत्ययेन षष्ठ्याः स्थाने वेदितव्या। "दिवः पृथिव्याः" इत्यादि। सर्वतोभावे परिशब्दोऽत्र वर्तते॥

---

सूत्रम्

काशिका-वृत्तिः

पातौ च बहुलम् ८।३।५२

पातौ च धातौ परतः पञ्चमीविसर्जनीयस्य बहुलं सकारादेशः भवति छन्दसि विसये। दिवस्पातु। राज्ञस्पातु। न च भवति। परिषदः पातु।

न्यासः

पातौ च बहुलम्?।, ८।३।५२

"दिवस्पातु" इति। पातेर्लोट्(), तिप्(), "एरुः" ३।४।८६ इत्युत्वम्(), अदादित्वाच्छपो लुक्()॥

---

सूत्रम्

काशिका-वृत्तिः

षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ८।३।५३

षष्थीविसर्जनीयस्य सकारादेशो भवति पति पुत्र पृष्ठ पार पद पयस् पोष इत्येतेषु परतः छन्दसि विषये। वाचस्पतिं विश्वकर्माणमूतये। पुत्र दिवस्पुत्राय सूर्याय। पृष्ठ दिवस्पृष्ठे धावमानं सुपर्नम्। पार अगन्म तमसस्पारम्। पद इलस्पदे समिध्यसे। पयस् सूर्यं चक्षुर्दिवस्पयः। पोष रायस्पोषं यजमानेषु धारय। षष्ठ्याः इति किम्? मनुः पुत्रेभ्यो दायं व्यभजत्।

न्यासः

षाष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु।, ८।३।५३

"वाचस्पतिम्()" इति। "तत्पुरुषे कृति बहुलम्()" ६।३।१३ इति बहुलवचनादकृत्यपयलुक्()॥

---

सूत्रम्

काशिका-वृत्तिः

इडाया वा ८।३।५४

इडायाः षष्थीविसर्जनीयस्य वा सकार आदेशो भवति पत्यादिषु परतः छन्दसि विषये। इडायस्पतिः, इडायाः पतिः। इडायासुपुत्रः , इडायाः पुत्रः। इडायास्पृष्ठम्, इडायाः पृष्ठम्। इडायास्पारम्, इडायाः पारम्। इडायस्पदम्, इडायाः पदन्। इडायास्पयः, इदायाः पयः। इडायास्पोषम्, इडायाः पोषम्।

न्यासः

इडाया वा। , ८।३।५४

पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्()। यद्येवम्(), वेत्यनर्थकम्(), आरम्भसामथ्र्यादेव विकल्पेनायं विधिर्विज्ञास्यते? नैतत्(); असति वाग्रहणे पूर्वो विधिर्बहुलं विज्ञायेत; बहुलग्रहणस्य प्रकृतत्वात्()। इह तु वाग्रहणे पूर्वो विधिर्नित्यो विज्ञायेतेति नानर्थकम्()॥

---

सूत्रम्

काशिका-वृत्तिः

अपदान्तस्य मूर्धन्यः ८।३।५५

पदाधिकारो निवृत्तः। अपदान्तस्य इति, मूर्धन्यः इति चैतदधिकृतम् वेदितव्यम् आपादपरिसमाप्तेः। वक्ष्यति आदेशप्रत्यययोः ८।३।५९। सिषेव। षुष्वाप। अग्निषु। वायुषु। अपदान्तस्य इति किम्? अग्निस्तत्र। वायुस्तत्र। षः इत्येवं सिद्धे मूर्धन्यग्रहणं ढकारार्थम्। अकृढ्वम्। चकृढ्वे।

न्यासः

अपदान्तस्य मूर्धन्यः। , ८।३।५५

मूर्धनि भवो मूर्धन्यः--"शरीरावयवाद्यत्()" ४।३।५५, "ये चाभावकर्मणोः" ६।४।१६८ इति प्रकृतिवद्भावः। "सिषेच", इति। "षिचिर्? क्षरणे" (धा।पा।१४३४), "ञिष्वप्? शये" (धा।पा।१०६८), "धात्वादेः षः सः" ९६।१।६४) इति सत्वम्(), लिट्(), तिप्(), णल्()। स्वपेः "लिट()भ्यासस्योभयेषाम्()" ६।१।१७ इति सम्प्रसारणम्()। अथ श्र्ूर्थन्यग्रहणं किमर्थम्(), न ष इत्येवोचयेत, षकारेऽपि कृते सिषेचेत्यादि सिध्यति, लघधु च सूत्रं भवति? इत्वाह--"ष इत्येवं सिद्धे" इति। यदि ष इत्येवोच्येत अकृढवम्(), चकृढ्वे इत्यत्रापि "इणः षीध्वं लुङ्? लिटां धोऽङ्गात्()" (८।३।७८) इति षत्वं प्रसज्येत? ढत्वं चेष्यते, तच्च मूर्धन्यग्रहणे सति सिध्यत्येव। अत्र हि सत्यान्तरतम्()यान्नादानुप्रदानस्य घोषवतो महाप्राणस्य घकारस्य तादृशो ढकारो भवति। यदि पुनः "इणः षीध्वम्()" इति सूत्रे ढग्रहणं क्रियते, तदा शक्यत इह सूत्रे मूर्धन्यग्रहणमकर्तुम्()। तथा च ढग्रहणं न कृतं वैचित्र्यार्थम्()। ननु च क्रियामाणेन ढग्रहणेन षकारस्य व्यवच्छिन्नत्वादत उत्तरेषु षग्रहणं कत्र्तव्यं जायेत। जायतां नाम, तथापि मूर्धम्यग्रहणात्? स्वरूपग्रहणमेव लाघवं भवति। स्वरूपग्रहणे हि षण्मात्रा भवन्ति--इह "ष" इत्युक्ते द्वे मात्रे उत्तरसूत्रे "ढ" इल्युक्ते द्वे, उत्तरत्र "ष इत्युक्ते द्वे। ताः सर्वाः सङ्कलिताः षण्मात्रा भवन्ति। मूर्धन्यग्रहणे सति सप्त। तस्मात्? स्वरूपग्रहणे सति लाघवं भवति। यदि तु सन्तावपि षकारढकारी प्रकृतौ, तथापि षकारस्य स्वरितत्वात्? स्यैषानुवृत्तिरिति कल्प्यते, तदा सुतरां स्वरूपग्रहणे ललाघवं भवति। "अकृढवम्()" इति। "ह्रस्वादङ्गात्()" ८।२।२७ इति सिचो लोप-। अथान्तग्रहणहणं किमर्थम्()? "अपदस्य मूर्धन्यः" इत्युच्यमानेऽपदस्य यः सकारस्तस्य मूर्धन्यो विज्ञायेत। तथा च करिष्यतीत्यादौ न स्यात्(); पदसकारत्वात्()। क्व तर्हि

स्यात्()? करिष्यतेत्यादौ यत्र पदसंज्ञा नास्ति। अत्र हि भसंज्ञा पदसंज्ञां बाधेत। तस्मादन्तग्रहणं क्रियते॥

बाल-मनोरमा

अपदान्तस्य मूर्धन्यः २०८, ८।३।५५

रामे--सु" इति स्थिते। आदेशप्रत्यययोरिति षत्वं विधास्यन्नाह-अपदान्तस्य। मूर्धन्यः=मूर्धस्थानकः। अष्टमाध्यायस्य तृतीयापादे मध्यत इदं सूत्रं पठितम्। इत आरभ्यैतत्पादसमाप्तिपर्यन्तमिदमधिक्रियत इत्यर्थः।

तत्त्व-बोधिनी

अपदान्तस्य मूर्धन्यः १७५, ८।३।५५

अपदान्तस्य। "ष" इत्येव सिद्धे मूर्धन्यग्रहणम् "इणः षीध्व"मिति ढत्वार्थम्। चकृढ्वे। अकृढ्वम्।

---

सूत्रम्

काशिका-वृत्तिः

सहेः साडः सः ८।३।५६

सहेर् धातोः साड्रूपस्य यः सकारः तस्य मूर्धन्यः आदेशो भवति। जलाषाट्। तुराषाट्। पृतनाषाट्। सहेः इति किम्? सह डेन वर्तते सडः, तस्य अपत्यं सादिः। साड्ग्रहणं किम्? यत्रास्य एतद् रूपं तत्र यथा स्यात्, इह मा भूत् जलासाहम्। तुरासाहम्। सः इति किम्? आकारस्य मा भूत्।

लघु-सिद्धान्त-कौमुदी

सहेः साडः सः २६४, ८।३।५६

साडरूपस्य सहेः सस्य मूर्धन्यादेशः। तुराषाट्, तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि॥

न्यासः

सहेः साडः सः। , ८।३।५६

"साड()पस्य" इति। साडित्येतद्रूपमापन्नस्येत्यर्थः। "जलाषाट्()" इति। जलं सहत इति "भजो ण्विः" ३।२।६२ इत्यनुवर्त्तमाने "छन्दसि सहः" ३।२।६३ इति ण्विः, "अत उपधायाः" ७।२।११६ इति वृद्धिः, "हो ढः" ८।२।३१ इति ढत्वम्(), तस्य जश्त्वम्--डकारः, "अन्येषामपि दृश्यते" ६।३।१३६ इति दीर्घः। सकारस्योष्मणो घोषवत आन्तरतम्यात्? तादृश एव षकारः। "सह डेन" इत्यादि। डीङः "सप्तम्यां जनेर्डः" ३।२।९७ इत्यनुवर्त्तमाने "अन्येष्वपि दृश्यते" ३।२।१०१ इति डप्रत्ययः; अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात्()। सह डेन वर्त्तत इति "तेन सहेति तुल्ययोगे" २।२।२८ इति बहुव्रीहिः, "वोपसर्जनस्य" ६।३।८१ इति सहशब्दस्य सभावः, सडस्यापत्यमिति अत इञि ४।१।९५ "यस्येति च" ६।४।१४८ इत्यकारलोपः, आदिवृद्धौ च साडिरित्येतद्रूपं भवतीति, असति सहेरित्येतस्मिन्? मूर्धन्यः प्रसज्येत। "अचः परस्मिन्? पूर्वविधौ" (१।१।५७) इत्यकारस्य स्थानिवत्त्वान्नास्ति साडित्येतत्तद्रूपमिति चेत्()? न; "पूर्वत्रासिद्धे न स्थानिवत्()" (जै।प।वृ।४८) इति स्थानिवद्भावनिषेधात्()। नन्वेवमपि नैवात्र साडित्येतद्रूपमस्ति? षत्वे कत्र्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्व#आत्()। इहापि तर्हि न स्यात्()--जलाषाडिति? षत्वे कत्र्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्वादेव; सा ह्यङ्गमाश्रित्य भवति, अङ्गसंज्ञा च प्रत्यये सति, प्रत्ययो ह्नु पपदाश्रय इति व्यक्तमुपधावृद्धेर्वहिरङ्गत्वम्()। षत्वं त्वन्तरङ्गं साड्भूतस्य विधीयत इति "असिद्धं बहिरङ्गमन्तरङ्गे" (व्या।प।४२) इत्यसिद्धत्वात्? षत्वं न भविष्यतीति वचनमिदमनर्थकं स्यात्()। तस्मान्मा भूद्वचनस्य वैयथ्र्यमिति नैयं परिभाषोपतिष्ठते। "तुरासाहम्()" इति।

द्वितदीयैकवचनान्तमेतत्()। क्वचित्? "जलासाहम्()" इति पाठः, स त्वयुक्तः; इष्टत्वादिह षत्वस्य। तथा च वक्ष्यति--८।३।११० "सवनादिष्व()आसनिग्रहणमनिणोऽपि षत्वं भवतीति ज्ञापनार्थम्()। तेन जलाषाहम्()। अ()आषाहमित्येतत्? सिद्धं भवति" इति। "स इति किम्()" इति। एवं मन्यते--अलोऽन्त्यपरिभाषया १।१।५१ अन्तस्य तावङ्डकारेण भवितव्यम्(), अन्तस्य भवन्नान्तरतम्याडुकारः स्यात्(), एतच्चायुक्तम्(); डकारस्य डकारविधाने प्रयोजनाभावात्()। तस्मादन्तरेणापि सग्रहणं सकारस्यैव भविष्यति। इतरस्तु "स" इत्येतस्मिन्नसति "अनन्त्यविकारेऽन्त्यसदेशस्य" (व्या।प।६३) इत्याकारस्य द्विमात्रिकस्यान्तरतम्यात्? तादृश ऋकारो मूर्धन्यः स्यादित्यनेनाभिप्रायेणाअह--"आकारस्य मा भूत्()" इति॥

बाल-मनोरमा

सहेः साडः सः , ८।३।५६

अत तुरासाह्()शब्दात्सोह्ल्यल्ङ्यादिलोपे हस्य ढत्वे कृते विशेषमाह--सहे) साडः सः। "इक्()श्तिपौ धातुनिर्देशे" इति "षह मर्षणे" इति धातोरिक्()प्रत्यये "धात्वादेः षः सः" इति षस्य सत्वे सहिशब्दः। षह्धातोरित्यर्थः। साडिति कृतढत्वडत्ववृद्धेरनुकरणं। तदाह--साड()पस्येति। मूर्धन्येति। "अपदान्तस्य मूर्धन्यः" इति तदधिकारादिति भावः। मूर्धनि भवः--मूर्धन्यः। मूर्धस्थानक इत्यर्थः। तुराषट् तुराषाडिति। सुलोपे ढत्वे जश्त्वेन डत्वे सस्य मूर्धन्यः षकारः, विवृतप्रयत्नसाम्यात्। "वाऽवासाने" इति चत्र्वपक्षेऽपि मूर्धन्यो भवत्येव, सूत्रे "साड" इति कृतजश्त्वनिर्देशस्य पदान्तोपलक्षणत्वादिति भावः। तुरासाहाविति। अपदान्तत्वान्न मूर्धन्य इति भावः। इत्यादीति। तुराषाड्भिः। तुराषाड्भ्यः। तुरासाहे। तुरासाहः। तुरासाहः। तुरासाहोः। तुराषाट्सु-तुराषाट्त्सु। अथ तुराषाट्शब्दं व्युत्पादयति--तुरं सहते इत्यर्थे छन्दसि सह इतीति। कर्मण्युपपदे सहेर्ण्विः स्याच्छन्दसीति तदर्थः। णकार इत्, उपदावृद्धिः, अपृक्तलोपः। ननु ण्विप्रत्ययस्य छन्दोविषयत्वेन तुरासाह्शब्दस्य कथं लोके प्रयोग इत्यत आह--लोके त्विति। सहेर्ण्यन्तात्क्विपि णिलोपेऽपृक्तलोपे च सति लोके प्रयोज्य इति भावः। ननु "नहिवृत्तिवृषिव्यधिरुआआवसाहतनिषु क्वौ" इति हि सहौ क्विबन्ते पर एव पूर्वपदस्य विहितो दीर्घः कथमिह स्यादित्यत आह--अन्येषामपीति। सहेः किम्?। डकारेण सहितः सडः=मृडादिशब्दः, स यस्य नाम सोष()पि लक्षणया सडः। तस्यापत्यम्। [साडिः]। अत इञ्। "यस्येति चे"त्यकारलोपः। आदिवृद्धिः। साडिरिति रूपम्। अत्र न मूर्धन्य इति भाष्ये स्थितम्। इति हन्ताः। अथ वकारान्ताः। दिव्शब्दः स्त्रीलिङ्गः। "द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बर"मित्यमरः। सु=शोभना द्यौर्यस्येति बहुव्रीहौ पुंसि सुदिव स् इति स्थिते-।

तत्त्व-बोधिनी

सहेः साडः सः २९५, ८।३।५६

सहेः साडः सः। सहेपिति किम्()। सह डेन वर्तते सडः। यस्य नाम्नि "ड"शब्देऽस्ति। यथा "मृड"इति। सडस्यापत्यं साडिः। इति हान्ताः।

---

सूत्रम्

काशिका-वृत्तिः

इण्कोः ८।३।५७

इण्कोः इत्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद् वक्ष्यामः, इणः कवर्गाच् च इत्येवं तद् वेदितव्यम्। वक्ष्यति आदेशप्रत्यययोः ८।३।५९। सिषेव। सुष्वाप। अग्निषु। वायुषु। कर्तृषु। हर्तृषु। गीर्षु। धूर्षु। वाक्षु। त्वक्षु। इण्कोः इति किम्? दास्यति। असौ।

न्यासः

इण्कोः। , ८।३।५७

"इण्कोः" इति द्वन्द्वैकवद्भावं कृत्वैकवचनेन निर्देशः। नुमागमस्तु सत्यपि नपुंसकत्वे "अनित्यमागमशासनम्()" (व्या।प।९९) इति न क्रियते। इणिति परेण णकारेण प्रत्याहारग्रहणम्()। "कु" इति कवर्गस्य। कुतः पुतरेत दवसितम्()--अनयोग्र्रहणम्(), न पुनरिकारककारोकाराणामिति? व्याख्यानात्()। सर्वसन्देहेष्विदमुपतिष्ठते--भवति हि व्याच्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति (व्या।प।७५)। "वाक्षु, त्वक्षु" इति। "चोः कुः" ८।२।३० इति कुत्वम्()। "दास्यति" इति। कथं पुनरिवं प्रत्युदाहरणमुपपद्यते, यावता "अणुदित्सवर्णस्य चाप्रत्ययः" १।१।६८ इत्यत्र हकारेण गृह्यमाणेन आकारो गृह्यत इति; अस्ति ह्नकारस्य हकारेण सह सवर्णत्वम्(); तुल्यस्थानप्रयत्नत्वात्(); स्थानमस्ति ह्नयोस्तुल्यमिति "अकुहविसर्जनीयाः कण्ठ्याः" इति। प्रयत्नोऽपि तुल्यः--विवृतं करणमूष्मणाअं स्वराणाञ्चेति; तस्मात्? सत्यपीण्कोरिति प्राप्नोत्येव मूर्धन्यः; "नाज्झलौ" १।१।६८ इत्यत्र हकारेण गृह्यमाणेन आकारो गृह्यत इति; अस्ति ह्नकारस्य हकारेण सह सवर्णत्वम्(); तुल्यस्थानप्रयत्नत्वात्(); स्थानमस्ति ह्नयोस्तुल्यमिति "अकुहविसर्जनीयाः कण्ठ्याः" इति। प्रयत्नोऽपि तुल्यः--विवृतं करणमूष्मणां स्वराणाञ्चेत्(); तस्मात्? सत्यपीण्कोरिति प्राप्नोत्येव मूर्धन्यः; "नाज्झलौ" १।१।१० इति सवर्णसंज्ञाप्रतिषेणादिति चेत्(); न;[अयं भागा कां३।पाठे नास्ति] अगुहीतसवर्णानां प्रतिवेधात्()यं भागः कां३।पाठे नास्ति]? नैष दोषः; यदयं "वयस्यासु मूध्र्नो मतुप्()" ४।४।१२६ इतयत्राकारादुत्तरस्य सकारस्य मूर्घन्यमकृत्वा निर्देशं करोति, ततोऽवसीयते--मूध्र्नो मतुप्()" ४।४।१२६ इत्यत्राकारादुत्तरस्य सकारस्य मूर्धन्यमकृत्वा निर्देशं करोति, ततोऽवसीयते--हकारो गृह्यमाणो नाकारं ग्राहयति; अन्यथा "वयस्यासु" इति निर्देशं न कुर्यात्()। "असौ" इति। "तदोः सः सावनन्त्ययोः" ७।२।१०६ इति दकारस्य सकारः, "अदस औ सुलोपश्च" ७।२।१०७ इत्यौत्वं सुलोपश्च॥

बाल-मनोरमा

इण्कोः २०९, ८।३।५७

इण्कोः। इत्यधिकृत्येति। उत्तरत्रव विधिष्वनुवर्तत इति भावः। इण् च कुश्चेति समाहारद्वन्द्वः। पुंस्त्वमार्षम्। इतरेतरयोगद्वन्द्वेत्वेकवचनमार्षम्। "इ" णिति परणकारेण प्रत्याहारः। कुः=कवर्गः।

तत्त्व-बोधिनी

इण्कोः १७६, ८।३।५७

इण्कोः। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। कोः किम्?। गवाक्षु। गवाङ्षु।

---

सूत्रम्

काशिका-वृत्तिः

नम्विसर्जनीयशर्व्यवाये ऽपि ८।३।५८

नुंव्यवाये ऽपि विसर्जनीयव्यवाये ऽपि शर्व्यवाये ऽपि उत्तरस्य सकारस्य मूर्धन्यादेशो भवति। व्यवायशब्दः प्रत्येकम् अभिसम्बध्यते। नुंव्यवाये तावत् सर्पिंषि। यजूंषि हवींषि विसर्जनीयव्यवाये सर्पिःषु। यजुःषु। हविःषु। शर्व्यवाये सर्पिष्षु। यजुष्षु। हविष्षु। नुमादिभिः प्रत्येकं व्यवाये। षत्वमिष्यते, न समस्तैः। तेन इह न भवति, निंस्से, निंस्स्वः इति। णिसि चुम्बने इत्येतस्य एतद् रूपम्। अत्र हि नुमा, सकारेण शरा च व्यवधानम्।

लघु-सिद्धान्त-कौमुदी

नुम्विसर्जनीयशर्व्यवायेऽपि ३५४, ८।३।५८

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः। ष्टुत्वेन पूर्वस्य षः। पिपठीष्षु, पिपठीःषु॥ चिकीः। चिकीर्षौ। चिकीर्भ्याम्। चिकीर्षु॥ विद्वान्। विद्वांसौ। हे विद्वन्॥ ,

न्यासः

नुम्विसर्जनीयशव्र्यवायेऽपि। , ८।३।५८

इण्कोरिति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यान्तर्यार्थत्वाद्व्यवये सति पूर्वेण न प्राप्नोतीत्यस्यारम्भः। इष्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति। एवं नुम्व्यवाये, विसरजनीयव्यवाये, शव्र्यवाये। "अपि" इत्येभिः प्रत्येकमभिसम्बध्यते, तेन त्रीणि वाक्यानि सम्पद्यन्ते। वाक्यत्रयस्य प्रयोजनं दर्शयिष्यामः नुम्ग्रहणं नुम्स्थानिकस्यानुस्वारस्योपलक्षणं द्रष्टव्यम्()। न हि नुमा क्यचिद्व्यवायोऽस्ति; सर्वत्र "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारविधानात्()। "सर्पींषि" इति। "नपुंसकस्य झलचः" ७।१।७२ इति नुम्(), "सान्तमहतः संयोगस्य" ६।४।१० इति दीर्घः। "सर्पिःषु" इति। "दा शरि" ८।३।३६ इति विसर्जतीयः। "सर्पिष्षु" इति। वाग्रहणाद्विसर्जनीयमुन्ते "विसर्जनीयस्य सः" ८।३।३४ इति पक्षे विसर्जनीयस्य सकारः, परस्य सकारस्य षत्वे कृते पूर्वस्य ८।४।४० ष्टुत्वम्()। अथेह कस्मान्न भवति--निस्से, निंस्स्वेति? अत आह--"नुमादिभिः" इत्यादि। एतच्च प्रत्येकं हि वाक्यपरिसमाप्तौ लभ्यते! प्रत्येक हि वाक्यपरिसमाप्तौ त्रीणि वाक्यानि भवन्ति--नुमा व्यवायेऽपीण्कोरुत्तरस्य मूर्धन्यो भवति, एवमन्यत्रापि। "नुम्विसर्जनीयशव्र्यवायेऽपि" इत्येतद्ग्रहणकवाक्यं तेषामेव निबन्धनम्()। तत्रैकेन वाक्येन नुमा व्यवाये मूर्धन्यो विधीयते, द्वितीयेन तु विसर्जनीयव्यवाये, तृतीयेन च शर्भिरिति। तेनेह न भवति--नुमा विसर्जनीयदिसहितेन मूर्धन्यः। "निंस्से" इति। "णिसि चुम्बने" (धा।पा।१०२५), इदित्त्वान्नुम्(), लट्(), थास्(), "थासः से" ३।४।८०, अदादित्वाच्छयो लुक्()। "निंस्स्वा" इति। लोट्(), टेरेत्त्वम्(), "सवाभ्यां वामौ" ३।४।९१ इत्येकारस्य वकारः। अथापिशब्दः किमर्थः? अव्यवायेऽपि यता स्यादिति चेत्()? नैतदस्ति; सिद्धं ह्रन्यवाये पूर्वेणैव, सिद्धे सत्यरम्भो नियमार्थो विज्ञायेत--नुमादिव्यवाय एव। तथा च सति नुमादिभिरव्यवहितादिण्कोर्न स्यात्()? नैतदस्ति; यदि हि नुमादिभिव्र्यवाये मूर्धन्योऽभिमतः स्यात्(), "इण्कोर्नुभ्विसर्जनीयशव्र्यवाये" इत्येकमेव योगं कुर्यात्(), कृतवांश्च, तस्माद्योगविभागकरणसामथ्र्यात्? पूर्वोऽव्यवायार्थो विज्ञास्यते, नार्थोऽपिशब्देन। यस्य तर्हि एवमर्थमवगच्छतः प्रतिपत्तिगौरवं भवति तं प्रति तत्परीहारार्थोऽपिशब्दः। सकरग्रहण एव कत्र्तव्ये शरिति प्रत्याहारग्रहणं वैचित्र्यार्थम्()। न हि शकारवकाराभ्यां निमित्तकार्यिणोव्र्यवधानमस्ति॥

बाल-मनोरमा

नुम्विसर्जनीयशव्र्यवायेऽपि , ८।३।५८

नुम्विसर्जनीय। "इण्को"रिति , "मूर्धन्यः" इति चानुवर्तते। तदाह--एतैः प्रत्येकमित्यादिना। अत्र प्रत्येकमेव नुमादिभिव्र्यवधानं विवक्षितं, न तु अटं कुप्वा"ङितिवद्यथासंभवं व्यवधानमिति भाष्ये स्पष्टम्। ततश्च प्रकृते विसर्जनीयपक्षे तेन व्यवधानेऽपि षत्वमिति भावः। विसर्जनीयस्य सत्वपक्षे आह--ष्टुत्वेनेति। पिपठीस्-सु इति स्थिते प्रथमसकारेण शरा व्यवायमाश्रित्य ईकारादिणः परत्वाद्द्वितीयसकारस्य षत्वे सति पूर्वस्य सकारस्य ष्टुत्वेन षकारः, नतु "आदेशप्रत्यययोः" इति षः, तत्र अपदान्तस्य इत्यनुवृत्तेरिति भावः। एवं च "नुम्शर्()व्यवायेऽपी"त्येव सिद्धे विसर्जनीयग्रहणं व्यर्थमित्याहुः। अयोगवाहानां शश्र्वपि पाठादिह विसर्जनीयग्रहणं भाष्ये प्रत्याख्यातम्। निंस्स्वेति। "णिसि चुम्बने" लुग्विकरणः। "णो नः" इति णस्य नः, इदत्त्वान्नुम्। अनुदात्तेत्त्वादात्मनेपदम्। लोण्मध्यमपुरुषैकवचनं थास्, "थासः से," "सवाभ्यां वामौ"इत्येकारस्य वत्वम्। निन्()स्स्व इति स्थिते "नश्चापदान्तस्ये"त्यनुस्वारे निंस्स्वेति

रूपम्। अत्र यथासंभवं व्यवधानाश्रयणे तु नुम्स्थानिकानुस्वारेण सकारेण च व्यवहितस्य द्वितीयसकारस्य षत्वं स्यादतः प्रत्येकं व्यवधानमाश्रितमिति भावः। निंस्से इति। उक्तधातोर्लण्मध्यमपुरुषैकवचनं थास्। तस्य "थासः से" इति सेआदेशः। "निंस्से" इत्यत्रापि द्वितीयसकारस्य षत्वं न भवति, प्रत्येकमेव व्यवधानाश्रयणादिति भावः। "हिसि हिंसायाम्" सुपूर्वादस्मात्, क्विप्, इदित्त्वान्नुम्, ततः सप्तमीबहुवचने सुहिन्स्सु इति स्थिते प्रथमसकारस्य संयोगान्तलोपे "सुहिन्सु" इति रूपम्। "स्वादिषु" इति पदान्तत्वात् "नश्चापदान्तस्य " इत्यनुस्वारो न। किं च पुम्शब्दात् सप्तमीबहुवचने पुंस्सु इति स्थिते प्रथमसकारस्य संयोगान्तलोपे पुंसु #इति रूपम्। तत्र सुहिन्सु इत्यत्र नुमा व्यवधानात्षत्वं स्यात्। नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वे पुंसु इत्यत्र षत्वं स्यादित्यत आह--नुम्ग्रहणमिति। व्याख्यानादिति। प्रकृतसूत्रे, "हयवरट्" सूत्रे च भाष्ये तथा व्याख्यानादित्यर्थः। नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थमित्येतत्सूत्राक्षरानुगतमित्याह--अत एवेति। नुम्ग्रहणस्य नुम्स्थानिकानुस्वारोपलक्षणार्थत्वादेव शग्ग्रहणेनैव सिद्धत्वात्तद्ग्रहणमनर्थकं स्यात्, अनुस्वारस्य शर्ष्वपि पाठादिति भावः। चिकीरिति। कृधातोः सनि "इको झल्" इति कित्त्वादृकारस्य गुणाऽभावे "अज्झनगमां सनी"ति दीर्घः। ततः "ऋ इद्धातोः" इति इत्वम्, "हलि चे"ति दीर्घः। ततः "सन्यङो"रिति द्वित्वम्। "हलादिः शेषः" "ह्रस्वः"। "कुहोश्चुः" इत्यभ्यासककारस्य चुत्वं, सस्य षत्वम्। चिकीर्ष इति रूपम्। "सनाद्यन्ताः" इति धातुत्वात्ततः क्विप्। "अतो लोपः"। चिकीर्ष इत्यस्मात्षकारान्तात्सुबुत्पत्तौ सोर्हल्ङ्यादिलोपे चिकीर्ष इति स्थितम्। एतावत् सिद्धवत्कृत्य "रात्सस्ये"ति नियमात्षकारस्य संयोगन्तलोपाऽभावमाहक्य आह--रात्सस्येति। षत्वस्याऽसिद्धत्वादिति भावः। एवं चिकीर्भ्यामित्याद्यूह्रम्। विसर्गमाशङ्क्य आह--रोः सुपीति। प्रकृते रपरत्वसम्पन्नस्य रस्य रुत्वाऽभावादिति भावः। दमेर्डोसिति। औणादिकमेतत्सूत्रम्। "दमु उपशमे" इत्येतस्माद्धातोर्डोस्प्रत्ययः स्यादित्यर्थः। डकार इत्। डित्त्वसामर्थायादिति। "टेः" इति भस्य विहितष्टिलोप इह भत्वाऽभावेऽपि डित्त्वसामथ्र्याद्भवतीत्यर्थः। सकारस्य प्रत्ययावयवत्वात्षत्वं, दोषिति षकारान्तं रूपम्। ततः सोर्हल्यङ्यादिलोपः। एतावत्सिद्धवत्कृत्य- आह--षत्वस्यासिद्धत्वादिति। षत्वस्याऽसिद्धत्वाद्रुत्वे सति विसर्गः। वा दोषन्निति। "शसादा"विति शेषः।

दोष्ण इति। शसि दोषन्नादेशे "अल्लोपोऽनः" इत्यकारलोपे "रषाभ्या"मिति णत्वमिति भावः। दोःषु दोष्षु। विविक्षशब्दं व्युत्पादयति--विशोत। सन्नन्तादिति। वेष्टुमिच्छतीति विग्रहे विशेः सन्। "हलन्ताच्च" इति सनः कित्त्वान्न लघूपधगुणः। "सन्यङो" इति द्वित्वम्। "हलादि शेषः"। शकारस्य झल्परकत्वात् "व्रश्चे"ति षः। "षढो कः कः सी"ति षस्य कः। प्रत्ययावयवत्वात्सस्य षत्वम्। "सनाद्यन्ताः" इति धातुत्वत्क्विप्। "अतो लोपः" विविक्ष् इति षकारान्तं रूपमित्यर्थः। कत्वस्येति। विविक्षित्यस्मात्सोर्हल्ङ्यादिलोपे षकारस्य संयोगान्तलोपः। "स्कोः" इति ककारलोपस्तु न शङ्क्यः, संयोगादिलोपे कर्तव्ये "षढोः तः सी"ति कत्वस्याऽसिद्धत्वादित्यर्थः। व्रश्चेति ष इति। संयोगान्तलोपे सति सकारस्य निमित्तस्य निवृत्त्या कत्वस्यापि निवृत्तौ, झल्परत्वनिवृत्त्या पूर्वप्रवृत्तषत्वस्यापि निवृत्तौ, पदान्तत्वात् "व्रश्चे"ति शस्य ष इत्यर्थः। जश्त्वचर्त्वे इति। षस्य जश्त्वेन डः, तस्य चत्र्वविकल्प इत्यर्थः। सक्रोरिति। "तक्षू तनूकरणे" अस्मात् क्विप्। ततस्सोर्हल्ङ्यादिलोपे "स्कोः" इति कलोपे षस्य जश्त्वेन डः, तस्य चत्र्वविकल्प इत्यर्थः। तड्ङ्याम्। तट्त्सु-तट् सु। गोडिति। "रक्ष पालने" इत्यस्मात् कर्मण्युपपदेऽणि प्राप्ते, वाऽसरूपन्यायेन क्विपि सुबुत्पत्तौ तक्ष्()शब्दवद्रूपम्। तक्षिरक्षिभ्यामिति। इका निर्देशोऽयम्। तक्ष् रक्ष इति धातुभ्यां "हेतुमति चे"ति णिच, चकार इत्। "चुटू" इति णकार इत्। ततः "सनाद्यन्ताः" इति धातुत्वात् क्विपि "णेरनिटी"ति णिलोपे, क्विपि लुप्ते, तक्ष्, रक्षिति षकारान्ते रूपे। ततः सुलोपे सति संयोगान्तलोपापवादः "स्कोः संयोगाद्योः" इति ककारस्य जश्त्वचर्त्वे इत्यभिप्रेत्य आह--तक्()तग्(), गोरक्()गोरगिति। "डु पचष् पाके" अस्मात् सनि "सन्यङोः" इति द्वित्वम्। "हलादि शेषः"। "सन्यतः" इत्यभ्यासाऽकारस्य इत्त्वम्। "चोः कुः" इति चकारस्य कुत्वम्। प्रत्ययावयवत्वात्सस्य षः। पिपक्ष् इति रूपम्। ततः

सोर्लोपः "स्कोः" इति ककारस्य लोपमाशङ्क्य आह--कुत्वस्यासिद्धत्वादिति। "चकारस्थानिकस्ये"ति शेषः। सति च षकारस्य संयोगान्तलोपे झल्परत्वनिवृत्त्या पूर्वप्रवृत्तककारस्य निवृत्तौ पदान्तत्वाकुत्वे जश्त्वचर्त्वे इत्यभिप्रेत्य आह--पिपक् पिपगिति। पिपक्षौ, पिपक्ष इत्यादि। एवं विवगिति। वक्तुमिच्छतीति विग्रहे "वच परिभाषणे" इत्यस्माद्विवक्षशब्दवदित्यर्थः। दिधगिति। दग्धुमिच्छतीत्यर्थे "दह भस्मीकरणे" इत्यस्मात्सनि, द्वित्वे, हलादिशेषे, अभ्यासेत्त्वे, दिदह्()स इति स्थिते "दादेर्धातोर्घः" इति हस्य घत्वे "एकाचो बशः" इति दकारस्य धत्वे दिधघ्स इति घकारस्य चर्त्वेन ककारे प्रत्ययावयवत्वात्सस्य षत्वे ततः क्विपि अतो लोपे दिधक्षिति रूपम्। तस्मात् सुबुत्पत्तौ सोर्लोपे चत्र्वस्याऽसिद्धत्वात् "स्कोः" इत्यभावे षकारस्यसंयोगान्तलोपे खर्परत्वाऽभावात्पूर्वप्रवृत्तककारस्य निवृत्तौ पदान्तत्वाज्जशत्वचर्त्वे इति भावः। दिधक्षौ दिधक्ष इत्यादि इति। षान्ताः। अथ सान्ताः। सुपीरिति। "वोरुपधाया" इति दीर्घः। एवं सुतूरिति। विद्वानिति। विद ज्ञाने। अदादिः लटः शत्रादेशे "विदेः शतुर्वसु" शित्त्वात्सार्वधातुकत्वात् शप्, लुक्। "सार्वधातुकमपित्" इति ङित्त्वान्न लधूपधगुणः। कृदन्तत्वात् प्रातिपदिकत्वं विद्वस्()शब्दः। तस्मात्सुः, उगित्त्वान्नुम्, "सान्तमहतः" इति दीर्घः, सुलोपः, सस्य संयोगान्तलोपः, तस्याऽसिद्धत्वान्नलोपो नेति भावः। सान्तत्वाऽभावात् "वसुरुआंसु" इति दत्वं न। विद्वांसाविति। सुटि नुमि कृते "सान्तमहतः" इति दीर्घः, "नश्चे"त्यनुस्वार इति भावः।

तत्त्व-बोधिनी

नुम्बिसर्जनीयशव्र्यवायेऽपि ३८६, ८।३।५८

नुम्बिसर्जनीय। "इण्को"रिति पञ्चमीनिर्देशाव्द्यवबितस्याऽप्राप्तौ वचनम्। ष्टुत्वेन पूर्वस्येति। सनः सस्य रुत्वविसर्गयोः कतयोः "वा शरी"ति विकल्पात्प७#ए सकारस्तेन शरा व्यवाये सुपः सस्य षत्वं। पूर्वस्य ष्टुत्वम्, न तु "आदेशप्रत्यययो"रिति षः, "अपदन्तस्ये"ति निषेधादिति भावः। एवं स्थिते शग्ररहणे विसर्जनीयस्य लाभादित्यन्ये। निस्स्वेति। आद्यसकाराररस्य प्रत्येकं व्यवधानेऽपि आदेशप्रत्ययावयवत्वनाऽभावात्षत्वं न भवति। न चाऽत्र "आदेशप्रत्यययो"रित्यनुवृत्त्यभावात् "नुम्बिसर्जनीये"त्यनेन धातुकारस्य षत्वं स्यादिति वाच्यम्, तस्य स्वातन्त्र्येण विधायकत्वाऽनङ्गीकारात्। "अपदान्तस्य मूर्धन्यः""इण्को"रितिवत् "नुम्बिसर्जनीये"त्यस्याप्यधिकारसूत्रत्वात्। विधाकत्वाऽनङ्गीकारात्। "अपदान्तस्य मूर्धन्यः" "इण्को"रितिवत्
"नुम्वि#इ#इ#इसर्जनीये"त्यस्याप्यधिकारसूत्रत्वात्। कर्तुमिच्छति चिकीर्षतिष चिकीर्षतेः क्विप्प्र त्ययः--चिकीः। "एकाच उपदेशे"इति "सनिग्रहगुहोश्चे"ति वासन इडभावे "इको झ"लिति कित्वाद्गुणाऽभावे "अज्झनगमां सनी"ति दीर्घे "ऋत इ"दीतीत्वे रपरत्वं, ततो द्वित्वं, "हलादिः शेषः""कुहोश्चुः"अल्लोपः। सर्हल्ङ्यादिलोपे पदान्तत्वात् "र्वोरुपधायाः"इति दीर्घः। दोरिति। दाम्यतीति दोः। संयोगान्तलोप इति। न चाऽस्मिन्कर्तव्ये बहिरङ्गत्वेनाऽतोलोपस्याऽसिद्धत्वं शङ्क्यं, बहिर्निमित्तापेक्षपदसंज्ञासापेक्षत्वेन संयोगान्कलोपस्यैव बहिरङ्गत्वादिति दिक्। विविडिति। विशेः सन्। "एकाच"इतीण्निषेधे "हलन्ताच्चे"ति कित्त्वाद्गुणीऽभावः। द्वित्वाऽभ्यासकार्ये। तडिति। "तक्षू त्वक्षू तनूकरणे"इत्यस्मात् क्विप्। गां रक्षतीति---गोरट्। कर्मण्युपपदे "वा सरूप"न्यायेन क्विप्। कुत्वस्यासिद्धत्वादिति। इतरथा "स्को"रिति कलोपः स्यादिति भावः। पिपागति। पक्तुमिच्छति पिपक्। वक्तुमिच्छति विवक्। "दादे"रिति घः। "एकाचो बश"इति भाष्भावः। दग्धुमिच्छतीति दिधक्। इति षान्ताः। सुतूरिति। सुष्ठु तोसतीति सुतूः। वेत्तीति विद्वन्। "विदेः शतु र्वसुः"। अदादित्वाच्छपो लुक्। "सार्वधातुकमिपित्िति ङित्त्वान्नोपधागुणः। उगित्त्वान्नुम्। "सान्तमहतः"इति दीर्घः। संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ आदेश-प्रत्यययोः ६।२ नुम्विसर्जनीयशर्व्यवाये ७।१ ५८ अपि ० ५८ सः १।१ ५६ इण्कोः ५।१ ५७ अपदान्तस्य ६।१ ५५ मूर्धन्यः १।१ ५५ संहितायाम् ७।१ ८।२।१०८

समासः॥

आदेशश्च प्रत्ययश्च आदेशप्रत्ययौ तयोः ॰ इतरेतरद्वन्द्वः

अर्थः॥

इण्कवर्गाभ्याम् उत्तरस्य आदेशः यः सकारः प्रत्ययस्य च यः सकारः तस्य मूर्धन्यादेशः भवति, संहितायाम्

उदाहरणम्॥

आदेशस्य - सिषेच, सुष्वापः। प्रत्ययस्य - अग्निषु, वायुषु, कर्तृषु, हर्तृषु
काशिका-वृत्तिः
आदेशप्रत्यययोः ८।३।५९

मूर्धन्यः इति वर्तते, स इति च। आदेशप्रत्यययोः इति षष्ठी भेदेन सम्बध्यते। आदेशो यः सकारः, प्रत्ययस्य च यः सकारः इण्कोरुत्तरः तस्य मूर्धन्यो भवति आदेशः। आदेशस्य तावत् सिषेव। सुष्वाप। प्रत्ययस्य अग्निषु। वायुषु। कर्तृषु। हर्तृषु। इन्द्रो मा वक्षत्, स देवान् यक्षतिति व्यपदेशिवद्भावात् प्रत्ययस्य इति षत्वं भवति। यजतेर् वहतेश्च पञ्चमलकारे परस्मैपदप्रथमैकवचने इकारलोपः, लेटो ऽडटौ ३।४।९४ इति अट्, सिब्बहुलं लेटि ३।१।३४ इति सिप्, ततः सिद्धं यक्षत्, वक्षतिति।
लघु-सिद्धान्त-कौमुदी
आदेशप्रत्यययोः १५०, ८।३।५९

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य यः सस्तस्य मूर्धन्यादेशः। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः॥
न्यासः
आदेशप्रत्यययोः। , ८।३।५९

अत्र चत्वारः पक्षाः सम्भवन्ति--१। आदेशप्रत्यययोरित्युभयत्र सकारपेक्षयाऽवयवयोगा येयं षष्ठी स्यात्()--आदेशावयवो यः सकारः, प्रत्ययो यः सकार इति। अथ वा--३ प्रत्यये समानाधिकरणाऽदेशेऽवयवयोगा--प्रत्ययो यः सकारः, आदेशावयवो यः सकार इति। ४।तस्य विपर्ययो वा--आदेशो यः सकारस्तस्य, प्रत्ययावयवो यस्तस्येति। कथं पुनरेका षष्ठी समानाधिकरणा वा स्यात्(), अवयवयोगा वा? विषयभेदात्()। यथैव हि "खरवसानयोः" ८।३।१५ इत्यत्रैकापि सप्तम्यधिकरणभेदादभिद्यते, तथेहप्येकस्या अपि षष्ठ()आ विषयभेदो वेदितव्यः। तन्नाद्यपक्ष आश्रीयमाणे "नित्यदीप्सयोः" ८।१।४ इति स्थाने द्विर्वचने कृते बसंबिसम्(), मुसलंमुसलमित्यत्रापि षत्वं प्राप्नोति, भवति ह्यत्रादेशावयवः सकारः। "सर्वस्य द्वे" ८।१।१ इति स्थाने द्विर्वचनपक्षोऽप्याश्रित एव। द्वितीये तु करिष्यतीत्यादौ न स्यात्(); सकारमात्रस्याप्रत्ययत्वात्()। तृतीये तु पक्षे यावाद्ययोर्दोषौ तावुभावपि प्रसज्येते इति विषु प्रक्षेषु दोषवत्तां दृष्ट्वा चतुर्थ

पक्षमाश्रित्याह--"अदेशो यः सकारः" इत्यादि। चतुर्थे पक्षेऽप्याश्रीयमाणे--इन्द्रो मा वक्षत्(), "सदेवाम्? यक्षत्()" (अ।दे।३।४।६) इत्यत्र न प्राप्नोति, प्रत्ययो ह्त्र सकारः, न तु प्रत्ययावयव इत्यत आह--"इन्द्रो मा वक्षत्()" इत्यादि। इतिकरणो हेतौ। यस्मादिहापि व्यपदेशिवद्भावात्? प्रत्ययावयवः सकारस्तस्माद्भवति मूर्धन्यः। वक्षादिति--वहेर्लेट्(), तिप्(), "इतश्च लोपः परस्मैपदेषु" ३।४।९७ इतीकारलोपः, "लेटोऽडाटौ" ३।४।९४ इत्यट, "सिब्बहुलं लेटि" ३।१।३४ इति सिप्(), "हो ढः" ८।२।३१, "षठोः कः सि" ८।२।४९ इति कत्वम्()। यक्षदिति--यजेः "चोः कुः" ८।२।३० इति कुत्वम्()--जकारसय गकारः, तस्य चत्र्वम्()--ककारः। शेषं यथायोगं पूर्ववत्()॥

बाल-मनोरमा

आदेशप्रत्यययोः २१०, ८।३।५९

अथ षत्वविधायकं सूत्रमाह--आदेश। षष्ठ()न्तमिति। "सहेः साडः सः" इति सूत्रे "स्" इति निर्दिष्टमिति भावः। तच्चेह द्विवचनान्ततया विपरिणम्य "आदेशप्रत्यययो"रित्यत्र सम्बध्यते। ततश्च "इण्कवर्गाभ्यां परयोरपदान्तयोरादेशात्मकप्रत्ययावयवात्मकयोः सकारयोर्मूर्धन्यः स्या"दित्यर्थः। फलितमाह--इम्कवर्गाभ्यामित्यादिना। प्रौढमनोरमायां तु आदेशप्रत्यययोरित्येकापि षष्ठी प्रत्ययविषये अवयवार्थिका, आदेशविषये चाऽभेदार्थिका। तथाच आदेशस्य प्रत्ययावयवस्य च सकारस्येति लभ्यत इति प्रत्ययशब्दस्य लक्षणां विनोक्तम्। सहविवक्षाऽभावेऽपि सौत्रो द्वन्द्व इति च स्वीकृतम्। यदि तु आदेशविषयेऽपि अवयवषष्ठी स्यात्--"आदेशावयवस्य सस्य ष" इति, तर्हि "तिरुआः" "तिसृणा"मित्यादौ दोषः। नच "त्रिचतुरोः स्त्रिया"मित्यत्रादेशे सकारोच्चारणसामथ्र्यान्न तत्र षत्वमिति वाच्यं, तिरुआ इत्यत्र "न रपरसृपिसृजिस्पृशिस्पृहिसवनादीना"मिति षत्वनिषेधेन चरितार्थत्वात्। विसम्विसमित्यादौ सकारस्याऽऽदेशावयवतया षत्वापत्तेश्च, नित्यवीप्सयोरित्याष्टमिकद्विर्वचनस्यादेशरूपताया वक्ष्यमाणत्वात्। "प्रत्ययो यः सकारस्तस्ये"ति व्याख्याने तु जिगीषुरित्यादाव#एव स्यात्। "रामेषु" इत्यादौ न स्यात्। अत "आदेशः प्रत्ययावयवश्च यः सकारस्तस्ये"ति व्याख्यातम्। प्रत्ययावयवसक्षणायां च "हलि सर्वेषां"मिति निर्देशो लिङ्गम्। विवृताघोषस्येति। मूर्धन्यत्वम् ऋटुरषेष्वविशिष्टम्। विवृतत्वरूपाब्यन्तरप्रयत्नवतोऽघोषरूपबाह्रप्रयत्नवतश्च सकारस्य तदुभयात्मकः षकार एव भवतीत्यर्थः। टकारनिवारणायाद्यं विशेषणम्। ऋकारवारणाय द्वितीयम्। रामेष्विति। ननु सु इत्यस्य व्यपदेसिवद्भावेन सुबन्तत्वेन पदत्वात् "सात्पदाद्यो"रिति षत्वनिषेधः स्यादिति चेन्न, "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणा"दित्यलम्। सुपिसाविति। "पिस गतौ"क्विप्। धातुसकारोऽयं नत्वादेशो नापि प्रत्ययावयव इति भावः।

अत सर्वादिशब्देषु सर्वनामकार्यं विधास्यन् सर्वनामसंज्ञामाह--सर्वादीनि। सर्वः आदिः=प्रथमावयवः येषां तानि सर्वादीनि। अत्र सर्वशब्दः स्वरूपपरः।

तत्त्व-बोधिनी

आदेशप्रत्यययोः १७७, ८।३।५९

आदेशप्रत्यययोः। प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः, "हलि सर्वेषाम्" इति निर्देशात् "सात्पदाद्योः" इत्यत्र सातिग्रहणाच्च लिङ्गादित्याशयेन व्याचष्टे--आदेशः प्रत्ययावयवश्चेति। यदि तु आदेशावयवो गृह्येत, तर्हि "तिसृणा"मित्यादौ दोषः। यद्यपि सकारोच्चारणसामथ्र्यात्तत्र षत्वं न स्यात्, तथापि बिसम्बिसं मुसलंमुसलमित्यादौ षत्वं दुर्वारं स्यात्। आष्टमिकद्विर्वचनस्यादेशरूपत्वात्। यदि तु "प्रत्ययो यः सकार" इति गृह्येत, तर्हि "रामेषु" "करिष्यती"त्यादौ न स्यात्, किं तु "इन्द्रो मा वक्षत्" इत्यादावेव स्यात्। इह मनोरमायामेकापि षष्ठी विषयभेदाद्भिद्यत इत्युक्त्वा सहविवक्षाऽभावेऽपि सौत्रत्वान्द्वद्व इत्युक्तं, तत्तु प्रत्ययशब्दे लक्षणामनङ्गीकृत्य यथाश्रुताभिप्रायेणोक्तमिति बोध्यम्।

विवृताघोषस्येति। "विवृतस्य सस्य तादृश एवे"त्युक्ते ऋकारेऽतिप्रसङ्गस्तद्वारणायाऽघोषस्येति। "अघोषस्ये"त्येतावदुच्यमाने ठकारेऽतिप्रसङ्गस्तद्वारणायोभयमुपात्तम्। तादृश एव ष इति। तादृशः ष एवादेशो भवति नान्य इत्यर्थः। नच "दधिसेचौ" "दधिसेच" इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तस्ततश्चेहापि "सात्पदाद्योः" इति निषेधः स्यात्, "करिष्यती"त्यादौ षत्वविधेः सावकाशत्वादिति चेन्मैवम्, "स्वादिषु" इति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्तत इति सातिग्रहणेन ज्ञापितत्वात्। रामस्येति। "टाङसिङसामिनात्स्याः" इति वक्तव्ये सकारोच्चारणसामर्थ्यात्षत्वं न भवेत्, नडादिषु "अमुष्ये"ति निपातनात्ततः फगादौ "आमुष्यायण" इत्यादिवार्तिकनिर्देशाच्च "अमुष्ये"त्यत्र षत्वं भवेदिति यदि तर्हि "वि()आपास्वि"त्यादि प्रत्युदाहर्तव्यम्। न च तत्रापि "षु"बिति वक्तव्ये "सु"बिति सकारोच्चारणसामर्थ्यादेव न भवेदिति शङ्क्यं लिट्त्सु" "प्रशान्त्सु" इत्यत्र "ङः सि धट्" "नश्चे"ति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति दिक्।

---

सूत्रम्

काशिका-वृत्तिः

शासिवसिघसीनां च ८।३।६०

शासि वसि घसि इत्येतेषां च इण्कोः उत्तरस्य यकारस्य मूर्धन्यो भवति। अन्वशिषत्, अन्वशिषताम्, अन्वशिषन्। शिष्टः। शिष्टवान्। वसि उषितः। उषितवान्। उषित्वा। घसि जक्षतुः। जक्षुः। घसिभसोर्हलि च ६।४।१०० इति उपधालोपः। अक्षन् पितरो ऽमीमदन्त पितरः। अनादेशार्थं वचनम्। घसिर् यद्यप्यादेशः, सकारस्त्वादेशो न भवति। इण्दोः इत्येव, शास्ति। वसति। जघास।

लघु-सिद्धान्त-कौमुदी

शासिवसिघसीनां च ५५६, ८।३।६०

इण्कुभ्यां परस्यैषां सस्य षः स्यात्। घस्य चर्त्वम्॥ जक्षतुः। जक्षुः। जघसिथ। जक्षथुः। जक्ष। जघास, जघस। जक्षिव। जक्षिम। आद। आदतुः। आदुः॥

न्यासः

शासिवसिघसीनां च। , ८।३।६०

"अन्वशिषत्()" ति। "शासु अनुसिष्टौ" (धा।पा।१०७५), लुङ्(), "सर्त्तिशास्त्यरत्तिभ्यश्च" ३।१।५६ इति च्लेरङ्(), "शास इदङ्हलोः" ६।४।३४ इतीत्त्वम्()। "अन्वशिषताम्()" इति। तसस्ताम्()। "शिष्टः" इति। ष्टुत्वम्(), पूर्ववदित्त्वम्()। "उषितः" इति। "वस निवासे" (धा।पा।१००५), "वसतिक्षुधोः" ७।२।५२ इतीट्(), वच्यादिसूत्रेच ६।१।१५ सम्प्रसारणम्()। "जक्षतुः जक्षुः" इति। "घस्लु अदे (धा।पा।७१५), यश्चादेशो घसिः--तयोद्र्वयोरपरि ग्रहणम्()। ननु चादेशस्य लाक्षणिकत्वाद्ग्रहणमयुक्तम्()? नैष दोषः; अनित्या हि लक्षणप्रतिपदोक्तपरिभाषः। अनित्यत्वं चास्याः "यावत्पुरानिपातयोर्लट्()" ३।३।४ इत्यत निपातग्रहणेन ज्ञापितम्()। "भुवश्च महाव्याह्मतेः" ८।२।७१ इत्यत्र महाव्याह्मतिग्रहणेन च ज्ञापितम्()। अपि चात्र घसिवसोरेकतरस्य लब्दक्षरत्वात्? पूर्वनिपाते कत्र्तव्ये शासेः पूर्वनिपातं कुर्वता शास्त्रनिरपेक्षता सूच्यते--किञ्चिच्छास्त्रमत्र नापेक्षितवयमित्यमुमर्थं दर्शयितुम्()। तेन लक्षणप्रतिपदोक्तपरिभाषा (व्या।प।३) नाश्रीयत इति युक्तमादेशस्यापि ग्रहणमिति। अदेर्लिटि कृते "लिट()न्यतरस्याम्()" २।४।४० इति धस्लादेशः, "गमहन" ६।४।९८ इत्यादिनोपध#आलोपः, "द्विर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावाद् द्विर्वचनम्(), "कुहोश्चुः" ७।४।६२

इति चुत्वम्()--झकारः, तस्यापि जश्त्वम--जकारः, घकारस्य चत्र्वम्()--ककारः। तस्य चाश्रयत्वात्? सिद्धं भवतीति वेदितव्यम्()। "अक्षन्()" इति। लुङ्(), "बहुलं छन्दसि" २।४।३९ इति घस्लादेशः, झेरन्तादेशः, संयोगान्तलोपः ८।२।२३, "मन्त्रे घसह्वर" २।४।८० इत्यादिना च्लेर्लुक्(), "घसिभसोर्हलि च" ६।४।१०० इत्युपधालोपः, चत्र्वम्()--ककारः। "अनादेशार्थं वचनम्()" इत्युक्ते यो देशयेत्()--युक्तं शासिवसोरनादेशार्थं वचनम्(), अनादेशार्थं तु घसिं प्रत्ययुक्तम्(), आदेशसकरत्वादिति? सं प्रत्याह--"धसिः" इत्यादि। घकारादिवर्णसमुदायो हि घसिरादेशः, सकारस्तु तस्यादयवः, नादेश इत्यादेशघसिमपि प्रत्यनादेशार्थं वचनम्()॥

बाल-मनोरमा

शासिवसिघसरीनां च २४२, ८।३।६०

- शासिवसि। "सहेः साडः सः" इत्यतः स इति षष्ठ()न्तमनुवर्तते। "इण्को"रिति, "अपदान्तस्य मूर्धन्यः" इति चाधिकृतम्। तदाह--इण्कवर्गाभ्यामिति। भारद्वाजनियमात्थलि वेडिति मत्वा आह-- उवसिथ उवस्थेति। "न शसददे" ति निषेधात् "थलि च सेटी"ति न भवति। ऊषथुः ऊष, उवास--उवस ऊषिव ऊषिम। क्रादिनियमादिट्। वस् स्य ति इति स्थिते आह-- सः स्याद्र्धधातुके इति। अनेन सकारस्य तकार इति भावः। वसतु। अवसत्। वसेत्। उष्यादिति। आशीर्लिङि यासुटः कित्त्वाद्वस्य संप्रसारणे "सासिवसी"ति षत्वमिति भावः। अवात्सीदिति। सिचि हलन्तलक्षणवृद्धौ सस्य तकारः। अवात्तामिति। अवस् स् तामिति स्थिते वृद्धौ "झलो झली" ति सलोपे प्रत्ययलक्षममाश्रित्य सकाराद्याद्र्धदातुकपरत्वाद्धातुसकारस्य "सः सि" इति तकारः। वस्तुतस्तु अवात्स्व अवास्म। अवत्स्यत्। वेञ्धातुरनिट्। ञित्त्वादुभयपदी। तन्तुसन्तानः-- पटनिर्माणार्थं तन्तूनां तिर्यक्प्रसारमविशेषः। वयति वयते इति। शपि अयादेशः। वेञो वयिः। शेषपूरणेन सूत्रं व्याचष्टे--वा स्याल्लिटीति। "लिच्यन्यतरस्या"मित्यतोऽन्यतरस्यामित्यनुवृत्तेरिति भावः। उच्चारणार्थ इति। इकारस्य इत्संज्ञकत्वे तु नुम् स्यादिति भावः। उवायेति। णल#इ वयादेशे यजादित्वादकिति लिटि परे "लिट()भ्यासस्ये"ति वकारस्य संप्रासरणे उपधावृद्धिरिति भावः। अत्र यकारस्य तु न संप्रसारणं, "लिटि वयो यः"इति तन्निषेधस्यानुपदमेव वक्ष्यमामत्वादिति भावः। यद्यपि णलि वयादेशाऽभावेऽपि द्वित्वे अभ्यासस्य संप्रसारमे "अचो ञ्णिती"ति वृद्धौ आयादेशे उवायेति सिध्यति, तथापि ऊयतुरित्याद्यर्थं वयादेशस्य आवश्यकत्वादिहापि वयादेशो न्याय्यत्वादुपन्यस्तः। वे--अतुस् इति स्थिते वयादेशे कृते--

तत्त्व-बोधिनी

शासिवसिघसीनां च २१४, ८।३।६०

शासिवसिघसीनां च। धातुसकारस्याऽप्राप्ते विधिरयम्। ननु सुपिसौ सुपिस इत्यादावतिप्रसङ्गवारणाय "धातोः सकारस्य चेदेषामेवे"ति नियमार्थतां स्वीकृत्य "आदेशप्रत्यययो"रिति सूत्रं त्यज्यतामिति चेत्। अत्राहुः--- आदेशावयवस्य षत्ववारणाय आदेशस्यैत्यंशस्तावदावश्यककः। तद्ग्रहणे कृते "धातुभिन्नसकारस्य चेद्भवति आदेशरूपस्यैवे"ति नियमप्रसङ्गवारणाय प्रत्ययग्रहणमपि कर्तव्यमेवेति। अवात्सीदिति। "वदव्रजे"ति वृद्धिः। "सः सी" ति तः। "अस्तिसिचः" इतीट्। उच्चारणार्थ इति। इत्संज्ञायां तु "इदितः" इति नुम् स्यादिति भावः। उवायेति। "ग्रहिज्ये"त्यत्र वयिग्रहणाद्वेञ् इति निषेधोऽत्र न प्रवर्तत इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

स्तौतिण्योरेव षण्यभ्यासात् ८।३।६१

स्तौतेः ण्यन्तानां च षभूते सनि परतः अभ्यासातिणः उत्तरस्य आदेशसकारस्य मूर्धन्यादेशो भवति। तुष्टूषति। ण्यन्तानाम् सिषेवयिषति। सिषञ्जयिषति। सुष्वापयिषति। सिद्धे सत्यारम्भो नियमार्थः, स्तौतिण्योः एव षणि अभ्यासाद् यथा स्यात्, अन्यस्य मा भूत्। सिसिक्षति। सुसूषति। एवकारकरणमिष्टतो ऽवधारणार्थम्। स्तौतिण्योः षणि एव इति हि विज्ञायमाने तुष्टाव इत्यत्र न स्यात्, इह च स्यादेव सिसिक्षति इति। षणि इति किम्? अन्यत्र नियमो मा भूत्, सिषेच। को विनते ऽनुरोधः? अविनते नियमो मा भूत्, सुषुप्सति। तिष्ठासति। कः सानुबन्धे ऽनुरोधः? षशब्दमात्रे नियमो मा भूत्, सुषुपिष इन्द्रम्। अभ्यासातिति किम्? अभ्यासात् या प्राप्तिः तस्या नियमो यथा स्यात्, धातोः या प्राप्तिस् तस्या नियमो मा भूत्, प्रतीषिषति। अधीषिषति।

न्यासः

स्तौतिण्योरेव षण्यभ्यासात्?। , ८।३।६१

"षभूते" इति। "ष" इतीदं रूपमापन्न इत्यर्थः। "तुष्टुषति" इति। "इको झल्()" १।२।९ इति सनः कित्त्वम्()" "अज्झनगमां सनि" ६।४।१६ इति दीर्घः, दिर्वचनम्(), "शपूर्वाः खयः" ७।४।६१ इति खयः शेषः। "सिवेचयिषति" इति। सिचेः "हेतुमति च" ३।१।२६ इति णिच्(), सन्(), इट्(), गुणायादेशौ। "णौ कृतं स्थानिवद्भवति" (चां।प।२१) इति सिचो द्विर्वचनम्()। "सिषञ्जयिषति" इति। "सन्ज सङ्गे" (धा।पा।९८७), सन्(), द्विर्वचनम्(), "सन्यतः" ७।४।७९ इतीत्त्वम्()। "सुष्वापयिषति" इति। स्वापेर्ण्यन्तस्य "द्युतिस्वाप्योः सम्प्रसारणम्()" ७।४।६७ इत्यभ्यासस्य सम्प्रसारणम्()। ननु च सिद्धोऽत्र भूर्धन्यः पूर्वणैव, तत्? किमर्थोऽस्यारम्भ,? इत्याह--"सिद्धे सति" इत्यादि। "सिसिक्षति" इति। सिचः सन्(), "इको झल्()" १।२।९ इत्यनुवत्र्तमाने "हलन्ताच्च" १।२।१० इति कित्त्वाद्गुणाभावः, "चोः कुः" ८।२।३० इति कुत्वम्()। "सुसूषते"[सुसूषति--काशिका] इति। "षूङ प्राणिगर्भविभोचने" (धा।पा।१०३१), "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। क्वचित्? तिप्प्रत्ययान्तं सुसूषतीति प्रत्युधरणम्(), तत्? "षू प्रेरणे" (धा।पा।१४०८) इत्यस्य द्रष्टव्यम्()। अथैवकारकरणं किमर्थम्(), सिद्धे सत्यारम्भसामथ्र्यादेव नियमो विज्ञास्यते? इत्याह--"एवकारकरणम्()" इत्यादि। कः पुनः स्तौतिण्योः षण्येवेत्यस्मिन्नियमे दोषो यतः स नेष्यते? इत्यत आह--"स्तौतिण्योः षण्येव" इत्यादि। षण्येदेत्यनेनावधारणेन स्तौतिण्योः सन्प्रत्ययेन प्रत्ययान्तरस्य व्यवच्छेदः क्रियते--स्तौतिण्योर्यदिमूर्धन्यो भवति तदा षण्येव, नान्यस्मिन्? प्रत्यय इति। ततश्च तुष्टावेति लिटि न स्यात्()। इह तु स्यादेव--सिसिक्षतीति; अवधारणेन षत्वस्याव्यवच्छिन्नत्वात्()। "अन्यत्र" इत्यादि। यदि षणीति नोच्येत ततोऽविशेषेण सर्वत्र नियमः स्यात्()। ततश्च नियमोन व्यावर्त्तितत्वाद्? यथा सिसिक्षतीत्यत्र न भवत्यभ्यासादुत्तरस्य सकारस्य षत्वम्(), तथा सिषेचेत्यत्र लिट()पि न स्यात्()। तस्मात्? षणोऽन्यत्र लिडादौ मा भूदित्येवमर्थं षणीत्युच्यते। "को विनतेऽनुरोधः" इति। विनत इति पूर्वाचार्यसंज्ञा षत्वणत्वयोः। अनुरुध्यत इत्नुरोधः= प्रयोजनम्()। किं प्रयोजनं षत्वस्य यतः कृतषत्वस्येहोपादानं कृतमित्यभिप्रायः। "अर्विनते नियमो मा भूत्()" इति। अविनत इति अविद्यमानषत्व इत्यर्थः। सनीत्युच्यमाने सन्मात्रे नियमः स्यात्()। तत्र यथा षभूते सन्यन्यधातोरभ्यासान्मूर्धन्यो न भवति, एवमषत्वभूतेऽपि न स्यात्()। तस्मादषत्वभूते नियमो मा भूत्()" इति।
अविनत इति अविद्यमानषत्व इत्यर्थः। सनीत्युच्यमाने सन्मात्रे नियमः स्यात्()। तत्र यथा षभूते सन्यन्यधातीरभ्यासान्मूर्धन्यो न भवति, एवमषत्वभूतेऽपि न स्यात्()। तस्मादषत्वभूते नियमो मा भूदित्येवमर्थं विनतस्य ग्रहणम्()। "सुषुप्सति" इति। स्वपेः सन्(), "रुदविद" (१।२।८) इत्यादिना कित्त्वाद्? वच्यादिसत्रेण ६।१।१५ सम्प्रसारणम्()। "कः सानुबन्धकेऽनुरोधः" इति। नकारोऽनुबन्धः। नकारानुबन्धस्य ग्रहणं किमर्थम्(), किं प्रयोजनमित्यर्थः। "षशब्दमात्रे नियमो मा भूत्()" इति। "ष" इत्युच्यमाने यो नाम कश्चित्? षशब्दस्तत्र सर्वत्र नियमः स्यात्()। सानुबन्धकग्रहणे तत्रैव भवति, नान्यत्र। तेन निरनुबन्धकषशब्देऽन्यस्यापि भवत्येव मूर्धन्यः। "सुषुपिष इन्द्रम्()" इति। स्वपेर्लिट्(), व्यत्यर्येनात्मनेपदम्(), "थासः से" ३।४।८०, "असंयोगाल्लिट्? कित्()" १।२।५ इति

कित्त्वम्(); वच्चादिसूत्रेण ६।१।१५ सम्प्रसारणम्(), क्रादिनियमादिट्, द्विर्वचनम्(), प्रत्ययसकारस्य मूर्धन्यः, इन्द्रशब्दे परतोऽयादेशः, "लोपः शाकल्यस्य" ८।३।१९ इति यकारलोपः; सूषुपिष इन्द्रमिति स्थित इह निरनुबन्धके नियमाभावादभ्यासान्मूर्धन्यो भवत्येव। "अभ्यासस्य या प्राप्तिः"["अभ्यासात्()"--काशिका, पदमञ्जरी च] इत्यादि। असत्यभ्यासग्रहणे धातोर्य इण्? तस्यापि नियमः स्यात्(), न चेध्यते। तस्मादभ्यासाद्या प्तिस्तस्या नियमो यथा स्यादित्यभ्यासग्रहणम्()। "प्रतीषिषति" इति। प्रतिपूर्वादिमः सन्()। "अधोषिषति" इति। अघिपूर्वादिकः सन्(), अजादित्वाद्()द्वितोयैकाच्? "सन्यङोः ६।१।९ इति द्विरुच्यते, "सन्यतः" ७।३।७९ इतोत्त्वम्(), धातूपसर्गयोरेकादेशः; अधीषिष इति, प्रतीषिष इति स्थिते धातुप्रापतिनियमाभावात्? षभूतेऽपि सनि धातोः परस्य सकारस्य मूर्धन्यो भवत्येव॥

तत्त्व-बोधिनी

स्तौतिण्येरेवषण्यभ्यासात् ३९५, ८।३।६१

स्तौतिण्योरेव। एवंच रिषाधयिषेति प्रयोगस्य साधुत्वं न तु सिसाधयिषेत्यस्येति ज्ञेयम्। उपसर्गात्त्विति। मध्येऽपवादन्यायात् "स्तौतिम्यो"रिति नियमेन "आदेशप्रत्यययो"रिति षत्वमेव बाध्यते न तु "स्थादिष्वभ्यासेन चे"त्युत्तरेण विहितमिति भाव-। सुषुप्सतीति। "रुदविदे"ति सनः कित्त्वान्न गुणः। प्रतीषिषतीति। इह षभूते सनीण् गताविति धातोः परसय् सत्य षत्वं भवत्येवेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सः स्विदिस्वदिसहीनां च ८।३।६२

स्विदि स्वदि सहि इत्येतेषां ण्यन्तानां सनि षभूते परतो ऽभ्यासादुत्तरस्य सकारस्य सकारादेशो भवति। स्विदि सिस्वेदयिषति। स्वदि सिस्वादयिषति। सहि सिसाहयिषति। सकारस्य सकारवचनं मूर्धन्यनिवृत्त्यर्थम्।

न्यासः

स स्विदिस्वदिसहीनां च। , ८।३।६२

"स" इत्यविभक्तिकोऽयं निर्देशः। नेति प्रतिषेध एव क्रियतामित्यादेशनीयम्(); लाघवकृते विशेषाभावात्()। "सिस्वेदयिषति" इत्यादि। "ञिष्विदा गात्रप्रक्षरणे" (धा।पा।११८८) "रुवद स्वर्द आस्वादने" (धा।पा।१८,१९), "षह मर्षणे" (धा।पा।८५२)--एभ्यो णिव्(), ततः सन्()। ननु च सकारस्य सकारविधाने न कश्चिद्विषेषः, तत्किमर्थं सकार उच्यते? इत्याह--"सकारस्य" इत्यादि। य एषां "धात्वादेः षः सः" ६।१।६२ इति सकारः कृतः, तस्यादेशत्वान्मूर्धन्ये प्राप्ते वचनम्()॥

बाल-मनोरमा

सः स्विदिस्वदिसहीनां च १२९२, ८।३।६२

सः स्विदि। सः स्विदीति छेदः। "स्तौतिण्योरेव षण्यभ्यासा"दिति सूत्रं स्तौतिवर्जमनुवर्तते। "सहे साडः सः" इत्यतः स इति षष्ठ()न्तं च। तदाह-- अभ्यासेण इति। सकारविधिर्नियमार्थ इत्याह-- सस्य स एवेति। सुनोतेः सनि "स्तौतिण्योरेव"ति नियमादुत्तरखण्डस्य षत्वाऽभावे अभिसुसूषतीत्यत्र "उपसर्गात्सुनोती"त्यभ्यासस्य षत्वमाशङ्क्याऽऽह-- स्थादिष्वेवेति। शैषिकादिति। सन्विधायकसूत्रस्थमिदं वार्तिकम्। शैषिकात्सरूपः शैषिकः प्रत्ययो न। मतुबर्थीयात्सरूपो मतुबर्थिकः प्रत्ययो नेत्यन्वयः। शेषाधिकारे। विहितः शैषिकः। भवार्थे अधायात्मादित्वाठ्ठञ्।

मतुबर्थे भवो-- मतुबर्तीयः। गहादित्वाच्छः। मतुबर्थोऽस्यास्तीति मतुबर्थिकः। "अत इनिठनौ" इति ठन्। शालीये इति। शालायां भवः शालीयः। "वृद्धाच्छः"। शालीये भव इत्यर्थे शालीयशब्दात्पुनः छो नेत्यर्थः। आहिच्छत्रे भव इति। आहिच्छत्रशब्दो भवार्थे अणन्तः। ततो भवार्थे "वृद्धाच्छः" इति छ एव भवति नतु पुनरणिति भावः। ननु जुगुप्सिषते इत्यादौ कथं सन्नन्तात् सन्नित्यत आह-- सरूप इत्यनुषज्यते इति। "सन्नन्तान्न सनिष्यते" इत्यत्रापि सरूप इत्यनुषज्यते इत्यर्थः। नन्वेवमपि जुगुप्सिषते इत्यत्र सरूपस्य सनः कथं प्रवृत्तिरित्यत आह-- अर्थद्वारेति। शब्दतो वैरूप्यस्याऽसंभवादर्थद्वारकमेव सारूप्यं विवक्षितमिति भावः। तेनेति। इच्छासन्नन्तादिच्छासन्नेति लभ्यते इत्यर्थः। स्वार्थेति। स्वार्थसन्नन्तात्तु इच्छासन् भवत्येवेत्यर्थः। इति सन्नन्तप्रक्रिया।

॥ इति बालमनोरमायाम् सन्नन्तप्रक्रिया॥

अथ सर्वसमासशेषप्रकरणम्।

--------------------

अथ प्रसङ्गात्सर्वसमासोपयुक्तं प्रकीर्णकं प्रकरणमारभते--कृत्तद्धितेति। कृदन्ताः, तद्धितघटिताः, समासाः, एकशेषाः, सनादिप्रत्ययान्तधातवश्चेति वृत्तयः पञ्चविधा इत्यर्थः। वृत्तिसामान्यलक्षणमाह--परार्थाभिधानं वृत्तिरिति। "समर्थः पदविधि"रिति सूत्रे भाष्ये स्थितमेतत्। अभिधानमिति करणे ल्युट्। सामान्ये नपुंसकम्। विग्रहवाक्यावयवपदार्थेभ्यः। परः=अन्यो योऽयं विशिष्टैकार्थः, तत्प्रतिपादिका वृत्तिरित्यर्थः। प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन प्रथमविगृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादिका वृत्तिरिति यावत्। समुदायशक्तिश्च "समर्थः पदविधि"रिति परिभाषया लभ्या। तत्र समासतद्धितयोः पदविधित्वं स्पष्टमेव, "सुप्सुपे"त्यनुवर्त्य समासविधानात्, सुबन्तात्तद्धितोत्पत्तेः। वक्ष्यमाणत्वात्। कृतामपि केषाचित् "कर्मण्य"णिति उपपदनिमित्तकानां पदविधित्वमस्त्येव। "सुप आत्मनःक्य"जित्यादीनामपि पदविधित्वमस्त्येव। एकशेषविधावपि द्वन्द्व इत्यनुवृत्तेद्र्वन्द्वविषये तद्विधानादेकार्थीभावोऽस्त्येवेति मञ्जूषादौ विस्तरः। वृत्त्यार्थवबोधकमिति। यद्यपि वृत्तावेव समुदायशक्त्याविशिष्टैकार्थप्रतिपातिपादकता, नतु वाक्ये इति समर्थसूत्रे भाष्ये प्रपञ्चितम्, तथापि समासवृत्तियोग्यविभक्त्यन्तपदानां पृथक्प्रयुज्यमानानां समूहो विग्रहवाक्यमिति बोध्यम्। परिनिष्ठितत्वादिति। व्याकरणसंस्कृतत्वादित्यर्थः। प्रयोगानर्ह इति। व्याकरमसंस्कृतत्वाऽभावादित्यर्थः। "यथे"त्युदाहरणप्रदर्शने। राज्ञः पुरुष इति। "लौकिकविग्रहवाक्य"मिति शेषः। राजन्-अस्-पुरुषृसु इति। "अलौकिकविग्रहवाक्य"मिति शेषः। अविग्रहो नित्यसमास इति। सौकिकविग्रहवाक्यरहित इत्यर्थः। समासस्य नित्यत्वादिति भावः। अस्वपदेति। समस्यमानपदसमानार्थकपदान्तरकृतविग्रहो वा नित्यसमास इत्यर्थः। संज्ञाविषयसमासे तु वाक्येन संज्ञानवगमेऽपि वृत्तिघटकपदज्ञापनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव। तत्र समासनित्यत्ववादस्तु वाक्यस्य वृत्तिसमानार्थकत्वाऽभावाद्गौण इत्याहुः। चतुर्विध इति। अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्वश्चेति चतुर्विध इत्यर्थः। प्रायोवाद इति। "प्राय"सित्यव्ययं बाहुल्ये। बाहुल्याभिप्रायकश्च तस्य चातुर्विध्यप्रवाद इत्यर्थः। कुत इत्यत आह--अव्ययीभावेति। बहुर्भूतानामपीति। "समासाना"मिति शेषः। प्रायोऽभिप्राय इति। बाहुल्यतात्पर्यक इत्यर्थः। सूपप्रतीति। इह द्वन्द्वे चे"त्यनन्तरं श्रुतम्-"अभावा"दिति पदम्-अव्यीभावे इत्यनन्तरं, तत्पुरुषे इत्यनन्तरं, बहुव्रीहावित्यनन्तरं चान्वेति। सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्रधानतया, उन्मतगङ्गं देशः, लोहितगङ्गं देश इत्यव्ययीभावेऽन्यपदार्थप्रधानतया पूर्वपदार्थप्राधान्याऽभावादित्यर्थः। अतिमालादौ तत्पुरुषे पूर्वपदार्थप्रधानतया उत्तरपदार्थप्राधान्याऽभावादित्यर्थः। "द्वित्रा" इति बहुव्रीहौ उभयपदार्थप्रधानतयाऽन्यपदार्थप्राधान्याऽभावादित्यर्थः। "दन्तोष्ठ"मित्यादिद्वन्द्वे समाहारस्यैव प्रधानतया उभयपदार्थप्राधान्याऽभावादित्यर्थः। तत्पुरुषविशेषः कर्मधारय इति। "तत्पुरुषः समानाधिकरणः कर्मधारय" इत्युक्तेरिति

भावः। तद्विशेषो द्विगुरिति। कर्मधारयविशेष इत्यर्थः। "सङ्ख्यापूर्वो द्विगुः" इत्यादिरिति भावः। अनेकपदत्वमिति। द्वित्रिचतुरादिपदकत्वमित्यर्थः। "अनेकमन्यपदार्थे" इति बहुव्रीहिगतस्यानेकग्रहणस्य द्वन्द्वविधावप्यनुवृत्तेरिति भावः। क्वचिदेवेति। "द्व्यह्नजात" इत्यादावित्यर्थः। इत्युक्तमिति। "भाष्यादा"विति शेषः। किंचेति-अव्ययमिदं विशेषान्तरप्रदर्शने। सुपां सुपेति। सुबन्तानां-सुबन्तेन तिङन्तेन प्रातिपदिकेन धातुना च समासः। अथेति पूर्ववाक्यव्यवच्छेदे। तिङामिति। तिङन्तानां तिङन्तेन सुबन्तेन च समास इत्येवं षड्विधः समासो ज्ञेय इत्यर्थः। सुपेति। सुपेत्यस्यादाहरणं वक्ष्यत इत्यर्थः। राजपुरुष इति। "राज्ञ" इत्यस्य षष्ठ()न्तस्य "पुरुष" इति सुबन्तेन समासः। तिङेति। सुपां तिङेत्यस्योदाहरणं वक्ष्यत इत्यर्थः। पर्यभूषयदिति। "सह सुपे"त्यत्र "सहे"ति योगविभागात्परीति सुबन्तस्य तिङन्तेन समासः। नाम्नेति। सुपां प्रातिपदिकेन समासे उदाहरणं वक्ष्यत इत्यर्थः। कुम्भकार इति। "उपपदमति"ङिति कुम्भस्येति षष्ठ()न्तस्य कारेति प्रातिपदिकेन समासः, "गतिकारकोपपदानां कृद्भिः सह समास वचनं प्राक् सुबुत्पत्ते"रित्युक्तेरिति भावः। धातुनेति। सुपां धातुना समासे उदाहरणं वक्ष्यत इत्यर्थः। कटप्रूरिति। क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च" इति वार्तिकेन "प्रु गतौ" इति धातुना समासो निपातितः, नतु तिङन्तेनोपपदसमास इति भ्रमितव्यं, क्विब्विधाविह सप्तमीनिर्देशाऽभावेन उपपदत्वाऽभावात्। अथ सुपां धातुनोदाहरणान्तरमाह--अजरुआमिति। "नमिकम्पिस्म्यजसकमिहि#ंसदीपो रः" इति सूत्रे रप्रत्ययविधौ जस्धातुना सह नञ्समासो निपातितः। तिङां तिङेति। समासे उदाहरणं वक्ष्यत इत्यर्थः। पिबतखादतेति। मयूरव्यंसकादित्वात्तिङन्तस्य तिङन्तेन समासः। तिङा सुपेति। समासे उदाहरणं वक्ष्यत इत्यर्थः। कृन्तविचक्षणेति। हे विचक्षण !कृन्त=छिन्द्धीत्यर्थः। इह तिङन्तस्य सुबन्तेन समासः कथमित्यत आह-एही डादय इति। अत्र सुपां तिङेत्यनेनैव तिङां सुबन्तेनेत्यस्यापि ग्रहणात्समासस्य षड्विधत्वं चिन्त्यम्। पञ्चविधत्वमेव युक्म्, उभयत्रापि सुप्तिङ्घटितत्वाऽविशेषादित्याहुः। अन्ये तु सुपां तिङेत्यनेन सुबन्तपूर्वपदकतिङन्तोत्तरपदकसमासस्य ग्रहणम्। तिङां सुबन्तेनेत्यनेन तु तिङन्तपूर्वपदकसुबन्तोत्तरपदकसमासस्य ग्रहणमित्याहुः।

*****इति बालमनोरमायाम् सर्वसमासशेषः।*****

अथ शैषिकाः प्रकरणम्।

-----------------

तत्त्व-बोधिनी

सः स्विदिस्वदिसहीनां च ४०३, ८।३।६२

नियमान्नेहेति। न चाऽत्र नियमादेव निषेधे "सुनोतेः स्यसनो"रिति सन्विषये निर्विषयं स्यादिति वाच्यम्, अभिसुसूषतेरप्रत्ययः "अभिसुसू"रित्यत्र षत्वनिषेधाय तस्यावश्यकत्वात्। एतच्च काशिकायां स्पष्टम्।

* शैषिकेति। एतच्च श्लोकवार्तिकमिति केचित्। भाष्यमिति बहवः। शेषे भवः शैषिकः। अध्यात्मादित्वाट्ठञ्। मतुबर्थे रभवो मतुबर्थीयः। गहादित्वाच्छः। मतुबर्थोऽस्यास्तीति मतुबर्थिकः। "अत इनिठनौ" इति ठन्।

इति तत्त्वबोधिन्यां सन्नन्तप्रक्रिया।

कृत्तद्धितसमासेकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। प्रसङ्गादाह--कृत्तद्धितेत्यादि। पञ्च वृत्तय इति। पञ्चानां "वृत्तिः"इति पूर्वचार्याणां संज्ञा इहाप्याश्रीयत इति भावः। तल्लक्षणमाह---परार्थेति। प्रत्ययार्थन्तर्भावेण परपदार्थान्तर्भावेन वा यो विशिष्ट[ऽर्थः] स परार्थः। स चाभिधीयते येन तत्परार्थाभिधानम्। अतएव तिङन्ते वृत्तिर्न भवति,

तत्रैकार्थीभावानभ्युपगमात्। अन्यथा "भृदु पचती"त्यादौ फले मृदुत्वान्वयो न स्यात्, "सबिशेषणानां वृत्तिर्न भवति, वृत्तस्य च विशेषणयोगोने"त्यभ्युपगमादित्येके। समर्थसूत्रे कैयटस्त्वाह--"परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः। यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते"इति। अविग्रह इति। लौकिकविग्रहरहित इत्यर्थः। अस्वपदेति। समस्यमानयावत्पदाऽघटित इत्यर्थः। द्वन्द्वबहुव्राईह्लोरेवेति। अनेकग्रहणतदनुवृत्तिभ्यां तद्विधानाद्वहुपदसमासत्वं यतोरेव संभवतीति भावः। क्वचिदेवेति। "व्यह्लजात"इत्यादौ। नाम्नेति। प्रातिपदिकेनेत्यर्थः। कुम्भकार इति। अत्र हि सुबुत्पत्तेः प्रागेवोपपदसमासः। कटप्रूः अजरुआमिति। "क्विब्वचिप्रच्छी"ति वार्तिके, "नमिकम्पी"ति सूत्रे च "कटप्रूः" "अजरुआ"मिति निपातनाद्धातुना समासः। पिबतखादतेति॥ "आख्यातमाख्यातेने"ति मयूरव्यंसकादौ पाठात्समासः।

इति तत्त्वबोधिन्यां सर्वसमासशेषः।

---

सूत्रम्

काशिका-वृत्तिः

प्राक् सितादड् व्यवाये ऽपि ८।३।६३

सेवसित ८।३।७० इति वक्ष्यति। प्राक् सितसंशब्दनाद् यानित ऊर्ध्वम् अनुक्रमिष्यामः तत्र अड्व्यवाये ऽपि मूर्धन्यो भवति इत्येवं तद् वेदितव्यम्, अपिशब्दादनड्व्यवाये ऽपि। वक्ष्यति उपसर्गात् सुनोतिसुवति इति षत्वम्। अभिषुणोति। परिषुणोति। वषुणोति। निषुणोति। अभ्यषुणोति। पर्यषुणोत्। व्यषुणोत्। न्यषुणोत्।

न्यासः

प्राक्सितादड्व्यवायेऽपि। , ८।३।६३

"इण्कोः" ८।३।५७ इति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्यार्थत्वाद्व्यवायेन प्राप्नीतौतीदमारभ्यते। अड्ग्रहणेनागमस्य ग्रहणम्(), न प्रत्याहारस्य। एतच्च व्याख्यानाद्वेदितव्यम्()। "प्राक्सितसंशब्दनात्()" इति। "परिनिविभ्यः सेवसितसय" ८।३।७० इत्यादितः। उदाहरणात्युत्तरत्र व्युत्पादयिष्यन्ते। अव्यवधानेऽपि यथा स्यादित्येवमर्थोऽपिशब्दः; अन्यथा ह्लसति तस्मिन्? यस्यापि तावत्पूर्वेण प्राप्तिरादेशसकारस्य, तस्याप्यच्यवाये न स्यात्(); तक्रकौण्डिन्यन्यायेन बाधितत्वात्? किं पुनरनादेशसकारस्य सेनायादिसम्बन्धिनो यस्य मूर्धन्यप्राप्तेरतयन्तासम्भव एव॥

तत्त्व-बोधिनी

प्राक्सितादड्?व्यवायेऽपि ९५, ८।३।६३

प्राक्सितात्। "उपसर्गात्सुनोति"त्यादिना विहितं षत्वमड्()व्यवाय एवेति भ्रमनिवारणार्थमपिशब्दस्योपादानम्। तेषामिति। पञ्चदशानामित्यर्थः। अब्यषुणोदित्यादीन्युदाहर्तव्यानि। स्थादिषु। इह द्वे वाक्ये,आद्यं षत्वविध्यर्थं, द्वितीयं तु नियमार्थमित्याशयेनाह--

---

सूत्रम्

काशिका-वृत्तिः

स्वादिष्वभ्यासेन च अभ्यासस्य ८।३।६४

प्राक् सितातिति वर्तते। उपसर्गात् सुनोति इत्यत्र स्थासेनयसेध इति स्थादयः, तेसु स्थादिषु प्राक् सितसंशब्दनातभ्यासेन व्यवाये मूर्धन्यो भवति, अभ्यासससकारस्य च भवति इत्येवं वेदितव्यम्। अभ्यासेन व्यवाये अषोपदेशार्थं च अभिषिषेणयिषति, परिषिषेणयिषति। अवर्णान्ताभ्यासार्थं च अभितष्टौ, परितष्टौ। षणि प्रतिषेधार्थं च अभिषिषिक्षति, परिषिषिक्षति। अभ्यासस्य इति वचनम् नियमार्थम्, स्थादिषु एव अभ्यासससकारस्य् मूर्धन्यो भवति, न अन्यत्र। अभिसुसूषति। अभिसिषासति।

न्यासः

स्थादिष्वभ्यासेन चाभ्यासस्य। , ८।३।६४

"प्राक्सितादिति वत्र्तते" इति। "स्थासेनयसेधसिच" ८।३।६५ इत्यत्र यः स्थाशब्दः, तमादाप प्राक्? (८।३।७०) सितसंशब्दनात्? ये धातवः सूत्रे निर्दिष्टास्ते स्थादयो वेदितव्याः। अथ किमर्थमभ्यासव्यवाये षत्वभुच्यते, यावता परितिष्ठासतीत्यादौ "इण्कोः" ८।३।५७, "आदेशप्रत्यययोः" (८।३।५९) इत्येवं सामान्यलक्षणेन सिद्धं णत्वम्()? इत्याह--"अभ्यासेन व्यवार्ये इत्यादि। अषोपदेशो यस्तस्य सकारः पूर्वेण न सिध्यतीति तदर्थमभ्यासेन व्यवाये षत्वमुच्यते। "अभिषिषेणयिषति" इति। सेनयाऽभियातीति "सत्यापपाश" ३।१।२५ इत्यादिना णिच्(), इष्ठवद्भावाट्टिलोपः, सन्(), पूर्ववदिडागमः। "अवर्णान्ताभ्यासार्थं च" इति। षोपदेशमधिकृत्य तदुक्तम्()। यद्यपि तस्य सकार आदेशो भवति, तथापि नैद सामान्यलक्षणेन सिध्यति; अनिणन्तत्वादभ्यासस्य, तेन व्यवधानाच्च। "अभितष्टौ" इति। "आत औ णलः" ७।१।३४ इत्यौत्वम्(), पूर्ववत्? खयः शेषः। "षणि तषेधार्थं च" इति। स्तौतिण्योरेवेति (८।३।६१) नियमेन यत्? प्रतिषिद्धं व्यावर्त्तितं तत्? षणि यथा स्यादित्येवमर्थं चेत्यर्थः। किं पुनस्तत्? प्रतिषिद्धम्()? षत्वम्()। अथ वा प्रतिषेधा प्रतिषिद्धम्(), भावे निष्ठा। अर्थशब्दो निवृत्तौ वत्र्तते, यता--मशकार्थो धूभ इति। तदेतदुक्तम्()--यः षणि प्रतिषेधः स्तोतिणिभ्यामन्यस्य धातोः षत्वप्रतिषेधः कृतस्तन्निवृत्यर्थ चेति। "अभिषिषिक्षति" इति। अत्र यद्यभ्यासेन व्यवाये नोच्येत तदा षत्वं न स्यात्(), यथा--सिसिक्षतीत्यत्र। अभ्यासस्येति किमर्थमुच्यते, यावता चशब्दोऽत्र क्रियते, स चापिशब्दस्यानुकर्षणार्थः, तेनायमर्थो भवति--अव्यवाये व्यवायेऽपीति, एवमन्तरेणाब्यासस्येति वचनमुपसर्गस्थान्निमित्तादुत्तरस्याभ्यासस्य भविष्यति? "सात्पदाद्योः" (८।३।१११) इति प्रतिषेधान्न भविष्यतीति चेत्()? न; "उपसर्गात्? सुनोति" ८।३।६५ इत्यस्य षत्वविधानार्थस्य प्रतिषेधार्थत्वात्(), तस्मिन्नेव हि प्रतिषेधे प्राप्ते तद्बाधनार्थ "उपसर्गात्? सुनोति" ८।३।६५ इत्यस्यारम्भः, तत्कुतः प्रतिषेधस्य प्राप्तिः? इत्याह--"अभ्यासस्य तु" इत्यादि। स्थादिष्वभ्यासस्यैवेति विपरीतनियमो नाशङ्कनीयः; विपरीतनियमे सत्यभ्यासध्वयाये स्थादीनां यन्मूर्धन्यविधानं तदपार्थकमेव स्यात्()। "अभिसुसूषति" इति। "षू प्रेरणे" (धा।पा।१४०८)। "अभिसिषासति" इति। "षो अन्तकर्मणि" (धा।पा।११४७)॥ "षुञ्? अभिषवे" (धा।पा।१२४७), "षू प्रेरणे" (धा।पा।१४०८)। सुवतीति शबिकरणनिर्देशात्? "निरनुबन्धकग्रहणे न सानुबान्धकस्य" (व्या।प।५३) इति च "षूङ प्राणिगर्भविमोचने" (धापा।१०३१), "षूङ प्रसवे" (धा।पा।११३२)--इत्येतयोरादादिकदैवादिकयोग्ररहणं न भवति। "षो अन्तकर्मणि" (धा।पा।११४७) "ष्टुञ् स्तुतौ" (धा।पा।१०४३), "ष्टुभु स्तम्भे" ["ष्टुम स्तम्भे"--का।प्रां३।पाठौ] (धा।पा।३९४) "ष्ठा गतिनिवृत्तौ" (धा।पा।९२८) सेनयतिण्यन्तः पूर्वमेव दर्शितः। "- गत्याम्()" (धा।पा।४७), "षिधू शास्त्रे माङ्गस्ये च" (धा।पा।४८)--द्वयोरपि ग्रहणम्()। एतयोस्तु "सेधतेर्गतौ" ८।३।११५ इति प्रतिषेधाद्गतेरन्यत्र षत्वं भवतीति वेदितव्यम्()। शपा निर्देशः "षिधु संराद्धौ" (धा।पा।११९२) इत्यस्य दैवादिकस्य निवृत्तये। "विचिर्? क्षरणे" (धा।पा।१४३४) "सन्ज सङ्गे" (धा।पा।९८७)। योऽत्र षोपदेशस्तस्य "आदेशप्रत्यययोः" ८।३।५९ इति प्राप्तस्य षत्वस्य "सात्पदाद्योः" ८।३।११३ इति प्रतिषेधे प्राप्ते[नास्ति--कां३।पाठे] वचनम्()। यस्त्वषोपदेशस्तस्यादित एवाप्राप्तेः। सुनोतीत्येव मादीनां श्तिपा निर्देशो यङ्लुग्निवृत्यर्थः। "उपसर्गस्थान्निमित्तादुत्तरस्य" इत्यादि। एतेनोपसर्गस्थे मूर्धन्यनिमित्ते

तात्स्थादुपचारेणोपसर्गशब्दोऽत्र वत्र्तत इति दर्शयति। भवति हि तात्स्थ्यात्? ताच्छब्द्यम्(), यथा--मञ्चाः क्रोशन्तीत्यत्र। "अभ्यषुणोत्()" इति। लङ्(), प्राक्तितादङ्व्यवायेऽपि" ८।३।६३ इति षत्वम्()। "अभिषुवति" इति। "अचि श्नुधातुभ्रुवाम्()" ६।४।७७ इत्यादिनोवङ्()। "अभिष्यति" इति। "ओतः श्यनि" ७।३।७१ इत्योकारलोपः। "अभिष्टौति" इति। अदादित्वाच्छपो लुक्(), "उतो वृद्धिर्लुकि हलि" ७।३।८९ इति वृद्धिः। "अभिष्टोभते" इति। अनुदात्तेत्त्वादात्मनेपदम्()। "अभिषिञ्चति" इति। "शे मुचादीनाम्()" ७।१।५९ इति नुम्()। "अभिषजति" इति। "दंशसञ्जस्वञ्जां शपि" ६।४।२५ इति नकारलोपः। एवमभिष्वजत इत्यत्रापि। पूर्ववदात्मनेपदम्()। "अभिषिष्वङ्क्षते" इति। अत्रापि "पूर्ववत्सनः" १।३।६२ इत्यात्मनेपदम्()। "दधि सिञ्चिति" इति। "सात्पदाद्योः" ८।३।१११ इति प्रतिषेधः। "निःसेचको देशः" इति। अत्र गमिक्रियया निसो योगः, न सिचिक्रिययेति गमिमेव प्रति तस्योपसर्गसंज्ञा, न सिचिं प्रति। "यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति" (जै।प।वृ।९९) इति वचनात। "अभिसावकीयति" इति। सुनोतेर्ण्वुल्()। सावकमिच्छतीति "सुप आत्मनः क्यच्()" ३।१।८, "क्यचि च" ७।४।३३ इतीत्वम्(); सावकीय इति स्थितेऽभिना योगः, ततो लट्()। अत्रापि सावक्रीयतिं प्रन्यभेरूपसर्गसंज्ञा; तं प्रति क्रियायोगात्(), न सुनोतिं प्रति; विपर्ययात्()। तेन षत्वं न भवति। यद्येवम्(), अभिषावयतीत्यत्रापि न स्यात्(), इहापि सावयतिं प्रति विपर्ययात्()? इत्यत आह--"अभिषावयतीत्यत्र तु" इत्यादि। अत्र हि प्रागेव सुनोतिरुपसगण योगमनुभूय पश्चात्? प्रेथणाध्येषणाद्यर्थेन योगमनुभवन्? णिचमुत्पादयति। तस्मादुपसर्गविशिष्टायामेव क्रियायां प्रेष्यते, अध्येष्यते वा। ततः सुनोतिमेव प्रत्यभेरुपसर्गसज्ञेति भवत्येव षत्वम्()॥

बाल-मनोरमा

स्थादिष्वभ्यासेन चाभ्यासस्य १२१, ८।३।६४

स्थादिषु। अभ्यासेनेति तृतीयान्तम्। प्राक्सितादित्यनुवर्तते। तदाह--- प्राक्सितादिति। "उपसर्गात्सुनोती"ति सूत्रे स्थाधातुमारभ्य "परिनिविभ्यः सेवसिते"त्यत्र सितशब्दात्प्राग्ये धातव उपात्तास्तेषु दशस्वित्यर्थः। निषिषेधेत्यादौ अभ्यासात्परस्य सस्य अभ्यासव्यवहत्वेन उपसर्गात्परत्वाऽभावादप्राप्तौ वचनम्। ननु निषिषेधेत्यादौ अभ्यासस्थसकारस्यौपसर्गादत्सुनोतीत्यनेनैव सिद्धत्वादभ्यासस्येति व्यर्थमित्याशङ्क्य नियमार्थमित्याह--एषामेवेति। अभ्यासस्थसकारस्य चेत्षत्वं तर्हि स्थादिदशानामेवेत्यर्थः। एवं च "षू प्रेरणे", अभिसुसूषत। अत्राभ्यासस्य न षत्वम्। अभ्यासात्परस्य तु सस्य स्तौतिण्योरेवेति नियमान्न षत्वम्।

तत्त्व-बोधिनी

स्थादिष्वभ्यासेन चाभ्यासस्य ९६, ८।३।६४

व्यवायेऽपि षत्वं स्यादेषामेव चेति। स्थदीनां दशानामेवभ्यासस्य षत्वमित्यर्थः। तत्फलं तु "षू प्रेरणे" अभिसुसूषति। अत्रोक्तनियमादभ्याससकारस्य न षत्वं, द्वितीयस्य तु "स्तौतिण्यो"रिति नियमान्न भवति। अभिसिषासतीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं, पूर्वस्य तूक्तनियमान्नेति बोध्यम्। स्यादेतत्--- निषिषेधेत्यादौ अभ्यासस्य "उपसर्गात्सुनोती"त्यनेन सिद्धम्, अभ्यासात्परस्य तु "आदेश प्रत्यययो"रित्यनेनेति किमाद्यावाक्येन?। अत्राहुः-- फलत्रयार्थमाद्यं वाक्यं। तथाहि अषोपदेशार्थम्-- सेनया अभियातुमिच्छति अभिषिषेणयिषति। अवर्णान्ताभ्यासार्थं च--"अर्धासनं गोत्रभिदोऽधितष्ठौ"। षणि प्रतिप्रसवार्थं च-- अभिषिषिक्षति। "षिच क्षरणे"। "स्तोतिण्योरेवे"ति नियमात्षभूते सनि निवर्तितमपि सत्वमुपसर्गमाश्रित्याऽत्र भवतीति।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८।३।६५

मूर्धन्य इति वर्तते, सः इति च। उपसर्गस्थान् निमित्तातुत्तरस्य सुनोति सुवति स्यति स्तौति स्तोभति स्था सेनय सेध सिच सञ्ज स्वञ्ज इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। सुनोति अभिषुणोति। परिषुणोति। अभ्यषुणोत्। पर्यषुणोत्। सुवति अभिषुवति। परिषुवति। अभ्यषुवत्। पर्यषुवत्। स्यति अभिष्यति। परिष्यति। अभ्यष्यत्। पर्यष्यत्। स्तौति तभिष्टौति। परिष्टौति। अभ्यष्तौत्। पर्यष्टौत्। स्तोभति अभिष्टोभते। परिष्तोभते। अभ्यष्टोभत। पर्यष्टोभत। स्था अभिष्ठास्यति। परिष्ठास्यति। अभ्यष्ठात्। पर्यष्ठात्। अभितष्ठौ। परितष्ठौ। सेनय अभिषेणयति। परिषेणयति। अभ्यषेणयत्। पर्यषेणयत्। अभिषिषेणयिषति। परिषिषेणयिषति। सेध अभिषेधति। प्रिषेधति। अभ्यषेधत्। पर्यषेधत्। सिच अभिषिञ्चति। परिषिञ्चति। अभ्यषिञ्चत्। पर्यषिञ्चत्। अभिषिषिक्षति। परिषिषिक्षति। सञ्ज अभिषजति। परिषजति। अभ्यषजत्। पर्यषजत्। अभिषिषङ्क्षति। प्रिरङ्क्षति। स्वञ्ज अभिष्वजते। परिष्वजते। अभ्यष्वजत। पर्यष्वजत। अभिषिष्वङ्क्षते। परिषिष्वङ्क्षते। सेध इति शब्विकरणनिर्देशः सिध्यतिनिवृत्त्यर्थः। उपसर्गातिति किम्? दधि सिञ्चति। मधु सिञ्चति। निर्गताः सेचका उस्मसद् देशात् निःसेचको देशः इति नायं सिचेः उप्सर्गः। अभिसावकोयति इत्यत्र अपि न सुनोतिं प्रति किर्यायोगः, किं तर्हि? सावकीयं प्रति। अभिषावयति इत्यत्र तु सुनोतिमेव प्रति क्रियायोगः, न सावर्यतिं प्रति इति षत्वं भवति।

बाल-मनोरमा

उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ११४, ८।३।६५

उपसर्गात्सुनोति। उपसर्गस्तादिति। उपसर्गशब्द उपसर्गस्थे लाक्षणिक इतिभावः। निमित्तादिति। इण्रूपादित्यर्थ-। "इण्को"रित्यधिकारेऽपि कोरिति नात्र संबध्यते, असंभवात्। सस्येति। "सहेः साडः स" इत्यतः स इति षष्ठ()न्तमनुवर्तत इति भावः। षः स्यादिति। "अपदान्तस्य मूर्धन्य" इत्यधिकारादिति भावः। अत्र सुनोतीत्यादिः श्तिपा निर्देशो यङ्()लुङ्निवृत्त्यर्थ इति प्राञ्चः। स्पष्टार्थ इति प्रौढमनोरमायाम्। सेनयेति णिजन्तो नामधातुः। सेधतीति शपा निर्देशात्सिध्यतेर्न ग्रहणम्। अभिषुणोतीत्याद्युदाहरणम्। प्रकृते निषेधतीत्याद्यर्थमिह सूत्रोपन्यास।

तत्त्व-बोधिनी

उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८९, ८।३।६५

उपसर्गात्। "सुनोति सुवती" इत्यादिश्तिपा निर्देशो यङ्()लुङ्निवृत्त्यर्थस्तेन अभिसोषवीति अभिसोषोतीत्यादौ षत्वं नेति प्राञ्चः। "स्थादिष्वेवाभ्यासस्य षत्वं न सुनोत्यादिष्वि"ति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध" इति मनोरमादौ स्थितम्। सेनयेति णिजन्तो नामदातुः। सेनयाऽभियाति-- अभिषेणयति। सेधेति शपा निर्देशाद्भौवादिकस्य ग्रहणं, न तु सिध्यतेः। परिसिध्यति। "गृहा दारा" इत्यत्रेव ता४त्स्थ्यात्ताच्छब्द्यमित्याह-- उपसर्गस्थादिति। निमित्तादिति। इण्रूपात्। कवर्गस्तुनेह संबध्यते, असंभवात्। न च निःषुणोति निःषेधति निःषिञ्चतीत्यादौ व्यवदानेन इणः परत्वाऽभावात्सस्य षत्वं न स्यादिति शङ्क्यं, षत्वविधौ "नुम्विसर्जनीयशर्व्यवायेऽपी"त्यधिकारात्। "इणन्तादुपर्गा"दिति व्याख्याने तु स्यादेवात्राऽव्याप्तिः। "दुरः षत्वणत्वयो"रित्युपसर्गत्वप्रतिषेधाद्दुः सुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक्। मूर्धन्यादेशे फलितमाह-- सस्य षः स्यादिति। स्थादिषु "प्राक् सिता"दित्यत्र क्रमज्ञानस्यापेक्षिततत्वात्तेनैव क्रमेण षत्वसूत्राणि व्याचष्टे-

---

सूत्रम्

काशिका-वृत्तिः

सदिरप्रतेः ८।३।६६

सदेः सकारस्य उपसर्गस्थान् निमित्तातप्रतेः उत्तरस्य मूर्धन्य आदेशो भवति। निषीदति। विषीदति। न्यषीदत्। व्यषीदत्। निषसाद। विषसाद। अप्रतेः इति किम्? प्रतिसीदति।

न्यासः

सदिरप्रतेः। , ८।३।६६

"सात्पदाद्योः" ८।३।११३ इति प्रतिषेधे प्राप्ते वचनम्()। सदिरिति सुब्व्यत्ययेन षष्ठ्याः स्थाने थमा। "निषीदति" इत। "षद्लृ विशरणगत्यवसादनेषु" (धा।पा।१४२७)। पाघ्रादिसूत्रेण ७।३।७८ सोदादेशः। "निषसाद" इति। "सदिस्वञ्जोः परस्य लिटि" (८।३।११८) इति प्रतिषेधादभ्यासात्? परस्य न भवति षत्वम्()॥

बाल-मनोरमा

सदिरप्रतेः ११५, ८।३।६६

प्रसङ्गादाह--सदिरप्रतेः। उपसर्गादिति। उपसर्गस्थादिणः परस्येत्यर्थः। सदिरिति षष्ठ()र्थे प्रथमेत्यभिप्रेत्याह-- सदेः सस्येति। निषीदतीत्युदाहरणम्।

बाल-मनोरमा

प्राक्सितादड्?व्यवायेऽपि १२०, ८।३।६६

प्राक्सतादिति। "उपसर्गात्सुनोतीत्यादिसूत्रोपात्ता" इति शेषः। तेषामिति। पञ्चदशानामित्यर्थः। न्यषेधदिति। अकारेम व्यवहितत्वादिणः परत्वाऽभावादप्राप्तौ वचनम्। अभ्युषुणोदित्यप्युदाहार्यम्।

तत्त्व-बोधिनी

सदिरप्रतेः ९०, ८।३।६६

सदिरप्रतेः। अप्रतेः किम्()। प्रतिसीदति। षष्ठ()र्थे प्रथमेत्याह-- सदेरिति।

---

सूत्रम्

काशिका-वृत्तिः

स्तन्भेः ८।३।६७

उपसर्गातिति वर्तते। स्तन्भेः सकारस्य उपसर्गस्थान् निमित्तातुत्तरस्य मूर्धन्य मुर्धन्य आदेशो भवति। अभिष्टभ्नाति। परिष्टभ्नाति। अभ्यष्टभ्नात्। पर्यष्टभ्नात्। अभितष्टम्भ। परितष्टम्भ। अप्रतेः इत्येतदिह न अनुवर्तते, तेन एतदपि भवति, प्रतिष्टभ्नाति, प्रयष्टभ्नात्, प्रतितष्टम्भ।

लघु-सिद्धान्त-कौमुदी

स्तन्भेः ६९२, ८।३।६७

स्तन्भेः सौत्रस्य सस्य षः स्यात्। व्यष्टभत्। अस्तम्भीत्॥ युञ् बन्धने॥ ७॥ युनाति, युनीते। योता॥ क्नूञ् शब्दे॥ ८॥ क्नूनाति, क्नूनीते॥ द्रूञ् हिंसायाम्॥ ९॥ द्रूणाति, द्रूणीते॥ दृ विदारणे॥ १०॥ दृणाति, दृणीते॥ पूञ् पवने॥ ११॥

न्यासः

स्तन्भे।, ८।३।६७

स्तन्भिः सौत्रो धातुः। स यदि" अज्दन्त्यपराः सादयः षोपदेशाः" ६।१।६२, भाष्यम्()) इति लक्षणत्वात्? षोपदेशस्तस्य ततः पूर्ववत्? षत्वप्रतिषेधे प्राप्ते वचनम्()। अथ सूत्रे तथा पाठादषोपदेशः, ततोऽप्राप्त एव। "स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च" ३।१।८२ इति चकारेण श्नाप्रत्ययः समुच्चीयते। "अनिदिताम्()" ६।४।२४ इत्यनुनासिकलोपः। "अप्रतेरेतदिह नानुवत्र्तते"["अप्रतेरित्येतदिह"--काशिका, पदमञ्जरी च] इति। एतच्च योगाविभागदेव गम्यते; इतरथा हि पूर्वसूत्र एव स्तन्मभेग्रहणं कुर्यात्()। स्यादेतत्()--"अवाच्चालम्बनाविदूर्ययोःट ८।३।६८ इति षत्वं वक्ष्यति। ततः स्तन्भेरेव यथा स्यात्(), सदेर्मा भूदित्येवमर्थो योगविभाव इति? नैतदस्ति; एकयोगेऽपि यस्यालम्बनादिदूर्ये वृत्तिरस्ति तस्यैव भविष्यते। कस्य चैते स्तः? स्तम्भेरेव॥

बाल-मनोरमा

स्तम्भेः ११६, ८।३।६७

स्तम्भेः। नकारोपधनिर्देशस्य प्रयोजनमाह-- सौत्र्येति। "स्तन्भुस्तुन्भु"इति सूत्रनिर्दिष्टस्य नोपधस्येत्यर्थः। स हि प्रतिपदोक्तः। "ष्टभि प्रतिबन्धे" इत्यस्य तु धातोरिदित्त्वान्नुमि लाक्षणिकत्वान्न ग्रहणम्। तेन विस्तम्भत इत्यादौ न षत्वम्। "उदः स्थास्तम्भ्वो"रिति सूत्रे तु मोपधग्रहणादुभयोरपि ग्रहणं, मकारस्य उभयत्रापि लाक्षणिकत्वात्। ननु "सदिस्तन्भ्योरप्रते"रित्येकमेव सूत्रं कुतो न कृतमित्यत आह--योगविभाग उत्तरार्थ इति। "अवाच्चालम्बनाविदूर्ययो"रित्युत्तरसूत्रे सदेरननुवृत्त्यर्थ इत्यर्थः। ननु सदेरस्वरितत्वादालम्बनाविदूर्ययोर्वृत्त्यभावादेव च अनुवृत्त्यभावः सिद्ध इत्यस्वारस्यादाह-- किंचेति। नानुवर्तत इति। स्तम्भेरित्यत्र अप्रतेरित्यस्य स्तन्भिनाऽपि संबन्धः स्यादिति भावः। "अप्रते"रित्यस्य स्तन्भावनन्वयो वृद्धिप्रयोगानुगत इत्याह---बाहुप्रतिष्टम्भेति।

तत्त्व-बोधिनी

स्तम्भेः ९१, ८।३।६७

स्तम्भेः। सौत्रस्येति। "स्तन्भुस्तुन्भु" इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु "ष्टभि प्रतिबन्धे" इत्यस्येति भावः। एवं "जृ()स्तम्भु" इत्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम्। एतच्च "लक्षणप्रतिपदोक्त" परिभाषया लभ्यते। सौत्रो हि धातुर्नकारोपध इति प्रतिपदोक्तः। इदित्त्वान्नुमि ष्टभिर्लाक्षणिकः। तेन विस्तम्भते मकारस्योभयत्रापि लाक्षणिकत्वात्। उत्तरार्थ इति। उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थ इति भावः। ननु "सदिस्तन्भ्यो"रिति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात्कथंचिदनुवृत्तिर्भविष्यतीत्यत आह-- किंचेति। नानुवर्तत इति। तथा च "स्तन्भे"रित्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अवाच् च आलंवनाऽविदूर्ययोः ८।३।६८

अवशब्दातुपसर्गातुत्तरस्य स्तन्भेः सकारस्य मूर्धन्यः आदेशो भवति, आलम्बने ऽर्थे आविदूर्ये च। आलम्बनम् आश्रयणम्। अविदूरस्य भावः आविदूर्यम्। आलम्बने तावत् अवष्टभ्यास्ते। अवष्टभ्य तिष्ठति। आविदूर्ये अवष्टब्धा सेना। अवष्टब्धा शरत्। आलम्बनाविदूर्ययोः इति किम्? अवस्तब्धो वृषलः शीतेन। अनिगर्थः आरम्भः।

न्यासः

अवाच्चालम्बनाविदूर्ययोः। , ८।३।६८

चकारः स्तम्भेरनुकर्षणार्थः। अनिणर्थोऽयभारम्भः। आलम्बनम्()श्रयणम। विदूरम्()=विप्रकृष्टम्(), ततोऽन्यदविदूरम्()। तत्पुनर्यदासन्नं यच्च नाप्यतिदूरं तद्वेदितव्यम्(), नासन्नमात्रम्()। आसन्नमात्रं यद्यभिमतं स्यात्(), तदासन्नग्रहणमेव कुर्यात्()। अविदूरस्य भाव आदिदूर्यम्()। अत एव निपातनान्नञ्पूर्वादपि तत्पुरुषादुत्तरो भावप्रत्ययः। ब्राआह्मणादित्वाद्वा। "अवष्टभ्य" इति। ल्यबन्तमेतत्()। आश्रित्येत्यर्थः। "अवष्टब्धा शरत्()" इति। आसन्नेत्यर्थः। अथ वा नाप्यासन्ना, नातिविप्रकृष्टेत्यर्थः। एष त्वर्थभेदः प्रकरणादिगम्यः। निष्ठातकारस्य "झषस्तथोर्धोऽधः" ८।२।४० इति धकारः, "झलां जशु झशि" ८।४।५२ इति भकारस्य वकारः। "अवस्तब्धः" इति। अभ्यर्दित इत्यर्थः॥

बाल-मनोरमा

अवाच्चाऽऽलम्बनाऽऽविदूर्ययोः ११७, ८।३।६८

अवाच्च। आलम्बनं च आविदूर्यं चेति द्वन्द्वात्सप्तमीद्विवचनम्। एतोरिति। आलम्बनाविदूर्ययोरर्थयोर्विद्यमानस्य अवात्परस्य स्तम्भेरित्यन्वयः। अपूर्वविधिरयम्, इणः परत्वाऽभावादप्राप्तेः। आलम्बने-- यथा--यष्टिवष्टभ्य तिष्ठतीति। आश्रित्येत्यर्थः। आविदूर्य--सामीप्यम्। अवष्टब्धा गौः। निरुद्धा सति समीपे आस्त उत्यर्थः।

तत्त्व-बोधिनी

अवाञ्चाऽऽलम्बनाऽऽविदूर्ययोः ९२, ८।३।६८

अवाञ्चा। चकारश्चिन्त्यप्रयोजन इत्याहुः। आलम्बनमाश्रयणम्। यथा-- यष्टिमवष्टभ्य आस्ते। तामाश्रित्य तिष्ठतीत्यर्थः। आविदूर्यं-- सामीप्यम्।तच्च प्रयोगोपाधिः। अवष्टब्धा गौः। निरुद्धा सती समीपे आस्त इत्यर्थः। एतयोः किम्?। अवस्तब्धो वृषलः शीतेन। केचिदिह अविदूरशब्दात्स्वार्थे ष्यञ्। आविदूर्यमनतिदूरम्। ईषद्दूरमित्यर्थः। तथा च अविदूरशब्दात् "न नञ्()पूर्वात्तत्पुरुषा"दिति निषेधे प्राप्ते अतएव निपातनाद्भावप्रत्यय इति मनोरमाग्रन्थोक्तिर्नातीवोपयुज्यत इत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

वेश् च स्वनो भोजने ८।३।६९

वेः उपसर्गातवात् च उत्तरस्य भोजनार्थे स्वनतेः सकास्य मूर्धन्यादेशो भवति। विष्वणति। व्यष्वणत्। विषष्वाण। अवष्वणति। अवाष्वणत्। अवषष्वाण। अभ्यवहारक्रियाविशेषो ऽभिधीयते, यत्र स्वननम् अस्ति। भोजने इति किम्? विस्वनति मृदङ्गः। अवस्वनति मृदङ्गः।

न्यासः

वेश्च स्वनो भोजने। , ८।३।६९

चकारः "अवात्()" ८।३।६८ इत्यस्यानुकर्षणार्थः। वेरुत्तरस्य स्वनतेरनादेशसकरत्वादप्राप्ते। अवशब्दात्? पुनरनिणन्तत्वाच्चाप्राप्त एवेदमारभ्यते। "अभ्यबहारक्रियाविशेषोऽभिधीयते" इति। अनेन भोजनार्थतां दर्शयति। "विष्वणति" इति। सशब्दं भूङ्क्त इत्यर्थः। अनेकार्थत्वाद्धातूनां स्वनतिरत्राभ्यबहार क्रियाविशेषे वत्र्तते। "यत्र" इत्यादिना

तमेव भोजनविशेषं दर्शयति॥

बाल-मनोरमा

वेश्व स्वनो भोजने ११८, ८।३।६९

वेश्व। अवादित्यनुकर्षणार्थश्चकारः। तदाह-- व्यवाभ्यामिति। विष्वणति। अवष्वणति। सशब्दं भुङ्क्ते इत्यर्थ-। अट्कुप्वाङिति णत्वम्।

तत्त्व-बोधिनी

वेश्वस्वनो भोजने ९३, ८।३।६९

वेश्व। विष्वणति सशब्दं भुङ्क्त इत्यर्थः। "अट्कुप्वा"ङिति णत्वम्। एवम्()-- अवष्वणति। व्यष्वणत्। विषष्वाण। "स्थादिष्वभ्यासेन चे"ति षत्वम्। भोजने किम्?। विखनति वीणा।

---

सूत्रम्

काशिका-वृत्तिः

परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ८।३।७०

परि नि वि इत्येतेभ्याः उपसर्गेभ्यः उत्तरेषाम् सेव सित सय सिवु सह सुट् स्तु स्वञ्ज इत्येतेषाम् सकारस्य मूर्धन्य आदेशः भवति। परिषेवते। निषेवते। विषेवते। पर्यषेवत। न्यषेवत। व्यषेवत। परिषिषेविषते। निषिषेविषते। विषिषेविषते। सित परिषितः। निषितः। विषितः। सय परिषयः। निषयः। विषयः। सिव् परिषीव्यति। निषीव्यति। विषीव्यति। पर्यषीव्यत्। न्यषीव्यत्। व्यषीव्यत्। पर्यसीव्यत्। न्यसीव्यत्। व्यसीव्यत्। सह परिषहते। निषहते। विषहते। पर्यषहत। न्यषहत। व्यषहत। पर्यसहत। न्यसहत। व्यसहत। सुट् परिष्करोति। पर्यष्करोत्। पर्यस्करोत्। स्तु परिष्टौति। निष्टौति। विष्टौति। पर्यष्टौत्। न्यष्टौत्। व्यष्टौत्। पर्यस्तौत्। न्यस्तौत्। व्यस्तौत्। स्वञ्ज दंशसञ्जस्वञ्जाम् इति नलोपः। परिष्वजते। निष्वजते। विष्वजते। पर्यष्वजत, पर्यस्वजत। पूर्वेण एव सिद्धे स्तुस्वञ्जिग्रहणम् उत्तरार्थम्, अड्व्यवाये विभाषा यथा स्यात्।

न्यासः

परिनिदिभ्यः सेवसितसयसिबुसहसुट्स्तुस्वञ्जाम्?। , ८।३।७०

"षेवृ सेवृ सेवने" [नास्ति धातुपाठे] (धा।पा।५०१) इति भ्वादावात्मनेपदिनौ पठ()एते। योऽत्र वोपदेशस्तस्य "सात्पदाद्योः" ८।३।११३ इति प्रतिषेधे प्राप्ते, इतरस्य त्वप्राप्त एव षत्वे वचनम्()। "सित" इति। "षिञ्? बन्धने" (धा।पा।१२४८) इत्येतस्य पूर्ववत्? प्रतिषेधे प्राप्ते वचनम्()। अपरे तु स्यतेरपि ग्रहणमिच्छन्ति, तस्यापि क्ते "द्यतिस्यति" ७।४।४० इत्यादिनेत्त्वे कृते सित इति रूपम्()। किमर्थं पुनस्तस्य ग्रहणम्(), यावता "उपसर्गात् सुनोति" (८।३।६५) इत्यादिना सिद्धमेव? नियमार्थम्()--परिनिविभ्य एवोपसर्गेभ्यो यथा स्यात्(), अन्येभ्यो मा भूदिति। "सय" इति। सुनोतेः "एरच्()" ३।३।५६ इत्यजन्तस्य ग्रहणमन्यप्रत्ययान्तनिवृत्त्यर्थम्()। "सिवु" इति। "षिवु तन्तुसन्ताने" (धा।पा।११०८) पूर्ववत्? प्रतिषेधे प्राप्तेऽस्यग्रहणम्()। "सह"[नास्ति--प्रांउ।पाठे] इति। "षह मर्षणे" (धा।पा।८५२)। "सुट्()" इति। "सुट्? कात्? पूर्वः" ६।१।१३१ सुडागमः, [रुडागमः--कांउ।पाठः] तस्यानादेशसकारत्वादप्राप्त एव षत्व उपादानम्()। स्तुस्वञ्जोः "उपसर्गात्? सुनोति" ८।३।६५ इत्यादिनैव सिद्ध उत्तरसूत्रेणाड्व्यवायेऽपि विकल्पो यता स्यादिति ग्रहणम्()। "परिषोध्यति" इति। "हलि च" ८।२।७७ इति दीर्घः। "परिष्करोति" इति। "सम्पर्युपेभ्यः" ६।१।१३२ इत्यादिना सुट्()॥

बाल-मनोरमा

परिनिविभ्यः सेवसितसयसिवुसहसुटस्तुस्वञ्जाम् ११९, ८।३।७०

परिनिविभ्यः। सेवेत्यकार उच्चारणार्थः। "षेवृ सेवाया"मिति धातोग्र्रहणम्। परिषेवते। निषेवते। विषेवते। सितेत्यनेन षिञ् बन्धन इति क्तान्तस्य ग्रहणम्। अस्यैव धातोरेरजन्तो वा पचाद्यजन्तो वा सयशब्दः। विषितः। विषयः। षिवु तन्तुसन्ताने। परिषीव्यति। षह मर्षणे। परिषहते। सुट् आगमः। परिष्करोति। स्तुस्वञ्जो"रुपसर्गात्सुनोती"त्येव सिद्धे "सिवादीनां वे"ति विकल्पार्थं पुनर्वचनम्।

तत्त्व-बोधिनी

परिनिविभ्यः सेवसितसयसिवुसहसुट्?स्तुस्वञ्जाम् ९४, ८।३।७०

परिनिवभ्यः। सेवेत्यत्र अकार उच्चारणार्थः। न च यङ्लुग्निवृत्तये शपा निर्देश एवास्त्विति शङ्क्यं, वकारान्तानामूठ्()भाविनां यङ्()लुङ् नास्तीति वक्ष्यमाणत्वात्। "षेवृ सेवायाम्"। परिषेवते। "षिञ् बन्धने"। क्तान्तः सितशब्दः। एरजन्तः पचाद्यजन्तो वा सयशब्दः। विषितः। विषयः। प्रत्ययविशिष्टग्रहणं किम्?। विसिनोति। "षिवु तन्तुसन्ताने"। परिषीव्यति। "षह मर्षणे" परिषहते। सुट आगमः। परिष्करोति। [विष्करोति]। स्तुस्वञ्ज्योः "उपसर्गात्सुनोती"त्येव सिद्धे परिनिविभ्यः परयोरेतयोः "सिवादीनां वाड्()व्यवायेऽपी"ति विकल्पार्थं पुनर्वचनम्।

---

सूत्रम्

काशिका-वृत्तिः

सिवादीनां वा अड्व्यवाये ऽपि ८।३।७१

अनन्तरसूत्रे सिवुसहसुट्स्तुस्वञ्जाम् इति सिवादयः। सिवादीनाम् अड्व्यवाये ऽपि परिनिविभ्यः उत्तरस्य सकारस्य वा मूर्धन्यो भवति। तथा चिअवोदाहृतम्।

न्यासः

सिवादीनां वाड्व्यवायेऽपि। , ८।३।७१

सिवादयः प्रत्यासत्तेः "सिवुसहसुट्स्तुस्वञ्जाम्()" ८।३।७० इति पूर्वसूत्र एव सन्निनिष्टा गृह्न्ते, न तु गणसन्निविष्टाः स्तुस्वञ्जोः "प्राक्सितादड्व्यवाये" ८।३।६३ इति प्राप्ते, शेषाणामप्राप्ते विभाषेयमारभ्यते॥

बाल-मनोरमा

सिवादीनां वाऽड्?व्यवायेऽपि १९६, ८।३।७१

सिवादीनां। "परिनिविभ्य" इति सूत्रादुत्तरमिदं सूत्रम्। तदाह--परिनिविभ्यः परेषामिति। "सिवुसहसुट्स्तुस्वञ्जा"मिति शेषः। रमु इति। नाऽयमुदिदिति माधवः। केचित्तु उदितं मत्वा "उदितो वे"ति क्त्वायामिड्विकल्पमिच्छन्ति। अनिट्कोऽयम्। लिटि क्रादिनियमादिट्। तदाह--रेमिषे इति। अथ कसन्ता इति। "कस गतौ" इत्येतत्पर्यन्ता इत्यर्थः। षद्लृधातुः षोपदेशोऽनिट्कश्च।

तत्त्व-बोधिनी

सिवादीनां वाऽड्व्यवायेऽपि। १६९, ८।३।७१

सिवादीनां। सिवुसहसुट्स्तुस्वञ्जः सिवादयः। पर्यषीव्यत्। पर्यसीव्यत्। पर्यष्करोत्। न्यष्टौत्। न्यस्तौत्। व्यष्वजत्। व्यस्वजत्। रम क्रीडायाम्। अमुमुदितं मत्वा रन्त्वा रमित्वेति केचिदुदाजह्रुस्तन्माधवादयो न सहन्ते। तथा च क्त्वायां रन्त्वेत्येव साधु। रेमिषे इति। क्रादिनियमादिट्। पचाद्यचि टाप्। रमा। घञि तु -- रामः। अमन्तत्वेन मित्त्वाण्णौ ह्रत्वः। रमयति। षद्लृ। विशरणमवयवानां विश्लेषः। अवसादनं-- नाशः।

---

सूत्रम्

काशिका-वृत्तिः

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ८।३।७२

अनु वि परि अभि नि इत्येतेभ्यः उत्तरस्य स्यन्दतेः अप्राणिषु सकारस्य वा मूर्धन्यादेशो भवति। अनुष्यन्दते। विष्यन्दते। परिष्यन्दते। अभिष्यन्दते तैलम्। निष्यन्दते। अनुस्यन्दते। विस्यन्दते। परिस्यन्दते। अभिस्यन्दते। निस्यन्दते। अप्राणिषु इति किम्। अनुस्यन्दते मत्स्य उदके। प्राण्यप्राणिविषयस्य अपि स्यन्दतेः अयम् विकल्पो भवति, अनुष्यन्देते मत्स्योदके, अनुस्यन्देते। अप्राणिषु इति पर्युदासो ऽयम्, न प्रसज्यप्रतिषेधः।

न्यासः

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु। , ८।३।७२

"स्यन्दू रुआवणे" ["प्ररुआवणे"--धा।पा।] (धा।पा।७६१)। अस्याषोपदेशत्वादप्राप्त एव षत्व इदं वचनम्()। "अनुस्यन्दते मत्स्य उदके" इति। अथ कथमिदं प्रत्युदाहरणमुपपद्यते? यद्यप्राणिष्विति प्रसज्यप्रतिषेध आश्रीयते; प्राणिषु न भवतीति। प्रसजयप्रतिषेधे हि यत्र प्राणिगन्धोऽस्ति तत्र श्रूर्धन्येन न भवितव्यम्()। इह चास्ति मत्स्यः प्राणीति षत्वं न प्रवत्र्तते। यदि तु पर्युदास आश्रीयते, प्राणिभ्योऽन्यत्र भवतीति तदा प्राण्यप्राणिसमुदायः प्राणिभ्योऽन्यो भवतीति स्यादेवात्र प्राण्यप्राणिसमुदायात्मके विषये मूर्धन्यः॥

बाल-मनोरमा

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु १८८, ८।३।७२

अनुविपर्यभिनि। एभ्य इति। अनु वि परि अभि नि इत्येतेभ्य इत्यर्थः। सस्येति। "सहेः साडः सः " इत्यतः स इति षष्ठ()न्तस्यानुवृत्तेरिति भावः। षो वा स्यादिति। "अपदान्तस्य मूर्धन्यः" इत्यधिकारादिति भावः। ननु "मत्स्योदके अनुष्यन्देते" इत्यत्र कतं षत्वं, प्राणिकर्तृकत्वस्यापि सत्त्वादित्यत आह-- अप्राणिष्विति पर्युदासादिति। "प्राणिकर्तृकस्य ने"ति न प्रतिषेधः, येनात्र प्राणिकर्तृकत्वस्यापि सत्त्वात् षत्वं न स्यात्। किन्तु प्राणिभिन्नकर्तृकस्येति पर्युदास आश्रीयते। एवं च प्राण्यप्राणिकर्तृकस्यापि अप्राणिकर्तृकत्वाऽनपायादिह षत्वं निर्बाधमिति भावः। कृपू सामर्थ्ये इति। सामथ्र्यं-- कार्यक्षमीभवनम्। ऊदित्त्वाद्वेट्कोऽयम्। ऋदुपधः।

तत्त्व-बोधिनी

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु १६१, ८।३।७२

अनुविपर्यभिनिभ्यः। एभ्य इति। पञ्चभ्य इत्यर्थः। षत्वं भवत्येवेति।
प्राण्यप्राणिकर्तृकस्याऽप्यप्राणिकर्तृकत्वानपायादिति भावः। असमर्थसमास-- वाक्यभेदापत्तिदोषाभ्यां प्रसज्यप्रतिषेधो न सूत्रेऽभिप्रेत इत्याशयेनाह--- प्राणिषु नेत्युक्ताविति। कृपू सामर्थ्ये। भाष्यकृतां व्याख्यामाह-- कृप उ इति।

---

सूत्रम्

काशिका-वृत्तिः

वेः स्कन्देरनिष्ठायाम् ८।३।७३

वेः उपसर्गादुत्तरस्य स्कन्देः सकारस्य मूर्धन्यो वा भवति अनिष्ठायाम्। विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। विषन्तव्यम्, विस्कन्तव्यम्। अनिष्ठायाम् इति किम्? विस्कन्नः।

न्यासः

वेः स्कन्देरनिष्ठायाम्?। , ८।३।७३

"स्कन्दिर्? गतिशोषणयोः" (धा।पा।९७१)। अधोपदेशः। अतस्तस्याप्राप्त एव मूर्धन्ये वचनम्। "विष्कशः" इति। "अनिदिताम्()" ६।४।२४ इत्यनुनासिकलोपः। "रदाभ्याम्()" ८।२।४२ इत्यादिना नत्वम्()॥

बाल-मनोरमा

वेः स्कन्देरनिष्ठायाम् २३३, ८।३।७३

वेः स्कन्दे। शेषपूरणेन सूत्रं व्याचष्टे-- षत्वं वा स्यादिति। "अपदान्तस्य मूर्धन्यः" इत्यधिकारात् "सिवादीनां वे"त्यतो वेत्यनुवृत्तेश्चेति भावः। वेः परस्य स्कन्देः सस्य षो वा स्यादनिष्ठायां परत इति फलितम्। ननु विस्कन्दतीत्यादौ कुतो न षत्वविकल्प इत्यत आह-- कृत्येवेदमिति। पर्युदासस्य "अब्राह्मणमानये"त्यादाविव सजातीयापेक्षत्वादिति भावः। विष्कन्त्ता विस्कन्त्तेति। तृचि रूपे। अषोपदेशत्वादप्राप्ते विभाषेयम्।

तत्त्व-बोधिनी

वेः स्कन्देरनिष्ठायाम् २०४, ८।३।७३

वेः स्क्नदेरनिष्ठायाम्। "सिवादीना"मित्तो "वे"त्यनुवर्तते। अषोपदेशत्वादप्राप्ते विभाषेयम्। माधवादिग्रन्तानुरोधेनाह-- कृत्येवेदमिति। प्राचा तु "विकन्दती"त्युदाह्रतं, तत्र मूलंमृग्यमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

परेश् च ८।३।७४

परिशब्दादुत्तरस्य स्कन्देः सकारस्य वा मूर्धन्यो भवति। परिष्कन्ता। परिष्कन्तुम्। परिष्कन्तव्यम्। परिस्कन्ता। परिस्कन्तुम्। परिस्कन्तव्यम्। पृथग्योगकरणसामर्थ्यातनिष्थायाम् इत्येतन् न अनुवर्तते। परिष्कण्णः, परिस्कन्नः।

न्यासः

परेश्च। , ८।३।७४

"पृथग्योगकरणसामथ्र्यात्()" इत्यादि। यदि परेरप्युत्तरस्या स्कन्देर्निष्ठायां मूर्धन्यो नाभिमतः स्यात्(), ततः "विपराभ्यां स्कन्देरनिष्ठायाम्()" इत्येकयोगमेव कुर्यादित्यभिप्रायः। चकारः स्कन्देरनुकर्षणार्थः॥

बाल-मनोरमा

परेश्च २३४, ८।३।७४

परेश्च। ननु "विपरिभ्यां स्कन्देरनिष्ठाया"मित्येव सिद्धे सूत्रभेदो व्यर्थ इत्यत आह--योगेति। षत्वपक्षे इति। परिष्कन्द् त इति स्थिते "अनिदिता"मिति "रदाभ्या"मिति निष्ठातकारस्य, तत्पूर्वदकारस्य ष्टुत्वेन णत्वे "परिष्कण्ण" इति रूपमित्यर्थः। ननु दकारस्थानिकनकारस्य षकारनिमित्तकं णत्वमन्तरङ्गं, निमित्तनिमित्तिनोरेकपदस्थत्वात्,षत्वं तु "परी"त्युपसर्गात्मकपदान्तरस्थमिणं निमित्तीकृत्य प्रवर्तमानं बहिरङ्गम्। ततश्च णत्वे कर्तव्ये बहिरङ्गस्य षत्वस्याऽसिद्धत्वात्षात्परत्वाऽभावात्कथं णत्वमित्याशङ्क्य निराकरोति--न चेति। पदद्वयाश्रयतया बहिरङ्गस्य षत्वस्याऽसिद्धत्वं यत्प्रसक्तं तन्न शङ्क्यमित्यन्वयः। कुत इत्यत आह--धातूपसर्गयोरिति पूर्वं धातुरिति। [पूर्वं] धातुरुपसर्गेण सह युज्यते = सन्ध्यादिकार्यं लभते। पश्चात् = धातूपसर्गकार्यप्रवृत्त्यनन्तरं साधनेन युज्यते। साधनशब्दः कारकवाची। इह तु तद्वाचकः प्रत्ययो लक्ष्यते। प्रत्ययेनेति यावत्। इदं च "संप्रसारमाच्चे"त्यादसूत्रभाष्ये स्पष्टम्। तदाह--भाष्यमिति। मतान्तरे त्विति। "पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेणे"ति पक्षे तु षत्वस्य बहिरङ्गतया असिद्धत्वान्न णत्वमित्यर्थः। यभधातुरनिट्। यभति। ययाभ येभतुः। थलि तु भारद्वाजनियमादिट्पक्षे पित्त्वेनाऽकित्त्वेऽपि "थलि च सेटि" इत्येत्वाभ्यासलोपं मत्वा आह-- येभिथेति। ययब्धेति। थलि इडभावपक्षे पित्त्वेनाऽकित्त्वादेत्वाऽभ्यासलोपाऽभावे ययम् थ इति स्थिते "झषस्तथो"रिति थस्य धत्वे भस्य जश्त्वेन बकार इति भावः। येभथुः येभ। ययाभ--ययभ। क्रादनियमादिट्। येभिव। येभिम। यब्धेति। लुटि तासि तकारस्य "झषस्तथो"रिति धत्वम्। भकारस्य जश्त्वेन बकार इति भावः। यप्स्यतीति। स्ये भस्य चर्त्वेन पः। यभतु। अयभत्। यभेत्। यभ्यात्। अयाप्सीदिति। हलन्तलक्षणावृद्धिरिति भावः। अयप्स्यत्। णम् प्रह्त्र्त्वे इति। अनिडयं णोपदेशश्च। केचित्त्विमं धातुमुदितं पठन्ति। तत्तु प्रामादिकम्। तथा सति "उदितो वे"ति क्त्वायामिड्विकल्पस्य "यस्य विभाषा" इति निष्ठायामिड्विकल्पस्य चाऽऽपत्तेः। नमति। ननाम नेमतुः नेमुः। थलि तु भारद्वाजनियमादिट्पक्षे पित्त्वेनाऽकित्त्वेऽपि "थलि च सेटी"त्येत्वाभ्यासलोपं मत्वा आह-- नेमिथ ननन्थेति। इडभावपक्षे पित्त्वेन अकित्त्वादेत्वाभ्यासलोपाऽभावे रूपम्। नेमथुः नेम। ननाम--ननम, नेमिव नेनिम। क्रादिनियमादिट्। नन्त#एति। मस्यानुस्वारपरसवर्णौ। नंस्यति। नमतु। अनमत्। नमेत्। नम्यात्। अनंसीदिति। "यमरमे"ति सगिति भावः। अनंस्यत्। गम्लृ सृप्लृ गताविति। अनिटौ। सृपिरषोपदेशः।

तत्त्व-बोधिनी

परेश्च २०५, ८।३।७४

न संबध्यत इति। अत एव तिङन्तेऽपि षत्वमुदाहरति। परिष्कन्दतीति। णम् प्रह्वत्वे।केचिदमुमुदितं पठन्ति, तत्प्रामादिकमित्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

परिस्कन्दः प्राच्यभरतेषु ८।३।७५

परिस्कन्दः इति मूर्धन्याभावो निपात्यते प्राच्यभरतेषु प्रयोगविषयेषु। पूर्वेन मूर्धन्ये प्राप्ते तदभवो निपात्यते। परिस्कन्दः। अन्यत्र परिष्कन्दः। अचि निपातनम्। अथ वा निष्थातकारस्य लोपः। भरतग्रहणं प्राच्यविशेषणम्।

न्यासः

परिस्कन्दः प्राच्यभरतेषु। , ८।३।७५

पूर्वेण षत्वविकल्पे प्राप्ते तदभावो विधीयते। "परिष्कन्दः" इति। पचाद्यच्()। "बह्वच इञः प्राच्यभरतेषु" २।४।६६ इत्यत्र

प्राचांग्रहणेन भरतानां ग्रहणं न भवतीति ज्ञापितमेतत्()। अतः प्राच्यत्वेऽपि भरतानां पृथग्ग्रहणम्()॥

बाल-मनोरमा

परिस्कन्दः प्राच्यभरतेषु ८३५, ८।३।७५

परिस्कन्दः प्राच्यभरतेषु। "अपदान्तस्य मूर्धन्यः" इत्यधिकारे इदं सूत्रम्। पूर्वेणेति। "परेश्चे"ति पूर्वसूत्रम्। परेः परस्य स्कन्देः सस्य षो वा स्यादिति तदर्थः। तेन षत्वविकल्पे प्राप्ते प्राच्यभरतेषु षत्वाऽभावो निपात्यत इत्यर्थः। परिस्कन्द इति। परिपूर्वात् स्कन्देर्निष्ठायास्तकारलोपः।

तत्त्व-बोधिनी

प्राच्यभरतेषु ६८४, ८।३।७५

परिस्कन्दः। अचि निपातनम्। अथ वा निष्टातकारस्य लोप इति काशिका।

---

सूत्रम्

काशिका-वृत्तिः

स्फुरतिस्फुलत्योर् निर्निविभ्यः ८।३।७६

स्फुरतिस्फुलत्योः सकारस्य निस् नि वि इत्येतेभ्यः उत्तरस्य वा मूर्धन्यादेशो भवति। स्फुरति निष्ष्फुरति, निस्स्फुरति। निष्फुरति, निस्फुरति। विष्फुरति, विस्फुरति। स्फुलति निष्ष्फुलति, निस्स्फुलति। निष्फुलति, निस्फुलति। विष्फुलति, विस्फुलति।

लघु-सिद्धान्त-कौमुदी

स्फुरतिस्फुलत्योर्निर्निविभ्यः ६६१, ८।३।७६

षत्वं वा स्यात्। निःष्फुरति, निःस्फुरति। णू स्तवने॥ ३१॥ परिणूतगुणोदयः। नुवति। नुनाव। नुविता॥ टुमस्जो शुद्धौ॥ ३२॥ मज्जति। ममज्ज। ममज्जिथ। मस्जिनशोरिति नुम्। (मस्जेरन्त्यात्पूर्वो नुम्वाच्यः)। संयेगादिलोपः। ममङ्क्थ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः॥ रुजो भङ्गे॥ ३३॥ रुजति। रोक्ता। रोक्ष्यति। अरौक्षीत्॥ भुजो कौटिल्ये॥ ३४॥ रुजिवत्॥ विश प्रवेशने॥ ३५॥ विशति॥ मृश आमर्शने॥ ३६॥ आमर्शनं स्पर्शः॥ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्॥ अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्॥ षद्ऌ विशरणगत्यवसादनेषु॥ ३७॥ सीदतीत्यादि॥ शद्ऌ शातने॥ ३८॥

न्यासः

स्फुरतिस्फुलत्योर्निर्निविभ्यः। , ८।३।७६

"स्फुर, स्फुल सञ्चलने" (धा।पा।१३८९,१३९०) इति तौदादिकौ। एतयोरपि पूर्ववदप्राप्त एव मूर्धन्यो विधीयरो। श्तिपा निर्देशो धातुनिर्देशार्थं एव; न यङ्लुग्निवृत्त्यर्थः। न हि यङ्लुक्यभ्यासस्य खयः शेषे कृते निरादिब्य उत्तरः सकारः सम्भवति॥

बाल-मनोरमा

स्फुरतिस्फलत्योर्निर्निविभ्यः ३६७, ८।३।७६

स्फरतिस्फुल्योः। "मूर्धन्य"इत्यधिकृतम्। "सिवादीनां वे"त्यतो वेत्यनुवर्तते। तदाह - षत्वं वा स्यादिति। णू स्तवने इति।

णोपदेशः। परिणूतेति। "श्रयुकः किती"ति नेट्। कुङ् शब्दे। दीर्घान्त इति। ततश्चायं सेट्। पृङ् व्यायामे इति। ह्रस्वान्तोऽयमनिट्।"ऋद्धनोः स्ये" इति इटं मत्वाऽऽह - व्यापरिष्यते इति। मृङ्धातुरनिट्।

तत्त्व-बोधिनी

स्फुरतिस्फुलत्योर्निर्निविभ्यः ३२१, ८।३।७६

स्फुरतिस्फुलत्योः। "सिवादीना"मित्यतो वेत्यनुवर्तनादाह-- षत्वं वा स्यादिति। परिणूतेति। "श्र्युकः किती"तीण्निषेधः।

---

सूत्रम्

काशिका-वृत्तिः

वेः स्कभ्नातेर् नित्यम् ८।३।७७

वेः उत्तरस्य स्कभ्नातेः सकारस्य नित्यं मूर्धन्यादेशो भवति। विष्कभ्नाति। विष्कम्भिता। विष्कम्भितुम्। विष्कम्भितव्यम्।

न्यासः

वे स्कभ्नातेर्नित्यम्?। , ८।३।७७

"विष्कम्भिता" इति। "स्तन्मभुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च" (३।१।८२) इति सूत्रे पाठात्? सौत्रोऽयं धातुरषोपदेशः। तत्सकारस्याप्राप्त एव मूर्धन्यो विधौयते वेरुत्तरस्य। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्()। श्तिपा निर्देशस्य पूर्ववदेव प्रयोजनम्()॥

तत्त्व-बोधिनी

वेः स्कभ्नातेर्नित्यम् ३३४, ८।३।७७

वेः स्कभ्नातेर्नित्यम्। "सिवादीनां वे"त्यतो वेति नानुवर्तते इति ध्वननार्थमिह नित्यग्रहणम्। विस्कभ्नोतीति। "स्कभ्नाते"रित्यत्र श्नाविशिष्टं रूपं न विवक्षितं किं तु धातुमात्रम्, अन्यथा विष्कम्भिता विष्कम्भितमित्यादावपि षत्वं न स्यात्। न चेष्टापत्तिः, माधवादिग्रन्थविरोधादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

इणः षीध्वंलुङ्लिटां धो ऽङ्गात् ८।३।७८

मूर्धन्यः इति वर्तते। इणन्तादङ्गातुत्तरेषां षीध्वंलुङ्लिटां यो धकारः तस्य मूर्धन्यादेशो भवति। च्योषीढ्वम्, प्लोषीढ्वम्। लुङ् अच्योढ्वम्। अप्लोढ्वम्। लिट् चकृढ्वे। ववृढ्वे। इण्कोः इति वर्तमाने पुनरिण्ग्रहणं कवर्गनिवृत्त्यर्थम्। पक्षीध्वम्। यक्षीध्वम्। षीध्वंलुङ्लिटाम् इति किम्? स्तुध्वे। अस्तुध्वम्। अङ्गातिति किम्? परिवेविषीध्वम्। अर्थवद्ग्रहणादपि सिद्धम्? तत् तु नाश्रितम्।

लघु-सिद्धान्त-कौमुदी

इणः षीध्वंलुङ्लिटां धोऽङ्गात् ५१६, ८।३।७८

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात्॥ एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे।

एधाम्बभूव। एधामास। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे॥

न्यासः

इणः षीध्वंलुङ्लिटां धोऽङ्गात्?। , ८।३।७८

"इणन्तादङ्गादुत्तरेषाम्()" इत्यादना इणन्तमङ्गं षीष्वंलुङ्लटां विशेषणम्()। तेऽपि धकारस्येति दर्शयति। अथ धकारस्यैवेणन्तमङ्गं विशेषणं कस्मान्न विज्ञायते--इणन्तादुत्तरो यो धकार इति? एवं मन्यते--इणन्तस्याङ्गस्य धकारविशेषणत्वे सति च्योषीढवम्(), प्लोषीढ्वमित्यत्र न स्यात्(); षीशब्देन व्यवधानात्()। अथापि "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्मात्()" (व्या।प।४६) इत्येकेन षीशब्देन व्यवधानेऽपि स्यादेव। एवमपि वचनप्रामाच्यादर्थप्रतिपत्तौ मन्दधियः प्रतिपत्तिगौरवं स्यात्()। षीध्वमादिषु विशेष्यमाणेषु नायं दोष इति तेषामेवाङ्गमिणन्तं विशेषणं युक्तम्()। गुणत्वादयुक्तमिति चेत्? स्यादेतत्()--धकारस्य कार्यित्वात्? तैश्च विशेष्यमाणत्वात्? प्राधान्यम्()। तेषां तु विपर्ययाद्गुणाभावः। तस्माद्धकारस्यैवेणन्तमङ्गं विशेषणं न्याय्यम्()। एतच्च न; यत्र हि विशेषणेन सह सम्बन्धमनुभूय गुमः प्रधानस्य भूयांसमुपकारं कर्त्तुं समर्थो भवति, तत्र विशेषणेन च सह तावदप्रधानेन प्रणमं सम्बन्धमनुभवति। पश्चात्? प्रधानेन सम्बन्धम्()। तथा च-- गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते। प्रधानस्योपकारे हि तथा भूयसि वत्र्तते॥ इति। इह चेणन्तेनाङ्गेन षीष्वमादयो विशेषिता धकारस्य विशिष्टमुपकारं प्रतिपत्तिगौरवदोषरहितं कार्यविशेषं प्रतिपादयन्ति। तस्मादिण्विशिष्टेनाङ्गन षीध्वमादय एव विशेष्यन्ते। तैश्च धकार इत्येतदेव युक्तं भवति। "च्योषीढवम्(), प्लोषोढ्वम्()" इति। च्युङ्प्लुङ्भ्यामाशिषि लिङ्(), सीयुट्(), ध्वम्(), "एकाचः" ७।२।१० इत्यादिनेटप्रतषेधः, गुणः। "अच्योढवम्(), अप्लोढवम्()" इति। "धि च" ८।२।२५ इति सकारलोपः "चकृढ्वे, ववृढ्वे" इति। कृञो वृञो लिट्()। "कुसृभृवृ" ७।२।१३ इत्यादिनेट्प्रतिषेधः। द्विर्वचनमभ्यासकार्यम्()। ननु चानुवत्र्तत एवेह "इण्कोः" ८।३।५७ इति पूर्वकमिण्ग्रहणम्()। कथं पुनरिण्ग्रहणं क्रियते? त्वाह--"इण्ग्रहणम्()" इत्यादि। तद्धि पूर्वकमिण्ग्रहणं कवर्गेण सह सम्बद्धम्(), अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्()। तस्मत्? तन्निवृत्त्यर्थं पुनरिण्ग्रहणमिह क्रियते। "पक्षीध्धम्(), यक्षीध्वम्()" यक्षीध्वम्()" इति। पचियजिभ्यामाशिषि लिङ्(), "चोः कुः" ८।२।३० इति कुत्वम्(), तस्मिन्? कृते कवर्गस्येह निवृत्तत्वान्मूर्धन्यो न भवति। "स्तुध्वम्()" इति। स्तोतेर्लोट्(), अदादित्वाच्छपो लुक्()। "अस्तुध्वम्()" इति। लङ्()। "परिवेविषोध्वम्()" इति। "विष्लृ ष्याप्तौ" (धा।पा।१०९५), विध्यादिलिङ, सीयुट्(); तस्य "जुहोत्यादिभ्यः" २।४।७५ इति श्लुः, "श्लौ" ६।१।१० इति द्विर्वचनम्(), "णिजां["निजां" इति--प्रांउ।प्राठः] त्रयाणणम्()" ७।४।७५ इत्यभ्यासस्य गुणः, "लिङः सलोपोऽनन्त्यस्य" ७।२।७९ इति सकारस्य लोपः, "लोपो व्योर्वलि" ६।१।६४ इति यकारलोपः। अत्र धातुषकारस्य ईध्वंशब्दस्य च यः समुदायस्तदात्मकः षीध्वंशब्दोऽस्ति, न त्वसाविणन्तावङ्गादुत्तरः। तथा हि--वेविषित्यस्याङ्गसंज्ञा, न तु वेषीत्येतावान्मात्रास्य षकारात्पूर्वभागस्य। "अर्थवद्ग्रहणादप्येतत्? सिद्धम्()" ["एतत्()"--नास्ति काशिकायाम्()] इति। चोदकस्यैतद्वचनम्()। मृह्रतेऽनेनेति ग्रहणम्(), अर्थयतो ग्रहणमर्थवद्ग्रहणम्()। तत्पुनः "अर्थवद्ग्रहणे नानर्थकस्य" (व्या।प।१) इति परिभाषासूत्रम्()। ततोऽपि परिवेविषीध्वमित्येतत्? सिद्धम्()। अर्थवद्ग्रहणपरिभाषया (व्या।प।१) अर्थवत एव षोध्वंशब्दस्य ग्रहणे सत्यस्यैव ढत्वेन भवितव्यम्()। न चे ह षीध्वशब्दोऽर्थवान्(), किं तर्हि? तदवयव ईध्वशब्दः; तत्किमेतन्निवृत्त्यर्थेनाङ्गग्रहणेनेत्यभिप्रायः। अत्रोत्तरमाह--"एतत्तु नाश्रितम्()" इति। एतदिति "अर्थवद्ग्रहणे नानर्थकस्य" (व्या।प।१) इति भाषावचनम्()। अथ वा--गृहीतिः=ग्रहणम्(), अर्थवतो ग्रहणमिति षष्ठीसमासः। अतोऽप्येतत्? सिद्धमितीह पूर्वक एवाभिप्रायः। "एतत्तु नाश्रितम्()" [तत्तु नाश्रितम्()--काशिका] इत्युत्तरम्()। एतदर्थवतो ग्रहणमिति नाश्रतम्; अर्थवद्ग्रहणपरिभाषाया (व्या।प।१) अनाश्रयणात्()। तदनाश्रयणं तु प्रतिपत्तिगौरवदोषपरिहाराय। सूत्रानुपात्तवचनाश्रयेण ह्यभीष्टमर्वं प्रतिपद्यमानस्य मन्वधियः प्रतिपत्तुः प्रतिपत्तिगौरवं स्यात्()। इह त्वङ्गग्रहणे क्रियमाणे

सुखत एवाभिमतोऽर्थः प्रतीयते। लिङ्ग्रहण एव कत्र्तव्ये षीध्वंग्रहणमस्य रूपस्य यो धकारस्तस्य यता स्यात्()। तेनायीध्वम्(), स्तुवीध्वमित्यत्र न भवति॥

बाल-मनोरमा

इणः षीध्वंलुङ्?लिटां धोऽङ्गात् ९३, ८।३।७८

इणः षीध्वं। षीध्वं लुङ्लिट् एषां द्वन्द्वः। "धः" इति षष्ठ()एकवचनम्। "इण" इत्यङ्गविशेषणम्। तदन्तविधिः। "अपदान्तस्य मूर्धन्य" इत्यधिकृतं। तदाह--इणन्तादित्यादिना। धकारस्य ढकारो मूर्धन्यः, घोषसंवारनादमहाप्राणप्रयत्नसाम्यात्। तदाह--एधांचकृत्रढ्व इति। उत्तमपुरुषैकवचने इटि एत्वे पूर्ववत् द्वित्वादौ कृते रूपमाह-- एधांचक्रि इति। एधांचकृवह इति। लिटो वहिभावे एत्वे द्वित्वादि पूर्ववत्। एवं लोटि महिभावे द्वित्वादि पूर्ववत्। सर्वत्राऽसंयोगाल्लिट्कदिति किव्वाद्गुणाऽभावः। अथ भूधातोर्लिडन्तस्यानुप्रयोगे उदाहरति-- एधांबभूवेति। एधाञ्चक्र इत्यनेन समानार्थकम्, अनुप्रयुज्यमानस्य भूधातोः क्रियासामान्यार्थकत्वात्। नन्वस्तेरनुप्रयोगे लिडादेशस्याद्र्धधातुकत्वादस्तेर्भूरित्याद्र्धधातुके विहितो भूभावुः कुतो न स्यादित्यत आह--अनुप्रयोगेति। कृञ्चानुप्रयुज्यत इत्यत्र प्रत्याहारमाश्रित्य कृभ्वस्तीनामनुप्रयोगविधिसामथ्र्यादस्धातोर्भूभावो नेत्यर्थः। तदेवोपपादयति-- अन्यथेति। अनुप्रज्यमानस्याऽस्तेर्भूभावाभ्युपमे कृञ्चानुप्रयुज्यत इत्यनुप्रयोगविदौ "क्रस्चानुप्रयुज्यते" इति वा, "कृभु चानुप्रयुज्यते" इति वा ब्राऊयात्। तावता एधांबभूवेति सिद्धेरित्यर्थः। यद्यपि "कृ"ञित्युतक्त्वौ लाघवमस्ति तथापि एकस्यैव भवतेरधिकस्य लाभाय कृञिति प्रत्याहारक्लेशो न कर्तव्य इति भाव। अत एवाऽत उत्सार्वधातुक इति सूत्रभाष्येऽनुप्रयोगे भूभावेन अस्तेरबाधनमिति भाष्यं सङ्गच्छते।

तत्त्व-बोधिनी

इणः षीध्वंलुङ्लिटां धोऽङ्गात् ७२, ८।३।७८

"इण्को"रित्यधिकारेऽपि पुनरिण्ग्रहणं कवर्गात्परस्य माभूदित्येतदर्थम्। तेनेहन न- पक्षीध्वम्। अङ्गात्परेषामिति। "विहिताना"मित्युक्तौ तु दात्रो लुङि अदिड्ढ्वमित्यत्राऽव्यासिः स्यात्, लिहदुहनहां तु ढत्वघत्वधत्वेषु लिक्षीध्वं धुक्षीध्वं नत्सीध्वमित्यत्रातिव्यासिश्च स्यादिति बोध्यम्। अङ्गात् किम्?। वेविषीध्वम्। यद्यप्यर्थवतः षीध्वमित्यस्य ग्रहणात्कृषीढ्वमित्यादावेव भवेन्नत्वत्र, तथाप्यर्थवद्ग्रहमपरिभाषा क्वचिन्न प्रवर्तत इति ज्ञापनार्थमिदमुक्तम्। तेन "अनिनस्मन्ग्रहणानी"ति सिद्धम्। एधांबभूवेत्यादि। "आम्प्रत्ययव"दिति सूत्रे कृञ्ग्रहणादनुप्रयोगान्तरे तङ् नेति "शेषात्कर्तरी"ति परस्मैपदमेव, भावकर्मणोस्तु स्यादेव-- "एधांबभूवे ईक्षांबभूवे इति। अस्तेस्तु भावकर्मणोस्तङि कृते एशि इटि च रूपे विप्रतिपद्येते। तथाहि-- उभयत्रापि "ह एती"ति हादेशे कृते एधामाहे ईक्षामाहे इति केचित्। तासिसाहचर्यादिट()एव हत्वं न त्वेशीत्यन्ये। तत्साहचर्यादेव सार्वधातुक एव एति हत्वम्। तथा च कर्मव्यतिहारे तङि व्यतिहे इत्यत्रैव भवति न तूक्तद्वयेऽपि। तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे। कृभ्वितीति। यद्यपि कृञित्युक्तौ लाघवमस्ति, तथापि धातुद्वयस्यैव लाभार्थं प्रत्याहाराश्रयणे क्लेश इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

विभाषा इटः ८।३।७९

इणः परस्मातिट उत्तरेषां षीध्वंलुङ्लिटां यो धकारः तस्य मूर्धन्यादेशो भवति विभाषा। लविषीढ्वम्, लविषीध्वम्। पविषीढवम्, पविषीध्वम्। लुङ् अलविढवम्, अलविध्वम्। लिट् लुलुविढ्वे, लुलुविध्वे। इणः इत्येव, आसिषीध्वम्। अथ

इह कथं भवितव्यम्, उपदिदीयिध्वे? केचिदाहुः, इणन्तादङ्गादुत्तरस्य इट आनन्तर्यं युटा व्यवहितम् इति न भवितव्यं ढत्वेन इति। अपरेषां दर्शनम्, अङ्गातिति निवृत्तम्, इणः इत्यनुवर्तते, ततश्च यकारादेव इनः परो ऽनन्तरः इटिति पक्षे भवितव्यं मूर्धन्येन इति।

लघु-सिद्धान्त-कौमुदी

विभाषेटः ५२९, ८।३।७९

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः। कामयिषीढ्वम्, कामयिषीध्वम्। कमिषीष्ट। कमिषीध्वम्॥

न्यासः

विभाषेटः। , ८।३।७९

क्वचित्? पूर्वेण नित्ये प्राप्ते, क्वचिदप्राप्त एव विकल्पार्थं वचनम्()। एतच्चोदाहरणे व्यक्तोकरिष्यामः। अत्रेण्ग्रहणमिटो विशेषणम्(), सोऽपि षोध्वमादोनाम्(), तेऽपि धकारस्येति दर्शयन्नाह--"इणः परस्मात्()" इत्यादि। ननु षीध्वमो लिटश्चेडपेक्षं परत्वं न सम्भवति, तस्य तद्ग्रहणेन ग्रहणात्()? यद्यपि शास्त्रकृतं न सम्भवति, तथापि श्रुतिकृतं तु सम्भवत्येवेत्यदोषः। "लविषीध्वम्(), लविषीढ्वम्()" इति। अत्र षीध्वंशब्दस्येटि कृते तस्य तद्ग्रहणेन ग्रहणाद्व्यवधानं नास्तीति पूर्वेण नित्यं प्राप्नोति। "अलविध्वम्()" इत्यत्रापि सिच एवेडागमः क्रियते, न लुङ इति तस्य तद्ग्रहणेनाग्रहणात्? पूर्वेण न प्राप्नोति। "लुलुविढ्वे" इत्यत्रापि लिट एवेडागम इति तस्य तद्ग्रहणेन ग्रहणादसति व्यदधाने पूर्वेण नित्यं प्राप्नोति। "आसिषीध्वम्()" इति। "आस उपदशने" (धा।पा।१०२१), लिङ्(), सोवुट्(), धातुसकारस्येणोऽसन्नि वेशादिणः परोऽत्रोडागमो न भवति। "अथेह कथं भवितव्यम्()" इति। किमत्रानेन विकल्पेन भवितव्यम्()? उत नित्येन भवितव्यमित्यभिप्रायः। "दीङ्? क्षये" (धा।पा।११३४), लिट्(), क्रादिनियमादिट्? ७।२।१३। "दीङो युडचि क्ङिति" ६।४।६३ इति गुट्(), टेरेत्तवम्()। उपदिदीयिध्व इति स्थिते केचिदाहुर्न भवितव्यमेवात्र ढत्वविकल्पेन; इणन्तादङ्गादिटो यदानन्तर्यं तस्य युटा व्यवहितत्वात। समुदायभक्तो ह्यसौ युट्? समुदायमेव न व्यवदधाति। अवयवं तु व्यवदधात्येव। अथ पूर्वेण नित्यं कस्मान्न भवति? अत्रेणन्तादङ्गादुत्तरो लिट्(), सत्सम्बन्धी च धकार इति भवितव्यम्()। तथा च वृत्तिकृता सूत्रार्थो दर्शितः। अथ तु नेष्यते, ततो विभाषाग्रहणं पूर्वेणासम्बन्धनीयम्()। सा च व्यवस्थितविभाषः, तेनेह न भवति। एवमन्यत्र तु नित्यमेव भविष्यति। "अपरेषाम्()" इत्यादि। यदाङ्गग्रहणमिह निवृत्तम्(), इण इत्येतदेवानुवत्र्तते, तदेणैव केवलेनेडागमो विशेष्यते--इणः परो य इडिति। एवञ्चात्र भवितव्यमेव पाक्षिकेण ढत्वेन। भवति ह्यत्र यकारादिण उत्तरोऽनन्तरश्चेडागमः॥

बाल-मनोरमा

विभाषेटः १६५, ८।३।७९

विभाषेटः। "इणः षीध्वंलुङ्लिटा धः" इत्यनुवर्तते। "अपदान्तस्ये"त्यतो मूर्धन्य इति च। तदाह-- इणः परो य इडित्यादि। इणन्तादङ्गादित्यर्थः। अयिषीढ्वमिति। लुङो ध्वमि च्लेः सिचि आटि वृद्धौ सिच इटि "धि चे"ति सलोपः। ध्वम इवर्णान्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पः। अङ्गादिति। निवृत्तमिति केचित्।

तत्त्व-बोधिनी

विभाषेटः १३८, ८।३।७९

लुङ्लिटां धस्येति। लिटि लिलिहिढ्वे। लिलिहिध्वे।

---

सूत्रम्

काशिका-वृत्तिः

समासे ऽङ्गुलेः सङ्गः ८।३।८०

सङ्गसकारस्य अङ्गुलेः उत्तरस्य मूर्धन्य आदेशो भवति समासे। अङ्गुलेः सङ्गः अङ्गुलिषङ्गः। अङ्गुलिषङ्गा यवागूः। अङ्गुलिषङ्गो गाः सादयति। समासे इति किम्? अङ्गुलेः सङ्गं पश्य।

न्यासः

समासाङ्गुलेः सङ्गः , ८।३।८०

सङ्ग इति षष्ठ्याः स्थाने सुब्व्यत्ययेन प्रथमा। एवमुत्तरत्रापि वेदितव्यम्()। "सात्पदाद्योः" ८।३।११३ इति प्रतिषेधे प्राप्तेऽन्यारम्भः। एवमुत्तरल्यापि। सञ्जनं सङ्ग इति भावे धञ्(), अङ्गुलिषु सङ्गः संश्लेषोऽस्या अस्तीति बहुव्रीहिः॥

बाल-मनोरमा

समासेऽङ्गुलेः सङ्गः १००४, ८।३।८०

समासेऽङ्गुलेः सङ्गः।

---

सूत्रम्

काशिका-वृत्तिः

भीरोः स्थानम् ८।३।८१

स्थानसकारस्य भीरोः उत्तरस्य मूर्धन्यादेशो भवति। भीरुष्ठानम्। समासे इत्येव, भीरोः स्थानं पश्य।

न्यासः

भीरोः स्थानम्?। , ८।३।८१

"भीरुष्ठानम्()" इति। अधिकरणसाधनन स्थानशब्देन षष्ठीसमासः। पृथग्योगकरण यथासंख्यभावनिवृत्त्यर्थम्()। एकयोगे हि निमित्तनिमित्तनोः माम्येऽपि सत्यस्वरितत्वाद्यथासंक्यभावः स्यात्()। अथ तदर्थ स्वरितत्वं प्रतिज्ञायते; ["प्रतिज्ञायेते"--कांउ।पाठः] ततो योगविभागकरणं वैचित्र्यार्थम्()॥

बाल-मनोरमा

भीरोः स्थानम् १००५, ८।३।८१

भीरोः स्थानम्।

तत्त्व-बोधिनी

भीरोः स्थानम् ८५३, ८।३।८१

भीरोः स्थानमिति। विसर्जनीयव्यवधानेऽपि षत्वप्राप्तिरस्ति।

---

सूत्रम्

काशिका-वृत्तिः

अग्नेः स्तुत्स्तोमसोमाः ८।३।८२

अग्नेः उत्तरस्य स्तुत् स्तोम सोम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमः। अग्नेर् दीघात् सोमस्य इष्यते। तेन इह न भवति, अग्निसोमौ माणवकौ। तथा च ज्योतिरग्निः, सोमः लताविशेषः, अग्निसोमौ तिष्ठतः। समासे इत्येव, अग्नेः स्तोमः।

न्यासः

अग्नेः स्तुत्स्तोमसोमाः। , ८।३।८२

पदादिसकारत्वात प्रतिषेधे प्राप्तेऽयमारभ्यते। एवमुत्तरत्रापि। स्तोमसोमशब्दी स्तौतिसुनोतिभ्याम्? "अर्तिस्तुसुहुरुसृधुक्षिक्षुभायावापदियक्षिनिभ्यो मन्()" ["क्षुभायापदियक्षिभ्य"--द।उ। क्षुभायावापदियक्षीनीभ्यः--प्रांयांउ।पाठः] (द।उ।७।२६) इति मन्प्रत्ययं विधाय व्युत्पाद्येते। अव्युगत्पत्तिपक्षे त्वादित एवाप्राप्तेऽनयोः षत्वं विधीयते। "अग्निष्टुत्()" इति। अग्नावुपपदे स्तौतेः क्विप। ह्यस्यस्य" ६।१।६९ इत्यादिना तुक। उपपदसमासः। "अग्निष्टोभः" इति। षष्ठीसमासः "अग्निषोमौ" इति। द्वन्द्वः, "ईदग्ने" सोमदरुणयोः" ६।३।२६ इतीत्त्वम्()। "अग्नेर्दीर्घात्? सोमशब्दस्य षत्वभिध्यते" (इति)। एतच्च भाष्ये "विभाषेटः ८।३।७९ इत्यतो विभाषाग्परहणानुवृत्तेर्लभ्यते। न च तदमुवृत्तादतिप्रसङ्गः स्यात्(), व्यवस्थितविभाषाविज्ञानात्()॥

बाल-मनोरमा

अग्नेः स्तुत्स्तोमसोमाः ९१४, ८।३।८२

अग्ने स्तुत्। स्तुत्-स्तोम-सोम इति द्वन्द्वात् षष्ठ()र्थे प्रथमा। "सहेः साडः सः" इत्यतः "स" इति षष्ठ()एकवचनान्तमनुवर्तते। अग्नेरिति पञ्चमी। "समासेऽङ्गुलेः" इत्यतः समासे इत्यनुवर्तते। तदाह--अग्नेः परेषामिति। षः स्यादिति। "अपदान्तस्य मूर्धन्यः" इत्यनुवृत्तेरिति भावः। "सात्पदाद्योः" इति षत्वनिषेधापवादोऽयम्। अग्निष्टुदिति। क्रतुविशेषोऽयम्। अग्निष्टोम इति। स्तोत्रविशेषस्य, संस्थाविशेषस्य च नाम। अग्नीषोमाविति। अग्निश्च सोमश्चेति विग्रहः। ईत्वषत्वे। अग्नीवरुणाविति। अग्निश्च वरुणश्चेति विग्रहः। ईत्वम्। देवताद्वन्द्वे किम्?। अग्निर्नाम कश्चित्, सोमो नाम कश्चित्। अग्निसोमौ अदेवताद्वन्द्वत्वादीत्वं न। अत एव च न षत्वम्, "अग्नेर्दीर्घात् सोमस्य इष्यते"इति वार्तिकात्। इद्वृद्धौ। "अग्ने"रिति "देवताद्वन्द्वे" इति चानुवर्तते। वृद्धिशब्देन वृद्धिमल्लक्ष्यते, देवताद्वन्द्वे केवलवृद्धिरूपोत्तरपदाऽसम्भवात्। तदाह--वृद्धिमतीति। इदिति तकार उच्चारणार्थः। प्रयोजनाऽभावान्नेत्संज्ञा। नापि तपरकरणं, विधीयमानत्वादेव सवर्माऽग्राहकत्वात्। अग्नामरुताविति।अग्निश्च मरुच्चेति विग्रहः। "देवताद्वन्द्वे चे"त्यानङ्। आग्निमारुतं कर्मेति। "साऽस्य देवते"त्यण्। तद्धितान्तप्रातिपदिकावयवत्वात्सुपो लुक्। अग्नोवरुणाविति। "ईदग्ने"इतीत्वम्। आग्निवारुणमिति। "साऽस्य देवते"त्यण्। ननु "तद्धितेष्वचामादे"रित्यादेरचो वृद्धिविधानात्कथमुत्तरपदस्याऽऽदिवृद्धिरित्यत आह--देवताद्वन्द्वेचेत्युभयपदवृद्धिरिति। नन्वग्नोरिकारस्य इकारविधिव्र्यर्थ इत्यत आह--आनङमीत्वं च बाधित्वेति। "आग्निमारुत"मित्यत्रानङ्, "आग्निवारुण"मित्यत्र ईत्वस्य च बाधनार्थग्नोरिकारस्य पुनरिकारविधानमित्यर्थः। ननु "समर्थानां प्रथमाद्वे"त्यत्र परिनिष्ठितात्तद्धितोत्पत्तिरिति वक्ष्यते। तथा च अग्नामरुतौ देवते अस्येति, अग्नीवरणौ देवते अस्येति च विग्रहे अग्नामरुच्छब्दादग्नीवरुणशब्दाच्च आनङीत्वाभ्यां परिनिष्ठिताद्देवताद्वन्द्वात् "साऽस्य देवते"त्यणतद्धित उत्पद्यते। ततस्तन्निमित्तकोभयपदवृद्धिः। ततः "इद्वृद्धौ" इत्यस्य प्रवृत्तिरिति क्रमः। ततश्च तद्धितोत्पत्तेः प्रागेव प्रवृत्तयोरानङीत्वयोः कथम् "इद्वृद्धौ" इत्यनेन बाधः?, युगपत्प्रवृत्तावेव बाध्यवाधकभावाभ्युपगमात्। उक्तं च भाष्ये--"भुक्तवन्तं प्रति मा भुक्था इत्युक्ते किं तेन कृतं स्या"दिति। अत आह--अलौकिके [विग्रह]वाक्ये इति। अग्नि मरुत् औ देवते अस्येति, अग्नि वरुण औ देवते अस्येति च तद्धिताऽलौकिकविग्रहवाक्ये आनङीत्वे प्रवर्तमाने बाधित्वा इद्विधिः प्रवर्तत इत्यर्थः। यद्यपि तदानीमुत्तरपदस्य वृद्धिमत्त्वं नास्ति,तद्धिताऽभावात् , तथाप्युत्तरपदस्य भाव्येव वृद्धिमत्त्वमिह विवक्षितमिति भावः।

तत्त्व-बोधिनी

अग्नेः स्तुत्स्तोमसोमाः ७९०, ८।३।८२

अग्नेः। "सात्पदाद्यो"रिति निषेधेऽयमारम्भः। अग्निष्टुदिति। अग्निः स्तूयतेऽस्मिन् स कतुविशेषः। सम्पदादित्वादधिकरणे क्विप्। अग्निष्टोम इति। अग्नीनां स्तोमोऽग्निष्टोमः। सोमयागस्य संस्थास्वाद्या संस्थोच्यते।

---

सूत्रम्

काशिका-वृत्तिः

ज्योतिरायुषः स्तोमः ८।३।८३

ज्योतिसायुसित्येताभ्याम् उत्तरस्य् स्तोमसकारस्य मूर्धन्यादेशो भवति समासे। ज्योतिष्तोमः। आयुष्टोमः। समासे इत्येव, जोतिः स्तोमं दर्शयति।

न्यासः

ज्योतिरायुषः स्तोमः। , ८।३।८३

"ज्योतिःष्टोमः, आयुःरुटोमः" इति। षष्ठोसमासः। सकारस्य रुत्वम, विसर्जनीयः, "वा शरि" (८३।३६) इति पक्षे सकारः। तस्य तकारस्य च ष्टुत्वम्()॥

बाल-मनोरमा

ज्योतिरायुषः स्तोमः १००६, ८।३।८३

ज्योतिरायुषः स्तोमः। अत्र त्रिसूत्र्याम्-अङ्गुलेः सङ्गः, भीरोः स्थानं, ज्योतिषः स्तोमः,आयुषःस्तोम इत्याद्यर्थे प्रत्यासत्त्या तयोः पदयोः समासे सति उत्तरपदस्थस्य सस्य ष इत्यर्थः। तद्ध्वनयन् प्रत्युदाहरति--अङ्गुलेः सङ्ग इत्यादि। नेह "इण्को"रित्यनुवर्तते, व्याख्यानात्।

तत्त्व-बोधिनी

ज्योतिरायुषः स्तोमः ८५४, ८।३।८३

ज्योतिषः स्तोम इति। इह "ज्योतिः स्तोमोऽय"मिति प्रकत्युदाहर्तुमुचितम्।

---

सूत्रम्

काशिका-वृत्तिः

मातृपितृभ्यां स्वसा ८।३।८४

मातृ पितृ इत्येताभ्याम् उत्तरस्य स्वसृसकारस्य समासे मूर्धन्यादेशो भवति। मातृष्वसा। पितृष्वसा।

न्यासः

मातुपितृभ्यां स्वसा। , ८।३।८४

"मातृपितृभ्याम्()" इति। "अभ्यहितं पूर्व निपतति" (वा।१०९) इति मातृशब्दसय पूर्वेनिपातः। अनादेशसकारत्वादप्राप्तस्यैव षत्वस्येवं निपातनम्()। "मातृष्वसा, पितृष्वसः" इति षष्ठोसमासः॥

न्यासः

मातृपितृभ्र्यामन्यतरस्याम्?। , ८।३।८४

पूर्वेणाप्राप्ते विभाषयमारभ्यते; मातृपितृभ्यां केवलाभ्यां प्रकृतिप्रत्ययसमुदाययोर्मातुःपितुरित्येतयोरन्यत्वात्()। "मातुः ष्वसा, पितुःष्वसा" इति। "विभाषा स्वसृपत्योः" (६।३।२४) इत्यलुक्? षष्ठ्याः। उत्तरपदस्य रेफान्तस्य ग्रहणात्? तत्साहच्र्यात्? पूर्वपदस्यापि रेफान्तस्य ग्रहणं विज्ञायत इत्याह--"मातुः- पितुरिति रेफान्तयोः" इति। यद्येवम्(), रेफस्य विसर्जनोये कृते तस्य "वा शरि" (८।३।३६) इति पक्षे सकारे कृते विसर्जनीयान्तात्? सकारान्ताच्च न प्राप्नोति? इत्याह--"एकादेशविकृतस्य" इत्यादि। यदि रेफान्तयोग्र्रहण न स्यात्? ततो यदि विसरजनीयान्तयोरुपादानं क्रियेत तदा तथाभूताभ्यामेव स्यात्(), न सकारन्ताभ्याम्(); निर्देशस्य तन्त्रत्वात्()। अथापि सकारन्तयोग्र्रहणं स्यात्(); एवमपि तथाभूताभ्यामेव स्यात्(), न विसर्जनीयान्ताभ्याम्()। रेफान्तयोस्तु ग्रहणे स्वसृशब्दे परतो नियोगतो विकारेण भवितव्यमिति निदशस्य तन्त्रता नास्ति। तेन विसर्जनीयान्ताभ्यां सकारान्ताभ्याञ्च षत्व सिद्ध्यति।
बाल-मनोरमा
मातृपितृभ्यां स्वसा १०५५, ८।३।८४

मातृपितृभ्यां स्वसा। स्वसुरिति। सूत्रे षष्ठ()र्थे प्रथमेति भावः। मातृष्वसा पितृष्वसेति। लुक्पक्षे नित्यमेव षत्वम्। आदेश प्रत्ययसकारत्वाऽभावादप्राप्ते षत्वविधिरयम्। षत्वविधौ समासग्रहमांनुवृत्तेः फलं दर्शयति--असमासे त्विति। वाक्ये वैकल्पिकं षत्वमपि नास्तीत्यर्थः।

*****इति बालमनोरमायाम् अलुक्समासः*****

अथ तद्धितेष्वपत्याधिकारप्रकरणम्।

-----------------------

---

सूत्रम्
काशिका-वृत्तिः
मातुःपितुभ्र्यामन्यतरस्याम् ८।३।८५

मातुर् पितुरित्येताभ्याम् उत्तरस्य स्वसृशब्दस्य अन्यतरस्यां मूर्धन्यादेशो भवति समासे। मातुःष्वसा, मातुःस्वसा। पितुःष्वसा, पितुःस्वसा। मातुः पितुः इति रेफान्तयोरेतद् ग्रहणम्। एकदेशविकृतस्य अनन्यत्वाद् विसर्जनीयान्ता सकारान्तात् च षत्वं भवति। समासे इत्येव, वाक्ये मा भूत्। मातुः स्वसा इत्येव नित्यं भवति।
बाल-मनोरमा
मातुःपितुभ्र्यामन्यतरस्याम् ९६८, ८।३।८५

पूर्वण नित्ये प्राप्ते विकल्पोऽयम्। अलुक्पक्षे विशेषमाह--मातुःपितुभ्र्यामन्यतरस्याम्। "मातृपितृभ्यामन्यतरस्याम्। "मातृपितृभ्यां स्वसे"ति पूर्वसूत्रात्स्वसेत्यनुवर्तते। षष्ठ()र्थे प्रतमा। "सहेः साडः सः" इति सूत्रात्स इति षष्ट()न्तं पदमनुवर्तते। "अपदान्तस्य मूर्धन्यः" इत्यधिकृतम्। तदाह--आभ्यामिति। "मातुः" "पितु"रिति षष्ठ()न्ताभ्यामित्यर्थः। समासे इति। "समासेऽङ्गुलेः सङ्गः" इत्यतस्तदनुवृत्तेरिति भावः। "मातुःष्वसा""पितुःष्वसे"ति अलुकि षत्वे रूपम्। "मातुःस्वसा""पितुःस्वसे"त्यलुकि षत्वाभावे रूपम्। लुक्पक्षे त्विति। "विशेषो वक्ष्यते" इति शेषः।

---

सूत्रम्

काशिका-वृत्तिः

अभिनिसः स्तनः शब्दसंज्ञायाम् ८।३।८६

अभिनिसित्येतस्मातुत्तरस्य स्तनतिसकारस्य मूर्धन्यादेशो भवति अन्यतरस्यां शब्दसंज्ञायां गम्यमानायाम्। अभिनिष्टानो वर्णः, अभिनिस्तानो वर्णः। अभिनिष्टानो विसर्जनीयः, अभिनिस्तानो विसर्जनीयः। शब्दसंज्ञायाम् इति किम्? अभिनिस्तनति मृदङ्गः। समासे इति अतःप्रभृति निवृत्तम्।

न्यासः

अभिनिसः स्तनः शबदसंज्ञायाम्?। , ८।३।८६

अनादेशसकारत्वादप्राप्त एव षत्वे वचनम्()। "ष्टन शब्दे" (धा।पा।४६१) इति भौवादिकस्य ग्रहणम्()। "स्तन गदी देवशब्दे" ["गदी परिवेदने" (धा।पा।१८६०)] (धा।पा।१८५९) इत्यतस्य चौरादिकस्य तु न। तस्य ग्रहणे सत्यदन्तत्वात्? "अत उपधायाः" ७।२।११६ इति न वृद्धिर्लभ्यते। अभि, निस्()--इत्येताभ्यामेवेदं षत्वं विधीयते। न हि व्यस्तभ्यामुत्तरस्य तस्य स्तुनतेर्मूर्धन्षे कृते शब्दसंज्ञा गम्यते। "अभिनिस इत्येतस्मात्()" इत्यादि। अभिनिसिति योऽयमुपसर्गसमवायस्तस्मादित्यर्थः। "अभिनिष्टानः" इति। अभिनिस्तव्यतेऽनेन, "अकर्तरि च कारके संज्ञायाम्()" ३।३।१९ इति घञ्()। प्रादिसमासः। ननु च समानाधिकारादेवाभिनिःस्तनतीत्यत्र न भविष्यति। किमेतन्निवृत्त्यर्थेन शब्दसंज्ञाग्रहणेन? इत्यत आह--"समास इत्यतः प्रभुति निवृत्तम्()" इति॥

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गप्रादुर्भ्याम् अस्तिर् यच्परः ८।३।८७

उपसर्गस्थान् निमित्तात् प्रादुस्शब्दाच् च उत्तरस्य यकारपरस्य अच्परस्य च अस्तिसकारस्य मूर्धन्यो भवति। अभिषन्ति। निषन्ति। विषन्ति। प्रादुःषन्ति। अभिष्यात्। निष्यात्। विष्यात्। प्राडुःष्यात्। उपसर्गातिति किम्? दधि स्यात्। मधु स्यात्। अस्ति इति किम्? अनुसृतम्। विसृतम्। अथ असत्यपि अस्तिग्रहणे सकारम् एव प्रति उपसर्ग आश्रीयते, प्रादुःशब्दस्य च कृभ्वस्तिष्वेव प्रयोगः इति अन्यत्राप्रसङ्गः? तथापि एतत् प्रत्युदाहर्तव्यम्, अनुसूते अनुसूः, अनुस्वो ऽपत्यं आनुसेयः। शुभ्रादित्वाड् ढक् ४।१।१२३, ढे लोपो ऽकद्र्वाः ६।४।१४७ इति उवर्नलोपः। यच्परः इति किम्? निस्तः। विस्तः। प्रादुस्तः।

लघु-सिद्धान्त-कौमुदी

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ५७८, ८।३।८७

उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे। निष्यात्। प्रनिषन्ति, प्रादुः षन्ति। यच्परः किम्?। अभिस्तः॥

न्यासः

उपसर्गप्रादुभ्र्यामस्तिर्यच्परः। , ८।३।८७

इदमपि पूर्ववदप्राप्ते वचनम्()। यश्चाच्च तौ यचौ, चचौ परो यस्मात्? स यच्परः। प्रादुःशब्दस्यानुपसर्गत्वात्? पृथग्ग्रहणम्()। "अभिषन्ति" इति। "अस भुवि" (धा।पा।१०६५) अदादित्वाच्छपो लुक्(), "श्नसोरल्लोपः" (६। ४।१११) इत्यकारस्य। "अभिष्यात्()" इति। लिङ्()। अनुसुनम्()" इति। "सृ गतौ" (धा।पा।९३५)। ननु च सकारस्य प्रृतत्वात्?

तमेव प्रत्युपसर्गत्वमाश्रीयते, न चानुसृतमित्यत्र यः सकारस्तं प्रत्यनुशब्दल्योपसर्गसंज्ञा; तन्मात्रस्यऽक्रियावचनत्वात्(), क्रियावचनं च प्रति प्रादीनामुपसर्गसज्ञाविधानात्()। "ये प्रति क्रियुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति" (म।भा।१।४।४०) इति वचनात्()। तस्मादसत्यप्यस्तिग्रहणे नैवात्र मूर्धन्यः प्रसज्येत। तत्किमस्तिग्रहणेन? तत्रैतत्? स्यात्()--असति तस्मिन्? प्रादुःशब्दादुत्तरस्य धात्वन्तरसकारस्य भूर्धन्यः प्राप्नोति; अतस्तन्निवृत्त्यर्थमस्तिग्रहणम्(), एतच्च नास्ति; प्रादुःशब्दस्य नियतविषयत्वात्()। स हि सर्वदा कृभ्वस्तिथिषय एव प्रयुज्यते। तत्? कुतोऽयं प्रसङ्ग इति यो देशयितुकामस्तदीयं मतम्? "अथ" इत्यादिना दर्शयति। प्रत्युदाहरणान्तरं वक्तुकाम आह--"अन्यत्र" इति। अनुसुतमित्यत्र प्रत्युदाहरणे। "तथापि" इति। एवमपीत्यर्थः। एतेनैतद्दर्शयति--एवमपि कल्प्यमानेऽस्तिग्रहणन्यानुसेय इत्येतत्? प्रत्युदाहरणमस्त्येव। तस्मात्? कत्र्तव्यमेवास्तिग्रहणम्()। "षूङ्? प्राणिगर्भविमोचने" (धा।पा।१०३१) इत्येतस्मादनुपूर्वात्? क्विप्(), अनुसूत इत्यनुसूः, तस्यापत्यं शुभ्रादित्वात्? ४।१।१२३ ढक्(), एयादेशः, "ढे लोपेनाऽकद्रवाः" ६।४।१४७ इत्यूकारलोपः। अत्र सकारं प्रत्यनुशब्दस्योपसर्गसंज्ञेत्यसत्यस्तिग्रहणे [संज्ञेत्यस्तिग्रहणे--कांउ।पाठः] स्यादेव मूर्धन्यः॥

बाल-मनोरमा

उपसर्गप्रादुभ्र्यामस्तिर्यच्परः ३०३, ८।३।८७

उपसर्गप्रादुभ्र्याम्। उपसर्गः प्रादुस् अनयोद्र्वन्द्वः। इण्कोरित्यधिकृतम्। तत्र इण इत्युपसर्गेण संबध्यते, न प्रादुसि, ततः परस्य अस्तेः सस्य इणः परत्वाऽसंभवात्। कोरित्यपि असंभवान्न संबध्यते। अस्तिरिति षष्ठ()र्थे प्रथमा। "सहेः साडः सः" इत्यतः स इति षष्ठ()न्तमनुवर्तते, मूर्धन्य इत्यधिकृतम्। य् अच् --अनयोद्र्वन्द्वः। यचौ परौ यस्मादिति विग्रहः। यकारे अचि च परे इति लभ्यते। तदाह-- उपसर्गेण इति। उपसर्गेण इति। उपसर्गस्थादिण इत्यर्थः। परस्येति। अस्तेः सस्य विशेषणमिदम्,न त्वस्तेः, तेन प्रादुरासीदित्यत्र न षत्वम्। यकारपरकत्वे उदाहरति-- निष्यात् प्रादुष्ष्यादिति। प्रादुसिति सान्तमव्ययम्। सस्य षत्वे पूर्वस्य सस्य ष्टुत्वेन षः। षान्तत्वे तु "प्रादुभ्र्या"मिति रुत्वनिर्देशो नोपपद्यते। अच्परकत्वने उदाहरति-- निषन्ति प्रादुष्षन्तीति। मृजूष् शुद्धाविति। ऊदित्त्वमिड्विकल्पार्थम्। "षिद्भिदादिभ्यो"ऽङित्यङर्थं षित्त्वम्। वस्तुतस्तु भिदादिगणे मृजाशब्दपाठादेव सिद्धेरिह षित्करममनार्षमित्याहुः।

तत्त्व-बोधिनी

उपसर्गप्रादुभ्र्यामस्तिर्यच्परः २६२, ८।३।८७

उपसर्गप्रादुभ्र्याम्। प्रादुसिति सान्तमव्ययम्। "प्रादुषश्चे"ति पाठे प्रादुभ्र्यामिति निर्देशो न युज्यते इति प्राचां षान्तपाठः प्रामादिकः। परस्येति। अयमस्तेः सस्य विशेषणं, न त्वस्तेः। तेन प्रादुरस्तीत्यत्र न षत्वम्। उपसर्गेत्यादि किम्?। दधि स्यात्। अस्तेः किम्?। परिसृजति। मृजू शुद्धौ। अयं न षित्, भिदादिपाठसामथ्र्यात्।

---

सूत्रम्

काशिका-वृत्तिः

सुविनिर्दुभ्र्यः सुपिसूतिसमाः ८।३।८८

सु वि निर् दुरित्येतेभ्यः उत्तरस्य सुपि सूति सम इत्येतेषां सकारस्य मूर्धन्यादेशो भवति। सुपि इति स्वपिः कृतसम्प्रसारणो गृह्यते। सुषुप्तः। विषुप्तः। निःषुप्तः। दुःषुप्तः। सूति इति स्वरूपग्रहणम्। सुषूतिः। विषूतिः। निःषूतिः। दुःषूतिः। सम सुषमम्। विषमम्। निःषमम्। दुःषमम्। सुपेः षत्वं स्वपेर्मा भूद् विसुष्वापेति केन न। हलादिशेषान्न सुपिरिष्टं पूर्वं प्रसारणम्। स्थादीनां नियमो नात्र प्राक् सितादुत्तरः सुपिः। अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते।

पूर्वत्रासिद्धीयमद्विर्वचने इति कृते ष्त्वे ततो द्विर्वचनम्।

न्यासः

सुविनिर्दुर्भ्यः सुपिसूतिसमाः। , ८।३।८८

सुपिसूत्योः "सत्पदाद्योः" ८।३।११३ इति निषेधे प्राप्ते। सम इत्येतदन्युत्पुन्नं प्रातिपदिकं सर्वादिषु षठ()ते; तेनास्यादित एवाप्राप्ति षत्वमुच्यते। अथ तु"षम ष्टम अवैकल्पे" (धा।पा।८२९,८३०) इत्यस्य पचाद्यचि समशब्दो व्युत्पाद्यते, तथा च सनि तस्यापि प्रतिषेधे प्राप्त इदं वचनम्()। "सुषुप्तः" इति। "ञिष्वप्? शये" ["ष्वप"--धा।पा।] (धा।पा।१०६८), निष्ठा, वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम्(), "एकाचः" ७।२।१० इतीट्()प्रतिषेधः। "सुषूतिः" इति। सूतेः सूयतेर्वा "स्त्रियां क्तिन्()" ३।३।९४। सूतीति स्वरूपग्रहणम्()। यत्रास्यैतद्रूपं नास्ति, तत्र न भवति--सुसूनम्(), विसूतमिति। कथं पुनर्ज्ञायते--स्वरूपग्रहणमेतत्(), न पुनः सूत्रलुग्विकरणसय ग्रहणमिति? भवति तस्यापि "इविश्तपौ धातुनिर्देशे" (वा ३१९) इति श्तिपि कृते सूतिरित्येष निर्दसः? समशब्देन साहचर्यात्? त य हीह स्यरूपं गृह्त इति। यद्यपि सु पना धातुना साहचर्याद्धातोरपि ग्रहणं युक्तम्(), तथापि शब्दपरविप्रतिषेधेन शब्दपरं यत्साहचर्यं तद्बलीय इति समशब्देनैव माहचर्यात स्वरूपमेव गृह्ते, न सुपिना धातुना साहचर्याद्धातुः। अथ किमर्थं सुपेः कृतसम्प्रसारणस्य षत्वमुच्यते? इत्यत आह--"सुपेः षत्वं स्वपेर्मा भूत्()" इत्यादि। सुस्वापः, विस्वपनम्(), निस्विपनम्(), दुःखपनमित्यत्राकृतसम्प्रसारणस्य स्वपेः षत्वं मा भूदित्येवमर्थं स्वपेः कृतसम्प्रसारणस्य षत्वमुच्यते। यद्येवम्(), विसुष्वापेति केन न" इति? स्वपेर्लिट्(), तिप्(), णल्(), द्विर्वचनम्(), "लिट()भ्यासस्योभयेषाम्()" ६।१।१६ इति सम्प्रसारणम्()। कृतसम्प्रसारणस्य स्वपेरभ्यासस्येति केन हेतुना षत्वं न भवति? नास्त्येव स हेतुयेन हेतुना विसुष्वापेत्यत्र न भविष्यतीत्यभिप्रायः। परस्य तु सकारस्य "आदेशप्रत्यययोः" ८।३।५९ इत्यनेन षत्वं भवत्येव, न तद्विषयेयं चिन्ता। "हलादिशेषान्न सुपिः" इति। एतेन येन हेतुना षत्वमत्र न भवति तं दर्शयति। "लिट()भ्यासस्योभयेषाम्()" (३।१।१७) इत्येतस्माद्धि सम्प्रसारणात्परत्वाद्धलादिशेषे कृते यद्यपि पश्चात्? सम्प्रसारणं क्रियते, तथापि सुप इति रूपं न भवति; पकारस्यारणात्परत्वाद्धलादशेषे कृते यद्यपि पश्चात्? सम्प्रसारणं क्रियते, तथापि सुप्? इति रूपंनि भवति; पकारस्याभावात्()। तस्मात्? षत्वं न भविष्यतीत्यभिप्रायः। तेन सुप सुप इत्यस्य रूपत्याभावः षत्वाभावे हेतुरुक्तः। पूर्वपक्षवादिना तु प्राक्? सम्प्रसारणे कृते पश्चाद्धलादिशेषेण पकारो निवृत्त इति मन्यमानेन देशितम्()। ननु पश्चादपि पकारस्य निवृत्तिः, नैवायं सुपिर्भवति, पकाराभावात्(), तत्? किमिति देशितम्()? "एकदेशविकृतस्यानन्य"त्वात्? (व्या।प।१६) सुपिरेवायमित्यभिप्रायः। यदा तु परत्वाद्धलादिशेषे कृते सम्प्रसारणं भवति, तदैकदेशविकृतस्यानन्यत्वे सुपिरयं न भवति; न हि तदा सुपेरेव विकारः, किं तर्हि? स्वपेः। अत आह--"इष्ट पूर्वं सम्प्रसारणम्()" इति। हलादिशेषादिं पूर्वं सम्प्रसारणमेवेष्यते। तथा ह्रुभयेषां ग्रहणं तत्रैवमर्थं कृतम्()--परमपि हलादिशेषं बाधित्वा पूर्वं सम्प्रसारणमेव यथा स्यादिति। तस्मद्धलादिशेषात्पूर्वमभ्यासस्य सम्प्रसारणेणैव भवितव्यमित्युक्तम्()--हलादिशेषान्न सुपिरिति। ततश्च "विसुष्वापेति केन न" इत्येतद्देश्यं तदवस्थमेव। एवं तर्हि "स्थादिष्वभ्यासेन चाभ्यासस्य" ८।३।६४ इति योऽयं नियमः स्थादीनमेवाभ्यासस्य प्रवत्र्तते, नान्येषामित्येतस्मन्नियमात्? "विसुष्वाप" इत्यत्राभ्यासस्य षत्वं न भवतीत्यत आह--"स्थादीनाम्()" इत्यादि। स्थादिनिमित्तको नियमः स्थादिनियमः स्थादिभिव्र्यपदिश्यते; स्थादिनिमित्तकत्वं तु नियमस्य तानुपादाय विधानात्()। स्थादीनां यो नियमः सोऽत्र न प्रवत्र्तते। कथं "विसुष्वाप" इत्यत्राभ्यासस्य षत्वं न भविष्यति? कस्मात्? पुनः स्थादिनियमोऽत्र न प्रवत्र्तते? इत्यत आह--"प्राक्? सितात्()" इति। तेषु पुनर्नियमविधानादिति शेषः। "स्थादिष्वभ्यासेन चाभ्यासस्य। ८।३।६४ इत्यत्र "प्राक्सितात्()" ८।३।६३ इति वत्र्तते। तेन सेवासत" ८।३।७० इत्यत्र सितसंशब्दनाद्ये प्राग्व्यवस्थिताः "सुनोतिसुवतिस्यतिस्तोभतिप्रभृतयस्तेष्वेवागं नियमः, अतस्तेषामेवाभ्यासस्य षत्वं व्यावत्र्तयति, नान्येषामिति दर्शयति सिद्धान्तवादिमस्तु सामान्येन नियम इत्यभि प्रायः।

स्यादेतत्()--सुपिरपि प्राक्सितादेव व्यवस्थितः; तेनात्रापि नियमः प्रवर्त्तिष्यते? इत्यत आह--उत्तरः सुयिः" इति। सितादित्येतदपेक्षते। सितशब्दादुत्तरः सुपिः पठ()ते, तत्? कुतस्तत्र नियमस्य प्रवृत्तिः अतो नियमेन तदभ्यासस्य षत्वं न व्यावर्त्यत इति "विसुष्वापेति केन न" इत्यविकलं देश्यमेव। एवं तर्हि "अर्थवद्ग्रहणे नानर्थकस्य" (व्या।प।१) इत्यर्थवेतः सुपेग्र्रहणात्(), इह च तस्यानर्थकत्वात्? षत्वं न भविष्यति। न ह्रत्र सुपिरर्थवान्()। तथा हि--यदा तादत्? स्थाने द्विर्वचनं तदा समुदाय एवार्थवान्? अवयवस्त्वनर्थक एव। यदा तु द्विष्प्रयोगो द्विर्वचनम्(), तदापि शब्दस्यावृत्तिः, नार्थस्य, तेन कृतेऽपि द्विर्वचनं समुदायस्यैवार्थवत्त्वम्(), न तु केवलायाः प्रकृतेः, नापि केवलाभ्यासस्येत्यत आह--"अनर्थके विषुषुपुः" इति। कथं षत्वमिति वाक्यशेषः। यद्यर्थवतः सुपेग्र्रहणात्? "विसुध्वाप" इत्यत्र षत्वं न भवति, एवं सति "विषुषुपुः" इत्यत्र कथं षत्वं न भविष्यति, अत्रापि ह्रनर्थकत्वान्नैव षत्वेन भवितव्यम्(), यथा विसुष्वापेत्यत्र? इत्यत्र आह सुपिभूतो द्विरुच्यते" ["षुपि"--प्रांउ।पाठः] इति। पुपीत्येतद्रूपमापन्नोद्विरुच्यत इत्यर्थः। स्वपेर्लिट्(), उस्(), द्विर्वचनम्(), "असंयोगाल्लिट्? कित्? १।२।५ इति कित्त्वम्(), वच्यादिसूत्रेण ६।१।१५ सम्प्रसारणम। अनेन षत्वम्()। विषुप्()ुस इति स्थित आन्तरतम्यात्? षुप्? इत्येतस्य द्विर्वचनम्(), एवं पुपिभूते द्विरुच्यमाने विषुषुपुरित्यत्राभ्यासस्य षत्वं सिध्यति पिसुष्वापेत्यत्र षुपिभूतस्य द्विर्वचनं नास्ति; पुपिभूतस्याभावात्()। तदेवं कुतः सम्प्रसारणे हि कृते षुपिभूते भवितव्यम्()? णलः कित्त्वाभावात्? सम्प्रसारणमेव मास्ति, कुतः पुनः षत्वम्()। तस्मात्? सुपोत्येतदेव द्विरुच्यते यद्यप्युत्तरकालं सम्प्रसारणे कृते सुपीत्येवं भवति, तथाप्यनर्थकत्वात्? तस्य मूर्धन्यो न भवतीति। तदेवं यदि कृतसम्प्रसारणस्य णत्वं भवति "विसुष्वापेति केन न" इति देश्यमर्थवद्ग्रहणपरिभाषा (व्या।प।१) माश्रित्य परिह्मतम्()। ननु च द्विर्वचने कत्र्तव्ये षत्वमसिद्धम्(), तत्? किमुच्यते "षुपिभूतो द्विरुच्यते" इति? अत आह--"पूर्वत्रासिद्धीयम्()" इत्यादि।

तत्त्व-बोधिनी

सुविनिर्दुभ्र्यः सुपिसूतिसमाः २६७, ८।३।८८

सुपिसूतिसमा इति। "सूति"ति क्तिन्नन्तः। "समे"ति पचाद्यजन्तः। सुषुप्तिः। सुषूतिः। सुषमा। विषमः। अद्विर्वचन इति। तेन षत्वसहितस्य द्वित्वम्। सुपिरूपाभावादिति। "एकदेशविकृतमनन्यव"दिति तु न प्रवर्तते, तस्य स्थानिवत्सूत्रशेषत्वात्, षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवत्त्वाऽभावादित्याहुः। वस्तुतस्तु "स्थानिवदादेश" इत्येनं प्रति त्रिपादी सिद्धेत्युक्तम्। तस्मादिह समाधानान्तरमूह्रमित्यन्ये।

---

सूत्रम्

काशिका-वृत्तिः

निनदीभ्यां स्नातेः कौशले ८।३।८९

नि नदी इत्येताभ्याम् उत्तरस्य स्नातिसकारस्य मूर्ध्न्यादेशो भवति कौशले गम्यमाने। निष्णातः कटकरणे। निष्णातो रज्जुवर्तते। नद्यां स्नाति इति नदीष्णः। सुपि स्थः ३।२।४ इत्यत्र सुपि इति योगविभागात् कप्रत्ययः। कौशले इति किम्? निस्नातः। नद्यां स्नातः नदीस्नातः इति।

न्यासः

निनदीभ्यां स्नातेः कौशले। , ८।३।८९

"ष्णा शौचे" (धा।पा।१०५२)। अस्य पूर्ववत्? षत्वप्रतिषेधे प्राप्तेऽस्यारम्भः। कौशलम्()=नैपुण्यम्()। "निष्णातः कढकरणे" इति। तत्र कुशल इति गम्यते। "नदीष्णः" इत्यत्रापि नदीस्नाने कुशल इति। "आतो लोप इटि च" ६।४।६४

इत्याकारलोपः, उपपदसमासः। "नदीस्नातः" इत्यत्रापि "सप्तमी" (२।१।४०) इति योगविभागात्? समासः॥

बाल-मनोरमा

निनदीभ्यां स्नातेः कौशले ८८८, ८।३।८९

निनदीभ्यां। सस्य षः स्यादिति। "सहे साडः सः" इत्यतः स इति षष्ठ()न्तमनुवर्तते, "अपदान्तस्य मूर्द्धन्यः" इत्यप्यधिकृतमिति भावः। निष्णात इति। कुशल इत्यर्थः। नदीष्ण इति। नद्यां कुशलं स्नातीति विग्रहः। सुपीति क इति। "सुपि स्थः" इत्यत्र "सुपी"ति योगविभागात्क इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

सूत्रं प्रतिष्णातम् ८।३।९०

प्रतिष्णातम् इति निपात्यते सूत्रं चेद् भवति। प्रतिष्णातम् सूत्रम्। शुद्धम् इत्यर्थः। प्रतिस्नातम् इत्येव अन्यत्र।

न्यासः

सूत्रं प्रतिष्णातम्?। , ८।३।९०

"प्रतिष्णातम्()" इति। पूर्ववत्? षत्वप्रतिषेधे प्राप्ते निपात्यते। "स्नातेः" ८।३।८९ इत्यनुधृत्तौ सत्यां सूत्रे प्रतेरित्युच्यचमाने कामं प्रतिष्णातमिति सिध्यति। तृजादिष्वपि प्राप्नोति; तस्मादतिपरसङ्गनिवृत्त्यर्थं प्रतिष्णातमिति निपातनमाश्रितम्()॥

---

सूत्रम्

काशिका-वृत्तिः

कपिष्ठलो गोत्रे ८।३।९१

कपिष्थलः इति निपात्यते गोत्रविषये। कपिष्ठलः नाम यस्य सः कापिष्ठलिः पुत्रः। गोत्रे इति किम्? कपेः स्थलम् कपिस्थलम्।

न्यासः

कपिष्ठलो गोत्रे। , ८।३।९१

यदि "ष्ठल स्थाने" (धा।पा।८३६) इत्ययं धातुः "अब्दन्त्यपराः सादयः षोपदेशाः" (काशिका।६।१।६४) इति लक्षणात्()षोपदेशः, तस्य चैतद्रूपं भवति, तदा पूर्ववत्? प्रतिषेधे प्राप्ते वचनम्()। अथ गणे तथाऽपाठादवोपदेश इति लक्षणादयोपदेशोऽध्युत्पन्नो वा स्थलशब्दः, तदादित एवाप्राप्ते षत्वे वचनम्()। "गोत्रविषये" इति। गोत्रविषयश्चेत्? कपिष्ठलशब्दो भवतीत्यर्थः। गोग्रग्रहणेन चेह लौकिकं गोत्रं गृह्यते न पारिभाषिकम्()। लोके च ये पुरुषा अपत्यसन्ततेः प्रवत्तयितारो यत्पूर्विकापत्यसन्ततिर्भवति ते गोत्रमित्यभीधीयन्ते। कश्च कपिष्ठलशब्दो गोत्रविषयः? यः संज्ञाशब्दः प्रवराध्याये पठ()ते। पारिभाषिकं गोत्रविषयत्वमपत्यप्रत्ययमन्तरेण न सम्भवतीति पारिभाषिकगोत्रस्येहग्ग्रहणम्()। "कपिष्ठलो नाम" इति। स्थलतौति स्थलः, पचाद्यच्(), कपिरिव स्थलः कपिष्ठलः। "उपमितं व्यघ्रादिभिः २।१।५५ इत्यादिना समासः। व्युत्पत्तिमात्रमेर्वतत्? कृतम्(), न त्ववयवार्थो विद्यते। नामशब्दः संज्ञाशब्दतां कपिष्ठलशब्दस्य दर्शयितुं प्रयुक्तः। कपिष्ठलशब्दस्याप्रसिद्धत्वात्? तदपत्येन प्रसिद्धेन तमाख्यातुमाह--"यस्य कापिष्ठलिः" इति। यस्य

कापिष्ठलिरपत्यं स कपिष्ठलो नामेत्यर्थः। "कपिस्थलम्()" इति। कपीनां स्थलं स्थानमित्यर्थः॥

---

सूत्रम्

काशिका-वृत्तिः

प्रष्ठो ऽग्रगामिनि ८।३।९२

प्रष्ठः इति निपात्यते अग्रगामिनि अभिधेये। प्रतिष्ठते इति प्रष्ठः अश्वः। अग्रतो गच्छति इत्यर्थः। अग्रगामिनि इति किम्? प्रस्थे हिमवतः पुण्ये। प्रस्थो व्रीहीणाम्।

न्यासः

प्रष्ठोऽग्रगामिनि। [ अग्रगामिणि--इति प्रांउंया।पाठः] , ८।३।९२

प्रशब्दस्याविणन्तत्वादप्रप्तमेव षत्वं विधीयते। अग्रे गन्तुं शीलं यस्य सोऽग्रगामौ=पुरःसर उच्यते। प्रतिष्ठित इति प्रष्ठः "सुपि स्थः" ३।२।४ इति कप्रत्ययः, पूर्ववदकारलोपः॥

बाल-मनोरमा

प्रष्ठोऽग्रगामिनि ७३३, ८।३।९२

प्रष्ठोऽग्रगामिनि। प्रपूर्वात्स्थाधातोः "आतश्चोपसर्गे" इति कप्रत्यये आतो लोपे प्रस्थशब्दः। स च अग्रगामिनि वाच्ये कृतषत्वो निपात्यते। इण्कवर्गाभ्यां परत्वाऽभावात्षत्वस्य न प्राप्तिः। प्रतिष्ठत इति। अग्रे गच्छतीत्यर्थः, उपसर्गवशात्। प्रष्ठो गौरिति। अग्रगामीत्यर्थः। एवं प्रष्ठोऽ()आ इत्यादि।

---

सूत्रम्

काशिका-वृत्तिः

वृक्षाऽसनयोर् विष्टरः ८।३।९३

विष्टरः इति निपात्यते वृक्षे आसने च वाच्ये। विपूर्वस्य स्तृणातेः षत्वं निपात्यते। विष्टरो वृक्षः। विष्टरमासनम्। वृक्षासनयोः इति किम्? औलपिवाक्यस्य विस्तरः।

न्यासः

वृक्षासनयोविष्टरः। , ८।३।९३

"विष्टरः" इति। "स्तृञ्? ञाच्छादेन"(धा।पा।१४८४) इत्यस्याज्दन्त्यपरस्यापि षोपदेशत्वं नास्ति, "सृपिसृजिस्तृ()स्त्यासेकृसृवर्जम्()" (काशिका।६।१।६४) इति वचनात्(), तेन नापराप्तेमेव षत्वं निपात्वते। विस्तीर्वत इति विष्टरः, "ऋदोरप" ३।३।५७। रूढिशब्दोऽयं यथाकथञ्चित्? व्युत्पाद्यते, नात्रावयवार्थं प्रत्यभिनिवेशः कत्र्तव्यः॥

---

सूत्रम्

काशिका-वृत्तिः

छन्दोनाम्नि च ८।३।९४

विष्टारः इति निपात्यते। विपूर्वात् स्तृ इत्येतस्माद् धातोः छन्दोनाम्नि च ३।३।३४ इत्येवं विहितो घञिति विष्टरः इत्यपि प्रकृते विष्टारः इति विज्ञायते। विष्टारपङ्क्तिः छन्दः। विष्टारो बृहतीछन्दः। छन्दोनाम्नि इति किम्? पटस्य विस्तारः।

न्यासः

छन्दोनाम्नि च। , ८।३।९४

छन्दोग्रहणेन वृहात्यादीनां ग्रहणम्(), न हि वेदस्य विष्टार इति नाम, किं तर्हि? वृहत्यादीनां वृत्तानाम्()। ननु विष्टर इति प्रकृतम्(), वत्कथं विष्टार इति निपातयि शक्यते? इत्याह--"विपूर्वात्" इत्यादि। "प्रे स्त्रोऽयज्ञे" ३।३।३२ इत्यतः "स्त्रः" इत्यनुवत्र्तमाने "प्रथने वाणशब्दे" ३।३।३३ इत्यतो वाविति "छन्दोनाम्नि च" (३।३।३४) इति स्तृणातेर्धञ्? णिधीयते। न च घञि विष्टर इत्येतद्रूपमापद्यते। तस्माद्यद्यपि विष्टर इति प्रकृतम्(), तथापि निपात्यते। न नु च घञ्यपि विहितेब्स्मादेव निपातनाद्घ्रस्वत्वे कृते विष्टर इति भवत्येव, तत्कथं विष्टार इति शक्यं विज्ञातुम्()? "छन्दोनाम्नि च" इति वचनात्()। न हि विष्टर इति छन्दोनाम्(), किं तर्हि? विष्टार इति॥

---

सूत्रम्

काशिका-वृत्तिः

गवियुधिभ्यां स्थिरः ८।३।९५

गवियुधिभ्याम् उत्तरस्य स्थिरसकारस्य मूर्धन्यादेशो बवति। गविष्ठिरः। युधिष्ठिरः। गोशब्दादहलन्तादपि एतस्मादेव निपातनात् सप्तम्या अलुग् भवति।

न्यासः

गवियुधिभ्यां स्थिरः। , ८।३।९५

स्थिरशब्दोऽयम्? "अजिरशिशिर" (द।उ।८।२७) इत्यादिसूत्रेण यदि तिष्ठतेः किरच्प्रत्ययान्तो निपात्यते तदा "सात्पवाद्योः" ८।३।११३ इति प्रतिषेधे प्राप्ते वचनम्()। अथाव्युत्पन्नमेव प्रातिपदिकं तदादित एवाप्राप्ते वचनम्()। "गविष्ठिरः, गुधिष्ठिरः" इति। संज्ञायां समासः। अथ कथं गविष्ठिर इत्यत्र सञ्चम्या अलुक्(), "हलदन्तात्? सप्तम्याः संज्ञायाम्()" (६।३।९) इति चेत्()? न; गोशब्दस्याहलन्तत्वादित्यत आह--"गोशब्दात्()" इत्यादि॥

बाल-मनोरमा

गवियुधिभ्यां स्थिरः ९५२, ८।३।९५

तत्र "आदोशप्रत्यययो"रिति षत्वस्य "सात्पदाद्यो"रिति निषेधे प्राप्ते इदमारभ्यते--गवियुधिभ्यां स्थिरः। गवीसि युधीति च सप्तम्या अनुकरणम्। "स्थिर" इति प्रथमा षष्ठ()र्थे। "सहेः साडः सः" इत्यस्मात्स इति षष्ठ()न्तमनुवर्तते। "अपदान्तस्य मूर्धन्यः" इत्यधिकृतम्। तदाह--आभ्यामिति। ननु "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते" इति परिभाषयाऽवादेशात्पूर्वमेव ङेर्लुकि प्रवृत्ते हलन्तत्वाऽभावात्कथमिहाऽलुगित्यत आह--अत्र गवीति। युधिष्ठिर इति। युध्धातोर्भावे क्विपि युध्शब्दात्सप्तम्येकवचनम्। हलन्तत्वादलुक्, षत्वं च। पाण्डवस्य धर्मपुत्रस्य नामेदम्। तदेवं हलन्तादलुकं प्रापञ्च्य अदन्तादलुकमुदाहरति--अरण्येतिलका इति। ननु तिलकशब्दस्य शौण्डादिगणेऽभावात्कथं तेन सप्तमीसमास इत्यत आह--अत्र संज्ञायामिति।

ह्रद्युभ्यां चेति। ह्रच्छब्दाद्दिव्शब्दाच्च सप्तम्या अलुग्वक्तव्य इत्यर्थः। असंज्ञार्थमिदम्। ह्रदिस्पृगिति। "पद्द"न्निति ङौ ह्रदयस्य ह्रदादेशः। ह्रदयं स्पृशतीत्यर्थः। दिविस्पृगिति। दिवं स्पृशतीत्यर्थः। इहोभयत्रापि सप्तम्या अलुग्विधानबलादेव कर्माणि सप्तमीति भाष्यम्। "अमूर्धमस्तका"दित्यनेन त्वलुङ्न सिध्यति, तत्र संज्ञायामित्यनुवृत्तेः।

तत्त्व-बोधिनी

गवियुधिभ्यां स्थिरः ८२२, ८।३।९५

गवियुधि। स्थिरशब्दोऽयम् अजिरशिशिरेत्यौणादिकः किरच्प्रत्ययान्तस्तिष्ठतेर्निष्पन्नः। सात्पदाद्योरिति निषेधे प्राप्ते वचनारम्भः। गवीति वचनादेवेति। न च लुकं बाधित्वापरत्वादन्तरङ्गत्वाच्चाऽवादेशे हलदन्तात्सप्तम्याः इत्येवाऽलुक् सिध्यीति वाच्यम्, अन्तरह्गानपि विधीन् बहिरङ्गो लुग् बाधते इति लुको बलीयस्त्वादिति भावः।

ह्मद्द्युभ्यां च। ह्मदिस्पृक् दिविस्पृगिति। ह्मदयं दिवं च स्पृशतीति विग्रहः। अलुग्विधिसामत्र्यात्कर्मणि सप्तमी, कर्मणोऽधिकरणत्वविवक्षया वा।

---

सूत्रम्

काशिका-वृत्तिः

विकुशमिपरिभ्यः स्थलम् ८।३।९६

वि कु शमि परि इत्येतेभ्यः उत्तरस्य स्थलसकारस्य मूर्धन्यादेशो भवति। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्।

न्यासः

विकुशमिपरिभ्यः स्थलम्?। , ८।३।९६

"सात्पदाद्योः" ८।३।१११३ इति प्रतिषेधे प्राप्ते वचनम्()। यथा चैवं तथा "कपिष्ठलो गोत्रे" ८।३।९१ इत्यत्र प्रतिपादितम्()। "विष्ठलम्(), कुष्ठलम्()" इति। स्थलशब्दः पचाद्यजन्तः, तेन यदा विकुशब्दौ निपातौ समत्येते तदा "कुयतिप्रादयः" २।२।१८ इति समासः। अथानिपातौ पक्षिपृथिवीवचणौ, तदा षष्ठीसमासः। "शमिष्ठलम्()" इति। शमीनां स्थलमिति समासः। "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्()" ६।३।६२ इति ह्रस्वः। ह्रस्वोच्चारणं दोर्धपक्षे मा भूदित्येवमर्थम्(), अन्यथा हि बहुलवचनात्? दीर्घोऽपि पक्षे विज्ञायेत। "परिष्ठलम्()" इति। प्रादिसमासः॥ येषामत्रोपपदसमासे कृते स्थलशब्द उत्तरपदे सप्तम्या अलुग्भवति, ये चेणन्ताः, तेब्यः "इष्कोः" ८।३।७७ इत्यनेन प्राप्तस्य वत्वस्य पदादिलक्षणप्रतिषेधे प्राप्ते वचनम्()। बर्हिःशब्दादपि "नुज्विसर्जनीयशर्ष्यवायेऽपि" ८।३।५८ इति पदादिलक्षण एव प्रतिषेधे प्राप्ते वचनम्()। शेवेभ्यस्त्वप्राप्त एव। स्थ इति धातुग्रहणं स्यात्()? स्वरूपग्रहणं वा? यदि "आतो धातोः" ६।४।१४० इत्याकारलोपं कृत्वा तिष्ठतेः षष्ठ()आं धिर्देशस्ततो धातुग्रहणम्()। अथ सुब्व्यत्ययेन षष्ठ्याः स्णले प्रथमां कृत्वा स्थशब्दस्य कप्रत्ययान्तस्य निर्देशस्तदा स्वरूपग्रहणम्()। यदात्र यदि धातोरिह ग्रहणं स्यात्? तदा गोस्थानमित्यादावपि प्रसज्येतेत्यालोच्य स्वरूपग्रहणं दर्शयन्नाह "इत्येतेभ्यः" इत्यादि। उदाहरणेषु गोष्ठ इत्यत्र गोशब्दे प्रथमान्त उपपदे घञर्थे कविधानम्()। "स्वास्नापाव्यथिहविवुज्यर्थं धञर्थे कविधानाम्()" (वा।३०६) इति गावस्तिष्ठन्त्यस्मिन्नित्यधिकरणे कप्रत्ययः। अपतिष्ठतीत्यर्थेऽपष्ठ इत्यत्र "सुर्पि स्वा" ३।२।४ इति कप्रत्वदः। "आपष्ठः" इति क्वचित्पाठः। "अन्येषामपि दृश्यते" ६।३।१३६ इति दीर्घः। अन्यत्रापि सर्वत्र "सुपि स्थः" ३।२।४ इत#इ कप्रत्ययः। यदि कुशब्दो निपातस्तदा प्रणमान्त एतस्मिन्नुपपदे कणिधिः, अथानिपातस्तदा सप्तम्यन्ते। अम्बादिषु सप्तम्यन्तेष्वेव। "जम्बष्ठः" इति। "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्()" ६।३।६२ इति ह्रस्वः। "स्थ" इति। स्वरूपग्रहणादन्येवां न प्राप्नोतीतीदमाह--"स्थास्थिन्स्थृ()णाम्()" इत्यादि। एषामपि षत्वं वक्तव्यम्(), व्याख्येयमित्यर्थः। तत्रैदं व्याख्यानम्()--सुषामादेराकृ-तिगणत्वादेषां षत्वं भविष्यतीति। "सव्येष्ठा" ["सव्येष्ठाः"---काशिका] इति। सव्ये तिष्ठतीति "दिवेॠ।" (द।उ।२।७) इत्यनुवत्तमाने "नयतेर्डिच्च" (द।उ।२।८) इति डिति च "सव्ये स्थश्छब्दसि" (द।उ।२।९) इति सव्यशब्द उपपदे तिष्ठतेॠप्रत्ययः, डित्वाट्टिलोपः, "तत्पुरुषे" ६।३।१३ इत्यादिना सम्पम्या अलुक्(), सव्येष्ठृ इति स्थिते "ॠदुशनस्पुदोदंशोऽनेहसाम्()" ७।१।९४ इत्यादिमाब्नङ्(), "सर्वनामस्णाने चासम्बुद्धौ" ६।४।८ इति दीर्घः। "परमेष्ठी"

["परमेष्ठीः"--काशिका] इति। "गमेरिधिः" (द।उ।६।७७) इत्यनुवत्र्तमाने "परमे स्थः किच्च" ["कित्()" इत्येव--द।उ।] (द।उ।६।६१) इतीनिप्रत्ययः, कित्त्वादालोपः। परमेष्ठिन्निति स्थिते "सौ च" ६।४।१३ इति दीर्घः। "सव्येष्टसारधिः" इति। पूर्ववत्? सव्येष्टशब्दं साधयित्वा सारधिशब्देन कर्मधारयः॥

---

सूत्रम्

काशिका-वृत्तिः

अम्बाऽम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ८।३।९७

अम्ब आम्ब गो भूमि सव्य अप द्वि त्रि कु शेकु शङ्कु अङ्गु मञ्जि पुञ्जि परमे बर्हिस् दिवि अग्नि इत्येतेभः उत्तरस्य स्थशब्दसकारस्य मूर्धन्यादेशो भवति। अम्बष्ठः। आम्बष्थः। गोष्ठः। भूमिष्ठः। सव्येष्ठः। अपष्ठः। द्विष्ठः। त्रिष्ठः। कुष्ठः। शेकुष्ठः। शङ्कुष्ठः। अङ्गुष्ठः। मञ्जिष्ठः। पुञ्जिष्ठः। परमेष्ठः। वर्हिष्ठः। दिविष्ठः। अग्निष्ठः। स्थास्थिन्स्थॄणाम् इति वक्तव्यम्। सव्येष्ठाः। परमेष्ठी। सव्येष्ठसारथिः।

बाल-मनोरमा

अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्?क्वङ्गुमञ्जिपुञ्जपरमेबर्हिर्दिव्यग्निभ्यः स्थः ७३४, ८।३।९७

अम्बाम्ब। अम्ब, आम्ब, गो, भूमि, सव्ये, अप, द्वि, त्रि, कुशे, कु , शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हिस्, दिवि, अग्नि-- एषामष्टादशानां द्वन्द्वः। अम्बष्ठः, आम्बष्ठः, गोष्ठः,भूमिष्ठः। सव्येष्ठः। निपातनादलुक्। "हलन्तात्सप्तम्याः" इति वा। अपष्ठः। एषु कतिपयेषु "सात्पदाद्यो"रिति निषेधः प्राप्तः। एवमग्रेऽपि। द्विष्ठ इति। द्वाभ्यां तिष्ठतीति विग्रहः। एवं त्रिष्ठः, कुशेष्ठः, कुष्ठः, शङ्कुष्ठ अङ्गुष्ठः मञ्जिष्ठः, पुञ्जिष्ठः। परमेष्ठः, निपातनादलुक्, "हलदन्ता"दिति वा। वर्षिष्ठः। दिविष्ठः। पूर्ववदलुक्। अग्निष्ठः। कप्रत्ययान्तस्येति। भूमिस्थितम्। इत ऊध्र्वमिति। "तुन्दशोकयो"रित्यारभ्येत्यर्थः। सुपीत्यस्येति। नतु कर्मणीत्यस्य , असंभवादिति भावः।

तत्त्व-बोधिनी

अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ६१३, ८।३।९७

अम्बाम्ब। कप्रत्ययान्तस्येति। तेन भूमिस्थितं गोस्थानमित्यादौ नेति भावः। प्राचा तु "स्थस्य सस्ये"ति व्याख्यातव्ये "स्थ सस्ये"ति व्याख्यातं, तदाकरविरोधेन "कप्रत्ययान्तस्ये"त्यध्याहृत्य व्याख्येयम्। द्विष्ठः त्रिष्ठ इति। द्वयोस्तिष्ठतीत्यादि विग्रहः। एवमम्बष्ठः आम्बष्ठः गोष्ठः भूमिष्ठः सव्यष्ठः अपष्ठः कुशेष्ठः कुष्ठः शङ्कुष्ट अङ्गुष्ठः पुञ्जिष्ठ परमेष्ठः बर्हिष्ठः दिविष्ठः अग्निष्ठः। आभ्यामिति। "परिमृजापनुदो"रित्यत्र पञ्चम्यर्थे षष्ठीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सुषामादिषु च ८।३।९८

सुषामादिषु शब्देषु सकारस्य मूर्धन्यादेशो भवति। शोभनं साम यस्य असौ सुषामा ब्राह्मणः। दुष्षामा। निष्षामा। निष्षेधः। दुष्षेधः। सुशब्दस्य कर्मप्रवचनीयसंज्ञाकत्वान् निर्दुर्शब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठो ऽयम्। सेधतेर् गतौ ८।३।११५ इति वा प्रतिषेधबाधनार्थः। सुषन्धिः। दुष्षन्धिः। निष्षन्धिः। सुष्ठु। दुष्ठु। तिष्ठतेरुणादिष्वेतौ व्युत्पाद्येते। गौरिषक्थः संज्ञायाम्। ङ्यापोः संज्ञाछन्दसोर् बहुलम् ६।३।६२ इति पूर्वपदस्य ह्रस्वत्वम्।

प्रतिष्णिका। प्रतिष्णाशब्दादयं कन् प्रत्ययः। जलाषाहम्। नौषेचनम्। दुन्दुभिषेवणम्। एति संज्ञायामगात्। एकारपरस्य सकारस्य मूर्धन्यादेशः भवति इण्कोरुत्तरस्य अगकारात् परस्य संज्ञायां विषये। हरिषेणः। वारिषेणः। जानुषेणी। एति इति किम्? हरिसक्थम्। संज्ञायाम् इति किम्? पृथ्वी सेना यस्य स पृथुसेनो राजा। अगातिति किम्? विष्वक्षेनः। इण्दोः इत्येव, सर्वसेनः। नक्षत्राद् वा। नक्षत्रवाचिनः शब्दादुत्तरस्य सकारस्य वा एति संज्ञायाम् अगकारात् मूर्धन्यो भवति। रोहिणीषेणः, रोहिणीसेनः। भरणीषेणः, भरणीसेनः। अगकारातित्येव, शतभिषक्षेनः। अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्यः।

न्यासः

सुषामादिषु च। , ८।३।९८

क्वचित्? षत्वप्रतिषेधे प्राप्ते, क्वचिदादित एवाप्राप्ते मूर्धन्यो विधीयते। "सुषामा" इति। सामशब्दोऽयम्? "षो अन्तकर्मणि" (धा।पा।११४७) इत्येतस्मान्मनिन्प्रत्ययं विधाय व्युत्पादितः। तस्य पदादिलक्षणे प्रतिषेधे प्राप्ते तद्बाधनार्थमिह पाठः। "निष्षामा" इति। "दुष्वामा" इति। रेफस्य विसर्जनीये कृते यदा "वा शरि" ८।३।३६ इति पक्षे सकार-, तदा परस्य षत्वे कृते पूर्वस्य ष्टुत्वम्()। ननु च सुषेधादीनां त्रयाणाम्? "उपसर्गात्? सुनोति ८।३।६५ इत्यादिनैव भूर्धन्यः सिद्धः, तत्? किमर्थमिह पठनम्()? इत्याह--"सुशब्द" इत्यादि। सुशब्दस्य कर्मप्रवचनीयत्दादनुपसर्गत्वे सति सुषेध इति पाठः। निर्दुःशब्दयोस्तु क्रियान्तरावषयत्वादनुवसर्गत्वे सति निःषेधः, दुःषेध इत्ययं पाठ इति सम्बन्धः कत्र्तव्यः। सुषेधादिषु स्थादीनामुपसर्गत्वं नास्ति; ततो यदि तेषामिह पाठो न क्रियते तदा "डपसर्गात्? सुनोति" (८।३।६५) इत्यादिनोपसर्गस्थान्निमित्तात्? षत्वं विधीयमानं न स्यात्(), इष्यते च; तस्मादनुपसर्गान्निमित्तात्? षत्वं यथा स्वादित्येवमर्थमेषां सुषेधादीनामिह पाठः। तत्र सुशब्दस्य कर्मप्रवचनीवत्वे सत्युपसर्गसंज्ञा न भवति; एका संज्ञेत्यधि कार#आत्? १।४।१। अनुपसर्गत्वं त्वस्य "सुः पूजायाम्()" १।४।९३ इति कर्मप्रवचनीयसंज्ञाविषानात्()। निर्दुःशब्दयोस्तूपसर्गत्वाभावः, क्रियान्तरविषयत्वात्()। निर्गतः सेधो निष्षेधः, दुर्गतः सेधो दुष्षे ध इति--गमिक्रिया विषयौ हि तौ; तस्माद्गमिमेव प्रति तयोरुपसर्गत्वम्(), न सेधतिं प्रति; यं परति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति (म।भा।१।४।६०) वचनात्()। एवं तावत्? "षिधु संराद्धो" (धा।पा।४७) इति यदा गतौ दत्रमानस्य सेध इत्येतद्भवति, तदा प्रतिषेधबाधनार्थः पाठ इति दर्शयितुमाह--"सेधतेः" इत्यादि। अथ वा "सेधतेर्गतौ" ८।३।११३ इति प्रतिषेधं वक्ष्यति, स मा भूदित्येवमर्थं एषां पाठः। "सुषन्धिः, निष्षन्धिः, दुष्षन्धिः" इति। एते "उपसर्गे घोः किः" ३।३।९२ इति क्रिप्रत्ययान्ताः। तेनैषामनादेशसकारत्वादप्राप्ते षत्वे पाठः। सन्धीयत इति सन्धिः, शोभनः सन्धिरिति प्रादिसमासः--सुषन्धिरिति। एवमन्यत्रापि। "सुष्ठुदुष्ठु" शब्दयोस्तु पदादिलक्षण एव तिषेधे प्रान्ते पाठः। "तिष्ठतेरुणादिष्वेतौ व्युत्पाद्येते" इति। "कुभ्रश्च" (द।उ।१।१०७) इत्यतः कुग्रहणमनुवत्रतते। "मृगय्वादयश्च" (द।उ।१२१) इति कुप्रत्ययान्त#औ व्युत्पाद्येते। "गौरिषक्यः" इति। गौरिषक्यशब्दस्य सकारस्य संज्ञायां षत्वं भवति। गौर्याः सक्थीति षष्ठीसमासः। "अच्प्रत्ययन्ववपूर्वात्()" (५।४।७५) इत्यादिसूत्रे अजिति योगविभागादच्? समासान्तः। यदा तु बहुव्रीहिः--गौर्या इव सक्ति यस्येति, तदा "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्? षच्()" ५।४।११३ इति षच्प्रत्ययान्तः। सक्तिशब्दोऽयम्? "असिसञ्चिभ्यां क्थिन" (द।उ।१।१०) इति विथन्प्रत्ययान्तो व्युत्पाद्यते। तेन प्रतिषेधबाधनार्थो गौरिषक्थशब्दस्य पाठः। अव्युत्पत्तिपक्षे त्वप्राप्त एव षत्वे। "प्रतिष्णिका" इति। अस्यापि प्रतिस्नातीति [प्रतिष्णातीति--कांउद्रितः, पाठः] "आतश्चोपसर्गे" ३।१।१३६ इति कप्रत्ययः। ठाप, तदन्तात्? "संज्ञायां कन्()" ५।३।८७, "केऽणः" ७।४।१३ इति ह्रस्वः। "प्रत्यस्थात्()" ७।३।४४ इत्यादिनेत्त्वम्()। "जलावाहम्()" इति। अनिणन्तार्थः पाठः। अनार्षः पुनरयं लक्ष्यते। तथा हि--सवनावि ८।३।११२ ष्व()आसनिशब्दग्रहणेन ज्ञापकेनास्य षत्वं प्रतिपादयिष्यते। अपरे त्व()आसनिशब्दो वा सवनादिज्ञापनार्थः पठितव्यः, इह वा जलाषाहिशब्द इति विकल्पदर्शनार्थमिहास्य पाठं

समर्थयन्ते। उपलक्षणार्थश्चेतीहास्य पाठः। तेना()आवाहमित्यप#इ पाठो वेदितव्यः। "नौषेचनम्(), दुन्दुभिषेषणम्()" इति। षष्ठीसमासौ। सिचेः "वेवृ सेवने" (धा।पा।५०१) इत्यस्माच्च स्युटि प्रतिषेधबाधनार्थः पाठः॥

बाल-मनोरमा

सुषामादिषु च १००७, ८।३।९८

सुषामादिषु च।स्पष्टम्

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वात् तादौ तद्धिते ८।३।९९

ह्रस्वादुत्तरस्य सकारस्य मूर्धन्यादेएशो भवति तादौ तद्धिते परतः। तरप् तमप् तय त्व तल् त्यप्, एतानि प्रयोजयन्ति। तरप् सर्पिष्टरम्। यजुष्तरम्। तमप् सर्पिष्टमम्। यजुष्टमम्। तय चतुष्टये ब्राह्मणानां निकेताः। त्व सर्पिष्ट्वम् यजुष्ट्वम्। तल् सर्पिष्टा। यजुष्टा। तस् सर्पिष्टः। यजुष्टः। त्यप् आविष्ट्यो वर्धते। ह्रस्वातिति किम्? गीस्तरा। धूस्तरा। तादौ इति किम्? सर्पिस्साद् भवति। प्रत्ययसकारस्य सात् पदाद्योः ८।३।११३ इति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात्। तद्धिते इति किम्? सर्पिस्तरति। तिङन्तस्य प्रतिषेधो वक्तव्यः। भिन्द्युस्तराम्। छिन्द्युस्तराम्।

न्यासः

एति संज्ञायामगात्?। , ८।३।९९

"एति संज्ञायाम्()" इत्यादि। एतद्ग्रहणकवाक्यम्()। अस्यैव "एकारपरस्य" इत्यादिना विवरणम्()। एकारः परो यस्मादिति बहुव्रीहिः। एतेर्नतीत्यस्याः परसप्तमीत्वं दर्शयति। "हरिषेमः" इति। हरयः सेना ञस्येति बहुव्रीहिः, उपसर्वनह्यस्वत्वम्()। "पुवुसेनः" इति। "स्त्रियाः" ६।३।३३ इत्यादिना पूंवद्भावः। "बिष्दक्सेनः" इति। विष्वञ्चतीति "ऋत्विक्()" ३।२।५९ इत्यादिना क्विन्()। "अनिदिताम्()" ६।४।२४ इति नलोपः। "उगितश्च" ४।१।६ इति ङीप्(), "अचः" ६।४।१३८ इत्यकारलोपः, "चौ" ६।३।१३७ इति दीर्घः। विषूची सेनास्येति बहुव्रीहिः। उपसजनह्यस्वत्वम्। "स्त्रियाः" ६।३।३३ त्यादिना पुंवद्भावः। "क्वित्वस्य कुः" ८।२।६२ इति कुत्वम्()। "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वं--गकारः। तस्य "खरि च" ८।४।५४ इति चत्र्व--ककारः। तस्यासिद्धत्वाद्यकारः॥

बाल-मनोरमा

एति संज्ञायामगात् १००८, ८।३।९९

एति संज्ञायामगात्। एकारे परे सस्य षः स्यादित्यर्थः।

तत्त्व-बोधिनी

एति संज्ञायामगात् ८५५, ८।३।९९

एति संज्ञायामिति। सुषामाद्यन्तर्गणसूत्रमेतत्।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वात् तादौ तद्धिते ८।३।९९

ह्रस्वादुत्तरस्य सकारस्य मूर्धन्यादेएशो भवति तादौ तद्धिते परतः। तरप् तमप् तय त्व तल् त्यप्, एतानि प्रयोजयन्ति। तरप् सर्पिष्टरम्। यजुष्तरम्। तमप् सर्पिष्टमम्। यजुष्टमम्। तय चतुष्टये ब्राह्मणानां निकेताः। त्व सर्पिष्ट्वम् यजुष्ट्वम्। तल् सर्पिष्टा। यजुष्टा। तस् सर्पिष्टः। यजुष्टः। त्यप् आविष्ट्यो वर्धते। ह्रस्वातिति किम्? गीस्तरा। धूस्तरा। तादौ इति किम्? सर्पिस्साद् भवति। प्रत्ययसकारस्य सात् पदाद्योः ८।३।१११ इति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात्। तद्धिते इति किम्? सर्पिस्तरति। तिङन्तस्य प्रतिषेधो वक्तव्यः। भिन्द्युस्तराम्। छिन्द्युस्तराम्।

न्यासः

एति संज्ञायामगात्?। , ८।३।९९

"एति संज्ञायाम्()" इत्यादि। एतद्ग्रहणकवाक्यम्()। अस्यैव "एकारपरस्य" इत्यादिना विवरणम्()। एकारः परो यस्मादिति बहुव्रीहिः। एतेर्नतीत्यस्याः परसप्तमीत्वं दर्शयति। "हरिषेमः" इति। हरयः सेना ऽस्येति बहुव्रीहिः, उपसर्वनह्यस्वत्वम्()। "पुवुसेनः" इति। "स्त्रियाः" ६।३।३३ इत्यादिना पूंवद्भावः। "बिष्दक्सेनः" इति। विष्वञ्चतीति "ऋत्विक्()" ३।२।५९ इत्यादिना क्विन्()। "अनिदिताम्()" ६।४।२४ इति नलोपः। "उगितश्च" ४।१।६ इति ङीप्(), "अचः" ६।४।१३८ इत्यकारलोपः, "चौ" ६।३।१३७ इति दीर्घः। विषूची सेनास्येति बहुव्रीहिः। उपसजनह्यस्वत्वम्। "स्त्रियाः" ६।३।३३ त्यादिना पुंवद्भावः। "क्वित्वस्य कुः" ८।२।६२ इति कुत्वम्()। "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वं--गकारः। तस्य "खरि च" ८।४।५४ इति चत्र्व--ककारः। तस्यासिद्धत्वाद्यकारः॥

बाल-मनोरमा

एति संज्ञायामगात् १००८, ८।३।९९

एति संज्ञायामगात्। एकारे परे सस्य षः स्यादित्यर्थः।

तत्त्व-बोधिनी

एति संज्ञायामगात् ८५५, ८।३।९९

एति संज्ञायामिति। सुषामाद्यन्तर्गणसूत्रमेतत्।

---

सूत्रम्

काशिका-वृत्तिः

ह्रस्वात् तादौ तद्धिते ८।३।९९

ह्रस्वादुत्तरस्य सकारस्य मूर्धन्यादेएशो भवति तादौ तद्धिते परतः। तरप् तमप् तय त्व तल् त्यप्, एतानि प्रयोजयन्ति। तरप् सर्पिष्टरम्। यजुष्तरम्। तमप् सर्पिष्टमम्। यजुष्टमम्। तय चतुष्टये ब्राह्मणानां निकेताः। त्व सर्पिष्ट्वम् यजुष्ट्वम्। तल् सर्पिष्टा। यजुष्टा। तस् सर्पिष्टः। यजुष्टः। त्यप् आविष्ट्यो वर्धते। ह्रस्वातिति किम्? गीस्तरा। धूस्तरा। तादौ इति किम्? सर्पिस्साद् भवति। प्रत्ययसकारस्य सात् पदाद्योः ८।३।१११ इति सत्यपि प्रतिषेधे प्रकृतिसकारस्य स्यात्। तद्धिते इति किम्? सर्पिस्तरति। तिङन्तस्य प्रतिषेधो वक्तव्यः। भिन्द्युस्तराम्। छिन्द्युस्तराम्।

न्यासः

एति संज्ञायामगात्?। , ८।३।९९

"एति संज्ञायाम्()" इत्यादि। एतद्ग्रहणकवाक्यम्()। अस्यैव "एकारपरस्य" इत्यादिना विवरणम्()। एकारः परो यस्मादिति बहुव्रीहिः। एतेर्नतीत्यस्याः परसप्तमीत्वं दर्शयति। "हरिषेमः" इति। हरयः सेना ऽस्येति बहुव्रीहिः,

उपसर्वनह्यस्वत्वम्()। "पुवुसेनः" इति। "स्त्रियाः" ६।३।३३ इत्यादिना पूंवद्भावः। "बिष्दक्सेनः" इति। विष्वञ्चतीति "ऋत्विक्()" ३।२।५९ इत्यादिना क्विन्()। "अनिदिताम्()" ६।४।२४ इति नलोपः। "उगितश्च" ४।१।६ इति ङीप्(), "अचः" ६।४।१३८ इत्यकारलोपः, "चौ" ६।३।१३७ इति दीर्घः। विषूची सेनास्येति बहुव्रीहिः। उपसजनह्यस्वत्वम्। "स्त्रियाः" ६।३।३३ त्यादिना पुंवद्भावः। "क्वित्वस्य कुः" ८।२।६२ इति कुत्वम्()। "झलां जशोऽन्ते" ८।२।३९ इति जश्त्वं--गकारः। तस्य "खरि च" ८।४।५४ इति चत्त्व--ककारः। तस्यासिद्धत्वाद्यकारः॥

बाल-मनोरमा

एति संज्ञायामगात् १००८, ८।३।९९

एति संज्ञायामगात्। एकारे परे सस्य षः स्यादित्यर्थः।

तत्त्व-बोधिनी

एति संज्ञायामगात् ८५५, ८।३।९९

एति संज्ञायामिति। सुषामाद्यन्तर्गणसूत्रमेतत्।

---

सूत्रम्

काशिका-वृत्तिः

निसस् तपतावनसेवने ८।३।१००

निसः सकारस्य मूर्धन्यादेशो भवति तपतौ परतो ऽनासेवने ऽर्थे। आसेवनं पुनः पुनः करणम्। निष्तपति सुवर्णम्। सकृदग्निं स्पर्शयति इत्यर्थः। अनासेवने इति किम्? निस्तपति सुवर्णं सुवर्णकारः। पुनः पुनरग्निं स्पर्शयति इत्यर्थः। निष्टसं रक्षो निष्टसा अरातयः इत्यत्र सदप्यासेवनं न विवक्ष्यते। छान्दसो वा वर्नविकारः।

न्यासः

नक्षत्राद्वा। , ८।३।१०२

"नक्षत्राद्वा" इति। पूर्वेण नित्ये प्राप्ते विकल्पोऽयमुच्यत इति। सूत्रे["सुषामादिषु च" इत्यस्मिन्? सूत्रे ८।३।९८] चकारोक्तसमुच्चयार्थः, स चाकृतिगणतां सुषामादेर्बोधयतीत्यत आह--"अविहितलक्षणा" इत्यादि॥

बाल-मनोरमा

नक्षत्राद्वा १००९, ८।३।१०२

नक्षत्राद्वा। स्पष्टम्।

तत्त्व-बोधिनी

नक्षत्राद्वा ८५६, ८।३।१०२

एवं "नक्षत्राद्वा"इत्यपि। विष्वक्सेन इति। चत्त्वस्याऽसिद्धत्वाद्गकारेण व्यवधानमस्तीति भावः।

---

सूत्रम्

काशिका-वृत्तिः

युष्मत्तत्ततक्षुःष्वन्तःपादम् ८।३।१०१

युष्मत् तत् ततक्षुसित्येतेषु तकारादिषु परतः सकारस्य मूर्धन्यादेशो भवति, स चेत् सकारो ऽन्तःपादं भवति। युष्मदादेशाः त्वम्, त्वाम्, ते, तव। अग्निष्ट्वं नामासीत्। त्वा अग्निष्ट्वा वर्धयामसि। ते अग्निष्टे विश्वमानय। तव अप्स्वग्ने सधिष्टव। तत् अग्निष्टद् विश्वमापृणाति। ततक्षुस् द्यावापृथिवी निष्टतक्षुः। अन्तःपादम् इति किम्? यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जतवेदा विच।

न्यासः

ह्रस्वात्तादौ तद्धिते।, ८।३।१०३

"अपदान्तस्य" (८।३।५५) इत्यधिकारारात्? पदान्तेऽप्राप्ते मूर्धन्ये सतीदमारभ्यते। येषु तकारादिषु तद्धितेषु मूर्धन्येन भवितव्यम्(), तान्? दर्शयितुमाह--"तरप्तमपौ" इति। "सर्पिष्टरम्()" इति। "द्विवचनविभज्योपपदे" [५।३।५७] इत्यादिना तरप्()। प्रकृतिसकारस्य रुत्वम्(), विसर्जनीयः, तस्यापि "विसर्जनीयस्य सः" [८।३।३४] इति सकारः, तस्यानेन षत्वम्(), ष्टुत्वम्()। "सर्पिष्टमम्()" इति। "अतिशायने" [५।३।५५] इत्यादिना तमप्()। "चतुष्टये" इति। "संख्याया अवयवे तयप्()" [५।२।४२], तदन्ताज्जम्(), सप्तम्येकवचनं वा। यदा जस्? तदा "जशः सी" [७।१।१७] इति शीभावः। क्वचित्? "चतुष्टयी" इति पाठः। तत्र हि "टिड्ढाणञ्()" [४।१।१५] इति ङीप्()। "सर्पिष्ट्()षम्(), सर्पिष्टा" इति। "तस्य भावस्त्वतलौ" [५।१।११८]। "र्पिष्टः" इति प्रयोगे "पञ्चम्यास्तसिल्()" [५।३।७] इत्यनुवत्र्तमाने "अपादाने चाहीयरुहोः" [५।४।४५] इति तसिप्रत्ययः। "आविष्ट्()" इति। आधिः शब्दाद्भवादावर्थे "अव्ययात्? त्यप्()" [४।२।१०३]। ननु च "अमेहक्वतसित्रेभ्यस्त्यद्विधियोऽव्ययात्? स्मृतः" ["अमेहत्वतसित्रेभ्यस्त्यब्विधिरव्ययात्()"--प्रांउ।पाठः, अमेहक्वतसित्रेभ्यस्त्यब्विधिरव्ययात्? स्मृतः--कांउ।पाठः] (कारिका।४।२।१०४) इति तत्र परिगणयति, तत्कथमादिःशब्दात्? त्यप्()? नैष दोषः; अल्पाच्तरत्वात्? कुशब्दस्य त्रशब्दस्य वा पूर्वनिपाते कत्र्तव्ये तदकरणाल्लक्षणव्यभिचारं दर्शयता सूचितं व्यभिचार्येव तत्परिगणनम्(), तेनाविःशब्दादपि भवति। "सर्पिस्मात्()" इति। "विभाषा साति कात्स्न्र्ये" [५।४।५२] इति सातिः। ननु च "सात्पदाद्योः" (८।३।१११) इति वक्ष्यमाणात्? प्रतिषेधादेव मूर्धन्यो न भविष्यति; त()त्क तन्निवृच्यर्थेन "तादौ" इत्यनेन? इत्यत आह--"प्रत्ययषकारस्य" इत्यादि। सादित्यनेन हि सात्प्रत्यस्य यः सकारः, यश्च पदादिलक्षणस्तयोः षतवं प्रतिषिध्यते, न तु सात्प्रत्ययात्? पूर्वस्य प्रकृतिसकारस्य। ततो यदि "तादौ" इति नोच्येत, तदा प्रत्ययसकारस्याषत्वे प्रकृतिसकारस्य स्यादेव। त()स्मश्च सति ष्टुत्वं प्रत्ययसकारस्यापि स्यात्()। "वक्तव्यः" इति। व्याख्येय इत्यर्थः। तत्रैदं व्याख्यानम्()--इहादिग्रहणं न कत्र्तव्यम्(), "यस्मिन्विधिस्तदादावल्ग्रहणे" (वा।१४) इत्येवं हि तादौ भविष्यति, तत्? क्रियते--ग्रन्थाधिक्यादर्थाधिक्यं सूचयतीति तिङन्तस्य प्रतिषेधो यथा स्यादित्येवमर्थम्()। अप या "न रपर" [७।३।११०] इत्यादौ "न" इति योगविभागः करिष्यते, तेन तिङन्तस्य न भवतीति। अस्मिस्तु व्याख्याने आदिग्रहणं विस्पष्टार्थम्()। "भन्द्युस्तराम्(), छिन्द्युस्तराम्()" इति। भिदिच्छिदिभ्यां लिङ्(), यासुट्(), "झर्जुस्()" [३।४।१०८], "लिङः सलोपः" [७।२।७९] त्यादिना सलोपः। "उस्यपदान्तात्()" [६।१।९३] इति पररूपत्वम्()। "श्नसोरल्लोपः" [६।४।१११] इत्यकारलोपः, "तिङश्च" [५।३।५६] इति तरप्(), "किमेत्तिडव्यय" श[५।४।११] इत्यादिनाऽऽमुप्रत्ययः॥

बाल-मनोरमा

ह्यस्वात्तादौ तद्धिते १३०६, ८।३।१०३

ह्यस्वात्तादौ। "इण्को"रित्यत इण्ग्रहणमनुवर्तते। "सहेः साडः स" इत्यतः स इति षष्ठ()न्तमनुवर्तते। "अपदान्तस्य मूर्धन्यः" इति च। तदाह--ह्यस्वादिण इति। निष्ट्() इति त्यपि सस्य षत्वे तकारस्य ष्टुत्वेन टः।

अरण्याण्ण्य इति। "वक्तव्य" इति शेषः। आरण्याः सुमनस इति। "स्तिरयः सुमनसः पुष्प"मित्यमरः। अरण्ये भवा

इत्यर्थे णप्रत्यये टापि "आरण्या" इति रूपम्। अणि तु ङीप् स्यादिति भावः।

दूरादेत्य इति। "वक्तव्य" इति शेषः। दूरेत्य इति। दूरादागतः, दूरे भव इति वाऽर्थः। दूरादित्यव्ययादेत्यप्रत्ययेऽव्ययानां भमात्रे इति टिलोपः।

उत्तरादाहञिति। "वाच्य" इति शेषः। औत्तराह इति। उत्तरस्मादागतः, उत्तरस्मिन् भव इति वाऽर्थः। औत्तर इति त्वसाधु।

तत्त्व-बोधिनी

ह्रस्वात्तादौ तद्धिते १०४६, ८।३।१०३

ह्रस्वात्तादौ। पदान्तत्वात्षत्वस्याऽप्राप्तावयमारम्भः। आदिग्रहणं तु व्यर्थं, "यस्मिन्विधि"रित्येव सिद्धेः। ह्रस्वांत्किम्()। गीस्तराम्। धूस्तराम्। तदौ किम्()। सर्पिःसाद्भवति। तद्धिते किम्()। सर्पिस्तरति। "तिङन्तस्य प्रतिषेधो वाच्यः"। भिन्द्युस्तरम्।

दूरादेत्यः। दूरेत्य इति। दूरादागत इत्यादिरर्थः।

उत्तरादाहञ्। औत्तराह इति। इहाद्युदात्तत्वं स्त्रियां टाप्च बोध्यः। यदा तु "उत्तराच्च"त्याहिप्रत्यये ततोऽण्क्रियते, "अमेहे"ति परिगणनेन त्यपोऽभावात्, तदा औत्तराहशब्दोऽन्तोदात्तः, स्त्रियां ङीप्च विशेषः।

---

सूत्रम्

काशिका-वृत्तिः

युजुष्येकेषाम् ८।३।१०२

यजुषि विषये युष्मत्तत्ततक्षुःषु परत एकेषाम् आचार्याणां मतेन सकारस्य मूर्धन्यादेशो भवति। अर्चिर्भिष्ट्वम्, अर्चिर्भिस्त्वम्। अग्निष्टे ऽग्रम्, अग्निस्ते ऽग्रम्। अग्निष्टत्, अग्निस्तत्। अर्चिर्भिष्टतक्षुः अर्चिर्भिस्ततक्षुः।

न्यासः

निसस्तपतावनासेवने। , ८।३।१०४

अयमपि पदान्तार्थ आरम्भः। "निष्डपति" इति। "तप धूप सन्तापे" (धा।पा।९८५,३९६)। रुत्वे विसर्जनीयः, "विसर्जनीयस्य सः" ८।३।३४, सस्य भूर्धन्यः, ष्टुत्वम्()। अथेह निष्टप्तं रक्षः, निष्टप्ता अरातयः इति निष्ठान्ते तपतौ कस्यान्न भवति, अस्ति ह्यत्रासेवनमिति? अत आह--निष्टप्तम्()" इत्यादि। न हीह वस्तुनः सत्तैव शब्दव्युत्पत्तेः प्रधानं कारणम्(), अपि तु तद्विवक्षा। न चेहासेवनविवक्षास्तीति भवति मूर्धन्यः। यदि तह्रासेवनं विवक्ष्यते तदा न भवितव्यं मूर्धन्येनेनत्यत आह--"च्छान्दसो वा" इत्यादि। समावे कृते "व्यत्ययो बहुलम्()" ३।१।८५ इति पुनः षकारः॥

तत्त्व-बोधिनी

निसस्तपतावनासेवने २०८, ८।३।१०४

निसस्तपता। "मूर्धन्य"इत्यनुवर्तमाने फलितमाह-- षः स्यादिति। आसेवने तु-- निस्तपति। पुनः पुनस्तपतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

स्तुतस्तोमयोश् छन्दसि ८।३।१०३

एकेषाम् इति वर्तते। स्तुत स्तोम इत्येतयोः सकारस्य छन्दसि विषये मूर्धन्यादेशो भवति एकेषामाचार्याणां मतेन। त्रिभिष्टुतस्य, त्रिभिस्तुतस्य। गोष्टोमं षोडशिनम्, गोस्तोमं षोडशिनम्। पूर्वपदातित्येव सिद्धे प्रपञ्चार्थम् इदम्।

न्यासः

युष्मत्ततत्क्षुष्वन्तःपादम्?। , ८।३।१०५

अयमापि पदान्तार्थ आरम्भः। "अन्तःपादम्()" इति। पादस्य मध्ये। विभक्त्यर्थेऽव्ययीभावसमासः। पादग्रहणेन ऋक्पादश्लोकपादयोः सामान्येन ग्रहणम्()। तकारादित्वं त्विह युष्मद एव विशेषणम्(), नेतरयोः; अव्यभिचारात्()। युष्मच्छब्दस्यापि त्वादिष्वादेशेषु तकारादित्वं भवतीत्यत आह--"युष्मदादेशाः" इत्यादि। "अग्निष्ट्वम्()" इति। "त्वाहौ सौ" ७।२।९४ इति त्वादेशः, "ङ प्रथमयोरम्()" ७।१।२८ इति सोरम्भावः, "शेषे लोपः" ७।२।९०। "अग्निष्ट्वः" इति। "त्वामौ द्वितीयायाः" ८।१।२३ इति द्वितीयान्तस्य त्वादेशः। "अग्निष्टे" इति। "तेमयावेकवचनस्य" ८।१।२२ इति षष्ठ()न्तस्य तयादेशः। "अग्निष्टव" इति। "तवममौ ङसि" ७।२।९६ इति तदादेशः, "युष्मदस्मद्भ्यां ङसोऽक्ष्()" ७।१।२७। "अग्निष्टत्()"[ण्स्वग्ने सधिष्टव--इति काशिकायामुदाहरणम्(), "अग्निष्ट्व"--इति कांउ।पाठः] इति। तच्छब्दोऽयं निपातः। सर्वनाम वा। "निष्टक्षुः" इति। तक्षेर्लिट्(), उस्()। "अग्निस्तत्पुनः" इति। अग्निशब्दोऽत्र पूर्वपदस्यान्ते वत्र्तते। तेनायं सकारः पादस्यान्ते वत्र्तते, न पादमध्ये॥

---

सूत्रम्

काशिका-वृत्तिः

पूर्वपदात् ८।३।१०४

छन्दसि इति वर्तते, एकेषाम् इति च। पूर्वपदस्थान्निमित्तात् परस्य सकारस्य मुर्धन्यादेशो भवति छन्दसि विषये एकेषामाचार्याणां मतेन। द्विषन्धिः। द्विसन्धिः। त्रिषन्धिः, त्रिसन्धिः। मधुष्ठानम्, मधुस्थानम्। द्विषाहस्रं चिन्वीत, द्विसाहस्रं चिन्वीत। असमासे ऽपि यत् पूर्वपदं तदपि इह गृह्यते। त्रिः षमृद्धत्वाय, त्रिः समृद्धत्वाय।

न्यासः

यजुष्येकेषाम्?। , ८।३।१०६

"यजुषि" इति। यजुर्वेदे। अत्र पादा न सम्भवन्तीति पूर्वेम नाप्राप्ते षत्वमिदमारभ्यते। एकेषांग्रहणं विकल्पार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

सुञः ८।३।१०५

सुञिति निपात इह गृह्यते, तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य मूर्धन्यादेशो भवति छन्दसि विषये। अभी षु णः सखीनाम्। ऊर्ध्व ऊ षु ण ऊतये।

न्यासः

स्तुतस्तोमयोश्छन्दसि। , ८।३।१०७

"सात्पदाद्योः" ८।३।११३ इति प्रतिषेधे प्राप्तेऽस्यारम्भः। ननु चोत्तरसूत्रेणैव "नृभिःष्टुतम्(), गोभिःष्टोमम्()" इत्यत्र षत्वं

सिध्यति, तत्किमर्थमिदमारभ्यते? स्यादेतत्()--समासे सत्येतद्भवति पूर्वपदम्(), उत्तरपदमिति, न चात्र समासः, तस्मात्? पूर्वपदादि (८।३।१०६) त्युत्तरेण न सिध्यतीति? एतच्चासम्यक्(), असमासे यत्? पूर्वपदं तदपि तत्रापि गृह्रते। वक्ष्यति--असमासे [असमासेऽपि यत्पूर्वपदम्()--काशिका। असमासे यत्? पूर्वपबदं तदपि तत्रापि गृह्रते--प्रांउंयासपाठः। ] यदपि पूर्वपदं तदपि [तदपीह--काशिका] गृह्रते" (काशिका।८।३।१०४) इति? अत आह--"पूर्वपदादित्येव" इत्यादि॥

---

सूत्रम्

काशिका-वृत्तिः

सनोतेरनः ८।३।१०६

सनोतेः अनकारान्तस्य सकारस्य मूर्धन्यादेशो भवति। गोषाः। नृषाः। अनः इति किम्? गोसनिं वाचमुदेयम् पूर्वपदातित्येव सिद्धे नियमार्थम् इदम्। अत्र केचित् सवनादिपाठाद् गोसनिर्नियमस्य फलं न भवति इति सिसानयिषति इति प्रयुदाहरन्ति। सिसनिषतेः अप्रत्ययः। सिसनीः इत्यपरे।

न्यासः

पूर्वपदात्?। , ८।३।१०८

"द्विषन्धिः" इति। षष्ठीतत्पुरुषः, बहुव्रीहिर्वा। "मधुष्ठानम्? इति। षष्ठीसमासः। "द्विवाहरुआम्()" इति। द्वयोः सहरुआयोर्भव इति तद्धितार्थे समासः। "तत्र भवः" ४।३।५३ इत्यण्(); "संख्यायाः संवत्सरसंख्यस्य च" ७।३।१५ इत्युत्तरपदवृद्धिः। अथेह कथं षत्वम्()--त्रिः षमुद्धत्वायेति? यावता समासे यत्? पूर्वपदं तत्र पूर्वपदशब्दो रूढः; न चायं समासः; किं तर्हि? वाक्यम्()? इत्यतद आह--"असमासेऽपि" इत्यादि। कथं पुनरेतल्लभ्यते? व्यवस्थावचनस्येह पूर्वपदस्याश्रयणात्()। यथैव हि पूर्वशब्दो लोको रूढिभादाय क्वचित्? तु समुदाये वत्र्तते--पूर्वपञ्चाला इति, क्वचिद्व्यवस्थायाम्()--अस्मात्? पूर्वं इति वा; तथा शास्त्रेऽपि। तत इह व्यवस्थाशब्दो गृह्रते। कुतः? व्याप्तेः। रूढिशब्द एव गृह्रमाणे समास एव स्यात्? नासमासे। व्यवस्थाशब्दे तु सर्वत्र भवति॥

---

सूत्रम्

काशिका-वृत्तिः

सहेः पृतनर्ताभ्यां च ८।३।१०७

पृतना ऋत इत्येताभ्याम् उत्तरस्य सहिसकारस्य मूर्धन्यादेशो भवति। पृतनाषाहम्। ऋताषाहम्। केचित् सहेः इति योगविभागं कुर्वन्ति। ऋतीषहम् इत्यत्र अपि यथा स्यात्। ऋतिशब्दस्य पूर्वपदस्य् संहितायाम् एतद् दीर्घत्वम्। अवग्रहे तु ऋतिसहम् इत्येव भवति। चकारो ऽनुक्तसमुच्चयार्थः, तेन ऋतीषहम् इति सिद्धम्।

न्यासः

सुञः। , ८।३।१०९

"पूर्वपदात्" ८।३।१०८ इत्येवं सिद्धे प्रपञ्चार्थमिदम्()। "सुञ ["सुञः"--प्रांउ।पाठः] इति निपातो गृह्रते" [निपात इह गृह्रते--काशिका] इति। अथ "षुञ्? अभिषवे" (धा।पा।१२४७) इति धातुः कस्मान्न गृह्रते? एवं मन्यते--यत्रास्य धातोग्र्रहणमिच्छति तत्र श्तिपा निर्द्देशं करोति। शैलीयमाचार्यस्य, यथा--"उपसर्गात्? सुनोति" ८।३।६५ इत्यत्र "सुनोतेः स्यसनोः" ८।३।११९ इत्यत्र च। तदिहापि यदि धातोग्र्रहणमभीष्टं स्यात्(), श्तिपा निर्द्देशं कुर्यात्(); नैव कृतम्(), अतो निपातस्येवं ग्रहणमवसीयते। "अभीषुणः" इति। षष्ठीबहुवचनस्यास्मच्छब्दस्य "बहुवचनस्य वस्नसौ" ८।१।२१ इति

नस्(), "ङकः सुत्रि" ६।३।१३३ इति दीर्घः। "नश्च धातुस्थोरुषुभ्यः" ८।४।२६ इति णत्वम्()॥

---

सूत्रम्

काशिका-वृत्तिः

न रपरसृपिसृजिस्पृशिस्पृहिसवनाऽदीनाम् ८।३।१०८

रेफपरस्य सकारस्य सृपि सृजि स्पृशि स्पृहि सवनादीनां च मूर्धन्यो न भवति। रपर विस्रंसिकायाः काण्डाभ्यां जुहोति। विस्रब्धः कथयति। स्पृपि पुरा क्रूरस्य विसृपः सृजि वाचो विसर्जनात्। स्पृशि दिविस्पृशम्। स्पृहि निस्पृहं कथयति। सवनादीनाम् सवने सवने। सूते सूते। सामे सामे। सवनमुखे सवनमुखे। किं स्यति किंसंकिंसम्। अनुसवनमनुसवनम्। गोसनिं गोसनिम्। अश्वसनिमश्वसनिम्। पूर्वपदातिति प्राप्ते प्रतिषेधः। अश्वसनिग्रहणम् अनिणो ऽपि षत्वम् अस्ति इति ज्ञापनार्थम्। तेन जलाषाहम्, अश्वषाहम् इत्येतत् सिद्धं भवति। क्वचिदेवं गणपाठः सवने सवने। अनुसवने ऽनुसवने। संज्ञायां बृहस्पतिसवः। शकुनिसवनम्। सोमे सोमे। सूते सूते। संवत्सरे संवत्सरे। किंसंकिंसम्। बिसंबिसम्। मुसलंमुसलम्। गोसनिमश्वसनिम्। सवनादिः।

न्यासः

सनोतेरनः। , ८।३।११०

"अनः" इति। अविद्यमानो नकारोऽस्येत्यर्थः। "गोषाः" इति। "षणु धाने" (धा।पा।१४६४)। गां सनोतीति "जनसनखनक्रमगमो विट्()" ३।२।६७, "विड्वनोरनुनासिकस्यात्()" ६।४।४१ इत्यात्वम्()। "गोसनिम्()" इति। "स्तम्बशकृतोरिन्()" ३।२।२४ इत्यत इन्नित्यनुवत्र्तमाने "छन्दसि वनसनरक्षिमयाम्()" ३।२।२७ इतीन्प्रत्यवः। ननु "पूर्वपदात्()" ८।३।१०८ इत्येव गोषा इत्यादौ षत्वं सिद्धम्()। तत्किकर्थमिदमित्याह--"पूर्वपदादित्येव" इति। अविद्यमाननकारस्यैव भवति; नान्यस्येत्येव नियमो यथा स्यादित्येवमर्थमेतत्()। यद्येवम्(), गोसनिमिति न नियमस्य फलम्(), सवनादित्वात्()? इत्याह--"अत्र" इत्यादि। इतिकरणो हेतौ। यस्मात्सवनादिषु पाठाद्()गोसनिशब्दो नियमस्य फलं न भवति, तस्मात्? केचित्? सिसानयिवतीति प्रत्युदाहरन्ति। "सिसनीरित्यपरे" इति। सनोतेण्र्यन्तस्य सनि रूपम्()--सिसानयिषतीति। अत्र यदि नियमार्थमेतन्नोच्येत, तदा स्तौतिण्योरेव ८।३।६१ षत्वं स्यात्()। अ()स्मस्तु सति न भवतीति ण्यन्तस्मोदाहरणम्()। अम्यन्तस्य स्तीतिण्योरेव (८।३।६१) इत्यत एव नियमात्? षत्वनिवृत्तेः सिद्धत्वात्()। सिसनोरोति--सनोतेः सन्(), इट्(), द्विर्वचनम्(), सनः सकारस्य णत्वम्(); सिसनिष इति स्थिते क्विप्(), अतो लोपः ६।४।४८, षत्वस्यासिद्धत्वाद्रूत्वम्(), "र्वोरुपदाया दीर्घ हकः" ८।२।७६ इति दीर्घः। सिसनीरिति स्थितेऽत्र सनः वत्वभूतस्याभावात्? स्तौतिण्योरेव ८।३।६१ इत्येषे नियमो न प्रवत्र्तते। अत्र यदीदं नोच्येत, "आदेशप्रत्यययोः" ८।३।५९ इति मूर्धन्यः स्यात्(); अ()स्मस्तु सत#इ न भवति॥

---

सूत्रम्

काशिका-वृत्तिः

सात् पदाद्योः ८।३।१०९

सातित्येतस्य पदादेश्च मूर्धन्यादेशो न भवति। विभाषा साति कात्स्न्र्ये ५।४।५२। प्रत्ययसकारत्वात् प्राप्तिः, पदादेश्च आदेशसकारत्वात्। सात् अग्निसात्। दधिसात्। मधुसात्। पदादेः दधि सिञ्चति। मधु सिञ्चति।

न्यासः

सहेः पृतनर्ताभ्यां च। , ८।३।१११

असाडर्थम्(), अनिणर्थञ्च। "पृतनाषाहम्()" इति। "छन्दसि सहः" ३।२।६३ इति ण्विः। "ऋतीषाहम्()" इति। "अन्येषामपि दृश्यते" ६।३।१३६ इती दीर्घः। "ऋतीषहम्()" इति। "कृत्यल्युटो बहुलम्()" ३।३।११३ इति क्विप्()। "नहिवृतिवृषिण्यधिरुचिसहितनिषु क्वौ" ६।३।११५ इती दीर्घत्वम्()। "संहितायामेतद्दीर्घत्वं षत्वञ्च" इति। उभयोरपि विधाने संहिताधिकाराद्दीर्घस्य प्रतिपादनम्()--ऋतीशब्दस्यायं प्रयोग इति प्रतिपादनार्थम्()। अन्यथा हि ऋतिशब्दान्तरमेवेदभित्याशङ्क्येत। ["ह्रतिशब्दान्तर"--प्रांउ।पाठः] यस्तु मन्यते--वर्णव्यत्ययेनैवात्र चत्वं भविष्यति, तत्? किमेतदर्थेन वोगविभागेनेति, तं प्रति षत्वस्य सांहितकत्वं प्रतिपादितम्()। यदि हि "व्यत्ययो बहुलम्()" ३।१।८५ इति षकारः क्रियते, ततोऽसंहितायामेव स्यात्(), न हि तत्र संहिताधिकारोऽस्ति। तस्मात्? संहिताधिकारे यथा स्यादिति योगविभागः कत्र्तव्य इति भावः। "अनुक्तसमुच्चयार्थः" इति। न केवलं साङ्भूतस्येण्कोः परस्येति, अपि तु पृतनत्र्ताभ्याञ्च षत्वं भवतीति। ये तु योगविभागं न कुर्वन्ति, ते ऋतीबहमित्यर्थश्चकारः समुच्चयार्थं इति वर्णयन्ति॥

---

सूत्रम्

काशिका-वृत्तिः

सिचो यङि ८।३।११०

सिचः सकारस्य यगि परतो मूर्धन्यादेशो न भवति। सेसिच्यते। अभिसेसिच्यते। उपसर्गातिति या प्राप्तिः सा पदादिलक्षणम् एव प्रतिषेधं बाधते, न सिचो यङि इति। तस्मादयं प्रतिषेधः सर्वत्र भवति। यङि इति किम्? अभिषिषिक्षति।

न्यासः

न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्?। , ८।३।११२

रः परो यस्मादिति रपरः। "सृप्लृ गतौ" (धा।रा।९८३), "सृज विसर्गे" (धा।पा।१४१४), "स्पृश संस्पर्शे", [संस्पर्शने--धा।पा।] "स्पृह ईप्सायाम्()" (धा।पा।१८७१) चुरादावदन्तः पठ()ते। सवनमादिर्येषामिति बहुव्रीहिः। "विरुआंसिकायाः" इति। "रुआन्सु अवरुआंसने" (धा।पा।७५४) अस्माद्विपूर्वात्? "रोयख्यायां ण्वुल्? बहुलम्()" ३।३।१०८ इति ण्वुल्()। "विरुआब्धः" इति। "रुआन्भु विश्रम्भे" ["वि()आआसे"--धा।पा।] (धा।पा।७५७), "अनिदिताम्()" ६।४।२४ इति न लोपः, "झषस्तथोर्धोऽधः" ८।२।४० इति धकारः, "झलां जश्? झशि" ८।४।५२ इति भकारस्य बकारः। "विसृपः" इति। "सृपितृदोः कसुन्()" ३।४।१७ इति कसुन्()। "विसर्जनात्()" इति। ल्युट्()। "दिविस्पृशम्()" इति। "स्पृशोऽनुदके क्विन्()" ३।२।५८, "तत्पुरुषे कृति बहुलम्()" ६।३।१३ इति सप्तम्या अलुक्()। "निस्यृहः" [निस्पृहम्()--काशिका] इति। स्पृहणं स्पुहः, "एरच्()" ३।३।५६ इत्यच्(), णिलोपः, निर्गतः स्पृहो निःस्पृहः। "सवनेसवने" इति। सुनोतेर्ल्युट्(), सप्सम्येकवचनम्(), वीप्सायां द्विर्वचनम्()। "सूतेसूते" इति। "षूङ्? प्राणिगर्भविमोचने" (धा।पा।११३१) सुवतेर्वा, निष्ठा। "सोमेसोमे" इति। सुञित्येतस्मात्? "अर्त्तिस्तु" (द।उ।७।२६) इत्यादिना सोमशब्दः व्युत्पादितः। "सवनमुखेसवनमुखे" इति। सवनस्य मुखमिति षष्ठीसमासः। "किंसं किंसम्()" इति। "षो अन्तकर्मणि" (दा।पा।११४७), "आतोऽनुपसर्गे कः ३।२।३। तत्र किमो कमारस्यानुस्वारे कृते "अयोगवहानामट्सूपदेशादङ्व्यवायेऽपि इति पूर्वपदस्थान्निमित्तात्? प्राप्तः। "अनुसवनमनुसवनम्()" ["अनुसवनमिति"--इति प्रांउ।पाठः] इति। ल्युडन्तमेतत्()। अश्यसनेव्र्युत्पत्तिर्गोसनिवत्()। अगा()आसनिग्रहणं किमर्थम्()? न ह्रत्र सकारस्य षत्वं प्राप्नोति, तथा हि पुर्वस्थादिण उत्तरस्य षत्वं प्राप्नोति, न चासाविण उत्तरः सकारः? इत्यत आह--"अ()आसनिग्रहणम्()" इत्यादि। किमेतज्ज्ञापनेन प्रयोजनम्()? इत्यत आह--"जलाषाहम्()" इत्यादि। क्वचित्? "विसंबिसम्(), मुसलमुसलम्()" इति पाठः। स्थाने द्विर्वचनपक्षे "आदेशप्रहत्यययोः" (८।३।५९) इत्यादेशसकारत्वात् प्राप्तस्य षत्वस्य प्रतिषेधो वक्तव्यः॥

तत्त्व-बोधिनी

न रपरसृपसृजिस्पृशिस्पृहिवनादीनाम् १५०३, ८।३।११२

शासिवसीति प्राप्तमपि नेति। एवं च "अविन्द उरिउआयाः" इति मन्त्रे षत्वाऽभावः सिद्धः। माधवस्तु वृत्तिग्रन्थानुरोधेन बाहुलकादिह षत्वं नेति व्याचष्टे। "उरुआओ वृषे च किरणे उरुआआऽर्जुन्युपचित्रयोः" इति मेदिनी। "माहेयी सौरभेयी गौरुरुआआ माता च श्रङ्गिणी"त्यमरः। "वाश्रो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे" इति मेदिनी। "वाश्रो रासभपक्षिणोः" इति केचित्। माधवेन तु "वाश्रेव विद्युन्मिमाति" इति मन्त्रे शब्दयुक्ता प्रस्नुतस्तना धेनुर्वाश्रेति व्याख्यातम्। "शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोरिउआषु इति मेदिनी।

मुरुआमिति। मुस खण्डने। चकि। चक तृप्तौ, रमु क्रीडायाम्, "चुक्रस्त्वम्लेऽम्लवेतसे। चुक्री चाङ्गेरिकायां स्याद्वृक्षाम्ले चुक्रमिष्यते" इति वि()आः।

वौ कसेः। कस गतौ। विपूर्वादस्माद्रक् स्यादुत्वं चोपधायाः।

अमि। अम गत्यादिषु, तमु काङ्क्षायाम्। आभ्यां रक् स्यादुपधाया दीर्घश्च।

निन्देः। णिदि कुत्सायाम्।

अर्देः। अर्द गतौ। "आद्र्रा नक्षत्रभेदे स्यात्स्त्रियां क्लिन्नेऽभिधेयव"दिति मेदिनी।

शुचेः। शुच शोके, अस्माद्रक् दश्चान्तादेश ,धातोर्दीर्घश्च। शूद्रो वृषलः। "अहहा रे त्वा शूद्र" इति श्रुतौ तु रूढेर्बाधाद्योग एव पुरस्कृतः। तथा चोत्तरतन्त्रे भगवता व्यासेन सूत्रितं--"शुगस्य तदनादरश्रवणा"दिति।

दुरीणो। इणा गतावित्यस्माद्दुपपदेरक् स्याद्धातोर्लोपश्च। "रो री"ति रेफस्य लोपे "ढ्रलोपे" इति दीर्घः।

कृतेः। कृती च्छेदने इत्यस्माद्रक् स्याच्छक्रू इत्येतावादेशौ च स्तः। छस्त्वन्त्यस्यादेशः। "क्रू" त्वनेकाल्वात्सर्वस्यादेशः। "कृच्छ्रमाख्यातमाभीले पापसंतापनादिनोः" इति वि()आमेदिन्यौ। "स्यात्कष्टं कृच्छ्रमाभील"मित्यमरः। "क्रूरस्तु कठिने धोरे नृशंसे चाभिधेयवदि"ति वि()आः। "नृशंसो धातुकः क्रूरः पापो धूर्तस्तु वञ्चकः" इत्यमरः।

रोदेः। रुदिर् अश्रुविमोचने, ण्यन्तादस्माद्रक्,णेश्चलुक्। "णेरनिटी"ति लोपे तु "पुगन्ते"ति गुणः स्यादिति णिलुक् चेत्युक्तम्। रोदयतीति रुद्र इति। नन्वेवं "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्व"मिति श्रुत्या सह विरोधोऽत्र स्यादिति चेत्। अत्राहुः-- "कर्तरि कृ"दिति सूत्रानुरोधेन शम्भुरित्यत्र शं भावयतीत्यन्तर्भावितण्यर्थता यथा स्वीक्रियते तथा अरोदीदित्यत्राप्यन्तर्भावितण्यर्थतायां स्वीकृतायं रोदनं कारितवानित्यर्थलाभान्नास्ति श्रुतिविरोधः। न च देवैरग्नौ वामं वसु स्थापितं तच्चधनं देवैर्याचितं तेदग्निस्तु रोदनं कृतवानिति सोऽरोदीदित्यादिश्रुत्यर्थादिहान्तर्भावितण्यर्थकल्पनं न संभवतीति श्रुतिविरोधस्त्वपरिहार्य एवेति वाच्यम्, दैवैः स्थापितं वामं वसु देवेभ्योऽग्निना न दत्तं, ते देवा एव रोदनं कृतवन्तः। अग्निस्तु तदीयमदत्वा रोदनं कारितवानित्यर्थकल्पनायाः संभवात्। अथवाऽग्नौ प्रयुज्यमानरुद्रशब्दस्य रोदितीति रुद्र इत्येवार्थोऽस्तु, परन्तु ब्राह्मविष्णुरुद्रा इति व्यवह्रियमाणो यो रुद्रस्तद्वाचकरुद्रशब्दस्य रोदेरित्युणादिसूत्रान्तरात्प्रत्ययान्तरेऽपि णेर्लुगित्यर्थः। संज्ञायामुदाहरणम्-- बृंहयति वर्धयति प्रजा इति ब्राह्मआ। शं सुखं भावयतीति शम्भुरित्यादि। छन्दसि तु वृधु वृद्धौ। "वर्धन्तु त्वा सुष्टुतयः। वर्धयन्त्वित्यर्थः। "य इमा जजान"। जनी प्रादुर्भावे लिटि रूपम्। जनयामासेत्यर्थः। इह णलि परतः "अत उपधायाः" इति वृद्धिर्भवत्येव, "जनिवध्योश्च" इति

निषेधस्यचिणि ञिति णिति किति च स्वीकारात्। न च णिलोपे सति प्रत्ययान्तत्वात् "कास्प्रत्यया"दित्याम्स्यादिति वाच्यम्, अमन्त्र इति पर्युदासादामोऽप्रसक्तेः। "कास्यनेकाच" इति वार्तिकेन तु आम्()शङ्का दूरापास्तैव, लिटि णिलोपे सत्यनेकाच्त्वाऽभावात्। ननु णलि "णेरनिटी"त्यनिडादावाद्र्धधातुके णिलोपे जजानेति रूपं सिद्धमिति किमनेन लुक्युदाहरणेनेति चेन्मैवम्। णिलोपे सति "जनीजॄ()षन्कसुरञ्जोऽमन्ताश्चे"ति णौ मित्त्वे "मितां ह्रस्वः स्यात्, प्रत्ययलक्षणन्यायेन णिपरत्वसंभवात्। ततश्चजनेनेति स्यात्। लुकि सति तु प्रत्ययलक्षणन्यायो न प्रवर्तत इति मित्त्वाऽभावादिष्टं सिध्यति। बाहुलकादसंज्ञाछन्दसोरपि क्वचिद्भवतीत्याशयेनोदाहरति-- वान्तीत्यादि।

पर्णानि शोषयन्तीति पर्णशु षः। पर्णानि मोचयन्तीति पर्णमुचः।

जोरी च। जु गतौ सौत्रोऽस्माद्रक्, ईकारश्चान्तादेशः। "जीरः खड्गे वणिद्ग्रव्ये" इति वि()आः। "जीरस्तु जरणे खड्गे" इति मेदिनी। ज्यश्चेति। ज्या वयोहानौ। अस्माद्रक् "ग्रहीज्ये" इति संप्रसारणं पूर्वरूपम् "हलः"इति दीर्घः। एके इति। मुख्या इत्यर्थः। तथा च " न धातुलोपे" इति सूत्रे जीवेरदानुरित्यस्य प्रत्याख्यानार्थं नैतज्जीवेरूपं किं तु रकि "ज्यः संप्रसारण"मिति भाष्ये उक्तम्।

सुसूधा। षुञ् अभिषवे, षूञ् प्राणिगर्भविमोचने, डुधाञ् धारणादौ, गृधु अभिकाङ्क्षायाम्। "सुरा चषकमद्योः। पुंलिङ्गस्त्रिदिवेशे स्यात्" इति मेदिनी। "सुरो देवे सुरा मद्ये चषकेऽपि सुरा क्वचित्" इति वि()आः। सुबति प्रेरयति कर्मणि लोकमिति सूरः सूर्यः। "सूरसूर्यार्यमादित्ये"त्यमरः। "दीरो धैर्यान्विते स्वैरे बुधेक्लीबं तु कुङ्कुमे। स्त्रियां श्रवणतुल्याया"मिति मेदिनी। "गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके" इति च।

शुसिचि। शु गतौ, षिञ् बन्धने, चिञ् चयने, डुमिञ् प्रक्षेपणे, एभ्यः कन्ेषां दीर्घत्वं च। "शूरः स्याद्यादवे भटे" इति मेदिनी। "शूरश्चारु(र)भटे सूर्ये" इति वि()आहेमचन्द्रौ। "सीरोऽर्कहलयोः पुंसि चीरी झिल्ल्यां नपुंसकम्। गोस्तने वरुआभेदे च रेखालेखनभेदयोः" इति मेदिनी। "चीरं तु गोस्तने वरुओ चूडायां सीम(स) केऽपि च। चीरी कृच्छ्राटिकाझिल्ल्योः" इति वि()आः।

वा विन्धेः। ञीन्धी दीप्तौ। विपूर्वादस्मात् क्रन्। "अनिदितामि"ति नलोपः। "वीघ्रं तु विमलात्मक"मिति विशेष्यनिघनेऽमरः।

वृधि। वृधु वृद्धौ, डुवप् बीजसन्ताने। "वप्रः पितरि केदारे वप्रः प्राकाररोधसोः" इति धरणिरन्तिदेवौ। "वप्रस्ताते पुमानस्त्री रेणौ क्षेत्रे चये तटे" इति मेदिनी।

ऋज्रेनद्राग्र। ऋज गतिस्थानादिषु,इदि परिमै()आर्ये,अगि गतौ ,वज गतौ, डुवप् बीजसन्ताने, कुबि आच्छादेन, चुबि वक्रसंयोगे, भदि कल्याणे, शुच शोके , गुङ् अव्यक्ते शब्दे, इण् गतौ। नायक इति। "ऋज्रा()आः पृष्टिभिरम्बरीषः इति मन्त्रे ऋज्रा गतिमन्तोऽस्वा यस्य स ऋज्रा()आ इति वेदभाष्यम्। "इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः" इति वि()आः। "अग्रं पुरस्तादुपरि परिमाणे पलस्य च।आलम्बने समूहे च प्रान्ते स्यात्पुंनपुंसकम्। अधिके च प्रधाने च प्रथमे चाभिधेयवत्" इति मेदिनी। "भद्रः शिवे खञ्जरीटे वृषभे तु कदम्बके। करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः" इति च। "उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे। स्त्रीवचांक्षुद्रयोः" इति मेदिनी। भेरीति। गौरादित्वान्ङीष्।"भेरी स्त्री दुन्दुभिः पुमा"नित्यमरः। "भेलः प्लवे भीलुकेच निर्बुद्धिमुनिभेदयोः" इति वि()आः। "भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यव"दिति। "शुक्रः स्याद्भार्गवे ज्येष्ठमासे वै()आआनरे पुमान्। रेतोऽक्षिरुग्भिदोः क्लीबं शुक्लो योगान्तरे सिते। नपुंसकं तु रजते" इति च। "गौरः पीतेऽरुणे ()ओते विशुद्धेऽप्यभिधेयवत्। ना ()ओतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे। गौरी

त्वसंजातरजः कन्याशङ्करभार्ययोः। रोचने रजनीपिङ्गाप्रियङ्गुवसुधासु च। आपगाया विशेषेऽपि यादसांपतियोषिति" इति च मेदिनी। "नदीभेदेच गौरीस्याद्वरुणस्य च योषिति" इति वि()आः। "अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते। सागौरी तत्सुतो यस्तु स गौरः परिकीर्तितः" इति ब्राह्मआण्डवचनं श्राद्धकाण्डे हेमाद्रिणोदाह्रतम्। एतेन "गौरः शुच्याचारः" इत्यादि भाष्यं व्याख्यातम्। "इरा भूवाक्सुराप्सु स्या"दित्यमरः। मालेति। प्रत्ययरेफस्य लत्वम्। "मालं क्षेत्रे स्त्रियां पृक्कारुआजोर्जात्यन्तरे पुमा"निति मेदिनी। "मालं क्षेत्रे जिने मालो माला पुष्पादिदामनी"ति वि()आः। "मालमुन्नतभूतल"मित्युत्पलः। "क्षेत्रमारुह्ममाल"मिति मेघदूतः। मणिपूर्वोऽयमर्थान्तरे रूढः। "मणिमालास्मृता हारे स्त्रीणां दन्तक्षताऽन्तरे" इति वि()आः। [बाहुकटौ" इति मेदिनी ]।

समि कस। "संकुसुकोऽस्थरः" इति विशेष्यनिघ्नेऽमरः।

पचिनशोः। डुपचष् पाके, णश अदर्शने। आभ्यां णुकन् प्रत्ययः स्यात्। णकारो वृद्ध्यर्थः। अनयोर्यथाक्रमं कादेशनुमागमौ च भवतः।

भियः। ञिभी भये। "अधीरे कातररुआस्नौ भीरुभीरुकभीलुकाः" इत्यमरः।

क्वुन्। शिल्पिन्यभिधेये संज्ञायां गम्यमानायां च क्वुन् स्यादपूर्वस्य निरुपपदस्य च। अपिशब्दात्सोपपदस्य। पञ्चम्यर्थे षष्ठी। यद्वा अर्थद्वारकसंबन्धे षष्ठी, प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात्। एवं च निरुपपदप्रकृत्यर्थनिरूपतिकर्तृकारके क्वुन्नित्याद्यर्थः फलितः। शिल्पिनि तावत्-- रञ्ज रागे। "रजको धावको शुके" इति वि()आः। "रजकौ धावकशुकौ" इति हेमचन्द्रः। "कुट्ट छेदने"। इक्षून् कुट्टयति गौडिकः। चर गतिभक्षणयोः। संज्ञायां तु "चषकोऽस्त्री पानमात्रम्"। शुन गतौ, भष भत्र्सने। शुनकः भषकः ()आआ।

लमक इति। ऋषिविशेषः।

जहातेः। ओहाक् त्यागे।

ध्मो धम च। ध्मा शब्दाग्निसंयोगयोः। कुहको दाम्भिकः।

कृतकमिति। कृती छेदने।

कृषेः। कृष विलेखने। अस्मात्क्वुन्। [वृद्धिश्च]। कार्षकः कृषीवलः। कृषकः सएव। "कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्" इति मेदिनी।

उदकं च। उन्दी क्लेदने अस्मात्क्वुन्। ननु "क्वुन् शिल्पि" इत्यादिना गतार्थमित्याशङ्कायामाह-- प्रपञ्चार्थमिति।

वृश्चिकृष्योः। ओव्रश्चू छेदने, कृष विलेखने।

प्राङि। पण व्यवहारे। कषशिषेति दण्डके हिंसार्थकः।

मुषेः। मुषस्तेये अस्मात्किकन् धातोर्दीर्घश्च।

स्यमेः। स्यमु शब्दे।

क्रियः। डुक्रोञ् द्रव्यविनिमये।

आङि पणि। पण व्यवहारे स्तुतौ च, पन च, पत्लृ गतौ, खनु अवदारणे, एभ्य आङि उपपदे इकन् स्यात्। आपणिक इति। नन्वेत्रैव प्रपूर्वे आङि प्रापणिक इति सिद्धौ "प्राङि पणी"त्यत्र पणिग्रहणं प्रपञ्चार्थमित्युज्ज्वलदत्तः। उपसर्गान्तरनिवृत्त्यर्थमिति तु मनोरमायाम्। आपणिकशब्दोऽयं णित्स्वरेणाद्युदात्तः। आपणेन व्यवहरतीत्यर्थे ठकि तु कित इत्यन्तोदात्तः।

श्यास्त्या। श्यैङ् गतौ, स्त्यै ष्ट()ऐ शब्दसंघातयोः,ह्मञ् हरणे, अव रक्षणादौ। "श्येनः पत्रिणि पाण्डुरे" इति मेदिनी। स्त्येनश्चौरः। स्तेन चौर्ये इति टचौरादिकात्पचाद्यचि तु स्तेन निर्यकारोऽपि। केचित्तु "स्तायूनां पतये नमः" इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि ष्टैधातोर्माधवादिभिर्भ्वादिषु स्वीकृतत्वात्प्रकृतसूत्रेऽपि ष्टैधातुमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः। "हरिणः पुंसि सारङ्गे विशदे त्वमभिधेयवत्। हरिणी हरितायां च नारीभिद्वृतभेदयोः। सुवर्णप्रतिमायां च" इति मेदिनी।

वृजेः। वृजी वर्जने। वृजिं पापम्। "वृजिं कल्मषे क्लीबं क्लेशे ना कुटिलेऽन्यव"दिति मेदिनी।

अजेः। अज गतिक्षेपमयोरस्मादिनच्। अजेरजादेशविधानं व्यर्थमित्यत आह-- वीभावबाधनार्थमिति। "अजिनं चर्म कृतिः स्त्री" इत्यमरः।

बहुलमन्यत्रापि। अन्यस्मादपीत्यर्थः। कठ कृच्छ्रजीवने,णल गहने,मल मल्ल धारणे, कुडि दाहे, दोअवखण्डने। "कठिनमपि निष्ठुरे स्यात्स्तब्धे तु त्रिषु नपुंसकं स्थाल्याम्। कठिनी खटिकायामपि कठिना गुडशर्करायां च" इति मेदिनी। "मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति" इति मेदिनी। कुण्डिनमिति। "नगरं कुण्डिनमण्डजो ययौ" इति श्रीहर्षः। कुण्डिन ऋषिः। तस्यापत्यं कौण्डिन्यः। [यत्पुरुषीति]। "यत्पुरषि = पर्वणि दिनं खण्डितं तद्देवाना"मिति तैत्तिरीयश्रुत्यर्थः।

द्रुदक्षि। द्रु गतौ,दक्ष वृद्धौ। "द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे इति मेदिनी। "दक्षिणो दक्षिणोद्भूतसरलच्छन्दवृत्तिषु। अवामे त्रिषु यज्ञादिविधिदाने दिशिस्त्रियाम्" इति च। "दक्षैमः सरलोदारपरच्छन्दानुवृत्तिषु। वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोः इति वि()आः।

अर्तेः। ऋ गतौ,अस्मादिनन्कित्स्यात्। इकारश्च धातोः। रपरत्वम्। "इरिणं शून्यमूषरम्" इत्यमरः। "इरिणं तूषरे शून्येऽपि"इति मेदिनी।

वेपि। टुवेपृ कम्पने, तुहिर् अर्दने, आभ्यामिनन् ह्रस्वश्च धातो-। "अटव्यरण्यं विपिनम्ित्यमरः। तुहिनमिति। लघूपधगुणे कृते ह्रस्वः।

तलि।तल प्रतिष्ठायाम्, पुल महत्त्वे। "तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गम्" इति मेदिनी।

गर्वेः। गर्व मोचने, अस्मादिनन् अकारस्य उत्।

रुहेश्च। रुह बीज जन्मनि प्रादुभावे। रोहिण इति। प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः।

महेः। मह पूजायाम्। "कुतस्त्वमिन्द्रमाहिनः सन्"। माहिनो महनीयः पूजनीय इति वेदभाष्यम्।

क्विब्वचि। वच परिभाषणे, प्रच्छ ज्ञीप्सायाम्, श्रिञ्सेवायाम्, रुआउ गतौ, प्रुङ्गतौ,जुगतौ सौत्रः। वागिति। "वचिस्वपि"

इति संप्रसारणाऽभावः। पृच्छतीति प्राट्। "ग्रहीज्ये"ति संप्रसारणाऽभावः। "छ्वोः शूड्" इति शः। "व्रश्च" इति षत्वं, जश्त्वचर्त्वे, प्राशौ प्राशः। श्रीरिति। "कृदिकारा"दिति ङीष् तु न भवति, "कृतप्रत्ययस्य य इकार" इति व्याख्यानात्। "कृदन्तं यदिकारान्त"मिति पक्षे तु यद्यपि ङीषः प्राप्तिरस्ति तथापि कारग्रहणसामर्थ्येन केवलस्येकारस्य ग्रहणादिकारन्तपक्षो दुर्बल इत्याहुः। दुर्घटस्तु-- ङीषि श्रीमित्यपि रक्षित इच्छतीत्याह। "श्री वेषरचाशोभारा()रतीसरलद्रुमे। लक्ष्म्यां त्रिवर्गसंपत्तिविद्योपकरणेषु च। विभूतौ च मतौ च स्त्री "ति मेदिनी। "जूराकाशे" इत्यादिमूलोदाह्मतमपि मेदिनी।

आप्नोतेः। आप्लृ व्याप्तौ, अस्मात्क्विप् धातोश्च दीर्घः। क्ष्नुवद्भावाद्द्विर्वचनम्।

परौ। व्रज गतौ।

हुवः। हु दानादनयोः। अस्मात्क्विप् धातोश्च दीर्घः। क्ष्नुवद्भावाद्द्विर्वचनम्।

रुआउवः कः। रुआउ गतौ। रुआउवो यज्ञपात्रविशेषः। "अयं रुआउवो अभिजिहर्ति" "रुआउवेण पार्वणौ जुहोति" इत्यादौ प्रसिद्धः।

चिक् च। रुआउव इत्येव। योगविभाग उत्तरार्थः। क इदिति। तेन रुआउक् रुआउचौ रुआउच इत्यादौ गुणो न।

[तनोते]। तनु विस्तारे। व इति सङ्घातग्रहमं। तदाह--वशब्दादेश इति। "रिउआयां तु त्वगसृग्धरा" इत्यमरः।

ग्लानुदि। ग्लै हर्षक्षये, णुद प्रेरणे। "ग्लौर्मृगाङ्कः कलानिधिः"इत्यमरः। "रिउआयां नौस्तरणिस्तरिः" इति च। ग्लौकरोतीति। अग्लौः ग्लौः संपद्यते तथा करोतीत्यर्थः। अव्ययत्वात्सुपो लुक्।

च्व्यन्त एवेति। तेन ग्लौर्नौर्गौरित्यादीनां नाव्ययत्वमिति भावः।

रातेः। रा दाने। रा इति। रायो हली"त्यात्वम्। "रा स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः" इति मेदिनी। "रास्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने" इति हेमचन्द्रः।

गमेः। गम्लृ गतौ। "गोतो णित्"। गौः। केशवोक्तमाह--गौर्नादित्य इत्यादि। "गौः स्वर्गे वृषबे रश्मौ वज्रे चन्द्रे पुमान् भवेत्। अर्जुनी नेत्रदिग्बाणभूवाग्वारिषु गौर्मता" इत्यमरः। द्युतेरपीति। द्युत दीप्तौ। द्योतन्ते देवा अस्यामिति द्यौः।

भ्रमेश्च। भ्रमु अनवश्थाने, गम्लृ गतौ। अग्रेगूः सेवकः।

दमेः। दमु उपशमे। डित्त्वाट्टिलोपः। दोरिति। "दोषं तस्ये"ति श्रीहर्षप्रयोगात्पुंस्त्वम्। "ककुद्दोषणी" इति भाष्यप्रयोगान्नपुंसकत्वम्। "दोर्दोषा च भुजो बाहुः" इति धनञ्जयकोशात्स्त्रीलिङ्गोऽप्ययमित्यादि प्रागेव प्रपञ्चितम्।

पणेः। पण व्यवहारे स्तुतौ च। अमरोश[स्थ] माह-- नैगम इत्यादि।

वशेः। वश कान्तौ, अस्मादिनिः कित्स्यात्,। "ग्रहिज्ये"ति संप्रसारणम्।

भृञः। भृञ् भरणे, अस्मादिनिः कित्स्याद्धातोरुकारान्तादेशश्च।

जसि। जसु मोक्षणे। षह मर्षणे। "जसुरये स्तर्यं पिप्यथुर्गा"मिति मन्त्रे जसुरये श्रान्तायेति, "नीचायमानं जसुरिं न श्येन"

मित्यत्र जसुरिं क्षुधितं श्येनं न = श्येनपक्षिणमिवेति। "उतस्य वाजी सहुरिरृतौ"इति मन्त्रेसहुरिः सहनशील इति च वेदभाष्यम्।

सुयु। षुञ् अभिषवे, यु मिश्रणे, रु शब्दे, वृञ् वरणे। "सवनं त्वघ्वरे स्नानेसोम निर्दलनेऽपि च" इति मेदिनी। यवनो म्लेच्छविशेषः। "रवणः शब्दने स्वरे" इति च मेदिनी। रवणः कोकिल इत्येके। वरणो वृक्षभेदः। टापितु वरणा नदी। "वरणस्तिक्तशाकेऽपि प्राकारे वरणं वृत्तौ" इति वि()आः। "वरुणो वरणः सेतुस्तिक्तशाकक्रृ कुमारकः" इत्यमरः।

अशेः। अशू व्याप्तौ। जिह्वावाची त्विति। "रस आस्वादने चौरादिकः। ततो नन्द्यादित्वाल्ल्युः। "ण्यासश्रन्थः" इति युज्वा। रसत्यास्वदयतीति रसना। "रसनं स्वदने ध्वनौ। जिह्वायां तु न पुंसि स्याद्रास्नायां रसना रिउआयाम्" इति मेदिनी। काञ्चीवाची तालव्यशकारवान्, जिह्वावाची तु दन्त्यसकारवानित्येषा व्यवस्था भूरिप्रयोगाबिप्रेयणोक्ता। वस्तुतस्तु तालव्यशकारवान् रशनाशब्दोऽपि काञ्च्यां जिह्वायां च, दन्त्यसकारवान् रसनाशब्दोऽप्यर्थद्वये बोध्यः। तथा हि "तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः। रशनापि च जिह्वाया"मिति वि()आकोशाज्जिह्वायामुभयं साधु। "रसनं निःस्वने रसना काञ्चिजिह्वयोः" इत्यजयधरणिकोशाभ्यां काञ्च्यामप्युभयं साधु। एवं च "असेरश चे"ति सूत्रे अशू व्याप्तौ, अश भोजने,इति धातुद्वयमपि ग्राह्मम्। रस आस्वादने, रसशब्दे इति धातुभ्यां तु "बहुलमन्यत्रापि" इत्यनुपदमेव वक्ष्यमाणो युच्। तेन सर्वत्रावयवार्थानुगमोऽपि सूपपाद इत्याहुः।

उन्देः। उन्दी क्लेदने अस्माद्युच्। "ओदनं न स्त्रियां भक्ते बलायामोदिनी स्त्रिया"मिति मेदिनी।

गमेः। गम्लृ गतौ। "नभोऽन्तरिक्षं गगन"मित्यमरः।

बहुलम्। स्यन्दू प्ररुआवणे, रुच दीप्तौ। "स्यन्दनं तु श्रुतौ नीरे तिनिशे ना रथे स्त्रियी"मिति मेदिनी। "रोचना रक्तकह्लारे गोपितवरयोषितोः। रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु" इति च। चदि आह्लादे। "चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनी" इति वि()आः। "चन्दनी तु नदीभिदि। चन्दनोऽस्त्री मलयजे भदर्काल्यां नपंसक"मिति मेदिनी। भद्रकाली ओषधिविशेषः। "भद्रकाली तु गन्धोल्यां कात्यायन्यामपि स्त्रिया"मिति मेदिनी। असु क्षेपणे। "असनं क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे" इति मेदिनी। अत सातत्यगमने राजपूर्वः। "राजातनः क्षीरिकायां प्रियाले किंशुकेऽपि च" इति वि()आमेदिन्यौ। एवमन्येऽपि द्रष्टव्याः।

रञ्जेः। रञ्ज रागे। ल्युटि तु रञ्जनम्। "रञ्जनो रागजनने रञ्जनं रक्त चन्दने" इति मेदिनी। बाहुलकात्कृपेरपि क्युन्। "कृपो रो लः" इति प्राप्तलत्वाऽभावश्च। कृपणः।

भूसू। भू सत्तायां, षूङ् प्राणिप्रसवे, धूञ् कम्पने, भ्रस्ज पाके, बहुलवचनाद्भाषायामपि क्वचित्। "भुवनं विष्टपेऽपि स्यात्सलिले गगने जने" इति मेदिनी। "विष्टपं भुवनं जग"दित्यमरः। भृज्जनामति। "ग्रहिज्ये"ति संप्रसारणम्।सस्य जश्त्वेन दः, दस्य श्चुत्वेन जः। क्लीबेऽम्बरीषं भ्राष्ट्रो ना" इत्यमरः।

कृ()पृ()। कृ? विक्षेपि, पृ? पालनादौ वृजी वर्जने, मदि स्तुत्यादौ, डुधाञ् धारणपोषणयोः। "निधनं स्यात्कुले नाशे" इति मेदिनी। "निधनं कुलनाशयोः" इति हेमचन्द्रः।

धृषेः। ञिधृषा प्रागल्भ्ये, अस्मात्क्युः, धिषादेशश्च धातोः"। "धिषमरिउआदशाचार्ये धिषणा धियि योषिति" इति मेदिनी। " गीष्पतिर्धिषणो गुरुः" इत्यमरः।

वर्तमाने। शतृवच्चेति। तथा च "उगिदचा"मिति नुमि महान्। रिउआयां तु "उगितश्च" इति ङीपि महतीत्यादि सिध्यतीति भावः। ननु पृषन्महदादयः "लटः शतृनाशचौ" इति शतृप्रत्ययान्ता एव भवन्तु। ततश्च वर्तमान इति शतृवच्चेति च न कर्तव्यमिति महदेव लाघवमिति चेदत्राहुः-- शतृप्रत्ययान्तत्वे तु "कर्तरि शप्" इति शप्प्रत्यये महतीत्यादौ "आच्छीनद्योः" इति नुम् स्यात्, महानित्यादौ तु "तास्यनुदात्तेन्ङिददुपदेशात्" इति लसार्वधातुकस्वरः स्यात्, अतिप्रत्ययान्तत्वे तु तस्याऽतिप्रत्ययस्याद्र्धधातुकत्वाभ्युपगमेन शबभावान्नोक्तदोष इत्याशयेनाऽडतिप्रत्ययान्तत्वेन निपातनं स्वीकृतमिति। वृह वृद्धौ, मह पूजायाम्, गम्लृ गतौ। पृषन्तीति। बिन्दुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनमुदाह्मतम्। "पृषन्भृगे पुमान्" बिन्दौ न द्वयोः पृषतोऽपि ना। अनयोश्च त्रिषु ()ओतबन्दुयुक्तेऽप्युभाविमौ" इति मेदिनी। "बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च। वारिधान्यां महत्यां च छन्दोवसनभेदयोः" इति वि()आः। शतृवदभ्वात् "उगिदचाम्" इति नुम्। बृहन्-विपुलः। "महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम्। तत्त्वभेदे पुमान् श्रेष्ठे वाच्यव"दिति मेदिनी। महती-- नारदवीणा। "वि()आआवसोस्तु बृहती तुम्बुरोस्तु कलावती। महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी"ति वैजयन्ती। "अवेक्ष्यमाणं महतीं मुहुर्मुहुः" इति माघः। "जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु। जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि चेटति मेदिनी। तत्र वायुवाचिनः पुंलिङ्गस्य शतृवद्भावादुगित्त्वेन नुमि "जगन् जगन्तौ जगन्त" इत्यादि भवति। "द्युतिगमिजुहोतीनां द्वे चे"ति व्युत्पादितस्य तु नुमभावाज्जगत् जगतौ जगत इत्यादीति बोध्यम्।

संश्चत् चिञ् चयने, तृप प्रीणने, हन हिंसागत्योः। निपात्यन्त इति। "अतिप्रत्ययान्ता" इति शेषः। निवृत्त्यर्थमिति। एवं च संश्चदित्यत्र "उगिदचा"मिति नुमः। शङ्कैव नास्ति। वेहदित्यत्र तु "उगितश्चे"ति ङीब्नेति भावः। सञ्चिनोतेरिति। सुभूतिचन्द्रस्तु संपूर्वाच्छवयतेः संश्च दित्याहथ। तृपच्छत्रमिति। चन्द्रमा इत्यन्ये। विहन्ति गर्भमिति वेहत्। एतए चेति। विशब्दसम्बन्धिन इकारस्य एकार इत्यर्थः। गौरित्यनुवृत्तौ "वेहद्गर्भोपघातिनी" इत्यमरः।

छन्दसि। शु गतौ, जृ()ष् वयोहानौ। पन्था इति। "प्रथमन्मह" इत्यादिमन्त्रद्वये शवसानशब्दो गन्तृपरतया व्याख्यातः।

ऋञ्जि। ऋजि भर्जने, वृधु वृद्धौ, मदि स्तुत्यादौ, षह मर्षणे एभ्यः असनाच् कित्स्यात्। ऋञ्जसानो मेघ इति। ऋजेरिदित्त्वान्नुम्। इदित्त्वादेव नलोपऽभावः। एवं चायं मनदिसही च त्रयोऽपि पूर्वसूत्र एव पठितुं शक्याः। कित्त्वं तु वृधुधातावेवोपयुज्यते। उत्तरसूत्रेऽपि गुणग्रहणं सुत्यजम्, अर्तेः सुट् च वृधेः भाष्ये तु यौगिकार्थ एव पुरस्कृतः।

अर्तेः। ऋ गतौ धातोर्गुणः प्रत्ययस्य सुडागमः। "आसाविषदर्शसानाये"ति मन्त्रस्य भाष्ये तु अर्शसानाय = शत्रूणां हिंसित्रे इति व्याख्यातम्।

समि। ष्टुञ् स्तुतौ। अस्मात्सम्युपपदे आनच्।

युधि। युध संप्रहारे। युधानो रिपुः। बुधिर् बोधने। बुधान आचार्यः। दृशिर् प्रेक्षणे। बाहुलकात् कृपेरप्यानच्। कृपाणः खड्गः। "कृपाणेन कथङ्कारं कृपणः सह गण्यते। परेषां दानसमये यः स्वकोशं विमुञ्चति"।

हुर्च्छेः। हुर्च्छा कौटिल्ये, अस्मात्सन्नन्तादानचस्यात्सनो लुक् छलोपश्च। "युयोध्यस्मज्जुहुराणमेनः" इति मन्त्रे जुहुराणं = कौटिल्यकारि एनः = पापं युयोधि = पृथक् कुरु इति भाष्यम्।

()इआतेः। ()इआता वर्णे अस्मात्सन्नन्तादानच्। "सन्यङोः" इति द्वित्वम्। सनो लुक्। तकारस्य च दकारः। किदित्यनुवत्तेर्न गुणः। पुण्यकर्मेति। "शि()इआदानोऽकृष्णकर्मे"ति विशेष्यनिघ्ने अमरः। अकृष्णं = शुक्लं निष्पापत्वात्

शुद्धं कर्म यस्येत्यर्थः। क्षीरस्वामिना तु प्कृतसूत्रं विस्मृत्य ()इआदि ()औत्ये अस्माल्लिटः कानजिति व्याख्यातं, तदसङ्गतं, कानचश्छान्दसत्वात्। इदित्वेन नलोपानुपपत्तेश्चेति दिक्।

शंस्तेति। शंसु स्तुतावस्मात्तृन्। "अप्तृन्--" इति सूत्रे नप्त्रादिग्रहणं नियमार्थमौणादिकतृजन्तानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेवेत्युक्तम्। तेनात्र दीर्घो नेत्युदाहरति-- शंस्तरौ शस्तर इति। नित्त्वादाद्युदात्तः। तथा च मन्त्रः "ग्रावग्राभ उत शंस्ता सुविप्रः"। आदिशब्दाच्छासु अनुशिष्टौ। शास्ति विनयति सत्त्वात् शास्ता बुद्धः। शास्तरौ।शास्तरः। "शास्ता समन्तभद्रे ना शासके पुनरन्यवत्" इति। प्रपूर्वस्य तु नप्त्रादिषु पाठात् "अप्तृन्" इति दीर्घः। प्रशास्तारौ प्रशास्तारः। "क्षत्ता वैश्याजे प्रतीहारे च सारथौ। भुजिष्यातनयेऽपि स्यान्नियुक्तवेधसोःपुमान्" इति मेदिनीकोशानुसारेणाह--वैश्यायामिति। अमरस्तु "क्षत्रियायां च शूद्रजे" इत्याह। णीञ् प्रापणे उत्पर्वः। उन्नेता ऋत्विग्भेदः। बहुलमन्यत्रापि। अन्यत्रापि धातोर्बहुलं तृन्()तृचौ भवतः। पूर्वसूत्रस्थादिशब्देनैव मन्ता हन्तेत्यादेः सिद्धत्वात्प्रपञ्चार्थमिदं सूत्रम्।

नप्तृनेष्ट्र। नप्त्रादयोदश तृन्तृजन्ता निपात्यन्ते। नप्तेति। नञः प्रकृतिभावः। पत्लृ गतावित्यस्याऽच्छब्दलोपः। णीञ् प्रापणे, त्विष दीप्तौ, हु दानादनयोः, पूञ् पवने, भ्राजृ दीप्तौ, मा माने, पा रक्षणे, दुह प्रपूरणे। "त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि" इति मेदिनी। जायां मातीत्यन्तरभावितण्यर्थः।

सुञि उपपदे असु क्षेपणे इत्यस्मात् ऋन्, यणादेशः। स्वसा भगिनी। सावसेरिति तु क्वाचित्कः पाठः।

यतेः। यती प्रयत्ने।

नञि च। टुनदि समृद्धौ अस्मान्नञ्युपपदे ऋन्। न नन्दतीति। कृतायामपि सेवायां तुष्यतीत्यर्थः। "उषाप्यूषा ननान्दा च ननन्दा च प्रकीर्तिता" इति द्विरूपकोशः।

दिवेः। दिवु क्रीडाविजिगीषादौ। देवेति। भ्रातर इत्यनुवृत्तौ "स्वामिनो देवृदेवरौ" इत्यमरः। [देवे धवे देवरि माधवे चे"ति श्रीहर्षः।

नयतेः। णीञ् प्रापणे। अस्माद् ऋप्रत्ययः स च डित्। डित्वाट्टिलोपः। "स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः" इत्यमरः।

सव्ये। ष्ठा गतिनिवृत्तौ अस्मात्सव्यशब्दे उपपदे ऋः स्यात्स च डित्। "तत्पुरुषे कृती" ति सप्तम्या अलुक्।

* स्थास्थिन्स्थूणाममुपसङ्ख्यानम्। उपसंख्यानमिति। "षत्वस्ये"ति शेषः।

अर्ति। ऋ गतौ, सृ गतौ, धृञ् धारणे, धमिः सौत्रः, अम गतौ, अश बोजने, अव रक्षणादौ, तॄ? प्लवनतरणयोः। "अरणिर्हह्निमन्थे ना द्वयोर्निर्मत्यदारुणि" इति मेदिनी। "सरणिः श्रेणिवर्त्मोः" इति दन्त्यादौ रभसः। "सरणिः पङ्क्तौ मार्गे स्त्री" इति मेदिनी। शॄ? हिंसायां ततोऽतिप्रत्ययः। शरणिरित्येके। "शरणि पथि चाऽऽवलौ" इति तालव्यादावजयः। "इमामग्ने शरणि" मिति मन्त्रे शरणिं हिंसां व्रतलोपरूपां मीमृषः क्षमस्वेति वेदभाष्यम्। धरणिर्भूमिः। "धमनी तु शिराहट्टविलासिन्यां तु योषिति" इति मेदिनी। अमनिर्गतिः। अश्यते भुज्यते राज्यमिन्द्रेणानयेति अशनिर्वज्रम्। "अशनिः स्त्रीपुंसयोः स्याच्चञ्लायां रवावपी"ति मेदिनी। अवनिः पृथिवी। "तरमद्र्युमणौ पुंसि कुमारीनौकयोः स्त्रिया"मिति मेदिनी। कुमारी लताविशेषः। "तरणी रामतरणी कर्णिका चारुकेसरा। सहा कुमारी गन्धाढ()आ" इति धन्वन्तरिनिघण्टुः। रजनिरिति। रञ्ज रागे अस्मादप्यनिः। न लोपोऽपि बाहुलकात्। "कृदिकारा"दिति ङीष्। रजनी।

"रजनी नीलिनी रात्रिर्हरिद्राजतु कासु च" इति मेदिनी।

आङि। शुष शोषणे अस्मात्सन्नन्तादाङि उपपदे अनिः स्यात्।

कृषेरादेः। कृष विलोपखने"। चर्षणिर्जन। इति। वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात्, "ओमासस्चर्षणीधृतः" इत्यादिमन्त्रेषु वेदभाष्यकारैस्तथैव व्याख्यातत्वाच्च। उज्जवलदत्तेन तु आदेश्च ध इति पठित्वा धर्षणिर्बन्धकीति व्याख्यातम्। तदयुक्तम्। तथा सति धृषेरित्येव सूत्रयेत्, प्रगाल्भ्यरूपावयवार्थानुगमात्। "आदेश्च ध" इत्यंशस्य त्यागेन लाघवाच्च, तस्मादादेश्च च इति दशपादीवृत्तिपाठ एव युक्त इत्याहुः।

अदेः। अद भक्षणे अस्मादनिस्तस्य मुडागमश्च।

वृतेश्च। वृतु वर्तने अस्मादप्यनिः। वर्तनिरित।"कृदिकारा"दिति ङीषि तु वर्तनी। "सरणीः पद्धतिः पद्या वर्तन्येकपदीति चे"त्यमरः।

क्षिपेः। क्षिप प्रेरणे। क्षिपणिरायुधमिति। "उतस्य वाजी क्षिपणिं तुरण्यती" ति मन्त्रस्य वेदभाष्ये तु क्षिपणिं = क्षेपणमनु, तुरण्यति = त्वरयति, गन्तुमिति व्याख्यातम्।

अर्चि। अर्च पूजायाम्, शुच शोके, हु दानादनयोः" सृप्लृ गतौ,छद अपवारणे,ण्यन्तः। छर्द वमने, अर्चिरिति सान्तम्। "तमर्चिषा स्फूर्जयन्" इति मन्त्रः। "नयनमिव सनिद्रं घूर्णते दैवमर्चिः" इति माघः। ज्वालाभासोर्नपुंस्यर्चिः" इति नानार्थे सान्तेष्वमरः। इदन्तोऽपीति। इदन्तोऽपीति। णिजन्तादर्चेरत इरिति भावः। "अर्चिर्हेतिः शिखारिउआया"मित्यमरः। "रोचिः शोचिरुभे क्लीबे" इति च। स्पिर्घृतम्। छाद्यतेऽनया छदिः। "छदिः रिउआयामेवे"ति लिङ्गानुशासनसूत्रम्। एवं च "पटलं छदि" रित्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः। छद्र्यतीति। छर्दिश्चातिसारश्च शूलञ्च तानि यस्य सन्तीति विग्रहः।

बृंहेः। बृहि वृद्धौ अस्मादिसिः। कुशशुष्मणोरिति। शुष्मा नाम अग्निः। शुष्मा नाम अग्निः। "अग्निर्वै()आआनरो वह्निः" इत्युक्रम्य "बर्हिः शुष्मेत्यमरेणोक्तत्वात्। [" बर्हिः पुंसि हुताशने। स्त्री कुशे" इति मेदिनी]।

द्युतेः। द्युत दीप्तौ। "ज्योतिरग्नौ दिवाकरे। पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः" इति मेदिनी।

वसौ। रुच दीप्तावस्माद्वसुशब्दे उपपद इसिन्तस्यात्संज्ञायाम्। बाहुलकात्केवलादपि। "रोचिः शोचिरुभे क्लीबे" इत्यमरः।

भुवः। भवतेरिसिन् स्यात्स न कित्।

सहो। षह मर्षणेषऽस्मादिसिन् धश्चान्तादेशः।

पिबतेः। पा पाने अस्मादिसिन्धातोश्च थुगागमः।

जेः। जनी प्रादर्भावे।

मनेः। मनु अवबोधनेऽस्मादुसिः स्याच्छन्दसि धकारश्चान्तादेशः। मधु पवित्रद्रव्यम्।

अर्तिपृ()। ॠ गतौ, पृ? पालनपूरणयोः , डुवप् बीजसन्ताने, यज देवपूजादौ, तनु विस्तारे, धन धान्ये, तप सन्तापे, एभ्य उसिर्नित्स्यात्। व्रणोऽस्त्रियामीर्ममरुः क्लीबे" इत्यमरः। "ग्रन्थिर्ना पर्वपरुषी" इति च। "वपुः क्लीबं तनौ शस्ताकृतावपि"

इति मेदिनी। शस्ताकृतिः प्रशस्ताकृतिरित्यर्थ-। यजुरितियजुर्वेदः। तनुः शरीरम्। "तनुषे तनुषेऽनङ्ग"मितति सुबन्धुः। "स्याततनुस्तनुषा सार्धं धनुषा च धनुं विदुः" धंरे त्रिषु" इति सान्ते मेदिनी।

एतेः। इण् गतावित्यस्मादुसिः। णित्त्वाद्वृद्धौ कृतायामायादेशः।

चक्षेः। चक्षिङ् व्यक्तायां वाचि, अस्मादुसिः शिद्भवति। शित्त्वात्ख्याञादेशाऽबावः। चक्षते रूपमनुभवन्त्येनेनेति चक्षुः।

मुहेः। मुह वैचित्ये। "मुहुः पुनः पुनः शस्वदभीक्ष्णमसकृत्समाः" इत्यव्ययेष्वमरः। [अस्मात्परं बहुलमन्यत्रापि इति सूत्रं स्पष्टत्वात्]।

कृ? गृ()।कृ? विक्षेपे,गृ? निगरणे, शृ? हिंसायाम्, वृञ् वरणे, चते याचने। "नैरृतः कर्वरः क्रव्यात्कर्बुरो यातुरक्षसोः"इति शब्दार्णवः। "शर्वरी यामिनीस्त्रियोः" इति मेदिनी। "वर्वरः पामरेकेशविन्यासे नीवृदन्तरे। वर्वरः फञ्जिकायां तु वर्वरा शाकपुष्पयोः" इति वि()आः। "वर्वरः पामरेकेशवक्रले नीवृदन्तरे। फञ्जीकायां पुमान् शाकपुष्पभेदभिदोः स्त्रियाम्" इति मेदिनी। "चत्वरं स्थण्डिले गणे" इति च।

नौ सदेः। षद्लृ विशरणादौ। निपूर्वादस्मात्ष्वरच् स्यात्। "सदिरप्रतेः" इति षत्वम्। "निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी" ति मेदिनी।

इत्युणादिषु द्वितीयः पादः।

छित्वर। अनयोरिति। छिदिर् द्वैधीरणे, छद अपवारणे, "छित्वरशश्छेदने द्रव्ये धूर्ते वैरिणि च त्रिषु" इति मेदिनी। डुधाञ् धारणपोषणयोः, पा पाने, मा माने, एषां त्रयाणामीत्वमन्त्यस्य निपात्यत इत्येके। अन्ये तु पीव मीव तीव नीव स्थौल्ये। एभ्यः ष्वरचि "लोपो व्योः" इति लोपमाहुः। "पीवरः कच्छपे स्थूले" इति मेदिनी। मीवर इति। हिंसक इत्यर्थानुगुण्येन मीञ् हिंसायामित्यस्मात्ष्वरजिति केचिदाहुः। "तीवरो नाऽम्बुधौ व्याधे" इति मेदिनी। "स्यान्नीवरो वाणिजके वास्तवेऽपि च दृश्यते" इति मेदिनी। उपह्वरो रथ इति केचित्। "तदु प्रयक्षतम्िति मन्त्रे तु उपह्वरे उपगन्तव्ये समीपदेशे]।

इण्। इण् गतौ,षिञ् बन्धने, जि जये, दीङ् क्षये, उष दाहे, अव रक्षणे। "इनः पत्यौ नृपाऽर्कयोः" इति मेदिनी। "जिनोऽर्हति च बुद्धे च पुंसि स्र्यात्रिषु जित्वरे" इति च। "दीना मूषिकयोषायां दुर्गते कातरेऽन्यवत्" इति वि()आः। "उष्णो ग्रीष्मे पुमान् दक्षाऽशीतयोरन्यलिङ्गकः" इति मेदिनी। "ज्वरत्वरे" त्यूठ्। ऊनमसंपूर्णम्।

फेन। स्फायी वृद्धौ,अस्य फे इत्यादेशः "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः। मीञ् हिंसायाम्। "मीनो राश्यन्तरे मत्स्ये" इति वि()आः।

कृषेः। कृष विलेखने अस्माद्वर्णे वाच्ये नक् स्यात्। "कृष्णः सत्यवतीपुत्रे केशवे वायसेऽर्जुने। कृष्णा स्यादद्रौपदीनीलीकणाद्राक्षासु योषिति। मेचके वाच्यलिङ्गः स्यात्क्लीबे मरिचलोहयोः" इति मेदिनी।

बन्धेः। बन्ध बन्धने अस्मान्नक्। "भास्करोऽहस्करो ब्राध्नः प्रभाकरदिवारकरौ" इत्यमरः। "बुध्नो ना मूलरुद्रयोः" इति मेदिनी।

धापृ()। डुधाञ् धारणादौ, पृ? पालनादौ, वस निवासे, अज गतौ, अत सातत्यगमन,एभ्यो नः स्यात्। नक्()प्रत्यये सति तु

वस्न इत्यत्र संप्रसारणं स्यात। वेन इत्यत्र तु गुणो न स्यादिति बावः। "धाना भृष्टयवे प्रोक्ता धान्याकेऽभिनवोद्भिदि" इति वि()आः। "पर्णं पत्रं किंशुके ना" इति मेदिनी। "वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसक"मिति च। वेनः लुण्टाकः प्रजापतिश्च।

लक्षेः। लक्ष दर्शनाङ्कनयोः। लक्षणमित्यादि। लक्षणलक्ष्मणशब्दौ द्वापवि नामचिह्नयोः क्लीबौ। रामभ्रातरि तु पुंलिङ्गौ। हंसयोषायां लक्षमा,सारसस्य योषायां तु लक्ष्मणेति व्यवस्थेत्यर्थः। "लक्षणं नाम्नि चिह्ने च सौमित्रिरपि लक्षणः। लक्ष्मणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित्। लक्षणा त्वौषधीभेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्यात्सश्रीके चाभिधेयव"दिति मेदिनी। कोशे तु "सारस्यामपि लक्षणा"इति निर्मकारः पाठः स्वीकृतः।

वनेः। वन संभक्तावस्मान्नः, उपधाया इत्वं च। वेन्नेति। लघूपधगुणः।

सिवेः। षिवु तन्तुसन्ताने। बाहुलकादिति। एत्च "छ्वोः शूड् इति सूत्रे वृत्तौ "येन विधिः" इति सूत्रे कैयटग्रन्थे च स्पष्टम्। यणिति। लघूपधगुणे कृते त्वेकारस्याऽदेशे ऊठोऽपि "सार्वधातुके" त्यादिना गुणे कृते सयोन इति स्यादिति भावः। "स्योनः किरणसूर्ययोः" इति मेदिनी।

कृ()वृ कृ? विक्षेपे,वृञ् वरणे, दीर्घपाठे तु वृ? वरणे, जृ()ष् वयोहानौ, दिवादिः। जृ? इति क्र्यादौ चुरादौ च। षिञ् बन्धने, द्रु गतौ, पन स्तुतौ, अन प्रापणने, ञिष्वप् शये, एभ्यो नप्रत्ययो नित्स्यात्। "कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि" इति वि()आमेदिन्यौ। "वर्णौ द्विजादिशुक्लादियशोगुणकथासु च। स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेखने" इति मेदिनी। वि()आमेदिनीस्थमाह-- जर्णश्चन्द्र इति। "जर्णो जीर्मद्रुमेन्दुषु" इति हेमचन्द्रः। "ध्वजिनी वाहिनी सेना" इत्यमरः।"द्रोणोऽस्त्रियामाढके स्यादाढकाचितुष्टये। पुमान्कृपीपतौ कृष्णकाकेऽस्त्री नीवृदन्तरे। स्त्रीयां काष्ठाम्बुवाहिन्यां गवादन्यमपीष्यते"। "अन्नं भक्ते च भुक्ते स्या"दिति मेदिनी। "स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति मेदिनी।

धेटः। धेट् पाने अस्मान्नः स्यादिच्चान्तादेशः। "देना नद्यां नदे पुमा"निति मेदिनी। "धेनः समुद्रे नद्यां च धेना" इति वि()आ। श्लोको धारा इत्यादिषु वाङ्नामसु देनेति वैदिकनिघण्टौ पठितम्। अत एव "धेना जिगाति दाशुषे" "इन्द्र धेनाभिरिह मादयस्व" इत्यादिमन्त्रेषु धेना वागिति व्याख्यातं भाष्ये।

तृषि। ञितृषा पिपासायाम्, शुष शोषणे, रस शब्दे। "तृष्णा लिप्सापिपासयोः" इति वि()आः।

सुञः। षुञ् अभिषवे अस्मान्नः स्याद्धातोर्दीर्घश्च। "सूनाऽधोजिह्विकापि चे"ति नान्तेऽमरः। "सूनं प्रसवपुष्पयोः। सूना पुत्र्यां वधस्थानगलकण्ठिकयोः स्त्रियाटमिति मेदिनी।

रमेः। रमेण्र्यन्तान्नः स्यात्तकारश्चाऽन्तादेशः। "रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसक"मिति मेदिनी।

रास्ना। रस आस्वादने उपधीदीर्घः। "रास्ना तु स्याद्भुजङ्गाक्ष्यामेलापण्र्यामपि स्त्रिया"मिति मेदिनी। षस स्वप्ने उपधादीर्घः। "सास्ना तु गलकम्बलः" इत्यमरः। "सास्नः गोगलकम्बलः" इति पाठान्तरम्। ष्ठा गतिनिवृत्तागत्यादिषु। गुणाऽभाव णत्वं च। "वीणा विद्युति वल्लक्या"मिति मेदिनी।

गादाभ्याम्।गै शब्दे, डुदाञ् कुक्षिषु" इति मेदिनी।

कृत्यशू।कृती वेष्टने, अशू व्याप्तौ। "कृत्स्नं सर्वाम्बुकुक्षिषु"इति मेदिनी।

तिजेः। तिज निशाने अस्मात्कस्नः, धातोर्दीर्घश्च।"तीक्ष्णं सामुद्रलवणेविषलोहाऽऽजिमुष्ककेे। क्लीबं यवाग्रके तिग्मात्मत्यागिनोस्त्रिषु" इति मेदिनी।

यजि। यज देवपूजादौ,मन ज्ञाने, शुन्ध ज्ञाने,शुन्ध शुद्धौ,दसु उपक्षय, जनी प्रादुर्भावे। "दस्युश्चौरे रिपौ पुंसि" इति मेदिनी। "अथ जन्युः स्यात्पुंसि प्राण्याग्निधातृषु" इति च।

भुजि। भुज पालनादौ, मृङ् प्राणत्यागे, आभ्यां यथासंख्यं युक्त्युकौ स्तः। "मृत्युर्ना करणे यमे" इति मेदिनी।

सृ गतौ।

पा रक्षणे, णीञ् प्रापणे, विष्लृ व्याप्मतौ। "नीपः कदम्बबन्धूकनीलाऽशोकद्रुमेऽपि च" इति मेदिनी।

च्युवः। च्युङ् गतौ। धातूनामनेकार्थत्वादिह भाषणे। च्यवन्ते भाषन्तेऽनेनेति विग्रहः। दशपाद्यः तु "चुपः किच्चे"ति पठ()ते। चुप मन्दायां गतौ। चोपतीति च्युपः मन्दगमनकर्ता।

स्तुवः। ष्टुञ् स्तुतौ। अस्मात्पः स्याद्धातोर्दीर्घश्च।

सुशृ()। षुञ् अभिषवे, शृ? हिंसायाम्। आभ्यां पः स्यात्स च निद्भवति। नित्त्वं तु स्वरार्थम्। "सूपो व्यञ्जनसूदयोः" इति मेदिनी। शूर्पमिति। बाहुलकादुत्वं रपरत्वं "हलि च" इति दीर्घः। "प्रस्फोटनं शूर्पमरुआई" इत्यमरः।

कुयु। कु शब्दे, यु मिश्रणे। आभ्यां पः, सच निद्धातोर्दीर्घत्वं च।

खष्पशिल्प। खनु अवदारणे, शील समाधौ, बाधृ लोडने, रु शब्दे, पृ? पालनादौ। "खष्पः क्रोधे बलात्कृतौ"इति वि()आः। "शष्पं बालतृणेऽपि च। पुंसि स्यात्प्रतिभाहानौ" इति मेदिनी। वि()आओक्तिमाह-- बाष्प इति। "बाष्पमूष्मणि चाश्रुणि" इति कोशान्तरमभिप्रेत्याह-- बाष्पं चेति। "रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः। ग्रन्थवृत्तौ नाटकादावाकारश्लोकयोरपि" इति वि()आमेदिनौ। "तल्पमट्टे कलत्रे चशयनीये चन द्वयोः" इति मेदिनी। अमरोक्तिमाह-- तल्पं शय्येति।

स्तनिह्मषि। स्तनदी देवशब्दे चचुरादिण्यन्तौ,ह्मष तुष्टौ,पुष पुष्टौ, मदी रर्षग्लेनयोः, घटादिः, एभ्यो ण्यन्तोब्यो इत्नुच् स्यात्। "स्तयित्नुः पुमान्वारिधरेऽपि स्तनितेऽपि चे"ति मेदिनी। "स्तनयित्नुः पयोवाहे तद्ध्वनौमृगरोगयोः" इति वि()आः। "हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे" इति च। "गदयित्नुः पुमान्कामे जल्पाके कार्मुकेऽपि च"इति वि()आमेदिन्यौ। "मदयित्नुः कामदेवे पुमान्मद्ये नपुंसक"मिति मेदिनी।

कृहनि। डुकृञ करणे, हन हिंसागत्योः। हत्नुरिति। "अनुदात्तोपदेशे"त्यादिनाऽनुसनासिकलोपः। एवमुत्तरत्र गमेः क्नुप्रत्यये जिगत्नुरित्यत्रापि बोध्यः। शस्त्रं चेति। चाद्धन्ता। दशपादीवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृणुः कर्ता। हनुर्वक्त्रैकदेशः। बाहुलकान्नलोपः। गमेसतुजिगत्नुरित्युदाह्मतं तत्सर्वं प्रामादिकम्। लक्ष्यविसंवादात्। तथा च श्रूयते--"सुरूपकृत्सुमूतये""ज्येष्ठराजं भरे कृत्नु" "अयं कृत्नुरगृभीतः" "मा नो वधाय हत्नवे" "मृगं न भीममुपहत्नुमुग्रम्" "योनः सनुत्य उतवा जिगत्नु"रित्यादि। अतएव हन्तिधातुं विवृण्वता माधवेन उपहत्नुरित्युदाह्मत्य क्त्नोः कित्त्वादननुासिकलोप इत्युक्तम्। [यत्तु तेनैव "सुरूपकृत्नु"मिति मन्त्रं विवृण्वता तकारोपजनश्छान्दस इत्युक्तं, तद्दशपादीवृत्तिमनुसृत्य, नतु वस्तुस्थितिमनुरुध्येति सह्मदयैराकलनीयमित्याहुः]।

दाभाभ्याम्। डुदाञ्, दाने,भा दीप्तौ। "दानुर्दातरि विक्रान्ते"इति मेदिनी। "भानू रश्मिदिवाकरौ" इत्यमरः।

वचेः। वच परिभाषणे। वग्नुर्वाचालः।

धेटः। धेट् पानेअस्मान्नुः स्यादिकारश्चान्तादेशः। "धेनुः स्यान्नवसूतिका" ओहाक् त्यागे। "जह्नुः स्यात्पुंसि राजषिभेदे च मधुसूदने"इति मेदिनी।

सुवः षूङ् प्राणिप्रसवे। अस्मान्नुः स्यात्स च कित्। वि()आओक्तिमाह-- सू नुः पुत्रे इति।

जहातेः। ओहाक् त्यागे। " जह्नुः स्यात्पुंसि राजषिभेदे च मधुसूदने " इति मेदिनी।

स्थो णुः। ष्ठा गतिनिवृत्तौ। अस्माण्णुः स्यात्। वि()आओक्तिमाह--स्थाणुरिति। "स्थाणुः कीले हरे पुमान्। अस्त्री ध्रुवे" इति मेदिनी।

अजिवृ। अज गतौ, वृङ् संभक्तौ, री गतिरेषणयोः, एभ्यो णुर्नित्स्यात्। "वेणुर्नृपान्तरे वंशे" इति वि()आः। "रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः" इति मेदिनी।

विषेः। विष्लृ व्याप्तौ। अस्माण्णुः स्यात्स च कित्। चान्नित्। नित्त्वादाद्युदात्तत्वम्। विष्णुरिच्छा।"विष्णुर्नारायणः कृष्णः" इत्यमरः।

कृदा। डुकृञ् करणे, डुधाञ् धारणपोषणयोः,रा दाने, अर्च पूजायाम्,कल गतौ। "कर्कः कर्केतने वह्नौशुक्ला()ओ दर्पणे घटे" इति वि()आमेदिन्यौ। "राका नद्यन्तरे कच्छ्वां नवजातरजः स्त्रियाम्। संपूर्णेन्दुतिथौ" इति मेदिनी। "राका तु सरिदन्तरे। राका नवरजः कन्या पूर्णेन्दुः पूर्णिमापिच" इति वि()आः। इह दा धा रा एषां "केणः" इति ह्रस्वोऽपि बाहुलकात्संज्ञापूर्वकविदेरनित्यत्वाद्वा नेति बोध्यम्। "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्ने दिवस्पतौ" इति वि()आमेदिन्यौ। "कल्कोऽस्त्री घृततैलादिशेषे दम्भे विभीतके। विट्()किट्टयोश्च पापे च त्रिषु पापशये पुनः" इति मेदिनी। बाहुलकाद्रमेरपि कः। "रङ्गः कृपणमन्दयोः" इति मेदिनी। कपिलकादित्वाल्लत्वं। टाप्। "लङ्का रक्षः पुरीशाखाशाकिनीकुलटासु च" इति इति वि()आमेदिन्यौ।

सुवृ। सृ गतौ, वृञ् वरणे, भू सत्तायाम्, शुष शोषणे, मुष स्तेये। सृक इति। सृक इति। "सृकं संशाय पविमिन्द्र तिग्म"मिति मन्त्रस्य वेदभाष्ये तु सृकं = सरणशीलं पविं = वज्रं संशाय सम्यक् तीक्ष्णीकृत्येति व्याख्यातम्। "भूकं छिद्रे च काले चे"ति मेदिनी। "मुष्को मोक्षकवृक्षे स्यात्संघाते वृषणेऽपि च" इति स एव। "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि। शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुसंकम्"। "वल्कं वल्कलशल्कयोः" इति च। "उल्का ज्वालाविभावसोः" इति शुभूतिचन्द्रः।

इण्()भी।इण् गतौ, ञिभी भये,कै शब्दे, पा पाने,शल गतौ, अत सातत्यगमने। "एखं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु" इति मेदिनी। "कारः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि। शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः। काका स्यात्काकनासायां काकोलीकाकरजङ्घयोः। रक्तिकायां मलय्वां च काकमाच्यां च योषिति। काकं सुरतबन्धे स्यात्काकानामपि संहतौ इति मेदिनीवि()आप्रकाशौ। "पाकः परिणतौ शिशौ। केशस्य जरसा शोक्ल्ये स्थाल्यादौ पचनेऽपि च "इति मेदिनी। "शल्कं तु शकले "वल्के इति च। मर्च इति सौत्रो धातुरिति बहव-। मर्च शब्दे चौरादिक इति "मिदचोऽन्त्यापरः"इति सूत्रे कैयटः। "मर्तो मर्तं मर्चयति द्वयेन" इति मन्त्रे मर्चयति विधेयीकरोति भत्र्सयति वेति वेदभाष्यम्। न चैवं णिलोपस्य

स्थानिवद्भावेन कुत्वाऽभावान्मर्क इति न सिध्येदिति वाच्यम्, पूर्वत्रासिद्धे तदभावात्। शो तनूकरणे अस्मादपि बाहुलकात्कन्। "शाको द्वीपान्तरेऽपि च।शक्तौ द्रुमविशेषे च पुमान् हरितके स्त्रियाम्" इति मेदिनी।

नौ सदेः। षद्लृ विशरणे अस्मान्निशब्दे उपपदे कन् स्यात्स च डित्। डित्त्वाट्टिलोपः। "सदिरप्रतेःर" इति षत्वम्। "निष्क्रमस्त्री साऽष्टहेमशते दीनारकर्षयोः। वक्षोऽलङ्करणे हेममात्रे हेमपलेऽपि च" इति मेदिनी।

स्यमेः। स्यमु शब्दे अस्मात्कनत्स्यात्तस्य च ईडागमः। "स्यमीका नीलिकायां स्त्री स्यमीको नाकवृक्षयोः" इति मेदिनी।

अजि। अज गतिक्षेपणयोः, यु मिश्रणे, धूञ् कम्पने, णीञ् प्रापणे, एभ्यः कन् स्यादेषां दीर्घश्च। तत्सामथ्र्याद्गुणाऽबाव-। अजेर्वीभावः।

ह्रियः। ह्री लज्जायामस्मात्कन्धातोर्दीर्घत्वं च। तत्सामथ्र्याद्गुणाऽभावः।

शकेः। शक्लृ शक्तौ। "शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः" इत्यमरः। "शकुनस्तु पुमान्पक्षिमात्रपक्षिविशेषयोः। शुभाशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्" इति मेदिनी। "शकुन्तः कीटभेदे स्याद्भासपक्षिविहङ्गयोः" इति। "शकुनिः पुंसि विहगे सौबले करणान्तरे" इति च।

भुवः। भू सत्तायाम्। अस्मात् झिच् स्यात्()। "झोऽन्तः" "कृदिकारात्--" इति ङीष्। भवन्ती लटः संज्ञा। [भवन्तीति स्पष्टार्थः]। तथा च "अस्तिर्भवन्तीपरः प्रयोक्तव्यः" इति भाष्यम्। बाहुलकात्कमेरपि प्रत्ययादिपलोपे धातोः कुशब्दादेश। कुन्तिः। "इतो मनुष्यजातेः"इति ङीष्। "कुन्ती पाण्डुप्रियायं च शल्कक्यां गुग्गुलद्रुमे" इति मेदिनी। अवन्तिरित्यादि। अव रक्षणे, वद वक्तायां वाचि, आभ्यामपि झिच्। वदन्तिरिति। "कृदिकारा"दिति वा ङीष्।

कन्युच्। क्षिप प्रेरणे, भू सत्तायाम्। "क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गकः" इति मेदिनी। "भुवन्युः स्यात्पुमान्भानौ ज्वलने शशलाञ्छने" इति वि()आमेदिन्यौ।

अनुङ्। णद अव्यक्ते शब्दे। अस्मादनुङ्प्रत्ययः स्यात्। क्षिपणुरिति। ङित्त्वाद्गुणाऽभावः।

कृ()वृ। कृ? विक्षेपे, वृञ् वरणे,दॄ? विदारणे, ण्यन्तः। "करुणस्तु रसे वृक्षे कृपायां करुणा मता" इति वि()आमेदिन्यौ। "वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः" इति वि()आः। "दारुणं भीषणं भीष्मम्" इत्यमरः। "दारुणो रसभेदे ना त्रिषुतु स्याद्भयावहे" इति मेदिनी।

त्रो रश्च। तृ? प्लवनतरणयोरस्मादुनन्स्यात्। "तरुणं कुब्जपुष्पे ना रुचके यूनि तु त्रिषु" इति मेदिनी। गौरादित्वान् ङीष्। "तरुणी तलुनीति च" इति द्विरुपेषु वि()आः।

क्षुधि। क्षुध बुभुक्षायाम्, पिश अवयवे, अयं दीपनायामपि। मिथिः सौत्रो धातुः। "पिशुनो दुर्जनः खलः" इत्यमरः। "पिशुनं कुङ्कुमे स्मृतम्। कपिवक्रे च काके ना सूचकक्रूरयोस्त्रिषु। पृक्कायां पिशुना स्त्री स्यात्" इति मेदिनी। "मिथुनं न द्वयो राशिभेदेस्त्रीपुंसयुग्मके" इति च।

फलेः। फल निष्पत्तौ, अस्मादुनन्, गुगागमश्च धातोः। "फल्गुनस्तु फाल्गुणोऽर्जुने" इति द्विरुपकोशः।

अशेः। अश भोजने अस्मादुनन्,धातोर्लशादेशश्च। लशुनं महाकन्दः। "लशुना लशुनं वेश्म कश्मलं विस्वम()आवत्ट इति मध्यतालव्येषु वि()आः। लस चेति दन्त्यमध्यपाठस्तु प्रामादिकः।

अर्जेः। ऋझ गतिस्थानार्जनोपार्जनेषु, अस्माण्ण्यन्तादुनन् स्यात् णेश्च लुक्। इह "णेरनिटि"इति णिलोपेनैव सिद्धे णिलुक् चेत्युक्तेः फलं चिन्त्यम्। "अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः। मातुरेकसुतेऽपि स्याद्धवले पुनरन्यवत्। नपुंसकं तृणे नेत्ररोगे वाप्यर्जुनी गवि। उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित्" इति वि()आमेदिन्यौ।

अर्तेश्च। ऋ गतावस्मादुनन्स्यात्स च चित्। "अरुणोऽवन्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ। निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु। अरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासु च" इति मेदिनी।

अजि। अज गतिक्षेपणयोः, यम उपरमे, शीङ् स्वप्ने, एभ्य उनन् स्यात्स च चित्। अजेर्वीभावः। वीयते गम्यतेऽत्रेति वयुन्। "वि()आआनि देव वायुनानि विद्वान्िति मन्त्रे वयुनानि प्रज्ञानानीति वेदभाष्यम्। वैदिकनिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः। "यमुना शमनस्वसा" इत्यमरः।

वृ? तृ()। वृ? वरणे, तृ? प्लवनतरणयोः, वद व्यक्तायां वाचि, हन हिंसागत्योः, कमु कान्तौ, कष हिंसायाम्। वर्सः तर्स इति। "तितुत्रे"ति नेट्। षत्वं तु न भवति, बाहुलकेन षत्वे कर्तव्ये प्रत्ययसंज्ञाया अप्रवृत्तेः। कक्षशब्दे तु षत्वं भवत्येव। एतच्च भाष्यकैयटादिपर्यालोचनयोक्तम्। कथं तर्हि सर्वैरप्युणादिवृत्तिकारैरिह षत्वमुदाह्मतमिति चेत्। अत्राहुः-- अस्तु भाष्यप्रामाण्यात् वर्सं तर्समिति दन्त्यपाटोऽपि साधुः। पक्षे तु षत्वमस्तु। बाहुलकलभ्यषत्वाऽभावस्य पाक्षिकत्वेऽपि बाधकाऽभावात्, वृषितृषिभ्यां घञि कृते ण्यन्तादेरचि "घञर्थे कविधान"मिति ण्यन्तात्कप्रत्यये वा कृते वर्षतर्षशब्दयोर्दुर्वारत्वात्, अज्विधौ भयादीनमुपसङ्ख्यागनं नपुंसके क्तादिनिवृत्त्यर्थमित्यत्र वर्षमित्याकरे उदाह्मतत्वाच्च। तस्मादिह द्विरूपता फलितेति। वर्षोषऽस्त्री भारतादौ स्याज्जम्बूद्वीपाऽब्दबृष्टिषु। प्रावृट्()काले स्त्रियां भूम्नी"ति मेदिनी। "तर्षो लिप्सोदन्ययोः" इति च। "पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसी"ति त्रिकाण्डशेषः। सद्योजातस्तु तर्णकः"। "हंसः स्यान्मानसौकसि। निर्लोभनृपविष्ण्वर्कपरमात्मसु मत्सरे। योगभेदे मन्त्रभेदे शारीरमरुदन्तरे।तुरङ्गमप्रभेदे चे " ति मेदिनी। "कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तुना"इति च। "कंसो दैत्यान्तरे स्मृतः। कांस्ये च कांस्यपात्रे च मानभेदे च कीर्तितः" इति वि()आः। "कक्षः स्यादनतरीयस्य पश्चादञ्चलपल्लवे। स्पर्धायां ना तु दोर्मूले कच्छवीरुत्तृणेषु चे"ति मेदिनी।

प्लुषेः। प्लुष दाहे, अस्मात्सः स्यादुपधाया अकारश्च। "प्लक्षो जटी गर्दभाण्जद्वीपभित्कुञ्जराशने" इति मेदिनी। "प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः। पिप्पले द्वारपार्(ो च गृहस्य परकीर्तितः" इति वि()आः।

मनेः। मन ज्ञाने। "मांसं स्मादामिषे क्लीबं कक्कोलीजटयोः स्त्रिया"मिति मेदिनी।

अशेः। अशू व्याप्तौ, अस्माद्देवने वाच्ये सः स्यात्। "व्रश्चभ्रस्जे"त्यादिना षत्वादिकार्यम्। "अथाऽक्षमिन्द्रिये। ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे"इत्यमरः। "अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके। रुद्राक्षेन्द्राऽक्षयोः सर्पे बिभीतकरावपि। चक्रे कर्षे पुमान् क्लीबं तुत्थसौवर्चलेन्द्रिये" इति मेदिनी।

स्नुव्रश्चि। स्नु प्ररुआवणे, ओव्रश्चू छेदने, कृती छेदने, ऋषी गतौ, एभ्य सः कित्स्यात्। स्नुषा पुत्रवधूः। वृक्षः इति। सस्य कित्त्वात् "ग्रहिज्या" इति संप्रसारणम्। "ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान्। कृतवेधेऽप्यन्यलिङ्गं नक्षत्रे पुंनपुंसक"मिति मेदिनी। ऋषेर्जातौ।पूर्वसूत्रेणैव सिद्धे ऋषेर्जातावेवेति नियमार्थं सूत्रम्। तेनाऽन्येभ्यस्त्रिभ्यः केवलयौगिकत्वेऽपि सप्रत्ययो भवति।

उन्दिगुधि। उन्दी क्लेदने, गुध रोषे,कुष निष्कर्षे, एभ्यः सः कित्स्यात्। "अनिदिता"मिति नलोपः। "उत्सः प्ररुआवणं

वारी"त्यमरः। "गुत्सः स्यात्स्तबके स्तम्बे हारभिद्ग्रन्थिपर्णयोः" इति मेदिनी। गुच्छश्च। "गुत्सो गुच्छो गुलुञ्छव"दिति द्विरूपकोशात्। "()सयाद्गुच्छः स्तबके स्तम्बे हारभेदकलापयोः" इति चवर्गद्वितीयान्ते मेदिनीकोशाच्च।

गृधि। गृधु अभिकाङ्क्षायाम्, पम व्यवहारे स्तुतौ च। ननु गृधेश्चर्त्वेन गृत्स इति सिद्धे दकारविधानं व्यर्थमिति चेत्। मैवम्। चर्त्वस्याऽसिद्धत्वेन "एकाचो बश" इति भष्()भावप्रसङ्गात्। न चैवमपि प्रक्रियालाघवाय तकार एव विधीयतामिति शङ्क्यं , "चयो द्वितीयाः" इति पक्षे तकारस्य थकारापत्तेः। पक्षो मासाऽर्धके पार्(ो ग्रहे साध्यविरोधयोः। केशादेः परतोवृन्दे बले सखिसहाययोः। चुल्लीरन्ध्रे पतत्रे च राजकुञ्जरपार्(ायोः" इति हेमचन्द्रः। "असेः सरन्" इत्युज्जवलदत्तादिपाठस्तु प्रामादिकः, नित्स्वरापत्तेः। इष्यते तु प्रत्ययस्वरेणाऽक्षरशब्दस्य मध्योदात्तत्वम्। "ऋचो अक्षरे परमे व्योमन्" इत्यादिऋङ् मन्त्रेषु , "त्रीणि च शतानि षष्टिश्चाक्षराणी"ति यजुषी च तथैव पाठात्। अत एवाऽश्नोतेर्वा सरोऽक्षरमिति द्वितीयाह्निकान्ते भाष्यकृतोक्तम्।

वसेश्च। वस निवासे, अस्मादपि सरः स्यात्। "सः स्याद्र्धदातुके" इति तत्त्वम्।

सपूर्वादिति। पाठान्तरम्। तच्च लक्ष्यविरोधादुपेक्ष्यम्।

कृधू। डुकृञ् करणे, धूञ् कम्पने, मदी हर्षे, एभ्यः सरः कत्स्यात्। "कृसरः स्या"दित्यादि हारावलीस्थम्। "धूसरी किन्नरीभेदे ना खरे त्रिषु पाण्डुरे" इति मेदिनी। मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान्। असह्यपरसंपत्तौ कृपणे चाभिधेयव"दिति च। "मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु" इत्यमरः। "अथ मत्सरः()।असह्यपरसंपत्तौ मात्सर्ये कृपणे क्रुधी"ति वि()आः। वेदे तु मदी हर्षे इति योगार्थं पुरस्कृत्य प्रयुज्यते-- "हन्दुमिन्द्राय मत्सरम्"। "तं सिन्धवो मत्सरमिन्द्रियाणमि"त्यादि। मत्सरं हर्षहेतुमिति तद्भाष्यम्।

पतेः। पत्लृ गतावस्मात्सरः स्याद्रेफस्य लश्च।

तन्यृषि। तनु विस्तारे, ऋषी गतौ। अमरोक्तिमाह-- तसर इति। कित्वात् "अनुदात्तोपदेशे"त्यादिनाऽनुनासिकलोपः। ऋक्ष ऋत्विगिति। "ऋक्षरं वारिधारायामृक्षरस्त्वृत्विजि स्मृतः" इति मेदिनी। "अनृक्षरा ऋजवः सन्तु पन्थाःर" इति मन्त्रस्य वेदभाष्ये तु ऋक्षरः कण्टक इति व्याख्यातम्।

पीयुक्वणिभ्याम्। अण रण इति दण्डके क्वणिः पठ()ते स च शब्दार्थकः। आभ्यां कालन् स्याद्यथाक्रमं ह्रस्वः,संप्रसारणं च। "राजादनः प्रियालः स्या"दित्यमरः। "प्रियालः स्यात्पियादलव"दिति द्विरूपकोशः। बाहुलकाद्भञ्जेरपि कालन्। कित्वान्नलोपः।न्यङ्क्वादित्वात्कुत्वम्। "भगालं नरमस्तकम्"। मत्वर्थे इनिः। "चण्डिका()तो बगाली च लेलिहानो वृषध्वज" इत राजशेखरः।

कठिकुषि। कठ कृच्छ्रजीवने, कुष निष्कर्षे। "कुषाकुः कपिवह्न्यर्के ना परोत्तापिनि त्रिषु" इति मेदिनी। उज्ज्वलदत्तस्तु "कटिकषिभ्या"मिति पठित्वा कषशिषेति दण्डकदातुमुपन्यस्य कषाकुरित्युदाजहार, तत्कोशविरुद्धम्। मेदिनीकोशे ह्युपकारप्रक्रमे पाठात्।

सर्तेः। सृ गतावस्मात्काकुः स्याद्धातोर्दुगागमश्च। "सृदानुर्नाऽनिले चक्रे ज्वलने प्रतिसूर्यके" इति मेदिनी।

वृतेः। वृतु वर्तने।"वार्ताकुः प्रियवार्ताकी वृन्ताकोऽपि च दृश्यते" इति द्विरूपे वि()आः। "वार्ताको हिङ्गुली सिंही भाण्टाकी दुष्प्रधर्षणी"त्यमरः। "वार्ताकं पित्तलं किंचिदङ्गारपरिपाचित"मिति वैद्यशास्त्रम्। पर्देः। पर्द कुत्सिते शब्दे। अस्मात्काकुः

स्यात्स च नित्। धातोः रेफस्य संप्रसारणमकारलोपश्च। वि()आकोशस्थमाह-- पृदाकुरिति। "पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमा"निति मेदिनी।

सृयु।सृ गतौ, यु मिश्रणे,वच परिभाषणे। "सरण्युस्तु पुमान् वारिवाहे स्यान्मातरि()आनी"निति मेदिनी। "सरण्युरस्य सूनुर()आः" इति मन्त्रस्य भाष्ये सरण्युः शीघ्रगामीति व्याख्यातम्। "यवागूरुष्णिकाश्राणा विलेपी तरलाच सा"इत्यमरः। "वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयव"दिति मेदिनी।

आनकः। शीङ् स्वप्ने, ञिभी भये। विभेत्यस्मादिति भयानको भयङ्करः।"भयानकः स्मृतो रसे राहौ भयङ्करे"इति मेदिनी।

आणको। लूञ् छेदने, धूञ् कम्पने, शिघि आघ्राणे, डुधाञ् धारणषोषणयोः। हारावलीस्थमाह-- शिङ्घाणमिति। "शिङ्घाणं काचपात्रे स्याल्लोहनासिकयोर्मले"इति वि()आः। "शिङ्घाणः फेनडिण्डीरो नक्ररेतश्च पिच्छिलः" इति विक्रमादित्यकोशः।

उल्मुक। एते निपात्यन्ते। निपातनप्रकारमेवाह-- उष दाहे इत्यादि। हारावलीस्थमाह-- उल्मुकमिति।"दर्विः कम्बिः खजाका च" इत्यमरः।

ह्रियः। ह्री लज्जायामस्मात्कुक्प्रत्ययः स्यात्। ककारो गुणनिषेधार्थः।

हसि। हसे हसने, मृङ् प्राणत्यागे,गृ? निगरणे, इण् गतौ, वा गतिगन्धनयोः, अम गत्यादिषु,दमु उपशमे, लूञ् छेदने, पूञ् पवने, धुर्वी हिंसायाम्। "हस्तः करे करिकरे सप्रकोष्टकरेऽपिच। ऋक्षे केशात्पपरो व्राते" इति मेदिनी। अत्रायमर्थः-- केशावाचकात्परो यो हस्तशब्दः ससमूहवाची। तथा च केशहस्तशब्दः केशसमूहशब्दपर्याय इति। मर्तो भूलोकस्तत्र भवो मत्र्यः। दिगादेराकृतिगणत्वाद्यत्। "गर्तस्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे" इति मेदिनी। "एतः कर्बुर आगते। अन्तः स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु" इति च। "दन्तोऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियाम्" इति च मेदिनी। लोतमश्रुणि चोरिते" इति वि()आः। "क्तक्तवतू निष्ठा"इतिसूत्रे "लोतो मेष"इति कैयटः। "पोतः शिशौ वहित्रे च" इति वि()आमेदिन्यौ। धूर्त इति। धूर्त इति। "लोपा व्योर्वली"ति वलोपः, "राल्लोपः" इत्यनेन लोपस्तु क्ङितीत्यननुवृत्तिपक्षे बोध्यः। "हलि चे"ति दीर्घः। "धूर्ते तु खण्()डलवणे धत्तूरे ना शठे त्रिषु" इति मेदिनी। तूस्तमिति। तुस खण्डन इत्यस्मात्तन्।

नञ्या। आप्लृ व्याप्तौ। अस्मान्नञ्युपपदे तन्स्यादिडागमश्च। बाहुलकान्नञो नलोपाऽभावः।

तनि।तनु विस्तारे,मृङ् प्राणत्यागे, आभ्यां तन्प्रत्ययः स्यात्स च कित्। कित्त्वादनुनासिकलोपः। "ततं वीणादिकं वाद्य"मित्यमरः। "अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम्। क्लीबं वीणादिवाद्ये स्यात्पुंलिङ्गस्तु समीरणे" इति मेदिनी। "मृतं तु याचितेमृत्यौ क्लीबं मृत्युमति त्रिषु" इति च।

अञ्जि। अञ्जू व्यक्तम्रक्षणादौ, घृ क्षरणदीप्त्योः, षिञ् बन्धने,एभ्यः क्तः स्यात्। निष्ठासंज्ञात्वेतस्य न भवति,उणादीनमव्युत्पन्नत्वाद्बाहुलकाद्वा। अन्यथा "निष्ठा द्व्यजना"दित्याद्युदात्तत्वं स्यादिति "क्तक्तवतू निष्ठे" ति सूत्रे कैयटः। अक्तं-- परिच्छिन्नम्। "अक्तपरिमाणवाचक" इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात्। "अक्तं व्याप्ते च सङ्कुले इति वि()आ" इत्युज्वलदत्तेनोक्तम्, तच्चलिपिभ्रमप्रयुक्तम्। वि()आकोशे जले क्लीबं प्रदीप्ते त्वभिधेयवत्"। "सितमवसिते च बद्धे धवलेत्रिषु शर्करायां स्त्री" इति मेदिनी। बाहुलकात् ऋ गतावित्यस्मात् क्तः। ऋतमुञ्छशिले

जले।सत्ये दीप्ते पूजिते स्या"दिति मेदिनी।

दुतनि। दु गतौ, तनु विस्तारे, आभ्यां क्तः स्याद्धातोर्दीर्घश्च। दूतः प्रेष्यः। गौरादित्वान्ङीष्। दूती।कथं तर्हि "तेन दूति। विदितं निषेदुषा" इति रघुरिति चेत्। अत्राहुः -- दूङ् परितापे इत्यस्मात् क्तिचि दूतिरिति। "दूत्यांदूतिरपि स्मृता" इति द्विरूपकोशः। "तातोऽनुकम्प्ये जनके" इति वि()आमेदिन्यौ। बाहुलकात् शीङ् स्वप्ने इत्स्मादपि क्तः। शीता लाङ्गलपद्धतिः। "सीता लाङ्गलपद्धतिः। वैदेहीस्वर्गगङ्गासु" इति दन्त्यादौ मेदिनी। "सीता लाङ्गलरेखा स्याद्व्योमगङ्गा च जानकी"ति दन्त्यादौ रभसकोशाच्च।

जेः। जि जये, अस्मात् क्तप्रत्ययस्तस्योदात्तमुडागमः स्यात्। दीर्घ इत्यनुवृत्त्या धातोर्दीर्घश्च स्यात्। इदं सूत्रमनार्षमिति केचित्। अतएव वृत्त्यादिग्रन्थे पृषोदरादिषु जीमूतशब्द उदाहृतः। "तीमूतोऽद्रौ मृतिकरे देवताडे पयोधरे" इति मेदिनी। "वेणी खरा गरी देवताडो जीमूतः" इत्यमरः। "जोमूतः स्याद्भृतकरे घने" इति वि()आः।

लोष्ट।लूञ् छेदने, पल गतौ,एतौ क्तान्तौ निपात्येते। "लोष्टानि लेष्टवः पुंसि" इत्यमरः। अत्र पुंसीत्युभयान्वयि। तेन पुंनपुंसकलिङ्गो लोष्टशब्दः। तथा च "स्थानेऽन्तरतमः" इति सूत्रे भाष्यं "लोष्टः क्षिप्तो बाहुवेगं गत्वे"त्यादि।अत एव "लेष्टुः शण्डेऽपि लोष्टः स्यात्" इति पुंलिङ्गकाण्डे बोपालितः। "पलितं शैलजेतापे केशपाके च कर्दमे" इति मेदिनी।

ह्रश्या। ह्रञ् हरणे,श्यैङ् गतौ। "हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यव"दिति मेदिनी। "शुक्लशुभ्रशुचि()ओतविशदश्येतपाण्डराः" इत्यमरः।

रुहेः। रुह बीजजन्मनि प्रादुर्भावे च। अस्मादितन्। "रोहितं कुङ्कुमे रक्तेऋजुशक्रशरासने। पुंसि स्यानमीनमृगयोर्भेदे रोहितकद्रुमे" इति मेदिनी। "लोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने। पुमान् नदान्तरे भौमे वर्णे च त्रिषु तद्वति" इति च।

पिशेः। पिश अवयवे। अयं दीपनायामपि। अस्मादितन्स्यात्स च कित्। "पिशितं मांसम्, मांस्यां स्त्री"ति मेदिनी। मांस्यां--जटामांस्याम्। तथा च "जटा च पिशिता पेसी"ति धन्वन्तरिः।

श्रुदक्षि। श्रु श्रवणे, दक्ष वृद्धौ, स्पृह ईप्सायाम्,गृहू ग्रहणे, चुरादावदन्तौ। "उद्यतरुआउचे भवसि श्रवाय्यः" इति मन्त्रे श्रवाय्यो = मन्त्रैः श्रवणीय इति वेदभाष्यम्। "दक्षाय्यो यो दम आस नित्यः" इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः। स्पृहयाय्यः। "अयामन्ते" णेरयादेशः। एवं-- गृहयाय्य इति। दिधिषाय्य इति। डुधाञ् धारणपोषणयोः। उज्ज्वलदत्तस्तु दधिषाय्य इति सूत्रं पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वं च, दधिषाय्यो घृतमिति व्याख्यात्। दशपादीवृत्तिकारस्तु धिषु शब्दे अस्य द्वित्वं, गुणाऽबावः, अत्वं चाऽभ्यासस्य निपात्यत इत्याह, प्रसादकारादयोऽप्येवमेवाहुस्तदेतत्सर्वं प्रामादिकम्। "मित्र इव यो दिधिषाय्योऽभूत्" इति वैदिकप्रयोगाद्दिधिषाय्य इत्येव सूत्रं युक्तिमिति प्रमाणिकाः।

वृञः। वृञ् वरणे। वरेण्यः = श्रेष्ठः।

स्तुवः। ष्टुञ् स्तुतौ। स्तुषेय्यं स्तोतव्यम्। पुरुवर्चसं = बहुरूपमिति वेदभाष्यम्। स्तुवः केय्य इति पठित्वा कित्वाद्गुणाऽभावे उवङि सति स्तुवेय्यः पुरन्दर इत्युदाहरन्नुज्वलदत्तस्तु उदाहृतश्रुतितद्भाष्यादिविरोधादुपेक्ष्यः। तस्मादिह क्सेय्यप्रत्ययं पठन् दशपादीवृत्तिकृदेव ज्यायानित्याहुः।

राजेः। राजृ दीप्तौ। क्षत्रियजातौ तु "राज()आराद्य"दिति यत्प्रत्यये राजन्य इत्यन्तस्वरितः।

शृ()रम्योः। शृ? हिंसायाम्, रम क्रीडायाम्। आभ्यामन्यः स्यात्।

अर्तेः। ऋ गतौ।अस्मादन्यः, स च नित्। "अटव्यरण्यं बिपिन"मित्यमरः।

पर्जन्यः। पृषु सेचने, षस्य जः। "पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशकयोः" इति मेदिनी।

वदेः। वद व्यक्तायां वाचि। अजयकोशस्थमाह--वदान्य इति।

अमिनक्षि। अम गत्यादिषु, नक्ष गतौ, नक्ष गतौ, यज देवपूजादौ, वध हिंसायाम्, पत्लृ गतौ। नक्षत्रमिति। "नभ्रण्नपा"दिति सूत्रे नञः प्रकृतिभावेन नक्षत्रमिति साधितं तत्तु व्युत्पत्त्यन्तरमिति बोध्यम्। यजत्रमग्निहोत्रमिति व्याख्यातत्वात्। अमरकोशस्थमाह--पतत्रं चेति।

गडेः। गड सेचने, अस्मादत्रन्स्याद्दकारस्य ककारादेशश्च। "कलत्रं श्रोणिभार्ययोःर" इत्यमरः।

वृञः। वृञ् वरणे अस्मादत्रन् चित्स्यात्। चित्त्वादन्तोदात्तः। "नघ्री वध्री वरत्रा स्यात्" इत्यमरः। "वरत्रायां दार्वानह्यमानः" इत्यादौ चित्स्वरः स्पष्टः।

सुविदेः कत्रः। विद ज्ञाने। इह कत्रन्निति नितंकेचित्पठन्ति, तत्प्रामादिकम्। "बृहस्पतेः सुविदत्राणि राध्या"इत्यादौ नित्स्वराऽदर्शनात्। कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्चेत्याहुः।

कृतेः। कृती छेदने, अस्मात्कत्रः स्याद्धातोर्नुमागमश्च। "धन्व च यत्कृन्तत्रं चे"ति कृनतत्रं कर्तनीयमरण्यमिति वेदभाष्यम्।

शृमृ। मृञ् भरणे, भङ् प्राणत्यागे, दृशिर् प्रेक्षणे,यज देवपूजादौ, परव पूरणे, डुपचष् पाके,अम गतौ, तमु काङ्क्षायाम्, णम प्रह्वत्वे शब्दे च, हर्य गतिकान्त्योः। दशपाद्यां तु भृदृशीङिति पठित्वा दृङ् आदरे द्रियते दरतः शेते शयतः इत्युदाहृतम्। तन्न। "रुशन्तम()ग्न दर्शतं बृहतम्, "तरणिर्वि()आदर्शतःर" "दैव्यो दर्शतो रथः" इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात्। "भरतो नाट()शास्त्रे मूनौ नटे। रामानुजे च दौष्यन्तौ" इति मेदिनी। यजत ऋत्विगिति। उज्ज्वलदत्ताद्यनुरोधेनैवमुक्तम्। वेदभाष्ये तु "हिरण्यशृङ्गं यजतौ बृहन्त"मित्यादिषु यजतशब्दो यष्टव्यपरतया व्याख्यातः। "पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः।देवमुन्यन्तरे शैले"इति मेदिनी। हर्यतोऽ()आ इति। "परि त्यं हर्यतं हरिम्" ["आनर्यताय धृष्णवे"] इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम्।

पृषि। पृषु सेचने, रञ्ज रागे, आभ्यामतच् कित्स्यात्। "पृषन् मृगेपुमान् बिन्दौ न द्वयोः पृषतोऽपि ना। अनयोश्च त्रिषु ()ओतबिन्दुयुक्तेऽप्युभाविमौ" इति मेदिनी। "रजतं त्रिषु शुक्ले स्यात् क्लीबं हारेच दुर्वर्णे" इति च।

खलतिः। स्खल संचलने।

शीङ्शपि। शीङ् स्वप्ने, शप आक्रोशे, रु शब्दे, गम्लृ गतौ, वञ्चु गतौ भ्वादिः, वञ्चु प्रलम्भने चुरादिः, जीव प्राणधारणे,अन प्राणने प्रपूर्वः। उज्ज्वलदत्तेनाऽत्र वञ्चिजीवीति पठ()ते। अन्यैस्तु वञ्चिस्थाने वन्दिः पठ()ते। वञ्चथवन्दथयोरन्यतरं वेदादावुपलभ्य बहुश्रुतैः पाठो निर्णेयः। वन्दथ इति। कर्मणि कर्तरि वा प्रत्ययः। प्रणथ इति। "अनितेः" इति णत्वम्। शमिदमिभ्यामिति। शम उपशमे,दमु उपशमे। "शमथः शान्तिमन्त्रिणोः" इति मेदिनी। "दमथस्तु पुमान् दण्डे दमे च परिकीर्तितः" इति च।

भृञः। डुभृञ् धारणपोषणयोः। अस्मादथः स्यात्सच चित्।

रुदि। रुदिर् अश्रुविमोचने,विद ज्ञाने, आभ्यामथः स्यात्स च ङित्। "विदथो योगिकृतिनोः" इति मेदिनी। अत्रोज्ज्वलदत्तो रुविदिभ्यां किदिति पठित्वा रौतीति रुवथः ()ओत्युदाजहार। दशपादीवृत्तिकारस्तु रुदिविदिभ्यां किदिति पपाठ। इह तु भाष्यानुरोधेन ङिदिति पठितम्। तथाहि "गाङ्कुटादि"सूत्रे "के पुनश्चङादयः? चङङ्()नजिङ्थङ्नङ्" इति भाष्यम्। किदिति पठतां तु अथङिति भाष्यं न सङ्गच्छेतेति दिक्।

उप। वस निवासे, अस्मादुपसर्गे अथः स्यात्। उज्ज्वलदत्तेन तु सोपसर्गाद्वसेरिति पठितम्, अन्यैस्तु आङि वसेरिति पठितम्।

अत्यवि। अत सातत्यगमने अव रक्षणादौ,चमु अदने,तमु काङ्क्षायाम्, णम प्रह्वत्वे शब्दे च, रभ राभ्स्ये,डुलभष् प्राप्तौ, णभ तुभ हिंसायाम्, भ्वादौ क्र्यादौ चायम्। तप सन्तापे, पत्लृ गतौ,पण व्यवहारे स्तुतौ च, पन च, मह पूजायाम्। गौरादित्वात् ङीष्। "अतसी स्यादुमा क्षुमा" इत्यमरः। "चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रिया"मिति मेदिनी। "पनसः कण्टकिफले कन्दके वानरान्तरे। स्त्रियां रोगप्रभेदे स्यात्" इति च।

वेञः। वेञ् तन्तुसन्ताने, अस्मादसच् स्यात्तस्य तुट्। दशपादीवृत्तौ तु "वियस्तुट् चे"ति पठित्वा वी गतिप्रजनकान्त्यादिष्विति धातुरुदाहृतः।

वहि। वह प्रापणे, यु मिश्रणादौ, "अजगरे" शयुर्वाहस इत्युभौ" इत्यमरः। "वा तु क्लीबे दिवसवासरौ" इति च। यावस इति। असचो णित्त्वाद्वृद्धिः।

दिवः। दिवु क्रीडादौ।

कृ()शृ()। कृ? विक्षेपे, शृ? हिंसायाम्,शल गतौ, कल विलेखने,गर्ग शब्देष "करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते"इति मेदिनी। "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः। "शरभस्तु पशोर्भिदि"। "करभो वानरभिदि" इति मेदिनी। "समौ पतङ्गशभौ" इत्यमररः। "कलभः करिपोतकः" इति च। "गर्दभः ()ओतकुमुदे गर्दभो गन्धभिद्यपि। रासभे गर्दभी क्षुद्रजन्तुरोगप्रभेदयोः" इति मेदिनी।

ऋषि। ऋषी गतौ,वृषु सेचने, आभ्यां अभच् स्यात्स च कित्। "ऋषभस्त्वौषधान्तरे। स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः। उत्तरस्थः स्मृतः श्रेष्ठे स्त्रीनराकारयोषिति। शूकशिम्ब्यां शिरालायां विधवायां क्वचिन्मता" इति मेदिनी।

जृ()विशि।जृ? वयोहानौ,विश प्रवेशने। "वेशन्तः पल्वलं चाल्पसरःट इत्यमरः। बाहुलकादर्हतेरपि झच्। अर्हन्तः क्षपणको जिनः"इति विक्रमादित्यकोशः।

रुहि। रुह बीजजन्मनि प्रादुर्भावे च, टुनदि समृद्धौ, जीव प्राणधारणे,अन प्राणने प्रपूर्वः। एभ्य आशिषि झच्, स च षिद्भवति। प्राणन्त इति। "अनितेः" इति णत्वम्।

तृ()भू। तृ? ल्पवनतरणयोः,भू सत्तायाम्,वह प्रापणे वस निवासे, बासृ दीप्तौ, साध संसिद्धौ,गड सेचने, मडि भूषायाम्, उभौ ण्यन्तौ। जि जये, टुनदि समृद्धौ ण्यन्तः। नन्दयन्त इति। उज्ज्वलदत्तस्तु स्वयमेवानुवर्तितत्वात्।

हन्तेः। हन हिंसागत्योरस्मात् झच्()प्रत्ययः स्यात्तस्य मुडागमः, धातोर्हिरादेशश्च।

भन्दे। भदि कल्याणे सुखे च। अस्मात् झच् स्याद्धातोर्नकारलोपश्च।

ऋच्छेः। ऋच्छ गतौ। बाहुलकादिति। जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु। परिभाषणभत्र्सनयोरिति तुदादौ। "जर्जरं शैवले शक्रध्वजे त्रिषु जरत्तरे। झर्झरः स्यात्कलियुगे वाद्यभेदे नदान्तरे" इति च मेदिनी। बाहुलकादेव झस्य जादेशे जर्झर इत्युज्ज्वलदत्तः।

अर्तिकमि। ऋ गतौ, कमु कान्तौ,भ्रमु अनवस्थाने, चमु अदने, दिवु क्रीडादौ, वस निवासे, उभावपि ण्यन्तौ। "अररं छदकपाटयोः"इति मेदिनी। "कपटामररं तुल्ये" इत्यमरः। "भ्रमरः कामुके भृङ्गे" इति मेदिनी। "चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः"इति च। चमरोमृगभेदः। देवरः पत्युः कनिष्ठभ्राता। वासर इति। केचित सूत्रे वाशिभ्य इति तालव्यं पठित्वा वाशृ शब्द इत्यस्मादरप्रत्यये वाश्यत इतिवाशरः कोकिल इत्याहुः।

कुवः। कु शब्दे। अङ्गि।अगिर्गत्यर्थः,मदी हर्षे,मदि स्तुत्यादौ।"अङ्गार उल्मुके न स्त्री पुंलिङ्गस्तु महोसुते" इति मेदिनी। "मन्दारः स्यात्सुरद्रुमे। पारिभद्रेऽर्कपर्णे च मन्दारो हस्तिधूर्तयोः" इति च। मदि स्तुत्यादावित्स्माद्बाहुलकादारुरपि। "पारिभद्रे तु मन्दारुर्मन्दारः पारिजातकः" इति शब्दार्णवः।

गडेः। गडि वदनैकदेशे,गड सेचने, अस्मादारन्प्रत्ययः स्यात्कडादेशश्च। "कडारः कपिले दासे"इति मेदिनी। "कडारः कपिलः पिङ्गः" इत्यमरः।

शृङ्गार। शृ? हिंसायाम्, डुभृञ् धारणपोषणयोः,एतौ निपात्येते। आभ्यामारन्नुम् गुग् ह्रस्वश्च। "शृङ्गारः सुरते नाट()ए रसे च गजमण्डने। नपुंसकं लवङ्गेऽपि नागसंभवचूर्णयोः"इति मेदिनी। "भृङ्गारी झिल्लिकायां स्यात्कनकालौ पुनः पुमान्" इति च।

कञ्जि। मृजू शुद्धौ, चित्वादारन्प्रत्ययः, अन्तोदात्तः। कञ्जारो जरठे सूर्ये विरञ्चौ वारणे मुनौ"इति वि()आमेदिन्यौ। "मार्जार ओतौ खट्वाङ्गे"इति च। "ओतुर्बिरडालो मार्जारः"इत्यमरः।

कमेः। कमु कान्तौ, अस्मादरन्कित्स्यात्। "कुमारः स्याच्छुके स्कन्दे युवराजेऽ()आवारके। बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने। कुमारी सैलतनयावनकाल्योर्नदीभिदि। सहापरजिताकन्याजम्बुद्वीपेषु च स्त्रिया"मिति मेदिनी। वि()आप्रकाशेतु "कुमारी रामतरणी"ति पाठः।रामतरणी लताविशेषः। सहेति प्रसिद्धः। " तरणो रामतरणी कर्णिका चारुकेसरा। सहा कुमारी गन्धाढ()आ" इतिधन्वन्तरिनिघण्टुः। "जम्बूद्वीपसहाकन्याः कुमार्योऽथा()आवारके। बालके कार्तिकेये च कुमारो भर्तृदारके" इति त्रिकाण्डशेषः।

तुषारा। एते निपात्यन्ते। तुष तुष्टौ आरन्। "तुषारस्तुहिं दीङ् क्षये, अस्मादारम्, चस्य नुडागमश्च।

सृ गतौ अस्मादपः स्याद्धातोः षुगागमश्च।

उषि। उष दाहे, कुट कौटिल्ये,दल विदारणे, कच बन्धने, खज मन्थे।

क्वणेः। क्वण शब्दे। अस्मात्कपन् धातुवकारस्य संप्रसारणं च। "कुणपः पूतिगन्धे शवेपि चे"ति मेदिनी। "कुणपः शवमस्त्रिया"मित्यमरः।

विटप। "विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे। विटाधिपे ना" इति मेदिनी। विशत्तेरिति।विश प्रवेशने। आदेः प इति। एतच्च उज्ज्वलदत्तरीत्योक्तम्। अ()नये तु सूत्रे विष्टपेति दन्त्यादौष्ठ()आदिमेव पठन्ति। युक्तं चैतत्। "अत्र ब्राध्नस्य विष्टपम्" इत्यादौ तथा दर्शनात्। अमरकोशेऽपि"विष्टपं भुनं जगत्" इति प्रचुरपाठाच्च। वलवल्ल संवरणे संचरणे च। "उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे" इति मेदिनी।

वृतेः। वृतु वर्तने।

कृतिभिदि। कृती छेदने, भिदिर् विदारणे, लतिः सौत्रो धातुः।

इष्यशि। इष इच्छायाम्, अशू व्याप्तौ,आभ्यां तकन् कित्स्यात्। इष्टकेति। "इष्टकेषीकामालाना"मिति निर्देशात् "प्रत्ययस्था" दिति नेत्त्वम्। केचित्तु प्रत्ययस्थादितीत्वमिह न भवति, अनित्यत्वात्। तज्ज्ञापकं तु "मृदस्तिकन्ि‍ति इकारोच्चारणित्याहुः।

इणस्तश। एतशा इति। "अत्वसन्तस्ये"ति दीर्घः। एतशसौ। एतशसः।

वीपति। पत्लृ गतौ।"पत्तनं पुटभेदन"मति पुरीपर्यायेष्वमरः।

दृ()दलि। दृ? विदारणे, दलविकसने।

अर्तिगृ()। ऋ गतौ। इयर्तीति अर्भः शिशुः।संज्ञायां कनिअर्भख-।"गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके" इति मेदिनी।

इणः। इण् गतौ,अस्माद्भन् कित्स्यात्। "इभः स्तम्बेरमः पद्मी" इत्यमरः।

असि। असु क्षेपणे,षञ्ज सङ्गे। "कीकसं कुल्यमस्थि च" इत्यमरः,"सक्थि क्लीबे पुमानूरुः इति च।

प्लुषि। प्लुष दाहे, कुष निष्कर्षे, शुष शोषणे।

अशेः। अशू व्याप्तौ, अस्मात् क्सिन्, नित्स्यात्। अक्षि नयनम्।

इष इच्छायाम्। "रसाल इक्षुः" इत्यमरः।

अवि। अव रक्षणादौ, तृ? प्लवनतरमयोः, स्तृ()ञाच्छादने,तत्रि कुटुम्बधारणे, चुरादिण्यन्तः। तरीरिति। "स्त्रियां नौस्तरणिस्तरिःर" इत्यमरः।

यापोः। या प्रापणे, पा पाने, आभ्यामीः कित्स्याद्द्वित्वं च धातोः।

लक्षेः। लक्ष दर्शनाङ्कनयोश्चुरादिण्यन्तः। अस्मादीप्रत्ययः स्यात्तस्य मुडागमो णिलोपश्च। "लक्ष्मीः पद्मा विभूतिश्च। "कृदिकारा"दिति ङीषि लक्ष्मीत्यपि भवतीपि रक्षितः। "लक्ष्मीः संपत्तिशोभयोः। ऋद्ध्योषधौ च पद्माया"मिति मेदिनी। इत्युणादिषु तृतीयः पादः।

अथ चतुर्थः पादः।

माधातोरिति। मा माने, कित्वात् "आतो धातोः" इत्यालोपः। "वातप्रमीर्वातमृगः" इत्यमरः। अयं स्त्रीपुंसयोः अयमिति। "द्विचतुः षट्पदोरगाः"इत्यमरेण चतुष्पाद्वाचिनामुभयलिङ्गतोक्तेः, सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः। तत्र "कृदिकारा"दिति पाक्षिकोऽपि ङीष् कैश्चिदिष्यते। न च ह्रस्वादेव "कृदिकारा" दिति ङीष् भवति न तु दीर्घादिति शङ्क्यं, वर्णनिर्देशे कारप्रत्ययस्य विधानेन दीर्घादपि "कृदिकारा"दिति ङीषः संभवात्। अत एव वातप्रमीश्रीलक्ष्मीति पक्षे ङ्यन्ताः सुसाधव इति रक्षितः। एतच्च दुर्घटग्रन्थे स्पष्टम्। "आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिस्त्रिया"मिति द्विरुपकोशः। अत एव "आशीविषो विषधरः" इत्यमरकोश सङ्गच्छते। अश भोजन इत्यस्मात् "इणजादिभ्यः" इति इण् प्रत्यये उपधावृद्धौ "कृदिकारा"दिति ङीषः स्वीकारात्। "आशीमिव कलामिन्दोः" इति राजशेखरः। "आशीर्हिताशंसाऽहिदंष्ट्रयो"रिति सान्तेऽमरात्सान्तोऽप्याशीः शब्दोऽस्तीत्यन्यदेतत्।

ऋतनि। ऋ गतौ, तनु विस्तारे, अञ्जू व्यक्त्यादौ, वनु याचने, अञ्जू स एव, ऋ गतौ ण्यन्तः, मदी हर्षे, अत सातत्यगमने अगि गत्यर्थः, कु शब्दे, यु मिश्रमे, कृश तनूकरणे। प्रसङ्गादाह--अरत्निरिति। न रत्निः अरत्निरिति नञ्समासः। प्रसृताङ्गुलिः स = हस्तः अरत्निरित्यर्थः। दशपादीवृत्तौ तु कत्निजित्यत्र ककारमपठित्वा अर्तेरत्निचमकितं विधाय अरत्निः साधितः। उज्ज्वलदत्तानुसारेणाह-- वायू रात्रिश्चेति। तन्यतुः शब्दो मेघः अशनिश्चेत्यपि बोध्यम्। "आविस्माऽस्य तन्यतोरिव द्यौः" इति मन्त्रे "दिवश्चित्रं न तन्यतु:"मिति मन्त्रे च तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात्। "अञ्जलिस्तु पुमान् हस्तसंपुटे कुडवेऽपि चे"ति मेदिनी। स्थविरान्त्रमिति। "वनिष्ठोह्मदयादधि" इति मन्त्रस्य भाष्ये तथोक्तत्वात्। अञ्जिष्ठ इति। केचिदञ्जेरिष्णुचमिच्छनति तेषामञ्जिष्णुरुदाहरण्। अर्पिस इति। "अर्तिह्री" त्यादिना पुक्। "णरेरनिटी" ति णिलोपः। मदेरिति। "मत्स्यो मीनेऽथ पुंभूम्नि देशे" इति मेदिनी। "अतिथिः कुशपुत्रे स्यात्पुमानागन्तुके त्रिषु" इति च। "अङ्गुलिः करशाखायां कर्णिकायां गजस्य चे"ति च। कवसः सन्नाहः कङ्कटजातिश्च। अच इति"कवचो गर्दभाण्डे च संनाहे पर्पटेऽपि च" इति मेदिनी। योतेरिति। "दुरालभाकटुस्पर्शा यासो धन्वयवासकः" इति धन्वन्तरिनिघण्टुः। "कृशानुः पावकोऽनलः" इत्यमरः।

श्रः। शृ? हिंसायाम्। "शर्करा खण्डविकृतौ उपलाकर्पराऽशयोः। शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च" इति मेदिनी।

पुषः। पुष पुष्टौ, अस्मात्करन्स्यात्स च कित्। "पुष्करं खेऽम्बुपद्मयोः। तूर्यवक्रेखड्गफले हस्तिहस्ताऽग्रकाण्डयोः। कुष्ठौषधिद्वीपतीर्थभेदयोश्च नपुंसकम्। ना रोगनागविहगनृपभेदेषु वारुणौ" इति मेदिनीं।

कलंश्च। पुष्यतेः कलन् स च कित्। "पुष्कलस्तु पूर्णे श्रेष्ठे" इति हेमचन्द्रः।

गमेः। गम्लृ गतौ। "भविष्यति गम्यादयः" इत्याशयेनाह-- गमिष्यतीति।

आगामीति इनि प्रत्ययस्य णित्त्वादुपधावृद्धिः। आगमिष्यतीत्यर्थः।#()

भुवश्च। भू सत्तायाम्। अस्मादिनिः स च णित्स्यात्। भविष्यतीति भावी।

प्रे स्थः। ष्टा गति निवृत्तौ, प्रपूर्वादस्मादिनिः स च णित्। णित्तवात् "आतो युक् " इति युक्। प्रस्थायी गन्तुकामः।

परमे। परमशब्दे उपपदे तिष्टतेरिनिः कित्स्यात्। कित्त्वादातो लोपः। "हलदन्ता"दित्यलुक्। "परमेष्ठी पितामहः" इत्यमरः।

मन्थः। मन्थ विलोडने। मन्था इति। "पथिमथि" इत्यात्वम्। "इतोऽत्सर्वनामस्थाने"। "मन्था मन्थनदण्डे च वज्रे

वातेऽपि च स्मृतः"।

पतः। पत्लृ गतावित्यस्मादिनिः स्थश्चान्तादेशः। पथे गतावित्यस्मात्पचाद्यचि अकारान्तोऽप्यस्ति। "वाटः पथश्च मार्गश्चे"ति सुभूतिचन्द्रः। "त्वचि त्वचः किरोऽपि स्यात्किरौ प्रोक्तः पथ पथि" इति द्विरुपेषु वि()आः। इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे "अन्येब्योऽपि दृश्यते" इति डः। "ऋभुक्षः स्वर्गवज्रयोः"इति वि()आः। ततो मत्वर्थीयेनिः। ऋभुक्षिन्निति नान्तं प्रातपदिकम्। "पथिमथी"त्यात्वे "इतोऽटदित्यत्वे च ऋभुक्षा इन्द्रः, ऋभुक्षाणौ ऋभुक्षाण इत्युज्ज्वलदत्तः। दशपाद्यां तु "अर्तेः भुक्षिनक्" इति सूत्रमुपन्यस्य तस्य ऋभुक्षिन्नित्युदाह्रतम्। "ऋभुक्षिणमिन्द्रमाहुव ऊतये" इति मन्त्रस्य वेदभाष्ये तत्सूत्रमुदाह्रतम्। अत्रायं विवेकः --- इनिप्रत्ययान्ता इति मते अन्तोदात्तत्वं न्याय्यं, प्रत्ययस्वरेण इनेरिकारस्योदात्तत्वात्। अवग्रहाऽभावो बाहुलकात्। द्वितीयमते त्ववग्रहाऽभावो न्याय्यः, परन्तु प्रत्ययस्वरेणोकारस्योदात्ततया भुक्षिनक्()प्रत्ययान्तस्य मध्योदात्तत्वे प्रसक्ते बाहुलकादन्तोदात्तः स्वीकर्तव्य इति।

खजेः। खज मन्थे।

बलाका।बल प्राणने, शलगतौ, पत्ल गतौ,एते आकप्रत्ययान्ता निपात्यन्ते। "बलाका बकपङ्किः स्याद्बलाका बिसकण्ठिका। बलाका कामुकी प्रोक्ता बलाकश्च बको मतः" इति वि()आशा()आतौ। "शलाकाऽञ्जनयष्टिका"। "पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च" इति वि()आः। "पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः" इति मेदिनी।

पिनाका। एतेआकप्रत्ययान्ता निपात्यन्ते। पा रक्षणे, "पिनाकोऽस्त्री रुद्रचापे पांशुवर्पत्रिशूलयोः" इति मेदिनी। अमरोक्तिमाह क्लीबपुंसोरिति। किञ्च पिष्लृ संचूर्णने, षकारस्यणत्वं दातोर्यगागमः। "पिण्याकोऽस्त्री तिलकल्के हिङ्गुबाह्लीकसिह्लके" इति मेदिनी।

कषि। कष खषेति दण्डके हिंसार्थकः। दुष वैकृत्ये ण्यन्तः। "दोषो णौ" इत्युपधाया ऊकारः। अमरोक्तिमाह-- दूषिकेति। किञ्च अकृतेऽपि ईकनि दूषयतेः "अचः इः"इति इप्रत्यये दूषिः। "कृदिकारा"दिति ङीषि दूषी। उभाभ्यामपि स्वार्थे कनि दूषिका ह्यस्वमध्यैव। "केऽणः" इति ङीषोऽपि ह्यस्वादेशात्। "पिचण्डी दूषिका दूषी पिचाटं च दृशोर्मल"मिति विक्रमादित्यकोशः। "दूषिका तूलिकायां च मले स्याल्लोचनस्य चे"ति मेदिनी। "ह्मषीकं विषयीन्द्रिय" मित्यमर।

चङ्कणः। कणधातोर्यङ्लुकि प्रत्ययलक्षणन्यायेन "सन्यङोः" इति द्वित्वे "कुहोश्चुः" इत्यभ्यासस्य चुत्वे "नुगतोऽनुनासिकान्तस्य" इति नुकि चङ्कण्। ङसिङसोस्तु चङ्कणः। धातोरिति। चङ्कणित्यस्य।

शृ? पृ()।शृ? हिंसायाम्, पृ? पालनादौ, वृञ् वरणे, एब्य ईकन्, एषां द्विर्वचनमभ्यासस्य रुगागमश्च। शर्शरीक इत्यादि। उरदत्वे रपरत्वम्।

पर्फरीका। ईकन्नन्ता एते निपात्यन्ते। पर्फरादेश इति। एतच्चोज्ज्वलदत्तरीत्योक्तं, वस्तुतस्तु धातोर्द्वित्वमुकारस्याऽकारः, सलोपः, रुक् चाभ्यासस्येति दशपाद्यां यदुक्तदेव न्याय्यम्। "चरेर्नुम् चे"त्युत्तरग्रन्थानुरोदेन "द्वे रुक् चे"त्याद्यनुवृत्तेर्न्याय्यत्वात्। किसलयमिति। "नैतोशव तुर्फरीपर्फरीकौट इति शत्रूणां विदरयितारौ,स्तोतृ()णां पालकौ, इष्टार्थस्य पूरयितारौ चेति व्याख्यातम्। दर्दरीकमिति। दृ? विदारणे, अस्मादीकन्धातोर्दर्दरादेशः। झर्झरीकमिति। झृ()ष् वयोहानो, अस्मादीकन्थातोर्झर्झरादेशः। वस्तुतस्तु दर्दरीक झर्झरीकावपि पर्फरीकवद्धातोद्र्वत्वं रुक् चाभ्यासस्येति व्याख्येयौ। उत्तरखण्डे ऋकारस्य गुणे रपरत्वम्। तित्तिडीक इति। तिम ष्टिम ष्टीम आद्रीबावे,मकारस्योकारः, अभ्यासस्य तुक् च। "तित्तिडी चिञ्चाऽम्लिका" इत्यमरे तु शब्दान्तरं बोध्यम्। तथा च "तित्तिडी त्वम्लिका चिञ्चा तित्तिडीका

कपिप्रिया" इति वाचस्पतिः। "अम्लीका चाम्लीका चिञ्चा तित्तिडीका च तित्तिडा" इतिचन्द्रः। "अम्लीका चुकक्रिकाचुक्रा साम्ला शुक्राथ शुक्लिका।अम्लिका चिञ्चका चिञ्चा तित्तिडीका सुतिन्तडा"इति धन्वन्तरिनिघण्टुः। चरेरिति। चर गतिभक्षमयोरस्मादीकन् द्विर्वचमभ्यासस्य नुमागमश्च। "भ्रमरश्चञ्चरीकः। स्याद्रोलम्बो मधुसूदनः। इन्दिन्दिरः पुषपकीटो मधुद्रो मधुकेशटः" इति त्रिकाण्डशेषः। मर्मरीक इत्यादि। मृङ् प्राणत्यागे, डुकृञ् करणे, आभ्यामीकन् धातोर्द्वित्वम् अभ्यासस्य रुक्। "कर्कर्यालुर्गलन्तिका" इत्यमरः। पुण कर्मणि शुभे, णस्य डः, प्रत्ययस्य रुडागमश्च। "पुण्डरीकंसिताम्भोजे सितच्छत्रे न भेषजे। पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारान्तरेऽपि चे"ति मेदिनी।

इषेः। ईष गतावस्मादीकन् ह्रस्वश्च।कित्त्वाद्गुमाऽभावः। ह्रस्वविदानसामथ्र्यादेव गुणाऽभावे सिद्धेऽप्युत्तरार्थं कित्तवमित्याहुः। "इषीकास्यादीषिकापि वानायुजवनायुजौ" इति द्विरुपकोशः।

ऋजेः। ऋज गतौ।

सर्तेः। सृ गतावस्मादीकन्कित्स्याद्धातोर्नुमागमश्च। "सृणिकास्यन्दिनी लाला" इत्यमरः।

मृडः कीकच्। मृड सुखने। मृ()डः कीकन्नितयुज्ज्वलदत्तादिपाठः प्रामादिकः। मृडीकशब्दस्य चित्स्वरेणान्तोदात्तत्वात्। "मृडीके अस्य सुमतौ स्याम" इत्यादौ चित्स्वरस्यैव दर्सनात्।

अलीकाद। "अलीकसप्रियेऽपि भाले वितये" इति हेमचन्द्रः। तथा चाऽभियुक्तैः प्रयुज्यते -- "ते दृष्टिमात्रपतिता अपि कस्य नाऽत्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च। नीचाः सदैव सविलासमलीकलम्ना ये कालत" कुटिलतां च न संत्यजन्ति" इति। इहाऽलीकलम्नाः = भाललम्नः, अप्रिये लम्ना इत्याद्यर्थो यथायोग्यं बोध्यः। "व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपि पीडने। ना नागरे" इति मेदिनी। वल संवरणे। "वलीकनीध्रे पटलप्रान्ते" इत्यमरः। वलतेर्मुगागमे वल्मीकन्।"वामलूरश्चनाकुश्चवल्मीकं पुनपुंसक"मित्यमरः। वहतेर्वद्धिस्च। वाहीको गोरस्वश्च।सुप्रपूरमवादिणस्तुट् च। सुप्रतीकः। शामय्तेः शमीक ऋषिः। एवमन्येऽप्यूह्या इत्याशयेनाह--इत्यादीति।

शृ()पृ()। शृ? हिंसायाम्, पृ? पालनादौ , आभ्यामीषन् कित्स्यात्। "ऋत इद्धातोः" इति इत्व रपरत्वम्। शिरीषो वृक्षभेदः। "उदोष्ठ()पूर्वस्य" इत्युत्वम्। "पुरीषं गूथं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियाम्" इत्यमरः।

अर्जेः। अर्ज पर्ज अर्जने, अस्मादीषन् कित्स्यात्, धातोरृजादेशश्च। अमरोक्तिमाह-- ऋजीषमिति। किंच उद्धृतरसः। सोमलतायाः शेषोऽपि ऋजीषम्। एतच्च "ऋजीषिण" वृषणसश्चत श्रिये" "असत्यो पातु मघवाँऋजीषी" इत्यादिमन्त्रे भाष्ये स्पष्टम्।

अयमिति। ईषन्()प्रत्ययस्य अरुडागमश्चेत्यर्थः। वोपालितोक्तिमाह-- अम्बरीषमिति। "क्लीबेऽम्बरीषं भ्राष्ट्रो ना"इत्यमरः। "अम्बरीषो रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे। नरकस्य प्रभेदे च किशोरे भास्करेऽपि च। आम्रातकेऽनुपाते च" इति मेदिनी।

कृ()शृ()पृ()। कृ? विक्षेपे, शृ? हिंसायाम्, पृ? पालनपूरणयोः, कटे वर्षावरणयोः, इट किट कटी गतौ, चुरादौ पट पुटेति दण्डके भाषार्थः, शौटृ गर्वे। "वंशाङ्कुरे करीरोऽस्त्री वृक्षमिद्धद्वयोः पुमान्।करीका चीरिकायां च दन्तमूले च दन्तिना" मिति मेदिनी। शीर्यत इति शरीरम्। "शरीरं वर्ध्म विग्रहः" इत्यमरः। अद्र्धर्चादित्वाच्छरीर इति पुंलिङ्गोऽपि। परीरमिति। पूर्यतेऽनेनेति विग्रहः। बाहुलकात् हिडि गत्यनादरयोः। हिण्डते इतस्ततो गच्चतीति हिण्डीरः। "हिण्डीरोऽब्धिकफः फेनः" इत्यमरः। "डिण्डिरोऽपि च हिण्डीरः" इति द्विरुपकोशः। किर्मीरजम्बीरतूणीरादयोऽपि बाहुलकादेव बोध्याः। "किर्मीरो नागरङ्गेच कर्बुरे राक्षसान्तरे" इति मेदिनी।"जम्बीर। प्स्थपुष्पे स्यात्ततता दन्तशठद्रुमे" इति च।

वशेः। वशकान्तौ, अस्मादीरन्कित्स्यात्। कित्वात्संप्रसारणादि। उशीरं वीरणमूलमुशीरोऽपि। "मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्य"मित्यमरः।

कशेः। कश इति सौत्रो धातुः, अस्मादीरन् तस्य मुडागमश्च। पृषोदरादित्वात्काश्मीरः।

कृञः। डुकृञ् करणे अस्मादीरन्, धातोरन्त्यस्यौदादेशो रपरः।

घसेः। घस्लृ अदने। अस्मादीरन् कित्स्यात्। "गमहनेत्युपधालोपे कत्वं षत्वं च। "क्षीरं दुग्धे च नीरे च" इति वि()आः।

गभीर्। गम्लृ गतौ। अस्मादीरन् भकारोऽन्तादेशः। पक्षे नुमागमश्च निपात्यते।"निम्नं गभीरं गम्भीर" मित्यमरः।

विष। षोऽन्तकर्मणि, ओहाक् त्यागे, आभ्यां विपूर्वाभ्यानाप्रत्ययो निपात्यते।

पचः। डुपचष् पाके, अस्मादेलिमच् स्यात्। कर्तरि अयम्। कृत्यप्रत्ययेषु तु केलिमर् उपसङ्ख्यातः।

शीङः। शीङ् स्वप्ने। शेरतेऽनेनति शीधुर्मद्यविशेषः। "मैरेयमासवः शीधुः"इत्यमरः। अर्धर्चादिपाठात् क्लीबं च। "पुंनपुंसकयोर्दारुजीवातुस्थाणुशीधवः"इति त्रिकाण्डशेषः। "शीलं स्वभावे सद्वृते" इति मेदिनी। "जलनीली तु शेवालं शैवलः"इत्यमरः। "शैवलं पद्मकाष्ठे स्यात् शैवाले तु पुमानय"मिति मेदिनी। शब्दार्णवोक्तिमाह--शैवालं शेवल इति।

मृकणि। मृङ् प्राणत्यागे, कण शब्दार्थः। ऊकश्च उकण् च ऊकोकणौ एतौ प्रत्ययौ यथाक्रमं भवतः। वल संवरणे।

"उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि" इति मेदिनी। वदेर्यङ्लुगन्तादूकः। "वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि" इत्यमरः। भल्लूक इति। भल्ल परिभाषणे इत्यस्मादूकः।

शमेः। शम उपशमे अस्मादूकः। धातोर्बुगागमश्च। शम्बूको गजकुम्भान्ते घोण्टे च शूद्रतापसे" इति मेदिनी। बाहुलकादुकप्रत्यये ह्रस्वमध्योऽपि। "जम्बूकं जम्बुकं प्राहुः शम्बुकमपि शम्बुक"मिति द्विरुपकोशः। जम्बूकबन्धूकादयोऽप्यत्रैव द्रष्टव्यः। जम्बूकः फेरवे नीचे पश्चिमाशापतावपि" इति मेदिनीवि()आप्रकाशौ। "बन्धूकं बन्धूकं बन्दुजीवे स्याद्बन्धूकः पीतसारके" इति च।

शलिमण्डि। शलगतौ, मडि भूषायां हर्षे च। "सौगन्धिकं तु कह्लार"मित्याद्युपक्रम्य् "सालूकमेषां कन्दः स्यात्" इत्यमरः। एषां च सौगन्धिकादीनां कुमुदकैरवान्तानां कन्दो मूलं शालूकमित्यर्थः। मण्डते वर्षासमयमिति मण्डूको भेकः।

नियो मिः। णीञ् प्रापणे। नयति चक्रमिति नेमिश्चक्रावयवः। "नेमिर्ना तिनिशेकूपत्रिकाचक्रान्तयोः स्त्रिया"मिति मेदिनी। बाहुलकादन्यतोऽपि। या प्रापणे। "यामिः स्वसकूलस्त्रियोः" इत्यन्तस्थादौ रभसः। "जामिः स्वसृकुलस्त्रियोः"इति चवर्गतृतीयादावजयकोशः। "चवर्गादिरपि प्रोक्तो जाभिः स्वसृकुलस्त्रियोः" इति द्विरूपेषु वि()आः।

अर्तेरुच्च। ऋ गतावित्यस्मन्मिः, धातोरुकारादेशश्च। उचेति वक्तुमुचितम्,रपरत्वे "हलिचे"ति दीर्गसंभवात्। "ऊर्मिः स्त्रीपुंसयोर्वाच्यां प्रकाशे वेगभङ्गयोः। वस्त्रसंकोचरेखायां वेदनापीडयोरपि" ति मेदिनी।

भुवः। भवतेर्मिः कित्स्यात्। भवन्ति भूतान्यस्यामिति भूमिः। "भूमिर्वसुन्धरायां स्यात्स्थानमात्रेऽपि च स्त्रिया"मिति मेदिनी। "बूर्भूमिरचलाऽनन्ता" इत्यादिस्त्वमरः।

अश्नोतेः। अशू व्याप्तौ, अस्मान्मिः, धातो रशादेशश्च। "रश्मिः पुमान् दीधितौ स्यात्पक्षप्रग्रहयोरपी"ति मेदिनी।

वीज्या। वी गतौ, ज्या वयोहानौ,ज्वर रोगे। अमरोक्तिमाह-- वेणिः स्यादित्यादि। "कृदिकारा"दिति ङीष्। "वेणी केशस्य बन्धने। नद्यादेरन्तरे देवताडे" इति मेदिनी। "वेणी खरा गरी देवताडेजीमूत इत्यपि" इत्यमरः। "ज्यानिर्हानौ रुआवन्त्यां च" इति वि()आः। "ज्वरत्वरे" त्युपधाया वकारस्य च ऊठ्। जूर्णिः स्त्रीरोगः।

सृवृषि। सृगतौ, वृषु सेचने, आभ्यां निः कित्स्यात्। "अङ्कुशोऽस्त्री सृणिः स्त्रिया"मित्यमरः। "सृणिः स्याङ्कुशे पुमा"निति कोशान्तरम्। अत एव "आरक्षमग्नमवमत्य सृणिं शिताग्न" इति माघे पुंलिङ्गप्रयोगः। "वृष्णिस्तु यादवे मेषे वृष्णिः पाखण्डमेषयोः" इति वि()आः। "ऐन्द्रे वृष्णिं षोडशिनि तृतीय"मिति श्रुतौ वृष्णिं मेषमित्यर्थः।

अङ्गेः। अगिर्गत्यर्थः। "अग्निर्वै()आआनरेऽपि स्याचित्रकाख्यौषधौ पुमाटमिति मेदिनी।

वहि। वह प्रापणे, श्रिञ् सेवायाम्,श्रु श्रवणे,युमिश्रणे, द्रु गतौ, ग्लै म्लै हर्षक्षये,ओहाक् त्यागे, ञित्वरा संभ्रमे, एभ्यो निः प्रत्ययः स्यात्स च नित्। "वहिर्वै()आआनरेऽपि स्याचित्रकाख्यौषधौ पुमा"निति मेदिनी। श्रेणिः। पङ्क्तिः। "निः श्रेणिस्त्यधिरोहिणी"। श्रेणिः स्त्रीपुंसया। पङ्क्तौ समाने शिल्पिसहतौ" इति मेदिनी। श्रोणिः कटिप्रदेशः। "कटिः श्रोणिः कुकुद्योनी"त्यमरः। योनिर्भगम्। "योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे"इति मेदिनी। द्रोणिः सेचनौ। "कृदिकारा"दिति ङीषि द्रोणी। "द्रोणोऽस्त्रीयामाढके स्यादाढकादिचतुष्टये। पुमान् कृपीपत्तौ कृष्णकाके स्त्री नीवृदन्तरे" इति मेदिनी। ग्लानिर्दौर्बल्यम्। हानिरपचयः क्षयश्च। तूर्णिर्मानः।

घृणि।घृ सेचने, स्पश संस्पर्शने, पृषु सेचने, चर गतौ, डुभृञ् धारणपोषणयोः। निप्रत्ययो गुणाभावश्च निपात्यते। घृ()णिः पुनः। अंशुज्वालातरङ्गेषु" इति हेमचन्द्रः। "पृश्निरल्पतनौ" इत्यमरः। "पाष्णिःस्यादुन्मदस्त्रियाम्। स्त्रियां द्वयोः सैन्यपृष्ठे पादमग्रन्थ्यधरेऽपि चे"ति मेदिनी। भूर्णिरिति। "तक्वा न भूर्णिः" इति मन्त्रभाष्ये तु भूर्णिर्धारकः पोषको वेति व्याख्यातम्।

वृदृ। दृञ् वरणे, दृङ् आदरे। स्त्रियां "कृदिकारा"दिति ङीष्। दर्वी।

जृ()शृ()। जृ? वयोहानौ, शृ? हिंसायाम्, स्तृ()ञ् आच्छादने, जागृ निद्राक्षये। क्विनः कित्त्वात् "ऋत इद्धातोः" इति इत्वे रपरत्वे जीविरित्यादि।

दिवो। दिवु क्रीडादौ अस्मात् क्विन्। कित्त्वाद्गुणाऽभावः। "दीदिविर्धिशषणाऽन्नयोः" इति वि()आः। "दीदिविनां धिषणेऽन्नेतदस्त्रिया"मिति मेदिनी। धिषणो बृहस्पतिः। "दीदिविद्र्वादशकरश्चक्षुः सुरगुरुर्गुरुः" इति त्रिकाण्डशेषः। "दीदिविद्र्वादशाचिः स्याज्जीवः प्राक्फल्गुनीसुतः" इति हारावली। "ओदनोऽस्त्री सदीदिविः" इत्यमरः। अत्र "सदीदिविदीदिविसहित इति व्याख्यानं न्याय्यम्। अत्र स इति विशेषणाद्दीदिविः पुंलिङ्ग इति केषांचिद्व्याख्यान नादर्तव्यम्। स इति छेदने तु अस्त्रियामिति न लभ्येत। ततश्चान्ते" तदस्त्रिया"मिति पूर्वोक्तमेदिनीग्रन्थो विरुध्येतेति ध्येयम्। "गोपामृतस्य दीदिविम्" इति मन्त्रे तु द्योतमानमित्यर्थः।

कृवि घृष्वि। डुकृञ् करणे, वृषु सेचने,छो छेदने , ष्ठा गतिनिवृत्तौ, दिवु क्रिडादौ, एते क्विन्नन्ता निपात्यन्ते। घृष्विर्वराह इति। "उग्रस्य यूनः स्थविरस्य घृष्वेः" इति मन्त्रे तु घृष्वेः = कामानां वर्षकस्येत्यर्थ इति व्याख्यातम्, घृषु सेचने इति धात्वर्थानुगमात्। "छविः शोभारुचोर्योषित्" इति मेदिनी। "अथ चाषः किकीदिविः"इत्यमरः। विनिमय इति। "किकिदीविः किकीदिवौ" इति द्विरूपकोशः।

पातेः। पा रक्षणे डित्त्वाट्टिलोपः। "पतिर्धवे ना त्रिष्वीशे" इति मेदिनी।

शकेः। शक्लृ शक्तौ। "उच्चाराऽवस्करौ शमलं शकृतम्। गूथं पुरीषं वर्चस्कमत्री विष्ठाविशौ स्त्रिया" मित्यमरः।

अमेः। अम गतौ। "अथाऽमतिः पुंसि हिमदीधितिकालयोःर" इति मेदिनी। अमितिश्चामतिः काले" इतिद्विरुपेषु वि()आः।

वहि। वह प्रापणे,वस निवासे, ऋ गतौ। "वहतिः सचिवे गवि" इति वि()आः। "वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतन्" इति मेदिनी।

अञ्चेः। अञ्चु गतौ, अस्मादतिः स्यात्ककारश्चान्तादेशो विकल्पेन।

हन्तेः। हन हिंसागत्योः। अमरोक्तिमाह-- प्रादेशनमित्यादि।

रमेः। रमेतरतिः स्यात्स च नित्। "रमतिर्नायके नाके पुंसि स्यात्" इति मेदिनी। नित्त्वमाद्युदात्तार्थम्। "रन्तिरसि रमतिरसि"।

सूङः। षूङ् प्राणिप्रसवे। कित्वाद्गुणाऽबावः। "दीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः"इत्यमरः। दशपाद्यां तु "सुञोरिन् दीर्घश्च" इति पाठः। तत्र रिनी नकारो नानुबन्धः, उत्तरसूत्रे क्रिन्? प्रत्ययारम्भात्। अनुबन्धत्वे हि लाघवादिहैव क्रिन्नुच्येत। तथा च सूरिणौ सूरिण इत्यादि रूपम्। अत एवाभिधानमालायां सूरीति नान्तमुदाहृतमित्यभिधेयम्। दशपादीवृत्तिकारैस्तु नित्वं स्वीकृत्य सूरिरित्युदाहृतं , तदेतेन प्रयुक्तम्। स्वरविरुद्धमपि "सदा पश्यन्ति सूरयः" "विसूरयो दधतो वि()आमायुः" इत्यादौ सूरिशब्दस्यान्तोदात्तत्वदर्शनात्।

अदि। अद भक्षणे, शद्लृ शातने, भू सत्तायाम्, शुभ शुम्भ शोभार्थे। "अद्रयो द्रुमशैलाऽर्काः"इत्यमरः। "भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि। नपुंसकं सुवर्णे च प्राज्येस्याद्वाच्यलिङ्गकः" इति मेदिनी।

वङ्क्यादयश्च। वकि कौटल्ये, टुवप् बीजसन्ताने। निपातनात्संप्रसारणाऽभावः। अहिर्भाषार्थश्चुरादिण्यन्तः। अधि गतौ गत्यारम्भे च। ञिभी भये। तन्द्रिरिति। "कृदिकारा"दिति पक्षे ङीष्। "तन्द्री निद्राप्रमालयोः" इति मेदिनी। "तन्द्री तन्द्रिव तन्द्राया"मितिद्विरुपकोशः। "विभज्य नक्तंदिवमस्ततन्द्रिणा" इति भारविः। प्रत्ययस्य कित्वाद्गुणाऽभावमाशङ्क्याह-- बहुलकादिति।

राशदि। रा दाने, शद्लृ शातने। "शत्रिर्नाम्भोधरे विष्णौ" इति मेदिनी। "शत्रिमग्र उपमां केतुमर्थः" इति मन्त्रस्य वेदभाष्ये तु उपमाम्- उपमानभूतं केतुं = प्रख्यातं , शत्रिम् = एतन्नामकं राजषिमिति व्याख्यातम्।

अदेः। अद भक्षणे। अत्राई भक्षकः, अत्रिर्मुनिभेदः। उज्ज्वलदत्तस्तु अदेस्त्रिन्निति पठित्वा अत्रिरित्युदाजहार। तन्न। त्रिचैवेष्टसिद्धौ प्रत्ययान्तरवैयथ्र्यात्। गोवद्र्धनस्तु अदेस्त्रिन्निचेति पठित्वा निदिति वचनान्नकारस्य नेत्संज्ञा, अत्राई अग्निणौ अग्निण इत्याह। तदपि न। नित्त्वे सत्याद्युदात्तत्वापत्तेः। न चेष्टापत्तिः। जहीन्या। १ अत्रिआणं पर्णिं"। [दूरे वा ये अन्ति वा केचिदत्रिआणः"।] "अग्ने हंसिन्या २ अत्रिणम्" इत्यादावन्तोदात्तस्य निर्विवादत्वात्। अतएव "न लुमताङ्गस्य" इति सूत्रे "अदेस्त्रिनिश्चे"त्येव कैयटोऽप्याहेति दिक्।

पतेः। पत्लृ गतौ। पतत्रिरिति। पक्षवाचकात्पतत्रशब्दान्मत्वर्थे इनि तु नान्तः। पतत्री पतत्रिणौ पतत्रिण इत्यादि।

मृकणि। मृङ् प्राणत्यागे, कण शब्दार्थः। "कणीचिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते" इति वि()आः। "मरोचिर्मुनिभेदे ना भगस्तावनपुंसक"मिति मेदिनी। "कणीचिः पुष्पितलतागुञ्जयोः शकटे स्त्रिया"मिति च।

()आयतेः। टुओ()इआ गतिवृद्ध्योः, अस्मादीचिप्रत्ययश्चित्स्यात्।

वेञः। वेञ् तन्तुसन्तानेऽस्मादीचिर्डित्स्यात्। "वीचिः स्वल्पे तरङ्गे स्यावकाशेसुखे द्वयोः" इति वि()आमेदिन्यौ।

ऋहनि। ऋ गतौ,हन हिंसागत्योः।

पुरः। कुष निष्कर्षे। कित्त्वाद्गुणाऽभावः। "पुरुषं पुरुषे साङ्ख्यज्ञे च पुंनागपादपे" इति वि()आमेदिन्यौ।

पृ()नहि। पृ? पालनपूरणयोः, णह बन्धने, कल शब्दसङ्ख्यानयोः। "परुषं कर्बुरे रुक्षे निष्ठुरोक्तौ च वाच्यवत्िति मेदिनी। "बहुषो राजविशेषे नागभिद्यपि" इति हेमचन्द्रः। उवचश्चित्त्वान्नहुषशब्द्सयान्तोदात्तत्वे प्राप्ते ग्रामादित्वाद्वृषादित्वाद्व। आद्युदात्तत्वमित्याहुः। एतच्च "देवा अकृण्वन्नहुषस्य वि()आ"मिति मन्त्रस्य भाष्ये स्पष्टम्। "कलुषं त्वाविलैनसोः" इति वि()आः।

पीयेः। "पीयुषममृतं सुधा" इत्यमरः। "पीयूषं सप्तदिवसावधि क्षीरे तथाऽमृते" इति मेदिनी। अमरोक्तिमाह-- पेयूष इत्यादि।

मस्जेः। टुमस्जो शुद्धौ, अस्मादूषन्स्यान्नुमागमश्च धातोः। "मिदचोऽन्त्यात्परः"। सस्य श्चुत्वेन शः। तस्य जश्त्वेन जः। तस्य "झरो झरी"ति वा लोपः। लोपाऽभावपक्षे जकारद्वयम्। मञ्जूषा काष्ठमयं द्रव्यम्। पेटक इति यावत्। "पिटकः पेटकः पेटा मञ्जूषा" इत्यमरः।

गडेः। गडि वदनैकदेशे। "गण्डूषो मुखपूरणः"["गण्डूषो मुखपर्तीभपुष्करप्रसृतोन्मिते" इति मेदिनी]।

अर्तेः। ऋ गतौ, उकारान्तोऽयं प्रत्ययो न तु सकारान्त इति स्फोरयति-- अररू अररव इत्यनेन। न चोकारान्तत्वे विवक्षितत्वात्। "कश्चिद्यावीररुरु शूरमत्र्यम्" "अपाररुमदेवयजनो जहि" इत्यादिमन्त्रेषु तथा दर्शनात्। अत्र व्याचक्षते-- "मा नः शंसो अररुषःरट इति मन्त्रस्य बाष्येसान्तोऽयमिति माधवेनोक्तं, यत्तत्प्रौढिवादमात्रं, न तु वास्तवम्। अररुष इति पदस्य आद्युदात्तत्वापत्तिप्रसङ्गात्। तस्माद्रातेर्लिटः। क्वसुश्चेति क्वसोररिवानित्यनेन नञ्समासे ङस्यररुष इति व्याख्येयम्। ततश्च "तत्पुरुषे तुल्यार्थे" त्यादिना पूर्वपदप्रकृतिस्वरे सत्याद्युदात्तत्वं" सिध्यति। "गुरुद्वेषो अररुषे दधन्ति" इत्यत्र स्वयमेव रातेः। क्वसन्तस्य नञ्समास इत्यादि व्याख्यानात्। "यो नो अग्ने अररिवाँ अत्रायुः" इत्यादिमन्त्रान्तरसंवादाञ्चेति।

कुटः। कुट कौटिल्येऽस्मादरुः स्यात्सच कित्। चिन्त्यमिति। "गाङ्कुटादिभ्यःर" इति ङित्त्वेनैव गुणाऽभावुसिद्धेरिति भावः।

शकादि। शकिगत्यर्थ इति। शक्लृ शक्तावित्स्मादटन्नित्येके। "क्लीबेऽयः शकटोऽस्त्री स्यात्" इत्यमरः। "करटो कजगण्डे , कटेवर्षावरणयोः। "करम्बो मिश्रिते वान्तो, भान्तु दधिसक्तुषु" इति वि()आः। "कदम्बं निकुरम्बेस्यान्नीपसर्षपयोः पुमान्" इतिच।

कदेः। "कादम्बः स्यात्पुमान्पक्षिविशेषे सायकेऽपि चे"ति मेदिनी।

कलि। कल सङ्ख्याने, कर्द कुत्सिते शब्दे। "कलमः पुंसि लेखन्यां शालौ पाटचरेपि च" इति मेदिनी।

कुणिपुल्योः। पुल महत्वे।

कुपेः। कुप क्रोधेऽस्मात्किन्दच् स्यात्, वकारश्चान्तादेशो विकल्पेन। "तन्तुवायः कुविन्दः स्यात्" इत्यमरः। बाहुलकात् अल भूषणादौ। अलिन्दम्। "यस्यामलिन्देषु च चक्ररेव मुग्धाहृगनागोमयगोमुखानि" इति भावः।

नौ ष()ञ्जेः। षञ्ज सङ्गे। निपूर्वादस्मात् घयिन्स्यात्। "उपसर्गात्सुनोती"त्यादिना षत्वम्। "चजोरिति"कुत्वम्। "आभुरस्य निषङ्गथिः"। रथकूवर इत्यर्थः।

उद्यत्ते। ऋ गतावुत्पूर्वादस्मात् घथिन् स्यात्, स च चित्।

सर्तेः। सृ गतावस्माद्धथिन् णित्स्यात्। "नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः" इत्यमरः।

खर्जि। खर्ज मार्जने, पिञ्ज हिंसायाम्। खर्जादिभ्यः, पिञ्जादिभ्यश्च यथाक्रमं ऊरौउलचौ स्तः।"खर्जुरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः" इति मेदिनीहेमचन्द्रौ। कृपू सामर्थ्ये। बाहुलकात् "कृपो रो लः" इति लत्वाऽभावः। "अथ कर्पूरमस्त्रियाम्। घसारश्चन्द्रसंज्ञः सिताऽभो हिमवालुका" इत्यमरः। वल्ल संवरणे। वल्लूरम्। "उत्तसं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिङ्गक"मित्यमरः। एवं शालूरादयो द्रष्टव्याः। "भेके मण्डूकवर्षाबूशालूरप्लवदर्दुराः"इत्यमरः। लङ्गेः। लगिर्गत्यर्थः। लाङ्गूलं पुच्छशेफसोः" इति मेदिनी। कुसूल इति। कुस श्लेषणे दन्त्यसकारवान्। "कुसूलं च कुसीदं च मध्यदन्त्यमुदाहृत"मिति वि()आः। ताम्बूलादयोऽप्यत्र द्रष्टव्याः। तमु ग्लानौ, वुग् दीर्घत्वं च। "ताम्बूली नागवल्यां स्त्री क्रमुके तु नपुंसक"मिति मेदिनी। शृ? हिंसायाम्, धातोर्वृद्धिर्दुगागमश्च। "शार्दूलो राक्षसान्तरे। व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः" इति मेदिनीवि()आप्रकाशौ। उत्तरस्थितः = उत्तरपदभूतः शार्दूलशब्दस्तु श्रेष्ठवाची। "राजशार्दूल" इति यथा। दु गतौ, कुङ् शब्दे, अनयोः कुक् च। "दुकूलं श्लक्ष्णवस्त्रे स्यात् क्षौमे चे"ति मेदिनी। "क#उकूलं शङ्कसङ्कीर्णे ()आश्रे ना तु तुषाऽनले" इति वि()आमेदिन्यौ। "शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना। अयं क्व च कुकूलाऽमिकर्कशो मदनानलः" इति प्रोयगश्च।

कुषः। कु शब्दे। कुचः = स्तनः। "कुचकूचौ स्तनौ मतौ"इति वि()आः। कूचीति। टित्त्वान्ङीप्।

समीणः। इण् गताविस्मात्सम्युपपदे चट् स्याद्दीर्घश्च धातोः।

सिवेः। षिवु तन्तुसन्तानेऽस्माचट् प्रत्ययः स्याट्टेकत्वं च। टित्त्वान्ङीप्। सूची तु सीवनद्रव्येऽप्याङ्गिकाभि नयान्तरे" इति मेदिनी।

शमेः। शम उपशमे। शम्बः स्यान्मुसलाऽग्रस्थलोहमण्डलके पव। शुभान्विते त्रिषु" इति वि()आमेदिन्यौ।

उल्वा। उल्वमिति। "गर्भाशयो जरायुः स्यादुल्यं च कललोऽस्त्रिया"मित्यमरः। शुच शोके। चस्य लत्वं, गुणाऽभावश्च प्राग्वत्। "शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसंनिधौ" इतिमेदिनीहेमचन्द्रौ। वी गतिप्रजनकान्त्यसनखादनेषु। अस्य मुमागमो ह्रस्वत्वं च। ववयोरभेदाद्विम्बम्। "विम्बस्तु प्रतिबिम्बे स्यान्मडले पुंनपुंसकम्। बिम्बिकायाः फले क्लीबं कृकलासे पुनः पुमान्" इति मेदिनी।

स्थः स्तः। ष्ठा गतिनिवृत्तौ। "स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च" इति वि()आः। "स्तम्बोऽप्रकाण्डद्रुमगुच्छयोः" इति मेदिनी। "स्याद्गुच्छकस्तु स्तम्बकःर" इत्यमरः।

शाशपि। शो तनूकरणे, शप आक्रोशे। "शादो जम्बालशष्पयोः" इत्यमरः। "शष्पं बालतृणं घासः" इति च। "शादः स्यात्कर्दमे शष्पे" इति मेदिनी। शब्दो = निनादः।

अब्दादयः। एते दनन्ता निपात्यन्ते। अव रक्षणे। वस्य वः। "अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान्" इति मेदिनी। कौतेः। कु शब्दे। "कुन्दौ माध्येऽस्त्री मुकुन्दभ्रमिनिद्यन्तरेषु ना" इति च मेदिनी।

वलिमलि। वल संवरणे "[संचरणे च],मल मल्ल धारणे, तनु विस्तारे। "वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसक"मिति मेदिनी। "मलयः पर्वातन्तरे। शैलांशे देशाआरामे त्रिवृतायां तु योषिति " इति च। "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रिया"मित्यमरः।

वृह्रोः। वृञ् वरणे,ह्मञ् हरणे, आभ्यां कयन् स्यात्, यथाक्रमं षुग्दुकावागमौ च भवतः। कयनः कित्त्वं त्विह गुणाऽभावर्थम्। ह्रियते विषयैरिति ह्मदयं मनः।

मिपीभ्याम्। डुमिञ् प्रक्षेपणे, पीङ् पाने। "मेरुः सुमेरुर्हेमाद्रिः" इत्यमरः। पीयते रसनिति पेरुः। पिबतेरिति। पा पाने। हट्टचन्द्रोक्तिमाह--संवत्सरवपुरित्यादि।

जत्र्वादयः। रुप्रत्यान्ता निपात्यन्ते।जनी प्रादुर्भावे। नकारस्य तकारः। जत्रुः स्कन्धसन्धिः। "सन्दी तस्यैव जत्रुणी" इत्यमरः। तस्य= पूर्वोक्तस्य स्कन्धस्य सन्दी इत्यर्थः। असु क्षेपणे, अशू व्याप्तौ सङ्घाते च। अरुआउ अश्रु च नयनजलम्। बाहुलकात् शीङो ह्रस्वत्वं गुगागमस्च। "शिग्रुर्ना शाकमात्रेऽपि शोभाञ्जनमहीरुहे" इति मेदिनी।

रुशाति।रु शब्दे, शद्लृ शातने ण्यन्तः। "कृष्णसाररुरुन्यङ्कुरकुङ्कुशम्बररौहिषाःर" इत्यमरः। रुरुर्दैत्ये मृगेऽपि च इति मेदिनी।

जनिदा। जनी प्रादुर्भावे, डुदाञ् दाने, च्युङ् गतौ, सृ गतौ, वृञ् वरणे, मदी हर्षे, षम ष्टम अवैकल्ये,णम प्रह्वत्वे शब्द च, डुमृञ् धारणपोषणयोः। एभ्यो नवभ्यो यथासङ्ख्यं नव स्युः। जनेरित्वन्। जनेरिडागमेनापि जनित्वेति रुपसिद्धाविकारोच्चारणमुत्तरार्थम्। च्यौत्न इति। त्नणो णित्त्वाद्वृद्धिः। सृणिरिति। क्निनः कित्त्वान्न गुणः। नित्त्वं तु आद्युदात्तार्थम्। "सृवृषिभ्यां कि"दिति निप्रत्यये त्वन्तोदात्तः साधितः। वृश इति। शकः कित्त्वान्न गुणः। मत्स्य इति। स्यप्रत्यये चर्त्वेन दस्य तः। अन्तोदात्तोऽयम्। "ऋतत्यजी"ति सूत्रे तु आद्युदात्तः साधितः। षण्ढ इति। बाहुलकाद्धात्वादेः षस्य सकारो न। प्रत्ययादेर्ढस्य तु प्रयोजनाऽभावान्नेत्संज्ञा। "शमेर्ढः" इति सूत्रे तु तालव्यादिः साधितः। "सायं सायो भवेत्कोशः कोषः षण्ढश्च शण्डवदि"ति द्विरूपकोशः। "षण्ढो वर्षवरः"इत्यमरः। "नटी नल्यौषधी स्त्री स्याच्छैलूषाऽशोकयोः पुमान्" इति मेदिनी। भरट इति। विभर्तेटच्। नट इति। नमतेर्डट्।

अन्येभ्योऽपि। इत्वन्नादयोऽनुवर्तन्ते। पेत्वमिति। पा पानेऽस्मादित्वन्। भृशमिति। भृञः शक्।

कुसेः। कुस संश्लेषणेऽस्मादुम्ब उम ईद इत एते प्रत्यया स्युः। "कुसुम्भं हेमनि महारजने ना कमण्डलौ" इति मेदिनी। "कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः" इति च। "कुसीदं जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके" इति च। इह सूत्रे तृतीयो ह्रस्वादिर्दीर्घादिश्च तन्त्रेणोपात्तः। "वृषाकप्यग्नी"ति सूत्रे ह्रस्वादिरेवेति वृत्तिकारहरदत्तादिग्रन्तोपष्टम्भेन निर्णीतम्। "पारलौकिककुसीदमसीद"दिति श्रीहर्षप्रयोगात्तु दीर्घादिरपि।

सानसि। सनोतेरिति। षणु दाने। वृञो नुक् चेति। वृञ् वरणेऽस्मादसिः। दशपाद्यां तु -- "सानसिधर्णसी"ति पठित्वा धृञो नुक् च। धर्णसिर्लोकपाल इति व्याख्यातम्। युक्तं चैतत्। "धर्णसिं भूरिधायस"मित्यादिमन्त्रानुगुणत्वात्। पर्णसिरिति। पृ? पालनपूरणयोरस्मादसिप्रत्ययो नुक् च। तण्डूला इति। उलच्प्रत्ययो नुमागमश्च धातोः। "त्रेधा तण्डुलान्विभजेत्"। इह चित्स्वरः। "तण्डुलः स्याद्विडङ्गे च धान्यादिनिकरे पुमा"निति मेदिनी। अङ्कुश इति। अयमपि चित्स्वरेणान्तोदात्तः।

तथाच मन्त्रः "दीर्घ ह्रङ्कुशं यथा" इति "अङ्कुशोऽस्त्री सृणिः स्त्रिया" मित्यमरः। चषेराल इति। चष भक्षणे। प्रत्ययस्वरेणाद्युदात्तः। उज्ज्वलदत्तस्त्वालनात्। अमरोक्तिमाह-- चषाल इति। इल्वल इति। इल स्वप्नप्रेरणयोः। वलच्। गुणाऽभावः। "इल्वलस्तारका राजभेदे ना दैत्यमत्स्ययोःर" इति मेदिनी। "इल्वलास्तच्छिरोदेसे तारका निवसन्ति याः" इत्यमरः। पा पाने अस्माद्वलच्, लुगागमो ह्रस्वत्वं च। पिबन्त्यस्मिन्निति पल्वलमल्पसरः। "वेशन्तः पल्वलं चाल्पसरः" इत्यमरः। इकार इति। रपरत्वाऽभावो ण्यप्रत्ययश्चेति बोध्यम्। "धिष्ण्यं स्थाने गृहे भेऽग्नौ इत्यमरः। "धिष्ण्यं स्थानाग्निसद्मसु। ऋक्षे शक्तौ च" इति मेदिनी। "धिष्ण्यं स्थाने च ऋक्षे च धिष्ण्योऽग्नौ धिष्ण्यमालये" इति धरणि। शलेः। शल गतौ "शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे। मदनद्रु()आआविधोर्ना" इति मेदिनी। मूशकि। मूङ् बन्धने, शक्लृ शक्तौ, अवि शब्दे। "मूलं शिफाऽऽद्ययोः।मूलं वित्तेऽन्तिके" इति मेदिनी। "शक्लः प्रियंवदेः" इति विशेष्यनिद्रेऽमरः। अमेरिति। अम रोगे चुराणित्यन्तः। बाहुलकादेवोपधाह्रस्वः। "अम्लो रसविशेषे स्यादम्ली चाङ्गेरिकोषधौ" इति मेदिनी। माछा। मा माने, छो छेदने, षस स्वप्ने। "माया स्याच्छाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे" इति मेदिनी। "छाया स्यादातपाऽभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिच्छोभापङ्क्तिषु स्त्रिया"मिति वि()आमेदिन्यौ। "वृक्षादीनां फलं सस्य" मित्यमरः। सुनोतेरिति। षुञ् अभिषवे। "सद्यं वामे प्रतीपे चे"ति मेदिनी।

जनेः। जन जनने। यकः कित्त्वमुत्तरार्थम्। "जन्यं हट्टे परीवादे सङ्ग्रामे च नुपंसकम्। जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्। त्रिषूत्पाद्यजनित्रोश्च नवोढाज्ञातिभृत्ययोः। "स्निग्धे" इति मेदिनी। आत्वपक्षे रुपमाह-- जायेति। "

अध्न्यादयश्च। अध्न्य इति। यकः कित्त्वात् "गमहने"त्युपधालोपे "हो हन्ते"रिति कुत्वेन हस्य घः। अडागममनुक्त्वा नञ्पूर्वाद्धन्तेर्यगित्यन्ये। अध्न्येति। स्त्रियां टाप्। "माहेयी सौरभेयी गौरुरुआआ माता च शृङ्गिणी। अर्जुन्यघ्न्या रोहिणी स्या"दित्यमरः। संपूर्वाद्धाञो यक् आतो लोपश्च। "संध्या पितृप्रसूद्यन्तरयोर्युगसन्धिषु" इति मेदिनी। "कन्या कुमारिकानार्योरोषधीराशिभेदयोः" इति वि()आमेदिन्यौ। बन्ध्येति। बन्ध बन्धने। "बन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रिया"मिति मेदिनी। कौतेर्यति डुक्। कुड()मित्युज्ज्वलदत्तः। "यतोऽनावः" इत्याद्युदात्तः। ड()क्प्रत्ययान्तोऽयमन्तोदात्त इत्यन्ये इति। "निवाते वातत्राणे" इति सूत्रे वृत्तिः। डित्त्वाट्टिलोपे सति कित्करणं व्यर्थं स्यादिति गुणप्रतिषेधार्थात्ककाराड्कारस्येत्त्वं नेति तत्रैव हरदत्तः। एवं स्थितेऽध्न्यादयो यगन्ता इति प्रायोवादः। स्नामदि। ष्णा शौचे। मदी हर्षे , पद गतौ, ऋ गतौ, पृ? पालनपूरणयोः, शक्लृ शक्तौ। "अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकःर" इति मेदिनी। "पर्व क्लीबं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपी"ति च। ङीब्राविति। "वनो रचे" त्यनेन। अङ्गुलिरिति। एतच्च "आरोहतं दर्शतं शक्वरीर्ममे"त्यादिमन्त्रव्याख्यायां स्पष्टम्। "शक्वरी छन्दसो भेदे नदीमेखलयोरपी"ति मेदिनी।

शीङ्। शीङ् स्वप्ने, क्रुश आह्वाने रोदने च, रुह बीजजन्मनि प्रादुर्भावे च, जि जये, क्षि निवासगत्योः, सृ गतौ,धृञ् धारणे।

ध्याप्योः। ध्यै चिन्तायाम्, प्यैङ् वृद्धौ, आभ्यां क्वनिप्स्यात्संप्रसारणं च। धातोर्हल इति दीर्घः।

अदेः। अद भक्षणेऽस्मात्क्वनिप्, धकारश्चान्तादेशः। अध्वा मार्गः।

प्र ईर। ईर गतौ, शद्लृ शातने, आभ्यां प्रपूर्वाभ्यां क्वनिप्स्यात्तस्य तुडागमश्च। प्रेत्वरीति। स्त्रियीं "वनो र चे"ति ङीब्राऔ।

सर्वधातुभ्य इन्। डुपचष् पाके, तुडि तोडने, तोडनं दारणं हिंसन च , वल संवरणे, वट वेष्टने, यज देवपूजादौ, काशृ दीप्तौ, यती प्रयत्ने। "यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्" इति मेदिनी। मल मल्ल धारणे, केलृ चलने भ्वादिः, केला विलासे कणड्वादिः, किल स्वैत्यक्रीडनयोः तुदादिः, कुट कौटिल्ये, हिल भावकरणे, बुध अवगमने,टुनदि समृद्धौ,कल

शब्दसङ्ख्यानयोः। "गाङ्कुटादिभ्यः" इति ङित्त्वाद्गुणाऽभावमाशङ्क्याह-- बाहुलकादिति। "कोटिः स्त्री धनुषोऽग्नेऽश्रौ संख्याबेदप्रकर्षयोः" इति मेदिनी। "बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे" इति च। "नन्दिद्र्यूताङ्ग आनन्दे स्त्री नन्दिके()आरे पुमान्" इति च। इह इन्नित्येव सूत्रम्। "सर्वधातुभ्य" इति तु प्रक्षिप्तं व्यर्थं च। एवं "सर्वदातुभ्यष्ट्रन्निटत्यादावपि बोध्यमित्याहुः। अतएव दशपाद्यां "ष्ट्र" न्नित्येव पठितमिति दिक्।

ह्मपिषि।ह्मञ् हरणे, पिष्लृ संचूर्णने, रुह बीजजनमनि प्रादुर्भावेच, वृतु वर्तने। वर्तिर्दीपोपकरणम्। विद सत्तायाम्। विद्यते पुण्यमस्यामिति वेदिः। "वेदिः परिष्कृता भूमिः"। छिदिर् द्वैधीकरणे, कृ()त संशब्दने, हरतेः कीर्तयतेश्च "अच इः" इति प्राप्ते, इतरेषां तु "इगुपधा"दिति कप्रत्यये प्राप्ते वचनमिदम्। "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांसुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः। "हरिश्चन्द्रार्कवाता()आशुकभेकयमाहिषु। कपौ सिंहे हरेऽर्जेऽशौ शक्रे लोकान्तरे पुमान्। वाच्यवत्पिङ्गहरितोः" इतिमेदिनी। "वर्तिर्भेषजनिर्माणे मुद्रायां स्यात्परिष्कृतभूतले" इति च। "कीर्तिः प्रसादयशसोर्विस्तारे कद्र्दमेऽपि चे"ति वि()आः।

इगुपधात्। कृष विलेखने, ऋषी गतौ,शुच शोके, लिप उपदेहे इत्यादेरिगुपधाद्धातोरिन्स्यात्स च कित्। केचित्तु इगुपधातिकंरिति "अग्निः पूर्वेभिरृषिभिः" "ऋषिर्विप्रः काव्येन"" शुचिर्विप्रः शुचिः कविः" इत्यादौ ऋषिशुचिप्रभृतीनामाद्युदात्तत्वदर्शनात्। न चैवम् "अक्षैर्मा दीव्यः कृषिमित्कृषस्वे"त्यादौ कृषिशब्दस्यान्तोदात्तता न सिध्येदिति वाच्यम्, "इग्लृष्यादिभ्यः" इतीक्प्रत्यये सत्यन्तोदात्तत्वसिद्धेः। "ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानय"मिति मेदिनी। "शुचिग्र्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणी"ति च।

भ्रमेः। भ्रमु अनवस्थानेऽस्मादिन्स्यात्, सच कित्, संप्रसारणं च। "भृमिं चिद्यथा वसवः पुषन्ति" इति मन्त्रे भृमिं = भरणशीलं दरिदिं()र जनमिति वेदभाष्यम्।

क्रमि। क्रमु पादविक्षेपे, तमु काङ्क्षायाम्, शतिस्तम्भौ सौत्रौ, एभ्य इन्स्यात्स च कित्। एषामत इकारादेशश्च। क्रिमिः क्षुद्रजन्तुः। "कृमिर्ना किमिवत्कीटे लाक्षायां क्रिमिले खरे" इति वि()आमेदिन्यौ। "पारतं पारदं वारुआओ वासरः, क्रिमिवत्कृमिः" इति द्विरुपकोशः। तिमिरिति। "अस्ति मत्स्यस्तिमिर्नाम तता चास्ति तिमिङ्गिलः। तिमिङ्गिलगिलोऽप्यस्ति, तद्गिलोऽप्यस्ति लक्ष्मणे"ति रामायणे सप्तमे काण्डे रामवाक्यम्। केचित्तु "तद्गिलोऽप्यस्ति राघवे"ति पठित्वा राघवं प्रति लक्ष्मणवाक्यमित्याहुः। "शितिः कृष्णे सिते भूर्जे" इति वि()आः। "शितिर्भूर्जे ना सिताऽसितयोस्त्रिषु" इति मेदिनी।

मनेः। मन ज्ञाने, अस्मादिन्स्यात्स च किदकारस्योकारदेशश्च स्यात्। मन्यते जानातीति मुनिः। मुनिः पुमान्वसिष्ठादौ वङ्गसेनतरौ जिने" इति मेदिनी।

वर्णेः। अस्मादिन्स्यात्स च कित्। ["बलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान्स्त्री तु जरया श्लक्ष्णचर्मणि। गृहदारुप्रभेदे च जठरावयवेऽपि चे"ति मेदिनी]।

वसि। वस निवासे, डुवप् बीजसन्ताने, यज देवपूजादौ,राजृदीप्तौ, व्रज गतौ, षद्लृ विशरणादौ, हन हिंसागत्योः, वाशृ शब्दे, वद व्यक्तायां वाचि ण्यन्तः, वृञ् वरणे ण्यन्तः। वासिरिति दन्त्यसकारवान्। सूत्रेऽष्टमस्तु तालव्यशकारवान्। द्वयमपि छेदनसाधने प्रयुज्यते। "वास्यादीनामिव करणानां कर्तृव्यापार्यत्वनियमा"दिति वैशेषिकाः। "वास्यर्थमित्यत्र "स्कोः" इतिसलोपः प्राप्नोती"ति भाष्यम्। वापिरुदकाधारः। वापी प्रसिद्धा। "राजिः स्त्री पङ्क्तिरेखयोः " इति मेदिनी। इह वादीति ण्यन्तनिर्देशेऽपि बाहुलकादण्यन्तादपि इञ्, तथा च भूवादिसूत्रे वदन्तीति वादयो वाचका इति न्यासकारादयः। "वारिः

स्मृता सरस्वत्यां वारि ह्रीबेरनीरयोः। वारी घटीभबन्ध्नयोः"इति वि()आः। ह्रञ् हरणेऽस्मादिञ्। "हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्" इति मेदिनी।

नहः। णह बन्धनेऽस्मादिञ् स्याद्भवश्चान्तादेशः। स्त्रियामिति। लिङ्गानुशासने स्त्रियामित्यधिकारे "नाबिरक्षत्रिये" इति सूत्रितत्वादिति भावः। पुंस्यपीति। तथा च मेदिनी-- "नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे" इति। भारविश्च पुंसि प्रायुङ्क्त--"समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीविनाभिभिः" इति।

कृषेः। कृष विलेखनेऽस्मादिञ्, वृद्धिश्च। "इको गुणवृद्धी" इतीकः स्थाने एव वृद्धिरित्युदाहरति--कार्षिरिति। भाषायां तु कृषिरित्येव।

श्रः। शृ? हिंसायामस्माच्छकुनौ वाच्ये इञ्स्यात्। शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे। युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि चे"ति मेदिनी। कपिलकादित्वाल्लत्वम्। "शालिस्तु कलभादौ चगन्धमार्जारके पुमान्"दिति मेदिनी।

कृञः। करोतेरञ्स्यादुदीचां मते कारुषु वाच्येषु। "कारिः स्त्रियां क्रियायां स्याद्वाच्यलिङ्गस्तु शिल्पिनी"ति मेदिनी।

जनि। जनी प्रादुर्भावे, घस्लृ अदने, आभ्यामिण्। "जनिवध्योश्चे"ति वृद्धिप्रतिषेधः। जनिरिति स्त्रीलिङ्गम्। "कृदिकारा"दिति पक्षे ङीष्। "जनी सीमन्तिनीवद्वोरुत्पत्तावौषधीभिदि" इति मेदिनी।

अजि। अज गतिक्षेपणयोः, अत सातत्यगमने।बाहुलकादजेर्वीभावो न।

पादे च। पादे चोपपदे अज्यतिभ्यामिण् स्यात्। "पादस्य पदाज्यातिगोपहतेषु" इति पदादेशः। पदाजिः पादचारी। "पदातिपत्तिपदगपदातिकपदाजयः। पद्गश्च पदिकश्च" इत्यमरः।

अशिपणाय्योः। अशिश्च पणायिश्चाऽसिपणायी,तयोरिति विग्रहः। अशू व्याप्तौ,पण व्यवहारे आयप्रत्ययान्तः, आभ्यामिण् स्यादनयोर्यथाक्रमं रुडायप्रत्ययलुकौ च भवतः। "राशिर्मेषादिपुञ्जयोः"इति मेदिनी।

"वातेः। वा गतिगन्धनयोरस्मादिण् स्यात्। डित्त्वाट्टिलोपः।

प्रे हर। प्रपूर्वाद्धरतेः कूपे वाच्ये इण्। "पुंस्येवाऽन्धुः प्रहिः कूप उदपानं तु पुंसि वा " इत्यमरः।

नौ व्यो। व्येञ् संवरणे। "स्त्रीकटीवरुआबन्धेऽपि नीवी परिपणेऽपि च" इत्यमरः। परिपणो = मूलधनम्।

समाने। ख्या प्रकथने। इञ् स्यादिति। यत्तूज्ज्वलदत्तेनोक्तमिञ् स्यात्स चोदात्त इति। "नौ व्यः"इति पूर्वसूत्रे उक्तम्-- "इञत्रानुवर्तते न त्विण्ुत्तरसूत्रे उदात्तवचनाज्ज्ञापका"दिति। तदपि न। "स इञ् उदात्त" इति व्याख्याय समानस्य सभाव इति प्रक्रियास्मरणमात्रं कृतं, तदपि न, सभावविधायकस्याऽभावात्। यदपि स्वरमञ्जरीकारादिभिरुक्तं "समानस्य च्छन्दसी" ति सूत्रेण सभाव इति, तदपि न,लोके सखिशब्दस्याऽसाधुत्वापत्तेः। अपि च "सखासखायमब्रावीत्" ["सखा सख्ये अपचन्"] "सखायस्त्वा ववृमहे"। "सखा सखिभ्य ईड()ः" इत्यादिमन्त्रेषु सर्वत्र सखिशब्द आद्युदात्त एवेति निर्विवादम्। एवं च इञुदात्त इत्युज्जवलदत्तादिव्याख्यानं वेदवार्तानभिज्ञत्वप्रयुक्तमेवेति दिक्।

डि। श्रिञ्, सेवायाम्, हन हिंसागत्योः। अमरोक्तिमाह-- स्त्रिय इति। एवं च "सुप्रातसु()ओ"ति सूत्रे चतुरश्चेति तालव्यपाठः सङ्गच्छत एव। तत्सूत्रे केषाञ्चिद्दन्त्यपाठस्तु एतत्सूत्राऽपर्यालोचनामूलक एवेत्यबधेयम्। नन्वेवं

चतुररुआमितिदन्त्यप्रयोगस्तु कथं निर्वाह इति चेदत्राहुः-- अकारान्तेन दन्त्यगर्भिणाऽरुआशब्देन विग्रहे तत्प्रयोगः साधीयानन्। न च तादृशे शब्दे विप्रतिपत्तव्यम्, "अरुआः कोणे कचे पुंसि क्लीबमश्रुण शोणिते" इति मेदिनीकोशादिति। "अहिर्वत्राऽसुरे सर्पे" इति मेदिनी।

अच इः। अजन्ताद्धातोरिः स्यात्। रु शब्दे, पूञ् पवने, पविर्वज्रम्। तृ? प्लवनतरणयोः। तरिर्वरुआआदिस्थापनभाण्डम्। "स्त्रियां नौस्तणिस्तरिः" इत्यमरः। कु शब्दे। "कविर्वाल्मीकिशुक्रयोः।सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति"इति मेदिनी। ऋ गतौ। अरिः शत्रुः। कपिलकादित्वाद्वैकल्पिकं लत्वम्। अलिभ्र्रमरः।

खनि। खनु अवदारणे।कष खषेति दण्डके हिंसार्थकः। अज गतिक्षेपणयोः, असु क्षेपणे,वस आच्छादने, वन षण संभक्तौ, वनु याचने, षणु दाने। ध्वन शब्दे, ग्रन्थ बन्धने उभौ चुरादी। चल कम्पने, एभ्य इः स्यात्। "खनिः स्त्रियामाकरः स्यात्" इत्यमरः। ण्यन्तात् "अच इः" इति इप्रत्यये खानिरपि। "कनिरेव मता खानिः" इति द्विरूपकोशः। "ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः" इति मेदिनी। "ग्रन्थिर्ना पर्वपरुषी" इत्यमरः। वनिरग्निरिति। वनु याचने इत्यस्मादिप्रत्यये वनिर्याच्ञा इत्याहुः। चलिः पशुरिति। "चरिभ्यश्चे"ति पाठान्तरम्। चर गतौ, चरतिर्भक्षणेऽपि। चरिः पशुः।

वृतेः। वृतु वर्तनेऽस्मादिः स्यात्। बाहुलकाल्लोकेऽपि--- "साज्यं च वर्तिसंयुक्त"मिति प्रयोगः। "वर्तिर्भेषजनिर्माणे नयनाञ्जलनलेखयोः। गात्रानुलेपननीदीपदशादीपेषु योषिति" इति मेदिनी।

भुजेः। भुज पालनाभ्यवहारयोरस्मादिः स्यात्स च कित्। भुजिरग्निः।

कृ()गृ()शृ()। कृ? विक्षेपे, गृ? निगरणे, शृ? हिंसायाम्, पृ? पालनपूरणयोः, कुट कौटिल्ये, भिदिर् विदारणे, छिदिर् द्वैधीकरणे। "वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः"इत्यमरः। "इगुपधज्ञाप्रीकिरः" इति कप्रत्यये किर इत्यकारान्तोऽपि। "त्वचिः त्वचः, किरोऽपि स्यात्किरौ प्रोक्तः, पथ पथि" इति द्विरूपकोशः। "गिरिर्ना नेत्ररुग्भिदि। अद्रौ गिरिजकेयोषिद्रीर्णौ पूज्ये पुनरिउआषु" इति मेदिनी। कुटरिति। ङीषि तु कुटी। "कुटीशमीशुण्डाभ्यो रः"। कुटीरः। "कुटिः कोटे पुमानस्त्री घटे स्त्रीपुंसयोर्गृहे। कुटी स्यात्कुम्भदास्यां च सुरायां चित्रगुच्छके" इति मेदिनी।

कुडि। कुडि दाहे, कपि चलने, आभ्यामिः कित्स्याद्धातोर्नलोपश्च। "कपिर्ना सिंहके शाखामृगे च मधुसूदने" इति च।

सर्वधातुभ्यः। डुकृञ् करणे, चर गतौ, चरतिर्भक्षणेऽपि, जन जनने, भस भत्र्सनदीप्त्योः, शृ? हिंसायाम्, शर्म सुखे, ष्ठा गतिनिवृत्तौ,छद अपवारणे चुरादिः, त्रैङ् पालने। सुष्ठु त्रायते इति सुत्रामा इन्द्रः। "कर्म व्याप्ये क्रियायां च पुंनपुंनसकयोर्मतम्" इति रुद्रः। "चर्म कृत्तौ च फलके" इति मेदिनी।

बृंहेः। बृहि वद्धावस्मान्मनिन्, नुमो नकारस्याकारे ऋकारस्य यणादेशः। "ब्राह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे" इति मेदिनी।

अशि। अशू व्याप्तौ सङ्घाते च, शक्लृ शक्तौ। शक्मा इन्द्रः। छन्दसीत्यस्य शकिना सम्बन्धो न त्वशिना। अतएव "अश्मानमारोपयतः स्मरारेः" इति प्रयोगः।

ह्मभृ। ह्मञ् हरणे डुभृञ् धारणपोषणयोः, धृ धारणे,सृ गतो, स्तृञ् आच्छादने, शृ? हिंसायाम्। शरिमेति। एतच्चोज्ज्वलदत्तरीत्योक्तम्। दशपाद्यां तु शृ()णातिर्न पठ()ते, तत्स्थाने सृधातुं प्रक्षिप्य प्रत्ययं च दीर्घादिं नितं च कृत्वा, स्तृसृभ्यामीमन्निति पठ()ते, छन्दोग्रहणं चानुवर्तिनम्। युक्तं चैतत्। "पिपृतां नो भरीमभिः"। "वातस्य सर्गे

अभवत्सरीमणि। "स्तर्णं बर्हिः सुष्टरीमा जुषाणा" "यस्मामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिः" इत्यादिमन्त्राणां, तद्भाष्यस्य चानुगुणत्वात्। उक्तप्रयोगाणां भाषायामदर्शनेन च्छन्दोऽनुवृत्तेन्र्याय्यत्वाच्च। अतएव "वेत्रः सर्वत्रे"ति सूत्रे सर्वत्रग्रहणं करिष्यति।

जनि। जन जनने, मृङ् प्राणत्यागे।

वेत्रः। वेञ् तन्तुसन्ताने।

निपात्यन्त इति। "मनिनन्ता" इति शेषः। म्रा अभ्यासे। मलोपो, नाभावो वा। नाम = संज्ञा। षिञ् बन्धने। "सीमसीमे स्त्रिया मुभे" इत्यमरः। व्येञ् संवरणे, रु शब्दे। रोम गात्रकेशः। लूञ् छेदने। लोम स एव। पा पाने। पुगागमः। ध्यै चिन्तायाम्। बाहुलकाणयोः। "धाम देहे गृहे रश्मौ स्ताने जन्मप्रभावयोः" इति मेदिनी।

मथुने। शृ? हिंसायाम्। सुष्ठु शृणाति इति सुशर्मा राजविशेषः। कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदम्। मनिनि तु मध्योदात्तं स्यात्।

साति। षोऽन्तकर्मणि, अत सातत्यगमने, आभ्यां यथासंख्यमेतौ स्तः। स्यति दुःखयति दुरध्येयत्वात्साम। "साम क्लीबमपायस्य भेदे वेदान्तरेऽपि च" इति मेदिनी। "आत्मा पुंसि स्वभावे स्यात्प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्राह्णणोरपि" इति च।

हनि। हन हिंसागत्योः, मश शब्दे रोषकृते च। "मक्षिका भम्भराली स्यात्" इति हारावली।

कोररन्। कु शब्दे। कवरः-- पावकः। बवयोरैक्यात्कबरी केशविन्यास-। "जानपदे"ति ङीष्।अन्यत्र कबरा।

गिरः। गृ? निगरणे। केचित्तु सूत्रमिदं परित्यज्य गरुता डयत इति विगृह्य डीङो डप्रत्यये पृषोदरादित्वाद्गरुतस्तकारलोपे गरुडशब्दं क्लेशेन व्युत्पादयन्ति।

इन्देः। इदि परमै()आर्ये।उज्ज्वलदत्तस्तु कमिन्निति नितं पपाठ, तच्चिन्त्यम्। "इदं त्यत्पात्रमिन्द्रपानम्"। "इदं ते सोम्यं मधु" इत्यादौ नित्स्वराऽभावात्। दशपाद्यां तु "इणो दमक्" इति सूत्रितम्। इदमिति। सर्वनामशब्दोऽयं संनिहितपरामर्शी।

कायतेः। कै गै शब्दे। प्रयोजनाऽभावादेव मकारस्येत्संज्ञाविरहे सिद्धे डिमेरिकार उच्चारणार्थः। डकारस्तु टिलोपाऽर्थः। दशपाद्यां तु मान्तमेव डिमिति सूत्रितम्। किमिति सर्वनाम।

सर्वधातुभ्यः। दशपाद्यां तु अर्थात्सर्वधातुभ्यो भविष्यतीत्याशयेन "ष्ट्र" न्नित्येव सूचितम्()। अतएवाधिकं प्रक्षिप्तमित्याहुः। वस निवासे, असु क्षेपणे, शसु हिंसायाम्, छद अपवारणे ण्यन्तः। "अस्त्रं प्रहरणे चापे करवाले नपुंसक"मिति मेदिनी। पत्लृ गतौ।"पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः" इति मेदिनी। पा पाने। पात्रम्। षित्वान् ङीष्। "पात्राऽमत्रे त्रिषु क्लीबं रुआउवादौ राजमन्त्रिणि। तीरद्वयान्तरे योग्ये"इति मेदिनी। दंश दशने। व्रश्चादिना षत्वे ष्टुत्वं। षितां ङीषोऽनित्यत्वाट्टाप्। दंष्ट्रा।

भ्रस्जि। भ्रस्ज पाके, गम्लृ गतौ, णम प्रह्वत्वे शब्देच, हन हिंसागत्योः, विश प्रवेशने,अशू व्याप्तौ,एभ्यः ष्ट्रन् स्यादेषां वृद्धिश्च। भ्राष्ट्र इति। संयोगादिलोपः। "व्रश्चे"ति षत्वे ष्टुत्वम्। "क्लीबेऽम्बरीषं भ्राष्ट्रो ना" इत्यमरः।वैष्टरं = विष्टपम्।

दिवेः। दिवु क्रिडाद, अस्मात् ष्ट्रन् स्यात्। द्युदादेशो वृद्धिश्च धातोः।

उषि। उष दाहे, खनु अवदारणे, आभ्यां ष्ट्रन् कित्स्यात्। उष्ट्रः क्रमेलकः। "उष्ट्रे क्रमेलकमयमहाङ्गाः"इत्यमरः।

सिवि। षिवुतन्तुसन्ताने,मुच्लृ मोक्षणे,आभ्यां ष्ट्रन्कित्स्यात्,टेरूकारादेशश्च। सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा रूपसिद्धेरायुत्तार्थमिदं सूत्रम्। नच धञा तत्सिद्धिः "एर"जित्यस्य घञो बाधकत्वात्। "सूत्रंतुसूचनाग्रन्थे सूत्रतन्तुव्यवस्थयोः"इति वि()आः।

अमि।अमगतिशब्दसंभक्तिषु,चित्र् चयने,ञिमिदा स्नेहने,शसु हिंसायाम्। आन्त्रमिति। "अनुनासिकस्ये"ति दीर्घः। "श्रोणिलम्बिपुरुषाऽऽन्त्रमेखला"मिति कालिदासः। "आख्याश्चर्यश्चित्र"मित्यमरः। "मित्रं सुह्रदि न द्वयोः। सूर्ये पुंसि"इति मेदिनी। "शस्त्रं लोहाऽस्त्रयोः क्लीबं क्षुरिकायां तु योषिति" इति च प्रत्ययस्वरेणैतेऽन्तोदात्ताः। "शुन आन्त्राणि पेचे"। "चित्रं देवानाम्"। "मित्रं नयनम्"। "शस्त्रस्य शस्त्रमसि" इत्यादि।

पुवः। पूञ् पवनेऽस्मात्रः स्यात्,धातोर्ह्रस्वत्वं च। पुनाति स्ववंशानिति पुत्रः। पुंनामा नरकस्तस्मात् त्रायते इत्यर्थे"आतोऽनुपसर्गे कः" इति कप्रत्यये पुत्र इति व्युत्पत्त्यन्तरम्।

स्त्यायतेः। स्त्यै ष्ट()ऐ शब्दसङ्घातयोः। स्त्रीति। डित्वाट्टिलोपः। "लोपो व्यो"रिति यलोपः। टित्त्वान्ङीप्। "स्त्री योषिदबला योषा नारी सीमान्तिनी वधूः" इत्यमरः।

गृधृ। गुङ् अव्यक्ते शब्दे, धृञ् धारणे, वी गतिप्रजनादौ, डुपचष् पाके, वच परिभाषणे, यम उपरमे, षद्लृ विशरणगत्यादौ, क्षद इति सौत्रः। "गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः। संभावनीयबोधे च काननक्षेत्रवत्र्मसु"इति मेदिनी। "सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च" इत्यमरः। "सत्रं यज्ञसदादानच्छादनाऽरण्यकैतवे"इति मेदिनी। क्षत्रं ब्राआह्मणानन्तरजातिः।

हुयामा। हु दानादनयोः, या प्रापणे, मा माने, श्रु श्रवणे,भस भत्र्सनदीप्त्योः। होत्रमाहुतिः। होत्राशब्द ऋत्विक्ष्वपि स्त्रीलिङ्ग इति "होत्राभ्यश्छः"इति सूत्रे हरदत्तादयः। "यात्रा तु यातनेऽपि स्याद्गमनोत्सवयोः स्त्रिया"मिति मेदिनी। "मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षराऽवयवे स्वल्पे क्लीबं कात्स्न्र्येऽवधारणे" इति च। "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः इत्यमरः। "भरुआआ चर्मप्रसेविका"इति च।

गमेः। गम्लृ गतावस्मात्रन्स्याद्धातोराकारन्तादेश्च। "गात्रमङ्गे"कलेवरेः। स्तम्बेरमाग्रजङ्घादिविभागेऽपि समीरित"मिति वि()आः।

दादिभ्यः। दाप् लवने एवमादिभ्यरुआन्। दात्रं धान्यादिच्छेदनसाधनम्। पा पाने। "योग्यभाजनयोः पात्रमित्यमरः। क्षि निवासगत्योः। क्षित्रमित्यादि योज्यम्।

भूवादि। भू सत्तायाम्। भावित्रं त्रैलोक्यम्। वद व्यक्तायां वाचि ण्यन्तः। वादित्रं तूर्यादि। गृ? निगरणे।

चरेः। चर गतौ, अस्माण्णित्रन्स्याद्वृत्ते वाच्ये। "वृत्तं पद्ये चारित्रे च" इत्यमरः। ननु इत्रन्प्रत्यये चरित्रमित्युक्तं ततश्च प्रज्ञाद्यणि चारित्रमितिसिद्धौ किमनेनेति चेत्। मैवम्।स्वरे विशेषात्।

अशू व्याप्तावेवमादिभ्य इत्रः, त्रैङ् पालनेएवमादिभ्य उत्रश्च स्यात्। वहित्रमिति। वह प्रापणे। धरित्रीति। धृञ् धारणे,

गौरादित्वात् ङीष्।

अमेः। अम गतौ,अस्मादित्रः स्यात्स च चित्। उत्रस्तु नानुवर्तते, अस्वरितत्वात्। मित्रं नेति विग्रहे त्वमित्रमिति नपुंसकम्।

आः समिण्। इण् गतौ। अस्मादाप्रत्यये गुणे सत्ययादेशः। केषरिति। कष खषेति दण्डकः। समयानिकषाशब्दौ समीपवाचकौ। बाहुलकात् दुषेः। दोषा। दिवेराप्रत्यये बाहुलकादेवाऽस्य गुणाऽभावे दिवा। स्वदेराप्रत्यये बाहुलकादेव धातोर्धान्तादेशश्च॥ स्वधेत्यादि।

चितेः। चिती संज्ञानेऽस्मात्कणः प्रत्ययः स्यात्कश्चाऽन्तादेशः। अमरोक्तमाह-- चिक्कणमिति।

सूचेः। सूचपैशुन्येचुरादिस्मात्स्मन्,णिलोपः। कुत्वषत्वे। "सूक्ष्मं स्यात्कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके"इति मेदिनी।

पातेः। "पा रक्षणेऽस्माड्डुम्सुन्स्यात्। डित्वाट्टिलोपः। "उकारौच्चारणार्थ"इत्युज्ज्वलदत्तः। वस्तुतस्तूगित्कार्यार्थः-- सुपुंसीति। "उगितश्चे"ति ङीप्। नकारः स्वरार्थः। "पुंसोऽसु" ङिति सूत्रे न्यासरक्षिताभ्यां पुनातेर्मक्सुन् ह्रस्वश्चेति पठितम्। पूञो डुम्सुन्नत्यन्ये। भाष्ये तु सूतेः सप्रत्यये पुमानित्युक्तम्। "उपेयप्रतिपत्त्यार्था उपाया अव्यवस्थिताः"इति तत्त्वम्।

रुचि। रुचदीप्तावभिप्रीप्तौ च, भुज पालनदौ। "भुजिष्यस्तु स्वतन्त्रेच हस्तसूत्रकदासयोः। स्त्रियां दासीगणिकयोः इति मेदिनी।

वसेः। वस निवासे,वस आच्छादने। "बस्तिद्रवयोर्निरूहे नाभ्यदोभूदिशासु च"इति मेदिनी। शास इति। शासु अनुशिष्टौ। अस्यतीति। असु क्षेपणे। "अगस्तिः कुम्भयोनौच वङ्गसेनतरौ पुमान्िति मेदिनी।

सावसेः। अस् भुविअस्मात्सावुपपदे तिः स्यात्। बहुवनान्न भूभावः।

वौ। तसु उपक्षयेऽस्माद्विपूर्वात्तिः स्यात्। "अङ्गुष्ठे सकनिष्ठे स्याद्()वितस्तिद्र्वादशाङ्गुलः" इत्यमरः। "स्त्रीपुंसयोर्वितस्तिः स्या"दित्यमरमाला।

पदि। पदगतौ,प्रथ प्रख्याने,आभ्यां तिः स्यात्स च नित्। पत्तिरिति पदातिः। प्रथितिरिति। प्रख्यातिः। तितुत्रेष्विति। ग्रहादित्वादिडागमनिषेधो नेतिभावः।

दृणातेः। दृ? विदारणे। अस्मात्तिः स्याद्धातोर्ह्र्यस्वत्वं च नात्। "दृतिश्चर्मपुटे मत्स्ये ना" इति मेदिनी।

कृ()तृ()।कृ? विक्षेपे, तृ? प्लवनतरणयोः, कृपू सामर्थ्ये। "किरीटं मुकुटे न स्त्रीति चन्द्रगोमी। "कृपीटमुदरे नीरे" इति वि()आः। दशपाद्यां तु "कृ()तृ()कृपिकपिभ्य" इति पठित्वा कम्पीट इतिचतुर्थमुदाह्रतम्। [कृपो रो लः" इत्यत्र न्यासे तु "कृ()कृपिभ्या"मिति पठ()ते। अतस्तरतिरत्र प्रक्षिप्त इति कश्चित्। "तरतेश्चे"ति पृथक्पठित्वा तिरीटः कूलवृक्ष"इति कश्चिद्वाख्यात्]।

रुचिवचि। रुच दीप्तावभिप्रीतौ,च , वच परिभाषणे,कुच शब्देतारे, अथवाकुञ्च कौटिल्याल्पीभावयोः। इकः कित्त्वात्सूत्रे नलोपेन निर्देशः। कुट कौटिल्ये। उचितमिति। "वचिस्वपी"त्यादिना संप्रसारणम्।

कुटिकुषि। "कुड्मलो मुकुले पुंसिन द्वयोर्नरकान्तरे" इतिमेदिनी। कुष निष्कर्षे। कुष्मलं छर्दनम्। विकसतिमित्यन्ये।

सर्वधातुभ्योऽसुन्। दशपाद्यां तु असुन्नित्येव सूत्रम्। चिती संज्ञाने, चित संचेतने चुरादिः, सृ गतौ। गौरादित्वान्ङीष्। "सरसी तु महासरः"इति शब्दार्णवः। "हमान्ति सरांसि सरस्यः"इति भाष्यम्। पय गतौ, पीङ् पाने। "पयः स्यात्क्षीरनीरयोः"इति मेदिनी। षद्लृ विशरणादौ। सदः सभा। वर्च दीप्तौ। "वर्चो नपुसकं रूपे विष्ठायामपि तेजसि। पुंसि चन्द्रस्य तनये" इति मेदिनी। रुदिर् अश्रुविमोचने। "रोदश्च रोदसी चापि दिवि भूभौ पृथक् पृथक्। सहप्रयोगेऽप्यनयो रोदस्यावपि रोदसी इति" वि()आः। वी गत्यादिषु। "वयः पक्षिणि बाल्यादौ यौवने च नपुंसक"मिति मेदिनी। अन प्राणने। अनो भक्तम्। अनोऽश्मायःसरसां जातिसञ्जयोः"रिति टचि तु अनसम्। "पाकस्थानं महानस" मित्यमरः। तमु ग्लानौ। "तमः क्लीबं गुणे शोके सैहिकेयाज्योतिषि च पुंसि हेमन्तमार्गयोः" इति मेदिनी। तप संतापे। "तपो लोकान्तरेऽपि च। चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः" इति रभसः। "तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुंतुदे" इति मेदिनी। षह मर्षणे। "सहो बले शिशिरमाघयोः" इति च। मह पूजायाम्। "मह उत्स्वतेजसोः" इति मेदिनी। नभ हिंसायां भौवादिकः क्रैयादिकश्च। "नभोऽन्तरिक्षं गगन"मित्यमरः। "नभं तु नभसा सार्धं तपं तु तपसा सह। सहं च सहसा सार्धं महं च महसा सह। तमेन च तमः प्रोक्तं सहं तममित्याद्यजन्ता अपि सिध्यन्ति, परन्तु रज इति अकारान्तसकारान्तौ नलोपवच्छब्दौ न सिध्यत इति "रजेनाऽपि रजः सम"मिति कोशश्चिन्त्य एवेति चेदत्राहुः-- रञ्ज रागे इत्यस्मादसुनि "भूरञ्जभ्यां कि"दिति वुक्ष्यमाणेनाऽसुनः कित्त्वान्नलोपे रज इति सिध्यति। "घञर्थे कविधान"मिति कप्रत्यये तु रज इत्यदन्तोऽपि सिध्यतीति।

सपेः। रप व्यक्तायां वाचि, अस्मादसुन्स्यादत एकारश्च। रेपोऽवद्यमिति। "अरेपसा तन्वा" इति मन्त्रे निरवद्ययेति भाष्ये उक्तं, नञ्पूर्वकरेपःशब्दस्याऽनवद्यवाचकत्वात्।

अशेः। अशू व्याप्तौ सङ्घाते च , अस्मादसुन्स्याद्धातोर्युडागमश्च। यशः कीर्तिः।

उब्जेः। उब्ज "आर्जवे अस्मादसुन्स्याद्बले वाच्ये, बकारस्य लोपश्च। "ओजो दीप्ताववष्टम्भे प्रकाशबलयोरपि इति मेदिनी।

श्वेः। टु ओ()इआ गतिवृद्भ्योः। अस्मादसुन्स्यात्सम्प्रसारणं च।

श्रयतेः। श्रिञ् सेवायामस्मात्स्वाङ्गे वाच्येऽसुन्स्यात्स च किद्धातोः शिरादेशश्च। "उत्तमाङ्गं शिरः शीर्ष"मित्यमरः। घञर्थे कप्रत्यये तु शिर इत्यदन्तोऽपि। "शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा" इति कोशान्तरम्। "पिण्डं दद्याद्गयाशिरे" इति वायुपुराणे। "कुण्डलोद्घृष्टगण्डानां कुमाराणां तरस्विनाम्। निचकर्त शिरान्द्रौणर्नालेभ्य इव पङ्कजान्" इति महाभारतम्।

अर्तेः। ऋ गतावस्मादसुन् कित्स्याद्धातोरुत्वं च। रपरत्वम्। "उरोवत्सं च वक्षश्च" इत्यमरः।

व्याधौ। अर्तेरेव व्याधौ वाच्येऽसुन्, तस्य सुडागमश्च स्यात्।

अर्ण इति। पानीयमित्यर्थः।

इणः। इण् गतौ अस्मात्पापे वाच्येऽसुन् स्यात्तस्य नुडागमश्। एनः पापम्।

रिचेः। रिचिर् विरेचने, रिच वियोजनसंपर्चनयोरित्यस्माद्वा धने वाच्येऽसुन्। रेक्ण इति। "चजो"रिति कुत्वे "अटकुप्वा"ङिति णत्वम्। इह दशपादीवृत्तौ नुटं नानुवत्र्य रेकः रेकसी इत्युदाह्मतम्। तन्न। उत्तरसूत्रे

नुडनुवृत्तेर्निर्विवादत्वात्, मण्डूकप्लुतौ मानाऽभावनाल्लक्ष्यविसंवादाच्च। उज्ज्वलदत्तेन तु "रिचेर्धने चित्किच्चे"ति पठित्वा नुटं चानुवत्र्य कित्त्वाद्गुणाऽभावे नुटश्चुत्वेन ञकारे रिञ्चमिति साधितं तल्लोकवेदयोरप्रसिद्धत्वादुपेक्ष्यम्। "नित्यं रेक्णो अमत्र्यः परिषद्यं ह्नरणस्य रेक्णः" इत्यादिमन्त्रेषु रेक्ण इति प्रयोग एव साधीयानिति दिक्।

चायतेः। चायृ पूजानिशामनयोः। अस्मादन्ने वाच्येऽसुन्स्यात्तस्य नुट् च धातोर्ह्रस्वत्वं च। यलोपः। "चनो दधिष्वपवता" "सुते दधिष्व नश्चनः" इत्यादिमन्त्रेषु प्रसिद्धोऽयं चनशब्दः। एतेन चणोऽन्नमित्युदाह्रत्य बाहुलकाण्णत्वमिति वदन्तो दशपादीवृत्तिकारास्तदनुसारिणः प्रसादकारादयश्च परास्ताः।

वृङ्। वृङ संभक्तौ, शीङ् स्वप्ने, आभ्यां यथाक्रमं रूपे स्वाङ्गे च वाच्येऽसुन्स्यात्तस्य पुडागमश्च। वर्पो रूपमिति। "घ्नञ्छिश्नदेवा अभिवर्पसाऽभूत्" इत्यादिमन्त्रेषु प्रसिद्धमिदम्। "शेपः स्याद्वृषणं पेल"मिति सुभूतिचन्द्रः। अकारान्तोऽप्ययम्। "शेपपुच्छलाङ्गूलेषु शुनः" इति वार्तिके शेप इति निर्देशात्, "यस्यामुशन्तः प्रहराम शेप"मिति वैदिकप्रयोगाच्च। ["शेपः शेपौ च शेवश्च शेवं प्रोक्तं च शेर()सि" इति द्विरूपकोशः]।

रुआउरीभ्याम्। रुआउ गतौ, रीङ् रुआवणे, आभ्यामसुन्स्यात्तस्य तुट् च। "रुआओतोऽम्बुवेगेन्द्रिययोः" इति वि()आः। रेतः शुक्रे पारदे च" इति मेदिनी।

पातेः। पा रक्षणेऽस्माद्बले वाच्येऽसुन् जुडागमश्च [वर्गतृतीयादिः]। युट् चेत्यन्तस्तादिपाठस्तूज्ज्वलदत्तस्य प्रामादिकः। "पृथुपाजा अमत्र्यः" इत्यादिमन्त्रतद्भाष्यविरोधात्।

उदके। पातेरुदके वाच्येऽसुन्स्यात्तस्य थुडागमश्च। "कबन्धमुकदकं पाथः" इत्यमरः।

अदेः। अद भक्षणे। "भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः। "द्विजातिशेषेम यदेतदन्धसा" इति भारविः।

स्कन्देः। स्कन्दिर् गतिशोषणयोः। अस्मात्स्वाङ्गे वाच्येऽसुन्, धश्चान्तादेशः।

आपः। आप्लृ व्याप्तौ। अस्मात्कर्माख्यायामसुन्, ह्रस्वश्च धातोः। प्रत्ययस्य नुडागमस्तु वा स्यात्। "अप्नस्वतीम()इआना" अपासि यस्मिन्नधि संदधुः" बाहुलकादिति। उपलक्षणं, ह्रस्वनुटौ वा स्त इति व्याख्यानस्यापि संभवात्। तथा च "ब्राउवते कतमेऽपि नपुंसकमापः" इति कोशमुदाह्रत्य "सर्वमापोमयं जग"दिति प्रयोगो दुर्घटवृत्तौ समर्थितः।

रूपे। रूपे वाच्ये आप्नोतेरसुन्, ह्रस्वत्वं च धातोः, प्रत्ययस्य जुडागमश्च स्यात्। अब्ज इति। "झलां जश् झशी"ति पकारस्य बकारः।

उदके। उदके वाच्ये आप्नोतेरसुन्, ह्रस्वत्वं, नुमागमो भश्चान्तादेशः।

नहेः। णह बन्धने अस्माद्गमने वाच्येऽसुन्भश्चान्तादेशः स्यात्। "नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे। घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृत"मिति वि()आः। "नभः क्लीबं व्योम्नि पुमान्धने। घ्राणश्रवणवर्षासु बिसतन्तौ पतद्ग्रहेर" इति मेदिनी। "नभः खं श्रावणो नभाः" इत्यमरः। "नभं तु नभसा सार्ध"मिति द्विरूपकोशादकारान्तोऽपि।

इणः। इणोऽसुन्स्यादपराधे वाच्ये, धातोरागादेशश्च। वि()आओक्तिमाह--आग इति।

अमेः। अम गत्यादौ। अस्मादसुन्, हुगागमश्च धातोः स्यात्। अमन्ति गच्छन्त्यनेनाऽधस्तादित्यंहो दुरितम्।

रमेश्च। रमेरसुन्स्यात्, हुगागमश्च धातोः। रहो वेगः। अहिरहिभ्यामसुना सिद्धे अघिरघिभ्यामसुनि अङ्घो रङ्घ इति माभूदिति सूत्रद्वयमिति गोवर्द्धनः। तथा च "स्यान्मघ्योष्मचतुर्थत्वमंहसो रंहसस्तथा" इति द्विरुपकोशः। एवं च "तत्तार्घाः सिद्धसङ्घैर्बिदधतु घृणयः शीघ्रमङ्घघोविघात"मिति, "रङ्घःसङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः" इत्यत्र अङ्घो रङ्घ इति घकारपाठोऽनुप्रसारसिकानां प्रामादिक इति वदन्ति।

देशेः। देशे वाच्ये रमेरसुन्, हकारश्चान्तादेशः स्यात्। "रहस्तत्त्वे रते गुह्ने" इति मेदिनी।

अञ्चि। अञ्चू गतिपूजनयोः, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, युजिर् योगे , युज समाधौ, भृजी भर्जने। अङ्कः अङ्कसी अङ्कांसि। अङ्गः अङ्गसी अङ्गांसि। योगः योगसी योगांसि। भर्गस्तेज इति। "हरः समहरो भर्गः" इत्यत्र तु भर्गशब्दो घञन्तः पुंलिङ्ग इति बोध्यः। उच समवायेऽस्मादसुनि बाहुलकात्कुत्वम्। न्यङ्क्वादित्वाद्वा। "ओक आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसक"मिति मेदिनी।

भूरञ्जि। भू सत्तायाम्, रञ्ज रागे, आभ्यामसुन्कित्स्यात्। भुवोऽन्तरिक्षम्। षष्ठ()न्तप्रतिरूपकमव्ययमिदम्। रजो रेणुः। "रजः क्लीबं गुणान्तरे। आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते" इति मेदिनी। घञर्थे कप्रत्यये तु अकारान्तोऽप्ययम्। "रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिषु" इत्यजयकोशः।

वसेः। वस निवासेऽस्मादसुन् स्यात्स च णित्। णित्वाद्वृद्धिः।

च्नदेः। चदि आह्लादने, अस्मादसुन्, आदेः छकारश्च। "छन्दः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोः" इति मेदिनी। अकारान्तोऽप्ययम्। "अभिप्रायवशौ छन्दौ" इत्यमरद्विरूपकोशौ।

पचि। डुपचष् पाके, वच परिभाषणे, आभ्यामसुन्स्यात्तस्य सुडागमस्च। चस्य कुत्वे सस्य षत्वम्। पक्षः पक्षसी पक्षांसि। "यथा शालायै पक्षसी" इति श्रुतिः। "पूर्वोत्तरे द्वे पक्षसी" इति अनीकाधिकरणे शाबरभाष्यम्। माधवस्तु पक्ष परिग्रह इत्यस्मादसुन्नित्याह।

वहि। वह प्रापणे, ओहाक् त्यागे, डुधाञ्धारणादौ, एभ्योऽसुन्स्यात्। अत्र पूर्वसूत्रात्सूटमनुवर्तयतामुज्ज्वलदत्तादीनां मतेनोदाहरणमाह-- वक्षाः हासाः धासा इति। प्राञ्च इति। सकलवृत्तिकृतः, प्रसादकारादयश्चेत्यर्थः। एतञ्चाऽयुक्तम्। उक्तोदाहरणानि हि न तावल्लोके दृश्यन्ते न वा संभवन्ति। सूत्रेऽस्मिन्छन्दसीत्युक्तत्वात्। वेदे तु विपरीतान्येवोदाहरणानि दृश्यन्त इत्याह-- वस्तुतस्त्विति। वेदभाष्यकारादयश्चेहानुकूला इत्यवधेयम्।

इणः। इण्गतौ, अस्मादासिः स्यात्।

मिथुने। सुयशा इति। "अशेर्देवने युट् चे" त्यादि पूर्ववत्। सुपयाः सुरुआओता इत्याद्युदाहार्यम्।

नञि। हन्तेर्नञ्युपपदेऽसिः स्याद्धातोरेहादेशश्च। "ऋदुशनस्पुरुदंसे" त्यादिना सावनङ्।

विधाञः। डुधाञ् धारणादौ, विपूर्वादस्मादसिः स्याद्वेधादेशश्च सोपसर्गाधातोः। "वेधाः पुंसि ह्मषीकेसे बुधे परमेष्ठिनी"ति मेदिनी।

नुवः। णु स्तुतौ, अस्मादसिः स्यात्तस्य धुडागमश्च। नोधा इति। "सद्यो भवद्वीर्याय नोधाः" इति मन्त्रे "नोदा ऋषिर्भवती"ति

निरुक्तम्। नवं दधातीति तु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम्।

गति। गतौ कारके चोपपदेऽसिः स्यात्। तप संतापे, विद ज्ञाने, विद्लृ लाभे।

चनद्रे। चन्द्रं रजतममृतं च , तदिव मीयतेऽसौ चन्द्रमा इति हरदत्तः। स च डिदिति। डित्त्वाट्टिलोपे चन्द्रमसौ चन्द्रमस इत्यादि सिध्यति।

वयसि। डुधाञ् धारणे अस्माद्वयस्युपपदेऽसिः स्यात्स च डित्।

पयोधा इति। पयः शब्द उपपदे?उधाञः पूर्ववत्।

पुरसि च। पुरः शब्दे उपपदे पूर्ववत्। "पुरोधास्तु पुरोहितः" इत्यमरः।

रौतेरिति। रु शब्दे। "पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः" इत्यमरः।

चक्षेः। चक्षिङ् व्यक्तायां वाचि, अस्मादसिः स्यात्स च बहुलं शित्। शित्त्वात्सार्वधातुकसंज्ञायां ख्याञ् न। नृचक्षाः राक्षसः। शित्त्वाऽभावपक्षे तु ख्याञ्यादेशः। प्रख्याः प्रजापतिः।

उषः। उष दाहेऽस्मादसिः स्यात्स च कित्। उषः प्रभातम्। दशपाद्यां तु "वसः कि"दिति पाठः। वसति सूर्येण सहेति उषाः देवताविशेषः। "अपो भि" इति सूत्रे "उषसश्चेष्यते" इति वार्तिकस्थसमुषद्भिरित्युदाहरणं विवृण्वद्भर्हरदत्तादिभिरयं पाठः पुरस्कृतः।

दमेः। दमु उपशमे। "सप्तार्चिर्दमुनाः शुक्रः" इत्यमरः। पक्षे "अन्येषामपि दृश्ययें" इति दीर्घः। "जुष्टो दमूनाः" "दमूनसं गृहपतिं वरेण्यम्"। दशपाद्यां तु "दमेरूनसिः" इति सूत्र एव दीर्घः पठ()न्ते तन्मते बाहुलकाद्ध्रस्वो बोध्यः। अगिर्गत्यर्थः। अङ्गिरा ऋषिभेदः।

सर्तेः। सृ गतौ। प्रायेणेति। "स्त्रियां बहुष्वप्सरसः प्रार्थितयोर्विवादः" इति रघुः।

विदि। विद ज्ञाने, भुज पालनाभ्यवहारयोः, आभ्यां वि()आशब्दे उपपदेऽसिः स्यात्()। शब्दस्वरूपपरत्वाद्विधे इत्यत्र स्मिन्नादेशो न कृतः। उदाहरणे वि()आं वेत्ति, भुङ्क्ते इति विग्रहः। यत्तु "तत्पुरुषे कृती"ति सप्तम्या अलुक् वि()ओवेदाः = अग्निः, वि()ओभोजाः इन्द्र" इत्युज्ज्वलदत्तेनोक्तं, तन्न, तथा सति स्मिन्नादेशस्य दुर्वारत्वापत्तेः। "सुमृलीको भवतु वि()आवेदाः" "पूषा भगः प्रमृथे वि()आभोजाः" #इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात्, वृत्त्यन्तरे तथैवोदाहरणाच्च।

वशेः। वश कान्तौ। "उशना भार्गवः कविः" इत्यमर। इत्युणादिषु चतुर्थः पादः।

अथ पञ्चमः पादः।

अदि भुवो। "अ" दित्यव्ययमाकस्मिकार्थे। अस्मिन्नुपपदे भूधातोर्डुतच्स्यात्। डित्त्वाट्टिलोपः। अद्भुतमाश्चर्यम्।

गुधेः। गुध परिवेष्टने। गुध्यते परिवेष्ट()ते प्राणिभिरिति। "गोधूमो नागरङ्गे स्यादौषधिब्राईहिभेदयोः" इति मेदिनी।

मसेः। मसी परिणामे।

स्थः। ष्ठा गतिनिवृत्तावस्मादूरन्। कित्त्वादालोपः। स्थूरो मनुष्य इति। "स्थूरस्य रायो बृहतो य ईशे" इति मन्त्रे तु योगपुरस्कारात्स्थिरस्येत्यर्थ इति व्याख्यातम्।

पातेः। पा रक्षणे।

वातेः। वा गतिगन्धनयोः। रभसकोशस्थमाह-- वातिरिति।

अर्तेः। ऋ गतौ, अस्मादतिः स्यात्स च नित्।

तृहेः। तृह हिंसायाम्, क्नस्य कित्त्वाद्गुणाऽभावः।

वृञ्। वृञ् वरणे, लुट विलोडने, तनु विस्तारे, तड आगाते, चुरादि एभ्य उलच्स्यात्, तण्डादेशश्च धातो-। यद्यपि "सानसिधर्णसी"ति सूत्रे तण्डुलशब्दो निपातिस्तथापि प्रत्ययस्वरेण मध्योदात्तः सः, अयं तु चित्स्वरेणाऽन्तोदात्त इति विवेकः।

दंसेः। दसि दंशनदर्शनयोः, अस्माट्टटनौ स्यातां नकारस्याऽऽकारश्च। टनो नकार आद्युदात्तार्थः। "दासः शूद्रे दानपात्रे भूत्यधीबरयोरपि" इति वि()आः।

दंशेः। दंश दशनेऽस्मादपि टटनौ स्तो, नकारस्य चात्वं स्यात्। "कैवर्ते दाशधीवरौ" इत्यमरः।

उदि। चिञ् चयने। डैसो डित्त्वाट्टिलोपः।

सौ रमेः। रमु क्रीडायाम्।

पूञः। पूञ् पवने। "पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः" इति वि()आः।

रुआंसेः। रुआंसु अधः पतने, कित्त्वं गुणाऽभावार्थम्।

अर्तेः। ऋ गतावस्मात्कुप्रत्ययः स्याद्धातोरुत्वं च। रपरत्वम्। "युवोरनाकौ"। "मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके" इत्यमरः।

हिंसेः। हिसि हिंसायाम्।

उदि। दृ? विदारणे।

डित्खनेः। खनु अवदारणे, अस्मादजलौ स्तः। "मुखं निःसरणे वक्त्रेप्रारम्भोपाययोरपि। सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसक"मिति मेदिनी।

अमेः। अम गतौ। "स्कन्धो भुजशिरोंसोऽस्त्री" इत्यमरः। "अंसः स्कन्धे विभागे च" इति दन्त्यान्ते वि()आः।

मुहेः। मुह वैचित्यऽस्मात्खप्रत्ययो धातोर्मूरादेशश्च। मुह्यतीति मूर्खः। "अज्ञे मूढ()थाजातमूर्खवैधेयबालिशाः" इत्यमरः।

नहेः। णह बन्धने। अस्मात्खः स्यात्। "नखी कररुहे षण्ढे गन्धद्रव्ये नखं नखी" इति वि()आः। "नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकम्" इति मेदिनी।

शीङः। शीङ् स्वप्नेऽस्मात्खः स्याद्धातोर्ह्रस्वश्च। ह्रस्वविधानसामर्थ्याद्गुणाऽभावः। "शिखा शाखाबर्हिचूडालङ्गालिक्यग्रमात्रके। चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च" इति मेदिनी।

माङः। माङ् माने। "मयूखस्त्विटकरज्वालासु" इत्यमरः।

कलि। कल शब्दसङ्ख्यानयोः, गल अदने, आभ्यां फक्स्यात्, धातोरकारस्योत्वं च। गुल्फ इति। "तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः। तयोः पादयोग्र्रन्थी इत्यर्थः।

स्पृशेः। स्पृश संस्पर्शे। "पार्(ाः कक्षाऽधरे चक्रोपान्ते पर्शुगमेऽपि च " इति वि()आमेदिन्यौ।

श्मनि। श्रिञ् सेवायाम्, अस्मात् श्मन्युपपदे डुन्स्यात्। डित्त्वाट्टिलोपः। "तद्वृद्धौ श्मश्रु पुंमुखे"इत्यमरः। पुरुषस्य मुखे तेषां रोम्णां वृद्धौ श्मश्रुशब्दो वर्तत इत्यर्थः।

अ()आआदयः। अशू व्याप्तावस्माद्रुन्प्रत्ययो, नञ्पूर्वात् श्रयतेर्डुन् च। यत्तूज्ज्वलदत्तेनोक्तम्-- "अश्नातेर्डुन् रुट् चे" ति, तदयुक्तम्, डित्त्वाट्टिलोपे सति धातोरश्रवणप्रसङ्गात्। न च टिलोपाऽभावो निपात्यत ति वाच्यं, तथा सति डित्त्वोप्रेक्षमस्य निष्फलत्वापत्तेरिति दिक्।

जनेः। जनी प्रादुर्भावे अस्माट्टन्प्रत्ययः स्याद्धातोरन्त्यलोपश्च। "जटा लग्नकचे मूले मांस्यां प्लक्षे पुनर्जटी"ति मेदिनी।

जङ्घेति। जनेरच्प्रत्यये सति "अजाद्यतः" इति टाप्।

देहावयवे वाच्ये हन्तेरच्प्रत्ययः स्याद्द्वित्वं च धातोः। अभ्यासकार्यम्। "अभ्यासाच्चे"ति कुत्वम्। अमरोक्तिमाह-- पश्चान्नितम्ब इति। " जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपि" इति मेदिनी।

क्लशेः। क्लिशू विबाधनेऽस्मादन्स्यात्। "केशः स्यात्पुंसि वरुणे ह्रीबेरे कुण्डलेऽपि च" इति मेदिनी।

फलेः। फल निष्पत्तौ। "पलितं जरसा शौक्ल्य"मित्यमरः। "पलितं शैलजे तापे केशपाशे च कर्दमे" इति मेदिनी।

कृञादिभ्यः। डुकृञ् करणे। करकः कमण्डलुः। "करकस्तु पुमान्पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ" इति मेदिनी। करका वृष्टिपाषाणः। कटे वर्षावरणयोः। "कटको वलये सानौ"। "क्वुन् शिल्पसंज्ञयोः" इति क्वुनाप्ययं सिद्धः। तथा च गुणभाज इहैव वुनि उदाहार्याः, गुणनिषेधभाजस्तु क्वुनि। उदासीनास्तु यत्र कुत्रचिदिति भावः। नृ? नये। "स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रिया"मित्यमरः। "नरकः पुंसि निरये देवाऽरातिप्रभेदयोः" इति मेदिनी। उदयनाचार्यास्तु-- "नच नरकाण्येव सन्ती"ति क्लीबं प्रयुञ्जते, तन्निर्मूलमित्याहुः। सृ गतौ। "सरकोऽस्त्री शीधुपात्रे शीधुपानेक्षुशीधुनोः" इति मेदिनी। कुर शब्दे। "कोरकोऽस्त्री कुड्मले स्यात्कक्कोलकमृमालयोः"इति मेदिनी। "विचकार कोरकाणी"ति माघः। "कोरकः पुमान्" इत्यमरोक्तिस्तु नादर्तव्येत्याहुः। अपवरकादयोऽपि इहैव बोध्याः।

चीकयतेः। चिक आमन्त्रणे, चीक च चुरादिः। अस्याद्यन्तविपर्ययः। पचिमच्योरित्वं चानुपदं वक्ष्यमाणं बाहुलकबललभ्यं बोध्यम्। "कीचको दैत्यभिद्वाताहतसस्वनवशयोः" इति मेदिनी। डुपचष् पाके। "उलूके करिणः) पुच्छमूलोपान्ते च पेचकः" इत्यमरः।

"पचको गजलाङ्गूलमूलोपान्ते च कौशिके" इति मेदिनी। मचि मुचि कल्कने। "मेचकस्तु मयूरस्य चन्द्रके श्यामले पुमान्। तद्युक्ते वाच्यबक्त्लीबं रुआओतोऽञ्जनान्धकारयोः" इति मेदिनी।

जनेः। जन जनने, जनी प्रादुर्भावे वा। "जठरः कठिनेऽपि स्या"दित्यमरः। "जठरो न स्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रिषु" इति मेदिनी।

वचि। वच परिभाषणे, मन ज्ञाने, आभ्यामरप्रत्ययः स्यात्स च चित्। रश्चान्तादेशः। वठरः कुक्कुटे वण्टे शठे च" इति मेदिनी।

ऊर्जि। दृ? विदारणेऽस्मादूर्ज्युपपदे अलचौ प्रत्ययौ स्तः।

हन्तेः।हन हिंसागत्योः।

क्रमि। क्रमु पादविक्षेपि, गम्लृ गतौ, क्षमूष् सहने, एभ्यस्तुन्स्यादेषां वृद्धिश्च॥

हयतेः। हर्य गतिकान्त्योः। "हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः। अक्षये मानभेदे स्यादकुप्ये च नपुंसक"मिति मेदिनी।

कृञः।डुकञ् करणे।

जने। "तु" इत्यविभक्तम्। जनेस्तुप्रत्ययो रेफश्चान्तादेशः स्यात्।

ऊर्णोतेः। ऊर्णुञ् आच्छादनेऽस्माड्डः स्यात्। डित्वाट्टिलोपः। टाप्। "ऊर्णामेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः" इत्यमरः। भ्रुवोर्मध्ये य आवर्तस्तत्रेत्यर्थः। "अन्तरान्तरेणे"ति द्वितीया।

दधातेः। डुधाञ् धारणादौ। अस्माद्यत् प्रत्ययः स्यात्तस्य नुडागमश्च। "धान्यं व्रीहिषु धान्याके" इति मेदिनी।

जीर्यतेः। जॄ? वयोहानावस्मात् क्रिन्स्यात्। ऋत इद्धातोः "। रपरत्वम्। रेफस्य वकारादेशः।

मव्यतेः। मव्य बन्धने। अन्त्यस्येति। वकारस्येत्यर्थः।

ऋजेः। ऋजी गतौ।

तनोतेः। तनु विस्तारेऽस्माड्डौः प्रत्ययस्तस्य सन्वद्भावाद्द्वित्वमभ्यासस्येत्वं च। डित्वाट्टिलोपः। पृथगुच्चारणसामर्थ्याद्गुणो न। तितौः चालनी। "सक्तुमिव तितौना पुनन्तो यत्र धीरा मनसा वाचमक्रत"। "तितौः परपवनं भवति" इति पस्पशायां भाष्यम्। "चालनी तितौः पुमा"नित्यमरः। "चालनं तितौन्युक्त"मिति कोशान्तरम्। "स्याद्वास्तु हिङ्गु तितौ" इति पुंनपुंसकवर्गे त्रिकाण्डशेषः। अर्भक। एते निपात्यन्ते। निपातनप्रकारमेवाह-- ऋधु वृद्धावित्यादि। प्रथेरिति। प्रथ प्रख्याने, पा पाने। पिवति स्तनादिकमिति पाकः। "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः।

अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च"। "पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत्"। "पाकः परिणतौ शिशौ। केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च"इति मेदिनी।

अवद्य। एते कुत्सिते। निपात्यन्ते। वद व्यक्तायां वाचि, अव रक्षणादौ, ऋ गतौ, "रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। "निकृष्टप्रतकृष्टार्वरेफयाप्याऽवभाऽधमाः" इत्यमरः। "कुपूयकुसिताऽवद्यखेटगह्र्राऽणकाः समाः" इति च। "अधमः स्याद्गह्र्र ऊनेऽपि" इति मेदिनी। "अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गकः"। "रेफो रवर्णे पुंसि स्यात्कुत्सिते

पुरन्यव"दिति च मेदिनी।

लीरीङोः। लीङ् श्लेषणे। रीङ् श्रवणे। क्रमादिति। श्लेषणे वाच्ये तप्रत्ययः, कुत्सिते वाच्ये रप्रत्यय इत्यर्थः। "लिप्तं विषाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते" इति वि()आः।

क्लिशेः। क्लिशू विबाधने। नामागमश्चेति। "प्रत्ययस्ये"ति शेषः। चिन्त्यमिति। ईत्वविधानसामर्थ्यादेव गुणाऽभावसिद्धेरिति भावः। "कीनाशः कर्षकः क्षुद्रोपांशुघातिषु वाच्यवत्। यमे ना" इति मेदिनी।

अश्नोतेः। अशू व्याप्तौ अस्माद्वरट् स्यात्। ई()आरी। आशुकर्म वरदानादिक्रिया यस्य तस्मिन्वाच्ये। शीघ्रदातरीत्यर्थः। ई()आर इति। स्त्रियां तु टित्वान्ङीप्। ई()आरी प्रत्ययस्वरेण मध्योदात्ता। ईशेर्वनिपि "वनो र चे"ति ङीब्रायोस्तु धातुस्वरेणाद्युदात्ता। पुंयोगलक्षणे ङीषि अन्तोदात्ता। "स्थेशभासपिसकसः"इति वरचि तदन्ताट्टापि ई()आरेति विवेकः। "ई()आरो मन्मथे शम्भौ नाट()ए स्वामिनि वाच्यवत्। ई()आरी चे()आरोमाया"मिति मेदिनी। ई()आरा-- उमायामिति छेदः। "ई()आरः शङ्करेऽधीशे तत्पत्न्यामी()आरी()आरा" इति बोपालितः। "विन्यस्तमङ्गलमहौषधिरी()आरायाः" इति भारविः। दशपादायं तु सूत्रान्तरमपि "हन्ते रन् घश्चेति। हन हिंसागत्योरस्माद्रन्प्रत्ययः स्याद्घश्चान्तादेशः। हन्यते गम्यतेऽतिथिभिरिति घरः = गृहम्।

चतेः। चते याचनेऽस्मादुरन्स्यात्। अकार उच्चारणार्थः। "चतुरनडुहोरामुदात्तः" इत्याम्। चत्वारः।

प्राततेः। अत सातत्यगमने प्रपूर्वादस्मादरन्स्यात्। रेफादकार उच्चारणार्थः। स्वरादिपाठादव्ययत्वम्। प्रातर्।

अमेः। अम गतिशब्दसंभक्तिषु, अस्मादरन्स्यात्तस्य तुडागमश्च। अन्तःशब्दोऽपि प्रातः शब्दवदव्ययम्।

दहेः। दह भस्मीकरणे। "नगो महीरुहे शैले भास्करे पवनाऽशने" इति मेदिनी।

सिचेः। षैच क्षरणे। हकारादेश इति। धातोरन्त्यस्येत्यर्थः। "सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः। सिंही क्षुद्रवृहत्योः स्याद्वासके राहुमातरि" इति वि()आः।

व्याङि। घ्रा गन्धोपादानेऽस्माज्जातौ वाच्यायां कः स्यात्। कित्त्वादातो लोपः। "व्याघ्र स्यात्पुंसि शार्दूले रक्तौरण्डकरञ्जयोः। श्रेष्ठे नराद्युत्तरस्थः कण्टकार्यां च योषिति" इति मेदिनी।

हन्तेः। हन्तेरच्स्याद्धातोर्घुरादेशश्च। "घोरं भीमे हरे" इति वि()आः।

क्षमेः। क्षमूष् सहने। "क्ष्माऽवनिर्मेदिनी मही"त्यमरः।

तरतेः। तृ? प्लवनतरणयोरस्मात् ड्रिः स्यात्। डित्वाट्टिलोपः।

ग्रहेः। ग्रह उपादाने। ङीषिति। "कृदिकारा"दित्यनेन। "ग्रहणी रुक् प्रवाहिका" इत्यमरः।

प्रथेः। प्रथ प्रख्याने। "प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्(), इति मेदिनी। "प्रथमचरमे"ति वैकल्पिकसर्वनमत्वात्पक्षेः जसः शीभावः। प्रथमे प्रथमाः।

चरेश्च। चर गतिभक्षमयोरस्मादमच्स्यात्। चरमे चरमाः। योगविभागश्चिन्त्यप्रयोजनः। "प्रथिचरिभ्या"मित्येव सुचवचम्।

मङ्गेः। उख उखीत्यादिदण्डके गत्यर्थको मागः पठ()ते। "कल्याणं मङ्गलं शुभम्"। मङ्गलो ग्रहभेदः। "मङ्गला सितदूर्वायामुमायां पुंसि भूमिजे। नपुंसकं तु कल्याणे सर्वार्थे रक्षणेऽपि च" इति मेदिनी। भावे ष्यञि-- माङ्गल्यम्। "तत्र साधुः" इति यत्। "मङ्गल्यः स्यात्त्रायमाणाऽ()आत्थबिल्वमसूरके। स्त्रियां शम्यामधःपुष्प्यां मिसिशुक्लवचासु च। रोचनायामथो दध्नि क्लीबं शिवकरे त्रिषु" इति मेदिनी। इत्युणादिषु पञ्चमः पादः।

उणादिप्रत्ययाः सन्ति पादोत्तरशतत्रयम् (३२५)। तेषां विवेचनं त्वत्र ज्ञानेन्द्रस्वामिभिः कृतम्॥१॥

प्राचा तु कतिपयानामेवोणादीनामुपन्यासः कृतो न तु सर्वेषां , सोऽप्युपन्यासो नैकप्रघट्टकतया कृतः, किंतु विच्छिद्येति स्पष्टम्। तत्रापि केचित्प्रमादा मनोरमायां प्रदर्शितास्तेष्वेव कांश्चित्प्रमादान्दर्शयामः। [ द्वितीयपादे--]। "भजो ण्वि#उ#ः" इति ण्विप्रकरणे "छन्दसि सहः" "वहश्चे"त्युपन्यस्य "परौ व्रजेः षः पदान्ते" इति ण्विस्तेनैव षः, परिव्राडित्ययं हि प्राचो ग्रन्थः। तद्व्याख्यायां तत्पौत्रेण "प()?चपाद्युणादिसूत्रे इदं पठ()ते" इत्युक्तं, तदुभयमपि प्रामादिकम्। "क्विब्बवची"ति क्विब्दीर्घौ हि प्रक्रम्य "परौ व्रजे" रिति सूत्रस्य पाठात्। अस्मिन्नंशे पञ्()चपादीदशपाद्योरेकवाक्यत्वात्।[यदपि प्राचो ग्रन्तोऽपि प्रयुक्तः। सूत्रारूढे सर्वसंमते चार्थे केचिदित्युक्तेरप्रामाणिकत्वात्। ]। यदपि "धनर्तिचक्षिङ्()वपितपिजनियजेरुस्" इति पठितं, तदप्यनाकरम्। तथा हि-- "जनेरुसिःरट "अर्तिपृ()वपियजितनिधनितपिभ्यो नित्"। "एतेर्णिच्च"। "चक्षेः शिच्चे"ति सर्वसंमतः पाठः, "तपूंषि तस्मै वपुषो वपुष्टर"मित्यादिमन्त्रेषु आद्युदात्तताया अनुकूलश्च। वेदबाष्ये एवमेव स्थितम्। इत्यादयो द्वितीयपादे प्रमादाः। तृतीयपादेऽपि--"स्तनिदूषिपुष#इगदिमदिह्रदिभ्यो णेरित्नु"ञिति प्राचा पठितं , तत्र दूषिह्रदी केषामपि वृत्तिकृतां ग्रन्थे न पठितौ। दूषयित्नुः ह्रदयिन्नुरिति प्रयोगोऽप्याकरे न दृष्टः। "स्तनिह्रषिपुषिमुदिगदिमदिभ्य" इति हि पञ्चपादीपाठः। "घुषिगन्धिमण्()डिजनिनमिभ्यः" इति दशपाद्यामधिकं पठितमित्यन्यदेतत्। यदपि "श्रुदक्षिस्पृहिद्दृगृहिजृ()भ्य आय्यः" इति पठित्वा दराय्य जराय्य इति प्राचोक्तं, तदपि न, दृ()जृ()ग्रहणस्याऽकरानारूढत्वात्। [यदपि "जृ()विशिभ्यां झच्" "गण्डिमण्डिजनिनन्दिभ्यस्चे"त्युक्त्वा गण्डयतो जनयन्त इत्युदाह्रतं प्राचा, यच्च गण्डयन्त इति प्रतीकमुपाया मेघनामेदमिति व्याख्याय गडि वदनैकदेशे इति व्याख्यातृभिर्विवृतं, तत्सर्वं प्रामादिकम्। तथाहि उणादिषु गडीति निरनुषङ्गं पठित्वा गड सेचने इति विवृतं, "अयामन्ते" ति सूत्रे वृत्तिन्यासहरदत्तादिसकलग्रन्थेष्वेवं , माधवग्रन्थेष्वेवं, माधवग्रन्थेऽप्येवमेव।युक्तं चैतत्। मेघ इति व्याख्यानं प्रति सेचनार्थस्यैवाऽनुगुणत्वात्। जनेः पाठोऽप्यप्रामाणिकः। जिधातुं पठित्वा "जयन्तः पाकशासनि" रिति सर्वैर्विवृतत्वात्, जनयन्त इति लक्ष्यस्य कैरपि अप्रदर्शितत्वात्। अप्रसिद्धत्वाच्च] इत्यादयस्तृतीयपादे प्रमादाः।

अथ चतुर्थे-- यदपि "कृ()गृ()स्तृ()जागृभ्यः क्विन्। कीर्विः गीर्विः स्तीर्वि"रिति प्राचोक्तं, तदपि लिपिभ्रमप्रयुक्तमेव। कृ? विक्षेपे, गृ? निगरणे, स्तृ()ञ् आच्छादने इति प्राचो ग्रन्थं विवृण्वतामुक्तिरपि मूलाऽशुद्ध्यैवाऽशुद्धा। "जृ()शृ()स्तृ()जागृभ्यः क्विन्" इति हि पाठ उणादिवृत्तिकृतां माधवादीनां च संमतः। जीर्विः पशुः। शीर्विर्हिरुआः। स्तीर्विरध्वर्युरिति च तद्ग्रन्थेषूपपादितम्। स्तृ? इत्यस्य दीर्घान्तत्व एवहि "ऋत इद्धातोः" इतीत्वं लभ्यते न तु ह्रस्वान्तत्वेऽपि , तस्माद्यथाकरमेव हि ग्रहीतुमुचितमिति दिक्। यदपि प्राचोक्तं--"ग्लाज्याहात्वरिभ्यो निः" इति, तदप्यनाकरम्। आकरे हि "वीज्याज्वरिभ्यो निः" इति पठित्वा सूत्रद्वयानन्तरं "वहिश्री"ति सूत्रे "ग्लाहात्वरिभ्यो निः" इति, तदप्यनाकरम्। आकरेहि "वीज्याज्वरिभ्यो निः" इति पठित्वा सूत्रद्वयानन्तरं "वहिश्री" ति सूत्रे "ग्लाहात्वरिभ्यो नि"दिति सूत्रितत्वात्। "तूर्णी"रथः सदानवः" इत्यादावद्युदात्तदर्शनाच्च। नच "स्त्रियां क्ति" न्नित्यधिकारस्थं वार्तिकमेवेदं प्राचोदाह्रतं न तूणादिसूत्रस्तमिति वाच्यम्, एवमपि त्वरतेः पाठस्याऽनुचितत्वात्। न ह्रसौ वार्तिकेऽस्तीति दिक्। एवं "संस्त्याने स्त्यायतेर्ड्र" डित्यपि प्राचोदाह्रतमनाकरम्। "स्त्यायतेर्ड्र" डित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां

चोपलम्भात्। "संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्प्रसवे पुमान्िति भाष्ये श्लोकपाठः, [स एव माधवेनोपन्यस्तो] न तु सूत्रपाठस्य तथात्वं दृश्यते, एवं तद्ग्रन्थव्याख्यातृ()णामपि प्रमादा ऊह्याः। तद्यथा "पाणिन्यादिमुनी"ति व्याचक्षाणैरुक्तम् "मनेरुच्चोपधायाः" इति, न ह्वेवंविधं सूत्रं पञ्चपाद्यां दशपाद्यां वास्ति, अत इत्यनुवर्तमाने "मनेरुच्च" इत्येव सूत्रितत्वादिति दिक्। इति चतुर्थपादे प्राचः प्रमादाः। इत्युणादयः।

इति तत्त्वबोधिन्याम् उणादयः॥

अथ उत्तरकृदन्तम्।

उणादयो बहुलम्। "वर्तमाने ल"डित्यतो वर्तमानग्रहणं, "पुवः संज्ञाया"मित्यतः संज्ञाग्रहणं चानुवर्तते। तदाह--एते इति। अत्र हि सूत्रे "धातोःर" "प्रत्ययः" "कृदिति"ङति चानुवर्तते, तेन "कृवापाजिमी"त्यादिना विहितानामष्टाध्यायीबहिर्भूतानामप्युणादीनां प्रत्ययसंज्ञा, कृत्संज्ञा च सिध्यति। तथा चोणादिप्रत्ययाः सर्वे धातोः परत्र "कर्तरि कृ"दिति कत्र्रर्थे भवन्ति। उणादिप्रत्ययान्तस्य "कृत्तद्धिते"ति प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिरित्यादिसर्वमपीष्टं सिध्यति। अपरिपूर्णानामुणादीनां परिपूरणार्थं बहुलग्रहणम्। तस्य फलमाह-- केचिदविहिता अपीति। ह्मषेरुलज्विहितः, स तु शङ्केरपि भवति, शङ्कुलेति प्रयोगदर्शनात्। किच्च फिडफिड्डप्रत्ययौ कुत्रापि न विहितौ अर्तेरुह्लेते ऋफिडः ऋफिड्ड इति, तयोः कित्तवं च कल्प्यते। तथा षण्ढ इत्यत्र सत्वाऽभावश्चेत्यादि। संज्ञास्विति। अनादिसंज्ञास्वेव, न तु सर्वास्वित्याहुः। "ह्मषेरुल"जिति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते। तेन शङ्कुलेति सिद्धम्। ऋ गतावित्यादिभ्यः फिडाफिड्डादिप्रत्यया गृह्न्ते। कार्याद्विद्यादिति। "ऋफिड" इत्यादौ गुणप्रतिषेधादिकार्यानुरोधादनुबन्धं ककारादिकं विद्यात्। अनूबन्धमित्यत्र "उपसर्गस्य घञी"ति दीर्घः। एतदुणादिषु शास्त्रं = शासितव्यमित्यर्थः।

---

सूत्रम्
काशिका-वृत्तिः
सेधतेर् गतौ ८।३।१११

गतौ वर्तमानस्य सेधतेः सकारस्य मूर्धन्यादेशो न भवति। अभिसेधयति गाः। परिसेधयति गाः। गतौ इति किम्? शिष्यमकार्यात् प्रतिषेधयति।
लघु-सिद्धान्त-कौमुदी
सात्पदाद्योः १२४८, ८।३।११३

सस्य षत्वं न स्यात्। कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति। दधि सिञ्चति॥
न्यासः
सात्पदाद्योः। , ८।३।११३

"आदेशप्रत्यययोः" ८।३।५९ इति षत्वे प्राप्तेऽयं प्रतिषेध-॥
बाल-मनोरमा
सात्पदाद्योः , ८।३।११३

सात्पदाद्योः। शेषपूरणेन सूत्रं व्याचष्टे--सस्य षत्वं न स्यादिति। सातेरवयवस्य, पदादेश्च सस्य षत्वं न स्यादित्यर्थः। "न रपरसृपी"त्यतो नेति, "अपदान्तस्ये"त्यतो "मूर्धन्य" इति चानुवर्तत इति भावः। पदादेरुदाहरति--दधि सिञ्चतीति।

षिचिधातोः "धात्वादेः षः सः" इति षस्य सः। तस्य "आदेशप्रत्यययो"रिति षत्वे प्राप्ते।ऽनेन निषेधः। कृत्स्नमिति। सर्वावयवोपेतमित्यर्थः। "अग्निसा"दित्यत्र प्रत्ययावयवसकारत्वात् षत्वे प्राप्तेऽनेन निषेधः। अग्नीभवतीति। च्विप्रत्यये "च्वौ चे ति दीर्घः। महाविभाषयेति। "समर्थाना"मित्यतो वाग्रहणानुवृत्तेरित्यर्थः। माहाविभाषया सिद्धे इह विभाषाग्रहणं तु अपवादेन मुक्ते औत्सर्गिकच्वेः समावेशार्थम्।

---

सूत्रम्

काशिका-वृत्तिः

प्रतिस्तब्धनिस्तब्धौ च ८।३।११२

प्रतिस्तब्ध निस्तब्ध इत्येतौ मूर्धन्यप्रतिषेधाय निपात्येते। स्तन्भेः ८।३।६७ इति प्राप्तं षत्वं प्रतिषिध्यते। प्रतिस्तब्धः। निस्तब्धः।

न्यासः

सिचो यङि। , ८।३।११४

"आदेशप्रत्यययोः" (८।३।५९) इति "उपसर्गात्? सुनोति" ८।३।६५ इति च प्राप्तस्य षत्वस्यार्य प्रतिषेधः। "सेसिच्यते" इति। "आदेशप्रत्यययोः" ८।३।५९ इति प्राप्तिः। "अभिसेसिच्यते" इति। अत्र "उपसर्गात्? सुनोति" ८।३।६५ इत्यादिना। कथं पूनरत्र प्रतिषेधः प्रवत्र्तते? यावता "उपसर्गात्()" ८।३।६५ इत्यादिना सूत्रेण षत्वं प्रतिषेधविषये विधीयते। अत्रोपसर्गस्थान्निमित्ताद्या प्राप्तिः सा यथा "सात्पदाद्योः" ८।३।११३ इतीमं पदादिलक्षणप्रतिषेधं बाधते, तथा "सिचो यङि" (८।३।११२) इत्यतच्च? इति देश्यमाशङ्क्याह--"उपसर्गाथा प्राप्तिः" इत्यादि। येन नाप्राप्तिन्यायेन (व्या।प।४९) पदादिलक्षणस्यैव प्रतिषेधस्य बाधा युक्ता, तत्र प्राप्त एवोपसर्गार्थमारभ्यते, "सिचो यङि" (८।३।११२) इत्येतस्मिन्? पुनः प्राप्ते चाप्राप्ते च। अथ वा--"पुरस्तादपवादा अनन्तरान्? विधीन्? बाधन्ते नोत्तरान्()" (व्या।पा।९) इत्येवमुपसर्गात्? षत्वप्राप्तिः सिचः पदादिलक्षणमेव प्रतिषेधं बाधते, न तु सिचो यङीत्यभिप्रायः॥

तत्त्व-बोधिनी

सिचो यङि ४०३, ८।३।११४

सिचो यङि। अभ्याससकारस्य "उपसर्गात्सुनोती"ति,ततः परसय् तु "स्थादिष्वभ्यासेन चे"ति षत्वे प्राप्ते निषेधोऽयम्। यङि किम्?। अभिषिषिक्षति।

---

सूत्रम्

काशिका-वृत्तिः

सोढः ८।३।११३

सहिरयं सोधभूतो गृह्यते। तस्य सकारस्य मूर्धन्यादेशो न भवति। परिषोढः। परिसोढुम्। परिसोढव्यम्। सोढभूतग्रहणं किम्? परिषहते।

न्यासः

सेधतेर्गतौ। , ८।३।११५

"उपसर्गात्()" सुनोति" ८।३।६४ इति प्राप्तस्य षत्वस्य प्रतिषेधः। प्रतिषेधस्याकार्यादिति निवारणे सेधतिर्थत्र्तते॥

बाल-मनोरमा

सेधतेर्गतौ १२२, ८।३।११५

सेधतेः। न षत्वमिति। "न रपरे"त्यतो नेत्यनुवृत्तेरिति भावः। गङ्गां विसेधतीति। गच्छतीत्यर्थः। इह "उपसर्गात्सुनोती"ति षत्वं न भवति। अनन्तरस्येति न्यायेन उपसर्गात्सुनोतीत्यस्यैवायं निषेधः,न त्वादेशप्रत्ययोरित्यस्यापि। तेन सिषेधेत्यादौ आदेशप्रत्ययोरिति षत्वं भवत्येव। षिधू इति। ननु वाक्यसङ्घविशेषात्मकस्य शास्त्रस्य अक्रियारूपतवात्कथं धात्वर्थत्वमित्यत आह---शास्त्रं शासनमिति। माङ्गल्यं तु--शुभकर्म। षिध गत्यामितिवदस्यापि रूपाणि।

तत्त्व-बोधिनी

सेधतेर्गतौ ९७, ८।३।११५

सेधतेर्गतौ। श्तिपा निर्देशाद्गत्यर्थादस्माद्यङ्लुकि न निषेधः,तेनोपसर्गमाश्रित्य षत्वं भवत्येव-- "विषेषिधीति"। न च सेदेति शपा निर्देशाद्यङलुकि "उपसर्गात्सुनोती"ति षत्वं न भवेदिति शङ्क्यं,दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चरितार्थतत्वात्। अन्यथा सेधतेरिति श्तिपा निर्देशस्य वैयथ्र्यापत्तेरिति दिक्। षिधू शास्त्रे। माङ्गस्यं- मङ्गलक्रिया। स्वार्थे ष्यञ।

---

सूत्रम्

काशिका-वृत्तिः

स्तम्भुसिवुसहां चङि ८।३।११४

स्तम्भु सिवु सह इत्येतेषां चङि परतः सकारस्य मूर्धन्यादेशो न भवति। स्तन्भेः ८।३।७७ इति, परिनिविभ्यः इति च प्राप्तः मूर्धन्यः प्रतिषिध्यते। स्तम्भु पर्यतस्तम्भत्। अभ्यतस्तम्भत्। सिवु पर्यसीषिवत्। न्यसीषिवत्। सह पर्यसीषहत्। व्यसीषहत्। स्तम्भुसिवुसहां चङ्युपसर्गादिति वक्तव्यम्। उपसर्गाद्या प्राप्तिः तस्याः एव प्रतिषेधो यथा स्यात्, अभ्यासाद्या प्राप्तिः तस्या मा भूतिति। तथा च एव उदाहृतम्।

न्यासः

प्रतिस्तब्धनिस्तब्धौ च। , ८।३।११६

"प्रतिस्तब्धम्(), निस्तब्धम्()" इति। "स्तम्भेः" ८।३।६७ इति प्राप्तस्य षत्वस्यापवादो निपात्यते॥

---

सूत्रम्

काशिका-वृत्तिः

सनोतेः स्यसनोः ८।३।११५

सुनोतेः सकारस्य मूर्धन्यदेशो न भवति स्ये सनि च परतः। अभिसोष्यति। परिसोष्यति। अभ्यसोष्यत्। पर्यसोष्यत्। सनि किम् उदाहरनम्? अभिसुसूषति। न एतदस्ति प्रयोजनम्, तत्र स्तौतिण्योरेव षण्यभ्यासात् ८।३।७१ इति नियमात् न भविष्यति। इदं तर्हि, अभिसुसूषते? एतदपि न अस्ति, स्थादिष्वभ्यासेन च अभ्यासस्य ८।३।६४ इति नियमात्। इदं तर्हि, अभिसुसूषतेः अप्रत्ययः अभिसुसूः इत्युदाहरनम् इति? अत्र हि सन्षभूतो न भवति इत्यभ्यासात् प्राप्तिरस्ति। स्यसनोः इति किम्? सुषाव।

न्यासः

सोढः। , ८।३।११७

"परिनिविभ्यः" ८।३।७० इति प्राप्ते षत्व आरभ्यते। "सोढः" इति। निष्ठायामपि प्रथमैकवचने कृत एतद्रूपं भवति। एतद्ग्रहणाशङ्कानिरासायाह--"सहिरयम्()" इत्यादि। "सोङ्भूतः"["सोढभूतः"--प्रांउ।पाठः] इति। हकारे ढकारे कृते यद्रूपं भवति तत्प्राप्त इत्यर्थः। ढकारस्तु जश्त्वे न श्रूयते। "परिसोढः" इति। घत्वढत्वष्टुत्वढलोपेषु कृतेषु "सहिवहोरोदवर्णस्य" ६।३।१११ इत्योकारः॥

बाल-मनोरमा

सोढः १९५, ८।३।११७

सोढः। "सोढ" इति सहेरोवत्वसंपन्नस्य षष्ठ()न्तम्। "सहेः साडः सः" इत्यतः स इति षष्ठ()न्तमनुवर्तते। "न रपरे"त्यतो नेति। "मूर्धन्य" इत्यधिकृतम्। तदाह--सोढ्()रूपस्येत्यादिना।

तत्त्व-बोधिनी

सोढः १६८, ८।३।११७

षत्वं नेति। "न रपरे" ति सूत्रान्नेत्यनुवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

सदिष्वञ्जोः परस्य लिटि ८।३।११६

सदि ष्वञ्ज इत्येतयोः धात्वोः लिटि परतः सकारस्य परस्य मूर्धन्यः न भवति। अभिषसाद। परिषसाद। निषसाद। विषसाद। परिषस्वजे, परिषस्वजाते, परिषस्वजिरे। अभिषस्वजे। स्वञ्जेः संयोगान्तादपि विभाषा लिटः कित्त्वम् इच्छन्ति इति पक्षे ऽनुषङ्गलोपः।

न्यासः

स्तम्भुसिवुसहां चङि। , ८।३।११८

अत्राद्यस्य "स्तन्भेः" ८।३।६७ इति षत्वे प्राप्ते, इतरयोस्तु "परिनिविभ्यः" ८।३।७० प्रतिषेधेऽयमारभ्यते। "अभ्यतस्तम्भत्()" इति। णिच्(), लुङ्(), णिश्रिद्रुरुआउभ्यः कत्र्तरि चङ्()" ३।१।४८, णिलोपः, "चङि" ६।१।११ इति द्विर्वचनम्(), पूर्ववत्? खयः शेषः, अट्(), "प्राक्सितादड्व्यवायेऽपि" ८।३।६३, "स्थादिष्वभ्यासेन चाभ्यासस्य" ८।३।६४ इति व्यवाये सत्युपसर्गस्थान्निमित्तातु षत्वं प्राप्तं न भवति। "पर्यसीषिवत्()" इत्यादि। पूर्ववल्लुङादि, सिवेर्लधूपधगुणः, सहेस्तु "अत उपधायाः" ७।२।११६ इति बृद्धिः, "सन्वल्लघुनि" ७।४।९३ इतीत्त्वे, उभयोः "णो चङ्युपधायाः" ७।४।१ इति ह्रस्वः। "दीर्घो लघोः" ७।४।९४ इति दीर्घः। अत्रापि "सिवादीनां वाङ्यवायेऽपि" (८।३।७१) इत्यङ्व्यवाय उपसर्गस्यान्निमित्तात्? परेषां प्राप्नोति, तत्र भवति। "सिवुसहोः" इत्यादि। एतयोः सिवुसहोश्चङ्युपसर्गस्थान्निमित्तात्? षत्वं प्राप्नोति, तनमा भूदित्येवमर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्()? इत्याह--"उपतर्गाद्या प्राप्तिः" इत्यादि। तत्रेदं व्याख्यानम्()--"ङपसर्गात्? सुनोति" ८।३।६५ इत्यतो मण्डूकप्लुतिन्यायेनोपसर्गादितीहानुवत्र्तते। तेनोपसर्गाद्या प्राप्तिस्तस्या एव प्रतिषेधो भविष्यतीति। "तथा चैवोदाह्नतम्()" इति। यत्तदर्थरूपं व्याख्येयम्(), तत्तथोक्तम्()। तदर्थरूपमेवोदाह्नतमित्यर्थः॥

बाल-मनोरमा

स्तन्भुसिवुसहां चङि ४०८, ८।३।११८

स्तन्भुसिवु। "उपसर्गनिमित्तस्य प्रतिषेध" इति वार्तिकम्। " न रपरसृपी"त्यतो नेत्यनुवर्तते। "सहे साडः सः" इत्यतः स इति षष्ठ()न्तमनुवर्तते। "मूर्धन्य" इत्यधिकृतम्। तदाह -- उपसर्गनिमित्त इत्यादि। स्तम्भुः सौत्रो धातुः। "षिवु ततन्तुसन्ताने" "षह मर्षणे" पर्यसीषिवत् न्यसीषहदिति। "परिनिविभ्यः सेवे"त्युपसर्गनिमित्तं षत्वं न। अभ्यासनिमित्तं तु षत्वं भवत्येव। आटिट्त आशिशदिति। आट् इ अ त्, आश् इ अ त् इति स्थिते "णौ चङी"त्युपधाह्रस्वात्प्रागन्तरङ्गत्वा"चङी"ति द्वित्वमाशङ्क्याह-- बहिरङ्गोऽपीति। उपधाह्रस्वश्चङ्परण्यपेक्षत्वाद्बहिरङ्गः। द्वित्वं तु चङ्मात्रापेक्षत्वादन्तरङ्गम्। अथाऽपि द्वित्वात्प्रागेव उपधाह्रस्व इत्यर्थः। कुत इत्यत आह-- ओणेरिति। "ओणृ अपनयने" इति धातोः ऋदित्करणम् औणिणदित्यत्र " नोग्लोपी"ति उपधाह्रस्वप्रतिषेधार्थम्। यदि तु उपधाह्रस्वात्प्रागेव अन्तरङ्गत्वाद्द्वित्वं स्यात्तदा ओण् इ अ त् इत्यत्र "अजादेर्द्वितीयस्ये"ति णीत्यस्य णिचा सह द्वित्वे सति पश्चादोकारस्य चङ्परे णौ उपधात्वाऽभावादेव ह्रस्वस्याऽप्रसक्तत्वादृदित्करणं व्यर्थं स्यात्। "द्वित्वात्प्रागेव उपधाह्रस्व"इत्यभ्युपगमे तु ओण् इ अ त् इत्यस्यामवस्थायां प्राप्तस्य ह्रस्वस्य निषेधार्थमृदित्करणमर्थवत्। अतो "बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेवे"ति विज्ञायते इत्यर्थः। ननु आटिटत् आशिशदिति सिध्यत्येवेति किमनेन ज्ञापनेनेत्यत आह-- मा भवानिदिधदिति। एध् इ अ त् इति स्थिते पूर्वं द्वित्वप्रवृत्तौ "धी"त्यस्य द्वित्वे पश्चादेकारस्य ह्रस्वो न स्यात्, द्वित्वात्प्रागेव उपधाह्रस्वे तु इध् इ अ त् इति स्थिते "धी"त्यस्य द्वित्वे माङ्योगादाडभावे इदिधदिति इष्टं सिध्यतीत्यर्थः। ननु मा भवान् प्रेदिधदित्यत्र प्र इदिधदिति स्थिते कृतेऽपि ह्रस्वे एकदेशविकृतन्यायेन एधधातुत्वात् "एत्येधत्यूठ्सु" इति वृद्धिः स्यादित्यत आह-- एजादावेधताविति। "अवर्णादेजाद्योरेत्येधत्यो"रिति व्याख्यातत्वादिति भावः। औन्दिददिति। उन्द् इ अ त् इति स्थिते "दी"त्यस्य द्वित्वमिति भावः। आड्डिडदिति। अड्डधातुर्दोपधः। ष्टुत्वसंपन्नो डकारः। अड्डि अ त् इति स्थिते ष्टुत्वस्याऽसिद्धत्वेन दकारात्परस्य "डि"इत्यस्य द्वित्वमिति भावः। आर्चिददिति। अर्च् इ अ त् इति स्थिते रेफात् परस्य "ची"त्यस्य द्वित्वमिति भावः। उब्ज आर्जवे इति। ननु चङि "ब्जी"त्यस्य द्वित्वे हलादिशेष#ए औबिब्जदिति रूपं स्यात्। औब्जिजदित्येव द्वित्वमिति भावः। तर्हि दकारः कुतो न श्रुयते इत्यत आह-- भुजन्युब्जाविति। ननु द्वित्वात्प्रागन्तरङ्गत्वाद्दकारस्य बकारादेशे सति "न न्द्रा" इति निषेधस्य कथमिह प्रवृत्तिरित्यत आह-- स चेति। ननु "द्रु गतौ" द्रावयति, चङि "द्रु"इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोरुपधाह्रस्वे "रुआवतिशृणोती"त्यभ्यासस्य इत्त्वे अदिद्रवदिति इष्यते। तन्नोपपद्यते। "न न्द्राः" इति दकारस्य द्वित्वनिषेधादित्यत आह--अजादेरित्येवेति। "न न्द्राः" इत्यत्र अजादेरित्यनुवर्तत एवेत्यर्थः। "आदिभूतादचः" इति व्याख्यातं प्राक्। ततश्च आदिभूतादचः परा नदरा द्विर्न भवन्तीति फलितम्। नेहेति। प्रकृते आदिभूतादचः परत्वाऽभावान्न दकारद्वित्वनिषेध इत्यर्थः। "अदिद्रप"दिति पाठे द्राधातोर्णिचि पुकि "द्रापी"त्यस्माद्रूपम्। ननु "लावस्थायाम"डिति पक्षे अचः परत्वमस्त्येवेति चेन्न, "न न्द्राः" इत्यत्र "लिटि धातो"रित्तो धातोरित्यनुवर्त्य धातुसंज्ञाकालिकादादेरचः परा नदरा द्विर्नेति व्याख्यानादित्याहुः।

तत्त्व-बोधिनी

स्तन्भुसिवुसहां चङि ३५७, ८।३।११८

स्तन्भुः सौत्रः। "षिवु तन्तुसंताने"। षह मर्षणे"। स्तन्भतेः "स्तन्भेः" इत्यनेन प्राप्तिरन्ययोस्तु "परिनिविभ्यः" इत्यनेनेति विवेः। आटिटत्। आशिशदिति। णिचा सह द्वित्वात्सन्वद्भावो नेति त्दविषये विहितो यो "दीर्घो लघो"रिति दीर्घः स न प्रवर्तते। ऋदित्करणाल्लिङ्गादिति। यदि पूर्वं द्विर्वचनं भवेत्तद। णिशब्दस्य द्वित्वे

सत्युपधाह्रस्वस्याऽप्राप्तेस्तत्प्रतिषेधार्थमृदित्करणं व्यर्थं स्यादतस्तदुक्तेऽथ ज्ञापकमेव। एजादावेधताविति। "एत्येधत्यूठ्सु" इति सूत्रे "एजाद्योरेत्येधत्यो"रिति व्याख्यातत्वादिति भावः। न च मा भवान्प्रेदिधदित्यत्र "णौ चङी"ति ह्रस्वे कृते नायमेधतिरिति वृद्धेरप्रवृत्तौ किमेधतेरेजादिविशेषमेनेति वाच्यम्, एकदेशविकृतस्याऽनन्यत्वात्। न चैवमपि "अजादेर्द्वितीयस्ये"ति धिशब्दस्थाने धिधिशब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभाघसंमोह इति वाच्यं, "द्विः प्रयोगो द्विर्वचनं षष्ठ"मिति भाष्ये सिद्धान्ततत्वात्। अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात्, "जिघांसती"त्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यादिति दिक्। उब्ज आर्जव इति। अयमुपध्मानीयोपध इति वार्तिककृतोक्तम्। तस्य "झलां जश् झशी"ति झश्त्वेन बकारे कृते-- अब्जिता उब्जितुमिति रूपम्। एतच्चाऽयोगवाहानां शर्षु पाठस्य फलम्। भाष्यकारादयस्तूपध्मानीयोपधपाठे "उब्जिजिषती"ति रूपं न सिध्येत्। यदि "पूर्वत्राऽसिद्धीयमद्विर्वचने" इत्याश्रित्य बकारोत्तरं द्वित्वं क्रिये, यदि वा अस्याऽनित्यतामाश्रित्य बकारात्पूर्वमेवोपध्मानीयस्य द्वित्वमुभयतापीष्टरूपाऽसिद्धिः, आद्ये उबिब्जिषति, द्वितीये तूपध्मीनीयस्याऽच्त्वात्तदादेः "अजादेर्द्वितीयस्ये"ति द्वित्वे हलादिः शेषे द्वितीयोपध्मानीयस्य जश्त्वेन बकारे पश्चात्प्रथमस्यापि तथैव बकारे उब्ब्जिषतीत्यापत्तेः। ततश्चेष्टसिद्धये दकारोपधोऽयं स्वीकार्यः। "बुजन्युब्जा"विति निपातनादुपधादकारस्य बो भवतीति वाक्यं कल्प्यते, तच्च "स्तोः श्चुना श्चु"रित्यस्याग्रे। तदयमर्थः--- श्चुना योगे उद्()जेर्दकारस्य बकार इति। अभ्युद्रः समुद्र इत्यत्र तु उब्जिता उब्जितुमित्यत्रेव चवर्गयोगो नास्तीति न बकारः। दकारोपधे चास्मन्स्वीकरृते "न न्द्राः" इति निषेधाज्जिशब्दस्य द्वित्वे ततो बकारे च उब्जिजिषतीति सिध्यति रूपम्। न च "पूर्वत्रासिद्धीयमद्विर्वचने"इति धकारोत्तरं द्विर्वचने सति स्यादेवाऽनिष्टमिति वाच्यम्, द्विर्वचने हि त्रैपादिकं सिद्धं न तु तन्निषेधेऽपि। तथा च निषेधे त्रिपादीश्थस्याऽसिद्धत्वात् "न न्द्राः" इति निषेधः प्रवर्तते। य्दवा तादृशवाक्यमिह न कल्प्यते किं तु "भुजन्युब्जौ" इति निपातनेन दस्य ब इति। न चैवं बकारसहितस्य द्वित्वप्रसङ्गः, धातोर्दकारोच्चारणसामर्थ्यात्। नचाऽभ्युद्र इत्यादावपि बकारश्रवणप्रसङ्गः, अकुत्वविषय एव बकारनिपातनाभ्युपगमात्। यद्वा अभ्युद्र इत्यादि रूपं द्व्युपसर्गाद्रमेर्डप्रत्यये ज्ञेयम्। उद्()जेस्तु घञि अनभिधात्प्रयोगाऽभाव इति वदन्ति। तदेतद्भाष्यादिमतमभिप्रेत्याह-- उपदेशे दकारोपध इत्यादि। अजादेरित्येवेति। "न न्द्राः" इत्यत्र अजादेरित्यनुवर्तते, तेन आदिभूतादचः परा एव नदरा द्विर्नोच्यन्ते नान्ये इत्यर्थः। ननु "लावस्थायामेव "अ"डिति भाष्याकोरक्तपक्षे अदिद्रपदित्यत्र अजादित्वमस्त्येव, न्याय्यश्च प्रथममट्, परत्वादन्तरङ्गत्वाच्चेति चेत्। अत्राहुः-- द्वितीयस्येत्यप्यत्रानुवर्तते, तत्सामर्थ्याच्च नित्यं द्वितीयस्येति तदर्थः। तेन लावस्थायामटि कृतेऽपि दातुसंज्ञाप्रवृत्तिकाले अजादित्वाऽभावान्नोक्तदोषः। नित्यं द्वितीयस्यैकाचो ये नदरास्तेषामेव निषेधात्। न चैवं नित्य#ं द्वितीयस्येति व्याख्ययैव इष्टसिद्धावजादेरित्यस्याऽत्रानुवृत्तिर्मास्त्विति वाच्यम्, इन्द्रिदीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः। अजादेरित्युक्तौ त्वादिभूतदचः परत्वं दकारस्य नेति सिद्धमिष्टम्। न च अजादेरिति कर्मधारयात्पञ्चमीत्युक्तत्वात्। इह च एकदेशे स्वरितत्वं प्रतिज्ञाय अच इत्येवानुवत्र्यताम्। अथवा आदेरित्य्सयाप्यनुवर्तनमस्तु, तस्य नावयवपरत्वं, किंतु पूर्ववर्तिमात्रपरत्वं, शब्दाधिकाराश्रयणादिति ज्ञेयम्। नन्वेवमुत्तरार्थतया द्वितीयस्येति ग्रहणस्य सार्थकत्वे स्थिते "द्वितीयस्येति न वक्तव्य"मिति भाष्यं विरुध्येतेति चेत्। मैवम्। यस्मिन्सूत्रे पठितं तत्र मास्त्विति तदाशयात्। रन च अजादेरित्येतावत्युक्तेयस्य कस्यचिदेकाचो द्वित्वं स्यादिति वाच्यम्, प्रथमस्यैकाचः पूर्वेणैव सिद्धेः पुनरारम्भो द्वितीयस्य द्वित्वार्थमिति सुवचत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

निव्यभिभ्यो ऽड्व्यवाये वा छन्दसि ८।३।११७

नि वि अभि इत्येतेभ्यः उपसर्गेभ्यः उत्तरस्य सकारस्य अड्व्यवाये छन्दसि विषये मूर्दह्न्यादेशो न भवति वा। न्यषीदत् पिता नः, न्यसीदत्। व्यषीदत् पिता नः, व्यसीदत्। अभ्यषीदत्, अभ्यसीदत्। सदिष्वञ्जोरिति तदिह न अनुवर्तते। सामान्येन एव तद्वचनम्। व्यष्टौत्, व्यस्तौत्, अभ्यष्टौत्, अभ्यस्तौतित्येतदपि सिद्धं भवति। इति वामनकाशिकायां वृत्तौ अष्टमाध्यायस्य तृतीयः पादः। अष्टमाध्यायस्य चतुर्थः पादः।

न्यासः

सुनोतेः स्यसनोः। , ८।३।११९

"अभ्यसोष्यत्()" इति। लृङ्()। "अभिसुसूषति" इति। सन्(), "इको झल्()" १।२।९ इति कित्त्वे गुणाभावः। "ऋज्झनगमां सनि" ६।४।१६ इती दीर्घः। "अत्र" इत्यादि। इतिकरणो हेतौ। अत्र यस्मात्? "स्तौतिण्योरेव षण्यभ्यासात्()" ८।३।६१ इत्यतो नियमादप्राप्ते "स्थादिष्वभ्यासेन" ८।३।६४ इति नियमादप्राप्तिस्तस्मादभिसुसूरित्युदाहरन्ति। स्यादेतत्()--अत्रापि नास्ति यत्? तदप्युदाहरणं नोपपद्यते? इत्यत आह--"सन्? षभूतो न भवति" इत्यादि। षभूते हि सनि स्तौतिण्योरेव ८।३।६१ नियमः, न चात्र सन्? षभूतः। तस्मादसति सन्ग्रहणेऽब्यासस्थान्निमित्तात् "आदेशप्रत्यययोः" ८।३।५९ इति षतद्वं न प्राप्नोति। अभ्यासग्रहणमुपसर्गात्? प्राप्तेरसन्भवात्()। अत उपसर्गस्थान्निमित्ताद्धातुसकारस्य षत्वं न प्राप्नोति; अभ्यासेन व्यवहितत्वात्(), नास्यासससकारस्य स्थादिनियमेन व्यावर्त्तितत्वात्()। "अभिसुसूः" इति। अभिसुसूष इति स्थिति क्विप्(), "अतो लोपः" ६।४।४८, षत्वस्यासिद्धत्वाद्रुत्वविसर्णनीयौ॥

बाल-मनोरमा

सुनोतेः स्यसनोः ३५४, ८।३।११९

सुनोतेः स्यसनोः। "अपदान्तस्य मूर्धन्यः र" इत्यधिकृतम्। "न रपरे"त्यतो नेत्यनुवर्तते। तादह--षो न स्यादिति। स्ये उदाहरति-- विसोष्यतीति। अत्र "उपसर्गात्सुनोती"ति प्राप्तः षो न भवति। सनि तु "अभिसुसू"रित्युदाहरणम्। षुञः सनि द्वित्वे अभिसुसूसेति ससन्तात्क्विपि अतो लोपे अभिसुसूसित्यस्मात्सोर्हल्ङ्यादिलोपे सस्य रुत्वे "र्वोरुपधायाः" इति दीर्घे रेफस्य विसर्गः। सुसूषतीति तु नोदाहरणं, "स्तौतिण्योरेव षण्यभ्यासा"दिति नियमादेव षत्वाऽभावसिद्धेरित्यलम्। षिञ् बन्धने इति। षोपदेशः, अनिट् च। षुञ इव रूपाणि। विसिनोतीति। "सात्पदाद्यो"रिति षत्वनिषेधः। "उपसर्गात्सुनोती"ति तु न षः, सुनोतत्यादिष्वनन्तर्भावादिति भावः। सिषायेति। णलि वृद्धावायादेशः। अतुसादौ "एरनेकाचः" इति यण्। सिष्यतुरित्यादि। लटस्तङ्याह-- सिष्ये इति। सिषि ए इति स्थिते "एरनेकाच" इति यणिति भावः। सिष्याते सिष्यिरे इत्यादि। असैषीत्। षिञ् निशाने इति। षिञ्वत्। डु मिञ् प्रक्षेपणे इति। मिनोति। उपदेशे एजन्तत्वाऽभावादात्वे अप्राप्ते आह-- मीनातिमिनोतीत्यात्वमिति। "एज्विषये अशिती"ति शेषः। ममाविति। आत्वे कृते णल औत्वमिति भावः। अतुसादावेज्विषयत्वाऽभाव#आन्नात्वम्। "एरनेकाचः" इतियण्। मिम्यतुः। मिम्युः। भारद्वाजनियमात्थलि वेडिति मत्वा आह-- ममिथ ममाथेति। थलः पित्त्वेन अकित्त्वादेज्विषयत्वम्। इट्पक्षे "आतो लोपः" इति भावः। मिम्यथुः मिम्य। ममौ मिम्यिव मिम्यिम। लिटस्तङ्याह-- मिम्ये इति। एशः कित्त्वादेज्विषयत्वाऽभावाच्च नात्त्वमिति भावः। मिम्याते मिम्यिरे। मिम्यिषे मिम्याथे [मिम्यिढ्वे] मिम्यिध्वे।मिम्ये मिम्यिवहे मिम्यिमहे। मातेति। एज्विषयत्वादशित्त्वाच्च आत्त्वमिति भावः। मास्यि मास्यते। सार्वधातुकेषु षुञ्वत्। मीयादिति। आशीर्लिङि परस्मैपदे यासुटः कित्त्वादेज्विषयत्वाऽभावादात्वाऽभावे "अकृत्सार्वधातुके"ति दीर्घ इति भावः। अमासाताम् अमासात इत्यादि। चिञ् चयने इति। चयनं = रचना। अनिट्। सार्वधातुके षुञ्वद्रूपाणि। प्रणिचिनोतीति। "नेर्गदे"ति णत्वमिति भावः।

तत्त्व-बोधिनी

सुनोतेः स्यसनोः ३०९, ८।३।११९

सुनोतेः स्यसनोः। "न रपरे" त्यस्मान्नेत्यनुवर्तनादाह-- षो न स्यादिति॥ सनि तु अभिसुसूः। सन्नन्तादस्मात्क्विप्यतो लोपे रुत्वे कृते दीर्घः। सुसूषतीत्येतत्तु नोदाहरणं, "स्तौतिण्योरेव षणी"ति नियमेनैव षत्वाऽभावसिद्धेः। एतच्च काशिकायां स्पष्टम्। चित्र्। चयनं रचनाविशेषः।

---

सूत्रम्

काशिका-वृत्तिः

रषाभ्यां नो णः समानपदे ८।४।१

रेफषकाराभ्याम् उत्तरस्य् नकारस्य णकारादेशो भवति, समानपदस्थौ चेन् निमित्तनिमित्तिनौ भवतः। आस्तीर्णम्। विशीर्णम्। अवगूर्णम्। षकारात् कुष्णाति। पुष्णाति। मुष्णाति। षग्रहणम् उत्तरार्थम्, ष्टुत्वेन एव हि सिद्धम् एतत्। समानपदे इति किम्? अग्निर्नयति। वायुर्नयति। ऋवर्णाच् च इति वक्तव्यम्। तिसृणाम्। चतसृणाम्। मातृणाम्। पितृणाम्। रश्रुतिसामान्यनिर्देशात् वा सिद्धम्। अवर्नभक्त्या च व्यवधाने ऽपि णत्वं भवति इति क्षुभ्नादिषु नृनमनतृप्नोतिग्रहणं ज्ञापकम्। अथवा ऋवर्णादपि णत्वं भवति इति एतदेव अनेन ज्ञाप्यते।

लघु-सिद्धान्त-कौमुदी

रषाभ्यां नो णः समानपदे २६८, ८।४।१

न्यासः

रषाभ्यां नो णः समानपदे। , ८।४।१

"समानपदस्थौ चेत्()" इत्यादि। समानशब्दोऽयमेकपर्यायः। समानम्()ेकम्(), अभिन्नमित्यर्थः। समानञ्च तत्? पदञ्चेति कर्मधारयः; तत्र तिष्ठत इति समानपदस्थौ, "सुपि स्थः" ३।२।४ इति कप्रत्ययः। अत्र निमित्तं रेफः षकारश्च। तन्निमित्तं यस्यास्तीति णत्वभावेन विपरिणतौ साध्यायां स निमित्ती नकारः। तेनैतदुक्तं भवति--यत्र पदे रेफषकारौ स्तस्तत्र यदि नकरोऽपीत्यर्थः। "आस्तीर्णम्(), विशीर्णम्()" इति। "स्तृञ्? आच्छादने" (धा।पा।१४८४), "शृ हिंसायाम्()" (धा।पा।१४८८)। व्याङ्पूर्वाभ्यां निष्ठा; "श्रयुकः किति" ७।२।११ इट्प्रतिषेधः। "ऋत इद्धातोः" ७।१।१०० इतीत्वम्(); रपरत्वञ्च। "अवगूर्णम्()" इति। "गुरी उद्यमने" (धा।पा।१३९६), "()आईदितो निष्ठायाम्()" ७।२।१४ इतीट्प्रतिषेधः। "हलि च" ८।२।७७ इति दीर्घः, "रदाभ्यां निष्ठातो नः" ८।२।४२ इति तकारस्य नकारः, तस्यानेनैव णत्वम्()। "कुष्णाति, पुष्णाति" इति। "कुष निष्कर्षे" (दा।पा।१५१८), "पुष पुष्टौ" (धा।पा।१५२९)। श्नाप्रत्ययः। "षग्रहणमुत्तरार्थम्()" इति। अथैतदर्थमपि कस्मान्न भवति? इत्याह--"ष्टुत्वेनैव सिद्धत्वात्()" इति। यद्येवम्(), कुष्णातीत्यादेरुपन्यासः किमर्थः? उत्तरार्थं षग्रहणं क्रियमाणमेतदर्थमपि भवतीति प्रदर्शनार्थः। असति षग्रहणे कुष्णातीत्येवमादौ ष्टुत्वेनैव सिद्धिर्भवति। सति च तस्मिन्नुत्तरार्थ आरभ्यमाणेऽनेनैव णत्वं कत्र्तदव्यम्()। अस्मिन्? कत्र्तव्ये ष्टुत्वस्यासिद्धत्वादन्यत्र चरितार्थत्वान्न च परत्वमुपपद्यते; "पूर्वत्रासिद्धीये नास्ति विप्रति, विप्रतिषेधोऽभावादुत्तरस्य" (जै।प।षृ।६७) इति। "ऋवर्णाच्चेति वक्तव्यम्()" इत्यादि। रषाभ्यां णत्वमुच्यमानमृवर्णान्न प्राप्नोति, तस्य वर्णान्तरत्वात्()। न च शक्यते वक्तुम्()--ऋवर्णस्थाद्रेफाद्भविष्यति, वर्णो हि रेफः सूत्रे णत्वं प्रति निमित्तत्वेनाश्रितः। न हि ऋवर्णस्थो रेफो वर्णः, किं तर्हि? वर्णैकदेशः; तदेकदेशत्वात्(), न हि वर्णेकदेशो वर्णग्रहणेन गृह्रते। तथा चोक्तम्()--"वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्त्येषु तत्कार्यं न वति। तच्छायानुकारिणो हि ते, न पुनस्त एव। पृथक्प्रयत्ननिर्वर्त्यं वर्णमिच्छन्त्याचार्याः" इति। तस्मात्? "ऋषर्णाच्च" इति वक्तव्यम्()। "तिसृणाम्(), चतसृणाम्()" इति। "त्रिचतुरोः

स्त्रियां तिसृचतसृ" ७।२।९९ इत्येतावादेशौ भवतः। "न तिसृचतसृ" (६।४।४) इति निषेधात्? "नामि" ६।४।३ इति दीर्घत्वं न भवति। "रश्रुतिसामान्यनिर्देशात्? सिद्धम्()" इति। अनेनोपसंख्यानं प्रत्याचष्टे। "र" इतीह श्रुतिरुपलब्विर्यस्येति बहुव्रीहिः। अथ वा--श्रुयत इति श्रुतिः, रश्चासौ श्रुतिश्चेति रश्रुतिः। तस्याः केवलाया ऋवर्णस्थायाश्च वर्णत्वावर्णत्वकृतभेदमुत्सृज्य यत्? सामान्यं रश्रुतिमात्रं तदिह निर्दिश्यते, न तु वर्णात्मिकैव रेफब्यक्तिः। तेनेह सिद्धं तिसृणामित्यादावपि णत्वम्(); ऋवर्णे हि तस्य रश्रुतिसामान्यस्य विद्यमानत्वात्()। स्यादेतत्()--ऋकारे त्रयोऽज्भागाः सन्ति, तन्मध्यवर्ती तुरीयो रेफः, तत्र रश्रुतिसामान्यनिर्द्देशादपि नैव णत्वं सिध्यति; योऽसौ रेफात्? परोऽज्भागस्तेन व्यवधानात्()? इत्यत आह--"अवर्णभाक्()" इत्यादि। यदयं क्षुम्नादिषु णत्वप्रतिषेधार्थं नुनमनतृप्नोतिग्रहणं करोति तेनैतज्ज्ञाप्यते--अवर्णभागव्यवधानेऽपि णत्वं भवतीति, अन्यथैतयोः पाठोऽनर्थकः स्यात्(); प्राप्त्यभावात्(), प्राप्तिपूर्वकत्वात प्रतिषेधानामिति। इदानीं यद्यपि वर्णास्मिकैव रेफव्यक्तिर्निर्द्दिश्यते, तथापि णत्वं भवतोति दर्शयितुमाह--"अथ वा" इत्यादि। पूर्वं सूत्रोपात्ताद्रश्रुतिसामान्यनिर्द्देशादवर्णभागव्यवधानेऽपि णत्वं भवतीति ज्ञापितम्()। सम्प्रति तु सूत्रानुपात्ताद्दवर्णादव्यवहिताद्भवतीत्येव विशेषः। शथ किमर्थं णग्रहणम्()? यावता प्रकृतोऽत्र मूर्धन्योऽनुवर्त्तिष्यते। स एव विधेयः; तत्रान्तरतम्यान्नकारस्य णकार एव भविष्यति? सत्यमेतत्(); पूर्वसूत्रे मूर्धन्यग्रहणं निषेधेन सम्बद्धम्(), अतसतदनुवृत्तौ तस्याप्यनुवृत्तिराशङ्क्येत। तस्मात्? प्रतिषेधशङ्कानिरासार्थं पुनग्र्रहणं निषेधेन सम्बद्धम्(), अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिराशङ्क्येत। तस्मात्? प्रतिषेधशङ्कानिरासार्थं पुनग्र्रहणं कृतम्()। ननु च प्राप्त्यभावादेव प्रतिषेधशङ्का न भविष्यति; प्राप्तिपूर्वका हि प्रतिषेधा भवन्ति, न च केनचिद्रषाभ्यामुत्तरस्य मूर्धन्यप्राप्तिरस्ति? सत्यमेतत्(), अस्मादेव प्रतिषेधाद्विधिरनुमीयत इति। अथ वा अनन्तरसूत्रे "वा" इति। वचनाद्विकल्पेनायं विधिर्विज्ञायते। तस्माद्विकल्पनिवृत्त्यर्थम्, विस्पष्टार्थं वा॥

बाल-मनोरमा

रषाभ्यां नो णः समानपदे २३३, ८।४।१

रषाभ्याम्। रषाभ्यामिति दिग्योगे पञ्चमी। परस्येत्यद्याहार्यम्। समानशब्द एकपर्यायः। यथा-"समानग्रामा वय"-चेहाऽखण्डत्वं विवक्षितं, पदे इत्येतावतैव सिद्धे समानग्रहणसामथ्र्यात्। अन्यथा रामनामेत्यादौ "अट्कुप्वाङ्" इति णत्वापत्तिः। एतस्यैव समानपदशब्दस्य तत्राप्यनुवृत्तेः। "मातृभोगीणः" इत्यत्र णत्वं तु तद्धिताधिकारे वक्ष्यते।

यूष्ण इति। शसि रूपम्। यूष्णेति। तृतीयैकवचनम्। नचाऽल्लोपस्य स्थानिवद्भावान्नकारस्य षात्परत्वं नेति शङ्क्यं, "रषाभ्या"मिति षात्परस्य हि नस्य णत्वे कर्तव्येऽल्लोपस्य स्थानिवद्भावो नापेक्षितः। किंतु णत्वाऽभावे तदपेक्षा। णत्वाऽभावश्चाऽशास्त्रीयत्वान्नाऽतिदेश्यः। स्थानिनि सति यत्कार्यं भवति तदेव हि स्थानिवत्सूत्रेणातिदिश्यते। "स्थानिनि सति यन्न भवति तदादेशेऽपि न भवती"त्येवं कार्याऽभावस्त्वशास्त्रीयत्वान्नातिदिश्यते इति स्थानिवत्सूत्रेऽवोचाम। यद्यप्यचः परस्मिन्नित्यत्राऽशास्त्रीयः कार्याभावोऽप्यतिदिश्यत इत्यभ्यधायि, तथापि नेह तस्यापि सूत्रस्य प्रवृत्तिरिति। स्थानीभूतादचः पूर्वत्वेन दृष्टस्यैव विधौ तत्प्रवृत्तेः। इह चाऽल्लोपस्थानीभूतादकारात्परस्यैव णत्वविधानादिति भावः। नन्वचः परस्मिन्निति सूत्रे स्थानीभूतादचः पूर्वस्मात्परस्य विधावजादेशः स्थानिवदिति पक्षोऽपि भाष्ये स्थितः। एवञ्चात्र लोपादेशस्थानीभूतादकारात्पूर्वो यः षकारस्तस्मात्परस्य नकारस्य णत्वविधौ लोपस्य स्थानिवद्भावे सत्यकारेण व्यवधानात्षात्परत्वाऽभावात्कथं णत्वमित्यत आह--पूर्वस्मादिति। पक्षे त्वित्यादिनाऽस्य पक्षस्याऽनित्यत्वं सूचितम्। अत एव प्रविगणय्येति भाष्ये प्रयुक्तं सङ्गच्छते। चुरादौ "गण सङ्ख्याने" इत्यदन्तो धातुः। णिच्। अतो लोपः। अल्लोपस्य स्थानिवद्भावात् "अत उपधायाः" इति वृद्धिर्न। ण्यन्तात्क्त्वो ल्यपिणिलोपं बाधित्वा "ल्यपि लघुपूर्वा"दिति णेरयादेशः। पूर्वस्मात्परस्य विधौ स्थानिवद्भावस्य नित्यत्वे इह "ल्यपि लघुपूर्वा"दिति णेरयादेशो न स्यात्। लोपस्थानीभूतादतः पूर्वस्मात्परस्य णेरयादेशविधावल्लोपस्य स्थानिवद्भावे सति अता व्यवहितत्वेन

णेर्लघुपूर्वाण्णकारात्परत्वाऽभावात्। तस्मादचः परस्मिन्नित्यत्र पूर्वस्मात्परस्य विधौ स्थानिवद्भावस्याऽनित्यत्वं विज्ञायते। एवं च गोशब्दात्संबुद्धौ ओतो णित्वे वृद्धौ हे "गौ"रिति सिध्यति। अन्यथा औकारस्य स्थानीभूतादोकारात्पूर्वो यो गकारस्तस्मात्परस्याः सम्बुद्धेर्लोपलिधौ स्थानिवद्भावे ओकारादेङः परत्वात्संबुद्धिलोपः स्यादिति शब्देन्दुशेखरे स्पष्टम्। अड्व्यवाये इत्येवेति। "अट्कुप्वाङि"ति सूत्रेणैवेत्यर्थः। षादव्याबहितपरस्य नस्य णत्वविधावुदाहरणं तु--पुष्णातीत्यादि बोध्यम्। वस्तुतस्तु "तत्रापि ष्टुत्वेनैव सिद्धे षग्रहणमुत्तरार्थ"मिति स्पष्टमाकरे। नन्वल्लोपस्य णत्वे कर्तव्ये कथं स्थानिवद्भावः, पूर्वत्रासिद्धे न स्थानिवदिति निषेधात्। णत्वस्य पूर्वत्रासिद्धीयत्वादित्यत आह--पूर्वत्रेति। संयोगादिलोपे लत्वे च कर्तव्ये, तस्य="पूर्वत्रासिद्धे न स्थानिव"दित्यस्य, दोषः=बाधः। अप्रवृत्तिरिति यावत्।

सयोगादिलोपे यथा-चक्रयत्र। इह "अचः परस्मिन्" इति यणादेशस्य स्थानिवद्भावात् "स्कोः संयोगाद्यो"रिति ककारलोपो न। लत्वे यथा-निगाल्यते। अत्र णिलोपस्य स्थानिवत्त्वात् "अचि विभाषे"ति लत्वम्। णत्वे यथा-माषवपनी। वपतेर्ल्युट्, अनादेशः , उगित्त्वान्ङीप्, "यस्येति चे"ति नकारा दकारस्य लोपः। इह अकारलोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाऽभावात् "प्रातिपदिकान्तनुम्विभक्तिषु चे"ति णत्वं न। यूषन्-भ्यामिति स्थिते।

तत्त्व-बोधिनी

रषाभ्यां नो णः समानपदे १९७, ८।४।१

रषाभ्यां नो णः। अत्र "अपदान्तस्य मूर्धन्यः" इत्यनुवर्त्य णप्रहणं, "पदान्तस्ये"ति सूत्रं च भाष्ये प्रत्याख्यातम्। समानपदे इति। निमित्तनिमित्तनोरपदस्थत्वाऽसंभवात्पदे इतीयतैव सामथ्र्यादेकपदत्वे लब्धे समानग्रहणं यत्समानमेव पदं, निमित्तवत्पदभिन्नपदस्थत्वाऽभावादिति यावत्, तत्र यथा स्यादित्येतदर्थम्। तेन समासे "रामनाम" "गन्धर्वगान"दित्यादौ न भवति। तत्र हि नकारस्यैकपदवृत्तित्वेऽपि निमित्तवत्पदभिन्नपदस्थत्वात्। भवति हि "यूष्ण" इत्यादौ णत्वम्, निमित्तवत्पदभिन्नपदत्वाऽभाववद्वृत्तित्वान्नाकारस्य। "मातृभोगीण" इत्यादावपि नस्य णत्वं भवत्येव, प्रत्ययवृत्तित्वेऽपि निमित्तवत्पदभिन्नपदस्थत्वाऽभावात्। एतेन समानग्रहणमखण्टपदलाभार्थमिति व्याख्याय "रामनामे"त्यादावपिप्रसङ्गे निवारितेऽपि "मातृभोगीण" इत्यादावव्याप्तिः स्यादेवेति केषांचिदुक्तिः परास्ता। उक्तरीत्या त्वव्याप्तिशङ्काया निरस्तत्वात्। यूष्ण इति। यूषो मण्डः। "मुद्रामलकयूषस्तु भेदी दीपनपाचनः" इति दर्शनात्।

पूर्वत्रासिद्धे न स्थानिवदिति। एतच्च न्यायसिद्धं, त्रिपाद्या असिद्धत्वेन तत्रत्ये कर्तव्ये "अचः परस्मि"न्नित्यतिदेशस्याऽप्रवृत्तेः। तस्येति। तस्य "पूर्वत्रासिंद्धे ने"त्यस्य। तथाच स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः। संयोगादिलोपे--चक्र्यत्र। इह "अचः परस्मि"न्निति यणादेशस्य स्थानिवत्त्वात् "स्कोः" इति कलोपो न। लत्वे-निगाल्यते। अत्र णिलोपस्य स्थानिवत्त्वा "दचि विभाषे"ति लत्वम्। णत्वे-माषवपनी। इह "यस्येति चे"त्यल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाऽभावाण्णत्वं न। ननु "गर्गभगिनी"त्यत्रेव "माषवपनी"त्यत्रापि णत्वप्राप्तिर्नास्त्येव, "उत्तरपदं यत्प्रातिपदिकं तदन्तस्ये"ति वक्ष्यमाणत्वात्। अत्राहुः-"साधनं कृते"ति ल्युडन्तेन समासे पश्चान्ङीपि "यस्येति चे"त्यल्लोपे कृते नकारस्योत्तरपदान्तत्वाण्णत्वप्राप्तिरस्त्येवेति। स्यादेतत् "यूष्ण" इत्यादौ "रषाभ्या"मित्यस्य नोपयोगः, ष्टुत्वेनैव रूपसिद्धेः। अतएव च "षग्रहणमुत्तरार्थ"मित्याकरे स्थितिमिति चेदुच्यते, उत्तरार्थतयाऽपीह षग्रहणं स्थितं, ततश्च "यूष्णः" "पुष्णाती"त्यादौ "रषाभ्या"मिति णत्वस्य प्रवृत्तिः केन वार्यताम्?। ष्टुत्वेनेति चेन्न, तस्याऽसिद्धत्वात्। न च वचनप्राभाण्यात्सिद्धत्वं शङ्क्यम्, "पृष्टः" "पुष्टिः" "षष्ठः" इत्यादौ चरितार्थत्वात्। "नस्य षयोगे ण" इत्यंशोऽचरितार्थ इति चेन्न, तस्य पृथगनुक्तेः। इह षात्परस्येत्युक्तिप्यचरितार्थेत्यस्यापि तुस्यत्वाच्च। एवमप्युत्तरार्थं षग्रहणमित्याकरो विरुध्यत इति चेन्न, आकरे हीह षग्रहणं विना पुष्णातीत्यादिलक्ष्यस्याऽसिद्धिर्नास्तीत्येतावदभिप्रेतं, न तु "पुष्णाती"त्यादौ "रषाभ्या" मित्यस्याऽप्रवृत्तिरिति।

सूत्रम्

काशिका-वृत्तिः

अट्कुप्वाङ्नुम्व्यवाये ऽपि ८।४।२

अट् कु पु आङ् नुम् इत्येतैर् व्यवाये ऽपि रेफषाकारभ्याम् उत्तरस्य नकारस्य णकारादेशो भवति। अड्व्यवाये तावत् करणम्। हरणम् किरिणा। गिरिणा। कुरुणा। गुरुणा। कवर्गव्यवाये अर्केण। मूर्खेण। गर्गेण। अर्घेण। पवर्गव्यवाये दर्पेण। रेफेण। गर्भेण। चर्मणा। वर्मणा। आङ्व्यवाये पर्याणद्धम्। निराणद्धम्। अड्व्यवाये इति सिद्धे आङ्ग्रहणं पदव्यवाये इत्यस्य प्रतिषेधस्य बाधनार्थम्। नुंव्यवाये बृंहणम्। बृंहणीयम्। नुंग्रहणम् अनुस्वारोपलक्षणार्थं द्रष्टव्यम्। तेन तृंहणम्, तृंहणीयम् इत्यत्र अनुस्वारव्यवाये नुमभावे ऽपि णत्वं भवति। सत्यपि च नुमि यत्र अनुस्वारो न श्रूयते तत्र न भवति, प्रेन्वनम्, प्रेन्वनीयम् इति। व्यवायोपलक्षणार्थत्वादडादीनाम् इह व्यस्तैः समस्तैर् व्यवाये ऽपि णत्वं भवति।

लघु-सिद्धान्त-कौमुदी

अट्कुप्वाङ्नुम्व्यवायेऽपि १३८, ८।४।२

अट् कवर्गः पवर्गः आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे। इति प्राप्ते॥

न्यासः

अट्कुप्वाङ्नुम्व्यवायेऽपि। , ८।४।२

रवाभ्यामिति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात्? पूर्वेणाडादिव्यवधाने सत्यप्रप्तमेव णत्वमेनेन विधीयते। "पर्याणद्धम्()" इति। "णह बन्धने" (धा।पा।११६६), निष्ठा, "नहो धः" ८।२।३४ इति हकारस्य धकारः, "झषस्तथोर्धोऽधः" ८।२।४० इति तकारस्य धकारः, पूर्वधकारस्य "झलां जश्? झशि" ८।४।५२ इति दकारः। ननु चाङ्व्यवायेऽत्र णत्वं सिद्धम्(), "अण्? सवर्णान्? गृह्णाति" (१।१।६९) इत्यङोऽप्यङ्ग्रहणेन ग्रहणात्? किमर्थमाङ्ग्रहणम्()? इत्याह--"आङ्ग्रहणम्()" इत्यादि। असत्याङ्ग्रहणे "पदवप्यवायेऽपि" ८।४।३७ इत्याङ्व्यवाये प्रतिषेधः स्यात्()। अतस्तद्बाधनार्थमाङ्ग्रहणम्()। "बृंहणम्()" इति। "बृह बृहि वृद्धौ" [वहि वृद्धौ शब्दे च--धा।पा।] (धापा।७३५,७३६) "इदितो नुम- धातोः" ७।१।५८ इति नुम्(), ल्युट्(), "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारः। कथं पुनरिदं नुम्ग्रहणस्योदाहरणम्(), यावताऽनुस्वारेणात्र व्यवायः, न नुमा; "तृंहणम्()" इत्यत्रापि नुमोऽभावात्(), "प्रेन्वनम्()" इत्यत्रैव प्रसज्येत, अस्ति ह्यत्र नुमा व्यवायः? इति देश्यमाशङ्क्याह--"नुम्ग्रहणम्()" इत्यादि। अनुस्वारोपलक्षणार्थं ह्यत्र नुम्ग्रहणम्(), न नुमः प्रतिपादनार्थम्()। तेन किं सिद्धं भवति? इत्याह--"तेन" इत्यादि। "दृंहणम्()" [तृंहणम्()--काशिका, पदमञ्जरी च] इति। "दृह दृन्ह हिंसायाम्()"[तृह--हिंसायाम्()--धा।पा।१४५५ तृह हिंसार्थे--धा।पा।१३५०] (धा।पा।१४५५०१३५०), ल्युट्(), पूर्ववदनुस्वारः। अत्र नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वादसत्यपि नुम्यनुस्यारव्यवाये णत्वं भवत्येव। अपिशब्दोऽयं वृंहणमित्यत्र नुमोऽनुस्वारे तद्व्यवाये णत्वं भवतीत्येवमर्थं द्योतयति। "प्रेन्वनम्()" इति। "इवि व्याप्तौ" (धा।पा।५८७)। पूर्थवशुम्(), तस्याझल्परत्वादनुस्वारो न भवति। अत्राप्यनुस्वारोपलक्षणार्थत्वाद्विद्यमानेऽपि नुव्यनुस्वारव्यवायो नास्तीति णत्वं न प्रवत्र्तते। यथैव हि "नक्षत्रं दृष्ट्वा वाचो विसृज्येरन्()" इत्यत्र नक्षत्रदर्शनकालस्योपलक्षणार्थत्वादसत्यपि नक्षत्रदर्शने तस्मिन्? कालविशेषे सति वाचा विसुज्यन्ते, सत्यपि च ["च" नास्ति प्रां।पाठः] नक्षत्रदर्शने तस्मिश्कालविशेषाभावे वाचो न विसृज्यन्ते; तथेहापि नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वादसत्यपि नुमि यत्रानुस्वारव्यवायो नास्ति तत्र न भवतीत्येधमर्थ वेदितव्यम्()। किं पुनरिह समुदायेन वाक्यपरिसमाप्तिः? प्रत्येकं वा? तत्र यदि पूर्वकः पक्ष आश्रौयते, तदा क्वचिदपि न स्यात्()। न ह्येकस्मिन्नुदाहरणे सर्वैरडादिभिव्र्यवायः सम्भवति। अथ द्वितीयस्तदा अर्केणेत्यादौ न स्यात्, अनेकेन व्यवधानात्()?

इत्यत आह--"व्यवायोपलक्षणार्थतत्वात्()" इत्यादि। इहैषामडादीनां व्यवायस्तस्मिन्निति। शक्नुवन्ति चैत एकैकाः परस्परसहिताश्च। तमुपलक्षयितुं ये च तदुपलक्षणार्थमुपादीयन्ते तेषामेकेन द्वाभ्यां बहुभिश्च य उपलक्षितः स सङ्गृह्यत एव। तथा हि--देवदत्तयज्ञदत्तविष्णुमित्रैः सह नाध्येतव्यमियुक्ते देवदत्तादयो ये सहाध्ययनप्रतिषेधोपलक्षणार्थमुपात्तास्तेषामेकेनापि सह नाधीयते, द्वाभ्याम्(), बहुभिश्च। तस्मादिहापि व्यषायोपलक्षणार्थत्वादडादीनां तैर्व्यस्तैः, समस्तैश्च व्यवाये णत्वं भवति। "व्यस्तैः" इति। तैरेकैकैरव्यवाय उपलक्ष्यते। "समस्तैः" इति। परस्परसहितैः। समस्तग्रहणमनेकोपलक्षणार्थम्()। न हि समस्तैर्व्यवायः क्वचित्? सम्भवति। एवञ्च क्वचित्? प्रत्येकं वाक्यपरिसमाप्तिः, क्वचिद्यथासम्भवं समुदायेन--इत्युक्तं भवति। अथापिग्रहणं किमर्थम्()? अव्यवाये यता स्यादिति चेत्()? न; पूर्वेणैव सिद्धत्वात्()? एवं तर्ह्युत्तरार्थमपिग्रहणम्()। असति हि तस्मिन्नुत्तरार्थे "उपसर्गादसमासेऽपि" ८।४।१४ इत्येतदिहैव स्यात्()--प्रणयतीति, यत्रास्ति व्यवायः। इह तु न स्यत्()--निर्णयतीति, न ह्यत्राडादीनामेकतमेन व्यवायोऽस्ति॥

बाल-मनोरमा

अट्कुप्वाङ्नुम्व्यवायेऽपि १९६, ८।४।२

अत्र नकारस्य णत्वप्राप्तिमाशङ्कितुमाह--अट्कुप्वाङ्। "रषाभ्यां नो णः समानपदे" इति पूर्वसूत्रमनुवर्तते। तत्र "न" इति षष्ठ()न्तम्। तेन च सूत्रेण रषाभ्यामव्यवहितपरस्य णत्वं विहितम्। रामेणेत्यादौ अडादिव्यवधानेऽपि प्राप्त्यर्थमिदमारब्धम्। अट्-प्रत्याहार, कुः-कवर्गः, पुः-पवर्गः। अट्च कुश्च पुश्च आङ् च नुम्च तैर्व्यवधानम्, तस्मिन् सत्यपि रषाभ्यां परस्य नस्य णत्वं न स्यात्। अतोऽडादिभिर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवायेऽपीति व्याख्येयम्। एवंच "क्षुभ्नादिषु चे"ति णत्वनिषेधसूत्रे "क्षुभ्न" शब्दपाठोऽर्थवान्। "सरूपाणा"मित्यादिनिर्देशाश्च उपपन्ना भवन्ति। तदाह--अटकवर्गेत्यादिना। विवरणावसरे अट् कवर्गेत्याद्यविभक्तिकनिर्देशाश्च न दूष्यन्ते, भाष्ये तथा बहुलमुपलम्भात्। समानपद इति। एकपद इत्यर्थः। अखण्डमेव पदमिह विवक्षितम्। तेन रामनामेत्यादौ नातिप्रसङ्गः। "मातृभोगीण" इत्यादौ णत्वोपपत्तिस्तु तद्धिताधिकारे वक्ष्यते। अङा व्यवाये पर्याणद्धमित्युदाहरणम्। इह आङ्गहणाऽभावे तु उपसर्गादसमासेऽपीत्यत्र तदनुवृत्त्या णत्वं न स्यात्। नन्वड्()व्यवाय इत्येवात्र णत्वं भविष्यति , किमाङ्ग्रहणेनेत्यत आह--नुम्ग्रहणमिति। नुम्ग्रहणेन अनस्वारो लक्ष्यते। प्रयोगानुसारादित्यर्थः। एवं च नुम्ग्रहणं प्रत्याख्येयमित्याह--तच्चेति। ननु नुम्ग्रहणाऽभावे तल्लक्षितानुस्वारस्य कथं लाभ इत्यत आह--अयोगवाहानमिति। न विद्यते योगो येषां वर्णसमाम्नाये ते अयोगाः। अनुपदिष्टाः, उपदिष्टैरगृहीताश्चेत्यर्थः। वाहयन्ति प्रयोगं निर्वाहयन्तीति वाहाः, अयोगाश्च ते वाहाश्च अयोगवाहाः=अनुस्वारविसर्गादयः। अट्()सूपदेशस्य=पाठस्य हल्सन्धिनिरूपणावसरे उक्तत्वादित्यर्थः। स्पष्टं चैतद्वयवरट्सूत्रभाष्यवार्तिकयोः। उक्तं चात्रैव सूत्रे भाष्ये--"नार्थो नुम्ग्रहणेन। अनुस्वारे कृते अड्व्यवाय इत्येवात्र णत्वं सिद्धम्" इति। इति णत्वमिति। शसवयवस्य नकारस्य णकारे प्राप्ते इत्यर्थः।

तत्त्व-बोधिनी

अट्कुप्वाङ्नुम्व्यवायेऽपि १६४, ८।४।२

अट्कुप्वाङ्। "रषाभ्या"मिति पञ्चमीनिर्देशाद्व्यवहितस्याऽप्राप्तौ वचनमिदम्। तत्र सर्वैर्व्यवायोऽसंभवी। "एकैकमात्रव्यावय" इत्यपि नार्थः, क्षुभ्नादिषु क्षु भ्नपाठसामर्थ्यात्, "सरूपाणाम्-"इत्यादिनिर्देशाच्चेत्यभिप्रेत्याह-व्यस्तैर्यथासंभवमिलितैश्चेत्यादि। नन्वेवं "कृत्स्नं" "कात्स्न्र्य"मित्यादावडादिव्यवधानाऽभावण्णत्वाऽभावेप्यादर्शेनेत्यादावड्वयवधानादतिप्रसङ्गः। न च अडादिभिरेव व्यवधान इति नियमः, अप्राप्ते विधिरयमित्युक्तत्वात्। सत्यम्। योगविभागोऽत्र बोध्यः। "व्यवायेऽपि" इत्येको योगो

विध्यर्थः। "अट्कुप्वाङ्नुम्--"इत्यन्यो नियमार्थः। छान्दसो भिसो लुक्। अत्र योगविभागं विनापि निर्वाहः सुकर इति तु नव्याः। तथाहि--अट्कुप्वाङ्-"इति सूत्रे "रषाभ्याम्" इत्यनुवर्तते। पञ्चमीश्रुत्या "तस्मादित्युत्तरस्ये"ति परिभाषोपतिष्ठते। उपस्थितापि सा वचनप्रामाण्यादडादिव्यावाये न प्रवर्तते। तदन्यव्यवाये तु प्रवर्तत एव। अतएव-"येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादेकवर्णव्यवहितस्यैव इको गुणो न तु भिनत्तीत्यादावनेकव्यवहितस्येकः"--इति "पुगन्तलघूपधस्ये"ति सूत्रे वक्ष्यति। एवं च यत्राडादिभ#इरेव व्यवधानं रामेणेत्यादौ तत्र भवत्येव णत्वम्। अत्र त्वडादिभिन्नेन व्यवधानमादर्शेनेत्यादौ, तत्र न भवति, "तस्मा"दिति परिभाषाया जागरूकत्वात्। निषेधं बाधितुमिति। तेन "पर्यणद्ध"मित्यत्र "उपसर्गादसमासेऽपि-" इति णत्वं सिध्यतीति भावः। उपलक्षणार्थमिति। नुम्स्थानिकस्य, स्वाभाविकस्य वाऽनुस्वारमात्रस्योपलक्षणार्थं नुम्ग्रहणमित्यर्थः। तेन "बृहि वृद्धौ"। इदित्वान्नुम्। तस्यानुस्वारः। "तृंहू हिंसायां"। स्वाभाविकोऽत्रानुसवारः। बृंहणम् तृंहणम्। उभयत्रापि णत्वं सिद्धम्। अयोगवाहानामिति। अविद्यमानो योगः=प्रत्याहारेषु संबन्धो येषां ते अयोगाः। अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसंबन्धशून्या इत्यर्थः। वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः। अयोगाश्च ते वाहाश्च अयोगवाहाः। अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः। अट्स्विति। निष्कर्षस्त्वकारोपरीति। तेन पयःस्वित्यादाविणः परस्येति षत्वं न भवति। अत एवोक्तं प्राक्-"अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरी"ति।

---

सूत्रम्

काशिका-वृत्तिः

पूर्वपदात् संज्ञायाम् अगः ८।४।३

पूर्वपदस्थान् निमित्तादुत्तरस्य गकारवर्जिताद् नकारस्य णकार आदेशो भवति संज्ञायां विषये। द्रुणसः। वार्ध्रीणसः। खरणसः। शूर्पणखा। संज्ञायाम् इति किम्? चर्मनासिकः। अगः इति किम्? ऋगयनम्। केचिदेतन् नियमार्थं वर्णयन्ति, पूर्वपदात् संज्ञायाम् एव णत्वं न अन्यत्र इति। समासे ऽपि हि समानपदे निमित्तनिमित्तिनोर् भावादस्ति पूर्वेण प्राप्तिः इति स च नियमः पूर्वपदसम्बधादुत्तरपदस्थस्य एव णत्वं निवर्तयति, चर्मनासिकः इति, न तद्धितपूर्वपदस्थस्य, खारपायणः, मातृभोनीणः, कर्णप्रियः इति। अगः इति योगविभागेन णत्वप्रतिषेधः, न नियमप्रतिषेधः इति। अपरे तु पूर्वसूत्रे समानम् एव यन् नित्यं पदं तत् समानपदम् इत्याश्रयन्ति, समानग्रहणात्। तेषाम् अप्राप्तम् एव णत्वम् अनेन निधीयते। समासे हि पूर्वपदोत्तरविभागादसमानपदत्वम् अप्यस्ति इति।

लघु-सिद्धान्त-कौमुदी

पूर्वपदात्संज्ञायामगः १२७१, ८।४।३

पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने। शूर्पणखा। गौरमुखा। संज्ञायां किम्? ताम्रमुखी कन्या॥

न्यासः

पूर्वपदात्संज्ञायामगः। , ८।४।३

रेफादिनिमित्तमिहानुवत्र्तते, तस्य केवलस्य पूर्वपदत्वं न सम्भवतीति सामथ्र्यात्? पूर्वपदस्थान्निमित्तादुत्तरस्येत्येषोऽर्थो विज्ञायत इत्याह--"पूर्वपदस्थान्निमित्तात्()" इत्यादि। "द्रूणसः" इति। दुरिव नासिकास्येति बहुव्रीहिः। द्रुशब्दोऽत्र शाखावचनः। "अञ्नासिकायाः सज्ञायां नसञ्चास्थूलात्()" (५।४।११८) इत्यच्? समासान्तनासिकायाश्च नसादेशः। "चर्मनासिकः" इति। चर्मविकारो नासिकास्येति "समुदायविकारषष्ठ()आश्च बहुव्रीहिरुत्तरपदलोपश्च" (दा।१००) इति

समासः। उपसर्जनह्रस्वत्वम्()। "ऋगयन्म्()" इति। ऋचोऽयनमिति षष्ठीसमासः। "अगः" इति शक्यमकर्तुम्(), "अणृगयनादिभ्यः" (४।३।७३) इति निपातनादेव ऋगयनमित्यत्र णत्वाभावः सिद्धः? नैतदस्ति; "अबाधकान्यपि निपातनानि भवन्ति" (पृ।प।वृ।००) इत्युक्तम्(), तत्र यद्यग इति नोच्येत, तदा पक्ष ऋगयणमित्यपि विज्ञायेत। तस्यादग इति वक्तव्यम्। अथ किं पुनरिदं नियमार्थम्()? उत्त विध्यर्थम्()? इत्यत आह--"केचित्()" इत्यादि। अपरे विध्यर्थमेतदिति वर्णयन्ति। अतः केचिदित्युक्तम्()। ननु पूर्वसूत्रेण निमित्तनिमित्तिनोः समानपदस्थत्वे सति णत्वं विहितम्(), न च द्रुणस इत्यादौ समासे कृते निमित्तनिमित्तिनोः समानपदस्थत्वमस्ति, निमित्तस्य पूर्वपदस्थत्वात्(), निमित्तन उत्तरपदस्थात्वाच्च। एवञ्च पूर्वसूत्रेणाप्राप्तिरेव णत्वस्य, तत्? कथमस्य नियमार्थतोपपद्यते? इत्यत आह--"समासेऽपि" इत्यादि। यद्यति समासार्थाभ्यां पदाभ्यां या विभक्तिरुत्पन्ना तस्यां लुप्तायामपि तयोः प्रत्येकं प्रत्ययलक्षणेन पदसंज्ञायां सत्यां समासावयवापेक्षयाऽसमानपदताऽस्ति, तथापि समासाद्या विभक्तिरुत्पन्ना तया समुदायस्य पदसंज्ञायां सत्यां समुदायापेक्षया समानपदताऽस्त्येव। तस्मात्? सत्रासेऽपि समानपदे निमित्तनिमित्तनोर्बावादसति पूर्वेण प्राप्तिः; ततश्च नियमार्थमेतदिति स्थितम्()। यद्येवम्(), तर्हि यथा चर्मनासिक, इत्यत्रोत्तरपदस्थस्य नकारस्य णत्वं न भवति नियमेन व्यावर्त्तितत्वात्(), तथा खरपस्यापत्यं खारपयणः--"नडादिभ्यः फक" (४।१।९९) मातृभोगाय हितो मातृभोगीणः--"आत्मन्वि()आजनभोगोत्तरपदात्? खः" ५।१।९ इत्यत्र च तद्धितस्थस्यापि न स्यात्(), तथा करणं प्रियमस्य करणप्रिय इत्यत्र पूर्वपदस्थस्यापि न स्यात्()? अत आह--"स च" इत्यादि। सध्बन्धिशब्दो हि नियतमेव प्रतियोगिनं सन्निधापयति, [सन्निधापयन्ति--कां३।पाठः, प्रां३।पाठश्च] यथा हि "भ्रातरि भक्त्या प्रवर्त्तितव्यम्()" इत्युक्ते यद्यपि स्वस्यामिति नोच्यते, तथापि स्वस्यां मातरीति गम्यते; तथेहापि पूर्वपदमुत्तरपदमिति सम्बन्धिशब्दावेतौ--सति पूर्वपदत्वे उत्तरपदत्वं सम्भवति, सति चोत्तरपदत्वे पूर्वपदत्वं सम्भवति। पूर्वपदसन्निधानादुत्तरपदे सथिधापिते तस्यैवोत्तरपदस्थस्य नकारस्य नियमो णत्वं निवत्र्तयति---चर्मनासिक इत्यादौ, न सद्धितपूर्वपदस्यस्यापि। खारपायणो मातृभोगीण इत्यादौ यतायोगं तद्धितपूर्वपदस्थोनकारः, न तूत्तरपदस्थः। अयं तह्रस्मिन्नियमार्थे दोषः--"अगः" इति। प्रतिषेदो नियमस्यैव स्यात्(), न तु णत्वस्य; नियमवाक्यैकदेशभूतत्वात्? प्रतिषेधस्य। ततः संज्ञायामसंज्ञायाञ्च गकाराण्णत्वं स्यात्()। अत एवाह--"अगः" इत्यादि। अग इति योऽयं प्रतिषेधः स णत्वस्यैव, न नियमस्य। तल्मान्न भवत्येव दोषप्रसङ्गः। कथं पुनर्नियमवाक्यैकदेशभूतः सन्नेव प्रतिषेधो णत्वस्य विज्ञातुं शक्यः? इति प्रश्नावसर इदमुत्तरमाह--"योगविभागेन" इत्यादि। "पूर्वपदात्संज्ञायाम्()" इत्येको योगः, "अगः" इति द्वितीयः; अनेन यावती काचिण्णत्वस्य प्राप्तिः सा सर्वा प्रतिषिध्यते, न त्वनन्तरमेव कार्यम्()। अन्यथा योगविभागस्य वैयथ्र्य स्यात्()। "अपरे तु" इत्यादि। तुशब्दः पूर्वस्माद्विशेषं दर्शयति। अपरे त्वाचार्याः पूर्वसूत्रे समानमेव यन्नित्वं पदं तत्? समानपदमित्याश्रयन्ति। तदेतदुक्तं भवतदि--यदाऽवयवापेक्षा क्रियते तदापि यत्? समानपदम्(); यदापि समुदायापेक्षा क्रियते, तदापि यत्? समानपदं तत्? समानपदमित्येवं परिगृह्णान्ति। कस्मात्()? इत्यत आह--"समानग्रहणात्()" इत्यादि। समानग्रहणं ह्येवमर्थं क्रियते। एकपदाधिकरणत्वे सति निमित्तनिमित्तिनोर्णत्वं यथा स्यात्(), भिन्नपदत्वे मा भूदिति। एतच्चाप्रयोजनम्(); पदग्रहणादेवाल्यार्थस्य लब्धत्वात्()। यदि भिन्नपदाधारत्वे सति णत्वं स्यात्(), तदा पदग्रहणमनर्थकं स्यात्(), व्यवच्छेद्याभावात्(), न ह्यपदस्थौ तौ स्तः। तस्मात्? पदग्रहणसामथ्र्यादेवाभिन्नपदयोर्निमित्तनिमित्तनोर्णत्वं लभ्यते। तत्? पदग्रहणादेव समानपदे लब्धे समानग्रहणं क्रियमाणं नियमार्थं भवति--"नित्यं यत्? समानपदम्()" इत्यभिप्रायः। "तेषाम्()" इत्यादिना समानमेव यन्नित्यं पदं तत्? पूर्वसूत्रे य आश्रयन्ति, तन्मतेन विध्यर्थतामस्य दर्शयति। स्यादेतत्()--समासेऽपि नित्यं समानपदमेवाश्रयो निमित्तनिमित्तिनोः, अत्रो नियमार्थमेतदुक्तम्(), न विध्यर्थम्()? इत्यत आह--"समासे हि" ["समासेऽपि"--प्रां३।पाठः] इत्यादि। समासे ह्यवयवापेक्षयैतत्पूर्वपदमिति, एतदुत्तरपदमिति--एव विभागोऽस्ति, तस्मादसमामपदत्वमप्यस्ति। अपिशब्दात्समानपदत्वमपि। तत्र यदा पूर्वोत्तरवदापेक्षा भयति, तदा पूर्वोत्तरविभागादसमानपदत्वम्()। यदा तु

समुदायापेक्षा, तदा पूर्वोत्तरविभागाभावात्? समानपदत्वम्()। अतो न समासे समानपदत्वं नित्यमेव॥

बाल-मनोरमा

पूर्वपदात्संज्ञायामगः ८४८, ८।४।३

पूर्वपदात्। "रषाभ्या"मित्यनेन लब्दो रेफः प्रत्येकमन्वेति। तदाह--पूर्वपदस्थान्निमित्तादिति। रेफषकारात्मकादित्यर्थः। "अग" इति फञ्चम्यन्तम्। गकारभिन्नात्परस्येत्यर्थः। गकारात्परस्य नेति यावत्। तदाह--नतु गकारव्यवधाने इति। अनेन "अट्कुप्वाङ्नुम्व्यवायेऽपि"इत्यनुवृत्तिः। सूचिता। अन्यथा "अग; इत्यस्य वैयथ्र्यं स्यात्। "खण्डपदत्वादप्राप्तौ वचनमिदम्। द्रुरिवेति। वृक्ष इवेत्यर्थः। द्रुणस इति। बहुव्रीहेरच्। नासिकाशब्दस्य नसादेशः। णत्वम्। ऋगयनमिति। "ऋवर्णा"दिति वार्तिकस्याप्यत्रानुवृत्त्या णत्वं प्राप्तं गकारेम व्यवधानान्न भवतीति भावः। अत्र "ऋचामयन"मिति विग्रहप्रदर्शनं चिन्त्यं, वाक्येन संज्ञानवगमात्। नच "रघुनाथ" इत्यादौ संज्ञायां णत्वं शङ्क्यम्, णत्वेन चेत्संज्ञा गम्यत इत्यर्थात्। इह तु कृते णत्वे संज्ञात्वभङ्गापत्तेर्न णत्वम्। अत एव "भृञोऽसंज्ञायां"मिति सूत्रभाष्ये "य एते संज्ञायामिति विधीयन्ते, तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति। किं "तर्हि?। प्रत्ययान्तेन चेत्संज्ञा गम्यते" इत्युक्तम्।

खुरेति। खुरखराभ्यां परस्य नासिकाशब्दस्य बहगुव्रीहौ संज्ञायां नसादेशो वेति वक्तव्यमित्यर्थः। प्रकृतत्वादेव सिद्धे नसादेशवचनमच्प्रत्ययानुवृत्तिनिवृत्त्यर्थम्। खुरणा इति। खररूपा नासिका यस्येति विग्रहः। पक्षे "खुरनासिक" इति "खरनासिक" इति च न भवतीत्याह--पक्षेऽजपीष्यते इति। अच्प्रत्ययसहितो नसादेश इत्यर्थः। भाष्ये त्विदं न दृश्यते।

---

सूत्रम्

काशिका-वृत्तिः

वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ८।४।४

पूर्वपदात् संज्ञायम् इति वर्तते। पुरगा मिश्रक सिघ्रका शारिका कोटरा अग्रे इत्येतेभ्यः पूर्वपदेभ्यः उत्तरस्य वननकारस्य णकारादेशो भवति संज्ञायां विषये। पुरगावणम्। मिश्रकवणम्। सिघ्रकावणम्। शारिकावणम्। कोटरावणम्। अग्रेवणम्। सिद्धे सत्यारम्भो नियमार्थः, एतेभ्य एव परस्य वननकारस्य णकारादेशो भवति, न अन्येभ्यः इति। कुबेरवनम्। शतधारवनम्। असिपत्रवनम्।

न्यासः

वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः।, ८।४।४

वनमिति षष्ठीस्थाने सुब्व्यत्ययेन प्रथमा। "पुरगावणम्()" इति षष्ठीसमासः। "वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम्()" ६।३।११६ इति पूर्वपदस्य दीर्घः। "अग्रेवणम्()" इति। षष्ठोसमासः। तस्मिन्? कृते राजदन्तादिवद्वनशब्दस्य परनिपातः। "हलदन्तात्? सप्तम्याः सज्ञायाम्()" ६।३।८ इति सप्तम्या अलुक्()। ननु च पूर्वेणैव णत्वं सिद्धम्(), तत्किमर्थोऽयम्()? इत्यत आह--"सिद्धे" इत्यादि। पुरगादिभ्यो वननकारस्यैवेति विपरीतनियमो नाशङ्कनीयः, पुरगादीनं कृतदीर्घाणां निर्देशात्()। सह्वेवमर्थः क्रियते--यत्रैषां दीर्घत्वं तत्र नियमो यथा स्यात्(), अन्यत्र मा भूदिति। अन्यता "अनगिर्योः" ६।३।११६ इत्यनेनैव दीर्घत्वे सिद्धे दौर्घोच्चारणं गौरवफलमेव केवलं स्यात्()। तस्माद्यत्रैषां दीर्घत्वं तत्रैव नियमः। अतो व्यवच्छेद्यामाभावान्न भवति विपरीतनियमाशङ्का; न हि वनादन्यस्मिन्नमीषां पूर्वपदभूतानां दीर्घत्वमस्ति॥

बाल-मनोरमा

वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः १०२४, ८।४।४

तत्र णत्वविधिं दर्शयति--वनं पुरगा। वनमिति। षष्ठ()र्थे प्रथमा। इत्यभिप्रेत्याह-वनशब्दस्येति। एभ्य इति। पुरगा, मिश्रका, सिध्रका, सारिका, कोटर, अग्रे इत्येतेभ्य एव परस्य उत्तरपदस्य वनशब्दस्य यो नकारस्तस्य णत्वमित्यन्वयः। "रषाभ्याम्" इत्यतो "णो नः" इत्यनुवृत्तेः। सूत्रे "अग्रे" इति सप्तम्यन्तस्यानुकरणम्। नन्विह भिन्नपदत्वात् "अट्कुप्वा"ङिति णत्वस्याऽप्राप्तेरपूर्वविध्यर्थकत्वावश्यकत्वादेभ्य एवेति कथं नियमलाभ इत्यत आह--इह कोटरान्ता इति। इह=णत्वविधावुपात्ताः पुरगा मिश्रका सिध्रका सारिका कोटर इत्येवं पञ्च शब्दाः, एव वनगिर्योरिति दीर्घाविधौ कोटरादिशब्देन विवक्षिता इत्यर्थः। ततः किमित्यत आह--तेषामिति। णत्वविधौ तावत्पुरगादिशब्दाः पञ्च दीर्घान्ता एव निर्दिष्टाः। दीर्घस्तु तेषां संज्ञायामेव "वनगिर्योरिति"विहितः। एवंच एतेषामसंज्ञायां दीर्घाऽभावात्संज्ञायामेव "वनं पुरगे"ति णत्वविधिरिति पर्यवस्यति। ततश्च तेषु वनशब्दनकारस्य "पूर्वपदात्संज्ञायामगः" इत्येव णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ निर्देशो नियमार्थः संपद्यत इत्यर्थः। अग्रेशब्दस्य त्विति। णत्वविधावग्रेशब्दस्य निर्देशस्तु अग्रेवणशब्दे अपूर्वणत्वविध्यर्थ एव, न तु नियमार्थः। अग्रेवणशब्दस्याऽसंज्ञायामगः" इत्येव णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ निर्देशो नियमार्थः संपद्यत इत्यर्थः। अग्रेशब्दस्य त्विति। णत्वविधावग्रेशब्दस्य निर्देशस्तु अग्रेवणशब्दे अपूर्वणत्वविध्यर्थ एव, न तु नियमार्थः। अग्रेवणशब्दस्याऽसंज्ञात्वादिति भावः। न च पुरगावणशब्दे गकारव्यवधानात् "पूर्वपदात्संज्ञाया"मित्यस्य प्राप्त्यसंभवादत्र अपूर्वणत्वविध्यर्थमेव पुरगाग्रहणमिति वाच्यम्, "अग" इति हि पञ्चमी, गकारान्तात्पूर्वपदात्परस्य णत्वं नेति लभ्यते। पुरगाशब्दस्त्वयमाकारान्त एव, न तु गकारान्त इति, तत्र अग इति निषेधाऽप्राप्त्या "पूर्वपदात्संज्ञाया"मित्येव सिद्धे, पुरगाग्रहणमपि नियमार्थमेवेति भावः। पुरगावणमित्यादयो नकरविशेषाणां संज्ञाः। असिपत्रवनमिति। नरकविशेषोऽयम्। अत्र संज्ञात्वेऽपि पूर्वपदात्संज्ञाया"मिति णत्वं न भवति, एभ्य एवेति नियमादिति भावः। अग्रेवणमिति। वनशब्दस्य षष्ठ()न्तस्य अग्रेशब्देन सह षष्ठीसमास इति भावः। ननु तर्हि "सुपो धात्वि"ति सप्तम्या अपि सुक् स्यादित्यत आह--राजदन्तादिष्विति। अनेन वनशब्दस्य परनिपातोऽपिसूचितः। ननु सप्तम्यर्थप्राधान्यात्सप्तमी स्यादित्यत आह--प्रातिपदिकेति। सप्तम्यर्थस्य प्रातिपदिकेऽन्तर्भावादिति भावः। किंशुलुकादीनामुदाहरणमाह--किंशुलुकागिरिरिति। "अञ्जनागिरि"रित्यप्युदाहार्यम्।

तत्त्व-बोधिनी

वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः ८६३, ८।४।४

वनं पुरगाष व्यत्ययेन षष्ठ()र्थे प्रथमा इत्याह---वनशब्दस्येति। एभ्य एवेति। कृतिदीर्घेभ्यः पुरगादिभ्य एव परस्य णत्वमित्यर्थः। "एभ्यो वनस्यैव णत्वं नान्येषा"मिति विपरीतनियमशङ्का तु न भवति, वनादन्यस्मिन्नुत्तरपदे पुरगादीनां दीर्घान्तत्वाऽसंभवात्। नियमार्थ इति। अयं भावः---"पुरगामिश्रके"ति दीर्घनिर्देशादसंज्ञायां दीर्घाऽभावेन संज्ञायामेणत्वमिति फलितम्। एवं च "पूर्वपदात्संज्ञाया"मित्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ निर्देशो नियमार्थ एवेति। विध्यर्थ इति। असंज्ञात्वेन "पूर्वपदात्संज्ञाया "मित्यस्याऽप्रवृत्तेरिति भावः। न च पुरगाग्रहणमपि विध्यर्थमेव, गकारव्ययधानेन "पूर्वपदात्संज्ञाया"मित्यस्य प्राप्त्यभावादिति वाच्यम्, "अगः" इत्यस्य पञ्चम्यन्ततत्वं स्वीकृत्य "गान्तात्पूर्वपदात्परस्य णत्वं ने"ति व्याख्यानात्। पुरगाशब्दस्य त्वकारान्ततत्वात् "अगः" इति निषेधस्याऽप्रवृत्तेः। अतएव "अगः" इत्यस्य "ऋगयन"मित्येकमेवोदाहरणमिति "अणृगयनादिभ्यः"इति निर्देशाश्रयेण तत्प्रत्याख्यातमाकरे। पुरगावणमित्यादि। नरकविशेषस्य संज्ञा। असिपत्रवनमिति। "एभ्यो वनस्यैवे"ति विपरीतनियमे तु णत्वमत्र दुर्वारमिति भावः। सप्तम्यर्थस्य प्रातिपदिकार्थेऽन्तर्भावादह---प्रथमेति। किंशुलुकादीनामुदाहरणमाह--किंशुलुकागिरिरिति। आदिशब्दग्रह्यस्तु "अञ्जनागिरिः" इत्यादयः। किंशुलुकेति किम्()। कृष्णगिरिः। रामगिरिः।

सूत्रम्

काशिका-वृत्तिः

प्रनिरन्तःशरैक्षुप्लक्षाऽम्रकार्ष्यखदिरपीयूक्षाभ्यो ऽसंज्ञायाम् अपि ८।४।५

प्र निरन्तर् शर इक्षु प्लक्ष आम्र कार्ष्य खदिर पीयूक्षा इत्येतेभ्यः उत्तरस्य वननकारस्य संज्ञायाम् असंज्ञायाम् अपि णकारादेशो भवति। प्र प्रवणे यष्टव्यम्। निर् निर्वणे प्रतिढीयते। अन्तर् अन्तर्वर्णे। शर शरवणम्। इक्षु इक्षुवणम्। प्लक्ष प्लक्षवणम्। आम्र आम्रवणम्। कार्ष्य कार्ष्यवणम्। खदिर खदिरवणम्। पीयूक्षा पीयूक्षावणम्।

न्यासः

प्रनिरन्तःशरेक्षुप्लक्षाम्रकाष्र्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि। , ८।४।५

येऽत्रौषधिवनस्पतिशब्दा न भवन्ति प्रादयस्तेभ्यः संज्ञायाम्()--यदि पूर्वसूत्रं नियमार्थम्(), अथापि विध्यर्थम्()--उभयथाप्यप्राप्तणत्वमनेन विधीयते। एवमसंज्ञायामपि विधिपक्षे। नियमपक्षे त्वसंज्ञायां निष्प्रयोजनोऽस्यारम्भः; असंज्ञायां नियमाभावात्(), आद्याभ्यामेव सूत्राभ्यां यथायोगं णत्वस्य सिद्धत्वात्()। इतरेषु शरादिष्विक्षुशरशपब्दावोषधिवचनौ। शेषाः प्लक्षादयो वनस्पतिवचनाः। तेभ्यः संज्ञायां विधिपक्षे नियमपक्षे चाप्राप्तं णत्वमनेन विधीयते। असंज्ञायां तु "विभाषौषधिवनस्पतिभ्यः" ८।४।६ इति विभाषा णत्वं प्राप्तं नित्यमनेन विधीयते। "असंज्ञायामपि" इत्यपिशब्दस्य व्यापारं दर्शयति--असत्यपिशब्दे संज्ञाधिकारादसंज्ञायां न स्यात्()। अथ तु संज्ञाधिकारं निवर्त्त्य समामान्येन विधीरुच्यते सदा शक्यते संज्ञाग्रहणमकर्त्तुम्()? तत्? क्रियते विस्पष्टार्थम्()। "प्रवणम्(), निर्वणम्()" इति। विभक्त्वर्थेऽयं "अव्ययम्()" २।१।६ इत्यादिनाऽण्ययीभावः। वनस्य मध्य इत्यर्थः। "शरवणम्()" इत्यादयश्च षष्ठीसमासाः॥

बाल-मनोरमा

पनिरन्तःशरेक्षुप्लक्षाम्रकाष्र्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि १०३५, ८।४।५

प्रनिरन्तः। एभ्य इति। प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, काष्र्य, खदिर, पीयूक्षा-इत्येतेभ्य इत्यर्थः। वनस्येति। "वनं पुरगे"त्यतस्तदनुवृत्तेरिति भावः। प्रवणमिति। प्रकृष्टं वनमिति विग्रहः। प्रादिसमासः। इहेति। "काष्र्यवण"मित्यत्र षकारात्परत्वेन णत्वं, नतु रेफात् परत्वमादाय, अडादिभिन्नषकारेण व्यवधानादिति भावः। एतेन कार्श्येति तालव्यशकारमध्यपाठोऽप्रामाणिक इति सूचितम्। तथा सति निमित्ताऽभावाण्णत्वाऽसंभवात्, अटकुप्वाङ्भिन्नेन शकारेण व्यवहिततया रेफस्य तन्निमित्तत्वाऽसंभवात्। निर्वणम्, अन्तर्वणं, शरवणम्, इक्षुवणम्, प्लक्षवणम्, आम्रवणं, काष्र्यवणं, खदिरवणं, पीयूक्षावणम्।

---

सूत्रम्

काशिका-वृत्तिः

विभाषौषधिवनस्पतिभ्यः ८।४।६

वनम् इत्येव। ओषधिवाचि यत् पूर्वपदं वनस्पतिवाचि च तत्स्थान् निमित्तादुत्तरस्य वननकारस्य णकार आदेशो भवति विभाषा। ओषधिवाचिभ्यस् तावत् दूर्वावणम्, दूर्वावनम्। मूर्वावणम्, मूर्वावनम्। वन्स्पतिभ्यः शिरीषवणम्, शिरीषवनम्। बदरीवणम्, बदरीवनम्। द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्। इह मा भूत्, देवदारुवनम्। भद्रदारुवनम्। इरिकादिभ्यः प्रतिषेधो वक्तव्यः। इरिकावनम्। मिरिकावनम्। फली वन्स्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगाः। ओषध्यः

फलपाकान्ता लतागुल्माश्च वीरुधः। सत्यपि भेदे वृक्षवनस्पत्योरिह भेदेन ग्रहणं द्रष्तव्यम्।

न्यासः

विभाषौषधिवनस्पतिभ्यः। , ८।४।६

संज्ञायाम्? "षनं पुरगामिश्रका" ८।४।४ दिनियमादोषधिवनस्पतिभ्यः परस्य वननकारस्य णत्वेन न भवितव्यमिति पारिशेष्यादसंज्ञायां विभाषा वेदितव्या। परत्वादनया भिभाषया संज्ञायामपि भवितव्यमित्येतच्च नाशङ्कनीयम्(); नियमे कत्र्तव्ये विभाषाया असिद्धत्वात्()। अथ तु संज्ञायामसंज्ञायामपि विभाषेयमिष्यते, तदर्थं यत्नानन्तरमास्थेयम्()। किं पुनस्तत्()? विभाषेति योगविभागकरणम्()। योगविभागे सत्येको योगो नियमबाधनार्थो विज्ञायत इति संज्ञायामपि विभाषा सिध्यति। असिद्धत्वं तु योगविभागसामथ्र्यान्न भविष्यति। अत्र समानग्रहणसामथ्र्यात्? समानमेव यन्नित्यं पदं तत्? समानपदमित्याश्रयन्ति ये, तेषामप्राप्तविभाषेयम्(); अन्येषां तु प्राप्तविभाषा। बहुवचननिर्द्देशस्तु स्वरूपनिरासार्थः। "दूर्वावणम्()" इत्येवमादयः षष्ठीसमासाः। "द्वयक्षरत्र्यक्षरेभ्य इति वक्तव्यम्()" इति। अक्षरशब्दोऽत्राक्षु वत्र्तते। द्वे अक्षरे, त्रीणि वाक्षराणि येषां ते द्व्यक्षरत्र्यक्षाराः, ओषधिदनस्पतिशब्दाः, तेभ्यः परस्य वननकारस्य णत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रैदं व्याख्यानम्()--व्यवस्थितभाषाविज्ञानाद्द्व्यक्षरत्र्यक्षरेभ्य एव भवति। एवमुत्तरत्रापि वक्तव्यशब्दस्य व्याख्येयमित्यर्थः। व्याख्यानं तु व्यवस्थितविभाषामाश्रित्य कत्र्तव्यम्()। ननु च शिरीषावयो वृक्षाः, न तु वनस्पतयः, न तु वनस्यतिग्रहणे न वृक्षस्य ग्रहणं भवति; तेषामत्यन्तभेदात्()। तथा चोक्तं शास्त्रान्तरे "फली वनस्यतिज्र्ञेयो वृक्षाः पुष्पफलोपयाः" इति। तत्कथं शिरीषवणम्(), वदरीवणमित्युदाह्यतम्()? इति यो देशयेत्? तं प्रत्याह--"फली वनस्पतिज्र्ञेयः" इति। यद्यप्यनेन श्लाकेन दृक्षवनस्पत्योर्भेदो दर्शितः, तथापि ततोरिहाभेदेन ग्रहणं वेदितव्यम्()। अभेदग्रहणे तु तयोर्भाष्यकारवचनमेव लिङ्गम्(); तथा हि "लुपि युक्तवद्व्यक्तिवचने" (१।२।५१) इत्यत्र भाष्यकारेणोक्तम्()--"व्यन्तिवचने इति किम्()? शिरीषाणामदूरभवो ग्रामः शिरीषाः, तेषां वनं शिरीदवनम्()"। यद्यत्र "व्यक्तिवचने" इति। नोच्यते, तदा वचनस्पतित्वमतिदिश्येत्(), ततो वनस्पतित्वमतिदिश्येत, तत्र "विभाषौषधिवनस्पतिभ्यः" ८।४।६ इति णत्वं प्रसज्येत। यदि चेह वृक्षवनस्पत्योरभेदेव ग्रहणं न स्यात्(), ततो वनस्पतित्वातिदेशाद्विभाषा णत्वप्रसञ्जनञ्च नोपपद्यते; शिरोषाणामवनस्पतित्वात्()। "फली वनस्पतिज्र्ञेयः" इति। पुष्पमन्तरेण फलमात्रं यस्यास्तीति स फली वनस्पतिज्र्ञेय इति--उदुम्बरादयः। "वृक्षाः पुष्पफलोपगाः" इति। पुष्पं फलञ्चोपगच्छन्ति प्राप्नुवन्तीति पुष्पफलोपगाः। "अन्तात्यन्त" ३।२।४८ इत्यादौ "अन्येष्यपि दृश्यते" (वा। २५६) इत्युपसंख्यानाड्डप्रत्ययः। न च ये पुष्पफले उपगच्छन्ति त एव वृक्षाः, किं तर्हि? येऽन्यतरत्? पुष्पं फलं चोपगच्छन्ति तेऽपि वृक्षा। एव। तत्र वेतसादयः पुष्पमेदोपगच्छन्ति, प्लक्षादयः फलमेव; आम्रादयस्तूभयम्()। तत्र यो वनस्पतिः स नियतं वृक्षो भवति, यस्तु वृ()क्षः स तु नावश्यं वनस्पतिः यथा--पुष्पोपगोश्च वृक्षा वेतसादयः, फलोपगाश्च प्लक्षादयः, पुष्पफलोपगाश्चाम्रादयः। "ओषध्यः फलपाकान्ताः" इति। ओषधिशब्दात्? "कृदिकारादिक्तिनः" (ग।सू।५०) इति, "सर्वतोऽक्तिन्नर्थादित्यके" (ग।सू।५१) इति बह्वादिपाठात्? ङीष्()। फलपाकेनान्तो विनाशो यासां ताः फलपाकान्ता ओषध्यो विज्ञेयाः, कवल्यादयः। "लता गुल्माश्च वीरुचः" इति। लताः=प्रतानवत्थो मालत्यादयः। गुल्माः=ह्यस्वस्कन्धास्तरावः। वीरुषः=बहुप्रकाण्डपचा विज्ञेयाः॥

बाल-मनोरमा

विभाषौषधिवनस्पतिभ्यः १०३६, ८।४।६

विभाषौषधि। वनस्य णत्वमिति। ओषधिवनस्पतिभ्यः परस्य वनस्य यो नकारस्तस्य णत्वं वेत्यर्थः। ओषधिभ्यः उदाहरति--दूर्वावणमिति। "ओषध्यः फलपाकान्ताः" इत्यमरः। अथ वनस्पतिभ्य उदाहरति--शिरीषवणमिति। यद्यपि यः पुष्पैर्विना फलति स एव उदुम्बरादिर्वनस्पतिः, "वानस्पत्यः फलैः पुष्पात्रैरपुष्पाद्वनस्पति"रित्यक्तेः। शिरीषवृक्षश्चायं

पुष्पफलवानेन न वनस्पतिस्तथापि वनस्पतिशब्देनाऽत्र वृक्षसामान्यं विवक्षितम्। अत एव "सुपि युक्तवद्व्यक्तिवचने" इति सूत्रे भाष्ये "शिरीषवण"मित्यत्र शिरीषे वनस्पतित्वं व्यवह्रतमिति दिक्। द्व्यच्त्र्यज्भ्यामेवेति। "परस्य वनस्य णत्वं वाच्य"मिति शेषः। देवदारुवनमिति। प्रत्युदाहरणम्।

इरिकादिभ्य इति। एभ्यः परस्य वनस्य णत्वप्रतिषेध इत्यर्थः।

तत्त्व-बोधिनी

विभाषौषधिकवनस्पतिभ्यः ८६८, ८।४।६

शिरीषवणमिति। ननु "वानस्पत्यः फलैः पुष्पत्तैरपुष्पाद्वनस्पति"रित्यमर कोशाद्यस्य पुष्पं विनैव फलप्रादुर्भावः स वनस्पतिः, स चोदुम्बरादिः। शिरीषल्तु न तथा, तस्य पुष्पफलोभयसत्त्वादतो णत्वमिह कथमिति चेत्()। अत्राहुः--वनस्पतिशब्देनात्र वृक्षमात्र मुपलक्ष्यते। अत्र च "लुपि युक्तव"दिति सूत्रस्थं भाष्यं लिङ्गम्। तत्र हि व्यक्तिवचने किम्()। शिरीषाणामदूरभवो ग्रामः शिरीषाः, तेषां वनं शिरीषवणमित्यत्र णत्वे कर्तव्ये वनस्पतित्वमप्यतिदिश्येतेत्युक्तम्। तच्च शिरीषाणां वनस्पतित्वे सङ्गच्छते नान्यथेति दिक्।

व्द्यच्त्र्यज्भ्यामेव। व्द्यच्त्र्यज्भ्यामेवेति। व्यवस्थितविभाषाश्रयणादिति भावः। ओषधित्वात्प्राप्ते प्रतिषेधमाह।

ईरिकादिभ्यः प्रतिषेधो वक्तव्यः। इरिकादिभ्य इथि। एतदपि व्यवस्थितविभाषाज्ञानादेव सिद्धम्। उशीनरा इति। इह उशीनरशब्दस्त द्देशवासिषु भाक्तः। कर्मणि ल्युडिति। "कृत्यल्युटो बहुल"मित्यनेन। वा भाव। आदेशार्थ आरम्भ इत्यप्रप्तविभाषा।

---

सूत्रम्

काशिका-वृत्तिः

अह्नो ऽदन्तात् ८।४।७

अदन्तं यत् पूर्वपदं तत्स्थान् निमित्तादुत्तरस्य अह्नो नकारस्य णकार आदेशो भवति। पूर्वाह्णः। अपराह्णः। अदन्तातिति किम्? निरह्नः। दुरह्नः। अह्नो ऽह्न एतेभ्यः ५।४।८८ इत्यह्नादेशः। अह्नः इत्यकारान्तग्रहणाद् दीर्घाह्नी शरदित्यत्र न भवति।

न्यासः

अह्नोऽदन्तात्?।, ८।४।७

"अह्नः" इति षष्ठ्याः स्थाने प्रथमा पूर्ववत्()। समानमेव यन्नित्यं पदं तत्? समानग्रहणादाश्रयन्ति ये, तेषां विध्यर्थमेतत्()। अन्येषां तु नियमार्थम्()। एवमुत्तरत्रापि नियमार्थता विध्यर्थता च यथायोगं वेदितव्या। "पूर्वाह्णः" इत्यादि। पूर्वापरादिसूत्रेण ["पूर्वपरादि"--कांउ।पाठः, प्रांउ।पाठश्च] २।२।१ एकदेशी समासः। "राजाहःसखिभ्यष्टच्()" (५।४।९१) इति टच्? समासान्तः। "अह्नोऽह्न एतेभ्यः" ५।४।८८ इत्यह्नादेशः, सवर्णदीर्घः। "निरह्नः" इति। निर्गतमह्न इति प्रादिसमासः। शेषं पूर्वयत्()। "दीर्घाह्नो" इति। दीर्घाव्यहानि यस्यामिति बहुव्रीहिः। टज्विचौ "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" ५।४।८६ इत्यतस्तत्पुरुषग्रहणमनुवत्र्तते। तेन बहुव्रीहौ टज्न भवति। "अन उपधालोपिनोऽन्यतरस्याम्()" ४।१।२८ इति ङीप्(), "अल्लोपोऽनः" ६।४।१३४ इत्युपधाकारलोपः। अत्राकारान्तग्रहणान्न भवति णत्वम्()। यदि त्वनकारान्तस्य स्यात्(), ततः "पूर्वाह्णः" इत्यत्र प्रत्ययात्प्राग्यथा व्यवस्थितस्याङ्नो नकारस्य णकारादेशो भवति, तथा "दीर्घाह्नी शरत" इत्यत्रापि स्यात्()। अतोऽस्य ग्रहणं हि व्याख्यानाद्विज्ञायते। तपरकरणात्?

पराजितमहः "पराह्णः" इत्यत्र आकारान्तान्न भवति। अन्तग्रहणं विस्पष्टार्थम्()। तपरेणाकारेम पूर्वपदे विशेष्यमाण तदन्तविधिर्भविष्यतीति विनाप्यन्तग्रहणतदन्तता लभ्यत इति।

बाल-मनोरमा

अह्नोऽदन्तात् ७८१, ८।४।७

अह्नोऽदन्तात्। "पूर्वपदात्संज्ञायाम्" इत्यतः पूर्वपदादित्यनुवृत्तमदन्तादित्यत्रान्वेति। "रषाभ्यां नो णः" इति सूत्रं षकारवर्जमनुवर्तते। पूर्वपदादित्यनेन पूर्वपदस्थादिति विवक्षितम्। तदाह--अदन्तपूर्वेति। तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टार्थम्। लक्षेषु अहस्सु भवो लक्षाह्ण इत्यत्र णत्वार्थं षादित्यपि बोध्यम्। समासान्ते परे इति किम्?। द्वे अहनी भृतो द्व्यहीनः। अत्र समासान्तविधेरनित्यत्वाट्टज्भावेऽह्नादेशो न। सर्वाह्ण इति। सर्वमहरिति विग्रहे "पूर्वकालैके"ति समासे "राजाहःसखिभ्यः" इति टच्, अह्नादेशः। णत्वं। "रात्राह्नाहाः" इति पुंस्त्वम्। पूर्वाह्ण इति। समासादि सर्वाह्णवत्। सङ्ख्याताह्न इति। सङ्ख्यातमहरिति विग्रहः। विशेषणसमासः, टच् अह्नादेशः। निमित्ताऽभावान्न णत्वम्। पुण्यपूर्वस्य त्वग्रे वक्ष्यते। सङ्ख्यापूर्वस्य उदाहरति--द्वयोरह्नोरित्यादि। द्वयह्न इति। तद्धितार्थे द्विगुः। टच्। ततो भावार्थे ठञ्, तस्य लुक्, अह्नादेशः। प्रसङ्गादाह--स्त्रियामिति। द्व्यह्नेति। द्व्योरह्नोर्भवेत्यर्थः। ठञ्। लुक् च पूर्ववत्। "अपरिमाणविस्ते"ति न ङीप्। टज्निमित्तस्तु ङीब्नेत्यपरिमाणविस्तेत्यत्रोक्तम्। टचष्टित्वेऽप्युपसर्वनत्वाट्टिड्ढेति न ङीप्। वस्तुतस्तु स्त्रीत्वमेवाऽत्रनास्ति। "रात्राह्नाहाः पुंसी"त्युक्तेरिति शब्देन्दुशेखरे प्रपञ्चितम्। सङ्ख्यापूर्वस्योदाहरणान्तरमाह-द्व्यह्नप्रिय इति। द्वे अहनी प्रिये यस्येति विग्रहः। तद्धितार्थ इत्युत्तरपदे द्विगुः। टच्, अह्नादेश इति भावः। अव्ययपूर्वस्योदाहरति--अत्यह्न इति। अहरतिक्रान्त इति विग्रहः। "अत्यादय" इति समासः। टच् अह्नादेश इति भावः।

तत्त्व-बोधिनी

अह्नोऽदन्तात् ६८८, ८।४।७

रेफादिति। यदि तु लक्षे अहस्तु भव इत्यादिव्युत्पत्त्या "लक्षाह्ण"इत्यपि प्रयोगोऽस्ति, तर्हि षादित्यपि बोध्यम्। "रषाभ्या"मित्यधिकारात्। ठञो लुगिति। "अणो लु"गिति वृत्तिकाराद्युक्तमयुक्तमिति भावः। प्रसङ्गादाह---सत्रियामिति। नन्विह स्त्रीत्वं दुर्लभं, "रात्राह्नहाः पुंसी"ति वचनादिति चेन्मैवम्। सर्वमहः सर्वाह्ण इत्यादावुपक्षीणस्य वद्वचनस्य लुप्ततद्धितायामप्रवृत्ते। "लुपि युक्तव"दिति लिङ्गतिदेशो ह्त्र प्रमाणम्। प्राकृतलिङ्गानुसासनानां लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयश्र्यापत्तेः। अतएव लवणः सूपः लवणा यवागूरित्यादौ न क्लीबत्वम्। किं च "द्विगुप्राप्तापन्ने "त्यादिना परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य "रात्राह्नाहाः" इत्यस्याऽप्राप्तिरेवेति व्यह्नशब्दोऽयं विशेष्यनिघ्न एव, न तु नियतपुंलिङ्गः। एवं चाऽत्र भवार्थकतद्धिते लुप्तेऽपि "यः शिष्यते स लुप्यमानार्थाभिधायी"ति न्यायेन भवार्थवत्तन्निष्ठस्त्रीत्वाभिधानमपि न्याय्यमेवेति दिक्। टाबिति। न चेह ठञन्तत्वान्ङीप्स्यादिति शङ्क्यं, ठञो लुप्तत्वात्। न च प्रत्ययलक्षणं, वर्णाश्रयत्वात्। "ठञो योऽकारस्तदन्तान्ङी"बिति तत्र व्याख्यात्वात्। अतएव वृत्तिकाराद्युक्ताऽणो लुक् पक्षेऽपि न ङीफ्, "अण्योऽकारः"इति तत्र व्याख्याततत्वात्। न चैवमपि टजन्तत्बान्ङीप्स्यादेवेति वाच्यम्। टचः समासान्ततया तदन्तस्य तद्धितार्थे प्रत्युपसर्जनत्वात्। अतएव हि आपिशलिना प्रोक्तमधीयाना ब्राआह्णी आपिशलेत्युदाह्रतं भाष्ये। "द्विगो"रिति ङीप्तु न शङ्क्य एव, "अपरिमणे"ति निषेधात्। अतष्टाबेबात्र युक्तः। तथैवोदाहरति--

---

सूत्रम्

काशिका-वृत्तिः

वाहनम् आहितात् ८।४।८

आहितवाचि यत् पूर्वपदं तत्स्थान् निमित्तादुत्तरस्यवाहननकारस्य णकार आदेशो भवति। इक्षुवाहणम्। शरवाहणम्। दर्भवाहणम्। वाहने यदारोपितम् उह्यते तदाहितम् उच्यते। आहितातिति किम्? दाक्षिवाहनम्। दाक्षिस्वामिकं वाहनम् इत्यर्थः।

न्यासः

वाहनमाहितात्?। , ८।४।८

उह्रतेऽनेनेति करणे ल्युट्()। अत एव निपातनादुपधादीर्घः। "इक्षुवाहणम्()" इति। इक्षूणां वाहनमिति कृद्योगलक्षमायाः कर्मणि षष्ठ्याः समासः। "वाहमे यदारोपितं तदाहितमुच्यते" इति। अनेकार्थत्वाद्धातूनां दधातिस्तत्र वत्र्तते। आहितमिति भूतकालोऽत्र न विवक्षितः। "कृत्यल्युटो बहुलम्()" [३।३।११३](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इति कालसामान्ये क्तो विधीयते। तेन यदापि वाहने वाहनार्थमिक्ष्वादिकमारोपितं न भवति, तदर्थं तु केवलमुपकस्पितं भूतलस्थितम्(), तदापि भवत्येव। "दाक्षिवाहनम्()" इति। अत्र दाक्षिस्वामिकवाहनमेव प्रतीयते, न त्वाहितत्वम्()। अत एवाह"दाक्षिस्वामिकं वाहनमित्यर्थः" इति। अत्र शब्दशक्तिर्हेतुः॥

बाल-मनोरमा

वाहनमाहितात् १०३७, ८।४।८

वाहनमाहितात्। वाहने आधीयते वहनाय यत्, नतु स्वयमेवारोढुं शक्नोति तदाहितम्। तदाह--आरोप्येति। निमित्तादिति। रेफषकारान्यतरस्मादित्यर्थः। वाहननकारस्येति। वाहनस्य यो नकारस्तस्येत्यर्थः। अनेन सूत्रे वाहनमिति षष्ठ()र्थे प्रथमेति सूचितम्। इक्षुवाहणमिति। "इक्षवो हि वहनाय परैरारीप्यन्ते, नतु स्वयमेवारोढुं शक्नुवन्ती"ति तेषामाहितत्वं बोध्यम्। आरोपितेश्रुयुक्तं शकटादिवाहनमिति यावत्। इन्द्रवाहनमिति। ननु वहेः करणे ल्युटि कथमुपधादीर्घः, ञ्णित्प्रत्ययपरकत्वाऽभावादित्यत आह--वहेर्ल्युटीति।

---

सूत्रम्

काशिका-वृत्तिः

पानं देशे ८।४।९

पाननकारस्य पूर्वपदस्थान् निमित्तादुत्तरस्य देशाभिधाने णकार आदेशो भवति। पीयते इति पानम्। कृत्यल्युटो बहुलम् [३।३।११३](http://sanskritdocuments.org/learning_tools/sarvanisutrani/allsutrani.htm) इति कर्मणि ल्युत्। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः। मनुष्याभिधाने ऽपि देशाभिधानं गम्यते। सुरापाणाः प्राच्याः। सौवीरपाणा बाह्लीकाः। कषायपाणाः गान्धाराः। देशे इति किम्? दाक्षीणां पानम् दाक्षिपानम्।

न्यासः

पानं देशे। , ८।४।९

"देशाभिधाने" इति। गम्यमान इति शेषः। "क्षीरं पानं येषाम्()" इत।["इति"--नास्ति--प्रां३।पाठे] कत्र्तरि कृद्योगलक्षणा षष्ठी। "क्षीरपाणा उशीनराः" इति। अतिशयोऽत्र प्रतीयते, न तु क्षीरपानसम्बन्धमात्रम्(); तस्यान्यत्रापि सम्भवात्()। ननु च क्षीरपाणादयः शब्दा मनुष्ये वत्र्तन्ते, तत्सामानाधिकरण्यादुशीनरादयोऽपि तत्रैव, तत कथमिह देशाभिधानं गम्यते? नैतदस्ति; उशोनरादिदेशवासिनां तात्स्थ्यात्? तथा प्रतीयमानत्वादुशीनरादिदेशसम्बन्धद्वारेण मनुष्येषूशीनराख्या।

उशीनरादयोऽपि शब्दाः संज्ञात्वेन प्राग्देशेष्वेव प्रवृत्ताः। क्रोशन्ति" इत्यत्र मञ्चसम्बन्धद्वारेण मनुष्येष्वपि वत्र्तमाना ये मञ्चशब्दास्तेषां मञ्चाभिदानं गम्यते। यदि तेषां मञ्चाभिधानं न गम्यतेत, तदा मञ्चाधारविशिष्टाः पुरुषाः कथं प्रतीयेरन्()!॥

बाल-मनोरमा

पानं देशे १०३८, ८।४।९

पानं देशे। "पान"मिति षष्ठ()र्थे प्रथमेत्यभिप्रेत्याह--पानस्येति। उशीनरा इति। देशविशेषे बहुवचनान्तोऽयम्। ननु पानशब्दस्य भावस्युडन्तत्वे क्षीरम्पानमिति कथं सामानाधिकरण्यमित्यत आह--पीयते इति।

तत्त्व-बोधिनी

पानं देशे ८६९, ८।४।९

क्षीरपाणमिति। पीतिः--पानं। "ल्युट् चे"ति नपुंसके भावे ल्युट्। पीयते अनेनेति पानं। करणे ल्युट्। क्षीरस्य पानं क्षीरपाणम्।

गिरिनद्यादीनां वा। गिरिनद्यादीनां वेति। "वक्तव्य"मिति शेषः। संज्ञायां प्राप्ते, असंज्ञायामप्राप्ते उभयत्र विभाषेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

वा भावकरणयोः ८।४।१०

भावे करणे च यः पानशब्दः तदीयस्य नकारस्य णकार आदेशो भवति वा पूर्वपदस्थानिमित्तादुत्तरस्य। क्षीरपाणं वर्तते, क्षीरपानम्। कषायपाणम्, कषायपानम्। सुरापाणम्, सुरापानम्। करणे क्षीरपाणः कंसः, क्षीरपानः। वाप्रकरणे गिरिनद्यादीनाम् उपसङ्ख्यानम्। गिरिणदी, गिरिनदी। चक्रणदी, चक्रनदी। चक्रणितम्बा, चक्रनितम्बा।

न्यासः

वा भावकरणयोः। , ८।४।१०

आदेशार्थोऽयमारम्भः। "क्षीरपाणम्()" इति। पीतिः=पानम्(), "नपुंसके भादे क्तः" (३।३।११४) इत्यनुवत्र्तमाने "ल्युट्? च" ३।३।११५ इति ल्युट्प्रत्ययः। "क्षीरपाणः कंसः" इति। पोयतेऽनेनेति पानः, "करणाधिकरणयोश्च" ३।३।११७ इति ल्युट्()। "वाप्रकरणे" इत्यादि। उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः। अस्मिन्? वाप्रकरणे गिरिनदीप्रभृतीनां यो नकारस्तस्य णत्वप्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--उत्तरसूत्रेऽनुक्तसमुच्चयार्थश्चकारः। तेन गिरिनदीप्रभृतीनां यो नकारस्तस्य णत्वं वा भविष्यतीति॥

बाल-मनोरमा

वा भावकरणयोः १०३९, ८।४।१०

वा भावकरणयोः इत्येवेति। अनुवर्तत एवेत्यर्थः। भावे करणे च यः पानशब्दस्तस्य उक्तविषये णो वा स्यादित्यर्थः। आदेशार्थं वचनम्। क्षीरपानं क्षीरपाणमिति। क्षीरस्य पानमिति विग्रहः। भावे करणे वा ल्युट्। पानक्रिया, पानपात्रं वेत्यर्थः।

गिरिनद्यादीनामिति। पूर्वपदस्थान्निमित्तात्परस्य उत्तरपदस्थस्य नस्य णो वेत्युपसङ्ख्यानमित्यर्थः। गिरेर्नदीति विग्रहः। चक्रनितम्बेति। चक्रमिव नितम्बो यस्याः सा इति विग्रहः।

---

सूत्रम्

काशिका-वृत्तिः

प्रातिपदिकान्तनुम्विभक्तिषु च ८।४।११

वा इति वर्तते। प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारः तस्य पूर्वपदस्थान्निमित्तादुत्तरस्य् वा णकार आदेशो भवति। प्रातिपदिकान्ते तावत् माषवापिणौ, माषवापिनौ। नुमि माषवापाणि, माषवापानि। व्रीहिवापाणि, व्रीहिवापानि। विभक्तौ माषवापेण, माषवापेन। व्रीहिवापेण, व्रीहिवापेन। पूर्वपदाधिकारादुत्तरपदस्य प्रातिपदिकस्थो यो ऽन्त्यो नकारः तस्य इदं णत्वम् इष्यति। इह हिन भवति, गर्गाणां भगिनी गर्गभगिनी। यदा त्वेवं भवति, गर्गाणां भगो गर्गभगः, गर्गभगो ऽस्या अस्ति इति गर्गभगिणी इति, तदा मातृभोगीणवन्नित्यम् एव णत्वेन भवितव्यम्। माषवापिणी, माषवापिनी इत्यत्र तु गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः इति कृदन्तेन एव समासे सति प्रातिपदिकस्य उत्तरपदस्य एव सतो नकारो भवति। तथा च अत्र नुंग्रहणम् कृतम्। स हि समुदायभक्तत्वादुत्तरपदस्य अन्तो न भवति। युवादीनां प्रतिषेधो वक्तव्यः। आर्ययूना। क्षत्रिययूना। प्रपक्वानि। दीर्घाह्नी शरद्।

न्यासः

प्रातिपदिकान्तनुम्विभक्तिषु च। , ८।४।११

अन्तशब्दोऽवयववाची। "माषवापिणौ" इति। "बहुलमाभीक्ष्ण्ये" ३।२।८१ इति णिनिः, न तु "सुप्यजाती णिनिस्ताच्छील्ये" ३।२।७८ इति; जातिवाचित्वादुपपदस्य। "माषवापाणि" इत्युपपदसमासः, माषान्? वपन्तीति "कर्मण्यण्()" ३।२।१, "जश्शसोः शिः" ७।१।२० इति शिरादेशः; "नपुंसकस्य झलचः" ७।१।७२ इति नुम्(), "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इति दीर्घः। "माषवापेण" इति। माधवापशब्दात्? तृतीयैकवचनस्य "टाङसिङसामिनात्स्याः" ७।१।१२ इतीनादेशः। अथह कस्मान्न भवति--गर्गाणाअं भगिनो गर्गभगिनीति, अत्रापि गर्गशब्दात्? परो भगिन्नित्येष शब्दः प्रातिपदिकम्(), तस्य चान्तो नकारो भवतीत्यस्ति प्राप्तिः? इत्यत आह--"पूर्वपदाधिकारात्()" इत्यादि। "पूर्वपदात्संज्ञायामगः" ८।४।३ इत्यतः "पूर्वपदात्()" इत्यनुवत्र्तते, पूर्वशब्दस्य सम्बन्दिशब्दत्वात्(), यदपेक्षया तस्य पूर्वपदत्वं तदेवोत्तरपदमुपस्थापयति। तेन यद्यपीह प्रातिपदिकस्य विशेषो नोपात्तः, तथाप्युत्ततरपदं यत्? प्रातिपदिकं तदन्तस्य नकारस्यैव णकारादेशो भवति। "इह हि न भवति" इति। हिशब्दो हेतौ। यस्मात्? पूर्वपदाधिकारादुत्तरपदं यत्? प्रातिपदिकं तदन्तस्यैव नकारस्य णत्वं विज्ञायते, तस्माद्गर्गभगिनीत्यत्र न भवति। न ह्रत्र भगिन्नित्येतच्छब्दरूपमृत्तरपदम्(), किं तर्हि? भगिनीत्येव शब्दः, स च प्रातिपदिकं न भवति; "अप्रत्ययः" १।२।४५ इति निषेधात। न च तस्यान्तो नकारः, किं तर्हि? ईकारः। ननु गर्()गभगिणीत्ययमपि च प्रयोगो दृशर्()यते, स चैवं सति नोपपद्यते? इत्यत आह--"यदा तु" इत्यादि। यदा तु गर्गाणां भगिनीत्येवं व्युत्पत्तिः, तदा न भवितव्यं णत्वेन। यदा तु गर्गस्य भग इति भगशब्देन षष्ठीसमासं कृत्वा, ततः स्त्रियां मत्वर्थ इत्रिः--इति व्युत्पाद्यते, तदैवं व्युत्पत्तौ सत्यां यथा मातृभोगीण इत्यत्र नित्यं णत्वं भवति, तता गर्गभगिणीत्यत्रापि णत्वेन भवितव्यम्()। "मातृभोगीणवत्()" इत्यनेन तदापि नानेन सूत्रेण वा णत्वम्(), किं तर्हि? लक्षणान्तरेणेति दर्शयति। तेनैतदुक्तं भवति--यदैवं व्युत्पत्तिर्भवति तदा यथा मातृबोगीण इत्यत्र अट्कुप्वादिना ८।४।२ नित्यं तद्धितस्य नकारस्य णत्वं भवति; तथा गर्गभगिणीत्यत्रापि। अत्र तद्धितस्थ एव नकारः, न तूत्तरपदस्थः। अत एव भिन्नपदस्थता निमित्तनिमित्तिनोर्नाशङ्कनीया। यथा "पूर्वपदात्संज्ञायामगः" ८।४।३ इत्यनेन नियमेन णत्वं न निवत्र्यते, तथा तत्रैव

प्रतिपादितम्()। यद्युत्तरपदं यत्प्रातिपदिकं तदन्तस्य नकारस्य णकारेण भवितव्यम्(), एवं सति माषवापिणी, माषवापिनीत्यत्र विभाषा णत्वं न प्राप्नोति। अत्र वापिनौशब्द एवोत्तरपदम्(), न वापिन्नित्येतच्छब्दः? इत्यत आह--"माववापिनीत्यत्र तु" इत्यादि। अत्र हि प्राक्? सुबुत्पत्तेः कृदन्तेनैव वापिन्नित्यनेन समासे कृते सति प्रातिपदिकस्यान्तो नकारो भवति; वापिन्नित्येतस्य "कृत्तद्धितसमासाश्च" [१।२।४६](#) इति प्रातिपदिकत्वात्()। तस्माद्भवत्येवात्र णत्वमिति। कथं पुनः प्राक्सुबुत्पत्तेः समासे सत्युत्तरपदस्यान्तो नकार उपपद्यते? यावता "सुप्तिङन्तं पदम्()" [१।४।१४](#) इत्यनेन सुबन्तस्य तिङन्तस्य च पदमित्येषा संज्ञा विहिता। तत्रासत्यां सुबुत्पत्तौ पदत्वमत्र न सम्भवति। कुतः पुनरेतदुत्तरपदमित्येष विशेषः? रूढित्वाददोषः। पूर्वपदोत्तरपदशब्दावेदौ रूढिशब्दौ; यस्मात्? समासे कृते यः कश्चिच्छब्दः पूर्वपदमिति प्रसिद्धः, यः कश्चिदुत्तरपदमिति। सा च रूढिर्न सुबन्तेष्वेव समासावयवेषु सम्भवति; किं तर्हि? असुबन्तेष्वपि केषुचिदिति। तत्? किमत्र नोपपद्यते पूर्वोत्तरपदन्यवहारः! "तथात्र" इत्यादिना यदुक्तम्? "पूर्वपदाधिकारादुत्तरस्य" इति तद्द्रढयति। यत एवमुत्तरपदस्य प्रातिपदिकस्य योऽन्त्यो न कारस्तस्यैव णत्वं भवति, नान्यस्येत्ययमत्रार्थः। एवञ्च कृत्वा नुम्ग्रहणं कृतम्()। कस्मात्? पुनरस्मिन्नर्थे सति नुमो न सिध्यति, यतस्तदुपादानं कृतम्()? इत्यत आह--"स हि" इत्यादि। अङ्गस्य नुम्विधानात्()। माषवापानीत्यत्र समुदायस्याङ्गत्वात्? समुदायात्मनोऽङ्गस्य भक्तो नुम्(); नोत्तरपदस्य। ततश्चोत्तरपदस्यान्तो नुम्? न भवति। तत्र यदि नुम्ग्रहणं न क्रियेत तदा णत्वं न स्यादित्यभिप्रायः। यदि पुनः प्रातिपदिकस्यानुत्तरपदभूतस्यापि योऽन्तो नकारः, तस्य णत्वं विधीयते, तदा नुम्ग्रहणं न कत्र्तव्यमेव, प्रातिपदिकान्तस्येत्येव सिद्धत्वात्()। भवति हि माषवापिनीत्यत्रापि समासे सति प्रातिपदिकस्यान्तो नकारः। "वक्तव्यम्()" इति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"वा" [८।४।१०](#) इति वत्र्तते, सा च व्यवस्थितविभाषा, तेन युवादीनां णत्वेन न भवितव्यम्()। "आर्ययूना" इति। विशेषणसमासः, "()आयुवमघोनामतद्धिते" [६।४।१३३](#) इति सम्प्रसारणम्(), "सम्प्रसारणाच्च" [६।१।१०४](#) इति पूर्वरूपत्वम्(), "अकः सवर्णे दीर्घः" [६।१।९७](#) "प्रपक्वानि" इति। गतिसमासः। चकारस्य पूर्वोक्तमेव प्रयोजनम्()॥

बाल-मनोरमा

प्रातिपदिकान्तनुम्विभक्तिषु च १०४०, ८।४।११

प्रातिपदिकान्त। पूर्वपदस्थादिति। "पूर्वपदात्संज्ञाया"मित्यतस्तदनुवृत्तेरिति भावः। एषु स्थितस्येति। प्रातिपदिकान्ते नुमि विभक्तौ च विद्यमानस्येत्यर्थः। वा स्यादिति। "वा भावकरणयो"रित्यतस्तदनुवृत्तेरिति भावः। प्रातिपदिकान्ते इति। "उदाहरणं वक्ष्यते" इति शेषः। माषवापिणाविति। माषान् वपेते इति विग्रहः। "बहुलमाक्षीक्ष्ण्ये" इति जातावपि सुप्युपपदे णिनिः। उपपदसमासः। वापिन्शब्दस्य कृदन्तत्वेन प्रातिपदिकत्वात्तदन्तनस्य णत्वमिति भावः। नुमीति। "उदाह्रियते" इति शेषः। व्रीहिवापाणीति। "कृषीवलकुलानी"ति शेषः। व्रीहिन्वपन्ती"ति विग्रहः। कर्मण्यण्। व्रीहिवापशब्दान्नपुंसकात् "जश्शसोश्शिः" "नपुंसकस्य झलचः" इति नुमि "सर्वनामस्थाने चे"ति दीर्घः। नुमो नस्य णत्वमिति भावः। विभक्ताविति। "उदाह्रियते" इति शेषः। माषवापेणेति। तृतीयाविभक्तिस्थत्वान्नस्य णत्वम्। इत्यादीति। णत्वाऽभावपक्षे माषवापिनौ, माषवापानि, माषवापेनेत्युदाहार्यमिंति भावः।

ननु गर्गाणां भगिनी गर्गभगिनीत्यत्र ङीप्प्रत्ययप्रकृतिभूतभगिन्शब्दात्मकप्रातिपदिकान्तत्वान्नकारस्य णत्वविकल्पः कुतो न स्यादित्यत आह--उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमिति। पूर्वपदेन उत्तरपदमाक्षिप्तम्। तच्च प्रातिपदिकस्यैव विशेषणं, नतु तदन्तस्य, नापि नुम्विभक्त्योः, असंभवादिति भावः।

नेहेति। गर्गाणां भगिनी गर्गभगिनीति षष्ठीसमासे भगिनीशब्द उत्तरपदं, नतु तत्प्रातिपदिकं, प्रत्ययान्तत्वात्। लिङ्गविशिष्टपरिभाषया प्रातिपदिकग्रहणेन भगिनीशब्दस्य ग्रहणेऽपि तदन्तमीकार एव, नतु नकारः, अतो न तस्येदं

पाक्षिकं णत्वमिति भावः। प्रातिपदिकस्योत्तरपदत्वविशेषणं सूत्रकारस्य संमतमित्याह--अत एवेति। प्रातिपदकस्य उत्तरपदत्वविशेषणादेव, सूत्रकारेण कृतं नुम्ग्रहणमर्थवत्, अन्यथा तदनर्थकमित्यर्थः। कुत इत्यत आह--अङ्गस्येति। "नपुंसकस्य झलचः" इति नुम्विधावङ्गस्येत्यनुवृत्तम्। तथाच झलन्तस्याऽजन्तस्य चाऽङ्गस्य क्लीबस्य नुम् स्यात्सर्वनामस्थाने इत्यर्थो लभ्यते। "माषवापाणी"त्यत्र तु सर्वनामस्थानं प्रति माषवापशब्दोऽङ्गम्। तस्य माषवापशब्दस्य विहितो नुमागमस्तदवयव एव भवति, नतु उत्तरपदभूतवापशब्दस्यैवाऽवयवः। तथाच उत्तरपदभूतप्रातिपदिकान्तत्वाऽभावात् "प्रातिपदिकान्ते"त्यनेन णत्वविकल्पस्याऽप्राप्तौ नुम्ग्रहणम्। प्रातिपदिकस्य उत्तरपदत्वं विशेषणाऽभावे तु माषवापशब्दान्तावयवस्य नुमो माषवापेति प्रातिपदिकान्तावयवत्वस्य सत्त्वात् "प्रातिपदिकान्ते"त्येव सिद्धे नुम्ग्रहणं व्यर्थं स्यादित्यर्थः। तदेव#ं प्रातिपदिकस्य उत्तरपदत्वविशेषणे नुम्ग्रहणं लिङ्गमिति स्थितम्। वस्तुतस्तुं नेदं लिङ्गमित्याह--किंञ्चेति। किञ्चेति विशेषप्रदर्शने। "हिवि प्रीणने" भ्वादिः, इदित्वात् नुम्, लटः शत्रादेशः। "माषवापाणी"त्यत्र नुमो नस्य प्रातिपदिकान्तत्वेपि प्रहिण्वन्शब्दे नुमो नस्य प्रातिपदिकान्तत्वाऽभावात् "प्रातिपपदिकान्ते"त्यनेन णत्वविकल्पस्याऽप्राप्तेस्तदर्थं नुम्ग्रहणमावश्यकम्। अत उत्तरपदत्वस्य प्रातिपदिकविशेषणत्वे कथं नुम्ग्रहणं लिङ्गं स्यात्। तस्मादुत्तरपदविशेषणे भाष्यमेव शरणमिति भावः। ननु माषवापिणावित्यत्र "वापिन्नि"ति प्रातिपदिकस्य कथमुत्तरपदत्वं, "गतिकारकोपपदानां कृद्भिः सह समासवचन"मिति सुबुत्पत्तेः प्रागेव समासप्रवृत्तेरिति चेत्, न उत्तरपदशब्दस्य समासचरमावयवे रूढत्वादित्यलम्। ननु "इवि व्याप्तौ" इदित्त्वान्नुम्। ल्युटि अनादेशः। प्रकृष्टमिन्वनमिति प्रादिसमासे नुमो नकारस्य णत्वविकल्पः स्यादित्यत आह--प्रेन्वनमिति।

युवादेर्नेति। "उक्तणत्वविकल्प" इति शेषः। वार्तिकमिदम्। रम्ययूनेति। रम्यश्चासौ युवा चेति विग्रहः। प्रातिपदिकान्तनकार त्वात्प्राप्तिः। परिपक्वानीति। इह नुमो नकारस्य "प्रातिपदिकान्ते"ति विकल्पं बाधित्वा "कुमति चे"ति नित्यं णत्वं प्राप्तम्, तदिह, युवादित्वान्निषिध्यते। एकाजुत्तरपदे णः। अजन्तस्त्रीलिङ्गे पुनर्भूशब्दनिरूपणे व्याख्यातमपि प्रकरणानुरोधात्स्मर्यते। नित्यमित्युक्तमिति। "आरम्भसामर्थ्यान्नित्यमिदं णत्व"मिति तत्रैवोक्तमित्यर्थः। हरिमाणीति। मनेण्र्यन्तात् "क्विप् चे"ति क्विपि "गतिकारकोपपदाना"मिति सुबुत्पत्तेः प्राक् समासः। नान्तत्वान्ङीप्। अत्र"मा"निति प्रातिपदिकमुत्तरपदं तदन्तत्वान्नकारस्य णत्वविकल्पे प्राप्ते नित्यं णत्वम्। नुमीति। "उदाह्रियते" इति शेषः। क्षीरपाणीति। कर्मण्युपपदे पाधातोः "आतोऽनुपसर्गे कः" इति कः, "आतो लोप इटि चे"त्याल्लोपः। क्षीरपशब्दाज्जश्शसोश्शिः। अजन्तलक्षणो नुम्। दीर्घः। तस्य नित्यं णत्वमम्। विभक्ताविति। "उदाह्रियते" इति। शेषः। क्षीरपेणेति। विभक्तिस्थत्वान्न नित्यं णत्वम्। विभक्तावुदाहरणान्तरमाह--रम्यविणेति। विः=पक्षी, रम्यश्चासौ विश्च, तेनेति विग्रहः। नचात्र "पदव्यवायेऽपी"ति निषेधः शङ्क्यः। किमिह प्रत्ययलक्षणे अन्तर्वर्तिनीं विभक्तिमाश्रित्य "सुप्तिङन्त"मिति पदत्वमभिमतम्, उत तृतीयाविभक्तौ परतः "स्वादिषु" इति पदत्वम्?। नाद्यः। "उत्तरपदत्वे चापदादिविधौ" इति प्रत्ययलक्षमप्रतिषेधात्। न द्वितीयः। "स्वादिषु" इत्यनेन हि रम्यविशब्दस्यैव पदत्वं लभ्यते, नतु विशब्दस्य , तृतीयाविभक्तेः समुदायादेव विधानात्। अत एव "पुनर्भूणा"मित्यत्र नामि भूशब्दमात्रस्य पदत्वाऽभावात् "पदव्यवायेऽपि" इति निषेधाऽभावाण्णत्वमिति प्राञ्चः। अत्र यद्वक्तव्यं तत् "पदत्वययवायेऽपीत्यत्रानुपदमेव वक्ष्यते।

तत्त्व-बोधिनी
प्रातिपदिकान्तनुम्विभक्तिषु च ८७०, ८।४।११

माषवापिणाविति। "बहुलमाभूक्ष्ण्ये"इति णिनिः। व्रीहिवापाणीति। कर्मण्यण्।

उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम्। उत्तरपदं यदिति। इष्टानुरोधेन तथा व्याख्यायत इति भावः। गर्गभगिनीति। इह भगिनीशब्द उत्तरपदं, न तु भगिन्शब्दः। अत्र च व्याख्याने नुम्ग्रहणमेव ज्ञापकमिति प्राचां मतमाह--अतएवेति। तदुक्तं ज्ञापकं विघटयति --किंचेति।

युवादेर्न। परिक्वानीति। "कुमति चे"ति नित्यं णत्वं प्राप्तम्। एकाजुत्तर। प्राग्व्याख्यातमपि प्रकरणानुरोधेन स्मार्यते। वृत्रहणाविति। वृत्रं हतवृन्तौ। "ब्राह्मभ्रूणे"ति क्विप्। हरिमाणीति। मनेण्र्यन्तात् "क्वीप् चे"ति क्विप्। "गतिकारकोपपदाना"मित्यादिना सुबुत्पत्तेः प्राक्समासान्नकारान्तमुत्तरपदम्। नान्तत्वान्ङीप्। क्षीरपाणीति। पिबतेः कर्मण्युपपदे "आतोऽनुपसर्गे" इति कः। "आतो लोप इटि चे"त्यालोपः। रम्यविणेति। रम्यश्चासौ विश्चेति विग्रहः। तत "आङो नाऽस्त्रियाम्"। नन्वन्तर्वर्तिनीं विभक्तिमाश्रित्य विशब्दस्य पदत्वात् "पदव्यवायेपी"ति णत्वनिषेधः स्यात्। मैवम्। "उत्तरपदत्वे चापदादिविधौ"इति प्रत्ययलक्षणप्रतिषेधेन विशब्दस्य पदत्वाऽभावात्। "स्वादिषु" इत्यनेन तु रम्यविशब्दस्यैव पदत्वं न तु विशब्दस्य। यस्मात्स्वादिविधिस्तस्यैव पदत्वाभ्युपगमात्। एवं च पुनर्भूणामित्यत्र णत्वं निर्बाधमेव, नामि परतो भूशब्दस्य पदत्वाऽभावात्।

---

सूत्रम्

काशिका-वृत्तिः

एकाजुत्तरपदे णः ८।४।१२

एकाजुत्तरपदं यस्य स एकाजुत्तरपदः, तस्मिन्नेकाजुत्तरपदसमासे प्रातिपदिकान्तनुंविभक्तिसु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारः आदेशो भवति। वृत्रहणौ। वृत्रहणः। नुमि क्षीरपाणि। सुरापाणि। विभक्तौ क्षीरपेण। सुरापेण। णः इति वर्तमाने पुनर्णग्रहणं विकल्पाधिकारनिवृत्तेः विस्पष्टीकरणार्थम्।

लघु-सिद्धान्त-कौमुदी

एकाजुत्तरपदे णः २८८, ८।४।१२

एकाजुत्तपरदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रतिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः। वृत्रहणौ॥

न्यासः

एकाजुत्तरपदे णः।, ८।४।१२

"वृत्रहणौ" इति। "ब्राह्मभ्रूण" ३।२।८७ इति क्विप्()। "क्षीरपाणि" इति। पिबतेः पातेर्वा"आतोऽनुपसर्गे कः" ३।२।३, "आतो लोप इटि च" ६।४।६४ इत्याकारलोपः। "सुरापाणि" इति। पिबतेः "गापोष्टक" ३।२।८। पातेर्वा पूर्ववत्? कः। अथ णग्रहणं किमर्थम्(), यावता "णः" (८।४।१) इत्यनुवत्र्तत एव? नित्यार्थमिति चेत्()? स्यादेतत्()--वेति प्रकृतम्(), तत्रासति पुनर्णग्रहणे विकल्पः प्रसज्येत, तस्मान्नित्यं यथा स्यादित्येवमर्थं पुनर्णगहणं कृतमिति? एतच्चायुक्तम्(), पूर्वेणैव विकल्पः सिद्धः। तत्रारम्भसामथ्र्यादेवायं विधिर्नित्यो भविष्यति? इत्यत आह--"ण इत्यनुवत्र्तमाने" इत्यादि। विकल्पाधिकारस्यास्वरितत्वाद्या निवृत्तिस्तस्या विस्पष्टार्थं पूनर्णग्रहणम्()। असति हि णग्रहणे कश्चिन्मन्दबुद्धिरेवं मन्येत--अनृवत्र्तत एव वाग्रहणम्(), त()स्मस्त्वनुवत्र्तमानेऽप्यारम्भसामथ्र्यादयं दिधिर्नित्यो भविष्यति, उत्तरस्तु पाक्षिक एवेति॥

बाल-मनोरमा

एकाजुत्तरपदे णः ३०५, ८।४।१२

एकाजुत्तरपदे णः। समासस्य चरमावयवे रूढेन उत्तरपदशब्देन समास इति लभ्यते। एकोऽच्यस्मिन्तत्-एकाच्, तदुत्तरपदं यस्य स एकाजुत्तरपदः। तस्मिन्समासे इति बहुव्रीहिगर्भो बहुव्रीहिः। "रषाभ्यां नो णः" इत्यनुवर्तते। "पूर्वपदात्संज्ञाया"मित्यतः पूर्वपदादित्यनुवर्तते। पूर्वं पदं यस्य तत्पूर्वपदम्। एकत्वमविवक्षितम्। पूर्वपदस्थाभ्यामिति लभ्यते। "प्रातिपदिकान्तनुम्विभक्तिषु चे"त्यनुवर्तते। "विद्यमानस्ये"ति शेषः। तदाह--एकाजुत्तरपदमित्यादिना। नन्विह णकारग्रहणं व्यर्थं, "रषाभ्यां नो णः" इत्यत एव तदनुवृत्तिसिद्धेः। नच "प्रातिपदिकान्तनुम्विभक्तिषु चे"ति विकल्पनिवृत्त्यर्थं पुनर्णग्रहणमिति वाच्यम्, आरम्भ सामश्र्यादेव नित्यत्वसिद्धेरित्यत आह--आरम्भेति। यणमिति। "दृन्करे"ति यणमित्यर्थः। पुनर्भूणामिति। रेफस्य "हशि चे"त्युत्वं तु न, रोरेव तद्विधानात्। ङेराम्, पुनर्भ्वाम्। वर्षाभूशब्दे विशेषमाह--भेकेति। "बह्वादिभ्यश्चे"ति ङीषो वैकल्पिकत्वान्ङीषभावे वर्षाभूशब्दः। स च भेकजातौ द्विलिङ्गः। "भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्" इति यादवः। दर्दुरो भेकः। एवं च "लिङ्गान्तरानभिधायकत्वमि"ति कैयटमते नित्यस्त्रीलिङ्गत्वाऽभावान्नदीत्वाऽभावे सति "अम्बार्थे"ति ह्यस्वाऽभावे सति हे वर्षाभूरिति रूपमित्यर्थः। मतान्तरे त्विति। "पदान्तरं विनापि स्त्रियां वर्तमानत्व"मिति वृत्तिकारादीनां मते तु वर्षाभूशब्दस्य भेकजातौ स्त्रीलिङ्गमात्रावगमात्कैयटमतेऽपि नित्यस्त्रीत्वं कुतो न स्यादित्यत आह--भेक्यामिति। यादवकोशानुसारादमरकोशे स्त्रीग्रहणमुपलक्षणमिति भावः। यद्वा अमरमतरीत्या कैयटमतेऽपि नित्यस्त्रीत्वमस्तु। अजादौ "एरनेकाचः" इति यणो "न भूसुधियोः" इति निषेधे प्राप्ते "वर्षाभ्वश्चे"ति यणः प्रतिप्रसव उक्तः। तं स्मारयति-वर्षाभ्वश्चेति। स्वयम्भूः पुंविदिति। स्वयम्भूशब्दस्य चतुरानने रूढत्वात्तस्य यौगिकस्य पदान्तरं विना स्त्रियामवृत्तेर्न वृत्तिमते नित्यस्त्रीत्वम्। कैयटमते तु अनेकलिङ्गत्वान्न नित्यस्त्रीत्वमितिभावः। इत्यूदन्ताः। अथ ऋदन्ताः। "सावसेरृन्" इति सौ उपपदे असधातोः ऋन्प्रत्यये स्वसृशब्दः, भगिनीवाची।

तत्त्व-बोधिनी

एकाजुत्तरपदे णः २६७, ८।४।१२

एकाच्। एकोञ्च् य()स्मस्तदेकाच्। तदत्तरपदं यस्य स "एकाजुत्तरपद" इति बहुव्रीहिगर्भो बहुव्रीहिः। उत्तरपदशब्दः समासावयवे रूढः। तेनाक्षिप्तः समासोऽनेनविशेष्यत इत्याह--तस्मिन्मास इति। "रषाभ्यां नो णः"इत्यतो "ण"इत्युनुबत्र्तमानेऽपि णग्रहणमिह नित्यार्थमावश्यकमित्याशङ्क्याह--आरम्भसमाश्र्यादिति। "प्रतिपदिकान्तनुम्बिभक्तिषु चे"ति विकल्पने (णत्व)सिद्धावेतदारम्भसामश्र्यादित्यर्थः। स्वयंभूः पुंवदिति। मतद्वयेऽपि नदीसंज्ञाया आभावान्ङिति ह्यस्वश्चेत्यादि न प्रवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कुमति च ८।४।१३

कवर्गवति च उत्तरपदे प्रातिपदिकान्तनुंविभक्तिषु पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। वस्त्रयुगिणौ। वस्त्रयुगिणः। स्वर्गकामिणौ। वृषगामिणौ। नुमि वस्त्रयुगाणि। खरयुगाणि। विभक्तौ वस्त्रयुगेण। खरयुगेण।

न्यासः

कुमति च। , ८।४।१३

अनेकाजुत्तरपदार्थ आरम्भः। चकारः "प्रातिपदिकान्तनुम्विभक्षि च" ८।४।११ इत्यनुकर्षणार्थः। तेनोत्तरत्रानुवृत्तिर्न भवति चानुकृष्टपरिभाषया (व्या।प।७६)। "वस्त्रयुगिणौ" इति। "अत इनिठनौ" ५।२।११४ इतीनिः। "को" इति कत्र्तव्ये कुमतीति

वजनमकवर्गादावपि यता स्यात्(); इतरथा हि "यस्मिन्विधिस्तदावल्ग्रहणे" (व्या।प।१२७) इति कवर्गादेरेव स्यात्()। दपन वापः, कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवापः--"अत इतिठनौ" ५।२।११४ इतीनिः। माषकुम्भवापिणावित्यत्र स्यात्(), वस्त्रयुगिणाअवित्यत्र न स्यादिति॥

बाल-मनोरमा

कुमति च १०४१, ८।४।१३

कुमति च। प्राग्वदिति। प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं मत्वं स्यादित्यर्थः। अनेकाजुत्तरपदार्थमिदम्। हरिकामिणाविति। "बहुलमाभीक्ष्ण्ये" इति णिनिः। प्रातिपदिकान्तत्वाण्णत्वम्। हरिकामाणीति। अजन्तलक्षणनुमो नित्यं णत्वम्। हरिकामेणेति। विभक्तिस्थस्योदाहरणम्।

तत्त्व-बोधिनी

कुमति च ८७१, ८।४।१३

कुमति च। अनेकाजुत्तरपदार्थ आरम्भः। "कौ" इत्येव तु न सूत्रितम्। "यस्मिन्विधि"रिति तदादिविधौ कवर्गाद्युत्तरपद एव हरिकामाणीत्यादावयं विधिः स्यान्न तु वस्त्रयुगेणेत्यादौ, तथा च लमतुबन्तनिर्देश आवश्यक इत्याह--कवर्गवतीति।

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गादसमासे ऽपि णोपदेशस्य ८।४।१४

णः उपदेशो यस्य असौ णोपदेशः। णोपदेशस्य धातोर् यो नकारः तस्य उपसर्गस्थान् निमित्तादुत्तरस्य णकारादेशो भवति असमासे ऽपि समासे ऽपि। प्रणमति। परिणमति। प्रणायकः। परिणायकः। उपसर्गातिति किम्? प्रगता नायकाः अस्माद् देशात् प्रनायको देशः। अस्मासे ऽपि किम्? पूर्वपदाधिकारात् समास एव स्यातिति तदधिकारणिवृत्तिद्योतनार्थम्। णोपदेशस्य इति किम्? प्रनर्दति। प्रनर्दकः।

लघु-सिद्धान्त-कौमुदी

उपसर्गादसमासेऽपि णोपदेशस्य ४६१, ८।४।१४

उपसर्गस्थान्निमित्तात्परस्य धातोर्नस्य णः। प्रणदति। प्रणिनदति। नदति। ननाद॥

न्यासः

उपसर्गादसमासेऽपि णोपदेशस्य। , ८।४।१४

"णोपदेशस्य" इति। ण उपदेशे यस्य स णोपदेशः--गमकत्वादैयधिकरण्ये बहुव्रीहिः। अथ वा--उपविश्यते प्रथमत उच्चार्यत इत्युपदेशः, ण उपदेशो यस्येति समानाधिकरण एव बहुव्रीहिः। "प्रणमति" इति। "णम प्रह्वत्वे शब्दे च" (धा।पा। ९८१)। "प्राणायकः" इति। "णोञ्? प्रापणे" (धा।पा। ९०१), ण्वुल्(), प्रादिसमासः। "प्रनायको देशः" इति। अत्र गर्मिं प्रति क्रियायुक्तत्वात्? प्रशब्दस्य गमिमेव प्रत्युपसर्गत्वम्(), न नयतिं प्रति, यं प्रति प्रयुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञाविधानात्()। "असमासेऽपीति किम्()" इति। विनाऽप्यनेन विशेषानुपादानात्? समासेऽसमासेऽपि भविष्यतीति भावः। "पूर्वपदाधिकारात्()" इत्यादि। पूर्वपदात्? ८।४।३ इति वत्र्तते। असमासे भवति पूर्वपदत्वम्()। रूढिशब्दो हि पूर्वपदशब्दः पूर्वमाश्रितः, स एव चेहानुवत्र्तते, स च समास एव संभवति, ततश्च समासेऽपीत्युच्यमाने "समास एव स्यात्()" इति। इतिकरणो हेतौ। यस्मादसति तस्मिन्नेष दोषस्तस्मात्? तस्य पूर्वपदस्य निवृतिं()त

द्योतयितुम्? "असमासेऽपि" इत्युच्यते। द्योतनग्रहणेनैतदाचष्टे--नानेन तस्य निवृत्तिः क्रियते, किं तर्हि? अस्वरितत्वादविद्यमानतैव केवलं प्रकाश्यत इति। तदेतदुक्तं भवति--मन्दबुद्धिर्य एवं प्रतिपत्तुमसमर्थस्तं प्रति विस्पष्टीकरणार्थमसमासेऽपीत्युच्यत इति। "प्रनर्दति" इति। "नर्द गर्द शब्दे" (धा।पा।५६,५७)। सत्यप्यच्परत्वेऽच्परोऽयं णोपदेशो न भवति; "नृतिनर्दिनन्दिनक्किनाथृनवर्जम्()" (म।भा।) इत्यपवादविधानात्()॥

बाल-मनोरमा

उपसर्गादसमासेऽपि णोपदेशस्य १३१, ८।४।१४

ननु णकारमुपदिश्य तस्य किमर्थं नकारो विधीयते, नकार एवोपदिश्यतामित्याशङ्क्य तत्प्रयोजनमाह-- उपसर्गात्। "रषाभ्यां नो णः"इत्यधिकृतम्। तदाह--उपसर्गस्थादिति। "समासेऽङ्गुले सङ्गः"इत्यतः समास इत्यनुवृत्तेरसमासे न स्यादित्यसमासग्रहणम्। तथा सति "प्रणाम"इत्यादौ समासे न स्यादित्यपिग्रहणं। तदाह--समासेऽसमासेऽपीति। णस्योपदेशो यस्मिन्निति विग्रहः। प्रणदतीति। भिन्नपदत्वादप्राप्तिः। प्रणिनदतीति। नेर्ददेति णत्वम्। न चात्र "उपसर्गादसमास"इति धातुनकारस्य णत्वं शङ्क्यम्, अट्कुप्वाङ्()भिन्नेन व्यवधानात्। अर्देति। "उपधायां चे"त्यत्र इक इत्यनुवर्तनादर्दतीत्यादौ न दीर्घः।

तत्त्व-बोधिनी

उपसर्गादसमासेऽपि णोपदेशस्य १०५, ८।४।१४

उपसर्गाद। "समासेऽङ्गुलेः सङ्गः"इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणं। कृते तु तस्मिन्नसमास एवस्यादित्यपेग्रहणं कृतम्। प्रणिनदतीति। "नेर्गदे"ति णत्वम्। धातु नकारस्य तु "उपसर्गादसमासे" इति णत्वं न भवति, अडादिभिन्नेन व्यवधानात्।

---

सूत्रम्

काशिका-वृत्तिः

हिनुमीना ८।४।१५

हिनु मीना इत्येतयोः उपसर्गस्थान् निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति। प्रःइणोति। प्रहिणुतः। प्रमीणाति। प्रमीणीतः। हिनुमीनाग्रहणे विकृतस्य अपि भवति, अजादेशस्य स्थानिवत्त्वात्।

लघु-सिद्धान्त-कौमुदी

हिनुमीना ६८८, ८।४।१५

उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात्। प्रमीणाति, प्रमीणीते। मीनातीत्यात्वम्। ममौ। मिम्यतुः। ममिथ, ममाथ। मिम्ये। माता। मास्यति। मीयात्, मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त॥ षिञ् बन्धने॥ ५॥ सिनाति, सिनीते। सिषाय, सिष्ये। सेता॥ स्कुञ् आप्लवने॥ ६॥

न्यासः

हिनुमीना। , ८।४।१५

"प्रणिणोति" इति। "हि गतौ" [गतौ वृद्धौ च--धा।पा।] (धा।पा।१२५७), "स्वादिभ्यः श्नुः" 3।१।७३, गुणः। "प्रमीणाति" इति। "मी हिंसायाम्()" ["मीञ्()"--धा।पा।] (धा।पा।१४७६), क्र्यादित्वात्? श्ना। "प्रमीणीतः" इति। "ई हल्यघोः" ६।४।११३ इतीत्वम्()। अथ कथं प्रहिणोति, प्रमीणीत इत्यत्र णत्वम्(), यावता "हिनुमीना" इति स्वरूपयोग्रहणम्(), न

चात्र गुणादौ विकारे कृते ते रूपे स्तः; तस्माच्चात्रैव भवितव्यम्()--प्रहिणुतः, प्रमीणातीति? अजादेशस्य स्थानिवद्भावात्(), एकदेशविकृतस्यानन्यत्वाद्वा भविष्()यतीत्यदोषः। ननु प्रतिषिध्यते स्थानिवद्भावः--"पूर्वत्रासिद्धीये न स्थानिवत्()" (जै।प।वृ।४८) इति? दोव एवायमत्याः परिभाषायाः; तथा चोक्तम्()--"अस्या दोषः संयोगादिलोपत्वणत्वेषु" ["तस्य"--इति वार्तिके पाठः] (१।१।५८ वा।९।) इति। अथ "हिमीभ्याम्()" इत्येवं कस्()मान्नोक्तम्()? अशक्यमेवं वक्तुम्(), अविकरणनकारस्यापि स्यात्()--प्रहेनर्दनमिति, प्रमीनर्दनमिति। प्रहिणोतीति प्रहेः, "अन्येभ्योऽपि दृश्यन्ते" अविकरणनकारस्यापि स्यात्()--प्रहेनर्दनमिति, प्रमीनर्दनमिति। प्रहिणोतीति प्रहेः, "अन्येभ्योऽपि दृश्यन्ते" ३।२।७५ इति विच्()। गुणः। प्रमीणातीत#इ प्रमीः, क्विप्()। प्रहेर्नर्दनम्(), प्रम्यो नर्दनमिति षष्ठीसमासः॥

बाल-मनोरमा

हिनुमीना ३६०, ८।४।१५

हिनुमीना। हिनु मीना अनयोर्द्वन्द्वात्षष्ठीद्विवचनस्य आर्षो लुक्। "रषाभ्यां नो णः" इत्यनुवर्तते। "उपसर्गादसमासेऽपि" इत्यत उपसर्गादिति च। तदाह-- उपसर्गस्थादिति।

तत्त्व-बोधिनी

हिनु मीना ३१४, ८।४।१५

हिनु मीना। प्रमीणाति।

---

सूत्रम्

काशिका-वृत्तिः

आनि लोट् ८।४।१६

आनि इत्येतस्य लोडादेशस्य उपसर्गस्थान् निमित्तादुत्तरस्य नकारस्य णकारदेशो भवति। प्रवपाणि। परिवपाणि। प्रयाणि। परियाणि। लोतिति किम्? प्रवपानि मांसानि।

लघु-सिद्धान्त-कौमुदी

आनि लोट् ४२२, ८।४।१६

उपसर्गसिथान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात्। प्रभवाणि। (दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः)। दुःस्थितिः। दुर्भवानि। (अन्तश्शब्दस्याङ्कि विधिणत्वेषूपसर्गत्वं वाच्यम्)। अन्तर्भवाणि॥

न्यासः

आनि लोट्?। , ८।४।१६

"प्रवपाणि" इति। वपेर्लोट्()। मिप्()। "मेर्निः" ३।४।८९। आडुत्तमस्य पिच्च" ३।४।९२ इत्याट्()। "प्रयाणि" इति। "या प्रापणे" (धा।पा।१०४९)। "प्रवपानि मांसानि" इति। प्रकृष्टा वपा येषामिति बहुव्रीहिः, "जश्शसोः शि" ७।१।२० इति शिरादेशः, "नपुंसकस्य झलचः" ७।१।७२ इति नुम्(), "सर्वनामस्थाने चासम्बुद्धौ" ६।४।८ इति दीर्घः--प्रवपानीति। अत्र लोड्ग्रहणान्न भवति। "प्रातिपदिकान्तनुम्विभक्तिकिषु च" (८।४।११) इत्यनेन तर्हि कस्मान्न भवतीति? भवत्येव पक्षे। ननु चोपसर्गादिति वत्र्तते, न चानिं प्रति प्रशब्दस्योपसर्गत्वम्()। किं तर्हि? अपिं ["कृषिं" इति प्रांउ।पाठः] प्रति, तस्मादुपसर्गत्वाभावादेव न भविष्यतीति किं लोङ्ग्रहणेन? नैतदस्ति; मूलोदाहरणेष्वपि तर्हि न स्यात्()। अत्र हि धातुं प्रत्युपसर्गत्वम्(), नानिं प्रति। तस्मात्? सामथ्र्यादिहोपसर्गग्रहणमनुवत्र्तमानं प्राद्युपलक्षणार्थं

विज्ञायते,--यथा--"अञ्नासिकायाः संज्ञायां नसञ्चास्थूलात्()" ५।४।११८। "उपसर्गाच्च" ५।४।११९ इत्यत्रोपसर्गग्रहणं प्राद्युपलक्षणार्थम्()। ततश्चासति लोज्ग्रहणे स्यादेव णत्वमिति तन्निवृत्त्यर्थं लोडित्युच्यते। नन्वेवयपि न कत्र्तव्यं लोड्ग्रहणम्(), "अर्थवद्ग्रहणे नानर्थकस्य" (व्या।प।१) इत्यर्थवतो ह्यनिशब्दस्येदं ग्रहणम्(), न हि प्रवपानि मांसानीत्यत्रानिशब्दोऽर्थवान्(), किं तर्हि? इकारः? एवं तह्रतज्ज्ञापयति--अनित्यैषा परिभाषेति। तेन "इन्हन्पूषार्यम्णां शौ" ६।४।१२ इत्यत्रानर्थकस्यापीनो ग्रहणे सति बहुवाग्मीनि ब्राआह्णकुलानीत्यत्रापि दीर्घत्वं सिद्धं भवति। आनीत्याकारोच्चारणं किमर्थम्()? यदाऽडागमो न भवति तदा शुद्धस्य निशब्दस्य स्यादित्येवमर्थम्()। ["भूदित्येवमर्थम्()--प्रांउ।पाठः] ननु च नित्यमेवाडागमेव भवितव्यम्(), न हि तद्विधौ विकल्पोऽस्ति? एवं तह्रेतज्ज्ञापयति--अनित्यमागमशासनमिति। तेनापि "शाकं पचानस्य सुखा वै मधवन्? गृहाः" इत्यादयः प्रयोगाः सिद्धा भवन्तीति॥

बाल-मनोरमा

आनि लोट् ७८, ८।४।१६

आनि लोट्। लोडिति आनीति च लुप्तषष्ठीकं पदम्। "रषाभ्यां नो ण" इत्यनुवर्तते, "उपसर्गादसमासेऽपी"त्यत उपसर्गादिति च। तदाह--उपसर्गस्थान्निमित्तादिति। रेफषकारात्मकादित्यर्थः। असमानपदत्वार्थ आरम्भः। "अट्कुप्वाङ्नुम्व्यवायेऽपी"ति सूत्रं णत्वप्रकरणे सर्वत्र भवतीति भाष्यम्। दुरः षत्वेति। षत्वणत्वयोः कर्तव्योर्दुर उपसर्गत्वप्रतिषेध इत्यर्थः। दुःस्थितिरिति। अत्रोपसर्गात्सुनोतीति षत्वं न भवति। दुर्भवानीति। अत्राऽऽनि लोडिति णत्वं न भवति। अन्तःशब्दस्येति। अङ्विधौ किविधौ णत्वे च कर्तव्ये अन्तरित्यस्य उपसर्गत्वमित्यर्थ-। प्रादित्वाऽभावादप्राप्ते वचनम्। अन्तर्धेति। "स्त्रिया"मित्यधकारे धाधातोः "आतश्चोपसर्गे" इत्यङ्। टाप्। अन्तर्धिरिति। "उपसर्गे घोः किः"। अन्तर्भवाणीति। "आनि लो"डिति णत्वम्।

तत्त्व-बोधिनी

आनि लोट् ६०, ८।४।१६

"नि लो" डित्येव वक्तव्ये आनिग्रहणमागमशास्त्रस्याऽनित्यतां ज्ञापयितुम्। तेन "सागरं तर्तुकामस्य" "जस्वा स्तोत्र"मित्यादि सिध्यति। लोड्ग्रहणं स्पष्टप्रतिपत्त्यर्थम्। न च प्रकृष्टा वपा येषां तानि प्रवपानि मांसानीत्यत्राप्यनेन नित्यं णत्वं स्यादिति वाच्यम्, उपसर्गग्रहणादर्थवद्ग्रहणाऽच्चास्याऽप्रवृत्तेः। "प्रातिपदिकान्ते"ति वैकल्पिकणत्वं त्विष्वत एव।

दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः। दुरः षत्वेति। "दुरः परस्य णत्वं नेति केचि"दिति प्राचोक्तं त्वयुक्तम्। एवं हि सिद्धान्ते णत्वं स्यात्, तच्चाकारविरुद्धमिति भावः।

अन्तः शब्दस्याऽङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्। अन्तर्द्धेति। "आतश्चोपसर्गे" इत्यङ्। टाप्। अन्तर्धिरिति। "उपसर्गे घोः किः"। श्रच्छब्दस्याङ्विधावुपसर्गत्वमुपसङ्ख्यायते तत्तु प्रकृतानुपयोगादुपेक्षितम्। भिदादिपाठेन, "प्रज्ञाश्रद्धे"ति निपातनेन वा गतार्थत्वाच्च।

---

सूत्रम्

काशिका-वृत्तिः

नेर् गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ८।४।१७

नि इत्येतस्य उपसर्गस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति गद नद पत पद घु मा स्याति हन्ति याति वाति

द्राति प्साति वपति वहति शाम्यति चिनोति देग्धि इत्येतेषु परतः। गद प्रणिगदति। परिणिगदति। नद प्रणिनदति। परिणिनदति। पत प्रणिपतति। परिणिपतति। पद प्रणिपद्यते। परिणिपद्यते। घु प्रणिददाति। परिणिददाति। प्रणिदधाति। परिणिदधाति। माङ् प्रणिमिमीते। परिणिमिमीते। मेङ् प्रणिमयते। परिणिमयते। मा इति मङ्मेङोर् ग्रहणम् इष्यते। स्यति प्रणिष्यति। परिणिष्यति। हन्ति प्रणिहन्ति। परिणिहन्ति। याति प्रणियाति। परिणियाति। वाति प्रणिवाति। परिणिवाति। द्राति प्रणिद्राति। परिणिद्राति। प्साति प्रणिप्साति। परिणिप्साति। वपति प्रणिवपति। परिणिवपति। वहति प्रणिवहति। परिणिवहति। शाम्यति प्रणिशाम्यति। परिणिशाम्यति। चिनोति प्रणिचिनोति। प्रिणिचिनोति। देग्धि प्रणिदेग्धि। परिणिदेग्धि। अड्व्यवाये ऽपि नेर्गदादिषु णत्वम् इष्यते। प्रण्यगदत्। परिण्यगदत्।

लघु-सिद्धान्त-कौमुदी

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यति चिनोतिदेग्धिषु च ४५५, ८।४।१७

उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णो गदादिषु परेषु। प्रणिगदति॥

न्यासः

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। , ८।४।१७

"घु" इति घुसंज्ञकानां ग्रहणम्()। "मा" इति "माङ्? माने" (दा।पा।११४२), "मेङ् प्रणिदाने" (धा।पा।९६१) इत्येतयोग्र्रहणम्(); न तु "मीञ्? हिंसायाम्()" (धा।पा।१४७६), "डु मिञ्? प्रक्षेपणे" (धा।पा।१२५०)--इत्येतयोः "मीनातिमिनोतिदीङां ल्यपि च" [६।१।४९] इति कृतात्त्वयोः, नापि "मा माने" (धा।पा।१०६२) इत्येतस्य। ननु च "गामादाग्रहणेष्वविशेषः" (व्या।प।१२४) इति सर्वेवामेव ग्रहणेन भवितव्यम्(), तत्? कथं माङ्मेङोरेव ग्रहणं लभ्यते? नैतदस्ति; इह "द्वन्देव धि" [२।२।३२] "अल्पाच्तरम्()" [२।२।३४] इति वचनमपेक्ष्य "घु" इत्येतस्य पूर्वनिपातमकुर्वता नात्र वचनानुरोधेन प्रवर्त्तितष्यम्(), अपि त्विच्छयेति सूचितम्()। तेन यत्रेच्छा भवति स एव गृह्तते। इच्छालक्ष्यानुरोधान्माङमेङोरेव ग्रहणं भवतीति युक्तम्()। अत एवेच्छयां प्रवर्त्तितव्यमिति सूचनाद्यदापि मेङ आत्वाभावे मेत्येतद्रूपं न सम्भवति, तदापि तस्य ग्रहणं भवत्येव--प्रणिमयत इति। "प्रतिपद्यते" इति। दिवादित्वाच्छ्यन्(), अनुदात्तेत्त्वादात्मनेपदम्()। "प्रणिमिमीते" इति। जुहोत्यादित्वात्? श्लुः, "श्लौ" [६।१।१०] इति द्विर्वचनम्(), "भृञामित्()" [७।४।७६] इत्यभ्यासस्येत्त्वम्(), "ई हल्यघोः" [६।४।११३] इतीत्त्वम्()। "प्रणिष्यति" इति। "ओतः श्यनि" [७।३।७१] इत्योकारलोपः, "उपसर्गात्? सुनोति" [८।३।६५] इति षत्वम्()। "प्रणिहन्ति" इत्यादिषु "प्रणिप्साति" इति पर्यन्तेष्वदादित्वाच्छपो लुक्()। "प्रणिशाभ्यति" इति। "शमामष्टानां दीर्घः" [७।३।७४] इति दीर्घः। "प्रणिदेग्धि" इति। "दिह उपचये" (धा।पा।१०१५), लट्(), पूर्ववच्छपो लुक्(), "दादेर्धातोर्घः" (८।२३२) इति घत्वम्(), "शषस्तथोर्धोऽर्थः" [८।२।४०] इति धत्वम्(), "झलां जश्? झशि" [८।४।५२] इति जश्त्वम्()--गकारः। इह गदादीनां सप्तम्या निर्दिष्टत्वात्? "तस्मिन्निति निर्दिष्टे पूर्वस्य" [१।१।६५] इति निर्दिष्टग्रहमस्यानन्तर्यार्थत्वावड्व्यवधानान्न भवितव्यमिति कस्यचिद्भ्रान्तिः स्यात्(), अतस्तां निराकर्तुमाह--"अड्व्यवायेऽपि" इति। कथं पुनरिष्यमाणमड्व्यवाये णत्वं लभ्यते? अत्र चकारस्यानुक्तसमुच्चयार्थत्वात्(), निव्यविभ्योऽड्व्यवायेऽपि" [निव्यभिभ्येऽड्व्यवाये वा छन्दसि" इति सत्रम्()। इत्यतो मणाडूकप्लुतिन्यायेन "अड्व्यवाये" इत्यस्यानुवृत्तेर्वा। ननु चाटो गदादिभक्तत्वात्? तस्य ग्रहणेनैव ग्रहणम्(), तत्? कुतो व्यावायः? नैतदस्ति; अङ्गस्य ह्डागम उच्यते, विकरणान्तञ्चाङ्गम्()। स ह्ङ्गस्य सङ्घातस्य भक्तः न गदादिमात्रस्य। अतो न शक्यते गदादिग्रहणेन ग्रहीतुम्()॥

बाल-मनोरमा

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च १२९, ८।४।१७

नेर्गद। "रषाभ्यां नो मः"इत्यनुवर्तते। "उपसर्गादसमासेऽपी"त्यत उपसर्गादिति च। तच् उपसर्गस्थे लाक्षणिकं। तदाह-- उपसर्गस्थादिति। श्तिता शपा च निर्देशा यङ्लुग्निवृत्त्यर्था। प्रणिगदतीति। भिन्नपदस्थत्वादप्राप्तौ वचनम्। रदेति। णलि उपधावृद्धिमभिप्रेत्याह-- ररादेति। रेदतुरित्यादि। अरादीत् अरदीत्। णदेति। अव्यक्तशब्दः-- अमनुष्यपशुपक्ष्यादिकृतशब्दप्रयोगः।

तत्त्व-बोधिनी

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च १०३, ८।४।१७

गदादीनां चतुर्णां शपा निर्देशः, स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्गिवृत्त्यर्थः। तेन "प्रनिजागदीति। प्रतिनानदीति। प्रनिसासेति। प्रनिजङ्घनीती"त्यादौ णत्वं न। घुशब्देन घुसंज्ञकादाधादयः षट् गृह्यन्ते। डुधाञ्- प्रणिदधाति। माशब्देन मेङ्भाङोरेव ग्रहणम्। "घुप्रकृतिमा"ङिति पठित्वा भाष्यादौ कतथा व्याख्यानात्।

---

सूत्रम्

काशिका-वृत्तिः

शेषे विभाषा ऽकखादावषान्त उपदेशे ८।४।१८

नेः इति वर्तते, उपसर्गातिति च। अककारादिरखकारादिरषकारान्तः च उपदेशे यो धातुः स शेषः, तस्मिन् परतः उपसर्गस्थान्निमित्तात्तुत्तरस्य नेः नकारस्य विभाष णकार आदेशो भवति। प्रणिपचति, प्रनिपचति। प्रणिभिनत्ति, प्रनिभिनत्ति। अकखादौ इति किम्? प्रनिकरोति। प्रनिखादति। अषान्त इति किम्? प्रनिपिनष्टि। उपदेशग्रहणं किम्? इह च प्रतिषेधो यथा स्यात्, प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यति इति। इह च मा भूत्, प्रणिवेष्टा। प्रणिवेक्ष्यति।

न्यासः

शेषे विभाषाऽकखादावषान्त उपदेशे। , ८।४।१८

"उपसर्गात्()" ८।४।१४ इति वत्र्तते। उपसर्गत्वं च यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति भवति। धातुरेव क्रियावची, तमेव प्रति प्रादीनामुपसरग्त्वम्()। ततश्चोपसर्गग्रहणेन धातौ सन्निधापिते तस्यैवाकखादित्वमषान्तत्वं च विशेषणं विज्ञायते, इत्यत आह--"अककारादिरखकारादिरषान्त उपदेशे यो धातुः" इति। आद्यन्तग्रहणे उभे अपि विस्पष्टार्थे; "अकखे अषे" इत्येषं सिद्धत्वात्()। यदि सर्वैरेवाककारादिभिस्तदादिधिधिस्तदन्तविधिर्वा स्यात्(), तदा सर्वेषां द्वन्द्वं कृत्वा "अकखषे" इत्येवं ब्राऊयात्()। "अकखे अषे" इति वचनात्? केनचित्? तदादिविधिः, केनचित्? तदन्तविधिरिति विज्ञायते। अत्र त्वेतावान्? सन्देहः स्यात्()--केन तदादिविधिः, केन वा तदन्तविधिरिति, स चापि व्यास्यानान्निवर्त्तिष्यत इति। शेषग्रहणमिति स्पष्टार्थम्()। यदि च गदादिषु विभाषा स्यात्(), पूर्वयोगो निरर्थकः स्यात्()। उपदेशग्रहणमपि स्पष्टार्थमेव। शक्यते तद्धि "उपसर्गादसमासेऽपि णोपदेशस्य" ८।४।१४ इत्यतोऽनुवत्र्तयितुमुपदेशग्रहणं मण्()डूकप्लुतिन्यायेन। "प्रनिपिनष्टि" इति। "पिष्लृ सञ्चूर्णने" (धा।पा।१४५२), "रुधादिभ्यः श्नम्()" ३।१।७८। "इह च प्रतिषेधः" इत्यादि। "प्रतिपेक्ष्यति" इति। पिणेः षकारस्य "षढोः कः सि" ८।२।४१ इति कत्वेऽकखादित्वादवान्तत्वाच्चासत्युपदेशग्रहणे प्रतिषेधो न स्यात्()। अ()स्मस्तु सति न भवति, उपदेशे षकारान्तत्वादिति। "इह च मा भूत्()" इति। प्रतिषेध इत्यपेक्ष्यते। "प्रणिदेष्टा" इति। अत्र "विश प्रवेशने" (धा।पा।१४२४) इत्येतस्य व्रश्चादिसूत्रेण ८।२।३६ षत्वे कृते षकारान्तत्वादुपदेशग्रहणेऽसति प्रतिषेधः स्यात्()। अ()स्मस्तु सति न भवति। अपि चोपदेशग्रहणेऽसति प्रणिचकार, प्रचिचखादेत्यभ्यासस्य "कुहोश्चुः" ७।४।६२ इति चुत्वे प्रतिषेधो न स्यात्(); अकखादित्वात्()। अ()स्मस्तु सति भवति॥

बाल-मनोरमा

शेषे विभाषाऽकखादावषान्त उपदेशे ७९, ८।४।१८

शेषे विभाषा। अकखादाविति च्छेदः। "नेर्गदनदे"ति पूर्वसूत्रोक्कतधातुभ्योऽन्यः शेषः। तदाह--गदनदादेरन्यस्मिन्निति। ननु णत्वप्रकरणं संहिताधिकारस्थं, ततश्चाऽविवक्षितायां संहितायामुपसर्गात्परत्वाऽभावाण्णत्वाऽभावः, विवक्षितायां तु णत्वमिति विकल्पसिद्धेः किमिह विभाषाग्रहणेनेत्यत आह--इहोपसर्गाणामिति। उक्तमिति। "हरिणे"ति शेषः। अत्र "एकपदे" इत्येन अखण्डं पदं विवक्षितं, "नित्यासमासे" इति लिङ्गात्। अखण्डत्वं च पदभिन्नोत्तरखण्डकत्वम्। अन्यथा "राजीयती"त्यादौ "अतो गुणे" इति शपा पररूपमेकादेशः पक्षे न स्यात्। अर्थनिर्देशश्चेति। धातुपाठे "भू सत्ताया"मित्याद्यर्थनिर्देश इत्यर्थः। उपलक्षणमिति। प्रदर्सनमात्रमित्यर्थः। नन्वर्थान्तरपरिसंख्या कुतो न स्यादित्यत आह--यागादिति। न च "यागात्स्वर्गो भवती"त्यादावुत्पत्त्यादौ लक्षणा कुतो न स्यादिति वाच्यं, प्रयोगप्राचुर्यसत्त्वात्। पाणिनिर्हि धातुपाठे धातुन् कांश्चिदर्थसहितान्कांश्चिदर्थरितान्पठतीति "चुटू" इति सूत्रभाष्ये स्थितम्। न चातिप्रसङ्गः शङ्क्यः, "अनेकार्था अपि धातवो भवन्ती"ति भाष्ये अपिशब्देन प्रयोगानुसारित्वावगतेः। सर्वेषु धातुष्वर्थनिर्देशस्त्वाधुनिकः। एवं च "सेधतेर्गता" विति सूत्रे गतावित्युपादानात्षिध गत्यामित्यर्थनिर्देशोऽपाणिनीय एवेति दिक्। ननु भूधातोः केवलस्योत्पत्त्याद्यर्थकत्वे उद्भवीत्यादौ उपसर्गा व्यर्था इत्यत आह-- उपसर्गास्त्विति। उपसर्ग विनापि भूधातोरुत्पत्त्याद्यर्थप्रतीतेः "उद्भवती"त्यादौ प्रयुज्यमाना अप्युपसर्गा द्योतका एव, न तु वाचका इति भावः। द्योतकत्वं वा तेषां किमर्थं स्वीकार्यमित्यत आह-- प्रभवतीत्यादि। प्रभवतीत्यादि। प्रभवः-- प्रकाशः उत्पत्तिः शक्तिर्वा। पराभवः-- पराजयः। सम्भवः-सम्भावना। अनुभवः-- उपभोगः। अभिभवः--हिंसा। उद्भवः-- उत्पत्तिः। परिभवः-- तिरस्कारः। उक्तं चेति। "हरिणे"ति शेषः। प्रहारः-- कशाद्याद्यातः। आहारो--भक्षणम्। संहारः-- वधः। विहारः- क्रीडा। परिहारः- परित्यागः। इति भूधातुप्रक्रिया। एध वृद्धाविति। जायते, अस्ति, विपरिणमते, वद्र्धते, अपक्षीयते, विनश्यतीति षड्भावविकाराः। तत्र चतुर्थावस्था वृद्धिरुपचयः। कत्थ्यन्ता इति। "कत्थ श्लाघाया"मित्यन्ता इत्यर्थः। अनुदात्तेत इति। ततस्च एतेभ्य आत्मनेपदमेवेति भावः। तत्र एध् इत्यस्मात् कर्तरि लटि तस्यात्मनेपदप्रथमपुरुषैकवचने तादेशे शपि एधत इति स्थिते--

तत्त्व-बोधिनी

शेषे विभाषाऽकखादावषान्त उपदेशे ६१, ८।४।१८

"नेर्गदनदे"ति सूत्रोक्तापेक्षया शेष इत्याह-- गदनदादेरन्यस्मिन्निति। उपदेशे किम्?। प्रनिचकार प्रनिचखादेत्यत्रापि निषेधो यथा स्यात्। अषान्तेति किम्?। प्रनिपिनष्टि। उपदेशग्रहणात्-- प्रनिपेक्ष्यते। "चक्षिङः क्शाञ्"। "प्रनिचक्शे"इत्यत्रापि निषेधः। शेषग्रहणं स्पष्टार्थम्। णत्वशास्त्रे संहितायामित्यधिकारात्संहितायामववक्षितायां णत्वाऽभावः, संहितायां तु णत्वमिति विकल्पसिद्धेः किमनेन विभाषाग्रहणेनेत्याशङ्का न कार्येत्याह-- इहोपसर्गाणामित्यादि। एकपद इत्येनैव सिद्धे समासग्रहणं गोबलीवर्दन्यायेनेति बोध्यम्। वाक्ये त्विति। सा संहिता विवक्षाधीना न त्वत्र नित्येत्यर्थः। उपलक्षममिति। एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि संमतमित्यत्र "कुर्द खुर्द गुर्द गुद क्रीडायामेवे"त्येवकारो ज्ञापकः। "सेधतेर्गतौ" इति सूत्रे गतावित्येतदपि "षिध गत्या"मित्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते नान्थेति दिक्। उत्पद्यत इत्याद्यर्थादिति। एवं च उपसर्ग विनाप्युत्पत्त्यर्थप्रतीतेरुद्भवतीत्यादौ प्रयुज्यमानोऽप्युपसर्गो द्योतक एव न तु वाचक इति भावः। उपसर्गेण धात्वर्थ इति। अत एवाऽमरेणाप्युक्तं-- "स्दाभाषणमालापः, प्रलापोऽनर्थकं वचः। अनुलापो मुहुर्भाषा, विलापः परिदेवनम्। विप्रलापो विरोधोक्तिः, संलापो भाषणं मिथः। सुप्रलापः सुवचनमपलापस्तु निह्नवः"इति।

सूत्रम्

काशिका-वृत्तिः

अनितेः ८।४।१९

अनितेः नकारस्य उपसर्गस्थान्निमित्तादुत्तरस्य णकारादेशो भवति। प्राणिति। पराणिति।

काशिका-वृत्तिः

अन्तः ८।४।२०

अनितेः इति वर्तते। उपसर्गस्थान्निमित्तातुत्तरस्य अनितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो भवति। हे प्राण्। हे पराण्। पदान्तस्य इति प्रतिषेधस्य अपवादो ऽयम्। अन्तश्च पदापेक्षो गृहयते। केचित् तु पूर्वसूत्रे एव एतदन्तग्रहणं सामीप्यार्थम् अभिसम्बध्नन्ति। निमित्तसमीपस्थैकवर्णव्यवहितस्य अनितिनकारस्य पदान्ते वर्तमानस्य णकारादेशो यथा स्यात्। इह मा भूत्, पर्यनिति इति। तैर् द्वितीयम् अपि पदान्तस्य णत्वार्थम् अन्तग्रहणम् आश्रयितव्यम् एव। येषां तु पर्यणिति इति भवितव्यम् इति दर्शनम्, तेषां पूर्वसूत्रे न अर्थो ऽन्तग्रहणेन।

न्यासः

अनितेः।, ८।४।१९

"प्राणिति" इति। "()आस प्राणने" (धा।पा।१०६९), "अन च" ["च" नास्ति--धा।पा।](धा।पा।१०७०), पूर्ववच्छपो लुक्(), "रुधादिभ्यः सार्वधातुके" ७।२।७६ इतीट्()। ञनितेरिति श्तिपा निर्देशो धातुनिर्देशार्थ एव; न यङ्लुङ्()निवृत्त्यर्थः; न ह्यनितेर्यङ्प्राप्तिरस्ति, हलादित्वाभावात्()॥

न्यासः

अन्तः।, ८।४।१९

अन्तशब्दोऽयमवयवयचनो वस्त्रान्तवत्()। "हे प्राण्()" इति। क्विबन्तात्? सम्बुद्धिः, तस्य हल्ङ्यादिलोपः ६।१।६६। सम्बुद्धेरन्यत्र यो नकारः प्रातिपदिकान्तः, तस्या लोपेन भवितव्यमिति सम्बुद्ध्यन्तस्योपन्यासः। सम्बुद्धौ हि "न ङिसम्बुद्ध्योः" ८।२।८ इति प्रतिषेधान्नलोपो न भवति। ननु च पूर्वेणैवात्र णत्वं सिद्धम्(), तत्? किमर्थमिदमारभ्यते? इत्यत आह--"पदान्तस्य" इत्यादि। "पदान्तस्य" ८।४।३६ इति प्रतिषेधं वक्ष्यति। तस्यायं पुरस्तादपवाद आरभ्यते। अन्तश्च पदापेक्षया गृह्यते; तत्रैव सम्भवव्यभिचारौ स्तः। न त्वनित्यपेक्षः। व्यभिचाराभावादिति भावः। "केचित्()" इत्यादि। केचिदन्तग्रहणं पूर्वयोग एव सम्बध्नन्ति। "अनितेरन्तः" इत्येकयोगमेव कुर्वन्तीत्यर्थः। किमर्थम्()? अन्तग्रहणं सामीप्यार्थम्()। सामीप्यमर्थो यस्य तत्? तथोक्तम्()। समीपमेव सामीप्यम्(), चातुर्वर्ण्यादित्वात्? स्वार्थे ध्यञ्()। तदनेनोदकान्तवत्? समीपवचनस्तैरन्तशब्दः समाश्रित इति दर्शयति। किमर्थं पुनस्त एवमन्तशब्दं सम्बध्नन्तीत्याह--"निमित्तसमीपभूतस्य" इत्यादि। यदि हि पूर्वसूत्रऽन्तशब्दः समीपवचनो न सम्बध्येत, तदेहापि स्यात्()--पर्यनितौति। तस्मात्प्रकृतस्य णत्यनिमित्तस्य समीपो य एकवर्णव्यवहितः स प्रत्यासन्नो नकारस्तस्यैव णत्वं यथा स्यात्()। पर्यनितीत्यत्र निमित्ताद्विप्रकृष्टस्य मा भूदित्येवमर्थं पूर्वसूत्रे समीपवचनमन्तशब्दं सम्बध्नन्ति। एकवर्णव्यवहितस्येत्यनेन सामीप्यमाचष्टे। अनेकवर्णव्यवहितस्य सामीप्यं नोपपद्येतेत्येतद्देश्यं नाशङ्कनीयम्(); तस्यापेक्षिकत्वात्()। पर्यनितीत्यत्रैवानेकवर्णेन व्यवहितो नकराः; यणादेशे कृते सत्याकारयकाराभ्यां रेफस्य व्यवधानात्()। प्राणितीत्यत्र त्वेकादेशे कृते सत्येकेन वर्णेन व्यवहितो नकारः; निमित्तादाकारेणैव केवलेन व्यवधानात्()। यो ह्यनेकवर्णव्यवहितः, स एकमपेक्ष्य विप्रकृष्टौ भवति; इतरस्तु तमपेक्ष्य सन्निकृष्टः, सोऽप्यष्यवहितमपेक्ष्य विप्रकृष्टो

भवति, भवत्येवं यद्यव्यवहितः सम्भवेत्()। स चानितेर्न सम्भवतीति न भवति तदपेक्षं विप्रकृष्टत्वम्()। ननु च "अचः परस्मिन्? पूर्वविधौ" (१।१।५७) इत्यत्र पूर्वस्माद्विधिः पूर्वविधिरिति तत्पुरुषस्याश्रयणाण्णत्वे कत्र्तव्ये सत्येकादेशस्य स्थानिवद्भावात्? प्राणितीत्यत्रानेकेन वणनापि व्यवहितो नकारः? "पूर्वत्रासिद्धीये न स्थानिवत्()" (पै।प।वृ।४८) इति वचनात्र भवति स्थानिवद्भाव इत्यदोषः। "सैः" इत्यादि। येऽत्रान्तशब्दं सामीप्यार्थमाश्रित्र्यकयोगं कुर्वन्ति, तेषां तस्य योगस्य प्राणित्यत्र सावकाशत्वात्(), हे प्राणित्यत्र "पदान्तस्य" ८।४।३६ इति प्रतिषधः प्राप्नोति। तस्मात्? तैद्वितीयमप्यन्तस्य ग्रहणमावृत्त्या तन्त्रेण न्यायेना श्रयितव्यम्(), पदान्तस्य णत्वं यथा स्यात्()। ननु येऽपि योगविभागं कुर्वन्ति, तेऽन्तशब्दगवयववचनमाश्रयन्ति। तैरपि पूर्वसूत्रे सामीप्यवाच्यन्तग्रहणमाश्रयितव्यमेव; अन्यथा हि पर्यनितीत्यत्रायि णत्वं स्यात्()? इत्यत आह--"येषां तु" इत्यादि। येषामिति योगविभागकारिणाम्()। ते ह्नेकवर्णव्यवहितस्यापि णत्वमिच्छन्त्येव। तस्मान्नार्थस्तेषां पूर्वसूत्रेऽन्तहणेन॥

बाल-मनोरमा

अनितेः ३०८, ८।४।१९

अनितेः। "रषाभ्यां नो णः" इत्यनुवर्तते। "उपसर्गादसमासेऽपी"त्यत उपसर्गादिति। तदाह--उपसर्गस्थादिति। भिन्नपदस्थत्वादप्राप्तौ वचनम्। जक्षधातुः सेट्। वलादौ सार्वधातुकेऽपि "रुदादिभ्यः" इति सेट्।

बाल-मनोरमा

अन्तः ७९४, ८।४।१९

अन्तः। "अनिते"रिति सूत्रमनुवर्तते, "रषाभ्यां नो णः" इति च। अन्त इति षष्ठ()र्थे प्रथमा।पदस्याऽन्तो विवक्षितः। "उपसर्गादसमासेऽपी"त्यत उपसर्गादित्यनुवर्तते। तदाह-- पदान्तस्येत्यादिना। हे प्राणिति। प्रपूर्वादनेः क्विबन्तात्संबोधनैकवचनस्य हल्ङ्यादिलोपः, नस्य णः। नलोपस्तु न, "न ङिसंबुद्ध्योः" इति निषेधात्। मित्रशीरिति। मित्राणि शास्तीति विग्रहः। शासः क्विप्। "शास इदङ्हलोः" नित्युपधाया इत्वम्(), "र्वोरुपधायाः" इति दीर्घः। मित्रशिषावित्यादौ अपदान्तवान्न दीर्घः। आशासः क्वाविति। "आङः शासु इच्छाया"मित्यात्मनेपदी। तस्य "शास इदङ्हलोः" इति इत्त्वं तु न भवति, तत्र परस्मैपदिन एव शासेग्र्रहणात्। अन्यथा आशास्ते इत्यादावपि इत्त्वापत्तेः। अत "आशासःर क्वा"विति विधिः। इत्त्वोत्त्वे इति। गृ? धातोः क्विपि, ऋत इत्त्वे,रपरत्वे, सोर्लोपे, "र्वोरुपधायाः" इतिदीर्घे गीरिति रूपम्। पृ()धातोः क्विपि, "उदोष्ठ()पूर्वस्ये"ति ऋत उत्त्वे, रपरत्वे , सुलोपे, उपधादीर्घे पूरिति रूपमित्यर्थः।

तत्त्व-बोधिनी

अनितेः २६८, ८।४।१९

अनितेः। "उपसर्गादसमासेऽपी"त्यत उपसर्गादिति वर्तते, "रषाभ्या"मित्यतो "नो णः" इतिच। तदाह--उपसर्गस्थादित्यादि।

तत्त्व-बोधिनी

अन्तः ६५९, ८।४।१९

अन्तः। अनितेरिति वर्तते, अन्तोऽत्र पदापेक्षो गृह्रते, नाऽनितेरपेक्षया, अव्यभिचारादत आह-- पदान्तस्येति।हे प्राणिति। अन प्राणने। क्विप्। "अनुनासिकस्ये"ति दीर्घः। "न ङिसंबुद्ध्यो"रिति नलोपनिषेधः। अन्यत्र तु नलोपेन भाव्यमिति संबुद्ध्यन्तमुदाह्मतम्। मित्रशीरिति। लुप्तेऽपि क्विप्प्रत्यये प्रत्ययलक्षणन्यायेन हलादिकित्प्रत्ययपरत्वमस्ति, "वर्णाश्रये

नास्ति प्रत्ययलक्षण" मित्येतद्वर्णप्राधान्य एवेत्युक्तत्वादिति भावः।

* आशास इति। शासु अनुशिष्टौ। आङः शासु इच्छायाम्, आत्मनेपदी। "शास इ"दित्यादिना सिद्धे "क्वावेवु उपधाया इत्त्व" मिति नियमार्थमिदम्। तेन आशास्ते इति सिद्धमित्येके। अन्ये तु विध्यर्थमेवेदं, न नियमार्थं, प्राप्त्यभावात्। न च "शास इदङ्हलो"रिति इत्त्वस्य प्राप्तरस्तीति वाच्यं, तत्राङ्साहचर्यात्परस्मैपदिन एव सासेग्रहणात्। यद्यपि "सर्तिशास्ती"ति सूत्रे पृथग्योगकरणादर्तेर्लुङि आरत समारतेति पदद्वयेऽप्यङिति सिद्धान्तस्तथाप्युत्तरार्थतया परस्मैपदग्रहणानुवृत्तेरप्याकरे स्पष्टतया परस्मैपदे दृष्टो यः शासिस्तस्मात्परस्याऽङिति निष्कर्षः। तथा चाशास्ते इत्यत्र इत्त्वप्रसक्तिरेव नास्तीत्याहुः। वस्तुतस्तु "आशिषि लिङ्लोटौ" , "क्षियाशीः प्रैषेषु" इत्यादिनिर्देशेनैव सिद्धमिति नेदमपूर्वं वार्तिकम्। "इत्त्वं वाच्यटमित्यस्य इत्त्वं व्याख्येयमित्यर्थः। आशिषीत्याद्युक्त निर्देशादिति दिक्। सुम्वाविति। "ओः सुपि" इति यण्।

---

सूत्रम्

काशिका-वृत्तिः

उभौ साभ्यासस्य ८।४।२१

साभ्यासस्य अनितेः उपसर्गस्थान् निमित्तादुत्तरस्य उभयोः नकारयोः णकार आदेशो भवति। प्रणिणिषति। प्राणिणत्। पराणिणिषति। पराणिणत्। पूर्वत्रासिद्धीयम् अद्विर्वचने इत्येतस्मिन् सति पूर्वेण एव कृतणत्वस्य द्विर्वचने कृते सिद्धम् एतदन्तरेण अपि वचनम्? एतत् तु नाश्रयितव्यम् इति सूत्रम् इदम् आरभ्यते। तेन ञौजढतिति सिद्धं भवति।

न्यासः

उभौ साभ्यासस्य। , ८।४।२०

नकारोऽयमडादोनामेकोऽपि न भवतीति। ततो द्विवचने कृते सत्यभ्यासनकारेण व्यवहितत्वादितरस्य नकारस्य न स्यात्(), इष्यते च। तस्मात्? तस्यापि यथा स्यादितीदमारम्यते। "प्राणिणिषति" इति। सम्(), इट्(), "अजादेर्द्वितीयस्य" ६।१।२ इति "सम्यङोः" ६।१।९ इत्यनेन निशब्दो द्विरुच्यते। "प्राणिणत्()" इति। ण्यन्ताल्लुङ्(), णिलोपः, तस्य "द्विर्वचनेऽचि" १।१।५८ इति स्थानिवद्भावान्निशब्दस्य द्विर्वचनम्()। "पूर्वत्रासिद्धीयम्()" इत्यादि। "पूर्वात्रासिद्धीयमद्विरवचने" (जै।प।वृ।७०) इत्येतस्मिन्नसति द्विर्वचन कत्र्तव्ये णत्वस्यासिद्धत्वात्? प्राग्द्विर्वचनेन भवितव्यम्()। अत्रास्मिन्? सूत्रेऽसति प्रथमेन नकारेम व्यवाये द्वितीयस्य "अनितेः" ८।४।१९ इत्यनेन णत्वं न स्यादिति प्राणिणिषतीत्यादि न सिध्यति। अ()स्मस्तु "पूर्वत्रासिद्धम्()" ८।२।१ इत्यस्यापवादे सति "अनितेः" ८।४।१९ इत्यनेन परत्वाण्णत्वमेव क्रियते। ततः कृतण्त्वस्य द्विर्वचने कृते सिद्धमेवैतदन्तरेणाप्येतत्? सूत्रम्()। यद्येवम्(), किमर्थमिदमारभ्यते? इत्यत आह--"एतत्तु" इत्यादि। शक्यार्थे कृत्यः। इतिकरणो हेतौ। तु शब्दोऽयभवधारणे। यस्मात्तदपवादवचनं नैव शक्याश्रयितुम्(), तस्मात्? सूत्रमिदमारभ्यते। यदि हि तदेदाश्रीयेत, ["तदेवाश्रीयते"--प्रांउ।पाठः] तदेदं सूत्रं न कत्र्तव्यं स्यात्(), ततश्चास्यापवादवचनस्यासर्वविषयता न विज्ञायते। एवमूढमाख्यदौजढदित्यत्र पूर्वत्रासिद्धस्याभावाड्ढत्वादीनमसिद्धत्वात्? "हत्()" इत्र्येतस्य द्विर्वचनं न स्यात्()। अ()स्मस्तु सूत्रे सति तस्यापवादवचनस्यासर्वविषयता विज्ञायते। तेनौजढवित्यत्र ढत्वादीनामसिद्धत्वात्? "हत्()" इत्येतस्य द्विर्वचनं भवति। अतोभाविति किमर्थम्(), यावता पूर्वस्य नकारस्य पूर्वसूत्रेणैव णत्वं सिद्धम्(), इतरस्य त्वारम्भसामथ्र्यात्()। अन्तरेणापि "उभौ" इति वचनं णकारस्य व्यवायेप्यनेन भविष्यति? एवं मन्यते--"साभ्यासस्य" इत्येतावत्युच्यमाने यथा "अजादेर्द्वितीयस्य" ६।१।२ इति द्विर्वचनमारभ्यमाणं प्रथमद्विर्वचनस्यापवादौ विज्ञायते तथेहाप्यनडादिव्यवाये द्वितीयस्य नकारस्य णत्वमारभ्यमाणं पूर्वस्यापवादो विज्ञायते। "साभ्यासस्य" इति वचनं

विस्पष्टार्थम्(); उभावित्यनेनैव सिद्धत्वात्()। न ह्नभ्यासस्यानितेरुभौ नकारौ सम्भवतः॥

बाल-मनोरमा

उभौ साभ्यासस्य ४३३, ८।४।२०

उभौ साभ्यासस्य। अनितेरित्यनुवर्तते। "अन प्राणने" इति धातोरित्यर्थः। "रषाभ्यां नो णः" इत्यधिकृतम्। "उपसर्गादसमासेऽपी"त्यत उपसर्गादित्यनुवर्तते। तदाह -- साभ्यासस्येत्यादिना। निमित्ते सतीति। उपसर्गस्थे रेफे सतीत्यर्थः। प्राणिणदिति। प्र अन् इ अ त् इति स्थिते "अनिते" रिति णत्वस्याऽसिद्धत्वान्नीत्यस्य द्वित्वे उत्तरखण्डे नकारस्याभ्यासनकारेण व्यवदानाण्णत्वे अप्राप्ते उभयोर्नकारयोरनेन णत्वमित्यर्थः। न च "पूर्वत्राऽसिद्धीयमद्विर्वचने" इति निषेधाद्द्वित्वे कर्तव्ये णत्वस्याऽसिद्धत्वविरहेण परत्वात्कृते णत्वे ततः पश्चाद्द्वित्वे "प्राणिण"दिति सिद्धमिति वाच्यम्, अत एव "पूर्वत्राऽसिद्धीयमद्विर्वचने" इत्यस्याऽनित्यत्वविज्ञानात्।तेन "ऊर्णुनावे"त्यत्र णत्वात् पूर्वमेव नुशब्दस्य द्वित्वे कृतेऽभ्यासोत्तरखण्डे णत्वाऽबावसिद्धिरित्यन्यत्र विस्तरः।

तत्त्व-बोधिनी

उभौ साभ्यासस्य ३७७, ८।४।२०

उभौ सा। "रषाभ्याटमिति सूत्रे "न"इति षष्ठ()न्तं प्रथमाद्विवनान्ततया विपरिणम्यत इत्याह-- उभौ नकाराविति। ननु "साऽभ्यास्ये" त्युक्त्या उभयोरपि भविष्यतीत्युभौग्रहणं व्यर्थमिति चेत्, अत्राहुः-- साहित्यमात्रं विवक्षितं न तुल्ययोग इत्यभ्युपगमे द्वयोर्युगपन्न सिध्येदित्युभौग्रहणम्। न च तुल्ययोगविवक्षायां "तेन सहेति तुल्योगे" इति समासोऽत्र न स्यादिति शङ्क्यं, "तुल्ययोगग्रहणं प्रायिकं, सकर्मकः सलोमक" इत्युक्तत्वादिति। कैयटे तु-- "उभावित्यस्मिन्नसति साभ्यासस्याऽनितेर्णो भवतीत्युच्यमाने वचनसामथ्र्याच्च "पूर्वत्रासिद्धीयमद्विर्वचने" इत्यनाश्रीयमामे?कृतणत्वस्य द्विर्वचने कृते अनन्तरस्याऽनितेरिति पूर्वेणैव णत्वस्य सिद्धत्वाद्व्यवहितनकारार्थमिदं णत्वं स्यात्, अनन्तरस्य तु तक्रकौण्डिन्यन्यायेन न स्यादिति उभावित्युच्यते" इति स्थितम्। साभ्यासस्येति किम्?। प्राण् नमति। असत्यस्मिन् "अनिते"रिति षष्ठी संबन्धसामान्ये स्यात्।ततश्चानन्तर्यादिसंबन्धोऽपि गृह्रेत। सति त्वस्मिन्नवयवावयविभावसंबन्धो लभ्यते। अतोऽर्थवत्साभ्यासग्रहणम्। यदि त्विष्टानुरोधेनाऽनितेरिति षष्ठीजनम्। इह पूर्वं णत्वं कृत्वा द्वित्वे क#ऋते प्राणिणदित्यादिसिद्धावयमारम्भः "पूर्वत्रासिद्धीयमद्विर्वचने"इत्स्याऽनित्यत्वज्ञापनार्थः। तेन ऊर्णुनावेत्यत्र णत्वात्पूर्वमेव नुशब्दस्य द्वित्वादभ्यासोत्तरखण्डे णत्वाऽभावः सिद्धः।

---

सूत्रम्

काशिका-वृत्तिः

हन्तेरत्पूर्वस्य ८।४।२२

अकारपूर्वस्य हन्तिनकारस्य उपसर्गस्थात् निमित्तादुत्तरस्य णकार आदेशो भवति। प्रहण्यते। परिहण्यते। प्रहणनम्। परिहणनम्। अत्पूर्वस्य इति किम्? प्रघ्नन्ति। परिघ्नति। तपरकरणं किम्? चिणि प्राघानि। पर्यघानि।

न्यासः

हन्तेरत्पूर्वस्य। , ८।४।२१

हन्तेरित्यवयवलक्षणा षष्ठी। "अत्पूर्वस्य" इति। अत्पूर्वो यस्मादिति बहुव्रीहिः। नकारोऽन्यपदार्थः। "प्रहण्यते" इति। "हन हिंसागत्योः" (धा।पा।१०१२) "भावकर्मणोः" १।३।१३ इत्यात्मनेपदम्()। "प्रघ्नन्ति" इति। "गमहन" ६।४।९८

इत्यादिनोपधालोपः। "हो हन्तेर्ञ्णिन्नेषु" ७।३।५४ इति कुत्वम्()। "प्राधानि" इति। लुङ्(), "चिण्भावकर्मणोः" ३।१।६६ इति च्लेश्चिण्(), "अत उपधायाः" ७।२।११६ इति वृद्धिः, "चिणो लुक्()" ६।४।१०४ इति तकारसय लुक्()। शितपा निर्देशो धातुनिर्देशारथ एव, न यङ्लुन्निवृत्त्यर्थः। "प्रजङ्घनीति" इति। द्विर्वचने चुत्वे जश्त्वे कृते परस्य नकारलस्य जकारेम व्यवधानाण्णात्वं न भविष्यतीति। पूर्वस्य तु "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारे सत्यनुस्वारी भूतत्वाच्च। अत इति कत्र्तव्ये "पूर्वस्य" इति वचनं वैचित्र्यार्थम्()॥

बाल-मनोरमा

हन्तेः , ८।४।२१

नन्विह कथं न णत्वं, भिन्नपदस्थत्वेऽपि "एकाजुत्तरपदे णः" इति णत्वस्य दुर्वारत्वात्, कृते।त्रप्यल्लोपे तस्य पूर्वस्माद्विधौ स्थानिवत्त्वादुत्तरपदस्य एकाच्त्वात्, स्थानिवत्त्वाऽभावेऽपि "प्रातिपदिकान्ततुम्विभक्तिषु चे"त्यस्य "कुमति चे"त्यस्य वा दुर्वारत्वादिति प्राप्ते तद्वारणार्थं "हन्तेरत्पूर्वस्ये"ति सूत्रं विभज्य व्याचष्टे हन्तेः। "रषाभ्यां नो णः" इत्यनुवर्तते। "उपसर्गादसमासेऽपी"त्यत उपसर्गादित्यनुवर्तते। तात्स्थ्यात्ताच्छब्द्यम्। उपसर्गस्थादिति लभ्यते। तच्च रषयोः प्रत्येकमन्वेति। तदाह-उपसर्गस्थान्निमित्तादित्यादिना। निमित्तशब्देन रेफः षकारश्च विवक्षितः। प्रहण्यादिति। अत्र भिन्नपदस्थात्वादप्राप्ते णत्वे वचनम्।

प्रकृतोपयुक्तमाह--अत्पूर्वस्य। हन्तेरित्यनुवर्तते। "रषाभ्यां नो णः" इति च। "उपसर्गा"दिति तु निवृत्तम्। हन्तेरत्पूर्वस्य नस्य णः स्यादिति लभ्यते। सिद्धे सत्यारम्भो नियमार्थस्तदाह--हन्तेरत्पूर्वस्यैवेत्यादिना। प्रघ्नन्तीति। हन्तेर्लट्, झिः, झोऽन्तः, शप्, लुक् "गमहने"त्युपधालोपः। "हो हन्तेः" इति कुत्वम्। प्रघ्नतीति रूपम्। अत्र उपसर्गस्थरेफात्परत्वात् "हन्तेः" इत्यनेन प्राप्तं णत्वम् "अत्पूर्वस्ये"ति नियमान्न भवति। "वृत्रघ्न" इत्यत्र "प्रातिपदिकान्ते" त्यादिणत्वं निवर्तते। ननु "प्रातिपदिकान्तनुम्विभक्तिषु" च, "एकाजुत्तरपदे णः", "कुमति च", "हन्तेरत्पूर्वस्ये"ति सूत्रपाठक्रमः। ततश्च "अनन्तरस्य विधि"रिति न्यायेन "अत्पूर्वस्ये"ति नियमेन "प्रघ्नन्ती"त्यत्र "हन्ते"रित्यव्यवहितणत्वमेव निवर्तेत, नत्वन्यदित्यत आह--योगेति। यदि "अत्पूर्वस्ये"त्यनेन "हन्तेः" इति णत्वमेव व्यावर्त्येत, तर्हि "हन्तेरत्पूर्वस्ये"त्येकमेव सूत्रं स्यात्। उपसर्गस्थान्निमित्तात्परस्य हन्तेरत्पूर्वस्य नस्य णत्वमित्येतावतैव प्रघ्नन्तीत्यत्र णत्वनिवृत्तिसम्भवात्। अतो योगविभागसामथ्र्याण्णत्वमात्रस्यायं नियम इति विज्ञायत इत्यर्थः। एकाजुत्तरेति। "कुमति च" इत्यस्य "प्रातिपदिकान्ते"त्यस्य चोपलक्षणम्। अल्लोपस्य पूर्वस्मादपि विधौ स्थानिवश्त्वादेकाच्त्वमुत्तरपदस्य बोध्यम्। नच "पूर्वत्रासिद्धे न स्थानिवत्" इति वाच्यम्, "तस्य दोषः समयोगादिलोपलत्वणत्वेषु" इत्युक्तेः। ननु वृत्रघ्न इत्यत्र "हो हन्तेः" इति कथं कुत्वं, पूर्वस्य विधावल्लोपस्य स्थानिवत्त्वादित्यत आह--नकारे पर इति। माधवमतं दूषयितुमनुवदति--यत्त्विति। तुः पूर्ववैषम्ये। वैकल्पिकमिति। "प्रातिपदिकान्ते ति विहितमित्यर्थः। तद्भाष्येति। "कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। किं प्रयोजनम्()। वृत्रघ्नः सुग्घः प्राघानि। "हन्तेरत्पूर्वस्ये"ति सूत्रे अत्पूर्वग्रहणं न कर्तव्यम्" इति " अट्कुप्वा"ङिति सूत्रे भाष्यम्। अत्र णत्वप्रकरणे हादेशकुव्यवाये प्रतिषेधविज्ञानात् "प्रातिपदिकान्ते"ति णत्वमपि आदेशकुव्यवाये न भवतीति विज्ञायते। तद्विरोधान्माधवमतमुपेक्ष्यमित्यर्थः। एवमिति। वृत्रहन्शब्दवदित्यर्थः। "इन्हन्पूषार्यम्णां शौ", "सौ चे ति दीर्घनियममात्रे दृष्टान्तो, न तु कुत्वादौ, असम्भवात्। शाङ्र्गमस्यास्तीत्यर्थे "अत इनिठनौ" इति मत्वर्थीय इनिः। यशोऽस्यास्तीत्यर्थे "अस्मायामेधारुआजः" इति विनिः। "तसौ मत्वर्थे" इति भत्वान्न रुत्वम्। नन्वर्थवत्परिभाषया "इन्हन्" इत्यत्रार्थवत एव इनो ग्रहणं, ततश्च विन्प्रत्यये इनोऽनर्थकत्वात्तस्य कथं ग्रहणमित्याशङ्क्य परिहरति--यशस्विन्नित्यादिना।

अनिनस्मन्निति। एतच्च "येन विधिः" इति सूत्रे भाष्ये स्थितम्। राज्ञ" इत्यत्र अन् अर्थवान्, "दाम्नः" इत्यत्र तु

अनर्थकः। "शाङ्गी"त्यत्र इन् अर्थवान्, "यशस्वी"त्यत्र तु अनर्थकः। "सुपया" इत्यत्राऽस् अर्थवान्, "सुरुआओता" इत्यत्र तु अनर्थकः। असन्तत्वाद्दीर्घः। "सुशर्मे"त्यत्र मन् अर्थवान्, "सुप्रथिमे"त्यत्र त्वनर्थकः। "मनः" इति न ङीप्। अर्यमन्शब्दे पूषन्शब्दे चाऽल्लोपे विशेष इत्याह-अर्यम्णीत्यादि। "विभाषा ङिश्योः" इत्यल्लोपविकल्पः। शसादावचि तु नित्यमल्लोप उक्तप्राय इति भावः। मह्रते पूज्यत इत्यर्थे कनिप्रत्ययः। इकार उच्चारणार्थः। ककार इत्। अन्निति प्रत्ययः शिष्यते। धातोरवुगागमः। तत्र ककार इत्। उकार उच्चारणार्थः। कित्त्वादन्तावयवः, महधातोर्हस्य घश्चेति त्रयं निपात्यते।

तत्त्व-बोधिनी

हन्तेः ३१९, ८।४।२१

"हन्तेरत्पूर्वस्ये"ति सूत्रं योगाविभागेन व्याचष्टे--हन्तरिति। प्रसङ्गादस्योहरणमाह--प्रहण्यादिति। प्रकृतोपयुक्तमंशमाह-

तत्त्व-बोधिनी

अत्पूर्वस्य ३२०, ८।४।२१

अत्पूर्वस्येति। एकाजुत्तरेति। न चाऽल्लोपे कृते एकाच्त्वं नास्तीति वाच्यं, पूर्वस्मादपि विधौ स्थानिवद्भावात्। न च "पूर्वत्राऽसिद्धे न स्थानिव"दिति वाच्यम्, "तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि"त्युक्तेः। निवर्त्यते इति। "कुमति चे"ति णत्वमपि निवर्त्यत एवेति बोध्यम्। भाष्ये तु--"कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः"। किं प्रयोजनम्()।वृत्रघ्नः रुआउग्घ्नः प्राघानि। "हन्तेरत्पूर्वस्ये"त्यत्पूर्वग्रहणं न कर्तव्यं भवति, इत्युक्तम्। एतच्च वार्तिकाशयवर्णनमात्रम्, नतु वस्तुस्थितिः वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसङ्ग्रहस्यैव न्याय्यत्वादिति तु मनोरमाया स्थितम्। नन्वत्पूर्वस्येत्यत्र तपरो विवक्षितो न वा, यदि विवक्षितस्तर्हि "बहुवृत्रहाणी"ति न सिध्येत्। यद्यविवक्षितस्तदा "प्राघानी"ति चिणन्तेऽपि णत्वं स्यात्, ततश्च "कुव्यवाये हादेशेषु प्रतिषेधः"इति वचनं स्वीकर्तव्यमेवेति किमनेन योगाविभागेन? अत्राहुः--तुपरोऽत्र विवक्षित एव। न च "बहुवृत्रहाणी"त्यत्र णत्वाऽसिद्धिः, णत्वस्याऽन्तरङ्गत्वेन तत्कार्यं प्रति दीर्घस्याऽसिद्धत्वात्। न च त्रैपादिकेऽन्तरङ्गे ष#आष्ठी परिभाषा न प्रवर्तत इथि वाच्यं, कार्यकालपक्षाऽभ्युपगमात्। न चैवमन्तरङ्गं णत्वं "प्राघानी"त्यत्रापि स्यादिति वाच्यं, "पूर्वधातुः साधनेन युज्यते"इति पक्षे णत्वस्य बहिरङ्गत्वात्। इष्टानुरोधेन "पूर्वं धातुरूपसर्गेणे"ति पक्षस्यानभ्युपगमादिति। अन्ये तु--"हन्तेरत्पूर्वस्ये"त्यत्र "उपसर्गा"दित्यस्यानुवृत्तिस्वीकाराद्योदविभागसाथर्य्येन "भ्रूणप्रघ्न "इत्यत्र "एकाजुत्तरे"त्यादिना णत्वाऽभावेऽपि "वृत्रघ्नः""रुआउग्घ्न"इत्यत्र णत्वं दर्वारमिति "कुव्यवाये"इति वार्तिकं स्वीकर्तव्यमेव। योगविभागस्याऽनन्तरस्येति न्यायबाधेनापि चरितार्थकत्वादुपसर्गसंबन्धस्यापि बाधे सामथ्र्याऽभावात्। न च ब्राह्नआदिषु कर्मसूपपदेषु विधीयमानः क्विप्प्रत्ययः केवलधातोरेव स्यान्न तु सोपसर्गादिति "बरह्नप्रहा""भ्रूणप्रहे"--त्यादि रूपमेव दुर्लभमिति वाच्यम्, "आतोऽनुपसर्गे कः"इत्यत्राऽनुपसर्गे इति सामान्यापेक्षज्ञापकात्सोपसर्गाद्धन्तेरपि "ब्राह्नभ्रूणे"ति क्विप्संभवात्। अनुपसर्गग्रहणस्य सामान्यापेक्षज्ञापकत्वे तूक्तवार्तिकमेव प्रमाणम्। तस्मान्"हन्ते"रिति योगविभागोऽत्र निरर्थक एवेत्याहुः।

---

सूत्रम्

काशिका-वृत्तिः

वमोर् वा ८।४।२३

हन्तेः इति वर्तते। वकारमकारायोः परतः हन्तिनकारस्य उपसर्गस्थान् निमित्तादुत्तरस्य वा णकारादेशो भवति। प्रहण्वः,

प्रहन्वः। परिहण्वः, परिहन्वः। प्रहण्मः, प्रहन्मः। परिहण्मः, परिहन्मः।

न्यासः

वमोर्वा। , ८।४।२२

पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्()। वाग्रहणं पूर्वविधीनां नित्यत्वज्ञापनार्थम्(); अन्यथा हि योगारम्भसामर्थ्यादेवास्य विधेर्नित्यत्वं [विधिः--प्रां३।पाठः; कां३।पाठश्च] विज्ञायेत, पूर्वेषां तु विधीनां "शेषे विभाषा" ८।४।१८ इत्यतो विभाषाग्रहणस्यानुवृत्तेः पाक्षिकत्वं स्यात्()। इह तु वाग्रहणे द्वयोर्विभाषयोर्मध्ये ये विधयस्त एवह नित्या इति तेषां नित्यत्वं विज्ञायते॥

बाल-मनोरमा

वमोर्वा २६०, ८।४।२२

वमोर्वा। "उपसर्गादसमासेऽपी"त्यतः उपसर्गादित्यनुवर्तते। "रषाभ्यां नो णः" इति सूत्रमनुवर्तते। "हन्तेरत्पूर्वस्ये"त्यतो "हन्ते"रिति। तदाह--- उपसर्गस्यान्निमित्तादिति। णलि जहानेति स्तिते आह--हो हन्तेरिति। "अभ्यासाच्चे"त्यपेक्षयाऽस्यान्तरङ्गत्वेन न्याय्यत्वादिति भावः। जघ्नतुरिति। "गमहने"त्युपधालोपे "हो हन्ते"रिति कुत्वम्। थलि भारद्वाजनियमादिड्विकल्पे जहनिथ जहन् थ, इति स्थिते ञ्णित्प्रत्ययपरत्वाऽभावान्नकारपरत्वाऽभावाच्च "हो हन्ते"रिति कुत्वाऽप्राप्तौ।

तत्त्व-बोधिनी

वमोर्वा २२९, ८।४।२२

जघान जघ्नतुरिति। यद्यप्यत्र "अभ्यासाच्चे"त्यस्यापि प्रवृत्तिरस्ति तत्राप्यन्तरङ्गत्वात् "हो हन्ते"रित्युपन्यस्तम्।

---

सूत्रम्

काशिका-वृत्तिः

अन्तरदेशे ८।४।२४

अन्तःशब्दादुत्तरस्य हन्तिनकारस्य अत्पूर्वस्य णकारादेशो भवति अदेशाभिधाने। अन्तर्हण्यते। अन्तर्हणनं वर्तते। अदेशे इति किम्? अन्तर्हननो देशः। अत्पूर्वस्य इत्येव, अन्तर्घ्नन्ति। तपरकरणं किम्? अन्तरघानि।

न्यासः

अन्तरदेशे। , ८।४।२३

"अन्तरपरिग्रहे" (१।४।६५) इत्यत्र "अन्तःशब्दस्याङ्क्रिविधिणत्वेषूपसर्गसंज्ञा वक्तव्या" (वा।७१) इत्यनेन णत्वविधावुपसर्गसंज्ञाया विद्यमानत्वात्? "हन्तेरत्पूर्वस्य" ८।४।२१ इत्यनेनैव णत्वे सिद्धेऽदेशार्थोऽस्य योगस्यारम्भः। "अन्तर्हणनम्()" इति। अत्र भावे ल्युट्()। मध्ये हननमित्यर्थः। "अन्तरपरिग्रहे" (१।४।६५) इति गतिसंज्ञकत्वात्? "कुगतिप्रादयः" २।२।१८ इति समासः। "अन्तर्हननो देशः" इति। अधिकरणे ल्युट्()। अन्तः-शब्दादबन्तस्य हन्तेः--अन्तर्धणो देश इति निपातनादेव देशाभिधानेऽपि णत्वं भवति॥

बाल-मनोरमा

नश्चापदान्तस्य झलि १२४, ८।४।२३

नश्चापदान्तस्य झलि। चकारान्मस्येत्यनुकृष्यते, अनुस्वार इति च। तदाह--नस्येत्यादिना। यशांसीति। यशश्शब्दात् जस्, जस्शसोश्शिः। "नपुंसकस्य झलचः" इति नुम्। "सान्तमहत" इति दीर्घः। यशान्-सि इति स्थिते नकारस्य अनुस्वारः। आक्रंस्यत इति। क्रमु पादविक्षेपे। आङ्पूर्वात्कर्तरि लृट्। "आङ उद्गमने" इति तङ्, स्यतासी लृलुटोरिति स्यः। स्नुक्रमोरिति नियमान्नेट्। आक्रम् स्य त इति स्थिते मस्य अपदान्तत्वात्पूर्वेणाप्राप्ते वचनम्। नम्यत इति। कर्मणि लट् तङ् यक्। अत्र मस्य झल्परकत्वाभावान्नानेनानुस्वारः। अपदान्तत्वाच्च न पूर्वेण।

तत्त्व-बोधिनी

नश्?चापदान्तस्य झलि ९८, ८।४।२३

नश्चापदान्तस्य। अपदान्तस्य किम्?। राजन्पाहि। आक्रंस्यत इति। "आङ उद्गमने" इति तङ्। "स्नुक्रमोः-" इति नेट्।

---

सूत्रम्

काशिका-वृत्तिः

अयनं च ८।४।२५

अन्तरदेशे इति वर्तते। अयननकारस्य च अन्तःशब्दादुत्तरस्य णकारादेशो भवति अदेशाभिधाने। अन्तरयणं वर्तते। अन्तरयणं शोभनम्। अदेशे इत्येव, अन्तरयनो देशः।

न्यासः

अयनञ्च। , ८।४।२४

"अयनम्()" इति। अयतेः, इणो वा ल्युटि रूपम्()। "कृत्यचः" ८।४।२८ इत्यनेनैव सिद्धेऽदेशप्रतिविधानार्थं वचनम्()। चकारेणादेशग्रहणमुपसर्गग्रहणं चानुकृष्यते। तेषामुत्तरत्रानुवृत्तिनिरासार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

छन्दस्यृदवग्रहात् ८।४।२६

पुर्वपदातिति वर्तते। ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णकारादेशो भवति छन्दसि विषये। नृमणाः। पितृयाणम्। अत्र हि नृमणाः, पितृयाणम् इति ऋकारो ऽवगृह्यते। अवग्रहग्रहणं किमर्थम् उच्यते, यावता संहिताधिकार आ अध्यायपरिसमाप्तेः इत्युक्तम्? विषयोपलक्षणार्थम् अवग्रहग्रहणम्। अवगृह्यमाणाद् यथा स्यात्, अनवगृह्यमाणात् मा भूत्। अपदान्ते च अवग्रहो न अस्ति।

न्यासः

छन्दस्यृदवग्रहात्?। , ८।४।२५

अवगृह्गते विच्छिद्य पठ()त इत्यवग्रहः ऋच्चासाववग्रहश्चेति ऋदवग्रहः। ऋकारात्(), अवग्रहात्(), पूर्वपदात्()--इत्येतास्तिरुआः समानाधिकरणाः पञ्चम्यः। ऋकारमात्रं च पूर्वपदं न भवतीति सामर्थ्यात्पूर्वपदैकदेश ऋकारे पूर्वपदशब्दो वत्र्तत इति दर्शयति। समुदयेषु हि यवृत्ताः शब्दाः क्वचिदवयवेष्वपि वत्र्तन्त इति, यथा--पटो दग्ध इत्यत्र ["इत्यत"--प्रांउद्रितः पाठः] पटैकदेशे पटशब्दः। "नृमणाः" इति। नरि मनोऽस्येति बहुव्रीहिः। "अत्वसन्तस्य चाधातोः" ६।४।१४ इति दीर्घः। "पितृयाणम्()" इति। यान्त्यनेनेति यानम्(), करणे ल्युट्()। पितुर्यानमिति षष्ठीसमासः।

"अत्र हि" इत्यादिना ऋकारस्यावग्रहत्वं दर्शयति। "अवग्रहग्रहणम्()" इत्यादि। यद्यवग्रहग्रहणं न क्रियते, ततोऽव्यपदान्तादनवगृह्णणाणात्? ऋकारात्? स्यात्(); अस्मिस्तु सति न वति। पदान्तस्यैवावग्रहो भवति, नापदान्तस्य। अत्र केषाञ्चिद्दर्शनम्()--अत्र "संहितायाम्()" ८।२।१०८ इत्यनुवत्तमानमपि नाभिसम्भध्यते, अवग्रहग्रहणात्()। तेन यदाऽवगृह्णत ऋकारस्तवैव णत्वं भवति, नान्यदेति। अपरे तु मन्यन्ते--यथाऽनृत्यन्नापि नत्र्तनयोग्यत्वान्नत्र्तक इत्युच्यते, तथाऽनवगृह्णमाणोऽपि ऋकारोऽवग्रहयोग्यत्वादवग्रह इत्युक्तः। अत एतदुक्तं भवति--अवग्रहयोग्यात्? ऋकाराण्णत्वं भवति, एवं सत्यवग्रहग्रहणे संहिताधिकारात्? संहितायामेव णत्वं भवति, नावग्रहादिति॥

---

सूत्रम्

काशिका-वृत्तिः

नश् च धातुस्थौरुषुभ्यः ८।४।२७

नसित्येतस्य नकारस्य णकारादेशो भवति धातुस्थान् निमित्तादुत्तरस्य उरुशब्दात् षुशब्दाच् च छन्दसि विषये। धातुस्थात् तावत् अग्ने रक्षा नः। शिक्षा णो अस्मिन्। उरुशब्दात् उरु णस्कृधि। षुशब्दात् अभी षु णः सखीनाम्। ऊर्ध्व ऊ षु ण ऊतये। अस्मदादेशो ऽयं नस्शब्दः बहुवचनस्य वस्नसौ ८।१।२१ इति।

न्यासः

नश्च धातुस्थोरुषुभ्यः।, ८।४।२६

धातौ तिष्ठतीति धातुस्थः, "सुपि स्थः" ३।२।४ इति कप्रत्ययः। ऊर्विति, ष्विति च स्वरूपग्रहणम्()। नसिति नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणम्()। तत इहास्मदादेश एव कार्यी, नेतरः; इतरस्य धातुस्थादिभ्यः परस्यासम्भवात्()। उत्तरत्र हि नासिकादेशस्य कार्यित्वं भविष्यति। "रक्षा णः" इति। "रक्ष पालने" (धा।पा।६५८) इत्यस्माद्धातोर्लोट्(), मध्यमपुरुषैकवचनान्तात्? परस्यास्मदो द्वितीयान्तस्य "बहुवचनस्य अस्नसौ" ८।१।२१ इति नसादेशः, "द्व्यचोऽतस्तिङः" ६।३।१३४ इति पूर्वपदस्य दीर्घः। "शिक्षा णः" इति। "शिक्षा विद्योपादाने" (धा।पा।६०५) इत्यस्मात्? तथाविधादेवास्मदो नसादेशः। "उरुणस्कृधि" इति। कृञो लोट्? सिप्(), "सेह्र्रपिच्च" ३।४।८७ इति हिरादेशः। "श्रुशृणुपृकृबृभ्यश्छन्दसि" ६।४।१०२ इति हेर्धिरादेशः। "कःकरत्()" ८।३।५० इत्यादिना विसर्जनीयस्य सत्वम्()। "अभीषु णः" इति। "इकः सुञि" ६।३।१३३ इति दीर्घः, "सुञः" ८।३।१०९ इति षत्वम्()। एवं "ऊष्र्व ऊषु णः" इत्यत्राप्युकारस्य "निपातस्य च" ६।३।१२५ इयानेन दीर्घः, सुञः" ८।३।१०९ इति इति षत्वञ्()। चकारेण "छन्दसि" ८।४।२५ इत्यनुकृष्यते, उत्तरत्रानुवृत्तिनिरासार्थम्()॥

---

सूत्रम्

काशिका-वृत्तिः

उपसर्गाद् बहुलम् ८।४।२८

उपसर्गस्थान् निमित्तातुत्तरस्य नसो नकारस्य णकारादेशो भवति बहुलम्। प्रणः शूद्रः। प्रणसः। प्रणो राजा। न च भवति। प्र नो मुञ्चतम्। बहुलग्रहणाद् भाषायाम् अपि भवति, प्रणसं मुखम्। उपसर्गाच् च इति नासिकाया नसादेशः।

न्यासः

उपसर्गाद्बहुलम्?।, ८।४।२७

नसादेशस्याक्रियावाचित्वात्? तं प्रत्युपसर्गत्वं न सम्भवतीति प्रायुपलक्षणार्थमेतदुपसर्गग्रहणं विज्ञायते। "प्रथः" इति।

पूर्ववदस्मदो नस्()। "प्रणसम्()" इति। प्रगता नासिका यस्येति बहुव्रीहिः। "उपसर्गाच्च" (५।४।११९) इत्यच्? समासान्तः; नासिकायाश्च नसादेशः॥

बाल-मनोरमा

उपसर्गाद्बहुलम् ८५०, ८।४।२७

"अनोत्परः" इत्यपनीय तत्स्थाने "बहुल"मिति च कृत्वा भाष्यकार आहेत्यर्थः। तथाच फलितं सूत्रमाह--उपसर्गाद्बहुलं। निमित्तादिति। रेपाषकारात्मकादित्यर्थः। "उपसर्गादनोत्परः" इति यथाश्रुते तु "प्र णो नय" इत्यादावव्याप्तिः, "प्र न #ः पूषा" इत्यादावतिव्याप्तिश्चेति भावः। प्रणस इति। प्रगता नासिका यस्येति विग्रहः। "उपसर्गाच्चे"त्यच्, नासिकाया नस्। "उपसर्गाद्बहुल"मिति णत्वमिति भावः।

वेरिति। वेः परो यो नासिकाशब्दः स ग्रादेशं प्राप्नोतीति भावः। विग्र इति। विगता नासिका यस्येति विग्रहः, प्रकृतवार्तिकेन नासिकाशब्दस्य ग्रादेश इति भावः। विगता नासिका यस्येति विग्रहे अचि नसादेशे टापि च विनसेति भट्टिप्रयोगो न युज्यते, ग्रादेशस्यास्य नसादेशं प्रत्यपवादत्वादित्याक्षिपति--कथं तर्हीति। समाधत्ते--विगतयेति। विगता नासिका। प्रादिसमासः। अबहुव्रीहित्वान्न ग्रादेशः। किंतु टायां "पाद्द"न्निति नसादेशे विनसेति तृतीयान्तं रूपम्। "उपलक्षिते"त्यध्याहार्यमिति भावः।

तत्त्व-बोधिनी

उपसर्गाद्बहुलम् ७४२, ८।४।२७

उपसर्गादनोत्परः। अनोत्परः किम्()। प्रनो मुञ्चतमित्यत्र णत्वं मा भूत्। तद्भङ्क्त्वेति। "अनोत्पर"इत्यपनीय बहुलग्रहणं च कृत्वेत्यर्थः। अन्यथा प्रणो नयेत्यादावव्याप्तिः, प्र नः पूषेत्यादौ त्वतिव्याप्तिः प्रसज्येतेति भावः। प्रणसैथि। प्रगता नासिका अस्येति विग्रहः। कथं तर्हीति। ग्रख्ययोरन्यतरेण भाव्यमिति प्रश्नः। नासिकयेति। तथा च विनसेति न प्रथमान्तं, किं तु "पद्दन्न" इति नसादेशे तृतीयान्तमिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

कृत्यचः ८।४।२९

कृत्स्थः यो नकारः अचः उत्तरः तस्य उपसर्गस्थान् निमित्तादुत्तरस्य णकारादेशो भवति। अन, मान, अनीय, अनि, निष्ठादेश एते णत्वं प्रयोजयन्ति। अन प्रयाणम्। परियाणम्। प्रमणम्। परिमाणम्। मान प्रयायमाणम्। परियायमाणम्। अनीय प्रयाणीयम्। परियाणीयम्। अनि अप्रयाणिः। अपरियाणि। इनि प्रयायिणौ। परियायिणौ। निष्ठादेश प्रहीणः। परिहीणः। प्रहीणवान्। परिहीणवान्। अचः इति किम्? प्रमग्नः। परिभुग्नः। भुजो कौटिल्ये, अस्य निष्ठाप्रत्ययः, ओदितश्च ८।२।४५ इति निष्ठानत्वम्, चोः कुः ८।२।३० इति कुत्वे सिद्धं परिभुग्नः इति। कृत्स्थस्य णत्वे निर्विण्णस्य उपसङ्ख्यानं कर्तव्यम्। निर्विण्णो ऽस्मि खलसङ्गेन। निर्विण्णो ऽहमत्र वासेन।

न्यासः

कृत्यच। , ८।४।२८

"कृत्स्थो यो नकारोऽच उत्तरः" इति। एतेनाद्य इति नकारस्येवं विशेषणम्()। न तु कृत इति दर्शयति। यदि कृत एव विशेषणं स्यात्(), "प्रवपणम्" इत्यत्र णत्वं न स्यात्(), न ह्यत्र कृदचः परः। नकारस्तु सम्भवत्येव। यदि कृत एतद्विशेषणं

स्यात्, तदा "न भाभूपूकमिगमिप्यायी" ८।४।२३ इत्यादौ कम्यादीनां ग्रहणमनर्थकं स्यात्(), प्राप्त्यभावात्()। न ह्येतेभ्यो यः कृद्विधीयते सोऽचः परः सम्भवति; तेषामनजन्तत्वात्()। तस्मान्नकारस्येदं विशेषणं युक्तम्()। कृत्स्थानां येषां णत्वं सम्भवति, तान्? दर्शयितुमाह--"अनमानानीयानि" इत्यादि। अन--योरादेशः। मानः--आगतमुका शानच्()-कानच्()-चानशः। अनीयर्()-तव्यदादि ३।१।९६ सूत्रेण यो विहितः। अनिः--"आक्रोशे नञ्यनिः" ३।३।११२ इति, इनिः--"सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति, "आवश्यकाधमण्र्ययोरिनिः" ३।३।११२ इति, इनिः--"सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति, "आवश्यकाधमण्र्ययोरिनिः" ३।३।१७० इति; अयञ्च उत्सृष्टानुबन्धः। निष्ठादेशः--"रदाभ्यां निष्ठातो नः" ८।२।४२ इति प्रकरणे यो विहितः। "प्रयाणम्()" इति। पूर्ववद्यातेर्ल्युट्()। "प्रयायमाणम्()" इति। कर्मणि लकारः। शानच्(), यक्(), "आने मुक्()" ७।२।८२ इति मुक्()। "प्रयाणीयम्()" इति। अनीयर्()। "अप्रयाणिः" इति। आक्रोशे नञ्यनिः" ३।३।११२। "प्रयायिणौ" इति। "आतो युक्चिण्कृतोः" ७।३।३३ इति युक्()। "प्रहीणः" इति। "ओहाक्? त्यागे" (धा।पा।१०९०)। "ओदितश्च" ८।२।४५ इति तकारस्य नकारः; "घुमास्था" ६।३।६५ त्यादिनेत्वम्()। "प्रमग्नः" इति। "टु मस्जो शुद्धौ" (धा।पा।१४१५), "मस्जिनशोर्झलि" ७।१।६० इति नुम्()। सच भवञ्जकारात्? ["भवञ्चकारात्()"--कांउ।पाठः] पूर्वो भवति; "मस्जेरन्त्यात्? पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपाथम्()" (वा।७) इति वचनात्()। "अनिदितातम्" ६।४।२४ इत्यादिनास्य नकारलोपः, "स्कोः" ८।२।२९ इत्यादिना सकारस्य च। "चोः कुः" ८।२।३० इति कुत्वम्()। "परिभुग्वः" इति। "भुञ्जो कौटिल्ये" (धा।पा।१४१७)। "निर्विण्णः" इति। लाभसत्ताविचारणार्थानां विदीनामन्यतमस्य रूपम्(), न "विद ज्ञाने" (धा।पा।१०६४) इत्यस्य; सेट्त्वात्? सस्य। अत्राच उत्तरो न भवति, तस्मान्निर्विण्णस्य सिद्धय उपसंख्यानम्()=प्रतिपादनं कत्र्तव्यमित्यर्थः। तत्रैदं प्रतिपादनम्()--पूर्वसूत्राद्बहुलवचनमनुवत्र्तते, तेनानचोऽपि परस्य भविष्यतीति॥

बाल-मनोरमा

कृत्यचः ६५६, ८।४।२८

कृत्यचः। "रषाभ्यां नो णः" इत्यनुवर्तते। "उपसर्गादनोत्परः" इत्यत उपसर्गादिति च। उपसर्गस्थादिति विवक्षितम्। "कृती"त्यनन्तरं "विद्यमानस्ये"ति शेषः। अच इति पञ्चमी। तदाह -- उपसर्गस्थादिति। असमानपदत्वादप्राप्तौ वचनम्। "अट्कुप्वाङ्नुम् व्यवायेऽपी"त्यनुवर्तते। तदाह--- प्रयाणीयमिति। निर्विण्णस्येति। नस्यण इत्युपसङ्ख्यानमित्यर्थः। अचः परत्वाभावादिति। विदेः क्तप्रत्यये "रदाभ्या"मिति दकारादुत्तरस्य तकारस्य पूर्वदस्य च नत्वे "निर्विन् न " इति स्थिते नकारस्य अचः परत्वाऽभावात् "कृत्यचः" इति अप्राप्ते णत्वे इदं णत्ववचनमित्यर्थः। नकारेण व्यवदानाच्च णत्वस्याऽप्राप्तिर्बोध्या। पूर्वस्येति। नस्य णत्वे, ष्टुत्वेन णत्वमित्यर्थः।तथा च द्विणकारकं रूपम्।

तत्त्व-बोधिनी

कृत्यचः ५४६, ८।४।२८

कृत्यचः। उपसर्गादित्यनुवर्तते, रषाभ्यामिति च। तत्र तात्स्थ्यात्ताच्छब्द्यमित्याह--- उपसर्गस्थादिति। कृत्स्थस्य नस्येति। "अच उत्तरस्ये" त्यस्य कृतो विशेषणत्वे तु प्रयापणमित्यादौ न स्यादिति भावः। प्रमग्न इति। "टुमस्जो शुद्धौ" , "ओदितश्चे"ति निष्ठानत्वं, तस्याऽसिद्धत्वात् "स्को"रिति सलोपः, "चोः कुः"।

* निर्विण्णस्योपसङ्ख्यानम्। निर्विणस्येति। विदेः क्तस्य "रदाभ्या"मिति नत्वं, पूर्वस्य दस्य च।

---

सूत्रम्

काशिका-वृत्तिः

णेर् विभाषा ८।४।३०

ण्यन्ताद् यो विहितः कृत्प्रत्ययः तत्स्थस्य नकारस्य उपसर्गस्थान् निमित्तातुत्तरस्य विभाषा णकारादेशो भवति। प्रयापणम्, प्रयापनम्। परियापणम्, परियापनम्। प्रयाप्यमाणम्, प्रयाप्यमानम्। प्रयापणीयम्, प्रयापनीयम्। अप्रयापणिः, अप्रयापनिः। प्रयपणौ, प्रयापिनौ, विहितविशेषणं किम्? प्रयप्यमाणम् इत्यत्र यका व्यवधाने ऽपि यथा स्यातिति।

न्यासः

णेर्विभाषा। , ८।४।२९

पूर्वेण नित्ये प्राप्ते विकल्पार्थमिदमारभ्यते। यद्येवम्(), विभाषाग्रहणमनर्थकं स्यात्()। आरम्भसामर्थ्यादेव विकल्पो विज्ञायते? नैतत्(), विपर्ययोऽपि सम्भाव्येत। अयं तु नित्यो विधिः, पूर्वसूत्रं तु बहुलग्रहणानुवृत्तेर्विभाषेति। "ण्यन्ताद्यो विहितः" इति। एतेन "णेः" इति विहितविशेषणत्वं दर्शयति। तस्य च प्रयोजनं वृत्तौ वक्ष्यति। "प्राप्यमाणम्()" इति। "हेतुमति च" ३।१।२६ इति णिच्()। "अर्त्तिह्री" ७।३।३६ इत्यादिना पुक्()॥

बाल-मनोरमा

णेर्विभाषा ६५७, ८।४।२९

णेर्विभाषा। "कृत्यचः" इत्यनुवर्तते। "रषाभ्यां नो णः" इति च। "णे"रिति कृतो विहितविशेषणमम्। तदाह--उपसर्गस्थादित्यादिना। प्रयापणीयमिति। याधतोर्णौ पुकि यापि इत्यस्माण्ण्यन्तादनीयरि णेर्लोपे अनेन णत्वविकल्पः। यकेति। यापि इत्स्माण्ण्यन्तात्कर्ममि लटः शानचि "आने मु"गिति मुगागमे यकि णिलोपे प्रयाप्यमाणशब्दे णत्वविकल्प इष्यते। णेः परो यः कृत्तत्स्थस्य णत्वविकल्प इत्युक्तौ तु कृतः शानचो यका व्यवहितत्वेन णिचः परत्वाऽभावात्तत्स्थस्य नस्यणत्वविकल्पो न स्यात्। तदर्थं णेरिति विहितविशेषणमाश्रित्यमित्यर्थः। भाष्ये तु ण्यन्तात्परो यः कृदित्यंशेऽप्यट्कुप्वाङ् नुमित्याद्यनुवर्त्य यकारव्यवधानेऽपि णत्वविकल्पः समर्थितः। णत्वे दुर इति। षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः" इत्यनेनेति भावः। ततश्च दुर उपसर्गत्वाऽभावात्ततः परे कृत्स्थनकारे सूत्रद्वयमपि न प्रवर्तते इत्यभिप्रेत्य उदाहरति-- दुर्यानं दुर्यापनमिति। यातेण्र्यन्ताल्ल्युटि णिलोपे दुर्यापनमिति रूपम्।

तत्त्व-बोधिनी

णेर्विभाषा ५४७, ८।४।२९

प्रयापणीयमिति। या प्रापणे। णिचि "अर्तिह्री" ति पुक्। "णेरनिटी"तिणिलोपः। प्रयाप्यमाणमिति। यातेर्णैचि पुकि ण्यन्तस्य धातुत्वेन वर्तमाने कर्मणि लटि लटः शानच्। तस्य शित्त्वेन "तिङ्शि"दिति सार्वधातुकत्वे "सार्वधातुके यक्" इत्यनेन यकि कृते "णेरनिटि" इति णिलोपे "आने मु"गिति मुगागमे णत्वे च सिध्यति रूपम्। विहितविशेषऽणाऽकरणे तु यका व्यवधानेन ण्यन्तात्परत्वाऽभावान्न सिध्यति। न चाऽड्व्यवायेऽपीति भविष्यतीति वाच्यं, रषाभ्यां परसय् नस्येत्यंशे तस्मादिति निर्दिष्टपरिभाषया प्रापितस्याऽव्यवधानस्य रामाणामित्यादिसिद्धये "व्यवायेऽपी"ति योगविभागेन बाधेसति आदर्शेनेत्यादावतिप्रसङ्गे प्राप्ते--अट्कुप्वाङित्यंशो नियमार्थः। आङ्ग्रहणं तु पदव्यवायेऽपीति निषेधं बाधितुमिति स्थितम्। "णेर्विभाषा" इत्यत्र तु ण्यन्तकृतोरव्यवधानस्याऽपेक्षा कथमङ्ग्रहणेन निवार्येतेति भावः।

---

सूत्रम्

काशिका-वृत्तिः

हलश्चेजुपधात् ८।४।३१

कृत्यचः इति वर्तते। हलादिः यो धातुरिजुपधः तस्मात् परो यः कृत्प्रत्ययः तत्स्थस्थ नकारस्य अच उत्तरस्य उपसर्गस्थान् निमित्तादुत्तरस्य विभाषा णकारादेशो भवति। प्रकोपणम्, प्रकोपनम्। परिकोपणम्, परिकोपनम्। हलः इति किम्? प्रेहणम्। प्रोहणम्। इजुपधातिति किम्? प्रवपणम्। परिवपणम्। कृत्यचः इति नित्ये प्राप्ते विकल्पः। अचः इत्येव, परिभुग्नः। इजुपधस्य सर्वस्य हलन्तत्वादिह हल्ग्रहणमादिविशेषणम्।

न्यासः

हलश्चेजुपधात्?। , ८।४।३०

चकारो विबाषेत्यनुकर्षणार्थः। तेनोत्तरत्र विधिर्नित्यो भवति। "प्रकोपधम्()" ति। "कुप क्रोधे" (धा।पा।१२३३)। "प्रहणम्(), प्रोहणम्()" इति। "ईह चेष्टायाम्()" (दा।पा।६३२), "ऊह वितर्के" (दा।पा।६४८)। अत्र "कृत्यचः" ८।४।२८ इति नित्यमेव भवति। कथं पुनज्र्ञायते--हल्ग्रहणमिहादेर्विशेषणम्(), न त्वन्तस्य? इत्यत आह--"इजुपधस्य" इत्यादि। सर्व एवेजुपधा धातवो हलन्ता एवेतीजुपधादेव हलन्तत्वे लब्धे हल्ग्रहणमं क्रियमाणमादेर्विशेषणं विज्ञायते॥

बाल-मनोरमा

हलश्चेजुपधात् ६५८, ८।४।३०

हलश्चेजुपधात्। हलन्तादिति नार्थः, इजुपधस्य हलन्तत्वाऽव्यभिचारात्। किंतु हलादेरितिविवक्षितम्। तदाह--हलादेरिजुपधादिति। "परस्ये"ति शेषः। प्रोहणीयमित्यादिप्रत्युदाहरणे तु "कृत्यच" इति नित्यमेव णत्वम्।

तत्त्व-बोधिनी

हलश्चेजुपधात् ५४८, ८।४।३०

हलश्च। इजुपधस्य हलन्तत्वाऽव्यभिचाराद्धल इत्यनेन तदादित्वं लक्ष्यत इत्याह-- हलादेरिति। प्रकोपणीयमिति। "कुप् क्रोधे"। प्रोहणीयणमिति। ऊह वितर्के। अत्र "कृत्यचः" इति नित्यमेव णत्वम्। एवं प्रवपणीयमित्यत्रापि। "डुवप् बीजसंताने"।

---

सूत्रम्

काशिका-वृत्तिः

इजादेः सनुमः ८।४।३२

हलः इति वर्तते, तेन इह सामर्थ्यात् तदन्तविधिः। इजादेः सनुमः हलन्ताद् धातोः विहितो यः कृत्, तत्स्थसय् नकारस्य उपसर्गस्थान् निमित्तातुत्तरस्य णकारो भवति। प्रेङ्खणम्। प्रेङ्ग्खणम्। प्रेङ्गणम्। परेङ्गणम्। प्रोम्भणम्। परोम्भणम्। सिद्धे सत्यारम्भो नियमार्थः, इजादेरेव सनुमः, नान्यस्मातिति। प्रमङ्गनम्। परिमङ्गनम्। हलः इत्यधिकाराद् ण्यन्ते नित्यं विध्यर्थम् एतन् न भवति।

न्यासः

इजादेः सनुमः। , ८।४।३१

"हल इत्यनुवत्र्तते" इति। तदनुवृत्ते। प्रयोजनं वक्ष्यति। ननु च पूर्वसूत्रे हल्ग्रहणमादेर्विशेष म्(), अन्तस्य विशेषणेन चेहार्थः? इत्याह--"तेन" इत्यादि। न हीजादिर्धातुः कश्चिद्धलादर्विद्यते, सामथ्र्यात्()। तेन हल्ग्रहणानुवृत्तेन

तदन्तविधिर्भवति। "सनुमः" इति। सानुस्वादादित्यर्थः। कुत एतत्()? नुम्ग्रहणस्यानुस्थारीपलक्षणार्थत्वात्()। कस्मात्? पुनरेवं व्याख्यायते? नियमार्थत्वादस्य योगस्य। एवञ्चास्य नियमार्थता भवति यदि नुम्ग्रहणमनुस्वारोपलक्षणार्थं भवति, नान्यथा। असति विधेये नियमार्थता विज्ञायते। यदि नुम्ग्रहणं मुम एव प्रतिपादकं स्यात्(), नानुस्वारोपलक्षणार्थ स्यात्(), नानुस्वारोपलक्षणार्थं स्यात्()। एवञ्च सति यत्र "कृत्यचः" ८।४।२८ इत्यनेन न सिध्यति, तत्र स्यादेवास्य विधेयत्वम्()। क्वैतेन न सिध्यतीति? "इवि व्याप्तौ" (धा।पा।५८७), प्रेध्वनमिति। अत्र यद्यपि च "अट्कुप्वनुम्व्यवायेऽपि" ८।४।२ इत्यनुवत्र्तते, तथापि तेनात्र न प्राप्नोति; नुम्ग्रहणास्यानुस्वारोपलक्षणार्थत्वात्(), इह चानुस्वाराभावात्()। तस्मान्नियमार्थतामस्येच्छता नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वं वेदितष्यम्()। एवं प्रेङ्खणमित्यादौ "कृत्यचः" ८।४।२८ इति सिद्धे नियमार्थमेतत्सम्पद्यते। अनुस्वारोपलणार्थता च नुमः "इजादेः सनुमः" इति महतः सूत्रसय प्रणयनादवसीयते। यदि हि नुम्ग्रहणं नुम एव प्रतिपादकं स्यान्नानुस्वारोपलक्षणार्थम्(), तदानीं "इवेः" इत्येवं ब्राऊयात्(); न हीवेरन्यो धातुरिवादिर्हलन्तः सनुम्? सम्भवति। इखिप्रभृतयः सम्भवन्तीति चेत्()? न; अनुस्वारे कृते नुमोऽभावात्()। "प्रेङखणम्()" इति। "अख वख" [नख--प्रां३।पाठः] इत्यादौ कवर्गान्त इखिः पठ()ते; तस्येदित्त्वान्नुम्? ७।१।५८, "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारः, "अनुस्थारस्य ययि" ८।४।५७ इति ["इति--नास्ति--प्रां३।पाठे] परसवर्णत्वम्(), तस्यासिद्धत्वादनुस्वार एवायम्()। "प्रोम्भणम्()" इति। "उभ उन्भ पूरणे" (धा।पा।१३१९,१३२०) पूर्ववदनुस्वारः। ननु च "कृत्यचः" ८।४।२८ इत्येवं सिद्धमत्र, किमर्थमिदमारभ्यते? इत्याह--"सिद्धे" इत्यादि। "प्रमङ्गनम्()" इति। तत्रैव गत्यर्थवर्गे मगिः पठ()ते, क्वचित्? "प्रमङ्कनम्()" इति पाठः। स "मकि मण्डने" (धा।पा।८९) इत्यस्य द्रष्टव्यः। ननु चासति विधेये नियमार्थता भवति, इह च णेर्विभाषायां प्राप्तायां नित्यंणत्वं विधेयमस्ति--"निधिनियमसम्भवे विधिरेव ज्यायान्()" (व्या।प।१३०) इति, ततो ण्यन्तान्नित्यं विध्यर्थमेतत्? कस्मान्न भवति? इत्याह--"हल इत्यभिकारात्()" इत्यादि। पूर्वसूत्राद्धल इत्यनुवत्र्तते, तेन च तदन्तविधिरित्युक्तम्(), न हि हलन्तो भवति ण्यन्तो धातुः। किं तर्हि? सजन्तः। न च हलन्तादुच्यमानमजन्ताद्भवितुमर्हति, तस्मान्नेदे ण्यन्ते नित्यं विध्यर्थ भवति। ननु च णिलोपे कृते ण्यन्तोऽपि हलन्तो भवति, ततश्च "हलः" इत्यधिकारेऽपि स्यादेव विध्यर्थता? नैतदस्ति; विहितवशेषणाश्रयणात्()। एतच्चोद्यनिरासायाह--"इजादेः समुमो हलन्ता द्धातोर्यो विहितः कृत्()" इति। विहितविशेषणमाश्रितम्()॥

बाल-मनोरमा

इजादेः सनुमः ६५९, ८।४।३१

इजादेः। "णेर्विभाषा" इति निवृत्तम्। "कृत्यच" इत्यनुवर्तते, "हलश्चेजुपधा"दित्यतो हल इति च। प्रकृतिविशेषणत्वात्तदन्तविधिः। तथा च सनुमो हलन्तादिजुपदात् परस्य कृन्नस्य णः स्यादिति लभ्यते। एवं च प्रेङ्खणीयमित्यादौ "कृत्यचः" इत्येव सिद्धेरिदं नियमार्थमित्याह-- सनुमश्चेदिति। कृत्स्थस्यैवेत्यनन्तरं "णत्व"मिति शेषः। प्रेङ्खणीयमिति। इखधातुरिदित्त्वात्सनुम्। "इवि प्रीणने" इति धातोर्ल्युटि तस्याऽनादेशे प्रेन्वनमित्यत्रापि णत्वं स्यात्, सनुमोऽस्य इजादित्वाद्धलन्तत्वाच्चेत्यत आह-- नुम्()ग्रहणमित्यादि। अनुस्वारश्च सर्व एव गृह्रते, न तु नुम्()स्थानिक एव, अविशेषात्। तदाह-- इह त्विति। प्रोम्भणमिति। इह उम्भधातुः स्वाभाविकानुस्वारवानेव, न तु नुम्()स्थानिकानुस्वारवानिति भावः।

तत्त्व-बोधिनी

इजादेः सनुमः ५४९, ८।४।३१

इजादेः सनुमः। "कृत्यचः" इत्येव सिद्धे नियमार्थमिदमित्याह-- सनुमश्चेदित्यादि। इह "हल" इत्यनुवृत्तं तदन्तपरं न तु

तदादिपरम्। इजादेर्हलादित्वाऽसंभवात्। तदाह--- हलन्तादिति। विहित इति। यदि तु विहितविशेषणं न व्याख्यायेत तर्हि नियमार्थता न लभ्येत्, णिजन्ताद्विहितस्यापि कृतस्थनकारस्य णिलोपे कृते हलन्तात्परत्वेन "णेर्विभाषे"ति विकल्पं बाधितुं विधेः संभवात्। इष्टापत्तौ तु अणिजन्तप्रकृतिकाऽनीयप्रत्ययान्तं प्रेङ्खणीयमित्याद्युदाहरणं न स्यात्, किं तु णिजन्तप्रकृतिकमेवोदाहरणं स्यात्। किं अस्य सूत्रस्य नियमार्थत्वाऽभावात्प्रमङ्गनीयमित्यत्र "कृत्यचः" इत्यनेन णत्वं स्यात्, अतो विहितविशेषणमवश्यं स्वीकार्यमिति दिक्। नन्वेवमपि नियमार्थता न युज्यते। प्रेन्वनमित्यत्र विध्यर्थत्वसंभवात्, नुम्नकारेण व्यवधानात् "कृत्यचः" इत्यस्याऽप्राप्तेरित्यत आह---नुम्ग्रहणमिति। "अट्कुप्वाङि"ति सूत्र इवाऽत्रापि नुमाऽनुस्वारो लक्ष्यत एति विध्यर्थत्वमिह न शङ्कनीयमिति भावः। प्रोम्भणमिति। उम्भ पूरण इत्यस्माद्भावे ल्युट्। "कृत्यचःर" इत्यतोऽनुवर्तनादाह--

---

सूत्रम्

काशिका-वृत्तिः

वा निंसनिक्षनिन्दाम् ८।४।३३

उपसर्गातित् वर्तते। निंस निक्ष निनद इत्येतेषां नकारस्य उपसर्गस्थान् निमित्तातुत्तरस्य वा णकारादेशो भवति। प्रणिंसनम्, प्रनिंसनम्। प्रणिक्षणम्, प्रनिक्षणम्। प्रणिन्दनम्, प्रनिन्दनम्। णोपदेशत्वादेतेषां नित्ये प्राप्ते विकल्पः।

न्यासः

वा निंसनिक्षनिन्दाम्?। , ८।४।३२

"णिसि चुम्बन" (धा।पा।१०२५), "णिक्षि रोषे" [नख--प्रांउ।पाठः] (धा।पा।६५९), णिदि कुतसायाम्()" (धा।पा।६६)। णोपदेशत्वादेषाम्? "उपसर्ग" ८।४।१४ इत्यादिना नित्ये प्राप्ते विकल्पार्थमिदमारभ्यते। यद्येवम्(), न कत्र्तव्यं वाग्रहणम्(), पृथग्योगकरणादेव विकल्पो भविष्यति? नैतदस्ति; विपर्ययोऽपि विज्ञायेत--अयं विधिर्नित्यः, स विभाषेति। "उपसरगादसमासे" (८।४।१४) इत्यस्यानन्तरमस्मिन्? कत्र्तव्य इहास्य करणं पूर्वविधेर्नित्यत्वज्ञापनर्थम्()--द्वयोर्विभाषयोर्मध्ये ये वै विधयस्ते नित्या भवन्तीति॥

बाल-मनोरमा

वा निंसनिक्षनिन्दाम् ६६०, ८।४।३२

वा निंस। "कृत्यचः इत्यतः कृतीत्यनुवृत्तम्। अच इति च निवृत्तम्। तदाह-- एषां नस्येति।

तत्त्व-बोधिनी

वा निंसनिक्षनिन्दाम् ५५०, ८।४।३२

कृति पर इति।

---

सूत्रम्

काशिका-वृत्तिः

न भाभूपूकमिगमिप्यायीवेपाम् ८।४।३४

भा भू पू कमि गमि पयायी वेप इत्येतेषाम् उपसर्गस्थात् निमित्तादुत्तरस्य कृत्स्थस्य नकारस्य णकारादेशो न भवति। भा प्रभानम्। परिभानम्। भू प्रभवनम्। परिभवनम्। पू प्रपवनम्। परिपवनम्। पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम्। पूङो हि भवत्येव

णत्वम्, प्रपवणं सोमस्य इति। कमि प्रकमनम्। परिकमनम्। गमि प्रगमनम्। परिगमनम्। प्यायी प्रप्यायनम्। परिप्यायनम्। वेप प्रवेपनम्। परिवेपनम्। ण्यन्तानां भादीनाम् उपसङ्ख्यानं कर्तव्यम्। प्रभापनम्। परिभापनम्।

न्यासः

न भाभूपूकमिगमिप्यायीवेषाम्?। , ८।४।३३

"पूग्रहणेन पूञ्ग्रहणं द्रष्टव्यम्()" इति। "पूङ्? पवने" (धा।पा।९६६) इति भ्वादौ यः पठ()ते तस्य ग्रहणं नेष्यते। तेन क्रैयादिकस्य चेष्यते। कथं "पू" इत्युच्यमाने पूञ एव ग्रहणं लभ्यते? "कृत्यचः" ८।४।२८ इति "कृति" इति योगविभागात्()। "योपविभागादिष्टसिद्धिः" (व्या।प्र।८७) इति पूङ एव योगविभागेन णत्वं भवतीति। एवं योगविभागेन पूङः परस्य कृत्स्थस्य नकारस्य णत्वेऽसाधिते पारिशेष्यात्? पूञ एव ग्रहणं विज्ञायते। "ण्यन्तानां च" इत्यादि। ण्यन्तानां ग्रहँ शब्दान्तरत्वान्न प्राप्नोति। तस्मादुपसंख्यानं कत्र्तव्यमेवेति। तस्य प्रतिपादन मित्यर्थः। तत्रेदं प्रतिपादनम्()--नेति योगविभागः कत्र्तव्यः, तेन ण्यन्तानामपि न भविष्यतीति। न चवं सति भादीनां ग्रहणमनर्थकं स्यात्(); पूर्वयोगस्यासर्वविषयत्वज्ञापनात्()। एवं ह्यतिप्रसङ्गः परिह्मतो भवति॥

बाल-मनोरमा

न भाभूपूकमिगमिप्यायीवेपाम् ६६१, ८।४।३३

न भाभू। प्रभानीयमिति। इह "कृत्यचः" इति प्राप्तं णत्वं नेति भावः। णत्वप्रकरमोपरीति। इदं "चक्षिङः ख्या"ञिति सूत्रे भाष्ये स्पष्टम्। प्रख्यानीयमिति। इह यत्वस्याऽसिद्धतया शकारेण व्यवधानात् "कृत्यचः" इति णत्वं नेति भावः।

तत्त्व-बोधिनी

न भाभूपूकमिगमिप्यायीवेपाम् ५५१, ८।४।३३

* ण्यन्तभादीनामुपसङ्ख्यानम्। ण्यन्तभादीनामिति। ण्यन्तस्य प्रकृत्यन्तरत्वादप्राप्ते वचनम्। "हेरचङी"ति सूत्रे अचङीति पर्युदासेन "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहण"मिति ज्ञापनादेतत्सिद्धमिति केचिदाहुस्ततद्रभसात्। ज्ञापनं तु कुत्वमात्रविषयकमिति भाष्यादौ सिद्धान्तितत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

षात् पदान्तात् ८।४।३५

षकारात् पदन्तादुत्तरस्य नकारस्य णकारादेशो न भवति। निष्पानम्। दुष्पानम्। सर्पिष्पानम्। यजुष्पानम्। षातिति किम्? निर्णयः। पदान्तातिति किम्? कुष्णाति। पुष्णाति। पदे अन्तः पदान्तः इति सप्तमीसमासो ऽयम्, तेन इह न भवति, सुसर्पिष्केण। सुयजुष्केण। शेषाद् विभाषा इति कप्।

न्यासः

षात्? पदान्तस्य। , ८।४।३४

"निष्पानम्(), दुष्पानम्()" इति। "इदुदुपधसय" ८।३।४१ इति विसर्जनीयस्य षत्वम्()। इह "कृत्यचः" ८।४।२८ इत्यनेन प्राप्तिः। "सर्पिष्पानम्, यजुष्पानम्()" इति। षष्ठीसमासः। "इसुसोः सामर्थ्ये" ८।३।४४ इत्यनुवत्र्तमाने "नित्यं समासे" ८।३।४५ इत्यादिना विसर्जनीयस्य षत्वम्()। अत्र "वा भावकरणयोः" ८।४।१० इति प्राप्तिः। "पदान्तात्()" इति षष्ठीसमासोऽयमिति मन्यमानो यो देशयेत्()--अथेह णत्वप्रतिषेधः कस्मान्न भवति--सुसर्पिष्केणेति, अत्र पदस्यान्तः

षकार इति? तं प्रत्याह--"पदे अन्तः" इत्यादि। षष्ठीसमासे हि सति णत्वस्य प्रतिषेधः स्यात्(), न चायं षष्ठीसमासः, किं तर्हि/ "सप्तमी" (२।१।४०) इति योगविभागात्? समासः--पदे परभूतेऽन्तः पदान्त इति। न चात्र पदे परभूते षकारोऽन्तः; कशब्दस्यापदसंज्ञकप्वात्()। तेनेह न भवति णत्वप्रतिषेधः। शोभनं सर्पिरस्येति बहुव्रीहिः, "शेषाद्विभाषा" ५।४।१५४ इति कप्()॥

---

सूत्रम्

काशिका-वृत्तिः

नशेः षान्तस्य ८।४।३६

न इति वर्तते। नशेः षकारान्तस्य णकारादेशो न भवति। प्रनष्टः। परिनष्टः। षान्तस्य इति किम्? प्रणश्यति। परिणश्यति। अन्तग्रहणं षान्तभूतपूर्वमात्रस्य अपि यथा स्यात्, प्रनङ्क्ष्यति। परिनङ्क्षयति।

न्यासः

नशेः षान्तस्य। , ८।४।३५

"उपसर्गादसमासे" ८।४।१४ इत्यादिना प्राप्तस्य णत्वस्य प्रतिषेधः क्रियते। "प्रनष्टः" इति। "णश अदर्शने" (धा।पा।११९४), तस्मान्निष्ठा, मस्जिनशोर्झलि" ७।१।६० इति नुम्(), "अनिदितां हल उपधायाः क्ङिति" ६।४।२४ इति नलोपः; व्रश्चादिसूत्रेण ८।२।३६ षत्वम्()। "प्रणश्यति" इति। दिवादित्वाच्छ्यम्()। अथान्तग्रहणं किमर्थम्(); यावता "नशेः षः" इत्युच्यमान नशो विशिष्यमाणे "येन विधिस्तदन्तस्य" (१।१।७२) इति तदन्तविधौ षान्तस्य णत्वप्रतिषेधो भविष्यति? इत्याह--"अन्तग्रहणम्()" इत्याह। "प्रनङ्क्ष्यति" इति। पूर्ववत्? षत्वे "षढोः कः सि" ८।२।४१ इति कत्वम्()। अत्र यद्यन्तग्रहणं न क्रियेत, कत्वे षान्तता नास्तीति प्रतिषेधो न स्यात्()। अ()स्मस्तु सति कत्वेऽपि कृते भवति। एतदेव हि तस्य प्रयोजनम्()--भूतपूर्वेऽपि षान्ते प्रतिषेधो यथा स्यात्()॥

बाल-मनोरमा

नशेः षान्तस्य ३४८, ८।४।३५

नशे षान्तस्य। "रषाभ्या"मित्यतो ण इति, "न भाभूपू" इत्यतो नेति चानुवर्तते इत्यभिप्रेत्य शेषं पूरयति-- णत्वं न स्यादिति। षान्तस्येति किम्?। प्रणश्यति। भूतपूर्वेति। पूर्वं षकारस्य सत इदानीमादेशवशेन षान्तत्वाऽभावेऽपि णत्वनिषेधप्राप्त्यर्थमन्तग्रहणमित्यर्थः। प्रनङ्क्ष्यतीति। अत्र षस्य कत्वे कृतेऽपि भूतपूर्वगत्या षान्तत्वान्न णत्वमिति भावः। तृप प्रीणने। तृप्तिस्तर्पणं चेति। आद्येऽकर्मकः। द्वितीये सकर्मकः। रधादित्वाद्वेडिति मत्वाह--ततर्पिथ ततर्प्थेति। तत्रप्थेति च। "अनुदात्तस्य चर्दुपधास्ये"त्यमिति भावः। ततृपिव--ततृप्व।सिज्वेति। पक्षे पुषाद्याङिति भावः। रधादित्वादिड्विकल्पः। तत्र सिचि इट्पक्षे आह--अतर्पीदिति। इडभावपक्षे आह---अताप्र्सीदिति। रहलन्तलक्षणा वृद्धिरिति भावः। "अनुदात्तस्य चे"त्यम्पक्षे आह---अत्राप्सीदिति। पुषाद्यङ्पक्षे आह-- अतृपदिति। ङित्वान्न गुण इति भावः। दृप हर्षे इति। तृपधातुवत्। ननु रधादित्वादेव वेट्कत्वादनिट्कारिकासु तृप्यतिदृप्यत्योः पाठो व्यर्थ इत्यत आह--रदादित्वादिमौ वेट्कावमर्थमनुदात्ततेति। द्रुह जिघांसायाम्। अनुदात्तत्वाऽभावेऽपि रदादित्वाद्वेट्। तत्र इडभावे आह-- वा द्रुहमुहेति। ध्रोक्ष्यतीति। "वा द्रुहे"ति घत्वपक्षे दकारस्य भषि घस्य चर्त्वे सस्य षत्वे रूपम्। ढत्वपक्षेऽपि "षढो"रिति कत्वे एतदेव रूपम्। तदाह--ढत्वघत्वयोस्तुल्यं रूपमिति। अद्रुहदिति। पुषादित्वादङिति भावः। मुहदातुरनुदात्तत्वाऽभावेऽपि रधादिद्वेट्।मुमोहिथेति। इट्पक्षे रूपम्। अनिट्पक्षे तु "वा द्रुहमुहे"ति घत्वं मत्वाऽऽह --मुमोग्धेति। ढत्वपक्षे आह--मुमोढेति। मोक्ष्यतीति। घत्वढत्वयोस्तुल्यं रूपम्। ष्णुह ष्णिहेति। षोपदेशौ। तदाह--- सुष्णोह सिष्णेहेति।

थलादावनिट्पक्षे "वा द्रुहे"ति घत्वविकल्पः। पक्षे ढः। इतिरधादयः। आ गणान्तादिति। दिवादिगणसमाप्तिपर्यन्ताः पुषादय इत्यर्थः। सिद्धान्त इति। माधवादिभिस्तथाऽभ्युपगमादिति भावः। उपशमे इति। उपशमो-- नाशः, इन्द्रियनिग्रहश्च।

तत्त्व-बोधिनी

नशेः षान्तस्य ३०५, ८।४।३५

नशेः। "न बाभूपूकमिगनी"त्यतो नेत्यनुवर्तते। तदाह-- णत्वं न स्यादिति। "षस्ये"त्युक्तेऽपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सज्ज्ञापयतीत्याह--- भूतपूर्वेति। काष्ठानामिति। करणस्य शेषत्वविवक्षायां षष्ठी। तत्रप्थेति। "अनुदात्तस्य चर्दुपधस्ये"ति विकल्पेनाऽमागमः। रधादय इति। रधनशतृपदृपद्रुहमुहष्णुहष्णिह इत्यर्थः। उदित्तवाक्त्वायां वेट्। शमित्वा। शान्त्वा। "यस्य विभाषे"ति निष्ठायामनिट्। शान्तः।

---

सूत्रम्

काशिका-वृत्तिः

पदान्तस्य ८।४।३७

पदान्तस्य नकारस्य णकारादेशो न भवति। वृक्षान्। प्लक्षान्। अरीन्। गिरीन्।

लघु-सिद्धान्त-कौमुदी

पदान्तस्य १३९, ८।४।३६

नस्य णो न। रामान्॥

न्यासः

पदान्तस्य। , ८।४।३६

"अट्कृप्वाङ्नुञ्व्यवायेऽपि" ८।४।२ इति प्राप्तस्य णत्वस्य प्रतिषेधोऽयमुच्यते। "वृक्षान्()" इति। "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घः, "तस्माच्छसो नः पुंसि" ६।१।९९ इति सकारस्य नकारः॥

बाल-मनोरमा

पदान्तस्य १९७, ८।४।३६

पदान्तस्य। "रषाभ्यां नो ण" इत्यनुवर्तते " न भाभूपू" इत्यतो "ने"ति च, तदाह--पदान्तस्येति। अथ तृतीयाविभक्तिः। तत्र टा इति टकारस्य "चुटू" इतीत्संज्ञायां लोपः। टकारोच्चारणं तु "टाङसिङसां" "द्वितीयाटौस्स्वि"त्यादौ विशेषणार्थम्।

तत्त्व-बोधिनी

पदान्तस्य १६५, ८।४।३६

णत्वं न स्यादिति। "न भाभूपूकमिगमी"त्यतो "ने"त्यनुवर्तत इति भावः।

---

सूत्रम्

काशिका-वृत्तिः

पदव्यवाये ऽपि ८।४।३८

पदेन व्यवायः पदव्यवायः पदव्यवधानम्। पदेन व्यवाये ऽपि सति निमित्तनित्तिनोः नकारस्य नकारादेशो न भवति। माषकुम्भवापेन। चतुरङ्गयोगेन। प्रावनद्धम्। पर्यवनद्धम्। प्र गां नयामः। परि गां नयामः। पदव्यवाये ऽतद्धित इति वक्तव्यम्। इह मा भूत्, आर्द्रगोमयेण। शुष्कगोमयेण। गोश्च पुरीषे इति मयट्। स्वादौ पूर्वं पदम् इति गोशब्दः पूर्वपदम् तेन व्यवायः।

न्यासः

पदव्यवायेऽपि। , ८।४।३७

निमित्तनिमित्तिनोः परकृतत्वादुभयोरेव व्यवायो विज्ञायते, इत्यत आह--"पदेन व्यवाये सति निमित्तनिमित्तिनोः" इत्यादि। "माषकुम्भषापेन" इति। माषाणां कुम्भः माधकुम्भः, तं वपतीति "कर्मण्यण्()" ३।२।१, तदन्तात्? तृतीयैकवचनम्()। अत्र "प्रातिपदिकान्तनुम्विभक्तिषु च" ८।४।११ इति प्राप्तिः। "चतुरङ्गयोगेन" इति। अत्र "कुमति च" ८।४।१३ इति प्राप्तिः। चत्वार्यङ्गान्यस्येति बहुव्रीहिः; तेन योगश्चतुरङ्गयोगः, "कर्तृकरणे कृता बहुलम्()" २।१।३१ इति तृतीयासमासः। पूर्वत्र कुम्भशब्देन व्यवायः, उत्तरत्र त्वङ्गशब्देन। "प्रावनद्धम" इति। "णह बन्धने" (धा।पा।११६६), निष्ठा, "नहो धः" ८।२।३४, "झषस्तथोर्धोऽधः" ८।२।४०, "झलां जश्? झशि" ८।४।५२ इत्येते विधयः कत्र्तव्याः, गतिसमासः। अत्रावशब्देन व्यवायः। णत्वप्राप्तिस्तु "उपसर्गादसमासेऽपि" ८।४।१४ इत्यादिना। एवं "प्रगान्नयामः" इत्यत्रापि। व्यवधानं तु गामित्यनेन। इदं तु च्छान्दसमुदाहणम्()। न हि भाषायां व्यवहितादामृपसर्गाणां धातोः प्राक्? प्रयोगोऽस्ति, किं तर्हि? "छन्दसि परेऽपि" १।४।८० इत्यतः "छन्दसि" इत्यनुवत्र्तमाने "व्यवहिताश्च" १।४।८१ इत्यनेन छन्दसि व्यवहितो भवति। गोशब्दस्यौकारस्य "औतोऽम्शसोः" ६।१।९० इत्यात्त्वम्()। "पदव्यवाये" इत्यादि। योऽयं पदव्यवाये प्रतिषेध उच्यते सोऽतद्धिते भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानमित्यर्थः। तत्रेदं व्याख्यानमित्यर्थः। तत्रेदं व्याख्यानम्()--"वा निंस निक्ष निन्दाम्()" ८।४।३२ इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणमनुवत्र्तते; सा च व्यवस्थितविभाषा, तेन तद्धिते प्रतिषेधो न भविष्यतीति। "आद्र्रगोमर्येण" इति। गोरिदं गोमयम्(), "गोश्च पुरीषे" ४।३।१४३ इति मयट्()। आद्र्र च तत्? गोमयञ्चेति कर्मधारयः। गोशब्देन पदेन ध्यवधानम्()। पदसंज्ञा चास्य "स्वादिष्वसर्वनामस्थाने" १।४।१७ इत्यनेन॥

बाल-मनोरमा

पदव्यवायेऽपि १०४२, ८।४।३७

पदव्यवायेऽपि। पदेन व्यवधाने इति। "पदेने"त्यनन्तरं "निमित्तकार्यिणो"रिति शेषः। न स्यादिति। "न भाभूपूकमिगमी"त्यस्तदनुवृत्तेरिति भावः। माषुकम्भवापेनेति। माषाणां कुम्भो माषकुम्भः, तस्य वाप इति षष्ठीसमासः। अत्र निमित्तकार्यिणोः षकारनकारयोः कुम्भपदेन व्यवधानान्न णत्वम्। चतुरङ्गयोगेनेति। चत्वारि अङ्गानि रथगजतुरगपदातिरूपाणि यस्य तत् चतुरङ्गं=सैन्यम्, तेन योग इति विग्रहः। अत्र निमित्तकार्यिणोरङ्गपदेन व्यवधानान्न णत्वम्। उभयत्रापि कुम्भशब्दस्य अङ्गशब्दस्य च प्रत्ययलक्षणेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वं बोध्यम्। "उत्तरपदे चाऽपदादिविधौ प्रतिषेधः" इति निषेधस्तु नात्र प्रवर्तते, उत्तरखण्डस्य कार्यभाक्त्वे सत्येव तत्प्रवृत्तेः। अत एव "न लुमताङ्गस्ये"त्यत्र परमवाचेत्येव तस्याः परिभाषाया उदाहरणमुक्तं भाष्ये। अत्र हि वाक्छब्दस्य उत्तरपदस्य कुत्वरूपकार्यभाक्त्वामस्तीति तस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाऽभावात्कुत्वं न भवति। अत एव च "कुमति चे"ति सूत्रे भाष्ये माषाणां कुम्भो माषकुम्भः, बाषकुम्भस्य वापो माषकुम्भवापः। तेन माषकुम्भवापेनेत्यत्र "पदव्यवायेऽपीति निषेधप्रवृत्तये "प्रातिपदिकान्ते"ति णत्वप्रवृत्तिरुपन्यस्ता सङ्गच्छते। नचैवं सति रम्यविणेत्यत्र "वि" इत्युत्तरखण्डस्य कार्यभाक्त्वाऽभावात् "उत्तरपदत्वे चाऽपदादिविधौ" इति प्रत्ययलक्षणनिषेधस्याऽप्रवृत्तौ अन्तर्वर्तिविभक्त्याश्रयणेन "पदव्यवायेऽपी"ति णत्वनिषेधः। एतेन पुनर्भूणामित्यत्रापि णत्वं निर्बाधम्।

अतद्धिते इति। अतद्धिते परे यत्पदं तेन व्यवधानेऽयं निषेधो, नतु तद्धितपरकपदेनेत्यर्थः। आद्र्रगोमयेणेति। गोः पुरीषं गोमयं। "गोश्च पुरीषे" इति गोशब्दात् षष्ठ()न्तात् मयट् तद्धितः, तद्धितान्तप्रातिपदिकावयवत्वात् सुपो लुक्। आद्र्रं गोमयमिति कर्मधारयः। यद्यपि प्रत्ययलक्षणेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य गोशब्दो मयटि पदन्तथापि तस्य तद्धितपरकतया तेन व्यवधानेऽपि रेफात्परस्य णत्वं भवत्येव, अस्मिन् प्रकरणे अटकुप्वाङ्()नुम्व्यवायस्य अबाधकत्वात्। शुष्कगोमयेणेति। षात्परस्योदाहरणम्। भाष्ये तु "पदान्तस्ये"ति पूर्वसूत्रात्पदग्रहणानुवृत्तिमभिप्रेत्य पदे परतः पदेन व्यवाये णत्वं नेत्याश्रित्य वार्तिकमिदं प्रत्याख्यातम्।

तत्त्व-बोधिनी

पदव्यवायेऽपि ८७२, ८।४।३७

पदेन व्यवधान इति। निमित्तनिमित्तिनोर्मध्ये पदे सति णत्वं नेत्यर्थः। माषकुम्भवापेनेति। माषकुम्भं वपतीति "कर्मण्यण्"। उपपदसमासः। चतुरङ्गयोगेनेति। "चत्वार्यङ्गान्यस्य"तेन योगः" इति मनोरमायां विगृहितम्। तदयुक्तम्। "उत्तरपदत्वे चाऽपदादिविधौ"इति प्रत्ययलक्षणप्रतिषेधादङ्गशब्दस्याऽपदत्वात्। तस्मात् "अङ्गानां योगोऽङ्गयोगश्चतुर्णामङ्गयोगः" इत्येव विग्रहीतव्यम्। न च "चतुरङ्गेन योगः इति विग्रहेऽप्यङ्गशब्द उत्तरपदं नेति प्रत्ययलक्षणप्रतिषेधो न प्रवर्तत इति शङ्क्यं, तस्य पूर्वसमासस्योत्तरपदत्वात्, उत्तरपदत्वे चे"ति प्रतिषेधवचनस्यापि "उत्तरस्य=समासचरमावयवस्य पदत्वे कर्तव्ये पदादिविधिभिन्ने प्रत्ययलक्षणं न प्रवर्तते"इत्यर्था ब्युपगमाच्च। "शाकपार्थिवादीनामुत्तरपदलोपः", प्रादिभ्यो धातुजस्ये"त्यादौ तूत्तरपदशब्देन समासचरमावयवमात्रं गृह्रते इति तत्र प्रत्ययलक्षणप्रवृत्त्यभावेऽपि न क्षतिः। इह तु पदत्वलाभाय प्रत्ययलक्षणप्रवृत्तिरपेक्षिता। एवं च "माषकुम्भवापेने"

त्यात्रापि कुम्भस्य वापः--कुम्भवापः। कुम्भशब्दः कुम्भपरिमितधान्ये भाक्तः। "माषाणां कुम्भवापः" इथि विग्रहीतव्यमिति नव्याः। केचुत्तु---"अपदादिविधौ"इत्यत्र "पदान्तविधौ"इत्यर्थं परिकल्प्य "पदव्यवायेऽपी" त्यस्य पदान्तविधित्वाऽभावान्नास्त्यत्र प्रत्ययलक्षणनिषेध इत्याहुः। तदपरे न क्षमन्ते। तथा हि सति लाघवात् "पदन्तविधौ"इत्येव ब्राऊयात्, न तु "अपदादिविधौ"इति दिक्। [किंचोत्तरपदत्वे इति वचनस्य पदान्तविधौ कर्तव्ये प्रतिषेध इत्यर्थाभ्युपगमे पदमदण्डिनाविति "ङमो ह्रस्वदची"ति सूत्रस्थमनोरमाग्रन्थेनैव विरोध इत्यलमियता]।

अतद्धित इति वाच्यम्। अतद्धित इथि। "व्यवधायकपदस्य तद्धितश्चेत्परो न भवति, तदा निषेधः"इत्यर्थः। आद्र्रगोमयेणेति। इह गोशब्दः पदम्। "उत्तरपदत्वे चे"ति निषेधोऽत्र न शङ्क्यः, गोमयशब्दस्योत्तरपदत्वात्, गोशब्दस्य च "स्वादिषु"इति पदत्वात्।

---

सूत्रम्

काशिका-वृत्तिः

क्षुभ्नादिषु च ८।४।३९

न इति वर्तते। क्षुभ्ना इत्येवम् आदिषु शब्देषु नकारस्य णकारदेशो न भवति। क्षुभ्नाति। अजादेशस्य स्थानिवद्भावादिह अपि प्रतिषेधो भवति। क्षुभ्नीतः। क्षुभ्नन्ति। नृनमनः पूर्वपदात संज्ञायाम् इति प्राप्तिः। छन्दस्यृदवग्रहात् ८।४।२५ इति च प्राप्नोति। नन्दिन्, नन्दन, नगर, एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति हरिनन्दी। हरिनन्दनः। गिरिनगरम्। नृतिं यङि प्रयोजयन्ति नरीनृयते। तृप्नु तृप्नोति। नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप, एतानि उत्तरपदानि प्रयोजयन्ति। परिनर्तनम्, परिगहनम् इति संज्ञायाम् पूर्वपदात् संज्ञायाम् इति प्राप्नोति। परिनन्दनम् इत्यत्र

उपसर्गादसमासे ऽपि इति प्राप्नोति। शरनिवेशः, शरनिवासः, शराग्निः, दर्भानूपः इत्येताः संज्ञाः। आचार्यादणत्वं च। आचार्यभोजीनः। आचार्यानी। इरिकादिभ्यो वनोत्तरपदेभ्यः संज्ञयाम्। इरिका, तिमिर, समीर, कुबेर, हरि, कर्मार इत्युत्तरपदवनशब्दस्थस्य संज्ञायाम्। क्षुभ्नादिराकृतिगणः। अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः।
लघु-सिद्धान्त-कौमुदी
क्षुभ्नादिषु च ७२०, ८।४।३८

णत्वं न। नरीनृत्यते। जरीगृह्यते॥
लघु-सिद्धान्त-कौमुदी
इति यङन्त प्रक्रिया ७२०, ८।४।३८

लघु-सिद्धान्त-कौमुदी
अथ यङ्लुक् प्रक्रिया ७२०, ८।४।३८

न्यासः
क्षुभ्नादिषु च। , ८।४।३८

"रवाभ्मां नो णः" ८।४।१ इत्यादिशास्त्रेण प्राप्तस्य णत्वस्य प्रतिषेधोऽयमुच्यते। "क्षुभ्ना" इति स्वरूपग्रहणमेतत्(), न धातुग्रहणम्(); अन्यथा "क्षोभणम्()" इत्यत्रापि स्यात्? प्रतिषेधः। यद्येवम्(), "क्षभ्नन्ति" इत्यत्र "श्नाभ्यास्तयोरातः" ६।४।११२ इत्याकारलोपे कृते, "क्षुभ्नीतः" ["क्षुध्वनीतः--प्रांउ।पाठः] इत्यत्र "ई इल्यधोः" ६।४।११३ इतीत्वे कृते णत्वस्य प्रतिषेधो न स्यात्(); स्वरूपस्याभावात्()? अजादेशस्य स्थानिवद्भावादेश विकृतस्यानन्यत्वाद्वा (व्या।प।१६) भविष्यतीत्यदोषः। "एतान्युत्तरपदानौ" इत्यादि। एतेन "पूर्वपदात्? संज्ञायामगः" ८।४।३ इति प्राप्तिं दर्शयति। "हरिन्दी" इति। ताच्छील्ये णिनिः। "हरिनन्दनः" इति। त्युडन्तेन समासः। एवं "हरिनगरम्()" [गिरि नगरम्()"--काशिका, पदमञ्जरी च] इत्यत्रापि नगरेण षष्ठीसमासः। "नरीनृत्यते" इति। "रीगृदुपधस्य च" ७।४।९० इत्यभ्यासस्य रीगागमः, "अट्कुप्वाङ्()" ८।४।२ एवं "तृप्नोति" इत्यत्रापि। "तृप प्रीणने" (धा।पा।२१९५), व्यत्वयेन श्नुः। "परिनत्र्तनम्(), परिगहनम्? इति। गतिसमासौ। "कृत्यचः" ८।४।२८ इति प्राप्तिः। "शरनिवेशा"दयो "दर्भानूप" पर्यन्ताः षष्ठीसमासाः। "अनूपः" ति। अमुगता आपो यस्मिन्निति बहुव्रीहिः, "ऋक्पूरब्धूःपथामानक्षे" ५।४।७४ इत्यकारः समासान्तः, "ऊदनोर्देशे" ६।३।९७ इत्युत्त्वम्(), सवर्णदीर्घत्वम्()। "आचार्यादणत्वञ्च" इति। चकाराण्णत्वं च, तेन विभाषा सम्पद्यते। व्यवस्थितविभाषाविज्ञानादाचार्येणेति नित्यं णत्वं भवति। "आचार्यभोगौनः" इति। "आत्मन्वि()आजनभोगोत्तरपदात्? खः" ५।१।९। "अट्कुप्वाङ्()" ८।४।२ इत्यादिना प्राप्तिः। एवं "आचार्यानी" इत्यत्रापि। "इन्द्रवरुण" ४।१।४९ इत्यादिना ङीष्(), आनुगागमश्च। चकारस्यानुक्तसमुच्चयार्थत्वावपरिसमा()प्त क्षुभ्नादेर्बोधयतीति मत्वाऽऽह--"क्षुभ्नादिराकृतिगणः" इति॥["क्षुध्वनीतः--प्रांउ।पाठः]
बाल-मनोरमा
क्षुभ्नादिषु च ७८२, ८।४।३८

क्षुभ्नादिषु च। "रषाभ्या"मित्यतो "ण" इति, "न भाभूपूकमी"त्यतो "ने"ति चानुवर्तते। तदाह--एष्विति। दीर्घाह्नी प्रावृडिति। वर्षर्तौ प्रावृट्शब्दः स्त्रीलिङ्गः। "स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः। दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः। "अन उपधालोपिनोऽन्यतरस्या"मिति ङीप्। "अल्लोपोऽनः" इत्युपधालोपः। "अह्नोऽदन्ता"दिति णत्वं तु क्षुभ्नादित्वान्नेति भावः। ननु क्षुभ्नादिषु "दीर्घाह्नी"त्यस्य पाठो व्यर्थः, "अह्नोऽदन्तात्" इत्यत्र हि "अर्हे"त्यदन्तात्

षष्ठ()र्थे प्रथमा। अदन्तपूर्वपदस्थान्निमित्तात्परस्याऽह्नशब्दस्य नस्य णत्वं स्यादिति तदर्थः। दीर्घाह्नीत्यत्र च?ह्नादेशस्याप्रसक्त्याऽदन्तत्वाऽभावादेव णत्वस्याऽप्राप्तौ किं तन्नुवृत्त्यर्थेन क्षुभ्नादिपाठेनेत्यत आह--एवंचेति। एवं सति=दीर्घाह्नीशब्दस्य क्षुभ्नादिपाठे सति, एतदर्थम्--"अह्नोऽदन्ता"दिति णत्वनिवृत्त्यर्थम्, अह्नेत्यस्य अदन्तत्वानुसरणं, षष्ठ()र्थे व्यत्ययेन प्रथमानुसरणं क्लेशावहं न कर्तव्यमित्यर्थः। क्षुभ्नादिपाठादेव णत्वनिवृत्तिसिद्धेरिति भावः। ननु दीर्घाह्नीत्यस्य णत्वाऽभावय किं क्षुभ्नादिपाठो।()भ्युपगम्यतामुत "अह्ने"त्यस्याऽदन्तत्वमित्यत्र विनिगमनाविरह इत्यत आह--प्रातिपदिकान्तेति। अथ "अह्नोऽदन्ता"दित्यत्र पूर्वपदविशेषणेऽदन्तादिति तपरत्वस्य प्रयोजनमाह--अदन्तादिति। पराह्न इति। "प्रादयो गताद्यर्थे" इति समासः, टच्, अव्ययात्परत्वादह्नादेशः परेति पूर्वपदस्याऽदन्तत्वाभावान्न णत्वमिति भावः।

तत्त्व-बोधिनी

क्षुभ्नादिषु च ६८९, ८।४।३८

व्यह्नेति। "अह्नोऽह्न"इति सूत्रेऽह्नदेसं प्रत्यख्याय "अच्प्रत्यन्ववे"त्यतोऽचमनुवर्त्त्य "टजपवादोऽ"जिति व्याचक्षाणस्य भाष्यकारस्य मते तु निर्विवाद एवात्र टाप्। कथं तर्हि कालनिर्णयदीपिकायां व्यह्नीति प्रयोग इति चेत्, अत्राहुः--द्वे अहनी यस्यां तिथाविति बहुव्रीहौ नान्तलक्षणो ङीब्बोध्यः। "द्वयोरह्नोर्भव"इति व्याख्यानग्रन्थस्तु फलितार्थकथन परतया ज्ञेय इति। सङ्ख्यादिभिन्नस्य तत्पुरुषस्य समाहारे वृत्यसम्भवादाह---स्पष्टार्थमिति।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ स्तोः ६।१ ४१ श्चुना ३।१ श्चुः १।१ संहितायाम् ७।१ ८।२।१०८

समासः॥

सश्च तुश्च स्तुः, तस्य ॰ समाहारद्वन्द्वः॥ शश्च चुश्च श्चुः, तेन ॰ समाहारद्वन्द्वः। एवं श्चुः इत्यत्रापि ज्ञेयम्

अर्थः॥

सकार-तवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ आदेशौ भवतः।

उदाहरणम्॥

सकारस्य शकारेण -- वृक्षस् शेते = वृक्षश्शेते, प्लक्षश्शेते॥ शकारस्य चवर्गेण -- वृक्षस् चिनोति = वृक्षश्चिनोति, प्लक्षश्चिनोति। वृक्षस् छादयति = वृक्षश्छादयति, प्लक्षश्छादयति॥ तवर्गस्य शकारेण -- अग्निचित् शेते = अग्निचिच्छेते, सोमसुच्छेते॥ तवर्गस्य चकारेण -- अग्निचिच्चिनोति, सोमसुच्चिनोति। अग्निचिच्छादयति, सोमसुच्छादयति। अग्निचिज्जयति, सोमसुज्जयति। अग्निचिज्झकारः, सोमसुज्झकारः। अग्निचिञ्ञकारः। सोमसुञ्ञकारः॥ मस्जेः -- मज्जति। भ्रस्जेः -- भृज्जति। यजेः -- यज्ञः। याचेः -- याच्ञा॥
काशिका-वृत्तिः
स्तोः श्चुना श्चुः ८।४।४०

सकारतवर्गयोः शकारचवर्गाभ्यां सन्निपाते शकारचवर्गावादेशौ भवतः। स्तोः श्चुना इति यथासङ्ख्यम् अत्र नेष्यते। सकारस्य शकारेण, चवर्गेण, द्वाभ्याम् अपि सन्निपाते शकारो भवति। तवर्गस्य अपि च शकारेण, चवर्गेन च सन्निपाते चवर्गो भवति। आदेशे तु यथासङ्ख्यम् इस्यते, सकारस्य शकारः, तवर्गस्य च चवर्गः इति। सकारस्य शकारेण सन्निपाते वृक्षश्शेते। प्लक्षश्शेते। तस्य एव चवर्गेण वृक्षश्चिनोति। प्लक्षश्चिनोति। वृक्षश्छादयति। प्लक्षश्छादयति। तवर्गस्य शकारेण अग्निचिच्छेते। सोमसुच्छेते। तस्य एव चवर्गेण अग्निचिच्चिनोति। सोमसुच्चिनोति। अग्निचिच्छादयति। सोमसुच्छादयति। अग्निचिज्जयति। सोमसुज्जयति। अग्निचिज्झकारः। असोमसुज्झकारः। अग्निचिञ्ञकारः। सोमसुञ्ञकारः। मस्जेः मज्जति। भ्रस्जेः भृज्जति। व्रश्चेः वृश्चति। यजेः यज्ञः। याचेः याच्ञा। शात् ८।४।४३ इति प्रतिषेधो ज्ञापकः सङ्ख्यातानुदेशाभावस्य। स्तोः श्चौ इति सप्तमीनिर्देशो न कृतः, पूर्वेण परेण च श्चुना सन्निपाते श्चुत्वं यथा स्यातिति।

लघु-सिद्धान्त-कौमुदी

स्तोः श्चुना श्चुः ६२, ८।४।३९

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। रामश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय॥

न्यासः

स्तोः श्चुना श्चुः। , ८।४।३९

"शकारचवर्याभ्यां सन्निपाते" इत्यादि। सन्निपाते=आनन्तर्य इत्यर्थः। "वृक्षश्शेते" इति। "वा शरि" ८।३।३६ इति विसर्गस्य सकारः। तस्यानेन शकारः। "यज्जति" इति। "टु मस्जो शुद्धौ" (धा।पा।१४१५), "झलां जश्? झशि" ८।४।५२ इति सकारस्यदकारः, तस्यानेन जकारः। श्चुत्वे कत्र्तव्ये जश्त्वत्यासिद्धत्वं नाशङ्कनीयम्(); "मस्जिनशोर्झलि" ७।१।६० इत्यत्र मज्जेः कृतचुत्वनिर्देशात्()। असिद्धत्वे ह्ययं निर्देशो नोपपद्यते। "भृज्जति, वृश्चति" इति। ग्रह्यादि ६।१।१६ सूत्रेण सम्प्रसारणम्()। "यज्ञः, पाञ्ञा" इति। यजियाचिभ्यां "यजयाच" ३।३।९० इत्यादिना नङ्()। इह सकारतवर्गौ द्वौ कार्यिणौ, निमित्ते अपि द्वे एव--शकारचवर्गौः, ततश्च साम्यात्? संख्यातानुदेशः प्राप्नोति, सकारस्य शकारेण सन्निपाते तवर्गस्य चवर्गेण कस्मान्न भवति? इत्याह--"शात्()" इत्यादि। प्राप्तिपूर्वका हि प्रतिषेधा भवन्ति। यदि निमित्तं प्रति यथासंख्यं स्यात्(), एवं सति शात्परस्य तवर्गस्य चुत्वप्राप्तिरेव नास्तीति "शात्()" ८।४।४३ इति प्रतिषेधं न कुर्यात्(), कृतश्चासौ, अतः स ज्ञापयति--संख्यातामुदेशो न भवव्रीति। "स्तोश्चौ" इति लाघवार्थं सप्तम्या निर्देशे कत्र्तव्ये "श्चुना" इति तृतीयानिर्देशः पूर्वभूतेनापि सन्निपातेन यथा स्यात्()--यज्ञः, याच्ञेति। सप्तनीनिर्देशे हि "तस्मिन्निति निर्दिष्टे पूर्वस्य" १।१।६५ इति परभूतेनैव स्यात्(), न पूर्वभूतेन॥

बाल-मनोरमा

स्तोः श्चुना श्चुः ११२, ८।४।३९

स्तोः श्चुना श्चुः। स् च तुश्चेति समाहारद्वन्द्वः। पुंस्त्वमार्षम्। इतरेतरयोगद्वन्द्वो वा, तथा सत्येकवचनमार्षम्। एवं "श्चुना श्चु" रित्यत्रापि। "श्चुने"ति सहार्थे तृतीया, "योगे" इत्यध्याहार्यं। ततश्च सहशब्दयोगाऽभावेऽपि तदर्थस्य गम्यत्वात्तृतीया युज्यते, अस्मादेव निर्देशात्। तदाह-सकारतवर्गयोरिति। अत्र स्थान्यादेशानां यथासङ्ख्यं भवति। ततस्च सकारस्य शकारस्तवर्गस्य चवर्गः। तत्रापि त-थ-द-ध-ने त्यादिक्रमस्याप्यनादिलोकसिद्धत्वात्। "श्चुनायोगे"इत्यत्र न यथासंख्यमित्युत्तरसूत्रेवक्ष्यते, ततश्च सकारस्य तवर्गस्य शकारेण चवर्गेण च यथासंभवं योगे श्चुत्वं भवति। रामश्शेते इति। रामस्-शेते इति स्थिते शकारेण योगात्सकारस्य शकारः। "श्चुना योग इत्यत्र न यथासङ्ख्य"मित्यस्य प्रयोजनं दर्शयितुं सकारस्य चकारयोगेऽप्युदाहरति--रामश्चिनोतीति। रामस्-चिनोतीति स्थिते चवर्गयोगात्सकारस्य शकारः।

"श्चुना योग" इत्यत्रापि यथासङ्ख्याश्रयणे तु इह सकारस्य शकारयोगा।ञभावाच्छकारो नस्यादिति भावः। सच्चिदिति। सत्-चिदिति स्थिते श्चुत्वस्यासिद्धत्वाज्जश्त्वेन तकारस्य दत्वे, तस्य श्चुत्वेन जकारे, "खरि चे"ति चर्त्वेन तस्य चकारे च रूपम्। शा()ङ्गञ्जयेति। शा()ङ्गन्-जयेति स्थिते, चवर्गयोगान्नकारस्य श्चुत्वेन ञकारादेशः।

तत्त्व-बोधिनी

स्तोः श्चुना श्चुः ९२, ८।४।३९

स्तोः श्चुना श्चुः। "स्तो"रिति समाहारद्वन्द्वः, सौत्रं पुंस्त्वम्। एवं "श्चुः" "ष्टु"रित्यपि बोध्यम्। श्चुनेति। "सह युक्ते-" इति सूत्रे "विनापि तद्योगं तृतीये"ति वक्ष्यमाणत्वात्तृतीया। योगे इति। एतदध्याहारलभ्यम्। अत्र स्थान्यादेशयोर्यथासङ्ख्यम्। निमित्तकार्यिणोस्तु न, "शा"दिति ज्ञापकात्। यथासङ्ख्यसूत्रमिह नोपन्यस्तम्, "स्थानेऽन्तरतमः" इत्यनेनापि इष्टसिद्धेर्नात्यन्तावश्यकत्वात्। हरिश्शेत इति। "वा शरी"ति पाक्षिकत्वाद्विसर्जनीयस्य शेन योगे शः, चवर्गयोगे "रामश्चिनोति"। तवर्गस्य तु चवर्गयोगे "सच्चि"दित्यादि। शेन योगे तु तच्छिव इत्याद्युदाहरिष्यति।

---

सूत्रम्

काशिका-वृत्तिः

ष्टुना ष्टुः ८।४।४१

स्तोः इति वर्तते। सकारतवर्गयोः षकारट्वर्गाभ्यां सन्निपाते षकारटवर्गावादेशौ भवतः। तत्र अपि तथैव सङ्ख्यातानुदेशभावः। षकारेण सकारस्य वृक्षष्षण्डे। प्लक्षष्षण्डे। तस्य एव टवर्गेण वृक्षष्टीकते। प्लक्षष्टीकते। वृक्षष्ठकारः। प्लक्षष्ठकारः। तवर्गस्य षकारेण पेष्टा। पेष्टुम्। पेष्टव्यम्। कृषीष्ट। कृषीष्ठाः। तस्य एव टवर्गेण अग्निचिट्टीकते। सोमसुट्टीकते। अग्निचिड्ढकारः। सोमसुड्ढकारः। अग्निचिड्डीनः। सोमसुड्डीनः। अग्निचिड्ढौकते। सोमसुड्ढौकते। अग्निचिण्णकारः। सोमसुण्णकारः। अट्ट अट्टति। अड्ड अड्डति।

लघु-सिद्धान्त-कौमुदी

ष्टुना ष्टुः ६४, ८।४।४०

स्तोः ष्टुना योगे ष्टुः स्यात्। रामष्षष्ठः। रामष्टीकते। पेष्टा। तट्टीका। चक्रिण्ढौकसे॥

लघु-सिद्धान्त-कौमुदी

उदः स्थास्तम्भोः पूर्वस्य ७०, ८।४।४०

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः॥

न्यासः

ष्टुना ष्टुः। , ८।४।४०

अत्रापि संख्यातानुदेशाभावस्य "तोः षि" ८।४।४२ इति प्रतिषेधो ज्ञापकः। यद्यत्रापि निमित्तं प्रति संख्यातानुदेकः स्यात्(), षकारेण सन्निपाते तवर्गस्य ष्टुत्वमेव न प्राप्नोति। "तोः षि" ८।४।४२ इति प्रतिषेधं न कुर्यात्(), कृतश्चासौ, अतः स एव लिङ्गमिह संख्यातानुदेशाभावत्य। "वृक्षष्टीकते" इति। तिकृ टिकृ टीकृ रगि ["रघिः"--धा।पाठ] लधि गत्यर्थाः (धा।पा।१०५,१०३,१०४,१०७,१०८)। "पेष्टा" इति। "पिष्लृ सञ्चूर्णने" (धा।पा।१४५२)। "कृषीष्ट, कृषीष्ठाः" इति। करोतेराशिवि लिङ्(), तस्य तथासौ, सीयुट्(), "लोपो व्योर्वलि" ६।१।६४ इति यकादलोपः, "सुट तिथोः" ३।४।१०७ इति सुट्(), "आदेशप्रत्यययोः" ८।३।५९ इति षत्वम्(), अनेन ष्टुत्वम्()। "अग्निचिड्डीनः" इति। "डीङ्()["ड्ट"--धा।पा।]

विहायसा गतौ" (धा।पा।९६८), स्वादित्वात्? "ओदितश्च" ८।२।४५ इति नत्यम्()। "अग्निचिड्ढौक्के" इति। "ढौकृ गतौ" (धा।पा।९८) "अट्टति, अड्ढति" इति। "अत्ट [अतिक्रमहिंसयोः--धा।पा।] अतिक्रमणहिंसयोः" (धा।पा।२५४), [अड्ड--धा।पा।] (धा।पा।२५४), "अदड अनियोगे" (धा।पा।३४८) तकारवकारोपधयोरेतयोर्गणे पाठः क्विबन्तयोल्तयोः संयोगान्तलोपे सकारदकारयोः श्रवणार्थः॥

बाल-मनोरमा

ष्टुना ष्टुः ११४, ८।४।४०

ष्टुना ष्टुः। "स्तो"रित्यनुवर्तते। तदाह-स्तोरिति। अत्रापि स्थान्यादेशानां यतासंख्यं, नतु"ष्टुयोगे"इत्यत्र। रामष्षष्ठ इति। रामस्-षष्ट इति स्थिते षकारयोगात्सस्य ष्टुत्वेन षः। अत्रापि "ष्टुना योग" इत्यत्र न यथासंख्यमित्यस्य प्रयोजनं दर्शयितुं सकारस्य टवर्गयोगेऽपि उदाहरति--रामष्टीकते इति। "टीकृ गतौ"। तट्टीकेति। तस्य-टीकेति विग्रहः। "तद्टीके"ति स्थिते टुत्वेन दस्य डत्वे चत्र्वम्। चक्रिण्ढोकसे इति। ढौकृ गतौ। चक्रिन् ढोकसे इति स्थिते टवर्गयोगान्नस्य टुत्वेन णत्वम्। न पदान्तात्। "अना"मिति "तो"रित्यस्य विशेषणं। ननु भिन्नविभक्तिकमेतत्कथं तद्विशेषणमित्यत आह--अनामिति लुप्तषष्ठीकमिति। नामवयवभिन्नस्येत्यर्थः। "स्तोः" "ष्टु"रित्यनुवर्तते।

तत्त्व-बोधिनी

ष्टुना ष्टुः ९४, ८।४।४०

ष्टुना ष्टुः। इहापि कार्यिनिमित्तयोर्यथासङ्ख्यं न, "तोःषी"ति ज्ञापकात्। सर्पिष्टममिति। "ह्रस्वात्तादौ तद्धिते" इति षत्वम्। यरो। पदान्तस्येति किम्?। वेद्मि। स्तभ्नाति। स्पर्शे चरितार्थ इति। प्रसिद्धप्रयोगाभिप्रायेणेदमुक्तम्। "कमल्म्मुरारिः" "वृक्षव्न्नेते"त्यादौ लकारवकारयोरनुनासिकप्रवृत्तौ बाधकाऽभावात्। "स्पर्शस्यैवेष्यते"इति प्राचो ग्रन्थानुरोधेन स्पर्शभिन्नेष्वनुनासिकविधिर्न प्रवर्ततेऽनभिधानादिति वा योज्यम्। रेफे न प्रवर्तत इति। यद्यपि "व्यक्तिः पदार्थ" इति पक्षे लक्ष्यभेदे लक्षणभेदादस्यां व्यक्तौ लक्षणस्याऽचरितार्थत्वाद्रेफेऽपि प्रवृत्तिर्दुर्वारैव, तथापि लक्ष्यानुरोधेन जातिपक्षमाश्रित्येदमुक्तम्। दकारनिपातनादिति। ननु यवादिगणे "ककु"दित्येव पठ()ते नतु "ककुद्मन्त" इति मतुब्विशिष्टम्। तथाच यरोऽनुनासिको दुर्वारः। न च यरोऽनुनासिकप्रवृत्तौ झयन्तत्वाऽभावेन "झयः" इति मतुपो मकारस्य वत्वाप्रसत्तया यवादिगणे "ककु"दिति पाठो निरर्थकः स्यादिति वाच्यम्; अनुनासिकविधेरलसिद्धत्वेन झयन्तत्वानपायाद्गणे तत्पाठस्य सार्थक्यादिति चेदत्राहुः, यद्यत्र ककुद्दकारस्य नकार इष्टः स्यात्तर्हि गणे "ककु" न्नित्येव पठेन्न "ककु"दिति। मतुपः प्रकृतिभूतककुच्छब्दस्य नान्तत्वनिपातनेऽप्यन्यत्र दकारान्तप्रयोगस्य निर्बाधत्वात्। तस्माद्यरोऽनुनासिकोऽत्र न प्रवर्तत इति। अन्येत्वाहुः-"यचि भं तसौ मत्वर्थे" इति संहितायां पाठे "तसा"विति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम्। "तसा"विति द्विवचननिर्देशस्तु दतयोः समाहारद्वन्द्वं कृत्वा इतरेतरयोगद्वन्द्वे कृते समुपपद्यत इति।

---

सूत्रम्

काशिका-वृत्तिः

न पदान्ताट् टोरनाम् ८।४।४२

पदान्ताट् टवर्गादुत्तरस्य स्तोः ष्टुत्वं न भवति नाम् इत्येतद् वर्जयित्वा। श्वलिट् साये। मधुलिट् तरति। पदान्तातिति किम्? ईड स्तुतौ ईट्टे। टोः इति किम्? सर्पिष्टमम्। अनाम् इति किम्? षण्णाम्। अत्यल्पम् इदम् उच्यते। अनाम्नवतिनगरीणाम् इति वक्तव्यम्। षण्णाम्। षण्णवतिः। षण्णवरी।

लघु-सिद्धान्त-कौमुदी

न पदान्ताट्टोरनाम् ६५, ८।४।४१

पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। पदान्तात्किम्? ईट्टे। टोः किम्? सर्पिष्टमम्। (अनाम्नवतिनगरीणामिति वाच्यम्)। षण्णवतिः। षण्णगर्य्यः॥

न्यासः

न पदान्ताट्टोरनाम्?। , ८।४।४१

"अनाम्()" इति षष्ठीबहुवचनस्यागतनुट्कस्य प्रतिषेधः। "()आलिट्साये" इति। यदा "डः सि धुट्()" ८।३।२९ इति धुट नास्ति, तदैतदुदाहरणम्()। "ईट्टे" इति। "इड स्तुतौ" (धा।पा।१०२९)। अनुदात्तेत्त्वादात्मनेपदम्(), अदादित्वाच्छपो लुक्(), "खरि च" ८।४।५४ इति डकारस्य टः। "सर्पिष्टमम्()" इति। "अतिशायने तमप्()" ५।३।५५, "ह्रस्वात्तादौ तद्धिते" ८।३।१०३ इति सकारस्य मूर्धस्यः। "षज्णाम्()" इति। "षट्चतुर्भ्यश्च" ७।१।५५ इति गुट्(), "झलां णशोऽन्ते" ८।२।३९ इति षकारस्य डकारः, "यरोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इति डकारस्य णकारः। "षण्णवतिः" इति। पडधिका नवतिरिति शाकपार्थिवा दित्वादुत्तरपदलोपिसमासः। षण्णां नगराणां समाहारः "षण्णगरी" "द्विगोः" ४।१।२१ इति ङीप्()॥

बाल-मनोरमा

न पदान्ताट्टोरनाम् ११५, ८।४।४१

तदाह--पदान्तादित्यादिना। ईट्टे इति। "ईडस्तुतौ" आत्मनेपदी। ईड्-ते इति स्थिते, खरि चेति डस्य चत्र्वम्, ततः परस्य तकारस्य टुत्वम्। तस्य टवर्गात्परत्वेऽपिपदान्तात्परत्वाऽभावान्न टुत्वनिंषेधः। सर्पिष्टममिति। सर्पिष्-तममितित स्थिते "स्वादिष्वसर्वनामस्थाने" इति, अन्तर्वर्तिनीं विभक्तिमाश्रित्य वा पदत्वात्षकारस्य पदान्तत्वात्ततः परस्य तकारस्य ष्टुत्वनिषेधो न भवति, पदान्ताट्टवर्गात्परत्वाऽभावात्। नच षकारस्य "झलाञ्जशोऽन्ते" इति जश्त्वेन डकारे सति तकारस्य टोः परत्वात्ष्टुत्वनिषेधः स्यादेवेति वाच्यं, "ह्रस्वात्तादौ तद्धिते" इति षत्वस्याऽसिद्धत्वेन जश्त्वाऽभावात्। इह "आदेशप्रत्यययोरिति" षत्वं तु न भवति, "अपदान्तस्य मूर्धन्यः" इत्यधिकारात्।

अनाम्नवति। ष्टुत्वप्रतिषेधे नाम एव पर्युदासो न भवति, किन्तु नवतिनगरीशब्दावयवनकारस्यापि पर्युदासो वक्तव्यः इत्यर्थः। षण्णामिति। षष्-नामिति स्थिते "स्वादिष्वसर्वनामस्थाने " इति पदान्तत्वात् षस्य जश्त्वेन डकारे "प्रत्यये भाषायां नित्य"मिति तस्य णकारः। अत्र टवर्गयोगान्नकारस्य ष्टुत्वम्। "न पदान्ता"दिति निषेधस्तु न, "अना"मिति पर्युदासात्। षण्-णगर्य इति--पृथक्पदे। न तु कर्मधारयः, "दिक्()संख्येसंज्ञाया"मिति नियमात्। अत्रापि "न पदान्ता"दिति नगरीशब्दे नकारस्य टुत्वनिषेधो न भवति, नगरीशब्दस्यापि पर्युदासात्।

---

सूत्रम्

काशिका-वृत्तिः

तोः षि ८।४।४३

न इति वर्तते। तवर्गस्य षकारे यदुक्तं तन् न भवति। अग्निचित्षण्डे। भवान्षण्डे। महान्षण्डे।

लघु-सिद्धान्त-कौमुदी

तोः षि ६६, ८।४।४२

न ष्टुत्वम्। सन्षष्ठः॥

न्यासः

तोः षि। , ८।४।४२

"अग्निचित्? षण्डे" इति। "अग्नौ चेः" ३।२।९१ इति क्विप्()। "सोमसुत्षण्डे" [नास्तीदमुदाहरणं--काशिका] इति। "सोमे सुञः" ३।२।९० इति क्विप्()। अत्र "षि" इति सप्तमीनिर्देशात्? पूर्णभूतेन सन्निपातेन भवत्येव ष्टुत्वामिति--पेष्टा, पेष्टुमिति।

बाल-मनोरमा

तोः षि ११६, ८।४।४२

तेः षि। ष्टुरिति नेति चानुवर्तते। तदाह--तवर्गस्येति। सन्षष्ठ इति। अत्र नकारस्य षकारयोगात् टुत्वं प्राप्तं निषिध्यते। अस्मादेव ज्ञापकात् ष्टुना ष्टुरित्यत्र ष्टुना योगे इत्यत्र यथासंख्यं नेति विज्ञायते। "झलाञ्जशोऽन्ते" इत्यच्सन्धिनिरूपणे प्रसङ्गादुपन्यस्तम्। हल्सन्धिप्रस्तावे पुनस्तदुपन्यासः।

---

सूत्रम्

काशिका-वृत्तिः

शात् ८।४।४४

तोः इति वर्तते। शकारादुत्तरस्य तवर्गस्य यदुक्तं तन् न भवति। प्रश्नः। विश्नः।

लघु-सिद्धान्त-कौमुदी

शात् ६३, ८।४।४३

शात्परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः॥

न्यासः

शात्?। , ८।४।४३

"विश्नः, प्रश्नः" इति। "विच्छ गतौ" (धा।पा।१४२३) "प्रच्छ ज्ञीप्सायाम्()" (धा।पा।१४१३), पूर्ववन्नङ्(), "च्छ्वोः शूड्नुनासिके च" ६।४।१९ इति च्छकारस्य शकारः। यद्यपि "प्रश्ने चासन्नकाले" ३।२।११७ इति निपतनादेव शात्परस्य तदर्गस्य चुत्वं न भवतीत्यैषोऽर्थो लभ्यते, तथापि मन्दधियां प्रतिपत्तिगौरवपरीहारार्थमिदमारभ्यते। अथ वा"अवाधकान्यपि निपातनानि भवन्ति" (पु।प।वृ।१९) इत्युक्तम्()। यद्येतन्नारभ्यते, प्रश्ञः, विश्ञ इत्यपि रूपं सम्भाव्येत॥

बाल-मनोरमा

शात् ११३, ८।४।४३

शात्। न पदान्तादिति पूर्वसूत्रात् "ने"त्यनुवर्तते। "स्तोःश्चुना श्चु"रित्यतः "तो"रिति , "चु"रिति चानुवर्तते। नतु सकारः शकारश्च। "शा"दिति दिग्योगे पञ्चमी, "परस्ये"त्यध्याहार्यन्तदाह--शात्परस्येत्यादिना। विश्न इति। विच्छ गतौ। "यजयाचयतविच्छप्रच्छरक्षो नङ्" इति नङ्। छ्वोःशूठ्" इति छस्य शः। ङित्वान्न गुणः। अत्र शकारयोगात्तवर्गीयनकारस्य श्चुत्वेन ञकारे प्राप्ते निषेधः। पूर्वसूत्रे "श्चुना योगे" इत्यत्रापि यथासङ्शख्याश्रयणे तु इह तवक्दीयस्य नकारस्य चुना योगाभावेन चुत्वस्याप्रसक्ततया तन्निषेधो व्यर्थः स्यात्। एवंचाऽस्मादेव निषेधात्पूर्वसूत्रे

श्चुना योगे इत्यत्र न यथासंख्याश्रयणमिति विज्ञायते। प्रश्न इति। "प्रच्छ ज्ञीप्सायाम्"। पूर्वन्नङादि। अत्र "ग्राहिज्ये"ति संप्रसारणं न, "प्रश्ने चासन्नकाले" इत्यादिनिर्देशात्। अत्र वर्गपञ्चमानां नासिकास्थानाधिक्ये।ऋपि तत्तद्वर्गीयैरस्ति सावण्र्यमिति तुल्यास्यसूत्रेऽवोचाम।

तत्त्व-बोधिनी

शात् ९३, ८।४।४३

शात्। "ने"ति "तो"रिति चानुवर्तते तदाह-तवर्गस्येत्यादि। "जश्त्व"-मित्यादिव्याख्यातृनिर्देशे निःसन्दिग्धत्वेन बोधनाय "वश्चे"ति षत्वं जश्त्वं च न कृतं,तथा श्चुत्वमपि न कृतमिति परिहारसम्भवाद्वर्गान्त्यमेवोदाहरति-विश्नः प्रश्न इति। "विच्छ गतौ", "प्रच्छ ज्ञाप्सायाम्"। "यजयाचे"त्यादिनानङ्। "छ्वोः शू"डिति छस्य शत्वम्। नङो ङित्वाद्गुणाभावः। प्रच्छेस्तु "प्रश्ने चासन्ने"ति निर्देशात्संप्रसारणाऽभावः। ननु ञमङणनाना नासिकास्थानाधिक्याद्वर्गेष्वाद्यैश्चतुर्भिः सह तुल्यस्थानत्वाभावेन सावण्र्याऽभावात् "स्तोः श्चुने"ति "तु" शब्देन नकारो न गृह्यते किं तु स्ववर्गाद्यश्चत्वार एवेति विश्न प्रश्न इत्यत्र श्चुत्वाऽप्रसक्तेः किमनेन निषेधेनेति चेदत्राहुः,-"शा"दिति निषेधाल्लिङ्गादेव "तुल्यास्यप्रयत्न"मित्यत्रास्यग्रहणेन नासिकास्थानभिन्नं ताल्वादिस्थानं गृह्यते, तत्स्थानं तु तुल्यमेवेति "तु" शब्देन पञ्चमस्यापि ग्रहणात्स्चुत्वप्रसक्तौ निषेधोऽयमावश्यकः। एवंच "तोर्ली"ति "तु" शब्देन नकारस्यापि ग्रहणाद्विद्वाँल्लिखतीत्यादि सिध्यति। नच निमित्तकार्यिणोर्यथासङ्ख्यनिरासज्ञापकमित्युक्तत्वात्तेनैव चार्थवत्त्वे कथमुक्तार्थे ज्ञापकं भवेदिति वाच्यं; "तु" शब्देन नकारग्रहणे सिद्धे हि यथासङ्ख्यनिवृत्तिरतेन ज्ञापनीयेत्युभयज्ञापेनबाधकाऽभावात्। नापि "तुल्यास्ये"त्यत्र यत्किञ्चित्स्थानतुल्यत्वविवक्षायां वर्गेषु पञ्चापि वर्णाः परस्परं सवर्णा भवेयुरित्युक्तोदाहरणे श्चुत्वप्रसक्तौ "शा"दित्यारम्भ आवश्यक इत्येतज्ज्ञापकाश्रयणं किमर्थमिति वाच्यं, तथाहि सति ञमङणनानां परस्परसावण्र्यपत्त्या "त्व नयसी"त्यादौ "अनुस्वारस्य ययि परसवर्णः""वा पदान्तस्ये"त्यनुस्वारस्य ञादयोऽपि स्युः। ताल्वादिस्थानासाम्याऽभावेऽपि नासिकारूपस्य यत्किचित्स्थानस्य तुल्यत्वात्। नापि तुस्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां ञादीनां परत्परसावण्र्यं न भवेत्, तेषां नासिकास्थानसाम्येऽपि ताल्वादिस्थानसाम्याऽभावेन न्यूनस्थानकत्वात्। ततश्च "त्वं नयसी"त्यादिषु नातिप्रसङ्गः। स्ववर्गाद्यैः सह तु ञादीनां सावण्र्यं स्यादेव। नासिकास्थानाधिक्येऽपितदन्यूनस्थानकत्वात्तेषामिति "विद्वाँल्लिखतीट"त्यादीष्टं सिध्यति। वर्गाद्यानां तु नासिकास्थानाऽभावेन न्यूनस्थानकत्वात्पञ्चमेन च सावण्र्याभावेऽपि न क्षतिरिति ज्ञापकाश्रयणं विनैवेष्टसिद्धिरिति वाच्यं, "हे गौरि एही"त्यादौ सवर्णदीर्घापत्तेः। "इकोऽसवर्णे" इति शाकलप्रकृतिभावानापत्तेश्च। इकारान्यूनस्थानकत्वेन तत्सवर्णत्वादेकारस्य। "स्वराणामूष्माणां चैव विवृतं करणं स्मृतम्। तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव चे"ति वचनात्प्रयत्नभेदेन सावण्र्याऽभावमभ्युपगम्योक्तानिष्टवारणेऽपि "तद्वस्तु" "तदस्त्र"मित्यत्र "तोर्ली"ति परसवर्णविधिना दकारस्य वकारापंत्तेः,वकारस्य ओष्ठस्थानादिक्येऽपि दन्तस्थानसाम्येन लकाराऽन्यूनस्थानकत्वात्। यदि तु "वकारस्य दन्तोष्ठ"मिति समाहारनिर्देशादोष्ठस्थान (दन्तस्थान)भिन्नमेव दन्तोष्ठस्थानमिति वकारस्य लकारसावण्र्याभावात्तद्वस्त्वित्यादौ नातिप्रसङ्ग इति ब्राऊषे तर्हि "लुग्वा दुहे"त्यादिना दन्त्ये तङि विधीयमानो रक्सस्तस्य लुक्-"अदुह्वही"त्यत्र न स्यात्, किंतु "अदुग्धे"त्यादावेव स्यात्। तथा "पिपूर्तः" "पिपुरती"त्यादौ विधीयमानम् "उदोष्ठयपूर्वस्ये"त्युत्वं "सुस्वूर्षती"त्यादौ न स्यादुक्तरीत्या वकारस्यौष्ठ()त्वाऽभावात्। न च वस्योष्ठ()त्वेदन्त्यत्वेच सति "सेक्सृप्" इति षोपदेशलक्षणे स्विदादीनां पृथग्ग्रहणं व्यर्थं स्यात्तेषामपि दन्त्यान्तसादित्वादिति भ्रमितव्यम्; "दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपी"त्यादेर्मूल एव वक्ष्यमाणत्वात्। ये तु पाणिनिशिक्षायां यमानुस्वारयोरेव नासिकास्थानत्वकथनादन्येषां स्थानं नासिका न भवति, किंत्वनुनासिकत्वं गुण एव। नासिकाव्यापारेणोच्चार्यमाणत्वमात्रेण नासिकास्थानत्वकथने त्वकारादीनामप्युक्तरीत्या

नासिकास्थानमिति स्थाननिरूपणे तेषां तदकथान्न्यूनतेत्यादि वदन्ति। तेषामत्रोक्तज्ञापकाश्रयणं विनैवेष्टसिद्धिः। अन्ये त्वकारादीना नासिकया सर्वदाऽनुच्चारणादनुनासिकत्वं गुणः, "सत्त्वे निविशतेऽपैती"त्यादिलक्षणलक्षितत्वात्। ञमङणनानां त्वनुनासिकत्वं नापैति, सर्वदैव तयोच्चारणादिति न गुणः, किन्तु यमानुस्वारयोरिव स्थानमेव नासिकेति स्थानानिरूपणे "ञमङणनाना नासिका चे"त्युक्तं नत्वकारादीनां। नासिका चेति। यत्तूक्तं तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां तद्वस्त्वित्यादौ "तोर्ली"ति दकारस्य वकारप्रसङ्ग इति तदापाततः। "तोर्ली"त्यत्र लकारद्वयनिर्देश इति स्वीकृत्य लकाररूपे लकारे परे परसवर्ण इति व्याख्यायामुक्तदोषाऽप्रसक्तेरित्याहुः॥

---

सूत्रम्

काशिका-वृत्तिः

यरो ऽनुनासिके ऽनुनासिको वा ८।४।४५

पदान्तग्रहणम् अनुवर्तते। यरः पदान्तस्य अनुनासिके परतः वा अनुनासिकः आदेशो भवति। वाङ् नयति, वाग्नयति। श्वलिण्नयति, श्वलिड्नयति। अग्निचिन्नयति, अग्निचिद् नयति। त्रिष्तुम्नयति, त्रिष्टुब् नयति। पदान्तस्य इत्येव, वेद्मि। क्षुभ्नाति। यरो ऽनुनासिके प्रत्यये भाषायां नित्यवचनं कर्तव्यम्। वाङ्मयम्। त्वङ्मयम्।

व्यवस्थितविभाषाविज्ञानात् सिद्धम्।

लघु-सिद्धान्त-कौमुदी

६८, ८।४।४४

यरोऽनुनासिकेऽनुनासिको वा॥ यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः, एतद् मुरारिः। (प्रत्यये भाषायां नित्यम्)। तन्मात्रम्।चिन्मयम्॥

न्यासः

यरोऽनुनासिकेऽनुनासिको वा। , ८।४।४४

"पदान्तस्य" इत्यनेन "न पदान्ताट्टोरनाम्()" ८।४।४१ इत्यतः पदान्तग्रहणमनुवत्र्तते, तच्चार्थात्? षष्ठ()न्ततामनुभवतीति दर्शयति। "वाङ्न्यति" इत्यादावुदाहरणे "झलां जशोऽन्ते" ८।२।३९ इति गकारादौ जश्त्वे कृते तस्यानुनासिकः कत्र्तव्यः। "वाङ्मयम्()" इति। "नित्यं वृद्धशरादिभ्यः" ४।३।१४२ इति मयट्()। "त्वङ्मयम्()" इति। अत्रापि "मयड्वैतयोः" ४।३।१४१ इत्यादिना॥

बाल-मनोरमा

यरोऽनुनासिकेऽनुनासिको वा ११७, ८।४।४४

यरोऽनुनासिके। "न पदान्ताट्टो"रित्यतः पदान्तादित्यनुवर्तते, तच्च षष्ठ()न्ततया विपरिणम्()यते, तदाह--यरः पदान्तस्येति। "एतन्मुरारि"रिति कर्मधारयः। एतद्-मुराररिति स्थिते दस्य अनुनासिको नकारः, दन्तस्थानसाम्यात्, स्पृष्टप्रयत्नसाम्याच्च।

ननु चतुर्मुख इत्यत्रापि रेफस्य अनुनासिको णकारः स्यात्, रेफसकारयोः स्पृष्टेत्स्पृष्टप्रयत्नभेदेऽपि मूर्धस्थानान्तर्यादित्यत आह--स्थानेति। "एतन्मुरारि"रित्यादौ स्थानतः प्रयत्नतश्चान्तरतमे स्पर्शे चरितार्थः=लब्धप्रयोजनोऽयमनुनासिकविधिः स्थानमात्रेण आन्तर्यमादाय रेफे न प्रवृत्तिमर्हतीत्यर्थः। "यूनि लब्धे तु युवतिर्जरठे रमते कथ"मिति न्यायादिति भावः।

प्रत्ययेभाषायाम्। वार्तिकमेतत्। भाष्य=लोकिकप्रयोगः। तत्र प्रयत्ने विद्यमाने अनुनासिके परतः प्रागुक्तोऽनुनासिको नित्यं भवतीत्यर्थः। तन्मात्रमिति। तत्-प्रमाणं यस्य तत्तन्मात्रं। "प्रमाणे द्वयसज्दध्नञ्मात्रचः" इति मात्रच्प्रत्ययः। चिन्मयमिति। "नित्यं वृद्धशरादिभ्यः" इत्यत्र "नित्य"मिति योगविभागात्ताद्रूप्ये मयट्। कथं तहीति। यदि प्रत्यये परे नित्यमनुनासिकः स्यात्तदा "मदोदग्राः ककुद्मन्त" इति कालिदासप्रयोगः कथमित्याक्षेपः। मतुपः प्रत्ययत्वेन तस्मिन् परे दकारस्य अनुनासिकनकारावश्यम्भावादिति भावः। परिहरति--यवादीति। यवादिगणे कुद्मच्छब्दे दकारस्य निर्देशान्न तस्यानुनासिकः। यदि तत्र दकारस्य नकार एव इष्टः स्यात्तर्हि नकारमेव लाघवान्निर्दिशेदिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अचो रहाभ्यां द्वे ८।४।४६

यरः इति वर्तते। अच उत्तरौ यौ रेफहकारौ ताभ्याम् उत्तरस्य यरो द्वे भवतः। अर्क्कः मर्क्कः। ब्रह्म्मा। अपह्न्नुते। अचः इति किम्? किन् ह्नुते। किम् ह्मलयति।

लघु-सिद्धान्त-कौमुदी

अचो रहाभ्यां द्वे ६०, ८।४।४५

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। गौर्य्यौ। (न समासे)। वाप्यश्वः॥

लघु-सिद्धान्त-कौमुदी

अचो रहाभ्यां द्वे २६९, ८।४।४५

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। चतुर्ण्णाम्, चतुर्णाम्॥

न्यासः

अचो रहाभ्यां द्वे। , ८।४।४५

"अच उत्तरौ यौ रेफहकारौ" इति। एतेनाच इति रहोर्विशेषणमिति दर्शयति। "आन्यामुत्तरस्य यरः" इति। अनेनापि रहौ यर्विशेषणमिति। "बर्क्कः" इति। "अर्च पूजायाम्()" (धा।प।२०४),धञ्(), "चजोः कुधिण्ण्यतोः" ७।३।५२ इति कुत्वम्()। "मर्क्कः" इति। मर्चिः सौत्रो दातुः, तस्मात्? इण्()भीकापाशस्यर्तिमर्चिभ्यः कन्()" (द।उ।३।२१) इति कन्(), "चोः कुः" ८।२।३० इति कुत्वम्()। अत्राकारादुत्तरो रेफः, तस्मादपि परः ककारो यरिति। "ब्राह्आ" इति। अत्राप्यकारादेवाच्च उत्तरो हकारः, तस्मादपि परो मकारो यरिति। "अपह्नुते" इति। अत्राप्यकारादुत्तरो हकारः, पूर्ववच्छपो लुक्(), तस्मात्? परस्य नकारस्य द्विर्वचनम्()। "किन्()ह्नुते" इति। अत्राच उत्तरो हकारो न भवतति नकारो न द्विरुच्यते। "किम्()ह्मलयति" इति। "ह्मल ह्मल सञ्चलने" (धा।पा।८०५,८०६), हेतुमण्णिच। "ज्वलह्मलह्मलनमामनुपसर्गाद्वा" ["ज्वलह्मलह्मल"--प्रांउ।पाठः] (धा।पा।८१७ अनन्तरम्()) इति मित्त्वम्(), "मितां ह्रस्वः" ६।४।९२ इति ह्रस्वत्वम्()॥

बाल-मनोरमा

अचो रहाभ्यां द्वे ६०, ८।४।४५

अचो रहाभ्यां द्वे। यरोऽनुनासिक इत्यतो यर इति षष्ठ()न्तं वेति चानुवर्तते। अच इति दिग्योगे पञ्चमी। "पराभ्या"मिति शेषः। रहाभ्यामित्यपि पञ्चमी। "परस्ये"ति शेषः। तदाह--अचः पराभ्यामित्यादिना। हर्य्यनुभव इति। हरेरनुभव इति विग्रहः। हरि-अनुभव इति स्थिते रेफादिकारस्य यण्। तस्य द्वित्वम्। अथ हकारात्परस्योदाहरति--न ह्य्यस्तीति।

नहि--अस्तीति स्थिते हकारादिकारस्य यण्। तस्य द्वित्वम्। इहोभयत्र यकारस्य अचः परत्वाऽभावादच्परकत्वाच्च द्वित्वमप्राप्तं विधीयते। अत्राऽनचि चेति रेफहकारयोर्द्वित्वं न भवति। द्वित्वप्रकरणे रहाभ्यामिति रेफत्वेन हकारत्वेन च साक्षाच्छ()तेन निमित्तभावेन तयोर्यर्शब्दबोधितकार्यभाक्त्वबाधात्, "श्रुतानुमितयोः श्रुतं बलीय" इति न्यायात्। हर्? य्? य् अनुभवः, नह् य् य् अस्ति इति स्थिते।

तत्त्व-बोधिनी

अचो रहाभ्यां द्वे ५०, ८।४।४५

अचो रहाभ्याम्। अचः किम्? "ह्नुते" इत्यादौ नकारस्य माभूत्।

---

सूत्रम्

काशिका-वृत्तिः

अनचि च ८।४।४७

अचः इति वर्तते, यरः इति च। अनच्परस्य अच उत्तरस्य यरो द्वे वा भवतः। दद्ध्यत्र। मद्ध्वत्र। अचः इत्येव, स्मितम्। ध्मातम्। यणो मयो द्वे भवत इति वक्तव्यम्। केचिदत्र यणः इति पञ्चमी, मयः इति षष्ठी इति व्याचक्षते। तेषाम् उल्क्का, वल्म्मीकः इत्युदाहरणम्। अपरे तु मयः इति पञ्चमी, यणः इति षष्ठी इति। तेषाम् दध्य्यत्र, मध्व्वत्र इत्युदाहरणम्। शरः खयो द्वे भवत इति वक्तव्यम्। अत्र अपि यदि शरः इति पञ्चमी, खयः इति षष्ठी, तदा स्त्थाली, स्त्थाता इति उदाहरणम्। अथवा खय उत्तरस्य शरो द्वे भवतः। वत्स्सः। इक्ष्षुः। क्ष्षीरम्। अप्स्सराः। अवसाने च यरो द्वे भवत इति वक्तव्यम्। वाक्क, वाक्। त्वक्क्, त्वक्। षट्ट्, षट्। तत्त्, तत्।

लघु-सिद्धान्त-कौमुदी

अनचि च १८, ८।४।४६

अचः परस्य यरो द्वे वा स्तो न त्वचि। इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते॥

न्यासः

अनचि च। , ८।४।४६

"अनच्परस्य" इति। अचोऽन्योऽनच्(), अनच्? परो यस्मात्? सोऽयमनच्परः। "दद्ध्यत्र" इति। अत्राचः परो धकारो यर्(), तस्यानचि यकारे परतो द्विर्वचनम्()। "झलां जश्? झशि" (८।४५३) इति धकारस्य दकारः। "मद्ध्वत्र" इति। अत्रानच्परस्य धकार्सय द्वर्वचनम्()। "यणो मयः" इत्यादि। अच उत्तरलस्य यरो द्विर्वचनमुक्तम्()। अनचि यण उत्तरस्य मयोऽचि परतो न प्राप्नोतीत्युपसंख्यायते। किं पुनरिहोदाहरणम्()? इत्याह--"केचित्()" इत्यादि। "उत्क्का, वल्म्मीकः" इत्यादि। यकाराद्यन उत्तरस्य ककारस्य मकारस्य च मयो द्विर्वचनम्()। "दध्य्यत्र, मध्व्वत्र" इति। धकारान्मय उत्तरस्य यकारस्य च यणो द्विर्वचनम्()। "शरः खयः" इत्यादि। "स्त्थालौ, स्त्थाता" इति सकाराच्छर उत्तरस्य खयस्थकारस्य द्विर्वचनम्()। "वत्स्सः" इति। तकारात्? खय उत्तरस्य सकगारस्य शरो द्विर्वचनम्()। "इक्च्षु_, कष्वीरम्()" इति। ककारात्? खय उत्तरस्य खरः षकारस्य द्विर्वचनम्()। "अप्स्सराः" इति। पकारात्? खयः परस्य सकारस्य शरो द्विर्वचनम्()। "अवसाने द्वे" इत्यादि। "अवचि च" इति पर्युदासाश्रयणादिदमुज्यते। प्रसज्यप्रतिषेधेतु "यनोऽनुनासिकेऽनुनासिको वा" ८।४।४४ इत्यतो वाग्रहणमनुवर्त्यं शक्यनिदमकर्त्तुम्()। नैतत्()। प्रसज्यप्रतिषेधे हि विधिवाक्यत्वं सूत्रस्य नोपपद्यते, ततश्च केनचिद्()द्विर्वचनं स्यात्()? तस्मादेव प्रतिषेध

वाक्याद्विधिवाक्यतास्यानृमास्यत इत्यदोवः। प्रसज्यप्रतिषेधे सति प्रतिपत्तदिगौरवभयात्? पर्युदासाश्रयणम्()॥

बाल-मनोरमा

अनचि च ५०, ८।४।४६

सुध्? य् इति स्थिते इति। धकारस्य द्वित्वमिति वक्ष्यमाणेनान्वयः। केन सूत्रेणेत्यत आह- अनचि चः। "यरोऽनुनासिकेऽनुनासिको वे"त्यतो "यर" इति ष,()ट()न्तं "वे"ति चानुवर्तते। "अचो रहाभ्यां द्वे" इत्यतोऽच इति पञ्चम्यन्तं "द्वे" इति चानुवर्तते। न अच अनच्, तस्मिन् अनचीति न पर्युदासः, तथा सति "नञिवयुक्तमन्यसदृशे तथाह्यर्थगति"रिति न्यायेनाऽज्भिन्ने हलीत्यर्थः स्यात्। तथा सति लाघवाद्धलीत्येव वदेत्। रामादित्याद्येवसानेषु च द्वित्वं न स्यात्। अतोऽचि न भवतीत्यसमर्थसमासमाश्रित्य प्रतिषेधपरं वाक्यान्तरम्। तदाह-अचः परस्येत्यादिना। इति धकारस्येति। अनेन सूत्रेण धकारस्य द्विरुच्चारणमित्यर्थः। धकारस्य उकारादचः परत्वादच्परकत्वाऽभावाच्चेति भावः।

तत्त्व-बोधिनी

अनचि च ४३, ८।४।४६

अनचि च। यरो द्वे वेति। "यरोऽनुनासिके" इति सूत्राद्यरो वेति चानुवर्तते। "अचो रहाभ्या"मिति सूत्रादयो द्वे इति च, तदाह-अचः परस्येत्यादि। एवं चात्र "वा"ग्रहणानुवृत्त्यैवेष्टसिद्धेः "त्रिप्रभृतिषु शाकटायनस्य" "सर्वत्र शाकल्यस्य" दीर्घादाचार्याणा"मिति च सूत्रत्रयं नारम्भणायमिति भावः। अच इति किम्?, "तादात्म्य"मित्यादौ मस्य द्वित्वं मा भूत्। "अनची"ति यदि पर्युदासः स्यात्ततो "नञिवयुक्तमन्यसदृशे तथा ह्यर्थगति"रिति न्यायादज्भिन्नेऽच्सदृशे वर्णे हलीत्यर्थः स्यात्, ततो लाघबाद्धलीत्येव वदेत्, तस्मात्प्रसज्यप्रतिषेध इत्याह-न त्वचीति। एवं चाबसानेऽपि द्वित्वं भवति-वाक्क् वाक्।

---

सूत्रम्

काशिका-वृत्तिः

न आदिन्याक्रोशे पुत्रस्य ८।४।४८

आदिनि परतः आक्रोशे गम्यमाने पुत्रशब्दस्य न द्व भवतः। अनचि च ८।४।४६ इति प्राप्तिः प्रतिषिध्यते। पुत्रादिनीत्वम् असि पापे। आक्रोशे इति किम्? तत्त्वकथने द्विर्वचनं भवत्येव, पुअत्रानत्ति इति पुत्त्रादिनी। शिशुमारी व्याघ्री। तत्परे चेति वक्तव्यम्। पुत्रपुत्रादिनी त्वमसि पापे। वा हतजग्धपर इति वक्तव्यम्। पुत्त्रहती, पुत्रहति। पुत्त्रजग्धी, पुत्रजग्धी। चयो द्वितीयाः शरि पौष्करसादेः। चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन। तकारस्य थकारः वथ्सः। ककारस्य खकारः ख्षीरम्। पकारस्य फकारः अफ्सराः।

न्यासः

नादिन्याक्रोशे पुत्त्रस्य। , ८।४।४७

आदिनीति [मुद्रित काशिकायां तथा पदमञ्जर्यां च "आदिनी" शब्दो ङीबन्तो गृहीतः] परसप्तमीयम्()। अत आह--"आदिनि परतः" इति। "पुत्रादिनी" इति। पुत्रावत्तुं शीलमस्या इति ताच्छील्ये णिनिः। "पुत्त्रादिनी, सिशुमारी" इति। तत्त्वख्यानमेतत्(), नाक्रोशः। "तत्परे चेति यक्तव्यम्()" (इति)। स आदिनिशब्दः परो यस्मात्? पुत्रशब्दात्? तत्र द्विर्वचनं न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--नेति योग विभागः क्रियते, तेन तत्परे न भविषयतीति। "वा हत" इत्यादि। हतजग्धशब्दयोः परतः पुत्त्रस्य या द्विर्वचनं न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः।

व्याख्यानं तु वागद्रहणमनुवर्त्यं, नेति योगविभागकरणमाश्रित्य वा कत्तव्यम्()। न चैवं पुत्त्रादिनीत्यत्रापि विकल्पः प्रसक्तः। व्यवस्थितविभाषाविज्ञानात्()। हतञ्च जग्धञ्च तत्? हतजग्धम्(), हतजग्धञ्च तत्? परञ्चेति हतजग्धपरम्(), तस्मिन्? हतजग्धपरे। "पुत्रहती, पुत्रजग्धी" इति। पुत्रो हतः, पुत्रो जग्धोऽनयेत बहुव्रीहिः, "अस्वाङ्गपूर्वपदात्()" ४।१।५३ इत्यादिना ङीष्()। "चयो द्वितीयाः" इत्यादि। चय इति स्थानषष्ठी, खछठचफा इति द्वितीया इत्यस्यार्थः। द्वितीयत्वमेषां वर्णानां प्रथमवर्णापेक्षया भवति। "वप्सः" इति। तकारस्य चयः सकारे शरि परतो द्वितीयस्थकारः। "ख्षीरम्()" इति। ककारस्य चयः वकारे शरि परतो द्वितौयः सकारः। "अफ्सराः" इति। पकारस्य चयः सकारे शरि परतो द्वितीयः फकारः॥

बाल-मनोरमा

नादिन्याक्रोशे पुत्रस्य ५७, ८।४।४७

नादिन्याक्रोशे। "द्वे" इत्यनुवर्तते। "यर" इति च। आक्रोशो निन्दा। आदिनीति ङ्यन्तं लुप्तसप्तमीकम्। आदिनीशब्दे परे पुत्रशब्दस्यावयवो यो यर् तकारस्तस्य न द्वित्वम्, आक्रोशे गम्ये इत्यर्थः। तदाह-पूत्रशब्दस्येत्यादिना। पुत्रशब्दस्यावयवस्येत्यर्थः। पुत्रादिनी त्वमसि पाषे इति। पुत्रानत्तुं शीलमस्याः पुत्रादिनी। "सुप्यजातौ" इति णिनिः। "ऋन्नेभ्य" इति ङीष्। हे पापे। त्वं पुत्रादिनीत्यन्वयः। पुत्रघातिनीत्यर्थः। ईदृशाक्रोशस्य प्रायेण स्त्रीष्वेव सम्भवात् सूत्रे आदिनीति ङ्यन्तमेव विवक्षितमिति हरदत्तः। माधवोऽप्येवम्। अत्र उकारात्परस्य तकारस्याऽनचि चेति प्राप्तं द्वित्वं निषिध्यते। रेफस्य तु न क्वापि द्वित्वप्रसक्तिरित्यनुपदमेव वक्ष्यते। आक्रोशे किमिति। आक्रोशे इत्यस्य किं प्रयोजनमित्यर्थः। "किं पृच्छायां जुगुप्सने" इत्यव्ययवर्गेऽमरः। एवमुत्तरत्राप्येवञ्जातीयकेषु द्रष्टव्यम्। तत्त्वकथन इति। यस्याः पुत्राः स्वयमेव म्रियन्ते तां प्रति पुत्रादिनीति वस्तुस्थितिकथने तु न द्वित्वनिषेधः, तत्र निन्दाया अप्रतीतेरित्यर्थः। तत्परे च। वार्तिकमेतत्। स आदिनीशब्दः परो यस्मात्स तत्परः। आदिनीशब्दपरके पुत्रशब्दे च परे पुत्रशब्दावयवस्य यरो न द्वित्वमित्यर्थः। पुत्रपुत्रादिनी त्वमिति। पुत्रस्य पुत्रानत्तीति विग्रहः। अत्र पूर्वस्य पुत्रशब्दस्य आदिनीशब्दः परो न भवति, द्वितीयपुत्रशब्देन व्यवधानात्। अतः पूर्वसूत्रेणाऽप्राप्ते द्वित्वनिषेधे इदमारब्धम्। वा हतजग्धयोः। हतशब्दे जग्धशब्दे च परे पुत्रशब्दावयवस्य यरो द्वित्वं वा स्यादित्यर्थः। पुत्रहतीति। तकारद्वित्वे रूपम्। पुत्रो हतो ययेति विग्रहः। "अस्वाङ्गपूर्वपदा"दिति ङीषिति केचित्। वस्तुतस्तु जातिपूर्वादित्यस्य तत्रानुवृत्तेर्गौरादित्वान्ङीषिति युक्तम्। पुत्रघातसाहसस्य स्त्रीष्वेव सम्भवात्स्त्रीलिङ्गमेवोदाहृतम्। पुत्रहतीति। द्वित्वाऽभावे रूपम्। एवं पुत्रजग्धी पुत्रजग्धीति। अनचि चेति द्वित्वविकल्पे सिद्धे पुत्रशब्दस्य क्तान्ते चेद्धतजग्धयोरेव आक्रोश एवेति नियमार्थमिदं वार्तिकमित्याहुः।

तत्त्व-बोधिनी

नादिन्याक्रोशे पुत्रस्य ४९, ८।४।४७

नादिन्या। स्त्रीष्वाक्रोशः प्रायेण प्रवर्तत इति स्त्रीलिङ्गमुदाहरति-पुत्रादिनीति। इह "सुप्यजातौ-" इति णिनिः।

तत्परे चेति। आदिनि यः पुत्रशब्दस्तस्मिन् परेऽपि पुत्रशब्दस्य न द्वे स्त इत्यर्थः।

वा हतेति। द्वित्वस्य वैकल्पिकत्वे वार्तिकमिदं नारम्भणीयमित्येक। अन्ये तु-हतजग्धयोः परतः पुत्रशब्दस्यैव "अनचि चे"ति द्वित्वं नान्येषामित्यादिनियमसंभवात्तदर्थमारम्भणीयमेवेदमित्याहुः। पुत्रहतीति। पुत्रो हतो यया सा। "अस्वाङ्गपूर्वपदाद्वे"ति ङीष्। एवं पुत्रो जग्धो यया सा पुत्रजग्धी।

---

सूत्रम्

काशिका-वृत्तिः

शरो ऽचि ८।४।४९

न इति वर्सते। शरो ऽचि परतः न द्वे भवतः। अचो रहाभ्यां द्वे ८।४।४५ इति प्राप्तिः प्रतिषिध्यते। कर्षति। वर्षति। आकर्षः। अक्षदर्शः। अचि इति किम्? दर्श्श्यते।

लघु-सिद्धान्त-कौमुदी

शरोऽचि २७१, ८।४।४८

अचि परे शरो न द्वे स्तः। चतुर्षु॥

न्यासः

शरोऽचि। , ८।४।४८

"कर्वति" इति। "कृष विलेखने" (धा।पा।९९०)। "वर्वति" इति। "पृषु वृषु मृषु सेचने" (धा।पा।७०५-७०७)। "आदर्शः" इति। "दृशिर्? प्रेक्षणे" (धा।पा।९८८)। अधिकरणे धञ्()। "दर्शः" [नास्ति--काशिकायाम्()] इति। अत एव करणे धञ्()॥

बाल-मनोरमा

शरोऽचि , ८।४।४८

शरोऽचि। "अचो रहाभ्या"मित्यतो "द्वे" इति, "नादिन्याक्रोशे" इत्यतो नेति चानुवर्तते। तदाह अचि पर इत्यादिना। तथाच "चतुर्षु" इत्येकषकारमेव रूपम्। नच सत्यपि द्वित्वे "झरो झरि सवर्णे" इति लोपादेव एतषकाररूपसिद्धेरिदं व्यर्थमिति वाच्यं, लोपस्य वैकल्पिकत्वादिति भावः। प्रियाश्चत्वारो यस्येति बहुव्रीहौ प्रियचतुर्शब्दो विशेष्यनिघ्न एकद्विबहुवचनान्तः। तस्य सौ रूपमाह--प्रियचत्वा इति। प्रियचतुर् स् इति स्थिते "चतुरनडुहोः" इत्युकारादाम्। तस्याङ्गत्वेन तदन्तेऽपि प्रवृत्तेः। तत उकारस्य यण्। हल्ङ्यादिलोपश्चेति भावः। हे प्रियचत्व इति। "अम् संबुद्धौ" इत्यमिति भावः। प्रयिचत्वाराविति। सुटि सर्वनामस्थानत्वादाम्। प्रियचत्वारः। प्रियचत्वारम्, प्रयिचत्वारौ। शसादावाम् न। प्रियचतुरः। प्रियचतुरा प्रियचतुर्भ्याम् प्रियचतुर्भिः। प्रियचतुरे। प्रयिचतुरः २। प्रियचतुरोः। आमि "षट्चतुर्भ्यश्चे"ति नुटमाशङ्क्याह--गौणत्वे त्विति। "षट्चतुर्भ्यश्चे"ति बहुवचननिर्देशात्तदर्थप्राधान्य एव नुडिति भावः। प्रियचतुरि। प्रयिचतुर्षु। परमचतुर्णामिति। कर्मधारयः। आङ्गत्वात्तदन्तादपि नुटिति भावः। इति रान्ता#ाः। अथ लकारान्ताः। कमलमिति। कमलं=पद्मम्। कमला=लक्ष्मीः। कमलमाचष्टे इत्यर्थे कमलशब्दात्, कमलामाचष्टे इत्यर्थे कमलाशब्दा"त्तत्करोति तदाचष्टे" इति णिचि "सनाद्यन्ताः" इति धातुत्वात्तदवयवस्य सुपो लुकि "णाविष्ठत्प्रातिपदिकस्ये"ति इष्ठवत्त्वाट्टिलोपे कमव्-इ इत्यतः कत्तरि क्विपि णेरनिटीति णिलोपे अपृक्तलोपे च कमलिति रूपम्। ततः सोर्हल्ङ्यादिलोपे कमलिति रूपम्। कमलाविति। औजसादिषु न कोऽपि विकार इति भावः। कमलं कमलौ कमलः। कमला कमल्भ्यां कमल्भिः। कमले। कमल्भ्यः। कमलः। कमलः कमलोः कमलाम्। सुपि विशेषमाह--षत्वं कमल्ष्विति। लकारस्य इण्त्वादिति भावः। तोयमाचष्टे तोयित्यादियकारान्तास्तु न सन्त्येव, क्विपि "लोपो व्योः इति यलोपस्य दुर्वारत्वा। णिलोपस्य स्थानिवत्त्वं तु न भवति, यलोपे तन्निषेधात्। वस्तुतस्तु "न पदान्ता हलो यणः सन्ती"ति लण्सूत्रस्थभाष्यादनभिधानमेवंजातीयकानामिति हरदत्तः। "भोभगो" इति सूत्रे "वृक्षव्करोती"ति भाष्यं तु एकदेश्युक्तिरिति तदाशय इत्यलम्। इति लान्ताः।

तत्त्व-बोधिनी

शरोऽचि ३००, ८।४।४८

शरोऽचि। "अचो रहाम्भा"मित्यतो "द्वे"इति, "नादिन्याक्रोशे"इत्यतो "ने"ति चानुवर्तत इत्याह--न द्वे स्त इति। नन्वस्तु द्वित्वमेकस्य, "झरो झरि सवर्णे"इति लोपे सिद्धमिष्टम्, मैवम्, लोपस्य वैकल्पिकत्वेन पक्षे द्वयोः श्रवणप्रसङ्गात्। प्रियाः चत्वारश्चत्वारि वा यस्य स "प्रियचत्वाः"। आङ्गत्वात्तदन्तस्यापि "चतुरनडुहो"रित्याम्। "हे प्रियचत्व"इत्यत्र तु "अम्सबुद्धौ"इत्यम्। इति रान्ताः। कमलमिति।"कमला श्रीर्हरिप्रिये"त्यमरः। कमलमिति। "तत्करोति तदाचष्टे"इति णिचीष्ठवद्भावाट्टिलोपः। णिजन्तात्क्विपि, "णेरनिटी"ति णिलोपः। एवं सलिलमाचक्षाणः--"सलिलौ" "सलिल"इत्यादि बोध्यम्। नन्वेवं तोयमाचक्षाणस्तय् तोयौ तोय इति यान्ता अपि सुसाधाः। न च "वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन"ति यलोपः शङ्क्यः, "लोपो व्योर्वली"ति लोपे कर्तव्ये णिलोपस्य टिलोपस्या वा स्थानिवद्भावेन यकारस्य वल्परत्वाऽभावादिति चेन्मैवम्, "न पदान्ते"ति सूत्रेण यलोपे स्थानिवद्भावनिषेधात्। तस्माल्लोपो व्योर्वलीति यलोपः स्यादेवेति यान्ता नोक्ताः। इति लान्ताः। पदान्त इति। प्राचा तु "झलि"त्यप्युक्तं, तन्निष्फलत्वादुपेक्ष्यम्।

---

सूत्रम्

काशिका-वृत्तिः

त्रिप्रभृतिषु शाकटायनस्य ८।४।५०

त्रिप्रभृतिषु वर्णेषु संयुक्तेषु शाकटायनस्य मतेन द्वित्वं न भवति। इन्द्रः। चन्द्रः। उष्ट्रः। राष्ट्रम्। भ्राष्ट्रम्।

न्यासः

त्रिप्रभृतिषु शाकटायनस्य। , ८।४।४९

"इन्द्रः" इत्यादौ "अनचि च" ८।४।४६ इति प्राप्तिः। "इन्द्रः, चन्द्रः, मन्द्रः" इति। "इदि परमै()आर्ये" (धा।पा।६३), "चदि आह्लादे"[आह्लादे दीप्तौ च--धा।पा।] (धा।पा।६८) "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु" (धा।पा।१३)। "स्फायितञ्चि" (द।उ।८।३१) इत्यादिना रक्प्रत्ययः। "राष्ट्रः, भ्राष्ट्रः" [राष्ट्रम्(), भ्राष्ट्रम्()--काशिका] इति। "राजृ भ्राजृ दीप्तौ" [टु भ्राजृ दीप्तौ--धा।पा।] (धा।पा।८२२,८२३)। "सर्वधातुभ्यः ष्ट्रन्? (द।उ।८।७९) प्रत्ययः। व्राचादिसूत्रेण ८।२।३६ षत्वम्()। शाकटायनग्रहणं पूजार्थम्()। नित्य एवायं विधिः। अन्ययोत्तरसूत्रेणैव सिद्धत्वादस्यारम्भो निरर्थकः स्यात्()॥

बाल-मनोरमा

त्रिप्रभृतिषु शाकटायनस्य ५८, ८।४।४९

त्रिप्रभृतिषु शाकटायनस्य। त्रिचतुरादिषु हल्षु संयुक्तेषु #आद्यस्याऽचः परस्य यरो द्वित्वं शाकटायनमते। मतान्तरे तु नेत्यर्थः। इन्द्र इति नकारस्य द्वित्वविकल्पः। राष्ट्रमित्यत्र षकारस्य द्वित्वविकल्पः।

---

सूत्रम्

काशिका-वृत्तिः

सर्वत्र शाकल्यस्य ८।४।५१

शाकल्यस्य आचर्यस्य मतेन सर्वत्र द्विर्वचनं न भवति। अर्कः। मर्कः। ब्रह्मा। अपह्नुते।

न्यासः

सर्वत्र शाकल्यस्य। , ८।४।५०

अत्रिप्रभृत्यर्थोऽयमारम्भः। "अर्कः" इत्यादौ "अचो रहाभ्यां द्वे" ८।४।४५ इति प्राप्तिः। आरम्भसामर्थ्यादेवात्रिप्रभृतिष्वपि

सिद्धे सर्वत्रग्रहणं पूर्वस्या[पूर्वस्यापि प्राप्ते प्रतिषेधः--प्रांउद्रितः पाठः; कांउ।पाठश्च] अपि प्राप्तेः प्रतिषेधो यथा स्यादित्येवमर्थम्()। असति तस्मिन्? प्रत्यासत्तेः "अनचि च" ८।४।४६ इत्यस्या एव प्राप्तेस्यं निषेधः स्यात्()। शाकल्यग्रहणं पूजार्थम्(), न विकल्पार्थम्()। विधिरपि योगद्वयेनोच्यते, प्रतिषेधोऽपि। अत्र सामर्थादेव विकल्पो भविष्यति; अन्यथा विधेरनवकाशः स्यात्()॥

---

सूत्रम्

काशिका-वृत्तिः

दीर्घादाचार्याणाम् ८।४।५२

दीर्घादुत्तरस्य आचार्याणां मतेन न द्वित्वं भवति। दात्रम्। पात्रम्। मूत्रम्। सूत्रम्।

न्यासः

दीर्घादाचार्याणाम्?। , ८।४।५१

नित्यार्थोऽयमारम्भः। अत्रारम्भसामथ्र्यादेव सिद्ध आचार्यग्रहणं पूजार्थं। दातद्रमित्यादौ "अनचि च" ८।४।४६ इति प्राप्तिः॥

---

सूत्रम्

काशिका-वृत्तिः

झलं जश् झशि ८।४।५३

झलां स्थाने जशादेशो भवति झशि परतः। लब्धा। लब्धुम्। लब्धव्यम्। दोग्धा। दोग्धुम्। दोग्धव्यम्। बोद्धा। वोद्धुम्। बोद्धव्यम्। झशि इति किम्? दत्तः। दत्थः। दध्मः।

लघु-सिद्धान्त-कौमुदी

झलां जश् झशि १९, ८।४।५२

स्पष्टम्। इति पूर्वधकारस्य दकारः॥

न्यासः

झलां जश्? झशि। , ८।४।५२

"लब्धा" इत्यादि। लभेस्तृच्तुमुन्()तव्याः। "झषस्तथोर्धोऽधः" ८।२।४० इति धकारे झशि भकारस्य जश्त्वम्()--बकारः। "देग्धा" ["दोग्घा"--काशिका] इति। "दिह उपचये" (धा।पा।१०१५), "दादेर्धातोर्धः" ८।२।३२ इति हकारस्य धकारः। "बोद्धा" इति। जश्तेवन धकारस्य दकारः॥

बाल-मनोरमा

झलां जश्झशि ५४, ८।४।५२

झलाञ्जश् झशि। स्पष्टमिति। झलां स्थाने जश् स्यात् झशि परत इति सप्ष्टार्थकम्। तत्र न किञ्चिद्व्याख्यातव्यमस्ति, पदान्तरस्यानुवृत्त्यभावादित्यर्थः। इति धकारस्येति। प्रथमधकारस्येत्यर्थः। दकार इति। स्थानत आन्तर्यादिति भावः।

---

सूत्रम्

काशिका-वृत्तिः

अभ्यासे चर्च ८।४।५४

अभ्यासे वर्तमानानां झलां चरादेशो भवति, चकाराज् जश्च। चिखनिषति। चिच्छित्सति। टिठकारयिषति। तिष्ठासति। पिफकारयिषति। बुभूषति। जिघत्सति। ढुढौकिषते। प्रकृतिचरां प्रकृतिचरो भवन्ति। चिचीषति। टिटीकिषते। तितनिषति। प्रकृतिजशां प्रकृतिजशो भवन्ति। जिजनिषते। बुबुधे। ददौ। डिड्ये।

लघु-सिद्धान्त-कौमुदी

अभ्यासे चर्च ४०१, ८।४।५३

अभ्यासे झलां चरः स्युर्जशश्च। झशां जशः खयां चर इति विवेकः। बभूव। बभुवतुः। बभूवुः॥

न्यासः

अभ्यासे चर्च। , ८।४।५३

चकारेण चश्ग्रहणमनुवत्र्तते, तेनोत्तरत्र तदनुवृत्तिर्न भवति। "चिखनिषति" ति। खनतेः सन्(), द्विर्वचनम्(), हलरादिशेषः, "कुहोश्चुः" ७।४।६२ इति चुत्वम्()--छकारः, तस्थानेन चकारः। "चित्छित्सति"["चिच्छित्सति"--का।प्रांउ।पाठो] इति। छिदेः सन्(), द्विर्वचनम्(), "छे च" ६।१।७१ इति तुक्(), चुत्वम्()। "ठिठकारयिषति" इति। ठकारमाचष्ट इति "तत्करोति तदाचष्टे" (धा।२००, २०१) इति णिच्(), इष्ठवद्भावाट्()टिलोपः, सन्(), इट्(), गुणः, अयादेशः। "तिष्ठासति" इति। "शर्पूर्वाः खयः" ७।४।६१ शेषः। "पिफकारयिषति" इचि। "टिठकारयिषतीत्यनेन तुल्यसाधनम्()। अयं तु विशेषः--फकारशब्दाण्णिच्()। "प्रकृतिचरा प्रकृतिचरो भवन्ति" इति। जश्त्वबाधनार्थम्()" पर्जन्यवल्लक्षण (व्या।प।८३) प्रवृत्त्या प्रकृतिरूपाश्चरः प्रकृतिचरः स्थानिनाऽभिन्नरूपा इत्यर्थः। "चिचीषति" इति। "अज्झनगमां सनि" ६।४।१६ इति दीर्घः। "तितीर्षति"[न स्तः--काशिकायाम्()] इति। "ॠत इद्धातोः" ७।१।१०० इतीत्त्वं रपरत्वं च, "हलि च" ८।२।७७ इति दीर्घः। "जिझकारयिषति" [न स्तः--काशिकायाम्()] इति। टिठकारयिधतीत्यनेन तुल्यसाधनम्()। अत्र झकारशब्दाण्णिजि विशेषः। "जिघत्सति" इति। अदेः सन्(), "लुङसनोर्घस्लृ" २।४।३७ इति धस्लादेशः पूर्ववदभ्यासस्य चुत्वम्()--झकारः, तस्य जश्त्वम्()--जकारः, "सः स्यार्धधातुके" ७।४।४९ इति सकारस्य तकारः। "डुढौकिषते" इति। ढौकतेः सन्()। "प्रकृतिजशां प्रकृतिजशो भवन्ति" इति। चर्वाधनार्थं पूर्ववत्? प्रकृत्या स्थानिनाऽभिन्नरूपा जशः प्रकृतिजशः। "जिजनिषते" इति। "पूर्ववत्? सनः" १।३।६२ इत्यात्मनेपदम्()। "बुबुधे" इति। अनुदात्तेत्त्वादात्मनेपदम्(), "लिटस्तझयोरेशिरेच्()" ३।४।८१ इत्येश्()। "ददौ" इति। "आत औ णलः" ७।१।३४ इत्यौत्त्वम्()। "डिड()ए इति। "डीङ्? विहायसा गतौ" (धा।पा।९६८), पूर्ववदेशादेशः, स्थानिवद्भावड्डीत्यस्य द्विर्वचनम्()॥

बाल-मनोरमा

अभ्यासे चर्च ३१, ८।४।५३

भ भूव् अ इति स्थिते -- अभ्यासे चर्च। "झलां जश् झशी"त्यस्माज्झलामित्यनुवर्तते। चकारेण जश् समुच्चीयते। तदाह--अभ्यासे झलामित्यादिन। झलश्चतुर्विंशतिः। तत्र शषसाः--शरः। तेषामभ्यासे लोपो वक्ष्यते-- "शर्पूर्वाः खय" इति। हकारस्य त्वभ्यासे "कुहोश्चु" रिति चुत्वं वक्ष्यते। एवं च झल्षु झयो विंशतिरिहाऽभ्यासगताः स्थानिनो लभ्यन्ते। तेषां मध्ये कस्य चरः, कस्य जश इत्याशङ्कायामाह-- झशां जश इति। वर्गाणां तृतीयचतुर्था झशः। तेषां जशः जबगडदा इत्यर्थः। यद्यद्वर्ग्याः स्थानिनस्तत्तद्वग्र्या आदेशा इत्यपि बोध्यम्। खयां चर इति। वर्गाणां प्रथमद्वितीयाः खयः, तेषां चरः चटकतपा इत्यर्थः। अत्रापि यद्यद्वर्ग्याः स्थानिनस्तत्तद्वग्र्या आदेशा इत्यपि बोध्यम्। तत्रापीति। तेष्वपि वर्ग्येषु प्रकृत्या = स्वभावेन जशामेव सतां प्कृत्या स्वभावेन जश एव सन्तस्तत्तद्वग्र्या आदेशाः स्युः। एवं प्रकृत्या स्वभावेन चरामेव सतां

प्रकृत्या स्वभावेन चर एव सन्तस्तत्तद्वर्ग्या आदेशाः स्युरित्यर्थः। पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः। कुत इयं व्यवस्थेत्यत आह-- आन्तरतम्यात्। झशां जशां च घोषसंवारनादप्रयत्नसाम्यम्। खयां चरां च ()आआसाऽघोषविवारप्रयत्नसाम्यम्। तत्तद्वर्ग्याणां तत्तद्वर्ग्या आदेशा इत्यत्र तु स्थानसाम्यं नियामकं बोध्यम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ खरि ७।१ च ० चर् १।१ ५३ झलाम् ६।३ ५२ संहितायाम् ७।१ ८।२।१०८

अर्थः॥

खरि परतः झलां चर् आदेशो भवति॥

उदाहरणम्॥

भेत्ता, भेत्तुम्, भेत्तव्यम्, युयुत्सते, आरिप्सते, आलिप्सते॥
काशिका-वृत्तिः
खरि च ८।४।५५

खरि च परतो झलां चरादेशो भवति। जश्ग्रहणं न अनुवर्तते, पूर्वसूत्रे च अनुकृष्तत्वात्। भेत्ता। भेत्तुम्। भेत्तव्यम्। युयुत्सते। आरिप्सते। आलिप्सते।
लघु-सिद्धान्त-कौमुदी
खरि च ७४, ८।४।५४

खरि झलां चरः। इत्युदो दस्य तः। उत्थानम्। उत्तम्भनम्॥
न्यासः
स्वरि च। , ८।४।५४

"युयुत्सते" इति युधेः सन्(), "पूर्ववत्? सनः" १।३।६२ इत्यात्मनेपदम्()। "आरिप्सते" इति। रभिलभिभ्यां सन्()। "सनि मीमा" ७।४।५४ इत्यादिनेस्(), "स्कोः संयोगाद्योरन्त च" ८।२।२९ इति सकारलोपः। "अत्र लोपोऽब्यासस्य" ७।४।५८ इत्यभ्यासलोपः। समुच्चयार्थश्चकारः, न केवलमब्यासे चरो भवन्ति, अपि तु खरि च। असति ह्()स्मश्चकारेऽनन्तरविहितं यच्चर्त्वं तत्? खरादावभ्यासनिमित्ते प्रत्यये स्यात्()--तिष्ठासतीत्यादौ, न तु "चखाद" इत्यादावपीति कस्यचिन्मन्दभियो भ्रान्तिः स्यात्()॥
बाल-मनोरमा
खरि च १२२, ८।४।५४

केनेत्यत आह--खरि च। "झलाञ्जश्झशी"त्यतो झलामिति , "अभ्यासे चर्चे"त्यतश्चरिति चानुवर्तते। तदाह--खरि पर इत्यादिना। इति जकारस्येति। स्थानत आन्तंक्यादिति भावः। ततः छत्वं नतु प्रागुत्यपि बोध्यम्। छत्वस्य चुत्वचर्त्वे प्रत्यसिद्धत्वात्। हलो यमामिति सूत्रस्थभाष्यसंमतसूत्रक्रमे तु चुत्वेन जकारे कृते शस्य छत्वं ततो जकारस्य चत्र्वम्।

नतु छत्वात् प्राक् चत्त्वम्, चत्वं प्रतिछत्वस्याऽसिद्धत्वात्। तच्छिव इति। स चासौ शिवश्चेति, तस्य शिव इति वा विग्रहः। "चोः कु"रिति कुत्वं तु न, श्चुत्वस्याऽसिद्धत्वात्।

छत्वममीति। "शश्छोऽटी"ति सूत्रेऽटीति विहाय अमीति वक्तव्यमित्यर्थः। "शश्छोऽमी"ति सूत्रं पठनीयमिति यावत्। तच् श्लोकेनेति। स चासौ श्लोकश्च,तस्य श्लोक इति वा विग्रहः। लकारस्य अड्बहिर्भूतत्वात्तत्परकस्य शकारस्य सूत्रपाठतः छत्वे अप्राप्ते वार्तिकमिदम्। वाक्श्च्योततीति। अत्र तु कुत्वं भवत्येव, चकारस्य स्वाभाविकतया श्चुत्वनिष्पन्नत्वाऽभावेन असिद्धत्वाभावात्। अत्र चकारस्य अम्बर्हिर्भूतत्वात्तत्परकशकारस्यात्र न छत्वम्।

---

प्रथमावृत्तिः

सूत्रम्॥

पदच्छेदः॥ वा ० ५६ अवसाने ७।१ ५६ चर् १।१ ५३ झलाम् ६।३ ५२ संहितायाम् ७।१ ८।२।१०८

अर्थः॥

अवसाने वर्त्तमानानां झलां वा चर् आदेशो भवति।

उदाहरणम्॥

वाच् -- वाक्, वाग्। त्वच् -- त्वक्, त्वग्। श्वलिड् -- श्वलिट्, श्वलिड्। त्रिष्टुभ् -- त्रिष्टुप्, त्रिष्टुब्।
काशिका-वृत्तिः
वा अवसाने ८।४।५६

झलां चरिति वर्तते। अवसाने वर्तमानानां झलां वा चरादेशो भवति। वाक्, वाग्। त्वक्, त्वग्। श्वलिट्, श्वलिड्। त्रिष्टुप्, त्रिष्टुब्।
लघु-सिद्धान्त-कौमुदी
वावसाने १४६, ८।४।५५

अवसाने झलां चरो वा। रामात्, रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य॥
न्यासः
वाऽवसाने। , ८।४।५५

"झलां जशोऽन्ते" ८।२।३९ इति नित्ये जश्त्वे प्राप्तेऽवसाने वा चरो विधीयन्ते। वावचनात्? पक्षे जश्त्वमपि भवत्येव॥
बाल-मनोरमा
वावसाने २०४, ८।४।५५

वाऽवसाने "झलां जश्झशी"त्यतो "झला"मिति "अभ्यासे चर्चे"त्यतश्चरिति चानुवर्तते। तदाह--अवसान इति। द्वित्वे रूपेति। तकारदकारयोरनचि चेति द्वित्वे, तदभावे च रूपचतुष्टयमित्यर्थः। तत्र चत्र्वपक्षे द्वतकारमेकतकारं च रूपम्। जश्त्वपक्षे द्विदकारं एकदकारं च। रामाभ्याम्। रामेभ्य इति। चतुर्थीवत्प्रक्रिया सुगमिति भावः।

अथ षष्ठीविभक्तिः। ङसो ङकारस्य "लशक्लतद्धित" इति इत्त्वं, लोपः। ङकारोच्चारणं तु "ङिति ह्रस्वश्चे"त्याद्यर्थम्। "टाङसिङसा"मिति स्यादेशं सिद्धवत्कृत्याह--रामस्येति। नन्विह सकारस्यानचि चेति द्वित्वे पूर्वसकारस्य "खरि चे"ति चर्त्वेन दन्तस्थानतो।ञन्तरतमे तकारे सति रामत्स्येति स्यादित्यत आह--सस्य द्वित्वेति। स एवेति। सकार एवेत्यर्थः। "एव"कारव्यावर्त्यमाह--नतु तकार इति। ननु दन्तस्थानतः ()आआसाघोषविवारात्मकबाह्रप्रयत्नश्चान्तर्यं तकारे।ञप्यविशिष्टमित्यत आह--अल्पप्राणतयेति। सकारः स्थानी महाप्राणः। तकारस्तु अल्पप्राणः। अतो बाह्रप्रयत्नभेदात्तकारो न भवति। इदमुपलक्षणम्, आभ्यन्तरप्रयत्नभेदादपि सकारस्य तकारो भवतीति द्रष्टव्यम्। अत एवेति। "वस निवासे" इत्यदिधातोर्वत्स्यतीत्यादौ सकारस्य सकारे परे तकारो विधीयते यदि तु त्र खरि चेति सकारस्य तकारः स्यात्तर्हि तद्विधानमनर्थकं स्यादित्यर्थः।

तत्त्व-बोधिनी

वावसाने १७२, ८।४।५५

जश्त्वं वावसान इति। अत्राहुः--जश्त्वे कृतेऽवसाने चत्र्वमिति न मन्तव्यं, किंतु येननाप्राप्तिन्यायेन अवसाने चत्र्वस्य जश्त्वापवादत्वाच्चत्र्वाऽभावपक्षे जश्त्वमिति योज्यमिति। द्वित्व इति। "अनचि चे"त्यनेन। "अनचीति प्रसज्यप्रतिषेध" इति प्रागेवोक्तम्। पर्युदासाभ्युपगमे तु इह द्वित्वं न स्यात्। तादेश आरभ्यत इति। वत्स्यतीत्यादौ चर्त्वेन तकारो न लभ्यत इति "सः स्याद्र्धधातुके" इत्यनेन सकारस्य तकारो विधीयत इत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

अणो ऽप्रगृह्यस्य अनुनासिकः ८।४।५७

अणः अप्रगृह्यसंज्ञस्य अवसाने वर्तमानस्य वा अनुनासिकादेशो भवति। दधिम्ँ, दधि। मधुम्ँ, मधु। कुमारीम्ँ, कुमारी। अणः इति किम्? कर्तृ। हर्तृ। अप्रगृह्यस्य इति किम्? अग्नी। वायू।

न्यासः

अणोऽप्रगृह्रस्यानुनासिकः।, ८।४।५६

"अणः" इति पूर्वेण णकारेण प्रत्याहारग्रहणम्। अन्यथाऽसन्देहार्थ "अचः" इति कुर्यात्()। न च पदान्तहलोऽणः सम्भन्ति। "दीर्घे, मधुँ" इति। "स्वमोर्नपुंसकात्()" ७।१।२३ इति स्वमोर्लुक्()। "अग्नी, वायू" इति। "प्रथमयोः पूर्वसवर्णः" ६।१।९८ इति दीर्घः। "ईदूदेद्विवचनम्()" १।१।११ इति प्रगृह्रसंज्ञा॥

बाल-मनोरमा

अणोऽप्रगृह्रस्यानुनासिकः ७११, ८।४।५६

अणोऽप्रगृह्रस्य। "वा"अवसाने" इत्यनुवर्तते। तदाह--अप्रगृह्रेत्यादिना। अत्र अण् पूर्वेणैव णकारेण, व्याख्यानात्। ततस्च "कर्तृ" इत्यत्र नानुनासिकः। इत्यच्संधीति। अल्पाच्तरमिति, सिद्धमनच्त्वादिति, कथमनच्त्वमिति च सूत्रवार्तिकभाष्यप्रयोगादेवजातीयस्थलेषु असंदेहार्थं संध्यभावोऽभ्यनुज्ञातः। अतोऽत्र कुत्वश्चुत्वयोरभावेऽपि न दोषः। इति*बालमनोरमायामच्सन्धिः।

अत तिङन्ते प्रत्ययमाला।

अथ प्रत्ययमालां वक्ष्यन्नाह--कण्डूयतेः सन्निति। "धातोः कर्मणः" इत्यनेनेति भावः। प्रथमस्यैकाच इति। "अजादेर्द्वितीयस्ये"ति द्वितीयैकाचो द्वित्वे प्राप्ते इत्यपि ज्ञेयम्।कण्ड्वादेस्तृतीयस्येति। "एकाचो द्वित्व"मिति शेषः। "कण्ड्वादे"रित्यनन्तरं "यगन्तस्ये"ति शेषः, केवलकण्ड्वादिषु तृतीयैकाचोऽभावात्। कण्डूयियिषतीति। कण्डूयेति यगन्तात्सनि इटि अतो लोपः। इस् इति तृतीयस्यैकाचो द्वित्वम्। असु उपतापे। कण्ड्वादिः। असूयियिषति। अजादेस्तृतीयस्य एकाचो द्वित्वम्। क्यजन्तात्सन्निति। "उदाघ्नियते" इति शेषः। यथेष्टं नामधातुषु -- इत्पि वार्तिकम। नाम = प्रातिपदिकं, तद्धटितधातुष्वित्यर्थः। अजादेस्त्वाद्येतरस्येति। अजादेरित्यनुवृत्त्या आदिभूतादचः पेरषामेकाचां यतेष्टमित्यर्थलाभादिति भावः। नदराणामिति। तेषां मध्ये आदिभूतादचः परस्यैवेत्यर्थः। इन्द्रीयतेः सन्निति। इन्द्रशब्दात् क्यजन्तात्सन्नित्यर्थः। द्रीशब्दयिशब्दयोरिति। नकारस्य आदिभूतादचः परत्वान्न द्वित्वम्। दकारस्य तु आदिभूतादचः परत्वाऽभावान्न द्वित्वनिषेध इति भावः। चिच्नद्रीयिषतीति। चन्द्रीयतेः सनि प्रथमस्यैकाचो द्वित्वम्। चन्द्रिद्रीयिषतीति। द्वितयीस्यैकाचो द्वित्वम्। प्रियमिति। प्रियमाख्यातुमिच्छतीत्यर्थे "तत्करोति तदाचष्टे" इति ण्यन्तात्सनि इटि णाविष्ठवत्त्वात्प्रियशब्दस्य "प्रियस्थिरे"ति प्रादेशे वृद्धौ पुकि णिचो गुणाऽयादेशयोः षत्वे प्रापयिषेत्येव सन्नन्तम्। प्रियमाचक्षाणं प्रेरयितुमिच्छतीत्यर्ते तु प्रापि इति ण्यन्तादुक्ताद्धेतुमण्णौतद्रतात्सनि इटि द्वितीयं णिचमाश्रित्य प्रथमणिचो लोपेद्वितीयणिचो गुणाऽयादेशयोः प्रापयिषेत्येव सन्नन्तम्। तत्र यथेष्टं नामधातुष्वित्याद्यानां त्रयाणामेकाचामेकैकस्य द्वित्वे "पिप्रापयिषती"त्यादिरूपत्रयमित्यर्थः। उरुमिति। उरुमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे उरुशब्दाचष्टे इत्यर्थे णिचि "प्रियस्थिरे"ति वरादशे उपधावृद्धौ वारि इति ण्यन्तात्सनि इटि णिचो गुणाऽयादेशयोः षत्वे वारयिषेति सन्नन्तम्। माधवमते वृद्ध्याङ्गीकाराद्वारीत्यस्माद्धेतुमण्ण्यन्तात् सनि इटि प्रथमणेर्लोपे षत्वे वारयिषेत्येव रूपम्। तत्र यथेष्टं नामधातुषवित्येकैकस्य एकाचो द्वित्वे विवारयिषतीत्यादिरूपत्रयमित्यर्थः। बाढंसिसाधयिषतीति। बाढमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे णिजादि पूर्ववत्। "अन्तिकबाढयो"रिति साधादेशः। तत्र सकारस्यादेशत्वाऽभावान्न षत्वम्। तदाह-- षत्वं तु नास्तीति। बोभूयिषयिषतीत्यत्र प्रक्रियां दर्शयति-- यङिति। "भूधातो" रिति शेषः। द्वित्वे बोभूयेति स्थितम्। सन्निति। इटि अतो लोपे षत्वे बोभूयिषेति स्थितम्। ण्यन्तात्सन्निति। बोभूयिषेत्यस्माद्धेतुमण्णिचि अतो लोपे बोभूयिषि इति स्थितम्। तस्मात् सनि इटि णिचो गुणाऽयादेशयोः षत्वे बोभूयिषयिषेति स्थितम्। ततो लटस्तिपि शपि पररूपे बोभूयिषयिषतीति रूपम्। "अनभ्यासस्ये"त्युक्तेर्न पुनर्द्वित्वम्। अथ बोभूययिषयतीत्यत्र प्रक्रियां दर्शयति-- यङिति। "भूधातो"रिति शेषः। द्वित्वे बोभूयेति स्थितम्। णिजिति। बोभूयेत्यस्माद्धेतुमण्णौ अतो लोपे बोभूयि इति स्थितम्। सन्नन्ताण्णिजिति। बोभूयि इत्यस्मात्सनि इटि णिचो गुणाऽयादेशयोः ष्तवे बोभूययिषेति स्थितम्। तस्माद्धेतुमण्णिचि अतो लोपे बोभूययिषि इत्यस्माल्लटस्तिपि शपि गुणाऽयादेशयोर्बोभूययिषयतीति रूपं सिद्धम्।

प्रत्ययमाला समाप्ता।

अथ पूर्वकृदन्तप्रकरणम्।

तत्त्व-बोधिनी

अणोऽप्रगृह्यस्यानुनासिकः ५९२, ८।४।५६

अणोऽप्रगृह्यस्य। अण इति किम्?, हर्तृ कर्तृ। अच्सन्धिरिति। कुत्वं श्चुत्वं वाऽत्र न कृतं, स्पष्टप्रतिपत्त्यर्थम्। अत एवानुस्वारस्याप्यच्त्वादित्यादिनिर्देशोऽप्युपपन्नः।

इति प्रकृतिभावप्रकरणम्॥

इति तत्त्वबोधिन्यामच्सन्धिप्रकरणम्॥

--------------------------

अथ तिङन्ते प्रत्ययमाला।

प्रथमस्येति। अजादेस्तु द्वितीयस्य द्वित्वे प्राप्ते इत्यपि ज्ञेयम्। प्राचा तु "यथेष्टं नामाधातुषु" इति प्राप्ते "कण्ड्वादेस्तृतीयस्येत्युक्त"मित्यवतारितं, तदयुक्तम्, नामधातुत्वस्य निराकृतत्वात्। अत एव मूले नामधाथून् समाप्य कण्ड्वादयः पृथगेवोक्ताः। द्रीशब्दयिशब्दयोरिति। नकारस्य त्वचः परत्वाद्द्वत्वं नेति भाव-। पिप्रापयिषतीति। णाविष्ठवद्भावेन प्रियशब्दस्य "प्रियस्थिरे"त्यादिना प्रादेशः। ततो द्वित्वादि। सिसाधयिषतीति। इष्टवद्भावादिह "अनतिकबाढयो"रिति साधादेशः। सादिधयिषति। साधयियिषति। षत्वं तु नास्तीति। आदेशावयवत्वादिति भावः। बोभयिषयिषतीति। इह यङ् निमित्तद्वित्वे कृतेऽपि सन्निमित्तद्वत्वे कृतेऽपि सन्निमित्तद्वित्ववारणाय "लिटि धातो"रिति सूत्रे "अनभ्यासस्ये" त्येतदवश्यं वर्तव्यम्। एवं च "लक्ष्ये लक्षमं सकृदेव प्रवर्तते" इति अनभ्यासग्रहणं तत्र माऽस्त्विति भाष्यस्थं प्रत्याख्यानं प्रौढिवादमात्रमिति भावः।

अथ पूर्वकृदन्तप्रकरणम्।

---

सूत्रम्

काशिका-वृत्तिः

अनुस्वारस्य ययि परसवर्णः ८।४।५८

अनुस्वारस्य ययि परतः प्रस्वर्णः आदेशो भवति। शङ्किता। शङ्कितुम्। शङ्कितव्यम्। उञ्छिता। उञ्छितुम्। उञ्छितव्यम्। कुण्डिता। कुण्डितुम्। कुण्डितव्यम्। नन्दिता। नन्दितुम्। नन्दितव्यम्। कम्पिता। कम्पितुम्। कम्पितव्यम्। इह कुर्वन्ति, वृषन्ति इत्यत्र णत्वस्य असिद्धत्वात् पूर्वं नकारस्य अनुस्वारः क्रियते। तस्य अपि परसवर्णेन पुनर् नकार एव भवति। तस्य अपि असिद्धत्वात् पुनर् णत्वं न भवति। एवम् अनुस्वारीभूतो णत्वम् अतिक्रामति इति। ययि इति किम्? आक्रंस्यते। आचिक्रंस्यते।

लघु-सिद्धान्त-कौमुदी

अनुस्वारस्य ययि परसवर्णः ७९, ८।४।५७

स्पष्टम्। शान्तः॥

न्यासः

अनुस्वारस्य ययि परसवर्णः। , ८।४।५७

"शङ्()किता" इत्यादि। "शकि शङ्कायाम्()" (धा।पा।८६), "उछि उञ्छे" (धा।पा।२१५), "कुडिदाहे" (धा।पा।२७०), "टुनदि समृद्धो" (धा।पा।६७), "कपि चलने" (धा।पा।३७५)--एभ्यस्तृजादयः, इदित्त्वान्नुम्(), "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्वारः, तस्यानेन परसवर्णः। "कुर्वन्ति, कृषन्ति" इति। करोतेः, "कृष विलेखने" (धा।पा।१२८६) इत्यस्माच्च तौदादिकात्? परस्य लडादेशस्य झेः "झोऽन्तः" ७।१।३ इत्यन्तादेशः। नकारस्यानुस्वारे तस्य च परसवर्णे नकारे सति "अट्कुप्वाङ्नुम्()" ८।४।२ इत्यादिना णत्वं प्राप्नोति, तत्? कस्मान्न भवति? इत्याह--"इह" इत्यादि। णत्वमत्रानुस्वारात्? पूर्वं स्यात्()? पश्चाद्वा? पूर्वं तावन्न भवति; यस्मादनुस्वारे कत्र्तव्ये णत्वस्यासिद्धत्वम्(), अतः पूर्वं

नकारस्यानुस्वार एव क्रियते। परसवर्णे नकारे कृते पश्चादपि न भवति; णत्वे कत्र्तव्येऽनुस्वारस्थानिकस्यासिद्धत्वात्()। "परसवर्णेन" इति। परसवर्णार्थेन शास्त्रेणेत्यर्थः। भवति तादथ्र्यात्? ताच्छब्द्यम्()। यथा प्रदीपार्था मल्लिका प्रदीप इति। "पुनः" इति। अनुस्वारक्रियाया उत्तरकालमित्यर्थः। "एवम्()" इत्यादिनाऽनुस्वारीभूतो नकारो णत्वमतिक्रामतीति भाष्ये णत्वस्यातिक्रमणमनुस्वारीभूतस्य नक्रस्योक्तम्()। तदेवासिद्धत्वात्? परसवर्णस्य नकारसय णत्वं न सम्पद्यत इति दर्शयति। "अतिक्रामति" इति। अतिक्रम्म वत्र्तत इत्यर्थः। "आर्क्रस्यते" इति। आङ्पूर्वात्? क्रमेर्लुट्(), "आङ उद्गमने" [१।३।४०] इत्यात्मनेपदम्()। "आचिर्क्रसते"[आचिक्रंस्यते--काशिका] इति। "पूर्ववत्? सनः" [१।३।६२] इत्यात्मनेपदम्()॥
बाल-मनोरमा
अनुस्वारस्य ययि परसवर्णः १२५, ८।४।५७

अनुस्वारस्य ययि। स्पष्टमिति। अनुवत्र्यपदान्तराभावादिति भावः। अङ्कित इति। अन्क पदे लक्षणे चेति चुरादौ नौपधः। नश्चापदान्तस्येति कृतानुस्वारस्य निर्देश इति केचित्। ण्यन्तात् क्तः, इट्। निष्ठायां सेटीति णिलोपः। अनुस्वारस्यानेन परसवर्णः। परनिमित्तमत्र ककारः, तत्सवर्णः कवर्गः। सोऽनुस्वारस्य भवन् नासिकारस्थानसाम्याङ्कार एव भवति। अञ्चित इति। अन्()चु गतिपूजनयोः। नोपधः। तस्मात्। क्तः। अञ्चेः पूजायामिति इट्। नाञ्चेः पूजायामिति निषेधादनिदितामिति नलोपो न। अत्र नश्चापदान्तस्येत्यनुस्वारस्य परसवर्णो ञकारः। कुण्ठित इति। कुठि प्रतिघाते। इदित्वान्नुम्। क्त इट्। अत्र नश्चेत्यनुस्वारस्य परसवर्णो णकारः। शान्त इति। शम उपशमे। क्तः। वा दान्तशान्तेत्यादिनिपातनान्नेट्। अनुनासिकस्य क्वीति दीर्घः। नश्चेति मस्यानुस्वारः। तस्यं परसवर्णो नकारः। गुम्फित इति। गुन्()फ ग्रन्थे-द्वितीयान्तः चतुर्थान्तो वा, नोपधः। क्तः इट्। "नोपधात्थफान्ताद्वा" इत्यकित्त्वपक्षे नलोपो न। अत्र नश्चेत्यनुस्वारस्य परसवर्णो मकारः। ननु कृञ्धातोर्लट्, झिः, झोऽन्तः, तनादिकृञ्भ्य उः, गुणः, परत्वम्। "अत उत्स#आर्वधातुके"। उकारस्य यण्। न भकुर्छुरामिति निषेधात् र्वोरुपधाया इति दीर्घो न। कुर्वन्तीति रूपम्। अत्र नकारस्य नश्चापदान्तस्येत्यनुस्वारं बाधित्वा परत्वाद्रषाभ्यामिति णत्वं स्यात्। न च त्रिपाद्यां नश्चापदान्तस्येत्यपेक्षया रषाभ्यामित्यस्य परत्वात्पूर्वत्रासिद्धमित्यसिद्धत्वादनुस्वारे सति परसवर्णे च नकारस्यैव श्रवणमिति वाच्यम्। एवमपि परसवर्णविधिना प्राप्तस्य नकारस्य रषाभ्यामिति णत्वप्राप्तेर्दुर्वारत्वादित्यत आह--कुर्वन्तीत्यादि। रषाभ्यामित्यपेक्षया परसवर्णस्य परतया णत्वे कर्तव्ये अनुस्वारस्थानिकपरसवर्णस्य नकारस्याऽसिद्धत्वान्न णत्वमिति भावः।

तत्त्व-बोधिनी
अनुस्वारस्य ययि परसवर्णः ९९, ८।४।५७

अनुस्वारस्य। अत्र "ययी"ति स्पष्टार्थम्, अचि परेऽनुस्वाराऽभावात्। शलि तु परसवर्णोऽनुस्वारान्तरतमो न संभवतीति "कुण्डं रथेने"त्यत्रेव "दंशन"मित्यादावपि परसवर्णविध्यप्रवृत्तेः। अत्र वदन्ति-"ईषद्विवृतमूष्माणां, विवृतं स्वराणा"मिति भाष्यमते "ययी"त्यास्यापार्थकत्वम्। सूत्रकारमते तदावश्यकमेव। अन्यथा "दशन"मित्यादावनुस्वारान्तरतमः परसवर्णोऽनुनासिक ईकारः स्यात्। ईकारशकारयोस्तन्मते सावण्र्यस्य सत्त्वात्। तथा "कुण्डं शेते" इत्यादावनुस्वारस्य "वा पदान्तस्ये"ति स्यादिति। अङ्कित इति। "अङ्क पदे लक्षणे चे"ति चुरादिण्यन्तात्क्तः। "निष्ठायां सेटी"ति णिलोपः। परसवर्णेन ङः। "अकि लक्षणे" इत्यस्माद्वा क्तः। नुमोऽनुस्वारे परसवर्णेन ङः। अञ्चित इति। "अञ्चेः पूजाया"मिति निष्ठायामिट्। "नाऽचे"रिति नलोपनिषेधः।

कुण्ठित इति। "कुठि प्रतिघाते" क्तः। नुमोऽनुस्वारे परसवर्णेन णः।

शान्त इति। "शम उपशमे" क्तः। "वा दान्तशान्ते"ति निपरातनादिडभावः। "अनुनासिकस्य क्वी"ति दीर्घः। मस्यानुस्वारे

परसवर्णेन नकारः। गुम्फित इति। "गुम्फ ग्रन्थे"क्तः। मस्यानुस्वारे परसवर्णेन मः॥

---

सूत्रम्

काशिका-वृत्तिः

वा पदान्तस्य ८।४।५९

पदान्तस्य अनुस्वारस्य ययि परतः वा परसवर्णादेशो भवति। तङ्कथञ्चित्रपक्षण्डयमानन्नभःस्थम्पुरुषो ऽवधीत्, तं कथं चित्रपक्षं डयमानं नभःस्थं पुरुषो ऽवधीत्।

लघु-सिद्धान्त-कौमुदी

वा पदान्तस्य ८०, ८।४।५८

त्वङ्करोषि, त्वं करोषि॥

न्यासः

वा पदान्तस्य। , ८।४।५८

वावचनं पूर्वस्य नित्यात्वज्ञापनार्थम्()। द्वयोर्विभावयोमध्ये ये वै विधयस्ते नित्या भवन्तीति कृत्वा। असति वाग्रहणे विपर्ययः सम्भाव्येत--पूर्वो विधिर्विभाषा, अयं तु विधिरारम्भसामर्थ्यान्नित्य इति॥

बाल-मनोरमा

वा पदान्तस्य १२६, ८।४।५८

वा पदान्तस्य। "अनुस्वारस्य ययि परसवर्ण" इत्यनुवर्तते। तदाह--पदान्तस्येत्यादिना। त्वङ्करोषीति। त्वम्-करोषीति। स्थिते मोऽनुस्वारः। परसवर्णो ङकारः। तदभावपक्षे अनुस्वार एव श्रूयते। अत्रेति। सम्-यन्तेति स्थिते मोऽनुस्वारः। तस्य परनिमित्तभूतयकारसवर्णः अनुनासिक एव यकारो भवति, आन्तर्यात्। तथाच सय्यँन्तेति रूपम्। एवं सं-वत्सर इति स्थिते अनुस्वारस्य परसवर्णोनुनासिको वकारः। सव्वँत्सर इति रूपम्। यं-लोकमिति स्थिते, अनुस्वारस्य परसवर्णोऽनुनासिको लकारः। यल्लोँकमिति रूपम्। परसवर्णाभावपक्षे तु अनुस्वार एवेत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

तोर् लि ८।४।६०

तवर्गस्य लकारे परतः परसवर्णादेशो भवति। अग्निचिल्लुनाति। सोमसुल्लुनाति। भवाम्ँल्लुनाति। महाम्ँल्लुनाति।

लघु-सिद्धान्त-कौमुदी

तोर्लि ६९, ८।४।५९

तवर्गस्य लकारे परे परसवर्णः। तवर्गस्य लकारे परे परसवर्णः। तल्लयः। विद्वांल्लिखति। नस्यानुनासिको लः।

न्यासः

तोर्लि। , ८।४।५९

बाल-मनोरमा

तोर्लि ११८, ८।४।५९

तोर्लि। "अनुस्वारस्य ययी"त्यतः "परसवर्णः" इत्यनुवर्तते। तदाह--तवर्गस्येत्यादिना। तल्लय इति। तस्य-लय इति विग्रहः। तदा-लय इति स्थिते दस्य परसवर्णः=परनिमित्तभूतलकारसवर्णो भवति, स च लकार एव, अन्यस्य तत्सावर्ण्याऽभावात्। अत्र नकारस्येति। विद्वान्-लिखतीत्यत्र विद्वान् लिखतीति स्थिते नकारस्य स्थानिनोऽनुनासिकस्य परसवर्णो लकारो भवन्नान्तर्यादनुनासिक एव लकारो भवतीत्यर्थः।

---

सूत्रम्

काशिका-वृत्तिः

उदः स्थास्तम्भोः पूर्वस्य ८।४।६१

सवर्णः इति वर्तते। उदः उत्तरयोः स्था स्तम्भ इत्येतयोः पूर्वसवर्णादेशो भवति। उत्थाता। उत्थातुम्। उत्थातव्यम्। स्तम्भेः खल्वपि उत्तम्भिता। उत्तम्भितुम्। उत्तम्भितव्यम्। स्थास्तम्भोः इति किम्? उत्स्नाता। उदः पूर्वसवर्नत्वे स्कन्देश् छन्दस्युपसङ्ख्यानम्। अग्ने दूरम् उत्कन्दः। रोगे च इति वक्तव्यम्। उत्कन्दको नाम रोगः। कन्दतेर् वा धात्वन्तरस्य एतद् रूपम्।

न्यासः

उदः स्थास्तम्भोः पूर्वस्य। , ८।४।६०

"उत्थाता" इति। "आदेः पदस्य" १।१।५३ इति सकारस्य महाप्राणस्याघोषस्य तादृश एव पूर्वसवर्णस्थकारः, "खरि च" ८।४।५४ इति थकारस्य तकारः, "अनचि च" ८।४।४६ इति पूर्वतकारस्य द्विर्वचनम्(), "झरो झरि" ८।४।६४ इति पक्ष एकस्य लोपः। "उत्तम्भिता" इति। स्तम्भिः सौत्रो धातुः। "उत्स्नाता" इति"ष्णा शौचे" (धा।पा।१०५२)। पूर्वग्रहणं परसवर्णनिवृत्त्यर्थम्()। "उत्पूर्वस्य" इत्यादि। पूर्वसवर्णे कत्रत्व्ये स्कन्देश्छन्दति दि य उपसंख्यानम्()--प्रतिपादनं कत्रत्व्यमित्यर्थः। तत्रेदं प्रतिपादनम्()--"व्यत्ययो बहुलम्()" ३।१।८५ इति व्यत्ययेनोदः परस्य स्कन्दे श्छन्दसि विषये पूर्वसवर्णो भविष्यति। "उत्कन्द" ["उत्कन्दः"--काशिका] इति। लोट्(), सिप्(), "सेह्र्रपिच्च" ३।४।८७ इति हिरादेशः, "अतो हेः" ६।४।१०५ इति हेर्लुक्()। "रोगे च" इत्यादि। इदमविशेषेण च्छन्दसि भाषायां च रोगे वाच्य उदः परस्य स्कन्देः पूर्वसवर्णो भवतीत्येतदर्थरूपं व्याक्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--पृषोदरादित्वा६।३।१०८द्भविष्यतीति। "उत्कन्दकः" इति। "रोगाख्यायां ण्वुल्बहुलम्()" ३।३।१०८ इति ण्वुल्()॥

बाल-मनोरमा

सर्वत्र शाकल्यस्य ५९, ८।४।६०

सर्वत्र शाकल्यस्य। "ने"त्यनुवर्तते। यत्र यत्र द्वित्वं विहितं तत्र तत्र शाकस्यस्य ऋषेर्मते द्वित्वं न भवतीत्यर्थः। दीर्घादाचार्याणाम्। "ने"त्यनुवर्तते। दीर्घात्परस्य यरो द्वित्वं केषाञ्चिदाचार्याणां मते न भवति। मतान्तरे तु भवति। "अनचि चे"त्यत्र वाग्रहणमनुवर्तते इति नाज्झलाविति सूत्रे कैयटः। एवं चाऽनचि चेत्येव द्वित्वविकल्पसिद्धौ त्रिप्रभृतिष्वित्यादिसूत्रत्रयं नारम्भणीयमिति प्रौढमनोरमायां स्थितम्। एतत्सूत्रत्रयविरोधादनचि चेत्यत्र वाग्रहणं नानुवर्त्यमिति युक्तं प्रतिभाति।

बाल-मनोरमा

उदः स्थास्तम्भोः पूर्वस्य ११९, ८।४।६०

उदः स्थास्तम्भोः। "अनुस्वारस्य ययि परसवर्णः" इत्यत्र समासनिर्दिष्टमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते, एकदेशे स्वरितत्वप्रतिज्ञानात्। "उद" इति पञ्चमी। अतस्तस्मादित्युत्तरस्येति परिभाषया "उदःपरयो"रिति लभ्यते। तदाह--उदः परयोरिति। पूर्वेति। पूर्वनिमित्तस्य उदो दकारस्य यः सवर्णः स आदेशः स्यादित्यर्थः। पूर्वसवर्णश्चायमलोऽन्त्यपरिभाषया स्थास्तम्भोरन्तादेशो न भवतीत्याह--आदेः परस्येति। अनया परिभाषया स्थास्तम्भोराद्यवयवस्य सकारस्यैव भवतीत्यर्थः। उत्थानमिति। "ष्ठा गतिनिवृत्तौ"। भावे ल्युट्। उत्तम्भनमिति। "ष्टभि प्रतिष्टम्भे" भावे ल्युट्। "स्तम्भु रोधने" इति श्नुविधौ निर्दिष्टः सौत्रो वा धातुः। "स्थास्तम्भो"रिति पवर्गीयोपधनिर्देशस्य उभयसाधारणत्वात्। ननु उद्-स्थानमित्यत्र सकारस्य पूर्वसवर्णविधौ पूर्वनिमित्तं दकारः, तत्सवर्णश्च तथदधनाः पञ्चैव। दन्तस्थानसाम्यात्स्पृष्टप्रयत्नसाम्याच्च, न तु लृकारः सकारश्च, तयोः स्थानसाम्येऽपि विवृतप्रयत्नत्वात्। नापि लकारः, ईषत्स्पृष्टत्वात्। एतदतिरिक्ताश्च सर्वे वर्णा भिन्नस्थानकत्वान्न दकारसवर्णाः। ततश्च पूर्वनिमित्तभूतदकारसवर्णास्तथदधना#ः पञ्चापि सकारस्य प्राप्ताः, स्थानीभूतसकारेण दन्तस्थानत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात्। आभ्यन्तरप्रयत्नत आन्तर्यस्य च पञ्चस्वप्यभावात्। स्थानीभूतसकारस्य विवृप्रयत्नत्वात्, एतेषां च पञ्चानां स्पृष्टप्रयत्नत्वात्। अतोऽत्र बाह्यप्रयत्नत एवान्तर्यमादाय पञ्चस्वन्यतमव्यवस्थामाह--अत्राऽघोषस्येति। "अघोषस्ये"त्यनेन ()आआसवतो विवरवतश्चेत्युक्तप्रायं, समनियतत्वात्। स्थानीभूतस्तावत्सकारोऽत्राघोष()आआसविवारमहाप्राणात्मकयत्नचतुष्टवान्। तस्य तथदधनेषु प्रथमतृतीयपञ्चमा न भवन्ति, तेषामल्पप्राणत्वात्। नापि चतुर्थो भवति, तस्य घोषनादसंवारयत्नकत्वात्। द्वितीयस्तु थकारोऽघोष()आआसविवारमहाप्राणात्मकयत्नचतुष्टयवान्। अतः स एव थकारः पूर्वनिमित्तभूतदकारसवर्णः सकारस्य भवतीत्यर्थः। एवं च उद्-स्थानमिति स्थिते दकारस्य "खरि चे"ति चर्त्वेन तकारे सकारस्य पूर्वसवर्णे थकारे उत्थ्थानमित्येकतकारं द्विथकारं च रूपं सिद्धम्। एवं उत्थतम्भनमित्यत्रापि योज्यम्। तत्र द्वितकारमेकथकारं चेति विशेषः। तस्येति। सकारादेशस्य थकारस्येत्यर्थः। एवं च प्रथमथकारस्य लोपपक्षे एकतकारमेकथकारं च रूपमिति भावः। ननु प्रथमथकारस्य ल#ओपाभावपक्षे एकतकारं द्विथकारं च रूपमित्यनुपपन्नम्। प्रथमथकारस्य खरि चेति चर्त्वे सति द्वितकारमेकथकारमित्यापत्तेरित्यत आह--लोपाभावेति। असिद्धत्वादिति। "खरि चे"ति सूत्रापेक्षया उदस्था इत्यस्य परत्वादिति भावः। उत्तम्भनमिति त्रितकारपाठस्तु प्रामादिकः। उक्तप्रक्रियाया उभयत्रापि साधारण्यात्। केचित्तु "न मुने" इत्यत्र नेति योगविभागमभ्युपगम्य पूर्वसवर्णस्य थकारस्य चर्त्वं प्रत्यसिद्धत्वाऽभावाच्चर्त्वे उत्तम्भनमिति त्रितकाररूपं कथञ्चित्साधयामासुः। तत्तु मूलकृतो न संमतं, मूले उभयसाधारण्येनैव प्रक्रियानिरूपणात्। वस्तुतस्तु "दीर्घादाचार्याणा"मित्युत्तरम्। अनुस्वारस्य ययि परसवर्णः, वा पदान्तस्य, तोर्लि, उदःस्थास्तम्भोः पूर्वस्य, झयो होऽन्यतरस्याम्, शश्छोऽटीति षट्()सूत्रीपाठोत्तरं "झलाञ्जश् झशि", अभ्यासे चर्च", "खरि च", "वाऽवसाने", "अणोऽप्रगृह्यस्यानुनासिकः", इति पञ्चसूत्रीपाठ इति "हलो यमा"मिति सूत्रस्थभाष्यसंमतः सूत्रक्रमः। एवं च "खरि चे"ति चर्त्वे कर्तव्ये उदः स्थास्तम्भोरिति पूर्वसवर्णस्य थकारस्य असिद्धत्वाऽभावाच्चर्त्वे उत्थ्तानमिति द्वितकारमेकथकारं च रूपम्, उत्तूतम्भनमिति तु त्रितकारमेव रूपमिति शब्देन्दुशेखरे प्रपञ्चितम्।

तत्त्व-बोधिनी

उदः स्थास्तम्भोः पूर्वस्य ९५, ८।४।६०

उदः स्था। "अनुस्वारस्य ययी"त्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य संबध्यते, एकदेशे स्वरितत्वप्रतिज्ञानादित्यमिप्रेत्याह--पूर्वसवर्णः स्यादिति॥

---

सूत्रम्

काशिका-वृत्तिः

झयो हो ऽन्यतरस्याम् ८।४।६२

झयः उत्तरस्य पूर्वसवर्णादेशो भवति अन्यतरस्याम्। वाग्घसति, वाघसति। स्वलिड् ढसति, श्वलिड् हसति। अग्निचिद् धसत्। अग्निचिद् हसति। सोमसुद् धसति, सोमसुद् हसति। त्रिष्टुब् भसति, त्रिष्टुब् हसति। झयः इति किम्? प्राङ् हसति। भवान् हसति।

लघु-सिद्धान्त-कौमुदी

झयो होऽन्यतरस्याम् ७५, ८।४।६१

झयः परस्य हस्य वा पूर्वसवर्णः। नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः। वाग्घरिः, वाघरिः॥

न्यासः

झयो होऽन्यतरस्याम्?। , ८।४।६१

"वाग्धसति" इत्यादावुदाहरणे हकारस्य महाप्राणस्यान्तरतम्यात्? तादृश एव घकारादयो वर्गचतुर्था भवन्ति। अन्यतरस्यांग्रहणं पूर्वविध्योर्नित्यत्वज्ञापनार्थम्()॥

बाल-मनोरमा

झयो होऽन्यतरस्याम् १२०, ८।४।६१

झयो हः। झय इति पञ्चमी। "परस्ये"त्यध्याहार्यम्। "ह" इति। षष्ठी। "उदः स्थास्तम्भो"रित्यतः "पूर्वस्ये"ति, "अनुस्वारस्य ययी"त्यतः "सवर्ण" इति चानुवर्तते, तदाह--इयः परस्येत्यादिना। "वाग्घरि"रित्युदाहरणम्। वाच्शब्दश्चकारान्तः, कुत्वं जश्त्वम्। वाग्-हरिरिति स्थिते हकारस्य पूर्वसवर्णविधौ गकारः पूर्वो निमित्तम्, तत्सवर्णाः कखगघङाः पञ्च। तेषां हकारेण स्थानिना स्थानत आन्तर्यमविशिष्टम्। आभ्यन्तरप्रयत्नसाम्यं तु पञ्चानामपि हकारेण स्थानिना न विद्यते, स्पृष्टविवृतप्रयत्नबेदात्। अतो बाह्रयत्नत आन्तर्यमादाय पञ्चस्वन्यतमव्यवस्थामाह--घोषवत इत्यादिना। स्थानीभूतो हकारो घोषनादसंवानमहाप्राणाख्ययत्नचतुष्टयवान्, तस्य क-ख-ग-घ-ङेषु प्रथमतृतीयपञ्चमा न भवन्ति, तेषामल्पप्राणत्वात्। द्वितीयः खकारोऽपि न भवति, तस्याऽघोषस्वासविवारयत्नकत्वात्। चतुर्थस्तु घकारो घोषनादसंवारमहाप्राणवान्। अतः स एव घकारो हकारस्य (स्थाने) भवतीत्यर्थः। ततश्च वाग्घरिरिति भवति। पूर्वसवर्णभावे तु वाग् हरिरिति रूपम्।

---

सूत्रम्

काशिका-वृत्तिः

शश्छो ऽटि ८।४।६३

झयः इति वर्तते, अन्यतरस्याम् इति च। झय उत्तरस्य शकारस्य अटि परतः छकरादेशो भवति अन्यतरस्याम्। वाक् छेते, वाक् शेते। अग्निचिच् छेते, अग्निचित् शेते। सोमसुच् छेते, सोमसुत् शेते। श्वलिट् छेते, श्वलिट् शेते। त्रिष्टुप् छेते, त्रिष्टुप् शेते। छत्वममि इति वक्तव्यन्। किं प्रयोजनम्? तच्छलोकेन, तच्छमश्रुणा इत्येवम् अर्थम्।

लघु-सिद्धान्त-कौमुदी

शश्छोऽटि ७६, ८।४।६२

झयः परस्य शस्य छो वाटि। तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः। तच्छिवः, तच्शिवः।

(छत्वममीति वाच्यम्) तच्छ्लोकेन॥

न्यासः

शश्छोऽटि। , ८।४।६२

"छत्वममीति धक्तव्यण्()" इति। अमि परतश्छत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्()--"शश्छः" इति योगविभागः क्रियते, तेनाट्प्रत्याहारेऽसन्निविष्टे लकारादावपि भविष्यति, अतोऽटीत्यतिप्रसङ्गनिरासार्थो द्वितीयो योगः--तेनाट()एव परभूते, नान्यनेति। योगवभागकरणसामथ्र्याच्चाम्प्रत्याहारान्तर्गतेऽनट()दि क्वचिद्भवत्येव। अन्यथा योगविभागकरणमनर्थकं स्यात्()। अमीति नोक्तम्(), वैचित्र्यार्थम्()। अत्र "वा पदान्तस्य" ८।४।५८ इत्यतः पदान्तग्रहणमनुवत्र्तते, झयो विशेषणार्थम्()। तेन "शि तुक्()" ८।३।३१ इत्यत्र तुकः पूर्वान्तकरणं छत्वार्थमुपपन्नं भवति; "डः सि धुट्()" (८।३।२९) इत्यतो धुङ्ग्रहणानुवृत्तेः परस्या सिद्धत्वात्? पूर्वान्तकरणमनर्थकं स्यात्()॥

बाल-मनोरमा

शश्छोऽटि १२१, ८।४।६२

शश्छोऽटि। "झय" इति पञ्चम्यन्तमनुवर्तते। "श" इति षष्ठ()एकवचनम्। तदाह--झयः परस्येति। "तद्-शिव" इति स्थिते दकारस्य चुत्वेन जकारे कृते जकारस्य चकार इत्यन्वयः।

तत्त्व-बोधिनी

शाश्छोऽटि ९६, ८।४।६२

शाश्छोऽटि। इह पदान्तादित्यनुवत्र्य "पदान्ताज्झय" इति व्याख्येयम्, तेनेह न, "मध्वश्चोतन्त्यभितो विरप्शम्"। विपूर्वाद्रपेरौणादिकः शः।

छत्वममीति। "शश्छोऽटी"ति सूत्रं "शश्छोऽमी"ति पठनीयमित्यर्थः। तच्छ्लोकेनेति। "तच्छ्मश्रुणे"त्याद्यप्युदाहर्तव्यम्॥

---

सूत्रम्

काशिका-वृत्तिः

हलो यमां यमि लोपः ८।४।६४

अन्यतरस्याम् इति वर्तते। हल उत्तरेषां यमां यमि परतो लोपो भवति अन्यतरस्याम्। शय्य्या इत्यत्र द्वौ यकारौ, क्रमजस्तृतीयः, तत्र मध्यमस्य वा लोपो भवति। शय्या, शय्य्या। अदितेरपत्यमादित्य्यः इत्यत्र तकारात् परः एकः यकारः,यणो मयः इति क्रमजो द्वितीयः, तत्र मध्यमस्य वा लोपो भवति। आदित्यः, आदित्य्यः। आदित्यो देवता अस्य स्थालीपाकस्य इति आदित्य्यः इत्यत्र अपि द्वौ यकारौ क्रमजस्तृतीयः। तत्र मध्यमस्य मध्यमयोर् वा लोपो भवति। हलः इति किम्? आन्नम्। यमाम् इति किम्? अग्निः। अर्ध्यम्। यमि इति किम्? शार्ङ्गम्।

न्यासः

हलो यमां यमि लोपः। , ८।४।६३

"शय्य्येत्यत्र द्वौ यकारो" इति। एकः "संज्ञायां समज" ३।३।९९ इत्यादिना विहितस्य क्यपोऽवयवः, अपरस्त्वपङः। "क्रमजस्तृतीयः" इति। क्रमः=आनुपूर्वी, ततो जातः क्रमजः। स पुनः "अनचि च" ८।४।४६ इत्यनेन यो विहितः, स हि पूर्वयकाराभ्यां पश्चाज्जात इति क्रमजो भवति। "तकारत् परो यकार एकः" [एको यकारः--काशिका] इति।

"दित्यदित्यादित्य" ४।१।८५ इत्यादिना विहितस्य ण्यस्यावयवः। "द्वौ यकारौ" इति। एकोऽदितिशब्दात्? "तस्यापत्यम्()" ४।१।९२ इत्यर्थे "दित्यदित्या"दिसूत्रेण ४।१।८५ विहितस्यावयवः। द्वपितीयस्त्वादित्यशब्दादेव "साऽस्य देवता" ४।२।२३ इत्यर्थे तेनैव सूत्रेण विहितस्य ण्यस्यावयवः। "क्रमजस्तृतीयः" इति। "यणो मयः" (वा।९५६) इत्यनेन यो विहितः। "मध्यमस्य मध्यमयोर्वा" इति। अन्यतरस्याम्? ८।४।६१ इत्यधिकारात्()। यद्येकस्य भवति ततो मध्यमस्य, अथ द्वयोरिति ततो मद्यमयोः। "आश्नम्()" इति। "अन्नाष्णः" (४।४।८५) इति निपातनात्? "अदो जग्धिर्ल्यप्ति किति" २।३।३६ इति न भवति जग्ध्यादेशः, "रदाभ्याम्()" ८।२।४२ इत्यादिना निष्ठानत्वम्()। भवत्ययं नकारो यम्(), यमि परतश्च; न च हल उत्तरः, किं तर्हि? अचः। "अध्यम्()" इति। "पादार्धाभ्याञ्च" ५।४।२५ इति तादर्थे यत्()। अत्र घकारो रेफादुत्तरो भवति, यकारे यमि परतः। न त्वयं यम्? धकारः; तस्य यम्त्वसन्निवेशात्()। "शाङ्गंम्()" इति। शृङ्गस्य विकार इत्यण्(), आदिवृद्धिः, रपरत्वम्()। अत्र ङकारो यम्? हल उत्तरो भवति, न तु तस्मात् परो यम्? गकारः; तस्य यम्प्रत्याहारेऽसन्निवेशात्()। नत्वादिवृद्धिस्तद्धिताश्रया बहिरह्गा भवति; न तु तस्मात्? परो यम्? गकारः; तस्य यम्प्रत्याहारेऽसन्निवेशात्()। नत्वादिवृद्धिस्तद्धिताश्रया बहिरङ्गा भवित; लोपस्त्वन्तरङ्गः, ततश्चान्तरङ्गे लोपे कत्र्तव्ये वृद्धेरसिद्धत्वम्(), तस्या असिद्धत्वात्? तदाश्रितस्य रेफस्याप्यसिद्धत्वमेव। एवं च सति ङकारो हल एव परो न भवतीति यत्? केचिच्चोदयन्ति तन्मतमिदं नोपन्यसनीयमेव; मूलोदाहरणेऽपि तथा सम्भवात्()॥

बाल-मनोरमा

हलो यमां यमि लोपः ६१, ८।४।६३

उभयत्रापि प्रथमयकारस्य लोपविधिमाह--हलो यमां यमि लोपः। "झयो होऽन्यतरस्या"मित्यतोऽन्यतरस्यामित्यनुवर्तते। तच्च विभक्तिप्रतिरूपकमव्ययं वार्थे वर्तते। यमामिति बहुत्वं प्रयोगबहुत्वापेक्षम्। एकैकस्मिन् प्रयोगे बहूनां यमामसम्भवात्। "हल" इति दिग्योगे पञ्चमी। "परस्ये"ति शेषः। तदाह-हलः परस्य यम इत्यादिना। अनेन सूत्रेण उदाहरणद्वयेऽपि प्रथमयकारस्य लोपे सति एकयकाररूपे संपद्यते। लोपाऽभावपक्षे तु द्वियकाररूपं संपद्यते। ननु "हलो यमा"मिति सूत्रमेतदर्थं नारम्भणीयम्, अचो रहाभ्यामिति यकारद्वित्वस्य वैकल्पिकतया द्वित्वे सति द्वियकाररूपस्य, द्वित्वाऽभावे एकयकाररूपस्य च सिद्धेरित्याशङ्क्य नास्य सूत्रस्यात्र प्रयोजनमित्याह--इति लोपेति। तर्हि किमस्य सूत्रस्य फलमित्यत आह--लोपारम्भेति। "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इत्यादित्यशब्दाच्छेषार्थण्यान्ताद्देवतार्थेण्यः। आदित्य--य इति स्थिते "यस्येति चे"ति यकारादकारस्य लोपे तकाराद्यकारस्याऽनेन सूत्रेण लोपः। तस्मिन् सत्येव आदित्यमित्येकयकारं रूपं सिध्यति, नान्यथा। अतः सूत्रारम्भो न विफल इति भावः। अत्र "आपत्यस्य च तद्धितेऽनाती"ति लोपस्तु न, जाताद्यर्थकत्वेन आपत्यत्वाऽभावात्। अत्र त्वतत्सूत्रं न्याय्यत्वादुपन्यस्तमिति भावः। नन्वेवमपि महात्मनो भाव इत्यर्थे "गुणवचनब्राआह्मणादिभ्यः" इति ष्यञि टिलोपे आदिवृद्धौ माहात्म्यमित्यत्रापि तकारान्मकारस्य लोपः स्यात्, तस्य यम्त्वात्, यकाररूपयम्परकत्वाच्चेत्यत आह--यमामिति। यथासंख्यविज्ञानादिति। विज्ञायते अनेनेति विज्ञानं=सूत्रम्। "विज्ञानं शिल्पशास्त्रयोः" इत्यमरः। यथासंख्यसूत्रादित्यर्थः। तथाच मकारस्य मकारे परत एव लोपलाभाद्यकारे परे न लोप इत्यर्थः।

तत्त्व-बोधिनी

हलो यमां यमि लोपः ५१, ८।४।६३

हलो यमां यमि। हलः किम्? न्याय्यम्। इह यकारादीनां यकारादौ परे यथासम्भवमुदाहरणान्युच्यन्ते। सुध्युपास्यः। मध्वरिः। अत्र "यणो मय" इति मयः परस्य यस्य वस्य च द्वित्वे कृते अनेन लोपः। दुर्लभः। दुर्ग्ङुवे। कुर्मः। अत्र तु "अचो

रहाभ्या"मिति लस्य ञस्य मस्य च द्वित्वे कृते लोपः। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः। अत्र "अनचि चे"ति ङमो द्वित्वे सत्यनेन ङकारणकारनकाराणां लोपः। लोपः स्याद्वेति। "झयो ह्मः" इति सूत्रादन्यतरस्यामित्यनुवर्तत इति भावः।लोपारम्भफलं तु आदित्यो देवतेति। आदित्यशब्दात् "दित्यदित्ये"ति ण्यप्रत्यये "यस्येति चे"त्यकारलोपेऽनेन च यलोपे आदित्यमित्येकयकारकं रूपं सिध्यति नान्यथेति भावः। नच "आपत्यस्य च तद्धितेऽनाती"त्यनेन यलोपे कृते एकयकारकं रूपं सिध्यतीति वाच्यम् ; अदितौ जात आदित्य इत्यादिविवक्षायां तस्याऽप्रवृत्तेः। यथासङ्ख्यविज्ञानादिति। उक्तोदाहरणेषु वोपारम्भफलाभावाद्रोफस्य रेफे परत उदाहरणाऽभावाच्च यथासङ्क्यासूत्रमिह नोप्रन्यस्तम् ष। माहात्म्यमिति। अत्र मलोपो नेत्यर्थः। "हलोयरां यरि सवर्णे लोपः" इति तु न सूत्रितम्। "मूर्धः" "शाङ्ग" मित्यादौ रेफात्परस्य लोपांपत्तेः।

---

सूत्रम्

काशिका-वृत्तिः

झरो झरि सवर्णे ८।४।६५

हलः इति वर्तते, अन्यतरस्याम् इति च। हल उत्तरस्य झरो झरि सवर्णे परतो लोपो भवति अन्यतरस्याम्। प्रत्तम्, अवत्तम् इत्यत्र त्रयस्तकाराः, क्रमजश्चतुर्थः। तत्र मध्यमस्य मध्यमयोर् वा लोपो भवति। मरुत्तः इत्यत्र चत्वारस्तकाराः क्रमजः पञ्चमः। तत्र मध्यमस्य मध्यमयोः मध्यमानां वा लोपो भवति। मरुच्छब्दस्य हि उपसङ्ख्यानसामर्थ्यातच उपसर्गात्तः ७।४।४७ इति तत्वं भवति। झरः इति किम्? शार्ङ्गम्। झरि इति किम्? प्रियपञ्च्ञा। अल्लोपस्य च पूर्वत्र असिद्धे न स्थानिवतिति स्थानिवद्भावप्रतिषेधात् चकारस्य ञकारे लोपः स्यात्। सवर्णे इति किम्? तर्प्ता तप्तुम्। तर्प्तव्यम्। सवर्णग्रहणसामर्थ्यातिह सङ्ख्यातानुदेशो न भवति, सवर्णमात्रे लोपो विज्ञायते। तेन शिण्ढि, पिण्ढि इति ढकारे डकारस्य लोपो भवति।

लघु-सिद्धान्त-कौमुदी

झरो झरि सवर्णे ७३, ८।४।६४

हलः परस्य झरो वा लोपः सवर्णे झरि॥

न्यासः

झरो झरि सवर्णे। , ८।४।६४

"प्रत्तमवत्तम्()" इत्यादि। ददातेः क्तः, "अच उपसर्गात्तः" ७।४।४७ इत्यकारस्य तकारः, दकारस्यापि "खरि च" ८।४।५४ इति चर्त्वम्()। एवं तावत्? त्रयस्तकाराः--द्वावादेशौ, एकः प्रत्ययावयवः। "अनचि च" (श्र।४।४७) इति यो निर्वृत्तः स क्रमजश्चतुर्थः। "मध्यमस्य मध्यमयोर्वा" इति। पूर्ववदन्यतरस्यांग्रहणानुवृत्तेरेव वेदितव्यम्()। "मरुत्त इति चत्वारस्तकाराः" इति। तरयः पूर्ववत्(), चतुर्थो मरुच्छब्दावयवः, क्रमजः पञ्चम इति "अनचि च" ८।४।४६ इति यो विहितः। ननु चाजन्तादुपसर्गात्? तत्वमुच्यते, न च मरुच्छब्दोऽजन्तः, किं तर्हि? हलन्तः, तत्? कथं तत्वं भवति? इत्याह--"मरुच्छब्दस्य" इत्यादि। "उपसर्गाः क्रियायोगे" १।४।५८ इत्यत्र मरुच्छब्दस्योपसंख्यानमुपसर्गकार्यार्थम्()। यदि सत्यामपि तस्यां तत्वं न स्यात्(), तदा तस्य वैयथ्र्यं स्यात्()। तस्मादुपसंख्यानसामथ्र्यादनजन्तादपि तत्वं भवत्येव। तर्हि यथा ह्रुपसर्गोपसंख्यानसामथ्र्यात्? तत्वं भवति, तथा भरुन्नयतीत्यत्रापि "उपसर्गादसमासेऽपि णोपदेशस्य" ८।४।१४ इति तकारेणा नडादिव्यवाये णत्वं स्यात्()। यदीष्यते तदा भवतु। यदि नेष्यते तदा क्षुभ्नादिषु ८।४।३८ द्रष्टव्यः। "शाङ्गम्()" इति। ङकारो हल उत्तरो भवति झरि च सवर्णे परतः, न त्वयं झरिति न भवति लोपः।

"प्रियपञ्च्ञा" इति प्रियाः पञ्चास्येति बहुव्रीहिः, ततस्तृतीयैकवचनम्()। "अल्लोपोऽनः" ६।४।१३४ इत्यकारलोपः, "स्तोः श्चुना श्चुः" ८।४।३९ इति श्चुत्वं तवर्गस्य। वर्गो वर्गेण सवर्ण इति ञकारश्चवर्गस्य सवर्णः। न त्वयं ञकारो झर्()। तेन तस्मिन्? परभूते पूर्वस्माद्धलः परस्यापि चकारस्य लोपो न भवति। ननु चाक्रियमाणेऽपि झरीत्येतस्मिन्? नैवात्र लोपः प्राप्नोति, निर्दिष्टग्रहणस्यादन्तर्यार्थत्वात्(); अनन्तरे परभूते सवर्णे लोपेन भवितव्यम्(), न चात्रानन्तरो ञकारः, पूर्वस्य लोपे कृते "अचः परस्मिन्? पूर्वविधौ" १।१।५६ इत्यकारलोपस्य स्थानिवद्भावात्(), तत्? किं झरीतयनेन? इत्यत आह--"लोपस्य" इत्यादि। पूर्वत्रासिद्धीये हल्लोपस्य स्थानिवद्भावः प्रतिषिध्यते। अत्र "झरि" इत्येतन्नोच्येत यदि, तदात्र लोप स्यादेव। "तर्प्ता" इति। "तृप प्रीणने" (धा।पा।१२७१), पकारस्य तकारः स्थानबेदात्? सवर्णो न भवति, तेनाच लोपे न भवति। ननु च निमित्तानां कार्यिणां च साम्यादिह संख्यातानुदेशेन भवितव्यम्(), तत्रासत्यपि सवर्णग्रहणे तर्प्तेत्यादौ नैव लोपः प्राप्नोति, तत्? किं तन्निवृत्त्यर्थेन सवर्णग्रहणेन? इत्यत आह--"सवर्णग्रहणसामर्थ्यात्()" इत्यादि। यद्यत्र यतासंक्यं स्यात् ततो झकारस्य झकार एव लोपः प्रसज्येत, यावता झकारस्य झकार एव सवर्णः, एवं च सति सवर्णग्रहणमनर्थकं स्यात्(); व्यवच्छेद्याभावात्()। न हि झकारस्यासवर्णो झकारः सम्भवति। तस्मादत्र सवर्णग्रहणसामर्थ्यान्न संख्यातानुदेशो भवति। तेन शिण्डि, पिण्ढौत्यत्र सवर्णमात्रे ढकारे डकारलोपे भवतीति। "शिष्लृ विशरणे" ["विशेषणे"--धा।पा"] (धा।पा।१४५१), "पिष्लृ सञ्चूर्णने" (धा।पा।१४५२), लोङ्(), सिप्(), "सेह्रपिच्च" ३।४।८७ इति हिरादेशः, श्नम्(), "श्नसोरल्लोपः" ६।४।१११ इत्यकारलोपः, "हुझल्भ्यो हेर्धिः" ६।४।१०१ इति धिभावः, "झलां जश्? झशि" ८।४।५२ इति जश्त्वम्()--षकारस्य डकारः, "नश्चापदान्तस्य झलि" ८।३।२४ इत्यनुस्यारः; "ष्टुना ष्टुः" ८।४।४० इति धकारस्य ढकारः, "अनुस्वारस्य ययि परसव्रणः" ८।४।५७ इति णकारः, अनेन डकारस्य ढकारे लोपः॥

बाल-मनोरमा

झरो झरि सवर्णे ७२, ८।४।६४

झरो झरि सवर्णे। "झयोहोऽन्यतरस्या"मित्यतोऽन्यतरस्यामित्यनुवर्तते। "हलो यमा"मित्यतो "हल" इति, "लोप" इति चानुवर्तते। तदाह--हलः परस्येत्यादिना। तदिह रूपत्रयं संपन्नमित्याह-द्वित्वाभाव इत्यादिना। रेफात्परस्य ऋधिति धात्वन्तस्य धकारस्य "अचो रहाभ्या"मिति द्वित्वाऽभावे सति "झरो झरी"ति लोपे च सति एकधकारं रूपमित्यर्थः। असतीति। "द्वित्वाऽभावे" इत्यनुकृष्यते। तस्यैव ऋधेर्धकारस्य द्वित्वाऽभावे लोपे चा।ञसति द्विधकारं रूपम्। तथा तस्यैव ऋधेर्धकारस्य द्वित्वे लोपे च सति द्विधकारमेव रूपमित्यर्थः। सतीति। तस्यैव ऋधेर्धकारस्य द्वित्वे सति लोपे च असति त्रिधकारं रूपमित्यर्थः। यद्यपि द्विधपक्षे प्रथमधकारस्य त्रिधपक्षे मध्यमधकारस्य च "झलाञ्जश् झशी"ति जश्()त्वेन दकारो भवति। तथापि प्रक्रियाभिप्रायेण भूतपूर्वगत्या वा द्विधत्वं त्रिधत्वं चेति न दोषः। अथ तवल्कार इत्यत्राह यण इति। यणः परस्य मयो द्वित्वमिति व्याख्याने ककारस्य द्वित्वं, लकारस्य त्वनचि चेति द्वित्वमित्यर्थः। तेनेति लकारककारयोर्द्वित्वविकल्पेनेत्यर्थः। द्वित्वं लस्यैवेति। लकारस्य द्वित्वे ककारस्य द्वित्वाऽभावे च सति द्विलकारमेकककारं च प्रथमं रूपमित्यर्थः। नोभयोरिति। लकारककारयोरुभयोरपि द्वित्वाऽभावे एकलकारमेकककारं तृतीयं रूपमित्यर्थः। उभयोरपीति। लककारयोरुभयोरपि द्वित्वे द्विलकारं द्विककारं चतुर्थं रूपमित्यर्थः। तवल्कारादिष्विति। आदिना ममल्कारादिङ्ग्रहः।

तत्त्व-बोधिनी

झरो झरि सवर्णे ५९, ८।४।६४

झरो झरि। "हलो यमा"मित्यतो "हल" इत्यनुवर्तते, तदाह-हलः परस्येति। हलः किम्?। प्रत्तम्। झर इति किम्?। शाङ्र्गम्। झरीति किम्?। तर्प्ता। सवर्णग्रहणसामर्थ्याद्यथासङ्ख्यमत्र न भवति। तेन "शिण्डी" त्यत्र डस्य विकल्पेन लोपः

सिध्यतीति दिक्। लोपोवेति। "झयो हः" इति सूत्रादन्यतरस्यामित्यनुवृत्तेः। असति लोप इति। "द्वित्वाऽभावे"इत्यनुषज्यते। द्वित्वलोपयोरसतोरित्यर्थः। त्रिधमिचि। "यणो मयः" इति लक्षणान्तरेण पुनर्द्वित्वे "चतुर्ध"मिति बोध्यम्।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि।

तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम्॥

---

सूत्रम्

काशिका-वृत्तिः

उदत्तादनुदात्तस्य स्वरितः ८।४।६६

उदात्तातुत्तरस्य अनुदात्तस्य स्वरितादेशो भवति। गार्ग्यः। वात्स्यः। पचति। पठति। अस्य स्वरितस्य असिद्धत्वातनुदात्तं पदम् एकवर्जम् ६।१।१५२ इत्येतन् न प्रवर्तते। तेन उदात्तस्वरितौ उभावपि श्रूयेते।

न्यासः

उदात्तादनुदात्तस्य स्वरितः।, ८।४।६५

"गार्ग्यः, वात्स्यः" इति। गर्गवक्षतशब्दाभ्याम्? "गर्गादिभ्यो यञ्()" ४।१।१०५ इति यञ्(), "ञ्नित्यादि नित्यम्()" ["ञ्नित्यादेनि"--प्रांउद्रितः पाठः] ६।१।१९१ इत्यत्त्युदात्तत्वम्, "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इति शेषस्यानुदात्तत्वम्(), तस्य स्वरितो भवति। "पचति, पठति" इति। तिप्सपौ पित्त्वादनुदात्तौ। पकारस्याकारोऽपि धातुस्वरेणोदात्तः। तस्मात्? परस्य शवकारस्य स्वरितत्वं भवति। किं पुनः कारणं सूत्रमिदमिहोचयते, न "तित्स्वरितम्()" ६।१।१७९ इत्यस्यानन्तरमुच्यताम्(), एवं हि स्थरितग्रहणं न कत्र्तव्यं भवति; प्रकृतमेव ह्यनुवर्त्तिष्यते? इत्याह--"अस्य" इत्यादि। यदि तत्र क्रियेत, तदा "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इत्येतदिह प्रवत्र्तेत, तत्श्चानुदात्तस्वरितौ श्रूयेयाताम्(), नोदात्तस्वरितौ। इह तु क्रियमाणे स्वरितस्यासद्धत्वात्? तदाश्रयम्? "अनुदात्तं पदमेकवर्जम्()" ६।१।१५२ इति न प्रवत्र्तते, तेन द्वावप्यस्योदात्तस्वरितौ श्रूयेते॥

---

सूत्रम्

काशिका-वृत्तिः

न उदात्तस्वरितोदयम् अगाघ्र्यकाश्यपगालवानाम् ८।४।६७

उदत्तोदयस्य स्वरितोदयस्य च अनुदात्तस्य स्वरितो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते, अगार्ग्यकाश्यपगालवानां मतेन। उदात्त उदयो यस्मात् स उदात्तोदयः। उदात्तपरः इत्यर्थः। एवं स्वरितोदयः। उदात्तो दयस्तावत् गार्ग्यस्तत्र। वात्स्यस्तत्र। तत्रशब्द आद्युदात्तः। तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति। स्वरितोदयः गार्ग्यः क्व। वात्स्यः क्व। क्वशब्दः स्वरितः, तस्मिन् परतः अनुदात्तः स्वरितो न भवति। अगार्ग्यकाश्यपगालवानाम् इति किम्? गार्ग्यस् तत्र। गार्ग्यः क्व। तेषां हि मतेन स्वरितो भवत्येव। उदात्तस्वरितपरस्य इति वक्तव्ये उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यसङ्कीर्तनं पूजार्थम्।

न्यासः

नोदात्तस्वरितोदामगाग्र्यकाश्यपगालवानाम्?।, ८।४।६६

"उदात्तस्वरितोदयम्()" इति। उदात्तस्वरितादुवयौ यस्मादिति बहुव्रीहिः। उदयशब्दोऽत्र प्रत्येकमभिसम्बध्यत इति दर्शयितुमाह--"उदात्तोदयस्य" इत्यादि। उदयशब्दः परशब्दस्यार्थे वत्र्ततेऽत्र। "गाग्र्यस्तत्र" इति तत्रशब्द आद्युदात्तः। "सप्तम्यास्त्रल्()" ५।३।१० इति त्रल्प्रत्ययान्ताल्लित्स्वरेण। "गार्ग्यः क्व" इति। कशब्दः स्वरितस्तित्स्वरेण, "किमोऽत्()" ५।३।१२ इति किंशब्दादत्प्रत्ययः। किमः क्वादेशः "क्वाति" ७।२।१०५ इति। उदात्तस्वरितमिति वक्तव्ये लाघवार्थत्वाद्विल्पष्टार्थत्वाच्च "उदयग्रहणं मह्गलार्थम्()" इति। इष्टार्थसिद्धेर्हेतुर्गङ्गलम्(), इष्टं पुनरर्थागस्त्रस्य प्रथनं वीरपुरुषादिता च। तथा चोक्तम्()--"यतो मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणियन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च" (म।भा।१।१।१) इति। यथा मङ्गलादीन्येर्ववधानि भवा तथा मङ्गलावसानान्यपि। मङ्गलार्थं इहोदयशब्दे क्रियमाण उत्तरारन्भो मङ्गलपूर्वकौ भवति। तेन यद्वक्ष्त--"वीर्घप्लुतयोश्धानेन विवृताकारेण ग्रहणं नेष्यते, संवृतेन ["संवृतेन च णस्य मात्रिकस्य ग्रहणमिष्यते"--काशिका] तु मात्रिकस्य सर्वगुण युक्तस्याकारसय ग्रहणमि" (का।८।४।६८) इति, तदुपपन्नं भवति। मङ्गलपूर्वकेषु हि कारयेष्वारभ्यमाप्पेध्वपीष्टार्थसिद्धिर्भवति। उशब्दश्चायं लोके वृदिशब्दवन्मङ्गलार्थत्वेन प्रसिद्धः। तस्मात्? तस्य ग्रहणं मङ्गलार्थं क्रियते॥

---

सूत्रम्

काशिका-वृत्तिः

न उदात्तस्वरितोदयम् अगार्ग्यकाश्यपगालवानाम् ८।४।६७

उदत्तोदयस्य स्वरितोदयस्य च अनुदात्तस्य स्वरितो न भवति। पूर्वेण प्राप्तः प्रतिषिध्यते, अगार्ग्यकाश्यपगालवानां मतेन। उदात्त उदयो यस्मात् स उदात्तोदयः। उदात्तपरः इत्यर्थः। एवं स्वरितोदयः। उदात्तो दयस्तावत् गार्ग्यस्तत्र। वात्स्यस्तत्र। तत्रशब्द आद्युदात्तः। तस्मिन्नुदात्ते परतो गार्ग्यशब्दः स्वरितो न भवति। स्वरितोदयः गार्ग्यः क्व। वात्स्यः क्व। क्वशब्दः स्वरितः, तस्मिन् परतः अनुदात्तः स्वरितो न भवति। अगार्ग्यकाश्यपगालवानाम् इति किम्? गार्ग्यस् तत्र। गार्ग्यः क्व। तेषां हि मतेन स्वरितो भवत्येव। उदात्तस्वरितपरस्य इति वक्तव्ये उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यसङ्कीर्तनं पूजार्थम्।

न्यासः

नोदात्तस्वरितोदामगाग्र्यकाश्यपगालवानाम्?। , ८।४।६६

"उदात्तस्वरितोदयम्()" इति। उदात्तस्वरितादुवयौ यस्मादिति बहुव्रीहिः। उदयशब्दोऽत्र प्रत्येकमभिसम्बध्यत इति दर्शयितुमाह--"उदात्तोदयस्य" इत्यादि। उदयशब्दः परशब्दस्यार्थे वत्र्ततेऽत्र। "गाग्र्यस्तत्र" इति तत्रशब्द आद्युदात्तः। "सप्तम्यास्त्रल्()" ५।३।१० इति त्रल्प्रत्ययान्ताल्लित्स्वरेण। "गार्ग्यः क्व" इति। कशब्दः स्वरितस्तित्स्वरेण, "किमोऽत्()" ५।३।१२ इति किंशब्दादत्प्रत्ययः। किमः क्वादेशः "क्वाति" ७।२।१०५ इति। उदात्तस्वरितमिति वक्तव्ये लाघवार्थत्वाद्विल्पष्टार्थत्वाच्च "उदयग्रहणं मह्गलार्थम्()" इति। इष्टार्थसिद्धेर्हेतुर्गङ्गलम्(), इष्टं पुनरर्थागस्त्रस्य प्रथनं वीरपुरुषादिता च। तथा चोक्तम्()--"यतो मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणियन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च" (म।भा।१।१।१) इति। यथा मङ्गलादीन्येर्ववधानि भवा तथा मङ्गलावसानान्यपि। मङ्गलार्थं इहोदयशब्दे क्रियमाण उत्तरारन्भो मङ्गलपूर्वकौ भवति। तेन यद्वक्ष्त--"वीर्घप्लुतयोश्धानेन विवृताकारेण ग्रहणं नेष्यते, संवृतेन ["संवृतेन च णस्य मात्रिकस्य ग्रहणमिष्यते"--काशिका] तु मात्रिकस्य सर्वगुण युक्तस्याकारसय ग्रहणमि" (का।८।४।६८) इति, तदुपपन्नं भवति। मङ्गलपूर्वकेषु हि कारयेष्वारभ्यमाप्पेध्वपीष्टार्थसिद्धिर्भवति। उशब्दश्चायं लोके वृदिशब्दवन्मङ्गलार्थत्वेन प्रसिद्धः। तस्मात्? तस्य ग्रहणं मङ्गलार्थं क्रियते॥